|| श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ||

जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## टिप्पणीषट्कोपेता

|| श्रीगुरुभ्यो नमः || || हरिः ॐ ||

सुधा— श्रियः पत्ये नित्यागणितगुणमाणिक्यविशद-
प्रभाजालोल्लासोपहतसकलाविद्यतमसे ।
जगज्जन्मस्थेमप्रलयरचनाशीलवपुषे
नमोऽशेषाम्नायस्मृतिहृदयदीपाय हरये || १ ||

वाक्यार्थचन्द्रिका— नित्यागण्यबलद्युतिप्रमितिसत्सौख्याग्र्यवीर्यातुलौ-
दार्यप्राभवधीरतामुखगुणव्रातात्मदिव्याकृतिम् ।
सन्तापादिसमस्तदोषविधुरं वेदैकवेद्यं जग-
ज्जन्मादिप्रदमिन्दिरेश(ममलं)मनिशं नारायणं नौम्यहम् || १ ||

वेदाम्भोधिसमुद्धृतातिविलसत्सूत्रामृताम्भोलसद्धारावर्षणतुष्टसद्गुदवनिज्ञानाङ्कुराधायकम् ||
संसारातपनाशनं सुरमनःसच्चातकानन्ददं वेदव्यासविचित्रमेघमनिशं मच्छ्रेयसे संश्रये || २ ||

यद्भाग्विस्तररश्मिभिर्जगदिदं सन्मार्गमालम्बितं सत्सिद्धान्तवरारविन्दनिवहा विस्तारमासादिताः ||
दुःसिद्धान्तमहान्धकारनिकरा देशान्तमुल्लङ्घिताः सोऽयं मध्वदिवाकरो भवतु सज्ज्ञानप्रकाशाय मे || ३ ||

सत्सूत्रान्वितमध्वभाष्यविलसद्गाण्डीवसंयोजितैः सन्मानेषुभिरर्दयन्कुसमयप्रत्यर्थिदुःस्यन्दनान् ।
श्रीकृष्णेरितवेदवाजिनियतश्रीमध्वशास्त्रोल्लसद्दिव्यस्यन्दनसंस्थितो जयमुनीशाख्यार्जुनः स्यान्मुदे || ४ ||

सच्छास्त्रामलभावबोधकिरणैः संवर्धयन्मध्वसत्सिद्धान्ताब्धिमनन्तशिष्यकुमुदव्रातं विकासं नयन् ||
उद्भूतो रघुवर्यतीर्थजलधेस्तापत्रयं त्रासयन्यस्तं नौमि रघूत्तमाख्यशशिनं श्रीविष्णुपादाश्रयम् || ५ ||

श्रीमद्रामगिरीन्द्रपादनिरतं विद्रावयन्तं दिशो दुर्वादीन्द्रमहामृगान्निगमसद्व्याख्यालसन्नादतः ||
दुःशास्त्रेभकुतर्ककुम्भदलनप्रौढात्मविद्यानखं वेदव्याससमृगेन्द्रराजमधिकं वन्देऽनिशं मद्गुरुम् || ६ ||

वेदान्ताब्धिममन्दबोधगिरिणा सद्ब्रह्मसूत्राहिना दुस्तर्केतरदानवामरगणैः सम्मथ्य यो लब्धवान् ।
सन्न्यायामृतचन्द्रिके युधि तथा तर्केऽकरोत्ताण्डवं सोऽयं व्यासमुनीन्द्रपूज्यचरणो नित्यं भवेन्मे मुदे ॥ ७ ॥
अनुव्याख्याब्धियुङ्न्यायसुधाऽगाधसुरापगाम् ॥ गुरूणां दयया शुद्ध्यै धियः सेवितुमुत्सहे ॥ ८ ॥

टीकाकारा ग्रन्थादौ मङ्गलमाचरन्ति ॥ **श्रियः पत्य इति** ॥ नारायणमिति प्रथमपद्यव्याख्यानरूपेऽत्र पद्ये नारायणपदस्थाने हरिपदप्रक्षेपेण प्रादुर्भूत इति श्लोकोक्तहरेरेव नारायणत्वादुत्तरश्लोकोक्तं तमेवेति समर्थितं भवति । अत्र श्रियः पत्य इत्युक्त्या नारा लक्ष्मीः तत्पतित्वेन तदयनमित्यभिप्रायव्यञ्जनेन आवश्यकसकलवाङ्मनसदेवतानमनाभावप्रयुक्तन्यूनताशङ्काऽपहस्तिता भवति । पूर्वविशेषणान्तर्गतनिखिलपूर्णगुणत्वस्य तदुत्तरनिर्दोषत्वस्य च प्रयोज्यप्रयोजकभावोऽप्यस्तीत्यभिप्रेत्य गुणावद्ययोर्माणिक्यतमोभ्यामुपमानम् । तदुपपादनायैव प्रभाजालोल्लासेति । गुणनिखिलत्वोक्तिलब्धोपहन्यमानदोषसाकल्यकथनं सकलेति । गुणोपहतत्वयोर्नित्यत्वविशेषणेन तयोः कादाचित्कत्वशङ्कां व्यवच्छिनत्ति । अस्येति परामर्शविषयमादिपदसंग्राह्यं च दर्शयन्नेव प्रयोजनाभावान्नोद्भवादिदानं युक्तमित्याशङ्कां च परिहरति ॥ **जगदिति** । अत्र क्षेमशब्देनान्नदानादिनेव ज्ञानदानेनापि पालनस्याभिप्रेतत्वात्प्रलयशब्देन चाज्ञानबन्धमोक्षाणां रचनाशब्देन तन्त्रेण नियमनस्यापि ग्रहणसम्भवादुत्तरत्राष्टकसङ्ग्राहकत्वेन व्याख्यास्यमानादिपदसङ्ग्राह्यकथनपरत्वं नास्य युक्तमिति न शङ्कनीयम् । [अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः । स्थास्फाय्योष्ठिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् । तिष्ठतेर्वुक् ह्रस्वत्वं च । स्थविरः । खद स्थैर्ये हिंसायां च । खदिरः । खदिरी शाकभेदे स्त्री ना चन्द्रे दन्तधावने इति मेदिनी । बाहुलकाच्छीङो बुक्ह्रस्वश्च । शिबिरम् । शेरतेऽस्मिन् राजबलानि । निवेशः शिबिरं शण्डमित्यमरः । अजगतिक्षेपणयोः अजेर्वीभावाभावः । अजिरमङ्गणम् अङ्गेर्ल्युटि अनादेशस्य बाहुलकाण्णत्वमित्येके । अन्ये तु विश्वकोशाद्युपष्टम्भेन दन्त्यमेवेच्छन्ति । इह दशपादीवृत्तौ नञ्पूर्वस्य जीर्यतेर्ऋवर्णलोपो निपात्यत इत्युक्तं तदपि ग्राह्यम् । आशु हतमजिरं प्रत्नमीड्यमित्यादौ न जीर्यतीत्यजिर इत्यर्थस्यानुगुणत्वात् । अजिरं प्राङ्गणे काये विषये दर्दुरेऽनिले । शशप्लुतगतौ । उपधाया इत्वम् । शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत् । शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिषु । श्रथ मोचने । उपधाया इत्वं रेफलोपः प्रत्ययरेफस्य लत्वम् । शिथिलम् । ] अत्राजिरशिशिरशिथिलस्थिरेत्युणादिसूत्रेण (उणादीत्यादिपदेन ष्यञ्अन्त्वतलां समावेशो बोध्यः) स्थाधातोः किरच्प्रत्यये आतो लोप इटि चेति धात्वाकारलोपे च निष्पन्नस्य दृढार्थस्थिरशब्दस्य दृढादित्वेन वर्णदृढादिभ्य (वर्णदृढादिभ्यः ष्यञ्च । चादिमनिच् । शौक्ल्यं शुक्लिमा । दार्ढ्यम् । पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् । द्रढिमा षो ङीषर्थः । औचिती । यथाकामी । ब्राह्मणादेराकृतिगणत्वाद्गुणवचनब्राह्मणादिभ्यः ष्यञ् कर्मणि चेति सूत्रेण ष्यञ् । हलस्तद्धितस्येति यलोपः ।

चाद्भावे । जडस्य कर्म भावो वा जाड्यम् । मौढ्यम् । ब्राह्मण्यम् । अर्हतो नुम् चेति नुमर्थः पाठः । आर्हन्त्यम् । आर्हन्ती । एकभाव । अन्यभाव । त्रिभाव । एषां पाठः स्वार्थे विधानार्थः । आन्यभाव्यम् । ) इतीमनिचि ( पृथ्वादिभ्य इमनिज्वा । वावचनमणादिसमावेशार्थम् । रऋतो हलादेर्लघोः । इष्ठेमेयस्सु । टेः । टेर्लोपः स्यादिष्ठे मेयस्सु । पृथोर्भावः प्रथिमा । पार्थवम् । म्रदिमा । मार्दवम् । ) प्रियस्थिरेत्यादिना (प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः । प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु । प्रेष्ठः स्थेष्ठः स्फेष्ठः वरिष्ठः बंहिष्ठः गरिष्ठः वर्षिष्ठः त्रपिष्ठः द्राघिष्ठः । वृन्दिष्ठः । एवमीयम् । प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात्प्रेमेत्यादि । ) स्थादेशे निष्पन्नस्थेमशब्दस्य दार्ढ्ये प्रसिद्धावपि 'अखिलभुवनजन्मस्थेमभङ्गादिलील' इति रामानुजभाष्यनान्दीश्लोके स्थित्यर्थत्वेन तद्व्याख्यानरूपश्रुतप्रकाशिकायामन्यत्र चाभियुक्तप्रयोगाणां बहुलमुपलम्भात्तिष्ठतीति स्थिरमिति व्युत्पत्तेः स्थितिमत्परत्वेऽप्युपपत्तेश्च स्थेमशब्दस्य स्थितावत्र प्रयोग इति द्रष्टव्यम् । सुवाक्यैरित्यत्र वाक्यानां शोभनत्वमात्ररूपसुष्ठुत्वस्य प्रकृतानुपयोगादपौरुषेयत्वेन तन्मूलकाप्तवाक्यत्वेन वा शोभनत्वमुच्यत इत्यभिप्रेत्याप्यतममित्यत्र तमबर्थं चाह ॥ अशेषेति । ( द्वन्द्वे घि । द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ । अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे । हरिगुरुहराः । हरिहरगुरवः । ) न च द्वन्द्वे घीत्यस्य पटुगुप्तावित्यत्राजाद्यन्तमित्यस्य ( अजाद्यन्तम् । इदं द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ । बहुषु अनियमः । अश्वरथेन्द्राः । इन्द्राश्वरथाः । घ्यन्तादजाद्यदन्तं विप्रतिषेधेन । इन्द्राग्नी । ) चेशकृष्णौ इत्यत्र सावकाशत्वेनेन्द्राग्नी इत्यत्रेवाम्नायस्मृतीत्यत्राप्युभयप्रसङ्गे विप्रतिषेधे परं कार्यमित्यजाद्यन्तत्वादाम्नायशब्दस्य पूर्वनिपातसम्भवेऽप्यजाद्यन्तमित्यस्य पूर्वोक्तेऽल्पाच्तरमित्यस्य (अल्पाच्तरम् । शिवकेशवौ । ) प्लक्षन्यग्रोधावित्यत्र सावकाशत्वेन वागीशावित्यत्रेवात्राप्युभयप्रसङ्गे पूर्वन्यायेनाल्पाच्तरत्वात्स्मृतिशब्दस्यैव पूर्वनिपातः स्यादिति वाच्यम् । लक्षणहेत्वोः क्रियायाः समुद्राभ्राद्ध इत्यादिषु यथायथं व्यभिचारं कुर्वता सूत्रकृतैतत्प्रकरणस्यानित्यत्वज्ञापनादल्पाच्तरमित्यस्यानित्यत्वाच्छकुनिसूत्रयोरिति साध्विति वदता टीकाकृता तदनित्यत्वस्योक्तत्वाच्च । अल्पाच्तरमिति लक्षणस्य व्यभिचारं कुर्वाणेनेति युक्तिपादीयटीकाकारीयोक्तिश्च तन्नित्यत्वाभ्युपगमवादेन प्रवृत्तेति न विरोध इति द्रष्टव्यम् ॥ १ ॥

**सत्यव्रततीर्थीया–** वेदव्यासं मूलरामं नत्वा दिग्विजयं तथा ।
गुरूनपि सुधावाक्यव्याख्यां कुर्मो यथामति ॥ १ ॥

अथ परमकारुणिको जयतीर्थश्रीचरणो 'ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् । बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोरि'त्याचार्योक्तौ लोकानां विश्वासमुपजनयन् अनुव्याख्यानव्याख्यामारभमाणोऽभीष्टसमाप्त्यादिप्रयोजनकं श्रीपतिनतिनुतिरूपं मङ्गलं कृत्वा शिष्यशिक्षायै ग्रन्थादौ निबध्नाति ॥

**श्रियः पत्य इति ।** अत्रानुव्याख्यानाद्यपद्यगतविशेषणचतुष्टयविवरणाय नित्यागणितेत्यादि विशेषणानि । तेन तेषां यद्वक्ष्यमाणं प्रयोजनं तदेतेष्वपि बोध्यम् ॥ १ ॥ २ ॥

**परिमळः—** पूर्णागण्यगुणोदारमूर्तये पुण्यकीर्तये । नमः श्रीपतये भक्तदत्तस्वानन्दमूर्तये ॥ १ ॥

पूर्णागण्यगुणोदारनित्यसुन्दरमूर्तिने । श्रीब्रह्मवीन्द्रपूर्वेड्यकीर्तिने ब्रह्मणे नमः ॥ २ ॥

विश्वं यस्य वशे सर्वमनिशं शङ्करादिकम् । तस्य वायोस्तृतीयांशमाश्रये शमवाप्तये ॥ ३ ॥

सत्पद्मबन्धवो यस्य गावो विश्वतमोनुदः । स स्यात्तत्त्वप्रकाशाय जयतीर्थरविर्मम ॥ ४ ॥

पदवाक्यप्रमाणज्ञो दुर्मतध्वान्तभास्करः । व्यासतीर्थमुनीन्द्रो मे भूयाज्ज्ञानसमृद्धये ॥ ५ ॥

अस्मद्देशिकपादानां प्रणम्य चरणाम्बुजम् । श्रीमन्न्यायसुधावाक्यव्याख्यां कुर्वे यथामति ॥ ६ ॥

आद्यपद्यं विवृण्वानो ग्रन्थादौ नम्यत्वप्रयोजकविशिष्टत्वेष्टत्वाधिकृतत्वयुक्तदेवतानतिरूपं मङ्गलमाचरति ॥ **श्रिय इति** ॥ मूले अशेषविशेषतोऽपीत्यनेन सङ्कलय्य श्रीब्रह्माद्युत्तमत्वमुक्तम् । तत्र सकलवाङ्मनसदेवतायाः देव्याः ग्रन्थारम्भेऽवश्यं वन्द्यत्वद्योतनाय श्रियः पत्य इति विशिष्योक्तिः । तदपि ईश्वरोपसर्जनतयेति ज्ञापनाय श्रिय इति पृथगुक्तिः । निखिलेति निर्दोषमिति च विशेषणद्वयस्य हेतुहेतुमद्भावेन योजनाद्योतनाय नित्येत्याद्युक्तम् । 'प्रच्युतोऽशेषदोषैः सदा पूर्तित' इत्युक्तेः सर्वस्वातन्त्र्यसर्वज्ञानसर्वशक्तिसर्वैश्वर्यादिगुणसत्त्वे पारतन्त्र्यादिदोषाणामयोगात् । एतच्च ब्रह्मपदेन गुणपूर्तिवन्निर्दोषत्वस्यापि लाभाय । तेन नारायणशब्दस्य ब्रह्मशब्दसमानार्थत्वसूचनेन ब्रह्मतन्त्रे नारायणनतिः मूले न युक्तेति शङ्का परास्ता । यद्वा लोके गुणदोषयोरविनाभावदृष्टेरिहापि गुणित्वे दोषित्वापत्तिरित्यतः मितगुणित्वे दोषित्वमत्रामितगुणित्वान्न दोषितेति सूचनायैवमुक्तिः । देहस्य ज्ञानादिगुणात्मकत्वे लोके ज्ञानादेरनित्यत्वाद्देहोऽपि तथा स्यादिति शङ्कानिरासाय नित्येति गुणविशेषणम् । तेन मूले सदापदस्य निखिलेत्यत्रापि अन्वयः सूचितः । निर्दोषमित्यत्र दोषपदं अशेषदोषपरमिति ज्ञापनाय सकलावद्येत्युक्तिः । अस्योद्भवादिदमित्यत्रास्येतिपदं प्रमितसर्वपरं सदपि नेश्वरपरमिति ज्ञापनाय जगज्जन्मेत्युक्तम् । अनेनास्य समस्तस्योद्भवादिदमित्यन्वयः सूचितः । क्षेमा स्थैर्यं रक्षेत्यर्थः । उक्तं हि श्रुतप्रकाशेऽपि । 'अखिलभुवनजन्मक्षेमभङ्गादिलील' इति भाष्यव्याख्यानावसरे क्षेमा स्थितिरिति । स्थिरशब्दादिमनिच्प्रत्यये प्रियस्थिरेत्यादिसूत्रेण स्थिरशब्दस्य स्थादेशे आद्गुण इति गुणे च स्थेमेति रूपम् । यद्यपि वामनवृत्त्यादौ मुग्धप्रौढस्थिरशब्दानां पृथ्वादिष्वपाठात्पृथ्वादिभ्य इमनिज्वेत्युक्तेमनिजप्राप्तेरिमनिजन्तप्रयोगोऽसाधुरिति उक्तम् । तथापि नैषधद्वादशसर्गस्थस्य 'यत्कस्यामपि भानुर्मान्न ककुभि स्थेमानमालम्बत' इत्यस्य व्याख्याने 'वर्णदृढादिभ्यः ष्यञ्चे'ति सूत्रे चकारेणेमनिजः समुच्चितत्वात्स्थिरशब्दस्य दृढादिषु पाठादिमनिजित्युक्तत्वात्साधुरेवायं ध्येयः । यद्वा तिष्ठतेरौणादिकेमनिचि गुणे रूपं स्थेमेति । स्थितिरित्यर्थः । उद्भवादिद-

मित्यनेन सृष्ट्याद्यष्टकग्रहणेऽपि वियदधिकरणन्यायेन ईशादन्यसर्वसम्बन्धित्वाज्जन्मादित्रयस्यैवात्रोक्तिः । नियतिरप्युपलक्ष्या । ईश्वरस्य जगज्जन्मादिना फलं नास्ति चेदस्योद्भवादिदमित्ययुक्तम् । प्रेक्षावतो निष्फले प्रवृत्त्ययोगात् । अस्ति चेन्निखिलपूर्णगुणेत्ययुक्तमित्यतः **शीलेति** । जन्मादिरचनास्वभावेत्यर्थः । फलाभावेऽपि स्वभावोऽयं सृष्ट्यादिव्यापारः । यथा चैतत्तथा नप्रयोजनाधिकरणे वक्ष्याम इति भावः । अनेन सदाऽस्योद्भवादिदमित्यप्यन्वयः सूचितः । मूले देहमित्युक्तिर्न केवलं ज्ञानादिगुणसत्त्वाद्युपपत्त्यर्थं किंत्वस्योद्भवादिदमित्युक्तस्रष्टृत्वाद्युपपत्त्यर्थं चेति सूचनाय **वपुष** इत्युक्तिः । अन्यथा पत्युरसामञ्जस्यादित्यधिकरणे सम्बन्धानुपपत्तिश्चेति सूत्रेऽशरीरस्य जगता कर्तृकार्यभावरूपसम्बन्धानुपपत्तेरिति वक्ष्यमाणदोषापत्तेरिति भावः । सुवाक्यैरित्येतद्वेदवेदानुसारिसर्वपौरुषेयापौरुषेयपरमिति भावेनोक्तम् **अशेषाम्नायस्मृतीति** । आपाततो नोक्तगुणविशिष्टो हरिः प्रतीयत इत्यत उक्तम् **हृदयेति** । तात्पर्यप्रकाशितायेत्यर्थः । सदा प्रियतममित्यस्यार्थः **हरय** इति । नित्येत्यादिविशेषणद्वयेन विशिष्टत्वम् अशेषेत्यधिकृतत्वम् हरत्यशेषक्लेशानिति हरय इत्यनेनेष्टत्वमुक्तं ध्येयम् । 'हरिं हरन्तमनुयन्ति देवा' इत्यादेः । यद्वा मूले तमेवेति श्लोके व्यासगुरोर्नारायणैक्यमुच्यते । 'प्रादुर्भूतो हरिर्व्यास' इति श्लोके च हर्यैक्यम् । तत्कथमित्यतस्तावेक एवेति ज्ञापनाय मूलोक्तनारायणविशेषणान्येवोक्त्वा हरय इति विशेष्यमुक्तम् । 'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानी'ति स्मृतिसूचनाय हरिपदप्रयोग इत्येके । अनेन हरेर्नारायणानन्यत्वप्रतीत्या प्रादुर्भूतो हरिर्व्यास इति व्यासस्य हर्यवतारत्वोक्तेर्नारायणानवतारत्वात्तमेवेति तदभेदोक्तिरयुक्तेति शङ्काऽनवकाश इति । तमेव शास्त्रप्रभवमित्युपपत्त्यर्थमित्यन्ये । हरेर्नारायणविशेषणविशिष्टत्वोक्त्या हरिविशेषणानां कृत्यं मूलविशेषणकृत्यवद्बोध्यम् । निखिलेत्यादिविशेषणत्रये वेदादिरेव मानमिति ज्ञापनाय मूलक्रमोलङ्घनेनाशेषाम्नायेत्यस्यान्ते निवेशः । नित्येति विशेषणेन पूर्वाध्यायद्वयस्य अशेषेत्यादिविशेषणविशेष्याभ्यामुत्तरद्वयस्यार्थोक्तिः । 'नासिकास्तनयोर्ध्माधेटो'रिति निर्देशादल्पाच्तरमित्यस्य प्रायिकत्वाद्वाऽभ्यर्हितत्वाद्वा आम्नायशब्दस्य पूर्वनिपातः ॥ १ ॥

**यादुपत्यम्—** सुखमुखगुणबिम्बः साधुमार्गावलम्बः सुमतिजलजमोदो दूषितान्यप्रमोदः ।
भुवनविततमोहध्वान्तविध्वंसकेहो दिशतु दशमभीष्टां व्याससूर्यः स्वनिष्ठाम् ॥ १ ॥

पूर्णप्रज्ञजयार्यपूर्वकगुरूनानम्य विद्याप्रदान् वेदेशाभिधयोगिनोऽपि कृपया तेषां सुधाटिप्पणीम् ।
बालानां तनुते मितां यदुपतिर्बोधाय धीशुद्धये स्वस्यापि प्रविचिन्त्य सद्गुरुमुखात्सम्यक् श्रुतार्थान्मुहुः ॥ २ ॥

न पाण्डित्याभिमानेन नापि मत्सरतः क्वचित् ।
यत्नोऽयं किन्तु धीवाचोविशुद्ध्यै मम नान्यथा ॥ ३ ॥

अथ परमकारुणिको जयतीर्थश्रीचरणो 'ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् । बहुज्ञा एव जानन्ति विशेषेणार्थमेतयो'रित्याचार्योक्तौ लोकानां विश्वासमुपजनयन्ननुव्याख्यानव्याख्यामारभमाणो अभीष्टसमाप्त्यादिप्रयोजनकं श्रीपतिस्तुतिप्रणामरूपं मङ्गलं कृत्वा शिष्यशिक्षार्थं ग्रन्थादौ तदुपनिबध्नाति । **श्रियः पत्य इति** ॥ अत्राद्ये पद्ये अनुव्याख्यानाद्यपद्यगतविशेषणचतुष्टयविवरणाय नित्यागणितेत्यादि विशेषणानि । तेन तेषां विशेषणानां यद्वक्ष्यमाणं प्रयोजनं तदेतेष्वपि बोध्यम् । गुणमाणिक्यविशद-प्रभाजालोल्लासोपहतसकलावद्यतमस इत्यनेन निखिलपूर्णगुणैकदेहं निर्दोषमित्येतयोर्हेतुहेतुमद्भावो विव-क्षित इति सूचितमिति ज्ञातव्यम् । यद्यपि स्थिरशब्दप्रकृतिकः क्षेमशब्दो दाढर्ये रूढः तथापि क्षाधातु-निष्पन्नत्वाद्योगेन स्थितिवाच्यपि भवतीत्यभिप्रेत्य क्षेमेत्युक्तम् । अत एव 'अखिलभुवनजन्मक्षेमभङ्गादि-लील' इति प्राचां प्रयोगः । व्याख्यातं च तट्टीकायां क्षेमा स्थितिरिति । स्मृतिपदस्याल्पाच्तरत्वेऽपि आम्नायपदस्याभ्यर्हितत्वात्पूर्वं प्रयोग इति ज्ञातव्यम् ॥ १ ॥

**श्रीनिवासतीर्थीया–** वेदव्यासं गुणावासं पूर्णबोधान्मुनीनपि ।
वन्देऽहं जयतीर्थार्यांस्तथा वेदेशयोगिनः ॥ १ ॥

वेदेशमुनिसत्पादसेवासंप्राप्तवैभवान् । यादवार्यान् न्यायसुधाटीकाकारानहं भजे ॥ २ ॥

तत्पादाराधकश्रीनिवासेन तदनुग्रहात् । टीकाऽगृहीतवाक्यार्थविवृतिः क्रियते मया ॥ ३ ॥

ग्रन्थादौ श्रीपतिनमनरूपं मङ्गलमाचरति ॥ **श्रियः पत्य इति** । ॥ १ ॥

**चषकः–** पर्यष्कारि तनुर्गुणौघमणिभिस्तत्कौसुमोत्कर्षतो जङ्घानीतरतन्त्रताद्यरतमःस्तोमः कदम्बं विदाम् ।
स्वामोमोदि च येन विश्वजननक्षेमादिहेतुर्गिरां सर्वस्वं मम तन्तनीतु स शिवं श्रीशस्तुरङ्गास्यकः ॥ १ ॥

योऽश्रायि विधेन्दिरया शुकेन्दुना तन्त्रादिरत्नैरपि भारतद्रुणा ।
सूत्रामृतेन श्रितकल्पपादपं तमद्य कानीनसुधानिधिं श्रये ॥ २ ॥

यस्सूत्रपीयूषनिधिं पृणाति गोभिर्ह्यविद्याख्यतमः कृणाति ।
पृणोतु स स्वान्तचकोरकेऽद्य त्विष्णाति वाच्येन दरीदृशाख्यः(ज्वः) ॥ ३ ॥

सूत्रज्यान्वितसौत्रभाष्यधनुषि प्रोतप्रमाणाशुगैश्छिन्दन्युक्तिशिरांसि मायिकसुधीसंसत्सकीयानि हि । श्री
कृष्णव्यापृतनैगमार्वकमहाशास्त्रोल्लसच्छ्यन्दनारूढस्सम्पदमाशु मे प्रदिशतात्पार्थो जयीशाभिधः ॥ ४ ॥

योऽनन्तविद्वद्रसमण्डनक्रियाहेतुं व्यधाद्रत्ननिभं कृतित्रयम् ।
सोऽलञ्चिकीर्ष्यादथ संयमीन्द्रो मां व्यासराजक्षितयेन तेन ॥ ५ ॥

व्याचक्रिरे ये तु महानुभाविनस्तत्पादपाथोजरजःस्मृतिर्हि नौः ।
सुधां गभीराम्बुसरिन्निभामलं तितीर्षतो बालिशशेखरस्य मे ॥ ६ ॥
चमत्कृतं चर्करीते चर्कृतादौ फणीतरैः । अचर्कृतमचर्करीरे सत्यवर्यं तमाश्रये ॥ ७ ॥
गीष्पतिं योऽदिधिषणदचिकीर्तत्किरीटिनम् । व्यशश्राणनदादित्थं सत्यधर्मः स माऽवतात् ॥ ८ ॥
धायंधायं सुधां सौधभावस्य हि प्रकाशिकाम् । योऽतानीच्छ्रीनिवासार्यः श्रेयो मे तन्तनीतु सः ॥ ९ ॥
अगाधेऽयं सुधा कातिगूढार्था मन्दशेमुषिः । क्व चाहमपवाक्यत्वं यास्याम्यन्ते सतामपि ॥ १० ॥
श्रीमन्न्यायसुधां भौमनिजिम्नानां सुधित्सताम् । सौधं चषकमुद्दीप्तं मुदे कृष्णोऽभिधास्यति ॥ ११ ॥
श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः । सुनन्दताच्छ्रेव्यया मे भक्त्याऽलंकृतयाऽनया ॥ १२ ॥

'वृद्धिसूत्रे एतदेकमाचार्यस्य मङ्गलार्थं मृष्यतां माङ्गलिक आचार्यो महतश्शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते' इति व्याख्यासमर्थनौपयिकतया 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च मङ्गलयुक्ता वृद्धियुक्ताश्च यथा स्युरि'ति पातञ्जलाभिधानाद्ग्रन्थोऽयमित्यानुपूर्वीकभगवत्पादीयवचोधर्मिकप्रामाण्योपरक्तप्रतिसंहित्युत्पादनानुकूलव्यापारविशेषितोऽनुव्याकृतिव्याकृतिमारिप्सुष्टीकाकृत्पूज्यचरणस्समीहितसमापनादिफलकश्रीजान्यभिष्टुत्यादिरूपमङ्गलविधानोत्तरकालिकानभ्यर्णवर्ति विनेयाधिकरणकतद्गोचरानुसंहितिप्रयोजनकं मङ्गलप्रत्यायकपदघटकवर्णानुवादकरेखाविशेषरूपोपनिबन्धमादितो विधत्ते ॥ **श्रियः पत्य इत्यादि** ॥ घिसंज्ञाविरुद्धत्वान्नगुणः । आदितस्समापनदशायां च श्रीमहालक्ष्मीपदयोरुपादानेनातीवमाङ्गलिकतैतस्य ध्वन्यते । शैषिकषष्ठ्यन्तताश्रयणेनेशशेषतयैव प्रणता श्रेयसे प्रभवतीति ज्ञापयति । स्वव्याख्येयाद्यपद्यगतचतुर्विशेषणीविवृतिफलिका नित्येत्यादिचतुर्थ्यन्तत्रयीत्यभिधास्यमानतत्फलेनैवैतस्याः फलवत्तेत्यवसेयम् । अत्र श्रियः पत्य इत्युक्त्या नारा लक्ष्मीः पतित्वेन तदयनमित्यभिप्रायव्यञ्जनेनावश्यकवाङ्मनसदेवतानमनाभावप्रयुक्तन्यूनताशङ्काऽपहस्तिता भवतीत्याद्यचतुर्थ्यन्तमपि विशेष्यवाचकपदविवृतिपरमित्यपि स्थितम् । श्रीपदप्रकृतिकया षष्ठ्या पतिपदार्थतावच्छेदकान्वयिनिरूपितत्वं प्रत्याप्यते । नमःस्वस्तीत्यादिना नमःपदसमभिव्याहारे चतुर्थ्यनुशिष्यते । स्वापकर्षबोधनानुकूलस्वीयव्यापाररूपनत्यात्मकनमःपदार्थतावच्छेदकघटकापकर्षान्वय्यवधित्वं तया प्रत्याप्यते । स्वमुच्चारयिता । तथाच समानविभक्तिकविशेषणविशेष्यवाचकपदसमभिव्याहारस्थले विशेषणपदोत्तरविभक्तेरर्थराहित्यस्याभेदार्थकत्वस्य च मतभेदेन स्थिततया चतुर्थ्यन्तचतुष्टयीप्रतिपाद्याभिन्नहयवधिकापकर्षबोधानुकूलष्टीकाकृद्व्यापार इति बोधाकारो द्रष्टव्यः । सुपो धात्वितिलुप्तयोल्लासपदोत्तरतृतीयया निरूपकतया धात्वर्थान्वितकरणप्रत्ययनाम्नाणिक्योपमितगुणैकदेहत्वध्वान्तोपमितदोषराहित्ययोर्हेतुहेतु-

मद्भावो ध्वनित इत्यवधेयम् । अप्रौढप्रकाशकचाक्षुषादिरश्मिभिस्तमोनिवृत्तिप्रसङ्गनव्युदसनाय प्रौढप्रकाशकत्वस्य तन्निवर्तकतावच्छेदकघटकताज्ञापनायौल्लासपर्यन्तानुधावनम् । स च न तज्जालमन्तरेणोपपद्यत इति जालपदोपादानम् । अथोपोपसृष्टाद्धनेः कर्मसाधननिष्ठायामनुदात्तोपदेशेत्यनुनासिकलोपे निष्पन्न उपहतशब्दो नकुलेनाहिरुपहत इत्यादौ नकुलकर्तृकध्वंसप्रतियोगितारूपकर्मताविशेषवचन इति नाजात एकोऽयं हन्ति नाप्यन्याधार इति न्यायेन तत्र स्वोपहन्तव्याहिसामानाधिकरण्यवत्प्रकृतेऽपि तथात्वप्रसङ्ग इति चेदत्र गुरुपादाः । प्रयोजकतासम्बन्धेन फलोत्पत्तिवैशिष्ट्यरूपफलोपहितत्वस्यैव तादृङ्न्यायसञ्चारबीजत्वात्प्रकृते च तादृगुल्लासवृत्तितेजस्त्वावच्छिन्नजनकतानिरूपितध्वंसवृत्तिजन्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नावच्छेदकतावच्छेदकधर्मावच्छिन्नत्वात्मकस्वरूपयोग्यत्वरूपोपहतत्वस्यैवाभिप्रेतत्वात् । अन्यथा यादृशो राजपालितनकुलो न जातु भुजङ्गमवधीत्तत्रायमुपहतभुजङ्गो नैसर्गिकप्रौढप्रकाशकतेजः प्रतिहततमस्कस्सवितेत्याद्यभियुक्तप्रयोगाणां दुस्समाधेयतापत्तेः । अत एवोपघातकतावच्छेदकधर्मावच्छिन्ननिरूपिताधारतायाः कालत्रयावच्छिन्नतया तत्र नैकतरकालावच्छिन्नोपहन्तव्यनिरूपिताधारतेति ध्वनयितुमुपघातकतावच्छेदकधर्मावच्छिन्ननिरूपिताधारतायां आधारतायाः कालत्रयावच्छिन्नत्वावबोधनतात्पर्यकनित्यपदोपादानम् । अत्रैके नव्यसङ्ख्यावन्तः । प्रामाणिकप्रतियोगिताकात्यन्ताभावमुरीकृत्य तस्य टीकाक्षरजनिताधिगतिविषयत्वसिद्धये प्रकृतोल्लासोपहतपदं तादृगुल्लाससमानाधिकरणात्यन्ताभावप्रतियोग्यर्थकमित्यर्थापयन्ति । वध्यघातकभावापन्नगुणदोषाणां समसङ्ख्यतया तत्तद्वृत्तिव्यासज्यवृत्तिधर्मयोर्वध्यघातकतावच्छेदकत्वायोगेन सर्वज्ञानसर्वस्वातन्त्र्यसर्वेशत्वादिरूपा यावन्तो घातकाभिमता गुणाः प्रत्येकं तत्तद्वृत्तिधर्मावच्छिन्नजनकतानिरूपितजन्यताशालिध्वंसप्रतियोगितावच्छेदकाभिमतवध्याभिमततत्तद्वृत्तिधर्मावच्छिन्नत्वलाभाय सकलपदोपादानम् । सर्वनामरूपप्रकृतिप्रत्ययसङ्घातात्मकमौलास्येतिघटकप्रकृत्यंशजनितोपस्थितिविषयतावच्छेदकावच्छिन्नगोचरजिज्ञासां तत्समभिव्याहृततद्गुणसंविज्ञानाभिधेयस्य वा तदघटकोत्तरपदलक्ष्यस्य वान्यपदार्थस्य च जिज्ञासां पूरयन्नुद्भवादिदातृतया नैसर्गिकतयोद्भवादेर्न फलराहित्यनिबन्धनविधित्सानुपपत्त्यवकाश इत्यभिदधाति । **जगदिति** । मौलादिपदस्याष्टकप्रत्यायकत्वेन व्याकरिष्यमाणतया प्रकृते त्रितयप्रमापकत्वोक्तिस्तद्व्यावृत्तिं विरोत्स्यतीतिशङ्का त्वेकतरपदस्यशिष्टोपलक्षकत्वाशयेन प्रवृत्तेति निरसनीया । अत्राजिरशिशिरेत्युणादिसूत्रव्युत्पादितकिरच्प्रत्ययान्तस्य आतो लोप इति प्रत्ययकित्वनिबन्धनधात्वाकारलोपकस्य दृढार्थनिरूपितसमुदायवृत्तिकस्य स्थिरशब्दस्य काशिकायां मुग्धप्रौढस्थिरशब्दानां पृथ्वादिष्वपाठात्पृथ्वादिभ्य इत्यनेनेमनिचोऽप्राप्तेर्नायमिमनिजन्तस्साधुरित्युक्तत्वेऽपि नैषधद्वादशसर्गगत 'यत्कस्यामपि भानुमान्न ककुभि स्थेमानमालम्बत' इति श्लोकस्य व्याख्यायां वर्णदृढादिभ्यः ष्यञ्चेति सूत्रे चकारेणेमनिजस्समुच्चितत्वात्स्थिरशब्दस्येमनिजन्तोऽयं साधुरित्यभिहिततया तादृशाद्भावार्थकेमनिचि प्रत्यये

प्रियस्थिरेतिविहितस्थादेशनिष्पन्नस्थेमशब्दस्य प्रकृतिजन्यबोधीयप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नभावभूतदार्ढ्यप्रत्यायकत्वेऽपि स्थाधातुप्रकृतिकतया स्थितिमन्निरूपितावयववृत्तिमानपि भवतीत्याशयेन 'अखिलभुवनजन्मस्थेमभङ्गादिलील' इति रामानुजभाष्यकृदमाषिष्ट । तादृशनान्दीश्लोकगतस्थेमपदं स्थेमा स्थितिरिति श्रुतप्रकाशिकाकृदपि व्याचख्यौ । एवमन्येऽपि चिरन्तनाः प्रकृतेऽपि स्थितिप्रतीतितात्पर्येण स्थेमपदप्रयोग इति व्याचक्षिरे । अपौरुषेयत्वेन तन्मूलत्वेन वाऽनाशङ्कितदोषत्वादिना शोभनानि वेदादीनीत्यादिव्याख्यास्यमानमङ्गीं प्रतिसन्दधानो वाक्यपदप्रकृतिकबहुवचनोपस्थाप्य व्यासज्य वृत्तिसङ्ख्याया असंकुचितायाः प्रकृत्यर्थेऽन्वयमुपगच्छन् कृत्यान्तप्रकृतिकतमबर्थस्तात्पर्यविषयतारूप इति च विभावयन् समुदिताशयं दर्शयति । **अशेषेति** । अष्टलक्षण्यां द्वितीयलक्षणे द्वितीयचरणे द्वन्द्वाधिकारे द्वन्द्वे घि 'अजाद्यदन्तं' अल्पाच्तरमिति त्रिसूत्री द्वन्द्वसमासे प्राक्प्रयोज्यताविधात्री श्रूयते । तत्र घ्यन्तस्यासङ्कीर्णमुदाहरणं हरिहराविति । अजादीत्यस्य तादृशमीशकृष्णाविति । घ्यन्तादजाद्यन्तं विप्रतिषेधेन इन्द्राग्नी इतिवदाम्नायस्मृतीत्यत्राम्नायशब्दस्य पूर्वप्रयोगनिर्वाहवत् अजाद्यदन्तमित्येतद्दर्शिततादृशेऽल्पाच्तरमित्येतच्छिवकेशवावित्यत्र तादृशोऽजाद्यदन्तादल्पाच्तरविप्रतिषेधेन वागीशाविति यथा तद्वत्प्रकृतेऽप्याम्नायस्मृती इत्यत्र विप्रतिषेधेन स्मृतिशब्दस्य पूर्वनिपातस्स्यादितिशङ्का तु निर्दलैव । समानाधिकरणजातीययोर्लक्षणहेत्वोः क्रियायास्समुद्राभ्राद्धः 'नासिकास्तनयोर्ध्माधेटो'रित्यादिसूत्रकारीयनिर्देशैनैतत्प्रकरणस्यानित्यताज्ञापनात् । शकुनिसूत्रयोरित्यस्य साधुत्वासिसाधयिषयाऽल्पाच्तरमित्यस्य टीकाकृत्पादैरप्यनित्यताभिहितेश्च । तापसपर्वताविितिवदाम्नायस्य अभ्यर्हितत्वाद्वा तत्पदस्य पूर्वनिर्देश इति ॥ १ ॥

सु.— **येन प्रादुरभावि भूमिवलये व्यस्तारि गोसन्ततिः**
**प्राबोधि श्रुतिपङ्कजं करुणया प्राकाशि तत्त्वं परम् ।**
**ध्वान्तं ध्वंसमनायि साधुनिकरश्चाकारि सन्मार्गग-**
**स्तेन व्यासदिवाकरेण सततं मा त्याजि मे मानसम् ॥ २ ॥**

**वा०**—गुरुत्वोपपादकशास्त्रप्रभवत्वोप(पादक तमेवेति द्वितीयपद्यव्याख्यानरूपे)पादनेन किञ्चित् द्वितीयस्य पद्यस्य व्याख्यानरूपे येनेति पद्ये वेदविभागो वेदार्थोपबृंहकेतिहासपुराणादिनिर्माणं तन्निर्णायकब्रह्मसूत्रनिर्माणं चेति त्रिविधोऽपि गोसन्ततिविस्तारोऽभिमतः । तत्राद्यस्य प्राबोधीत्युक्ते मन्दैरध्येयत्वरूपे प्रबोधे हेतुत्वम् । द्वितीयतृतीययोस्तु प्राकाशीत्याद्युक्तप्रकाशादि(तृतीयेऽपि) हेतुत्वमिति द्रष्टव्यम् । करुणयेत्येतत्प्रादुरभावीत्यादौ सर्वत्र सम्बध्यते । अनेन प्रादुर्भूत इति पद्यतात्पर्यमप्युक्तं भवति । लुङ्प्रायपाठभङ्गपरिजिहीर्षयाऽऽह ॥ **मेति** ॥ माङ्योगे लुङः कर्मलकारापवादकत्वान्न त्यज्यतामित्यर्थः ॥ २ ॥

प०—प्रतिपाद्यं नत्वा द्वितीयपद्यस्थशास्त्रप्रभवत्वादि विवृण्वन्सूत्रकृतमभीष्टं याचते ॥ **येनेति** । गोसन्ततिरित्यनेन भारतपुराणब्रह्मसूत्रादिग्रन्थसमूहः किरणसन्ततिश्चोच्यते । प्राबोधीत्यनेन वेदप्रभवत्वं वेदव्यञ्जकत्वमेवेति दर्शितम् । गोपदश्रुतिपदयोरुक्त्या शास्त्रपदेन पौरुषेयापौरुषेयग्रन्थसंग्रह इति सूचितम् । यद्वा गोसन्ततिर्ज्ञानसन्ततिरित्यादि ध्येयम् ॥ २ ॥

या०—माङ्योगे लुङः सर्वलकारापवादकत्वेन मा त्याजीति लुङ् लोडर्थ इति ज्ञातव्यम् ॥ २ ॥

श्री०—व्याचिख्यासितानुव्याख्यानमूलभूतब्रह्मसूत्रकर्तृत्वोपाधिना श्रीवेदव्यासं दिवाकरसाम्येन वर्णयन्मनसः सदा तद्विषयकत्वं प्रार्थयते । **येनेति** । भूमिवलये भूखण्डे यमुनाद्वीप इत्यर्थः । साधूनां निकरः समूहश्च सन्मार्गगोऽकारि । मानसं मनः मा त्याजि सदा तद्विषयकमेव भवत्वित्यर्थः ॥ २ ॥

च०—चतुर्लक्षणीप्रतिपाद्यविशेषणविशेषितप्रणामानन्तर्येण व्याख्येयद्वितीयपद्यप्रतिपादनीयगुरुत्वोपपादकशास्त्रप्रभवत्वादिकं स्फुटीकुर्वाणस्सूत्रकृत्सन्निहितिं स्वचेतसि प्रार्थयते ॥ **येनेति** ॥ तन्त्रावृत्त्याद्याश्रयणेन चिणन्तषट्केनान्वेति । करुणयेत्यपि तथा । तत्राद्या चिण्प्रकृतिरकर्मिका शिष्टतत्प्रकृतयस्सकर्मिका इति । भवतेर्भावे लकारः शेषतत्सङ्ख्यात्कर्मणि । 'लः कर्मणि च' 'चिण्भावकर्मणोरि'ति च स्मृतेः । अत्र भावो भावनोत्पादनक्रिया सा धातुत्वेन सकलधातुषु वाच्या भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमपुरुषः । तिङ्वाच्यभावनाया असत्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किंत्वेकवचनमेव तस्यौत्सर्गिकत्वेन सङ्ख्यानपेक्षत्वात् । अनभिहिते कर्तरि तृतीया । आद्ये यन्निष्ठकर्तृतानिरूपकः प्रादुर्भाव इति बोधः । शेषेषु यत्कर्तृकविस्तृत्यादिक्रियाकर्मभूता गोसन्तत्यादय इति । द्विकर्मणां तु 'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्व हाम् । बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मता' इत्यनुशासनविषयतया चैत्रेण ग्राममजा नीयत इतिवन्मुख्यकर्मीभूतध्वान्तवृत्तिकर्मतैव चिणा प्रत्याय्यत इति तत्पदोत्तरा प्रथमैव । ग्रामस्येव ध्वंसस्याप्रधानकर्मतया तदुत्तरा तन्निष्ठकर्मतावगमिका द्वितीयैव । क्षुब्धस्वान्तध्वान्तेत्यनिट्कतया निपातितध्वनिप्रकृतिकभावनिष्ठांतरीयेण ध्वान्तशब्दस्य नपुंसकाधिकारीय भावे ल्युडन्त इति सूत्रोत्तरनिष्ठायां चेत्यनुशिष्ठनित्यक्लीबताकतया क्लीबनिर्देश इति ज्ञातव्यम् । माङ् समभिव्याहारे लुङस्सर्वलकारापवादकतया लोडर्थभूताशीरर्थकोऽयम् । आशिषि लिङ् लोटाविति स्मृतेः । लोडप्रयोगबीजं तु लुङ् भूयः समभिव्याहारभङ्गापनिनीषैवेति ध्येयम् । शिष्टं निबन्धान्तरेषु व्यक्तम् ॥ २ ॥

सु.— व्याप्तिर्यस्य निजे निजेन महसा पक्षे सपक्षे स्थिति-
व्यावृत्तिश्च विपक्षतोऽथ विषये सक्तिर्न वै बाधिते ।
नैवास्ति प्रतिपक्षयुक्तिरतुलं शुद्धं प्रमाणं स मे
भूयात्तत्त्वविनिर्णयाय भगवानानन्दतीर्थो मुनिः ॥ ३ ॥

**वा०**—युक्तिप्रधानत्वादनुव्याख्यानस्य तदुद्बोधार्थं युक्तिश्लेषेण तत्प्रणेतॄन्प्रार्थयते ॥ **व्याप्तिरिति** । अत्राचार्यपक्षे व्यापनं स्वभावसामर्थ्येन ॥ स्वसिद्धान्ते स्वसमानसिद्धार्थे दार्ढ्यम् अनभिमतिर्विरुद्धसिद्धान्ततः निषिद्धविषयास्नेहो विरोध्भिमतयोगश्च यथाक्रमं शब्दार्था द्रष्टव्याः । अत्र न वै नैवेत्युभयावधारणप्रयोगेण व्याप्तिरेवेत्यादिः सर्वत्र सम्बन्धस्तस्य सूच्यते । तेन धूमस्य ह्रदपर्वतपक्षकानुमाने पक्षे व्याप्त्या स्थितेरभावात् ह्रदे वह्निसाधनार्थं प्रयुक्तस्य पक्षे स्थित्यभावात् ह्रदद्दष्टान्तेन प्रयुक्तस्य सपक्षे स्थित्यभावात् वन्ह्यभावसाधनाय प्रयुक्तस्य विपक्षतो व्यावृत्त्यभावात् वन्हिमति वन्ह्यभावसाधनाय प्रयुक्तस्य (प्रत्यक्षादि)-बाधिते विषये सक्तेश्च स्थाल्यादिमत्त्वसाधनाय प्रयुक्तस्य पाषाणवत्त्वादिप्रतिपक्षयोगाच्च क्वचित्सत्या एव युक्तेः क्वचिदसत्त्ववन्नाचार्यस्य क्वचिदपि स्वसिद्धान्तस्थित्यभावादीत्यर्थसिद्ध्याऽतुल्यत्वं सिद्धं भवतीति द्रष्टव्यम् । अत्र निजे पक्षे व्याप्तिः सर्वस्मिन्स्वीये पक्षे स्थितिरित्यन्वयो द्रष्टव्यः ॥ ३ ॥

**स०**—आनन्दतीर्थपक्षे निजे पक्षे । सूत्रकारसिद्धान्ते । व्याप्तिः अशेषस्य तस्याङ्गीकारः । निजेन महसा स्वसामर्थ्येन न तु तपःप्रभावाद्यासादितवरादिनेत्यर्थः । सपक्षे तत्सजातीये वैशेषिकादिसिद्धान्ते स्थितिस्तदेकदेशस्वीकारः । भेदसत्यत्वादिस्वीकारात् । विपक्षतो व्यावृत्तिः विरुद्धप्रमेयानङ्गीकारः । सक्तिरासक्तिराग्रह इति यावत् । प्रतिपक्षयुक्तिः प्रतिवादियोगः । अनुमाने सर्वत्र कथञ्चित् प्रतिपक्षयोगः सम्भावितः । 'उपाधिप्रतिरोधौ तु क्व नामातीवदुर्वचा'वित्युक्तेः । अस्य तु सर्वथा प्रतिपक्षयोगसम्भावनापि नास्तीत्यभिप्रायेण नैवेत्युक्तम् । अत एवातुलमित्याहेति योजना । यद्वा क्वचित्पञ्चरूपोपपन्नस्यापि धूमाद्यनुमानस्य ह्रदादिस्थलान्तरे पञ्चरूपोपपन्नत्वाभावात् तद्वैलक्षण्यप्रतिपादनाय सक्तिर्न वै इति नैवास्तीति चोक्तम् । तथाच व्याप्तिरित्यादावपि तदनुवृत्त्यातुलत्वोपपादकत्वं द्रष्टव्यम् । अनुमानपक्षे तु निजेन महसा व्याप्त्याख्यसामर्थ्येन । निजे पक्षे स्वसाध्यधर्मविशिष्टे धर्मिणि व्याप्तिर्व्याप्त्या वर्तनम् । अन्यथा भागासिद्ध्यापत्तेरिति योज्यम् । शिष्टं स्पष्टम् । शुद्धं पञ्चरूपोपपन्नम् ॥ ३ ॥

**प०**—भाष्यकर्तारमभीष्टं प्रार्थयते ॥ **व्याप्तिरिति** ॥ तत्त्वविनिर्णयाय । **इदमदो वाऽन्यदेव वा** तत्वज्ञानमिति संशयविपर्ययानास्कन्दितनिर्णीतप्रामाण्यकनिश्चयरूपतत्वज्ञानायेति साध्योक्तिः । प्रमाण-

मिति करणे ल्युट् । इतरकरणवदस्य प्रमातृप्रयोज्यत्वाभावेऽपि सर्वप्रमितिकरणमनआदिशक्तिप्रबोधकतया प्राधान्येन प्रमाहेतुत्वात् 'बृहत्तुलैरप्यतुले'रित्यादाविवातुलमनुपममित्यर्थः । शुद्धं निर्दोषम् । पक्षवृत्तित्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वं असत्प्रतिपक्षत्वं चेति अन्वयव्यतिरेकिणः पञ्चरूपाणीति तानि क्रमेणाह ॥ **व्याप्तिरित्यादिना** ॥ निजे भक्तवर्गाख्ये । पक्षे । भक्तवर्गस्य विष्णूत्कर्षादिज्ञानं वा तत्वज्ञानमिति तत्वज्ञानगोचरसन्देहवत्त्वेन विष्णूत्कर्षादिज्ञानमेव तत्वज्ञानं नान्यदित्येवं तत्वनिर्णयरूपप्रमाणफलस्य तस्मिन्सिषाधयिषितत्वेन तस्य पक्षत्वात् । स्वमाहात्म्यस्य तत्र प्रकटितत्वेन तैरवगतमाहात्म्यत्वात्तत्र सान्निध्यविशेषाद्वा निजेन महसा तं व्याप्नोतीति व्याप्तिपदेन पक्षे सर्वत्र वृत्तिरुक्ता । 'व्यावृत्तं यद्विपक्षेभ्यः सपक्षे च कृतान्वयि । व्याप्त्या पक्षे वर्तमानमन्वयव्यतिरेकि तदि'त्युक्तेः । सपक्षे हरौ इदमदो वेति सन्देहानास्कन्दितानुपचरिततत्वनिर्णयवति । स्थितिः निष्ठा न तु तत्र व्याप्तिः । हरिविषये कृत्स्नाविषयत्वात् । ईशादन्यत्रैवालोचने सर्वविषयकत्वादिति भावः । विपक्षतः उक्तरूपतत्वनिर्णयहीनायोग्यजनेभ्यः व्यावृत्तिः उपदेशादावप्रवृत्तिः । बाधिते निषिद्धे विषये सक्तिः सङ्गो नैवास्तीति अवधारणे प्रसिद्धिद्योतको वा वैशब्दः भ्रान्तिशून्य इति वार्थः । ऋजुज्ञानस्य यथार्थैकस्वभावत्वात् । प्रतिपक्षयुक्तिः प्रतिवादियोगः । स नैव, प्रतिभटशून्य इत्यर्थः । वेदभारतबौद्धादिग्रन्थाः पक्षसपक्षविपक्षा इत्येके ॥ ३ ॥

**या०**—आनन्दतीर्थपक्षे निजः पक्षो ब्रह्ममीमांसाशास्त्रम् । विप्रतिपत्त्या सन्दिग्धसाध्यार्थवत्त्वात् । तत्र व्याप्तिर्निष्ठा । न तु परभाष्यकारस्येवानादरः । तेन श्रुतिसूत्रयोः विरोधे सूत्राणां कथञ्चिद्योज्यत्वस्योक्तत्वात् । निजेन स्वाभाविकेनैव न वरादिलब्धेन । महसा स्वसाध्यज्ञापनसामर्थ्येनेत्यर्थः । सपक्षे निर्णेतव्यार्थवत्तया निश्चिते वेदेतिहासादौ स्थितिर्निष्ठा । विपक्षतो विरुद्धराद्धान्ततो व्यावृत्तिस्तत्रानादरः । सक्तिरासक्तिः । आग्रह इति यावत् । ऋजुयोगिनामदुष्टबुद्धित्वस्य वेदादिप्रसिद्धत्वादिति हेतुं वैशब्देन सूचयति । प्रतिपक्षयुक्तिः प्रतिवादियोगः । अनुमाने सर्वत्र कथञ्चित्प्रतिपक्षयोगः सम्भावित 'उपाधिप्रतिपक्षौ तु क्व नामातीवदुर्वचावि'त्युक्तेः । अस्य तु सर्वथा प्रतिपक्षयोगसम्भावनाऽपि नास्तीत्यभिप्रायेण नैवेत्युक्तम् । अत एवातुलमित्याहेति योजना द्रष्टव्या । अनुमानपक्षे तु निजेन महसा व्याप्त्याख्यसामर्थ्येन निजे पक्षे स्वसाध्यधर्मविशिष्टे धर्मिणि व्याप्तिस्तत्र सर्वत्र वृत्तिः । अन्यथा भागासिद्ध्यापत्तेः । शिष्टं स्पष्टम् । शुद्धं पञ्चरूपोपपन्नम् । प्रमाणमनुमितिरूपप्रमाकरणम् । आनन्दतीर्थमुनेरपि सकलशेमुषीनियामकतयाऽस्मदाद्यनुमितिप्रमाकरणत्वमुपपादनीयम् ॥ ३ ॥

**श्री०**—व्याचिख्यासितानुव्याख्यानकर्तृत्वोपाधिना श्रीमदानन्दतीर्थमुनिमनुमानसाम्येन वर्णयन् ज्ञानाद्यैश्वर्यसाधनत्वं प्रार्थयते ॥ **व्याप्तिरिति** ॥ ३ ॥

तत्वनिर्णयसाधनत्वं (पा)

च०—व्याचिख्यासितानुव्याख्याया युक्तिमालाग्रथिततया तत्स्फुरणौपयिकतया तत्तादात्म्योपरक्त-भाष्यकृदुपास्तिं विधत्ते ॥ **व्याप्तिरित्यादि** ॥ भगवत्पादकल्पे ब्रह्ममीमांसाशास्त्रं पक्षः निखिलगुणपूर्त्य-वद्यगन्धवैधुर्योभयविशेषितस्य स्वप्रतिपादकतासम्बन्धेन तत्र सिषाधयिषितत्वात् । तत्र व्याप्तिः प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमितरानधिगन्तव्यतत्तत्प्रतिपाद्याधिगन्तृता । निजेन नैसर्गिकेण महसा स्वसिषाधयि-षितार्थानुमापनसामर्थ्येन । सपक्षे वेदेतिहासादौ अवधृतसाध्यकत्वात् । उभयानुगतहेतुताघटकसम्बन्धस्तु स्वेतरानधिगन्तव्यस्वाधिगतार्थकत्वं हेत्वभिमतस्य । विपक्षतः प्रतीपसमयात् । बाधिते गर्हिते । सक्तिः अभिनिवेशः । प्रतिपक्षयुक्तिः प्रत्यर्थिघटना । अनुमाने उपाध्यादिसम्भावनास्ति । प्रकृते तु तामपि व्यवच्छेत्तुं नैवेत्युक्तिः । पर्वतादौ वन्ह्यादिकं धूमेनालोकेन भस्मना च साध्यत इति तानि साधनानि सतुलानि प्रकृतसाधनाभिमतभगवत्पादातिरेकेण तादृशसाध्यानुमापनसमर्थवैकल्यादिदमतुलमिति हृदयम् । अनुमानकल्पे तु महःपदं तत्तत्साध्यनिरूपितव्याप्त्यवगमकं पक्षतावच्छेदकसामानाधिकरण्येनासिद्धिव्युद-सनाय व्याप्तिपदं तदवच्छेदेन हेतुतावच्छेदकघटकसम्बन्धप्रत्यायकम् । प्रमाणपदं करणसाधनल्युडन्तमि-त्यतो भगवत्पादानामपि निखिलमनीषानेतृतया प्रकृतसाध्यगोचरासदाद्यधिकरणकानुमितिहेतुतोपपादनीया । भक्तवर्गाख्ये पक्षे विष्णूत्कर्षादिज्ञानधर्मिकतत्त्वज्ञानत्वतदभावकोटिकसन्देहवत्वात् । सपक्षे हरौ तादृश-सन्देहानास्कन्दितत्वात् । विपक्षतोऽयोग्यजनाद्यावृत्तिस्तदुपदेशादावप्रवृत्तिरित्यादिकं निबन्धान्तरे स्थितम् ॥ ३ ॥

सु.— **भवति यदनुभावादेडमूकोऽपि वाग्मी**
**जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः ।**
**सकलवचनचेतोदेवता भारती सा**
**मम वचसि निधत्तां सन्निधिं मानसे च ॥ ४ ॥**

वा०—वाङ्मनसयोर्भारतीसन्निधिप्रार्थनानिमित्तं सहेतुकं वदन्नेव तां प्रार्थयते ॥ **भवतीति** ॥ 'स्यादेडे बधिरः प्राज्ञे गड्डुलः कुकरे कुणिरि'त्यभिधानादेडो बधिरश्चासौ मूकश्चेति विग्रहः ॥ ४ ॥

स०—यदनुभावाद्यदनुग्रहात् । यदनुभावाभावे वाग्म्यपि मूको भवतीति व्यतिरेकसमुच्चायको अपि शब्दः । एवमग्रेऽपि । अनेन वाग्देवतात्वमुपपाद्य चेतोदेवतात्वमुपपादयति ॥ **जडमतिरपीति** ॥४॥५॥

प०—देवीं सरस्वतीं व्यासमिति शिष्टाचारशिक्षामनुसृत्य वायुपत्नीसन्निधिमर्थयते ॥ भवतीति ॥ एडमूकः वक्तुं श्रोतुमशक्तः 'जडोऽज्ञ एडमूकस्तु वक्तुं श्रोतुमशिक्षित' इत्यमरोक्तेः । किम्वनीदृश इति कैमुत्यार्थोऽपिशब्दः । वाग्मित्वभवने प्राज्ञमौलित्वभवने च हेतुः सकलवचनचेतोदेवतेति ॥ ४ ॥

**वा०**—यदनुभावाद्यदनुग्रहात् । यदनुभावाभावे वाग्म्यपि मूको भवतीति व्यतिरेकसमुच्चायको अपिशब्दः । एवमग्रेऽपि । अनेन वाग्देवतात्वमुपपाद्य चेतोदेवतात्वमुपपादयति ॥ **जडमतिरपि इति** ॥ ४ ॥ ५ ॥

**श्री०**—ग्रन्थकरणस्य वाक्चेतोव्यापाररूपत्वेन तद्देवतां भारतीं प्रार्थयते ॥ **भवतीति** ॥ ४ ॥

**च०**—वाग्मित्वप्राज्ञमौलित्वयोः स्वानुग्रहव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वस्वसमाधानकालीन-समवहितिकत्वरूपस्वनिरूपितान्वयव्यतिरेकविशेषिततया प्रत्यायितवाङ्मनसदेवतात्विकाया भारत्यास्सन्निहितिं स्वीयवाङ्मनसयोरर्थयते ॥ **भवतीत्यादि** ॥ अथ 'श्रिणीभुवोनुपसर्गे' इति सूत्रेऽनुपसर्गग्रहणात् प्रभव इतिवदनुभव इति भवितव्यतयाऽनूपसृष्टस्य भवतेर्घञ्प्रत्ययानवकाशे वानुग्रहवचनः कथमनुभावशब्दो निष्पद्यत इति चेन्मैवम् । कथं प्रभावो राज्ञ इत्यादिकमाशङ्क्य प्रकृष्टो भाव इति प्रादिसमास इति पाणिनीयास्समादधुरिति तद्दिशाऽनुसमस्तस्यैव भावशब्दस्यानुग्रहप्रत्यायकत्वोपगतेः । एडो बधिरः स चासौ मूकश्चेति विग्रहः ॥ ४ ॥

**सु.**— **रमानिवासोचितवासभूमिस्सन्न्यायरत्नावलिजन्मभूमिः ।**
**वैराग्यभाग्यो मम पद्मनाभतीर्थामृताब्धिर्भवताद्विभूत्यै ॥ ५ ॥**

**वा०**—सन्न्यायरत्नावलिग्रन्थस्यात्रोपजीवनं व्यञ्जयन्नमृताब्धिश्लेषेण तत्कर्तृन्प्रार्थयते ॥ **रमेति** ॥ क्रमेण विशेषणत्रयेण भक्तिज्ञानवैराग्याणि व्यञ्जयन्ति । 'सर्व एव वान्वावादयोऽनन्वादेशे वा वक्तव्या' इत्युक्तेर्ममेति साधु । ( किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । कार्थं विधातुमपूर्वं बोधयितुमित्यर्थः यथाऽनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अन्वादेशे तु नित्यं स्युः । ) एवमुत्तरत्रापि द्रष्टव्यम् ॥ ५ ॥

**प०**—प्राचीनटीकाकारादभीष्टमाशास्ते ॥ **रमेति** ॥ सन्न्यायरत्नावल्याः अनुव्याख्यानटीका-ग्रन्थस्य जन्मभूमिः जनक इत्यर्थः । अब्धिपक्षे वैराग्यं शौक्ल्यं ध्येयम् ॥ ५ ॥

**श्री०**—अनुव्याख्यानस्य पूर्वटीका सन्न्यायरत्नावली । तत्कर्तॄन् पद्मनाभतीर्थश्रीमच्चरणान् क्षीरसमुद्रसाम्येन वर्णयन् ज्ञानाद्यैश्वर्यसाधनत्वं प्रार्थयते ॥ **रमानिवासेति** ॥ ५ ॥ ६ ॥

**च०**—चिरन्तनटीकामुपजीवतीयमभिनवटीकेति ध्वनयितुममृतोदधितुल्यतया तत्प्रणेतॄन्समीहितं नाथते ॥ **रमेति** ॥ पदस्य पदात् । अनुदात्तं सर्वमपादावित्यधिकृत्य युष्मदस्मदोः षष्ठीचतुर्थीद्वितीया-

स्मयोर्वानावौ, बहुवचनस्य वस्नसौ । ते मयावेकवचनस्य । त्वामौ द्वितीयाया इति चतुस्सूत्र्या विहिता-देशान्तर्गतमइत्यादेशस्य दत्तात्ते मेऽपि शर्म स इत्यादाविव प्रसङ्गेन ममेति निर्देशासाधुत्वशङ्का निर्दलैव । किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानरूपान्वादेशस्थले दर्शितादेशानां नित्यत्वेऽपि 'एतेषां नावादय आदेशा अनन्वादेशे वा वक्तव्या' इत्यभिहिततया हरिर्मम सुखप्रद इत्यादिवत्साधुत्वो-पपत्तेः ॥ ५ ॥

सु.— पदवाक्यप्रमाणज्ञान्प्रतिवादिमदच्छिदः ।
श्रीमदक्षोभ्यतीर्थाख्यानुपतिष्ठे गुरून्मम ॥ ६ ॥

**वा०**—साधकोक्तौ बाधकपरिहारे च सामर्थ्येनासंशयः संशयच्छिदित्युक्तत्वनिर्णायकतया मुख्यगुरुत्वं प्रतिपादयन्नेव साक्षाद्गुरूनुपतिष्ठते ॥ **पदेति** ॥ अत्र पदार्थज्ञानोपायभूतं पद्यते शब्दार्थोऽनेनेति व्युत्पत्त्या व्याकरणं पदम् । वाक्यार्थज्ञानोपायन्यायसमर्पकप्रमेयमीमांसाशास्त्रं वाक्यम् । उद्देशलक्षण-विभागपरीक्षाभिः प्रमाणस्वरूपनिर्धारकं प्रमाणमीमांसाशास्त्रं प्रमाणमुच्यत इति द्रष्टव्यम् ॥ **उपतिष्ठ इति** ॥ उपान्मन्त्रकरण इत्याग्नेय्याऽग्नीध्रमुपतिष्ठत इत्याद्युपपादनाय वैवक्षिकमन्त्रकरणस्य विवक्षितत्वेऽपि आदित्यमुपतिष्ठत इत्यादावमन्त्रकरणेऽप्यात्मनेपदोपपादनाय प्रवृत्ते 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिषु इति वक्तव्यमि'ति तत्सूत्रीयवार्तिके देवपूजादावप्युपपूर्वात्तिष्ठतेरात्मनेपदविधानाद्गुरोरपि देवप्रतिमात्वेन देवत्वात्तत्पूजायामपि देवपूजात्वविवक्षयोपतिष्ठ इत्यात्मनेपदोपपत्तिरिति ध्येयम् । ( मन्त्रकरणे किं भर्तारं उपतिष्ठति यौवनेन । आग्नेय्याऽग्निदेवतत्र्चा । वार्तिकोदाहरणानि तु । आदित्यमुपतिष्ठते कथं तर्हि स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वतीति । देवतात्वारोपात् । नृपस्य देवतांशत्वाद्वा । गङ्गा यमुना-मुपतिष्ठते । उपश्लिष्यतीत्यर्थः । रथिकानुपतिष्ठते मित्रीकरोतीत्यर्थः । पन्थाः स्रुघ्नमुपतिष्ठते प्राप्नोति इत्यर्थः । इति द्रष्टव्यानि ) ॥ ६ ॥

**स०**—पदं व्याकरणम् । वाक्यं मीमांसा । प्रमाणं न्यायः ॥ ६ ॥

**प०**—स्वगुरून्नमति ॥ **पदेति** ॥ शब्दमीमांसान्यायशास्त्रज्ञानित्यर्थः । उपतिष्ठे मनसा पूजयामि । 'उपान्मन्त्रकरण' इति सूत्रे 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्वि'ति वार्तिकेन पूजाया-मात्मनेपदम् ॥ ६ ॥

**या०**—पदं व्याकरणम् । वाक्यं वार्तिकम् । प्रमाणं न्यायः । ॥ ६ ॥

च०—संशयराहित्यविशेषतोऽन्यदीयसंशयच्छेतृत्वरूपगुरुत्वौपयिकव्याकरणप्रमेयप्रमाणमीमांसा - धिगन्तृत्वं विशदयन् चेतसा गुरूणां पूजां विधत्ते ॥ **पदेति** ॥ 'उपान्मन्त्रकरण' इति सूत्रे 'उपाद्देवपूजा-सङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यमि'ति वार्तिकादुपोपसृष्टतिष्ठतेः पूजायामात्मनेपदम् । गुरोरपि देवप्रतिमात्वेन देवपूजात्वविवक्षोपपत्तेरिति ध्येयम् ॥ ६ ॥

सु.— श्रीमदानन्दतीर्थार्यसन्मनःसरसीभुवि ।
अनुव्याख्याननलिने चञ्चरीकति मे मनः ॥ ७ ॥

वा०—स्वमनश्चञ्चरीकोपमोक्तिव्याजेन चिकीर्षितं व्यनक्ति ॥ **श्रीमदिति** ॥ ७ ॥

स०—मङ्गलाचरणं कृत्वा चिकीर्षितं निर्दिशति ॥ **श्रीमदिति** ॥ सरोवाचकः सरसीशब्दोऽपि प्रसिद्धः । भाषितपुंस्काद्भुवीति नलिनविशेषणमुपपन्नम् । **चञ्चरीकतीति** । रोलम्बश्चञ्चरीकश्चेत्यभि-धानात् चञ्चरीको भ्रमरः तद्वदाचरतीत्यर्थः । अत्र चरतेर्यङ्लुगन्तात् चरफलोश्चेत्यनेनाभ्यासस्य नुग्वि-धानेन तस्य चानुस्वारोपलक्षणत्वेनानुस्वारे ईकक्प्रत्यये चञ्चरीक इति जाते तस्मात्सर्वप्रातिपदिकेभ्यः क्विबाचार इत्यनेन क्विपि तल्लोपे 'सनाद्यन्ताधातव' इत्यनेन धातुसंज्ञायां तिङुत्पत्तौ चञ्चरीकतीति रूप-सिद्धिरिति द्रष्टव्यम् ॥ ७ ॥

प०—स्वचिकीर्षितं व्यनक्ति ॥ **श्रीमदिति** ॥ सन्मनोरूपसरस्यां सरोवरे भुवि जात इत्यर्थः । 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्ये'ति पुंवद्भावः । अनुव्याख्यानाख्यकमले चञ्चरीकति चञ्चरीकवद्भ्र-मरवदाचरति । 'इन्दिन्दिरभ्रमरषट्पदचञ्चरीका' इत्यादिशब्दरत्नाकरोक्तेः । इन्दिन्दिरश्चञ्चरीक इति क्वाचित्कामरपाठः प्रक्षिप्तः । अनेककोशेष्वदर्शनात् । तद्व्याख्यातृभिरस्पृष्टत्वाच्च । अनेकधा व्याख्यातुं मनः प्रवर्तत इत्यर्थः । आचारार्थात्क्विबन्ताच्चञ्चरीकशब्दात्तिङ्प्रत्ययः ॥ ७ ॥

या०—सरःशब्दपर्यायोऽयं सरसीशब्दः । 'कासारः सरसी सर' इत्यभिधानात् । भाषित-पुंस्काद्भुवीति नलिनविशेषणमित्याहुः । वस्तुतस्तु 'मानयानाभिधानपुलिने'त्यादिपुलिङ्गानुशासनसूत्रेण नलिनशब्दस्य पुलिङ्गताऽभिधानादिदं विशेषणमुपपन्नमिति ध्येयम् ॥ **चञ्चरीकतीति** ॥ चञ्चरीको भ्रमरः । 'इन्दिन्दिरश्चञ्चरीको रोलम्बश्चे'त्यभिधानात् । तद्वदाचरतीत्यर्थः ॥ ७ ॥

श्री०—सन्मनःसरसीभुवि । निर्दुष्टमनोलक्षणसरोवरोत्पन्नेनेत्यस्य नलिनविशेषणत्वेन भु भुनी भूनीति नपुंसकभूशब्दस्य सप्तमी भुनीति स्यात् । न तु भूः भुवौ भुवइति पुलिङ्गशब्दस्य सप्तमी भुवि इति । अतः कथमनयोः विशेषणविशेष्यभाव इति चेत् । उच्यते । भूशब्दस्य भाषितपुंस्कत्वात्तस्य च तृतीयादिषु 'भाषितपुंस्कं पुंवद्गालवस्ये'ति सूत्रे टादिविभक्तिषु पुंवद्भावोक्तेः भु भुनी भूनीति नपुंस-

कत्वेऽपि तृतीयादिविभक्तिषु भुवा भूम्यामित्यादि पुल्लिङ्गवदेव भवति । अतो भुवीति युक्तम् । भाषितपुंस्कस्वरूपमुक्तम् । 'यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते । नपुंसकेऽपि तच्चेत्स्याद्भाषितपुंस्कं तदुच्यत' इति । यदा हि सरसीभु नलिनं भेकश्च तदुभयत्रापि तच्छब्दप्रवृत्तौ सरसीभुत्वमेव निमित्तं नान्यदिति भवति भाषितपुंस्कम् । अत एव भाषितपुंस्कम् । अत एव भाषितपुंस्कत्वाभावात् 'पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे । वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनरि'ति प्रत्युदाहरणमभाणीति द्रष्टव्यम् ॥ **चञ्चरीकतीति** । यथा हि भ्रमरः समग्रं पुष्परसं पातुमसमर्थस्तं विहायान्यत्र गन्तुमप्यसमर्थस्तत्रैव परिभ्रमति । तथा मदीयं मनो ग्रन्थोऽयमपि बह्वर्थः । अनुव्याख्यानगतैकवाक्यस्य समग्रार्थावगाहनं कर्तुमसमर्थं तद्विहायोत्तरानुव्याख्याव्याख्यानाय गन्तुमसमर्थं सत्तत्रैव परिभ्रमति । वैलक्षण्यं सतश्चापि, स्वभावाज्ञानवादस्य, प्रत्यक्षवच्च प्रामाण्यमित्यादिवाक्यानां बहुप्रकारेण व्याख्यानकरण एवासक्तं भवति इत्यर्थः ॥ ७ ॥ ८ ॥

च०— चञ्चरीकस्यारविन्दगतगन्धाघ्रातृत्वशक्तेरिवात्मीयचेतसोऽनुव्याख्याव्याख्यौपयिकतत्प्रतिपाद्याधिगन्तृत्वशक्तिं स्फोटयन् चिकीर्षितं व्यनक्ति ॥ **श्रीमदिति** ॥ तृतीयादिषु भाषितपुंस्कत्वात्पुंवद्भावेन भुवीतिनलिनविशेषणं सङ्गच्छते । 'मानयानाभिधाननलिनपुलिनोत्तानशयनासनस्थानचन्दनालानसमानभवनवसनसंभावनविभावनविमानानि नपुंसके चे'ति पुल्लिङ्गाधिकारीये लिङ्गानुशासनसूत्रे चकारेण पुंस्त्वसमुच्चयाद्वा ॥ ७ ॥

**सु.— न शब्दाब्धौ गाढा न च निगमचर्चासु चतुरा**
**न च न्याये प्रौढा न च विदितवेद्या अपि वयम् ।**
**परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं**
**प्रपन्ना मान्याः स्मः किमपि च वदन्तोऽपि महताम् ॥ ८ ॥**

वा०—केवलं गुरुदेवताप्रसादलब्धैतद्ग्रन्थप्रतिपादितपदस्वरूपप्रमाणप्रमेयोपपादकन्यायजाते न अनादरः कार्य इत्येतद्व्यञ्जयन्स्वगर्वं परिहरति ॥ **न शब्देति** ॥ न शब्दाब्धावित्यादिना क्रमेण पदवाक्यप्रमाणज्ञत्वाभाव उच्यते । महतामित्येतच्चात्र व्यञ्जकं द्रष्टव्यम् । किमपि चेति लौकिककारणनिरपेक्षतामाह । अलौकिककारणभावान्नाकारणकार्योत्पत्तिरपीत्याह ॥ **परमिति** ॥ अत्रास्मदोर्द्वयोश्चेति बहुवद्भावाद्वयमिति बहुवचनम् । 'त्वं राजा वयमप्युपासित गुरुप्रज्ञाभिमानोन्नता' इत्यादावुन्नतत्वादेः विधेयत्वेन व्यावृत्तावतात्पर्यादविशेषणत्वान्न शब्दाब्धौ गाढा इत्यादेरपि विधेयत्वेनाविशेषणत्वात्परं श्रीमदित्यादेश्चाविधेयत्वेऽपि हेतुपरतया व्यावृत्तावतात्पर्येणाविशेषणत्वान्नात्र 'सविशेषणस्य प्रतिषेधो वक्तव्य' इति

प्रतिषेधस्य प्रसक्तिरिति द्रष्टव्यम् । ( प्रतिषेधस्येति । अस्मदो द्वयोश्चेत्युक्त बहुवद्भावप्रतिषेधस्येत्यर्थः । तथा चाहं पण्डितो ब्रवीमीतिवदहं प्रपन्नो मान्योऽस्मीति न प्रयुक्तमिति भावः ) ॥ ८ ॥

**स०**—भगवत्पादकृपामात्रसाध्यत्वान्नानादरः कार्य इत्याह ॥ **न शब्दाब्धाविति** ॥ निगमचर्चा मीमांसा । वेद्यं परमपरं च तत्वम् । अन्ये तु शब्दाब्धौ गाढा नेति न, निगमचर्चासु चतुराश्च न्याये प्रौढाश्च नेति न । विदितत्रेयाश्चापि यद्यपि तथापीति व्याचक्षते । अत्र च न परटीकाकाराणां व्याख्यानमिवास्मद्व्याख्यानमशेषशास्त्रपरिज्ञानसाध्यं, अपि तु गुरूत्तमश्रीमध्वकृपासाध्यमतो नानादरः कर्तव्य इत्यवतारिका द्रष्टव्या । किमपि युक्तमयुक्तं वेत्यर्थः । आपाततोऽयुक्तार्थकमपि मदीयवचनं मध्वगुरुप्रसादसाध्यत्वाद्युक्तार्थं मान्यमेव महतामिति भावः । चोऽवधारणे । मान्या इत्यनेन सम्बन्धः । 'अस्मदो द्वयोश्चे'तिसूत्रात् वयमिति बहुवचनम् । न च 'सविशेषणस्य प्रतिषेधो वक्तव्य' इति वचनात् बहुवचनायोग इति वाच्यम् । त्वं राजा वयमित्यादिप्रयोगदर्शनेन निषेधस्य प्रायिकत्वादिति ॥ ८ ॥

**प०**—चञ्चरीकतीत्युक्त्या प्राप्तं स्वमहत्वं विनयेन भूषयितुं विनयप्रदर्शनं करोति ॥ **न शब्देति** । निगमचर्चासु वेदविचारेषु । क्वचिदपि चेन्न प्रौढिस्तर्हि किं बलं व्याख्यान इत्यत आह ॥ **परमिति** ॥ अन्यद्बलमस्तीत्यर्थः । तत्किं गुरुकारुण्यसरणिं प्रपन्ना इति यत्तदेव बलं अतो मान्या इत्यन्वयः । एतेन अग्रे वक्ष्यमाणं सर्वं मूलाभिप्रेतमिति ध्वनितम् । किमपि साध्वसाधु वेत्यर्थः । विनयोक्तिरेवैषा । वस्तुतो मयि गुरुकारुण्यसरणिप्रतिपत्तिलब्धशब्दाब्ध्यवगाहादयो व्याख्यानप्रयोजकीभूता धर्माः सन्तीति स्वगतव्याख्योपयुक्तधर्मबाहुल्याभिप्रायेण बहुवचनोक्तिः । यद्वा गाढा इत्यादेः निषेधप्रतियोगितया प्रपन्ना इत्यस्य मान्यत्वोपपादकतयोपात्तत्वेन मान्यत्वादेः विधेयतया च वयमित्येतदविशेषणत्वेन सविशेषणस्य तु नेति निषेधाप्रवृत्तेरस्मदो द्वयोश्चेत्येकस्मिन्नपि बहुवचनं ध्येयम् । श्लोकानां च वक्तव्यबहुत्वेऽपि ग्रन्थगौरवभयात्सङ्क्षेपः । प्रतिवाक्यं प्रतिपदमनेकाकूतगर्भिता । प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते ॥ ८ ॥

**या०**—भगवत्पादकृपामात्रसाध्यत्वान्नात्रानादरः कार्य इत्याह ॥ **न शब्दाब्धावित्यादिना** ॥ निगमचर्चा मीमांसा । वेद्यं परमपरं च तत्त्वम् । अत्र यद्यप्यस्मदो द्वयोश्चेत्यत्र सविशेषणस्य प्रतिषेधो वक्तव्य इत्युक्तत्वात् । अहं पण्डितो ब्रवीमीतिवत् अहं प्रपन्नो मान्योऽस्मीत्येव वक्तव्यम् । तथाऽपि बहुत्वारोपमात्रेण बहुवचनोपपत्तिः । अत एवोक्तं दुर्घटवृत्तिकारेण 'बहुत्वारोपात्र वयं वैय्याकरणा इत्यादिकमुपपादनीयमि'ति । अन्ये तु शब्दाब्धौ गाढा नेति न, निगमचर्चासु चतुरा नेति न, न्याये

प्रौढाश्च नेति न । विदितवेद्या अपि यद्यपि तथाऽपीति व्याचक्षते । अत्र च न परटीकाकाराणां व्याख्यानमिवास्मद्व्याख्यानमशेषशास्त्रपरिज्ञानमात्रसाध्यमपि तु गुरुत्तमश्रीमध्वकृपासाध्यमतो नात्रानादरलेशः अपि कर्तव्य इत्याहेत्यवतारिका द्रष्टव्या । किमपि युक्तमयुक्तं वेत्यर्थः । आपाततोऽयुक्तार्थकमदीयं वचनं मध्वगुरुप्रसादसाध्यत्वाद्युक्तार्थप्रमापकमेव सुधियामिति भावः । चोऽवधारणे । मान्या इत्यनेन सम्बध्यते ॥ ८ ॥

च०—आचारक्विबन्तप्रकृतिककर्तृसाधनप्रत्ययान्तनिर्देशापादितामात्मनो महत्तां विनयातिशयेन संस्कुर्वन् भगवत्पादप्रसत्त्येकविहितप्रकृतग्रन्थनिरूपितार्थजातं नावजानीयादिति च ध्वनयन्स्वावलेपकर्मक-मन्दाधिकरणकप्रतीतिमपनिनीषति ॥ **न शब्देति** ॥ अस्मदो द्वयोश्च । एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यादिति विहितस्य 'सविशेषणस्य प्रतिषेधो वक्तव्य' इति प्रतिषेधात्पटुरहं ब्रवीमीतिवत् प्रपन्नोऽहं मान्योऽस्मीत्येव भवितव्यतया कथमयं बहुवचनान्तनिर्देश इति शङ्का 'त्वं राजा वयमप्युपासित गुरुप्रज्ञाभिमानोन्नता' इत्यादावौन्नत्यादेः विधेयतया व्यावृत्तिबोधनतात्पर्यविरहेण तद्धेतुत्वरूपविशेषणत्वा-भावेन व्यावृत्तिप्रतीतिजनकविशेषणावच्छिन्नविशेष्यकसमभिव्याहृतपदार्थान्तरप्रतीतिस्थल एव वार्तिकाव-तारात् प्रकृतेऽपि तदनवतारात्साधुतेव तयैवदिशा सोपपादनीयेति निरसनीयेति स्थितम् ॥ ८ ॥

**सु.— भगवता बादरायणेन प्राणिनां निःश्रेयसाय प्रणीतमपि ब्रह्ममीमांसाशास्त्रमसाधु-निबन्धान्धतमसाऽवकुण्ठितत्वेनाप्रणीतमिव मन्यमानो भगवानानन्दतीर्थमुनिर्यथाऽऽचार्याभिप्रायं अस्य भाष्यं विधायानुभाष्यमपि करिष्यन्विलीनप्रकृतितया स्वयमन्तरायविधुरोऽप्यनवरतमी-श्वरप्रवणकायकरणवृत्तिरपि नारायणप्रणामादिकं प्रारिप्सितस्यानन्तरायपरिसमाप्तेः प्रचयस्य च हेतुतयाऽविगीतशिष्टाचारपरम्परादिनाऽवगतमवश्यं करणीयं शिष्यान् ग्राहयितुं ग्रन्थादौ निबध्नाति ॥ नारायणमिति ।**

वा०—ननु प्रामाण्यविषयादिमत्त्वदुर्गमार्थत्वानां व्याख्येयत्वप्रयोजकतया प्रकृतशास्त्रे च तदभा-वात् तद्भावेऽपि वा भाष्यान्तराणां सत्त्वेनैतद्भाष्यानुभाष्ययोरेवाकर्तव्यत्वेन तदन्तरायपरिसमाप्त्यादेः प्रयोजनस्यासम्भवात् विलीनप्रकृतितयाऽनवरतमीश्वरप्रवणकायकरणतया भवदभ्युपेतभाष्यकारस्य ग्रन्थारम्भ एवान्तरायविरहोद्देशेन मङ्गलकृतेस्त्वया वक्तुमशक्यत्वाच्चाचारपरम्पराया अन्धपरम्परात्वसम्भवेन प्रमाणा-भावाच्च नारायणप्रणामादेरकर्तव्यतया ग्रन्थे निवेशनस्य च प्रयोजनाभावेन सुतरामनुपपत्तेरसङ्गतमेतत्प्रथ-मपद्यमित्यत आह ॥ **भगवतेति** ॥ अत्र ज्ञानवैराग्यैश्वर्यसमर्पकभगवच्छब्देन विवक्षार्थतत्त्वज्ञानविवक्षा-

करणपाटवानां लाभेन प्राणिनां निःश्रेयसायेति वक्तृप्रीतिविषयत्वतत्त्वज्ञानयोग्यत्वलाभेन वक्त्रानुकूल्य-श्रोत्रानुकूल्ययोर्निःश्रेयसाय प्रणीतमित्यनेनैव प्रसङ्गानुकूल्यस्य च सिद्ध्याऽऽप्तोक्ततयाऽप्रामाण्यशङ्कायाः वेदार्थभूतपरब्रह्मनिर्णायकन्यायग्रथनपरेण ब्रह्ममीमांसाशास्त्रशब्देन वेदादीतिकर्तव्यतात्वलाभेन विषयादि-राहित्यशङ्कायाः निबन्धेति व्याख्यानरूपनिबन्धप्रवृत्त्युक्त्या दुर्गमार्थत्वाभावशङ्कायाः एतद्ग्रन्थयोर्भाष्या-नुभाष्यशब्दौ प्रयुज्य यथाऽऽचार्याभिप्रायमिति तदर्थकथनेनान्यत्र नितरां बन्धकत्वार्थकनिबन्धशब्दं प्रयुज्याचार्याभिप्रायाननुसारित्वरूपासाधुत्वेन तद्विशेषणेनैतयोरन्येन गतार्थत्वशङ्कायाः अविगीतशिष्टेत्यन्ध-परम्परात्वशङ्कायाः विलीनेत्यादिकायकरणवृत्तिरपि शिष्यान् ग्राहयितुमित्यन्तेन भाष्यकारस्य ग्रन्थारम्भ एवान्तरायविरहोद्देशककृत्यनुपपत्तिशङ्कायाः ग्रन्थनिबन्धनानुपपत्तिशङ्कायाश्च परिहारेण पद्यं सङ्गतमिति द्रष्टव्यम् ।

म०—नारायणस्याभिमतदेवतास्तुतिप्रणतिलक्षणस्य कर्तव्यतामकर्तव्यताशङ्कानिराकरणेनोपपाद-यति ॥ **भगवतेत्यादिना निबध्नातीत्यन्तेन** ग्रन्थेन । अकरणीयत्वशङ्कानिरासश्च श्लोकव्याख्यानप्रकारेण अवसेयः । नारायणप्रणामादिकम् अवश्यकरणीयं अवश्यकरणत्वेन विशिष्टम् नारायणप्रणामादिकं अवश्यं करणीयमिति शिष्यान् ग्राहयितुमित्यर्थः । नन्वस्तु निबन्धः शिष्यान् ग्राहयितुम् । स किं ग्रन्थारम्भसमये कृतस्य प्रणामस्याकृतस्य वा । न तावद् द्वितीयः । अकृतनिवेशने प्रतारकत्वप्रसंगात् । नापि कृतस्येति युज्यते । तस्य विलीनप्रकृतितया स्वत एवान्तरायविधुरत्वेन तत्करणप्रयोजनाभावात् । न च परमास्तिकस्वभावत्वादारम्भसमये तत्करणमिति वाच्यम् । तेनानवरतमीश्वरप्रवणकायकरणवृत्तित्वस्यैव लाभेनारम्भसमये विशेषेण तत्करणे निमित्तालाभादित्यत उक्तम् । **विलीनप्रकृतितयेत्यादिवृत्तिरपी-त्यन्तम्** । आरम्भसमये कृतस्यैव नारायणप्रणामस्य निबन्ध इत्याद्यपक्ष एवाभिमतः । न च तदा विशेषेण तत्करणे प्रयोजनाभावः । सन्निहितशिष्यशिक्षाया एव प्रयोजनत्वसम्भवात् । तथाचान्तरायविधुरोऽप्य-नवरतमीश्वरप्रवणकायकरणवृत्तिरपि सन्निहितशिष्यान् ग्राहयितुं कृतं नारायणप्रणामं असन्निहित-शिष्यानपि ग्राहयितुं निबध्नातीति योजना द्रष्टव्या ।

प०—भाष्यादिवैयर्थ्यशङ्कां निराह ॥ **भगवतेत्यादिना** ॥ **असाध्विति** ॥ असमीचीनग्रन्था-ख्यान्धतमसेन प्रतिबद्धतत्वज्ञानजननशक्तिकत्वेनाप्रणीतमिवेत्यर्थः । सूत्रकृतेः पूर्वं विद्यमानयोः साधुजन-मनोगतसंशयविपर्यययोरनपगमादिति भावः । यथाचार्याभिप्रायं सूत्रकाराभिप्रायमनतिक्रम्य । अस्य ब्रह्ममीमांसाशास्त्रस्य ॥ **अनुभाष्यमपीति** ॥ तत्कृत्यमन्वपि चेत्यादावग्रे व्यक्तम् । ग्रन्थादौ निबन्धनेन प्रणामादिकं कृतमिति तावदवगम्यते । अन्यथा तदयोगात् । तच्चेतरजनकृतमिव विघ्नविघाताद्यर्थमिति

इदानीमेव कृतमिति च प्रतीयते । तत्प्रतीतिद्वयं निरसितुं स्वयमित्याद्यप्यन्तं विशेषणद्वयम् । प्रणामादिकं प्रणामस्तवनादिकम् । **अविगीतेति** । अविप्रतिपन्नव्यासादिशिष्टानामाचारेण मन्वादिशिष्टानामाचार इत्येवमाचारपरम्परया तदनुमितश्रुत्यादिना चावगतमित्यर्थः । श्रुत्यनुमानप्रकारश्चाग्रे तत्र .तारेत्येतदवतारिकायां व्यक्तः ।

**या०**—अनुव्याख्यानमङ्गलाचरणयोः कर्तव्यतामुपपादयन्नाद्यपद्यमवतारयति ॥ **भगवतेत्यादिना** । विधायेत्यनन्तरं स्वयं कृताऽपि तद्व्याख्येत्यत्र वक्ष्यमाणप्रयोजनायेति शेषः । नारायणप्रणामादिकमवश्यं करणीयम् । अवश्यकरणीयत्वेन विशिष्टं नारायणप्रणामादिकमवश्यं करणीयमिति शिष्यान्ग्राहयितुमित्यर्थः । नन्वस्तु निबन्धः शिष्यान्ग्राहयितुं किन्तु ग्रन्थारम्भसमये कृतस्यैव नारायणप्रणामस्य अकृतस्य नमामीत्यादिरूपेण निवेशने प्रतारकत्वप्रसङ्गात् । न च तत्करणमत्र सम्भवति । आनन्दतीर्थमुनेर्विलीनप्रकृतितया जीवन्मुक्तत्वेन स्वत एवान्तरायविधुरत्वेन तत्करणे उक्तप्रयोजनाभावात् । न च परमास्तिकस्वभाववत्त्वात्तत्करणमिति वाच्यम् । तेनानवरतमीश्वरप्रवणकायकरणवृत्तित्वस्यैव लाभेनारम्भसमये विशेषेण तत्कारणालाभात् इत्याशङ्क्याह ॥ **विलीनप्रकृतितयेत्यादि** ॥ शिष्यान्ग्राहयितुमित्यतः परं कृतमिति शेषः । प्रणामादिकमित्यत्रादिपदेन स्तुतिर्ग्राह्या । निबध्नातीत्यतःपूर्वं गुणप्रधानभावेनेति शेषः । तथा चान्तरायविधुरोऽप्यनवरतमीश्वरप्रवणकायकरणवृत्तिरपि सन्निहितशिष्यान्ग्राहयितुमारम्भसमये विशेषेण कृतं नारायणप्रणामादिकमसन्निहितशिष्यानपि ग्राहयितुं गुणप्रधानभावेन निबध्नातीति योजना द्रष्टव्या ।

**च०**—अथ प्रकृतशास्त्रव्याचिख्यासैव भाष्यकृतो नोपपद्यते । व्याख्येयाभिमतस्याप्रामाण्यनिर्विषयत्वानतिगूढार्थप्रतिपादकत्वरूपव्याख्यानकर्मतानिबन्धनव्यतिरेकित्वात् । तदुपगमेऽपि वृत्तिकारान्तरप्रणीतवृत्त्यन्तरैरेवैतदर्थाधिगतेः स्वप्रणीतैकतरवृत्त्यैव निर्वाहे वृत्त्यन्तरानर्थक्यस्य दुष्परिहरत्वात् प्रतियोगिनमन्तरेण ध्वंसोत्पत्तेरयोगेन विलीनेतिविशेषणद्वयविशेषिततयोरीकृतभाष्यकृतः साधनाभावनियन्त्रितान्तरायांकुरोत्पादायोगनिबन्धनतद्ध्वंसोद्देश्यक तदारम्भकालावच्छिन्नमङ्गलकृतेरतिदुस्थत्वाच्च । प्रज्ञाचक्षुःष्वपारम्पर्यरूपतायाः सूपगमत्वात्तदाचारपारम्पर्यस्य । तस्यैवाकर्तव्यत्वं फलराहित्यायत्ततदुपनिबन्धचिकीर्षायोगेन दुःशकं प्रथमपद्योत्थानमित्यतस्तदवतारयति **भगवतेत्यादिना** । प्रणीतमित्यन्तेनाप्तिनियन्त्रितप्रामाण्यस्य तद्विशेष्यवाचकपदेन विषयस्य निबन्धपदोपादानेनातिदुर्घटार्थत्वस्य च ध्वनिततया आद्यशङ्कायाः असाधुपदस्य यथेत्याद्यव्ययीभावस्य चोपादानेन द्वितीयस्याः अपिना प्रयोजनसद्भावद्योतनेन तृतीयस्यास्तुमनन्तेन चतुर्थ्या षष्ठ्याश्च शिष्टेत्यनेन पञ्चम्याश्च समाहितत्वेनाद्यपद्यं सङ्गच्छत इति ध्येयम् ।

अनुव्याख्यानम्– नारायणं निखिलपूर्णगुणैकदेहं
निर्दोषमाप्यतममप्यखिलैः सुवाक्यैः ।
अस्योद्भवादिदमशेषविशेषतोऽपि
वन्द्यं सदा प्रियतमं मम सन्नमामि ॥

**सु.— अत्र नारायणं सन्नमामीत्यन्वयः । उत्तमपुरुषप्रयोगादेवाहमिति लभ्यते । समिति भक्त्याद्यतिशयसाहित्यलक्षणां प्रणामस्य सम्यक्तामाह । तथाविध एव हि नारायणप्रणामो भवत्यभिमतसिद्धेरङ्गम् । निखिलेत्यादीनां तु प्रणामकर्मणा नारायणेन विशेषणतया सम्बन्धः । प्रयोजनं च स्तुतिपदानां विशेष्यप्रशंसैव । तत्रार्थिकपुनरुक्तेः स्तुतित्वमेव समाधानमवधातव्यम् ।**

वा०—नन्वत्र नमनक्रियायाः सकर्मकत्वान्निखिलेत्यादीनामनेकेषां कर्मकारकाणां मिलितानामेकक्रियान्वयानुपपत्त्या प्रत्येकं क्रियान्वये च वाक्यभेदापत्त्या विशेषनियामकाभावेनैकस्यैव क्रियान्वयासम्भवात्सन्निधानादन्त्यस्यैव क्रियान्वये विशिष्य नम्यत्वरूपनिर्धारणानापत्तेर्न कर्मक्रियान्वयोऽत्र युक्त इत्यत आह ॥ **अत्रेति** । अत्र चैकस्यैव नमनकर्मकतयोपपादनेन प्रत्येकमिलितपक्षोक्तदोषद्वयस्य रूढपदोपादानेन विशेषनियामकाभावरूपदोषस्य विष्णौ निरूढपदोपादानेनान्तिमदोषस्य च निवृत्तिरिति द्रष्टव्यम् । ननु नमामीति कर्तृतिङा कर्तृमात्रलाभेऽपि तस्य परकर्तृत्वेऽप्युपपत्त्या स्वमात्रकर्तृत्वसमर्पकाहमित्यनुक्तेर्न्यूनतेत्यत आह ॥ **उत्तमेति** । अत्र यदोपपदनियमो युष्मद्युपपदे मध्यम एव न प्रथमोत्तमौ अस्मद्युपपदे उत्तम एव न प्रथममध्यमौ शेषे प्रथम एव न मध्यमोत्तमावित्येवमाकारकनियमस्य तुल्यजातीयापेक्षत्वात् । तदा युष्मदो मध्यमेन शेषस्य च प्रथमेन नियमितत्वेन तयोरुत्तमंप्रत्यप्राप्तेरुत्तमं प्रति स्वनियमितास्मद एवोपपदत्वमार्थिकमित्युत्तमप्रयोगादहमित्यस्यार्थिको लाभः । ( 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' । तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः स्यात् । स्थानिनीत्यस्य व्याख्यानमप्रयुज्यमान इति । 'अस्मद्युत्तमः' । तथाभूतेऽस्मद्युत्तमः स्यात् । 'शेषे प्रथमः' । मध्यमोत्तमयोरविषये प्रथमः स्यात् ) । उपपदनियमे युष्मदस्मदी नियते पुरुषः शेषश्चानियत इति प्रथम इत्येतावतैवोच्यमानेन नियमो विज्ञायते । अत्र नियम्यान्तराभावात् प्रथम एव नियम्यः । यत्र च प्रथमाप्रथमप्रसङ्गस्तत्रैव चैवंविधो नियमः कर्तव्यः । शेष एव च तत्प्रसङ्ग इति तत्रैव नियमो विज्ञायत इति शेषग्रहणं व्यर्थम् । पुरुषनियमे तु मध्यमोत्तमौ नियतौ

युष्मदस्मदी अनियते शेषश्च । तत्र युष्मदस्मदोरपि प्रथमप्रसङ्गे शेष एव प्रथम इति नियमः कर्तव्यः । न चान्तरेण शेषग्रहणमेवं शक्यते कर्तुमिति कर्तव्यं शेषग्रहणमिति शेषग्रहणं कुर्वतः सूत्रकारस्याभिमतो युष्मद्येव मध्यम अस्मद्येवोत्तमः शेष एव प्रथम इत्येवमाकारपुरुषनियमो यदा तदोत्तमपुरुषस्यास्मदर्थं विनाऽसम्भवात्साक्षादेवोत्तमपुरुषप्रयोगादहमित्यस्य लाभो न तु पूर्ववदार्थिक इत्युभयथाऽप्यहमित्यस्य लाभान्न न्यूनतेत्याशयः । एवकार उभयथाऽर्थलाभसम्भवेऽपि लाघवमेतत्पक्षोद्बलकमिति सूचयति । अत्र विवक्षितं समित्यस्यार्थमाह ॥ **समिति** । तद्विवक्षायां नियामकमाह ॥ **तथाविध इति** । अनेनोत्तरव्याख्याने विशिष्टेष्टाधिकृतत्वानां वन्द्यत्वप्रयोजकतयाऽभिमतानां मध्ये विशिष्टाधिकृतत्वयोः विशिष्यवन्द्यत्वप्रयोजकत्ववदिष्टत्वस्य तदभावाद्वृत्त्यादिसहकृतत्वरूपविशेषणद्वारैव तदिति यदभिप्रेतं तदपि समर्थितं भवति । ननु तथाऽपि निखिलेत्यादिभिर्विजातीयैर्व्यवधानान्नारायणमित्यस्य नमामीत्यनेनान्वयानुपपत्तिः । नारायणस्यैव प्रणामकर्मत्वे निखिलेत्यादीनां तदभावात्तत्र द्वितीयानुपपत्तिश्च । न च निखिलेत्यादीनां प्रणामकर्मणा नारायणेन सम्बन्धान्न विजातीयव्यवधानं नापि द्वितीयानुपपत्तिरिति वाच्यम् । गुणानां च परार्थत्वादिति न्यायेन कारकाणां क्रियान्वितस्वार्थबोधकत्वव्युत्पत्त्या परस्परसम्बन्धस्यासम्भवात्तादृशसम्बन्धस्याभावात् । यादृशतादृशसम्बन्धस्य द्वितीयानुपपादकत्वाच्चेत्यतो विशेषणानां पृथक्कारकत्वाभावाद्विशेष्यनिष्ठत्वाच्च विशेष्यविशेषणभावाभ्युपगमे न व्यवधानं नापि द्वितीयानुपपत्तिरित्याह ॥ **निखिलेत्यादीनां त्विति** । ननु निखिलेत्यादीनां नारायणेन विशेषणतया सम्बन्धे तैः विशेष्यस्येतरव्यावृत्तिमात्रलाभेऽपि नारायणप्रणामादिकमित्यत्रादिपदसंग्राह्यतया भवदभिमतस्तुतिरूपार्थकत्वं तेषां न सिद्ध्येदित्यतो व्यावर्तकमात्रदण्डादिविशेषणानां तथात्वेऽपि स्तुतिसमर्पकविशेषणपदानां विशेष्यप्रशंसाप्रयोजनकत्वं नानुपपन्नमित्याह ॥ **प्रयोजनं चेति** ॥ विशेषणत्वाभ्युपगमेऽपि न पूर्वाभ्युपेततत्प्रशंसारूपप्रयोजनपरित्याग इत्येवशब्दः । ननु तथाऽपि निखिलेत्यादिविशेषणलब्धगुणपूर्णत्वस्य निर्दोषत्वस्य च प्रभाजालोल्लासोपहतेत्युक्तरीत्याऽविनाभावेनैकोक्तावप्यन्यसिद्धेरन्यस्य प्रयोजनाभाव इत्यत आह ॥ **तत्रेति** । विशेषणत्वेऽपि सप्रयोजनत्वे हेतुतयोपन्यस्तस्तुतिपदस्यैवार्थिकपौनरुक्त्यपरिहारेऽपि हेतुत्वमित्येवशब्दः । यश्चार्थादर्थो न स चोदनार्थ इति न्यायेनार्थात्तल्लाभेऽपि शब्दात्तदलाभादार्थिकपौनरुक्त्यस्य न दूषणत्वम् । दूषणत्वे वा प्रकृते सप्रयोजनत्वान्न तस्य दूषणत्वमित्यभिप्रायेणैतत्समाधानमतो न वक्ष्यमाणविरोध इति हृदयम् ।

**स०**—व्यवहितत्वादन्वयं दर्शयति ॥ **अत्र नारायणमिति** । नन्वकर्तृकक्रियानुपपत्तेरगमकमेतद्वाक्यमित्यत आह ॥ **उत्तमपुरुषेति** ॥ अस्मद्युत्तम इत्यप्रयुज्यमाने प्रयुज्यमानेऽप्यस्मद्युपपदे उत्तमपुरुष-

विधानसामर्थ्यादिति भावः । ननु धातुनैव प्रह्वीभावविधानादुपसर्गो व्यर्थ इति चेन्न । तद्गतातिशय-विशेषद्योतकत्वादित्याह ॥ **समितीति** । प्रणाममात्रेणाभिमतसिद्धेः किं भक्त्याद्यतिशयेनेत्यत आह ॥ **तथाविध एवेति** । नारायणं सन्नमामीत्यन्वये व्यर्थानेकपदव्यवधानेन सन्निध्यभावः । निखिलेत्यादि-द्वितीयान्तानां नमामीत्यनेनावर्तितेन साक्षादन्वये वाक्यभेदापत्तिरित्यत आह ॥ **निखिलेत्यादीनामिति** । तथाच साक्षात्सम्बन्धाभावान्न वाक्यभेदापत्तिरिति भावः । प्रथमदोषं परिहरति । **प्रयोजनं चेति** । सप्रयोजनपदव्यवधानं न दोषायेति भावः । प्राञ्चस्तु प्रणामक्रियायां नारायणस्यैव कर्मत्वात् तस्य च नारायणमित्यनेनैव पूर्णत्वात् निखिलेत्याद्यानर्थक्यमाशङ्क्य न तावत्सम्बन्धाभावात्तदित्याह । **निखिलेत्यादीनां त्विति** । नापि प्रयोजनाभावादित्याह । प्रयोजनं चेतीत्याहुः । नन्वेवं विशेष्यप्रशंसारूपै-कार्थविषयकत्वात्पदानामर्थतः पौनरुक्त्यमित्यत आह ॥ **तत्रेति** । तत्र तेषु स्तुतिपदेषु । आर्थिक-पुनरुक्तेः अर्थादागतपुनरुक्तेः एकार्थविषयत्वेन प्राप्तपुनरुक्तेरित्यर्थः । न शब्दतः पुनरुक्तिरियमिति भावः । **स्तुतित्वमेवेति** । स्तुतिरूपार्थवादस्यायमेव स्वभावो यत्सर्वैरपि पदैः विशेष्यप्राशस्त्यप्रतिपादन-मिति भावः । केचित्तु तत्र निखिलपूर्णगुणैकदेहं निर्दोषमित्यनयोरार्थिकस्य गुणमाणिक्यविशदप्रभाजा-लोल्लासोपहतसकलावद्यतमस इत्युक्तिन्यायेन निखिलेत्यनेनार्थात्प्राप्तस्यागुणमदोषत्वस्य निर्दोषमिति पुनर्वचनात्पुनरुक्तिरित्याचक्षते । अपरे तु नारायणशब्देनैव गुणपूर्णतादेरभिधानात्पुनर्निखिलेत्याद्यभिधाने पुनरुक्तिरित्यर्थ इत्याहुः । यद्वा निखिलेत्यादीनां न क्रियापदान्वयः । नारायणपदस्यैव तेनान्वयात् । नापि नारायणमित्यनेन । तेनान्वयस्यैवानुपपत्तेरित्यतो विशेष्यविशेषणभावः सम्बन्ध इत्याह ॥ **नारायणविशेषणतयेति** । नन्वेतावता नतिस्तुत्युभयपरत्वमस्य श्लोकस्योक्तं भवति । तच्चायुक्तम् । तथात्वे वाक्यभेदापत्तेरित्यत आह ॥ **प्रणामकर्मणेति** । समप्रधानतया नतिस्तुत्युभयपरत्व एव वाक्यभेदस्य दोषत्वम् । प्रकृते च गुणप्रधानभावेनोभयपरत्वान्न वाक्यभेददोष इति भावः । ननु निखिलपूर्णगुणैक-देहमित्यनेनानन्तगुणपूर्णत्वे उक्ते तस्य दोषाभावव्याप्तत्वेन निर्दोषत्वस्यार्थतो लाभेन पुनस्तस्य निर्दोषमि-त्यभिधाने पौनरुक्त्यम् । एवं निर्दोषत्वस्य गुणपूर्णत्वव्याप्तत्वेन यत्किंचिद्गुणाभावे तस्यैव दोषत्वेन सकलदोषराहित्यस्यैवासम्भवात् निर्दोषमित्यनेनैव तल्लाभात् निखिलपूर्णगुणैकदेहमित्यनेन तदभिधाने पौनरुक्त्यमित्यत आह ॥ **तत्रेति** । स्तुतौ शब्दतोऽपि पौनरुक्त्यं न दोषः । किं पुनस्त्वर्थत इति द्योतनार्थमेवशब्दः । यश्चार्थादर्थो न स चोदनार्थ इति समाधाने स्थिते समाधानान्तरमेतदित्यदोषः ।

५०—द्वितीयान्तविशेषणानां विशेष्यद्वारा क्रियान्वयो न साक्षादिति वक्तुं वाक्यव्यवहिततया अन्वयाप्रतीतेर्वा नारायणमित्यपि विशेषणमिति भ्रमनिरासाय विशेष्यमिति सूचनाय वाऽऽह । **इत्यन्वय**

**इति** । कर्त्रनुक्तेर्न्यूनतामाशङ्क्य ममेत्यस्यैव विपरिणामेन कर्तृत्वभ्रमनिरासाय वाऽऽह ॥ **उत्तमेति** । अस्मद्युत्तम इति सूत्रेऽस्मच्छब्दे उपपदत्वेन श्रूयमाणेऽश्रूयमाणे वा तदर्थविवक्षायामुत्तमपुरुषो भवतीत्युक्त्या तदविनाभावादहमित्यस्येति भावः । नन्वेतावन्ति विशेषणानि व्यर्थानि । यदि विशेषस्तुत्यर्थानि तथापि न कृत्यं पश्याम इत्यत आह । **प्रयोजनं चेति** । प्रशंसैवेत्युक्तस्तवनं च तत्प्रीत्यर्थमिति भावः । नन्वेवं गुणपदेन सार्वज्ञसर्वस्वातन्त्र्यादिगुणोक्त्याऽज्ञानपारतन्त्र्यादिदोषाभावलाभान्निर्दोषमिति पुनरुक्तम् । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्त'मिति वक्ष्यमाणदिशाऽस्योद्भवादिदमित्युक्त्यैव गुणपूर्णतालाभान्निखिलपूर्णगुणेति च पुनरुक्तम् । उद्भवादिदमित्युक्त्या देहस्यापि लाभाद्देहमिति च पुनरुक्तमित्यत आह ॥ **तत्रार्थिकेति** ।

**या०**—व्यवहितत्वादन्वयं दर्शयति ॥ **अत्र नारायणमिति** ॥ नन्वकर्तृकक्रियानुपपत्तेरगमकमेतद्वाक्यम् । न च तिङ्प्रयोगादेव कर्तृलाभः । तथाऽप्युत्तमपुरुषापेक्षितस्य कर्तृविशेषस्यालाभादित्यत आह ॥ **उत्तमपुरुषेति** । 'अस्मद्युत्तम' इत्यत्र समानाधिकरणे स्थानिनीत्यस्यानुवृत्त्याऽप्रयुज्यमानेऽप्यस्मदि उत्तमपुरुषविधानादिति भावः । ननु नारायणं सन्नमामीत्यनयोर्व्यर्थानेकपदव्यवधानात्सान्निध्याभावः । निखिलेत्यादिद्वितीयान्तानां च नमामीत्यनेनावर्तितेन साक्षादन्वये वाक्यभेदापत्तिरित्यत आह ॥ **निखिलेत्यादीनां त्विति** ॥ तथाच साक्षात्सम्बन्धाभावान्न वाक्यभेदापत्तिरिति भावः । प्रथमं दोषं परिहरति ॥ **प्रयोजनं चेति** । तथाच सप्रयोजनं व्यवधानं न दोषायेति भावः । नन्वेवं विशेष्यप्राशस्त्यरूपैकार्थविषयकत्वात्पदानामर्थतः पौनरुक्त्यमित्यत आह ॥ **तत्रेति** ॥ तत्र तेषु स्तुतिपदेषु ॥ **आर्थिकपुनरुक्तेरिति** । एकार्थविषयकत्वेन प्राप्तपुनरुक्तेरित्यर्थः ॥ **स्तुतित्वमेवेति** । स्तुतिरूपार्थवादस्य अयमेव स्वभावो यत्सर्वैरपि स्वपदैर्लक्षणया स्तुत्या प्राशस्त्यप्रतिपादनमिति भावः । केचित्तु निखिलपूर्णगुणैकदेहं निर्दोषमित्यनयोरार्थिकस्य गुणमाणिक्यविशदप्रभाजालोल्लासोपहतसकलावद्यतमसेत्युक्तन्यायेन निखिलेत्यनेनार्थात्प्राप्तस्य निर्दोषत्वस्य निर्दोषमिति पुनर्वचनात्पुनरुक्तिरिति व्याचक्षते । अपरे तु नारायणशब्देनैव वक्ष्यमाणरीत्या गुणपूर्णतादेरभिधानात्पुनर्निखिलेत्याद्यभिधाने पुनरुक्तिरित्यर्थ इत्याहुः ॥

**च०**— अथात्र फलावच्छिन्नव्यापारबोधकतारूपसकर्मकतापन्नप्रकृतनमनक्रियायामेकत्र द्वयमितिरीत्या कर्मविभक्त्यन्तसप्तकोपस्थाप्यानामन्वयमुपेत्य तादृशविभक्त्यन्तोपस्थाप्यवृत्तयो यावत्यः प्रकारतास्तत्तन्निरूपकत्वकूटविशेषिता या प्रकृतक्रियानिष्ठविशेष्यता तन्निरूपकान्वयधीस्वीकारे क्रियाभेदस्य कर्मभेदनिबन्धनतासिद्धान्तविरोधप्रसङ्गेन तादृशविभक्त्यन्तोपस्थाप्य प्रातिस्विकरूपावच्छिन्नानामावर्तितधातूपस्थाप्य तादृशरूपावच्छिन्नेष्वन्वयोपगमे न्यायनयदिशा चैत्रः पत्राणि पुष्पाणि फलानि चिनोती-

त्यादौ तत्तत्कर्मकधातूपस्थाप्य क्रियान्विताख्यातार्थनिष्ठप्रकारतानिरूपितचैत्रनिष्ठनानाविशेष्यताशालिन्याः पाणिनीयदिशा प्रथमान्तार्थविशेष्यतापन्नाख्यातार्थनिष्ठप्रकारतानिरूपिततत्तत्कर्मकक्रियानिष्ठनानाविशेष्यताशालिन्या अन्वयबुद्धेः समुदयेनैतज्जनकतानिरूपवाक्यभेदस्येव प्रकृतेऽपि तद्दिशा तत्प्रसङ्गेनैकस्यैव कर्मविभक्त्यन्तस्य क्रियानिरूपितविशेषणतापन्नं स तु तत्प्रकृत्यर्थविशेषिततत्प्रत्यायकत्वमितरेषां साधुत्वार्थविभक्त्यन्तानां कर्मविभक्त्यर्थविशेषणीभूतप्रकृत्यर्थनिष्ठविशेष्यतानिरूपिताभेदसंसर्गावच्छिन्नप्रकारतापन्नावगमकत्वमित्युपगमे च कर्मविभक्त्यन्तत्वात्तत्साधुत्वार्थविभक्त्यन्तत्वावधारणभावेनानिर्णयप्रसङ्गेन नमस्कार्यव्यक्तिगोचरानवधृतिप्रसङ्गेन सन्निहितैस्तदवधारकत्वासम्भवेन कर्मविभक्त्यन्तक्रियावाचकयोरन्वयो दुरुपपाद इत्यतोऽभिधत्ते ॥ **अत्रेति** ॥ नारायणपदे विष्णुनिरूपिता लोकवेदप्रत्यायितसमुदायवृत्तिरेवैतत्पदाभिधेयस्य द्वितीयान्तषट्कोपस्थाप्य निरूपितविशेष्यताप्रतीतिजनिका सती मिलितप्रातिस्विककल्पद्वयाभिहितक्षत्यपमेष्वपि भवतीति सामञ्जस्यमवसेयम् । अथात्रयंगतसमभिव्याहृतनमतेस्तिङ्वाच्यकर्तृवाचकयुष्मदस्मच्छेषान्यतमा समभिव्याहृततयान्वयबोधौपयिकतद्धर्मिकतदन्यतमनिरूपिता सति ज्ञानविरहनियन्त्रितान्वयबोधानुपपत्तिप्रसञ्जनं दुर्वारमित्यत आह **उत्तमपुरुषेति** ॥ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः अस्मदुत्तमः शेषे प्रथमः । अत्र भाष्यकारः किंलादेशविधानवाक्यैनैकवाक्यत्वाद्विध्यर्थमिदं अथ विहितेषु लादेशेषु नियमार्थमित्याशयेन किमर्थमिदमुच्यत इतिप्रश्नभाष्येण प्रश्नं कुर्वाणस्तत्रैकवाक्यतापक्ष इतरेतराश्रयदोषपरिहाराय भाविनी संज्ञा आश्रयितव्येति प्रतिपत्तिलाघवार्थं वाक्यभेदेन नियमपक्षं प्रदिदर्शयिषुर्युष्मच्छेषवचनं नियमार्थं नियमार्थोयमारम्भः अथैतस्मिन्नियमार्थे विज्ञायमाने किमयमुपपदनियमः युष्मद्येव मध्यमः अस्मदि एवोत्तम आहोस्वित्पुरुषनियमः । युष्मदि मध्यम एव । अस्मदि उत्तम एव इति कल्पद्वयं प्रदर्श्य यदि पुरुषनियमः शेषग्रहणं कर्तव्यम् । शेषे प्रथम इति । किं कारणं मध्यमोत्तमौ नियतौ । युष्मदस्मदी अनियते । तत्र प्रथमोऽपि प्राप्नोति । तत्र शेषग्रहणं कर्तव्यं प्रथमनियमार्थं शेष एव प्रथमो भवतीति नान्यत्रेति । पुरुषनियमपक्षे निर्बाधं शेषग्रहणसार्थक्यमभिधाय अथाप्युपपदनियमः एवमपि शेषग्रहणं कर्तव्यम् । शेषे प्रथम इति । युष्मदस्मदी नियते मध्यमोत्तमावनियतौ । तौ शेषेऽपि प्राप्नुतस्तत्र शेषग्रहणं कर्तव्यम् । शेषे प्रथम एव भवति नान्य इति यथा श्रुते शेषग्रहणसार्थक्यमभिधाय उपपदनियमे शेषग्रहणं शक्यमकर्तुं कथं युष्मदस्मदी नियते मध्यमोत्तमावनियतौ शेषे प्राप्नुतस्ततो वक्ष्यामि प्रथमो भवतीति तन्नियमार्थं भविष्यति । यत्र प्रथमश्चान्यश्च प्राप्नुतस्तत्र प्रथम एव भवतीति । शेषग्रहणमुपपदनियमपक्षे प्रत्याचख्याविति उपपदनियमपक्षे युष्मच्छेषयोर्मध्यम प्रथमाभ्यां नियमिततया तयोरुत्तमं प्रत्युपपदत्वाप्राप्तिरुत्तमं प्रतिस्वनियमितास्मद एवोपपदत्वमर्थात्सिद्धमित्यार्थिकलाभेऽपि पुरुषनियम एव शेषग्रहणं कुर्वतः सूत्रकारस्य तथा भाष्यकृतश्चाभिप्रेत

इत्यस्मदर्थमन्तरेणोत्तमपुरुषस्यासम्भवेनोत्तमपुरुषस्य साक्षादेवास्मदर्थाक्षेपकतेति न तदनिर्देशनिबन्धनन्यूनतेति भावः । ममेति षष्ठीविपरिणामेनैव प्रथमां कल्पयिष्यतीति तस्यैव कर्तृवाचकतां मन्दाः प्रतिपद्येरन्निति वा आहेत्यप्यवतारितम् । अस्मद्युत्तम इत्यत्र समानाधिकरणे स्थानिनीत्यस्यानुवृत्त्या अप्रयुज्यमानेऽप्यस्मदि उत्तमपुरुषविधानादिति भाव इत्यपि स्थितम् । समितिह्युपसर्गध्वनितसम्यक्तााया नानात्वेन प्रकृतौपायिकीं तां दर्शयति ॥ **भक्तीत्यादि । तथाविध इति** ॥ 'सङ्ख्याया विधार्थे वा' इति सूत्रव्याख्यानावसरे विधाशब्दो यत्रार्थे प्रसिद्धस्तत्रैव यथास्यात्तादृशश्चार्थः प्रकार एवेत्याकरोक्त्या प्रकारवचनो विधाशब्दस्तथापदेन कृतबहुव्रीहिर्विशेष्यनिघ्न इति तादृशसम्यक्तारूपप्रकारविशिष्ट इत्यर्थः । अभिमतेति प्रकृतनिष्ठाप्रकृत्यंशस्यावगत्यर्थकत्वेऽप्युपसर्गविशेषसमभिव्याहारादिनेच्छार्थकता हीयते निष्ठा च कर्मणि तथाच ग्रन्थप्रणेतृकर्तृकेच्छाविषयीभूतप्रारिप्सितसमापनप्रचयादिसिद्धेरित्यर्थः । कर्तृलङ्कारान्तकर्मविभक्त्यन्तयोर्योजनाप्रदर्शनेनैव ध्वनितमाशयमाविर्भावयति **निखिलेत्यादीनां त्विति** ॥ असति विशेषानुशासने विशेष्यविशेषणवाचकपदयोः समानलिङ्गवचनकतानियमस्य स्थिततयैकस्य कर्मविभक्त्यन्तत्वेऽपि तद्विशेषणवाचकषट्कस्य साधुतानिर्वाहायैव तत्र द्वितीयान्ततोरीकृत्या न विजातीयव्यवधानायत्ता सति ज्ञानविरहनियन्त्रितान्वयबोधानुपपत्तिप्रसञ्जनावकाश इति भावः । सप्तम्यन्तोपादानफलं तु वरणः ग्रामश्श्वाः पुरुषं यस्य वाभ्रिकाः पुरुषं पश्य सीता रामदारा इत्यादेः साधुतानिर्वाहः । ननूक्तदिशा पदषट्कोपस्थाप्यानां प्रणामकर्मीभावावनारायणविशेषणतयान्वयमानोपगतेः फलराहित्येन क्रियाकर्मवाचकयोरासत्तिभञ्जकपदान्तरकृतव्यवहितिकतया तदुपागमस्य चानुपलम्भवाधिततयाऽसामञ्जस्यमित्याशङ्कायाईशप्रीतिजनकस्तुतिफलत्वोपलब्धेर्न क्षतिरिति समाधत्ते । **प्रयोजनं चेति** । एवकारस्तत्रोपलभ्यमानतामाचष्टे । अत एवैतदभिमापकनारायणप्रणामादिकासत्यादिपदोपादानं सङ्गच्छत इति ध्येयम् । **आर्थिकेति** । पूर्णगुणत्वनिर्दोषत्वयोर्हेतुहेतुमद्भावेन हेतूक्त्यैव हेतुमतोऽपि लाभात् निर्दोषमिति पुनर्वचनमिति व्याकर्तारोऽर्थापयन्ति । विशेष्यप्राशस्त्यरूपैकार्थविषयकत्वात्पदानामर्थतः पौनरुक्त्यमिप्यर्थानं स्थितम् । अभिधास्यमानदिशा नारायणपदेनैव गुणपूर्णतादिरपत्स्यतीति पुनस्तदभिहितौ तदित्यपि मन्वतो गुणपदेन सार्वज्ञसर्वस्वातन्त्र्यादिगुणोक्त्या अज्ञानपारतन्त्र्याद्यभावलाभात् निर्दोषमिति पुनरुक्तम् । उद्भवादिदमित्युक्त्यैव गुणपूर्णता देहवत्तापि सेत्स्यतीति पूर्णगुणेति देहमिति तदिति च निबन्धान्तरे विन्यस्तम् ।

**सु.— अथवा । कुतो नारायणस्य नम्यत्वम् । तथात्वेऽपि कुतोऽन्यासु देवतासु सतीषु तस्यैव नमनमित्यत्रोक्तमशेषविशेषतोऽपि वन्द्यमिति । विशिष्यते वस्त्वेभिरिति विशेषा असाधारणधर्मा अशेषाश्च ते विशेषाश्च । अपरिमिव्याप्तौ । यावन्तो वन्द्यत्वनिमित्तभूता धर्माः**

तेभ्यो विशेषेभ्योऽपि हेतुभ्यो वन्द्यम् । तथाऽशेषाद्वन्द्यत्वेन समाशङ्कितात्पद्मापद्मभवादेर्जगतो विशेषोऽतिशयोऽशेषविशेषस्सर्वोत्तमत्वम् । ततो हेतोः सतीष्वन्यासु देवतासु वन्द्यमिति । एतदुभयं कथं नारायणस्येत्यतोऽभिहितं निखिलेत्यादि । त्रिविधा हि देवता वन्द्या भवति । विशिष्टाधिकृतेष्टा चेति । न हि देवतावन्दनं व्यसनितया क्रियते । किन्तु विघ्नविघातादि-प्रयोजनापेक्षया । विशिष्टैव देवता तस्येष्टे । अधिकृता च स्वविषयग्रन्थप्रबोधादिकं सम्पादयति । वन्दनं खलु भक्त्याद्युपेतमेव सफलम् । तच्चेष्टायामेव देवतायामुपपद्यत इति । तत्र वैशिष्ट्यो-पपादनाय निखिलपूर्णगुणैकदेहं निर्दोषमस्योद्भवादिदमिति विशेषणत्रयम् । निखिला निःशेषाः पूर्णाः प्रत्येकमप्यनवधिका गुणा आनन्दादयः । एकशब्दः केवलार्थः । त एव देहो यस्य न पुनः प्राकृतादिरिति तथोक्तः । निष्क्रान्तो दोषेभ्यः पारतन्त्र्यादिभ्य इति निर्दोषः । अस्य प्रत्यक्षादिप्रमाणसिद्धतया बुद्धिसन्निहितस्य स्वव्यतिरिक्तप्रपञ्चस्योद्भव उत्पत्तिरादिरस्ये-त्युद्भवादि जन्माद्यष्टकं तद्यथासम्भवं ददातीत्युद्भवादिदस्तम् । अस्येति सम्बन्धमात्रे षष्ठी । अशेषविशेषतोऽपीत्येतदस्योद्भवादिदमित्यनेनापि सम्बध्यते । वियदधिकरणादिव्युत्पाद्यसम-स्तावान्तरभेदसहितोद्भवादिदमिति । अधिकृतत्वप्रदर्शनायाप्यतममप्यखिलैः सुवाक्यैरिति । अपिशब्दो वन्द्यत्वे हेतुसमुच्चयार्थः । अभिव्याप्तौ वा । अपौरुषेयत्वेन तन्मूलत्वेन वाऽनाश-ङ्कितदोषत्वादिना शोभनानि वाक्यानि वेदादीनि ब्रह्मसूत्रादीनि च सुवाक्यानि तैरखिलैराप्य-तमम् । अतिशयेन प्रतिपाद्यम् । यदि व्याचिख्यासितेन ब्रह्ममीमांसाशास्त्रेण तन्निर्णेतव्यार्थेन वेदादिना च प्रतिपाद्य इति नारायणो वन्दनीयः । हन्त तर्हि तत एव धर्मादिकं प्राणादिकं वा वन्दनीयं स्यात् । न स्यात् । तस्य नारायणप्रतिपत्त्यङ्गतया वेदाद्येकदेशप्रतिपाद्यत्वात् । अस्य पुनरनन्यार्थतयाऽखिलवेदादिवेद्यत्वात् । तथाविधमेव चाधिकृतमुच्यत इत्याशयवताऽऽप्य-तममित्यखिलैरिति चोक्तम् । इष्टत्वप्रदर्शनं सदा प्रियतमं ममेति । अत्रापि पूर्ववत्सदापदस्य तमपश्च प्रयोजनमवधेयम् ।

वा०—प्रणामकर्मनारायणविशेषणानां प्रणामोपयुक्तार्थप्रतिपादनेन प्रणामप्रयोजकत्वमेव स्वरसं न तु प्रयोजनान्तरार्थकस्तुतिपरत्वमित्यभिप्रेत्याह ॥ **अथवेति** । अत्र निखिलेत्यादिविशेषणत्रयस्य वन्द्यत्वप्रयोजकवैशिष्ट्योपपादकत्वस्य वन्द्यान्तरादतिशयप्रतिपादकत्वस्य च वक्ष्यमाणरीत्या स्पष्टत्वात्तदुप-पाद्यसमर्पकस्याशेषविशेषतोऽपीत्यस्य द्वेधा व्याख्यानमुचितमित्यभिप्रेत्य द्वेधा तन्निवर्त्यां शङ्कां दर्शयति ॥ **कुत इत्यादिना** ॥ विशेषतोऽपीत्यपिशब्दस्य समुच्चायकत्वासम्भवात्सर्वकर्मण्यपि सदाकुर्वाण इति

गीतातात्पर्यनिर्णय एकमपि कर्म तदनादरेण न कार्यमित्यादिनाऽऽचार्यैरभिव्याप्त्यर्थतया तस्य व्याख्यातत्वात्सर्वेऽप्यानेया इत्यादिलोकव्यवहारसिद्धत्वाच्चाशेषपदसङ्कोचप्रतीतिं वारयितुमभिव्याप्त्यर्थतया तं व्याख्याति ॥ **अपिरिति** । ननु निखिलेत्यादिविशेषणानामन्यत्राभावेन वन्द्यत्वप्रयोजकत्वानिश्चयात्कथमेषां तत्प्रयोजकत्वेनोक्तिरित्यतो निखिलेत्यादिविशेषणत्रयस्य वन्द्यत्वप्रयोजकत्वेनान्यत्रोपलब्धवैशिष्ट्योपपादकतयाऽखिलैः सुवाक्यैराप्यतममिति सदा प्रियतमं ममेति प्रकृताधिकृतेष्टस्वरूपप्रदर्शकविशेषणयोश्च तत्प्रयोजकत्वेनान्यत्रोपलब्धाधिकृतेष्टत्वरूपसामान्यमुखेन वन्द्यत्वप्रयोजकप्रतिपादकत्वसम्भवान्नानुपपत्तिरित्यभिप्रेत्याह ॥ **त्रिविधा हीति** । अत एव वैशिष्ट्योपपादनायेत्यधिकृतत्वप्रदर्शनायेतीष्टत्वप्रदर्शनमिति वैचित्र्यम् । विशिष्टाधिकृतत्वयोर्वन्द्यत्वनिमित्ततामुपपादयन्निष्टत्वस्य वन्द्यत्वविशेषणीभूतभक्त्यादिद्वारा विशिष्य वन्द्यत्वनिमित्ततामुपपादयति ॥ **न हीत्यादिना** । सर्वविशेषणानां वैशिष्ट्यादिसर्वप्रतिपादकत्वप्रतीतिमपाकरोति ॥ **तत्रेत्यादिना** । निखिलपूर्णगुणत्वपारतन्त्र्यादिराहित्यसकलजगज्जनकत्वादिना सर्व वैशिष्ट्ये प्रतिपादिते गुणवत्त्वरागादिराहित्यबहुजनकत्वादिप्रयुक्तवैशिष्ट्यमुपपादितं भवतीति किमुतेत्याशयेन सम्मुग्धतया वैशिष्ट्योपपादनायेत्युक्तमिति ध्येयम् । यद्वा । प्रकृते निखिलेत्यादिविशेषणानां वैशिष्ट्यं वन्द्यान्तरादतिशयश्चेत्युभयोपपादकत्वाभिप्रायेण वैशिष्ट्योपपादनायेत्युक्तमिति द्रष्टव्यम् । निखिलानां पूर्णगुणा इति समासभ्रान्ति निःशेषपूर्णशब्दयोरेकार्थत्वेन द्वन्द्वानुपपत्तिशङ्कामेकशब्दस्य सङ्ख्यार्थत्वेन पूर्वनिपातशङ्कां सत्त्वादिगुणैकदेहवत्त्वस्य जीवादिसाधारण्यापादकत्वाद्दोषशब्दस्य रागद्वेषमोहार्थत्वेन प्रसिद्धेस्तद्राहित्यस्य पद्मापद्मभवाद्यतिशयाहेतुत्वात्स्वपुत्राद्युद्भवादिदत्वस्य सर्वसाधारण्यान्नैषां सर्ववैशिष्ट्योपपादकत्वमिति शङ्कां च परिहरति ॥ **निखिल इत्यादिना** ॥ **एकशब्द केवलार्थ** इति ॥ सङ्ख्यार्थत्वे ह्येकशब्दस्य न तावदत्र पूर्वेण विशेषणसमासोऽङ्गीकर्तुं युक्तः । तस्य 'दिक्सङ्ख्ये संज्ञायामि'ति संज्ञायामेव नियमितत्वेन प्रकृते त्वेकशाठीत्यादाविव विशिष्टशब्दस्य संज्ञात्वाभावेन तदसम्भवात् । अतः सङ्ख्यार्थकैकशब्दस्य समानाधिकरणेन समासविधानार्थं प्रवृत्तेन पूर्वकालैकेति सूत्रेणैव स वाच्यः । ( सर्वजरत्पुराणनवकेवलाः समानाधिकरणेनेति सूत्रशेषो द्रष्टव्यः ) न चासौ वक्तुं शक्यः । तथा सति तस्य पूर्वकालैकेति समासशास्त्रे प्रथमानिर्दिष्टतया 'प्रथमानिर्दिष्टं समास उपसर्जनमि'त्युपसर्जनत्वेनोपसर्जनं पूर्वमिति पूर्वनिपातप्रसङ्गात् । निखिलपूर्णगुणा एको देहो यस्येति बहुव्रीह्याश्रयणेऽपि 'बहुव्रीहौ सर्वनामसङ्ख्ययोः प्राङ्निपातो वक्तव्य' इति सङ्ख्यायाः प्राङ्निपातनियमनादेकशब्दस्य पूर्वनिपातप्रसङ्ग एव । अत एवानित्यैकरूपा इत्यादावनित्यमेकं रूपं येषामिति त्रिपदबहुव्रीह्यनाश्रयणमभियुक्तानाम् । चतुर्थे च अनुमानमेकं शरणं यस्येति त्रिपदबहुव्रीह्यनाश्रयणं टीकाकाराणामपि । केवलार्थत्वे तु न तत्प्रसङ्ग इत्युक्तरीत्या समासद्वयमप्युपपन्नमिति भावः । यद्यप्यत्र टीकाकृदभिमते बहुव्रीहौ सङ्ख्यार्थत्वप्रयुक्तपूर्वनिपा-

तवारणेऽप्येकशब्दस्य न सर्वनामत्वप्रयुक्तपूर्वनिपातवारणं सम्भवतीत्यनर्थकमेव केवलार्थत्वाश्रयणम् । न च केवलार्थस्यासर्वनामत्वान्नोक्तदोष इति वाच्यम् । 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे सङ्ख्यायां च प्रयुज्यत' इत्यभिधानात्सन्त्येकशब्दस्याष्टावर्थाः । तत्रैकशब्दः सङ्ख्यायां नित्यैकवचनान्तः । अन्येषु तु सप्तसु वचनान्तरमपि स्यादेव । एके एकेषामिति यथेत्यभियुक्तव्याख्यानेन केवलार्थस्यापि तस्य सर्वनामत्वस्य स्थितेः । तथाऽप्येको देहं एकदेहो निखिलपूर्णगुणा एकदेहो यस्येति द्विपदबहुव्रीह्याश्रयणे न दोषः । एकदेहशब्दस्यासर्वनामतया पूर्वनिपाताभावसम्भवात् । न चैवमेकं रूपमेकरूपमनित्यमेकरूपं येषामित्यन्यत्र द्विपदबहुव्रीह्याश्रयणवदेकं शरणमेकशरणम् । अनुमानमेकशरणं यस्येति तथोक्त इत्युत्तरग्रन्थीयटीकाकारीयद्विपदबहुव्रीह्याश्रयणवच्च सङ्ख्यार्थत्वेऽप्येकशब्दस्य द्विपदबहुव्रीह्याश्रयणेऽसङ्ख्यार्थत्वादेवैकदेहशब्दस्य पूर्वनिपाताभावसम्भवात्तस्य केवलार्थत्वाश्रयणं व्यर्थमिति वाच्यम् । अर्थाधिक्यलाभायैव तदाश्रयणात् । अत एव केवलार्थत्वविवक्षाव्यावर्त्यप्रदर्शनं न पुनः प्राकृतादीति ज्ञेयम् । 'ननु कर्मणा यमभिप्रैति स सम्प्रदानमि'ति सूत्रे ( दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् । ) 'अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते सम्प्रदानतामि'त्यत्र च कर्तुर्दानशेषभूतं दानकर्मणाप्तुमिष्टममनिराकरणात्प्रेरणादनुमत्या वा सम्प्रदानतां लभत इत्युक्तत्वादीश्वरस्य दानकर्मणोद्भवादिनाऽप्तुमिष्टमस्यानिराकुर्वतोऽस्येति निर्दिष्टस्य जगतः सम्प्रदानत्वाच्चतुर्थ्या भाव्यम् । ( अन्वर्थसंज्ञाबलेनाह ॥ दानस्येति । तेनाजां नयति ग्रामं हस्तं निदधाति वृक्षे इत्यादौ नातिप्रसङ्ग इति भावः । दानं चापुनर्ग्रहणाय स्वत्वनिवृत्तिपूर्वकं परस्वत्वापादानमतएव रजकस्य वस्त्रं ददातीत्यादौ न भवति । तत्र हि ददातिर्भाक्तः । एतच्च वृत्तिमतम् । भाष्यमते तु नान्वर्थतायामाग्रहः । खण्डिकोपाध्यायस्तस्मै चपेटां ददातीति प्रयोगात् । रजकस्य ददातीति शेषत्वविवक्षायां बोध्यम् । न चैवमजां नयति ग्राममित्यत्रातिप्रसङ्गः । यमभिप्रैतीत्युक्त्या हि यमिति निर्दिष्टस्य शेषत्वं कर्मणश्च शेषत्वं लभ्यते ग्रामस्य चाजां प्रति शेषत्वं नास्ति ) । न च स्वसत्तापरित्यागेन परसत्तापादनस्य दानपदार्थस्य जगत उद्भवादिविषये ईश्वरेणाकरणान्न चतुर्थीति वाच्यम् । वृक्षाय जलं ददाति, खण्डिकोपाध्यायः शिष्याय चपेटिकां ददाति, न शूद्राय मतिं दद्यादित्यादौ चतुर्थ्युपपत्त्यर्थं किञ्चिदुद्दिश्यापुनर्ग्रहणाय स्वद्रव्यत्यागमात्रस्य दानशब्दार्थतया विवक्षणीयत्वेन पदमञ्जर्यामुक्तत्वात्प्रकृते मतिदानादिवद्यथाकथञ्चित्त्यागस्य प्रतिपादयितुं शक्यत्वात् भाष्यकारेण क्रियामात्राश्रयणेन ददाति कर्मणेत्यस्यानाश्रितत्वाच्च सम्प्रदानचतुर्थ्या भवितव्यमित्यतो विवक्षातः कारकाणि भवन्तीत्युक्तेः सम्प्रदानस्य शेषत्वविवक्षायां युक्ताऽऽस्येति षष्ठीत्याह ॥ **अस्येतीति** । अत्रापिपदस्य यथास्थितस्य समुच्चयार्थतायाः एव वक्तव्यत्वात्साक्षाद्वन्द्यत्वहेतोरस्य वन्द्यत्वहेतुवैशिष्ट्यहेतुभिर्निखिलेत्यादिभिः साक्षात्साध्येन समुच्चया-

सम्भवात्परमसाध्यसमुच्चयमभिप्रेत्याह ॥ **अपीति** । अत एवास्वरसाद्भिन्नक्रमत्वमभ्युपेत्यार्थान्तरं तस्याह ॥ **अभीति** । स्वर्गादेरनित्यत्वेन सदा प्रियत्वाभावाद्धर्मादेरन्यार्थतयैव प्रियत्वादस्य पुनः सदाऽनन्यार्थतया प्रियत्वात्तथाविधमेव चेष्टमुच्यत इत्याशयवानाह ॥ **अत्रापीति** ।

**स०**— एवं पदजातं सामान्यतो व्याख्याय विशेषतो व्याचक्षाण एव तद्व्यावर्त्यशंकासद्भावात् न पुनरुक्तिरिति प्रकारान्तरमाह ॥ **अथवेत्यादिना** । **अपिरभिव्याप्ताविति** । न चाशेषेत्यनेन गतार्थता तावन्तो वन्द्यत्वनिमित्तभूता धर्मा लोके प्रसिद्धास्तेषां प्रकृतेऽभिव्याप्तिरसंकोचेन वृत्तिरिति विवक्षितत्वात् । यथा च तेभ्यो विशेषेभ्योऽपि । तेभ्यः सर्वेभ्यः विशेषेभ्यः प्रकृते विद्यमानेभ्य इत्यर्थः । यावन्तो ब्राह्मणास्ते सर्वे आकार्या इत्यादाविवासंकोचव्यञ्जनमपिशब्दप्रयोजनमिति हृदयम् । एवमग्रेऽपि । **तत्र वैशिष्ट्योपपादनायेति** । अनेनैव विशेषणत्रयेण सर्वोत्तमत्वमप्युपपादितमवगन्तव्यम् । अत एतदुभयं कथं नारायणस्येत्यवतार्य सर्वोत्तमत्वोपपादनमुत्तरत्र न कृतमतो न्यूनतेत्यपास्तम् ॥ **एक शब्दः केवलार्थ इति** । सङ्ख्यार्थत्वे पूर्वनिपातः स्यादिति भावः । ननु दानकर्मत्वेनास्य जगतोऽभिप्रेततया सम्प्रदानत्वात्तत्र चतुर्थ्या भाव्यमस्येति षष्ठी कथमित्यत आह ॥ **अस्येति** । एवं च 'विवक्षातः कारकाणि भवन्ती'त्युक्तत्वेन सम्प्रदानत्वस्याविवक्षितत्वात् । शेषे षष्ठीति सम्बन्धमात्रे विहिता षष्ठ्येवेति भावः । अत्र यत्तु वदति । दानं हि स्वस्वत्वपरित्यागेन परस्वत्वापादनम् । तथाच सम्प्रदानत्वप्राप्तेरेवाभावाद्व्यर्थमिदमिति ॥ **तन्न** । परस्वत्वापादनमात्रस्यापि दानशब्दार्थत्वेनाभियुक्तैर्व्याख्याततयाऽत्र सम्प्रदानत्वप्राप्तिसम्भवात् । अखिलैरित्यस्य तमपश्च प्रयोजनं वक्तुमाह ॥ **यदि व्याचिख्यासितेनेत्यादिना** । अधिकृतत्वमात्रं कर्मकाण्डप्रतिपाद्ये धर्मादौ ब्रह्मकाण्डप्रतिपाद्ये प्राणादौ च व्यभिचरतीति भावः । नन्वेतावताऽधिकृतत्वस्य व्यभिचारो नोद्धृत इत्याशङ्कायामाह । **तथाविधमेवेति** । अनन्यापेक्षया वेदादिवेद्यं सकलवेदादिवेद्यं चेत्यर्थः । इदं च हेतुद्वयमतो न वैय्यर्थ्यम् ॥ **अत्रापि पूर्ववदिति** । इष्टत्वमात्रं स्रक्चन्दनादौ व्यभिचारि । अनन्यार्थतयेष्टत्वं च तमबर्थभूतं सुखे व्यभिचारि अतः **सदेति** ॥ वैषयिकं सुखं च न सदेष्टमिति भावः । नन्वेवमपि मध्यमाधिकारिस्वरूपसुखे व्यभिचारः । अतो **ममेति** ॥ तस्या अपि अन्यार्थतयैव प्रियत्वादिति । पूर्ववत् पूर्वन्यायेन । इयांस्तु विशेषः । अत्र विशिष्टो हेतुः पूर्वत्र हेतुद्वयमिति ।

**प०**— अन्यथापि स्तुतिसम्भवादेतैरेव विशेषणैः स्तुतौ न किञ्चिद्बीजमित्यत आह ॥ **अथवेति** । आद्यचोद्यं निरसितुमाह ॥ **विशिष्यत इति** । व्यावर्त्यत इत्यर्थः । **यावन्त इति** । विशिष्टत्वेष्टत्वाधिकृतत्वरूपा इति भावः । द्वितीयचोद्यं निराह ॥ **तथेत्यादिना** । **पद्मेति** । श्रीब्रह्मा-

देरित्यर्थः । **एतदुभयमिति** । वन्द्यत्वप्रयोजकासाधारणधर्मवत्त्वं सर्वोत्तमत्वं चेत्येतदुभयमित्यर्थः । **निखिलेत्यादीति** । विशेषणपञ्चकमित्यर्थः । तत्र विशेषणत्रयेण विशिष्टत्वमन्याभ्यामधिकृतत्वेष्टत्वे इति वक्तुं वन्द्यत्वप्रयोजकधर्मांस्तावदाह । **त्रिविधाहीत्या**दिनोपपद्यत इत्यन्तेन । विशिष्टा वन्द्येत्येतद्व्यनक्ति ॥ **न हीति** । अधिकृता वन्द्येत्येतद्व्यनक्ति ॥ **अधिकृता चेति** । इष्टा वन्द्येत्येतद्व्यनक्ति ॥ **वन्दनमिति** । इतिशब्दो हेत्वर्थः । इतिहेतोस्त्रिविधा वन्द्येति पूर्वेणान्वयः । ततः किमित्यत आह ॥ **तत्रेति** । त्रेधा वन्द्यत्वे सतीति वा विशेषणपञ्चकमध्य इति वाऽर्थः । एकशब्दस्य सङ्ख्यार्थत्वेन गुणविशेषणत्वे 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेने'त्यनेनैकशब्दस्य प्रथमान्तनिर्देशेन समासविधानात् 'प्रथमानिर्दिष्टं समास उपसर्जनमि'त्युपसर्जनसंज्ञायां उपसर्जनं पूर्वमिति पूर्वनिपातो निखिलेत्यनेन विरोधश्च प्राप्नोतीत्यत आह ॥ **एकशब्द इति** । एके मुख्यान्यकेवला इत्युक्तेः । 'दोषैकदृक्पुरोभागी दीर्घसूत्रश्चिरक्रिय' इत्यमरे 'नियतिकृतनियमरहितां ह्लादैकमि'ति काव्यप्रकाशे च प्रयोगात्सङ्ख्यार्थस्यैवैकशब्दस्य पूर्वकालैकेति सूत्रे निर्देशो न केवलार्थस्येति न दोष इति भावः । केवलार्थैकशब्दस्य गुणविशेषणत्वे लब्धार्थमाह ॥ **त एवेति** । 'निरादयः क्रान्ताद्यर्थे पञ्चम्ये'त्युक्तेराह ॥ **निष्क्रान्तो दोषेभ्य इति** । पारतन्त्र्यादिभ्य इत्युक्त्या कथं सर्वोत्तमत्वं नारायणस्येत्येतदंशोऽप्युपपादितो ध्येयः । ईश्वरस्य जन्मलयाद्यभावोक्तिपरैः असम्भवस्त्वित्याद्यधिकरणैरविरोधाय वा व्याघातपरिहाराय वाऽऽह ॥ **स्वव्यतिरिक्तेति** । एतेनापि सर्वोत्तमत्वमस्योपपादितं ध्येयम् ॥ **जन्माद्यष्टकमिति** । 'गुणव्यत्यय एतस्मिन्मायावत्त्वादधीशितुः । न पौर्वापर्यमिच्छन्ति नद्यां भ्राम्यद्भ्रमेरिवे'ति तृतीयस्कन्धोक्त्या पौर्णमास्यमावास्यातिथ्योरिव जन्मस्थित्यादेरिदंप्राथम्याभावेऽपि लब्धजन्मन एव स्थितिलयादीति जन्मन आदित्वमुपेत्य जन्मादीत्युक्तम् ॥ **यथासम्भवमिति** । जन्मस्थितिलयनियमनानि सर्वस्य । ज्ञानाज्ञानबन्धमोक्षाःब्रह्मादिचेतनस्य । तत्रापि मोक्षं सतामेवेत्येवं रूपेणेत्यर्थः । चतुर्थीसम्प्रदान इति चतुर्थ्या भाव्यम् । कथमस्येति षष्ठीत्यत आह ॥ **सम्बन्धमात्र इति** । न तु सम्प्रदानत्वमप्यत्र विवक्ष्यत इति मात्रपदार्थः । 'कर्मणा यमभिप्रैति स सम्प्रदानमि'ति सूत्रे अचोन्त्यादिटीत्यादाविव लघुसंज्ञायाः कार्यत्वेऽपि सम्प्रदानमिति गुरुसंज्ञाकरणमन्वर्थत्वविज्ञानार्थम् । तेन बहुमानपूर्वं स्वस्वत्वत्यागेन परस्वत्वापादनादिरूपदानं यत्र तत्रैव सम्प्रदानसंज्ञा नत्वन्यत्र रजकस्य वस्त्रं ददातीत्यादाविति वृत्त्यादावुक्तेरिहापि सम्प्रदानसंज्ञाऽभावात् 'षष्ठी शेष' इति षष्ठ्येवेति भावः। यद्वोद्भवादीतिपदस्य नित्यसापेक्षत्वात्समास इत्युपेत्य कर्मत्वसम्प्रदानत्वविशेषौदासीन्येन सम्बन्धसामान्याश्रयेणोद्भवादीत्यनेन तद्गमिति ददातिना वाऽन्वय इति भावेनाह ॥ **सम्बन्धमात्र इति** । अथवास्येति षष्ठी कर्तरि चेत् आदिपदोक्तपालनादिनाऽनन्वयः । तस्य जगत्कर्मकत्वात् । कर्मणि चेदुद्भवादिनाऽनन्वयः तस्य तत्कर्तृकत्वादत आह ॥ **सम्बन्धमात्र इति** ।

ननु स्वव्यतिरिक्तप्रपञ्चस्येति व्याख्या न युक्ता । प्रकृतिजीवकालवेदादेर्नित्यस्य जन्माद्ययोगादित्यत आह ॥ **अशेषेति** । तथात्वे कोऽर्थ इत्यत आह । **वियदिति** । विशेषत इति तृतीयार्थे तसिरित्युपेत्यार्थमाह ॥ **अवान्तरभेदसहितेति** । 'न वियदश्रुतेः' । 'एतेन मातरिश्वा व्याख्यातः' । 'ज्ञोऽत एवे'त्येतेष्वधिकरणेषु नित्यस्यापि पराधीनविशेषावाप्तिरूपजनिरुच्यते । प्रकृतेः जडस्य परिणामः । तदभिमानिश्रियः सिसृक्षुत्वम् । गगनस्य मूर्तसंयोगित्वम् । मातरिश्वादिजीवस्य देहयोगः । इन्द्रियाणामुपचय इत्यादिरूपेण व्युत्पाद्याशेषविशेषसहितो य उद्भवः । तथा जीवानां प्रकृतैतावत्वं हीत्यत्रोक्तदिशा अन्नादिदानेन । अन्येषां नित्यानामुत्तरकालसम्बन्धादिना स्थितिरित्यादि । तथा संहृतिरपि कार्यस्य जडस्य ध्वंसः । जीवानां देहलयः । श्रियोऽत्यन्तसामीप्यमित्यादि । तदादिदमित्यर्थः ॥ **हेतुसमुच्चयार्थ इति** । न केवलं विशिष्टत्वादधिकृतत्वादपि वन्द्यमिति समुच्चयार्थ इत्यर्थः । अखिलैरित्युक्तावपि तन्मध्ये किञ्चिदपि नान्यपरमिति द्योतनाय यावदर्थकमप्यपिपदमिति भावेनाह ॥ **अभिव्याप्तौ वेति** । अत एव आह । **अखिलैरपीति** । पदवर्णस्वरादिरूपेणापि प्रतिपाद्यमित्यभिप्रेत्याभिव्याप्तौ वेत्युक्तमित्यप्याहुः । तमप्प्रत्ययाखिलशब्दापिपदानां कृत्यं व्यनक्ति ॥ **यदीत्यादिना** ॥ **तस्येति** । धर्मादेः प्राणादेश्चेत्यर्थः । 'अन्यार्थं तु जैमिनिरि'त्यादिना वक्ष्यमाणन्यायेन नारायणप्रतीत्यङ्गत्वं ज्ञेयम् । एतावता धर्मादेरधिकृतत्वं न निरस्तमिति वन्द्यत्वं प्राप्तमत आह ॥ **तथाविधमेवेति** । अनन्यार्थतयाऽखिलवेदादिवेद्यमेवेत्यर्थः ॥ **अखिलैरिति चोक्तमिति** । अखिलैरपीतिचोक्तमित्यभिव्याप्त्यर्थकमपिपदं च ध्येयम् । अन्यथा धर्मादेरखिलवेदाप्रतिपाद्यत्वेऽपि 'ता वा एताः सर्वा ऋच' इत्यत्रैतरेयभाष्ये सर्ववेदाभिधेयत्वं वायोरप्यस्तीत्युक्त्या प्राणस्याप्यखिलवेदप्रतिपाद्यत्वादखिलपदं तद्व्यावर्तकं न स्याद्व्यर्थं चाभिव्याप्त्यर्थकमपिपदं स्यात् । तस्मिन् सति तु 'पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मता' इति ऋग्भाष्योक्तदिशा मन्त्रादिवद्वेत्यत्रोक्तन्यायेन च विष्णुसूक्तपुरुषसूक्तलक्ष्मीसूक्ताद्यन्यत्रैव प्रतिपाद्यत्वाद्भवति व्यावर्तकमखिलपदम् ॥ **पूर्ववदिति** । पूर्वत्रानयोर्यत्प्रयोजनमुक्तं तदत्र ज्ञेयमिति नार्थः । किंतु यथा अन्यार्थतया वेदैकदेशप्रतिपाद्यस्य धर्मादेः प्राणादेश्च प्रियत्वमेव न तु प्रियतमत्वम् । तदपि धर्मादेर्भगवत्प्रतिपत्त्यङ्गत्वदशायाम् । काम्यतादशायां तु प्रियत्वमपि नास्ति । प्राणादेर्भगवदङ्गत्वेनैव प्रियत्वं न तु स्वतः । तथाच तयोः कदाचित्प्रियत्वमात्रेऽपि न तयोर्नम्यत्वप्रयोजकेष्टत्वम् । अनाद्यनन्तकालमतिशयेनानन्यार्थतया प्रियत्वरूपनम्यत्वप्रयोजकमिष्टत्वं नारायणस्यैव । अतस्तस्यैव नतिरिति द्योतनाय सदेति प्रियतममिति चोक्तमिति व्याख्येयमित्यर्थः ।

**या०— अपिरभिव्याप्ताविति** । न चाशेषेत्यनेन गतार्थता । यावन्तो वन्द्यत्वनिमित्तभूता धर्मा लोके प्रसिद्धास्तेषां सर्वेषां प्रकृतेऽभिव्याप्तिरसङ्कोचेन वृत्तिरिति यावत् । तथाच यावन्तो ब्राह्मणाः

ते सर्वेऽप्याकार्या इत्यादाविवासङ्कोचव्यञ्जनमपिशब्दप्रयोजनमित्याशयात् । एवमग्रेऽपि । तत्र विशिष्टत्वस्य वन्द्यत्वप्रयोजकत्वमुपपादयितुमाह ॥ **न हीति** ॥ अधिकृतत्वस्य तदुपपादयति ॥ **अधिकृता चेति** ॥ इष्टत्वस्यापि तदुपपादयितुमाह ॥ **वन्दनं खल्विति** ॥ **तत्र वैशिष्टयोपपादनायेति** । अत्र वैशिष्ट्यं तु सर्वोत्तमत्वरूपमेव विवक्षितम् । अत एतदुभयं कथं नारायणस्येत्यवतार्य सर्वोत्तमत्वप्रतिपादनमुत्तरत्र पृथङ् न कृतमित्यवधेयम् ॥ **केवलार्थ इति** ॥ सङ्ख्यार्थत्वे पूर्वनिपातः स्यादिति भावः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्ये'ति वचनादाह ॥ **निष्क्रान्त इति** । नन्वस्येति कथं षष्ठी । न तावत् कर्तरि षष्ठी भगवत एव कर्तृत्वात् । नापि कर्मणि उद्भवादेरेव कर्मत्वात् । हेत्वादिरूपार्थान्तरस्य च असम्भवादित्यत आह ॥ **सम्बन्धमात्र इति** । तथाच 'षष्ठी शेष' इत्यनेनैवात्र षष्ठीति भावः । सौत्रशेषशब्दार्थकथनाय सम्बन्धमात्र इत्युक्तम् । उक्तादन्यः शेष उच्यते । कर्मादयश्च प्रातिपदिकार्थपर्यन्ताः पूर्वमुक्ताः । अतस्तदन्यो यः सम्बन्धः स एव शेषशब्देन विवक्षित इति ॥ **षष्ठ्यर्थ इति** । षष्ठ्यर्थभूतानां स्वस्वामिभावादिसम्बन्धानामनेकत्वात्सर्वेषां सामान्यरूपेण ग्रहणाय मात्रपदम् । केचित्तु ननु दानकर्मणोद्भवादिनाऽस्य जगतोऽभिप्रेततया सम्प्रदानत्वात्तत्र चतुर्थ्या भाव्यमस्येति षष्ठी कथमित्यत आह ॥ **अस्येतीति** ॥ एवंच विवक्षातः कारकाणि भवन्तीत्युक्तत्वेन सम्प्रदानत्वस्याविवक्षितत्वात् 'षष्ठी शेष' इति सम्बन्धमात्रे विहिता षष्ठ्येव युक्ता । यद्यप्युद्भवादौ न स्वस्वत्वपरित्यागरूपदानकर्मत्वमीश्वरस्य सर्वदा सर्वेश्वरत्वात् तथाच न सम्प्रदानप्राप्तिः । तथाऽपि परस्वत्वापादनमात्रस्यापि दानशब्दार्थतया कन्यादानादौ प्रसिद्धत्वेनात्र कथञ्चित्सम्प्रदानत्वप्राप्तिसम्भव इत्याहुः ॥ **वियदधिकरणादाविति** । तत्र हि क्वचित्पराधीनविशेषावाप्तिः क्वापि देहलाभः कुत्रचित्स्वरूपलाभ इत्यनेकप्रकारेणोद्भवः कथितः । लयोऽपि विपर्ययेणेत्यत्रोत्पत्तिक्रमवैपरीत्येन प्रतिपादित इत्यवधेयम् । अखिलैरित्यस्य तमपश्च प्रयोजनं वक्तुमित्यत आह ॥ **यदि व्यभिचार्यस्यासितेनेत्यादिना** । अधिकृतत्वमात्रं कर्मकाण्डप्रतिपाद्ये धर्मादौ ब्रह्मकाण्डप्रतिपाद्ये प्राणादौ च व्यभिचारीति भावः । नन्वेतावताऽप्यधिकृतत्वस्य व्यभिचारो नोद्धृत इत्याशङ्कायामाह ॥ **तथाविधमेवेति** । अनन्यापेक्षया वेदादिवेद्यं सकलवेदादिवेद्यं चेत्यर्थः । इदं च हेतुद्वयमतो न वैयर्थ्यम् ॥ **अत्रापि पूर्ववदिति** । इष्टत्वमात्रं स्रक्चन्दनादौ व्यभिचारि । अनन्यार्थतयेष्टत्वं च तमबर्थभूतं सुखे व्यभिचारि ॥ **अतः सदेति** । वैषयिकसुखं च न सदेष्टमिति भावः । नन्वेवमपि ऋष्यादिस्वरूपसुखे व्यभिचारः । अतो **ममेति** । न चैवं मम सदा प्रियत्वादित्येवास्त्विति वाच्यम् । तथाच ममैकान्तिनः सदा प्रियत्वात् मम प्रियतमत्वात् इति हेतुद्वये तात्पर्यमतो न वैयर्थ्यशङ्का इति । भारत्यादावपि गतत्वात् प्रियतमत्वादित्युक्ते च न तत्र व्यभिचारः । तस्या अन्यार्थतयैव प्रियत्वादिति ध्येयम् । एवंच पूर्ववदित्यस्य पूर्वन्यायेनेत्यर्थो बोध्यः । इयांस्तु विशेषः । अत्र विशिष्टो हेतुः । पूर्वत्र हेतुद्वयमिति ।

श्री०— **एतदुभयमिति** । वन्द्यत्वप्रयोजकीभूतधर्माणामत्र सत्वं पद्मापद्मभवादेर्जगतः सकाशात्सर्वोत्तमत्वरूपातिशयश्चेत्युभयमित्यर्थः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्ये'ति वचनान्निष्क्रान्तो दोषेभ्य इत्युक्तम् । स्वव्यतिरिक्तप्रपञ्चस्य पद्मापद्मभवादिप्रपञ्चस्य । रमायामज्ञानबन्धयोरभावेन जन्माद्यष्टकस्य प्रत्येकं सर्वत्राभावाद्यथासम्भवमित्युक्तम् ॥ **वियदधिकरणेति** । 'तस्मात्तद्वशतैव हि उत्पत्तिरत्र कथिते'-त्येवं पराधीनविशेषावाप्तिरूपामुत्पत्तिमभिधाय तदवान्तरभेदाः पराधीनविशेषाः । 'सिसृक्षुत्वविशेषं तत् साक्षाद्भगवदिच्छया । प्राप्तैव सृष्टेत्युदिता प्रधानं विकृतेरपि । पुमांसो देहसम्बन्धात्सृष्टिमन्त इतीरिताः' । मूर्तसम्बन्धपरतन्त्रविशेषयुक् खमेवोत्पत्तिमन्नाम । वेदस्यापीश्वरेच्छया व्यक्तिर्नाम विशेषोऽस्तीत्यादिनोपपादिता द्रष्टव्याः । **पूर्ववदिति** । सदापदस्य तमपश्च प्रयोजनं पूर्ववत् पूर्वन्यायेनावधेयम् । यथा अखिलैराप्यतममित्यत्र धर्मादौ व्यभिचारपरिहारो विशेषणप्रयोजनमेवमत्रापि । भगवान्वन्द्यो भवितुमर्हति ममैकान्तिनः सदा प्रियतमत्वात् मम प्रियतमत्वादिति विवक्षिते हेतुद्वये व्यभिचारपरिहारायेदं विशेषणद्वयमित्यर्थः । तत्प्रकारश्चाद्ये हेतौ वैषयिकसुखे व्यभिचारपरिहाराय सदेति विशेषणम् । द्वितीयहेतौ मम प्रियत्वस्य स्रक्चन्दनादौ व्यभिचारवारणाय प्रियतमत्वादित्युक्तम् । अनन्यार्थतयेष्टत्वस्य तमबर्थत्वान्न व्यभिचार इति ।

च०— प्रकृतनमनक्रियाकर्मीभवन्नारायणे विशेषणषट्कप्रमापकतुल्यकक्षापन्नाखिलद्वितीयान्तानां फलान्तरोद्देश्यकस्तुतितात्पर्यकत्वाशयं प्रकाश्य संप्रति तदेकतरस्य बीजाभावनियन्त्रिततादृशक्रियाकर्मत्वानुपपत्तिशङ्कायास्तादृशव्यक्त्यन्तराप्रणतिपूर्वकैतत्प्रणतिकर्मत्वानुपपत्तिशङ्कायाश्च व्युदसनतात्पर्यकतां शिष्टतत्पञ्चकस्य च तदभिहितार्थसमर्थनतात्पर्यकतां प्रकाशयति । **अथवेत्यादि** । विपूर्वकशिष्टः करणसाधन घञन्ततामाश्रित्य व्यावर्तकधर्मप्रमापकतामभिधत्ते । **विशिष्यन्त इति** । अथ 'उपदेशेऽजनुनासिक इदि'ति सूत्रं व्याचक्षाणेन भाष्यकृता उपदेश इति घञ् अयं करणसाधनः न सिध्यति परत्वात् ल्युट् प्राप्नोति न ब्रूमो कर्तरि च कारकसंज्ञायामिति किं तर्हि हलश्चेति संज्ञायामिति वर्तते । न चैषा संज्ञेत्यादिना एवं च कृत्वा घञ् न प्राप्नोतीत्यनेन करणे घञो दूषिततया करणसाधनघञन्तता विशेषशब्दस्य न सङ्गच्छत इति चेत्सत्यम् । तत्रैव एवं तर्हि कृत्यल्युटो बहुलमित्येव घञ् भविष्यतीति उपदेशशब्दस्य करणसाधनतया भाष्यवृत्त्यादिषु व्याख्याततया तद्वत्प्रकृतेऽपि सम्भवात् विशेषशब्दस्यापि परीक्षकव्यवहारादिना व्यावर्तकसंज्ञात्वावगमेन हलश्चेत्यपि भविष्यति । ईश्वरं गुरुमपि भजस्वेत्यादाविव प्रातिस्विकधर्मद्वयावच्छिन्ननानाकर्मताकैकधातूपस्थाप्यान्वयित्वरूपसमुच्चयबोधकत्वासम्भवेन गीतातात्पर्यनिर्णये सर्वकर्माण्यपि सदाकुर्वाण इति प्रतीकव्याख्यावसरे एकमपि कर्म तदनादरेण न कार्यमित्यादिना भगवत्पादैरभिव्याप्तिगमकतया विवृततया यावन्तो ब्राह्मणास्ते सर्वेऽप्याकार्या इत्यादाविव समभिव्याहृताशेषपदार्थतावच्छेदकीभूत-

व्यासज्यवृत्तिधर्मनिष्ठपर्याप्तिसम्बन्धावच्छिन्नावच्छेदकताकपदार्थान्तरान्वयितारूपाभिव्यास्यर्थतया व्याकुरुते **अपिरिति** । तथाच न तादृशाशेषादिपदार्थतावच्छेदकीभूततादृशधर्मसामानाधिकरण्यमात्रविशेषिततादृगन्वयितारूपः सङ्कोच इति भावः । एवमुपरिष्टादपि बोध्यम् । **यावन्त इत्यादि** । विशेषपदोत्तरपञ्चम्या निरूपकतासम्बन्धेन वन्द्यपदार्थतावच्छेदकान्वयि ज्ञापकत्वं प्रत्याय्यते । तथाच विशिष्टेष्टाधिकृतत्वादिरूपयावद्धर्मनिष्ठा या व्यासज्यधर्मावच्छिन्ना ज्ञापकता तन्निरूपकवन्द्यत्वाश्रयीभूतमित्यर्थः । अथ कथमेतत् । नारायणपक्षकवन्द्यत्वसाध्यकदर्शितधर्मसम्बन्धकप्रयोगस्याभिप्रेततायां हेतुवाक्यघटकपदानां प्रयोजनाभावे प्रयुक्तनिग्रहासिद्धिप्रसङ्गेन प्रत्येकहेतुताकल्पस्याश्रयितव्यतया धूमालोकभस्मनिष्ठवन्हिनिरूपितज्ञापकतासु तत्तद्वृत्तिधूमत्वादिरूपप्रातिस्विकधर्माणामेवावच्छेदकतावत्प्रकृतेऽपि वैशिष्ट्यादिवृत्तितथाविधधर्माणामेव तत्तद्वृत्तिज्ञापकतावच्छेदकतया व्यासज्यवृत्तिधर्मस्य तदनवच्छेदकतयाऽसामञ्जस्यमिति चेन्मैवम् । धूमालोकभस्मभ्यो वन्हिमानित्यादिनिर्देशानुरोधेन व्यासज्यवृत्तिधर्मावच्छिन्नत्वस्य पारिभाषिकतद्व्यापकतात्मकतया क्षतिविरहात् । न च प्रातिस्विकज्ञापकतायां न धूमादित्रितयवृत्तिधर्मव्यापकतेति वाच्यम् । वन्हिनिरूपितज्ञापकतात्वेन व्यापकतायाः निर्बाधत्वादित्यलं सूक्ष्मेक्षिकया । एतदुभयं वन्द्यत्वप्रयोजकधर्मसाकल्यवन्द्यान्तरावधिकोत्तमत्वोभयम् । नारायणे धर्मिणि वन्द्यत्वसाधकनिखिलेत्यादिविशेषणानां पक्षीकृतेशान्यस्मिन्नभावेन तत्र प्रकृतसाध्यनिरूपितव्याप्तेर्दुर्ग्रहतया तैर्न सङ्गच्छत इति निदर्शनगृहीतसाध्यनिरूपितव्याप्तिकविशिष्टत्वेष्टत्वाधिकृतत्वरूपप्रधानसाधनान्तर्गतोत्तमत्वरूपवैशिष्ट्यानुमापकप्रमापकद्वितीयान्तत्रिकस्य निखिलगुणपूर्णावद्यगन्धवैधुर्यविश्वोत्पादकत्वादिनियन्त्रितसर्वोत्तमत्वप्रतिपादने बहुगुणवत्वरागादिदोषदूरत्वबहुजनकत्वादिनिबन्धनमुत्तमत्वं कैमुत्येन सेत्स्यतीत्याशयेन व्युत्पाद्यशिष्टद्विकस्य प्रधानसाधनद्वयप्रत्यायकतां तत्रापीष्टत्वं वन्दनक्रियाविशेषणीभूतभक्त्यादिसाहित्यसम्पादन एवोपयोक्ष्यते न विशेष्यांश इत्याशयेनाद्यशङ्कां, सर्ववैशिष्ट्यसर्ववेदप्रतिपाद्यत्वानन्योद्देश्यकवेदकरणप्रतिपादनक्रियाकर्मत्वान्यतरात्मकाधिकृतत्वसार्वकालिकातिशयितभाष्यकारीयप्रीतिविषयत्वानामीशासाधारणानां प्रतिपादनेन द्वितीयशङ्कां चापाचिकीर्षुर्व्याकुरुते । **त्रिविधा हीत्यादिना**ऽवधेयमित्यन्तेन । **एकशब्द इति** । ह्लादैकमयीतिकाव्यप्रकाशाद्युदाहरणानि टीकाकृद्भिरेवान्यत्रोपन्यस्तानीति सङ्ख्यार्थकताराहित्येन न पूर्वनिपातापत्तिरिति भावः । ननु 'कर्मणा यमभिप्रैति स सम्प्रदानमि'ति सूत्रे वृक्षाय जलं ददाति खण्डिकोपाध्यायः शिष्याय चपेटिकां ददाति, रजकाय वस्त्रं ददाति, 'न शूद्राय मतिं दद्याद्विप्राय कन्यां ददाती'त्यादि गौणोदाहरणाद्यनुरोधेन गौणददात्यर्थविवक्षावश्यम्भावेन भाष्यकृता श्राद्धाय निगर्हते युद्धाय सन्नह्यते पत्ये शेत इत्याद्यनुरोधेन क्रियाग्रहणमपि कर्तव्यमिति ददाति कर्मणेत्यस्यानाश्रयेण क्रियामात्रस्याश्रयणाच्च सम्प्रदानचतुर्थ्या भवितव्यमित्यतो 'विवक्षातः कारकाणि भवन्ती'त्युक्तेः सम्प्रदानस्य शेषत्वविवक्षायां

युक्ताऽस्येति षष्ठीत्याह । **अस्येतीत्य**वतारयन्ति । नन्वस्येति कथं षष्ठी । न तावत्कर्तरि । भगवत एव कर्तृत्वान्नापि कर्मणि उद्धवादेरेव कर्मत्वात् हेत्वादिरूपार्थान्तरस्य चासम्भवादत आह । सम्बन्धमात्र इतीत्यप्यवतार्य तथाच 'षष्ठी शेष' इत्यनेनैवात्र षष्ठीति भाव इत्यपि व्याकुर्वते । **सम्बन्धमात्र इति** । सम्प्रदानचतुर्थी कर्तृकर्मणोरित्यनुशिष्टा षष्ठी च सम्प्रदानत्वकर्तृत्वकर्मत्वरूपसम्बन्धत्वव्याप्यधर्मावच्छिन्नप्रकारताशालिशाब्दधीप्रयोजिकेति तादृगन्वयबोधतात्पर्यविरहान्न क्षतिरिति सम्बन्धत्वरूपसामान्यधर्मावच्छिन्ननिरूपकतासंसर्गावच्छिन्नप्रकारताशाल्यन्वयबोधोत्पादप्रयोजिका शैषिकी षष्ठ्येवेत्याशयः । **सम्बध्यत इति** । तन्त्रावृत्त्याद्याश्रयणेनेति भावः । **अवान्तरेति** । विशेषावाप्तिदेहलाभस्वरूपलाभसिसृक्षुत्वमूर्तसम्बन्धाद्यवान्तरवैचित्र्यसहितेत्यर्थः । **समुच्चयार्थ इति** । निखिलेत्यादिविशेषणत्रिकस्यापि वैशिष्ट्यद्वारा वन्द्यत्वसाधन एव तात्पर्योपगतेरिति भावः । दर्शितत्रिकस्य किञ्चिद्द्वारकप्रधानसाध्यसाधनीभूताधिकृतत्वतुल्यकक्ष्यापन्नताविरहात्समुच्चायकता न सूपपादेत्यरुचिं मन्वानः कल्पान्तरं श्रयते । **अभीति** । तमपोऽखिलैरित्यस्य च प्रयोजनमभिधित्सते । **यदीत्यादि** । स्ववृत्तिकर्मतानिरूपकत्वसंसर्गेण प्रकृत्यर्थप्रकथनविशेषितसन्प्रत्ययार्थेच्छाविषयीभूतेनेत्यर्थः । कर्मब्रह्मकाण्डभेदेन व्यभिचारनिरूपकाधिकरणद्वयोपादानम् । **तथाविधमिति** । अखिलवेदादिकरणकेतरप्रतीत्यनुद्देश्यकप्रतिपादनक्रियाकर्मत्वरूपसमुदितार्थस्य हेतुतायां हेतुतावच्छेदकघटकविशेषणयोर्वैकल्पिकफलकतया मतभेदेन निग्रहासिद्धिप्रसङ्गेनानन्योद्देश्यकतादृशक्रियाकर्मत्वस्य साकल्यांशघटिततादृशक्रियाकर्मत्वस्य च पार्थक्येनव तद्धेतुत्वोपगतेरुक्तक्षत्यनवकाशादिति हृदयम् । **पूर्ववदिति** । षष्ठ्यन्ताद्वतिरुपमेये षष्ठीदर्शनात् । स्वर्गादेरनित्यत्वेन सदाप्रियत्वाभावाद्धर्मादेरन्यार्थतयव प्रियत्वादस्य पुनः सदाऽनन्यार्थतया प्रियत्वात्तथाविधमेव चेष्टत्वमुच्यत इत्याशयेनाह । **अत्रापीतीति** । ममेत्यंशस्य हेतुतावच्छेदकघटकतामनङ्गीकुर्वाणा एव व्याकुर्वते । इष्टत्वमात्रं स्रक्चन्दनादौ व्यभिचारि । अनन्यार्थतयेष्टत्वं च तमबर्थभूतं सुखे व्यभिचारि अतः **सदेति** । वैषयिकसुखं च न सदेष्टमिति भावः । नन्वेवमपि ऋष्यादिस्वरूपसुखे व्यभिचारः । अतो **ममेति** । न चैवं मम सदा प्रियत्वादित्येवास्त्विति वाच्यम् । विपक्षे भारत्यादावपि गतत्वात् । प्रियतमत्वादित्युक्ते तु न तत्र व्यभिचारः । तस्या अप्यन्यार्थतयैव प्रियत्वादिति ज्ञेयम् । एवं च पूर्ववदित्यस्य पूर्वन्यायेनेत्यर्थो बोध्यः । इयांस्तु विशेषः । अत्र हि विशिष्टो हेतुः पूर्वत्र हेतुद्वयमित्यपि व्याचक्रिरे । **पूर्ववदिति** । पूर्वत्रानयोर्यत्प्रयोजनमुक्तं तदत्र ज्ञेयमिति नार्थः । किंतु यथा अन्यार्थतया वेदैकदेशप्रतिपाद्यस्य धर्मादेः प्राणादेश्चाधिकृतत्ववारणाय आप्यतममिति तमप्प्रत्ययोऽखिलपदं च प्रयुक्तम् । तथाऽत्रापि धर्मादेः प्रियत्वमेव नतु प्रियतमत्वं तदपि धर्मादेर्भगवत्प्रतिपत्त्यङ्गत्वदशायां, काम्यतादशायां तु प्रियत्वमपि नास्तीति प्राणादेर्भगवदङ्गत्वेनैव प्रियत्वं न तु स्वतः तथाच तयोः कदाचित्प्रियत्वमात्र-

सत्त्वेऽपि न तयोर्नम्यत्वप्रयोजकेष्टत्वम् । अनाद्यनन्तकालमतिशयेनानन्यार्थतया प्रियत्वरूपनम्यत्वप्रयोजकमिष्टत्वं नारायणस्यैव नान्येषामिति द्योतनाय सदेति प्रियतममिति चोक्तमिति व्याख्येयमित्यर्थ इत्यपि निबध्नन्ति । अत्र च सदाप्रियतमत्वं मम प्रियतमत्वं चेति स्वतन्त्रहेतुद्वयमेव सौधाक्षरानुपूर्वीसामञ्जस्यानुरोधेनावसीयते । तत्र विपक्षभूतभारत्यादावाचार्यस्वरूपसुखे चेशोद्देशेन प्रिये ऋष्यादिस्वरूपसुखस्य मुक्तिदशायामनुभूयमानतया तत्कालीनातिशयितप्रीतिविषयतासत्त्वेऽपि संसारदशायामननुभूयमानतया तत्कालीनतादृशप्रीतिविषयत्वस्य दुरुपपादतया सार्वकालिकतादृशप्रीतिविषयत्वहेतोस्तत्र चानैकान्त्यानवकाशेन तद्व्यावृत्तिफलकतया न ममेत्यंशस्याद्यहेतुतावच्छेदकघटकतयोपादानम् । किंतु वैषयिकसुखादावनैकान्त्यव्युदसनाय द्वितीयहेतुशरीरघटकतयैव तदिति प्रतिसन्दधतां वाक्यार्थचन्द्रिकाकृतां परिमळकृतां च पन्थानमनुरुन्धानाः गुरुपादा अपि तद्दिशा प्रकृतेऽपि हेतुद्वयमेवाभिप्रेतं ग्रन्थकृतामिति न्यभांत्सुर्भावप्रकाशिकायाम् ।

**सु० — यद्वा । नानिर्धारितस्वरूपस्य प्रणामो युक्तः । न चान्तरेण लक्षणं वस्तुनिर्धारणमित्यतो विभवादनेकानि नारायणस्य लक्षणान्यनेनोच्यन्ते । तत्र निखिलेत्यनेन निखिलगुणत्वं पूर्णगुणत्वं स्वतो गुणैकदेहत्वं चेति विवक्षाभेदेन त्रीणि लक्षणान्युदितानि । निर्दोषमित्यनेनैकम् । आप्यतममित्यनेन वेदादिमुख्यार्थत्वमखिलवेदाद्यर्थत्वं चेति द्वयम् । अस्येत्यनेनाष्टौ । अशेषेत्यनेन मुख्यवन्द्यत्वमुक्तमशेषाद्विशेषेण वन्द्यमिति । सदेत्यनेन परमप्रेमयोग्यत्वम् । तस्यानानुभाविकत्वादसम्भवमाशङ्क्य सदा ममेत्युक्तम् । अन्येषामपि ज्ञानोत्तरकालमिदमानुभाविकं मम तु सदेति । अपिशब्दो लक्षणसमुच्चये । अथवा । निखिलेत्याद्युक्तलक्षणोपपन्नतया नारायणः केन प्रमाणेन प्रतिपत्तव्य इत्यतः सुवाक्यैराप्यमित्युक्तम् । ननु वेदाद्येकदेशेऽन्यथाऽप्युच्यते । न । तत्प्रतीतेरपरामर्शपूर्वकत्वादित्याशयेनाखिलैरित्युदितम् । तर्हि धर्माद्यसिद्धिः स्यात् । तस्य प्रमाणान्तरागोचरत्वात् । मैवम् । अमुख्यया वृत्त्या धर्मादेरपि वेदादिवेद्यत्वादित्याशयवताऽऽप्यतममित्यभिहितम् । अपिशब्दो वक्ष्यमाणप्रमाणसमुच्चयार्थः । सकलजगन्निमित्तकारणत्वादिहेतुभिरप्युक्तलक्षणो नारायणः प्रत्येतव्य इत्यभिप्रेत्योक्तमस्येति ।**

वा० — एवं नमामीति क्रियासमभिव्याहृतद्वितीयाविभक्त्यर्थनम्यत्वोपपादकतया निखिलेत्यादीनि नारायणविशेषणानीति व्याख्याय प्रकृत्यर्थभूतनारायणस्वरूपनिर्धारणहेतुलक्षणपरतयाऽपि तानि व्याख्याति। **यद्वेति** । अत्र विशिष्टस्य लक्षणत्वे निखिलपूर्णपदयोरन्यतरवैयर्थ्यापाताद्धर्मलक्षणद्वयपरत्वे गुणानां

देहविशेषणत्वेन नारायणविशेषणत्वाभावेन देहपदवैयर्थ्यशङ्काऽनुदयेऽप्येकपदवैयर्थ्यापाताद् गुणानां नारायणविशेषणत्वं गुणपदावृत्तिं तृतीयलक्षणे स्वातन्त्र्यं च विवक्षित्वा त्रीणि लक्षणानि ज्ञातव्यानीत्याह ॥ **तत्रेति** । ममेत्यनेन स्वं प्रत्यनुभवसिद्धत्वोक्ताव'प्येकस्य प्रतिभातं तु कृतकान्न विशिष्यत' इत्युक्तरीत्या प्राप्तासम्भवशङ्कानिवृत्त्यर्थं सदापदाभिप्रायमाह । **अन्येषामिति** । प्रथमापिशब्दस्याभिव्याप्त्यर्थत्वमेवाङ्गीकृत्य द्वितीयोऽपिशब्द उक्तवक्ष्यमाणसमुच्चयार्थ इत्याह ॥ **अपीति** । अपिशब्दौ लक्षणसमुच्चय इति पाठे तूभयोरपि लक्षणसमुच्चयार्थत्वमेवेत्यर्थः । लक्षणेन व्यावृत्तस्वरूपस्य बुद्ध्यारूढत्वेऽपि मानाधीनत्वान्मेयसिद्धेर्लक्षणोक्तिमात्रपरत्वादपि लक्षणप्रमाणोभयपरत्वस्य ज्यायस्त्वादुभयपरतया श्लोकं योजयति ॥ **अथवेति** ॥ **अन्यथाऽपीति** । निर्गुणत्वदोषित्वादिनेत्यर्थः ॥ **तर्हीति** । निखिलवेदैरुक्तगुणविशिष्टनारायणस्यैव वचन इत्यर्थः ।

**स०**— नारायणमिति द्वितीयाविभक्त्यर्थभूतनमनकर्मत्वरूपनम्यत्वोपपादकापेक्षया नारायणप्रातिपदकार्थनिर्धारणार्थत्वमन्तरङ्गमित्याशयेनाह ॥ **यद्वा नानिर्धारितेति** ॥ **स्वत इति** ॥ स्वातन्त्र्येण इत्यर्थः । न चात्र स्वातन्त्र्यमात्रस्यैव लक्षणत्वे दोषाभावात् व्यर्थविशेष्यत्वमिति वाच्यम् । एकधर्मिनिष्ठत्वेन विशेषणविशेष्ययोरुपस्थितावेव व्यर्थत्वादेश्चिन्तनीयत्वेन प्रकृते च स्वातन्त्र्यस्य गुणैकदेहत्वनिष्ठतया प्रतीयमानत्वेन तस्य च लक्ष्यनिष्ठतया प्रतीयमानत्वेनैकधर्मिनिष्ठत्वेनाप्रतीतेर्न तन्न्यायविषयत्वम् । यथोक्तविशेषणविशेष्यभावे दोषाभावादिति भावः । अत एव समयचरणे नित्यपरिमाणत्वादित्यत्रापि न वैयर्थ्यमिति ध्येयम् ।

**प०**— ननु नम्यत्वप्रयोजकवैशिष्ट्यस्याधिकृतत्वादेरिवैकेन विशेषणेनाप्युक्तिसम्भवाद्विशेषणत्रयोक्तिर्निर्बीजेत्यत आह ॥ **यद्वेति** । वैयर्थ्यनिरासायोक्तं विभवादिति । ऐश्वर्याधिक्यादित्यर्थः । अनेनाद्यपद्येन । स्वत इति श्रीमुक्तयोर्व्युदासाय ॥ **अस्येत्यनेनेति** । अस्योद्भवादिदमित्यनेनेत्यर्थः । **सदेत्यनेनेति** । सदा प्रियतमं ममेत्यनेनेत्यर्थः । सदाममेतिपदयोर्लक्षणासम्भवपरिहारः फलमित्याह । **तस्येति** । परमप्रेमयोग्यत्वस्येत्यर्थः । तर्हि ममेत्येकमेवालमित्यत आह ॥ **अन्येषामिति** । अन्येषां जीवानां ज्ञानिनां भगवदपरोक्षानन्तरं भगवतः परमप्रेमयोग्यत्वमनुभवसिद्धम् । मम त्वनाद्यनन्तकालम् । अतो यावद्द्रव्यभावीदं हरेर्लक्षणं न कदाचिदागतमिति द्योतनाय सदेत्युक्तमित्यर्थः । प्रेमयोग्यत्वं च निरुपाधिकेष्टत्वम् । ननु विभवादनेकलक्षणोक्तावप्येवं रूपेणैव लक्षणानि वाच्यानीत्यत्र न बीजमस्तीत्यतः सर्वस्योपयोगमाह ॥ **अथवेत्यादिना दुःखादिदोषरहितश्चेत्यन्तेन** । तमपोऽग्रे पृथक्कृत्यं वक्तुमाप्यमिति प्रतीकोक्तिः । वक्ष्यमाणप्रमाणेत्युक्तम् । तद्व्यनक्ति ॥ **सकलेति** । आदिपदाज्जगत्पालकत्व-

संहर्तृत्वनियन्तृत्वाद्यष्टौ हेतवो ग्राह्याः । उक्तं हि भागवते 'कर्तृत्वात्सगुणं ब्रह्मे'ति । वक्ष्यति च भाष्यकारोऽप्यानन्दमयनये । 'जन्माद्यस्येतिसूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तमि'तीति भावः । नहि जगज्जन्मादिकर्तुर्दोषाः सम्भवन्तीति जगत्कर्तृत्वादिनैव गुणसर्वस्ववन्निर्दोषताऽपि सिद्ध्यतीति भावेनोक्तलक्षण इत्युक्तम् ।

**या०** — नारायणमिति द्वितीयाविभक्त्यर्थभूतकर्मत्वरूपनम्यत्वोपपादकतापेक्षया नारायणप्रातिपदिकार्थनिर्धारणार्थत्वमन्तरङ्गमित्याशयेनाह ॥ **यद्वा नानिर्धारितेति** । ननु वस्तुनिर्धारणस्यैकेनैव लक्षणेन सम्भवात्किमनेकलक्षणोक्त्येत्यत आह ॥ **विभवादिति** । ल्यब्लोपनिमित्तेयं पञ्चमी विभवमैश्वर्यमपेक्ष्येति । तज्ज्ञापनायेति यावत् । ततश्च प्रसङ्गान्नारायणस्यैश्वर्यमपि ज्ञापयितुमनेकलक्षणोक्तिरियमिति भावः । सुवाक्यैराप्यतममस्योद्भवादिदमित्येतल्लक्षणपरतया व्याख्याय लक्षणप्रतिपादकप्रमाणपरतयाऽपि व्याख्याति ॥ **अथवेत्यादिना** ।

**श्री०** — तदेव प्रमाणं दर्शयति ॥ **सकलेति** ।

**च०** — नारायणपदप्रकृतिकबहिरङ्गद्वितीयोपस्थापितप्रकृतनमनक्रियानिरूपितकर्मत्वनिर्वाहकगोचरप्रतिपत्त्यनुकूलतया तद्द्वितीयान्तषट्कं व्याख्याय सम्प्रत्यन्तरङ्गतत्प्रकृत्यंशप्रतिपाद्यनारायणस्वरूपनिर्धारकलक्षणतात्पर्यकतया तद्याकर्तुं कल्पान्तरमनुसरति । **यद्वेति** । नम्यत्वप्रयोजकवैशिष्ट्यस्याधिकृतत्वादेरिवैकेन विशेषणेनाप्युक्तिसम्भवाद्विशेषणत्रयोक्तिर्निर्बीजेत्यत आह **यद्वेती**त्यपि निबन्धान्तरीयो विन्यासः । अनेकोक्तेः फलवत्तां व्यनक्ति । **विभवादिति** । अथ गुणैकदेहत्वं गुणानात्मकदेहशून्यत्वे सति गुणात्मकदेहवत्त्वरूपं पर्यवस्यति । सत्यन्तोपादानफलं तु मुक्तात्मस्वतिप्रसङ्गविधूननम् । समुदितस्यापि रमायामनतिप्रसङ्गाय स्वत इत्युपादाने स्वत्वमात्रस्यैवेतरानतिप्रसक्तस्य तल्लक्षणत्वसम्भवेन शेषवैयर्थ्यं दुर्वारमिति चेन्नैवम् । गुणकर्मान्यत्वे सति सत्त्वं द्रव्यलक्षणमित्यतः सामानाधिकरण्यप्रत्यासत्त्यान्यत्वान्तविशिष्टसत्त्वमिति प्रतीतिवद्भावप्रधानस्वशब्दप्रकृतिकसप्तम्यर्थतसिना स्वत्वे सति गुणैकदेहत्वमित्यत इव तादृशप्रत्यासत्त्या स्वत्वविशिष्टं तल्लक्षणमित्यर्थप्रतीत्या तत्र विशेष्यांशानुपादाने तादृशप्रत्यासत्त्या स्वत्ववैशिष्ट्यरूपोर्वरितांशस्यासम्भवप्रसङ्गेन समुदितोपादानावश्यम्भावात् । न भविष्यत्क्रियेत्यनुव्याख्याप्रतीकव्याख्यावसरे देवदत्त कृतः किं त्वया कटः क्रियते वेति पृष्टः प्रत्याह । न मया कृतो नापि क्रियते किंतु कार्य इति तेन प्राप्नोति भविष्यत्क्रियाकार्यं भविष्यत्त्वावच्छिन्नक्रियात्वं क्रियागतभविष्यत्त्वं वा कार्यतेतीति कार्यलक्षणनिरूपकसौधाक्षरविन्यासे क्रियात्वरूपविशेष्यांशानुपादाने दर्शित भंग्यनादरे सामानाधिकरण्यप्रत्यासत्या भविष्यत्वविशिष्टत्वरूपतदवच्छिन्नत्वस्य लक्ष्याभिमते प्रतीत्यसम्भ-

ववारणातिरेकेण प्रयोजनं ········ यस्यादिति विभावनीयम् ।प्रकृतपद्यघटकपदद्वयीमुक्तलक्षणप्रमाणतात्पर्य-कतयाऽपि व्याकुरुते । **अथवेत्यादिना** । निरूपकतया प्रत्युपसृष्टपद्यर्थाधिगत्यन्वयिनी प्रकारता तलन्त-प्रकृतिकतृतीययोपस्थाप्यते ।

**सु०— यद्वा नारायणस्य देहसद्भावे दुःखादिदोषानुषङ्गः । तदभावे ज्ञानादिगुणा-भावः । उभयथाऽपि जगज्जन्मादिकारणत्वासम्भव इत्याशङ्क्योक्तम् । निखिलपूर्णगुणैकदेहं निर्दोषमिति । देहवत्त्वाज्ज्ञानादिगुणपूर्णः । तस्यापि निखिलपूर्णगुणमात्रत्वेन दुःखादिदोष-रहितश्चेति । अथवा नायं नारायणशब्दो डित्थादिशब्द इव भगवति साङ्केतिको घटादिशब्द इव वा रूढिमात्रप्रवृत्तः । किन्तु विशिष्टगुणानप्याचष्ट इति ज्ञापयंस्तदर्थमनेन कथयति । एतदपि स्तुत्यर्थमवगन्तव्यम् । तथा हि । अरा दोषास्तद्विरुद्धत्वाद्गुणा नारास्तदयनत्वान्नारा-यणः । अराणामयनं न भवतीति वा । उपकारित्वादिना नराणामिमे नारा वेदादयः प्रति-पाद्यतया तदयनत्वाद्वा । नराणामिदं नारमुद्भवादिदातृतया तस्यायनत्वाद्वा । नरसमूहो नारं वन्द्यतया तदयनत्वाद्वा । नराणामयमधिपतिर्नारो मुख्यवायुः परमप्रेमास्पदतया तस्यायनत्वा-द्वेति यथाक्रममवगन्तव्यम् ।**

**वा०**— साधकवद्बाधकपरिहारस्याप्यावश्यकत्वेन लक्षणप्रमाणोक्तिमात्रपरत्वादपि विशेषणद्वयस्य बाधकपरिहारार्थत्वाभ्युपगमेऽर्थविशेषलाभं मन्वानः पक्षान्तरमाह ॥ **यद्वेति** । एवं प्रकृत्यर्थनारायण-स्वरूपनिर्धारणहेतुलक्षणादिपरतया विशेषणानि व्याख्याय प्रकृत्यर्थकथनपरतयाऽपि तानि व्याचष्टे ॥ **अथवेति** । अर्थगतप्रवृत्तिनिमित्तमनपेक्ष्य वक्त्रभिप्रायेणार्थप्रत्यायकत्वं साङ्केतिकत्वमखण्डशक्ती रूढिः ।

**स०**— सुवाक्यैराप्यतममस्योद्भवादिदमित्येतल्लक्षणपरतया व्याख्यातम् । इदानीमसम्भवपरिहा-रार्थतयाऽपि व्याचष्टे । **यद्वा नारायणस्य देहसद्भाव इति** । पदार्थनिर्धारणापेक्षया व्याख्यानस्यान्त-रङ्गतामभिप्रेत्याह ॥ **अथवा नायं नारायणशब्द इति** । अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य वक्तुरभिप्राय-मात्रेणार्थप्रत्यायकः शब्दः साङ्केतिक इत्युच्यते । तादृश एव वक्त्रभिप्रायमन्तरेणार्थप्रत्यायको रूढः । नैवंविधो नारायणशब्दोऽपि तु रूढोऽप्यर्थगतप्रवृत्तिनिमित्तापेक्षित्वाद्यौगिकोऽपि भवति । 'अरो रथाङ्गे चक्राङ्के शीघ्रगामिनि किल्बिषे' इत्यभिधानं मनसि निधायाऽऽह ॥ **अरा दोषा इति** ।

**प०**— ननु जन्मादिहेतुत्वमेवाशरीरस्यायुक्तमिति वादिनं प्रति कथं तत्साधनम् । किञ्च जन्मा-दिहेतुत्वमेव जन्मादिसूत्रे लक्षणत्वेन प्रसिद्धमित्यतोऽस्त्विदमेव लक्षणम् । एतदुपपादकत्वेन निखिलेत्यादि

प्राप्तमिति भावेनाह ॥ **यद्वेति** ॥ **दुःखादिदोषेति** । 'करणवच्चेन्न भोगादिभ्य' इत्यादिना सूत्रकृतैव पत्युरधिकरणे तथा वक्ष्यमाणत्वादिति भावः ॥ **ज्ञानादिगुणाभाव इति** । 'अन्तवत्त्वमसर्वज्ञता वे'ति वक्ष्यमाणसूत्रादिति भावः ॥ **तस्यापीति** । 'विकरणत्वान्नेति चेत्तदुक्तम् । आह च तन्मात्रमि'त्यादिषु सूत्रेषु वक्ष्यमाणत्वादिति भावः । नन्वेवमस्तु विशेषणानामर्थवत्त्वम् यदि नारायणनतिरेवात्र युक्ता स्यात् । सैवायुक्ता । ब्रह्मतन्त्रारम्भे ब्रह्मनतेरेव कार्यत्वादित्यतः । 'ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोततम् । स एव ब्रह्मशब्दार्थो नारायणपदोदित' इति । 'दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः । गुणा नारा इति ज्ञेयास्तद्वान्नारायणः स्मृतः । ब्रह्मशब्दोऽपि हि गुणपूर्तिमेव वदत्ययमि'ति च वक्ष्यमाणदिशा गुणपूर्तिवाचिब्रह्मशब्दसमानार्थवाचित्वान्नारायणशब्दस्य तदर्थो ब्रह्मैवातो ब्रह्मतन्त्रारम्भे नारायणनतिर्युक्तेति भावेन प्रयोजनान्तरमाह ॥ **अथवेति** ॥ **साङ्केतिक इति** । अस्माच्छब्दादयमर्थो बोद्धव्य इतीच्छया नियमित इत्यर्थः ॥ **विशिष्टगुणानपीति** । न केवलं रूढः किन्तु निखिलपूर्णगुणत्वनिर्दोषत्वादीनितरासाधारणान्गुणानप्याचष्ट इत्यर्थः ॥ **तदर्थं** नारायणशब्दार्थम् ॥ **अनेन** श्लोकेनेत्यर्थः ॥ स्तुत्यर्थमित्युपलक्षणं ब्रह्मशब्दसमानार्थत्वसूचनार्थं चेत्यपि ध्येयम् ॥ निखिलेत्यनेनैव ब्रह्मपदसमानार्थत्वलाभादितरनिरुक्तिसार्थक्याय स्तुत्यर्थमित्येवोक्तम् ॥ **अराणामयनं न भवतीत्यत्रारविरुद्धा** नारा इति पूर्वत्र चानरायण इति स्यादित्यादिचोद्यं तु 'दोषारच्छिद्रशब्दाना'मित्यादिव्याख्यावसरे अधिकरणान्ते निरसिष्यते ॥ **तस्यायनत्वाद्वेतीति** । परमप्रेमास्पदतया वाय्वयनोक्त्यैव वाय्ववतारत्वादाचार्यस्य मम प्रियतममित्येतन्नारायणमित्यनेन प्राप्तमेवेति भावः ।

**या०**— निखिलपूर्णगुणैकदेहं निर्दोषमिति विशेषणद्वयं लक्षणपरतया व्याख्यातमिदानीं तदसम्भवपरिहारार्थतयाऽपि व्याचष्टे ॥ **यद्वा नारायणस्येति** । पदार्थनिर्धारकलक्षणकथनात्मकतापेक्षया पदव्याख्यानरूपत्वस्यान्तरङ्गज्ञापकतामभिप्रेत्याह ॥ **अथवा नारायण इति** ॥ **साङ्केतिक इति** । शब्दवृत्त्यभावेऽपीदमनेन शब्देन वाच्यमस्त्विति कस्यचिदिच्छामात्रेण बोधक इत्यर्थः ॥ **विशिष्टगुणानिति** । अनन्यसाधारणान्धर्मानित्यर्थः । तेन महायोगोऽयमिति सूचयति । नराणामिमे नारा इत्यादिकं तस्येदमित्यर्थे विहिताण्प्रत्ययव्याख्यानमित्यवगन्तव्यम् । ईयतेऽस्मिन्नित्यधिकरणे व्युत्पन्नस्य ल्युडन्तायनशब्दस्य नपुंसकत्वनियमाभावात्पुलिङ्गता न विरुध्यत इत्यग्रे विभावयिष्यति ।

**श्री०**— विशिष्टगुणान् लोकविलक्षणगुणान् ।

**च०**— बाधकव्युदसनतात्पर्यकतयाऽपि पदद्वयं व्याचिख्यासुः कल्पान्तरमुत्प्रेक्षते ॥ **यद्वेति** । विशेष्यवाचकपदोपस्थाप्यावधारकलक्षणप्रत्यायकतातस्तत्पदविवरणरूपता ज्यायसीत्यभिप्रेत्य भङ्ग्यन्तर-

मनुसरति । **अथवेति** । साङ्केतिकः नदीवृद्ध्यादिशब्द इवार्थनिरूपितशक्तिलक्षणान्यतररूपवृत्तिमन्तरेणापि प्रणेतृपरिभाषयार्थप्रतीतिजनकः । रूढिमात्रप्रवृत्तः । प्रकृतिप्रत्ययसमुदायवृत्तिव्यासज्यवृत्तिधर्मावच्छिन्नाधारताकाभिधावृत्तिनिबन्धनः ॥ **विशिष्टेति** । असाधारणेत्यर्थः ।

**सु०— अथवा श्रोतृबुद्ध्यनुकूलनाय सकलशास्त्रार्थं सङ्क्षेपतोऽनेनाचष्टे । विदितसङ्क्षेपा हि प्रपञ्चं जिज्ञासवो भवन्ति । तत्र सदा वन्द्यमिति प्रथमसूत्रार्थोक्तिः । मनोवृत्तेस्तत्प्रवणता हि वन्दनम् । जिज्ञासाऽपि तद्विशेष एव । तस्य जीवादिव्यावृत्तये यद्ब्रह्मेत्युक्तं तस्यार्थो निखिलेति । तदुपपादनाय द्वितीयसूत्रे लक्षणमभिहितम् । तदाह ॥ अस्येति । तृतीयसूत्रेण तत्र शास्त्रं प्रमाणमभिधाय तस्याध्यायशेषेण तद्विषयतोपपादिता । तत्कथनमाप्यतममिति । प्रथमाध्यायार्थे शङ्कितदोषनिरासो द्वितीयेऽभिहितस्तमाह ॥ निर्दोषमिति । एवं ब्रह्मस्वरूपे सिद्धे अधिकारिणस्तत्प्रसादसाधनोपायभूततत्साक्षात्कारजननाय वैराग्यभक्तिभ्यामखिलवेदार्थश्रवणादि तृतीये निरूपितम् । तस्यायं संग्रहोऽशेषविशेषतोऽपि प्रियतममाप्यतममिति । ल्यब्लोपनिमित्ता पञ्चमी । अशेषान्विषयविशेषान्विहाय ज्ञातव्यतममिति । इयदामननादित्याद्यर्थसूचनं ममेति । प्रसन्नं च तद्यादृशं पुमर्थं प्रयच्छति तत्स्वरूपनिरूपणं चतुर्थेऽभिहितम् । तदभिधानमाप्यतममिति । आप्तिमात्रस्य नित्यसिद्धत्वात्तमपा ताँ विशिनष्टीति ।**

वा०—एवं शास्त्रार्थव्याख्यानहेतूक्तिपरतया श्लोको व्याख्यातः । इदानीं तु शास्त्रार्थमेवानेनाचष्ट इत्याह ॥ **अथवेति** । श्रोतृबुद्ध्यनुकूलनायेत्येतद्विशदयति ॥ **विदितेति** ॥ **मनोवृत्तेरिति** । मनोवृत्तिप्रावण्यपूर्वकायिकादिव्यापार एव लोकेऽपि वन्दनव्यवहारात्प्राप्ताप्राप्तविवेकेन तस्यैव वन्दनत्वमिति भावः । पञ्चमीविधाने 'ल्यब्लोपे कर्मण्यधिकरणे चोपसङ्ख्यानमि'त्यतो ल्यबन्तलोपेऽत्र कर्मणि पञ्चमीत्याह ॥ **ल्यब्लोपेति** । ( ल्यबन्तस्य गम्यमानार्थत्वादप्रयोगे इत्यर्थः । 'ल्यब्लोपे कर्मण्यधिकरणे चे'ति वार्तिकस्यायमर्थः । ल्यबन्ताप्रयोगे तदर्थे गम्यमाने ल्यबन्तं प्रति कर्मकारकेऽधिकरणकारके च पञ्चमी वाच्येति । प्रासादात्प्रेक्षते । आसनात्प्रेक्षते । प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः । श्वशुराज्जिन्हेति श्वशुरं वीक्ष्येत्यर्थः । गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम् । कस्मात्त्वं । नद्याः । ) अत्र प्रथमे नतिस्तुतिरूपोभयविधस्यापि मङ्गलस्यानुष्ठानम् । द्वितीयादिचतुर्षु नतेरेवानुष्ठानं विशेषणानां च कण्ठोक्तनत्युपपादकत्वम् । तत्रापि प्रथमे विशेषणानां नतिप्रयोजकधर्मकथनपरत्वम् । द्वितीये नतिप्रयोजकस्वरूपनिर्धारणार्थकलक्षणपरत्वम् । तृतीये स्वरूपनिर्धारकलक्षणे साधककथनपरत्वम् । चतुर्थे तन्निर्धारके लक्षणे प्रमाणे वा बाधकपरिहारपरत्वम् । षष्ठे तूभयपरत्वेऽप्यस्य पद्यस्य विशेषणानां नारा-

यणपदव्याख्यानद्वारैतत्पद्याभिप्रेतस्तुत्यर्थत्वम् । सप्तमे त्वेतत्पद्यतात्पर्यविषयीभूतनतिस्तुतिपरत्वाभावेऽप्येतत्पद्योक्तनतिविशेष्यनारायणविशेषणानां नतेर्यच्छास्त्रार्थव्याख्यानार्थत्वं तच्छास्त्रार्थसङ्क्षेपकथनपरत्वमिति पूर्वपूर्वप्राबल्यक्रमः पक्षाणां द्रष्टव्यः । ( प्रथमे द्वितीये तृतीये चतुर्थे इति । द्वितीये तृतीये चतुर्थे पञ्चमे इति क्रमेणार्थो ज्ञेयः पूर्वं द्वितीयादिषु चतुर्ष्वितिद्वितीयस्य प्राथम्योक्तेः । ) यद्वा । नतिविशेष्यनारायणविशेषणानां कण्ठोक्तनत्युपपादकतया सम्भवत्येकवाक्यत्वे न कण्ठतोऽनुक्तस्तुतिपरतया भिन्नवाक्यत्वं युक्तमिति प्रथमापेक्षया द्वितीयादीनां प्राबल्यम् । तत्रापि नतिविशेष्यनारायणधर्मनम्यत्वप्रयोजकपरत्वापेक्षया तत्स्वरूपनिर्धारकलक्षणपरत्वं ज्याय इति सर्वविशेषणानां लक्षणपरत्वपक्षस्य प्राबल्यम् । स्वरूपमात्रप्रदर्शकलक्षणमात्रपरत्वापेक्षया निखिलेत्यादिविशेषणचतुष्टयस्य लक्षणपरत्वम् । तल्लक्षणविशिष्टे आप्यतममस्योद्भवादिदमिति विशेषणद्वयस्य लक्षणविशिष्टे प्रमाणपरत्वमाद्यविशेषणद्वयस्य तत्र प्राप्तबाधकपरिहारपरत्वमित्यभिप्रेत्य प्रवृत्तस्य चतुर्थस्य पूर्वापेक्षयोपयुक्तबह्वर्थप्रतिपादकत्वात्ततोऽपि प्राबल्यम् । ( पञ्चमस्येत्यर्थः पूर्ववत् । ) एवमपि स्तुतेरलाभान्नम्यत्वोपपादकस्वरूपनिर्धारकलक्षणप्रमाणतद्बाधकपरिहारकतत्तदर्थप्रतिपादकनारायणपदव्याख्यानेन स्तुतेरपि लाभात्तत्प्रतिपादकनारायणपदव्याख्यानेन स्तुतेरपि लाभात्तत्प्रतिपादकषष्ठस्य पूर्वतोऽपि प्राबल्यम् । नमामीत्याद्युक्त्यैव तदुपपादकानां सर्वेषामप्याक्षेपेण लाभसम्भवेन प्रश्नजिज्ञासोपयुक्तसङ्क्षिप्तसकलशास्त्रार्थाकथनप्रयुक्तन्यूनतापरिहाराय विशेषणानां तत्कथनपरत्वं सर्वतोऽपि ज्याय इत्यभिप्रेत्य प्रवृत्तस्यान्तिमस्य सर्वतोऽपि प्राबल्यमिति पक्षाणामुत्तरोत्तरप्राबल्यक्रमो द्रष्टव्यः ।

स० — शास्त्रपरिसमाप्तिकारकमङ्गलोपयुक्तार्थप्रतिपादनापेक्षया शास्त्रार्थकथनमतीवान्तरङ्गमित्याशयेनाह ॥ **अथवा श्रोतृबुद्धीति** । ननु करशिरःसंयोगादेरेव वन्दनत्वात्कथं वन्द्यमित्यनेन प्रथमसूत्रार्थजिज्ञासोक्तिरित्यत आह ॥ **मनोवृत्तेरिति** । कायिकादौ भगवद्विषयकमनोवृत्तिपूर्वकत्वाभावे न नमस्कारत्वमत आवश्यकत्वाद्भगवद्विषयकमनोवृत्तिरेव वन्दनमिति भावः ॥ **तद्विशेष एवेति** । तथाच सामान्यशब्दस्य विशेषे पर्यवसानेनोक्तार्थप्राप्तिरिति भावः । **अखिलवेदार्थश्रवणादीति** । 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादि'त्यादौ वेदार्थश्रवणादेरेव निरूपितत्वादेवमुक्तम् । अशेषविशेषतोऽपि प्रियतममिति भक्तिरुक्ता । अशेषात् स्वात्मीयसमस्तवस्तुनो विशेषेण प्रियतममिति । वैराग्योक्तिः कथमागतेत्याकाङ्क्षायामाह ॥ **ल्यब्लोपेत्यादिना** । 'ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्ये'ति वार्तिकादिति भावः ॥ **ममेति** । इयदामननादित्यत्र प्राणस्य अधिकार्युत्तमत्वकथनाद्भाष्यकारस्य च तदंशावतारत्वात् इति भावः ।

प०— ननु बुद्धिचातुर्येण नानाप्रकारेण नारायणपदस्य निर्वचनसम्भवेऽप्येवंरूपेणैव तत्राप्येतावद्भिरेव निर्वचनैर्नारायणस्तुतौ न प्रबलहेतुं पश्यामः । श्रोतृबुद्ध्यानुकूल्यादिप्रयोजकस्यैवादाववश्यवक्तव्यादित्यतो वा 'व्याख्यां करोमी'तिवक्ष्यमाणवर्तमाननिर्देशघटनाय वा योजनान्तरमाह ॥ **अथवेति । प्रपञ्चं जिज्ञासव इति** । 'सनाशंसभिक्ष उरि'त्युप्रत्ययान्तजिज्ञासुपदप्रयोगे 'न लोकाव्ययनिष्ठाखलर्थतृनामि'ति षष्ठीनिषेधाद्द्वितीयोक्ता । प्रपञ्चविषयकजिज्ञासावन्तो भवन्तीत्यर्थः ॥ **तत्र शास्त्रमिति** ब्रह्मशब्दार्थरूपगुणपूर्णत्वे तदुपपादकजगज्जन्मादिहेतुत्वलक्षणे चेत्यर्थः । तेन भाष्ये आद्यद्वितीयसूत्रार्थयोः मध्ये तृतीयसूत्रार्थोक्तिः । पूर्वोत्तरयोरन्वयेन द्वयोरपि शास्त्रप्रमाणकत्वसूचनायेत्युक्तं भवति । सन्न्यायरत्नावलीनयचन्द्रिकयोस्तु निखिलेत्यादिविशेषणचतुष्टयं क्रमादध्यायचतुष्टयार्थोक्तिपरमित्युक्तम् ॥ **निर्दोषमिती**ति । एतदपि शास्त्रप्रमाणसिद्धमिति सूचनाय तृतीयसूत्रार्थोक्तेः पूर्वं निवेशितमिति भावः । प्रियतमस्यैवाप्यतमत्वात्प्रियतममित्यस्यैवाप्यतममित्यर्थमुपेत्य वा आप्यतममित्यत्राप्यनुवर्तत इति भावेन वा प्रियतममाप्यतममित्युक्तम् । अनुवृत्तिपक्षे प्रियतमत्वाज्ज्ञातव्यमिति हेतुगर्भं बोध्यम् । मनसाऽऽप्यत्वस्य ज्ञातव्यत्वानतिरेकात् । ननु प्रियतममित्यनेन भक्तेर्लाभेऽप्यशेषेत्यनेन कथं वैराग्यलाभ इत्यत आह ॥ **ल्यब्लोपेति** । पञ्चमीविधाने 'ल्यब्लोपे कर्मण्युपसङ्ख्यानमि'ति वार्तिके ल्यबन्ताप्रयोगे तदर्थे गम्यमाने ल्यबन्तं प्रति कर्मकारके पञ्चमी वाच्येत्युक्तत्वादिति भावः । तर्हीश्वरज्ञानस्य सर्वसदधिकारित्वान्ममेति व्यर्थमित्यत आह ॥ **इयदिति** । उपासनापादे 'इयदामननात्'दित्यधिकरणे उपासनाधिकारिणामियदेतावन्मुख्यप्राणावधित्वमेव । 'प्राणो वाव सर्वेभ्यो भूयानि'त्यामननादिति प्राणस्य सर्वाधिकार्युत्तमत्वोक्तेर्ग्रन्थकृतश्च प्राणावतारत्वान्ममेति युक्तमित्यर्थः । आदिपदेन 'त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठा'दित्यादेः प्राणोत्तमत्वपरस्य परिग्रहः । प्रियतममित्यस्य प्रागाप्यतममिति प्रतिपदं दत्तम् । तदेवानुवदति ॥ **आप्यतममिती**ति । **नित्यसिद्धत्वादिति** । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इत्यादेरिति भावः ॥ **तमपेति** । अतिशयार्थकतमप्प्रत्ययेन श्वेतद्वीपादिस्थरूपविशेषप्राप्तिरेवेहाप्तिशब्दार्थ इति भावेन तां प्राप्तिं विशेषणयुक्तां करोतीत्यर्थः । इतिशब्द आद्यपद्यव्याख्यासमाप्तौ ।

या०— शास्त्रोत्पादकमङ्गलोपयुक्तार्थप्रतिपादनापेक्षया शास्त्रार्थकथनमतीवान्तरङ्गमित्याशयेनाह ॥ **अथवा श्रोतृबुद्धीति** । ननु करशिरःसंयोगादेरेव वन्दनत्वात्कथं वन्द्यमित्यनेन प्रथमसूत्रार्थजिज्ञासोक्तिरित्यत आह ॥ **मनोवृत्तेरिति** ॥ **तत्प्रवणतेति** । मत्तस्त्वमुत्कृष्ट इति स्वावधिकमुत्कर्षविषयकतेत्यर्थः । ततश्च करशिरःसंयोगादावुक्तभगवद्विषयकमनोवृत्तिविशेष एव वन्दनम् । तच्च सदा क्रियमाणमुपासनारूपमेव पर्यवस्यति । अत एव सदेत्यस्यात्रोत्तरत्र चान्वय उक्त इति भावः । नन्वेवमपि वन्दनं न मननाख्यजिज्ञासेत्यत आह ॥ **जिज्ञासाऽपीति** ॥ तद्विशेष एव मनोवृत्तेस्तत्प्रवणताविशेष एव । भग-

वदुत्कर्षविषयकमननरूपमनोवृत्तिविशेष एवात्र विवक्षितजिज्ञासेति यावत् । 'सोपासना च द्विविधे'-त्यादिवचनादिति भावः । तथाच सामान्यवाचकेन वन्दनेन तद्विशेषरूपा जिज्ञासा लक्ष्यत इति भावः ॥ **अखिलवेदार्थश्रवणादीति** । 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादि'त्यादिनोपासनापादे सर्ववेदार्थश्रवण-मनननिदिध्यासनानि निरूपितानीत्यर्थः । नन्वशेषविशेषतोऽपि प्रियतममिति भक्तिरुक्ताऽस्तु । अशेषा-त्स्वात्मात्मीयसमस्तवस्तुनो विशेषेण प्रियतममिति वैराग्योक्तिस्तु कथमागतेत्यपेक्षायामाह ॥ **ल्यब्लोपे-त्यादिना** । 'ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्ये'ति वार्तिकादिति भावः ॥ **ममेतीति** । 'इयदामननादि'त्यत्र प्राणस्याधिकार्युत्तमत्वकथनाद्भाष्यकारस्य च तदवतारत्वादिति भावः ।

**श्री०** — श्रोतृबुद्ध्यनुकूलनाय वक्ष्यमाणग्रन्थार्थविषयीकरणाय । प्रपञ्चो विस्तारः ॥ **तस्य-जीवादीति** । मनोवृत्तिप्रवणतालक्षणजिज्ञासारूपवन्दनस्य जीवादिविषयकत्वव्यावृत्तय इत्यर्थः । ननु कथमनेन वैराग्यस्य साक्षात्कारसाधनत्वं सङ्गृहीतमित्यतोऽशेषविशेषत आप्यतममित्येतद्व्याचष्टे ॥ **अशेषा-निति** । आप्यतममित्यस्यार्थो ज्ञातव्यतममिति । आप्तिरवगतिः । गत्यर्थानां ज्ञानार्थत्वात् । साक्षा-त्कर्तव्यतममित्यर्थः । प्रियतममिति प्रीतिविषयत्वकथनेन भक्तिरुक्तेति द्रष्टव्यम् ॥ **नित्यसिद्धत्वादिति** । सुप्तावित्यर्थः । तामाप्तिम् । तमबर्थभूतोऽतिशयो लिङ्गशरीरभङ्गरूपो द्रष्टव्यः । तथा चापरोक्षज्ञाना-नन्तरमर्चिरादिमार्गेण कार्याकार्यब्रह्मसमीपं प्राप्तिः । कार्यात्यये तदध्यक्षेण सह लिङ्गशरीरभङ्गवद्भिः प्राप्यमित्यर्थः । तथाच नाप्तेः सुप्तिसाधारण्यमिति भावः । इतिशब्दः प्रथमश्लोकव्याख्यानसमाप्तौ ॥

**च०** — शास्त्रार्थभूतनारायणाभिधायकपदविवरणरूपतातः शास्त्रार्थाभिधायकता श्रेयसीत्याशयेन कल्पान्तरमनुधावति ॥ **अथवेति** । सङ्क्षेपप्रपञ्चशब्दौ कर्मसाधनघञन्तौ सङ्क्षिप्तप्रपञ्चनीयार्थतात्पर्यकौ । भावसाधनघञन्ततामाश्रित्यापि सनाशंसेतिविहितो प्रत्ययान्तसमभिव्याहारे न लोकेति षष्ठी प्रतिषेधात्सुपो धात्विति लुप्तद्वितीयोपस्थापिता या प्रपञ्चनक्रियाविशेषितकर्मता तन्निरूपकजिज्ञासाश्रया इति व्याचख्युः । कर्मसाधनकृत्यप्रत्ययान्तवदितिनिर्देशेन प्रथमसूत्रार्थाभिहितिं सङ्घटयति ॥ **मनोवृत्तेरिति** । **तत्प्रवणतेति** । स्वाबधिकभागवतोत्कर्षविषयकतेत्यर्थः । तथाच करशिरःसंयोगादौ तादृशोत्कर्षविषयकमनोवृत्तिपूर्वकत्व-प्रतिसंधानाभावदशायां ल्युडन्तवन्दतिनिर्देशाभावेन 'नागृहीतविशेषणा धीर्विशिष्टमवगाहत' इति न्यायेन विशेषणीभूतावश्यकतादृशमनोवृत्तिविशेष एव वन्दतिनिर्देश्यतोपेयत इति भावः । **तद्विशेष एवेति** । तथाच वन्दत्यभिधेयचेतोवृत्तिविशेषस्य यदुपादानं तदुपादेयत्वसम्बन्धाद्वन्दतिना जिज्ञासा लक्षणया प्रत्याय्यत इति भावः । तस्यासम्भाव्यसम्भावकतापन्नलक्षणद्वयवैशिष्ट्यस्य । **अध्यायशेषेणेति** । समन्वयनयमारभ्याध्यायसङ्गत्यूरीकृतेरिति भावः । तद्विषयता शास्त्रनिरूपितविषयता । वैराग्यावगम-

कतामपि सङ्गमयति । **ल्यब्लोपेत्यादि** । श्वशुराज्जिहेति प्रासादात्प्रेक्षत इत्याद्यनुरोधेन ल्यब्लोपे कर्मण्यधिकरणे चोपसङ्ख्यातत्वात्पञ्चम्या इति भावः ॥ **ममेतीति** । ताद्रूप्येण भाष्यकृतोऽवतीर्णत्वादिति भावः । सप्तकल्प्यां पूर्वपूर्वप्राबल्यक्रम उत्तरोत्तरप्राबल्यक्रमो वा निबन्धान्तरदिशाऽवसेयः ।

**अनु.— तमेव शास्त्रप्रभवं प्रणम्य जगद्गुरूणां गुरुमञ्जसैव ॥**
**विशेषतो मे परमाख्यविद्याव्याख्यां करोम्यन्वपि चाहमेव ॥ २ ॥**

**सु०— नारायणप्रणामस्येव गुरुप्रणामस्याप्यभिमतसिद्ध्यङ्गतया कार्यारम्भेऽवश्यमनुष्ठेयत्वात्तदाचरणपुरःसरं ब्रह्ममीमांसाशास्त्रव्याख्यानं समर्थयमानः प्रतिजानीते ॥ तमेवेति । तं पूर्वप्रणतं नारायणमेव । अन्वपि पुनरपि प्रणम्य भक्त्याद्युपेततालक्षणेन प्रकर्षेण नत्वाऽहं परमाख्यविद्याया ब्रह्ममीमांसाशास्त्ररूपाया व्याख्यां करोमीति सम्बन्धः । वर्तमानसामीप्याद्वर्तमानव्यपदेशः । सङ्क्षेपतो व्याख्यानस्य प्रक्रान्तत्वाद्वा ।**

**वा०—** द्वितीयपद्यस्य सूत्रव्याख्यानत्वभ्रान्तिं वारयन्नेव तत्प्रतिपाद्यं सहेतुकमाह ॥ **नारायणेति** । सूत्रव्याख्यानकरणस्य परमाख्यविद्याव्याख्यां करोमीति प्रतिज्ञानेनासङ्गतिशङ्कां निराकुर्वन्नन्वपीत्यस्योभयत्र सम्बन्धमभिप्रेत्य व्यवहितत्वात्सम्बन्धं च दर्शयति ॥ **तमित्यादिना** ॥ **वर्तमानेति** । 'वर्तमानसामीप्ये वर्तमानवद्वे'तिसूत्रे चातुर्वर्ण्यादिसिद्ध्यर्थं स्वार्थिकष्यञ्ज्ञापकः ष्यञन्तः सामीप्यशब्दः । ( 'वर्तमानसामीप्ये वर्तमानवद्वा' । समीपमेव सामीप्यम् । स्वार्थे ष्यञ् । 'वर्तमाने लडि'त्यारभ्यो'णादयो बहुलमि'ति यावत् येनोपाधिना प्रत्यया उक्तास्तथैव वर्तमानसमीपे भूते भविष्यति च वा स्युः । कदा आगतोऽसि । अयमागच्छामि । अयमागमम् । कदा गमिष्यसि । एष गच्छामि । गमिष्यामि वा । येनोपाधिनेति । तथा हि । पूङ्यजोः शानन्विहितः स ताभ्यामेव न तु धात्वन्तरात् । तच्छीलादिविशिष्टे कर्तर्यलंपूर्वात्कृञ इष्णुजुक्तः सोऽपि तस्मिन्नुपाधौ सत्येवेत्यादि । कदाऽऽगतोऽसीति भूतकालेन प्रश्नवाक्यमुदाहरणे भूतकालाभिव्यक्तये । एवं कदा गमिष्यसीत्यत्राप्यूह्यम् । उदाहरणयोरयमेष इति पदाभ्यामागमनाविनाभूतं प्रस्वेदपरिकरबन्धादियुक्तं तत्प्रतिनिर्दिश्यते । इदानीमागमनमिति ध्वनयितुं तेन कदेति प्रश्नं प्रत्यार्थिकमुत्तरं सङ्गच्छते । सामीप्यं च द्योतितं भवति । आक्षेपेणोपपत्तिमाश्रित्य प्रत्याख्यातमिदमाकरे । ) तथा च वर्तमानसमीपे भूते भविष्यति चार्थे वर्तमानाद्धातोर्वर्तमाने लडित्यारभ्य यावदुणादयो बहुलमिति विभाषया वर्तमानवत्प्रत्यया भवन्तीति सूत्रार्थनिष्पत्त्या वर्तमानसमीपे भविष्यति करोमीति लडित्यर्थः । एतच्च प्रतिपत्तिविशेषानाश्रयणेनाद्यपद्यपूर्वव्याख्यानषट्कपक्षे । अन्यथा गच्छामीत्यादेर्वर्तमानार्थत्वेऽपि कालान्तरस्य प्रश्नवाक्यबललभ्यत्वेन वाक्यकालस्य पद-

संस्कारेऽनुपयोगेन न तत्र वर्तमानवत्प्रत्यया इति विशेषप्रतिपत्तारं प्रत्येतत्समाधानस्यासम्भवात् । न च प्रकृते तादृशप्रश्नवाक्यस्याभावान्न तद्बलेन कालान्तरलाभ इति वाच्यम् । अत्रापि प्रश्नवाक्याहरणस्य वक्तर्यावश्यकत्वादिति द्रष्टव्यम् । अन्तिमव्याख्यानानुरोधेनाह ॥ **सङ्क्षेपत इति** ॥ **प्रक्रान्तत्वादिति** । प्रारब्धत्वादित्यर्थः ।

प०— गुरुनतिवैयर्थ्यमाशङ्क्याह ॥ **नारायणेति** ॥ **अभिमतेति** । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः' इत्युक्तेरिति भावः । परमाख्यविधेत्यस्य व्यर्थतां निराह । **ब्रह्ममीमांसेत्यादि** । नन्वोतत्ववाचीत्यादिनैव सूत्रव्याख्यानस्य करिष्यमाणत्वात्ततः पूर्वग्रन्थस्य शास्त्रस्य व्याख्येयतोपयुक्तप्रमेयप्रतिपादनपरत्वात्करिष्यामीत्येव प्रयोक्तव्यं न तु करोमीति । लडन्तस्य 'वर्तमाने लडि'ति सूत्रेण प्रारब्धापरिसमाप्तिक्रियोपलक्षिते काले विवक्षिते लट् भवतीत्युक्त्या भविष्यदर्थावाचित्वादित्यत आह ॥ **वर्तमानेति** । 'वर्तमानसामीप्ये वर्तमानवद्वे'ति सूत्रादिति भावः । वर्तमानव्यपदेशे हेत्वन्तरमाह ॥ **सङ्क्षेपत इति** । श्रोतृबुद्ध्यनुकूलनायेत्यादिना पूर्वोक्तप्रकारेणेत्यर्थः ॥

श्री०— **प्रक्रान्तत्वादिति** । प्रथमश्लोकेनेत्यर्थः । सङ्क्षेपतः सकलशास्त्रार्थनिरूपणतया प्रथमश्लोकस्य व्याख्यातत्वादिति भावः ।

च०— अथाद्यसूत्रावयवव्याख्यारूपोतत्ववाचीत्यादिप्राक्तनग्रन्थस्य सूत्रव्याख्येयतासमर्थनौपयिकप्रमेयप्रतिपादनतात्पर्यकतया भविष्यदर्थकप्रत्ययप्रयोगस्यैवौचिती न प्रारब्धापरिसमाप्तक्रियोपलक्षितकालविवक्षानिबन्धनवर्तमानार्थलट्प्रयोगस्येत्यत आह । **वर्तमानेति** । बीजान्तरमभिधत्ते । **सङ्क्षेपत इति** । श्रोतृबुद्धीत्याद्युक्तदिशेति भावः ।

**सु०—ननु प्रणतस्य पुनः प्रणामः किमर्थः । नहि प्रणामावृत्तिर्विघ्नविघातादिहेतुरित्यत्र नियामकमस्ति । भावे वा पूर्वश्लोक एव बहुशः सन्नमामीति वक्तव्यम् । मैवम् । गुरुत्वेनात्र प्रणामाचरणात् । कथं नारायणस्य गुरुत्वमित्यत आह ॥ शास्त्रप्रभवमिति । शास्त्रशब्देन प्रकृतत्वाद्ब्रह्ममीमांसाशास्त्रं वेदादिकं चोच्यते । प्रभवत्युत्पद्यते प्रथममुपलभ्यते वा यस्मात्सः प्रभवः । यथासम्भवं शास्त्रस्य प्रभवः शास्त्रप्रभवस्तम् । यो हि यच्छास्त्रे प्रवर्तते तस्य तत्प्रभवो गुरुरिति प्रसिद्धमेव । प्रकृतशास्त्रसम्प्रदायप्रवर्तकत्वाच्च नारायणस्य गुरुत्वमित्याह ॥ जगद्गुरूणामिति । जगत एतच्छास्त्रप्रवक्तॄणां ब्रह्मादीनामञ्जसा मुख्यतया न तु वयोऽधिकत्वादिमात्रेण गुरुम् । अस्य शास्त्रस्य प्रवक्तारमिति यावत् । प्रकारान्तरेण गुरुत्वं नारायणस्य**

**समर्थयते ॥ विशेषत इति । गुरुमिति वर्तते । विशेषत इति साक्षादुपदेष्टृत्वेन न तु जगत इव परम्परया । अत्र यदि शास्त्रप्रभवमित्याद्येवोच्येत तदा पृथक्प्रणामेन देवताया गुरोश्च पार्थक्यशङ्का स्यात् । तदर्थं तमेवेत्युक्तम् । न चैवं पृथक् प्रणामानुपपत्तिः । निमित्तद्वयसमावेशे नैमित्तिकविलोपनियमाभावात् । शिष्यशिक्षायै चैतद्ग्रन्थे निवेशनम् । शिष्याणां चास्ति गुरुदेवताभेदः । तदपेक्षयैव जगद्गुरूणामित्युक्तम् । अन्यथा विशेषतो मे इत्युक्तमयुक्तं स्यात् ।**

**वा०**— अत्र शास्त्रप्रभवमित्यादिविशेषणानां प्रणामप्रयोजकत्वं प्रतीयमानं साक्षान्न सम्भवतीति गुरुत्वमुखेनैव तदित्यभिप्रेत्य गुरुत्वविवक्षाया आवश्यकत्वं दर्शयितुं शङ्कामुत्थापयति ॥ **नन्विति** । ननु श्रेयांसि बहुविघ्नानीत्यतो विघ्नानां बहुत्वाद्विघ्नसमसङ्ख्यमङ्गलस्यैवाभिमतसिद्ध्यङ्गत्वात्तदावृत्तिर्युक्तेत्यत आह । **भावे वेति** ॥ **प्रकृतत्वादिति** । अखिलैः सुवाक्यैरित्यनेनेत्यर्थः । उभयत्रोभयान्वयभ्रान्तिं निवारयति ॥ **यथासम्भवमिति** । अत्र प्रवर्तत इत्युक्ता प्रवृत्तिर्वक्ष्यमाणरीत्या पुरुषार्थसाधनेच्छाप्रयत्नलक्षणा द्रष्टव्या अतो न कश्चित्क्षुद्रोपद्रवः । सम्प्रदायप्रवर्तकत्वं यथैतद्विशेषणलब्धं तथाऽऽह ॥ **जगत इत्यादिना** ॥ **निमित्तसमावेश इति** । 'तत्र विप्रतिषेधाद्विकल्पः स्यादि'ति षष्ठाधिकरणे प्रतिहर्त्रुद्गात्रोर्युगपदपच्छेदे प्रतिहर्त्रपच्छेदनिमित्तकसर्ववेतसदानस्योद्गात्रपच्छेदनिमित्तकस्यादक्षिणतद्यज्ञसमाप्त्यनन्तरानुष्ठीयमानपुनर्यागे पूर्वदेयदानस्य चैकस्मिन्नेव प्रयोगे विरुद्धतयाऽसम्भवादुद्गात्रपच्छेदनिमित्तकपुनर्यागे सर्ववेतसदानेनोभयसम्भवेऽपि प्रयोगान्तरे क्रियमाणे प्रायश्चित्तनिमित्तवत्प्रयोगसाद्गुण्यासम्भवेनाशक्यतया विकल्पोक्तावपि 'प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेष' इति तृतीयाधिकरणे समाख्याया वषट्कारस्य होमाभिषवयोश्चैतेषां भक्षनिमित्तानां समवायेऽन्वयवशश्च सर्वैर्भक्षैः प्रतिपत्तिसम्भवेन बाधायोगात्समुच्चय एवेत्याश्रितत्वाज्जीवनादिनिमित्तैक्येऽपि तदावृत्तिमात्रेण नैमित्तिकदर्शपूर्णमासाद्यावृत्ते'स्तेषामौत्पत्तिकत्वादागमेन प्रवर्तेते'ति षष्ठाधिकरणे प्रतिपादितत्वेन निमित्तभेदे नैमित्तिकसमुच्चयस्य कैमुत्यसिद्धत्वाच्च प्रकृतेऽप्युभयसम्भवेन समुच्चयो युक्त इत्याशयः । एवं गुरुदेवतैक्येऽपि पृथक्प्रणाममुपपाद्येदानीं शिष्याणां गुरुदेवताभेदाद् ग्रन्थे निवेशनस्य च तच्छिक्षैकप्रयोजनकत्वाद्युक्तं पृथग्गुरुप्रणामस्य निवेशनमित्याह ॥ **शिष्येति** । अत्र शिष्याणां गुरुदेवताभेदविवक्षायां भाष्यकारीयं ज्ञापकमाह ॥ **तदिति** । जगद्गुरूणामित्युक्तं सम्प्रदायप्रवर्तकत्वं शिष्यानपेक्ष्यैव न स्वात्मानमित्यत्रापि तदीयं नियामकमाह ॥ **अन्यथेति** ।

**स०**— **यथासम्भवमिति** । वेदस्योपलम्भकत्वेन मीमांसादेरुत्पादकत्वेन प्रभव इत्यर्थः ॥ **जगत इति** । सज्जनसमुदायस्येत्यर्थः । **न चैवं पृथक्प्रणामानुपपत्तिरिति** । ननु कथमियमाशङ्का ।

गुरुत्वेनात्र प्रणामाचरणादिति समाहितत्वादिति चेत् न । गुरुत्वदेवतात्वरूपनिमित्तद्वयसमावेशेऽपि न तन्निमित्तकप्रणामद्वयं युक्तम् । प्रतिहर्त्रुद्गात्रोर्युगपदपच्छेदे तन्निमित्तयोः सर्वस्वेतसदानादाक्षिण्ययागयो-र्विकल्पस्यैवोक्तेः । तथैकस्मिन्नेव दिने संक्रमणव्यतीपातसमावेशेऽपि तन्निमित्तकश्राद्धद्वयाभावादिति शङ्कितुरभिप्रायात् । नैमित्तिकविलोपनियमाभावात् । प्रकृतेऽपि निमित्तद्वयप्रकृतप्रणामद्वयोपपत्तिरिति भावः । ननु यत्रोभयोरेकनिष्पाद्यस्यापरेण निष्पत्तिस्तत्र विलोपनियमस्यैव यत्र चापरेणापरनिष्पाद्यस्या-निष्पत्तिस्तत्राविलोपनियमस्यैव सत्त्वेन प्रकृते देवताप्रणामनिष्पाद्यस्य गुरुप्रणामनिष्पाद्यस्य वाऽन्यतरेणा-निष्पत्तौ सर्वत्र पृथक्प्रणामस्यावश्यकत्वापत्त्या तन्निष्पत्तौ त्वेकत्रापि कर्तव्यत्वापत्त्या दृष्टान्तदार्ष्टान्तिक-योर्वैषम्यमित्यतः युक्त्यन्तरेण गुरुप्रणामस्य पार्थक्येन कर्तव्यत्वं साधयितुमाह ॥ **शिष्यशिक्षायै चेति** । तथा च शिष्यापेक्षयैव मङ्गलस्य ग्रन्थे निवेशनात् शिष्याणां च गुरुदेवतयोर्भेदेन तदपेक्षया नारायण-प्रणामकरणपूर्वकं गुरुप्रणामकरणनिवेशनमुपपन्नमिति भावः । नन्वेतत्पृथक् गुरुप्रणामनिवेशनं, शिष्या-पेक्षयेत्यत्र किं भाष्यकारीयं ज्ञापकमित्यत आह ॥ **तदपेक्षयैवेति** । जगद्गुरूणां गुरुमिति उक्तम् । परम्परोपदेशकत्वस्यापि स्वापेक्षयैव सम्भवान्न शिष्यापेक्षाज्ञापकत्वमिति तत्राह ॥ **अन्यथेति** ॥ यदि जगद्गुरूणामप्युक्तपरम्परोपदेशकत्वं स्वापेक्षयैव स्यात्तदा विशेषतो मे गुरुमित्युक्तमयुक्तं स्यात् ॥ तद्विशे-षणेन स्वं प्रति साक्षादुपदेष्टृत्वेनैव गुरुत्वं न तु परम्परयेति परम्परया गुरुत्वस्य निवारणात् । अन्यथा विशेषणद्वयस्य परस्परविरोधापातादिति भावः । अन्ये तु पृथक्प्रणामनिमित्तान्तरमाह ॥ **शिष्यशिक्षायै चेति** ॥ **तदपेक्षयैव** ॥ शिष्याणां गुरुदेवताभेदप्रदर्शनापेक्षयैव ॥ अन्यथा स्वस्येव शिष्याणामपि गुरुदेवतयोरभेद(प्रसङ्ग) इत्याहुः ॥ यद्वा ननु शिष्याणामिव स्वात्मनोऽपि जगद्गुरूणामिति गुरुर्देवता-भिन्न एवोक्तः । स्वस्यापि जगदन्तःपातित्वादतो विरोध इत्यत आह ॥ **तदपेक्षयैवेति** । शिष्यापेक्ष-यैवेत्यर्थः । स्वात्मापेक्षयापि किं न स्यादित्यत आह ॥ **अन्यथेति** । अन्यथा जगच्छब्देन स्वात्मनोऽपि ग्रहणे विशेषतो मे गुरुमित्यनेन साक्षाद्गुरुत्वोक्तेः न स्वात्मापेक्षया तदिति भाव इत्याहुः ॥

प० — **प्रकृतत्वादिति** । सुवाक्यैरित्यनेनेति भावः । पौरुषेयानुरोधेनाह ॥ **उत्पद्यत इति** । अनादिवेदाभिप्रायेणाह ॥ **प्रथममिति** । 'ऋदोरप्' इतिसूत्रे ऋवर्णान्तादुवर्णान्ताच्चाप्प्रत्ययो भवति कर्तृ-भिन्नकारक इत्युक्तेरिति भावः । 'भुवः प्रभवः' इति पञ्चमीविधानाद्यस्मादित्युक्तम् । कथं गुरुत्वमित्यस्य कथमनेन निरास इत्यत आह ॥ **यो हीति** । जगतः साधुवर्गस्य । मानस्तेनेभ्य इत्यादेः । गुरूणा-मित्यस्यार्थ एतच्छास्त्रप्रवक्तृणामिति । उक्तं हि दशमतात्पर्ये । 'गुरुर्ब्रह्माऽस्य जगतो दैवं विष्णु'रित्यादि । वक्ष्यति चात्राप्युपासनापादे 'गुरुर्ब्रह्माऽखिलानां चे'त्यादि । 'कर्तृकर्मणोः कृती'ति कर्मणि षष्ठी । गुरु-मित्यस्यार्थः अस्येति । प्रागुक्तपौरुषेयापौरुषेयग्रन्थस्येत्यर्थः ॥ **साक्षादुपदेष्टृत्वेनेति** । तथाचोक्तं मध्व-

विजये । 'इतिहाससुन्दरपुराणसूत्रसत्प्रियपञ्चरात्रनिजभावसंयुतम् । अशृणोदनन्तहृदनन्ततोऽचिरादि'-त्यादि ॥ **परम्परया** ब्रह्मादिद्वारा । गुरुत्वेनात्र पुनर्नतिरिति पूर्वं समाधाने उक्तेऽपि लोके क्वचिदेकत्र पितृत्वस्योक्तरूपगुरुत्वस्य च सत्त्वेऽपि तदुभयनिमित्तकनत्यादिक्रियाऽऽवृत्तेरदर्शनाच्छङ्कते ॥ **न चेति** । अन्यथा पितृत्वस्वामित्वादिनिमित्तापि नतिः कार्येति शङ्काभिप्रायः । परिहारस्य तु, सत्यमेवम् तथापि क्वचित्तत्रादौ ऋत्विक्त्वयजमानत्वोभयनिमित्तकक्रियानुष्ठानस्यापि दृष्टेस्तथा ज्योतिराकाशादिशब्देष्वप्यन्यत्रप्रसिद्धत्वाद्यनेकनिमित्तकविचारक्रियायाश्च दृष्टेर्दर्शेष्टीनामाग्नेयादीनां तिसृणामेककाले समावेशेन तन्निमित्तकानां प्रयाजानां सकृदनुष्ठानेऽपि दर्श एव सांवत्सरिकप्राप्तौ दार्शिकस्य सांवत्सरिकस्य च श्राद्धस्य करणवदिहाभ्यर्हिततत्वाद्देवतात्वगुरुत्वरूपनिमित्तद्वयसमावेशेऽपि नैमित्तिकस्य नमनस्य तत्प्रीत्यतिशयार्थं पुनरनुष्ठानोपपत्तेरिति भावः । तर्हि मनसैव कार्यं किं ग्रन्थे निबन्धनेनेत्यत आह ॥ **शिष्येति** । ग्रन्थे तन्निवेशनं च शिष्यशिक्षार्थम् । अस्माभिरपि देवतानतिर्गुरुनतिश्च कार्येत्येवं शिष्याणां बुद्ध्युत्पादनद्वारा तदनुष्ठानाय । 'यद्यदाचरति श्रेष्ठ' इत्यादेः । नन्वस्तु तेषामपि देवतानतिरेव तस्या एव गुरुत्वादित्यत आह ॥ **शिष्याणां चेति** । शिष्याणां गुरुदेवताभेदात्तैः पृथङ्नतिः कार्येति शिष्यशिक्षार्थमेतन्निवेशनमिति कथं ज्ञातव्यमित्यत आह ॥ **तदपेक्षयैवेति** । शिष्याणां गुरुदेवताभेदापेक्षयैवेत्यर्थः । जगद्गुरूणां गुरुमित्युक्तावपि जगत्प्रति साक्षाद्गुरुत्वं किं न स्यादित्यत आह ॥ **अन्यथेति** । साक्षादपि गुरुत्वे विशेषतः साक्षान्मे गुरुमित्येतदयुक्तं स्यात् । साक्षात्त्वबोधकस्य विशेषत इति पदस्य व्यावर्त्याभावात् । मे गुरुमित्येतावतैव सिद्धत्वात् । तेन ज्ञायते जगच्छब्दितशिष्याणां ब्रह्मादयो गुरवः देवता तु नारायण इति शिष्याणां गुरुदेवताभेदज्ञापनमस्य फलम् । तेन च तैः पृथङ्नतिः कार्येति शिक्षार्थमेव निवेशनमिति ।

**या० — जगत इति** । सज्जनसमुदायस्येत्यर्थः ॥ **नचैवं पृथक्प्रणामेति** । ननु कथमियमाशङ्का 'गुरुत्वेनात्र प्रणामाचरणादि'ति समाहितत्वादिति चेन्न । गुरुत्वदेवतात्वरूपनिमित्तद्वयसमावेशे अपि न तन्निमित्तकप्रणामद्वयं युक्तम् । प्रतिहर्तृद्गात्रोर्युगपदपच्छेदे तन्निमित्तयोः सर्ववेतसदानदाक्षिण्ययोः विकल्पस्यैवोक्तत्वेनैकस्मिन्प्रयोगे तदुभयानुष्ठानाभावात् । तथैकस्मिन्नेव दिवसे सङ्क्रमणव्यतीपातरूपनिमित्तद्वयसमावेशे तन्निमित्तकश्राद्धद्वयाभाववदिति शङ्कितुरभिप्रायः ॥ **नैमित्तिकविलोपेति** । अमावास्यायाः सांवत्सरिकश्राद्धदिनत्वे तदुभयनिमित्तकश्राद्धद्वयस्यापि विहितत्वेन निमित्तद्वयसमावेशे नैमित्तिकद्वयविलोपनियमाभावादित्यर्थः । तथाच तद्वत्प्रकृतेऽपि निमित्तद्वयप्रयुक्तप्रणामद्वयोपपत्तिरिति भावः । नन्वेवं पृथक् प्रणामस्य नावश्यंकर्तव्यतेत्यतस्तत्र निमित्तान्तरमाह ॥ **शिष्यशिक्षायै वेति** । अत्र निवेशनानुमितं प्रणामाचरणमपि ग्राह्यम् । तस्याप्युक्तरीत्या शिष्यशिक्षार्थत्वात् । अतो नासङ्गतिरित्यवधेयम् ।

तदपेक्षयैव । शिष्याणां गुरुदेवताभेदापेक्षयैव । अन्यथा । स्वस्येव शिष्याणामपि गुरुदेवतयोरभेदे । यद्वा ननु शिष्याणामिव स्वात्मनोऽपि जगद्गुरूणामिति गुरुर्देवताभिन्न एवोक्तः । स्वस्यापि जगदन्तःपातित्वात् । अतो विरोध इत्यत आह ॥ **तदपेक्षयैवेति** । शिष्यापेक्षयैवेत्यर्थः । स्वात्मापेक्षयाऽपि किं न स्यादित्यत आह ॥ **अन्यथेति** । अन्यथा जगच्छब्देन स्वात्मनोऽपि ग्रहणे ।

श्री०— ननु न देवताप्रणामो व्यसनितया क्रियते । किन्तु विघ्नविघातादिप्रयोजनोद्देशितया । न प्रणामावृत्तिरेव विघ्नविघातहेतुरतः प्रणतस्यापि पुनः प्रणामोऽयुक्त एवेत्यत आह ॥ **न हीति** ॥

च०— **गुरुत्वेनेति** । निरूपकतयाप्रणामान्वयि हेतुत्वं तृतीयाऽर्थः । **यस्मात्स प्रभव इति** । 'ऋदोर'बित्यनुशिष्टाप्प्रत्ययस्य कर्तृभिन्नकारकसामान्यार्थकत्वस्याकरे व्यक्ततया 'भुवः प्रभव' इति सूत्रविहितपञ्चम्युपस्थाप्यापादानार्थताया निर्बाधत्वादिति भावः । जगतः योग्यचेतनसङ्घातस्य । प्रकृत्यर्थजगदन्वितषष्ठीप्रत्यायितसम्बन्धितापन्नानां लुप्ततत्वपदप्रकृतिकषष्ठ्यर्थकर्मतानिरूपकोपदेशनक्रियाकर्तृणामिति अर्थः । परस्परविरहसमानाधिकरणतया प्रतीतपितृत्वस्वामित्वरूपनिमित्तयोरेकत्र समावेशेऽपि तन्निमित्तकनतिभेदाभावेन प्रतिहर्तुरुद्गातुश्च युगपदपच्छेदे तन्निमित्तकसर्ववेतसदानादाक्षिण्ययोरेकप्रयोगानुष्ठानासम्भवेन तद्विकल्पस्यैवोक्त्या प्रकृतेऽपि देवतात्वगुरुत्वरूपनिमित्तभेदेऽपि तन्निमित्ता नतिरेकैवास्तामित्याशयेनाशङ्कते॥ **न चैवमिति** । समाधत्ते । **निमित्तद्वयसमावेश इति** । ज्योतिराकाशादिशब्देषु अन्यत्रोभयत्रान्यत्रैव प्रसिद्धत्वरूपसमाविष्टनिमित्तभेदाधीनस्य प्रथमतृतीयतुरीयचरणनिवेशनस्य क्वचित्सत्रादौ ऋत्विग्यजमानोभयनिमित्तकक्रियानुष्ठितेश्च दर्शनेन प्रकृतेऽपि देवतात्वगुरुत्वरूपनिबन्धनभेदनियन्त्रिततत्कार्यभूतप्रणामभेदः सङ्गच्छत इत्याशयः । गुरुदेवतानत्युभयधर्मिकस्वविधेयत्वप्रकारकासन्निहितविनेयाधिकरणकानुसंहित्युत्पादनफलितारूपबीजान्तरं दर्शयति ॥ **शिष्येत्यादि** । तदपेक्षया विनेयापेक्षया ॥ **अन्यथा** । स्वात्मनोऽपि इतरतुल्यकक्ष्यापन्नतया गृहीते ।

**सु०—स्यादेतत् । अथातो ब्रह्मजिज्ञासेत्यादिकं ग्रन्थं व्याख्यातुमयं देवतादिप्रणामः । न चायं व्याख्यातव्यः । अर्थविवक्षापूर्वकस्यैव पौरुषेयवाक्यस्य व्याख्यातव्यत्वात् । न हि मातृकामात्रव्याख्याने प्रेक्षावान्प्रवर्तते । न चास्यार्थविवक्षापूर्वकत्वे मानमस्ति । प्रणयनमात्रस्य व्यभिचारित्वात् । प्रेक्षावत्प्रणयनस्य चानिश्चयात् । निश्चये वा विषहरमन्त्रस्येव जपादिनाऽभ्युदयसिद्धये निर्माणोपपत्तेः । गृहीतसङ्गतेरर्थप्रतिभासो हि विषहरमन्त्रेऽपि समानः । न चार्थविवक्षापूर्वकत्वमात्रेणोपादेयतया व्याख्यानं युक्तम् । विप्रलम्भकादिवाक्यव्याख्यानप्रसङ्गात् । किं नाम याथार्थ्ये च सति । न चास्य याथार्थ्ये मानमस्ति । तद्भावेऽपि तथाविधवाक्यान्तरपरित्यागेनास्यैव व्याख्याने कारणं वक्तव्यमित्याशङ्कानिरासाय परमाख्यविधेत्युक्तम् ।**

**वा०**— व्याख्यां समर्थयमान इत्युक्तं परमाख्यविधेत्यंशस्य व्याख्यासमर्थनरूपत्वं घटयितुं तन्निवर्त्यां शङ्कामुत्थापयति ॥ **स्यादेतदिति** । नायं ग्रन्थो व्याख्यातव्योऽर्थावबोधोद्देश्यकत्वशून्यत्वान्मातृकादिवदिति विवक्षितानुमाने वेदवदस्याप्यर्थावबोधोद्देश्यकत्वादसिद्धिरित्याशङ्कायां वेदस्य फलवदर्थावबोधपर्यन्तस्वाध्यायाध्ययनविधिनाऽर्थावबोधोद्देश्यकत्वसिद्धावपि पौरुषेयेऽर्थावबोधोद्देश्यकत्वतदभावयोर्मन्वादि ग्रन्थमातृकामात्रयोर्दृष्टत्वेन नात्र वेदवदर्थावबोधोद्देश्यकत्वसिद्धिरित्यभिप्रायेणोत्तरवाक्योक्तस्य पौरुषेयवाक्येत्यंशस्य समर्थनाय प्रसक्तिमाह ॥ **अथात इति** ॥ **अयमिति** । प्रकृतः पौरुषेय इत्यर्थः । अर्थविवक्षापूर्वकत्वं चार्थावबोधोद्देशकत्वं वेदादिसाधारणमभिमतं न तु तद्व्यावृत्तं वक्तृविवक्षापूर्वकत्वम् । परिहारग्रन्थानानुगुण्यापत्तेः । अत्र व्यतिरेकदृष्टान्तो मन्त्रादिग्रन्थोऽभिमतः । विपक्षे बाधकमुखेनान्वयदृष्टान्तमाह ॥ **न हीति** । हेत्वसिद्धिं परिहरति ॥ **न चेति** ॥ **व्यभिचरितत्वादिति** । वर्णसमाम्नायरूपे मातृकामात्र इति शेषः ॥ **अनिश्चयादिति** । तथा च सन्दिग्धासिद्धिरिति भावः । ननु 'भगवान्पुरुषोत्तमः । अवतीर्णो महायोगी सत्यवत्यां पराशरात्' इत्याद्यागमादेव प्रणेतुः प्रेक्षावत्त्वनिश्चय इत्यतो विशिष्टहेतोरपि प्रेक्षावत्प्रणीतेऽर्थावबोधोद्देशशून्ये विषहरमन्त्रे व्यभिचारः । तद्वदेव च प्रकृतसाध्याभावेऽपि जपादिनाऽभ्युदयसिद्धये प्रेक्षावत्प्रणयनोपपत्तेरन्यथासिद्धिश्चेत्याशयेनाह ॥ **निश्चये वेति** । ननु हेत्वन्तरासम्भवेऽपि प्रकृतग्रन्थादर्थावभासादेव तस्यार्थावबोधोद्देश्यकत्वसिद्धिरित्यतोऽगृहीतसङ्गतेरर्थावभासाभावाद्गृहीतसङ्गतेरर्थावभासस्य समवेतार्थाप्रतिपादकत्वेनार्थावबोधोद्देश्यकत्वशून्यतयोभयसम्प्रतिपन्ने विषहरमन्त्रेऽपि सत्त्वेन पूर्वोक्तदोषद्वयानतिवृत्तिरित्याशयेनाह ॥ **गृहीतसङ्गतेरिति** । एवं विद्याशब्दार्थतयाऽभिमतयथार्थज्ञानसाधनतान्तर्गतार्थज्ञानसाधनतांशनिवर्त्यां शङ्कामुत्थाप्य ब्रह्मसूत्रेभ्यः उपयुक्तार्थप्रतिभासनेन विषहरमन्त्रवैधर्म्यात्पुनस्तस्यार्थवित्तय इत्याद्यागमाच्चार्थावबोधोद्देश्यकतासिद्धिरित्याशङ्कायां तथापि सिद्धान्त्यभिमतमुपादेयतया व्याख्यानं तत्प्रयोजकाभावान्न सम्भवतीत्येवंरूपां विद्याशब्दार्थान्तर्गतयथार्थांशनिवर्त्यां शङ्कामुत्थापयति ॥ **न चेति** । बोधकस्य सतो बाधकाभावे प्रामाण्यस्य स्वतः सिद्धत्वात्किं तत्र प्रमाणान्तरगवेषणयेत्यतः परशब्दव्यावर्त्याशङ्कामुत्थापयति ॥ **तद्भावेऽपीति** ।

**स०**— **स्यादेतदिति** । प्रमाणभूतस्यैव व्याख्येयत्वात् ब्रह्मसूत्राणां पौरुषेयत्वेन वेदानपेक्षप्रामाण्याभावादित्याशयः । पौरुषेयाणामपि प्रमाणत्वं व्याख्येयत्वं च दृष्टमित्यतो विमतमव्याख्येयं अर्थविवक्षापूर्वकत्वरहितत्वे सति पौरुषेयवाक्यत्वादित्यनुमानेन तत्साधयन् यदव्याख्येयं न भवति तत् विवक्षापूर्वकत्वरहितत्वविशिष्टपौरुषेयवाक्यत्वरहितं इति व्यतिरेकं मनसि निधाय तद्राहित्यस्य च पौरुषेयवाक्यत्वरूपविशेष्यराहित्येन वा अर्थविवक्षापूर्वकत्वराहित्यरूपविशेषणराहित्येन वा पर्यवसानमभिप्रेत्याद्ये वेद एव दृष्टान्त इति स्फुटत्वात्तदनुक्त्वा द्वितीये मन्वादिवाक्यं दृष्टान्त इति भावेनाह ॥ **अर्थविवक्षेति** ।

अत्र व्याख्येयस्यार्थविवक्षापूर्वकत्वे सति पौरुषेयवाक्यत्वदर्शनादिति वक्तव्ये अव्याख्येयत्वरूपसाध्यव्यतिरेकस्य व्याख्येयत्वस्य व्यतिरेकिणि व्याप्यस्य उक्तहेतुव्यतिरेकरूपव्यापकायोगव्यवच्छेदसिद्ध्या व्यभिचारशङ्कानिरासार्थमियमुक्तिरिति ज्ञातव्यम् । आवश्यकं व्यतिरेकं प्रथममभिधाय यदर्थविवक्षापूर्वकत्वरहितत्वे सति पौरुषेयं वर्णसमूहरूपं तदव्याख्येयं यथा वर्णसमवाय: केनचित् इत्यन्वयमाह ॥ **न हीति** । हेतोरसिद्धिमाशङ्क्याह ॥ **न चास्येति** । विमतमर्थविवक्षापूर्वकं प्रणीतत्वात्सम्मतवदिति चेन्न उन्मत्तवाक्ये व्यभिचारादित्याह ॥ **प्रणयनेति** । प्रेक्षावद्विशेषणोपादाने व्यासस्य प्रेक्षावत्त्वे मानाभावात्सन्दिग्धासिद्धो हेतुरित्याह ॥ **प्रेक्षावदिति** । अर्थविवक्षारहितेऽपि विषहरमन्त्रे प्रेक्षावत्प्रणीतत्वसद्भावादनैकान्तिको अन्यथासिद्धोऽप्रयोजकश्चेत्याह ॥ **निश्चये वेति** । विषहरमन्त्रे कथमर्थविवक्षापूर्वकत्वं नास्तीति चेत् न । समवेतार्थाप्रकाशनात् हुंफडादिवज्जपमात्रेणादृष्टसिद्ध्यर्थं प्रणयनात् । ननु सूत्राण्यर्थविवक्षापूर्वकाणि प्रतिभासमानार्थकत्वादिति चेन्नेत्याह ॥ **गृहीतेति** । बालस्यार्थाप्रतिभासात् । गृहीतसङ्गतेश्च प्रतिभासमानार्थोऽनुपयोगादविवक्षित इत्यर्थ: । ननु ब्रह्मसूत्रेषु प्रतिभासमानार्थस्योपयुक्तत्वाद्विवक्षितार्थान्येवेति चेत् किमेतावता व्याख्येयं किं वा याथार्थ्येऽपि । नैतावतेत्याह ॥ **तद्भावेपीति** । सर्वोत्कर्षे सत्यस्यैव व्याख्यानम् । न चास्यान्यस्मात्कोऽप्युत्कर्षो दृश्यत इति ।

प० — परमाख्यविद्येत्येतदवतारयितुमाह ॥ **स्यादेतदिति** । विद्याशब्दस्य व्यावर्त्यमाह ॥ **अर्थविवक्षेति** ॥ **मातृकेति** । कखगघङेत्यादिवर्णमात्रेत्यर्थ: । व्याप्तिमुपपाद्योपनयनमाह ॥ **न चास्येति** । अथातो ब्रह्मजिज्ञासेत्यादिग्रन्थस्येत्यर्थ: । तथा च प्रयोग: । अथात इत्यादिग्रन्थो न व्याख्येय: । अर्थविवक्षापूर्वकत्वाभावात् । मातृकाक्षरमात्रसन्दर्भवत् । यो व्याख्येय: सोऽर्थविवक्षापूर्वक इति व्यतिरेकव्याप्तौ काव्यादिदृष्टान्त: । न च हेतुरसिद्ध: । विमतो ग्रन्थ: अर्थविवक्षाशून्य: अर्थविवक्षावत्त्वसाधकमानहीनत्वादिति । ननु मानाभावोऽसिद्ध: । प्रणीतत्वस्य वा प्रेक्षावत्प्रणीतत्वस्य वा व्युत्पन्नप्रतीयमानार्थकत्वस्य वा मानत्वादित्यत: क्रमेण निराह ॥ **प्रणयनेत्यादिना** । हेतोरप्रयोजकत्वमाह ॥ **निश्चये वेति** । विषहरमन्त्रे वर्णमालामात्रपाठेन कार्यकरत्वस्य लोके प्रसिद्धेरिति भाव: । विद्यापदस्य व्यावर्त्यान्तरं चाह ॥ **न चेति** । किं चेति चार्थ: । ख्यात्यर्थमप्रमाणत्वेन निश्चितबौद्धादिग्रन्थव्याख्यानदर्शनेन व्यभिचारनिरासायोपादेयतयेत्युक्तम् । पुरुषार्थहेतुतयेत्यर्थ: । न चास्येत्युपनय: । अत्रापि प्रयोगौ । विमतं नोपादेयतया व्याख्येयम् । अयथार्थज्ञानजनकत्वाद्विप्रलम्भादिवाक्यवत् । न चासिद्धो हेतु: । विमतं न यथार्थम् याथार्थ्यनिर्णायकमानशून्यत्वाद्विप्रलम्भादिवाक्यवदिति । परमाख्यपदव्यावर्त्यमाह ॥ **तद्भावेऽपीति** । याथार्थ्यभावेऽपीत्यर्थ: ।

या०— ननु मीमांसाया वेद इवार्थविवक्षापूर्वकत्वाभावेऽपि व्याख्येयत्वमस्त्वित्यत आह । **पौरुषेयवाक्यस्येति** । अभ्युपेत्याह ॥ **निश्चये वेति ॥ विषहरमन्त्रस्येवेति** । तस्य हुं फडित्यादि-वर्ज्जनेनैवाभिमतसिद्धये निर्माणमित्यर्थः । तथा चान्यथासिद्धिरिति भावः । ननु तथाऽपि प्रतिभासमा-नार्थत्वमर्थविवक्षापूर्वकत्वे हेतुर्भविष्यतीत्यत आह ॥ **गृहीतसङ्गतेरिति** । तथाच व्यभिचार इति भावः । तुष्यत्विति न्यायेनाह ॥ **न चार्थविवक्षापूर्वकत्वेति** ॥

श्री०—**मातृकामात्रेति** । अर्थविवक्षापूर्वकत्वरहितककाराद्यक्षरमात्रव्याख्यान इत्यर्थः । ननु इदं ब्रह्ममीमांसाशास्त्रमर्थविवक्षापूर्वकं प्रणीतत्वादित्यनुमानमेव मानमिति चेत्तत्राह ॥ **प्रणयनमात्रस्येति** । हुं फडित्यादिविषहरमन्त्र इत्यर्थः । शुकबालादिवाक्ये व्यभिचारादित्यर्थः ॥ **प्रेक्षावदिति** । तादृश-मन्त्रप्रणयनकर्ता न प्रेक्षावानिति भावः । **अनिश्चयादिति** । ग्रन्थकर्तुर्व्यासस्य प्रेक्षावत्त्वानिश्चयादित्यर्थः ॥ अर्थविवक्षापूर्वकत्वमङ्गीकृत्याप्याह ॥ **न चार्थविवक्षेति** ।

च०— परमाख्यविद्येत्यंशनिवर्तनीयाशङ्कामाविर्भावयति ॥ **स्यादेतदिति** । प्रकृतग्रन्थपक्षकव्या-ख्यातव्यत्वाभावसाध्यकार्थावबोधोद्देश्यकतावैधुर्यलिङ्गकमातृकानिदर्शनकफलीभूतानुमानेऽसिद्धिशङ्कानिरस-नौपयिकतत्पक्षकतादृशहेतुसाध्यकतत्प्रतियोगिग्राहकमानराहित्यरूपसाधनानुमाने प्रणीतत्वप्रेक्षावत्प्रणीतत्व-गृहीतशक्तिकप्रतिभासमानार्थकत्वानामनैकान्त्यादिव्युत्पादनेनासिद्धिशङ्कामपाकुर्वाणोऽर्थावबोधोद्देश्यकता — मात्रेण तद्धर्मिण्युत्तरवादिना व्याख्येयतासाधनेऽनैकान्त्यापत्त्या याथार्थ्यस्य हेतुतावच्छेदककोटिनिवेशावश्य-म्भावेन तद्घटितहेतोर्ग्राहकाभावनियन्त्रितासिद्धिमभ्युपगमवादाश्रयणेऽपि हेतोरप्रयोजकतां विभावयति ॥ **अथात इत्यादि** ।

सु०— **अयमभिसन्धिः । अस्ति तावदस्मिन्ग्रन्थे 'द्वे विद्ये वेदितव्ये परा चैवापरा च' इत्यादौ परविद्याख्या । अत्र विद्याशब्देनार्थविवक्षा याथार्थ्यं चास्यावगम्यते । यथार्थज्ञान-तत्साधनयोर्विद्याशब्दस्य योगरूढिभ्यां प्रवृत्तत्वात् । 'संज्ञायां समजनिषद' इत्यत्र संज्ञाया-मित्यनुवृत्तेः । परशब्देन च यथार्थाद्वाक्यान्तरादुत्कर्षः । तदेवमागमेनास्य सर्वोत्तमप्रामाण्य-प्रतीतेर्ग्रहनार्थत्वाच्चोपपन्नमन्यपरित्यागेनास्यैव व्याख्यानमिति । तथाऽप्यन्यैरेव व्याख्यात-त्वान्न पुनरिदं व्याख्यातव्यमित्यतो व्याख्यामित्युक्तम् । विशिष्टाऽऽख्या व्याख्या । अनेन परकृतानामपव्याख्यानतामभिप्रैति । तथाच तत्र तत्र प्रदर्शयिष्यति । तथाऽपि स्वप्रणीत-भाष्येणैव कृतव्युत्पादनमिदं शास्त्रमिति किमनेन व्युत्पादनेनेत्यतोऽन्यदपि चेत्याह । चशब्देन**

**अनुव्याख्याने प्रयोजनसद्भावं समुच्चिनोति । तच्च वक्ष्यते । प्रयोजनसद्भावे भाष्यदिशा शिष्या एवानुव्याकरिष्यन्तीत्यतोऽहमेवेत्यभिहितम् । एवशब्देनान्येषामसामर्थ्यं सूचयति ।**

**वा०** — नन्वनेनार्थविवक्षापूर्वकत्वादौ न किमपि मानमुक्तमितिक थमनेनोक्तशङ्कापरिहार इत्यत आख्यापदसूचितं मानमुदाहृत्य तदुपपादयितुमाह ॥ **अयमिति** । ननु ज्ञानार्थकविदेर्भावे क्यपि निष्पन्नविद्याशब्दस्य ज्ञानगमकत्वेऽपि नार्थविवक्षायाथार्थ्यगमकत्वमित्यतो विद्याशब्दस्य भावकरणसाधनतया योगेन ज्ञानस्येव तत्साधनत्वस्य रूढ्या याथार्थ्यस्य च लाभादुभयगमकत्वं युक्तमित्यभिप्रेत्याह ॥ **यथार्थेति** । ननु 'संज्ञायां समजनिषद' इति सूत्रे 'व्रजयजोर्भावे क्यप्' इत्यतो भावग्रहणानुवृत्तौ तद्भावग्रहणस्य भावेऽनुपसर्गस्येत्यादाविव 'अकर्तरि च कारक' इत्येतन्निवृत्त्यर्थतया तत्साधनालाभ एव । न चात्र सूत्रे भाव इति न स्मर्यते इति वृत्तिकृतोक्तत्वान्न तद्भावाधिकार इति वाच्यम् । अत्र तदधिकाराभावज्ञापकाभावात् 'स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति' इत्युक्तविरोधाच्च भावाधिकारस्यावश्यकत्वात् । तदधिकाराभावेन ज्ञानसाधनलाभेऽपि रूढिज्ञापकाभावेन याथार्थ्यालाभ एवेत्यत: 'संज्ञायां समज' इति सूत्रे संज्ञायामित्युक्तत्वाद्यस्मिन्नर्थे उत्पद्यमानेन क्यपा संज्ञा गम्यते तस्मिन्नर्थे क्यप् भवतीति सूत्रार्थनिष्पत्त्या संज्ञाग्रहणबलेनैव भावाधिकाराभावस्य ज्ञापितत्वात् । भृञश्च भाव एवोत्पाद्यमानेन क्यपा संज्ञा गम्यत इति भृत्याशब्दवाच्यत्वेन व्यापाररूपभावाधिकारस्य स्त्रियां भावाधिकारोऽस्तीत्यनेन उक्तावपि तेन स्वरितत्वनिबन्धनशास्त्रीयाधिकारानुक्त्या तद्विरोधाभावात्संज्ञाग्रहणेनैव रूढेरपि ज्ञापितत्वेन ज्ञानार्थकविदेश्च यथार्थज्ञानरूपभावे तत्साधने च विहितेन क्यपा संज्ञा गम्यत इति युक्तं तदुभयगमकत्वं विद्याशब्दस्येत्याह ॥ **समजनिषदेत्यत्र संज्ञायामित्युक्तेरिति** । (व्रजयजोर्भावे क्यप् । व्रज्या । इज्या । 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिण:' । समजादिभ्य: स्त्रियां भावादौ क्यप् स्यात्स चोदात्त: संज्ञायाम् । 'अजे: क्यपि वीभावो नेति वाच्यम्' । समजन्त्यस्यामिति समज्या सभा । निषीदन्त्यस्यामिति निषद्या आपण: । निपतन्त्यस्यामिति निपत्या पिच्छला भूमि: । मन्यतेऽनयेति मन्या गलपार्श्वे शिरा । तया हि क्रुद्धो ज्ञायत इति भाव: । विदन्त्यनया विद्या । सुत्या । अभिषव: । शय्या । भृत्या । भरणम् । जीविका । 'कुमारभृत्या गर्भिण्या: परिचर्याऽभिधीयत' इति हारावली । 'कुमारभृत्याकुशलैरधिष्ठित' इति रघु: । ईयतेऽनया इत्या शिबिका । 'भावेऽनुपसर्गस्य' । अनुपसर्गस्य ह्वयते: सम्प्रसारणमप् च स्याद्भावे । हव: । 'अकर्तरि च कारके संज्ञायाम्' । कर्तृभिन्नकारके घञ् स्यात् । 'घञि च भावकरणयो:' । रञ्जेर्नलोप: स्यात् । राग: । अनयो: किम् । रजत्यस्मिन् रङ्ग: । प्रास्यत इति प्रास: । संज्ञायामिति प्रायिकम् । को भवता लाभो लब्ध: । इत उदरं भावे 'अकर्तरि

च कारक' इति पदद्वयमप्यनुवर्तते 'कृत्यल्युटो बहुलम्' इति यावत् । एरजिति सूत्रव्याख्यानावसरे काशिकायां भावेऽकर्तरि च कारक इति प्रकृतमनुवर्तते यावत्कृत्यल्युटो बहुलमित्युक्तम् ) । संज्ञायां समजनिषदित्युक्तेरिति पाठेऽप्ययमेवार्थः । समजनिषदेत्यत्र संज्ञायामित्यस्यानुवृत्तेरिति पाठे तु व्रजयजो-र्भावे क्यबित्यतोऽस्वरितत्वेन भावग्रहणानुवृत्त्या निवर्तकाभावादकर्तरि च कारके संज्ञायामित्यस्यानुवृत्ते-र्विद्याशब्दस्य योगरूढिभ्यां यथार्थज्ञानसाधनबोधकत्वं युक्तमिति दर्शयितुं संज्ञायामित्यस्यानुवृत्तेरित्येकदेशो-त्कीर्तनम् । अत्र च संज्ञाग्रहणेऽनुवर्तमाने पुनः संज्ञाग्रहणमकर्तरि च कारके संज्ञायामित्यत्र चशब्दस्य संज्ञायामित्यनेन सम्बन्धे संज्ञायामसंज्ञायां चेत्यर्थलाभात्तत्सूत्रीयसंज्ञाशब्दस्य प्रायिकार्थतया व्याख्यातत्वा-त्तदनुवृत्तावप्यत्र नियमालाभात्तल्लाभायेति द्रष्टव्यम् । अत्र परत्वस्य प्रकारान्तरेण विवक्षणे तद्भावेऽपीति शङ्कानिवर्तकत्वं न स्यादिति सन्निधानाद्विद्याशब्दार्थयाथार्थ्येनैव परत्वमित्यभिप्रेत्याह ॥ **परेति** । गहना-र्थत्वस्य साक्षाद्भाष्येऽनुक्ततया तन्निवर्त्यां शङ्कामनुक्त्वा व्याख्येयत्वमुपपादयितुं तत्प्रयोजकानि कथयतो भाष्यकारस्य व्याख्येयत्वप्रयोजकत्वाद्गहनार्थत्वमप्युपलक्षणतयाऽभिप्रेतमित्यभिप्रायेण भावकथनदशायां तदाह ॥ **गहनार्थत्वाच्चेति** ॥ **तच्च वक्ष्यत इति** ॥ स्वयं कृताऽपीत्यत्रेत्यर्थः ।

**स०**— एतावता कथमुक्तशङ्कानिरास इत्यत आह ॥ **अयमिति** ॥ ब्रह्मसूत्राणां पौरुषेयत्वेऽपि अर्थविवक्षापूर्वकत्वं यथार्थत्वं ग्रन्थान्तरादुत्कृष्टत्वं च 'द्वे विद्ये वेदितव्ये' इति श्रुत्याऽवगम्यत इति प्रदर्शनाय परमाख्यविद्येत्युक्तमित्यर्थः । 'व्रजयजोर्भावे क्यबि'त्यतो भाव इव करणेऽपि विधेर्ज्ञानतत्सा-धनयोरित्युक्तम् । ज्ञानतत्साधनयोर्विद्याशब्दस्य योगरूढी समर्थयते ॥ **समजनिषदेत्यत्रेति** । 'अकर्तरि च कारके संज्ञायाम्' इति समग्रस्यानुवृत्तेरित्यर्थः । इत्युक्तेरिति पाठे तु संज्ञानुवृत्तावपि पुनः संज्ञाया-मित्युक्तेरित्यर्थः । अयं भावः । एकसंज्ञाग्रहणे सति भावे यद्यपि संज्ञाप्रतीतिस्तत्रैव क्यब्विधानमात्रेण सूत्रं पर्यवस्येत् । अतः पुनः संज्ञाग्रहणेन प्रायिकी संज्ञा तद्विषयं सूत्रमिति ज्ञायते । तथाच भाव इव करणेऽपि संज्ञाऽवगमात् क्यप् प्रत्ययसिद्धिरिति ॥ **आगमेनेति** । परविद्याख्ययेत्यर्थः । प्रदर्शयिष्यति बन्धमिथ्यात्वमित्यादौ ॥ **तच्च वक्ष्यते** । स्वयं कृतापीत्यनेन ।

**प०**—कथमनेनोक्तशङ्कानिरास इत्यत आह ॥ **अयमभिसन्धिरिति** । आद्यं शङ्काद्वयं तावत् निराह ॥ **अस्तीत्यादिना** ॥ **अस्मिन् ग्रन्थे** । 'अथातो ब्रह्मजिज्ञासे'त्यादिब्रह्ममीमांसात्मकग्रन्थे । विषयसप्तमीयम् ॥ **इत्यादौ** । आथर्वणाद्युपनिषदि । ब्रह्मसूत्रसन्दर्भवाचितया परविद्यापदप्रयोगः श्रूयत इत्यर्थः ॥ परविद्याशब्दस्य ब्रह्मसूत्रवाचित्वमग्रे व्यक्तम् ॥ **अस्येति** । व्याख्येयग्रन्थस्येत्यर्थः । कथ-मित्यत आह ॥ **यथार्थेति** । यद्यपि यथार्थज्ञानसाधने विद्याशब्दस्येत्येवात्र प्रकृतसङ्गतत्वाद्वक्तव्यमथापि

ज्ञानसाधनमात्रोक्तौ ज्ञानस्य विद्याशब्दार्थत्वं नेति स्यात् । तथाच 'विद्यैव तु निर्धारणात्' । 'विद्याकर्मणोरिति तु प्रकृतत्वादि'ति सूत्रे 'विद्ययाऽमृतमश्नुत' इत्यादिश्रुतौ च विद्यापदप्रयोगो ज्ञाने गौण इति शङ्का स्यात्सा माभूदित्येतदर्थं ज्ञानपदमप्युपात्तम् । ज्ञान इवेति दृष्टान्तत्वेन वा ज्ञानेत्युक्तिः ॥ **योगरूढिभ्यामिति** । ननु 'व्रजयजोर्भावे क्यबि'ति सूत्रेण भावे क्यप् विहितः । अत्र च पूर्वसाद्भावे इत्यनुवर्तमाने पुनः भावग्रहणं भाव एव व्रजयजोर्यथा क्यप्स्यान्न तु अकर्तरि च कारके संज्ञायां इत्यस्यापि अनुवर्तमानत्वात्कर्तृव्यतिरिक्तकारकेऽपि स्यादित्येतदर्थम् । तथाच व्रज्या इज्येतिव'त्संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिण' इत्युत्तरसूत्रेऽपि तस्यैव क्यपोऽनुवर्तमानत्वाद्भाव एव क्यबिति विद्याशब्दो ज्ञान एव मुख्य इति प्राप्नोतीति चेन्नैवम् । व्रजयजोर्भावे क्यबित्यत्रोक्तं भावग्रहणं संज्ञायां समजेति सूत्रे नानुवर्तते । क्यबेवानुवर्तत इति वृत्त्यादावुक्तत्वेन ततः पूर्वं दूरे सामान्यतोऽधिकृतस्य भाव इत्यस्य अकर्तरि चेति सूत्रस्य च 'कृत्यल्युटो बहुल'मित्येतत्पर्यन्तमनुवर्तनेन समजनिषदेति सूत्रेऽपि सम्बन्धेन भावे कर्तृभिन्ने कारके च संज्ञायां विषये क्यप्प्रत्ययो भवतीत्युक्तत्वेन वेदनमित्यर्थे च विदेः क्यपि सति 'लशक्वतद्धित' इति ककारस्य 'हलन्त्यमिति' पकारस्य चेत्संज्ञायां लोपे 'पुगन्तलघूपधस्य चे'ति गुणस्य 'क्ङिति चे'ति निषेधे स्त्रीप्रत्यये टापि सति विद्येतिरूपनिष्पत्तेर्विद्याशब्दे अकर्तरीत्युक्तेः योगस्य संज्ञायामित्युक्तेः रूढेश्चोक्तत्वादिति भावः । अत एवैतावन्तमभिप्रायं द्योतयितुं समजनिषदेत्यत्र संज्ञायामित्यनुवृत्तेरित्युक्तम् । अकर्तरि च कारके संज्ञायामित्यस्यानुवृत्तेरित्यर्थः । तेन तत्सहनिविष्टभावपदानुवृत्तिरपि सूचिता । अन्यथा संज्ञायां समजेति सूत्र एव संज्ञायामित्यस्य सत्त्वादनुवृत्तेरित्युक्तिरयुक्ता स्यात् । संज्ञायामित्यनुवृत्तेरित्युक्तौ त्वन्यथानुपपत्त्या एकदेशद्वाराऽकर्तरि चेति सूत्रस्मरणेन तस्यैवानुवृत्तिं ज्ञासन्तीत्यभिप्रायः । ननु चाकर्तरीत्यतः संज्ञापदेऽनुवर्तमानेऽपीह संज्ञाग्रहणं किमर्थमिति चेत् उच्यते । अकर्तरि चेत्यत्रोपात्तं संज्ञापदमव्यावर्तकम् । चशब्दस्य संज्ञायां चेत्यत्रान्वयेन संज्ञायामसंज्ञायां चेति व्याख्यानात् । एवं तर्हि तत्रत्यसंज्ञापदानुवृत्तिः किमर्थमुक्तेति चेन्न । तत्सूत्रस्यैवात्रानुवृत्त्यर्थत्वादित्युक्तत्वात् । तर्हि यथार्थज्ञानसाधने विद्याशब्दस्य रूढिर्न ज्ञापिता स्यादिति चेन्न । समजनिषदेति सूत्रस्थसंज्ञापदस्यैव रूढिज्ञापकत्वात् । अत एव समजनिषदेत्यत्र प्रतिपदं संज्ञायामित्यनुवृत्तेरनुषङ्गादित्यप्यर्थ इत्यास्तां तावत् । संज्ञायां समजनिषदेत्युक्तेरित्येव क्वचित्पाठः । तदा तु न क्लेशः । अर्थविशेषालाभः । समर्थितं च ज्ञानतत्साधनयोर्मुख्यत्वं विद्याशब्दस्यादृश्यत्वनयचन्द्रिकायाम् । तद्भावेऽपीत्यादिना कृतं चोद्यं निराह ॥ **परशब्देनेति** ॥ उत्कर्षं आधिक्यम् ॥ **आगमेनेति** । 'द्वे विद्ये वेदितव्ये' इति प्रागुक्तवाक्येनेत्यर्थः ॥ अस्य ब्रह्मतन्त्रादिशास्त्रस्य ॥ **अनुव्याख्यान इति** । पुनरपि विवरणकरण इत्यर्थः ॥ **वक्ष्यत इति** । 'स्वयं कृताऽपि तद्व्याख्या क्रियते स्पष्टतार्थत' इत्यत्रेति भावः ॥

या० — **विद्याशब्दस्य योगरूढिभ्यामिति** । वेद्यतेऽर्थोऽनयेति योगेन वा 'सा विद्या तन्मतिर्यया' इत्यादिप्रयोगदर्शनसिद्धया रूढ्या च प्रवृत्तत्वादित्यर्थः । न च रूढ्यैवोभयलाभे योगाश्रयणं व्यर्थमिति वाच्यम् । अर्थविवक्षाविधुरे यथार्थज्ञानेऽपि रूढेः सत्वेन तन्मात्रेणोभयलाभासम्भवात् । वेदनकरणत्वरूपयौगिकार्थप्रापकक्यप्प्रत्ययस्य संज्ञायामेव विहितत्वेन रूढ्यभावे तदनुपपत्ते रूढेरप्यावश्यकता । अत्र यथार्थज्ञाने वेदनं विद्येति योगस्य 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते' । 'विद्यैव तु निर्धारणा'दित्यादिप्रयोगमभिप्रेत्य रूढेश्च प्रदर्शनं दृष्टान्ततयेति ज्ञातव्यम् । ननु 'एरजि'ति सूत्रव्याख्यानावसरे काशिकायां भावे 'अकर्तरि च कारक' इति च प्रकृतमनुवर्तते यावत्कृत्यल्युटो बहुलमित्युक्तत्वेन भवतु भावे करणे वा विदेः क्यपि विद्याशब्दादुक्तयोगेन ज्ञानतत्साधनलाभः । तत्र रूढिज्ञापकं तु न किञ्चिदस्ति । उक्तप्रयोगाश्च योगेनाप्युपपन्नाः । संज्ञायामित्यस्य तु भिन्नक्रमेण चकारेणासंज्ञायामपीत्यर्थलाभादनियतत्वाभिप्रायेणाननुवृत्तेरुक्तत्वादित्यत आह ॥ **संज्ञायामिति** । सत्यमकर्तरि च कारके संज्ञायामित्यतः संज्ञायामित्यस्य नानुवृत्तिरुक्तेति । तथाऽप्यत्र सूत्रे पुनः संज्ञाग्रहणात्संज्ञायामित्यस्याप्यत्रानुवृत्तिरभिप्रेतेति ज्ञायते । 'सिद्धे सत्यारम्भो नियमार्थ' इति न्यायादतो रूढिरप्युपपन्नेति भावः । अत एव क्वचित्संज्ञायामित्यस्यानुवृत्तेरित्यपि पाठः । 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिण' इति सूत्रस्यायमर्थः । समजादिभ्यो धातुभ्यः स्त्रियां क्यप्प्रत्ययो भवति संज्ञायां विषय इति । उदाहरणं तु समजन्ति अस्यामिति समज्येत्यादि द्रष्टव्यम् ॥ **तच्च वक्ष्यत इति** । स्वयं कृताऽपि तद्व्याख्येत्यत्रेति शेषः ॥

श्री० — अस्मिन्ग्रन्थे 'अथातो ब्रह्मजिज्ञासे'ति ब्रह्ममीमांसात्मके ग्रन्थे । अस्य व्याख्येयग्रन्थस्य ॥ **विद्याशब्देनार्थविवक्षा याथार्थ्यं चेति** । शब्दानां यथावस्थितार्थप्रतिपादकत्वरूपयाथार्थ्यं वक्तृविवक्षाधीनम् । वक्त्रा हि यथावस्थितमेवार्थं प्रतिपादयिष्यामीतीच्छया शास्त्रं निर्मितं चेत्तदा तस्य निरुक्तं याथार्थ्यं सम्पद्यते । नान्यथेत्येवमर्थविवक्षायाथार्थ्ययोः साध्यसाधनभावसद्भावाद्याथार्थ्योक्त्या विवक्षा अपि लब्धा । कार्योक्त्या कारणस्यापि लाभात् । अत एव हुं फडित्यादिमन्त्रेऽर्थविवक्षाया अभावादेव न तस्य यथावस्थितार्थप्रतिपादकत्वरूपं याथार्थ्यम् । याथार्थ्येऽर्थविवक्षायाः कारणत्वद्योतनायैव विवक्षा याथार्थ्यं चेति विवक्षाया आदित उपपादनं कृतम् । एवं च वेद्यते यथावस्थितमेव तत्त्वं ज्ञायतेऽनयेति निर्वचनेनास्य शास्त्रस्य यथावस्थितार्थप्रतिपादकत्वरूपं याथार्थ्यमवगम्यत इत्यर्थः । 'मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय' इति न्यायेन यथावस्थितमेव वेद्यत इत्यर्थो लभ्यते । अत एव शिष्यते यथावस्थितमेव प्रतिपाद्यते तत्त्वमनेनेति शास्त्रमिति शास्त्रशब्देनैकार्थतां विद्याशब्दस्य 'चक्रे शास्त्रमनुत्तममि'ति वक्ष्यतीति द्रष्टव्यम् ॥ **यथार्थज्ञानतत्साधनयोरिति** । विद् ज्ञान इति धातोर्भावे क्यप्प्रत्यये ककारलोपे कित्वा-

द्गुणाभावे वेदनं विद्येति भावे व्युत्पन्नो विद्याशब्दो यथार्थज्ञाने रूढः । विद् धातोः करणे क्यप्प्रत्यये सति वेद्यतेऽर्थोऽनयेति विद्येति करणे निष्पन्नो विद्याशब्दो यथार्थज्ञानसाधने यौगिकः । 'सा विद्या तन्मतिर्यये'ति प्रयोगाद्यथार्थज्ञानसाधने विद्याशब्दो रूढ इति द्रष्टव्यम् । आगमेन 'द्वे विद्ये वेदितव्ये' इति प्रागुक्तेनेत्यर्थः ॥ **अनुव्याख्यां करिष्यन्तीति** । अनुव्याख्यानं करिष्यन्ति पुनरपि व्याख्यानं करिष्यन्तीत्यर्थः ॥

**च०**— तदंशस्य दर्शितनिखिलाशङ्कानिरासकतां व्युत्पादयति ॥ **अयमिति** । ज्ञानार्थस्य विदेर्भवकरणसाधनक्यपि निष्पन्नविद्याशब्दस्यावयववृत्त्या ज्ञानतत्साधनयोरिवार्थविवक्षायाः 'सा विद्या तन्मतिर्यये'त्यादिप्रयोगप्रत्यायितसमुदायवृत्त्या याथार्थ्यस्य गमकता सङ्गच्छत इत्यभिप्रेत्याह ॥ **यथार्थेति** । अतः समुदायवृत्त्यैवार्थविवक्षाऽपि सेत्स्यतीति तत्प्रत्यायनफलकयोगपदोपादानमप्रयोजननिमितिशङ्का तु अर्थावबोधोद्देश्यकताविनिर्मुक्तयथार्थज्ञानसाधारणयथावस्थितज्ञेयविषयीकारित्वस्य समुदायवृत्त्या प्रत्याय्यमानस्य प्रकृतानुपयोगेन यथावस्थितज्ञेयविषयीकारिसाधनत्वेनैव याथार्थ्यं न ज्ञान इव साक्षादिति ध्वनयितुं तदुपादानावश्यम्भावान्निरसनीया । साधनमात्रे समुदायावयववृत्तिव्युत्पादनस्य चिकीर्षितत्वेऽपि 'विद्यया च विमुच्यते' 'विद्यैव तु निर्णारणा'दित्यादिप्रयोगप्रत्यायितसमुदायवृत्तेर्वेदनं विद्येत्यवयववृत्तेश्च यथार्थज्ञानेऽपि प्रदर्शनं निदर्शनविधयेत्यवसेयम् । नन्वष्टलक्षण्याम् तृतीयलक्षणे तृतीयचरणे 'व्रजयजोः भावे क्यबि'ति सूत्रे भाव इत्यनुवर्तमाने पुनर्भावग्रहणमनयोर्भाव एव क्यप् भवति नत्वकर्तरि च कारक इत्यस्याप्यनुवृत्त्या कर्तृव्यतिरिक्तकारकान्तर इति ध्वनयितुमिति स्थितत्वया 'संज्ञायां समजे'त्युत्तरसूत्रेऽपि तस्यैव क्यपोऽनुवर्तनेन व्रज्येत्यादिवत् भावमात्रसाधनक्यप्प्रत्ययान्तविद्याशब्दो ज्ञप्तिप्रत्यायक एव न तत्साधनप्रमापक इति चेन्मैवम् । संज्ञायां समजेत्यत्र पूर्वस्मात् क्यबित्यंशस्यैवानुवृत्तिर्न तु भाव इत्यस्यापीति वामनो वृत्तावप्यभ्यधादिति तत्प्राक्तनयोर्भावे कर्तरि चेत्यनयोराकृत्यल्युटो बहुलमनुवर्तनेन संज्ञायां समजेत्यत्रापि द्वयोरनुवृत्त्याभावे तादृशकारकान्तरे च सम्भवतीति भावकरणयोर्योगोपपादनेऽपि भिन्नविन्यासेन चकारेण संज्ञायामित्यस्यासंज्ञायामपीत्यर्थकतोरीकृत्यानिरवकाशरूढिज्ञापकं दुर्मिलमित्याशङ्कायामाह ॥ **संज्ञायामिति** । 'सिद्धे सत्यारम्भो नियमार्थ' इति न्यायेन पुनः संज्ञाग्रहणेन संज्ञायामित्यनुवृत्तेर्ज्ञापनात् इति भावः ॥

**अनु.**— **प्रादुर्भूतो हरिर्व्यासो विरिञ्चभवपूर्वकैः ।**
**अर्थितः परविद्याख्यं चक्रे शास्त्रमनुत्तमम् ॥ ३ ॥**

सु.— यदुक्तं नारायणोऽस्य शास्त्रस्य प्रभव इति तदयुक्तम् । व्यासोपज्ञताप्रसिद्धि-विरोधात् । न च नारायण एव व्यासः । जननविरोधात् । कृतकृत्यस्य प्रयोजनाभावेन शास्त्रप्रणयनासम्भवाच्च । यच्चास्य श्रौत्या परविद्याख्यया सर्वोत्तमप्रामाण्यसिद्धिरिति तदप्य-युक्तम् । परशब्दस्यानेकार्थत्वेन विद्याशब्दस्यचार्थविवक्षाविरहिण्यपि मन्त्रे प्रयोगदर्शनेन परविद्याख्यायाः सर्वोत्तमप्रामाण्यानिश्चायकत्वात् । किञ्चेयं परविद्याख्यैतद्विषयेत्यत्रापि न नियामकमस्तीत्यत आह ॥ प्रादुर्भूत इति । अत्र कृतकृत्योऽपि हरिरात्मकृपास्पदैर्विरिञ्चभव-पूर्वकैरमरैरर्थितो व्यासः प्रादुर्भूतो न तु जातो ग्रन्थमिमं चक्र इत्यनेन नारायणस्य शास्त्रप्रभ-वत्वेऽनुपपत्तिः परिहृता । दृश्यन्ते हि केवलं कृपापारवश्येन परोपकाराय प्रवर्तमानाः सुतरां तैरर्थिताः । अत एव परप्रयोजनमप्यात्मगामीव मन्यमानस्य भगवतः शास्त्रप्रणयनमिति ज्ञाप-यितुमात्मनेपदप्रयोगः । अत्र च नारायणाद्विनिष्पन्नमित्याद्यागमः प्रमाणम् । परविद्याख्यया अस्य सर्वोत्तमप्रामाण्यसिद्धिं व्युत्पादयितुं परविद्याख्यमित्यनूद्यानुत्तमं शास्त्रमिति व्याख्यातम् । नास्त्युत्तमं शास्त्रमस्मादित्यनुत्तमम् । शिष्यते यथास्थितं प्रतिपाद्यते तत्त्वमनेनेति शास्त्रम् ।

वा०— हरिर्व्यास इति सामानाधिकरण्येन प्रादुर्भूत इत्यनेन विरिञ्चादिभिरर्थित इत्यनेन परविद्याख्यमित्यनूद्यानुत्तमं शास्त्रमिति व्याख्यानेन बहुव्रीहिणा च व्यावर्त्याः शङ्काः क्रमेण दर्शयति ॥ यदुक्तमित्यादिना ॥ व्यासोपज्ञतेति । 'उपज्ञोपक्रमं तदाद्याचिख्यासायामि'ति सूत्रे उपज्ञायत इत्युपज्ञा । कर्म'ण्यातश्चोपसर्गे' इत्यङ् । उपक्रम्यत इत्युपक्रमः । कर्मणि घञ् । उपज्ञेयोपक्रम्ययोरादेराख्यानेच्छा-यामुपज्ञोपक्रमशब्दान्तस्तत्पुरुषो नपुंसकलिङ्गो भवत्येकवच्चेत्युक्तत्वात् व्यासोपज्ञेति कर्तृषष्ठ्या समासे तदाद्याचिख्यासायां नपुंसके सति व्यासोपज्ञमिति सिध्यति । तथा च व्यासेन प्रथमं प्रणीतताप्रसिद्धि-विरोधादित्यर्थः । ( उपज्ञोपक्रमं तदाद्याचिख्यासायाम् । उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात्तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमिष्यते । पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः ) । अत्र कृतकृत्योऽपि हरिरित्यनुवादेन पूर्वपक्ष्यभिप्रेतकृतकृत्यत्वहेतोरप्रयोजकत्वस्य प्रादुर्भूत इति प्रादुर्भावाभिधानेन जननहेतोरसिद्धेश्च सूचनात् विरिञ्चभवपूर्वकैरिति सूचितकृपाया अर्थित इत्युक्तप्रार्थनस्य च प्रादुर्भावशास्त्रप्रणयनप्रयोजकत्वस्याभिप्रेततया युक्तः शङ्कापरिहार इत्यभिप्रेत्य तथा न्वयं दर्शयन्नेवांशविशेषप्रयोजनं दर्शयति ॥ अत्रेति । स्वप्रयोजनशून्यानामपि कृपाप्रार्थनाभ्यां प्रवृत्तिं निदर्शयति ॥ दृश्यन्ते हीति । ननु परप्रयोजनोद्देशेन भगवतः प्रवृत्तौ ' स्वरितञितः कर्त्रभिप्राये क्रियाफले ' इति (स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् । कर्तारमभिप्रैति गच्छति कर्त्रभिप्रायं तस्मिन् ) कर्तृगामिक्रियाफलनिमित्तकात्मनेपदप्रयोगोऽनुपपन्न इत्यतः कृपापारवश्यादिना कर्तुः परप्रयो-

जनस्यापि स्वात्मगामित्वानुसन्धानज्ञापकत्त्वात्तस्य नानुपपत्तिरित्याशयेनाह ॥ **अत एवेति** । अंशान्तरप्रयोजनं दर्शयति ॥ **परेति** । अनुत्तममित्यस्य न परशब्दव्याख्यानत्वं विरुद्धार्थत्वात् । नापि भावसाधनशास्त्रशब्दस्य करणसाधनविद्याशब्दव्याख्यानत्वं युक्तमित्यत आह ॥ **नास्तीत्यादिना** । यद्वा परविद्याशब्दव्याख्यानार्थं प्रवृत्तेऽनुत्तमं शास्त्रमित्यत्र वक्ष्यमाणमनुपपत्तिपरिहारकत्वं यदभिप्रेतं तदुपयुक्ततया व्याख्यानमिदमिति द्रष्टव्यम् ।

स०— **व्यासोपज्ञतेति** । व्यासेन प्रथमं ज्ञाततेत्यर्थः । सर्वोत्तमप्रामाण्यप्रतिपादकस्य प्रमाणस्य ऋगादिविषयत्वात् नैतदित्याह ॥ **किंचेति ॥ अत एवेति** । 'स्वरितञितः कर्त्रभिप्राये क्रियाफल' इति वचनादित्यर्थः । सिद्धान्ती सर्वोत्तमप्रमाण्यं च सिध्यतीत्याह ॥ **परविद्याख्ययेति** । मध्ये ब्रह्मसूत्राणां व्यासप्रणीतत्वेन नारायणप्रणीतत्वाभावात्, व्यासस्य नारायणत्वे जन्माद्यनुपपत्तेरवाप्तकामत्वेन प्रयोजनानुद्देशिततया शास्त्रप्रणयनं व्यर्थम् । व्यासत्वेन नारायणस्यैव प्रादुर्भावादुत्पत्त्यभावादाप्तकामत्वेऽपि कृपालुत्वेन परप्रयोजनार्थं शास्त्रप्रणयनमित्याक्षेपपरिहारौ देवतागुर्वभेदज्ञापनार्थकश्लोकस्यानेकाक्षेपपरिहारकत्वात् प्रमाणेन च सहोक्ताविति द्रष्टव्यम् । अथवा तमेव शास्त्रप्रभवमिति शास्त्रस्य परमाप्तनारायणप्रणीतत्वेन प्रामाण्यं सूचितम् । तद्यदुक्तमित्यादिना आक्षिप्यात्रेत्यादिना समाधीयत इति ।

प०— उत्तरश्लोकमवैयर्थ्यायावतारयति ॥ **यदुक्तमिति** । हरिर्व्यास इत्यस्य व्यावर्त्यं नारायण इत्यादि ॥ **व्यासोपज्ञतेति** । व्यासेनोपज्ञायते प्रथमं ज्ञायत इत्यर्थः । आतश्चोपसर्गे इति प्राप्ताङ्- 'प्रत्ययान्तोपज्ञाशब्दस्योपज्ञोपक्रमं तदाद्याचिख्यासायामि'ति सूत्रेण नपुंसकलिङ्गत्वोक्तेः । व्यासप्रणीतेति यावत् । प्रादुर्भूतपदव्यावर्त्यं न चेत्यादि । अर्थित इत्येतद्व्यावर्त्यं कृतकृत्यस्येति । अनुत्तमपदव्यावर्त्यं यच्चेत्यादि ॥ **श्रौतयेति** । श्रौत्येति पाठः साधुः । श्रौतयेति पाठे तु श्रुतिस्थेत्यर्थे श्रुत्युक्तेत्यर्थे वा तद्धिता इतिप्राप्तअणप्रत्यये टापि श्रौतेति रूपम् । शास्त्रपदव्यावर्त्यं **विद्याशब्दस्य चेति ॥ किं चेति** । मुक्तिहेतुज्ञानपरत्वेनोपपत्तेरिति भावः । नन्वेवं चक्र इत्ययुक्तम् । कृञः ञित्त्वेन 'स्वरितञितः कर्त्रभिप्राये क्रियाफल' इति क्रियाजन्यफलस्य कर्तृगामित्व एवात्मनेपदत्वोक्तेः । अत्र कर्तुः कृतकृत्यतया फलानपेक्षित्वादित्यत आह ॥ **अत एवेति** । परार्थप्रवृत्तिमत्त्वादेवेत्यर्थः ॥ **अत्रेति** । श्लोकोक्तार्थे । भाष्योक्तागमो मानमित्यर्थः ।

या०— **व्यासोपज्ञतेति** । उपज्ञायत इति उपज्ञा । आतश्चोपसर्गे इति कर्मणि अङ् । व्यासस्योपज्ञा व्यासोपज्ञम् । 'उपज्ञोपक्रमं तदाद्याचिख्यासायामि'ति नपुंसकताविधानात् । तस्य भावो

व्यासोपज्ञता । व्यासेनादावुपज्ञाततेत्यर्थः । तत्कृततेति यावत् ॥ आत्मकृपास्पदैरित्यनेन स्वप्रयोजनाभावे अपि परप्रयोजनाय प्रणयनमुपपन्नमिति दर्शितं भवति । अत एव कृपापारवश्येन प्रवर्तमानत्वादेव ॥ **आत्मनेपदप्रयोग इति** । 'स्वरितञितः कर्त्रभिप्राये क्रियाफल' इति वचनादित्यर्थः । शास्त्रमेवेत्यत्र न मन्त्रमात्रमित्येव (न ज्ञानमित्येव) कारार्थो बोध्यः ॥

श्री०— **कृतकृत्यस्येति** । प्राप्तप्राप्तव्यस्येत्यर्थः ॥ **एतद्विषयेति** । एतच्छास्त्रविषयिणी । परविद्याशब्देनेदं ब्रह्ममीमांसाशास्त्रमेवोच्यत इत्यत्र न नियामकमस्तीत्यर्थः ।

च०— **व्यासोपज्ञतेति** । 'उपज्ञोपक्रमं तदाद्याचिख्यासायामि'ति सूत्रे उपज्ञोपक्रमशब्दान्त-तत्पुरुषस्य क्लीबत्वैकवद्भावयोः विहिततया उपज्ञायत इत्युपज्ञा 'आतश्चोपसर्गे' इति कर्मण्यङ् तस्य कर्तरि षष्ठ्यन्तव्यासपदेन समासे व्यासोपज्ञमिति निष्पद्यते । व्यासकर्तृकप्रथमज्ञानविषयताप्रसिद्धिविरोधादित्यर्थः । व्यासकर्तृकप्रणयनक्रियाकर्मताप्रसिद्धिविरोधादिति फलिताशयः ॥ **आत्मनेपदेति** । स्वरितञित इति सूत्रादिति भावः । परप्रयोजनधर्मिकस्वात्मगामित्वोपरक्तानुसन्धानसमवधानादिति हृदयम् ।

**सु०— इदमुक्तं भवति । 'द्वे विद्ये वेदितव्ये परा चैवापरा च' इति विद्याद्वयमुद्दिश्य तत्रापरेत्यादिना साङ्गान्वेदानपरविद्यात्वेनोक्त्वा 'अथ परा यया तदक्षरमधिगम्यत' इति परविद्या प्रदर्शिता । सा तावद्वेदादिशास्त्रप्रकरणात्परमाक्षराधिगतिकरणत्वलिङ्गाच्च शास्त्रमेव भवितुमर्हति अन्यथा सकृदुक्तविद्याशब्दस्यानेकार्थत्वकल्पनाप्रसङ्गाच्च । शास्त्रं चाप्रमाणं चेति विप्रतिषिद्धम् । तस्य च परत्वं नामान्यत्र सम्भवतीत्यनुत्तमत्वमेव । तदपि सन्निधानात् प्रमाणत्वेनैव । शब्दान्तरसमभिव्याहारवशेन सामान्यशब्दस्य विशेषार्थस्य कल्पनीयत्वात् । तद्यथा परमधार्मिक इत्यभिहिते परमत्वं धर्मेणेति ज्ञायते । तच्चानुत्तमं शास्त्रमिदमेव विवक्षि-तम् । निर्णेतव्यार्थानामृगादिपदोपलक्षितानामशेषशास्त्राणामपरविद्यात्वेनोक्तत्वात् । अन्यस्य अप्रसङ्गात्परत्वासम्भवाच्च । सम्भवति त्वस्य परत्वमनुग्राहकत्वात् । एतेनोपनिषदः परविद्येति व्याख्यानमिति परास्तम् । ऋगादिग्रहणेन तासामपि गृहीतत्वात् । ब्राह्मणपरिव्राजकन्यायश्च अगतिका गतिः । तज्जन्यं ज्ञानं परविद्येत्यपि न युक्तम् । अधिगतिकरणत्वानुपपत्तेः । अनेकार्थताकल्पनापत्तेश्च । अतोऽनया परविद्याख्ययाऽस्य शास्त्रस्य सर्वोत्तमप्रामाण्यसाधन-मुपपन्नमिति ।**

वा०—ननु परशब्दस्यानेकार्थत्वेन विद्याशब्दस्यार्थविवक्षाविरहिण्यपि मन्त्रे प्रयोगदर्शनेन न परविद्याख्यया सर्वोत्तमप्रामाण्यसिद्धिरिति शङ्कायाः परविद्याख्यमित्यनूद्यानुत्तमं शास्त्रमिति व्याख्यान-

मात्रेण न परिहारः । परा विद्येत्यत्र विद्याशब्देन शास्त्रोपादाने परशब्दस्यानुत्तमत्वातिरिक्तार्थत्वाभावे च हेतोरनुक्तेस्तत्सद्भावेऽपि वा शास्त्रत्वेन प्रामाण्यसिद्धिप्रकारस्य परशब्दस्य स्वतन्त्रविशेषणत्वेनाप्युपपत्त्या प्रामाण्येऽनुत्तमत्वसिद्धिप्रकारस्य चानुक्त्या विवक्षितार्थासिद्धिरेव । तत्रापरेत्यादिनिर्दिष्टव्यतिरिक्तानामेव अर्थपरेत्यनेन ग्रहणसम्भवेन तेनास्यैव ग्रहणे विशेषहेतोरनुक्त्या न किञ्चेत्युक्तशङ्कापरिहारोऽपीत्यतः शास्त्रग्रहणेनैव तत्रापरेत्यादिशास्त्रप्रकरणस्य प्रतिपत्तिकरणार्थकशास्त्रपदोपादानेनैव 'यया तदक्षरमधिगम्यत' इति वाक्यशेषोगात्तलिङ्गस्य च सूचनाद्विद्याशब्देन शास्त्रोपादाने साधकस्य प्रकरणस्य सूचनेनैवान्यथेत्युक्त विपक्षबाधकस्य च सूचनात्तत्त्वज्ञानकरणार्थकशास्त्रशब्दोपादानेन तादृशस्याप्यप्रामाण्यशङ्का व्याहतिग्रस्ततया नोदेतीत्यर्थस्य सूचनेन शास्त्रत्वेन प्रामाण्यसिद्धिप्रकारस्यापि सूचितत्वादनुत्तममित्यर्थविशेषकथनेनैव प्रकृते परशब्दार्थान्तरासम्भवस्य सामान्यविशेषपदसमभिव्याहारेण च परत्वस्य विद्यात्वेन सम्बन्धे सन्निधानरूप-हेतोश्च सूचनाद्युक्तः शास्त्रमनुत्तममिति व्याख्यानमात्रेण पूर्वशङ्कापरिहारः शास्त्रप्रकरणसूचकशास्त्रशब्देन परशब्दस्योत्तमत्वव्याख्यानेन च शास्त्राणामृगाद्यपेक्षया सम्भवपरत्वानां चानुपादानसूचनादुत्तमत्व-व्याख्यानेनैव तत्प्रयोजकस्य तत्प्रयोजकप्रयोज्यावधिभूतानां तत्रापरेत्यादिनोपलक्षणस्य च सूचनेनास्यैव ग्रहणे परिशेषसूचनात्किञ्चेत्यादिशङ्कापरिहारोऽपि युक्त इत्याशयेनाह ॥ **इदमुक्तं भवतीति** । अत्र द्वे विद्येत्यारभ्योपदिश्येत्यन्तमन्यथेत्युक्तबाधकस्य तत्रेत्याद्युक्तवेत्यन्तं शास्त्रप्रकरणस्य ययेति वाक्यशेषश्च लिङ्गस्य सूचनायेति मन्तव्यम् ॥ **लिङ्गाच्चेति** । अक्षराधिगतिकरणत्वस्य च तत्त्वज्ञानकरणे शास्त्र एव सम्भवादर्थविवक्षाविरहिणि मन्त्रादावसम्भवादिति भावः ॥ **प्रसङ्गाच्चेति** । चशब्द उक्तसाधकसमु-च्चयार्थः ॥ **अन्यत्र सम्भवतीति** । अन्यत्वारित्वपरमात्मत्वानामपरप्रतियोगितयोक्तविद्यायामसम्भव इत्यर्थः । एतदतिरिक्तं परविद्यात्वेन विवक्षितं भवच्छास्त्रमृगादिकं तदतिरिक्तं वा । अतिरिक्तत्वेऽपि निर्णेतव्यमितिहासादिकं निर्णायकं धर्मदेवमीमांसारूपं वा बौद्धादि वेति विकल्पान्मनसि निधाय ऋगादि शब्दानां निर्णेतव्येतिहासाद्युपलक्षणत्वमभिप्रेत्याद्यौ निराचष्टे ॥ **निर्णेतव्यार्थानामिति** । तदतिरिक्तत्व-पक्षे द्वितीयं शास्त्रशब्दसूचितयुक्त्या निराह ॥ **अन्यस्य चेति** । स ब्रह्मविद्यामिति ब्रह्मशास्त्रस्यैव प्रकरणेन धर्मदेवमीमांसयोरप्रसङ्गादित्यर्थः । सर्वनिर्णेतव्यशास्त्रनिर्णायकस्यास्य परविद्यात्वेनाविवक्षाया-मेतदेकदेशामुख्यप्रतिपाद्यव्याख्यानरूपयोस्तयोः परविद्यात्वस्य सुतरामप्राप्तेरिति वाऽर्थः । बौद्धादेर्वेदादि-विरुद्धत्वेनायथार्थत्वाच्छास्त्रग्रहणसूचितप्रकरणेन निरास इत्यभिप्रेत्य द्वितीये तृतीयं निराकरोति ॥ **अन्यस्येति** । परशब्दार्थोत्तमत्वेनापि तद्व्यावृत्तिरित्याह ॥ **परत्वेति** । परिशेषस्यानुत्तमत्वोक्त्या सूचितं तत्प्रयोजकमाह ॥ **सम्भवतीति** । उक्तन्यायं स्वोक्तप्रसक्तप्रतिषेधविरोध्यपव्याख्याननिरासेऽप्यतिदिशति ॥ **एतेनेति** । 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिश्रुतिस्मृतिभिर्ऋगादीनामुपनिषदां

च ब्रह्मपरत्वावगमादुपनिषत्स्वपि ज्ञेयशुद्धब्रह्मविषयाणामुपासनादिव्याख्यानां बहूनां मन्त्रेष्वपि ज्योतिराद्यधिकरणोक्तन्यायेन ब्रह्मपरभागस्य च दर्शनाच्चाविशेषादुपनिषदामृगादिभ्यः पृथक्करणं न युक्तमित्यभिप्रेत्य आह ॥ **ऋगादीति** । ननु तथाऽपि ब्राह्मणपरिव्राजकन्यायेनोपनिषदां पृथक्करणं किं न स्यादित्यतः अस्मदुक्तरीत्या सति गत्यन्तरे ब्राह्मणपरिव्राजकन्यायमनुसृत्य रूपं द्विविधं नीलमनीलं चेत्यादिवद् द्वे विद्ये वेदितव्ये परा चैवापरा चेत्यत्र परापरशब्दयोर्विरुद्धार्थत्वप्रतीतेरपन्हवो न युक्त इति आह ॥ **ब्राह्मणेति** । गत्यन्तररहिता गमनिकेत्यर्थः । स्वपक्षसाधकत्वेनोक्तं लिङ्गमेवापव्याख्यानान्तरनिरासेऽपि व्यापारयति ॥ **अधीति** । न चाधिगम्यत इत्यस्य प्राप्यत इत्यर्थः । अधिपूर्वस्य गमेर्ज्ञाने प्रसिद्धेरिति भावः । अन्यथेत्युक्तबाधकमप्यपव्याख्याननिरासे व्यापारयति ॥ **अनेकेति** । सकृत् श्रुतविद्याशब्दस्य इति शेषः ।

**स०**— ब्रह्मसूत्राणां परविद्यात्वेन सर्वोत्तमप्रामाण्यं वक्तुं विद्यायास्तावत्प्रामाण्यमाह ॥ **इद-मुक्तमिति** । ननु यथास्थिततत्वप्रतिपादकं हि शास्त्रम् । तदेव प्रमाणम् । न चेयं विद्या शास्त्ररूपा यतस्तस्याः प्रामाण्यं स्यादित्यत आह ॥ **सा तावदिति** । शास्त्रशब्दार्थस्याभावे सति न प्रकरणमात्रात् मुख्यशास्त्रतेत्याशंक्य परमेत्याद्युक्तम् । विपक्षे बाधकमाह ॥ **अन्यथेति** । सकृत् श्रुतस्य विद्याशब्दस्य अपरविद्यायां शास्त्रपरत्वं न परविद्यायामिति वैरूप्यं स्यादित्यर्थः । किमतो यद्येवमित्यत आह ॥ **शास्त्रं चेति** । यदि शास्त्रत्वेऽप्यप्रामाण्यं तर्हि ऋगादीनामपि प्रामाण्यं न स्यादिति भावः । ननु सर्वोत्तमत्वं कथं सिद्ध्येत् । परशब्दादिति चेत् न । तस्यानेकार्थत्वादित्युक्तं तत्राह ॥ **तस्य चेति** । अपरप्रतियोगित्वेन परत्वोक्तेः अन्यार्थत्वेऽर्थभेदाद्भेदव्यपदेशो न स्यात् ॥ अपरशब्दस्याधमार्थत्वे परशब्दस्य निरतिशयार्थत्वमेव सिद्ध्यतीत्यर्थः । साधारणशब्दस्य समभिव्याहारादर्थविशेषनिष्ठत्वे दृष्टान्तः **तद्यथेति** । ननु 'द्वे विद्ये' इति श्रुतौ परविद्या श्रूयताम् । तस्याश्च विद्याशब्दादर्थविवक्षापूर्वकत्वं यथार्थत्वं चास्तु । शास्त्रत्वाच्च प्रामाण्यम् । तस्य परशब्दादुत्कृष्टत्वम् । ब्रह्मसूत्राणां किमायातमित्याशङ्क्य ऋगादिशास्त्राणां अपरविद्यात्वात् ब्रह्मावगतिकारणत्वेन तेषामेव परविद्यात्वे सर्वोत्कृष्टप्रामाण्यं लब्धमित्याह ॥ **तच्चेति** । ननु धर्मसूत्राणामपि वेदानुग्राहकत्वात्परविद्यात्वं स्यादिति चेत्तेषां ब्रह्मज्ञानार्थधर्मप्रतिपादकत्वेन अक्षराधिगतिकारणत्वाभावादित्याह ॥ **अन्यस्येति** । ननु धर्मसूत्राणां कर्मप्रतिपादकत्वात्कर्मणां ब्रह्मज्ञानार्थत्वात् परम्परया तदस्तीत्यत आह ॥ **परत्वेति** । ननु कथं ब्रह्मसूत्राणां साक्षात्परत्वं वेदद्वारत्वादित्यत आह । **सम्भवति त्विति** । वेदद्वारा ब्रह्मावगतिहेतुत्वेऽपि साक्षाद्ब्रह्मावगतिहेतुभूतवेदानुग्राहकत्वात्परत्वमित्यर्थः ॥ **एतेनेति** । ऋगादिग्रहणेनोपनिषदामपि ग्रहणात् । गतिसम्भवे गोबलीवर्दन्यायानुपपत्तेः । उपनिषदां कर्मापेक्षितकर्तृप्रतिपादकत्वपक्षे ब्रह्मज्ञानसाधनत्वाभावात् परविद्यात्वाभावात् ब्रह्मज्ञानसाधनत्वावलम्बनेन

परविद्यात्वे ऋगादीनामपि तथात्वेन विभागायोगादुपनिषदां ब्रह्मपरत्वमेव न कर्मापेक्षितकर्तृपरत्वमित्युक्ते ऋगादीनामपि ब्रह्मणि तात्पर्यं नान्यत्रेति तुल्यत्वादुपनिषदां स्वरसतो ब्रह्मपरत्वं न तथा ऋगादीनामिति एतावान् विशेषः । तात्पर्यं तु सर्वेषां ब्रह्मण्येवेति नोपनिषन्मात्रस्य परविद्यात्वमित्यर्थः । एकस्मिन्वाक्ये शब्दार्थसङ्कोचफलको गोबलीवर्दन्यायः । अनेकस्मिन्वाक्येऽनुष्ठानापवादफलकः सामान्यविशेषभावन्यायः । यथा न हिंस्यात् सर्वाभूतानीति सामान्यं अग्नीषोमीयं पशुमालभेतेति विशेषः । **तज्जन्यमिति** । ऋगादिजन्यज्ञानस्याधिगतित्वेन तत्करणत्वायोगात् सकृत् श्रुतस्य विद्याशब्दस्य शब्दज्ञानविषयत्वेनानेकार्थत्वापत्तेर्न ज्ञानं परविद्येति । ब्रह्मसूत्राणां श्रुत्या सर्वोत्तमप्रामाण्यमुपपादितमुपसंहरति ॥ **अत इति** ।

प॰— नन्वेतावता विद्याशब्दः शास्त्रपर इत्यत्र न नियामकमुक्तमित्यत आह ॥ **इदमुक्तं भवति इति** । 'द्वे विद्ये वेदितव्ये परा चैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वणवेदः शिक्षाकल्पो व्याकरणं निरुक्तं च्छन्दोज्योतिषमिति । अथ परे'त्यादिपाठक्रमः । अपरोक्षज्ञानं परविद्याशब्दार्थ इति वादिभिरुक्तमसदिति भावेनोक्तं **वेदादिशास्त्रेति** । युक्तिस्तु चन्द्रिकायामुक्ता । वक्ति चात्रापि लेशतः ॥ **अन्यथेति** । ज्ञानार्थत्व इत्यर्थः ॥ **सकृदुक्तेति** । द्वे विद्ये वेदितव्ये इत्यत्र सकृत् श्रुतेत्यर्थः । परोक्षज्ञानमपरविद्या । अतो नानेकार्थत्वमिति तु तत्रापरेत्यादिविरोधादयुक्तमेवेति भावः । तावता प्रामाण्यं सर्वोत्तमप्रामाण्यं वा कुतः । परशब्दस्यानेकार्थत्वादित्युक्तेरित्यत आह ॥ **शास्त्रं चेति** । **अन्यन्न सम्भवतीति** । अपरत्वप्रतिद्वन्द्वितया निर्देशादिति भावः । प्रमाणत्वेनैव तत्त्वज्ञानकरणत्वेनैव इत्यर्थः ॥ **सामान्येति** । अनेकार्थसाधारणपरशब्दार्थस्येत्यर्थः । किंचेयं परविद्येत्यनेनोक्तशङ्कां निराह ॥ **तच्चेति** । इदमेव ब्रह्मतन्त्रमेव । **अन्यस्य** कर्मतन्त्रादेः । अक्षराख्यपरब्रह्मप्रतिपादकत्वात् इति भावः ॥ **परत्वेति** । मुक्तिहेतुज्ञानजनकत्वादिति भावः ॥ **अस्य** ब्रह्मतन्त्रस्य ॥ मायावाद्युक्तं निराह ॥ **एतेनेति** । ब्राह्मणा आगताः परिव्राजकाश्चागता इतिवत्स्यादित्यत आह ॥ **ब्राह्मणेति** । अगतिकेति भिन्नं पदम् । रामानुजोक्तं निराह ॥ **तज्जन्यमिति** । ऋगादिजन्यं उपनिषज्जन्यं वा । **अनेकार्थतेति** । द्वे विद्ये इत्यत्र ऋगादिकं तज्जन्यज्ञानं चेत्यनेकार्थत्वं सकृत् श्रुतविद्याशब्दस्येत्यर्थः ।

या॰— **विप्रतिषिद्धमिति** । शिष्यते यथास्थितमेव वस्तु प्रतिपाद्यत इति शास्त्रशब्दस्य निरुक्तत्वादिति भावः ॥ **अन्यन्न सम्भवतीति** । परत्वस्यान्यत्वरूपत्वेऽपरत्वस्यानन्यत्वरूपतापत्त्या तत्र ये वेदा यान्यङ्गानीत्यादिभेदव्यपदेशो बाधितः स्यादित्यर्थः । अतोऽपरत्वमधमत्वं तत्प्रतियोगिकं च परत्वमुत्तमत्वमेव वक्तव्यमिति भावः ॥ **सन्निधानादिति** । विद्याशब्देनैवोक्तरीत्या प्रामाण्यस्य प्रस्तुतत्वादित्यर्थः ॥ **सामान्यशब्दस्येति** । अनेकप्रकारेण सम्भवदुत्तमत्वार्थकपरशब्दस्येत्यर्थः । विशेषार्थस्य

प्रामाण्येनोत्तमत्वस्य । परविद्येत्याख्या यस्य तत्परविद्याख्यमिति बहुव्रीहिलब्धमर्थं दर्शयति ॥ **तच्चानुत्तमं शास्त्रमिदमेवेति** । नन्वन्यस्याप्रसङ्गः कथं धर्मादिमीमांसासद्भावादत आह ॥ **परत्वेति** ॥ **अनेकार्थताकल्पनेति** । द्वे विद्ये इति सकृत् श्रुतस्य विद्याशब्दस्य शाब्दज्ञानरूपानेकार्थताकल्पनापत्तेरिति भावः ।

श्री० — **शब्दान्तरेति** । विद्याशब्देत्यर्थः । सामान्यशब्दस्य परशब्दस्य ॥ **विशेषार्थस्य इति** । अनुत्तमत्वरूपार्थस्येत्यर्थः । अगतिका गतिरिति भिन्नं पदम् । **तज्जन्यं** ऋगादिजन्यम् उपनिषज्जन्यं वा ।

च० — **शब्दान्तरसमभिव्याहारेति** । विद्याशब्दसमभिव्याहारेत्यर्थः ॥ **सामान्यशब्दस्य इति** । उत्तमत्वरूपसामान्यधर्मावच्छिन्ननिरूपितशक्तिकस्येत्यर्थः । **विशेषार्थकत्वस्येति** । स्वसमभिव्याहृतपदार्थतावच्छेदकावच्छिन्नव्यक्त्यन्तरावधिकत्वविशेषितोत्तमत्वरूपविशेषधर्मावच्छिन्ननिरूपकताक - लक्षणोपगमादित्यर्थः । **अन्यस्य** । धर्ममीमांसादेः ॥ **अनेकार्थतेति** । द्वे विद्ये वेदितव्ये इति वाक्यघटकविद्याशब्दस्य शब्दत्वशब्दजनितज्ञानरूपत्वनानाधर्मावच्छिन्ननिरूपकताकशक्तिद्वयकल्पनाप्रसङ्गात् इत्यर्थः ।

सु० — **यद्यपि विद्याशास्त्रशब्दौ शिष्याचार्यव्यापारानुबन्धिनौ तथाऽप्युभयानुगततत्त्वज्ञानकरणत्वमात्रमुपादाय द्वयोरैकार्थ्यमुक्तमित्यवगन्तव्यम् । 'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः । ता एव परमा विद्या यदा विष्णोस्तु वाचकाः' इति भगवत्पादीयं व्याख्यानमप्येतमेवार्थं सूचयति । ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृता हि वेदादयो विष्णोरवाचकास्तदुपकृताश्च तस्य वाचका भवन्तीति । तथाऽपि केवलस्य न परविद्यात्वं लभ्यत इति चेत् । मा लाभि । वेदादीतिकर्तव्यतारूपस्यास्य पृथक् प्रामाण्यानभ्युपगमात् ।**

वा० — ननु विद्याशास्त्रशब्दयोर्भिन्नविषयत्वान्न व्याख्यानव्याख्येयभावो युक्त इत्यतो गौणीं वृत्तिमाश्रित्य समाधत्ते ॥ **यद्यपीति** । नन्वपव्याख्यानस्यायुक्तत्वेन प्रसक्तप्रतिषेधस्य तद्विरोधाभावेऽपि 'ऋगाद्या अपरा विद्ये'ति भगवत्पादीयव्याख्यानविरोधः स्यादेवेत्यतो विकल्पेन भगवद्वाचकेष्वपि ऋगादिषु यदातदाशब्दप्रयोगादुपकारकविशेषसाहित्यतदभावविवक्षायाः सूचितत्वादुपकृतानां परविद्यात्वे परिशेषणीय उपकारकप्राधान्यविवक्षया प्रसक्तप्रतिषेधेन परिशेषो नानुपपन्न इत्याह ॥ **ऋगाद्या इति** । नन्वेवं तर्हि वस्तुत उपकृतस्य ऋगादेरनुपकृतऋगाद्यपेक्षया परविद्यात्वं सिद्ध्येत् । न तूपकारकप्राधान्य-

विवक्षामात्रेण भवदभिमतमुपकारकस्यैव परविद्यात्वमित्याशङ्कां सयुक्तिकमनङ्गीकारेण परिहरति ॥ **तथाऽपीति** ।

**स०**— ननु विद्याशास्त्रशब्दयो(र्न) व्याख्यानव्याख्येयभावः । वेत्त्यनया शिष्यस्तत्वमिति विद्याशब्दस्य शिष्यकर्तृकवेदनकरणत्वार्थकत्वेन शास्ति तत्वमनेनेति शास्त्रशब्दस्य गुरुकर्तृकशासनकरणार्थकत्वेन तयोर्भिन्नार्थकत्वादित्यत आह ॥ **यद्यपीति** । तथाचाख्यातार्थभूतधात्वर्थानुकूलव्यापारभेदेऽपि तस्याविवक्षया धात्वर्थभूतज्ञानमात्रविवक्षया तत्करणत्वस्योभयत्रानुगतत्त्वात्तदैकार्थ्यमिति भावः । वस्तुतस्तु **शिष्याचार्यव्यापारानुबन्धिनौ** शिष्याचार्यकर्तृकव्यापारघटितप्रवृत्तिनिमित्तकौ । **उभयानुगतं** शिष्याचार्यव्यापारद्वयानुगतम् । **तत्वज्ञानकरणत्वं** तत्वज्ञानकारणभूतव्यापारघटितप्रवृत्तिकत्वं विद्याशास्त्रशब्दद्वयानुगतमितियावत् । मात्रशब्देन व्यापारद्वये शिष्याचार्यकर्तृकत्वविवक्षां व्यावर्तयतीति व्याख्येयम् । नन्वेवमपि न परविद्यात्वं ब्रह्मसूत्राणाम् । **ऋगाद्या इति** । ऋगादीनां ब्रह्मविषयत्वनिर्णयो मीमांसायत्त इत्यर्थः । एवं तर्हि ब्रह्मसूत्राणामितिकर्तव्यतात्वेन पृथक् परविद्यात्वं प्रामाण्यं च न स्यादिति शङ्कते ॥ **तथाऽपीति** । इष्टापत्त्या परिहरति ॥ **मा लाभीति** ।

**प०**— ननु वेद्यते अनेन शिष्येण कर्त्रा वेदादिना करणेनेति विद्याशब्दः शिष्यप्रयत्नजन्यज्ञानकरणवाची । शिष्यते प्रतिपाद्यते आचार्येण कर्त्रा वेदादिना करणेनेति शास्त्रशब्दः आचार्यप्रयत्नसाध्यशासनकरणवाची । तथाच विद्याशब्दशास्त्रशब्दौ भिन्नार्थाविति न व्याख्यानव्याख्येयभावमापद्येते । अतः कथं परविद्याख्यमित्यनूद्यानुत्तमं शास्त्रमिति व्याख्यातमित्युक्तमित्याशङ्क्य निराह ॥ **यद्यपीति** ॥ **तथापीति** ॥ वेदनशासनयोः शिष्याचार्यप्रयत्नसाध्यत्वेऽपि शिष्याचार्यव्यापारांशं विहाय वेदनशासनयोस्तुल्यतत्वज्ञानत्वधर्ममात्रमुपादाय तज्जनकत्वमात्रेणैकार्थ्यमुक्तमित्यर्थः । उभयानुगतेत्यस्य विद्याशास्त्रोभयानुगतेति वार्थः । नन्वेवमाथर्वणभाष्यविरोधः । तत्र ऋगादेरेव परविद्यात्वोक्तेः इत्यत आह ॥ **ऋगाद्या इति** । यदा विष्णोर्न वाचका इति मन्त्रब्राह्मणाभिप्रायम् । कर्मदेव तन्त्रोक्तन्यायानामपि कर्मकाण्डदेवकाण्डमात्रनिर्णायकत्वात् । उपनिषदां तु विष्ण्ववाचकत्वदशायाः अभावात् । उक्तं हि छान्दोग्यभाष्ये तृतीयेऽध्याये । आरण्यकमावर्तयेदारण्यकमावर्तयेदिति । अन्यथेतरपरत्वे आवृत्तिविधानं व्यर्थं स्यात् । 'आरण्यकेष्वृते विष्णुं नैवान्यत्किञ्चिदुच्यत' इति तत्रोक्तस्मृतिविरोधश्च स्यात् । यदा वाचका इति तु त्रिरूपकृत्स्नवेदाभिप्रायम् । ब्रह्मतन्त्रस्य कृत्स्नवेदेतिकर्तव्यतारूपत्वात् । यदेत्युक्तिरपि मन्त्रब्राह्मणरूपैकदेशाभिप्राया । आगमेन ' द्वे विद्ये वेदितव्ये ' इत्यागमेनेत्यर्थः ॥

**या०— शिष्याचार्यव्यापारानुबन्धिनाविति** । यथाक्रमं शिष्याचार्यव्यापारघटितार्थाभिधायिनावित्यर्थः । वेदनस्य विद्याशब्दबोध्यार्थान्तर्गतव्यापारस्य शिष्यकर्तृकत्वात् । प्रतिपादनस्य शास्त्रं मानमिति पूर्वोक्तयोजनायां पूर्वार्धोक्तानां गुरूणां गुरुत्वादीनां पक्षीभूतशास्त्रनिष्ठतया प्रामाण्यरूपसाध्यार्थान्तर्गतव्यापारस्याचार्यकर्तृकत्वादिति भावः । नन्वेवं भगवत्पादीयव्याख्यानविरोधः । तत्र ऋक्शब्दबोध्यऋगादीनामेव परविद्यात्वोक्तेरित्यत आह ॥ **ऋगाद्या अपरा इति । एतमेवार्थं** एतत्शास्त्रस्य परविद्यात्वरूपम् । **केवलस्य** ऋगाद्यननुग्राहकस्य ब्रह्ममीमांसाशास्त्रस्य ॥ **पृथगिति** । वेदाद्यननुग्राहकत्वेनेत्यर्थः ॥

**च०**— अनुकूलतासम्बन्धेन शिष्यकर्तृकवेदनावच्छिन्नग्रन्थनिरूपितशक्तिकतया विद्यापदस्याचार्यकर्तृकप्रतिपादनक्रियावच्छिन्नग्रन्थनिरूपितशक्तिकशास्त्रशब्दस्य च समानप्रवृत्तिनिमित्तकताविरहेण व्याख्यानव्याख्येयभावो न सङ्गच्छत इत्याशङ्क्य समाधित्सते ॥ **यद्यपीत्यादि ॥ ऐकार्थ्यमिति** । तत्तज्ज्ञानकरणत्वावच्छिन्ननिरूपकताका गौणीवृत्तिरुभयत्रोपेयत इति भावः । नन्वेवमाथर्वणभाष्यं विरोत्स्यतीति आशङ्क्य तत्तात्पर्यप्रकाशयोभयोरैककण्ठ्यमुपपादयति ॥ **ऋगाद्या इति** । उपकारकप्राधान्यविवक्षयाऽयं परिशेष इति भावः । केवलस्य व्युत्पादकतासम्बन्धेन ऋगाद्युपकारकन्यायाविशेषितस्य ॥ **मा लाभीति** । कर्मण्ययं चिण् ।

**अनु०—** **गुरुर्गुरूणां प्रभवः शास्त्राणां बादरायणः ।**
**यतस्तदुदितं मानमजादिभ्यस्तदर्थतः ॥**

**सु०— एवं तावदागमेनास्य शास्त्रस्यानुत्तमं प्रामाण्यं प्रसाध्याधुनाऽनुमानतोऽपि तत् सिषाधयिषुरादौ तावत्प्रामाण्यमात्रे अनुमानं वक्तुमाह ॥ गुरुरिति । यतो यत्कारणं बादरायणो गुरूणां जगतस्तत्त्वोपदेशकानां ब्रह्मादीनां गुरुरुपदेष्टा । यतश्च शास्त्राणां वेदानां भारतादीनां च यथासम्भवं प्रभवो गुरूणामशेषार्थप्रतिपादकानां सविस्तराणां वेदादिशास्त्राणां गुरुर्मुख्यप्रभवो न तु सम्प्रदायमात्रप्रवर्तक इति वा । यतश्चाजादिभ्यः श्रोतृभ्यस्तेषामर्थो मोक्षस्तदर्थः तस्मै तदर्थतः । तदुदितं तेन बादरायणेनोपदिष्टमिदं शास्त्रमतो मानं भवितुमर्हति ।**

**वा०**— ननु गुरुर्गुरूणामित्युत्तरश्लोके पूर्वश्लोकोक्तप्रमाणानुपपादनात्प्रमाणान्तरस्याप्यकथनात् तत्कथनपरत्वे वाऽनुत्तमत्वस्य सर्वथाऽकथनादुत्तरश्लोकोऽसङ्गत इत्यत आह ॥ **एवमिति** । 'पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धये' इति न्यायमनुसन्धाय तावच्छब्दप्रयोगः । अत्र गुरुर्गुरूणामित्यादेर्मानम्

इत्यस्य च साध्यसाधनभावाप्रतीतेस्तत्समर्पकत्वं यत इत्यस्य दर्शयितुं 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इत्यनुसन्धाय यत इत्येतद्व्याख्याति ॥ **यत्कारणमिति** । ननु गुरुर्गुरूणामित्यादिहेतूनामित्यादिवक्ष्यमाणरीत्या गुरुगुरुत्वादीनां हेतूनां वक्त्राद्यानुकूल्यान्येव साध्यानीति तावन्निष्टङ्कितम् । अत्र वक्त्रानुकूल्यैकदेशविवक्षितार्थतत्त्वज्ञानसाधकत्वेन भवदभिमतस्य गुरूणां गुरुत्वस्य न तत्साधकत्वं युक्तम् । उपदेशकानुपदेशकत्वेन वक्ष्यमाणरीत्या तदपेक्षया अधिकज्ञानसिद्धावपि तत्त्वज्ञानासिद्धेः । न च तत्त्वोपदेशक एव गुरुशब्दस्य योगरूढिभ्यां प्रवृत्तत्वेन तत्सिद्धिरिति वाच्यम् । तावताऽपि तत्त्वोपदेशकान्तरापेक्षयाऽधिकतत्त्वज्ञानसिद्धावपि विवक्षितार्थतत्त्वज्ञानासिद्धेः । प्रभवः शास्त्राणामित्यस्य तु यत इत्यस्य गुरुर्गुरूणामित्यनेनान्विततया हेतुत्वसमर्पकाभावेन हेतुत्वमेव न प्रतिपत्तुं शक्यम् । न च यत इत्यस्य आवृत्त्या योग्यतया चशब्दाध्याहारेण तस्यापि हेत्वन्तरत्वं प्रतिपत्तुं शक्यमिति वाच्यम् । वेदानां भारतादीनां च प्रभवत्वेन तदर्थतत्त्वज्ञानसिद्धावपि विवक्षितार्थतत्त्वज्ञानालाभात् । न चात्रोभयत्र सर्वज्ञत्वस्य साध्यतया विवक्षितत्वेन तन्मुखेन विवक्षितार्थतत्त्वज्ञानसिद्धिरिति वाच्यम् । उपदेशकान्तरतत्त्वोपदेशकत्वमात्रेण वेदभारतादिप्रभवत्वमात्रेण च सार्वज्ञ्यासिद्धेः । वेदादिप्रभवत्वेऽप्यपटुकरणत्वसम्भवेन तेन पटुकरणत्वासिद्धेश्च । यत इत्यस्य पूर्वार्धेऽन्वयेनोत्तरार्धे पक्षसाध्यमात्रोक्ततया हेत्वभावेन वक्त्रानुकूल्यैकदेशविवक्षाश्रोतृप्रसङ्गानुकूल्यासिद्धेश्च । यतश्चेत्यस्यावृत्त्याऽजादिभ्यस्तदर्थतत्त्वदुदितमित्यनेन अन्वयेऽपि ब्रह्मादिभ्यस्तज्ज्ञानार्थं बादरायणादुत्पन्नमित्युक्तिमात्रेण श्रोतृप्रसङ्गानुकूल्यालाभात् । अतो न वक्त्रानुकूल्यादिहेतुसमर्पकत्वमस्य श्लोकस्येत्यतो जगद्गुरूणामजादिभ्य इत्येतत्सन्निधानादत्र गुरूणामित्यनेन जगत्तत्त्वोपदेशकब्रह्मादीनां सर्वज्ञकल्पत्वस्याभिप्रेततया सर्वज्ञकल्पोपदेशकत्वस्य च सार्वज्ञ्यसाधकत्वोपपत्तेः वेदभारतादीनां चाशेषार्थप्रतिपादकत्वस्य विवक्षितत्वाद्गुरूणामित्यादेरावृत्त्या शास्त्रादिविशेषणत्वे च साक्षादेवाशेषार्थप्रतिपादकत्वलाभादशेषार्थप्रतिपादकशास्त्रप्रभवत्वस्य च सार्वज्ञ्यसाधकत्वोपपत्तेर्नोभयत्रापि अनुपपत्तिः । सविस्तरत्वार्थकगुरूणामित्यस्य शास्त्रविशेषणत्वे तत्प्रभवत्वेन पटुकरणत्वसिद्धिः । गुरूणां इत्यनेन ब्रह्मादीनां तत्त्वोपदेशकत्वोक्तेरजादिभ्य इत्यनेन तेषां श्रोतृत्वस्यार्थपदेन मोक्षस्य तदुदितमिति बादरायणेनोपदिष्टत्वस्य च विवक्षिततया अजादिभ्यस्तदर्थतत्त्वदुदितमित्युक्तहेतुभिर्विवक्षादिसिद्धिरिति न काऽप्यनुपपत्तिरित्यभिप्रेत्याह ॥ **बादरायण इत्यादिना** ।

**स०**— यत इत्यस्यार्थो यत्कारणमिति । निमित्तकारणहेतुषु प्रयोगे सर्वासां प्रायदर्शनमित्युक्तेः यत्कारणमित्युक्तम् । यस्मात्कारणादित्यर्थः ।

**प०**— **अनुमानत इति** । 'आप्तवाक्यतया तेन श्रुतिमूलतया तथे'त्यादिग्रन्थेनाप्तवाक्यत्वादिप्रमाणत्रयावगतत्वाद्ब्रह्मतन्त्रप्रामाण्यमनुत्तममित्यनुमानेनानुत्तमप्रामाण्यं सिषाधयिषुरित्यर्थः ॥ **वक्तुमाह**

इति । एतच्छास्त्रं प्रमाणं अनुकूलवक्तृश्रोतृप्रसङ्गवत्वाद्भारतवदित्यनुमानं अतो मानमित्यंशेन वक्तुमनुकूलवक्त्रादिमत्त्वरूपहेतुसाधकान्हेतूनाहेत्यर्थः । यत इति हेतौ पञ्चमीति भावेन प्रकृतिप्रत्यययोरर्थमाह ॥ **यत्कारणमिति** । निमित्तकारणहेतुषु सर्वासामिष्टिरित्युक्तेः प्रथमोक्तिः । यस्मात्कारणादित्युक्तावपि पञ्चम्योः शब्दसाधुत्वमात्रार्थत्वेनाधिकार्थत्वाभावात् । यद्वा यत इत्यस्य नेयमर्थोक्तिः किंतु यत्कारणं यस्य शास्त्रस्य कारणमिति बादरायणविशेषणम् । यत्कारणमित्युक्तयच्छब्दार्थस्येदं शास्त्रमित्यन्वयः । पूर्वसादनुवृत्तिं मत्वाऽऽह ॥ **जगत इति** । अर्थतः शब्दतश्च गुरुत्वमाह ॥ **अशेषार्थेति** । आद्यादिभ्य उपसङ्ख्यानमिति सर्वविभक्त्यर्थे तसिप्रत्ययोक्तेश्चतुर्थ्यर्थे तसिरिति भावेनाह ॥ **तस्मै तदर्थत इति** ॥

**या०— आगमेनेति** । परविद्याख्येत्यर्थः ॥ **यतो यत्कारणमिति** । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति कात्यायनस्मरणात् प्रथमा कृता यस्मात्कारणादित्यर्थः ।

**च०**— प्रामाण्यमात्रे उत्तमत्वाविशेषितप्रामाण्ये ॥ **यत्कारणमिति** । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति वार्तिककारोक्त्या तत्प्रकृतिकसकलविभक्तीनामेकार्थकतोरीकृत्येह प्रथमा पञ्चम्यर्थप्रत्यायिकेति भावः ।

**सु०— अत्र गुरुर्गुरूणामित्यादिहेतूनां वक्तृश्रोतृप्रसङ्गानामानुकूल्यान्येव साक्षात्साध्यानि मानसिति तु परमसाध्यनिर्देश इति ज्ञातव्यम् । तथा हि । विवक्षितार्थतत्त्वज्ञानं करणपाटवं विवक्षा चेति त्रयं वक्तुरानुकूल्यं नाम । तत्त्वज्ञानयोग्यता वक्तृप्रीतिविषयता चेति द्वयं श्रोतुः । श्रोतृप्रयोजनोद्देशः प्रसङ्गस्य । तत्र गुरूणां गुरुरिति वक्तुर्बादरायणस्य विवक्षितार्थतत्त्वज्ञानसाधने हेतुः । यो हि यस्य तत्त्वोपदेष्टा स ततोऽधिकतत्त्वज्ञानवानुपलब्धः । अयं च सर्वज्ञकल्पानां ब्रह्मादीनां तत्त्वोपदेष्टा ब्रह्मरुद्रादिदेवेष्वित्याद्यागमादवगतः । अतः सर्वज्ञो भवितुमर्हतीति । गुरूणां शास्त्राणां गुरुः प्रभव इत्यनेनापि तत्त्वज्ञानं करणपाटवं च साध्यते । यो हि यावदर्थप्रतिपादकस्यागमस्य प्रभवः स तावन्तमर्थं तत्त्वतो जानन्नवगतः । अयं चाशेषार्थप्रतिपादकस्यागमस्य प्रभवोऽनुक्तं पञ्चभिर्वेदैरुत्सन्नान्भगवान्वेदानित्यादिवचनादवगतः । ततो भवितव्यमनेन सर्वज्ञेन । यश्च बहोरागमस्य प्रभवः सोऽसति निमित्तान्तरे पटुकरणो दृष्टः । अयं चापारस्य वेदादेः प्रभवः कथमपटुकरणो भवेदिति । तदुदितमिति वचनेन कार्येण वक्तुर्विवक्षा कारणभूतोपपादिता । गुरूणामिति श्रोतॄणां तत्त्वज्ञानयोग्यतोपपादने हेतुः । न हि स्वयं तत्त्वज्ञानायोग्यः परेषां तत्त्वोपदेष्टा दृष्टः । अजादिभ्य इति वक्तृप्रेमास्पदत्वोपपादनम् । ब्रह्मादयो हि परमेश्वरप्रेमविषयाः सुप्रसिद्धाः । तदर्थत इति प्रसङ्गानुकूल्योपपादनम् । अत्र सर्वत्राकारणकार्योत्पत्त्यादिप्रसङ्गो विपक्षे बाधकस्तर्क ऊह्यः ।**

वा० — अत्रैतच्छ्लोकोक्तं मानमित्येतदेतच्छ्लोकोक्तहेतून्प्रति न साक्षात्साध्यमपि तूत्तरश्लोकोक्त-वक्त्राद्यानुकूल्यादीन्येव साक्षात्साध्यानि परमसाध्यनिर्देशत्वाच्च मानमित्यस्य न वैयर्थ्यमुपपत्तिं तूत्तरत्र वक्ष्याम इत्यभिप्रेत्य वक्त्राद्यानुकूल्यादेरेतैर्हेतुहेतुमद्भावं घटयितुं वक्त्राद्यानुकूल्यादिस्वरूपविवेचनाय प्रसक्तिं आह ॥ **अत्रेत्यादिना** । गुरुर्गुरूणामित्याद्युक्तहेतुत्रयस्य क्रमेणानुकूल्यत्रये हेतुत्वमिति भ्रान्तिं वारयितुं यथायोग्यं हेतुसाध्ये विवेचयति ॥ **तत्रेति** । सार्वज्ञमुखेन विवक्षितार्थतत्त्वज्ञानसिद्धेरत्राभिप्रेतत्वात् बादरायणः सर्वज्ञः सर्वज्ञकल्पोपदेष्टृत्वादिति विवक्षितानुमाने हेतुसाध्ययोर्यथास्थितयोर्व्याप्तेर्लोके दृष्टान्ता-भावेन दुर्ग्रहत्वादुपदेश्याधिकतत्त्वज्ञानरूपसामान्यमुखेन व्याप्तिरनुसन्धेयेत्यभिप्रायेणाह ॥ **यो हीति** । हेतोः पक्षधर्मतामुपपादयति ॥ **अयं चेति** । गुरूणामित्यस्य पूर्वोक्तमर्थद्वयमभिप्रेत्याह ॥ **गुरूणामिति** । बादरायणः सर्वज्ञोऽशेषार्थप्रतिपादकागमप्रभवत्वादिति विवक्षितानुमानेऽपि सामान्यव्याप्तिमेवाह ॥ **यो हीति** । वेदाद्यागमस्याशेषार्थप्रतिपादकत्वे तस्य च तत्प्रभवत्वे क्रमेण प्रमाणं वदन्नस्यापि पक्षधर्मतां आह ॥ **अयं चेति** । आदिपदेन 'व्यासो भूत्वा च तेन च । वेदादपि परं चक्रे पञ्चमं वेदमुत्तमम्' इत्यादेः सङ्ग्रहः । बादरायणः पटुकरणोऽपारवेदादिप्रभवत्वादिति विवक्षितानुमाने विशेषे व्यभिचार-शङ्काऽनवकाशात्पक्षधर्मताकथनावसरे विशेषणमनुपादाय बह्वागमप्रभवस्यापि दोषवशादपटुकरणत्वदर्शनात् सामान्यव्याप्तौ तदवकाशाच्च्यावर्तकविशेषणप्रक्षेपेण सामान्यव्याप्तिमाह ॥ **यश्चेति** । बादरायणो विवक्षावान् वचनवत्त्वादिति विवक्षितानुमाने व्याप्तिं सूचयितुं कार्यकारणयोर्व्याप्यव्यापकभावस्य सुप्रसि-द्धत्वादनयोः कार्यकारणभावं सूचयति ॥ **तदिति** । ब्रह्मादयः श्रोतारस्तत्त्वज्ञानयोग्या गुरुत्वादिति विवक्षितानुमाने व्यतिरेकव्यभिचारादर्शनप्रदर्शनमुखेन व्यतिरेकव्याप्तिं सूचयति ॥ **न हीति** । विमताः श्रोतारो वक्तृप्रेमास्पदान्यजादित्वादिति विवक्षितानुमाने हेतोः साध्येन व्याप्तिमागमप्रसिद्ध्या दर्शयति ॥ **ब्रह्मादय इति** । प्रसङ्गः प्रयोजनोद्देशको मोक्षोद्देशकत्वादिति विशेषेण सामान्यानुमाने विवक्षिते मोक्षस्य प्रयोजनविशेषतया सर्वसिद्धत्वाद् व्याप्तिसिद्धिं शास्त्रस्य सूत्रे मोक्षसाधनत्वोक्त्या पक्षधर्मतासिद्धिं चाभिप्रेत्य ते अनुपपाद्य प्रसङ्गानुकूल्योपपादकांशमेव दर्शयति ॥ **तदिति** । अत्र तत्त्वोपदेशस्योपदेश्यापेक्षया अधिकतत्त्वज्ञानसाध्यत्वादागमप्रणयनस्य वक्तुस्तदर्थज्ञानसाध्यत्वाद्बह्वागमप्रणयनस्यासति निमित्तान्तरे पटुकरणत्वसाध्यत्वाद्वचनस्य च विवक्षासाध्यत्वात्तत्त्वज्ञानायोग्यस्य तदनुत्पत्त्या तत्त्वोपदेशस्य ज्ञानद्वारा तत्त्वज्ञानयोग्यतासाध्यत्वादेषु हेतुष्वकारणकार्योत्पत्तिप्रसङ्गः । अन्त्ययोर्द्वयोश्चादिपदसंगृहीतागमप्रसिद्धि-विरोधः सामान्यविशेषभावविरोधश्च विपक्षे बाधका उन्नेया इत्याह ॥ **अत्रेति** ।

स० — **अत्र सर्वत्रेति** । प्रथमानुमाने हेत्वर्थस्य तत्त्वोपदेष्टृत्वस्य विवक्षितार्थतत्त्वज्ञानकार्यत्वे तदभावेऽभावात्तत्त्वज्ञानाभावेऽपि तत्त्वोपदेशकत्वाङ्गीकारे अकारणकार्योत्पत्तिरेव द्वितीयतृतीयचतुर्थेष्वपि

अकारणकार्योत्पत्तिः द्रष्टव्या । पञ्चमे तु आदिशब्दोक्त आगमबाधो विपक्षे बाधकत्वेन ज्ञेय इति भावः ।

**प०— इति ज्ञातव्यमिति** । अयं भावः । यत इति श्रवणात्प्राप्तं अत इत्येतदावर्त्यम् । अत एतच्छास्त्रमनुकूलवक्तृकं शास्त्रप्रभवत्वादिविशिष्टेनोक्तत्वात् भारतादिवत् । विमतमनुकूलश्रोतृकं जगदुपदेष्टृभ्यो अजादिभ्य उपदिष्टत्वात् । विमतमनुकूलप्रसङ्गोपेतं श्रोतृप्रयोजनोद्देशशब्दत्वात् भारतवत् एवेत्यतःशब्दोक्तहेतुत्रयपरामर्शेन साध्यत्रयम् । तथैतच्छास्त्रं मानं भवितुमर्हति अनुकूलवक्त्रादिमत्वात् भारतवदिति । अनुकूलवक्तृत्वादिरतःशब्दार्थ इति । अनुकूलवक्त्रादिमत्त्वमपि प्रामाण्ये साक्षान्न हेतुः । किंतु आप्तवाक्यत्वसाधनद्वारेत्यग्रे व्यक्तमिति परमसाध्यनिर्देश इत्येवोक्तम् । आद्यसाध्यत्रये हेतुत्रयं नाप्रयोजकमिति उपपादयति ॥ **तथा हीत्यादिना** ॥ **श्रोतुरिति** । आनुकूल्यमित्यनुषङ्गः । एवमग्रे अपि । उपपादयति ॥ **इत्यागमादिति** । 'ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्य भगवान्' इति भाष्योक्तागमादित्यर्थः । 'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन' इत्येकं वाक्यम् । 'उत्सन्नान् भगवान्वेदानुज्जहार हरिः स्वयमि'ति अपरम् ॥ **अत्र सर्वत्रेति** । गुरूणां गुरुत्वात्तत्त्वज्ञानवत्त्वमित्यत्र गुरुशास्त्रप्रभवत्वात् सार्वज्ञं करणपाटवं चेत्यत्र वक्तृत्वाद्विवक्षावानित्यत्र गुरुत्वादजादयस्तत्त्वज्ञानयोग्या इत्यत्र अजादित्वात्प्रेमास्पदत्वमित्यत्र चेत्यर्थः । व्याघातप्रमाणबाधादिरादिपदार्थः । तेनाजादित्वात्प्रेमा-स्पदत्वमित्यत्रापि विपक्षे बाधकमुक्तं ध्येयम् ।

**या०—** अनुक्तं पञ्चभिः वेदैरित्येतद्वेदानामशेषार्थप्रतिपादकत्वांशे मानमिति बोध्यम् । अजादित्वाद्वक्तृप्रेमास्पदा(नि) इत्यत्राकारणकार्योत्पत्तिरूपप्रसङ्गो न सम्भवतीत्यत उक्तम् ॥ **अजादिभ्य इतीति** । तेन तत्रागमिकप्रसिद्धिबाधप्रसङ्ग एव विपक्षे बाधक उन्नेय इत्युक्तं भवति । अत एव सुप्रसिद्धा इति पूर्वमुक्तं ज्ञातव्यम् ॥

**श्री०—** प्रयोजनोद्देशो वक्तुः । नन्वस्तु बादरायणस्य गुरूणां गुरुत्वम् । विवक्षितार्थतत्त्वज्ञानं मास्त्वित्याद्यप्रयोजकताशङ्कायां बाधकमाह ॥ **अत्र सर्वत्रेति** ॥

**च०—** बादरायणपक्षकसार्वज्ञसाधकब्रह्माद्युपदेष्टृत्ववेदादिशास्त्रप्रभवत्वलिङ्गकानुमानद्वये तथा तत्पक्षकविवक्षाकरणपाटवसाध्यकापारवेदादिप्रभवत्वहेतुकानुमाने च निदर्शनविरहेण विशेषव्याप्तेर्दुर्ग्रहतया सामान्यमुखव्याप्तिमभिधित्समानोऽप्रयोजकताशंकां च अकारणकार्योत्पत्तिप्रसङ्गेनापाचिकीर्षुः कतिपयपदा-वृत्त्युपगमेन न्यूनतामपनिनीषुर्योजनां दर्शयति ॥ **बादरायण इत्यादिनोन्नेय इत्यन्तेन** ।

**सु०— नन्वत्र गुरुर्गुरूणामित्यादीनां शास्त्रप्रामाण्येन यथाश्रुत एव साध्यसाधनभावो व्याख्यायताम् । किं मध्ये साध्यान्तराध्याहारकल्पनया । यद्यपि यथाश्रुतानामेषां व्यधिकरणता । तथाऽपि तदुदितमिति वचनाद्विभक्तिविपरिणामेन एकाधिकरणता भविष्यति ।**

वा०—अत्र गुरुर्गुरूणामित्यादिहेतूनामित्युक्तमुपपादयितुं शङ्कते ॥ **नन्वत्रेति** । गुरुगुरुत्वाशेषशास्त्रप्रभवत्ववचनानां श्रुतं मानमित्येव साध्यमस्तु किं सार्वज्ञमुखेन सिच्चद्विवक्षितार्थतत्त्वज्ञानकरणपाटवविवक्षारूपवक्त्रानुकूल्यस्यात्राश्रुतस्य साध्यत्वकल्पनया । एवं गुरुत्वाजादित्वयोर्मोक्षोद्देश्यकत्वस्य च श्रुतमानत्वसाध्यकत्वसम्भवे नाश्रुतश्रोतृप्रसङ्गानुकूल्यसाध्यकत्वमुपपन्नम् । श्रुताश्रुतपरित्यागकल्पनारूपदोषापत्तेः इत्यर्थः । नन्वत्र वक्तृश्रोतृप्रसङ्गानुकूल्यानां साध्यत्वे बादरायणश्रोतृप्रसङ्गानां पक्षत्वाद्गुरुगुरुत्वाशेषशास्त्रप्रभवत्ववचनगुरुत्वाजादित्वमोक्षोद्देश्यकत्वानां पक्षे सत्त्वेन साध्यवैय्यधिकरण्याभावात्प्रामाण्यसाधने च शास्त्रस्य पक्षत्वेनैतेषां च हेतूनां च तत्रासत्त्वेन साध्यवैय्यधिकरण्यापत्त्या बाधकवशात् श्रुतपरित्यागेन अश्रुतकल्पनायामपि न दोषः । यद्यपि व्याप्तिसत्त्वे वैय्यधिकरण्यं न दोषस्तथाऽपि समानाधिकरणयोरेव यत्र व्याप्तिग्रहस्तत्र वैय्यधिकरण्यस्य व्याप्त्यभावसम्पादकत्वाद्दोषत्वमेवेत्यतः स्यादेतदेवं यद्यत्र गुरुर्गुरूणामित्याद्येव श्रूयेत तदुदितमिति च श्रवणात् । तस्य च तेन बादरायणेनोदितमिति तृतीयातत्पुरुषत्वात्तेन तृतीयान्तबादरायणपदविशेषणतया हेतुशरीरप्रविष्टानां गुरूणां गुरुरित्यादीनामपि विपरिणामसूचनात्तदुदितमित्यत्र तदित्यस्य भिन्नपदत्वे वा पूर्वार्धोक्तप्रथमान्तानां तृतीयान्ततया विपरिणामे उदितमित्यनेन सम्बन्धे तादृशबादरायणोदितं तच्छास्त्रं मानमिति सम्बन्धे सति गुरूणां गुरुणा बादरायणेनोदितत्वस्य शास्त्रप्रभवेन बादरायणेनोदितत्वस्य गुरुभ्योऽजादिभ्य उदितत्वस्य तदर्थत उदितत्वस्य च लाभात्तस्य च शास्त्रनिष्ठत्वसम्भवान्न व्यधिकरणता । यद्यप्यत्रापि श्रुताश्रुतपरित्यागकल्पने समाने तथाऽपि तत्र वाक्यार्थविषये ते अत्र तु विभक्त्यर्थमात्रविषये ते इति विशेष इति वाऽत्र तदुदितमिति विभक्तिविपरिणामज्ञापकस्येव तत्र ज्ञापकस्याभाव इति वा विशेष इति नानुपपत्तिरित्यभिप्रेत्याह ॥ **यद्यपीति** ।

**स०**— गुरूणां गुरुत्वादित्यादिहेतूनां साक्षाद्वक्त्राद्यानुकूल्यमेव साध्यं, न प्रामाण्यमित्युक्तमाक्षिपति ॥ **नन्वत्रेति** । यदि सामान्यमेव साक्षात्साध्यं स्यात्तदा व्यधिकरणता स्यात् , इदं शास्त्रं प्रमाणं व्यासस्य गुरूणां गुरुत्वात् भारताद्यशेषशास्त्रप्रभवत्त्वादितीत्यत आह ॥ **यद्यपीति** ॥ **एषां व्यधिकरणतेति** ॥ एषां मध्ये द्वयोर्व्यधिकरणतेत्यर्थः ॥ **तदुदितमिति** । तच्छब्देन पूर्वोक्तविशेषणविशिष्टो बादरायणः परामृश्यते । उदितशब्दस्य भावप्रधानस्य पञ्चम्यन्ततया विपरिणामः । तेन सामानाधिकरण्यं भवति । अन्यथा वक्त्राद्यानुकूल्यसाधनेऽपि वैयधिकरण्यतादवस्थ्यादित्याह ॥ **तथापीति** ।

प०— सन्न्यायरत्नावल्यादावयोजितं पारम्पर्यं किमिति योज्यत इत्याक्षिपति ॥ **नन्वित्यादिना सत्यमित्यन्तेन** ॥ **विपरिणामेनेति** । यः गुरूणां गुरुः शास्त्राणां प्रभवश्च तेनैतादृग्गुणकेनोदितत्वात् इत्येवं रूपविपरिणामेनेत्यर्थः ॥

या०— **साध्यान्तराध्याहारेति** । वक्त्राद्यानुकूल्यरूपसाध्यान्तरेत्यर्थः ॥ **यथाश्रुतानामेषां इति** । यतो यत्कारणं बादरायणो गुरूणां गुरुर्यतः शास्त्राणां प्रभवो यतश्च गुरूणां शास्त्राणां गुरुः प्रभवोऽतो मानमिति पूर्वोक्तयोजनायां पूर्वार्धोक्तानां गुरूणां गुरुत्वादीनां पक्षीभूतशास्त्रनिष्ठतया प्रामाण्यरूपसाध्यव्यधिकरणतेत्यर्थः ॥ **तदुदितमिति** ॥ **वचनादिति** । अत्र तदिति भिन्नपदं शास्त्रपरम् । नन्वेवमुदितपदस्य तृतीयान्तकर्तृपदसापेक्षस्य गुरुर्गुरूणामित्यादिप्रथमान्तैः कथमन्वय इत्यत उक्तम् ॥ **विभक्तिविपरिणामेनेति** । तथा च गुरूणां गुरुणा शास्त्राणां प्रभवेन बादरायणेन यतः तच्छास्त्रमुदितमतो मानमित्येकाधिकरणतोपपद्यत इत्यर्थः । न च तदुदितमित्यस्य समासत्वे यो बादरायणः पूर्वोक्तविशेषणविशिष्टस्तेनेदमुदितमित्यर्थलाभादुक्तविभक्तिविपरिणामो नापेक्षित इति वाच्यम् । तथात्वे विशेष्यवाचकस्येदं शास्त्रमित्यस्याध्याहारप्रसङ्गादित्यभिप्रायात् । केचित्तु तच्छब्देन पूर्वोक्तविशेषणविशिष्टो बादरायणः परामृश्यते । उदितशब्दस्य भावप्रधानस्य पञ्चम्यन्ततया विपरिणामः तेन सामानाधिकरण्यमित्याहुः ॥

च०— **यथाश्रुतः** श्रूयमाणपदसमभिव्याहाराधीनान्वयधीविषयः ॥ **साध्यान्तराध्याहारेति** । प्रामाण्येतरवक्त्राद्यानुकूल्यत्रयरूपसाध्योपस्थापकपदप्रतीतिकल्पनयेत्यर्थः ॥ **व्यधिकरणतेति** । दर्शितश्रूयमाणपदयोजनाधीनान्वयधीविषयतापन्नगुरुगुरुत्वशास्त्रप्रभवत्वगुरुशास्त्रप्रभवत्वानां सिषाधयिषितप्रामाण्यनिरूपितानुमित्युद्देश्यतारूपपक्षताश्रयीभूतप्रकृतशास्त्रनिरूपितवृत्तिताविरह इत्यर्थः ॥ **वचनादिति** । तदुदितमित्यत्र सर्वनाम्ना कर्मसाधननिष्ठान्तस्य समासे लुप्तान्तवर्तिकर्त्रर्थकतृतीयासर्वनामविशेषणपदतानिर्वाहाय गुरुप्रभवबादरायणपदप्रकृतिकप्रथमात्रिकं तृतीयात्रिकं कल्पयिष्यतीति वा तदित्यस्य व्यस्ततामुपेत्य पक्षोपस्थापकतायां कर्तृबोधकपदनिर्वाहाय तत्रिकस्य तत्कल्पकत्वोपगमेन वा गुरुसम्बन्धिगुर्वभिन्नसर्वनामार्थोदितत्वशास्त्रप्रभवाभिन्नतदुदितत्वादीनां गुरुगुरूदितत्वशास्त्रप्रभवोदितत्वादीनां वा प्रामाण्यहेतुतोपगमेन न क्षतिरित्याशयः । तदुदितमित्यस्य समस्तताकल्पे सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति निषेधप्रसङ्गेन 'ऋद्धस्य राजमातंगा' इत्यादाविवासामञ्जस्यं दुर्वारम् । न च 'शरैः शातितपत्रश्चैत्रस्य दासभार्ये'त्यादाविव निर्वाह इति वाच्यम् । 'प्रतियोगिपदादन्यद्यदन्यत्कारकादपि । वृत्तिशब्दैकदेशेन न तस्यान्वय इष्यते' इति नियमेन तत्र निर्वाहेऽपि प्रकृते समासघटकसर्वनामार्थं प्रति

गुरोः प्रभवस्य वा प्रतियोगित्वकारकत्वयोरभावेन तद्वचनाप्रवृत्त्या समस्तताकल्पादपि व्यस्तताकल्पो गरीयानिति ध्येयम् । तच्छब्देन पूर्वोक्तविशेषणविशिष्टो बादरायणः परामृश्यते । उदितशब्दस्य भावप्रधानस्य पञ्चम्यन्ततया विपरिणामस्तेन सामानाधिकरण्यमित्यपि निबन्धान्तरे स्थितम् ।

**सु०— यद्यपि चैते प्रत्येकं बौद्धागमादौ मानतां व्यभिचरन्ति । तथाऽपि मिलितानां हेतुताऽस्तु । भारताद्यशेषसच्छास्त्रप्रभवप्रणीतत्वांशस्य सपक्षाप्रवेशितत्वेनासाधारण्यं स्यादिति चेन्न । तेष्वेव हेतुवृत्तिसम्भवात् । तत्प्रामाण्यस्य महाजनपरिग्रहादिना निश्चितत्वात् । एवं तर्हि भारतादिप्रणयनविशिष्टेन तेषामप्रणीतत्वाद्बादरायणेन ब्रह्मादीन्प्रति तन्मोक्षार्थमुपदिष्टत्वमात्रं हेतुः स्यादिति चेद्बाढम् । तावन्मात्रस्यैव व्यभिचाराभावात् । तथा सति गुरुर्गुरूणां प्रभवः शास्त्राणामिति व्यर्थमापद्यत इति चेन्न । तस्य हेतुशरीराप्रवेशिनोऽपि दृष्टान्तोपदर्शनादिना सार्थक्योपपत्तेरिति ।**

**वा०**— नन्वत्र गुरूणां गुरुणा बादरायणेनोदितत्वरूपे शास्त्रप्रभवेन बादरायणेनोदितत्वरूपे च हेतौ बादरायणग्रहणस्य गुरुभ्योऽजादिभ्य उदितत्वरूपहेतावजादिग्रहणस्य च विवक्षितत्वे बादरायणस्य गुरुगुरुत्वाव्यभिचारात् अजादीनां च गुरुत्वाव्यभिचारात् विशेषणवैयर्थ्यापातेन गुरूणां गुरुरित्यादीनां हेतुत्वोपपत्तये बादरायणाजादिग्रहणस्य प्रकृताभिप्रायेण प्रयोगेण हेतुशरीराप्रवेशस्य वक्तव्यत्वात् गुरूणां गुरुणोदितत्वस्य शास्त्रप्रभवेनोदितत्वस्य गुरुभ्यः श्रोतृभ्य उदितत्वस्यैव च हेतुत्वे वक्तव्ये प्रथमहेतुद्वयस्य बौद्धागमे तृतीयस्य जैनागमे तदर्थत उदितत्वस्य तदुभयत्रापि पूर्वहेतुत्रयस्य च नर्मादिवाक्ये मानताव्यभिचारात् गुरूणां गुरुत्वादीनां च वक्त्रानुकूल्यादिरूपाध्याहृतसाध्याव्यभिचारात् अध्याहृतसाध्यान्वयपक्ष एव युक्त इत्यतः प्रत्येकमेषां मानताव्यभिचारेऽपि गुरूणां गुरुणोदितत्वे सति शास्त्रप्रभवेनोदितत्वे सति गुरुभ्यः श्रोतृभ्य उदितत्वे सति तदर्थत उदितत्वादिति विशिष्टहेतोः क्वचिद्विशेषणाभावेन क्वचित् विशेष्याभावेनोक्तस्थलेष्वभावान्नात्रापि व्यभिचारप्रसक्तिरित्याह ॥ **यद्यपि चेति** । ननु विशिष्टहेतावपि पूर्वोक्तसत्यन्तद्वये गुरूणामिति ब्रह्मादीनां शास्त्रपदेन च वेदाद्यशेषसच्छास्त्रस्य विवक्षायामन्यतरेणैव जिनवाक्ये व्यभिचारपरिहारेण सत्यन्तद्वयस्य वैयर्थ्यापत्त्या विशेषविवक्षायां च सत्यन्तद्वयग्रहणेऽपि तत्र व्यभिचारापातात् । गुरूणां शास्त्राणां गुरुः प्रभव इति योजनानुसारेण भारताद्यशेषसच्छास्त्रप्रभवप्रणीतत्वस्यैव हेतुविशेषणत्वं वक्तव्यम् । एवं च वेदप्रामाण्यसिद्धौ तन्मूलकतया भारतस्यैवैतच्छास्त्रस्यापि प्रामाण्यसिद्ध्या तत्साधनायोगेन वेदप्रामाण्यानिश्चयेन भारतप्रामाण्यानिश्चयस्यैव वक्तव्यत्वेन वेदभारतादेः सपक्षत्वासम्भवात्प्रत्यक्षानुमानयोर्मन्वादिवाक्यस्यैव च सपक्षत्वेन वक्तव्यत्वात् प्रत्यक्षानुमानयोरुच्चारणरूप-

प्रणयनासम्भवान्मन्वादिवाक्ये च गुरुभ्यः श्रोतृभ्यस्तदर्थत उदितत्वसत्त्वेऽपि भारताद्यशेषसच्छास्त्रप्रभव-प्रणीतत्वांशस्याभावादसाधारण्यापत्त्या न यथाश्रुतसाध्यसाधनभावो युक्त इत्याशङ्कते ॥ **भारतादीति** । माऽस्तु प्रत्यक्षानुमानमन्वादिवाक्यानां सपक्षत्वं वेदभारतादिष्वेव हेतुवृत्तेर्नासाधारण्यमित्याह ॥ **तेष्वेव इति** । ननु तस्य प्रामाण्यं न निश्चितमित्युक्तमित्यतो भारतस्य महाजनपरिग्रहेण वेदस्य चापौरुषेयतया प्रामाण्यनिश्चयेन वेदभारताद्यशेषशास्त्रस्य सपक्षत्वसम्भवेऽपि प्रकृतशास्त्रे वेदमूलकत्वस्याद्याप्यनिश्चयेन तत्प्रामाण्यसाधनासम्भवादित्यभिप्रेत्याह ॥ **तदिति** । नन्वेवं भारताद्यतिरिक्तस्य सपक्षत्वे भारतादिप्रण-यनविशिष्टेन तत्प्रणयनसम्भवेऽपि भारतादेरेव सपक्षत्वे भारतादेर्भारताद्यन्तराभावेन भारताद्यशेषसच्छास्त्र-प्रभवप्रणीतत्वांशस्य तत्रासम्भवेन पुनरसाधारण्यापत्त्या भारतादेरेव सपक्षत्वं वदता तद्विशेषणाविवक्षा विशेष्यमात्रविवक्षा चाभ्युपेता स्यात् । तथा च बादरायणेन ब्रह्मादीन्प्रति तन्मोक्षार्थमुपदिष्टत्वमात्रं हेतुः स्यादिति गूढाभिसन्धिः शङ्कते ॥ **एवमिति** । तावन्मात्रस्य व्यभिचारत्वे हीदमनिष्टापादनं स्यान्न चैव-मित्यभिप्रेत्याभिप्रायमजानान इव गूढाभिसन्धिरेवोत्तरमाह ॥ **बाढमिति** । तर्हि तस्य हेतुशरीरप्रवेशा-भावेन प्रयोजनान्तरस्याप्यभावाद्वैयर्थ्यमापद्येतेति शङ्किता स्वाभिप्रायमुद्घाटयति ॥ **तथा सतीति** । हेतुशरीराप्रवेशेऽपि प्रकारान्तरेण सार्थक्यमिति सिद्धान्ती स्वाशयमुद्घाटयति ॥ **न तस्येति** ॥ **दृष्टान्तेति** । भारतादीनां दृष्टान्तत्वं दर्शयितुं तत्प्रभवत्वमुच्यत इति भावः ।

**स०— यद्यपीति** । गुरूणां गुरुणोदितत्वस्य शास्त्रप्रभवेणोदितत्वस्य बौद्धागमे सत्वेन तत्र प्रामाण्याभावेन श्रोतृप्रयोजनोद्देशेनोदितत्वस्यादिशब्दोक्तजैनागमे सत्वेन व्यभिचारादेत इत्युपपन्नमिति भावः ॥ **मिलितानामिति** । भारताद्यशेषसच्छास्त्रप्रभवप्रणीतत्वे सति श्रोतृप्रयोजनोद्देशेन प्रणीतत्वं हेतुरित्यर्थः । मन्वादिस्मृत्यादौ श्रोतृप्रयोजनोद्देशेनोपदिष्टत्वरूपांशान्तरस्य सत्वेन तदप्रवेशेनासाधारण्या-नुपपत्त्या भारताद्यशेषसच्छास्त्रप्रभवप्रणीतत्वांशस्येत्युक्तम् । न च गुरूणां गुरुणोदितत्वस्य तत्राभावेनापि असाधारण्यं किं नोच्यत इति वाच्यम् । गुरूणां शास्त्राणां गुरुः प्रभव इत्यनेनैव भारताद्यशेषसच्छास्त्र-प्रभवप्रणीतत्वलाभेन तस्य हेत्वन्तरत्वाभावादिति भावः । केचित्तु ॥ **तथापि मिलितानामिति** । भारताद्यशेषसच्छास्त्रप्रभवप्रणीतत्वे सति गुरूणां गुरुणा ब्रह्मादिभ्यस्तत्प्रयोजनोद्देशेनोदितत्वादिति हेतोः इत्यर्थः ॥ **भारतादीति** । वेदे प्रणीतत्वमेव नास्ति । मन्वादिवाक्येषु प्रणीतत्वसत्त्वेऽपि व्यासप्रणीतत्वं नास्ति, भारतादीनां च प्रामाण्यमप्रसिद्धम् । भारताद्यशेषसच्छास्त्रप्रभवप्रणीतत्वरहिताद्वेदादितः सपक्षा-द्व्यावृत्तो, विपक्षाच्च बौद्धागमादेर्ब्रह्माद्यर्थमुपदिष्टत्वरहिताद्व्यावर्तमानो विशिष्टो हेतुरसाधारणानैकान्तिकः स्यात् । वेदे विशेषणाभावः । बौद्धागमादौ विशेष्याभावः । मन्वादिवाक्ये विशिष्टाभाव इत्यर्थ इत्याहुः । असाधारण्यशङ्काकर्तुराशयं प्रकटयितुं गूढाभिसन्धिरेव समाधत्ते ॥ **तेष्विति** । भारतादीनां

निर्णेयत्वेन महाजनपरिग्रहात्प्रामाण्यं (वेदं) निश्चितं नैवं निर्णायकस्य मीमांसाशास्त्रस्य येन सिद्धत्वेन पक्षत्वं न स्यात् । मीमांसाशास्त्रमात्रप्रामाण्ये विप्रतिपद्यमानं प्रत्येतदुच्यत इत्यदोषः । पूर्वोक्तशङ्काशय-मुद्धाटयत् पुनर्गूढाभिसन्धिः शङ्कते ॥ **एवं तर्हीति** । भारताद्यशेषसच्छास्त्रप्रभवप्रणीतत्वांशस्य विवक्षायां भारतादीनां भारताद्यन्तराभावात् तत्प्रणेत्रा प्रणीतत्वायोगादसाधारण्यं तदवस्थम् । अविवक्षायां वैयर्थ्यं सर्वदा निवेशनस्येत्यर्थः । आशयमुद्धाटयति ॥ **तथा सतीति** । किं हेतुविशेषणत्वाभावाद् वैयर्थ्यं, सर्वथा प्रयोजनराहित्यं वेति विकल्प्याद्यमिष्टापत्त्या समाधत्ते ॥ **तस्येति** । द्वितीये त्वाह ॥ **दृष्टान्तोप-दर्शनादिनेति** । शास्त्राणां प्रभव इत्यस्य भारतादिरूपदृष्टान्तप्रदर्शकत्वेन गुरूणां गुरुरित्यस्य भारतादा-वादिशब्दोक्तबादरायणेन ब्रह्मादीन्प्रति तन्मोक्षार्थमुपदिष्टत्वरूपहेतुसत्वप्रतिपादकत्वेन सार्थक्यादिति भावः ।

प०— **एत इति** । गुरूणां गुरुणोदितत्वम् । अशेषशास्त्रप्रभवेनोक्तत्वम् । अजादीन् श्रोतॄन् प्रत्युपदिष्टत्वं प्रयोजनोद्देशेनोक्तत्वमित्येते हेतव इत्यर्थः । नारायणावतारेण बुद्धेन कृतत्वाद्बौद्धागमस्य बुद्धस्य च ब्रह्मादिगुरुत्वात्तत्राद्यस्य सर्वशास्त्रप्रभवप्रणीतत्वस्य च वेदविरुद्धशैवादिपुराणभागे तृतीयस्य नर्मादौ चतुर्थस्य कापिलादावपि गतत्वादेकैकस्य व्यभिचारेऽपि अजादिप्रयोजनोद्देशेन उक्तत्वाभावात् तन्मिलितस्य हेतुत्वं भविष्यतीति भावः । अजादिमोक्षोद्देशेनोक्तत्वमात्रस्यैव हेतुत्वमव्यभिचाराद्युक्तमित्ये-तदग्रे व्यक्तम् । ननु विशिष्टस्यापि हेतोर्बौद्धागमादौ व्यभिचार एव । भारततात्पर्यनिर्णये द्वात्रिंशा-ध्यायोक्तदिशा बौद्धागमाभिप्रेतार्थस्य देवेभ्य उपदिष्टत्वादिति चेत् । न । तन्मोक्षार्थोद्देशेनोक्तत्वाभावात् अभिप्रेतार्थे प्रामाण्यसद्भावाच्चाशेषशास्त्रकर्त्रा व्यासेनाकृतत्वाच्चेति भावः । शास्त्रप्रभवत्वं विशेषणं मत्वा भारतादिसपक्षे हेतुर्नेति भावेन शङ्कते ॥ **भारतादीति** । उपलक्षणत्वाशयेनाह ॥ **तेष्वेवेति** । भारता-दिष्वेवेत्यर्थः । ननु तत्राप्यनेनैव हेतुना मानत्वं साध्यमिति पक्षतौल्यान्न सपक्षत्वमित्यत आह ॥ **तदिति** । 'इतिहासपुराणः पञ्चमो वेदानां वेद' इति श्रुतिपरिगृहीतत्वादिरादिशब्दार्थः । प्रामाण्ये परम्परया हेतुः अयमिति वादी शास्त्रप्रभवत्वस्य विशेषणत्वपक्षे विशिष्टहेतोरप्यसाधारण्याद्विशेष्येणैवालमिति भावेनाशङ्कते । **एवं तर्हीति** । बाढमित्यङ्गीकारे हेतुमाह ॥ **तावन्मात्रस्येति** । परम्परया हेतुवादी शङ्कते ॥ **तथा सतीति** ॥ **हेतुशरीरेति** । यतः यतश्चेत्येवं हेतुशरीरप्रवेशितया प्रयोजनाभावेऽपि गुरूणां गुरुरित्यंशेन अजादिमोक्षोद्देशेनेत्यंशस्य शास्त्राणां प्रभव इत्यंशेन बादरायणेनोक्तत्वांशस्य महाजनपरिग्रहादिना सिद्ध-प्रामाण्ये भारतादौ लाभेन भारतादिदृष्टान्तः । तत्र साधनं चास्तीति प्रदर्शनेन सार्थक्योपपत्तेरित्यर्थः ॥

या०— **एते प्रत्येकमिति** । गुरुगुरूदितत्वशास्त्रप्रभवोदितत्वयोः बौद्धागमे शैवपुराणादौ च बादरायणोदितत्वस्यापि शैवपुराणादौ अजादीन्प्रत्युपदिष्टत्वस्य नर्मादौ मोक्षार्थमुपदिष्टत्वस्य गौतमप्रणीत-

न्यायशास्त्रे च व्यभिचार इति भावः । गूढाभिसन्धिराह ॥ **मिलितानामिति** । मिलितानामित्यस्य वक्ष्यमाणमाशयमविद्वान्भ्रान्तः शङ्कते ॥ **भारताद्यशेषेति** ॥ इदं च सपक्षैकदेशे भारतादौ न हेतोर्वृत्तिरित्युपपादनाय भारतादिप्रणयनविशिष्टेन तेषामप्रणीतत्वादिति इति द्रष्टव्यम् । तथा च वेदे प्रत्यक्षादौ च प्रणीतत्वाभावेन प्रमाणभूतेऽस्मदीयवाक्ये बादरायणप्रणीतत्वाद्यभावेन बादरायणीये च प्रमाणभूते गामानयेत्यादिलौकिकवाक्ये अजादिमोक्षार्थमुदितत्वाभावेन भारतादौ चोक्तरीत्या हेत्वभावेन न कुत्रापि सपक्षे हेतुसत्त्वमिति भावः । गूढाभिसन्धिरेवोत्तरमाह ॥ **तेष्वेवेति** । भारतादिष्वेवेत्यर्थः । अस्मदभिमतवक्ष्यमाणमिलितहेतोस्तत्र सत्त्वादिति भावः ॥ ननु भारतादेरपि सूत्रकारकृतत्वेन सूत्रसमानयोगक्षेमतया कथं सपक्षत्वमिति तटस्थशङ्कायामाह ॥ **तत्प्रामाण्यस्येति** । ब्रह्मसूत्रप्रामाण्यानङ्गीकर्तृभिरपि कापिलगौतमीयादिभिर्भारतादिप्रामाण्यस्याङ्गीकृतत्वादिति भावः । आशयमुद्घाटयति ॥ **बाढमिति** । तथा च पूर्वं मिलितानामित्यत्र द्वितीयार्धोक्तानामेव मेलनमभिप्रेतं न पूर्वार्धोक्तानामपि । त्वया त्विममभिप्रायमजानता पूर्वार्धोक्तानामपि मेलनं मत्वाऽसाधारण्यं शङ्कितमिति भावः ॥

च०— अथ गुरुगुरुत्वविशेषितबादरायणोदितत्वस्य शास्त्रप्रभवत्वविशेषितबादरायणोदितत्वस्य गुरुत्वविशेषिताजाद्युद्देशेनोदितत्वस्य च हेतुत्वे विशेष्यांशवैयर्थ्यनिबन्धनमतभेदनियन्त्रितनिग्रहासिद्धिप्रसङ्गेन हेतुतावच्छेदकघटकतया तदनिवेशेऽपि आद्यहेतुद्विकस्य बौद्धागमशैवपुराणयोस्तृतीयस्य जैनागमादौ मोक्षोपदेशेनोपदिष्टत्वस्य च गौतमीयेऽनैकान्त्यापत्त्या मानतायाः साध्यत्वस्य दुरुपगमतया वक्त्राद्यानुकूल्यरूपसाध्यान्तरोपस्थापकपदाध्याहार आवश्यक इत्याशयेनाशङ्कते ॥ **यद्यपि चैत इति** । गूढाभिसन्धिः समाधत्ते ॥ **तथापीति** । स्फुटीकरिष्यमाणाभिसन्धिमननुसन्दधानः शङ्कते ॥ **भारतेति** । प्रमाणभूतप्रत्यक्षानुमानयोः प्रणयनकर्मत्वाभावेन तादृशचैत्रादिवाक्ये बादरायणकर्तृकतत्कर्मत्वाभावेन बादरायणोच्चरित एव घटमानयेत्यादिवाक्ये अजादिमोक्षोद्देश्यकतत्कर्मत्वस्य भारतादिप्रणेतृतावच्छेदककोटौ तत्प्रणयनस्य कार्याव्यवहितपूर्वक्षणावच्छेदेन कारणतावच्छेदकावच्छिन्नसमवधानयोगनियन्त्रित तदनुत्पत्तिप्रसङ्गेन दुरुपगमतया भारतादौ च हेत्वभावेन सपक्षसामान्यवृत्तिताविरहेण असाधारण्यमिति भावः । आशयम् आविष्करोति ॥ **तावन्मात्रस्यैवेति** । दलान्तराभिहितमात्रस्य हेतुत्वमुत्तरवादिनाऽभिधित्सितमिति तदप्रतिसंहितिनियन्त्रितेयमसाधारण्यशङ्केत्याशयः । आद्यदलसार्थक्यं सम्पादयति ॥ **दृष्टान्तेति** ।

**सु०— सत्यम् । तथाऽपि नैतदेवं विज्ञातुं शक्यम् । तथा सत्युत्तरवाक्ये वक्त्राद्यानुकूल्यस्य साध्यसम्बन्धव्युत्पादनमसङ्गतं स्यात् । तदनुमानान्तरं भविष्यतीति चेन्न । तथात्वे प्रामाण्यं त्रिविधमिति वक्ष्यमाणविरोधात् । विजातीयसंवादत्वेनानयोरैक्यविवक्षया त्रित्वोक्तिः**

**अस्त्विति चेत् । एवं तर्हि वक्ष्यमाणश्रुतियुक्तिसंवादोऽपि सजातीयसंवादतयैक एव स्यात् । अर्धज(च)रतीयानुपपत्तेः । तथा च पुनस्त्रित्वानुपपत्तिरेव । भवेदयं ग्रन्थकृतोऽभिप्रायः । तेनापीदं प्रयत्नगौरवं कस्मादाश्रितमिति चेन्न । उक्तसाधनत्वोपपन्नेऽप्यस्तु भारतादीनां प्रामाण्यं मा भूचास्येति शङ्कायां वक्त्राद्यानुकूल्यसाधनस्यावश्याश्रयणीयत्वात् । अन्यथाऽप्रयोजकत्वापत्तेरिति ।**

**वा०**— किं ग्रन्थकृतोऽयमेवाभिप्राय इति मनुषे आहोस्विदेतादृशि लघूपाये सति ग्रन्थकृतैवं प्रयत्नगौरवं नाश्रयणीयम् । नाद्य इत्याह ॥ **तथाऽपीति ॥ तथा सतीति ।** बादरायणेन ब्रह्मादीन्प्रति तन्मोक्षार्थमुपदिष्टत्वस्य हेतुतया ग्रन्थकृताऽभिप्रेतत्वे तस्यैव मानत्वरूपसाध्यसम्बन्ध उत्तरवाक्ये प्रतिपाद्यः स्यात् । वक्त्राद्यानुकूल्यस्य मानत्वोपपादकाप्तवाक्यतया व्याप्तिपक्षधर्मतोपपादनद्वारा मानत्वरूपसाध्यसम्बन्धकथनस्य न काऽपि सङ्गतिरित्यर्थः । वक्त्राद्यानुकूल्यस्यापि मानत्वहेतुत्वमित्यभिप्रायेणोत्तरवाक्यसङ्गतेर्न तस्य बादरायणेनेत्यादेर्मानत्वहेतुत्वाभावज्ञापकत्वमित्याशयेन शङ्कते ॥ **तदिति ॥ विजातीयेति ।** वक्त्राद्यानुकूल्यरूपसंवादस्य बादरायणेन तन्मोक्षार्थमुपदिष्टत्वस्य च ब्रह्मसूत्रसमानार्थकत्वाभावे सति तत्प्रामाण्यग्राहकतया विजातीयसंवादत्वमित्यर्थः । श्रुतियुक्तिसंवादस्य तु ब्रह्मसूत्रसमानार्थतया तत्प्रामाण्यग्राहकत्वेन सजातीयसंवादत्वमिति द्रष्टव्यम् ॥ **अर्धेति ।** केनचित्पाशुपतेन सर्वजरत्या योषितोऽनुपभोग्यत्वात्सर्वतरुण्याश्च वृद्धे मय्यरुचिप्रसङ्गादर्धजरत्यानयने दूतः प्रेषित इति लोकप्रवादोऽर्धजरतीशब्देनोच्यते । छप्रत्ययेन चोपमानोपमेयभावरूपः सम्बन्ध उच्यते । तथा च तत्प्रवादतुल्यप्रवादानुपपत्तेरित्यर्थः । अस्तु श्रुतियुक्तिसंवादस्य सजातीयसंवादितयैकत्वमित्यत आह ॥ **तथा चेति** । द्वितीयं निराकरोति ॥ **भवेदेवमिति ।** अत्र ह्यप्रयोजकत्वशङ्कायां विपक्षे बाधकान्तरस्याभावात्प्रामाण्यानङ्गीकारे अस्य शास्त्रस्य वक्त्राद्यानुकूल्योपेतत्वं न स्यादित्येव विपक्षे बाधकं वक्तव्यम् । तत्रेष्टापादनत्वशङ्कायां गुरूणां गुरुत्वादित्यादिहेतुभिर्वक्त्राद्यानुकूल्यस्यावश्यं साधनीयत्वे प्रथमत एव तदस्त्विति ग्रन्थकृतोऽभिप्रायत्वान्न प्रयत्नगौरवाश्रयणं तस्येत्याह ॥ **उक्तेति ।**

**स०**—वक्तृश्रोतृप्रसक्तीनामित्युत्तरवाक्ये वक्त्राद्यानुकूल्यस्य प्रामाण्यहेतुत्वोक्तेः गुरूपदेष्ट्रादिप्रणीतत्वं न प्रामाण्यसाधकहेतुः श्रुतियुक्तिभ्यां सह चतुष्ट्वापत्त्या त्रित्वविरोधादिति समाधत्ते ॥ **सत्यमिति** । ननूत्तरश्लोकोक्तस्यानुमानान्तरत्वेऽपि न प्रामाण्यत्रित्वहानिः । अनयोरनुमानयोः प्रामाण्यग्राहकत्वेन विजातीयत्वेन रूपेणैकत्वसम्भवात् । अत्र च शास्त्रसमानार्थत्वाभावे सति प्रामाण्यग्राहकत्वं विजातीयत्वं विवक्षितम् । श्रुतिमूलत्वयुक्तिमूलत्वयोरपि शास्त्रसमानार्थत्वे सति प्रामाण्य-

ग्राहकत्वरूपसजातीयत्वेनैकत्वसम्भवात्प्रमाणद्वित्वापत्त्या प्रमाणत्रित्वहानिरेवेत्यर्थः । केचित्तु ब्रह्मसूत्राण अलौकिकवाक्ये सम्भवाद्विजातीयतर्कत्वाद्वेदानुकूला युक्तिरपि सजातीया । अनुकूलवक्त्रादिमत्वस्य युक्त्यात्मकत्वरहितेऽपि लौकिकवाक्ये भावाद्विजातीयत्वं श्रुतियुक्त्योस्तु सर्वोत्तमप्रामाण्यसाधकत्वात् तत् संवादस्य सजातीयत्वमित्याह ॥ **अर्धजरतीयेति** । अत्र जरतीशब्देन सर्वात्मना जरतीं त्यक्तुमशक्नुवतः प्रक्रिया लक्ष्यते । छप्रत्ययेन चोपमानोपमेयरूपः सम्बन्ध उच्यते । तथाच एतत्प्रक्रियातुल्यप्रक्रिया-नुपपत्तेरित्यर्थः पर्यवस्यति । इत्थं तत्प्रक्रिया । अर्धं जरत्याः कामयते अर्धं न कामयते । मुखं जरत्याः कामयते ॥ नाङ्गान्तरमिति । एवं च जरत्या एकदेशे कामना नैकदेशान्तरे इत्येतद्यथा जुगुप्सितं तथा एतदपीत्यर्थः । अर्धचरतीयेति पाठे चरतिश्चरणं भक्षणमिति यावत् । तेन तत्कर्तुः प्रक्रिया लक्ष्यते । छप्रत्ययेन च पूर्ववत्सम्बन्ध उच्यते तेनार्धभक्षणकर्तृप्रक्रियातुल्यप्रक्रियानुपपत्तेरित्यर्थः पर्यवस्यति । इत्थं हि तत्प्रक्रिया । सगर्भां मत्स्यवधूं गृहीत्वा कश्चिदस्याः प्रसवे मत्स्यान्तरं भविष्यति । इदानीं चेमाम-पक्त्वाऽनश्नन्नहं न स्थातुमुत्सहे इति विचार्य वदति अस्या अर्धं पाकायार्धं प्रसवायेति । एवं च तद्यथा जुगुप्सितमेवमेतदिति भाव इत्याहुः । अन्ये तु 'लम्बमानौ सुतौ दृष्ट्वा व्याधः परमबुद्धिमान् । सर्वनाशे समुत्पन्ने ह्यर्धं चरति पण्डित' इत्यस्य न्यायस्य प्रकृतेऽनुपपत्तेरित्यर्थ इत्याहुः । गुरूपदे गुर्वुपदिष्टत्वेनानु-कूलवक्त्रादिमत्वसाधनं तेन प्रामाण्यसाधनमिति परम्पराश्रयणे प्रश्नपूर्वकं प्रयोजनमाह ॥ **भवेदिति** । विपक्षे बाधकोपन्यासार्थमनुकूलवक्त्रादिमत्त्वं साधनम् । यत्र प्रामाण्यं तत्राप्तवाक्यत्वमित्यस्य प्रत्यक्षे व्यभिचारात् । ब्रह्मसूत्राणामाप्तवाक्यत्वे मानाभावात् । क्वचिदाप्तस्य सर्वत्राप्तत्वनियमाभावादिति भावः ॥

प०— **एवमिति** । साक्षाद्धेतुत्वेनेत्यर्थः ॥ **साध्येति** । आप्तिपदोक्ताप्तवाक्यरूपसाध्येत्यर्थः ॥ **तदनुमानान्तरमिति** । विमतं शास्त्रं मानं भवितुमर्हति ॥ अजादिमोक्षोद्देशेन व्यासप्रोक्तत्वाद्भारतादि-वदिति पूर्वश्लोकोक्तानुमानाद्विमतं मानमाप्तवाक्यत्वादिति प्रामाण्ये अनुमानान्तरं भविष्यतीति आप्त-वाक्यत्वासिद्धिपरिहारार्थं वक्तृश्रोत्रित्यादिसार्थकं भविष्यतीत्यर्थः ॥ **त्रिविधमितीति** । आप्तिमूलत्व-श्रुतिमूलत्वयुक्तिमूलत्वरूपत्रैविध्यवदजादिमोक्षोद्देशेन प्रोक्तत्वरूपैकविधस्याधिकस्य प्राप्ततया प्रामाण्यं चतुर्विधं महदिति वक्तव्यं स्यादिति भावः ॥ **विजातीयेति** । शास्त्रप्रतिपाद्यार्थविषयकं सजातीयं विजातीयं तु साक्षात्तदर्थाविषयकं तत्प्रामाण्यनिश्चायकम् । यथा सत्यरजते इदं रजतमिति ज्ञानस्य तादृशज्ञानान्तरं सजातीयम् । विजातीयं तु कटकाद्यर्थक्रियाकारित्वम् । प्रकृते च वक्ष्यमाणदिशा श्रुतियुक्त्योर्ब्रह्मतन्त्रार्थसमानविषयकत्वमेव साक्षादिति सजातीयत्वम् । अजादिमोक्षोद्देशेनोक्तत्वस्याप्त-वाक्यत्वस्य च न साक्षात्तदर्थविषयकत्वं किं तु तत्प्रामाण्यविषयकतयेति विजातीयत्वम् । अतो विजा-

तीयसंवादित्वेन सजातीयसंवादतयेत्युक्तम् । तथा च द्वैविध्यमेव प्रामाण्यस्य प्राप्तं न त्रैविध्यमिति भावः ॥ **अर्धचरतीयेति** । सगर्भमत्स्यस्यार्धं भक्षणायार्धं गर्भप्रसवायेति यथा न युक्तं तथेत्यर्धचरतीय न्याय इत्येके । अलाब्वादिफलादेरर्धं भक्षणायार्धं बीजाभिवृद्धिद्वाराङ्कुरादिप्रसवाय यथा न युक्तं तथेत्यर्थ इत्यन्ये ॥ **इदमिति** । शास्त्रप्रभवत्वादिना वक्राद्यानुकूल्यन्तेन च प्रामाण्यमिति प्रयत्नगौरवमित्यर्थः । विमतं शास्त्रं प्रमाणं शास्त्रप्रभवत्त्वादिविशिष्टेन प्रोक्तत्वाद्भारतवदित्येवोक्तावप्रयोजकत्वशंका स्यात्तन्निवृत्त्यर्थमेवमाश्रितमिति भावेनाह ॥ **उक्तसाधनेति** । यथा हि क्षित्यादिकं सकर्तृकं सावयवत्वादित्युक्ते हेतोरप्रयोजकत्वशङ्कानिरासाय मध्ये कार्यत्वं निवेश्यते तद्वदिति भावः ॥ **वक्रादीति** । तत्र च नाप्रयोजकत्वमिति भावः ॥

या० — **साध्यसम्बन्धेति** । आप्तिद्वारा प्रामाण्यरूपसाध्यसाधकताव्युत्पादनमित्यर्थः ॥ **तदनुमानान्तरमिति** । गुरुर्गुरूणामिति श्लोकोक्तप्रामाण्यसाधकानुमानापेक्षया वक्तृश्रोतृप्रसक्तीनामित्यनेन उच्यमानवक्राद्यानुकूल्यसिद्धमाप्तोक्तत्वं प्रामाण्यसाधकानुमानमपरमित्यर्थः ॥ **विजातीयसंवादत्वेनेति** । शास्त्रप्रामाण्यव्यवस्थापनद्वारा शास्त्रविषयव्यवस्थापकमानान्तरसंवादत्वेनेत्यर्थः । स्वप्रामाण्यव्यवस्थापनद्वारा स्वविषयव्यवस्थापकमानान्तरसंवादस्यैव विजातीयसंवादतया विवक्षितत्वात् ॥ **सजातीयसंवादतयेति** । साक्षाच्छास्त्रविषयविषयकमानान्तरसंवादतयेत्यर्थः । साक्षात्स्वविषयविषयकमानान्तरसंवादस्यैव सजातीयसंवादत्वेन विवक्षितत्वादित्याशयः । केचित्तु गुरूपदेशाद्युपदिष्टत्वस्यानुकूलवक्रादिमत्त्वसिद्धाप्तवाक्यत्वस्य च लौकिकवाक्यसाधारण्येन प्रामाण्यमात्रसाधकत्वात्संवादस्य विजातीयत्वम् । श्रुतियुक्त्योस्त्वलौकिकार्थत्वात्सर्वोत्तमप्रामाण्यमात्रसाधकत्वात्तत्संवादस्य सजातीयत्वमित्याहुः ॥ **अर्धजरतीयानुपपत्तेरिति** । अत्रार्धजरतीशब्देन सर्वात्मना जरतीं त्यक्तुमशक्नुवतः प्रक्रिया लक्ष्यते । छप्रत्ययेन चोपमानोपमेयरूपः सम्बन्ध उच्यते । तथा च तत्प्रक्रियातुल्यप्रक्रियानुपपत्तेरित्यर्थः पर्यवस्यति । इत्थं हि तत्प्रक्रिया । अर्धं जरत्याः कामयतेऽर्धं न कामयते मुखं जरत्याः कामयते नाङ्गान्तरमिति । एवं जरत्या एकदेशे कामना एकदेशे नेत्येतद्यथा जुगुप्सितमेवं प्रकृते साम्ये सम्भवे च सत्येकत्रैक्यविवक्षाऽन्यत्र तु नेत्येतत् जुगुप्सितमिति भावः । अर्धचरतीयानुपपत्तेरिति पाठे तु चरतिश्चरणं भक्षणमिति यावत् । तेन तत्कर्तुः प्रक्रिया लक्ष्यते । छप्रत्ययेन च पूर्ववदुपमानोपमेयरूपः सम्बन्ध उच्यते । तेनार्धभक्षणकर्तुः प्रक्रियातुल्यप्रक्रियानुपपत्तेरित्यर्थः पर्यवस्यति । इत्थं हि तत्प्रक्रिया । सगर्भां मत्स्यवधूं गृहीत्वा कश्चिदस्याः प्रसवे मत्स्यान्तरं भविष्यति । एवं च तदपि भक्षणार्थं भविष्यति । इदानीं चेमामपक्त्वाऽनश्नन्नहं न स्थातुमुत्सह इति विचार्य वदति । अस्या अर्धं पाकायार्धं प्रसवायेति । तद्यथा जुगुप्सितमेवमेतदपीति भाव इत्याहुः । अन्ये तु 'लम्बमानौ सुतौ दृष्ट्वा व्याधः परमबुद्धिमान् । सर्वनाशे समुत्पन्नेऽर्धं चरति

पण्डित' इति न्यायस्य प्रकृतेऽनुपपत्तेरित्यर्थ इत्याहुः ॥ **उक्तसाधनोपपन्नत्वेऽपीति** । बादरायणेन ब्रह्मादीन्प्रति तन्मोक्षार्थमुपदिष्टत्वरूपसाधनोपपन्नत्वेऽपीत्यर्थः ॥ **वक्त्राद्यानुकूल्यसाधनस्येति** । तथा च उक्तरीत्या नाप्रयोजकतेति भावः ।

श्री०— **तथात्व इति** । गुरूणां गुरुत्वादिहेतुभिः प्रामाण्यानुमानमेकं वक्त्राद्यानुकूल्यसिद्धाप्तवाक्यत्वेन तदनुमानपरं श्रुतिसंवादित्वेन तदनुमानं तृतीयं युक्तिसंवादित्वेन तदनुमानं चतुर्थमिति प्रामाण्यसाधकहेतूनां चतुष्टयप्राप्तेरित्यर्थः ॥ **विजातीयसंवादित्वेनेति** । ब्रह्ममीमांसाशास्त्रप्रामाण्यव्यवस्थापनद्वाराऽर्थसत्तानिश्चायकत्वात्तत्संवादस्य विजातीयत्वम् । प्रामाण्यस्यार्थसत्ताघटितत्वादित्यर्थः ॥ **अनयोरिति** । प्रामाण्यसाधकयोर्गुरुगुरुत्वाप्तवाक्यत्वयोरित्यर्थः ॥ **त्रित्वोक्तिरिति** । श्रुतिसंवादो द्वितीयो युक्तिसंवादस्तृतीय इति त्रित्वोक्तिरित्यर्थः ॥ **सजातीयेति** । श्रुतियुक्त्योः साक्षाद्ब्रह्ममीमांसाशास्त्रप्रतिपाद्यार्थस्यैव प्रतिपादकत्वेन साक्षात्स्वविषयविषयकमानान्तरसंवादरूपत्वात्तदुभयसंवादस्य सजातीयत्वमित्यर्थः ॥ **अर्धजरतीयेति** । गुरुगुरूपदिष्टत्वाप्तवाक्यत्वयोर्विजातीयसंवादत्वेनैक्यं श्रुतियुक्तिसंवादद्वयस्य सजातीयसंवादत्वेनैक्यमनङ्गीकृत्य पार्थक्योक्तेरयुक्तत्वादित्यर्थः ॥ **पुनरुक्तित्रित्वोक्तिरिति** । संवादद्वयस्यैव प्राप्तेरित्यर्थः ॥ **इदमिति** । शास्त्रप्रभवत्वादिना वक्त्राद्यानुकूल्यं तेन च प्रामाण्यमिति प्रयत्नगौरवमित्यर्थः ॥

च०—**तथा सति** । दलान्तरोदीरितमात्रस्य मानत्वनिरूपितप्रधानसाधनत्वोपगमे। **साध्यसम्बन्धव्युत्पादनम्** । मानत्वनिरूपितप्रधानसाधनतापन्नाप्तवाक्यतानिरूपितव्याप्तिपक्षधर्मतोपपादनं द्वारीकृत्य मानत्वरूपसाध्यसम्बन्धव्युत्पादनम् ॥ **अनुमानान्तरमिति** । दर्शितानुमानादतिरिच्यमानं वक्त्राद्यानुकूल्यत्रयानुमापिताप्तोक्ततारूपं मानतानिरूपितप्रधानसाधनतापन्नमनुमानमित्यर्थः ॥ **विजातीयसंवादत्वेनेति** । शास्त्रधर्मिकस्वप्रतिपाद्यघटितप्रामाण्यविधेयकानुमितिजनकहेत्वन्तरकत्वेनेत्यर्थः । स्वधर्मिकस्वप्रतिपाद्यघटितप्रामाण्यावगाहिप्रमितिजनकमानान्तरकत्वस्यैव विजातीयसंवादपदाभिधेयत्वात् ॥ **सजातीयसंवादतयेति** । शास्त्रजनितान्वयधीनिरूपितमुख्यविशेष्यतावच्छेदकावच्छिन्नतादृशविशेष्यताकप्रमितिजनकमानान्तरकत्वेन इत्यर्थः । स्वोत्पादिनीयप्रमितिनिरूपितमुख्यविशेष्यतावच्छेदकावच्छिन्नतादृशविशेष्यताकप्रमितिजनकमानान्तरकत्वस्यैव सजातीयसंवादपदाभिधेयत्वादित्याशयः ॥ **अर्धजरतीयानुपपत्तेरिति** । जरत्याः मुखं कामुकः कामयते नावयवान्तरमिति प्रक्रिया छप्रत्ययप्रकृत्यंशेन लक्षणयोपस्थाप्यते । 'समासाच्च तद्विषयादि'त्युपमार्थे विहिततत्प्रकृतिकप्रत्ययेन च प्रकृत्यर्थवृत्तिस्तादृश्यनिरूपकप्रक्रियेति तादृशप्रक्रियासदृशप्रक्रियानुपपत्तेरित्यर्थः। **उक्तसाधनेत्यादि** । प्रकृतसाध्यमन्तरेण हेतुरस्त्वित्यप्रयोजकत्वशङ्कानिरसनोपयि-

कप्रामाण्याभावापादककवक्राद्यानुकूल्यत्रयाभावापाद्यकापत्तिहेतुभूतापाद्यव्यतिरेकनिर्णयरूपतत्रिकानुमित्यात्मकफलोपधायकतत्रितयनिरूपितव्याप्त्यवच्छिन्नबादरायणोदितत्वादिहेतुवृत्तिप्रकारताशालिपरामर्शादिघटितसामग्रीसम्पादनमावश्यकमेवेति भावः ॥

अनु०— वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता ।
आप्तवाक्यतया तेन श्रुतिमूलतया तथा ॥
युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महत् ।
दृश्यते ब्रह्मसूत्राणामेकधाऽन्यत्र सर्वशः ॥

सु०— ननु तर्ह्यनेनेदमुदितं भवति । एतच्छास्त्रं प्रमाणमनुकूलवक्त्रादिमत्त्वाद्भारतादिवत् । वक्त्राद्यानुकूल्यं चोक्तहेतुसिद्धमिति । एतदनुपपन्नम् । आप्तवाक्यतायास्तत्रोपाधित्वात् । न च प्रत्यक्षादौ सत्यपि प्रामाण्ये नास्त्याप्तवाक्यत्वमिति साध्याव्यापकत्वान्नायमुपाधिरिति वाच्यम् । वाक्यत्वावच्छिन्नसाध्यव्यापकत्वेनोपाधित्वोपपत्तेः । तथाऽप्यपौरुषेये वेदे तदभावादनुपाधित्वमिति चेन्न । वेदापौरुषेयत्वस्यासम्मतत्वात् । सम्मतत्वे वा साधनावच्छिन्ने पौरुषेयवाक्यत्वावच्छिन्ने वा साध्येऽस्योपाधित्वोपपत्तेरिति । मैवम् । अभिप्रायानवगमात् । न हि वयं वक्त्राद्यानुकूल्येन शास्त्रप्रामाण्यं साक्षात्साधयितुमुद्यताः । येनात्रोपाध्युद्भावनं सङ्गच्छेत । अपि तर्ह्यनुकूलवक्त्रादिमत्त्वस्याप्तवाक्यतया व्याप्तत्वात्तेन तां प्रसाध्य तया प्रामाण्यं शास्त्रस्य साध्यत इत्याशयवानाह ॥ वक्तृश्रोतृप्रसक्तीनामिति । यद्यत्र वाक्ये वक्तृश्रोतृप्रसक्तीनामनुकूलता तत्राप्तिः । यद्वक्त्राद्यानुकूल्योपेतं तदाप्तवाक्यमिति यावत् । यत एवं व्याप्तिर्यतश्चास्य शास्त्रस्यास्त्यनुकूलवक्त्रादिमत्त्वम् । तेन सिद्धयाऽऽप्तवाक्यतया मानमिदं शास्त्रमिति पूर्वेण सम्बन्धः ।

वा०— नन्वेवं मानत्वस्य गुरूणां गुरुत्वादित्यादिहेतून्प्रति परमसाध्यत्वेऽपि वक्त्राद्यानुकूल्यं प्रति तस्य साक्षात्साध्यत्वाद्वक्त्राद्यानुकूल्यस्याप्तवाक्यत्वेन व्याप्त्याद्युपपादनपुरःसरमाप्तवाक्यत्वस्य मानत्वसम्बन्धव्युत्पादकमुत्तरवाक्यमसङ्गतमेव । न चात्रापि सा परम्पराभिप्रेतेति वाच्यम् । तथात्वे उत्तरश्लोकवैयर्थ्यापत्तेरित्यतोऽत्र श्लोके आप्तवाक्यत्वबोधकशब्दाभावेन परम्परायाः स्पष्टमप्रतीतेर्यथाश्रुतस्य वक्त्राद्यानुकूल्यमानत्वयोः साक्षात्साध्यसाधनभावाभिप्रायकत्वं प्रकल्प्य परोक्तदूषणस्य परिहाराय स्वाभिप्रायाविष्करणार्थत्वादुत्तरश्लोकस्य नासङ्गतिवैयर्थ्ये इत्यभिप्रेत्य उत्तरवाक्यं सङ्गमयति ॥ नन्विति । यद्वा पूर्ववाक्याभिप्रायदर्शकं वक्तृश्रोतृप्रसक्तीनामित्युत्तरवाक्यं व्यर्थम् । अभिप्रायान्तराप्रतीत्याऽस्यैव सुज्ञानत्वात्प्रतीतौ

वा तस्याप्युपपत्तौ तत्परित्यागेनाभिप्रायान्तरप्रदर्शकोत्तरवाक्यवैयर्थ्यमेवेत्यतोऽभिप्रायान्तरप्रतीतितदनुपपत्तिप्रदर्शनपूर्वं स्वाभिप्रायस्वरूपं दर्शयन्नेव तदाशयप्रदर्शकतयोत्तरवाक्यमवतारयति ॥ **ननु तर्हि इति ॥ वाक्यत्वावच्छिन्नेत्यादि ।** यथाच पक्षधर्मसाधनधर्मावच्छिन्नयोरुपाधित्वं तथोपाधिपरीक्षायां वक्ष्यति । ननु वक्तृश्रोतृप्रसक्तीनामिति श्लोके वक्त्राद्यानुकूल्यस्यास्याऽभेदोक्तावपि व्याप्तेरनभिहितत्वात्पक्षधर्मतां विना तावन्मात्रस्य साधनत्वानुपयोगाच्च मानमित्यस्याश्रुतत्वाच्चापि तर्हीत्यादिनोक्तमयुक्तमित्यतो यदित्यस्य यत्रेत्यर्थतां तत्सन्निधियोगेन तत्रेत्यस्य लाभं यदित्यस्यावृत्त्या यत इत्यर्थकत्वमस्येति योग्यतया सम्बन्धं वक्तृश्रोतृप्रसक्तीनामित्यस्यावृत्तिं तेनेत्येतद्बलेन सिद्धेत्यस्य लाभं पूर्वेण सम्बन्धं चाभिप्रेत्योक्तमुपपादयति । **यद्यत्रेत्यादि ।**

स०— **साधनावच्छिन्न इति ।** अनुकूलवक्त्रादिमद्वाक्यत्वविशिष्टे इत्यर्थः । ननु साध्यस्य उपाधिव्यभिचारपरिहाराय कथं साधनावच्छिन्नसाध्ये उपाधिप्रसरः । कथं च साध्यविशेषणानां व्यभिचारवारकत्वमिति । मैवम् । शब्दो न स्पर्शवद्विशेषगुण इत्यादौ साध्यविशेषणानां व्यभिचारवारकत्वदर्शनात् । साधनावच्छिन्ने साध्ये उपाधिप्रसरं तूपपादयिष्यति ॥ **पौरुषेयवाक्यत्वावच्छिन्न इति ।** 'सर्वपुरुषाभ्यां णढञावि'तिसूत्रे पौरुषेयो बध इत्यादिरूपसिद्ध्यर्थं 'पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यमिति' वार्तिककृताऽन्यत्रापि ढञोऽभ्यनुज्ञातत्वात् पौरुषेयमित्यनेनैव वाक्यालाभात्पृथक्तदुपादानमुपपन्नमिति द्रष्टव्यम् । तेन पौरुषेयपदेनैव वाक्यलाभात्पुनर्वाक्यपदमनर्थकमिति चोद्यानवकाशः । पौरुषेयपदविवरणरूपत्वाद्वाक्यपदस्य न वैयर्थ्यमित्याहुः ।

प०— वक्त्राद्यानुकूल्यमपि प्रामाण्ये साक्षान्न हेतुः किंत्वाप्तवाक्यत्वानुमानद्वारैव । कुत एवम् । अन्यथा सोपाधिकत्वेन प्रामाण्यसाधकत्वानापत्तेरिति भावेनाशङ्कोत्तराभ्यां मूलमवतारयति ॥ **नन्वित्यादिना ॥ हेतुभिरिति ।** गुरुर्गुरूणामित्यादिनोक्तहेतुत्रयेण वक्त्राद्यानुकूल्यत्रयं सिद्धमित्यर्थः ॥ **वाक्यत्वावच्छिन्नेति ।** साध्यव्यापकत्वं हि द्वेधा । शुद्धसाध्यव्यापकत्वमवच्छिन्नसाध्यव्यापकत्वं चेति । तत्राद्यं यागीयहिंसा पापसाधनं हिंसात्वादित्यत्र निषिद्धत्वस्य । द्वितीयं च द्वेधा । पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं साधनधर्मावच्छिन्नसाध्यव्यापकत्वं चेति । तत्राद्यं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र उद्भूतरूपवत्त्वोपाधेः बहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकत्वम् । द्वितीयं तु ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वोपाधेर्जन्यत्वावच्छिन्नसाध्यव्यापकत्वम् । प्रकृतेऽस्योपाधेः शुद्धसाध्याव्यापकत्वेऽपि वाक्यत्वरूपेण वा पौरुषेयवाक्यत्वरूपेण वा पक्षधर्मेणानुकूलवक्त्रादिमत्त्वरूपसाधनेन वाऽवच्छिन्नसाध्यव्यापकत्वोपपत्तेः । न च स एव सत्प्रतिसाधन इति प्रमाणलक्षणोक्त्योपाध्यभावेनानुमीयमानोऽपि विशिष्टस्याभाव एव

सिध्येत् न तु अभिमतशुद्धसाध्यस्याभाव इति न प्राचीनहेतोः सत्प्रतिपक्षत्वमिति वाच्यम् । विशेषणवतिविशिष्टाभावसिद्धेर्विशेष्याभावेनैव पर्यवसानादिति भावः ॥ **उद्यता इति** । उद्युक्तवन्त इत्यर्थः । तत्राप्तिरित्ययुक्तम् । आप्तेः पुंगतत्वादित्यतः सामानाधिकरण्याय फलितार्थमाह ॥ **यद्वक्रादीति** । यदित्यस्य पञ्चम्यंताव्ययत्वं आवृत्तिं आप्तिरित्यस्य व्याप्तिरिति चार्थमुपेत्याप्तवाक्यतया तेनेत्यन्तस्य योजनान्तरमाह ॥ **यत एवमिति** ।

**या०**— आप्तेः पुरुषगताया वाक्यनिष्ठत्वाभावाद्वक्ष्यमाणानुमानायोग इत्यतोऽभिप्रायमाह । **यद्वक्रानुकूल्योपेतमिति** ।

**श्री०— उक्तहेतुसिद्धमिति** । गुरुर्गुरूणामित्यादिनोक्तहेतुत्रयेण वक्राद्यानुकूल्यत्रयं सिद्धमित्यर्थः ॥

**च०— पौरुषेयवाक्यत्वावच्छिन्न इति** । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यादौ बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकोद्भूतरूपवत्वस्येव पक्षधर्मावच्छिन्नव्यापकस्य वोदासीनधर्मावच्छिन्नव्यापकस्य वोपाधित्वसम्भवादिति हृदयम् ॥ **यद्वक्रेति** । आप्तेस्तदानुकूल्यत्रिकव्यधिकरणत्वेऽपि तद्वत्प्रणीतत्वस्य न तद्व्यधिकरणतेति भावः ।

**सु०—एतदुक्तं भवति । विमतमाप्तवाक्यमनुकूलेन वक्त्राऽनुकूलान् श्रोतॄन्प्रति तदीयहितसाधनबोधायोपदिष्टत्वात्सम्प्रतिपन्नवत् । विमतं प्रमाणमाप्तवाक्यत्वात्सम्प्रतिपन्नवदिति । वक्तुरानुकूल्याभावाज्जैनाद्यनाप्तवाक्यम् । श्रोत्रानुकूल्यविरहाद्बौद्धादि । प्रसङ्गानुकूलतावैधुर्यात् नर्मादि । ननु कोऽयमाप्तो नाम यद्वाक्यत्वं साध्यते । यथादृष्टार्थवादीति चेन्न । भ्रान्तिदृष्टार्थवादिन्यपि प्रसङ्गात् । प्रमाणदृष्टेति विशेषणेऽपि प्रमाणदृष्टस्य प्रमादादिनाऽन्यथाकथके अपि प्रसङ्गात् । प्रमाणेन यथा दृष्टं तथा वादीति चेन्न । एकदेशे तथाभूतवादित्वेऽप्यंशान्तरे अतथाभूतवादिन्यपि प्रसङ्गात् । यावत्प्रमाणदृष्टं तावतो वक्तेति चेन्न । प्रायेणातथाभूतत्वादेव लक्ष्याणां तदव्याप्तेः । न हि केनापि यावत्प्रमाणप्रमितं तावदभिधीयते । यावत्प्रमाणदृष्टं तावत एव वक्तेति चेन्न । अज्ञातसन्दिग्धानुवादवाक्यप्रयोक्तुरनाप्तत्वप्रसङ्गात् । भीमाग्रजस्य अपि कदाचिच्चाटुवादित्वसम्भवेनानाप्तत्वापत्तेश्च । निर्दोष आप्त इति चेन्न । आप्तानामपि क्वचिद्रागादिदोषसम्भवात् । यत्र विषये निर्दोषस्तत्राप्त इति चेन्न । यत्तच्छब्दयोर्विशेषविषयत्वेनासाधारण्याद्व्याप्तेरिति ।**

वा०— एवं च सिद्धमनुमानप्रयोगं दर्शयितुमाह ॥ **एतदुक्तं भवतीति** । प्रथमहेतौ विशेषणत्रयव्यवच्छेद्यानि दर्शयति ॥ **वक्तुरित्यादिना** । नन्वस्तु वक्त्राद्यानुकूल्यं माऽस्तु चाप्तवाक्यत्वं विपक्षे बाधकाभावादप्रयोजको हेतुरित्यतो व्याघातरूपं विपक्षे बाधकमेवं चेत्यादिना वक्तुं विवक्षितार्थतत्त्वज्ञानाविप्रलिप्साकरणपाटवविवक्षाणामाप्तिशब्दार्थत्वं व्यवस्थापयन् द्वितीयानुमाने नन्वाप्तेत्यादिना शङ्किष्यमाणव्यभिचारपरिहाराय यो यत्रेत्यंशस्याप्तिशब्दार्थान्तर्गतानां च व्यवस्थापयन् खण्डनोक्ताप्तिलक्षणदूषणमनुवदति ॥ **ननु कोऽयमिति** । लोके प्रायशो यथादृष्टार्थवाद्यादिष्वाप्तत्वव्यवहारादेषां पक्षाणां प्रसक्तिरिति द्रष्टव्यम् । यथादृष्टार्थवादित्वमाप्तत्वं विवक्षितं प्रमाणदृष्टार्थवादित्वं प्रमाणेन यथा दृष्टं तथा वादित्वं वा । अत्र प्रथमे दृष्टानतिक्रममात्रं वादे विवक्षितं दर्शनप्रामाण्ये त्वौदासीन्यम् । द्वितीये विपरीतं तृतीये तूभयं विवक्षितमिति द्रष्टव्यम् । तत्राद्यमुत्थाप्य तथात्वे देहात्मनोर्भ्रान्त्यैकत्वं प्रतिपद्य देह एवात्मेति व्यवहरतोऽप्याप्तत्वं स्यादित्याह ॥ **भ्रान्तीति** । द्वितीयमुत्थाप्य तथा सति प्रमाणेन इन्द्रियाणां प्राकृतत्वं प्रतिपद्य प्रमादादिना भौतिकानीन्द्रियाणीति वादिनः साङ्ख्यस्याप्तत्वं स्यादित्याह ॥ **प्रमाणेति** । तृतीयेऽपि यथा प्रमाणेतिविशेषणद्वयस्यैव विवक्षा यावदित्यपि वा विवक्षितम् । नाद्यः । ग्रावाणः प्लवन्त इति वादिनोऽपि ग्रावाण इत्यंशे तथाभूतवादित्वात्प्लवन्त इत्यंशे चातथाभूतवादित्वात् आप्तत्वापत्तिरित्याह ॥ **एकदेश इति** । द्वितीयेऽपि यावदित्यवधारणं कार्त्स्न्यार्थमुतान्ययोगव्यवच्छेदार्थम् । नाद्यः । आप्तत्वेनाभिमतानां प्रमाणदृष्टस्य कार्त्स्न्येनावक्तृत्वादव्याप्तिरित्याह ॥ **प्रायेणेति** । असम्भवे प्रसञ्जनीयेऽव्याप्तिः कुतः प्रसज्यत इत्यतः प्रायेणेत्युक्तम् । तदेवोपपादयति ॥ **न हीति** ॥ **केनापीति** । असत्परिचितेनेत्यर्थः । द्वितीयमुत्थापयति ॥ **यावदिति** । भ्रान्तिदृष्टवादिनि लोके अनाप्तव्यवहारेऽप्यज्ञातवाक्यप्रयोक्तरि सन्दिग्धवाक्यप्रयोक्तर्यनुवादवाक्यप्रयोक्तरि च लोकेऽनाप्तत्वव्यवहाराभावेन तेषामपि लक्ष्यत्वात्तत्र च लक्षणाभावेनाव्याप्तिः स्यादित्याह ॥ **अज्ञातेति** ॥ **भीमाग्रजस्य अपीति** ॥ प्रतिपक्षसेनानिविष्टानामप्याप्तत्वेन सम्भावितस्य युधिष्ठिरस्य कदाचिदनृतवादित्वदर्शनेन तत्रापि अव्याप्तिरित्यर्थः । एवं दृष्टिगर्भलक्षणानि निराकृत्य लक्षणान्तरं निराकरोति ॥ **निर्दोष इति** । अत्र निर्दोषत्वं सर्वथा विवक्षितम् । यत्र विषय इति विशेषितं वा । आद्ये भीमाग्रजादावव्याप्तिरित्याह ॥ **आम्नानमिति** । द्वितीयं शङ्कते । **यत्रेति** । एतच्चोपलक्षणम् । प्रथमपक्षेऽप्येवं विवक्षायामेतदेव दूषणं स्यादित्यपि द्रष्टव्यम् । अत एवान्ते तस्य निवेशनम् । यत्तच्छब्दयोः सर्वनामत्वात्सर्वनाम्नां च घटदेवदत्तादिविषयिणीं शक्तिग्रहाविषयतया शाब्दज्ञाने विषयतयाऽप्रविष्टां ज्ञातां बुद्धिमुपधानीकृत्य घटत्वदेवदत्तत्वाद्यनेकप्रकारावच्छिन्नेषु देवदत्तादिषु शक्तिग्रहणेन यत्तदादीनां घटत्वादिप्रकारकघटाद्युपस्थितिजनकत्वाल्लक्षणवाक्यस्य घटविषये निर्दोषो घटे आप्त इत्याद्यर्थप्राप्त्या तस्य चाप्तत्वावच्छिन्नेऽभावेन

अव्याप्त्यापत्त्याऽऽप्तमात्रे आप्त इत्यादिव्यवहारसम्पादनलक्षणस्वप्रयोजनासाधकत्वाच्च नेदं लक्षणं युक्तमित्यभिप्रेत्य दूषयति ॥ **यत्तदिति** ॥ **अव्याप्तेरिति** । सार्वत्रिकव्यवहारानौपयिकत्वस्याप्युपलक्षणम् । अत एवोत्तरत्र सामान्येनानूद्य विकल्पयिष्यतीति द्रष्टव्यम् ।

स० — आप्तवाक्यत्वसाधकहेतुविशेषणानां व्यवच्छेद्यानि दर्शयति ॥ **वक्तुरिति** । उपदिष्टत्वमात्रस्य जैनादिवाक्ये सत्यपि अनुकूलेन वक्त्रोपदिष्टत्वाभावान्न व्यभिचार इति भावः । अनुकूलान् श्रोतॄन्प्रति तदीयहितसाधनबोधायोक्तत्वादित्येवोक्ते प्रह्लादं प्रति शण्डामर्कवचने व्यभिचारस्तन्निवृत्त्यर्थमनुकूलेन वक्त्रेति । दुर्योधनादीन्प्रति हितैषिपितृवाक्ये विशिष्टस्य हेतोर्व्यभिचारवारणायानुकूलानिति श्रोतृविशेषणमिति द्रष्टव्यम् ॥ **ननु कोऽयमिति** । किं यथार्थदृष्टार्थवादीति निर्दोषो वेति किंशब्दार्थः । आद्यमाशङ्कते ॥ **यथेति** । अत्र किं यथा शब्दो वदिक्रियाविशेषणं वाऽर्थविशेषणं वेति विकल्प्य क्रमेण दूषयति ॥ **न भ्रान्तीति** । तृतीयेऽप्येकदेशे प्रमाणेन यथादृष्टार्थवादित्वमुत सर्वत्रेति विकल्प्य आद्यं दूषयति ॥ **नैकेति** । द्वितीयमुत्थाप्य दूषयति ॥ **यावदिति** । अत्र यावत्तावच्छब्दाभ्यामवधारणं प्रतीयते तत्किमयोगव्यवच्छेदार्थमन्ययोगव्यवच्छेदार्थं वा । आद्ये ज्ञातमात्रस्यानुसन्धानाभावाद्यत्किञ्चित्प्रमाणप्रतिपन्नं तथावदतो नाप्तत्वमित्यव्याप्तिरित्युक्तम् । द्वितीयमुत्थाप्याऽव्याप्त्या दूषयति ॥ **यावदिति** । अज्ञाते सन्दिग्धेऽनुवादे च यद्वाक्यं तत्प्रयोक्तुराप्तत्वं न स्यादित्यर्थः । द्वितीयं शङ्कते ॥ **निर्दोष इति** । किमाप्तत्वं सर्वत्रैकमेवाहोस्विदनेकान्याप्तत्वानि । आद्ये अव्याप्तिमाह ॥ **न आप्तानामिति** । द्वितीयमाशङ्क्य निषेधति ॥ **यत्रेति** ।

प० — वक्तृश्रोतृप्रसक्तीनामनुकूलतेत्यत्रास्येति शेषमुपेत्य फलितार्थमाह ॥ **अस्येत्यादि** ॥ **विमतमिति** । ब्रह्मतन्त्रम् । आद्यप्रयोगे हेतुविशेषणकृत्यान्याह ॥ **वक्तुरिति** । बौद्धादीत्यत्र नर्मादीत्यत्र चानाप्तवाक्यमित्यनुषङ्गः । नर्मादौ अनृतोक्तावप्यदोषात् । 'न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन्न विवाहकाले । प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानी'ति भारतोक्तेरिति भावः । विमतमाप्तवाक्यमित्यादिप्रागुक्तप्रयोगे हेतुसाध्ययोर्व्याप्तिं एवं च वक्तुरित्यादिना व्युत्पादयितुं मैवमित्यादिनैवं चेति अन्तेनात्र विवक्षिताप्तत्वं समर्थयमान आप्तत्वमाक्षिपति ॥ **ननु कोऽयमित्यादिना** मैवमित्यन्तेन ॥ **अज्ञातेति** । अज्ञातसन्दिग्धार्थकवाक्यानुवादरूपवाक्ययोः प्रयोक्तुरित्यर्थः । तत्राज्ञानादिविषयस्यापि वक्तृत्वेन प्रमाणदृष्टस्यैव वक्तृत्वाभावादिति भावः ॥

या० — आप्तवाक्यत्वसाधकहेतुविशेषणानां क्रमेण व्यवच्छेद्यान्निदर्शयति ॥ **वक्तुरित्यादिना** । आप्तवाक्यतासाधकाऽनुमानेऽप्रयोजकताशङ्कापरिहारायानुकूलतर्कं वक्तुमाप्तस्वरूपं निर्धारयितुमाह ॥ **ननु**

**कोऽयमाप्त इति** ॥ **तावत एव वक्तेति** । प्रमाणदृष्टस्यैव वक्तेत्यर्थः ॥ **अज्ञातसन्दिग्धेति** । अनुवादकर्त्रा यत्प्रमेयं स्वेन न ज्ञातं सन्दिग्धं वा तत्प्रतिपादकं यद्वाक्यं तदनुवादस्तावत्क्रियते । तस्य च आप्तत्वं वादविषये सुप्रसिद्धम् । न हि स प्रमितं वादमेव वदति । तदवच्छेदकतयाऽज्ञातस्य सन्दिग्धस्य वा विषयस्यापि वचनात् । अतो लक्षणस्य तत्राव्याप्तिरित्यर्थः । केचित्तु अज्ञाते सन्दिग्धेऽनुवादे च यद्वाक्यं तत्प्रयोक्तुराप्तत्वं न स्यादित्यर्थ इत्याहुः ॥ **भीमाग्रजस्यापीति** । धर्मराजत्वात्प्रमितवक्तृतया प्रसिद्धस्यापीत्यर्थः । कदाचिद् द्रोणवधसमये नर्मादिसमये वा ॥ **चाटुवादित्वसम्भवेनेति** । अप्रमितवादित्वसम्भवेनेत्यर्थः ॥

**श्री०— तावतो वक्तेति** । तावतः सर्वस्य वक्तेत्यर्थः ॥ **असाधारण्यादिति** । सर्वानुगतत्वाभावादित्यर्थः ॥

**च०**— आप्तवाक्यतासाधनदशायां हेतुतावच्छेदकघटकतद्विशेषणानां मतभेदनियन्त्रितनिग्रहासिद्धिप्रसञ्जनव्युदसनायनैकान्त्यनिरसनफलितां दर्शयति ॥ **वक्तुरित्यादि** । तदानुकूल्यत्रिकघटितहेतुना आप्तवाक्यतासाधने अप्रयोजकताशङ्कानिरसनौपयिकानुकूलतर्कमभिधित्समान आप्तिस्वरूपं निर्णिनीषुः आशङ्कते । **नुन कोऽयमिति** । यथादृष्टार्थवादित्वं प्रमाणदृष्टार्थवादित्वं प्रमाणेन यथा दृष्टं तथा वादित्वं निर्दोषत्वं वा तदिति कल्पचतुष्टयी निराचिकीर्षिता प्रमाभ्रमोपसाधारणदर्शनत्वावच्छिन्ननिरूपकताकविषयतानापन्नावगमकशब्दाप्रयोक्तृत्वे सति तादृग्विषयतापन्नावगमकशब्दप्रयोक्तृत्वमाद्यं निर्गलितम् । प्रमाणजनितप्रतीतिविषयतापन्नगोचरावगतिहेतुभूतशब्दप्रणेतृत्वं द्वितीयं प्रमाणजनितप्रतीतिविषयतानापन्नावगतिहेतुभूतशब्दाप्रयुञ्जानत्वे सति तदापन्नावगतिहेतुभूततत्प्रयुञ्जानत्वं तृतीयम् । तृतीयेऽप्युत्तरदलनिविष्टतादृग्विषयतापन्ने कतिपयत्वं साकल्यं वा तावतो वक्तेत्यत्र सावधारणत्वं वेति कल्पत्रयी प्रत्याचिख्यासिता । तुरीये च विषयानुपहितसामान्यधर्मावच्छिन्नाभावः तदुपहितधर्मावच्छिन्नाभावो वेति कल्पद्वयी तादृशीत्यभिप्रेत्य क्रमेण प्रतिविधत्ते ॥ **अव्याप्तेरित्यन्तेन** ॥ **भ्रान्तिदृष्टार्थेति** । भ्रान्तिविषयीकृतेत्यर्थः । तथा चेदं रजतमित्युपदेष्ट्र्यतिप्रसङ्ग इति भावः ॥ **अन्यथाकथक इति** । प्रमाणजन्यप्रमितिविशेष्यावृत्तिधर्मोपरागेण तादृशविशेष्यप्रतीतेरपि तथाविधत्यादिति भावः । तृतीयकल्पे प्रमाणदृष्टे कतिपयत्वं विशेषणमभिप्रेत्याह ॥ **एकदेश इति** । साकल्यं तद्विशेषणमित्यभिसन्धायअभिधत्ते ॥ **प्रायेणेत्यादि** । तावत एव वक्तेति सावधारणत्वाश्रयणेनाशङ्कते ॥ **यावदिति** ॥ **अज्ञातेत्यादि** । अज्ञातसन्दिग्धशब्दौ मत्वर्थीयाजन्तौ आढ्यमिदं नगरमिति यथा । अज्ञातावर्थकावित्यर्थः । तादृशयोर्यदनुवादरूपवाक्यं तत्प्रयोक्तुरित्यर्थः । कृतद्वन्द्वानुवादान्तेन कृतैकशेषवाक्यपदस्य कर्मधारय इत्यपि स्थितम् ॥

**भीमाग्रजस्यापीति** । प्रतीपसैनिकानामपि प्रमितमात्रवक्तृत्वोपरक्तानुमितिविषयस्येत्यर्थः । चाटुवादित्वम-प्रमितवक्तृत्वम् । तुरीये द्वितीयं प्रत्याख्याति ॥ **यत्तदिति** । सर्वनाम्नामन्वयधीविषयतानापन्नबुद्धिविषय-तावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्त्युपगमेन निर्विशेषणघटत्वदेवदत्तत्वादिप्रकारकोपस्थितिजनकतादृश यत्तत्पदादिघटितलक्षणवाक्यादपि तादृश्येवान्वयधीरुदेष्यतीति प्रकृतलक्ष्यतावच्छेदकाभिमतासत्वावच्छेदेन लक्षणप्रतीतिविरहेण न तदवच्छेदेन तन्नियन्त्रितव्याव‍ृत्तिव्यवहृतिप्रत्यापनसम्भव इति भावः ।

**सु०— मैवम् । विवक्षितार्थतत्त्वज्ञानमविप्रलिप्सा विवक्षा करणपाटवं चेतीयमाप्तिः । तद्वानाप्त इत्यङ्गीकारात् । आप्तत्वाभिमतेऽपि कदाचिदिदं नास्तीति चेन्मा भूत् । तदाऽसाव-नाप्त इत्यङ्गीकारात् । कालादिभेदेनाविरोधात् । एवं सति यो यत्रैवम्भूतः स तत्राप्त इत्युक्तं स्यादिति चेदस्तु को दोषः । यत्तच्छब्दार्थयोरननुगम इति चेत् । कोऽयमननुगमो नाम किं सार्वत्रिकव्यवहारानौपयिकत्वमुतैकस्यानेकवृत्तित्वाभावः । नाद्यः । यो यस्य सुतः स तदीयं धनं अर्हतीत्यादौ सार्वत्रिकव्यवहारहेतुतोपलम्भात् । न द्वितीयः । अदोषत्वात् । यथा चाननु-गतस्यापि नाव्याप्तिः सार्वत्रिकव्यवहारहेतुता च तथा सामान्यपरीक्षायां वक्ष्यामः ।**

**वा०—** वाक्याप्रामाण्यस्याबोधकत्वविपरीतबोधकत्वनिबन्धनत्वाद्विवक्षाभावेन वाक्यस्वरूपस्यैव अभावादकुरपटुकरणत्वे चाबोधकत्वप्राप्तेस्तस्यैवाविवक्षितार्थविपरीतज्ञानविप्रलिप्साभ्यां विपरीतबोधकत्व-प्राप्तेर्वाक्याप्रामाण्यप्रसञ्जकनिरासहेतुत्वाद्विवक्षितार्थतत्त्वज्ञानादेराप्तिशब्दार्थतया स्वविवक्षां दर्शयति ॥ **मैवमित्यादिना** । अत्र विवक्षितार्थतत्त्वज्ञानादिमत्त्वं सर्वथा वा किञ्चिद्विशेषितं वा विवक्षितमिति विकल्पं मनसि निधायाद्येऽज्ञातसन्दिग्धेति भीमाग्रजस्यापीत्याप्तानामपीत्युक्तं पूर्वलक्षणयोर्दोषं शङ्कते ॥ **आप्तत्वेति** । अलक्ष्यत्वान्न क्षतिरित्याह ॥ **मेति** । तदेत्युक्तिप्रयोजनमाह ॥ **कालेति** । आप्तत्वा-नाप्तत्वयोः समावेशस्य लक्षणस्याविशेषितत्वेऽनुपपत्त्या समावेशं कथयतो द्वितीयपक्षाभिप्रायं गूढाभिसन्धिः उद्घाटयति ॥ **एवमिति** । गूढाभिसन्धिरेव सिद्धान्ती तं पक्षमङ्गीकरोति ॥ **अस्त्विति** । पूर्वलक्षणोक्त-दोषो अत्रापि न निवृत्त इति पूर्ववादी स्वाशयमुद्घाटयति ॥ **यत्तदिति** । सिद्धान्ती स्वाशयमुद्घाटयति ॥ **कोऽयमिति** । अनुगमशब्दस्य रूढिभावव्युत्पत्तिभ्यामेकस्यानेकवृत्तित्वे रूढिकरणव्युत्पत्तिभ्यां चानुगमके प्रवृत्तेर्विकल्पोपपत्तिः ॥ **अदोषत्वादिति** । एकस्यानेकवृत्तित्वाभावस्य स्वयं लक्षणदोषरूपत्वाभावादित्यर्थः । ननु लक्षणस्यानेकलक्ष्यवृत्तित्वाभाव एवाव्याप्तिरिति कथं नायं दोषः । कथं च 'यो यस्य सुत' इत्यादौ उपलब्धिमात्रेण घटत्वपटत्वाद्यनन्ताननुगतधर्मेष्वदृष्टा सार्वत्रिकव्यवहारहेतुता विनोपपादकं निश्चेतुं शक्या । अन्यथा यावद्द्रव्यभाविरूपादिष्वभेदस्य धर्मधर्मिभावस्य चोपलब्धिमात्रेण स्वीकर्तव्यताऽऽपत्त्या

तदुपपादकत्वेन विशेषोऽपि न तत्सिद्धान्ते कल्पनीयः स्यादित्यतो न लक्षणस्यानेकवृत्तित्वाभावमात्रमव्याप्तिरपि तु लक्ष्यजातीये लक्षणजातीयस्यावृत्तिः । यद्यपि मन्मते जातेरप्यननुगतत्वान्न साजात्यमेकजातीयत्वं तथाऽपि सदृशजात्याश्रयत्वरूपं तदुपपद्यत एव । यद्यपि मन्मते गवादिशब्दप्रवृत्तिनिमित्तगोत्वादिजातीनां सादृश्ये विद्यमानेऽपि यत्तदादिशब्दप्रवृत्तिनिमित्तघटत्वदेवदत्तादीनां सादृश्याभावस्तथा अपि तदादिशब्दानां घटत्वाद्यवच्छिन्नघटादिशक्तिग्रहे वक्तृबुद्धेरुपाधितया स्वीकृतत्वात्तस्याश्च सदृशत्वाद् बुद्धिद्वारकं तदादिशब्दप्रवृत्तिनिमित्तं घटत्वादौ सादृश्यं विवक्षित्वा सदृशजात्याश्रयत्वं मयाऽपि वक्तुं शक्यत एव । तदेव सदृशजात्याश्रयत्वमुपपादकं विवक्षित्वा सार्वत्रिकव्यवहारहेतुत्वमपि सूपपादमित्याशयेनाह ॥ **यथा चेति** ॥ **वक्ष्याम इति** । 'व्युत्पत्तिरपि हि सादृश्येनैवे'त्याद्यनुव्याख्यानव्याख्याऽवसरे । एतेन कार्यकारणभावावधारणादिकमपि समाहितं वेदितव्यमित्यत्रादिशब्दसङ्गृहीतेऽव्याप्तिः सार्वत्रिकव्यवहारौपयिकत्वादौ शक्तिग्रहप्रकारातिदेशेन वक्ष्याम इत्यर्थः ।

**स०**— आप्तिशब्दार्थान्तरमाह ॥ **मैवमिति** ॥ **यो यस्येति** । सर्वनाम्नां सर्वार्थपरामर्शार्थत्वाद्यत्तच्छब्दयोः विशेषविषयत्वेऽपि विशेषतः सर्वत्रानुगतिरस्तीत्यर्थः ॥ **अदोषत्वादिति** । मा भूदेकमनेकवृत्ति को दोष इत्यर्थः । नन्वेकमनेकानुगतं यदि न स्यात्तदा तस्य व्याप्तिसार्वत्रिकव्यवहारहेतुते न स्यातामिति तत्राह ॥ **यथा चेति** ।

**प०**— **यत्तच्छब्दार्थयोरननुगम इति चेदिति** । यत्त्वतत्त्वरूपजातेरभावेन व्यक्तिविशेषग्रहणे सति सर्वत्राननुगम इत्यर्थः । नन्वाप्तवाक्यत्वरूपहेतुशरीरप्रविष्टाप्तेरननुगमे सति यद्यदाप्तवाक्यं तत्सर्वं प्रमाणमिति आप्तवाक्यत्वमात्रे व्याप्तिर्न स्यात् व्यक्तिविशेष एव व्याप्तिः स्यादित्यत आह ॥ **यथा चेति** । अव्याप्तिर्व्याप्तिहीनता । यद्वाऽऽप्तत्वावच्छिन्नाप्तमात्रे अनुगतस्यैकस्याभावे तत्तद्व्यक्तिमात्रनिष्ठधर्मस्यैवाप्तलक्षणत्वेनोक्तावेकत्र व्यक्तौ विद्यमानस्यान्यत्र व्यक्तावभावेनाप्तलक्षणस्याव्याप्तिः । आप्तत्वावच्छिन्नसर्वव्यक्तिषु अयमाप्त इति व्यवहारश्च न स्यादित्यत आह ॥ **यथा चेति** । वैशेषिकाधिकरणे 'नरत्वादिकमप्येवं तत्तद्धर्मतयेष्यते । न सर्वधर्म एकोऽस्ति समुदायस्तु भिन्नग' इत्यादि सामान्यास्तित्वविचारप्रकरणे । 'इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते । सर्वेषु युगपच्छब्दः सदृशेषु च वर्तत' इत्यादिना सादृश्येनैवाननुगतस्यापि धर्मस्य नाव्याप्त्यादिकमित्यादि वक्ष्याम इत्यर्थः । तत्र सादृश्येन सार्वत्रिकव्यवहारस्यैव स्फुटत्वेऽपि तुल्यन्यायतया लक्षणाव्याप्तेरपि सुपरिहरत्वादिति भावः । अत एव च तर्कताण्डवे सादृश्येनैव लक्षणाव्याप्तिं च निरस्य चतुर्णामपि पक्षाणामनुव्याख्यानोक्तं सादृश्यमेव जीवातुरिति ग्रन्थेन स्वोक्तपक्षचतुष्टयं मूलारूढतया दर्शितमिति ज्ञेयम् ।

या०— **यो यत्रैवम्भूत इति** । यत्र विषये एवम्भूतो विवक्षितार्थतत्त्वज्ञानादिमानित्यर्थः ॥ **एकस्येति** । यत्तच्छब्दघटितस्यैव लक्षणस्येत्यर्थः ॥ **यो यस्य सुत इति** । अत्रापि कथमिति चेत् । इत्थम् । विशेषविषययोरपि यत्तच्छब्दयोरपि प्रयोगोपाधिर्बुद्धिस्थत्वम् । तच्च प्रकृतसर्वसङ्ग्राहकम् । अतस्तयोः सार्वत्रिकव्यवहारहेतुतोपपद्यत इति । सर्वनाम्नां सर्वार्थत्वाद्यत्तच्छब्दयोः विशेषविषयत्वेऽपि विशेषतः सर्वत्रानुगतिरस्तीत्यप्याहुः ॥ **सामान्यपरीक्षायामिति** । 'व्युत्पत्तिरपि हि सादृश्येनैव गम्यते' इत्यनुव्याख्यानव्याख्यावसर इत्यर्थः । तत्र यद्यपि सादृश्यस्य सार्वत्रिकव्यवहारहेतुतोक्ता न त्वनुगतस्य लक्षणत्वेऽव्याप्त्यभावः । तथाऽपि सामान्यस्थानाभिषिक्तेन सादृश्येनाव्याप्तिपरिहारोऽपि तत्र तत्रोपलक्षणया विवक्षित एव । लक्ष्यसदृशे लक्षणसदृशस्यावृत्तिरव्याप्तिर्न त्वेकस्य लक्षणस्य लक्ष्यैकदेशे येनानुगतलक्षणानामव्याप्तिरिति ॥

च०— समाधत्ते । **मैवमिति** । आप्तत्वाभिमते । आप्तत्वप्रकारकाभिमतिविषये अज्ञातसन्दिग्धेत्यादिनाभिहिते ॥ **कालादीति** । आप्ततायाः अव्याप्यवृत्तित्वोपगतेरिति भावः । यो यत्रैवम्भूतः । यो यादृशार्थविषयकतत्त्वज्ञानाविप्रलिप्साविवक्षाकरणपाटववान् स तादृशार्थविषयकाप्तिमान् । अनूपसृष्टस्य गमेर्व्यवहारार्थतां तदुत्तरप्रत्ययस्य करणसाधनतामभिप्रेत्य सार्वत्रिकव्यवहारौपयिकप्रत्यायकता तादृशगमेः सत्तार्थतां प्रत्ययस्य च भावसाधनतामाश्रित्यानेकवृत्तित्वप्रमापकताभिहितेति विकल्पोपपत्तिः । **यो यस्य सुत इति** । सर्वनामनिरूपितशक्यतावच्छेदकतापन्नदेवदत्तत्वादीनामन्वयधीविषयताविनिर्मुक्तबुद्धिविषयतावच्छेदकत्वेनोपलक्षितत्वाङ्गीकारात् सार्वत्रिकव्यवहृतिनिर्वाहकता सङ्गच्छत इत्याशयः ॥ **अदोषत्वादिति** । न्यायनय इव सिद्धान्ते स्वसमानाधिकरणलक्ष्यतावच्छेदकाभिमतधर्मसमानाधिकरणाभावप्रतियोगित्वस्य अव्याप्तिरूपत्वानङ्गीकारादित्यर्थः । यावन्तो लक्ष्यतावच्छेदकाभिमतधर्माः प्रत्येकं तत्तद्व्यक्तित्वावच्छिन्नाश्रयीभूतकतिपयावृत्तिस्वसमानजातीयकत्वस्यैव सिद्धान्तेऽव्याप्तिरूपतोपगत्या गवादिशब्दप्रवृत्तिनिमित्तगोत्वादिजातीनां सादृश्योपगमेन सदृशजात्याश्रयत्वस्यैव सार्वत्रिकव्यवहारनिर्वाहकतोपगमेन न क्षतिरिति अर्थस्य अविरोधलक्षणे 'व्युत्पत्तिरपि हि सादृश्येनैव गम्यत' इत्यनुव्याख्याव्याकृत्यवसरेऽभिधास्यमानतया सामञ्जस्यमित्यभिधत्ते ॥ **यथा चेति** ।

**सु०— एतेन निर्दोषः प्रमितस्यैव वक्तेति लक्षणद्वयमपि समाहितं वेदितव्यम् । अनुवादस्य वादविषयत्वेन तत्प्रयोक्तुरप्याप्तत्वाविरोधात् । एवं च वक्तुरानुकूल्यमाप्त्येकदेश एव । विप्रलिप्सा च श्रोतृप्रसङ्गाननुकूलतैकनिबन्धना तदभावे निवर्तत इति वक्त्राद्यानुकूल्यवत्ताया आप्तवाक्यतया सुस्थः प्रतिबन्धः । नन्वाप्तवाक्यता स्वकपोलकल्पितेषु मालतीमाधवादिषु**

**प्रामाण्यं व्यभिचरति । न हि नाटकादिप्रबन्धं विरचयन्नपि कदाचिदुक्तलक्षणोपपन्नो न भवति भवभूतिरिति चेन्न । यो यत्रैवम्भूत इत्यनेनैवोक्तोत्तरत्वात् । आप्तिमूलवाक्यस्याप्तवाक्यतया विवक्षितत्वाच्च । अबोधकं विपरीतबोधकं वा वाक्यमप्रमाणमित्युच्यते । तत्राबोधकं वक्तुरपटुकरणतया भवति । विपरीतबोधकं च विपरीतज्ञानादिनेत्याप्तिपूर्वकवाक्यत्वस्य प्रामाण्येन प्रतिबन्धसिद्धिः । अन्यथा कारणेन विना कार्योत्पत्तिप्रसङ्गादिति ।**

**वा०**— निर्दोषः प्रमितस्यैव वक्तेति लक्षणद्वयेऽपि यत्र विषय इति विशेषणविवक्षामभ्युपेत्य एतद् दूषणपरिहारप्रकारमतिदिशति ॥ **एतेनेति ।** मा भूत्तदाऽसावनाप्त इत्यङ्गीकारादित्यज्ञातसन्दिग्धवाक्यप्रयोक्तुरपि अलक्ष्यत्वमनुमतमिति भ्रान्तिं तस्य लक्ष्यत्वेऽपि लक्षणोपपादनेन परिहरति ॥ **अनुवादस्येति ।** ननु कोऽयमाप्तो नामेति प्रश्नपूर्वं विवक्षितार्थतत्त्वज्ञानादीनां चतुर्णामाप्तिस्वरूपत्वप्रतिपादनं यदर्थं कृतं तदाह ॥ **एवं चेति ।** प्रतिबन्धो व्याप्तिः । एवं विवक्षितार्थतत्त्वज्ञानादीनां चतुर्णामाप्तिशब्दार्थताविवक्षाप्रयोजनत्वेन प्रथमानुमाने व्याप्तिसिद्धिमुपपाद्य यो यत्रेत्यंशस्याप्तलक्षणे विवक्षायाः प्रयोजनस्य प्रथमानुमाने अभावात् द्वितीयानुमाने व्यभिचारपरिहारलक्षणं तत्प्रयोजनमभिप्रेत्य तन्निवर्त्यं व्यभिचारं शङ्कते ॥ **नन्विति ।** स्वकपोलेति साध्याभावोपपादनम् । न हीति साधनसद्भावोपपादनम् ॥ **यो यत्रेति ।** आप्तलक्षणे यो यत्रेति विशेषणप्रक्षेपेण यो यद्विषये विवक्षितार्थतत्त्वज्ञानादिमांस्तद्विषये तद्वाक्यस्याप्तवाक्यताहेत्वर्थत्वेनोक्तत्वादित्यर्थः । एवमाप्तलक्षणे यो यत्रेति विवक्षितत्वात् तत्सामर्थ्यलब्धार्थानुसारेण व्यभिचारः परिहृतः । अधुना तु लक्षणे विवक्षितस्य यो यत्रेत्यंशस्य हेतुशरीराप्रवेशेऽप्याप्तिमद्वाक्यत्वेनाप्तिमूलकत्वस्य विवक्षया व्यभिचारं परिहरति ॥ **आप्तीति ।** द्वितीयानुमाने अप्रयोजकत्वशङ्कायामकारणकार्योत्पत्तिरूपं (अप्रामाण्यरूपकार्येत्यर्थः) बाधकं वक्तुं करणाप्रामाण्यस्वरूपं विवृण्वन्नेव वाक्याप्रामाण्यकारणान्याह ॥ **अबोधकमिति ।**

**स०**— **एतेनेति ।** व्याप्तिसार्वत्रिकव्यवहारहेतुत्वसम्भवेनेत्यर्थः । यदुक्तमज्ञातसन्दिग्धानुवादवाक्यप्रयोक्तुरनाप्तत्वं प्रसज्येतेति ॥ तथाऽज्ञातसन्दिग्धवाक्यप्रयोक्तुरनाप्तत्वम् । अनुवादप्रयोक्तुस्तु नानाप्तत्वं पुरावादविषयकत्वादनुवादस्येत्याह ॥ **अनुवादस्येति ।** यदाऽऽप्तवाक्यत्वं श्रोतृप्रसङ्गानुकूल्यवत्वेन साधयितुं शक्यते, तदा न विप्रलिप्सानिबन्धनमप्रामाण्यम् । श्रोतृप्रसङ्गानुकूल्ये सति तदननुकूलतानिबन्धनविप्रलिप्साऽभावादित्याह ॥ **एवं चेति ।** ननु निर्दोषवाक्यत्वादेरेवाप्तवाक्यत्वप्रयोजकत्वादनुकूलवक्त्रादिमत्त्वेऽप्याप्तवाक्यत्वाभावे बाधकाभावात् निदर्शनादर्शनाच्च नायं हेतुः साध्यसाधनक्षम इत्याशङ्क्याह ॥ **इतीति ।** निर्दोषवाक्यत्वादेराप्तवाक्यत्वानतिरिक्तत्वात् आप्तवाक्यत्वाभावे अनुकूलवक्त्रा-

दिमत्वायोगात् । यदनुकूलवक्त्रादिमत् तदाप्तवाक्यं यथा भारतादि यन्नाप्तवाक्यं न तदनुकूलवक्त्रादिमत् यथा जैनादिवाक्यमिति व्याप्तेर्न दोष इत्यर्थः । व्याप्तेः सार्वत्रिकव्यवहारहेतुत्वसिद्ध्यर्थं यावद्वस्तुसत्वमाप्तत्वं मन्यमानश्चोदयति ॥ **नन्विति** । मालतीमाधवादयो नाटकग्रन्थविशेषाः । अननुगतस्यापि व्याप्तिसार्वत्रिकव्यवहारोपयोगित्वसम्भवान्न व्यभिचार इति परिहरति ॥ **य इति** । प्रकारान्तरेण व्यभिचारं वारयति ॥ **आप्तीति** । कथमाप्तिमूलवाक्यत्वस्य प्रामाण्येनाव्यभिचरिता व्याप्तिः । आप्तिमूलवाक्यत्वेऽपि प्रामाण्याभावे किं बाधकमित्याशङ्क्य आप्तिशब्दार्थपर्यालोचनया व्याप्तिं विपक्षे बाधकं चाह ॥ **अबोधकमिति** ।

प०— आप्तेरुक्तरूपत्वे विमतमाप्तवाक्यमिति प्रागुक्तप्रयोगे हेतोर्वक्ष्यमाणदिशा कथञ्चित्साध्यावैशिष्ट्यं मन्वानं प्रति लक्षणान्तरं समाधत्ते ॥ **एतेनेति** । यत्रैवम्भूत इत्यननुगमस्यादोषत्वकथनेनेत्यर्थः । द्वितीयलक्षणे प्रागुक्तदोषं निराह ॥ **अनुवादस्येति** । प्रतिबन्धोऽविनाभाव इत्यर्थः । विमतं प्रमाणमाप्तवाक्यत्वादिति द्वितीयाऽनुमानेऽव्याप्तिमाक्षिप्य समाधत्ते ॥ **नन्वित्यादिना** कार्योत्पत्तिप्रसङ्गादित्यन्तेन । मालतीमाधवेति भवभूतिनामककवीश्वरकृतनाटकग्रन्थस्य नामधेयम् । आदिपदेन मेघसन्देशादेर्मानान्तरासिद्धकथाप्रतिपादकप्रबन्धस्य सङ्ग्रहः ॥ **उक्तोत्तरत्वादिति** । मालतीमाधवादिग्रन्थविषये तस्यानाप्तत्वेन हेतोरेवाभावान्न व्यभिचार इति भावः । हेतोरप्रयोजकत्वनिरासाय विपक्षे बाधकं व्यनक्ति ॥ **अबोधकमित्यादिना** ॥ **अन्यथेति** । अपटुकरणत्वादेरभावेऽप्यप्रामाण्ये इत्यर्थः ।

या०— **एतेनेति** । यो यत्रैवम्भूतः स तत्राप्त इति विवक्षितत्वेनेत्यर्थः । अज्ञातसन्दिग्धेत्यादिनोक्तं दोषमप्यनयैव विवक्षया निराकरोति ॥ **अनुवादस्येति** ॥ **आप्तत्वाविरोधादिति** । वादांश इति शेषः । यदर्थमाप्तस्वरूपं निरूपितं तदिदानीमाह ॥ **एवञ्चेति** । एवं निर्दोषः प्रमितस्यैव वक्तेति पक्षद्वयेऽप्यन्यथा निरुपाधिकः साध्यसम्बन्धो भज्येतेति विपक्षबाधकतर्को द्रष्टव्यः । एवमाद्यानुमाने अनुकूलतर्कोक्त्या व्याप्तिमुपपाद्य द्वितीयानुमानेऽपि तामुपपादयितुमाह ॥ **नन्वाप्तवाक्यतेति** ॥ **यो यत्रैवम्भूत इत्यनेनैवेति** । तथा च यो यत्र एवम्भूतः तद्वाक्यत्वमाप्तवाक्यत्वम् । इदं च न मालतीमाधवादिषु । तत्प्रणयनकाले तस्यैवम्भूतत्वाभावस्य स्वकपोलकल्पितेष्विति वदता त्वयैवोक्तत्वादिति भावः । एवं व्यभिचारमपाकृत्याप्रयोजकतापरिहाराय विपक्षबाधकतर्कं वक्तुमाह ॥ **अबोधकमिति** ॥ **अन्यथेति** । आप्तवाक्यत्वमङ्गीकृत्य प्रामाण्यानङ्गीकार इत्यर्थः ॥ **कारणेन विनेति** । आप्तवाक्यत्वाङ्गीकारे उक्तरीत्याऽप्रामाण्यकारणाभावप्राप्तेरित्यर्थः ॥

च०— **एतेन** । यत्र विषय इत्यंशस्य लक्षणवाक्यघटकत्वोपगमेन । अज्ञातेत्यादिनाभिहित-क्षतिं प्रतिविधत्ते ॥ **अनुवादस्येति** । वादविषयकतत्त्वज्ञानं तु क्षतमेवेति भावः । आप्तिस्वरूपनिरूपणं फलवतां नयति ॥ **एवं चेति** । भावसाधनघञन्तप्रत्युपसृष्टबध्नात्युपस्थाप्य व्याप्त्यन्वयनिरूपितता तत्समभिव्याहृततलन्तप्रकृतिकतृतीययोच्यते। साधनानुमानेऽनुकूलतर्कसानाथ्याऽऽपादितनिरङ्कुशताकव्याप्तिं उपपाद्य फलितानुमानेऽपि तादृशीं प्रतिपिपादयिषुरनैकान्त्यमाशङ्कते ॥ **नन्वित्यादि** ॥ **यो यत्रेत्यादि** । ब्रह्ममीमांसाशास्त्रं स्वप्रतिपाद्यार्थविशेषघटितप्रामाण्यकं स्वप्रतिपाद्यगोचरतत्त्वज्ञानादिमत्प्रणीतत्वादित्यर्थ-विशेषघटितमूर्तिकयोरेव हेतुसाध्ययोराद्दततया यादृशार्थगोचरतत्त्वज्ञानादिमत्प्रणीतो यः स तादृशार्थ-घटितप्रामाण्यक इति सामान्यव्याप्तेरेवाश्रयितव्यतया भवभूत्यादौ मालतीमाधवादिप्रतिपाद्यगोचरतत्त्व-ज्ञानादिसत्ताराहित्येन तादृशनाटके तादृशार्थघटितहेतुमत्ताविरहेण तादृक्क्षत्यनवकाशादिति भावः । हेतुसाध्यशरीरघटकतयार्थविशेषानिवेशेऽपि हेतूकृताप्तवाक्यत्वस्यास्यवच्छिन्नकर्तृताकप्रणयनक्रियाकर्मत्व-रूपतया मालतीमाधवादिप्रणेतृतावच्छेदककोटावाप्तिनिवेशविरहनियन्त्रिततद्घटितहेतुमत्वाभावेन न क्षति-रित्याशयेनाह ॥ **आप्तिमूलेति** । एवमनैकान्त्यनिरसनानन्तर्येण प्रयोजकतां यदीदमप्रमाणं स्यात् तदा अप्रामाण्यनियामकाबोधकत्वविपरीतबोधकत्वान्यतरविशेषितं स्यात् यदि दर्शितान्यतरविशेषितं स्यात् तदा तन्नियामककरणापाटवविपरीतज्ञानादिपूर्वकं स्यादिति बाधकतर्कप्रदर्शनेन प्रतिविधित्सते ॥ **अबोधकमिति** ।

**सु०— ननु चानुकूलवक्त्रादिमत्तया प्रामाण्यसाधनमेवात्र व्याख्यायताम् । किमाप्त-वाक्यतासाधनं मध्ये व्याख्यायते । व्याप्तिपक्षधर्मतयोरतुल्यत्वात् । न हि यद्यद्व्यापकस्य व्यापकं तत्तस्याव्यापकमिति सम्भवति । अनुकूलवक्त्रादिमत्तया आप्तवाक्यतासाधने वक्त्रानुकू-ल्यस्याप्त्येकदेशत्वेन साध्याविशिष्टता च स्यात् । वक्तृश्रोतृप्रसक्तीनामिति वाक्यं तु शङ्कितस्य उपाधेः साधनव्यापकताप्रदर्शनार्थं भविष्यति । मैवम् । आप्तवाक्यतया तेनेत्युत्तरवाक्यवैयर्थ्य-प्रसङ्गात् । उपाधेः साधनव्यापकताया वक्तृश्रोतृप्रसक्तीनामित्यनेनैवोपपादितत्वात् । न हि उपाधिं दूषयता साधनव्यापकतां व्युत्पाद्य साधनेनोपाधेः पक्षे साधनं विधाय तेन साध्यं साधनीयमिति कुलधर्मः ।**

वा०— बादरायणेन ब्रह्मादीन्प्रति मोक्षार्थमुपदिष्टत्वमानत्वयोः साक्षात्साध्यसाधनभावाभ्युपगमे अप्रयोजकत्वापातेन विपक्षबाधकत्वेन वक्त्राद्यानुकूल्योपेताभावस्यानिष्टत्वेनावश्याश्रयणीयत्वे तदुपपत्तये वक्त्राद्यानुकूल्यसाधनस्यावश्यकत्वेन तत्र परम्पराश्रयणवद्वक्त्राद्यानुकूल्यमानत्वयोः साक्षात्साध्यसाधनभावा-भ्युपगमे अप्रयोजकत्वपरिहाराय आप्तवाक्यत्वसाधनस्यावश्याश्रयणीयतया युक्तमत्रापि ग्रन्थकृतः परम्परा-

श्रयणमिति वक्तुं कुतोऽस्य ग्रन्थकृदभिप्रायत्वं येनेदं प्रयोजनाभिधानं सङ्गच्छेतेति शङ्कापरिहारायाभिप्रायानवगमादित्युक्तं परम्पराश्रयणस्य ग्रन्थकृदभिप्रेतत्वमुपपादयितुं ननु तर्ह्यनेनेदमुक्तं भवतीति पूर्वपक्ष्युत्प्रेक्षिताभिप्रायं शङ्कामुखेनोपपादयति ॥ **नन्विति** । अत्र गुरुर्गुरूणामिति श्लोके । गुरूणां गुरुत्वादित्यादिहेतून्प्रति वक्राद्यानुकूल्यरूपसाध्याध्याहारस्योक्तरीत्या सिद्धत्वात्साक्षादेव तस्य मानत्वेन साध्यसाधनभावे गुरुर्गुरूणामिति श्लोकाभिप्रेततया व्याख्यातुं शक्ये किमाप्तवाक्यतासाधनं तदभिप्रेततया मध्ये व्याख्यायत इत्यर्थः । व्याप्तिपक्षधर्मतयोः साधनाङ्गतया साक्षात्साध्यसाधनभावे तदसम्भवात्परम्पराश्रयणमिति शङ्कां निवर्तयति ॥ **व्याप्तीति** । उभयसाधनेऽपि शास्त्रस्यैव पक्षत्वेन पक्षधर्मतायाः स्पष्टत्वात्तामनुपपाद्य व्याप्तिमेवोपपादयति ॥ **न हीति** । न केवलं व्याप्तिपक्षधर्मतयोस्तुल्यत्वेन परम्पराश्रयणमेव दोषोऽपि त्वनुकूलवक्रादिमत्त्वेनाप्तवाक्यतासाधने आप्तिवक्रानुकूल्ययोः साध्यसाधनानुप्रवेशात्त्रितयरूपवक्रानुकूल्यस्य चतुष्टयरूपास्येकदेशत्वादंशतः साध्याविशिष्टता च स्यादित्याह ॥ **अनुकूलेति** । ननु साधनेनोपाधेः पक्षे साधनार्थमुत्तरवाक्यमिति न वैयर्थ्यम् । न च तस्यापि साधनव्यापकतार्थत्वात्तस्याश्च पूर्ववाक्येनैव सिद्धत्वात्पूर्ववाक्येन तां व्युत्पाद्य पुनस्तदर्थमुपाधेः पक्षे साधने पूर्वेणोत्तरस्योत्तरेण वा पूर्वस्य गतार्थताया अनपाय एवेति वाच्यम् । उपाधेः पक्षे साधनस्य तेन पक्षे साध्यसिद्ध्यर्थतया साधनव्यापकतार्थकत्वाभावादित्यतः स्यादिदं यदि पक्षे साध्यसिद्ध्यर्थं प्रथम एव साधनतया स प्रयोजितः स्यात्तर्हि तदसिद्धौ तत्साधनं युक्तं स्यात् । न चैवम् । साध्यसिद्ध्यर्थं साधनान्तरे प्रयोजिते तत्रोपाधिशङ्कायां तं दूषयता तस्य साधनव्यापकत्वव्युत्पादनेनैव दूषितत्वात्तावन्मात्रमेव व्युत्पाद्य निरुपाधिकपूर्वप्रयुक्तसाधनेन एव साध्यस्य साधनीयतया साध्यसाधनस्योपाधिना अकर्तव्यतया तदर्थं पक्षे तत्साधनं व्यर्थमेवेत्याशयेन आह ॥ **न हीति** । इदं च वक्तृश्रोतृप्रसक्तीनामित्यस्य स्वकृत व्याख्यानानुसारेण दूषणम् । शङ्कित्रभिमतव्याख्यानं तूपाधेः साधनाभेदमित्यादिना आशङ्क्य निराकरिष्यतीति द्रष्टव्यम् ।

स०— उक्तपरम्परामाक्षिपति ॥ **ननु चेत्यादिना** ॥ **न हि यदिति** । यत्प्रामाण्यं यद्व्यापकस्य यस्यानुकूलवक्रादिमत्वस्य व्यापकं आप्तवाक्यत्वं तस्य व्यापकं तत्प्रामाण्यं तस्यानुकूलवक्रादिमत्वस्य अव्यापकं न हीत्यर्थः । आप्तवाक्यत्वप्रामाण्ययोरिवानुकूलवक्रादिमत्वप्रामाण्ययोरपि भारतादौ व्याप्तिः दृश्यते इति भावः । न केवलं व्याप्तिः परम्पराश्रयणे दोषश्चेत्याह ॥ **अनुकूलेति** । साध्यवद्धेतोरपि सन्दिग्धत्वेन सन्दिग्धासिद्धिर्हेतुवत्साध्यस्य सिद्धत्वेन सिद्धसाधनता वा स्यादिति भावः । यद्यप्यत्राविप्रलिप्साऽपि साध्यते । सा च न वक्राद्यानुकूल्याभिन्नेति न साध्यावैशिष्ट्यम् । तथापि सिद्धस्यासिद्धेन सहाभिधानेऽप्यसिद्धत्वाभावादविशिष्टत्वमेवेति द्रष्टव्यम् । नन्वनुकूलवक्रादिमत्वस्याप्तवाक्यत्वं प्रत्यहेतुत्वे 'वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता' इत्ययुक्तं तत्राह ॥ **वक्रिति** । अनुकूलवक्रादिमत्वस्य प्रामाण्य-

हेतुत्वे सुतरां त्रित्वविरोधादिति भावः । न चोपाधेः साधनव्यापकतोपपादनार्थमुत्तरवाक्यमित्याह ॥ **उपाधेः इति** । यदि साधनव्यापकतोपपादनार्थं तर्ह्याप्तवाक्यतयेत्यनुकूलवक्त्रादिमत्वेनाप्तवाक्यत्वं प्रसाध्य तेन प्रामाण्यसाधनमयुक्तं स्यादित्याह ॥ **न हीति** ।

**प०**— वक्तृश्रोत्रित्यादित्रिपाद्याः स्वकृतव्याख्यानस्य दार्ढ्याय शङ्कोत्तराभ्यां परीक्षामारभते ॥ **ननु चेत्यादिना** । को निवारयितेत्यन्तेन ॥ **अत्रेति** । वक्त्रित्यादित्रिपाद्यामित्यर्थः ॥ **व्याप्तिपक्ष-धर्मतयोरिति** । पक्षीकृतशास्त्रनिष्ठप्रामाण्यरूपसाध्येनाप्तवाक्यत्वस्यैव वक्त्राद्यानुकूल्यवत्त्वरूपहेतोरपि व्याप्तेः सत्त्वात्पक्षधर्मतायाश्च पूर्वश्लोकेनैव सिद्धत्वादिति भावः । व्याप्त्यंशं स्पष्टयति ॥ **न हीति** । यत्प्रामाण्यमनुकूलवक्त्रादिमत्त्वव्यापकाप्तवाक्यत्वस्य व्यापकं तत्प्रामाण्यं तस्यानुकूलवक्त्रादिमत्त्वस्याव्यापकं न हीत्यर्थः । तथा व्याख्याने दोषोऽप्यस्तीत्याह ॥ **अनुकूलेति** ॥ **आप्त्येकदेशत्वेनेति** । विवक्षि-तार्थतत्त्वज्ञानमविप्रलिप्सा विवक्षा करणपाटवं चेति चतुष्टयस्याप्तित्वात् । अविप्रलिप्सां विनोर्वरितत्रयस्य वक्त्रानुकूल्यरूपत्वादंशतः साध्याविशिष्टतेति भावः । वक्त्रित्यर्धस्य व्यर्थतामाशङ्क्याह ॥ **वक्त्रिति** ॥ **शङ्कितस्येति** । एतच्छास्त्रं प्रमाणं अनुकूलवक्त्रादिमत्त्वादिति प्रयोगे शङ्कितस्याप्तवाक्यत्वरूपोपाधेः इत्यर्थः ॥ **साधनव्यापकतेति** । पूर्वोक्तव्याख्यानरीत्यैवेति भावः ॥ **उत्तरवाक्येति** । तत्र वक्त्राद्या-नुकूल्यस्याप्तवाक्यत्वरूपसाध्यसम्बन्धस्यैव प्रतीतेरिति भावः । ननु वक्त्राद्यानुकूल्येन हेतुना आप्तवाक्य-त्वस्योपाधेः पक्षे साधनार्थमाप्तवाक्यतया तेनेत्येतदर्थवदित्यत आह ॥ **न हीति** ॥ **व्युत्पाद्येति** । वक्त्रित्यर्धेनेत्यर्थः ।

**या०**— **अत्र व्याख्यायतामिति** । गुर्गुरूणामिति श्लोक इत्यर्थः । गुर्गुरूणामिति हेतु-सिद्धावनुकूलवक्त्रादिमत्त्वं साक्षात्प्रामाण्यानुमापकमेवास्तु । न त्वाप्तवाक्यतानुमितिद्वारेत्यर्थः ॥ **शङ्कि-तस्योपाधेरिति** । आप्तवाक्यत्वरूपस्योपाधेरित्यर्थः ॥ **उत्तरवाक्येति** । अत्र हि आप्तवाक्यत्वेनैव प्रामाण्यानुमानमवगम्यत इति भावः । ननु वक्तृश्रोतृप्रसक्तीनामित्यत्रोपाधेः पक्षे साधनव्यापकतां व्युत्पाद्य तेन सिद्धेनाप्तवाक्यत्वरूपोपाधिना प्रामाण्यं साधयितुमाप्तवाक्यतयेति वाक्यमतो न वैयर्थ्यमित्यत आह ॥ **न हि उपाधिं दूषयतेति** । तथा च कथकसम्प्रदायविरोध इति भावः ॥

**श्री०**— **यद्व्यापकस्य व्यापकमिति** । यत् द्रव्यत्वं यद्व्यापकस्य घटत्वव्यापकपृथिवीत्वस्य व्यापकं तत् द्रव्यत्वं तस्य घटस्याव्यापकमिति न हि सम्भवति । किं नाम व्यापकमेवेति यावत् । एवं प्रामाण्यमनुकूलवक्त्रादिमत्त्वव्यापकीभूताप्तवाक्यत्वव्यापकमनुकूलवक्त्रादिमत्त्वव्यापकं भवत्येव । व्याप्य-व्याप्यस्य सुतरां व्याप्यत्ववत् व्यापकव्यापकस्य सुतरां व्यापकत्वादित्यर्थः ॥

च०— **नन्विति** । गुरुसम्बन्धिगुरुत्वाद्यनुमापितानुकूलवक्त्रादिमत्तायां प्रामाण्यनिरूपितप्रधान-साधनत्वमेवोपेयतां न त्वप्रधानसाधनत्वमिति भावः ॥ **तुल्यत्वादिति** । अन्तरास्थितसाध्यनिरूपितव्याप्तौ सत्यां प्रधानसाध्यनिरूपितव्याप्तेः कैमुत्यसिद्धत्वादिति भावः । पक्षधर्मता प्रतिज्ञाताऽपि स्फुटप्रतिपत्ति-कतया नोपपादितेति ध्येयम् । वक्त्राद्यनुकूल्यस्य विवक्षितार्थतत्त्वज्ञानविवक्षाकरणपाटवत्रिकरूपस्य । आस्येकदेशत्वेन अविप्रलिप्सातत्त्रिकघटितचतुष्टयरूपाप्तिघटकत्वेन । साध्याविशिष्टता साध्यसिद्धि-सन्दिग्धासिद्ध्यन्यतरापादिकेत्यादिः ॥ **शङ्कितस्येति** । आप्तवाक्यतायास्तत्रोपाधित्वादित्यादिनेत्यर्थः ॥ **वैयर्थ्येति** । प्रामाण्यविधेयकानुमितेर्दर्शितसाधनेनैव निर्वृत्ततया तदेकफलकाप्तवाक्यतारूपसाधनान्तरस्य अनर्थकतेति भावः । दर्शितोपाधौ प्रकृतसाधननिरूपितव्यापकतां वक्तृश्रोत्रितिदलेन निरूप्य तादृशोपा-धिना प्रामाण्यसिषाधयिषयोत्तरग्रन्थः प्रावर्तिष्ट इति नानर्थकतेत्यत आह ॥ **न हीति** । कुलधर्मः कथक-सम्प्रदायः ॥

**सु०— उपाधेः साधनाभेदं प्रदर्श्य तेन साध्यं साध्यत इति चेन्न । आप्तेर्वक्तृमात्र-धर्मस्य साधनाभेदानुपपत्तेः । साध्याविशिष्टता तु नास्त्येव । वक्त्रादीनामानुकूल्येन वक्तुराप्ति-साधने खल्वंशतः सा स्यात् । अनुकूलवक्त्रादिमत्तया आप्तवाक्यता साध्यत इति चोक्तम् । तथाऽपि साध्यसाधनयोराप्त्येकदेशानुप्रवेशोऽस्तीति चेत् । सत्यम् । तथाऽपि विशिष्टभेदेन अदोषत्वात् । अन्यथा यो धूमवानसावग्निमानिति व्याप्यव्यापकभावोऽपि न स्यात् । विशे-ष्यांशस्योभयत्रानुप्रवेशात् । कृतकत्वानित्यत्वयोस्सत्तानुप्रवेशेऽपि परैर्व्याप्यव्यापकभावस्य अङ्गीकृतत्वाच्च । यदा तु निर्दोषः प्रमितस्यैव वक्ता आप्त इत्याश्रितं तदा साध्याविशिष्टतायाः शङ्कैव नास्ति ।**

वा०— ननु माऽस्तु वक्तृश्रोतृप्रसक्तीनामिति वाक्यस्योपाधिसाधनव्यापकाप्रदर्शनपरत्वमुत्तर-वाक्यवैयर्थ्यापत्तेरपि तु साधनानुप्रविष्टवक्त्राद्यानुकूल्यस्योपाध्यनुप्रविष्टाप्तेश्चाभेददर्शनमुखेन साधनोपाध्यो-रभेदं प्रदर्श्य तेन साध्यसाधने तात्पर्याभ्युपगमेनोत्तरवाक्यवैयर्थ्यमिति प्रकारान्तरेणान्यथासिद्धिं शङ्कते ॥ **उपाधेरिति** । वक्तृमात्रधर्मभूताप्तेर्वक्तृश्रोतृप्रसङ्गरूपत्रितयधर्मभूतानुकूल्यानामभेदानुपपत्त्या तद्घटितोपा-धिसाधनयोरप्यभेदानुपपत्त्या तदभेदप्रतिपादने वाक्यार्थो बाधितः स्यादित्याह ॥ **आप्तेरिति** । बाधका-धीनत्वात्साधकान्यथासिद्धेः परेण साध्याविशिष्टत्वमुद्भाव्य साधकान्यथासिद्धावुक्तायामपि साधकाधीनत्वा-द्वस्तुसिद्धेः स्वयमुत्तरवाक्यवैयर्थ्यप्रसङ्गेनान्यथासिद्धिं परिहृत्य साधके निरवकाशतामुपपाद्येदानीं बाधकं परिहरति ॥ **साध्येति** । वक्त्राद्यानुकूल्यस्याप्त्येकदेशत्वेन साध्याविशिष्टतोद्भावनस्य वक्त्रादीनामानुकूल्येन

वक्तुराप्तिसाधने सङ्गतत्वेऽप्यनुकूलवक्त्रादिमत्तया आप्तवाक्यतासाधने न कथमपि सङ्गतिरित्यसङ्गतिकथनं परोक्तस्य यथाश्रुताभिप्रायमादायेति द्रष्टव्यम् । स्वाभिप्रायं परः शङ्कते ॥ **तथाऽपीति** । साध्यसाधनयोरेकदेशप्रवेशेऽपि चतुष्टयविशिष्टवक्तृघटितत्वात्साध्यस्य त्रितयविशिष्टवक्तृघटितत्वाच्च साधनस्य विशिष्टयोश्च भेदात्तस्यादोषत्वमित्याह ॥ **सत्यमिति** । यथाकथञ्चिदेकदेशानुप्रवेशमात्रेण साध्याविशिष्टत्वे बाधकमाह ॥ **अन्यथेति** ॥ **कृतकत्वेति** । कृतकत्वानित्यत्वयोः परस्परव्याप्यव्यापकभावमङ्गीकुर्वद्भिः परैर्ध्वंसप्रागभावव्यभिचारपरिहाराय प्रागभावध्वंसावच्छिन्नसत्तायोगित्वरूपत्वेन तयोरभ्युपगमादित्यर्थः । न च यस्य हेतुत्वं तदा व्यभिचारपरिहाराय हेतौ सत्ताप्रवेशेऽपि साध्ये न तत्प्रवेश इति न साध्याविशिष्टतेति वाच्यम् । जन्यभावपक्षकानुमाने अव्यभिचाराय हेतावसाधारण्यपरिहाराय साध्येऽपि तत्प्रवेशस्यावश्यकत्वात् । एवं सत्तापरित्यागेन भावत्वादिविशेषणान्तरप्रक्षेपेऽपि तत्प्रयुक्त एवाविशेषो द्रष्टव्यः । सत्त्वावतो विनाशित्वमनित्यत्वं प्रागसतः सत्तासम्बन्धः कृतकत्वमिति कृतकत्वानित्यत्वनिरुक्त्याश्रयणेनेदमुक्तम् । अत एव सकलसपक्षवृत्तित्वं कृतकत्वस्य भवति । अत एव न ध्वंसे व्यभिचारोऽपीति भावः । (उत्पत्तिर्नाम कारणाधीनसत्तालाभ इत्येतदध्यायान्त्यभागे वक्ष्यमाणदिशा वा पूर्वमसतः सत्तासमवायवत्त्वं वा कृतकत्वम् । उत्तरकालमसतः पूर्वं सत्तासमवायवत्त्वं वा सत्तासम्बन्धापगमो वा अनित्यत्वमित्येवं रूपेण सत्तानुप्रवेश इति भावः) ।

स० — अन्यधर्मस्यान्यतरधर्मत्वायोगान्नांशतोऽभेदमात्रेणोपाधिसाधनयोरभेदः येनोपाधिना साध्यं साध्यत इत्याशङ्कामुखेनाह ॥ **उपाधेरिति** ॥ **तथाऽपीति** । विवक्षितार्थतत्त्वज्ञानादेराप्तिपदार्थत्वेन तस्यैव च वक्त्राद्यानुकूल्यशब्दार्थत्वेनैकदेशात्साध्याविशिष्टता स्यादिति भावः ॥ **विशिष्टभेदेनेति** । विवक्षितार्थतत्त्वज्ञानं करणपाटवं विवक्षा अविप्रलिप्सा चेति चतुष्टयमाप्तिस्तद्वद्वाक्यत्वं वाऽऽप्तवाक्यत्वम् । अनुकूलेन वक्त्राऽनुकूलान् श्रोतॄन् प्रति तदीयहितसाधनबोधायोपदिष्टत्वं वक्त्राद्यानुकूल्यम् । तथा च विशिष्टभेदेन न साध्यावैशिष्ट्यमिति भावः । विशिष्टभेदेऽप्येकदेशाभेदेन साध्याविशिष्टता स्यादित्यत्र आह ॥ **अन्यथेति** । वह्निविशिष्टधूमविशिष्टयोर्भेदेऽपि विशेष्यांशस्याभेदादिति भावः । पर्वतो वह्निमान् धूमवत्त्वादित्यत्र विशेष्यातिरिक्तविशेषणांशस्योभयत्रानुप्रवेशाभावेन दूषणान्तरमाह ॥ **कृतकत्वेति** । कृतकत्वस्य प्रागभावप्रतियोगित्वरूपत्वात्प्रागभावस्य चानादित्वे सति सान्तत्वरूपत्वादनादित्वस्य चोत्पत्तिमत्वाभावरूपत्वादुत्पत्तेश्चासतः सत्तासम्बन्धरूपत्वात् कृतकत्वे सत्वप्रवेशः । एवमनित्यत्वस्य अपि ध्वंसप्रतियोगित्वरूपत्वात् ध्वंसस्य च सादित्वे सत्यनन्तत्वरूपत्वात्सादित्वस्य चोत्पत्तिमत्वरूपत्वात् उत्पत्तेश्चासतः सत्तासम्बन्धरूपत्वादनित्यत्वरूपसाध्येऽपि सत्ताप्रवेश इति भाव इत्याहुः । वस्तुतस्तु प्रागभावोपलक्षितसत्ताकत्वं कृतकत्वं प्रध्वंसोपलक्षितसत्ताकत्वमनित्यत्वमिति सत्ताप्रवेशोऽपीत्यर्थः ॥ **यदा**

**त्विति** । न हि निर्दोषत्वं प्रमितवक्तृत्वं वा वक्राद्यानुकूल्येऽनुप्रविष्टमिति भावः । तस्माद्ब्रह्माद्युपदेष्ट्रोपदिष्टत्वेनानुकूलवक्रादिमत्वं तेनाप्तवाक्यत्वं तेन च प्रामाण्यमिति स्थितम् ।

**प०** — ननु वक्तृश्रोत्रित्यर्धं भवद्व्याख्यानरीत्या यत् यत्रेत्याश्रित्योपाधेर्न साधनव्यापकत्वदर्शनार्थं प्रवृत्तम् । किंत्विदमेव ह्याप्तत्वं यद्वक्तृश्रोतृप्रसक्त्यानुकूल्यमिति सन्न्यायरत्नावल्युक्त्यानुकूलवक्रादिमत्त्वरूपसाधनस्याप्तवाक्यत्वरूपोपाधेश्चाभेदं दर्शयितुं आप्तवाक्यतया तेनेत्येतत्तु यस्मादभेदस्तेन कारणेनाप्तवाक्यतया हेतुना मानमिति पूर्वेणान्विततया प्रवृत्तमित्येव योज्यत इत्याशङ्क्याह ॥ **उपाधेरिति** ॥ **तेनेति** । साधनाभिन्नोपाधिना प्रामाण्यरूपं साध्यमित्यर्थः । मूले आप्तिरित्येव श्रवणादाह ॥ **आप्तेः इति** । अत एव नयचन्द्रिकायां 'स वै बलं बलिनां चापरेषामि'त्यादाविव यदाप्तिरनुकूलतेति निमित्तनैमित्तिकयोरभेदव्यवहार इत्युक्तम् । ननु भवत्पक्षे साध्याविशिष्टतेत्युक्तमित्यत आह ॥ **साध्येति** ॥ **इति चोक्तमिति** । वक्रित्यर्धावतारिकायामित्यर्थः ॥ **सत्तानुप्रवेशेऽपीति** । उत्पत्तिर्नाम कारणाधीनसत्तालाभ इत्येतदध्यायान्त्यभागे वक्ष्यमाणदिशा वा पूर्वमसतः सत्तासमवायवत्त्वं वा कृतकत्वम् । उत्तरकालमसतः पूर्वं सत्तासमवायवत्त्वं वा सत्तासम्बन्धापगमो वा अनित्यत्वमित्येवंरूपेणेति भावः ॥

**या०** — **साधनाभेदमिति** । तथा च वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलतेति वक्तृश्रोतृप्रसक्तीनामनुकूलता यद्यस्मादाप्तिस्तेन कारणेनाप्तवाक्यतया मानमित्येव योजनाऽत्राभिप्रेतेति द्रष्टव्या । न तु यद्यत्र वाक्य इत्यादिनोक्ता पूर्वयोजनेति भावः ॥ **साधनभेदानुपपत्तेरिति** । श्रोतृप्रसक्त्यानुकूलधर्मयोः अपि साधने प्रविष्टत्वादिति भावः । ननु यो धूमवानित्यादौ विशेष्यांशस्योभयत्रानुप्रवेशेऽपि न दोषः । विशेषणांशस्यैवोभयत्र प्रवेशस्योक्तदोषहेतुत्वादित्यत आह ॥ **कृतकत्वानित्यत्वयोरिति** । इदं चासतः सत्तासम्बन्ध एव कृतकत्वम् । सतः सत्तासम्बन्धस्यापगमो अनित्यत्वमित्यभिप्रेत्योक्तमिति ज्ञातव्यम् । यदाह किरणावलीकारः । 'कार्यत्वमभूत्वा भावित्वमि'ति । 'अनित्यत्वं, भूत्वा अभावित्वमि'ति ॥

**श्री०** — **विशेष्यांशस्येति** । पर्वतस्येत्यर्थः ॥ **यदा त्विति** । एतदर्थमेव निर्दोषः प्रमितस्यैव वक्तेति लक्षणद्वयमपि समाहितं वेदितव्यमिति प्रागुक्तमिति ज्ञातव्यम् ॥

**च०** — **साधनाभेदमिति** । आप्त्यनुकूलतापदयोरभेदान्वयबोधानुकूलसमानविभक्तिकतारूपाकाङ्क्षाशालिताया यदित्यस्य लिङ्गविपरिणामेन स्त्रीरूपप्रथमान्तस्य तद्विशेष्यपदत्वोपपत्त्या या वक्रादीनाम् अनुकूलताप्तिस्तादृशाप्तिमत्प्रणीतवाक्यतयेति योजनैवाभिप्रेयते न तु यदित्यस्य सप्तम्यर्थतामुपेत्य दर्शिता प्राचीनयोजनेति भावः । **अनुपपत्तेरिति** । श्रोतृप्रसक्त्यानुकूल्याघटिताप्तिस्तद्घटितसाधनाभेदानुपपत्तेः

इत्यर्थः ॥ **उक्तमिति** । अनुकूलेन वक्त्राऽनुकूलान् श्रोतॄन्प्रति तदीयहितसाधनबोधायोपदिष्टत्वादित्यादिनोक्तमित्यर्थः ॥ **आप्त्येकदेशानुप्रवेश इति** । आप्तिश्चैकदेशश्चेति द्वन्द्वस्तयोरनुप्रवेशस्तत्र साध्यशरीरे आप्तेरेव प्रवेशः साधनशरीरे च तदेकदेशभूताविप्रलिप्साविनिर्मुक्तांशत्रिकस्य प्रवेश इत्यर्थः । न च द्वन्द्वस्याभिप्रेततायामाप्तितदेकदेशेति विन्यासेन भवितव्यमिति वाच्यम् । अनापत्त्यैकदेशपदस्यैव लक्षणया स्वीयान्यपक्षयोरित्यादाविवैतदेकदेशतात्पर्यकत्वोपगमात् ॥ **विशिष्टभेदेनेति** । चतुष्ट्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नावच्छेदकताककर्तृताकप्रणयनक्रियाकर्मत्वस्य साध्यतया त्रित्वरूपतदवच्छिन्नावच्छेदकताकर्तृताकप्रणयनक्रियाकर्मत्वस्य च हेतुतयाभिप्रेततया क्षत्यनवकाशादिति भावः । उभयत्र विशेषणांशनिवेशस्य असहिष्णुतायामभियुक्तकिरणावलीकारादिव्यवहारविरोध इत्याह ॥ **कृतकत्वेति** । कृतिनिर्वर्त्यत्वरूपकृतकत्वेन ध्वंसप्रतियोगित्वरूपानित्यत्वसाधने ध्वंसे व्यभिचारवारणाय तथा तादृशानित्यत्वेन कृतकत्वसाधने प्रागभावे व्यभिचारवारणाय च हेतौ जन्यभावसामान्ये कृतकत्वेनानित्यत्वस्य सिषाधयिषिततायां प्रागभावपरिगृहीतिनियन्त्रितासाधारण्यव्युदसनाय युगपदुभयत्र च सत्तानुप्रवेश आदृत इति ध्येयम् ।

**सु० — ग्रन्थकृताऽपि कस्मादियं परम्पराऽऽश्रितेति चेन्न । वक्त्राद्यानुकूल्येन प्रामाण्यं साधयताऽप्यन्ततोऽस्यार्थस्याश्रयणीयत्वात् । अन्यथाऽस्तु वक्त्राद्यानुकूल्यं वक्तुर्विप्रलिप्सामूलत्वेनाप्रामाण्यं च भवत्वित्याशङ्कायाः को निवारयिता । यद्यपि प्रामाण्यं स्वत एवेति बादरायणीयं मतम् । यद्वक्ष्यति 'न विलक्षणत्वादि'ति । जैमिनिरपि 'तत्प्रामाण्यं बादरायणस्य अनपेक्षत्वादि'ति । तथाऽप्यप्रामाण्यशङ्कानिरासार्थोऽयं प्रयत्न इत्यविरोधः ।**

**वा०** — एवं ग्रन्थकृतः परम्पराश्रयणाभिप्रायमुपपाद्य तत्र निमित्तं शङ्कते ॥ **ग्रन्थेति** । वक्त्राद्यानुकूल्यस्य विवक्षितार्थतत्त्वज्ञानकरणपाटवविवक्षारूपत्वात्सति तस्मिन्विवक्षितार्थतत्त्वज्ञानविरोधिप्रयुक्ताप्रामाण्यशङ्काया असम्भवेऽप्यविप्रलिप्साया वक्तृश्रोतृप्रसङ्गानुकूल्यरूपत्वाभावेन सत्यपि तस्मिंस्तदभावप्रयुक्ताप्रामाण्यशङ्कायाः सम्भवेन तच्छङ्कायाः श्रोतृप्रसङ्गानामानुकूल्यैकनिबन्धनत्वाद्विप्रलिप्सायास्तदानुकूल्याभावे प्रयोजकाभावेनानुपपत्तिरित्येवं श्रोतृप्रसङ्गानुकूल्येन वक्तर्यविप्रलिप्सानाश्रयणेऽनिवृत्तेरन्ततः तत्साधनाश्रयणे प्रथमत एव तदस्त्विति भावेन भाष्यकृतः परम्पराश्रयणं युक्तमेवेत्याह ॥ **वक्त्रादीति** ॥ **जैमिनिरपीति** । 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वादि'ति सूत्रम् । तत्र चोपदेशो विधिवाक्यं तस्य धर्मस्य ज्ञानं ज्ञापकम् । तच्च प्रमाणमेव । प्रामाण्यस्य स्वतस्त्वेनाप्तिमूलत्वाद्यनपेक्षितत्वात् । न चैवमनाप्तवाक्यस्यापि प्रामाण्यापत्तिः इति वाच्यम् । स्वाभाविकस्यापि प्रामाण्यस्यानाप्तसंस्पर्शप्रयुक्तकरणदोषबाधकप्रत्ययज्ञातार्थकत्वैरपोदितत्वेन

तत्र प्रामाण्याभावेऽपि स्वतस्त्वानपायादित्यभिप्रायेणौत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति । करणदोषाभावस्याव्यतिरेक इति व्यतिरेको विपर्ययो बाधकप्रत्यय इति यावत् तदभावस्यानुपलब्धेऽर्थ इति ज्ञातार्थकत्वाभावस्य चोक्त्याऽपवादकाभावाद्युक्तं प्रामाण्यमित्युपपाद्यते । तथा च प्रामाण्ये स्वतस्त्वं जैमिनिरप्याहेत्यर्थः । सूत्रावयवस्यैव प्रकृतोपयोगितया तावत एवात्रोदाहरणमिति द्रष्टव्यम् ॥ **तथाऽपीति** । प्रामाण्यस्यौत्सर्गिकत्वेन बुद्धिदोषनिरासाय युक्त्यपेक्षायाः स्वतस्त्वाविघातकत्वादिति भावः ।

**स०** — परम्पराश्रयणे प्रयोजनं प्रश्नपूर्वकमाह ॥ **ग्रन्थेति** । विपक्षे बाधकोपन्यासार्थमाप्तवाक्यत्वसाधनमित्यर्थः ॥ **यद्यपीति** । युक्त्यादिपरिपक्षे प्रामाण्ये सति स्वतःप्रामाण्याभावः ॥ **जैमिनिः अपीति** । अनपेक्षत्वलक्षणस्वतःप्रामाण्यं प्रमाणानां जैमिनिरपि वक्तीत्यर्थः । स्वतश्च प्रामाण्यमपवादाद् विपर्यय इति युक्त्यादेर्बुद्धिदोषमात्रनिरासहेतुत्वान्मूलापेक्षत्वेऽपि स्मृत्यादीनां न स्वतःप्रामाण्यहानिरिति भावः । ननु सिद्धान्ते करणप्रामाण्यस्य ज्ञप्तिस्वतस्त्वं नाभ्युपेयते यथोक्तमन्यत्र टीकाकारैः । 'ज्ञप्तिस्तु परत एव । इन्द्रियादिस्वरूपस्य यथायथं स्वप्रमाणवेद्यत्वाद्यथार्थज्ञानसाधनत्वस्यानुमानवेद्यत्वादि'ति । अत्रापि वक्ष्यति । 'करणानां तु ज्ञप्तौ स्वतस्त्वं नास्त्येवे'ति । तत्कथमेवमाक्षेपपरिहाराविति चेन्न । परत एवेत्युक्ते स्वाश्रयीभूतकरणग्राहकमात्रग्राह्यत्वरूपं स्वतस्त्वं नेत्यभिप्रेत्य प्रवृत्तत्वाद्वस्तुतस्तु करणप्रामाण्येऽपि ज्ञानजनकत्वग्राहकमात्रग्राह्यत्वरूपं यथार्थज्ञानान्वयव्यतिरेकानुविधानातिरिक्तप्रमाणनिरपेक्षत्वरूपस्वतस्त्वमेव विवक्षितम् । अत एव वक्ष्यति । 'अथवा ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयस्य ग्राह्यत्वं स्वतस्त्वमि'ति ॥

**प०** — **ग्रन्थकृता** । भाष्यकृतेत्यर्थः ॥ **अस्यार्थस्येति** । आप्तवाक्यत्वद्वारकत्वस्येत्यर्थः ॥ **प्रामाण्यं स्वत इति** । ननु कथमेतत् । पद्धतौ करणप्रामाण्यं ज्ञप्तौ परत इत्युक्तेरित्यत आह ॥ **यद् वक्ष्यतीति** । तच्च विवरिष्यते 'प्रत्यक्षवच्च प्रामाण्यम्' इत्यत्र । पद्धत्युक्तिस्तु विवक्षाभेदेन युक्तेति प्रत्यक्षवच्चेत्यत्रैव व्यक्तीकरिष्यतीति भावः । नन्वेतच्छास्त्रं प्रमाणं प्रमितिजनकम् । आप्तवाक्यत्वादिति शास्त्रप्रामाण्यज्ञानाय न विजातीयसंवादरूपानुमानोक्तिरयुक्ता । शास्त्रस्य ज्ञानजननशक्तिः येन ज्ञायते तेनैव तस्य प्रमाजननशक्तिरूपप्रामाण्यस्यापि ज्ञायमानत्वरूपस्वतस्त्वोपगमाविरोधात् । न चाप्तवाक्यत्वरूपमनुमानं प्रमाजननशक्तिग्राहकं सत् ज्ञानजननशक्तिं न गृह्णातीति युक्तम् । तयोरभेदात् । भेदे वा इदं ज्ञानजनकमाप्तवाक्यत्वादिति प्रयोगसम्भवेन तस्या अपि ग्राहकत्वादिति चेन्न । पर्यायेण ग्राहकत्वे अपि ज्ञानं प्रमाणमितिवत् ज्ञानजनकमिदं प्रमाजनकमिति युगपदग्रहात् । ननु च ज्ञानजनकमिदं शास्त्रं प्रमाजनकमाप्तवाक्यत्वादित्युक्तौ युगपदुभयग्राहकत्वमप्यस्तीति चेत् । एवं तर्हि वक्ष्यमाणश्रुति-

युक्तिसंवादेन प्रामाण्यग्रहस्योत्तरवाक्ये वक्ष्यमाणत्वात्तदपेक्षयैते शङ्कोत्तरे स्याताम् । अत एव 'न विलक्षणत्वात्' इति सम्मत्युक्तिः सङ्गता । तत्र संवादनिरपेक्षेण प्रामाण्यग्रहस्य वक्ष्यमाणत्वात् । यद्वा मूले ब्रह्मसूत्राणां प्रामाण्यमित्यस्य ब्रह्मसूत्रज्ञानप्रामाण्यमित्यर्थः । आप्तवाक्यतयेत्यादेराप्तवाक्यजत्वेनेत्यादिरर्थः । एवं च तत्प्रामाण्यस्य साक्षिवेद्यतयाऽनुमानावेद्यत्वादाप्तवाक्यत्वादित्युक्तिरयुक्तेति शङ्काभिप्रायः । 'न विलक्षणत्वात्' इत्यत्रापि तज्जन्यज्ञानप्रामाण्यस्वतस्त्वाशयेनैव सम्मत्युक्तिरिति ध्येयम् । अथवेदं शास्त्रं प्रमाजनकं ज्ञानजनकत्वे सति संशयविपर्ययाजनकत्वात्सम्मतवाक्यवदित्यनुमानमेव प्रामाण्यग्राहकम् । आप्तवाक्यत्वादिहेतुत्रयं चोक्तहेतोः विशेष्यासिद्धिवारकमिति शङ्कोत्तरे ध्येये । वस्तुतस्तु वाक्यश्रवणात् जायमानबोधरूपकार्यलिङ्गेन ज्ञानजननशक्तिरनुमीयते । तेनैव प्रमाजननशक्तिरपि न त्वाप्तवाक्यत्वादिनेति स्वतः प्रामाण्यमिति शङ्कार्थः ॥ **नेति** । 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' इति युक्तिपादीय-द्वितीयाधिकरणे अस्य वेदादिशास्त्रस्य विलक्षणत्वात्संवादानपेक्षत्वरूपस्वतःप्रामाण्याख्यात् पाशुपताद्यागम-विलक्षणत्वान्न तथात्वं नाप्रामाण्यमिति वक्ष्यतीत्यर्थः ॥ **जैमिनिरपीति** । स्वत एव प्रामाण्यमिति बादरायणीयं मतमित्येतत्प्रमेयं 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थे अनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति सूत्रेणाद्याध्यायाद्यपादस्थेनाहेत्यर्थः । सूत्रार्थस्तु शब्दस्यार्थेन सम्बन्ध औत्पत्तिकः स्वाभाविकः उपदेशो वेदात्मा तस्य ज्ञानं ज्ञापकः अव्यतिरेको विपर्ययाजनकः चशब्दात्संशयाजनकश्च । बोधकत्वे सति संशयविपर्ययाजनक इति यावत् । तत्तस्मात् अनुपलब्धे मानान्तरानवगतेऽर्थे प्रमाणमनपेक्षत्वादन्यानपेक्षत्वादिति । बादरायणग्रहणं पूजार्थम् । बुद्धिदोषनिरासमात्रकारणत्वाद्युक्तीनामिति तत्वनिर्णयोक्तदिशा समाधिमाह ॥ **तथाऽपीति** ॥

या०— **अन्ततोऽस्यार्थस्येति** । विप्रलिप्साभावघटिताप्तिसाधनस्येत्यर्थः ॥ **को निवारयिता इति** । तथा च विपक्षे बाधकोपन्यासार्थमाप्तवाक्यत्वसाधनमावश्यकमित्यर्थः ॥ **यद्यपीति** । तथा च युक्त्या तत्साधनेऽपसिद्धान्त इति भावः ॥ **न विलक्षणत्वादिति** । 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' इति सूत्रखण्डस्य न विलक्षणत्वादित्यस्य नैवं श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यं वाच्यम् । विलक्षणत्वात्तत्प्रामाण्यस्य संवादानपेक्षतया स्वतस्त्वादित्यर्थः ॥ **तत्प्रामाण्यमिति** । 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धेस्तत्प्रामाण्यं बादरायणस्य अनपेक्षणात्' इति जैमिनिसूत्रखण्डस्य तत्प्रामाण्यमित्यादेस्तस्यापौरुषेयत्वेनानाशङ्कितदोषस्य वेदस्य स्वत एव प्रामाण्यं बादरायणस्यापि सम्मतम् । प्रामाण्यस्योत्पत्तावाप्तोक्तत्वादेर्ज्ञप्तौ संवादादेश्चानपेक्षणादित्यर्थो बोध्यः । 'बुद्धिदोषनिरासमात्रकारणत्वाद्युक्तीनाम्' इति भगवत्पादीयं वाक्यं मनसि निधाय आह ॥ **तथाऽपीति** ।

च०— एवं सत्तापरित्यागेन भावत्वादिविशेषणान्तरप्रक्षेपिततत्प्रयुक्त एवाविशेषो द्रष्टव्य इत्यपि स्थितम् ॥ **अस्यार्थस्येति** । विप्रलिप्साभावघटिताप्तिसाधनस्येत्यर्थः । अन्यथा तादृशाप्तिसाधनानभ्युपगमे । **को निवारयितेति** । विवक्षितार्थतत्त्वज्ञानविवक्षाकरणपाटवेति त्रितयरूपवक्त्रानुकूल्यसमवधाने तद्धटकान्यतमाभावनिबन्धनाप्रामाण्यशङ्काया असम्भवेऽपि अविप्रलिप्साया उक्तानुकूल्यघटकताविरहेण श्रोतृप्रसङ्गानुकूल्यघटकत्वाभावेन च तादृशानुकूल्यत्रयघटितहेतूपगमेऽपि विप्रलिप्सानियन्त्रिताप्रामाण्यशङ्का सङ्गच्छत एव । न च विप्रलिप्सायास्तादृशानुकूल्यत्रयघटकत्वाभावेऽपि श्रोतृप्रसङ्गानुकूल्यैकप्रयोज्यतया तत्प्रयोजकाभावदशायां कथं सा सङ्गच्छतामिति वाच्यम् । श्रोतृप्रसङ्गानुकूल्येन वक्तर्यविप्रलिप्साश्रयणस्य एतावन्तं पन्थानं प्रयातस्यावश्यतायामादृत एव विप्रलिप्साभावघटिताप्तिसाधनौचित्यादित्याशयः । उत्तरवादिमते प्रामाण्यस्य स्वतस्त्वोपगत्या प्रकृतेऽनुमेयत्वोपगमेऽपसिद्धान्तमाशङ्कते ॥ **यद्यपीऽति** ॥ **यद्वक्ष्यतीति** । अविरोधलक्षण इति पूरणीयम् ॥ **जैमिनिरपीति** । 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थेऽनुपलब्धेः तत्प्रामाण्यं बादरायणस्यानपेक्षत्वादि'ति जैमिनिसूत्रावयवस्य तत्प्रामाण्यमित्यादेस्तस्यापौरुषेयत्वापादिताप्रामाण्यतदभावकोटिकशङ्कानास्कन्दितताकत्वेदस्य प्रामाण्यं स्वत एवेति बादरायणस्यापि सम्मतम् । आप्तोक्तत्वादेः प्रामाण्योत्पत्तौ संवादादेस्तज्ज्ञप्तावनपेक्षितत्वादित्यर्थोऽवसेयः । भाष्यकारीयप्रयत्नस्याप्रामाण्यशङ्काव्युदसनफलत्वोपगमेन प्रामाण्याधिगतिफलत्वानुपगमान्न क्षतिरित्याशयः ।

**सु०— एवं विजातीयसंवादेनास्य शास्त्रस्य प्रामाण्यमुपपाद्य तदनुत्तमतासिद्धये सजातीयद्वयसंवादमप्याह ॥ श्रुतीति । तथाचशब्दौ समुच्चयार्थौ । मानमित्यस्यानुकर्षणार्थौ वा । यथा आप्तवाक्यतया तथा श्रुतिमूलतयाऽपीत्युपमार्थो वा तथाशब्दः । यद्यपि श्रुतियुक्तिमूलशब्दौ श्रुतियुक्तिभ्यामर्थमुपलभ्य रचितस्य वाचकौ । तथाऽप्यत्र समानार्थतासाम्येन गौण्या वृत्त्या श्रुतियुक्तिसंवादितार्थौ व्याख्येयौ । भगवतो बादरायणस्य स्वतः सर्वज्ञत्वेन मुख्यार्थासम्भवात् । यदि च श्रुतियुक्तिसंवादित्वादित्येवावक्ष्यत्तदा यादृच्छिकसंवादिताऽपि व्यज्ञास्यत । सा मा विज्ञायीति गौणप्रयोगः । एवं हि प्रयोगेऽङ्गाङ्गिभावोऽप्यधिको विज्ञायते । स च पक्षधर्मतोपपादको भविष्यति । ततश्चायमर्थः । यच्छ्रुतिसंवादि तत्प्रमाणम् । यथा मन्वादिवाक्यम् । श्रुतिसंवादि चेदं शास्त्रम् । तदर्थविचारपरत्वात् । विसंवादे तदनुपपत्तेः । तच्च 'पुनस्तस्यार्थवित्तय' इत्याद्यागमसिद्धम् । यच्च युक्तिसंवादि तत्प्रमाणम् । यथा धूमवन्तं पर्वतमुद्दिश्य पर्वतोऽयमग्निमानित्युक्तं वाक्यम् । युक्तिसंवादि चेदम् । मीमांसारूपत्वात् ।**

**मीमांसायाश्च युक्त्यनुसन्धानात्मकत्वात् । तस्मात्प्रमाणम् । अन्यथा श्रुतेर्युक्तेश्चाप्रामाण्यप्रसङ्गः । अर्धवैशसासम्भवादिति ।**

**वा०**— आदौ तावत्प्रामाण्य इति तावच्छब्दसूचितमाह ॥ **तदनुत्तमतेति** । वक्त्राद्यानुकूल्याप्तवाक्यत्वयोरिव न श्रुतियुक्तिमूलत्वयोः पूर्वोक्तहेतुं प्रति साध्यत्वमपि तु मानत्वं प्रति स्वतन्त्रसाधकत्वमिति अभिप्रेत्य भाष्यकृता प्रयुक्तयोस्तथाचशब्दयोस्तदभिप्रायं विशदयति ॥ **तथेति** । तथाचशब्दयोर्हेतुसमुच्चयार्थत्वे तद्बलात्साध्यसम्बन्धलाभः । अनुक्तसाध्यसमुच्चयरूपसाध्यानुकर्षणार्थत्वे तु साक्षात्साध्यसम्बन्धलाभात्परस्परहेतुसमुच्चयफलस्यापि लाभात्पक्षान्तरमाह ॥ **मानमिति** । चशब्दस्योक्तरीत्या समुच्चयार्थतामङ्गीकृत्य तथाशब्दस्योपमार्थतया प्रसिद्धत्वात्तदर्थत्वेऽपि समुच्चयफललाभात्तथाशब्दे प्रकारान्तरं आह ॥ **यथेति** । श्रुतियुक्तिमूलत्वशब्दयोर्मुख्यार्थत्वभ्रान्तिं वारयति ॥ **यद्यपीति** । **समानार्थतासाम्येनेति** । श्रुतियुक्तिभ्यामर्थमुपलभ्य रचितवदस्यापि श्रुतियुक्तिसमानार्थत्वादिति भावः । मुख्यार्थानुपपत्तिमभिधाय गौणप्रयोगे प्रयोजनं वक्तुं तदप्रयोगे तदसिद्धिमाह ॥ **यदि चेति** । मूलस्याङ्गित्वनियमेन तन्मूलकत्वोक्त्या तदङ्गत्वसूचनोपपत्तिरित्याह ॥ **एवं हीति** । व्याप्तिपक्षधर्मतयोरुभयोरप्यनुमानाङ्गत्वाद्भाष्यकारीयं पक्षधर्मतासूचनं व्याप्तेरप्युपलक्षणमित्यभिप्रेत्य व्याप्तिप्रदर्शनपूर्वं कीदृशोऽङ्गाङ्गिभावः कुतश्च स कथं च पक्षधर्मतोपपादक इत्याशङ्कां परिहरति ॥ **ततश्चेति** ॥ **अर्धेति** । समानार्थत्वाविशेषेऽप्येकप्रामाण्यस्यापराप्रामाण्यस्य चार्धवैशसवदसम्भावितत्वादित्यर्थः ।

**स०**— **एवं हीति** । मूलित्वेनाङ्गत्वदर्शनात् ब्रह्मसूत्राणामङ्गत्वेन श्रुतिसंवादार्थमूलित्वव्यपदेश इति भावः ॥ **स चेति** । श्रुतिसंवादित्वस्य यादृच्छिकश्रुतिसंवादित्वेन तस्य प्रामाण्यसाधकत्वाभावात् । नियतश्रुतिसमानार्थत्वस्यैव च तत्साधकत्वात्प्रामाण्यसाधनानुपपत्तिपरिहारार्थं मूलमित्युक्तम् । तथा च मूलमूलिनोर्नियतसंवाददर्शनान्मूलपदेन तदभिधानात्तेन प्रामाण्यसाधनमुपपन्नमिति भावः ॥ **अन्यथेति** । न हि श्रुतियुक्त्योरपि कयोश्चित्प्रामाण्यं कयोश्चिन्नेति वैरूप्यं सङ्गच्छत इत्यर्थः ।

**प०**— **विजातीयेति** । आप्तवाक्यत्वरूपप्रमाणसंवादेनेत्यर्थः । तस्य श्रुतियुक्त्योरिव साक्षाच्छास्त्रसमानार्थविषयकत्वेन विजातीयत्वमिति भावः ॥ **अनुत्तमतेति** । सर्वोत्तमतेत्यर्थः । 'चक्रे शास्त्रमनुत्तमम्' इत्यत्र प्रागेव विग्रहः प्रदर्शितः । तदनुवादत्वादेतत्प्रयोगः ॥ **अनुकर्षणार्थौ वेति** । श्रुतिमूलतया मानं युक्तिमूलतयाऽपि मानमिति प्रत्येकमनुकर्षणार्थावित्यर्थः ॥ **समानार्थतेति** । मूलमूलिभावापन्नयोर्यथैकार्थत्वं तथाऽत्रापीत्येकार्थतागुणसाम्येनेत्यर्थः । किं गौणप्रयोगे प्रयोजनमित्यत एकं प्रयोजनमुक्त्वाऽन्यदप्याह ॥ **एवं हि प्रयोग इति** । श्रुतिमूलतयेति प्रयोगे हि तद्विचारपरत्वाच्छास्त्र-

मङ्गं अङ्गि तु श्रुतय इत्येवं विज्ञायते । मूलमूलिनोरङ्गाङ्गित्वस्य काव्यटीकादौ प्रसिद्धेः । न चाङ्गाङ्गिभावज्ञापनं व्यर्थम् । शास्त्रं मानं श्रुतिसंवादित्वादित्यत्रासिद्धिशङ्कानिरासार्थत्वात् । मूलमूलितयाङ्गाङ्गिभावापन्नयोरेकार्थत्वस्यान्यत्र दर्शनादित्येतत्प्रयोजनलाभाय च गौणप्रयोग इति भावः । यद्वोदाहरणादिकानित्युक्तत्वादस्य मीमांसाशास्त्रत्वादुदाहरणावयवपूर्वं प्रयोगमाह ॥ **यद्धतीति** । उपनयमाह ॥ **श्रुतीति** । तत्र हेतुस्तदर्थेति ॥ **तच्चेति** । श्रुतिविचारणपरत्वम् । 'पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि' इति भाष्योक्तस्मृतिसिद्धमित्यर्थः । तस्य वेदराशेरित्यर्थः । उभयत्र निगमनमाह ॥ **तस्मादिति** । श्रुतियुक्तिसंवादवादित्यर्थः । अप्रयोजकत्वनिरासाय विपक्षे बाधकमाह ॥ **अन्यथेति** । शास्त्राप्रामाण्ये श्रुत्यादेः कुतोऽप्रामाण्यप्रसङ्ग इत्यत आह ॥ **अर्धेति** । वैशसो हिंसा । अङ्गाङ्गिनोः एकशरीरापन्नत्वादिति भावः । विपूर्वाच्छमु हिंसायामित्यतः पचाद्यजन्तात्तस्येदमित्यणि वैशसेति रूपनिष्पत्तेः ।

या०— **गौणप्रयोग इति** । तथा च श्रुत्यादिनाऽर्थमुपलभ्य रचितं यद्वाक्यं तत्सादृश्यनियमेन संवादित्वस्य लाभेन यादृच्छिकसंवादिताशङ्कया या व्यभिचारशङ्का तस्या निरास इति भावः । एवं प्रयोगे कृत्यान्तरमप्याह ॥ **एवं हीति** । श्रुतिर्मूलभूता विचार्यतयोपजीव्या यस्येत्यपि व्याख्यानसम्भवेन विचार्यविचारकभावलाभादङ्गाङ्गिभावोऽपि ज्ञायत इत्यर्थः । एवं युक्तिर्मूलभूतोपजीव्या स्वार्थनिर्णयायोपादीयमाना यत्रेति व्याख्याने विचाराङ्गयुक्तिग्रथनात्मकत्वलाभेनाङ्गाङ्गिभावो ज्ञायत इत्यर्थः । यद्वा यादृच्छिकसंवादितेत्यस्य विवक्षितस्य नियमेन श्रुत्यादिसंवादित्वस्य प्रामाण्यसाधकहेतोरसिद्धिराशङ्कितेत्यर्थः । ननु गौणप्रयोगे कथमुक्तशङ्कापरिहार इत्यत आह ॥ **एवं हीति** । तथा चाङ्गाङ्गिभावे सति श्रुत्यादिसंवादित्वस्य कर्ममीमांसादौ दर्शनात् अत्रापि तत्सादृश्यलाभ इति भावः । **पक्षधर्मतोपपादक इति** । वक्ष्यमाणानुमानयोरिति शेषः ॥ **अर्धवैशसासम्भवादिति** । अर्धहिंसान्यायासम्भवात् इत्यर्थः । अर्थवैशसासम्भवादिति पाठेऽर्थवैशसाऽसम्भवाद्विरोधासम्भवात् । वस्तुनो द्वैरूप्यासम्भवादिति यावत् इति व्याख्यानं द्रष्टव्यम् ।

श्री०— **अन्यथेति** । श्रुतियुक्तिसंवादिनो ब्रह्ममीमांसाशास्त्रस्याप्रामाण्य इत्यर्थः । कुत इत्यत आह ॥ **अर्धवैशसेति** । ब्रह्ममीमांसाशास्त्रश्रुतियुक्तीनामेकार्थप्रतिपादकत्वे समाने ब्रह्ममीमांसाया अप्रामाण्यमितरयोस्तु प्रामाण्यमित्यर्धहिंसान्यायासम्भवादित्यर्थः । अर्थवैशसेति पाठे ब्रह्ममीमांसाशास्त्रस्य श्रुतियुक्तिसंवादे त्रयाणामेकार्थप्रतिपादकत्वं प्राप्तम् । तत्र श्रुतियुक्त्योः प्रामाण्ये तत्प्रतिपादितप्रमेयस्य सत्यत्वं प्राप्तम् । ब्रह्ममीमांसाशब्दस्याप्रामाण्ये तत्प्रतिपादितप्रमेयस्यासत्यत्वं प्राप्तमित्येकस्यैवार्थस्य सत्यत्वासत्यत्वरूपद्वैरूप्यासम्भवादित्यर्थः ।

च० — **तदनुत्तमतासिद्धये** । स्वावधिकोत्तमत्वविशेषितराहित्यसिद्धये ॥ **अर्थमुपलभ्य रचितस्य** । अर्थकर्मकोपलब्धिप्रयोज्यरचनक्रियाकर्मीभूतस्य ॥ **गौणः प्रयोग इति** । तादृशमन्वादिवाक्यन्तस्य यथानियतश्रुतिसंवादित्वादिकं तथैतस्यापीति भावः । ईदृशविन्यासस्य फलान्तरमपि दर्शयति ॥ **एवं हीति ॥ पक्षधर्मतेति** । अभिधास्यमानतदर्थविचारपरत्वमीमांसारूपत्वयोरित्यर्थः । वैशसशब्दो हिंसावचनः ।

सु० — **किमतो यद्येवमित्यत आह ॥ एव प्रामाण्यमिति । एवशब्दो ब्रह्मसूत्राणां इत्यनेन सम्बध्यते । त्रिविधमिति क्रियाविशेषणम् । ब्रह्म वेदस्तदर्थः परब्रह्म वा तस्य सूत्राणि ब्रह्मसूत्राणि । सकलवेदार्थभूतस्य परब्रह्मणो विष्णोः स्वरूपनिर्णयार्थानि सूत्राणीति यावत् । सूत्रशब्दार्थश्चाल्पाक्षरमित्याद्यागमादवगन्तव्यः । एतेनैतच्छास्त्रवाचिनः शारीरकशब्दस्य शरीरमेव शरीरकं तत्र भवः शारीरको जीवः । तमधिकृत्य कृतोऽयं ग्रन्थः शारीरक इति व्याख्यानं निरस्तं भवति । ब्रह्मसूत्रशब्दार्थेन विरुद्धत्वात् । त्वंपदाभिधेयस्य तत्पदाभिधेयब्रह्मरूपता मीमांसेति व्याख्यानादविरोध इति चेन्न । असम्भवात् । न हि जन्मादिसूत्राणि अभेदपराणि । प्रत्युत तन्निरासपराणीति वक्ष्यते । अतः शारीरकः परमात्मैव । यथोक्तम् । 'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसंज्ञित' इति । तस्य सकलगुणपूर्णत्वादिमीमांसैव शारीरकमीमांसा । तथा चोक्तं पुराणे 'सर्वदोषविहीनत्वम्' इत्यादि ।**

वा० — यद्येवं श्रुतियुक्तिसंवादितया प्रामाण्यं लब्धमतोऽपि तदनुत्तमता सिद्धा किमित्याशङ्कते ॥ **किमिति** । यथाश्रुतान्वये एवशब्दस्य वैयर्थ्याद् ब्रह्मसूत्राणामित्यनेन सम्बन्धे प्रयोजनं कथयिष्याम इत्यभिप्रेत्य भिन्नक्रमतया तं व्याचष्टे ॥ **एवशब्द इति** । प्रामाण्यस्यैकविधत्वेन त्रैविध्यासम्भवात् स्वरूपेण त्रैविध्यस्यानुत्तमतानुपपादकत्वाच्च क्रियाविशेषणतायां बाधकाभावाद्वक्ष्यमाणरीत्या अनुत्तमतोपपादकत्वसम्भवाच्च तथा व्याचष्टे ॥ **त्रिविधमितीति** । साधनं परित्यज्य धात्वर्थमात्रविशेषणं हि क्रियाविशेषणमित्यर्थः । 'चक्रे शास्त्रमनुत्तमम्' इति प्रकृतशास्त्रस्यैव पूर्वत्रेवात्रापि प्रामाण्यसम्बन्धित्वेन लाभे सिद्धेऽपि यद् ब्रह्मसूत्राणामिति विशेषग्रहणं तस्य प्रयोजनं वक्तुं तस्य स्वाभिप्रेतयथास्थितोक्तिं विनाऽसम्भवात्स्वाभिप्रेतार्थं तावदाह ॥ **ब्रह्मेति** । वेदपरब्रह्मणोरुभयोरपि ब्रह्मपदशक्यत्वेन ब्रह्मपदात्तयोः स्वातन्त्र्येणोपस्थितावपि प्रत्ययोपस्थितकर्तृत्वैकत्वयोरेकप्रत्ययश्रुत्या वा योग्यतावशाद्वा विवक्षाबलाद्वा यथा परस्परान्वयस्तथा प्रकृतेऽप्येकपदश्रुत्यादिना प्रतिपाद्यप्रतिपादकभावेन परस्परान्वय इत्यभिप्रेत्य तदर्थ इत्युक्तम् । न तु शक्यसम्बन्धाभिप्रायेण परब्रह्मणोऽपि शक्यत्वादिति बोध्यम् । एवं ब्रह्मसूत्रपदं व्याख्याय तद्ग्रहेण पञ्चपाद्युक्तशारीरकमीमांसापदान्तर्गतशारीरकपदव्याख्यानं निरस्तमित्याह ॥ **एतेनेति ॥**

**ब्रह्मेति** । जीवमधिकृत्य प्रवृत्ते ग्रन्थे परब्रह्मस्वरूपनिर्णयार्थसूत्रत्वाभावेन ब्रह्मसूत्रशब्दार्थविरुद्धत्वात् इत्यर्थः । ननु शारीरकस्य त्वंपदाभिधेयस्य जीवस्य तत्पदाभिधेयब्रह्मरूपताप्रतिपादकमीमांसाया अपि शारीरकजीवमधिकृत्य प्रवृत्तत्वाद् ब्रह्मविषयकसूत्रत्वसम्भवाच्च न विरोध इति शङ्कते ॥ **त्वंपदेति** । यद्वा । नन्वस्तु शारीरकं जीवमधिकृत्य कृतो ग्रन्थः शारीरकस्तद्रूपा मीमांसेति पञ्चपादीव्याख्यानस्येदं दूषणम् । शरीरमेव शरीरकम् । तत्र निवासी शारीरको जीवात्मा । तस्य त्वंपदाभिधेयस्य तत्पदाभिधेयपरमात्मरूपता मीमांसा तथोक्तेति भामतीव्याख्याने नेदं दूषणं सम्भवतीत्याशङ्कते ॥ **त्वंपदेति** । यद्वा व्याख्यानद्वयस्यानतिविशेषतया व्याख्यानद्वयमेतेनेत्यादिना सम्मुग्धतयाऽनूद्य ब्रह्मसूत्रशब्दार्थविरोधेन अपाकृत्य त्वंपदेत्यादिनोभयाभिप्रायाविष्करणपूर्वमसम्भवादिति दूषणाभिधानमिति द्रष्टव्यम् ॥ **असम्भवादिति** । एवं च जन्मादिसूत्रेषु त्वदुक्तब्रह्मसूत्रशब्दार्थाभावेन तस्य ब्रह्मसूत्रार्थशब्दतया वक्तुमशक्यत्वे अस्मदुक्तार्थकत्वे वक्तव्ये तद्विरोधस्तदवस्थ इति भावः ॥ **अत इति** । परोक्तार्थस्यानुपपन्नत्वादित्यर्थः । ब्रह्मसूत्रशब्दार्थविरोधासम्भवयोः परपक्ष इव स्वपक्षेऽभावादिति भावः । न केवलं स्वपक्षेऽसम्भवाभावो अपि तु शारीरकमीमांसाशब्दार्थतयाऽस्मदुक्तार्थः प्रामाणिकश्चेत्याह ॥ **तथा चेति** ।

स०— ननु ब्रह्ममीमांसाशास्त्रस्य यथार्थज्ञानसाधनत्वरूपप्रामाण्यस्यैकविधत्वात् त्रिविधमिति अनुपपन्नमित्यतस्त्रिविधमित्यस्य दृश्यत इति क्रियाविशेषणत्वान्न दोष इत्याह ॥ **त्रिविधमिति** ॥ **शारीराविति** । भवार्थतद्धितानुपपत्तेः स्वार्थतेत्यर्थः । 'सर्वदोषविहीनत्वं गुणैः सर्वैरुदीर्णता । अभेदः सर्वरूपेषु जीवभेदः सदैव च । विष्णोरुक्तानि सूत्रेषु सर्ववेदेड्यता तथा' इति प्रमाणस्य प्रतीकं गृह्णाति ॥ **सर्वदोषविहीनत्वमित्यादीति** ।

प०— प्रमाजनकत्वरूपप्रामाण्यस्यैकविधत्वेन त्रैविध्यायोगादाह ॥ **क्रियाविशेषणमिति** । विवरिष्यते चैतत् । त्रिविधं दृश्यते । आप्तवाक्यत्वादिप्रमाणत्रयेण दृश्यत इति यावदिति ग्रन्थेन ॥ ब्रह्मपदस्य तन्त्रतामुपेत्यार्थमाह ॥ **ब्रह्मवेद इत्यादि** । वाशब्दः समुच्चये ॥ **एतेनेति** । ब्रह्मसूत्रपदोपादानेनेत्यर्थः ॥ **त्वंपदेति** । तत्त्वमसीतिवाक्यस्थेत्यर्थः ॥ **यथोक्तमिति** । सप्तमे गीताभाष्ये । 'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसंज्ञित' इति । परमस्तथेति पाठो लेखकायत्तः ॥ **सर्वदोषविहीनत्वमिति** । 'सर्वदोषविहीनत्वं गुणैः सर्वैरुदीर्णता । अभेदः सर्वरूपेषु जीवभेदस्सदैव च । विष्णोरुक्तानि सूत्रेषु सर्ववेदेड्यता तथा । तारतम्यं च मुक्तानां विमुक्तिर्विद्यया तथा' इति भारततात्पर्यनिर्णयोक्तपुराणे उक्तमित्यर्थः ।

या०— ब्रह्ममीमांसाशब्दस्योक्तविरोधपरिहाराय व्याख्यानान्तरमाशङ्कते ॥ **त्वंपदाभिधेयस्य इति ॥ शारीराविति ।** तद्धितस्य मानार्थकत्वानुपपत्त्या वासाद्यर्थता स्वीकार्येति भावः ॥ **सर्वदोष-विहीनत्वमित्यादीति ।** 'सर्वदोषविहीनत्वं गुणैः सर्वैरुदीर्णता । अभेदः सर्वरूपेषु जीवभेदः सदैव च । विष्णोरुक्तानि सूत्रेषु सर्ववेदैकवेद्यता तथा' इत्यादिना पुराणेन सकलगुणपूर्णत्वादिमीमांसारूपत्वं सूत्राणामुक्तमित्यर्थः ॥

श्री०— प्रमाजनकत्वरूपप्रामाण्यस्यैकविधत्वेन त्रैविध्यायोगादाह ॥ **क्रियाविशेषणमिति ॥**

च०— प्रामाण्ये त्रैविध्यस्य बाधिततया स्वावधिकोत्तमत्वविशेषितरहित्यानुपपादकतया च अभेदेन प्रामाण्यविशेषणीभूतकर्मप्रत्यायकलकारप्रकृतिभूतधातूपस्थाप्यानुमितिरूपदर्शनक्रियानिष्ठविशेष्य-तानिरूपिताभेदसंसर्गावच्छिन्नप्रकारतापन्नप्रत्यापकमित्याशयेनाभिधत्ते ॥ **त्रिविधमिति ।**

**सु०— यत एवं ब्रह्मसूत्राणां प्रामाण्यं त्रिविधं दृश्यते । आप्तवाक्यत्वादिप्रमाणत्रयेण दृश्यत इति यावत् । अतस्तन्महदनुत्तमं मन्तव्यम् । आप्तवाक्यत्रयादिलिङ्गत्रयावसितं प्रामाण्यं अन्यत्रापि चेत्स्यात्तदा कथमेषां तदनुत्तममित्यतो ब्रह्मसूत्राणामेवेत्युक्तम् । तत्कथमित्यत आह ॥ एकधेति । सर्वश इति वचनादेकधेत्युपलक्षणम् । तथा हि । क्वचिदेकधा । यथाऽऽप्ति-मूलतया लौकिकविषये पितृवाक्ये । श्रुतिसंवादेन धर्मादिविषये प्रतिवाद्युदीरितवचने । तदुक्त एव पर्वतोऽग्निमानिति वाक्ये युक्तिसंवादेन । क्वचिद् द्वेधा । यथाऽऽप्तिश्रुतिभ्यां मन्वादि-वाक्ये । आप्तियुक्तिभ्यां पर्वतोऽग्निमानित्यादौ पितृवाक्ये । श्रुतियुक्तिभ्यामीश्वरः सर्वज्ञ इति प्रतिवाद्युदीरितवचसीति । जैमिन्यादिवाक्ये त्रेधाऽप्यस्तीति चेत् । सत्यम् । यथा ब्रह्मसूत्रेषु न तथा । निरवधिकं हि तत्राप्त्यादिकम् । एतदर्थमपि महदित्येतत्त्रिविधमित्यनेनापि योजनीयम् । ननु प्रमाणैकत्वानेकत्वयोः प्रमेयतादवस्थ्यात् कथमेतत् । इत्थम् । न हि प्रमाणमत्र निःशङ्कप्रवृत्तावुपयुज्यते । किं नाम प्रमाणतया प्रमितमेव । तच्च यावद्यावदधिकं प्रमीयते तत्तदनुसारिणीमविशङ्कां क्षिप्रप्रवृत्तिं प्रसूत इत्यनुभवसिद्धम् । ततः प्रामाण्यमेव स्वकार्यातिशयवशेनातिशयवदुच्यते । एवं विषयप्रयोजनातिशयवशेनाप्यतिशयो द्रष्टव्यः ।**

वा०— एकधाऽन्यत्र सर्वश इत्यनेनातो नैतादृशमित्युपसंहारबलेन च लब्धं प्रामाण्यसाधक-प्रमाणे त्रैविध्यं तस्यानुत्तमत्वे हेतुत्वं च दर्शयितुं यत्तच्छब्दार्थाध्याहारेण वाक्यं व्याख्याति ॥ **यत**

**इति** । यद्वैवं पदार्थमुक्त्वा वाक्यार्थमाह ॥ **यत इति** । अन्यत्र द्वैविध्यस्य स्पष्टदृष्टत्वेऽपि सर्वश इति यद्वचनं तदेकधेत्यस्योपलक्षणत्वज्ञापकमित्याह ॥ **सर्वश इतीति** । आप्त्यादिकमित्यत्रादिपदेन श्रुतिमहातात्पर्यविषयसमानार्थत्वमिति निरवकाशयुक्त्यनुसन्धानात्मकत्वं च परिगृह्यते ॥ **कथमेतदिति** । प्रामाण्यज्ञापकत्रैविध्यात्प्रामाण्ये महत्त्वं नोपपन्नमित्यर्थः । न केवलं साक्षाद्भाष्यकारोक्तो लिङ्गत्रयावसितत्वप्रयुक्तस्वकार्यातिशयवशादेव प्रामाण्येऽतिशयोऽपि तु फलवत्त्वे सति ज्ञानसाधनत्वोपाधिना यथास्थितज्ञेयविषयीकारित्वरूपवाक्यप्रामाण्यस्य प्रकृते सर्वोत्तमज्ञेयविषयीकारित्वरूपतया सर्वोत्तमफलसाधनज्ञानसाधनत्वोपाधिकत्वाच्चातिशयो भाष्यकाराभिप्रेतो द्रष्टव्य इत्याह ॥ **एवमिति** । भाष्यमुपलक्षणमिति अभिप्रेत्य चाह ॥ **एवमिति** ।

स०— आप्तवाक्यत्वादिप्रमाणानां बाहुल्यात्प्रामाण्यमनुत्तममित्युक्तं तदनुपपन्नमिति शङ्कते ॥ **ननु प्रमाणैकत्वानेकत्वयोरिति** ॥ **इत्थमिति** । एवं चाप्तवाक्यतया सिद्धेऽपि प्रामाण्ये सर्वोत्तमप्रामाण्यसिद्धये श्रुतियुक्तिसंवादद्वयमित्यनेकप्रमाणानां निःशङ्कप्रवृत्तिहेतुत्वात्सार्थक्यम् । कर्ममीमांसासूत्रापेक्षया ब्रह्मसूत्राणामविशङ्कप्रवृत्तिलक्षणकार्यातिशयेन धर्माद्यपेक्षयातिशयितविषयेण ब्रह्मणा स्वर्गाद्यपेक्षयातिशयितेन फलेन मोक्षेणातिशयवत्त्वात् प्रामाण्यस्यापि त्रिविधातिशयवत्वं प्रामाण्यं त्रिविधं महदित्यनेनोक्तमिति भावः ॥

प०— उपलक्षणत्वे बीजोक्तिः ॥ **इति वचनादिति** । सर्वशः सर्वत्रान्यत्रेत्युक्त्यैकधेत्युक्तिः अयुक्ता । क्वचिद् द्वेधा त्रेधाऽपि सम्भवादत उपलक्षणं कार्यमिति भावः ॥ **श्रुतियुक्तिभ्यामिति** । यः सर्वज्ञः इत्यादिश्रुत्येश्वरः सर्वज्ञः सर्वकर्तृत्वादित्यादियुक्त्या च मूलभूतयेत्यर्थः । प्रामाण्यमिति सर्वत्रानुषङ्गः ॥ **एतदर्थम्** । जैमिन्यादिवाक्यव्यावृत्तप्रामाण्यसिद्ध्यर्थमित्यर्थः ॥ **त्रिविधमित्यनेनापि इति** । त्रिविधमित्यस्य क्रियाविशेषणत्वादाप्तवाक्यत्वादिप्रमाणत्रयेणेति पूर्वं तदर्थो दर्शितः । तत्र महदित्यस्य प्रामाण्येनेव तेनाप्यन्वये सति महदाप्तवाक्यत्वादिप्रमाणत्रयेणेत्यर्थः । महत्त्वं च प्रमाणस्य आप्तेः निरवधिकत्वेन । श्रुतियुक्त्योरनन्तत्वेनेत्यर्थो लभ्यत इति कर्ममीमांसादेवमीमांसाव्यावृत्तप्रामाण्यं सिद्ध्यतीति भावः ॥ **प्रमाणेति** । प्रामाण्यज्ञापकप्रमाणैकत्वानेकत्वयोरित्यर्थः ॥ **एतदिति** । उत्तमानुत्तमप्रामाण्ये इत्येतदित्यर्थः । ब्रह्मसूत्रपदप्रयोगसूचितं तदर्थत इति पदप्रयोगसूचितं च कार्यातिशयमपि आह ॥ **एवं विषयेति** । यथा निःशङ्कक्षिप्रप्रवृत्तिजनकत्वेनातिशयः तथा कर्मदेवतादितोऽपि प्रागुक्तदिशा सर्वदोषविहीनत्वादिगुणविशिष्टपरब्रह्माख्यातिशयितविषयप्रतिपादनेनानल्पस्थिरमोक्षाख्यातिशयितप्रयोजनकत्वेन चैतच्छास्त्रप्रामाण्यस्यातिशयो द्रष्टव्य इत्यर्थः ।

या०— तत्रेति । ब्रह्मसूत्रकर्तरि बादरायण इत्यर्थः ॥

च०— अनुत्तमं मन्तव्यमिति । ब्रह्मसूत्रप्रामाण्यमनुत्तमम् आप्तवाक्यत्वादिलिङ्गत्रयावसितत्वादित्यनुमानाकारोऽवसेयः ॥

अनु०— अतो नैतादृशं किञ्चित्प्रमाणतममिष्यते ।
स्वयं कृताऽपि तद्व्याख्या क्रियते स्पष्टतार्थतः ॥

सु०— तदेवं श्रुत्यनुमानाभ्यामिदमेव शास्त्रं प्रमाणतमं नान्यदेतादृशमस्तीत्युपसंहरति ॥ अत इति । इष्यते प्रामाणिकैरिति शेषः । तथा चान्यपरिहारेणास्यैव व्याख्यानं युक्तमिति हृदयम् । ननु भारतं सर्वशास्त्रेषूत्तममुच्यते । सत्यम् । विचार्येषु शास्त्रेषु तदित्यविरोधः । ननु चास्य शास्त्रस्यारम्भणीयत्वं सूत्रकार एव प्रथमसूत्रे समर्थयते । तद्व्याख्यानेनैव सर्वं सम्पद्यते । किमनेन । प्रथमसूत्र एव कथं प्रवृत्तिरिति चेत् । प्रथमभाष्येऽपि कथम् । सन्देहात्प्रवृत्तस्य पुनरुक्तप्रमाणैर्निर्णय इति चेत् । समं प्रथमसूत्रेऽपि । मैवम् । विषयादिसम्पादनेनैव तत् । न च तावताऽऽरम्भणीयत्वम् । प्रामाण्ये हि सति काकदन्तपरीक्षाग्रन्थवैलक्षण्यार्थं विषयादिव्युत्पादनमुपयुज्यते । अतः सूत्राक्षिप्तमेवेदं शिष्याणां बुद्धिशुद्धये भाष्यकृतोक्तमिति ।

वा०— नन्वत इत्युत्तरवाक्यस्य पूर्वोक्तार्थप्रतिपादकत्वात्पौनरुक्त्यमित्यतः परमाख्यविद्येत्यारभ्य प्रकृतप्रमेयोपसंहारत्वान्न वैयर्थ्यमित्याह ॥ तदेवमिति । मयेत्यध्याहारस्य स्वतः सिद्धत्वेऽपि प्रमाणतमत्वेन स्वाङ्गीकारमात्रस्यानुपयुक्तत्वात्सर्वाङ्गीकारस्य च बाधितत्वात्प्रमाणानां चानुपदमेवोपपादितत्वात् प्रामाणिकैरित्येव शेषपूरणं युक्तमित्यभिप्रेत्याह ॥ इष्यत इति । परमप्रमेयानुपसंहारेणोपसंहारभाष्यन्यूनतां परिहर्तुं भाष्यकाराभिप्रेतं परमप्रमेयं स्वयं दर्शयति ॥ तथा चेति । ननु श्रुत्यनुमानाभ्यामस्यैव प्रमाणतमत्वे भारतस्य सर्वशास्त्रेषूत्तमत्वोक्तिर्व्याहन्येतेति शङ्कते ॥ नन्विति । 'भारतं सर्वशास्त्रेषु भारते गीतिका वरा' इति प्रमाणमनेनानुकरोति । 'द्वे विद्ये वेदितव्ये' इति श्रुतौ ऋगादिपदोपलक्षिताशेषशास्त्राणामपरविद्यात्वेनोक्त्या लिङ्गत्रयावसितत्वरूपस्य महत्त्वस्यात्रैव सम्भवेनास्यैव शास्त्रस्य भारतापेक्षया उत्तमत्वेऽपि भारतस्योत्तमत्वोक्तिः निर्णेतव्यान्तरापेक्षया सङ्कोचयितव्येत्याह ॥ सत्यमिति । नन्वियता प्रबन्धेन प्रतिपादितयोः प्रामाण्यतदनुत्तमत्वयोरुक्तरीत्या शास्त्रारम्भणीयतार्थत्वाच्छास्त्रारम्भणीयतायाश्च सूत्रकारेणैव प्रथमसूत्रे समर्थनात्तद्व्याख्यानेनैवारम्भणीयतौपयिकविषयादिवत्प्रामाण्यादेरपि सिद्धेस्तदेव

व्याख्यायतां किमनेन सूत्रानर्थतया प्रामाण्यादिव्युत्पादकेन प्रथमभाष्येणेति शङ्कते ॥ **ननु चेति** । प्रामाण्यनिश्चयस्य प्रवृत्तिप्रयोजकत्वाच्छास्त्रप्रवृत्तिप्रयोजकप्रामाण्यनिश्चयाय प्रथमसूत्रगवेषणायां तत्र प्रवृत्तेरपि प्रामाण्यनिश्चयाधीनतया तत्प्रामाण्येऽवश्यं प्रतिपाद्ये समानन्यायतया शास्त्रप्रामाण्योक्तिः प्रथमभाष्य इत्याशङ्कते ॥ **प्रथमेति** । तर्हि प्रवृत्तेः प्रामाण्यनिश्चयसाध्यत्वादेव व्याख्यानप्रामाण्य-निश्चयस्य व्याख्येयप्रामाण्यनिश्चयाधीनतया तन्निश्चयाभावे प्रथमभाष्येऽपि न प्रवृत्त्युपपत्तिरिति समाधत्ते ॥ **प्रथमेति** । सूत्रे प्रामाण्यानुक्त्या समाधत्ते ॥ **विषयादीति** । तत् शास्त्रस्यारम्भणीयत्वम् । सम्पादनेन व्युत्पादनेन सूत्रकारः प्रथमसूत्रे समर्थयत इति पूर्वेण सम्बन्धः । ननु सूत्रस्य विषयादिव्युत्पादनेनैव आरम्भणीयत्वसमर्थकत्वे तावतैवारम्भणीयत्वसिद्धौ भाष्यकारीयं प्रामाण्यव्युत्पादनं व्यर्थमेवेत्यत आह ॥ **न चेति** । तावता विषयादिव्युत्पादनेन आरम्भणीयत्वं सिद्धं भविष्यतीति शेषः । नन्वेवं प्रामाण्य-व्युत्पादनस्यावश्यकत्वे प्रमाणस्य सतो निर्विषयत्वादिप्रयुक्तानारम्भणीयत्वशङ्काया अप्रसक्तेर्विषयादि-व्युत्पादनं व्यर्थं सूत्रे । आवश्यकप्रामाण्याव्युत्पादनान्न्यूनता चेत्यतः काकदन्तपरीक्षाग्रन्थादौ सत्यपि याथार्थ्यरूपप्रामाण्ये निष्प्रयोजनत्वादिप्रयुक्तानारम्भणीयताया दृष्टत्वेन शङ्काप्रसञ्जकसद्भावात् । अप्रा-माण्ये च तेनैवानारम्भणीयत्वप्राप्तौ काकदन्तपरीक्षाग्रन्थसालक्षण्यशङ्काया अनवसरग्रस्ततया तद्वैलक्षण्याय सविषयकत्वादेरप्रतिपादनीयतया तत्प्रतिपादनेनैव प्रामाण्यव्युत्पादनस्य सूत्रकृदभिमततया सुज्ञानत्वाच्च न न्यूनताऽपीत्याशयेनाह ॥ **प्रामाण्ये हि सतीति** । नन्वस्तु सूत्रकारीयविषयादिव्युत्पादनस्य प्रामाण्ये सत्येवोपयोगस्तथाऽपि प्रामाण्यव्युत्पादकस्यास्य कथं भाष्यत्वमित्याशङ्कां परिहरन्नेव भाष्यकारीयतदुक्तेः प्रयोजनं चोपसंहारव्याजेन दर्शयति ॥ **अत इति** । न च याथार्थ्ये मानमस्तीत्यादिशङ्कापरिहारो बुद्धिशुद्धिः ।

स०— **श्रुत्यनुमानाभ्यामिति** । श्रुतिः परविद्याऽख्या । अनुमानमाप्तवाक्यत्वादि । **विचार्येषु शास्त्रेष्विति** । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इत्यत्र भारतस्य निर्णायकत्वोक्तावपि युक्तिभिरनिर्णायकत्वाद्विचार्यतुल्यत्वमेवेति भावः ॥ **न विरोध इति** । 'भारतं सर्ववेदाश्च'त्यादिना इति शेषः । न च तावता आरम्भणीयत्वमित्यतः परं किंत्वित्यध्याहार्यम् । ननु तर्हि प्रामाण्यमात्रेणैव आरम्भणीयत्वसिद्धेर्विषयादिकथनं व्यर्थमित्यत उक्तम् ॥ **काकदन्तपरीक्षेति** ।

प०— एकधाऽन्यत्र सर्वश इत्युक्तमात्रोपसंहारपरत्वभ्रमनिरासाय व्याकुर्वन्नेवावतारयति ॥ **तदेवमित्यादिना** । अत इत्यस्यार्थः श्रुत्यनुमानाभ्यामिति । परविद्याख्यं चक्रे शास्त्रमित्यत्रोक्तया 'द्वे विद्ये वेदितव्ये' इत्यादिश्रुत्या । आप्तवाक्यत्वाद्यनुमानत्रयावगतप्रामाण्यकत्वरूपानुमानेन चेत्यर्थः ।

शास्त्रपदमनुवर्त्य तेन प्रमाणतमपदस्यान्वयमुपेत्योक्तमिदमेवेत्यादि । प्रमाणतमत्वोक्तेः क उपयोग इत्यतः प्रागुक्तशङ्कानिरासः फलमित्याह ॥ **तथा चेति** । गीताभाष्ये प्रथमे 'वेदादपि परं चक्रे पञ्चमं वेदमुत्तमम्' ॥ **भारतमिति** । 'भारतं सर्वशास्त्रेषु भारते गीतिका वरा' इत्यादिनोक्तभारतोत्तमत्वविरोधमाशङ्क्य निराह ॥ **नन्विति** । प्रादुर्भूत इत्यादिश्लोकचतुष्टयस्योत्सूत्रितार्थत्वेन वक्ष्यमाणदिशा परमते अभ्यासभाष्यस्येव वैयर्थ्यदोषमाशङ्क्य निराह ॥ **ननु चेत्यादिना** ॥ **समर्थयत इति** । तत्प्रकारोऽग्रे व्यक्तः ॥ **किमनेनेति** । श्लोकचतुष्टयकृतेनारम्भणीयतोपयुक्तप्रामाण्यसमर्थनेनेत्यर्थः ॥ **कथं प्रवृत्तिः इति** । आरम्भणीयत्वानिर्णये तत्प्रवृत्तेरयोगात् प्रादुर्भूत इत्यादिभाष्येणारम्भणीयत्वसिद्धौ पश्चात्तत्र प्रवृत्तिरिति भावः ॥ **कथमिति** । प्रवृत्तिरित्यनुषङ्गः । सूत्रस्यैवारम्भणीयत्वानिर्णये तद्व्याख्यारूपभाष्ये अपि प्रवृत्तेरयोगादिति भावः । उत्तरं शङ्कते ॥ **सन्देहादिति** । आरम्भणीयत्वानारम्भणीयत्वसन्देहात् इत्यर्थः ॥ **उक्तेति** । आप्तवाक्यत्वादिरूपप्रमाणैः सूत्रप्रामाण्यसिद्धौ तद्व्याख्यानत्वयुक्त्या आरम्भणीयत्वनिर्णयो भविष्यतीत्यर्थः । सत्यम् । प्रथमसूत्रेऽप्यारम्भणीयत्वसन्देहात्प्रवृत्तस्य सूत्रस्थाथादिपदोक्तप्रमाणैरारम्भणीयत्वनिर्णयो भवतीति । तथाप्यारम्भणीयत्वसन्देहो द्वेधा । प्रामाण्यसन्देहनिमित्तको विषयप्रयोजनाधिकारिसम्बन्धसन्देहनिमित्तकश्च । तत्रान्त्यस्य सूत्रेण परिहारेऽपि आद्यस्य न परिहारः । अतो भाष्यमेतत्सार्थकमिति भावेनाह ॥ **मैवमित्यादिना** ॥ **तदिति** । प्रथमसूत्रे आरम्भणीयत्वसमर्थनमित्यर्थः । तावतैवालमित्यत आह ॥ **न चेति** । बौद्धादावपि तत्सम्पादनस्य बौद्धादिग्रन्थकर्तृक्रियमाणत्वेन व्यभिचारादिति भावः । तर्हि सूत्रे विषयादिव्युत्पादनं व्यर्थम् । तावन्मात्रस्यारम्भानुपयोगादित्यत आह ॥ **प्रामाण्ये हीति** ॥ **अत इति** । प्रामाण्ये सत्येव विषयादिव्युत्पादनस्योपयोगात् इत्यर्थः ॥ **सूत्राक्षिप्तमिति** । विषयादिव्युत्पादनान्यथानुपपत्त्यैवार्थाल्लब्धं प्रामाण्यमित्यर्थः । आर्थिको अप्यर्थः सूत्रार्थ एवेति तु बन्धमिथ्यात्वमित्येतदवतारिकायां परमतानुवादप्रस्तावे निपुणतरमुपपादयिष्यत इति भावः । एतेन प्रामाण्ये हीत्यादिग्रन्थेनैव श्रौतार्थं प्रागनुक्त्वा आर्थिकार्थमेव प्राक्कथयन् भाष्यकारो अकुशल इति परास्तम् । प्रामाण्येन विना विषयादिव्युत्पादनस्यैव अयोगादिति । बुद्धिसिद्धये प्रवृत्तिबुद्ध्युत्पादनाय ॥

**या॰— तदेवं श्रुत्यनुमानाभ्यामिति** । श्रुतिः परविद्याख्यमित्यत्रोक्ता ॥ **विषयादिसम्पादनेनैव तदिति** । आरम्भणीयत्वमित्यर्थः । प्रथमसूत्रे समर्थयत इति पूर्वेणान्वयः । न प्रामाण्यसम्पादनेनेत्यर्थः । अतो नास्य प्रामाण्यव्युत्पादनस्य प्रथमसूत्रेण गतार्थतेति भावः । ननु विषयादिसम्पादनेनैव आरम्भणीयत्वसिद्धिसम्भवे प्रामाण्यव्युत्पादनं व्यर्थमित्याशङ्क्य निराकरोति ॥ **न चेति** । तावता तावतैवारम्भणीयत्वं समर्थयितुं शक्यमिति शेषः । कुतो नेत्यत आह । **प्रामाण्ये हीति** ।

अन्यथाऽप्रामाण्येनैवानारम्भणीयत्वशङ्कायां प्रयोजनादिव्युत्पादनस्यावसर एव नेति भावः । ननु इदं प्रामाण्यसमर्थनं सूत्रोक्तं न चेत्तर्हि गुरुर्गुरूणामित्यादेर्भाष्यत्वव्याघातः । तदुक्तं चेद्भाष्यकारीयं तद् व्युत्पादनं व्यर्थमसङ्गतं स्यादित्याशङ्कां परिहरन्नुपसंहरति ॥ **अत इति** । प्रामाण्यसमर्थनाभावे विषयादिव्युत्पादनस्यावसर एव नेति विषयादिव्युत्पादकसूत्रेण तदाक्षिप्तमित्यर्थः ॥ **बुद्धिशुद्ध्य इति** । विषयादिव्युत्पादनप्रतिबन्धकाप्रामाण्यशङ्कानिरासायेत्यर्थः ॥

च०— **श्रुत्यनुमानाभ्यामिति** । श्रुतिः परविद्याख्यमित्यत्राभिहिता ॥ **विषयादिसम्पादनेनैव तदिति** । आरम्भणीयत्वं विषयादिव्युत्पादनेन सूत्रकारः समर्थयत इत्यनुषक्तेनान्वयः । सूत्रकारीय-विषयादिव्युत्पादनमात्रेणैवारम्भणीयता सेत्स्यतीति तन्मात्रफलकभाष्यकारीयप्रामाण्यतदुत्तमताव्युत्पादनं मन्दप्रयोजनमित्यत आह ॥ **न चेति** । तावता विषयादिव्युत्पादनमात्रेण । पूरणीयसिद्धमित्यंशेन प्रथमान्तमन्वेति । अथ सूत्रकारः कथमारम्भणीयतानिर्वाहकप्रामाण्यं न व्युदपीपदत् । तदनावश्यक-विषयादिमत्तां च प्रत्यपीपददित्यतः सौत्रप्रामाण्यतदनुत्तमत्वे सुदृढनिरूढे मन्वानः काकदन्तपरीक्षाग्रन्थ-सालक्षण्यशङ्कापादिततदनारम्भणीयताशङ्कापचिकीर्षयैव विषयादिमत्तामात्रमेव प्रत्यपीपदत् । भाष्यकारः तु सूत्रध्वनितमेव प्रामाण्यादिकं विनेयमतिशुशुत्सया प्रागभ्यधादिति सामञ्जस्यमित्याह ॥ **प्रामाण्ये हीति** ।

सु०— **तथाऽपि नेदं व्याख्यातव्यं व्याख्यातत्वादित्यत्रान्वपि चेति यत् प्रयोजनान्तरं अस्तीति सूचितं तद्विवरणार्थमाह ॥ स्वयमिति । यद्यपि तेषां ब्रह्मसूत्राणां व्याख्या स्वयं मयैव भाष्ये कृता तथाऽपि पुनरत्र स्पष्टतैवार्थः प्रयोजनं यस्य स्पष्टतार्थः । तस्मै स्पष्टतार्थतः । भाष्ये अस्पष्टीकृतमर्थं स्पष्टीकर्तुं क्रियते । स्पष्टीकरणं चानेकविधम् । क्वचिदनुक्तांशस्योक्तिः । क्वाप्यतिसङ्क्षिप्तस्य विस्तरणम् । क्वचिदतिविस्तृततया बुद्ध्यनारूढस्य सङ्क्षेपः । क्वापि विक्षिप्तस्य एकीकरणम् । कुत्राप्युक्तस्योपपादनम् । क्वचिदपव्याख्याननिरासेन दृढीकरणमित्यादि तत्र तत्र द्रष्टव्यम् । नन्वेकत्रैव सर्वं वक्तव्यं वक्तव्यं किं प्रस्थानभेदेन । मैवम् । यतः सङ्क्षेपविस्तराभ्यामुक्तं श्रोतॄणां सुग्रहं सप्रयोजनं च भवति । यथोक्तम् । 'सङ्क्षेपविस्तराभ्यां तु कथयन्ति मनीषिणः । बहुवारस्मृतेस्तस्य फलबाहुल्यकारणात्' इति । तत्र भाष्याद्यपद्यार्थो अत्र श्लोकत्रयेण विवृतः । तथा हि । सर्वगुणोदीर्णतोक्त्या प्राप्ता गुणगुणिभेदशङ्का निखिले-त्यादिना निराकृता । ज्ञेयत्वगम्यत्वयोरितरसाधारण्यात्कथं विशेषणत्वमित्याशङ्क्य आप्यतम-मित्यनेन परिहृता । अपिशब्दो विशेषणान्तरसमुच्चयार्थः । तद्विवरणमस्येत्यादि । शास्त्रप्रभवं**

इत्यादिभिर्बहुभिः प्रकारैर्यद्गुरुत्वोपपादनं तेन गुरूंश्चेति बहुवचनान्तं पदं विवृतम् । गुरुदेवतयोः भेदेऽपिपदेनारुचिः सूचिता । तद्विवृतिस्तमेवेति । सम्प्रशब्दाभ्यां नत्वेति विशेषितम् । निरूपपदसूत्रग्रहणेन यद्ब्रह्मसूत्राणां सर्वोत्तमप्रामाण्यं सूचितं तदुपपादनं परमाख्येति । यद्द्वापर इत्यादिभाष्यं तदसङ्गतम् । सूत्रार्थवचनं प्रतिज्ञाय तदुत्पत्तिक्रमकथनस्योपयोगादर्शनात् । मैवम् । यस्मादाप्तमूलत्वादियुक्त्याऽपि ब्रह्मसूत्राणां सर्वोत्तमं प्रामाण्यं समर्थयितुं एतदिति दर्शयति गुरुर्गुरूणामित्यादिनेति ।

वा०— कृतस्य करणायोगात् । यद्यपि तथाऽपि पुनरित्यर्थकत्वमपिशब्दस्य दर्शयन्वाक्यं योजयति ॥ यद्यपीति । ननु सर्वत्रानुव्याख्याने सङ्क्षिप्य भाष्योक्तविस्तरणादर्शनादयुक्तमेतदित्यत आह ॥ स्पष्टीकरणं चेति ॥ इत्यादि तत्र तत्रेति । आदिपदेनासङ्गतिपरिहारादिकं सङ्गृह्यते । अत:शब्दार्थतया बन्धसत्यत्वोक्तिप्रभृत्यनुपदं वक्ष्यमाणस्योद्भवादिदं शास्त्रप्रभवमित्यादि । एवमेवाविरोधेन प्रारब्धस्यैव कर्मणः । ज्ञानं दृष्टफलं प्रोक्तं मुक्तिश्चैवेह लभ्यते । अतो जगद्व्याप्तिमन्त एवेत्यादि । वैराग्यतो भक्तिदार्ढ्यं युक्तितो ज्ञातवेदार्थ इत्यादि परमाख्यविधेत्यादि । आत्मेति नाम कथितमित्यारभ्य तस्माद्यथोक्तमार्गेणेत्यादि गुरुर्गुरूणामित्यादि च क्रमेण तत्र तत्र द्रष्टव्यमित्यर्थः ।

स०— सूचितमिति । अन्वपि चेत्यत्र चशब्देनेति शेषः ॥ दृढीकरणमित्यादि इत्यादिशब्देन शेषकरणं ग्राह्यम् । यथा 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय' इति सूत्रपूर्वपक्षभाष्ये सृष्टिसंहारकर्तृत्वमेवास्य न पालकत्वं स्वत:सिद्धेरित्यत्र पालनस्येति शेषकरणं कृतम् ॥ अपिशब्द इति । गुरुदेवताभेदे अरुचिसूचको भाष्यस्थापिशब्दो विशेषणान्तरसमुच्चयार्थोऽपीत्यर्थः ।

प०— सूचितमिति । 'अन्वपि चाहमेव' इत्यत्रस्थचशब्देनेति भावः ॥ अनुक्तांशस्येति । सिद्धार्थे व्युत्पत्त्यादेः ॥ अतिसङ्क्षिप्तस्येति । व्यक्तमेतदनुपदं तत्र भाष्याद्यपद्यार्थ इत्यादौ ॥ सङ्क्षेप इति । 'एतद्भावाभिधं लिङ्गम्' इत्यादिविषयमालायाः पूर्वोत्तरपक्षयुक्तिमालादेश्च करणादिति भावः ॥ एकीकरणमिति । आनन्दमयनयादौ ॥ कुत्रापीति । अन्तरादिनयेष्वभ्यधिकाशङ्कादिनोपपादनम् । अपव्याख्याननिरासस्तत्र तत्र व्यक्त एव । इत्यादीत्यादिपदेन क्वचिद्बाधकोद्धारादिर्ग्राह्यः ॥ यथोक्तं इति । प्रथमस्कन्धतात्पर्ये । अतिसङ्क्षिप्तस्य विस्तरणमित्येतद्व्यनक्ति ॥ तत्रेति । निखिलेत्यादिना निराकृतेति । देहस्य गुणात्मकत्वोक्त्या देहदेहिनोरभेदस्य प्रमितत्वाद्गुणाभेद एवोक्तो भवतीति भावः ॥ इतरेति । कर्मदेवतासाधारण्यादित्यर्थः । अपिशब्दस्यारुचिसूचकत्ववदनुक्तसमुच्चयरूपार्थान्तरमप्युपेत्य

आह ॥ **अपिशब्द इति** ॥ **सम्प्रेति** । आद्यद्वितीयश्लोकस्थसम्प्रशब्दाभ्यां यथाक्रमं देवतानतिर्गुरुनतिश्च विशेषितेत्यर्थः । द्वापर इत्यादिभाष्यविवृतिपरं गुरुर्गुरूणामित्यादीत्याह ॥ **द्वापर इतीति** ।

या० — **अस्तीति सूचितमिति** । अन्वपि चाहमेवेत्यत्र चशब्देनेति शेषः ॥ **अनुक्तांशस्य इति** । यथा प्रथमाधिकरणे भाष्यानुक्तानामतःशब्दार्थानामुक्तिरित्यादि ॥ **अतिसङ्क्षिप्तस्येति** । एतत् उदाहरणम् त्वपिशब्दो विशेषणान्तरसमुच्चयार्थः । तद्विवरणमस्येत्यादीति वक्ष्यमाणम् । तथा मान्त्रवर्णिकसमाख्याया भाष्ये सङ्क्षेपेणोदितायास्तत्र सत्यत्वं सृष्ट्यन्नप्राणयोरपीत्यादिनाऽत्र विवरणमित्यादिकं ज्ञेयम् ॥ **सङ्क्षेप इति** । यथा प्रथमेऽध्याये तृतीयपादार्थस्य पूर्वपक्षसिद्धान्तन्यायोक्त्यादिमात्रेण सङ्क्षेप इत्यादि । **विक्षिप्तस्येति** । यथा चतुर्थे शेषमार्गगरुडमार्गस्य वा भाष्ये विक्षिप्ततयोक्तस्यात्र ' सोमस्तु वारीशयुत ' इत्यादिनैकीकरणमित्यादि । उक्तस्योपपादनमित्यस्य 'चेष्टा हि चेतनानां सा सा भवेत्त्वत्प्रसादत' इत्याद्यभ्यधिकाशङ्काप्रदर्शनादिनोपपादनमुदाहरणं ज्ञेयम् । **अपव्याख्याननिरासेनेति** । यथा 'बन्धमिथ्यात्वं नैवमुक्तिरपेक्षत' इत्यादि । इत्यादीत्यत्रादिपदेन द्वितीये प्रमाणलक्षणादेरुक्तिरनुक्तांशेत्युक्तोपपादनयोः सूत्रार्थमात्रविषयत्वान्न ताभ्यामिदं गतार्थमित्यवधेयम् ।

श्री० — **बहुवचनान्तं पदमिति** । गुरुत्वोपपादकप्रकाराणां बहुत्वोपपादकप्रकाराणां बहुत्वात् बहुवचनम् । तथा च गुरूनित्यस्य बहुभिः प्रकारैरुपपाद्यं यद्गुरुत्वं तदुपेतानित्यर्थो द्रष्टव्यः ।

च० — **अनुक्तांशस्य** । अतःशब्दार्थतया बन्धसत्यत्वादेः । **अतिसङ्क्षिप्तस्य** । मान्त्रवर्णिकसमाख्योक्तार्थस्य विस्तरणं सृष्ट्यन्नप्राणयोरपीत्यादिना । **सङ्क्षेपः** । समन्वयलक्षणे उभयत्रप्रसिद्धनामलिङ्गोभयपादार्थस्य । अविरोधलक्षणे तुरीयपादार्थस्येत्यर्थः । **विक्षिप्तस्येति** । तुरीये भाष्ये विक्षिप्तोक्तशेषगरुडमार्गादिरूपार्थस्य सोमस्तु वारीशेत्यादिना सङ्कलनम् । **उक्तस्योपपादनं** चेष्टाहीत्याद्यधिकाशङ्काप्रदर्शनादिना । **दृढीकरणं** बन्धमिथ्यात्वनिरासेनेत्यादिकं तत्रतत्रावधेयम् ॥ **तत्र भाष्याद्यपद्यार्थ इति** । अत्र व्याचक्षाणाः यद्यपि प्रादुर्भूत इति तृतीयश्लोके भाष्याद्यपद्यस्थस्य कस्यापिशब्दस्यार्थो न विवृतः । तथापि कृतकृत्यस्य व्यासस्य शास्त्रप्रभवस्त्वानुपपत्तिः । परविद्याख्याया एतच्छास्त्रविषयत्वेन नियामकमस्तीत्याद्याशङ्कानिरासार्थप्रवृत्तेन तृतीयश्लोकेनापि व्यासस्य शास्त्रप्रभवत्वसमर्थनद्वारा गुरूनिति वहुवचनोपेतगुरुत्वप्रकरणविवरणम् । परविद्याख्याया एतच्छास्त्रविषयत्वे समर्थनद्वारा निरुपपदसूत्रग्रहणसूचित, सर्वोत्तमप्रामाण्यविवरणं च कृतमिति द्रष्टव्यमिति व्याचक्षते ।

सु०— तथाऽपि नेदं शास्त्रं व्याकर्तव्यं मङ्गलाचरणरहितत्वात् । मङ्गलाचरणपुरःसराणि खलु कर्माणि निरन्तरायं परिसमाप्यन्ते प्रचीयन्ते च । न चाकृतमङ्गलाचरणानामपि कार्यपरिसमाप्त्यादिदर्शनात्कृतमङ्गलाचरणानामपि तदभावोपलम्भान्न तद्धेतुत्वमस्येति साम्प्रतम् । तथा सति कारीर्यादेरपि वृष्ट्यादिहेतुत्वाभावापत्तेः । स्यादेतदेवम् । यदि कारीर्यादेर्वृष्ट्यादिहेतुत्वं निष्प्रमाणकं स्यान्न चैवम् । श्रुतिनिश्चिते तु साध्यसाधनभावे तदभावेऽपि भावोऽनेककारणकत्वस्य कल्पको भवति । दर्शपूर्णमासाभ्यामिव त्रैवर्णिकपरिचर्यादिनाऽपि स्वर्गप्राप्तेः । भावेऽप्यभावस्तु कर्तृकरणादिवैगुण्यनिमित्तो भवति । न हि सामग्रीवैकल्येन साध्यं व्यभिचरन् हेतुरहेतुः स्यात् । कर्त्रादिसाद्गुण्ये वा प्रबलप्रतिबन्धकसद्भावः कल्प्यते । न हि प्रतिबद्धं कार्यं अजनयत् कारणमकारणं भवति । वन्हेरपि स्फोटं प्रत्यकारणत्वप्रसङ्गात् । न चैवं सामग्रीवैगुण्यशङ्कया प्रतिबन्धकशङ्कया वाऽस्याननुष्ठानम् । औत्सर्गिकी खलु प्राणभृतां प्रवृत्तिर्निवृत्तिस्त्वपवादात् । अन्यथैवंविधशङ्कायाः सर्वत्र सौलभ्येन सकलप्रवृत्तिविलयापातादिति । सममेतत्सकलं प्रकृतेऽपि ।

वा०— 'तत्र ताराथमूलत्वमि'त्यनुव्याख्याने ताराथयोर्माङ्गलिकत्वेनैतत्सूत्रनिवेशितयोः सर्वशास्त्राङ्गतायाः कथयिष्यमाणत्वान्मङ्गलस्यैवाकर्तव्यत्वेऽनिवेशनीयत्वे वा माङ्गलिकत्वेन निवेशस्य कथयितुमशक्यतया तयोर्माङ्गलिकत्वेन निवेशं वक्तुं मङ्गलस्य कर्तव्यत्वं निवेशनीयत्वं च शङ्कामुखेनोपपादयति ॥ **तथाऽपीति** । मङ्गलाचरणरहितस्याप्यस्तु व्याकर्तव्यत्वमित्यप्रयोजकत्वशङ्कायां मङ्गलाचरणाभावेऽन्तरायप्रसङ्गेन सत्साध्यनिरन्तरायसमाप्तिप्रचयाभावेनासमाप्तस्य स्वरूपाभावेन वीर्यवत्त्वायुष्मत्पुरुषकत्वप्रचयादिहीनस्य च शिष्यानुपादेयत्वेनाकर्तव्यत्वात् । व्याकर्तव्यताऽङ्गीकारे समाप्तिप्रचयौ स्यातां तौ च कारणाभावादनुपपन्नाविति विपक्षबाधकं सूचयन्मङ्गलसमाप्त्यादेः कार्यकारणभावं प्रसिद्ध्या दर्शयति ॥ **मङ्गलेति** । उपलक्षणं चैतत् मङ्गलाभावे विघ्नोपसंसृष्टतया वाक्यार्थेऽप्रतिपत्त्यन्यथाप्रतिपत्त्यापत्त्या शिष्टाचारपरिपालनहीनतयाऽनाप्तप्रणीतत्वप्रसङ्गाच्चाव्याकर्तव्यत्वेन हेतोः प्रतिबन्धसिद्धिरिति द्रष्टव्यम् । अन्वयव्यतिरेकाभ्यां कार्यकारणभावग्रहोऽनयोरिति भ्रान्त्या तत्र व्यभिचारं शङ्कते ॥ **न चेति । साम्प्रतं** युक्तम् । प्रतिबन्दीमुखेन समाधातुं गूढाभिसन्धिरुत्तरमाह ॥ **तथा सतीति** । श्रुतिसिद्धे कार्यकारणभावे व्यभिचारशङ्का नोन्मिषतीत्येतत्सहेतुकमुपपादयितुं प्रतिबन्दीमोचनव्याजेन शङ्कामुत्थापयति ॥ **स्यादेतदेवमिति ॥ निष्प्रमाणकं स्यादिति** । श्रुतिं विहायान्वयव्यतिरेकमात्रकल्प्यं स्यादित्यर्थः । श्रुतिसिद्धत्वेऽपि कार्यकारणभावे कुतो न व्यभिचारशङ्केत्यतोऽन्यथासिद्धत्वात्तत्र व्यभिचारस्यान्यथासिद्धान्वयव्यतिरेकयोर्हेतुहेतुमद्भावप्रयोजकत्वाभावस्येवान्यथासिद्धव्यभिचारस्य तद्बाधकाभावादुत्पन्नाऽपि साऽप्रयो-

जिकेत्याह ॥ **श्रुतीत्यादिना** । ननु तर्हि यत्प्रयुक्ता व्यभिचारस्यान्यथासिद्धिस्तच्छङ्काप्रतिबद्धः श्रुतिनिश्चितोऽपि हेतुहेतुमद्भावः फलार्थिनो हेतौ न प्रवृत्तिप्रयोजक इत्याशङ्कते ॥ **न चैवमिति** । तर्हि मङ्गलेऽप्ययं प्रवृत्तिप्रयोजको हेतुहेतुमद्भावनिश्चयादिप्रकारः समः । इयांस्तु विशेषः । कारीर्यादौ प्रत्यक्षश्रुतिर्मङ्गले त्वनुमितेति स्वाभिप्रायमाविष्कुर्वन् प्रतिबन्दीमुपपादयति ॥ **सममिति** ।

**स०** — एवं ब्रह्मसूत्राणामप्रामाण्याद्व्याख्येयत्वमाक्षिप्य श्रुत्यादिसंवादेन च प्रामाण्यसाधनात् साधितम् । इदानीं ग्रन्थे निवेशनमेव मङ्गलानुष्ठानमिति मन्वानः प्रकारान्तरेणाक्षिपति ॥ **सूत्रकृतेति** । विघ्नाद्यसम्भवेऽपि शिष्टाचारस्य पालनार्थं शिष्यशिक्षार्थं च मङ्गलाचारः कर्तव्यः । अन्यथा मोक्षफले महाशास्त्रे शिष्टाचारमुल्लङ्घ्य भगवान् सूत्रकारः प्रवृत्त इत्यन्येऽप्येवमेव प्रवर्तेरन् । ततश्च विघ्नादिमत्त्वं प्रसज्येतेति भावः । कुतो मङ्गलाचाराभावे विघ्नादिप्रसक्तिरित्यत आह ॥ **मङ्गलेति** । अनेनान्वयव्यतिरेकावुक्तौ तयोर्व्यभिचारमाशङ्क्याह ॥ **न चेति** । तत्र हेतुः **तथा सतीति** । कारीर्याद्यनुष्ठानेऽपि कदाचिद्वृष्ट्यादिहेतुत्वं न स्यादतिप्रसङ्गादिति भावः ॥ **स्यादेतदेवमिति** । यत्रान्वयव्यतिरेकगम्यः साध्यसाधनभावः तत्र तयोर्व्यभिचारे स एवायुक्तः स्यात् । कारीर्यादिवृष्ट्यादीनां तु श्रुत्यैव साध्यसाधनभाव इत्याह ॥ **सममिति** ।

**प०** — तत्रेत्यादिमूलमवतारयति ॥ **तथाऽपीत्यादिना** । प्रामाण्ये सत्यपीत्यर्थः ॥ **मङ्गलाचरणेति** । मङ्गलाचारपूर्वमकृतत्वादित्यर्थः । हेतोरप्रयोजकत्वमाशङ्क्य समाप्तिप्रचयभङ्गो विपक्षे बाधक इति भावेन तयोर्मङ्गलहेतुकत्वमाह ॥ **मङ्गलाचरणपुरस्सराणीति** । निरन्तरायं निर्विघ्नं यथा भवति तथेत्यर्थः । प्रचीयन्तेऽविच्छिन्नपारम्पर्यरूपमम्प्रदायवन्ति भवन्तीत्यर्थः । मङ्गलस्य हेतुत्वासिद्धिमाशङ्क्य निराह ॥ **न चेति** । अकृतमङ्गलाचरणानां कृतमङ्गलाचरणानां चेति च बहुव्रीहिः । पुरुषाणामित्यर्थः ॥ **कार्येति** । भोजनपचनादिकार्यपरिसमाप्तिप्रचयदर्शनादित्यर्थः । परमुखेन समाधिं वाचयितुं प्रतिबन्दीमाह ॥ **तथा सतीति** । व्यतिरेकादिव्यभिचारेणाहेतुत्वे सतीत्यर्थः । कारीरी नाम 'शुष्यत्सस्यसंजीवनवृद्धिकामः कारीर्या यजेत' इत्युक्तेष्टिविशेषः । आदिपदेन च पुत्रेष्ट्यादिः । तत्र अपि उक्तव्यभिचारद्वयदर्शनादिति भावः । तत्र परेणैव समाधिं वाचयित्वा समं मङ्गलाचरणेऽपीत्याह ॥ **स्यादेतदित्यादिना** । एवं व्यभिचारादिना कारीर्यादेरहेतुत्वं स्यात् । यदि हेतुत्वं निष्प्रमाणकं स्यात् इति योजना । श्रुत्युक्तसाधनाभावेऽपि साध्यसत्त्वमनेककारणकत्वकल्पकमित्येतद्दृष्टान्तेन व्यनक्ति ॥ **दर्शेति** । दर्शो नामामावास्यायां क्रियमाणमाग्नेययागदधियागपयोयागरूपेष्टित्रयरूपकर्मविशेषः । पूर्णमासस्तु पौर्णमास्यां क्रियमाणमाग्नेयोपांश्वग्नीषोमीयाख्येष्टित्रयाख्यं कर्म । ताभ्यां दर्शत्रिकपूर्णमास

त्रिकाभ्यां यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति श्रुतिबलात्स्वर्गप्राप्तिः तथा 'परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् । स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इत्यष्टादशे गीतायामुक्तदिशा त्रैवर्णिकपरिचर्यातीर्थस्नानदानादिनाऽपि त्रैवर्णिकेतरस्य स्वर्गप्राप्तिर्यथा तथैव कारणान्तरेणाऽपि वृष्ट्यादिसम्भवादिति भावः । अन्वयव्यभिचारं निराह ॥ **भावेऽपीति** । साधनस्य भावेऽपि साध्यस्य अभाव इत्यर्थः ॥ **अस्येति** । कारीर्यादिश्रौतसाधनस्येत्यर्थः । औत्सर्गिकी स्वाभाविकी ।

**या०**— ननु मङ्गलाचरणस्य शास्त्रपरिसमाप्तिहेतुत्वेऽपि न तद्व्याख्यानकरणेऽपि हेतुता येन तदभावेन तदभावसाधनं सङ्गतं स्यात् इत्यप्रयोजकताऽत्रेत्याह ॥ **मङ्गलाचरणपुरस्सराणीति** । व्यतिरेकस्याप्युपलक्षणमेतत् । तथा चानेनान्वयव्यतिरेकौ प्रदर्शिताविति ज्ञातव्यम् । अयमभिसन्धिः । शास्त्रे ह्यनुष्ठितं मङ्गलाचरणं शास्त्रसमाप्तिमिव प्रचयरूपं तद्व्याख्यानमपि सम्पादयति । अन्यथा मङ्गला-चरणरहितशास्त्रव्याख्याने प्रवर्तमानस्य विघ्नोपसंसृष्टतया शास्त्रार्थाप्रतिपत्तिविप्रतिपत्त्यादिप्राप्त्या शिष्टा-चारपरिपालनहीनतयाऽनाप्तप्रणीतत्वशङ्कया च व्याख्यानस्य कर्तुमशक्यत्वात् । अत एवाहुः । 'मङ्गलाचरणपुरःसराणि शास्त्राणि वीर्यवन्ति भवन्ति' इति । तथा च व्याख्येये मङ्गलाचरणस्य तत्प्रचयरूपव्याख्यानं प्रत्यपि हेतुतया कारणाभावे च कार्यस्य शङ्कितुमशक्यत्वान्नाप्रयोजकतेति । अत्र समाप्यन्त इत्येतत्प्रसङ्गदृष्टान्ततया मङ्गलस्य समाप्तिं प्रत्यपि हेतुतामुपपादयितुमिति ज्ञातव्यम् । प्रचयशब्दस्य प्रसिद्धिमात्रपरत्वेऽपि शास्त्रप्रचयो व्याख्यानरूप एवेति न कोऽपि दोष इति ध्येयम् । केचित्तु सूत्रकृतो विघ्नाद्यसम्भवेऽपि शिष्टाचारपरिपालनार्थं शिष्यशिक्षार्थं वा मङ्गलाचरणं कर्तव्यम् । अन्यथा मोक्षफलकमहाशास्त्रे शिष्टाचारमुल्लङ्घ्य भगवान्प्रवृत्त इत्यन्येऽप्येवमेव प्रवर्तेरन् । ततश्च विघ्नादिमत्त्वं च प्रसज्येत । कुतो मङ्गलाचरणाभावे विघ्नादिप्रसक्तिरित्यत आह ॥ **मङ्गलेति** । अनेन अन्वयव्यतिरेकावुक्तावित्याहुः ॥ **स्वर्गप्राप्तेरिति** । शूद्रस्येति शेषः । परिसमाप्त्यादीत्यत्रादिपदेन प्रचयादिपरिग्रहः । एवमग्रेऽपि ॥

**श्री०**— सिद्धान्ती शङ्कते ॥ **न चाकृतेति** । पूर्वपक्षी प्रतिबन्दीं गृह्णाति ॥ **तथा सतीति** । तत्र सिद्धान्ती समाधानमाशङ्कते ॥ **स्यादेतदेवमिति** ॥ **श्रुतीति** । 'वृष्टिकामः कारीर्या यजेत' इत्यादिश्रुतीत्यर्थः ॥ **स्वर्गप्राप्तेरिति** । शूद्रस्येति शेषः । तस्य दर्शपूर्णमासानधिकारित्वात्तदभावेऽपि तस्य स्वर्गप्राप्तिसद्भावात्स्वर्गस्यानेककारणकत्वमेव कल्पनीयं न तयोर्व्यभिचारेणाकारणत्वमित्यर्थः । सर्वत्र कृष्यादौ । पूर्वपक्षी उत्तरमाह ॥ **सममेतदिति** ।

च०— 'वृद्धिरादैजि'तिसूत्रे वृद्धिशब्दस्येव प्रकृताद्यसूत्रे ताराथशब्दयोर्माङ्गलिकतया कृत्स्न-शास्त्राङ्गतामभिधित्समानस्तदौपयिकमङ्गलकर्तव्यतां तन्निवेशनीयतां च व्यवतिष्ठापयिषुराशङ्कते ॥ **तथा अपीति** । परिसमाप्यन्ते प्रचीयन्ते । कर्मलकारौ परिसमापनप्रचयक्रियाकर्मीभूतानि भवन्ति । **साम्प्रतं** युक्तम् ।

**सु०— मङ्गलाचरणस्याविघ्नपरिसमाप्त्यादिहेतुत्वस्यापि अविगीतशिष्टाचारानुमितश्रुति-सिद्धत्वात् । न तावत्प्रेक्षावत्प्रवृत्तिर्विफला सम्भाविनी । नापि प्रयोजनान्तरार्था । दृष्टपरि-त्यागाददृष्टकल्पनाप्रसङ्गात् । कार्यमारिप्सुः खलु तत्समाप्त्यादिकं कामयत इत्यनुभवसिद्धम् । न च फलान्तरानुसन्धाने प्रमाणमस्ति । न चैतेषामियं साध्यसाधनभावप्रतीतिर्भ्रान्तिः । तथा सत्यविगानानुपपत्तेः । न च प्रत्यक्षादेरत्रावकाश इति श्रुतिरेव शिष्टाचारमूलं कल्प्यते । न च विघ्नहेतुसद्भावानिश्चयादिदमननुष्ठेयम् । तत्सन्देहेऽप्यनुष्ठानस्य 'पाक्षिकोऽपि दोषः परिहर्तव्य' इति न्यायप्राप्तत्वात् । न च भगवतः सूत्रकारस्य विघ्ना एव न सन्तीति तत्परिहारार्थानुष्ठानं न दोषायेति युक्तम् । शिष्यार्थमपि कर्तव्यत्वात् । यतो मङ्गलाचरण-पुरःसराणि शास्त्राणि वीर्यवन्ति भवन्त्यायुष्मत्पुरुषकाणि च । अन्यथा भारतादावपि न कुर्यात् । एतेन सूत्रकृता कृतमेव मङ्गलाचरणम् । किं नाम ग्रन्थादौ न निवेशितमित्यपि निरस्तम् । ग्रन्थे निवेशनस्यापि शिष्टाचारप्राप्तत्वात् । शिष्यार्थत्वाच्च । अत एवान्यत्किमपि विघ्नविघाताद्यर्थमनुष्ठितं सूत्रकारेणेति निरस्तम् । अत्रोच्यते । कर्तव्यमेव कार्यारम्भे मङ्गला-चरणम् । कृतं च भगवता सूत्रकारेण । निवेशितं च ग्रन्थादौ । यदयमोङ्काराथशब्दावादितः कृतवान् । तयोर्माङ्गलिकत्वात् । यथोक्तम् । "ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इति ।**

वा०— ननु तर्हि मङ्गलं श्रुतिबोधिताविघ्नसमाप्त्याद्युपायताकमविगीतशिष्टाचारविषयत्वादिति विवक्षितानुमाने अप्रयोजकत्वमित्यतो अविगीतशिष्टाचारविषयत्वेऽपि मङ्गलस्य श्रुत्यबोधिताविघ्नसमाप्त्या-द्युपायताकत्वाभावे मङ्गलविषयकशिष्टप्रवृत्तेर्वैफल्यं वा फलान्तरानुसन्धानपूर्वकत्वं वाऽविघ्नसमाप्तिसाधनत्व-भ्रान्तिपूर्वकत्वं वा प्रमाणान्तरबोधिताविघ्नसमाप्त्याद्युपायताकत्वं वा वक्तव्यम् । प्रकारान्तराभावात् । तत्र च वैफल्ये शिष्टाचारत्वरूपहेतूच्छेदापत्त्या फलान्तरानुसन्धानपूर्वकत्वे च दृष्टादृष्टपरित्यागकल्पना-प्रसङ्गात् । भ्रान्तिपूर्वकत्वे चाविगीतशिष्टाचारत्वरूपहेतूच्छेदापत्त्या प्रत्यक्षस्य स्वतः साध्यसाधनभावा-गोचरत्वात् । अन्वयव्यतिरेकयोश्च व्यभिचारेण तत्सहकाराभावात्तत एवानुमानस्यापि प्रवृत्त्यनुपपत्तेः

अतिप्रसङ्गपराहतेश्चास्यार्थस्यालौकिकत्वाच्च पौरुषेयवाक्यस्यापि मूलान्तरसापेक्षत्वात् श्रुतिमूलकत्वाभावे प्रेक्षावत्प्रवृत्तेः निर्मूलत्वापत्तिरूपविपक्षबाधकसत्वात् श्रुतिबोधिताविघ्नसमाप्त्याद्युपायकताकत्वसिद्धिरिति न अप्रयोजकत्वमित्याशयेनाह ॥ **न तावदिति** । दृष्टपरित्यागमुपपादयति ॥ **कार्यमिति** । अदृष्टकल्पनां उपपादयति ॥ **न च फलान्तरेति** । ननु तर्हि समाप्तिविशेषणतया विघ्नाभावस्य मङ्गलप्रवृत्त्युद्देश्यतापत्त्या नाशार्थिप्रवृत्तौ नाश्यनिश्चयवतोऽधिकारस्य च प्रायश्चित्तादिस्थले क्लृप्ततया विघ्ननिश्चयाभावेन अधिकाराभावादधिकारिशून्यत्वान्न मङ्गलं श्रुतिबोधिताभीष्टोपायताकमित्युक्तानुमाने प्रतिपक्षं शङ्कते ॥ **न च विघ्नेति** । न्यायप्राप्तविघ्नसन्देहवच्छिष्टानुष्ठानबलेन विघ्नज्ञानवत एव तत्राधिकारकल्पनाद्धेतुः अप्रसिद्ध इत्याह ॥ **तत्सन्देहेऽपीति** । नन्वेवमप्यविघ्नसमाप्त्यादिहेतुत्वस्येत्ययुक्तम् । तावता विघ्नध्वंसस्य फलत्वोपपत्तावपि समाप्तेर्मङ्गलफलत्वानुपपत्तेः । यद्यपि श्रुतिनिश्चितसाध्यसाधनभावे मङ्गलाभावे अपि समाप्तिभावो मद्रीत्याऽनेककारणानामेकशक्तिमत्त्वकल्पको वा त्वद्रीत्या समाप्तिगतजातिविशेषनिमित्तो वेति न व्यतिरेकव्यभिचारः । अन्यथा गङ्गास्नानादिनाऽपि विघ्नध्वंसभावेन तस्यापि मङ्गलव्यभिचारः प्रसज्येत । मङ्गलभावेऽपि समाप्त्यभावस्तु सामग्रीवैकल्यस्य वा प्रतिबन्धकसद्भावस्य वा कल्पको भविष्यतीति नान्वयव्यभिचारोऽपीति समाप्तिं प्रत्युभयतो व्यभिचाराभावस्तुल्यस्तथाऽपि विघ्नध्वंसविशिष्टसमाप्तेः फलत्वे विशेषणीभूतविघ्नध्वंसफलत्वस्यावश्यकत्वाल्लाघवाच्च विघ्नसंशये तन्निश्चये वा शिष्टानां मङ्गलाचरणाद्विघ्नाभावस्यावश्यं कामनाविषयत्वेनोपस्थिततया पूर्वानुपस्थितापूर्वप्रतिबन्दीग्रहणासम्भवाच्च । समाप्यतामिति कामनास्थले विघ्नध्वंसस्य बुद्धिस्थत्वाच्च तस्यैव फलत्वसम्भवे समाप्तेरपि फलत्वे कल्पनागौरवं स्यादेव । किञ्च विघ्नध्वंसस्य समाप्तिपूर्ववृत्तित्वग्रहानन्तरं मङ्गलस्य तत्पूर्ववृत्तित्वग्रहानन्तरं मङ्गलस्य तत्पूर्ववृत्तित्वग्रहात्कुलालपितृवत्तस्यान्यथासिद्धत्वम् । अपि च प्रमत्तानुष्ठितसमाप्तौ मङ्गलं विनैव विघ्नसंसर्गाभावो हेतुः । तथा च तत्र क्लृप्तपूर्ववर्तिन एवान्यत्रापि समाप्तिसम्भवे तत्सहभूतमङ्गलस्यान्यथासिद्धिरेवेति न समाप्तेरपि फलत्वं युक्तमिति चेन्मैवम् । तथा सति कारीर्यादेरप्यवग्रहध्वंसविशिष्टवृष्टिफलकत्वे विशेषणीभूतावग्रहध्वंसफलस्यावश्यकत्वाल्लाघवाच्चावग्रहनिश्चय एव तदनुष्ठानेन अवग्रहध्वंसस्य कामनाविषयत्वेनावश्यमुपस्थितत्वात् । वृष्टिर्भूयादिति कामनायामप्यवग्रहध्वंसस्य बुद्धिस्थत्वादवग्रहध्वंसस्य वृष्टिपूर्ववृत्तित्वग्रहानन्तरं कारीर्यादेस्तत्पूर्ववृत्तित्वग्रहात्कुलालपितृवत्तस्यान्यथासिद्धत्वात् स्वत एव जायमानवृष्टाववग्रहसंसर्गाभावस्य हेतुतया तत्र क्लृप्तनियतपूर्ववर्तिन एवान्यत्रापि वृष्ट्युपपत्तौ तस्यान्यथासिद्धत्वाच्च कारीर्यादेरप्यवग्रहध्वंसविशिष्टवृष्टिफलकत्वं न स्यात् । न च कारीर्यादितोऽवग्रहनिवृत्तिमात्रं वृष्टिस्तु स्वकारणादेवेतीष्टापत्तिरिति वाच्यम् । सुखं मे भूयादित्यविशेषेण कामनाया अभावेन स्रक्चन्दनादिविशिष्टसुखं स्यादित्येव कामनाया दर्शनेनावश्यकत्वाल्लाघवादुपस्थितत्वात्स्रक्चन्द-

नादिकमेव यागादिसाध्यम् । स्वर्गपदबोध्यं सुखं स्वकारणात्स्रक्चन्दनादेरित्यापातेन यागस्वर्गयोः श्रुतः अपि साध्यसाधनभावः परित्यजेत । कार्यान्विते व्युत्पत्तिबललब्धसिद्धान्वितव्युत्पत्तेः पश्चादुपस्थिताया अपि लाघवेन गुरुभूतकार्यान्वितव्युत्पत्तेस्त्यागवत्पश्चादुपस्थितापूर्वस्यापि लाघवबलेन यागादिफलत्वं कल्प्येतेत्याद्यनेकातिप्रसङ्गापातेन श्रुतसाध्यसाधनभावपरित्यागस्यानिष्टत्वात् । तदिदमुक्तम् ॥ **कारीर्यादेः अपि वृष्ट्यादिहेतुत्वाभावापत्तेरिति** । यदि च कारीर्यादेर्वृष्ट्यादिकं प्रति साधनत्वस्य श्रुतिसिद्धत्वात् श्रुतिसिद्धे च साध्यसाधनभावे न लाघवगौरवचिन्ता । श्रुत्या चावग्रहध्वंसविशिष्टवृष्टिं प्रति साधनत्व-ग्रहणैकपूर्ववृत्तित्वग्रहानन्तरमन्यपूर्ववृत्तित्वग्रहाभावान्नान्यथासिद्धिश्च । श्रुतिसिद्धत्वादेव च नान्यत्र क्लृप्तपूर्ववर्तिन एवेत्यादेरपि प्रसर इति कारीर्यादेर्वृष्ट्यादिहेतुत्वमुपपन्नमिति मन्यसे तर्हि मङ्गलेप्येतत्सर्वं सममिति युक्तं मङ्गलस्यापि समाप्तिहेतुत्वमिति । तदेतदाह ॥ **सममेतत्सकलं प्रकृतेऽपीति** । ननु तथाऽपि मङ्गलाचरणाभावेऽपि सूत्रकारस्य स्वत एव विघ्नाभावसिद्धेः फलविघाताभावात्तद्राहित्यं न व्याकर्तव्यत्वाभावे प्रयोजकमित्यप्रयोजकत्वं शङ्कते ॥ **न चेति** । भगवत्त्वान्निरन्तरायसमाप्तिरूपफल-विघाताभावेऽपि मङ्गलाभावे प्रचयरूपफलविघातः स्यादेवेत्याह ॥ **शिष्येति** । तदेवोपपादयति ॥ **यत इति** । ननु न प्रचयस्तस्य फलं तथात्वे वा सूत्रकारस्य भगवत्त्वादेव तदिच्छामात्रेण मङ्गलाभावे अपि प्रचयसिद्धिरित्यत आह ॥ **अन्यथेति** । अत्र मङ्गलाचरणरहितत्वादिति मङ्गलाचरणस्याकृतत्वं हेतुतयाऽभिप्रेतमनिवेशितत्वं वा । आद्येऽसिद्धिः । द्वितीये त्वप्रयोजकतेत्याशङ्कायामकृतत्वं तदुप-पादकतयाऽनिवेशितत्वं चाभिप्रेतम् । न चासिद्धिः । अनिवेशनस्य तत्साधकत्वात् । न चाप्रयोजकता पूर्वन्यायेन तत्परिहारादित्याशयेनाह ॥ **एतेनेति** । प्रकारान्तरेणाप्रयोजकताशङ्कामतिदेशेन दूषयति ॥ **अत एवेति** । पूर्ववाद्युक्तं मङ्गलाचरणतन्निवेशयोः कर्तव्यतोपपादनप्रकारं सर्वमङ्गीकृत्याकृतत्वानिवेशित-त्वरूपपराभिप्रेतहेतोरसिद्धिमाह ॥ **कर्तव्यमेवेत्यादिना** ॥ **माङ्गलिकत्वादिति** । मङ्गलं प्रयोजन-मनयोरिति प्रयोजनमिति ठक् । ( प्रयोजनम् । तदस्येत्येव । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । प्रयोजनं फलं कारणं च ) ।

**स०**— मातुलदुहितृपरिणयनादेः शिष्टापरिगृहीतत्व्यावृत्त्यर्थमविगीतेत्युक्तम् । 'आचारश्चैव साधूनाम्' इति शिष्टाचाराणां धर्मस्मरणादप्रमाणभूतानां तदयोगात्पौरुषेयत्वेन स्वतःप्रामाण्यरहितत्वेन प्रामाण्यार्थं वेदानुमापकत्वमिति भावः । अन्वयव्यतिरेकौ च कारीर्याद्यन्वयव्यतिरेकसमाविति साध्य-साधनभावं परिशेषादुपपादयति ॥ **न तावदित्यादिना** । यद्वा मङ्गलाचाररूपप्रवृत्तिः प्रारिप्सितपरि-समाप्त्यादिफलिका तदितराफलकत्वे सति सफलत्वादित्यभिप्रेतानुमाने विशेष्यासिद्धिं तावत्परिहरति ॥ **न तावदिति** । अभ्रान्तप्रवृत्तिर्नाभीष्टाफलिकेत्यर्थः । विशेषणासिद्धिं परिहरति ॥ **नाऽपीति** । अत्र च

तत्त्वसङ्ख्यानटीकोक्तो नियमेन ग्रन्थारम्भेऽनुष्ठानादिति हेतुरध्याहार्यः । तस्य च प्रारिप्सितपरिसमाप्त्यादिव्यतिरिक्तोद्देशेनाननुष्ठानादित्यर्थः । तेन यथाश्रुते आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासौ आरिप्समान इति श्रुतिबोधितायां दर्शारम्भे नियमेनानुष्ठीयमानायामारम्भणीयेष्टौ प्रारिप्सितसमाप्त्यादिव्यतिरिक्तस्वर्गफलिकायां व्यभिचारः प्रारिप्सितसमाप्त्युद्देशेनानुष्ठानस्य विवक्षायां तत एव समाप्तिफलकत्वसिद्धेः परिशेषवैयर्थ्यमिति निरस्तम् । हेतोरप्रयोजकत्वपरिहाराय विपक्षे बाधकमाह ॥ **दृष्टपरित्यागेति** । अन्यथेति शेषः । व्याख्येयत्वसिद्ध्यर्थं मङ्गलाचरणभावोपपादनार्थं प्रतिजानीते ॥ **अत्रोच्यत इत्यादिना** ॥ **माङ्गलिकत्वादिति** । माङ्गलिकत्वादिति मङ्गलं प्रयोजनमनयोरित्यर्थे ठक् । तयोर्भावस्तत्वं तस्मादित्यर्थः ।

**प०**— ननु सममित्ययुक्तम् । 'समाप्तिकामो मङ्गलमाचरेत' इति स्पष्टश्रुतेरभावादित्यत आह ॥ **मङ्गलेति** । कर्मादौ शिष्टैः क्रियमाणो मङ्गलाचारः तत्कर्मसमाप्त्यादिहेतुत्वप्रमापूर्वकः तत्कामनयैव शिष्टैरनुष्ठीयमानत्वात् तृप्तिकामनया अनुष्ठीयमानभोजनवत् । तद्धेतुत्वप्रमा च श्रौती भवितुमर्हति प्रत्यक्षानुमानाजन्यत्वे सति जन्यप्रमात्वात् यदेवं तदेवं यथा सम्मतमित्येवंरूपेणानुमितश्रुतिसिद्धत्वात् इत्यर्थः । आद्यहेतुप्रयोगे फलकामनारूपविशेषणासिद्धिं निराह ॥ **न तावदिति** । तत्कामनयेत्यस्य असिद्धिं निराह ॥ **नाऽपीति** । दृष्टत्यागादृष्टकल्पने क्रमेण व्यनक्ति ॥ **कार्यमिति** । आरिप्सुः आरब्धुकामः । हेतोरप्रयोजकत्वं निराह ॥ **न चैतेषामिति** । द्वितीयप्रयोगे विशेषणासिद्धिं निराह ॥ **न चेति** । नन्वस्तु मङ्गलाचारस्याविघ्नपरिसमाप्त्यादिहेतुत्वम् । तथापि नास्य कर्तव्यत्वम् । विघ्नसन्देहेन वा सूत्रकृतो निर्विघ्नत्वादेव वाऽननुष्ठानस्य । अनुष्ठानेऽपि वा फलाभावेन ग्रन्थे निवेशनाभावस्य वा सम्भवेन मङ्गलाचाररहितत्वादित्यस्यान्यथोपपत्तेरसिद्धत्वादित्यतः क्रमेण त्रयमपि निराह ॥ **न चेत्यादिना** ॥ **भारतादाविति** । 'नारायणं सुरगुरुं जगदेकनाथं भक्तप्रियं सकललोकनमस्कृतं च । त्रैगुण्यवर्जितमजं विभुमाद्यमीशं वन्दे भवघ्नममरासुरसिद्धवन्द्यम्' इत्यादि भारते । 'जन्माद्यस्य यतोऽन्वयात्' इत्यादि भागवतादौ च न कुर्यादित्यर्थः ॥ **एतेनेति** । शिष्यार्थमपि ग्रन्थे निवेशनस्य कर्तव्यत्वकथनेनेत्यर्थः ॥ **अत एवेति** । आवश्यकस्य ग्रन्थे निवेशनस्याभावादेवेत्यर्थः ॥ **अन्यदिति** । ध्यानादिकमित्यर्थः । माङ्गलिकत्वान्मङ्गलप्रयोजनकत्वात् ॥ 'तत्प्रयोजने ठगि'ति ठक्प्रत्ययः ।

**या०**— **अविगीतशिष्टाचारेति** । श्रुत्यनुमापनं च मङ्गलं श्रुतिप्रमापिताभीष्टपरिसमाप्त्यादिहेतुताकं तदुद्देश्यकाविगीतशिष्टाचारविषयत्वात् यद्यदुद्देश्यकाविगीतशिष्टाचारविषयस्तत्तद्धेतुतया श्रुतिप्रमापितं यथा स्वर्गोद्देश्यकं दर्शादीति सामान्यव्याप्तिमूलकं द्रष्टव्यम् । ननु वेदनिषिद्धाचारस्याशिष्टा-

चारत्वेनागम्यागमनादौ शिष्टपदेनैव व्यभिचारवारणेऽविगीतपदं व्यर्थमिति चेन्न । वेदप्रामाण्यानभ्युपगमासम्भाविताचारस्यैवात्र शिष्टाचारपदेन विवक्षितत्वात् तस्य च रात्रिश्राद्धादौ व्यभिचारवारणाय अविगीतपदम् । अविगीताचारत्वमात्रस्य च भोजनादौ व्यभिचारपरिहाराय शिष्टपदम् । भोजनादेश्च वेदप्रामाण्यानभ्युपगन्तरि बौद्धेऽपि सत्वेनोक्तरूपशिष्टाचारपरत्वाभावान्न व्यभिचार इति । ननूक्तहेतोः साध्यं विनाऽपि फलाभावेन वा समाप्तीतरफलकत्वेन वा तत्फलकत्वप्रतीतेर्भ्रान्तित्वेन वा प्रत्यक्षादिमानान्तरजन्यत्वेन वोपपत्तेरप्रयोजकतेत्याशङ्कायामुक्तहेतूच्छित्तिरेवात्र बाधिकेत्यभिप्रेत्याह ॥ **न तावत् प्रेक्षावत्प्रवृत्तिरित्यादिना** । प्रारिप्सितपरिसमाप्त्यादिकामनया मङ्गले शिष्टानां या प्रवृत्तिः सेत्यर्थः । दृष्टपरित्यागमुपपादयति ॥ **कार्यमारिप्सुरिति** । अदृष्टकल्पनामुपपादयति ॥ **न च फलान्तरेति** ॥ **न च प्रत्यक्षादेरिति** । साध्यसाधनभावस्यातीन्द्रियत्वान्न प्रत्यक्षस्यान्धपरम्पराशङ्कावरुद्धत्वान्नानुमानस्य अत्रावकाश इति भावः । ननु नाशार्थिप्रवृत्तौ नाश्यनिश्चयवानधिकारी दृष्टः । यथा पापनिश्चयवान् प्रायश्चित्ते । अत्र च नाश्यानां विघ्नहेतूनां प्रथमतोऽनिश्चयादनधिकारिकं मङ्गलं नानुष्ठेयमिति सत्प्रतिपक्षमाशङ्क्याह ॥ **न च विघ्नहेतुसद्भावेति** ॥ **तत्सन्देहेऽपीति** । तथा च विघ्नज्ञानवानेव अत्र अधिकारीति प्रतिपक्षानुमाने स्वरूपासिद्धिरिति भावः ॥ **शिष्यार्थमपीति** । अध्येतॄणामायुरादिप्रतिबन्धकविघ्नघातार्थमित्यर्थः । अत एवाह ॥ **आयुष्मत्पुरुषकाणि चेति** ॥ **शिष्यार्थत्वाच्चेति** । शिष्यशिक्षार्थत्वाच्चेत्यर्थः ॥ **अत एवेति** । ग्रन्थादौ निवेशनस्यावश्यकत्वादेवेत्यर्थः ॥ **अन्यत्किमपि इति** । गङ्गास्नानादिकमित्यर्थः ॥ **माङ्गलिकत्वादिति** । मङ्गलं प्रयोजनमनयोरित्यर्थे ठक्प्रत्ययः । तथा च श्रुत्या मङ्गलप्रयोजनकत्वादित्यर्थः ॥

**श्री०**— तदुपपादयति ॥ **मङ्गलेति** । श्रुत्यनुमानप्रकारं दर्शयति ॥ **न तावदिति** । प्रयोजनान्तरं स्वर्गादि । दृष्टं प्रयोजनमुपपादयति ॥ **कार्यमिति** ॥ **अविगानेति** । विगानं विप्रतिपत्तिः । अविगानं सर्वसम्मतिरित्यर्थः ॥ **अनिश्चयादिति** । विघ्ननिश्चयवत एवाधिकारित्वेनात्मनो विघ्नहेतुसद्भावस्यानिश्चिततया विघ्ननिश्चयाभावेन निरधिकारिकत्वप्राप्त्या मङ्गलस्याननुष्ठेयत्वमित्यर्थः । विघ्नज्ञानवानेवाधिकारी । ज्ञानं निश्चयः शङ्का चेत्याशयेनाह ॥ **तत्सन्देहेऽपीति** । विघ्नहेतुसन्देहेन विघ्नसन्देहेऽपीत्यर्थः । ' श्रेयांसि बहुविघ्नानि भवन्ति भवतामपि ' इति वचनादिति भावः । तथा च मङ्गलं नानुष्ठेयं निरधिकारिकत्वादित्यत्र स्वरूपासिद्धिरिति हृदयम् ॥

**च०**— **शिष्टाचारानुमितश्रुतिसिद्धत्वादिति** । मङ्गलं श्रुतिप्रत्यापितसमीहितसमाप्त्यादिनिरूपितसाधनताविशेषितम् । तदुद्देश्यकाविगीतशिष्टप्रवृत्तिगोचरत्वात् । यत्तादृशप्रवृत्तिगोचरैतत्तत्प्रत्या-

पितसमीहितसाधनताकमिति दर्शनिदर्शनकसामान्यव्याप्तिमूलकश्रुत्यनुमापकानुमानभङ्गी द्रष्टव्या । समाधत्ते ॥ अत्रोच्यत इति । माङ्गलिकत्वात् श्रुत्या मङ्गलफलकत्वात् ।

अनु० — तत्र ताराथमूलत्वं सर्वशास्त्रस्य चेष्यते ।
सर्वत्रानुगतत्वेन पृथगोङ्क्रियतेऽखिलैः ॥

सु० — नन्वेतदनुपपन्नम् । तथा सत्येतयोर्विघ्नविघातादिहेतुत्वेन समस्तशास्त्राङ्गतया प्रथमसूत्रावयवत्वाभावप्रसङ्गात् । तथात्वे च प्रथमसूत्रं न्यूनमापद्येत । अधिकार्यादिप्रतिपादकस्य अन्यस्याभावात् । तत्प्रतिपादनस्य चावश्यकत्वात् । अन्यथाऽधिकारिविषयवैधुर्येण शास्त्रस्य अनारम्भणीयत्वशङ्का न निराकृता स्यादित्यनर्थकं सूत्रमापद्येतेत्यत आह ॥ तत्रेति । तरन्ति अनेन अनिष्टनिचयमित्योङ्कारस्तारः । तारश्चाथश्च तयोर्मूलत्वं क्रमेणादित्वम् । आदौ प्रयुक्तौ ओङ्काराथशब्दाविति यावत् । तत्र प्रथमसूत्रेऽवयवतया सर्वशास्त्रस्य चाङ्गतया चेष्यतेऽङ्गीक्रियते सूत्रकृतेति शेषः । एतदुक्तं भवति । प्रथमसूत्रेऽधिकार्यादिप्रतिपादनायोपात्तावोङ्काराथशब्दौ शङ्खवीणावेणुध्वनिवत् श्रुतितो माङ्गलिकत्वात्कृत्स्नशास्त्रस्यानन्तरायपरिसमाप्त्यादिकं कुर्वाते । अन्यार्थानीयमानपूर्णकलशदर्शनवदिति । ताराथावित्येतावता पूर्णे यन्मूलत्वमित्याह तत्सूत्र-कारानङ्गीकारलिङ्गसूचनम् । यत्पर्यायान्तरं विहायानयोरेव क्रमान्तरं विहायादावेवोपादानं तेन जानीमो ज्ञापकतयाऽऽदिसूत्रस्य कारकतया समस्तशास्त्रस्य चोपयोगित्वेनैतौ सूत्रकृता विवक्षिताविति । न चैतद्यादृच्छिकम् । सकलसूत्रकारैरेवमेव प्रयुक्तत्वात् । न चानेकेषां प्रेक्षावतां यदृच्छयैकविधा प्रवृत्तिरुपलब्धेति । अनेनाथशब्दो मङ्गलार्थ इत्यादिभाष्यं विवृतं भवति ।

वा० — एवं तत्र ताराथेति वाक्ये सर्वशास्त्रस्येत्यंशप्रतिपादनीयसर्वशास्त्राङ्गत्वप्रयोजकं ताराथयोः माङ्गलिकत्वेन निवेशनमुपपाद्य तयोः सर्वशास्त्राङ्गत्वेऽनुपपत्तिस्तत्रैव वाक्ये तत्र चेत्यंशेनैव परिह्रियत इति अभिप्रायेण तामनुपपत्तिमाशङ्कते ॥ नन्विति । अधिकार्यादीत्यादिशब्देन विषयग्रहणम् ॥ अन्यस्य अभावादिति । यद्यप्योङ्कारस्य समग्रशास्त्राङ्गत्वेऽपि ब्रह्मशब्दस्य विषयप्रतिपादकस्य सत्त्वान्नान्यस्याभावः तथाऽपि न केवलं जिज्ञास्ये 'तद्विजिज्ञासस्व तद्ब्रह्मे'त्यादौ ब्रह्मपदश्रवणात्तस्य च जीवाद्भिन्नत्वेन जिज्ञास्यता किन्तु 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यादौ जीवेष्वसम्भावितगुणपूर्तिवाचकोङ्कारादिश्रवणादपीति युक्त्य-न्तरसूचकत्वेन ब्रह्मशब्दसमकक्षतयोङ्कारस्य विषयोपपादकतया कथयिष्यमाणत्वात् प्रत्यक्षादेरसम्भवाद्वेदस्य चेश्वरविषयत्वाभावादनुग्राह्यप्रमाणाभाव इत्याशङ्कापरिहारकविषयशास्त्रसम्बन्धोपपादनस्य ओङ्कारमात्र-

साध्यताया वक्ष्यमाणत्वाच्च तथोक्तमिति ध्येयम् । अथशब्दप्रायपठिततारशब्दस्य तारशब्दार्थकत्वे तस्य च सूत्रादावप्यभाव इत्यतो योग्यताबलात्तारशब्देन योगेन तत्पर्यायोङ्कारग्रहणमित्यभिप्रेत्य प्रकृतोपयोगितया तद्योगं दर्शयति ॥ **तरन्तीति** । (तॄ प्लवनतरणयोरित्यस्मा'दकर्तरि च कारके संज्ञायामि'ति करणे घञि 'अचो ञ्णिती'ति ऋकारस्याकाररूपवृद्धौ तस्य 'उरण्रपर' इति रपरत्वे च तारशब्दो निष्पन्नः) । उभयोः आदित्वस्यैकत्रासम्भवादाह ॥ **क्रमेणेति** । यद्वा । मूलत्वं नात्रादित्वमात्रमपि तु क्रमेणादित्वं विवक्षितं विवक्षाप्रयोजनं चोत्तरत्र प्रदर्शयिष्याम इत्यभिप्रेत्याह ॥ **क्रमेणेति** । अत्रादित्वमादौ प्रयुक्तत्वम् । तस्य चावयवत्वाङ्गत्वाभ्यां प्रथमसूत्रशास्त्राभ्यां नान्वयः सम्भवतीत्यतस्तात्पर्यमाह ॥ **आदाविति** । ताराथयोः सूत्रशास्त्राभ्यामेकप्रकारेण सम्बन्धभ्रान्तिं निवारयितुं विवक्षितशेषाध्याहारेण वाक्यार्थमाह ॥ **तत्रेति** । सूत्रकृद्विवक्षां दर्शयितुं तथैव शेषं पूरयति ॥ **सूत्रेति** । ननु यदि विघ्नविघातादिहेतुत्वेन शास्त्राङ्गत्वं तर्ह्यस्य तदुपयुक्तार्थप्रतिपादकत्वेनाधिकार्यादिप्रतिपादकत्वाभावान्न प्रथमसूत्रावयवता । यदि च किञ्चिदर्थप्रतिपादकत्वेन नास्य शास्त्राङ्गता किन्तु श्रवणमात्रेण विघ्नविघातादिसम्पादकतया तथा चाधिकार्यादिप्रतिपादकत्वाद्युक्ताऽवयवतेति मतं तर्हि श्रवणमात्रस्य तद्धेतुताया अदर्शनादन्यार्थप्रयुक्तस्य प्रयोजनान्तरार्थताया अदर्शनाच्च शास्त्राङ्गत्वं परित्यक्तं स्यादित्यतोऽभिप्रायमाह ॥ **एतदुक्तं भवतीति** । यद्वा । ननु कथमनेनोक्तशङ्कापरिहार इत्यतो विघ्नविघातादिहेतुत्वोक्त्या न प्रथमसूत्रावयवत्वत्यागोऽपि त्वधिकार्यादिप्रतिपादकत्वेन प्रथमसूत्रोपात्ताभ्यामेव ताभ्यां प्रयोजनान्तरस्यापि सिद्धिरित्येवाभिप्रेतमित्येतत् सहेतुकं दृष्टान्तपूर्वं विवृणोति ॥ **एतदुक्तं भवतीति** । अधिकार्यादिप्रतिपादकत्वेनानयोः सूत्रावयवत्वे सिद्धेऽप्येतत्पर्यायाभ्यामनयोरपि क्रमान्तरेणोपादानेन ब्रह्मशब्दवन्मध्ये ग्रहणेनाप्यधिकार्यादिलाभादनयोरेव अनेन क्रमेणैवादावेवोपादानं समस्तशास्त्राङ्गत्वस्य ज्ञापकमित्याह ॥ **यदिति** । ज्ञापकतयाऽऽदिसूत्रस्येति दृष्टान्ततयोपात्तम् । यद्वा स्पष्टज्ञापकतयाऽऽदिसूत्राङ्गत्वस्य पूर्ववादिनाऽप्यङ्गीकार्यत्वात्तत्र सूत्रकाराङ्गीकार-लिङ्गसूचनस्याकर्तव्यत्वादिति भावः । मङ्गलवाचकमङ्गलपदं विहायेत्यप्यत्र द्रष्टव्यम् । यत्पर्यायान्तरं विहायेत्येतदेव वा स्पष्टमङ्गलवाचकशब्दं विहाय तत्प्रयोजकयोरनयोरुपादानमिति व्याख्येयम् ॥ अत्र च पक्षद्वये ज्ञापकतयाऽऽदिसूत्रस्येत्युपपादनीयतयैवोपात्तमिति द्रष्टव्यम् । कयोश्चिच्छब्दयोः केनचित्क्रमेण क्वचिदुपादानं कर्तव्यमिति क्रियते । तथा चान्यथासिद्धिरित्याशङ्कते ॥ **न चेति** ॥ **अनेनेति** । मङ्गलार्थत्वव्याख्यानेन मङ्गलार्थत्वे प्रथमसूत्रावयवत्वानुपपत्तिपरिहारेण चेत्यर्थः । ( मङ्गलानन्तरारम्भ-प्रश्नकार्त्स्न्येष्वथोऽथेत्यमरः ) ।

स०— **अधिकारिविषयवैधुर्येति** । 'तद्विजिज्ञासस्व तद्ब्रह्म' इति जिज्ञासाविधायकवाक्ये जिज्ञास्यजीवाभिन्नत्वेनाविषयत्वप्रयुक्तानारम्भणीयत्वशङ्कायाः जिज्ञास्यस्यानन्तगुणवत्त्वेन जीवभेदप्रति-

पादकेन ब्रह्मशब्देन परिहारेऽपि तस्यैव विषयवाचकत्वाभावात् 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'आत्मानमेव लोकमुपासीत' इत्यादि जिज्ञासाविधायकवाक्येषु जिज्ञास्यस्य जीवाभिन्नत्वेनाविषयत्वशङ्कानिवारकस्य अन्यस्याभावेन ओँशब्देनैव गुणपूर्णत्वाभिधायिना परिहार्यत्वात् ओँशब्दस्य मङ्गलार्थत्वे तदनुपपत्त्याऽनारम्भणीयत्वं स्यादेवेति भावः ॥ **अथश्चेति** । आनन्तर्यरूपार्थविवक्षायामेवाथेत्यस्याव्ययत्वेनाथशब्दार्थत्वेन आनन्तर्यस्यानभिधानादथश्चेत्युपपन्नमिति भावः ॥ **प्रथमसूत्र इति** । मीमांसानुग्राह्यप्रमाणप्रतिपादनद्वारा ओँकारस्य विषयदार्ढ्यार्थत्वादधिकार्यादिप्रतिपादनायोपात्तावोङ्काराथशब्दावित्युक्तम् ॥ **यत्पर्यायान्तरमिति** । यद्योङ्काराथशब्दयोर्मङ्गलमेव प्रयोजनं स्यात्तर्हि विशिष्टार्थमङ्गलशब्दमेव प्रयुञ्जीत यदि च आनन्तर्यमेवार्थस्तदा तथैव शब्दान्तरं प्रयुञ्जीत । असाधारणशब्दप्रयोगेणेदं ज्ञायते कारकत्वेन शास्त्रोपयोगित्वं ज्ञापकतया प्रथमसूत्रावयवत्वमिति । आदावेवोपादानमपि कारकत्वेन शास्त्रोपयोगित्वज्ञापने हेतुः । क्रमाव्यत्यासेन चेदमवगम्यते अथशब्दस्य सूत्रासन्निकर्षात्तत्रस्थस्यैव ज्ञापकत्वेन शास्त्रोपयोगित्वं ओँकारस्य प्रतिसूत्रमुच्चरितस्य कारकत्वेनेति । क्रमाव्यत्यासेनेत्यस्य कृत्यमाह ॥ **आदावुपादानमिति** । न च विवक्षितावितीति योज्यम् ।

**प०**— अधिकार्यादिप्रतिपादकस्यान्यस्येत्यत्रादिपदेन विचारशास्त्रानुग्राह्यविषयबोधकवेदरूपप्रमाणप्रतिपादकस्यान्यस्याभावादिति ग्राह्यम् । ओँकारस्य तदर्पकत्वेनाग्रे व्याख्यानात्तस्य विषयार्पकपदत्वे अपीह न तदर्थग्रहणम् । तथात्वे ब्रह्मपदस्यापि विषयार्पकस्यात्र भावेनान्यस्याभावादित्ययोगात् । अधिकारिविषयेत्युत्तरवाक्यस्थविषयपदेन विषयसमर्पकवेदरूपप्रमाणं ग्राह्यम् । ओँकारप्रयोगलब्धस्य व्याहृतिगायत्रीपुरुषसूक्तद्वारा तद्व्याख्यानभूतसकलवेदरूपप्रमाणस्याभावे ब्रह्मपदमात्रस्याविचार्यत्वेनानुग्राह्यप्रमाणाभावाभिप्रायेण विषयवैधुर्येणेत्येवोक्तम् । ब्रह्मपदेन विषयलाभेऽप्युपर्योङ्कारस्य विषयार्पकत्वेनापि व्याख्यानं तु चन्द्रिकोक्तदिशा अत्रापि 'नारायणपदोदित' इत्यत्र वक्ष्यमाणदिशा च युक्त्यन्तरसूचनायेति ध्येयम् ॥ **तरन्त्यनेनेति** । तॄ प्लवनतरणयोरिति धातोः 'अकर्तरि च कारके संज्ञायाम्' इति करणे घञ्प्रत्यये 'अचो ञ्णिति' इति वृद्धौ रूपम् । यद्यपि तॄ प्लवनतरणयोरित्यस्य धातोर्दीर्घॠवर्णान्तत्वेन 'ॠदोरबि'ति सूत्रेणाप्प्रत्यये तर इत्येव भाव्यम् । अप्प्रत्ययस्य घञपवादत्वात् । तथापि तृ प्लवनतरणयोरिति ह्रस्वऋवर्णान्ताद्धात्वन्तराद्घञ्प्रत्यये तार इति रूपं ध्येयम् । अन्यथा साम्पराये तर्तव्याभावादिति प्रयोगोऽसाधुः स्यादिति भावः । यद्वा तॄ प्लवनतरणयोरित्यस्यैव 'ॠदोरबिति' अप्प्रत्यये तर इति रूपम् । तस्य 'प्रज्ञादिभ्यश्चे'ति स्वार्थिकेऽण्प्रत्यये तार इति सिद्ध्यति । अथवा तॄ धातोर्ण्यन्तस्य 'एरजि'त्यच्प्रत्यये सति तार इति रूपम् । तारयति पुरुषाननिष्टनिचयमिति व्युत्पत्तिदर्शने कार्ये स्पष्टार्थत्वाय करणत्वव्यक्तीकरणेन तरन्त्यनेनेत्यर्थकथनमात्रमेतदिति ज्ञेयम् । अत एव 'आसमन्तात्

गमयति धर्माधर्मौ परं पदम्' इत्युपासनापादीयानुव्याख्यानसुधादौ करणे कर्तृत्वोपचारेण गमयतीत्युक्तिः । गमेः करणार्थ एवाप्रत्ययविधानादित्यादिना तत्र तत्र व्युत्पत्तिप्रकारापेक्षया अन्यथाप्यर्थकथनं दृश्यते । तथा चाथर्वशिरसि श्रुतिः 'अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मजरामरणसंसारमहा-भयात्तारयति' इत्यादि । तत्रेत्यनुवादः प्रथमसूत्रे इति व्याख्या ॥ **अवयवतयेति** । अन्वयप्रतियोगि-समर्पकतयेत्यर्थः । ब्रह्मपदार्थस्य विशेषणीभूतं यद्गुणपूर्णत्वरूपमोतत्वं तदर्थकत्वात्तारस्येति भावः । यद्वा जिज्ञासायां कर्मकारकार्पणतयेति भावः ॥ **अङ्गतयेति** । अविघ्नपरिसमाप्तिप्रचयकारकत्वेनेत्यर्थः । तावता नन्वेतदनुपपन्नमिति कृतचोद्यस्य किमुत्तरमित्यत आह ॥ **एतदुक्तमिति** ॥ **ज्ञापकतयेति** । अधिकार्यादिबोधकतयाऽऽद्यसूत्रस्योपयोगित्वेन निरन्तरायपरिसमाप्त्यादिजनकतया शास्त्रस्योपयोगित्वेन इत्यर्थः । अन्यथासिद्धिं निराह ॥ **न चैतदिति** । ताराथमूलत्वमित्यर्थः ॥ **सकलेति** । 'अथातो धर्मजिज्ञासा' । 'अथातो दैवीमीमांसा' । 'अथातो दर्शपूर्णमासौ व्याख्यास्यामः' इत्यादि कर्मतन्त्र-देवतन्त्र कल्पसूत्रकारादिभिरित्यर्थः । न च तत्रोङ्कारो न श्रूयते इति वाच्यम् । 'स्रवत्यनोंकृतं ब्रह्म' इति वक्ष्यमाणदिशा तत्रापि तस्यावर्जनीयतया प्राप्तत्वात् । तद्भाष्यकारादिभिस्तस्याव्याख्यानं त्वनुप-योगादज्ञानाद्वा । अथ शब्दमूलत्वस्य सर्वत्र प्रत्यक्षत्वेन तदभिप्रायाद्वा सकलेत्युक्तिः । एतेन सर्वशास्त्रस्य इत्येतत् सर्वेषां शास्त्रं सर्वशास्त्रं तस्येति प्रकारान्तरेण व्याख्यानं ध्येयम् ॥ **अनेनेति** । तत्र तारेत्यर्थेन इत्यर्थः ॥

**या०— एवमग्रेऽपीति ॥ अधिकार्यादिप्रतिपादकस्येति** । यद्यपि ब्रह्मशब्दो विषयप्रति-पादकोऽन्योऽस्ति तथाऽपि ॐकारस्य मीमांसानुग्राह्यप्रमाणप्रतिपादनाय वेदस्येश्वरविषयकत्वसमर्थनार्थत्वस्य वक्ष्यमाणत्वेन तदर्थकस्यान्यस्याभावादित्यभिप्रायात् ॥ **विषयवैधुर्येणेति** । उक्तरीत्या वेदस्येश्वरविषय-कत्वसमर्थकवैधुर्येणेत्यर्थः । अनारम्भणीयत्वशङ्केत्युपलक्षणम् । मीमांसानुग्राह्यप्रमाणाभावशङ्का चेत्यपि द्रष्टव्यम् ॥ **यन्मूलत्वमित्याहेति** । क्रमेणादित्वमित्याहेत्यर्थः । कथमेवमुक्तेः सूत्रकाराङ्गीकारलिङ्ग-सूचकत्वमित्यतस्तद्दर्शयति ॥ **यत्पर्यायान्तरमिति** । मङ्गलवाचिशब्दान्तरमित्यर्थः । क्रमान्तरमन्ते निवेशनम् । अयं भावः । यदि कारकतया समग्रशास्त्राङ्गत्वमेवैतयोः सूत्रकारस्य विवक्षितं स्यात्तदा स्पष्टं मङ्गलवाचि मङ्गलमित्यादि शब्दान्तरमेव वक्तव्यं किमनयोर्मङ्गलप्रयोजनकयोर्वचनेन पर्यायान्तरं विहाय चानयोरेव यदोपादानं करोति तेन जानीमो मङ्गलप्रयोजनादन्यदप्यनयोरस्ति प्रयोजनं तज्ज्ञापक-तया आदिसूत्राङ्गत्वमेवेति विवक्षितं सूत्रकारस्येति । एवं यदि ज्ञापकतया आदिसूत्राङ्गत्वमेव विवक्षितं स्यात्तदाऽन्ते निवेशनं किमर्थं न कृतं तद्विहायादावेव निवेशनं करोति । तेन जानीमः कारकतया समस्त-शास्त्राङ्गत्वमप्यभिमतं तस्येतीति । यदा ज्ञापकतयाऽऽदिसूत्रोपयोगित्वं पूर्वपक्षिणाऽङ्गीकृतमेवेति न तत्र

सूत्रकाराङ्गीकारलिङ्गं सूचनीयं किन्तु कारकतया समस्तशास्त्रोपयोगित्वमेव । ततश्च पर्यायान्तरं विहाय इत्यस्याधिकार्यादिप्रतिपादकशब्दान्तरं विहायेत्यर्थः । क्रमान्तरमित्यस्य चान्ते निवेशनमित्यर्थः । तेन पर्यायान्तरपरित्यागोऽन्ते विहाय आदावेव निवेशनं चैतद्द्वयं मिलितं सत्कारकतया समस्तशास्त्राङ्गत्वं सूत्रकारेणाङ्गीकृतमित्यस्यैव सूचकं न तु ज्ञापकतयाऽऽदिसूत्राङ्गत्वस्यापि सूत्रकाराङ्गीकृतत्वस्य । ज्ञापकतया सूत्रस्येत्युक्तिस्तु दृष्टान्तकथनायानुवाद एवेति ज्ञातव्यम् ॥ **सकलसूत्रे एवमेवेति** । अनेन सर्वशास्त्रस्य इत्येतत्प्रकारान्तरेण योजितमिति द्रष्टव्यम् ॥

श्री० — **ज्ञापकतयेति** । प्रथमसूत्रवाक्यार्थोपयुक्तार्थप्रतिपादकतयेत्यर्थः ॥ **कारकतयेति** । निर्विघ्नपरिसमाप्त्यादिजनकतयेत्यर्थः ॥

च० — **एतयोः** ताराथशब्दयोः । अधिकार्यादीत्यत्रादिशब्दो विषयपरिग्राहकः । यद्यपि ब्रह्मशब्दो विषयप्रत्यायकोऽस्ति तथापि ब्रह्मशब्दतुल्यकक्ष्यापन्नतयोङ्कारस्य विषयप्रत्यायकतया अनुग्राह्य-प्रमाणाभावशङ्काव्युदसनाय श्रुतीनामीश्वरविषयकतासमर्थकतायाश्चाभिधास्यमानतया तथोक्तिरिति मन्त-व्यम् । **विषयवैधुर्येण** उक्तदिशा श्रुतीनामीश्वरविषयतासमर्थकराहित्येन । अनारम्भणीयत्वशङ्कापदस्य अनुग्राह्यप्रमाणराहित्यशङ्कोपलक्षकताऽवसेया । करणसाधनघञन्ततामभिप्रेत्य व्याचष्टे ॥ **तरन्तीति** ॥ **यन्मूलत्वमिति** । आदित्वमित्यर्थः । **पर्यायान्तरम्** ताराथशब्दसमानार्थकशब्दान्तरम् । **क्रमा-न्तरम्** अतःशब्दाद्युत्तरविन्यासम् ॥ **ज्ञापकतया आदिसूत्रस्येति** । आदिसूत्रघटकपदार्थान्वितार्थ-प्रत्यायकतयेत्यर्थः ॥ **कारकतयेति** । कृत्स्नशास्त्रसमापनौपयिकान्तरायध्वंसप्रयोजकतयेत्यर्थः । यदि सूत्रकारः कारकतया कृत्स्नशास्त्राङ्गतामेवानयोरभिप्रेयात् तदा तादृशमङ्गलादिपदान्तरमेव प्रयुञ्जीत । तथा तु न प्रायुङ्क्त । तेन जानीमोऽर्थप्रत्यायनरूपफलान्तरमप्यस्तीति । यदि चार्थप्रतीतिमेव फल-मनुसन्दध्यात् तदा अतःशब्दाद्युत्तरं निर्दिशेत् तथा तु न निरदिक्षत्ततो जानीमहे अर्थप्रतीतितोऽति-रिच्यमानमन्तरायध्वंसनिर्वर्तनादिरूपं फलमस्तीतीति भावः ।

सु० — **अत्र यत्परेषां दूषणं 'मङ्गलस्य वाक्यार्थे समन्वयाभावादि'ति । 'तथा हि । पदार्थ एव हि वाक्यार्थे समन्वीयते । स च वाच्यो वा लक्ष्यो वा । न चेह मङ्गलमथशब्दस्य वाच्यं लक्ष्यं वा । किन्तु मृदङ्गध्वनिवदथशब्दस्य कार्यम् । न च कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शाब्दे व्यवहारे दृष्टः' । 'अस्तु वा मङ्गलस्य पदार्थत्वम् । तथाऽपि न वाक्यार्थे समन्वयः । तथा हि । न तावन्मङ्गलं ब्रह्मजिज्ञासायाः कर्तृकर्मकरणभावेन वाक्यार्थेऽन्वेति । कर्त्राद्यन्यतमभावे प्रमाणाभावात् । कारकान्तराणां विद्यमानत्वाच्च । नापि सामानाधिकरण्येन अन्वयः । जिज्ञासा मङ्गलमिति प्रशंसापरतया अर्थवादत्वप्रसङ्गात्' इति । तदेतेनापास्तं**

भवति । अस्माभिरप्यानन्तर्याभिधेयोऽथशब्दः श्रुत्या मङ्गलप्रयोजन इत्यङ्गीकारात् । नन्वत्र सूत्रादावोङ्कार एव न विद्यते । तत्कथमुच्यते ताराथमूलत्वमिति । यद्यपि शिष्टैरध्येतृभिः उच्चार्यमाणोऽध्यक्षसिद्धस्तथाऽपि नायं सूत्रावयवः । लक्षणान्तराभावे सत्यसंहिततया सम्पाठे अखिलैः पठ्यमानत्वात् । वेदाध्ययनोपक्रमे अध्येतृभिरुच्चार्यमाणोङ्कारवत् । अन्यथाऽथशब्द-वत्संहिततया निर्दिश्येत । न च दृष्टान्तः साध्यविकलः । अध्ययनोपक्रमविरतिवैचित्र्येण तत्तत्स्थानपरित्यागेनान्यान्यस्थानेऽखिलैः पठ्यमानस्य वेदवाक्यानवयवतायाः सुप्रसिद्धत्वात् । अन्यथाऽध्ययनोपक्रमविरतिवैचित्र्येऽपि ॐ इति ब्रह्मेत्यादिवन्नियतस्थानतया पाठप्रसङ्गात् । पक्षसपक्षयोरादावुच्चारणं तु प्राङ्मुखत्वादिवदध्ययननियमान्तर्गतमध्येतृभिरनुष्ठीयत इत्यस्तु । एवं चायमोङ्कारः सूत्रकृता मङ्गलार्थतया सूत्रादावुपनिबद्ध इत्यनुपपन्नमित्यत आह ॥ सर्वत्र इति । अखिलैः सूत्रपाठकैः यत्पृथगसंहिततयोङ्क्रियते तत्सर्वत्र सूत्रेष्वनुगतत्वेनाभिलषितेन निमित्तेनोपपद्यते ।

वा०— मङ्गलस्येति परभाष्यस्य भामत्यभिप्रेतमर्थमाह ॥ **पदार्थ एव हीति** । विवरणाभि-प्रेतमर्थमाह ॥ **अस्तु वेति** । किमथशब्दस्य वैयधिकरण्येनान्वय उत सामानाधिकरण्येनेति विकल्पं मनसि निधायाद्यं निराचष्टे ॥ **न तावदिति** । देवदत्तादिपदार्थानां कर्त्रादिभावेनान्वयवत्तस्यान्वयवत्त्वे प्रमाणाभावादित्यर्थः । आकाङ्क्षाभावाच्च न कर्त्रादिरूपेणान्वय इत्याह ॥ **कारकान्तराणामिति** । कारकशब्देन मुमुक्षुतर्कादयः सङ्गृह्यन्ते । द्वितीयं दूषयति ॥ **नापीति** । न चार्थवादत्वमास्थेयं सूत्रस्य वाक्यार्थनिर्णयापेक्षितन्यायसूचकत्वादित्यर्थः ॥ **तदनेनेति** । यद्यप्यत्रापदार्थत्वहेतौ समन्वयाभावे अपदार्थत्वस्य हेतुत्वेऽन्योन्याश्रय इति भामतिमतदूषणं सधूमो गिरिः साग्निक इतिवदीक्षतेर्नाशब्दमित्यत्र त्वत्पक्षेऽशब्दमितिवच्च मङ्गलत्वात्कर्तव्येत्यन्वयोपपत्तेर्नान्वयदोष इति विवरणमतदूषणं चन्द्रिकोक्तरीत्या सम्भवति । तथाऽपि यथाश्रुतभाष्यस्योपरि प्रसक्तदूषणस्य तत्र तारेति विवरणेन स्वाभिप्रेतमङ्गलार्थत्वे दूषणप्रसक्तेरभावलाभेन तावतैव दूषणासङ्गतिसिद्धौ किं तत्साधुत्वासाधुत्वचिन्तयेति मूलमेव परभाष्यदूषणे व्यापारयतो भावोऽनुसन्धेयः । ननु तत्र ताराथमूलत्वमिति ताराथयोः प्रथमसूत्रावयवत्वे सर्वशास्त्राङ्गत्वे चोक्ते ॐकारस्यासंहिततया निर्देशगतिकथनपरोत्तरवाक्यसङ्गतिर्न प्रतीयत इत्यतस्तत्सङ्गमयितुमुक्तेऽनुपपत्तिं शङ्कते ॥ **नन्विति** । सूत्रानुपात्तस्य न तदेकदेशत्वमित्यर्थः । नन्वोङ्कारः प्रथमसूत्रैकदेशः सूत्रोच्चारण-दशायां शिष्टैरध्येतृभिरुच्चार्यमाणत्वादथशब्दवत् । न चासिद्धो हेतुः । प्रथमसूत्रोच्चारणदशायां आदौ शिष्टानामोङ्कारोच्चारणस्य सर्वाध्यक्षसिद्धत्वादित्यनुमानमोङ्कारस्य सूत्रैकदेशत्वे प्रमाणमाशङ्कते ॥ **यद्यपीति** । अनुमानबोधेनैतन्निराकरोति ॥ **तथाऽपीति** । सामान्यव्याप्त्यभिप्राये यथास्थितसाध्यहेतौ वा संहिता-

निर्दिष्टस्यापि भ्रान्त्या केनचिदसंहिततया पठ्यमाने तद्वाक्यावयवे पदे व्यभिचारवारणायाविगानसूचकं अखिलैरिति। पददशायां तथा पठ्यमाने तद्वारणाय सम्पाठ इति। अथशब्दादौ तद्वारणायासंहिततयेति सुकृतदुष्कृते एवेत्यादौ तद्वारणाय लक्षणान्तराभावे सतीति। सामान्यव्याप्तेरेव सम्भवात्तत्र दृष्टान्तमाह॥ **वेदेति**। विपक्षे बाधकमाह॥ **अन्यथेति**। वेदाध्ययनोपक्रमेऽध्येतृभिरुच्चार्यमाणत्वादेवोङ्कारस्य तदवयवत्वमपीति दृष्टान्तः साध्यविकल इत्याशङ्कते॥ **न चेति**। अध्ययनेत्यारभ्य पठ्यमानस्येत्यन्तं हेतुगर्भं विशेषणम्। तथा च पठ्यमानतया वाक्यानवयवतायाः सुप्रसिद्धत्वादित्यर्थः। पूर्ववद्विपक्षे हेतूच्छित्तिं बाधकमाह॥ **अन्यथेति**। स्वानुमानस्य सत्प्रतिपक्षवत्तां निराकर्तुमवयवत्वसाधकहेतोरन्यथासिद्धिमाह॥ **पक्षसपक्षयोरिति**। प्राङ्मुखत्वादेरनवयवत्वेन निश्चितस्याप्यध्ययननियमान्तर्गततया आवश्यकत्ववदस्य अप्यध्ययननियमान्तर्गततया अनुष्ठानोपपत्तेरन्यथासिद्धिरित्यर्थः। लौकिकवाक्यप्रयोक्तृभिर्नैवोङ्क्रियत इत्यखिलैरित्यनुपपन्नमित्यत उक्तं सूत्रेति। अनुगतत्वेनेत्यसंहिततया पाठे निमित्तप्रदर्शनमित्यभिप्रेत्याह॥ **निमित्तेनेति**।

स०— **लक्षणान्तरेति** अविगानं दर्शयितुमखिलैरित्युक्तम्। गामानयेत्यादिवाक्यस्थगोशब्दस्य अखिलैः पठ्यमानत्वात् व्यभिचारपरिहारायासंहिततयेत्युक्तम्। अतिशयितसन्निध्यभावेनेत्यर्थः। विलम्बेन शब्दोच्चारणे प्रसङ्गो मा भूदिति **सम्पाठ इत्युक्तम्**। समाम्नाये सहोच्चारण इति यावत्। दूराद्धूतेत्यादौ व्यभिचारनिवृत्त्यर्थं लक्षणेत्याद्युक्तम्। दूराद्धूतेचेत्यादिप्रकृतिभावविधायकसूत्राभाव इत्यर्थः॥ **अध्ययनेति**॥ **उपक्रमोपसंहारवैचित्र्येणो**ङ्कारस्य वेदानवयवत्वं गम्यते। यदा यद्वाक्यमुपक्रान्तं तस्यैवान्यदा मध्योच्चारितस्योङ्कारपूर्वकत्वाभावात्। न हि सर्वदा तस्यैव वाक्यस्यादावेवोच्चारणं तत्पूर्ववाक्य एव पर्यवसानं सम्भवतीति भावः॥ **ॐ इति ब्रह्मेत्यादि**वन्नियतस्थानोच्चारणाभावेऽपि नियमेनोच्चारणादेव अवयवत्वं भवेदत आह॥ **पक्षेति**। ब्रह्मसूत्राध्ययनवेदाध्ययनयोरादावुच्चारणं नियमार्थम्। अध्ययनस्याक्षरग्रहणद्वारा अदृष्टार्थत्वेऽपि ॐकारादिनियमपूर्वस्यादृष्टजनकत्वान्नैतावता अवयवत्वमिति भावः॥

प०— **अत्रेति**। अथपदस्य मङ्गलार्थत्व इत्यर्थः। **परेषां** मायिनाम्। परभाष्यवाक्यमाह॥ **मङ्गलस्येति**। कथं समन्वयाभाव इत्यतो वाचस्पत्युक्तव्याख्यानप्रकारमाह॥ **पदार्थ एवेति**॥ **मृदङ्गध्वनिवदिति**। मृदङ्गध्वनेः यथा मङ्गलं फलं तथाऽथशब्दस्य फलमित्यर्थः॥ **कार्यज्ञाप्ययोरिति**। कार्यं फलम्। ज्ञाप्यं द्योत्यमुच्यते। परभाष्यवाक्यस्य विवरणोक्तमर्थमाह॥ **अस्तु वेति**॥ **कारकान्तराणामिति**। मुमुक्षुरूपकर्तृकारकस्य। ब्रह्मरूपकर्मकारकस्य। न्यायादिरूपकरणकारकस्य च भावादित्यर्थः। इति यत्परेषां दूषणमिति पूर्वेणान्वयः॥ **तदेतेनेति**। यद्वाचस्पतिना मङ्गलस्याथपदार्थत्वं

नेत्युपेत्य वाक्यार्थेऽनन्वयव्युत्पादनम् । यच्च विवरणकृता पदार्थत्वमुपेत्य वैयधिकरण्येन वा सामानाधिकरण्येन वाऽनन्वयव्युत्पादनं कृतं तदुभयं ताराथमूलत्वमिति कथनेन निरस्तमित्यर्थः । तद्व्यनक्ति ॥ **अस्माभिरिति** । अथशब्देन मङ्गलस्याप्रतीतेरानन्तर्यमुखेनाधिकार्याद्यसूचनापातात् 'तस्मान्माङ्गलिकावुभौ' इति स्मृतेश्च मङ्गलप्रयोजकत्वमेव न वाचकत्वमिति भावः । श्रुत्या श्रवणेनेत्यर्थः । उत्तरार्धमवतारयति ॥ **नन्वित्यादिना ॥ अध्येतृभिरिति** । ब्रह्मसूत्राणामिति योज्यम् ॥ **सूत्रावयव इति** । सूत्रेऽन्वयप्रतियोगिसमर्पको नेति साध्यार्थः ॥ **सम्पाठ इति** । संहिताध्ययन इत्यर्थः । अथादिपदे व्यभिचारवारणायोक्तमसंहिततयेति । असंश्लिष्टतयेत्यर्थः । 'परः सन्निकर्षस्संहिते'ति पाणिन्युक्तेः । 'हरीं इहोपवक्ष्यतः' । 'इन्द्रवायू इमे सुताः' । 'उभे अहनी सुदिने विवस्वतः' । 'अः इति ब्रह्म' । 'तमेवैकं जानथ आत्मानमि'त्यादौ हरी इहेत्यादिशब्देषु सामान्यतः प्रवृत्तव्याप्तेरव्यभिचाराय सत्यन्तम् । 'ईदूदेद्द्विवचनं प्रगृह्यम्' । विवृतावविसर्गः स्यात् । विश्लिष्टार्थे च विशिष्टमित्यादिलक्षणान्तराभावे सतीत्यर्थः । पदाध्ययनेऽसंहिततया पठ्यमानपदेष्वव्यभिचाराय सम्पाठ इति । य एवमुक्तहेतुयुक्तः स तदवयवो नेति सामान्यव्याप्तिमुपेत्याह ॥ **वेदेति** । विपक्षे हेतून्छित्तिरूपबाधकतर्कमाह ॥ **अन्यथेति ॥ अन्यान्यस्थान इति** । एतेन विमत ॐकारो न वेदवाक्यावयवः अन्यान्यस्थाने पठ्यमानत्वात् साम्नि स्तोभाक्षरवत् । व्यतिरेकेण वेदगतपदवदिति सूचितम् । विपक्षे बाधकमाह ॥ **अन्यथेति ॥ ॐ इति ब्रह्मेतीति** । 'ॐ इति ब्रह्म, ॐ इतीदꣳसर्वं, ॐ इत्येतदनुकृति ह स्म वा' इत्यादितैत्तिरीयोपनिषदीव ऋगादिशाखादावपि तत्र तत्रोङ्कारपाठप्रसङ्गादित्यर्थः । नन्वयमोङ्कारः सूत्रवेदयोरवयवो भवितुमर्हति । तदादावध्येतृभिर्नियमेन पठ्यमानत्वादथादिपदवदित्यवयवत्वेऽप्यस्ति मानमित्यतोऽस्य हेतोरन्यथोपपत्तिं सदृष्टान्तमाह ॥ **पक्षसपक्षयोरिति** । 'अथ स्वाध्यायविधिः प्राग्वोदग्वा ग्रामान्निष्क्रम्य आप आप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्याक्लिन्नवाससा दर्भाणां महदुपस्तीर्य प्राक्कूलानां तेषु प्राङ्मुख उपविश्ये'त्याद्युक्त्या 'अधीयेते'त्याम्नाता आश्वलायनसूत्रे । ब्रह्मयज्ञेन यक्ष्यमाण इत्यादिना तैत्तिरीयादौ चोक्तदिशा पूर्वाभिमुखत्वशुचिदेशस्थत्वशुचित्वादिर्यथा अध्ययनाङ्गत्वेनोच्यते तथोङ्कारोऽप्यस्तु न तु सूत्रावयवत्वेनेत्यर्थः । मङ्गलार्थतया मङ्गलप्रयोजनकेनेत्यर्थः ॥ **अभिलषितेनेति** शेषोक्तिः । अभिमतेन इत्यर्थः । अनुगतत्वेनेति हेतौ तृतीयेत्युपेत्य तदर्थमाह ॥ **निमित्तेनेति ॥**

**या०— अत्रेति** । यथाश्रुतभाष्य इत्यर्थः ॥ **वाच्यं लक्ष्यं वेति** । वाक्यार्थेऽसमन्वयादिति भावः ॥ **न च कार्यज्ञाप्ययोरिति** । ज्ञाप्यमिहार्थात् ज्ञाप्यमेव विवक्षितम् । एवं च यथाऽर्थज्ञाप्यस्य न वाक्यार्थे समन्वयः । तथा कार्यस्याऽपीति दृष्टान्तार्थं ज्ञाप्यग्रहणमिति द्रष्टव्यम् । ननु मङ्गलमथशब्दार्थो न भवतीत्यत्र वाक्यार्थे समन्वयाभावो हेतुतयोपात्तः । तत्र च पदार्थ एव हि वाक्यार्थे

समन्वीयत इत्यादिना अथशब्दार्थत्वाभावस्यैव हेतुतयोक्तत्वादन्योन्याश्रय इत्यरुचेराह ॥ **अस्तु वेति ।** मङ्गलं जिज्ञासायां किं कर्त्रादिभावेन वैयधिकरण्येनान्वेत्युत जिज्ञासा मङ्गलमिति सामानाधिकरण्येनेति विकल्पं मनसि निधायाद्यं तावद्दूषयति ॥ **न तावन्मङ्गलमिति** ॥ **कर्त्राद्यन्यतमेति ।** मङ्गलस्येति शेषः ॥ **कारकान्तराणामिति ।** मङ्गलापेक्षयाऽन्येषामेव कर्तृकर्मकरणरूपाणां कारकान्तराणां जिज्ञासायां सत्वादित्यर्थः । अधिकारिजीवस्यैव कर्तृत्वात्साक्षाद्वेदानामुद्देश्यफलसम्बन्धितया च ब्रह्मणः कर्मत्वात् युक्तीनामेव करणत्वादिति भावः ॥ **अस्माभिरपीति ।** तथा च कार्यस्य वाक्यार्थे समन्वयाभावोपपादनं अस्माकमिष्टमेवेति भावः ॥ **यद्यपि शिष्टैरध्येतृभिरिति ।** अनेन ओंकारः सूत्रावयवः शिष्टैरध्येतृभिः तदादावुच्चार्यमाणत्वादथशब्दवदिति स्थापनानुमानमाशङ्क्य तथाऽपीत्यादिना तस्य सत्प्रतिपक्षतोच्यत इति द्रष्टव्यम् । अध्यक्षसिद्ध इति हेतुसिद्ध्यर्थमुक्तम् ॥ **लक्षणान्तराभावे सतीति ।** असंहिताप्रापकसूत्रान्तराभावे सतीत्यर्थः । सुध्युपास्य इत्यादिवाक्यावयवे सुधीत्यादिपदेऽखिलैः पठ्यमाने व्यभिचारवारणाय असंहिततयेत्युक्तम् । कृष्ण एहीति वाक्यावयवे कृष्णेति पदे व्यभिचारवारणाय लक्षणान्तराभावे सति इति । तत्र हि 'प्लुत प्रगृह्याची'ति सूत्रमेवासंहिताप्रापकमस्तीति भावः । पदपाठकालेऽखिलैरसंहिततया पठ्यमानेषु पदेषु व्यभिचारवारणाय सम्पाठ इति । संहितापाठकाल इत्यर्थः । संहितापाठकालेऽपि प्रामादिकेषु असंहिततया पठ्यमानपदेषु व्यभिचारवारणायाखिलैरित्युक्तम् । स्थापनानुमानस्यान्यथासिद्धिं अपि आह ॥ **पक्षसपक्षयोरिति ।**

श्री० — **मङ्गलस्येति ।** अथशब्दस्य मङ्गलवाचकत्वे इति शेषः ॥ **वाच्य इति ।** गङ्गायां मत्स्य इत्यादावित्यर्थः ॥ **लक्ष्यो वेति ।** गङ्गायां घोष इत्यादावित्यर्थः ॥ **कार्यज्ञाप्ययोरिति ।** घटमानयेत्यादौ घटकार्यस्य जलाहरणादेर्दिवाऽभुञ्जानः पीन इत्यादावर्थात्ज्ञाप्यस्य रात्रिभोजनादेर्वाक्यार्थे समन्वयो न दृष्ट इत्यर्थः ॥ **कारकान्तराणामिति ।** ब्रह्मजिज्ञासायामधिकारिणः कर्तृत्वाद्वेदानां करणत्वाद्ब्रह्मणः कर्मत्वादित्यर्थः ॥ **अर्थवादत्वेति ।** विधिवाक्ये सति तद्बोध्यार्थे प्रशंसापरत्वेनार्थवादानां सार्थक्यस्य 'वायव्यं श्वेतमालभेत' 'वायुर्वै क्षेपिष्ठा देवता' इत्यादौ दर्शनात्प्रकृते च जिज्ञासाकर्तव्येति विधेरभावेन केवलार्थवादस्यानुपयुक्तत्वेनादौ तत्कथनस्यासङ्गतत्वादिति भावः ॥ **श्रुतेति ।** श्रवणमात्र इत्यर्थः ॥ **असंहिततयेति ।** संहिता सन्निकर्षः । वर्णानामत्यन्तं सन्निधिः । यथोक्तम् । 'परः सन्निकर्षः संहिता' इति । तथा च ओं अथात इति निर्देशः स्यादित्यर्थः ॥

च० — परभाष्यं दुदूषयिषुरनुवदति ॥ **अत्रेति ।** भामतीदिशा तत्तात्पर्यं व्यनक्ति ॥ **पदार्थ एव हीति ।** पदजनितोपस्थितिविषय इत्यर्थः । अत्र पक्षीकृतमङ्गले संसृष्टसंसर्गान्यतरलक्षणवाक्यार्थानु-

योगिकभेदाभेदान्यतरसंसर्गलक्षणसमन्वयाभावेन हेतुना अथपदनिरूपितशक्तिलक्षणान्यतररूपवृत्तिविषयत्वात्मकाथपदार्थत्वाभावसाधने हेतोः स्वरूपासिद्धिशङ्कानिरसनाय तादृशपदार्थत्वाभावेन तादृशसमन्वयाभावस्य साधनीयतापत्त्या अन्योन्याश्रय इत्यरुचिं प्रतिसन्दधान आह ॥ **अस्तु वेति** । जिज्ञासायां मङ्गलं स्वनिष्ठकर्तृत्वकर्मत्वकरणत्वान्यतमनिरूपकतालक्षणभेदसंसर्गेण अभेदसंसर्गेण वान्वेतीति कल्पद्वयीं प्रतिसन्दधान आद्यं प्रतिविधत्ते ॥ **न तावदिति** । निराकरिष्यमाणकल्पान्तरावधिकप्राथम्यद्योतनार्थः तावच्छब्दः । मङ्गलस्येति पूरणीयम् ॥ **कारकान्तराणामिति** । जिज्ञासायाः विशिष्टाधिकारिकर्तृकतया ब्रह्मकर्मकतया न्यायकरणकतया च मङ्गले तन्निरूपिततदन्यतमाभावादित्यर्थः ॥ **अस्माभिरपीति** । अथशब्दो मङ्गलार्थ इत्यादिभाष्याक्षरतात्पर्यमप्रतिसन्दधानानामेवेयमाशङ्का । आद्यार्थपदस्य फलतात्पर्यकत्वादुत्तरस्य च प्रतिपाद्यतात्पर्यकत्वात्कार्यज्ञाप्ययोरन्वयस्यास्माकमनभिधित्सितत्वेनैव तदीयदूषणासङ्गत्यमसैत्सीदिति तत्साधुत्वासाधुत्वे नाचिचिन्तत् । चन्द्रिकाकृतस्तु तदुक्तिमप्यसहमाना भामतीमते अन्योन्याश्रयरूपं विवरणमते च हेतुमद्भावेनान्वयलक्षणं दूषणं व्यवीभवन् । सूत्रानिर्दिष्टस्य तद्धटकत्वायोगमाशङ्कते ॥ **नन्विति** । ॐकारः प्रथमसूत्रघटकः शिष्टभूताध्येतृकर्तृकप्रथमसूत्रोच्चारणकालीनोच्चारणविषयत्वादथशब्दवदित्यनुमान-मेवोङ्कारस्य तदवयवत्वे प्रमाणमाशङ्कते ॥ **यद्यपीति** । अनुमानबाधेनैतत्प्रतिविधत्ते ॥ **तथाऽपीति** ॥ **लक्षणान्तराभावे सतीति** । सन्धिकार्यप्रवृत्तिज्ञापकसूत्रान्तराभावे सतीत्यर्थः ॥ **असंहिततयेति** । वर्णानामतिशयितसन्निधिरूपसंहिताभावेनेत्यर्थः ॥ **सम्पाठ इति** । संहितापाठकाल इत्यर्थः ॥ **अखिलैरिति** । निरूपकतया कर्मसाधनप्रत्ययप्रकृत्युपस्थाप्यान्वयि कर्तृत्वार्थिका तृतीया । प्रकृतिभावस्थलेनैकान्त्यव्युदसनाय सत्यन्तम् । सन्धिकार्यप्रवृत्तिस्थले तद्विधूननायासंहितयेति । पदपाठकाले तदपहस्तयितुं सम्पाठ इति । संहितास्थलेऽपि प्रमादेनासंहितायां कतिपयपठ्यमानपदेषु तन्निरसनाय अखिलैरिति । स्थापनायामप्रयोजकतामप्यभिधत्ते ॥ **पक्षेति** ।

**सु०— एतदुक्तं भवति । सर्वाणि हि सूत्राणि प्रत्येकमनेकवेदवाक्यविचारपरत्वादवान्तरब्रह्मविद्याः । 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यत' इति श्रौतार्थवादसामर्थ्यात्सर्वास्वपि ब्रह्मविद्यास्वाद्यन्तयोरोङ्कारस्योहः कर्तव्य इति गम्यते । न चोह्यमानं वाक्यात्पृथगिति शक्यते वक्तुम् । मन्त्रेष्वप्यूह्यमानस्यामन्त्रावयवत्वप्रसङ्गात् । ततश्च प्रतिसूत्रमाद्यन्तयोरुच्चारणे गौरवं स्यादित्यादावेवोङ्कारोऽधिकृतत्वेनोच्चार्यते । तस्य संहिततया निर्देशे प्रथमसूत्रावयव एवायं विज्ञायेत । तन्मा विज्ञायीति शिष्टैः पृथगोङ्क्रियते । न च व्याख्यानतोऽप्यधिकारो ज्ञायत इति व्यर्थं पृथक्करणमिति वाच्यम् । अन्तरङ्गज्ञापकाभाव एव बहिरङ्गस्यान्वेषणीयत्वादिति । तदनेनासंहिततया निर्देशे निमित्तान्तरं वदता हेतोरन्यथासिद्धिरुक्ता भवति ।**

वा० — ननु सर्वसूत्रेष्वोङ्कारानुगतिरेव कुतो येनासंहिततया निर्देशं प्रति सा निमित्तं स्यात् । अस्तु वा सा तथाऽपि निमित्तान्तरेणासंहिततया निर्देशोपपत्तौ न तस्या निमित्तत्वमित्यत आह ॥ **एतदुक्तं भवतीति** । अवयवत्वोपपादकोहसाधकवाक्ये ब्रह्मपदप्रयोगादस्तु वेदविद्यायामाद्यन्तयोरूहात् ओंकारस्य तदवयवत्वम् । सूत्रेषु किमायातम् । तथात्वे वा सर्वसूत्राणां भिन्नविद्यात्वे वाक्यभेदापत्त्यैक-विद्यात्वात्किं सर्वसूत्रानुगमेनेत्याशङ्कां परिहर्तुमनेकवेदवाक्यविचाररूपत्वात्सूत्राणामपि प्रत्येकं ब्रह्मविद्यात्वं उपोद्घातेनाह ॥ **सर्वाणि हीति** । अत्राद्यन्तयोरूह इति स्थानिरहिताद्यन्तप्रदेश ऊहोक्त्या नात्रोहशब्दः कर्मव्युत्पत्त्या प्राकृतस्थानपतितेत्याद्युक्तविकृतप्रयोगपरोऽपि तु भावव्युत्पत्त्याऽध्याहारपर इति सूचनेन सूर्यायेत्यूहं प्रत्यग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावान्नोहः सम्भवतीत्याशङ्का गर्भस्रावेणैव निरस्ता भवति । (प्राकृतस्थानपतितपदार्थान्तरकार्यतः । ऊहः प्रयोगो विकृत उह्यमानतयोदितः) । श्रौतार्थ-वादेत्येतदूहस्यार्थवादप्रमाणकत्वोक्त्या सप्रमाणकत्वमेवोहे नियामकं न तु लौकिकाकाङ्क्षेत्यर्थसूचनात् संयज्ञपतिराशिषा इत्येत्यादाविव साकाङ्क्षत्वाभावान्नाध्याहारोऽप्यूहशब्दार्थ इत्यपि शङ्काऽसङ्गतेति द्रष्टव्यम् । अर्थवादे ब्रह्मविद्यास्वाद्यन्तयोरोङ्कारानुच्चारणेऽनिष्टकथनेऽप्यूहः कर्तव्य इत्यर्थस्य ततः शाब्द-मर्यादयाऽभावात्सामर्थ्यादित्युक्तम् । अत्र स्रवत्यनोङ्कृतमित्यर्थवादस्वरूपविशेषोपादानेन स्रवणविशरण-परिहाररूपादृष्टफलार्थत्वबोधनादर्थप्रतीतेरादावेव प्रयोगेन चरितार्थत्वादन्ते प्रयोगवैयर्थ्यमनुषक्तस्योत्तर-सूत्रानन्वयदोषश्चेति दोषद्वयमसङ्गतमिति द्रष्टव्यम् । अत्रोह्यमानस्य वाक्याद्बहिर्भूतत्वे श्रौतार्थवाद-सामर्थ्यात्प्रतिसूत्रमाद्यन्तयोरूहसिद्धावपि तस्य तदवयवत्वेन संहिततया निर्देशप्रसक्तेरेवाभावेनासंहिततया निर्देशस्य नाधिकारज्ञापकत्वमिति न स्वाभिमतान्यथासिद्धिसम्भव इत्यत उह्यमानत्वस्यावयवत्वाविनाभावं उपपादयति ॥ **न चेति** । यद्वा श्रौतार्थवादसामर्थ्येनाद्यन्तयोरोङ्कारोहसिद्धावपि तस्याध्ययननियमादिवत् बहिर्भूतस्य सकृदध्याहृतस्यैव सर्वसूत्रोपकारित्वसम्भवेन प्रतिसूत्रमुच्चारणासिद्ध्या न प्रकृतसिद्धिरित्यतो अध्याहृतस्य वाक्यावयवत्वेनाध्ययननियमादिवैषम्यादर्थवादबलेन प्रतिसूत्रमध्याहारे सिद्धे तद्बलादेव अवयवत्वसिद्धाववयवानां च प्रतिसूत्रमुच्चारणस्यापि नियतत्वात्प्रकृतसिद्धिरित्याशयेनाह ॥ **न चेति** । अत्रावयवत्वस्य प्रसङ्गेऽप्यमन्त्रत्वप्रसङ्गादिति वा मन्त्रानन्तर्गतत्वप्रसङ्गादिति चोक्त्या मन्त्रावयवत्वलाभे अपि तथाऽनुक्त्या मन्त्रानवयवत्वप्रसङ्गादित्युक्त्या च यद्यप्यनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यादित्युक्तरीत्या मन्त्र इत्यभियुक्तप्रयोगविषयस्यैव मन्त्रत्वान्मन्त्रेषूह्यमानस्य न मन्त्रत्वम् । 'आम्नायमानं ह्यनुषज्यमानमन्तर्गतं मन्त्रविचारणायामि'त्युक्तरीत्या न वा मन्त्रान्तर्भूतत्वं न वा मन्त्रवाक्येन सहैककार्य-कारित्वेन मन्त्रवाक्यावयवत्वम् । रथघोषादेरपि महेन्द्रस्तोत्रावयवत्वप्रसङ्गात् । तथाऽप्यवदानादिविधौ द्रवादिपदवद्विश्वजिदादौ फलपदवदूहादेरपि श्रुतार्थापत्त्यादिकल्प्यस्यार्थाद्वा कल्प्यैकदेशत्वादिति वैदिक-

देशत्वोक्तेर्वेदत्वाभ्युपगम इति तदभियुक्तैरुक्तत्वेनोह्यमानस्यापि वेदत्वस्वीकाराद्वेदत्वे सति मन्त्रवाक्येन सहैककार्यकारित्वं वा वाक्यत्वे सति मन्त्रेण सहैककार्यकारित्वं वा मन्त्रावयवत्वं तेषामपीष्टमेव । प्रकृते च वाक्यत्वे सति ब्रह्मविद्ययैककार्यकारित्वरूपमेव तदवयवत्वं विवक्षितम् । तावतैवोङ्कारस्य मङ्गलार्थतया सूत्रादावुपनिबन्धनरूपस्वप्रयोजनसिद्धेरित्यर्थसूचनेन ऊहप्रवरनामधेयानाममन्त्रत्वस्य द्वितीये सिद्धान्तितत्वान्मन्त्रेष्वप्यूह्यमानस्य तदनवयवत्वापादनमिष्टमेवेति शङ्काऽसङ्गतेति ज्ञेयम् । नन्वेवमध्याहारस्यावश्यकत्वेऽध्याहृतस्य छिन्द्मीत्यादेः प्रयोगदशायामुच्चारणनियमवत्प्रतिसूत्रमोङ्कारस्य नियतोच्चारणापत्त्योत्तरत्राधिकाराभावेनासंहिततया निर्देशस्य तत्सूचकत्वं न सिद्ध्येदिति नान्यथासिद्धिरुक्ता स्यादित्यत आह ॥ **ततश्चेति** । अत्र ततश्च गौरवं स्यादित्यधिकृतत्वेनोच्चार्यत इति लाघवतर्कसहकृतोहस्यानुषङ्गरूपाधिकृतत्वेनोच्चारणे प्रयोजकत्वोक्त्या न ह्यनुगतिरूहः । आम्नायमानं ह्यनुषज्यमानमित्यनुषज्यमानस्य मन्त्रत्वोक्त्याऽम्नातेष्वमन्त्रत्वमित्यूहस्यामन्त्रत्वोक्त्या चानुषङ्गोहयोर्भेदेन व्यवहारात्तद्विरोध इति कस्यचित् प्रलपनमज्ञानमूलमिति सूचितं भवति । यदर्थमेतावदुक्तं तदिदानीमाह ॥ **तस्येति** । अधिकारे ज्ञापकान्तरं शङ्कते ॥ **न चेति** ॥ **अन्तरङ्गेति** । वाक्यस्य निर्देशापेक्षया व्याख्यानस्य बहिरङ्गत्वादिति भावः । अस्त्वयं वाक्याभिप्रायस्तावताऽप्यनुमाने दूषणं किमुक्तं भवतीत्यत आह ॥ **तदनेनेति** ।

स०— **स्रवतीति** । आदावनोङ्कृतं ब्रह्मवेदादिकं स्रवति परस्तादनोङ्कृतं तु विशीर्यते इत्यर्थः ॥ **अर्थवादसामर्थ्यादिति** । निन्दारूपार्थवादसामर्थ्यादित्यर्थः ॥ **ऊह इति** अध्याहार इत्यर्थः । तेन अन्यभाव ऊह इति निरस्तम् । अध्याहारस्यान्यानपेक्षत्वात् न चाकाङ्क्षाविरहान्नाध्याहारोऽपीति वाच्यम् । ओङ्काराभावे प्रतिपाद्यार्थस्थैर्याभावेन तत्स्थैर्यस्योङ्कारसाकाङ्क्षत्वेनाध्याहारसम्भवात् ॥ **मन्त्रेष्वपीति** । न चेष्टापत्तिः ऊहप्रवरनामधेयानाममन्त्रत्वस्य द्वितीये सिद्धान्तितत्वादिति वाच्यम् । मन्त्रेण सहैककार्यकारित्वं न स्यादित्यापादनात् । तर्हि उह्यमानस्य व्यर्थत्वमित्यत आह ॥ **न चेति** । ओङ्कारस्य पृथगुच्चारण एव सर्वत्राधिकृतत्वज्ञानादुच्चारणस्यान्तरङ्गत्वं व्याख्यानं तूच्चारणानन्तरभावित्वात् बहिरङ्गमिति भावः ।

प०— ननु सूत्रादावोङ्कार एव नेति वदन्तं प्रति पृथगुच्चारणस्य गत्युक्तिरयुक्ता । अध्येतृपरम्परयोच्चार्यमाणत्वस्यापि निर्मूलत्वेनान्धपरम्परात्वानिवारणाच्चेत्यत आह ॥ **एतदुक्तमिति** । सप्तदशगीतातात्पर्योक्तश्रुतिमाह ॥ **स्रवतीति** । ब्रह्मेति मन्त्र उच्यते ॥ अनोङ्कृतं आदावोङ्कारशून्यतयोच्चारितं चेदामघटजलवत्स्रवति सुकृतजनकं नेत्यर्थः । परस्तादनोङ्कृतं चेद्विशीर्यते हिंस्यते फलजनकं नेत्यर्थः ॥ **श्रौतेति** । श्रुत्युक्तनिन्दारूपार्थवादबलेन मन्त्रस्य स्रवणविशरणाभावकामः आद्यन्तयोरोङ्कुर्यादिति

कल्पितविधिवाक्येन सर्वास्वपि सूत्रादिरूपब्रह्मविद्यास्वाद्यन्तयोरोङ्कारस्योहोऽध्याहारः कार्य इत्यर्थः। 'अध्याहारस्तर्क ऊह' इत्यमरोक्तेः । न तु मीमांसकाभिमत ऊहः । तथैव चन्द्रिकोक्तेः। ननु यद्यध्याहार एवोहशब्दार्थः तर्हि यदयमोङ्काराथशब्दावादितः कृतवानित्यादिपूर्वतनसुधावाक्यविरोधः। प्रयुज्यमानस्याध्याह्रियमाणत्वायोगात् । अन्यथाऽथादिपदस्याध्याहार इति स्यादिति चेत् । अत्राहुः। आदितः कृतवानित्यादिपूर्वतनसुधावाक्यानामादितः द्वयोरपि सत्त्वादित्यर्थः । अथशब्दस्यादौ कृतत्वमस्तीति वा श्रुतिप्राप्तत्वेन सूत्रकृदभिमततया कृतप्रायत्वाद्वा तदभिप्रायेण कृतवानित्यादिकृतनिवेशितादिशब्दप्रयोगः । एवमग्रे प्रयुक्तत्वादितिशब्दप्रयोगोऽपि ध्येयः । सूत्रकृताऽथातो ब्रह्मजिज्ञासेत्येवोक्तादपि स्रवतीत्यादिनिन्दार्थवादबलेनाद्यन्तयोरोङ्कारमध्याहृत्याग्निमीळइत्यादाविवाध्येतारो अधीयन्ते तदभिप्रायेणैव ताराथमूलत्वमिति पूर्वार्धे प्रवृत्तम् । न तु सूत्रकृताऽथादिपदसमानतयाऽप्योङ्कारस्य कृतत्वाभिप्रायेण। अत एव श्रीमद्भाष्येऽप्यथादिपदादेरेवार्थोक्तिः । ' अथातः शब्दपूर्वाणि सूत्राणि निखिलान्यपि ' इति 'तावेवादौ प्रयुञ्जत' इति चोपक्रमोपसंहारोपेतप्रमाणोदाहरणं चेति । यद्वा चन्द्रिकोक्तदिशाऽथादिपदतुल्यतया 'ॐकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात्' इति स्मृतिसिद्धोङ्कारपरोऽयं ग्रन्थः । न तु स्रवतीति श्रुतिप्राप्तसाधारणोङ्कारपरः । स्रवतीति श्रुत्युक्तिस्तूपलक्षणं ध्येयमिति । केचित्तु सूत्रकृतोङ्कारोऽप्यादौ कृत एव । ऊह इत्युक्तिस्तु निन्दार्थवादरूपश्रुतिमूलत्वाभिप्राया । वस्तुतस्तूच्चारितोऽपि सूत्रकृताथादिशब्दवन्न सूत्रोपनिबद्ध इति । यत्तु 'ब्रह्मणः प्रवणं कुर्यादादावन्ते च सर्वदा' इत्यादि शिक्षावचनमित्युक्तत्वाच्चेति तन्न । तत्र शिक्षावचनस्य स्रवतीति निन्दार्थवादमूलत्वेन स्पष्टार्थतया सावधिकतया शिक्षाग्रन्थकर्तृकृतत्वेनोपपत्तेः । नन्वस्त्वोङ्कारस्य सूत्रादौ वेदाध्ययनोपक्रमसाधारण्येन सत्त्वं निन्दार्थवादसिद्धम् । तावता कथमवयवत्वमित्यत आह ॥ **न चेति** । उह्यमानमध्याह्रियमाणम् ॥ **पृथगिति** । वाक्यार्थतयाऽन्वयप्रतियोग्यसमर्पकं इत्यर्थः ॥ **अमन्त्रावयवत्वेति** । मन्त्रावयवत्वाभावप्रसङ्गादित्यर्थः । क्वचिन्मन्त्रानवयवत्वेति पाठः । संयज्ञपतिराशिषेत्यत्र गच्छतामित्यस्य इषेत्वेत्यादौ छिनद्मीत्यादेरध्याहृतस्यान्वयप्रतियोगिसमर्पकत्वरूपावयवत्वाभावप्रसङ्गात् । तथात्वे 'व्यवायान्नानुषज्यत' इत्यादिजैमिनिसूत्रकृतः 'व्यतिहारो विशिंषंति हि' इति ब्रह्मसूत्रकृतश्च तत्रतत्राध्याहारोक्तिरयुक्ता स्यात् इति भावः । अनवयवत्वसाधकप्रागुक्तहेतोः का गतिरित्यतोऽन्यथोपपत्तिमाह ॥ **तत्रश्चेति** । प्रथमसूत्रावयवे सतीत्यर्थः । यद्वा प्रतिसूत्रमाद्यन्तयोरोङ्कर्तव्यत्वस्यावश्यकत्वे सतीत्यर्थः ॥ **प्रतिसूत्रम्** । द्वितीयादिसर्वसूत्रेष्वित्यर्थः ॥ **आदावेवेति** । प्रथमसूत्र एवेत्यर्थः । ॐकार इत्येकवचनेन प्रथमसूत्रे अपि आदावेवोच्चार्यमाणः न त्वन्तेऽप्युच्चार्यमाण इत्यवगम्यते । अन्तिमस्य सूत्रानवयवत्वेनादृष्टमात्रार्थतया पृथक्करणाभावेऽपि एतत्सूत्रमात्रसम्बन्धत्वशङ्कानुदयेनादिमोङ्कारस्यैव तथात्वे शङ्कोदयात् । यद्वोङ्कार इति

आद्यन्तयोरप्युच्चार्यमाणो गृह्यते । केचित्तु प्रथमसूत्रेऽप्येक एवोङ्कार आदावुच्चार्यमाणः । अन्तिमस्तु सर्वसूत्रपारायणानन्तरमनावृत्तिःशब्दादिति सूत्रसमाप्त्यनन्तरमुच्चार्यमाण एव वेदाध्ययनवदेवेत्याहुः ॥ **अधिकृतत्वेनेति** । द्वितीयादिसूत्रेऽप्यनुवर्तमानत्वेनेत्यर्थः । इदं सर्वत्र द्वितीयादावप्यनुवर्त्यतामिति बुद्ध्योच्चार्यत इति यावत् । अस्त्वेवं पृथक्पाठस्तु कुत इत्यत आह ॥ **तस्येति** । संहिततया संश्लिष्टतया निवेशेऽध्ययने कृते सतीत्यर्थः । प्रथमसूत्रावयव एवेत्यत्रावयवशब्द उपकारमात्रपरः नत्वन्वयप्रतियोगिसमर्पकरूपावयवपरः । तथात्वे सति तन्मा विज्ञायीत्युत्तरवाक्ये प्रथमसूत्रावयवत्वमात्रं विज्ञातं मा भूत् किन्तु द्वितीयादिसूत्रावयवत्वमपि व्यज्ञायीत्यर्थस्य वाच्यत्वेन द्वितीयादावदृष्टमात्रोपकारकतया अन्वयप्रतियोगिसमर्पकत्वस्य बाधात् । यद्वा प्रथमसूत्रावयव एव विज्ञायेतेति द्वितीयादावदृष्टमात्रोपकारकत्वेन अनुवृत्तिर्न ज्ञायेतेत्येवं व्याख्येयम् ॥ **पृथगोङ्क्रियत इति** । यथा पाणिनीये । 'प्रत्ययः' 'परश्च' 'धातोः' 'अङ्गस्ये'त्यादीन्यनेकसूत्रेष्वनुवृत्त्यर्थं पृथक्कृत्य निर्दिश्यन्ते न तूपरितनसूत्रसंश्लिष्टतया तथा इहापीति भावः । 'ढलोपे पूर्वस्य दीर्घोऽण' इत्यादौ पाणिनीये संहितया निर्दिष्टस्यापि दीर्घादिपदस्य अनेकसूत्रेष्वनुवृत्तिर्भाष्यवृत्तिकारादिव्याख्यानाद्यथाऽवसीयते तथेहापि भाष्यकारादिव्याख्यानादनुवृत्त्यवगमसम्भवादनुवृत्त्यर्थं शिष्टानां पृथक्पाठ इत्ययुक्तम् । किंत्वनवयवत्वादेवेत्यत आह ॥ **न चेति** । अधिकार उत्तरसूत्रेष्वनुषज्यमानत्वमित्यर्थः ॥ **अन्तरङ्गेति** । असंहितापाठोऽन्तरङ्गम् । व्याख्यानं बहिरङ्गमिति भावः । इतिपदस्यैतदुक्तमिति पूर्वेणान्वयः । तावताऽनवयवत्वसाधकहेतोः का गतिरुक्ता इत्यत आह ॥ **तदनेनेति** । सर्वत्र इत्यर्थेन ॥

**या०** — अर्थवादो निन्दारूपः ॥ **ऊहः कर्तव्य इति** । यद्यप्यत्र मन्त्रसामसंस्कारोह इत्यादाविवोहशब्दो न कर्मव्युत्पत्त्योह्यमानपरः सूर्यायेत्याद्यूहं प्रति अग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावेन 'प्राकृतस्थानपतित पदार्थान्तरकार्यतः । ऊहः प्रयोगो विकृत उह्यमानतयोदित' इति तदूहलक्षणाभावात् । तथाऽप्यध्याहारस्तर्क ऊह इति प्रसिद्धेर्भावव्युत्पत्त्याऽध्याहारपरो विवक्षितः । न चेषेत्वेत्यादाविव वस्त्वाकाङ्क्षाभावादध्याहारो व्यर्थ इति वाच्यम् । दृष्टार्थाभावेप्युदाहृतश्रुत्या स्रवणविशरणभावरूपादृष्टार्थसम्पादकतया सार्थकत्वात् ॥ **अमन्त्रावयवत्वप्रसङ्गादिति** । अत्रापाद्यमानं मन्त्रानवयवत्वं मन्त्रेण सहैककार्यकारित्वाभावरूपं विवक्षितम् । तेनोहप्रवरनामधेयानाममन्त्रत्वस्य द्वितीये सिद्धान्तितत्वादिष्टापादनमेतदिति दूषणानवकाश इति ध्येयम् ॥ **अधिकृतत्वेनेति** । 'ङ्याप् प्रातिपदिकात्' इत्यादाविवोत्तरत्रानुषङ्गार्थत्वेनेत्यर्थः । न चैवमोङ्कारस्य तद्वदेवोत्तरसूत्रेष्वप्यन्वयप्रसङ्गः । अनन्वयेऽप्यदृष्टार्थमेवानुषङ्गस्योक्तश्रुतिसिद्धत्वात् ॥ **न च व्याख्यानत इति** । श्रौतार्थवादानुसारिव्याख्यानत इत्यर्थः ॥ **अन्तरङ्गेति** । पृथक्करणमेवात्रान्तरङ्गज्ञापकमिति भावः ॥

श्री०— **अधिकृतत्वेनेति** । सर्वत्रानुगत्यर्थत्वेनेत्यर्थः ॥ **व्याख्यानत इति** । ॐ अथात इति संहिततया निर्देशोऽपीत्यर्थः । वाक्यान्तर्गतं पृथगुच्चारणमन्तरङ्गम् । व्याख्यातृपुरुषव्याख्यानं बहिरङ्गम् ॥ **अन्यथासिद्धिरिति** । लक्षणान्तराभावे सत्यसंहिततया सम्पाठेऽखिलैः पठ्यमानत्वहेतोः अनवयवरूपसाध्यं विना सर्वत्रानुगतिज्ञापनार्थत्वेनान्यथासिद्धिरित्यर्थः ।

च०— 'आद्यंतयोरोङ्कारस्योहः कर्तव्यः' इति । सूर्यायेत्याद्यूहं प्रति अग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावेन 'प्राकृतस्थानपतितपदार्थान्तरकार्यतः ऊहः प्रयोगो विकृत उह्यमानतयोदित' इति लक्षणलक्षितत्वाभावेन मन्त्रसामसंस्कारोह इत्यादाविवोहशब्दस्य कर्मव्युत्पत्त्योह्यमानपरत्वाभावादध्याहारस्तर्क ऊह इत्यभिधानादूहवितर्क इत्यस्माद्भावसाधनघञा निष्पन्नऊहशब्दोऽध्याहारवाचकः । न च संयज्ञपतिराशिषा इषेत्वेत्यादाविवासाकाङ्क्षत्वादध्याहारो व्यर्थ इति वाच्यम् । साकाङ्क्षताराहित्येऽपि श्रौतार्थवादरूपप्रमाणप्रत्यापितस्रवणविशरणपरिहतिरूपादृष्टार्थान्तरसत्वेन तादृशप्रमाणसाहित्यस्यैव तन्त्रत्वात् । प्राथमिकोङ्कारस्याभिधास्यमानदिशा साकाङ्क्षत्वापादितदृष्टार्थत्वस्यापि सत्वाच्च । **मन्त्रानवयवत्वप्रसङ्गादिति** । मन्त्रनिर्वाह्यकार्यनिर्वाहकत्वाभावरूपमेवात्रापाद्यमानममन्त्रत्वम् । तेनोहप्रवरनामधेयानां आम्नातेष्वमन्त्रत्वमान्मातेषु हि विभागः स्यादित्युक्तदिशा मन्त्र इति अभियुक्तप्रयोगविषयत्वरूपमन्त्रत्वाभावरूपामन्त्रत्वस्य द्वितीये सिद्धान्तिततयेष्टापादनमेवैतदिति शङ्कानवकाशः ॥ **अधिकृतत्वेनेति** । अनुषज्यमानत्वेनेत्यर्थः । न चानुषक्तस्य 'ङ्याप् प्रातिपादिकात्' इत्यादेरुत्तरत्रान्वयदर्शनात्प्रकृतेऽप्युत्तरसूत्रेष्वन्वयोऽभिधातव्यः स चाशक्य इति वाच्यम् । अन्वयराहित्येऽपि दर्शितार्थवादप्रत्यापितादृष्टार्थोद्देशेनैवानुषज्यमानत्वात् ॥ **न च व्याख्यानत इति** । अणिण्ग्रहणेषु सन्देहादनिर्णयशङ्काविधूननफलकतया 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमि'तिपरिभाषाया उपेततया प्रकृते श्रौतार्थवादानुसारिव्याख्यानेनैव निर्वाहादित्यर्थः ॥ **अन्तरङ्गेति** । वाक्यघटकपदसमभिव्याहारापेक्षया व्याख्यानस्य बहिरङ्गत्वादिति भावः । निमित्तान्तरम् । उत्तरसूत्रेषु अधिकृतत्वसूचनरूपम् । हेतोः लक्षणान्तरेत्यादिनाऽभिहितस्य अन्यथासिद्धिरप्रयोजकता ॥

**सु०— ननु च श्रौतार्थवादबलेनाद्यन्तयोरोङ्कारस्योहो वा प्राङ्मुखत्वादिवद्बहिर्भूतस्यैव उच्चारणं वा विधेयत्वेन कल्प्यमिति सन्दिह्यते । सत्यम् । सन्देहेऽपि तया प्रणाड्यानुमानस्य सन्दिग्धान्यथासिद्ध्याऽप्याभासत्वमेव । वक्ष्यमाणन्यायेनोङ्कारार्थस्य प्रथमसूत्रवाक्यार्थे समन्वयेन निश्चयोपपत्तौ बाधितविषयं चानुमानमिति । अथवा दृष्टान्तदूषणमनेन क्रियते । तथा हि । अखिलैर्वेदपाठकैः पृथग्रूपान्तरेण स्थानव्यत्यासेन यदोङ्क्रियते तदुक्तन्यायेनादावुच्चारणेनैव**

लब्धेन सर्वत्रानुगतत्वेन कारणेनैवोपपद्यत इत्यनेन दृष्टान्ते साधकस्य हेतोरन्यथासिद्धिरुक्ता । तथा च दृष्टान्तस्य साध्यविकलतेति । एवमनुमाने निरस्ते निरपवादेनादावुच्चारणेनोङ्कारस्य प्रथमसूत्रावयवतासिद्धावुक्तमुपपन्नम् । तदेवं सिद्धे शास्त्रव्याख्येयत्वे प्रेक्षावत्प्रवृत्तिविषयस्यैव आरम्भणीयत्वात्प्रयोजनाभिधेयसम्बन्धवत्येव च प्रेक्षावतां प्रवृत्तेरारम्भणीयतासिद्धये प्रेक्षावतः प्रवर्तयितुं प्रयोजनाद्यभिसम्बन्धं प्रतिपादयतः प्रथमसूत्रस्य व्याख्यामोतत्ववाचीत्यादिना आरभते ।

वा० — ननु चार्थवादस्यादृष्टफलबोधकत्वेन वाक्यार्थे समन्वयरूपदृष्टफलसमर्पकत्वाभावेन ब्रह्मविद्योच्चारणदशायामोङ्कारोच्चारणमात्रस्यार्थवादेन सिद्धावपि न नियमेनोहसिद्धिः । ऊहेनेव रात्रिसत्र-न्यायेन प्राङ्मुखत्वादिवद्बहिर्भूतस्योच्चारणस्य विधिकल्पनयाऽप्यर्थवादस्योपपत्तेः । एवं चार्थवादसाम-र्थ्यादित्युक्तमनुपपन्नमिति सामर्थ्यरूपान्यथानुपपत्तावन्यथासिद्धिं शङ्कते ॥ **ननु चेति** । सन्देहेऽप्यूहपक्षे ऊह्यमानस्यावयवत्वात्प्रतिसूत्रं चोच्चारणे गौरवादधिकृतत्वेनादावुच्चारणे सिद्धेऽधिकारज्ञापकतयाऽसंहिततया निर्देशोपपत्तौ हेतोरन्यथासिद्धिः पक्षान्तरे तु नेति सन्दिग्धान्यथासिद्धिरप्यनुमानदूषणमेवेत्याह ॥ **सन्देहेऽपीति** । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्त्वोङ्कारस्य विषयादिसमर्पकतया प्रथमसूत्रवाक्यार्थे समन्वयस्य वक्ष्यमाणत्वाद्वाक्यार्थान्वितस्य च तद्बहिर्भावासम्भवादर्थवादो बहिर्भूतोच्चारणविधिकल्पनायां प्रवृत्तो वक्ष्यमाणन्यायानुसन्धानेन प्रथमसूत्र एव कुण्ठितः । तत्राप्रसराद्विधिकल्पनामार्गं परित्यज्योक्तरीत्या तदर्थानन्वितत्वेऽपि तदेककार्यकारित्वस्याध्याहृतेऽपि सम्भवेनाध्याहारपक्षे दोषमनुपलभमानः सर्वसाधारण-मध्याहारमार्गमेवाश्रयतीति निश्चितान्यथासिद्धिरेव । प्रथमसूत्रवाक्यार्थान्वयेनावयवत्वनिश्चयाद्बाधित-विषयत्वं चानुमानस्येत्याशयेनाह ॥ **वक्ष्यमाणेति** । यद्वा न केवलमर्थवादबलेन सन्दिग्धान्यथासिद्ध्या अनुमानस्याभासत्वं वक्ष्यमाणन्यायेन बाधितविषयत्वाच्चेत्याशयेनाह ॥ **वक्ष्यमाणेति** ॥ **उक्तन्यायेन इति** । अर्थवादबलादूहे सिद्धे प्रतिवाक्यमुच्चारणे गौरवं स्यादित्युक्तन्यायेनेत्यर्थः । अर्थवादवक्ष्यमाण-न्याययोरवयवत्वसाधकत्वेनोक्तत्वेऽपि तयोः परानुमानदूषणे व्यापृतत्वेनोपक्रमोक्तसाधकमेवावयवत्वसाधक-तयोपसंहरति ॥ **एवमिति** । विस्तरस्तु चन्द्रिकायां द्रष्टव्यः । ओतत्ववाचीत्यादेरपि पूर्ववद्व्याख्येयतया उपयुक्तप्रमेयप्रतिपादकत्वं न तु व्याख्यानत्वमिति भ्रान्तिं निवारयितुमोतत्ववाचीत्यादिव्याख्यानोपयुक्त-प्रमेयोपक्षेपायोतत्ववाचीत्यादिभाष्यस्योपलक्षणत्वान्न सूत्रप्रतिपाद्यतत्फलानुक्त्या भाष्ये न्यूनतेत्यर्थसूचनाय च फलफलिभावोपपादनपुरःसरं परमावान्तरफले प्रतिपाद्यं च कथयन्नेव पूर्वग्रन्थासम्भिन्नतयोत्तरग्रन्थ-प्रतिपाद्यं कथयति ॥ **तदेवमिति** ।

स०— परिहरति ॥ **सन्देहेऽपीति** । प्रणाड्या परम्परया । न केवलमर्थवादबलादोङ्कारस्य प्रथमसूत्रावयवत्वं किन्तु समवेतार्थत्वादपीति न सन्देह इत्याह ॥ **वक्ष्यमाणेति** ॥ **ओतत्ववाचीत्यादिनेति शेषः** । दृष्टान्तदूषणं साध्यवैकल्यलक्षणम् । एवं च मङ्गलाचारादप्युपपन्नं ब्रह्मसूत्राणां व्याख्येयत्वमिति सिद्धम् ॥

प०— **ऊहो वेति** । अवयवतयाऽध्याहारो वेत्यर्थः । उत्तरमाह ॥ **सत्यं सन्देहेऽपीति** ॥ **तया प्रणाड्येति** । प्रागुक्तकोटिद्वयरूपप्रणाड्येत्यर्थः । यद्वा एतदुक्तं भवतीत्यादिनोक्तप्रणाड्येत्यर्थः ॥ **वक्ष्यमाणेति** । ओतत्ववाचीत्यादिना वक्ष्यमाणेत्यर्थः । अनेन । सर्वत्रेत्यर्थेन । रूपान्तरेणेत्यस्यार्थः स्थानेति ॥ **हेतोरिति** । अन्यान्यस्थाने पठ्यमानत्वरूपस्य वेदोपक्रमे पठ्यमानोङ्काररूपदृष्टान्ते वेदानवयवत्वसाधकहेतोरित्यर्थः । अग्निमीळ इत्यादौ स्रवणादिदोषपरिहारकतया अध्यापकैरुच्चार्यमाणस्य वेदवाक्यावयवत्वं च वेदबोधाम्न्यादिरूपार्थे गुणपूर्णत्वादिविशेषणार्पकत्वानुसन्धानाभिप्रायेणेति ध्येयम् । तथैव चन्द्रिकोक्तिः ॥ **साध्येति** । अनवयवत्वरूपसाध्यविकलतेत्यर्थः । अनुमाने सूत्रानवयवत्वसाधकानुमान इत्यर्थः ॥ **उक्तमिति** । ताराथमूलत्वमित्युक्तमित्यर्थः ॥छा॥ **उपोद्घातः समाप्तः** ॥छा॥ ओतत्ववाचीत्यादेरप्युपोद्घातत्वभ्रमनिरासाय आह ॥ **तदेवमिति** । उक्तप्रकारेण प्रामाण्यमङ्गलाचाराभ्यां युक्तत्वासिद्धे व्याख्येयत्व इत्यस्य प्रथमसूत्रस्य व्याख्यामारभत इत्यनेनान्वयः । शङ्कोत्थापनाय वा वैयर्थ्यनिरासाय वा आद्यसूत्रतात्पर्यमाह ॥ **प्रेक्षावदिति** ॥ **प्रयोजनेति** । प्रयोजनविषयसम्बन्धवतीति वा ताभ्यां सम्भवतीति वाऽर्थः ॥ **प्रयोजनाद्यभिसम्बन्धमिति** । शास्त्रस्येत्यनुषङ्गः । मोक्षरूपप्रयोजनेन ब्रह्मरूपविषयज्ञानद्वारा जन्यजनकभावरूपसम्बन्धं ब्रह्मसूत्रसन्दर्भरूपशास्त्रस्य प्रतिपादयत इत्यर्थः । तद्ज्ञानाधीनत्वात्प्रवृत्तेरिति भावः । एतच्च जिज्ञासाद्वारेत्यग्रे व्यक्तम् ।

या०— **तया प्रणाड्येति** । श्रौतार्थवादबलेनाद्यन्तयोरोङ्कारस्योहविधिकल्पने तेन चावयवत्वकल्पनासिद्धौ प्रतिसूत्रमाद्यन्तयोरुच्चारणे गौरवं स्यादित्यादावेवोङ्कारोऽधिकृतत्वेनोच्चार्येह तस्य संहिततया निर्देशे प्रथमसूत्रावयव एवायं विज्ञायेत तन्मा विज्ञायीति शिष्टैः पृथगोङ्क्रियते । एवं च हेतोरन्यथासिद्धिरिति पूर्वोक्तया परम्परयेत्यर्थः ॥ **प्रथमसूत्र वाक्यार्थ इति** । न चात्रोङ्कारस्तु पृथगुच्चारितो वेदितव्यः । नाथशब्दवत्सूत्रोपनिबद्ध इति सन्न्यायरत्नावलीविरोधो वाच्यः । सन्न्यायरत्नावल्युक्तं पृथक्त्वमसंहिततयोच्चार्यमाणत्वं विवक्षितं न त्वनवयवत्वरूपम् । अन्यथा 'ॐकारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात्' इति भाष्योदाहृतप्रमाणेन तत्र ताराथमूलत्वमित्यनुव्याख्यानेन च विरोधप्रसङ्गात् । अतो न कोऽपि विरोध इति । रूपान्तरेणेत्यस्यैव विवरणं स्थानव्यत्यासेनेति ॥ **आदावुच्चारणेनेति** ।

पूर्वोक्तस्थापनानुमानरूपेणेत्यर्थः ॥ **प्रेक्षावत्प्रवृत्तिविषयस्यैवारम्भणीयत्वादिति** । यद्यप्यत्रारम्भणीयत्वं मायावादखण्डनटीकोक्तं प्रेक्षावदुपादेयत्वरूपं ग्रहीतुं न शक्यम् । तस्य प्रेक्षावत्प्रवृत्तिविषयत्वरूपतया अत्रोक्तप्रयोज्यप्रयोजकभावानुपपत्तेः । तथाऽपि श्रोतव्यत्वादिरूपमन्यदेवेति द्रष्टव्यम् ।

**श्री०**— उत्तरमाह ॥ **सन्देहेऽपीति** । अनुमानस्याखिलैः पठ्यमानत्वहेतोः ॥ **उक्तन्यायेन इति** । सर्वाणि वेदवाक्यानि प्रत्येकं परब्रह्मप्रतिपादकतया अवान्तरब्रह्मविद्याः । तत्र 'स्रवत्यनोङ्कृतं ब्रह्म' इति वचनात्सर्वास्वपि ब्रह्मविद्यास्वाद्यन्तयोरोङ्कारस्योहः कर्तव्यः । प्रतिवाक्यमाद्यन्तयोरुच्चारणे गौरवं स्यादित्यधिकृतत्वेनादावुच्चार्यत इत्येवमुक्तरीत्येत्यर्थः ॥ **दृष्टान्तसाधकहेतोरिति** । वेदाध्ययनोपक्रमे अध्येतृभिरुच्चार्यमाणोङ्काररूपदृष्टान्ते वेदवाक्यानवयवत्वरूपसाध्यसाधकस्याध्ययनोपक्रमविरतिवैचित्र्येण तत्तत्स्थानपरित्यागेनान्यान्यस्थाने पठ्यमानत्वहेतोरनवयवत्वं विना सर्वत्रानुगतत्वेनान्यथासिद्धिः सर्वत्रानुगतत्वेनेति मूलवाक्येनोक्ता भवतीत्यर्थः ॥ **साध्यविकलतेति** । तत्रापि स्रवणाभावसम्पादकतया पुण्यसम्पादकत्वेन वेदेन सहैककार्यकारित्वरूपावयवत्वस्य सत्वादिति भावः ॥ **उक्तमुपपन्नमिति** । अयमोङ्कारः सूत्रकृता मङ्गलार्थतया सूत्रादावुपनिबद्ध इत्युपपन्न इत्यर्थः । अत्रोङ्कारस्य प्रथमसूत्रावयवत्वं नाम तदुपयुक्तार्थप्रतिपादकत्वम् । तथा हि । ब्रह्मजिज्ञासेत्यत्र निर्विषयत्वशङ्कापरिहाराय ब्रह्मपदेन वेदप्रतिपाद्यत्वरूपं विषयत्वमीश्वरस्योक्तम् । तत्कथमितिशङ्कायां वेदस्येश्वरप्रतिपादकतया तद्विषयकत्वसमर्थनार्थमोङ्कारः सूत्रकृता ब्रह्मणि प्रयुक्तः । तत्प्रकारश्च स एव ब्रह्मशब्दार्थो व्याहृतीनां च' इत्यादिना उत्तरत्र स्पष्टः । द्वितीयादिसूत्रेष्वोङ्कारस्य तदवयवत्वं नाम तेन सहैककार्यकारित्वम् । स्रवणविशरणाभावसम्पादकतया सूत्रेण सह पुण्यरूपैककार्यकारित्वात् । आद्यन्तयोरोङ्कारपूर्वकं सूत्रोच्चारणे पुण्यं सम्पद्यत इति यावत् । एतादृशादृष्टार्थत्वमोङ्कारस्य प्रथमसूत्रेऽप्यस्ति । तथाच प्रथमसूत्रे ॐकारस्य स्विष्टकृदादिवत् दृष्टादृष्टोभयार्थत्वम् । द्वितीयादिसूत्रे तु केवलादृष्टार्थत्वमेवेति मन्तव्यम् ॥

**च०**— **तया प्रणाडचेति** । श्रौतार्थवादमहिम्नोङ्कारस्योहविधेरवधृत्या तदवयवतानिर्णीत्या प्रतिसूत्रमाद्यन्तयोरुच्चारणे गौरवं स्यादित्यादावेवोङ्कारोऽधिकृतत्वेनोच्चार्यते अस्य संहितया निर्देशे प्रथमसूत्रावयव एवायं विज्ञायेत तन्मा विज्ञायीति शिष्टैः पृथगोङ्क्रियते । तथाच हेतोरसिद्धिरुक्ता भवतीति उक्तदिशेत्यर्थः । सन्दिग्धान्यथासिद्ध्या । अप्रयोजकताशङ्कया । आभासत्वमेव । रत्नकोशकारान्यमते संशयात्मकानुमितेरनुपगमेन प्रकृतसाध्यविधेयकानुमित्यनुपपादकत्वमेव । **वक्ष्यमाणन्यायेन** । तदेतावोङ्कारब्रह्मशब्दावपि यौगिकौ जिज्ञास्यमनन्तगुणपूर्णं प्रतिपादयन्तावित्यादिनोङ्कारस्याभिधास्यमानविषयसमर्पकत्वाश्रयन्यायेन । ॐकारार्थस्य । गुणपूर्णत्वस्य प्रथमसूत्रवाक्यार्थे विशिष्टाधिकारिकमोक्षफलकजीवान्यभूतधर्मि विशेषितजिज्ञासालक्षणधर्मि विशेषितत्वं विषयिताप्रत्यासत्त्या । समन्वयेन । प्रकारिता

प्रत्यासत्याऽन्वयोपगमेन । अनुमानमनवयवैत्वसाध्यकम् । अत्र चोङ्कारस्तु पृथगुच्चरितो वेदितव्यः न अथशब्दवत्सूत्रोपनिबद्ध इति सन्न्यायरत्नावलीग्रन्थविरोधमाशङ्कमानाश्चन्द्रिकाकाराः पृथक्त्वमूह्यमानत्वमसंहितयोच्चार्यमाणत्वरूपं 'ॐकारश्चाथशब्दश्च' इत्याद्यानुपूर्वीकभाष्योदाहृतप्रमाणेन तत्र ताराथेत्यनुव्याख्यया च विरोधादित्यभिसन्दधाना समेदधुरिति सर्वं समञ्जसम् । **दृष्टान्तदूषणम्** । साध्यवैकल्यरूपम् । अनेन ग्रन्थेन क्रियते व्युत्पाद्यते । पृथगित्यनूद्य रूपान्तरेणेति व्याख्यातं तदपि विवृणोति ॥ **स्थानव्यत्यासेनेति** । ॐक्रियते ॐइत्युच्चार्यते । तदित्युपपद्यत इत्यनेनात्वेति ॥ **आदावुच्चारणेति** । दर्शितस्थापनानुमानरूपेणेत्यर्थः । अन्यथासिद्धिः साध्यमन्तरेणापि सत्वम् ॥ **निरयवादेनेति** । अपवादान्निष्क्रान्तेनेत्यर्थः । निरादय इत्यनुशासनात् । अपवादापादानकनिष्क्रान्तिविशेषितेनेति फलिताशयः ॥ **प्रेक्षावदिति** । अत्र आरम्भणीयत्वप्रेक्षावत्प्रवृत्तिविषयत्वयोः प्रयोज्यप्रयोजकभावोक्त्या तयोः परस्परतादात्म्यप्रत्यायकटीकान्तरं विरुध्यत इति शङ्कमाना व्याकर्तारः करणयोगत्वादिरूपमन्यदेव द्रष्टव्यमिति समादधति ।

सु०— **ननु ब्रह्मज्ञानस्य मोक्षहेतुता यदि शास्त्रप्रवृत्तेः प्रागेव प्रमाणान्तरसिद्धा व्यर्थं तदा तदभिधानं शास्त्रे । प्रमाणान्तरसिद्धे क्वचिदुपदेशानपेक्षणात् । अथेहैव तन्निश्चयस्तदा प्रवृत्तौ प्रयोजनादिनिश्चयो निश्चिते च प्रयोजनादौ प्रवृत्तिरित्यन्योन्याश्रयत्वम् । अथ प्रथमसूत्रात्तन्निश्चयः । तत्रैव कथं प्रवृत्तिः । तदर्थं च प्रयोजनान्तराभिधानेऽनवस्था । एवमेव तत्र प्रवृत्तावुत्तरत्रापि तथात्वप्रसङ्गादनर्थकं सूत्रे प्रयोजनाद्यभिधानमिति । उच्यते । त्रिविधा हि पुंसां चित्तवृत्तिः । अनुभव इच्छा प्रयत्नश्च । तत्र साधनगोचराविच्छाप्रयत्नौ प्रवृत्तिरिति उच्येते । न त्वनुभवो नापि फलगोचरेच्छा । येन तयोरपि प्रयोजननिश्चयापेक्षा स्यात् । न हि उपेक्षणीयं निष्प्रयोजनमिति नानुभूयते । नापि सुखं प्रयोजनान्तररहितमिति नेष्यते । न च मुमुक्षुणा अनपेक्षिते स्वर्गे यागादिकं तत्साधनतया नानुभूयते । पुरुषार्थसाधने तु इच्छालक्षणा प्रयत्नलक्षणा वा प्रवृत्तिस्तथा न स्वरससिद्धा । न हि कश्चित्क्षुत्प्रहाणादिकमननुसन्धाय भोक्तुमिच्छति प्रयतते वा । तस्माद्यो यत्र प्रवर्तनीयः स तत्प्रयोजनादिकं दर्शयित्वैव इति सार्थकं सूत्रे प्रयोजनाद्यभिधानम् ।**

वा०— ननु प्रथमसूत्रस्य शास्त्रप्रवृत्तिप्रयोजकप्रयोजनादिप्रतिपादकत्वं वदता तस्य शास्त्रान्तर्भावः अङ्गीक्रियते न वा । आद्येऽपि तस्य प्रमाणान्तरसिद्धब्रह्मज्ञानमोक्षसाध्यसाधनभावबोधकत्वं तदनवगततद्बोधकत्वं वा । आद्ये वाक्यप्रामाण्यस्य फलनियतत्वेनावगतार्थबोधकत्वे प्रयोजनान्तरस्याप्यभावेन अप्रामाण्यापत्तेः । द्वितीयेऽपि फलाद्यध्यायैस्तन्निश्चयः प्रथमसूत्रं तु तत्प्रतिज्ञारूपमिति वा शास्त्रैकदेश-

प्रथमसूत्रेणैव तन्निश्चयो वा । आद्ये शास्त्रप्रवृत्तिप्रयोजकप्रयोजनादिनिश्चयस्य शास्त्रप्रवृत्तिसाध्यत्वेन अन्योन्याश्रयतापत्तेः । शास्त्रान्तर्भावो नेत्याद्यद्वितीये शास्त्रैकदेशप्रथमसूत्रेणैव तन्निश्चय इति । अव्यवहितद्वितीयेऽपि प्रथमसूत्रे प्रवृत्तिः प्रयोजनादिनिश्चयसाध्या न वा । आद्ये तत्र प्रयोजनादिनिश्चायकस्य अभावे प्रवृत्त्यनुपपत्त्या तत्प्रवृत्तिप्रयोजकप्रयोजनादिनिश्चायकान्तराभिधाने तत्प्रवृत्तिप्रयोजकप्रयोजनादिनिश्चायकान्तरपरम्परयाऽनवस्थापत्तेः । नेति पक्षे न्यायसाम्येन शास्त्रप्रवृत्तेरपि तन्निश्चयाभावेऽप्युपपत्त्या प्रथमसूत्रे तदभिधानं व्यर्थं स्यादित्याशङ्कते ॥ **नन्विति** । अत्र शास्त्रस्य प्रयोजनहेतुतेति वक्तव्ये न्यायप्रथनात्मकशास्त्रस्य न्यायानुसन्धानफलकत्वस्य न्यायानुसन्धानरूपविचारस्य च विचार्यज्ञानहेतुताया लोकसिद्धत्वाल्लोकतोऽसिद्धब्रह्मज्ञानमोक्षसाध्यसाधनभावस्यैव सूत्रप्रमेयत्वमित्यभिप्रेत्य ब्रह्मज्ञानस्य मोक्षहेतुता इत्युक्तम् । प्रमाणान्तरसिद्धता च विचारस्य ज्ञानहेतुतैव प्रत्यक्षादिसिद्धता वा । अलौकिकत्वादस्यार्थस्य श्रुतिसिद्धता वेति द्रष्टव्यम् । सूत्रे प्रकृते शास्त्र इत्युक्तिः प्रथमसूत्रस्य शास्त्रान्तर्भावपक्षे दूषणत्वं सूचयितुं तथा चेहैवेति शास्त्रपरामर्शादन्योन्याश्रयतोपपादनसौकर्यम् । प्रमाणान्तरसिद्धे क्वचिदुपदेशानपेक्षणादिति च श्रौतप्रयोजनादेर्न्यायेनोपपादनार्थमिति वक्ष्यमाणव्यावर्त्यत्वेनेति द्रष्टव्यम् । विमता शास्त्रे प्रवृत्तिः प्रयोजनादिज्ञानसाध्या प्रवृत्तित्वाद्बालस्य स्तनपानप्रवृत्तिवदित्यनुमानेन प्रवृत्तेः प्रयोजनादिज्ञानसाध्यत्वसिद्धेः सूत्रकारेण शास्त्रे प्रवर्तनीयं प्रति प्रयोजनादि दर्शनीयमेवेति युक्तं सूत्रे तदभिधानमिति वक्तुं यत्किञ्चिदनुभवे फलेच्छायां स्वानपेक्षितप्रयोजनसाधनानुभवे च प्रवृत्तित्वहेतोर्व्यभिचारादनुमानमेव अयुक्तमित्यतः साधनगोचरेच्छाप्रयत्नयोरेव प्रवृत्तित्वेनोभयविधानुभवफलेच्छयोश्चित्तवृत्तित्वेऽपि प्रवृत्तित्वाभावान्न व्यभिचार इत्याह ॥ **उच्यत इति** ॥ **स्यादिति** । अन्यथा व्यभिचारापत्तेरिति भावः । ननु साध्यसत्त्वमेवाभ्युपगम्य व्यभिचारपरिहारसम्भवे एवं वैलक्षण्यमङ्गीकृत्य हेत्वभावव्युत्पादनमनुचितमित्यतस्तत्र साध्याभ्युपगमस्यायुक्ततामाह ॥ **न हीत्यादिना** । उपेक्षणीयस्य स्वस्य प्रयोजनत्वाभावे सति प्रयोजनान्तरशून्यत्वं सुखस्य तु प्रयोजनान्तरशून्यत्वमात्रं यागादेस्त्वनपेक्षितप्रयोजनत्वमिति विशेषः (भेदः) । ननु पक्षीभूतप्रवृत्तेरप्यनुभवादिवत्प्रयोजनादिनिरपेक्षत्वे बाधः स्यादित्यत आह ॥ **पुरुषार्थेति** । अत्रार्थसाधन इत्यंशेन सुखोपेक्षणीययोः पुरुषार्थेत्यंशेनानपेक्षितप्रयोजनस्य व्यावृत्तिरिति द्रष्टव्यम् । तदेव उपपादयति ॥ **न हीति** । एवमाभासोद्धारे सिद्धमनुमानमित्यभिप्रेत्योपसंहरति ॥ **तस्मादिति** । यद्वा । यदि पक्षीभूतप्रवृत्तेः प्रयोजनादिनिश्चयसाध्यत्वं तर्हि ज्ञानफलेच्छयोरपि प्रवृत्तित्वाविशेषात् प्रयोजनादिनिश्चयसाध्यता स्यात् । अन्यथा पक्षीकृतप्रवृत्तेरपि न स्यादिति पूर्वोक्तानुमाने तर्कपराहतौ प्राप्तायां ज्ञानेच्छाप्रयत्नानां चित्तवृत्तित्वाविशेषेऽपि प्रवृत्तित्वाविशेषोऽसिद्धः । साधनेच्छाप्रयत्नयोरेव प्रवृत्तित्वेन ज्ञानफलेच्छयोः प्रवृत्तित्वाभावात् । तदभावे तत्प्रयोज्यप्रयोजनादिनिश्चयसापेक्षताया अपि

अभावात् पक्षीभूतप्रवृत्तेश्च प्रयोजकवत्वात् प्रयोज्यवत्त्वमिति व्याप्तिविकलोऽयं तर्काभास इत्यभिप्रेत्याह ॥ **उच्यत इति** । ननु ज्ञानफलेच्छयोरपि प्रयोजकप्रयोज्ययोः प्रवृत्तित्वप्रयोजनादिनिश्चयसापेक्षत्वयोः स्वीकारेणैव तर्कस्येष्टापादनत्वे वक्तुं शक्ये व्याप्तिवैकल्योक्तौ किं बीजमित्यतः प्रयोजनादिनिश्चय-सापेक्षत्वस्य तत्रासम्भवित्वाद् युक्तं व्याप्तिवैकल्यकथनमित्यभिप्रेत्याह ॥ **न हीत्यादिना** । पक्षीकृतप्रवृत्तावपि प्रयोजनादिनिश्चयसाध्यत्वस्यासम्भवित्वे तत्साधनमशक्यमित्यत आह ॥ **पुरुषार्थेति** । एवं च तर्कपराहतेरभावाद् युक्तमनुमानमित्यभिप्रेत्य तत्फलमुपसंहारव्याजेनाह ॥ **तस्मादिति** । अथवा प्रथमसूत्रप्रवृत्तेः प्रयोजनान्तराभिधानेऽनवस्थां प्रसञ्जयन्प्रष्टव्यः । ज्योतिष्टोमेन स्वर्गकाम इत्यादि-वाक्यजनितमुमुक्ष्वनभिमतस्वर्गादिसाधनतानुभवस्येव प्रथमसूत्राज्जायमानफलसाधनतानुभवमात्रस्य प्रवृत्ति-शब्दार्थत्वमित्यभिप्रेत्य तदर्थं प्रयोजनान्तराभिधानेऽनवस्थाप्रसङ्गं ब्रूषे आहोस्वित्प्रथमसूत्रसाध्यजिज्ञासा-वाक्यविचाररूपपुरुषार्थसाधनेच्छाप्रयत्नरूपप्रथमसूत्रप्रवृत्तेःप्रयोजनादिनिश्चयसाध्यत्वेऽनवस्थाप्रसङ्गं ब्रूषे । नाद्यः । दृष्टान्तदार्ष्टान्तिकानुभवद्वयस्यापि प्रयोजनादिनिश्चयसाध्यत्वानभ्युपगमात् । न च तर्ह्येवमेव प्रवृत्तावित्युक्तदूषणप्रसङ्गः । अनुभवद्वयस्य चित्तवृत्तित्वेऽपि प्रवृत्तित्वाभावेन तद्दूषणाप्रवृत्तेरित्यभिप्रेत्य चित्तवृत्तिप्रवृत्तिस्वरूपं विवेचयति ॥ **उच्यत इति** । न केवलं प्रवृत्तित्वाभावादनुभवादेः प्रयोजनादि-निश्चयसापेक्षत्वाभावोऽपि त्वसम्भावितत्वाच्चेत्याह ॥ **न हीत्यादिना** । अत्र पक्षे उपेक्षणीयानुभव-फलेच्छयोर्दृष्टान्ततयोपादानमिति मन्तव्यम् । द्वितीये तु प्रथमसूत्रप्रवृत्तेः प्रयोजनादिनिश्चयसापेक्षत्व-मनुमतमेव । अनवस्थां च परिहरिष्याम इत्यभिप्रेत्यानुभवादेरिव प्रवृत्तेः प्रयोजनादिनिश्चयसापेक्षत्वं नासम्भावितमित्याह ॥ **पुरुषार्थेति** । फलितमाह ॥ **तस्मादिति** ।

**स०**— शास्त्रे प्रेक्षावत्प्रवृत्त्यर्थं प्रयोजनादिप्रतिपादकसूत्रार्थपरं भाषणं चानर्थकमिति आक्षिपति ॥ **ननु ब्रह्मज्ञानस्येति** । किं प्रवृत्तिमात्रे प्रयोजनादिनिश्चयस्य कारणत्वमेतच्छास्त्रप्रवृत्तावेव । आद्येऽपि किं प्रयोजनादिनिश्चयः प्रमाणान्तरेणोत प्रथमसूत्रेण । द्वितीयेऽपि किं प्रथमसूत्रं शास्त्रान्तर्भूतमुतबहिर्भूतमिति विकल्पान्मनसि निधाय प्रथमे प्रथममाशङ्क्य परिहरति ॥ **यदि शास्त्रप्रवृत्तेः प्रागेवेति** । शास्त्रारम्भ-हेतुभूतप्रयोजनादिप्रतिपादकस्यापि यदि श्रुत्यादिसिद्धानुवादकत्वं तर्हि तत एव तन्निश्चयात् सूत्रानर्थक्यम् । यद्यपि प्रमाणानां सम्प्लवोऽभिमतः तथापि शब्दस्यापेक्षितार्थबोधकत्वात् सिद्धे चोपदेशानपेक्षणादित्युक्तम् ॥ **क्वचिदिति** । निष्प्रयोजनस्थल इत्यर्थः । तेन 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इत्यादौ द्रव्यदेवता-संयोगाद्यागपरत्वे अर्थप्राप्तनिर्वापानुवादकत्वेऽपि धातोर्यथा अर्थवत्वं तथाऽत्रेति निरस्तम् । तत्र निर्वापवानयं याग इति प्राशस्त्यरूपार्थबोधकत्वेन सार्थक्यादिति भावः ॥ प्रथमस्य द्वितीये प्रथममाशङ्क्य पराचष्टे ॥ **अथेहैवेति** । इह शास्त्रे । तस्यैव प्रयोजनाद्यभावात्प्रवृत्त्यनुपपत्तौ शास्त्रीयप्रवृत्तिप्रयोजकत्वं न स्यात् ।

तेनैव तत्प्रतिपादनेऽन्योन्याश्रयापत्तेरिति भावः ॥ **तदर्थं चेति** । प्रयोजनादिप्रतिपादकस्यापि प्रयोजनादिरहितत्वे प्रवृत्त्यभावापत्तेः प्रयोजनादिमत्वं स्वत इत्युक्ते आत्माश्रयात्, तदपेक्षया प्रथमसूत्राच्चेदन्योन्याश्रयात् तस्यापि अन्यतश्चेत्तस्याप्येवमित्यनवस्थेति भावः । आद्ये द्वितीयं निराकरोति ॥ **एवमेवेति** । प्रयोजनादिमत्येव प्रवृत्तेः स्वारसिकत्वात् प्रथमसूत्रे प्रवृत्त्यभावे शास्त्रस्य प्रयोजनादिमत्त्वमेव न सिद्ध्येदिति भावः ॥ प्रवृत्तिमात्रस्य प्रयोजनादिनिश्चयसापेक्षत्वात् शास्त्रीयप्रवृत्तिप्रयोजनादिप्रतिपादकं प्रथमसूत्रं सार्थकमेव । ननु प्रवृत्तिमात्रस्य प्रयोजनादिनिश्चयसापेक्षत्वे अनुभवादेरपि प्रवृत्तित्वात्सापेक्षता स्यादित्यतो या प्रवृत्तिः सा प्रयोजनादिनिश्चयसापेक्षा या प्रयोजनादिनिश्चयापेक्षा न सा प्रवृत्तिरिति वक्तुं प्रवृत्तिविवेकार्थं चित्तवृत्तिविभागमाह ॥ **त्रिविधा हीति** । अत्र प्रवृत्तिमात्रे प्रयोजनादिनिश्चयो हेतुरिति प्रथमपक्षान्तर्गतः प्रमाणान्तरेण प्रयोजनादिनिश्चय इति पक्षः । प्रथमसूत्रेणेत्याद्यद्वितीयेऽपि प्रथमसूत्रं शास्त्रान्तर्भूतमिति प्रथमपक्षः शास्त्रीयप्रवृत्तावेव प्रयोजनादिनिश्चयो हेतुरिति ॥ **आद्यद्वितीयपक्ष इति** । पक्षत्रयस्यानङ्गीकारपराहतत्वात् न तत्पक्षोक्तदोषावकाशः । प्रथमसूत्रेण तन्निश्चयपक्षोक्तदोषं तु 'अध्ययनविध्यादिवदस्याप्यत एवारम्भणीयत्वसिद्धेर्नानवस्थादिदोषोऽपि' इत्युत्तरत्र परिहरिष्यतीति द्रष्टव्यम् । अथवा तत्र तावद्विमता प्रवृत्तिः प्रयोजनादिनिश्चयसापेक्षा प्रवृत्तित्वाद्भोजनादिप्रवृत्तिवदिति शास्त्रविषयप्रवृत्तेः प्रयोजनादिनिश्चयपूर्वकत्वनियमान्नैवमेव प्रवृत्तिर्युक्तेत्याह ॥ **उच्यत इति** । इच्छाप्रयत्नानुभवानां एव प्रवृत्तित्वात्सुखादिविषयेच्छानुभवयोः प्रयोजनान्तराभावात् प्रवृत्तित्वहेतोर्व्यभिचार इत्यत आह ॥ **त्रिविधा हीति** । तत्र तेषां मध्ये सुखादिविषयेच्छानुभवयोः प्रयोजनान्तराभावात्प्रवृत्तित्वहेतोर्व्यभिचार इत्यत आह ॥ **प्रवृत्तीति** । प्रवृत्तिशब्दवाच्यत्वाभावान्न व्यभिचार इत्यर्थः ॥ **न त्विति** । तयोः प्रवृत्तित्वस्यैवाभावात्तन्निबन्धनं प्रयोजनान्तरवत्त्वमपि नास्ति । यतः सपक्षत्वं स्यादित्यर्थः ॥ **न हीति** । प्रमाणविरुद्धं च तयोः प्रयोजनान्तरवत्त्वम् । स्वर्गस्य सुखत्वेऽप्यपेक्षितत्वाभावादैहिकामुष्मिकफलवैराग्यवतेत्यभिप्रेत्य **मुमुक्षुणेत्युक्तम्** ॥ **पुरुषार्थेति** । फलगोचरेच्छादेः प्रवृत्तित्वमेव नास्तीत्युक्तम् । अस्तु वा तथापि न व्यभिचारः । अस्वारसिकप्रवृत्तित्वस्य हेतुत्वादिति भावः । अथवा न चै(नन्वे)वं तर्हि साधनगोचरेच्छादिकं न फलवत् इच्छादित्वात्फलगोचरेच्छावदिति फलस्यानर्थक्यम् । अत्रास्य स्वारसिकेच्छादित्वमुपाधिः न चोपेक्षणीये साध्याव्यापकता, साधनावच्छिन्ने साध्ये अस्योपाधित्वादित्याह ॥ **पुरुषार्थेति** । ननु प्रवृत्तेरपि प्रयोजनादिपूर्वकत्वाभावे किं बाधकं तत्राह ॥ **न हीति** । प्रवृत्त्यनुपपत्तिः बाधिकेत्यर्थः । तस्मादिति व्याप्तिप्रदर्शनं इतीत्युपनयनिगमने । इति शब्दो हेतौ । यस्मादियं प्रवृत्तिः तस्मात्प्रयोजनाद्यभिधानपूर्विका इति ।

प०— प्रयोजनाद्यभिसम्बन्धज्ञानं प्रवृत्तिहेतुरित्युक्तम् । तत्किं मानान्तरेणार्थैतच्छास्त्रेणोताद्य-सूत्रेणेति विकल्पान्क्रमेण निराह ॥ **नन्वित्यादिना** ॥ **ब्रह्मज्ञानस्य मोक्षहेतुतेति** । ब्रह्मज्ञानद्वारा शास्त्रस्य मोक्षहेतुतेत्यर्थः । यद्यपि प्रयोजनाद्यभिसम्बन्धं प्रतिपादयतः प्रथमसूत्रस्येत्युक्तत्वान्न कोट्यन्तर-शङ्काऽवकाशः । शास्त्रे प्रवृत्त्यर्थं तस्य प्रयोजनाद्यभिसम्बन्धाभिधानमाद्यसूत्रे चेत्तत्रैव कथं प्रवृत्तिरित्येव शङ्कनीयम् । तथापि यदि कश्चिदन्यत एव तद्ज्ञानमिति ब्रूयात्तदा तं प्रत्युत्तरं वक्तुं परिशेषादाद्यसूत्रादेव तदिति दृढीकर्तुं प्रमाणान्तरसिद्धेत्यादिकोटेरप्युपन्यास इत्यदोषः ॥ **कथमिति** । आद्यसूत्रजन्योक्तरूप-निश्चयस्यापि फलान्तरहेतुत्वानिश्चये तज्जनक आद्यसूत्रेऽपि प्रवृत्त्ययोगादिति भावः ॥ **तदर्थमिति** । यथा जन्माद्यस्येत्यादिशास्त्रप्रवृत्तिहेतुतया तज्जन्यब्रह्मज्ञानद्वारा तस्य प्रयोजनाद्यभिसम्बन्धज्ञानजननाय आद्यसूत्रमित्युच्यते । तथाऽऽद्यसूत्रेऽपि प्रवृत्त्यर्थमाद्यसूत्रस्यापि तज्जन्योक्तरूपज्ञानद्वारा तस्य प्रयोजना-द्यभिसम्बन्धं ज्ञापयितुं सूत्रान्तरं तत्राप्येवमित्यर्थः ॥ **एवमेवेति** । प्रयोजनहेतुत्वाननुसन्धानेनैवाद्यसूत्रे प्रवृत्तावित्यर्थः । तत्रैव कथं प्रवृत्तिरित्यादिनोक्तामनवस्थां निरसितुं प्रवृत्तिशब्दार्थं तावन्निर्धारयति ॥ **त्रिविधा हीत्यादिना** । प्रयत्नश्चेत्यनन्तरमितिशब्दोऽध्याहार्यः । इच्छा च द्वेधा । साधनगोचरा फलगोचरा चेत्यपि योज्यम् ॥ **नत्वनुभव इति** । पुमर्थसाधनत्वप्रकारकसाधनगोचरानुभव इत्यर्थः । फलगोचरेच्छाऽपि न प्रवृत्तिरित्युच्यत इत्यन्वयः ॥ **येनेति** । प्रवृत्तिशरीरप्रवेशेन निमित्तेन साधनत्व-प्रकारकसाधनगोचरनिश्चयफलेच्छयोरपि स्वस्वविषयस्य स्वस्य वा फलहेतुत्वनिश्चयापेक्षा स्यात्तथा तन्निमित्ता-नवस्था च स्यादित्यपि योज्यम् ॥ एतच्चोपलक्षणम् । येन फलेच्छापि फलान्तराधीनेच्छा स्यात् । तथा तन्निमित्तानवस्था च स्यादित्यपि ध्येयम् ॥ **प्रयोजननिश्चयापेक्षेत्यस्य** प्रयोजनहेतुत्वनिश्चयापेक्षेत्यर्थः । साधनानुभवफलेच्छयोः प्रयोजनापेक्षा नेत्येतत्क्रमेण व्यनक्ति ॥ **न हीति** । ननूक्तरूपानुभवस्य फला-न्तरानपेक्षत्वेऽपि इच्छाप्रयत्नयोरेवं फलेच्छापेक्षत्वं तु स्यादित्यतस्तदपि नेत्याह ॥ **न चेति** । अनपेक्षितत्वे हेतुः मुमुक्षुणेति । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिवाक्यश्रवणे सति स्वर्गादौ विरागिणोऽपि व्युत्पन्नस्य वाक्यार्थबोधोदयानुभवादिति भावः । ननु यथाऽऽद्यसूत्राच्छास्त्रस्य पुमर्थहेतुत्वानुभवस्तस्य फलहेतुत्वज्ञानानपेक्षस्तथेच्छाप्रयत्नावपि तदनपेक्षौ स्याताम् । एवं चाद्यसूत्रं व्यर्थमित्यत आह ॥ **पुरुषार्थसाधने त्विति** । शास्त्ररूप इति भावः । इच्छा प्रारम्भेच्छा ॥ **प्रयत्नेति** । श्रवणाद्यनुकूल-प्रयत्नेत्यर्थः ॥ **न स्वरससिद्धेति** । पुरुषार्थहेतुत्वज्ञानं विना फलेच्छां च विना न सिद्धेत्यर्थः । तद्व्यनक्ति ॥ **न हीति** । क्षुत्प्रहाणादिकं भोजनसाध्यत्वेनाननुसन्धायेत्यर्थः ॥ **सार्थकमिति** । एतेन आद्यपक्षे भाष्यकारीयं प्रयोजनाभिधेयसम्बन्धव्युत्पादनमपि समर्थितं ध्येयम् ।

**या०**— प्रथमसूत्रादेव ब्रह्मज्ञानस्य मोक्षहेतुत्वनिश्चयः । न च प्रयोजनाद्यनिश्चये तत्रैव कथं प्रवृत्तिरिति वाच्यम् । तत्राप्रवृत्तस्यापि घनगर्जितन्यायेन प्रथमसूत्रश्रवणे व्युत्पन्नस्य मुमुक्षोर्ब्रह्मज्ञानं मोक्षहेतुरित्यनुभवोपपत्तेरित्यभिप्रेत्य समाधानमाह ॥ **उच्यत इति** । नन्वनुभवेच्छाप्रयत्नानां प्रवृत्तित्वात् प्रवृत्तित्वावच्छिन्ने च प्रयोजनादिनिश्चयस्यापेक्षितत्वात्तदभावे कथं ब्रह्मज्ञानं मोक्षहेतुरित्यनुभवरूपा प्रवृत्तिः प्रथमसूत्रात्स्यात् । कथं वा प्रयोजनाद्यनिश्चये मोक्षे इच्छारूपा प्रवृत्तिर्येन स पूर्वं मुमुक्षुः स्यादित्यत आह ॥ **त्रिविधा हीति** । ब्रह्मज्ञानं मोक्षहेतुरित्यनुभवस्य वा मोक्षरूपफलेच्छाया वा प्रवृत्तिशब्दावाच्यत्वेनाप्रवृत्तित्वेन विवक्षितत्वात् । प्रयोजनाद्यनिश्चयेऽप्युक्तरीत्या तयोः सम्भवान्न कोऽपि दोष इति भावः । अनुभवस्य प्रयोजननिश्चयानपेक्षत्वं दर्शयति ॥ **न हि उपेक्षणीयमिति** । फलगोचरेच्छायाः तदनपेक्षत्वं दर्शयति ॥ **नापि सुखमिति** । ननूपेक्षणीयानुभवस्य प्रयोजननिश्चयापेक्षत्वेऽपि साधनानुभवस्य प्रयोजननिश्चयापेक्षानियमादुक्तदोषस्तदवस्थ एवेत्यत आह ॥ **न च मुमुक्षुणेति** । तथा च न कोऽप्यनुभवः प्रयोजननिश्चयापेक्षः किन्तु स्वकारणापेक्ष एवेति भावः । नन्वेवं पुरुषार्थसाधने ब्रह्मज्ञाने इच्छाप्रयत्नरूपप्रवृत्त्योरपि स्वकारणाधीनत्वसम्भवेन तदर्थं सूत्रे प्रयोजनाद्यभिधानं व्यर्थमापन्नमित्यत आह ॥ **पुरुषार्थसाधने त्विति** । तथा च न स्वरससिद्धा यथाऽनुभवफलेच्छे प्रयोजनानिश्चयेऽपि स्वकारणादेव भवतस्तथेत्यर्थः । नन्वेवं व्युत्पन्नस्य मुमुक्षोः प्रथमसूत्र इवाग्रेऽपि प्रयत्नाद्यभावेऽपि कथञ्चित् श्रवणेन तदर्थानुभवसम्भवात्तदर्थकोक्तरूपप्रवृत्तिप्रयोजकं प्रयोजनाद्यभिधानं व्यर्थमापन्नमिति चेत् । न । आद्यसूत्रमात्रे कथञ्चित् श्रवणस्योक्तन्यायेन सम्भावितत्वेऽप्यशेषशास्त्रे तथा श्रवणसम्भावनाया अनुभवबाधितत्वात् मोक्षोपयोगिनो विमर्शसाध्यस्येदमित्थमित्येवेत्यवधारणरूपशास्त्रसाध्यानुभवस्योक्तरूपप्रवृत्त्यभावे कथञ्चित् श्रवणमात्रेणासम्भवाच्च ॥ **प्रवर्तनीय इति** । साधनगोचरेच्छाप्रयत्नवान्करणीय इत्यर्थः । केचित्तु विमता प्रवृत्तिः प्रयोजनादिज्ञानपूर्विका प्रवृत्तित्वात् भोजनादिप्रवृत्तिवदिति शास्त्रविषयप्रवृत्तेः प्रयोजनादिपूर्वकत्वनियमात् । नैवमेव प्रवृत्तिर्युक्तेत्याह ॥ **उच्यत इति** । इच्छाप्रयत्नानुभवानामेव प्रवृत्तित्वात्सुखादिविषयेच्छानुभवयोः प्रयोजनान्तराभावात् प्रवृत्तित्वहेतोर्व्यभिचार इत्यत आह ॥ **त्रिविधा हीति** । तत्र तेषां मध्ये सुखादिविषयेच्छानुभवयोः प्रवृत्तिशब्दवाच्यत्वाभावान्न व्यभिचार इत्यर्थ इत्याहुः ।

**श्री०**— **प्रयोजनान्तरेति** । प्रथमसूत्रे प्रवृत्त्यर्थं सूत्रान्तरं कृत्वा तेन प्रयोजनान्तराभिधान इत्यर्थः । एवमेव प्रयोजनाद्यनभिधानेऽपि । तत्र प्रथमसूत्रे । उत्तरत्रापि शास्त्रेऽपि । अनुभवः साधनगोचरानुभवः ॥ **नानुभूयत इति** । किन्त्वनुभूयत एवेति अनुभवस्य प्रयोजननिश्चयापेक्षत्वं नास्तीति भावः । सुखं सुखरूपं फलम् ॥ **नेष्यत इति** । किन्त्विष्यत एवेति फलगोचरेच्छायाः

प्रयोजननिश्चयापेक्षत्वं नास्तीति भावः ॥ **नानुभूयत इति** । मुमुक्षुत्वादेव स्वर्गेच्छा न हि । तस्यापि ज्योतिष्टोमेनेत्यादिवाक्यश्रवणानन्तरं यागः स्वर्गसाधनमित्यनुभवस्य जायमानत्वेन साधनगोचरानुभवस्यापि न प्रयोजननिश्चयापेक्षत्वमिति न कोऽप्यनुभवः प्रयोजननिश्चयापेक्ष इति भावः । नन्वनुभवफलगोचरे-च्छयोरिव प्रवृत्तित्वेनाभिमतयोः साधनगोचरेच्छाप्रयत्नयोरपि प्रयोजननिश्चयाधीनत्वाभावोपपत्तेः पुरुषार्थ-साधनभूतब्रह्मज्ञानगोचरेच्छाप्रयत्नरूपपुरुषप्रवृत्त्यर्थं सूत्रे प्रयोजनाभिधानं व्यर्थमेवेत्यत आह ॥ **पुरुषार्थेति** ॥ **तथेति** । अनुभवफलगोचरेच्छयोरिवेत्यर्थः ॥ **स्वरसेति** । प्रयोजनानिश्चयेऽपीत्यर्थः । ननु पुरुषार्थ-साधनेऽपीच्छाप्रयत्नलक्षणप्रवृत्त्योः प्रयोजननिश्चयानपेक्षत्वमेव किं न स्यादित्यत आह ॥ **न हीति** । क्षुत्प्रहाणादिकं तद्रूपं पुरुषार्थं प्रयोजनमिति यावत् ॥ **भोक्तुमिति** । क्षुत्प्रहाणसाधनीभूतभोजनेच्छा-वान् भवति भोजने प्रयतते वा । न हीत्यर्थः ॥

**च०**— अथ शास्त्रप्रवृत्तिनिष्ठप्रवृत्तित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतेष्टसाधनता-निश्चयत्वावच्छिन्नधर्मिकप्रकृतशास्त्रान्यप्रमाणनिष्पन्नत्वप्रकृतशास्त्रनिवर्त्यत्वप्रथमसूत्रायत्तत्वोपरक्तकल्पत्रयी - घटितादिमकल्पमुपदेशानर्थक्येन द्वितीयमन्योन्याश्रयेण तृतीयं प्रथमसूत्रगोचरप्रवृत्तिदौस्थ्येन प्रतिविधि-त्समानः प्रथमसूत्रप्रवृत्तिधर्मिकप्रयोजनान्तराभिधानायत्तत्वनिर्निबन्धनत्वोपरक्ततद्द्वयीघटकादिममनवस्थया द्वितीयं सौत्रतदभिधानानर्थक्येन पराचिकीर्षुराशङ्कते ॥ **नन्वित्यादि** । प्रथमसूत्रगोचरेच्छाप्रयत्नलक्षण-प्रवृत्तिविनिर्मुक्तस्यापि गृहीतशक्तिकतद्घटकपदजातस्य पुंसस्तत्सूत्रश्रवणाव्यवहितोत्तरक्षणावच्छेदेनेष्ट-साधनतानिश्चयोदयात्तदुदीच्येच्छाप्रयत्नयोरप्युत्पादनिर्वाह इत्यभिप्रेत्य समाधत्ते ॥ **उच्यत इति** । तथा च विषयितासम्बन्धेन साधनविशेषितेच्छाप्रयत्नत्वयोरेव साधनानुभवफलेच्छाव्यावृत्तयोस्तादृङ्निश्चयजन्यता-वच्छेदकत्वोपगमान्न क्षतिरित्याशयः ॥ **पुरुषार्थसाधन इति** । इच्छाप्रयत्नान्वयिविषयित्वार्थिका सप्तमी ॥ **स्वरससिद्धेति** । इष्टसाधनतानिश्चयासमवधानकालीनस्वकारणायत्तोत्पत्तिके यथा साधनानुभव-फलेच्छे तद्वन्न तादृशहेत्वधीनोत्पत्तिकेत्यर्थः । **प्रवर्तनीयः** । साधनगोचरेच्छाप्रयत्नवत्तया विधातव्यः ।

**सु०— उक्तं च प्रयोजनादिकं श्रोता कथं श्रद्दधीताश्रद्दधानश्च कथं प्रवर्तेतेति पुनरव-शिष्यते । तत्रैके समाधानमाहुः । अवगतसूत्रकारप्रभावस्तावत्तद्वचनादेव श्रद्धास्यति । यद्यपि आप्तत्वावधारणे प्रयोजनाद्यनभिधानेऽपि तत्सामान्यनिश्चयो भवत्येव प्रयोजनादिमदिदं शास्त्रं आप्तोक्तत्वादिति । तथाऽपि नासौ प्रवृत्त्यङ्गम् । न हि प्रयोजनादिमदित्येव प्रवर्तते । किं नामास्मदभिमतप्रयोजनादिमदिति । स च प्रयोजनादिविशेषो वचनादेवावसीयत इति सार्थकं तदभिधानम् आप्तत्वानिश्चयेऽप्यर्थसन्देहादेव कृष्यादाविव प्रवृत्त्युपपत्तिः । ननु सन्देहः**

प्रयोजनाद्यवचनेऽपि साधकबाधकप्रमाणाभावे सति सुलभ एव । विशेषस्मृतिश्च तदर्थित्व-विशेषाद्भविष्यति । मैवम् । यो हि यद्वचनात्प्रवर्तते स तद्वचनादेव विशेषस्मृतिमपेक्षते । न तु स्वातन्त्र्येण । न हि रोगार्तो ममेदं रोगनिवृत्तिसाधनं न वेति यत्र तत्रोच्छृङ्खलः स्वयं उत्प्रेक्ष्य प्रवर्तते । किं नामानवधृताप्तभावस्यापि वैद्यस्यैव वचनात् । अन्यथा स्वयं प्रयोजना-भिधानमनधिगच्छन्ननर्थमप्याशङ्केत । किं निष्प्रयोजनमिदं काकदन्तपरीक्षाग्रन्थवदुताशक्य-साधनप्रयोजनं मृतिहरहिममहीधरोत्तरसानुसिद्धसञ्जीवनीकथनवत् । उत मदनभिमतप्रयोजन-मार्यावर्तवासिनं प्रति दाक्षिणात्यस्य मातुलकन्यापरिणयनप्रकारोपदेशवत् । अथवाऽभिमतस्यापि प्रयोजनस्य सत्यपि लघीयस्युपायान्तरे गरीयानयमुपायः । पिपासुं प्रति गीर्वाणतरङ्गिणी-समीपकूपखननोपदेशवदित्यादि । एतासु चानर्थसम्भावनासु न प्रवर्तेत । न च प्रयोजना-द्यभिधानेऽप्येतासामवकाशः । लोकव्यवहारोच्छेदप्रसङ्गात् । न हि कश्चिद्वैद्यवचनादावेव-माशङ्क्य निवर्तते । तस्मादुपपन्नमुभयथाऽपि प्रयोजनाद्यभिधानमिति । तदेतदनुपपन्नम् । तथा हि । यदि तावदाप्तवाक्यतया सूत्रमिदं प्रयोजनादेर्निश्चायकं स्यात्तदाऽऽगमतया न्याय-सूत्रत्वहानिः । किञ्चाप्तत्वं सूत्रकृतो येन वेदादिना प्रमाणेनावगन्तव्यं तेनैव प्रयोजनाद्यभि-सम्बन्धोऽपि शास्त्रस्यावगम्यत इति व्यर्थं तदभिधानमापद्येत । आप्तत्वानिश्चयेऽप्यर्थसन्देहात् प्रवृत्तिरिति चातिस्थवीयः । न हि कश्चित्प्रयोजनादिसन्देहेऽतिमहायाससाध्ये प्रवर्तते प्रागुक्ता-नर्थपरम्पराश्च कथं न शङ्केत । तस्मान्नेदं प्रयोजनाद्युपदेशमात्रं किन्तु श्रौतस्य प्रयोजनादेः न्यायेनोपपादनार्थमित्येव परिहारः । आप्तत्वं तु न्यायस्योपोद्बलकमात्रमिति भाष्यकारीयं तद्व्युत्पादनमपि नानर्थकम् । अत एवास्य सूत्रस्य न शास्त्रबहिर्भावः । अध्ययनविध्यादि-वदस्याप्यतएवारम्भणीयत्वसिद्धेर्नानवस्थादिदोषोऽपीति ।

**वा०** — शास्त्रीयविषयप्रयोजनादिसमर्पकत्वेन शास्त्रारम्भहेतोरस्य सूत्रस्य वेदार्थनिर्णायकन्याय-ग्रथनात्मकत्वाच्छास्त्रान्तर्भावोऽप्यस्तीति नानवस्थादोष इति वक्तुं कुतोऽस्य न्यायसूत्रत्वं येन नानवस्थेति आशङ्कायां न्यायसूत्रत्वाङ्गीकारनिवर्त्यां शङ्कां प्रकारान्तरेण केषाञ्चित्समाधानप्रकारं तद्दूषणप्रकारं च दर्शयति ॥ **उक्तं चेत्यादिना** । श्रौतस्य प्रयोजनादेर्न्यायेनोपपादनार्थमित्युक्त्या प्रमाणान्तरसिद्धार्थ-प्रतिपादकत्वेऽपि नास्य वैयर्थ्यं पूर्वपक्षरीत्या श्रुतिप्रतिपादितेऽप्यर्थेऽनुपपत्तौ प्राप्तायां न्यायेन तदर्थोप-पादकत्वेनोपदेशमात्रत्वाभावादिति सूचितं भवति ॥ **आप्तत्वं त्विति** । न्यायस्वरूपे न्यायसाध्यप्रमेये वाऽन्यथात्वशङ्कानिरासेन न्यायोपोद्बलकमित्यर्थः ॥ **अत एवेति** । वेदार्थनिर्णायकन्यायग्रथनात्मकस्यैव शास्त्रत्वादस्य च तथात्वादित्यर्थः । एवं चास्य शास्त्रबहिर्भावे शास्त्रारम्भसमर्थनेनैतदारम्भासिद्धेरेतदार-

म्भोपपादकान्तरापेक्षायामनवस्थायामपि नेदानीं सा । एतदारम्भायोपपादकान्तरानन्वेषणात् । नापि समन्वयाध्यायाद्यारम्भोपपादकैतदारम्भाय तदध्यायाद्यपेक्षा येनान्योन्याश्रयः स्यात् । नाप्येतदारम्भायै-तदपेक्षयामात्माश्रयः । स्वाध्यायोऽध्येतव्य इति वाक्यत्वरूपविशेषाकारेण सर्वस्वाध्यायाध्ययनविधायकस्य अप्यस्य वाक्यस्य स्वाध्यायत्वरूपसामान्याकारेण स्वविषयत्ववदेतत्सूत्रत्वेन शास्त्रारम्भहेतोरप्यस्य शास्त्रत्वेन स्वविषयत्वस्याप्युपपन्नत्वादित्याह ॥ **अध्ययनेति** । अत्र तस्मादित्यारभ्य दोषोऽपीत्यन्तेनैव ननु ब्रह्मज्ञानस्येत्यादिना शङ्कितस्य सर्वस्य परिहारः उच्यत इत्यादिपूर्वग्रन्थेन तु प्रसङ्गाच्छिष्यशिक्षायै प्रवृत्तेः प्रयोजनादिनिश्चयसापेक्षत्वं विविच्योपपादितमिति द्रष्टव्यम् । अथवा प्रवृत्तेः प्रयोजननिश्चयसापेक्षत्व-नियमाच्छास्त्रप्रवृत्तिप्रयोजकतयाऽऽद्यसूत्रेऽवश्यं प्रयोजनादिकमभिधेयम् । न चैवं प्रथमसूत्रप्रवृत्तिप्रयोजक-प्रयोजनाद्यभिधायकवाक्यान्तरानुसरणपरम्परयाऽनवस्थोक्तेति वाच्यम् । पुरुषार्थसाधनगोचरेच्छाप्रयत्नरूप-चित्तवृत्तेः प्रवृत्तित्वेन प्रयोजननिश्चयसापेक्षत्वेऽपि यत्किञ्चिदनुभवफलेच्छापुरुषानपेक्षितसाध्यसाधनभावानु-भवानां चित्तवृत्तित्वेऽपि प्रवृत्तित्वाभावात् । प्रथमसूत्रेण च साध्यसाधनभावानुभवमात्रस्य जायमानत्वेऽपि तस्य प्रयोजनादिनिश्चयानपेक्षतया वाक्यान्तराननुसरणेनानवस्थाऽभावात् । न च तद्यनुभवस्यैव शास्त्र-फलत्वेन तदर्थप्रयोजनाद्यभिधायकप्रथमसूत्रवैयर्थ्यमिति वाच्यम् । प्रथमसूत्रतः साध्यसाधनभावानुभवस्य अयत्नसाध्यत्वेन पुरुषार्थसाधनस्य द्वितीयसूत्रादिशास्त्राकलनस्य पूर्वापरपरामर्शतत्तदविरोधादवगमस्य च अतिप्रयत्नसाध्यतया प्रयत्नसाध्ये प्रयोजनादिनिश्चयस्यावश्यापेक्षितत्वात् । न च आद्यसूत्रावधारणेऽपि विरोधाशङ्का नियता येन तन्निरासाय यत्नो युज्येत । सम्भावनामात्रस्याप्रयोजकत्वात् । न च शास्त्राव-धारणादिकमपि लोकोत्तरमतेः कस्यचित्सम्भाव्यत इति न तदर्थमपि प्रयोजनाद्यभिधेयमिति वाच्यम् । कस्यचित्प्रयोजनानपेक्षायामपि सर्वस्यातथात्वेन तदर्थमेव प्रयोजनाद्यभिधानादित्याशयेन चित्तवृत्तिविभागं दर्शयन्नेव प्रवृत्त्यप्रवृत्ती विवेचयति ॥ **त्रिविधा हीत्यादिना** । ननु किमनेनार्धजरतीयेन सर्वचित्तवृत्तेः प्रवृत्तित्वमेव स्वीकृत्य प्रयोजननिश्चयसापेक्षत्वस्य सर्वत्र तन्निरपेक्षत्वस्य वा स्वीकार्यत्वेन वैचित्र्ये नियामकाभावादित्यतो यत्किञ्चिदनुभवफलेच्छासाध्यसाधनभावानुभवानां प्रयोजनादिनिश्चयसापेक्षत्वस्य बाधितत्वेन पुरुषार्थसाधनेच्छाप्रयत्नयोश्च प्रयोजनादिनिश्चयसापेक्षत्वस्यानुभवसिद्धतया वैचित्र्यकल्पनस्य आवश्यकत्वमित्याशयेनाह ॥ **न हीत्यादिना** । तस्माद्या प्रवृत्तिस्तस्याः प्रयोजनादिनिश्चयसापेक्षत्वं यस्याश्च तन्नास्ति तस्याः प्रवृत्तित्वमेव नेति युक्तं प्रथमसूत्रे तदभिधानं नाप्यनवस्थेत्याशयेनाह ॥ **तस्मादिति** । एवं प्रथमसूत्रस्य शास्त्रोपोद्घाततत्वमभ्युपगम्यैवानवस्थां परिहृत्याधुना शास्त्रान्तर्भावमङ्गीकृत्य अपि तां परिजिहीर्षुः शास्त्रान्तर्भावप्रयोजकं वक्तुं तन्निवर्त्यां शङ्कां प्रदर्श्य तत्र केषाञ्चित्प्रकारेण परिहारं दूषयितुमनुवदति ॥ **उक्तं चेत्यादिना** । न चैतदुभयमेकत्र विरुद्धमिति वाच्यम् । शास्त्रप्रवृत्तिहेतु-

शास्त्रीयप्रयोजनादिप्रतिपादकत्वमात्रविवक्षयोपोद्धातत्वस्य न्यायेन श्रौतप्रयोजनादिनिश्चायकत्वविवक्षया च तदन्तर्भावस्य चोपपत्तेः । शास्त्रान्तर्भावे प्रयोजनादिनिश्चयसापेक्षतयाऽनवस्थातादवस्थ्यमित्यत आह ॥ **अध्ययनविध्यादिवदिति** ।

**स०**— प्रयोजनादिसत्वं प्रवृत्तौ प्रयोजकं तच्चाप्तत्वावधारणेन सामान्यतो भविष्यति किमभिधानेनेत्यर्थः ॥ **तथाऽपीति** । सामान्येन फलादिप्रतिपत्तावपि निश्शङ्कप्रवृत्तये प्रयोजनविशेषोक्तिः इत्यर्थः ॥ **यो हीति** । विवक्षितफलालाभप्रसङ्गान्नोत्प्रेक्षामात्रेण फलविशेषप्रतिपत्तिरिति भावः । विशेषवचनाभावे न केवलं विवक्षितफलालाभः किन्तु विपरीतफलमप्यापद्येतेत्याह । **अन्यथेति** । सति तु विशेषवचने न विपरीतफलाशङ्का विवक्षितार्थलाभादित्याह ॥ **न चेति** । परमतं अपाकरोति ॥ **तदेतदिति** । आप्तवाक्यस्यागमत्वाद्युक्त्यनुसन्धानात्मकतर्कत्वव्याघात इति भावः । प्रागुक्तानर्थपरम्पराशङ्कया निवृत्तौ अनवधृताप्तभावे वैद्यवचनेऽप्यनर्थपरम्पराशङ्कया निवृत्तिः स्यात्तथा च सकललोकव्यवहारोच्छेद इति चेन्न । अल्पायाससाध्येऽनवधृताप्तभाववैद्यवचनेऽनर्थपरम्पराशङ्कया अनिवृत्तावपि महायाससाध्ये प्रागुक्तानर्थपरम्पराशङ्कया निवृत्तेरिष्टत्वेन सकललोकव्यवहारोच्छेदासम्भवादिति भावः ॥ **तस्मान्नेदमिति** । एवं च श्रुतिसिद्धार्थप्रतिपादकत्वेऽपि न सूत्रानर्थक्यं संशयविपर्ययनिरासेन निर्णायकत्वादिति भावः । यदुक्तं प्रयोजनादिमत एव शास्त्रत्वादाद्यसूत्रस्यातिरिक्तसूत्राणां प्रयोजनादिकं प्रतिपादयतस्तदयोगात् शास्त्रानन्तर्भाव इति तत्राह ॥ **अत एवेति** । श्रुत्यर्थस्य न्यायेनोपपादकत्वादेव इत्यर्थः । श्रुत्यर्थनिर्णायकत्वात् सूत्राणाम् । तत्र यथा श्रुतिवाक्यस्य स्वव्यतिरिक्तवेदराशेः प्रयोजनादिमत्वेनाध्येतव्यत्वं प्रतिपादयतो न वेदबहिर्भाव एवमत्रापीति भावः ॥ **अध्ययनेति** । स्वत एव प्रयोजनादिमत्वान्नानवस्था । न च कर्तृकर्मविरोधः । यथा स्वाध्यायोऽध्येतव्य इति विधिना अध्ययनार्थसर्वविधायकविधिर्युज्यते स्वाध्यायपदोपात्तश्चात्मा यथोक्तं 'स्वाध्यायविधिना सर्वे नियुज्यन्ते विधायकाः । स्वाध्यायविधिरप्येवं न प्रतीमो विरुद्धताम्' इति तथेहापि अथातो ब्रह्मजिज्ञासा इत्येतत् जिज्ञासाद्वारा शास्त्रस्य ।

**प०**— प्रयोजनाद्यभिधानस्यार्थवत्त्वमङ्गीकृत्यापि प्रवृत्त्यसम्भवं शङ्कते ॥ **उक्तं चेति** । अवशिष्यते शङ्केति शेषः । स्वयं किन्तु श्रौतस्येत्यादिना समाधिं विवक्षुः प्रकारान्तरेण समाधिद्वयं तदेतदनुपपन्नमित्यादिना निरसितुमनुवदति ॥ **तत्रैक इत्यादिना** ॥ **तद्वचनादेवेति** । प्रथमसूत्ररूपतद्वचनादेवेत्यर्थः । तथात्वे आद्यसूत्रानर्थक्यमित्याशङ्क्य निराह ॥ **यद्यपीति** ॥ **असौ** । सामान्यनिश्चयः ॥ **वचनादेवेति** । प्रथमसूत्रादित्यर्थः । मानान्तराभावादिति भावः ॥ **तदभिधानमिति** ।

आद्यसूत्र इति योज्यम् । समाधानान्तरमाह ॥ **आप्तत्वेति** । यथा कृष्यादाववश्यं फलं भवत्येवेत्यनिश्चयेऽपि फलोत्पत्तिसन्देहात्प्रवृत्तिरेवं शास्त्रेऽप्यस्तु प्रवृत्तिरित्यर्थः । अस्मिन्पक्षेऽप्याद्यसूत्रं व्यर्थमिति आशङ्क्य समाधत्ते ॥ **नन्वित्यादिना** ॥ **विशेषेति** । मोक्षफलकं भवति न वा स्वर्गफलकं भवति न वेत्यादिरूपेण'मोक्षादिकोटिविशेषस्मृतिरित्यर्थः । तदर्थमप्याद्यसूत्रं व्यर्थमिति भावः ॥ **अन्यथेति** । आद्यसूत्राभाव इत्यर्थः । अनर्थाशङ्कामेव व्यनक्ति ॥ **किमित्यादिना** । गीर्वाणतरङ्गिणी गङ्गा ॥ **येनेति** । 'पाराशर्यश्च कपिलो वैकुण्ठो ऋषभस्तथा । यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः । नारायणो हरिः कृष्णः उपेन्द्रः सर्व एव च । एवमाद्या हरेस्साक्षात्प्रादुर्भावाः प्रकीर्तिता' इति बृहद्भाष्योक्तपैङ्गिश्रुत्यादिरूपवेदेन । 'नारायणाद्विनिष्पन्नम्' इत्यादिप्रागुक्तस्मृत्या चेत्यर्थः ॥ **तेनैवेति** । 'गुणोत्कर्षे देवदेवस्य विष्णोः' । 'तमेवं विद्वानमृत इह भवति' इत्यादिना तज्जातीयवाक्येनैवेत्यर्थः ॥ **अतिस्थवीयः** । अतिस्थूलतरं समाधानमित्यर्थः ॥ **श्रौतस्येति** । तद्विजिज्ञासस्वेत्यत्र विशब्दतच्छब्दाभ्यां यस्य प्रसादादित्यादौ मुच्यत इत्यादिशब्दैः श्रुतस्येत्यर्थः ॥ **न्यायेनेति** । पूर्वपक्षिणा वक्ष्यमाणदिशा प्रयोजनाद्यभावशङ्कायां प्रयोजनस्य कर्माद्यजन्यत्वरूपन्यायेन । विषयब्रह्मणो जीवाद्भिन्नत्वन्यायेनाधिकारिणः शूद्रादिव्यावृत्तत्वोपपादकाध्ययनादिमत्त्वरूपन्यायेनोपपादनार्थमित्यर्थः ॥ **तद्व्युत्पादनमपीति** । प्रादुर्भूत इत्यादिना कृतमिति भावः ॥ **अत एवेति** । न्यायव्युत्पादकत्वादेव इत्यर्थः । प्रेक्षावतां शास्त्रारम्भसिद्धये यथैतत्सूत्रं तथैतदारम्भार्थमस्य प्रयोजनाद्यभिसम्बन्धबोधकस्यान्यस्योक्तावनवस्थाऽऽत्माश्रयादिर्वा स्यादित्यत आह ॥ **अध्ययनेति** । 'स्वाध्यायोऽध्येतव्य' इति वाक्यं स्वाध्यायमात्रस्याध्ययनं विदधदात्मनोऽपि तद्विधत्ते तद्वदित्यर्थः । आदिपदेन 'सर्वे वेदा यत्पदमामनन्ति' 'वाचा विरूप नित्यया' इत्यादेर्ग्रहः ॥ **अत एवेति** । एतत्सूत्रादेवेत्यर्थः । न चैकस्य द्वैरूप्यविरोधः । अन्यसाहित्यकैवल्यरूपावच्छेदकधर्माभ्यामुपपत्तेरिति भावः । एतेन शास्त्रे प्रवृत्तिहेतुप्रयोजनाद्यभिसम्बन्धज्ञानायाद्यसूत्रं चेत्तत्र प्रवृत्त्यर्थं तस्य प्रयोजनाद्यभिसम्बन्धबोधकस्यान्यस्योक्तावनवस्थितिरिति निरस्तम् । स्वेनैव स्वस्यापि शास्त्रत्वेन रूपेण तद्बोधनादिति ॥

**या०**— प्रयोजनाद्यभिधानस्यार्थवत्त्वमङ्गीकृत्यापि प्रवृत्त्यभावं शङ्कते ॥ **उक्तं चेति** ॥ **वचनादेवावसीयत इति** । आप्तोक्तत्वहेतोः प्रयोजनविशेष्यव्यभिचारित्वेनानुमानासम्भवादिति भावः ॥ **सुलभ एवेति** । तथा च सूत्रे प्रवृत्त्यर्थं प्रयोजनाद्यभिधानं व्यर्थमिति भावः । ननु सन्देहजनककोटिकस्मृतिहेतुतया तदभिधानं सार्थकमेवेत्यत आह ॥ **विशेषस्मृतिश्चेति** । कोटिस्मृतिश्चेत्यर्थः । आप्त्यनिश्चयदशायामपि प्रथमसूत्रश्रवणानन्तरं ब्रह्मज्ञानं मोक्षसाधनं न वेति जायमाने मानसे संशये विधिकोटिप्रापकेऽप्यन्यन्न सम्भवतीति तदर्थं सूत्रे प्रयोजनाद्यभिधानमित्यभिप्रेत्य समाधत्ते ॥ **यो हीति** ॥

**यद्वचनात्प्रवर्तत इति** । यद्वचनश्रवणानन्तरभाविमानससंशयात्प्रवर्तत इत्यर्थः । वैद्यस्यैव वचनादित्यनन्तरमिदं रोगनिवृत्तिसाधनमिति विधिकोटिमवगम्य मानसे संशये सतीति शेषः ॥ **अन्यथेति** । औत्प्रेक्षिककोटिस्मृत्यधीनमानससंशयेन प्रवृत्तावित्यर्थः ॥ दाक्षिणात्यस्येति कर्तरि षष्ठी । परिणयनं विवाहः ॥ **उभयथाऽपीति** । आप्तत्वनिश्चयानिश्चयपक्षयोरित्यर्थः ॥ **तदेतदिति** । परिहारद्वयमपि इत्यर्थः ॥ **इत्येव परिहार इति** । अनेन ब्रह्मज्ञानस्य मोक्षहेतुता शास्त्रप्रवृत्तेः प्रागेव प्रमाणान्तरसिद्धेत्येतत्पक्षः समाहितो भवति । प्रमाणान्तरसिद्धेऽपि विप्रतिपत्त्यादिनिरासकन्यायग्रथनात्मकसूत्रोपदेशसार्थक्यादिति ज्ञातव्यम् ॥ **अत एवास्य सूत्रस्येति** । श्रौतस्य प्रयोजनादेर्न्यायेनोपपादनार्थत्वादेव न श्रुत्यर्थनिर्णायकन्यायग्रथनात्मकशास्त्रबहिर्भाव इत्यर्थः । नन्वेवं यदि प्रथमसूत्रस्य विषयादिप्रतिपादनद्वारा शास्त्रारम्भोपपादकता तर्हि स्वस्यारम्भणीयता केनोपपादितव्या । न तावत्स्वेन । आत्माश्रयत्वप्रसङ्गात् । अन्येन चेत्तस्याप्यारम्भणीयता पुनरन्येनेत्यनवस्थापात इत्यत आह ॥ **अध्ययनविध्यादिवदिति** । यथा 'स्वाध्यायोऽध्येतव्य' इति विधिवाक्यं स्वाध्यायत्वावच्छिन्नस्याध्ययनं विदधत्स्वस्यापि तदवच्छिन्नत्वादध्ययनं विधत्ते । एवमिदं सूत्रं ब्रह्ममीमांसाशास्त्रत्वावच्छिन्नस्यारम्भणीयतोपपादकं सत् स्वस्यापि तदवच्छिन्नत्वात् आरम्भोपपादकं भवति । आत्माश्रयत्वं तु प्रामाणिकम् । अत एव न कर्तृकर्मभावविरोधोऽपीति । आदिपदेनाभिधेयत्वावच्छेदेन प्रमेयत्वविधायकं लौकिकं वाक्यं यथा प्रमेयस्याप्यभिधेयत्वावच्छिन्नत्वात्प्रमेयत्वविधायकं तथेत्यादिकं द्रष्टव्यम् ॥

**श्री०— प्रयोजनाद्यभिधानेऽपीति** । तथा च तद्वचनादेव श्रद्धास्यतीत्ययुक्तमिति भावः ॥ **अर्थसन्देहादेवेति** । घनगर्जितन्यायेन सूत्रश्रवणानन्तरमिति शेषः ॥ **स्वातन्त्र्येणेति** । औत्प्रेक्षिककोटिस्मृत्यधीनमानसंशयेनेत्यर्थः ॥ **दाक्षिणात्यस्येति** । कर्तरि षष्ठी । दाक्षिणात्यकर्तृकोपदेशवदित्यर्थः । तर्हि भाष्यकारीयं सूत्रकारस्याप्युपपादनं व्यर्थमापन्नमित्यत आह ॥ **आप्तत्वं त्विति** ।

**च०—** सौत्रप्रयोजनाभिहितेरर्थवत्तामूरीकृत्यापि प्रवृत्तिदौस्थ्यमाशङ्कते ॥ **उक्तं चेति** ॥ **वचनादेव** । आप्तवचनादेव ॥ **अवसीयते** । सूत्रे धर्मिणि प्रयोजनविशेषवैशिष्ट्यमनुमीयते । तस्य तद्व्याप्तत्वादिति भावः ॥ **सुलभ एवेति** । प्रतियोगिमता तदभाववत्तानिश्चयाभावसाधारणधर्मदर्शनादिघटितसामग्रीमात्रनिष्पाद्यत्वात्सन्देहस्येति भावः । सन्देहजनककोटिद्वयोपस्थित्यौपयिकतया तदभिधानावश्यकतेत्यत आह ॥ **विशेषेति** । फलविशेषेच्छानिबन्धनेनैककोटिस्मृतिर्न तदभिधाननिर्वाह्येति भावः । आप्तत्वानवधृतिदशायां प्रथमसूत्रश्रवणाव्यवहितोत्तरक्षणावच्छेदेनोत्पद्यमानब्रह्मज्ञानधर्मिकमुक्तिसाधनत्वतदभावकोटिकसन्देहविषयतापन्नविधिकोट्युपस्थितिजनकस्यान्यस्य दुर्मिलिततया सौत्रं

तदभिधानमेव तादृशमाश्रयणीयमित्यनुसन्दधानः समादधाति ॥ **यो हीति** ॥ **यद्वचनात्प्रवर्तत इति** । यद्वचनश्रवणोत्पद्यमानसन्देहाधीनप्रवृत्तिमान् भवतीत्यर्थः ॥ **तद्वचनादेव** विशेषस्मृतिम् । तत्प्रणीत-वाक्यघटकपदश्रवणाव्यवहितोत्तरक्षणजनितकोटिगोचरस्मृतिम् ॥ **स्वातन्त्र्येण** । तादृशपदश्रवणादति-रिच्यमानेन हेतुना ॥ **उत्प्रेक्ष्य** । संशय्य ॥ **वैद्यस्यैव वचनादिति** । तादृग्वचनश्रवणोत्तरक्षणभावि-स्मृतिविषयीभूतरोगनिवृत्तिसाधनत्वरूपविधिकोटिं कोट्यन्तरं चावगाहमानो यः सन्देहस्तदधीनप्रवृत्तिमान् भवतीत्यर्थः ॥ **अन्यथा** । स्वाच्छंद्यायत्तकोटिस्मृतिनिबन्धनसन्देहाधीनप्रवृत्त्युपगमे ॥ **उभयथाऽपीति** । आप्तत्वावधृत्यनवधृतिकल्पयोरित्यर्थः ॥ **इतीति** आप्तुरित्यनेनान्वयि । **तदेतदिति** । कल्पद्वयदिशा समाधानमित्यर्थः ॥ **आगमतया** । आप्तवाक्यतया ॥ **न्यायसूत्रत्वहानिः** । न्यायावबोधकपदघटित-सूत्रत्वहानिः ॥ **इत्येव परिहार इति** । शास्त्रप्रवृत्तेः प्रागेव प्रमाणान्तरेण ब्रह्मज्ञानस्य मुक्तिसाधनता सैत्सीदित्युपगमेऽपि विप्रतिपत्त्यादिव्युदासकन्यायावबोधकपदघटितसूत्रप्रणयनसफलत्वोपपत्तेरिति मन्तव्यम् । **अत एवास्य सूत्रस्येति** । श्रुत्यभिहितप्रयोजनोपपादकन्यायावबोधकपदघटितत्वादेव न श्रुतिप्रतिपाद्य-गोचरानुमितिरूपनिर्णयजनकन्यायावबोधकपदघटितत्वलक्षणकशास्त्रबहिर्भाव इत्यर्थः । अथ प्रथमसूत्रस्य विषयाद्यनुबन्धचतुष्टयव्युत्पादनं द्वारीकृत्य शास्त्रारम्भणीयतासमर्थकताया आत्माश्रयताप्रसङ्गेन स्वस्य दुरुपगमतयाऽनवस्थाप्रसङ्गेनान्यस्यापि तस्यास्तादृशतयाऽसामञ्जस्यमित्यत आह । **अध्ययनविध्यादिवत् इति** । स्वाध्यायत्वावच्छेदेनाध्ययनकर्मतां विदधानः स्वस्यापि तादृशकर्मतावच्छेदकीभूतस्वाध्यायत्वा-क्रान्ततया स्वकर्मकाध्ययनक्रियामपि विदधाति यथा तद्वदिदं सूत्रं ब्रह्ममीमांसाशास्त्रत्वावच्छेदेनारम्भणीयता-समर्थकं स्वस्यापि तदवच्छेदकीभूततादृशधर्माक्रान्ततया स्वारम्भणीयतासमर्थकमपि भवत्येव । आत्माश्रय-त्वादिकमेकस्यैव धर्मस्योभयावच्छेदकत्वोपगम एव । प्रकृते तु सामान्यधर्मविशेषधर्मयोरेव तत्तदवच्छेद-कत्वोरीकृतेर्न तदवतारः । अत एवाभिधेयत्वादेः केवलान्वयिताविधायकवाक्यस्याप्यभिधेयत्वं सेधिष्यति इति सर्वं सुस्थम् । आत्माश्रयत्वं तु प्रामाणिकमत एव न कर्तृकर्मभावविरोधोऽपीत्यपि स्थितम् ॥

**सु०— कः पुनरस्य सूत्रस्य प्रसङ्गः । उच्यते । प्रारिप्सिततया हि बुद्धिसन्निहितं शास्त्रं सूत्रकारस्य । तत्र संशयः किमिदमारम्भणीयं न वेति । उपलभ्यन्ते खलूभयविधान्यपि वाक्यानि । वाक्यं चेदम् । न च विशेषो दृश्यते । येनान्यतरपक्षनिश्चयः स्यात् । ननु कस्यायं संशयः । न तावत्सूत्रकारस्य । अवगतविशेषत्वात् । अन्यथा निर्णायकसूत्रप्रणयना-नुपपत्तेः । नापि परस्य । परेणाद्यापि शास्त्रस्यानुपलब्धत्वात् । अनुपलब्धे च समानधर्म-दर्शनाद्ययोगेन संशयोत्पादानुपपत्तेः । मैवम् । यदीदं शास्त्रं परेणोपलभ्येत तदोक्तसन्देह-**

**कारणोपपत्तौ प्रयोजनार्थित्वेन विशेषस्मृतिमतैवं सन्दिह्यतेति सूत्रकृत एव परकीयसम्भावितसंशयाहरणोपपत्तेः ।**

**वा०**— नन्वधिकरणस्य विषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनरूपपञ्चाङ्गत्वादारम्भणीयतासिद्धये प्रेक्षावतः प्रवर्तयितुमित्यादिपूर्वग्रन्थे शास्त्रारम्भणीयतासिद्धेः प्रयोजनत्वोक्तावपि शास्त्रस्य विषयत्वसम्भव एव तदारम्भणीयत्वसिद्धेः प्रयोजनत्वसम्भवात् सामान्यतो ज्ञातस्य विशेषतश्च सन्दिग्धस्यैव विषयत्वात् शास्त्रस्याद्याप्यनुत्पन्नत्वेन सामान्यतो ज्ञानासम्भवाद्धर्मिज्ञानाभावेनारम्भणीयत्वादिकोटिप्रापकस्याप्यभावेन विशेषतः सन्देहासम्भवाद्विषयसंशययोः सतोरेव सन्दिग्धेऽर्थे न्यायः प्रवर्तत इति न्यायेन विपरीतयुक्त्यनुसन्धानात्मकपूर्वपक्षप्रवृत्तेरवतारिकारूपपूर्वपक्षस्यैव च सिद्धान्तसूत्रप्रापकत्वादस्य च सिद्धान्तसूत्रत्वात् प्रसञ्जकाभावे कथमस्य सूत्रस्य प्रवृत्तिरित्याशङ्कते ॥ **कः पुनरिति** । केचित्तु कः पुनरिति विवरणवाक्यस्य तत्त्वदीपनव्याख्यानमनुसृत्येदं वाक्यं व्याचक्षते । तत्तु विवरणपरिहारवाक्ये तादृगर्थप्रतीतेः तद्व्याख्यानसम्भवेऽपि प्रारिप्सिततयेत्यादिप्रकृतग्रन्थाननुसारित्वाद्विचारणीयम् ॥ **उच्यत इत्यादि** । अत्र प्रारिप्सिततया बुद्धिसन्निहितमिति विषयस्य सामान्यतो ज्ञानसमर्थनं सूत्रकारस्येति तदसम्भावनापरिहारः । उपलभ्यन्त इत्यादिना संशयप्रापकसमर्थनम् । नन्वित्यादिना च संशयानुपपत्तिपरिहार इति द्रष्टव्यम् ।

**स०**— **कः पुनरिति** । अयमर्थः । जिज्ञासासूत्रारम्भणीया जिज्ञासा च ज्ञाते । ज्ञानं च शास्त्रश्रवणमन्तरेण न सम्भवति । पाठकादिषु अदृष्टेरित्यसङ्गतिः । तथा प्रसज्यतेऽनेनेति प्रसङ्गः प्रसञ्जकः । स किमस्त्युत नास्ति । नाद्यः । वेदवाक्यविचारकर्तव्यतायाः प्रमाणान्तरागोचरत्वात् तद्विजिज्ञासस्व मन्तव्य इत्यादिकं वक्तव्यम् । न च तत्सम्भवति विकल्पासहत्वात् तत्किं नित्यमुत नैमित्तिकं, किं वा प्रायश्चित्तरूपमुत काम्यम् । नाद्यः । अकरणे प्रत्यवायाश्रवणात् । न द्वितीयः । गृहदाहेष्ट्यादिवदनिमित्तश्रवणात् । न तृतीयः । ब्रह्मचार्यवकीर्णी नैरऋतं गर्दभमालभेतेतिवद्दोषसंयोगे सत्यचोदितत्वात् । न चतुर्थः । विध्युद्देशे फलाश्रवणात् । न चरमः सूत्रस्य प्रमाणापेक्षितन्यायसूचकत्वात् तदभावे सूत्रत्वस्यैवासङ्गतेः । तस्मात्प्रसञ्जकाभावाच्चासङ्गतिः । शास्त्रासङ्गतिश्च । समन्वयादिप्रतिपादकं शास्त्रम् । न च समन्वयाद्यन्यतममनेन प्रतिपाद्यत इति आदौ चास्य सूत्रस्य प्रणयने प्रसञ्जकं न पश्याम इति ॥ **उच्यत इति** । अधिगतस्वाध्यायस्य निगमनिरुक्तादिना व्युत्पन्नपदपदार्थस्य भगवानेव सर्वशब्दार्थ इति ज्ञातवतः सात्विकप्रवृत्तेर्वैराग्यादिसम्पन्नस्य मुमुक्षोः किं मया अनुष्ठेयं साधनं किं वा फलमित्यादि जिज्ञासमानस्यानुग्रहार्थमपेक्षितमागमिकमपि न्यायेन निर्णेतुं प्रारब्धवानिदं शास्त्रं

भगवान् सूत्रकारः । ततश्च श्रवणेनैव ज्ञाते वस्तुनि मननविधानात् ज्ञात एव जिज्ञासा । तद्विजिज्ञासस्वेत्यादीनां प्रसज्ञकत्वात् तस्य मननस्य काम्यत्वात् विध्युद्देशे फलाभावेऽपि 'प्रतितिष्ठन्ति ह वा एता रात्रीरूपयन्ती'ति अर्थवादेन चोदितेषु रात्रिसंज्ञकेषु कर्मसु आर्थवादिकप्रतिष्ठाफलवत् 'तरति शोकमात्मविदि'त्यार्थवादिकबन्धनिवृत्तिफलोपपत्तेर्न प्रसज्ञकाभावः । शास्त्रारम्भासिद्धौ हि समन्वयादिकं नोपपद्यत इति शास्त्रारम्भसमर्थनपरस्य सूत्रस्य शास्त्रान्तर्भावः आद्यत्वं चेति न कश्चिद्दोष इति भावः ॥

**प०**— श्रौतस्य प्रयोजनादेर्न्यायेनोपपादनार्थमिदं सूत्रमित्युक्तमयुक्तम् । श्रौतस्यान्यथात्वप्रसक्तावेव न्यायावतारावसरादिति भावेन पृच्छति ॥ **कः पुनरिति** ॥ **अस्येति** । श्रौतप्रयोजनादेः न्यायेनोपपादनपरस्य संशयादिरूपप्रसञ्जकमित्यर्थः । यद्वा 'जीवव्यतिरिक्तेश्वराभावात्तस्य च स्वप्रकाशत्वान्न जिज्ञास्यतेति प्राप्त' इति न्यायविवरणोक्तमत्र वक्ष्यमाणदिशाऽनेकधा सौत्रपदार्थनिरूपणाननुरूपमिति भावेन पृच्छति ॥ **क इति** । संशयबीजमाह ॥ **उपलभ्यन्त इति** । काकदन्तपरीक्षादिरूपवाक्यान्यनारभ्याणि इष्टगोष्ठिपरवाक्यान्यारभ्याण्युपलभ्यन्त इत्यनेन वाक्यत्वरूपधर्मस्यारभ्यत्वानारभ्यत्वरूपकोटिद्वयसहचारो दर्शितः । पुरोवर्तिनिष्ठतामाह ॥ **वाक्यं चेति** ॥ **उक्तेति** । धर्मिज्ञानविशेषादर्शनरूपसन्देहकारणेत्यर्थः ॥ **विशेषेति** । आरम्भणीयत्वादिकोटिस्मृतिमतेत्यर्थः । तत्र हेतुः प्रयोजनेति । अस्मात्प्रयोजनं मया लब्धव्यमिति फलकामित्वेनेत्यर्थः ।

**या०**— **प्रसङ्ग इति** । अत्र प्रसङ्गशब्देन प्रसज्यतेऽनेनेति व्युत्पत्त्या प्रसञ्जकमुच्यते । तथा चैतत्सूत्रप्रवृत्तौ कीदृशं संशयपूर्वपक्षादिकं निमित्तमिति प्रश्नार्थः ।

**श्री०**— **अनुपलब्धे** शास्त्ररूपे धर्मिणि ॥

**च०**— **प्रसङ्ग इति** । करणसाधनघञन्तः प्रसक्तिहेतुमभिधत्ते । तथाच प्रकृतसूत्रप्रवृत्तिबीजभूतं कीदृक्सन्देहपूर्वमतादिकमिति प्रष्टुराशयः ॥ **उच्यत इति** । सन्देहजनकधर्मिज्ञानसम्पादनाय सूत्रकारस्येत्यन्तम् । **बुद्धिसन्निहितं** विषयितासम्बन्धेन बुद्धौ वर्तमानम् । तत्र हेतुः **प्रारिप्सिततया इति** । तदधिगतेरेवाभावे तद्धेतुकतत्प्रारम्भेच्छाया अयोगादिति भावः ॥ **अवगतविशेषत्वात्** । निषेधकोटिव्यावर्तकधर्मदर्शनवत्वात् ॥ **समानधर्मदर्शनाद्योगेन** । प्रकृतधर्मितावच्छेदकाभिमतधर्मावच्छिन्नविशेष्यानिरूपितकोटिद्वयनिरूपितसाहचर्यावच्छिन्नधर्मनिष्ठप्रकारताशालिदर्शनाद्ययोगेन । विशिष्टानुयोगिकवैशिष्ट्यबोधे विशेष्यतावच्छेदकप्रकारकज्ञानस्य हेतुत्वादिति भावः ।

**सु०**—नन्विदं युक्त्यनुसन्धानात्मकविचारमीमांसामननापरनामकजिज्ञासाङ्गभूतन्यायनिबन्धनं जिज्ञासायाः कर्तव्यतायामारम्भणीयं भविष्यति । न हि विचारः कर्तव्यः तद्द्वारभूतन्याय-निबन्धनं च नारम्भणीयमिति सम्भवति । निःसाधनस्य विचारस्यैवानुत्थानात् । अन्यथा तु नेति जिज्ञासैव विचारणीया । सत्यम् । एतच्छास्त्रव्युत्पादनीयन्यायकरणिकायां जिज्ञासायां उभयविधव्यापारदर्शनाद्विशेषादर्शनाच्च संशयः किं कर्तव्या न वेति । ननु च तद्विजिज्ञासस्व इति जिज्ञासायाः श्रुतिविहितत्वात् कथं विशेषादर्शनम् । मैवम् । विना विचारेण श्रुत्यर्थस्य आद्याप्यनिर्णीतत्वेन संशयास्पदत्वात् । तत्र तावज्जिज्ञासा न कर्तव्येति प्राप्तम् । कुतः । विषयप्रयोजनसम्बन्धाधिकारिलक्षणानुबन्धविधुरत्वात् । कर्तव्यता खलु विषयादिमत्तया व्याप्ता । कृष्यादिकं हि सति विषयभूते भूम्यादौ प्रयोजने च सस्याधिगमादावधिकारिणि च कृषीवलादौ कर्तव्यमुपलब्धम् । सा च व्यापिका व्यावर्तमानेतो व्याप्यामपि कर्तव्यतां व्यावर्तयतीति प्रतिबन्धसिद्धिः । विषयादिसद्भावो हि जिज्ञासायाः कारणम् । न च कारणा-भावे कार्यमुत्पत्तुमर्हति । विषयशून्यत्वाद्धि समनस्केन्द्रियसन्निकृष्टस्य स्फीतालोकमध्यवर्तिनो घटस्य न जिज्ञासा क्रियते । प्रयोजनविकलत्वात्खलु सन्दिग्धमपि वायसदशनादिकं न जिज्ञास्यते । सम्बन्धवैधुर्याद्धि सप्रयोजनं सविषयमपि शब्दज्ञानमर्थयमानो न वैद्यके प्रवर्तते । अधिकारविरहाच्च न मुमुक्षोर्वात्स्यायने प्रवृत्तिः ।

**वा०**— एवं सविषयचिन्तामुपपाद्य सूत्रोक्तकर्तव्यत्वकोटिकां सविषयां तदर्थचिन्तामुपपादयितुं तस्यास्तादर्थ्यं शङ्कामुखेनोपपादयति ॥ **नन्विति** । यद्वा शास्त्रारम्भणीयत्वानारम्भणीयत्वयोर्जिज्ञासा-कर्तव्यत्वाकर्तव्यत्वे विहाय हेत्वन्तरेण प्राप्त्यभावात्तत्कर्तव्यत्वादौ च स्वत एव तत्सिद्धेः सूत्रकारेण युक्तिभिर्जिज्ञासाकर्तव्यताया एव प्रतिपादनीयतया जिज्ञासाया एव विचारविषयत्वात्तद्धर्मिक एव संशये वक्तव्ये शास्त्रधर्मिकतत्कथनमयुक्तमित्याशङ्कते ॥ **नन्विति** । अत्र शास्त्रजिज्ञासयोः स्वरूपकथनं जिज्ञासाकर्तव्यत्वादेरारम्भणीयत्वादिसाधकत्वमुपपादयितुमिति द्रष्टव्यम् । अत्र मननापरनामकेत्युक्त्या जिज्ञासासूत्रस्य मननविधिमूलत्वमेव न तु श्रवणविधिमूलत्वमित्यर्थम् । मीमांसापरनामिकेत्युक्त्या च विचारार्थकमान् धातोर्मान् बधेति स्वार्थसन्नन्तान्निष्पन्नस्य मीमांसाशब्दस्य विचाररूढेः सर्वसिद्धत्वात् जिज्ञासाशब्दस्यापि विचाररूढिं युक्त्यनुसन्धानात्मकेति विचारशब्दव्याख्यानपूर्वं विचारशब्दपर्याय-त्वोक्त्या च तर्हि मान्धातोर्विचारार्थत्वेऽपि विचारस्य श्रवणरूपत्वान्मीमांसापरनामकत्वं मननापरनामकत्वं च विरुद्धमिति शङ्कापरिहारं च सूचयति ॥ **विचारणीयेति** । ('गुप्तिज्किद्भ्यः सन्' । 'मान्बध-दान्शान्भ्यो दीर्घश्चाऽभ्यासस्य' । सूत्रद्वयोक्तेभ्यः सन्स्यान्मानादीनामभ्यासस्येकारस्य दीर्घश्च । मानोः

जिज्ञासायाम् । अभ्यासस्य विकार आभ्यासः स चेत्वमेव । तथा हि दीर्घश्रुत्याऽच इत्युपस्थितम् । न च मानादीनामभ्यासस्य विकारभूतोऽच् इकारादन्यः सम्भवति । यदि तु ह्रस्व इत्येव गृह्येत तर्हि तद्धितनिर्देशो व्यर्थः स्यात् । सन्यभ्यासे ईकारश्रवणार्थं क्रियते । अन्यथाऽजन्तस्याभ्यासस्य विधीयमानो दीर्घो हलादिशेषमात्रं प्रतीक्षतां न तु सन्वदित्वमपि । तदेवाह । इकारस्येति । सनाद्यन्ता इति धातुत्वम् । 'सन्यङोः' । सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । 'अः प्रत्ययात्' । प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । मीमांसा । कर्मण्यनीयर्कर्मण्यनीय-रिति । 'तव्यत्तव्यानीयरः' । धातोरेते प्रत्यया भावकर्मणोः स्युः । तकाररेफौ स्वरार्थौ । एधितव्यम् । एधनीयं त्वया भावे औत्सर्गिकमेकवचनं क्लीबत्वं च । चेतव्यश्चयनीयो वा धर्मस्त्वयेत्याद्युदाहरणानि) । तथा च तद्धर्मिक एव संशयः प्रदर्शनीय इति वाक्यशेषः । चिन्तासाफल्याय शास्त्रधर्मिकानारम्भणीय-त्वादिकोटिकसंशयप्रदर्शनेऽपि विचार्यत्वाज्जिज्ञासायास्तद्धर्मिक एव संशयः प्रदर्श्यत इत्याह ॥ **सत्यम् इति** । एतच्छास्त्रेत्यादिना जिज्ञासाया विषयत्वाय बुद्धिसन्निहितत्वोक्तिः । तद्विजिज्ञासस्वेति श्रुत्या जिज्ञासायाः कर्तव्यत्वे प्रतिपादितेऽपि ज्ञानेच्छयोश्च विधेयत्वासम्भवेन विचारविधानस्य च वस्तुतः सम्भवेऽपि प्रकृतब्रह्मविचारकर्तव्यत्वं श्रुत्युक्तमपि तस्य विषयादिमत्त्वे युक्तं तदभावे चायुक्तमिति सूत्रे वर्तिष्यमाणविषयादिमत्त्वविचारसाध्यस्य श्रुत्यर्थभूतविचारकर्तव्यताया युक्तत्वस्य सूत्रप्रवृत्तेः पूर्वं विषया-दिसंशयदशायामनिश्चितत्वेन श्रुतेः विशेषदर्शनत्वासम्भव इत्याह ॥ **मैवमिति** । श्रुत्यर्थस्य विचार-कर्तव्यत्वस्याद्यापि विषयादिसंशयदशायामप्यनिर्णीतत्वेन युक्ततयाऽनिश्चितत्वेन । अनेनास्मिन्नधिकरणेऽस्य विषयवाक्यत्वं सूचितमुपपादितं भवति । न चैवं तद्ब्रह्मेत्यादिब्रह्मशब्द इत्याद्युत्तराधिकरणादाविव तद्विजिज्ञासस्वेति श्रुत्युक्तजिज्ञासा कर्तव्या न वेति सन्देह इति साक्षादेव तस्य विषयवाक्यत्वसूचन-सम्भवे सन्देहहेतुविशेषादर्शनोपपादनमुखेन तस्य विषयवाक्यत्वसूचनोपपादने कुत इति वाच्यम् । तद्विजिज्ञासस्वेति वाक्यार्थविचारपरस्याप्यस्य न तेन रूपेण प्रवृत्तिरपि तु शास्त्रव्यापारविचारकर्तव्यता-समर्थनद्वारेण शास्त्रारम्भणीयताप्रतिपादकत्वमुखेनेति दर्शयितुं तथा सूचनमिति द्रष्टव्यम् । तत्रोक्तरीत्या विषयसंशयसिद्धौ तस्यां न्यायविरोधाभावाद्युक्ता पूर्वपक्षप्राप्तिरित्याह ॥ **तत्रेति** । तद्विध्याप्रामाण्य-शास्त्रानारम्भणीयत्वप्राप्त्यपेक्षया तावच्छब्दः । यद्वा सिद्धान्तापेक्षया तावच्छब्द इति ध्येयम् ॥ **विषयेति** । तत्र विषयादीनां वैधुर्यं प्रत्येकमेव हेतुर्न तु मिलितम् । प्रत्येकं व्यभिचाराभावादिति द्रष्टव्यम् । अनुबन्धग्रहणं च यत्र कर्तव्यता तत्र विषयादिकमनुबध्यत एवेति व्युत्पत्त्याऽनुबन्धशब्दस्य तत्र प्रसिद्धिसूचनद्वारा विषयादिमत्त्वस्य कर्तव्यताव्यापकत्वसूचनेन विपक्षे बाधकत्वं सूचयितुं न तु हेत्वन्तर्गतम् । अनुबन्धशब्दार्थमेव विशदयन् कृष्यादिकमत्र व्यतिरेकदृष्टान्त इति सूचयति ॥

**कर्तव्यतेत्यादिना** । स्यादेतदेवं यदि विषयादिमत्त्वस्य कर्तव्यताव्यापकत्वं स्यात् । न चैवम् । विपक्षबाधकाभावेन तदनिश्चयादित्यत: कर्तव्यतायां विषयादिमत्त्वस्याकारणत्वेऽपि कर्तव्यजिज्ञासां प्रति तत्कारणत्वस्यान्वयव्यतिरेकाभ्यां निश्चितत्वाद्विषयाद्यभावेऽपि कर्तव्यताऽङ्गीकारे कर्तव्यजिज्ञासाया: तदभावेऽपि प्रसक्त्याऽकारणकार्योत्पत्तिप्रसङ्गस्यैव विपक्षबाधकत्वाद्व्याप्तिसिद्धिरित्यभिप्रेत्याह ॥ **विषयादीति** । अत्र कर्तव्यतामात्रस्य विषयादिप्राप्तावपि प्रकृतत्वाद् दृष्टान्तसौलभ्याच्च जिज्ञासाग्रहणम् । अन्वयस्य सौलभ्यात् कृष्यादिग्रहणेन सूचितत्वाच्च व्यतिरेकमेव कारणतोन्नाहकत्वेन दर्शयति ॥ **विषयाभावादिति** । अत्र पूर्वद्वये स्वरूपेण न जिज्ञास्यत्वमुत्तरद्वये तु स्वरूपेण जिज्ञास्यत्वेऽपि पुरुषविशेषेणाजिज्ञास्यत्वमिति विशेषसूचनाय पूर्वत्र न जिज्ञास्यत इत्युक्त्वोत्तरत्र न प्रवर्तत इत्याद्याह ।

स०— **नन्विदमित्या**देरयमर्थ: । जिज्ञासाया: कर्तव्यताऽकर्तव्यते विचार्ये न शास्त्रस्यारम्भणीयतानारम्भणीयते । तयोस्तदन्वयव्यतिरेकानुविधायित्वादिति । तत्र योग्यतां प्रदर्शयितुं न्यायनिबन्धनमित्युक्तम् । न हीत्यादिनान्वयव्यतिरेकौ दर्शितौ । केचिज्जिज्ञासाशब्दस्य रूढ्या लक्षणया वा श्रवणार्थत्वमाहु: । तन्निरासार्थं युक्त्यनुसन्धानेत्यादिना जिज्ञासाशब्दार्थो दर्शित: । श्रवणादित्रयं जिज्ञासाशब्दार्थत्वेन प्रसक्तम् । प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयो: साध्यसाधनभावानुपपत्ते: अस्य तदुपपादकत्वाच्च तत्र तत्र श्रवणस्योपदेशमात्रेण सिद्धे: निदिध्यासनस्य मननानन्तरं स्वत एव सिद्धत्वात् मननस्य असम्भावना विपरीतभावनाव्युदासार्थत्वेन न्यायनिबन्धनापेक्षत्वात्तदेव जिज्ञासाशब्दार्थ इत्यर्थ: ॥ **सत्यमिति** । अस्माभिरपि जिज्ञासा कर्तव्यतैव विचार्यते । शास्त्रस्य आरम्भणीयत्वानारम्भणीयत्वविचारस्तु फलभूत इत्यर्थ: ॥ **एतच्छास्त्रेति** । पूर्वपक्षसिद्धान्तन्यायाभ्यां कर्तव्यताकर्तव्यतयोरुपस्थितिसम्भवाद्विनिगमकाभावाच्च संशय इत्यर्थ: ॥ **तत्र तावदित्यादि** । जिज्ञासा न कर्तव्या विषयविधुरत्वात् समनस्केन्द्रियसन्निकृष्टस्यालोकमध्यमध्यासीनस्य घटस्य जिज्ञासावत् । प्रयोजनशून्यत्वात् सन्दिग्धवायसदशनजिज्ञासावत् । सम्बन्धरहितत्वाच्छब्दज्ञानार्थिनो वैद्यकजिज्ञासावत् । अधिकारिरहितत्वात् मुमुक्षोर्वात्स्यायनशास्त्रोक्तार्थवत् । सर्वत्र व्यतिरेके कृष्यादिवदिति दृष्टान्त इति भाव: ॥ वात्स्यायनं भोगशंसनम् ॥

प० शास्त्रधर्मिकसंशयस्य जिज्ञासाकर्तव्यत्वोक्तिपरसूत्राननुरूपत्वभ्रमनिरासाय सौत्रजिज्ञासाकर्तव्यत्वाकर्तव्यत्वयो: शास्त्रानारम्भारम्भौ फले इति शङ्कामुखेन दर्शयति ॥ **नन्वित्यादिना** । शास्त्रमिदंशब्दार्थ: । शब्दानां भिन्नार्थत्वभ्रमनिरासायोक्तं युक्त्यनुसन्धानात्मकेत्यादि । श्रवणाद्यात्मकत्वे शास्त्रारम्भेण हेतुहेतुमद्भावायोगादुक्तं युक्त्यनुसन्धानेति । भाष्यटीकायां श्रवणादिरूपत्वोक्तेर्भाव:

चन्द्रिकायां व्यक्तः । इच्छायां सन्निधानात्कथमेतदित्यतो रूढोऽयं जिज्ञासाशब्द इति भावेन उक्तं मीमांसेत्यादि । जिज्ञासायाः कर्तव्यतायामारम्भणीयं भविष्यतीत्यस्यान्यथा तु नेतीत्यनेनान्वयः। मध्ये हेतुहेतुमद्भावं व्यनक्ति ॥ **न हीति** ॥ **न्यायेति** । न्यायाः करणानि यस्याः सा न्यायकरणिका तस्यामित्यर्थः ॥ **विना विचारेणेति** । विषयप्रयोजनादिमत्त्वरूपन्यायानुसन्धानेन विना जिज्ञासा-कर्तव्यत्वरूपश्रुत्यर्थस्येत्यर्थः ॥ **अनुबन्धेति** । अनुबध्यते प्रवर्त्यतेऽनेन प्रणेता श्रोता चेत्यनुबन्धः प्रवर्तकस्तद्विधुरादित्यर्थः । व्यतिरेकमुखेन व्याप्तिमाह ॥ **कर्तव्यतेति** ॥ **प्रतिबन्धेति** । व्याप्तिसिद्धिः इत्यर्थः । हेतोरप्रयोजकत्वं निराह ॥ **विषयादीति** । विषयादिवैधुर्यं प्रत्येकं हेतुरिति भावेन हेतुचतुष्टये अन्वयव्याप्तिं दृष्टान्तोक्त्या व्यनक्ति ॥ **विषयशून्यत्वाद्धीति** । सन्दिग्धस्यैव विषयत्वेन निश्चितस्य अविषयत्वादिति भावः । विषयाभावनिमित्तमजिज्ञास्यत्वमत्रेति शङ्काव्युदासायोक्तं **सन्दिग्धमपीति** । **शब्दज्ञानम्** । सुशब्दापशब्दविवेकेन साधुशब्दज्ञानम् ॥ **वात्स्यायने** । कामतन्त्रे ।

**या०**— ननु जिज्ञासायाः कर्तव्यत्वमेव विचारणीयं न शास्त्रारम्भणीयत्वम् । तस्य तदन्वय-व्यतिरेकानुविधायित्वादित्यभिप्रेत्य शङ्कते ॥ **नन्विदमिति** । ननु सन्नन्तजिज्ञासाशब्दवाच्येच्छायां कथं न्यायोऽङ्गभूत इत्यत उक्तम् ॥ **विचारमीमांसामननापरपर्यायनामकेति** । ततश्च जिज्ञासाशब्दस्य विचारादिशब्दापरपर्यायत्वान्नेच्छापरत्वमत्रेति भावः । सूत्रनिबद्धन्यायानां क्वचिद्विचाराङ्गत्वं क्वचित् मीमांसाङ्गत्वं क्वचिन्मननाङ्गत्वं शास्त्रे व्यवहृतम् । अतस्तस्य सर्वस्य सङ्ग्रहाय विचारेत्याद्युक्तम् । ननु विचारादिरपि न्याय एवातस्तत्र कथं न्यायोऽङ्गभूत आत्माश्रयत्वप्रसङ्गादित्यत उक्तम् ॥ **युक्त्यनुसन्धा-नात्मकेति** । युक्तिभिरनुसन्धानं पूर्वोत्तरपक्षबलाबलचिन्तनं तदात्मकेत्यर्थः । यथा आहुः । पूर्वोत्तरपक्षबलाबलचिन्ता विचार इति । तथा च विचारशब्दोऽत्र न न्यायपर इति भावः । अस्माभिरपि जिज्ञासाकर्तव्यतैव विचार्यते । आरम्भणीयत्वविचारस्तु तत्फलभूतोऽतःपूर्वं प्रदर्शित इत्याशयवानाह ॥ **सत्यमिति** ॥ **संशयास्पदत्वादिति** । वक्ष्यमाणरीत्या विषयाद्यभावेनोपपत्तिविरोधात् । तद्विजिज्ञास-स्वेत्यादिकं न प्रमाणतया निश्चेतुं शक्यमित्याशयः । निश्चितकार्यकारणाभावसूचकत्वान्नात्राप्रयोजकता-शङ्केत्याह ॥ **विषयादिसद्भाव इति** । विषयादिसद्भावस्य जिज्ञासाकारणत्वमुपपादयति ॥ **विषय-शून्यत्वाद्धीत्यादिना** । वात्स्यायने कोकशास्त्रे ॥

**श्री०**—**उक्तसन्देहकारणतोपपत्ताविति** । आरम्भणीयानारम्भणीयोभयविधवाक्यरूपोक्तसन्देहकारण-प्राप्तावित्यर्थः ॥ **अङ्गभूतेति** ॥ तत्करणीभूतेत्यर्थः ॥ **न्यायनिबन्धनमिति** । तद्ग्रथनात्मकं शास्त्रमित्यर्थः ।

भविष्यत्यन्यथा तु नेत्यन्वयः । तत्रारम्भणीयत्वमुपपादयति ॥ **न हीति** ॥ **तद्द्वारभूतेति** । तत्करणीभूतेत्यर्थः ॥ **अन्यथा तु नेतीति** । जिज्ञासाया अकर्तव्यत्वे त्वारम्भणीयं न भविष्यतीत्यर्थः ।

**च०**— ननु शास्त्रारम्भणीयतायाः जिज्ञासाकर्तव्यतानिरूपितान्वयव्यतिरेकानुविधायितया तत्प्राधान्येन जिज्ञासाधर्मिकसन्देहाकारप्रदर्शनस्यैवौचिती न शास्त्रधर्मिकस्य तस्येत्याशङ्कते ॥ **नन्विति** । शास्त्रीयविचारमीमांसामननपदानामेकार्थतात्पर्यकतां ध्वनयितुमपरनामकेत्यन्तं, तथा जिज्ञासासूत्रस्य मनन-विधिमूलत्वमेव न श्रवणविधिमूलत्वमिति सूचयितुं मननगृहीतिः स्वार्थसन्नन्तमीमांसाशब्दस्येव जिज्ञासा-शब्दस्यापि रूढत्वमेवेति ज्ञापयितुं मीमांसाग्रहणं. विचारशब्दं व्याकर्तुं युक्त्यनुसन्धानात्मकेति व्याचख्युः व्याकर्तारः । ननु सन्नन्तजिज्ञासापदवाच्येच्छाया कथं न्यायोङ्गभूत इत्यत उक्तम् ॥ **मीमांसामनना-परनामकेति** । ततश्च जिज्ञासाशब्दस्यापि विचारादिशब्दपर्यायत्वान्नेच्छापरत्वमिति भावः । सूत्र-निबद्धन्यायानां क्वचिद्विचाराङ्गत्वं क्वचिन्मीमांसांगता कुत्रचिन्मननाङ्गत्वं च शास्त्रे व्यवहृतं तस्य सर्वस्य सङ्ग्रहाय विचारेत्याद्युक्तम् । ननु विचारादिर्न्याय एवातः कथं तत्र न्यायोङ्गभूत आत्माश्रयत्वप्रसङ्गात् इत्यत उक्तम् । **युक्त्यनुसन्धानात्मकेति** । लिङ्गपरामर्शात्मकेत्यर्थः । एतत्प्रयोजकः पञ्चावयवाद्युपेतः परार्थानुमानप्रयोगो न्यायशब्देनात्र विवक्षित इति तयोरङ्गाङ्गिभावोपपत्तिः । न चात्र पराभावः शिष्यस्यैव परत्वादित्यवधेयमित्यपि व्याचक्रिरे । युक्त्यनुसन्धानात्मकेत्यस्य युक्तिकर्मकानुसन्धानपरता प्रतीतिविधूननफलिकायाः समनन्तरं करिष्यमाणैतच्छास्त्रव्युत्पादनीयन्यायकरणिकायां जिज्ञासायामित्या-त्मीयव्याख्याया एव तथा युक्तिभिरनुचिन्तनं मननमिति नयान्तरीयपरःशतव्यवहृतीनां च विरोधापत्त्या लिङ्गपरामर्शात्मकेत्यर्थार्पनं कथं सङ्गच्छताम् । युक्त्यनुसन्धानपदस्य दर्शितार्थकतायां तस्य युक्तिकर्मकताया एव ध्रौव्यादात्मानात्मनोस्तद्विषयताप्रत्याख्यानपूर्वकनिर्विषयतासमर्थनपरोत्तरग्रन्थानुत्थितेश्च युक्तिकरणका-नुसन्धानतात्पर्यकतैव तत्पदस्य ग्रन्थकृदभिप्रेतेत्यङ्गाङ्गिभावानुपपत्तिशङ्काङ्कुरस्याप्यनुत्पाद इति गुरुपादाः प्राहुः । चिन्तासाफल्याय शास्त्रधर्मिकसन्देहस्य प्रदर्शितत्वेऽपि प्राधान्याज्जिज्ञासाधर्मिक एव स प्रदर्श्यत इत्याशयेनाह ॥ **सत्यमिति** ॥ **विशेषादर्शनम्** । व्यावर्तकादर्शनम् । प्राक्सूत्रप्रवृत्तेर्विषयादिसन्देह-दशायां श्रुत्यर्थभूतविचारकर्तव्यत्वस्यानवधृत्या श्रुतेर्न विशेषदर्शनता घटत इत्यनुसन्दधानः समाधत्ते ॥ **नैवमिति** ॥ **श्रुत्यर्थस्य** विचारकर्तव्यत्वस्य ॥ **अद्यापि** विषयादिसन्देहदशायां **अनिर्णीतत्वेन** । युक्तत्वप्रकारकनिश्चयाविषयीकृतत्वेन । एतेन प्रकृतनये विषयवाक्यतैतस्य ध्वन्यते ॥ **संशयास्पदत्वात् इति** । अभिधास्यमानदिशा विषयाद्यभावलक्षणयुक्तिविरोधात्तद्विजिज्ञासस्येति वाक्यं प्रामाण्यप्रकारक-निश्चयेनावगाढुं दुःशकमिति भावः ॥ **अनुबन्धविधुरत्वादिति** । कर्मसाधनघञन्तोऽनुबन्धशब्दो अनुबध्यमानपरः । अत्र च हेतुचतुष्टयमेवाभिप्रेतं नत्वेकविशेषितापररूपं तत्कूटरूपं वा तेन न निग्रह-

सिद्ध्यवकाशः ॥ **कर्तव्यता** । कृतिविधेयता ॥ **विषयादिमत्तया व्याप्ता** । विषयादिमत्ता-निरूपितव्याप्तिविशेषिता । धूमानुमाने यथा धूमो यदि वह्निजन्यो न स्यात्तदा वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहितजन्यः स्यादिति तर्कोपजीविना धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति तर्केणावधृतकार्यकारणभावानुगृहीतव्याप्तिमूलकस्य पर्वतो यदि निर्वह्निः स्यात्तदा निर्धूमः स्यात् इति विषयपरिशोधकतर्कस्येव प्रेक्षावत्कर्तव्यता यदि विषयाद्यनुबन्धचतुष्टयप्रयोज्या न स्यात्तदा तन्निरू-पितान्वयव्यतिरेकानुविधायिनी न स्यादिति प्रसङ्गोपजीविना यदि कर्तव्यता तच्चतुष्टयव्यभिचारिणी स्यात्तदा तच्चतुष्टयप्रयोज्या न स्यादितिप्रसङ्गेन निर्धारितप्रकृतसाध्यव्यतिरेकनिष्ठसाधनव्यतिरेकनिरूपित-व्याप्तिमूलकस्य यदि कर्तव्यता स्यात्तर्हि तद्व्यापिका सविषयकता स्यादिति तर्कस्यावतरणसम्भवात् नाप्रयो-जकतेत्याह ॥ **विषयादिसद्भाव इति** । हेतुचतुष्टयेऽपि व्याप्तिमुपपादयति ॥ **विषयादीति** । असिद्धिं आशङ्कते ॥ **विषयादीति** ।

**सु० — विषयादिवैधुर्यमेवात्र कथमिति चेदित्थम् । न तावदनात्मविषयेयं जिज्ञासा । तस्य तृणादिलक्षणस्य प्रत्यक्षादिनैव निश्चितत्वात् । सन्दिग्धश्चार्थो न्यायविषयो भवति । यथोक्तम् । 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क' इति । निष्पादितक्रिये च कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायातिपातः । नाप्यसौ जिज्ञासितः कस्मैचन प्रयोजनाय कल्पते । एवंविधे चाधिकारी दूरोत्सारितः । यतोऽर्थी समर्थो विद्वानधिक्रियते । न चैतादृशेऽर्थेऽर्थिता सम्भवति । धर्मादिलक्षणस्त्वनात्मा शास्त्रान्तरादिनैव निर्णीतः । आत्मा च शरीरेन्द्रियादिसङ्घातव्यतिरिक्तो नास्त्येव । शरीरादिकं च यथायथं प्रत्यक्षादिनैव निश्चितम् । नन्वात्मा शरीरादिव्यतिरिक्तोऽहमित्यसन्दिग्धाविपर्यस्तसाक्षात्प्रतीत्यैव निश्चीयत इति चेत् । एवं तर्हि तत एव न जिज्ञास्यः । अत एवानादितस्तदीयतत्त्वज्ञाने विद्यमानेऽपि इष्टानिष्टप्राप्तिपरिहारयोरदर्शनान्नासौ जिज्ञासितः कस्यचित्प्रयोजनस्येष्टे ।**

वा० — एवं हेतोर्व्याप्तिमुपपाद्यासिद्धिं परिहर्तुं शङ्कते ॥ **विषयादीति** । सूत्रेऽधिकारिसमर्पकाथ-शब्दस्य विषयसमर्पकब्रह्मशब्दापेक्षयाऽऽदित्वेन तन्निवर्त्यपूर्वपक्षस्य प्रथमतः कथनीयत्वेऽपि विषयसमर्पको-शब्दस्य ततोऽप्यादित्वाद्विषयाभावोक्त्याऽधिकार्यभावसिद्धिवदधिकार्यभावोक्त्या विषयाभावसिद्धेरभावेन लाघवाच्च सूत्रे ॐब्रह्मशब्दाभ्यां तदर्थकथनपरौतत्ववाची ह्योङ्कार इत्यनुव्याख्यानेन च सूचितपूर्वपक्ष एव प्रथमतो वक्तव्य इत्यभिप्रेत्य विषयोऽस्य शास्त्रस्य भवन्ननात्माऽऽत्मा वा । आद्येऽप्युपेक्षणीयत्वेन सर्वसिद्धस्तृणादिर्वा । अतथाविधो धर्मादिर्वा । द्वितीयेऽपि जीव ईश्वरो वा । आद्येऽपि स्वात्मा

परात्मा वेति विकल्पान्मनसि निधायाद्यं तावन्निराकरोति ॥ **न तावदिति** । अत्राभ्यर्हितत्वादात्मपक्षस्य प्रथमं निराकर्तव्यत्वेऽपि सूचीकटाहन्यायेनानात्मपक्षनिराकरणमादौ कृतमिति मन्तव्यम् । प्रत्यक्षादिनेत्यादिपदेन लोकसिद्धानुमानवाक्ययोः सङ्ग्रहः ॥ **अविज्ञातेति** । कारणं प्रमाणं चोपपत्तिश्च ताभ्यामित्यस्याविज्ञाततत्त्व इत्यनेन सम्बन्धः । अत्र न विशेषतो ज्ञातं तत्त्वमस्येति विशेषज्ञानरहितत्वोक्त्या संशयकारणीभूतधर्मिज्ञानरूपसामान्यज्ञानलाभेन सन्दिग्धत्वसूचनात्प्रकृतोपयोग इति ज्ञेयम् । निश्चितस्य ज्ञानविषयत्वं युक्तिविरुद्धं चेत्याह ॥ **निष्पादितेति** । निष्पादिता क्रिया यस्मिंस्तस्मिन्कर्मकारके क्रियारूपं तदुपकारकं वा विशेषमकुर्वतः क्रियासाधकत्वरूपं साधनत्वं न स्यादित्यर्थः । निष्पादिता प्रमितिलक्षणा क्रिया यस्य कर्मणो विषयस्य स इह तथोक्त इति कल्पतरुः ॥ **असाविति** । उपेक्षणीय इत्यर्थः ॥ **एवंविधे चेति** । उपेक्षणीयविषयक इत्यर्थः । सामान्यविवक्षया नपुंसकनिर्देशोऽयमिति ज्ञातव्यम् । तेन जिज्ञासाया विशेष्यत्वे स्त्रीलिङ्गापत्तिस्तृणादेरर्थस्य विशेष्यत्वे तु विषयस्य कुत्रापि साधिकारित्वाभावादप्रसक्तप्रतिषेधापत्तिरिति दूषणमपास्तं भवति ॥ **न चैतादृश इति** । अर्थी समर्थ इत्यत्रार्थत इत्यर्थ्यत इति व्युत्पत्तिभ्यां क्रमेण विषयः प्रयोजनं चार्थौ ज्ञेयत्वेन विषयवत्ता काम्यत्वेन प्रयोजनवत्ता चार्थिता विवक्षिता । ततश्चैतादृशे निश्चितेऽर्थे विषयेऽर्थिता जिज्ञास्यत्वेन तद्वच्चैतादृशे अविद्यमानेऽर्थे प्रयोजनेऽर्थिता काम्यत्वेन तद्वत्ता पुरुषस्य न हि सम्भवतीत्यर्थः । यद्वा न चैतादृशोऽर्थ इति वक्ष्यमाणमर्थ इत्येवंविधे चेत्यनेनापि सम्बध्यते । एवंविधे एतादृश इत्यनयोः निश्चिते निष्प्रयोजने चेत्युभयमप्यर्थः । सतिसप्तम्यौ चेमे । सप्तम्यन्तोऽर्थशब्दो विषयमात्रपरः । अर्थिशब्दश्चोक्तरीत्या उभयपरः । एवं च निष्प्रयोजने निश्चिते च विषये सत्यधिकारी दूरोत्सारितो यतोऽर्थी समर्थो विद्वानधिक्रियते । न च निष्प्रयोजने निश्चिते च विषये सत्युक्तोभयविधार्थिता सम्भवतीत्यर्थः । धर्मादीत्यादिपदेन देवादिस्वरूपमश्वलक्षणादिकं च गृह्यते । शास्त्रान्तरं मीमांसान्तरम् । आदिपदेनाश्वविद्यादिसङ्ग्रहः । आत्मपक्षं दूषयति ॥ **आत्मा चेति** । यथा गोशब्दस्य व्यक्त्याकृतिजातिसन्निधौ प्रयुज्यमानस्य वाच्यं कैश्चिज्जातिरिति कैश्चिद्व्यक्तिरिति कैश्चिदाकृतिरिति कैश्चित्त्रितयमपीति प्रतिपन्नं तथा चैतन्यकार्यकारणसङ्घातसन्निधावुत्पद्यमानाहंप्रत्ययस्यालम्बनं कैश्चिद्देहादिष्वेकैकमेव प्रतिपन्नं कैश्चिच्च सङ्घात एवेति प्रतिपन्नमिति पक्षद्वयमत्राभिप्रेतम् । अत एव गीताभाष्यटीकायां पक्षद्वयमप्युदाहृत्य निराकृतम् । एवं च शरीरेन्द्रियादिश्च सङ्घातश्चेति विग्रहः । सङ्घातश्च प्रकृतत्वात्तेषामेव । आदिपदेन च मनोबुद्ध्योर्ग्रहणम् । अत्रात्मा नास्त्येवेत्येवं विशेषणपरित्यागेनान्वयस्याभिप्रेतत्वाच्छून्यपक्षोऽप्यत्र शङ्कितः । एवं चोत्तरवाक्ये शून्यस्यासत्वादेव न विषयत्वमित्यपि द्रष्टव्यम् । शरीरादीनां प्रत्येकं सङ्घातस्य वा आत्मत्ववादिनामहंप्रत्ययविषयत्वेन शरीरादीनां प्रत्यक्षत्वस्य सम्मतत्वेऽप्यादिपदेनानु-

मानादिग्रहणं यथायथमित्युक्तिश्च विषयत्वाभावप्रयोजकनिश्चितत्वमुपपादयतामस्माकं परेण प्रमाणान्तरसिद्धत्वेऽङ्गीकृतेऽपि न क्षतिरिति प्रदर्शयितुमिति द्रष्टव्यम् । तत्र देहस्य तावदात्मत्वमहं मनुष्य इत्याद्यनुभवसिद्धमिति कश्चित् । अत एव गीताभाष्यटीकायां न केवलमित्यादिनैतदेवोक्तम् । सत्यपि शरीरे विषयज्ञानानामिन्द्रियैरन्वयव्यतिरेकवत्त्वात्कारणतया अन्वयव्यतिरेककल्पनादाश्रयतया अन्वयव्यतिरेककल्पनस्याभ्यर्हितत्वाच्छरीरमहमितिप्रत्ययाभावेऽपि मनुष्यत्वादिधर्मविशिष्टस्याहंप्रत्ययालम्बनत्ववत्काणोऽहं मूकोऽहमिति धर्मविशिष्टेन्द्रियाणामहन्त्वेन सामानाधिकरण्यस्य सत्त्वात् । शरीरस्याहंप्रत्ययालम्बनत्वविज्ञानान्वयव्यतिरेकयोरिन्द्रियात्मनामाश्रयत्वेनाप्युपपत्त्येन्द्रियाणामेव व्यस्तानामात्मत्वमित्यपरः । एतेनेन्द्रियचैतन्यपक्षोऽपि निरस्त इति गीताभाष्यटीकायामियमेव तत्पक्षप्रसक्तिरभिमता । तत्सन्निधौ ईक्षणदर्शनस्य शरीरादिसर्वसाधारणत्वेनास्यैव विशिष्यप्रसञ्जकत्वात् । तत्रैव पूर्वत्र शरीरप्राणजठरानलेन्द्रियमनोविषयसन्निधावीक्षणदर्शनादेषामन्यतमः किं न स्यादित्युक्तिस्तु साधारणत्वहेतोस्तत्तत्प्रापकत्वमभिप्रेत्य न तु तस्यैव विशेषप्रापकत्वमित्यभिप्रेत्यासम्भवादिति द्रष्टव्यम् । स्वप्ने चक्षुराद्यभावेऽपि केवले मनसि विज्ञानालम्बनत्वाहंप्रत्ययविषयत्वयोरबाधितयोर्दर्शनाद्रूपादिविज्ञानानां चक्षुराद्याश्रयत्वे तदभावे केवलं मनसि स्मृत्यनुपपत्तेराश्रयान्तरे च सिद्धे चक्षुरादीनां ज्ञानान्वयव्यतिरेकयोः करणविषयतयाऽपि उपपत्तेः । अहंप्रत्ययस्य च देह इव करणे कर्तृत्वोपचारात्सिद्धेश्चक्षुरादिकरणं शरीराधारं मन एवात्मेत्यन्यः । पूर्ववदिदमेव मनःपक्षविशेषप्रसञ्जकं टीकाभिमतं द्रष्टव्यम् । शरीरादीनां विज्ञेयतया घटादिवज्ज्ञानव्यतिरिक्तत्वेनानात्मत्वान्मनसश्च समनन्तरप्रत्ययव्यतिरेकिणोऽभावाच्च विज्ञानमेवाहंप्रत्ययालम्बनमात्मेत्यपरः । सङ्घातावलम्बनोऽहमिति प्रत्ययः सङ्घातसन्निधावहमितिप्रत्ययदर्शनादित्यन्य इत्युक्तमेव । विज्ञानव्यतिरिक्तानामात्मत्वस्य विज्ञेयत्वेन प्रत्याख्यानात्सुषुप्ते च विज्ञानलेशस्याप्यभावेन समनन्तरप्रत्ययरूपकारणाभावात्स्वोचितकारणाभावे च सुप्तोत्थितस्याकस्माज्जायमानाहंप्रत्ययस्य सदवलम्बनत्वानुपपत्त्या शून्यालम्बनत्वमेवेत्यपि कश्चित् । नन्वित्युत्तरवाक्येन च सर्वे एते पक्षा निराक्रियन्ते । तत्र चात्माऽसन्दिग्धाविपर्यस्तसाक्षात्प्रतीत्यैव निश्चीयत इत्येतावन्मात्रेण शून्यपक्षनिराकरणम् । अत्र च य एवाहं पूर्वेद्युर्हस्तिनमद्राक्षं स एवाहं सम्प्रति तुरगमुपलभ इत्येवमादिप्रत्यभिज्ञा साक्षात्प्रतीतिरभिप्रेता । तद्वशाच्च सुप्तावात्मनः सत्त्वमास्थेयमिति । विशिष्टेन वाक्येन तु पक्षान्तरनिराकरणम् । तस्य च स्वप्ने शरीरानवभासेऽपि चक्षुरादिव्यापाराभावेऽपि चाहमिति साक्षात्प्रतीतेः सुप्ते च शरीरेन्द्रियाणां मनोबुद्ध्योश्च व्यापाराभावेऽप्येतावन्तं कालं सुखमस्वाप्समित्युत्थितपरामर्शानुरोधेनाहमितिप्रतीतेः सुप्तिदशायामपि सिद्धेस्तस्याः शरीरादिभिन्नविषयत्वमिति । शरीरादेर्ममेतिप्रतीतिविषयस्याहमितिप्रतीतिविषयत्वासम्भवात् अहमितिप्रतीतेः शरीरादिव्यतिरिक्तविषयकत्वमित्यप्यर्थः । एवं चानेन सर्वपक्षनिराकरणम् । गीताभाष्ये

तु प्रकारान्तरेणैषां पक्षाणां निराकरणमिति द्रष्टव्यम् । एवं तर्हि नात्माभावे तस्य शरीराद्यभेदे वा अस्माकं तात्पर्यं किन्तु तस्य निश्चितत्वे । तदर्थं च तस्य शरीराभेदायुक्तिः । एवं च शरीराद्यतिरिक्ततयाऽप्यात्मनो निश्चयाङ्गीकारे तावतैवाजिज्ञास्यत्वरूपास्मदभिमतसिद्धिरित्याह ॥ **एवं तर्हीति** ।

स० — **न तावदिति** । ज्ञातुमिच्छा जिज्ञासा । निश्चित एवेत्यसन्दिग्धो विषयो न जिज्ञासां अपेक्षते । सा च विचाररूपत्वात् नासन्दिग्धं विषयीकरोतीत्युभयतो नियमः । सामान्यतो ज्ञाते विशेषेण सन्दिग्धेऽर्थे कारणस्य प्रमाणस्योपपत्तितोऽनुग्राहकत्वेन विशेषनिर्णयार्थमूहस्तर्क इति समुदायार्थः ॥ **कर्मणि** । कर्मकारकभूते अर्थे । निष्पादिता क्रिया यस्य तन्निष्पादितक्रियं तस्मिन्विशेषानाधायिनः क्रियाफलाजनकस्य साधनस्य करणस्य साधनन्यायातिपातः । क्रियायां साधकतमत्वाभावः । क्रियायामनुपकुर्वतः साधनत्वाभावात् तृणादिविषये प्रत्यक्षादिनैव निश्चिते निष्पादितज्ञानक्रियेऽस्य तर्कस्य अनुपयोगित्वान्न तद्विषया जिज्ञासेति भावः ।

प० — सौत्रब्रह्मादिपदार्थोक्तिपरस्योतत्ववाचीत्यादेर्व्याख्यर्थे निर्विषयत्वं तावद्व्यक्तीकुर्वन्नैन्द्रियकानैन्द्रियकरूपेण वा श्रेयोऽहेतुतद्धेतुरूपेण वा द्विविधानात्मनां स्वात्मपरात्मपरमात्मनां च विषयत्वं क्रमेण निराह ॥ **अनात्मेत्यादिना** प्रयोजनं चेश्वरजिज्ञासाया इत्यतः प्राक्तनग्रन्थेन । तार्किकोक्तमाह ॥ **यथोक्तमिति** ॥ **कारणोपपत्तित इति** । कारणस्य प्रमाकारणस्य प्रमाणस्येति यावत् । उपपत्तिः अनुग्रहः । ततः प्रमाणानुग्रहकरणेन तत्वज्ञानसम्पादको य ऊहः स तर्क इति न्यायसूत्रार्थः । निश्चितार्थकत्वेऽप्यस्तु जिज्ञासायास्तृणादिविषयत्वमित्यत आह ॥ **निष्पादितक्रिये चेति** बहुव्रीहिः । **कर्मणि** कर्मकारके । साधनन्यायोऽतिशयाधायकत्वं तस्यापगम इत्यर्थः ॥ **नाप्यसाविति** । तृणादिः इत्यर्थः ॥ **कस्मैचनेति** । चनशब्दोऽप्यर्थे निपातः । **अर्थी** । फले तत्साधने वा कामनावान् । **समर्थः** पटुकरणः । **विद्वान्** कर्तव्योपयुक्तज्ञानी ॥ **एतादृश इति** । निष्फले तृणादौ । ऐन्द्रियकस्याविषयत्वमुपपाद्यातीन्द्रियस्यापि तदुपपादयति ॥ **धर्मादीति** । यद्वा निष्फलस्याविषयत्वमुपपाद्य सफलस्यानात्मनस्तदाह ॥ **धर्मादीति** ॥ **शास्त्रान्तरादिनेति** । कर्ममीमांसया धर्मादिस्वरूपस्य दैवीमीमांसया देवतादिस्वरूपस्य कालादिस्वरूपस्य ज्योतिःशास्त्रादिना सिद्धत्वादिति भावः ॥ **तत एवेति** । साक्षात्प्रतीतिसिद्धत्वादेवेत्यर्थः । सन्दिग्धार्थ एव न्यायविषय इति प्रागुक्तत्वादिति भावः । अत एव इत्यस्य विवृतिः अदर्शनादित्यन्तेन । प्रयोजनस्येत्यधीगर्थदयेशां कर्मणीति षष्ठी ।

या० — **अविज्ञाततत्त्वेऽर्थ इति** । अविज्ञाततत्त्वेऽनिश्चितस्वरूपे सन्दिग्ध इति यावत् । अनेन तर्कविषयो दर्शितः । उत्तरेण पञ्चम्यन्तेन कारणं कारणस्याहार्यलिङ्गस्योपपत्तिः सद्भावस्तस्मादिति ।

इत्थंभावलक्षणतृतीयान्तत्वमङ्गीकृत्य तर्कव्यापारनिर्देश इति केचित् । कारणस्य प्रमाणस्योपपत्तिः सम्भावना प्रमाणविषयाभ्यनुज्ञानमिति यावत् ॥ तदुपलक्षितमिति । तत्त्वज्ञानार्थमिति प्रयोजनम् । ऊह इति लक्षणम् । ऊहशब्देन प्रसङ्गाभिधानादिति गौतमसूत्रार्थः । तृणादिरूपे कर्मणि जिज्ञासारूप-साधनस्य प्रमारूपक्रियायाः प्रत्यक्षादिसाधनान्तरसाध्यत्वेनाफलतया अन्यस्य कर्तव्यस्य क्रियाविशेषणस्य अनुपलम्भेन साधनत्वमेवापगतमित्याह ॥ **निष्पादितक्रिये चेति** । निष्पादिता प्रमितिलक्षणा क्रिया यस्य कर्मणो विषयस्य स इह तथोक्तः । साधनन्यायः साधनरीतिः । अतिपातोऽतिक्रमः । साधनत्वेन अभिमते तस्मिन्फलाभावात्साधनरीतिरपगतेति भावः ।

श्री० **अविज्ञाततत्त्वेऽर्थ इति** । विशेषेण ज्ञातं निश्चितं विज्ञातम् । विज्ञातं न भवतीति अविज्ञातं सन्दिग्धं तत्त्वं यस्यार्थस्य विषयस्यासावविज्ञाततत्त्वोऽर्थस्तस्मिन्नित्यर्थः । यथोक्तं वरदराजीयमूले अस्याविज्ञाततत्त्वोऽर्थ इत्यनूद्य सन्दिग्धो विषयो मत इति व्याख्यातम् । तत एव निश्चितत्वादेव ॥ **अत एवानादित इति** । अहमित्यसन्दिग्धाविपर्यस्तसाक्षात्प्रतीतेः सकाशादेवेत्यर्थः ।

च० — विषयाभिमतधर्मिकानात्मात्मोपरक्तकल्पद्वयीघटकादिमकल्पे ऐन्द्रियकातीन्द्रियभेद-भिन्नतृणादिधर्मादित्वगोचरकल्पद्वयीं द्वितीयेऽपि तस्मिन् जीवेश्वरत्वावगाहितद्द्वयीघटकादिमेऽपि स्वात्म-परात्मत्वविषयिणीं तां प्रतिविधित्समानोऽसिद्धिशङ्कां परिजिहीर्षति ॥ **न तावदिति** ॥ **यथोक्तमिति** । इतीत्यनेनान्वेति । गौतमसूत्र इति पूरणीयम् । अविज्ञाततत्वे । अनवधृतस्वरूपे सन्दिग्ध इति फलितं कारणपदेन प्रमाणसामान्यमुपपत्तिपदेन तद्विशेषस्ताभ्यां पञ्चमीद्विवचनस्यायं तसिलादेशः । अविज्ञानेत्यनेनान्वेतीत्येकः पन्थाः । कारणस्याहार्यलिङ्गस्योपपत्तिः सद्भावस्तस्मादिति ऊहपदार्थेनान्वेतीति चान्यः । प्रमाकरणस्य प्रमाणस्योपपत्तिरनुग्रहस्तत्करणेनेत्यर्थ इति चाभिधास्यत एव **निष्पादितक्रिये** उत्पादितप्रमितिरूपक्रियाविशेषिते **कर्मणि** विषये । **अविशेषाधायिनः** क्रियारूपं तदुपकारकलक्षणं वा विशेषमनुत्पादयतः **साधनन्यायातिपातः** । साधनमर्यादातिक्रमः । फलानुपधायकतया साधनमपि असाधनायितमिति भावः ।

सु०— **नन्वयं कर्ता भोक्ता दोषसंसर्गी चाहंप्रत्यये प्रकाशते । तद्विपरीतस्तु श्रुति-प्रतिपादितः प्रतिपत्तव्योऽतो जिज्ञासेति चेत् । एवं तर्हि जरद्गवादिवाक्यवत्पावकशैत्यानु-मानवच्च प्रतीतिविरोधेन श्रुतिजिज्ञासयोराभासतापातः । अत एव न परात्मा जिज्ञास्यः । तस्य प्राणादिलिङ्गैरवगतत्वात् । सैव जिज्ञासेति चेन्न । तस्या लौकिकप्रवेदनीयत्वेन शास्त्रा-व्युत्पादनीयत्वात् । न खलु बालकः स्तनपानेष्टसाधनत्वानुमाने शास्त्रव्युत्पादनमपेक्षते ।**

**यत्किञ्चिच्छास्त्रेऽपि लौकिकप्रवेदनीयार्थव्युत्पादनमनुवादोऽसौ न पुनः स एव प्रधानव्यापारः। ईश्वरविषया जिज्ञासा भविष्यतीति चेन्न। तस्यैवाभावात्। न चैवमीश्वरादिपदानामानर्थक्ये-नापदत्वप्रसङ्ग इति वाच्यम्। तेषां कथञ्चिज्जीवविषयतोपपत्तेः। सोऽपि हि स्वशरीरेन्द्रिया-दीनामीष्टे। प्रतीतार्थत्वोपपत्तावप्रतीतार्थत्वकल्पनायां गौरवप्रसङ्गात्। जीवस्य चाहमिति स्वप्रकाशतया स्वप्रकाशज्ञानाश्रयतया मानसप्रत्यक्षवेद्यतया वा सिद्धत्वेन न जिज्ञासाविषयत्व-मित्युक्तम्।**

वा०— नन्वात्मनः शरीराद्यतिरिक्ततया असन्दिग्धाविपर्यस्तसाक्षात्प्रतीतिनिश्चितत्वेऽपि तस्य जिज्ञास्यता न तेन रूपेणापि तु श्रुतिप्रतिपादितकर्तृत्वादिशून्यत्वरूपेणैव। फलार्थं तादृशस्यैव प्रतिपत्त-व्यत्वात्। न च प्रत्यक्षं तद्रूपनिश्चायकं प्रत्युत विपरीतमिति तस्य जिज्ञास्यतासिद्धिरित्याशङ्कते॥ **नन्विति**। एवं तर्हि माऽस्तु प्रत्यक्षनिश्चितत्वेनाविषयत्वादजिज्ञास्यता प्रत्यक्षविरुद्धताप्रयुक्ताविषय-त्वादिनिमित्तिका तु सा भविष्यति। कथमपि जिज्ञासाप्रयोजकविषयाभावे ह्यस्माकं तात्पर्यं न तु निश्चितत्वेनाविषयत्व इत्याह॥ **एवं तर्हीति**॥ **जरद्गवादिवाक्यवदिति**। तद् वाक्यं च प्रसिद्धम्। आदिपदेन 'शङ्खः कदल्यां कदली च भेर्यां भेर्यां महच्चाविरभूद्विमानमि'ति वाक्यमुच्यते। यथासङ्ख्यं च वाक्यानुमानयोः श्रुतिजिज्ञासे प्रति निदर्शनत्वम्। नन्वेवं बन्धसत्यत्वादेर्लोकप्रवेदनीयार्थस्यातःशब्दार्थ-तया भाष्यकारीयं व्युत्पादनमयुक्तं स्यादित्यत आह॥ **यत्किञ्चिदिति**। अत एव प्रत्यक्षेक्षाक्षम इत्यनुव्याख्यानावसरे यो हि लौकिकप्रवेदनीयमित्यादिना बन्धस्य सत्यत्वादेर्लौकिकव्युत्पादनीयत्वं वक्ष्यति। नन्वेवं तत्पदानां मुख्यार्थपरित्याग एव दोष इत्यतो बाधके सति तस्यादोषत्वमाह॥ **प्रतीतेति**। एवं चेश्वरादिशब्दानामपूर्वार्थविषयकत्वाभावे ईश्वरविषया जिज्ञासेत्यनेन जीवविषयेत्युक्तं स्यात्। तस्य च सिद्धत्वान्न विषयत्वमित्यभिप्रेत्य विशेषं विवक्षन्नुक्तं स्मारयति॥ **जीवस्य चेति**। स्वप्रकाशत्वमानसवेद्यतापक्षयोरहमित्येतावन्मात्रमुल्लेखः स्वप्रकाशज्ञानाश्रयपक्षे त्वहमिदं जानामीति ज्ञानस्य एकदेशोल्लेखोऽयमिति ज्ञातव्यम्। अत्र चाहमिति प्रत्यक्षेण जीवसिद्धिं वदता पूर्वपक्षिणाहमिति सिद्धान्त्यभिप्रेतं जीवविषयकप्रकाशस्य जीवरूपत्वरूपं स्वप्रकाशत्वमेव वक्तव्यमिति न नियमः। अहं इत्यस्य मानसवेदनत्वेन वा स्वप्रकाशज्ञानाश्रयसमर्पकत्वेन वाऽङ्गीकारेऽपि जीवसिद्धेरविघातात्। तथा च तस्य च स्वप्रकाशत्वादिति न्यायविवरणमुपलक्षणमित्यभिप्रेत्य प्रभाकरवैशेषिकमतमप्युपन्यस्तम्। अत एव न्यायविवरणटीकायां तदुपलक्षणत्वमुक्तम्। तत्त्वप्रकाशिकायां तु सिद्धान्तरीत्यैव सिद्धिसम्भवे किं रीत्यन्तरगवेषणेनेत्यनुपलक्षणत्वपक्षमाश्रित्य वोपलक्षणत्वेऽपि स्वशब्देनानुपादाने बीजत्वेन वा वस्तुस्थिति-प्रदर्शनमित्यवधेयम्।

स०— श्रुतिजिज्ञासापेक्षया प्रत्यक्षस्य प्राबल्यं मन्यमान आह ॥ **जरद्गवादीति** । यथासंख्यं निदर्शनम् । आदिपदेन 'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणि । तं ब्राह्मणी पृच्छति रन्तुकामा राजन्रमायां लशुनस्य कोऽर्घ' इति समग्रश्लोकग्रहणम् । 'शङ्खः कदल्यां कदली च भेर्याम्' इत्यादेर्ग्रहणार्थं वा ॥ **यत्किंचिदिति** । आपो वै शीता इत्यादावप्शैत्यादिकमित्यर्थः । सिद्धबोधनवाक्यमिहानुवादशब्दार्थः ॥ **सोऽपीति** । प्रतिनियतेश्वरत्वं सर्वस्य विद्यते सर्वेश्वरत्वं तु न कस्यापीति भावः । क्रमाद्वेदान्तिप्राभाकरवैशेषिकादिमताश्रयणेनाह ॥ **जीवस्येति** ।

प०— मायावादिरीत्या विषयत्वसम्भवमाशङ्क्याक्षप्राबल्येन निराह ॥ **नन्वयमिति** । अहंधीविषय इत्यर्थः ॥ **श्रुतीति** । 'निष्कलं निष्क्रियं' 'निरनिष्ठो निरवद्य' इत्यादिश्रुतीत्यर्थः ॥ **प्रतिपत्तव्य इति** । जिज्ञासयेति योज्यम् ॥ **जरद्गवेति** । 'जरद्गवः पादुककम्बलाभ्यां द्वारि स्थितो गायति भद्रकाणी'तिवाक्यवदिति श्रुतेरयं दृष्टान्तः । जरद्गवो वृद्धबलीवर्दः । पावकशैत्यानुमानवदिति न्यायचिन्तारूपजिज्ञासायाः दृष्टान्तः ॥ **अत एवेति** । उपायान्तरसिद्धत्वादेवेत्यर्थः । **परात्मा** परशरीरस्थजीवः ॥ **प्राणादीति** । हिताहितप्राप्तिपरिहारानुकूलचेष्टादिलिङ्गैरित्यर्थः । 'चेष्टालिङ्गेन सात्मत्वे परदेहस्य साधित' इत्युपाधिखण्डनोक्तेः । प्राणवाय्वादिमत्त्वलिङ्गेनेति वाऽर्थः ॥ **लौकिकप्रवेद-नीयार्थेति** । धूमाग्न्यादिव्याप्त्यादिव्युत्पादनमित्यर्थः । अनुवादो दृष्टान्तार्थमिति भावः ॥ **अपदत्वेति** । 'अर्थवदधातुरप्रत्ययः प्रातिपदिकमि'त्यर्थवत्त्वेन प्रातिपदिकसंज्ञायां तत्र 'प्रातिपदिकादि'त्यधिकृत्य 'स्वौजसमौड्' इतिसूत्रोक्तसुप्प्रत्यये सति सुप्तिङन्तमिति पदसंज्ञाविधानादर्थवत्त्वाभावे प्रातिपदिकसंज्ञा-ऽभावेन सुप्प्रत्ययानुत्पत्त्या पदत्वं न स्यादित्यर्थः । ईष्टे ईशो भवति । ॐब्रह्मपदयोः यौगिकत्वोक्तेः व्यावर्त्यमाह ॥ **प्रतीतेति** । जीवत्यागेनेश्वररूपाप्रतीतार्थकत्वकल्पनायामित्यर्थः । तेषामित्यनुकर्षः । अस्तु जीव एव विषय इत्यत आह ॥ **जीवस्य चेति** । न्यायविवरणरीत्याऽऽह ॥ **स्वप्रकाशतयेति** । प्राभाकररीत्या आह ॥ **स्वप्रकाशज्ञानेति** । तार्किकरीत्या आह ॥ **मानसेति** । अत्र भाष्यटीका-द्यविरोधश्चन्द्रिकायां व्यक्तः ॥ **उक्तमिति** । सन्दिग्धश्चार्थो न्यायविषय इत्यादिनोक्तमित्यर्थः ।

या०— जरद्गवादिवाक्यं श्रुत्याभासतायां निदर्शनं पावकशैत्यानुमानं च जिज्ञासाभासताया-मिति द्रष्टव्यम् । 'जरद्गवः पादुककम्बलाभ्यां द्वारि स्थितो गायति भद्रकाणि । तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घ' इत्येतज्जरद्गववाक्यशब्देन गृह्यते । 'शङ्खः कदल्यां कदली च भेर्यां भेर्यां महच्चाविरभूद्विमानमि'त्येतदादिशब्देनोच्यते ॥ **यत्किंचिदिति** । अग्निर्हिमस्य भेषज-मित्यादौ । स्वप्रकाशतयेत्यादि क्रमाद्वेदान्तिप्राभाकरवैशेषिकादिमतमाश्रित्योक्तमित्यवगन्तव्यम् ॥

श्री०— प्राणादिलिङ्गैश्चेष्टादिलिङ्गैः ॥ **सैवेति** । चेष्टादिलिङ्गैरवगतिरेवेत्यर्थः ॥ **तस्या इति** । प्राणादिलिङ्गैरवगतिरूपजिज्ञासाया लोकदृष्टान्तसिद्धानुमानप्रवेदनीयत्वेनेत्यर्थः ॥ **अपदत्वप्रसङ्ग इति** । 'अर्थवदधातुः' इति सूत्रेण प्रातिपदिकसंज्ञायां 'ङ्याप् प्रातिपदिकात्' इति सूत्रेण स्वाद्युत्पत्तौ 'सुप्तिङन्तं पदम् इति' पदत्वं भवति । अर्थराहित्ये तु प्रातिपदिकसंज्ञाऽभावेन स्वाद्यनुत्पत्तौ पदत्वं व्याहतमित्यर्थः । ईश्वरादिपदानां जीवे रूढ्यभावात्कथञ्चिदित्युक्तम् । **गौरवप्रसङ्गादिति** । धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायादीश्वररूपधर्मिकल्पनापेक्षया ईश्वरादिपदानामहमिति प्रत्यक्षसिद्धजीववाचित्वकल्पने लाघवमित्यर्थः । न्यायविवरणरीत्योक्तं स्वयंप्रकाशेति । प्राभाकररीत्योक्तं स्वयंप्रकाशज्ञानेति तार्किकरीत्योक्तं मानसेति । **उक्तम्** सन्दिग्धश्चार्थो न्यायविषय इत्यादिना ॥

च०— **जरद्गवादिवाक्यवदित्यादि** । षष्ठ्यन्ताद्वतिद्वयमुपमेये तद्दर्शनात् । लोटो लङ्वदितिवत् । आद्यं निदर्शनं श्रुत्याभासतायाम् । चरमं तु जिज्ञासाभासतायाम् । 'जरद्गवः कम्बलपादुकाभ्यामि'त्याद्यानुपूर्वीकमन्यत्रोपन्यस्तम् ॥ **अपदत्वप्रसङ्ग इति** । अर्थवत्तानिबन्धनप्रातिपदिकसंज्ञाऽभावेन तन्नियन्त्रितसुबाद्युत्पत्तेर्दुरुपपादतया तदन्तत्वाधीनपदसंज्ञाया अयोगादित्यर्थः ॥ **स्वप्रकाशतया** । स्वात्मकप्रकाशविषयतया । वेदान्तिमताशयेनेदम् ॥ **स्वप्रकाशज्ञानाश्रयतया** । अयं घटो घटमहं जानामीत्यादिव्यवसायानुव्यवसायोभयलिङ्गकमितिमातृमेयरूपत्रिपुटीप्रत्यक्षवादिनां गुरूणां मतमनुरुन्धानेनोक्तम् ॥ **मानसप्रत्यक्षवेद्यतयेति** । मनःकरणकात्माश्रितप्रत्यक्षविषयीकृततयेत्यर्थः । न्यायनयाभिप्रायेणेयमुक्तिः ॥

**सु०— किं चेश्वरः प्रमितो न वा । नोभयथाऽपि जिज्ञासा सम्भवति । नेति पक्षे अनुग्राह्यप्रमाणाभावेन जिज्ञासायास्तर्कत्वव्याघातात् । कारणोपपत्तित इति हि उक्तम् । प्रमाकरणस्य प्रमाणस्योपपत्तिरनुग्रहस्तत्करणेनेत्यर्थः । न च बुद्धावनारूढं शक्यं जिज्ञासितुम् । प्रमितत्वे तु निश्चितत्वादेव । न चैवं सकलतर्कानुपपत्तिप्रसङ्गेन व्याघातः । सामान्यतः प्रतीतौ विशेषे तदवकाशात् । न चात्र तथात्वं पश्यामः । किञ्चेश्वरे प्रमाणं भवन्न तावत्प्रत्यक्षम् । तस्यापाततस्तदभावावेदकत्वात् । नाप्यनुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । आगमस्तु कार्यनिष्ठो न निष्पन्नस्वरूपमीश्वरं शक्नोत्यवगमयितुम् । न चान्यत्प्रमाणमस्ति यन्मीमांसया अनुगृह्येत । किञ्चागमोऽपि भवन्वेद एव वक्तव्यः । अन्यस्यानाशङ्कनीयत्वात्पारतन्त्र्याच्च ।**

**वेदस्य पौरुषेयत्वापौरुषेयत्वयोः कारणाभावेन प्रामाण्यमेव दुर्लभम् । स्वतः प्रामाण्याङ्गीकारे तु वेदविरुद्धानामपि शाक्यादिवचसां तथात्वापातेन पुनर्वेदाप्रामाण्यतादवस्थ्यम् । किञ्च शब्दस्यैव प्रामाण्यं दुर्घटमर्थसंस्पर्शशून्यत्वात् । वाक्यार्थप्रत्यायनप्रकारानिरूपणाच्च । कुतस्तद्विशेषस्य वेदस्य ।**

वा०— एवमोङ्कारब्रह्मशब्दाभ्यां साक्षान्निवर्त्यं विषयाभावप्रयुक्तजिज्ञासाऽसम्भवपूर्वपक्षमभिधाय ननु यौगिकोङ्कारब्रह्मशब्दप्रयोगान्यथाऽनुपपत्तिप्रमाणकत्वेनापूर्वार्थकल्पनाभावात्क्वचिन्मुख्यस्यैव शब्दस्य क्वचिदमुख्यत्वेन सर्वथाऽमुख्यार्थशब्दाभावान्मुख्यार्थे च तादृशे वस्तुनि स्वीकृते तच्छब्दानां तद्विषयत्वाङ्गीकारे गौरवाख्यबाधकाभावाच्च नेयमनुपपत्तिरित्यतो व्याहृतीनां चेत्याद्यनुव्याख्यानोपपादितोङ्कारप्रयोक्तृसूत्रकृदभिप्रेतार्थनिवर्त्यं तथाऽपि न जिज्ञासासम्भवोऽनुग्राह्यप्रमाणाभावेन शास्त्रस्य विषयसम्बन्धाभावादित्येवंरूपं पूर्वपक्षं दर्शयति ॥ **किञ्चेति ॥ इत्यर्थ इति** । इदं च पूर्वोक्तात्सूत्रस्यार्थान्तरमिति द्रष्टव्यम् । प्रमितत्वाप्रमितत्वयोरीश्वरस्य बाधकतया त्वयोच्यमानस्यापि तर्कत्वात्तद्विषयस्याप्रमितत्वे बुद्ध्यनारूढविषयकत्वेन प्रमितत्वे तु निश्चितविषयकत्वेन तर्कत्वानुपपत्तिरूपतर्कसामान्यदूषणस्य तत्रापि आपत्त्या तर्कसामान्यं तर्केण निराकुर्वतो व्याघात इत्याशङ्क्य निषेधति ॥ **न चैवमिति ॥ न चात्रेति** । सामान्यतः प्रत्यायकस्य विशेषतोऽप्रत्यायकस्येश्वरे प्रमाणस्याभावेन सामान्यतः प्रमितत्वे सति विशेषतोऽप्रमितत्वरूपतर्कविषयताप्रयोजकस्य तर्कान्तर इवात्राभावान्न व्याघात इति भावः । एवं सामान्यतोऽनुग्राह्यप्रमाणनिराकरणमुखेन शास्त्रविषयसम्बन्धानुपपत्तिरूपपूर्वपक्षमोङ्कारप्रयोगसूचिताभिप्रायनिवर्त्यम् उपपाद्य ननु प्रत्यक्षादीनामेव तथात्वेन नानुग्राह्यप्रमाणाभावो येन बुद्ध्यनारूढविषयकत्वेन जिज्ञासाया अशक्यत्वं स्यात् नापि निश्चितविषयकत्वं विप्रतिपत्त्यादिप्रतिबन्धकनिरासार्थत्वसम्भवादित्यतो विशेषतः अनुग्राह्यप्रमाणनिराकरणेनापि शास्त्रविषयसम्बन्धानुपपत्तिरूपं कार्यता चेत्याद्यनुव्याख्याने सिद्धव्युत्पत्तिसमर्पकतया व्याख्याततःशब्दनिवर्त्यं पूर्वपक्षमाह ॥ **किञ्चेति** । योग्यप्रतियोगित्वेनाभावस्य योग्यतया प्रत्यक्षस्येश्वराभावावेदकतयाऽवक्तव्यत्वेऽपीश्वरस्य प्रत्यक्षत्ववादिनाऽयोग्यताया वक्तुमशक्यत्वेन तं प्रति तदभावे प्रत्यक्षं क्लिर्युक्तेत्यभिप्रेत्यापातत इत्युक्तम् ॥ **नादीति** । कार्यत्वादेः प्रतिपक्षग्रस्तत्वादिति भावः । अर्थापत्त्यादेरनुमानानतिरेकादुपमानाभावयोर्नियतविषयकत्वाच्च न प्रमाणान्तरसम्भावनेत्याह ॥ **न चेति** । एवं सामान्यत आगमनिराकरणमुखेनानुग्राह्यप्रमाणाभावपूर्वपक्षमुपपाद्य ननु नागमस्य कार्यनिष्ठत्वं व्युत्पत्तिग्राहकव्यवहारादेः सिद्धविषयत्वादित्यतः 'स्वत एवागमस्य हि मिथ्याज्ञप्ति' इत्याद्यनुव्याख्याव्याख्यानप्रतिपादितार्थकातःशब्दनिवर्त्यं विशेषतोऽप्यागमनिराकरणेनानुग्राह्यप्रमाणाभावपूर्वपक्षं दर्शयति ॥

**किञ्चेति** । अन्यस्योदासीनलौकिकवाक्यस्य भिन्नविषयत्वेन विरोधिपाशुपतादेर्विपरीतविषयत्वेनैतदनुग्राह्यत्वेनानाशङ्कनीयत्वात्समानविषयकपञ्चरात्रादेस्तु मूलभूतवेदपरतन्त्रत्वेन स्वतोऽनुग्राह्यत्वासम्भवान्नान्यसम्भावनेत्याह ॥ **अन्यस्येति** ॥ **कारणाभावेनेति** । पौरुषेयत्वे निश्चायकाभावेनाप्तिरूपविशेषणाभावेन अपौरुषेयत्वे च विशेष्याभावेनाप्तवक्तृकत्वगुणरूपकारणाभावेनेत्यर्थः । ननु प्रामाण्यस्य स्वतस्त्वेन गुणाजन्यत्वात्तदभावेऽपि प्रामाण्यं युक्तमित्यतो विशिष्य प्रामाण्यस्वतस्त्वप्रतिपादकातःशब्दसूचिता प्रामाण्यस्वतस्त्ववदतःशब्देन साक्षादभिहिता वा 'अप्रामाण्यं तथाऽन्यत' इत्यनुव्याख्यानप्रतिपादिता वा अप्रामाण्यपरतस्त्वरूपा या युक्तिस्तन्निवर्त्यां युक्तिमाह ॥ **स्वत इति** । ननु शाक्यादिवचसां प्रामाण्येऽपि वेदस्यानुग्राह्यप्रमाणत्वाभावरूपप्रकृतस्य न सिद्धिरित्यतः शाक्यादिवाक्यप्रामाण्यस्य वेदप्रामाण्यविघातकत्वात्प्रकृतसिद्धिरित्याह ॥ **तथात्वापातेन पुनरिति** । ननु प्रामाण्यस्य स्वतस्त्वादप्रामाण्यस्य च परतस्त्वान्नेदं दूषणं युक्तमित्यतो माऽस्त्वनेन प्रकारेण वेदस्यानुग्राह्यप्रमाणत्वाभावसिद्धिः कैमुत्येन तु स सिध्यत्येवेत्यभिप्रेत्य 'प्रत्यक्षवच्च प्रामाण्यं' 'शक्तिश्चैवान्विते स्वार्थे' इत्यनुव्याख्याव्युत्पादितार्थकातःशब्दनिवर्त्यं पूर्वपक्षमाह ॥ **किञ्चेति** । अत्र यद्यपि प्रथमभाविप्रत्यक्षवच्चेत्यनुव्याख्याननिरसनीयैतत्पूर्वपक्षानन्तरभावित्वं स्वत एवागमस्य हि मिथ्याज्ञप्तीत्युत्तरानुव्याख्यानिरसनीयपूर्वपक्षस्य युक्तम् । तथाऽपि शक्तिश्चैवान्विते स्वार्थ इति पूर्वोत्तरभाव्यनुव्याख्यानेनापि निरसनीयत्वाद्धेतुद्वयसिद्धत्वेन प्रबलत्वाच्चास्य पूर्वपक्षस्य सर्वान्तिमतेति द्रष्टव्यम् ॥ **अर्थसंस्पर्शशून्यत्वादिति** । अत्रार्थशून्यत्वात्संस्पर्शशून्यत्वात् इति हेतुद्वयं विवक्षितम् । संस्पर्शश्च सन्निधानादर्थेन एव । एवं च वक्ष्यमाणो विषयाभावरूपो हेतुरप्यनेन सङ्गृहीतो भवति । उपलक्षणं चैतत् । अविज्ञानात्मकत्वादीनामपरोक्षविषयस्य प्रत्यक्षसिद्धत्वात्परोक्षस्य अनुमानवेद्यत्वाच्छब्दार्थयोर्वक्ष्यमाणरीत्या तादात्म्यसंयोगसमवायानामसम्भवाद्धेतुद्वयसिद्धिरिति द्रष्टव्यम् ॥ **वाक्यार्थेति** । वर्णपदपदार्थतदनुभवस्मृतीनां प्रत्येकं समुदितानां चोपायत्वासम्भवादिति भावः ।

**स०**— अनुग्राह्यप्रमाणाभावे जिज्ञासाया अकर्तव्यत्वे युक्तिं चाह ॥ **न च बुद्धाविति** ॥ **न चात्रेति** । प्रमाणाभावाद्विपर्ययावेदकत्वाच्च न सामान्यतः प्रतीतिरित्यर्थः ॥ **नापीति** । कार्यत्वादीनां प्रत्यक्षागमविरोधान्न प्रवृत्तिरीश्वर इत्यर्थः । अस्तु तर्ह्यागमानुकूलमनुमानमागमो वा साक्षात्प्रमाणमित्यत आह ॥ **आगमस्त्विति** ॥ **न चान्यदिति** । उपमानस्य सादृश्याद्यभावेनासम्भवात् । अर्थापत्तेः अनुमानानतिरेकादनुपपत्त्यभावाच्च । अभावस्य भावविषयत्वाभावात्प्रमाणाविषयत्वेनाभाव एवेश्वरस्येत्यर्थः ॥ **अन्यस्येति** । पुरुषवचसां सदोषत्वात्तन्मूलत्वेन वेदस्याभ्युपेयत्वाच्चेत्यर्थः । यद्वा वेदातिरिक्तमनुग्राह्यप्रमाणं भवत्तद्विरोधि शैवपुराणादिकं वा तदनुकूलपञ्चरात्रादिकं वा । नाद्य इत्याह ॥ **अन्यस्येति** । अन्त्ये च

आह ॥ **पारतन्त्र्याच्चेति** । तस्य वेदमूलकत्वादिति भावः । वेदस्यापि पौरुषेयत्वे विप्रलम्भादिशङ्का-कलङ्कितत्वादपौरुषेयत्वे प्रामाण्यकारणगुणाभावादप्रामाण्यमित्याह ॥ **वेदस्येति** ॥ **स्वत इति** । उभयोर्विरुद्धयोः प्रामाण्यायोगादिति भावः ॥ **अर्थसंस्पर्शेति** । परोक्षस्यानुमानवेद्यत्वादपरोक्षस्य च प्रत्यक्षवेद्यत्वादर्थस्यासत्वात्तत्सद्भावेऽपि तेन तादात्म्यादिसम्बन्धशून्यत्वादित्यर्थः ॥

**प०**— ब्रह्मणि वेदरूपप्रमाणोक्तिपरतयोङ्कारस्य व्याख्यानपरं 'स एव भर्गशब्दार्थ' इत्यादि । तद्व्यावर्त्यं व्यनक्ति ॥ **किञ्चेति** ॥ **तत्करणेनेति** । अनुग्रहकरणेनेत्यर्थः ॥ **निश्चितत्वादेवेति** । न जिज्ञासितुं शक्यमित्यन्वयः ॥ **न चात्रेति** । ईश्वरविषये सामान्यतः प्रमितत्वं विशेषेणाप्रमितत्वं च न पश्याम इत्यर्थः । अतो नेश्वरोऽपि विषय इति भावः । एवं ॐब्रह्मपदव्याख्यानपरौ तत्ववाचीत्यादि-सपादश्लोकद्वयव्यावर्त्यं प्रमेयारोपितान्यथाकारमूलचोद्यमुक्त्वा अधुना यदतःपदस्य वेदानां सिद्धार्थपरत्वात् इति व्याख्यानं कार्यता चेत्यादिना क्रियते, यच्च वेदस्य प्रामाण्यमात्रस्य स्वतस्त्वादिति व्याख्यानं 'प्रत्यक्षवच्च प्रामाण्यमि'त्यादिना क्रियते तदुभयव्यावर्त्यं प्रमाणे आरोपितान्यथाकारमूलचोद्यं क्रमेणाह ॥ **किञ्चेश्वर इत्यादिना** । तत्प्रतिबद्धलिङ्गेति । कार्यत्वादिकं शास्त्रयोनिसूत्रे निरसिष्यत इति भावः ॥ **कार्येति** । प्राभाकररीत्या यागादिजन्यापूर्वलक्षणकार्यपर इत्यर्थः । तत्परत्वप्रकारश्च कार्यता चेत्येतदव-तारिकायामग्रे स्फुटीकरिष्यत इति भावः । न चान्यत्प्रमाणमिति पाशुपतादिकं तु न प्रमाणमिति भावः ॥ **पारतन्त्र्याच्चेति** । वेदमूलपञ्चरात्रादेर्वेदप्रामाण्यपरतन्त्रत्वादित्यर्थः ॥ **कारणेति** । आप्तोक्तत्वलक्षण-गुणरूपप्रामाण्यकारणाभावेनेत्यर्थः । पौरुषेयत्वे'ऽविप्रलम्भस्तज्ज्ञानमि'ति वक्ष्यमाणदिशाऽऽस्यसम्भवात् इति भावः । 'अप्रामाण्यं तथाऽन्यत' इत्येतद्व्यावर्त्यमाह ॥ **स्वत इति** । गुणमनपेक्ष्य ज्ञानजनकादेव प्रामाण्यजन्माङ्गीकार इत्यर्थः ॥ **अर्थसंस्पर्शशून्यत्वादिति** । एतच्च प्रत्यक्षवच्चेत्यत्र व्यक्तीकरिष्याम इति भावः । 'शक्तिश्चैवान्विते स्वार्थे' इत्यादिना अतःपदस्यान्विताभिधायकत्वादिति व्याख्या क्रियते । तद्व्यावर्त्यमाह ॥ **वाक्यार्थेति** । एतदपि शक्तिश्चैवान्विते स्वार्थ इत्येतदवतारिकायां व्यक्तीभविष्यति ।

**या०**— **निश्चितत्वादिति** । तथा च नेश्वरजिज्ञासयोर्विषयविषयिभावः सम्बन्धः सम्भवतीति भावः ॥ **न चैवं सकलेति** । यद्यग्निर्न स्यादित्यादावपि विषयीभूताग्निमत्त्वादिना पर्वतादिनिश्चये निश्चितत्वादेवानिश्चये च बुद्धावनारूढं न शक्यं जिज्ञासितुमिति उक्तरीत्या तर्कावतारानुपपत्तिप्रसङ्गेन इत्यर्थः ॥ **व्याघात इति** । निश्चितत्वेऽनिश्चितत्वे वा जिज्ञास्यत्वं न स्यादिति प्रकृततर्कविषयेऽपि प्रमितत्वाप्रमितत्वविकल्पतद्दूषणयोः प्रसङ्गेनेत्यर्थः ॥ **सामान्यत इति** । पर्वतत्वादिना सामान्यरूपेण धर्मिणो निश्चितत्वं न तु तर्कविषयीभूतत्वेन वन्हिमत्पर्वतत्वादिविशेषरूपेणापि येन तर्कानवतार इति

भावः ॥ **न च तत्रेति** । वक्ष्यमाणरीत्या ईश्वराख्यधर्मिणः सामान्यतोऽप्युपस्थापकप्रमाणाभावादिति भावः । ननु प्रत्यक्षेण कथमीश्वराभावज्ञानं तस्यातीन्द्रियत्वेन तदयोग्यत्वादित्यत आह ॥ **आपाततः इति** । तस्यातीन्द्रियत्वादिविचाराभावदशायामित्यर्थः । तद्विचारानन्तरं तु न प्रत्यक्षं तत्रोपन्यासार्हमित्यभिसन्धिः ॥ **पारतन्त्र्याच्चेति** । वेदसंवादाधीनप्रामाण्यनिश्चायकत्वादित्यर्थः ॥ **पौरुषेयत्वापौरुषेयत्वयोरिति** । पौरुषेयत्वे आप्तिनिश्चायकत्वाभावेन अपौरुषेयत्वे आप्तस्यैवाभावेनाप्तोक्तत्वरूपगुणलक्षणकारणाभावेनेत्यर्थः । **शाक्यादिवचसां** बौद्धादिवचसाम् । **संस्पर्शः** सम्बन्धः । शब्दस्यार्थेन संयोगसमवाययोरसम्भवादन्यस्य चासम्बद्धत्वादिति भावः ॥ **वाक्यार्थेति** । पदानामर्थ इव वाक्यार्थेऽपि शक्त्याद्यभावादिति भावः ।

श्री०— **अनुग्राह्यप्रमाणाभावेनेति** । मीमांसानुग्राह्येत्यर्थः । ईश्वरस्याप्रमितत्वे तत्प्रमापकप्रमाणाभावप्राप्तेरित्याशयः ॥ **अनुग्रहस्तत्करणेनेति** । प्रमाणानामनुग्रहस्तर्कसाध्यव्यापार इत्यर्थः । यथाहुः । 'प्रत्यक्षादेः प्रमाणस्य तर्कोऽनुग्राहको भवेदि'ति ॥ **बुद्धावनारूढमिति** । आश्रयासिद्ध्यापत्तेः इत्यर्थः ॥ **न चात्रेति** । सामान्यतोऽपीश्वरप्रमापकप्रमाणाभावादिति भावः ॥ **तत्प्रतिबद्ध इति** । तद्व्याप्तेत्यर्थः । अनुग्राह्यप्रमाणाभावे जिज्ञासाया अकर्तव्यत्वे युक्तिं चाह ॥ **बुद्धावनारूढमिति** । वेदातिरिक्तमप्यनुग्राह्यं प्रमाणं भवत्तद्विरोधिशैवपुराणादिकं वा (तदनुकूलपञ्चरात्रादिकं वा) । नाद्य इति आह ॥ **अन्यस्यानाशङ्कनीयत्वादिति** । द्वितीये त्वाह ॥ **पारतन्त्र्याच्चेति** । तस्य वेदमूलकप्रमाणकत्वादिति भावः ।

च०— **निश्चितत्वादेवेति** । न जिज्ञासा सम्भवतीत्यनुषक्तेनान्वेति ॥ **सकलतर्केति** । उक्तदिशा निर्वह्नित्वापादकनिर्धूमत्वाद्यापत्तावपि पर्वतादौ वह्निमत्त्वाद्युपरक्तनिश्चयानिश्चयसमवहितिनियन्त्रितदूषणप्रसरादिति भावः ॥ **सामान्यत इति** । तृतीयार्थतसिः प्रतीत्यन्वयिप्रकारतानिरूपकत्वं तृतीयार्थः । पर्वतत्वादिसामान्यधर्मोपरागेण धर्म्यवगाही निश्चय एव प्रसङ्गहेतुर्न स्वनिवर्तनीयशङ्काकोटितापन्नापादकविपर्ययोपरागेणेति न प्रसङ्गानुदयप्रसङ्ग इति भावः ॥ **तथात्वम्** । सामान्यधर्मोपरक्तप्रतीतिविषयत्वम् । अभिधास्यमानदिशा सामान्यधर्मोपरागेणापीश्वराख्यधर्मिगोचरोपस्थितिजनकप्रमाणवैधुर्यादिति भावः । अनुग्राह्यप्रमाणाभिमतधर्मिकां प्रत्यक्षानुमानागमत्वोपरक्तकल्पत्रयीं तद्घटकचरमकल्पे पौरुषेयापौरुषेयत्वगोचरकल्पद्वयीं चाभिप्रेत्य क्रमेण प्रतिविधत्ते ॥ **किञ्चेत्यादिना तद्विशेषस्येत्यन्तेन** ॥ **आपातत इति** । योग्यप्रतियोगिकाभावस्यैव योग्यत्वेन ईश्वराभावस्यातीन्द्रियेश्वरप्रतियोगिकतया वास्तवयोग्यताराहित्येऽपि यः पूर्ववादी वैय्यात्येनेश्वरस्य प्रत्यक्षगोचरतां मनुते तन्मतदिशा तदभावस्य योग्यप्रतियोगिकताप्राप्त्या तादृशाभावस्य तं प्रति प्रत्यक्षगोचरतोक्तिः युज्यत इति भावः ।

एतेन वस्तुत ईश्वराभावस्यातीन्द्रियत्वेन तत्प्रत्यक्षतोक्तिः न सङ्गच्छत इति शङ्काऽनवकाशः ॥ **कार्यनिष्ठः** कार्यतात्पर्यकः ॥ **निष्पन्नस्वरूपं** कार्यान्यकार्यानन्वितस्वरूपम् ॥ **कारणाभावेनेति** । पौरुषेयत्वे आप्तोक्तत्वघटकासत्वाभावनिबन्धन अपौरुषेयत्वे च तादृशोक्तत्वाभावनिबन्धनो गुणाभाव इत्याशयः ॥ **शाक्यादिवचसां** बुद्धादिवचसाम् ।

**सु०— प्रयोजनं चेश्वरजिज्ञासाया अभ्युदयो वा स्यात् मोक्षो वा । नाद्यः । तस्य धर्मादिलघूपायसाध्यस्य शास्त्रान्तरप्रयोजनत्वात् । न द्वितीयः । तस्याप्यपाम सोममित्याद्यागमेन लघूपायान्तरसाध्यतावगमात् । न चैकस्यैव कर्मणोऽभ्युदयनिःश्रेयसहेतुत्वं विरुद्धम् । फलाभिसन्ध्यादिभावाभावाभ्यां विशेषोपपत्तेः । जिज्ञासा च मोक्षसाधनं भवन्ती किं साक्षादुत ज्ञानद्वारेण । नाद्यः । दृष्टादृष्टत्यागकल्पनाप्रसङ्गात् । न द्वितीयः । कर्मणा ज्ञानमातनोतीत्यागमेन ज्ञानस्य लघूपायान्तरसाध्यताध्यवसायात् । ज्ञानस्यापि साक्षान्मोक्षहेतुत्वाभ्युपगमेऽदृष्टकल्पनैव । न चेश्वरप्रसादद्वारा । ज्ञानस्य प्रसादहेतुतायाः क्वाप्यदृष्टत्वात् । 'तत्कर्म हरितोषं यदि'त्यादिना तत्प्रसादस्य कर्माद्यल्पोपायसाध्यताप्रतीतेश्च । किञ्चायमात्माऽविद्याकल्पितो बन्धस्तद्विद्ययैव निवृत्तिमर्हति । शुक्तिकाऽविद्याकल्पितं रजतमिव शुक्तिविद्यया । तत्कुतो बन्धनिवृत्तिलक्षणे मोक्षे परमेश्वरप्रसादस्योपयोगः । कुतस्तरां तज्ज्ञानस्य कुतस्तमां च तज्जिज्ञासायाः । अथ परमार्थ एवायं बन्धस्तर्हि न ज्ञानेन निवर्तेत । न च सत्यस्यानादेरात्मस्वरूपमात्रानुबन्धिनो बन्धस्यात्मस्वरूपस्येव केनापि निवृत्तिर्युक्ता । अपि च मुक्तस्य शरीरेन्द्रियविषयादिसंसर्गे मुक्तत्वव्याघातः । दुःखादिप्रसङ्गश्च । कारणसामग्रीसद्भावात् । तथा चाभ्युदयतुल्यतयोक्तदोषः । शरीराद्यभावे च तत्साध्यसुखाभावेन कस्यापि तत्रार्थितानुपपत्तेरनधिकारिकं शास्त्रमापद्येत । को हि स्वस्थात्मा सहसा सुखतत्साधने हातुमुत्सहते । तदेवं विषयाद्यनुबन्धविधुरत्वान्न जिज्ञासा कर्तव्या । तद्विधयोऽपि न प्रमाणम् । शास्त्रं चेदमनारम्भणीयमिति प्राप्ते सूत्रयामास भगवानाचार्यः ॥ ॐ अथातो ब्रह्मजिज्ञासेति ॥**

वा०— एवं विषयतत्सम्बन्धोपपादकहेतुसमर्पकोऽथातःशब्दनिवर्त्यं पूर्वपक्षमुपपाद्य प्रयोजनोपपादकहेतुसमर्पकातःशब्दनिवर्त्यं पूर्वपक्षमुपपादयति ॥ **प्रयोजनं चेत्यादिना** । अत्राभ्युदयशब्देन स्वर्गादिकमणिमाद्यैश्वर्यं च गृह्यते । धर्मादीत्यत्रादिशब्देन योगः शास्त्रान्तरं धर्ममीमांसा योगशास्त्रं चेति द्रष्टव्यम् । अत्र 'जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यत' इत्यतःशब्दार्थकथनपरानुव्याख्याने मुच्यत इत्युक्तेर्व्यावर्त्यत्वेनाभ्युदयपक्षमुद्भाव्य तद्दूषणं तस्मिन्नेवानुव्याख्यानेऽभिप्रेतं यज्जिज्ञासाया मोक्षं

प्रत्यवधारणं तद्व्यावर्त्यत्वेन मोक्षस्योपायान्तरसाध्यत्ववर्णनं तद्वाक्योक्तज्ञानप्रसादघटितपरम्पराव्यावर्त्यतया जिज्ञासाज्ञानयोः साक्षान्मोक्षसाधनत्वे दृष्टादृष्टत्यागकल्पनाप्रसञ्जनं तद्वाक्याभिप्रेतेन ज्ञानप्रसादौ प्रति जिज्ञासाज्ञानयोः साधनत्वावधारणेन व्यावर्त्यतया ज्ञानप्रसादयोर्लघूपायान्तरसाध्यत्वकथनं ज्ञानप्रसादान्तरालिकतया तद्वाक्याभिप्रेतभक्त्युक्तिव्यावर्त्यतया ज्ञानस्य प्रसादे हेतुतायाः क्वाप्यदृष्टत्वकथनं चेति ज्ञातव्यम् । नन्वभ्युदयरूपस्वर्गसाधनतया श्रुतसोमयागस्यापाम सोममित्यादिवाक्यबलेन मोक्षसाधनत्वाभ्युपगमे शरीरेन्द्रियविषयादिसंसर्गेण जायमानानागतदुःखाविरोध्यल्पास्थिरसुखरूपाभ्युदयस्य शरीरादिविनिर्मोकेनाभिव्यज्यमानानागतदुःखविरोधिबहुस्थिरसुखरूपमोक्षेण विरोधादेकजातीयसाधनस्य विरुद्धोभयजनकत्वे एकमात्रोत्पत्तिदशायामपरमात्रोत्पत्तेः सामग्रीसद्भावेनैकोत्पत्तिदशायामुभयोत्पत्तेर्नैकस्याप्युत्पत्तेर्वा आपातेन व्याघात इति शङ्कते ॥ **न चेति** । सहकारिवशादेकस्यापि विरुद्धकार्यजनकत्वमुपपन्नमित्याह ॥ **फलेति** । आदिपदेन हरौ समर्पितत्वादिपरिग्रहः । जिज्ञासायाः साक्षान्मोक्षसाधनत्वासम्भवमभिप्रेत्य ज्ञानप्रसादयोर्मध्ये निवेशे दूषणान्तरं 'अतो यथार्थबन्धस्य' इत्यनुव्याख्याव्याख्यातातःशब्दनिवर्त्यं शङ्कते ॥ **किञ्चेति** । बन्धनिवृत्तिलक्षणे मोक्ष इत्युक्त्या स्वर्गादिवदनित्यत्वापातेन नाभ्युदयमात्रं मोक्षो येन प्रसादापेक्षा तत्र स्यादिति ध्वनितं भवति । तज्ज्ञानस्येत्युक्त्या विवक्षितभगवज्ज्ञानस्यैवायमाक्षेपो न तु ज्ञानमात्रस्ये'त्येवं दृष्टः स' इत्यस्य व्यावर्त्यकथनम् । अथ परमार्थएवायमिति 'यथादृष्टे'त्यस्य । 'न च सत्यस्ये'त्यादि भगवानित्यस्येति द्रष्टव्यम् । एवं प्रयोजनपरातःशब्दनिवर्त्यं पूर्वपक्षमुत्थाप्याधिकारिपराथशब्दनिवर्त्यं शिरःकराद्यभावश्चेत्यनुव्याख्याव्याख्यानेनान्यार्थे प्रवृत्तेनाप्यर्थान्निराकृतं पूर्वपक्षमुत्थापयति ॥ **अपि चेति** । अदोषः देहः स्वरूपात्मक एवेत्युक्तव्यावर्त्यकथनं मुक्तत्वव्याघातो दुःखादिप्रसङ्गश्चेति ॥ **सामग्रीति** । समग्रस्य भावः सामग्री साकल्यमित्यर्थः । औचितीत्यादिवद्ब्राह्मणादित्वात् ष्यञ् षित्वात् ङीष् ॥ **उक्तदोष इति** । नाद्यस्तस्य धर्मादीन्युक्तो दोष इत्यर्थः । पूर्वपक्षमुपसंहरन्नेव तत्परमप्रमेयोक्तिपूर्वकं पूर्वपक्षनिवर्तकतया सूत्रमवतारयति ॥ **तदेतमिति** ।

स०— **तस्याऽपीति** । न च स्थायित्वमात्रममृतशब्दार्थः । मुख्यार्थे बाधकाभावादिति भावः ॥ **ज्ञानस्याऽपीति** । मोक्षस्य प्रसादसाध्यत्वावगमादित्यर्थः । प्रसादसाध्यत्वस्याप्यसम्भवमाह ॥ **न चेति** । बन्धस्य मिथ्यात्वे सत्यत्वे वा न प्रसादसापेक्षतेत्याह ॥ **किञ्चायमिति** ॥ **अपि चेति** । अप्राकृतशरीरसत्वे प्रमाणाभावो विरोधश्चेत्यर्थः ॥ **उक्तदोष इति** । मोक्षस्याभ्युदयतुल्यत्वेन तस्य च धर्मादिलक्षणलघूपायसाध्यत्वेन शास्त्रान्तरप्रयोजनत्वाद्ब्रह्मजिज्ञासावैयर्थ्यलक्षणो दोष इत्यर्थः । विप्रतिपत्तयस्तु तत्रतत्रोद्भाव्य निरसिष्यन्त इति नेह प्रपञ्चिताः ।

प०— एवं विषयाभावमुपपाद्य यच्च 'ज्ञानी प्रियतमोऽतो म' इत्यादिनाऽतःपदस्य मोक्षहेतु प्रसादजनकज्ञानजनकत्वादिति व्याख्यानान्तररं तद्व्यावर्त्यप्रयोजनाभावे हेतुं व्यनक्ति ॥ **प्रयोजनं चेत्यादिना ।** यद्यपीदं मूलकृत्करिष्यमाणव्याख्यानक्रमानुरोधेन किञ्चेश्वर इत्यादितः पूर्वं वक्तव्यं तथाऽप्यतःपदस्य पश्चात्करिष्यमाणव्याख्यानत्रयव्यावर्त्यत्रयस्याप्योंब्रह्मपदव्यावर्त्यविषयाभावोपपादकत्वेन तत्सम्बद्धत्वात्तद्व्याख्यानत्रयव्यावर्त्यं किञ्चेश्वर इत्यादिना पूर्वमुक्त्वेदं पश्चादुक्तमित्यदोषः ॥ **शास्त्रान्तरेति ।** धर्मादिस्वरूपप्रतिपादककर्मतन्त्रप्रयोजनत्वादित्यर्थः ॥ **अपामेति ।** 'अपाम सोमममृता अभूम' इति सोमपानस्यामृतशब्दितमुक्तिहेतुत्वश्रवणादिति भावः ॥ **फलाभिसन्धीति ।** यथैकमेवान्नमनुपानभेदात् पथ्यमपथ्यं तथैवेत्यर्थः । 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' इत्युक्तेरिति भावः ॥ **दृष्टेति ।** लोके गान्धर्वादिशास्त्रविचारेण ज्ञानस्यैव तत्फलत्वेन दर्शनान्मोक्षस्य तत्त्वेनादर्शनाद्दृष्टत्यागाददृष्टकल्पनाप्रसङ्गादित्यर्थः ॥ **अदृष्टकल्पनैवेति ।** लोके क्वाप्यदृष्टेः इति भावः । राजदर्शनस्य तत्प्रसादद्वारा निगडमोक्षहेतुत्वं दृष्टमित्यरुचेराह ॥ **तत्कर्मेति ।** 'तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यये'त्येकादशस्कन्धोक्तेरित्यर्थः । यदप्यतःपदस्य बन्धसत्यत्वादिति व्याख्यानान्तरं 'इत्युक्तेर्बन्धमिथ्यात्वमि'त्यादिनोच्यते तद्व्यावर्त्यमाह ॥ **किञ्चायमिति ।** सिद्धान्ती शङ्कते ॥ **अथ परमार्थ एवेति ।** पूर्वपक्षी निराकरोति ॥ **न ज्ञानेन निवर्तेतेति ।** तद्व्यनक्ति ॥ **न चेति ।** एतच्च 'अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च स' इत्येतद्व्यावर्त्यमिति ज्ञेयम् । 'आनन्ददश्च मुक्तानामि'त्येतद्व्यावर्त्यमाह ॥ **अपि चेति ।** अत्रानुव्याख्याने सौत्राथपदव्याख्यानस्याकृतत्वात्तद्व्यावर्त्यप्रपञ्चनमकृत्वा संक्षिप्योपसंहरति ॥ **कस्यापि तत्रार्थितेत्यादि ।** 'तद्विजिज्ञासस्वे'त्यादेस्तर्हि का गतिरित्यत आह ॥ **तद्विधय इति ।** विना विचारेण श्रुत्यर्थस्याद्याप्यनिर्णीतत्वेनेति पूर्ववाक्यानुरोधेन न प्रमाणमित्यस्य जिज्ञासाकर्तव्यत्वरूपेऽर्थे न प्रमाणमिति वा सर्वथा न प्रमाणमिति वा द्वेधाऽर्थो ध्येयः । तथैव चन्द्रिकोक्तेः । **आचार्यः** सूत्रकारः ॥

श्री०— **अभ्युदयः** स्वर्गादिः ॥ **दृष्टादृष्टत्यागकल्पनेति ।** जिज्ञासायाः साक्षान्मोक्षसाधनत्वे दृष्टत्यागः । 'आत्मा वा अरे द्रष्टव्य' इति श्रुतौ दर्शनार्थश्रवणादिरूपजिज्ञासाया विधानात् प्रमाणदृष्टस्यापरोक्षज्ञानसाधनत्वस्य त्यागः । यद्वा इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनमित्युक्तरीत्या दृष्टस्याज्ञानसंशयविपर्ययनिवृत्तिद्वारा इदमिति निश्चयरूपज्ञानसाधनत्वस्य त्यागः । अदृष्टस्य मोक्षसाधनत्वस्य कल्पनं कार्यम् । जिज्ञासायाः साक्षान्मोक्षसाधनत्वस्य प्रमाणादृष्टत्वादिति भावः । शास्त्रस्यानधिकारिकत्वं व्युत्पादयितुमाह ॥ **अपि चेति ।** कारणसामग्री कारणसाकल्यम् । शरीरेन्द्रियविषयादिसंसर्गस्यैव दुःखादिकारणत्वादित्यर्थः ॥ **अभ्युदयतुल्यतयेति ।** स्वर्गवदनित्यत्वप्राप्त्योक्तदोषो मुक्तत्वव्याघात इत्यर्थः ॥

च०— निष्प्रयोजनत्वहेतोः पक्षधर्मता प्रतिपिपादयिषति ॥ **प्रयोजनं चेत्यादिना शास्त्रान्तरम्** धर्ममीमांसादिकम् ॥ **फलाभिसन्धिः** फलेच्छा ॥ **आत्माविद्याकल्पितः** आत्मावरकाविद्याकल्पितः ॥

# ॐ ॐ अथातो ब्रह्मजिज्ञासा ॐ ( १-१-१ )

**अनु०— ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम् ॥**

**सु०— यत्तावदुक्तं विषयाभावान्न जिज्ञासा कर्तव्येति तदनुपपन्नम् । अनात्मजीवात्मनोर्विषयत्वानुपपत्तावपीश्वरस्य तदुपपत्तेः । अत्र यदुक्तं जीवव्यतिरिक्त ईश्वर एव नास्तीति तत्परिहाराय सूत्रकृतोङ्कारब्रह्मशब्दौ प्रयुक्तौ । तेनायमर्थः सूचितः । 'ॐ इत्येतदक्षरमुद्गीथमुपासीत', 'तद्विजिज्ञासस्व तद्ब्रह्मे'त्यादिश्रुतावोङ्कारब्रह्मशब्दौ जिज्ञास्ये वस्तुनि श्रूयेते । ताभ्यां च तत्सकलजीवजडात्मकात्प्रपञ्चाद्विलक्षणमवगम्यत इति । तदयुक्तमिवाभाति । ॐ आदिपदस्य अलौकिकार्थेऽनवगतसङ्गतित्वात् । न हि पदं चक्षुरादिवदप्रतीत एवार्थे प्रतीतिं जनयति येनापूर्वमर्थं पदप्रयोगादेव प्रतीमः । स्वर्गापूर्वदेवताद्यर्थोऽपि न पदप्रयोगादेव सिद्धः । किन्तु सन्निहितानेकवाक्यार्थसामर्थ्याल्लभ्यत इत्यत आह भाष्यकारः ॥ ओतत्ववाचीति ।**

वा०—. ननु भर्गादिशब्दतुल्यतयोङ्कारब्रह्मशब्दनिर्वचनमात्रपरौतत्ववाचीत्यादिसिद्धान्तानुव्याख्याने पूर्वपक्षनिराकृतविषयत्वेषु अनात्मजीवात्मपरमात्मस्वन्यतरपक्षपरिग्रहस्य तत्पक्षोक्तदोषपरिहारस्य वाऽदर्शनाद्वैयर्थ्यमित्यतः स्पष्टत्वादीश्वरविषयत्वपक्षपरिग्रहस्य तत्पक्षोक्तदूषणपरिहारस्य सूत्रकारेणैव सूचनात्सूत्रसूचितपक्षविशेषदूषणपरिहारे प्राप्तानुपपत्तिपरिहारेण स्वयमपि पक्षपरिग्रहादेः सूचनात्साक्षात्तदनुक्तावपि सूत्रसूचितपरिहारे प्राप्तानुपपत्तिपरिहारार्थत्वान्न तदनुव्याख्यानवैयर्थ्यमित्यभिप्रेत्य बहिरेव साध्यनिर्देशपूर्वकं पक्षविशेषपरिग्रहप्रकारं सूत्रसूचिततत्पक्षोक्तदूषणपरिहारप्रकारं च दर्शयन्नेव तत्र प्राप्तानुपपत्तिनिवर्तकतया भाष्यमवतारयति ॥ **यत्तावदित्यादिना** ॥ **सूचित इति** । जिज्ञास्यस्य जीवादिवैलक्षण्यासूचनेऽवैलक्षण्यपूर्वपक्षप्रतिक्षेपकत्वायोगात्ताभ्यां तत्सूचनमिति भावः ॥ **चक्षुरादिवदिति** । अत्र चक्षुरितीन्द्रियान्तरोपलक्षणम् । आदिपदेन चानुमानग्रहणम् । सङ्गतिग्रहणसापेक्षार्थबोधकत्वात्पदस्य तदुभयवैलक्षण्यमिति भावः ॥ **सन्निहितेति** । ' स्वर्गकामो यजेत ' इत्यादिश्रुतिस्थस्वर्गशब्दशक्तिग्राहिकायां 'यन्न दुःखेने'त्यादिश्रुतौ 'न हि दुःखेन सम्भिन्नं न च ग्रस्तमि'त्याद्यनेकवाक्यार्थभूतदुःखासम्भिन्नत्वाग्रस्तत्वादीनां प्रसिद्धसुखेऽनुपपत्तिरूपसामर्थ्येन 'तानि धर्माणि प्रथमानि' 'पुण्येन

पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकमि'त्यादौ 'स्वर्गकामो यजेत' इत्यादौ च सन्निहित-वाक्यार्थलोकान्तरप्राप्तिसाधनत्वकालान्तरभाविफलसाधनत्वादीनां प्रसिद्धयागादिसाधनेऽनुपपत्तिरूपसाम-र्थ्येन 'न कदाचन स्तरीरसि नेन्द्र दाशुषे सश्चसि', 'मृदब्रवीदि'त्यादिवाक्यार्थानां प्रसिद्धपरत्वेऽनुपपत्तिरूप-सामर्थ्येन स्वर्गापूर्वदेवतालाभः । देवतादीत्यत्रादिपदेन यूपाहवनीयादिसङ्ग्रहः । तदर्थतया 'यूपं तक्षती'त्यादिवाक्यार्थसामर्थ्यमुदाहार्यम् ।

स०— प्रसिद्धपरत्वस्याप्रसिद्धकल्पनाया ज्यायस्त्वादोङ्कारब्रह्मशब्दयोः प्रसिद्धजीवपरत्वोपपत्तेः । तस्य चान्यतः सिद्धत्वात्कथमेताभ्यां विषयसिद्धिः । कथं च जीवादिव्यावृत्तिरित्यत आह ॥ **तेनेति** ॥ **न हीति** ॥ पदग्रहणेन प्रमाणत्वाविशेषाच्छब्दस्य सङ्गतिग्रहणापेक्षयार्थबोधकत्वस्वाभाव्यं दर्शयति । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक' इति न्यायात् । ननु प्रमाणान्तरविषयस्वर्गाद्यर्थकस्वर्गादिपदेषु नाऽयं न्याय इत्यतो 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्', 'यूपं तक्षती'त्यादिपदसमभिव्याहारा-दगत्याऽलौकिकेऽप्यर्थे व्युत्पत्तिः स्वर्गादिपदानाम् । न चेहार्थविशेषज्ञापकपदसमभिव्याहारो दृश्यत इत्याह ॥ **स्वर्गेति** ॥ आदिशब्दो यूपाहवनीयाद्यभिप्रायः ॥

प०— तदयुक्तमित्यादिना भाष्यमवतारयितुं विषयाभावशङ्कानिरासकत्वप्रकारमोंब्रह्मपदयोः व्यनक्ति ॥ **यत्तावदित्यादिना** ॥ तदिति जिज्ञास्यं वस्तु । इतीत्यस्येत्ययमर्थः सूचित इति पूर्वेणान्वयः । अत्र ब्रह्मपदेनैव जीवादिविलक्षणविषयसम्भवेऽप्योमित्युक्तेः कृत्यं नारायणपदोदित इत्यत्राग्रे व्यक्तं भविष्यति । स्वर्गाद्यलौकिकार्थावबोधवदित्यत आह ॥ **स्वर्गेति** ॥ **सन्निहितेति** ॥ 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदमि'त्यनेकवाक्यार्थलभ्यः स्वर्ग-पदार्थः । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति यागस्य स्वर्गसाधनत्वरूपवाक्यार्थसामर्थ्यलभ्योऽपूर्वाख्योऽर्थः । 'वज्रहस्तस्सहस्राक्ष' इत्यनेकवाक्यार्थसामर्थ्यलभ्येन्द्रादिदेवतारूपोऽर्थ इत्यर्थः । सामर्थ्यमन्यथाऽनुपपत्तिः ॥

या०— नन्वेवं स्वर्गापूर्वदेवतादिरूपोऽर्थोऽपि सङ्गतिग्रहणासम्भवेनागमसिद्धो न स्यादित्यत आह ॥ **स्वर्गापूर्वदेवतादीति** ॥ **किन्तु सन्निहितानेवेति** । यथा 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्' इत्यनेकवाक्यार्थसामर्थ्येनोपस्थिते सुखविशेषे स्वःपदशक्तिग्रहः पश्चादेवेति भावः । यथा 'स्वर्गकामो यजेत' इत्यादौ स्वर्गकामपदसमभि-व्याहाराल्लिङादेरपूर्वपरत्वमेवं देवताशब्दस्यापि तदर्थपरत्वं द्रष्टव्यम् ॥

श्री०— ॐ **अथातो ब्रह्मजिज्ञासेति** ॥ ननु पूर्वं सङ्गतिग्रहणाभावेऽपि चक्षुरादिवत्पद-मप्यप्रतीतार्थज्ञानजनकमेव किं न स्यादित्यत आह ॥ **न हीति** ॥

च० — निर्विषयत्वहेतोरसिद्धिमुपपादयति ॥ **तदनुपपन्नमिति** ॥ **अलौकिकार्थ इति** ॥ अतीन्द्रियार्थ इत्यर्थः ॥ **अनवगतसङ्गतित्वात्** शक्तिग्रहाविषयत्वात् ॥ **सन्निहितेत्यादि** ॥ 'स्वर्गकामो यजेत' इत्यादिश्रुतिघटकीभूतस्वर्गादिशब्दशक्तिग्रहजनिकायां 'यन्न दुःखेन' इत्यादिश्रुतौ समभिव्याहृतावेकपदात्मकवाक्यतात्पर्यधीविषयीभूतदुःखासम्भिन्नत्वाग्रस्तत्वाभिलाषोपनीतत्वादीनां प्रसिद्धसुखेऽनुपपत्तिप्रतिसन्धानरूपसामर्थ्येनोपस्थिते सुखविशेषादौ पदशक्तिग्रहः पश्चादेवेति तदुदीच्यशाब्दधीविषयस्स्वर्गापूर्वादिरिति भावः ॥

**सु० — हिशब्दो हेत्वर्थे । ॐकारस्तावदोतत्वस्य गतत्वस्य प्रविष्टत्वस्य वा वाचकः । गत्याद्यर्थस्यावतेः खलु रूपमेतत्, 'अवतेष्टिलोपश्चे'ति सूत्रात् । 'ॐ इति पुनः कस्य वक्ते'ति प्रश्नपूर्वक'मवतिर्नामाऽयं धातुर्गतिकर्मा प्रवेशनकर्मा चे'त्यन्यत्राप्येवमेव निरुक्तत्वात् । तथा च यद्यसौ कर्मणि तदा कर्तुर्यदि वा कर्तरि तदा कर्मणोऽपेक्षायामुपपदाद्यभावेऽपि योग्यतया श्रुत्यन्तरादिबलाद्वाऽसावोङ्कारस्तस्य जिज्ञास्यस्य गुणैरानन्दाद्यनन्तकल्याणगुणैर्गुणान्वोततां वक्ति । पक्षद्वयेऽप्यनन्तानवद्यकल्याणगुणपूर्णतैवोङ्कारस्यार्थः । ब्रह्मशब्दस्यापि स एवार्थः । बृहतेर्वृद्ध्यर्थस्य खल्वेतद्रूपम् । तथा च पूर्ववद्योग्यतया 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा' इत्यादिश्रुत्यन्तरबलाद्वा गुणानां सम्बन्धः ।**

वा० — 'ओतत्ववाची'ति 'वक्त्यसौ तद्गुणोततामि'ति चोङ्कारस्य वाच्यद्वयकथनपरमिति भ्रान्तिं निवारयति ॥ **हिशब्द इति** । ओतत्ववाचीत्यस्य तद्गुणोततामित्यस्य च हिशब्दसूचितहेतुहेतुमद्भावं तथा चेत्यादिना स्पष्टयितुं हेतुसिद्धिं तावदाह ॥ **ओङ्कार इति** । वक्ष्यमाणसाध्यप्रतिपादनापेक्षया तावच्छब्दः ॥ **सूत्रादिति** । अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मनित्यतोऽत्र मनित्यनुवृत्तेरवतेर्मन् तस्य च टेर्लोप इति सूत्रार्थः । (अवतेष्टिलोपश्च । मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः । अन्यथा डिदित्येव ब्रूयात् । ज्वरत्वरेत्यूठौ । तयोर्दीर्घे कृते गुणः । चादिपाठादव्ययत्वमित्युज्ज्वलदत्तः । तन्न । तेषामसत्त्वार्थत्वात् । वस्तुतस्तु स्वरादिपाठादव्ययत्वम् । अवतीत्योम् । ॐ प्रश्नेऽङ्गीकृतौ रोष इति विश्वः ) । ( ज्वरत्वरस्रिव्यविमवामुपधायाश्च । ज्वरादीनामुपधावकारयोरूठ् क्वौ झलादावनुनासिकादौ च प्रत्यये । च्छ्वोः शूडनुनासिके च । सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् एतावादेशौ स्तोनुनासिके क्वौ झलादौ च क्ङिति । अर्तीति सूत्रोदाहरणानि तु अर्मः चक्षूरोगः । स्तोमः सङ्घातः । सोमः । होमः । सर्मो गमनम् । धर्मः । क्षेमम् । क्षोमम् प्रज्ञाद्यणि क्षौमं च । भामः क्रोधे रवौ दीप्तौ । यामः । वामः शोभनदुष्टयोः । पद्मम् । यक्ष पूजायां यक्ष्मो रोगराजः । नेमः कीलेऽवधौ

गर्ते प्राकारे कैतवेऽपि चेति मेदिनी । नेमस्त्वर्धे प्राकारगर्तयोः । अवधौ कैतवे चेति हेमचन्द्र इति द्रष्टव्यानि ) । एवं च ज्वरत्वरेत्यत्र पूर्वसूत्रादनुनासिक इत्यस्यानुवृत्तेर्धातुवृत्तिकारादिभिर्व्याख्यातत्वात् उपधावकारयोरूठि गुणे च तद्रूपनिष्पत्तिरिति भावः । गतिकर्मेत्यादौ कर्मशब्दोऽर्थपर्यायविषयसमर्पक इति प्रसिद्धमेव ॥ **यद्यसौ कर्मणीति** । 'कर्तरि कृदि'त्युक्तावपि 'उणादयो बहुलमि'त्युक्तबाहुलकाभिप्रायेणेदमुक्तमिति ध्येयम् । अत्र प्रविष्टत्वार्थानुसारेण कर्मणीति गत्यर्थानुसारेण कर्तरीति व्यवस्थयोक्तम् । यद्वोभयार्थत्वेऽप्युभयम् । प्रवेशो हि सम्बन्धविशेष इति गुणान्विशतीत्यपि युज्यत इति द्रष्टव्यम् । श्रुत्यादौ सतात्पर्यं गुणपूर्णत्वप्रतिपादनाद्दोषादेश्च निषिद्धत्वाद्देशकालौतत्ववद्गुणौतत्वस्यापीति प्रतिपादनयोग्यत्वमित्याह ॥ **योग्यतयेति** । 'बृहन्तो ह्यस्मिन् गुणा इती'त्यादिवदत्रापि श्रुत्यन्तरमुन्नेयमिति भावः । आदिपदेन स्मृतिसङ्ग्रहः । योग्यतयेत्युक्तत्वादानन्दादिग्रहणम् । सङ्कोचे कारणाभावाभिप्रायेणानन्तेत्युक्तम् । कर्मकर्त्रोः प्रत्ययोत्पत्तिपक्षद्वये प्रवेशार्थकत्वगतिरूपपक्षद्वयेऽप्यर्थे न कोऽपि विशेष इत्याह ॥ **पक्षेति** । **ब्रह्मेति** । या तद्गुणोततेति शेषः । 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गभाञ्जि भवन्ती'त्युक्तत्वादर्थशब्दाभिप्रायेण स एवेति पुल्लिङ्गम् ॥ **बृहतेरिति** । यद्यपि बृहेर्नोऽच्चेति बृहेर्मनिनि नकारस्याकारे च (नकारस्येति बृहेर्नकारस्येत्यर्थः) ब्रह्मशब्दो व्युत्पादितस्तथाऽपि बृहबृहिवृद्धाविति बृहतेरपि पाठादन्येभ्योऽपि दृश्यत इति मनिनि दृशिग्रहणसामर्थ्यादमागमेन तस्यैवैतद्रूपमित्यभिसन्धायैवमुक्तमिति ध्येयम् । ( सर्वधातुभ्यो मनिन् । क्रियत इति कर्म । चर्म भस्म । शर्मेत्यादि । बृहेर्नोच्च । नः । नकारस्याकारः । ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः । ब्रह्म तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि । ऋत्विग्योगभिदोः विप्रे इति मेदिनीत्यौणादिके चतुर्थपादे ) । यद्यपि इदित् बृहे रूपाश्रयणेन दृशिग्रहणसामर्थ्यमाश्रयणीयं तथाऽपि बृहजातिजीवेति धात्वन्तरादप्येतद्रूपनिष्पत्तिरिति सूचनायैवमुक्तमिति द्रष्टव्यम् ।

स०— **अवतेष्टिलोपश्चेतिसूत्रादिति** । अवतेर्धातोर्मन्प्रत्ययस्तस्य च टिलोपो भवतीति सूत्रार्थः । तथा च गत्यर्थकात्प्रवेशार्थकाद्वा अवतेर्मन्प्रत्यये तस्य च टिलोपे अवम् इति जाते 'छ्वोः शूडनुनासिके चे'ति पूर्वसूत्रस्थस्यानुनासिके चेत्यस्य ज्वरत्वरेत्यत्र धातुवृत्तिकारादिभिर्व्याख्यातत्वेन मस्यानुनासिकत्वेनज्वरत्वरेत्यने न वकारस्य लघूपधाकारस्य चोठि सवर्णदीर्घे'सार्वधातुकार्धधातुकयो'रित्यनेन गुणे ओमिति रूपनिष्पत्तिः । नन्वत्र छ्वोः शूडनुनासिके चेत्यनेन वकरस्योठि जाते 'एत्येधत्यूठ्स्वि'तिऊठ्परत्वनिमित्तप्राप्तवृद्ध्यपेक्षयाऽत्र्म् इत्यत्र 'सार्वधातुकार्धधातुकयोरि'त्यनेनादावेव गुणे पश्चादोमाङोश्चेति पररूपे ओमितिरूपनिष्पत्तिसम्भवेन ज्वरत्वरेत्यत्रानुनासिके चेत्यस्य वृत्तिकाराद्यनुक्तानुवृत्त्याश्रयणेनोठ्करणमनुपपन्नमिति चेन्न । मन्प्रत्ययकार्यभूतसार्वधातुकगुणापेक्षया प्रकृत्यवयववकारस्थानिकोठ्निमित्त-

कैत्येधत्यूठ्स्विति सूत्रप्रापितवृद्धेरन्तरङ्गत्वेन तस्यामेव प्रथमतो जातायामौमितिरूपापत्त्या छ्वोः शूडिति सूत्रेणोठोऽसम्भवात्तत्सूत्रस्थस्यानुनासिके चेत्यस्य ज्वरत्वरेत्यत्रानुवृत्त्याश्रयणस्यावश्यकत्वादिति । यद्वा अवतेर्मन्प्रत्यये बाहुलकेन वकारस्य सम्प्रसारणे गुणे च जाते ओमितिरूपनिष्पत्तिरिति द्रष्टव्यम् ॥ **श्रुत्यन्तरादिबलादिति ।** 'ओतं जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्चे'त्यादिश्रुत्या 'ॐनामा भगवान् विष्णुरधिकोच्चगुणत्वत' इत्यादिस्मृत्या चैवमेव प्रतिपादितमिति भावः ।

प०— **गत्याद्यर्थस्येति ।** अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति भीमसेनधातुपाठेऽवतेरनेकार्थत्वोक्तेर्गत्याद्यर्थस्येत्युक्तम् । कथं रूपमित्यत आह ॥ **अवतेरिति ।** उणादावाद्यपादे 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' इत्यव्यवहितसूत्रान्मन्प्रत्ययमनुवर्त्य 'अवतेष्टिलोपश्च' इति सूत्रे अवतेर्मन्प्रत्ययः टिलोपश्च भवतीति सूत्रार्थ उक्त उणादिवृत्तौ । टिलोपश्चेति सामान्योक्तावपि मन्प्रत्ययस्यैव टिलोपो भवति । टिग्रहणसामर्थ्यात् । अवतिधातोरेव टिलोपे टिग्रहणमनर्थकम् । लोप इत्युक्तावप्यवधातोर्लोपो भविष्यति । न च 'अलोन्त्यस्य' इति परिभाषयाऽवधातोर्वकारमात्रलोपनिवृत्त्यर्थं टिग्रहणमिति शङ्क्यम् । षष्ठीनिर्दिष्टस्याल एवालोन्त्यपरिभाषावतारात् । इह च मन्प्रत्ययविधानार्थमवतेरित्यस्य पञ्चम्यन्तत्वात् । 'अलोन्त्यस्य' इति वकारमात्रस्य लोपेऽप्यतो लोप इत्यकारस्य लोपः स्यादेवेत्यनर्थकं टिग्रहणम् । ननु चातो लोप इत्यस्याकारान्तस्य लोप इत्यर्थ इति चेत्सत्यम् । आद्यन्तवदेकस्मिन्नित्याद्यन्तवद्भावसम्भवात् । केचित्तु यदि धातोष्टिलोपस्तर्हि 'अवतेर्डिच्च' इति सूत्रकरणेनैवावतेर्मन्प्रत्ययो डिच्चेत्युक्तावपि धातोस्सर्वस्य लोपः सिद्ध इति टिलोप इति न वक्तव्यम् । तेन ज्ञायते प्रत्ययस्यैव टिलोप इति टिग्रहणसामर्थ्यं प्रकारान्तरेणाहुः । तथात्र अवम् इति स्थिते 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इत्यकारवकारयोर्द्वयोरपि ऊठि कृते सवर्णदीर्घे 'सार्वधातुकार्धधातुकयोरि'ति गुणे 'नेड्वशि कृति' इतीडागमाभावे चोमिति रूपमित्यर्थः । यद्यप्यङ्गपादे ज्वरत्वरेति सूत्रवृत्तौ क्वौ झलादौ किति परत ऊठ् भवतीत्येवोक्तं नत्वनुनासिके परत इत्यपि तथाप्युणादिवृत्तौ ज्वरत्वरेत्यूठ्इत्युक्तवोमिति रूपसिद्धेरुक्तत्वात् । 'छ्वोः शूडनुनासिके च' इति पूर्वसूत्रादनुनासिके चेत्येतत् ज्यरत्वरेत्यत्राप्यनुवर्तत इति ज्ञायत इत्यदोषः । धातुवृत्तावप्येवमुक्तेश्च । औणादिकानामर्थानुगत्यदृष्टेरोंपदेऽप्येवमिति शङ्कानिरासायाह ॥ ॐ **इतीति ॥** गतिकर्मेति बहुव्रीहिः । गतिक्रियावाचीत्यर्थः । एवमग्रेऽपि । अन्यत्रेति महाभाष्य इत्येके । निरुक्तग्रन्थ इत्यन्ये ॥ **कर्मणीति ॥** यद्यप्युणादीनामपि धात्वधिकारविहितत्वेन 'कृदतिङ्' इति कृत्संज्ञकत्वात् 'कर्तरि कृद्' इति कर्तर्येवोणादिः विहितः । तथाऽपि 'उणादयो बहुलम्' इति बहुलग्रहणात् कर्मणीत्युक्तम् । निष्पन्न इति योज्यम् ॥ **श्रुत्यन्तरादिति ॥** 'ओतं जगद्यत्र स्वयं च पूर्णो

वेदोक्तरूपोऽनुपचारतश्च । सर्वैः शुभैश्चाभिहितो न चान्यैरों तत्सदित्येनमतो वदन्ति' इति सप्तदश-गीताभाष्योक्तश्रुतिबलात् 'ॐ इति ब्रह्म' इति श्रुतिबलाच्च 'ॐ नामा भगवान्विष्णुरधिकोच्चगुणत्वत' इत्यादि तैत्तिरीयभाष्योक्तस्मृतिबलात् । 'ओतमस्मिन् जगत्सर्वमत्युच्चश्च अखिलैर्गुणैः' इत्यादिछान्दोग्य-भाष्योक्तस्मृतिबलाच्चेत्यर्थः । कर्मसाधनत्वेऽर्थमाह ॥ **गुणैरिति** ॥ कर्तरि निष्पन्नत्वेऽर्थमाह ॥ **गुणान्वेति** ॥ **पक्षद्वयेऽपीति** ॥ गतिप्रवेशरूपार्थद्वयपक्षेऽपीति वा कर्तृकर्मणोरन्यतरार्थनिष्पन्नत्वपक्षेऽपि इति वाऽर्थः ॥ **बृहतेरिति** ॥ बृहबृहिवृद्धाविति भीमसेनधातुषु शब्विकरणेषु पठितस्य बृहधातोः तृतीयाध्यायद्वितीयपादे 'आयो मनिन् क्वनिब्वनिपश्च' इति सूत्रानन्तरेण 'अन्येभ्योऽपि दृश्यत' इति सूत्रेण 'मनिन्प्रत्यये दृशिग्रहणसामर्थ्याद्धातोरमागमश्च' इति चतुर्थाध्यायाद्यपादे 'ब्रह्मदृष्टिरुत्कर्षात्' इत्यत्र सुधायां वक्ष्यमाणदिशा रूपमित्यर्थः । यद्यपि बृहिवृद्धावित्यस्मात् 'बृंहेरन्नलोपश्च' इत्यादि चतुर्थपादीयौणादिकसूत्रेण 'मनिन्सर्वधातुभ्य' इति पूर्वसूत्रादनुवृत्तमनिन्प्रत्यये नलोपेऽमागमे यणादेशे च ब्रह्मेति रूपं सिध्यति । न च बृहिधातुरेव नास्ति भीमसेनधातुष्वपाठादिति शङ्क्यम् । अङ्गपादेऽनिदितां हलउपधायाः 'क्ङिति' इति सूत्रे बृंहेरच्यनिटीति वार्तिके भाष्ये च बृंहेरुक्तत्वात् । तथाप्यौणादिक-सूत्रानुशिष्टानामव्युत्पन्नप्रातिपदिकत्वस्य 'अतः कृकमिकंसकुम्भपात्र' इत्यादिसूत्रे कंसग्रहणेन ज्ञापितत्वात् ब्रह्मशब्दस्य यौगिकत्वासिद्धेरष्टाध्यायीगतसूत्रेणैव रूपादिसिद्धिर्ध्येयेति भावः । अत एवानुमानिकपादे योगादिवृत्तिलक्षणोक्तिप्रस्तावे सुधायामौणादिकानामर्थानुगमादर्शनादित्युक्तम् । नन्वेवं शब्विकरणस्य तिपानिर्देशे बर्हते रूपमेतदिति निर्देशापत्त्या बृहतेरिति कथं निर्देशः 'पुगन्तलघूपधस्य च' इति गुणेन भाव्यत्वादिति चेत्सत्यम् । अनुक्रियमाणरूपविनाशप्रसङ्गेनाकृतगुणस्यानुकरणात् 'न लोकाव्ययनिष्ठा खलर्थतृनाम्' इत्यत्र तृनो णत्वाभावेन निर्देशो यथा तथेत्येके । 'संज्ञापूर्वको विधिरनित्य' इत्यगुणेन निर्देश इत्यपरे । 'अथ कस्मादुच्यते ब्रह्मेति बृहति बृंहयति चे'त्यादि श्रुत्यनुरोधात् शविकरणेऽप्यस्ति बृहधातुरित्यन्ये । अत एव दशमगीताभाष्यटीकायां 'अथ कस्मात्' इति श्रुतिव्याख्यानावसर एव बृहतेर्मनिन्नमागमश्चेति उक्तमित्याहुः ।

या०—**गत्याद्यर्थस्यावतेरिति** ॥ अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचन-क्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति धातुव्याख्यानादिति भावः ॥ **अवतेष्टिलोपश्चेति** ॥ अवतेर्मन्प्रत्ययः । प्रत्ययस्य टेर्लोपश्चेत्युणादिसूत्रार्थः । एवं च अव्+म् इति स्थिते ज्वरत्वरेत्यादिनो-पधाऽकारस्य वकारस्य चोठिकृते सवर्णदीर्घे सार्वधातुकार्धधातुकयोरिति गुणे च सति ओमिति सिध्यतीति भावः । नन्वत्र न ज्वरत्वरेति सूत्रेणोठः प्राप्तिः । तत्र क्वौ झलादौ क्ङिति परतस्तद्विधानादत्र तदभावादिति चेत् । उच्यते । 'च्छ्वोः शूडनुनासिके च' इति पूर्वसूत्रादनुनासिके चेत्यनुवर्तते ।

एवं चानुनासिकस्य मकारस्यात्र परतो विद्यमानत्वादूठ् स्यादेव । यद्वा ओतुरित्यादिशब्दानामकित्यपि बाहुलिकत्वेनोठमङ्गीकृत्य वैयाकरणैः साधितत्वेन प्रकृतेऽकित्यप्यूठ्प्राप्तिरिति ध्येयम् । वस्तुतस्तु 'च्छ्वोः शूडनुनासिके च' इत्यनेनैवात्र धातुवकारस्योठि आद्गुण इति गुणे च कृते ओमिति रूपम् । अत्र 'एत्येधत्यूठ्सु' छान्दसत्वान्न भवति । अत्र चोङ्कारस्य वर्णत्रयात्मकत्वप्रसिद्धिरप्यनुकूला भवतीति ज्ञेयम् । अन्ये तु 'अवतेर्मन्' प्रत्यये बाहुलिकेन वकारस्य सम्प्रसारणे गुणे च सति ॐ इति सिध्यतीत्याहुः ॥ **उपपदाद्यभाव इति** ॥ कर्त्रादिवाचकोपपदाभावेऽपीत्यर्थः । आदिपदेन तत्प्रापकवाक्यसमभिव्याहारोऽपि नेति ग्राह्यम् ॥ **योग्यतयेति** ॥ प्रमाणबाधेनेत्यर्थः । गुणानां कर्त्रादिभावेनान्वये प्रमाणविरोधो नेति भावः ॥ **बृहतेर्वृद्ध्यर्थस्येति** ॥ बृहवृद्धौ अस्मात् मन्प्रत्यये अमागमे ब्रह्मेति रूपमिति भावः ।

श्री०— **यद्यसौ कर्मणीति** ॥ असाववधातुः । कर्मणि कर्तरि वा मन्प्रत्यये सति ॐ इति निष्पन्नश्चेदित्यर्थः ॥ **कर्तरीति** ॥ प्रविष्ट इत्यर्थे इत्यर्थः । कर्मसाधनत्वेऽर्थमाह ॥ **गुणैरिति** ॥ कर्तरि निष्पन्नत्वेऽर्थमाह ॥ **गुणान्वेति** ॥ **पक्षद्वयेऽपि** गतिप्रवेशार्थद्वयेऽपीति वा कर्तृकर्मणोरन्यतरार्थ-निष्पन्नत्वपक्षेऽपीति वेत्यर्थः ॥

च०— **ॐकारस्तावदिति** ॥ **गतत्वस्य प्रविष्टत्वस्येति** ॥ गतिकर्तृत्वस्य गतिकर्मत्वस्य प्रवेशनकर्तृत्वस्य तत्कर्मत्वस्य चेत्यर्थः ॥ गत्यर्थकर्मकेति तयोरेवेति चानुशासनात् ॥ **गत्याद्यर्थस्येति** ॥ अव रक्षणेत्यादिना धातोर्व्याख्यातत्वादिति हृदयम् ॥ **अवतेष्टिलोपश्चेति** ॥ उणादावाद्यपादे अवते-र्मन्प्रत्ययः । मन्प्रत्ययसम्बन्धिनष्टेर्लोपश्चेति सूत्रार्थः । तथा च अवम् इति स्थिते 'च्छ्वोः शूडनुनासिके च' इति पूर्वसूत्रात् अनुनासिकेत्यंशस्य धातुवृत्तिकारादिप्रदर्शितानुवृत्तिकतयाऽनुनासिके परतो ज्वरत्वरे-त्यादिनोपधाकारवकारयोरूठिसवर्णदीर्घे आर्धधातुकनिमित्तके गुणे नेड्वशि कृतीतीण्निषेधे च सति ॐ इति निष्पद्यत इति भावः ॥ अङ्गपादे ज्वरत्वरेति सूत्रवृत्तौ क्वौ सलादौ क्ङिति परत ऊठ् भवतीत्ये-वाभिहिततयाऽनुनासिके परत इत्यनभिधानेप्युणादिवृत्तावोमिति रूपस्य ज्वरत्वरेत्यूठा निष्पादितत्वात् च्छ्वोरितिसूत्रादनुनासिकेत्यंशस्यानुवृत्तिर्ज्ञायत इत्याकरो दर्शितः ॥ **गतिकर्मा** गतिरूपक्रियावचनः ॥ **प्रवेशनकर्मा** प्रवेशनरूपक्रियावचनः ॥ **असौ** मन्प्रत्ययः ॥ **कर्मणीति** ॥ उणादीनां धात्वधि-कारीयतया कृदतिङिति कृत्संज्ञतया 'कर्तरि कृद्' इति कर्तृसाधनतौचित्येऽपि 'उणादयो बहुलम्' इति बहुलग्रहणात्कर्मसाधनताऽपि सङ्गच्छत इत्याशयेनेयमुक्तिरित्यवसेयम् ॥ **उपपदाद्यभाव इति** ॥ कर्त्रादि-वाचकपदान्तरसमभिव्याहाराभावेऽपीत्यर्थः ॥ **योग्यतयेति** ॥ देशकालीतत्वस्येव गुणौतत्वस्यापि श्रुत्याद्यबाधिततयेत्यर्थः ॥ **पक्षद्वयेऽपि** प्रत्ययस्य कर्तृकर्मसाधनताकल्पद्वयेऽपि । बृहतेः भीमसेन-

धातुषु पठितस्य शब्विकरणकस्य एतद् रूपमिति । 'अन्येभ्योऽपि दृश्यत' इति सूत्रानुशिष्टमनिन्प्रत्यये दृशिग्रहणसामर्थ्यापादितामागमे चैतद्रूपं निष्पद्यत इति भावः ॥

सु०— **एतदुक्तं भवति । यौगिका हि शब्दा नावश्यमर्थप्रत्यायने सङ्गतिग्रहणमपेक्षन्ते । किं नाम निगमनिरुक्तव्याकरणबलेनावयवार्थावगमे सति तत्संसर्गसम्भावनायां प्रसिद्धमन्यथाऽपूर्वमेवार्थमवगमयन्ति । वाक्यरूपत्वात्तेषाम् । यथाऽऽह 'श्रोत्रियंश्छन्दोऽधीते' 'वाक्यार्थे पदप्रयोग' इति । न च वाक्यं सङ्गतिग्रहणापेक्षमर्थमवबोधयति । अधिगतार्थत्वप्रसङ्गादशक्यत्वाच्च ।**

वा०— नन्वेवं निर्वचनकथनेन भाष्यकारेणोंब्रह्मशब्दयोर्यौगिकत्वसूचनेऽपि न प्राप्तशङ्कापरिहारः । अलौकिकार्थे तच्छब्दसङ्गतिग्रहणप्रकारानिरूपणादित्यतः सङ्गतिग्रहणप्रकारानिरूपणेऽपि यौगिकत्वेन सङ्गतिग्रहणानपेक्षासूचनान्नासङ्गतं भाष्यमित्यभिप्रेत्य कुतो यौगिकत्वेऽपि सङ्गतिग्रहणानपेक्षत्वमित्यतस्तदभिप्रायमाह ॥ **एतदुक्तं भवतीति** ॥ अवश्यपदप्रयोगस्तु रूढानां यथा सङ्गतिग्रहणानपेक्षावश्यकी न तथैतेषामिति रूढेष्वावश्यकत्वं सूचयितुं वैतेषामपि समुदायसङ्गतिग्रहणानपेक्षायामपि वक्ष्यमाणरीत्याऽवयवसङ्गतिग्रहणापेक्षावश्यकत्वं सूचयितुं वेति द्रष्टव्यम् ॥ तर्हि यौगिकशब्दानां श्रवणमात्रेणापूर्वार्थप्रत्ययापत्तिः प्रसिद्धार्थप्रत्ययानापत्तिश्चेति शङ्कते ॥ **किं नामेति** ॥ एवं वदतामस्माकं यौगिकेष्ववयवार्थसङ्गतिग्रहणापेक्षा न निषेध्या न वा तत्संसर्गसम्भावनायां प्रसिद्धार्थबोधकत्वमपि निषेध्यमपि तु तेषु समुदायशक्तिग्रहापेक्षैव निषिध्यतेऽवयवार्थसंसर्गासम्भावनायामपूर्वार्थपरत्वं च अभ्युपगम्यत इति न विरोध इत्यभिप्रेत्य समाधत्ते ॥ **निगमेति** ॥ निगमो नाम प्रसिद्धार्थतदवयवतद्गुणानपरित्यज्यार्थान्तरे वृत्तिः । यथा देहात्मादिशब्दानामुपचितवस्तुसन्ततगमनवत्पदार्थादावेकदेशानुगमेन वृत्तिः । प्रसिद्धार्थोपादानेनार्थान्तरवृत्तावजहल्लक्षणा स्यात्तदवयवोपादानेनार्थान्तरे वृत्तौ जहदजहल्लक्षणा तद्गुणोपादानेनार्थान्तरे वृत्तौ तु गौणीति तद्व्यावर्तकं विशेषणत्रयमिति ज्ञेयम् । निरुक्तं नाम सर्वावयवार्थानुगमेन प्रसिद्धादर्थान्तरे वृत्तिः । यथा सोमशब्दस्य पार्वतीसहितमहेश्वरे वृत्तिः । व्याकरणं नामास्मिन्नर्थेऽयं प्रत्ययो भवतीति विधिसामर्थ्यादर्थनिश्चयः । यथा वादीति ताच्छील्ये णिनिप्रत्ययविधानसामर्थ्याद् वदनशीलो गम्यते । एवं च यत्र निगमादिबलादवगतावयवार्थसंसर्गः प्रसिद्धानेकेषु तत्र सन्निहितपदान्तरसमभिव्याहारोऽर्थविशेषग्रहणनियामकोऽन्यत्र तु तत एव अपूर्वार्थलाभ इति द्रष्टव्यम् । (सुप्यजातौ णिनिस्ताच्छील्ये । अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी । शीतभोजी । अजातौ किं ब्राह्मणानामन्त्रयिता । ताच्छील्यस्य विवक्षितत्वात्तृन् । अत एव ब्राह्मणानिति कर्मणि षष्ठी न कृता । ताच्छील्ये किमुष्णं भुङ्क्ते कदाचित् । इह वृत्तिकारे-

णोपसर्गभिन्न एव सुपि णिनिरिति व्याख्यायोत्प्रतिभ्यामाङि सर्तेरुपसङ्ख्यानमिति पठितम् । हरदत्त-माधवादिभिश्च तदेवानुसृतम् । एतच्च भाष्यविरोधादुपेक्ष्यम् । उक्तं हि भाष्ये । सुपीति वर्तमाने पुनः सुपूग्रहणं किमर्थम् । अनुपसर्ग इत्येवं तदभूत् । इदं सुम्मात्रे यथा स्यात् । उदासारिण्यः प्रत्यासारिण्य इति । आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु । क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छी-लादिषु कर्तृषु बोध्याः शीलादीनां त्रयाणां विशेषणं समर्पयितुं निर्दिष्टैस्त्रिभिस्तच्छब्दैः प्रकृतिभूतधात्वर्थो निर्दिश्यते । तृन् । कर्ता कटान् ) । न हि पदं चक्षुरादिवदित्यादिना पूर्वपक्ष्युक्तपदत्वहेतुमन्यथयति ॥ **वाक्यरूपत्वादिति** । रूपशब्दः सदृशार्थः । यौगिकशब्दस्य वाक्यत्वाभावात् । अत एव चन्द्रिकायां वाक्यतुल्यत्वादित्युक्तम् ॥ **यथाऽऽहेति** । यद्यपि वाक्यार्थे पदवचनमित्यत्र वाक्यार्थशब्देन तदाश्रय-छन्दोऽध्यायी लक्ष्यते । अविद्यमानप्रकृतिप्रत्ययविभागः श्रोत्रियशब्दश्च तस्मिन्नेवाभिधेये निपात्यते क्रियारूपस्य सम्बन्धरूपस्य वा मुख्यस्य वाक्यार्थस्य सत्त्वभूतार्थाभिधायिश्रोत्रियशब्दबोध्यत्वासम्भवात् । तथाऽपि तादृशवाक्यार्थविशिष्टतया तदाश्रयसमर्पणं श्रोत्रियपदस्य वाक्यतुल्यत्वाभावे नोऽपपद्यत इत्यभिप्रेत्य इदमुदाहृतमिति द्रष्टव्यम् । यद्यपि च यौगिकपदे प्रकृतिप्रत्ययविभागः श्रोत्रियपदे च तदभाव इति वैषम्यं तथाऽपि वाक्यार्थसमर्पणेन वाक्यतुल्यत्वेन साम्यमाश्रित्येदमुदाहरणम् । यद्यपि च वाक्यार्थे पदवचनमिति वृत्तिभाष्यादौ पाठो दृश्यते तथाऽपि वचनप्रयोगशब्दयोरैकार्थ्याद्वा तथैव पाठदर्शनाद्वा प्रयोग इत्युक्तम् । इदं च छन्दसः श्रोत्रभावो घंश्चेत्येतदपेक्षया सूत्रस्यार्थान्तरं प्रकृतोपयोगादिहोदाहृतं न तु द्वितीयं तस्य प्रकृतानुपयोगादिति द्रष्टव्यम् ॥ **अशक्यत्वाच्चेति** ॥ अनन्तपुरुषप्रयुक्तस्वस्वाभि-प्रेतार्थप्रतिपादकतत्तत्पदावापोद्वापप्रयुक्तानन्तवाक्यानां तत्तदर्थानां च पदादिवदनुगतत्वाभावेनोपस्थित्य-सम्भवेन शक्तिग्रहस्याशक्यत्वमित्यर्थः ।

स०— नन्वेवमपि न समस्तगुणपूर्णे नारायणे सम्बन्धग्रहः प्रत्युतालौकिकार्थत्वमेव दृढीकृत-मित्यत आह ॥ **एतदुक्तं भवतीति** ॥ **निगमनिरुक्तेति** ॥ निगमो नाम प्रसिद्धार्थतदवयवौ परित्यज्य शब्दैकदेशानुगमेनार्थान्तरे वृत्तिः । अत्र तदवयवशब्देन तद्गुणो विवक्षितः शब्दैकदेशानुगमेनेत्यस्य प्रकृतिलक्षणशब्दैकदेशानुगमेनेत्यर्थः । अत्र शब्दस्यार्थान्तरे वृत्तिरित्येवोक्तौ प्रसिद्धपदार्थोपादानेन अर्थान्तरे वृत्तिरजहल्लक्षणा स्यात् । तदवयवोपादानेन वृत्तौ जहदजहल्लक्षणा । तद्गुणोपादानेनार्थान्तरे वृत्तिः गौणी स्यादतः प्रसिद्धार्थतदवयवौ परित्यज्येत्युक्तम् । यथा देहात्मादिशब्दानां उपचितवस्तु-सन्ततगमनावगमेन तत्पदार्थादावेकदेशानुगमेन वृत्तिः । निरुक्तं नाम शब्दस्य सर्वावयवार्थानुगमेन प्रसिद्धार्थादर्थान्तरे वृत्तिः । यथा सोमशब्दस्य पार्वतीसहितेश्वरे वृत्तिः । व्याकरणं नाम प्रत्ययविधान-सामर्थ्यादर्थनिश्चयः । यथा वादीति ताच्छील्ये प्रत्ययविधानसामर्थ्यात् वदनशीलोऽवगम्यत इति

विवेकः । यौगिकानां प्रमाणान्तराप्रसिद्धबोधकानां वाक्यरूपत्वात्सङ्गतिग्रहणानपेक्षत्वं द्रढयति ॥ **यथा आहेति** ॥ छन्दोऽधीते इत्यस्मिन्वाक्यार्थे श्रोत्रियन्निति निपात्यते । नकारः स्वरार्थः । तदधीत इति घप्रत्ययश्छान्दसः श्रोत्रभवो वेत्यर्थः ॥

प० — तदयुक्तमिवाभातीति कृतचोद्यस्य त्रिपाद्या कः समाधिरुक्त इत्यत उपोद्घातमाह ॥ **एतदुक्तमित्यादिना** तदेताविविति पर्यन्तेन ॥ **सङ्गतीति** ॥ अवयवसङ्गतिग्रहणं विना पृथक्समुदायस्य सङ्गतिग्रहणं नापेक्षन्त इत्यर्थः । 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इत्यादिसङ्केतग्राहकवाक्यं निगमः । अग्र्यत्वमग्रनेतृत्वमित्यादिवैदिकाग्न्यादिशब्दनिरुक्तिपरवेदाङ्गरूपनिरुक्तसंज्ञग्रन्थः । प्रसिद्धमर्थमवगमयन्तीत्यन्वयः ॥ **अन्यथेति** ॥ प्रसिद्धेऽर्थेऽवयवार्थसंसर्गसम्भावनाया अभावे इत्यर्थः । तेषां यौगिकशब्दानां वाक्यरूपत्वाद्वाक्यतुल्यत्वादित्यर्थः । यौगिकस्य वाक्यरूपऽत्वे पञ्चमाध्यायद्वितीयपादपाणिनीयसूत्रसम्मतिमाह ॥ **यथाऽऽहेति** ॥ छन्दोऽधीते वेदाध्ययनकर्तरि श्रोत्रियन्निति नकारान्तः शब्दो निपात्यते । नकारः 'ञ्नित्यादिर्नित्यमि'त्याद्युदात्तस्वरार्थः । श्रोतृशब्दाद्घप्रत्यये तस्येयादेशे यणादेशे श्रोत्रिय इति रूपम् । कथमस्य वाक्यरूपतेत्यतो वृत्तिकारादिवचनमाह ॥ **वाक्यार्थ इति** ॥ छन्दोऽध्ययनकर्तृरूपवाक्यार्थे श्रोत्रियपदप्रयोग इति । वाक्यरूपत्वेऽपि यौगिकस्य कुतो न सङ्गतिग्रहणापेक्षेत्यत आह ॥ **न चेति** ॥ **अधिगतेति** ॥ सङ्गतिग्रहणस्य सम्बन्धिज्ञानाधीनत्वेन प्रागेव वाक्यार्थरूपसम्बन्धिनो ज्ञातत्वादिति भावः ॥ **अशक्यत्वाच्चेति** ॥ वाक्ये शक्तेरभावेन तन्निष्ठशक्त्यविषयत्वाच्चेत्यर्थः ।

या० — यौगिकानामेव रूढत्वे सङ्गतिग्रहणापेक्षा नास्तीत्यत उक्तम् ॥ **अवश्यमिति** ॥ तथा च लोके योगरूढेषु तथाभावेऽपि न केवलं यौगिकेषु तदपेक्षा । अतो नियमेन यौगिकेषु सङ्गतिग्रहणापेक्षेति भावः ॥ **निगमनिरुक्तेति** ॥ यथा सत्यादिशब्दानां 'तस्य वा एतस्य ब्रह्मणो नाम सत्यमिति तानि ह वा एतानि त्रीण्यक्षराणि सन्ति । सत् तियमिति तद्यत्सत् तदमृतं अथ यत्ति तन्मर्त्यं अथ यद्यं तेनोभे यच्छती'त्यादिनिगमबलेनावयवार्थावगमो दृश्यते । क्वचित्तु निरुक्तबलेन 'यथा आपो वा अर्क' इत्यादौ अर्कादिशब्दानां 'उदकं सुखहेतुत्वात्कमित्येवाभिधीयते । तदेव ह्यर्चतो जातमतोऽर्कमिति कीर्तितम्' इत्यादिव्यासकृतनिरुक्तबलेनार्चतो जातं सुखसाधनं चेत्यर्क इत्याद्यवयवार्थावगमः । क्वचिद्व्याकरणबलेन । यथा पङ्कजादिशब्दानां 'सप्तम्यां जनेर्ड' इत्यादिव्याकरणबलेन पङ्के जायत इति अवयवार्थावगम इत्यर्थः । एवं च निगमशब्दो वेदविशेषे रूढः । निरुक्तव्याकरणशब्दावपि रूढ्या ग्रन्थविशेषपरावित्यवगन्तव्यम् । अन्ये तु निगमो नाम प्रसिद्धार्थतदवयवौ परित्यज्य शब्दस्य शब्दैकदेशानुगमेनार्थान्तरे वृत्तिः । अत्र तदवयवशब्देन तद्गुणोऽपि विवक्षितः । शब्दैकदेशानुगमेनेत्यस्य

प्रकृतिलक्षणशब्दैकदेशान्तरेऽनुगमेनेत्यर्थः । अत्र शब्दस्यार्थान्तरे वृत्तिरित्येवोक्तौ प्रसिद्धार्थोपादानेन अर्थान्तरे वृत्तिरजहल्लक्षणा स्यात्तदेवावयवोपादानेन वृत्तौ जहदजहल्लक्षणा च स्यात् । तद्गुणोपादानेन अर्थान्तरे वृत्तिर्गौणी स्यादतः प्रसिद्धार्थतदवयवौ परित्यज्येत्युक्तम् । जहल्लक्षणत्वपरिहाराय शब्दैकदेशानुगमेनेत्युक्तमित्यवधेयम् । यथा देहात्मादिशब्दानामुपचितवस्तुसन्ततगमनतत्पदार्थादावेकदेशानुगमेन अनुवृत्तिः । निरुक्तं नाम शब्दस्य सर्वावयवार्थानुगमेन प्रसिद्धार्थादर्थान्तरे वृत्तिः । यथा सोमशब्दस्य पार्वतीसहितेश्वरे वृत्तिः । व्याकरणं नाम प्रत्ययविधानसामर्थ्यादर्थनिश्चयः । यथा वादीति ताच्छील्ये प्रत्ययविधानसामर्थ्याद्वदनशीलो गम्यत इत्याहुः ॥ **तत्संसर्गसम्भावनायामपि** ॥ तत्संसर्गस्य स्वावगतसंसर्गेष्वन्यतमत्वसम्भावनायामित्यर्थः । ननु पदानां कथमपूर्वार्थगमकत्वमित्यत आह ॥ **वाक्यरूपत्वादिति** ॥ वाक्यस्येव रूपं येषां ते वाक्यरूपाः तेषां भावो वाक्यरूपत्वं तस्मादिति व्याख्यानमत्र विवक्षितम् । तेन वाक्यतुल्यत्वादित्यर्थः प्राप्नोति । अत एव चन्द्रिकायां 'वाक्यतुल्यत्वादि'त्येवोक्तम् । तेन विभक्त्यन्ता वर्णाः पदं पदसमूहो वाक्यं न च यौगिकानां सर्वेषामुक्तपदसमूहरूपत्वमिति शङ्काऽनवकाश इति ध्येयम् । यौगिकानां शब्दानां वाक्यार्थप्रतिपादकत्वेन वाक्यतुल्यत्वेऽभियुक्तसम्मतिमाह ॥ **यथाऽऽहेति** ॥ 'श्रोत्रियंश्छन्दोऽधीत' इति सूत्रे 'वाक्यार्थे पदवचनम्' इति यद्वार्तिकं तस्यायमर्थानुवाद इति ज्ञेयम् । अत्र वाक्यार्थशब्देन तदाश्रयछन्दोऽध्यायी लक्ष्यते । पदार्थसंसर्गरूपवाक्यार्थस्य सत्त्वभूतार्थाभिधायिश्रोत्रियशब्दबोध्यत्वासम्भवात् । तथाच छन्दोधीत इत्यस्य वाक्यस्यार्थो यः छन्दःकर्मकाध्ययनक्रियाकः संसर्गः कर्तृतया तदाश्रयो यस्तस्मिन्नभिधेये श्रोत्रियशब्दो निपात्यत इति वार्तिकवाक्यार्थः पर्यवस्यति । ततश्च श्रोत्रियपदस्य छन्दोधीत इति वाक्यप्रतिपादकत्वोक्त्या तत्तुल्यत्वं तस्य अत्राभिप्रेतमिति ज्ञातव्यम् । नन्वत्र विद्यमानप्रकृतिप्रत्ययविभागस्य रूढस्यैव श्रोत्रियशब्दस्योक्तवाक्यार्थे निपातोऽभिप्रेतः । अन्यथा 'छन्दसो वा श्रोत्रभावस्तदधीत इत्यर्थे घश्च' इत्युत्तरवार्तिकवैयर्थ्यप्रसङ्गात् । अतः कथं यौगिकानां शब्दानां वाक्यतुल्यत्वे इदमुदाहरणमिति चेन्न । उदाहृतोत्तरवार्तिकानुसारेण श्रोत्रियशब्दस्य वस्तुतो यौगिकत्वमप्यस्तीत्यभिप्रेतत्वात् । न च तदेव वार्तिकमत्र कुतो नोदाहृतमिति वाच्यम् । तेन यौगिकत्वलाभेऽपि स्पष्टवाक्यतुल्यत्वप्रतिपादनालाभात् । पदानामेव वाक्यतुल्यत्वे इदमुदाहरणं न तु यौगिकत्वांशेऽपीत्यप्याहुः । श्रोत्रियन्नित्यत्र नकारः स्वरार्थ इत्याहुः ॥ **अशक्यत्वाच्चेति** ॥ वाक्यार्थस्य प्रथममनुपस्थित्या तत्र शक्तिग्रहस्याशक्यत्वादित्यर्थः ॥

**च०**— यौगिकाः अवयववृत्त्यैवार्थप्रत्यायकास्तेन रूढिविशेषितानां तादृशानामर्थप्रत्यापने सङ्गतिग्रहणापेक्षायामपि न क्षतिः ॥ **निगमनिरुक्तेति** ॥ 'इदं तच्छिर एव ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इत्यादिसङ्केतग्राहकवाक्यं निगमः । वैदिकाग्न्यादिशब्दानामग्र्यत्वाग्रनेतृत्वाङ्गनेतृत्वादितात्पर्यकवेदाङ्ग-

रूपनिरुक्तसंज्ञो ग्रन्थः । **अन्यथा** प्रसिद्धे अवयवार्थसंसर्गसम्भावनाया अभावे **अपूर्वं** शक्तिग्रहाविषयं **वाक्यरूपत्वादिति** ॥ स्वधर्मिकार्थनिरूपितशक्तिग्रहनैरपेक्ष्येण शाब्दधीजनकत्वनियन्त्रितवाक्य-तुल्यताकत्वादित्यर्थः । तेन विभक्त्यन्तत्वरूपपदत्वविशेषितानेकव्यक्तिघटितसमुदायत्वस्य यौगिकपदेषु विरहेण तत्तुल्यतोक्तिः न सङ्गच्छत इति शङ्काऽनवकाशः । **तेषां** यौगिकपदानाम् । यौगिकपदानां दर्शितवाक्यतुल्यतायां पाणिनिकर्तृकाष्ठलक्षणीघटकपञ्चमलक्षणीयद्वितीयचरणगतसूत्रसम्मतिमभिधत्ते ॥ **यथाऽऽहेति** । छन्दःकर्मकाध्ययनक्रियारूपस्य तत्संसर्गरूपस्य वा वाक्यार्थस्य द्रव्यरूपसत्वाभिधायक-श्रोत्रियपदप्रत्याय्यमानत्वस्य दुरुपगमतया 'वाक्यार्थे पदवचनम्' इति वार्तिकघटकवाक्यार्थपदेन लक्षणया छन्दःकर्मकाध्ययनक्रियाश्रयः प्रत्याप्यत इत्युपेत्य तादृशार्थविषयकप्रतीतौ जननीयायां प्रकृतिप्रत्यय-विभागविनिर्मुक्तः श्रोत्रियशब्दो निपातित इति वाक्यतुल्यता श्रोत्रियपदस्य यद्यपि दुर्वचैव तथापि छन्दोऽधीत इति वाक्यप्रत्येतव्यतादृशक्रियासंसर्गान्यतररूपवाक्यार्थाश्रयप्रत्यापकतामात्रेणैवेयं वाक्यतुल्य-तोक्तिः न तु पदसमुदायत्वाभिप्रायेणेति न क्षतिः । एवं यौगिकपदानां प्रकृतिप्रत्ययविभागवत्तया श्रोत्रियपदस्य चाव्युत्पन्नतया वैरूप्यसद्भावेऽपि दर्शिततुल्यताश्रयणेन वेयमुदाहृतिरित्यवसेयम् । न च 'छन्दसो वा श्रोत्रभावस्तदधीत इत्यर्थे घश्च' इति द्वितीयवार्तिकस्य प्रकृतिप्रत्ययविभागोपगमेन प्रवृत्तस्यैव उदाहार्यतौचिती न तद्विपरीतप्रथमवार्तिकस्येति वाच्यम् । तथा सति यौगिकतामात्रलाभेऽपि वाक्य-तुल्यताया अलाभादिति स्थितम् । भाष्यवृत्त्यादिग्रन्थेषु वाक्यार्थे पदवचनमित्येव वार्तिकाक्षरानुपूर्वी श्रवणेऽपि वचनप्रयोगपदयोरैकार्थ्यादानुपूर्व्यन्तराश्रयणेऽपि सामञ्जस्यमिति मन्तव्यम् । 'ञित्यादिर्नित्यमि'-त्याद्युदात्तस्वरार्थः श्रोत्रियन्निति नकार इति पाणिनीयाः ॥ **अशक्यत्वाच्चेति** ॥ नियतानुपूर्वीविशेष-रूपशक्ततावच्छेदकोपरागेण पदानां तत्तत्प्रवृत्तिनिमित्तोपरागेणार्थानां च पूर्वं भङ्ग्यन्तरेणोपस्थिततया तत्र तन्निरूपितशक्तीनां सुग्रहत्वेऽपि पुरुषेच्छाभेदनियन्त्रितानुपूर्वीवैचित्र्यकारणकवाक्यानां तत्तदर्थानां चानु-गमकधर्मोपरागेण पूर्वमनुपस्थित्या तत्र तन्निरूपितशक्तेर्दुर्ग्रहत्वादित्यर्थः ।

**सु०— तदेतावोङ्कारब्रह्मशब्दावपि यौगिकौ जिज्ञास्यमनन्तगुणपरिपूर्णं प्रतिपादयन्तौ जीवजडयोस्तदयोगात्तद्व्यतिरिक्तमेव किञ्चिद्ब्रह्मयतः तच्चाविदितत्वात्सम्भवति जिज्ञासाविषयः । न च तत्रापि गुणपूर्णता विरुद्धा । प्राक् प्रतीतेर्निराश्रयस्य विरोधिप्रत्ययस्यानुत्थानात् । प्रतीत्या चैवमेव सिद्धत्वादिति । यत्पुनरकारवाच्येन तत्पदार्थेनोकारवाच्यस्य त्वंपदार्थस्याभेदो मकारेणोच्यते ब्रह्मशब्देन च सकलवस्त्वात्मकत्वलक्षणपूर्णताऽभिधीयत इति व्याख्यानम् । तदप्रामाणिकं प्रमाणविरुद्धं च । यत्त्वाप्तेरादिमत्त्वाद्वेत्याद्योङ्कारस्य नित्यशुद्धबुद्धमुक्तस्वभावं**

**सर्वज्ञं सर्वशक्तिसमन्वितमित्यादि ब्रह्मशब्दस्य व्याख्यानम् तज्जीवादिव्यतिरिक्तवस्तुसाधनाविरोधीति स्फुटमेवेत्याशयवता न व्याख्यानान्तरं दूषितमनुमतं च ।**

**वा०**— नन्वस्तु यौगिकानां सङ्गतिहणानपेक्षार्थबोधकत्वम् । तथाऽपि निगमादिबलादवगतोङ्कारादिशब्दावयवार्थसंसर्गस्य प्रसिद्धे सम्भावनायां प्रसिद्धत्वादेव तस्याजिज्ञास्यत्वप्राप्तावोङ्कारब्रह्मशब्दोपादानेऽपि न विषयरूपविवक्षितार्थसिद्धिरित्याशङ्कां परिहरन्नुपपादितप्रमेयस्य प्रकृतोपयोगमाह ॥ **तदेतौ इति** ॥ अन्यत्रासम्भावितगुणपूर्णता प्रसिद्धवदप्रसिद्धेऽपि नाङ्गीकर्तुं शक्येत्याशङ्कते ॥ **न चेति** ॥ तथात्वे वाक्यादप्यपूर्वार्थप्रतीतिर्न स्यादिति बाधकमुत्तरत्र वक्ष्याम इत्यभिप्रेत्योपपादकमेवाह ॥ **प्रागित्यादिना** ॥ ननु साङ्करीयस्याप्योंब्रह्मशब्दव्याख्यानस्य सत्त्वान्न भवदभिप्रेतार्थसिद्धिः । न चाप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च न तद्विरोध इति वाच्यम् । तथा सति तस्य दूष्यत्वप्रसङ्गात् । किञ्चाप्तेरादिमत्त्वाद्वेत्याद्योङ्कारब्रह्मशब्दव्याख्यानान्तरस्यापि सत्त्वात्तद्विरोधः । न च जीवव्यतिरिक्तेश्वरसाधनाविरोधित्वात्तस्य न तद्विरोध इति वाच्यम् । तथा सति तद्व्याख्यानस्यानुमन्तव्यत्वप्रसङ्गादित्यत आह ॥ **यत्पुनरित्यादिना** ॥ स्फुटमेवेत्यस्य प्रमाणविरुद्धं चेत्यनेनापि सम्बन्धः । नेत्यस्योभयत्रापि सम्बन्धः । दूषितमनुमतं चेत्यनयोर्यथायोग्यं सम्बन्ध इति द्रष्टव्यम् ।

**स०**— **आप्तेरादिमत्वाद्वेत्यादीति** ॥ इदमकारव्याख्यानरूपमाण्डूकोपनिषद्गतवाक्यम् । आदिपदेन उत्कर्षादुभयत्वाद्वा मितेरपीतेर्वेति उकारमकारव्याख्यानरूपतद्गतमेव वाक्यं ग्राह्यम् ॥ **न दूषितमनुमतं चेति** ॥ ओंकारब्रह्मशब्दयोराद्यव्याख्यानमप्रमाणिकं प्रमाणविरुद्धं चेति स्फुटत्वान्न दूषितम् । आप्तेरादिमत्वाद्वेत्योङ्कारस्य द्वितीयं व्याख्यानं प्रामाणिकत्वात् न दूषितमनुमतं च ।

**प०**— ततश्च किमित्यत आह ॥ **तदेताविति** ॥ 'ॐ इत्येतदक्षरम्' इत्यत्र श्रुतोपासनाया अपि जिज्ञासारूपत्वाज्जिज्ञास्यमित्येवोक्तम् । तावता पूर्वपक्ष्युक्तविषयाभावशङ्का कथं निरस्तेत्यत आह ॥ **तच्चेति** ॥ **तत्रापीति** ॥ अपूर्वेऽप्यर्थे । इति व्याख्यानं मायिनामिति योज्यम् ॥ **प्रमाणविरुद्धमिति** ॥ ओतं जगद्यत्रेति पूर्वोक्तश्रुतिस्मृतिरूपप्रमाणविरुद्धमोङ्कारव्याख्यानम् । अथ कस्मादुच्यत इत्यादिप्रमाणविरुद्धं ब्रह्मपदव्याख्यानमित्यर्थः । प्रमाणविरुद्धं चेत्यस्येति स्फुटमेवेत्याशयवता न व्याख्यानान्तरं दूषितमित्यन्वयः ॥ **आप्तेरिति** ॥ 'अकारः प्रथमा मात्रा आप्तेरादिमत्वाद्वा उकारो द्वितीया मात्रा उत्कर्षादुभयत्वाद्वे'ति माण्डूकोपनिषद्योंकारस्य व्याख्यानमिति सम्बन्धः । आप्तेः कामितावाप्तेर्हेतुत्वात् । प्राज्ञतैजसाख्यरूपद्वयादिमत्वाच्च इत्यर्थः । नित्येत्यादिरामानुजभाष्योक्तमविरोधीति स्फुटमेवेत्याशयवता द्वितीयव्याख्यानं न दूषितमनुमतं चेत्यर्थः ।

या०— **आप्तेरादिमत्त्वाद्वेति** ॥ आदिपदेनोत्कर्षादुभयत्वाद्वा मितेरपीतेर्वेत्यस्य ग्रहणम् । तदप्रामाणिकं प्रमाणविरुद्धं चेत्यस्यापीति स्फुटमेवेत्यग्रिमग्रन्थेनान्वय: । तथा च स्फुटदूषणत्वादाद्य-व्याख्यानं न दूषितम् । जीवादिव्यतिरिक्तवस्तुसाधनाविरोधित्वस्य द्वितीयव्याख्याने स्फुटत्वात्तदनुमत-मिति नोक्तमित्यर्थ: ॥

श्री०— **विरुद्धेति** ॥ तथाच जीवजडातिरिक्तं यत्किञ्चिद्वस्तु तद्गुणपूर्णं न भवति चेतनत्वात् जीववदित्यनुमानविरुद्धेत्यर्थ: । विरोधिप्रत्ययस्य विरुद्धत्वानुमानस्य । आश्रयाज्ञानासिद्धेरित्याशय: ॥ **एवमेवेति** ॥ एवंच याभ्यामोङ्कारब्रह्मशब्दाभ्यां तद्वस्तु प्रतीतं ताभ्यां गुणपूर्णत्वेनैव प्रतीतमिति धर्मिग्राहकमानविरोध इति भाव: । इति यद्व्याख्यानं तदप्रामाणिकं प्रमाणविरुद्धं चेति स्फुटमेवेत्या-शयवता न दूषितम् । नन्वोतत्ववाचीतिवदाप्तेरादिमत्त्वाद्वेति माण्डूकोपनिषत्कृतमोङ्कारव्याख्यानं कस्मादत्र न कृतमित्यत उक्तम् ॥ **यत्त्वित्यादि** ॥ यस्त्वाप्तेरित्यादि यदोङ्कारब्रह्मशब्दव्याख्यानान्तरं तज्जीवादिव्यतिरिक्तवस्तुसाधनाविरोधीति स्फुटमेवेति हेतोस्तदस्माकमनुमतं सम्मतमतस्तदत्र नोक्तमित्यर्थ: ॥

च०— भाष्यकृतामोङ्कारब्रह्मशब्दयो: भाष्यान्तरीयव्याख्याद्वयस्याप्रत्याचिख्यासायां बीज-मभिधत्ते ॥ **यत्पुनरित्यादिकेनानुमतं चेत्यन्तेन** ॥

सु०— **ननु गुणोततामिति कथम् । वृद्धिरेचीति भवितव्यम् । मैवम् । ओमाङोश्च इति चशब्देनान्यत्रापि पररूपत्वानुशासनात् । अथवा ऊयते रूपमेतत् । नन्वसौ तन्तुसन्ताने पठ्यते । अनेकार्थत्वाद्धातूनामित्यदोष: । कथं तर्ह्योतत्ववाचीति गुण: । तत्रावतिरूपाङ्गी-कारात् । वैचित्र्यं तु धातुद्वयजत्वसूचनार्थम् । अथवाऽऽकारोपसर्गपूर्वकोऽसावित्यदोष: ।**

वा०— नन्वत्रावते: क्तप्रत्यये छान्दसत्वादिडभावे च सति ज्वरत्वरेत्यनेन वकारस्य तदुपधा-कारस्यचोठि सवर्णदीर्घे च सति क्तस्य क्विप्त्वेऽप्योमास इत्यादाववतेर्मनोऽविसिविसुषीत्यादिना क्विप्त्वेऽपि बाहुलकाद्गुणवदोतं प्रोतमित्यादिबहुलमुपलम्भाद्बाहुलकाद्गुणसम्भवेनोतशब्दे निष्पन्ने तस्मिन्परतो गुण-शब्दस्यावर्णान्ततया 'वृद्धिरेची'ति वृद्धौ गुणौततामिति स्यान्न तु गुणोततामित्याशङ्कते ॥ **नन्विति** ॥ अद्य आ ऊढा अद्योढेत्यादौ 'धातूपसर्गयो: कार्यमन्तरङ्गमि'ति पूर्वमाद्गुणे पश्चादद्यशब्देन सम्बन्धे वृद्धिरेचीति प्राप्ताया वृद्धेराङ्नाङोरेकादेशयो: कार्यमाङ्ग्रहणेन गृह्यत इति ओमाङोश्चेति पररूपस्य मध्येऽपवादन्यायेन (मध्येऽपवादा: पूर्वान्विधीन्बाधन्ते नोत्तरानिति न्यायेनेत्यर्थ:) बाधकत्वेऽपि अद्य आ ऋश्यादद्यर्शादित्यादौ प्राप्तसवर्णदीर्घत्वस्य परत्वेन पररूपस्य तद्बाधकत्वायोगेन

कथमद्यश्र्यादिकमित्याशङ्किते 'ओमाङोश्चे'त्यत्रत्यचकारस्याधिकविधानार्थत्वाद्युक्तं दीर्घत्वबाधकत्वमिति समाधानेन चकारस्यान्यत्रापि प्रयोगानुसारेण पररूपाभ्यनुज्ञापकत्वादस्याप्यभियुक्तप्रयोगत्वेन पररूपे युक्तं गुणोततामित्यपीत्यभिप्रायेण समाधत्ते ॥ **ओमाङोश्चेतीति** ॥ अस्मिन्पक्षे चशब्दार्थप्रतिपत्तिगौरवं हृदि निधाय लघुभूतं पक्षान्तरमाह ॥ **अथवेति** ॥ ऊयतेः क्तप्रत्यये 'लोपो व्योर्वली'ति यलोपे ऊतमिति रूपं द्रष्टव्यम् । अवतेः कित्यपि गुणे सति प्रयोगदर्शनेन बाहुलककल्पनेऽप्यूयतेः किति गुणे सति प्रयोगादर्शनेन न बाहुलककल्पक इत्याशयेन शङ्कते ॥ **कथं तर्हीति** ॥ अत एव तथैव समाधत्ते ॥ **तत्रेति** ॥ तर्हि सकृत्प्रयुक्तस्यौतशब्दस्यानेकधातुजत्वमन्याय्यं स्यादित्यतः प्रयोजनाभाव एव तत्सति प्रयोजने न दोष इत्याह ॥ **वैचित्र्यं त्विति** ॥ व्याख्येयोङ्कारस्य धातुद्वयजत्वसूचनार्थं तद्व्याख्याने प्रयोगवैचित्र्यमिति भावः । धातुद्वयजत्वसूचनस्यापि प्रयोजनविशेषाभावं मन्वान ओतत्ववाचीत्यत्रापि ऊयतिरूपत्वमङ्गीकृत्याकारोपसर्गपूर्वकत्वाद्गुणोऽपि युक्त इत्यभिप्रेत्याह ॥ **आकारेति** ॥ ननु वयत्यादि (वेञ् सन्ताने वयति) धात्वन्तरनिष्पन्नोतशब्दाभिप्रायेणानुभाष्यकारैः प्रयुक्ते गुणोततामित्यत्र वृद्धिशङ्कैव नोदेतीति कथमेतदिति चेत् । अवतिधातुवृत्तोङ्कारव्याख्यानस्य तद्वृत्तोतशब्देनैव सम्भवेन धात्वन्तराभिप्रायो भाष्यकृतामिति तादृशशङ्कोदयोपपत्तेः । न चैवं निष्ठान्तस्यावतेः क्विन्निष्ठानिमित्तगुणप्रतिषेधे ओतत्ववाचीत्यत्रौकारो न श्रूयतेति वाच्यम् । निष्ठायाः कित्वेऽपि ऊठ्पक्षे बाहुलकाद्गुणेन 'बहुलमेतन्निदर्शनमि'त्येतद्बलेन यजादिषु पाठाश्रयणात्सम्प्रसारणेन वा ओकारश्रवणोपपत्तेः । न चोठ्पक्षे ऊठ्निमित्तवृद्धेरेव प्राप्त्या 'वृद्धिरेची'ति प्रश्नासङ्गतिः । (वृद्धिरेचि । आदेचिपरे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ) । ऊठ्निमित्तवृद्धेः पररूपापवादकत्वेन तत्परिहारासङ्गतिश्चेति वाच्यम् । ऊठ्पक्षेऽपि 'एत्येधत्यूठ्स्वि'त्यत्र रूपग्रहणेनात्र च गुणेनोठो विकृतत्वात्तन्निमित्तवृद्धेरेङि पररूपापवादकत्वेऽपि पुरस्तादिति न्यायेनोमाङोश्चेति पररूपानपवादकतया प्रश्नपरिहारयोः सङ्गतत्वात् । (एत्येधत्यूठ्सु अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् । उपेतः । मा भवान् प्रेदिधत् । 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरानि'ति न्यायेनेयं वृद्धिरेङि पररूपस्यैव बाधिका न त्वोमाङोश्चेत्यस्य । तेनावैहीति वृद्धिरसाधुरेव । एत्येधत्यूठ्स्वित्यत्र एचीत्यनुवर्तते । तच्च एत्येधत्योः विशेषणम् । नाप्यूठः । असम्भवात् । न च मा भवान् प्रेदिधदित्यत्र णौ ण्यन्तात्कर्तरि लुङि परे च्लेः णिश्रीति चङि 'णौ चङ्युपधाया ह्रस्व' इति ह्रस्वे कृते नायमेधतिरिति वाच्यम् । एकदेशविकृतस्यानन्यत्वात् । चङीति सूत्रेणाजादेर्द्वितीयस्येति धिशब्दस्य द्वित्वे चर्त्वे 'णेरनिटी'ति णिलोपे च सति प्रेदिधदिति रूपम् । चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यादिति

सूत्रार्थः । चङि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त अजादेर्द्वितीयस्येति च । माङ्योगा-दडभावः । प्रष्ठौह इत्यत्र वाह ऊठ् । भस्य वाहः सम्प्रसारणमूठ् स्यात् । सम्प्रसारणाच्चेति पूर्वरूपम् ) । सम्प्रसारणपक्षे एतद्दोषाप्रसराच्च । न च बाहुलकं कल्पकशून्यं नापि ग्रन्थकृदभिमतमिति वाच्यम् । मनः क्विप्येऽप्योमास इत्यादौ गुणाश्रयणस्यैव तत्कल्पकत्वात् । ओतिरोतमवतेः क्तिरित्युत्तर-ग्रन्थानुसन्धाने ग्रन्थकृतोऽप्येवमभिप्रायस्य सुज्ञानत्वाच्च । एवं चैतद्दोषपरिजिहीर्षया भूवादिषु तन्तु-सन्तानार्थस्योयतेरौणादिकतच्प्रत्ययान्तस्योतशब्द इत्याश्रित्य शङ्कापरिहारौ वयतिपक्षाश्रयणेन चाग्रिमपक्ष इति केषाञ्चिद्व्याख्यानं तद्यथास्थितपाठे परिहारादर्शनेन पाठान्तरं कल्पनीयमित्यनादरणीयमित्यास्तां तावत् ।

**स०**— ननु 'गुणोतता'मित्यत्र अवतेः तदुपधाकारस्य चोठि सवर्णदीर्घे च सतीत्युक्तस्याऽकंत्वेति ओमास इत्यादाविव मनोविस्फूर्त्यादिगा किन्त्वार्थिकात् बाहुलकाद्गुणे ओतप्रोतमित्यादिबहुलमुपलम्भात् बाहुलकाद्गुणसम्भवेन ओतशब्दे निष्पन्ने तस्मिन्परतो गुणशब्दस्याकारान्ततया 'वृद्धिरेची'ति वृद्धौ गुणौततामिति स्यान्न तु गुणोततामितीत्याशयेन शङ्कते ॥ **नन्विति** ॥ अद्य ऊढा आद्गुण इति अद्योढे-त्यादौ धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वमाद्गुणे पश्चादद्यशब्देन सम्बन्धे वृद्धिरेचीति प्राप्ताया वृद्धेराह वा ओरेकादेशयोः कार्यमाङ्ग्रहणेन गृह्यत इति ओमाङोश्चेति पररूपस्य मध्येऽपवादन्यायेन बाधकत्वेऽपि अद्य आरूढ्यादद्यर्श्यादित्यादौ प्राप्तसवर्णदीर्घत्वस्य परत्वेन पररूपस्य तद्बाधकत्वायोगेन कथमद्यर्श्यादि-त्यादिकमित्याशङ्कित ओमाङोश्चेत्यत्रत्यचकारस्याधिकविधानार्थत्वाद्युक्तं दीर्घत्वबाधकत्वमिति समाधानेन चकारस्यान्यत्रापि प्रयोगानुसारेण पररूपाभ्यनुज्ञापकत्वादस्याप्यभियुक्तप्रयोगत्वेन पररूपे युक्तं गुणोतता-मित्यपि इत्यभिप्रायेण समाधत्ते ॥ **ओमाङोश्चेतीति** ॥ अस्मिन्पक्षे चशब्दार्थोऽनुमत इत्युक्तप्रतिपत्ति-गौरवं हृदि निधाय लघुभूतं पक्षान्तरमाह ॥ **अथवेति** ॥ ऊयी तन्तु सन्तान इत्यस्मात्क्तप्रत्यये 'लोपो व्योर्वली'ति यलोपे ऊतमिति रूपं द्रष्टव्यम् । अवतेः क्विपि गुणे सति प्रयोगदर्शने बाहुलाकल्पनेऽपि ऊयतेः किति गुणे सति प्रयोगादर्शनेन बाहुलकमित्याशयेन शङ्कते ॥ **कथं तर्हीति** ॥ अत एव समाधत्ते ॥ **तत्रेति** ॥ ननु इदमनुपपन्नमिवाभाति अवतेः क्तप्रत्यये ज्वरत्वरेत्यादिनोपधाकारवकारयोरूठ्कृते सवर्णदीर्घे गुणे सति खल्वोतमिति भवेत् । न चात्रोठ्प्राप्तिरस्ति अवतेः सेट्कत्वेन झलादेः कितोऽभावात् । नापि गुणस्य क्ङिति चेति निषेधादिति चेन्न । औणादिकस्य क्तप्रत्ययाङ्गीकारात् । न च तस्य कित्वाद्गुणा-प्राप्तौ ऊठोऽप्राप्तिः 'उणादयो बहुलम्' इति बहुलग्रहणादकित्यप्यूठःसम्भवात् । तितुत्वेति सूत्रेणोठो निषेधात् झलादित्वोपपत्तेश्च । ननु च नियामकाभावे कथं बहुलग्रहणमपि अकित्यप्यूठः सूचकमिति वाच्यं ओतुरित्यत्रावतेः सितनीत्यनेन तुन्प्रत्यये बहुलग्रहणादकित्यपि ऊठ् भवतीति उणादिवृत्तावेव

उक्तत्वादिति न किञ्चिदनुपपन्नम् । अनेकधातुजत्वे सकृत्प्रयुक्तस्योतशब्दस्यानेकधातुजत्वमन्याय्यं स्यादित्यतः प्रयोजनाभाव एवैतद् दूषणं प्रयोजने तु नेत्याह ॥ **वैचित्र्यं त्विति** ॥ धातुद्वयजत्व-सूचनस्यापि प्रयोजनविशेषाभावं मन्वान ओतत्ववाचीत्यत्रोयतिरूपत्वं अङ्गीकृत्याकारोपसर्गपूर्वकत्वा-द्गुणोऽपि युक्त इत्यभिप्रेत्याह ॥ **अथवेति** ॥

प०— ओतत्ववाचीत्यत्रेवात्राप्योतशब्दं मत्वा आक्षिपति ॥ **ननु गुणोततामिति कथमिति** ॥ **वृद्धिरेचीति भवितव्यमिति** ॥ एजित्येकारौकारैकारौकाराणां नाम । अवर्णादेचि परतः पूर्वपरयोरेका-देशतया वृद्धिसंज्ञकादैचामन्यतमो वर्णो भवतीति पाणिनिसूत्रोक्त्याऽत्रौकारे कृते गुणौततामिति स्यादिति भावः ॥ **चशब्देनेति** ॥ षष्ठस्याद्यपादे ओमाङोश्चेति सूत्रम् । अस्यार्थः । ओमि आङि च परतः पररूपमेकादेशः स्यादिति का ओमित्याह कोमित्याहेति । आ ऊढा ओढा अद्य ओढा अद्योढेति उदाहरणम् । अत्र महाभाष्ये । आ ऋश्यादित्यत्राङो ऋश्यशब्दे परतो गुणे कृते अर्श्यादिति रूपम् । एतस्मिन्परतः अद्यशब्दस्य पररूपनिवृत्त्या अद्यार्श्यादिति सवर्णदीर्घार्थं 'एङि पररूपम्' इति सूत्रादेङ्रूपे आङि परत इत्यर्थलाभायैङीत्यस्यानुवृत्त्यर्थश्चकार इत्यापाततः प्रयोजनमुक्त्वा नैतदस्ति चकारस्य प्रयोजनं अद्यर्श्यादित्यत्र पररूपस्यैवेष्टत्वेनानर्थकश्चकारोनधिकारादेङीत्यस्येति चकारः प्रत्याख्यातः । स च व्यर्थः सन्नोतशब्देऽपिपरतः पररूपसमुच्चयार्थो ज्ञायत इत्यत्रापि पररूपता भविष्यति । सा च वृद्धेरपवाद इति भावः । ननु मञ्जर्यां मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानिति पररूपं न सवर्णदीर्घस्य बाधकम् । अतोऽद्यर्श्यादित्यत्र पररूपस्येष्टत्वेऽपि न सवर्णदीर्घापवादकत्वमत-श्चकारः पुनर्विधानार्थस्सन्नुत्तरस्यापि सवर्णदीर्घस्यापवादनार्थो भविष्यतीति चकारस्यान्यदेव प्रयोजनमुक्त-मिति चेत् । मैवम् । प्रतिपदविधेर्बलवत्त्वात्परोऽपि सवर्णदीर्घ ओमाङोश्चेत्यनेन बाध्यत इति कैयटोक्त-दिशा सवर्णदीर्घबाधसम्भवेन चकारस्य मञ्जर्युक्तप्रयोजनवत्त्वासिद्धेः चकारोऽधिकविधानार्थः । तेन शकन्ध्वादिषु पररूपं सिध्यतीति न्यासोक्तिश्चेत्यास्तां तावत् ॥ **ऊयतेरिति** ॥ अत्रैके चोदयन्ति । यदि वेञ् तन्तुसन्तान इत्यस्येत्यर्थस्तदा वयतेरिति निर्देशः स्यात् । यदि च विशेष्यनिघ्नवर्गे 'ऊतं स्यूतमुतं चेति त्रितयं तन्तुसन्तते'त्यमरोक्त्या ऊयी तन्तुसन्तान इत्यस्य रूपमित्यमरव्याख्यानबन्दिघटीया-द्युक्त्या च ईकारेत्संज्ञकयकारान्तधातोः निर्देशस्तदा तस्यात्मनेपदवर्ग एव भीमसेनधातुपाठे पठितत्वात् । तथैव धातुवृत्तौ व्याख्यातत्वात् । ऊयीङ् सेवन इति कविकल्पद्रुमे ङकारानुबन्धकरणाच्चात्मनेपदित्वेन तिपा निर्देशायोगः । तिपोत्र कर्त्रर्थकलादेशत्वाभावतया कर्तृवाचित्वाभावेन कर्तरि शबिति सूत्रविहित-शब्विकरणयुक्तत्वेन निर्देशायोगश्चेति । अत्राहुः । अस्तु वेञ् तन्तुसन्तान इत्यस्य रूपमित्यर्थः ।

न चोयतेरिति निर्देशायोगः । तृतीयाध्यायतृतीयपादे 'रोगाख्यायां ण्वुल्बहुलम्' इति सूत्रे 'इक्श्तिपौ धातुनिर्देश' इति वार्तिके इक्तिपावित्यनुक्त्वा श्तिपाविति शित्वेन निर्देशस्य कर्तृकर्मादिवाचित्वाभावेऽपि तन्निबन्धनशबादिप्रत्ययादिरूपकार्यसिद्धिप्रयोजनार्थत्वोक्तेः । अत्रापि वेञः श्तिपानिर्देशे तस्य भावकर्मवाचित्वाभावेऽपि भावकर्मणोरित्यधिकारे 'सार्वधातुके यगि'ति सूत्रोक्तयक्प्रत्ययेन सह तिपा निर्देशे तस्य क्त्विाद्वचि स्वपि यजादीनां कितीति सूत्रेण 'यजिर्वपिवहिश्चैव वेञ् व्येञौ श्वयतिस्तथा । वद्वसौ ह्वयतिश्चैव स्मृता नव यजादय' इति यजादित्वाद्वकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति एकारस्य पूर्वरूपत्वेऽकृत्सार्वधातुकयोरिति दीर्घे च ऊयतेरिति निर्देशोपपत्तेः । अत एव लीङ् श्लेषणे ली श्लेषण इत्यनयोः क्रमात् श्यन् श्नाविकरणयोर्धात्वोः विलायविलीयेत्यादिरूपसिद्ध्यर्थं ल्यबादावात्वविधायके 'विभाषा लीयतेः' इति षष्ठाद्यपादीयसूत्रे महाभाष्ये लीयतेरिति लीयति लीनात्योर्यका निर्देश इत्युक्तम् । कैयटे मञ्जर्यां च श्तिपः शित्करणसामर्थ्यात् भावकर्मवाचित्वाभावेऽपि यग्भवति । यथा कर्तृवाचित्वाभावेऽपि शबादयो 'भवते र' इत्यादिसौत्रनिर्देशेषु दृश्यन्त इत्युक्तम् । ऊयी तन्तुसन्तान इत्यस्य वा अयं निर्देशः । न चोक्तदोषः । लीङादेवात्मनेपदिनोऽपि 'विभाषा लीयतेरुपसर्गस्यायतौ नित्यं स्रयतेः' इत्यादौ तिपा निर्देशदर्शनादत्र शास्त्रेऽपीक्षतिकर्मेत्यादिनिर्देशदर्शनाच्च तिपः, कर्तृवाचित्वाभावेऽपि शपा निर्देशस्योक्तदिशोपपन्नत्वाच्चेति । न चाद्यपक्षे वयतेरित्येव कुतो नोक्तम् । मैवम् । वय गताविति भ्रान्तिनिरासाय वाऽन्यत्रापि तिपा निर्देशस्थले शबादिविकरणेन सह निर्देशो ज्ञेय इति ज्ञापनार्थत्वाय वा गुणोततामिति कर्मणि निष्पन्नता द्योतनाय वा वयतेरित्येव नोक्तम् । तथा च 'ईक्षतेर्नाशब्दम्' इत्यादिनिर्देशोपपत्तिरिति । एवं च वेञ् इत्यस्य क्तप्रत्यये यजादित्वात्सम्प्रसारणे पूर्वरूपे कित्वेन गुणाभावे च उतेति भवति । ऊयी इत्यस्य वा क्तप्रत्यये श्वीदितो निष्ठायामितीडभावे 'लोपो व्योर्वलि' इति यकारलोपे ऊतेति भवति । एवं च गुण उतेति वा गुण ऊतेति वा स्थिते आद्गुण इति गुणे गुणोततामिति स्यादिति भावः ॥ **अनेकार्थत्वाद्धातूनामिति** ॥ 'क्रियावाचित्वसिद्ध्यर्थमेकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातव' इत्युक्तेर्गत्यर्थोऽपि भविष्यतीति भावः ॥ **कथं तर्हीति** ॥ वेञ् तन्तुसन्तान इत्यस्य रूपत्वे उतत्ववाचीति स्यात् । ऊयी तन्तुसन्तान इत्येतद्रूपत्वे तु ऊतत्वेति स्यात् । उकारस्य ऊकारस्य वा गुणप्राप्तेः प्रत्ययकित्वेन 'क्ङिति च' इति बाधादिति भावः । **अवतिरूपेति** । ननु कथमेतत् । अवतेः क्तप्रत्यये इडागमे झलादित्वाभावात् । औणादिके तप्रत्यये च कित्वाभावादूठोप्राप्तेरिति चेत् । सत्यम् । बहुलग्रहणेन ऊठ्सवर्णदीर्घगुणानां सम्भव इत्येके । छ्वोः शूडिति सूत्रवृत्तौ केचिदत्र क्ङितीति नानुवर्तयन्तीत्युक्तत्वेन तत्पक्षे ज्वरेत्यत्रापि क्ङितीत्यस्याननुवृत्तेः अवतेरौणादिके तप्रत्यये 'तितुत्रतथसिसुसरकसेषु चे'ति इडभावे झलादौ प्रत्यये ज्वरत्वरेति ऊठि सवर्ण-

दीर्घे गुणे च ओतेति रूपम् । अत एव धातुवृत्तौ उणादिवृत्तौ काशिकावृत्तौ चावतेरौणादिकतुन्प्रत्ययान्तस्य ओतुरिति रूपं प्रदर्शितमित्यन्ये । एतेन गुणोततामिति कथम् । वृद्धिरेचीति भाव्यमिति पूर्वतनशङ्काग्रन्थोऽपि समर्थितो ध्येयः । अवतेरोतेतिरूपस्योक्तदिशा सम्भवेन वृद्धिरेचीति भाव्यमिति पूर्वशङ्कोपपन्ना । ननु गुणोततामिति वेञो वा ऊयीति धातोर्वा रूपम् । ओतत्ववाचीत्यत्रावते रूपं कुत उपात्तं भाष्यकृतेत्यत आह ॥ **वैचित्र्यमिति** ॥ ओंकारस्यावधातुजत्वमिव वेञ् तन्तुसन्तान इत्यादिधातुजत्वमप्यस्तीति सूचनार्थमित्यर्थः । 'उणादयो बहुलम्' इति बहुलग्रहणाद्वेञः कर्मणि क्मन्प्रत्यये यजादित्वात्सम्प्रसारणे बहुलग्रहणादेव गुणे च सति ओं इति रूपस्य सम्भवात् । तथा च ओतमस्मिञ्जगत्सर्वम्' इत्यादिव्याख्यानं युक्तमिति भावः । ऐकरूप्यमेवाह ॥ **अथवेति** ॥ **आकारेति** ॥ ओतत्ववाचीत्यत्र वेञो वा ऊयीत्यस्य वा रूपम् । आङ्पूर्वकत्वेन आ उतेति ऊतेति वा स्थिते गुणे च ओतत्ववाचीतिरूपमित्यप्रसिद्धतप्रत्ययकल्पनदोषो वैचित्र्यदोषो वा वृद्धिरेचीति भाव्यमिति दोषो वा नेत्यर्थः ॥

या०— **वृद्धिरेचीति** ॥ आदेचि परे वृद्धिरेकादेशः स्यादिति सूत्रार्थः । उदाहरणं तु कृष्णैकत्वमित्यादि ॥ **ओमाङोश्चेति** ॥ ओमि आङि च पररूपमेकादेशः स्यादिति सूत्रार्थः । उदाहरणं तु शिवायोन्नम इत्यादि । अत्र ओमाङोः परत्वाभावात्कथमनेन पररूपत्वमित्यत उक्तम् ॥ **चशब्देन इति** । चकारोऽधिकविधानार्थः । तेन शकन्ध्वादिषु पररूपं भविष्यतीति न्यासकारेणोक्तत्वादिति भावः ॥ **ऊयते रूपमिति** ॥ उञि तन्तुसन्ताने इत्यस्येदं रूपं न तु वेञः । तथा सति वयतेरिति वक्तव्यत्वात् । एवं चोयतेः क्तप्रत्यये लोपो 'व्योर्वली'ति यलोपे ऊतमिति रूपं सिध्यति । ततश्चाद्गुण इति गुणे गुणोततामिति भविष्यतीति भावः ॥ **कथं तर्ह्योतत्वेति** ॥ उक्तरीत्या तत्रापि ऊयतिरूपाङ्गीकारे तत्पूर्वमकाराभावेन कथं गुणप्राप्तिः । तथा चोतत्ववाचीति स्यादिति भावः ॥ **तत्रावतिरूपेति** ॥ नन्विदमनुपपन्नमिवाभाति । अवतेः क्तप्रत्यये ज्वरत्वरेत्यादिनोपधाकारवकारयोरूठि कृते सवर्णदीर्घे गुणे च सति खल्वोतमिति भवेत् । न चात्रोठः प्राप्तिरस्ति । अवतेः सेट्कत्वेन झलादेः कितोऽभावात् । नापि गुणस्य क्ङिति निषेधादिति चेन्न । औणादिकस्य क्तप्रत्ययस्यात्र विवक्षितत्वात् । न चैवं गुणप्राप्तावप्यूठोऽप्राप्तिः । उणादयो बहुलमिति बहुलग्रहणात् झलादेः कितोऽभावेऽपि ऊठ्सम्भवात् तितुत्रेति सूत्रेणेठो निषेधात् झलादित्वोपपत्तेश्च । अत एवोतुरित्यत्रावतेः सितनीत्यनेन तुन्प्रत्यये बहुलग्रहणादकित्यपि ऊठ् भवतीत्युणादिवृत्तावुक्तमिति न किञ्चिदत्रानुपपन्नमिति ॥ **धातुद्वयजत्वेति** ॥ ओंकारस्येति शेषः ॥ **अथवा आकारेति** ॥ ओतत्ववाचीत्यत्रत्योतशब्द इत्यर्थः । तथा च तत्रापि ऊयतिरूपत्वमेव । आकारोपसर्गस्य तत्पूर्वं विवक्षितत्वाद्गुणोपपत्तिरिति भावः ॥

च० — ओतत्ववाचीत्यत्र भावप्रत्ययस्येव गुणोततामित्यत्रापि तादृशप्रत्ययस्योतशब्दप्रकृतिकतां मन्वानः शङ्कते ॥ **नन्विति** ॥ ओमि आङि च परतः पररूपमेकादेशो भवतीति सूत्रार्थः । शिवायों नमः आ इहि ऐहि शिव एहि शिवेहीत्युदाहरणम् । वृत्तिव्याख्यानरूपन्यासकारेणैव चकारोऽधिक-विधानार्थस्तेन शकन्ध्वादिषु पररूपं भविष्यतीत्यभिहितत्वादिति भावः । **ऊयतेरिति** ॥ तन्तुसन्ताना-र्थकत्वेन व्याख्यातस्येत्यर्थः ॥ **अनेकार्थत्वादिति** ॥ बह्वर्था अपि धातवो भवन्तीत्यादि भाष्योक्तेरिति भावः । निष्ठाप्रत्ययस्य कित्वेन गुणनिषेधादिति भावः ॥ **तत्रावतीति** ॥ अथावतेः सेट्कतया झलादिकित्परत्वाभावेनोठः प्राप्त्यभावेन निष्ठायाः कित्वेन गुणनिषेधेन चोतेति रूपनिष्पत्तेरसम्भवदुक्तिक-त्वात् । अवतेरुपधाकारवकारयोर्ज्वरत्वरेत्यादिनोठि सवर्णदीर्घे गुणे च सति तत्स्यात् । तदेव दुर्निरू-पमिति चेन्न । अत्र व्याकर्तारः औणादिकतशब्देनैव गुणस्य बहुलग्रहणादकित्वेऽपि ऊठश्च निर्वाहात् । वृत्त्यादिग्रन्थेषु अवतेस्तुनि ओतुरित्यादिरूपसाधनाच्च सामञ्जस्यमिति व्याचख्युः । एकप्रकृतिजन्यत्वोप-गमेऽपि निर्वाह इति समाधत्ते ॥ **अथवेति** ॥ ऊयतिजन्यत्वेप्याकारोपसर्गपूर्वकत्वाद्गुणोपपत्तिरिति भावः ।

अनु० — **स एव ब्रह्मशब्दार्थो नारायणपदोदितः ॥**

सु० — अस्तु वोङ्कारब्रह्मशब्दाभ्यां जीवजडातिरिक्तस्य जिज्ञास्यस्य सिद्धिः । तथापि ईश्वरस्य किमायातमित्यत आह ॥ **नारायणेति** ॥ स एवेत्यनुवर्तते । न हि नाम्नि विप्रति-पत्तिरित्याशयः । अथवा सूत्रकारोक्तावोङ्कारब्रह्मशब्दावुपलक्षणमात्रम् । 'नारायणं महाज्ञेयं' इत्यादिश्रुतौ जिज्ञास्ये नारायणशब्दोऽपि श्रूयते । नारायणपदोदितश्चार्थः स एव यो गुणपूर्ण-त्वाख्यः । अतो नारायणशब्देनापि जिज्ञास्यं जीवादिव्यतिरिक्तं सिद्ध्यतीत्यनेनोच्यते । एतदप्युपलक्षणम् । आत्मानन्तेश्वरादिशब्दा अपि ज्ञातव्याः । तेषामपि 'आत्मानमेव लोक-मुपासीत' इत्यादौ जिज्ञास्ये श्रवणात् । गुणपूर्णत्वाभिधायित्वाच्च । न चालौकिकार्थकल्पने गौरवप्रसङ्गाद्वरं कथञ्चिदेषां शब्दानां जीवादिविषयाङ्गीकरणमिति वाच्यम् । यौगिकशब्द-प्रयोगान्यथाऽनुपपत्तेरुक्तत्वेन कल्पनाभावात् । अन्यथा वाक्यादप्यलौकिकार्थप्रत्ययो न स्यात् । लौकिकार्थ एव कथञ्चिदर्थानुगमस्य वक्तुं शक्यत्वात् । किञ्च क्वचिन्मुख्यार्थ एव शब्दोऽनुपपत्त्या क्वचिदमुख्यार्थोऽनुगम्यते । न पुनरमुख्यार्थ एव । तथा च श्रौतं ब्रह्मादि-शब्दं जीवादिविषयमङ्गीकुर्वाणेनाऽपि निरवग्रहपूर्णतायुक्तं किञ्चिदभिधेयं मुख्यमङ्गीकरणीयमेव । ततश्चानेन किं कृतं स्यात् । जीव एवैते मुख्यार्थास्तदनुपलब्धिस्त्वविद्यावरणनिमित्तेति चेन्न । यतोऽत्राचार्यः स्वयमेव प्रतिवक्ष्यतीति ।

**वा०**— नन्वीश्वरस्य जिज्ञास्यत्वं प्रतिज्ञाय तदभावे शङ्किते जीवजडव्यतिरिक्तजिज्ञास्यब्रह्म-साधनं व्यधिकरणमित्याशङ्कते ॥ **अस्त्विति** ॥ एवं सति वस्तुसिद्धिमङ्गीकृत्य तस्य परमेश्वरनामार्थत्वं नास्तीति शङ्कितं स्यात् । तच्चायुक्तमिति पदशब्दप्रयोगलब्धमाशयमाह ॥ **न हीति** ॥ अस्मिन्पक्षे जीवजडातिरिक्तजिज्ञास्यसिद्धिमात्रेण प्रकृतसिद्धेर्नारायणपदेति भाष्यस्य प्रयोजनविशेषाभावं मन्वानो जिज्ञास्यस्य जीवजडातिरिक्तत्वसाधकसमर्पणपरतयैव तद्भाष्यमवतारयति ॥ **अथवेति** ॥ अस्मिन्पक्षे नारायणशब्दस्यैव विशिष्योपादाने न किमपि कारणमतो नायं भाष्यकाराभिप्राय इत्यत आह ॥ **एतदपीति** ॥ उपलक्षणे नियामकन्यायसाम्यमाह ॥ **तेषामपीत्यादि** ॥ जीवजडव्यतिरिक्तजिज्ञास्य-साधकत्वेनोक्तयौगिकशब्दप्रयोगान्यथाऽनुपपत्तिरूपयुक्तेर्विपक्षे बाधकमुखेनोपपादनपुरःसरं तां युक्तिं पूर्व-पक्ष्युक्तायां साधकान्यथासिद्धावपि व्यापारयितुं किञ्चेत्यादिना तत्रैव दूषणान्तरं वक्तुं तेषां कथञ्चिज्जीव-विषयत्वोपपत्तेरिति पूर्वपक्ष्युक्तमनुवदति ॥ **न चालौकिकेति** ॥ यद्वा नन्वेतावतोमादिपदानां योग-मात्रोक्तावप्यलौकिकार्थे प्रमाणानुक्तेस्तत्कल्पनैव स्यात् । न च यौगिकशब्दप्रयोगान्यथाऽनुपपत्तिरेव प्रमाणत्वेनात्राभिमतेति वाच्यम् । ओमादिशब्दानां क्लृप्तजीवविषयत्वेनोपपत्तौ तदन्यथाऽनुपपत्तेरेव अभावादिति शङ्कते ॥ **न चेति** ॥ अभिमतं प्रमाणं तावदाह ॥ **यौगिकेति** ॥ अन्यथोपपत्तिं प्रतिबन्द्या विघटयति ॥ **अन्यथेति** ॥ यन्न दुःखेनेत्यादिवाक्यबलादपि स्वर्गादिशब्देभ्योऽपूर्वार्थप्रत्ययो न स्यादित्यर्थः ॥ यद्वा वाक्यमात्रादप्यपूर्वप्रत्ययो न स्यादर्थवादादिवत् क्लृप्ते पदार्थमात्रे तात्पर्यस्य वक्तुं शक्यत्वादित्यर्थः । प्रतिबन्द्या विघटितामन्यथोपपत्तिं स्वरूपेण विघटयति ॥ **किञ्चेति** ॥ कथञ्चिदेषां शब्दानां जीवादिविषयत्वमङ्गीकुर्वाणेन सर्वत्रैतेषाममुख्यार्थत्वमेव न कुत्रापि मुख्यार्थत्वममुख्यार्थश्च जीवादिरिति वा जीवव्यतिरिक्तमुख्यार्थसद्भावेऽपि जिज्ञास्ये श्रुतब्रह्मादिशब्दानाममुख्यार्थजीवादिपरत्व-मेवेति वा जीव एव मुख्यार्थस्तद्विषयत्वमेवैषां शब्दानामिति वाऽङ्गीकरणीयम् । प्रकारान्तराभावात् । तत्राद्यं प्रतिक्षिपति ॥ **क्वचिदिति** ॥ द्वितीयं प्रतिक्षिपति ॥ **तथा चेति** ॥ **ततश्चेति** ॥ अलौकिकार्थ-कल्पनागौरवभयाच्छ्रौतब्रह्मादिशब्दानां जीवादिविषयकतामङ्गीकुर्वताऽपि सर्वथाऽमुख्यार्थशब्दाभावेन अप्रसिद्धमुख्यार्थेऽवश्यमङ्गीकार्येऽलौकिकार्थकल्पनागौरवस्यापरिहारादेषां शब्दानां जीवविषयत्वाङ्गीकारेण किं कृतं न किमपीत्यर्थः । तृतीयं शङ्कते ॥ **जीव एवेति** ॥ इदं च समुदायैक्यवादिनः शङ्कत्यव-धेयम् । तर्हि कथं कथञ्चिदित्युक्तिरित्यत आह ॥ **तदनुपलब्धिस्त्विति** ॥ **यतोऽत्रेति** ॥ 'अशेष-शक्तियुक्तिश्चेत्स्वातन्त्र्याद्दोषवान्कथम्' इत्यनुव्याख्यानेनेत्यर्थः ।

**स०**— **उपासीतेत्यादाविति** ॥ अत्रादिपदेन 'अनन्तमव्ययं कविं' 'यः परः स महेश्वर' इति वाक्यद्वयं ग्राह्यम् । यदुक्तमप्रसिद्धार्थकल्पनस्याप्रामाणिकत्वा(त्प्रसिद्धार्थकल्पनस्याप्रामाणिकत्वा)त्प्रसि-

द्यर्थत्वं न्याय्यमिति तत्रार्थापत्तिः प्रमाणमित्याह ॥ **न चालौकिकेति** ॥ अमुख्यर्थाभ्युपगमेऽपि मुख्यार्थावश्यं भाव इत्याह ॥ **किञ्चेति** ॥ **तदनुपलब्धिः** निष्परिपन्थिपूर्णत्वानुपलब्धिः ॥ **प्रतिवक्ष्यतीति** ॥ एवं वदतो हि जीवब्रह्मैक्यमभिमतम् । तदसम्भवं 'यजमानप्रस्तरत्वम्' इत्यादिना वक्ष्यति इत्यर्थः ।

प०— **इत्यादाविति** ॥ 'स एष परोवरीयानुद्गीथः स एषोऽनन्त' इत्यादावनन्तशब्दः । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादावीश्वरशब्दः 'त्वं बन्धदो मुक्तिदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इत्यादौ विष्णुशब्दः । एतेन ब्रह्मपदेनैव विषयसिद्धौ ओमादिपदानर्थक्यमिति निरस्तम् । न केवलं ब्रह्मपदात्किन्त्वोमादिपदादपीति युक्त्यन्तरसूचनार्थत्वेन सार्थक्यात् ॥ **अनेनेति** ॥ जीवे गौणार्थाङ्गीकारेण किं कृतं स्यान्मुख्यार्थभूतापूर्वार्थस्यावश्यमङ्गीकृतत्वादिति भावः ॥ **प्रतिवक्ष्यतीति** ॥ 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेदि'त्यादिनेत्यर्थः । यद्वैतदधिकरणान्ते हरेरेव ब्रह्मादिपदमुख्यार्थत्वकथनेनेत्यर्थः ।

या०— **कथञ्चिदिति** ॥ लक्षणादिरूपामुख्यवृत्त्येत्यर्थः ॥ **निरवग्रहेति** ॥ निष्परिपन्थीत्यर्थः । **यतोऽत्र आचार्य इति** ॥ 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेत्' इत्यावरणखण्डन इत्यर्थः ॥

श्री०— **इत्यादाविति** ॥ 'स एव परो वरीयानुद्गीथः स एषोऽनन्त' इत्यादावनन्तशब्दः । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादावीश्वरशब्दः । 'त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इत्यादौ विष्णुशब्दः ॥

च०— **निरवग्रहेति** ॥ असङ्कुचितेत्यर्थः ॥ **प्रतिवक्ष्यतीति** ॥ 'निर्विशेषे स्वयं भात' इत्यादिनाऽऽवरणप्रत्याख्यानादिति भावः ॥

अनु०— **स एव भर्गशब्दार्थो व्याहृतीनां च भूमतः ॥**
**भावनाच्चैव सुत्वाच्च सोऽयं पुरुष इत्यपि ॥**

**सु०— यदत्रोक्तमीश्वरः प्रमितो न वेति । तत्र प्रमित इत्युत्तरम् । तत्पक्षदोषश्च परिहरिष्यते । तथा च शास्त्रस्य विषयसम्बन्धः समाहितो भवति । यत्पुनरत्रोक्तं केन प्रमाणेनेति । तत्र वेदेनेति वदामः । वेदस्येश्वरविषयता कुत इत्यतोऽप्योङ्कारः सूत्रकृता ब्रह्मणि प्रयुक्तः । तत्कथमस्यार्थस्योपपादकमित्याशङ्क्येदमत्राकूतं सूत्रकारस्येत्याह ॥ व्याहृतीनां चेति ॥ स एवार्थ इति सम्बन्धः । ॐकारस्तावद्भगवत ईश्वरस्य वाचकः । 'ओमिति ब्रह्म' इत्यादि-**

श्रुतेः । अतः स एव व्याहृतीनां च भूरादीनामर्थ इति गम्यते 'प्रणवार्था व्याहृतय' इत्याद्यागमेन तिसृणां व्याहृतीनां वर्णत्रयात्मकोङ्कारव्याख्यानतयाऽङ्गतत्वात् । व्याख्यानव्याख्येययोश्चैकविषयता सुप्रसिद्धेति । एवकारो व्याहृतीनामग्निवायुसूर्यदेवताकत्वप्रसिद्ध्या तत्प्रतिपादकत्वभ्रमं निवारयति । अग्न्यादीनामधिदेवतात्वेनापि प्रसिद्ध्युपपत्तेः । अन्यथोक्तव्याख्यानव्याख्येयभावानुपपत्तिप्रसङ्गः । केन निमित्तेन व्याहृतीनां च स एवार्थ इत्यत आह ॥ भूमत इति ॥ भूमा पूर्णत्वं ततो भूः । भवतेर्बहुत्वार्थस्य क्विपि रूपमेतत् । भावनाज्जगत उत्पादनाद्भुवः । भवतेरेवान्तर्णीतण्यर्थस्य कप्रत्यये रूपम् । सुत्वात्सुखत्वात्स्वः । स्वशब्दो हि सुखवाची प्रसिद्धः । चकारौ निमित्तान्तरसमुच्चये । यथोक्तम् । 'पूर्णो भूतिवरोऽनन्तसुखो यद्व्याहृतीरित' इति । एतैरेव निमित्तैर्व्याहृतीनामर्थो न पुनर्लोकत्रयात्मकत्वेन । तस्य प्रमाणविरुद्धत्वात् । 'भूरिति वा अयं लोक' इत्यादिश्रुतिरपि लोकत्रयान्तर्गतभगवद्विषयैवेत्येवशब्दार्थः ।

**वा०** — ननु स एव भर्गशब्दार्थ इत्यारभ्य स एव सर्ववेदार्थ इत्यन्तेन सूत्रोपात्तस्य तदुपलक्षितस्य वा पदस्याव्याख्यानादभाष्यत्वमित्यतो वेदस्येश्वरविषयतोपपादनायापि सूत्रकृतोङ्कारे प्रयुक्ते सूत्रकृदभिप्रेतं तदुपपादनप्रकारं प्रतिपादयतस्तस्य नाभाष्यत्वमित्यभिप्रेत्य सूत्रकृतो वेदस्येश्वरविषयतोपपादनमप्रयोजनं विषयस्य सन्दिग्धत्वोपपादनेनैव सिद्धेरित्यत ईश्वरस्य प्रमितत्वसिद्धिर्वेदस्य तत्र प्रमाणत्वसिद्धिश्च तत्प्रयोजनमित्यभिप्रेत्य प्रमितत्वसिद्ध्यादेरपि प्रयोजनं दर्शयन्प्रमितत्वोक्तिमात्रेण पूर्वपक्ष्युक्तदोषानुद्धृतिरित्याशङ्कां परिहरन्नेव तदुभयोक्तिनिवर्त्यपूर्वपक्ष्युक्तशङ्कां दर्शयति ॥ **यदत्रेति** ॥ **तत्पक्ष इति** ॥ 'जिज्ञास्योऽयं विधीयत' इत्येतद्भाष्याभिप्रायकथनावसरे एतेनैतदपि निरस्तमित्यादिनेत्यर्थः । अत्र स एव भर्गशब्दार्थ इत्यस्य पूर्वपठितस्याप्याकाङ्क्षाक्रमेण निवेशो युक्त इति पश्चान्निवेशः । नन्वत्राभिप्रायकथनावसरे ॐकारस्य न कोऽपि सम्बन्धः प्रतीयतेऽतो न तस्य तदुपपादकत्वमित्यतो व्याहृत्यर्थत्वे ॐकारार्थत्वस्य हेतुतया सम्बन्धमभिप्रेत्योतत्ववाचीत्युक्तप्रकारेण तस्येश्वरवाचकत्वे सिद्धेऽपि श्रुत्या स्पष्टं तद्दर्शयन् हेतुं साधयति ॥ **ॐकार इति** ॥ व्याहृतीनां तिसृणां वर्णत्रयात्मकोङ्कारव्याख्यानत्वं च यथायोग्यं द्रष्टव्यम् । 'बहोर्लोपो भू च बहोरि'ति बहुशब्दनिष्पन्नस्यापि भूमशब्दस्य 'बहुः पूर्णतायाम्' इति वचनानुसारेणार्थमाह ॥ **भूमेति** ॥ **बहुत्वार्थस्येति** ॥ भू जहाविति धातोरिति भावः । (बहोः लोपो भू च बहोः । बहोः परयोरि मेयसोर्लोपः स्याद्बहोश्च भूरादेशो भूमा । भूयान् । उगित्वान्नुम् । अत्रादेः परस्येति इमनिच इकारस्येयसुन ईकारस्य च लोपो बोध्यः । अञ्च्श्रियुजिभृजिभ्यः कुश्च । एभ्योऽसुन्कवर्गश्चान्तादेशः । अङ्कश्चिन्हशरीरयोः । अङ्कः अङ्कसी अङ्कांसि । एवमुत्तरत्रापि रूपाणि ।

अङ्गः पक्षी । योगः समाधिः । भ्रस्ज पाके । 'भ्रस्जोरोपधयोरमन्यतरस्याम्' । 'भस्जेरेफस्योपधायाः। स्थाने रमागमो वा स्यात् आर्धधातुके मित्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशात् रोपधयोर्निवृत्तिश्च भर्गस्तेज इत्यौणादिके चतुर्थे पाद उक्तम् ) । ननु भूर्भुव इति च क्विपि केप्रत्यये च रूपे तर्हि भूरिति भुवर्लोक इति चान्यत्र भूरादीनामित्यत्र च कथं व्यवहार इति चेत् । ऊकाराकारान्तयो रेफान्तयोश्च पर्यायत्वव्युत्पादनमेतदित्यदोषः । सुशब्दस्य शोभनार्थत्वात्सुखस्यैव मुख्यशोभनत्वाद्वैकदेशग्रहणन्यायेन वा सुशब्दस्य सुखनामत्वमेवाभिप्रेत्य वा सुखत्वादिति व्याख्यानम् । भूर्भुवः शब्दयोर्योगमाश्रित्य स्वःशब्दे तु रूढिमाश्रित्यैतद्व्याख्यानमित्यभिप्रेत्याह ॥ **स्वःशब्द इति** ॥ समुच्चयावधारणयोरेकत्र विरुद्धत्वादेवकारमनभिमतव्यावर्तकतया व्याख्यातुं चकारसङ्ग्राह्यं ऋग्भाष्यीयव्याख्यानं वक्तुमाह ॥ **चकाराविति** ॥

**स०**— तर्हि प्रमितत्वे तु निश्चितत्वादेव जिज्ञासानुपपत्तिरित्युक्तदोषः स्यादित्यत आह ॥ **तत्पक्षदोषश्चेति** ॥ 'जिज्ञास्योऽयं विधीयत' इत्येतद्व्याख्यानदशायामेतेनेत्यादिना विप्रतिपत्तिसद्भावात् तन्निरासार्थं जिज्ञासोपपत्तिरिति परिहरिष्यत इत्यर्थः ॥ **तथा चेति** ॥ ततश्चेश्वरस्य प्रमितत्वेन बुद्ध्या-रोहसम्भावाज्जिज्ञासोपपत्तिः । अनेन च न बुद्धावनारूढं शक्यं जिज्ञासितुमिति शङ्का निरस्ता भवति ॥ **अधिदेवतात्वेनापीति** ॥ व्याहृतिप्रतिपाद्यभगवदधिष्ठानत्वेनापीत्यर्थः ॥

---

**प०**— **तत्पक्षदोषश्चेति** ॥ निश्चितत्वान्न जिज्ञासितुं शक्यम् । सामान्यतो ज्ञातत्वस्य विशेषतोऽज्ञातत्वस्याभावादित्युक्तदोषो जिज्ञास्योऽयं विधीयत इत्येतद्व्याख्यानावसरे निरसिष्यत इत्यर्थः ॥ **विषयसम्बन्ध इति** ॥ तन्निर्णयजनकत्वरूप इत्यर्थः ॥ **इदमत्राकूतमिति** ॥ व्याहृतिगायत्रीपुरुषसूक्त-द्वारा सर्ववेदानां ॐकारव्याख्यानत्वादोङ्कारार्थस्य ब्रह्मण इति ब्रह्मण ॐकारार्थत्वोक्त्या सर्ववेदार्थत्वं तस्य सिध्यतीत्यभिप्राय इत्याहेत्यर्थः । शब्दक्रमादर्थक्रमो बलीयानिति न्यायेन स एव भर्गशब्दार्थ इत्येतत्पश्चाद्व्याकुर्वन्व्याहृतीनां चेति प्रतीकग्रहणं कृतवान् । तैत्तिरीयभाष्योक्तस्मृतिमाह ॥ **प्रणवार्था इति** ॥ **एवकार इति** ॥ स एवेत्येवकार इत्यर्थः ॥ **अग्नीति** ॥ 'भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्य' इति तैत्तिरीयश्रुत्युक्तदिशा अग्न्यादिदेवताकत्वप्रसिद्धेरित्यर्थः ॥ **अधिदेवता-त्वेनेति** ॥ अभिमानिदेवतात्वेनापीत्यर्थः ॥ **भूमापूर्णत्वमिति** ॥ 'बहोर्लोपो भू च बहोः' इति सूत्रे बहुशब्दस्य भावार्थे मन्नन्तस्य रूपत्वादिति भावः ॥ **बहुत्वार्थस्येति** ॥ धातूनामनेकार्थत्वस्य प्रागुक्त-त्वादिति भावः । यद्वा भू बहाविति छान्दोग्यभाष्यादावुक्तेरेवमुक्तिः ॥ **कप्रत्यय इति** ॥ 'उणादयो बहुलम्' इति बहुलग्रहणात्कप्रत्यये कित्वाद्गुणनिषेधे उवङादेशे रूपमित्यर्थः ॥ **निमित्तान्तरेति** ॥ भूतिवरत्वानन्तसुखत्वरूपयोः क्रमाद्भुवरादिशब्दद्वयनिमित्तान्तरयोरित्यर्थः ॥ **यथोक्तमिति** ॥ ऋग्भा-

ण्योपक्रमे उक्तमित्यर्थः ॥ भूत्या ऐश्वर्येण वरो महैश्वर्यवानिति भुवः । भवतेरौणादिको डुप्रत्ययः । वरशब्दस्यान्तलोपो निरुक्तत्वात् । यथोक्तम् । 'पृषोदरादीनि यथोपदिष्टमि'त्यत्र वृत्तौ 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमि'ति । एवमग्रेऽपि ज्ञेयम् । शोभनं वः सुखं यस्य स्वः उकारलोपः ॥ **एतैरेवेति** ॥ उक्तनिर्वचनलभ्यनिमित्तैरेव इत्यर्थः ॥ **प्रमाणेति** ॥ 'पुरुषेणेदं सर्वं व्याप्तम्' । 'मया ततमिदं विश्वम्' । 'इदं हि विश्वं भगवानिवेतर' इत्यादिप्रमाणविरुद्धत्वादित्यर्थः ॥

या० — **तत्पक्षदोषश्चेति** ॥ ईश्वरस्य प्रमितत्वे निश्चितत्वात्किं मीमांसयेति दोषः मीमांसाया युक्तिवाक्याभासजनितविप्रतिपत्तिप्रतिबन्धनिरासरूपप्रयोजनकथनेनाग्रे परिहरिष्यत इत्यर्थः ॥ **ब्रह्मणि प्रयुक्त इति** ॥ ब्रह्मशब्दोक्तस्य विष्णोर्विषयत्वसमर्थनार्थं प्रयुक्त इत्यर्थः ॥ **अस्यार्थस्येति** ॥ विषयत्वसमर्थनार्थस्येत्यर्थः ॥ **अधिदेवतात्वेनापीति** ॥ अभिमानिदेवतात्वेनापीत्यर्थः ॥ **भवतेर्बहुत्वार्थस्येति** ॥ भू बहाविति धातोः क्विबित्यर्थः । बहुः पूर्णतायामित्यप्युक्तेरिति भावः ॥ **भवतेरेवेति** ॥ कप्रत्ययान्तरं अचिश्नुधात्वित्युवङादेशो चेत्यपि ग्राह्यम् ॥

श्री० — **अग्निवायुसूर्यदेवताकत्वप्रसिद्धेति** ॥ 'भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्य' इति तैत्तिरीयश्रुतिप्रसिद्धयेत्यर्थः ॥

---

च० — **परिहरिष्यत इति** ॥ ईश्वरकर्मकनिश्चयाभ्युपगमे मीमांसासाध्यफलस्य निर्वृत्तत्वादेव तदानर्थक्यरूपो दोषः मीमांसायाः प्रमाणाभासोत्पादितप्रतिपत्त्यादिप्रतिबन्धनिरसनौपयिकत्वाभिधानेन प्रतिविधास्यत इत्यर्थः ॥ **अधिदेवतात्वेन** अभिमानिदेवतात्वेन । 'बहोर्लोपो भू च बहोरि'ति सूत्रे बहुशब्दप्रकृतिके मनिजवयवेकारलोपस्य बहुशब्दस्य भूरादेशस्य च विहितत्वादिति भावः ॥ **बहुत्वार्थस्येति** ॥ भू बहौ पूर्णतायामित्युक्तेरिति भावः ॥ **यथोक्तमिति** ॥ ऋग्भाष्य इति पूरणीयम् ॥

सु० — **किमतो न हि व्याहृतय एव वेद इति चेत्** । व्याहृत्यर्थतया तावत्परमेश्वरस्य गायत्रीप्रतिपाद्यताऽवगम्यते । त्रिपदाया गायत्र्या व्याहृतित्रयव्याख्यानत्वस्यागमसिद्धत्वात् । ननु गायत्र्यां यो भर्गो नोऽस्माकं धियः प्रचोदयात्प्रेरयेत्तस्य सवितुर्देवस्य तद्वरेण्यं रूपं धीमहि चिन्तयाम इति भर्गनामकः सविता प्रतिपाद्यो दृश्यते । तत्कथं भगवत्परत्वमित्यत आह ॥ **स एव भर्गशब्दार्थ इति** ॥ भरणगमनयोगादिति शेषः । उपलक्षणं चैतत् । जगत्प्रसवहेतुत्वात्सवितेत्यपि द्रष्टव्यम् । न तु सूर्यः । तथात्वे गायत्र्या व्याहृत्यर्थत्वानुपपत्तेः । 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण' इत्याद्यागमविरोधाच्चेत्येवार्थः । अस्तु गायत्र्यर्थो

**नारायणः किमेतावताऽपि । गायत्र्यर्थत्वात्पुरुषसूक्तार्थोऽपि स एवेति सिद्ध्यति । वर्गत्रयात्मकस्य तस्य त्रिपदागायत्रीव्याख्यानत्वेन 'तद्वेदः पौरुषं सूक्तमि'त्याद्यागमसिद्धत्वात् । ननु पुरुषसूक्ते पुरुषस्य पशोर्हिरण्यगर्भस्य वा प्रतिपादनात्कथं नारायणः प्रतिपाद्यत इत्यत आह ॥ सोऽयमिति ॥ पूर्णत्वादिनेति शेषः । तथा च श्रुतिः । 'स वा अयं पुरुषः सर्वासु पूर्षुपुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्' इति । अन्यथोक्तयुक्तिविरोधः । वक्ष्यते चैतत् । सिद्धे च पुरुषसूक्तार्थत्वे विष्णोः किं स्यात् । सर्ववेदार्थत्वमेव सिद्धम् ।**

**वा०**— स एव गायत्र्यर्थ इति वक्तव्ये स एव भर्गशब्दार्थ इत्युक्तमयुक्तमित्यतो नेदं व्याहृतीनां चेत्यादिरिव साक्षाद्गायत्र्यर्थत्वप्रतिपादकमपि तु व्याहृत्यर्थत्वेन साधनीयतया बहिरेवाभिप्रेते गायत्र्यर्थत्वे प्राप्तानुपपत्तिपरिहारकमित्यभिप्रेत्य तदभिप्रेतं वक्तुं शङ्कामुत्थापयति ॥ **किमत इति ॥ भरणेति ॥** डुभृञ् भरणे गम्लृ गतौ आभ्यामसुन्प्रत्ययो डिच्च । उणादयो बहुलमित्युक्तत्वात् । ऋग्भाष्ये 'भारतिज्ञानरूपत्वादिति व्याख्यानेऽप्यन्यथाशेषपूरणं ऋग्भाष्यापेक्षया प्रकारान्तरेण व्याख्यानस्य व्याहृतीनां चेत्यादौ प्रस्तुतत्वात्तत्प्रायपाठेनात एव 'सुपूर्णत्वात्पुमान्नामे'ति ऋग्भाष्योक्तावपि स्वयं पूर्णत्वादिनेत्यादिशब्दं प्रयुज्यानेकार्थप्रतिपादकश्रुतिमेवोदाजहारेति द्रष्टव्यम् । अस्त्वित्यादेः पूर्ववत्सङ्गतिर्द्रष्टव्या । (पूर्ववत् सङ्गतिरिति ) स एव पुरुषसूक्तार्थ इति वक्तव्ये सोऽयं पुरुष इत्यपीत्युक्तमयुक्तमित्यतो नेदं व्याहृतीन चेत्यादिरिव साक्षात्पुरुषसूक्तार्थत्वप्रतिपादकमपि तु गायत्र्यर्थत्वेन साधनीयतया बहिरेवाभिप्रेते पुरुषसूक्तार्थत्वे प्राप्तानुपपत्तिपरिहारकमित्यभिप्रेत्य तदभिप्रेतं वक्तुं शङ्कामुत्थापयति । अस्त्वित्यादिनेति पूर्ववद्गमनिका द्रष्टव्येत्यर्थः ॥ **पूर्णत्वादिनेति** ॥ पॄपालनपूरणयोरित्यतः 'पुरः कुषन्नि'ति कुषन्प्रत्ययः । ( पॄ उष इति स्थिते उदोष्ठ्यपूर्वस्य । अङ्गावयवौष्ठ्यपूर्वो यदॄत् तदन्ताङ्गस्य उत्स्यात् । रपरत्वं पुरुषः ) पुरिशय इति व्याख्याने तूपपदस्य सप्तम्या अलुक् तस्य चेकारस्योकारो धातुशकारस्य षकारो निर्वचनत्वात् । अधिकरणे शेतेरन्येष्वपि दृश्यत इति डः ॥ **उक्तयुक्तीति** ॥ व्याख्यानव्याख्येयभावानुपपत्तिप्रसङ्गरूपोक्तयुक्तीत्यर्थः । ननु पुरुषशब्दस्य पशुविषयत्वे पशोर्देहयोगवशाद्भूतत्वादेरुपपत्त्या पुरुष एवेदमित्युक्तसर्वात्मकत्वस्याबाधकत्वेऽपि भगवत्पक्षे तस्य बाधकत्वात्तद्वेद इत्यागमस्यान्यथाव्याख्येयतया नोक्तयुक्तिविरोध इत्यत आह ॥ **वक्ष्यते चैतदिति** ॥ 'मुक्तामुक्तपरेशत्वमिति तस्याह सा श्रुतिः' इत्याद्यनुव्याख्यान इति शेषः । स एव सर्ववेदार्थ इत्यस्य पूर्ववन्न बाधकपरिहारात्मकत्वं किन्तु साक्षाद्विवक्षितार्थप्रतिपादकत्वमेवेत्यभिप्रेत्य तदुपपादयति ॥ **सिद्धे चेति** ॥

**स०**— **त्रिपदाया इति** ॥ 'व्याहृति त्रिगुणात्पुनः वेदमाता तु गायत्री' इत्यागमेन त्रिपदाया गायत्र्याः व्याहृतित्रयव्याख्यानत्वस्यावगमादित्यर्थ इत्याहुः ॥ **तथा च श्रुतिरिति** ॥ सर्वासु

पूर्षु वर्तमान इति स्वरूपानुवादेन 'स वा अयं पुरुष' इति पुरुषशब्दवाच्यत्वं विधीयते ॥ **पुरिशय इति** ॥ तत्र निमित्तम् । निमित्तान्तरमाह ॥ **नैनेनेति** ॥ आवरणमन्तर्व्याप्तिः । संवरणं बहिराच्छादनमिति श्रुत्यर्थः ॥ **वक्ष्यते चैतदिति** ॥ 'सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदा' इत्यादिनेति शेषः ॥

प०— **त्रिपदा गायत्र्या इति** ॥ ऋग्वाचिनस्त्रिपदा इत्यस्य टाबृचीति टाबन्तस्याभाषितपुंस्कत्वान्न पुंवद्भावः । क्वचित् त्रिपदाया इति पाठः ॥ **आगमेति** ॥ 'नारायणाष्टाक्षराच्च व्याहृतित्रिगुणात्पुनः । वेदमाता तु गायत्री'ति तन्त्रसारोक्तेरित्येके । तच्चिन्त्यम् । तत्र व्याहृतिशब्दस्य व्याहरणार्थत्वात् । किन्तु पञ्चरात्रागमसिद्धत्वादित्यर्थ इत्यन्ये । तस्य स्पष्टमाचार्यैः क्वाप्यनुक्तत्वादिहाप्यनुक्तिरिति ॥ **यो भर्ग इति** ॥ ऋग्भाष्यटीकायां तु सकारान्तनपुंसकमुपेत्य भर्गोरूपमित्युक्तम् । तच्चाद्युदात्तत्वसिद्ध्यर्थमिति ज्ञेयम् । यस्य भर्गाख्या तच्चिन्तयामीति मैत्रायणीयश्रुत्यादावकारान्तताश्रवणादत्राकारान्त उक्तः । तथात्वे रूढ्या रुद्रः स्यादिति न शङ्क्यम् । आगमविरोधात् । चुद् प्रेरण इत्यस्माल्लेटि रूपमित्युपेत्याह ॥ **प्रेरयेदिति** ॥ ध्यै चिन्तायामित्यस्य संप्रसारणं विकरणलोप आत्मनेपदं च छान्दसम् । व्यत्ययो बहुलमिति वचनादित्युपेत्यार्थमाह ॥ **चिन्तयाम इति** ॥ **भरणेति** ॥ भृञ् भरणे गम्लृ गतौ धातुद्वयादौणादिको डन्प्रत्ययः । 'अदिभूभ्यां डुतजि'तिवत् । भृञो गुणो गमेष्टिलोप इति भावः । तेन डनो नित्वात् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं सिद्धं ज्ञेयम् । षूञ्प्राणिप्रसव इत्यस्मात्तृजित्युपेत्याह ॥ **जगदिति** ॥ **आगमेति** ॥ ऐतरेयभाष्योक्तादित्यपुराणरूपागमेत्यर्थः । एतेन मूले स एव भर्गशब्दार्थ इति व्याहृतिव्याख्यानात्पूर्वं गायत्र्यर्थोक्तेर्बीजं प्रकटितं भवति । शङ्कोत्तरमाह ॥ **गायत्र्यर्थत्वादिति** ॥ **इत्याद्यागमेति** ॥ 'तद्वेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगा' इति तन्त्रसारोक्तागमसिद्धत्वादित्यर्थः । 'स पूर्णत्वात्पुमान्नामे'ति ऋग्भाष्योक्तेराह ॥ **पूर्णत्वादिनेति** । पॄ पालनपूरणयोरित्यस्मात् 'पुरः कुषन्' इति कुषन्प्रत्यये 'उदोष्ठ्य पूर्वस्ये'त्युत्वम् । अत्र विवक्षितबहिरन्तर्व्याप्तत्वरूपपूर्णत्वाख्यनिमित्ते आदिपदोपात्तनिमित्तान्तरे च काण्वश्रुतिमाह ॥ **तथा चेति** ॥ सर्वासु पूर्षु वर्तमान इत्यनुवादेन 'स वा अयं पुरुष' इति पुरुषशब्दवाच्यत्वविधानं पुरिशय इति तस्य व्याख्यानम् । आवरणमन्तर्व्याप्तिः । संवरणं बहिराच्छादनमिति व्याख्यातैषा श्रुतिरष्टमे गीताभाष्यव्याख्यायाम् ॥ **उक्तेति** ॥ आगमसिद्धव्याख्यानत्वरूपयुक्तिविरोध इत्यर्थः ॥ **वक्ष्यते चैतदिति** ॥ विष्णोः पुरुषसूक्तप्रतिपाद्यत्वं 'सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदाः इति पैङ्गिश्रुतिश्चाह' इत्यानन्दमयनये । तथोपासनापादे 'विद्यैव तु निर्धारणात्' इत्यत्र 'नान्यः पन्था इति ह्युक्तं पुरुषज्ञानतः श्रुतौ' इत्यादौ च वक्ष्यत इत्यर्थः । उत्तरमाह ॥ **सर्ववेदार्थत्वमेवेति** ॥

या०— **आगमसिद्धत्वादिति** ॥ 'व्याहृतित्रिगुणात्पुनर्वेदमाता तु गायत्री' इत्याद्यागमसिद्धत्वादित्यर्थः ॥ **भरणगमनयोगादिति** ॥ डुभृञ्‌ भरणे गम्लृ गतौ आभ्यां असुन् प्रत्ययो डिच्च । तथा च भरणगमनकर्तृ भर्ग इत्यर्थः ॥ **पुरुषस्य पशोरिति** ॥ 'अबध्नन्पुरुषं पशुमि'त्युक्तत्वादिति भावः ॥ 'स वा अयं पुरुष' इति वाक्यस्य सर्वासु पूर्षु वर्तमान इति स्वरूपानुवादेन पुरुष इति विधेयम् । तस्य व्याख्यानं पुरिशय इत्यादि । आवरणमन्तर्व्याप्तिः संवरणं बहिराच्छादनमिति गीताभाष्यटीकानुसारेणार्थो द्रष्टव्यः ॥ **अन्यथोक्तयुक्तीति** ॥ व्याख्यानव्याख्येयभावरूपयुक्तिविरोध इत्यर्थः । नन्वस्त्वेवं पुरुषशब्दस्य कथञ्चिद्यौगिकत्वम् । तथाऽपि न पुरुषसूक्तं तत्परम् । अत्र पुरुषशब्दस्य पशौ रूढत्वात् । रूढिबाधकस्य विष्णुपरताप्रापकस्याभावाच्च । विष्णुपरत्वे 'पुरुष एवेदं सर्वम्' इत्युक्तसर्वात्मकत्वायोगाच्च । न हि विष्णुः सर्वात्मकः । पशोस्तु देहयोगवशाद्भूतत्वादिकं युज्यते । एतद्बलात्पुरुषसूक्तस्य गायत्रीव्याख्यानत्वं तु कयाचिद्विवक्षया नेयमित्यत आह ॥ **वक्ष्यते चैतदिति** ॥ 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी'त्यादिनोपासनापादे विष्णौ विद्वद्रूढ्या निरवकाशलिङ्गादिना चोक्तबाधकपरिहारेण विष्णुपरत्वं वक्ष्यत इत्यर्थः ।

च०— **आगमसिद्धत्वादिति** ॥ 'व्याहृतित्रिगुणात्पुनः वेदमाता तु गायत्री'त्यागमसिद्धत्वात् इत्यर्थः ॥

---

सु०— 'वेदाः पुरुषसूक्तगा' इत्यागमेन सर्ववेदानां पुरुषसूक्तार्थतयाऽवगतत्वादित्याह ॥ स एवेति ॥ एवशब्दः कार्यादिव्यावृत्त्यर्थः । 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतिसिद्धमपि भगवतः सर्ववेदार्थत्वं न्यायेनोपपादयितुमयं प्रयत्नः सूत्रकारस्य । स्यादेतत् । ईश्वरः सर्ववेदार्थस्तद्व्याख्येयोङ्कारार्थत्वात् । यो यद्व्याख्येयार्थः स तदर्थो यथा सम्प्रतिपन्न इति वा सर्वो वेद ईश्वरपरस्तत्परोङ्कारव्याख्यानत्वादिति वा साक्षादेवानुमानं किं न व्याख्यायते । 'तद्यथा सर्वाणि पर्णानि शङ्कुना सन्तृण्णान्येवमोङ्कारेणैव सर्वा वाक् सन्तृण्णा' इत्यादिश्रुत्या हेत्वर्थसमर्थनं भविष्यति किमनेन परम्पराव्याख्यानेन । सत्यम् । तथाऽपि वाक्यान्तरबलेन न सर्वा वागोङ्कारव्याख्यानं साक्षात्किं नामोक्तप्रकारेण परम्परयैवेति ज्ञापयितुमित्थं व्याख्यानमित्यदोषः । ननु चेश्वरे प्रमाणं पृष्टवत ॐकारब्रह्मशब्दावेव कस्मान्नोक्तौ किं वेदानुमानेन । न च पदस्याप्रमाणतेति वाच्यम् । यौगिकपदप्रामाण्यस्य उक्तत्वात् । मैवम् । मीमांसानुग्राह्यप्रमाणस्य पृष्टत्वात् । न चोङ्कारादिमात्रं तथा विवक्षितम् । किं नाम समस्तो वेद एवेति । किमतो यद्येवमीश्वरः सर्व वेदार्थ इति चेत् । विषयसम्बन्धसम्भवाज्जिज्ञासायाः कर्तव्यता शास्त्रस्य चारम्भणीयत्वं सिद्धमित्याशयवान् साकाङ्क्षस्य वाक्या-

भासस्याप्रतिपादकत्वादाकाङ्क्षिताध्याहारं सूचयन्सूत्रवाक्यार्थमाह ॥ **जिज्ञास्य इति** ॥ **अयमिति** उक्तविधया जीवजडात्मकात्प्रपञ्चादत्यन्तविविक्तत्वेन निश्चिततया विषयभूतः सर्ववेदार्थतया शक्यप्रतिपादनश्चेत्यर्थः ।

**वा०—** कार्यादीत्यादिशब्देनाखण्डब्रह्मपरिग्रहः । नन्वेवं प्रयत्नं कुर्वतः सूत्रकारस्य सर्ववेदार्थत्वे श्रुतिसिद्धताऽभिमता न वा । आद्ये लघूपायेन सिद्ध्यत्यर्थे प्रयत्नगौरवमाश्रयतः सूत्रकारस्यानौचिती । ( गुणवचनब्राह्मणादिभ्यः कर्मणि च । ष्यञ् । चाद्भावे । जडस्य कर्म भावो वा जाड्यम् । मौढ्यं ब्राह्मण्यम् । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । हलस्तद्धितस्येति यलोपः । औचिती । याथाकामी । ष्यञः षो ङीषर्थः । उचितस्य कर्म भावो वा औचिती न औचिती अनौचिती ) । द्वितीये च 'इत्याहोपनिषत्परे'ति ऋग्भाष्यं 'घोषाः सर्वेऽपि वेदाश्च' इत्याद्यनुव्याख्यानं चायुक्तं स्यादित्यत आह ॥ **सर्व इति** ॥ श्रुतिबोधितार्थनिर्णायकन्यायसूचकग्रन्थकर्तुः सूत्रकारस्य इति हेतुगर्भं विशेषणम् । एवं सूत्रकारीयामनौचितीं परिहृत्योङ्कारार्थत्वेन साक्षात्सर्ववेदार्थत्वानुमानसम्भवेऽपि परम्पराश्रयणेन प्रयत्नगौरवरूपभाष्यकारीयानौचितीं परिहर्तुं शङ्कते ॥ **स्यादेतदिति** ॥ एवं सर्ववेदानुमानमङ्गी-कुर्वतोद्भावितामनौचितीं परिहृत्य तदनङ्गीकुर्वताऽभिप्रायमजानानेनोद्भावितां तां परिहर्तुं शङ्कते ॥ **ननु चेति** ॥ अयमितीदमा पूर्वप्रकृतं परामृश्य जिज्ञास्य इति तस्य जिज्ञासाविषयत्वोक्त्या लब्धमाशयं कथयन्नेव विधीयत इत्यंशस्याध्याहारसूचकत्वमध्याहारनियामककथनपूर्वकं कथयन्नेवोत्तर-वाक्यमवतारयति ॥ **किमत इति** ॥ उक्ताशयलाभप्रकारं दर्शयितुमयमित्यस्यार्थमाह ॥ **अयमितीति** ॥

**स०—** **वेदानुमानेनेति** ॥ वेदानां भगवत्परत्वानुमानेनेत्यर्थः ॥

**प०—** **कार्यादीत्या**दिपदेन प्रकृतिदेवतादिपरिग्रहः ॥ **न्यायेनेति** ॥ 'भगवान्सर्ववेदार्थः तद्व्याख्येयपुरुषसूक्तप्रतिपाद्यत्वात् सामान्यव्याप्त्या संमतवत् । भगवान्पुरुषसूक्तार्थः । तद्व्याख्येय-गायत्र्यर्थत्वात् । भगवान् गायत्र्यर्थः । तद्व्याख्येयव्याहृत्यर्थत्वात् । भगवान् व्याहृत्यर्थः । तद्व्या-ख्येयप्रणवार्थत्वात् । न चासिद्धिः । सर्वत्र व्याख्यानव्याख्येयभावस्यागमसिद्धत्वात् । ॐकारवाच्य-त्वादौ 'तस्योपव्याख्यानम् । तद्ब्रह्म' इत्यादिश्रुतेः । न चाप्रयोजकत्वम् । सर्वत्र विपक्षे व्याख्यान-व्याख्येयभावव्याघातस्योक्तत्वादि'ति प्रबलानुमानरूपन्यायेनेत्यर्थः ॥ **अयं प्रयत्नः** ॐकारोच्चारणरूप-प्रयत्नः ॥ **इत्यादिश्रुत्येति** ॥ छन्दोगश्रुत्येत्यर्थः ॥ **वाक्यान्तरेति** ॥ 'प्रणवार्था व्याहृतय' इत्याद्यु-दाहृतवाक्यान्तरबलेनेत्यर्थः । एतेन ॐकारो जिज्ञासागुणभूतब्रह्मविशेषणम् । कृन्मेऽजन्त इत्यव्ययात् षष्ठ्यन्तस्याप्योमित्येव रूपमिति सूचितम् । अत एव वेदस्येश्वरविषयता कुत इत्यतोऽप्योङ्कारो ब्रह्मणि प्रयुक्त इति पूर्वमुक्त्वा इयता प्रबन्धेन तद्विवरणं कृतम् ॥ **वेदानुमानेनेति** ॥ ब्रह्मणि प्रमाणतया

वेदानुमानेन किमित्यर्थः ॥ **आकाङ्क्षिताध्याहारमिति** ॥ कर्तव्यपदाध्याहारमित्यर्थः ॥ **निश्चिततयेति** ॥ तादृशस्यापि विषयत्वं युक्तिवाक्याभासेत्यादिग्रन्थेनाग्रे व्यक्तीकरिष्याम इत्यर्थः ॥ **शक्येति** ॥ मीमांसया इति योज्यम् ।

**या०**— सन्तृण्णानि सम्बद्धानि ॥ **निश्चिततयेति** ॥ जीवाभिन्नत्वे ब्रह्ममिति स्वप्रकाशत्वेन निश्चिततया विषयत्वं न स्यादिति भावः ॥ **सर्ववेदार्थतयेति** ॥ सर्ववेदविज्ञेयार्थतयेत्यर्थः ॥ **शक्यप्रतिपादनः** शक्यजिज्ञासः । ततश्च प्रमितो नेति पक्षेऽनुग्राह्यप्रमाणाभावः न च बुद्धावनारूढं शक्यं जिज्ञासितुमिति यद्दूषणद्वयमुक्तं तन्नेति भावः ॥

**श्री०**— **किमेतावताऽपीति** ॥ न हि गायत्र्येव वेद इति भावः ॥ **किं स्यादिति** ॥ न हि पुरुषसूक्तमेव वेद इति भावः ॥

**च०**— **न्यायेनेति** ॥ ईश्वरः सकलवेदप्रतिपाद्यस्तद्व्याकर्तव्यपुरुषसूक्तप्रतिपाद्यत्वादिति फलीभूतानुमाने सामान्यव्याप्तिमूलकेऽसिद्धिशङ्कानिरसनौपयिके तत्पक्षकदर्शितहेतुसाध्यकतद्व्याकर्तव्यगायत्र्यर्थत्वलिङ्गकतादृशव्याप्तिमूलकानुमानेऽपि तच्छङ्काव्युदसनहेतुभूततद्धर्मिकोक्तहेतुसाध्यकतद्व्याख्येयव्याहृत्यर्थत्वहेतुकतादृशानुमानेऽपि तादृशशङ्कापहस्तकतद्धर्मिकोक्तसाध्यकतद्विगीर्यमाणप्रणवप्रतिपाद्यत्वलिङ्गकव्याकर्तव्यव्याकृतिभावावगमकागमनिरस्तासिद्धिशङ्कानुमानेनेत्यर्थः ॥ **सन्तृण्णानि** सम्बद्धानि ॥ **अदोष इति** ॥ उक्तदिशा साक्षादेवानुमानेऽसिद्धिप्रसङ्गेन युक्तं पारम्पर्याश्रयणमिति भावः ॥ **सर्ववेदार्थतयेति** ॥ सर्ववेदजनितज्ञानविषयतयेत्यर्थः ॥ **शक्यप्रतिपादनः** शक्यजिज्ञासः । तथा च ईश्वरः प्रमितो नेति कल्पेऽनुग्राह्यप्रमाणवैधुर्यबुद्ध्यनारूढतानियन्त्रितजिज्ञास्यताऽनुपपत्तिरूपोक्तदूषणद्वयाऽनवकाशः ॥

**सु०** — **ननु वेदानामीश्वरप्रतिपत्तिजनकत्वाद्भवतु तद्विषयत्वम् । शास्त्रं तु तेषामीश्वरप्रतिपादनानुसरणोपायन्यायविषयं कथमीश्वरपरमुच्यते । मैवम् । वेदानामीश्वरमवबोधयतामितिकर्तव्यता हि मीमांसा । तेनोपकारकत्वाद्भवति तद्विषया तद्द्वारा शास्त्रमपि । न हि बीजस्याङ्कुरं जनयतः सहकारिणो जलादेरङ्कुरो न कार्यम् । ननु मीमांसाऽपि सम्भावनादिविषया कथमीश्वरविषया भवति । मैवम् । द्विविधं खलु कर्म कारकं भवति । किञ्चिद्व्यवधानेन व्यापारजन्यातिशययोगि । यथोद्यमननिपतनव्यापारजन्योर्ध्वाधोदेशसंयोगविभागातिशयविशिष्टः कुठारः कर्तृव्यापारस्याव्यवधानेन कर्म भवति । किञ्चिदुद्देश्यफलसम्बन्धितया करणव्यापारव्यवधानेन । यथा द्वैधीभाववान्वृक्षः । तत्र कर्तृव्यापारस्य करणव्यापारव्यवधानेन वृक्षकर्मतेव मीमांसाव्यापारस्यापि प्रमाणादिसम्भावनाद्वारेणेश्वरावबोध एवोद्देश्य इति भवति**

**तत्कर्मता । स्यादेतदेवम् । यदि वेदेतिकर्तव्यता विचारः स्यात् । न चैवम् । विनाऽपि विचारेण शब्दोपलब्धिसमयग्रहणतत्स्मरणसहकृताच्छब्दादेवार्थावगमदर्शनात् । न च मन्तव्यं शक्तितात्पर्याज्ञानविपर्ययदोषाच्छब्दः संशयविपर्ययावुत्पादयति । तत्र दोषापनयनेन संशयादिव्युदासाय शक्तितात्पर्यविचारोऽङ्गं भवतीति । यतस्तत्रापि शब्दो विना विचारेण तत्त्वज्ञानस्येष्टे । किं नाम प्रतिबन्धमात्रं विचारेणापनीयते । न हीतिकर्तव्यतैवम् । तत्कथं वेदेतिकर्तव्यता जिज्ञासा । कथन्तरां चेश्वरविषया । कथन्तमां च शास्त्रस्य तद्विषयतेति ।**

व्या०— अत्र जिज्ञासाया विषयसम्बन्धसिद्धौ शास्त्रस्यापि तत्सम्बन्धसिद्धिरित्याशयेन जिज्ञास्योऽयमिति ब्रुवता भाष्यकारेण शास्त्रस्य न स्वातन्त्र्येण ब्रह्मरूपविषयसम्बन्धोऽपि तु जिज्ञासाद्वारैवेत्यर्थसूचनात्तन्निवर्त्यां शङ्कां दर्शयति ॥ **नन्विति** ॥ नन्वनेन सूत्रेणैव शास्त्रस्यापि ब्रह्मविषयकत्वमेवोक्तमित्यतोऽप्रतिभासात्तदुक्तमप्ययुक्तमित्यभिप्रेत्याह ॥ **शास्त्रं त्विति** ॥ तुशब्दो विचारशास्त्रस्वरूपविशेषद्योतकः । करणेतिकर्तव्यतयोरेकप्रयोजनकत्वनियमादर्थकर्मरूपप्रयाजाद्यङ्गानां संस्कारकर्मरूपप्रोक्षणाद्यङ्गानां च षड्यागजन्यप्रधानापूर्वजन्यपरमापूर्वद्वारेण स्वर्गसिद्धिरूपैकप्रयोजनत्ववच्छब्दशक्तितात्पर्यविचारस्य संस्कारकर्मवच्छब्दप्रमाणस्वरूपोपकारितयाऽर्थस्वरूपब्रह्मविचारस्य च प्रयाजादिवद्ब्रह्मावगमफलोपकारितया कारणीभूतवेदादिनैकप्रयोजनकत्वादवगम्यमानब्रह्मविषयकत्वमुभयविधविचारस्य युज्यत इति तद्द्वारा शास्त्रस्यापि तद्विषयत्वोपपत्तेर्नानुपपत्तिरित्याशयेन समाधत्ते ॥ **नैवमिति** ॥ उपकार्योपकारकयोरेकप्रयोजनकत्वं लोकसिद्धं चेत्याह ॥ **न हीति** ॥ अत्र जिज्ञास्योऽयमिति जिज्ञासाया ब्रह्मरूपविषयसम्बन्धोक्त्या सूचितं तत्रत्यानुपपत्तिपरिहारं वक्तुं जिज्ञासाया ब्रह्मविषयकत्वेऽनुपपत्तिं शङ्कते ॥ **नन्विति** ॥ प्रमाणप्रमेयसम्भावनाबुद्धिहेतुतया तद्विषयकोभयविधविचारस्य ब्रह्मावगमजनकतया तद्विषयत्वेऽन्यविषयकव्यापारस्याप्यन्यविषयकतापत्तिरित्यर्थः । दृष्टत्वान्नेदमनिष्टापादनमित्याशयेन समाधत्ते ॥ **द्विविधं हीति** ॥ **कर्तृव्यापारस्येति** ॥ उद्यमनिपतनलक्षणस्येत्यर्थः ॥ **मीमांसाव्यापारस्येति** ॥ मीमांसारूपव्यापारस्य इत्यर्थः । प्रमाणादीत्यादिपदेन प्रमेयग्रहणम् । नन्वागमान्वयव्यतिरेकयोरितिकर्तव्यताप्रमाणतया प्रयाजादीनामागमात् षड्यागाङ्गत्वेऽपि मृज्जलादीनां कर्तृव्यापारस्य चान्वयव्यतिरेकाभ्यामङ्कुरद्वैधीभावाङ्गत्वेऽपि विचारस्य ब्रह्मावगमाङ्गत्वे आगमाभावादन्वयव्यतिरेकयोश्च व्यतिरेकव्यभिचारेणासम्भवेन प्रमाणाभावान्नाङ्गत्वसम्भव इति शङ्कते ॥ **स्यादेतदेवमिति** ॥ पूर्वोक्तमुपकारकत्वं विवृण्वन्नेव व्यतिरेकव्यभिचारपरिहारं शङ्कते ॥ **न चेति** ॥ एवं विचारस्याङ्गत्वं वदतः किं दोषसहितशब्दस्यान्यथाज्ञानजनकत्वं विचारस्य च दोषनिरासेन प्रमितिजनकत्वमभिमतमुत सम्यग्ज्ञानजनकत्वं शब्दस्वभावो दोषाच्च

अन्यथाज्ञाने समुत्पन्ने विचारेण च निवृत्ते शब्दादेव निर्णय इत्यभिमतम् । नाद्यः । शब्दस्य विचार-सापेक्षस्य प्रमितिहेतुत्वे प्रामाण्यस्य स्वतस्त्वभङ्ग इत्याशयेनाह ॥ **यतस्तत्राऽपीति** ॥ तर्हि द्वितीयो अङ्गीकार्यः किमित्याशङ्कते ॥ **किं नामेति** ॥ अङ्गीकारेण समाधत्ते ॥ **प्रतिबन्धेति** ॥ ननु तावतैव विचारस्याङ्गत्वसिद्धिरित्यतोऽवगमप्रतिबन्धकनिवर्तकस्य नावगमहेतुत्वं येनावगमहेतोरवगम्यमानविषयकता स्यात् । लोके प्रतिबन्धकनिवर्तकस्य हेतुत्वादर्शनादित्याह ॥ **न हीति** ॥

**स०**— ॐकाराद्यखिलवेदस्येश्वरविषयकत्वात् शास्त्रस्य न्यायविषयकत्वात्कथमनेन शास्त्रस्य विषयप्रतिपत्तिरिति शङ्कते ॥ **ननु वेदानामिति** ॥

**प०**— सूत्रसन्दर्भरूपशास्त्रस्येश्वरविषयकत्वमाक्षिप्य समाधत्ते ॥ **नन्वित्यादिना** ॥ **न्याय-विषयं** न्यायप्रतिपादकम् ॥ **इतिकर्तव्यता हि मीमांसेति** ॥ सहकारिरूपं हि न्यायानुसन्धानमित्यर्थः ॥ **सम्भावनादीति** ॥ प्रमाणतद्विषयगोचरासम्भावनाविपरीतसम्भावनानिरासेनैतदर्थप्रतिपादने इदं योग्यम् इदं चैतत्प्रमाणवेद्यमित्येवं योग्यत्वादिविषयिकेत्यर्थः । मीमांसायास्तर्कानुसन्धानरूपत्वात्तर्कस्य सम्भावना-विषयकत्वादिति भावः । विवरिष्यते चैतद्भक्तिपादे सन्ध्ये सृष्टिरित्यधिकरणे 'स्वन्यायैस्साधनं कार्यं परन्यायैश्च दूषणम्' इत्येतदवतारिकायाम् ॥ **करणव्यापारेति** ॥ कुठारदारुसंयोगादिरूपेत्यर्थः ॥ **मीमांसेति** ॥ कर्तृभूतेति योज्यम् ॥ **शक्तितात्पर्याज्ञानेति** ॥ युक्त्याद्याभासनिमित्तेति योज्यम् ॥ **तत्राऽपीति** ॥ दोषोपनिपातस्थलेऽपि स्वगतशक्त्यैवेष्ट इत्यर्थः ॥ अन्यथा प्रामाण्यस्य परतस्त्वापत्तेरिति भावः ॥ **न हीति** ॥ किन्तु कार्योत्पादिकैवेति योज्यम् ॥

**या०**—**न्यायविषयमिति** ॥ न्यायग्रथनात्मकत्वादिति भावः ॥ **सम्भावनादिविषयेति** ॥ प्रमाणविषयेऽसम्भावनाशङ्काविच्छेदकत्वेन सम्भावितत्वं सम्पादयतीत्यर्थः । विषये प्रमाणप्रवृत्त्यनु-ज्ञापकत्वमादिशब्दार्थः ॥ **न हीतिकर्तव्यतैवमिति** ॥ स्वातन्त्र्येण सहकारिण एवेतिकर्तव्यतारूपत्वात् इति भावः ॥

**श्री०**— **संयोगविभागातिशयेति** ॥ तद्रूपफलेत्यर्थः । **कर्तृव्यापारस्य** उद्यमननिपतनरूपस्य ॥ **व्यवधानेन** कर्तृव्यापारस्य कर्म भवतीति वर्तते ॥ **यथेति** ॥ देवदत्तः कुठारेण दारु छिनत्तीत्यत्रो-द्देश्यफलं द्वैधीभावस्तत्सम्बन्धी वृक्षः कुठाररूपकरणस्य यो व्यापारः कुठारदारुसंयोगस्तद्व्यवधानेन उद्यमननिपतनरूपकर्तृव्यापारस्य कर्म भवति ॥ एवमुद्देश्यं यत्फलमवबोधः । विषयतया तत्सम्बन्धीश्वरः । विचारापरपर्यायमीमांसारूपकर्तृव्यापारस्य । प्रमाणं प्रमाकरणभूतो वेदः । वेदेन करणात्मनेति वचनात् । तद्व्यापारोऽसम्भावनाविपरीतभावनाशङ्कापरिहारेण सम्भावनादिः प्रमाणविषयाभ्यनुज्ञानं तद्द्वारा विषयः । मीमांसाया असम्भावनाशङ्कानिरासे सति वेदादिप्रमाणेनेश्वरज्ञानं जायत इति यावदित्याह ॥ **तत्रेति** ॥

प्रमाणादिसम्भावनाद्वारेण करणव्यापारव्यवधानेन ॥ **ईश्वरेति** ॥ उद्देश्यफलसम्बन्धित्वेनेश्वरः कर्मेत्यर्थः ॥ **भवतीति** । मीमांसायास्तत्कर्मकता ईश्वरकर्मकता परम्परया भवतीत्यर्थः । विचारो मीमांसा ॥ **विचारोऽङ्गमिति** ॥ तथा च मीमांसारूपो विचारो वेदेतिकर्तव्यता भवत्येवेत्यर्थः । तर्हि विचारस्य वैयर्थ्यमेव स्यादित्याशङ्क्य परिहरति ॥ **किं नामेत्यादिना** ॥

च० — **न्यायविषयमिति** ॥ न्यायावबोधकपदघटितत्वादिति भावः ॥ **इतिकर्तव्यतेति** ॥ व्यापार इत्यर्थः । **उपकारकत्वात्** प्रामाणाभासजनितविप्रतिपत्त्यादिप्रतिबन्धनिरासौपयिकत्वात् । **तद्विषया** ईश्वरविषया ॥ **सम्भावनादिविषयेति** ॥ प्रमाणतद्विषयगोचरासम्भावनाविपरीतभावना-निरासेन एतदर्थप्रतिपादनेन सम्भावितत्वं सम्पादयतीत्यर्थः । प्रमाणप्रवृत्तिनिर्वाहकत्वमादिपदेनोपादेयम् । **कर्तृव्यापारस्य** उद्यमननिपतनलक्षणस्य । **उद्देश्यफलसम्बन्धितया** अवयवविभागात्मकप्रवृत्त्युद्देश्यभूत-द्वैधीभावरूपफलाश्रयतया । **मीमांसाव्यापारस्य** मीमांसारूपव्यापारस्य ॥ **समयग्रहणेति** ॥ शक्ति-लक्षणासङ्केतान्यतमग्रहणेत्यर्थः ॥ **शक्तीति** ॥ दर्शितान्यतमेत्यर्थः ॥ **न हीतिकर्तव्यतैवमिति** ॥ दाहादिप्रतिबन्धकमण्यादिनिवर्तकस्य दाहादिहेतुत्वानुपगमेन प्रकृतावगतिविरोधिनिरसनमात्रौपयिक-जिज्ञासायास्तादृशावगतित्वावच्छिन्ननिरूपितहेतुताकत्वविरहेण व्यापाराभिमतचक्षुःसन्निकर्षादितुल्यकक्ष्या-पन्नताविरहादिति भावः ॥

**सु० — अत्रोच्यते । सत्यमेवम् । तथाऽपि प्रतिबन्धनिवृत्तौ सत्यामेव निर्णय इति प्रतिबन्धकनिरासहेतोरपि विचारस्योपचारेण निर्णयहेतुत्वादुपपन्नमीश्वरविषयत्वम् । एतेनैतदपि निरस्तम् । ईश्वरस्य वेदप्रमाणकत्वे तत एव निश्चितत्वात्किं मीमांसयेति । युक्तिवाक्याभास-जनितविप्रतिपत्तिप्रतिबन्धस्योक्तत्वात् । तथा हि । वेदप्रामाण्यमेवानङ्गीकुर्वाणाः केचिदीश्वर एव नास्तीति प्रतिपन्नाः । अपरे तु तदङ्गीकृत्यापि तद्वाचिनां पदानां जीवादिविषयतां व्याकुर्वन्तस्तदभावमास्थिताः । अन्ये तु पुनरस्तीश्वरः किन्तु परमार्थतो निर्गुण एवेति सङ्गिरन्ते । एके तु सगुणोऽपि न जगतः कारणमपि तूदासीन एवेत्यातिष्ठन्ते । केचित्कार-णत्वेऽप्युपादानमित्यभ्युपयन्ति । निमित्तमात्रत्वेऽपि कतिपयगुणं गुणेभ्यो भिन्नमन्ये मन्यन्ते । इतरे तु भिन्नाभिन्नमुपगतवन्तः । केचिद्विग्रहवन्तमित्येवमाद्यास्वनेकासु विप्रतिपत्तिषु सतीषु तत्त्वज्ञानकरणादपि वेदात्तदनुत्पत्तौ तदपनोदनद्वारेण वेदेतिकर्तव्यतारूपा जिज्ञासा कर्तव्येति ।**

वा० — प्रतिबन्धकनिरासहेतोर्निर्णयहेतुत्वाभावेऽपि निर्णयप्रयोजकत्वान्निर्णयप्रयोजकत्व-रूपस्यैव निर्णयोपकारकत्वस्य प्रकृते विवक्षितत्वात्तावतैव निर्णयविषयत्वं युक्तमित्याशयेन समाधत्ते ॥ **अत्रोच्यत इति** ॥ अत्र निर्णयप्रतिबन्धकनिरासहेतुत्वरूपं निर्णयप्रयोजकत्वमेव तद्धेतुत्व-

मभिप्रेत्य जिज्ञासाया ब्रह्मविषयकत्वं वदता जिज्ञास्योऽयमिति वाक्येन वेदेन स्वार्थनिर्णये प्रतिबन्धस्य जिज्ञासया तन्निवृत्तेश्च सूचनात्प्रमितत्वपक्षोक्तदोषः परिहृतो भवतीत्यभिप्रेत्य तत्पक्षदोषश्च परिहरिष्यत इत्युक्तं वक्तुमाह ॥ **एतेनेति** ॥ युक्तिवाक्यानीवाभासन्त इत्याभासपदमुभयेन सम्बध्यते । एतासु विप्रतिपत्तिष्वतिविरोधित्वक्रमेण निर्देशोऽयम् । वेदप्रामाण्यमेवेत्यनेन प्रमाणाभावरूपयुक्त्याभाससूचनपूर्वं 'न विलक्षणत्वा'धिकरणव्यावर्त्यस्यापरे त्वित्यनेन वेदस्येश्वरे प्रमाणत्वाभावेन प्रमाणाभावरूपतत्सूचनपूर्वकमोङ्कारादिव्यावर्त्यस्यान्य इत्यनेन केवलो निर्गुणश्चेति वाक्याभासबलात्परमेश्वरगुणेषु वेदस्य तत्त्वावेदकप्रमाणत्वाभावसूचनपूर्वकमोङ्कारादिसमन्वयाध्यायव्यावर्त्यस्यैक इत्यनेन वेदस्य सगुणत्वे तत्त्वावेदकप्रमाणत्वेऽपि कूटस्थत्वबोधकवाक्याभासबलाज्जगत्कारणत्वे प्रमाणत्वाभावसूचनपूर्वमन्यत्राभावाच्चेत्याद्यधिकरणव्यावर्त्यस्य केचिदित्यनेन वेदस्य जगत्कारणत्वे तादृशप्रमाणत्वेऽपि 'येनाश्रुतं' 'बहु स्याम्' इत्यादिवाक्याभासबलान्निमित्तमात्रत्वे प्रमाणत्वाभाव इति 'अधिकं तु भेदनिर्देशात्' इत्यादिसूत्रव्यावर्त्यस्य निमित्तमात्रत्वेऽपीत्यनेन वेदस्य निमित्तमात्रत्वे प्रमाणत्वेऽपि गुणकतिपयत्वादियुक्त्याभासाश्रयणेनानन्तगुणत्वे गुणाभेदे च प्रमाणत्वाभाव इति 'उभयव्यपदेशात्' इत्याद्यधिकरणव्यावर्त्यस्येतरे त्वित्यादिना च तद्व्यावर्त्यस्यैव पुनः केचिदित्यनेनारूपवदित्याद्यधिकरणव्यावर्त्यस्य विप्रतिपत्तिविशेषस्य कथनमिति द्रष्टव्यम् ।

प०— **युक्तिवाक्याभासेति** ॥ युक्त्याभासवाक्याभासेत्यर्थः ॥

श्री०— **विग्रहवन्तं** प्राकृतदेहवन्तम् ।

च०— **उपचारेणेति** ॥ तथाच गौणोपकारकताया एव प्रकृतेऽभिप्रेततया तावतैव निर्णयविषयविषयकता सङ्गच्छत इत्याशयः ॥

**सु०— तत्र तावद्ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति षष्ठीसमासो न पुनर्धर्माय जिज्ञासेतिवच्चतुर्थीसमासः । तादर्थ्यसमासे प्रकृतिग्रहणं कर्तव्यमिति वार्तिककृता प्रकृतिविकारभाव एव चतुर्थीसमासस्य नियमितत्वात् । तथैवोदाहरणं यूपाय दारु यूपदार्विति । प्रकृतिविकारभावरहितेषु चाश्वघासादिष्वश्वघासादयः षष्ठीसमासा भवन्तीति प्रतिविहितम् । न चात्र प्रकृतिविकारभावोऽस्ति । षष्ठीसमासेऽपि केचिच्छेषे षष्ठीति प्रतिपन्नाः । केचित्कर्मणीति । तत्र कर्मणि षष्ठीपरिग्रहाय जिज्ञास्य इत्युक्तम् । कृत्यानां कर्मणि स्मरणात् । अन्यथा जिज्ञासास्येत्यवक्ष्यत् । जिज्ञासा खलु कर्मापेक्षा विना कर्मणा न ज्ञातुं शक्या न तु सम्बन्धिनं विनेति कर्मणः प्राधान्यात्तदेव वक्तव्यम् । सम्बन्धिसामान्योक्तावर्थात्कर्मापि लभ्यत इति चेन्न ।**

**साक्षात्प्रतीतपरित्यागेनार्थलभ्यस्वीकारस्य वैयर्थ्यात् । एवं सति लक्षणादिजिज्ञासाऽपि प्रतिज्ञाता स्यादिति चेन्न । तस्या विनाऽप्यभिधानेन लाभात् । न हि लक्षणादिजिज्ञासा-मन्तरेण ब्रह्मजिज्ञासाऽस्ति । अन्यथाऽनेकविषयत्वेन शास्त्रभेदप्रसङ्गः । निर्विषयताशङ्कापनोदार्थं प्रयुक्तं पदमिदं कर्माभिधाय्येव युक्तम् । तद्विजिज्ञासस्वेत्यादिश्रुत्यर्थानुगतं चैवं सति सूत्रं स्यात् ।**

वा०— एवं ब्रह्मणो जिज्ञासाविषयत्वानुपपत्तिपरिहारसूचकत्वेन जिज्ञास्योऽयमिति भाष्यं व्याख्याय जिज्ञास्य इति कर्मप्रत्ययान्तनिर्देशस्य सूत्रे कर्मणि षष्ठीपरिग्रहसूचकत्वं वक्तुं धर्मजिज्ञासे-त्यादिवद्ब्रह्मजिज्ञासेत्यत्र चतुर्थीसमासाश्रयणे षष्ठीपरिग्रहायोगात् षष्ठीसमासं तावदुपपादयति ॥ **तत्रेति** ॥ वक्ष्यमाणषष्ठीविशेषप्रतिपादनापेक्षस्तावच्छब्दः ॥ **चतुर्थीसमास इति** । वृत्तिकारान्तरोक्त इति शेषः । चतुर्थीसमासाभावे हेतुमाह ॥ **तादर्थ्येति** ॥ 'चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गोऽविशेषात्' इति वार्तिकलब्धार्थकथनमेतदिति द्रष्टव्यम् । उपलक्षणं चैतत् । भाष्योक्तज्ञापकबलतोऽपि तत्सिद्धिरित्यपि द्रष्टव्यम् । प्रकृतिविकृतिभाव एव तादर्थ्यचतुर्थीसमासाश्रयणेऽश्वघासादिषु तादर्थ्यसमासो न स्यादित्यतो वार्तिककृता 'विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसङ्ख्यानम्' इत्यश्वघासादीनामुपसङ्ख्यान उक्तेऽपि तदर्थमात्रेण समासस्य सूत्रकाराभिमतत्वे भूतबलिरित्यादावपि तदर्थेत्यनेनैव समाससिद्धेर्बलिरक्षितग्रहणं पृथक् न कर्तव्यं स्यादिति तत्करणरूपाचार्यप्रवृत्तिरूपज्ञापकाश्रयणेन प्रकारान्तरेणैव वार्तिकप्रयोजनसिद्ध्या विकृतिः प्रकृत्येति वार्तिकं प्रत्याचक्षाणेन भाष्यकारेणाश्वघासादयः षष्ठीसमासा भविष्यन्ति इति समासान्तरविधानान्नानुपपत्तिरित्याह ॥ **प्रकृतीति** ॥ भाष्यकृतेति शेषः । ( चतुर्थी तदर्थार्थेत्यत्र वार्तिकम् । चतुर्थी तदर्थमात्रेणेति चेत्तर्हि सर्वप्रसङ्गोऽविशेषात् विकृतिः प्रकृत्येति चेदश्वघासादीना-मुपसङ्ख्यानमिति । अस्यार्थः । सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण समासप्रसङ्गः । रन्धनाय स्थाली अवहननायोलूखलमित्यादावपि समासः प्रसज्येत विशेषज्ञापकाभावात् । यदि विकृतिवाची चतुर्थ्यन्त-शब्दः प्रकृतिवाचिना समस्यत इति विशिष्यते तदा सर्वप्रसङ्गः परिहृतो भवति । किन्त्वश्वाय घासो-ऽश्वघास इति समासो न प्राप्नोति । प्रकृतिविकाराभावात् । अतस्तत्सङ्ग्रहार्थमुपसङ्ख्यानं यत्नान्तरं कर्तव्यमिति । तथा चैतद्वार्तिकानुसारेण शबरेण धर्माय जिज्ञासेत्येव विग्रहः प्रदर्शितः । चतुर्थी-तदर्थार्थबलिहितसुखरक्षितैः । चतुर्थ्यन्तार्थाय यत्तद्वाचिनाऽर्थादिभिश्च चतुर्थ्यन्तं समस्यते वा स तत्पुरुषः । तदर्थेन प्रकृतिविकृतिभाव एव । बलिरक्षितग्रहणाज्ज्ञापकात् । यूपाय दारु यूपदारु । नेह रन्धनाय स्थाली । अश्वघासादयस्तु षष्ठीसमासाः । अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् । द्विजायायं द्विजार्थः सूपः । द्विजार्था यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् ।

गोमुखम् । गोरक्षितम् ) । एवं चाश्वघासादयः षष्ठीसमासा भविष्यन्तीति वाचस्पतिग्रन्थस्यावतरणं कात्यायनेनैव समासान्तरमुपसङ्ख्यातमित्याहेति कल्पतरुकृतं तदज्ञानमूलकमिति द्रष्टव्यम् । एवं च भाष्यकृन्मतमनाश्रित्य यथास्थितपाणिनिमतमेव वाऽश्वघासादिष्वस्यापि निवेशमभ्युपेत्याश्वघासादिषु चतुर्थीसमासोपसङ्ख्यानपरवार्तिककृन्मतं वाऽऽश्रित्य प्राचि तन्त्रे चतुर्थीसमासप्रदर्शनम् । भाष्यकृदुक्तरीत्या तन्मतयोरस्वारस्याद्भाष्यकृन्मतमेवाश्रित्य न पुनर्धर्माय जिज्ञासेतिवच्चतुर्थीसमास इति स्वयं तन्निषेधः कृतः । भाष्यकृदुक्तिभयादेव भट्टवार्तिके 'धर्माय जिज्ञासेत्यर्थप्रदर्शनं भाष्ये, षष्ठीसमास एव युक्त' इत्युक्तमिति ध्येयम् । एवं षष्ठीसमासं सिद्धवत्कृत्य विवक्षितमर्थमाह ॥ **षष्ठीति** ॥ **कृत्यानामिति** ॥ 'तयोरेव कृत्यक्तखलर्थाः' इति स्मरणादित्यर्थः । ननु शेषषष्ठीपरिग्रहस्यापि सम्भवे कर्मषष्ठ्या एव परिग्रहे न बीजमित्यतो जिज्ञासाया ज्ञानं विना ज्ञानस्य च सकर्मकतया कर्म विना प्रतिपत्तुमशक्यतया प्रतिपत्त्यनुबन्धित्वात्कर्मणो जिज्ञासायास्तदपेक्षावदतादृशसम्बन्धिमात्रापेक्षाभावेन कर्मणः प्राधान्यात्कर्मषष्ठी-परिग्रहो युक्त इत्याशयेनाह ॥ **जिज्ञासेति** ॥ ननु शेषषष्ठीपरिग्रहेऽपि तस्याः सम्बन्धिसामान्यार्थकत्वेऽपि सामान्यस्य व्यवहारानुपयोगितयाऽन्यतमविशेषविषयकत्वेऽवश्याश्रयणीये प्रकरणोपपदरूपविशेषान्तर-ज्ञापकाभावे जिज्ञासारूपक्रियोपादानेन क्रियाकारकत्वसम्बन्धाश्रयणे च सकर्मकक्रियायाः कर्माभ्यर्हितमिति कर्मतया ब्रह्म लभ्यत इति कर्मषष्ठीपरिग्रहो व्यर्थ इत्याशङ्कते ॥ **सम्बन्धीति** ॥ अपिशब्दस्योक्तावपीति सम्बन्धः । अत्र सम्बन्धिसामान्योक्तावित्यनेनेदं ध्वनितम् । 'षष्ठी शेष' इत्यत्र न कर्मादिभ्योऽन्यः स्वस्वाम्यादिः शेषो विवक्षितो येन षष्ठ्या कर्मालाभः । तस्य 'यद्येवं शेषो न कल्प्यते न हि कर्मादिभ्योऽन्येऽर्थाः' इत्यादिना भाष्ये निराकरणादपि तु कर्मादीनामविवक्षा शेष इत्युक्तरीत्या सम्बन्ध-सामान्यमतो नानुपपत्तिरिति । उभयत्र षष्ठीविधानाविशेषे कर्मषष्ठीसमासपक्षाश्रयणेन स्वाभिमतकर्म-रूपार्थस्य साक्षात्प्रतीतिसम्भवेऽप्यर्थान्तरमुपादाय तन्मुखेन स्वाभिप्रेतार्थं प्रतिपद्यमानस्य वृथा प्रयासः स्यादित्याह ॥ **साक्षादिति** ॥ ननु न कर्ममात्रलाभाय शेषषष्ठीपरिग्रहो येनोक्तरीत्या वैयर्थ्यं किन्तु येन जिज्ञासितेन विना न ब्रह्म जिज्ञासितं भवति तस्य सर्वस्य ब्रह्मसम्बन्धिनो जिज्ञास्यत्वेन प्रतिज्ञानाय सः । कर्मापि तदन्तर्भूतमित्येवातो नानुपपत्तिः शेषषष्ठीपरिग्रहपक्ष इत्याशङ्कते ॥ **एवं सतीति** ॥ अत्र ब्रह्मकर्मकजिज्ञासायाः तल्लक्षणप्रमाणादिजिज्ञासाव्यतिरिक्ताया अभावात्तज्ज्ञानसाधनफलादि-जिज्ञासायास्तद्व्यतिरिक्तत्वेऽपि ज्ञानेनाप्तुमिष्टतमत्वेन प्रधानभूते ब्रह्मणि जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्मजिज्ञासा न सम्पूर्यते तज्जिज्ञासाया अर्थाक्षिप्ततया लाभेनाभिधानानावश्यकतया वैयर्थ्यमेवेत्याशयेनाह ॥ **तस्या इति** ॥ अत एव न हीत्युत्तरग्रन्थो लक्षणप्रमाणजिज्ञासामन्तरेण तज्जिज्ञासैव नास्ति तज्ज्ञानसाधनफलादिजिज्ञासामन्तरेण ब्रह्मजिज्ञासा न सम्पूर्णा भवतीत्युभयथा

व्याख्येय: ॥ **अन्यथेति** ॥ लक्षणादिजिज्ञासाया ब्रह्मजिज्ञासापूर्त्यर्थत्वमनङ्गीकृत्य स्वातन्त्र्याभ्युपगम इत्यर्थ: ॥ **निर्विषयतेति** ॥ अनेन स्वमतावष्टम्भेन कर्मषष्ठीपरिग्रहे हेतुविशेषमभिदधता परमते ब्रह्मणो ज्ञानकर्मत्वासम्भवात्कर्मषष्ठीपरिग्रहोऽनुपपन्न इति सूचितम् । अत एव भामतीविवरणयोर्जिज्ञासापदेनैव विषयसूचनमभ्युपेतमिति द्रष्टव्यम् ।

स०— **विनाप्यभिधानेनेति** ॥ प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति न पृथक् सूत्रयितव्यानि यथा राजाऽसौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वदिति भाव: ॥ **अन्यथेति** ॥ ब्रह्मजिज्ञासाया लक्षणादि-जिज्ञासानपेक्षत्वे स्वप्राधान्येन लक्षणादीनां जिज्ञास्यत्वे चेत्यर्थ: ॥ **निर्विषयतेति** ॥ विषयाद्यभि-धानार्थत्वात्सूत्रस्य अन्यथाऽनपेक्षिताभिधानं स्यादित्यर्थ: । किं च 'यतो वा इमानि भूतानि जायन्त' इत्याद्या: श्रुतय: 'तद्विजिज्ञासस्व तद्ब्रह्मे'ति प्रत्यक्षमेव ब्रह्मणो जिज्ञासा कर्मत्वं दर्शयन्ति । अतस्तदनु-गमार्थं सूत्रे ब्रह्मण इति कर्मणि षष्ठी परिग्राह्येत्याह ॥ **तदिति** ॥

प०— 'जिज्ञासाऽस्य विधीयत' इति वक्तव्ये जिज्ञास्योऽयं विधीयत इत्युक्ते: कृत्यं वक्तुमाह ॥ **तत्र तावदित्यादिना** ॥ तत्र सूत्र इत्यर्थ: । सा च कर्मणीति पश्चाद्वक्ष्याम इति तावच्छब्द: ॥ **षष्ठीसमास इति** ॥ षष्ठीति सूत्रेणेति भाव: । वृत्तिकारादिमतं निराह ॥ **न पुनरिति** ॥ **इतिवदिति** ॥ 'अथातो धर्मजिज्ञासा' इति जैमिनिसूत्रे तद्भाष्यकारादिभिरुक्तदिशेति भाव: । इतिवदिति दृष्टान्तोक्ति: वक्ष्यमाणगतार्थताशङ्कोपयोगायेति ज्ञेयम् । कुतो नेत्यत आह ॥ **तादर्थ्येति** ॥ 'चतुर्थीतदर्थार्थबलि-हितसुखरक्षितै:' इति चतुर्थ्यन्तं तदर्थादिभि: समस्यत इति चतुर्थीसमासविधायकसूत्रे वार्तिकं तादर्थ्येत्यादि । तस्यार्थ: । तदर्थमिदमित्येतदर्थवाचकयो: पदयो: समासेऽभिमते प्रकृतिग्रहणं कर्तव्यं उपादानग्रहणं कर्तव्यम् । उपादानोपादेयभावापन्नार्थवाचिनोरेव समास इत्यवगन्तव्यमिति । कथं तर्हि अश्वाय घासोऽश्वघास इति समास इत्यतो भाष्यकाराद्युक्तिमेवाह ॥ **प्रकृतीति** ॥ **प्रतिविहितमिति** ॥ प्रतिविधानं निषेध: । चतुर्थीसमासो निषिद्ध इत्यर्थ: । अत एव तन्त्रवार्तिके धर्मजिज्ञासयो: यूपदार्वादिवत्प्रकृतिविकृतिभावाभावाच्चतुर्थीसमासविरोधमाशङ्क्य फलितप्रदर्शनपरतया शाबरभाष्यं भट्टेन व्याख्यातमिति भाव: ॥ **न चात्रेति** ॥ ब्रह्मजिज्ञासेत्यत्रेत्यर्थ: ॥ **केचिच्छेषेति** ॥ 'षष्ठी शेष' इति सूत्रेण कारकप्रातिपदिकार्थव्यतिरिक्ते सम्बन्धसामान्ये विवक्षिते षष्ठी भवतीति विहितषष्ठ्यन्तस्य समास इत्यर्थ: ॥ **कर्मणीति** ॥ 'कर्तृकर्मणो: कृती'ति कर्मणि षष्ठीत्यर्थ: । ब्रह्मजिज्ञासेत्यत्र कर्मणि षष्ठी-समास इत्यत्र जिज्ञास्य इति भाष्यं कथं ज्ञापकमित्यत आह ॥ **कृत्यानामिति** ॥ सन्प्रत्ययान्तजिज्ञास-

शब्दात् 'अचो यत्' इति सूत्रेण यत्प्रत्यये 'अतो लोप' इति सूत्रेणाकारलोपे जिज्ञास्य इति निष्पन्नत्वात् । यत्प्रत्ययस्य च 'कृत्याः प्राङ्ण्वुल' इति सूत्रेण कृत्यसंज्ञकत्वात् । कृत्यसंज्ञकप्रत्ययानां च 'तयोरेव कृत्यक्तखलर्थाः' इति सूत्रेण भावकर्मणोर्विधानादित्यर्थः । तथा च जिज्ञास्यः जिज्ञासा-कर्मेत्यर्थो लभ्यत इति भावः । कर्मणि षष्ठीसमासग्रहे का युक्तिरित्यत आह ॥ **जिज्ञासा खल्विति** ॥ **एवं सतीति** ॥ शेषे षष्ठीसमासग्रहे सति लक्षणप्रमाणसाधनफलानामध्यायचतुष्टये वक्ष्यमाणानामपि जिज्ञासा प्रतिज्ञाता स्यात् । अन्यथाऽप्रतिज्ञातकीर्तनमप्रेतनं स्यादित्यर्थः ॥ **तस्या इति** ॥ लक्षणादि-जिज्ञासाया इत्यर्थः । ब्रह्मजिज्ञासयैव नान्तरीयकतया तल्लाभं व्यनक्ति ॥ **न हीति** ॥ **अन्यथेति** ॥ ब्रह्मजिज्ञासयैव लक्षणादिजिज्ञासाया अलाभे स्वातन्त्र्येण जिज्ञास्यत्व इत्यर्थः । कर्मणि षष्ठीग्रहे युक्त्यन्तरद्वयं निर्विषयताशङ्केत्यादि तद्विजिज्ञासस्वेति च ॥ **पदमिदमिति** ॥ सौत्रब्रह्मपदमित्यर्थः ॥ **श्रुत्यर्थेति** ॥ श्रुतौ तत्पदस्य द्वितीयान्तत्वादिति भावः ॥

**या०**— ननु धर्मजिज्ञासेत्यादाविवात्रापि चतुर्थीसमासाश्रयणमेव युक्तम् । तथा हि । चतुर्थी तदर्थार्थेत्यत्र वार्तिकम् । 'चतुर्थी तदर्थमात्रेणेति चेत्तर्हि सर्वप्रसङ्गोऽविशेषात् । प्रकृतिविकृत्योः इति चेत् अश्वघासादीनामुपसङ्ख्यानम्' इति । अस्यार्थः । सर्वप्रसङ्गः सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण समासप्रसङ्गः । रन्धनाय स्थाली अवहननायोलूखलमित्यादावपि समासः प्रसज्येतेत्यर्थः । यदि विकृतिवाची चतुर्थ्यन्तशब्दः प्रकृतिवाचिना समस्यत इति विशिष्यते तदा सर्वप्रसङ्गः परिहृतो भवति । तथा च अश्वाय घासोऽश्वघास इति समासो न प्राप्नोति । प्रकृतिविकारभावाभावात् । अतस्तत्सङ्ग्र-हार्थमुपसङ्ख्यानं यत्नान्तरं कर्तव्यमिति । तथा चैतद्वार्तिकानुसारिणा शबरेण धर्माय जिज्ञासेत्येव विग्रहः प्रदर्शितः । अतोऽत्रापि तत्रेव चतुर्थीसमासप्रदर्शनमेव कार्यं न षष्ठीसमासप्रदर्शनमित्यत आह ॥ **न पुनर्धर्मायेति** ॥ 'तादर्थ्यसमासे प्रकृतिग्रहणं कर्तव्यम्' इत्युक्तवार्तिकार्थानुवादोऽयमिति द्रष्टव्यम् । वार्तिककृतेत्युपलक्षणम् । भाष्यकारेणापीत्यपि द्रष्टव्यम् । तथाहि भाष्यम् । 'यदि हि तदर्थसमासः तदर्थमात्रविषयः स्यात्कुबेराय बलिः कुबेरार्थो भवति । अश्वाय रक्षितमश्वार्थं भवतीति । कुबेरबलि-रक्षितमिति समासयोस्तदर्थसमासविधिनैव सिद्धेः पृथग्बलिरक्षितग्रहणं कर्तव्यं न स्यात् । तत्कृतं ज्ञापयति तदर्थसमासः प्रकृतिविकृतिमात्रविषय' इति । नन्वेवं चेत्कथमश्वघासादीनामुपसङ्ख्यानमिति वार्तिकमित्यत आह ॥ **प्रकृतिविकारभावरहितेष्विति** ॥ प्रतिविहितं भाष्यकृतेति शेषः । 'अश्वघासादिषु षष्ठीचतुर्थीसमासयोः स्वरवैषम्याभावेन षष्ठीसमासस्यैवोपपत्तेः' इति भाष्यकारेण वार्तिककारीयमुपसङ्ख्यानं प्रत्याख्यातम् । अतो न तदाश्रयेणेह चतुर्थीसमासाश्रयणं युक्तमित्यर्थः ।

नन्वश्वघासादिषु स्वरवैषम्याभावे षष्ठीसमास एवाश्रयणीय इत्यत्र किं नियामकं चतुर्थीसमासाश्रयणेऽपि बाधकाभावादित्यत उक्तम् ॥ **प्रकृतिविकारभावरहितेष्विति** ॥ अश्वघासादिषु चतुर्थीसमासो हि तादर्थ्ये वक्तव्यः । तदर्थसमासे च सर्वत्र प्रकृतिविकार आवश्यक इत्युपपादितम् । न चासावश्वघासादिष्वस्ति । अतः षष्ठीसमास एवात्रेति नियम्यत इत्ययुक्तमुपसङ्ख्यानमिति भावः । अत एवेदं भाष्यकारीयं वार्तिकप्रत्याख्यानमालोच्य भट्टाचार्येण धर्माय जिज्ञासेति शबरवचनं 'षष्ठीसमासबललब्धार्थिकार्थप्रदर्शनपरम् । न तु विग्रहप्रदर्शनपरम् । तस्य ज्ञातुमिच्छेति निगमनवाक्येन षष्ठीसमासविधानात्' इति व्याख्यातमिति ॥ **कृत्यानां कर्मणीति** ॥ 'तयोरेव कृत्यक्तखलर्थाः' इति वचनादिति भावः ॥ **न तु सम्बन्धिन इति** ॥ जिज्ञास्यवस्त्वज्ञाने यथा जिज्ञासाया न ज्ञानमेवं सम्बन्धिसामान्याज्ञाने न जिज्ञासाज्ञानविलम्ब इति भावः ॥ **विनाऽप्यभिधानेनेति** ॥ प्रधाने जिज्ञासाकर्मणि गृहीते यावतां जिज्ञासां विना ब्रह्म जिज्ञासितं न भवति तावतां जिज्ञासाऽप्यर्थाल्लभ्यत एवातो न तानि पृथक् सूत्रयितव्यानि । यथा राजाऽसौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वदित्यर्थः ॥ **अन्यथेति** ॥ उक्तरीत्या लक्षणादीनां ब्रह्मजिज्ञासायामपेक्षितत्वेनाजिज्ञास्यत्वे स्वातन्त्र्येण जिज्ञास्यत्वे चेत्यर्थः ॥ **श्रुत्यर्थानुगतमिति** ॥ श्रुतौ तदिति कर्मत्वार्थकद्वितीयाप्रयोगादिति भावः ॥

श्री०— ननु धर्माय जिज्ञासेतिवदत्रापि चतुर्थीसमास एव किं न स्यादित्यत आह ॥ **तादर्थ्येति** ॥ 'चतुर्थी तदर्थार्थे'त्यादि सूत्रेण तादर्थ्ये चतुर्थीसमासो वाच्यः । तादर्थ्यमित्यस्य प्रकृतिविकृतिभाव एवार्थो विवक्षितः । 'प्रकृतिरुपादानम् । प्रकृतिविकृतिभाव एवेष्टिः' इत्युक्तत्वात् । यूपाय दार्वित्यत्रोपादानोपादेयभावसद्भावादश्वाय घासोऽश्वघास इत्यत्र प्रकृतिविकारभावाभावात् कथं चतुर्थीसमास इत्याशङ्क्य षष्ठीसमास एव तत्र विहितः । एवं चात्र प्रकृतिविकारभावाभावाच्चतुर्थीसमासो न युक्त इत्याशयः ॥

च०— जिज्ञास्य इति कर्मसाधनकृत्यान्तनिर्देशेन समासावयवभूतब्रह्मपदप्रकृतिका 'कर्तृकर्मणोः' इति लक्षणलक्षिता कर्मणि षष्ठ्येव सुपो धात्वित्यनेन लुप्यते न चतुर्थीति ध्वन्यत इत्यभिधित्समानः चतुर्थीसमासं प्रतिविधित्सते ॥ **तत्र तावदिति** ॥ प्रकृत्यंशेन सर्वनाम्ना प्रकृतसूत्रं परामृश्यते तत्प्रकृतिकसप्तम्या च समासान्वयिनी घटकतोच्यते । अथ चतुर्थीतदर्थमात्रेणेति चेत्तर्हि सर्वप्रसङ्गोऽविशेषात्प्रकृतिविकृत्योरिति चेदश्वघासादीनामुपसङ्ख्यानमिति भाष्ये रन्धनाय स्थाली अवहननायोलूखलमित्यादावपि सर्वत्र समासापत्त्या विकृतिवाचकचतुर्थ्यन्तशब्द एव प्रकृतिवाचिना समस्यत इति विवक्षायां

दर्शितापत्तिविधूननेऽप्यश्वाय घास इत्यत्र चतुर्थ्यन्तस्य विकृतिवाचकताविरहेण चतुर्थीसमासानिर्वाह-प्रसङ्गापनुत्तये यत्नान्तरमेवानुष्ठेयमिति वार्तिककृन्मतमभ्यधाद्भाष्यकार इति तादृग्वार्तिकमनुरुन्धानः शबरोऽपि धर्मजिज्ञासेतिसमासवाक्यस्य धर्माय जिज्ञासेत्येव विग्रहवाक्यं प्रादर्शयदिति तद्दिशा प्रकृतेऽपि चतुर्थीसमास एवाश्रयणीय इत्यत आह ॥ **न पुनरिति ॥ वार्तिककृतेति** ॥ भाष्यकृताचेत्यपि पूरणीयम् । यदि हि तदर्थसमासस्तदर्थमात्रविषयः स्यात्कुबेराय बलिः कुबेरार्थो भवति । अश्वाय रक्षितमश्वार्थं भवतीति कुबेरबल्यश्वरक्षितयोस्तदर्थसमासविधिनैव सिद्धेः पृथग्बलिरक्षितग्रहणं न कर्तव्यं स्यात्तत्कृतं ज्ञापयति तदर्थसमासः प्रकृतिविकृतिमात्रविषय इति भाष्याक्षरानुपूर्व्याः सत्वात् ॥ **प्रतिविहितमिति** ॥ भाष्यकृतेति पूरणीयम् ।• षष्ठीचतुर्थीसमासयोः स्वरवैषम्याभावेनाश्वघासादिषु षष्ठीसमासस्यैवोपपत्तिरिति भाष्यदृग्वार्तिकं प्रत्याचख्याविति न तच्छङ्कावकाश इत्यर्थः । अत एव तादृशप्रत्याख्यातिप्रतिसंहितिमान् दर्शितशबरवचनं व्याचक्षाणोऽपि षष्ठीसमासलब्धार्थकथनपरतयैव तादृग्वचनं निनायेति मन्तव्यम् ॥ **प्रतिपन्ना इति** ॥ प्रतिपत्तिनिरूपिताश्रयतारूपकर्तृत्वविशेषिता इत्यर्थः । 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चे'ति कर्तरि गत्यर्थकप्रकृतिकनिष्ठाया अनु-शासनात् । **कृत्यानां कर्मणीति** । 'तयोरेव कृत्यक्तखलर्थाः' इति स्मृतेरिति भावः ॥ **प्राधान्यादिति** ॥ सविषयकाणां विषयविनिर्मोकेण भानानुपगमेन विषयितया विषयविशेषितज्ञानविशेषितेच्छाविषयकाव-गतित्वावच्छिन्नं प्रति विशिष्टप्रतियोगिकवैशिष्ट्यावगाहिज्ञाने विशेषणतावच्छेदकप्रकारकनिर्णयविधया तादृशप्रत्यासत्त्या विषयप्रकारकज्ञानस्य हेतुतावत्सम्बन्धित्वावच्छिन्नावगाहिज्ञानस्य कया कयाऽपि विधया हेतुत्वाभावेन विषयविशेषितज्ञानविशेषितेच्छाविषयिताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेद-कीभूतविषयितासंसर्गावच्छिन्नप्रकारतापन्नत्वरूपप्राधान्यादिति भावः ॥ **कर्मापि लभ्यत इति** ॥ निरूपितत्वप्रत्यासत्या प्रकृत्यर्थब्रह्मविशेषितषष्ठ्युपस्थाप्यतावच्छेदकीभूतसम्बन्धत्वावच्छिन्नवृत्तिविषयतायाः सम्बन्धत्वाक्रान्तकर्मत्ववृत्तित्वानपायेन तादृशकर्मत्वाश्रयस्यापि शाब्दधीविषयता सङ्गच्छत इति भावः । **साक्षादिति** ॥ कर्मत्वत्वरूपविशेषधर्मोपरागेणान्वयबोधे भानमनादृत्य तद्व्यापकसम्बन्धत्वोपरागेण भानोपगतेः अनौचित्यादिति भावः ॥ **एवं सतीति** ॥ दर्शितसामान्यधर्मोपरक्तभानोपगम इत्यर्थः ॥ **प्रतिज्ञातेति** ॥ लक्षणजिज्ञासाया अपि ब्रह्मसम्बन्धित्वाक्षतेरिति भावः ॥ **विनाप्यभिधानेनेति** ॥ यावतोऽनुयायिवर्गस्य गमनमन्तरेण राज्ञोपगमनं न सङ्गच्छते तावद्गमनं यथा राजाऽसौ गच्छतीति वाक्यात्प्रतीयते तद्वत् यावतां जिज्ञासामन्तरेण ब्रह्मजिज्ञासा न घटते तावज्जिज्ञासायाः ब्रह्मजिज्ञासापदेनैव प्रतीतेरिति भावः ॥ **अन्यथेति** ॥ स्वातन्त्र्येण लक्षणजिज्ञास्यतायाम् ॥ **श्रुत्यर्थानुगतमिति** ॥ श्रुतौ सर्वनामप्रकृतिकायाः कर्मणि द्वितीयेत्यनुशिष्टायाः कर्मत्वार्थकद्वितीयायाः समभिव्याहारादिति भावः ॥

सु०— ननु च 'प्रतिपदविधाना षष्ठी न समस्यत' इति कर्मणि षष्ठ्याः समासः प्रतिषिध्यत इति चेन्न । 'कृद्योगलक्षणा च षष्ठी समस्यत' इति प्रतिप्रसवात् ।

व्या०— नन्वस्याः शेषषष्ठीत्वमनभ्युपगम्य कर्मषष्ठीत्वाभ्युपगमे 'कर्तृकर्मणोः कृति' इति प्राप्तषष्ठ्या अपि प्रतिपदविधानत्वात्समासानुपपत्तिरित्याशङ्कते ॥ **नन्विति** ॥ षष्ठीशेष इत्येतदतिरिक्ता प्रतिपदविधानेत्यर्थः । (प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम् । सर्पिषो ज्ञानम् ) । कृतीति कृच्छब्दोपादानेन विहितस्वरूपषष्ठ्याः प्रतिप्रसवान्नानुपपत्तिरित्याह ॥ **कृद्योगेति** ॥ ( कृद्योगा च षष्ठी समस्यत इति वाच्यम् । इध्मप्रव्रश्चनः ) । एतच्छङ्कासमाधाने च वार्तिकद्वयारम्भमभ्युपेत्य यदा तु 'ज्ञोविदर्थस्य करणे' इत्यादिप्रकरणे षष्ठी शेष इत्यतः शेषग्रहणानुवृत्तेर्न माषाणामश्नीयादित्यादिवत् ज्ञोविदर्थस्येत्यादिविषयेऽपि षष्ठी शेष इत्यनेनैव षष्ठी सिद्धेः षष्ठीप्रकरणारम्भवैयर्थ्ये प्राप्ते षष्ठी भवत्येव श्रूयत एव न लुप्यत इति समासप्रयुक्तलोपनिषेधेन समासनिवृत्तिफलकनियमार्थत्वान्न प्रकरणवैयर्थ्यमिति प्रकरणारम्भसामर्थ्यादेव सर्पिषो ज्ञानमित्यादौ समासनिषेधस्य लाभात्प्रतिपदविधानेति वार्तिकानारम्भः तत एव कृद्योगवार्तिकानारम्भश्च तदा ज्ञोविदर्थस्येत्यादौ शेषग्रहणानुवृत्तावपि 'कर्तृकर्मणोः कृती'त्यत्र शेषग्रहणाननुवृत्त्या कारकषष्ठ्या लक्षणान्तराप्राप्ताया एवानेन विधानादेतत्प्रतिषेधाप्रसक्तेर्न काऽप्यनुपपत्तिरिति द्रष्टव्यम् । नन्वत्राप्यनुपपत्त्यन्तरमस्त्येव । तथा हि । कर्तृकर्मणोः कृतीत्यस्या अनभिहिताधिकारविहितत्वादनभिहिताधिकारविहितद्वितीयापवादकत्वाच्चाकर्मकेभ्योऽनभिहितकर्तृमात्रे सकर्मकेभ्यश्च कर्तृकर्मणोर्यदनभिहितं तत्र प्रवृत्तेः सकर्मकेभ्यो भावे कृत्युभयोरनभिहिततयोभयत्रापि षष्ठीप्रसक्तौ कर्तरि तृतीयैव न षष्ठीत्युभयत्र प्रसक्तषष्ठीनियमार्थं प्रवृत्तेनोभयप्राप्तौ कर्मणीत्यनेन 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति कर्तृकर्मणोः कृतीति प्राप्तषष्ठ्या एवोभयप्राप्तिविषये कर्मण्येव षष्ठीति नियमनात् । ब्रह्मजिज्ञासेत्यत्र च कर्त्रनिर्देशेऽपि मुमुक्षुरूपकर्तुर्गम्यमानत्वादुभयप्राप्तौ कर्मणीत्यत्र चोभयस्मिन्निति वक्तव्ये प्राप्तिग्रहणेन कर्तृकर्मणोरप्रयोगेऽपि गम्यमानत्वेनाऽपि प्रसक्तिमात्रस्य सूचितत्वादन्तर्धौ येनादर्शनमित्यत्र कर्मतयाऽऽत्मन इत्यस्य गम्यमानत्वादुभयप्राप्तिवत्प्रकृतेऽप्युभयप्राप्तेः सम्भवेनैतत्सूत्रप्रापितषष्ठ्याः समासस्य कर्मणि चेति प्रतिषेधात्समासानुपपत्तिस्तदवस्थैवेति चेन्न । अकाराकारयोः प्रयोगे प्रतिषेधो नेति वार्तिकेनोभयप्राप्तौ कर्मणीति नियमलब्धकर्तृषष्ठीप्रतिषेधस्य निराकरणेनाकाकारप्रयोगे उभयप्राप्ताचित्यस्याप्राप्तेश्चिकीर्षा देवदत्तस्य कटस्येत्यादाविव ब्रह्मजिज्ञासेत्यत्रापि जिज्ञासाशब्दस्य अःप्रत्ययादित्यप्रत्ययान्तरत्वेनोभयप्राप्तावित्यस्याप्राप्तौ ब्रह्मणः कर्मत्वस्य च विवक्षितत्वात् कर्तृकर्मणोः कृतीति प्राप्तषष्ठीसमासस्य निरपवादत्वात् । न च कर्मणि चेत्येव कर्तृकर्मणोरिति प्राप्तषष्ठ्या अपि समासापवाद

इति वाच्यम् । कर्मणि चेत्यत्र किञ्चित्कर्मषष्ठीग्रहणेऽपां स्रष्टेत्यादावप्यनेनैव षष्ठीसमासप्रतिषेधसिद्धेः यौक्तमते 'तृजकाभ्यां कर्तरि' इत्यस्य जयादित्यमते 'कर्तरि च' इत्यस्य वैयर्थ्यापत्त्या निपातानामनेकार्थत्वादितीत्यर्थकचशब्देन कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थलाभात् 'कर्मणि च' इत्यनेनोभयप्राप्ताविति प्राप्तषष्ठीसमासनिषेधसिद्धावपि 'कर्तृकर्मणोः कृती'ति प्राप्तसमासनिषेधासिद्धेः । एवं च शेषग्रहणानुवृत्तिलब्धनियमप्रयुक्तस्य वा कर्मणि चेत्येतत्प्रयुक्तस्य वा समासनिषेधस्याप्रसक्तेर्धर्मजिज्ञासा देवदत्तस्य शिष्यस्याचार्यशुश्रूषेत्यादिवद्ब्रह्मजिज्ञासेत्यपि समासो युक्त एवेति दिक् । [ षष्ठी शेषे । कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधोदकस्योपस्कुरुते । भजे शम्भोश्चरणयोः । फलानां तृप्तः ॥ ज्ञोऽविदर्थस्य करणे । जानातेरज्ञानार्थकस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् । सर्पिषो ज्ञानम् ॥ कर्तृकर्मणोः कृति । कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृतिः । जगतः कर्ता कृष्णः । कृति किं तद्धिते मा भूत् । कृतपूर्वी कटम् ॥ उभयप्राप्तौ कर्मणि । उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां दोहोऽगोपेन । स्त्रीप्रत्ययोरकाकारयोर्नायं नियमः । भेदिका बिभित्सा वा रुद्रस्य जगतः । शेषे विभाषा स्त्रीप्रत्यय इत्येके । विचित्रा जगतः कृतिर्हरेर्हरिणा वा । केचिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येणाचार्यस्य वा ॥ अन्तर्धौ येनादर्शनमिच्छति । व्यवधाने सति यत्कर्तृकस्य आत्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् । मातुर्निलीयते कृष्णः । अन्तर्धौ किम् । चोरान्न दिदृक्षते । इच्छतिग्रहणं किम् । अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् ॥ अःप्रत्ययात् । प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । चिकीर्षा पुत्रकाम्या ॥ कर्मणि च । उभयप्राप्तौ कर्मणीति या षष्ठी सा न समस्यते । आश्चर्यो गवां दोहोऽगोपेन । कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः । अपां स्रष्टा । वज्रस्य भर्ता । ओदनस्य पाचकः । जयादित्यमते कर्तरि चेति सूत्रार्थस्तु कर्तरि यौ तृजकौ ताभ्यां सह कर्मणि षष्ठी न समस्यत इति यादुपत्ये प्रदर्शितः । कौमुद्यां तु कर्तृषष्ठ्या अकेन न समासः । भवतः शायिका । नेह तृजनुवर्तते । तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावादित्युक्तम् । तृजकाभ्यां कर्तरीति सूत्रमनोरमायां तु । इह कर्तरीत्यकस्यैव विशेषणं न तु तृचः । अव्यभिचारात् । तथाऽप्युपरञ्जकमात्रमभिप्रेत्याह ॥ कर्त्रर्थेति ॥ जयादित्यस्तु कर्तृषष्ठ्या इति व्याचष्टे । तन्मते तु तृजुत्तरार्थ इति कल्प्यं स्यात् । किञ्च कर्तृग्रहणं तृजकयोरेव विशेषणमिति युक्तम् । तयोः श्रुतत्वान्न तु षष्ठ्या इति भाव इत्युक्तम् । ] इमे च टीकोक्ते शङ्कासमाधाने उक्तशङ्कासमाधानयोरुपलक्षणे इति द्रष्टव्यम् ।

स०— **ननु चेति** ॥ कर्मणि चेति षष्ठ्याः समासो निषिध्यते । निषेधश्चोभयप्राप्तौ कर्मणीति विहितायाः षष्ठ्याः । यदि च या काचन कर्मणि षष्ठी गृह्यते तदा कर्तरि चेति प्रतिषेधं न कुर्यात् । कत्रर्थकतृजकाभ्यां तदनभिहिते कर्मणि षष्ठीसमासप्रतिषेधस्यानेनैव सिद्धत्वात् । तेन कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थः ॥ **न कृदिति** ॥ कर्तृकर्मणोः कृतीति कृच्छब्दोपादानेन या विहिता सा कृद्योगा । ब्रह्मविचारचोदनायां कृतीति विशेषस्याविवक्षितत्वात् उभयप्राप्त्यभावान्नोभयप्राप्तौ कर्मणीति षष्ठी अपि तु कर्तृकर्मणोः कृतीत्यनेनेति कर्मणि समासप्रतिषेधाप्रसङ्गादिध्मप्रव्रश्चनवत्समास इत्यर्थः । ननु जिज्ञासाशब्दस्य सन्नन्तत्वेन कृदन्तत्वाभावात्कथं कर्तृकर्मणोः कृतीति सूत्रेण षष्ठीप्राप्तिरिति चेन्न । अःप्रत्ययादिति सूत्रेण सन्नन्ताज्जिज्ञासाशब्दादकारप्रत्ययस्य कृतो विहितत्वात्कृदन्तत्वोपपत्तेरिति ।

प०— **प्रतिपदेति** ॥ यत्किञ्चित्पदनिमित्तेन विधानवती या षष्ठी 'ज्ञोऽविदर्थस्य करण' इत्यादिषष्ठी तदन्तं पदं तेन निमित्तभूतपदेन न समस्यते । यथा सर्पिषो ज्ञानमित्यादीति द्वितीयेन निर्धारण इति सूत्रे वार्तिककृता निषिद्धत्वादित्यर्थः । इयं च वक्ष्यमाणदिशा प्रतिपदविहितेति भावः ॥ **कृद्योगेति** ॥ कृत्प्रत्यययोगनिमित्तेत्यर्थः । ज्ञाऽवबोधन इत्यस्माद्धातोः 'कर्मणः समानकर्तृकादिच्छायां वा' इतीच्छार्थे सन्प्रत्यये 'सन्यङोः' इति द्विर्वचने हलादिः शेषे ह्रस्व इति सूत्रेण पूर्वस्य ह्रस्वत्वे सन्यत इतीत्वे जिज्ञास इति स्थिते सनस्तृतीय धात्वधिकाराविहितत्वेनाकृत्वेऽपि 'अः प्रत्ययादि'ति सूत्रेण प्रत्ययान्ताद्धातोः अप्रत्ययो भवतीत्यकारप्रत्यये अजाद्यतष्टाबिति टाप्प्रत्यये सवर्णदीर्घे च जिज्ञासेति सिद्ध्यति । 'कृदतिङ्' इति प्राप्तकृत्संज्ञकाकारप्रत्ययस्य स्थाने स्त्रीप्रत्ययस्य स्थाने च प्राप्तसवर्णदीर्घस्याप्यन्तादिवच्चेति सूत्रेण पूर्वस्यान्तवद्भावेन कृत्संज्ञिकतया तदन्तजिज्ञासाशब्दयोगे 'कर्तृकर्मणोः कृति' इति सूत्रेण प्राप्तषष्ठ्यन्तत्वाद्ब्रह्मपदस्य कृद्योगेति वार्तिके प्रतिप्रसवात्समास इत्यर्थः । प्रतिप्रसवो नाम सामान्यतो निषिद्धस्य विषयविशेषेऽभ्यनुज्ञानम् । यत्तु कर्मणि चेति सूत्रेण कर्मणि षष्ठ्याः समासनिषेध इति । तन्न । 'उभयप्राप्तौ कर्मणि' इति सूत्रेण कर्तृकर्मणोर्योगे कर्मणि षष्ठीति विहितषष्ठ्यन्तस्यैव कर्मणि चेति सूत्रेण समासनिषेधो नान्यस्य । यथाऽऽश्चर्यो गवां दोहोऽगोपालेनेत्यादौ । न चेह षष्ठी तत्सूत्रप्राप्ता । सूत्रे कर्मणो ब्रह्मण उपादानेऽपि जिज्ञासायाः कर्तुः सूत्रेऽनुपादानेन प्राप्त्यभावात् । किन्तु 'कर्तृकर्मणोः कृति' इत्यनेनैवेति । अन्यत्तु चन्द्रिकाव्याख्यानेऽवसेयम् ।

या०— **प्रतिपदविधानेति** ॥ पदं पदं प्रति विहिता प्रतिपदविधाना । 'ज्ञोऽविदर्थस्य करण' इत्यादिना विहिता षष्ठी । 'षष्ठी शेष इति विहितां शेषषष्ठीं विहायान्येन विहिता सर्वैव षष्ठी

प्रतिपदविधानेत्यर्थः । इयं च षष्ठी 'कर्तृकर्मणोः कृती'त्यनेन विहितेति प्रतिपदविधानैवेति भावः ॥ **कृद्योगलक्षणा चेति** ॥ कृत्प्रत्ययस्य योगो लक्षणं निमित्तं यस्याः सा कर्तृकर्मणोः कृतीत्यादिना कृतेत्यर्थः । ननु तृतीयाध्याये धात्वधिकरण एव विहितानां कृत्त्वात्सनश्चातथात्वात्कथं जिज्ञासाशब्दस्य कृदन्तत्वमिति चेत् । उच्यते । 'अः प्रत्ययात्' इति सन्नन्तादप्रत्ययस्य विहितत्वात्तस्य 'कृदतिङ्' इति सूत्रेण कृत्संज्ञकत्वाज्जिज्ञासाशब्दस्य कृदन्तत्वोपपत्तेः काऽत्र कथन्तेति । ननु कृद्योगलक्षणा षष्ठीषु अपि कर्मणि या षष्ठी तस्याः समासो (न) कर्मणि चेति सूत्रेण प्रतिषिद्ध इति चेन्न । 'कर्मणि च' इति सूत्रेण कर्मणि षष्ठीमात्रस्य समासप्रतिषेधो न भवति । तथा सति 'कर्तरि च' इति सूत्रवैयर्थ्यप्रसङ्गात् । तेन हि सूत्रेण कर्तरि यौ तृजकौ ताभ्यां सह कर्मणि षष्ठ्याः समासो निषिध्यते । अपां स्रष्टा ओदनस्य भोजक इत्यादौ । न च कर्मणि षष्ठीमात्रस्यात्र समासप्रतिषेधे तत्फलं भवेत् । अतः 'कर्मणि च' इति सूत्रे चकार इति नकारार्थः । कर्मणीति शब्दमुच्चार्य या षष्ठी नियमिता सा न समस्यत इति तदर्थः । ततश्च 'उभयप्राप्तौ कर्मणि' इति सूत्रेण कर्मणीति शब्दमुच्चार्य नियमिता षष्ठी तस्य समासस्य प्रतिषेधविषयो न तु 'कर्तृकर्मणोः कृति' इति सूत्रविहिता कर्मणि षष्ठी । नन्विहाऽपि उभयप्राप्तिसूत्रनियमितैव कर्मणि षष्ठी । तस्य हि सूत्रस्यायमर्थः । कर्तृकर्मणोरुभयोः षष्ठीप्राप्तिर्यत्रैकस्मिन् कृति भवति तस्मिन्कृति सति कर्मण्येव षष्ठी न कर्तरीति । यथाऽऽश्चर्यो गवां दोहोऽगोपालकेन इति । तथा चात्र साधनचतुष्टयसम्पन्नः कर्ता यदि श्रूयेत तदा तस्मिन्नपि कर्मणीव कर्तृकर्मणोः कृतीति सूत्रेण षष्ठ्याः प्राप्तौ निमित्तं सम्भवति । जिज्ञासेति कृत्प्रत्ययः । तथा चास्याप्युभयप्राप्तसूत्रविषयत्वात् कर्मणि चेति समासप्रतिषेधः स्यादेवेति चेत् । अत्राहुः । 'कृत्वोऽर्थप्रकरणे कालेऽधिकरण' इति व्यवहितपूर्वसूत्रात्प्रयोग इत्यनुवर्तते । तच्च कर्तृकर्मगतकिञ्चिदतिशयविवक्षासामर्थ्यात्कर्तृकर्मोभयप्रयोगावश्यंभावपरम् । एवं चाश्चर्यो गवां दोह इत्यादिरेवोभयप्राप्तिसूत्रविषयः । तत्र ह्याश्चर्यशब्दसूचितकर्तृगताकौशलरूपातिशयोपपादनोपयोगितया दुदोहित्वरूपाजादिवैलक्षण्यसूचनाय गोत्वेन दोहनकर्मणामपेक्षितमुपादानम् । तथा तद्दोहासामर्थ्यसम्भावनासूचनायाशिक्षितत्वादिना दोहकर्तुश्चोपादानमपेक्षितं कृतम् । न चेह तथा किञ्चिदतिशयविवक्षया कर्तुरुपादनं कृतमस्तीति नात्रोभयप्राप्तिसूत्रेण कर्मणि षष्ठी किन्तु कर्तृकर्मणोः कृतीत्यनेनैव अतो ब्रह्मजिज्ञासेत्युपपन्नः समास इति । तच्चिन्त्यम् । उभयप्राप्तिसूत्रे कर्तृकर्मोभयप्रयोगनियमाभावस्य सूत्रकृतैवान्यत्र प्रदर्शितत्वात् । तथाहि 'अन्तर्धौ येनादर्शनमिच्छति' इत्यत्रान्तरङ्गप्रत्यासत्त्या गम्यमानेऽपि स्वात्मरूपे कर्मण्युभयप्राप्तिसूत्रेण कर्तरि षष्ठ्याः प्रतिषेधमभिप्रेत्य तृतीयाप्रयोगः कृतः । अन्तर्द्धिनिमित्तं यत्कर्तृकदर्शनाभावं स्वात्मन इच्छति तस्यापादानसंज्ञाऽनेन विधीयते । यथा चोपाध्यायादन्तर्धत्ते इत्यत्र पञ्चमी भवति । न च कर्मणि गम्यमान

एवोभयप्राप्तिसूत्रप्रवृत्तिर्न कर्तरि गम्यमान इति विशेषः शङ्कनीयः । कर्तृकर्मणोरुभयोपादाननियमभङ्गे सत्यस्य विशेषस्याप्रयोजकत्वादिति । वस्तुतस्तु 'अकाकारयोः प्रतिषेधो नेति वक्तव्यम् । शेषे विभाषा' इति भाष्यकारेणोभयप्राप्तौ कर्मणीति कर्तरि षष्ठीप्रतिषेधस्य अके अकारे च कृति नित्यमप्रवृत्तिः स्त्रीप्रत्ययरूपे कृति तद्व्यतिरिक्तकृन्मात्रे वा विकल्पेनाप्रवृत्तिश्चोक्ता । उदाहृतं च । भेदिका देवदत्तस्य काष्ठानाम् । चिकीर्षा विष्णुमित्रस्य कटस्येति । शोभना खलु पाणिनेः सूत्रस्य कृतिः । शोभना खलु पाणिनिना सूत्रस्य कृतिरिति च । तस्मादिह जिज्ञासेत्याकारप्रत्यययोगान्नोभयप्राप्तिसूत्रविषयत्वशङ्कावकाश इति समाधानमवधेयम् ॥

श्री०— **प्रतिपदेति** ॥ 'शेषे षष्ठी' इति सूत्रेण सम्बन्धसामान्ये विहिता षष्ठी तां षष्ठीं विहाय सूत्रान्तरैः विहिता षष्ठी प्रतिपदविधानेत्युच्यते । तद्यथा । 'ज्ञोऽविदर्थस्य करणे' 'सर्वनाम्नस्तृतीया च' 'षष्ठी हेतुप्रयोगे' 'कर्तृकर्मणोः कृती'ति सूत्रविहिता षष्ठी प्रतिपदविधाना । सर्पिषो जानीते । कस्य हेतोरन्नस्य हेतोर्वसतीत्यादि । इयं च षष्ठी प्रतिपदविधाना । 'इच्छायां सन्' इति विहितसन्प्रत्ययस्य कृत्त्वाज्जिज्ञासाशब्दस्य सनन्तत्वेन कृदन्तत्वात्तद्योगे कर्तृकर्मणोः कृतीति विहिता षष्ठी प्रतिपदविधाना । अतः सा न समस्यते । तथाच ब्रह्मणो जिज्ञासेत्येव वाक्यवृत्तिः स्यादिति भावः ॥ **कृद्योगलक्षणा चेति** ॥ प्रतिपदविधानषष्ठीनां मध्येऽपि कर्तृकर्मणोः कृतीति सूत्रविहितायाः कृद्योगलक्षणा चेति प्रतिप्रसवात्समासोपपत्तिरिति भावः ॥

च०— **प्रतिपदविधानेति** ॥ पदं पदं प्रति विहिता तत्पदं निमित्तीकृत्य विधानकर्मीकृता 'ज्ञोऽविदर्थस्य करण' इत्यादिनाऽनुशिष्ट 'षष्ठी शेष' इति लक्षणलक्षितषष्ठीतोऽतिरिच्यमाना निखिलेव षष्ठी प्रतिपदविधानेति पदाभिधेयेति भावः । इयं च षष्ठी 'कर्तृकर्मणोः कृती'ति लक्षणलक्षितेति कृदन्तपदसमभिव्याहारनिमित्तकत्वात्प्रतिपदविधानैवेति हृदयम् ॥ **कृद्योगलक्षणा चेति** ॥ कृदन्तपदसमभिव्याहारं निमित्तीकृत्य कर्तृकर्मणोरित्यनेन विधीयमानेत्यर्थः । तृतीयधात्वधिकाराविहिततया सनः कृत्वाभावेऽपि सन्नन्तस्य सनाद्यन्ता इति धातुत्वेन तत्प्रकृतिकस्य 'अः प्रत्ययात्' इत्यनुशिष्टाकारप्रत्ययस्य कृत्वेन जिज्ञासापदस्य कृदन्तताया निरर्गलत्वात् ॥ **प्रतिप्रसवादिति** ॥ प्रतिषेधप्रतिषेधादित्यर्थः । न च 'कर्मणि च' इति सूत्रेण कर्मणि षष्ठ्या स प्रतिषिद्ध इति वाच्यम् । एकस्मिन् वाक्ये कर्तृकर्मवाचकपदसमव्यवहारे कर्मणि षष्ठ्येव प्रयोक्तव्या कर्तरि तु तृतीया षष्ठी वेति प्रत्यायकेन 'उभयप्राप्तौ कर्मणि' इति सूत्रेण विहितषष्ठ्यन्तस्यैव 'कर्मणि च' इत्यनेन समासः प्रतिषिध्यते । यथाऽऽश्चर्यो गवां

दोहोऽगोपेन गोपस्य वा शब्दानामनुशासनमाचार्येणाचार्यस्य वेत्यादौ । प्रकृते तु कर्मीभूतब्रह्मण उपादानेऽपि जिज्ञासाकर्तुरनुपादानादुभयप्राप्तावित्यस्याप्रवृत्त्या कर्तृकर्मणोः कृतीत्यनेनैव षष्ठ्याः विहिततया कर्मणि इति शब्दमुच्चार्य विहिततया क्षत्यभावात् । प्रपञ्चितं चैतच्चन्द्रिकाभावदीधितावस्माभिरिति तत एव अवसेयम् ।

**सु०— अथवा ब्रह्मणः कर्मत्वेनाप्राधान्यशङ्कां निवर्तयितुं जिज्ञास्य इति कर्मप्राधान्यं सूचितम् । ज्ञानविधौ हि ब्रह्मणोऽप्राधान्यं स्यात् । तज्ज्ञानोद्देशेन जिज्ञासाविधाने कुतः अप्राधान्यम् ।**

**वा०**— ननु ब्रह्मणो विषयत्वोपपादनसूचनस्य कर्मषष्ठीपरिग्रहसूचनस्य च ब्रह्मकर्मकजिज्ञासेत्येवमाकारकव्याख्यानेनापि सम्भवे सूत्रे जिज्ञासां प्रति गुणतया निर्दिष्टस्य ब्रह्मणो जिज्ञासाविशेष्यत्वेन निर्देशे न प्रयोजनं पश्याम इत्यतस्तन्निवर्त्यं शङ्काविशेषं तेन तत्परिहारप्रकारं च दर्शयितुं पक्षान्तरमन्वाचिनोति ॥ **अथवेति ॥ कर्मत्वेनाप्राधान्यमिति** ॥ अव्यवधानेन कर्तृव्यापारजन्यातिशययोगिकुठारवदव्यवधानेन जिज्ञासाव्यापारजन्यातिशययोगित्वरूपमप्रधानकर्मत्वमित्यर्थः ॥ **शङ्कामिति** ॥ सूत्रे जिज्ञासाविशेषणतया निर्देशेन प्रसक्तामिति शेषः ॥ **जिज्ञास्य इति** ॥ जिज्ञासां प्रति विशेष्यतया निर्देशेनेत्यर्थः ॥ **कर्मप्राधान्यमिति** ॥ करणव्यापारव्यवधानेनोद्देश्यफलसम्बन्धिवृक्षवत्प्रमाणादिसम्भावनाद्वारेणोद्देश्यतया प्रधानभूतब्रह्मावबोधरूपफलसम्बन्धित्वरूपं प्रधानकर्मत्वमित्यर्थः । नन्वस्त्वनेन तत्सूचनं तथाऽपि ब्रह्मणः कुठारवदप्रधानकर्मत्वमेव किं न स्यात् । वृक्षस्याव्यवधानेन कर्तृव्यापारजन्यातिशययोगित्वरूपाप्रधानकर्मत्वासम्भवस्येव प्रकृते तदसम्भवाभावादित्यतो ब्रह्मज्ञानविधौ ब्रह्मणः साक्षात्कर्तृव्यापारजन्यातिशययोगित्वेनाप्रधानकर्मत्वेऽप्यव्यवधानेन जिज्ञासाव्यापारजन्यातिशययोगित्वस्य प्रमाणादावेव सत्त्वेन ब्रह्मणस्तदभावादुद्देश्यब्रह्मज्ञानरूपफलसम्बन्धित्वरूपमेव कर्मत्वं युक्तम् । अत एव धर्मज्ञानाय वेदवाक्यानि विचारयेदितिवद्ब्रह्मज्ञानाय वेदान्तवाक्यानि विचारयेदित्येव सूत्रार्थ इत्याशयेन आह ॥ **ज्ञानविधौ हीत्यादिना** ॥ एवं च सूत्रस्य ब्रह्मणः कर्मत्वमात्रे तात्पर्यं न तु तदुपसर्जनत्व इत्युक्तं भवति । अन्ये तु कर्मत्वेनेत्यावृत्त्या योज्यं जिज्ञासाया इति शेषः । तदन्वये च कर्मत्वेनेत्यस्य क्रियात्वेनेत्यर्थः । ब्रह्मान्वये च क्रियारूपजिज्ञासोपसर्जनत्वेनेत्यर्थः । तथा च कर्तव्यपदोपस्थापितनियोगस्यैव प्राधान्याद्विधेयभूतजिज्ञासाया नियोगनिवर्तकतया नियोगोपसर्जनत्वेन तदुपसर्जनीभूतब्रह्मणोऽपि सुतरां गुणभूतत्वमित्याशङ्का सूत्रानुसारेण जिज्ञासाऽस्य विधीयत इति वक्तव्ये जिज्ञासां प्रति

विशेष्यत्वेन निर्देशेन प्राधान्यसूचनान्निरस्तेत्यर्थः । जिज्ञासाविधौ ब्रह्मणो गुणत्वाभावं दर्शयितुं युक्तिसूचनाय ज्ञानविधौ गुणत्वं तावदाह ॥ **ज्ञानविधौ हीति** ॥ ज्ञानविधौ हि 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययः प्राधान्येने'ति न्यायेन प्रत्ययार्थनियोगस्यैव प्राधान्यात्प्रकृत्यर्थस्य क्रियारूपस्य विधेयज्ञानस्य नियोगनिवर्तकतया तदुपसर्जनत्वात्तदुपसर्जनब्रह्मणोऽपि सुतरामुपसर्जनत्वं स्यादित्यर्थः। जिज्ञासाविधावपि ब्रह्मणो दर्शनं प्रति गुणत्वं तुल्यमित्यत आह ॥ **तज्ज्ञानोद्देशेनेति** ॥ ब्रह्मज्ञानाय वेदवाक्यानि विचारयेदिति फलत्वेन प्रधानं ब्रह्मदर्शनमुद्दिश्य विचारविधौ न कोऽपि दोषः । स्वप्रधान-भूतफलदर्शनं प्रति विषयभूतस्य ब्रह्मणो गुणत्वानापत्तेः । जिज्ञासाया वेदवाक्यविषयकत्वं ब्रह्मणश्च उद्देश्यफलसम्बन्धितया जिज्ञासाकर्मत्वं चोक्तमनुसन्धेयमिति भाव इत्याहुः ।

स०— ननु कथं ब्रह्मणः कर्मत्वे अप्राधान्यशङ्का कथं च जिज्ञास्य इति कर्मप्राधान्यसूचनेन अप्राधान्यशङ्कानिरास इत्यत आह ॥ **ज्ञानविधौ हीति** ॥ यद्यत्र त्रिसूत्रेण ब्रह्मविचारत्वेन जिज्ञासा विधीयेत तदा विधेयस्याप्राधान्यनियमाद्विधेयविशेषणत्वेन ब्रह्मणोऽप्राधान्यं स्यात् । न च व्रीहीन-वहन्तीत्यादौ कर्मणोऽपि प्राधान्यदर्शनात्कथमेतदिति वाच्यम् । वितुषाणामुद्देश्यतया प्राधान्येपि स तुषाणां विधेयावघातविशेषणत्वेनाप्राधान्यात् । न च कर्मणोऽप्राधान्ये सक्तून् जुहोतीत्यादौ द्वितीया श्रुतिप्रतीतसक्तुप्राधान्यपरित्यागेन सक्तुभिर्जुहोतीति विभक्तिविपरिणामोक्तिविरोध इति वाच्यम् । तत्रापि विधेयहोमविशेषणताप्रयुक्ताप्राधान्यस्याङ्गीकारात् उद्देश्यत्वप्रयुक्तप्राधान्यस्यैव च विभक्ति-विपरिणामेन परिहारादिति ॥ **तज्ज्ञानेति** ॥ ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इत्येवं वेदविचारत्वेन जिज्ञासाविधान इत्यर्थः । यद्यपि ब्रह्मज्ञानमुद्दिश्य वेदविचारविधानेऽपि ब्रह्मणोऽप्राधान्यं तदवस्थमेव । तथापि न ब्रह्मपरवेदविचाररूपेण विधानम् । किं नाम वेदविचाररूपेण । तथाच श्रुतिः 'तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेत्' इति । अयं भावः । द्विविधं खलु कर्म कारकं भवतीत्यादि पूर्वोक्तरीत्या कुठारेण वृक्षं द्वैधीकुर्यादित्यत्र वृक्षस्याकर्मकत्वेऽपि कुठारव्यापारद्वारा कर्तृव्यापारस्य कर्म-त्वात्प्राधान्यवत् प्रकृतेऽपि प्रमाणादिसम्भावनारूपकरणव्यापारद्वारेश्वरावबोधस्यैवोद्देश्यत्वादीश्वरस्योद्देश्य-फलसम्बन्धितयैव कर्मत्वेन कुठारवदव्यवधानेन मीमांसाकर्मत्वाभावेऽपि नाप्राधान्यम् । अत एव सक्तून् जुहोतीत्यत्र सक्तूनामुद्देश्यसम्बन्धित्वेन प्रधानकर्मत्वासम्भवादप्रधानकर्मत्वोक्तिरिति न कश्चिद्दोषः ॥

प०— भाष्यनिर्देशस्य फलान्तरं चाह ॥ **अथवेति** ॥ राजपुरुष इत्यादौ षष्ठ्यन्तराजपद-निर्दिष्टस्य राज्ञ इवेहाप्यप्राधान्यशङ्कायामित्यर्थः । स्वर्गाद्युद्देशेन यागादिविधिस्थले स्वर्गादेरुद्देश्यस्य,

प्राधान्येन विधीयमानयागादेरप्राधान्यवदिहापि मोक्षादिफलोद्देशेन विधीयमानजिज्ञासाया अप्रधानत्वेन तद्विशेषणस्यापि विधेयविशेषणत्वेनाप्राधान्यशङ्का स्यादतः जिज्ञास्योऽयमिति प्राधान्येन कर्मकारकभूतं ब्रह्म निर्दिष्टमिति भावः । तावता कथं सूत्रे प्रतीतविधेयविशेषणत्वप्राप्ताप्राधान्यशङ्कानिरास इत्यत आह ॥ **ज्ञानविधाविति** ॥ ब्रह्मज्ञानं सम्पाद्यमिति वा ब्रह्मजिज्ञासा कर्तव्येति वा न सूत्रवचनव्यक्तिः किन्तु ब्रह्मज्ञानाय सकलवेदार्थविषयकजिज्ञासा कर्तव्येत्येव वचनव्यक्तिः । उक्तं हि न्यायामृते तृतीय-परिच्छेदे । 'ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति न वचनव्यक्तिः । तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वापातात् । किन्तु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्येव वचनव्यक्तिः' इत्यादि । अत्रापि ग्रन्थेऽग्रे बन्धमिथ्यात्वमित्येतदवतारिकायां परमतानुवादप्रस्तावे स्पष्टीभविष्यति । तथा चोद्देश्यज्ञान-विशेषणत्वेन ब्रह्मणोऽप्युद्देश्यकोटिप्रवेशात्प्राधान्यलाभ इति भावः ।

या०— **कर्मत्वेनाप्राधान्यशङ्कामिति** ॥ ब्रह्म तावज्जिज्ञासाकर्मतया प्रतीयते । जिज्ञासा च विधेयत्वेन गुणभूताऽतस्तद्विशेषणीभूतब्रह्मणोऽपि गुणत्वेनाप्राधान्यमेव प्राप्तमित्यर्थः । कर्मप्राधान्ये सूचितेऽपि कथमुक्तशङ्कापरिहार इत्यत आह ॥ **ज्ञानविधौ हीति** ॥ सत्यम् ब्रह्म जिज्ञासाशब्दार्थ-विशेषणमिति । तथाऽपि न विचाररूपे तदर्थे साक्षात्कर्मतया विशेषणं किन्तु प्रकृत्यर्थभूते ज्ञान एव । एवञ्च यदि जिज्ञासाशब्दलभ्योऽर्थः सर्वोऽपि विधेयतयात्र विवक्षितः स्यात् तदा ब्रह्मणो विधेयनिष्ठ-ज्ञानविशेषणतयाऽप्राधान्यशङ्का स्यात् । न ह्येवम् । किन्तु तत्र प्रकृत्यर्थभूतं यज्ज्ञानं ब्रह्मकर्मकं तदुद्देश्यमेव । विचारमात्रं तु प्रत्ययार्थभूतं विधेयमिति ह्यत्र विवक्षितम् । तथा चोद्देश्यस्य ज्ञानस्य फलतया प्राधान्यात्तद्विशेषणीभूतब्रह्मणोऽपि प्राधान्यमेव । विधेयभूतविचारस्य च साक्षात्कर्म वेद एव । उद्यमननिपतनादिरूपकर्तृव्यापारस्य कुठार इव । तथा च श्रुतिः । 'तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेत्' इति । न चैवं कर्मणि षष्ठीपरिग्रहाय जिज्ञास्य इत्युक्तमित्यनेन विरोधस्तेन ब्रह्मणि जिज्ञासाकर्मताप्रतीतेरिति वाच्यम् । कर्तृव्यापारस्य करणव्यापारव्यवधानेन वृक्षकर्मतेव मीमांसा-व्यापारस्यापि प्रमाणादिसम्भावनाद्वारेणेश्वरावबोध एवोद्देश्य इति भवति तत्कर्मतेत्युक्तन्यायेन परम्परया ब्रह्मकर्मताया अपि सत्वात् । एवञ्च ब्रह्मज्ञानाय वेदान्त(वेद)विचारः कर्तव्य इति सूत्रवाक्यार्थः पर्यवस्यति । सति चैवं काप्राधान्यशङ्का ब्रह्मण इति । यद्वा कर्मत्वेनाप्राधान्यशङ्कामित्यस्य जिज्ञासा-विधायकेषु वाक्येष्विच्छाया अविधेयत्वेनेष्यमाणं ज्ञानमेव विधेयम् । एवञ्च विधेयस्य ज्ञानस्य क्रिया-रूपस्य नियोगनिवर्तकतयाऽप्राधान्यात्कर्मतया तद्विशेषणस्य ब्रह्मणोऽप्यप्राधान्यमित्यर्थः । अनेन कथमुक्त-शङ्कापरिहार इत्यत आह ॥ **ज्ञानविधौ हीति** ॥ स्यादेवं ब्रह्मणोऽप्राधान्यशङ्का यद्युक्तविधया ज्ञानं

विधेयं स्यात् । न चैवम् । इच्छाविषयत्वेनोद्देश्यस्य प्राधान्ये तद्विरोधिविधेयत्वासम्भवात् । न हि स्वर्गकामपदेनेच्छाविषयतया प्रतीतः स्वर्गो विधेयः । किन्तु विचार एव विधीयते । तस्य च साक्षात्कर्मतया विशेषणं वेद एव । तत्साध्यं ज्ञानं तूद्देश्यतया प्रधानमेवातस्तद्विशेषणं ब्रह्मापि प्रधानमेवेति नोक्तशङ्केत्यर्थः ॥

श्री० — **अप्राधान्येति** ॥ ब्रह्मजिज्ञासा नाम ब्रह्म ज्ञातुमिच्छा । तस्याः कर्तव्यत्वं न विधातुं युक्तम् । इच्छाया अविधेयत्वात् । अतो ज्ञानेच्छान्तर्णीतो विचारो लक्ष्यते इति वदिष्यति । इच्छया विचारे सति ज्ञानं सम्पद्यते । तथा च वेदान्तविचारेण ब्रह्मकर्मकं ज्ञानं सम्पाद्यमिति । तथा चात्र ब्रह्मज्ञानं विधेयम् । यदुद्देश्यं तत्प्रधानम् । यद्विधेयं तदन्यथा (तदप्रधानं) इति मीमांसकमतम् । एवं सति ब्रह्मजिज्ञासा कर्तव्येत्यस्य वेदान्तविचारेण ब्रह्मज्ञानं सम्पाद्यमित्यर्थः स्यात् । तथा च ज्ञानस्य विधेयतयाऽप्रधानत्वेन तद्विशेषणीभूतस्य ब्रह्मणोऽप्यप्राधान्यं प्राप्तमित्यर्थः । कथमनेनोक्तशङ्कापरिहार इत्यत आह ॥ **ज्ञानविधौ हीति** ॥ नात्र जिज्ञासाशब्दलब्धोऽर्थः सर्वोऽपि विधेयतयाऽभिप्रेतो येन विधेयनिष्ठज्ञानविशेषणतया ब्रह्मणोऽप्राधान्यशङ्का स्यात् । ( न चैवम् ) । किं नाम ज्ञातुमिच्छेत्यत्र ज्ञा अवबोधन इति धातोर्ज्ञाधात्वर्थभूतं यज्ज्ञानं ब्रह्मकर्मकं तदुद्देश्यमेव न विधेयम् । सन्प्रत्ययार्थभूतेच्छालक्ष्यविचारो विधेय इति ह्यत्र विवक्षितम् । तथा च ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इति । तथा चोद्देश्यस्य ज्ञानस्य फलत्वेन प्राधान्यात्तद्विशेषणीभूतब्रह्मणोऽपि प्राधान्यमेवेत्याशयः । अत एवोक्तम् । आत्मा द्रष्टव्यस्तदर्थं श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति ॥

च० — तादृग्विन्यासस्य फलान्तरं दर्शयति ॥ **अथवेत्यादि** ॥ उद्देश्यविधेयभावेनान्वयबोधस्थले उद्देश्यस्य प्राधान्यं विधेयस्याप्राधान्यमित्यस्य स्वर्गोद्देश्यकयागादिविधेयकान्वयबोधविषयीभूतस्वर्गयागयोर्दर्शनेन प्रकृतेऽपि विषयिताप्रत्यासत्त्या ब्रह्मावच्छिन्नजिज्ञासावृत्तिविधेयताकमोक्षवृत्त्युद्देश्यताकान्वयबोधोपगमे अप्रधानभूतविधेयतापन्नजिज्ञासाविशेषणीभूतब्रह्मणोऽप्यप्राधान्यमेव प्रासांक्षीदित्यर्थः ॥ **कर्मप्राधान्यमिति** ॥ करणव्यापारव्यवधानेनोद्देश्यफलसम्बन्धिवृक्षादिवत्प्रमाणादिसम्भावनाद्वारेणोद्देश्यतया प्रधानभूतावबोधरूपफलसम्बन्धितया प्रधानकर्मतेति । कर्मविशेष्यकशाब्दबोधौपयिकप्रथमान्तपदसमभिव्याहाराश्रयणेऽपि कथमुक्तशङ्कापनोद इत्यत आह ॥ **ज्ञानविधौ हीति** ॥ बन्धमिथ्यात्वमित्येतदवतरणिकायां पूर्ववादिमतानुवाददशायां ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रवाक्यस्य श्रौतार्थः सम्पद्यत इत्यात्मीयाशयस्फुटीकरणेन न्यायामृते तृतीयपरिच्छेदे 'ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति न वचन-

व्यक्तिस्तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वापातात् । किन्तु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्येव वचनव्यक्तिरि'त्यादिना सौधतात्पर्याविष्टसत्त्वविषयिताप्रत्यासत्त्या ब्रह्मावच्छिन्नज्ञानवृत्त्युद्देश्यताक-वेदविचारत्वावच्छिन्नविधेयताकान्वयबोधोपगमेन विधेयतावच्छेदकघटकतानापन्नब्रह्मण उद्देश्यतावच्छेदक-घटकत्वोपगमेन प्राधान्यमेव सेत्स्यति नाप्राधान्यमित्याशयः ।

**सु० विधीयत इत्यनेन कर्तव्येति पदाध्याहारं सूचयति ॥ ननु भवतीति स्वतः सिद्धम् । मैवम् । तथा सत्यनुवादत्वप्रसङ्गात् । अत्रैके चोदयन्ति ॥ सिद्धैव ननु ब्रह्मजिज्ञासा । अथातो धर्मजिज्ञासेति सकलवेदार्थविचारस्योदितत्वात् । ब्रह्मज्ञानस्य चोदनालक्षणत्वेन धर्मस्वरूपत्वादभ्यधिकाशङ्काऽभावादिति ।**

वा०—नन्वत्र विधीयत इति सूत्रशेषसमर्पणं वा सूत्रेण विधीयत इति भाष्यकारीयं सूत्रप्रति-पाद्यकथनं वा । आद्येऽपि विपूर्वदधातेः करोत्यर्थत्वात्क्रियत इत्यर्थो वा रूढिमाश्रित्य कर्तव्यतया बोध्यत इति वा तस्यार्थः । नाद्यः । अनुवादत्वप्रसङ्गादिति वक्ष्यमाणदूषणस्यात्रापि प्रसक्तेः । न द्वितीयः । सूत्रोक्तविषयादिमत्त्वस्य कर्तव्यतां प्रत्येव हेतुत्वेन तद्बोधे हेतुत्वासम्भवेनासङ्गत्यापत्तेः । न च विषयादि-मत्वात् श्रुत्या कर्तव्यतया बोध्यत इति सूत्रार्थ इति वाच्यम् । श्रुतिसमानार्थकसूत्रे श्रुत्यर्थं साध्यतया निर्दिश्य तत्र हेतोः कथनीयतया बोध्यस्याप्यकथनीयत्वात् । नापि द्वितीयः । कृत्यानां विधौ स्मरणा-ज्जिज्ञास्य इत्येतावतैव विधिलाभसम्भवे विधीयत इत्यस्य वैयर्थ्यापत्तेरित्यतः कृत्यानामर्हार्थेऽपि स्मरणेन सावकाशतया नियमेन कर्तव्यपदाध्याहारसूचकत्वासम्भवाद्भाष्यकारीयं तत्प्रतिपाद्यकथनमुपपन्नं इत्याशयेन आह ॥ **विधीयत इति** ॥ अनुवादत्वे सिद्धार्थबोधकत्वप्रसङ्गादिति । तस्य च वैयर्थ्यादित्याशयः । स एव भर्गशब्दार्थ इत्यादिकं प्रकारान्तरेण व्याख्यातुं स एव सर्ववेदार्थ इत्यनेनांशभेदव्यावर्त्यगतार्थ-ताशङ्कातत्समाधानं पञ्चपादिकोदाहृतमनुवदति ॥ **सिद्धैव नन्विति** । ब्रह्मप्रतिपादकवाक्यान्युदाहृत्य अविचारेऽपि वेदान्तानामर्थनिर्णयापेक्षितन्यायसन्दर्भस्याथातो धर्मजिज्ञासेत्यादिसूत्रैः सूचितत्वात्पूर्वतन्त्रेण अस्य गतार्थतेत्याशयः । (अथातो धर्मजिज्ञासेत्युक्तौ किं तद्धर्मस्वरूपमित्याकाङ्क्षायां चोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रे धर्मस्वरूपमुक्तम् । तस्यायमर्थः । चोदनेति विधिवाक्यमिति प्राभाकरमतं मन्त्रार्थवाद-नामधेयसहितं तदिति भाट्टमतम् । लक्षणशब्दः प्रमाणशब्दः । यश्चोदनाप्रमाणकोऽर्थरूपः स धर्म इति । श्येनयागादौ प्राप्तिनिरासायार्थ इति । तस्यानर्थसाधनत्वादिति । तथा च तद्ब्रदात्मन्येवात्मानं पश्येदिति चोदनाप्रमाणकत्वेन ज्ञानस्य धर्मस्वरूपत्वादित्यर्थः ) । ननु विधिवाक्यनिर्णयार्थं प्रवृत्तपूर्वतन्त्रेण सिद्ध-

परवाक्यार्थनिर्णयार्थप्रवृत्तैतत्तन्त्रस्य विषयभेदान्न गतार्थता युक्तेत्यतः सकलपदार्थानां कार्य एव गृहीत-सङ्गतित्वेन कार्यस्यैव पदार्थतया वेदस्य कार्यमात्रपरत्वात्तस्य च तत्रैव निरूपितत्वेन निरूपणेऽनवशेषात् पुनरारम्भो न युक्त इत्याशयेनाह ॥ **सकलेति** ॥ ननु येन यत्प्रमीयते तस्य तत्परत्वाद्वेदान्तेभ्यश्चोप-क्रमादितात्पर्यलिङ्गैर्ब्रह्मण एव प्रमीयमाणत्वेन तेषां तत्परत्वेन पूर्वोत्तरतन्त्रयोर्विषयभेदः स्यादेवेत्यतो वेदान्तेष्वपि 'आत्मा वा अरे द्रष्टव्य' इत्यादिज्ञानविध्युपलम्भादितरेषां च तदपेक्षितार्थप्रतिपादकत्वेन वेदान्तानामकार्यनिष्ठत्वानुपपत्तेः विधिभेदेऽपि विध्यपेक्षितरूपाणामुत्पत्तिविनियोगप्रयोगाधिकाराणां क्रिया-प्रतिपत्त्योरविशेषेण निरूपितत्वेन न्यायसाम्यान्नास्य पुनरारम्भो युक्त इत्याशयेनाह ॥ **ब्रह्मज्ञानस्येति** ॥ ननु प्रथमेऽध्याये वेदप्रामाण्यस्य द्वितीये कर्मोत्पत्तिविधिभेदस्य तृतीये विहितानामङ्गाङ्गिभावस्य चतुर्थे क्रतुपुरुषार्थप्रयुक्तानुष्ठेयपरिमाणस्य पञ्चमेऽनुष्ठानक्रमस्य षष्ठे विध्यपेक्षिताधिकारस्य सप्तमे प्रकृत्युपदिष्टाना-मङ्गानां विकृतावतिदेशस्याष्टमे त्वाग्नेयोऽष्टाकपाल इत्यादिप्रकृत्युपदिष्टानामङ्गानां सौर्यं चरुमित्यादिविकृतौ द्रव्यदेवतादिद्वारेण विशेषातिदेशस्य नवमे प्रकृत्युपदिष्टमन्त्रसामसंस्काराणां विकृतावतिदिष्टानां प्रकृति-विकृत्योर्द्रव्यदेवताभेदे सति प्रकृतिगतद्रव्यादिशब्दं विहाय विकृतिगतद्रव्यादिशब्दाध्याहारलक्षणोहस्य दशमे तु विकृतावतिदिष्टाङ्गानां प्रकृतौ सावकाशानां विकृतगतविशेषाङ्गोपदेशादिना बाधस्यैकादशे त्वनेकशेषिविधिप्रयुक्तस्य सकृदनुष्ठानादेव सर्वशेष्युपकारकत्वसाम्यलक्षणतन्त्रस्य द्वादशे त्वेकशेषिप्रयुक्त-शेषानुष्ठानस्याप्रयोजकशेष्यन्तरोपकारलक्षणप्रसङ्गस्य निरूपणमिति पूर्वतन्त्रे तत्तदाशङ्कापरिहाराय विध्यंश-भेदानां निरूपणार्थं तत्तदध्यायारम्भवद्वेदान्तानां विधिपरत्वेन तत्रैव प्रामाण्ये सिद्धेऽपि प्रतिपत्तव्यस्य ब्रह्मणः प्रत्यक्षानुमानागम्यत्वादाम्नायस्य क्रियार्थत्वात्प्रमाणाभावेन प्रतिपत्तव्यस्यैवाभावात्प्रतिपत्तव्याभावे च प्रतिपत्तिविध्ययोगान्न तेषां प्रामाण्यमिति विशेषशङ्कापरिहाराय ब्रह्मनिरूपणार्थमेतदारम्भः किं न स्यादित्यतस्तक्षणादिसंस्कारविशिष्टदारुविशेषरूपालौकिकयूपस्य यूपं तक्षतीत्यादिविधिपरादपि वाक्यात् सिद्धिवदलौकिकाहवनीयस्याग्नीनादधीतेत्यादिविधिवाक्यादेव सिद्धिवत्स्वर्गकामपदसमभिव्याहारादपूर्व-सिद्धिवच्च विधिपरादपि ब्रह्मसिद्ध्युपपत्तेर्द्वैतग्राहिप्रत्यक्षादिविरोधादसिद्धौ वाऽऽरोपित ( वाचं धेनुमुपासीत इत्यादिवत् ) रूपेणोपासनोपपत्तेर्नेयं पूर्वतन्त्रतोऽभ्यधिकाशङ्केत्याशयेनाह ॥ **अभ्यधिकाशङ्का-ऽभावादिति** ॥

स०— **विधीयत इतीति** । निरर्थकसिद्धबोधकवाक्यमनुवादशब्दार्थः । सर्वज्ञबादरायण-प्रणीतत्वान्नैरर्थक्यानुपपत्तेरध्याहारेणापि सूत्रं योजनीयम् । स च योग्यस्यैव । योग्यं च पुरुषप्रवृत्ति-हेतुत्वात्कर्तव्येति पदमेवेत्यर्थः ॥ **ननु सिद्धेवेति** ॥ वेदार्थनिर्णायकन्यायग्रथनात्मकमिदं शास्त्रं

नारम्भणीयम् । अथातो धर्मजिज्ञासेति मीमांसायामेव वेदान्तानामर्थनिर्णयापेक्षितन्यायकलापस्योक्तत्वेन वेदार्थनिर्णायकन्यायानुसन्धानरूपजिज्ञासाया एव अकर्तव्यत्वादित्यर्थः । ननु कार्यपरवेदभागस्यैव तत्र विचारितत्वेन तदतिरिक्तसिद्धपरवेदनिर्णयार्थमुक्तविचारस्य कर्तव्यत्वादित्यत्राह ॥ **सकलेति** ॥ वृद्धव्यवहाराद्यनुरोधेन सर्वस्यापि वेदस्य कार्यपरत्वादिति भावः । उपक्रमादिलिङ्गैनार्थनिर्णये क्रियमाणे कार्यस्याप्रतीयमानत्वेन ब्रह्मस्वरूपस्यैव च प्रतीयमानत्वेन तत्स्वरूपनिरूपणार्थं तद्विचारोऽप्यावश्यक इत्यत आह ॥ **ब्रह्मज्ञानस्येति** ॥ 'आत्मा वा अरे द्रष्टव्य' इत्यादिवाक्ये ब्रह्मस्वरूपस्य बोध्यत्वेन धर्मस्वरूपत्वात् तस्य च पूर्वमेव विचारितत्वादस्य वैफल्यमिति भावः । प्रवृत्तिर्येन शब्देन जन्यते स चोदनाशब्दार्थः ।

प०— वाचस्पतिमतमाशङ्कते ॥ **नन्विति ॥ स्वत इति** ॥ यत्नेन विना 'अस्तिभवत्योः सर्वत्राध्याहार' इति न्यायादित्यर्थः ॥ **सिद्धैव नन्विति** ॥ नन्वित्यस्य खल्वित्यर्थो ध्येयः । तथा च अनुवादकत्वं न दोषायेति भावः । ननु धर्माय सर्ववेदविचारः कार्य इति जैमिनीसूत्रस्य तद्भाष्येऽर्थ उक्तः । न च ब्रह्मज्ञानं धर्मः येन ब्रह्मज्ञानाय वेदविचारः कार्य इत्यर्थोऽपि लब्धः स्यात् । तथा च सकलवेदार्थविचारस्योदितत्वादित्युक्तिरयुक्तेत्यत आह ॥ **ब्रह्मज्ञानस्येति** ॥ पूर्वतन्त्रे अथातो धर्मजिज्ञासेत्युक्तौ किं धर्मस्वरूपं यदर्थं विचारः कार्य इति शङ्कायां 'चोदनालक्षणोऽर्थो धर्म' इति द्वितीयसूत्रे धर्मस्वरूपमुक्तम् । तस्यायमर्थः । चोदनेति विधिवाक्यमात्रमिति प्राभाकरमतम् । मन्त्रार्थवादनामधेयसहितं विधिवाक्यमिति भाट्टमतम् । लक्षणशब्दः प्रमाणवचनः । यश्चोदनाप्रमाणकोऽर्थरूपश्च स धर्म इति । शत्रुवधहेतुश्येनयागादेरपि श्येनेनाभिचरन्यजेतेति चोदनाप्रमाणकत्वेन धर्मत्वप्राप्तिनिरासायार्थ इति विशेषणोक्तिः । श्येनयागादेरनर्थत्वादिति । तथाच जैमिनिसूत्रोक्तदिशा ब्रह्मज्ञानस्यापि 'आत्मन्येवात्मानं पश्येद्विज्ञाय प्रज्ञां कुर्वीत' इत्यादि चोदनाप्रमाणकत्वेन धर्मस्वरूपत्वादित्युक्तम् ॥

**या०— ननु भवतीति स्वतः सिद्धमिति** ॥ भवतीत्यध्याहारः । स्वत एव व्याख्यातृव्यापारमनपेक्ष्यैतत्सिद्धमित्यर्थः । विधिनिषेधाववधूय प्रत्यययायोगात्तत्रापि विधेरेवाधिकार्यादीतरपदार्थान्वितत्वेन योग्यत्वादिति भावः ॥ **अनुवादत्वेति** ॥ श्रोतृप्रवृत्तिनिवृत्त्यनुपयुक्तसिद्धार्थबोधकत्वप्रसङ्गात् इत्यर्थः ॥ **ननु सिद्धैवेति** ॥ वेदान्तानामर्थनिर्णयार्थमपेक्षितो न्यायकलापो अथातो धर्मजिज्ञासेत्यादिसूत्रैः सूचित इत्यर्थः । ननु विधिवाक्यार्थनिर्णय एव प्रवृत्तो न ब्रह्मवाक्यार्थनिर्णयोऽतः प्रमेयभेदात् न्यायभेदोऽप्यावश्यक इत्यत आह ॥ **सकलवेदार्थस्य विचारितत्वादिति** ॥ लोके सकलपदाना

कार्यपरतया सङ्गतिग्रहणात्कार्यमेव वेदार्थः । तस्य च तत्र निरूपितत्वात् । किमपरमवशिष्टं यद्विचाराय पुनरारम्भ इत्यर्थः । ननु न सर्वस्य वेदस्य कार्यपरत्वं युक्तम् । वेदान्तानामुपक्रमादिभिर्ब्रह्मपरत्वावगमात् । कार्यं च वेदान्तैरनवगम्यमानं न तद्वाक्यप्रमेयमिति तत्राह ॥ **ब्रह्मज्ञानस्येति** ॥ वेदान्तेष्वप्यात्मा द्रष्टव्य इत्यादौ ज्ञानविधिरुपलक्ष्यते । तदपेक्षितार्थप्रतिपादकानि चेतराणि वाक्यानि । तत्कथमकार्यनिष्ठत्वं वेदान्तानामिति भावः । ननु प्रतिपत्तव्यस्य ब्रह्मणो न तावत्प्रत्यक्षादिना सिद्धिः । 'नेन्द्रियाणि नानुमानम्' इत्यादिश्रुतेः । नाप्यागमेन तस्य कार्यमात्रपरत्वादतो ब्रह्मणोऽसिद्धत्वात्तत्प्रतिपत्तिविधिरेवानुपपन्नार्थतया न सम्भवतीति न ब्रह्मज्ञानं धर्मस्वरूपमित्याशङ्कायां तन्निराकरणायेदमारभ्यत इति तत्राह ॥ **अभ्यधिकाशङ्केति** ॥ अयमर्थः । यथा यूपं तक्षति यूपमष्टाश्रीकरोति खादिरो यूपो भवतीत्यादिवाक्यपर्यालोचनया तक्षणादिसंस्कारविशेषविशिष्टो दारुविशेषो यूपोऽलौकिकोऽप्याम्नायाद्विधिपरान्निश्चीयते । यथा वाऽलौकिकोऽप्याहवनीयोऽग्नीनादधीतेत्यादिवाक्यात्संस्कृताग्निरिति निश्चीयते तथा विधिपरादपि सत्यादिवाक्याद्ब्रह्मसिद्धिः । प्रत्यक्षादिविरोधादाम्नायतस्तदसिद्धौ वाचं धेनुमुपासीतेत्यादाविवारोपितब्रह्मोपास्तिसम्भवान्न तद्विषयोग इति नोक्ताऽभ्यधिका शङ्काऽयुक्ता । अतो युक्तमुक्तं ब्रह्मज्ञानस्य धर्मस्वरूपत्वमिति न तदर्थकमिदं शास्त्रमारम्भणीयमिति ॥

श्री०— **अनुवादत्वेति** ॥ सिद्धार्थबोधकत्वेन प्रवृत्तिनिवृत्त्यनुपयुक्तत्वादित्यर्थः । ननु ब्रह्मजिज्ञासायाः कथं धर्मत्वं येन पूर्वमीमांसयैव ब्रह्मज्ञानस्य सिद्धत्वादियं ब्रह्ममीमांसा व्यर्था स्यादित्यत आह ॥ **ब्रह्मज्ञानस्येति** ॥ **चोदनालक्षणत्वेनेति** ॥ 'तद्विजिज्ञासस्व' 'आत्मा वा अरे द्रष्टव्य' इत्यादिविधिवाक्यबोध्यत्वेनेत्यर्थः ॥ **धर्मेति** ॥ 'चोदनालक्षणोऽर्थो धर्म' इति धर्मलक्षणस्योक्तत्वादित्यर्थः ॥

च०— कृत्यानामर्हार्थेऽपि स्मृत्या नियमेन जिज्ञास्य इति निर्देशध्वनितत्वस्य कर्तव्यपदाध्याहारे असम्भवेऽपि विधीयत इति निरवकाशनिर्देशध्वनितत्वस्यैव तादृक्पदाध्याहारेऽनुवादकत्वनियन्त्रितसिद्धार्थबोधकत्वापादितानर्थक्यपरिजिहीर्षया सूपगमत्वादित्यभिधत्ते ॥ **विधीयत इति** ॥ भामतीदिशा शङ्कते ॥ **नन्विति** ॥ **स्वत इति** ॥ व्याकर्तृप्रयत्नमन्तरेणैवास्तिभवत्योः सार्वत्रिकाध्याहारस्य निखिलतान्त्रिकसिद्धत्वादित्यर्थः । पञ्चपादिकोक्तां गतार्थताशङ्कां तत्समाहितिं च प्रतिविधित्समानो अनुवदति ॥ **सिद्धैव नन्विति** ॥ तथा च अनुवादकत्वं न क्षतिमावहतीति भावः । ननु धर्मोद्देशेन निखिलवेदविचारकर्तव्यतायाः पूर्वतन्त्रभाष्यभाषिततया ब्रह्मज्ञानस्य चातदात्मकतया तदुद्देशेन वेदविचारकर्तव्यतारूपैतत्तन्त्रार्थस्य तदलब्धतयोदितत्वादित्यन्तोक्तिः न साधीयसीत्यत आह ॥ **ब्रह्मज्ञानस्येति** ॥

'आत्मा द्रष्टव्य' 'आत्मन्येवात्मानं पश्येत्' 'विज्ञाय प्रज्ञां कुर्वीते'त्यादिज्ञानविधीनां वेदान्तवाक्येषूपलम्भेन लिङ्लोट्तव्यप्रत्ययपञ्चमलकाररूपविधिप्रत्ययविनिर्मुक्तानामपि तादृग्वाक्यानां विधेयार्थप्रतिपत्त्यनुकूल-कर्मकारकादिस्वरूपप्रतिपत्तिजनकतया कार्यतात्पर्यकता सेधिष्यतीति भावः । अथ पूर्वतन्त्रे तत्तदाशङ्का-परिहाराय विध्यंशभेदानां निरूपणार्थं तत्तदध्यायारम्भवत् वेदान्तानां विधिपरत्वेन तत्रैव प्रामाण्ये सिद्धेऽपि प्रतिपत्तव्यस्य ब्रह्मणः प्रत्यक्षानुमानागम्यत्वादाम्नायस्य क्रियार्थत्वात्प्रामाण्याभावेन प्रतिपत्तव्यस्यैव अभावात्प्रतिपत्तिविध्ययोगान्न तेषां प्रामाण्यमिति विशेषशङ्कापरिहाराय ब्रह्मनिरूपणार्थमेतदारम्भः किं न स्यादित्यतस्तक्षणादिसंस्कारविशिष्टदारुविशेषरूपालौकिकयूपस्य यूपं तक्षतीत्यादिविधिपरादपि वाक्यात् सिद्धिवदलौकिकाहवनीयस्याप्यग्नीनादधीतेत्यादिविधिवाक्यादेव सिद्धिवत्स्वर्गकामपदसमभिव्याहारादपूर्व-सिद्धिवद्विधिपरादपि ब्रह्मसिद्ध्युपपत्तेरसिद्धौ वाऽऽरोपितरूपेणोपासनोपपत्तेः न पूर्वतन्त्रतोऽधिका शङ्केत्या-शयेनाह ॥ **अभ्यधिकाशङ्काऽभावादिति ॥**

**सु०— तत्र केचिदभ्यधिकाशङ्कां दर्शयन्तो ब्रह्मजिज्ञासां पृथगारभन्ते । अपरे तु कार्यनिष्ठ एव वेदभागो विचार्यत्वेन तत्र प्रक्रान्तो विचारितश्च । न वस्तुतत्त्वनिष्ठ इत्यतो वस्तुतत्त्वनिष्ठं वेदभागं विचारयितुमिदमारभ्यत इत्याहुः । सेयं गतार्थताशङ्का तत्समाधानं च नोपपद्यते । सर्ववेदानामीश्वरैकनिष्ठत्वेन सर्ववेदार्थस्यात्रैव जिज्ञास्यत्वात् । धर्मजिज्ञासाशास्त्रं तु वेदैकदेशामुख्यार्थधर्मविचाराय प्रवृत्तमित्याशयेन वा 'स एव भर्गशब्दार्थ' इत्याद्युक्तम् । तत्र सर्ववेदार्थ इत्यनेन गतार्थताशङ्कानिरासः स एव न तु कार्यशेषतयेत्याद्यं समाधानं सर्वेति द्वितीयं च निरस्तम् । तदुपपादनाय पूर्ववाक्यम् । जिज्ञास्य इति साध्यनिर्देशः । वक्ष्यति च एतद्विस्तरेण कार्यता चेत्यादिना ।**

**वा०—** तत्र केषाञ्चिदभ्यधिकाशङ्कातत्समाधानप्रकारं सामान्यतो वक्तुं प्रवृत्तं तत्र केचिदिति । तस्यायं भावः । 'सदेव सोम्येदम्' 'सत्यं ज्ञानमनन्तम्' इत्यादिषु विध्यश्रवणान्न वेदान्तानां विधिपरत्वं उचितम् । न च 'आत्मा वा अरे द्रष्टव्यः' 'तदन्वेष्टव्यम्' इत्यादिषु विधिश्रवणात्तदेकवाक्यतया विधिरहितवाक्यानामपि तत्परत्वमेवेति वाच्यम् । तेषामपि 'तयोरेव कृत्यक्तखलर्थाः' इति सूत्रविहित-भावकर्मार्थकतव्यप्रत्ययान्तत्वेऽपि विधिवाक्यत्वाभावात् । न च भावकर्मविहितानामपि कृत्यप्रत्ययानां कृत्याश्चेति विधौ स्मरणाद्युक्तं तेषां ज्ञानविधित्वमिति वाच्यम् । गन्तव्यमित्यादिभावाभिधायिप्रत्ययस्य भावप्राधान्येन ततो धात्वर्थविधिप्रत्ययेन तत्र धात्वर्थस्य स्वतन्त्रफलाय विधातुं शक्यत्वेऽपि कर्माभिधायि-

प्रत्ययस्थले कर्मणः प्राधान्येन क्रियायाश्च गुणत्वेन स्वतन्त्रफलाय तस्या विधातुमशक्यतया ग्रामो गन्तव्यः स्वाध्यायोऽध्येतव्य इत्यादिवत् 'आत्मा वा अरे द्रष्टव्य' इत्यादौ तव्यप्रत्ययस्यात्मरूपकर्मकारकगतफलाय क्रियाविधानपरत्वेऽङ्गीकार्ये कर्मरूपात्मगतातिशयस्य चोत्पत्तिरूपस्यानादित्वेनाविकारित्वेन विकाररूपस्य नित्यत्वात्तदाप्तिरूपस्यासम्भवात्संस्काररूपत्वे वक्तव्ये संस्कारस्य गुणाधानमलापकर्षणरूपेण द्वैविध्यादात्मनश्चनिर्गुणत्वेन गुणाधानरूपस्यासम्भवान्मलाकर्षरूपस्य सम्भ ेऽपि विनियुक्तविनियोक्ष्यमाणयोः संस्कारदर्शनादात्मनश्चोभयरूपत्वाभावेन संस्कारासम्भवेन तद्रूपातिशयस्याप्यभावान्न तस्य ज्ञानविधिपरत्वं युक्तम् । न च सक्तून् जुहोतीत्यस्य क्रतुप्रकरणे श्रवणेन क्रत्वङ्गत्वादङ्गानां चार्थकर्मत्वसंस्कारकर्मत्वरूपेण द्वैविध्यात्सक्तुहोमस्य सक्तुद्रव्यगुणभूतत्वेन प्रयाजादिवदर्थकर्मत्वासम्भवेन प्रोक्षणादिवत्संस्कारकर्मत्वे वक्तव्ये विनियुक्तविनियोक्ष्यमाणसंस्कारत्वेन संस्कारद्वैविध्याद्धोमेन भस्मीकृतानां सक्तूनां प्रोक्षणादिवत् आहवनीयादिवच्चोभयविधसंस्कारत्वस्याप्यसम्भयात् अङ्गत्वायोगे स्वतन्त्रफलसाधनत्वाश्रवणात् दर्शपूर्णमासप्रकरणपठितत्वेन फलकल्पनानुपपत्तेरध्ययनविध्युपात्तत्वेनानर्थक्यासम्भवाच्च संस्कारकर्मत्वं परित्यज्य सक्तूनिति कर्मप्राधान्यं विहाय सक्तुभिरिति गुणभावेन क्रियाप्राधान्यक्रियाभाक्त्यार्थकर्मता निरूपिता यथैवमात्मानमिति साध्यतया प्राधान्यं विहायात्मनेति गुणत्वेनोपगमेन स्वतन्त्रफलायोगासनं प्राधान्येन विधीयतामिति नास्य विधित्वासम्भव इति वाच्यम् । तत्र यथा होमप्राधान्येऽपि सकर्मकत्वाज्जुहोतेः सक्तव एव कर्मकारकतया भस्मीक्रियन्ते एवमवगमस्य सकर्मकत्वादर्थतः कर्मभावेन विधानमिति कर्मान्तरासम्भवात् शब्दतः कारणस्यात्मन एवार्थतः कर्मत्वे वक्तव्ये तद्गतस्यातिशयस्याप्युत्पत्तिविकृतिसंस्काररूपस्यासम्भवेनार्थकर्मत्वस्यैवमप्यसम्भवेन विध्यभावादविवक्षितार्था वेदान्ता इति धर्ममीमांसानन्तरं स्नाने प्राप्ते इदमारभ्यते ॥ अथातो ब्रह्मजिज्ञासेति ॥ अनन्तरं ब्रह्म जिज्ञासितव्यं न स्नातव्यमित्यभिप्रायः । कटस्त्वया कर्तव्यो ग्रामो गन्तव्य इत्यादौ कर्माभिधायिप्रत्ययादपि धात्वर्थनियोगसम्प्रत्ययात् द्रष्टव्य इत्यादौ च क्रियाफलस्यात्मगतस्याविद्योच्छेदलक्षणातिशयस्य सम्भवादपुरुषार्थसंस्कारस्योत्तरत्रोपयोगापेक्षायामपि न पुरुषार्थसंस्कारस्य तदपेक्षेति द्रष्टव्य इत्यादेरेव विधित्वसम्भवाद्युक्तं विधिपरत्वं वेदान्तानामिति ॥ **अपरे त्विति** ॥ लोके सन्दिग्धसप्रयोजनयोरेव विचार्यत्वाद्धर्मत्वस्य च लोकप्रवादसिद्धतया सामान्यतः प्रसिद्धत्वेनाग्निहोत्रचैत्यवन्दनादिविशेषाकारेण वादिविप्रतिपत्तिविषयत्वेन च सन्दिग्धत्वात्पुरुषार्थसाधनतया सप्रयोजनत्वाच्च तस्यैव विचारयोग्यतया वेदप्रामाण्यप्रतिपादनात्प्राक् सामान्यतोऽसिद्धेस्तत एव विशेषतोऽविप्रतिपत्तेः पुरुषार्थसाधनतया न सर्ववेदार्थो विचारयोग्य इति धर्मपरः कार्यनिष्ठ एव वेदभागो विचार्यतया प्रक्रान्तोऽत एव विचारितश्च न त्वतथाविधो वस्तुतत्त्वनिष्ठ इति भावः । स एव भर्गशब्दार्थ इत्याद्युक्तमित्युक्तमेवांशभेदेन विशदयति ॥ **तत्र सर्वेति** ॥ **गतार्थताशङ्कानिरास इति** ॥

विधेरेव सर्ववेदार्थत्वं तद्विचारश्च प्राचि तन्त्र एव कृत इति प्राप्तगतार्थताशङ्कायाः सर्ववेदार्थो ब्रह्मैव न विधिरित्युक्त्या निरास इत्यर्थः' । स एवेत्यत्रावधारणान्यथाऽनुपपत्त्या प्राधान्यस्यैव विवक्षितत्वात् इत्याशयः ॥ **आद्यं समाधानमिति** ॥ तस्य विधिपरत्वरूपत्वादिति भावः ॥ **द्वितीयमिति** ॥ विषयविभागपरत्वात्तस्येति भावः । अस्मिन्पक्षे शङ्कानिरासस्य पूर्वेणैव सिद्धत्वाज्जिज्ञास्य इत्यादेर्वैयर्थ्यमित्यत आह ॥ **जिज्ञास्य इतीति** ॥ न केवलं पूर्ववाक्येन तदुपपादनमपि तु वक्ष्यमाणन्यायेनापि इत्याह ॥ **वक्ष्यति चेति** ॥

**स०**— ननु अथातो धर्मजिज्ञासेति प्रथमसूत्रे धर्मस्य जिज्ञास्यत्वे प्रतिज्ञाते किं लक्षणको धर्म इत्यपेक्षायां विधिवाक्यज्ञाप्यत्वरूपचोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रेणाभिहिते चोदनानामेव अप्रामाण्यान्न धर्मजिज्ञासा कर्तव्येत्याकाङ्क्षायां प्रथमाध्याये वेदप्रामाण्यस्य, द्वितीये कर्मोत्पत्तिविधिभेदस्य, तृतीये विहितानामङ्गाङ्गिभावस्य, चतुर्थे क्रतुपुरुषार्थप्रयुक्तानुष्ठेयपरिमाणस्य, पञ्चमे अनुष्ठानानुक्रमस्य, षष्ठे विध्यपेक्षिताधिकारस्य, सप्तमे प्रकृत्युपदिष्टानामङ्गानां विकृतौ सामान्यातिदेशस्य अष्टमे आग्नेयोऽष्टाकपाल इत्यादि प्रकृत्युपदिष्टानामङ्गानां सौर्यं चरुं निर्वपेदित्यादिविकृतौ द्रव्यदेवतादिसामान्यद्वारेण विशेषातिदेशस्य, नवमे प्रकृत्युपदिष्टमन्त्रसामसंस्काराणां विकृतावतिदिष्टानां प्रकृतिगताग्नेयादिशब्दं विहाय विकृतिगतसूर्यायेत्यादिशब्दाध्याहारलक्षणस्योहस्य, दशमे विकृतावतिदिष्टानां कुशमयं बर्हिर्भवतीत्यादीनां शरमयं बर्हिर्भवतीत्यादिविशेषाङ्गोपदेशादिना बाधस्य, एकादशे सकृदनुष्ठितानां प्रयाजादीनामाग्नेयाद्यनेकशेष्युपकारकत्वलक्षणतन्त्रस्य, द्वादशे एकविप्रयुक्तस्य तत्स्थानाभिषिक्तशेष्यन्तरोपकारकत्वरूपप्रसङ्गस्य प्रतिपादितत्वेन धर्मस्वरूपस्यैव विचारितत्वात् ब्रह्मणोऽपि धर्मादिवदवश्यप्रतिपत्तव्यत्वात्तस्य चातीन्द्रियत्वेन प्रत्यक्षेण तत्प्रतिबद्धलिङ्गाभावेनानुमानेन सर्वस्याप्यागमस्य कार्यपरत्वेनागमेन चासिद्धत्वात्तत्प्रतिपत्त्यर्थं ब्रह्ममीमांसारम्भ इत्यत आह ॥ **अभ्यधिकेति** ॥ यूपं तक्षति, यूपमष्टाश्रीकरोति, आहवनीये जुहोतीत्यादिवाक्यैरपूर्वस्यैव यूपाहवनीयादिविधिशेषत्वेन सिद्धिवद्ब्रह्मणोऽपि सिद्धेः सम्भवात्; असिद्धत्वे वाऽऽरोपितरूपेणोपपत्तेर्न ब्रह्मजिज्ञासा कर्तव्येति नैतच्छास्त्रमारम्भणीयमिति भावः॥ **अत्र केचिदिति** ॥ चोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रे विधिपरत्वेन सर्वस्य वेदस्य प्रामाण्यमुक्तम् तदयुक्तम् । तथात्वे 'सदेव सोम्येदमग्र आसीत्'इत्यादिवेदान्तवाक्येषु विध्यश्रवणेन तेषां विधिपरत्वाभावादप्रामाण्यापत्तेः । न च 'आत्मा वा अरे द्रष्टव्य' इत्यादौ विधिश्रवणेन विधिशेषत्वेन तदेकवाक्यतया सर्वस्यापि प्रामाण्यमिति वाच्यम् । द्रष्टव्य इत्यत्र तव्यप्रत्ययस्य 'तयोरेव कृत्यक्तखलर्थाः' इत्यनेन भावकर्मणोरेव विहितत्वेनाविधायकत्वात् । न च भावकर्मणोरिव विधावपि 'कृत्याश्च' इत्यनेन तेषां स्मरणाद्विधायकत्वमस्तीति वाच्यम् । तथापि गन्तव्यमि-

त्यादिवद्भावविध्यर्थत्वेन कर्मविध्यर्थत्वाभावात् । न च कटस्त्वया कर्तव्यो, ग्रामो गन्तव्यः, स्वाध्यायो अध्येतव्य, इत्यादाविव द्रष्टव्य इत्यादिकर्मविधायकप्रत्ययादपि धात्वर्थविषयभूतविध्यवगमः सम्भवतीति वाच्यम्, दर्शनरूपक्रियाया द्रव्यभूतात्मगुणत्वेन स्वतन्त्रफलार्थकर्मविधानस्यासम्भवात्, कर्मसमवेत-फलार्थमपि तद्विधानासम्भवेन विधायकत्वानुपपत्तेः । न चात्मन एव कर्मत्वान्नोक्त दोष इति वाच्यम् । क्रियाजन्यफलशालिन एव कर्मत्वेनात्मनश्चानादिनित्यत्वेनोत्पाद्यत्वविकार्यत्वयोरसम्भवात् । सर्वगतत्वेन नित्याप्तत्वेन चाप्यत्वासम्भवात् । संस्काराभावेन संस्कार्यत्वस्याप्यसम्भवेन क्रियाजन्यफलशालित्वासम्भवेन कर्मत्वासम्भवात् । न चाविद्याऽधर्मादिनिवृत्तिलक्षणमलापकर्षरूपसंस्कारसंभवेन संस्कार्यत्वात् कर्मत्वं सम्भवतीति वाच्यम् । संस्कृतस्योत्तरत्रोपयोगस्यावश्यकत्वेन प्रकृते चोपयोगाभावेन संस्कार्यत्वानुपपत्तेः । ननु सक्तून् जुहोतीत्यादि सक्तुहोमस्य क्रतुप्रकरणे श्रुतत्वेन अङ्गत्वादङ्गानां चार्थसंस्कारकत्वेन द्विविधत्वात् सक्तुहोमस्य प्रोक्षणादिवत्सक्तुगुणत्वेन प्रयाजादिवदर्थसंस्कारत्वासम्भवात् विनियुक्तविनियोक्ष्यमाण-संस्कारत्वेन द्रव्यसंस्कारत्वेन द्रव्यसंस्कारस्य द्वैविध्यात् । व्रीहिभिर्यजेतेति विनियुक्तव्रीहीनुद्दिश्य प्रोक्षणादिसंस्कारवत् विनियुक्तसंस्कारत्वे चाहवनीये जुहोतीति विनियोक्ष्यमाणस्याधानेन संस्कारकर्मत्व-परित्यागेन द्वितीयां च तृतीयार्थतया व्याख्याय सक्तुभिर्जुहोतीति वाक्यार्थसम्भवेन स्वतन्त्रफलार्थं विधानवत् प्रकृतेऽप्यात्मानमिति परोक्तप्राधान्यं परित्यज्य द्वितीयां तृतीयार्थत्वेन व्याख्यायात्मना लोकमुपासीतेति वाक्यार्थसम्भवेन स्वतन्त्रफलार्थमेव विधानमस्त्विति चेन्न । अवगमस्य सकर्मकत्वेन कर्मण आवश्यकत्वात् प्रकृते च ब्रह्मणः शब्दतः कर्मत्वाभावेऽपि अर्थतः कर्मत्वेन क्रियाजन्यातिशयस्य आवश्यकत्वेन प्रकृते चोक्तरीत्या कर्मत्वासम्भवेन निष्कर्मकज्ञानविधानानुपपत्तेः । तस्माद्विधिपरत्वेन प्रामाण्ये वेदान्तानां प्रामाण्यं न स्यादिति भावः ॥ **पृथगारभन्त इति** ॥ कटस्त्वया कर्तव्य इत्यादाविव कर्माभिधायितव्यप्रत्ययाद्धात्वर्थविषयीभूतावगमनविधायकत्वसम्भवात् । न च स्वतन्त्रफलार्थं कर्मसमवेत फलार्थं वा विधानमित्यादिना विकल्प्यैतद्दूषितमिति वाच्यम् । द्वितीयपक्षाभ्युपगमात् । न च कर्माभावः । आत्मन एव तत्त्वात् । न चोत्पाद्यत्वाद्यभावान्न कर्मत्वमिति वाच्यम् । अविद्याऽधर्मादि-निवृत्तिलक्षणातिशयसम्भवेन कर्मत्वसम्भवात् । न चोत्तरत्रानुपयोगान्न संस्कार्यत्वमिति वाच्यम् । अपुरुषार्थसंस्कारोपेतानामुत्तरत्रोपयोगापेक्षायामपि अविद्यानिवृत्तेः पुरुषार्थत्वेनोत्तरत्रोपयोगापेक्षाया एव अभावात् । तस्मादात्मन एव कर्मत्वेन कर्मसमवेतफलार्थं विधानसम्भवेन 'आत्मा वा अरे द्रष्टव्य' इत्यादिवाक्येषु विधायकतव्यप्रत्ययस्मरणेन विधिपरत्वेन तेषां प्रामाण्यादेकवाक्यत्वेन सदेवेत्यादेः अपि प्रामाण्यान्न कश्चिद्दोष इति भावः । ननु वृद्धव्यवहारानुरोधेन सर्वस्यापि वेदस्य कार्यपरत्वे सिद्धबोधक-त्वायोग इत्युक्तम्, तत्राह ॥ **वक्ष्यतीति** ॥

प०— **केचिदिति** ॥ 'व्युत्पत्त्यभावः प्रतिपत्तिदौस्थ्यमन्येन सिद्धत्वमथाफलत्वम् । एतानि वै सूत्रचतुष्टयेन नारम्भमूलानि निराचकार' इति वदन्तो रामानुजीयादयः सिद्धेऽर्थे व्युत्पत्त्यभावेन वेदान्तानां ब्रह्मण्यमानत्वान्न तद्विचार आरम्भ्य इत्यादिरूपाभ्यधिकाशङ्कां दर्शयन्त इत्यर्थः । यद्वा केचिदिति मायावाद्येकदेशिन इत्यर्थः । तैरपि सिद्धेऽर्थे व्युत्पत्त्यभावाद्यभ्यधिकाशङ्कां प्रदर्श्य कार्यशेषे ब्रह्मणि व्युत्पत्त्यादेरुक्तत्वात् ॥ **अपरे त्विति** ॥ मायावादिन इत्यर्थः ॥ **आद्यमिति** ॥ स्वप्रधाने प्रामाण्यायोगेऽपि उपासीतेत्यादिलिङाद्युक्तकार्यशेषे ब्रह्मणि प्रामाण्ययोगात्तद्विचारः कार्य इति समाधानमित्यर्थः । निरस्तमित्यन्वयः ॥ **द्वितीयं चेति** ॥ कार्यनिष्ठ एवेत्यादिनोक्तमित्यर्थः ॥ **तदिति** ॥ सर्ववेदार्थत्वोपपादनाय ओतत्ववाचीत्यादिपूर्ववाक्यमित्यर्थः । यद्वा स एव भर्गशब्दार्थ इत्यादिपूर्ववाक्यमित्यर्थः ॥ **साध्येति** ॥ स एव सर्ववेदार्थ इत्यनेन कृतस्य गतार्थताशङ्कासमाधिनिरासस्य जिज्ञासाविधिरूपं फलं जिज्ञास्योऽयमिति पादेन निर्दिश्यत इत्यर्थः । अत्र सङ्ग्रहः । मङ्गलाख्यणे युक्तिविशेषद्योतनं तथा । मीमांसानुग्राह्यमानकीर्तनं पूर्वतन्त्रतः ॥१॥ अगतार्थतासूचनं चेत्येवं पञ्चप्रयोजनः । सौत्रप्राथमिकोङ्कारः श्रुतिसिद्धोऽवधारितः ॥२॥

या०— **तत्र केचिदभ्यधिकाशङ्कामिति** ॥ चोदनालक्षणोऽर्थो धर्म इति ब्रुवता विधिपरत्वेन सर्ववेदानां प्रामाण्यं प्रदर्शितम् । अत्र केषुचिद्वाक्येषु विधिरेव न श्रूयते सदेव सोम्येत्येदमादिषु । यत्रापि श्रूयते आत्मा वा अरे द्रष्टव्य इत्यादिषु तत्रापि विधेरनुपपत्तिः । भावकर्मणोः विहितानामपि कृत्यानां 'कृत्याश्च' इत्यविशेषेण विधौ स्मरणेऽपि यो भावाभिधायी प्रत्ययः स गन्तव्यमित्यादाविव क्रियाप्रधानत्वात्क्रियायां पुरुषं नियोक्तुं शक्नोति । अयं तु न प्राधान्येन भावाभिधायी । अपि तु कर्माभिधाय्येव । ननु कर्माभिधायितव्यप्रत्ययादपि धात्वर्थविषयो विधिरवगम्यते स्वाध्यायोऽध्येतव्य इति । तद्वदत्रापि किं न स्यादिति चेत् । अत्र प्रष्टव्यम् । किं स्वतन्त्रफलाय कर्मगुणतया धात्वर्थो विधीयते । उत कर्मकारकगतफलाय । न तावदाद्यः । स्वतन्त्रफलाय द्रव्ये गुणभूतक्रियाविधानस्यानुचितत्वात् । न द्वितीयः । कर्मकारकगतं फलं क्वचिदुत्पादः । यथा व्रीहीनवहन्तीत्यत्रावहननक्रियया वितुषव्रीहीणां उत्पादः । क्वचिद्विकारः । यथा तण्डुलान् पिनष्टीत्यत्र तण्डुलानां पेषणेन पिष्टीभावः । न चेदं प्रकारद्वयं प्रकृते सम्भवति । आत्मनो नित्यत्वेनानुत्पाद्यत्वादविकार्यत्वाच्च । क्वचित्क्रियया आप्तिः । यथा गान्दोग्धीत्यत्र गोदोहनक्रियया आप्तिः । न चेयं प्रकृते युक्ता । आत्मनो ज्ञानक्रियया नित्याप्तत्वात् । क्वचित्संस्कारः । यथा स्रुचः सम्मार्ष्टीत्यत्र सम्मार्जनक्रियया स्रुक्संस्कारः । न चायमपि प्रकार आत्मनि युक्तः । अन्यत्र तस्य विनियोगाभावात् । संस्कार्यस्यान्यत्र विनियोगनियमात् ।

तस्मान्न केनापि प्रकारेण आत्मनः कर्मत्वमुपपद्यत इति तत्कर्मकविधेरनुपपत्तिरेव । स्वाध्यायोऽध्येतव्य इत्यत्र तूक्तप्रकारेष्वन्यतमः प्रकारः सम्भवतीति न तत्रानुपपत्तिः । अर्थज्ञानादिरूपस्य फलस्य तत्र सम्भवात् । एतेनात्मानमुपासीतेति विधिरपि प्रत्याख्यातो वेदितव्यः । तत्राप्यात्मनः कर्मत्वस्योक्तविधयोपपादयितुमशक्यत्वात् । ननु यथा सक्तून् जुहोतीत्यत्र भस्मीभूतानां सक्तूनां क्रतौ विनियोगाभावात्संस्कारकर्मत्वं परित्यज्य सक्तूनिति प्राधान्यं विहाय सक्तुभिरिति गुणभावेन होमप्राधान्यमुपादाय स्वतन्त्रफलार्थता निरूपिता तथेहाप्यात्मानमिति श्रुतप्राधान्यं विहायात्मनोपासीतेति गुणत्वोपगमेन स्वतन्त्रफलायैवोपासनं प्राधान्येन विधीयतामिति चेन्न । तत्र यथा होमप्राधान्येऽपि सकर्मकत्वाद्धातोः सक्तव एव कर्मकारकतया भस्मीक्रियन्ते एवमवगमस्यापि सकर्मकत्वात्कर्मापेक्षायामात्मनः शब्दतः करणत्वेऽप्यर्थतः कर्मत्वमेव वाच्यम् । तच्चोक्तरीत्या न सम्भवतीति न निष्कर्मकं ज्ञानं स्वतन्त्रफलाय विधातुं शक्यमित्यतो विध्यसम्भवादविवक्षितार्था वेदान्ता इति धर्मजिज्ञासानन्तरं स्नानं प्राप्तमित्यधिकां शङ्कां प्रदर्शयन्त इत्यर्थः । कर्माभिधायिनोऽपि प्रत्ययान्नियोगसम्प्रत्ययान्न नियोजकत्वं तस्य निराकर्तुं शक्यते । कटस्त्वया कर्तव्यो ग्रामस्त्वया गन्तव्य इतिवत् । यत्तूक्तं तथात्वे प्रयोजनाभावादानर्थक्यं नियोगस्येति । तदसत् । अविद्योच्छेदस्योपलभ्यमानत्वात् । अविद्या च संसारहेतुभूताऽतस्तदुच्छेदः पुरुषार्थः । स एव चात्मनः क्रियाजन्यः संस्कारः । न च संस्कृतस्यान्यत्र विनियोगापेक्षा । स्वयमेव पुरुषार्थत्वात् । अपुरुषार्थसंस्कारस्यैवान्यत्र विनियोगापेक्षत्वादतो विधिसम्भवाद्ब्रह्म जिज्ञासितव्यमेव न स्नातव्यमिति पृथगारभन्त इत्यर्थः ॥ **आद्यं समाधानमिति** ॥ विधिसम्भवात्कर्मतयोपासनाविध्यन्वितं ब्रह्म जिज्ञासितव्यमिति समाधानमित्यर्थः ॥ **द्वितीयमिति** ॥ वस्तुतत्वनिष्ठवेदभागं विचारयितुमिदमारभ्यत इति समाधानमित्यर्थः ॥

**श्री०— तत्र केचिदित्यादि** ॥ सर्ववेदान्तानां विधिपरत्वेन प्रामाण्यमुक्तम् । तत्र वेदान्तेषु कुत्रचिद्वाक्ये विधिरेव न श्रूयते । 'सदेव सोम्येदमग्र आसीत्' इत्यादौ । यत्र श्रूयते 'तद्विजिज्ञासस्व' इत्यादौ तत्रापि विधेरनुपपत्तिः । तथाहि धात्वर्थभूता या क्रिया सा स्वतन्त्रफलाय कर्मणि विधीयते उत कर्मकारकगतफलाय वा । नाद्यः । स्वतन्त्रफलाय द्रव्ये गुणभूतक्रियाविधानस्यानुचितत्वात् । द्वितीये कर्मकारकगतं फलं क्वचिदुत्पादो दृष्टः । यथा व्रीहीनवहन्तीत्यत्रावहनक्रियया वितुषव्रीहीणामुत्पादः । क्वचिद्विकारः । यथा तण्डुलान् पिनष्टीत्यत्र तण्डुलानां पेषणेन पिष्टीभावः । न चेदं प्रकारद्वयं ब्रह्मणि सम्भवति । तस्य नित्यत्वेनानुत्पाद्यत्वादविकार्यत्वाच्च । क्वचिच्च संस्कारः यथा स्रुचं सम्मार्ष्टीत्यत्र सम्मार्जनक्रियया स्रुक्संस्कारः । अयमपि प्रकारो नात्मनि युक्तः । संस्कृतस्यान्यत्र

होमादौ विनियोगदर्शनात् । आत्मनश्चान्यत्र विनियोगाभावात् । अत आत्मकर्मकविधेरसम्भवात् अविवक्षितार्था वेदान्ता इति धर्मजिज्ञासाऽनन्तरं स्नातकव्रतमेव कर्तव्यतया प्राप्तं न ब्रह्मजिज्ञासेत्यभ्यधिकाशङ्कां दर्शयन्तो मायावादिन इत्यर्थः ॥ **पृथगारभन्त इति** ॥ यदुक्तं प्रयोजनाभावाद्ब्रह्मजिज्ञासाविधेरनुपपत्तिरिति । तदसत् । कर्मकारकगतसंस्काररूपफलाय विधीयत इत्यभ्युपगमात् । कर्मकारकभूतात्मगतः क्रियाजन्यः संस्कारस्तु अविद्योच्छेद एव । अविद्या हि संसारहेतुभूता । अतस्तदुच्छेदः पुरुषार्थो भवत्येव । अविद्याया ब्रह्माश्रितत्वेन तदुच्छेदस्यापि कर्मकारकभूतात्मगतत्वात् । न च संस्कृतस्यान्यत्र विनियोगदर्शनादत्र च तदभावादित्युक्तमिति वाच्यम् । स्वयमेवापुरुषार्थरूपसंस्कारस्यैव अन्यत्र विनियोगापेक्षा न तु स्वयमेव पुरुषार्थरूपस्य । प्रकृते चाविद्योच्छेदरूपस्य संस्कारस्य स्वयमेव पुरुषार्थरूपत्वान्नान्यत्र विनियोगापेक्षा । तथाच ब्रह्मजिज्ञासाविधिसम्भवाद्धर्मजिज्ञासानन्तरं ब्रह्मजिज्ञासैव कर्तव्या । न स्नातकव्रतं कर्म कार्यमिति पृथगारभन्त इत्यर्थः । तथाच विधिसम्भवादुपासनादिविधौ कर्मतया कार्यशेषत्वेन ब्रह्म प्रतिपाद्यत इत्यर्थः ॥ **कार्यनिष्ठ एवेति** ॥ लिङ्लोट्तव्यप्रत्ययपञ्चमलकारप्रतिपाद्यं यत्कृतिसाध्यत्वे सति कृत्युद्देश्यरूपं कार्यं तत्प्रतिपादक एव वेदभाग इत्यर्थः ॥ **वस्तुतत्त्वनिष्ठ इति** ॥ कार्यानन्वितः कार्यातिरिक्तोऽर्थः सिद्धोऽर्थो वस्तुतत्त्वपदेनोच्यते ।, तत्प्रतिपादक इत्यर्थः ॥ **गतार्थताशङ्केति** ॥ धर्ममीमांसाशास्त्रविचार्यवेदभागस्यापि मुख्यतो भगवत्प्रतिपादकत्वेन ब्रह्ममीमांसयैव विचार्यतया धर्ममीमांसया ब्रह्ममीमांसागतार्थत्वशङ्का नास्तीति भावः ॥ **कार्यशेषत्वेनेति** ॥ उपासनाविधौ कर्मकारकतया कार्यशेषत्वेनेत्यर्थः ॥ **आद्यमितीति** ॥ ब्रह्मजिज्ञासां पृथगारभन्त इत्युक्तं समाधानं निरस्तमिति सम्बन्धः ॥ **द्वितीयमिति** ॥ अपरे त्वित्यादिनोक्तमित्यर्थः । भगवत एव सर्ववेदार्थत्वोक्त्या त्वदुक्तकार्यस्यैवाप्रामाणिकत्वेन तत्परत्वं वेदभागस्य नास्तीति भावः । **तदुपपादनाय** सर्ववेदार्थत्वोपपादनाय । **पूर्ववाक्यम्** ओतत्ववाचीत्यादि पूर्ववाक्यम् । अथवा स एव भर्गशब्दार्थ इत्यादि पूर्ववाक्यम् ।

**च०** — तत्र कतिपयेषामधिकाशङ्कां तत्समाहितिभङ्गीं च सामान्यतोऽभिधित्सते ॥ **तत्र केचिदिति** ॥ अयमाशयः ॥ विधायकप्रत्ययविनिर्मुक्तानामपि 'सदेव सोम्येदं, सत्यं ज्ञानम्' इत्यादीनां वेदान्तानां श्रूयमाणत्वान्न तेषां विधिपरत्वमध्यवसितुं सुशकम् । विधायकतव्यादिघटितानां तत्परत्वाध्यवसायात्तद्रहितानामपि तदेकवाक्यतया तत्परत्वोपपत्तिरिति शङ्का तु तादृशतव्यादीनां तयोरेवेत्यनुशिष्टभावकर्माद्यर्थकत्वस्यापि सूपगततया विधिपरत्वाध्यवसायकत्वाभावान्निरसनीया । न च भावकर्मविहितानामपि कृत्यप्रत्ययानां कृत्याश्चेति विधौ स्मृत्या ज्ञानविधित्वं सङ्गच्छत इति वाच्यम् ।

भावाभिधायकप्रत्यय एव गन्तव्यमित्यादाविव क्रियाप्रधानकतया क्रियायाः स्वतन्त्रफलोद्देशेन पुरुषं नियोक्तुं शक्नोति प्रकृतस्तु न प्राधान्येन भावमभिधत्ते अपि तु कर्मैवेति क्रियायास्तत्र गुणत्वेन स्वतन्त्र-फलोद्देशेन विधातुमशक्यत्वात् । कर्माभिधायितव्यप्रत्ययादपि धात्वर्थविषयविध्यधिगतिर्ग्रामो गन्तव्यः स्वाध्यायोऽध्येतव्य इत्यादौ दृश्यत इति प्रकृतेऽपि तथाऽस्त्विति शङ्काऽपि निर्दलैव । द्रव्यरूपकर्मविशे-षणीभूतक्रियायाः कर्मकारकासमवेतत्वरूपस्वातन्त्र्यविशेषितफलोद्देशेन विधानानौचित्येन तत्समवेतत्व-रूपपारतन्त्र्यविशेषितफलोद्देशेनैव तद्विशेषणीभूतायास्तस्या विधानमुपेतव्यम् । तच्च दुरुपगमम् । तथाहि । 'आत्मा द्रष्टव्य' इत्यादौ कर्मीभूतस्यात्मनो अनादित्वेन व्रीहीनवहन्तीत्यादाववहननक्रियया वितुषव्रीहीणामुत्पादस्येवोत्पादलक्षणातिशयस्याविकारित्वेन तण्डुलान् पिनष्टीत्यादौ पेषणेन पिष्टीभावरूप-विकारस्येव विकाररूपस्यात्मनो ज्ञानक्रियया नित्याप्तत्वेन गां दोग्धीत्यादौ गोदोहनक्रियया कादाचित्काप्ते-रिवाप्तिरूपस्य संस्कारस्य मलापकर्षया गुणाधानरूपेण द्वैविध्यादात्मनो निर्गुणत्वेन गुणाधानरूपस्या-सम्भवान्मलापकर्षणरूपस्य च तस्य स्रुचः संमार्ष्टीत्यादौ विनियुक्तविनियोक्ष्यमाणयोरेव दर्शनादात्मनश्चोक्तो भयरूपत्वाभावेन तादृशस्याप्ययोगात्कर्मकारकगतातिशयस्य दुर्निरूपतया नात्मा द्रष्टव्य इत्यादेर्ज्ञानविधि-रूपता सङ्गच्छते । स्वाध्यायोऽध्येतव्य इत्यादौ तु दर्शितप्रकारेष्वन्यतमस्यार्थज्ञानादिरूपस्य सम्भवेन तत्र विधायकता निर्वहतीति । अथ क्रतुप्रकरणे श्रूयमाणे सक्तून् जुहोतीत्यत्र भस्मीभूतानां विनियोगासम्भवेन संस्कारकर्मतां सक्तूनिति प्राधान्यं चापहाय तृतीयात्वेन विपरिणामेन सक्तुभिरिति गुणभावेन होमप्राधान्यं स्वीकृत्य स्वतन्त्रफलार्थतोरीकृता तद्वदात्मानमुपासीतेत्यत्र द्वितीयायास्तृतीयात्वेन विपरिणामत्वेन श्रुतप्राधान्यानादरणेनात्मनेति गुणत्वोपगमेन स्वतन्त्रफलायैवोपासनं प्राधान्येन विधीयतामिति चेन्न । तत्र यथा होमप्राधान्येऽपि सकर्मकत्वाज्जुहोतेः सक्तव एव कर्मकारकतया भस्मीक्रियन्ते एवमवगमस्य सकर्मकत्वादर्थतः कर्माभावेन तादृशार्थान्तरासम्भवादन्तःकरणस्यात्मन एवार्थतः कर्मत्वमभिधातव्यं तच्चोक्तदिशा न सङ्गच्छत इति कर्मकारकविनिर्मुक्तं ज्ञातं स्वतन्त्रफलोद्देशेन न विधातुं सुशकमिति विध्यसम्भवाद्वेदान्तानामविवक्षितार्थत्वाद्धर्मजिज्ञासानन्तरं स्नातव्यमित्यधिकशङ्का प्रदर्श्यत इत्यर्थः । 'व्युत्पत्त्यभावः प्रतिपत्तिदौःस्थ्यमन्येन सिद्धत्वमथाफलत्वम् । एतानि वै सूत्रचतुष्टयेन नारम्भमूलानि निरा-चकारे'ति रामानुजीयादयः सिद्धार्थे व्युत्पत्त्यभावेन वेदान्तानां ब्रह्मण्यमानत्वान्न तद्विचार आरभ्य इत्यादि-रूपाधिकाशङ्कां दर्शयन्त इत्यर्थः । यद्वा केचिदिति मायावादिन इत्यर्थः । तैरपि सिद्धेऽर्थे व्युत्पत्त्य-भावाभ्यधिकाशङ्कां प्रदर्श्य कार्यशेषे ब्रह्मणि व्युत्पत्त्यादेरुक्तत्वादित्यपि स्थितम् ॥ **पृथगारभन्त इति** ॥ ग्रामो गन्तव्यः कटस्त्वया कर्तव्य इत्यादौ कर्माभिधायकप्रत्ययादपि धात्वर्थनियोगसम्प्रतीतेर्द्रष्टव्य इत्यादौ च क्रियाफलस्यात्मगतस्याविद्योच्छेदलक्षणातिशयस्य सम्भवादपुरुषार्थसंस्कारस्योत्तरत्रोपयोगा-

पेक्षायामपि न पुरुषार्थसंस्कारस्य तदपेक्षेति द्रष्टव्य इत्यादेरेव विधित्वसम्भावाद्युक्तं वेदान्तानां विधिपरत्वमिति ॥ **अपरे त्विति** ॥ अद्वैतवादिन इत्यर्थः । **आद्यं समाधानम्** । द्रष्टव्य इत्यादेः विधित्वसम्भवात्कर्मकारकविधयोपासनाविधावन्वितं ब्रह्म जिज्ञासितव्यमिति समाधानम् । **द्वितीयम्** । वस्तुतत्वनिष्ठवेदभागं विचारयितुमिदमारभ्यत इति समाधानम् ।

**अनु०— ज्ञानी प्रियतमोऽतो मे तं विद्वानेव चामृतः ।**
**वृणुते यं तेन लभ्य इत्याद्युक्तिबलेन हि ॥**
**जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते ॥**

**सु०— ब्रह्मजिज्ञासाया निष्प्रयोजनत्वं शङ्कितमपाकर्तुं अतःशब्दं व्याचष्टे ॥ ज्ञानीति ॥ तं विद्वानित्यनेन 'तमेवं विद्वानमृत इह भवति' इति वाक्यमेवशब्देन 'नान्यः पन्था अयनाय' इत्युत्तरवाक्यमवधारणार्थं च सङ्गृहीतम् । चशब्दो वाक्यसमुच्चये । वृणुते यमित्यनेन 'यमेवैष वृणुत' इति वाक्यं सङ्गृहीतम् । आदिपदेन 'आत्मा वा अरे द्रष्टव्य' इत्यादेः सङ्ग्रहः । हिशब्दो हेतौ । एवशब्दः प्रत्येकमभिसम्बध्यते । यस्मात्तस्य ब्रह्मणो नारायणस्य प्रसादात्परमानुग्रहादेव मुच्यते संसारात् न तु कर्मादिनेति 'तमेवं' 'यमेवैष वृणुत' इति श्रुतिबलेन गम्यते । यद्यपि तमेवमिति परमपुरुषप्रसादो न श्रूयते । तथाऽपि यमेवैष वृणुत इति वाक्यानुरोधेन तत्राप्यनुसन्धेयः । निमित्तेन नैमित्तिकोपलक्षणान्मुमुक्षुसम्बन्धिसाधनावधारणाय तु न साक्षादुक्तः । वरणं तु प्रसाद उच्यते । 'अपाम सोमम्' इत्याद्यास्तु श्रुतयः सावकाशत्वादन्यथा योज्याः । ईश्वरपरमप्रसादश्च तज्ज्ञानादेव भवति । न पुनः कर्मादिनेति ज्ञानी प्रियतमस्तमेवं विद्वानित्युक्तिबलेनावगम्यते । विद्वानित्यस्यापि प्रसादातिशयद्वारेणेत्यर्थपर्यवसानस्योक्तत्वात् । कर्मादेरनुग्रहमात्रहेतुत्वेनापि तद्वचनं सार्थकम् । ईश्वरज्ञानं च तज्जिज्ञासयैव नान्येनेति 'आत्मा वा अरे द्रष्टव्य' इति परमात्मदर्शनानुवादेन तत्साधनतया श्रोतव्य इत्यादिना श्रवणादिविधायकोक्तिबलेन प्रतीयते । कर्मणां त्वन्तःकरणशुद्धिद्वारेण ज्ञानाङ्गत्वोपपत्तेस्तद्वाक्यं सार्थकं भविष्यति । अतो ब्रह्मजिज्ञासा कर्तव्येति सम्बन्धः ।**

**वा०—** ओतत्ववाचीत्यादि विधीयत इत्यन्तस्यैव ज्ञानीत्याद्युत्तरग्रन्थस्यापि विषयोपपादकत्वभ्रान्तिं निवारयन्नेव तत्प्रतिपादनसार्थक्यप्रदर्शनपूर्वकं तत्प्रतिपाद्यमाह ॥ **ब्रह्मेति** ॥ अत्र ज्ञानी-

त्याद्यनुव्याख्यानाद्यपादस्य ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति मामित्येकादशस्कन्धगतवाक्याद्यपादस्वरूपानुवादत्वेनार्थकथनरूपत्वाभावादर्थानुवादरूपोत्तरपादादिसङ्ग्राह्यमेव दर्शयति ॥ **तं विद्वान् इत्यादिना** । नन्वेतद्वाक्यार्थाननुवादत्वादेवेत्यंशस्य वैयर्थ्यम् । न च नान्यः पन्था इति वाक्यान्तरसङ्ग्राहकत्वं तस्येति वाच्यम् । तस्य तेनासमानार्थत्वात् । एवेत्येतावन्मात्रेण वाक्यविशेषालाभाच्च समानार्थकत्वेऽपि वाऽन्यशब्दस्य कर्मान्यपरत्वे प्रकृतविरोधापाताच्चेत्यतो जिज्ञासाद्यतिरिक्तसाधनस्य पूर्वपक्षिणा शङ्कितत्वेन तन्निवर्तके जिज्ञासोत्थेति वाक्ये जिज्ञासादीनां साध्यसाधनभावस्य साधनान्तरव्यावृत्तेश्च प्रतिपाद्यमानतया तत्र प्रमाणसमर्पके पूर्ववाक्ये उभयविधवाक्योपादानाय विद्वानेवेत्यनूदिते विद्वानित्येतत्समभिव्याहारेण वेदनातिरिक्तसाधननिषेधकवाक्योपादानसूचनात् । अवधारणफलान्यनिषेधप्रतिपादकस्य नान्य इत्यस्यावधारणार्थकैवकारेण समानार्थत्वसम्भवान्नान्य इत्यस्य च तमेवं विद्वानित्यत उत्तरत्वेन पूर्वप्रकृतवेदनान्यस्यैवान्यशब्देन ग्रहणयोग्यतयाऽप्रकृतकर्मादेरन्यस्यायोग्यत्वाद्युक्तः प्रकृतोपयोग इत्यभिप्रेत्याह ॥ **एवशब्देनेति** ॥ एवशब्दवच्चशब्दस्याप्यर्थानुवादकत्वभ्रान्तिं निराचष्टे ॥ **चशब्द इति** ॥ जिज्ञासोत्थेत्युत्तरवाक्यानुरोधेनादिपदसङ्ग्राह्यमाह ॥ **आदीति** ॥ हिशब्दस्य प्रसिद्ध्याद्यर्थकत्वे ज्ञानीत्यादेरतःशब्दव्याख्यानरूपत्वाप्रतीतेराह ॥ **हिशब्द इति** ॥ ज्ञानप्रसादमोक्षाणां साधनान्तरसाध्यत्वस्य पूर्वपक्षितत्वात्तन्निवर्तके जिज्ञासोत्थेतिवाक्ये बुद्ध्या विवेकेन प्रत्येकमेवशब्दसम्बन्धो विवक्षित इत्याह ॥ **एवेति** ॥ नन्वेकवाक्यत्वादस्य नैवकारस्य प्रत्येकं सम्बन्धः सम्भवति । प्रसादशब्दस्य यत्किञ्चित्प्रसादपरत्वे च कर्मादेर्मोक्षसाधनत्वं वदताऽपि कर्मादिसाध्यस्य तस्याङ्गीकर्तुं शक्यत्वेन तस्य जिज्ञासोत्थज्ञानजन्यत्वाभावेन भवदभिमतजिज्ञासाप्रयोजनत्वासिद्धिः । मुच्यत इत्यस्य पापादिमुक्तिपरत्वे तस्याः कर्मादिसाध्याऽधमप्रसादादिसाध्यत्वस्य सिद्धान्तेऽप्यङ्गीकारात्साधनान्तरव्यावृत्त्यर्थकैवकारानुपपत्तेः इति जिज्ञासावश्यकत्वस्यासिद्धिश्च । श्रुतेरेव साधकत्वाद्बलशब्दप्रयोगे च न प्रयोजनं पश्यामः । हिशब्दस्य हेत्वर्थकत्वे वाक्यापूर्तिश्च इत्यतो बुद्ध्या विवेकेन भिन्नवाक्यत्वमत्राभिप्रेत्योक्तशङ्कापरिहाराय वाक्यं योजयति ॥ **यस्मादित्यादिना** ॥ अत्र तस्य ब्रह्मण इत्यनेन विषयफलसम्बन्धप्रदर्शनम् । पररीत्या तस्य निर्गुणत्वे प्रसादोक्त्यनुपपत्तेरुक्तं नारायणस्येति । भिन्नवाक्यताप्रदर्शनेन प्रथमशङ्कापरिहारः । परमानुग्रहादिति विशेषविवक्षया द्वितीयायाः शङ्कायाः संसारादिति शेषोक्त्या तृतीयायाः श्रुतेरापातप्रतीत्यैतदर्थालाभेऽपि प्रमाणान्तराविरोधेन वाक्यार्थपर्यालोचनायामेतदर्थलाभ इत्यभिप्रेत्य बलशब्दप्रयोग इत्याह ॥ **यद्यपीति** ॥ पुरुषग्रहणेन तमेवमिति वाक्यस्य पुरुषसूक्तस्थत्वाद्युक्तं नारायणपरामर्शकत्वमिति सूचयति । परमग्रहणेन सोऽयं पुरुष इत्यपीत्युक्तस्य न्यायस्य वक्ष्यमाणस्य चानुसन्धेयतां सूचयति । **श्रूयते** वचनवृत्त्या बोध्यते ॥ **अनुसन्धेय इति** ॥ विद्वांस्तत्प्रसादातिशयवांश्च इति विद्वच्छब्दलक्षणां

सूचयति । वाक्यानुरोधेनेत्यनेन लक्षणाप्रयोजकमुख्यार्थानुपपत्तेः प्रदर्शनम् । निमित्तेनेति शक्यसम्बन्धस्य । मुमुक्षुस्त्वित्यादिना च प्रयोजनस्य । एवं तमेवमिति वाक्ये बलशब्दप्रयोजनमुपपाद्य यमेवैष इत्यत्रापि तदुपपादयति ॥ **वरणं त्विति** ॥ साधनान्तरव्यावृत्त्यर्थकैवकारेण सूचितां पूर्वपक्ष्यभिमतसाधनान्तरप्रतिपादकवाक्यानां गतिमाह ॥ **अपामेत्यादिना** ॥ **अन्यथा योज्या इति** ॥ भाक्तं वेति सूत्रोक्तरीत्या त्रेधा योज्या इत्यर्थः । सूत्र एव स्पष्टत्वादत्र योजनाप्रकाराप्रदर्शनम् । तत्रास्पष्टत्वादेवानुग्रहमात्रहेतुत्वेनेत्यन्तःकरणशुद्धिद्वारेण चेत्युत्तरवाक्यान्तरे तत्प्रदर्शनमिति ध्येयम् । विद्वच्छब्दस्य प्रसादातिशये लक्षणायामपि ज्ञानप्रसादयोर्द्वारद्वारिभावस्य पर्यवसानगत्या लाभमभिप्रेत्याह ॥ **विद्वानितीति** ॥ यद्वा मुख्यार्थानुपपत्तिशक्यसम्बन्धाद्यनुसन्धानबललभ्यस्य लाक्षणिकस्य ज्ञानसाध्यप्रसादातिशयस्यैवेयं पर्यवसितोक्तिरिति ध्येयम् । अपूर्णताशङ्कानिराकरणाय सूत्रशेषरूपस्य ज्ञानीत्यादिमुच्यत इत्यन्तवाक्यस्य सूत्रेणान्वय इत्याह ॥ **अत इति** ॥

**स०— प्रत्येकमभिसम्बध्यत इति** ॥ जिज्ञासयैव ज्ञानं, ज्ञानेनैव प्रसादः, प्रसादादेव मोक्ष इति प्रत्येकमभिसम्बन्ध इत्यर्थः ॥ **निमित्तेनेति** ॥ लाङ्गलेन जीवाम इत्यत्र साक्षाल्लाङ्गलस्य जीवनसाधनत्वाभावान्नैमित्तिकमुपलक्ष्यते यथा, तद्वन्निमित्तेन ज्ञानेन नैमित्तिकस्य प्रसादस्योपलक्षणादित्यर्थः । अनेन शक्यसम्बन्धो दर्शितः । ज्ञानशब्दस्य प्रसादे बहुलप्रयोगाभावेन रूढलक्षणाऽसम्भवात्प्रयोजनाभावेन अरूढलक्षणायाश्चासम्भवात्कथं ज्ञानशब्देन प्रसादोपलक्षणेत्यतः प्रयोजनाभावोऽसिद्ध इत्याह ॥ **मुमुक्षिवति** ॥ प्रसादस्य तु मुमुक्षुसम्बन्धिसाधनत्वं नेति भावः । ननु मुमुक्षुसम्बन्धिसाधनावधारणं हि ज्ञानमेव मोक्षसाधनं मुख्यं नान्यदिति कार्यम् । तदयुक्तम् भक्तेरेव मोक्षं प्रति मुख्यसाधनत्वादिति चेन्न । ज्ञानेन भक्तेरुपलक्षणात् । न च सम्बन्धाभावः । ज्ञानस्य भक्त्येकदेशत्वेनैकदेशे विशिष्टलक्षणोपपत्तेः । वक्ष्यते चैतत् 'ज्ञानस्य भक्तिभागत्वा'दिति भाष्यकृता । तमेवेत्यत्रैव प्रसादो न श्रूयते यद्बलाच्छङ्क्यत इत्यत आह ॥ **कर्मादेरिति** ॥ 'कर्मणा त्वधमः प्रोक्तः प्रसाद' इति प्रमाणानुसारेण स्वर्गादिहेत्वधमप्रसादमात्रहेतुत्वेनेत्यर्थः ।

**प०**— एवं ॐब्रह्मपदाभ्यां चिदचिद्विलक्षणविषयसिद्धिमनुग्राह्यप्रमाणमन्येनागतार्थत्वं चोपपाद्य अथपदस्य भाष्य एव सङ्क्षेपविस्तराभ्यामर्थस्योक्तत्वेन इह वक्तव्यविशेषाभावादुपासनापादोपक्रमे सङ्ग्रहेण व्याख्यास्यमानत्वाच्चातःपदस्यैव ज्ञानादिप्रणाड्या मोक्षफलकत्वाद्ब्रन्धस्य सत्यत्वाद्वेदस्य सिद्धरूपवस्तुपरत्वाद्वेदस्य प्रामाण्याद्वेदस्यान्विताभिधायित्वादित्येवंरूपहेतुपञ्चकपरत्वेन पञ्चधा व्याख्या आचार्येण

प्रारभ्यते ज्ञानीत्यादिना स्वयं भगवतेत्यतः प्राक्तनग्रन्थेन । तत्र ज्ञानीत्यादेर्वैयर्थ्यनिरासाय प्रयोजनमाह ॥ **ब्रह्मेति** ॥ ब्रह्मपदादिना चिदचिदन्यविषयसिद्धयैव ज्ञानस्वभावतोऽपीत्यत्र वक्ष्यमाणदिशाऽथपदजिज्ञासा-पदाभ्यामन्यथानुपपत्त्या च तज्ज्ञानतत्प्रसादद्वारा मोक्षाख्यप्रयोजनसिद्धावपि ज्ञानादित्रयस्यापि कर्मजत्व-प्रयुक्तं यन्निष्प्रयोजनत्वं प्रयोजनं चेश्वरजिज्ञासाया इत्यादिना पूर्वपक्षे शङ्कितं तद्द्विचारैकजन्यज्ञानैकजन्य-प्रसादद्वारकमोक्षाख्यफलवत्त्वोक्त्या निवारयितुमित्यर्थः । 'ज्ञानी प्रियतमोऽतो मे' 'ज्ञानेनासौ बिभर्ति माम्' इति भागवतवाक्यं व्यक्तमिति तदनुक्त्वाऽन्यदाह ॥ **तमिति** ॥ अवधारणार्थं चेति बहुव्रीहिः । तमेवं विद्वानेवेत्यवधारणोक्तौ योऽर्थो लभ्यते तदर्थकथनपरमुत्तरवाक्यं च गृह्यत इत्यर्थः ॥ **वाक्येति** ॥ भाष्योपात्तश्रुतिस्मृतिवाक्यानामन्योन्यसमुच्चय इत्यर्थः ॥ **हेताविति** ॥ एतच्च यस्मादित्यादिना अतो ब्रह्मजिज्ञासा कर्तव्येत्यन्तेनानुपदमेव व्यक्तम् ॥ **प्रत्येकमिति** ॥ प्रसादादेवेत्येवशब्दः जिज्ञासयैवोत्था ज्ज्ञानादेव जातात्प्रसादादिति सम्बध्यत इत्यर्थः । एतदप्यग्रे व्यक्तम् । एतच्चावधारणं 'सिद्धे सत्यारम्भो नियमाय'इति न्यायेन जीवान्यविषयसमर्पकब्रह्मपदेनैव ब्रह्मज्ञानादिद्वारा मोक्षफलकत्वसिद्धावपि पुनरत इति कथनाल्लब्धमिति भावः । भाष्यवाक्यानि योजयति ॥ **यस्मादित्यादिना** ॥ इति श्रुतिबलेन गम्यत इत्ययुक्तमित्याक्षिप्य समाधत्ते ॥ **यद्यपीति** ॥ **निमित्तेनेति** ॥ ज्ञानेन तज्जन्यप्रसादोपलक्षणात् इत्यर्थः । तमेवं विद्वानित्यस्य तत्प्रसादवानित्यर्थो लक्षणया ध्येयः । वेदजन्यत्वरूपशक्यसम्बन्धसत्त्वात् इति भावः । तथैव श्रुतौ कुतो नोक्तमित्यत आह ॥ **मुमुक्ष्विति** ॥ प्रसादो हीश्वरसम्बन्धी सन्मोक्ष-साधनं ज्ञानं च मुमुक्षुनिष्ठत्वात्तत्सम्बन्धि सत् मोक्षसाधनं तत्र तत्प्रसादवानमृत इह भवतीत्युक्तौ नान्यः पन्था इति वाक्यशेषो व्यर्थः । भगवन्निष्ठस्य प्रसादादन्यस्य मोक्षसाधनतयाऽप्रसक्ततया तन्निरासा-योगात् । विद्वानमृत इत्युक्तौ तु मुमुक्षुनिष्ठं भगवद्वेदनमिव कर्माप्यपाम सोममित्यादि पूर्वपक्ष्युक्त-श्रुत्यादिवशेन प्रसक्तमिति तन्निरासकतया नान्यः पन्था इति वाक्यशेषोऽर्थवान् । मुमुक्षुनिष्ठं ज्ञानमेव मोक्षसाधनं न तु कर्मेत्यवधारणोपपत्तेः । अतः प्रसादो न साक्षादुक्त इत्यर्थः । एतेन नान्यः पन्था इति ज्ञानादन्यस्य साधनत्वनिषेधात्कथं प्रसादः साधनत्वेन निवेश्यत इति प्रत्युक्तम् । मुमुक्षुसम्बन्धि-साधनान्तरस्यैव निषेधात् । यमेवैष इति वाक्यानुरोधेनेत्ययुक्तम् । तत्र प्रसादाप्रतीतेरित्यत आह ॥ **वरणं त्विति** ॥ पूर्वपक्ष्युक्तश्रुतेः का गतिरित्यत आह ॥ **अपामेति** ॥ **सावकाशत्वादिति** ॥ 'भाक्तं वा अनात्मवित्त्वात्' इति वैराग्यपादीयससमाधिकरणभाष्यटीकयोरुक्तदिशेति भावः । ज्ञानजादित्यंशं व्याचष्टे ॥ **ईश्वरेति** ॥ यस्मादित्येतदत्राप्यन्वेति । तत्कर्म हरितोषं यदित्यादिवचनाविरोधायोक्तम् ॥ **परमेति** ॥ कर्मजस्त्वपरम इति भावः । एवशब्दः प्रत्येकमभिसम्बध्यत इत्येतद्व्यक्तीकृतं ज्ञानादेवेति ॥ **तद्वचनमिति** ॥ तत्कर्म हरितोषं यदित्यादि पूर्वपक्ष्युक्तवचनमित्यर्थः । जिज्ञासोत्थेत्येतद्योजयति ॥

**ईश्वरज्ञानं चेति** ॥ यस्मादित्येतदत्राप्यन्वेति । कर्मणा ज्ञानमातनोतीत्यादि पूर्वपक्ष्युक्तवचनानां गतिम् आह ॥ **कर्मणां त्विति** ॥ **ज्ञानाङ्गत्वेति** ॥ 'उत्क्रमिष्यत एवं भावादित्यादौ तथा वक्ष्यमाणत्वादिति भावः । जिज्ञास्योऽयं विधीयत इत्यनेनान्वयमुपेत्यातःशब्दाध्याहारेणार्थमाह ॥ **अत इति** ॥

**या०— निमित्तेनेति** ॥ यथा लाङ्गलेन वयं जीवाम इत्यत्रान्ननिमित्तेन लाङ्गलेन तत्कार्यमन्नं लक्ष्यते तथा प्रकृतेऽपि ज्ञानलक्षणेन प्रसादसाधनेन तत्कार्यप्रसादो लक्ष्यत इत्यर्थः । लक्षणावृत्तिरर्थगतेति मतमाश्रित्येदमुक्तमित्यवगन्तव्यम् । उपलक्षणे कारणमाह ॥ **मुमुक्षुसम्बन्धीति** ॥ अयं भावः । अत्र हि 'नान्यः पन्था अयनाय विद्यत' इत्यन्यनिषेधेनोक्तावधारणं प्रतीयते । तेन मुमुक्षुसम्बन्धीनि यानि साधनानीष्टापूर्तादीनि कर्माणि ब्रह्मज्ञानं चेति प्रसिद्धानि तेषु ब्रह्मज्ञानमेव मोक्षसाधनं नोक्तरूपं कर्मेति मुमुक्षुनिष्ठकर्माद्यनेकसाधनेषु ज्ञानस्यैव मोक्षसाधनत्वनिर्धारणाय प्रसादो न कण्ठरवेणोपात्तः । तस्य भगवन्निष्ठत्वेन मुमुक्षुसम्बन्धित्वाभावात् । यदि चात्र प्रसादोऽभिधीयते तदा तस्यैव मोक्षसाधनता-प्रतीतिः स्यात् । न तु मुमुक्षुसम्बन्धित्वावच्छिन्नसाधनेषु अभिलषितैकसाधनताप्रतीतिरिति । ज्ञानस्य भक्तिभागत्वेन ज्ञानशब्देन भक्तेरुपलक्षणान्मुमुक्षुसम्बन्धित्वेऽपि तस्या न व्यावर्त्यत्वमिति द्रष्टव्यम् ॥ **सावकाशत्वादिति** ॥ 'अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्य' इति श्रुत्युक्त-प्रकारेणेति भावः ॥ **अनुग्रहमात्रहेतुत्वेनेति** ॥ अधमप्रसादहेतुत्वेनापीत्यर्थः ॥ **तद्वचनमिति** ॥ 'तत्कर्म हरितोषं यत्' इत्यादिवचनमित्यर्थः ॥ **तद्वाक्यमिति** ॥ कर्मणा ज्ञानमातनोतीत्यादिवाक्य-मित्यर्थः ॥

**श्री०**— ननु तं विद्वानित्यनेन तमेवं विद्वानिति वाक्यं सङ्गृहीतमिति यथोच्यते एवं ज्ञानी प्रियतमोऽतो म इत्यनेन प्रियोहि ज्ञानिनोऽत्यर्थमिति वाक्यं सङ्गृहीतमिति कस्मान्नोक्तमिति चेत् । उच्यते । ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति मामित्येवमेवैकादशस्कन्धवाक्यसद्भावात्तथा नोक्तमिति सम्प्रदायः ॥

**च० — निमित्तेनेति** ॥ धनेन विद्यया लाङ्गलेन वा वयं जीवामेत्यत्र निमित्ताभिधायकपदस्य तन्निमित्तकान्नलक्षकतादर्शनात्प्रकृतेऽपि ज्ञानरूपनिमित्ताभिधायकविदेस्तन्निमित्तकप्रसादलक्षकतोपेया इति भावः । ज्ञानलक्षणेन प्रसादसाधनेन तत्कार्यप्रसादो लक्ष्यत इत्यर्थः । लक्षणावृत्तिरर्थगतेतिमतमाश्रित्य इदमुक्तमित्यवगन्तव्यमित्यपि व्याचख्युः । स्वारसिकलक्षणोपगतेः फलमभिधत्ते ॥ **मुमुक्ष्विति** ॥ **साक्षात्** वाचकपदप्रयोगेण ॥ **ततः काञ्चिदिति** ॥ कल्पद्वयेऽपीशगुणत्वानपायेनेशाभिन्नतया भक्त्यादि-साध्यत्वानुपपत्तिरिति शङ्कानवकाशैव सिद्धान्ते गुणगुणिनोः सविशेषाभेदोपगत्या व्यक्त्यव्यक्तिभ्यां सर्व-सामञ्जस्यादिति भावः ।

सु० — इदमुक्तं भवति । यद्यपि न जिज्ञासायाः स्वर्गादिरूपोऽभ्युदयः प्रयोजनं सम्भवति । तथाऽपि मोक्षो भविष्यति । तस्यानन्यसाध्यत्वात् । मोक्षसाधनं हि साक्षात् भगवानेव । 'बन्धको भवपाशेन भवपाशाच्च मोचक' इत्यादिवचनात् । साधनं च द्विविधम् । सिद्धमसिद्धं च । तत्रासिद्धमुत्पाद्यं फलकामेन । यथा यागादि । सिद्धं तु सव्यापारी-करणीयम् । यथा कुठारादि । सिद्धं च साधनं भगवानिति मुमुक्षुणा सव्यापारीकरणीयः । व्यापारश्च प्रसन्नतैव । निगडादिमोचकेषु राजादिषु तथा दर्शनात् । 'यस्य प्रसादात्परमार्ति-रूपादस्मात्संसारान्मुच्यते नापरेण' इत्यादिश्रुतेश्च । व्यापारप्राधान्योक्तिश्चेन्द्रियार्थसन्निकर्षः प्रत्यक्षमित्यादाविवौपचारिकी । मोचकश्चेश्वरप्रसादस्तद्भक्त्यैकसाध्यः । 'भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचिदित्यादिवचनात् । स्वर्गादिहेतुप्रसादमात्रं कर्मादिसाध्यम् । 'कर्मणा त्वधमः प्रोक्तः प्रसाद' इत्यादि स्मृतेः । प्रसादो नामेच्छाविशेषो गुणान्तरं वा न नः काचित् क्षतिः । परमेश्वरभक्तिर्नाम निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वकः स्वात्मात्मीयसमस्त-वस्तुभ्योऽनेकगुणाधिकोऽन्तरायसहस्रेणाप्यप्रतिबद्धो निरन्तरप्रेमप्रवाहः । यमधिकृत्य 'यत्र नान्यत्पश्यति' 'सा निशा पश्यतो मुनेः' इत्यादिश्रुतिस्मृतयः । न चासौ तत्साक्षात्कार-मन्तरेणोत्पद्यते । लोके तथाऽदर्शनात् । न चाव्यक्तस्वभावो भगवांत्सहस्रेणापि प्रयत्नानां शक्यः साक्षात्कर्तुं विना तदनुग्रहात् । प्रसन्नस्त्वनन्ताचिन्त्यशक्तियोगादात्मानं दर्शयतीति युज्यते । दर्शनसाधनं चानुग्रहः स्वयोग्यगुणोपेतस्य निर्दोषस्य भगवद्विग्रहविशेषस्यादर-नैरन्तर्याभ्यां विषयवैराग्यतद्भक्तिसहिताद् बहुकालोपचितान्निदिध्यासनापरनामकाद्विचिन्तनादृते न लभ्यते । न च निदिध्यासनं वाक्यार्थग्रहणलक्षणे श्रवणे कृतेऽपि विना मननापरनाम्ना विचारेणोपपद्यते । संशयविपर्ययोस्तादवस्थ्यात् । न हि तयोः सतोरादरनैरन्तर्याद्युपपद्यते । अतो जिज्ञासा निदिध्यासनपरमेश्वरानुग्रहदर्शनपरमभक्तिपरमानुग्रहद्वारा मोक्षसाधनत्वात् कर्तव्येति । ये तु ध्यानमेव परमपाटवापन्नमपरोक्षाकारमिति मन्यन्ते तेषां दर्शनश्रुतय उपचरितार्थाः प्रसज्येरन् ।

वा० — ननु प्रसादस्य मोक्षहेतुत्वं नातःशब्दार्थतया व्याख्यातुं युक्तम् । 'ततो ह्यस्य बन्ध-विपर्ययौ' परेण च शब्दस्य' इत्यादिसूत्रैः 'ज्ञानिनां मोक्षदश्च सः' इति स्वेनैवोदाहरिष्यमाणप्रमाणेन 'येनैव बन्धमोक्षः स्यात्' इति वक्ष्यमाणस्ववचनेन च विरोधापत्तेः । न च तदनुसारेणेश्वरस्यैव मोक्षहेतुत्वं प्रसादस्य च व्यापारत्वमत्राभिप्रेतमिति वाच्यम् । व्यापारस्यानावश्यकत्वात्तथात्वेऽपि वा

तस्यैव व्यापारत्वे प्रमाणाभावात्तथैवोक्तिप्रसङ्गाच्च । 'ज्ञानजात्तप्रसादात्' इत्यप्ययुक्तम् । पूर्वपक्ष्युक्तादृष्टकल्पनानुद्धारात् । ज्ञानान्तरमेव प्रसादेन सद्यो मोक्षापत्तेश्च । न चैवमेव साक्षात्कारप्रसादयोरन्तरा साधनान्तरमत्राभिप्रेतमिति वक्तुमुचितम् । प्रसादस्येच्छामात्रत्वेन तस्याश्चानादिसिद्धत्वेन साधनानपेक्षणाच्च । जिज्ञासोत्थज्ञानेत्यप्ययुक्तम् । अतोऽनन्तेनेत्येतद्विरोधापत्तेः । आदिपदेनात्मा वा अरे इति श्रवणादित्रयसङ्ग्राहकवाक्यविशेषोपादानप्रयोजनं च न पश्याम इत्यतः सूत्राद्यनुसारेणैतद्वाक्याभिप्रेतं साधनान्तरोपलक्षणमुक्तोपलक्षितानां साध्यसाधनभावोपपादनप्रकारं च दर्शयति ॥ **इदमुक्तमिति** ॥ अत्र यद्यपीत्यादि मुच्यत इत्यस्याभिप्रायकथनम् । मोक्षसाधनं हीत्यादि सहेतुकं प्रसादशब्दोपलक्षितार्थकथनम् । साधनं चेत्यादिनैवकारेण लब्धस्य प्रकृते व्यापारावश्यकत्वस्य प्रसन्नताया एव व्यापारत्वस्य चोपपादनेन साध्यसाधनभावोपपादनम् । मोचकश्चेत्यादिना सहेतुकमुपलक्षितार्थकथनम् । प्रसादो नामेति तत्स्वरूपकथनेनेच्छामात्रस्य सिद्धत्वेऽपीच्छाविशेषस्य गुणान्तरस्य वाऽनभिव्यक्त्यादिसूचनेन साध्यसाधनभावोपपादनम् । एवं भक्तिप्रसादयोः साध्यसाधनभावमुपपाद्य भक्तिज्ञानयोः साध्यसाधनभावं न चासौ इत्यादिनोपपादयितुं 'माहात्म्यज्ञानपूर्वस्तु' इति प्रमाणं मनसि निधाय भक्तिस्वरूपकथनं परमेश्वरेति । तादृशभक्तिस्वरूपमनुभवारूढं कर्तुं तत्कार्यप्रतिपादकप्रमाणोपन्यासो यमधिकृत्येति न चात्यक्तेति सहेतुकं ज्ञानशब्देन प्रसादशब्देन वोपलक्षितार्थकथनम् । प्रसन्न इत्यादि साध्यसाधनभावोपपादनम् । जिज्ञासाशब्दस्य निदिध्यासनार्थत्वमभिप्रेत्य तस्य ज्ञानसाधनतोपपादनाय निदिध्यासनस्वरूपनिरूपणं दर्शनसाधनं चेत्यादि । जिज्ञासाशब्दार्थविचारस्य निदिध्यासनसाधनतोपपादनं न चेत्यादि । अत एव त्रितयसङ्ग्राहकवाक्यस्यादिपदेनोपादानम् । यद्वा नात्रोपलक्षितार्थकथनं किन्तु परम्परासाध्यसाधनभावाभिप्रायप्रवृत्तैतद्वाक्याभिप्रेतपरम्पराघटकानां कथनमिति द्रष्टव्यम् ।

**स०**— ननु कथं भगवतः साधनत्वम् । यागादिवत् व्यापाररूपत्वाभावात् । कुठारादिवत् तदिति चेन् न । व्यापारानिरूपणात् इत्यत आह ॥ **साधनं चेति** ॥ ननु न भगवतः साधनत्वम् । यस्य प्रसादादिति प्रसादस्य मोक्षसाधनत्वाध्यवसायादित्यत आह ॥ **व्यापार इति** ॥ कथं नित्यगुणस्य प्रसादः साध्यत इत्याशङ्क्याह ॥ **प्रसाद इति** ॥ शक्तिव्यक्तिरूपताया वक्ष्यमाणत्वादित्यर्थः । अत्र गुणान्तरमित्यभ्युच्चयः । इच्छाविशेष इत्येव वस्तुस्थितिः । तथा वक्ष्यत्याचार्यः 'इच्छानिमित्तको यस्मात्' इत्यादिना ॥ **स्वात्मात्मीयेति** ॥ स्वात्मात्मीयसमस्तवस्तुषु क्रियमाणस्नेहादित्यर्थः ॥ अत्र प्रमाणमाह ॥ **यमधिकृत्येति** ॥ यं प्रेमप्रवाहम् । प्रवृत्ता इति शेषः । यत्र भूम्नि दृष्टेऽन्यत् न पश्यति । अस्य स भूमेति वाक्यशेषेणान्वयः ।

प०— कथमनेन ज्ञानीत्यादिना मुच्यत इत्यन्तेन भाष्येण पूर्वपक्षदशायामुक्तनिष्प्रयोजनत्वशङ्कानिरास इत्यत आह ॥ **इदमुक्तमिति** ॥ श्रुतौ मूले च यस्य प्रसादादित्यादिप्रसादप्राधान्योक्तिः कथमित्यत आह ॥ **व्यापारेति** ॥ परेण चशब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्ध इति सूत्राद्युक्तमाह ॥ **तद्भक्त्येकेति** ॥ भारततात्पर्योक्तमाह ॥ **भक्त्यैवेति** ॥ तत्कर्म हरितोषं यदित्यादि तु कथमित्यत आह ॥ **स्वर्गादीति** ॥ भाष्योक्तस्मृतिमाह ॥ **कर्मणेति** ॥ ननु प्रसादस्येच्छाविशेषत्वाद्भगवतश्च 'आप्तकामस्य का स्पृहा' इति श्रुत्येच्छानिषेधात्कथं प्रसादो भगवत उच्यत इत्यत आह ॥ **प्रसादो नामेति** ॥ **न नः काचित्क्षतिरिति** ॥ प्रसादद्वारा ज्ञानं मुक्तिहेतुरिति प्रकृतप्रमेये काचिद्धानिर्नास्ति इत्यर्थः । युक्तिपादे 'न प्रयोजनवत्त्वात्' इत्यधिकरणानुव्याख्याने सुधायां च समर्थयिष्यमाणं प्रसादस्य इच्छारूपत्वं तु वास्तवाभिप्रायम् । अत एवेच्छाविशेष इति कोट्यन्तरोक्तिः श्रुतेरर्थान्तरस्य वक्ष्यमाणत्वादिति भावः । ननु प्रसादस्य भक्तिसाध्यत्वे ज्ञानजात्तत्प्रसादादिति कथमित्यतः ज्ञानस्य भक्तिभागत्वादिति भक्तिपादान्त्यभागे वक्ष्यमाणदिशैकदेशकीर्तनमेतदिति भावेनाह ॥ **परमेश्वरभक्तिर्नामेति** ॥ 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा' इति भारततात्पर्योक्तेरिति भावः । असम्भावितोऽयं प्रेमप्रवाह इत्यत आह ॥ **यमधिकृत्येति** ॥ उक्तरूपप्रेमप्रवाहमाश्रित्य 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति छान्दोग्ये सप्तमाध्याये भूमप्रकरणे यत्र यस्मिन् भूमविषये उक्तरूपभक्तौ सत्यामन्यदर्शनादिकं नास्तीत्याद्यर्थकश्रुतयो वर्तन्ते । तथा । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इत्यादि गीतादिस्मृतयः प्रवर्तन्त इत्यर्थः । अस्तु मोक्षहेतुप्रसादो भक्त्येकसाध्यः । किं जिज्ञासया कृत्यमित्यतः प्रणाड्या तदुपयोगमाह ॥ **न चासावित्यादिना** कर्तव्येत्यन्तेन । असौ भक्तिरित्यर्थः । लोक इति । राजादौ ॥ **अव्यक्तेति** ॥ 'तदव्यक्तमाह हि' इति वक्ष्यमाणन्यायेनेति भावः । नन्वव्यक्तैकस्वभावः प्रसन्नः सन्नपि कथं मुक्तिहेतुप्रसादजनकभक्तिकारणस्य साक्षात्कारस्य विषयः स्यादित्यतः 'अतोऽनन्तेन तथा हि लिङ्गम्' इति सूत्राद्युक्तमाह ॥ **प्रसन्नस्त्विति** ॥ नन्वस्त्वेवं तावता मुक्तिप्रसादजनकभक्तिकारणसाक्षात्कारोत्पादकस्येश्वरानुग्रहस्यान्येनापि सम्भवान्न जिज्ञासया विचाररूपया कृत्यमित्यतस्तन्निर्धारणार्थनियमस्तदृष्टेः पृथग्ध्यप्रतिबन्धः फलम्' इति सूत्राद्युक्तोपयोगमाह ॥ **दर्शनसाधनं चेति** ॥ **विग्रहविशेषस्येति** ॥ बिम्बरूपस्येत्यर्थः । न सामान्यादप्युपलब्धेरित्यादेरिति भावः ॥ **भक्तीति** ॥ 'अनुबन्धादिभ्यः' इति सूत्रादिति भावः । कर्तव्येतीति शब्दस्येदमुक्तं भवतीति पूर्वेणान्वयः ॥ **येत्विति** ॥ रामानुजीयाः ॥ **दर्शनश्रुतय इति** ॥ 'आत्मा वा अरे द्रष्टव्यः' 'दृष्ट्वैव तं च्यतमु इत्यादिश्रुतय इत्यर्थः ।

या० — **न नः काचिदिति** ॥ प्रसादस्य पक्षद्वयेऽपि भगवद्गुणत्वेन तदभेदाद्भक्त्यादि-साध्यत्वानुपपत्तिरूपक्षतिर्नास्ति । अस्माभिः विशेषबलेन शक्त्यात्मना सतोऽपि व्यक्त्यात्मना साध्यत्वाङ्गीकारादिति भावः । यद्वा ननु भगवतो निर्गुणत्वात्कथं तत्रेच्छारूपो गुणः । सगुणत्वेऽपि वा तस्य अष्टगुणत्वात्कथं गुणान्तररूपप्रसादसम्भव इत्यत आह ॥ **न नः काचिदिति** ॥ अस्माभिरनन्त-गुणवत्त्वाङ्गीकारान्नोक्तदोष इति भावः । मोचकप्रसादहेतुभूतभक्तिस्वरूपं दर्शयति ॥ **परमेश्वरभक्तिः इति** ॥ मोचकप्रसादहेतुभूतेति शेषः । एतादृशः प्रेमप्रवाहोऽसम्भावित इत्याशङ्कापरिहाराय सम्भावकं प्रमाणेनाह ॥ **यमधिकृत्येति** ॥ यं ज्ञापयितुमित्यर्थः । अत्रोभयत्र जाग्रदवस्थायामपि बाह्यविषया-ज्ञानोक्त्या भगवत्युक्तप्रेमप्रवाहोऽस्तीति ज्ञायते । अन्यथा तदसम्भवादिति भावः ॥ **दर्शनश्रुतय इति** । 'आत्मा वा अरे द्रष्टव्यः' 'दृष्ट्वैव तं मुच्यत' इत्याद्याः श्रुतय इत्यर्थः । ध्यानस्य परमपाटवत्वेऽपि परोक्षत्वानपगमादिति भावः । न च ध्यानस्यापि मानसापरोक्षरूपत्वेनाविरोध इति वाच्यम् । ध्येयांशे तस्य परोक्षत्वात् । यथाऽऽहुः । 'परोक्षज्ञानसन्ततिर्ध्यानम्' इति । केचित्तु दर्शनश्रुतय इत्युक्तस्य दर्शनस्य ध्यानसाध्यश्रुतय इत्यर्थ इत्याहुः ।

च० — मुक्त्यात्मकफलोपधायकप्रसक्तिहेतुभूतभक्तिस्वरूपं प्रकाशयति ॥ **परमेश्वरेति** ॥ निरूपकतयाऽधिकपदार्थतावच्छेदकीभूताधिक्यान्वय्यवधित्वार्थिका पञ्चमी । उक्तार्थेऽसम्भावनाशङ्काव्यव-च्छित्त्यै प्रमाणमभिधत्ते ॥ **यमधिकृत्येति** ॥ यं परमात्मानं विषयीकृत्येत्यर्थः । **यत्र** यस्यां विषय-लक्षणायां जाग्रति अन्यत् । परमात्मातिरिक्तं न पश्यति । न साक्षात्कुरुते । सा परमात्मानं पश्यतो मुनेर्निशा प्रायस्तत्र ज्ञानाभावादित्यर्थः । **शक्तियोगात्** शक्तिलक्षणादुपायात् । **दर्शनश्रुतयः** दर्शन-प्रतिपादिकाः श्रुतयः 'आत्मा वा अरे द्रष्टव्य' इत्याद्याः ॥ **उपचरितार्था इति** ॥ ध्यानस्य परम-पाटवेनापि परोक्षत्वानपायादिति भावः ।

सु० — **स्यादेतत्** । अतःशब्दस्तावत्प्रकृतस्य हेतुभावे वर्तते । तत्र ब्रह्मजिज्ञासायाः प्रयोजनाकाङ्क्षायामधिकारिविशेषणतयाऽथशब्देन प्रकृतो मोक्षः सम्बध्यते । ज्ञातुमिच्छा जिज्ञासा । न चात्रावयवार्थेन जिज्ञासाशब्दोऽर्थवान् । इच्छायाः स्वातन्त्र्याविषयत्वेन विधातुमशक्यत्वात् । अत एवेष्यमाणज्ञानोपलक्षणाऽप्ययुक्ता । तस्माज्ज्ञानेच्छान्तर्णीतो विचारो जिज्ञासापदेन लक्ष्यते । मुख्यप्रयोगातिक्रमेण लाक्षणिकाश्रयणे चेदं प्रयोजनम् । यद्विचारस्य ज्ञानद्वारैव मोक्षसाधनत्वज्ञापनम् । अन्यथा योग्यताविरहेणान्वयाभावप्रसङ्गात् ।

**यदि च जिज्ञासाशब्दो मीमांसाशब्दवद्विचार एवोपसङ्क्रायते । तदाऽप्यन्वयव्यतिरेकाभ्यां विचारस्य ज्ञानसाधनता ज्ञास्यते । एवं च विचारो यतो ज्ञानसाधनं ज्ञानं च मोक्षसाधनमतो असौ कर्तव्य इति लभ्यते ।**

**वा०**— ननु द्रव्यं कर्म चेति ज्ञानस्वभावतो मुक्तिनिषेधकमुतरवाक्यमसङ्गतम् । न च जिज्ञासोत्थेति पूर्ववाक्योक्तप्रसादस्यातःशब्दार्थतया लाभोपपादनाय तदिति वाच्यम् । तद्वाक्योक्तविचारज्ञानमोक्षाणामिव प्रसादस्यापि हेतुसमर्पकातःशब्देन लाभोपपत्त्या विशेषशङ्काभावेन प्रसादलाभस्यैव विशिष्यानुपपादनीयत्वाज्ज्ञानस्वभावतो मुक्तेः साधकाभावेनेश्वराधीनत्ववचनविरोधेनानुपपत्तिश्चेत्यतः प्रकृतहेतुत्वसमर्पकेणातःशब्देन प्रकृतत्वाद्विचारज्ञानमोक्षाणां हेतुत्वलाभेऽपि प्रसादस्याप्रकृतत्वान्न तल्लाभ इति विशेषशङ्कासद्भावाद्युक्तं तदुपपादनमित्यभिप्रेत्य विशेषशङ्कामुत्थापयति ॥ **स्यादेतदिति** ॥ एतत्प्रसादार्थकतयाऽतःशब्दव्याख्यानं तदा स्याद्यदि प्रसादः प्रकृतः स्यादिति शेषः । मोक्षादीनां प्रकृतत्वं प्रसादस्य तदभावं चोपपादयति ॥ **तत्रेत्यादिना** ॥ अथशब्देनाधिकारिविशेषणतया मोक्षस्येव शमादीनामपि प्रकृतत्वान्न मोक्षस्यैव सम्बन्धे विशेषनियामकमित्यत उक्तं ब्रह्मजिज्ञासायाः प्रयोजनाकाङ्क्षायामिति । एवमथशब्देन मोक्षस्य प्रकृतत्वमुपपाद्य विचारे ज्ञानसाधनत्वस्य ज्ञाने मोक्षसाधनत्वस्य जिज्ञासाशब्दलक्षणानिमित्तशक्यसम्बन्धत्वेन लक्षणाप्रयोजनत्वेन च लाभार्थं लक्षणाया मुख्यार्थानुपपत्त्यादिपूर्वकत्वात्प्रसिद्धयौगिकार्थानुपपत्त्यादिप्रतिपादनाय जिज्ञासाशब्दस्य यौगिकमर्थं तावदाह ॥ **ज्ञातुमिच्छेति** ॥ **इच्छाया इति** ॥ इच्छाया विषयसौन्दर्याधीनत्वेन पुमनधीनत्वेन विधेयत्वात्सम्भवादित्यर्थः ॥ **अत एवेति** ॥ ज्ञानस्य स्वकारणे सति पुमनिच्छायामपि दर्शनात्स्वातन्त्र्याविषयत्वेनाविधेयत्वादेवेत्यर्थः । इष्यमाणेति शक्यसम्बन्धप्रदर्शनम् । एवं च मुख्यार्थानुपपत्तेरुपलक्षणीयान्तरस्य चाभावाद्विचार एवोपलक्षणीय इत्युपसंहरन् शक्यसम्बन्धं च दर्शयति ॥ **तस्मादिति** ॥ इष्यमाणज्ञानं प्रति साक्षादिच्छायाः साधनत्वासम्भवादिच्छानन्तरभाविज्ञानात्प्राक्कालसम्बन्धी विचारो ज्ञानेच्छयोरन्तर्मध्ये नीत इत्यर्थः । यद्वा श्रुतिसिद्धस्वर्गसाधनभावो यागः स्वर्गेच्छासाध्य इवान्वयव्यतिरेकसिद्धज्ञानसाधनभावो ज्ञानेच्छासाध्यो विचारो ज्ञानेच्छयोरन्तर्णीत इत्यर्थः । एवं च ज्ञानेच्छासाध्यत्वं विचारस्य शक्यसम्बन्ध इति भावः । अत्र ज्ञानेच्छासाध्य इत्येव वक्तव्येऽन्तर्णीत इत्युक्तिः शक्यसम्बन्धगवेषणायां विचारे ज्ञानसाधनत्वस्यापि लाभ इति सूचयितुम् । अस्तु तर्ह्यथशब्दान्मोक्षस्य जिज्ञासाशब्दाच्च विचारे ज्ञानसाध्यत्वस्य च लाभः । ज्ञानस्य मोक्षसाधनतालाभस्तु कथमित्यतः स्वायत्तन्यायविरोधेन लाक्षणिकप्रयोगानुपपत्तेस्तत्प्रयोगप्रयोजनत्वेन तत्सिद्धिरित्याह ॥ **मुख्येति** ॥

**अन्यथेति** ॥ विचारे मुख्यस्य विचारशब्दस्यैव सूत्रे प्रयोगेऽतो मोक्षाद्धेतोर्विचारः कर्तव्य इति सूत्रवाक्यान्मोक्षविचारयोः साक्षात्साध्यसाधनभावप्रतीत्या विचारस्य चान्वयव्यतिरेकाभ्यां साक्षाज्ज्ञान-साधनत्वस्यैव सिद्धतया विचारे साक्षान्मोक्षसाधनत्वस्य बाधितत्वेनान्वयाभावप्रसङ्गादित्यर्थः । एवं लक्षणापक्षे ज्ञानसाधनत्वादिलाभं प्रदर्श्य रूढिपक्षेऽपि तं दर्शयति ॥ **यदि चेति** ॥ एवं च पूर्वोक्ता-न्वयाभावप्रसङ्गो ज्ञानान्वयव्यतिरेकाननुसन्धानेन साक्षात्साध्यसाधनभावेन सूत्रव्याख्यान इति न विरोध इति द्रष्टव्यम् । अस्मिन्पक्षेऽथ मुमुक्षानन्तरं ज्ञानसाधनविचारः कर्तव्य इति सूत्रवाक्यार्थान्यथाऽनुपपत्त्या ज्ञानस्य मोक्षसाधनतालाभ इति द्रष्टव्यम् ।

स०— अपरोक्षाकारध्यानमेव मोक्षसाधनज्ञानमित्यत्र ज्ञानसाधनत्वाध्यवसायादसूत्रितः प्रसादो न वक्तव्य इति शङ्कते ॥ **स्यादेतदित्यादिना** ॥ **अतःशब्द इति** ॥ यस्माद्विचारः फलसाधनमतोऽसौ कर्तव्य इत्यर्थः । विचारसाध्यज्ञानस्य सुखप्राप्तिदुःखनिवृत्त्यन्यतरत्वाभावात् । तस्मात्फलविशेषाकाङ्क्षायां 'स्वर्गकामो यजेते'त्यत्राधिकारिविशेषणस्य स्वर्गस्य फलत्ववदथशब्दोपात्ताधिकारिविशेषणभूतो मोक्षः फलत्वेन सम्बध्यत इति भावः । नन्वधिकारिविशेषणत्वेन मोक्षस्य फलत्वमुत काम्यत्वेन । नाद्यः गृहदाहादेरपि फलताप्रसङ्गात् । न द्वितीयः 'परस्त्रीकामः प्रायश्चित्तं कुर्यात्' इत्यत्र कामिनीव्यक्तेरपि फलतापत्तिः । तस्मादधिकारिविशेषणस्य फलत्वमसङ्गतमिति । मैवम् । न विशेषणत्वेन न वा काम्यत्वमात्रेण मुक्तेः फलत्वम् । किन्तु काम्यत्वे सत्यनिन्दितत्वेन तस्मादधिकारिविशेषणतयेति सुष्ठूक्तमिति ॥ **इच्छाया इति** ॥ पुरुषप्रयत्नाविषयत्वेन विधानानुपपत्तेर्लक्षणाऽऽश्रयणीयेति भावः । जिज्ञासाशब्देन विचारस्यैव लक्षणायां को हेतुरित्यतो जिज्ञासापदवाच्यसम्बन्ध इत्याह ॥ **अन्तर्णीत इति** । ज्ञानेच्छाभ्यामन्तर्मध्ये नीत इत्यर्थः । परोक्षज्ञानं फलम् । सन्दिग्धे न निश्चयः । तच्च विचाराविनाभूतमिति विचारे लक्षणेति भावः । अथवा जिज्ञासा कर्तव्येत्यत्रेष्यमाणज्ञानस्य साक्षादिच्छासाध्यत्वस्य इच्छाया अपि साक्षात् ज्ञानं प्रति साधनत्वस्य चासम्भवात् । क्रियायाः कालान्तरभाविफलसाधनत्वानुपपत्त्याऽपूर्वाभ्युपगमवत्तन्निर्वाहकमेव आक्षिप्यत इत्यर्थः । यद्वा ज्ञानेच्छा-न्तर्णीत इति शक्यसम्बन्धज्ञापनार्थमुक्तम् । ज्ञानेच्छाभ्यामन्तः मध्ये नीतः । ब्रह्मज्ञानेच्छया हि विचारे क्रियमाणे ब्रह्मज्ञानं भवति अत इच्छाज्ञानमध्यवर्ती विचार इच्छासाध्यो ज्ञानजनको लभ्यत इत्यर्थः । नन्वत्र जिज्ञासापदं यौगिकं वाक्यं न रूढमतः कथं विचारलक्षकं रूढस्य गङ्गादिपदस्य तीरादिलक्षकतया प्रसिद्धत्वादिति चेत् । अत्र वदन्ति । न प्रकृतिप्रत्ययसमुदायोऽत्र लक्षकः, किन्तु प्रत्यय एक एवेति तच्चिन्त्यम् । तथात्वे मुख्यार्थसम्बन्धदर्शनायेच्छासाध्य इत्येव वक्तव्यत्वेन ज्ञानेच्छा-

न्तर्णीत इति प्रकृतिप्रत्ययार्थसम्बन्धप्रदर्शनवैयर्थ्यात् । तस्मादत्र प्रकृतिप्रत्यययोरुभयोरपि विचारलक्षकत्वम् । एवं हि उभयाभिधेयसम्बन्धप्रदर्शनं सार्थकम् । न च पदसमूहे एकार्थलक्षकत्वं क्वाप्यदृष्टं कथं कल्पनीयमिति वाच्यम् । परैः गम्भीरायां नद्यां घोष इत्यत्र गम्भीरनदीपदयोर्गम्भीरनदीसम्बद्धतीरलक्षकत्वस्य सत्यादिपदानां ब्रह्मस्वरूपमात्रलक्षकत्वस्य च स्वीकारात् । तत्रैकैकस्य लक्षकत्वे शक्यसम्बन्धिनो गम्भीरनदीतीरादेरप्रतीतिप्रसङ्गवत् अत्राप्येकैकस्य लक्षकत्वे शक्यासम्बन्धिनो ज्ञानसाधनेच्छासाध्यविचारस्याप्रतीतिप्रसङ्ग इति । अत एतादृशविचारोपस्थित्यर्थं प्रकृतिप्रत्यययोरुभयोरपि लक्षकत्वं वक्तव्यमिति । अत्र ब्रूमः । न तावदत्र प्रकृतिप्रत्यययोरजहत्स्वार्थलक्षणा । छत्रिणो गच्छन्तीत्यादौ छत्र्यच्छत्रिसमुदायस्य गमनान्वय इवात्रापि ज्ञानेच्छाविचाररूपसमुदायस्य कर्तव्यत्वान्वयप्रसङ्गेन ज्ञानेच्छयोरपि विधेयत्वप्राप्तेः । नापि जहत्स्वार्था । तथात्वे ज्ञानबोधकस्यान्यस्याभावेन ब्रह्मण उद्देश्य ज्ञानान्वयोक्तिविरोधात् । तस्मात्प्रत्यय एक एव जहत्स्वार्थलक्षणया विचारलक्षक इति प्रतिभाति । न चैवं विचारस्य ज्ञानेच्छान्तर्णीत इति प्रकृतिप्रत्ययार्थसम्बन्धप्रदर्शनं व्यर्थमिति वाच्यम् । नात्र विचारस्य प्रकृतिप्रत्ययार्थसम्बन्धो मुख्यार्थसम्बन्धतयोच्यते किन्तु लोके हि यो मुख्यार्थसम्बन्धः यत्समभिव्याहृतापरपदार्थान्वययोग्यः । स एव लभ्यो भवति न परः । विचारस्य प्रत्ययमुख्यार्थेच्छायाः साध्यतया सम्बन्धः । साधनतया ज्ञानरूपापरपदार्थान्वययोग्यश्च । अतः प्रत्ययलभ्यो भवतु युक्त इत्याशयेन तस्योभयसम्बन्धप्रदर्शनोपपत्तेः । न चैवमत्रेच्छाबोधकाभावेन ज्ञानस्येष्टत्वं न सिध्यतीति वाच्यम् । आक्षेपेणैव तत्सिद्धेः । तथाहि इष्टसाधनत्वस्यैव विध्यर्थतया ब्रह्मज्ञानजनके विचारे इष्टसाधनतया विधिनावगते ज्ञानजनकविचारस्येष्टसाधनत्वं ज्ञानस्यैवेष्टत्वमादाय पर्यवस्यतीति न काचिदत्रानुपपत्तिरिति । ननु जिज्ञासाशब्दस्य रूढत्वे ज्ञानज्ञापकाभावाद्योग्यताविरहेण विचारस्य मोक्षसाधनत्वोक्तिरनन्विता स्यादित्यत आह ॥ **यदि चेति** ॥

प० — 'द्रव्यं कर्म च कालश्च' इत्यादिश्लोकद्वयं पूर्वसङ्गतमिति दर्शयंस्तार्किकशङ्कोत्तरत्वेन अवतारयति ॥ **स्यादेतदित्यादिना** ॥ एतत् वक्ष्यमाणम् । पूर्वं मोक्षहेतुप्रसादजनकज्ञानजनकत्वाजिज्ञासा कर्तव्येति जिज्ञासोत्थेत्यादिनोक्तम् । तत्र मोक्षहेतुज्ञानजनकत्वमात्रस्य प्रकृतत्वसम्भवोऽतःशब्दस्तावदित्यादिनोपपाद्यते । ईश्वरप्रसादस्य त्वित्यादिना तु प्रसादांशस्याप्रकृतत्वमुच्यते ॥ **प्रकृतस्य हेतुभाव इति** ॥ एतस्माद्धेतोरित्यर्थे वर्तत इत्यर्थः । एतच्छब्दात्पञ्चम्यास्तसिलादेशो एतदोऽशिति प्रातिपदिकस्याशादेशोऽत इति रूपम् । तथाच सर्वनामसंज्ञकेन प्रातिपदिकेनाकारेण प्रकृतं परामृश्य तस्य तसिल्विभक्त्या हेतुत्वमतःशब्दो वक्तीत्यर्थः ॥ **अधिकारीति** ॥ अधिकारिविशेषणेच्छाविषयत्वेन

इत्यर्थः । अथेत्यस्याधिकारानन्तर्यमर्थः । अधिकारश्च मुमुक्षादिरिति भाष्य एव व्यक्तत्वादिति भावः । मोक्षस्याथपदेन प्रकृतत्वमुक्त्वा ज्ञानस्य जिज्ञासापदेन प्रकृतत्वं वक्तुं वाचस्पतिनोक्तमर्थमनूद्य निराह ॥ **ज्ञातुमिच्छेति** ॥ **स्वातन्त्र्येति** ॥ विषयविशेषदर्शनादेवेच्छाया जायमानत्वेन प्रयत्नानपेक्षणादिति भावः ॥ **विधातुमशक्यत्वादिति** ॥ प्रयत्नविषयस्यैव विधेयत्वादिति भावः । रामानुजाभिमतार्थं निराह ॥ **अत एवेति** ॥ ज्ञानस्य करणपरतन्त्रतया पुरुषप्रयत्नाविषयत्वादेवेत्यर्थः ॥ **अन्तर्णीत इति** ॥ प्रकृत्यर्थज्ञानसाधनत्वेन सम्प्रत्ययार्थरूपेच्छासाध्यत्वेन मध्ये प्राप्त इत्यर्थः । अनेन मुख्यार्थसम्बन्धो लक्षणाबीजभूतो दर्शितः । अत्रान्तर्णीतेति पाठः साधुः । 'अदन्तरोरुपसर्गवद्वृत्तिर्वाच्या' इत्युक्त्यन्तः-शब्दस्योपसर्गत्वेनोपसर्गादसमासेऽपि 'णो नदेशस्य' इति णत्वेन भाव्यत्वात् ॥ **अन्यथेति** ॥ मुख्य-विचारपदस्यैवोक्तावित्यर्थः । साक्षाद्धेतुत्वाभावादिति भावः ॥ **विचार एवोपसङ्ख्यायत इति** ॥ यद्यपि श्रीमद्भाष्यटीकायां जिज्ञासितं सुसम्पन्नमिति प्रयोगान्मुख्यार्थ एव जिज्ञासाशब्दो विचारेऽभिमत-स्तथापि पूर्वत्र लक्ष्यत इत्युक्तिः । अत्र च यदि चोपसङ्ख्यायत इति चोक्तिरनास्थयेति चन्द्रिकायामुक्तम् ॥

या०— असूत्रितः प्रसादः किमर्थं मोक्षसाधनतयोच्यत इति वक्तुमाह ॥ **अतः शब्दस्ताव-दित्यादिना** ॥ **हेतुभाव इति** ॥ हेतुत्व इत्यर्थः । अत्र हेतुशब्दो लिङ्गवचनो न कारणवचनः । प्रकृतस्य मोक्षस्य जिज्ञासां प्रत्यकारणत्वात् । तथाच ब्रह्मजिज्ञासाकर्तव्यत्वरूपसाध्येऽधिकारिविशेषणतया प्रकृतस्य मोक्षस्य प्रयोजनरूपतया लिङ्गत्वमिति भावः ॥ **प्रयोजनाकाङ्क्षायामिति** ॥ मुख्यप्रयोजना-काङ्क्षायामित्यर्थः । ज्ञानस्य तु सुखदुःखावाप्तिहान्योरन्यतरत्वाभावान्न मुख्यत्वमिति भावः । तेन जिज्ञासाशब्देनैव ज्ञानस्य विचारप्रयोजनस्योक्तत्वान्न प्रयोजनाकाङ्क्षाऽनुपपन्नेति शङ्काऽनवकाश इति ध्येयम् ॥ **अधिकारिविशेषणतयेति** ॥ स्वर्गकामो यजेतेत्यत्राधिकारिविशेषणस्य स्वर्गस्य यथा मुख्य-फलत्वं तद्वदिति भावः । अत्र कश्चित् । अधिकारिविशेषणत्वेन न मोक्षस्य फलता साधयितुं शक्या । जीवनगृहदाहादेरपि फलताप्रसङ्गात् । नापि काम्यत्वविशेषितेन । परस्त्रीकामः प्रायश्चित्तं कुर्यादित्यत्र काम्यमानयोषित्पिण्डस्यापि फलतापातादित्याशङ्क्य न विशेषणत्वमात्रेण काम्यत्वमात्रेण वा मुक्तेः फलत्वं किन्तु काम्यत्वे सत्यनिन्दितविशेषणत्वेनातो नोक्तदोष इत्याह । तच्चिन्त्यम् । न ह्यत्राधिकारिविशेषण-तयेत्येतन्मोक्षस्य फलत्वसाधनायोक्तं येनोक्तशङ्कासमाधाने सङ्गच्छतः किन्तु तस्य प्रकृतत्वोपपादनाय । फलत्वं तु मोक्षस्य दुःखनिवृत्त्यादिरूपतया प्रसिद्धमेवेति नोपपादकापेक्षेति ॥ **स्वातन्त्र्येति** ॥ प्रयत्ना-विषयत्वेनेत्यर्थः । विषयविशेषदर्शनादेवेच्छाया जायमानत्वेन प्रयत्नानपेक्षणादिति भावः ॥ **अत एवेति** ॥ ज्ञानसाधनस्य विचारादेव साक्षात्प्रयत्नविषयत्वं न ज्ञानस्येति भावः । **चशब्देन** तथात्वे

ब्रह्मणो विधेयविशेषणत्वापत्त्याऽप्राधान्यप्रसङ्ग इत्युक्तदूषणं ग्राह्यम् । विचारस्यैव लक्षणायां को हेतुरित्यत आह ॥ **ज्ञानेच्छान्तर्णीत इति** ॥ ज्ञानेच्छयोरन्तर्मध्ये नीत इत्यर्थः । सन्दिग्धे विपर्यस्ते वा तत्त्वावधारणमिष्यते । तच्च विचाराविनाभूतमिति विचारे लक्षणेत्यर्थः । नन्वत्र जिज्ञासापदं यौगिकं वाक्यरूपं कथं लक्षकं लक्षणायाः पदवृत्तित्वादिति चेत् । अत्र वदन्ति । न प्रकृतिप्रत्ययसमुदायोऽत्र लक्षकः । किन्तु प्रत्यय एक एवेति । तच्चिन्त्यम् । तथात्वे मुख्यार्थसम्बन्धप्रदर्शनायेच्छासाध्य इत्येव वक्तव्यत्वेन ज्ञानेच्छान्तर्णीत इति प्रकृतिप्रत्ययोभयार्थसम्बन्धप्रदर्शनवैयर्थ्यप्रसङ्गात् । तस्मादत्र प्रकृतिप्रत्यययोरपि लक्षकत्वं वाच्यमित्यपरे । न च वाक्ये कथं लक्षणेति चोद्यावतारः । गम्भीरायां नद्यां घोष इत्यत्र गम्भीरनदीपदयोर्गम्भीरनदीसम्बद्धतीरलक्षकत्वस्य सत्यादिपदानां ब्रह्मस्वरूपमात्रलक्षकत्वस्य च वेदान्तिभिरङ्गीकारात् । तत्रैकैकस्य लक्षकत्वे शक्यासम्बन्धिनो गम्भीरनदीतीरादेरप्रतीतिप्रसङ्गवदत्राप्येकैकस्य लक्षकत्वे शक्यासम्बन्धिनो ज्ञानसाधनेच्छासाध्यविचारस्याप्रतीतिप्रसङ्गात् । अत एव तादृशविचारोपस्थित्यर्थं प्रकृतिप्रत्यययोरुभयोरपि लक्षकत्वं वेदान्तिरीत्या वक्तव्यमिति । इदमप्यनुपपन्नम् । अत्र किं प्रकृतिप्रत्यययोरजहत्स्वार्थलक्षणोत जहत्स्वार्थलक्षणा । नाद्यः । छत्रिणो गच्छन्तीत्यादौ छत्र्यछत्रिसमुदायस्य गमनान्वय इवात्रापि ज्ञानेच्छाविचाररूपसमुदाये कर्तव्यत्वान्वयप्रसङ्गेन ज्ञानेच्छयोरपि विधेयत्वप्राप्तेः । नापि द्वितीयः । तथात्वे ज्ञानेच्छाबोधकस्यान्यस्याभावेन ब्रह्मग इष्यमाणज्ञानान्वयोक्तिविरोधात् । तस्माद्विचारो लक्ष्यत इत्यस्याक्षिप्यत इत्यर्थो वर्णनीयः । तथाहि । जिज्ञासा कर्तव्येत्यत्रेष्यमाणज्ञानस्य साक्षादिच्छासाध्यत्वासम्भवादिच्छाया वा साक्षात्तत्साधनत्वे अनन्वयात्तन्निर्वाहको विचार आश्रयणीयः । क्रियायाः कालान्तरभाविफलसाधनत्वानुपपत्त्याऽपूर्वाभ्युपगमवदित्याहुः । तदपि चिन्त्यम् । मुख्यातिक्रमेणेत्यग्रिमफक्किकाऽस्वारस्यात् । विचारस्याक्षेपलभ्यत्वे कर्तव्यपदानन्वयप्रसङ्गाच्च । न ह्याक्षेपलभ्यस्य वाक्यार्थे समन्वयो दृष्टः । अत एवमत्रास्वरसात्पक्षान्तरमाह ॥ **यदि चेति** ॥ मीमांसाशब्दवदित्यनेन जिज्ञासाशब्दो विचारे रूढ एव । इच्छाप्रतीत्यभावेऽपि विचारप्रतिपादकत्वात् मीमांसाशब्दवदिति युक्तिं सूचयति । यथाहुः । 'मीमांसाशब्दतो हीच्छामज्ञात्वैव विजानते । विचारं लौकिकास्तेन तत्रायं रूढ इष्यत' इति । एवं चास्मिन्पक्षे तद्विजिज्ञासस्व इत्यादौ अस्मिंश्च सूत्रे विधौ न लक्षणाश्रयणमिति ज्ञातव्यम् । मीमांसाशब्दवद्विचार एवोपसङ्ख्यायत इत्यनेन मीमांसाशब्दो यथा इच्छार्थत्वाभावेऽपि विचार एव 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासे'त्यत्र सन्नन्त उक्तः । तथा जिज्ञासाशब्दोऽपि इच्छार्थत्वाभावेऽपि विचार एव सन्नन्त उपसङ्ख्येय इति सूचयति । ननु रूढ्या जिज्ञासाशब्दस्य विचारवाचकत्वे तस्य साक्षान्मोक्षसाधनत्वासम्भवेन ज्ञानद्वारकत्वं कथं ज्ञेयमित्यत आह ॥ **तदाऽप्यन्वयव्यतिरेकाभ्यामिति** ॥ अस्मिन्नपि पक्षे ब्रह्मण उद्देश्य-

फलसम्बन्धित्वेनैव जिज्ञासाकर्मत्वं न साक्षादतो न विधेयविशेषणतयाऽप्राधान्यमिति शङ्कावकाश इति ध्येयम् ।

श्री०— **अधिकारिविशेषणतयेति** ॥ नित्यानित्यवस्तुविवेको विषयवैराग्यं शमदमादिसम्पत्तिर्मुमुक्षेति साधनचतुष्टयसम्पन्नस्यैवाधिकारित्वादित्यर्थः ॥ **अन्यथेति** ॥ ज्ञानद्वारमन्तरेण साक्षाद्विचारस्यैव मोक्षहेतुत्वोक्तावित्यर्थः ॥ **योग्यतेति** ॥ विचारे क्रियमाणेऽपि मोक्षानुपलम्भेनार्थाबाधरूपयोग्यताविरहादित्यर्थः ॥

च०— सूत्रघटकपदाप्रतिपादितप्रसादस्य मुक्त्युपधायकतावचनं मन्दप्रयोजनमित्यभिधित्समानः पीठिकामारचयति ॥ **अतःशब्दस्तावदित्यादिना** प्रकृतिभूतसर्वनामसंज्ञकैतच्छब्दस्यैतदोशिति अशादेशे तत्प्रकृतिकपञ्चम्यादेशतापन्नतसिल्प्रत्यये च निष्पन्नोऽतःशब्दः प्रकृतिजनितोपस्थितिविषयस्य ज्ञापकत्वरूपहेतुत्वस्य ज्ञानज्ञाप्यत्वरूपहेतुमत्वस्य वा प्रतिपादक इत्यर्थः । आद्ये हेतुविभक्त्यर्थे ज्ञापकत्वे प्रकृत्यर्थस्याधेयतासम्बन्धेन प्रत्ययार्थस्य च प्रतिज्ञार्थैकदेशे साध्ये निरूपकतासम्बन्धेनान्वयः । द्वितीये तादृशविभक्त्यर्थैकदेशे ज्ञाने विषयितासम्बन्धेन तद्धटितविभक्त्यर्थस्य च तादृशसाध्ये आश्रयतासम्बन्धेनेति भावः । प्रयोगसमवेतादेशैः स्मार्यमाणानां स्थानिनामेव बोधकत्वमिति नैयायिकास्तत्समवेतादेशा एव तादृशा इति पाणिनीया इति वैचित्र्यं तु नेह प्रपञ्चनीयम् ॥ **प्रयोजनेति** ॥ मुख्यप्रयोजनजिज्ञासायामित्यर्थः । सुखदुःखाप्तिनिवृत्त्यन्यतररूपत्वाभावेन ज्ञानं न मुख्यमिति हृदयम् । तेन सन्प्रत्ययार्थेच्छाविशेषणतापन्नतत्प्रकृतिभूतधातूपस्थाप्यज्ञानरूपप्रयोजनगोचरावगतेर्जिज्ञासापदेनैव निर्वृत्ततया विषयपूरणात्प्रयोजनजिज्ञासैव नोदेतुमलमिति चोद्यानवकाशः ॥ **अधिकारिविशेषणतयेति** ॥ चन्द्रिकायां जन्मादिनये विशिष्टाधिकारिकमोक्षफलकजीवान्यधर्मिकगुणपूर्णत्वप्रकारकजिज्ञासा कर्तव्येति तत्सूत्रजनितान्वयबोधाकारप्रदर्शनायेति निपातोपस्थाप्यविशेषणचतुष्टयविशेषिताधिकारिणः स्ववृत्तिकर्तृतानिरूपकतासंसर्गेण जिज्ञासापदार्थविशेषणतापन्नस्य विशेषणीभवत्यां मुमुक्षायां विषयिताप्रत्यासत्त्या प्रकारीभूयभासमानमोक्षेति शब्दोपस्थाप्यतावच्छेदकघटकेनाप्यन्वेष्यतीति भावः ॥ **अशक्यत्वादिति** ॥ इच्छाया विषयसौन्दर्यदर्शनघटितसामग्रीनिष्पाद्यतया पुंप्रयत्नागोचरत्वेन तन्नैरपेक्ष्यादिति भावः । अत एव पुंप्रयत्नघटितसामग्रीनिष्पाद्यत्वादेव ॥ **इष्यमाणेति** ॥ सन्प्रत्ययार्थेच्छायां विषयितया प्रकारीभूयमानज्ञानलक्षकता जिज्ञासाशब्दस्य न सङ्गच्छत इत्यर्थः ॥ **तस्मादिति** ॥ प्रकृतिप्रत्ययाभिधेययोर्ज्ञानेच्छयोः प्रतिसन्धीयमानपदार्थान्तरान्वयित्वबाधाल्लक्ष्यान्तरविरहादेवेत्यर्थः । **ज्ञानेच्छान्तर्णीतः** प्रकृतिभूतजानात्युपस्थाप्यज्ञानसाधनीभूतःसन्प्रत्ययार्थेच्छासाध्यस्तन्मध्यपतितो विचार इत्यर्थः । एतेन जिज्ञासापदा-

भिधेयनिरूपितो जन्यजनकभाव एव शक्यसम्बन्ध इति ध्वन्यते। ज्ञानगोचरेच्छासाध्य इत्येवाभिहिते- रौचित्येनान्तर्णीत इत्युक्तिः शक्यसम्बन्धगवेषणायां विचारे ज्ञानसाधनत्वस्यापि लाभ इति सूचयितुमिति व्याचक्षते अत्र व्याकर्तारः। नन्वत्र जिज्ञासापदं यौगिकं वाक्यरूपं कथं लक्षकं लक्षणायाः पदवृत्तित्वा- दिति चेदत्र वदन्ति। न प्रकृतिप्रत्ययसमुदायोऽत्र लक्षकः किन्तु प्रत्यय एक एवेति। तच्चिन्त्यम्। तथात्वे मुख्यार्थसम्बन्धप्रदर्शनायेच्छासाध्य इत्येव वक्तव्यत्वेन ज्ञानेच्छान्तर्णीत इति प्रकृतिप्रत्ययोभयार्थसम्बन्ध- प्रदर्शनवैयर्थ्यात्। तस्मादत्र प्रकृतिप्रत्यययोरुभयोरपि लक्षकत्वमित्यपरे। न च वाक्ये कथं लक्षणेति चोद्या- वतारः। गभीरायां नद्यां घोष इत्यत्र गभीरनदीसम्बद्धतीरलक्षकत्वस्य सत्यादिपदानां ब्रह्मस्वरूपमात्र- लक्षकत्वस्य च वेदान्तिभिरङ्गीकारात्। तत्रैकैकस्य लक्षकत्वे शक्यासम्बन्धिनो ज्ञानसाधनेच्छासाध्यविचार- स्याप्रतीतिप्रसङ्गात्। अत एव तादृशविचारोपस्थित्यर्थं प्रकृतिप्रत्यययोरुभयोरपि लक्षकत्वं वेदान्तिरीत्या वक्तव्यमिति। इदमप्यनुपपन्नम्। अत्र किं प्रकृतिप्रत्यययोरजहत्स्वार्थलक्षणा उत जहत्स्वार्थलक्षणा। नाद्यः छत्रिणो गच्छन्तीत्यादौ छत्र्यछत्रिसमुदायस्य गमनान्वय इवात्रापि ज्ञानेच्छाविचाररूपसमुदाये कर्तव्यत्वा- न्वयप्रसङ्गेन ज्ञानेच्छयोरपि विधेयत्वप्राप्तेः। नापि द्वितीयः। तथात्वे ज्ञानेच्छाबोधकस्याभावेन ब्रह्मण इष्यमाणज्ञानान्वयोक्तिविरोधात्। तस्माद्विचारो लक्ष्यत इत्यस्याक्षिप्यत इत्यर्थो वर्णनीयस्तथाहि जिज्ञासाकर्तव्येत्यत्रेष्यमाणज्ञानस्य साक्षादिच्छासाध्यत्वासम्भवादिच्छायाः साक्षात्तत्साधनत्वेनानन्वयात्तन्नि- र्वाहको विचार आश्रयणीयः। क्रियायां कालान्तरभाविफलसाधनत्वानुपपत्त्याऽपूर्वाभ्युपगमवदित्याहुः। तदपि चिन्त्यम्। मुख्यातिक्रमेणेत्यग्रिमफक्किकास्वारस्यात्। विचारस्याक्षेपलभ्यत्वे कर्तव्यपदार्थानन्वय- प्रसङ्गाच्च। न ह्याक्षेपलभ्यस्य वाक्यार्थे समन्वयो दृष्टः अत एव तत्रास्वरसात्पक्षान्तरमाह **यदि चेतीति** व्याचचक्षिरे। वस्तुतस्तु वाक्यस्य पाणिनिदिशा सुप्तिङन्तानेकघटिततया शक्त्यभावनिबन्धनलक्षकता- राहित्येऽपि यौगिकजिज्ञासापदस्य तादृशानेकघटितत्वाभावेन कृदन्तत्वायत्तप्रातिपदिकसंज्ञाधीनसुबुत्पत्ति- कतापादितपदसंज्ञाध्रौव्येन प्रकृत्यर्थज्ञानविशेषितेच्छावाचिनो ज्ञानसाधनेच्छासाध्यविचारलक्षकताया निरर्गलतया वाक्यतुल्यत्वाद्यौगिकस्य न लक्षकतेति शङ्काङ्कुरमुत्पत्तुमेव नालम्। कथमन्यथा छत्रिणो यान्तीत्यादेर्यौगिकस्य छत्रिपदस्य तान्त्रिकाणां वैश्वदेवीमिति वाक्यविहितयागे यौगिकस्य वैश्वदेवेन यजेतेति वाक्यघटकवैश्वदेवपदस्य वैश्वदेवावैश्वदेवसमुदायस्य तादृशयोः क्षराक्षरपदयोष्टीकाकृतां च लक्षकतोरीकृतिः सङ्गच्छेत। गभीरायां नद्यामित्यत्र तु गभीरपदस्यैव वा नदीपदस्यैव वा गभीरनदीतीरे लक्षणाऽन्यतरपदं तात्पर्यग्राहकमित्याकारे व्यक्तमेव। वाक्यलक्षणापक्षः स्वबोध्यसम्बन्धो लक्षणेत्यभिदधतां मीमांसकानामेवेति निरूढमेव। अत एवास्वरसात्पक्षान्तरमाहेति वा कथम्। अरुचेरेव दुरुपपादत्वात्। तस्मा'ज्जिज्ञासा- शब्दतो हीच्छामज्ञात्वैव विजानते। विचारं लौकिकास्तेन तत्रायं रूढ इष्यत' इति चन्द्रिकादिशा।

अवयवार्थप्रतिसंहितिनियन्त्रितलक्षणाग्रहासमवधानेऽपि शाब्दबोधोदयाद्रूढिरेवोपेतव्येत्याह यदि चेतीत्येवावतारयितव्यः स ग्रन्थ इति सर्वं समञ्जसम् । अत एवावयवार्थप्रतिसंहितिदशायामेवार्थप्रत्यायकबुभुत्सापदादविशेषो नैतत्पदस्येति ध्येयम् । एवं लक्षणापक्षे ज्ञानसाधनत्वादिलाभं प्रदर्श्य रूढिपक्षेऽपि तं दर्शयति । यदि चेतीत्यप्यवतारयन्ति । अत्र चन्द्रिकायां सुधायां जिज्ञासापदस्य विचारलक्षकताकल्पो मतान्तरमभिप्रेत्य प्रदर्शितः यदि चेत्यादिना विचारे रूढतामतं तु सिद्धान्तदिशेति स्थितम् । अवाचकेनार्थनिर्देशायोगेन मान्वधदानिति सूत्रे मानेर्जिज्ञासायामित्यर्थनिर्देशाद्विचारबोधकता जिज्ञासाशब्दस्य सेत्स्यतीत्यपि निबन्धान्तरीयो विन्यासः । एवं च प्रकृतकल्पे विधौ न लक्षणेति प्रवादोप्याहतो भवति । जिज्ञासापदस्य विचारलक्षकताकल्पे स्वायत्ते इति न्यायेन स्वारसिकलक्षणोपगतिसाफल्यानुरोधेनान्तराकृत्य ज्ञानं विचारस्य मोक्षसाधनताधिगतावपि तदभिधायकताकल्पे तन्न्यायाप्रवृत्त्या तद्दुरधिगम इत्यतः सम्प्रत्यपि तद्घटयिष्यति ॥ **तदाऽप्यन्वयेति** ॥

**सु०— मोक्षादेरन्यलभ्यत्वस्य शङ्कितत्वात्सावधारणताऽपि । ईश्वरप्रसादस्य तु ज्ञापकं न किञ्चिदत्र पश्यामः ।**

वा०— जिज्ञासोत्थेति वाक्योक्तावधारणलाभप्रकारं दर्शयति ॥ **मोक्षादेरिति** ॥ ननु लक्षणापक्षस्तावदनुपपन्नः । तथा हि । न तावज्जिज्ञासापदसमुदाये लक्षणा । जिज्ञासापदस्य यौगिकतया समुदायस्याशक्तत्वात् । शक्तपदस्यैव लक्षकत्वात् । नापि सन्प्रत्यये लक्षणा । इच्छाया अविधेयत्वेनेच्छाविचारयोः कर्तव्येत्येकक्रियान्वयाभावेन छत्रिपदवदजहल्लक्षणानुपपत्तेः । नापि तत्र जहल्लक्षणा । इच्छापरित्यागे साध्यतोपस्थितिं प्रति प्रयोजकीभूतस्येष्टत्वस्याभावेन ज्ञानस्य साध्यतोपस्थित्यभावेनाकाङ्क्षाभावेन तस्य साधनेन विचारेणान्वयायोगात् । ज्ञानायेति साध्यत्वाकारेणान्वयायोगाच्च । नापि ज्ञानपदेऽजहल्लक्षणा । ज्ञानविचारयोरेकवृत्त्युपस्थितयोः परस्परान्वयासम्भवेन साध्यसाधनभावेनान्वयानुपपत्तेः । न ह्येकवृत्त्युपस्थितानामपि परस्परमन्वयो व्युत्पत्तिसिद्धः । शक्यलक्ष्यसमुदायस्य ज्ञानविचारस्य युगपदेकक्रियान्वयाभावाच्च न तत्राजहल्लक्षणा । नापि तत्र जहल्लक्षणा । ज्ञानाय विचारः कर्तव्य इति श्रौतान्वयायोगादिच्छाया अनन्वयप्रसङ्गात्कर्तव्यविचारस्येच्छयाऽन्वयासम्भवाद्विचारातिरिक्तस्य लक्ष्यमाणार्थस्याभावाच्च । नापि रूढिपक्षो युक्तः । इच्छायां सन्विधानेनावयवशक्तेरेव सुप्रसिद्धतया रूढिकल्पकाभावादिति चेन्न तावल्लक्षणापक्षे दोषः । वैश्वदेवेन यजेतेत्यादौ वैश्वदेवीमामिक्षामिति वाक्यविहितयागे यौगिकस्य वैश्वदेवशब्दस्य वैश्वदेवावैश्वदेवसमुदाये लक्षणावद्यौगिकस्यापि जिज्ञासाशब्दस्य

लक्षणोपपत्तेः। अवयवशक्तिमाश्रित्य समुदाये योग इवावयवशक्तिमाश्रित्य समुदाये लक्षणाङ्गीकारेऽप्यनुपपत्तेरभावात्। अस्तु वा सन्प्रत्यये जहल्लक्षणा। न चोक्तदोषः। गम्भीरनद्योरन्वयबोधानन्तरं गम्भीरान्वितनदीबोधकनदीपदस्यैव तीरे लक्षणायामपि गम्भीरनदीतीरत्वेनोपस्थित्या गम्भीरनदीतीरत्वस्य लक्ष्यतावच्छेदकत्वात्तत्कोटिप्रवेशेन नद्या गम्भीरत्वसिद्धिवज्ज्ञानेच्छयोरन्वयबोधानन्तरं ज्ञानान्वितेच्छाबोधकसन्प्रत्ययस्य विचारे लक्षणायामपि ज्ञानविषयकेच्छासाध्यविचारत्वप्रकारकबोधेन ज्ञानविषयकेच्छासाध्यविचारत्वस्य लक्ष्यतावच्छेदकत्वात्तत्कोटिनिवेशेन ज्ञाने इष्टत्वलाभेन ज्ञानस्य साध्यतयोपस्थितेर्बुध्द्या विवेकेन ज्ञानायेत्याकारेणान्वयस्य च सम्भवात्। न च गम्भीरनदीपदद्वयेऽपि लक्षणास्वीकाराद्दृष्टान्तासङ्गतिरिति वाच्यम्। उक्तरीत्या नदीपद एव लक्षणया गम्भीरनदीबोधोपपत्तौ पदद्वयेऽपि लक्षणायां कल्पकाभावात्। यत्तु केनचित्सन्प्रत्ययस्य जहल्लक्षणया विचारलक्षकत्वमङ्गीकृत्य विचारान्वयाय ज्ञानस्य साध्यतोपस्थितये सिद्धावस्थज्ञानवाचकज्ञानपदस्य साध्यावस्थज्ञानलक्षकत्वं पञ्चदशान्याज्यानीत्यत्र सिद्धावस्थस्तोत्रनाम्नोऽप्याज्यपदस्य पञ्चदशसङ्ख्यागुणान्वयाय साध्यावस्थस्तोत्रलक्षकत्ववदिति पदद्वयेऽपि लक्षणेत्युक्तम्। तन्न। पञ्चदशान्याज्यानीत्यत्र प्रकारान्तरेण साध्यतोपस्थित्यसम्भवेन तत्र लक्षणाश्रयणेऽपि प्रकृते उक्तरीत्या लक्ष्यतावच्छेदककोटिनिवेशेन ज्ञानस्येष्टत्वलाभेन साध्यत्वेनोपस्थितेः प्रकारान्तरेण सम्भवान्न पदद्वये लक्षणा युक्ता। अङ्गीकृत्य चेदमुदितम्। वस्तुतः पदवृत्तिर्लक्षणा वृत्तित्वाच्छक्तिवदिति वाक्ये लक्षणैव न युक्ता। न च विषं भुङ्क्ष्वेत्यादौ वाक्येऽपि लक्षणा दृष्टेति वाच्यम्। अयमिदानीं मयि क्रुद्धः। आप्तत्वेसति प्रमाणविरुद्धकर्तव्यताभिधायित्वात्। क्रोधश्चास्य सन्निहितशत्रुगृहभोजनादेव दृष्टत्यागेनादृष्टकल्पनाऽयोगात्। अतो न मयेदं कार्यमित्यनुमितेरेव तत्रापि स्वीकारेण वाक्यलक्षणाया अनङ्गीकारात्। नन्वर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति वाक्येऽर्धमेवान्तर्वेदीति वाक्यार्थपक्षे परिसङ्ख्यादोषापत्त्याऽर्धमन्तर्वेदि मातव्यमित्येव विधातव्येऽर्धान्तरं न विहितं नापि प्रतिषिद्धमित्यर्धान्तरस्य विधितो व्यावृत्तावपीच्छातः प्राप्तस्यानिवारणात्। पाक्षिकप्राप्तबहिर्देशानुवादकत्वे बहिर्वेदीत्यस्य नित्यवच्छ्रवणानुपपत्त्या बहिर्वेदीत्यस्यापि विधायकत्वस्वीकारे वाक्यभेदापत्त्याऽन्तर्वेदिबहिर्वेदिशब्दद्वयोपलक्षितान्तरालदेशरूपैकार्थविधानेन वाक्यभेदाभावात्। यत्र मीयमानयूपस्यार्धमन्तर्वेदि भवत्यर्धं बहिर्वेदि तत्र मिनुयादिति देशविशेषलक्षणा वाक्येऽपि स्वीकृतैवेति चेत्। अत्र केचित्। अर्धमेवान्तर्वेदीति नियमाश्रयणाद्विनैव लक्षणां सन्धिदेशविशेषसिद्धिरिति परिहरन्ति। तन्न। प्रकरणविशेषादसंयुक्तम्। प्रधानस्य चिकीर्षया च संयोगादित्यधिकरणाभ्यां वेदैरङ्गप्रधानरूपसर्वार्थत्वप्रतिपादनेन नियमेन प्राप्तसर्ववेदैरर्धान्तरव्यावृत्तिफलकपरिसङ्ख्याप्रसक्तावपि पाक्षिकाप्राप्तेरभावेन नियमाश्रयणासम्भवात्तस्मादर्धस्यान्तरत्वे सत्यर्धस्य बहिष्ट्वेन वाक्यार्थेनान्तरालप्रदेशस्यापेक्षणादेव लाभेनानन्यलभ्यत्वाभावान्न

लक्षणेत्येव परिहारो द्रष्टव्यः। न चैवं लक्षणोच्छेदः। यत्र वाक्यान्तर्गतपदान्तराणां शक्यार्थबोधकत्व-स्वीकार एकपदलक्षणया च न प्रकृतार्थलाभस्तत्र शाब्दी हीति न्यायाविरोधायानेकपदलक्षणास्वीकारेऽपि शक्यपदरहितवाक्ये एकपदलक्षणयोपपत्तिस्थले वा नानेकलक्षणेत्यभिप्रायान्न लक्षणोच्छेदप्रसङ्गः। विषं भुङ्क्ष्व इत्यत्र भुजिधातोर्मुख्यार्थत्वेऽधमन्तर्वेदीत्यत्रापि लिङादेरभिधायकत्वस्वीकारे तत्राप्यनेकपदलक्षणास्वीकारेपि बाधकाभावात्। न च जिज्ञासापदेऽप्येवमेव पदद्वये लक्षणाऽस्त्विति वाच्यम्। उक्तरीत्या प्रकृते एक-पदलक्षणयैवोपपत्त्या विषं भुङ्क्ष्वेत्यादिवत्पदद्वयलक्षणां विनाऽनुपपत्तेरभावेन पदद्वयलक्षणाया अस्वीकार्य-त्वात्। तस्मान्न लक्षणापक्षे कश्चिद्दोषः। नापि रूढिपक्षोक्तदोषः। प्रयोगप्रत्यययोरेव रूढिकल्पकत्वात्। न चावयवशक्त्या ज्ञानेच्छावाचिनो जिज्ञासाशब्दस्य विचारे लक्षणया प्रयोगप्रत्यययोरुपपत्तौ न शक्त्यन्तर-कल्पनमिति वाच्यम्। तथा सति ज्ञानेच्छावाचिनो मीमांसाशब्दस्यापि विचारे लक्षणया प्रयोगप्रत्ययोपपत्त्या रूढिर्न स्यात्। न च मीमांसाशब्दाद्विचारप्रतीतेर्ज्ञानेच्छारूपयौगिकार्थप्रतीतिपूर्वकत्वाभावान्न तस्य तत्र लक्षणेति वाच्यम्। बुभुत्सापदादपि विलम्बेन विचारधीसम्भवेनाभियुक्तानां तदप्रयोगेन मीमांसाशब्द-वज्जिज्ञासाशब्दस्यैव नियमेन विचारे प्रयोगेन मीमांसाशब्दतुल्यतया जिज्ञासाशब्दाद्विचारप्रतीतेरपि यौगिकार्थप्रतीतिपूर्वकत्वाभावस्य सिद्धत्वात्। अन्यथा मान्बधेति सूत्रे मानेर्जिज्ञासायामिति वृत्तावुक्ते-रुत्तरसूत्रेणैव सनः सिद्धेरत्र मानो ग्रहणमभ्यासदीर्घत्वार्थमिति पदमञ्जर्यामुक्तेस्तयोरेकार्थत्वस्य तदभिप्रेत-त्वाज्जिज्ञासाशब्दवन्मीमांसाशब्देऽपीच्छायां सन्विधानेनाविशेषान्मीमांसाशब्दाद्विचारप्रतीतेरिच्छाप्रतीति-पूर्वकतैव स्वीकर्तव्या स्यात्तदेदमुक्तं मीमांसाशब्दवदिति। न च मीमांसावद्विचारपर्यायेष्वगणनान्न जिज्ञासाशब्दस्य तत्र रूढिरिति वाच्यम्। बुभुत्सापदवैलक्षण्यस्य मीमांसाशब्दसारूप्यस्य चोपपादिततया-ऽस्यापि तत्पर्यायेषु गणनीयत्वात्तदिदमुक्तमुपसङ्ख्यायत इति। न चैवं विचारप्रतीतेरिच्छाप्रतीतिपूर्वक-त्वाभावमुपजीव्य जिज्ञासाशब्दस्य विचारे रूढिप्रतिपादने तस्या इच्छाप्रतीतिपूर्वकत्वनियमोपजीवनेन प्रवृत्तलक्षणापक्षः पूर्वोक्तोऽयुक्तः स्याद्वस्तुनो द्वैरूप्यासम्भवेन जिज्ञासाशब्दाद्विचारप्रतीतेरिच्छाप्रतीति-पूर्वकत्वनियमतदभावयोरनुपपत्तेरिति वाच्यम्। विचारे रूढेरेव स्वपक्षत्वेऽपि जिज्ञासाशब्दाद्विचारे ज्ञानसाधनत्वरूपप्रकृतप्रमेयस्य रूढिरूपस्वपक्षेणेव परपक्षभूतलक्षणयाऽपि निर्वाहात्। परीत्याऽपि प्रकृतोपपादनसम्भवे किमिदानीं स्वपक्षाग्रहेणेत्यभिप्रेत्य परसिद्धलक्षणापक्षस्यानूदितत्वेनाविरोधात्। अत एव शङ्काग्रन्थे तदुक्तिः। न चैवं गीताभाष्यटीकायामेतत्सूत्रस्थजिज्ञासाशब्दस्य विचारलाक्षणिकत्व-मङ्गीकृत्येच्छाया विधेयत्वोपपादनमयुक्तं स्यादिति वाच्यम्। कर्तव्यपदान्वयाय सूत्रस्थजिज्ञासाशब्दस्ये-च्छार्थताऽसम्भवेन विचारपरताया आवश्यकत्वात्स्वाभिप्रेतरूढ्यनुसारेण चेच्छाप्रसक्तेरेव सूत्रेऽनुपलम्भे-नेच्छाया युक्तत्वप्रतिपादकप्रमाणोपन्यासावसरे सूत्रोदाहरणस्यासङ्गत्यापातेन सूत्रे प्रकृते सङ्गमयितुं वा

जिज्ञासाशब्दस्य विचारे लक्षणां वदता परेणापि ज्ञानादिच्छाऽङ्गीकर्तव्येति परन्यायेन परं प्रत्युपपादयितुं वा तत्रापि परमतस्यैवोपन्यस्तत्वात् यद्वा विचारे रूढेः सत्त्वेऽपि येन रूढिं विद्यमानामप्यनवबुध्य यौगिक एवार्थोऽवबुद्धस्तस्य विचारप्रतीतेर्यौगिकार्थेच्छाप्रतीतिपूर्वकत्वनियमेन तं प्रति लक्षणाया आवश्यकत्वात्तदभिप्रायेणात्र गीताभाष्ये च लक्षणापक्षोक्तिरिति सर्वमनवद्यम् । ( गुप्तिज्किद्भ्यःसन् । मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य । सूत्रद्वयोक्तेभ्यः सन्स्यान्मानादीनामभ्यासस्येकारस्य दीर्घश्च । गुपेर्निन्दायाम् । तिजेः क्षमायाम् । कितेर्व्याधिप्रतीकारे निग्रहेऽपनयने नाशने संशये च । मानेर्जिज्ञासायाम् । बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने । एष्वर्थेष्वेते नित्यं सन्नन्ता धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वं तेनेड्गुणौ न । अत्र न्यासकार आह । धातोः कर्मणः समानकर्तृकादिच्छायां वेति सूत्रे वाग्रहणं विभज्य त्रिसूत्रीशेषतया सम्बध्यते । सा च व्यवस्थितविभाषा । तेनेह सूत्रद्वयेऽर्थविशेषोपहितेभ्य एव सनिति । स च विशेषो मुनित्रयेण साक्षादनुक्तोऽपि वृत्तिकारादिभिरुपनिबद्धस्तं दर्शयति ॥ गुपेर्निन्दायामित्यादिना । धातोरिति सूत्रे इच्छायामिति श्रुतत्वात्कर्मत्वं समानकर्तृकत्वं च तदपेक्षमेव गृह्यते । तथा च इषिकर्मणः इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायामित्यर्थः । उदाहरणं तु पठितुमिच्छति पिपठिषतीत्यादि पिपठिषेत्यादि च । अथाष्टावनुदात्तेतः गुपगोपने तिजूनिशाने मान्पूजायां बधबन्धने । अनुदात्तेत्त्वरूपानुबन्धस्य केवलेऽचरितार्थत्वात् सन्नन्तात्तङ् । जुगुप्सते जुगुप्साञ्चक्रे तितिक्षते मीमांसते भष्भावः चर्त्वं बीभत्सते । गुपिप्रभृतयः किञ्चिन्ना निन्दाद्यर्थका एवानुदात्तेतः आर्जवनिशानार्थौ दान्शानौ च स्वरितेतौ । गोपनादिरूपे धातुपाठोपात्तेर्थान्तरे त्वननुबन्धकाश्चुरादयः । भ्वादयो भिन्नाः । अभेदे तु सन्नन्तादिवाकर्तृगफलात् ण्यन्तादपि तङ्स्यादिति भावः । वाचस्पत्यादौ मीमांसाशब्दो माङ्मान इत्यस्माद्व्युत्पन्न इत्युक्तम् । तत्समर्थनं त्वित्थम् । इह सन्प्रकृतिस्तावदात्मनेपदार्हा चुरादिकाद्भिन्नेवेति स्थितम् । मानपूजायामित्यादिवृत्तिकारग्रन्थोऽपि भङ्क्त्वा व्याख्येय एव । न हि तस्मादयं सन् । एवं स्थिते सन्प्रकृतिरनुदात्तेदेवेत्यत्र मानाभावात् ङिदेव सास्तु नुक् च सूत्रे निपात्यताम् । न च वैयाकरणानामुपायेष्वाग्रहः । उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इत्युक्तेः । न चैवं सनिमीमेति इस्प्रसङ्गः । भ्वादिसाहचर्येणेच्छासन्येव तद्विधानादिति ) ।

प० — **शङ्कितत्वादिति** ॥ पूर्वपक्षिणेति योज्यम् ॥ **सावधारणतेति** ॥ विचार एव यतो ज्ञानसाधनं ज्ञानमेव यतो मोक्षसाधनमिति सावधारणतेत्यर्थः । अन्यथा पूर्ववादिकृतशङ्कानिरासाभावेन अत इत्यस्य वैयर्थ्यापत्तेरिति भावः ॥ **अत्रेति** ॥ सूत्रे न पश्याम इत्यर्थः ।

**श्री०— सावधारणतेति** ॥ विचार एव यतो ज्ञानसाधनं ज्ञानमेव यतो मोक्षसाधनमिति सावधारणतेत्यर्थः ।

**सु०— न च ज्ञानस्य मोक्षसाधनता न युक्ता । येनेश्वरप्रसादो मध्येऽध्याह्रियते । आत्मयाथात्म्याज्ञानादनात्मनि शरीरादावात्मत्वारोपे सति हि तदनुकूलप्रतिकूलयो रागद्वेषौ भवतः । ताभ्यां प्रयुक्तः पुण्यपापलक्षणां प्रवृत्तिमाचिनुते । ततश्च सुरनरतिर्यगादिनाना- योनिषु नवीनशरीरेन्द्रियादिसंयोगलक्षणं जन्मास्य भवति । तस्माच्च दुःखानुभव इत्यनादिरयं कार्यकारणप्रवाहः संसार इत्युच्यते । आत्मतत्त्वज्ञानाच्चाज्ञानविपर्ययौ निवर्तेते । तत्त्वज्ञानस्य समानाश्रयविषयाज्ञानमिथ्याज्ञाननिवर्तनस्वाभाव्यात् । शुक्तिकातत्त्वज्ञानस्य तदज्ञानरजतारोप- निवर्तकत्वदर्शनात् । मिथ्याज्ञाननिवृत्तौ च रागद्वेषानुदयः । कारणाभावात् । तयोरभावे च न प्रवृत्तेरुत्पत्तिः । तत एव प्रागुपचितायाश्चोपभोगेन प्रक्षयः । प्रवृत्त्यभावे च जन्मान्तरा- भावो हेत्वभावादेव । वर्तमानशरीरादेश्चारम्भकक्षये सति निवृत्तिः । जन्माभावे च न निर्बीजस्य दुःखस्योत्पाद इत्येवमात्यन्तिकी दुःखनिवृत्तिर्मुक्तिः । तथा च ज्ञानस्वभावलयाभ्यां मुक्तौ किमीश्वरप्रसादेन । न ह्यन्धकारनिबन्धनदुःखनिवृत्तये प्रदीपमुपाददानाः कस्यचित्प्रभोः प्रसादमपेक्षन्ते । स्वभावो हि प्रदीपस्यायं यत्समानाधिकरणान्धकारनिवर्तकत्वम् । तथा च न्यायसूत्रम् । 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति ।**

**वा०—** ननु विचारस्य सौत्रपदशक्तिबलादलाभेऽपि लक्षणया लाभवद्विचारस्य ज्ञानसाधनताया लक्षणानिमित्तशक्यसम्बन्धत्वेन लाभवच्च प्रसादस्य सौत्रपदशक्त्यादिनाऽलाभेऽपि सूत्रोक्तज्ञानमोक्षसाध्य- साधनभावान्यथाऽनुपपत्तिलब्धतया सूत्रार्थत्वमेव । न च ज्ञानस्य स्वभावेनैव मोक्षसाधनत्वसम्भवान्न तदन्यथाऽनुपपत्तिरिति वाच्यम् । ज्ञानस्य मोक्षसाधनताया अदृष्टत्वेन स्वभावकल्पनाया असम्भवेन मध्ये प्रसादाध्याहारस्यावश्यकत्वादित्यतो दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानरूपकार्यकारणप्रवाहरूपसंसारनिवृत्ति- रूपत्वान्मुक्तेस्तादृशकार्यकारणप्रवाहस्यानाद्यज्ञानमूलकत्वात् ज्ञानाज्ञानयोश्च प्रदीपान्धकारयोरिव स्वाभा- विकविरोधात् ज्ञानेन साक्षाद्दुःखाद्यनिवृत्तावपि तन्मूलभूताज्ञाननिवृत्तिसम्भवात्तन्निवृत्तौ च तत्कार्य- निवृत्तेः कारणाभावेन सुलभत्वात् दुःखादीनां कार्यकारणभावस्य कारणापाये कार्याभावस्य च न्यायसूत्र एवोक्तत्वात् नादृष्टकल्पनेत्यभिप्रेत्य कथं दुःखादीनां कार्यकारणभावः कुतश्च तदपाये तदपायस्तथात्वे वा कथं प्रागापादितदोषाद्यनिवृत्तावात्यन्तिकदुःखनिवृत्तिरित्याशङ्कां दुःखादिस्वरूपविवरणेन तदपायादौ

हेत्वादिकथनेन च परिहरन् मोक्षस्येश्वराधीनत्ववचनान्यथाऽनुपपत्त्या प्रसादाध्याहारशङ्कां च तद्वचनादिगतिकथनेन परिहरन्नन्यथाऽनुपपत्तिमाशङ्क्य समाधत्ते ॥ **न च ज्ञानस्येत्यादिना** ॥ अत्र शङ्काग्रन्थे रागादीनां दुःखावान्तरकारणानां निवेशो द्रव्यं कर्म चेति परिहारग्रन्थे द्रव्यादिशब्दोदितप्रकृत्यादिमूलकारणपरिग्रहेण तन्निवर्त्यतयेति द्रष्टव्यम् । न्यायसूत्रोदाहरणं त्वेतच्छङ्कामूलभूततन्मतस्यागमविरोधेनाभासत्वं द्योतयितुम् । यद्यप्यत्र सूत्रे दुःखादिमिथ्याज्ञानान्तानामेवोपादानं न त्वज्ञानस्य तथाऽप्यधिष्ठानयाथात्म्यज्ञाननियतत्वान्मिथ्याज्ञानस्य तदुक्त्यैव सिद्धत्वात्सूत्रेऽज्ञानस्य पृथगनुक्तावपि सूत्राभिप्रायलब्धत्वाज्ज्ञानस्वभावत इति मूलग्रन्थे ज्ञानस्वभावस्य शङ्काप्रापकत्वेनोक्ततया मिथ्याज्ञाननिवर्तकत्वस्येव अज्ञाननिवर्तकत्वस्यापि ज्ञानस्वभावत्वादत्र तदुक्तिः । अत एव तत्त्वज्ञानस्येत्याद्युक्तमिति द्रष्टव्यम् । यत्तु मोक्षस्येत्यादिना वचनगतिकथनं तदुदाहरिष्यमाणेनाज्ञानां ज्ञानद इति विशेषवचनेन निवर्त्यतयेति द्रष्टव्यम् । यद्वा ज्ञानस्य मोक्षसाधनताया अदृष्टत्वेनादृष्टकल्पनाप्रसङ्गेनानुपपत्त्या मध्ये प्रसादाध्याहारस्य आवश्यकत्वात्प्रसादस्यापि प्रकृतत्वेन युक्तमतःशब्दार्थत्वमित्याशङ्क्य निषेधति ॥ **न च ज्ञानस्येति** ॥ अदृष्टकल्पनापरिहाराय मुक्तेर्ज्ञानस्वभावलभ्यत्वस्य वक्तव्यत्वात्सिद्धान्त्यभिमतमोक्षस्वरूपे ज्ञानस्वभावलभ्यतायाः प्रतिपादयितुमशक्यतया न्यायसूत्रं मूलीकृत्य मोक्षस्वरूपाभ्युपगमेन तस्य ज्ञानस्वभावलभ्यतां व्युत्पादयितुं तदुपयुक्ततया बन्धस्वरूपं निरूपयति ॥ **आत्मेत्यादिना** ॥

**स०**— ननु प्रसादस्यासूत्रितत्वेऽपि ज्ञानमोक्षयोः श्रुतसाध्यसाधनभावाऽनुपपत्त्या यागस्वर्गयोरपूर्वस्येवाक्षेपः स्यादित्यत आह ॥ **न चेति** ॥ ज्ञानस्वभावलभ्यत्वं मुक्तेरन्वयव्यतिरेकाभ्यामुपपादयति ॥ **आत्मेत्यादिना ॥ अनात्मनि शरीरादाविति** ॥ अयं परमतानुवाद इति नापसिद्धान्तः । केचित्तु स्फुटतरविवेकाभावाभिप्रायेणेयमुक्तिरित्याहुः ॥

**प०**— ननु यथा यजेत स्वर्गकाम इत्यादौ स्वर्गयागयोर्मध्यभाविनोऽपूर्वस्याश्रवणेऽपि 'अपूर्वद्वारा यागः स्वर्गसाधनम्' इत्युच्यते । यथा वा स्रवेणावद्यतीत्यत्र द्रवद्रव्यमित्यध्याह्रियते एवमस्त्वित्यत आह ॥ **न च ज्ञानस्येति** ॥ 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति गौतमसूत्रं हृदि कृत्वा प्रसादमृतेऽपि ज्ञानस्य मोक्षसाधनत्वं व्यनक्ति ॥ **आत्मेत्यादिना** ॥ **तदनन्तरापायादिति** ॥ पूर्वपूर्वापायादित्यर्थः ।

**श्री०**— वक्ष्यमाणं न्यायसूत्रं व्याख्याति ॥ **आत्मयाथात्म्याज्ञानाच्चेत्यादिना** दुःखनिवृत्तिर्मुक्तिरित्यन्तेन ॥ **रागद्वेषेति** ॥ सौत्रदोषशब्दव्याख्यानम् ॥ **उत्तरोत्तरेत्यादि** ॥ मिथ्याज्ञानापाये दोषापाय इत्यादिरूपेणेत्यर्थः ॥

अनु०— द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥
नर्ते त्वत्क्रियते किञ्चिदित्यादेर्न हरिं विना ।
ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि क्वचित् ॥

सु०— यत्तु मोक्षस्येश्वराधीनत्ववचनं तज्ज्ञानादिजन्मनीश्वरस्य निमित्ततापरमित्यविरुद्धम् । तदर्थं च तदुपास्त्यादेरुपयोगः । तदेवं ज्ञानस्वभावेनाज्ञानादिनिवृत्तौ कारणाभावे कार्यानुदयस्येश्वरप्रसादानपेक्षत्वादयुक्तमिदमतःशब्दव्याख्यानमित्यत आह ॥ द्रव्यमिति ॥ द्रव्यशब्देन प्रकृत्यादितत्त्वमुच्यते । कर्मेति धर्माधर्मौ । स्वभावः प्रकृत्यादीनां परिणामादिः । जीव इत्यभिमानी । एवेति यदनुग्रहत इत्यतः परं द्रष्टव्यम् । अनेन सर्वोत्पत्तिमदुपादाननिमित्तानां सत्ताऽपि परमेश्वराधीनेत्युच्यते । 'न ऋते त्वत्क्रियते किञ्चन' इति श्रुत्या सर्वार्थक्रियायास्तदधीनत्वम् । इत्यादेरागमादवगम्यत इति शेषः । ज्ञानस्वभावतोऽपीत्यपिशब्देनाङ्गीकारवादोऽयमिति सूचयति । हिशब्दो हेतौ । यस्मादेवं तस्मादुपपन्नं पूर्वव्याख्यानमिति ।

वा०— अत्र जीवकालयोर्द्रव्यत्वेऽपि तयोः पृथक्करणे स्वभावशब्दस्य स्वरूपमात्रपरत्वे तेनैव द्रव्यकर्मजीवकालानां ग्रहणोपपत्त्या स्वधर्मग्रहणे कर्मशब्दोक्तचेष्टायाश्च विशिष्योक्तेः प्रयोजनविशेषाभावेन द्रव्यादिशब्दान्विशेषनिष्ठतया व्याख्याति ॥ **द्रव्यशब्देनेत्यादिना** ॥ यद्वा पूर्वपक्षनिवर्तकतया अनेन सर्वोत्पत्तिमदित्यादिनैतन्मूलाभिप्रायं वक्तुं तदनुगुणतया द्रव्यादिशब्दान्व्याख्याति ॥ **द्रव्यशब्देनेत्यादिना** ॥ न ऋत इत्यस्य पूर्वेण समानविषयत्वभ्रान्तिं निवारयितुं विषयभेदमाह ॥ **न ऋत इति** ॥ इत्यादेरित्यत्र विशेष्यतयाऽभिमतप्रमाणं प्रदर्शयन्नेव पञ्चम्याः कारकहेतुत्वपरत्वभ्रान्तिं शेषपूरणेन निवारयति ॥ **इत्यादेरिति** ॥ पूर्वं मुक्तौ साधनान्तरनिषेधेन समुच्चायकत्वासम्भवादाह ॥ **ज्ञानेति** ॥

स०— **ज्ञानादिजन्मनीति** ॥ ज्ञानाद्युत्पत्तावित्यर्थः । चित्प्रकृतिसंग्रहाय जीवपदं व्याख्याति ॥ **जीव इत्यभिमानीति** ॥ **न ऋते त्वदिति** ॥ ननु कथं कालजीवादीनां नित्यादीनां नियम्यत्वम् । नित्यत्वेनैवेति ब्रूमः नित्यकर्मभिर्दुरितप्रागभावपरिपालनदर्शनात् । प्रागभावपरिपालनस्य नित्यत्वानतिरिक्तत्वादिति ।

प॰— ज्ञानिनां मोक्षदश्च स इत्यादेः का गतिरित्यत आह ॥ **यच्चेति** ॥ **ज्ञानादि-जन्मनीति** ॥ ज्ञानादिजन्ये मोक्षे ईश्वरोऽपि निमित्तमित्येवं परमित्यर्थः । कार्यमात्रं प्रति तस्य निमित्तत्वादिति भावः । यद्वा ज्ञानादिजन्मनि ज्ञानादेरुत्पत्तौ ईश्वरस्य निमित्ततापरमित्यर्थः । श्रीतत्वस्यापि लाभाय जीवशब्दार्थमाह ॥ **जीव इतीति** ॥ प्रकृत्यादितत्वानां तत्परिणामानामभिमानी । तथाच सर्वोऽपि चेतन इत्यर्थः ॥ **इति शेष इति** ॥ इत्यादेरित्यनन्तरमागमादिति ॥ क्वचिदित्यनन्तरमित्यवगम्यत इति शेष इत्यर्थः ॥ **अङ्गीकारवादोऽयमिति** ॥ ज्ञानस्वभावाद्भवन्नपि मोक्षो न हरिं विनेति मोक्षस्य ज्ञानस्वभावाधीनत्वमुपेत्य हर्यधीनत्वोक्तिपक्षोऽङ्गीकारवादेन ।

या॰— युक्तो नियुक्तः प्रेरित इत्यर्थः । बन्धस्येश्वराधीनत्वप्रतिपादनपरतया श्लोकं व्याचष्टे ॥ **द्रव्यशब्देनेत्यादिना** ॥ रमासङ्ग्रहार्थमाह ॥ **जीव इत्यभिमानीति** ॥

श्री॰— **निमित्ततापरमिति** ॥ ईश्वरस्य सर्वोत्पत्तिमत्पदार्थनिमित्तकारणत्वादित्यर्थः ॥ **तदर्थमिति** ॥ निमित्तकारणभूतेश्वरस्य ज्ञानजनकत्वार्थमित्यर्थः ॥ **अङ्गीकारवादोयमिति** ॥ ज्ञानस्वभावाद्भवन्नपि । मोक्षस्य ज्ञानस्वभावाधीनत्वमुपेत्य हर्यधीनत्वोक्तिपक्षोऽङ्गीकारवादेन । वस्तुतस्तु ज्ञानस्वभावाधीनत्वमेव नेत्यर्थः ॥

**सु॰— ततश्चायमर्थः । स्यादेतदेवम् । यद्यज्ञानमात्रनिबन्धनोऽयं बन्धो जीवस्य स्यात् । न चैवम् । श्रुतिस्मृतीतिहासपुराणेषु परमेश्वरेच्छानिमित्तत्वावगमात् । अद्वैतिनामविद्याधीनजीवब्रह्मविभागवत्तार्किकादीनां च गुणवत्त्वाधीनद्रव्यत्ववदनादेरपीश्वराधीनत्वोपपत्तेः । उपपादयिष्यते हि ज्ञानानन्दादिस्वरूपोऽयं जीव इति पुंस्त्वादिवदित्यादिना । तद्भावानुपलब्धिश्चानुभवसिद्धा । तेनावगम्यतेऽस्ति किमप्यावरकम् । येनावृतः स्वप्रकाशचैतन्यरूपोऽपि नात्मनस्तत्त्वं वेद । न च कामकर्मादिकमेव तथा भवितुमर्हति । तस्यापि सादिनः कारणापेक्षत्वात् । न च पूर्वपूर्वस्मादुत्तरोत्तरमिति युक्तम् । सुप्तिप्रलययोस्तद्वृत्त्यभावेन निष्कलङ्कचैतन्यबलात्स्वरूपावभासप्रसक्तेः । अतः कामकर्माद्यतिरिक्तं मायाऽविद्या प्रकृतिरित्यादिशब्दाभिधेयमनाद्येव किमपि द्रव्यमङ्गीकरणीयम् । 'अनादिमायया सुप्त' इत्यादिश्रुतिस्मृतयश्चात्र भवन्ति । न च मायाऽपि कथं स्वप्रकाशमावृणोतीति युक्तम् । आवरकतयैव तस्याः प्रमितत्वात् । वक्ष्यते चात्रोपपत्तिः । न च जडस्य स्वतः किञ्चित्करत्वं युक्तम् । द्रव्यं कर्म चेत्यादिवाक्यविरुद्धं च ।**

वा०— ननु ज्ञानस्वभावेनैवाज्ञाननिवृत्तौ कारणाभावेन कार्यानुत्पादान्नेश्वरप्रसादोऽपेक्षित इति शङ्किते सर्वोत्पत्तिमदुपादाननिमित्तानां भगवदधीनतावबोधकवाक्योदाहरणमसङ्गतम् । न च मोचने प्रसादस्यावश्यकत्वाद्बन्धस्येश्वराधीनत्वेन तस्यैव मोचकत्वात्प्रसाद आवश्यक इत्युपपादयितुं बन्धस्येश्वरेच्छाधीनत्वे वक्तव्ये न तदुदाहरणासङ्गतिरिति वाच्यम् । तर्हि बन्धस्येश्वरेच्छाधीनत्वे प्रमाणस्योपन्यसनीयत्वेन प्रकृत्यादीनां तदधीनत्वे तदुदाहरणासङ्गतिरेव । न च तेषामपि बन्धकारणत्वात्तदुक्तिः तेषां बन्धकारणत्वे प्रमाणाभावत्वात् । भावे वा प्रकृत्यादीनां बन्धकानां भगवदधीनत्वेऽपि भगवतः साक्षाद्बन्धकत्वानापत्त्या तेषां बन्धकत्वोक्तेः साक्षात्प्रसादोपपादकत्वाभावेन तदुक्तेरसङ्गतिरेव । रागादीनां बन्धकत्वेनाशङ्कितानां भगवदधीनत्वस्यावश्यवक्तव्यस्यानुक्तेश्चेत्यतस्तत्सङ्गमयितुमाह ॥ **ततश्चेति** ॥ यद्वा नन्वनेन वाक्येन मोक्षस्य न ज्ञानस्वभावलभ्यत्वम् । ततश्च प्रसादोऽपेक्षित एव । ज्ञानस्वभावलभ्यत्वाङ्गीकारेऽपि प्रसादोऽपेक्षित एवेत्युक्तं स्यात् । तच्च नोपपद्यते । मोक्षस्य युक्त्या ज्ञानस्वभावलभ्यताव्युत्पादनान्नोक्तिमात्रेण तदभाव ईश्वरेच्छाधीनत्वं च तस्य सिध्यतीत्यतो बन्धस्येशेच्छाधीनत्वयुक्त्यैव मोक्षस्येशेच्छाधीनत्वव्युत्पादनमत्र वाक्येऽभिप्रेतं नोक्तिमात्रमतो नानुपपत्तिरित्याशयकथनपूर्वमनङ्गीकारपक्षं व्युत्पादयितुमस्तु वेत्यादिनाऽङ्गीकारपक्षमपि व्युत्पादयितुमाह ॥ **ततश्चेति** ॥ एतन्मुक्तेर्ज्ञानस्वभावलभ्यत्वम् । एवं त्वदुक्तरीत्या यदा स्यादित्यर्थः । अत्र श्रुतिपुराणयोरुदाहृतयोर्ग्रहणं स्मृतीतिहासेत्यादिशब्दसङ्गृहीतकथनम् । परमेश्वरेत्यतः पूर्वं साक्षात्परम्परया चेति शेषः । तत्र पुराणं बन्धकानामीशाधीनतोक्तिद्वारा बन्धस्येशाधीनतापरं श्रुतिस्तु बन्धस्याप्यर्थक्रियात्वात्साक्षादेवेशाधीनतापरा । ततश्च बन्धस्य साक्षाद्बन्धकप्रवर्तकतया चेशेच्छानिमित्तत्वं सूचयति । एतादृशवाक्योदाहरणलब्धार्थकथनं यद्यज्ञानेत्यादि । अयं बन्धो मिथ्याज्ञानेत्यादिदुःखान्तोऽज्ञानमात्रनिबन्धनो न चैवमित्यतःपरं किन्त्वज्ञानं यन्नियतं तन्निबन्धनः पृथक् च भगवन्निबन्धन इति शेषः । ननु पराभिप्रेतकार्यकारणप्रवाहरूपबन्धस्यदं प्रथमताशून्यत्वेनानादित्वेऽपि स्वरूपेणानादित्वाभावादज्ञानाधीनत्वस्य परेण वक्तुं शक्यत्वेऽपि सिद्धान्त्यभिप्रेतप्रकृत्यादिबन्धस्य स्वरूपेणानादित्वान्नेश्वरेच्छाधीनत्वं तस्येति शङ्कामुपोद्घातेन परिहरति ॥ **अद्वैतिनामिति** ॥ इदं चानादीनामपि प्रकृत्यादीनां भगवदधीनताबोधकपुराणबलाच्छ्रुतिस्थकिञ्चनेति पदाच्च लब्धार्थकथनम् । उपपत्तिग्रहणेनानादेरुत्पत्त्यर्थं भगवदनपेक्षायामपि स्थित्यर्थं सादितो न विशेष इति न्यायं सूचयति । ननूक्तरूपबन्धस्य कथमज्ञाननियामकेशाधीनत्वं पृथक् च कथमीशाधीनत्वमित्यतो बन्धस्वरूपं न केवलं त्वदुक्तरीत्यैव किन्तु स्वरूपाच्छादनमपि । एवं च जीवस्वरूपाच्छादकप्रकृत्यादिशब्दिताज्ञाननियामकतया स्वतश्च जीवस्वरूपाच्छादकत्वेन मिथ्याज्ञानादिप्रयोजकनियामकतया स्वतश्च बन्धनियामकत्वेनेति प्रदर्शयितुं किं तत्स्वरूपं कुतश्च तत् कुतश्च तदाच्छादककल्पना प्रकृत्यादिकमेव च

कुतस्तथा रागादेरपि सम्भवात्कथं च स्वप्रकाशाच्छादनसम्भवः कुतश्च तदाच्छादकस्यापि भगवदधीनत्वमित्याशङ्काः परिहरति ॥ **उपपादयिष्यते हीत्यादिना** ॥ अथवा ननूक्तरूपबन्धस्याज्ञानमात्रनिबन्धनताया युक्तिपूर्वमुपपादनान्न तस्येच्छाधीनत्वम् । न च श्रुत्यादिबलात्तथा । उदाहृतवाक्येषूक्तरूपबन्धस्येशेच्छाधीनताया अप्रतिभानादित्यतः साक्षात्परम्परया बन्धस्येशेच्छाधीनत्वं व्युत्पादयितुं परोक्तविलक्षणबन्धकस्वरूपं युक्त्यादिना प्रतिपादयन्नुदाहृतवचनानां तत्र प्रमाणत्वं च घटयितुमाह ॥ **उपपादयिष्यते हीत्यादिना** ॥ स्वप्रकाशेत्यनेन सामग्र्यभावप्रयुक्ततयाऽनुपलब्धेरन्यथासिद्धिं निराकरोति । न आवरकान्तरप्रयुक्तान्यथासिद्धिनिराकरणं न चेति । सुप्तौ रागाभावः प्रलये कार्यमात्राभावेन कर्मणोऽप्यभाव इत्युभयोर्ग्रहणम् । इत्यादिश्रुतीत्युत्तरत्रादिशब्दोपात्ताविद्याप्रकृतिबन्धकत्वाभिधायकश्रुत्यनुसारेणाह ॥ **मायाऽविद्या प्रकृतिरिति** ॥ **अनाद्येवेति** ॥ एतच्च परिशेषकथनं सादिधर्माधर्मौ कर्मशब्देनोपादायाप्यनादिप्रकृतेर्द्रव्यशब्देन प्रमाणे पृथगुपन्यासमहिम्ना लब्धमिति द्रष्टव्यम् ॥ **स्मृतयश्चात्रेति** ॥ चशब्देनोक्तपरिशेषसमुच्चयः । कथमित्यावरकत्वमप्रामाणिकमिति वा । प्रमाणबोधितमप्यसम्भावितं कथमङ्गीकर्तव्यमिति वा । नाद्यः । परिशेषश्रुत्यादेरिदानीमेवाभिहितत्वादित्याह ॥ **आवरकतयेति** ॥ न द्वितीय इत्याह ॥ **वक्ष्यते चेति** ॥ स्वभावाज्ञानवादस्येत्यनुव्याख्यानव्याख्यावसरे यद्यपि जीवचैतन्यं ब्रह्म स्वधर्मप्रकाशात्मकं तथाऽपि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिताविद्यावशान्न तथा संसारे प्रकाशयति इति वक्ष्यत इत्यर्थः । जडस्येति हेतुगर्भं विशेषणम् । द्रव्यं कर्म चेत्यादिनाऽस्य वाक्यस्यात्रोपयोगप्रदर्शनम् ।

स० — नन्वज्ञाननिमित्तोऽयं बन्धो ज्ञानेनैव निवर्त्यः । ज्ञाने चेश्वरानुग्रहो निमित्तमस्तु । तत्प्रसादस्य तु न कश्चिन्मुक्तावुपयोगः । कारणनिवृत्त्यैव कार्यनिवृत्तेरित्यत आह ॥ **ततश्चेति** ॥ कथमनादिबन्धस्येश्वरेच्छाधीनत्वं किञ्चिदुपकाराभावादित्याशङ्क्यानादेरप्यधीनत्वे वादिसम्मतिमाह॥ **अद्वैतिनामिति** ॥ **स्वरूपावभासप्रसक्तेरिति** ॥ यावत्स्वरूपावभासप्रसक्तेरित्यर्थः ॥ **वक्ष्यते चात्रोपपत्तिरिति** ॥ 'स्वभावाज्ञानवादस्य' इत्यादिना ॥

प० — वस्तुतस्तु ज्ञानस्वभावाधीनत्वमेवास्य नेत्यर्थः । अङ्गीकारवादमस्तु वेत्यादिनाऽग्रे विवरिष्यन्नेतिपक्षं तावत्प्रपञ्चयति ॥ **स्यादेतदित्यादिना** ॥ **श्रुतीति** ॥ 'त्वं मुक्तिदो बन्धदोऽतो मतो न' इति श्रुतिः । तत्र तत्र भाष्यकारोक्तपञ्चरात्रस्मृतिः । 'सुखं दुःखं भवो भावो भयं चाभयमेव च' इत्यादीतिहासः । 'तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ' इत्यादिपुराणम् । ननु कथमनादेरनाधेयातिशयस्येशाधीनतेत्यत आह ॥ **अद्वैतिनामिति** ॥ विवृतमेतद्रायव्यधिकरणचन्द्रिकायाम् । 'अनादीनां गुणादीनां यथा गुण्यादितन्त्रता' इत्यादिना ॥ ननु गौतमसूत्रोक्तदिशा देहात्म्यैक्यारोप-

निमित्त एव बन्धोपपत्तावनादिबन्धमुपेत्य तस्येशाधीनता किमर्थमुपेयेत्यतोऽनादिबन्धस्थितिं स्वाभिमतां साधयति । उपपादयिष्यते हीत्यादिना तदेवमितिपर्यन्तेन ॥ **इत्यादिनेति** ॥ सूत्रेणेत्यर्थः ॥ **तद्वृत्तीति** ॥ तत्परिणामरूपकार्याभावेनेत्यर्थः । तत्तच्छब्दघटितनानाश्रुत्यैकमत्याप्रोक्तमित्यादिशब्दाभिधेयमिति ॥ **वक्ष्यते चेति** ॥ 'स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेत्' इत्यत्र सविशेषाङ्गीकारादित्युपपत्तिर्वक्ष्यत इत्यर्थः । अस्त्वेवं किमीशेनेत्यत आह ॥ **न च जडस्येति** ॥ प्रकृत्येति स्वशक्त्येति च व्यधिकरणे तृतीये ।

**या०—** बन्धस्येश्वराधीनत्वं कथमनेन लब्धमित्यतस्तत्प्रदर्शयितुमाह ॥ **उपपादयिष्यते हि इत्यादिना ॥ तद्वृत्त्यभावेनेति** ॥ तत्कार्याभावेनेत्यर्थः । न तु तत्सत्ताभावेनेत्यर्थः । सुप्त्यादावपि कामादेः सूक्ष्मरूपेण सत्वात् । तथाच सुप्तिप्रलययोः कामकर्मादिजन्यस्य कार्यस्य कस्याप्यभावेन स्वरूपप्रकाशप्रतिबन्धरूपकार्यस्याप्यभावापत्त्या तदानीं स्वरूपावभासप्रसङ्ग इति भावः । ननु कथमविद्याऽपि स्वप्रकाशमानचैतन्याभिन्नमानन्दादिकमावृणोतीत्यत आह ॥ **वक्ष्यते चात्रेति** ॥ 'स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेदि'त्यत्र सविशेषत्वरूपा अविद्यायाः परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहितत्वरूपा चोपपत्तिर्वक्ष्यत इत्यर्थः ।

**श्री०— श्रुतीति** ॥ 'त्वं मुक्तिदो बन्धदोऽतो मतो न' इति श्रुतिः । तत्र तत्र भाष्यकारोक्तपञ्चरात्रस्मृतिः । 'सुखं दुःखं भवोऽभवो भयं चाभयमेव चे'त्यादीतिहासः । 'तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठिता'वित्यादिपुराणम् । नन्वनादेः कथमीश्वराधीनत्वमित्यत आह ॥ **अद्वैतिनामित्यादिना ॥**

**च०—** किञ्चिन्निबन्धनत्वप्युत्पत्तिरूपातिशयविनिर्मुक्तस्यानादेर्बन्धस्य कथमीशेच्छायत्ततेत्यतो मतान्तरानुमतनिदर्शनप्रदर्शनेन सा सङ्गच्छत इत्याह ॥ **अद्वैतिनामित्यादि** ॥ अनादीनां गुणादीनां यथा गुण्यादितन्त्रता । तथाऽनादिश्रुतेरस्तु क्षेमायेश्वरतन्त्रता । यथा वैशेषिकादिमते गगनपरिणामादीनामनादिनित्यानामपि स्वाश्रयगगनाद्यधीनता यथा वाऽद्वैतिमतेऽनादेरात्माज्ञानसम्बन्धस्य जीवब्रह्मविभागादेश्च सम्बध्यज्ञानाधीनता यथा प्रभाकरमते दुःखप्रागभावस्य मोक्षस्य ज्ञानाधीनता यथा वा मतान्तरे दुरितप्रागभावस्य निषिद्धाकरणाधीनतेत्यादिनाऽनादेरपि स्थितावीशाधीनताऽस्त्येव । 'अकर्तुमन्यथाकर्तुं कर्तुं चास्तीश्वरस्य यत् । सामर्थ्यं तेन तत्तन्त्रमनाद्यपि च सादिवदि'ति कारिकाविवृत्यन्तेन गायत्रीनयचन्द्रिकायां कृतप्रपञ्चनमेतत् ॥ **तद्वृत्त्यभावेन** तत्कार्याभावेन । तथाच सुप्त्यादिदशायां स्वरूपावभासानुत्पादप्रयोजककामकर्मादिकार्यसमवधानाभावेन तदवभासप्रसङ्ग इति भावः ॥ **वक्ष्यते चेति** ॥ स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेदित्यनुव्याख्याप्रतीकव्याख्यावसरे यद्यपि जीवचैतन्यं

ब्रह्मस्वधर्मप्रकाशात्मकं तथापि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिताविद्यावशान्न तथा संसारे प्रकाशयतीत्यभिधास्यत इत्यर्थः ॥

सु० — अतः परमेश्वर एव सत्त्वादिगुणमय्या विद्याविरोधित्वेनाविद्यया स्वाधीनया प्रकृत्याऽचिन्त्याद्भुतया स्वशक्त्या च जीवस्य स्वप्रकाशमपि स्वरूपचैतन्यमाच्छादयतीति युक्तम् । स एव च स्वाधिष्ठानलब्धपरिणाममहदहङ्कारादिप्रकृत्यंशैः संयोज्य कर्तृत्वभोक्तृत्वस्वातन्त्र्यं कारकफलस्वाम्यं चास्याविद्यमानमेवोपदर्श्य रागाद्युत्पादनद्वारा दुःखमनुभावयति । तदेवं बन्धस्येश्वराधीनत्वात्स एव मोचकोऽङ्गीकार्योऽपरस्य स्वातन्त्र्याभावात् । प्रसन्न एवासौ स्वकीयां मायां व्यावर्तयतीति तत्प्रसादार्थं सर्वोऽप्ययं साधनसन्दर्भ इत्युक्तम् । ततो यद्यपि न सूत्राक्षरेभ्यो भगवत्प्रसादो लभ्यते । तथाऽप्यनुपपत्त्याऽङ्गीकरणीय इति युक्तं व्याख्यानम् । वक्ष्यति चैतत्सूत्रकारः 'ततो ह्यस्य बन्धविपर्ययौ इति । एवमुक्तेन न्यायेन न ज्ञानस्यैवायं स्वभावो यत्साक्षान्मोक्षसाधनत्वम् । अस्तु वा तथाऽपीश्वरप्रसादोऽपेक्षितः । सकलकारकाणां तदधीनसत्ताप्रवृत्तित्वेन तदिच्छां विना कस्यापि कार्यस्यानुदयादिति । अङ्गीकारवादस्य चेदं प्रयोजनं यत्पूर्वस्यैवार्थस्य समर्थनम् । तथा हि । येन ज्ञानस्य मोक्षहेतुत्वमङ्गीकृतं न तेनापि ईश्वरेच्छा त्यक्तुं शक्यते । कारकप्रेरकत्वादिनाऽवश्याभ्युपगमनीयत्वात् । तथा च किमनेन ज्ञानेनाप्रमितेन । प्रमित ईश्वर एवाङ्गीकार्य इति ।

वा० — एवमुपयुक्तमभिधाय कथं प्रकृतेरविद्यात्वमनादित्वं चेत्यतस्तमोरूपायास्तद्घटयन्भगवतो द्वेधा स्वरूपाच्छादकत्वं विवक्षितमाह ॥ **अत इति** ॥ अनेन प्रमाणे द्रव्यमित्यंशस्याभिप्रेतार्थः कथितो भवति । इदं चाज्ञानस्य भगवदधीनत्वकथनम् । स एव चेत्यनेन स्वभावपदोक्तपरिणामांशस्य । कर्तृत्वेत्याद्युपदर्श्येत्यन्तेन जीवपदोक्ताभिमानीत्यंशस्य अस्वरूपे स्वरूपमतेरेवाभिमानित्वात् इदं च मिथ्याज्ञानस्य भगवदधीनत्वकथनम् । इयता ग्रन्थेन बन्धस्येश्वराधीनत्वं यदर्थं वर्णितं तदिदानीमाह ॥ **तदेवमिति** ॥ स एव कुतो मोचक इत्यत एतद्वाक्योदाहरणलब्धमपरस्य स्वातन्त्र्याभावमत्रापि हेतुत्वेन योजयति ॥ **अपरस्य इति** ॥ तावता हरेर्मोक्षसाधनत्वेऽपि प्रसादस्य किमायातमित्यतो हरेः समूलबन्धमोचनं मूलभूतमायाव्यावर्तनाभावे न सम्भवति । मायाव्यावर्तनं च न प्रसादेन विनेति प्रसादसिद्धिरित्याह ॥ **प्रसन्न एवेति** ॥ स्वकीयामित्युक्त्या बन्धस्य भगवदधीनत्वोपपादनस्य प्रकृतोपयोगं दर्शयति । नन्वेवं मोक्षस्य प्रसादलभ्यत्वे ज्ञानस्य मोक्ष उपयोगादर्शनेन तदर्थमीमांसारम्भानुपपत्तिरित्यतो 'जिज्ञासोत्थज्ञानजादि'ति पूर्ववाक्योक्तं ज्ञानादेः प्रसादार्थत्वं स्मारयति ॥ **तदिति** ॥ न केवलमन्यथाऽनुपपत्तिमात्रेण प्रसादस्य सूत्रार्थान्तःप्रवेशनमपि तु सूत्राभिप्रेतं च तदित्याशयवान् प्रसादप्रापकस्य बन्धमोक्षयोर्भगवदधीनत्वस्य

सूत्रान्तरारूढतां दर्शयति ॥ **वक्ष्यति चेति** ॥ अङ्गीकारवादसूचकापिशब्देन सूचितं ज्ञानस्य साक्षान्मोक्षसाधनत्वं स्वभाव इत्यस्यार्थस्यानुपपन्नत्वं सिद्धमित्याह ॥ **एवमिति** ॥ एवं चेत्यादेर्वाक्याद्बन्धस्य बन्धकानां च भगवदधीनत्वावगमादपरस्य स्वातन्त्र्याभावावगमाच्च हरिं विना ज्ञानस्वभावान्मुक्तिर्न स्यात् । साक्षान्मोक्षसाधनत्वं न ज्ञानस्वभाव इति यावत् । इत्यपिशब्दपरित्यागेनापि वाक्यं व्याख्येयमित्युक्तं भवति ॥ **अस्तु वेति** ॥ अस्मिंश्च पक्षे यथास्थितैव योजनेति हृदयम् । ननु ज्ञानस्य साक्षान्मोक्षसाधनत्वस्वभावत्वाङ्गीकारः प्रकृतविरुद्धः प्रमाणविरुद्धश्चेत्यतः प्रकृतार्थोपपादकत्वं पर्यवसानगत्या प्रमाणाविरुद्धत्वं चोपपादयति ॥ **अङ्गीकारेति** ॥ **अप्रमितेनेति** ॥ साक्षान्मोक्षसाधनत्वस्वभाववत्त्वयेति शेषः ।

**स०— कारकफलस्वाम्यमिति** ॥ इन्द्रियतत्फलस्वामित्वमित्यर्थः । ननु शब्दो नित्योऽनित्यो वास्तु पक्षद्वयेऽपि शब्दानुशासनं तावत्कर्तव्यम् इतिवत् अनास्थाऽभावात्कथमङ्गीकारवाद इत्यत आह ॥ **अङ्गीकारवादस्येति** ॥ सर्वत्राङ्गीकारवादस्य पूर्वोक्तार्थसमर्थनमेव प्रयोजनम् । वैयाकरणैस्तु शब्दनित्यत्वानित्यत्वयोर्द्वयोरप्यभ्युपगमादुक्ता तत्रानास्थेति भावः ।

**प०**— संयोज्य जीवमित्यर्थः ॥ **इत्युक्तमिति** ॥ मुच्यत इत्यन्तपूर्वग्रन्थव्याख्यावसर इत्यर्थः ॥ **वक्ष्यति चैतदिति** ॥ बन्धमोक्षावीशाधीनावित्येतद्भक्तिपादे 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्ये'ति वक्ष्यतीत्यर्थः । पूर्वमङ्गीकारवादोऽयमित्युक्तं व्यनक्ति ॥ **अस्तु वेति** ॥ मोक्षसाधनत्वं ज्ञानस्वभाव इत्यनुकर्षः ॥ **पूर्वस्यैवेति** ॥ तत्प्रसादादेव मुच्यत इत्यत्रोक्तार्थस्यैवेत्यर्थः ॥ **अप्रमितेनेति** ॥ ज्ञानिनां मोक्षदश्च स इतीश्वरस्यैव ज्ञानस्वभावे मुक्तिहेतुत्वस्याप्रमितत्वादिति भावः ॥

**या०**— सत्त्वादिगुणमय्याऽविद्ययेति प्रकृतिविशेषणं ग्रन्थान्तराविरोधायेति ज्ञातव्यम् । अङ्गीकारवादोऽयमिति सूचयतीत्युक्तं प्रपञ्चयति ॥ **अस्तु वा तथेति** ॥ 'न ऋते त्वदि'ति श्रुत्युक्तं सर्वार्थक्रियायास्तदधीनत्वमत्र हेतुतयान्वितमित्याशयेनाह ॥ **सकलकारकाणामिति** ॥ **पूर्वस्यैवार्थस्येति** ॥ ईश्वरस्यैव मोक्षहेतुत्वरूपार्थस्येत्यर्थः ॥ **कारकेति** ॥ ज्ञानरूपकारकेत्यर्थः ॥

**श्री०**— सत्त्वादिगुणात्मकप्रकृतेरविद्याशब्दवाच्यत्वे निमित्तम् ॥ **विद्याविरोधित्वेनेति** ॥ तथाच सिद्धान्ते भावरूपाज्ञानशब्देन सत्त्वादिगुणमयी प्रकृतिर्वोच्यत इति सम्प्रदायः । चतुर्थाध्यायटिप्पण्यामस्मदाचार्यैः एतत्स्फुटतरं प्रतिपादितमस्तीति ज्ञेयम् ॥

**च०— सूत्राक्षरेभ्य इति** ॥ सूत्रजनितान्वयधीविषयो न भवतीत्यर्थः ॥ **अनुपपत्तीति** ॥ अनुपपत्तिप्रतिसन्धानाधीनोदीच्यबोधविषय इत्यर्थः ॥ **सकलकारकाणामिति** ॥ न ऋते त्वदिति श्रुतेः इति भावः ॥

अनु० — अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः ।
आनन्ददश्च मुक्तानां स एवैको जनार्दनः ॥

सु० — यदुक्तं न कार्यो मोक्षः किन्तु प्राचीनेषु मिथ्याज्ञानादिषु निवृत्तेषु कारणाभावादेवोत्तरप्रवाहानुत्पादमात्रम् । तत्र का नाम परमेश्वरापेक्षा । तद्वचनानि तु ज्ञानोत्पत्त्यादिनिमित्ततापराणीति । तदनुपपन्नम् । ज्ञानप्रदानाद्यतिरिक्तस्यापीश्वरप्रयोजनस्यागमेषूक्तेरिति आह ॥ अज्ञानामिति ॥ मोक्षदः प्रागुक्तप्रकृतिबन्धात् । नन्वनादेः प्रकृतिबन्धस्य कथं निवृत्तिरिति चेत् । अत्राह कश्चित् । न सादित्वमनादित्वं वा विनाशाविनाशयोर्निमित्तम् । किन्तु विरोधिसन्निपातासन्निपातावेव । किञ्च लोके तावदनादिः प्रागभावो निवर्तते । सुगतानां तत्त्वपरिभावनाप्रकर्षेणानादिवासनासन्तानानां निवृत्तिरिष्टा । नैय्यायिकानामप्यनादिमिथ्याज्ञानप्रवाहः परमाणुश्यामता च निवर्तते । साङ्ख्यानामप्यविवेको निवर्तते विवेकेन । मीमांसकानामिदानीन्तनधर्मतत्त्वज्ञानप्रागभावोऽनादिर्निवर्तते । अनादिभावरूपस्य न निवृत्तिरिति चेन्न । अनिर्वचनीयत्वादज्ञानस्य । अनादिर्न निवर्तत इति सामान्यव्याप्तिः । ज्ञानेनाज्ञाननिवृत्तिरिति विशेषव्याप्तिः । अतः सैव बलवती ।

वा० — नन्वज्ञानामिति वाक्येऽपि स एवैक इति हरिं विना मुक्त्यभावबोधनात्तस्यापि पूर्वत्रोदाहार्यत्वेन पृथक्करणमयुक्तमित्यतोऽत्र मोक्षद इत्यनेन भगवतः प्रकृतिबन्धनिवृत्तिरूपमोक्षकारणत्वोक्त्या प्रकृतिबन्धनिवृत्तिरूपत्वान्मोक्षस्य कार्यत्वमुपपद्यत इत्यर्थसूचनेन दुःखानुत्पादरूपत्वान्मोक्षस्याकार्यत्वेन कारकानपेक्षत्वात् कारकप्रेरकत्वादिनेश्वरप्रसादसापेक्षताव्युत्पादनमनुपपन्नमिति शङ्कापरिहारस्य ज्ञानदानातिरिक्तमोक्षदानोक्त्या चेशाधीनत्ववचनगतिकथननिरासस्यापि सूचनात्पूर्ववाक्याद्विशेषाभिप्रायेण भाष्यकारीयं पृथक्करणमुपपन्नमित्यभिप्रेत्य तच्छङ्कानिवर्तकतया तद्वाक्यं योजयितुमाशङ्कते ॥ **यदुक्तमिति** ॥ मोक्षद इत्यस्मादुक्तशङ्कानिवृत्त्युपयुक्तार्थलाभायोत्तरग्रन्थोपक्षेपाय चात्र तदुपयुक्तं प्रतिसम्बन्धिनं पूरयति ॥ **मोक्षद इति** ॥ नन्वेवं व्याख्याने प्रकृतिबन्धस्यानादित्वेन निवर्त्यत्वानुपपत्त्या वाक्यमनुपपन्नार्थं स्यादतो नेदं व्याख्यानं युक्तम् । ततश्च नास्य प्रकृतौ योग इत्यतोऽनादेर्निवृत्त्यनुपपत्तिशङ्कापरिहारं विवरणकारीयमनूद्य निराकृत्य भाष्यकाराभिमतं परिहारं वक्तुं शङ्कामुत्थापयति ॥ **नन्विति** ॥ बन्धो न निवर्ततेऽनादित्वादिति विवक्षितानुमाने न सादित्वमित्यादिना हेतोरप्रयोजकत्वमभिधाय व्यभिचारमप्याह ॥ **किञ्चेति** ॥ यद्यपि विवरणे किञ्चेत्येतावानंशो नास्ति लोके तावदिति ग्रन्थश्च न सादित्वमित्युक्ताप्रयोजकत्वोपपादकतया व्याख्यातुं शक्यते । तत्त्वदीपने सादित्वादेरनिमित्तत्वे हेतुं दर्शयतीत्यवतारितश्च । तथाऽपि स्पष्टव्यभिचारस्य ग्रन्थस्य न तथाऽवतरणमुचितमप्रयोजकत्वोपपादनस्यापि

व्यभिचारोपपादनेनैव सिद्धेः किन्तु विरोधिसन्निपातेत्युक्तानुपपादनाच्च दूषणान्तरत्वमेवोचितम् । अत एव तत्रत्यैनापि व्यभिचारमाहेत्यवतरणं कृतमित्यभिप्रायेण विवरणाभिप्रेतार्थकथनं किञ्चेत्येतदिति ध्येयम् । अनादिर्न निवर्तत इत्यत्र किमनादित्वमात्रं विवक्षितमुतानादिभावत्वम् । आद्येऽपि किं लौकिकस्य चोद्यमुत वादिनामिति विकल्प्याद्यं दूषयति ॥ **लोके तावदिति** ॥ द्वितीयेऽपि किं सुगतस्योत नैय्यायिकस्याथवा साङ्ख्यस्याहोस्विन्मीमांसकस्येति विकल्पान्क्रमेण दूषयति ॥ **सुगतानामित्यादिना** ॥ द्वितीयं पक्षमुत्थापयति ॥ **अनादीति** ॥ यद्यपि सुगतानामित्याद्युक्तदोषस्यात्रापि सम्भवस्तथाऽपि लौकिकस्येदं चोद्यं न वादिनोऽतस्तान्प्रत्यप्ययमाक्षेप इत्यभिप्रायेण वा स्वपक्षेण दूषणान्तरसम्भवाभिप्रायेण वा तमनभिप्राय किमत्र भावशब्देन सत्त्वं विवक्षितमुताभाववैलक्षण्यमथवा तत्प्रयोजको धर्मः कश्चिदिति विकल्प्याद्येऽज्ञाने हेतुविशेष्यासिद्धिरित्याह ॥ **नानिर्वचनीयत्वादिति** ॥ परमते प्रागभावे व्यभिचाराच्चेति द्रष्टव्यम् । किञ्चाप्रयोजकोऽयं हेतुः । न चानौपाधिकव्याप्तिभङ्ग एव दोषः । तस्य बलवद्व्याप्त्यन्तरबाधितत्वेनानौपाधिकत्वासिद्धेरित्यभिप्रेत्याह ॥ **अनादिर्न निवर्तत इति** ॥ लोके ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकतादर्शनाद्ब्रह्मज्ञानाज्ञानयोरपि तथात्वमित्यर्थः ।

स० — विमतो बन्धो न निवर्तते अनादित्वादात्मवदित्यनुमानान्न बन्धनिवृत्तिरित्याशङ्कते ॥ **नन्वनादेरिति** ॥ परमतेन परिहरति ॥ **अत्राहेति** ॥ विरोध्यभावस्योपाधित्वं विरोधिसंसर्गस्य वा प्रतिपक्षत्वमित्यर्थः सादित्वादेर्विनाशाविनाशनिमित्तत्वे हेतू दर्शयति ॥ **किंचेति** ॥ अनादिर्न निवर्तत इत्यत्र किमनादित्वमात्रं विवक्षितमुतानादिभावत्वम् । आद्येऽपि किं लौकिकानां चोद्यं उत तद्वादिनां इति विकल्प्य क्रमेण दूषयति । लोके तावदित्यादिना । द्वितीयं पक्षमाशङ्कते ॥ **अनादीति** ॥ भावशब्देन किं सत्वं विवक्षितं उताभाववैलक्षण्यमिति विकलल्प्याद्ये विशेषणासिद्धिमाह ॥ **नेति** ॥ अनादित्वे सति भावत्वेऽपि निवृत्तिरस्तु । को बाधः । न च सामान्यव्याप्तिबाधः । ततो विशेषव्याप्तेर्बलीयस्त्वादित्यभिप्रायेणाह ॥ **अनादिरिति** ॥ लोके ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभावदर्शनाद्ब्रह्मज्ञानाज्ञानयोरपि तथात्वमित्यर्थः ।

प० — **प्रागुक्तप्रकृतिबन्धादिति** ॥ सत्त्वादिगुणमय्येत्यादिना प्रागुक्तेत्यर्थः । कथं निवृत्तिरित्याक्षेपस्यात्रोच्यत इत्यादिना स्वयं समाधिं वक्ष्यन्विवरणोक्तं निरसितुं तावदनुवदति ॥ **अत्राह कश्चिदित्यादिना** तदयुक्तमित्यन्तेन । बन्धो न निवर्तते अनादित्वादिति हेतोरप्रयोजकत्वमुक्त्वा प्रागभावादावनेकत्र व्यभिचार इति भावेनाह ॥ **किञ्च लोक इति** ॥

या० — **कार्य इति** ॥ पुरुषकृतिसाध्य इत्यर्थः । विमतो बन्धो न निवर्ततेऽनादित्वादात्मवदित्यनुमानविरोधात्कथं बन्धनिवृत्तिरुपपन्नेत्याशङ्कते ॥ **नन्वनादेरिति** ॥ **न सादित्वमनादित्वं**

**वेति** ॥ ध्वंसप्रागभावयोर्व्यभिचाराद्भावत्वे सतीति विशेषणे तदभावे प्रयोजनान्तरकल्पनापात इति भावः ॥ **विरोधिसन्निपातेति** ॥ निवर्तकभावाभावावित्यर्थः । तथाच पूर्वानुमाने निवर्तकाभाव उपाधिस्तत्सद्भावेन सत्प्रतिपक्षता चेत्यर्थः । ननु सत्प्रतिपक्षानुमानेऽपि सादित्वमुपाधिरित्यत उक्तम् ॥ **सादित्वं विनाशे न प्रयोजकमिति** ॥ अनादिर्न निवर्तत इत्यत्र किमनादित्वमात्रं विवक्षितमुतानादि-भावत्वम् । आद्येऽपि किं लौकिकानां चोद्यमुत तत्तद्वादिनामिति विकल्प्य क्रमेण दूषयति ॥ **लोके तावदित्यादिना** ॥ **अविवेक इति** ॥ प्रकृतिपुरुषयोरित्यर्थः । इदानींतनेति धर्मतत्त्वज्ञानविशेषणम् तत्प्रतियोगिकप्रागभावनिवृत्त्युपपादनायेति ध्येयम् । द्वितीयं पक्षमाशङ्कते ॥ **अनादीति** ॥ भावत्वे सत्यनादिन इत्यर्थः । भावशब्देन किं सत्त्वं विवक्षितमुताभाववैलक्षण्यमिति विकल्प्याद्ये विशेषणा-सिद्धिमाह ॥ **अनिर्वचनीयत्वादिति** ॥ किञ्च विमतमज्ञानं ज्ञाननिवर्त्यमज्ञानत्वाच्छुक्त्यज्ञानवदित्यनु-मानबाध इत्याशयेनाह ॥ **अनादिर्न निवर्तत इत्यादिना** ॥

श्री० — **प्रागुक्तेति** ॥ अतः परमेश्वर एवेत्यादिना प्रागुक्तेत्यर्थः ॥ उत्तरग्रन्थोपक्षेपायेदं व्याख्यानम् ॥ **अविवेक इति** ॥ प्रकृतिपुरुषयोरविवेकः । प्रकृतिपुरुषविवेकेन ज्ञानेन निवर्तत इत्यर्थः ॥ **अनिर्वचनीयत्वादिति** ॥ भावाभावविलक्षणत्वेन भावत्वाभावादिति भावः ॥

च० — साध्यतदभावकोटिकविमतिविषयीभूतबन्धपक्षकानादित्वहेतुकानिवर्त्यत्वसाध्यकात्मनिद-र्शनकानुमानविरोधाद्बन्धनिवृत्तिर्न घटत इत्याशङ्कते । नन्वनादेरिति । विवरणकारीयसमाहितिं प्रतिविधि-त्समानोऽनुवदति ॥ **अत्राहेति** ॥ दर्शितानुमाने निवृत्तिप्रयोजकसामग्र्यभाव उपाधिस्तादृशसामग्रीसद्भावेन प्रतिरोधप्रयोजकता वेत्याह ॥ **विरोधीत्यादिना** ॥ **किञ्चेत्यादि** ॥ सामानाधिकरण्यप्रत्यासत्याभाव-त्वाविशेषितमनादित्वं हेतूक्रियते तद्विशेषितं वेति कल्पद्वयीघटकादिमकल्पेऽपि वादीतरजनरूपलौकिका-नुमिमानकत्वं वादिरूपानुमिमानकत्वं वेति कल्पद्वयीं तत्रत्योत्तरकल्पेऽपि वादिपदेन सुगतो नैय्यायिकः साङ्ख्यो मीमांसको वाऽभिप्रेयत इति कल्पचतुष्टयीमभिसन्दधान आद्यकल्पीयादिमं प्रत्याख्याति ॥ **लोके तावदित्यादि** ॥ तथाच प्रागभावेऽनैकान्त्यम् वादितानापन्नजनैरपि सुप्रतिपदमिति भावः । तादृशद्वितीयकल्पीयकल्पचतुष्टयीं प्रतिविधत्ते ॥ **सुगतानामित्यादिना** ॥ प्रधानभूताद्यकल्पीयं द्वितीयं निरस्यति ॥ **अनादिभावरूपस्येति** ॥ सुगतानामित्यादिनाऽभिहितस्थानत्रयेऽनादित्वाभावेनैवानैकान्त्य-व्युदासं प्रतिसन्दधान उत्तरदलेऽपि भावत्वं भावधर्मरूपमभिप्रेयते अभावविलक्षणत्वरूपं वेति कल्पद्वयी-मभिप्रेत्याद्ये तदभावनियंत्रिताप्रसिद्धिमभिधत्ते ॥ **अनिर्वचनीयत्वादिति** ॥ किञ्च प्रकृतसाध्यमन्तरेणापि प्रकृतहेतोः सत्त्वोपपत्त्याऽप्रयोजकतामभिधित्समानस्तच्छङ्कानिवर्तकाभिमतबन्धधर्मिकनिवर्त्यत्वापादक-तद्व्यापकानादिभावत्वाभावापाद्यकतर्कस्य हेतुभूतायां प्रकृतापादकव्यतिरेकनिरूपितप्रकृतापाद्यव्यतिरेकनिष्ठ-

व्याप्यावज्ञानत्वाभावस्योपाधितया मूलशैथिल्यनियन्त्रिततादृशतर्कानवतारेणाप्रयोजकतां प्रतितिष्ठा- यिषति ॥ **अनादिर्न निवर्तत इत्यादि** ॥ किञ्च विमतमज्ञानं ज्ञाननिवर्त्यमज्ञानत्वाच्छुक्त्यज्ञानवदि त्यनुमानेन बाध इत्याशयेनाह । अनादिर्न निवर्तत इत्यादिनेत्यपि व्याकुर्वते ।

सु० — **ननु स्वोपादानगतोत्तरावस्था विनाशः । तत्कथमनादेर्निरुपादानस्य विनाशः । न । स्वाश्रयगतोत्तरावस्थेत्येतावत्त्वात् । अन्यथा परमाणुश्यामत्वादीनामनिवृत्तिप्रसङ्गात् । अभाववैलक्षण्यादात्मवदज्ञानस्यानिवृत्तिरिति चेन्न । सद्वैलक्षण्यात्प्रागभाववन्निवृत्तिः किं न स्यात् । कस्तर्हि निर्णयः । ज्ञानाज्ञानकृतो विशेषान्वय इत्युक्तमिति । तदयुक्तम् । तथाहि । यत्तावन्न सादित्वमनादित्वं वेत्यादि । तत्र किं निवर्तकाभाव उपाधिरनेनोच्यते किंवा निवर्तक सद्भावेन सत्प्रतिपक्षता । नाद्यः । साधनव्यापकत्वात् । न द्वितीयः । असिद्धेः । न हि अज्ञानस्यानादितया निवृत्त्यनुपपत्तिं ब्रुवाणस्तन्निवर्तकमभ्युपैति । किन्त्वनादित्वेन तदभावम- प्यनुमिनोति । यदपि प्रागभावे व्यभिचारोद्भावनं तदपि भावत्वेन हेतुविशेषणादयुक्तम् । यदपि सुगतानामित्यादि तदत्यन्तमसङ्गतम् । न हि वासनानामनादित्वं वैनाशिका अभ्यु- पयन्ति । न च तद्व्यतिरिक्तं सन्तानम् । येन तत्र व्यभिचार उद्भाव्येत । न च नैय्यायिका- दयो मिथ्याज्ञानस्यानादितां तद्व्यतिरिक्तं वा प्रवाहमङ्गीकुर्वते । परमाणुश्यामताऽपि सादिरेव । न हि परमाणुपाकस्येदंप्रथमता तत्सिद्धान्तः ।**

वा० — प्रकारान्तरेणानादेर्नाशाभावं शङ्कते ॥ **ननु स्वोपादानेति** ॥ घटादेर्नाशो नाम स्वका- रणसमवायिनी कपालाद्यवस्था । अज्ञानस्य चाकार्यत्वान्न स्वकारणसमवायिन्युत्तरवस्थेत्यविनाश इत्यर्थः । व्यर्थविशेषणतया परिहरति ॥ **न स्वाश्रयेति** ॥ स्वाश्रयगतोत्तरावस्थाया नाशत्वसम्भवे समवायिकारणेति विशेषणं व्यर्थम् । तथा चात्मनो ब्रह्मस्वरूपाभिव्यक्तिरविद्यानिवृत्तिरिति किमत्रावद्यमित्यर्थः । न केवलं व्यर्थविशेषणता किन्त्वव्याप्तिश्चेत्याह ॥ **अन्यथेति** ॥ प्रागभावादिरादिपदार्थः । परिशिष्टं पक्षद्वय- माशङ्क्य निराकरोति ॥ **अभाववैलक्षण्यादिति** ॥ तत्प्रयोजको धर्मो भावत्वमित्यस्याप्युपलक्षणम् । अत्रानादित्वमपि विशेषणं द्रष्टव्यम् । प्रत्यनुमानपराहतिमाह ॥ **न सद्वैलक्षण्यादिति** ॥ सत्ताजात्या- श्रयान्यत्वादित्यर्थः । अतो न परमते दृष्टान्ते साधनवैकल्यमिति ध्येयम् । समानबलत्वान्नानयोर्बाध्य- बाधकभाव इति शङ्कते ॥ **कस्तर्हीति** ॥ समानबलत्वमसिद्धमित्याह ॥ **ज्ञानाज्ञानेति** ॥ नसादित्व- मित्यादेर्नाप्रयोजकतामात्रे तात्पर्यं किन्त्वित्यादिना विनाशाविनाशयोर्निवर्तकसद्भावतदभावरूपनिमित्ता- न्तरस्याप्युक्तेः । तथा चाविनाशे निवर्तकाभावः प्रयोजक इति विवक्षयोपाधिकथने तात्पर्यम्। विनाशे निवर्तकसद्भावः प्रयोजक इति विवक्षायां प्रतिपक्षे तात्पर्यं लभ्यत इत्यभिप्रेत्य विकल्पयति॥

**तत्र किमिति** ॥ समानत्वाद्दूषणद्वयं युगपदुपपादयति ॥ **न हीति** ॥ ननु माऽस्तु निवर्तकाभ्युपगमः परस्य साधकाभावेन निवर्तकाभावस्यानिश्चितत्वात् साधनव्यापकतासन्देहेन सन्दिग्धोपाधिः स्यादेवेत्यत आह ॥ **किन्त्विति** ॥ ननु सिद्धान्त इव मायिनाऽपि विश्वमायानिवृत्तिरिति प्रमाणानुसारेण प्रमितमिवर्तकानभ्युपगमस्यानुचितत्वादिति निवर्तकाभावानुमानस्य च बाधितत्वादित्युपाधिप्रतिपक्षसमाधानं कर्तुं शक्यत एवेति कथं परं प्रत्येवं पर्यनुयोग इति चेन्न । अनादेः कथं निवृत्तिरित्याक्षिप्य 'तरति शोकमात्मविदि'ति शास्त्रप्रामाण्यादनादेरपि निवृत्तिरिति समाधानमाशङ्क्यानादिदेहात्माध्यासस्य तत्त्वज्ञानेऽपि अनिवृत्तेः प्रत्यक्षविरोधेन शास्त्रस्यैवाप्रामाण्यमिति शास्त्रमवधीर्यास्या युक्तेरेव तदाक्षेपसमाधानत्वेन परेण उपन्यस्तत्वान्नोपाधिप्रतिपक्षसमाधानं शास्त्रप्रामाण्यानुसारेण परेण कर्तुं शक्यं । अस्माकं त्वलौकिकेऽर्थे शास्त्रविरोधेन प्रत्यक्षस्याभासत्वाद्युक्तं प्रमाणानुसारेण तथा समाधानमित्याशयात् । यदपि प्रागभाव इत्यत्र प्रागभावशब्देन लौकिकः प्रागभावः साङ्ख्याभिमतोऽविवेकशब्दोक्तो विवेकप्रागभावो मीमांसकाभिमतो धर्मतत्त्वज्ञानप्रागभावश्च गृह्यते । सुगतानामित्यादीत्यादिपदेन तु नैयायिकादीनामित्युक्तानामेव ग्रहणम् । न हीत्यादिना तेषामेव मतेनानुपपत्तेर्वक्ष्यमाणत्वादिति द्रष्टव्यम् । वासनासन्तानानां निवृत्तिं वदन्प्रष्टव्यः । हेतुहेतुमद्भावेनावस्थिता उदयव्ययधर्माणः सन्तानिन एव सन्तान इत्येतन्मतेनेदं व्यभिचारोपपादनमुत तदतिरिक्तः कश्चित्सन्तान इति मतेन । नाद्य इत्याह ॥ **न हीति** ॥ तैः पूर्वपूर्वसंस्कारक्षणैरुत्तरोत्तरसंस्काराधानाङ्गीकारेण वासनानामनादित्वस्यानभ्युपगमात् । अन्यथा क्षणिकत्वानुपपत्त्या सत्त्वस्य व्यभिचारापत्तेः । सत्त्वाभावे चापसिद्धान्तात् तदिदमुक्तं वैनाशिका इति ॥ अत एव च क्षणिकत्वाभावे सत्त्वानुपपत्त्याऽतिरिक्तसन्तानमङ्गीकृत्यापि क्षणिकत्वेऽवश्यमङ्गीकर्तव्ये नातिरिक्तत्वाङ्गीकारस्य प्रयोजनविशेष इत्यभिप्रेत्य तैरतिरिक्तत्वं नाङ्गीकृतमित्याह ॥ **न चेति** ॥ अभ्युपयन्तीत्यनुषङ्गः । न च वासनानां तन्मते सादित्वे चतुर्थाध्याये तन्मतोपन्यासावसरेऽनादित्वोक्तिर्व्याहन्येतेति वाच्यम् । वासनानां स्वरूपेणोत्पन्नानामपीदंप्रथमताऽभावाभिप्रायेणानादित्वोक्तेरुपपत्तेरित्याशयः । अतिरिक्तं सन्तानमिति द्वितीयपक्षेऽपि तैः सन्तानस्य सत्त्वक्षणिकत्वयोरनङ्गीकारेणानादित्ववन्नित्यत्वस्यापि सत्त्वान्न तन्मतेनेदं व्यभिचारोपपादनमुपपद्यते । न च सन्तानिनां सत्त्वे सन्तानस्यासत्त्वानुपपत्त्या सत्त्वे च क्षणिकत्वावश्यंभाव इत्युपपाद्य तेनापि निवृत्तिरङ्गीकार्येत्याशयः । तर्हि तयैव युक्त्या सादित्वस्याप्यङ्गीकर्तव्यतापत्तौ हेत्वभावेन व्यभिचारानापत्तेः । अत एव तन्मतोपन्यासावसरे नित्यं सन्तानमेतेषामिति तन्मतमाविष्कृतम् । एतदप्याह ॥ **न चेति** ॥ अत्र च योग्यतया निवर्तत इतीत्यध्याहृत्याभ्युपयन्तीत्यप्यनुषञ्जनीयम् । वस्तुतस्तु हेतुहेतुमद्भावापन्नसन्तानिरूपस्य सन्तानिनां हेतुहेतुमद्भावरूपस्य वा सन्तानस्येदंप्रथमताशून्यत्वेन तेन तेन तत्र तत्रानादिनित्यत्वोक्तावपि वस्तुतः सन्तानस्यातिरिक्तस्य

तन्मतेऽप्यभावात्सन्तानिनां च स्वरूपेणानादिनित्यत्वाभावाद्यथाश्रुत एवायं ग्रन्थः साधुरिति द्रष्टव्यम् ॥ **न चेति** ॥ न चैवं तदीयसंसारानादित्वोक्तेः का गतिरिति वाच्यम् । कार्यकारणभावादिरूपस्य तस्येदंप्रथमताऽभावमात्रेण तदुक्त्युपपत्तेः । इदं च 'त इमे दुःखादयो मिथ्याज्ञानान्ता अविच्छेदेन वर्तमानाः संसारः । कः पुनरयं संसारो दुःखादीनां कार्यकारणभावः । स चानादिः । पूर्वापरकालानियमात' इति न्यायवार्तिके दुःखजन्मप्रवृत्तिदोषा विषयत्वेन तावन्मिथ्याज्ञानकारणम् । एवमसति जन्मनि मिथ्याज्ञानानुत्पत्तेरविषयोऽपि जन्म मिथ्याज्ञानस्य कारणम् । एवं विना प्रवृत्त्या जन्माभावाज्जन्मद्वारेण प्रवृत्तेरपि मिथ्याज्ञानकारणत्वं प्रवृत्तिद्वारेण च दोषाणां तथा 'मिथ्याज्ञानाद्दोषा, दोषेभ्यः प्रवृत्तिः, प्रवृत्तेः जन्म, जन्मनो दुःखम्' इत्यादिवार्तिकटीकायां च स्पष्टमिति द्रष्टव्यम् ॥

स० — प्रकारान्तरेणानादेर्नाशासम्भवं शङ्कते । ननु स्वेति । घटादेर्नाशो नाम स्वसमवायिकारणगतोत्तरकपालत्वावस्था । अज्ञानस्य चाकार्यत्वान्न तत्समवायिकारणगतोत्तरावस्था विनाश इत्यर्थः । व्यर्थविशेषणतया परिहरति ॥ **न स्वाश्रयेति** ॥ स्वाश्रयगतोत्तरावस्थाया नाशत्वसम्भवे समवायिकारणेति विशेषणं व्यर्थम् । तथा चात्मनो ब्रह्मस्वरूपताभिव्यक्तिरविद्यानिवृत्तिरित्यर्थः । न केवलं व्यर्थविशेषणता । किन्त्वव्याप्तिश्चेत्याह ॥ **अन्यथेति** ॥ प्रागभावादिरादिशब्दार्थः । कल्पान्तरमुत्थापयति ॥ **अभावेति** ॥ अत्रानादित्वमपि विशेषणं द्रष्टव्यम् । प्रत्यनुमानपराहतिमाह ॥ **नेति** ॥ अत्राप्यनादित्वं विशेषणं द्रष्टव्यम् । अतो न प्रध्वंसे व्यभिचारः । समानबलत्वान्न तयोः बाध्यबाधकतेति शङ्कते ॥ **कस्तर्हीति** ॥ समानबलत्वमसिद्धमित्याह ॥ **ज्ञानेति** ॥ तन्मतं दूषयति ॥ **तदयुक्तमिति** ॥ नन्वनादित्वनिवर्तकराहित्ययोरात्मनि विद्यमानयोरपि, निवर्तकसद्भावेन पक्षे व्याप्त्यभावात् साधनवतः पक्षाद्व्यावर्तमानस्य निवर्तकाभावस्य न साधनाव्यापकत्वम् । नापि निवर्तकसद्भावस्यासिद्धिरित्याशङ्क्याह ॥ **न हीति** ॥ न केवलं निवर्तकानङ्गीकारमात्रम् । अपि तु विमतं निवर्तकरहितं भावत्वे सत्यनादित्वादात्मवदिति निवर्तकाभावोऽप्यनुमीयत इत्याह ॥ **किन्त्विति** ॥ न चैवम् हिंसात्वे निषिद्धत्वमपि अनुपाधिः स्यात् । हिंसात्वेन निषिद्धत्वस्य साधयितुं शक्यत्वादिति वाच्यम् । तत्रानिषिद्धत्वसाधकश्रुतिबाधसद्भावात् । एवमेव तरति शोकमात्मविदित्यादिश्रुतिविरोधस्तु नास्ति । अनादिभावरूपस्य त्वयापि निवृत्त्यनङ्गीकारात् । अनिर्वाच्यत्वस्य निराकरिष्यमाणत्वेनाज्ञानस्य भावत्वावश्यंभावेनानिवर्त्यत्वापातेन श्रुतेरेवान्यथात्वप्रसङ्गादिति भावः । यदुक्तं भावनातिशयेनानादिवासनासन्तानानां निवृत्तिरिति तत्र किं वासनानां निवर्त्यत्वं सन्तानस्य वा । आद्ये नानादिभावस्य न निवृत्तिरिति नियमभङ्गः वासनानामनादित्वाभावादित्याह ॥ **न हीति** ॥ वैनाशिका इति हेतुगर्भविशेषणम् । सर्वक्षणिकत्ववादित्वात् इत्यर्थः । द्वितीये त्वाश्रयासिद्धिरित्याह ॥ **न चेति** ॥ अभ्युपयन्तीत्यनुषङ्गः । नहि वासनास्वनुगतः

कश्चिदेकः सन्तानः । तस्य भावत्वे सर्वक्षणिकत्वविरोधः अभावत्वे न व्याप्तिभङ्ग इति भावः । नापि मिथ्याज्ञानानामनादित्वम् । ज्ञानानां क्षणिकत्वाङ्गीकारात् । तत्प्रवाहस्त्वसिद्ध एवेत्याह ॥ **न चेति** ॥ **परमाण्विति** ॥ पार्थिवपरमाणुगतरूपादीनां पाकजत्वाङ्गीकारादग्निसंयोगानां च पूर्वपूर्वतरकालेऽपि सद्भावान्नानादित्वमित्यर्थः ।

प०— **परमाण्विति** ॥ पार्थिवपरमाणुश्यामतेत्यर्थः । तस्य अपाकजत्वादिति भावः ॥ **विवेकेनेति** ॥ प्रकृतिपुरुषविवेकेन तदविवेको निवर्तत इत्यर्थः । वासनादावनादित्वं नेति मन्वानः शङ्कते ॥ **अनादिभावरूपस्येति** ॥ हेतोः सत्प्रतिपक्षत्वासिद्धत्वाद्यभिप्रायेण निराह ॥ **अनिर्वचनीयत्वादिति** ॥ भावाभावविलक्षणत्वादित्यर्थः । भावत्वमुपेत्यापि समाधिमाह ॥ **अनादिरिति** ॥ **सैवेति** ॥ विशेषव्याप्तिरेवेत्यर्थः । तार्किकोक्तविनाशस्वरूपं निषेधति ॥ **नेति** ॥ स्वयं प्रकारान्तरेण विनाशस्वरूपं निर्वक्ति ॥ **स्वाश्रयेति** ॥ न तूपादानेत्यप्याश्रयो विशेषणीय इत्यर्थः ॥ **परमाणुश्यामत्वादीनामिति** ॥ तेषामनादित्वादिति भावः । अनिर्वचनीयत्वादित्युक्तपक्षेऽपि दोषमाशङ्क्य निराह ॥ **अभावेति ॥ ज्ञानाज्ञानकृत इति** ॥ यदज्ञानं तद् ज्ञानेन निवर्तत इति विशेषव्याप्तिरित्युक्तमित्यर्थः । निवृत्तौ विरोधिसन्निपातः प्रयोजक इत्यादि क्रमेण निरस्यति ॥ **यत्तावदित्यादिना ॥ उपाधिरिति** ॥ अज्ञानं न निवर्ततेऽनादित्वादात्मवदित्यनुमाने निवर्तकाभाव उपाधिः । निवर्तकवत्त्वादज्ञानं निवर्तत इति प्रतिपक्षोऽभिप्रेयत इत्यर्थः । साधनव्यापकत्वमसिद्धिं च व्यनक्ति ॥ **न हीति** ॥ किञ्च लोक इत्यनेन उक्तदोषं निराह ॥ **यदपीति** ॥ नन्वन्यत्राप्युक्तो व्यभिचार इत्यत आह ॥ **यदपि सुगतानामित्यादीति** ॥

या०— प्रकारान्तरेणानादेर्नाशासम्भवं शङ्कते ॥ **ननु स्वेति** ॥ घटादेर्विनाशो नाम स्वकारणसमवायिनी कपालाद्यवस्था । अज्ञानस्य चाकार्यत्वान्न स्वकारणसमवायिन्युत्तरावस्थेत्यविनाश इत्यर्थः । व्यर्थविशेषणत्वेन परिहरति ॥ **नेति** ॥ तथा चात्मनो ब्रह्मस्वरूपाभिव्यक्तिरेवाविद्यानिवृत्तिरिति न नाशलक्षणानाक्रान्ततेति भावः । न केवलं व्यर्थविशेषणता किन्त्वव्याप्तिश्चेत्याह ॥ **अन्यथेति** ॥ प्रागभावादिरादिशब्दार्थः । कल्पान्तरमुत्थापयति ॥ **अभाववैलक्षण्यादिति** ॥ अत्रानादित्वमपि विशेषणं द्रष्टव्यम् । अस्य प्रत्यनुमानपरिहारमाह ॥ **सद्वैलक्षण्यादिति** ॥ समानबलवत्त्वान्नानयोर्बाध्यबाधकभाव इति शङ्कते ॥ **कस्तर्हीति** ॥ समानबलत्वमसिद्धमित्याह ॥ **ज्ञानाज्ञानेति** ॥ तथा चाज्ञानत्वहेतुसहकृतं सद्वैलक्षण्यं प्रबलं सन्निवृत्तिनिर्णायकं भविष्यतीति भावः । वैनाशिका इति हेतुगर्भविशेषणम् । सर्वक्षणिकत्ववादित्वादित्यर्थः ॥ **इदंप्रथमतेति** ॥ अग्निसंयोगस्य ततः पूर्वमपि सम्भवादेवं ततः पूर्वमपीति नानादित्वम् ॥

श्री०— **अनिवृत्तीति** ॥ श्यामताया अनादित्वेनोपादानाभावादिति भावः ॥ **कस्तर्हीति** ॥ अभाववैलक्षण्यादात्मवदज्ञानस्यानिवृत्तिर्वा सद्वैलक्षण्यात्प्रागभाववन्निवृत्तिर्वेति सन्देह एव स्यान्न निर्णय इत्यर्थः । उत्तरमाह ॥ **ज्ञानेति** ॥ यदज्ञानं तज्ज्ञाननिवर्त्यमिति विशेषव्याप्तिर्बलवतीति निवृत्तिनिर्णय एव भविष्यतीति भावः ॥ **उक्तमिति** ॥ ज्ञानेनाज्ञाननिवृत्तिरिति विशेषव्याप्तिरित्युक्तमित्यर्थः । साधनव्यापकत्वमसिद्धिं चोपपादयति ॥ **न हीति** ॥ तदभावं निवर्तकाभावरूपमुपाधिम् । वासना-सन्ताने व्यभिचार उद्भाव्यत इति चेत्तत्राह ॥ **न चेति** ॥ तद्व्यतिरिक्तं वासनारूपसन्तानिव्यतिरिक्तम् ॥ **इदंप्रथमतेति** ॥ अस्मिन्कालविशेषे तेजःसंयोगरूपः पाकः आरब्ध इति पाकस्येदंप्रथमता यदि स्यात् । तदैवैतावत्पर्यन्तं श्यामता न निवृत्तेति श्यामताया अनादित्वं स्यादित्यर्थः ॥

च०— भङ्ग्यन्तरेणानादिप्रतियोगिकनिवृत्तिवैधुर्यमाशङ्कते ॥ **ननु स्वेति** ॥ निवृत्तिलक्षणवाक्ये उपादानत्वांशनिवेशस्यानर्थक्यनियन्त्रितयोरितरभेदानुमाने निग्रहासिद्ध्योः प्रसङ्गेन तां परिजिहीर्षति ॥ **न स्वाश्रयेति** ॥ तथा चात्मनो ब्रह्मस्वरूपाभिव्यक्तिरेवाविद्यानिवृत्तिरिति निवृत्तिलक्षणाक्रान्तता सङ्गच्छत इति भावः । तत्रोपादानत्वांशेऽव्याप्तिमप्यभिधत्ते ॥ **अन्यथेति** ॥ तद्गुणसंविज्ञानः प्रागभावादिघटित-समुदायोऽन्यपदार्थः । कल्पान्तरप्रत्याचिख्यासया शङ्कते ॥ **अभावेति** ॥ घटादावनैकान्त्यापत्त्या अनादित्वांशोऽपि हेतुतावच्छेदकघटकोऽवसेयः । सत्ताजातिवृत्त्यवच्छेदकताकप्रतियोगिताकभेदवस्स्वरूपप्रति-रोधेन प्रतिहन्यत इत्याह ॥ **सदिति** ॥ साधनप्रतिसाधनयोर्बलसाम्यान्न बाध्यबाधकभावो घटत इत्या-शङ्कते ॥ **कस्तर्हीति** ॥ बन्धपक्षकनिवर्त्यत्वसाध्यकतद्वृत्त्यसाधारणधर्मरूपाज्ञानत्वात्मकहेत्वन्तरसाचिव्य-विशेषिततया तत्साचिव्याप्रतिसन्धानदशायां तुल्यकक्ष्यापन्नमपि तत्समवहितिदशायामतादृशं सद्वैलक्षण्यं-निश्चायकं भविष्यतीति भावः ॥ **वैनाशिका इति** ॥ विश्वक्षणिकतामूरीकुर्वाणा इत्यर्थः ॥ **इदंप्रथम-तेति** ॥ कर्मधारयप्रकृतिकः तत्पूर्वपूर्वतराग्निसंयोगसद्भावेनानादित्वायोगादिति भावः ॥

सु०— **यदप्यज्ञानस्यानिर्वचनीयत्वमुक्तम् । तत्रानिर्वचनीयत्वं सदसद्विलक्षणत्वं चेत् किमनेन प्रकृतानुपयुक्तेन । प्रतिपक्षोऽयमिति चेन्न । परस्यासिद्धेरव्याप्तेश्च । भावाभाव-विलक्षणत्वमनिर्वचनीयत्वम् । तेन विशेषणासिद्धिरुच्यत इति चेन्न । स्वोक्तिविरोधात् । स्वयमेव ह्यनादिभावरूपं यद्विज्ञानेन विलीयत इत्यज्ञानलक्षणमभिधाय भावरूपाज्ञानसाधनाय प्रमाणान्युपन्यस्तानि । अभाववैलक्षण्यमात्रं तत्र विवक्षितमिति चेन्न । तस्यैव हेतुविशेषण-त्वोपपत्तेः । नन्वत्रोक्तम् । सद्वैलक्षण्यात्प्रागभाववन्निवृत्तिः किं न स्यादिति । सत्यमुक्तं दुरुक्तं तत् । प्रागभावस्यापि सत्त्वाङ्गीकारात् । अथ सद्विलक्षणत्वं नाम भावविलक्षणत्वं**

विवक्षितम् । तदाऽभाववैलक्षण्याङ्गीकारविरोधेनासिद्धिप्रसङ्गोऽत्यन्ताभावे व्यभिचारश्च । तस्यापि निवृत्तिसाधने तन्निवृत्तावेव व्यभिचारः । किञ्चात्मनि भावत्वं नास्तीति तत्रानैकान्त्यं दुष्परिहरम् । तथाऽप्यारोपितं भावत्वं तत्रास्तीति चेत् । तदविद्यायामपि समानमित्यसिद्धिः । यदपि व्याप्त्योः सामान्यविशेषभावकथनं तस्योपयोगो वक्तव्यः । तेन बलाबलनिश्चय इति चेत् । स किं सामान्यविशेषभावमात्रेणोताव्यभिचारादिसम्पत्तौ सत्याम् । आद्ये धूमवानग्निमानिति सामान्यव्याप्तेः पर्वतो निरग्निक इति विशेषव्याप्तिर्बलवती प्रसज्येत । द्वितीये किं सामान्यविशेषभावेन व्यभिचारादिकमेव व्युत्पाद्यताम् । किं वाऽनेन प्रबलत्वेन दुर्बलत्वेन च । विशेषव्याप्त्या सामान्यव्याप्तिर्बाध्यत इति चेत् । किं सङ्कोचनं बाध्यत्वमुत व्यभिचारप्रदर्शनमथोपाध्युद्भावनम् । नाद्यः । यदनादि तदज्ञानातिरिक्तं न निवर्तेत इति सङ्कोचनीयम् । न पुनर्यदनादित्वरहितं तदेव ज्ञाननिवर्त्यमिति सङ्कोच्यमित्यत्र नियामकाभावात् । सामान्यविशेषभावे तूक्तम् । न द्वितीयः । व्यभिचारस्थलस्यादर्शितत्वात् । व्याप्तिबलेनाज्ञानस्य ज्ञाननिवर्त्यत्वे सिद्धेऽनादित्वस्य तत्रैव व्यभिचार इति चेत् । तर्ह्येतदेवोच्यताम् । किं सामान्यविशेषभावेन । अनादित्वेनाज्ञानस्यानिवर्त्यत्वे सिद्धेऽज्ञानत्वस्य तत्रैव व्यभिचार इति किं न स्यात् ।

वा० — **तत्रेति** ॥ गूढाभिसन्धेरिमौ पक्षपरिग्रहतत्परिहाराविति ज्ञेयम् । सदसद्विलक्षणत्वपरिग्रही स्वाशयमुद्घाटयति ॥ **प्रतिपक्ष इति** ॥ परिहर्ता किमनेनेति स्वोक्तस्याशयमुद्घाटयति ॥ **परस्येति** ॥ अविद्यायाः परेण सत्त्वाभ्युपगमादसिद्धिः । सदसद्विलक्षणत्वस्याप्रसिद्ध्याऽन्वयतो व्यतिरेकतश्च व्याप्तिग्रहानुपपत्त्याऽव्याप्तिश्चेत्यर्थः । यद्वा स्वपक्षबहुप्रसिद्ध्यनुसारेणानिर्वचनीयशब्दार्थतया सदसद्विलक्षणपरिग्रहे प्रागभावे व्यभिचारपरिहाराय भावत्वविशेषणं प्रक्षेप्तुस्तदर्थतया सत्त्वाभिप्रायस्यासम्भावनया कल्पयितुमशक्यत्वेनानिर्वचनीयत्वादज्ञानस्येति सदसद्विलक्षणत्वोक्तावपि विशेषणसिद्ध्यप्राप्त्या तदुक्तेर्वैयर्थ्यमित्याह ॥ **तत्रेति** ॥ माऽस्तु विशेषणासिद्धिस्तथापि दूषणान्तरसूचकत्वसम्भवान्न वैयर्थ्यमित्याशङ्कते ॥ **प्रतिपक्षोऽयमितीति** ॥ अत्र सदसद्वैलक्षण्यस्य सत्ताजात्याश्रयान्यत्वरूपत्वे घटादिवत् अविद्याया अपि द्रव्यत्वेन सत्ताजात्याश्रयत्वादसिद्ध्यापत्तौ सत्तायाः कुत्राप्यभावेनाविद्याया अपि तदाश्रयान्यत्वे च हेतोरप्रसिद्ध्यापातेन स्वरूपसद्विलक्षणत्वादिरूपे सद्वैलक्षण्ये वक्तव्ये प्रागभावे साधनविकलत्वमित्याह ॥ **प्रागभावस्यापीति** ॥ **विरोधेनेति** ॥ अविद्याया अपारमार्थिकत्वान्न तत्रोभयाङ्गीकारेऽपि विरोध इति तु निरसिष्यत इति भावः ॥ **तस्यापीति** ॥ निवृत्तेरपि निवृत्तौ प्रतियोग्युन्मज्जनापत्तिरनवस्थापत्तिश्चेति भावः । यद्वा नन्वत्यन्ताभावस्यापि ब्रह्मातिरिक्तत्वान्निवृत्तिरेवेति न

व्यभिचार इति चेत्तर्हि मुक्तस्यापि संसारित्वापत्त्याऽविद्यानिवृत्तेरनिवृत्तेस्तत्र व्यभिचार इत्याह ॥ **तस्यापीति** ॥ अनादिर्न निवर्तत इत्यादिना परेण व्याप्तिद्वयस्योपन्यासात्तस्य चैकयाऽपरस्याबाधेन वा प्रतिपक्षेण वोपपन्नत्वाद्वक्ष्यमाणरीत्या बाधे निरस्तेऽगत्या तद्वास्तु प्रतिपक्ष एव । तावताऽपि पूर्वपक्ष्यनुमानं दुष्टमेवातः सा बलवतीति मदुक्तिस्तूपलक्षणमित्यपि परेण शङ्कितुं शक्यमित्यभिप्रेत्यातः सैव बलवतीति परेणोक्तेऽपि स्वयमुपयोगमेव पृच्छति ॥ **यदपीति** ॥ सामान्यविशेषभावकथनस्योपयोगो भवन् बलाबलनिश्चयप्रयुक्तबाधे वा प्रतिपक्षे वा बाधेऽपि प्रयोजकीभूतबलाबलनिश्चय एव वा प्रयोज्ये बाधे वा तत्रापि सङ्कोचने वा व्यभिचारप्रदर्शने वेति प्रश्नाभिप्रायः । तत्र पराभिप्रेततया प्रबलत्वादाद्यं शङ्कते ॥ **तेनेति** ॥ कार्ये उपयुक्तस्य केवलस्य ससहायस्य चोपलब्धत्वात्तत्रापि पृच्छति ॥ **स किमिति** ॥ अव्यभिचारादीत्यत्रादिपदेनापरत्र व्यभिचारग्रहणम् ॥ **पर्वतोऽनग्निक इति विशेषव्याप्तिरिति** ॥ न च भावरूपाज्ञानान्यस्य ज्ञानानिवर्त्यत्वात्पराभिमताज्ञानस्य तु प्रतियोगिमात्रविरोधितया ज्ञानत्वपुरस्कारेण तदनिवर्त्यतया 'न जानामि, ज्ञानादज्ञानं निवृत्तम्' इति ज्ञाननिवर्त्याज्ञानानुभवस्य तद्विषयकत्वायोगेन भावरूपाज्ञानविषयकत्वे वक्तव्ये तद्बलेनाज्ञानं ज्ञानेन निवर्तत इति व्याप्तेः सिद्धत्वात्पर्वतोऽनग्निक इति व्याप्तेश्चाप्रामाणिकत्वेन न साम्यमिति वाच्यम् । सत्यस्यापि पापादेर्ज्ञाननिवर्त्यतायाः प्रतिपादयिष्यमाणत्वात्पूर्वज्ञानादेः विशेषणज्ञानत्वादिनैव कारणत्वाभावेऽपि पूर्वज्ञानादुत्तरज्ञानमुत्पन्नमुत्तरज्ञानात्पूर्वज्ञानं नष्टमित्यनुभववज्ज्ञानत्वस्य निवर्तकतानवच्छेदकत्वेऽपि ज्ञानादज्ञानं निवृत्तमित्यनुभवोपपत्त्या तस्य ज्ञानाभावविषयकत्वेनाप्युपपत्तेर्नास्या अपि प्रामाणिकत्वम् । किञ्च विशेषविषयकत्वमात्रेण सामान्यव्याप्त्यपेक्षया प्राबल्यपक्षेऽतिप्रसङ्गोक्तौ प्रामाणिकत्वादिना वैषम्यकथनं नोपयुज्यते । तथा सति प्रामाणिकत्वादिनैव बाधाद्युपपत्तौ सामान्यविशेषभावकथनानुपयोगादिति भावः । सामान्यविशेषभावमात्रस्यातिप्रसञ्जकत्वादव्यभिचारमात्रस्यातथात्वात्तस्यैव बलाबलनिश्चये प्रयोजकत्वेन तदेव बलाबलनिश्चयमाशासानेन वक्तव्यं न त्वप्रयोजकः सामान्यविशेषभाव इत्याशयेनाह ॥ **द्वितीयेऽपीति** ॥ अस्तु वा सामान्यविशेषभावस्य प्राबल्यदौर्बल्यनिश्चायकत्वं तथाऽपि तन्मात्रासादितप्राबल्यदौर्बल्यनिश्चयस्य व्यसनितः । अनङ्गीकारात्कार्यार्थत्वे वक्तव्ये बाधरूपकार्ये प्राप्तानुपपत्तेरतिप्रसञ्जकत्वेनानेन समाधातुमशक्यत्वात् प्रतिपक्षे चापेक्षाया एवाभावान्नैतदुक्तिः प्रकृतोपयोगिनीत्याशयेनाह ॥ **किञ्चानेनेति** ॥ अभिप्रायमजानानः शङ्कते ॥ **विशेषेति** ॥ पक्षे साध्याभावरूपस्य तत्प्रमारूपस्य वा प्रसिद्धबाधस्य व्याप्तिविचारे अनुपपत्त्या तत्र सम्भावितं बाधं विकल्प्य पृच्छति ॥ **किं सङ्कोचनमिति** ॥ आद्येऽपि सामान्ये सङ्कोचसम्भवेऽपि विशेषे विशेषत्वादेव सङ्कोचनमशक्यमित्यभिप्राय उत विशेषे सङ्कोचनसम्भवेऽपि विशेषानुसारेण सामान्य एव सङ्कोचः कर्तव्यो न तु विपरीतमिति । पक्षद्वयमपि निराकरोति ॥ **नाद्य**

**इति** ॥ अत्र सङ्कोचप्रकारप्रदर्शनेनाशक्यत्वाभिप्रायस्यान्येन द्वितीयाभिप्रायस्य च परिहारो द्रष्टव्यः । ननु सामान्यविशेषभावस्यैव नियामकत्वान्न तदभाव इत्यतस्तर्हि पर्वतो निरग्निक इति विशेषस्य धूमरहितः पर्वत एव निरग्निक इति सङ्कोचसम्भवेऽपि तस्य विशेषत्वात्तदनुसारेण पर्वतातिरिक्तो धूमवानग्निमानिति सामान्यव्याप्तेरेव सङ्कोचः प्रसज्येतेत्याशयेनाह ॥ **सामान्येति** ॥ **व्यमिचारेति** ॥ स्थलान्तरस्याप्रदर्शनादज्ञानस्य च पक्षतया व्यभिचारस्थलत्वासम्भवादिति भावः । ननु विशेषव्याप्तिः साक्षाद्व्यभिचारस्थलाप्रदर्शकत्वेऽपि स्वसाध्यसिद्धिद्वाराऽज्ञानरूपपक्षस्यैव विपक्षत्वसम्पादनेन व्यभिचारस्थलप्रदर्शकत्वं सम्भवत्येवेत्याशङ्कते ॥ **व्याप्तीति** ॥ तर्हि स्वसाध्यसिद्धौ सामान्यविशेषभावानुपयोगेनैतद्व्याप्तिसिद्धानुमानबाधकमुखेन पूर्वानुमाने व्यभिचार एव वक्तव्यो न तु सामान्यविशेषभाव इत्याशयेनाह ॥ **तर्हीति** ॥ अशक्या चैतद्व्याप्तिबलेन स्वसाध्यसिद्धिः । विपरीतस्यापि सम्भवादित्याशयेनाह ॥ **अनादित्वेनेति** ॥ नन्वेतदर्थमेव सामान्यविशेषभावप्रयुक्तं बलाबलमाश्रित्य विशेषव्याप्त्या स्वसाध्यविद्धिः न तु सामान्यव्याप्त्येत्युच्यत इति कथं सामान्यविशेषभावानुपयोग इति चेत् । तर्हि सामान्यविशेषभावमात्रप्रयुक्तबलाबलसाम्यात्पर्वतो निरग्निक इति विशेषव्याप्तिबलेन पर्वतस्य निरग्निकत्वसिद्धौ धूमवत्त्वस्य तत्रैव व्यभिचार इत्यपि स्यादित्याशयात् । अस्याशयस्य पूर्वन्यायेनैव ज्ञातुं शक्यतया तथा पूर्ववदेतच्छेषत्वेन सामान्यविशेषभावे तूक्तमित्यनुक्तिरिति द्रष्टव्यम् ।

स०— नन्वनादेर्भावस्य निवृत्त्यभावेऽप्यज्ञानस्य भावत्वाभावान्निवृत्तिर्भविष्यतीत्युक्तमनुवदति ॥ **यदपीति** ॥ किमिदमनिर्वचनीयत्वं सदसद्वैलक्षण्यं वा भावाभाववैलक्षण्यं वा । आद्यं प्रत्याह ॥ **तत्रेति** ॥ अनादेर्भावस्यानिवर्त्यत्वेऽभिहिते सद्वैलक्षण्योक्तिर्व्यर्था । न ह्येवं विशेषणासिद्धिः । न च सद्वैलक्षण्यं भाववैलक्षण्यम् । सद्वैलक्षण्यभाववैलक्षण्ययोर्भेदात् । भावविलक्षणेऽप्यभावे सद्वैलक्षण्याभावादित्यर्थः । विमतं ज्ञाननिवर्त्यं सदसद्विलक्षणत्वादिति प्रयोगमाशङ्क्यान्यतरासिद्धो हेतुरित्याह ॥ **प्रतिपक्ष इति** ॥ **अव्याप्तेश्चेति** ॥ किमियमन्वयव्याप्तिराहोस्विद्व्यतिरेकव्याप्तिः । नाद्यः शुक्तिरजतादेरसत्त्वेन सदसद्वैलक्षण्याभावात् । न द्वितीयः । प्रतियोगिप्रतीत्यर्थमन्वयावश्यम्भावात् । शुक्तिरजतादेरपि ज्ञाननिवर्त्यत्वाभ्युपगमेनासाधारण्यापत्तेश्चेति भावः । द्वितीये स्ववचनव्याघात इत्याह ॥ **भावेति** ॥ **उपन्यस्तानिति** ॥ न किञ्चनावेदिषमिति परामर्शसिद्धसौषुप्तिकानुभवस्य प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त,स्वविषयावरण, स्वनिवर्त्य, स्वदेशगत, वस्त्वन्तरपूर्वकं अप्रकाशितार्थप्रकाशकत्वादित्यनुमानस्य 'तम आसीदि'त्याद्यागमस्य चोपन्यस्तत्वादिति भावः । भावाभावविलक्षणाज्ञानस्याभाववैलक्षण्येन भावत्वोपचारो न वास्तवं भावत्वमिति शङ्कते ॥ **अभावेति** ॥ तर्ह्यभाववैलक्षण्ये सत्यनादित्वादेवात्मवदनिवृत्तिः स्यादित्याह ॥ **नेति** ॥ **अथेति** ॥ ततश्च न साधनविकलो दृष्टान्त इत्यर्थः । अनिर्वचनीयत्वस्य

निराकरिष्यमाणत्वादिति भावः । सर्वाद्वैतमतेऽत्यन्ताभावस्यापि सपक्षत्वमित्यत आह ॥ **तस्यापीति** ॥ निवृत्तेरपि निवृत्तौ प्रध्वंसताव्याघात इत्यर्थः । ननु निवृत्तौ भावविलक्षणत्वसत्वेऽप्यनादित्वरूप-विशेषणाभावेन हेत्वभावान्न व्यभिचार इति चेन्न । भावविलक्षणत्वमात्रहेतुत्वविवक्षायां तदुपपत्तेः विशिष्टस्य हेतुत्वेऽप्रयोजकत्वम् । नन्वत्राप्रयोजकत्वे अभावविलक्षणत्वे सत्यनादित्वेनानिवृत्तिसाधनेऽपि अप्रयोजकत्वसाम्यात् । न च भावविलक्षणस्याप्यज्ञानस्यानिवृत्तौ प्रागभावस्यापि तदापत्त्या प्रयोजकत्व-सम्भवादिति चेन्न । अनादित्वे सत्यभावविलक्षणस्य निवृत्तेरदृष्टत्वेन तस्यानिवर्त्यत्वप्रयोजकत्वसम्भवेऽपि सादिभूतस्यापि पटादेर्निवृत्तिदर्शनेनानादित्वे सति भावविलक्षणत्वस्य प्रयोजकत्वासम्भवादिति भावः । यथोक्तम् 'तस्मिन् सत्यभवतस्त्वेन विनापि भवतस्तदप्रयोजकत्वमेवे'ति ॥ **किं चेति** ॥ न च निर्धर्मक-त्वादेव भावविलक्षणत्वस्यापि तत्राभावेन न व्यभिचार इति वाच्यम् । भावरूपधर्माणां ब्रह्मण्यभावे-ऽप्यभावरूपधर्माणां तत्र सत्वात् । अन्यथा ब्रह्मभावविलक्षणं न निर्धर्मकत्वादित्यनुमाने भावविलक्षण-त्वाभावरूपसाध्यस्य निर्धर्मकत्वरूपहेतोश्च ब्रह्मणि सदसद्भावयोर्निधर्मकत्वव्याघातात् । यद्वा भावत्वा-नधिकरणे भाववैलक्षण्यस्य दृष्टत्वेन ब्रह्मणि भावत्वाभावाद्भाववैलक्षण्यमावश्यकम् । अन्यथा लोकदर्शन-विरोधात् । तथाच तत्र व्यभिचारः सुस्थ इति भावः । आरोपितहेत्वभावेन व्यभिचारपरिहारेऽतिप्रसङ्ग इति दोषे सत्येव तुष्यतु दुर्जन इति न्यायेन दोषान्तरमाह ॥ **तदविघ्नायमिति** ॥ **तस्योपयोगो वक्तव्य इति** ॥ अतः सैव बलवतीत्युक्तत्वेऽपि तत्पक्षे दोषाभिधानार्थं पुनः प्रश्न इति बोध्यम् । ननु अनाद्यज्ञानातिरिक्तं न निवर्तते न साद्येव निवर्त्यमित्यत्र सामान्यविशेषभावो नियामक इत्याशङ्क्य तस्यैवानुपयुक्तत्वाच्चेत्याह ॥ **सामान्यविशेषभाव इति** ॥ किं सामान्यविशेषभावमात्रं प्रयोजकमित्या-दिनेति शेषः ।

प० — नन्वनादिभावत्वहेतोरप्यनिर्वचनीयत्वादित्यनेन दोष उक्त इत्यतस्तद्विविच्य निराह ॥ **यदप्यज्ञानस्येति** ॥ **प्रतिपक्षोयमिति** ॥ बन्धो निवर्तते सदसद्विलक्षणत्वरूपानिर्वचनीयत्वाच्छुक्ति-रजतवदिति वा सद्विलक्षणत्वाच्छुक्तिरजतवदिति वेति भावः ॥ **परस्येति** ॥ प्रतिवादिनो नैयायिकादे-रनिर्वचनीयत्वस्य सद्विलक्षणत्वस्य वाऽसम्प्रतिपत्त्याऽसिद्धेः । शुक्तिरजतादावनिर्वचनीयत्वादेर्हेतोर्निवृत्ति-शब्दितध्वंसप्रतियोगित्वस्य चासम्प्रतिपत्त्या व्याप्त्यभावाच्चेत्यर्थः ॥ **विशेषणेति** ॥ भावत्वे सत्यनादि-त्वादिति हेतोरित्यर्थः ॥ **प्रमाणानीति** ॥ तानि चाग्रे ग्रन्थकार एव दूषयितुं स्पष्टयिष्यति ॥ **तत्रेति** ॥ लक्षणादौ ॥ **तस्यैवेति** ॥ अभावविलक्षणत्वे सत्यनादित्वाद्बन्धो न निवर्तत इति प्रयोगोपपत्तेरित्यर्थः । सदिति सत्पदेन किं सत्त्वमेव विवक्षितं भावत्वं वा । आद्य आह ॥ **प्रागभावस्यापीति** ॥ द्वितीय-मनूद्य निराह ॥ **अथेति** ॥ **अभाववैलक्षण्याङ्गीकारविरोधेनेति** ॥ अभाववैलक्षण्यमङ्गीकुर्वता त्वया

तद्विरोधेन तद्धान्यापातेनेति यावत् । भावत्वस्यैवाभ्युपगम्यत्वेन भाववैलक्षण्यस्यासिद्धेरित्यर्थः । भावविलक्षणत्वे सत्यनादित्वहेतोः पररीत्याऽऽत्मनि व्यभिचारमाह ॥ **किं चात्मनीति** ॥ अव्यभिचारादिसम्पत्ताविति ॥ विशेषत्वेनाभिमतस्येति योज्यम् ॥ उपलक्षणं चेदम् । सामान्यत्वेनाभिमतस्य व्यभिचारादौ सतीत्यपि ज्ञेयम् । अङ्गीकृत्यापि बलाबलत्वं तेनाप्युपयोगो नेत्याह ॥ **किं वानेनेति** ॥ सामान्यविशेषभावेन प्राप्तप्राबल्यदौर्बल्याभ्यां किं प्रयोजनमित्यर्थः ॥ **सङ्कोचनमिति** ॥ यदनादि तन्न निवर्तत इति सामान्यव्याप्तेरज्ञानभिन्नं यदनादिरूपमिति सङ्कोचनमित्यर्थः ॥ **व्यभिचारेति** ॥ अज्ञाने अनादिभावरूपत्वमस्ति न निवर्तत इति नास्तीत्यज्ञान एव व्यभिचारप्रदर्शनमित्यर्थः ॥ **उपाधीति** ॥ अज्ञानान्यत्वरूपोपाध्युद्भावनमित्यर्थः ॥ **यदनादित्वरहितमिति** ॥ यदनादि तन्न निवर्तते यदज्ञानं तत्तु ज्ञाननिवर्त्यमित्यनयोर्व्याप्त्योरविरोधाय क्वचित्सङ्कोचः कार्यः । यदज्ञानभिन्नमनादीति सङ्कोचेऽप्यविरोधः । यदनादित्वरहितमज्ञानं तद्ज्ञाननिवर्त्यमिति सङ्कोचेऽप्यविरोधः सिध्यत्येव । तथाच त्वदुक्तदिशैव सङ्कोचो नान्यथेत्यत्र न किमपि नियामकमित्यर्थः । सामान्यविशेषभाव एव नियामक इत्यत आह ॥ **सामान्येति** ॥ स किं सामान्येत्यादिना दूषणमुक्तमित्यर्थः । पराभिप्रायव्यक्तीकरणाय सामान्येन दोषमाह ॥ **व्यभिचारस्थलस्येति** ॥ **एतदेवेति** ॥ अज्ञानेऽनादित्वहेतोर्व्यभिचार इत्येतदेवेत्यर्थः । किञ्च यदनादि तन्न निवर्तत इति व्याप्तौ प्रतिपक्षतया जाग्रत्यां यदज्ञानं तद्ज्ञाननिवर्त्यमिति व्याप्त्या कथमज्ञानस्य निवर्त्यत्वनिश्चयः । येन तत्र व्यभिचारोऽवधार्येतेति भावेनाह ॥ **अनादित्वेनेति** ॥ यदनादि तन्न निवर्तत इति व्याप्तिबलेनेत्यपि योज्यम् । सामान्यविशेषभावमात्रस्य यो धूमवानित्यादावकिञ्चित्करत्वस्य दर्शितत्वादिति भावः । व्यभिचारानिश्चयेऽपि द्वयोर्व्याप्त्योः परस्परप्रतिबध्यप्रतिबन्धकभावोऽस्तु । तावताऽप्यनादित्वहेतोः सन्दिग्धव्यभिचारादिना दुष्टता स्यादिति भावेन शङ्कते ।

या० — **प्रकृतानुपयुक्तेनेति** ॥ अनादिभावस्यानिवृत्तिरित्यत्र दूषणालाभादित्यर्थः । न च भावशब्देन सत्त्वविवक्षायां विशेषणासिद्धिरनेनोक्तेति वाच्यम् । प्रागभावादेरपि सत्त्वेन भावशब्दस्य सत्त्वावाचकत्वादित्याशयात् ॥ **अव्याप्तेश्चेति** ॥ अज्ञानं निवर्तते सदसद्विलक्षणत्वादित्यत्रान्वयव्याप्तिः शुक्त्यज्ञाने ग्राह्या । व्यतिरेकव्याप्तिश्च ब्रह्मणि । नोभयमपि युक्तम् । शुक्तिरजतादेरसत्त्वेन सदसद्वैलक्षण्याभावादन्वयव्याप्त्यनुपपत्तेः । असद्विलक्षणस्य ब्रह्मणः सदन्तरविलक्षणत्वेन व्यभिचाराद्व्यतिरेकव्याप्तेरप्यनुपपत्तेः । सत्त्वानधिकरणत्वविवक्षायामपि तथा । ब्रह्मणो निर्धर्मकत्वादिति भावः । अप्रयोजकत्वात् व्याप्तेरित्युक्तम् ॥ **अनादीति** ॥ उत्तरज्ञाननिवर्त्यपूर्वज्ञाने प्रागभावे ब्रह्मणि चातिव्याप्तिवारणायानादीत्यादिविशेषणानीति द्रष्टव्यम् ॥ **व्यभिचारादिकमेवेति** ॥ आदिपदेनाव्यभिचारः ॥ तथा च दौर्बल्यहेतुर्व्यभिचारः प्राबल्यहेतुरव्यभिचार इति तद्व्युत्पादनमेव कार्यमिति भावः ॥

**व्यभिचारप्रदर्शनमिति** ॥ अज्ञान एवेति भावः ॥ **अथोपाध्युद्भावनमिति** ॥ अज्ञानेतरत्वरूपोपाध्युद्भावनमित्यर्थः ॥ **सामान्यविशेषभावेति** ॥ धूमवानग्निमानिति सामान्यव्याप्तेः पर्वतोऽनग्निक इति विशेषव्याप्तिर्बलवती प्रसज्येतेत्युक्तमित्यर्थः । सामान्यविशेषभावेन बलाबलनिश्चये निरस्ते समबलत्वेन प्रतिरोधमप्यपाकर्तुमाह ॥

श्री० — **प्रकृतानुपयुक्तेति** ॥ अज्ञानं न निवर्तते । भावत्वे सत्यनादित्वादित्यनुमाने दूषणालाभादित्याशयः । उक्तानुमानस्य अज्ञानं निवर्तते सदसद्विलक्षणत्वादिति सत्प्रतिपक्षानुमानस्याभिप्रेतत्वान्न प्रकृतानुपयोग इति शङ्कते ॥ **प्रतिपक्षोऽयमिति** ॥ **परस्येति** ॥ नन्वनादेः कथं निवृत्तिरिति त्वां प्रति पूर्वपक्षकर्ता यदा तत्त्ववादी अहमेव जातोऽस्मि तदा परेण पूर्वपक्षिणा मया अज्ञानस्य सदसद्विलक्षण्यानङ्गीकारादसिद्धिरित्यर्थः । स्वोक्तविरोधो नास्तीत्याशङ्कते ॥ **अभावेति** ॥ तत्र लक्षणे ॥ **तस्यैवेति** ॥ अज्ञानं न निवर्तते भावत्वे सत्यनादित्वादित्यनुमानेऽभावविलक्षणत्वरूपमेव भावत्वं हेतुविशेषणं विवक्षितमिति न विशेषणासिद्धिरित्यर्थः ॥ **सत्त्वाङ्गीकारादिति** ॥ तथाच साधनवैकल्यमिति भावः ॥ **अथेति** ॥ तथाच न प्रागभावे साधनवैकल्यमिति भावः ॥ **असिद्धिप्रसङ्ग इति** ॥ अज्ञानं निवर्तते सद्विलक्षणादित्यत्र सद्विलक्षणत्वं नाम यदि भावविलक्षणत्वं तदाऽज्ञानस्याभावविलक्षणत्वाङ्गीकारेण भावत्वस्यैव प्राप्त्या तद्विलक्षणत्वहेतोरसिद्धिरित्यर्थः ॥ **अत्यन्ताभाव इति** ॥ भावविलक्षणत्वे सत्यपि निवृत्तेरभावादित्यर्थः । प्रतियोग्युन्मज्जनप्रसङ्ग इति दूषणे सत्येव दूषणान्तरमाह ॥ **तन्निवृत्तावेवेति** ॥ भावविलक्षणत्वे सत्यपि ध्वंसस्य नित्यत्वेन निवृत्त्यभावादित्यर्थः ॥ **पर्वत इति** ॥ पर्वतस्यापि धूमवद्विशेषत्वादित्यर्थः ॥ **किमनेनेति** ॥ विशेषव्याप्तित्वेन प्राबल्यं सामान्यव्याप्तित्वेन दौर्बल्यमिति व्युत्पादितेनानेन प्राबल्यादिमात्रेण प्रकृते किं कृतं स्यादित्यर्थः । एवमुक्ते उत्तरमाशङ्कते ॥ **विशेषव्याप्त्येति** ॥ **सङ्कोचनमिति** ॥ अग्नीषोमीयपशोर्हिंस्यत्वे विशेषवाक्येन सिद्धे सति न हिंस्यादिति वाक्यस्य तदितरभूतहिंसानिषेधकत्वेन सङ्कोचनमिवाज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्त्या बलवत्या अज्ञानस्य निवर्त्यत्वे सिद्धे अनादि न निवर्तत इति सामान्यव्याप्तेरज्ञानेतरदनादि न निवर्तत इति सङ्कोचनमित्यर्थः ॥ **व्यभिचारेति** ॥ न हिंस्यादिति सामान्यवाक्येन भूतत्वस्याहिंस्यत्वव्याप्यत्वं बोधितमग्नीषोमीयवाक्यबलेन भूतत्वस्याग्नीषोमीयपशौ व्यभिचारप्रदर्शनवद्विशेषव्याप्तिबलेन सामान्यव्याप्तेरज्ञाने व्यभिचारः प्रदर्श्यत इति भावः ॥ **अथोपाध्युद्भावनमिति** ॥ अज्ञानं न निवर्ततेऽनादित्वादित्यत्र यदज्ञानं तदज्ञाननिवर्त्यमिति विशेषव्याप्त्या पूर्वानुमानेऽज्ञानेतरत्वरूपोपाध्युद्भावनरूपं बाध्यत्वमुच्यत इत्यर्थः ॥ **यदनादीत्यादि** ॥ अयमर्थः । अज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्तिबलेनाज्ञानातिरिक्तं यदनादि तन्न निवर्तते । अज्ञानं त्वनाद्यपि

निवर्तेत इति यथा सङ्कोचः क्रियते । एवमज्ञानं ज्ञाननिवर्त्यमित्यत्र यदनादित्वरहितमज्ञानं साद्यज्ञानमिति यावत् । तदेव ज्ञाननिवर्त्यं न त्वनाद्यज्ञानम् । पक्षीभूतं चाज्ञानमनादीत्यनिवर्त्यमेव किं न स्यादित्येवं त्वदीयविशेषव्याप्तावपि सङ्कोचः किं न स्यान्नियामकाभावात् । तथा च विशेषव्याप्त्या सामान्यव्याप्तिर्बाध्यत इति वक्तुस्तव स्वन्यायविरोध इति । ननु बलाबलहेतुसामान्यविशेषभाव एव नियामक इति चेत्तत्राह ॥ **सामान्येति** ॥ **उक्तमिति** ॥ धूमवानग्निमानिति सामान्यव्याप्तिरित्यादिनोक्तमित्यर्थः ॥ तत्रैव अज्ञान एव । एतदेव व्यभिचारस्थलमेव । एवं व्यभिचारप्रदर्शनरूपं बाध्यत्वं त्वदीयविशेषव्याप्तावपि समानमित्याह ॥ **अनादित्वेनेति** ॥ अयमर्थः । अज्ञानं ज्ञाननिवर्त्यमिति व्याप्तिबलेनाज्ञानस्य ज्ञाननिवर्त्यत्वे सिद्धे यदनादि तन्न निवर्तेत इति व्याप्तिबलेनाज्ञानस्यानिवर्त्यत्वे सिद्धे यदज्ञानं तज्ज्ञाननिवर्त्यमित्यस्या व्याप्तेरज्ञान एव व्यभिचार इत्यपि किं न स्यादिति पूर्वपक्ष्यपि वदिष्यतीति ।

च०— **प्रकृतानुपयुक्तेनेति** ॥ अनादिभावरूपस्य न निवृत्तिरिति कल्पादूषकत्वादित्यर्थः । हेतुशरीरघटकं भावत्वं सद्रूपत्वरूपमेवाभिप्रेयत इति विशेष्याभावनिबन्धनासिद्धिरनेन ग्रन्थेनोच्यत इति शङ्का तु प्रागभावादेरपि तादृशहेतुविशेषिततयाऽनैकान्त्यापत्त्या निर्दलैवेत्याशयः ॥ **परस्येति** ॥ सदसद्वैलक्षण्येन हेतुना बन्धे निवर्त्यतां यं प्रत्यनुमिमीते तत्र सद्रूपतामुपगच्छतस्तस्य दिशाऽसिद्ध्याऽन्यतरासिद्धो हेतुरित्यर्थः ॥ **अव्याप्तेरिति** ॥ अलीकख्यातिवादिनये शुक्तिरजतादेरसत्वोपगत्या 'न हि नाशोऽसतो भवेदित्युक्त्या तत्र हेतुसाध्ययोरसम्प्रतिपत्त्याऽन्वयव्याप्तेस्तथा सद्रूपव्यक्त्यन्तरप्रतियोगिकवैलक्षण्यासद्वैलक्षण्ययुते ब्रह्मणि दर्शितसाध्याभावेनानैकान्त्यात् व्यतिरेकव्याप्तेश्चाभाव इत्यर्थः । सत्वानधिकरणत्वं सद्विलक्षणत्वमिति विवक्षा तु निर्धर्मकात्मनोऽपि संग्राहिवेत्यनैकान्त्यप्रसक्तिवेति भावः । व्याप्तिविचारे सम्भावितबाध्यत्वगोचरकल्पत्रयमभिप्रेत्य पृच्छति ॥ **किं सङ्कोचनमिति** ॥ अनादित्वव्याप्त्याऽज्ञानातिरिक्तानादित्वस्यैवानिवर्त्यत्वव्याप्यतोपगतिरित्यर्थः ॥ **व्यभिचारप्रदर्शनमिति** ॥ अज्ञानमेव व्यभिचारनिरूपकाधिकरणमिति भावः ॥ **उपाध्युद्भावनमिति** ॥ अज्ञानेतरत्वरूपोपाध्युद्भावनमित्यर्थः ॥ **उक्तमिति** ॥ धूमवानग्निमानित्यादिनोक्तमित्यर्थः ।

**सु०— अस्तु तर्हि प्रतिपक्ष एवेति चेत् । किं व्याप्तिमात्रेणोत पक्षधर्मतोपेतया व्याप्त्या । न प्रथमः । व्याप्तिमात्रस्याप्रतिपादकत्वात् । अन्यथा पक्षधर्मतावैयर्थ्यात् । द्वितीये संसारकारणमज्ञानं ज्ञाननिवर्त्यं भवितुमर्हति । अज्ञानत्वात् । शुक्तिकाऽज्ञानवदित्युक्तं स्यात् । अत्रापि किं सामान्यविशेषभावेन । किंच तु शुक्तिकाऽज्ञानं नाम किं ज्ञानाभावोऽथ भावरूपमज्ञानम् । आद्ये दृष्टान्तस्य साधनवैकल्यम् । न हि शब्दसाम्यमात्रेण दृष्टान्तदार्ष्टान्तिकभावोऽस्ति । तथात्वे गोत्वेन वागादीनामपि शृङ्गित्वसाधनप्रसङ्गात् । द्वितीये किं**

**तत्साम्युतानादि । आद्ये कथमयं विशेषः स्यात् । द्वितीये तदपि पक्षतुल्यम् । न तृतीयः । अज्ञानेतरत्वस्य समव्याप्त्यभावात्पक्षेतरत्वाच्च ।**

वा० — नन्वेवं यदि तव व्याप्तिद्वये साम्यसम्मतिस्तर्हि मास्तु सामान्यविशेषव्याप्तिद्वयोक्तिर्बलाबलनिश्चयेन बाधाय, प्रतिपक्षाय तु स्यात् । तावताऽपि पूर्वानुमानस्य दुष्टत्वसम्भवादित्याशयेन शङ्कते ॥ **अस्त्विति** ॥ व्याप्तिमात्रस्य सङ्कोचनव्यभिचारोपाधिसूचकत्वसम्भवेऽप्यप्रतिपादकत्वान्न प्रतिपक्षत्वसम्भव इत्यभिप्रेत्य बाधकल्पे अविकल्प्य पराभिप्रायं ज्ञातुमत्रैव विकल्पयति ॥ **किं व्याप्तीति** ॥ अत्र यद्यपि प्राबल्यप्रयुक्तबाधपक्षविकल्पत्रयदूषणानन्तरं समबलत्वप्रयुक्तसत्प्रतिपक्षदूषणमुचितं न तु मध्ये तथाऽप्युपाध्युद्भावनपक्षे व्याप्त्योः साम्यस्यानुपपादनाद्दूषणान्तरस्यैव वक्तव्यत्वात्सङ्कोचनादिपक्षद्वये च साम्योपपादनात्तदुत्तरमेव च यदि साम्यं तवापि सम्मतं तर्ह्यस्तु प्रतिपक्ष इति शङ्कोदयेन सङ्गतिलोभान्मध्ये प्रतिपक्षमाशङ्क्य दूषणमुक्तमिति ध्येयम् ॥ **संसारकारणमिति** शुक्तिकाज्ञानमादाय सिद्धसाधनवारणाय । यद्यप्यत्र प्रतिपक्षे व्याप्त्योः साम्यस्यैवापेक्षितत्वेन सामान्यविशेषभावोक्तिः प्रतिकूलेत्येव वक्तव्यं तथाऽप्यत्रापीति मृदूक्तिरुपक्रमे तस्योपयोगो वक्तव्य इत्युक्तानुपयोगोपपादनायेति द्रष्टव्यम् । अनुपपन्नश्चायं सामान्यविशेषभाव इति वक्तुं विकल्पयति ॥ **किञ्चेति** ॥ **आद्य इति** ॥ साद्यनाद्यज्ञानविषयकस्याज्ञानं ज्ञानेन निवर्तत इत्यस्यानादिर्न निवर्तत इत्यतो न विशेषत्वं युक्तमित्यर्थः ॥ **द्वितीय इति** ॥ तथा च दृष्टान्ततया न तदुपादानं युक्तमित्यर्थः । न च ब्रह्मैव व्यतिरेकदृष्टान्त इति वाच्यम् । अनादेरप्यज्ञानस्य निवृत्तौ ब्रह्मणोऽपि निवृत्त्यापत्तेः । न च निवर्तकभावाभावाभ्यां विशेषः । अनादेरज्ञानस्य निवृत्तिं वदता तन्निवर्तकाभावस्यैवाभ्युपगमादित्युक्तत्वादित्याशयात् । यद्यप्यत्र विशेषानुमानेऽपि सादित्वस्य वाऽनादीतरत्वस्य वोपाधित्वसम्भवात्साम्यकथनप्रस्तावे तदनुक्त्वा दूषणान्तरोक्तिः न युक्ता तथाऽपि तयोः पूर्वसाधनव्यतिरेकरूपत्वात्तेन रूपेण साम्याभावाद्व्यभिचारप्रतिपक्षोन्नायकत्वेनोपाधेर्दोषत्वात्सामान्यव्याप्तिस्थले व्यभिचाराद्युन्नयने विशेषेऽप्युपाधिसम्भवेन तदुन्नयनं स्यादिति प्रतिपादनफलस्य व्यभिचारादिसाम्यस्योरीकृत्या सिद्धत्वादुपाधिप्रयुक्तस्य च तस्य विशेषप्रयोजनाभावेनावक्तव्यत्वाल्लक्षणाभावेनोपाध्याभासादिनोपाधित्वस्यैवानुपपत्तौ तदभ्युपगमेन साम्यप्रतिपादनस्यास्वरसत्वाच्चेत्याशयेनोपाधिना साम्यमनुक्त्वोपाधित्वमेव खण्डयति ॥ **अज्ञानेतरत्वस्येति** ॥ ज्ञानानिवर्त्ये ब्रह्मण्यज्ञानेतरत्वसद्भावेन साध्यव्यापकतासद्भावेऽप्यज्ञानेतरस्मिन्प्रागभावादौ ज्ञाननिवर्त्यत्वस्यैव सद्भावेन समव्याप्त्यभावादिति भावः । ननु माऽस्तु समव्याप्तिर्विषमव्याप्तोऽपि दूषकताबीजसद्भावादुपाधिरेवेत्यत आह ॥ **पक्षेतरत्वाच्चेति** ॥ न चाज्ञानतत्कार्यान्यतरेतरत्वमुपाधिः । तथा च ब्रह्मातिरिक्तस्य सर्वस्याप्यज्ञान-

तत्कार्यान्यतरत्वेन न प्रागभावादिकमादाय समव्याप्तिभङ्गः । नापि पक्षेतरत्वम् । पक्षमात्रव्यावर्तकविशेषणशून्यत्वादिति वाच्यम् । ब्रह्मातिरिक्तस्य सर्वस्याज्ञानतत्कार्यान्यतरत्वस्यासिद्धेः । मां प्रति समव्याप्त्यभावाच्च । एतादृशोपाधेः प्रकृतव्याप्तिमात्रेणासूचनात्तत्सूचिताज्ञानेतरत्वमात्रस्य पक्षेतरत्वाविघाताच्च । ननु बाधोन्नीतपक्षेतरस्योपाधित्वं सर्वसम्मतम् । न चात्र न बाध इति वाच्यम् । विशेषव्याप्तिबलसिद्धतया प्रबलेन विमतमज्ञानं ज्ञाननिवर्त्यमज्ञानत्वाच्छुक्तिकाज्ञानवदित्यनुमानेनैव बाधात् । अत एव सामान्यविशेषभावकथनमप्युपयुक्तमेवेति चेन्न । पर्वतोऽनग्निक इति विशेषव्याप्तिबलसिद्धतया प्रबलेन पर्वतोऽनग्निकः पर्वतत्वादित्यनुमानेन बाधात् पर्वतो वह्निमान् धूमादित्यत्रापि पर्वतेतरत्वमुपाधिः स्यात् । न चासाधारण्यान्न तदनुमानसम्भवः । ज्ञानप्रागभावादौ सत्यपि सपक्षे तत्राप्यप्रवेशेन अज्ञानत्वहेतावप्यसाधारण्यात् । न च शुक्तिकाऽज्ञानस्यैव दृष्टान्ततया नासाधारण्यमिति वाच्यम् । पूर्वोक्तरीत्या निरस्तत्वादित्याशयात् । एतेन सामान्यविशेषव्याप्तिकथनपरविवरणग्रन्थस्य तत्सिद्धानुमानबाधपरत्ववर्णनं कस्यचिदपास्तमिति ध्येयम् ।

स०— सामान्यविशेषभावेन बलाबलनिश्चये निरस्ते समबलत्वेन प्रतिरोधमप्यपाकर्तुमाह ॥ **अस्त्विति** परमतानुसारेण ॥ **व्याप्तिमात्रस्येति** ॥ अन्यथा व्याप्तिरेवेह प्रयोजिकेत्यादिविरोधप्रसङ्गात् पक्षधर्मत्वस्यानावश्यकत्वेऽपि समुचितदेशसिद्धेरङ्गीकारात्तद्रहितव्याप्तेरसाधकत्वादित्यर्थ इत्यप्याहुः । पक्षधर्मतोपेताया एव व्याप्तेः प्रतिपादकत्वेऽपि तादृशं प्रतिपक्षानुमानमेव प्रयोक्तव्यं न सामान्यविशेषभावस्योपयोग इत्याह ॥ **द्वितीय इति** ॥ इदानीं प्रतिपक्षानुमानमप्यसदित्याह ॥ **किं चेति** ॥ ननु भावरूपाज्ञाने ज्ञानाभावे चाज्ञानशब्दप्रयोगादज्ञानत्वहेतोः पक्षसपक्षानुगतिरित्याशङ्क्याह ॥ **न हीति** ॥ दृष्टान्तीकृतस्य शुक्त्यज्ञानस्य सादित्वे अज्ञानं ज्ञाननिवर्त्यमिति व्याप्तेः साद्यनाद्यज्ञानविषयकत्वेन सामान्यव्याप्तित्वम्, यदनादि तत् न निवर्तत इति व्याप्तेश्चानादिमात्रविषयकत्वेन विशेषव्याप्तित्वापत्त्या अज्ञानं ज्ञाननिवर्त्यमित्यस्याः विशेषव्याप्तित्वं न स्यादित्यर्थः । समव्याप्त एव उपाधिरित्युदयनमतानुसारेण समव्याप्त्यभावादिति । साध्यवति ब्रह्मण्युपाधिसद्भावेऽपि अज्ञानेतरत्ववति घटादौ निवृत्तिशून्यत्वरूपसाध्यस्याभावः । नवीनमतानुसारेणाह ॥ **पक्षेतरत्वाच्चेति** ॥ पक्षमात्रव्यावर्तकविशेषणवत्त्वादित्यर्थः । तादृशस्याप्युपाधित्वे अनुमानमात्रोच्छेदः । न च बाधोन्नीतपक्षेतरत्वस्याप्युपाधित्वमिष्टमिति वाच्यं । प्रकृते बाधाभावात् । न च विश्वमायानिवृत्तिरित्याद्यागमबाधः, तथात्वे तेनैवानादेरपि बन्धस्य निवृत्त्युपपत्त्या सामान्यविशेषभावकथनस्यानुपयुक्तत्वप्रसङ्गादिति भावः । केचित् ॥ "**कथमिति** ॥ अनादित्वेऽप्यज्ञानस्य निवृत्तिरित्ययं विशेषो न स्यात् शुक्त्यज्ञानस्य सादित्वादेव निवृत्त्युपपत्तेरित्यर्थः । **न तृतीय इति** ॥ घटादावज्ञानेतरत्वसत्त्वेऽप्यनिवर्त्यत्वाभावादित्यर्थः । नन्वस्यापि पक्षत्वात्

अज्ञानतत्कार्येतरत्वस्योपाधित्वान्न दोष इत्यत्राह ॥ **पक्षेति** ॥ तथाच सर्वानुमानोच्छेदः स्यादिति भाव" इति व्याचक्षते ॥

प०— **अस्तु तर्हीति ॥ कथमयं विशेषः स्यादिति** ॥ शुक्त्यज्ञानं सादि बन्धरूपमज्ञानमनादीत्ययं विशेष इत्यर्थः । उपाध्युद्भावनं वेति पूर्वविकल्पितपक्षत्रयगतान्त्यपक्षं निराह ॥ **न तृतीय इति** ॥

या०— **अस्त्विति** ॥ पक्षधर्मतोपेताया एव व्याप्तेः प्रतिपादकत्वेऽपि तादृशं प्रतिपक्षानुमानमेव प्रयोक्तव्यं न सामान्यविशेषभावस्योपयोग इत्याह ॥ **न द्वितीय इत्यादिना** ॥ **अत्रापि किमिति** ॥ इदमुपलक्षणम् ॥ भावरूपाज्ञानत्वं ममासिद्धम् । ज्ञानाभावरूपाज्ञानत्वं तवासिद्धमिति पक्षधर्मताऽप्यत्र नास्तीति द्रष्टव्यम् ॥ **कथमयं विशेषः स्यादिति** ॥ विशेषव्याप्तिर्हि शुक्त्यज्ञाने ग्राह्या । तस्य च सादित्वे यदज्ञानं तज्ज्ञाननिवर्त्यमित्यस्य यदनादिभावरूपं तन्न निवर्तत इति व्याप्त्यपेक्षया न विशेषव्याप्तित्वं युज्यते । यदि शुक्त्यज्ञानमप्यनादिभावपदार्थेष्वेकं स्यात्तदा परं तस्या विशेषव्याप्तितोपपद्यत इति भावः । यद्वाऽयमज्ञानस्वरूपो धर्मो विशेषोऽनादिभावत्वव्याप्यः कथं स्यात् । अज्ञानस्यानादित्वे तत्र व्यभिचारप्रसङ्ग इति भावः । केचित्तु दृष्टान्तीकृतस्य शुक्त्यज्ञानस्य, यदि सादित्वं तदाऽज्ञानं ज्ञाननिवर्त्यमिति व्याप्तेरेव साद्यज्ञानविषयत्वेन सामान्यव्याप्तित्वं न स्यात् । अनादिर्न निवर्तत इति व्याप्तेश्चानाद्यज्ञानमात्रविषयत्वेन विशेषव्याप्तित्वापत्त्याऽज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्तिर्न स्यादिति भाव इत्याहुः ॥

श्री०— उक्तव्याप्त्योः सामान्यविशेषभावेन बलाबलनिश्चये निरस्ते सामान्यविशेषव्याप्त्योः समबलत्वेन सत्प्रतिपक्षत्वमेवास्त्वित्येवं व्याप्तेः सामान्यविशेषभावकथनस्योपयोगोऽस्त्वित्याशङ्कते ॥ **अस्त्विति** ॥ अज्ञानं न निवर्ततेऽनादित्वादित्यस्य अज्ञानं ज्ञाननिवर्त्यमज्ञानत्वादिति सत्प्रतिपक्षोऽस्त्वित्यर्थः ॥ **अत्रापीति** ॥ एवं स्पष्टं सत्प्रतिपक्ष एवोच्यतां किं व्याप्तेः सामान्यविशेषभावकथनेनेत्यर्थः । टिप्पण्युक्तरीत्या पक्षधर्मताऽपि नास्तीति द्रष्टव्यम् ॥ **आद्य इति** ॥ शुक्त्यज्ञानस्य ज्ञानाभावरूपत्वेऽज्ञानत्वरूपसाधनस्य तत्र वैकल्यं स्यात् । अज्ञानत्वस्य भावरूपाज्ञानमात्रनिष्ठधर्मत्वादित्याशयः । ननु भावरूपाज्ञानेऽप्यज्ञानत्वमस्ति ज्ञानाभावेऽपि ज्ञानविरोधित्वरूपमज्ञानत्वमस्तीति ज्ञानाभावभावरूपाज्ञानयोरज्ञानशब्दत्वसाम्येन साधनवैकल्याभावादनुमानप्रवृत्त्युपपत्तिरिति चेत्तत्राह ॥ **न हि शब्दसाम्येति ॥ किं तदिति** ॥ भावरूपशुक्त्यज्ञानमित्यर्थः ॥ **कथमयमिति** ॥ यदनादि तन्न निवर्तत इत्युक्तेऽनाद्यप्यज्ञानं ज्ञानेन निवर्तते । यथा शुक्त्यज्ञानमिति वक्तव्यम् । इदं तदा स्यात् । यदि शुक्त्यज्ञानमप्यनादिविशेषः स्यात् । अनादिपदार्थमध्ये एकं स्यात् । न चैवम् । तस्य

सादित्वाङ्गीकारादिति भावः ॥ **पक्षतुल्यमिति** ॥ भावरूपस्य शुक्त्यज्ञानस्यानादित्वे पक्षभूताज्ञानतुल्यतया तत्र ज्ञाननिवर्त्यत्वरूपसाध्यस्य सन्दिग्धतया दृष्टान्तत्वानुपपत्तिरित्यर्थः ॥ **न तृतीय इति** ॥ उपाध्युद्भावनरूपं बाध्यत्वमेव विशेषव्याप्त्या सामान्यव्याप्तिर्बाध्यत इत्यस्याभिप्राय इति तृतीयः पक्षो नेत्यर्थः ॥ **समव्याप्तीति** ॥ घटादौ व्यभिचारादिति भावः ॥ **पक्षेतरत्वादिति** ॥ तथात्वे सकलानुमानोच्छेद इति भावः ।

च० — अन्यसाचिव्यनियन्त्रितप्राबल्येऽपहस्तिते बाधकत्वायोगेऽपि समबलतया प्रतिरोधकता सङ्गच्छत इत्याशङ्कां परिजिहीर्षति ॥ **अस्तु तर्हीति** ॥ व्याप्तिपक्षधर्मतोभयसम्पत्तौ प्रतिरोधकानुमानस्यैव अभिधातव्यतया न सामान्यविशेषभावाभिहितेरुपयोगितेत्याह ॥ **द्वितीय इत्यादिना** ॥ अज्ञानत्वस्यैव पक्षतावच्छेदकतायां शुक्त्यज्ञानादौ सिद्धसाधनतावारणाय संसारकारणत्वस्य पक्षतावच्छेदककोटिनिवेशनम् । न च पक्षतावच्छेदकावच्छेदनानुमितौ तत्सामानाधिकरण्येन सिद्धेरविरोधितया तस्य तद्घटकतयाऽनिवेशनेऽपि सामञ्जस्यमिति वाच्यम् । प्राचां मते तादृशसिद्धेरपि तद्विरोधित्वोपगमात् । प्रकृतसाध्यतदभावकोटिकविमतिविषयत्वं वा पक्षतावच्छेदकमवधेयम् ॥ **कथमयं विशेष इति** ॥ शुक्त्यज्ञानं सादि बन्धरूपमज्ञानमनादीत्ययं विशेष इत्यर्थः ।

**सु०—एतेन ज्ञानाज्ञानकृतो विशेषान्वय इति निरस्तम् । यदपि निरुपादानस्य विनाशानुपपत्तिमाशङ्क्योक्तं स्वाश्रयगतोत्तरावस्था विनाश इति । तदनुपपन्नम् । अनुपादानभूताश्रयोत्तरावस्था चेदाश्रितविनाशः स्यात्तदा भूतलादपसारिते घटे घटविनाशः स्यात् । परमाणुश्यामताप्रतिबन्दी तु तस्या अपि सोपादानत्वेनैव निरस्तेति । अत्रोच्यते । यत्तावदविद्याया अनादित्वेनानिवृत्तिरिति सोऽयं प्रसङ्गः स्वतन्त्रानुमानं वा । नाद्यः । अविद्यानादित्वस्य श्रुतियुक्तिसिद्धत्वेन विपर्ययापर्यवसानात् । न द्वितीयः । 'विश्वमायानिवृत्तिः' 'मायामेतां तरन्ति ते' 'तरन्त्यविद्याम्' इत्यादिश्रुतिस्मृतिविरुद्धत्वात् । अनादेरपि निवृत्तौ बाधकाभावेनाप्रयोजकत्वाच्च । आत्मनोऽपि निवृत्तिप्रसङ्गो बाधक इति चेन्न । व्याप्त्यभावात् । निवर्तकभावाभावाभ्यां विशेषोपपत्तेः । प्रमितनिवर्तकानभ्युपगमस्यानुचितत्वात् । अनादित्वेन निवर्तकाभावानुमानस्य बाधितत्वात् । एतेन निवर्तकाभावस्योपाधित्वम् तद्विपर्ययस्य प्रतिपक्षत्वं च समाहितम् ।**

वा० — यच्चाभाववैलक्षण्यादात्मवदनिवृत्तिरिति प्राप्ते तर्हि भाववैलक्षण्यात्प्रागभाववन्निवृत्तिः किं न स्यादित्यभिधाय समानबलत्वादनयोः कस्तर्हि निर्णय इत्याशङ्क्याज्ञानं ज्ञानेन निवर्तत इत्यस्या विशेषव्याप्तित्वात्तयैव वा तत्सहकारेण भावविलक्षणं निवर्तत इत्यस्याः प्राबल्यादनया वा पूर्वव्याप्ति-

बाधेन निर्णय इत्यभिप्रेत्य ज्ञानाज्ञानकृतौ विशेषान्वय इत्युक्तं तद्विशेषव्याप्तेः पूर्वव्याप्तिसङ्कोचकत्वाद्यसम्भवेनाकिञ्चित्करत्वप्रतिपादनेन निरस्तमित्याह ॥ **एतेनेति** ॥ अत्रानादिभावरूपत्वादिति हेतौ भावशब्दार्थविकल्पदूषणं परोक्तं प्रकरणशुद्ध्या निराकृत्य प्रकारान्तरेणानादेर्विनाशाभावशङ्कोत्तरस्य परोक्तस्यान्ते निराकरणं भावशब्दविकल्पदूषणयोर्मध्ये प्रकारान्तरेण विनाशाभावशङ्कासमाधानरूपग्रन्थस्य निवेशनमनुचितमिति परस्याचातुरीं दर्शयितुमिति द्रष्टव्यम् । स्वाश्रयेत्यनुक्त्वोपादानत्वस्यैव विनाशलक्षणान्तर्भावेनाज्ञानस्यानिवृत्तौ परमाणुश्यामताया अप्यनिवृत्तिरिति परोक्तप्रतिबन्दीमुक्तसारणेन मोचयति ॥ **परमाण्विति** ॥ **यत्तावदिति** ॥ अनादेः कथं निवृत्तिरित्यस्यानादित्वे कथं निवृत्तिः निवृत्तिश्चास्ति बन्धस्यातो नानादित्वमुक्तं युक्तमिति निवृत्तिमङ्गीकृत्यानादित्वनिषेधेऽपि पर्यवसानसम्भवादनादित्वान्न निवृत्तिरिति पूर्वोक्तमनादित्वमभ्युपगम्य निवृत्तिरुच्यमाना नोपपद्यत इति निवृत्त्यभावसाधनेऽपि पर्यवसानसम्भवाद्विकल्पप्रसक्तिः । एवं चानादित्वाभावसाधकः प्रसङ्गो वा निवृत्त्यभावसाधकं स्वतन्त्रानुमानं वेति विकल्पार्थः । न तु प्रसङ्गोऽनुमानं वेत्येकविषयम् । नाद्य इत्युक्तदोषासङ्गत्यापत्तेः । यद्यपि निवृत्तावनादित्वं न स्यादित्यनिवृत्तिविषये प्रसङ्गोऽपि निवृत्तिमत्त्वान्नानादीत्यनादित्वाभावे स्वतन्त्रानुमानमपि विकल्पयितुं शक्यं तथाऽप्यनादेः कथं निवृत्तिरिति प्रश्नवाक्यादुक्तलक्षणयोः प्रसङ्गानुमानयोरेव प्रसक्तेस्तत्तद्विषयकैकदूषणेनैवापरदूषणस्यापि लाभाच्च तदनुक्तिरिति द्रष्टव्यम् ॥ **युक्तिश्रुतीति** ॥ द्रव्यं कर्म चेत्येतद्व्याख्यावसरेऽविद्यानादित्वप्रतिपादकतयोपन्यस्तपरिशेषलक्षणयुक्तिश्रुतिसिद्धत्वादित्यर्थः । आगमबाधमुक्त्वाऽप्रयोजकत्वमप्याह ॥ **अनादेरपीति** ॥ अनादेर्निवृत्त्यसम्भवादागमोऽपि कथञ्चिदन्यथा व्याख्येय इति शङ्कापरिहारस्याप्यत्राभिप्रेतत्वाच्चशब्दाभावः । क्वचिच्चेत्यपि पाठस्तत्र यथाश्रुतैव योजना । अनादेरज्ञानस्य निवृत्तावात्मनोऽपि निवृत्तिः स्यादिति तर्के विशेषव्याप्तिर्वाऽभिमतोत यस्य यद्भवति तद्विशिष्टस्यापरस्यापि तद्भवतीति सामान्यव्याप्तिः । नाद्य इत्याह ॥ **व्याप्तीति** ॥ न द्वितीयोऽविशेषासिद्धेरित्याह ॥ **निवर्तकेति** ॥ तथा च साध्यसाधनयोर्व्याप्तिशरीरप्रविष्टसामान्यधर्मानाक्रान्तत्वान्नाव्याप्तिरिति भावः । निवर्तकमनभ्युपगन्तारं प्रति कथमियं विशेषोक्तिरित्यत आह ॥ **प्रमितेति** ॥ अपरीक्षकत्वापत्तेरतिप्रसङ्गाच्चेति भावः । नन्वनादित्वेन निवर्तकाभावानुमानस्य मयोक्तत्वेनोक्तिमात्रत्वाभावात्कथमपरीक्षकत्वादिकमित्यत आह ॥ **अनादित्वेनेति** ॥

स०— ज्ञानाज्ञानेति किं सामान्यविशेषभाव एवोपन्यस्त उपाधिर्वा नोभयममपि उक्तादेव दोषादित्याह ॥ **एतेनेति** ॥ **यदपीति** ॥ स्वोपादानोत्तरावस्थायामेव विनाशव्यवहारादित्याशयः । विपक्षे अनिष्टमाह ॥ **अनुपादानेति** ॥ तत्रोक्तं व्यभिचारं परिहरति ॥ **परमाण्विति** ॥ यद्वा स्वोपादानोत्तरावस्थाया विनाशत्वादविद्यायास्तदभावान्न निवृत्तिरित्यत आह ॥ **अनुपादानेति** ॥ तत्रोक्तं व्यभिचारं

परिहरति । तत्पक्षेऽविनाश इत्युक्ते परमाणुश्यामताया इव विनाशो भविष्यतीत्युक्तं तत्राह ॥ **परमाण्विति** ॥ **विपर्ययावसानादिति** ॥ अविद्या यद्यनादिः स्यात् तदा न निवर्तेत निवर्तते च तस्मान्नानादिरिति प्रसङ्गस्य विपर्ययापर्यवसानादित्यर्थः ॥ **न द्वितीय इति** ॥ विमतमनिवर्त्यमनादित्वादित्यनुमानमागमबाधितमित्यर्थः । अनादिभावस्याप्यस्माभिर्निवृत्त्यङ्गीकारेण विपक्षेबाधकाभावादप्रयोजको हेतुरित्याह ॥ **अनादेरपीति** ॥ बाधकं शङ्कते ॥ **आत्मनोऽपीति** ॥ विशेषव्याप्त्यभावेऽपि यस्य यद्भवति तदविशिष्टस्यान्यस्यापि तद्भवतीति सामान्यव्याप्त्या आपादनोपपत्तिस्तत्राह ॥ **निवर्तकेति** ॥ यदुक्तमनिवृत्तिवादी निवर्तकं नोपैति किन्त्वनादित्वेन तदभावमपि अनुमिनोतीति तत् क्रमेण दूषयति ॥ **प्रमितेति** ॥ ततश्चानादित्वानुमानं सोपाधिकं सत्प्रतिपक्षं चेत्याह ॥ **एतेनेति** ॥

प०— प्रागुक्तमन्यदपि निराह ॥ **एतेन ज्ञानेति** ॥ एवं परोक्तं समाधिं निरस्यानादिबन्धस्य कथं निवृत्तिरित्याक्षेपं स्वयं समाधत्ते ॥ **अत्रोच्यत** इत्यादिना ॥ **श्रुतीति** ॥ अनादिमायया सुप्त इत्यादिश्रुत्या जीवानादित्वयुक्त्या च सिद्धत्वेन यद्यज्ञानमनादि स्यात्तर्हि न निवर्तेत निवर्तते च तस्मादनादि नेति विपर्ययपर्यवसानस्य बाधितत्वादिति भावः ॥ **विश्वमायेति** ॥ 'तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतिः । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त' इति सप्तमे गीता । 'तरन्त्यविद्यां विततां हृदि यस्मिन्निवेशित' इति विष्णुपुराणे षष्ठांशे ॥ **एतेनेति** ॥ श्रुत्यादिना निवर्तकसमर्थनेन साधनाव्यापकत्वपक्षधर्मतयोः सम्भवादिति भावः ॥

या०— **एतेनेति** ॥ किं सङ्कोचनं बाध्यत्वमुत व्यभिचारादिप्रदर्शनमित्यादिविकल्पदूषणेन इत्यर्थः ॥ **सोऽयं प्रसङ्ग इति** ॥ यद्यज्ञानमनादि स्यात्तर्हि न निवर्तेत । निवर्तते च । तस्मान्नानादीतिप्रसङ्ग इत्यर्थः । यद्यपि परस्य स्वतन्त्रानुमानमेव विवक्षितं तथाऽप्यनादेः कथं निवृत्तिरिति-तदीयवाक्यस्यानादित्वेनापादकेनानिवृत्तिरापादनीयेत्यप्यर्थसम्भवात्प्रसङ्गस्य विकल्पकोटिता । न हि पराभिप्रेतमेव विकल्पनीयम् । अतादृशसम्भावितपक्षाणामपि विकल्पकोटित्वस्य बहुलमुपलम्भात् । वस्तुतस्तु विश्वमायानिवृत्तिरित्यादिप्रमाणविरोधेऽस्माभिरभिहिते नेदं स्वतन्त्रानुमानं येन प्रमाणविरोधो दूषणं स्यात् किन्तु प्रसङ्ग एवायम् । तत्र च प्रमाणविरोधोऽलङ्कार एवेति तटस्थशङ्कामप्यपाकर्तुमित्थं विकल्पितमित्यवधेयम् ॥ **श्रुतियुक्तीति** ॥ 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यत' इत्याद्याः श्रुतयः । अनादिजीवस्वरूपावरकस्य सादित्वे तदनुपपत्तिरिति च युक्तिः । ननु यद्येनाविशिष्टं तत्तथेति व्याप्तिरस्तीत्यत आह ॥ **निवर्तकाभावेति** ॥

**श्री०** —कस्तर्हि निर्णय इत्याशङ्क्य ज्ञानाज्ञानकृतो विशेषान्वय इत्युक्तमित्येतदप्यनेनैव निराकृतमित्याह ॥ **एतेनेति** ॥ किं सङ्कोचनं बाध्यत्वमित्याद्युक्तप्रकारेणेत्यर्थः । स्वोपादानगतोत्तरा-

वस्था विनाशश्चेत्परमाणुश्यामतादीनामनिवृत्तिः स्यादित्युक्तप्रतिबन्दीमपाकरोति ॥ **परमाण्विति** ॥ परमाणुश्यामतायां परमाणोरेव परिणामिकारणत्वरूपोपादानकारणत्वाङ्गीकारादिति भावः ॥

च०— **एतेन** ॥ किं सङ्कोचनं बाध्यत्वमित्यादिविकल्प्य दूषणाभिधानमित्यर्थः । स्वयं समाधित्सते । **अत्रोच्यत इति** ॥ **सोऽयं प्रसङ्ग इति** ॥ अज्ञानधर्मिकानादित्वापादकानिवर्त्यत्वापादकस्तर्क इत्यर्थः । विपर्यये तत्कोटिमात्रपर्यवसान एव तर्कस्य तदभावकोटिकशङ्कानिवर्तकत्वादिति दीधितिकारोक्त्या तत्कोटितावच्छेदकावच्छिन्नसाधकविपर्ययप्रतियोगितावच्छेदकावच्छिन्नापाद्यकस्तर्कस्तत्कोटितावच्छेदकावच्छिन्नशङ्कानिवर्तक इति नियमेन प्रकृते विपर्ययपर्यवसानस्य बाधिततया प्रसङ्गस्य तादृशतया नाभिमतं निर्वोढुं स शक्नोतीत्याह ॥ **नाद्य इति** ॥ **श्रुतियुक्तीति** ॥ अनादिमायया सुप्त इति श्रुतिरज्ञानस्य सादित्वेऽनादिजीवस्वरूपावरकत्वानुपपत्तिर्युक्तिरित्यर्थः ॥

सु०— **नन्ववयवतत्संयोगविनाशाभ्यां द्रव्यनाशो दृष्टस्तत्कथमत्र विनाश इति चेत् । कुतोऽयमुभयाभ्युपगमः । एकैकपरिहारेणापि विनाशदर्शनादिति चेत् । तर्हि सादेरेवमस्तु । अनादेस्तृतीयोऽपि प्रकारोऽनुसर्तव्यः । प्रमितत्वादेव विनाशस्य । अनादेः कीदृशो विनाश इति चेत् । स्वरूपध्वंस एव । स्वोपादानगतोत्तरावस्था स्वोपादानमात्रस्वापत्तिरित्यादि कार्यविषयम् । नन्वविद्या चेन्निवर्तेत । तर्ह्येकमुक्तौ सर्वमुक्तिः स्यात् । न स्यात् । प्रतिजीवमविद्याभेदाङ्गीकारात् । अत्र विशेषः 'स्वगुणाच्छादिकास्त्वेके' त्यागमादनुसन्धेयः ।**

वा०— नन्ववयवनाशेन वा तत्संयोगनाशेन वा द्रव्यनाशदर्शनादनादेर्निरवयवत्वेन तदुभयप्रयुक्तविनाशासम्भवेन यदीदं द्रव्यं सन्नाशवत्स्यात्तर्हि तत्प्रयोजकैतदन्यतरवत्स्यात् । न चैतदस्ति । तस्मान्न नाशवदिति विपक्षे बाधकान्तरमाशङ्कते ॥ **नन्विति** ॥ प्रमितकार्यान्यथाऽनुपपत्त्या प्रयोजकान्तरस्याप्यनुसर्तव्ये उभयोरेव द्रव्यनाशप्रयोजकत्वाभ्युपगमोऽनुपपन्न इत्यभिप्रेत्य प्रयोजकान्तरं परमुखेनैव अङ्गीकारयितुं पृच्छति ॥ **कुत इति** ॥ **एकैकेति** ॥ तन्त्वादिनाशप्रयुक्तपटादिनाशे द्व्यणुकादिनाशे चेति शेषः ॥ **अनादेरिति** ॥ इदं च प्रतिबन्दीमुखेन प्रवृत्तस्य परं प्रति दूषणाभिधानम् । वस्तुतस्तु स्वमते निरवयवद्रव्याभावालिङ्गदेहादिवदनाद्यविद्यादेरप्यवयवसंयोगनाशप्रयुक्त एव नाश इति द्रष्टव्यम् । स्वाश्रयगतोत्तरावस्थाविनाश इत्यस्य भवतैव निराकृतत्वादुपादानत्वगर्भविनाशलक्षणस्य चानादावसम्भवादनादेर्विनाशानुपपत्तिरेवेति विपक्षे बाधकान्तरमभिप्रेत्य गूढाभिसन्धिः शङ्कते ॥ **अनादेरिति** ॥

प्रकारान्तरसम्भवाद्बाधकतर्केऽप्रयोजकतेत्याशयेनाह ॥ **स्वरूपेति** ॥ तर्हि उपादानत्वगर्भितलक्षणोक्तिरभियुक्तानां न स्यादित्यतो न नाशसामान्यलक्षणतया तदुक्तिरपि तु नाशविशेषलक्षणतयेत्याशयेनाह ॥ **स्वेति** ॥ उपादाननाशप्रयुक्तनाशस्थले प्रकारान्तराभिप्रायेणादिपदम् । विपक्षे बाधकान्तरमाशङ्कते ॥ **नन्विति** ॥ यद्वा 'ज्ञानिनां मोक्षद' इति निवृत्तिबाधकप्रमाणमुदाहरता भाष्यकारेण बन्धनिवृत्तौ प्राप्तसर्वबाधकपरिहारस्य सूचितत्वादनादित्वप्रयुक्तां निवृत्त्यनुपपत्तिं परिहृत्य प्रकारान्तरप्राप्तां तामेव परिहर्तुमाशङ्कते ॥ **नन्विति** ॥ माऽस्त्वनादित्वप्रयुक्ता निवृत्त्यनुपपत्तिस्तथाऽप्यविद्याया निवृत्तावेकमुक्तौ सर्वमुक्तिप्राप्त्या निवृत्त्यनुपपत्तिस्तदवस्थैव । न ह्येकजीववादिविवरणकारेणेवेष्टापत्त्या सा त्वया परिहर्तुं शक्यते । अपसिद्धान्तापत्तेरिति भावः । मन्मतेऽविद्याभेदादेव न सर्वमुक्तिप्रसङ्ग इत्याह ॥ **नेति** ॥ एतावतैकजीववादिमतवैलक्षण्ये लब्धेऽपि प्रतिजीवमेकैकैवाविद्या तस्याश्च स्वरूपध्वंस एव विनाश इति बहुजीववादिमतसाधारण्यं प्रतीयते । तावतैव स्वमते सर्वमुक्तिप्रसक्तिपरिहारेऽपि वस्तुस्थितिकथनाय वा न सर्वाविद्यायाः स्वरूपध्वंसो युक्तो नापि प्रकृतप्रकृत्यात्मकाविद्याया अपसिद्धान्तापत्तेरित्याशङ्कापरिहाराय वा स्वमते विशेषमाह ॥ **अत्रेति** ॥ एवं च प्रतिजीवमप्यनादी द्वे प्रकृती । तयोर्मध्ये स्वगुणाच्छादिकाया अनादिभूताया अपि स्वरूपप्रध्वंसः । परमाच्छादिकायास्त्वनन्तत्वाद्व्याघुट्टनमात्रम् । मोक्षद इत्येतत्तूभयविधप्रकृतेरप्युक्तरूपयथायोग्यमोक्षद इति व्याख्येयमित्युक्तं भवति ॥

स०— **एकैकेति** ॥ कपालनाशाद्घटनाशः द्व्यणुकावयवानां परमाणूनां नाशाभावेऽपि तत्संयोगनाशात् द्व्यणुकनाश इत्युभयाङ्गीकारेऽपि यथा प्रमितत्वान्न कल्पनागौरवं तथा अज्ञानस्यापि विनाशप्रमितेरवयवतत्संयोगाभ्यां नाशाभावेऽपि विधान्तरमनुसरणीयम् । प्रमितत्वेन कल्पनागौरवाभावात् । यथोक्तं 'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि । बालाग्रशतभागोऽपि न कल्प्यस्त्वप्रमाणक' इति ॥ **कीदृश इति** ॥ स्वाश्रयगतोत्तरावस्थाविनाश इत्येतद्दूषितं स्वोपादानोत्तरावस्था प्रकृते नास्ति तदतिरिक्तस्तु प्रकारो नोपलभ्यत इत्यर्थः । विनाशलक्षणस्याव्याप्तिमाशङ्क्याह ॥ **स्वेति** ॥ पूर्वपक्षी एकजीववादिदूषणेन तद्वासनावासितान्तःकरण आह ॥ **नन्विति** ॥ 'नृषु प्रातिस्विके स्थिते' इति वाक्यस्याभिप्रेतत्वात्तेन प्रतिजीवमविद्याभेदसिद्धिरिति भावः ।

प०— **अवयवेति** ॥ समवाय्यसमवायिकारणनाशाभ्यामित्यर्थः ॥ **स्वगुणेति** ॥ 'स्वगुणाच्छादिकात्वेका परमाच्छादिका परा । स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः । व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तम' इत्यादिश्रुतिगीतातात्पर्योक्तागमादनुसन्धेय इत्यर्थः ॥

या०— **अनादेः कीदृश इति** । स्वाश्रयगतोत्तरावस्थेत्येतद्दूषितम् । स्वोपादानगतोत्तरावस्था च प्रकृते नास्ति । तदतिरिक्तस्तु प्रकारो नोपलभ्यत इत्यर्थः । अतिरिक्तप्रकारोऽप्यस्तीत्याह ॥ **स्वरूपप्रध्वंस इति** ॥ प्रागभावेऽयमपि प्रकारः प्रामाणिक इति भावः ॥ **स्वोपादानमात्रत्वापत्तिरिति** ॥ सदसत्कार्यवादाभिप्रायेण ॥ **अत्र विशेष इति** ॥ अत्र प्रतिजीवमावरकतया स्वीकृताविद्यायामिति विशेषः प्रभेदोऽनुसन्धेय इत्यर्थः । यथोक्तं महातत्त्वविवेके । 'अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विके स्थिते । स्वगुणाच्छादिका त्वेका परमाच्छादिका परा । स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः । व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तम' इति । एतदागमबलेन स्वगुणाच्छादिकाविद्याया हननलक्षणो नाशः । परमाच्छादिकायास्तु व्याघुट्टनमात्रमित्यपि विशेषोऽनुसन्धेय इत्यर्थः ॥

श्री०— **नन्ववयवेति** ॥ अवयवनाशात्समवायिकारणनाशाद्द्रव्यनाशो दृष्टः । यथा तन्तुनाशे सति पटनाशः । अवयवसंयोगनाशात्तन्तुद्वयसंयोगरूपासमवायिकारणनाशात्पटनाशो दृष्ट इत्यर्थः । नन्वनादिपदार्थध्वंसे स्वोपादानगतेत्यादिनाशलक्षणायोगः । उपादानस्यैवाभावादिति चेत्तत्राह ॥ **स्वोपादानेति** ॥

च०—**अत्र विशेष इति** ॥ 'अजे द्वे प्रकृती दुष्टे नृषु प्रातिस्विके स्थिते । स्वगुणाच्छादिका त्वेका परमाच्छादिका परा । स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः । व्याघुट्यमोक्षपदवीं ददाति पुरुषोत्तम' इत्याद्यागमानुरोधेन स्वगुणाच्छादकाविद्यायाः स्वरूपप्रध्वंस एव । परमाच्छादिकायास्तु व्याघुट्टनमात्रमिति विशेषोऽवसेय इत्यर्थः ।

सु०— स्यादेतत् । ब्रह्मविदामप्यविद्याऽनुवर्तते । तेन न श्रुतिस्मृतीनां प्रामाण्यम् । ब्रह्मसाक्षात्कारोऽविद्यानिवर्तको न विवेकमात्रमिति चेन्न । तद्वतामपि संसारानुवृत्तिदर्शनात् । साक्षात्कृतब्रह्मणां सद्यः शरीरादिपाते व्रातपुत्रीयाः पौरुषेया ब्रह्मोपदेशाः प्रसज्येरन्निति । मैवम् । न स्मरति भवानुक्तार्थस्य । प्रसन्नः परमेश्वर एव बन्धविध्वंसं करोतीत्युक्तम् । न च साक्षात्कारस्तत्प्रसादसाधनम् । येन सोऽपि कथं तेषां नेति पर्यनुयुज्येत । भक्तेः परावस्था हि तद्धेतुरुक्ता तत्सम्पत्तिश्च कार्यगम्या । पराचित्तवृत्तीनामप्रत्यक्षत्वात् । प्रारब्धकर्मप्रतिबद्धो भगवत्प्रसाद इति तु मन्दम् । अचेतनानां कर्मणां स्वतन्त्रभगवत्प्रसादप्रतिबन्धकत्वायोगात् ।

वा॰ — ज्ञानिनां मोक्षद इति भगवतो मोक्षदत्वोक्त्या ज्ञानस्वभावादेव मोक्षसम्भवान्नेशकृत्यमिति शङ्काया एव न केवलं परिहारो भाष्यकृतोऽभिप्रेतोऽपि तु ज्ञानस्याविद्यानिवर्तकत्वासम्भवान्नोक्तश्रुत्यादिकमुपपन्नमिति शङ्कापरिहारोऽपीति भावेन तां शङ्कामुत्थापयति ॥ **स्यादेतदिति** ॥ जीवजडविवेकेन ब्रह्मविदामपि न जानामीत्यनुभवेन तत्कार्यसंसारानुवृत्तिदर्शनेन चाविद्यानुवृत्तिसिद्धेर्ब्रह्मज्ञानस्य तन्निवर्तकत्वबोधकश्रुत्यादीनामप्रामाण्यान्न तद्बाधोऽज्ञाननिवृत्त्यभावसाधकानुमानस्येति भावः । विवेकमात्रस्याज्ञानाविरोधित्वेन तदनिवर्तकत्वेऽपि ब्रह्मसाक्षात्कारस्य तद्विरोधित्वेन निवर्तकत्वसम्भवात्तद्विषयकत्वाच्च श्रुत्यादीनां नोक्तमयुक्तमिति शङ्कते ॥ **ब्रह्मसाक्षात्कार इति** ॥ विवेकिनामस्मदादीनामज्ञानानुभवस्येव साक्षात्कारवतामज्ञानानुभवस्य निश्चेतुमशक्यत्वेऽपि संसारानिवृत्तिदर्शनेन तत्कारणाज्ञानादिनिश्चयः सुशक एवेत्याशयेनाह ॥ **तद्वतामिति** ॥ अत एव पूर्वमविद्याऽनुवर्तत इत्युक्त्वाऽत्र संसारानुवृत्तिदर्शनादित्येवाहेति भावः । ननु न साक्षात्कारवतां संसारानुवृत्तिः । तेषामज्ञाननिवृत्त्या तत्कार्यस्यापि निवृत्तेः संसारानुवृत्तिमतां च न साक्षात्कार इत्यत आह ॥ **साक्षात्कृतेति** ॥ **वातपुत्रीया इति** ॥ अत्र यद्यपि 'समासाच्च तद्विषयादि'ति सूत्रेणेवार्थविषयात्समासादपरस्मिन्निवार्थे छप्रत्ययेन काकतालीयाजाकृपाणीयवातपुत्रीयादिशब्दा व्युत्पादिता उपमाद्वयगर्भाः । तथा च काकतालाजाकृपाणवातपुत्राणामिव यादृच्छिको दस्युदेवदत्तयोः समागम इत्येका समासार्थोपमा । तदानीमेव तालकृपाणवातैः काकाजापुत्राणामिव दस्युना देवदत्तवधः कृत इत्यन्या तद्धितार्थोपमा चेति । यत्रोपमाद्वयं तत्रैवास्य शब्दस्य सम्पूर्णार्थता तथापि यादृच्छिकसमागममात्रेऽप्यस्य प्रचुरः प्रयोगो दृश्यत इत्ययमपि प्रयोगो यादृच्छिकसमागममात्रविषयो द्रष्टव्यः । [ समासाच्च तद्विषयात् । इवार्थविषयात्समासात् छः स्यादिवार्थे । पूगाञ्ञ्य इत्यतः प्राक् इवेत्यधिकारात् । काकतालीयो देवदत्तस्य वधः । इह काकतालसमागमसदृशश्चोरसमागम इति समासार्थस्तत्प्रयुक्तः काकमरणसदृशस्तु प्रत्ययार्थः । अजाकृपाणीयोऽतर्कितोपनत इति फलितोऽर्थः । काकतालीय इति प्रकृतसूत्रादेव ज्ञापकादिवार्थे समासः । सुप्सुपेति वा । उभयथाऽपि विशेषसंज्ञाविनिर्मुक्तः । स च छप्रत्ययविषय एव । तेन स्वातन्त्र्यमुपाध्यन्तरगो विग्रहश्च नेत्याकरः । शस्त्रीश्यामेत्यादौ त्वेक एवार्थः । स च समासेऽन्तर्भूत इति छो न भवतीति ज्ञेयम् । ] **उक्तार्थस्येति** ॥ अधीगर्थेति षष्ठी । ( अधीगर्थदयेशां कर्मणि । एषां कर्मणि शेषे षष्ठी स्यात् । मातुः स्मरणम् । सर्पिषो दयनमीशनं वा । ) उक्तं द्रव्यं कर्म चेत्येतद्व्याख्यावसरे । नन्वुक्तस्मारणं व्यर्थमित्यतः प्रसादस्यैव बन्धविध्वंससाधनत्वं वदताऽपि साक्षात्कारस्य प्रसादसाधनत्वेन वक्तव्यतया सति साक्षात्कारे प्रसादोऽपि स्यात् ततश्च बन्धनिवृत्तिरपि स्यादिति साक्षात्कारस्य बन्धध्वंससाधनत्वे प्राप्तानुपपत्तेः प्रसादस्य बन्धध्वंससाधनत्वोक्तावपि तदवस्थतया न प्रसादाङ्गीकार उचित

इति विशेषशङ्कापरिहारायोक्तसारणोपपत्तिरित्यभिप्रेत्य प्रसादेऽप्यनुपपत्तिमाशङ्क्य परिहरति ॥ **न चेति** ॥ तथा च साक्षात्कारस्य बन्धध्वंसहेतुत्वे प्रागुत्पत्तेर्न प्रसादपक्षे प्रसक्तिरिति भावः ॥ **परावस्थेति** ॥ यमभिव्यक्तेत्यादिनोक्ता परिपाकावस्थेत्यर्थः । ननु सति साक्षात्कारे सामग्रीसद्भावेन भक्तेः परावस्था-ऽप्यस्त्येवेति प्रसादोऽपि स्यादिति पर्यनुयोगस्तदवस्थ इत्यत आह ॥ **तदिति** ॥ ज्ञानेनाज्ञाननिवृत्तौ विरामाभावस्य सिद्धतया तन्निवृत्तौ च तत्कार्यविलयस्यावश्यकतया तत्पक्षेऽनुपपत्तावपि सिद्धस्यापि कारणस्य कदाचिदेव फलोन्मुखत्वलक्षणपरिपाकस्यापूर्वादौ क्लृप्तत्वात्सत्यपि साक्षात्कारे भक्तिपरावस्था-भावोपपत्तेर्भक्तिपक्षे नानुपपत्तिरिति भावः । अचेतनानामिति कर्मणामस्वातन्त्र्योपपादनायोक्तम् ।

**स०**— बन्धस्य ज्ञाननिवर्त्यत्वमुक्तमिति भ्रान्त्या चोदयति ॥ **स्यादिति** ॥ **साक्षात्कृतेति** ॥ ब्रह्मापरोक्षज्ञानरहितानां च सम्प्रदायाभावेनोपदेशकत्वाभावात्साक्षात्कारवतामेवोपदेशा वातपुत्रीयाः आक-स्मिका भवेयुरित्यर्थः ॥ **वातपुत्रीया इति** ॥ अत्र वातपुत्रशब्दौ वृत्तिविषयवातपुत्रसमवेतक्रियापरौ । तेन वातागमनमिव पुत्रपतनमिव वातपुत्रमिति । इवार्थे समासाच्च तद्विषयात् इवार्थविषयात्समास-पदादिवार्थे छ इति ज्ञापकात्समासः । उभयत्रोपमेयादि कस्यचिद्ब्रह्म(णः) साक्षात्कारः तदैव यदृच्छया ब्रह्मोपदेशप्रवृत्तिः । तेन साक्षात्कारब्रह्मोपदेशानां चैककालिकत्वं वातपुत्रसमागमपतनसदृशमिति फलति । ततो वातपुत्रमिव वातपुत्रीयमिति द्वितीयस्मिन्निवार्थे समासाच्च तद्विषयादिति सूत्रेण इवे प्रतिकृताविल्या-धिकारिस्थेन छप्रत्ययः । तथा च पतनेन व्यथितो यथा वातेन हन्यते तथा ब्रह्मोपदेशेषु साक्षात्कृतत्व-प्रसिद्धिरुत्पद्यत इत्यर्थः । ततश्चात्र वातागमनपुत्रपतनरूपस्य वातकृतपुत्रबाधरूपस्य चोपमानस्यानुपादानात् प्रत्ययार्थोपमायामुपमानलोपः छप्रत्ययार्थोपमायामुपमानलोपः । समासार्थोपमायां वाचकोपमानलोपः छप्रत्ययविधायकशास्त्रकृत इति सूक्ष्मया दृष्ट्याऽवगन्तव्यम् । ननु तेषामुपदेशानामनादित्वेन नोपदेशका-पेक्षेत्यत उक्तम् ॥ **पौरुषेया इति** ॥ **उक्तार्थस्येति** ॥ कर्मणि षष्ठी ॥ 'अधीगर्थदयेशां कर्मणि' इति स्मरणात् । तथा चोक्तार्थं न स्मरतीत्यर्थः ॥ **उक्तेति** ॥ जिज्ञासोत्थज्ञानजादित्येतद्व्याख्यानावसरे इदमुक्तं भवतीत्यादिनेत्यर्थः ॥

**प०— श्रुतिस्मृतीनामिति** ॥ ज्ञानिनां मोक्षद इत्यादीनां ज्ञानान्मोक्षोक्तिपराणामित्यर्थः ॥ **न विवेकमात्रमिति** ॥ देहात्मादिविवेकमात्रमिति वा नित्यानित्यविवेकमात्रमिति वाऽर्थः ॥ **वात-पुत्रीया इति** ॥ अशरीरवाक्यानि भवेयुरित्यर्थ इत्येके । पिशाचवार्ता भवेयुरित्यर्थ इत्यन्ये । वातपुत्रो वायुः तदीयाः वातपुत्रीयाः वाय्वानीतवार्ता भवेयुर्निर्मूला भवेयुरित्यर्थ इत्यपरे । वातागमनमिव पुत्र-

पतननिव वातपुत्रीयं काकतालीयमितिवदयं शब्दः । यादृच्छिकत्वात्पुत्रपतनं न वातागमनहेतुकम् । तथेहापि शुकवामदेवाद्युपदेशा अहेतुका भवेयुरित्यर्थ इत्यप्याहुः । शुकवामदेववैशम्पायनादिपुरुषसम्बन्धिनः पौरुषेयाः । शुकादेरपरोक्षज्ञानित्वादिति भावः । 'अधीगर्थदयेशां कर्मणीति' षष्ठीमुपेत्याह ॥ **न स्मरति भवानुक्तार्थस्येति** ॥ उक्तार्थः कः यस्य विस्मृतिरुच्यत इत्यत आह ॥ **प्रसन्न इति** ॥ तत्सम्पत्तिः भक्तेः परावस्थासम्पत्तिः ॥ **प्रारब्धेति** ॥ ज्ञानिप्रारब्धेत्यर्थः ॥

या०— **तेन न श्रुतीति** ॥ विश्वमायानिवृत्तिरित्याद्यानामित्यर्थः । तथा च न तद्बाधोऽनुमानस्येति भावः ॥ **विवेकमात्रमिति** ॥ परोक्षज्ञानमित्यर्थः ॥ **वातपुत्रीया इति** ॥ अयं च समासः काकतालीय इति समासवद्द्रष्टव्यः । तदर्थश्च युक्तिपादे वक्ष्यते । अर्थस्येति कर्मणि षष्ठी । 'अधीगर्थदयेशां कर्मणी'ति स्मरणात् । केचिदाहुः । नापरोक्षज्ञानानन्तरमेव मोचकप्रसादोत्पत्तिः । किन्तु प्रारब्धकर्मणा प्रतिबद्धोऽसावतो न मुक्तिं तदैव जनयतीति तद्दूषयति ॥ **प्रारब्धेति** ॥

श्री०— अविद्यानाशस्य श्रुतिस्मृतिसिद्धत्वेनाविद्याया न निवृत्तिरिति स्वतन्त्रानुमानस्यायोग इत्ययुक्तम् । श्रुत्यादेरप्रामाण्यादित्याशयेन शङ्कते ॥ **स्यादेतदिति** ॥ श्रुतिस्मृतीनामविद्यानाशप्रतिपादकानां विश्वमायानिवृत्तिरित्यादीनां । विवेकमात्रं परोक्षज्ञानम् । ननु न ब्रह्मसाक्षात्कारवतां संसारानुवृत्तिरङ्गीक्रियते । साक्षात्कृतब्रह्मणां ज्ञानसामर्थ्येन तदुत्पत्त्यनन्तरमेवाविद्यानिवृत्त्या सद्यः शरीरादिपाताङ्गीकारात् । अतः श्रुत्यादीनां प्रामाण्यमुपपद्यत इत्यत आह ॥ **साक्षात्कृतेति** ॥ **पौरुषेया इति** ॥ अपरोक्षज्ञानिपुरुषकर्तृकाः । परं ब्रह्म दृष्टवन्तो यदि तत्स्वरूपमुपदिशेयुस्तर्हि परेषां विश्वासो भविष्यति । अन्यथाऽन्धपरम्पराशङ्का स्यात् । ब्रह्मसाक्षात्कारवतामवस्थानं चाविद्यानिवृत्त्या सद्यः शरीरादिपाते न सम्भवति । अतस्तेषामवस्थानमुपदेशार्थमवश्यं वक्तव्यमेव । तथा चाविद्यानिवृत्तिर्नास्तीति प्राप्तमतः पूर्वोक्तदोषस्तदवस्थ इति भावः ॥ **उक्तमिति** ॥ तथा च साक्षात्कारोऽप्रयोजक इति भावः । साक्षात्कार इव प्रसादोऽपि तेषां कुतो नास्तीति चेत्तत्राह ॥ **न चेति** ॥ न हीत्यर्थः ।

च०— **वातपुत्रीया इति** ॥ वातागमनपुत्रपतनसमागमसदृशा आकस्मिका इत्यर्थः ॥ **उक्तार्थस्येति** ॥ अधीगर्थदयेशां कर्मणीत्यनुशासनान्निरूपकताप्रत्यासत्त्या स्मृत्यन्वयिकर्मत्वार्थिका षष्ठी ।

सु०— **तान्यपि तदिच्छाविशेषानुगृहीतानीति चेत् । भगवदिच्छयोर्विरोधप्रसङ्गात् । मोचकप्रसाद एवैवंरूपइति चेत् । तर्हि स एवापरिपूर्ण इत्येवागतम् । अन्यथा कथं प्रारब्धा-**

नामप्युपमर्दं वक्ष्यति । प्रारब्धप्रतिबन्धादिवादास्तूपचरितार्था एव । वस्तुतस्तु भगवानेव अनादेरपि बन्धस्य निवर्तक इति साधूक्तं 'ज्ञानिनां मोक्षदश्च स' इति । ननु चानन्दः स्वरूपमेव । स चाविद्यावृतोऽविद्यानिवृत्तौ स्वतः सिद्ध एव । अनुभवोऽप्येवमेव । विषयित्वमप्यनुभवस्वभावो न त्वागन्तुको धर्मः । ततो मोक्षदानात्कथं पृथगानन्दादिदानम् । उच्यते । परमेश्वरशक्तिरेव जीवस्वरूपावरणं मुख्यम् । अविद्या तु निमित्तमात्रम् । ततोऽविद्यायां निवृत्तायामपि नाशेषानन्दाभिव्यक्तिर्यावदीश्वर एव स्वकीयां बन्धकशक्तिं न ततो व्यावर्तयति । अत एवानन्दह्रासवृद्धी वक्ष्येते इति ।

था० — प्रतिबन्धकीभूतकर्मानुग्राहकभगवदिच्छाविशेषो हि नैनं मोचयामीत्याकारो वाच्यः । प्रसादश्चैनं मोचयामीत्याकारः । एवं च प्रसादस्येच्छाविशेषानुगृहीतकर्मप्रतिबद्धत्वाभ्युपगमे भगवदिच्छयोर्विरोधप्रसङ्ग इत्याह ॥ **भगवदिति** ॥ ननु न कर्मानुग्राहको भगवदिच्छाविशेषः प्रसादातिरिक्तोऽभ्युपगम्यते येन विरोधः स्यादपि तु मोचको भगवदिच्छाविशेषरूपः प्रसाद एव च प्रारब्धकर्मावसान एनं मोचयिष्यामीत्याकारोऽतो नानुपपत्तिरित्याशङ्कते ॥ **मोचक इति** ॥ तर्हि प्रसादे जातेऽपि तद्विषयीभूतप्रारब्धकर्मावसानस्याभावे विषयाभावे इच्छाया अपूर्तेर्लोकव्यवहारसिद्धत्वात्प्रसादस्वरूपं सम्पूर्णं नास्त्येवेत्येव प्राप्तं न तु कर्मादिप्रतिबद्धमिति । यथा विद्याचरणादिना प्रभोरागामिपर्वकालेऽस्मै गां दास्यामीतीच्छाविशेषे जातेऽपि तदिच्छाविशेषविषयीभूतकालविशेषस्याप्राप्त्येच्छाविशेषोऽपूर्ण इत्युच्यते तद्वत् । तथाच प्रसादस्यापूर्त्या साधनपूर्त्यभावे प्राप्तेऽपि प्रसादस्य प्रारब्धप्रतिबद्धत्वं नैव सिद्धम् । सति पुष्कलकारणे कार्याभावप्रयोजकस्यैव प्रतिबन्धकत्वादित्याशयेनाह ॥ **तर्हीति** ॥ युक्त्यन्तरं चाह ॥ **अन्यथेति** ॥ प्रारब्धकर्मणां प्रसादप्रतिबन्धकत्वे प्रसादेन कर्मोपमर्दोक्तिरयुक्ता । न हि प्रतिबद्धं प्रतिबन्धकमेवोपमर्दयतीति भावः । नन्वेवं प्रारब्धकर्मणां प्रतिबन्धकत्वाभावे तद्बोधकवाक्यविरोधः । तथा ज्ञानस्य मोक्षप्रसादसाधनताऽनङ्गीकारे तद्बोधकवाक्यविरोधश्चेत्यत उक्तयुक्त्या प्रारब्धकर्मणां प्रतिबन्धकत्वाभावात्सति प्रतिबन्धके कार्योत्पत्तिविलम्बवत्प्रारब्धकर्मदशायां साधनपूर्त्यभावेऽपि कार्योत्पत्तिविलम्बेन प्रतिबन्धकत्वोक्तेरौपचारिकत्वाज्ज्ञानस्य साक्षान्मोक्षसाधनताया अप्युक्तरीत्याऽनुपपत्तेर्मोक्षसाधनप्रसन्नभगवद्व्यापारभूतप्रसादसाधनभक्तिसाधनतया मोक्षसाधनत्वोक्तेरौपचारिकत्वमिति नोक्तानुपपत्तिरित्यभिप्रेत्य ननु अनादेरित्यारभ्योक्तप्रमेयस्य ज्ञानिनां मोक्षद इत्युक्तोपपादकत्वान्नासङ्गतिरित्यपि सूचयति ॥ **प्रारब्धेति** ॥ एवं ज्ञानिनां मोक्षद इत्यंशमुपपाद्यानन्ददश्च मुक्तानामित्यंशमप्युपपादयितुं पृथगुक्त्यनुपपत्तिं शङ्कते ॥ **ननु चेति** ॥ आनन्दः स्वरूपमेवातः स्वतः सिद्धस्तिष्ठतीत्यन्वयः । तथा च सिद्धत्वादानन्दद इति

साध्यत्वोक्त्यनुपपत्तिरित्याशयः । ननु स्वतः सिद्धस्याप्यविद्यावृतत्वेन निवृत्ताविद्यात्वेन साध्यत्वान्न साध्यत्वोक्त्यनुपपत्तिरित्यतोऽविद्यानिवृत्तावित्युक्तम् । तथा च तथा साध्यत्वस्य सम्भवेऽपि तस्य मोक्षद इत्यनेनैवोक्तत्वात्पृथगानन्ददानं न वक्तव्यमित्यर्थः । अत्रानन्दस्य स्वरूपेण सिद्धत्वादानन्ददानं कथम-विद्यानिवृत्तिमत्त्वेन साध्यत्वस्य मोक्षद इत्युक्तत्वान्मोक्षदानादानन्ददानं पृथक्कथमिति योजना द्रष्टव्या । यद्वा । आनन्ददानं मुख्यममुख्यं वाऽत्र विवक्षितम् । द्वितीयेऽपि तदभिव्यक्तिदानप्रयुक्तो वा तदनुभव-दानप्रयुक्तो वाऽऽनन्दानुभवे तद्विषयकत्वदानप्रयुक्तो वाऽनन्ददानव्यपदेशः । नाद्य इत्याह ॥ **स्वरूप-मेवेति** ॥ द्वितीयेऽप्याद्यं दूषयति ॥ **स चेति** ॥ स्वतः सिद्धोऽवस्थाविशेषलक्षणाभिव्यक्तिं प्राप्तः । ननु कथमावृतस्याभिव्यक्तिरित्यत उक्तमविद्येति । अविद्याया एवावरणत्वात्तन्निवृत्तेश्च मोक्षद इत्यनेनैव लब्धत्वादिति भावः । तृतीयं निराह ॥ **अनुभव इति** ॥ एवमेव स्वरूपमेवेत्यर्थः । ननु चावृतस्या-नुभवस्य न पुरुषार्थत्वमित्यत एवमेवेत्यावृत्त्या स चाविद्यानिवृत्तौ स्वतोऽभिव्यक्त एवेत्यपि व्याख्येयम् । चतुर्थं निराह ॥ **विषयित्वमपीति** ॥ यद्वा नात्रानन्ददानं वक्तुं युक्तम् । जीवस्वरूपत्वेन सिद्धत्वा-दित्याह ॥ **स्वरूपमेवेति** ॥ नन्वनुभूयमानानन्दस्यैव पुरुषार्थत्वादविद्यावृतस्य चानुभवायोगादावरण-निवर्तनेन सिद्धस्यापि तस्य दानमुच्यत इत्यतोऽविद्याया एवावरणत्वात्तन्निवृत्तेश्च मोक्षद इत्यनेनैवोक्ततया न पृथग्वक्तव्यमानन्ददानमित्याह ॥ **स चेति** ॥ सिद्धोऽनुभूयत एवेत्यर्थः । निवृत्तेऽप्यावरणे सामग्र्य-भावान्नानुभव इत्यत उक्तं स्वत इति । साक्षिण एव तत्करणत्वेन सिद्धत्वादिति भावः । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्त्वानन्दवत्तदनुभवोऽपि स्वरूपमेव । आवरणनिवृत्तौ तदभिव्यक्तिश्च स्वतः सिद्धै-वेत्याह ॥ **अनुभवोऽपीति** ॥ ननु चोभयोः स्वतःसिद्धत्वेऽपि तयोर्विषयविषयिभावदानमत्र पृथगुच्यत इत्यत आह ॥ **विषयित्वमपीति** ॥ ननु स्यादिदं समाधानमुपपन्नं यद्यविद्यावरणातिरिक्तं परमेश्वर-शक्त्याख्यमपरमावरणं स्यात् । न चैवम् । कल्पकाभावादित्यतो निवृत्ताविद्यानां मुक्तानामप्यभिव्य-क्त्यनभिव्यक्तिरूपे ह्रासवृद्धी वक्ष्यमाणे आवरणान्तरं विनाऽनुपपद्यमाने तत्कल्पयत इत्यभिप्रेत्याह ॥ **अत एवेति** ॥

स० — **विरोधप्रसङ्गादिति** ॥ एनमिदानीं मोचयामि एनं प्राच्यकर्मभिरिदानीं प्रतिबध्नामीति विरोधप्रसङ्गादित्यर्थः । एवंरूपः प्रारब्धकर्मावसाने मोचयामीत्येवं रूपः । अनादित्वस्यानिवृत्तिं प्रत्य-प्रयोजकत्वमित्युक्तमनादेरपीत्यादिना । अधुना प्रयोजकत्वमङ्गीकृत्यापि निवृत्तिरुपपन्नेति पक्षान्तरमाह ॥ **वस्तुतस्त्विति** ॥ अनादेरित्यनन्तरं अत एवानिवर्त्यस्येति शेषः । तेनापिशब्दस्य सम्बन्धः । भगवान् अघटितघटनसामर्थ्योपेतः । अपि हेत्वर्थगर्भं विशेषणम् । तथा च युक्त्या अनिवर्त्यतया प्रसक्तस्यापि

बन्धस्याचिन्त्यशक्त्या हरिर्निवर्तक इति भावः ॥ **अत एवेति** ॥ ईश्वराधीनत्वादेव बन्धनिवृत्तेरित्यर्थः ॥ **वक्ष्येते** स्तुत्यधिकरणे ।

**प०— विरोधेति** ॥ इदानीमिमं मोचयामि प्रारब्धवशान्न विमोचयामीत्येवंरूपविरोधप्रसङ्गादित्यर्थः ॥ **अन्यथेति** ॥ विष्णुप्रसादस्य ज्ञानिप्रारब्धप्रतिबद्धत्वे सति तृतीयाध्यायचतुर्थपादे 'उपमर्दं चे'ति सूत्रेऽनेककालं भोक्तव्यप्रारब्धस्याल्पभोगेन ज्ञानिन उपमर्दकथनमयुक्तं स्यात् । ज्ञानजन्यप्रसादेनैवोपमर्दस्य वाच्यत्वात्प्रतिबद्धत्वे तदयोगादिति भावः । नन्वेवं तर्हि ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् । एवं मुक्तिफलानियम इत्यादौ सूत्रे अवसन्नं यदारब्धं कर्म तत्रैव गच्छति । न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशय इत्यादौ च ज्ञानिनः प्रारब्धप्रतिबन्धे सति न तस्मिन्नेव जन्मनि मुक्तिरित्यादिवादः कथमित्यत आह ॥ **प्रारब्धेति** ॥ ईश्वरप्रसादपूर्तिरेव नास्तीत्येवमर्थ इत्यर्थः । सप्तमे योगमायासमावृत इत्येतद्व्याख्यापरगीताभाष्ये गतं "सामर्थ्योपायेने"त्यादिवाक्यं हृदि कृत्वाऽऽह ॥ **परमेश्वरेति** ॥ **अत एवेति** ॥ ईश्वरशक्तेरप्यावरकत्वादेव स्वशक्तिरूपावरणाव्यावर्तनव्यावर्तनाभ्यां ह्रासवृद्ध्योरुपपन्नत्वादेव 'स्तुतयेऽनुमतिर्वे'ति ज्ञानपादीयाधिकरणे ज्ञानिनोऽसत्प्रवृत्तिसत्प्रवृत्तिभ्यां मुक्तावानन्दह्रासवृद्धी वक्ष्येते । अन्यथा ते अनुपपन्ने स्यातामिति भावः ॥

**या०**— ननु मोचकप्रसादरूपेच्छैका प्रतिबन्धककर्मानुग्राहिका चापरेतीच्छाद्वयं नाङ्गीक्रियते येन विरोधः स्यात् । अपि तु मोचकप्रसाद **एवैवंरूपः** प्रतिबन्धककर्मानुग्राहक इत्यङ्गीक्रियते । अतो न विरोध इत्याशङ्कते ॥ **मोचकप्रसाद इति** ॥ **अन्यथेति** ॥ भगवदिच्छाया एव प्रारब्धकर्मानुग्राहकत्व इत्यर्थः । भगवदिच्छानुगृहीतकर्मणां प्रतिबन्धकत्वे उपमर्दं चेत्यत्र वक्ष्यमाण उपमर्दोऽयुक्तः स्यात् । तदनुग्राहकभगवदिच्छाया मोघत्वप्रसङ्गादिति भावः । नन्वेवं भवत्पक्षेऽपि 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत' इत्यादिवादानुपपत्तिः । अत्र हि प्रारब्धकर्मणां प्रतिबन्धकत्वमुच्यते । तदन्यथाऽनुपपत्त्या मोचकप्रसादोऽपरोक्षज्ञानानन्तरं सम्पूर्ण एवास्तीत्यवगम्यते । अन्यथा तेषां प्रतिबन्धकत्वस्यैवायोगात् । सति पुष्कलकारणे कार्यानुत्पत्तिप्रयोजकं हि प्रतिबन्धकं नामेत्याशङ्कां परिहरति ॥ **प्रारब्धप्रतिबन्धेत्यादिना** ॥ आदिपदेन तत्क्षयानन्तरमेव मोक्षं प्रतिपादयतामथ सम्पत्स्यत इत्यादिवादानां सङ्ग्रहः ॥ **उपचरितार्था एवेति** ॥ मोचकप्रसादप्रतिबन्धद्वारा मोक्षेऽपि प्रतिबन्धकत्वादिति भावः । नन्वनादेर्बन्धस्य कथं निवृत्तिरिति शङ्कायां अनादित्वमनिवृत्तिप्रयोजकं न भवति किन्तु निवर्तकाभाव एव प्रयोजकः । प्रकृते तु निवर्तकं प्रमितमेवातोऽनादेरपि बन्धस्य निवृत्तिरुपपन्नेति पूर्वं

समाधानमभिहितम् । इदानीं वस्त्वनादित्वमनिवृत्तिप्रयोजकं तथाऽप्यघटितघटकैश्वर्ययोगादनादित्वेना-निवर्त्यतया प्रसक्तस्यापि बन्धस्य निवर्तकः परमेश्वर इति तत्र का कथंतेति समाधानान्तरं वदन्नुपसंहरति ॥ **वस्तुतस्त्विति** ॥ **भगवान्** अघटितघटकैश्वर्यवान् । एवकारेणानादित्वमनिवर्त्यत्वप्रयोजकं भवदपि न सर्वथा किन्तु भगवदितरानिवर्त्यत्वप्रयोजकमेवेति सूचयति । अनादेरित्यनन्तरमत एवानिवर्त्यतया प्राप्तस्यापीति शेषः ॥ **मोक्षदानादिति** ॥ अविद्यानिवृत्तिरूपमोक्षदानादित्यर्थः ॥ **अत एवानन्द-ह्रासेति** ॥ परमेश्वरशक्तेरविद्यातिरिक्ताया जीवस्वरूपावरणत्वादेवेत्यर्थः । अन्यथा निवृत्ताविद्यानामप्यु-त्तमाधिकारिणां मुक्तानां स्वोत्तमद्रोहादिना स्वरूपानन्दानुभवरूपह्रासो वक्ष्यमाणः कथमावरणाभावे सङ्गतः स्यात् । तथा ज्ञानोत्तरकृतकर्मणाऽऽनन्दाभिवृद्धिरिति वक्ष्यते सा च कथमुपपन्ना । न हि स्वरूपापेक्षयाऽभिवृद्धिरिति तदर्थः । किं त्वविद्यायां निवृत्तायामपि स्वस्वरूपभूतमप्यानन्दादिकमीश्वरेच्छा-शक्त्यावृतं कर्माभावे नानुभवितुं शक्यम् । कृते च कर्मणि तेन तुष्टो भगवानिच्छाशक्तिमपसारयति । ततः पूर्वमनुभूयमानानन्दापेक्षयाऽधिकानन्दाद्यनुभवलाभादानन्दवृद्धिरित्युच्यते । ईश्वरेच्छाशक्तिरूपा-वरणाभावे इयमपि न स्यादिति भावः ।

श्री० — ननु 'न मोचकप्रसादः प्रारब्धकर्मप्रतिबद्धः कर्मणामचेतनत्वेन प्रतिबन्धकत्वायोगात्' इत्युक्तमयुक्तम् । मोचकप्रसादरूपेच्छा एका । प्रतिबन्धकीभूताचेतनकर्मानुग्राहिका चेच्छाऽपरेतीच्छा-द्वयाङ्गीकाराद्भगवदिच्छानुगृहीतकर्मणां प्रतिबन्धकत्वोपपत्तिरित्याशङ्क्य निराकरोति ॥ **तान्यपीति** ॥ **तर्हीति** ॥ प्रारब्धकर्मानुग्राहकत्वेन प्रतिबन्धकत्व इत्यर्थः ॥ **अन्यथेति** ॥ भगवदिच्छाया एव प्रारब्ध-कर्मानुग्राहकत्वे ज्ञानेन प्रारब्धानामुपमर्दो वक्ष्यमाणो न युक्तः स्यात् ॥ 'न वै जनो जातु कथञ्चना-व्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृति'मिति वचनेनोपमर्दस्वरूपमुक्तम् । यथाऽज्ञानी कर्मवशादश्वो भूत्वा दुःख-मनुभवति । तथा ज्ञानिनोऽयमश्वो भूत्वा दुःखमनुभोक्तव्यमिति प्रारब्धकर्मास्ति । तस्य ज्ञानेनोपमर्देऽश्वे-दश्वजन्म प्राप्नोति तावद्दुःखं नानुभवतीति ह्युपमर्दो वक्तव्यः । तत्रैतादृशकर्मानुग्राहको भगवत्प्रसादः तर्हि ज्ञानेनोपमर्दो न स्यात् । ज्ञानस्यैव प्राबल्यप्राप्त्या यथोक्तफलदातृकर्मानुग्राहकभगवदिच्छाया मोघत्वप्रसङ्गादित्यर्थः । ननु तस्य तावदेवचिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत इति प्रारब्धकर्मणां मोक्ष-प्रतिबन्धकत्वं तावदुच्यते । तदन्यथाऽनुपपत्त्याऽपरोक्षज्ञानानन्तरं मोचकप्रसादः सम्पूर्ण एवास्ता-त्यागतम् । अन्यथा प्रतिबन्धकत्वमेव न स्यात् । सति पुष्कलकारणे यस्मिन्सति यन्नोत्पद्यते तस्यैव तत्र प्रतिबन्धकत्वात् । तथा च सम्पूर्णमोचकप्रसादसद्भावात्साक्षात्कृतब्रह्मणां सद्यः शरीरादिपाते वातपुत्रीया ब्रह्मोपदेशाः प्रसज्येरन्निति दूषणं भवत्पक्षेऽपि समानमित्यत आह ॥ **प्रारब्धेति** ॥ तस्य तावदेवेति

वाक्ये कर्मणां साक्षान्मोक्षप्रतिबन्धकत्वमभिप्रेतं स्यात्तदा तदन्यथाऽनुपपत्त्या सम्पूर्णप्रसादोऽप्यस्तीति स्यात् । न चैवम् । प्रारब्धकर्मणामपरोक्षज्ञानिषु मोचकप्रसादोत्पत्तिप्रतिबन्धकत्वमेवोच्यते । मोक्षप्रतिबन्धकत्वोक्तिस्तूपचरितैव मोक्षसाधनीभूतप्रसादप्रतिबन्धकत्वात् । अतो नोक्तदोष इति भावः ॥

च०— **भगवदिच्छयो**र्मोचकप्रसादरूपप्रतिबन्धककर्मानुग्राहकरूपेच्छयोः । **एवंरूपः** प्रतिबन्धककर्मानुग्राहकरूपः । अनादित्वमनिवृत्तावप्रयोजकीकृत्य निवृत्तिप्रयोजकसामग्र्येव तत्प्रयोजिकेति प्रकृते तादृशसामग्र्याः प्रमिततयाऽनादेरपि बन्धस्य निवृत्तिः सङ्गच्छत इति समाहितिमनादेर्बन्धस्य कथं निवृत्तिरिति शङ्कायाः विभाष्ये सम्प्रत्यनादित्वस्यानिवृत्तिप्रयोजकत्वोपगमेऽप्यनिवर्त्यतया प्रसक्तस्यापि बन्धस्याघटितघटकैश्वर्यलक्षणोपायात्परमात्मैव विध्वंसं करोतीति समाहित्यन्तरं विधत्ते ॥ **वस्तुतस्त्विति** ॥ **भगवान्** अघटितघटकैश्वर्यवान् ॥ एवकारेणानादित्वस्येशान्यकर्तृकविध्वंसनक्रियाकर्मताराहित्यनिर्वाहकतैव नेशकर्तृकतत्क्रियाकर्मताराहित्यनिर्वाहकतेति ध्वन्यते । **मोक्षदानात्** प्रागुक्तप्रतिबन्धनिवृत्तिरूपमोक्षदानात् । **अत एव** ॥ अविद्यातोऽतिरिच्यमानायाः पारमेश्वरशक्तेर्जीवस्वरूपावरणत्वादेव । निवृत्ताविद्यानामपि मुक्तानामप्यनभिव्यक्त्यभिव्यक्तिरूपे ह्रासवृद्धी अभिधास्यमाने आवरणान्तरं विनानुपपद्यमाने तद्गमयत इति भावः ॥ ( १ समाधानम् । २ उक्त्वा )

अनु०— इत्युक्तेर्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते ॥

सु०— एवं तावत्स्वमतेन सूत्रं व्याख्याय तत्परिशुद्धये परेषां भाष्यं दूषयति ॥ **बन्धमिथ्यात्वमित्यादिना** ॥ मायावादिना हि कर्तृत्वभोक्तृत्वदोषसंसर्गक्रियाकारकफललक्षणस्य बन्धस्याऽऽत्मन्यारोपितत्वेन मिथ्यात्वं स्वभाष्यादौ वर्णितम् । तदनुपपन्नम् । बन्धमिथ्यात्वस्यासूत्रितत्वात् । असूत्रितार्थवर्णने च भाष्यलक्षणाभावेनाभाष्यत्वप्रसङ्गात् । सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरिति हि भाष्यलक्षणमाचक्षते । अत्राह । द्विविधो हि सूत्रार्थः । श्रौत आर्थश्च । तत्राथातो ब्रह्मजिज्ञासेतिसूत्रे अनुवादत्वपरिहाराय शास्त्रे पुरुषप्रवृत्तिसिद्धये च कर्तव्येति पदमध्याहार्यम् । जिज्ञासापदं चानुष्ठानयोग्यस्यान्तर्णीतस्य विचारस्योपलक्षणमिति स्थिते साधनचतुष्टयसम्पन्नस्य ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रवाक्यस्य श्रौतोऽर्थः सम्पद्यते । अर्थादधिकारिविशेषणमोक्षसाधनं ब्रह्मज्ञानमिति सिध्यति । सन्निधानाच्च वेदान्तवाक्यविचार इति श्रुत्यर्थाभ्यां साधनचतुष्टय-

**सम्पन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति सूत्रवाक्यस्य तात्पर्येण प्रतिपाद्योऽर्थोऽवगतः । एवं च शास्त्रे प्रेक्षावत्प्रवृत्त्यङ्गतयाऽर्थतः सूत्रितस्य प्रयोजनादेरुपपादकं बन्धमिथ्यात्वमिति तदपि सूत्रार्थ एव ।**

वा० — ननु बन्धमिथ्यात्वमित्यादिना वर्तिष्यमाणं सूत्रार्थवर्णनमन्यद्वा । नाद्यः । तथात्वानुपलम्भात् । नाप्यन्यत् । सूत्रार्थव्याख्यानावसरेऽन्योक्तेरसङ्गतत्वादभाष्यत्वप्रसङ्गाच्चेत्यतः 'अतो यथार्थबन्धस्ये'त्येतदुपसंहारभाष्यं मनसि निधायोत्तरप्रघट्टकतात्पर्यमाह ॥ **एवमिति** ॥ परिशुद्धिरत्रापव्याख्यानिराकरणाभावे स्वोक्तार्थस्य शिष्यबुद्ध्युपारूढत्वाभावात्स्वव्याख्यानस्य शिष्यचेतसि स्थिरीकरणलक्षणा ज्ञेया । यथा चैतत्तथा 'अतो यथार्थे'ति वाक्यव्याख्यानावसरे स्फुटम् । ननूत्तरग्रन्थे बन्धमिथ्यात्वस्य मुक्त्याद्याक्षिप्ततायाः परेणावक्तव्यत्वेन तदाक्षेपकत्वनिराकरणमसङ्गतम् । न च स्वभाष्यस्य भाष्यत्वोपपत्तये स्वोक्तबन्धमिथ्यात्वस्य सूत्रार्थतायै सूत्रार्थमुक्त्याद्याक्षिप्तत्वमवश्यं तेन वक्तव्यमिति वाच्यम् । बन्धमिथ्यात्वस्यापि सूत्रितत्वात् । असूत्रितत्वेऽपि वा तत्प्रतिपादकस्यास्य भाष्यकृत्प्रणीतत्वेनैव भाष्यत्वोपपत्त्याऽभाष्यत्वानापत्तेः । परेणेतरेतरारोपवर्णनेऽप्यात्मवन्मिथ्यात्वानापत्त्या बन्धमिथ्यात्वानुक्तेश्चेत्याशङ्कां परिहरन्नुत्तरग्रन्थमवतारयति ॥ **मायावादिना हीति** ॥ अत्रानर्थश्च प्रमातृताप्रमुखं कर्तृत्वं भोक्तृत्वं चेत्यादिपरग्रन्थानुसारेण कर्तृत्वभोक्तृत्वयोस्तत्प्रयोजकतया क्रियाकारकफलानां तत्प्रयोजकत्वेन चाविद्यातत्कार्यरागादिदोषसंसर्गस्य च बन्धत्वेन ग्रहणम् । अस्य सर्वस्य लोकव्यवहारशब्दोपात्तस्य मिथ्यात्वं परेणोक्तमिति द्रष्टव्यम् । **आरोपितत्वेन मिथ्यात्वमिति** वदताऽऽत्मानात्मनोरितरेतराध्यासेऽपि देहेन्द्रियादिरूपप्रपञ्चस्य स्वरूपेणैवारोपितत्वाच्छ्रुत्यादिबाधितत्वाच्च मिथ्यात्वमेव । आत्मनस्तु संसृष्टतयैवारोपितत्वाच्छ्रुत्याद्यबाधाच्च न मिथ्यात्वमिति पराभिप्रायो ध्वनितो भवति । भाष्यादावित्यादिग्रहणमकुशलत्वरूपोत्तरदूषणसौकर्यार्थम् ॥ **लक्षणाभावेनेति** ॥ भाष्यकृत्प्रणीतत्वेनैव भाष्यत्वे चातिप्रसङ्ग इति भावः । सागरादिवर्णनस्यापि भाष्यत्वव्यावृत्तये सूत्रेत्यर्थो विशेषितः । वार्तिकव्यावृत्त्यर्थं सूत्रानुकारिभिरिति । वार्तिके सूत्रप्रतिकूलस्यापि वर्णनसम्भवादिति भावः । वृत्तिव्यावृत्तये स्वपदानीति । बन्धमिथ्यात्वस्य मा भूत्सूत्रश्रौतार्थत्वम् । माच भूत्साक्षादार्थिकार्थत्वम् । तथाऽपि श्रौतवदार्थिकस्यापि सूत्रार्थत्वाच्छ्रौतार्थापत्तिलब्धप्रयोजनादेरिवार्थिकप्रयोजनाद्यर्थापत्तिलब्धबन्धमिथ्यात्वस्यापि सूत्रार्थत्वात्तत्प्रतिपादकस्य भाष्यत्वमुपपन्नमेवेति वक्तुं सूत्रार्थद्वैविध्यमाह ॥ **द्विविध इति** ॥ श्रौतार्थिकार्थयोरन्यादृशत्वे न प्रयोजनाद्याक्षेपकत्वमित्यतः प्रकृतोपयोगितया विशिष्य श्रौतार्थिकार्थस्वरूपं दर्शयति ॥ **तत्रेत्यादिना** ॥ साकाङ्क्षतया सूत्रानर्थक्यं तावन्निरस्यति ॥ **तत्रेति** ॥ सर्वज्ञबादरायणप्रणीतसूत्रानर्थक्यानुपपत्तेरध्याहारे-

णापि सूत्रं योज्यमित्याह ॥ **अध्याहर्तव्यमिति** ॥ तदपि योग्यमेवाध्याहर्तव्यमित्याह ॥ **कर्तव्येतीति** ॥ योग्यत्वमुपपादयति ॥ **शास्त्रेति** ॥ पुरुषप्रवृत्तिरेव मा भूयादित्यत आह ॥ **अनुवादत्वेति** ॥ निरर्थकसिद्धबोधकवाक्यमनुवादशब्दार्थ इति ज्ञेयम् । ननु कर्तव्यपदं नाध्याहारयोग्यम् । प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोरन्यतरस्यापि कृतिसाध्यत्वाभावादित्यत आनर्थक्यपरिहाराय प्रवृत्तयेऽध्याहर्तव्यकर्तव्यपदस्य लक्षितविचारेणान्वयमाह ॥ **जिज्ञासापदं चेति** ॥ वाच्यार्थानुपपत्तिशामकस्य विचारस्य लक्ष्यत्वमुपपन्नमित्याह ॥ **अनुष्ठानेति** ॥ शक्यसम्बन्धकथनमन्तर्णीतार्थस्येति व्याख्यातमेतत् । एवमप्यधिकारिफलसाकाङ्क्षत्वेनानर्थक्यमित्यत आह ॥ **साधनेति** ॥ अथशब्दाद्विशिष्टाधिकारिप्रतिपत्तिः । इच्छाविषयत्वाद्ब्रह्मज्ञानस्य फलत्वं चेत्यर्थः ॥ **श्रौतार्थः संपद्यत इति** ॥ यद्यप्यथशब्दस्य किञ्चिन्निरूपितानन्तर्यमात्रमर्थस्तथाऽपि सामान्यशब्दस्य नियतविशेषपरत्वव्युत्पत्तेः श्रुत्यनुभवसिद्धः प्रतियोगिविशेषोऽपि शब्दार्थ इत्यर्थः । ज्ञानस्य सुखदुःखाभावेतरत्वादफलत्वमित्यत आह ॥ **अर्थादिति** ॥ अयमाशयः ॥ ब्रह्मज्ञानाय विचारकर्तव्यतायास्तावत्सूत्रात्प्रतीयमानत्वाद् ब्रह्मज्ञानस्य च स्वरूपेण पुमर्थत्वानुपपत्तेः पुमर्थसाधनत्वेनैव पुमर्थत्वे वक्तव्ये तत्फलविशेषाकाङ्क्षायां स्वर्गादेर्विरक्तस्यैवात्राधिकारात् दृष्टसम्भवेऽदृष्टकल्पनायोगाच्चाथशब्दोपात्ताधिकारिविशेषणमोक्षस्य ज्ञानफलत्वेन सम्बन्धो यथा स्वर्गकामो यजेतेत्यत्र स्वर्गस्य । न चाधिकारिविशेषणतामात्रस्य फलताप्रयोजकत्वे जीवनगृहदाहादेरपि फलताप्रसङ्गात्काम्यत्वेनापि विशेषणे परस्त्रीकामः प्रायश्चित्तं कुर्यादिति काम्यमानयोषित्पिण्डस्यापि फलताप्रसङ्गात्कथमेतदिति वाच्यम् । अधिकारिविशेषणत्वेन प्रकृतमोक्षस्यानिन्दितकाम्यत्वेन फलत्वोपपत्तेरिति । विचारस्य विषयसाकाङ्क्षत्वात्तस्य चानिर्देशात्साकाङ्क्षत्वमित्यत आह ॥ **सन्निधानाच्चेति** ॥ इति च सिध्यतीति सम्बन्धः । योग्यतया स्मृतिरत्र सन्निधानम् । तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुत्या वेदान्तानां ब्रह्मप्रमितियोग्यतया नावेदविदिति श्रुत्या तदितरमानानां तदयोग्यत्वेन चावगतत्वात् । श्रोतव्यादिवाक्यसन्निधौ वेदानां पाठात्तस्य तानि सन्निहितानीति तत्मूलसूत्रस्यापि तानि सन्निहितानीति वाऽर्थः । यदर्थमर्थद्वयवर्णनं तदाह ॥ **एवं चेति** ॥ तत्र प्रयोजनोपपादकत्वमुपपादयति ॥

**स०** — अत्र भाष्यकृता सूत्रार्थमुपवर्ण्य मतान्तरनिरासः कृतः । स न युक्तः प्रयोजनाभावादप्रसक्तत्वादभाष्यत्वप्रसङ्गाच्चेत्यत आह ॥ **एवं तावदिति** ॥ अर्थदोषाभिधानस्यारम्भदोषोपयुक्तत्वात् । तत्प्राधान्याभिप्रायं भाष्यग्रहणम् । किं तन्मतं यद्दूष्यत इत्यत आह ॥ **मायावादिनेति** ॥ किं तल्लक्षणं यदभावोत्रेत्यत आह ॥ **सूत्रेति** ॥ सागरादिवर्णनस्य भाष्यत्वनिरासाय सूत्रेति विशेषणम् । वार्तिकव्यावृत्त्यर्थं सूत्रानुकारिभिरित्युक्तम् । वार्तिके सूत्रप्रतिकूलवर्णनस्यापि सद्भावात् ततो व्यावृत्तिः । वृत्तिं वारयति

स्वपदानीति । पूर्ववादी सौत्रश्रौतार्थासंस्पर्शित्वेऽपि अर्थार्थसंस्पर्शित्वेन भाष्यत्वं वक्तुमाह ॥ **अत्राहेत्यादिना** ॥ सूत्रस्याबोधकत्वेनानर्थकतां तावत्परिहरति ॥ **द्विविधो हीति** ॥ **तत्रेति** ॥ अर्थद्वैविध्ये सतीत्यर्थः । कर्तव्यपदाध्याहारेप्यानर्थक्यं तदवस्थम् । प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वासम्भवादित्याशङ्क्य जिज्ञासापदेन विचारं लक्षयित्वा तस्य कर्तव्यतोच्यत इत्याह ॥ **जिज्ञासेति** ॥ एवमपि अधिकारिफलसाकाङ्क्षत्वेनानर्थक्यमाशङ्क्याह ॥ **इति स्थित इति** ॥ अथशब्दाद्विशिष्टाधिकारिप्रतिपत्तिरिच्छाविषयत्वात् ब्रह्मज्ञानस्य फलत्वं चेत्यर्थः । ज्ञानस्य सुखदुःखावाप्तिनिवृत्त्यन्यतरत्वाभावादफलत्वमाशङ्क्य अर्थार्थमाह ॥ **अर्थादिति** ॥ विचारस्य विषयसाकाङ्क्षत्वात् तस्य चानिर्दिष्टत्वात् साकाङ्क्षत्वशङ्कां निरस्यति ॥ **सन्निधानादिति** ॥ वेदान्तवाक्यविचार इति च सिद्ध्यतीति सम्बन्धः । प्रत्यक्षाद्यगोचरत्वेनोपनिषन्मात्रप्रतिपाद्यत्वात् तद्विषयो विचारः सन्निधानमित्यर्थः । सूत्रार्थवर्णनमुपसंहरति ॥ **इतीति** ॥ यदर्थमर्थद्वयसमर्थनं तदाह ॥ **एवं चेति** ॥

प०— श्रोतृबुद्धिसौकर्यायाह ॥ **एवमिति** ॥ **तत्परिशुद्धय इति** ॥ परकृतापव्याख्यामापातरमणीयां पश्यतां श्रोतॄणां स्वकृतव्याख्यानं न मनसि स्थिरं भवतीति तत्स्थैर्यसिद्धय इत्यर्थः । यद्वा सौत्रातःशब्दस्य मोक्षहेतुप्रसादजनकज्ञानकारणत्वादित्यर्थ इति जिज्ञासोत्थज्ञानजादित्यादिनोक्तमयुक्तम् । बन्धस्य मिथ्यात्वेन ज्ञानादेव बन्धनिवृत्तिरूपमोक्षसम्भवेन प्रसादनैरपेक्ष्यादित्यतस्तद्व्याख्यास्थैर्यायेत्यर्थः ॥ **दोषेति** ॥ रागद्वेषादीत्यर्थः ॥ **क्रियेति** ॥ विहितनिषिद्धादिक्रिया कर्त्रादिकारकतज्जन्यैहिकामुष्मिकफलरूपस्येत्यर्थः ॥ **अत्राहेति** ॥ सङ्गतित्रयोक्त्याऽध्यासभाष्यस्योपपन्नतामाहेत्यर्थः ॥ **अनुवादत्वेति** ॥ भवतीत्युक्तौ सिद्धार्थनिर्देशरूपतयाऽनुवादत्वं स्यादिति भावः ॥ **शास्त्र इति** ॥ न्यायानुसन्धानरूपविचारस्य कार्यत्वे हि न्यायनिबन्धनरूपशास्त्रे पुरुषप्रवृत्तिर्भवति नान्यथेति भावः ॥ **अन्तर्णीतस्येति** ॥ यथा चैतत्तथोक्तं प्राक् ॥ **साधनेति** ॥ नित्यानित्यवस्तुविवेकविषयवैराग्यशमदमादिमुमुक्षारूपसाधनचतुष्टयेत्यर्थः ॥ **सन्निधानाच्चेति** ॥ निर्णयार्थकत्वेन बुद्धौ सान्निध्यादित्यर्थः ॥ **प्रयोजनादेरुपपादकं बन्धमिथ्यात्वमितीति** ॥ अनेन प्रयोजनविषयोपपादकत्वं बन्धमिथ्यात्वस्योक्तम् ।

या०— स्वभाष्यादौ स्वभाष्यस्यादौ । लक्षणावगममन्तरेण तदभावावगमानुपपत्तेर्लक्षणमाह ॥ **सूत्रार्थ इति** ॥ यत्रार्थो वर्ण्यते तद्भाष्यमित्युक्ते सागरादिवर्णनस्यापि भाष्यत्वं स्यात् । तद्व्यावृत्त्यर्थं सूत्रेति विशेषणम् । पदवृत्तिं व्यावर्तयति ॥ **वाक्यैरिति** ॥ वार्तिकव्यावृत्त्यर्थमाह ॥ **सूत्रानुकारिभिरिति** ॥ वार्तिके सूत्रप्रतिकूलवर्णनस्यापि सम्भवात्तद्व्यावृत्तिरित्यर्थः । वृत्तिं व्यावर्तयति ॥ **स्वपदानि**

**चेति** ॥ पूर्ववदसौत्रश्रौतार्थासंस्पर्शित्वेप्यार्थार्थसंस्पर्शित्वेन भाष्यत्वं वक्तुमाह ॥ **द्विविधो हि सूत्रार्थ इत्यादिना** ॥ **अनुवादत्वे चेति** ॥ भवतीत्यध्याहारेऽनुवादत्वं स्यात्तत्परिहारायेत्यर्थः । प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वासम्भवादाह ॥ **जिज्ञासापदं चेति** ॥ एवमप्यधिकारिफलसाकाङ्क्षत्वेन अबोधकत्वमाशङ्क्याह ॥ **साधनचतुष्टयेति** ॥ अथशब्दाद्विशिष्टाधिकारिप्रतिपत्तिः । इच्छाविषयत्वाद्ब्रह्मज्ञानफलत्वं चेत्यर्थः । ज्ञानस्य सुखदुःखावाप्तिनिवृत्त्यन्यतरत्वाभावादफलत्वमाशङ्क्यार्थमाह । **अर्थादिति** ॥ ब्रह्मज्ञानाय विचारे विहिते ब्रह्मज्ञानस्य स्वतोऽपुरुषार्थत्वेनान्यत्तत्साध्यफलं वक्तव्यम् । तत्किमित्याकाङ्क्षायामथशब्दवाच्यानन्तर्यावधित्वेन यद्विवक्षितं मुमुक्षुत्वरूपमधिकारिविशेषणं तत्प्रविष्टो मोक्षः फलतया सम्बध्यते । कुतः । अर्थात् । अन्यथाऽनुपपत्तेरित्यर्थः । विचारस्य विषयसाकाङ्क्षत्व तस्य चानिर्दिष्टत्वात्साकाङ्क्षत्वशङ्कां निवारयति ॥ **सन्निधानाच्चेति** ॥ वेदान्तवाक्यविचार इति च सिद्ध्यतीति सम्बन्धः । प्रत्यक्षाद्यगोचरत्वेनोपनिषन्मात्रप्रतिपाद्यत्वात्तद्विषयो विचारः साधनमित्यर्थः । सूत्रार्थवर्णनमुपसंहरति ॥ **इति श्रुत्यर्थाभ्यामिति** ॥ यदर्थमर्थद्वयं समर्थितं तदाह ॥ **एवं चेति** ॥ प्रयोजनादेरित्यत्रादिपदेन विषयो ग्राह्यः ।

**श्री०**— श्रौतः श्रुत्या पदमहिम्ना लब्ध इत्यर्थः ॥ **अनुष्ठानयोग्यस्येति** ॥ ज्ञानेच्छयोरविधेयत्वेन पुरुषानुष्ठानयोग्यत्वाभावादिति भावः ॥ **अर्थादिति** ॥ ब्रह्मज्ञानस्य मोक्षसाधनत्वमार्थिकमित्यर्थः ॥ **सन्निधानादिति** ॥ विचार्यत्वेन बुद्धिसन्निहितत्वादित्यर्थः ।

**च०**— तत्परिशुद्धये अन्यदीयव्याख्याधर्मिकाप्रामाण्यप्रकारकप्रतिसंहितिपूर्वकात्मीयव्याकृतिधर्मिकप्रामाण्यप्रकारकावधृतिसंपत्त्यै । स्वभाष्यादौ स्वभाष्योपक्रमे ॥ **अभाष्यत्वप्रसङ्गादिति** ॥ भाष्यलक्षणलक्षितत्वाभावप्रसङ्गादित्यर्थः । तल्लक्षणलक्षितत्वाभावप्रतिपत्त्यौपयिकतल्लक्षणप्रतिपत्तिजननाय तदभिधत्त ॥ **सूत्रार्थ इति** ॥ यत्रेति सप्तम्या पदान्वयिनी घटकतोच्यते । सूत्रानुकारिभिः सूत्रघटकपदानुपूर्वीसदृशानुपूर्वीकैः इदं च सावधारणं सत्तद्धटकपदानुपूर्वीविरुद्धानुपूर्वीकपदाघटितत्वं यत्पदार्थे प्रत्याययति । इत्थं च तदानुपूर्वीविरुद्धानुपूर्वीक पदाघटितस्वघटकतादृशानुपूर्वीकपदकरणकार्थकर्मकवर्णनक्रियाकत्वे सति स्वघटकपदशक्तितात्पर्यप्रकाशकपदघटितत्वमिति पर्यवसितम् । वार्तिकेतिप्रसङ्गव्युदसनायाद्यदलोपादनम् । तत्र सूत्रानुकूलवर्णनवत्प्रतिकूलवर्णनस्यापि सत्वेन तन्निरासः । सूत्रार्थनिरूपिकायां वृत्तावतिप्रसङ्गविधूननायोत्तरदलोपादानम् । तथाच सागरादिवर्णनक्रियायाः सूत्रानुकारिपदकरणकत्वाभावेनैव तद्वर्णकग्रन्थेऽतिप्रसङ्गाप्रसक्त्यार्थांशे सूत्रप्रतिपाद्यस्वांशनिवेशः स्वरूपसंकीर्तनायैवेति ध्येयम् ।

सूत्रघटकपदसमभिव्याहाररूपाकाङ्क्षाज्ञानजनितान्वयधीविषयतापन्नाप्रतिपादकत्वेऽपि तादृशार्थान्वयानुप-पत्तिप्रतिसन्धानाधीनोदीच्यबोधविषयीभूतार्थप्रत्यायकतया भाष्यता सङ्गच्छत इत्याशयेनाह ॥ **द्विविधो हि सूत्रार्थ इत्यादिना ॥**

सु०— **ब्रह्मज्ञानं हि सूत्रितमनर्थहेतुनिबर्हणम् । अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वं भोक्तृत्वं च । तद्यदि वस्तुकृतं स्यान्न ज्ञानेन निबर्हणीयम् । यतो ज्ञानमज्ञानस्यैव निवर्तकम् । तद्यदि कर्तृत्वं भोक्तृत्वमज्ञानहेतुकं स्यात्ततो ब्रह्मज्ञानमनर्थहेतुनिबर्हणमुच्यमानमुपपद्येत । तेन सूत्रकारेणैव ब्रह्मज्ञानमनर्थहेतुनिबर्हणं सूत्रयताऽविद्याहेतुकं कर्तृत्वं भोक्तृत्वं प्रदर्शितं भवति । विचारविषयतया च ब्रह्म सूत्रितम् । आत्मा च ब्रह्म । तस्य चाहं कर्ता भोक्तेति प्रतीयमानं रूपं यदि पारमार्थिकं स्यात्तदाऽसन्दिग्धतया विचारविषयता न स्यात् । तद्यदि कर्तृत्वादिरूपमविद्यारोपितम् । पारमार्थिकं तु निष्क्रियं निष्कलं ब्रह्मरूपं स्यात्ततोऽस्य सन्दिग्धतया विषयतोच्यमानोपपद्यते । तेनात्मस्वरूपं विचारविषयं सूत्रयता सूत्रकृतैव कर्तृत्वाद्य-तदाकारस्य मिथ्यात्वं सूत्रितं भवति । कर्तृत्वादेर्बन्धस्य मिथ्यात्वं च यावता विना नोपपद्यते तदपि सूत्रितमेव । न चैवमनेकार्थतादोषः । श्रौतार्थिकत्वभेदस्योक्तत्वात्सूत्रत्वाच्च । अलङ्कार एव ह्ययं सूत्रस्य यदनेकार्थत्वम् । यथाऽऽहुः । अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुरिति । विश्वतोमुखमित्यनेकार्थतामाह । अन्यत्रापि । लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिण इति । यावांत्सूचितः स सर्वोऽप्येषामर्थ इति सूचितार्थानि । अतो यः कश्चिदर्थः शब्दसामर्थ्येनार्थ-वशाद्वा प्रतीयते स सर्वस्तदर्थ एवेति भवत्ययमर्थकलापस्तन्महिमाधिगतः । तदेवं विध्यपेक्षि-तेष्वधिकारिविषयप्रयोजनानुबन्धेषु सूत्राक्षिप्तप्रयोजनविषययोरुपपादकं बन्धमिथ्यात्वं प्रतिपाद-यद्युष्मदस्मत्प्रत्ययगोचरयोरित्यादिभाष्यं सूत्रार्थसङ्गतमेव ।**

वा०— **ब्रह्मज्ञानं हीति** । अर्थाद् ब्रह्मज्ञानस्य मोक्षसाधनत्वसिद्धेः प्रागुक्तत्वादिति भावः । नन्वनर्थो नरकपातादिलक्षणोऽन्य एव शरीरादिप्रतिभासस्य च मिथ्यात्वं साध्यत इति किं केन सङ्गत-मित्यतः शरीराद्यभिमानपुरःसरनरकपातादिजन्यदुःखप्रमातृताया एवानर्थत्वान्नासङ्गतिरित्याह ॥ **अनर्थ-श्चेति** ॥ निवर्ततां परमार्थ एव बन्धो ब्रह्मज्ञानेनेत्याशङ्क्य दृष्टान्तसम्मत्योत्तरयति ॥ **तद्यदीति** ॥ वस्तुना परमार्थसता निष्पन्नं वस्तुकृतं यथा वस्तु तथा वा कृतं वस्तुकृतमित्यर्थः । विषयाश्रयोभय-गतानां सत्यानां ज्ञानेन निवृत्तेर्वक्ष्यमाणरीत्याऽसम्भवादिति भावः । ननु ज्ञानबन्धनिवृत्त्योः श्रुतिसिद्धसाध्य-

साधनभावेऽनुपपत्त्यभावेन न बन्धस्याविद्यात्मतासिद्धिरिति चेन्न । आग्नेयादिष्वपूर्वकल्पनावच्छ्रुतोपपत्तये-ऽविद्यात्मकत्वस्यावश्यकल्पनीयत्वात् । न च यत्कालान्तरभावि न तत्कारणमिति व्याप्त्यन्यथाऽनुपपत्त्या तत्र तथा कल्पनमिति वाच्यम् । प्रकृतेऽपि तादृशव्याप्तेः सम्भवादित्याशयेनाह ॥ **यत इति** ॥ यद्वा तद्यदीत्युक्ततर्के स्वाश्रयगतेत्यादिपूर्वोक्तो भावो न वर्णनीयः । यथाश्रुते चाप्रयोजकताशङ्कायां ज्ञानमज्ञान-स्यैव निवर्तकमिति व्याप्तिर्बन्धस्याज्ञानहेतुकत्वमनादाय न पर्यवस्यन्ती वस्तुकृतत्वमुन्मूलयतीति नाप्रयोजक-तेति भावेनाह यत इतीति योज्यम् । एवं च सूत्रस्यैव बन्धस्याविद्यात्मकत्वे व्यापारः सिद्ध इत्याह ॥ **तेनेति** ॥ एवं प्रयोजनोपपादकतां बन्धमिथ्यात्वस्योपपाद्य विषयोपपादकतां चोपपादयति ॥ **विचारेति** ॥ नन्वस्तु ब्रह्मणो विचारविषयत्वं तथाऽपि मन्मत इव त्वन्मतेऽपि बन्धमिथ्यात्वाभावेऽपि ब्रह्मणः सन्दिग्धतया विचारविषयत्वोपपत्तेर्न तदर्थं बन्धमिथ्यात्वं वर्णनीयमित्यतो जीवस्य सन्दिग्धत्व एव ब्रह्मणः सन्दिग्धत्वं न त्वन्यथेति भावेन तदुपपादनाय जीवब्रह्माभेदरूपं मन्मतवैलक्षण्यं स्वमतस्याह ॥ **आत्मा चेति** ॥ एवं ब्रह्मण आत्मत्वं सिद्धवत्कृत्य तद्विषयत्वस्य बन्धमिथ्यात्वं विनाऽनुपपत्तिप्रकारं दर्शयति ॥ **तस्य चेत्या-दिना** ॥ पूर्ववत्सूत्रस्यैव विषयोपपादकबन्धमिथ्यात्वे व्यापारं दर्शयति ॥ **तेनेति** ॥ नन्वस्तु तर्हि लोकव्यव-हार इत्यन्तं भाष्यम् । सूत्राक्षिप्तबन्धमिथ्यात्वोपपादकत्वात् । कोऽयमध्यासो नामेत्यादेस्त्वतथात्वादभाष्यत्व-मेवेत्यतः कोऽयमित्यादेर्लक्षणपरस्य तत्स्वरूपप्रतिपादकत्वं कथं पुनः प्रत्यगात्मन्यविषयेऽध्यास इत्यादेरध्यास-सम्भावनापरत्वं तमेतमविद्याख्यमित्यादेश्चाध्याससद्भावनिर्णायकप्रमाणोपपादकत्वमिति सर्वस्याप्यध्यासोप-पादकतया बन्धमिथ्यात्वएव व्यापारान्नाभाष्यत्वमित्याह ॥ **कर्तृत्वादेरिति** ॥ ननु विषयप्रयोजनब्रह्मस्वरूप-प्रमाणयुक्तिसाधनफलविचाराणामध्यासलक्षणसम्भावनाप्रमाणानां च प्रतिपादने बह्वर्थप्रतिपादनाद्वाक्यभेदः स्यादिति शङ्कते ॥ **न चेति** ॥ अत्रानेकशब्दो बह्वर्थः । केषाञ्चिच्छ्रौतत्वेन केषाञ्चिदार्थिकत्वेन क्रोडीकारान्न बह्वर्थता । नाप्यनेकार्थता प्रकारान्तरेण भेदोक्तौ प्रधानानेकत्वेनानेकार्थत्वप्राप्तावपि श्रौतार्थि-कत्वभेदोक्तौ गुणप्रधानानेकत्वेन नानेकार्थताप्राप्तिः । श्रुत्यर्थाभ्यां मिलिताभ्यां तात्पर्यविषयीभूतैकार्थसम-र्पणादित्याशयेनाह ॥ **श्रौतेति** ॥ अनेकार्थत्वे सम्मतिमाह ॥ **यथेति** ॥ संमतित्वं घटयति ॥ **विश्वत इति** ॥ सूचितस्यापि सूत्रार्थत्वे सूत्राणामनेकार्थत्वे च संमतिमाह ॥ **अन्यत्रापीति** ॥ लघून्यसन्दिग्धा-र्थानि । संशायकं हि नानार्थस्फोरकत्वेन । गुरुवाक्ये पदाल्पत्वेन स्वल्पत्वं लघुत्वम् । पदे स्वल्पाक्षरत्वेन स्वल्पाक्षरत्वमिति न पौनरुक्त्यमिति वा । ननु सूचितार्थत्वेन मुख्यार्थत्वस्याप्यावश्यकत्वाद्बह्वर्थता-सिद्धिरस्तु सूचितस्य सर्वस्यापि तदर्थतासिद्धिस्तु केनेत्यत आह ॥ **यावानिति** ॥ यद्वाऽनेकार्थत्वे पूर्वा सम्मतिः । सूचितस्य तदर्थत्वे द्वितीया । अत एव तत्र तत्र तत्पदमेव व्याख्यातमिति द्रष्टव्यम् । एवं बाधकपरिहारेण लब्धमाह ॥ **अत इति** ॥ परमफलमाह ॥ **तदेतमिति** ॥

**स०**— ननु ज्ञानस्यैव विचारफलत्वम् । अनर्थस्य मिथ्यात्वेन विनानुपपत्त्यभावात् न प्रयोजनं मिथ्यात्वाक्षेपकमित्याशङ्कयाह ॥ **ब्रह्मज्ञानं हीति** ॥ ब्रह्मज्ञानोद्देशेन विचारकर्तव्यता विधीयमाना ब्रह्मज्ञानस्यानर्थनिवृत्तिफलतामाक्षिपति । स्वरूपेण तस्यापुरुषार्थत्वादित्यर्थः । अथ नरकपातादि-लक्षणस्यानर्थस्य ज्ञाननिवर्त्यत्वाभावात् । शरीराद्यभिमानपुरःसरं नरकपातादिजनितदुःखप्रमातृतैवानर्थ इत्याह ॥ **अनर्थश्चेति** ॥ निवर्ततां परमार्थ एवानर्थो किं ब्रह्मज्ञानेनेत्यत आह ॥ **तद्यदीति** ॥ वस्तुना परमार्थसता निष्पन्नं वस्तुकृतम् । वस्तु यथा तथा वा कृतमित्यर्थः । सत्यस्य ज्ञानानिवर्त्यत्वे हेतुमाह ॥ **यत इति** ॥ अथवा ननु न दृष्टसामर्थ्याद् ज्ञानाद्बन्धनिवृत्तिर्येन बन्धस्याविद्यात्मकत्व वर्ण्येत । किं त्वागम एव ज्ञानाद्बन्धनिवृत्तिं श्रावयतीत्यत आह ॥ **तद्यदीति** ॥ ननु श्रुत्युपपत्त्यर्थमेव बन्धस्याप्यविद्यात्मकत्वं वर्णनीयम् । यथाग्नेयादीनां षण्णामपि यागानामपूर्वकरणभावे श्रुतेऽपि कालान्तरभाविप्रधानापूर्व-साधनत्वोपपत्त्यर्थं क्रमभावियागजन्यानि मध्यवर्तीन्यवान्तरापूर्वाणि कल्प्यन्ते । यथा वा श्रुतस्यैव यागस्य स्वर्गसाधनत्वस्योपपत्तयेऽपूर्वं कल्प्यते तद्वत् । क्षणिककर्मणां कालान्तरभाविफलसाधनत्वा-भावव्याप्तिनियमाल्लोके वेदेऽपि स्वर्गापूर्वसिद्ध्यै यदि मध्येऽपूर्वाणि कल्प्यन्ते श्रुतोपपत्तयइति यदि तर्हीहापि व्याप्तिरस्तीत्याह ॥ **यतो ज्ञानमिति** ॥ अत्राज्ञानपदेन तत्कार्यमुपलक्षणीयम् । अतो बन्धस्याविद्या-त्मकत्वे सूत्रस्यैव व्यापारात् सूत्रार्थविचारकर्तव्यतोपपत्त्यर्थं प्रयोजनसाधनायाध्यासो वर्णनीय इत्याह ॥ **तदित्यादिना** ॥ विषयोक्त्यापि मिथ्यात्वमाक्षिप्यते इत्याह ॥ **विचारेति** ॥ ब्रह्मणो विचारविषय-त्वेपि कुतो बन्धमिथ्यात्वाक्षेपकत्वमित्यत आह ॥ **आत्मेति** ॥ प्रत्यग्ब्रह्मणोरेकत्वं विषय इति भावः । ननु यदि सूत्रे जीवात्मनो विषयतयोक्तिः स्यात् तदा सा तस्य संदिग्धतासिद्धये कर्तृत्वादिरूपबन्ध-मिथ्यात्वं कथञ्चिदपेक्षेत । ब्रह्मणो विचारविषयत्वे तु न बन्धमिथ्यात्वसिद्धिः । न ह्यन्यस्य संदिग्धतयान्यस्य विषयतोपपद्यते अतिप्रसङ्गात् । तत्कथं मिथ्यात्वाक्षेप इत्यतो वाऽऽह ॥ **आत्मा चेति** ॥ ऐक्यस्याध्यासा-क्षेपकत्वमुपपादयति ॥ **तस्य चेत्यादिना** ॥ अतः सूत्रस्यैव बन्धस्याविद्यात्मकत्वे व्यापारः सूत्रार्थविचार-कर्तव्यतोपपत्त्यर्थः । विषयसाधनायाध्यासो वर्णनीय इत्याह ॥ **तेनेति** ॥ ननु विषयप्रयोजनयोर्बन्ध-मिथ्यात्वानाक्षेपकत्वाद्धि ज्ञाननिवर्त्यत्वस्याज्ञानात्मकत्वानाक्षेपकत्वात् यथाक्रममध्यासमिथ्यात्वाभिधानम-सङ्गतमित्यत आह ॥ **कर्तृत्वादेरिति** ॥ अनध्यस्तस्य मिथ्यात्वायोगात् सत्यस्य निवृत्त्यनुपपत्तेश्चेत्यर्थः ॥ **न चेत्यादि** ॥ प्रधानानेकत्वे वाक्यभेदः न गुणानेकत्व इत्यर्थः । फलितमर्थार्थस्पर्शित्वेन नाभाष्यत्व-मित्याह ॥ **तदेवमिति** ॥

**प०**— तत्र प्रयोजनोपपादकत्वं ब्रह्मज्ञानं हीत्यादिना विव्रियते ॥ प्रमातृताप्रमुखं प्रमातृप्रमेय-प्रमाणरूपम् ॥ **अज्ञानहेतुकमिति** ॥ अज्ञानं साक्षाज्ज्ञाननिवर्त्यं तत्कार्यं तु तन्निवृत्तिद्वारा निवर्त्यम् ।

प्रमात्रादि च नाज्ञानरूपमिति तद्धेतुकमेव वाच्यम् । तथात्व एव हि तदुपादानाज्ञाननिवृत्तिद्वारा निवृत्तिः संभवतीति भावः । विषयोपपादकत्वं बन्धमिथ्यात्वस्याह ॥ **विचारविषयतया चेति** ॥ **ब्रह्मसूत्रितमिति** ॥ वेदान्तार्थस्यैव ब्रह्मत्वाद्वेदान्तविचारः कार्य इत्युक्तावपि विचारविषयतया ब्रह्मणः प्राप्तत्वादिति भावः । वाचस्पत्युक्तवचनं चाह ॥ **लघूनीति** । एवं वा एवं वेति नानाकोटिकतयोक्तिहीनानीत्यर्थः । तथोक्तेर्गुरुत्वादिति कल्पतरूक्तोऽर्थः ॥ **तदेवंविध्यपेक्षितेष्विति** । जिज्ञासाविध्यपेक्षितेष्वित्यर्थः ॥ **अधिकारीति** । अधिकार्यादिरूपानुबन्धेष्वित्यर्थः ॥

**या०**— ननु कथं प्रयोजनादेरुपपादकं बन्धमिथ्यात्वमित्यपेक्षायां तस्य प्रयोजनोपपादकत्वरूप प्रकारं तावद्दर्शयति ॥ **ब्रह्मज्ञानं हीति** । विचारफलतयोच्यमानं ब्रह्मज्ञानं स्वस्यापुरुषार्थत्वादनर्थनिवृत्तिफलतामाक्षिपतीत्यर्थः । नरकपातादिलक्षणस्यानर्थस्य ज्ञाननिवर्त्यत्वाभावात् । शरीराद्यभिमानपुरःसरं नरकपातादिजनितदुःखप्रमातृत्वैवानर्थ इत्याह ॥ **अनर्थश्चेति** ॥ **वस्तुकृतमिति** ॥ वस्तु परमार्थसद्यथा तथा कृतमित्यर्थः । परमार्थभूतमिति यावत् । विषयोपपादकताप्रकारं दर्शयति ॥ **विचारविषयतया चेति** ॥ ब्रह्मणो विचारविषयत्वे कुतो मिथ्यात्वाक्षेप इत्यत आह॥ **आत्मेति** ॥ नन्वेवमस्तु कर्तृत्वादेर्बन्धस्य मिथ्यात्वं सूत्रितमिति । तथाऽप्यध्यासस्य सिद्धिहेतुभूतलक्षणसंभावनाप्रमाणादिकमसूत्रितं प्रतिपादयद्भाष्यं कथं नासङ्गतमित्यत आह ॥ **कर्तृत्वादेर्बन्धस्येति** ॥ तथा च तदपि व्यवधानेन विषयाद्युपपादकमिति सूत्राक्षिप्तमेवेति भावः ॥ **सौत्रार्थिकत्वेति** ॥ प्रधानानेकत्वे वाक्यभेदो न गुणानेकत्व इत्यर्थः ॥

**श्री०**— **सूत्रितमर्थात्** । अनर्थः संसारस्तद्धेतुरविद्या । निबर्हणं नाशकम् । मोक्षसाधनमिति यावत् । वस्तुकृतं वास्तवम् ॥ **अज्ञानस्यैवेति** ॥ उपलक्षणमेतत् । तत्कार्यस्य चेत्यपि द्रष्टव्यम् । एवशब्देन सत्यस्य निवर्तकत्वव्यावृत्तिः । तथा च प्रमातृताप्रमुखस्यार्थस्य सत्यत्वे आत्मस्वरूपानुबन्धित्वप्राप्त्या आत्मस्वरूपवज्ज्ञानेन निवृत्तिर्न स्यादित्यर्थः । उच्यमानमर्थादुच्चमानम् । आत्मा जीव एव । तस्य जीवस्य । निष्क्रियनिष्कलब्रह्मस्वरूपस्य जीवस्य । सूत्रितमर्थात् ॥ **न चैवमिति** ॥ बन्धमिथ्यात्वोपयोगिलक्षणसम्भावनाप्रमाणादिप्रतिपादकत्वेऽनेकार्थप्रतिपादकत्वप्राप्त्या न वाक्यभेदप्रसङ्गः । एकवाक्यताया अर्थैक्यनिबन्धनत्वात् अर्थैकत्वादेकंवाक्यमिति वचनादित्यर्थः ॥ **विध्यपेक्षितेष्विति** ॥ जिज्ञासाकर्तव्येति जिज्ञासाविध्यपेक्षितेष्वित्यर्थः ॥ **अनुबन्धेष्विति** ॥ अधिकार्यादिरूपानुबन्धेषु मध्य इत्यर्थः ॥

**च०**— बन्धमिथ्यात्वस्य प्रयोजनोपपादकताभङ्गीं दर्शयति ॥ **ब्रह्मज्ञानं हीति** ॥ निबर्हणं निवर्तकम् ॥ **वस्तुकृतं** परमार्थभूतम् । विषयोपपादकताविधां च तस्य दर्शयति ॥ **विचारेति** ॥ **श्रौतार्थिकेति** ॥ प्रधानभूतार्थनानात्वमेव वाक्यभेदे निबन्धनं गुणीभूतार्थान्तर्भावेन न तत्र नियामकमिति भावः ।

सु०— स्यादेतत् । प्रथमप्रतिपन्नं श्रौतार्थमुल्लङ्घ्य चरमप्रतिपन्नमार्थिकार्थमेवोपपादयन्कथमकुशलो न स्यादिति । अत्रोच्यते । स्यादेतदेवम् । यदि युष्मदस्मदित्यादिभाष्यं प्रथमसूत्राक्षिप्तार्थस्यैवोपपादकं स्यात् । न चैवम् । किं नाम सकलतन्त्राऽर्थोपोद्घातोऽपि प्रयोजनमस्य भाष्यस्य । तथा हि । अस्य शास्त्रस्यैदंपर्यं सुखैकतानसदात्मकूटस्थचैतन्यैकरसता संसारित्वाभिमतस्यात्मनः पारमार्थिकं स्वरूपमिति वेदान्ताः पर्यवस्यन्तीति । तच्चाहं कर्ता सुखी दुःखीति प्रत्यक्षाभिमतेनाबाधितकल्पेनावभासेन विरुध्यते । अतस्तद्विरोधपरिहारार्थं ब्रह्मस्वरूपविपरीतरूपमविद्यानिमित्तमात्मन इति यावन्न प्रतिपाद्यते तावज्जरद्गवादिवाक्यवदनर्थकं प्रतिभाति । अतस्तन्निवृत्त्यर्थमविद्याविलसितमब्रह्मस्वरूपत्वमात्मन इति प्रथममेव प्रेक्षावत्प्रवृत्तये प्रतिपादनीयम् । तदनेन भाष्येणोच्यत इति ।

वा०— मिथ्यात्वसूत्रणमङ्गीकृत्य प्रथमप्रतिपादने हेतुं शङ्कते ॥ **स्यादेतदिति** ॥ विषं भुङ्क्ष्वेत्यादिवाक्यात्प्रतिपन्नस्याप्यनुपादेयत्वादाह ॥ **श्रौतमिति** ॥ श्रुतिप्रतिपिपादयिषितमिति भावः । एकेनोभयोरप्रतिपत्तेः कथं चरमत्वोक्तिरित्यत आह ॥ **आर्थिकेति** ॥ आर्थिकप्रतीतेः पाश्चात्यत्वेन चरमत्वोक्तिर्न तु शब्दादेकं पूर्वं प्रतीत्य पश्चादपरं प्रत्येतीति। येन शब्दस्य विरम्यव्यापारःस्यादिति भावः। प्रयोजनसद्भावात्प्रथमप्रतिपादनमित्याह ॥ **स्यादेतदिति** ॥ प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्य प्रागेव तदुपयोगितयाऽर्थान्तरवर्णनमुपोद्घातः । अध्यासभाष्यस्याध्यासबोधः प्रयोजनम् । तन्त्रोपोद्घातो हेतुरिति प्रयोजनमित्यर्थः । विषयफलसिद्धिहेतोरध्यासस्य कथं तन्त्रशब्दवाच्यशास्त्रोपोद्घातत्वमिति न वाच्यम् । तन्त्रि कुटुम्बधारणइति धातुपाठेऽपि धातूनामनेकार्थत्वेनास्य प्रतिपादनार्थत्वात्तन्त्र्यते प्रतिपाद्यत इति तन्त्रशब्देन प्रतिपाद्यमुच्यते । प्रतिपाद्यार्थसिद्धिहेतुत्वं चाध्यासस्योपपन्नमेवेति भावः । ननु ब्रह्मणोऽनादित्वात्स्वप्रकाशत्वाच्च नाध्यासस्य तन्त्रार्थसिद्धिहेतुत्वमपीत्यतस्तन्त्रार्थं तावद्दर्शयति ॥ **अस्येति** ॥ पर्यवस्यतीत्यैदंपर्यमिति सम्बन्धः । अस्मिन्परः शेषभूत इदंपरस्तस्य भाव ऐदंपर्यमिति व्युत्पत्तिः । अस्त्वयं तन्त्रार्थस्तथापि नाध्यासस्य तत्सिद्धिहेतुत्वमुक्तबाधकादित्यत आह ॥ **तच्चेति** ॥ तन्त्रार्थप्रतिपत्तिप्रतिबन्धनिवृत्तावध्यासवर्णनोपयोग इति भावः । वाक्यविरोधात्सुखाद्यवभासस्याप्रामाण्यमित्यत उक्तं प्रत्यक्षेति । ज्येष्ठत्वात्तस्य प्राबल्यमिति भावः । नाहं दुःखीत्यादिविद्वत्प्रत्यक्षविरोधात् । तर्ह्यस्तु तस्याप्रामाण्यमित्यतस्तस्यासम्प्रतिपत्तेरिति भावेनाह ॥ **अबाधितेति** ॥ ननु विषयादेरध्यासाधीनत्वेऽपि तद्वर्णनमनर्थकम् । शास्त्रोत्थबोधादध्यासनिवृत्त्या विषयादिसिद्धेः समारोपितरजतादेरध्यस्ततबोधं विनाऽप्यधिष्ठानसाक्षात्कारान्निवृत्तिरिवेत्यत आह ॥ **अत इति** ॥ लोकावलोकितपदार्थशक्त्यनुसारेण हि पदानामर्थबोधकत्वम् । न च बन्धवैतथ्यबोधं विना

प्रत्यग्ब्रह्मणोरेकत्वयोग्यताऽधिगन्तुं शक्याऽतोऽध्यासवर्णनमुचितमित्याशयः । उपोद्घातत्वसमर्थनमुपसंहरति ॥ **अत इति** ॥

स०— मिथ्यात्वादिसूत्रणमङ्गीकृत्य प्रथमप्रतिपादने को हेतुरिति शङ्कते ॥ **स्यादेतदिति** ॥ शब्दस्य विरम्यव्यापाराभावान्नामुख्याभिप्रायं चरमपदमित्यार्थिकविषयप्रयोजनविवक्षया न प्रथमप्रतिपादनमित्याह ॥ **स्यादेतदिति** ॥ अध्यासबोधः प्रयोजनं तन्त्रोपोद्घातो हेतुरिति प्रयोजनम् ॥ तन्त्र्यते प्रतिपाद्यते इति तन्त्रं ब्रह्मात्मैक्यम् । धातूनामनेकार्थत्वात् । प्रयोजनस्याध्यासहेतुकत्वेपि न विषयस्य तद्धेतुकत्वं ब्रह्मणोऽनादित्वात्स्वप्रकाशत्वाच्चेत्याह ॥ **तथा हीति** ॥ शास्त्रार्थप्रतिपत्तिप्रतिबन्धकनिवृत्त्यर्थमध्यासवर्णनोपयोग इत्यर्थः ॥ **अस्य शास्त्रस्येति** ॥ ऐदंपर्यं हृदयवत्त्वम् । अस्मिन्नर्थे तात्पर्यमिति यावत् । तदेव दर्शयति ॥ **सुखैकतानेत्यादिना** ॥ सुखैकतानत्वं सुखरूपत्वम् । ब्रह्मात्मैकत्वे वेदान्ताः पर्यवस्यन्तीति इदमस्य शास्त्रस्य तात्पर्यमिति भावः । युष्मदस्मदित्यादिग्रन्थस्योपोद्घातार्थत्वमुपसंहरति ॥ **अत इति** ॥

प०— **भाष्यमिति** ॥ परभाष्यमित्यर्थः । ऐदंपर्यमित्यस्य पर्यवस्यन्तीतिवक्ष्यमाणेतिपदेनान्वयः । सूत्रसन्दर्भरूपस्यास्य शास्त्रस्य वेदान्ताखण्डैकरसचैतन्यस्वरूपप्रतिपादनेन पर्यवस्यन्तीत्येतदर्थसमर्थनपरत्वशब्दितमैदंपर्यं इदंपरत्वं तावदस्तीत्यर्थः ॥ **सुखैकतानेति** ॥ सुखैकघनेत्यर्थः ॥ **सदात्मेति** ॥ सद्रूपेत्यर्थः ॥ **तच्चेति** ॥ शास्त्रस्यैदंपर्यमित्यर्थः ॥ **जरद्गवेति** ॥ विस्तृतमेतत्पूर्वपक्षदशायामस्माभिः ।

या०— **श्रौतमर्थमिति** ॥ विषयादिकं वा विचारकर्तव्यत्वं वेत्यर्थः ॥ **आर्थिकार्थमिति** ॥ बन्धमिथ्यात्वादिकमित्यर्थः । तन्त्रार्थः शास्त्रार्थो ब्रह्मात्मैक्यलक्षणः । उपोद्घातो नाम प्रतिपाद्यार्थं बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरवर्णनम् । तन्त्रोपोद्घात इत्येव परग्रन्थपाठः ॥ तत्र तन्त्रमिति तन्त्र्यते प्रतिपाद्यत इति ब्रह्मात्मैक्यमेवोच्यते । धातूनामनेकार्थत्वात्तन्त्रिकुटुम्बधारण इति धातोः प्रतिपादनार्थत्वादिति द्रष्टव्यम् ।

श्री०—**उपपादयन्** ॥ युष्मदस्मदित्यादिना आदिभाष्येणोपपादयन्भाष्यकारः । ऐदम्पर्यमिदम्परत्वम् । अस्मिन्नर्थे तात्पर्यमिति यावत् ॥ **सुखैकतानेति** ॥ केवलसुखरूपेत्यर्थः ॥ **सदात्मेति** ॥ सद्रूपेत्यर्थः । तच्च शास्त्रस्यैदम्पर्यम् ॥ **स्वरूपमितीति** ॥ स्वरूपमित्यत्रेत्यर्थः । जीवब्रह्मैक्ये वेदान्तानां तात्पर्यमिति भावः ॥ **अनर्थकमिति** ॥ प्रत्यक्षविरुद्धार्थप्रतिपादकत्वादित्यर्थः ॥

**च०— प्रथमप्रतिपन्नमिति** । कर्मसाधननिष्ठान्तोयमिति प्राथमिकप्रतीतिविषयमित्यर्थः ॥ **श्रौतार्थं** सूत्रघटकपदशक्तिनिरूपकम् ॥ **उल्लङ्घ्य** अप्रतिपाद्य । आर्थिकार्थमनुपपत्तिप्रतिसन्धानाधीनोदीच्यबोधविषयीभूतबन्धमिथ्यात्वादिकम् । तन्त्रार्थः शास्त्रतात्पर्यगोचरो ब्रह्मात्मैक्यलक्षणः । अभिधास्यमानशास्त्रतात्पर्यविषयीभूतार्थगोचरप्रतिपत्त्यौपयिकार्थान्तरप्रतिपत्त्यनुकूलशब्दोच्चारणादिव्यापार एवोपोद्धातपदेनोच्यते । **ऐदंपर्यम्** एतत्तात्पर्यकत्वम् । **अबाधितकल्पेन** ईषदूनाबाधितेन । ईषदसमाप्तौ कल्पदेश्यदेशीयर इति स्मृतेः ॥

**सु०—तदेतदादिभाष्यस्य सङ्गतित्रयमप्यसङ्गतम् । तथा हि । यत्तावदुक्तं सूत्रितप्रयोजनाक्षिप्तं बन्धमिथ्यात्वमिति । तदसत् । यत्खलु प्रमितमप्यनुपपद्यमानं स्वोपपत्तये यदपेक्षते तत्तदाक्षिपति नान्यत् । यथा जीवतो देवदत्तस्य गृहेऽभावो बहिर्भावं न पुनः शब्दानित्यत्वम् । तत्कस्य हेतोः । यतो गृहेऽभावो बहिर्भावेनैवोपपद्यमानस्तमपेक्षते । एवं च प्रयोजनतयोक्ता मुक्तिर्यदि बन्धमिथ्यात्वमपेक्षेत तदा तदाक्षिपेत् । न चैतदस्तीत्याह ॥ बन्धमिथ्यात्वमिति ॥ एवशब्देनान्यथैवोपपन्नतां सूचयति । कथम् । उक्तमेतत् ज्ञानात्प्रसन्नः परमेश्वर एव बन्धनिवृत्तिं करोतीति । उपपद्यते च सत्यस्यापि प्रभुप्रसादान्निवृत्तिरिति वक्ष्यते ।**

**वा०**—अत्र बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत इत्युत्तरग्रन्थे प्रयोजनोपपादकत्वरूपपरोक्तसङ्गतिनिराकरणमात्रप्रतीत्या सङ्गत्यन्तराननुमतौ सङ्गतित्रितयासम्भवेऽपि सङ्गतिद्वयसम्भवेन भाष्यं न दूषितं स्यात् । तथा च भाष्यं दूषयतीति प्रतिज्ञा वन्ध्या स्यादित्यतो वक्ष्यमाणरीत्याऽनेनैव भाष्येण सङ्गतित्रयस्यापि निरासान्नानुपपत्तिरिति भावेन सामान्यतो भाष्यतात्पर्यमाह ॥ **तदेतदिति** ॥ एकोक्त्यैव न सङ्गतित्रितयनिराकरणं किन्तु वक्ष्यमाणरीत्योक्तिभेदेनेत्यभिप्रेत्य प्रयोजनोपपादकतया सङ्गतेः परेण प्रथमोपन्यासाद्बहुसंविधेयत्वाच्च तन्निरास एवादौ युक्त इति तमेवादौ प्रतिजानीते ॥ **यत्तावदिति** ॥ नन्वत्र मुक्तिरूपप्रयोजनस्य बन्धमिथ्यात्वाक्षेपकत्वं परोक्तमनिराकृत्य तस्य तदपेक्षाभावप्रतिपादनं भाष्यकारीयमसङ्गतम् । न च तस्य तदनाक्षेपकतोपपादनायैव तदनपेक्षोक्तिरिति वाच्यम् । अप्रयोजकत्वात् । न च यद्यदपेक्षते तदेव तदाक्षिपतीति नियमाद्युक्तमपेक्षाभावस्याक्षेपाभावोपपादकत्वमिति वाच्यम् । धनापेक्षिणः पुरुषस्यापि तदाक्षेपकतापत्तेरित्यतः प्रयोजकस्वरूपं निष्कृष्याह ॥ **यत्खल्विति** ॥ अत्र स्वोपपत्तय इति विशेषणं पूर्वोक्तातिप्रसङ्गव्युदासाय । निष्पन्नस्वरूपस्य पुरुषस्य स्वजीवनाद्यर्थं धनापेक्षायामपि स्वस्वरूपोपपत्तये तदनपेक्षणात् । शशविषाणादेरपि स्वस्वरूपोपपत्तये कारणाद्यपेक्षस्य तदाक्षेपकतापत्तेः प्रमितमित्युक्तम् ।

प्रत्यक्षादिप्रमाणसिद्धदिवाभोजनादिमतः पीनत्वस्य स्वोपपत्तयेऽन्यापेक्षाक्षेपकत्वयोरभावान्नास्याः किमप्युदाहरणमित्यतः स्वोपपत्तय इत्युक्त्या लब्धमनुपपद्य-मानस्थलं योगिरोगिभिन्नस्य दिवाऽभुञ्जानस्य प्रमितं पीनत्वादिकमत्रोदाहरणमिति ज्ञापनायानुपपद्यमानमिति विशेषणम् । नन्वेवमप्येवं प्रयोजकनिष्कर्षेण सिद्धे वक्ष्यमाणानुमानेऽप्यप्रयोजकत्वमित्यतो जीवतो देवदत्तस्य गृहाभावस्य बहिर्भावाक्षेपकत्वशब्द-नित्यत्वानाक्षेपकत्वयोरनुभवसिद्धत्वात् तत्र च प्रयोजकान्तराभावादस्याप्यप्रयोजकत्वे तदनुभवसिद्धतदपलापप्रसङ्ग इत्यभिप्रेत्याह ॥ **यथेत्यादिना** ॥ एवं च मुक्तिर्न बन्धमिथ्यात्वाक्षेपिका तदनपेक्षत्वादिति मूलाभिप्रेतानुमानं सिद्धमित्याह ॥ **एवं चेति** ॥ ननु नैव मुक्तिरपेक्षत इत्यत्रैवकारोऽनुपपन्नः । अभावे तारतम्याभावेन व्यावर्त्याभावात् । न च पाक्षिकापेक्षैव व्यावर्त्येति वाच्यम् । तावताऽप्यन्यथोपपत्त्याऽर्थापत्तेर्दुष्टत्वादित्यतोऽर्थापत्तेर्दुष्टत्वेऽपि पाक्षिकापेक्षितार्थप्रतिपादकत्वेन परभाष्यस्य सङ्गतत्वापत्त्या सर्वथा तदसङ्गतिप्रतिपादनाय सर्वथाऽपेक्षाभावस्यैव वक्तव्यतया नानुपपत्तिरित्यभिप्रेत्यापेक्षाभावस्यान्यथोपपत्तिनिबन्धनत्वात्सर्वथा तदभावोक्त्या तदुपपादकेऽवधारणलाभ इत्याह ॥ **एवशब्देनेति** ॥ नन्वन्यथोपपत्तिहेतोरनुक्तत्वान्न प्रतिज्ञामात्रं साधकमित्यतो ज्ञानस्वभावतोऽपि स्यादिति पूर्ववाक्यलब्धं हेतुं सङ्गमयितुं पृच्छति ॥ **कथमिति** ॥ एवं च ज्ञानपक्षे प्राप्ता ज्ञानेन सत्यस्य निवृत्तेरदर्शनेनादृष्टकल्पनाप्रसङ्गात्सत्यत्वे निवृत्त्यनुपपत्तिरूपानुपपत्तिः न प्रसादस्यान्तर्निवेशोऽपि प्रसरति । यथादृष्ट्याप्रसन्नःसन्निति वक्ष्यमाणयुक्तिबलादित्यभिप्रेत्याह ॥ **उपपद्यत इति** ॥ अनेन बन्धमिथ्यात्ववन्नास्यानुपपादकत्वमित्यपि सूचितं भवति । एवं च साक्षाज्ज्ञानाद्बन्धनिवृत्तेरसूत्रितत्वात् सूत्रितायाश्चान्यथो-पपन्नत्वान्नार्थापत्तिर्युक्तेत्याशयः ।

स०—**तदेतदिति** ॥ प्रयोजनसिद्ध्यर्थत्वं विषयप्रतिपादकत्वं उपोद्घातार्थत्वं चेति सङ्गतित्रयमित्यर्थः । अनेनार्थापत्तेः को दोष उक्त इत्यत्राह ॥ **एवशब्देनेति** ॥ वक्ष्यते 'यथा दृष्ट्या प्रसन्नः सन्' इत्यनेन ।

प०—**सङ्गतित्रयमिति** । प्रयोजनोपपादकत्वरूपं विषयोपपादकत्वरूपं सर्वशास्त्रस्योपोद्घातरूपं सङ्गतित्रयमित्यर्थः ॥ **अन्यथैवोपपन्नतामिति** । मुक्तिरूपप्रयोजनस्य बन्धमिथ्यात्वेन विनैव युक्ततामित्यर्थः ॥ **वक्ष्यत इति** । 'यथा दृष्ट्या प्रसन्नः सम्राजा बन्धापनोदकृदि'त्यादाविति भावः ।

श्री०— **सङ्गतित्रयमिति** ॥ सूत्रक्षिप्तप्रयोजनविषयोपपादकत्वेन तन्त्रोपोद्घातरूपत्वेन चोक्तं सङ्गतित्रयमित्यर्थः ॥ **सूत्रेणेति** ॥ अर्थात्सूत्रितेत्यर्थः ।

च०— **कं पक्षमिति** ॥ आद्यं द्वितीयं वेत्यर्थः ॥ **सामान्यवचनं** प्रसादबोधकपदाघटितम् । **विशेषवचनेन** । तादृशपदघटितेन ।

सु०— **ननु दर्शनेन बन्धनिवृत्तिरुभयी दृष्टा । यथा सत्यस्यापि निगडादिबन्धस्य दर्शनजन्येन राजप्रसादेन । यथा च मिथ्याभूतस्य स्वाप्ननिगडबन्धस्य प्रबोधेनैव साक्षात् । तत्र ब्रह्मज्ञानात्संसारबन्धनिवृत्तिः सूत्रिता कं पक्षमवलम्बतामिति सन्दिह्यते । तथाच अन्यथाप्युपपत्तिः स्यान्नान्यथैवोपपत्तिरिति । मैवम् । विशेषोक्त्या निर्णयोपपत्तेरित्येतदर्थोपपादनायाज्ञानामित्युक्तमत्राप्यनुषञ्जनीयम् । तरति शोकमात्मविदिति सामान्यवचनं विशेषवचनेन बाध्यते । दृष्ट्वैव तं मुच्यत इति श्रुतिर्दर्शनमोक्षावन्तरा किञ्चिन्न सहत इति चेन्न । अवधारणस्यायोगव्यवच्छेदपरत्वोपपत्तेः । दर्शनजन्यादेवेश्वरप्रसादान्न पुनः कर्मादिहेतुकादित्यन्ययोगव्यवच्छेदपरत्वोपपत्तेश्चेति ।**

वा०— ननु दर्शनजन्यप्रसादेन बन्धनिवृत्तेर्दर्शनबलादेव सूत्रार्थतया व्याख्येयत्वात्कल्पकदर्शनस्य च ज्ञानेन साक्षाद्बन्धनिवृत्तावपि तुल्यत्वात्सूत्रितसामान्यस्य प्रसादपक्षरूपविशेषमात्राश्रयणस्य नाग्रहादन्यन्मूलमित्याशङ्कते ॥ **नन्विति** ॥ न दृष्टिमात्रात्प्रसादपक्षाश्रयणमपितूक्तिबलात् । दृष्टिस्तु सम्भावकत्वेनोक्तेति भावेनाह ॥ **विशेषेति** ॥ यद्येवं तर्हि तरतिशोकमात्मविदिति वचनबलादेव ज्ञानस्य साक्षाद्बन्धनिवर्तकत्वमपि सूत्रार्थतया स्वीकार्यमिति प्रतिपक्षशङ्कां निरस्यति ॥ **तरतीति** ॥ अनेनेत्युक्तेरित्यनुव्याख्याने उक्तिपदं विशेषोक्तिपरमित्यभिप्रेत्य पूर्वोक्तस्य विशेषोक्त्येत्यत्रत्यविशेषपदस्य प्रयोजनमुक्तं भवति । विशेषवचनमेव प्रतिपक्षतया शङ्कते ॥ **दृष्ट्वैवेति** ॥ **अवधारणस्येति** ॥ एवंच तं दृष्ट्वैवमुच्यतेऽपरेण दर्शनासहकृतेन साधनेनेति श्रुतिर्व्याख्याता भवति । अस्मिन्पक्षेऽपरेणेत्यस्यास्वारस्यात्प्रकारान्तरेण श्रुतेः सावकाशतामाह ॥ **दर्शनेति** ॥ अनेनानुव्याख्याने उक्तिपदस्य निरवकाशोक्तिपरत्वमभिप्रेत्य विशेषोक्त्येत्युक्तविशेषपदसूचितं श्रुत्यन्तरस्य सावकाशत्वमुपपादितं भवति । एवं च विशेषोक्त्येत्यत्र विशेषपदस्य सामान्यप्रतियोगिविशेषपरत्वं निरवकाशपरत्वं चाभिप्रेतमिति द्रष्टव्यम् । यद्वाऽवधारणस्यान्यथासिद्धिसम्पादकदृष्ट्वैवेति श्रुतेरप्यज्ञानामितिश्रुत्यपेक्षया सामान्यत्वमेवेत्यभिप्रायः ।

स०—कथंशब्दार्थं प्रकटयति ॥ **नन्विति** ॥ बन्धस्य प्रसादनिवर्त्यत्वनिश्चयान्न मिथ्यात्वमित्याह ॥ **विशेषेति** ॥ ननु श्रुत्या ज्ञानमात्रनिवर्त्यत्वं श्रूयते न प्रसादनिवर्त्यत्वमित्यत आह ॥ **तरतीति** ॥

नन्वेवकारेण ज्ञानेनेतरनिवर्त्यत्वं निवार्यते इत्यतोऽवधारणस्यायोगव्यवच्छेदपरत्वं वा प्रसादान्तर्भावेनैव अन्ययोगव्यवच्छेदपरत्वं वेत्याह ॥ **दृष्ट्वेत्यादिना** ॥ प्रसादैकनिवार्यत्वं बन्धस्य प्रागेवोपपादितम् ।

**प०**—एवकारानुपपत्तिमाशङ्क्य निराह ॥ **नन्वित्यादिना** ॥ **अज्ञानामित्युक्तमत्रापीति** । इत्युक्तेरित्यंतमित्यर्थः । ननु साक्षाज्ज्ञाननिवर्त्यत्वेऽप्यस्ति विशेषोक्तिस्तरतिशोकमित्यादि । तथाच पुनरपि सन्देहेनान्यथाप्युपपत्तिरेव नान्यथैवोपपत्तिरित्यत आह ॥ **तरतीति** ॥ ज्ञानिनां मोक्षदश्च स इति विशेषवचनेनात्मप्रसादात्तरतीत्यर्थपरतया नेतव्यमित्यर्थः ॥ **दर्शनमोक्षावन्तरेति** ॥ अन्तरान्तरेण युक्त इति द्वितीया । तयोर्मध्य इत्यर्थः । एवकारसाहित्यादिति भावः । **अयोगेति** । ज्ञानिनोऽपि केनचिच्छापादिना प्रबलनिमित्तेन मुक्तिर्नेतिशङ्कायाम् 'अनियमः सर्वेषामि'तिवक्ष्यमाणन्यायेनेति भावः । दर्शनेन तज्जन्यप्रसादे लक्षणामभिप्रेत्याह ॥ **दर्शनजन्यादेवेति** । इतिशब्दोऽन्यथैवोपपत्तियुक्तिसमाप्तौ ।

**या०**— ननु श्रुत्यादिना ज्ञानमात्रनिवर्त्यत्वमुच्यत इत्यत आह ॥ **तरतीति** ॥ प्रसन्ने भगवतीत्यध्याहारेऽस्मत्पक्षस्यापि प्रतिपादकमितीदं वाक्यं पक्षद्वयसाधारणमित्यर्थः ॥ **विशेषवचनेनेति** ॥ 'अज्ञानां ज्ञानद' इति निरवकाशवचनेनेत्यर्थः ।

**च०**— अन्तरा ज्ञानमुक्त्योर्मध्ये ।

**सु०**— अस्तु वा ज्ञानाद्बन्धनिवृत्तिः । तथाऽपि बन्धमिथ्यात्वं नैवमुक्तिरपेक्षते । कथम् । न हि दृष्टसामर्थ्याज्ज्ञानाद्बन्धनिवृत्तिः । येन बन्धमिथ्यात्वमपेक्षेत । किन्त्वागम एव ज्ञानाद्बन्धनिवृत्तिं श्रावयति । प्रमिते च साध्यसाधनभावे का नामानुपपत्तिर्यच्छमनायोपपादकं मृग्यम् । ननु यथाग्नेयादीनां षण्णां यागानामपूर्वकारणभावे श्रुतेऽपि कालान्तरभाविप्रधानापूर्वसाधनत्वोपपत्त्यर्थं क्रमभावियागजन्यानि मध्यवर्तीन्यवान्तरापूर्वाणि कल्प्यन्ते । यथा वा श्रुतस्यैव यागस्य स्वर्गसाधनत्वस्योपपत्तयेऽपूर्वं कल्प्यते । तथा श्रुतोपपत्त्यर्थमेव बन्धमिथ्यात्वकल्पनमिति । मैवम् । वैषम्यात् । युक्तं हि तत्रापूर्वकल्पनम् । यत्कालान्तरभावि न तत्कारणमिति नियमात् । न चेह तथाऽस्ति । इहापि ज्ञानमज्ञानस्यैव निवर्तकमिति नियमोऽस्तीति चेन्न । सत्यस्यापि ज्ञानेन निवृत्तौ बाधकाभावेन तदनिश्चयात् । न च दर्शना-

दर्शनमात्रं व्याप्तेर्नियामकमिति वक्ष्यामः । नियतपूर्वक्षणवृत्तित्वशून्यमपि कारणमस्त्विति व्याहता शङ्कैव नोदेति । यन्निवृत्तये बाधकमुपन्यसनीयम् । सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेति चेन्न । व्याप्त्यभावात् । विपक्षे बाधकाभावाच्च । अनादेश्चाज्ञानस्य निवृत्तावात्मनोऽपि निवृत्तिः किं न स्यात् । मिथ्याभूतमज्ञानमनाद्यपि निवर्तते । न सत्य आत्मेति चेत् । क्वेदमुपलब्धं भवता यत्सत्यं न निवर्तत इति । निवृत्तावनादित्वमप्रयोजकीकृत्य मिथ्यात्वं प्रयोजकीकुर्वताऽज्ञानस्य येन केनापि निवृत्तिः कस्मान्नेष्यते । किं ज्ञाननियमेन । ज्ञानमेवाज्ञानविरोधीति चेत् । हन्त तर्हि विरोधिसद्भाव एव निवृत्तौ प्रयोजक इति कुत आत्मनिवृत्तिः ।

वा०—एवं ज्ञानस्य साक्षाद्बन्धनिवर्तकत्वानुपपत्तिं बन्धमिथ्यात्वकल्पनेनैव तदुपपत्तिं च पराभिप्रेतामभ्युपेत्य साक्षाज्ज्ञानाद्बन्धनिवृत्तेर्बन्धमिथ्यात्वसापेक्षत्वेऽपि ज्ञानाद्बन्धनिवृत्तिमात्रस्य सूत्रितत्वेन तस्या असूत्रितत्वात्सूत्रितायाश्चोक्तविशेषोक्तिबलेनावश्यकल्पनीयान्तरालिकप्रसादेनैवोपपत्तेर्न बन्धमिथ्यात्वकल्पनेति श्रुतिसूत्ररहस्यं स्वसिद्धान्तभूतमुक्तविशेषोक्तिरूपोपपादकसापेक्षं वस्तुगतिमनुरुध्य प्रसादपक्षमवलम्ब्य परोक्तार्थापत्तेरन्यथैवोपपन्नतापरतया बन्धमिथ्यात्वमिति भाष्यं व्याख्याय साक्षाज्ज्ञानाद्बन्धनिवृत्त्यङ्गीकारेऽप्यनुपपत्तेरेवाभावेन न तदुपपादकतया बन्धमिथ्यात्वकल्पनेति पराभिमतोन्मूलनेन प्रवृत्तमुक्तविशेषोक्तिरूपोपपादकनिरपेक्षं प्रसादनिरपेक्षस्य ज्ञानस्य बन्धनिवर्तकत्वरूपाभ्युच्चयपक्षमाश्रित्यार्थापत्तिमूलभूतानुपपद्यमानत्वविघटनपरतया भाष्यं योजयति ॥ **अस्तु वेति** ॥ अनेन सूत्रिता बन्धनिवृत्तिर्न केवलं द्वारत्वेन प्रसादव्याख्यानपक्ष एव बन्धमिथ्यात्वं नापेक्षते प्रत्युत साक्षादिति व्याख्यानेऽपि नापेक्षत इत्यप्येवकाराभिप्राय उक्तो भवति । अत्रैवकार उपपादनप्रकारस्यापि सूचकोऽतस्तं प्रतिपादयितुं पृच्छति ॥ **कथमिति** ॥ ननु दृष्टबलाद्धि ज्ञानाद्बन्धनिवृत्तिः कल्पनीया । न च ज्ञानस्य वस्तुनिवर्तकता दृष्टा । अपि तु मिथ्याभूतनिवर्तकतैवेति कथं न बन्धमिथ्यात्वापेक्षेत्यत आह ॥ **न हीति** ॥ **आगम इति** ॥ तदा विद्वान्नामरूपाद्विमुक्त इत्यादिरागमइत्यर्थः । प्रतीतेरनुपपत्त्यभावादुपपादकानपेक्षां वदतः किं श्रुतिप्रमितेऽनुपपत्तिप्रसक्तिरेव नेति किंवा सत्यामपि तस्यां तच्छमनायोपपादकापेक्षा नेत्युत श्रुतिप्रमितेऽनुपपत्तेस्तच्छमनायोपपादकापेक्षायाश्चान्यत्र सत्त्वेऽपि प्रकृतेऽनुपपत्तेरभावान्नोपपादकापेक्षेति वाऽऽशयः । तत्र नाद्य इत्याशयेन शङ्कते ॥ **ननु यथेति** ॥ आग्नेयोऽष्टाकपाल उपांशुयाजमन्तरा यजति अग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदिति वाक्यविहितं पौर्णमासत्रिकम् । आग्नेयोऽष्टाकपाल ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोमावास्यायामिति वाक्यविहितं दर्शत्रिकम् । एतेषां च षण्णां यागानामपूर्व-

साधनतोपपत्त्यर्थमपूर्वाणि कल्प्यन्त इति सम्बन्धः । नन्वपूर्वसाधनत्वस्यैवाभावान्नात्रोपपत्त्यपेक्षेत्यत उक्त-
मपूर्वेति ॥ स्वर्गकामो यजेतेत्यत्र लिङो लौकिककार्यव्युत्पत्त्यनुरोधेन स्वात्मनि पुरुषनियोक्तृत्वान्नियोग-
शब्दवाच्यापूर्वोपलब्धेस्तस्य च विषयमन्तरेणानुपपद्यमानतया कुत्र नियोग इति विषयाकाङ्क्षायां यागस्यैव
नियोगं प्रत्यनुबन्धित्वरूपविषयत्वेन सम्बन्धाद्यागविषयनियोगश्च साध्यतया प्रतीयमानः साक्षात्कृत्य-
साध्यत्वात्स्वस्य कृतिसाध्यत्वनिर्वाहाय विषयतयाऽन्वितयागस्यैव नियोगनिष्पत्त्यनुबन्धित्वरूपकरणत्व-
माक्षिपतीति भावः । तदुक्तं शालिकायाम् । कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः । कार्ये
सङ्घटिताकारे करणत्वेन सम्मत इति । यागानामेव परमापूर्वकरणत्वात्किमवान्तरापूर्वैरित्यतः किमेकैक-
निष्पत्त्यनन्तरमपूर्वस्य जनिरुत सर्वनिष्पत्त्यनन्तरमिति विकल्पं मनसि निधायाद्यं दूषयति ॥
**कालान्तरेति** ॥ एकैकस्यैवापूर्वनिष्पादकत्वे यागान्तरवैयर्थ्यापत्त्याऽपूर्वस्य निरंशत्वेनाप्यंशतोऽप्यु-
त्पादनासम्भवाद्दर्शपूर्णमासाभ्यामिति तृतीयया समुच्चितानामेव करणत्वप्रतीतेर्नायं पक्षः साधुरित्यर्थः ।
अत्रोपपत्त्यर्थमित्यनेनानुपपत्तौ सत्यामपि नोपपादकापेक्षेति द्वितीयो निरस्तः । द्वितीयं दूषयति ॥
**क्रमभावीति** ॥ देवतोद्देशेन द्रव्यत्यागलक्षणानां यागानां सकृदनुष्ठानासम्भवादिति भावः । क्रमेणो-
त्पन्नास्त एव मिलिताः सन्तु कार्यहेतव इत्यतः क्षणिकत्वान्मेलनानुपपत्तिं सूचयितुं कर्मवाचकयागशब्द-
प्रयोगः । अपूर्वाणामपि यागवत्क्रमभावित्वात्सम्भूय हेतुत्वमनुपपन्नमित्यत उक्तं मध्यवर्तीनीति । यागो-
त्तरं प्रधानापूर्वपर्यन्तं स्थायीनीत्यर्थः । न चैतावता यागकरणताभङ्गः । तेषामेव सूक्ष्मरूपत्वादपूर्वाणा-
मित्याह ॥ **अवान्तरेति** ॥ परमापूर्वापेक्षयाऽवान्तरेति विशेषणम् । नन्ववान्तरापूर्वैः फलसिद्धेः किमन्त-
र्गडुना परमापूर्वेण । न च प्रत्ययबलात्तत्प्रत्ययान्न तन्निराकरणमिति वाच्यम् । तस्य लिङादिपदवाच्य-
त्वासिद्धेरिति प्राभाकरमतेऽनुपपत्तिं मन्वानं प्रति भाट्टमतेन दृष्टान्तान्तरमाह ॥ **यथा वेति** । यजेते-
त्युक्ते शाब्दीभावनाभाव्यत्वेन पुंप्रवृत्तिलक्षणार्थभावनाप्रतीतेस्तस्याश्च भाव्यकरणेतिकर्तव्यतारूपांशत्रय-
सापेक्षत्वात्समानपदोपात्तस्यापि यागस्य स्वयं क्लेशात्मकत्वेन भाव्यत्वेन सम्बन्धासम्भवाद्भिन्नपदोपात्तस्यापि
स्वर्गस्य भाव्यत्वेन यागस्य करणत्वेन प्रयाजादेरितिकर्तव्यतात्वेन सम्बन्धस्य वक्तव्यत्वात् क्षणभङ्गुरस्य
यागस्य कालान्तरभाविफलसाधनताऽनुपपत्तेः श्रुतकरणत्वोपपत्त्यर्थमपूर्वकल्पनेति भाट्टाशयः । तत्र गुरुमते
प्रधानापूर्वसाधनत्वेन भट्टमते स्वर्गसाधनत्वेनापूर्वकल्पनमिति विभागो द्रष्टव्यः । तृतीयं निरस्यति ॥
**तथेति** ॥ अनुपपत्त्याद्याविष्कारः परिहारदशायां भविष्यतीत्याशयः । न वयं श्रुतिप्रतीतेऽनुपपत्तिशम-
नायोपपादकानपेक्षां सर्वत्र ब्रूमः । किन्तु प्रकृत एव । एवं च त्वदुदाहृते यागेऽनुपपत्तिसद्भावेनापूर्व-
कल्पनायामपि प्रकृते तदभावेन न बन्धमिथ्यात्वापेक्षेतिभावेनाद्यद्वितीयावनङ्गीकारेणैव पराकृत्य
तृतीयमङ्गीकरोति ॥ **वैषम्यादिति** ॥ वस्तुतः सतो ज्ञाननिवर्त्यताया अदर्शनान्मिथ्याभूतस्य

च ज्ञाननिवर्त्यतादर्शनेनज्ञानमज्ञानस्यैव निवर्तकमिति नियमस्यावश्यकत्वात्तद्विरोधेन श्रुतेरप्रामाण्यापत्त्या तदुपपादकतया बन्धमिथ्यात्वमवश्यं कल्प्यमित्याशयेन शङ्कते ॥ **इहापीति** ॥ अप्रयोजकतया त्वदुक्तनियमस्यासिद्धेर्वैषम्यमेवेत्याह ॥ **सत्यस्यापीति** ॥ परोक्तं दर्शनस्य नियामकत्वमन्यथयति ॥ **न चेति** ॥ तर्हि बाधकाभावेन त्वदुक्तनियमोऽप्यप्रयोजक इति न वैषम्यमित्यतो बाधकानुपन्यासेऽपि व्याहत्या शङ्कानुदयेन तदुक्तनियमसिद्धेस्त्वदुक्ते च शङ्कानुदयप्रयोजकव्याहत्यभावाद्बाधकानुपन्यासाच्च वैषम्यमेवेत्याशयेनाह ॥ **नियतेति** ॥ नियतपूर्ववृत्तित्वशून्यत्वं कालान्तरभावित्वव्यापकं कालान्तरभाविशब्दबललब्धमिति द्रष्टव्यम् । ननु सत्यस्यापि निवृत्तौ बाधकाभावेनेत्यनुपपन्नम् । बाधकसद्भावात् । तथा च दृष्टान्ते व्याहत्याशङ्कानुदयः । प्रकृते चोत्पन्नशङ्काया बाधकवशान्निवृत्तिरिति वैषम्यमात्रमप्रयोजकमेवेत्याशयेन शङ्कते ॥ **सत्यस्यापीति** ॥ **व्याप्त्यभावादिति** ॥ सत्यनिवृत्त्याऽऽत्मनिवृत्तिरूपापाद्यापादकयोर्व्याप्तिग्राहकप्रमाणाभावेन व्याप्त्यभावादिति भावः । ननु माऽस्तु विशेषव्याप्तिः । यस्य यद्वति तदविशिष्टस्यापरस्यापि तद्वतीति सामान्यव्याप्तिस्तावत्सर्वसिद्धा । तथाच सत्यत्वाविशेषात्तदाश्रयेण प्रकृतेऽप्यापादनं सुलभमेव । नापि विपक्षे बाधकाभावः । सत्यस्य निवृत्तावप्यात्मनोऽनिवृत्तावविशेषानुपपत्तेरेव तथात्वादित्यतो विरोधिसदसद्भावाभ्यां विशेषादविशेषोऽसिद्ध इत्याशयेन विरोधिसद्भावस्य निवृत्तिप्रयोजकत्वं परमुखेनैवानेतुं सत्यस्य निवृत्तावात्मनिवृत्त्यापादनेऽज्ञानकल्पितत्वपक्षेऽप्यनादित्वाविशेषेणाज्ञाननिवृत्तावात्मनिवृतिः स्यादित्यापादनसौलभ्यादाभाससाम्यं तावदाह ॥ **अनादेश्चेति** ॥ नन्वनादेरपि प्रागभावस्य निवृत्तेर्भावत्वेन विशेषणेऽपि तत्तद्वादिरीत्याऽनादिभावानामपि निवृत्तेर्नानादित्वमनिवृत्तौ प्रयोजकम् । सत्यस्य चानिवृत्तेर्मिथ्यात्वमेव निवृत्तौ प्रयोजकमिति तद्वत्त्वादज्ञाननिवृत्तावपि प्रयोजकाभावान्नात्मनिवृत्तिरिति विशेषं शङ्कते ॥ **मिथ्याभूतमिति** । मिथ्यात्वस्य निवृत्तिप्रयोजकतानिश्चयस्य मुख्यतो व्यतिरेकसहचारनिश्चयनिबन्धनत्वादात्मप्रपञ्चयोश्च प्रकृततर्कयोरापाद्यापादककोटिनिविष्टतया तत्र तन्निश्चयासम्भवान्न मिथ्यात्वस्य निवृत्तिप्रयोजकतानिश्चय इत्याशयेनाह ॥ **केदमिति** ॥ ननु सत्यस्यानिवृत्त्यदर्शनेऽपि निवृत्तेरदर्शनमात्रेण व्यतिरेकसहचारनिश्चयो भविष्यतीति चेत् तर्हि सादिभावत्वस्य निवृत्तिप्रयोजकत्वेऽवयवतत्संयोगनाशाभ्यामेवावयविनाशो न येन केनचिदिति नियमसम्भवेऽपि मिथ्यात्वस्य प्रयोजकत्वेन तत्सम्भवो नियामकाभावादिति बाधकान्न तस्य प्रयोजकतानिश्चयः । यदि च मिथ्यात्वस्य निवृत्तिप्रयोजकताग्रहेण दृष्टमप्यवयवतत्संयोगविनाशाभ्यामेवावयविनाश इति नियममपलपसि तर्हि ज्ञानेनैवाज्ञाननिवृत्तिरिति नियममपि त्यज । तथा च न पूर्वोक्तं बाधकमित्याशयेनाह ॥ **निवृत्ताविति** ॥ यद्वा सत्यस्यानिवृत्त्यदर्शनेऽपि निवृत्त्यदर्शनमात्रेण व्यतिरेकसहचारनिश्चयो भविष्यतीत्युक्तशङ्कापरिहार एवं तर्हि निवृत्तावनादित्वादेरप्रयोजकत्वेन मिथ्यात्वस्यैवाव-

श्यकत्वान्निवर्त्ये सादित्वादिनियमवन्निवर्तके ज्ञानत्वादिनियमोऽपि परित्याज्यः स्यादित्याह ॥ **निवृत्ताविति** ॥ मिथ्यात्वं प्रयोजकमङ्गीकुर्वताऽपि विरोधिसद्भावस्य निवृत्तिप्रयोजकताया अपरित्यागान्नायमतिप्रसङ्ग इति भावेनाशङ्कते ॥ **ज्ञानमेवेति** ॥ तर्हि प्राप्ताप्राप्तविवेकेन विरोधिसद्भावस्यैव निवृत्तिप्रयोजकतापर्यवसानेन मिथ्यात्वोक्तेः रिक्तत्वात् सत्यत्वेऽपि विरोधिसद्भावात्प्रपञ्चनिवृत्तावपि नात्मनिवृत्तिस्तदभावात् । तथा च मां प्रत्यप्यात्मनिवृत्त्यापादनमनुपपन्नमेव विशेषाभावादित्याह ॥ **हन्तेति** ॥

म०—ज्ञाननिवर्त्यत्वमङ्गीकृत्यापि मिथ्यात्ववर्णनमसङ्गतं सत्यस्यैव ज्ञाननिवर्त्यत्वसम्भवादित्याह ॥ **अस्तु वेति** ॥ ननु ज्ञानस्य वस्तुनिवर्तकत्वं किं दृष्टिबलादुत श्रुतिबलात् । नाद्यः विप्रतिपन्नत्वात् । द्वितीये ह्यनुपपत्त्या श्रुतेरर्थान्तरकल्पनमावश्यकमिति कथं शब्दार्थः तत्र द्वितीयपक्षमङ्गीकृत्य समाधत्ते ॥ **न हीति** ॥ **येनेति** ॥ दृष्टिबलान्निवर्तते बन्ध इति पक्षे ज्ञानस्य वस्तुनिवर्तकताया अदृष्टेरध्यस्तत्वं स्यादित्यर्थः । तत्रोक्तदोषं परिहरति ॥ **प्रमिते चेति** ॥ ननु श्रुतिप्रमितत्वेऽपि श्रुतिप्रामाण्यसिद्ध्यर्थमज्ञानात्मकत्वं बन्धस्य कल्पनीयमिति दृष्टान्ताश्रयणेन शङ्कते ॥ **ननु यथेति** ॥ आग्नेयोष्टाकपालः उपांशुयाजमन्तरा यजति अग्नीषोमीयमेकादशकपालमिति पूर्णमासत्रयं आग्नेयोष्टाकपालः ऐन्द्रं दधि ऐन्द्रं पय इति दर्शत्रयमित्येषां षण्णां यागानामपूर्वसाधनत्वोपपत्त्यर्थमवान्तरापूर्वाणि कल्प्यन्त इति सम्बन्धः । यागानामेव प्रधानापूर्वकरणत्वात् किमवान्तरापूर्वैरित्याशङ्क्य किमेकैकनिष्पत्त्यनन्तरमपूर्वं निष्पद्यते । उत सर्वनिष्पत्त्यनन्तरमिति विकल्प्याद्यं दूषयति ॥ **कालान्तरेति** ॥ दर्शपूर्णमासाभ्यामिति तृतीयया समुच्चितानां यागानां करणताप्रतीतेर्नायं पक्षः साधुरित्यर्थः । द्वितीयं दूषयति ॥ **क्रमभावीति** ॥ देवतोद्देशेन द्रव्यत्यागलक्षणानां यागानां सकृदनुष्ठानमसम्भवीत्यर्थः । अपूर्वाणामपि यागवत् क्रमभावित्वात् सम्भूय हेतुत्वमनुपपन्नमित्याशङ्क्योक्तम् ॥ **मध्यवर्तीनीति** ॥ यागप्रधानापूर्वयोर्मध्यस्थितानीत्यर्थः । न चैतावता यागकरणताभङ्गः तेषामेव सूक्ष्मरूपत्वादपूर्वाणामित्याह ॥ **अवान्तरेति** ॥ परमापूर्वमपेक्ष्यावान्तरेति विशेषणम् । नन्ववान्तरापूर्वैः फलसिद्धेः किमन्तर्वर्तिना तेन परमापूर्वेणेति मन्यमानं प्रति दृष्टान्तान्तरमाह ॥ **यथा वेति** ॥ एषा भाट्टप्रक्रिया । यजेतेत्युक्ते पुरुषप्रवृत्तिहेतुभूतशब्दव्यापारलक्षणशब्दभावनाभाव्यत्वेन पुरुषप्रवृत्तिलक्षणार्थभावना प्रतीयते । सा च भाव्यकरणेतिकर्तव्यतारूपमंशत्रयमपेक्षते । तत्र यद्यप्येकपदोपात्तत्वेन यागाख्यं भाव्यं प्रतीयते तथापि क्लेशात्मकत्वेन भाव्यत्वासम्भवाद्भिन्नपदोपात्तः स्वर्गो भाव्यत्वेन सम्बध्यते यागः करणत्वेन, प्रयाजादिरितिकर्तव्यतात्वेन । तत्र यागस्य क्षणभङ्गुरस्य समयान्तरभाविफलसाधनत्वानुपपत्तेः श्रुतकरणत्वनिर्वाहार्थमपूर्वं कल्प्यत इति भावः । भाट्टमते स्वर्गसिद्ध्यर्थमपूर्वकल्पनं गुरुमते परमापूर्वसिद्ध्यर्थमिति भेदः । दृष्टान्तवैषम्यं दर्शयति ॥ **युक्तं हीति** ॥ साम्यमाशङ्कते ॥ **इहापीति** ॥ किमत्र सत्यस्य निवृत्तौ बाधक-

सद्भावान्मिथ्यात्वमुच्यते उत मिथ्याभूतस्य शुक्तिरजतादेर्निवृत्तिदर्शनात् । नाद्य इत्याह ॥ **नेति** ॥ न द्वितीय इत्याह ॥ **न चेति** ॥ यद्वा न च दर्शनमिति सहचारदर्शनं व्यभिचारादर्शनमित्यर्थः ॥ वक्ष्यामः, 'सहदर्शनमात्रेण न व्याप्तिरवसीयत' इत्यनेन । ननु यत्कालान्तरभावि न तत्कारणमिति व्याप्तिनिश्चयो न युक्तः कालान्तरभाविनोपि कारणत्वे बाधकाभावेनाप्रयोजकत्वादित्यत आह ॥ **नियतेति** ॥ व्याघातान्नाप्रयोजकत्वमिति भावः । सत्यस्य निवृत्तौ बाधकं शङ्कते ॥ **सत्यस्यापीति** ॥ परिहरति ॥ **क्वेदमिति** ॥ निवर्तकसद्भावस्य प्रयोजकत्वानभ्युपगमेऽतिप्रसङ्गमाह ॥ **निवृत्ताविति** ॥ एवं च सत्यस्य निवृत्तौ बाधकं नास्तीत्युपसंहरति ॥ **इतीति** ॥

प०—कथमितिप्रश्नस्योत्तरमाह ॥ **नहीति** ॥ प्रबोधादौ स्वाप्ननिगडबन्धस्य मिथ्याभूतस्यैव निवृत्तिर्दृष्टेति प्रबोधादौ दृष्टं मिथ्याभूतबन्धनिवर्तनसामर्थ्यं यस्य तस्माज्ज्ञानाद्बन्धनिवृत्तिर्यदि कल्प्येत तदा परमेवं स्यात् । न हि तथा कल्प्यत इत्यर्थः ॥ **दृष्टसामर्थ्यादिति** ॥ दण्डादेरिवान्वयव्यतिरेकावगतशक्तिकादित्यर्थः ॥ **आगमएवेति** ॥ तरति शोकमात्मविदित्यादिरित्यर्थः । आग्नेयादीनां षण्णामिति । विवृतमेतद्यागषट्कं तत्र तारेत्येतदवतारिकाव्याख्यानप्रस्तावे ॥ प्राभाकरमतेनाह ॥ **अपूर्वेति** ॥ अपूर्वं प्रतिकरणभावे श्रुतेऽपीत्यर्थः । तन्मतेऽपूर्वस्यैव लिङर्थत्वात् । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ विधिप्रत्ययबोध्यस्वर्गापूर्वं प्रति यागकरणताऽवगमादिति भावः ॥ **प्रधानापूर्वेत्यादेरयमर्थः** ॥ अमावास्यायां क्रियमाणदर्शत्रिकेण पौर्णमास्यां क्रियमाणेन पूर्णमासत्रिकेण च मिलित्वा एकं स्वर्गजनकं प्रधानापूर्वं जायते । तत्र त्रिकद्वयस्य व्यवहितत्वात् । एकैकेन प्रधानापूर्वानुदयात् । आग्नेयादिषड्भिर्यागैः षडपूर्वाणि यागानुष्ठानक्रमेण जायन्ते । तैश्चापूर्वैः पश्चात्प्रधानापूर्वमिति । अयं सप्तापूर्वीपक्षः प्रभाकरस्य । भट्टरीत्या नवाऽपूर्वीपक्षस्तु दर्शापूर्वत्रयेण किञ्चिदपूर्वमवान्तरं जायते । पूर्णमासापूर्वत्रयेणाप्येकमपूर्वम् । ताभ्यां च प्रधानापूर्वमिति ॥ भट्टमतेनाह ॥ **यथा वेति** ॥ ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र कालान्तरभाविस्वर्गं प्रति श्रुतस्य यागनिष्ठस्य साधनत्वस्योपपत्तयेऽपूर्वं कल्प्यत इत्यर्थः । व्यक्तमेतत्सर्वं षष्ठाद्ये स्वर्गकामाधिकरणे द्वितीयाद्ये च भावार्थाधिकरणापूर्वाधिकरणयोश्च ॥ **तथा श्रुतेति** ॥ 'तरति शोकमात्मविदि'ति श्रुतेत्यर्थः ॥ **न चेहेति** ॥ ज्ञानोदयादेवाज्ञाननिवृत्तेरिति भावः । प्रबोधे मिथ्याभूतस्वाप्ननिगडबन्धनिवर्तकत्वं दृष्टम् । सत्यनिवर्तकत्वं तु ज्ञानस्य न दृष्टमित्यत आह ॥ **न च दर्शनेति** ॥ **वक्ष्याम इति** ॥ 'सहदर्शनमात्रेण न व्याप्तिरवसीयत' इति वैशेषिकाधिकरणे विपक्षे बाधकं विना दर्शनमात्रं व्याप्तिनिश्चायकं नेति वक्ष्याम इत्यर्थः । ननु यथा सत्यस्यापि ज्ञानेन निवृत्तौ बाधकाभावेन तन्निवर्त्यबन्धस्य मिथ्यात्वं न कल्प्यमित्युच्यते तथा यागस्यापि कालान्तरभाविस्वर्गहेतुत्वे बाधका-

भावान्मध्येऽपूर्वमपि न कल्प्यमिति वक्तुं शक्यत एवेत्यत आह ॥ **नियतेति** ॥ सत्यस्यापि ज्ञानेन निवृत्तौ बाधकाभावेनेत्युक्तमयुक्तमिति भावेन बाधकमाशङ्कते ॥ **सत्यस्यापीति** ॥ आत्मनो निवृत्त्या-पत्तिभयेनाज्ञानस्य सत्यत्वत्यागेऽनादित्वत्यागोऽपि स्यादिति भावेनाभाससाम्यं चाह ॥ **अनादेश्चेति** ॥

**या०** — येन बन्धेत्यस्यायमर्थः । दृष्टबलाज्ज्ञानान्निवर्तते बन्ध इति पक्षे ज्ञानस्यापि वस्तु-निवर्तकताया अदृष्टेरध्यस्तत्वं स्यादिति । श्रुतेऽप्युपपत्त्यपेक्षां दृष्टान्तेनाह ॥ **यथेति** ॥ आग्नेयोऽष्टा-कपाल उपांशुयाजमन्तरा यजति अग्नीषोमीयमेकादशकपालमिति पूर्णमासत्रयम् । आग्नेयोऽष्टाकपाल ऐन्द्रं दधि ऐन्द्रं पय इति दर्शत्रयमित्येतेषां षण्णां यागानामपूर्वसाधनत्वोपपत्त्यर्थमपूर्वाणि कल्प्यन्त इति सम्बन्धः । अयं भावः । स्वर्गकामो यजेतेत्यत्र लिङा लौकिककार्यव्युत्पत्त्यविरोधेन नियोगस्तावदुप-लभ्यते । नियोगशब्दवाच्यं च वेदे प्राभाकरमते चापूर्वमेव । तच्च साक्षात्कृत्यसाध्यत्वात्स्वस्य साक्षा-त्कृतिसाध्यत्वनिर्वाहार्थं प्रकृत्यर्थभूतानां यागानां करणत्वमाक्षिपतीति । तदेतदाह ॥ **अपूर्वकरणेति** ॥ नियोगनिष्पत्त्यनुबन्धित्वं करणशब्दार्थः । यागानामेव प्रधानापूर्वकरणत्वात्किमवान्तरापूर्वैरित्याशङ्क्य किमेकैकयागनिष्पत्त्यनन्तरमपूर्वजनिरुत सर्वनिष्पत्त्यनन्तरमिति विकल्प्याद्यं दूषयति ॥ **कालान्तरेति** ॥ दर्शपूर्णमासाभ्यामिति तृतीयया समुच्चितानां करणताप्रतीतेर्नायं पक्षः साधुरित्यर्थः । द्वितीयं दूषयति ॥ **क्रमभावीति** ॥ देवतोद्देशेन द्रव्यत्यागलक्षणानां यागानां सकृदनुष्ठानं न सम्भवतीत्यर्थः । क्रमेणो-त्पन्नास्त एव मिलिताः कार्यहेतव इत्याशङ्क्य क्षणिकत्वान्मेलनमेवानुपपन्नमित्यभिसन्धिनोक्तम् ॥ **कर्मेति** ॥ अपूर्वाणामपि यागवत्क्रमभावित्वात्सम्भूय हेतुत्वमनुपपन्नमित्याशङ्क्योक्तम् । **मध्यवर्तीनीति** ॥ याग-प्रधानापूर्वयोर्मध्ये स्थितानीत्यर्थः । न चैतावता यागकरणताभङ्गः । तेषामेव सूक्ष्मरूपत्वादपूर्वाणा-मित्याह ॥ **अवान्तरेति** ॥ परमापूर्वमपेक्ष्यावान्तरेति विशेषणम् । नन्ववान्तरापूर्वैः फलसिद्धेः किमन्त-र्गडुना परमापूर्वेण । न च तत्प्रत्ययबलात्तत्प्रत्ययान्न तन्निराकरणमिति शङ्क्यम् । तस्य प्रत्ययार्थत्वा-सिद्धेरिति मन्वानं प्रति दृष्टान्तान्तरमाह ॥ **यथेति** ॥ एषा भाट्टप्रक्रिया । यजेतेत्युक्ते शब्दव्यापार-भावनाभाव्यत्वेनैव पुंप्रवृत्तिलक्षणार्थभावना प्रतीयते । सा च भाव्यकरणेतिकर्तव्यतारूपमंशत्रयमपेक्षते । तत्र यद्यप्येकपदोपात्तत्वेन यागस्य भाव्यत्वं प्रतीयते । तथाऽपि क्लेशात्मकत्वेन तस्य भाव्यत्वासम्भवा-द्भिन्नपदोपात्तः स्वर्गो भाव्यत्वेन सम्बध्यते । यागः करणत्वेन । तत्र यागस्य क्षणभङ्गुरस्य समयान्तरभावि-फलसाधकताऽनुपपत्तेः श्रुतकरणत्वनिर्वाहार्थमपूर्वं कल्प्यत इति ॥ अपूर्वकल्पनमिति भाट्टमते स्वर्गसिद्ध्यर्थमपूर्वकल्पनं गुरुमते परमापूर्वसिध्यर्थमिति विभागः ॥ **यत्कालान्तरभावीति** ॥ चिरातीतत्वेन यागस्यापि स्वर्गापेक्षया कालान्तरभावित्वादित्याशयः ॥ **न च दर्शनेति** ॥ सहचारदर्शनं व्यभिचारादर्शनं

चेत्येतावन्मात्रमित्यर्थः ॥ **वक्ष्याम इति** ॥ 'सहदर्शनमात्रेण न व्याप्तिरवसीयत' इत्यादाविति शेषः । किन्त्वनुकूलतर्कसहितम् । प्रकृते च स नास्तीति पूरणीयम् । नन्वेवं यत्कालान्तरभावि न तत्कारणमिति नियमोऽपि न सम्भवति । विपक्षे बाधकाभावेनाप्रयोजकत्वादित्याशङ्कायामाह ॥ **नियतपूर्वेति** ॥ सत्यस्यापि ज्ञानेन निवृत्तौ बाधकतर्कमाशङ्कते ॥ **सत्यस्यापि निवृत्ताविति** ॥ ननु यद्येनाविशिष्टं तत्तथेति व्याप्तिरस्तीत्यत आह ॥ **विपक्ष इति** ॥ ज्ञानमज्ञानस्यैव निवर्तकमिति नियमे न केवलमनुकूलतर्काभावः । किन्तु प्रतिकूलतर्कपराहतिश्चेत्याह ॥ **अनादेश्चेति** ॥ प्रतिकूलतर्के मिथ्यात्वमुपाधिमाशङ्कते ॥ **मिथ्याभूतमिति** ॥ **छेदमिति** ॥ आत्मातिरिक्तस्य सत्यस्य त्वन्मतेऽभावादिति भावः । ततश्च नोपाध्यभावेनात्मनोऽनिवृत्तिसाधनं सम्भवतीत्युक्तं भवति । किञ्चैवं सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेति त्वदीयतर्केऽपि विरोधसन्निपातस्योपाधित्वात्तदभावेनात्मनोऽनिवृत्तिरस्त्विति वक्तुं विरोधिसद्भावस्य निवृत्तिप्रयोजकत्वं तावत्परेणाप्यङ्गीकारयितुमाह ॥ **निवृत्तावनादित्वमिति** ॥

**श्री०—दृष्टसामर्थ्यादिति** ॥ प्रबोधस्य स्वाप्ननिगडबन्धनिवर्तकत्वसामर्थ्यस्य दृष्टत्वात्तद्दृष्टान्तेनैव प्रकृतेऽपि ज्ञानाद्बन्धनिवृत्तिरिति नोच्यते इत्यर्थः । आगम एव तरतिशोकमात्मविदित्यादिरित्यर्थः । ननु ज्ञानमज्ञानस्य तत्कार्यस्य वा निवर्तकमिति शुक्तिज्ञाने सहचारदर्शनाद्व्यभिचारादर्शनाच्च नियमोपपत्तिरिति चेत्तत्राह ॥ **न दर्शनेति** ॥ **कुत आत्मनिवृत्तिरिति** ॥ सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेत्यात्मनिवृत्त्यापादनं कुतः । विरोधिनोऽभावादिति भावः ।

**च०—** श्रुतिप्रमितेऽर्थेऽनुपपत्तिप्रसक्तिरेव नेति सत्यामपि तस्यां तच्छमनौपयिकोपपादकापेक्षा नेति श्रुतिप्रमितेऽप्यर्थेऽनुपपत्तेस्तदपवारकोपपादकापेक्षायाश्च स्थलान्तरे सत्त्वेऽपि प्रकृते न तदुभयमिति वेति कल्पत्रयीमनुसन्दधानस्तद्घटकाद्यकल्पप्रत्याचिख्यासया तमाशङ्कते ॥ **ननु यथेति** ॥ आग्नेयोष्टाकपालः उपांशुयाजमन्तरा यजति अग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदितिवाक्यविहितं पौर्णमासत्रिकम् । आग्नेयोऽष्टाकपाल ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोमावास्यायामितिवाक्यविहितं दर्शत्रिकमेव । तेषां षण्णां यागानामपूर्वसाधनतोपपत्त्यर्थमपूर्वाणि कल्प्यन्त इति सम्बन्धः । स्वर्गकामोय जेतेत्यत्र लिङो लौकिककार्यव्युत्पत्त्यनुरोधेन स्वात्मनि पुरुषनियोक्तृत्वान्नियोगपदाभिधेयापूर्वोपलब्धेस्तस्य च विषयमन्तरेणानुपपद्यमानतया क्व विनियोग इति विनियोगाकाङ्क्षायां यागस्यैव विनियोगं प्रत्यनुबन्धित्वरूपविषयत्वेन सम्बन्धात् यागविषयनियोगस्तत्र साध्यतया प्रतीयमानः साक्षात्कृत्यसाध्यत्वात्स्वस्य कृतिसाध्यतानिर्वाहाय विषयतयान्वितयागस्यैव विनियोगनिष्पत्त्यनुबन्धित्वरूपकरणत्वमाक्षिपतीति भावः ॥ **कालान्तरभावीति** ॥

एकैकस्यापूर्वनिष्पादकत्वे यागान्तरवैयर्थ्यापत्त्या मिलितानां च हेतुत्वोपगतेः क्षणिकत्वान्मेलनस्यैवायोगेन अयुक्तत्वादिति भावः ॥ द्वितीयं प्रत्याख्याति ॥ **क्रमभावीति** ॥ देवतोद्देश्यकद्रव्यत्यागरूपयागानां युगपदनुष्ठानासम्भवादिति भावः ॥ **मध्यवर्तीनीति** ॥ यागोत्तरं प्रधानापूर्वपर्यन्तं स्थायीनीत्यर्थः । प्राभाकरानुमतसप्तापूर्वीकल्पं प्रदर्श्य दर्शापूर्वत्रयेण किञ्चिदपूर्वमवान्तरं जायते पूर्णमासापूर्वत्रिकेणाप्येकं ताभ्यां च प्रधानापूर्वमिति भट्टदिशा नवापूर्वीमतमभिप्रेत्याह ॥ **यथा वेति** ॥ क्रियारूपयागस्यापूर्वमन्तरेण कालान्तरभाविस्वर्गसाधनत्वासम्भवादिति भावः ॥ तृतीयं प्रतिविधत्ते ॥ **तथेति** ॥ **वक्ष्याम इति** ॥ 'सहदर्शनमात्रेण न व्याप्तिरवसीयत' इत्यादावित्युपस्कर्तव्यम् । कार्याव्यवहितपूर्वक्षणावच्छेदेनावर्तमानस्यापि कारणतास्त्विति शङ्कामपाकुरुते ॥ **नियतेति** ॥ सत्यस्यापि ज्ञानेन निवृत्त्युपगमे सत्यत्वानिवृत्त्योरापाद्यकापादकयोरात्मनि व्याप्त्यवधारणेनाज्ञानं यदि सत्यं स्यात्तर्हि न निवर्तेत निवर्तते चातो न सत्यमिति विपक्षे बाधकतर्कमाशङ्कते ॥ **सत्यस्यापीति** ॥ **व्याप्त्यभावादिति** ॥ घटादेरपि सत्यत्वोपगमेनापादके आपाद्यनिरूपितव्याप्त्यभावादिति भावः ॥ **विपक्ष इति** ॥ आत्मनोऽनिवृत्त्युपगमे बाधकप्रमाणाभावादिति भावः । अज्ञानं यद्यनादि स्यात्तर्हि आत्मवन्न निवर्तेत निवर्तते चातो नानादीत्यज्ञानधर्मिकानादित्वापादककानिवर्त्यत्वापाद्यकप्रतिकूलरूपापत्तेरात्मावधृतापाद्यापादकव्याप्तिकायाः पराहतिं चाभिधत्ते ॥ **अनादेरिति** ॥ भावत्वाविशेषितानादित्वस्य निवृत्तिप्रतियोगिन्यपि प्रागभावे तद्विशेषितस्य च तत्तद्वादिदिशा तत्प्रतियोगिभूतदर्शितसदर्थेषु दर्शनेनानिवृत्तिप्रयोजकतावैधुर्येण सत्यत्वस्यैव तादृशतया आत्मनस्तादृशानिवृत्तिप्रयोजकसत्यत्वाक्रान्ततयाऽनिवर्त्यत्वेऽप्यज्ञानस्य मिथ्यात्वेन तादृगनिवृत्तिप्रयोजकराहित्यान्निवृत्तिः सङ्गच्छत इति दर्शितप्रतिकूलतर्कहेतुभूतापाद्याभिमतानिवर्त्यत्वनिरूपितापादकीभूतानादित्वनिष्ठव्याप्तौ सत्यत्वमुपाधिमाशङ्कते ॥ **मिथ्याभूतमिति** ॥ आत्मनोऽनिवृत्त्यापत्तिभयेनाज्ञानस्य सत्यत्वत्यागेऽनादित्वत्यागोऽपि स्यादिति भावेनाभाससाम्यं चाह ॥ **अनादेश्चेती**त्यवतारयन्ति ॥ दर्शितापत्तिहेतुभूतप्रकृतापाद्यानिवर्त्यत्वनिरूपितप्रकृतापादकानादित्वनिष्ठव्याप्तौ सत्यत्वस्योपाधित्वं क किमधिकरणावच्छेदेनोपलब्धं भवतीति योजना । आत्मान्यसर्वस्य त्वन्मते सत्यत्वानुपगतेस्तत्र सत्यत्वस्यानिवर्त्यत्वव्यापकत्वानवधारणेनात्मनि सत्यत्वेनानिवृत्तिनिश्चयस्तदभावेनाज्ञाने निवृत्तिनिश्चयश्च दुःशक इति भावः । सत्यस्यापि निवृत्तावात्मापि निवर्तेतेति त्वदीयप्रसङ्गेऽप्यापाद्यापादकव्याप्तौ विरोधिसन्निपातस्योपाधितया तादृशोपाध्यभावादात्मनो न निवृत्तिरित्यभिधित्समानः प्रतिवादिदिशाऽपि विरोधिसन्निपातस्य निवृत्तिप्रयोजकतासंप्रतिपत्तिं संपिपादयिषति ॥ **निवृत्तावनादित्वमिति** ॥

**सु०— ननु ज्ञानेन सत्यं निवर्तमानं किं विषयगतं निवर्तते । उताश्रयगतम् । अथोभयगतम् । नाद्यः । यतश्चित्रावयविनि नीलविशिष्टद्रव्यज्ञानं स्वविषयं वा स्वविषयसमवेतं वा**

रसादिकं विरोधिनं वा पीतिमादिगुणं न निवर्तयति ।  न द्वितीयः । घटादिज्ञानेनात्मगत-धर्माद्यनिवृत्तेः । न तृतीयः । आत्मनः शरीरविषयज्ञानेन शरीरात्मसम्बन्धानिवृत्तेरिति । मैवम् । उक्तोत्तरत्वात् । यदि ज्ञानमाश्रयगतं निवर्तयेत् तदा धर्मादिकमपि निवर्तयेदित्यत्र व्याप्त्यभावात् । विपक्षे बाधकाभावाच्च । घटादिज्ञानं धर्माद्यविरोधि । आत्मयाथात्म्यज्ञानं तु बन्धविरोधीति वैषम्याच्च । आत्मयाथात्म्यज्ञानस्यैवापादनविषयतायामिष्टापादनम् । चित्राश्रयविनि नीलविशिष्टद्रव्यज्ञानं तु मिथ्याज्ञानमेव । नापि तत्र पीतिमगुणोऽस्ति । एकमेव हि चित्रं नाम रूपमाश्रयव्याप्यवृत्तीति पदार्थविदः ।

वा०— एवं ज्ञानाद्बन्धनिवृत्तिर्न दृष्टसामर्थ्यात् । आगमप्रतीते च साध्यसाधनभावे न काऽप्यनुपपत्तिरिति पक्षे विवरणोक्तबाधकं परिहृत्यास्तु वा दृष्टसामर्थ्यादेव बन्धनिवृत्तिस्तथाऽपि नानुपपत्तिरित्यभ्युच्चयेन पक्षमभ्युपेत्य तत्रापि विवरणोक्तानुपपत्तिं परिहर्तुं शङ्कते ॥ नन्विति ॥ यद्यप्यत्र प्रथममेवास्तु वा ज्ञानाद्बन्धनिवृत्तिः सा च दृष्टसामर्थ्यादित्युक्त्वा तत्रैतदाशङ्क्य परिहृत्यानन्तरमभ्युपेत्य चेदमुदितम् । न वयं दृष्टसामर्थ्याज्ज्ञानाद्बन्धनिवृत्तिं ब्रूम इत्यादिग्रन्थकरणे विवरणोक्तक्रमेणैव दूषणमुक्तं भवति । तथाऽप्यत्र तत्प्रमेयानङ्गीकारेण पराभिमतं निराकृत्यास्तु वेत्यादिनोत्तरोत्तरं तदङ्गीकारेणापि पराभिमतनिरासस्याभ्युच्चयेन प्रस्तावादागमेन ज्ञानाद्बन्धनिवृत्तौ प्राप्तानुपपत्तिनिरासानन्तरं किमागमपर्यन्तधावनेनास्तु वा दृष्टार्थसामर्थ्याज्ज्ञानाद्बन्धनिवृत्तिरिति पक्षस्तथापि परोक्तदूषणपरिहारः सुशक इत्युक्तेः सङ्गतत्वादुक्तातिदेशेन दूषणसौकर्याच्चैवं सन्निवेश इति द्रष्टव्यम् । न चैवमप्यस्तु वा दृष्टसामर्थ्याद्बन्धनिवृत्तिस्तथाऽपि नानुपपत्तिरिति साक्षादेवोक्त्वा तद्दूषणपरिहारः कुतो न कृत इति वाच्यम् । ज्ञाननिवर्त्यस्य सत्यस्य विषयगतत्वाद्यन्यतमवत्त्वस्यावश्यवाच्यतया ज्ञानेन विषयगतादिबन्धनिवृत्तौ च विषयगतादिनिवृत्तिदर्शनस्यैव मूलत्वात्तस्य चानुपपन्नतया मूलाभावेन विषयगतादिनिवृत्त्यसम्भवे सत्यस्य ज्ञानेन निवृत्तिर्न स्यादिति सत्यस्यापि निवृत्तावात्मनिवृत्तिरपि स्यादितिवत्सत्यस्यापि निवृत्तौ तस्य विषयगतत्वाद्यन्यतमवत्त्वमपि स्यात् । तन्मूलतया ज्ञानेन विषयगतादिनिवृत्तिदर्शनमप्यनुपपन्नमङ्गीकार्यं स्यादिति बाधकान्तरकथनेऽपि तात्पर्यात् । अत्र चात्मज्ञानेन स्वविषयात्मनिष्ठनियन्तृत्वादिनिवृत्तौ तत्सापेक्षस्य जीवगतस्य नियम्यत्वादेरप्यर्थान्निवृत्तिसिद्धिरित्याशयेनाद्यः । ज्ञानाश्रयजीवगतनियम्यत्वादिप्रपञ्चनिवृत्तौ तत्सापेक्षब्रह्मगतनियन्तृत्वादेरप्यर्थान्निवृत्तिरिति द्वितीयः । उभयगतकर्तृत्वादिनिवृत्तिरिति तृतीयः । आद्येऽपि निवर्त्यनियन्तृत्वादिरूपप्रपञ्चविशिष्टविषयकमात्मज्ञानं तन्निवर्तकमुत निवर्त्यप्रपञ्चाविषयकम् । उभयत्रापि विशिष्टविषयस्य केवलविषयकस्य वाऽऽत्मज्ञानस्य स्वविषय-

गतनियन्तृत्वादिनिवर्तकत्वं दृष्टसामर्थ्याद्वदता विशिष्टादिविषयकस्य विषयगतनिवर्तकत्वं दृष्टमिति वक्तव्यम् । न च तद् दृष्टं प्रत्युत तदभाव एव दृष्ट इति व्यभिचार इत्याशयेनाद्यं निराह ॥ **यत इति** ॥ अत्र ब्रह्मज्ञानेन सत्यं निवर्तमानं विषयगतं नियन्तृत्वादि निवर्तते यतो ज्ञानेन विषयगतं निवर्तते लोक इति योजनयोक्ताभिप्रायलाभोऽत एव शङ्काग्रन्थे सामान्यनिर्देश इति । एवमेवोत्तरकल्पद्वयेऽपि योजना द्रष्टव्या । विषयगतपक्षदूषणावसरे नीलादेः स्वविषयत्वोक्तिस्तु विशिष्टविषयकस्य विशेषणविषयकत्वस्यापि सत्त्वाभिप्रायेणेति द्रष्टव्यम् । केवलविषयकं तद्गतनियन्तृत्वादिनिवर्तकमित्यत्रापि व्यभिचारमाह ॥ **स्वविषयसमवेतमिति** । नीलज्ञानस्य न रसादिनिवर्तकत्वमविरोधाच्छुद्धात्मविषयं पुनस्तद्विरोधिनं निवर्तयतीत्यतस्तत्रापि व्यभिचारमाह ॥ **विरोधिनं वेति** ॥ अथवा निवर्त्यस्य सत्यस्य विषयगतत्वाद्यन्यतमवत्त्वनियमाद् ब्रह्मज्ञानेन विषयादिगतसत्यनियन्तृत्वादिनिवृत्तौ ज्ञानेन स्वविषयादिगतमन्यदपि सत्यं निवर्तेतेति सत्यस्यापि निवृत्तौ बाधकप्रसङ्गोऽत्र शङ्काग्रन्थेऽभिमतः । तत्र चेष्टापत्तौ तर्हि तत्तज्ज्ञानेन स्वस्वविषयादिगतं निवर्तेत किमित्यापाद्यापादकयोः सूचनाय । ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तौ सत्यस्यापि निवृत्तिः किं न स्यादिति सामान्यस्यैव प्रस्तुतत्वाच्च सामान्येनानुवादोऽयम् । एवं च ज्ञानमज्ञानस्यैव निवर्तकमित्यत्राप्रयोजकत्वाशङ्कायां विपक्षे बाधकान्तरं विवरणोक्तमाशङ्कते ॥ **नन्विति** ॥ आपादनत्रयेऽपीष्टापत्तिं निरस्यति नाद्यो यत इत्यादिनेति योज्यम् । एवं च विवरणे दृष्टसामर्थ्याज्ज्ञानाद्बन्धनिवृत्तिरिति दर्शनमूलपक्षदूषणत्वेनैतदुक्तावप्युक्तरीत्या विपक्षबाधकत्वस्यापि सम्भवात्तथा शङ्कितम् । अत्र च पक्षे आपादनविवक्षाप्रवृत्तोत्तरग्रन्थस्वारस्यं यथास्थितविन्यासानुपपत्तिशङ्कानुदयश्चेति द्रष्टव्यम् । आत्मज्ञानेनात्मगतनियन्तृत्वादेरुभयगतकर्तृत्वादेर्वा निवृत्तेः सिद्धान्तेऽनभ्युपगमात्प्रथमतृतीयावनङ्गीकारेण पराकृत्य द्वितीयं पक्षमाश्रित्य तत्रोक्तदूषणं परिहरति ॥ **मैवमिति** ॥ यदि ज्ञानमाश्रयगतं निवर्तयेत्तर्हि धर्मादिकमपि निवर्तयेत् । न च धर्मादिकं निवर्तयति । तस्मान्न ज्ञानमाश्रयगतनिवर्तकम् । ततश्च नाश्रयगतनियम्यत्वादिनिवर्तकत्वमात्मज्ञानस्येति ज्ञानसामान्यस्यापादनविषयतामभिप्रेत्यात्मज्ञानस्य नियम्यत्वादिनिवर्तकत्वाभावसिद्धिरार्थिकीति मनुषे आहोस्विदात्मज्ञानं यद्याश्रयगतनियम्यत्वादिनिवर्तकं तर्हि धर्मादिनिवर्तकमपि स्यादित्यात्मज्ञानरूपविशेषस्यापादनविषयतामभिप्रेत्य यज्ज्ञानमाश्रयगतं निवर्तयति तद्धर्मादिकमपि निवर्तयतीति व्याप्तौ च घटादिज्ञानेनेति व्यभिचारोद्भावनमिति वा । तत्राद्यं सत्यस्य निवृत्तावात्माऽपि निवर्तेतेति परोक्ततर्के पूर्वोक्तदूषणातिदेशेन दूषयति ॥ **यदीति** ॥ हन्त तर्हि विरोधिसद्भाव एवेत्युक्तदूषणातिदेशेनापि तं दूषयति ॥ **घटादीति** ॥ मयाऽऽत्मज्ञानेन नियम्यत्वादिवद्धर्मादिनिवृत्तेरभ्युपगमादिष्टापत्तिरिति भावेन द्वितीयं निराचष्टे ॥ **आत्मेति** ॥ एवं चोक्तोत्तरत्वादित्याद्यकल्पनिरासायैवेति द्रष्टव्यम् । इदं च व्यभिचारपरतापक्षे व्यभिचारोपपादनाय विवक्षितेऽन्यथा घटादिज्ञानेनापि

धर्मादिनिवृत्तिः स्यादित्यापादने दूषणं विपक्षबाधकतापक्षे यथास्थित आपादन एवेति द्रष्टव्यम् । एवमाद्यपक्षस्यानङ्गीकारपराहतत्वात्तद्दूषणमनुद्धृत्य स्वाभिमतद्वितीयपक्षदूषणमेवोद्धृतम् । अधुनाप्रतिवादिस्खलितं नोपेक्षामर्हतीत्याशयेनाद्यपक्षोक्तव्यभिचारस्थलं निराकरोति ॥ **चित्रावयविनीति** ॥ तत्र नीलरूपस्य तद्विरोधिपीतिम्नोऽप्यभावान्न तस्य व्यभिचारोदाहरणत्वं युक्तमिति भावः । न च चित्रावयव्यारम्भकनीलावयवविवक्षया नीलविशिष्टवस्तुज्ञानस्यानिवर्तकत्वोदाहृतेर्न विरोध इति वाच्यम् । तथा सति चित्रावयविनीत्यस्य वैयर्थ्यापत्तेः । नीलज्ञानस्य स्वविषयनिवर्तकत्वे चित्रावयविन एवानुपपत्तिरिति प्रदर्शनार्थत्वेन कथञ्चिदवैयर्थ्ये स्वविरोधिनं पीतिमानमित्यस्यानुपपत्तिरेव । तदेतदप्याह ॥ **चित्रावयविनीति** ॥ नापि तत्र पीतिमगुणोऽस्तीति च । नापि चित्रावयव्यारम्भकपीतावयवे नीलोऽयमासीदिति ज्ञानस्य वा नीलमिति ज्ञानस्य वा विवक्षितत्वात्तज्ज्ञानस्य वा नीलमिति ज्ञानस्य वा विवक्षितत्वात्तज्ज्ञानस्य च वर्तमानपीतानिवर्तकत्वान्नोदाहरणासङ्गतिरित्यपि युक्तम् । वर्तमानविषयज्ञानस्य स्वविषयविरोधिनिवर्तकतां वदन्तं सत्यत्ववादिनं प्रत्येतस्यानुदाहरणत्वात् । न च तथा सति पारमार्थिकप्रपञ्चवादिनस्तत्काले प्रपञ्चाभावासम्भवेन निष्प्रपञ्चब्रह्मज्ञानस्य प्रपञ्चनिवृत्तेः पूर्वं वर्तमानप्रपञ्चाभावविषयकत्वासम्भवेन ततः प्रपञ्चनिवृत्त्यसम्भव इति वाच्यम् । तन्मते निष्प्रपञ्चब्रह्मज्ञानस्य प्रपञ्चनिवर्तकत्वासम्प्रतिपत्तेः । तदिदमुक्तम् ॥ **भ्रम एवेति** ॥ नन्वस्तु तर्हि प्रतिभासबलाच्छुक्लादिरूपस्य समानजातीयरूपारम्भकत्वनियमेन कारणे चित्ररूपाभावे कार्ये तदयोगाच्च नानारूपसमाहार एव चित्रमिति यथास्थितोदाहरण एव नासङ्गतिरिति । न चैवं चित्ररूपमिति प्रतीतिमाश्रित्य चित्ररूपमङ्गीकुर्वतोऽन्यथा प्रतीतौ विप्रतिपत्तेः अव्याप्यवृत्तेर्व्याप्यवृत्ति सजातीयताविरोधेन रूपाणां व्याप्यवृत्तितानियममभ्युपगच्छतो रूपस्य सजातीयरूपारम्भकत्वनियमस्य चासिद्धेर्नानारूपवदवयवारब्धद्रव्यरूपस्याव्याप्यवृत्तित्वमनुभवबलादित्यस्य त्वनुभवविप्रतिपत्त्या निरस्ततया नानारूपसमाहारपक्षानुपपत्त्या कथं नोदाहरणासङ्गतिरिति वाच्यम् । तथाऽप्यनुभवद्वयस्य नियमद्वयस्य च प्रतिपक्षतया नैकस्यापि निर्णय इति भ्रम एवेत्युक्तमयुक्तमित्यत आह ॥ **एकमेव हीति** ॥ पदार्थविद इत्यनेन तदुक्तयुक्त्यैव प्रकृतसिद्धौ वाक्यार्थमीमांसाऽभिनिविष्टानां किं पृथक् तत्र युक्त्युपन्यासाऽऽयासेनेति परस्य पदार्थक्लृप्तिशून्यस्य वाक्यार्थमीमांसायां नाधिकार इति च सूचयति । एवं हि पदार्थविदामाशयः । नानारूपवदवयवारब्धस्यावयविनो न तावन्नीरूपत्वम् । अप्रत्यक्षत्वप्रसङ्गात् । न चावयवरूपमेव स्वाश्रयसमवेतत्वप्रत्यासत्त्या तत्र हेतुः । चित्रावयवारब्धावयविप्रत्यक्षतयाऽपि व्यभिचारात् । न चाव्याप्यवृत्तिनानारूपाण्येव तथा । अव्याप्यवृत्तेर्व्याप्यवृत्तिसजातीयताविरोधात् । न च व्याप्यवृत्तीन्येव तानि । नीलावयवानवच्छेदेन सन्निकर्षे नीलादेरुपलम्भापत्तेः । अतो नीलपीतादिभिरेकं सम्भूय चित्ररूपमारभ्यते । न च सामग्रीसत्त्वान्नीलादिभिर्नीलादेरपि जननापत्तिः । अगत्या

नीलेतररूपादेर्नीलादिकं प्रति प्रतिबन्धकत्वकल्पनात् । प्रतिबन्धकतावच्छेदकः संबन्धः स्वसमवायिसमवेतत्वं प्रतिबध्यतावच्छेदकः समवायः कपालादौ नीलेतररूपसत्त्वे घटादौ समवायेन नीलादेरनुत्पादनात् । तथाऽपि चित्ररूपजनकतावच्छेदकं किमिति चेत् । रूपत्वमेव । न चैवमवयवे केवलनीलसत्त्वे चित्रोत्पादः स्यादिति वाच्यम् । नीलाभावपीताभावादीनामवयवस्थितानां चित्रत्वावच्छिन्नं प्रति हेतुत्वात् । हेतुतावच्छेदकसन्बन्धः स्वाश्रयसमवेतत्वं कार्यताघटकः समवायः । एवं च नीलाभावादेर्वाय्वादावपि सत्त्वात्तत्र चित्रोत्पत्तिवारणाय चित्रत्वावच्छिन्ने रूपत्वेन हेतुत्वमुक्तम् । एवं च न कोऽपि दोषः । ननु स्यादियं प्रतिबन्धकादिकल्पना यदि चित्ररूपस्थले नीलेन नीलजनने बाधकं स्यात् । न चाव्याप्यवृत्तेर्व्याप्यवृत्तिसजातीयताविरोधो बाधक इति वाच्यम् । तद्विरोधस्य निष्प्रमाणकत्वात् । अप्रामाणिकविरोधं प्रकल्प्य नीलेतररूपादेर्नीलादिप्रतिबन्धकत्वकल्पनस्य गौरवकरत्वात् । एवं चाव्याप्यवृत्तिनानारूपाण्येव चित्रम् । अत एव लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुर इत्यादिशास्त्रं त्रिश्वेता शलकीत्यादिव्यवहाराश्चोपपद्यन्ते । न चैवं कचित्किञ्चिदवयवावच्छिन्नं कचिच्च सर्वावयवावच्छिन्नं नीलाद्युत्पद्यते । तत्र च न नियामकमिति वाच्यम् । अवच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलादेरुत्पत्तिवारणायावच्छेदकतासम्बन्धेन नीलं प्रति नीलेतररूपं प्रतिबन्धकमतो न तत्र कपालावच्छेदेन नीलरूपोत्पत्तिः । किन्तु नीलकपालावच्छेदेन । न च सर्वनीलारब्धघटादिवृत्तिनीलरूपादेरप्यवच्छेद्यत्वापत्तिरुक्तसामग्रीसत्त्वादिति वाच्यम् । नीलरूपाभावोऽपि नीलरूपं प्रति हेतुः । कार्यताघटकः सम्बन्धोऽवच्छेदकत्वं कारणताघटकः सम्बन्धः स्वाश्रयवृत्तिद्रव्यसमवायः । एवं पीतरूपादौ पीतरूपाभावादिस्तथा । एवं च न कोऽपि दोष इति चित्ररूपाङ्गीकारोऽनुपपन्न इति चेत् । उच्यते । यद्यपि चित्ररूपाङ्गीकारपक्षे नीलादिकं प्रति नीलेतररूपत्वादिना प्रतिबध्यप्रतिबन्धकभावोऽगत्या कल्पनीयः । नीलाभावादीनां चित्ररूपं प्रति हेतुता च कल्पनीया । अव्याप्यवृत्तिरूपपक्षेऽवच्छेदकतासम्बन्धेन नीलादिकं प्रति नीलेतररूपादिकं समवायेन प्रतिबन्धकम् । व्याप्यवृत्तिनीलस्थलेऽवच्छेदकतासम्बन्धेन नीलोत्पत्तिवारणाय पूर्वोक्तद्रव्यघटितसम्बन्धेन नीलाभावादीनामवच्छेदकतासंबन्धेन नीलादिकं प्रति हेतुता कल्पनीयेति कार्यकारणभावकल्पना तुल्या । तथाऽप्यव्याप्यवृत्तिरूपपक्षे चित्रस्थलेऽवयविनि बहूनि रूपाणि तद्ध्वंसप्रागभावादीनि कल्पनीयानि । चित्रपक्षे एकमेव रूपमिति लाघवम् । तस्माच्चित्रं रूपमेकमेवेति पक्ष एव साधुरिति । एवं च नानारूपसमाहारश्चित्रमिति पक्षस्यायुक्तत्वात्प्रतिभासस्य च मिथ्याज्ञानत्वाच्चित्रावयविनि नीलविशिष्टवस्तुज्ञानोदाहरणमयुक्तमित्याशयः ।

स० —प्रकारान्तरेणापि वस्तुनो ज्ञाननिवर्त्यत्वं नास्तीति चोदयति ॥ **ननु ज्ञानेनेति** ॥ ब्रह्मज्ञानेन जीवगतेन सत्यं निवर्तमानं किं विषयभूतब्रह्मगतं नियन्तृत्वादिकमेव तन्निवृत्तौ जीवगतनियम्य-

त्वादिरूपप्रपञ्चस्यापि तत्सापेक्षस्य निवृत्तिरर्थाल्लब्धैवेत्यभिप्रायः । यद्वा स्वाश्रयजीवगत नियम्यत्वादिक-मेव ब्रह्मज्ञाननिवर्त्यं तन्निवृत्तौ तत्सापेक्षस्यापि ब्रह्मगतनियन्तृत्वादिकस्य निवृत्तिरार्थिकीति अथवाऽऽश्रय-विषयभूतजीवब्रह्मलक्षणोभयसम्बद्धकर्तृत्वादिकमिति विकल्पत्रयार्थः । आद्यपक्षे नियन्तृत्वादिविशिष्ट-ब्रह्मविषयं ज्ञानं स्वविषयभूतं नियन्तृत्वादिविशिष्टं निवर्तयति उत केवलब्रह्मविषयमेव ब्रह्मगतनियन्तृ-त्वादिकमिति विकल्प्याद्यं दूषयति ॥ **नीलविशिष्टद्रव्यज्ञानमिति** ॥ द्वितीयं दूषयति ॥ **स्वविषय-समवेतमिति** ॥ नीलज्ञानस्य न रसादिनिवर्तकत्वमविरोधात् । शुद्धात्मविषयं पुनस्तद्विरोधिनं निवर्तयतीत्यत उक्तम् ॥ **विरोधिनं वेति** ॥ केचित्तु विषयगतं सत्यं निवर्तमानं किं स्वविषयीभूतं किं वा स्वाविषयीभूतम् । द्वितीयेपि स्वविषयगतं स्वविषयागतं अविरोधि वा तद्विरोधि वेति विकल्प्याद्यं दूषयति ॥ **यतश्चित्रावयविनीति** ॥ नीलवानयमिति ज्ञानविषयीभूतनीलस्य नीलवानयमिति ज्ञानेन निवृत्त्यापातादित्यर्थः । न द्वितीय इत्याह ॥ **स्वविषयेति** ॥ नान्त्य इत्याह ॥ **विरोधिनं वेति** । इति व्याचक्षते । ननु चित्राख्यरूपस्यैकत्वात्तत्र नीलरूपाभावात् कथं चित्रावयविनि नीलज्ञानस्य नीला द्यनिवर्तकत्वमुदाह्रियते इति चेन्न । चित्रावयव्यारम्भकनीलविशिष्टवस्तुज्ञानस्य विवक्षितत्वात् । न चैवं चित्रावयविनीतिपदवैयर्थ्यम् नीलज्ञानस्य स्वविषयनिवर्तकत्वे चित्रावयविन एवानुपपत्तिरिति प्रदर्शनार्थ-त्वेन सार्थक्यात् । यद्वा नानारूपसमाहार एव चित्रं रूपं तथैव प्रतीतेः । कारणे चित्राभावे कार्ये तदयोगाच्च । शुक्लादिरूपस्य समानजातीयरूपारम्भकत्वनियमात् । नानारूपवदवयवारब्धद्रव्यरूपस्या व्याप्यवृत्तित्वमनुभवबलात् स्वीकर्तव्यम् । अभावान्तरे गुणान्तरे चादृष्टस्यापि तस्य संयोगे तदभावे च दर्शनबलेनाभ्युपगमात् । एकस्यैव संयोगात्यन्ताभावस्य व्याप्याव्याप्यवृत्तित्वाभ्युपगमे किमपराद्धं रूपेणेति तत्त्वम् । द्वितीयं पक्षमाश्रित्य विरोधिसद्भावस्य निवृत्तौ प्रयोजकत्वान्न दोष इत्याह ॥ **मैवमिति** ॥ आश्रयगतदुःखादिबन्धनिवृत्तिरेव नियम्यत्वादिनिवृत्तिरिति बोध्यम् ॥ **उक्तोत्तरत्वादिति** ॥ प्रसाद एव निवर्तको न तु ज्ञानमित्युक्तोत्तरत्वादित्यर्थः । दोषान्तरमाह ॥ **यदीति** ॥ केचित्तु सत्यस्यापि निवृत्तावात्मनोपि निवृत्तिः स्यादिति पक्षनिराकरणप्रकारेणास्यापि दूषितप्रायत्वादित्यर्थः । तत्प्रकारमाह । यदीतीत्यप्याहुः । किं ज्ञानमात्रे सत्याश्रयगतधर्मादिनिवृत्तिरापाद्यते किं वा आत्मयाथात्म्यज्ञाने सति । आद्यं दूषयति ॥ **घटादीति** ॥ द्वितीयमङ्गीकरोति ॥ **आत्मेति** ॥ धर्मा-दीनामेव बन्धत्वादिति भावः ॥ **चित्रावयविनीति** ॥ चित्रावयविनि नीलरूपाभावादित्यर्थः । यद-त्रोक्तं चित्रावयव्यारम्भके नीलविशिष्टज्ञानं विवक्षितमिति तन्न । नीलावयविनि पीतिमादेरभावेन तद्गतपीतिमादेरित्यस्यासाङ्गत्यापत्तेः । यदपि नानारूपसमाहार इति तदपि न । नानारूपसमाहारस्य चित्रत्वे नीलधवलारुणरूपेषु पटेषु कर्बुरार्थकचित्रप्रत्ययापत्तेः । नीलपीतादिषु मिथः संसृष्टेष्वनारब्ध-

द्रव्येष्वपि कर्बुरप्रत्ययस्तु द्रव्यान्तरोत्पादाभिमानात् । तस्मान्नीलादिवच्चित्रमपि रूपान्तरमेवाभ्युपेयम् । न चैकरूपवदवयवसहितस्यावयविन उपलम्भेऽपि चित्रप्रत्ययः स्यादिति चेदस्त्येव तत्र चित्ररूपप्रत्ययः । चित्रत्वजातिस्तु न अवयववृत्तिविजातीयसमाहाराभिव्यङ्ग्यत्वात्तस्याः । अत एव त्र्यणुके चित्रे कदापि न चित्रप्रत्ययः । तथाप्यचित्रे पार्श्वे चित्रप्रत्ययो मा भूत् धवलप्रत्ययस्तु कुत इति चेत् अवयवरूपसञ्चारेणावयविनोऽपि तथा प्रत्ययात् । तस्माच्चित्रावयविनि नीलाभावात्तत्र नीलविशिष्टज्ञानमित्येतदनुपपन्नमिति भावः । परस्यासम्बद्धप्रलापित्वप्रकटनायैतदुक्तम् । न त्वेतत्पक्षकक्षीकरणार्थम् ॥

प०— विवरणोक्तमाशङ्कते ॥ **ननु ज्ञानेनेति** ॥ **विषयेति** ॥ ज्ञानविषयगतं ज्ञानाश्रयगतं वेत्यर्थः । आद्ये किं स्वविषयगतं किञ्चित्स्वविषयमेव निवर्तयति ज्ञानं उत स्वविषयसमवेतं यत्किञ्चिन्निवर्तयति । अथ स्वविषयसमवेतं स्वविषयस्य विरोधिनमेव विषयगतमिति त्रीनपि कल्पान् क्रमेण निराह ॥ **स्वविषयं वेत्यादि** ॥ स्वविषयं नीलमित्यर्थः । स्वविषयसमवेतं वा रसादिकमित्येकान्वयः ॥ **घटादिज्ञानेनेति** ॥ न्यायमते घटादिज्ञानस्य धर्मादेश्चात्मधर्मत्वादात्मगतेत्युक्तम् । उक्तोत्तरत्वादित्येतद्व्यनक्ति ॥ **यदीति** ॥ घटादिज्ञानस्य धर्माधनिवर्तकत्वेऽप्यात्मज्ञानस्य तु स्यादेवेत्याह ॥ **घटादीति** ॥ आत्मयाथात्म्यज्ञानं स्वाश्रयगतं निवर्तयति चेद्धर्मादिकमपि निवर्तयेदित्यापाद्यत इत्यत आह ॥ **आत्मेति** ॥ **इष्टेति** ॥ 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने'त्यादेरिति भावः । एतच्चेष्टापादानं न्यायमतरीत्येति ध्येयम् । तन्मते षोडशपदार्थविविक्तत्वेनात्मयाथात्म्यज्ञानस्यैव धर्मादिनिवर्तकत्वात् । यद्वाऽऽत्मपदेन परमात्मैव ग्राह्यः । परमात्मयाथात्म्यविषयकज्ञानस्यैव जीवगतस्य स्वाश्रयसंबन्धे सकलकर्मनिवर्तकत्वात् । यदपि चित्रावयवीत्यादि तदपि न । ज्ञानपदेन प्रमाज्ञानस्य विवक्षितत्वादिति भावेनाह ॥ **चित्रेति** ॥ **एकमेव हीति** ॥ नानारूपोपेतावयवैर्जाते द्रव्ये जायमानं रूपमनेकं न भवति ॥ तथात्वे रूपस्य संयोगादिवदव्याप्यवृत्तित्वापत्तेः । किन्तु कार्यद्रव्यरूपस्वाश्रयव्याप्यपि चित्ररूपं नामैकमेव तद्रूपमिति पदार्थविदो नैयायिका मन्यन्ते । तान्प्रति त्वया कथ्यमानमापादनमसङ्गतमेवेति भावः ।

या०— प्रकारान्तरेण सत्यस्य ज्ञानेन निवृत्तौ बाधकमाशङ्कते ॥ **ननु ज्ञानेन सत्यमिति** । जीवगतेन ब्रह्मज्ञानेन सत्यं निवर्तमानं किं विषयभूतब्रह्मगतं नियन्तृत्वादिकमेव । तन्निवृत्तौ जीवगतनियम्यत्वादिप्रपञ्चस्यापि तत्सापेक्षस्य निवृत्तिरर्थाल्लब्धैवेत्यभिप्रायः । यद्वा आश्रयजीवगतनियम्यत्वादिकमेव ब्रह्मज्ञाननिवर्त्यम् । तन्निवृत्तौ तत्सापेक्षस्यापि ब्रह्मगतनियन्तृत्वादिकस्य निवृत्तिरार्थिकीति । अथवा आश्रयविषयीभूतजीवब्रह्मलक्षणोभयसम्बद्धं कर्तृत्वादिकमिति यथाक्रमं विकल्पत्रयार्थः ।

सर्वत्रापि क्रमेण व्यभिचारमाह ॥ **यत इत्यादिना** ॥ नानारूपसमाहारश्चित्रमिति कस्यचिन्मतमाश्रित्येद-मुदितमित्याहुः । आद्यपक्षेऽपि नियन्तृत्वादिविशिष्टब्रह्मविषयं ज्ञानं स्वविषयभूतं नियन्तृत्वादिविशिष्टं निवर्तयति उत केवलब्रह्मविषयमेव ब्रह्मगतनियन्तृत्वादिकमिति विकल्प्याद्यं दूषयति ॥ **नीलविशिष्ट-द्रव्येति** ॥ स्वविषयं नीलविशिष्टमित्यर्थः । चित्रावयविनीत्येतद्विरोधिनं वा पीतिमादिगुणमिति वक्ष्यमाणगुणोपपत्त्यर्थम् । द्वितीयं दूषयति ॥ **स्वविषयसमवेतमिति** ॥ नीलज्ञानस्य न रसादिनिवर्तकत्व-मविरोधात् । शुद्धात्मविषयं पुनस्तद्विरोधिनं निवर्तयतीत्याशङ्क्य तत्रापि व्यभिचारमाह ॥ **विरोधिनं वेति** ॥ द्वितीयपक्षमाश्रित्य विरोधिसद्भावस्य निवृत्तौ प्रयोजकत्वान्नोक्तदोष इत्याह ॥ **मैवमित्यादिना** ॥ **उक्तोत्तरत्वादिति** ॥ सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेत्यस्य यदुत्तरमुक्तं व्याप्त्यभावादित्यादि तदेवात्रापीत्यर्थः । तदेव दर्शयति ॥ **यदि ज्ञानमिति** ॥ यदि ब्रह्मज्ञानमाश्रयगतं नियम्यत्वादि निवर्तयेत्तदा स्वाश्रयगतं धर्मादिकं निवर्तयेदित्यत्र व्याप्त्यभावादित्यर्थः । पूर्ववदविशेषनिष्ठ-व्याप्तिनिरासायाह ॥ **विपक्ष इति** ॥ असिद्धश्चाविशेष इत्याह ॥ **घटादिज्ञानमिति** ॥ **बन्धेति** ॥ आश्रयगतनियम्यत्वादिरेव दुःखादिबन्धरूप इति हृदयम् । ननु यदि ब्रह्मज्ञानमाश्रयगतनियम्यत्वादि निवर्तयेत्तदा तद्गतं धर्मादिकमपि निवर्तयेदविशेषादित्यापाद्यते न घटादिज्ञानमतस्तद्वैषम्येऽपि न दोष इत्याकाङ्क्षायामाह ॥ **आत्मयाथात्म्येति** ॥ परमात्मयाथात्म्यज्ञानेन जीवगतधर्मादिबन्धनिवृत्तेरस्माभि-रप्यङ्गीकृतत्वादिति भावः ॥ **मिथ्याज्ञानमेवेति** ॥ अतो न याथात्म्यज्ञानस्य विषयतद्गतनिवर्तकत्वे व्यभिचारोदाहरणस्थलमिदमिति भावः ॥ **एकमेव हीति** ॥ नानारूपसमाहारस्य चित्रत्वे नीलधवलारुणेषु पटेषु कर्बुरार्थचित्रप्रत्ययापत्तिः । एकस्मिन्धर्मिणि नानारूपसमाहारातिरिक्तचित्ररूपानङ्गीकारे एकस्या-नारम्भकत्वेन सितपीततन्तुद्वयमात्रारब्धपटे रूपोत्पत्त्यसम्भवेन तस्य नीरूपत्वापत्त्याऽचाक्षुषत्वापत्तिश्चेति तेषां भावः । इदं च परस्यासम्बद्धप्रलापित्वप्रकटनायैवोक्तं न तु तत्पक्षकक्षीकरणार्थम् । एकस्याप्यारम्भ-कत्वे रूपस्याव्याप्यवृत्तित्वे च बाधकाभावेनैकस्मिन्धर्मिणि नानारूपसमाहारातिरिक्तचित्ररूपाङ्गीकारे साधकाभावात् । अत एव 'पीतशुक्लारुणो हरिः । कृष्णश्चे'त्यादीनि वचनानि समञ्जसानीत्यवधेयम् ॥

श्री०— ज्ञानं घटादिज्ञानम् ॥ **तथा सतीति** ॥ ज्ञानेन सत्यं निवर्तमानं विषयगतं चेन्निवर्तते तर्हि नीलविशिष्टद्रव्यस्य निवृत्तिः स्यादित्यापादनं कर्तुं न शक्यते । तव मते तस्याप्यसत्वादित्यर्थः ॥

च०— सत्यस्य ज्ञानेन निवृत्तौ विवरणोक्तानुपपत्तिं परिजिहीर्षुराशङ्कते ॥ **ननु ज्ञानेन सत्यमिति** ॥ अत्रात्मज्ञानविषयीकृतात्मनिष्ठनियन्तृत्वादेरात्मज्ञानेन निवृत्तौ तन्निरूपितजीवगतनियम्य-

त्वादेरप्यर्थान्निवृत्तिः सेधिष्यतीत्याशयेनाद्यकल्पस्य तादृशज्ञानाश्रयीभूतजीवगतनियम्यत्वादेस्तेन निवृत्तौ तन्निरूपितात्मवृत्तिनियन्तृत्वादेरप्यर्थान्निवृत्तिरिति द्वितीयस्योभयगतकर्तृत्वादिनिवृत्तिरिति तृतीयस्यावतार इत्यवधेयम् । आद्यकल्पेऽपि नियन्तृत्वादिप्रकारकब्रह्मविशेष्यकज्ञानं नियन्तृत्वादिविशेषितं ब्रह्म निवर्तयतीति विशेषणतया नियन्तृत्वाद्यविषयकमेव ब्रह्मविषयकज्ञानं स्वविषयीभूतब्रह्मवृत्तिनियन्तृत्वादिकमिति द्वितीयाभावादिरूपशुद्धत्वोपरागेण ब्रह्मज्ञानं स्वनिरूपितप्रकारतापन्नं यद्दर्शितशुद्धत्वं तद्विरुद्धनियन्तृत्वादिकमिति कल्पत्रयीममिप्रेत्य क्रमेण प्रतिविधत्ते ॥ **यत इत्यादि** ॥ विरोधिनं वा पीतिमादिगुणमिति समनन्तराभिधास्यमाने पीतिमगुणे स्वनिरूपितप्रकारतापन्ननीलिमनिरूपितविरोधस्फोरणाय चित्रावयवविनीतिपदम् । नानारूपसमाहारश्चित्रमिति कतिपयमततात्पर्यकमुपात्तम् । द्वितीयकल्पमाश्रित्य समाधित्सते ॥ **मैवमित्यादि ॥ उक्तोत्तरत्वादिति** ॥ सत्यस्यापि निवृत्तावात्माऽपि निवर्तेतेतिप्रसञ्जनस्य व्याप्त्यभावादिति समाहितिरभिहिता । सैवात्राप्यवसेयेत्यर्थः । तदेव विशदयति ॥ **यदीत्यादि** ॥ ब्रह्मगोचरज्ञानस्याश्रयगतनियम्यत्वादिनिवर्तकतोपगमे घटादिज्ञानस्याप्याश्रयगतधर्मादिनिवर्तकता स्यादित्यत्र व्याप्त्यभावादित्यर्थः । विवक्षितात्प्रत्यासत्त्या ब्रह्मविशेषितज्ञानत्वावच्छिन्नस्यैवाश्रयगतनिवृत्तिप्रयोजकत्वोपगमेन तदन्यविषयविशेषितज्ञानत्वावच्छिन्नस्याश्रयगतनिवृत्तिव्याप्त्यङ्गीकारस्तत्राप्रयोजकतानिवर्तकबाधकतर्कानवतारेण न सम्भवतीत्याह ॥ **विपक्ष इति** ॥ दर्शितज्ञानद्वयस्य विषयवैलक्षण्यनिबन्धनवैलक्षण्यस्य सत्वेनावैशेष्यमसिद्धमित्याह ॥ **घटादीति ॥ बन्धविरोधीति** ॥ नियम्यत्वादेरेव बन्धरूपत्वादिति भावः । प्रमात्वस्य ज्ञानवृत्तिनिवर्तकतावच्छेदकत्वोपगमे न क्षतिरित्याह ॥ **चित्रावयविनीति** ॥ न्यायनये संयोगादिवद्रूपस्याव्याप्यवृत्तिताविरहेणनानारूपवदवयवारब्धपटादिवृत्तिचित्ररूपस्य व्याप्यवृत्तितया नीलपीतादिसामानाधिकरण्याभावेन चित्ररूपवति नीलादिज्ञानस्य भ्रमत्वादिति भावः । पदार्थविदः नैयायिकाः ॥

**सु०— अस्तु वा ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिस्तथाऽपि बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते । किन्तु बन्धस्याज्ञानतत्कार्ययोरन्यतरत्वमेवेति तदेव वर्णनीयम् । अध्यासवर्णनस्य का सङ्गतिः । अज्ञानस्य मिथ्यात्वं तु कफोणिगुडायितम् । निराकरिष्यमाणत्वात् ।**

वा०—एवं यत्खलु प्रमितमप्यनुपपद्यमानं स्वोपपत्तये यदपेक्षते तत्तदाक्षिपति नान्यदित्यत्रत्यस्य प्रमितत्वांशस्य प्रथमं निरासः । साक्षाज्ज्ञानाद्बन्धनिवृत्तेरसूत्रित्वात् । अप्रामाणिकत्वाच्च । सामान्योक्तेश्च

विशेषप्रमाणानुरोधेनान्यथैवोपपन्नत्वादिति । अत एव तत्र प्रमाणान्युदाहृत्य तत्सावकाशत्ववर्णनम् । तदनन्तरं च ज्ञानमज्ञानस्यैव निवर्तकमिति नियमाभावेनानुपपत्तेरभावात्साक्षाज्ज्ञानाद्बन्धनिवृत्त्यभ्युपगमेऽपि न क्षतिरित्यनुपपद्यमानत्वांशस्यास्तु वेत्यादिना निरासः । अधुना ज्ञानमज्ञानस्यैव निवर्तकमिति नियमाभ्युपगमेऽपि साक्षाज्ज्ञानाद्बन्धनिवृत्तेरन्यथैवोपपन्नतया न काचिदपि क्षतिरित्यभिप्रेत्य स्वोपपत्तये यद्यदपेक्षते तत्तदाक्षिपतीतीममंशं निरस्यति ॥ **अस्तु वेति** ॥ साक्षाज्ज्ञानाद्बन्धनिवृत्तिः श्रूयमाणा ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिबलाद्बन्धस्याज्ञानात्मकत्वं विनाऽनुपपन्ना सती बन्धस्य साक्षादज्ञानत्वं वोपादानोपादेययोरभेदादज्ञानोपादानकत्वमेव वाऽऽक्षिपेदित्यन्यथैवोपपत्तिरिति भावः । नन्वज्ञानोपादानत्वाक्षेपेऽप्युपादेयस्योपादानस्वभावतयाऽज्ञानस्य च मिथ्यात्वात्तत्कार्यबन्धस्यापि मिथ्यात्वमेवेति तदध्यासवर्णनं सङ्गतमेवेत्यत्राह ॥ **अज्ञानस्येति** ॥ अज्ञानस्य मिथ्यात्वं बन्धस्याध्यस्ततया कार्यकारणयोरेकस्वभावत्वात्साध्यं वा प्रकारान्तरेण वा । नाद्यः । बन्धाध्यासस्यैवाभावेन तत्प्रयुक्ताज्ञानमिथ्यात्वस्यासम्भवात्कपोणिलेहनप्रयुक्तकपोणिस्थगुडलेहनतुल्ययोगक्षेमत्वादित्याह ॥ **कपोणीति** ॥ न द्वितीयः । साधकाभावबाधकसद्भावाभ्यामज्ञानस्य च मिथ्यात्वमित्यादिना निराकरिष्यमाणत्वादित्याह ॥ **निराकरिष्यमाणत्वादिति** ॥ केचित्तु निराकरिष्यमाणत्वादित्यत्राज्ञानस्य तन्मिथ्यात्वस्य चेत्यन्वयमभिप्रेत्याज्ञानस्वरूपस्यैव त्वन्मते निराकरिष्यमाणत्वेन तन्मिथ्यात्वं कपोणिगुडायितमित्यर्थः इत्याहुः ।

स० —**अस्तु वेत्यादि** ॥ अज्ञानस्य स्वाभाविकत्वे तदात्मकस्यापि बन्धस्यानध्यस्तस्यैव निवृत्तिर्भविष्यतीत्यर्थः । नन्वत एव ज्ञानस्य मिथ्यात्वमित्युक्तं तत्राह ॥ **अज्ञानस्येति** ॥ निराकरिष्यमाणत्वादित्येतदज्ञानस्येत्यनेनाभिसम्बध्यते । तथा च कफोणिकूर्पराभिधेयहस्तमूलस्यैव जिह्वासम्बन्धायोग्यत्वात् तदालिप्तगुडलेहनमसङ्गतम् । तथा अज्ञानस्यैवासंभवात् तन्मिथ्यात्वव्युत्पादनमत्यन्तासङ्गतमित्यर्थः । निराकरिष्यमाणत्वात् 'निर्विशेषे स्वयंभाते' 'अज्ञानस्य च मिथ्यात्वमि'त्यनेन निराकरिष्यमाणत्वादित्यर्थः ।

प० —नन्वज्ञानकार्यत्वे बन्धस्य मिथ्यात्वं सिद्धमेव । अज्ञानस्यैव मिथ्यात्वादित्यत आह ॥ **अज्ञानस्येति** ॥ यद्वा बन्धस्याज्ञानरूपत्वात्तस्य च मिथ्यात्वात्तद्वर्णनं युक्तमित्यत आह ॥ **अज्ञानस्येति** ॥ **कपोणिगुडायितमिति** ॥ कपोणिगुडवदाचरितमित्यर्थः । कपोणिर्नाम बाहुमध्यसन्धिः । 'भुजबाहू प्रवेष्टो दोः स्यात्कपोणिस्तु कूर्परः । अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यध' इत्यमरोक्तेः । अत्र कपोणीतिपवर्गाद्याक्षरपाठः साधुः । न तु कफोणीति पवर्गद्वितीयवर्णपाठः । कं कर्म प्रसारणादिकं पुणति

करोतीत्यमरव्याख्याने पुणधातुजत्वस्यैवोक्तेः । मध्यपनिम्नबाह्यप्रदेशान्तर्भागे विद्यमानस्य गुडस्य रसनेन्द्रियस्पर्शो यथा न शक्यते तथाऽज्ञाने मिथ्यात्वसंबन्धोऽपि न शक्यत इत्यर्थः ॥ **निराकरिष्यमाणत्वादिति** ॥ 'अज्ञानस्य च मिथ्यात्वमज्ञानादिति कल्पन' इत्यत्रेति भावः ।

**या० – का सङ्गतिरिति** ॥ अज्ञानस्य सत्यत्वे तत्कार्यस्यापि बन्धस्यानध्यस्तस्यैव निवृत्तिर्भविष्यतीति भावः । नन्वत एवाज्ञानस्य मिथ्यात्वं मिथ्याज्ञाननिमित्तमित्यनेनोक्तमित्यत आह ॥ **अज्ञानस्येति** ॥ कफोणिः कूर्पराभिधं हस्तमूलम् । स्यात्कफोणिस्तु कूर्पर इत्यभिधानात् । तस्य जिह्वासन्निकर्षायोग्यत्वात्तदालिप्तगुडलेहनं यथाऽशक्यसाधनं तथाऽज्ञानस्यैवासम्भवात्तन्मिथ्यात्वव्युत्पादनमप्यत्यन्तासङ्गतमित्यर्थः । निराकरिष्यमाणत्वादित्यत्राज्ञानस्येत्यनुवर्तते । 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेदित्यादिनाऽज्ञानस्य निराकरिष्यमाणत्वादित्यर्थः । तन्मिथ्यात्वस्याप्यज्ञानस्य च मिथ्यात्वमित्यादिना निराकरिष्यमाणत्वादित्यर्थः ।

**च०— का सङ्गतिरिति** ॥ पटस्य सत्यत्वेऽपि तदुपादानभूततन्तुनिवृत्त्या पटनिवृत्तिवत् बन्धस्य सत्यत्वेऽपि तदुपादानभूताज्ञाननिवृत्त्यैव तन्निवृत्तेः संभवेन तस्याध्यासवर्णनमसङ्गतमिति भावः । अत्र कफोणिः कूर्पराभिधहस्तमूलमिति व्याकर्तॄणामेकः पन्थाः । अन्यस्तु कपोणिरिति पवर्गीयाद्याक्षरपाठ एव साधुः । कं कर्म प्रसारणादिकं पुणति करोतीत्यमरव्याख्याने पुणधातुजत्वस्यैवोक्तेरिति ॥ **निराकरिष्यमाणत्वादिति** ॥ अज्ञानस्येत्यनुषञ्जनीयेनान्वेति । निर्विशेषे स्वयं भात इत्यादिना प्रत्याख्यास्यमानत्वादित्यर्थः ।

**सु०— अपि च सत्यस्यापि विषस्य गरुडध्यानेन निवृत्तिदर्शनाद्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते । विषं न सत्यमिति चेन्न । तथा सति नीलविशिष्टद्रव्यादेरपि तवासत्यत्वेन तन्निवृत्त्यापादनस्यानुपपत्तिप्रसङ्गात् । सत्यम् । तदपि मम मिथ्या । पराङ्गीकारेण त्वापादनमिति चेत् । तर्हि तदेव न ज्ञानान्निवृत्तमिति न मिथ्याभूतस्यापि ज्ञानान्निवृत्तिः । मिथ्याभूतं विरोधिज्ञाननिवर्त्यमिति चेन्न । विशेषणवैयर्थ्यात् । अविरोधादेवात्मनोऽनिवृत्तिसंभवात् । मिथ्यात्वमङ्गीकृत्यापि विरोधोऽङ्गीकार्यः । ततो वरं स एव प्रयोजक इत्यङ्गीकारो लाघवात् । ज्ञानविरोधित्वं मिथ्याभूतस्यैवेति चेन्न । प्रमाणाभावात् । दर्शनादिति चेत् । तद्यागमेन सत्यस्यापि भवत्केन वार्यते । न च दर्शनमात्रं व्याप्तेर्नियामकम् । ध्यानं मानसी**

क्रिया न ज्ञानमिति चेन्न । यदि क्रियापरिस्पन्दः स तर्ह्यतीन्द्रियाश्रितोऽतीन्द्रिय इत्यपरोक्षावभासविरोधो रूपरहितत्वेन तदवभासविरोधश्च । यदि च मानसी सृष्टिरिति मतम् अनुमतमेतत् । श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसाऽवलोकनं ध्यानमित्यङ्गीकारात् । अतीन्द्रियोपादानकस्यापि द्रव्यस्यैन्द्रियकत्वं त्र्यणुकादेरिवोपपद्यते । नीरूपाद्वायो रूपवतस्तेजसो जन्म वेदान्तिनां प्रसिद्धमेव । तार्किकादीन्स्त्वारम्भवादनिराकरणेन तोषयिष्यामः । एवं च ध्यायतेश्चिन्तार्थताऽपि स्मृतिसिद्धासिद्धा । अत एव क्रियामानसवदिति सूत्रविरोधोऽपि परिहृतः । विधिजन्यपुरुषेच्छाप्रयत्ननिरपेक्षमेव सर्वत्र ज्ञानस्य पुष्कलकारणम् । अनिच्छतोऽप्यनिष्टज्ञानदर्शनात् । तत्कथमिदं ज्ञानमिति चेन्न । विधेः साध्यसाधनभावमात्रज्ञापनेन चरितार्थत्वात् । इच्छाप्रयत्नयोश्च संस्कारोद्बोधे कृतार्थत्वान्मानसवस्त्ववलोकने व्यापाराभावात् । चक्षुश्चलननिरासवन्मनोविक्षेपनिरासे वा तदुपयोगः ।

वा०—एवं सत्यस्यापि ज्ञानान्निवृत्तौ बाधकाभावेन ज्ञानमज्ञानस्यैव निवर्तकमिति नियमो नास्त्येव । तन्नियमाङ्गीकारेऽपि वा बन्धस्याज्ञानतत्कार्यान्यतरत्वमात्रप्राप्त्या तस्य च सत्यत्वेऽप्युपपत्त्या न बन्धमिथ्यात्वाक्षेप इत्यन्यथैवोपपत्तिं प्रतिपाद्याधुना सत्यस्य ज्ञानान्निवृत्तेः स्पष्टदृष्टतया व्यतिरेकव्यभिचारेण बन्धमिथ्यात्वस्य तदुपपादकत्वानुपपत्तौ ज्ञानाद्बन्धनिवृत्तेरन्यथैवोपपत्तेर्न तया बन्धमिथ्यात्वाक्षेप इत्याह ॥ **अपि चेति** ॥ न च तत्रापि विप्रतिपत्तिः । सा किं विषनिवृत्तिगरुडध्यानयोः साध्यसाधनभावे प्रमाणाभावाद्वा विषयस्यासत्यत्वाद्वा ध्यानस्य ज्ञानत्वाभावाद्वा । नाद्यः । दर्शनादित्यन्वयव्यतिरेकसध्रीचीनप्रत्यक्षस्योपन्यस्तत्वात् । द्वितीयं शङ्कते ॥ **विषमिति** ॥ मन्मते विषस्य सत्यत्वात्तदुदाहरणं युक्तमेव त्वां प्रत्यपि तत्सत्यमेव । तस्य नीलविशिष्टद्रव्ययोगक्षेमत्वात् । तस्याप्यसत्यत्वे सत्यस्य निवृत्तौ नीलविशिष्टद्रव्यज्ञानेन तन्निवृत्त्यापादनमयुक्तं स्यादित्याह ॥ **तथा सतीति** ॥ ननु विषं नीलविशिष्टद्रव्यं चेत्युभयमपि मां प्रत्यसत्यमेव । अतो विषस्यानुदाहार्यत्वमुच्यते । आपादनं तु पराङ्गीकारेणेत्याशङ्कते ॥ **सत्यमिति** ॥ मन्मते नीलविशिष्टद्रव्यस्य सत्यत्वात्सत्यस्य ज्ञानेन निवृत्तौ नीलद्रव्यस्यापि तज्ज्ञानेन निवृत्तिं मदङ्गीकारेण मां प्रत्यापाद्य सत्यस्य ज्ञानेन निवृत्तिं त्याजयसि चेत् । त्वन्मते तस्य मिथ्यत्वान्मिथ्याभूतस्य ज्ञानेन निवृत्तौ नीलद्रव्यस्य तज्ज्ञानेन निवृत्तिं त्वदङ्गीकारेणैवापाद्य मिथ्याभूतस्यापि ज्ञानेन निवृत्तेस्त्याजयितुं शक्यत्वेन प्रत्यापादनपराहतत्वान्मां प्रत्यपि तदापादनमनुपपन्नमेवेत्याह ॥ **तर्हीति** ॥ ननु न मिथ्यात्वमात्रं निवृत्तिप्रयोजकमपि तु विरोधित्वमपि । एवं चाविरोधादेव नीलद्रव्यस्य तज्ज्ञानेन न निवृत्तिरिति मां प्रति प्रत्यापादनं न युक्तमित्याशङ्कते ॥ **मिथ्याभूतमिति** ॥

विरोधिज्ञाननिवर्त्यमित्येतावन्मात्रेऽनुपपत्त्यभावेन मिथ्याभूतमिति विशेषणवैयर्थ्यान्नीलद्रव्यस्य सत्यत्वेऽप्यविरोधादेव न निवृत्तिरिति न मां प्रत्यपीदमापादनं युक्तमित्याशयेनाह ॥ **विशेषणेति** ॥ ननु न तावन्मात्रेऽनुपपत्त्यभाव आत्मनो निवृत्तिप्रसङ्गस्यानिष्टत्वादित्यत्राह ॥ **विरोधादिति** ॥ ननु विरोधिपदेनैवमिथ्याभूनेति विशेषणेनाप्यात्मनो निवृत्तिप्रसङ्गस्य परिहर्तुं शक्यत्वात्को निर्बन्धो विरोधित्वेनैव तत्परिहार इत्यत्र येन त्वां प्रत्यापादनमनुपपन्नं स्यादित्यत आह ॥ **मिथ्यात्वमिति** । ननु मिथ्याभूतस्यैव ज्ञानविरोधित्वेन सत्यस्य ज्ञानविरोधस्यैवाभावेन सत्यत्वेन ज्ञानविरोधतदभावाभ्यां निवृत्त्यनिवृत्ती त्वया प्रतिपादयितुं शक्ये । मिथ्याभूतमिति विशेषणं च तस्यैव ज्ञानविरोधित्वमिति प्रतिपादयितुमुपादीयते न त्वात्मादिव्यावृत्त्यर्थम् । एवं च त्वां प्रत्यापादनं युक्तमेव मां प्रति प्रत्यापादनं चानुपपन्नमित्याशङ्कते ॥ **ज्ञानेति** ॥ **प्रमाणेति** ॥ यज्ज्ञानविरोधि तन्मिथ्येति व्याप्तौ प्रमाणाभावादित्यर्थः । ननु मिथ्याभूते शुक्तिरजतादौ ज्ञानविरोधित्वदर्शनमेव । तत्र प्रमाणमित्याशङ्कते॥ **दर्शनादिति चेदिति** ॥ अस्तु शुक्तिरजतादौ दर्शनान्मिथ्याभूतस्यापि ज्ञानविरोधित्वम् । ज्ञानध्यानादिना बन्धविषादेर्निवृत्तिप्रतिपादकागमवशेन सत्यस्यापि ज्ञानविरोधित्वाङ्गीकारे न किञ्चिद्बाधकमित्याह ॥ **तर्हीति** ॥ ननु दर्शनवशेन ज्ञानविरोधित्वमिथ्यात्वयोर्व्याप्तौ सिद्धायामागमो ज्ञाननिवर्त्यत्वं बन्धादेः प्रतिपादयितुं प्रवृत्तो मिथ्यात्वं विनाऽनुपपद्यमानस्तत्रैव पर्यवस्यतीत्यत आह ॥ **न चेति** ॥ एवं च विरोधित्वस्य ज्ञाननिवर्त्यत्वप्रयोजकत्वे मां प्रत्यप्यापादनानुपपत्तेस्तत्परित्यागेन मिथ्यात्वस्यैवोपपादकत्वाभ्युपगमे त्वां प्रत्यपि नीलनिवृत्त्यापादनस्य कर्तुं शक्यत्वान्नीलादेः सत्यत्वेऽभ्युपगन्तव्ये तत्तुल्ययोगक्षेमत्वेन विषस्यापि सत्यत्वात्तत्र व्यतिरेकव्यभिचारस्तदवस्थ इति भावः । यद्वा माऽस्तु तर्हि विषे व्यतिरेकव्यभिचाराद्बन्धमिथ्यात्वस्यानुपपादकत्वं मिथ्याभूते नीलद्रव्ये ज्ञाननिवर्त्यत्वाभावेनान्वयव्यभिचारादनुपपादकत्वमेवेत्याह **तर्हीति** ॥ एवं च विषयस्यासत्यत्वात्तत्र व्यतिरेकव्यभिचारे परेण परिहृते तस्य ज्ञानान्निवृत्तिमत्त्वेन तत्रान्वयव्यभिचारोक्त्यसम्भवान्नीलद्रव्येऽन्वयव्यभिचारोद्भावनाय तत्र मिथ्यात्वं परसिद्धं कर्तुं तथा सतीत्यादिना विषस्य नीलद्रव्यतुल्ययोगक्षेमत्वोपपादनमिति द्रष्टव्यम् । अन्वयव्यभिचारपरिहारायोपपादके विरोधित्वान्तर्भावमाशङ्कते ॥ **मिथ्याभूतमिति** ॥ माऽस्तु तर्ह्यन्वयव्यभिचारः । तथाऽपि मिथ्याभूतमिति विशेषणेन व्यावर्तनीयस्यात्मनो विरोधित्वेनैव व्यावृत्तेरुपपादके तद्विशेषणवैयर्थ्यं स्यादेवेत्याह ॥ **विशेषणेति** ॥ उभयथाऽप्यात्मव्यावृत्तिसम्भवे किं विरोधित्वेनैवत व्यावृत्तिरित्यत्राग्रहेणेत्यभिप्रायमजानानस्य शङ्कां परिहरति ॥ **मिथ्यात्वमिति** ॥ एवं चान्वयव्यतिरेकव्यभिचारपरिहारेऽपि नासत्प्रसञ्जितस्य बन्धमिथ्यात्वेऽनुपपादकत्वस्य हानिः । मिथ्यात्वस्यानुपपादकतया विरोधित्वस्यैवोपपादकत्वेन ज्ञानात्सत्यस्यापि बन्धस्य विरोधादेव निवृत्त्युपपत्तेर्ज्ञानाद्बन्धनिवृत्तेरन्यथैवोपपन्नत्वादिति भावः । ननु मिथ्याभूतस्यैव ज्ञानविरोधं सूचयितुं तद्विशेषणम् ।

एवं च ज्ञानविरोधित्वस्योपपादकत्वोक्तावपि तस्य मिथ्यात्वेन विनाऽनुपपद्यमानतया बन्धमिथ्यात्वस्याप्युपपादकत्वसिद्धेर्नान्यथोपपत्तिरित्याशयेनशङ्कते ॥ **ज्ञानेति** ॥ **तद्योगमेनेति** ॥ ज्ञानाद्बन्धनिवृत्तिप्रतिपादकागमेनेत्यर्थः । ननु दर्शनसिद्धव्याप्तिबलात्सामान्यस्याप्यागमस्य मिथ्यात्वरूपविशेष एव पर्यवसानमित्यत आह ॥ **न चेति** ॥ तृतीयं शङ्कते ॥ **ध्यानमिति** ॥ चेतोवृत्त्यन्तरं ध्यानमिति वदतः परस्य मते ध्यानस्य परिस्पन्दत्वाभावेऽपिक्रियाशब्दार्थतया प्रसिद्धिमात्रेण प्रथमः कल्पः । अत एव पूर्वं परिस्पन्द इत्युक्त्वा सृष्टिरित्यतः परं मतमित्युक्तमिति भावः । ध्यानदशायां रूपवद्वस्तुविषयकापरोक्षावभासोऽस्तीत्येतत्त सर्वानुभवसिद्धम् । तस्य च विषयान्तरशून्यत्वाद्ध्यानविषयत्वमेव वाच्यम् । एवं च क्रियायाः परिस्पन्दरूपत्वेऽतीन्द्रियाश्रितक्रियाया अतीन्द्रियत्वनियमान्मनसश्च नैय्यायिकादिमतेऽतीन्द्रियत्वात्तदाश्रितपरिस्पन्दस्य चातीन्द्रियत्वेन रूपरहितत्वेन च तद्विषयकापरोक्षावभासानुपपत्ती रूपावभासानुपपत्तिश्चेत्याह ॥ **तर्हीति** ॥ यद्वा गरुडं ध्यायामीति ध्यानविषयकापरोक्षावभाससत्त्वे न ध्यानस्य परिस्पन्दत्वे तस्योक्तदिशाऽतीन्द्रियत्वात्तद्विषयकापरोक्षावभासानुपपत्तिः परिस्पन्दस्य निर्विषयत्वेन ध्याने विषयावभासानुपपत्तिर्ध्यानविषये प्रसिद्धरूपावभासानुपपत्तिश्चेत्याह ॥ **तर्हीति** ॥ श्रवणदर्शनादीत्यनुमितिभ्रमादीनां सङ्ग्रहः । नन्वत्र मनसाऽवलोकनस्य ध्यानत्वोक्त्या तस्यापरोक्षज्ञानत्वमुक्तं स्यात् । तथा च परोक्षज्ञानसन्ततिर्ध्यानमिति तत्त्वप्रकाशिकाविरोध इति चेन्न । तत्रेश्वरस्यैव प्रकृतत्वेन तस्य च परोक्षत्वाच्छ्रवणरूपतत्परोक्षानुभवजन्यत्वाद्वासनायास्तन्मयविषयकतन्मानसानुभवेऽपरोक्षेऽपि परोक्षत्वोक्तेरुपचरितत्वात् । न चाखण्डस्मृतेर्ध्यानत्वोक्तिविरोधस्तथाऽपि स्यादिति वाच्यम् । अनुभवजन्यवासनामयविषयत्वेन तदुक्तेरप्युपचरितत्वादिति भावः । नन्वतीन्द्रियाश्रितपरिस्पन्दस्येवातीन्द्रियोपादानकद्रव्यस्याप्यतीन्द्रियत्वनियमात् । वासनाया अतीन्द्रियकत्वेन तन्मयत्वाङ्गीकारेऽप्यपरोक्षावभासविरोधस्तदवस्थ एवेत्यत आह ॥ **अतीन्द्रियेति** ॥ नन्वेवमपि वासनाया नीरूपत्वेन तदुपादानकवस्तुनो नीरूपत्वाद्रूपावभासविरोधस्तदवस्थ एवेत्यतो नैतद्वेदान्तिभिश्चोदनीयमित्याह ॥ **नीरूपादिति** ॥ ननु न वायोस्तेजसो जन्म किन्तु नित्यतैजसपरमाणुभ्यो द्व्यणुकादीनाम् । ततश्च कारणरूपात्कार्यरूपमिति वदद्भिर्नैय्यायिकै रूपावभासविरोधश्चोदयितुं शक्यत एवेत्यत आह ॥ **तार्किकादीन्स्त्वति** ॥ एवं च ध्यै चिन्तायामिति धातुसूत्रं न परमत इव स्वस्य प्रतिकूलमित्याह ॥ **एवं चेति** ॥ ननु तथाऽपि क्रियामानसवदिति सूत्रं प्रतिकूलमेवेत्यतः क्रियाशब्दस्य कार्यपरत्वान्न तद्विरोधोऽपीत्याह ॥ **अत एवेति** ॥ ध्यानस्य क्रियात्वाङ्गीकारेऽनुपपत्तिवज्ज्ञानत्वेऽप्यनुपपत्तिं शङ्कते ॥ **विधीति** ॥ **इदमिति** ॥ विधिजन्यपुरुषेच्छाप्रयत्नसाध्यत्वेन सिद्धं ध्यानमित्यर्थः । सदृशादृष्टचिन्तादीनामिव विध्यादीनां संस्कारोद्बोधरूपसाधकोपयोगेनान्यथासिद्धिमभिधाय प्रतिबन्धकनिरासोपयोगेनापि तामाह ॥ **चक्षुरिति** ॥ षष्ठ्यर्थे वतिः । तथा च

चक्षुश्चलननिरासस्य दिशश्चानवलोकयन्निति ध्यानाङ्गतया बोधितस्याप्यचलं चेच्छरीरं स्यादित्युक्त-न्यायेन मनोविक्षेपनिरासे यथोपयोगस्तथा विधिना साध्यसाधनभावे बोधिते फलेच्छायां सत्यां प्रयत्नेन मनोविक्षेपे निरस्ते ध्यानं सुलभमिति विध्यादीनां तदुपयोग इत्यर्थः । केचित्तु सप्तम्यर्थे वतिस्तथा च चक्षुश्चलननिरासे पत्न्यवेक्षितमाज्यं भवतीत्यादि विध्यादीनामुपयोग इव मनोविक्षेपनिरासेऽपि स इत्यर्थ इत्याहुः ।

म० — अत्र निवृत्तिः किं विनाश उत बाध इति विकल्प्य द्वितीये वक्ष्याम इत्याशयेन आद्यं दूषयति ॥ **अपि चेत्यादिना** ॥ तथाच विषादेर्विनाशेऽपि बाधाभावात् कथं व्यभिचारप्रदर्शनमिति चोद्यानवसर इति ध्येयम् । उपलक्षणमेतत् । सत्यस्यैव रागस्य विषयदोषदर्शनेन सत्यस्यैव दुःखस्य सुहृद्दर्शनेन सत्यस्यैव पापस्य सेतुदर्शनेन निवर्त्यत्वं च द्रष्टव्यम् ॥ **अतीन्द्रियाश्रित इति** ॥ यद्यपि वाय्वादिगतस्पर्शादेरैन्द्रियकत्वेनातीन्द्रियाश्रितस्यातीन्द्रियत्वनियमो नास्ति । तथापि तदाश्रितपरिस्पंदस्य तन्नियम एवेति न व्यभिचारः । ननु तत्ववादिमते मनसः साक्षिविषयत्वेनैन्द्रियकत्वात् मायिमते च मनसोऽहमर्थत्वेन तस्य चापरोक्षत्वादुभयरीत्यापि हेतोरसिद्धिरिति चेन्न । तार्किकस्याप्यत्र प्रतिवादित्वेन तन्मतानुसारेणैवमुक्तेर्युक्तत्वात् । अयं भावः । ध्यानस्यापरोक्षत्वमवभासत्वं चानुभवसिद्धम् । तच्चातीन्द्रियाश्रितपरिस्पंदस्यैव ध्यानशब्दार्थत्वे न संभवति । अतीन्द्रियत्वेनापरोक्षत्वासंभवात् । परिस्पंद-त्वेनावभासत्वस्य चासंभवादिति ॥ **रूपरहितत्वेनेति** ॥ परिस्पंदस्य शुक्लादिरूपरहितत्वात् ध्याने तदवभासविरोधश्चेत्यर्थः । यद्वा गरुडं ध्यायामीति ध्यानविषयत्वापरोक्षावभास इति पूर्ववाक्यार्थः रूपरहितत्वेनेत्यस्य तु ध्यानस्य परिस्पंदत्वेन तस्य च निर्विषयत्वेन ध्याने विषयावभासो न स्यादित्यर्थः । न च रूपशब्दस्य विषयपरत्वाभावः । स्वं रूपमित्यत्र विषयपरत्वस्य परैरभ्युपगतत्वात् । रूप्यत इति रूपमिति योगसंभवाच्च । न च क्रियाया अपि न निर्विषयत्वं गमनादिक्रियाया ग्रामादिविषयत्वदर्शना-दिति वाच्यम् विषयशब्देन प्रकाश्यस्य विवक्षितत्वेन गमनेन ग्रामस्याप्रकाश्यत्वेन वैवक्षिकविषयकत्वस्य तत्राभावादिति भावः । ननु यथा मनोगतायाः क्रियाया अतीन्द्रियत्वादपरोक्षावभासविरोधस्तथातीन्द्रि-यवासनामयस्य वस्तुनोपीत्यत आह ॥ **अतीन्द्रियेति** ॥ आदिपदेनातीन्द्रियवायूपादानकस्य वह्नेर्ग्रहणम् । त्र्यणुकचतुष्टयेनेव परमाणुचतुष्टयेनापि चतुरणुकोत्पत्तेरेकदेशिभिरंगीकृतत्वात् तदनुसारेण चतुरणुकमादि-पदेन ग्राह्यमित्यपि आहुः । ननु नीरूपस्य वस्तुनः कथमपरोक्षावभासः । न च नीरूपत्वासिद्धिः । नीरूपोपादानकत्वेन तत्सिद्धेरिति चेत् । किमेतदौपनिषदानां चोद्यमुत तार्किकादीनाम् । नाद्य इत्याह । **नीरूपादिति** ॥ वायोरग्निरिति श्रुतेः । नान्त्य इत्याह ॥ **तार्किकादीन्स्त्विति** ॥ **स्मृतिसिद्धेति** ॥

ध्यै चिन्तायामितिसूत्रसिद्धेत्यर्थः । ननु तर्हि ध्यानस्य मानसक्रियात्वाभिधायकसूत्रविरोध इत्यत आह ॥ **अत एवेति** ॥ वासनोपादानकवस्त्ववलोकनविशेषस्य ध्यानशब्दार्थत्वादित्यर्थः । अस्यापि धात्वर्थरूपक्रियात्वादिति भावः । इच्छाद्यन्वयव्यतिरेकानुविधायिनो ध्यानस्य कथं तद्विपरीतज्ञानत्वमिति शङ्कते ॥ **विधिजन्येति** ॥ **निरासवदिति** ॥ पत्न्यवेक्षितमाज्यं भवतीत्यत्र विधिजन्येच्छादीनां चक्षुश्चलननिरासे उपयोगवन्मनोविक्षेपनिरासे इच्छादीनामुपयोग इत्यर्थः ॥

प०— ज्ञाननिवर्त्यत्वस्य मिथ्यात्वरूपसाध्येन व्यभिचारं चाह ॥ **अपि चेति** ॥ मिथ्याभूत जगदन्तःपातित्वाभिप्रायेण शङ्कते ॥ **विषन्न सत्यमिति चेदिति** ॥ **तवेति** ॥ सर्वमिथ्यात्ववादिन इत्यर्थः ॥ **तन्निवृत्तीति** ॥ स्वविषयनीलादेः सत्यस्य निवृत्तिः स्यादिति पूर्वोक्तापादनमसङ्गतं स्यादित्यर्थः ॥ **दर्शनादितिचेदिति** ॥ स्वाप्नपदार्थेषु शुक्तिरूप्यादौ चेति भावः ॥ **आगमेन सत्यस्यापि भवदिति** ॥ विश्वमायानिवृत्तिरित्याद्यागमेन सत्यस्याप्यज्ञानादिबन्धस्य निवर्तनमावेद्यमानं केन वार्यते । तदप्युपेयमेवेत्यर्थः । यद्वा सेतुदर्शनगरुडध्यानादिना ब्रह्महत्यादेः सत्यस्य 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'त्याद्यागमेव सत्यस्यापि भवन्निवर्तनमवगम्यमानं केन वार्यत इत्यर्थः । तत्र सत्त्वं नोभयसम्मतम् । शुक्तिरूप्यादौ मिथ्यात्वमुभयसम्मतमित्यतो दोषान्तरमाह ॥ **नचेति** ॥ किन्चेति चार्थः । तथात्वे वह्नेरपि धूमव्याप्यतापत्तेः । क्वचित्सहदर्शनस्य सत्त्वादिति भावः । नन्वस्तु नाम पररीत्या विषं सत्यम् । न तस्य ज्ञाननिवर्त्यत्वम् । ध्यानस्य ज्ञानरूपत्वाभावादिति शङ्कते ॥ **ध्यानमिति** ॥ मानसक्रियेति कोऽर्थः । क्रियापदेन मनोनिष्ठः परिस्पन्द एव भाति नातोऽन्यत्किञ्चिदस्तीत्यभिप्रायः । उत मनःपरिणामविशेषस्य मानसावभासो ध्यानमिति । आद्ये आह ॥ **यदीति** ॥ स्वमते साक्षिवेद्यत्वेऽपि न्यायमतावष्टम्भेनाह ॥ **सतद्यतीन्द्रियेति** ॥ साक्षिवेद्यत्वपक्षेऽप्याह ॥ **रूपेति** ॥ रूपमाकृतिः । परिस्पन्दस्यामूर्तत्वेन करचरणाद्यवयवोपेतगरुडाकृत्यवभासविरोध इत्यर्थः । द्वितीयपक्षे त्वाह ॥ **यदि चेति** ॥ नन्वेवं संस्कारोपादानकत्वे गरुडाकृतेरतीन्द्रियत्वापत्तिरित्यत आह ॥ **अतीन्द्रियेति** ॥ **वेदान्तिनामिति** ॥ 'आकाशाद्वायुर्वायोरग्निरग्नेराप'इत्याद्युपनिषद्वाक्यं विचारयतामित्यर्थः ॥ **आरम्भवादेति** ॥ वैशेषिकाधिकरणे आरम्भवादनिरासे सति तैरप्येवमेवोपेयं भविष्यतीति भावः ॥ **स्मृतीति** ॥ ध्यै चिन्तायामिति व्याकरणस्मृतिसिद्धा चिन्तार्थतासिद्धेत्यर्थः । चिती संज्ञान इति धातोरिति भावः ॥ **क्रियेति** ॥ 'पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवदि'त्युपासनापादीयब्रह्मसूत्रविरोधोऽपि प्रप्युक्तः । तत्रापि मानसक्रियापदेनोक्तदिशा मानसमृष्टेरेवाभिमतत्वादित्यर्थः । नन्वेवं ध्यानस्य ज्ञानरूपत्वे ध्यायीतेति ध्यानविध्ययोग इति शङ्कते ॥ **विधिजन्येति** ॥ लिङादिज्ञानजन्येत्यर्थः ॥ **विधेरिति** ॥

ध्यायीतेत्यादि लिङादिप्रत्ययस्येत्यर्थः ॥ **इच्छाप्रयत्नयोरिति** ॥ ध्यायीतेत्यादिलिङादिप्रत्ययादिना ध्यानस्य पुमर्थसाधनत्वावगतौ सत्यां तदनन्तरं ध्यानं मेऽस्त्वितीच्छया तत्साधनगोचरप्रयत्नेन च प्रागनुभूत-वस्तुगोचरसंस्कारोद्बोधे सति तत्परिणामरूपस्य वस्तुनो मनसावलोकनस्य ध्यानत्वेन विधेर्वा विधि-जन्यप्रयत्नेच्छयोर्वा ध्यानेऽनुपयोगेन ध्यानस्य ज्ञानत्वेपि ध्यानविध्यनुपपत्तिर्नेति भावः ॥ **एतच्चाभ्यु-पेत्योक्तमिति ज्ञेयम्** ॥ न्यायामृते तृतीयपरिच्छेदे ज्ञानविधेरपि समर्थनात् ॥ **मानसेति** ॥ वस्तु-नोऽवलोकनस्य च द्वयोरपि विशेषणम् ॥ मानसं संस्कारद्वारा मनःपरिणामरूपं यद्वस्तु तस्य मानसं मनोजन्यं यदवलोकनं तत्रेत्यर्थः । एतेन ध्यानं स्मृतिरूपमेवेति वदन्तो निरस्ताः । स्मृतिचिह्नतत्तोल्ले-खाभावात् । मानसवासनापरिगततया सन्निकृष्टवस्तुविषयकत्वात् । संस्कारस्य वस्तुपरिणाम एवोपक्षीण त्वेन मानसावलोकनस्य संस्काराजन्यत्वाच्चेति ॥ **तदुपयोग इति** ॥ प्रयत्नस्योपयोग इत्यर्थः ।

**या०** — व्यभिचारमप्याह ॥ **अपि चेति** ॥ सत्यस्य ज्ञाननिवर्त्यत्वाभावो द्वेधा वक्तव्यः । विषयस्यासत्यत्वाद्वा ध्यानस्य ज्ञानत्वाभावाद्वेति विकल्पं मनसि निधायाद्यमाशङ्क्य निराकरोति ॥ **नन्वे-त्यादिना** ॥ सत्यस्यापि निवृत्तौ नीलविशिष्टेत्याद्युदाहृतं तत्तत्सत्यत्वानङ्गीकारे न सङ्गच्छते । तस्य सत्यत्वे विषयस्यापि सत्यत्वं स्यात् । तुल्यन्यायत्वादित्यर्थः ॥ **मिथ्याभूतस्यैवेति** ॥ तथाच स्वरूपकथनाय मिथ्या-भूतमिति विशेषणमिति भावः ।\द्वितीयमाशङ्क्य निषेधति ॥ **ध्यानं नामेति** ॥ **अपरोक्षज्ञानत्वाव-भासेति** ॥ ध्यानेऽपरोक्षत्वावगाह्यनुभवविरोध इत्यर्थः ॥ **रूपरहितत्वेनेति** ॥ रूपशब्दोऽत्र स्वं रूपं शब्द-स्येत्यत्रेव विषयवचनः। तथाच परिस्पंदस्य विषयशून्यत्वेन ध्याने सविषयकत्वावभासविरोध इत्यर्थः । वस्तु-तस्तु ध्येयगरुडादेरपि परिस्पन्दात्मकताया अत्राभिप्रेतत्वात्तस्यापरोक्षत्वावभासविरोधः । ध्येयस्य हि मानसापरोक्षत्वमनुभवसिद्धम् । न चातीन्द्रियपरिस्पन्दात्मकस्य तस्य तत्सम्भवति । तथा तत्र स्वर्णादिरूपविशेषावभासविरोधः । परिस्पन्दस्यारूपत्वादित्यर्थः । अत एवानुपदं सिद्धान्ते ध्येयस्यैवै-न्द्रियकत्वं रूपवत्त्वं च समर्थ्यते । ननु वासनाया अतीन्द्रियत्वात्तदुपादानकध्येयवस्तुनोऽप्यतीन्द्रिय-त्वापत्त्याऽपरोक्षावभासविरोधो भवत्पक्षेऽपि समान इत्यत आह ॥ **अतीन्द्रियेति** ॥ ननु वासनाया नीरूपत्वेन ततो रूपजन्मासम्भवे ध्येये रूपावभासविरोधोऽविशिष्ट इत्यत आह ॥ **नीरूपादिति** ॥ **एवं चेति** ॥ ध्यानस्य ज्ञानरूपत्व इत्यर्थः ॥ **स्मृतिसिद्धेति** ॥ ध्यै चिन्तायामिति पाणिनिवचनसिद्धे-त्यर्थः । नन्वेवं ध्यानस्य क्रियामानसवदिति मानसक्रियात्वोक्तिविरोध इत्यत आह ॥ **अत एवेति** ॥ धात्वर्थत्वादेवेत्यर्थः । सूत्रे क्रियाशब्देन धात्वर्थक्रियैव विवक्षिता न परिस्पन्द इति भावः । यद्वा ध्यानस्योक्तरीत्या मानससृष्टिरूपत्वादेवेत्यर्थः । तथाच सूत्रे क्रियापदं कार्यपरमिति भावः । ननु

ध्यानमात्मानमुपासीतेत्यादिविधिजन्यपुरुषेच्छाप्रयत्नजन्यमुपलब्धम् । ज्ञानं तु विध्यादिनिरपेक्षस्वकारणाधीनमतस्तयोः कथमभेद इत्याशङ्कते ॥ **विधिजन्येत्यादिना** ॥ **तत्कथमिदमिति** ॥ विध्यादिसापेक्षोत्पत्तिकमिदं ध्यानं न ज्ञानमित्यर्थः ॥ **साध्यसाधनभावमात्रेति** ॥ विधेरिष्टसाधनतावबोधकत्वेन ब्रह्मज्ञानसाधनत्वं ध्याने विधिर्बोधयति न तु ध्यानमुत्पादयतीत्यर्थः ॥ **संस्कारोद्बोध इति** ॥ ध्येयवस्तूपादानभूतमानसवासनोद्बोध इत्यर्थः । विक्षेपो विषयान्तरसञ्चारः ॥ **तदुपयोग इति** ॥ इच्छाप्रयत्नयोरुपयोग इत्यर्थः । मनोविक्षेपनिरासस्यापि ध्यानार्थमपेक्षितत्वादिति भावः ।

श्री०— **तदेवेति** ॥ मिथ्याभूतं नीलविशिष्टं द्रव्यं तद्गतं रसादिकं च त्वन्मते न ज्ञानान्निवृत्तमित्यर्थः ॥ **विरोधीति** ॥ नीलविशिष्टद्रव्यस्य रसादेश्च तज्ज्ञानविरोधित्वाभावादिति भावः । तर्ह्यात्मनोऽपि ज्ञानेन निवृत्तिः स्यादतो मिथ्याभूतमिति विशेषणं सार्थकमिति चेत्तत्राह ॥ **अविरोधादेवेति** ॥ आत्मज्ञानस्यात्मनश्च विरोधाभावादिति भावः ॥ **अङ्गीकार्य इति** ॥ अन्यथा नीलविशिष्टद्रव्यज्ञानेन मिथ्याभूतस्य तद्विषयादेर्निवृत्तिप्रसङ्ग इत्यर्थः । **अतीन्द्रियाश्रित इति** ॥ मनसोऽतीन्द्रियत्वेन तन्निष्ठपरिस्पन्दस्याप्यतीन्द्रियत्वादित्यर्थः । ननु वायोस्तेजसो जन्म तार्किकासम्मतं तत्परमाणुभ्य एव तज्जन्माङ्गीकारादित्यत आह ॥ **तार्किकादीन्स्त्वति** ॥

च०— अज्ञानं न निवर्त्यं सत्यत्वादित्यस्यानैकान्त्यमप्याह ॥ **अपि चेति** ॥ विषस्य सत्यत्वाभावनिबन्धनस्य सत्यस्य ज्ञाननिवर्त्यत्वाभावस्य ध्यानस्य ज्ञानरूपत्वाभावनिबन्धनस्य च तादृशाभावस्य भेदभिन्नकल्पद्वयीमभिसन्दधान आद्यं प्रत्याख्याति ॥ **विषं नेत्यादिना** ॥ कल्पान्तरमपहस्तयते ॥ **ध्यानमिति** ॥ मानसक्रियापदेन मनोनिष्ठपरिस्पन्दस्तत्परिणामविशेषो मानसावभासो वेति कल्पद्वयीमभिप्रेत्याद्यं प्रत्याह ॥ **स तर्हीति** ॥ न्यायमतानुरोधेनेदम् । सिद्धान्ते साक्षिवेद्यत्वात् । सिद्धान्तदिशाऽप्याह ॥ **रूपेति** ॥ स्वं रूपं शब्दस्येतिवत् स्वरूपज्ञानसंततिमितिवच्चात्र रूपशब्देन वस्तुस्वरूपमुपादीयते न गुणविशेषः ॥ **अपरोक्षेति** ॥ ध्यानधर्मिकापरोक्षत्वप्रकारकावभासविरोध इत्यर्थः ॥ तथाच परिस्पन्दस्यामूर्तत्वेन करचरणादिसंस्थानविशेषरूपाकृतिरहितत्वेन तद्विशेषविशेषितगरुडाद्यवभासविरोध इत्यर्थः ॥ द्वितीयं प्रतिविधत्ते ॥ **यदि चेति** ॥ अतीन्द्रियोपादानकस्यापि तादृशसंस्कारोपादानकस्यापि । तार्किकादीन् वायोस्तेजोजन्मानुपगच्छतस्तोषयिष्यामः समर्थयिष्यामः । स्मृतिसिद्धा ध्यै चिन्तायामिति पाणिनिवचनसिद्धा । अत एव धातूपस्थाप्यत्वादेव । सूत्रघटकक्रियापदेन धातूपस्थितैव विवक्षिता न परिस्पन्दरूपेति भावः । तत्रापि मानसक्रियापदेनोक्तदिशा मानसस्रष्टेरेवा-

मिमतत्वादित्यर्थ इत्यप्यतिथियन् । एतन्मते सूत्रघटकक्रियापदं कार्यतात्पर्यकमवसेयम् ॥ **तत्कथमिदमिति** ॥ आत्मानमुपासीतेत्यादिविधिजन्यपुरुषेच्छाप्रयत्नघटितसामग्रीजन्यत्वात्तादृशसामग्रीजन्यत्वरूपविरुद्धधर्माधिकरणत्वलिङ्गकभेदाध्यवसायादिति भावः ॥ **विधेरिति** ॥ ध्यानधर्मिकब्रह्मज्ञानलक्षणसमीहितसाधनत्वप्रकारकज्ञानजनन एव व्यापृततया विधेर्न ध्यानोत्पादकतेत्यर्थः ॥ **कृतार्थत्वादिति** ॥ ध्येयस्वरूपोपादानभूतमानसवासनाजनन एवोपक्षीणतया ध्येयवस्तुस्वरूपनिर्वृतावन्यथासिद्धत्वादित्यर्थः ॥

**सु०— किञ्च सेतुदर्शनादिना पापादिनिवृत्तिः सुप्रसिद्धा । मध्येऽदृष्टकल्पनायां तु न प्रमाणमस्ति । अन्यथा प्रकृतेऽप्यदृष्टकल्पनाप्रसङ्गात् । अदृष्टसाध्यत्वे मोक्षस्यानित्यताप्रसक्तिरिति चेत् ज्ञानजन्यत्वेऽपि साम्यात् । ज्ञानजन्यत्वेऽपि प्रध्वंसत्वान्नानित्यत्वमिति चेत् । समानमेतदृष्टसाध्यत्वेऽपीति ।**

**वा०—** एवं ज्ञानत्वोपपादनसापेक्षे ध्याने स्पष्टदृष्टता सत्यनिवर्तकतया उपपादिता । अधुना तन्निरपेक्षे पापादिनिवर्तकतया श्रुतिस्मृतिप्रसिद्धे सेत्वग्निचित्कपिलादर्शनादौ तामुपपादयति ॥ **किञ्चेति** ॥ ननु स्वर्गादिसाधनत्वेन श्रुतस्यापि यागादेरदृष्टद्वारकत्ववत्पापादिनिवृत्तिसाधनत्वेन श्रुतस्यापि सेतुदर्शनादेरदृष्टद्वारकत्वमेवेति न साक्षाज्ज्ञाननिवर्त्यत्वं पापादीनाम् । बन्धे च साक्षाज्ज्ञाननिवर्त्यत्वं तन्मिथ्यात्वं विना नोपपन्नमिति न व्यभिचार इत्यतो यागादेः कालान्तरभाविस्वर्गसाधनतानुपपत्तेरदृष्टकल्पकत्वेऽपि पापादिनिवृत्तेस्तदैव सम्भवेन न प्रकृतेऽदृष्टकल्पकं किञ्चिदस्तीत्याह ॥ **मध्य इति** ॥ ननु कथं नास्ति सेतुसाक्षात्कारमात्रस्य दुरितनिवर्तकत्वे तत्र स्थितानामपि दुरितनिवृत्तिप्राप्त्या दूरदेशागमनछत्रपादुकादिविधुरत्वस्वकृतदोषोद्घोषणादिनियमादियुतस्यैव तस्य पापादिनिवर्तकत्वे वक्तव्ये नियमादृष्टस्यावश्यकल्प्यत्वादित्यतो मध्य इत्युक्तम् । एवं च नियमादृष्टसहकृतसेतुदर्शनादेः पापादिनिवर्तकत्वसिद्धावपि सेतुदर्शनादिजन्यादृष्टस्य पापादिनिवृत्त्यर्थमनपेक्षणान्न व्यभिचारपरिहार इति भावः । ननु विशिष्टज्ञाननिवर्त्यस्य मिथ्यात्वव्यभिचारेऽपि न मदभिमतस्य ज्ञानमात्रनिवर्त्यस्य मिथ्यात्वव्यभिचार इत्याशय इति चेत् । तर्हि भाषाप्रबन्धजन्येनानधीतवेदान्तजन्येनाधीतवेदान्तजन्येनाप्यसम्भावनाविपरीतभावनाप्रारब्धकर्मादिप्रतिबद्धेन ब्रह्मज्ञानेन बन्धानिवृत्तेर्नियमाधीनवेदान्तश्रवणादिनियमादृष्टसहकृतब्रह्मज्ञानमेव तन्निवर्तकं त्वयाऽपि वाच्यम् । अन्यथा वेदान्ताध्ययनस्य श्रवणनियमस्यासम्भावनादिनिवर्तकमननादेश्च वैयर्थ्यं स्यात् । प्रारब्धवशाज्जीवन्मुक्तस्य संसारानुवृत्तिश्च न स्यात् । तथा च विशिष्टस्य व्यभिचारोद्भावनं कथं न प्रकृतसङ्गतमित्याशयेनाह ॥ **अन्यथेति** ॥ सहकारित्वेनादृष्टसापेक्षत्वे

कल्पकसद्भाव इत्यर्थः । नन्वदृष्टसाध्यस्यानित्यतानियमान्मोक्षस्यानित्यतापत्त्या नादृष्टं मोक्षसाधनब्रह्मज्ञान-सहकारि प्रत्युत मोक्षसाधनब्रह्मज्ञानजनकमेवेति प्रकृतेऽदृष्टकल्पनाया असम्भवेऽपि बाधकाभावात्सेतु-दर्शनादावदृष्टकल्पनोपपद्यत इत्याशयेन शङ्कते ॥ **अदृष्टेति** ॥ मोक्षस्यानित्यतायामदृष्टजन्यत्वं प्रयोजकं जन्यत्वमेव वा । नाद्यः । कारणान्तरजन्यत्वेऽनित्यत्वाभाववददृष्टजन्यत्वेऽपि तदभावोपपत्त्याऽप्रयोजक-त्वात् । न द्वितीय इत्याह ॥ **ज्ञानेति** ॥ ननु ज्ञानफलस्य नित्यत्वबोधकश्रुतिबलाज्जन्यभावत्वस्य विनाशिताप्रयोजकत्वकल्पनान्मोक्षस्य ध्वंसत्वान्न विनाशितेति ज्ञानजन्यत्वपक्षे समाधातुं शक्यत्वेऽपि अदृष्टजन्यत्वपक्षे कल्पकाभावान्नानित्यता समाधातुं शक्येत्यत उक्तरीत्या ज्ञानमात्रस्य मोक्षसाधनत्वाभावा-ज्ज्ञानस्य नित्यफलकताबोधकमेवादृष्टस्यापि तद्बोधकमित्यदृष्टजन्यत्वेऽपि नानित्यतापत्तिरित्याह ॥ **ज्ञान-जन्यत्वेऽपीति** ॥ यद्वाऽदृष्टजन्यत्वेऽभ्युदयत्वापत्त्याऽनित्यताप्रसङ्गेऽपि ज्ञानजन्यत्वे ध्वंसरूपत्वान्नानित्य-तापत्तिरिति न साम्यमित्यतोऽदृष्टजन्यस्याभ्युदयत्वनियमस्याप्रयोजकतया ध्वंसत्वेन समाधानं तत्रापि सुशकमेवेत्याशयेनाह ॥ **ज्ञानजन्यत्वेऽपीति** ॥ प्रध्वंसत्वादित्युपलक्षणम् । श्रुत्यादिबलाच्चेत्यपि द्रष्टव्यम् ।

**स०—अनित्यताप्रसक्तिरिति** ॥ अनित्यत्वापत्तिरित्यर्थः । अदृष्टसाध्यस्वर्गादेस्तद्दर्शनादिति भावः ॥ **साम्यादिति** ॥ विशेषणादिज्ञानजन्यविशिष्टज्ञानस्यापि तद्दर्शनादिति भावः ।

**प०**—अपि च । सत्यस्यापीत्यादिना गरुडध्याननिवर्त्यत्वं सत्यस्याप्युक्तम् । ध्यानस्य ज्ञानत्वं च व्युत्पादितम् । तथापि चेद्ध्यानस्य ज्ञानत्वमुपेत्य ज्ञाननिवर्त्यत्वं सत्यस्य न मन्यते तं प्रति सत्यस्य ज्ञाननिवर्त्यत्वे स्थलान्तरमाह ॥ **किञ्चेति** ॥ **सुप्रसिद्धेति** ॥ 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'-त्यादिपुराणेषु प्रसिद्धेत्यर्थः । ननु साक्षाज्ज्ञाननिवर्त्यत्वं मिथ्याभूतस्यैव न सत्यस्य । पापादि तु सेतु-दर्शनेनादृष्टे जाते सति तद्द्वारा निवर्तते न साक्षात् । अज्ञानं तु 'भूयश्चान्ते विश्वमायानिवृत्तिरि'ति साक्षादेव निवर्तते । अतोऽज्ञानादिबन्धस्य मिथ्यात्वमेव न पापादेरित्यत आह ॥ **मध्य इति** । प्रकृते-ऽपि ज्ञानेन बन्धो निवर्तत इत्यत्रापीत्यर्थः ।

**श्री०**— सुप्रसिद्धा 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'त्यादिपुराणेषु ॥ **पापादीति** ॥ सत्यभूतपापादीत्यर्थः । ननु सेतुदर्शनेन पापं न निवर्तते । किं नाम सेतुदर्शनजनितादृष्टेनैवेति चेत् तत्राह ॥ **मध्य इति** ॥ सेतुदर्शनपापनिवृत्त्योर्मध्य इत्यर्थः ॥ **प्रकृतेऽपीति** ॥ ज्ञानजन्यादृष्टेनैव बन्ध-

निवृत्तिरस्त्वित्यर्थः । तथा च ज्ञाननिवर्त्यत्वाप्राप्त्या न मिथ्यात्वसिद्धिरिति भावः ॥ **अनित्यतेति** ॥ स्वर्गवदिति भावः ॥ **प्रध्वंसरूपत्वादिति** ॥ बन्धनिवृत्तिरूपमोक्षस्य प्रध्वंसरूपत्वादित्यर्थः ॥ **समानमिति** ॥ तस्मात्सेतुदर्शनेनैव सत्यभूतपापादिनिवृत्तिरिति भावः ।

**सु० — अपि च बन्धविध्वंसलक्षणत्वाद्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते । किं नाम सत्यत्वमेव । न हि मिथ्याभूतस्य शशविषाणादेर्ध्वंसोऽस्ति । ननु यथा मिथ्याभूताच्छशविषाणादेर्व्यावृत्तौ ध्वंसः सत्ये पर्यवस्यतीति भवतोच्यते । तथा सत्याच्चिदात्मनोऽपि व्यावृत्तौ मिथ्याभूते पर्यवस्यतीति मयाऽपि वक्तुं शक्यत एव । सत्यमापाततस्तथा तथाऽप्यपि सौत्री अर्थापत्तिः सन्देहास्कन्दिता कुण्ठितैव । अनिर्वाच्यनिरासेन निश्चयमपि भवतो जनयिष्यामः । बन्धबाध एव मुक्तिरिति चेत् । नैवं श्रुतिसूत्रे वदतः । तरति शोकमित्यादौ विपरीताभिधानात् । विमुक्तश्च विमुच्यत इति श्रुतार्थापत्तिस्तु भाष्यकृतैवान्यथोपपादिता ।**

वा० — एवं सम्मुखतया ज्ञाबाद्बन्धनिवृत्तिं मूलस्थमुक्तिपदाभिप्रेततया विवक्षित्वा तस्या अन्यथैवोपपत्तिरभिहिता । अधुना मूलस्थमुक्तिपदस्वारस्यानुरोधेन मुक्तिपदार्थस्य बन्धध्वंसस्य प्रतियोगिसत्यताव्याप्ततया न तद्विरुद्धबन्धमिथ्यात्वसापेक्षतेति विरुद्धताप्रतिपादनमुखेनान्यथैवोपपत्तिं दर्शयति ॥ **अपि चेति** ॥ अत्र मुक्तिशब्दार्थतया बन्धध्वंसस्य प्रसिद्धत्वान्मूलोक्तान्यथाऽनुपपत्तेश्च तत्पक्ष एव सम्भवात्तमेव पक्षं सिद्धवत्कृत्य विरुद्धतामभिधाय तद्दूषणनिरासाय परेण शङ्कितस्य स्वाभिमतमुक्तिशब्दार्थस्य निरासोऽभिहितो न तु प्रथममेव मुक्तिशब्दार्थं विकल्प्येति द्रष्टव्यम् । ननु पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्ववतोपि बन्धस्य स्वरूपेण ध्वंससम्भवान्न प्रतियोगिसत्यतानियमो ध्वंसस्य येन मिथ्यात्वसापेक्षता विरुध्येतेत्यत: सप्रतियोगिकस्यासत्प्रतियोगिकत्वाभावे सत्यप्रतियोगिकत्वमेव सिध्यतीत्यभिप्रेत्य लोकप्रसिद्धमिथ्याशब्दार्थतयोभयसम्प्रतिपन्नासद्व्यावृत्तिं ध्वंसस्य प्रतियोगिसत्यत्वनियमे हेतुत्वेनाह ॥ **न हीति** ॥ उभयसम्प्रतिपन्नसत्याद्व्यावृत्त्या प्रतिपक्षं शङ्कते ॥ **नन्विति** ॥ अयमप्यन्यथाऽप्युपपत्त्यार्थापत्तिराभास एवेति न त्वदिष्टसिद्धिरित्याह ॥ **सत्यमिति** ॥ अर्थापत्तेराभासत्वसिद्धावपि सत्यत्वमेवापेक्षत इति मूलस्थैवकाराभिप्रेततयाऽन्यथैवोपपत्तिप्रतिपादनप्रकारस्य प्रतिज्ञातस्य हानिस्तवाप्यनिष्टमेवेत्यत आह ॥ **अनिर्वाच्येति** ॥ सत्याद् ध्वंसस्य व्यावृत्तिं वदतस्तवापि नोभयसिद्धमिथ्याशब्दार्थासत्प्रतियोगिकत्वं संमतमपि त्वनिर्वाच्यत्वं मिथ्याशब्दार्थत्वेन प्रकल्प्य तत्प्रतियोगित्वं वाच्यम् । तच्च वैलक्षण्यं सदसतोरित्यादिना-

निर्वचनीयत्वनिरासेन सुलभमिति न प्रतिज्ञातहानिरिति भावः। यद्वा बन्धध्वंसरूपत्वान्मुक्तिर्बन्धमिथ्यात्वं नैवापेक्षत इत्युक्तेऽप्रयोजकत्वे प्राप्ते तत्परिहाराय प्रतियोगिमिथ्यात्वस्य ध्वंसविरोधित्वे सिद्धान्तिना वक्तव्ये कथं विरोधित्वमित्याशङ्कते ॥ **किन्नामेति** ॥ मिथ्यात्वविरोधिसत्यत्वव्याप्तत्वाद्विरोधित्वमिति समाधत्ते ॥ **सत्यत्वमेवेति** ॥ तां व्याप्तिमेवोपपादयति ॥ **न हीति** ॥ गूढाभिसन्धिः शङ्कते ॥ **नन्विति** ॥ अभिप्रायमजानान इवोत्तरमाह ॥ **सत्यमिति** ॥ तावताऽन्यथैवोपपत्त्यभावेऽप्यन्यथाऽप्युपपत्त्याऽर्थापत्तेराभासत्वमेवेत्याह ॥ **तथाऽपीति** ॥ ध्वंसेऽसद्व्यावृत्तिवत्सद्व्यावृत्तेरपि सत्त्वादसद्व्यावृत्त्या सत्ये पर्यवसाने सद्व्यावृत्त्याऽसत्यपि पर्यवसानापत्त्या तस्याश्च तवाप्यनिष्टत्वादुभयमप्रतिपन्नसदसद्व्यावृत्तिभ्यां सदसद्विलक्षणे पर्यवसानस्यावश्यवक्तव्यतया ध्वंसप्रतियोगिनः सदसद्विलक्षणत्वसिद्धौ मदिष्टसिद्धिरिति पराभिसन्धिमधुना खण्डयति ॥ **अनिर्वाच्येति** ॥ एवं च सत्यान्तराद्व्यावृत्तस्यापि ध्वंसस्य सत्यान्तरप्रतियोगित्वसम्भवान्नानुपपत्तिरित्याशयः। निवृत्तिर्बाध इति स्वमतानुसारेणाविरोधं शङ्कते ॥ **बन्धेति** ॥ आदिपदेन ततो ह्यस्य बन्धविपर्ययावित्यादिसूत्रोपादानम् ॥ **विपरीतेति** ॥ नदीं तरतीत्यादौ सत्यप्रतियोगिकसम्बन्धध्वंस इव शुक्तिरजतं तरतीत्यप्रयोगाच्छ्रुतौ तरतीत्यबाधस्यैवाभिधानादिति भावः।

स०—**अनिर्वचनीयनिरासेनेति** ॥ वैलक्षण्यं सदसतोरित्यनेनेति शेषः। ननु विमुक्तश्चेति श्रुत्या संसारिणो मुक्तत्वाधिगतिस्तदन्यथानुपपत्त्याऽध्यस्तबन्धबाधो मुक्तिरिति सिध्यतीत्यत आह ॥ **विमुक्तश्चेति** ॥ जीवस्य परब्रह्मत्वाभावेपि मुक्तत्वोक्तिर्युज्यते। तद्गतबन्धस्याज्ञानमूलत्वेनास्वाभाविकत्वात्। अस्वाभाविके त्वविद्यमानत्वव्यपदेशदर्शनादिति ॥ प्रमादात्मकत्वादित्यादिना भाष्ये अन्यथोपपादितेत्यर्थः।

प०—शेषोक्त्या व्याचष्टे ॥ **बन्धविध्वंसलक्षणत्वादिति** । मुक्तिरिति योज्यम्। शङ्कां निराह ॥ **सत्यमित्यादिना** ॥ **अर्थापत्तिः** ॥ ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तिरूपार्थापत्तिः ॥ **कुण्ठितैव** ॥ बन्धमिथ्यात्वनिर्णयायाक्षमैवेत्यर्थः ॥ **अनिर्वाच्यनिरासेनेति** ॥ मिथ्यापदस्यानिर्वाच्यमर्थ इति त्वदभिमतस्य 'वैलक्षण्यं सदसतोरप्येतेन निषिध्यत'इत्यादिना वक्ष्यमाणदिशा निरासे सति ज्ञाननिवर्त्यत्वं सत्यस्यैवेति तव निश्चयो भविष्यतीत्यर्थः। मुक्तिर्न बन्धध्वंसः। येनोक्तदोषः स्यादिति शङ्कते ॥ **बन्धबाध इति** ॥ **श्रुतिसूत्रइति** ॥ तरतीत्यादिश्रुतिरग्रे व्यक्ता। जिज्ञासासूत्रं चेत्यर्थः। तत्र बन्धरूपानर्थनिबर्हणहेतुब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इत्येव प्रतीत्या बन्धबाधस्याप्रतीतेरिति भावः। ननु मास्तु ज्ञाननिवर्त्यत्वबोधकश्रुत्यन्यथानुपपत्त्या बन्धमिथ्यात्वसिद्धिः। 'विमुक्तश्च विमुच्यत'इति संसा-

रिणोऽपि, विमुक्तत्वश्रवणान्यथानुपपत्त्या बन्धमिथ्यात्वसिद्धिरस्तु । बन्धस्य सत्यत्वे तदयोगादित्यत आह ॥ **विमुक्तश्चेति** ॥ 'प्रमादात्मकत्वाद्बन्धस्येत्यानन्दमयाधिकरणे भाष्यकृतैव जीवगतबन्धस्याज्ञानमूलत्वेनास्वाभाविकत्वादस्वाभाविके चाविद्यमानपदप्रयोगदर्शनात्तदभिप्रायेण विमुक्तश्चेत्युक्तिः न तु मिथ्यात्वाभिप्रायेणेत्युपपादितेत्यर्थः ।

**या० — वक्तुं शक्यत एवेति** ॥ अनिर्वचनीयस्य मन्मते ध्वंसप्रतियोगित्वादिति भावः ॥ **निश्चयमपीति** ॥ ध्वंसप्रतियोगित्वं सत्यस्यैवेति निश्चयमित्यर्थः ॥ **विपरीताभिधानादिति** । अविद्यमानस्य तरणानुपपत्तेस्तरणोक्त्या बाधाभावस्यैवाभिधानादिति भावः । 'विमुक्तश्च विमुच्यत'इति श्रुत्या-संसारिणोऽपि मुक्तत्वावगतेस्तदन्यथाऽनुपपत्त्याऽध्यस्तबन्धबाध एव मुक्तिरिति सिध्यतीत्यत आह ॥ **विमुक्तश्च विमुच्यत इति** ॥ बन्धस्याध्यस्तत्वाभावेऽपि मुक्तित्वोक्तिर्युज्यते । तस्याज्ञानमूलकत्वेन जीवस्वभावत्वाभावात् । अस्वाभाविके चाविद्यमानपदप्रयोगादिति 'प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यत'इत्यनेन भाष्येणान्यथोपपादितेत्यर्थः ।

**श्री० —** अर्थापत्तिः ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तिरूपार्थापत्तिः । कुण्ठितैव मिथ्यात्वनिर्णयाक्षमैवेत्यर्थः । मिथ्याभूतेऽनिर्वाच्ये ॥ **निश्चयमिति** । तथाच मिथ्याभूताच्छशविषाणादेर्व्यावृत्तो ध्वंसः सत्य एव पर्यवस्यतीति निश्चयो भवतीति भावः ॥ **बन्धबाध एवेति** ॥ तथा च बन्धमिथ्यात्वं प्राप्नोति ।

**च० — वक्तुं शक्यत एवेति** ॥ अनिर्वचनीयस्यैव ध्वंसप्रतियोगितोरीकृतेरिति भावः ॥ **निश्चयमिति** ॥ ध्वंसप्रतियोगित्वधर्मिकमिथ्यात्वासामानाधिकरण्यप्रकारकनिश्चयमित्यर्थः । बन्धबाधः बन्धात्यन्ताभावः । तथाच तस्य नित्यतया बन्धध्वंसवत्प्रतियोगितासंसर्गावच्छिन्नध्वंसत्वावच्छिन्नजन्यतानिरूपिततादात्म्यसंसर्गावच्छिन्नजन्यभावत्वावच्छिन्नजनकतापन्नानपेक्षणादिति भावः । विमुक्तश्च विमुच्यत इति श्रुतौ बन्धापादानकमोचनक्रियाकर्तृत्वविशेषितस्यैव संसारिणस्तिङन्तशक्तिविषयक्रियाकर्तृत्वावगतेर्बन्धविपर्यस्ततामन्तरेणानुपपद्यमानतया तादृशाध्यस्तबाधाभाव एव मुक्तिरिति सेत्स्यतीत्यत आह॥ **विमुक्तश्चेति**॥ बन्धस्य विपर्यस्तत्वानुगमेऽपि तस्याज्ञाननिबन्धनत्वोरीकारेण जीवनिसर्गत्वाभावेनानैसर्गिके चाविद्यमानपदप्रयोगदर्शनेन प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यत इति भाष्यकृतैव भङ्ग्यन्तरेणोपपादिततया विमुक्तत्वोक्तिः सङ्गच्छत एवेत्यर्थः ॥

सु० — अपि चैवम् — उक्तिर्ब्रह्मज्ञानं जीवगतं बन्धं निवर्तयतीति सौत्री प्रयोजनोक्ति-र्बन्धमिथ्यात्वं नापेक्षते । यदि जीवज्ञानं जीवगतस्य बन्धस्य निवर्तकमिति प्रयोजनोक्तिः सूत्रे स्यात्तदा कथञ्चिदपेक्षेताऽपि बन्धमिथ्यात्वम् । न चैवं सूत्रकृदाह ॥ न हि शुक्तिकाया-मारोपितं रजतं घटज्ञानान्निवर्तते । ब्रह्मज्ञानं नाम त्वंपदार्थस्य जीवस्य तत्पदार्थेन ब्रह्मणैक्या-नुभव इति तु स्वगोष्ठीनिष्ठं प्रलापमात्रम् । निराकरिष्यमाणत्वात् ।

वा० —एवं मुक्तिरिति पदच्छेदेनान्यथोपपत्तिमुपपाद्यैवम् उक्तिरितिपदच्छेदमुपेत्य तामुपपादयति ॥ **अपि चेति** ॥ अधिष्ठानज्ञानस्य तदारोपितनिवर्तकत्वदर्शनाज्जीवज्ञानं तद्गतबन्धनिवर्तकमित्युक्ते बन्ध-स्यारोपितत्वलाभेऽप्यधिष्ठानेतरज्ञानस्यान्यगतनिवर्तकत्वादर्शनान्न तदुक्त्या तस्यारोपितत्वसिद्धिरित्याह ॥ **ब्रह्मेति** ॥ एवमित्युक्तिलब्धमाह ॥ **यदीति** ॥ जीवज्ञानेन सत्यस्यापि जीवगतबन्धस्य निवृत्तौ बाधका-भावान्न तथोक्त्याऽपि नियमेन बन्धमिथ्यात्वसिद्धिरित्याशयेनोक्तं कथञ्चिदिति । विवक्षितब्रह्मज्ञानस्य जीवज्ञान एव पर्यवसानान्नानुपपत्तिरिति शङ्कते ॥ **ब्रह्मेति** ॥ **निराकरिष्यमाणत्वादिति** ॥ सत्यत्वात्ते-नेत्यादिनैक्यस्य न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यत इत्यैक्यज्ञानस्य बन्धनिवृत्तिहेतुतायाश्च निरा-करिष्यमाणत्वादित्याशयः ।

प० — **इतिप्रयोजनोक्तिरिति** ॥ अथातो जीवजिज्ञासेति यदि स्यादित्यर्थः । **कथञ्चिदिति** ॥ गरुडध्यानसेतुदर्शनरूपज्ञानस्य स्वसमानाधिकरणसत्यविषादिनिवर्तकत्वं दृष्टमिति तदाऽपि न मिथ्यात्व-सिद्धिर्बन्धस्य । तथापि स्वात्मन्यारोपितदेहादितादात्म्यं स्वात्मयाथात्म्यज्ञाननिवर्त्यं दृष्टमिति तद्वच्छङ्का-स्पदं भवतीति कथञ्चिदित्युक्तम् । जीवेऽध्यस्तो बन्धो ब्रह्मज्ञानान्निवर्ततामित्यत आह ॥ **नहीति** ॥ किन्त्वधिष्ठानभूतशुक्तितत्वज्ञानादेवेति वाक्यशेषः ॥ **निराकरिष्यमाणत्वादिति** ॥ 'सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः । न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चने'त्यादिनाऽत्रैवाधिकरणे किञ्चि-दुपरिभाग इति भावः ॥

श्री० —एवं जीवस्वरूपे आरोपितकर्तृत्वभोक्तृत्वादिरूपबन्धोऽधिष्ठानभूतजीवज्ञानान्निवर्तत इत्यु-क्तिर्यदि स्यात्तदा बन्धमिथ्यात्वमपेक्षेतेत्यर्थः । सत्यस्यापि निवृत्तौ बाधकाभावस्योक्तत्वात्कथञ्चिदित्युक्तम् । ब्रह्मज्ञानं जीवगतं बन्धं निवर्तयतीति सौत्रीप्रयोजनोक्तिः कुतो बन्धमिथ्यात्वं नापेक्षते ॥

सु०— **अपि च यदि बन्धमिथ्यात्वं यदि च ज्ञानमात्राद्बन्धबाधः । तदा ज्ञाने सति किमपि मुक्तिर्नैवापेक्षत इति सद्य एव साक्षात्कृतब्रह्मणां शरीरादिनिवृत्तिः प्रसज्येतेत्यर्थापत्तेस्तर्कविरोधः । एतच्च तृतीये प्रपञ्चयिष्यामः । एवं सूत्रितप्रयोजनाक्षिप्तं बन्धमिथ्यात्वमिह वर्णितमित्येतन्निराकृतम् ।**

वा०—एवमर्थापत्तेरन्यथोपपत्तिप्रतिपादकतया मूलं व्याख्यायाधुना बन्धमिथ्यात्वमित्यस्योद्देश्यकोटिनिवेशं ज्ञानस्वभावत इत्यनुवृत्तस्य ज्ञानमात्रादित्यर्थं मुक्तिशब्दस्यावृत्तिं तस्य बन्धबाधार्थकत्वं योग्यतया ज्ञाने सति किमपीत्यस्योपपादके एवकारेण सद्य एवेत्यस्य ज्ञानमात्रादित्युक्तिसामर्थ्येन साक्षात्कृतब्रह्मणामित्यस्य च लाभं मुक्तिशब्दस्य शरीरादिनिवृत्तिपरत्वमुद्देश्यस्य विधेयकोटिप्रवेशं प्रसङ्गतात्पर्यं चाभिप्रेत्य तर्कबाधपरतयाऽपि योजयति ॥ **अपि चेति** ॥ ननु ज्ञानमात्राद्बन्धबाधेऽपि प्रारब्धकर्मवशाद्वा दग्धपटायमानाविद्यावशाद्वाऽविद्यासंस्कारवशाद्वाऽविद्यालेशवशाद्वाऽविद्याकारद्वयनिवृत्तावपि तृतीयाकारानुवृत्तेर्वा न सद्यः शरीरादिनिवृत्तिरित्यत आह ॥ **एतच्चेति** ॥ न चाप्येकत्वविज्ञानादिति वाक्यव्याख्यावसरे एतत्परिहारेण प्रपञ्चयिष्याम इत्यर्थः ।

स०—**अपि च यदीति** ॥ ऐक्यसाक्षात्कारो हि सविलासाविद्यां विच्छिन्द्यात् । ततश्च भेददर्शनरहितस्य शरीरपालनाद्यर्था भिक्षाटनादिप्रवृत्तिर्न स्यात् । न चाविद्यांशवती येनाविद्यालेशावस्थाननिमित्ता प्रवृत्तिः स्यात् । तथात्वे तस्य लेशस्यैक्यसाक्षात्कारेप्यनिवृत्तस्य कदाप्यनिवृत्तिप्रसङ्गः । प्रारब्धकर्मादिवशादनिवृत्तिरिति चेत् । कर्मादेरप्यविद्याकार्यस्यैक्यसाक्षात्कारेण समूलघातं हतत्वात् । प्रक्रियामात्रस्यचाप्रामाणिकत्वादिति भावः ।

प०— यदि तदेत्यध्याहृत्य वाक्यं योजयति ॥ **यदि बन्धमिथ्यात्वमिति** ॥ तस्यैवार्थः यदि च ज्ञानमात्राद्बन्धबाध इति ॥ **अर्थापत्तेरिति** ॥ मिथ्यात्वसाधकज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तेरित्यर्थः ॥ **तृतीय इति** ॥ अध्याये 'परप्रसादनेच्छोस्तु विलम्बो नाम युज्यते । पुमिच्छाधीनता नोचेद्विलम्बः किं कृतो भवेदि'त्यादिनोपासनापादेऽन्त्यभागे प्रपञ्चयिष्याम इत्यर्थः ॥

या०—नन्वविद्यासंस्काराद्वा प्रारब्धकर्मवशाद्वा शरीराद्यवस्थानमित्यत आह ॥ **एतच्चेति** ॥ संस्कारकर्मादेरप्यज्ञानोपादानकत्वेन तन्निवृत्ताववस्थानासम्भवात् । न हि भावकार्यमुपादानव्यतिरेकेणा-

वतिष्ठते । न चाविद्यांशवती येनाविद्यालेशावस्थाननिमित्तमिदं सर्वमुपपद्यत इत्यादि प्रपञ्चयिष्याम इत्यर्थः ॥

च० — **प्रपञ्चयिष्याम इति** ॥ साधनलक्षणे उपासनाचरणान्त्यभागे परप्रसादनेच्छोस्त्वित्याद्यानुपूर्वीकानुव्याख्याप्रतीकव्याख्यावसरे संस्कारकर्मादेरप्यज्ञानोपादानकत्वेन तन्निवृत्तावस्थानासंभवात्। नहि भावकार्यमुपादानातिरेकेणावतिष्ठते ॥ न चाविद्यांशवतीयेनाविद्यालेशावस्थाननिमित्तमिदं सर्वमुपपद्यत इति ग्रन्थेनाविद्यासंस्काराद्वा प्रारब्धकर्मवशाद्वा शरीरावस्थानं नेति व्यक्तीकरिष्याम इत्यर्थः ॥

**सु० — अथवा विषयोक्त्याक्षिप्तमित्येतदनेन निराचष्टे । एवमुक्तिः सौत्री ब्रह्मणो विषयत्वोक्ति.बन्धमिथ्यात्वं नापेक्षते । यदि हि सूत्रे जीवात्मनो विषयतयोक्तिः स्यात्तदा सा तस्य सन्दिग्धतासिद्धये कर्तृत्वादिबन्धमिथ्यात्वं कथञ्चिदपेक्षेतापि । ब्रह्मैव ह्यत्र विषयतयोच्यते । न ह्यन्यस्य सन्दिग्धतयाऽन्यस्य विचारविषयतोपपद्यते । अतिप्रसङ्गात् । आत्मैव ब्रह्मेत्येतां तु दुराशामपाकरिष्यामः । यद्वा सकलतन्त्रार्थोपोद्घातः प्रयोजनं युष्मदस्मदित्यादिग्रन्थस्येत्येतदनेनापाकरोति । तथा हि । एवमुक्तिः सकलजगज्जन्मादिनिमित्तत्वलक्षणं समस्तजीवजडात्मकात्प्रपञ्चादत्यन्तव्यावृत्तं ब्रह्मैवाशेषवेदप्रतिपाद्यमित्येवं तत्तु समन्वयादित्यादिकोक्तिर्जीवगतबन्धमिथ्यात्वं नापेक्षते । एषा हि ब्रह्मण्येव प्रमाणाभासप्रतिपन्नस्य जीवाभेदादेरेव मिथ्यात्वमपेक्षते । यदि हि जीवस्य ब्रह्मतायां सकलवेदान्तपर्यवसानं प्रतिपादयितुमिदं शास्त्रं प्रवृत्तं स्यात्तदा विरोधशान्त्यै बन्धमिथ्यात्वापेक्षा । न चैवम् । यथा चैतत्तथा वक्ष्यामः । नन्वपेक्षायाः पुरुषधर्मत्वात्कथमेतत् । इत्थम् । प्रतीयमानोऽर्थोऽर्थान्तरविषयां पुरुषस्यापेक्षामुपजनयन्सापेक्ष इत्युपचर्यते । यद्वा प्रमितस्यानुपपद्यमानस्यार्थस्यैवोपपादकाक्षेपशक्तिरपेक्षाऽत्रोच्यत इति । एवञ्च ज्ञानाद्बन्धनिवृत्तेर्बन्धमिथ्यात्वेन विनाऽनुपपद्यमानत्वाभावान्न तदाक्षेपकत्वमित्युक्तम् ॥**

वा० — मुक्तिपदोपेततया प्रयोजनान्यथानुपपत्तिमात्रनिराकरणार्थं भाष्यमिति भ्रान्तिं निरस्यति ॥ **एवमिति** । कर्तृत्वादेर्मिथ्यात्वाभावेऽपि देहव्यतिरिक्तत्वाणुत्वादिना सन्दिग्धतायाः सम्भवाभिप्रायेण कथञ्चिदित्युक्तम् । ननु न प्रतिज्ञामात्रेण सूत्रार्थनिश्चयः । तत्तु समन्वयादित्यादिकं न सर्वव्यावृत्तसगुणब्रह्मणोऽशेषवेदप्रतिपाद्यत्वपरम् अपि त्वद्वितीयनिर्गुणब्रह्मणोऽशेषोपनिषत्प्रतिपाद्यत्वपरमिति विपरीतस्यापि

प्रतिज्ञातुं शक्यत्वादित्यतो युक्तिपूर्वं समन्वयसूत्रादेर्भवदुक्तार्थपरतानिराकरणेनास्मदुक्तार्थपरताया ईक्षत्यधिकरणादौ साधयिष्यमाणत्वान्नप्रतिज्ञामात्रमेतदित्याह ॥ **यथा चेति** ॥ अपेक्षत इत्यस्य मुख्यार्थत्वाय विवक्षाविशेषं दर्शयति ॥ **यद्वेति** ॥ ननु मिथ्यात्वमपीत्युत्तरवाक्ये क्रियापदाभावेन पूर्ववाक्यात्क्रियापदस्य मुक्तिरित्यस्यचानुवृत्तेर्वक्तव्यत्वान्मुक्तिर्बन्धस्य मिथ्यात्वमपि नापेक्षते प्रत्यक्षविरोधादित्यर्थनिष्पत्त्योक्तस्यैव पुनरुक्त्यैकस्मिन्नेव समुच्चयार्थापिपदानुपपत्त्याऽपेक्षाभावे प्रत्यक्षविरोधस्य हेतुत्वानुपपत्त्या च नोत्तरवाक्यं पूर्वसङ्गतम् । न चास्तिभवत्योः सर्वत्र सम्बन्धादस्तीतिक्रियासम्बन्धे बन्धमिथ्यात्वं नास्तीत्येतदर्थप्रतिपादकमिदं वाक्यमिति वाच्यम् । तथात्वेऽर्थापत्तौ पूर्ववाक्योक्तदूषणानुपपादकत्वादर्थान्तरोक्तेश्च प्रकृतानुपयोगादसङ्गतिरित्यतः पूर्वोक्तानुपपादकत्वेऽप्यर्थापत्तौ दूषणान्तरकथनपरत्वान्नासङ्गतिरित्याशयेन प्रकरणशुद्धये पूर्ववाक्याभिप्रायानुवादपूर्वमुत्तरवाक्यतात्पर्यमाह ॥ **एवमिति** ॥ अत्र बुद्ध्याविवेकेन ज्ञानाद्बन्धनिवृत्तेरेवाभावादित्यप्यन्वयः । तेन च ज्ञानाद्बन्धनिवृत्तेः प्रथमोक्तप्रमितत्वाभावोक्तिः । अनुपपद्यमानत्वाभावादित्यनेनास्तु वेत्युक्तानुपपत्त्यभावोक्तिः । बन्धमिथ्यात्वेन विनेत्यनेन बन्धमिथ्यात्वस्यानुपपादकत्वस्योक्तिः । दूषणान्तरमित्यनेन प्रमाणविरोधोक्तिः । एवंचार्थापत्तिसामग्र्यभावः सकलतद्दोषवत्त्वं चेति सूचितं भवति । अत एवोत्तरत्रैषाखल्वित्यादिना तत्सामग्र्यादिवर्णनमिति ध्येयम् ।

स०— **अपाकरिष्यामः** ॥ यजमानप्रस्तरत्वमित्यनेन ॥ **यथा चैतत्तथा वक्ष्यामः** ॥ 'जन्माद्यस्येतिसूत्रेण गुणसर्वस्वसिद्धय' इत्यादिना प्रमेयदोषस्य प्राधान्येनाभिधानं ग्रन्थदोषस्याप्राधान्येनाभिधानं मत्वाऽऽह ॥ **एवं ज्ञानादीति** ॥

प०—**कथंचिदपेक्षेतापीति** ॥ बन्धस्य सत्यत्वेऽपि देहादिविविक्तत्वाविविक्तत्वाणुत्वमहत्त्वनित्यत्वानित्यत्वादिनापि सन्देहसंभवात्कथंचिदित्युक्तम् ॥ **नह्यन्यस्येति** ॥ जीवस्येत्यर्थः ॥ **अन्यस्येति** ॥ ब्रह्मण इत्यर्थः ॥ **अपाकरिष्याम इति** ॥ 'न ब्रह्मतां वदेद्वेद' इत्यादिनेति भावः । एवमध्यासभाष्यस्य परोक्तसङ्गतिद्वयं निरस्य तृतीयामपि सङ्गतिं निराकर्तुमिदमेव वाक्यं प्रकारान्तरेण व्याख्याति ॥ **यद्वा सकलेति** ॥ **इत्यादिग्रन्थस्येति** ॥ परकीयाध्यासभाष्यस्येत्यर्थः ॥ **यथा चैतत्तथा वक्ष्याम इति** ॥ 'निर्गुणत्वं च तेनैव निषिद्धं प्रभुणा स्वयमि'ति 'कथन्नित्यगुणस्यास्य स्यादैक्यं गुणहानत' इत्यादि च जन्माधिकरणे । 'तस्माच्छास्त्रेणजिज्ञास्यमस्मदीयं गुणार्णवम् । वासुदेवाख्यमद्वन्द्वं परं ब्रह्माखिलोत्तममि'तीक्षत्यधिकरणे तत्रतत्रेति भावः । मुक्तिरपेक्षते उक्तिरपेक्षत इति योजनाद्वयेऽप्यनुपपत्तिमाशङ्क्य निराह ॥ **नन्वपेक्षाया इति** ॥

या०—**विरोधभ्रान्त्या इति** ॥ विरुद्धधर्माधिकरणत्वेन ब्रह्मात्मताया अयोगादिति भावः ॥ **बन्धेति** । जीवगतदुःखादीत्यर्थः ॥ **वक्ष्याम इति** ॥ अस्मिन्नेवाधिकरणे 'सत्यत्वाच्चैन दुःखादेः प्रत्यक्षेण विरोधतः । न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चने'त्यादिनेति शेषः ।

श्री०—ब्रह्मज्ञाननिवर्त्यत्वे बाधप्राप्त्या बन्धस्य मिथ्यात्वं प्राप्तमेवेत्यतो बन्धस्य ब्रह्मज्ञानं निवर्तकमेव न भवतीत्याशयेनाह ॥ **न हीति** ॥ तथा जीवगतो बन्धो न ब्रह्मज्ञानान्निवर्तत इति भावः । ननु न ब्रह्मज्ञानं घटज्ञानतुल्यमित्याशङ्कते ॥ **ब्रह्मज्ञानं नामेति** ॥ **सद्य एवेति** ॥ तथा च वातपुत्रीया ब्रह्मोपदेशाः प्रसज्येरन्नित्याशयः ॥ **सन्दिग्धतेति** ॥ आत्मा च ब्रह्म तस्य चाहं कर्तेत्याद्युक्तरीत्येत्यर्थः । अन्यस्य जीवात्मनः अन्यस्य ब्रह्मणः । नन्वात्मन एव ब्रह्मत्वाज्जीवस्य सन्दिग्धत्वेऽपि ब्रह्मणो विषयत्वं युक्तमित्यत आह ॥ **आत्मा चेति** ॥

च०— **वक्ष्याम इति** ॥ प्रकृतनय एव सत्यत्वाच्चैनदुःखादेरित्यादिना जन्मादिनये निर्गुणत्वं च तेनैवेत्यादिनेक्षतिनये च वासुदेवाख्यमित्यादिनाभिधास्याम इत्यर्थः ॥ **उपचर्यत इति** ॥ जानाति मन्थाचल इत्यादिवदिति भावः ॥

अनु०— **मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः ॥**

**सु०— दूषणान्तरं चार्थापत्तेराह ॥ मिथ्यात्वमपीति ॥ न केवलं बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते किं नाम बन्धस्य मिथ्यात्वं नास्तीत्यपिसंबन्धः । नन्वेतदनुपपन्नम् । प्रमाणं हि स्वमहिम्नैवार्थं व्यवस्थापयति । न पुनः प्रागर्थसिद्धिमपेक्षते । तथात्वे वा प्रमाणवैयर्थ्यं पूर्वप्रमाणस्यापि तथात्वेनानवस्था च स्यात् । अतः प्रागाक्षेप्यासिद्धिरर्थापत्तेर्भूषणमेव । प्रवृत्तायां त्वर्थापत्तौ नाक्षेप्यासिद्धिः प्रमितत्वादेव । एवं तर्हि परिचितचरपुरुषस्य दिवाऽभुञ्जानस्य पीनत्वमनुपपद्यमानं रसायनसिद्धिं योगर्द्धिं वा कस्मान्नाक्षिपेत् । तदसिद्धिरपि प्रागर्थापत्तिप्रवृत्तेरलङ्कार एव । उत्तरकालं तु नास्त्येवेति चेत् । न । वैषम्यात् । न हि रसायनसिद्ध्याद्यसिद्धतया नार्थापत्तिप्रमेयम् । अपि तर्हि परिचितचरे पुरुषे प्रमाणबाधिततया । असिद्धं साधयति प्रमाणं न तु प्रमाणविरुद्धमिति हि प्रसिद्धम् । एषा खल्वर्थापत्तिसामग्री । यदाक्षेपकस्य प्रमितत्वमनुपपद्यमानत्वं च । आक्षेप्यस्याप्युपपादकत्वं प्रमाणाविरुद्धत्वं च । अत**

एवाप्रमितत्वमनुपपत्त्यभावोऽन्यथाऽप्युपपत्तिरन्यथैवोपपत्तिः प्रमाणविरुद्धार्थत्वं चेत्यर्थापत्तिदूषणानीति । सत्यम् । वयमपि हि बन्धमिथ्यात्वमहं कर्ता भोक्ता सुखी दुःखीत्यादिप्रत्यक्षविरुद्धत्वादेव नार्थापत्तिप्रमेयमिति ब्रूमः । तदिदमुक्तं प्रत्यक्षविरोधत इति । प्रत्यक्षविरोधतोऽपीति वा योजना । तेन प्रमाणान्तरविरोधं समुच्चिनोति । चेष्टादिलिङ्गैरहमित्येव यो वेद्य इत्याद्यागमैश्चात्मनः कर्तृत्वाद्युपेतस्यैव प्रमितत्वात् । अथवाऽर्थापत्तेराभासत्वेनानाक्षिप्तबन्धमिथ्यात्वं वर्णयत्परेषां भाष्यमनुपयुक्तमित्युक्तम् । अयुक्तमपि प्रत्यक्षादिविरुद्धार्थप्रतिपादकत्वादित्यनेनोच्यते । ननु प्रत्यक्षं बन्धस्वरूपमात्रं गोचरयति न तु तस्मिन् मिथ्यात्वाभावम् । अतोऽर्थापत्तेर्भाष्यकारीयस्य वा तन्मिथ्यात्वव्युत्पादनस्य कथं प्रत्यक्षविरोधः । मैवम् । प्रत्यक्षं खलु बन्धं गोचरयदस्तीति नास्तीति वा गोचरयेत् । उभयोदासीनस्य ज्ञानस्यादर्शनात् । आद्येऽस्तित्वं मिथ्यात्वाभावश्चेत्यनर्थान्तरमिति कथं न प्रत्यक्षविरोधः । द्वितीयेऽनुभवविरोधस्तद्व्युत्पादनवैयर्थ्यप्रसङ्गश्च ।

वा०—ननु नास्य दूषणान्तरपरत्वं प्रतीयते प्रत्युतोक्तरीत्या वैयर्थ्यमेवेत्यतोऽपिशब्दार्थप्रदर्शनपूर्वं योग्यक्रियासंबन्धं प्रदर्शयति ॥ **न केवलमिति** ॥ नन्वर्थासिद्धिमात्रेणार्थापत्तिनिरासात्प्रत्यक्षविरोधकथनमधिकमसङ्गतं चेत्यतो नात्र भाष्यकारस्यासिद्धिमात्रे तात्पर्यम् । वक्ष्यमाणानुपपत्तेः । प्रमाणाविरोधस्य चोपपत्तेस्तत्रैव तात्पर्यं युक्तमित्यभिप्रेत्य परमुखेनैव तदुभयं साधयितुं शङ्कासमाधानपूर्वं प्रत्यक्षविरोधादिति हेतुं सङ्गमयति ॥ **नन्वित्यादिना** ॥ ननु सहकारिसामर्थ्यादप्यर्थव्यवस्थापकत्वात्कथमेतदित्यत एवकारव्यावर्त्यमाह ॥ **न पुनरिति** ॥ सामान्यन्यायं प्रकृते सङ्गमयितुमाह ॥ **अत इति** ॥ गूढाभिसन्धिरसिद्धेर्भूषणत्वेऽतिप्रसङ्गं शङ्कते ॥ **एवं तर्हीति** ॥ प्रत्यक्षस्यैव विशिष्यग्रहणे प्रयोजनमनुपलभमानोऽपिशब्दस्य प्रयोजनान्तरं दर्शयति ॥ **प्रत्यक्षेति** ॥ अस्याप्यर्थापत्तिदूषणत्वेऽर्थापत्तेराभासत्वात् सूत्रानाक्षिप्तबन्धमिथ्यात्वप्रतिपादकत्वात्परभाष्येऽनुपयुक्ततामात्रप्रतिपादकत्वं ततोवरं परभाष्यायुक्तताप्रतिपादकत्वमित्यभिप्रेत्य तत्परतया भाष्यं योजयति ॥ **अथवेति** ॥ यद्यप्यर्थापत्तिप्रमेयस्य बन्धमिथ्यात्वस्य प्रमाणविरोधे प्रतिपादिते बन्धमिथ्यात्वप्रतिपादकपरभाष्यस्यायुक्तता सिद्ध्यति तथाऽपि साक्षात्तल्लाभायेदमिति द्रष्टव्यम् । भाष्ये विरोधपदसूचितपरस्पराभावविषयकत्वमुपपादयितुं शङ्कते ॥ **नन्विति** ॥

स०— मिथ्यात्वसिद्धिः किमर्थापत्तिप्रवृत्तेः प्राङ्नास्तीत्युच्यते पश्चाद्वा । नाद्य इत्याह ॥ **प्रमाणं हीति** ॥ प्रमाणसंप्लवेऽपि निरपेक्षप्रवृत्तिरिति दर्शयितुमपेक्षत इत्युक्तम् । **तथात्वे** प्रागर्थसिद्ध्यपेक्षत्वे । प्रमाणाकाङ्क्षाया एवानुदयादिति भावः । किमर्थापत्तेरेवायं नियमः प्रमाणमात्रस्य वा । नाद्यः ।

विनिगमकाभावात् । द्वितीयेऽतिप्रसङ्गमाह ॥ **पूर्वेति** ॥ न केवलं प्रागर्थसिद्धिर्दूषणं किन्तर्हीत्यत आह ॥ **अत इति** ॥ द्वितीयं प्रत्याह ॥ **प्रवृत्तायां त्विति** ॥ प्रागर्थसिद्धेर्दूषणत्वेऽतिप्रसङ्गं शङ्कते ॥ **एवं तर्हीति** ॥ नार्थसिद्धिमात्रं प्रमाणप्रवृत्तौ कारणं किन्तु प्रमाणान्तराविरोधादि च । न चेह तदस्तीत्याह ॥ **न वैषम्यादिति** ॥ **अथवेति** ॥ ग्रन्थदोषस्यैव प्राधान्येनाभिधानम् । प्रमेयदोषस्तदुपयोगीत्यर्थः । ग्रन्थार्थप्राधान्यरूपपक्षद्वयेऽपि नायं दोष इति शङ्कते ॥ **नन्विति** ॥ **तद्व्युत्पादनमिति** ॥ असत्त्वलक्षणमिथ्यात्वस्य प्रत्यक्षसिद्धत्वाभ्युपगमे तादृशमिथ्यात्वव्युत्पादनं शास्त्रे न स्यादित्यर्थः ॥

प० —**दूषणान्तरश्चेति** ॥ बाधितविषयत्वं चेत्यर्थः ॥ **इति संबन्ध इति** ॥ अपिपदस्य नञश्चाध्याहृतास्तीतिपदेनान्वय इत्यर्थः । परमुखेनैव समाधिं वाचयितुं प्रतिबन्दीमाशङ्कते ॥ **एवंतर्हिपरिचितचरपुरुषस्येति** ॥ रसायनमौषधविशेषः । योगस्य ऋद्धिर्योगर्धिः । योगसमृद्धिरित्यर्थः ॥ **नास्त्येवेति** ॥ असिद्धिर्नास्त्येवेत्यर्थः । परेणैव समाधिं वाचयति ॥ **वैषम्यादित्यादिना** । तत्समस्माकमित्याह ॥ **सत्यं वयमपीत्यादिना** ॥ अनुक्तसमुच्चयेऽपिपदमित्युपेत्याह ॥ **प्रत्यक्षविरोधतोपीतिवेति** ॥ तर्हि किं प्रमाणान्तरमित्यतोऽनुमानागमावित्याह ॥ **चेष्टादीति** ॥ हिताहितप्राप्तिपरिहारानुकूलपरिस्पन्दविशेषश्चेष्टा । चक्षुरादीन्द्रियाणि श्वासवायवश्चादिपदार्थाः ॥ 'अहमित्येव यो वेद्यः स जीव इति कीर्तितः । स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोरि'त्यादि तत्वनिर्णयोक्तागमैरित्यर्थः ॥ **अनेनेति** ॥ मिथ्यात्वमपीत्यादिनेत्यर्थः ॥ **भाष्यकारीयस्येति** ॥ परभाष्यकारीयस्येत्यर्थः ॥ **तद्व्युत्पादनेति** ॥ बन्धमिथ्यात्वव्युत्पादनवैयर्थ्यमित्यर्थः । प्रत्यक्षेणैव बन्धगतनास्तित्वग्रहणादिति भावः ॥

या० — **परिचितपुरुषस्येति** ॥ रसायनशून्यत्वेनायोगित्वेन च निश्चितपुरुषस्येत्यर्थः । न पुनः प्रमाणविरुद्धमित्येतदुपपादयितुमाह ॥ **एषा खल्वित्यादिना** ॥ उक्तानां सामग्रीत्वमुपपादयति ॥ **अत एवेति** ॥ अन्यथैतेषां दूषणता न स्यादिति भावः ॥ **चेष्टादिलिङ्गैरिति** ॥ चेष्टादिलिङ्गैस्तदनुकूलयत्नवानात्माऽनुमीयते । यत्नवत्त्वमेव च कर्तृत्वमिति भावः । 'अहमित्येव यो वेद्य' इत्यत्र जीवस्य बन्धमोक्षपात्रत्वोक्त्या प्राणधारणार्थकजीवशब्दवाच्यत्वोक्त्या वा कर्तृत्वं लभ्यत इत्यवगन्तव्यम् । आदिपदेन 'यत्कर्म कुरुते तदभिसम्पद्यत' इत्याद्यागमसंग्रहः ॥ **अनुभवविरोध इति** ॥ सुखादिकमस्तीति जानामीति साक्ष्यनुभवविरोध इत्यर्थः ॥ **तद्व्युत्पादनेति** ॥ नास्तितायाः प्रत्यक्षसिद्धत्वे तदपरपर्यायमिथ्यात्वस्य व्युत्पादनं भाष्ये महता प्रबन्धेन क्रियमाणं व्यर्थं स्यात् । न हि प्रत्यक्षसिद्धोऽर्थो व्युत्पादनमपेक्षत इति भावः ॥

श्री० — **नास्त्यपीति** ॥ बन्धमिथ्यात्वमसिद्धमित्यर्थः ॥ प्रत्यक्षविरोधत इति मूलमवतारयितुं शङ्कते ॥ **नन्विति** ॥ **तथात्व इति** ॥ प्रमाणमूलभूताया अर्थसिद्धेः प्रागेवोक्तत्वादिति भावः ॥ **तथात्वेनेति** ॥ प्रमाणस्य प्रागर्थसिद्धिसापेक्षत्वेन प्रागर्थसिद्धिरपि प्रमाणाधीना तत्प्रमाणमपि प्रागर्थसिद्धिसापेक्षं साऽपि पुनः प्रमाणाधीनेत्यनवस्था स्यादित्यर्थः ॥ **प्रागिति** ॥ अर्थापत्तिरूपप्रमाणप्रवृत्तेः प्रागित्यर्थः । अत्र सिद्धान्ती प्रतिबन्दीमुत्तरमाशङ्कते ॥ **तदसिद्धिरपीति** ॥ तयोराक्षेप्ययोर्योगर्द्धिरसायनयोरसिद्धिरित्यर्थः ॥ **नास्तीति** ॥ असिद्धिर्नास्त्येवेति संबन्धः । पूर्वपक्षी वैषम्यमुत्तरमाह ॥ **वैषम्यादिति** ॥ **परिचितचर इति** ॥ भूतपूर्वे चरडिति सूत्रात् रसायनादिशून्यत्वेन पूर्वं परिचित इत्यर्थः । ननु प्रमाणबाधितस्याप्यर्थापत्तिरूपप्रमाणसाध्यत्वं किं न स्यादित्यत आह ॥ **असिद्धमिति** ॥ **प्रमाणान्तरेति** ॥ अनुमानागमरूपप्रमाणान्तरेत्यर्थः ॥ **उभयोदासीनस्येति** ॥ विधिनिषेधाववधूयेत्यर्थः ॥

च० — **परिचितेति** ॥ पर्युपसृष्टस्य चिनोतेः कर्मसाधननिष्ठायां निष्पन्नः योगित्वरसायनराहित्योपरक्तनिश्चयकर्मतामाचष्ट इति तादृग्निश्चयविषयस्येत्यर्थः । **योगर्धिं** तपःसमृद्धिम् । न तु प्रमाणविरुद्धमित्यंशं प्रतिपिपादयिषतीति ॥ **एषा खल्विति** ॥ **तद्व्युत्पादनवैयर्थ्येति** ॥ प्रत्यक्षेणैव बन्धनास्तित्वात्मकमिथ्यात्वस्यावगाढतया तादृशार्थे शास्त्रीयव्युत्पादनानवश्यंभावेनादिभाष्ये तदध्यस्तताव्युत्पादनं यत्तदनर्थकमापद्येतेति भावः ।

अनु० — **मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेत् ।**

**सु० — स्यादेतदेवम् । यदीदं प्रत्यक्षं तत्त्वावेदकं भवेत् । न चैतदस्ति । समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमेवाद्वितीयंखल्वात्मतत्त्वं नेहनानाऽस्ति किंचनेत्यादिश्रुतिस्मृतीतिहासपुराणेषु गीयते । न चैतान्युपक्रमादिवशादीदृगात्मतत्त्वमभिदधति तत्पराणि सन्ति शक्यानि केनाप्युपचरितार्थानि कर्तुम् । तद्विरुद्धं च प्रादेशिकमनेकविधदुःखादिप्रपञ्चोपप्लुतमात्मानमादर्शयत्प्रत्यक्षं कथमुपप्लवो न भवेत् । येयं चैतन्यस्य स्वत एव स्थितलक्षणब्रह्मरूपतावभासं प्रतिबध्य जीवत्वापादिकाविद्याकर्मपूर्वप्रज्ञासंस्कारचित्रभित्तिरनादिरनिर्वाच्याविद्या । तस्याः परमेश्वराधिष्ठितत्वलब्धपरिणामविशेषो विज्ञानक्रियाशक्तिद्वयाश्रयः कर्तृत्वभोक्तृत्वैकाधारः कूटस्थचैतन्यसंवलनसञ्जातज्योतिरपरोक्षोऽहङ्कारः । स च चिदात्मनो बुद्ध्या निष्कृष्य वेदान्तवादिभिरन्तःकरणं मनो बुद्धिरहंप्रत्ययीति च विज्ञानशक्तिविशेषमाश्रित्य**

गीयते । परिस्पन्दशक्त्या च प्राण इति । तदुपरागनिमित्तं मिथ्यैवात्मनः कर्तृत्वादिकं प्रतिभाति । स्फटिकमणेरिवोपधाननिमित्तो लोहितिमा । तदेवमहं कर्ता भोक्ता सुखी दुःखीत्यादिप्रत्यक्षे श्रुत्यादिविरोधेन पूतिकूष्माण्डीकृते बन्धमिथ्यात्वव्युत्पादनमुपपन्नतरमित्यत आह ॥ मिथ्यात्वं यदीति ॥ भवेदेतन्नेहनानेत्यादिवाक्यविरोधेन प्रत्यक्षमाभासीकृत्य बन्धमिथ्यात्ववर्णनम् । बालजनमनोहरा चैषा प्रक्रिया । यदि तद्वाक्यमुक्तविधात्मतत्त्वपरं स्यात् । न चैवम् । तथाहि । किमापाततः प्रतिपन्न एव वाक्यार्थः । अथवोपक्रमोपसंहाराभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय इत्याद्युक्तलिङ्गानुगुणस्तदविरुद्धश्च । नाद्यः । मीमांसावैयर्थ्यापत्तेः । द्वितीये तु कथमिदं वाक्यमुक्तलक्षणात्मतत्त्वपरं स्यात् । उपक्रमादिलिङ्गेषु बलवत्योपपत्त्या विरुद्धत्वात् । अत एव ह्यसतः सदजायतेत्यादिवाक्यप्रपतिन्नोऽर्थः कुतस्तु खलु सोम्यैवं स्यात्कथमसतः सज्जायेतेत्युपपत्तिविरुद्धस्त्यज्यते । वक्ष्यति च भगवान्सूत्रकारोऽभिमान्यधिकरणे मृदब्रवीदित्यादिवाक्यात्प्रतीतमप्यर्थमुपपत्तिविरुद्धं परित्यज्यार्थान्तरम् । कथमत्रोपपत्तिविरोध इति चेत् । एवं यदि दुःखादेरात्मातिरिक्तस्य समस्तस्य मिथ्यात्वं श्रुत्यादिबलेन स्यात्तर्हि तस्य श्रुत्यादिवाक्यस्य तावन्मिथ्यात्वं भवेत् । आत्मातिरिक्तत्वात् । अन्यथा स्वस्मिन्नेवास्य प्रामाण्यं प्रतिहतमिति न कञ्चिदर्थं प्रतिपादयेत् । यदि चेदं वाक्यं मिथ्या स्यात्तथाऽपि न दुःखादेर्मिथ्यात्वं प्रतिपादयेत् । मिथ्याभूतस्य वन्ध्यासुतवचसः साधकत्वादर्शनात् । तदेवमस्य वाक्यस्य मिथ्यात्वामिथ्यात्वयोर्बन्धमिथ्यात्वप्रतिपादनासामर्थ्यात्प्रत्यक्षबाधकत्वानुपपत्तेर्न दुःखादिबन्धमिथ्यात्वसिद्धिरिति ।

वा०—नन्वनेन वाक्येन प्रत्यक्षविरोधेन मिथ्यात्वे निरस्ते मिथ्यात्वं यदीत्युत्तरवाक्ये तत्प्रसज्योपपत्तिविरोधेन तन्निराकरणयुक्तं बलाभावेन मिथ्यात्वोज्जीवनायोगात् । न च श्रुत्यादिकमेव तदुज्जीवकमिति वाच्यम् । श्रुत्यादेः प्रत्यक्षोपमर्दकत्वासम्भवात् । न ह्यागमाः सहस्रं घटं पटयितुमीशते । प्रत्युत ज्येष्ठप्रमाणप्रत्यक्षविरोधेन श्रुत्यादेरुपचरितार्थत्वमेव युक्तमिति नोत्तरवाक्यं सङ्गतमित्यतो भामतीमतेन प्राप्तशङ्कापरिहारकतया तत्सङ्गमयति ॥ **स्यादेतदिति** ॥ अत्र शक्रेणापीति परेण व्यवहृतेऽपि देवताद्रोहजनितं पापं तस्यैवास्त्विति भावेन तत्तात्पर्यानुवादोऽयं केनापीति । ज्येष्ठत्वंचानपेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे । रजतज्ञानस्य ज्यायसः कनीयसा शुक्तिज्ञानेन बाधदर्शनादिति भावः । अत्र समस्तेत्यादेः प्रादेशिकमित्यनन्तानन्देत्यादेरनेकविधदुःखेत्युदासीनमेकमद्वितीयमित्यस्यादिपदसङ्गृहीतकर्तृत्वभोक्तृत्वनानात्वसद्वितीयत्वं प्रतियोगितयोपात्तम् । उपप्लवो विपर्यासः । ननु नायं स्मर्यमाणारोपः ।

पूर्वानुभूतमात्रविषयकत्वाभावात् । नापि गृह्यमाणारोपो ग्रहणोपाधेरदर्शनादित्यतः पञ्चपादिकोक्तरीत्या ग्रहणोपाधिमुपपाद्य द्वितीयं कक्षीकरोति ॥ **येयमित्यादिना** ॥ यद्वा न प्रत्यक्षं भ्रमः । श्रौतबाधेऽप्यनिवृत्तेरित्यतः सोपाधिकभ्रमत्वादनिवृत्तिरित्यभिप्रेत्य सोपाधिकत्वमुपपादयति ॥ **येयमित्यादिना** ॥ अत्र बुद्ध्युपरागनिमित्तमात्मनः कर्तृत्वादिकं मिथ्यैव प्रतिभातीत्येतावत्येवानुवदितव्ये बुद्धेरहमर्थत्वानुवदनमहमर्थस्यानात्मत्वनिरासोपक्षेपाय । अत्र च ननु चिदात्मन एवाहमर्थत्वात्कथमनात्मधर्माणामात्मन्यारोप इत्यतश्चिदात्मनो बुद्ध्या निष्कृष्येति । वेदान्तवादिभिरित्यनेन बुद्धेर्गुणेनात्मगुणेन चेव ह्यारोपमात्रा ह्यपरोपि द्रष्टुर्बुद्धिश्च न विचेष्टतीत्यादेः परिमाणक्रियावत्त्वादिनाऽऽत्मातिरिक्तबुद्धिरूपद्रव्यसाधकतया परोपन्यस्तप्रमाणस्य सङ्ग्रहः । नन्वात्मन्यहङ्कारस्यानादित्वेऽविद्यातत्सम्बन्धातिरिक्तानादित्वेनानुच्छेद्यत्वापत्त्या सादित्वेऽपि निरुपादानत्वे भावकार्यत्वानुपपत्त्या सोपादानत्वेऽपि सर्वसामर्थ्यविधुरासत्कार्यत्वानुपपत्त्या सदुपादनकत्वे च कार्यस्यापि सत्त्वापत्त्या नात्माऽन्यत्वमुपपन्नमित्यतोऽनिर्वाच्याविद्योपादानकत्वान्नानुपपत्तिरित्याशयेन येयमित्यादि तस्या इत्यन्तमुपादानकीर्तनम् । तत्र जीवब्रह्मणोरेवान्यत्वे कर्तृत्वाद्यध्यासवर्णनमनुपपन्नमित्यविद्याकार्यप्रदर्शनम् । स्वत एवेति स्थितलक्षणा सिद्धरूपा या ब्रह्मस्वरूपता तदवभासमित्यर्थः । अविद्याया एकरूपत्वान्नविचित्रकार्योत्पादकत्वमित्यत उक्तेऽविद्याकर्मपूर्वप्रज्ञासंस्कारचित्रभित्तिरित्यत्राविद्यायाः स्वभित्तित्वासम्भवादविद्याशब्दो भ्रान्तिपरः । पूर्वप्रज्ञा पूर्वानुभवो भ्रान्तिसम्यगनुभवभेदेन पृथङ्निर्देशः । तथा चाविद्याकर्मपूर्वप्रज्ञानां संस्कार एव चित्रं तस्य भित्तिरित्यर्थः । उपादानीभूताविद्याया अपि सादित्वे तदुपादानपरम्परयाऽनवस्थेत्यत उक्तमनादिरिति । अनिमित्तककार्यानुपपत्त्या परिच्छिन्नज्ञानतयाऽहङ्कारप्रेरकत्वानुपपत्त्या जीवाधिष्ठातृकत्वासम्भवान्निर्धर्मकतया ब्रह्माधिष्ठातृकत्वासम्भवाच्च निमित्तासम्भव इत्यतो वस्तुतो निर्धर्मिकत्वेऽपि काल्पनिकधर्मवत्तयेश्वरस्याधिष्ठातृत्वोपपत्तिरिति निमित्तकथनं तस्याः परमेश्वरेति । स्वरूपमेव तस्य न निष्कृष्टमित्यतस्तत्स्वरूपकथनं विज्ञानेति । कर्तृत्वादेरात्मधर्मत्वान्न तत्कार्यत्वमित्यतस्तस्यैव धर्म इत्याह ॥ **कर्तृत्वेति** ॥ अनुपलम्भेन तत्र प्रत्यक्षाभावकौटस्थ्यविरोधेन साक्षिणोऽप्यसम्भवान्न तत्र प्रमाणमित्यतः साक्षिचैतन्यस्य कूटस्थत्वेऽपि तस्मिन्नध्यासलक्षणसंवलनेन परिनिष्पन्नप्रकाश इति प्रमाणकथनं कूटस्थेति । नित्यानुमेयत्वव्यावृत्तयेऽपरोक्ष इति । यदर्थमेतावदुक्तं तदाह ॥ **तदुपरागेति** ॥ अहङ्कारोपरागात्तन्निष्ठकर्तृत्वादेरात्मन्यारोपमात्रं वा रजतादिवन्मिथ्याभूतकर्तृत्वादेरात्मन्युत्पत्तिर्वास्तु । न चाद्येऽहङ्कारेऽसतः कर्तृत्वादेरारोपे व्यधिकरणप्रकारख्यात्यन्यथाख्यात्यापत्तिः । कर्तृत्वादिविशिष्टाहङ्कारस्यात्मन्यारोपाभ्युपगमेनान्यत्र सतोऽन्यत्रारोपानभ्युपगमेनान्यथाख्यात्यनापत्तेः । न च द्वितीये कर्तृद्वयापत्तिः । आत्माहङ्कारयोस्तादात्म्याध्यासाभ्युपगमेन तदनापत्तेरिति विवरणाभिप्रायः । प्रकृतेन सङ्गमयति ॥ **तदेवमिति** ॥ पूतिशब्देन दुर्गन्ध-

भिधीयते । ततश्च दुर्गन्धयुक्तकूष्माण्डफलमिव कृत इत्यर्थः । मिथ्यात्वंयदीति मूलं न साक्षात्प्रकृत-सङ्गतम् । अतोऽभिप्रेतार्थपूरणेन तत्सङ्गमयति ॥ **भवेदेतदिति** ॥ ननु प्रत्यक्षमप्याभासीकृत्य प्रवर्तमान-श्रुत्यादेः कथमुपपत्तिविरोधमात्राद्भयमित्यत उपपत्तिविरोधकथनेन प्रबलेनाप्यागमेन तदविरुद्धार्थ एव प्रतिपादनीयोऽन्यथा मीमांसावैयर्थ्यप्रसङ्ग इत्यस्य तात्पर्यलिङ्गेष्वपि प्रबलयोपपत्त्या विरोधकथनेन च परोक्तोपक्रमादीनां तद्विरोधस्य च भाष्यकारेण सूचनान्नानुपपत्तिरित्याशयेन भाष्याभिप्रेतप्रमेयं दर्शयति ॥ **तथा हीत्यादिना** ॥ एवमुपपत्तिविरोधप्राबल्यमुपपाद्य भाष्यमुत्थापयितुं शङ्कते ॥ **कथमिति** ॥ ननु दुःखादेर्मिथ्यात्वेऽपि कुतस्तद्वाक्यमिथ्यात्वं व्याप्त्यभावादित्यतो विशेषेण सामान्यव्याप्तिमभिप्रेत्य सर्वस्येति वक्तव्ये दुःखादेरिति वचनमात्मातिरिक्तग्रहणायेति तत्सूचितमविशेषं वक्तुमादिपदेनात्माऽन्यस्य सर्वस्य ग्राह्यतां वक्तुं च दुःखादेरित्यनुवादेनात्मातिरिक्तस्येति व्याख्यानम् । अग्रत इत्यस्यार्थकथनं तावदिति । अप्रयोजकत्वं परिहरति ॥ **अन्यथेति** ॥ इष्टापत्तिपरिहाराय मिथ्यायाः साधकत्वं चेत्युत्तरवाक्यबल-लब्धमनिष्टं सोदाहरणमाह ॥ **यदि चेति** ॥

स०—ननु कर्तृत्वभोक्तृत्वशून्यत्वे तदवभासः कथमिति चेदहङ्कारोपरागादिति ब्रूमः । तर्ह्य-यमहङ्कारः किमुपादानक इत्यत आह ॥ **येयमिति** ॥ येयमित्याद्युपादानकीर्तनम् । अविद्याया एकरूप-त्वान्न विचित्रकार्योत्पादकत्वमित्यत उक्तम् ॥ **अविद्याकर्मेति** ॥ भ्रान्तिकर्मपूर्वानुभवतत्संस्कारा इत्यर्थः । त एव चित्रं तस्य भित्तिरिवेति विग्रहः । परमेश्वराधिष्ठितेति निमित्तकारणनिर्देशः ॥ **विज्ञानेति** ॥ स्वरूपप्रदर्शनम् ॥ **तदेवमिति** ॥ प्रकृतोपयोगोक्तिः । पूतिशब्देन दुर्गन्धोऽभिधीयते ॥

प०—**अभिदधतीति** ॥ शत्रन्तं । अभिदधानानीत्यर्थः । संतीत्यपि शत्रन्तं । तात्पर्यवत्त्वेन विद्य-मानानीत्यर्थः । प्रादेशिकं प्रदेशस्थं अल्पपरिमाणमिति यावत् । अहमिहैवास्मि सदने जानान इति प्रतीते-रुदयात् । उपप्लवोऽप्रमाणं । न केवलं श्रुत्यादिविरोधेन कर्तृत्वादिविषयं प्रत्यक्षमतत्वावेदकं । अपि तु वस्तु-स्थितिपर्यालोचनयाऽपीत्याह॥**येयंचैतन्यस्येत्यादिना**॥ येयमित्यादिकं वक्ष्यमाणाहंकाररूपकार्यस्योपादान-सङ्कीर्तनम् । स्वत एव स्वभावत एव स्थितं यल्लक्षणमानन्दादि । या च स्वत एव स्थिता ब्रह्मरूपता तदुभयावभासं प्रतिरुध्येत्यर्थः । जीवेभ्यो ब्रह्मान्यदिति मतमपाकर्तुमेतदुक्तम् । जीवत्वापादिकेत्यस्या-नादिरनिर्वाच्याविद्येत्यनेनान्वयः । अविद्या भ्रान्तिः । तां विशिनष्टि ॥ **विद्येति** । विद्या वृत्तिरूपं ज्ञानम् । कर्म पुण्यपापलक्षणं । पूर्वप्रज्ञा स्मृतिः । संस्कारो वासनापरपर्यायः । एतेषां विद्यादीनां भित्तिरिव भित्तिः । कारणमिति वार्थः ॥ **पूतिकूश्मांडीकृते** ॥ पूतिकूष्माण्डवत्प्रकृतेऽप्रमाणीकृत इति यावत् । उपपत्तिविहीनस्य वाक्यस्यार्थो न गम्यत इति ज्ञानपादीयानुव्याख्यानानुरोधेन मूलवाक्यं योज-

यितुमुपोद्घातमाह ॥ **भवेदेतदित्यादिना** ॥ एवमितिपर्यन्तेन ॥ **बालजनेति** ॥ अज्ञजनमनोहरा । एषा ॥ येयं चैतन्यस्येत्यादिनोक्ता । प्रक्रिया च भवेदित्यन्वयः ॥ **तद्वाक्यमिति** ॥ एकवचनं समुदायाभिप्रायं मूलवाक्यानुरोधेन कृतमिति ध्येयम् । तेन श्रुतिस्मृतीतिहासपुराणेष्वित्युपक्रमाविरोधः । इत्याद्युक्तेत्यादिपदेन श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा । पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णय इत्युक्तदिशेति ग्राह्यम् ॥ **मीमांसेति** ॥ 'आकाशस्तल्लिङ्गादित्यादिना हि आकाश इति होवाचेत्यादिवाक्ये प्रतीतार्थत्यागेनार्थान्तरमुपादीयते । यद्यापाततः प्रतिपन्न एव श्रुत्यर्थस्तर्हि श्रुत्यर्थनिर्णायकन्यायविचाररूपमीमांसारंभ एव न स्यादित्यर्थः ॥ **उपपत्तिविरुद्ध इति** ॥ निःस्वरूपस्यासतः पूर्ववृत्तित्वरूपकारणत्वानुपपत्तिरूपोपपत्तिविरुद्धस्त्यज्यत इत्यर्थः ॥ **उपपत्तिविरुद्धमिति** ॥ मृन्न वक्री जडत्वादित्याद्युपपत्तिविरुद्धं मृत्पदस्य जडरूपमर्थं परित्यज्य चेतनरूपमर्थान्तरं वक्ष्यतीत्यर्थः ॥ **कथमत्रेति** ॥ 'नेहनाने'त्यादिवाक्ये । मूलं योजयति ॥ **यदीत्यादिना** ॥ तदिति व्यस्तं समस्तं चेत्युपेत्य वा तदिति व्यस्तमेवाव्ययमित्युपेत्यार्थद्वयमाह ॥ **तत्तर्हि तस्येति** ॥ अस्तु वाक्यस्य मिथ्यात्वं किं नः छिन्नमित्यतस्तदेव वाक्यं यदीत्यस्य तद्वाक्यस्येत्यत्रान्वयं पूर्वस्मादनुवृत्तनञो दुःखादेर्न मिथ्यात्वं भवेदित्यन्वयं चोपेत्य प्रकारान्तरेण व्याचष्टे ॥ **यदिचेदं वाक्यमिति** ॥ मिथ्यात्वं दुःखादेर्न भवेदित्यस्य फलितार्थः न दुःखादेर्मिथ्यात्वं प्रतिपादयेदिति ॥ **सिद्धिरितीति**शब्दो मूलव्याख्यानेन पूर्वोक्तशङ्कोत्तरसमाप्तौ ॥

**या० —स्यादेतदिति** ॥ प्रत्यक्षस्य दोषशङ्काकलङ्कितस्य न निर्दोषश्रुतिसिद्धमिथ्यात्वप्रतिरोधकत्वमिति शङ्काग्रन्थार्थः । न केवलं श्रुत्यादिविरोधेन कर्तृत्वादिविषयकं प्रत्यक्षमतत्त्वावेदकमपि तु वस्तुस्थितिपर्यालोचनयाऽपीत्याह ॥ **येयं चैतन्यस्येत्यादिना** ॥ येयमित्यादिकं वक्ष्यमाणाहङ्काररूपकार्यस्योपादानसङ्कीर्तनम् । स्वत एव स्वभावत एव स्थितम् । यल्लक्षणमानन्दादि या च स्वत एव स्थिता ब्रह्मरूपता तदुभयावभासं प्रतिबद्धेत्यर्थः । जीवेभ्यो ब्रह्मान्यदिति मतमपाकर्तुमेतदुक्तमिति ज्ञातव्यम् । अविद्या भ्रान्तिः । पूर्वप्रज्ञा पूर्वानुभवः । भ्रान्तिश्च कर्म च पूर्वानुभवश्चेति तथोक्तास्तेषां संस्कार एव चित्रं तस्य भित्तिरिति विग्रहः । तत्र च भ्रान्तिसम्यगनुभवभेदमङ्गीकृत्य पृथङ्निर्देश इति ज्ञातव्यम् । अविद्याया एकरूपत्वान्न विचित्रकार्योत्पादकत्वमिति शङ्कां निराकर्तुमेतदुक्तम् । परमेश्वरेति निमित्तप्रदर्शनम् । विज्ञानेति स्वरूपप्रदर्शनार्थम् । कर्तृत्वभोक्तृत्वेति कार्यप्रदर्शनम् । कूटस्थचैतन्येति प्रमाणोपन्यासः । यद्यपि चैतन्यमविकारं तथाऽपि तस्मिन्नैक्याध्यासलक्षणेन संवलनेन परिनिष्पन्नप्रकाश इत्यर्थः । नित्यानुमेयत्वं व्यावर्तयति ॥ **अपरोक्षेति** ॥ शक्तिद्वयोपेतमहङ्कारस्वरूपमित्युक्तम् । तत्प्रपञ्चयति ॥ **स चेति** ॥ तदुपरागेति फलप्रदर्शनम् । तदेवमिति प्रकृतोपयोगोक्तिः । पूतिशब्देन दुर्गन्ध्यमभिधीयते पूतिगन्धस्तु दुर्गन्ध इत्यभिधानात् । अर्थान्तरमभिमानिदेवतारूपम् ।

श्री०—समस्तोपाध्यनवच्छिन्नमित्युक्तापरिच्छिन्नत्वविरोधित्वेन प्रादेशिकमित्युक्तम् । परिच्छिन्न-मित्यर्थः । उपप्लुतं उपद्रुतम् । उपप्लवो भ्रमरूपः । अहङ्कारगतमेव कर्तृत्वं भोक्तृत्वं च तदुपरागाज्जीवे मिथ्याभूतमेव प्रतीयत इत्याह ॥ **येयमित्यादिना** ॥ परिस्पन्दशक्त्या । ननु श्रुतिप्रतीतार्थस्य कथ-मुपपत्तिविरोधेन त्यागोऽदृष्टत्वात् सूत्रकारासम्मतत्वाच्चेत्यत आह ॥ **अत एवेति** ॥ बलवदुपपत्तिविरुद्ध-त्वादेवेत्यर्थः ।

च०— दोषजन्यत्वसन्देहाहिताप्रामाण्यशङ्कास्कन्दितप्रत्यक्षं निर्दोषत्वायत्त तच्छङ्कानास्कन्दित-ताकश्रुतिप्रत्यापितमिथ्यात्वप्रतिरुन्धानं कथं भवेदित्याशयेन शङ्कते ॥ **स्यादेतदिति** ॥ स्वत एव स्थितेति लक्षणब्रह्मरूपतयोर्विशेषणम् । लक्षणं परमानन्दादिकम् । उभयावभासं प्रतिबध्येत्यर्थः । अविद्याशब्देन भ्रान्तिरुपादीयते । पूर्वप्रज्ञापदेन पूर्वानुभवः । कृतद्वन्द्वप्रज्ञान्तेन षष्ठ्यन्तेन संस्कारपदस्य समासः । तादृशसंस्कारा एव चित्रं तस्य भित्तिरिवेतिविग्रहः । एकरूपाया अप्यविद्यायाः विचित्रनाना-कार्यनिर्वाहकता सङ्गच्छत इति ध्वनयितुमेतदुपात्तम् । शक्तिद्वयाश्रयः विज्ञानशक्तिक्रियाशक्त्याश्रयः पूतिशब्दो दुर्गन्धिवचनः अर्थान्तरमभिमानिदेवतारूपम् ।

सु०— **तत्त्वविदो वदन्ति । सर्वोऽपि हि बन्धो बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणो-ऽस्माभिरप्यात्मन्यारोपित एवेत्यङ्गीक्रियते । यथोक्तं भाष्यकृता । प्रमादात्मकत्वाद्बन्धस्येति । अतः किंबिन्धनो बन्धमिथ्यात्वनिरासे निर्बन्धः । सत्यम् । तथाऽप्यस्त्यत्र दर्शनभेदः । एवं खल्वध्यात्मविदां दर्शनम् । क्रियाज्ञाने प्रति कारकान्तराप्रयोज्यत्वादिलक्षणं कर्तृत्वं भोक्तृत्वं च परमेश्वरायत्तमात्मनि स्वतो विद्यत एव । क्रियावेशादिरूपाया विक्रियाया विनाशाद्यहेतुत्वस्य वक्ष्यमाणत्वात् । तस्य परायत्तत्वावभासोऽविद्यानिमित्तको भ्रमः । अवि-द्यादिकं च स्वरूपेणात्मसंबन्धित्वेन च सदेव । एवं बुद्धीन्द्रियशरीरविषयाः स्वरूपसन्त एवे-श्वरवशा अप्यविद्यादिवशादात्मीयतयाऽध्यस्यन्ते । परायत्तात्मीयताऽप्यस्त्येव । तांश्चात्मनो विविक्तानपि विस्पष्टतयाऽनुपलभमानस्तद्धर्मान्दुःखादींस्तत्त्यानेवात्मीयत्वेन पश्यंस्तत्कृते नीचो-च्चत्वलक्षणे विकृती सत्ये एव प्रतिपद्यते । ततो रागद्वेषाभ्यां प्रयुक्तस्तद्विनिवृत्तये यत्करोति तदप्येतादृगेवातनोतीत्यनेकयोनिषु बम्भ्रमीति । न क्वाप्यात्यन्तिकं तदुपशमं लभते विना परमपुरुषाराधनादिति । मायावादिनस्तु दुःखादिकं स्वरूपेणापि मिथ्येति मन्यन्ते । यदवो-चत् । सत्यानृते मिथुनीकृत्येति । अतस्तन्निराकरणनिर्बन्धो युक्त एवेत्येतत्परिभावयितुं**

**बन्धमिथ्यात्वमिति सम्मुग्धे प्रस्तुतेऽपि दुःखादेरिति निष्कृष्योक्तम् । स्वातन्त्र्यादेर्नान्योऽतोऽस्तिकर्तेत्यादिश्रुतिबाधितत्वात् । न हि सर्वमिथ्यात्वश्रुतेरिवास्याः कश्चिद्विरोधोऽस्ति । वक्ष्यति चैतत्तत्र तत्र सूत्रकारः ।**

**वा०**— ननु बन्धमिथ्यात्वमिति पूर्ववाक्ये बन्धशब्देन यदुच्यते तावतोऽप्यत्र दुःखादिशब्देन ग्रहणं तद्विशेषस्य वा । नाद्यः । बन्धशब्देन प्रस्तुतस्य शब्दान्तरेणोपादाने निमित्ताभावात् । द्वितीयेऽपि युक्तिर्बन्धविशेषमिथ्यात्वनिरास एवेति तदुपपादनमुत दुःखादिरूपबन्धविशेषस्यैव सत्यत्वादन्यस्यच मिथ्यात्वाद्बन्धशब्दोक्तस्य निष्कर्षार्थं वा । नाद्यः । एतद्वाक्योक्तस्य श्रुतेरुपपत्तिविरोधस्य दुःखादाविवान्यत्रापि समत्वात् । न द्वितीयः । सिद्धान्ते बन्धमात्रस्य सत्यत्वाद्बन्धविशेषस्यैव सत्यत्वे वापूर्वपक्षिणं प्रति तन्निष्कर्षप्रदर्शनस्यानुपयोगाच्च । न च स्वयूथ्यान्प्रत्येव तत्प्रदर्शनमिति वाच्यम् । स्वयूथ्यानां सर्वमिथ्यात्वप्रसक्तेरेवाभावेन तान्प्रत्यप्यस्यानुपयोगादित्यतः स्वयूथ्यान्प्रति प्रसञ्जकसद्भावान्मिथ्यात्वनिरासप्राप्तानौचितीपरिहाराय भाष्यकारीयनिष्कर्षप्रदर्शनमित्यभिप्रेत्य प्रसञ्जकं निष्कर्षप्रदर्शनसूचितभाष्यकारीयपरिहारप्रकारं च दर्शयति ॥ **तत्त्वविद् इत्यादिना** ॥ **प्रमादेति** ॥ प्रमादोऽज्ञानम् । तथा चाविद्यकत्वोक्त्याऽऽरोपितत्वसिद्धिरिति भावः । अत्र निर्बन्धपदेनैतत्सूचयति । स्वयं बन्धमिथ्यात्वमभ्युपगम्यापि परं प्रति तन्निराकारणं किं प्रथमभाष्ये तदुक्तेरसङ्गतत्वप्रदर्शनार्थं वा तदुक्तोपपादनप्रकारस्यानुपपन्नत्वदप्रदर्शनार्थं वा । नाद्यः । तस्य पूर्ववाक्येनैव सिद्धत्वात् । तदर्थमुपपत्तिविरोधस्यावक्तव्यत्वाच्च । अथत्येत्यादिनाऽस्यायुक्तताप्रतिपादनपरत्वेनावतारितत्वाच्च । नापि द्वितीयः । प्रमेये विवादाभावे उपपादनप्रकारनिरासायैतावतःप्रयासस्यानुचितत्वादिति । अत्र कर्तृत्वभोक्तृत्वयोर्दुःखादिवन्मायावादिरीत्या बुद्धिधर्मत्वं शङ्कितुरभिप्रेतम् । अत एव शङ्कादशायां पृथक् तदनुपादानं तन्न तथा भ्रमितव्यम् । कर्तृत्वादेरात्मधर्मत्वेन दुःखादिवैलक्षण्यात् । अतोऽपि दर्शनभेद इत्यभिप्रेत्य । ननु कर्तृत्वादेः स्वातन्त्र्यरूपत्वे तस्य भगवद्धर्मत्वेन क्रियावेशरूपत्वे च विनाशोत्पत्तिप्रयोजकविकाररूपस्य तस्यानादिनित्ये जीवेऽसम्भवेन च कथमात्मधर्मत्वं तस्योपपद्यत इत्याशङ्कां कर्तृत्वादिस्वरूपनिरूपणेन तत्र प्राप्तदोषपरिहारेण च निरस्यति ॥ **क्रियाज्ञाने प्रतीति** ॥ अत्र कारकान्तरेत्युक्त्या स्वस्य कारकत्वसूचनान्नातिप्रसङ्गः । क्रियावेशत्वादिकमादिपदार्थः । अत्र स्वतः स्वरूपेण विद्यत इत्युक्त्या न परमत इवाहमर्थेऽपि स्वरूपेणाध्यस्तमित्यात्मनि स्वतोऽनौपाधिकमित्युक्त्या स्फटिकलौहित्यवन्नान्योपरागनिमित्तमिति स्वत आत्मस्वरूपमित्युक्त्या दुःखादिवन्नागन्तुकमिति च दर्शनभेदकथनमिति द्रष्टव्यम् ॥ **क्रियेति** ॥ क्रियावेशोनामाहंकरोमीत्यादिरभिनिवेशः । आदिपदेनोच्च-

नीचत्वादेर्ग्रहणम् । यावल्लक्ष्यभाविलक्षणनिवृत्त्यादेरेव विनाशादिहेतुत्वाज्जीवे चैतन्यस्यैव च तादृशत्वात्तस्य चानिवृत्त्यादिना न विनाशोत्पत्तिप्रसङ्ग इत्यस्य जैनमतनिरासावसरे नानित्यताऽसत्पक्षे तु चैतन्यादेर्विशेषिण इत्यादिना वक्ष्यमाणत्वादित्यर्थः । कर्तृत्वादेरनध्यासे प्रमादात्मकत्वं न तदंशे स्यादित्यत आह ॥ **तस्येति** ॥ निमित्तग्रहणेन परमत इव नोपादानत्वमित्याह । नन्वविद्याया असत्त्वे नासतः साधकत्वमनिर्वाच्यत्वे च तत्खण्डनानुपपत्तिरित्यत आह ॥ **अविद्यादिकं चेति** ॥ नन्वेवमपि बुद्धीन्द्रियादेरस्वरूपत्वात्स्वरूपेणैवाध्यास इति कथं दर्शनभेदस्तदंश इत्यत आह ॥ **एवमिति** ॥ ननु बुद्ध्यादीनामनात्मीयत्वे नात्मविकारहेतुसुखादिसाधनत्वमित्यत आह ॥ **परायत्तेति** ॥ एवं च कर्तृत्वादीनामात्मीयत्वात्तत्रापरायत्तत्वामात्राध्यासो बुद्ध्यादीनां चापरायत्तात्मीयतयाऽध्यास इति भेदः । नन्वयमध्यासः शुक्तिरजताध्यासतुल्यतया न बन्ध इत्यत एतदध्यासस्य बुद्ध्यादिधर्मभूतदुःखाद्यनात्मीयतानवगमसहकृतस्योच्चनीचत्वादिरूपविकारापादकत्वाद्युक्तं बन्धमिथ्यात्वमित्याह ॥ **तद्धर्मानिति** ॥ ननु बुद्ध्यादीनां विविक्ततयोपलम्भे न तद्धर्माणामनात्मीयतयाऽदर्शनं युक्तमित्यत आह ॥ **तांश्चेति** ॥ ननु यद्येतावन्मात्रं बन्धस्तर्हि तन्निवृत्तिः कर्मादिना सुलभेत्यतो निवृत्तकर्मणोऽन्यादृशत्वेऽपि प्रवृत्तकर्मणो बन्धापादकत्वमेवेत्याह ॥ **तत इति** ॥ तादृशस्यापि कर्मविशेषेण निवृत्तिः किं न स्यादित्यत आह ॥ **नेति** ॥ आत्यन्तिकं मूलकारणाविद्योच्छेदप्रयुक्तम् । अत एवोक्तं कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यत इति । नन्वेवं मोक्षशास्त्रमनुपपन्नमित्यत आह ॥ **विनेति** ॥ **सत्येति** ॥ स्वरूपेण सत्यं संसृष्टतयाऽनृतं मिथुनीकृत्याध्यस्य क्त्वाप्रत्ययो गौणः । एतदध्यासरूपोऽहंममेति लोकव्यवहारो नैसर्गिक इत्यन्वयः ॥ **एतदिति** ॥ न तु दुःखादेरेव बन्धत्वाद्वाऽन्यमिथ्यात्वनिरासेऽस्या युक्तित्वासम्भवाद्वेति भावः । ननु भाष्यकारीयमर्धजरतीयमनुपपन्नं नियामकाभावादित्यत्राह ॥ **स्वातन्त्र्यादेरिति** ॥ ननु माऽस्तु भाष्यकाराभिप्रेतेऽनुपपत्तिर्मूलं तु नकिमपि पश्याम इत्यत आह ॥ **वक्ष्यति चेति** ॥ तदनन्यत्वमितरव्यपदेशादित्यादौ जीवे स्वातन्त्र्यकर्तृत्वादिनिरासेन कर्ताशास्त्रार्थवत्त्वादित्यादौ कर्तृत्वाभ्युपगमेन वैधर्म्याच्चेत्यादौ जगत्सत्यत्वप्रतिपादनेन भाक्तं वा विद्येवत्वित्यादौ कर्मादेर्मोक्षसाधनत्वादिप्रतिपादनेन चैतदेव वक्ष्यतीत्यर्थः ।

स० — **वक्ष्यमाणत्वादिति** ॥ नानित्यताऽसत्पक्षे तु चैतन्यादेर्विशेषिणः । लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने क्वचिदित्यादिना वक्ष्यमाणत्वादित्यर्थः ।

प० — अत्र मिथ्यात्वं यदि बन्धस्येति वा मिथ्यात्वं यदि तस्य स्यादिति वा वक्तव्ये दुःखादेरिति विविच्य कीर्तनस्य फलं वक्तुं शङ्कामाह ॥ **तत्त्वविद इति** ॥ तत्त्वज्ञानिनः शङ्कन्त इत्यर्थः ।

निर्बन्ध इत्यनन्तरमितिशब्दोऽध्याहार्यः । किन्निबन्धनो निर्बन्ध इति तत्वविदो वदन्तीत्यन्वयः ॥ **यथोक्तमिति** ॥ आनन्दमयनये ॥ **प्रमादात्मकत्वादिति** ॥ यद्यपि प्रमादात्मकत्वादित्यस्यास्वाभाविकत्वादित्येवार्थो न मिथ्यात्वादिति । तथापि जीवस्वातन्त्र्यविवक्षायां मिथ्यात्वमपि तदर्थ इत्यत्रैतदुदाहरणमिति ज्ञातव्यम् ॥ **दर्शनभेद इति** ॥ तत्वज्ञानिदर्शनमायिदर्शनयोर्भेद इत्यर्थः । 'स्वतन्त्रः कर्ते'ति पाणिन्युक्तस्वातन्त्र्यं विवृण्वन्नेवाह ॥ **कारकान्तराप्रयोज्यत्वादीति** ॥ आदिपदेन तार्किकरीत्या ज्ञानचिकीर्षाकृतिसमवायित्वलक्षणमिति गृह्यते । उच्चत्वादिरूपं भोक्तृत्वमिति वा ॥ **स्वत इति** ॥ न परमत इवोपाधिसम्बन्धमपेक्ष्येत्यर्थः । 'कर्ता शास्त्रार्थवत्त्वादि'त्यत्र द्वितीये तथैव सूत्रकृता निर्णीतत्वादिति भावः । नन्वेवमौदासीन्यप्रच्युतिरूपक्रियावेशरूपविकारप्राप्तेरात्मनो जनिमत्त्वादनित्यत्वं स्यादित्यत आह ॥ **क्रियावेशेति** ॥ **वक्ष्यमाणत्वादिति** ॥ 'नानित्यताऽस्मत्पक्षेतुचैतन्यादेर्विशेषिण' इत्यादिना समयपादे 'नैकस्मिन्नसम्भवादि'ति जैनमतापाकरणाधिकरणे वक्ष्यमाणत्वादित्यर्थः ॥ **बम्भ्रमीतीति** ॥ पुनःपुनर्भ्रमति । क्रियासमभिहारे यङ्लुगन्तम् ॥ **यदवोचदिति** ॥ तद्भाष्यकार इति शेषः ॥ **सत्यानृत इति** ॥ सत्यं चैतन्यं अनृतमन्तःकरणादिकम् । मिथुनीकृत्य तादात्म्येन भ्रान्त्वा अहं ममेत्यादि नैसर्गिकव्यवहारं करोतीत्यादि । परिभावयितुं प्रकटयितुमित्यर्थः । अपरायत्तत्वावभासो भ्रम इत्युक्तम् । तत्कुत इत्यत आह ॥ **स्वातन्त्र्यादेरिति** ॥ **एतत्तत्रतत्रेति** ॥ जीवस्य स्वतः कर्तृत्वादिमत्त्वेऽपि तस्य स्वातन्त्र्यबुद्धिर्भ्रम इत्येतत्पूर्वोक्तं प्रमेयं सर्वं 'कर्ता शास्त्रार्थवत्त्वादि'त्यादिसूत्रेषु 'इतरव्यपदेशादि'त्यधिकरणसूत्रेषु 'अन्यथानुमितौ च ज्ञशक्तिवियोगादि'त्यादौ च वक्ष्यतीत्यर्थः ।

या० — मूले दुःखादेरिति निष्कृष्योक्तेः प्रयोजनं वक्तुमाह ॥ **तत्त्वविद इत्यादिना** ॥ **प्रमादात्मकत्वादिति** । यद्यपि प्रमादात्मकत्वादित्यस्यास्वाभाविकत्वादित्येवार्थो न मिथ्यात्वादिति तथाऽपि जीवस्वातन्त्र्यविवक्षायां मिथ्यात्वमपि तदर्थ इत्यभिप्रेत्यात्रैतदुदाहरणमिति ज्ञातव्यम् ॥ **वक्ष्यमाणत्वादिति** । नानित्यताऽस्मत्पक्षे तु चैतन्यादेर्विशेषिणः । लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने क्वचिदित्यत्रेति शेषः । ननु दुःखादिवज्जीवगतस्वातन्त्र्यादेरपि सत्यत्वमेव किं न स्यादित्यत आह ॥ **स्वातन्त्र्यादेरिति** ॥ ननु सर्वमिथ्यात्वश्रुतेरिवास्या अपि श्रुतेरुपपत्तिविरोधान्न जीवस्वातन्त्र्यनिषेधकतेत्यत आह ॥ **न हीति** ॥ अतो ब्रह्मणोऽन्यः कर्ता चेतनो नास्तीति जीवस्य ब्रह्मान्यत्वमेव निषिध्यते न तु ब्रह्मणोऽन्यः स्वतन्त्रकर्ता, अतोऽन्यो नास्तीति श्रुत्यर्थ इत्यत आह ॥ **वक्ष्यते चैतदिति** ॥ जीवस्य ब्रह्मान्यत्वं जन्माधिकरणादिषु वक्ष्यतीत्यर्थः । यद्वा यदध्यात्मदर्शनविषयतयोक्तं कर्तृत्वादेः सत्यत्वादिकं तत्कर्ता शास्त्रार्थवत्त्वादित्यादौ सूत्रकारो वक्ष्यतीत्यर्थः । यद्वा जीवकर्तृत्वस्यापि श्रुत्यनुमानादिसिद्धत्वेन तद्वि-

रोधात्कथं नास्याः कश्चिद्विरोध इत्यत आह ॥ **वक्ष्यतीति** ॥ तत्र तत्र 'एतेन शिष्टा अपरिग्रहा' इत्यत्र 'इतरव्यपदेशादि'त्यत्र'अन्यथाऽनुमिताविʼत्यत्र 'उपलब्धिवदनियम' इत्यत्र चेत्यर्थः ।

**श्री०**— ननु करणभोजनादिरूपक्रियाया आगन्तुकत्वेन तदावेशरूपकर्तृत्वादिलक्षणविक्रिया-प्राप्त्या तन्नाशेनात्मनोऽपि विनाशः स्यादित्यत आह ॥ **क्रियावेशेति** ॥ परवशा अधीनाः । तान् शरीरेन्द्रियादीन् । विविक्तान्भिन्नान् ॥ **विस्पष्टतयेति** ॥ स्फुटतरभेदज्ञानशून्यत्वेन इत्यर्थः । तद्धर्मान् शरीरादिधर्मान् । तत्प्रयुक्तानिति यावत् । अनात्मत्वेन आत्मभिन्नत्वेन । तदनाश्रितत्वेनेति यावत् । ननु जीवगतकर्तृत्वादिरपरायत्तत्वावभासोऽविद्यानिमित्तको भ्रमः । कुतोऽपरायत्तत्वरूपं स्वातन्त्र्यं सत्यमेव किं न स्यादित्यत आह ॥ **स्वातन्त्र्यादेरिति** ॥

**च०**— दुःखादेरिति विशिष्यमूलकारीयनिर्देशस्य फलमभिप्रेतसते ॥ **तत्वविद इत्यादि** ॥ **क्रियावेशादीति** ॥ अहंकरोमीत्यभियोगादीत्यर्थः ॥ **वक्ष्यमाणत्वादिति** ॥ समयपादे जैनमतनिरासा-वसरे नानित्यतास्मत्पक्षे तु चैतन्यादेरित्यादिनाभिधास्यमानत्वादित्यर्थः ॥ **वक्ष्यतीति** ॥ एतेन, इतर, अन्यथानुमितावित्यादिनाभिधास्यतीत्यर्थः ।

**सु०— यदपि परेणात्मानात्मनोरितरेतराध्याससमर्थनाय तमेतमविद्याख्यमात्मानात्मनो-रितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिकाः प्रवृत्ताः । सर्वाणि च शास्त्राणि इत्यादिना प्रमाणान्तरमादर्शितम् । तदनेनैव निरस्तम् । अत्र हि प्रमातृप्रमाणप्रमेयकर्तृकर्म-कार्यभोक्तृभोग्यभोगलक्षणव्यवहारत्रयस्य शरीरेन्द्रियादेष्वहंममाध्यासपुरःसरत्वप्रदर्शनेन व्यव-हारकार्यलिङ्गकमनुमानं व्यवहारान्यथाऽनुपपत्तिर्वाऽध्यासे प्रमाणमुक्तम् । न चानेनान्तः-करणशरीरेन्द्रियविषयाणां तद्धर्माणां दुःखादीनां च मिथ्यात्वं सिध्यति । स्वरूपसतामपि तादात्म्यतत्संबन्धित्वाभ्यामारोपेणैव व्यवहारोपपत्तेः । न चारोपितत्वमात्रेण मिथ्यात्वम् । आत्मनोऽप्यन्तःकरणादिष्वारोपितत्वेन मिथ्यात्वप्रसङ्गात् । अङ्गीकृतश्चान्तःकरणादिषु परेणा-त्माध्यासः । यथोक्तम् । तं प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यतीति । चेतनस्याचेतने स्वरूपाध्यासाभावात्संसृष्टतयैवाध्यासात्तन्मात्रेणैव सकललौकिकवैदिकव्यवहारो-पपत्तेर्न मिथ्यात्वमिति चेत् सममचेतनस्यापि । यदत्र केनचित्प्रलपितम् । इतरेतराध्यासेऽपि देहेन्द्रियादिप्रपञ्चस्य बाधनं श्रुतियुक्तिभिरुपपादयिष्यते । चिदात्मा तु श्रुतिस्मृतीतिहास-**

**पुराणतदविरुद्धन्यायनिर्णीतोऽबाधित इति । तदसत् । प्रपञ्चबाधकश्रुत्यादेर्निराक्रियमाणत्वात् । युक्तीनां च निराकरिष्यमाणत्वात् । श्रुत्यादिसिद्धत्वे च मिथ्यात्वस्य तमेतमविद्याख्य-मित्यादि व्यर्थमापद्येत । न खलु कोऽपि वादी वदति । केनापि रूपेण शरीरादिकमात्मनि नाध्यस्तमिति । येनाध्यासमात्रमुपपाद्येत । तादात्म्याध्यासं च निराकरिष्यत्याचार्यः । विना च तेन व्यवहारमुपपादयिष्यति ।**

वा०— अत्र दुःखादेरिति निष्कृष्योक्त्या न केवलं स्वपक्षानुसारिशङ्कापरिहारोऽपितु पर-पक्षीयसाधकान्तरनिरासोऽपीति भावेनाह ॥ **यदपीति** ॥ किं तत्प्रमाणमित्यतो विवरणरीत्या तत्प्रकारं दर्शयति ॥ **अत्र हीति** ॥ अत्र प्रमाणप्रमेयग्रहणं स्वैकदेशभूतप्रमातुर्व्यवहारान्तरस्य चोपलक्षणमिति भावेनाह ॥ **प्रमात्रिति** ॥ देहेन्द्रियादिष्वित्यादिना तदीयभाष्ये वक्ष्यमाणोपपादनप्रकारसूचनम् । विवादाध्यासितो व्यवहारोऽध्यासनिबन्धनो व्यवहारत्वात्स्वप्नादिव्यवहारवदित्यनुमानमत्राभिप्रेतम् । अथवा देवदत्तस्य जाग्रत्स्वप्नकालौ तस्यैव देहेन्द्रियादिष्वहंममाध्यासपुरःसरप्रमातृत्वादिव्यवहारवन्तौ देवदत्तसुषुप्तिकालान्यत्वे सति तत्कालत्वात् यन्नैवं तन्नैवं यथा तस्यैव सुषुप्तिकाल इति व्यतिरेक्यनुमानम् । प्रमातृत्वादिव्यवहारो देहादितादात्म्याध्यासं विना नोपपद्यते सुषुप्तावध्यासाभावेन व्यवहाराभावादित्यर्था-पत्तिः । ननु यः कर्तृकरणभावः स सम्बन्धपुरःसर इति व्याप्तेर्देहादीनां प्रमातुश्च सम्बन्धमात्रेण व्यवहारो-पपत्त्या सति संबन्धमात्रे तादात्म्याभावापराधेन कार्याभावादर्शनादर्थापत्तेरन्यथोपपत्तिरनुमानस्य चाप्रयो-जकतेति चेन्न । सम्बन्धान्तरस्य दुर्निरूपत्वेन तादात्म्यस्यैव संबन्धत्वपर्यवसानात् । तथा हि । संब-न्धान्तरं किं स्वस्वामिता वा स्वेच्छामात्रानुविधायित्वं वा संयोगो वा समवायो वा भोक्तृभोग्यत्वं वा स्वकर्मारभ्यत्वं वा स्वेन्द्रियाधिष्ठेयत्वं वा । नाद्यः । भृत्यादिशरीरेणापि प्रमातृत्वादिव्यवहारापातात् । सुषुप्ते तदापाताच्च । न च सहकार्यन्तराभावस्तदेति वाच्यम् । आत्मनः स्वतः कर्तृत्वशक्तौ हि तत्कल्पना न च तत्सम्भवः । कारकान्तराप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वरूपप्रमातृत्वस्य व्यापारवद्देहेन्द्रिय-तादात्म्याध्यासं विना स्वतो व्यापारशून्ये कूटस्थे चिन्मात्रेऽनुपपत्तेः । अस्तु तर्हि स्वेच्छानुविधायित्वं संबन्ध इति द्वितीयो भृत्यादिशरीरं तु स्ववचनानुविधायीति नातिप्रसङ्ग इति चेन्न । तत्किमिच्छानु-विधानयोग्यतामात्रमुतेच्छयाऽनुविधीयमानत्वं वा । नाद्यः । सुषुप्तेऽपि तत्सत्त्वेन व्यवहारस्य दुर्वारत्वात् । न द्वितीयः । आतुरे तदभावेन व्यवहारानापत्तेः । इच्छानुविधानस्य व्यवहारमूलत्वमनुभवसिद्धमिति चेत् । तत्किं सार्वत्रिकमुत काचित्कम् । नाद्यः । इच्छानुविधानमन्तरेण दुर्गन्धादिप्रमातृत्वदर्शनात् । न द्वितीयः । इच्छाया अन्तःकरणपरिणामरूपतयाऽन्तःकरणतादात्म्याध्यासमन्तरेण निर्विकारचिदात्मनि तदसम्भवेनेच्छाया अप्यध्यासमूलत्वेनाध्यासस्यैव व्यवहारहेतुत्वात् । नापि संयोगसमवायौ व्यवहार-

निमित्तम् । सुषुप्तेऽपि तयोः सत्त्वात् । भोक्तृभोग्यत्वस्वकर्मारभ्यत्वस्वेन्द्रियाधिष्ठेयत्वादीनां भोगाद्य या-समूलत्वाद्भृत्यादिशरीरे सद्भावाच्च न व्यवहारहेतुत्वम् । अथ भृत्यादिव्यावृत्तयेऽव्यवधानेन भोग्यसंबन्ध-इत्युच्यते तर्हि भोगयोग्यतामात्रस्य सुषुप्तेऽपि सत्त्वाद्भुज्यमानत्वस्य चात्मनः सर्वशरीरदेशकालेष्वव्यव-धानस्य समत्वात्कस्यचिदेव शरीरस्य कयोश्चिदेव देशकालयोर्भोग्यत्वे नियामकमूलसम्बन्धसापेक्षत्वान्न स्वयमेव व्यवहारनिर्वाहकत्वम् । एवं च संबन्धान्तरासम्भवात्कल्पिततादात्म्यमेव सम्बन्ध इति नार्थाप-त्त्यादेरन्यथोपपत्त्यादिकमिति भावः । अनुमानार्थापत्ती मिथ्यात्वसाधकतयोपन्यस्ते आरोपितत्वमात्र-साधकतया वा । नाद्य इत्याह ॥ **न चेति** ॥ ननु व्यवहारो मिथ्यात्वेन विनाऽनुपपद्यमानः कथं न तत्साधयेदित्यत आह ॥ **स्वरूपेति** ॥ अत्र स्वरूपसतामितिविशेषणंप्रति विशेष्यतयाऽन्वितानामन्तः-करणादीनां धर्मिणामहं मनुष्य इत्यादितादात्म्येन दुःखादिधर्माणां च मम दुःखमित्यादि-तत्सम्बन्धित्वेनेति सम्बन्धः । अत एव पूर्वं द्वन्द्वेन निर्देष्टव्ये पृथङ्निर्देशः । अत्र स्वरूपसता-मप्यारोपोक्त्या द्वितीयोऽपि परास्तः । आरोपितत्वस्य स्वरूपसत्त्वाविरोधित्वेन तत्साधनस्य निष्फलत्वात् । ननु यथाकथञ्चिदारोपितत्वाङ्गीकारे सिद्धमेव मिथ्यात्वमित्यत आह ॥ **न चेति** ॥ तद्विपर्ययेणेत्यत्र तदचेतनमन्तःकरणादिकं तद्विपर्ययश्चेतनमित्थंभूतलक्षणे तृतीया । एवं च चेतनमात्मानमचेतनेष्वध्यस्यतीत्यर्थः । कथमन्यथाऽन्तःकरणादिषु चिदात्मतादात्म्यानध्यासे प्रमेयप्रवण-कर्तृस्थचित्स्वभावरूपप्रमायाः केवलजडान्तःकरणपरिणामत्वमुपपद्येतेति तदाशय इति भावः । यदत्रे-त्यादिना वाचस्पतिमतेन वैषम्यमाशङ्क्य निराकर्तुं साम्योपक्षेपाय तन्निवर्त्यं शङ्कते ॥ **चेतनस्येति** ॥ यद्वा गूढाभिसन्धेरेवात्मवैषम्यशङ्कासाम्यपरिहारौ यदत्रेत्यादिना च तदुद्घाटनमिति द्रष्टव्यम् । अत्र बन्धस्य प्रकृतत्वेऽपि दुःखादेरिति निष्कृष्योक्त्या प्रतीयमानतादात्म्यस्वातन्त्र्यादिरूपसम्बन्धस्य मिथ्यात्वे-ऽपि दुःखादेस्तन्न सिध्यतीति सूचनेनैतन्मानान्तरनिरासः सिध्यति तदनेनेत्थं मूलयोजनामभिप्रैति । पूर्ववाक्यान्नेत्यनुवर्तते । सावधारणं चैतत् । दुःखादेर्मिथ्यात्वं नैव मानान्तरेण न सिध्यतीति यावत् । आरोपमात्रेण व्यवहारोपपत्त्या तन्मात्रस्य चात्मन्यपि सत्त्वेन न मिथ्यात्वप्रयोजकतेति हेतुरवधारणलब्धः। तत्र च नेहनानेत्यादिवाक्यबलादात्मवैषम्ये यदत्रेत्यादिना शङ्किते मिथ्यात्वं यदि दुःखादेरिति मूलेन तद्वाक्ये उपपत्तिविरोधोद्भावनमिति । यद्वाऽऽत्मन्यपि सत्त्वेनारोपमात्रस्य मिथ्यात्वाप्रयोजकत्वादारोपमात्रेण च व्यवहारोपपत्त्या न मानान्तरं मिथ्यात्वसाधकमित्येतावदर्थे बहिरेव सिद्धे नेहनानेतिवाक्यबला-दात्मवैषम्ये शङ्किते तत्रोपपत्तिविरोधप्रतिपादकेनानेन मूलेन परम्परया मानान्तरनिरासः सिध्यतीति भावः । श्रुतियुक्तिभिरित्यत्र श्रुतिशब्दः स्मृत्यादीनामुपलक्षकः । अतएवोत्तरत्र श्रुत्यादेरित्याह ॥ **निराकरिष्य-माणत्वादिति** ॥ दृश्यत्वाद्विमतं मिथ्यास्वप्नवच्चेत्यादिनेत्यर्थः । प्रमेयं निराकृत्य भाष्यानुपपत्तिमाह ॥

**श्रुत्यादीति** ॥ इतरेतराध्यासेऽपि प्रपञ्चबाधनं श्रुत्यादिभिरिति वदता श्रुत्यादेरेव मिथ्यात्वसाधकत्वं न तु अध्यासस्येत्युक्तं स्यात् । तथा च तत्प्रतिपादकं भाष्यं व्यर्थमिति भावः । ननु मिथ्यात्वेऽविवदमानं-प्रत्यध्यासस्यानुपपादनीयत्वेऽप्यध्यासे विप्रतिपन्नं प्रति तदुपपादनं सङ्गतमेवेति चेन्न । विषयप्रयोजना-क्षिप्तबन्धमिथ्यात्वव्युत्पादनावसरेऽध्यासमात्रस्याव्युत्पादनीयत्वात् अध्यासमात्रविप्रतिपन्नो वादी नास्त्यपि चेत्याह ॥ **न खल्विति** ॥ अङ्गीकृत्यैव तादात्म्येनारोपमिदमुक्तम् । वस्तुतस्तु सोऽपि नास्ति । देहात्मत्वंयदिनतत्प्राप्तमित्यादिना भाष्यकारेण निराकरिष्यमाणत्वादित्याह ॥ **तादात्म्येति** ॥ ननु कथं स नास्ति व्यवहारान्यथाऽनुपपत्त्यादेरुक्तत्वादित्यत आह ॥ **विना च तेनेति** ॥ उपचारश्च कृष्णो-ऽहमिति व्याप्तत्वादात्मनो देह इत्यादिनेति भावः । उपलक्षणं चैतत् । क्रियावेशादिलक्षणविक्रियाया विनाशाद्यहेतुत्वात्प्रमातृत्वादेर्जीवे स्वाभाविकत्वान्नाध्याससापेक्षत्वमिति पूर्वोक्तरीत्या समाधानमपि द्रष्टव्यम् । अत्र तादात्म्यतत्सम्बन्धित्वाभ्यामारोपे प्रस्तुते तादात्म्यारोपस्य विशिष्यनिरासेन तत्सम्बन्धि-त्वेनारोपोऽनुमत इति ज्ञायते । अत एव स्वातन्त्र्यरूपतत्सम्बन्धारोपः पूर्वमुपपादित इति द्रष्टव्यम् ॥

**स०**— एवं श्रुत्या तावन्मिथ्यात्वं सिद्ध्यतीत्येतन्निराकृतम् । प्रमाणान्तरं च परोक्तमनूद्य निराकरोति ॥ **यदपीति** ॥ **व्यवहारकार्यलिङ्गकमनुमानमिति** ॥ प्रमातृत्वादिव्यवहारत्रितयं देहे-न्द्रियादिष्वहंममाध्यासपुरःसरं प्रमातृत्वादिव्यवहारत्वात् यदाध्यासाभावस्तदा व्यवहाराभावो यथा सुषुप्ताविति कार्यलिङ्गकमनुमानमित्यर्थः । उपलक्षणं चैतत् । देवदत्तस्य जाग्रत्स्वप्नकालौ तस्यैव कर्तुः करणभूतदेहेन्द्रियादिष्वहंममाध्यासपुरःसरप्रमातृत्वादिव्यवहारवन्तौ तस्यैव सुषुप्तिकालादन्यकालत्वात् यः कालस्तथाविधव्यवहारवान्न भवति स न तस्यैव सुषुप्तिकालादन्यकाल इति प्रयोगान्तरमपि द्रष्टव्यम् । केवल-व्यतिरेकिणमनङ्गीकुर्वाणं प्रत्याह ॥ **व्यवहारान्यथानुपपत्तिर्वेति** ॥ व्यवहारत्रितयमध्यासमन्तरेणानुप-पद्यमानमध्यासं कल्पयतीत्यर्थः ॥ **युक्तीनां चेति** ॥ वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिन इत्यादिना वादिविप्रतिपत्तिनिरासार्थं तद्व्युत्पादनमर्थवदिति चेत् किमध्यासमात्रव्युत्पादनं क्रियते तादात्म्याध्यासो वा । नाद्य इत्याह ॥ **न खल्विति** ॥ नान्त्य इत्याह ॥ **तादात्म्येति** ॥ जातमात्रा मृगा गाव इत्यादिना तृतीयस्य द्वितीये । ननु स्वरूपाध्यासाभावे कृशोऽहमित्यादिव्यवहारः कथमित्यत आह ॥ **विना च तेनेति** । व्याप्तत्वादात्मनो देहे इत्यादिना ।

**प०**— मूले वाक्यस्येत्युपलक्षणम् । परोक्तमन्यदपि बन्धमिथ्यात्वप्रमाणं निरसनीयमिति भावेन तदप्यनूद्य निराह ॥ **यदपीति** ॥ प्रमाणान्तरमादर्शितमित्यन्वयः ॥ **तमेतमिति** ॥ अध्यासमित्यन्वयः ॥

**अविद्याख्यं** अविद्यानिमित्तम् ॥ **शास्त्राणि** 'ब्राह्मणोवाजपेयेनयजेते'त्यादिशास्त्राणीत्यर्थः ॥ प्रमाणान्तरमनुमानमर्थापत्तिर्वेत्यग्रे व्यक्तम् । ननु तदात्मतया तत्संसृष्टतया वाऽऽरोपितत्वाद्देहादेर्मिथ्यात्वमस्त्वित्यत आह ॥ **नचेति** ॥ परमुखेन समाधिं वाचयित्वा समं ममेत्याह ॥ **चेतनस्येति** ॥ **सममचेतनस्यापीति** ॥ नन्वेवमिदंरजतमित्यादिभ्रमस्थलेऽपि रजतस्यासत्त्वं न सिद्ध्येत् । चिरन्तनतार्किकरीत्या तादात्म्यतत्संसर्गयोरेवासत्त्वापत्त्याऽभिनवान्यथाख्यातिर्वक्ष्यमाणा न युक्ता स्यादिति चेत् । मैवम् । स्मर्यमाणारोपस्थले आरोप्यस्य सर्वस्यासत्त्वेऽपि गृह्यमाणारोपस्थले सिद्धान्तेऽपि तादात्म्यादिरूपधर्ममात्रस्यासत्त्वेन धर्मिणस्सत्त्वस्यान्यथाख्यातिवादे वक्ष्यमाणत्वात् । अस्यापि गृह्यमाणारोपत्वान्नान्तःकरणादेरचेतनस्य मिथ्यात्वसिद्धिरित्युक्तमिति ध्येयम् ॥ **युक्तीनां च निराकरिष्यमाणत्वादिति** ॥ विश्वं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्छुक्तिरूप्यवदित्यादियुक्तीनां समयपादे शून्यवाद्यपाकरणप्रस्तावे भेदो मिथ्या भेदत्वादित्यादेः पृथगुपदेशादित्येतद्व्याख्यावसरे विवादपदं सदसद्विलक्षणं ज्ञाननिवर्त्यत्वादित्यादेर्वैलक्षण्यं सदसतोरप्येतेन निषिध्यत इत्यादिनाऽत्रैवाग्रे निराकरिष्यमाणत्वादित्यर्थः ॥ **इत्यादीति** ॥ अनुमानादिप्रमाणोपन्यासपराध्यासभाष्यमित्यर्थः ॥ **कोपिवादीति** ॥ अस्माभिरप्यपरायत्तत्वेनारोपाङ्गीकारादिति भावः । स्वरूपसतामपि तादात्म्यतत्सम्बन्धित्वाभ्यामारोपेणैव व्यवहारोपपत्तेरिति पूर्वमुक्तम् । तत्रतादात्म्याध्यासमङ्गीकृत्य । वस्तुतस्त्वयुक्तं चैतद्वर्णनमिति भावेनाह ॥ **तादात्म्येति** ॥ तृतीयाध्याये भक्तिपादे 'देहात्मत्वं यदि न तत्प्राप्तं प्रत्यक्षतः क्वचित् । मम देह इति ह्येव न देहोऽहमितिप्रमे'त्यादिनेति भावः । कथं तर्हि कृष्णोऽहं कृशोऽहमित्यादि व्यवहारः । 'नैषां ममाहमिति धीः श्वसृगालभक्ष्य'इत्यादि पौराणिकव्यवहारश्चेत्यत आह ॥ **विना च तेनेति** ॥ तादात्म्यारोपेण विनैव । उपचारश्च कृष्णोऽहमित्यादिना । 'व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् । भेदज्ञानेऽपि चाङ्गारवह्निवत्स्वाविविक्तवत् । भवन्ति व्यवहाराश्चे'त्यादिना चेति भावः । विवृतमेतत्सम्यग्देहात्मैक्याध्यासभङ्गे न्यायामृते ।

या० — एवं श्रुत्या बन्धमिथ्यात्वं सिध्यतीत्येतन्निरस्तम् । इदानीं मिथ्यात्वसाधकं परोपन्यस्तं प्रमाणान्तरमप्यनूद्य निराकरोति ॥ **यदपि परेणेति शरीरेन्द्रियादिष्विति** ॥ 'देहेन्द्रियादिष्वहंममाभिमानहीनस्यप्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरि'त्यादिना तथा 'ब्राह्मणोयजेतेत्यादीनि शास्त्राण्यात्मनिर्वाणाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्त' इत्यादिना ग्रन्थेनाहंममताध्यासपुरःसरत्वस्य प्रदर्शितत्वादिति भावः । एतद्ग्रन्थसङ्ग्रहायैव पूर्वमित्यादिनेत्युक्तमिति ध्येयम् । स्वरूपाध्यास एव मिथ्यात्वे प्रयोजको नाध्यासमात्रमित्याशङ्कते ॥ **चेतनस्येति** ॥ प्रपञ्चस्यापि नास्ति स्वरूपाध्यास इति न मिथ्या-

त्वमित्याह ॥ **सममिति** ॥ आत्मानात्मनोर्न स्वरूपेणेतरेतराध्यासः किन्तु संसृष्टत्वादिरूपेणेत्यस्य साम्येऽपि देहादेरनात्मनः स्वरूपेणैव मिथ्यात्वमङ्गीकार्यम् । श्रुत्यादिबलान्नात्मस्वरूपस्येति यत्केनचिदुक्तं तदनूद्य दूषयति ॥ **यदत्रेति** ॥ अभ्युपेत्याह ॥ **श्रुत्यादिसिद्धत्वे चेति** ॥ स्वरूपसतामपि तादात्म्यतत्संबन्धित्वाभ्यामारोपेणैव व्यवहारोपपत्तेरिति यत्पूर्वमुक्तं तत्तादात्म्याध्यासमङ्गीकृत्यैव न वस्तुत इत्याह ॥ **तादात्म्याध्यासमिति** ॥ देहादीनां तत्संबन्धित्वेनाध्यासस्यास्माभिरङ्गीकृतत्वात्तादात्म्याध्यासमित्येवोक्तम् । 'मम देह इति ह्येव न देहोऽहमिति प्रमे'त्यादिनेति शेषः । देहात्मनोरैक्याध्यासाभावे देहानुकूलप्रतिकूलयो रागद्वेषासम्भवेन प्रवृत्तिनिवृत्त्यनुपपत्त्या कर्तृत्वादिव्यवहारानुपपत्तिरित्यत आह ॥ **विना चेतनेति** ॥ 'व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् । भेदज्ञानेऽपि चाङ्गार वह्नित्वाविविक्तवत् । भवन्ति व्यवहाराश्चे'त्यादिना तादात्म्याध्यासंविनाऽप्यात्मनोऽत्यन्तं प्रेमास्पदतया तत्संबन्धिनो देहादेरपि प्रेमास्पदत्वात्तदनुकूलप्रतिकूलयो रागद्वेषादिसम्भवेन प्रवृत्त्याद्युपपत्तौ कर्तृत्वादिव्यवहारो युज्यत एवेति तमुपपादयिष्यतीत्यर्थः ।

श्री०— **प्रमाणान्तरमिति** ॥ अध्याससद्भाव इति शेषः । अनेनानुमानार्थापत्तिरूपप्रमाणेन । स्वरूपसतां स्वरूपेण सत्यानामित्यर्थः ॥ **तादात्म्येत्यादि** ॥ तादात्म्यारोपसंसर्गारोपाभ्यामित्यर्थः । ननु यथाकथञ्चिदारोपितत्वप्राप्त्या तन्मात्रेणैव मिथ्यात्वं प्राप्तमिति चेत्तत्राह ॥ **न चेति** ॥ शङ्कते ॥ **चेतनस्येति** ॥ **स्वरूपेति** ॥ स्वरूपेणैवाध्यास एव मिथ्यात्वे प्रयोजक इत्यर्थः ॥ **सममिति** ॥ अनात्मनोऽचेतनस्याप्यात्मनि संसृष्टत्वेनैवाध्यासोऽस्तु न स्वरूपेणातो न मिथ्यात्वमिति भावः । आत्मानात्मनोः स्वरूपेणैवेतरेतराध्याससाम्येऽप्यनात्मन एव मिथ्यात्वं नात्मन इत्याह ॥ **यदत्रेति** ॥ सममित्यस्माभिरुक्ते सतीत्यर्थः ननु श्रुत्यादिसिद्धमप्यध्यासं कोऽपि वादी नाङ्गीकरोतीत्यतोऽस्माभिः स उपपाद्यतेऽतस्तमेतमित्यादिभाष्यं न व्यर्थमित्यत आह ॥ **न खल्विति** ॥

च०— इयता ग्रन्थसन्दर्भेण बन्धमिथ्यात्वस्य श्रुतिप्रमाणकतां प्रत्याख्याय संप्रति तदभिहितप्रमाणान्तरकतामपि प्रतिविधित्सुरनुवदति यदपीत्यादिना दर्शितमित्यन्तेन । अविद्याख्यमविद्यानिमित्तम् ॥ **इत्यादिनेति** ॥ ब्राह्मणो वाजपेयेन यजेतेत्यादीनि शास्त्राणि आत्मनि वयोवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्त इत्यादिना ग्रन्थेनाहंममाध्यासपुरःसरत्वस्य प्रदर्शितत्वादित्यर्थः । मिथ्यात्वप्रयोजकाभिमतस्वरूपाध्यासस्यात्मन्यनङ्गीकारान्न क्षतिरित्याशङ्कते ॥ **चेतनस्येति** ॥ **युक्तीनामिति** ॥ समयपादे शून्यवादापाकृतिप्रस्तावे पृथगुपदेशादिति नये प्रत्याख्यास्यमानत्वादित्यर्थः ॥ **आपाद्येतेति** ॥ श्रुति-

निर्धारितेऽर्थेऽनुमानादिप्रमाणोपन्यासस्यानर्थक्यादिति भावः ॥ **न खल्विति** ॥ अनन्याधीनत्वाद्युपरक्ताध्यासस्योत्तरवादिनाऽप्युरीकृततया तं प्रति शरीराध्याससमर्थनमनर्थकमिति भावः ॥ **निराकरिष्यतीति** ॥ भक्तिचरणे देहात्मत्वं यदित्यादिना न देहोऽहमिति प्रमेत्यन्तेनेति भावः । विना च तेन तादात्म्यारोपेण विना । व्यवहारं कृष्णोऽहमित्यादिः ॥ **उपपादयिष्यतीति** ॥ व्याप्तत्वादात्मन इत्यादिनेति भावः । न्यायामृते देहात्मैक्याध्यासभङ्गे प्रपञ्चितमेतत् ॥

**सु०— यदप्यहङ्कारस्थं कर्तृत्वादिकं तदुपरागादात्मनि चकास्तीति । तदयुक्तम् । अहंप्रत्ययस्यात्मविषयत्वात् । ननु तथा सति सुप्तावप्यहमुल्लेखः स्यात् । तदाऽऽत्मनः स्वप्रकाशतया प्रकाशमानत्वात् । न चाविद्याकार्यस्यापि तदानीं प्रतीतिप्रसङ्गः । सुप्तावविद्यायाः समुत्खातितनिखिलपरिणामत्वेन तदभावादिति । मैवम् । सुप्तावप्यहमवभासस्येष्टत्वात् । तथा सति स्मर्येत ह्यस्तन इवाहङ्कारः । अनुभूते स्मृतिनियमाभावेऽपि स्मर्यमाणात्ममात्रत्वादिति चेन्न । सुखमहमस्वाप्समिति सुप्तोत्थितस्य स्वापसुखानुभवपरामर्शदर्शनात् । तदा विशेषतः स्मर्येतेति चेत् । किं स्पष्टं स्मरणमापाद्यते । उत विषयविशेषोपरक्तम् । आद्ये त्विष्टापादनम् । न द्वितीयः । अविषयजन्यत्वात्सौषुप्तिकसुखस्य । न चायमस्ति नियमो यत्स्मर्यमाणमशेषसंबन्धिविशेषसहितं स्मर्यत इति । अत एव मुख्यसुखतदनुभवे बाधकाभावाद्दुःखाभावविषयकत्वकल्पनं परामर्शस्यापास्तम् ।**

वा०— **अहंप्रत्ययस्येति** ॥ तथा च प्रमाणाभावेनात्मातिरिक्ताहमर्थस्यैवाभावान्नतन्निष्कृष्य कर्तृत्वारोपः किन्त्वात्मनि स्वनिष्ठकर्तृत्वादेरेव भानमिति भावः । सुषुप्तावहमर्थावभासे पूर्वस्मिन्दिनेऽहमित्यभिमन्यमान आसमिति ह्यस्तनपरामर्शवत्सुषुप्तावहमित्यभिमन्यमान आसमित्यप्युत्थितस्य परामर्शः स्यादिति शङ्कते ॥ **तथा सतीति** ॥ तर्कस्याभासतां निरस्यति ॥ **अनुभूत इति** ॥ अहंशब्दोल्लेखी परामर्शः स्यादित्यापाद्यतेऽहमित्यर्थाभिमानविषयक इतिवोताहमर्थविषयक इत्येव वा । नाद्यः । सुषुप्तावहंशब्दोल्लेख्यनुभवाभावेन तदभावोपपत्तेः । न द्वितीयः । अहमर्थप्रकाशेन तदभिमानापादनस्य व्यधिकरणत्वात् । अन्यथा तत्राप्यात्मेत्यभिमन्यमान आसमिति परामर्शापत्तेः । तृतीये त्विष्टापत्तिः । न च तत्र विवादः । अहमस्वाप्समिति परामर्शस्य सर्वानुभवसिद्धत्वात् । नचाहङ्कारे परामृश्यमानात्मैक्यारोपादहङ्कारतज्ज्ञाने परमर्शत्वाभिमान इति वाच्यम् । अपरामर्शे परामर्शत्वारोपादर्शनात् । अस्याः कल्पनाया अहमर्थस्यात्माऽन्यत्वसिद्ध्यधीनतयाऽन्योन्याश्रयाच्चाहमित्यतोऽन्यस्यात्मपरामर्शस्याभावाच्च । न

च नायमहमंशे परामर्शः । किन्तु परामृश्यमान आत्मेदानींजातेनान्तःकरणेनावच्छेदादहन्त्वं प्राप्तस्तथाऽनुभूयत इति वाच्यम् । उक्तोत्तरत्वात् । तथा सति सुखमहमस्वाप्सं नकिञ्चिदवेदिषमित्यादेरपि सुखाज्ञानाद्यंशे परामर्शत्वाभावापत्तेश्च । सुखादेरन्याश्रयस्य निराश्रयस्य वाऽपरामर्शेनाहमर्थाश्रयत्वस्यैव वक्तव्यत्वात् । अन्यथा यः पूर्वं सुखी सोऽधुना दुःखी जातः इतिवत् यः पूर्वं मदन्यः सोधुनाऽहं जात इति धीः स्यादित्याशयेनाह ॥ **सुखमिति** ॥ अत्र सर्वत्र विवरणोक्तरीत्या परामर्शः स्मृतिरूपं ज्ञानमिति ज्ञायते । न च स्मृतेः संस्कारजन्यत्वनियमात्साक्षिरूपस्य सौषुप्तिकसुखाद्यनुभवस्य संस्काराजनकतया साक्षात्साक्षिजन्यत्वेन न परामर्शस्य स्मृतित्वं युक्तमिति वाच्यम् । तस्यैव जागरावस्थायां तत्कालोत्पन्नाहंवृत्त्यवच्छिन्नत्वेनानित्यतया संस्कारजनकत्वसम्भवेन तज्जन्यपरामर्शस्य स्मृतित्वोपपत्तेः । अस्माकं तु परामर्शस्य साक्ष्यनुभवत्वं वा मानसानुभवत्वं वा नोभयत्रापि क्षतिरिति द्रष्टव्यम् । सुखानुभवपरामर्शे बाधकं शङ्कते ॥ **तदेति** ॥ विषयविशेषः स्रक्चन्दनादिः ॥ **अविषयेति** ॥ सुषुप्तौ स्वरूपसुखानुभवाङ्गीकारादिति भावः । अस्त्वयं सुखस्वरूपाणां सुखानुभवपरामर्शो नान्येषाम् । तथा च तेषां सुखाश्रयतया नाहमर्थपरामर्शसिद्धिरिति चेत् । तेषामप्यज्ञानाश्रयतया तत्परामर्शसिद्धेः । सुखपरामर्शेऽपि न दोषः । तेषामपि तदा वैषयिकसुखाङ्गीकारात् । न च तदाविषयसम्बन्धाभावदोषः । प्राज्ञसम्बन्धस्यैव तत्त्वात् । न च तर्हि स्रक्चन्दनादिजन्यमेतदिति जाग्रदादाविव प्राज्ञसम्बन्धजन्यमेतत्सुखमिति परामर्शापत्तिरिति वाच्यम् । सुखस्मरणदशायां तज्जनकविषयसम्बन्धस्मरणस्यावश्यकत्वे नियामकाभावादित्याह ॥ **न चायमिति** ॥ ननु नायं सौषुप्तिकसुखानुभवपरामर्शः किन्तु सौषुप्तिकदुःखाभावविषयकानुमितिर्वा सौषुप्तिकदुःखाभावविषयकस्मृतिर्वा तथाचोक्तमयुक्तमिति चेन्न । सुषुप्तौ स्वरूपभूतस्य प्राज्ञसम्बन्धजन्यस्य वा सुखस्य सम्भवेन स्मर्यमाणस्य स्वाशेषसम्बन्धिसहितस्मरणनियमाभावेन च मुख्यसुखतदनुभवे बाधकाभावेन सुखानुभवपरामर्शत्वेनानुभवसिद्धस्य तत्परित्यागेन दुःखाभावविषयकानुभवत्वतत्स्मृतित्वकल्पनाया अयुक्तत्वात्सौषुप्तिकदुःखाभावविषयकस्मृतित्वेऽपि दुःखाभावाश्रयतयैवाहमर्थप्रकाशस्य स्वीकार्यत्वाच्च नोक्तमयुक्तमित्याह ॥ **अत एवेति** ॥ अत्र परामर्शस्येत्यस्यानुमितेरिति स्मृतेरिति वाऽर्थः ।

**स०**— सुषुप्तौ सुखाभावात् दुःखाभावविषयोऽयं परामर्श इति परोक्तं प्रसङ्गादपाकरोति ॥ **अत एवेति ॥**

**प०**— सुप्तावात्मनः प्रकाशमानत्वेसत्यविद्याकार्यान्तःकरणतद्धर्माणां दुःखादीनामप्युपलब्धिप्रसङ्ग इत्याशङ्क्य निराह ॥ **नचेति** ॥ **तदभावादिति** ॥ अविद्याकार्यस्याभावादित्यर्थः ॥ **ह्यस्तन इव** पूर्वदिवस इव । नन्वनुभूतं स्मर्तव्यमेवेति न नियम इत्यत आह ॥ **अनुभूत इति** ॥ आत्ममात्रत्वा-

त्स्मर्येतेत्यन्वयः । अहङ्कारस्मरणाभावोऽसिद्ध इति परिहरति ॥ **सुखमहमित्यादिना** ॥ **सुखानुभवेति** ॥ सुखानुभवजन्यपरामर्शदर्शनादित्यर्थः ।

**या०**— न चाविद्याकार्यस्यापीत्यनन्तरमहंकारस्येति शेषः । सुप्तेऽप्यहमवभासाङ्गीकारे पूर्वस्मिन्दिनेऽहमिति मन्यमान एवासमितिवत्सुप्तिकालेऽनुभूतस्याप्यहङ्कारस्य जागरणे स्मृतिः स्यादिति शङ्कते ॥ **तथा सतीति** ॥ अनुभूतस्य सर्वस्य स्मरणनियमाभावान्न जागरेऽहङ्कारस्मरणमित्यत आह ॥ **अनुभूत इति** ॥ अन्यथा तत्स्वरूपभूतस्यात्मनोऽप्यस्मरणं स्यादित्यर्थः । अहंकारस्य स्मरणाभावोऽसिद्ध इति परिहरति ॥ **सुखमहमित्यादिना** ॥ **सुखानुभवेति** ॥ सुखानुभवजन्यपरामर्शदर्शनादित्यर्थः । दुःखाभावविषयोऽयं परामर्श इति परोक्तं प्रसङ्गादपाकरोति ॥ **अत एवेति** ॥

**श्री०** — **तदात्मन इति** ॥ आत्माभिन्नत्वाचाहमर्थस्येत्यर्थः । सिद्धान्ती प्रतिबन्दीमाशङ्कते ॥ **न चेति** ॥ अविद्याकार्यस्येत्यनन्तरं अहङ्कारस्येति शेषः । तदानीं सुप्तौ । प्रसङ्गस्त्वन्मतेऽपीति शेषः ॥ **तदभावादिति** ॥ अविद्यापरिणामाहङ्कारस्य सुप्तावभावादित्यर्थः ॥ **अनुभवपरामर्श इति** ॥ अनुभवजन्यः परामर्शः स्मृतिरित्यर्थः । एवं सुखस्मरणकालेऽहमुल्लेखोऽप्यस्त्येवेति भावः ॥ **स्पष्टेति** ॥ सुखं यथा स्यात्तथा स्वापकर्तृतयाऽहंत्वप्रकारेण स्पष्टं सुखस्मरणमित्यर्थः ॥ **विषयविशेषेति** ॥ सुखसाधनीभूतकदलीफलादिरूपविषयविशेषसम्बन्धतया सुखस्मरणमित्यर्थः । दूषणान्तरमाह ॥ **नचायमिति** ॥ तथा च विषयविशेषरूपसम्बन्धिसहितं न स्मर्यत इति भावः । अत्र यत्केनचिदुक्तं सुखमहमस्वाप्समिति न सुखपरामर्शः सुखस्य विषयजन्यत्वेन विषयविशेषोपरक्ततया स्मर्यमाणत्वाभावाद्दुःखाभावविषयक एवेति तदप्यत एवापास्तम् ॥ सौषुप्तिकसुखस्य विषयजन्यत्वाभावादेवेत्याह ॥ **अत एवेति** ॥

**सु०** — यत्त्वथातोऽहङ्कारादेशोऽथात आत्मादेश इत्यात्माऽहङ्कारयोर्भेदवचनं तद्भाष्यकृतैवान्यथा व्याख्यातम् । वक्ष्यति च सूत्रकारः सैव हि सत्यादय इति । कथमन्यथाऽहङ्कारस्य सर्वगतत्वमुपपद्येत । महाभूतान्यहङ्कारइत्यादिस्मृतिसिद्धस्त्वहङ्कारो यद्यप्यात्मनो भिन्नः । तथाऽपि नासावहं कर्तेत्युल्लेखविषयः । तथा सति अहंब्रह्मास्मीत्यादावपि तथात्वप्रसङ्गात् । अत्रापि यः स्थाणुः स पुरुष इतिवद्व्याख्यानमिति चेन्न । तदाऽऽत्मानमेवावेदहंब्रह्मास्मीति निरवद्यस्य ब्रह्मणोऽप्यहमुल्लेखदर्शनात् । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त' इति स्वप्रपन्नमायानिरसनसमर्थस्येश्वरस्याप्यहं सर्वस्य प्रभव इत्याद्युल्लेखोपलम्भाच । स्पष्ट एव

**शब्दतोऽप्यनयोर्भेदः । यत्प्रकृतिपरिणामवाचि मकारान्तमव्ययमहंपदं न जातु तदात्मनि प्रयुज्यते । यच्चात्मवाचि दकारान्तास्मच्छब्दजं तन्न कदाचिदपि मायापरिणामे प्रयुज्यत इति । तदेवं सर्वमिथ्यात्वपरत्वे श्रुतेरेव मिथ्यात्वप्रसङ्गेनासाधकत्वापत्तौ दुःखादिबन्धमिथ्यात्वासिद्ध्या न प्रत्यक्षमतत्त्वावेदकमिति । नन्वग्रत इति कथम् । नेहनानेतिवाक्येनात्मातिरिक्तं सकलमपि मिथ्येत्येकैव बुद्धिरुत्पद्यते । न च बुद्धेर्विरम्यव्यापारोऽस्ति । यावत्स्वविषयगोचराया एव तस्याः समुत्पादात्तदतिरिक्तव्यापाराभावादिति । सत्यम् । वाक्येन सकृदेव जातायाः सकलमिथ्यात्वविषयाया बुद्धेः प्रामाण्यावधारणाय परीक्षकबुद्धय एव तद्विषयं बुद्ध्या विभज्य क्रमेणावगाहन्त इत्यदोषः । समानमेतद्यावज्जीवमहं मौनीत्यादिवाक्यप्रामाण्यचिन्तायामिति ।**

वा०—'भूमा नारायणाख्यः स्यात्स एवाहङ्कृतिः स्मृतः । जीवस्थस्त्वनिरुद्धो यः सोहङ्कार इतीरितः । अणुरूपोऽपि भगवान्वासुदेवः परो विभुः । आत्मेत्युक्तः स च व्यापी'त्यादिस्मृत्युदाहरणपूर्वं छान्दोग्यभाष्यकृदन्यथाव्याख्यानेन परोदाहृतश्रुतेः सावकाशतामाह ॥ **यत्त्विति** ॥ भाष्योदाहृतस्मृतौ विप्रतिपन्नं प्रति सूत्रीयज्ञापकमाह ॥ **वक्ष्यतीति** ॥ सूत्रार्थे विमतं प्रति भाष्योक्तश्रुत्यर्थानभ्युपगमे बाधकमाह ॥ **कथमिति** ॥ यः स्थाणुत्वेन भ्रमविषयः स पुरुष इतिवद्योऽहमिति भ्रमविषयस्तद्ब्रह्मेति श्रुतिर्व्याख्यायते इति शङ्कते ॥ **अत्रापीति** ॥ **निरवद्यस्येति** ॥ शुद्धस्य भ्रमासम्भवे हेतुकथनम् । ननु नेहनानेतिवाक्यस्य दुःखादिसमस्तविश्वमिथ्यात्वसाधकत्वाभावस्यैतद्वाक्यमिथ्यात्वसिद्ध्यधीनतया तत्सिद्धेश्च प्रमाणान्तराभावेनैतद्वाक्येनैव वक्तव्यतयैतेन चैतद्वाक्यस्य मिथ्यात्वसिद्धिदशायामर्धजरतीयायोगेन समस्तस्यापि मिथ्यात्वसिद्धेस्तत्साधकत्वाभावापादनासम्भवात् । अनेनैतद्वाक्यमिथ्यात्वासिद्धौ च तदधीनसिद्धिकसमस्तमिथ्यात्वासाधकत्वस्य सुतरामसम्भवान्नोपपत्तिविरोधकथनं युक्तम् । न च अत एवैतद्वाक्यमिथ्यात्वमेतद्वाक्येन प्रथमं बोद्ध्यते समस्तमिथ्यात्वं तु पश्चादिति ज्ञापयितुमग्रत इति भाष्यकारेणोक्तमिति वाच्यम् । तस्यैवानुपपत्तेरिति शङ्कते ॥ **नन्विति** ॥ वाक्यजन्यसकलविषयकबुद्धिविषयं विविच्य क्रमेणावगाहमानाः प्रामाण्यावधारणाय प्रवृत्ताः परीक्षकबुद्धीरननुसृत्योपपत्तिविरोधखण्डने 'यावज्जीवमहं मौनी'त्येतद्वाक्यस्य समस्तवाक्याभावसाधकत्वाभावसिद्धेरेतद्वाक्याभावसिद्धिनिबन्धनतयैतद्वाक्याच्चैतदभावसिद्धिदशायां समस्ताभावस्यापि सिद्धेरेतद्वाक्याभावसिद्धेः प्राथमिकत्वाभावान्न तत्रापि तत्सिद्धिनिबन्धनसमस्ताभावसाधकत्वाभावसिद्धिरिति स्वक्रियाविरोधवार्तैवोच्छिद्येतेत्यसदुक्तप्रकारस्यैवानुसर्तव्यत्वे युक्तमुपपत्तिविरोधोद्भावनमित्याशयेनाह ॥ **समानमेतदिति** ॥

स०—**अन्यथा व्याख्यातमिति** ॥ जीवस्थस्त्वनिरुद्धाख्यः सोऽहङ्कार इतीरितः । अणुरूपोऽपि भगवान् वासुदेवः परो विभुः । आत्मेत्युक्तः स च व्यापी न च भेदो हरौ क्वचिदित्यादिना परमेश्वररूपविषयतया छान्दोग्यभाष्ये व्याख्यातमित्यर्थः ॥ **वक्ष्यति चेति** ॥ सैव परदेवता सत्यादय इति सत्याद्यहमात्मान्तानां परदेवतात्वमित्यर्थः । यदि सत्यादीनां परमात्मत्वं न स्यात्तर्हि स एवाधस्तादित्यादिनोच्यमानव्याप्तत्वं अयुक्तं स्यादित्याह ॥ **कथमिति** ॥ यथा यः स्थाणुत्वेनावगतः स विवेके सति पुरुष इति व्याख्यायते तथा योहङ्काराध्यासमुपगतः स आत्मतत्त्वज्ञाने सति ब्रह्मैवेत्यहंब्रह्मास्मीत्येतद्व्याक्रियते ॥ **अत्रापीति** ॥ तर्ह्यत्राहङ्काराध्यासो नास्ति तत्र श्रुतिस्मृतिसिद्धोऽहंप्रत्ययो न स्यादित्याह ॥ **नेति** ॥ **तदतिरिक्तव्यापाराभावादिति** ॥ तथा च प्रथमत एवैतद्वाक्यमिथ्यात्वस्फूर्त्यभावेन सकलमिथ्यात्वबोधानन्तरं च प्रमिते विरोधस्याकिंचित्करत्वान्नोपपत्तिविरोधेन तद्वावयाप्रामाण्यमिति भावः । सकलमिथ्यात्वविषयाया बुद्धेः प्रामाण्यावधारणाय परीक्षकबुद्धीनामेव सकलमिथ्यात्वविषयकबुद्धिविषयं विभज्यावगाहकत्वादेतद्वाक्यमिथ्यात्वस्य प्रथमं स्फूर्तिसंभवादुपपत्तिविरोधप्रसक्तिः संभवतीत्यत आह ॥ **सत्यमिति** ॥ अथैतदनङ्गीकृत्य सकलमिथ्यात्वबोधस्यैव जननान्नोपपत्तिविरोध इति ब्रूयात्तदा विरुद्धत्वेनाप्रामाण्येन च संप्रतिपन्ने यावज्जीवमहं मौनीत्यादावपि यावज्जीवं सकलवचनाभावविषयकबुद्धेरेकस्या एवोत्पादात् प्रमिते च विरोधस्याकिञ्चित्करत्वादप्रामाण्यं न स्यादित्याह ॥ **समानमेतदिति** ॥ अथ तत्र सकलवचनाभावविषयकबुद्धिप्रामाण्यावधारकपरीक्षकबुद्धीनामेव पूर्वं तद्बुद्धिविषयस्य विभागेनावगाहकत्वादेतद्वाक्याभावस्य प्रथमोपस्थितेस्तत्र विरोधस्फूर्तिर्भविष्यतीत्यत्राप्रामाण्यमेवेति मतं तर्हि प्रकृतेऽपि तथा स्यादिति भावः ।

प०— नन्वहमर्थस्यात्मत्वे छान्दोग्ये सप्तमे 'यो वै भूमा तत्सुखमि'ति भूमशब्दितब्रह्मण आदेशोक्त्यनन्तरमथातोऽहङ्कारादेश इत्युक्त्वानन्तरं अथात आत्मादेश इत्यात्मनः पृथगुक्त्यनुपपत्तिरित्यत आह ॥ **यत्त्विति** ॥ **भाष्यकृतेति** ॥ 'सैव ही'त्येतत्सूत्रभाष्यकृता । 'सत्याद्या अहमात्मान्ता यद्गुणास्समुदीरिता इति । यथा छान्दोग्यभाष्ये च । 'भूमा नारायणाख्यः स्यात्स एवाहङ्कृतिः स्मृतः । आकार्योऽहमिति ह्येष ततोऽहङ्कार उच्यते । जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः । अणुरूपोऽपि भगवान्वासुदेवः परो विभुः । आत्मेत्युक्तः स च व्यापी न च भेदो हरौ क्वचिदि'त्यादिना भगवद्गुणपरत्वेन रूपविशेषपरत्वेन च व्याख्यातमित्यर्थ; । आत्माहङ्कारयोर्भेदे सूत्रविरोधमप्याह ॥ **वक्ष्यतिचेति** ॥ सैव परदेवता सत्यादय इति सत्याद्यहङ्कारात्मान्तानां परदेवतात्वं च वक्ष्यतीत्यर्थः । श्रुतिगताहङ्कारपदस्येश्वरपरत्वाभावेऽहमेवाधस्तादिति वाक्यशेषे तस्य सर्वगतत्वप्रतिपादनं न घटत इत्याह ॥ **कथमन्य-**

**अवेत्** व्यजानात् । **निरवद्यस्य** अहङ्काराध्यासविनिर्मुक्तस्य ॥ **मकारान्तमव्ययमिति** ॥ अहंशुभयोर्युसितिसूत्रे अहमिति शब्दान्तरं मकारान्तमव्ययमहङ्कारे वर्तत इति वामनः काशिकायामभ्यधात् । त्वाहौसावित्यस्मदादेशो योऽहंशब्दस्तदपेक्षया शब्दान्तरमस्तीति रुद्रदत्तोऽपि मञ्जर्यामिति भावः । विरम्य व्यापारः । कतिपयार्थविषयीकरणोत्तरार्थान्तरविषयीकरणाख्यः ॥ **समुत्पादादिति** ॥ ज्ञानं गुणः शब्दो गुण इत्यादिवाक्यजन्यशाब्दधीवदिति भावः ॥ **तदतिरिक्तेति** ॥ विषयीकरणातिरिक्तेत्यर्थः ॥ **बुद्धेः प्रामाण्यावधारणायेति** ॥ बुद्धिनिष्ठविशेष्यतानिरूपितमिथ्यात्ववद्विशेष्यकत्वावच्छिन्नमिथ्यात्वप्रकारकत्वरूपमिथ्यात्वघटितप्रामाण्यनिष्ठप्रकारताकेत्यर्थः ॥ **तद्विषयमिति** ॥ मिथ्यात्वबुद्धि तदिति परामृशति । तस्याः विषयं विषयान् । मिथ्यात्वधर्मिभूताः व्यक्तीस्तत्तद्व्यक्तित्वादिना तद्व्यक्तिविशेष्यकत्वावच्छिन्नमिथ्यात्वप्रकारकत्वैतद्व्यक्तिविशेष्यकत्वावच्छिन्नमिथ्यात्वप्रकारकत्वादिरूपतद्व्यक्तिघटितप्रामाण्यघटकतया क्रमेणावगाहन्त इति भावः । उक्तसकलमिथ्यात्वबुद्धौ तत्तद्व्यक्तिघटितप्रामाण्यावगाहिनीनां नानात्वं परीक्षकबुद्धय इति बहुवचननिर्देशेन ध्वन्यते । तेन विरम्य व्यापारायोगादितिदोषानवकाशः । इयांस्तु विशेषः यद्व्यक्तिविशेष्यकत्वादिघटितप्रामाण्यज्ञानजनिकादृष्टादिघटितसामग्री प्राथमिकी तद्व्यक्तिघटितप्रामाण्यज्ञानस्य प्राथम्यं यस्यत्वानन्तरिकी तस्यानन्तर्यमिति । उक्तमर्थं निदर्शनेन द्रढयति ॥ **समानमेतदिति** ॥ अयमभिसन्धिः । निखिलवचनान्तर्गते स्वस्मिन् यदि न मिथ्यात्वं प्रतिपादयेत् तदा वचनान्तराणां मिथ्याभावं कथं तत्र तत्प्रतिपादकतायां च वन्ध्यासुतवचःकल्पतया तस्य निखिलवचनान्तरधर्मिकमिथ्यात्वप्रकारकप्रतीतिजनकता कथं सङ्गच्छेतेत्युपपत्तिविरोधोद्भावने प्रकृतवाक्यजनितान्वयबुद्धेर्निखिलवचनाभावविषयिण्या एकस्या एव समुत्पादेन प्रकृतवाक्यस्य मिथ्यात्वप्रतिपत्तेः निर्वाहाय तादृशवाक्यजनितजीवनाधिकरणकालत्वव्यापकतत्कर्तृत्ववचनावच्छिन्नाभावबुद्धेः प्रामाण्यमवगाहमानाः परीक्षकबुद्धय एव दर्शितदिशा तत्तद्वचनव्यक्तीरुक्तविधप्रामाण्यघटकतया तत्तद्व्यक्तित्वेन क्रमेणावगाहन्त इति समाधातव्यमिति नादृष्टपरिकल्पनावकाश इति ॥

अनु०— मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः ॥

सु०—**ननु श्रुत्यादेर्मिथ्यात्वेऽपि साधकत्वं संभवति । मया मिथ्याभूतस्यैव साधकत्वाभ्युपगमादित्यत आह ॥ मिथ्याया इति ॥ याः श्रुत्यादिवाचो मिथ्या तासामिति योजना । विभक्तिप्रतिरूपकं वा मिथ्याया इत्यव्ययम् । अयमभिसन्धिः । नेहनानेत्यादिवाक्यैः किं पुमान्निश्चिताद्वैतो बोध्यते । उत तद्विपरीतः । नाद्यः । वैय्यर्थ्यात् । द्वितीयस्तु सत्यस्यैव**

श्वरत्वाभावेऽहमेवाधस्तादित्यादिवाक्यशेषे तस्य सर्वगतत्वप्रतिपादनं नोपपद्यत इत्याह ॥ **कथमन्यथेति** ॥ स्मृतिसिद्धाहङ्कारतत्त्वस्याहमित्युल्लेखविषयत्वे बाधकमाह ॥ **तथा सतीति** ॥ ब्रह्माहङ्कारयोरैक्यमनभिमतमापतेत् । अभिमतं च जीवब्रह्मैक्यं न सिध्येदित्याशयः ॥ **अत्रापि यः स्थाणुरिति** ॥ यः स्थाणुत्वेन प्रतीतः स विवेके सति पुरुष इतिवद्योऽहङ्काराध्यासमुपगतः स आत्मज्ञाने सति ब्रह्मेति व्याख्यानमित्यर्थः ॥ **निरवद्यस्येति** ॥ अहङ्काराध्यासशून्यस्येत्यर्थः । यदा स्वप्रपन्नानां मायानिरसनसमर्थस्तदा स्वस्याहङ्काराध्यासो नास्तीति किं वक्तव्यमित्यभिप्रेत्य स्वप्रपन्नमायेत्याद्युक्तम् । प्रथमतो जाताया बुद्धेः प्रामाण्यावधारणाय परीक्षकबुद्धय इत्याद्युक्तम् । क्वाप्यनुपलब्धं कथमत्र कल्पनीयमित्याशङ्कायामाह ॥ **समानमेतदिति** ॥ अयमर्थः । यद्यतद्वचनबलेन स्वकर्तृकसर्ववचनाभावः स्यात् । तर्ह्येतद्वचनस्य प्रथमं तावन्मिथ्यात्वं भवेत् । अन्यथा स्वस्मिन्नेवास्य प्रामाण्यं प्रतिहतमिति न वचनान्तराभावं प्रतिपादयेत् । यदि चेदं वाक्यं मिथ्या स्यात्तथाऽपि नानेन स्वकर्तृकसर्ववचनाभावसिद्धिः । मुख्याभूतस्य वन्ध्यासुतवचसः साधकत्वादर्शनादित्युपपत्तिविरोधेऽभिहिते एतद्वाक्येन सकलवचनाभावविषयाया बुद्धेरेकस्या एवोत्पत्तेस्तावदेव तद्वाक्यस्य प्रथमं मिथ्यात्वं भवेदिति कथमुक्तमित्याशङ्कायां वाक्येन सकृदेव जाताया बुद्धेः प्रामाण्यावधारणाय परीक्षकबुद्धय एव तद्विषयं बुद्ध्या विभज्य क्रमेणावगाहन्त इत्येव वक्तव्यमिति नादृष्टकल्पनेति ॥

श्री० — **तथात्वेति** । प्रकृतिकार्याहङ्कारतत्त्वस्यैवाहंब्रह्मासीति श्रुतावहमुल्लेखविषयत्वप्रसङ्गेनाहङ्कारतत्त्वब्रह्मणोरैक्यापत्त्या जीवब्रह्मैक्यं त्वदभिमतमनया श्रुत्या न सिद्धेदित्यर्थः । अत्रापि अहंब्रह्मासीति श्रुतौ ॥ **मकारान्तमव्ययमिति** ॥ प्रकृतिपरिणामाहङ्कारतत्त्ववाचिनोऽहंपदस्याव्ययत्वे द्वितीयस्त्वहमः सर्ग इत्यत्राहम इति षष्ठीप्रयोगो न स्यात् । न चाव्ययत्वेऽपि तु नायमर्थः सूचितः । तस्यायमर्थ इत्यादिप्रयोगानुपपत्तिरिति । तत्र स्वरूपं शब्दस्येति परिभाषया तु नेत्यादेः शब्दपदार्थकत्वेनार्थपदार्थकत्वाभावात् । अहम इत्यत्र स्वार्थस्यैव विवक्षितत्वेन शब्दस्याविवक्षितत्वात्कथमेतदिति चोद्यस्य समाधानं विचार्यम् । वैदिकत्वाद्वा विभक्तिप्रतिरूपकाव्ययत्वसमाधिरित्यप्याहुः ।

च० — **व्याख्यातमिति** ॥ छान्दोग्यभाष्ये भूमा नारायणः साक्षादित्यादिनेति भावः ॥ **वक्ष्यतीति** ॥ सत्याद्यात्मान्तानां परमात्मरूपतामभिधास्यतीत्यर्थः । **अत्रापि** अहंब्रह्मासीत्यादावपि ॥ **यः स्थाणुरिति** ॥ यः विशेषादर्शनदशायां स्थाणुत्वप्रकारकप्रतीतिविषयः सः तद्दर्शनदशायां पुरुष इति यथा तद्वदात्मज्ञानाभावदशायामहंत्वप्रकारकप्रतीतिगोचरस्तत्समवधानदशायां ब्रह्मेति व्याख्यानमित्यर्थः ।

**अवेत्** व्यजानात् । **निरवद्यस्य** अहङ्काराध्यासविनिर्मुक्तस्य ॥ **मकारान्तमव्ययमिति** ॥ अहंशुभयो-र्युसितिसूत्रे अहमिति शब्दान्तरं मकारान्तमव्ययमहङ्कारे वर्तत इति वामनः काशिकायामभ्यधात् । स्वाहौसावित्यस्मदादेशो योऽहंशब्दस्तदपेक्षया शब्दान्तरमस्तीति रुद्रदत्तोऽपि मञ्जर्यामिति भावः । विरम्य व्यापारः । कतिपयार्थविषयीकरणोत्तरार्थान्तरविषयीकरणाख्यः ॥ **समुत्पादादिति** ॥ ज्ञानं गुणः शब्दो गुण इत्यादिवाक्यजन्यशाब्दधीवदिति भावः ॥ **तदतिरिक्तेति** ॥ विषयीकरणातिरिक्ते-त्यर्थः ॥ **बुद्धेः प्रामाण्यावधारणायेति** ॥ बुद्धिनिष्ठविशेष्यतानिरूपितमिथ्यात्ववद्विशेष्यकत्वावच्छिन्न-मिथ्यात्वप्रकारकत्वरूपमिथ्यात्वघटितप्रामाण्यनिष्ठप्रकारताकेत्यर्थः ॥ **तद्विषयमिति** ॥ मिथ्यात्वबुद्धिं तदिति परामृशति । तस्याः विषयं विषयान् । मिथ्यात्वधर्मिभूताः व्यक्तीस्तत्तद्व्यक्तित्वादिना तद्व्य-क्तिविशेष्यकत्वावच्छिन्नमिथ्यात्वप्रकारकत्वैतद्व्यक्तिविशेष्यकत्वावच्छिन्नमिथ्यात्वप्रकारकत्वादिरूपतद्व्यक्ति-घटितप्रामाण्यघटकतया क्रमेणावगाहन्त इति भावः । उक्तसकलमिथ्यात्वबुद्धौ तत्तद्व्यक्तिघटितप्रामाण्या-वगाहिनीनां नानात्वं परीक्षकबुद्धय इति बहुवचननिर्देशेन ध्वन्यते । तेन विरम्य व्यापारायोगादिति-दोषानवकाशः । इयांस्तु विशेषः यद्व्यक्तिविशेष्यकत्वादिघटितप्रामाण्यज्ञानजनिकादृष्टादिघटितसामग्री प्राथमिकी तद्व्यक्तिघटितप्रामाण्यज्ञानस्य प्राथम्यं यस्यत्वानन्तरिकी तस्यानन्तर्यमिति । उक्तमर्थं निदर्शनेन द्रढयति ॥ **समानमेतदिति** ॥ अयमभिसन्धिः । निखिलवचनान्तर्गते स्वस्मिन् यदि न मिथ्यात्वं प्रतिपादयेत् तदा वचनान्तराणां मिथ्याभावं कथं तत्र तत्प्रतिपादकतायां च वन्ध्यासुतवचःकल्पतया तस्य निखिलवचनान्तरधर्मिकमिथ्यात्वप्रकारकप्रतीतिजनकता कथं सङ्गच्छेतेत्युपपत्तिविरोधोद्भावने प्रकृत-वाक्यजनितान्वयबुद्धेर्निखिलवचनाभावविषयिण्या एकस्या एव समुत्पादेन प्रकृतवाक्यस्य मिथ्यात्व-प्रतिपत्तेः निर्वाहाय तादृशवाक्यजनितजीवनाधिकरणकालस्वव्यापकतत्कर्तृत्ववचनावच्छिन्नाभावबुद्धेः प्रामाण्यमवगाहमानाः परीक्षकबुद्धय एव दर्शितदिशा तत्तद्वचनव्यक्तीरुक्तविधप्रामाण्यघटकतया तत्त-द्व्यक्तित्वेन क्रमेणावगाहन्त इति समाधातव्यमिति नादृष्टपरिकल्पनावकाश इति ॥

अनु०— मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः ॥

**सु०—ननु श्रुत्यादेर्मिथ्यात्वेऽपि साधकत्वं संभवति । मया मिथ्याभूतस्यैव साधक-त्वाभ्युपगमादित्यत आह ॥ मिथ्याया इति ॥ याः श्रुत्यादिवाचो मिथ्या तासामिति योजना । विभक्तिप्रतिरूपकं वा मिथ्याया इत्यव्ययम् । अयमभिसन्धिः । नेहनानेत्यादिवाक्यैः किं पुमान्निश्चिताद्वैतो बोध्यते । उत तद्विपरीतः । नाद्यः । वैयर्थ्यात् । द्वितीयस्तु सत्यस्यैव**

श्वरत्वाभावेऽहमेवाधस्तादित्यादिवाक्यशेषे तस्य सर्वगतत्वप्रतिपादनं नोपपद्यत इत्याह ॥ **कथमन्यथेति** ॥ स्मृतिसिद्धाहङ्कारतत्त्वस्याहमित्युल्लेखविषयत्वे बाधकमाह ॥ **तथा सतीति** ॥ ब्रह्माहङ्कारयोरैक्यमनभिमतमापतेत् । अभिमतं च जीवब्रह्मैक्यं न सिध्येदित्याशयः ॥ **अत्रापि यः स्थाणुरिति** ॥ यः स्थाणुत्वेन प्रतीतः स विवेके सति पुरुष इतिवद्योऽहङ्काराध्यासमुपगतः स आत्मज्ञाने सति ब्रह्मेति व्याख्यानमित्यर्थः ॥ **निरवद्यस्येति** ॥ अहङ्काराध्यासशून्यस्येत्यर्थः । यदा स्वप्रपन्नानां मायानिरसनसमर्थस्तदा स्वस्याहङ्काराध्यासो नास्तीति किं वक्तव्यमित्यभिप्रेत्य **स्वप्रपन्नमायेत्याद्युक्तम्** । प्रथमतो जाताया बुद्धेः प्रामाण्यावधारणाय परीक्षकबुद्धय इत्याद्युक्तम् । क्वाप्यनुपलब्धं कथमत्र कल्पनीयमित्याशङ्कायामाह ॥ **समानमेतदिति** ॥ अयमर्थः । यद्येतद्वचनबलेन स्वकर्तृकसर्ववचनाभावः स्यात् । तर्ह्येतद्वचनस्य प्रथमं तावन्मिथ्यात्वं भवेत् । अन्यथा स्वस्मिन्नेवास्य प्रामाण्यं प्रतिहतमिति न वचनान्तराभावं प्रतिपादयेत् । यदि चेदं वाक्यं मिथ्या स्यात्तथाऽपि नानेन स्वकर्तृकसर्ववचनाभावसिद्धिः । मिथ्याभूतस्य वन्ध्यासुतवचसः साधकत्वादर्शनादित्युपपत्तिविरोधेऽभिहिते एतद्वाक्येन सकलवचनाभावविषयाया बुद्धेरेकस्या एवोत्पत्तेस्तावदेव तद्वाक्यस्य प्रथमं मिथ्यात्वं भवेदिति कथमुक्तमित्याशङ्कायां वाक्येन सकृदेव जाताया बुद्धेः प्रामाण्यावधारणाय परीक्षकबुद्धय एव तद्विषयं बुद्ध्या विभज्य क्रमेणावगाहन्त इत्येव वक्तव्यमिति नादृष्टकल्पनेति ॥

श्री० — **तथात्वेति** । प्रकृतिकार्याहङ्कारतत्त्वस्यैवाहंब्रह्मासीति श्रुतावहमुल्लेखविषयत्वप्रसङ्गेनाहङ्कारतत्त्वब्रह्मणोरैक्यापत्त्या जीवब्रह्मैक्यं त्वदभिमतमनया श्रुत्या न सिद्धेदित्यर्थः । अत्रापि अहंब्रह्मासीति श्रुतौ ॥ **मकारान्तमव्ययमिति** ॥ प्रकृतिपरिणामाहङ्कारतत्ववाचिनोऽहंपदस्याव्ययत्वे द्वितीयस्त्वहमः सर्ग इत्यत्राहम इति षष्ठीप्रयोगो न स्यात् । न चाव्ययत्वेऽपि तु नायमर्थः सूचितः । तस्यायमर्थ इत्यादिप्रयोगानुपपत्तिरिति । तत्र स्वरूपं शब्दस्येति परिभाषया तु नेत्यादेः शब्दपदार्थकत्वेनार्थपदार्थकत्वाभावात् । अहम इत्यत्र स्वार्थस्यैव विवक्षितत्वेन शब्दस्याविवक्षितत्वात्कथमेतदिति चोद्यस्य समाधानं विचार्यम् । वैदिकत्वाद्वा विभक्तिप्रतिरूपकाव्ययत्वसमाधिरित्यप्याहुः ।

च० — **व्याख्यातमिति** ॥ छान्दोग्यभाष्ये भूमा नारायणः साक्षादित्यादिनेति भावः ॥ **वक्ष्यतीति** ॥ सत्याद्यात्मान्तानां परमात्मरूपतामभिधास्यतीत्यर्थः । **अत्रापि** अहंब्रह्मासीत्यादावपि ॥ **यः स्थाणुरिति** ॥ यः विशेषादर्शनदशायां स्थाणुत्वप्रकारकप्रतीतिविषयः सः तद्दर्शनदशायां पुरुष इति यथा तद्वदात्मज्ञानाभावदशायामहंत्वप्रकारकप्रतीतिगोचरस्तत्समवधानदशायां ब्रह्मेति व्याख्यानमित्यर्थः ।

वाच्यम् । वादिनं प्रति विरुद्धतयोपपत्तिविरोधाभावेन वाक्यस्य तं प्रति मिथ्यात्वबोधकत्वोपपत्तेः । मिथ्याभूतसाधकत्वस्य वादिनाऽभ्युपगतत्वादेव प्रतिवादिनं प्रति विरुद्धत्वाच्च बीजाभावेन प्रतिवादिनं प्रति तर्कस्याप्रसराच्चायुक्तश्चायं तर्कः । आत्मातिरिक्तस्य समस्तस्य मिथ्यात्वं श्रुत्यादिबलेन यदि तर्ह्येतच्छ्रुत्यादेर्मिथ्यात्वं स्यादित्यत्र दृष्टान्तानुक्तेर्व्याप्त्यभावात् । यदि चेदं वाक्यं मिथ्या स्यात्तर्हि दुःखादेर्मिथ्यात्वं न प्रतिपादयेदित्यत्र विशेषनिषेधेऽपि सामान्यतोऽर्थप्रतिपादकत्वस्याक्षतेश्चेत्यतो वादिनं प्रति तर्कस्य विरुद्धत्वाभावेऽपि तदीयमिथ्याभूतसाधकत्वाभ्युपगमस्य मिथ्यात्वनिश्चयाधीनतया तन्निश्चयस्य च वक्ष्यमाणरीत्याऽन्योन्याश्रयेणैतद्वाक्यसाध्यत्वासम्भवात्प्रमाणान्तरेण मिथ्यात्वं निश्चित्य मिथ्याभूतस्य साधकत्वमभ्युपगच्छन्तं प्रति तर्कस्य विरुद्धतयोपपत्तिविरोधाभावेऽपि ज्ञातज्ञापकतया तं प्रति मिथ्यात्वबोधकत्वेन न परार्थवाक्यस्य प्रामाण्यम् । तद्बोध्यं निश्चितद्वैतं प्रति च पराभ्युपगममात्रस्याप्रयोजकत्वात्तर्कस्याविरुद्धत्वेनोपपत्तिविरोधान्न मिथ्यात्वबोधकत्वम् । एवं च यो वाक्यबोध्यो न तं प्रति तर्कस्य विरुद्धता यं प्रति विरुद्धता न स वाक्यबोध्य इत्युभयथापि वाक्यस्याबोधकत्वमेवेत्यमिप्रेत्य सत्यस्यैव साधकत्वाभिमानरूपं तर्कबीजं दर्शयन्नेव वाक्यबोध्यं प्रति तर्कस्वरूपतत्प्रवृत्तिप्रकारौ दर्शयति ॥ **अयमिति** ॥ अत्र सकलान्तर्गतत्वादित्यनेन सकलस्य यद्भवति तदन्तर्गतस्यापि तद्भवतीति सामान्यव्याप्तिसूचनम् । यथेति तत्रैव दृष्टान्तोक्तिः । न कस्यापीत्यनेन पूर्वं प्रकृतोपयुक्ततया विशेषोपादानेऽपि सामान्य एव तात्पर्यमिति सूचयति । ननु साधकत्वपदार्थपर्यालोचनायां पददोषादीनामेव साधकत्वाभावोपपादकत्वप्रतीत्या साधकत्वाभावमापादयतस्तेषामेवोपादेयत्वेऽपि मिथ्यात्वस्याप्रयोजकत्वेनोपपादकत्वाभावादनुपादेयत्वेन सत्यस्यैव साधकत्वं न मिथ्याभूतस्येत्यभिमानासम्भवेन तर्कबीजाभावाच्च प्रत्यपि तर्कस्याप्रसर एवेत्याशयेन शङ्कते ॥ **नन्विति पददोषेणेति** ॥ स्वरवर्णादिहीनतादिरूपेणेत्यर्थः । मिथ्यात्वस्य पददोषादेश्चासाधकताप्रयोजकत्वेऽपि मिथ्यात्वाभाव एव दोषादेर्गवेषणीयत्वेन प्रथमभावित्वान्मिथ्यात्वमेव मुख्यमसाधकताप्रयोजकमित्येतत्परमुखेनैव दृढीकर्तुं मिथ्यात्वमप्रयोजकीकृत्य पददोषादेरेवासाधकत्वे प्रयोजकत्वं वदता प्रकृतवाक्यस्य मिथ्यात्वेऽपि पददोषाद्यभावात्साधकत्वमित्युक्तं स्यादित्याह ॥ **तत्किमिति** ॥ निर्दोषाः पदरूपा अवयवा अस्य तत्त्वमित्यत्र निर्दोषपदत्वमिति वक्तव्येऽवयवग्रहणमविद्यमानस्यावयवाः सन्तीत्येतद्व्याहतमिति सूचयितुमिति ध्येयम् । अस्तु तथा तथाऽपि को दोष इत्यत आह ॥ **एवं चेति** ॥ ननु मिथ्यात्वमप्रयोजकीकुर्वतोऽपि मम नासत्त्वमप्रयोजकमित्यभिमतम् । एवं च वन्ध्यासुतवचसोऽसत्त्वेनासाधकत्वेऽपि न प्रकृतवाक्यस्य तथा । तस्य मिथ्यात्वेऽप्यनिर्वचनीयत्वेनासत्त्वाभावादिति गूढाभिसन्धिर्वैषम्यं शङ्कते ॥ **स्वरूपस्यैवेति** ॥ अनिर्वचनीयत्वस्य वक्ष्यमाणरीत्याऽनुपपन्नत्वेनासत्त्वस्यैव वक्तव्यतया साम्यमेवेति गूढाभिसन्धिरेव परिहरति ॥ **सममिति** ॥ अनेन तर्केऽप्रयोजकत्वादिकमपि निरस्तम् । न च

ननु वाक्यस्येत्यादिग्रन्थस्तर्केऽप्रयोजकत्वान्यथासिद्धिशङ्कातत्परिहारपरत्वेनैव किं न व्याख्यायत इति वाच्यम् । विरुद्धतापरिहारकपूर्वोत्तरग्रन्थमध्यस्थस्य तत्सङ्गतस्यास्यार्थादप्रयोजकत्वादिनिरासकत्वस्यैव युक्तत्वात् । इमे च शङ्कासमाधाने मिथ्यायाः साधकत्वं चेति मूले मिथ्यात्वस्यैव साधकत्वाभावे प्रयोजकत्वोक्त्या सूचिते इति द्रष्टव्यम् । ननु मां प्रति तर्कस्य विरुद्धतायास्त्वयाप्यभ्युपगमान्मयैव मदपेक्षया तर्कस्य विरुद्धताऽन्यतरासिद्ध्यादेरिव परं प्रत्युद्भावयिष्यत इत्याशङ्क्य प्रमाणान्तरेण तवाद्वैतनिश्चयमभ्युपगम्य त्वां प्रति तर्कस्य विरुद्धता स्वीकृता । वस्तुतस्तु सकलमिथ्यात्वबोधकप्रमाणान्तरस्याप्येतत्तुल्यतया अनुपपत्तेः साम्यादनेनैव मिथ्यात्वनिश्चये वक्तव्ये तस्य चानुपपत्त्या तवापि न विरुद्धताप्रतिपत्तिरित्याशयेनाह ॥ **नन्वित्यादिना** ॥ इदं च मूलस्थप्रतिवादिशब्दस्य भूतपूर्वप्रतिवादिपरत्वमप्यभिप्रेत्येति द्रष्टव्यम् । अत्र निश्चिताद्वैतो बोध्यत इति प्रथमपक्षस्यैतद्वाक्येन विना द्वैतनिश्चयासम्भवेनैतद्वाक्यस्य च अन्योन्याश्रयतापत्त्या न तन्निश्चायकत्वमिति परिहारे वक्तव्ये तमनुक्त्वा यद्वैय्यर्थ्यादिति परिहारवचनं वाद्यपेक्षया विरुद्धता भविष्यतीत्याशङ्कायाश्च वादिनोऽप्येतद्वाक्येनैव तन्निश्चयस्यान्योन्याश्रयेणासम्भवलक्षणपरिहारवचनं तेन ज्ञायते प्रतिवादिन इत्येतत्स्वारस्यानुरोधेन पूर्वं प्रमाणान्तरेण वादिनो मिथ्यात्वनिश्चयमुपेत्य तं प्रति विरुद्धताऽङ्गीकृता । सम्प्रति प्रतिवादिशब्दस्य तत्तुल्यार्थत्वमभिप्रेत्य प्रमाणान्तरेऽप्येतदनुपपत्तेः साम्यादस्यैव तन्निश्चायकत्वस्य चासम्भवेन तं प्रत्यपि विरुद्धता नेत्युक्तमिति । अन्यथा पूर्वोत्तरविरोधापत्तेरिति द्रष्टव्यम् ।

स०—**विभक्तिप्रतिरूपकमिति** ॥ विभक्त्यन्तप्रतिरूपकं तत्सदृशमित्यर्थः । न चात्र मिथ्याया इति विभक्त्यन्तस्यैवाभावात्तत्सादृश्यकथनायोग इति वाच्यम् । मृषेत्यादिवन्मिथ्येत्यपि कस्याश्चिन्नाम संभवतीति मिथ्याया इत्यस्येति द्रष्टव्यम् ॥

प०—मिथ्यापदस्याकारान्ताव्ययत्वान्मिथ्याया इत्यस्यासाधुत्वमाशङ्क्य द्वेधा गतिमाह॥ **या इत्यादिना** ॥ **विभक्तीति** ॥ यत्किञ्चित्स्त्रीव्यक्त्यादौ सङ्केतितषष्ठ्यन्तमिथ्याशब्दस्य संभवेन तत्प्रतिरूपकमित्युक्तम् । चिरायेत्यादिवदिति भावः । **स्वतर्कस्येति** ॥ यदीदं वाक्यं मिथ्या स्यान्न कस्याप्यर्थस्य साधकं स्यादिति तर्कस्य विरुद्धत्वम् । आपाद्याभावेनापादकस्य व्याप्तत्वलक्षणविरुद्धहेत्वाभासत्वमित्यर्थः । मिथ्यायास्साधकत्वं न चेदुक्तमयुक्तमिति शङ्कते ॥ **नन्विति** ॥ ननु वाक्यस्येत्यादिना कृतशङ्काया उत्तरमाह ॥ **तत्किमिति** ॥ उद्यतः उद्युक्त इत्यर्थः । बाढमिति वदन्तं प्रत्याह ॥ **एवं च वदतेति** ॥ पददोषाद्यन्यतममेवोपादेयमिति वदतेत्यर्थः । नूनमिति काकुस्वरः । तत्र तथा वक्तुमशक्यत्वात् ।

तत्र तव प्रत्युत्तरमेव न स्यादिति भावः । परमुखेन समाधिं वाचयति ॥ **स्वरूपस्यैवेति** ॥ **प्रतिपद्य** ॥ विज्ञायेत्यर्थः ॥

य० — **विभक्तिप्रतिरूपकमिति** । न च मिथ्याया इति विभक्तिरेव नास्तीति वाच्यम् । दुःशीलायाः पूर्वं मृषेति नामवन्मिथ्येति यदि कस्याश्चिन्नाम तदैतादृशविभक्तिसम्भवात् । यद्वा चिरायेत्यव्ययस्य विभक्त्यन्तसादृश्योपपत्त्यर्थं परैरचिरायेति विभक्त्यन्तसादृश्यस्य कथितत्वात्प्रकृतेऽपि मिथ्याया इति विभक्त्यन्तसादृश्यं द्रष्टव्यम् ॥

श्री० — अनिष्टप्रसङ्गं अनिष्टापादनरूपं तर्कम् । पश्यन् निश्चिताद्वैतभिन्नः प्रतिवादी ॥ **विरुद्धतामिति** ॥ मिथ्यात्वरूपापादकस्यार्थसाधकत्वाभावरूपापाद्याभावेन व्याप्ततां साधकत्वमिति यावत् । वाक्यस्यासाधकत्वे पददोषादेरेव प्रयोजकत्वेन मिथ्यात्वस्याप्रयोजकत्वाद्यदीदं वाक्यं मिथ्या स्यादिति मिथ्यात्वं नापादकत्वेनोपादेयमित्याशङ्कते ॥ **नन्विति** ॥ पददोषेण अबोधकत्वरूपेण । कुत्रचिदग्निना सिञ्चेदित्यादौ विपरीतप्रतिपादनेन । अर्थाबाधरूपयोग्यताविरहेण ॥ **उद्यतोऽसीति** ॥ वाक्यस्यासाधकत्वे मिथ्यात्वं न प्रयोजकम् । किं नाम पददोषादिकमेवेति शङ्कमानो भवान् अविद्यमानस्य मिथ्याभूतस्यापि वाक्यस्य निर्दोषपदाद्युपेततया साधकत्वमस्ति । मिथ्यात्वस्यासाधकत्वाप्रयोजकत्वादिति वक्तुमुद्यत इत्यर्थः । ओमिति तत्राह ॥ **एवं चेति** ॥ मिथ्यात्वमसाधकत्वेऽप्रयोजकमिति वदतेत्यर्थः । तत्र वन्ध्यासुतवचसि ॥ **सममिति** ॥ अत्रापि मिथ्यात्वेन नेहनानेतिवाक्यस्वरूपस्यैवाभावेनासाधकत्वे सिद्धे किं चरमभाविन्या पददोषादिचिन्तयेत्यर्थः ॥ **तर्कस्येति** ॥ यदीदं वाक्यं मिथ्या स्यान्न तर्हि कस्याप्यर्थस्य साधकं स्यादिति तर्कस्येत्यर्थः ॥ **तन्निरासे चेति** ॥ तर्कविरोधाभावादिति भावः । असौ वादी ॥

च० — **विभक्तिप्रतिरूपकमिति** ॥ विभक्त्यन्तसदृशमित्यर्थः । चिरमतिक्रान्तोऽतिचिरस्तस्मा अतिचिरायेतिविभक्त्यन्तसदृशन्चिरायेत्यादिवदतिमिथ्याया इति षष्ठ्यन्तप्रतिरूपकत्वान्मिथ्याया इत्यस्यापि साधुता सेत्स्यतीति भावः । प्रतिवाद्यपेक्षया तत्ववाद्यपेक्षया । वाद्यपेक्षया अद्वैतवाद्यपेक्षया ॥

अनु० — **तच्च मिथ्या प्रमाणेन सता वा साध्यते त्वया ।**
**सता चेदद्वैतसिद्धिः स्यान्न सिद्धं चान्यसाधनम् ॥**

सु० — अथ मतम् । प्रत्यक्षादिकस्य साधकत्वं तावदनुभवसिद्धम् । तन्मिथ्यात्वं च श्रुतिभिर्युक्तिभिश्चावगम्यते । मिथ्याभूतस्य साधकत्वमित्येषोऽर्थः कुतः सिद्ध इति मा वोचः । एकज्ञानजनितसंस्कारसहकृतस्येतरप्रमाणस्यैव सुरभि चन्दनमितिवद्विशिष्टप्रत्ययजनकत्वोपपत्तेः । अथवोभयप्रतिसन्धातुरात्मनो विद्यमानत्वाद्दर्शनस्पर्शनाभ्यामेकार्थग्रहणवद्विशिष्टप्रतिपत्तिर्भविष्यति । एवंच प्रमाणेनैव मिथ्याभूतस्यैव साधकत्वे सिद्धे विरुद्धस्तर्को न मदभ्युपगममात्रेणेत्येतद्दूषयितुं विकल्पेन पृच्छति ॥ तच्चेति ॥ तदिति मिथ्याभूतस्यैव साधकत्वम् । आत्मातिरिक्तस्य मिथ्यात्वमिवेति चशब्दः । सता वा प्रमाणेनेति संबन्धः । यदिदं मिथ्याभूतस्यैव साधकत्वं साधयितुं त्वया प्रमाणद्वयसमाहारात्मकं प्रमाणमुपन्यस्यते । तन्मिथ्या सद्वेति प्रश्नार्थः । सत्त्वपक्षं दूषयति ॥ सता चेदिति ॥ यद्यपि परेणाङ्गीचिकीर्षितत्वेन प्राधान्यान्मिथ्यात्वविकल्पः प्रथमं प्रश्नावसरे निर्दिष्टः । तथाऽपि मिथ्यासत्ययोः सत्यमर्थतः प्रधानमिति तत्क्रमेण दूषणम् । सता चेदित्यतः परमात्मरूपेण तदन्येन वेति विकल्पः । प्रथमपक्षे वक्ष्याम इत्याद्यपक्षदूषणप्रतिज्ञानं चाध्याहार्यम् । आत्मेतरेण सतेति द्वितीयपक्षदूषणं द्वैतसिद्धिः स्यादिति । तथा चाद्वैतप्रतिपादकश्रुतेरुपपत्तिविरोध इति हृदयम् । न पुनरपसिद्धान्तमात्रे तात्पर्यम् । प्रक्रमाननुरूपत्वात् । श्रुतेरुपपत्तिविरोधेनाद्वैतप्रतिपादकत्वाभावस्य प्रक्रान्तत्वात् । मिथ्यात्वपक्षे दोषमाह ॥ न सिद्धं चेति ॥ चशब्दोऽवधारणे तुशब्दार्थो वा । सतोऽन्यन्मिथ्याभूतं तु साधनं न सिद्धमेव । मिथ्याभूतस्य प्रमासाधनत्वं न सिद्धमेवेति यावत् । इदमुक्तं भवति । यो हि यन्मिथ्या न तत्साधकमिति व्याप्तिमङ्गीकृत्य श्रुतेर्मिथ्यात्वे असाधकत्वं प्रसञ्जयति स मिथ्याभूतस्यैव साधकत्वमित्यर्थसाधनायोपन्यस्तप्रमाणस्यापि मिथ्यात्वेऽसाधकत्वमापादयिष्यत्येव । तथाच अस्य प्रमाणस्य साधकत्वे सिद्धे मिथ्याभूतस्यैव साधकत्वमित्यर्थसिद्धिः । ततश्च तर्कस्य विरुद्धतासिद्धिः । ततश्चास्य प्रमाणस्य साधकत्वसिद्धिरिति चक्रकप्रसङ्गेन नैकस्यापि सिद्धिरिति ।

वा० — ननु तच्च मिथ्याप्रमाणेनेत्युत्तरग्रन्थेन मिथ्याभूतस्य साधकत्वसाधकप्रमाणे मिथ्यात्वसत्त्वादि विकल्प्य दूषणाभिधानमनुपपन्नम् । तादृशप्रमाणस्वरूपस्यैवासम्भाविततया न सिद्धमित्येतावतैव तद्दूषणे सिद्धे धर्मदूषणमुखेन तद्दूषणस्यानुचितत्वात्तद्दूषणस्य प्रकृतासङ्गतेश्चेत्यतस्तादृशप्रमाणसम्भावनां दर्शयन्नेव तद्दूषणं प्रकृतेन सङ्गमयति ॥ **अथ मतमिति** ॥ **एकेति** ॥ प्रत्यक्षादिसाधकत्वानुभवनाशेऽपि तत्संस्कारसहकृतश्रुतियुक्त्यादेर्वा तन्मिथ्यात्वसाधकश्रुत्यादिज्ञाननाशेऽपि तत्संस्कारसहकृतप्रत्यक्षादिसाधक·

त्वानुभवजनकस्य वा विशिष्टज्ञानजनकत्वं तथाऽन्यत्र दृष्टेरुपपद्यत इत्यर्थः । यद्वाऽनुभवेन प्रत्यक्षादेः साधकत्वे सिद्धे तत्स्मृतौ सत्यां श्रुतियुक्त्यादिना तन्मिथ्यात्वज्ञानानन्तरमेव यदिदं साधकत्वेनान्वभवं तदेव श्रुत्यादिना मिथ्यात्वेन प्रत्येमीति वा श्रुत्यादिना प्रत्यक्षादेर्मिथ्यात्वे सिद्धे तत्स्मृतौ सत्यां तत्साधकत्वानुभवानन्तरमेव यच्छ्रुत्यादिना मिथ्यात्वेन व्यज्ञासिषं तत्साधकत्वेनानुभवामीति वा प्रतिसन्धानेन विशिष्टार्थसिद्धिरुपपद्यते । न च पौर्वापर्येण प्रवृत्तप्रमाणद्वयजन्यज्ञानप्रतिसन्धानं कथमात्मन इति वाच्यम् । आत्मक्षणिकतावादे चक्षुरादिचैतन्यवादे चैतदनुपपत्तावप्युभयप्रतिसन्धातुरात्मनः स्थिरतावादे प्रतिसन्धानानुपपत्तेः शङ्कितुमशक्यत्वात् । न च प्रतिसन्धातुरात्मनः स्थिरत्वमात्रेण विजातीयकरणजन्यज्ञानद्वयप्रतिसन्धानं न दृष्टचरमिति वाच्यम् । चक्षुषा घटे गृहीते त्वचा ज्ञानान्तरमेव । त्वचा घटे गृहीते चाक्षुषज्ञानान्तरमेव । यं चक्षुषा अद्राक्षं तमेव घटं त्वचा स्पृशामीति वा । यमस्पृशं तमेव घटं चक्षुषा पश्यामीति वा विजातीयकरणजन्यज्ञानद्वयप्रतिसन्धानस्य दर्शनात् । न च प्रागुपस्थितज्ज्ञानद्वयप्रतिसन्धानसद्भावेऽपि कथं विशिष्टार्थविषयकं तदिति वाच्यम् । पूर्वानुभूतितत्कार्यस्मृतितत्कार्यानुभवानामेकेनानुव्यवसायेनैकविषयकतयैककर्तृकतया च सङ्कलनरूपप्रतिसन्धानस्यैकविषयकस्मृतिपूर्वापरप्रत्ययानां सति सामानाधिकरण्ये सङ्कलयितुरेकत्वेनोपपत्तेः । न चैकार्थक्यप्रतिसन्धानदृष्टान्तेन विभिन्नार्थप्रतिसन्धानोपपादनं कथमिति वाच्यम् । प्रत्यक्षादिरूपं धर्मिणमादायार्थैक्यस्य प्रकृतेऽपि सत्त्वाद्विशिष्टार्थविषयकप्रत्ययानां सति सामानाधिकरण्ये सङ्कलयितुरेकत्वेन सङ्कलनस्य सामग्रीतौल्येनोपपत्तेः । तद्वद्विशेष्यकत्वादिवज्ज्ञानद्वयनिष्ठैकार्थविषयकत्वस्य विशिष्टैकार्थविषयकत्वस्य वा ग्रहणे समानसंवित्संवेद्यतयाऽर्थैक्यस्य विशिष्टार्थैक्यस्य वा सिद्ध्युपपत्तेश्च । अत्र दृष्टान्तस्वरूपविवरणं दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति गौतमीयतृतीयाध्यायाद्यसूत्रादौ स्पष्टमतो न विशिष्टार्थसिद्धावनुपपत्तिरित्याशयेन पक्षान्तरमाह ॥ **अथवेति** ॥ दर्शनस्पर्शनोभयजन्यज्ञानद्वयप्रतिसन्धानवदित्यर्थः । उक्ताक्षेपसमाधानतयोत्तरग्रन्थसङ्गमनमेवं चेति । आत्मातिरिक्तमिथ्यात्वसाधकत्वेन परोक्तं श्रुत्यादिकं मिथ्येति सिद्धवत्कृत्य मिथ्यायाः साधकत्वं च न सिद्धमित्यादिना दूषणमभिधाय संप्रति पुनस्तच्चेत्यात्मातिरिक्तमिथ्यात्वं परामृश्य तत्साधकप्रमाणस्य मिथ्यात्वादिविकल्पेन दूषणाभिधानमनुचितमित्यतः प्राधान्येन प्रकृतस्याप्यात्मातिरिक्तमिथ्यात्वस्य नायं परामर्शो येनोक्तदोषः स्यादपि तु तादर्थ्येन प्रकृतस्यापि मिथ्याभूतसाधकत्वस्यैवेत्याह ॥ **तदितीति** ॥ तर्हि चशब्दो व्यर्थः । आत्मातिरिक्तमिथ्यात्वसमुच्चायकत्वे च उक्तदोषानतिवृत्तिरेवेत्यत आह ॥ **आत्मेति** ॥ ननु सत्यस्येव मिथ्याभूतस्य साधकत्वेन लोके संप्रतिपत्तेरेवाभावान्नासंभावितकल्पना युक्ता । प्रमाणे सत्त्वासत्त्वमात्रनिषेधकोत्तरग्रन्थास्वारस्यं च । प्रमाणस्वरूपस्यापि संशयकोट्यन्तर्भावेन धर्मिभूतप्रमाणस्वरूपविशेषस्यानुक्तिश्चेत्यतः प्रमाणस्वरूपस्यानुवादकोटि-

निवेशेन प्रकृतपरामर्शकतच्छब्दबलाच्च प्रमाणविशेषस्य मूलारूढतालाभः । सत्त्वमिथ्यात्वयोरेव कोटित्वमतो नानुपपत्तिरित्याशयेन प्रश्नपर्यवसानं दर्शयति ॥ **यदिदमिति** ॥ निर्देशदूषणयोर्वैषम्ये निमित्तमाह ॥ **यद्यपीति** ॥ सता चेदित्यात्मतदितरपक्षयोः प्राप्त्याऽऽत्मपक्षे च द्वैतसिद्धिः स्यादित्यस्यालम्बकत्वादाह ॥ **सता चेदित्यतःपरमिति** ॥ **इति हृदयमिति** ॥ आत्मातिरिक्तस्यास्यैव सत्यत्वेऽत्रैव प्रतिहतप्रामाण्यतयाऽऽत्मातिरिक्तसमस्तमिथ्यात्वसाधकत्वाभिमता श्रुतिर्न किञ्चिदपि साधयेदित्युपपत्तिविरोध इत्यर्थः । ननु मिथ्यात्वपक्षे पूर्वं दूषणानुक्तेस्तत्समुच्चायकचशब्दानुपपत्तिरित्यतः प्रकारान्तरेण द्वेधा तदर्थमाह ॥ **चशब्द इति** ॥ सर्वस्यापि किञ्चिदपेक्षयाऽन्यत्वाद्विवक्षितमर्थमाह ॥ **सत इति** ॥ मिथ्याभूतसाधनस्य धर्मिणोऽसिद्धत्वोक्तेः प्रकृतानुपयोगात्प्रकृतोपयुक्तं विशेषणबललब्धं तात्पर्यमाह ॥ **मिथ्येति** ॥ ननु मिथ्याभूतस्यापि प्रमाणस्य साधनत्वमित्येतत्प्रमेयसाधनायोपन्यस्तप्रमाणस्य मिथ्यात्वरूपकल्पनिरासावसरे प्रमेयासिद्धिकथनं न सङ्गतम् । न चैतत्प्रमेयं न मिथ्याभूतप्रमाणेन साधयितुं शक्यं तर्कविरोधादिति प्रमाणनिराकरणमेवैतदिति वाच्यम् । श्रुतेर्मिथ्यात्वे साधकत्वं न स्यादिति तर्कविरोधस्यात्राप्रसरादित्यतस्तदप्रसरेऽपि तत्समानन्यायलब्धतर्कविरोधः प्रसरत्येवेत्यभिप्रेत्य तत्प्रकारमुपपादयन् किमनेन दूषणमुक्तं भवतीत्यतस्तत्फलं चक्रकापत्तिरूपं चाह ॥ **इदमुक्तं भवतीति** ॥

**स०—अथवेति** ॥ पूर्वं प्रत्यक्षादि विशेष्यकसाधकत्वप्रकारकज्ञाने तन्मिथ्यात्वं मानान्तरोपनीतं भासते तथा च मिथ्याभूतं प्रत्यक्षादिकं साधकमिति तज्ज्ञानोल्लेख इत्युक्तम् । अत्र तु प्रत्यक्षादिकं मिथ्याभूतमित्येकं ज्ञानं साधकमित्यपरं तज्ज्ञानद्वयविशेषणकं आत्मविशेष्यकं विशिष्टज्ञानं विवक्षितं योहं प्रत्यक्षादिकं मिथ्येत्यमनिषं सोहं साधकमिति जानामीति तदाकारो बोध्यः ॥ **दर्शनस्पर्शनाभ्यामिति** ॥ दर्शनं चक्षुः स्पर्शनं त्वक् ताभ्यां जातयोर्घटरूपैकार्थविशेष्यकयोर्भिन्नप्रकारकयोर्ग्रहणयोरिवेत्यर्थः । तथाच योऽहं घटं चक्षुषा नीलमद्राक्षं सोऽहं त्वचा स्पर्शवन्तं जानामीति यथा ज्ञानद्वयविशिष्टात्मप्रतिपत्तिस्तथा प्रकृतेऽपीति भावः । केचित्तु नेहनानेति श्रुत्या प्रत्यक्षस्य मिथ्यात्वे प्रतीते प्रमाणान्तरेण साधकत्वे च प्रतीते उभयानुसन्धानवत आत्मनो मनसैव मिथ्यात्वविशिष्टप्रत्यक्षसाधकत्ववैशिष्ट्यबोधः सम्भवति । यथा चक्षुषा दृष्टे घटे स्पर्शनेन च ज्ञाते योऽहं चक्षुषा घटमद्राक्षं सोऽहं त्वचा जानामीति मनसा विशिष्टानुभवस्तथेति भाव इत्याहुः ॥ **प्रथमपक्षे वक्ष्याम इति** ॥ इत्यनवस्थितिरित्यस्य व्याख्यावसरे । एतेन प्राग्विकल्पितः सतात्मभूतेनेति पक्षोऽपि निरस्तो वेदितव्य इत्यादिना वक्ष्याम इत्यर्थः ॥ **उपपत्तिविरोध इति हृदयमिति** ॥ यदि नेहनानेतिवाक्यमात्मातिरिक्तस्य सर्वस्यापि मिथ्यात्वप्रतिपादकं स्यात् तर्हि मिथ्याभूतस्यैव साधकत्वमित्येतदर्थसाधकप्रमाणस्यापि मिथ्यात्वप्रतिपादकं स्यात् न च तस्य मिथ्यात्वमङ्गीकर्तुं शक्यं तस्य सत्यत्वाङ्गीकारादित्युपपत्तिविरोध इति भावः ॥

प० — **अनुभवसिद्धमिति** ॥ प्रमितिरूपकार्यलिङ्गजन्यानुमितिसिद्धमिति वा अनुमितिप्रामाण्यग्राहकसाक्षिसिद्धमिति वाऽर्थः ॥ **श्रुतिभिर्युक्तिभिरिति** ॥ नेहनानेत्यादिश्रुतिभिर्दृश्यत्वादियुक्तिभिरित्यर्थः ॥ **इतरप्रमाकरणस्यैवेति** ॥ मिथ्यात्वप्रमाकरणस्य वा साधकत्वप्रमाकरणस्य वेत्यर्थः । क्वचित्प्रमाणस्यैवेति पाठः ॥ **सुरभीति** ॥ यथा घ्राणजन्यगन्धज्ञानजनितसंस्कारसहकृतचक्षुष एव चन्दनकाष्ठे सुरभि चन्दनमिति विशिष्टज्ञानजनकत्वं तथेत्यर्थः ॥ **दर्शनस्पर्शनाभ्यामिति** ॥ यथा चक्षुरिन्द्रियत्वगिन्द्रिययोरेकत्र घटादौ समावेशे रूपवान्स्पर्शवांश्चेति रूपस्पर्शरूपविशेषणद्वयविशिष्टवस्तुविषयकं ज्ञानं जायते तथा मिथ्यात्वप्रमाणसाधकत्वप्रमाणयोः समावेशे मिथ्यात्वसाधकत्वोभयविशिष्टैकवस्तुविषयकं ज्ञानं भविष्यतीत्यर्थः ॥ **इवेतीति** ॥ तद्यथा मिथ्याभूतवाक्येन साध्यते तथा मिथ्याभूतस्य साधकत्वमपि मिथ्याभूतप्रमाणेन साध्यते किमित्यर्थः ॥ **वक्ष्यामइति** ॥ अविशेषस्य साध्या साधकतेत्यत्रेति भावः ॥ **अद्वैतप्रतिपादकेति** ॥ 'नेहनानेत्यादिश्रुतेः सर्वमिथ्यात्वबोधनांशे बाधितविषयत्वरूपोपपत्तिविरोध इत्यर्थः ॥ **अद्वैतेति** ॥ आत्मान्यसर्वमिथ्यात्वप्रतिपादकत्वाभावस्य 'मिथ्यात्वं यदि दुःखादेः' इत्यत्र प्रक्रान्तत्वादित्यर्थः । अन्यसाधनमित्यत्र कर्मधारय इत्युपेत्याह ॥ **सतोन्यदिति** ॥ चशब्दस्यार्थद्वयमपि योजयति ॥ **मिथ्याभूतस्त्विति** ॥ न सिद्धमेवेति च ॥ **तर्कस्येति** ॥ यदीदं वाक्यं मिथ्या स्यान्न किञ्चिद्बोधयेदिति तर्कस्य विरुद्धहेत्वाभासतेत्यर्थः ॥

या० — **अथवोभयप्रतिसन्धातुरिति** । पूर्वं प्रत्यक्षादिविशेष्यकसाधकत्वप्रकारकज्ञाने तन्मिथ्यात्वं मानान्तरोपनीतं भासते तथाच मिथ्याभूतं प्रत्यक्षादिकं साधकमिति विशिष्टज्ञानं विशिष्टसाधकमित्युक्तम् । अत्र तु प्रत्यक्षादिकं मिथ्येत्येकंज्ञानम् । साधकमित्यपरम् । ततश्च क्रमेण तज्ज्ञानयोरुत्पत्त्यनन्तरं श्रुत्यादिभिर्यत्प्रत्यक्षादिकं मिथ्येत्यमनिषि तदेवानुभवेन साधकमिति जानामीत्यात्मैवोभयमेकत्र प्रतिसन्धत्ते तेन साक्षित एवोभयविशिष्टप्रतिपत्तिरित्युच्यत इति भेदः ॥ **दर्शनस्पर्शनाभ्यामिति** ॥ दर्शनं चक्षुः । स्पर्शनं त्वगिन्द्रियम् । ताभ्यामेकार्थग्रहणमिवेत्यर्थः । अयमाशयः । यथा दर्शनस्पर्शनाभ्यामेकस्यार्थस्य घटादे रूपवत्तया स्पर्शवत्तया च क्रमेण ग्रहणे जाते यमहं रूपिणं चक्षुषाऽद्राक्षं तमेव स्पर्शवन्तं त्वचा प्रत्यभिजानामीति एकत्रोभयप्रतिसन्धातुरात्मनो विद्यमानत्वाद्रूपस्पर्शविशिष्टप्रतिपत्तिः साक्षिणा भवति तथेत्यर्थः ॥ **प्रथमपक्षे वक्ष्याम इति** ॥ 'अविशेषस्य साध्या साधकता पुनरि'त्यादाविति शेषः ॥ **उपपत्तिविरोध इति** ॥ यदि ब्रह्मातिरिक्तमुक्तप्रमाणं सत्यं स्यात्तर्ह्यत्रैव प्रतिहतप्रामाण्यमेकमेवेत्यादिवाक्यं कथमितरमिथ्यात्वं प्रतिपादयेदविश्वासप्रसङ्गादित्युपपत्तिविरोधः । यद्वा यदि प्रागुक्तं प्रमाणं सत्स्यात्तदा तदंशे श्रुतेर्योग्यता न स्यादित्येवोपपत्तिविरोध ऊह्यः । नन्वेतत्प्रमाणविरोधात्तर्क एव न स्वार्थसाधक इत्यत आह ॥ **तथा चास्येति** ॥

श्री०— **सुरभिचन्दनमितीति** ॥ आदौ चन्दनखण्डे सौरभ्यं घ्राणेन गृहीतमभूत् । पश्चाच्चन्दनखण्डे प्रत्यक्षेण दृष्टे सति चन्दनमिदं सुरभीति चाक्षुषं ज्ञानमुत्पद्यते । इदं चोपनीतभानम् । घ्राणजन्यसौरभ्यानुभवजनितसंस्कारसहकृतस्य प्रत्यक्षादिकं साधकमित्यनुभवरूपप्रमाणस्यैव मिथ्याभूतं साधकमिति विशिष्टप्रत्ययजनकत्वमुपपद्यते । तथाच प्रत्यक्षादिकं साधनमित्यनुभवे मिथ्यात्वं मानान्तरोपनीतं भासते । तथाच मिथ्याभूतं प्रत्यक्षादिकं साधकमित्युपनीतभानरूपं विशिष्टज्ञानमेव मिथ्याभूतस्य भाधकत्वरूपविशिष्टार्थसाधकमित्यर्थः ॥ **अथवेति** ॥ चक्षुषा त्वगिन्द्रियेण चैकस्यैवार्थस्य घटादेः रूपवत्त्वेन स्पर्शवत्त्वेन च क्रमेण ज्ञानद्वयोत्पत्त्यनन्तरं योऽहं घटं चक्षुषा रूपवन्तमद्राक्षं तमेव त्वचा स्पर्शवन्तं प्रत्यभिजानामीत्येवंरूपस्पर्शविशिष्टार्थप्रतिपत्तिरेकैव साक्षिणैव भवति । एकत्रैव घटे उभयप्रतिसन्धातुरात्मनो विद्यमानत्वात् । एवमत्रापि प्रत्यक्षादिकं मिथ्येत्येकं ज्ञानं प्रत्यक्षादिकं साधकमित्यपरं ज्ञानम् । तथाच क्रमेण ज्ञानद्वयोत्पत्त्यनन्तरं श्रुत्यादिभिर्यत्प्रत्यक्षादिकं मिथ्येत्यमनिषं तदेवानुभवेन साधकमिति जानामीत्यात्मैव मिथ्यात्वं साधकत्वं चेत्युभयमेकत्र प्रत्यक्षादिप्रमाणेऽनुसन्धत्ते । तथाच मिथ्यात्वसाधकत्वरूपोभयविशिष्टं यत्प्रत्यक्षादिप्रमाणं तत्प्रतिपत्तिर्मिथ्याभूतं प्रत्यक्षादिकं साधकमिति विशिष्टार्थप्रतिपत्तिरिति यावत् साक्षिणैव भवतीत्यर्थः । पूर्वमुपनीतभानं साक्षिभिन्नं विवक्षितमत्र तु प्रत्यभिज्ञारूपं साक्षिरूपं प्रमाणं विवक्षितमिति भेदः । उभयत्रापि प्रमाणद्वयसमाहारात्मकमेव प्रमाणं विवक्षितमिति ध्येयम् । अत एवोत्तरत्र तथैव व्यवहारः ॥ **तर्कस्येति** ॥ मिथ्यात्वे साधकत्वं न स्यात् इति तर्कस्य ॥ **ततश्चेति** ॥ तर्कस्य विरुद्धतया दुष्टत्वेन तद्विरोधाभावादिति भावः ॥

च०— **अनुभवसिद्धमिति** ॥ प्रत्यक्षादित्वावच्छिन्नधर्मिकानुभवविषयीकृतमित्यर्थः ॥ **कुतः सिद्ध इति** ॥ मिथ्याभूतत्वावच्छिन्नधर्मिकसाधकत्वप्रकारकानुभवजनकसामग्रीविरहादिति भावः । **सहकृतस्येत्यादि** ॥ प्रत्यक्षादित्वावच्छिन्नधर्मिकानुभवजनितसंस्कारसहकृतस्य मिथ्यात्वबोधकश्रुतियुक्तिरूपप्रमाणस्येत्यर्थः ॥ **सुरभिचन्दनमितिवदिति** ॥ घ्राणादिजनितसौरभगोचरोपनायकज्ञानलक्षणलौकिकप्रत्यासत्तिचन्दनचक्षुःसन्निकर्षादिघटितसामग्र्योपनीतं विशेषणतयैव भासते । 'मानसे त्वनियम' इति न्यायेन सौरभनिष्ठप्रकारतानिरूपितचन्दननिष्ठविशेष्यताशालिज्ञानजननादिति भावः ॥ **विशिष्टप्रत्ययेति** ॥ मिथ्याभूतत्वविशेषितप्रत्यक्षादित्वावच्छिन्नधर्मिकसाधकत्वप्रकारकोदीच्यमानसज्ज्ञानजनकत्वोपपत्तेरित्यर्थः ॥ **उभयप्रतिसन्धातुरिति** ॥ प्रत्यक्षादित्वरूपैकधर्मावच्छिन्ने साधकत्वमिथ्यात्वोभयकर्मकप्रतिसन्धानकर्तुरित्यर्थः । दर्शनस्पर्शनाभ्यामिति करणसाधनल्युडन्तौ चक्षुस्त्वगिन्द्रिये अभिदधाते । तादृशेन्द्रियद्वयाधीनघटधर्मिकरूपस्पर्शोभयप्रकारकचाक्षुषस्पर्शनोभयगोचरयो रूपिणं यं चक्षुषाऽद्राक्षं तमेव त्वचाऽस्प्राक्षमित्यनुव्यसाययोरेकात्मनि न्यायमते, सिद्धान्ते तादृशव्यवसायद्वयगोचरसाक्षिरूपप्रकाशस्य

वा सद्भावेनैकत्र रूपस्पर्शोभयवैशिष्ट्यप्रतिपत्तिः साक्षिणा यथा तद्वत्प्रकृतेऽपीत्यर्थः ॥ **प्रथमपक्षे वक्ष्याम इति** ॥ 'अविशेषस्य साध्या साधकता पुनरि'त्यादाविति पूरणीयम् ॥ **उपपत्तिविरोध इति** ॥ आत्मातिरिक्तस्य तादृशप्रमाणस्य सत्यतायां तत्रैवैकमेवेत्यादिवाक्यस्य प्रामाण्यमभांक्षीदिति कथमितरमिथ्यात्वं निश्चिन्वीतानाश्वासापत्तेरित्युपपत्तिविरोध इत्यर्थः ॥

**सु०— ननु च श्रुतिः स्वव्यतिरिक्तस्य दुःखादेर्मिथ्यात्व प्रतिपादयन्ती कथमुपपत्तिविरुद्धेति चेत् । कुतोऽयं श्रुत्यर्थसङ्कोचः । साधकत्वानुपपत्तिप्रमाणबलादिति चेत् । तर्हि प्रमितं विहाय मिथ्यात्ववादिनी कथं दुःखादिमिथ्यात्वमपि प्रतिपादयेत् तस्यापि प्रत्यक्षसिद्धत्वात् । ननु च श्रुतिविरोधेन प्रत्यक्षमाभासीकर्तुं मयोपक्रान्तम् । तेनैव श्रुतिविरोधाभिधाने कथमितरेतराश्रयत्वं न स्यात् । श्रुतेरप्रामाण्ये बाधकाभावात्प्रत्यक्षप्रामाण्यम् । ततश्च तद्विरुद्धत्वेन श्रुतेरप्रामाण्यमिति । हन्त तवापि कथमितरेतराश्रयत्वं न स्यात् । श्रुतिप्रामाण्ये तद्विरोधेन प्रत्यक्षाप्रामाण्यम् । ततश्च बाधकाभावेन श्रुतिप्रामाण्यसिद्धिरिति । श्रुतेः प्रबलत्वान्नैवमिति चेन्न । तस्य दूष्यत्वात् । साधयिष्यते च प्रत्यक्षप्राबल्यम् । ननु चात्र श्रुतेः प्रत्यक्षविरोधमेवोपन्यस्य तत्प्राबल्यव्युत्पादनं कुतो न कृतम् । किमुपपत्तिविरोधव्युत्पादनेन । उच्यते । परेण ह्यत्राद्वैतपरत्वे तात्पर्यलिङ्गानुगुणत्वं महता प्रबन्धेनोपपादितम् । अतस्तद्विरोध एव परस्य विचाराकौशलप्रकटनाय व्युत्पादितः । उपक्रमादिविरोधस्य चैतदुपलक्षणम् । तं च व्युत्पादयिष्यामः ।**

**वा०—** ननु माऽस्तु तर्कस्य विरुद्धतयोपपत्तिविरोधानुपपत्तिस्तथाऽपि मिथ्याभूतस्य साधकत्वानुपपत्तिप्रमाणबलेन श्रुतेरेतच्छ्रुतिव्यतिरिक्तमिथ्यात्वप्रतिपादकतया सङ्कोचे सति तर्कप्रसर एव नेत्युपपत्तिविरोधोद्भावनं न युक्तमेव । न च माऽस्तु तदुपपत्तिविरोधः प्रमाणबलादेतच्छ्रुतिमिथ्यात्वप्रतिपादकत्ववत्प्रत्यक्षादिप्रमाणबलादविशेषेण दुःखादिमिथ्यात्वाप्रतिपादकत्वमपि श्रुतेः प्राप्तमिति मदिष्टसिद्धिरिति वाच्यम् । श्रुतिविरोधेन प्रत्यक्षमाभासीकर्तुमुपक्रान्ततया प्रत्यक्षादेस्तत्प्रमाणवैलक्षण्यात् । अन्यथाऽन्योन्याश्रयापातात् । न च तर्हि तवाप्यन्योन्याश्रय इति वाच्यम् । श्रुतेः प्रबलत्वेन मां प्रति तदप्रसरादित्यभिप्रेत्य गूढाभिसन्धिः शङ्कते ॥ **नन्विति** ॥ अपसिद्धान्ते वक्तुं शक्येऽपि विरोधकथनप्रसङ्गात्तमेव वक्तुमभिसन्धिमजानान इव पृच्छति ॥ **कुत इति** ॥ शङ्किता स्वाभिसन्ध्येकदेशमुद्धाटयति ॥ **साधकत्वेति** ॥ असङ्कोचे ह्युपपत्तिविरोध उद्भावितः । सङ्कोचे तु तन्न्यायेन प्रत्यक्षादिविरोधमेवोद्भावयामी-

त्याह ॥ **तर्हीति** ॥ स्वाभिप्रेतां तदशक्यतां शङ्कते ॥ **ननु चेति** ॥ अजानान इव परिहरति ॥ **हन्तेति** ॥ शङ्किता स्वनिष्कर्षमुद्घाटयति ॥ **श्रुतेरिति** ॥ **दूष्यत्वादिति** ॥ सङ्कोचासङ्कोचयोः प्रत्यक्षोपपत्तिविरोधाभ्यामिति शेषः । अङ्गीकृत्य च साम्यमिदमुक्तम् । वस्तुतस्तु प्रत्यक्षस्यैव प्राबल्यात्सुस्थस्तद्बाध इत्याह ॥ **साधयिष्यते चेति** ॥ प्रत्यक्षस्याविशेषत इत्यादिनेति शेषः । अनेनान्यसाधनं मिथ्यात्वसाधकश्रुतिर्न सिद्धं प्रबलत्वेनेति शेष इति भाष्यं व्याख्यातं भवति । अनेन तर्के आपादकासिद्धिश्च परिहृता भवतीति द्रष्टव्यम् । ननु श्रुतेरर्थसङ्कोचे उपपत्तिविरोधासम्भवात्प्राबल्यमुपपाद्य प्रत्यक्षविरोधेऽवश्यं वक्तव्ये स एवादितोऽपि वक्तव्यः किमन्तर्गडुनोपपत्तिविरोधेनेत्याशयेन शिष्यो भाष्यकारीयामचातुरीं शङ्कते ॥ **ननु चेति** ॥ सप्रयोजनत्वान्नैवमुक्तिर्दोष इत्याह ॥ **उच्यत इति** ॥

स०—**साधयिष्यते चेति** ॥ सत्यत्वात् तेन दुःखादेरित्यादिना व्युत्पादयिष्यत इति ॥

प०— **तवापीति** ॥ मिथ्यात्ववादिनोऽपीत्यर्थः ॥ **दूष्यत्वादिति** ॥ उपपत्तिविरोधादिनेति भावः ॥ **साधयिष्यते चेति** ॥ 'ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषत' इत्यादावुपजीव्यत्वेन प्राबल्यं साधयिष्यत इत्यर्थः ॥ **व्युत्पादयिष्याम इति** ॥ पृथगुपदेशादित्यादाविति भावः ॥

या०— **तस्य दूष्यत्वादिति** ॥ 'क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमि'त्यादाविति शेषः । साधयिष्यत इत्यत्रापि स एव शेषोऽनुवर्तते ॥

श्री०— **साधकत्वानुपपत्तिरिति** ॥ नेहनानेतिश्रुतिः स्वव्यतिरिक्तस्यैव मिथ्यात्वं बोधयति न स्वात्मनः । तथात्वे स्वस्यापि मिथ्यात्वप्राप्त्या साधकत्वं न स्यात् । मिथ्याभूतस्य साधकत्वानुपपत्तिप्रमाणबलादित्यर्थः । प्रमितं साधकत्वेन प्रमितं स्वात्मानम् ॥ **प्रत्यक्षसिद्धत्वादिति** ॥ तथाच श्रुतेः प्रत्यक्षविरोध इति भावः । सिद्धान्ती उत्तरमाह ॥ **हन्त तवापीति** ॥ शङ्कते ॥ **श्रुतेरिति** ॥ **तथाच** तद्विरुद्धत्वेन श्रुतेरप्रामाण्यमिति प्रत्यक्षविरोधेन श्रुतेरप्रामाण्यमित्युक्तमयुक्तम् । श्रुतेः प्रबलत्वेन प्रत्यक्षस्य दुर्बलत्वेन श्रुतिप्रामाण्यस्य दुर्बलप्रत्यक्षविरोधानपेक्षत्वेन नान्योन्याश्रय इति भावः । तस्य प्रत्यक्षापेक्षया श्रुतिप्राबल्यस्य । श्रुतेः सर्वमिथ्यात्वप्रतिपादिकायाः ॥ **तदिति** ॥ प्रत्यक्षेत्यर्थः ॥ **किमुपपत्तीति** ॥ तद्वाक्यस्याप्रतो भवेदित्यनेनेत्यर्थः अनुगुणपदोपरिभागः ॥ **तद्विरोध एवेति** ॥ यदनुगुणत्वं त्वयोपपादितं तद्विरोध एव । प्रबलोपपत्तिविरोध इति यावदित्यर्थः ॥ **अकौशलेति** ॥ तात्पर्यलिङ्गानुगुणत्वं

व्युत्पादयन् भवान् प्रबलोपपत्तिरूपतात्पर्यलिङ्गविरोधं न पश्यति । तथा प्रबलोपपत्तिविरुद्धार्थं महाप्रबन्धेनोपपादयतस्तवाकौशलं प्रकटितं भवतीत्यर्थः ॥

च०— दूष्यत्वादिति ॥ 'क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमि'त्यादिनेति पूरणीयम् ॥

**सु०— ननु मा भूत्तर्कस्य विरुद्धता । तथाऽपि मिथ्याभूतोऽपि स्वाप्नोऽर्थः शुभाशुभयो रेखारोपितो वर्णोऽर्थस्य प्रतिबिम्बं च बिम्बस्य स्फटिकलौहित्यं चोपधानसन्निधानस्य वर्णदैर्घ्यादिकं चार्थभेदस्य सवितृसुषिरप्रभृतिचारिष्टस्य साधकमुपलब्धमिति प्रशिथिलमूलत्वेनाभासत्वम् । मैवम् । यतोऽत्र, यत्साधकं न तन्मिथ्या, यच्च मिथ्या न तत्साधकम् । तथा हि । स्वप्नस्य तावज्ज्ञानार्थरूपस्य सत्यतां वक्ष्यति । रेखाऽपि वर्णे पदमिवार्थे सङ्केतिता तं स्मारयतीति न किञ्चिदत्र मिथ्याऽस्ति । अत एव रेखामुपलभ्य वर्णमुच्चारयन्ति । प्रतिबिम्बस्य तु सत्यता परेणाप्यङ्गीकृता । विच्छेदस्यापि सत्यतामुपपादयिष्यामः । स्फटिकलौहित्यमप्येतेनैव व्याख्यातम् । दैर्घ्यादयोऽपि ध्वनिष्विव वर्णेष्वपि स्वाभाविका एव । अन्यथा स्वरेष्विव व्यञ्जनेष्वपि ध्यानोपधानवशेन दीर्घादिप्रतिभासप्रसङ्गात् । न तथाविधध्वनिव्यङ्ग्यं व्यञ्जनमिति चेन्न । तथात्वे वर्णेष्वेव विशेषोऽङ्गीकार्यः स्यात् । स एव दैर्घ्यादिपदाभिधेयो भविष्यति । सवितृसुषिरप्रभृतिज्ञानमेवारिष्टसूचकम् । वक्ष्यते चैतत् । एवमन्यदप्यूहनीयमिति । तस्मात्पदवाक्यप्रमाणविदामग्रेसरेण परमास्तिकेन भगवता भाष्यकारेणोक्तो भगवति स्वरूपभेदाभाव एव श्रुत्यर्थोऽवधेयः ।**

वा०— एवं विरुद्धतानिरासकत्वेन मिथ्यायाः साधकत्वं चेति भाष्यं योजयित्वा यन्मिथ्या सवितृसुषिरादि तस्य साधकत्वं न प्रतिवादिनः सिद्धम् । यस्य च स्वाप्नार्थादेः साधकत्वं प्रतिवादिनः सिद्धं तन्मिथ्यायाः साधकत्वं न, तत्साधकं मिथ्या नेति यावदिति भाष्ययोजनया; न सिद्धं चान्यसाधनमिति भाष्यस्य वा यन्सतोऽन्यत्तस्य साधकत्वं न सिद्धं, यच्च साधकं तस्य सतोऽन्यत्वं न सिद्धमिति योजनया; तर्कस्य प्रशिथिलमूलत्वनिराकरणपरत्वमस्येत्यभिप्रेत्य प्रशिथिलमूलतामाशङ्क्य निराकरोति ॥ **नन्विति** ॥ ननु विरुद्धतामभिदधतो व्यभिचारशङ्कनं नोपपद्यते । विरुद्धे उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वलक्षणव्यभिचारदूषकताबीजासम्भवादित्यतो विरुद्धत्वाभावस्योपपादितत्वात्तदभ्युपगमेन प्रत्यवस्थानान्न दोष इत्याशयेन मा भूदित्युक्तम् ॥ **रेखाऽपीति** ॥ तथाच पदस्यार्थे सङ्केतितस्यार्थस्मारकत्व-

मिव वर्णे सङ्केतितरेखाया वर्णस्मारकत्वमेव नार्थस्मारकत्वम् । अर्थप्रतीतिस्तु वर्णात्मकपदानामर्थे गृहीतसङ्गतिकानां पुंसां वर्णबुद्धिजन्येत्यर्थः ॥ **न किञ्चिदत्रेति** ॥ रेखासङ्केतवर्णबुद्धीनामेवात्र सत्त्वात्तेषु न मिथ्याभूतं किञ्चिदस्तीत्यर्थः । पूर्वत्र, जाग्रत्त्वस्य मिथ्यात्वेऽपि न साधकत्वं, साधकस्य चार्थज्ञानरूपस्य न मिथ्यात्वमिति विभागवत्प्रकृते न स इति भावः । अत एव वर्णात्मकपदानामर्थे सङ्गतिग्रहाभावे रेखादर्शनेऽपि नार्थबुद्धिः किन्तु वर्णस्मरणाधीनं वर्णोच्चारणमात्रमित्याह ॥ **अत एवेति** ॥ रेखादर्शनस्य वर्णस्मारकत्वादेवेत्यर्थः । अत एव तत्तद्देशभेदेन लिपिभेदेऽपि वर्णस्मरणं सर्वेषामविशिष्टमिति भावः । प्रतिबिम्बस्वरूपस्य मिथ्यात्वं न तावत्परमतेन नापि स्वमतेनेति तदुपन्यास एवानुचित इत्याह ॥ **प्रतिबिम्बस्येति** ॥ ननु नानुचितः तदुपन्यासः प्रतिबिम्बस्य स्वरूपेण सत्यत्वेऽपि तस्य बिम्बैक्येन साध्यावैशिष्ट्येन बिम्बसाधकत्वानुपपत्त्या विच्छेदोपेतस्य साधकत्वे वक्तव्ये विच्छेदस्य च मिथ्यात्वात्तदुदाहरणं युक्तमेवेत्यत आह ॥ **विच्छेदस्यापीति** ॥ यद्वा प्रतिबिम्बशब्देन तद्विच्छेद उच्यते बिम्बशब्देन च तद्व्यवस्थाविशेषः । एवं च 'नेक्षेतोद्यन्तमादित्यमि'त्युद्यदादित्यदर्शननिषेधेऽपि तत्प्रतिबिम्बदर्शनानिषेधः, वारिस्थसूर्यदर्शननिषेधेऽपि गगनस्थतद्दर्शनानिषेधः, प्रतिबिम्बदर्शनेऽपि दृष्ट्वा स्नायादिति शास्त्रार्थाननुष्ठानं, बिम्बस्यावदातत्वेऽपि प्रतिबिम्बस्य श्यामत्वमित्यादिव्यवस्थाया विच्छेदसाध्यत्वात्तस्य च मिथ्यात्वात्तदुपन्यास इत्यत आह ॥ **विच्छेदस्यापीति** ॥ बिम्बप्रतिबिम्बयोरैक्ये प्रमाणनिराकरणेन भेदे 'यथैषा पुरुषे छाये'त्यागमोदाहरणेन च 'अत एव चोपमे'त्यधिकरणे व्युत्पादयिष्याम इत्यर्थः ॥**स्फटिकेति**॥ स्फटिकलौहित्यस्यापि प्रतिबिम्बत्वादिति भावः । ननु ध्वानोपाधिवशेनैव दीर्घादिप्रतिभासोपपत्तेर्न वर्णेषु तत्कल्पकमित्यत आह ॥ **अन्यथेति** ॥ **तथाविधेति** ॥ दीर्घेत्यर्थः ॥ **तथात्व इति** ॥ ध्वनावेव दीर्घत्वमिति वदतः स्वरेष्विव व्यञ्जनेष्वपि दीर्घादिप्रतिभास आपाद्यत एवाविशेषादतस्तत्प्रयोजकविशेषं वर्णेष्वङ्गीकृत्य तत्परिहारेऽर्थस्याङ्गीकारान्नाममात्रे च विवादाभावेन तस्यैव विशेषस्य दीर्घादिपदाभिधेयत्वात् ध्वनावेव दीर्घत्वमिति न युक्तमिति भावः । एतच्च वस्तुगतिमनुरुध्योक्तम् । दैर्घ्यादिज्ञानस्यैव नगो नाग इत्यादावर्थविशेषप्रतीतिजनकत्वाद्दैर्घ्यादेरसत्वेऽपि तस्य सत्यत्वात्सवितृसुषिरज्ञानस्येव वक्ष्यमाणरीत्योपपत्तिरित्यपि द्रष्टव्यम् ॥ **ज्ञानमेवेति** ॥ तच्च सत्यमेवेति भावः । नन्वर्थानवच्छिन्नज्ञानस्यातिप्रसङ्गेनाहेतुत्वात्तदवच्छिन्नज्ञानस्य हेतुत्वेऽर्थस्यापि हेतुत्वं प्राप्तमेवेत्यतो ज्ञाने विषयानुपाधिकस्वसामग्र्यासादितस्वतोवैलक्षण्यस्य 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृश'मित्यादौ वक्ष्यमाणत्वान्नार्थानवच्छिन्नस्य हेतुत्वेऽप्यतिप्रसङ्ग इत्याशयेनाह ॥ **वक्ष्यति चेति** ॥ **एवमन्यदपीति** ॥ शङ्काविषेऽपि शङ्कानिमित्तभयजन्यधातुव्याकुलतैव मरणहेतुर्न विषम् । भारतयुद्धे शक्तिविशेषाद्धटोत्कचादिसृष्टं गजादि च सत्यमेवार्थक्रियाकारीत्याद्यूह्यमिति भावः । ननु श्रुतेरपौरुषेयत्वेन सर्वथाऽप्रामाण्यासम्भवादर्थान्तरस्य

चोपपन्नस्याभावात्केनचिदुपायेनोपपत्तिविरोधं परिहृत्यैतदर्थकत्वमेवाङ्गीकार्यमित्यत आह ॥ **तस्मादिति** ॥ परोक्तार्थवन्मात्राविश्वसनीयमिति भावेनोपात्तं यद्भगवानिति भाष्यकारीयविशेषणं तदुपपादनं पदेत्यादि । सम्भावकहेतुकथनं परमेति ।

**स०**—**वक्ष्यति** स्वप्नाधिकरणे ॥ **रेखापीति** ॥ अर्थे पदमिव रेखा वर्णे सङ्केतितेति योजना ॥ **अत एवेति** ॥ रेखायाः वर्णे सङ्केतितत्वादेव रेखामुपलभ्य वर्णमुच्चारयन्ति । वर्णस्य तत्रारोपितत्वेनोपलम्भो न युक्तः रजतारोपदशायां शुक्तित्वप्रकारकज्ञानाभावदर्शनादिति भावः ॥ **प्रतिबिम्बस्येति** ॥ दर्पणादिसन्निकृष्टा नायनरश्मयो दर्पणेनोपहता मुखादिकमेव विषयीकुर्वन्तीति परैरङ्गीकारादिति भावः । ननु बिम्बाभिन्नत्वेन प्रतिबिम्बस्य सत्यत्वेपि बिम्बप्रतिबिम्बविभागो न सत्य इत्यत आह ॥ **विच्छेदस्यापीति** ॥ 'अत एव चोपमे'त्यत्र ॥ **व्याख्यातमिति** ॥ **स्फटिकलौहित्यमप्येतेनेति** ॥ एतस्यापि प्रतिबिम्बसमानयोगक्षेमत्वादिति भावः । ध्वानोपधानं ध्वनिरूप उपाधिः ॥ **वक्ष्यति चैतदिति** ॥ 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशमि'त्यादिना ॥ **एवमन्यदपीति** ॥ शङ्काविषादिकमित्यर्थः ।

**प०**— यदीदं वाक्यं मिथ्या स्यान्न किञ्चिद्बोधयेदिति तर्कस्य व्यभिचारोक्त्या व्याप्तिवैकल्यमाशङ्कते ॥ **ननु मा भूदित्यादिना** ॥ **उपधानसन्निधानस्य** उपाधिसन्निधानस्येत्यर्थः । **प्रशिथिलमूलत्वेन** व्याप्तिविकलत्वेनेत्यर्थः ॥ **यतोऽत्रेति** ॥ उदाहृतस्वाप्नादिपदार्थेषु । अतो मैवमित्यन्वयः ॥ **वक्ष्यतीति** ॥ तृतीये भक्तिपादे 'सन्ध्ये सृष्टिराह हि' इत्यत्र ॥ **प्रतिबिम्बस्य त्विति** ॥ अन्यथा बिम्बस्य प्रतिबिम्बेनाभेदोक्त्ययोग इति भावः । भेदविशिष्टस्यास्ति मिथ्यात्वमित्यत आह ॥ **विच्छेदस्येति** ॥ बिम्बप्रतिबिम्बभेदस्यापीत्यर्थः ॥ **उपपादयिष्याम इति** ॥ 'पृथगुपदेशात्' 'अत एव चोपमा सूर्यकादिवत्' इत्यादाविति भावः ॥ **एतेनैवेति** ॥ प्रतिबिम्बतद्भेदयोः सत्त्वकथनेनेत्यर्थः । लौहित्यस्यापि प्रतिबिम्बत्वादिति भावः ॥ **स्वरेष्विवेति** ॥ अकारादिवर्णेष्विवेत्यर्थः ॥ 'अचः स्वरा' इत्युक्तेः ॥ व्यञ्जनेषु ककारादिष्वित्यर्थः ॥ **वक्ष्यते चैतदिति** ॥ आनुमानिकपादे 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम्' इत्यादाविति भावः ॥ **एवमन्यदप्यूहनीयमिति** ॥ शङ्काविषं च मरणस्येत्याद्यपि विषत्वशङ्काया एव मृतिहेतुत्वमित्येवंरूपेणेत्यर्थः । प्रपञ्चितमेतन्न्यायामृते 'असतः साधकत्वाभावे बाधकोद्धार'वादे । नन्वेवं श्रुतेः सर्वमिथ्यात्वार्थकत्वाभावे निरर्थकत्वेनाप्रामाण्यं स्यादित्यत आह ॥ **तस्मादिति** ॥

**या०**— **प्रतिबिम्बं चेति** ॥ अयं प्रदेशो बिम्बवान् प्रतिबिम्बवत्त्वादित्यनुमानादित्यर्थः । अत्रोदाहरणसमुदाये ॥ **यच्चेति** ॥ सवितृसुषिरप्रभृतीत्यर्थः ॥ **वर्णदैर्घ्यादिकं चेति** ॥ नगो नाग

इत्यादावित्यर्थः । सवितृसुषिरप्रभृतीत्यत्र प्रभृतिग्रहणेन 'छिद्रां छायां वा पश्येदि'त्यादिवाक्योक्तस्य ग्रहणम् ॥ **वक्ष्यतीति** ॥ भक्तिपाद इति शेषः ॥ **प्रतिबिम्बमत्यतेति** ॥ बिम्बाभिन्नत्वाङ्गीकारादिति भावः । उक्तं हि पञ्चपादिकायाम् 'अहंकर्तुरनिदमंशो बिम्बादिवत्प्रतिबिम्बं न ब्रह्मणो वस्त्वन्तरं किन्तु तदेव तदि'ति । एवंच सत्यस्यैव साधकत्वमित्याशयः । नन्वथाऽपि तद्विच्छेदस्यैव मिथ्याभूतस्यैव कार्यसाधकता दृष्टेत्यत आह ॥ **विच्छेदस्यापीति** ॥ **उपपादयिष्याम इति** ॥ 'किञ्चित्सादृश्यमपीश्वरे नासुरानृत' इत्यत्रेति शेषः ॥ **स्फटिकलौहित्यमपीति** ॥ तस्यापि प्रतिबिम्बरूपत्वादिति भावः ॥ **अन्यथेति** ॥ वर्णेषु स्वाभाविकदैर्घ्याद्यभावेन ध्वन्युपाधिकदैर्घ्याङ्गीकार इत्यर्थः ॥ **स्वरेष्विति** ॥ अकारादिष्वित्यर्थः ॥ **तथात्व इति** ॥ स्वराक्षरेष्वकारादिषु दीर्घादिध्वनिव्यङ्ग्यतावच्छेदकत्वेन कश्चन धर्मोऽङ्गीकार्यः । अन्यथा प्रागुक्तातिप्रसक्तेरिति भावः ॥ **वक्ष्यतीति** ॥ 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् । तदेवार्थक्रियाकारि तत्सदेवार्थकारकमि'त्यत्रेति शेषः । ननु तथाऽपि मिथ्याभूते स्वाप्नकामिनीसम्भोगादौ चरमधातूत्सर्गसाधकत्वं, शङ्कितविषे च मरणसाधकत्वं, दृष्टमिति व्यभिचार इत्यत आह ॥ **एवमिति** ॥ स्वाप्नकामिनीसम्भोगज्ञानस्यैव चरमधातूत्सर्गसाधकत्वं, विषशङ्काजनितधातुव्याकुलताया एव मरणसाधकत्वमित्यूहनीयमित्यर्थः ।

श्री०— **प्रशिथिलमूलत्वेनेति** ॥ मिथ्यात्वे साधकत्वं न स्यादिति तर्कस्य स्वाप्नार्थेषु व्यभिचारेण व्याप्तिरूपाङ्गवैकल्येन प्रशिथिलमूलत्वादाभासत्वमित्यर्थः । तर्के व्यतिरेकान्वयव्याप्त्योरुभयोरपि नोक्तस्थलेषु व्यभिचार इत्याशयेनाह ॥ **योऽत्रेति** ॥ स्वाप्नादिष्वित्यर्थः ॥ **सङ्केतितेति** ॥ अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा सङ्केत इति उच्यते । इदं च तार्किकरीत्यैव । स्वमते पदानामर्थैः सम्बन्धस्य स्वाभाविकताया 'नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिध्यत' इति वक्ष्यमाणत्वादित्यवधेयम् । ननु प्रत्यक्पराग्भावादिना विच्छेदो भेदस्तावद्बिम्बप्रतिबिम्बयोरुपलक्ष्यते ॥ स च मिथ्या । तथाच मिथ्याभूतस्यापि विच्छेदस्य स्वोचितार्थक्रियासाधकत्वमुपलब्धमित्यत आह ॥ **विच्छेदस्यापीति** ॥ बिम्बप्रतिबिम्बयोरैक्यखण्डनेन तद्विच्छेदस्य सत्यतोपपादयिष्यत इत्यर्थः ॥ **अन्यथेति** ॥ वर्णेषु स्वाभाविकदैर्घ्याद्यनङ्गीकार इत्यर्थः ॥ **स्वरेष्विति** ॥ दीर्घध्वनिसंबन्धेनाकारादिषु यथा दैर्घ्यादिप्रतिभासस्तथा य् व् इत्यादिव्यञ्जनेष्वपि तादृशदीर्घध्वनिसन्निधानवशेन दैर्घ्यं प्रतिभासेत । स चानुभवविरुद्धः । तथाच वर्णगताः स्वाभाविका एव दैर्घ्यादयो दीर्घध्वनिभिर्व्यज्यन्त इति भावः । शङ्कते ॥ **न तथाविधेति** ॥ यादृशदीर्घध्वनिभिः स्वराक्षराणामभिव्यञ्जनं भवति तादृशध्वनिव्यङ्ग्यं व्यञ्जनं न भवतीति न तत्र दैर्घ्यादिप्रतिभास इत्यर्थः ॥ **वर्णेष्वेवेति** ॥ तथाच स्वराक्षरादिष्वकारादिषु दीर्घध्वनिव्यङ्ग्यता-

वच्छेदकत्वेन कश्चन धर्मोऽङ्गीकार्यः । स एव दैर्घ्यादिपदवाच्यो भविष्यतीत्यर्थः ॥ **परमास्तिकेनेति** ॥ श्रुतिसिद्धार्थस्य मिथ्यात्वं वक्तुः परकीयभाष्यकारस्य नास्तिकत्वादिति भावः । **श्रुत्यर्थो** नेहनानेति श्रुत्यर्थः ॥

च०— **प्रतिबिम्बस्य सत्यतेति** ॥ बिम्बप्रतिबिम्बयोरैक्योपगतेरिति भावः ॥ **विच्छेदस्यापीति** ॥ नेक्षेतोद्यन्तमित्यादिनोद्यदादित्यदर्शननिषेधेऽपि तत्प्रतिबिम्बदर्शनानिषेधः । वारिस्थमिति-प्रतिबिम्बदर्शननिषेधेऽपि बिम्बदर्शनानिषेधः । बिम्बस्यावदातत्वेऽपि प्रतिबिम्बस्य श्यामत्वादीतिव्यवस्था-निर्वाहकस्य भेदस्येत्यर्थः ॥ **उपपादयिष्यत इति** ॥ भक्तिपाद इति पूरणीयम् ॥ **व्याख्यातमिति** ॥ तस्यापि बिम्बरूपत्वादिति भावः ॥ **स्वाभाविका एवेति** ॥ नगो नाग इत्यादाविति भावः । स्वरेषु अज्वर्णेषु । व्यञ्जनेषु हल्वर्णेषु ॥ **वक्ष्यतीति** ॥ 'सर्वभ्रमादावपि हि ज्ञानमस्त्येव तादृशमि'त्यादिनेत्युप-स्कर्तव्यम् ॥ **अन्यदिति** ॥ स्वाप्नकामिनीज्ञानादिकमेव चरमधातूत्सर्गजनकमित्यादिकमित्यर्थः ।

**सु०— नन्वत्राप्यनुपपत्तिरेव । यतो नानेति नानाभूतः प्रपञ्चोऽभिधीयते । न तु भेदः । तथात्वे नानात्वमिति स्यात् । मैवम् । मुक्तोपसृप्यव्यपदेशादित्यादाविव भावप्रधाननिर्दे-शोपपत्तेः । भवितृप्राधान्येऽपि ब्रह्मणि नानाभूतावयवगुणकर्मादिनिषेधे नानात्वमेव निषिद्धं भवति । 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामत' इति न्यायात् । उभयनिषेधे गौरवात् । विशेषणस्य प्रथमप्राप्तत्वात् । अन्यथा तदुपादानवैयर्थ्यात् । 'न जीर्णमलवद्वासाः स्नातकः स्यादि'त्यादौ दर्शनाच्च । अत एवोक्तम् । 'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषण' इति । यत्कचिद्विशिष्टविधिनिषेधाङ्गीकरणं तदगतिकतयैव । सविशेषत्वं च ब्रह्मणो वक्ष्यामः । नन्वेवं सत्यप्राप्तप्रतिषेध इति चेन्न । आभासप्राप्तत्वात् । तथाच 'न स्थानतोऽपी'त्याद्यधिकरण-पूर्वपक्षे दर्शयिष्यामः । परस्यैव स्वर्गापूर्वादिनिषेधोऽप्राप्तत्वादनुपपन्नः । 'एकमेवाद्वितीय'-मित्यादौ सजातीयविजातीयस्वगतनानात्वनिषेधं व्याकुर्वता भवताऽपि समाधातव्यमेतत् ।**

वा०— स्वपक्षे नेयमनुपपत्तिरित्याशयेन नानाभूतः प्रपञ्च इत्युक्तमिति ध्येयम् । अत्र नाना-शब्दोपस्थापितनानात्वरूपधर्मस्य नास्तीति क्रियान्वयित्वरूपप्राधान्यमभिप्रेत्यायं प्रयोगः । न चैवं नाना-शब्दाद्विशेषणतयोपस्थापितनानात्वस्याप्राधान्येन, प्राधान्येनोपस्थित्यर्थं लक्षणाया आश्रयणीयत्वात्प्रयोजना-भावेनासम्भवाच्चानुपपत्तिरेवेति वाच्यम् । रूढलक्षणात्वेन प्रयोजनानपेक्षणादित्याशयेनाह ॥ **मुक्तेति** ॥

अत एव पक्षान्तरमाह ॥ **भवित्रिति** ॥ न चैवं नानाभूतप्रपञ्चनिषेध एव प्राप्यते, न तु भगवति स्वरूपभेदाभाव इत्युक्तमिति वाच्यम् । बृहदारण्यके काठके च 'तस्मिन् शुक्लमुत नीलमाहुर्गुहां प्रविश्य तिष्ठन्तं महान्तं विभुमात्मानमि'त्येतद्वाक्यात्पूर्ववाक्येषु भगवदवयवगुणादीनां प्रकृततया किञ्चनशब्दस्य सर्वनामतयोद्देश्यसमर्पकतया चैवंधर्मानिति विशेषशब्दसन्निहितसामान्यशब्दत्वाच्च प्रकृतवाक्यशेषस्थ-गुणादिपरत्वस्यैव न्याय्यत्वात् । न चैवं गुणादिनिषेधपरत्वाङ्गीकारेऽप्यपसिद्धान्त इति वाच्यम् । नानाभूतगुणादिनिषेधस्य नानात्वरूपविशेषणे पर्यवसानाङ्गीकारेणादोषादिति भावः । अत्र मूलभूतन्याय-माह ॥ **सविशेषण इति** ॥ ननु नायं न्यायो युक्तस्तथा सति 'यदाग्नेयोऽष्टाकपालो' 'न कलञ्जं भक्षयेदि'-त्यादौ विशिष्टविधिनिषेधाभावप्रसङ्गादित्यत 'एकदेशापवादेन कल्प्यमाने तु बाधके । न सर्वबाधनं युक्तमिति न्यायविदःस्थिता' इत्युक्तानुसारेण युक्त्यन्तरं तावदाह ॥ **उभयेति** ॥ सर्वेषामपि वाक्याना-मुत्सर्गतो लाघवानुसारेणैव प्रवृत्तिरत एव 'दध्ना जुहोती'त्यादौ गुणविधित्व एव पर्यवसानं स्वीकृतमिति भावः । तर्ह्यस्तु विशेष्यमात्रविषयकत्वेन पर्यवसानं लाघवस्यैवमपि सम्भवादित्यतो लाघवाविशेषेऽपि विशेषणविषयकत्वे विशेषनियामकमाह ॥ **विशेषणस्येति** ॥ विशेष्यस्वरूपमात्रोपस्थितेर्विधिनिषेधानु-पयोगादितरव्यावृत्ततया तत्स्वरूपोपस्थितेश्च स्वत एवेतरव्यावृत्तविशेषणोपस्थितिं विनाऽयोगेन निष्कृष्ट विशेष्योपस्थितिपूर्वभावित्वं विशेषणोपस्थितेरिति भावः । यद्वाऽऽवश्यकत्वं प्रथमप्राप्तत्वादित्यनेनोच्यते-ऽतो न बुद्धेर्विरम्यव्यापारानुपपत्तिप्रसङ्ग इति द्रष्टव्यम् । एवं विशेषणविषयत्वे साधकमुक्त्वा तदविषयत्वे विशेष्यमात्रविषयकत्वे किञ्चनेत्यादिनैव पूर्णत्वान्नानेति पृथगित्यादिविशेषणवैयर्थ्यं स्यादिति बाधकं चाह ॥ **अन्यथेति** ॥ तर्हि विशेष्योपादानं तवापि न स्यादित्यतो निषेध्यधर्मिसमर्पकतया सार्थक्य-सम्भवान्न तुल्यतेत्याशयेन विशेषणविषयकत्वेन पर्यवसाने दृष्टान्तमाह ॥ **न जीर्णेति** ॥ विशेषणस्य प्रथमप्राप्तावभियुक्तसम्मतिमाह ॥ **अत एवोक्तमिति** ॥ एवं युक्त्यन्तरमुपपाद्य यत्सविशेषणे हीति न्यायेन यदाग्नेय इत्यादावपि विशिष्टविषयत्वं न स्यादिति दूषणमभिहितं तन्निराकरोति ॥ **यत्क्वचि-दिति** ॥ यदाग्नेय इत्यत्र विशेषणवद्विशेष्यस्याप्यप्राप्तत्वेन तदुद्देशेन विशेषणमात्रविधानायोगान्न कल-ञ्जमित्यादौ च विशेष्यमङ्गीकृत्य विशेषणमात्रनिषेधासम्भवेनागत्या विधिनिषेधयोर्विशिष्टविषयत्वाङ्गी-करणमिति भावः । यद्वा सविशेषणे हीति न्यायमूलभूतां युक्तिमाह ॥ **उभयनिषेध इत्यादिना** ॥ अत्र प्रतीतितो विधिनिषेधयोर्विशिष्टविषयकत्वेऽपि परीक्षकैः प्रथमप्राप्त्यादि पर्यालोच्य विशेषणविषय-कत्वमवधार्यत इति फलतो विशेषणविषयत्वम् । यथा दध्ना जुहोतीत्यादेः प्रतीतितो विशिष्ट-विधित्वेऽपि फलतो गुणविधित्वं तद्वत् । एवं च पर्यवसितप्रतीतेर्विशेषणविषयकत्वेऽपि शाब्दप्रतीते-र्विशिष्टविषयकत्वान्न विशेषणस्य प्राधान्योपस्थित्यर्थं लक्षणादीति द्रष्टव्यम् । नन्वेवं निर्विशेषत्वस्य

श्रुत्यादिसिद्धत्वान्न प्रकृतेऽपि गुणादिरूपविशेष्याङ्गीकारेण नानात्वरूपविशेषणमात्रविषयकत्वं निषेधस्य युक्तमित्यत आह ॥ **सविशेषत्वं चेति** ॥ केचित्त्वस्तु युक्तः सविशेषण हीति न्यायस्तथाऽपि सति विशेष्ये बाधे विशेषणमात्रविषयकत्वस्य तन्न्यायसिद्धतया प्रकृते च नेह नानेति निषेधस्य विशेष्यविषयकत्वेऽपि बाधकाभावान्न तन्न्यायप्रसरोऽत्रेत्याशङ्क्याह ॥ **सविशेषत्वं चेति** ॥ जन्मादिसूत्रादाविति शेष इत्याहुः । ननु परमेश्वरस्य प्रमाणान्तरागोचरतया तद्गुणादिनानात्वस्याप्राप्तत्वात्तन्निषेधानुपपत्तिरिति शङ्कते ॥ **नन्विति** ॥ यद्युगपद्भिन्नस्थानं, तद्भिन्नं दृष्टं, यथा घटादि, भिन्नस्थानश्चायमित्यादियुक्त्याभासेन प्रत्यक्षाभासेन च भगवद्रूपाणां तार्किकाद्युत्प्रेक्षितयुक्त्याभासेन च तद्गुणादीनां च नानात्वस्य प्राप्त्या तन्निषेधो युक्त एवेत्याशयेनाह ॥ **आभासेति** ॥ **अप्राप्तत्वादिति** ॥ स्वर्गादीनां प्रमाणान्तराप्राप्तत्वाच्छ्रुतिप्राप्तस्य च निषेधे श्रुतेरुन्मत्तवाक्यत्वापातादिति भावः । एकमेवेति श्रुतावेकशब्दं स्वगतभेदनिषेधकत्वेन व्याकुर्वता त्वयाऽप्यवश्यसमाधातव्यानुपपत्तिं मां प्रत्येवं प्रसञ्जयतः स्वव्याहतिरित्याह ॥ **एकमिति** ॥

स० — गौरवादेकविषयत्वे वक्तव्ये प्रथमातिक्रमे कारणाभावान्नागृहीतविशेषणान्यायाच्च विशेषणनिषेध इत्याह ॥ **विशेषणस्येति** ॥ विशेष्यविषयत्वे विशेषणवैयर्थ्यं चेत्याह ॥ **अन्यथेति** ॥ विशेषणविषयत्वेऽपि विशेष्याभिधानस्य निषेध्याधिकरणसमर्पकत्वेनानुवादत्वान्नानर्थक्यमिति भावः । अत्र दृष्टान्तमाह ॥ **न जीर्णेति** । इदं विशिष्टविषयकनिषेधस्य विशेषणे पर्यवसानोदाहरणम् । विशिष्टविषयकविधेर्विशेषणपर्यवसानोदाहरणस्य 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यादेः ग्रहणायादिपदम् । तर्हि गौरवाद्विशिष्टविधिनिषेधौ क्वापि न स्यातामित्यत आह ॥ **यत्क्वचिदिति** ॥ 'सोमेन यजेत' 'अपरपक्षे श्राद्धं कुर्वीत' 'न हिंस्यात् सर्वा भूतानि' इत्यादीत्यर्थः । नन्वत्राप्यगतिका गतिरस्ति निर्विशेषश्रुतेरित्यत आह ॥ **सविशेषत्वं चेति** ॥ जन्माधिकरणे ॥ **एकमेवाद्वितीयमित्यादौ सजातीयेति** ॥ अत्रैकपदेन स्वगतनानात्वनिषेधः । अवधारणेन सजातीयभेदनिषेधः । अद्वितीयमित्यनेन विजातीयनानात्वप्रतिषेध इति ज्ञातव्यम् । यथाऽऽह, 'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः । वृक्षान्तरात् सजातीयो विजातीयः शिलादितः । तथा सद्वस्तुनो भेदत्रयं प्राप्तं निषिध्यते । ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमादि'ति ॥

प० - विशिष्टस्य विशेष्यस्य वा कुतो न निषेध इत्यत आह ॥ **उभयेति** ॥ **तदुपादानवैयर्थ्येति** ॥ नानेतिपदोपादानवैयर्थ्यात् । किञ्चनेत्यनेनैव सर्वनिषेधप्राप्तेरिति भावः ॥ **न जीर्णेति** ॥

जीर्णत्वमलिनत्वरूपविशेषणनिषेधस्यैव तत्र दर्शनादित्यर्थः । **उक्तं** प्राभाकरैरित्यर्थः ॥ **यत्क्वचिदिति** ॥ दण्डी नास्तीत्यादाविति भावः । ननु सविशेषणे हीतिन्यायो विशेष्यबाधे सत्येवेति वदन्तं प्रत्याह ॥ **सविशेषत्वं हीति** ॥ जन्माधिकरणे पराभिमताखण्डत्वनिरासपूर्वमनन्तगुणवत्वलक्षणं सविशेषत्वं वक्ष्याम इत्यर्थः । तथाच किञ्चनेतिपदोक्तधर्मनिषेधायोगाद्भेदस्यैव निषेध इति भावः । प्रपञ्चितश्चैतच्छ्रुत्यर्थो न्यायामृते । 'न स्थानतोऽपी'ति भक्तिपादे ॥ **समाधातव्यमेतदिति** ॥ अप्राप्तनिषेधचोद्यं श्रुतितात्पर्याभासयुक्त्याभासप्राप्तत्वात्सजातीयादिभेदस्येति समाधातव्यमित्यर्थः ॥

**या०**— नागृहीतविशेषणन्यायेनापि विशेषणनिषेध एवार्थ इत्याह ॥ **विशेषणस्येति** ॥ **तदुपादानेति** ॥ विशेषणोपादानेत्यर्थः । धर्मिनिषेधे धर्मनिषेधस्यापि लाभादिति भावः । नन्वेवं भवत्पक्षेऽपि किञ्चनेतिविशेष्योपादानं व्यर्थमापन्नमित्याशङ्कां परिहरन्सविशेषणे हीति न्यायस्योदाहरणमाह ॥ **न जीर्णेति** ॥ अत्र यथा स्नातकनिषेधाभावेऽपि विशेषणनिषेधाश्रयसमर्पकत्वेनानुवादकत्वान्न स्नातकपदवैयर्थ्यं तथा प्रकृतेऽपि किञ्चनपदावैयर्थ्यमिति भावः । नागृहीतविशेषणन्यायस्यापि स्वोत्प्रेक्षितत्वशङ्कापरिहाराय परीक्षकसम्मतमुदाहरणं दर्शयति ॥ **अत एवेति** ॥ नागृहीतविशेषणन्यायादेवेत्यर्थः । एवं चाभिधान्यायेनात्रापि निषेधो विशेषणेनैवान्विततया क्षीणशक्तिर्विशेष्यान्वितो न भवतीति भावः । तर्हि क्वापि विशिष्टविषयौ विधिनिषेधौ न स्यातामित्यत आह ॥ **यत्क्वचिद्विशिष्टेति** ॥ 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती'त्यादौ विशिष्टकर्मविधानादनेकेषामपि गुणानां विधिः सिध्यतीत्युक्तं भेदलक्षणे । अन्यथाऽनेकगुणविधाने वाक्यभेदप्रसङ्गेनागतेः । वैदिकं विशिष्टनिषेधोदाहरणं चिन्त्यम् । नन्वत्राप्यगतिरेव निर्विशेषत्वश्रुतेरित्यत आह ॥ **सविशेषत्वमिति** ॥ **वक्ष्याम इति** ॥ जन्माधिकरणादाविति शेषः ॥ **अप्राप्तेति** ॥ भगवदवयवगुणकर्मादिनानात्वस्याप्राप्तत्वादिति भावः ॥ **दर्शयिष्याम इति** ॥ तत्र हि यद्युगपद्भिन्नस्थानं तद्भिन्नं दृष्टम यथा घटादि, भिन्नस्थानश्चायमित्यतो भिन्न एवेति भवेत् । भिन्नानां च तारतम्यमनुग्राह्यानुग्राहकभावश्चोपलब्ध इति तत्प्रसङ्गोऽपीति युक्त्याभासप्राप्तिं तथा 'कार्यकारणबद्धौ ता'वित्यादिश्रुत्याऽऽपातप्रतीतभिन्नत्वादिप्राप्तिं च दर्शयिष्याम इत्यर्थः । इत्याद्यधिकरणेत्यत्रादिपदेनाहिकुण्डलाधिकरणसङ्ग्रहः । तत्रापि क्रियाणां ज्ञानादिगुणानां चास्राक्षीत् सृजति स्रक्ष्यति व्यज्ञासीत् जानाति ज्ञास्यतीत्यादिश्रौतव्यवहारैरनित्यतयाऽवगतानां भगवता नाभेदो युज्यत इत्यादिरूपां प्राप्तिं दर्शयिष्याम इत्यर्थः ॥ **एकमेवाद्वितीयमित्यादाविति** ॥ अत्रैकपदेन स्वगतनानात्वप्रतिषेध इत्यवगन्तव्यम् । यथाऽऽह । 'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः । वृक्षान्तरात्सजातीयो विजातीयः शिलादितः । तथा सद्वस्तुनो भेदत्रयं प्राप्तं निषिध्यते । ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमादि'ति ।

श्री० — **विशेष्यं नाभिधा गच्छेदिति** ॥ अभिधा शक्तिः । अयमर्थः । जातिविशिष्टव्यक्तौ पदानां शक्तिरिति तार्किकैरुच्यते । तत्र मीमांसको वदति । अगृहीतविशेषणा बुद्धिर्विशेष्ये न प्रवर्तत इत्यादौ गवादिपदानां वाच्यतया जातिं गृहीत्वा पश्चात्तद्विशिष्टव्यक्तौ शक्तिर्वाच्या । तथाच गोत्वादिजातावेव गवादिपदानां शक्त्या सर्वस्योपपत्त्या विशेषण एव क्षीणशक्तित्वादभिधा विशेष्यं न गच्छतीति । ननु तर्हि गामानयेत्युक्ते व्यक्तिलाभः कथमिति चेत् । आक्षेपात् व्यक्तिं विना केवलगोत्वजातेरानेतुमशक्यत्वात्तदन्यथाऽनुपपत्त्या व्यक्तिलाभ इति द्रष्टव्यम् । ननु तत्र सति विशेष्यबाध इत्युक्तत्वान्नात्र विशेष्यबाधोऽस्ति । ब्रह्मणि गुणादेरप्रामाणिकत्वादित्यत आह ॥ **सविशेषत्वं चेति** ॥ अवयवगुणकर्मादिविशेषसाहित्यमित्यर्थः ॥ **एवं सतीति** ॥ नेहनानेतिवाक्यस्य भगवति स्वगतभेदनिषेधकत्व_ व्याख्यान इत्यर्थः ॥ **अप्राप्तेति** ॥ भगवति स्वगतभेदस्याप्राप्तत्वादित्यर्थः ॥ **स्वर्गापूर्वेति** ॥ श्रुत्या प्राप्तस्यैव श्रुत्या प्रतिषेधे श्रुतेरुन्मत्तवाक्यत्वं स्यादिति भावः ॥

च० — **नानाभूतः** नानात्वं प्राप्तः । भूप्राप्तावात्मनेपदी । आधृषाद्वेति विभाषितो णिच् ॥ **भावप्रधानेति**॥ प्रकृतिजन्यबोधीयप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारतोपन्नो हि भावस्तन्मुख्यविशेष्यकशाब्दधीजनक इत्यर्थः । 'एकदेशापवादेन कल्प्यमाने तु बाधके । न सर्वबाधनं युक्तमिति न्यायविदः स्थिता' इत्यभियुक्तवचनमनुसन्धान आह ॥ **उभयेति** ॥ विशेष्यमात्रविषयकत्वपर्यवसानेन लाघवसम्भवेऽपि विशेषणविषयकतयैव निर्देशोपपत्तेरित्यर्थः ॥ **भवितृप्राधान्येऽपीति** ॥ नानापदस्य लक्षणानुपगमेनाश्रयमुख्यविशेष्यकान्वयधीजनकत्वोपगमेऽपीत्यर्थः ॥ **न्यायादिति** ॥ स्वर्गी ध्वस्त इत्यादिवदिति भावः । लाक्षणिके 'नागृहीतविशेषणबुद्धिर्विशिष्टमवगाहत' इति न्यायेन पर्यवसानमुपेयमित्याह ॥ **विशेषणस्येति** ॥ **तदुपादानेति** ॥ विशेषणोपादानेत्यर्थः । विशेषणविषयकतयैव पर्यवसानं निदर्शनप्रदर्शनेन द्रढयति ॥ **न जीर्णेति** ॥ विशेषणनिषेधाश्रयसमर्पकतयानुवादकत्वेन स्नातकपदं सार्थकमिति भावः । उक्तार्थेऽभियुक्तवचनं प्रमाणयति ॥ **उक्तमिति** ॥ यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीत्यादौ विशिष्टकर्मविधानादनेकेषां गुणानां विधिः सिध्यतीति भेदलक्षणीयसिद्धान्तो भज्येतेत्यत आह ॥ **यत्किञ्चिदिति** ॥ **अगतिकतया** ॥ अनेकगुणविधाननियन्त्रितवाक्यभेदप्रसङ्गेन । दण्डदेवदत्तरूपविशेषणविशेष्यवृत्तिप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकाभावद्वयसमवधानदशायां दण्डी नास्तीत्यादिकमेव विशिष्टनिषेधस्योदाहरणम् । ननु ब्रह्मण एव निर्विशेषतया तद्गतविशेषेषु नानात्वनिषेधन एव तात्पर्यमित्युक्तिः कथं सङ्गच्छत इत्यत आह ॥ **सविशेषत्वमिति** ॥ जन्मादिनय इति पूरणीयम् ॥ **आभासेति** ॥ भगवद्रूपविशेषाः परस्परं भिन्ना एकक्षणावच्छिन्ननानाधिकरणनिरूपिताधेयता-

कत्ववद्धटपटादिवदिति युक्त्याभासप्रत्यक्षाभासश्रुतितात्पर्यभ्रमादीत्यर्थः । इत्यादीत्यादिपदेनाहिकुण्डलनयः परिगृह्यते । तत्रापि भागवतगुणक्रियादीनामीशात् भेद एवोपेतव्य इति पूर्ववादिमतं दर्शयिष्याम इत्यर्थः ॥ **स्वगतनानात्वेति** ॥ एकमेवेत्यादावेकपदेन स्वाश्रितगुणक्रियादिप्रतियोगिकस्यैवकारेण जीवप्रतियोगिकस्याद्वितीयपदेन जडप्रतियोगिकस्य च नानात्वस्य निषेधमित्यर्थः ।

अनु०— **साधकत्वं सतस्तेन साक्षिणा सिद्धिमिच्छता ॥**
**स्वीकृतं ह्यविशेषस्य साध्या साधकता पुनः ॥**
**तच्चाविशेषमानेन साध्यमित्यनवस्थितिः ॥**

सु०— **ननु यथा भवतो मिथ्याभूतस्य साधकत्वं न सम्मतम् । तथा मम सत्यस्य साधकत्वं न सम्मतम् । चैतन्यातिरिक्तस्य सत्यताऽनभ्युपगमात् । चैतन्यस्य च क्रियावेशशून्यस्य साधकत्वायोगात् । तत्र यथा मिथ्याभूतस्य साधकत्वानभ्युपगमेन श्रुतेर्मिथ्यात्वेऽसाधकत्वप्रसङ्गान्न बन्धमिथ्यात्वसाधकतेत्युक्तं भवता । एवं मयाऽपि सत्यस्य साधकत्वमनभ्युपगच्छता वक्तुं शक्यत एव । प्रत्यक्षस्य सत्यत्वे साधकत्वं न स्यात् । मिथ्यात्वं तु त्वयैव नोपेयते । ततश्च प्रत्यक्षस्यापि बन्धसत्यत्वसाधकत्वाभावा'न्मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधत' इत्यनुपपन्नमिति । एवं च प्रथममेव मतिकर्दमे कथारम्भणमशक्यमापद्येत । तेनाविचार्यैव तावत्प्रमाणसदसत्त्वं विचार आरब्धव्य इति । मैवम् । दुःखादिसत्यताग्राहिणः प्रत्यक्षस्य सत्यत्वेऽप्यविरोधात् । सतः साधकत्वं मया न स्वीकृतमित्युक्तमिति चेत्तत्राह ॥ साधकत्वमिति ॥ तेन मायावादिना । भावरूपाज्ञानस्येति शेषः । हिशब्दो हेतौ । प्रसिद्धिद्योतको वा । मायावादिना खलु भावरूपाज्ञानं सिषाधयिषता 'प्रत्यक्षं तावदहमज्ञो मामन्यं च न जानामीत्यपरोक्षावभासदर्शनादि'त्यादिना तत्साधनाय साक्षिप्रत्यक्षं प्रमाणमङ्गीकृतम् । आश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्यमित्याद्युत्तरवाक्येन प्रत्यक्षस्य साक्षित्वावगमात् । एवं च साक्षिणाऽज्ञानसिद्धिमिच्छता परेण सतः साधकत्वं स्वीकृतमेव । साक्षिचैतन्यस्य सत्त्वात् । अतो मया सतः साधकत्वं नाङ्गीकृतमिति न शक्यते वक्तुम् । अस्माभिरपि दुःखादिबन्धसत्यतायां साक्षिप्रत्यक्षमेवोपन्यस्तमिति हृदयम् । अज्ञानवशादेव साक्षिणः साधकत्वं मयाऽङ्गीक्रियते । न स्वत इति चेन्न । इतरेतराश्रयत्वप्रसङ्गात् । न खलु साक्ष्यवभासादन्याऽज्ञानसत्ता तवास्ति । ततोऽज्ञाने सति साक्षिणः साधकत्वसिद्धिस्तस्यां चाज्ञान-**

सिद्धिरिति कथं नेतरेतराश्रयत्वम् । द्वयोरनादित्वादेवमिति चेत् । तदज्ञानवशादिति रिक्तं वचः । न हि सर्वथा यद्यदपेक्षते तत्तदधीनमिति युज्यते । अपेक्षायां तु परस्पराश्रयानुत्तारः ।

वा०— ननु 'साधकत्वं सतस्तेने'त्यादिभाष्ये मायावादिसम्बन्धिसत्साधकत्वाङ्गीकारव्युत्पादनमसङ्गतं फलाभावात् । न चासतः साधकत्वाभावे सतोऽपि तन्न स्यादिति प्रतिबन्दीमोचनं तत्फलमिति वाच्यम् । मूलाभावेन परस्य सतः साधकत्वाङ्गीकारायोगात् । योगे वा प्रत्यक्षादेः साधकत्वेनास्माभिरनुपन्यस्तत्वेन मां प्रति प्रतिबन्द्याऽनुत्थानात् । न च प्रत्यक्षादेः साधकत्वेनानुपन्यासेऽपि बाधकत्वेन त्वयोपन्यासात्स्वपक्षासाधकस्य च परपक्षबाधकत्वासम्भवात्तत्खण्डयितुं युक्ता प्रतिबन्दीति वाच्यम् । मदुक्तविरोधोपन्यासस्य परोक्तसाधकनिरासार्थत्वेन प्रतिबन्दीग्रहणेन प्रत्यक्षादेर्बाधकत्वासम्भवेऽपि प्रतिपक्षत्वसम्भवेन परोक्तस्य साधकत्वानिर्वाहेन व्यर्थत्वादित्यत आस्तामियं प्रमाणसदसत्त्वचिन्ता प्रमाणैनैव प्रमेयसिद्धेः । अन्यथा त्वयाऽपि मिथ्यात्वनिराकरणे सत्यतासाधने च प्रत्यक्षादिप्रमाणोपन्यासस्य, सत्साधकत्वस्य प्रतिवाद्यनङ्गीकारेणासत्साधकत्वस्य च स्वानङ्गीकारेणाशक्यतयाऽऽवयोः साधकबाधकोपन्यासस्याशक्यतया वा कथाभावप्रसङ्गात्सत्त्वासत्त्वौदासीन्येन प्रमाणेनैव कथाप्रवृत्तेरुभाभ्यामपि स्वीकार्यतया मिथ्यात्वसाधकतया श्रुत्याद्युपन्यासो ममाप्युपपन्न एवेति परेण शङ्किते मदुपन्यस्तप्रमाणस्योभयसिद्धसाधकभावतया प्रमाणसदसत्त्वविचारपूर्वककथाप्रवृत्तावपि मम न काऽपि क्षतिरित्याशयेन भाष्यकृता स्वप्रमाणस्योभयसिद्धसाधकभावः प्रदर्श्यत इति नासङ्गतिरित्यभिप्रेत्योत्तरभाष्यं योजयति ॥ नन्विति ॥ भाष्ये साध्यानुक्तेः साध्यमध्याहृत्य तत्र प्राप्तप्रतिबन्दीमोचनाय हेतुकथनपरं भाष्यमवतारयति ॥ दुःखादीति ॥ प्रतिवादिन इति प्रकृतस्य परामर्शे मायावादिनः सत्साधकत्वस्वीकारानुपन्यासेन प्रकृतानुपयोगापत्तिस्त्वयेति सन्निहितप्रकृतस्यापि मायावादिन आपरोक्ष्येण निर्दिष्टस्य तेनेति पारोक्ष्येण परामर्शानुपपत्तिरित्यतः प्रकृतत्वमात्रविवक्षया मायावादिपरामर्शोऽयमित्याह ॥ तेनेति ॥ दुःखादेः प्रकृतत्वात्तस्य साधकत्वमित्यनेन सम्बन्धे साक्षिणो दुःखादिसाधकत्वस्य स्पष्टं परेणानुपन्यासादाह ॥ भावेति ॥ स्वीकार्यत्वाभिप्रायेण स्वीकृतत्वोक्तिरौपचारिकीति भावेनाह ॥ प्रसिद्धीति ॥ इत्याद्युत्तरवाक्येनेत्यत्रादिपदेन 'भावान्तरस्याज्ञानस्य न निवर्तकं तस्याज्ञानविषयप्रतिभासत्वादि'त्यादेः सङ्ग्रहः । नन्वेतावताऽपि सत्साधकमित्युक्तिस्तदीया नास्तीति न तत्सिद्धिरित्यत आह ॥ एवं चेति ॥ नन्वज्ञानसाधकस्य साक्षिणः सत्यत्वेऽपि दुःखादिसत्यतासाधकप्रत्यक्षादिसत्यताया किमागतम् । न च यत्सत्यं तन्न साधकमिति परव्याप्तिभङ्गेन प्रत्यक्षादेः सत्यत्वेऽपि साधकत्वसिद्धिरिति वाच्यम् । साक्षिव्यतिरिक्तसत्यं न साधकमिति

परेण व्याप्त्यभ्युपगमात् । न चाप्रयोजकत्वम् । एवमप्युभयसिद्धप्रमाणाभावेन मतिकर्दमे कथाभावप्रसङ्गस्तदवस्थ एवेत्यतोऽज्ञानसाधकसत्यसाक्षिण एव दुःखादिसत्यतासाधकतयोपन्यासान्न क्षतिरित्याह ॥ **अस्माभिरपीति** ॥ अज्ञानवशात्साक्षिणः साधकत्वं वदता कूटस्थचैतन्यरूपसाक्षिण एव साधकत्वमज्ञानं तु तत्र सहकारीति वा वक्तव्यम् । अविद्यावृत्तिप्रतिबिम्बितचैतन्यमेव साक्षी स एवाज्ञानसाधक इति वा वक्तव्यम् । तत्र प्रथमेऽज्ञानस्य सहकारिमात्रत्वेऽपि साधककूटस्थचैतन्यस्य सत्त्वात्सतः साधकत्वमक्षतमेवेति सतः साधकत्वं पराभ्युपगतमिति मदिष्टसिद्धिरेव । पक्षद्वयेऽपि साक्षिसाधकत्वसिद्धेरज्ञानसापेक्षत्वादितरेतराश्रयश्च स्यादित्याह ॥ **इतरेति** ॥ ननु साक्षिणः साधकत्वसिद्धेरज्ञानाधीनत्वेऽपि नाज्ञानस्य साक्षिसाधकत्वसिद्ध्यधीनत्वम् । तदसिद्धावपि व्यावहारिकाज्ञानादेः सत्त्वसम्भवादित्यतः कालान्तरीयब्रह्मज्ञानबाध्यत्वेन व्यावहारिकत्वमङ्गीकुर्वताऽपि त्वयाऽज्ञानादौ पारमार्थिकार्थगतसत्त्वानङ्गीकारात् सत्त्वेन प्रतीतिमात्रमेव सत्तेत्येव वक्तव्यतया सत्त्वेन साक्ष्यवभासरूपाज्ञानसत्तायाः साक्षिसाधकत्वसिद्ध्यधीनता अस्त्येव । वियदादेः सद्भावे प्रतीतिनियमाभावेन तत्रार्थगतमायिकसत्त्वाङ्गीकारेऽप्यविद्यादिसद्भावे तत्प्रतीत्यभावाभावेन तत्र तत्प्रतीतेरेव तत्सत्तारूपत्वस्याविद्यादिप्रातिभासिकत्वं वदता त्वयाऽप्यभ्युपगमाच्च तत्सत्तायाः साक्षिसाधकत्वसिद्ध्यधीनत्वाद्युक्तमितरेतराश्रयत्वमित्याह ॥ **न खल्विति** ॥ तवेत्यस्य आत्मातिरिक्तसर्वापारमार्थिकत्ववादिन इति विशिष्याविद्याविद्यकादेः प्रातिभासिकत्ववादिन इति चार्थः । अनादित्वं वदता किं सर्वथाऽनपेक्षाऽभिमतोतान्यत्रापेक्षायामुत्पत्तौ तदभावः । नाद्य इत्याह ॥ **तर्हीति** ॥ न द्वितीय इत्याह ॥ **अपेक्षायामिति** ॥

स०— **मतिकर्दमे** मतिकालुष्ये अतिकर्दम इति वा । सिसाधयिषतेत्यस्य साक्षिप्रत्यक्षमिति वक्ष्यमाणेन संबन्धः । प्रत्यक्षं तावदित्यादिपरकीयं वाक्यमिति विवेकः । परेण साक्षिप्रत्यक्षं प्रमाणीकृतमित्यत्र ज्ञापकमाह ॥ **आश्रयप्रतियोगीति** ॥ ननु साक्षिचैतन्यस्य सत्त्वाभ्युपगमेऽपि चक्षुरादिप्रत्यक्षस्य साक्ष्यतिरिक्तस्य सत्यत्वे साधकत्वं न स्यादिति मयोच्यत इत्यत आह ॥ **अस्माभिरिति** ॥ **इतरेतराश्रयप्रसङ्गादिति** ॥ घटादौ प्रतीतिविषयत्वातिरिक्तस्यैव प्रतीतिविषयत्वरूपसत्यत्वमात्रवत्यज्ञानादौ अतिरिक्तस्वरूपसत्यत्वस्याभावेन तादृशस्वरूपसत्त्वस्य च साक्षिसाधकत्वसिद्ध्यधीनत्वादिति भावः ॥ अनादित्वादिति वदता किं सर्वथा परस्य परापेक्षाभावोऽभिप्रेत उतोत्पत्त्यादौ । नाद्य इत्याह ॥ **तर्ह्यज्ञानवशादितीति** ॥ नान्त्य इत्याह ॥ **अपेक्षायामिति** ॥

प०— **क्रियाविशेति** ॥ औदासीन्यप्रच्युतिहीनस्येत्यर्थः ॥ **मतिकर्दम इति** ॥ बुद्धिकालुष्य इत्यर्थः । प्रसिद्धिद्योतक इत्युक्तं व्यनक्ति ॥ **मायावादिना खल्विति** ॥ **आश्रयेति** ॥ अज्ञानाश्रय-

प्रतियोगिनोर्ज्ञानेत्यर्थः । प्रतियोगिपदेनात्राज्ञानविषयो ध्येयः । हेताविरयुक्तम् । तद्व्यनक्ति ॥ **अतो मयेति** ॥ यस्मात्सतः साधकत्वं तेनापि स्वीकृतमत इत्यर्थः । अस्त्वज्ञानादिसाधकं साक्षिरूपं सत्यं दुःखादिसाधकं प्रत्यक्षं कथं सत्यमित्यत आह ॥ **अस्माभिरपीति** ॥ साक्षिणः साधकत्वं नेति भावेन आशङ्कते ॥ **अज्ञानवशादेवेति** ॥ इतरेतराश्रयत्वं व्यक्तीकर्तुमाह ॥ **न खल्विति** ॥ **द्वयोरिति** ॥ अज्ञानसाक्षिणोरित्यर्थः ॥

**या०— मतिकर्दमे** बुद्धिकालुष्ये । ननु सतः साक्षिणः साधकत्वेऽपि तदतिरिक्तस्य चाक्षुषादिप्रत्यक्षस्य न सतः साधकत्वं मया स्वीक्रियत इत्यत आह ॥ **अस्माभिरपीति** ॥ परस्परसत्तायां परस्परापेक्षितत्वेन खल्वत्रेतरेतराश्रयत्वं परस्याभिप्रेतं न ज्ञप्तौ । तथा चाज्ञानज्ञप्तेः साक्षिसाधकत्वसिद्ध्यधीनत्वेऽपि नाज्ञानसत्तायास्तदधीनत्वमतो नेतरेतराश्रयत्वमित्यत आह ॥ **न खलु साक्ष्यवभासादिति** ॥ अज्ञानस्य प्रातिभासिकत्वाङ्गीकारादिति भावः ॥

**श्री०— साधकत्वायोगादिति** ॥ सिद्धिकर्तृत्वरूपसाधकत्वायोगादित्यर्थः । तत्प्रत्यक्षं चक्षुरादिकं किं न स्यादित्यत आह ॥ **आश्रयेति** ॥ ननु दुःखादिबन्धस्य सत्यतायां प्रत्यक्षविरोधत इति भवद्भिश्चक्षुरादिप्रत्यक्षस्यैव प्रमाणतया भवदभिप्रेतत्वात्तस्य च मया सत्त्वानङ्गीकारात्कथं सतः साधकत्वं तेन स्वीकृतमित्युच्यत इत्यत आह ॥ **अस्माभिरपीति** ॥ **न खल्विति** ॥ अज्ञानस्य प्रातिभासिकत्वेन प्रतिभासमात्रशरीरत्वादिति भावः । द्वयोरज्ञानसाक्षिणोः ॥ **न हीति** ॥ किञ्चिदुपकाराभावे तदधीनताया एव मृषात्वादिति भावः ।

**च०—** साधकाभिमतानां साक्षीतरेषां सत्यता मया नोरीक्रियत इत्यत आह ॥ **अस्माभिरपीति** ॥ **साक्ष्यवभासादिति** ॥ अज्ञानस्य प्रातिभासिकत्वोपगतेरिति भावः ॥

**सु०— एवमुभयवादिसम्प्रतिपन्नं प्रमाणं स्वमतेऽस्तीति दर्शयितुं सत्यस्य साक्षिणोऽज्ञानसाधकत्वं पराभ्युपगतमुपन्यस्तम् । साम्प्रतं प्रसङ्गात्तदपि नोपपद्यत इत्याह ॥ अविशेषस्येति ॥ भावरूपमज्ञानमनिच्छन्तं प्रति हि तत्र साक्षिप्रत्यक्षं प्रमाणमुपन्यस्तम् । न च तदुचितम् । साक्षिणोऽशेषविशेषविधुरत्वाङ्गीकारात् । अविशेषस्य साधकता तु परं प्रति त्वया साध्यैव । न तु सिद्धा । यत्साधकं करणं वा फलं वा नित्यं वा ज्ञानं तत्सर्वं जात्यादि-**

विशेषवत् । यच्च निर्विशेषं शशविषाणादि न तत्साधकमिति परेण नियमस्याङ्गीकृतत्वात् । न ह्यसम्प्रतिपन्नसाधकभावं कस्याप्यर्थस्य साधनायोपन्यासमर्हति । अतिप्रसङ्गात् । ननु प्रमाणं वस्तुसिद्धावुपयुज्यते । तत्सविशेषत्वं तु किमर्थमिति चेत्सत्यम् । निर्विशेषस्य प्रामाण्यमेव नोपपद्यत इति तदर्थमेव विशेषानुसरणम् । न हि साधकतमत्वादिविशेषाभावे प्रामाण्यं शक्यनिर्वाहम् । साक्षिण्यारोपिततयैवाज्ञानं सिद्ध्यति । न ततोऽतिरिक्तं साधकत्वं तस्येति चेत् । न तर्हि सुतरां साक्षिणाऽज्ञानसिद्धिः । प्रकाशाश्रयं तमः प्रकाशेनैव सिद्ध्यतीत्यस्यार्थस्याविशेषवादिना भवता परं प्रत्युपपादयितुमशक्यत्वात् । किञ्चाज्ञानमारोपितमपि साक्षिणो विषयो न वा । आद्ये विषयित्वं साक्षिण्यापतितम् । द्वितीये साक्षित्वमेवानुपपन्नम् । 'साक्षाद्द्रष्टरि संज्ञायामि'ति निर्वचनासम्भवात् । अतद्विषयेण तत्सिद्धिरलौकिकी । निर्विशेषस्याप्यज्ञानवशात्साक्षित्वमिति च निरस्तम् । यस्तु वैय्यात्याद्ब्रवीति । सिद्धप्रामाण्यमिव साध्यप्रामाण्यमपि प्रमाणं प्रयोगार्हमेव । अन्यथा शब्दानित्यत्वे कृतकत्वमुपन्यस्य परेणान्यतरासिद्धावुद्भावितायां तत्साधनस्फूर्तिमताऽपि तूष्णीं भवितव्यम् । अहं चाविशेषस्य साक्षिणः साधकत्वं विप्रतिपत्तौ साधयिष्यामीति । स प्रष्टव्यः । किं सविशेषेण प्रमाणेनैतत्साध्यते । उताविशेषेणेति । नाद्यः । तस्य तव मिथ्यात्वात् । परेण चोक्तन्यायेन तस्य साधकत्वानभ्युपगमात् । अतो द्वितीय एवाङ्गीकर्तव्य इत्याह ॥ तच्चेति ॥ किमतः । इदं ततः । तदविशेषप्रमाणं किं साक्ष्युतान्यत् । आद्ये अन्योन्याश्रयत्वम् । साक्षिणः साधकत्वसिद्धावविशेषस्यापि साधकत्वमित्येषोऽर्थः सिद्ध्यति । तत्सिद्धौ च साक्षिणः साधकत्वसिद्धिरिति । न द्वितीयः । तदभावात् । अविशेषान्तराङ्गीकारे दूषणमाह ॥ इत्यनवस्थितिरिति ॥ तस्यापि अविशेषस्य साधकत्वमविशेषप्रमाणेनैव साध्यमित्युपपादनमितिशब्देन सूचयति । ननु चाविशेषस्य साध्या साधकतेति प्रकृतमतः सा चेति परामर्शो युक्तः । सत्यम् । तथाऽपि प्राग्यन्मिथ्याभूतस्यापि साधकत्वं प्रमाणविकल्पनिराकरणेन निरस्तं तत्सविशेषत्वादिविकल्पनिराकरणेनापि निराकरणीयमिति सूचनाय सामान्येन नपुंसकनिर्देशः । एतेन प्राग्विकल्पितः सताऽऽत्मभूतेनेति पक्षोऽपि निरस्तो वेदितव्यः ।

वा० — नन्वविशेषस्येत्यादिभाष्येऽविशेषस्य साधकत्वनिराकरणेऽसङ्गतिः प्रकृतसाक्षिसाधकत्वनिराकरणे च पूर्ववाक्ये तदनुपन्यासानुपपत्तिर्निराकर्तव्यत्वे च पराभ्युपगततयाऽप्युपन्यासो व्यर्थ एव । सार्थक्ये वा तावताऽपि प्रकृतस्वेष्टसिद्ध्या तन्निरासोऽसङ्गत एवेत्यत आह ॥ तदेतमिति ॥ नन्वविशेष-

स्येत्यविशेषस्य साधकताया अप्रस्तुतत्वात्तदसिद्धत्वकथनमसङ्गतम् । न च साक्षिणोऽविशेषस्य साधकत्वं प्रस्तुतमेवेति वाच्यम् । तथाऽपि साक्षिणोऽविशेषस्याज्ञानसाधकत्वं वदतो ममाविशेषसाधकताया अपि सिद्धतया तदसिद्धिकथनायोगात् । न च प्रतिवादिना स्वापेक्षया तदसिद्धिकथनमिति वाच्यम् । भावरूपाज्ञानवादिना स्वेनापि प्रमाणान्तराभावेन साक्षिण एव तत्साधकत्वेन तस्य च निर्विशेषतया तत्साधकतायाश्च स्वीकार्यत्वेन स्वापेक्षतयाऽपि तदसिद्धिकथनानुपपत्तेरित्यतो भावरूपाज्ञानं येन प्रतिवादिना स्वीकृतं तेनापि साक्षिणः सविशेषत्वमुपपाद्य स्वमते साक्षिणाऽज्ञानसिद्धेर्वक्तुं शक्यतया त्वया च साक्षिणो निर्विशेषत्वाङ्गीकारात्तस्य चाज्ञानसिद्धौ साधकत्वेनोपन्यासे प्रतिवादिना स्वापेक्षया निर्विशेषस्य साधकत्वासिद्धेर्वक्तुं शक्यत्वात् । अस्तु वा भावरूपाज्ञानवादिनः स्वापेक्षया निर्विशेषस्य साधकत्वासिद्धेरशक्यकथनीयत्वम् । तथाऽपि न तं प्रति तव भावरूपाज्ञानसाधनं वैयर्थ्यप्रसङ्गात् । किन्तु भावरूपाज्ञानमनङ्गीकुर्वाणं प्रत्येव । तेन च निर्विशेषस्य साधकताया अनङ्गीकार्यत्वात्तेन स्वापेक्षया तदसिद्धिरुद्भावयितुं शक्यैवेत्याशयेन मूलं योजयितुं ततः पूर्ववक्तव्यं तावदाह ॥ **भावरूपमिति** ॥ इदानीं मूलं योजयति ॥ **अविशेषस्येति** ॥ असिद्धौ वक्तव्यायां साध्यत्वोक्तिर्न श्लिष्टेत्यतः साध्येत्यस्य सावधारणतयाऽनया वाचोभङ्ग्या सैवोक्ता भवतीत्याशयेनाह ॥ **न त्विति** ॥ ननु परं प्रत्यविशेषसाधकताया असिद्धिमात्रेण न तदसाधकत्वं भवतीत्यत आह ॥ **न हीति** ॥ अनित्यतासाधकत्वेनासम्मतचाक्षुषत्वस्य, आगमादेः प्रामाण्यमनङ्गीकुर्वन्तं प्रति तस्य, शशविषाणादेश्च साधनायोपन्यासापत्तेरित्यर्थः । पराभिप्रेतनियमेऽप्रयोजकत्वं शङ्कते ॥ **नन्विति** ॥ ननु साक्षिणोऽज्ञानसाधकत्वं नाम यदि परमार्थसदज्ञानप्रमितिजनकत्वमङ्गीक्रियते तदा स्यादयं दोषः । न चैवम् । साक्षिण्यज्ञानस्याध्यस्तत्वमेवाज्ञानसिद्धिः साक्षिणस्तदध्यासाधिष्ठानत्वमेव साधकत्वमिति नानुपपत्तिरिति शङ्कते ॥ **साक्षिणीति** ॥ तर्हि पूर्वं साधकत्वप्रयोजकविशेषाभावात्साधकत्वानुपपत्तिरभिहिता । इदानीं त्वयैव साक्षिणोऽज्ञानाधिष्ठानत्वमात्रमङ्गीकृत्य साधकत्वस्वरूपस्यैवापलापे साक्षिणाऽज्ञानसिद्धिरित्येतद्भ्रममेव । न हि रजतारोपाधिष्ठानं शुक्तिस्तत्साधिकेत्याह ॥ **न तर्हीति** ॥ ननु साक्षिणोऽज्ञानाधिष्ठानमात्रत्वं न मयोच्यते किन्तु तस्यैव तत्सिद्धिकरणत्वं चेति नोक्तदोष इति चेत्तर्हि न केवलं करणत्वप्रयोजकविशेषाभावेन करणत्वानुपपत्तिः किन्त्वधिष्ठानस्यैव करणताया अलौकिकत्वेनाधिष्ठानत्वेनापि । न च त्वयाऽपि मामहं जानामीत्यादौ ज्ञानरूपस्य साक्षिणस्तदेव ज्ञानं प्रति कर्तृत्वकर्मत्वयोः कल्पनात्तद्वदेवाधिष्ठानस्यैव करणत्वकल्पनायामपि न दोष इति वाच्यम् । विशेषबलान्मत्कल्पनोपपत्तावप्यविशेषवादित्वेन त्वत्कल्पनानुपपत्तेरित्याह ॥ **प्रकाशाश्रयमिति** ॥ अत्र साक्ष्यज्ञानशब्दाभ्यां प्रस्तावेऽपि प्रकाशतमःशब्दौ प्रयुञ्जानेनेदं सूचितम् । प्रकाशतमसोरिव साक्ष्यज्ञानयोर्निवर्त्यनिवर्तकभावस्यैवोचिततयाऽधिष्ठानाधिष्ठेयभावस्य साध्यसाधकभावस्य वाऽनु-

पपत्तिः । न च त्वन्मते प्रकाशरूपसाक्षिण एवाज्ञानाधिष्ठानत्वतत्प्रकाशत्ववन्ममापि नानुपपत्तिरिति वाच्यम् । भावरूपाज्ञानानङ्गीकारेण प्रवृत्तं प्रत्येतत्पर्यनुयोगानुपपत्तेः । मम विशेषबलेन सर्वोपपत्तावप्यविशेषवादिनस्तवानुपपत्तिरेवेति । अस्तु वाऽधिष्ठानस्यैव कारणत्वं तथाऽप्यज्ञानस्य साक्षिविषयत्वाविषयत्वाभ्यां निर्विशेषत्वसाक्षित्वाभावप्राप्त्या साक्षित्वनिर्विशेषत्वयोर्विरोध इत्याह ॥ **किञ्चेति** ॥ **साक्षादिति** ॥ साक्षाच्छब्दोऽव्ययं संज्ञाग्रहणं च धनिकाधमर्णाऽन्योपद्रष्टृरूपाभिधेयनियमार्थम् । तथा च साक्षाच्छब्दाद्द्रष्टरि वाच्ये संज्ञायामिनिप्रत्ययेऽव्ययानां भमात्रेति टिलोप इति टिलोपे च साक्षीति निष्पन्नमिति भावः । द्वितीये दोषान्तरमाह ॥ **तदिति** ॥ **निरस्तमिति** ॥ अन्योन्याश्रयेणेति शेषः । ननु साधकत्वप्रयोजकविशेषाभावेन व्याहत्यादिना चाविशेषस्य साधकत्वे निरस्ते पुनस्तच्छङ्काऽप्रसरात्तत्साधकसविशेषत्वादिविकल्पनिरासेन तन्निरसनं तच्चेत्याद्युत्तरभाष्येऽनुपपन्नमित्यतः प्रमाणसिद्धे न व्याहत्यादिकमिति वैयात्याद् ब्रुवाणं प्रत्युत्तरग्रन्थस्तदहङ्कारखण्डनायैवेत्याशयेनाह ॥ **यस्त्विति** ॥ अत्र पूर्वत्र नेहनानेतिवाक्यातिरिक्तोभयसम्प्रतिपन्नसाधकभावस्य प्रत्यक्षादेरिवात्रान्यस्याभावात्साक्षिण एव साधकत्वे विवादात्तत्र साधकत्वानुभवस्याशक्यशङ्कत्वात्पूर्ववत्प्रमाणसमाहारात्मकप्रमाणस्य वक्तुमशक्यत्वाद्वैयात्यपर्यन्तधावनमिति द्रष्टव्यम् । अत्र निर्विशेषपक्षपर्यवसानेन तत्र दूषणमभिदधता भाष्यकारेण पक्षान्तरप्रसक्तेरुक्तन्यायेन दूषणसौलभ्यस्य च सूचितत्वात्तदाह ॥ **स प्रष्टव्य इति** ॥ नन्वस्मिन्पक्षे भाष्येऽनवस्थित्यभिधानमसङ्गतम् । साक्षिणोऽन्यस्य वैतदर्थसाधकत्वेनाश्रयणेऽपि परम्पराऽनाश्रयणादित्यतस्तत्पक्षद्वयस्य सुलभदूषणत्वाद्भाष्यकारीयं तत्पक्षोपेक्षणेन परम्पराश्रयण एव दूषणाभिधानं युक्तमेवेत्याशयेन स्वयमेव दूषणाशङ्कोत्तरत्वेन तत्पक्षं विकल्प्य प्रतिक्षिप्य परम्परापक्षे भाष्यं योजयति ॥ **किमत इति** ॥ प्रकारानुक्तेरितिशब्दस्य प्रकारसमर्पकत्वासम्भवादाह ॥ **तस्यापीति** ॥ **सामान्येनेति** ॥ भिन्नलिङ्गतयोपस्थितानेकसाधारणपरामर्शे नपुंसकमित्याशयः । वस्त्रेण शुक्लेन कम्बलेन शुक्लेन तेनानेन शुक्लेनेत्यत्र तल्लक्षणमात्रविशेषाभावान्नपुंसकमनपुंसकेनेत्यस्याप्राप्तौ [ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् । अक्लीबेन सहोक्तौ क्लीबं शिष्यते । तच्च वैकवत्स्यात्तल्लक्षण एव शेषश्चेत् । शुक्लः पटः शुक्ला पटी शुक्लं वस्त्रम् । तदिदं शुक्लम् । तानीमानि शुक्लानि । ] सामान्यविवक्षायां नपुंसकत्वैकवद्भावयोर्वक्तव्यत्वाद्बहुविषयेण तेनैव तदिति नपुंसकनिर्देशस्याप्युपपत्तेर्नपुंसकमनपुंसकेनेत्यनुक्त्वा सामान्येनेत्युक्तमत एव भाष्यकारेण नपुंसकस्य व्यापित्वात्प्राधान्यमुपादाय प्रधाने कार्यसम्प्रत्ययाच्छेष इत्यादिना तदिदं शुक्लमित्याद्युपपाद्य सूत्रं प्रत्याख्यातम् । अत एव च सामान्ये नपुंसकमित्यनेनैव (सामान्ये नपुंसकम् । दृढं भक्तिर्यस्य दृढभक्तिः । स्त्रीत्वविवक्षायां तु दृढा भक्तिः ।) तदिदं शुक्लमित्यादेरुपपत्तेर्नपुंसकमनपुंसकेनेति सूत्रवैयर्थ्यमाशङ्क्य द्वन्द्वापवादायेति तदभियुक्तैः समभिहितम् । अथा-

सामान्येनेत्यस्य सा च तच्चेति स्त्रीनपुंसकसाधारण्येनैकशेषेणेत्यर्थः । तदुपपादकसूत्रं च नपुंसकमनपुंसकेनेत्येतदेव द्रष्टव्यम् ।

स० — **सत्यस्यापि साक्षिणोऽज्ञानसाधकत्वमिति** ॥ यथोक्तं सङ्क्षेपशारीरके 'आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला । पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर इति ॥ **न हि साधकतमत्वादिविशेषाभाव इति** ॥ करणरूपप्रमाणे साधकतमत्वं फलरूपे निर्दोषकरणजन्यत्वम्. साक्षिरूपे नित्यज्ञाने निर्दुष्टस्वरूपेन्द्रियाभिव्यक्तत्वमिति विशेषाः द्रष्टव्याः । शङ्कते ॥ **साक्षिण्यारोपिततयैवेति** ॥ **अशक्यत्वादिति** ॥ यथा दिवाभीतान्धकारः सौरालोकारोपितः सौरालोकेनैवावभासते, एवमज्ञानं चैतन्यारोपितं चैतन्येनैव भासत इत्यर्थः ॥ **न तर्हीति** ॥ तर्हि न सिद्धिरिति भावः ॥ **प्रकाशेनैव सिद्ध्यतीत्यस्यार्थस्येति** ॥ न हिं दिवाभीतान्धकारः सौरालोकेन सिद्ध्यति ॥ किं तु दिवाभीतदृगिन्द्रियादेव । तथा च अधिष्ठानस्यैवारोपितज्ञप्तिकरणत्वमन्यत्र क्वाप्यदृष्टमत्रैव तन्निर्वाहकविशेषाभावे कल्पयितुमशक्यमिति भावः ॥ **साक्षाद्द्रष्टरीति** ॥ साक्षाद्द्रष्टर्यभिधेये संज्ञायां गम्यमानायां साक्षीति निपात्यत इत्यर्थः ॥ **निर्वचनासंभवादिति** ॥ साक्षिणः कर्तृत्वेन कारकत्वात् कारकमात्रस्याप्यतद्विषयकज्ञानजनकत्वापत्त्या तद्विषयत्वस्यावश्यकत्वादिति वा कर्तृत्वेऽप्यज्ञानादिप्रतीतौ तस्यैव करणत्वात् करणस्य सविषयकत्वनियमादज्ञानविषयत्वाभावे साक्षित्वमेव न स्यादिति वाऽभिप्रायः । न च अज्ञानविषयत्वाभावेऽपि दुःखादिविषयत्वेन तदुपपत्तिरिति वाच्यम् । तथात्वे सविषयत्वापत्त्या निर्विशेषत्वभङ्ग इत्याद्यपक्षोक्तदोषापत्तेरिति द्रष्टव्यम् ॥ **अलौकिकेति** ॥ रूपाविषयेणापि रसनेन रूपसिद्धिप्रसङ्गादित्यर्थः ॥ **निरस्तमिति** ॥ अन्योन्याश्रयेणेति शेषः ॥

प० — **फलं वेति** ॥ जन्यज्ञानादिरूपं फलं वेत्यर्थः । तस्यापि व्यवहारादिसाधकत्वादिति भावः ॥ **नित्यं वा ज्ञानमिति** ॥ ईश्वरसंबन्धिनित्यज्ञानं वेत्यर्थः ॥ तस्य कार्यमात्रे हेतुत्वादिति भावः ॥ **परेणेति** ॥ भावरूपमज्ञानमनिच्छता तार्किकादिना त्वत्प्रतिवादिनेत्यर्थः । यदुक्तं पूर्वत्राज्ञानवशादेव साक्षिणः साधकत्वमित्युक्ते इतरेतराश्रयत्वप्रसङ्गादिति । तन्न । अधिष्ठानतया ज्ञानावभासत्वमेव साक्षित्वम् । तथाच साक्षित्वमज्ञानसत्त्वं चैकमेव । साक्ष्यवभासादन्यस्याज्ञानसत्त्वस्याभावादज्ञानावभासत्वादन्यस्य साक्षिणः साधकत्वस्याभावात् कुतोऽन्योन्याश्रय इति शङ्कते ॥ **साक्षिणीति** ॥ ततः अज्ञानारोपादित्यर्थः । तमोऽज्ञानम् ॥ **अशक्यत्वादिति** ॥ प्रकाशाश्रयमित्यनेनाश्रयत्वस्य प्रकाशेनेति तृतीयया साधकत्वस्य च विशेषस्य चाभावे परं प्रति त्वया वक्तुमशक्यत्वादित्यर्थः । ननु प्रकाशेनैव सिद्ध्यतीत्यस्य प्रकाशजन्यज्ञानेन विषयीक्रियत इति नार्थः । येन साधकत्वं स्यादित्यत आह ॥ **किञ्चेति** ॥ **इति निर्वचनेति** ॥ व्याकरणसूत्रे हि साक्षिपदस्य साक्षादितिपदात् द्रष्टर्थे

संज्ञायां विषये इनिप्रत्ययो भवतीति इनिप्रत्यये 'अव्ययानां भमात्रे टिलोप' इति साक्षात्पदस्य टिलोपे च साक्षात्पश्यतीति साक्षीति यद्व्युत्पादनं तस्यासम्भवादित्यर्थः । दोषान्तरं चाह ॥ **अतदिति** ॥ तदविषयकेणेत्यर्थः । तद्विषयमानेनैव तत्सिद्धेर्घटादौ दृष्टेरिति भावः ॥ **निरस्तमिति** ॥ इतरेतराश्रय-प्रसङ्गादित्यनेनेति भावः ॥ **परेणेति** ॥ शब्दनित्यत्ववादिनेत्यर्थः ॥ **तत्साधनेति** ॥ शब्दः कृतकः व्यञ्जकप्रयत्नानन्तरभावित्वादिति कृतकत्वसाधकलिङ्गोपस्थितिमता तार्किकेणेत्यर्थः ॥ साधयिष्यामी-तीति शब्दस्येति ब्रवीतीति पूर्वेणान्वयः ॥ **किमत इति** ॥ अविशेषस्य साधकत्वं चाविशेष-प्रमाणान्तरसाध्यमित्युक्तितः किमनिष्टमिति प्रश्नार्थः । इदं वक्ष्यमाणमन्योन्याश्रयादिकमिति परिहारार्थः ॥ तच्चेति । निर्देशायोगमाशङ्कते ॥ **ननु चाविशेषस्येति** ॥ **तत्सविशेषत्वादीति** ॥ मिथ्याभूतस्य साक्षिणः साधकत्वम् । 'तच्च मिथ्याप्रमाणेन सता वा साध्यते त्वये'ति साधकप्रमाणविकल्पेन यथा निरस्तं, एवं मिथ्याभूतस्य साधकत्वं सविशेषप्रमाणेन साध्यते, अथाविशेषमानेन । आद्ये तस्यापि तव मिथ्यात्वात् । परेण च तस्य साधकत्वानङ्गीकारात् । न द्वितीयः । प्रतिवादिनस्तस्य साधकत्वा-संमतेरिति निराकरणीयमिति सूचनायेत्यर्थः ॥ **प्राग्विकल्पित इति** ॥ 'सता चेदद्वैतसिद्धिः स्यादि'त्यत्र सतेत्यात्मभूतेन वा आत्मातिरिक्तेन वेति विकल्पितात्मभूतेनेति पक्षोऽप्यविशेषस्य साधकत्वखण्डनेन निरस्त इत्यर्थः ।

या० — **न हि साधकतमत्वादिविशेषाभाव इति** । करणरूपप्रमाणे प्रमासाधकतमत्वं, फलरूपे निर्दोषकरणजन्यत्वं, साक्षिरूपे नित्यज्ञाने निर्दुष्टस्वरूपेन्द्रियाभिव्यक्तत्वमित्याद्या विशेषा द्रष्टव्याः । शङ्कते ॥ **साक्षिण्यारोपिततयैवेति** ॥ **न ततोऽतिरिक्तमिति** ॥ येन विशेषापेक्षा स्यादिति शेषः । यथा दिवाभीतान्धकारः सौरालोकारोपितः सौरालोकेनावभासते । एवमज्ञानं चैतन्यारोपितं चैतन्येनैव भासत इत्यर्थः ॥ **प्रकाशेनैवेति** ॥ न हि दिवाभीतान्धकारः सौरालोकेनैव सिध्यति किन्तु दिवाभीतदुष्टेन्द्रियादेव । तथा चाधिष्ठानस्यैवारोपितज्ञप्तिकारणत्वम् अन्यत्र काप्यदृष्टमत्रैव तन्निर्वाहकविशेषाभावे कल्पयितुमशक्यमिति भावः ॥ **आद्ये विषयित्वमिति** ॥ तथा च सविशेषत्वापत्तिरिति भावः ॥ **साक्षाद्द्रष्टरीति** ॥ साक्षाद्द्रष्टर्यभिधेये साक्षाच्छब्दादिनिप्रत्ययो विहित इत्यर्थः ॥

श्री० — फलप्रामाण्याभिप्रायेण फलं वेत्युक्तम् । ईश्वरज्ञानाभिप्रायेण नित्यं वा ज्ञानमित्यु-क्तम् ॥ **न ततोऽतिरिक्तमिति** ॥ तथा चाज्ञानारोपाधिष्ठानत्वमेवाज्ञानसाधकत्वमिति भावः ॥ **प्रका-**

**शेति** ॥ साक्षिणः प्रकाशरूपत्वेन तदाश्रितं तमोऽज्ञानमधिष्ठानभूतप्रकाशेनैव सिध्यतीति परं सिद्धान्तिनं प्रत्युपपादयितुं त्वया न शक्यते, अधिष्ठानस्यैवारोपितज्ञप्तिकारणतायाः कुत्राप्यदर्शनादिति भावः । अन्यत्र कुत्राप्यदृष्टमत्रैव कल्प्यत इत्याशङ्कापरिहारायोक्तम् ॥ **अविशेषवादिनेति** ॥ कुत्राप्यदृष्टमत्रैव साक्षिणि कल्पयितुं तदा शक्यते, यदीतरापेक्षया तन्निर्वाहकः कश्चन विशेषः स्यात् । स तु नास्ति । त्वया साक्षिणि विशेषानङ्गीकारादिति भावः । ननु साक्षिणोऽज्ञानविषयकत्वाभावेऽपि तेन तत्सिद्धिः किं न स्यादित्यत आह ॥ **अतद्विषयेणेति** ॥ अतद्विषयकेनेत्यर्थः ॥ **निरस्तमिति** ॥ इतरेतराश्रय-प्रसङ्गेनेत्यर्थः । तच्चाविशेषमानेन साध्यमित्युक्तत्वात्सविशेषप्रमाणेन साधनपक्षे दूषणं वक्तुमाह ॥ **यस्त्विति** ॥ ननु सविशेषस्य मिथ्यात्वेऽपि तस्य साधकत्वमङ्गीकृतमिति चेत्तत्राह ॥ **परेणेति** ॥ सिद्धान्तिनेत्यर्थः । उक्तन्यायेन 'न सिद्धं चान्यसाधनमि'त्युक्तन्यायेन । तस्य मिथ्याभूतप्रमाणस्य ॥ **तत्सविशेषत्वादीति** ॥ मिथ्याभूतस्य साधकत्वम् । 'तच्च मिथ्याप्रमाणेन सता वा साध्यते त्वये'ति साधकप्रमाणविकल्पेन यथा निरस्तम् । एवं मिथ्याभूतस्य साधकत्वं सविशेषप्रमाणेन साध्यते । अथा-विशेषप्रमाणेन । आद्ये तस्यापि तव मिथ्यात्वात् । परेण च तस्य साधकत्वानङ्गीकारात् । न द्वितीयः । प्रतिवादिनस्तस्य साधकत्वासम्मतेरिति निराकरणीयमिति सूत्रनायेत्यर्थः ॥ **एतेनेति** ॥ साक्षिणः साधकत्वनिराकरणेनेत्यर्थः ॥ **आत्मभूतेनेति** ॥ तस्यैव साक्षित्वादिति भावः ।

च० — **तत्सर्वमिति** ॥ करणं साधकतमत्ववत् फलं निर्दोषतज्जन्यत्ववत् नित्यज्ञानं तादृश-स्वरूपेन्द्रियाभिव्यक्तत्ववत् ॥ **साक्षादिति** ॥ साक्षादित्यव्ययं, तस्मात्प्रकृतिभूताद्रूढौ गम्यमानार्थां द्रष्टरि वाच्ये इनिप्रत्ययेऽव्ययानां भमात्रे टिलोपे च साक्षीति निष्पद्यत इति भावः ।

अनु० — अनङ्गीकुर्वतां विश्वसत्यतां तन्न वादिता ॥
तस्माद्व्यवहृतिः सर्वा सत्येत्येव व्यवस्थिता ॥

**सु० — मिथ्यात्वं यदीत्यादिनोक्तं प्रसङ्गमुपसंहरति ॥ अनङ्गीकुर्वतामिति ॥ यस्मादेवं न मिथ्याभूतस्य साधकत्वं तत्तस्माद्विश्वसत्यतामनङ्गीकुर्वतामात्मातिरिक्तस्य सर्वस्यापि मिथ्यात्वं प्रतिपादयतां नेहनानेत्यादिवाक्यानामपि मिथ्यात्वप्रसक्त्या न वादिता न साधकता स्यात् । तद्वाक्यस्येति प्रकृतमेकवचनं समूहविषयमिति ज्ञापयितुमुपसंहारे बहुवचनम् । अथवाऽति-प्रसङ्गान्तराभिधानमेतम् । तथा हि । यदि चैतन्यातिरिक्तं समस्तं मिथ्या स्यात्तदा समस्ता-**

न्तर्गतं कथाव्यवहाराङ्गभूतं प्रमाणादिकमपि मिथ्या स्यात् । तथाच विश्वसत्यतामनङ्गीकुर्वत-स्तन्मिथ्यात्वमङ्गीकुर्वतो मायावादिनो निरुपायस्य कथकता न स्यात् । कुतः । तत्तस्मा-दुक्तरीत्या मिथ्याभूतस्य साधनबाधनाङ्गताऽयोगादिति । विश्वमिथ्यात्वमङ्गीकुर्वतामपि चार्वा-काणां बौद्धानां च वादित्वोपलम्भाद्व्यभिचार इति चेन्न । तेषामप्यापादनविषयत्वात् । तदिद-मुक्तमनङ्गीकुर्वतां चार्वाकबौद्धमायावादिनामिति । अन्यथा त्वया तेनेत्येकवचनस्य प्रस्तुतत्वा-दनङ्गीकुर्वत इत्यवक्ष्यत् । तथाऽपि प्रमाणबाधः । चार्वाकादीनां वादित्वस्य प्रत्यक्षादिसिद्ध-त्वात् । मैवम् । वादित्वाभावस्यात्रापाद्यमानत्वात् । साधनस्य हि प्रमाणबाधो दूषणम् । न त्वापादानस्य । अनिष्टस्य च प्रामाणिकपरित्यागाप्रामाणिकस्वीकाररूपत्वात् । अन्यथा-ऽतिप्रसङ्गमात्रोच्छेदप्रसङ्गादित्याशयवानुक्तस्य प्रसङ्गत्वं स्फुटीकर्तुं विपर्ययपर्यवसानमाह ॥ तस्मादिति ॥ यस्मादस्ति परस्य वादित्वाभिमानस्तस्मात् । अन्यथा युष्मदस्मदित्यादिपूर्वोत्तर-पक्षबलाबलचिन्ता न स्यात् । व्यवह्रियतेऽनयेति व्यवहृतिः । कथाङ्गभूतप्रमाणादीति यावत् । प्रमाणादीनां कथाव्यवहारकारणत्वात्कारणाभावे च कार्याभावस्य सुलभत्वात्सुस्थो-ऽतिप्रसङ्गमूलभूतः प्रतिबन्ध इति ज्ञापयितुं प्रमाणादीति रूढपदपरित्यागेन व्यवहृतिरिति यौगिकपदोपादानम् ।

धा० — ननूत्तरभाष्ये उक्तमेवोच्यते । न चोपसंहारोऽयमविशेषस्येत्युक्तोपसंहाररूपत्वाप्रतीतेरि-त्यत आह ॥ **मिथ्यात्वमिति** ॥ ननु सत्यताऽनङ्गीकारिणां वादित्वाभावस्य पूर्वमनभिहितत्वान्नायमुप-संहार इत्याशङ्कामुपसंहारत्वज्ञापकतच्छब्दपरामृष्टार्थं दर्शयन्नेव निराकरोति ॥ **यस्मादिति** ॥ अस्मि-न्पक्षेऽनङ्गीकुर्वतां वादितेति पदयोः, बहुवचनस्य, तस्माद्व्यवहृतिः सर्वेत्युत्तरवाक्यस्य च स्वारस्याभावात्प्रका-रान्तरेण तद्भाष्यं व्याख्याति ॥ **अथवेति** ॥ अत्र विश्वसत्यतामनङ्गीकुर्वतामिति बीजकथनेनापादकं लब्धम् । यद्वाऽनेन विश्वशब्दस्यात्मातिरिक्तसर्वपरत्वम् । कथाव्यवहाराङ्गप्रमाणादिसर्वपरत्वं च । अनङ्गीकुर्वतां विश्वसत्यतामिति सम्पूर्णस्य चावृत्तिः । एवं चात्मातिरिक्तं सर्वं सत्यं यदि नाङ्गीक्रियेत मिथ्या स्यादिति यावत् । तर्हि कथाङ्गभूतं प्रमाणादिकमपि सत्यं नाङ्गीकर्तव्यं स्यात् । तदपि मिथ्या स्यादिति यावत् । यदि चैवं तर्हि कथकता न स्यादिति भाष्यं व्याख्यातं भवति । नन्वस्मिन्नपि पक्षे उपसंहारत्वज्ञापकतच्छब्दानुपपत्तिरित्यतो मिथ्याभूतस्यापि प्रमाणादेरेवोपायत्वान्न तदभाव इत्याशङ्का-निवर्तकपूर्वोक्तरीतिलब्धन्यायसमर्पकत्वान्न तच्छब्दानुपपत्तिरित्याशयेनाह ॥ **कुत इत्यादिना** ॥ अनेन यदि प्रमाणादीन्यसन्ति स्युस्तर्हि साधकानि न स्युस्तथाच तत्कार्यव्यवहारानुपपत्तिरिति मध्ये तर्कस्वरूप-

मभिप्रायमिति सूचयति । अस्मिन्पक्षे बहुवचनस्वारस्यं दर्शयितुं तन्निवर्त्यशङ्कापूर्वकं तद्विषयमाह ॥ **विश्वेति** ॥ बौद्धानां केषाञ्चिद्विश्वमिथ्यात्वाभ्युपगमः प्रसिद्ध एव । चार्वाकाणां चानुमानादेः प्रामाण्याभावेनातीन्द्रियस्यासत्त्वाद्गोलकमात्रस्य वस्तुतोऽप्रत्यक्षत्वेन तदतिरिक्तप्रत्यक्षस्य च साधकाभावेनाभावात्तत्सिद्धविश्वस्याप्यभाव इति विशेषद्योतनाय चार्वाकाणां बौद्धादीनामिति द्वन्द्वनिर्देशाभाव इति द्रष्टव्यम् । ननु तस्मादित्युत्तरवाक्येऽस्यापादनत्वस्पष्टनमयुक्तं साधनत्वस्याप्युपपत्तेः । न च साधनत्वे प्रमाणबाधात्तत्परित्याग इति वाच्यम् । प्रमाणबाधस्य विशेषाभावेन साधन इवापादनेऽपि साम्येन वृथा पक्षपातस्यायुक्तत्वादित्यतो विशेषमुपपादयन्भाष्यमवतारयति ॥ **तथापीति** ॥ वस्तुतः साधनशून्ये मायिनि वादित्वस्य ममाप्यसम्मतेः । परेणापि स्वस्मिन्वास्तववादित्वानभ्युपगमाद्विपर्ययपर्यवसानेऽसिद्धिं परिहर्तुं वादित्वाभिमान इत्युक्तम् ।

स० — **चार्वाकाणामिति** ॥ प्रात्यक्षिकविश्वसत्यत्वाभ्युपगमेऽपि अतीन्द्रियविश्वमिथ्यात्वाङ्गीकाराद्वा अनुमानादिना प्रामाण्यस्य ग्राह्यत्वात्तस्याप्रामाण्ये प्रत्यक्षप्रामाण्यग्राहकाभावेन तदसिद्ध्या ऐन्द्रियकविश्वसत्यत्वमपि न सिद्ध्येदित्यभिप्रायेण वा इदं बोध्यम् ॥

प० — 'सता वा साध्यते त्वये'ति 'साधकत्वं सतस्तेने'ति चैकवचनेन प्रस्तावात्पुरुषपरत्वे बहुवचनायोगं मत्वा श्रुत्यादिवाक्यपरतया योजयति ॥ **यस्मादिति** ॥ बहुवचनं वाद्यन्तराभिप्रायं मत्वा शब्दशक्तिस्वारस्यमनुरुध्य पुरुषपरतया योजयति ॥ **अथवेति** ॥ **अतिप्रसङ्गान्तराभिधानमिति** ॥ सर्वमिथ्यात्वपक्षे नेहनानेत्यादेर्मिथ्यात्वापातेनासाधकत्वापत्तिरूपातिप्रसङ्गापेक्षया वादिनः कथाधिकाराभावरूपातिप्रसङ्गान्तराभिधानमित्यर्थः । 'मिथ्यात्वं यदि दुःखादेरि'त्याद्यर्धश्लोकं तावदनुवर्त्यार्थमाह ॥ **यदीति** ॥ तद्वाक्यस्येत्येतत् प्रमाणादिकथाङ्गमात्रपरं मत्वा व्याचष्टे ॥ **कथाव्यवहाराङ्गभूतं प्रमाणादिकमिति** ॥ आदिपदेन व्याप्तिदृष्टान्तादिप्रमाणाङ्गस्य हेत्वाभासादिनिग्रहस्थानादेश्च ग्रहः । ततश्च किमित्यतो'ऽनङ्गीकुर्वतामि'त्यर्धं योजयति ॥ **तथाचेति** ॥ बहुवचनकृत्यमग्रे विवरिष्यन्नेकवचनान्तत्वमुपेत्य फलितार्थमाह ॥ **तन्मिथ्यात्वमङ्गीकुर्वत इति** ॥ वादितेत्यस्यार्थः कथकतेति । कथाधिकारितेत्यर्थः । इतिशब्दस्यातिप्रसङ्गान्तराभिधानमेतदिति पूर्वेणान्वयः । बहुवचनकृत्यं व्यनक्ति ॥ **विश्वेत्यादिना** ॥ **नत्वापादनस्येति** ॥ 'प्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्य दूषका' इति सन्ध्येसृष्टिरित्यधिकरणानुव्याख्याने तथा विवरिष्यमाणत्वादिति भावः । युष्मदस्मदित्यादि परभाष्योपक्रमानुवादः ॥ **चिन्तेति** ॥ परस्येत्यनुषङ्गः ॥ **व्यवह्रियतेऽनयेति** ॥ 'अकर्तरि च कारके संज्ञाया'मित्यनुवृत्तौ

'स्त्रियां क्तिनि'ति विधानात्करणे क्तिन्प्रत्ययः । प्रमाणादीत्येव कुतो नोक्तमित्यत आह ॥ **प्रमाणादीनामिति** ॥ प्रतिबन्धः व्याप्तिः । पूर्वार्धोक्तातिप्रसङ्गमूलभूतेत्यर्थः ॥ **व्यवहारेति** ॥ प्रमाणादिविषय इत्यर्थः ॥

**या०— कथाव्यवहाराङ्गभूतं प्रमाणादिकमपीति** ॥ अत्रादिपदेन प्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानां संग्रहः । एवमग्रेऽपि ।

**श्री०—** बहुवचनाभिप्रायं वक्तुमाह ॥ **विश्वमिथ्यात्वमिति** ॥ **आपादनविषयत्वादिति** ॥ न हि पक्षे पक्षतुल्ये वा व्यभिचार इति भावः । **अन्यथेति** ॥ आपादनेऽपि प्रमाणबाधनस्य दूषणत्व इत्यर्थः ॥ **अतिप्रसङ्गेनेति** ॥ यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादित्यादितर्केऽपि प्रमाणबाधसद्भावादिति भावः ॥ **प्रमाणादीति** ॥ रूढपदपरित्यागेन व्यवहृतिरिति व्यवहारकारणत्वार्थकयौगिकपदेन प्रमाणाद्युपादाने निमित्तमाह ॥ **प्रमाणादीनामिति** ॥ अस्तु प्रमाणादीनां सत्त्वं तद्विषयस्य सत्त्वं मास्त्विति शङ्कापरिहाराय दुःखादीतिरूढपदपरित्यागेन व्यावहारिकमिति व्यवहारविषयत्वार्थकयौगिकपदोपादानं कृतमित्यर्थः ॥

**च०— प्रमाणादिकमपीति** ॥ आदिपदेन गौतमसूत्रोक्तनिग्रहस्थानानां ग्रहः ।

**अनु०—** व्यावहारिकमेतस्मात्सत्यमित्येव चागतम् ।

**सु०—** अस्तु कथाङ्गभूतप्रमाणादिव्यवहारस्य सत्यता दुःखादिबन्धस्य तु किमायातमित्यत आह ॥ व्यावहारिकमिति ॥ एतस्मात्प्रमाणादिव्यवहारस्य सत्यत्वाद्व्यावहारिकं व्यवहारविषयो दुःखादि । चशब्दो न केवलं व्यवहारो व्यावहारिकं चेति संबध्यते । न हि प्रमेयं नास्त्यस्ति च प्रमाणमिति संभवति । व्याघातादित्यर्थप्रतिपादनाय व्यावहारिकमित्युक्तम् । यदत्रोक्तम् । प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन तत्कस्य हेतोः । किं वाग्व्यवहारस्य प्रमाणादिसत्ताऽभ्युपगमव्याप्तत्वेन तदभावे प्रवर्तयितुमशक्यत्वादथ कथकप्रवर्तनीयवाग्व्यवहारं प्रति हेतुभावादुत लोकसिद्धत्वादथवा तदनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वात् । आद्येऽपि किं व्यवहारमात्रं प्रमाणादिसत्ताऽभ्युपगमव्याप्तमुत साधनबाधनक्षमो

व्यवहारः । न प्रथमः । तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेर्वाग्विस्तराणां प्रतीयमानत्वेन व्यभिचारात् । तस्यैवानिष्पत्तौ भवतस्तन्निरासप्रयासानुपपत्तेः । तस्यापि पक्षत्वे बाधः । द्वितीये बाधतादवस्थ्यम् । मम सत्तानभ्युपगमस्यानुभवसिद्धत्वात् । हेतुश्च तवासिद्धः । सिद्धत्वे वा सिद्धं मम समीहितम् । व्यतिरेके च सद्वचनाभासलक्षणयोगित्वमुपाधिः । यतोऽभ्युपगम्यापि प्रमाणसत्तां प्रवर्तिता मतान्तरानुसारिभिर्व्यवहारा अभ्युपगतप्रमाणादिसत्त्वैर्मतान्तरानुसारिभिरपरैः साधनाद्यक्षमा इति कथ्यन्ते । तेन ज्ञायते व्यवहारस्य साधनाद्यक्षमतायां सद्वचनाभासलक्षणयोगित्वमेव प्रयोजकम् । न तु सत्ताऽनभ्युपगम इति । ननु यदि प्रमाणादीनि न सन्ति । तदा व्यवहार एव धर्मी कथं सिद्ध्येत् । दूषणादिव्यवस्था वा कथं स्यात् । सर्वविधिनिषेधानां प्रमाणाधीनत्वात् । मैवम् । न ब्रूमो वयं न सन्ति प्रमाणादीनीति स्वीकृत्य कथारभ्येति । किं नाम सन्ति न सन्ति प्रमाणादीनीत्यस्यां चिन्तायामुदासीनैर्यथा स्वीकृत्य तानि भवता व्यवह्रियन्ते । तथा व्यवहारिभिरेव कथा प्रवर्त्यतामिति । किञ्च कीदृशीं मर्यादामवलम्ब्य प्रवृत्तायां कथायामिदं दूषणमुक्तं भवता । किं प्रमाणादीनां सत्त्वमुपगम्योभाभ्यां वादिप्रतिवादिभ्यां प्रवर्तितायामुतासत्त्वमभ्युपेत्याथैकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य । नाद्यः । अभ्युपगतप्रमाणादिसत्त्वं प्रत्येतादृक्पर्यनुयोगानवकाशात् । न द्वितीयः । स्वस्याप्यापत्तेः । न तृतीयः । तथैव कथान्तरप्रसक्तेः । तस्मात्प्रमाणादिसत्त्वासत्त्वाभ्युपगमौदासीन्येन, व्यवहारनियमे समयं बद्ध्वा, प्रवर्तितायां कथायां, भवतेदं दूषणमुक्तमिति वाच्यम् । तथा च व्याघातः । न च वाच्यं नेदं दूषणं प्रतिवादिनं प्रत्युच्यते । किं नाम शिष्यादयः प्रमाणादिसत्ताऽनभ्युपगन्तुः कथाऽनधिकारं ज्ञाप्यन्त इति । यतः शिष्यादीन्प्रत्यपि चार्वाकादेर्दोषोऽयमित्येवाभिधातव्यम् । कथं च तथा स्यात् । तस्य कथाप्रवेशाप्रवेशयोस्तद्बोधाक्षमत्वात् । कथायामेव हि निग्रहः । न द्वितीयः । स्यादप्येवं यदि कथकप्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादीनां हेतुता तत्सत्तानभ्युपगमे निवर्तेत । नत्वेवं संभवति । तथा सति तत्सत्तानभ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत । हेत्वनुपपत्तेः । अथ मन्यसे । कथकवाग्व्यवहारं प्रति हेतुत्वात्प्रमाणादीनां सत्त्वम् । सत्त्वाच्चाभ्युपगमो यत्सत्तदभ्युपगम्यत इति स्थितेरिति । मैवम् । कयाऽपि नियमस्थित्या प्रवृत्तायां कथायां कथकवाग्व्यवहारं प्रति हेतुत्वात्प्रमाणादीनां सत्त्वं सत्त्वाच्चाभ्युपगमो भवता प्रसाध्यः । कथातः पूर्वं तु तत्त्वावधारणं परपराजयं वाऽभिलषद्भ्यां कथकाभ्यां यावता विना तदभिलषितं न पर्यवस्यति तावदनुरोद्धव्यम् । तच्च व्यवहारनियमसमयबन्धादेव द्वाभ्यामपि ताभ्यां संभाव्यत इति व्यवहारनियममेव

षष्ठीतः । स च प्रमाणेन तर्केण च व्यवहर्तव्यमित्यादिरूपः । न च प्रमाणादीनां सत्ताऽपीत्थमेव ताभ्यामङ्गीकर्तुमुचिता । तादृशव्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेः । प्रमाणादिसत्तामभ्युपेत्यापि तथाविधव्यवहारनियमव्यतिरेकेण कथाप्रवृत्तिं विना तत्त्वनिर्णयस्य जयस्य वाऽभिलषितस्य कथकयोरपर्यवसानात् । नापि तृतीयः । लोकव्यवहारोऽपि प्रमाणव्यवहारो वा स्यात् पामरादिसाधारणव्यवहारो वा । नाद्यः । विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वात् । तदर्थमेव च पूर्वं नियमस्य गवेषणात् । नापि द्वितीयः । शरीरात्मत्वादीनामपि तथा सति भवता स्वीकर्तव्यतापातात् । पश्चात्तद्विचारबाध्यतया नाभ्युपेयत इति चेत् । तर्हि प्रमाणादिसत्ताऽपि यदि विचारबाध्या भविष्यति तदा नाभ्युपेयैव अन्यथा तूपगन्तव्येति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यत इति तावन्न भवति । न चतुर्थः । यादृशो भवता प्रमाणादिसत्तामभ्युपगम्य व्यवहारनियमः कथायामवलम्ब्यते । तस्यैव प्रमाणादिसत्त्वासत्त्वानुसरणौदासीन्येनास्माभिरप्यवलम्बनात् । तस्य यदि मां प्रति फलातिप्रसञ्जकत्वम् । तदा त्वां प्रत्यपि समानः प्रसङ्गः । तस्मात्प्रमाणादिसत्ताऽभ्युपगमस्य कथोपयोगाभावादनङ्गीकुर्वतां प्रमाणादिसत्तां न वादितेत्यनुपपन्नमिति ।

वा०—अत्र भाष्यकारेण प्रसङ्गत्वसूचनेन सूचितपरिहारं खण्डनोक्तदूषणाभासं निराकर्तुमनुवदति॥ **यदत्रेति** ॥ तत्सत्ताऽभ्युपगमस्य कथाङ्गत्वे मानाभावात्प्रमाणाद्याकार एव प्रयोजकोऽतोऽसद्वादिनोऽपि कथाधिकारः किमुतानिर्वचनीयवादिन इत्याशयः । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति कात्यायनस्मरणात्कस्येति षष्ठी । प्रवर्तयितुमशक्यत्वादनुपपन्नत्वादित्यादीनामनुषक्तेनाभ्युपेयमित्यनेन सम्बन्धः । कार्यस्याप्यविनाभावेन गमकत्वेऽपि स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमिति पराभ्युपगमाद्रूपरसादिवत्स्वभावलिङ्गकमनुमानं विकल्प्य कार्यलिङ्गकं विकल्पयति ॥ **अथेति** ॥ 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक' इत्यादौ लोकशब्दस्य तद्व्यवहारे प्रयोगाल्लोकसिद्धत्वं प्राणिनिकायेन व्यवह्रियमाणत्वमिति तृतीयं विकल्पयति ॥ **उतेति** ॥ प्रमाणादिसत्तामनभ्युपगम्य व्यवहरतो वादजल्पादिफलतत्वनिर्णयजयाद्युपपत्त्युन्मत्तादेरपि तत्स्यादिति तत्सत्ताऽनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वादिति चतुर्थं विकल्पयति ॥ **अथवेति** ॥ **व्यभिचारादिति** ॥ विमतो व्यवहारः प्रमाणादिसत्ताऽभ्युपगमपुरःसरो वाग्व्यवहारत्वात्सम्मतवदित्यत्र चार्वाकादिव्यवहारे व्यभिचार इत्यर्थः । ननु प्रत्यक्षप्रामाण्यवादित्वेन चार्वाकव्यवहारे साध्यस्यापि सत्त्वात्सर्वशून्यतया माध्यमिकव्यवहारस्यैवाभावेन तत्र हेतोरेवागमनान्न व्यभिचार इत्यतोऽनुमानादिसत्तामनङ्गीकृत्यापि चार्वाकेण क्रियमाणेऽनुमानादि-

साध्यव्यवहारेऽथवा प्रत्यक्षप्रामाण्यस्यानुमानैकगम्यत्वात्तदप्रामाण्ये प्रत्यक्षस्याप्यप्रामाण्यमेवेति प्रत्यक्षादिसाध्ये सर्वस्मिंश्चार्वाकव्यवहारे, सांवृतव्यवहारमङ्गीकुर्वतो माध्यमिकस्य व्यवहारे च व्यभिचारः स्यादेव । अन्यथा प्रसक्त्यभावात्तत्प्रतिषेधायोग इत्याशयेनाह ॥ **तस्यैवेति** ॥ **बाध इति** ॥ तदीयप्रमाणादिसत्ताऽनभ्युपगमस्य सुप्रसिद्धत्वादिति भावः । आद्यद्वितीयमुक्तदूषणातिदेशेन दूषयति ॥ **द्वितीय इति** ॥ अत्र बाधासिद्ध्योः परेणानुक्तावपि सम्भावितत्वादुक्तिः परोक्तोपाधेश्च दूषणान्तरतयोक्तिरिति द्रष्टव्यम् । किञ्च विमतो वाग्व्यवहारः प्रमाणादिसत्ताऽभ्युपगमपुरःसरः साधनबाधनक्षमवाग्व्यवहारत्वाद्वाद्यादिसम्प्रतिपन्नव्यवहारवत् अन्यथा चार्वाकादिव्यवहारवत्साधनबाधनक्षमता न स्यादिति द्वितीयकल्पे पर्यवसितेऽनुमानेऽसमव्याप्तिकयोरन्वयव्याप्तिवैपरीत्येन व्यतिरेकव्याप्तिनियमात्साधनबाधनक्षमव्यवहारत्वाभावं प्रति प्रमाणादिसत्ताभ्युपगमपूर्वकत्वाभावस्य व्याप्ततायाश्च, साधनबाधनक्षमव्यवहारत्वाभावसद्वचनाभासलक्षणयोगित्वरूपव्यापकोपाध्योश्चार्वाकादिव्यवहारे सत्त्वात्प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वाभावरूपव्याप्यस्य पक्षे सत्त्वेऽप्युक्तोपाधेरभावेन, सोपाधिकतयाऽसम्भवात् । व्यतिरेके उपाधौ चान्वये मूलशैथिल्यस्य स्वतःसिद्धत्वान्नेदमनुमानं सम्भवतीत्याशयेनाह ॥ **व्यतिरेके चेति** ॥ सद्वचनाभासलक्षणान्यसिद्ध्यादिलक्षणानि तेषामन्यतमयोगित्वमित्यर्थः । ननु घटादौ सत्यपि व्यापके उपाधेरभावान्नास्य साध्यव्यापकत्वमिति चेन्न । वाग्व्यवहारत्वे सति साधनबाधनाद्यक्षमत्वे पुरुषश्यामत्वे शाकाद्याहारपरिणतिभेदस्येवास्याप्युपाधित्वसम्भवात् । अन्यथा स श्यामो मित्रातनयत्वादित्यादाविन्द्रनीलादौ साध्याव्यापकत्वेन शाकाद्याहारपरिणतिभेदस्याप्युपाधित्वं न स्यादिति भावः । ननु चार्वाकादिव्यवहारे प्रमाणादिसत्ताऽनभ्युपगमपुरःसरत्वसद्वचनाभासलक्षणयोगित्वयोर्द्वयोरपि सत्त्वात्साधनाद्यक्षमत्वे सद्वचनाभासलक्षणयोगित्वस्यैव प्रयोजकत्वनिश्चायकाभावेन नोपाधित्वमित्यत आह ॥ **यत इति** ॥ शब्दो द्रव्यमव्यवहितसम्बन्धग्राह्यत्वाद्घटवत् । शब्दो न द्रव्यं बहिरिन्द्रियव्यवस्थाहेतुत्वाद्रूपादिवदिति व्यवहारस्याभ्युपगतप्रमाणसत्तापुरःसरत्वेऽप्यन्योन्याभासतया प्रतिषेधस्य दृश्यमानत्वात्प्रमाणादिसत्ताऽनभ्युपगमस्य साधनाद्यक्षमत्वप्रयोजकत्वे स न स्यादिति भावः । ननु प्रमाणादीनां सत्त्वानङ्गीकारे तदसत्त्वाङ्गीकारापातेन तेषां चासत्त्वे व्यवहाररूपधर्मिणो दूषणादिव्यवस्थायाश्चासिद्ध्या सद्वचनाभासलक्षणयोगित्वं प्राप्तमेवेति साधनव्यापकत्वान्नायमुपाधिरित्याशङ्कते ॥ **नन्विति** ॥ सत्त्ववदसत्त्वस्याप्यनङ्गीकारान्न सद्वचनाभासलक्षणप्राप्तिरित्याशयेन परिहरति ॥ **नैवमिति** ॥ उभयानङ्गीकारे कथं व्यवहारसिद्धिरित्याशयेन शङ्कते ॥ **किं नामेति** ॥ यद्वा यदि प्रमाणानि न सन्तीति न स्वीकारस्तर्हि मदिष्टसिद्धिरित्याशङ्कते ॥ **किं नामेति** ॥ तथेत्यस्याऽऽवृत्तिः । तच्च व्यवहारिभिरित्यनेन सम्बन्धे समस्तं कथेत्यनेन त्वसमस्तं तथाव्यवहारिभिरुपेक्षितसदसत्त्वप्रमाणमात्रमूलव्यवहारिभिः । यद्यप्यन्यथा

त्वयाऽपि मां प्रति नेदं दूषणमभिधातुं शक्यं कीदृशीं मर्यादामलम्ब्येत्यादिना परेणोक्तानङ्गीकारे बाधकमभिहितमिति परग्रन्थाद्भाति । तथाऽपि मयौदासीन्येन कथाप्रवृत्तिस्वीकारान्नानुपाधित्वमस्येत्यर्थस्य पूर्ववाक्येनैव सिद्धत्वात्त्वयाऽप्येवमेवाङ्गीकार्यमित्याशयेन प्रवृत्तस्योत्तरग्रन्थस्य दूषणान्तरपरत्वप्रतिभासात्प्रमाणादिसत्तामनभ्युपगम्य कथाप्रवृत्तिं परेणाप्यङ्गीकारयत्यन्यथेतीति तट्टीकायामवतारितत्वाच्च दूषणान्तरत्वेनैवानुवदति ॥ **किञ्चेति** ॥ अनेकविशेषप्रसक्तेरभावात्कीदृशीमित्यादिप्रश्नानुपपत्तिरित्यतस्तां दर्शयति ॥ **किमित्यादिना** ॥ असत्त्ववादिनः सत्त्वाभ्युपगमे कथारम्भ एवापसिद्धान्तेन निग्रहे कथारम्भस्यैवानुपपत्तिरित्यतः कल्पान्तरमाह ॥ **उतेति** ॥ असत्त्वाभ्युपगमे तु सत्त्ववादिनो निग्रहात्पूर्वोक्तदूषणं तदवस्थमित्यत उभयानुगुणं पक्षान्तरमाह ॥ **अथेति** ॥ **एतादृगिति** ॥ प्रमाणादीनामसत्त्वे धर्म्यसिद्धिर्दूषणादिविभागासिद्धिः सर्वपदार्थानां नास्तीति निषेधस्यास्तीति विधेर्विभागस्य च प्रमाणायत्तत्वादित्यादिरूपस्येत्यर्थः । तथा च निरनुयोज्यानुयोग इति भावः ॥ **स्वस्यापीति** ॥ परस्येव स्वस्यापि धर्माद्यसिद्ध्यापादकन्यायस्य तुल्यतया जात्युत्तरत्वमिति भावः ॥ **तथैवेति** ॥ प्रमाणादिसत्ताऽनभ्युपगमे किमियं कथा नोपपद्यते कथान्तरं वा । नाद्यः । आरब्धत्वादेव । न द्वितीयः । विमताः कथाः प्रमाणादिसत्ताऽनभ्युपगमपुरःसराः कथात्वात्प्रारब्धैतत्कथावदिति भावः ॥ **तस्मादिति** ॥ प्रमाणतर्काभ्यां व्यवहर्तव्यमिति व्यवहारनियमे समयसङ्केतं बद्ध्वा सदसत्त्वौदासीन्येन प्रवृत्तायां सत्त्वानङ्गीकाराद्धर्म्याद्यसिद्धिरिति दूषणाभिधाने व्याघातः । औदासीन्येन प्रवृत्तिर्नाम सत्ताद्यनभ्युपगम्य प्रवृत्तिः । सत्त्वानङ्गीकारे व्यवहारो न सिद्ध्येदित्यनेन सत्तानभ्युपगमे कथाया अप्रवृत्तिरुक्ता भवति । तथा च सत्तामनभ्युपगम्य प्रवृत्तायां कथायां सत्ताऽनभ्युपगमे कथाप्रवृत्तिर्नास्तीति दूषणाभिधाने कथं न व्याघात इत्यर्थः । तर्हि कारणान्तराभावात्कथं कथाप्रवृत्तिरित्यतस्तत्कारणकथनं व्यवहारेति । स च वक्ष्यमाणोऽनुसन्धेयः । प्रमाणादिसत्ताऽनभ्युपगमे कथानधिकारो न कथायां प्रतिवादिनं प्रत्युच्यते किन्तु शिष्यशिक्षापरं क्रियतेऽतो न व्याघात इति शङ्कते ॥ **न चेति** ॥ चार्वाकादेः कथाप्रवेशोऽयं दोषो वक्तव्य इति विनेयो बोध्यते तदप्रवेशो वा । नोभयथाऽपीत्याह ॥ **तस्येति** ॥ बोधाक्षमत्वे हेतुमाह ॥ **कथायामेवेति** ॥ कथाप्रवेशे सत्येवातत्त्वज्ञानलिङ्गं निग्रहस्तस्येति विनेयबोधनं सम्भवति कथातोऽन्यत्र निग्रहाविषयत्वात् । तथा च व्याघात इति भावः । सत्ताऽभ्युपगमस्य कथाव्यवहारं प्रति हेतुत्वात्प्रमाणादिसत्ताऽभ्युपगम इति द्वितीयमाशङ्क्य निराकरोति ॥ **न द्वितीय इति** ॥ अन्वयव्यतिरेकावसेयत्वात्कारणतायाः प्रमाणादिसत्ताऽनभ्युपगमेऽपि प्रमाणादिभिर्हेतुभिः कथाव्यवहारनिष्पत्तिसम्भवेन व्यतिरेकासम्भवेन न तत्सत्ताऽभ्युपगमस्य कारणता येन तदभ्युपगमः स्यादिति भावः । नन्वभ्युपगमाभावे प्रमाणादीनां हेतुत्वनिवृत्तेर्व्यतिरेकः सम्भवत्येवेत्यत आह ॥ **न त्विति** ॥ ननु प्रमाणादीनां कथाहेतुतायास्त्वयापीष्टत्वाद्धे-

तोश्च प्राक् सत्यत्वनियमात्प्रमाणादीनां कथातः प्राक् सत्त्वे सिद्धे, यद्यदा सत्तदा तदभ्युपगमनीयमेवेति सत्ताऽभ्युपगमस्यापि कथापूर्वभावित्वेन तद्धेतुत्वं सिद्धमिति द्वितीयपक्षे आशयविशेषं शङ्कते ॥ **अथेति** ॥ हेतुत्वस्य सत्त्वरूपत्वाभावस्य वक्ष्यमाणत्वाद्धेतुत्वेन सत्ताऽभ्युपगमानुमानस्य च कथायामेव निग्रहेण कथातोऽन्यत्रासम्भवात्प्रमाणादिसत्ताऽभ्युपगमेन प्रवृत्तायां कथायां तदनुमानस्य च कथाप्रवृत्तौ सत्ताऽभ्युपगमसिद्धिस्तत्सिद्धौ च कथाप्रवृत्तिरित्यन्योन्याश्रयापातेनानुपपत्तेः समयबन्धप्रवृत्तकथायां तत्साधने चोक्तरीत्या व्याघात इति भावेनाह ॥ **मैवमिति** ॥ ननु प्रमाणादिसत्ताऽभ्युपगमस्य कथाप्रवृत्त्युत्तरकाल साध्यत्वे कारणान्तराभावात्कथं कथाप्रवृत्तिरित्यतः पूर्वसूचितं व्यवहारनियमस्य कथाकारणत्वमुपपादयति ॥ **कथात इति** ॥ व्यवहारनियमस्वरूपदर्शनं स चेति । आदिपदेन प्रतिवादिना प्रतिज्ञाहान्यादिनिग्रहस्थानमुद्भावनीयम् । तद्भङ्गे प्रथमस्य भङ्गो व्यवहर्तव्योऽन्यथा द्वितीयस्य प्रामाणिकः पक्षस्तत्त्वतया व्यवहर्तव्य इत्यादेः सङ्ग्रहः । ननु तत्त्वनिर्णयादिफलार्थमेव समयबन्धादिवत्प्रमाणादिवत्प्रमाणादिसत्ताऽपि कथाङ्गत्वेनाङ्गीकार्येत्यत आह ॥ **न चेति** ॥ **तादृशेति** ॥ उभयाङ्गीकारे गौरवादिति भावः । ननु तर्हि नियमं परित्यज्य प्रमाणादिसत्तैवानुसर्तव्या लाघवस्यैवमपि सम्भवादित्यत आह ॥ **प्रमाणादीति** ॥ लोकशब्दस्योभयत्र तुल्यत्वाद्विकल्पयति ॥ **लोकेति** ॥ पामरः संस्काररहितः । 'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जन' इति नामशासनात् ॥ **विचारेति** ॥ विचारसिद्धौ च सत्ताऽभ्युपगमस्तस्माच्च विचार इति चक्रकमिति भावः । सत्तां स्वीकृत्यापि नियमो बध्यते वादिभिर्विचारप्रवृत्त्यर्थं, तदनुपपत्तिरपि सत्ताया अहेतुत्वं गमयतीत्याह ॥ **तदिति** ॥ अबाध्यत्वे सति लोकव्यवहारसिद्धत्वं स्वीकारप्रयोजकमिति शङ्कते ॥ **पश्चादिति** ॥ तर्हि प्रमाणादिसत्ता लोकप्रसिद्धत्वादङ्गीकार्येत्येतद्धतमित्याह ॥ **तर्हीति यादृश इति** ॥ अवश्याश्रयणीयनियमादेव फलव्यवस्थोपपत्तेः सत्ताऽभ्युपगमो व्यर्थ इत्याशयः । नियमस्याप्रामाणिकत्वेनाव्यवस्थापकत्वे तवापि स न व्यवस्थापकः स्यादित्याह ॥ **तस्येति** ॥ अनेनाक्षेपभाष्यं दर्शयन्नेवोपसंहरति ॥ **तस्मादिति** ॥ अनेनोद्भाष्यस्यास्य प्रयासवैयर्थ्यमपि निरस्तं भवति ।

**स०** — **यदत्रोक्तमिति** ॥ यच्छब्दस्य तत्सर्वमित्युत्तरत्र संबन्धः । कथकेनेत्येकवचनं वैतण्डिकाभिप्रायेण । तदितरस्य प्रमाणादिसत्ताभ्युपगमसिद्धेः ॥ **तत्कस्य हेतोरिति** ॥ 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति कात्यायनवचनात् कस्माद्धेतोरित्यर्थः । तत्र किं प्रमाणमिति यावत् ॥ **हेतुभावादिति** ॥ हेतुत्वादित्यर्थः । यद्यपि कार्यमविनाभावेन गमकं तथापि स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमिति पराभ्युपगमात् पृथगुपन्यासः ॥ **लोकसिद्धत्वादिति** ॥ लोकशब्देन

लोकव्यवहार उच्यते, तत्सिद्धत्वं प्राणिनिकायेन व्यवह्रियमाणत्वम् । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक' इत्यादौ लोकशब्दस्य व्यवहारे प्रयोगदर्शनादित्यर्थः ॥ **अथवेति** ॥ प्रमाणादिसत्तामनभ्युपगम्य व्यवहरतो वादफलस्य तत्त्वनिर्णयस्य जल्पादिफलस्य विजयस्य चोपपत्तौ उन्मत्तारब्धकथाया अपी-स्यादिति तदनभ्युपगमस्य फलातिप्रसङ्गहेतुत्वादित्यर्थः ॥ **न प्रथम इति** ॥ विमतः प्रमाणादिसत्ता-ऽभ्युपगमपुरःसरः वाग्व्यवहारत्वात् संप्रतिपन्नवदित्यत्र निर्विशेषणवाग्व्यवहारस्य हेतुत्वे चार्वाकादि-व्यवहारे व्यभिचार इत्यर्थः । ननु माध्यमिकादेः शून्यवादितया प्रमाणादिसत्तानभ्युपगन्तृत्वेऽपि चार्वाकस्य प्रत्यक्षरूपप्रमाणसत्ताभ्युपगन्तृत्वात् कथं व्यभिचारः इति चेत् न । सकलप्रमाणसत्ताभ्युपगमो वाग्व्यवहारव्यापकः यत्किञ्चित्प्रमाणसत्ताभ्युपगमो वा । आद्ये चार्वाककथायां, द्वितीये माध्यमिककथाया-मित्यस्यार्थस्यात्र विवक्षितत्वात् । यद्वा प्रमाणादिपदेन तर्कादेः परिग्रहः । तथाच चार्वाकस्य प्रमाणा-भ्युपगमेऽपि तर्काभ्युपगमो नास्तीति व्यभिचार इत्यर्थः । चार्वाकैकदेशी चार्वाक इत्यप्याहुः । ननु माध्यमिकस्य सर्वशून्यत्ववादितया व्यवहारस्याप्यभावात् कुतो व्यभिचार इत्यत आह ॥ **तस्येति** ॥ माध्यमिकस्यापि सांवृतो व्यवहारोऽस्ति । अन्यथा प्रसक्त्यभावात् प्रतिषेधासंभवादित्यर्थः । किञ्च कथकवाग्व्यवहारः प्रमाणादिसत्तास्वीकारपुरःसरः साधनबाधनक्षमव्यवहारत्वात् भाट्टादिव्यवहारवत् । विपक्षे चार्वाकादिव्यवहारवत् साधनादिक्षमता न स्यादिति द्वितीये अनुमानं प्रयोक्तव्यम् । तत्राद्येऽ-समव्यापकयोर्हेतुसाध्ययोर्व्यतिरेकव्याप्तिनियमात् साधनबाधनक्षमव्यवहाराभावेन प्रमाणादिसत्तानभ्युपगमेन प्रवर्तितत्वं व्याप्तमिति चार्वाकादिव्यवहारे त्वया दर्शनीयम् । अनुमानस्य सोपाधिकत्वात् व्यतिरेके उपाधौ च अन्वये मूलशैथिल्यमेवेत्यभिप्रेत्याह ॥ **व्यतिरेके चेति** ॥ सद्वचनाभासलक्षणान्यसिद्ध्यादीनि तेषामन्यतमयोगित्वादित्यर्थः । ननु चायं नोपाधिः, सति साध्ये, घटादावसत्वेन साध्याव्यापकत्वादिति चेत् । मैवम् । पुरुषस्य श्यामत्वे शाकपाकजत्वस्येव वाग्व्यवहारत्वे सति साधनबाधनक्षमत्वाभावे सद्वचनाभासलक्षणयोगित्वं प्रयोजकमिति संतोष्टव्यम् । केचित्– किं च विशिष्टव्यवहारस्यापि माध्य-मिकादिव्यवहार एव व्यभिचारः । ननु माध्यमिकादिव्यवहारः साधनबाधनक्षमो न भवति । प्रमा-णादिसत्ताभ्युपगमपुरःसरत्वाभावादित्यनुमानेन हेतोरेवाभावसाधनान्न व्यभिचार इत्याशङ्क्य अनुमानस्य सोपाधिकत्वान्न हेतुव्यतिरेकसाधनत्वमित्याशयेनाह ॥ **व्यतिरेके चेति** ॥ साधनबाधनक्षमव्यवहारत्व-रूपपूर्वहेतुव्यतिरेके माध्यमिकव्यवहारनिष्ठतया व्यभिचाराभावायोक्तरीत्या साध्यतया विवक्षित इत्यर्थः । सद्वचनं समीचीनप्रयोगः, तदाभासो व्यभिचारादिः, तल्लक्षणं साध्यात्यन्ताभावसामानाधिकरण्यादिः तद्यो-गित्वमित्यर्थः । सद्वचनाभासशब्देन निग्रहस्थानं विवक्षितं, तल्लक्षणं तत्त्वज्ञानाभावलिङ्गत्वं, तद्योगित्व-मित्यर्थ इत्यन्ये । ननु प्रमाणादिसत्तानभ्युपगतावनिर्णय इत्यत आह ॥ **यत इति** ॥ शब्दो द्रव्य-

मव्यवहितसंबंधग्राह्यत्वात् पटवदिति । शब्दो न द्रव्यं बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपादिवदिति व्यवहाराभ्युपगते प्रमाणसत्तापुरःसरत्वे अन्योन्यमाभासतया प्रतिषेधो दृश्यते । प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वस्य साधनाद्यक्षमत्वप्रयोजकत्वे तन्न स्यादिति भावः । ननु यथा कथकव्यवहारस्य प्रमाणादिसत्ताभ्युपगमपूर्वकत्वासाधने भवता व्यभिचारादिकमुच्यते तथा तस्य प्रमाणाद्यसत्त्वाभ्युपगमपूर्वकत्वसाधने मयाऽप्याश्रयासिद्ध्यादिकं वक्तुं शक्यत एवेत्याशङ्कते ॥ **नन्विति** ॥ यद्यप्येतत् पक्षचतुष्टयदूषणानन्तरमाशङ्कनीयम् । तथाऽपि विलम्बमसहमानेनात्रैवाशङ्कितमिति ध्येयम् । ननु वयं कथापूर्वकाले प्रमाणादिसत्ताभ्युपगमस्याप्रयोजकत्वमाचक्ष्महे । न तु प्रमाणादीनि न सन्तीत्येवंरूपतदसत्वाभ्युपगमस्यापि कथाप्रयोजकत्वेन पूर्वकालसत्वं, येनेदं चोद्यं स्यादित्याह ॥ **न ब्रूम इति** ॥ ननु प्रमाणादिसत्वं त्वया कथापूर्वकाले नाभ्युपगतं, तदसत्वमपि यदि नाभ्युपगम्यते, तदा प्रमाणादीनां व्यवहारागोचरत्वप्राप्त्या प्रमाणेन तर्केण च व्यवहर्तव्यमित्यादिरूपसमयबन्धाद्यसंभवेन पुनः कथाऽऽरम्भोऽनुपपन्न इत्याशङ्कते ॥**किन्नामेति**॥ उत्तरमाह ॥ **सन्ति न सन्तीत्यादिना** ॥ अत्र कथाशब्द आवर्तनीयः । तथा चेत्थं योजना । यथा स्वीकृत्य तानि भवता व्यवह्रियन्त, समयबन्धादिपूर्वककथाऽऽरभ्यते, तथा सन्ति न सन्ति प्रमाणादीनीत्यस्यां चिन्तायां उदासीनैस्तथाव्यवहारिभिरुपेक्षितसदसत्वकप्रमाणैर्व्यवहर्तव्यमित्येव समयबन्धादिरूपव्यवहारवद्भिः अस्माभिरपि कथा प्रवर्त्यतामिति ब्रूम इति । प्रमाणादिसत्ताऽभ्युपगन्त्रा त्वया यादृशसमयबन्धेन कथाप्रवृत्तिरभ्युपगता तादृशसमयबन्धेनैव प्रमाणादिसत्वाद्युदासीनेन मयाऽपि कथाप्रवृत्तिरुच्यत इति भावः ॥ **न तृतीय इति** ॥ प्रमाणादिसत्तानभ्युपगमे किमियं कथा नोपपद्यते । कथान्तरं वा । नाद्यः । आरब्धत्वादेव । न द्वितीयः । विमताः कथाः प्रमाणादिसत्तानभ्युपगमपुरःसराः कथात्वात् प्रारब्धैतत्कथावदिति कथान्तरस्याप्युपपत्तेरिति भावः । चार्वाकादेः कथाप्रवेशेऽयं दोषो वक्तव्य इति बोध्यते उत कथातोऽन्यत्र वक्तव्य इति । उभयथाप्यनुपपत्तिरित्याह ॥ **तस्येति** ॥ तत्र हेतुमाह ॥ **कथायामिति** ॥ कथाप्रवेशे सत्येव तत्वाज्ञानलिङ्गनिग्रहस्तस्येति विनेयबोधनं संभावितम् ॥ कथातोऽन्यत्र निग्रहाविषयत्वात्, तथाच व्याघात इत्यर्थः ॥ **अथ मन्यस इति** ॥ प्रमाणादीनां कारणत्वं तवापीष्टं, नियतापूर्वक्षणसत्वमेव कारणत्वमिति सत्वमभ्युपगन्तव्यमित्यर्थः । सत्ताऽभ्युपगमस्य कथाप्रवृत्त्युत्तरकालसाध्यत्वं किं कथातः पूर्वं वादिप्रतिवादिभ्यामनुरोद्धव्यं नियमस्थित्यभ्युपगममाक्षिपतीत्यर्थः । तर्हि विचारप्रवृत्त्यैव तन्निरूप्यतामत आह ॥ **तदर्थमेवेति** ॥ विचारार्थमेवेत्यर्थः । नियमस्य प्रमाणादिसत्ताभ्युपगमनियमस्य । तथाच विचारसिद्धौ व्यवहारस्य प्रामाणिकत्वसिद्धिः, तत्सिद्धौ सत्वाभ्युपगमसिद्धिः, ततश्च विचारसिद्धिः इति चक्रकापत्तिरिति भावः । एके तु विचारप्रवृत्त्या प्रमाणादिसत्ताभ्युपगमस्यापि प्रामाणिकलोकव्यवहारसिद्धत्वम् । तत्सिद्धेन प्रमाणादिसत्ताभ्युपगमेन विचारप्रवृत्तिरित्यन्योन्याश्रय इत्याहुः । अबा-

ध्यत्वे सति लोकसिद्धत्वं स्वीकारप्रयोजकमिति न शरीरात्मत्वादीनामपि स्वीकारप्रसङ्ग इति शङ्कते ॥ **पश्चादिति** ॥ हेत्वन्तरं नाम निग्रहस्थानं स्यादिति दूषयति ॥ **तर्हीति** ॥ लोकसिद्धेरप्रयोजकतामाह ॥ **अन्यथेति** ॥ प्राप्ताप्राप्तविवेकेनाबाध्यत्वमेव स्वीकारप्रयोजकमागतम् । न लोकव्यवहारसिद्धत्वम् । अबाध्यत्वं प्रमाणादिसत्तायाः न विचारप्रवृत्तिमन्तरेण निश्चेतुं शक्यमिति भावः ॥ **न चतुर्थ इति** ॥ न च, मया कथापूर्वं प्रमाणादिसत्ताऽभ्युपगतेति न फलातिप्रसङ्ग इति, कयाऽपि नियमस्थित्या प्रवृत्तायां कथायां भवतेदं दूषणं वाच्यम् । तथैव कथान्तरप्रवृत्त्युपपत्तेः । अन्यथा अन्योन्याश्रयादिप्रसङ्गादिति उक्तन्यायेन कथातःपूर्वं प्रमाणादिसत्ताऽभ्युपगमस्य कर्तुमशक्यत्वात् । तथा च व्यवहारनियम एव फलातिप्रसङ्गो न भवतीति त्वयापि वाच्यमिति भावः ।

प०—**इत्युक्तमिति** ॥ अन्यथा प्रामाणिकमित्यवक्ष्यदिति भावः । अनङ्गीकुर्वतामित्यत्र द्वितीय-योजनायामुक्ततर्के परोक्तबाधकमनुवदति ॥ **यदत्रेत्यादिना** तदेतत्सर्वमनेनापहसितमित्यन्तेन । अत्र विश्व-सत्यतामनङ्गीकुर्वतां कथकता न स्यादित्युक्तप्रसङ्गे यद्बाधकमुक्तं तदपहसितमिति दूरेणान्वयः । हेतुभावा-द्धेतुत्वादित्यर्थः ॥ **लोकसिद्धत्वादिति** ॥ प्रमाणादिसत्त्वस्य लोकव्यवहारसिद्धत्वादित्यर्थः ॥ **तदिति** ॥ प्रमाणसत्त्वानभ्युपगमस्येत्यर्थः । प्रमाणहीनस्यापि तत्वनिर्णयादिति भावः ॥ **किं व्यवहारमात्रमिति** ॥ विमतो व्यवहारः प्रमाणसत्त्वाभ्युपगमपूर्वकः व्यवहारत्वादिति साध्यते, साधनबाधनक्षमव्यवहारत्वादिति वेति प्रश्नार्थः ॥ **बाध इति** ॥ चार्वाकादिनाऽनुमानादिप्रमाणसत्ताऽनभ्युपगमादिति भावः ॥**सिद्धं ममेति**॥ मायावादिव्यवहारस्य साधनादिक्षमत्वं प्रतिवादिसिद्धं चेत्तर्हि विश्वमिथ्यात्वं प्राप्तमेवेति भावः ॥ **व्यतिरेके चेति** ॥ नायं व्यवहारवान् । साधनादिक्षमव्यवहारवान्वा न भवति । प्रमाणसत्त्वानभ्युपगन्तृत्वादिति वा । त्वदीयव्यवहारः साधनाद्यक्षमः प्रमाणसत्ताभ्युपगमपूर्वकत्वविधुरत्वादिति वा । व्यतिरेकसाधने चेति वा पूर्वोक्तसाध्यहेत्वोर्व्यतिरेकव्याप्तौ चेति वा प्रमाणसत्वानभ्युपगमो न प्रयोजकः । किन्तु सद्वचनस्य निर्दोषशब्दस्य आभासः तद्वदवभासमानत्वे सति तल्लक्षणशून्यः शब्दस्तस्य यल्लक्षणं योग्यता-राहित्यादिरूपं तद्युक्तत्वमेवोपाधिः प्रयोजकमित्यर्थः । कथमिदं ज्ञायते प्रमाणसत्त्वानभ्युपगमोऽप्रयोजकः त्वदुक्तमेव प्रयोजकमित्यतो व्यभिचाराव्यभिचाराभ्यामिति भावेनाह ॥ **यत इति** ॥ मतान्तरानुसारिभिः तार्किकमतानुसारिभिः प्रवर्तिताः शब्दानित्यत्वादिव्यवहाराः अपरैर्मीमांसकैः शब्दनित्यत्वमतानुसारिभि-रित्यर्थः । कथ्यन्त इत्यनन्तरं सद्वचनाभासलक्षणायोगित्वे च प्रत्यक्षप्रामाण्यादिव्यवहाराः साधनादिक्षमा इति कथ्यन्त इत्यपि ध्येयम् । सिद्धान्ती शङ्कते ॥ **ननु यदीति** ॥ मायावादी समाधत्ते॥ **न ब्रूमो वयमिति** ॥ **भवतेति** ॥ तत्त्ववादिनेत्यर्थः ॥ **इदमिति** ॥ प्रमाणसत्ताऽभावे साधनादिक्षमव्यवहारो न स्यादिति

दूषणमित्यर्थः ॥ **पर्यनुयोगेति** ॥ दूषणाभिधानेत्यर्थः ॥ **कथान्तरेति** ॥ शब्दनित्यत्वानित्यत्वविषये तावदेका कथा । तदुपायस्यैकेन सत्त्वमन्येनासत्त्वमुपेत्योपक्रान्ता । तत्र च शब्दनित्यत्वादिचिन्तां हित्वा तदुपायो यदि तेऽपन्स्यात्तर्हि तव कथा न स्यादित्यापादने कथान्तरप्रसक्तिदोषः । असतो व्यवहाराङ्गत्वा-नङ्गत्वचिन्तारूपकथान्तरमप्यसतो व्यवहाराङ्गत्वसाधनोपायस्यैकेन सत्त्वमन्येनासत्त्वमुपेत्य पूर्वत्रेव प्रवर्तनीयम् । तथैवोपक्रमात् । तत्रापि कथान्तरे एवमापादने द्वितीयकथात्यागेन तदुपायगोचरतृतीयकथाप्रसक्तिः । साऽपि तथैव चालनीया। तत्राप्येवमापादने पुनस्तथैव कथान्तरप्रसक्तिरित्यपर्यवसितकथान्तरप्रसक्तेरित्यर्थः । एके तु अन्तरशब्दो विशेषवाची । तथैवैकेन सत्त्वमपरेणासत्त्वमुपेत्यैव तादृशकथाविशेषस्य प्रसक्तत्वेन तत्रैवं दोषोक्तेरयुक्तत्वादित्यर्थ इत्याहुः । तच्चिन्त्यम् । नचैवं कथान्तरप्रसक्त्यादिदोष इत्यग्रिमग्रन्थविरोधादित्यन्ये । ज्ञाप्यन्त 'इत्यस्य गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णाविति'द्विकर्मकत्वात्कर्मणि प्रयोगाच्च शिष्यादय इत्यनधिकारमिति च निर्देशो युक्तः ॥ **कथाप्रवेशा-प्रवेशयोरिति** ॥ प्रवेशे कीदृशीं मर्यादामित्यनेनोक्तविकल्पदोषाणामापत्तेरित्यस्य स्फुटत्वादप्रवेशपक्षे व्यनक्ति ॥ **कथायामेव हि निग्रह इति** ॥ हियेत इत्यर्थे । प्राश्निकल्पितकलत्रचतुष्टयमध्ये कथकप्रवर्तनीयवाग्व्यवहारं प्रति हेतुभावादितिपक्षं निराह ॥ **न द्वितीय इति** ॥ **हेत्वनुपपत्तेरिति** ॥ प्रमाणादेः सत्त्वानङ्गीकारे कारणायोगादित्यर्थः ॥ **तच्चेति** ॥ तत्वावधारणादि च सम्भाव्यत इत्यन्वयः ॥ **व्यवहारेति** ॥ पञ्चावयवत्र्यवयवादिप्रमाणतर्कादिव्यवहारविषयसमयबन्धादेवेत्यग्रे व्यक्तम् । समयस्सङ्केतः । इत्थमेव । व्यवहारनियमवदेवेत्यर्थः । लोकसिद्धत्वादितिपक्षं निराह ॥ **नापि तृतीय इति** ॥ **पूर्वं नियमस्यगवेषणादिति** ॥ तथाच पूर्वं व्यवहारनियमसमयबन्धादेव प्रवृत्तकथायां प्रमाण व्यवहारोपपत्तौ किं तत्सत्तयेति भावः ॥ **इति तावन्न भवतीति** ॥ किन्तु विचारबाध्यत्वाबाध्यत्वाभ्यामेवेति प्राप्तमिति भावः । प्रमाणसत्त्वानभ्युपगमस्य तत्वनिर्णयविजयातिप्रसञ्जकत्वादितिकल्पं निराह ॥ **न चतुर्थ इति** ॥ विश्वशब्दार्थः प्रमाणादीति ॥

या० — प्रमाणादिसत्ताऽभ्युपगमस्य कथाऽङ्गत्वे मानाभावात्प्रमाणाद्याकार एव प्रयोजकोऽतो ऽसद्वादिनोऽपि कथाधिकारः किमुतानिर्वचनीयवादिन इत्यभिप्रेत्य यत्केनचिदुक्तं तदनूद्य दूषयति ॥ **यदत्रोक्तमित्यादिना** ॥ कथकेनेत्येकवचनं वैतण्डिकाभिप्रायेण । तदितरस्य प्रमाणादिसत्ताऽभ्युपगम सिद्धेः । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति कात्यायनस्मरणात् । कस्य हेतोः कस्माद्धेतोरित्युक्तानेव विकल्पान्विशदयति ॥ **किमित्यादिना** ॥ अशक्यत्वात्तत्सत्ताऽभ्युपगम इति शेषः । रसो रूपमविनाभावबलेनैव गमयति न कार्यकारणभावः तत्र मूलं, एवं कथकवाग्व्यवहारोऽपि प्रमाणादि-

सत्ताऽभ्युपगमाविनाभूत इत्यैव तं गमयति । न कारणकार्यत्वेनेति प्रथमविकल्पार्थः । यथा ज्ञानलक्षणं कार्यं स्वकारणं कल्पयति तथा वाग्व्यवहारोऽपि कार्यतया स्वकारणं प्रमाणादिसत्ताऽभ्युपगमं गमयतीति द्वितीयविकल्पार्थः । यद्यपि कार्यमप्यविनाभावेनैव गमयति । तथापि स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमिति पराभ्युपगमात्पृथगुपन्यासः । लोकशब्देन लोकव्यवहार उच्यते । तथा च यथा घटादिकं लोकव्यवहारसिद्धमङ्गीकार्यं तथा प्रमाणादिसत्ताऽपीति तृतीयविकल्पार्थः । प्रमाणादिसत्तामनभ्युपगच्छतोऽपि कथकस्य यदि वादजल्पफलयोस्तत्त्वनिर्णयजययोः सिद्धिस्तदोन्मत्तस्यापि तत्सिद्धिः स्यादिति प्रमाणादिसत्तानभ्युपगमस्य फलातिप्रसङ्गहेतुत्वात्तत्सत्ताऽभ्युपगन्तव्येति चतुर्थविकल्पार्थः ॥ **साधनबाधनक्षम इति** ॥ साधनक्षमत्वं, स्वपक्षप्रमितिजनकत्वं बाधनक्षमत्वं परपक्षप्रतिषेधप्रमितिजनकत्वम् । विमतो मायावादिव्यवहारः प्रमाणादिसत्ताऽभ्युपगमपुरःसरः । व्यवहारत्वात्संप्रतिपन्नभाट्टादिव्यवहारवदिति प्रथमकल्पाभिप्रेतमनुमानं दूषयति ॥ **न प्रथम इति** ॥ **चार्वाकमाध्यमिकादेरिति** ॥ ननु माध्यमिकादेर्विश्वमिथ्यात्ववादितया प्रमाणादिसत्तानभ्युपगन्तृत्वेऽपि चार्वाकस्य प्रत्यक्षरूपप्रमाणसत्ताऽभ्युपगन्तृत्वात्कथं तद्व्यवहारे व्यभिचार इति चेन्न । सकलप्रमाणसत्ताऽभ्युपगमः कथकवाग्व्यवहारव्यापको, यत्किञ्चित्प्रमाणसत्ताऽभ्युपगमो वा । आद्ये चार्वाककथायां व्यभिचारो, द्वितीये माध्यमिककथायामित्यस्यार्थस्य विवक्षितत्वात् । यद्वा प्रमाणादीत्यादिपदेन तर्कादेः परिग्रहः । तथा च चार्वाकस्य प्रत्यक्षरूपप्रमाणसत्ताऽभ्युपपगमेऽपि तर्काभ्युगमो नास्तीति व्यभिचार इत्यर्थः । चार्वाकैकदेशी चार्वाक इत्यप्याहुः । ननु चार्वाकादेर्वाग्व्यवहार एव नास्ति कुत्र व्यभिचार इत्यत आह ॥ **तस्यैवेति** ॥ तत्तद्दर्शने तत्तदुक्तयुक्तिनिराकरणान्यथाऽनुपपत्तिरेव तद्वाग्व्यवहारे प्रमाणमित्यर्थः । विमतो व्यवहारः, प्रमाणादिसत्ताऽभ्युपगमपुरःसरः, साधनबाधनक्षमव्यवहारत्वाद्भाट्टादिव्यवहारवत् । विपक्षे चार्वाकादिव्यवहारवत्साधनादिक्षमता न स्यादिति द्वितीयं विकल्पमाशङ्क्याह ॥ **द्वितीय इति** ॥ किंच विशिष्टव्यवहारस्यापि माध्यमिकादिव्यवहार एव व्यभिचारः । ननु माध्यमिकादिव्यवहारः साधनबाधनक्षमो न भवति । प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वाभावाद्वन्ध्यापुरुषवाग्व्यवहारवदित्यनुमानेन तत्र हेत्वभावसिद्धेर्न व्यभिचार इत्याशङ्कायामस्यानुमानस्य सोपाधिकत्वान्नोक्तहेत्वभावसाधकत्वमित्याशयेनाह ॥ **व्यतिरेके चेति** ॥ साधनबाधनक्षमव्यवहारत्वरूपपूर्वहेतुव्यतिरेके माध्यमिकादिव्यवहारनिष्ठतया व्यभिचारायोक्तरीत्या साध्यतया विवक्षित इत्यर्थः । यद्वा व्यतिरेके पूर्वानुमानव्यतिरेकव्याप्तावित्यर्थः । वस्तुतस्तु माध्यमिकादिव्यवहारो न साधनादिक्षम इत्युक्तानुमानेऽन्वय एवायमुपाधिरिति द्रष्टव्यम् । अत एव सिद्धान्तेऽन्वय एवायमुपाधिरिति वक्ष्यति । सद्वचनाभासः स्फुटवचनाभासो व्यभिचारादिस्तल्लक्षणं साध्यात्यन्ताभावसामानाधिकरण्यादि तद्योगित्वमित्यर्थः । तथा च वाग्व्यवहारस्य साधनाद्य-

क्षमत्वे साधनदूषणाभासलक्षणयोगित्वं तन्त्रं न तु प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वाभाव इति भावः । सद्वचनाभासशब्देन निग्रहस्थानं विवक्षितम् । तल्लक्षणं तत्त्वज्ञानाभावलिङ्गत्वं तद्योगित्वमित्यर्थ इत्यन्ये । अत्र च वाग्व्यवहाररूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वस्य विवक्षितत्वान्न घटादौ साध्याव्यापकतेति द्रष्टव्यम् । उपाधिरेव साध्ये प्रयोजको न हेतुरित्युक्तं विशदयति ॥ **यतोऽभ्युपगम्यापीति** ॥ मतान्तरानुसारिभिर्मीमांसकैः । मतान्तरानुसारिभिरपरैस्तार्किकैः । तथा च नैयायिकमीमांसकयोः कथमुभयोरपि प्रमाणादिसत्ताऽभ्युपगमवत्त्वमुक्तहेत्वभावेऽपि साध्यस्योपाधिप्रयुक्तस्यैव सत्त्वेन नोक्तहेतुस्तत्प्रयोजक इति भावः । तस्मात्साधनबाधनक्षमव्यवहाररूपहेतोरपि माध्यमिकादिव्यवहारे व्यभिचारो युक्त एवेत्यवधेयम् । ननु कथकव्याग्व्यवहारस्य प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वाभावे तदसत्ताऽभ्युपगमपूर्वकत्वमेवोक्तं स्यात् । 'परस्परविरोधे तु न प्रकारान्तरस्थितिरि'ति वचनात् । तथा च प्रमाणाभावेनाश्रयासिद्धिर्न वा साधनदूषणमित्यव्यवस्था स्यादिति शङ्कते ॥ ॥ **नन्विति** ॥ यद्यप्येतत्पक्षचतुष्टयदूषणानन्तरमाशङ्कनीयम् । तथापि विलम्बमसहमानेनात्रैवाऽऽशङ्कितमिति ध्येयम् । कथापूर्वकाले प्रमाणादिसत्ताऽभ्युपगमस्याप्रयोजकतामाचक्ष्महे न तु प्रमाणादीनि न सन्तीत्येवंरूपतदसत्त्वाऽभ्युपगमस्यापि कथापूर्वकाले सत्त्वमनिर्वचनीयरूपतृतीयकोटेः सत्वेन तयोः परस्परविरोधस्यैवासंमतत्वात् । अतो नेदं चोद्यं युक्तमित्याह ॥ **न ब्रूम इति** ॥ उदासीनैः कथाऽऽरभ्येति पूर्वेणान्वयः एतदेवोपपादयति ॥ **यथेति** ॥ अत्र तथेत्येकस्तच्छब्दो यच्छब्दोपादानादेव द्रष्टव्यः । तथा च यथा तानि प्रमाणादीनि स्वीकृत्य भवता व्यवह्रियते, तादृशव्यवहारनियमे समयं बद्ध्वा कथाऽऽरभ्यते, तथा, तथाव्यवहर्तृभिरुपेक्षितसदसत्त्वप्रमाणैर्व्यवहर्तव्यमित्येवं समयबन्धादिरूपव्यवहारवद्भिरस्माभिरपि कथा प्रवर्त्यतामिति ब्रूम इति सम्बन्धः । यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी न सिध्येदित्यादिनोक्तं दूषणं स्वव्याहतं चेति वक्तुमाह ॥ **किञ्चेति** ॥ कथायामेव दूषणाभिधानं नान्यत्रेति नियमादेतेषां विकल्पानामवकाश इति ध्येयम् ॥ **एतादृक्पर्यनुयोगेति** ॥ यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी न सिध्येदित्येतादृशपर्यनुयोगानवकाशादित्यर्थः ॥ **स्वस्याप्यापत्तेरिति** ॥ प्रमाणाद्यसत्त्वस्य स्वेनाप्यङ्गीकृतत्वेन स्वस्यापि धर्म्याद्यसिद्धिरूपदूषणापत्तेरित्यर्थः ॥ **तथैव कथान्तरेति** ॥ यथा प्रकृतैनद्दूषणाधिकरणकथारूपव्यवहाराख्यो धर्म्येकेन प्रमाणादिसत्ताऽनभ्युपगमेऽपि सिद्धः । तथैव मया प्रमाणादिसत्ताऽनभ्युपगमेऽपि मत्कर्तृककथान्तरादिरूपव्यवहारादिलक्षणधर्म्यादिसिध्युपपत्तिरिति भावः ॥ **तथा च व्याघात इति** ॥ स्वयमेव प्रमाणादिसत्ताऽभ्युपगममन्तरेणापि प्रकृतकथारूपव्यवहारप्रवृत्तिमङ्गीकृत्य, तत्र यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी कथं सिध्येदिति दूषणाभिधाने व्याघात इत्यर्थः । ननु प्रमाणादिसत्ताऽनभ्युपगमे कथाऽनधिकारो न कथायां प्रतिपाद्यते

किन्तूपदेशद्वारेणैव शिष्यशिक्षार्थं क्रियते ततो न व्याघात इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ शिष्यादय इत्यत्रादिपदेन पुत्रादयो ग्राह्याः ॥ **कथं च तथेति** ॥ एवमभिधानं शिष्यादिबोधनाय कथमुपपन्नं स्यादित्यर्थः । कुत इत्यत आह ॥ **तस्य कथेति** ॥ तस्य चार्वाकादेर्यदि कथाप्रवेशानन्तरमेतद्दूषण मुच्यते तदेयमेव कथा कथं प्रवृत्तेत्याद्युक्तविकल्पदूषणप्रसङ्गः । यदि न तस्य कथाप्रवेशस्तदा न तं प्रति दूषणाभिधानं युक्तमिति शिष्येणापि वक्तुं शक्यत्वान्न तेनापीदं बोद्धुं शक्यमित्यर्थः । ननु यदि न तस्य कथाप्रवेशस्तदा न तं प्रति दूषणाभिधानमिति कुत इत्यत आह ॥ **कथायामेव हीति** ॥ कथायामखण्डिताहङ्कारेण परेण पराहङ्कारखण्डनस्य, कथाकारणसम्यग्ज्ञानाभावस्य वा निग्रहत्वादिति भावः । प्रमाणादिसत्ताऽभ्युपगमस्य कथकवाग्व्यवहारं प्रति हेतुत्वात्कथातः पूर्वं तदभ्युपगतिरिति द्वितीयपक्षं प्रतिषेधति ॥ **न द्वितीय इति** ॥ वाग्व्यवहारं प्रति प्रमाणादीनां हेतुत्वं सम्भाव्येतापि न तु तत्सत्ताऽभ्युपगमस्यापि, माध्यमिकवाग्व्यवहारे व्यतिरेकव्यभिचारादित्यर्थः ॥ ननु प्रमाणादीनां हेतुत्वं यदि मनुषे तदा तत्सत्ताऽभ्युपगमस्यापि हेतुत्वं मंस्यसे । यतो नियतपूर्वसत्त्वं हेतुत्वम् । तच्चावश्याभ्युपेयमित्यवर्जनीयसिद्ध एव प्रमाणादिसत्ताभ्युपगमः कथातः पूर्वमित्याशङ्कते ॥ **अथेति** ॥ यद्यद् सत्तया ज्ञायते तत्तदाऽभ्युपगम्यत इति व्याप्तेरुभयसिद्धत्वादिति भावः । प्रमाणादीनि सन्ति हेतुत्वाद्ब्रह्मवत् । प्रमाणादीन्यभ्युपगमविषयाः सत्त्वाद्ब्रह्मवदिति यस्यां कथायां त्वया साधनीयं सा किमुक्तविधया प्रमाणादिसत्ताऽभ्युपगमे प्रवृत्ता । उत तदनभ्युपगमेऽपि समयबन्धमात्रात् । आद्येऽन्योन्याश्रयः कथाप्रवृत्तौ सत्ताऽभ्युपगमसिद्धिस्तत्सिद्धौ च कथाप्रवृत्तिरिति । द्वितीये त्वाह ॥ **कथाऽपीति** ॥ अग्रे वक्ष्यमाणयेत्यर्थः । नियमस्थितिः समयबन्धः । भवता प्रसाध्येत्यनन्तरं तथा च तद्वदेव कथान्तरप्रवृत्तिसम्भवेनास्मदिष्टसिद्धिरिति वाक्यशेषः । कयाऽपि नियमस्थित्येत्यनेन समयबन्धस्य कथापूर्वकत्वं सत्त्वमावश्यकमित्युक्तं तदपि कुत इत्यतस्तत्कल्पकं वक्तुमाह ॥ **कथात इति** ॥ कथातः पूर्वं समयबन्धाभ्युपगमकल्पकं कथाफलमेवास्तीत्यर्थः । केचित्तु । ननु प्रमाणादिसत्ताऽभ्युपगमवत्समयबन्धोऽपि कथायां तन्त्रमेवेत्यत आह । कथात इतीत्यप्याहुः ॥ **व्यवहारनियमेति** ॥ व्यवहारनियमरूपसमयबन्धादित्यर्थः ॥ **द्वाभ्यामिति** ॥ अनेन कथातः पूर्वं समयबन्धाभ्युपगम उभयसम्मतो, न प्रमाणादिसत्ताऽभ्युपगम इव हेतुना साध्य इति सूचितम् । तेन कथायामेव, समयबन्धः पूर्वमावश्यक इति केनचिद्धेतुना साधनीयम् । कथा च समयबन्धाधीनेति परस्पराश्रयोऽन्तरेण च तं कथैष्टव्येति शङ्का निराकृतेति ध्येयम् । अनुरोध्यं समयबन्धं दर्शयति ॥ **स चेति** ॥ वादिनेव साधकेन प्रथमप्रयोक्त्रा । प्रमाणतर्काभ्यां व्यवहर्तव्यम् । वादाभिप्रायमेतत् । जल्पादौ छलादिप्रयोगस्यापि सम्भवात् । प्रायिकत्वापेक्षया वेदमुक्तम् । सत्साधनापरिस्फूर्तिदशायामेव कदाचिच्छलोपादानात् । इत्यादीत्यनेन

प्रतिवादिनाऽपि कथाऽङ्गतत्वज्ञानविपर्ययलिङ्गप्रतिज्ञाहान्याद्यन्यतमं निग्रहस्थानं तस्य प्रदर्शनीयम् । तद्व्युत्पादने प्रथमस्य भङ्गो व्यवहर्तव्यः । अन्यथा तु द्वितीयस्यैव । तादृशेतरौ च जेतृतया व्यवहर्तव्यौ । प्रामाणिकः पक्षस्तत्त्वतया व्यवहर्तव्य इत्यादिरूपसमयबन्धसङ्ग्रहः । ननु प्रमाणासत्ताऽपि तथैवानुरुध्यतामित्यत आह ॥ **न चेति** ॥ समयबन्धस्यावश्यकत्वात्तन्मात्रमनुरोध्यं न तु प्रमाणाद्यभ्युपगमोऽपि कल्पनागौरवप्राप्तेरित्यर्थः ॥ **कथाप्रवृत्तिं विनेति** । कथाप्रवृत्त्यभाव इत्यर्थः । लोकसिद्धत्वात्तत्सत्ताङ्गीकार्येति तृतीयं निरस्यति ॥ **नापीति** ॥ **प्रमाणव्यवहार इति** ॥ प्रामाणिकलोकव्यवहार इत्यर्थः । पामराः शास्त्रसंस्काररहिताः । 'विवर्णः प्राकृतो नीचः पामरस्तु पृथग्जन'इत्यभिधानात् । तर्हि विचारप्रवृत्त्यैव तन्निरूप्यतामित्यत आह ॥ **तदर्थमेवेति** ॥ विचारार्थमेवेत्यर्थः ॥ **नियमस्येति** ॥ प्रमाणादिसत्ताऽभ्युपगमनियमस्येत्यर्थः । तथाच विचारप्रवृत्त्या प्रमाणादिसत्ताऽभ्युपगमस्य प्रामाणिकलोकव्यवहारसिद्धत्वं तत्सिद्धेन प्रमाणादिसत्ताऽभ्युपगमेन विचारप्रवृत्तिरित्यन्योन्याश्रय इति भावः ॥ **शरीरेति** ॥ अहं स्थूल इत्यादिप्रत्ययाच्छरीर एवात्मव्यवहारादित्यर्थः । विचाराबाध्यलोकव्यवहारसिद्धत्वमभ्युपगम्यतायां तन्त्रमतो न शरीरात्मत्वादीनामपि स्वीकारप्रसङ्गः इति शङ्कते ॥ **पश्चादिति** ॥ प्राप्ताप्राप्तविवेकेनाबाध्यत्वमेव स्वीकारप्रयोजकमागतं न लोकव्यवहारसिद्धत्वम् । अबाध्यत्वं च प्रमाणादिसत्तायां न विचारप्रवृत्तिमन्तरेण निश्चेतुं शक्यमिति भावः ॥ **यादृशो भवतेति** ॥ समयनियमबन्धादेवावश्याश्रयणीयात्फलव्यवस्थोपपत्तेः कथातः पूर्वं प्रमाणादिसत्ताऽभ्युपगमो व्यर्थ इत्यर्थः । तथा चावश्यक्लृप्तनियतपूर्ववर्तिन एव नियतसमयबन्धात्कार्यसम्भवे तत्सहभूतस्य प्रमाणादिसत्ताऽभ्युपगमस्यान्यथासिद्धस्य न कथादिकारणत्वमिति प्रमाणादिसत्ताऽभ्युपगमो व्यर्थ इत्यर्थः ॥ **तस्येति** ॥ कथापूर्वं प्रमाणादिसत्ताऽभ्युपगमाभावे व्यवहारादिनियममात्रस्योन्मत्तादिसाधारण्यमुक्त्वा यदि फलातिप्रसङ्ग उच्यत इत्यर्थः ॥ **तदा त्वां प्रत्यपीति** ॥ कथातः पूर्वं प्रमाणादिसत्ताऽभ्युपगन्तृत्वमप्यस्तीति न फलातिप्रसङ्गः इति कयाऽपि नियमस्थित्या प्रवृत्तायां कथायां भवतेदं दूषणं वाच्यम् । तथैव कथान्तरप्रवृत्त्युपपत्तेरन्यथाऽन्योन्याश्रयादित्युक्तन्यायेन कथापूर्वं प्रमाणादिसत्ताऽभ्युपगमस्यैव कर्तुमशक्यत्वेनोक्तान्यथासिध्या च केवलो व्यवहारनियम एव फलातिप्रसञ्जको न भवतीति त्वयाऽपि वक्तव्यमिति भावः ।

**श्री०—न हीति** ॥ **व्याघातादिति** ॥ पदार्थप्रमितिकरणस्यैव प्रमाणत्वादिति भावः ॥ **तदभावेनेति** ॥ प्रमाणादिसत्ताभ्युपगमाभावेनेत्यर्थः । ननु चार्वाकमते प्रत्यक्षस्यैव प्रामाण्यम् । माध्यमिकस्य सर्वशून्यतया व्यवहारस्याप्यभावात्कुतो व्यभिचार इत्यत आह ॥ **तस्येति** ॥ यद्यपि

चार्वाकः प्रत्यक्षमेकं स्वीकुरुते तथाऽप्यनुमानादिभिर्व्यवहरत्येतत्सत्तां तु न मनुते । माध्यमिकस्य सांवृतो व्यवहारोऽस्ति । अन्यथा प्रसक्त्यभावात्प्रतिषेधासम्भवादित्यर्थः । ननु सोऽपि पक्षीक्रियत इत्यत आह ॥ **तस्यापीति** ॥ प्रमाणादिसत्वस्य तेनानङ्गीकारादिति भावः ॥ **अनुभवेति** ॥ मदनुभवेत्यर्थः । विमतो मायावादिव्यवहारः प्रमाणादिसत्ताभ्युपगमपूर्वकः साधनबाधनक्षमव्यवहारत्वाद्भाट्टादिव्यवहारवदित्यनुमाने बाधादिकमभिधाय व्यतिरेकव्याप्तावुपाधिं चाह ॥ **व्यतिरेके चेति** ॥ **सद्वचनेति** ॥ यः 'परार्थानुमानस्य प्रयोगो वाक्यलक्षण' इति वचनेन परार्थानुमानस्य शब्दरूपत्वाद्वचनेत्युक्तम् । सद्वचनं समीचीनानुमानम् । तदाभासस्य यल्लक्षणं व्यभिचारादि तद्योगित्वमित्यर्थः ॥ **व्यवहार एवेति** ॥ कथ् वाक्यप्रबन्ध इति धातोः कथारूपो यो वाग्व्यवहारस्तद्रूपो यो धर्मी साधनदूषणाधिकरणत्वात्स कथं सिध्येदित्यर्थः ॥ **इति स्वीकृत्येति** ॥ प्रमाणादीनामसत्वं स्वीकृत्येत्यर्थः ॥ **कथायामिति** । कथायामेव हि निग्रह इति भावः ॥ **इदं दूषणमिति** ॥ यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी कथं सिध्येदिति दूषणमित्यर्थः ॥ **स्यादप्येवमिति** ॥ अपिः सम्भावनायाम् । कथकप्रवर्तनीयकथारूपवाग्व्यवहारं प्रति प्रमाणादिसत्ताभ्युपगमस्य हेतुत्वं तदा सम्भावितं स्यादित्यर्थः । वाग्व्यवहारस्वरूपं वाग्व्यवहाररूपकथास्वरूपम् । कुत इत्यत आह ॥ **हेतुतेति** ॥ प्रमाणादिसत्ताभ्युपगमरूपकारणानुपपत्तेस्तदभावादित्यर्थः । स्थितिर्व्याप्तिः ॥ **कथाऽपि नियमस्थित्येति** ॥ प्रमाणेन तर्केण च व्यवहर्तव्यमित्येवंरूपे व्यवहारनियमे यः समयबन्धः सङ्केतकरणं तेन प्रवृत्तायामित्यर्थः ॥ **तच्चेति** ॥ अभिलषितमित्यर्थः ॥ **स चेति** ॥ व्यवहारनियम इत्यर्थः ॥ **प्रमाणादिसत्ताऽपीत्थमेवेति** ॥ यथा प्रमाणेन तर्केण च व्यवहर्तव्यमिति व्यवहारनियमे समयबन्धो द्वाभ्यां क्रियते एवमेव सद्भिरेव प्रमाणैर्व्यवहर्तव्यमिति समयबन्धः क्रियतामित्यर्थः ॥ **तादृशेति** ॥ प्रमाणेन तर्केण च व्यवहर्तव्यमित्येवंरूपेत्यर्थः ॥ **उपपत्तेरिति** ॥ प्रमाणादीनां सत्ता नाङ्गीकर्तुमुचितेत्याशयः ॥ **प्रमाणादिसत्तामित्यादि** ॥ अयं भावः । यः प्रमाणादिसत्तां कथाप्रवृत्तिकारणमङ्गीकरोति । तेनाप्युक्तव्यवहारनियमसमयबन्धस्तावदवश्यमङ्गीकर्तव्यः । तद्व्यतिरेकेण कथाप्रवृत्त्यभावेनाभिलषितस्य तत्त्वनिर्णयादेरनिष्पत्तेः । तथा चावश्यकल्प्यमाननियतपूर्ववर्तिनः समयबन्धादेव कथाप्रवृत्तिरूपकार्यसम्भवे तत्सहभूतस्य प्रमाणादिसत्ताभ्युपगमस्य न कथाप्रवृत्तिकारणत्वं समयबन्धेनान्यथासिद्धत्वात् । अथापि तस्य कारणत्वकल्पने कल्पनागौरवमिति भावः ॥ **तस्येति** ॥ अयं प्रामाणिकलोकव्यवहार इत्यर्थः ॥ **शरीरेति** ॥ अहं स्थूलोऽहं कृश इत्यादिव्यवहारस्तावदस्ति । देहधर्माणां स्थूलत्वादीनामात्मनि व्यवहारश्च देहात्मनोरभेदं विना न सम्भवतीति देहात्मत्वमपि स्वीकार्यं स्यादित्यर्थः । तत् देहात्मत्वादि । **अन्यथा त्विति** ॥ यदि विचाराबाध्या भविष्यतीत्यर्थः ॥ **इतीति** ॥ विचाराबाध्यत्वस्यैवाभ्युपगम्यतायां तन्त्रत्वादित्यर्थः ।

अवश्यकल्प्यमाननियतसमयबन्धेनान्यथासिद्धत्वान्न तत्सहभूतस्य प्रमाणादिसत्ताऽभ्युपगमस्य कथाप्रवृत्तिकारणत्वमित्याशयेनाह ॥ **यादृश इति** ॥ प्रमाणादिसत्तामभ्युपगम्य भवता यादृशो व्यवहारनियम इत्यन्वयः ॥ **यादृश इति** ॥ प्रमाणेन तर्केण च व्यवहर्तव्यमित्यादिरूपः । प्रमाणादिसत्तामभ्युपगम्यैवं व्यवहारनियमे कृते सद्भिरेव प्रमाणैर्व्यवहर्तव्यमित्येवं नियमो भवताऽवलम्बित आश्रित इत्यर्थः । **तस्यैव** नियमस्य ॥ **तदा त्वां प्रतीति** ॥ न च मम कथातः पूर्वं प्रमाणादिसत्ताऽभ्युपगन्तृत्वमस्तीति न फलातिप्रसङ्गो मत्पक्ष इति वाच्यम् ॥ उक्तरीत्याऽन्यथासिध्याऽङ्गीकृतस्याप्यङ्गीकृतप्रायत्वादित्याशयात् ॥

च० —प्रमाणादीनामेव कथौपयिकतोपेयते न तत्सत्यतोरीकृतेरिति कथायां प्रमाणादीनामसत्ता मूरीकुर्वाणा अपि यदाधिऽक्रियन्ते तदा किमुतानिर्वचनीयतामुपगच्छन्त इत्यभिसन्दधतः खण्डनकारस्य दूषणाभासान्प्रत्याचिख्यासुरनुवदति । **यदत्रोक्तमित्यादिना** ॥ नवादितेत्यनुपपन्नमितीत्यन्तेन । कस्य हेतोः कस्माद्धेतोः। निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति कात्यायनस्मृतेः । सत्तायां जातिनिरूपिताऽविनाभावबलेन यथा तदनुमापकता तद्वत्कथकवाव्यवहारस्य प्रमाणादिसत्तोपगतिनिरूपितव्याप्यतापन्नतया तदनुमापकतेति, धूमं प्रति वन्हेर्हेतुत्वात् तस्य तदनुमापकतेव प्रकृतेऽपि तं प्रति तस्या हेतुत्वात्तस्य तदनुमापकतेति, यथा स्तंभादिकं लौकिकव्यवहारविषयीभूतमुपगन्तव्यं तथा प्रमाणादिसत्ताऽपीति, वादजल्पकथाफलीभूततत्वनिर्णयविजयौ प्रति प्रमाणादिसत्तोपगतेर्हेतुतया द्वैतवादिधर्मिकतत्सत्तानभ्युपगन्तृत्वापादककताद्दशफलवैधुर्यापादकापत्तेस्तत्सत्तोपगन्तव्येति च कल्पचतुष्टयीं प्रतिसंधत्ते ॥ किमित्यादिनाऽतिप्रसंजकत्वादित्यन्तेन । हेतूकृतकार्यस्यापि स्वकारणीभूतसाध्यनिरूपितव्याप्तिबलेनैव तदनुमापकतया आद्यकल्पात् द्वितीयस्य भेदो दुर्वच इति तु न शङ्कनीयं । 'स्वभावानुपलब्धिकार्यलिङ्गकमनुमानं त्रिविधमि'ति पराभ्युपगतिमात्रेण विकल्पनात् । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि वोधक' इत्यादौ लोकशब्दस्य तदीयव्यवहारपरतादर्शनेन लोकसिद्धत्वादित्यस्य तादृशव्यवहारविषयत्वादित्यर्थः । **अतिप्रसंजकत्वात्** । प्रमाणादिसत्तामनुपेत्यापि व्यवहार उन्मत्तादेरपि तादृशफलद्वयशालिता स्यादिति प्रसङ्गहेतुत्वात् । आद्येऽपि व्यवहारत्वावच्छेदेन तादृशसाध्यनिरूपिता व्याप्तिरुत सिषाधयिषितार्थगोचरप्रतिपत्त्यौपयिकत्वतद्विपरीतार्थगोचरतज्जनकत्वरूपसाधनबाधनक्षमव्यवहारत्वावच्छेदेनेति कल्पद्वयमभिप्रेत्याह ॥ **आद्येऽपीत्यादिना** ॥ प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वतदभावकोटिकशङ्काऽस्कन्दितव्यवहारे व्यवहारत्वेन भट्टादिव्यवहारं निदर्शनीकृत्य तदुपगतिपूर्वकत्वसाधनेऽनैकान्त्यमभिधत्ते ॥**प्रथम इति**॥ यद्यपि माध्यमिकस्य विश्वालीकत्वोपगन्तृतया तन्मतदिशाऽनैकान्त्यस्य सूपपादत्वेऽपि चार्वाकस्य प्रत्यक्षप्रमाणसत्यतोरीकर्तृतया तद्दिशा तस्य दुरुपपादत्वेन। तथापि प्रमाणसामान्यसत्तोपगतिपूर्वकत्वं कतिपयतदुपगमपूर्वकत्वं वा सिषाधयिषितं। आद्ये चार्वाक-

दिशाऽन्त्ये माध्यमिकदिशेति ग्रन्थसङ्गमनात् । ननु व्यभिचारनिरूपकाधिकरणस्यैव दुर्मिलतयाऽनैकान्त्यस्य दुरुपपादतेत्यत आह ॥**तस्यैवेति**॥ त्वदीयनये तदभिहितयुक्तिप्रतिविधानानुपपत्तिरेव तादृशाधिकरणप्रमापिकेत्यर्थः ॥ **तस्यापि** ॥ चार्वाकमाध्यमिकादिव्यवहारस्यापि । **पक्षत्वे** । ऊरीकृते । तद्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाध्यकतन्निदर्शनकसाधनबाधनान्यतरक्षमव्यवहारत्वलिङ्गकानुमानं दर्शितसाध्यसाधनाभावयोश्चार्वाकादिव्यवहारेषु गृहीतव्याप्यव्यापकभावतया यद्यद्यमुक्तसाध्यव्यतिरेकवान् स्यात्तदा तद्व्यापकसाधनव्यतिरेकवान् स्यान्न च तादृशः अतो न साध्यव्यतिरेकवानित्यप्रयोजकताशङ्कानिरासकबाधकतर्कसचिवं द्वितीयकल्पीयमाशङ्क्य प्रतिविधत्ते ॥ **द्वितीय इति** ॥ यं प्रत्यनुमिमीते तन्मनदिशा बाध इति भावः । उभयसंप्रतिपन्नेन हेतुना तादृशे धर्मिणि सन्दिग्धं साध्यं साधनीयमिति परीक्षकाणां कुलधर्म इत्यन्यतरदिशाऽसिद्धिमभिधत्ते ॥**हेतुरिति**॥ तत्र तत्ववादिनः । किञ्च विशिष्टव्यवहारत्वेनोक्तसाध्यसाधनेऽप्रयोजकता । न च यद्यद्यं तत्सत्ताऽभ्युपगतिपूर्वको न स्यात्तदा तत्पूर्वकत्वाभावव्यापकविशिष्टव्यवहारत्वाभाववान् स्यान्न चायं तदभाववान् अतस्तत्सत्तोपगतिपूर्वक इति बाधकतर्कात्तन्निवृत्तिरिति वाच्यम् । तर्काङ्गान्वयव्याप्तावुपाधिमत्तया दूषितायां तदनवतारादित्यनुसंदधानस्तत्र व्यभिचारादिदोषदूषितत्वस्य, निग्रहस्थानयोगित्वस्य वोपाधितामाह ॥ **व्यतिरेकेचेति** ॥ प्रकृतसाधनव्यतिरेकलक्षणापाद्य चेत्यर्थः । दर्शितोपाधेर्वाग्व्यवहारत्वरूपपक्षधर्मावच्छिन्नोक्तापाद्यव्यापकतया तादृशापादकवति माध्यमिकादिव्यवहारेऽसत्वेन तदव्यापकतया चोपाधितानिर्वाहात् तर्काङ्गव्याप्तिविरहेण तदनवतारादप्रयोजकमनुमानमिति भावः । स्फुटीकरिष्यति च सिद्धान्तेऽन्वय एवायमुपाधिरिति व्याकर्तारः । विशिष्टव्यवहारत्वस्यापि माध्यमिकव्यवहार एव व्यभिचारः । ननु माध्यमिकादिव्यवहारः, साधनबाधनक्षमो न भवति, प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वाभावाद्वन्ध्यापुरुषवाग्व्यवहारवदित्यनेन तत्र हेत्वभावसिद्धेर्न व्यभिचार इत्याशङ्कायामस्यानुमानस्य सोपाधिकत्वान्नोक्तहेत्वभावसाधकत्वमित्याशयेनाह ॥ **व्यतिरेकेति** ॥ साधनबाधनक्षमव्यवहारत्वरूपपूर्वहेतुव्यतिरेके माध्यमिकादिव्यवहारनिष्ठतया व्यभिचाराय साध्यतया विवक्षित इत्यर्थः । यद्वा व्यतिरेके पूर्वानुमानव्यतिरेकव्याप्तावित्यर्थ इति व्याकुर्वते । उपाधेस्तादृशापाद्यप्रयोजकतां व्यनक्ति ॥ **यत इति** ॥ मतान्तरानुसारिभिर्नैयायिकैः मतान्तरानुसारिभिरपरैर्मीमांसकैः । इत्थं च कथकयोर्नैयायिकमीमांसकयोः प्रमाणादिसत्तोरीकर्तृतया तदीयव्यवहारे तत्सत्तोपगतिपूर्वकताराहित्यरूपापादकविरहेऽपि दर्शितापाद्यस्योक्तोपाधिनिबन्धनस्य सत्वेनोपाधिरेवापाद्ये प्रयोजको नापादकमिति प्रकृतानुमानेऽप्रयोजकतानिरासकतर्काङ्गभूतव्याप्तिविरहनियन्त्रिततदनवतारेणाप्रयोजकमुक्तानुमानमिति भावः । ननु प्रमाणादीनां सत्तां यदिनाभ्युपेयात्तदा तदसत्तामेवोपैषीदिति प्रमाणानामेवासत्वे व्यवहाररूपधर्मिणः साधनदूषणनिष्ठायाश्चासिध्यापत्त्या सद्वचनाभासलक्षणयोगितारूपोपाधिरेव पक्षे प्रासांक्षीदित्यापादकव्यापक-

तया नोपाधिता सङ्गच्छत इत्याशङ्कते । **नन्विति** ॥ ननु प्रमाणधर्मिकसत्ताप्रकारकोपगतेरिव तदसत्तोपरक्तोपगतेरपि कथातः प्रागनुपगमेनानिवर्चनीयत्वाख्यविधान्तरोपगमेनैवोक्ताखिलनिर्वाहान्न क्षतिरित्याशयेन समाधत्ते ॥ **मैवमिति** ॥ उदासीनैस्तादृशौपगतिद्वयविनिर्मुक्तैः । इदं च कथाऽऽरभ्येति पूर्वेणान्वेति । तथा व्यवहारिभिः, प्रमाणानां सत्वासत्वेऽनुपेत्यैव व्यवहर्तव्यमिति समयं बध्नानैरस्माभिरपि । इतीति ब्रूम इत्यनेनान्वेति । यदीत्यादिग्रन्थेनाभिहितं दूषणं स्वव्याहतमित्यभिधित्समानः पीठिकामारचयन् परलपनेनैव भाषयते । किंचेत्यादिकवाच्यमित्यन्तेन । **स्वस्यापीति** ॥ प्रसंजकस्य तदसत्तोररीकारस्य स्वसाधारण्यादिति भावः ॥ **तथैव कथान्तरेति** ॥ वादिप्रतिवाद्युभयत्वपर्याप्त्याधिकरणेन तत्सत्ताऽनङ्गीकृतावपि तदन्यतरमात्रेण तद्दूरीकृत्यैव निखिलकार्यनिर्वाहो यथा भवदुपगतस्तथा तत्सत्तायास्तद्दूरीकृत्यगोचरत्वेऽपि अन्यतरतद्दूरीकारगोचरतयैवाखिलकार्यनिर्वाहः संगच्छत इति भावः । **व्याघात इति** ॥ तत्सत्तोपगतिमन्तरेणापि कथाप्रवृत्तिमुपेत्येतरं प्रतितदनुपगमे तदनिष्पत्त्यापादने व्याहतिरित्यर्थः । कथकताऽऽपन्नप्रतिवादिबोधोद्देश्यिका नेयमुक्तिः किं तु तदनापन्नविनेयबोधोद्देश्यिकैवेति न क्षतिरित्याशङ्क्य प्रत्याख्याति ॥ **न चेति** ॥ **कथं च तथेति** ॥ विनेयादिबोधनं कया विधया स्यादित्यर्थः । तस्य चार्वाकादेः तद्बोधिति। विनेयस्येति पूरणीयं । कथायां प्रविष्टं चार्वाकं प्रति नेदं सुवचं । कया विधयेयं कथा प्रावर्तिष्टेति विकल्पानामुत्थितेः । तदप्रविष्टं प्रति तु तद्दुर्वचमिति विनेयेनापि सुवचत्वान्न तेनापि सुबोधमेतदिति भावः । तत्र बीजमाह ॥ **कथायामेवेति** ॥ निग्रहलक्षणस्य कथाघटितत्वादिति भावः । कथकप्रवर्तनीयवाग्व्यवहारं प्रति हेतुत्वादिति द्वितीयकल्पं प्रत्याचष्टे ॥ **न द्वितीय इति** ॥ प्रमाणवृत्तिवाग्व्यवहारनिरूपितहेतुतायां विशेष्यताप्रत्यासत्या सत्ताप्रकारकोपगतेरवच्छेदकतायां माध्यमिकादिव्यवहारस्य तदवच्छिन्नाव्यतिरेकनियन्त्रितानुत्पादप्रसङ्गेनायोगादिति भावः । अथ प्रमाणादीनां कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्तित्वघटितवाग्व्यवहारनिरूपितकारणाभ्युपगम एव तत्सत्तोपगम इति, तत्कारणतोपेयते न तु तत्सत्तेति रिक्तं वच इत्याशङ्कते ॥ **अथेति** ॥ कारणत्वं पदार्थान्तरं न सत्ताघटितमिति प्रतिसन्दधानः । प्रमाणादीनि धर्मीकृत्य हेतुत्वेन सत्वं ब्रह्मवत्सत्वेनाभ्युपगतिविषयत्वं च तत्कस्यां कथायां सिषाधयिषितमुक्तभङ्ग्याप्रमाणादिसत्तोपगत्या प्रवृत्तायां कथायां, तदनुपगमेन समयबन्धादिनैव वेति कल्पद्वयीघटकाद्यकल्पस्यान्योन्याश्रयेण प्रत्याख्याततां मन्वानः कल्पान्तरं प्रत्यस्यति ॥ **कयाऽपीति** ॥ अनुपदमभिधास्यमानयेत्यर्थः । नियमस्थित्या समयबन्धेन । समयबन्धस्यान्वयव्यतिरेकितामुपपादयति ॥ **तत्रेत्यादि** ॥ तत्सत्तोपगतेस्तद्राहित्यं दर्शयति ॥ **तादृशेति** ॥ लोकसिद्धत्वात्सोपेयेति तृतीयमपाकुरुते ॥ **नापीति** ॥ प्रमाणव्यवहारः प्रेक्षावद्व्यवहारः । पामराः शास्त्रसंस्काररहिताः । तस्य प्रेक्षावद्व्यवहारत्वस्य । तदर्थमेव विचारार्थमेव । पूर्वनियमस्य प्रमाणादिसत्ताऽभ्युपगमनियमस्य ।

तथाच तत्सत्तोपगतिधर्मिकः प्रेक्षावद्व्यवहारसिद्धत्वनिर्णयो विचारप्रवृत्तिनिबन्धनः सा च तादृशव्यवहार-सिद्धतत्सत्तोपगतिनियन्त्रितेत्यन्योन्याश्रय इति भावः ॥ **शरीरेति** ॥ गौरोहमित्यादिप्रतीत्या शरीर एवात्मत्वव्यवहारादित्यर्थः । पश्चात् शास्त्रजनितदेहात्मविवेकोत्तरम् । तद्देहात्मत्वम् ॥ **नाभ्युपेयत इति** ॥ विचाराबाध्यलोकव्यवहारसिद्धत्वस्यैवोपगन्तव्यतानिमित्तत्वादिति भावः । विचाराबाध्यत्वरूप-विशेषणांशस्यैवोपगन्तव्यताहेतुत्वसंभवेन तद्विशेषितव्यवहारसिद्धत्वस्य तत्तन्त्रतोरीकृतिर्निर्बीजेत्याह ॥ **तर्हीत्यादि** ॥ प्रमाणादिसत्तायां विचाराबाध्यत्वं च तत्प्रवृत्तिमन्तरेण दुष्प्रतिपादमिति भावः । तदनु-पगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वादिति तुरीयकल्पं न्यक्करोति ॥ **न चतुर्थ इति** ॥ तथाचावश्यो-पेतव्यसमयबन्धादेव फलोत्पत्तिसंभवेन तत्सहभूततत्सत्तोपगतेरन्यथासिद्धत्वमित्यर्थः । आक्षेपांशं निगम-यति ॥ **तस्मादिति** ॥ प्रमाणादीनि न स्युरिति । प्रमाणधर्मिकसत्ताऽऽश्रयत्वाभावापादकसाधकत्वा-भावापाद्यकापत्तेरभिप्रेतत्वादिति भावः ।

सु०— तदेतत्सर्वमनेनापहसित वेदितव्यम् । तथा हि । यत्तावद्व्यवहारमात्रस्य प्रमा-णादिसत्ताऽभ्युपगमव्याप्तत्वपक्षे दूषणमुक्तम् । तदसत् । यदि खल्वेवमस्माभिः साध्येत । मायावादी प्रमाणादिसत्ताऽभ्युपगमवान् । व्यवहर्तृत्वात् । तद्व्यवहारो वा प्रमाणादिसत्ता-ऽभ्युपगमपुरःसरो व्यवहारत्वात्तत्त्ववादिवत्तद्व्यवहारवच्चेति । यद्वा नायं व्यवहर्ता प्रमाणादि-सत्ताऽनभ्युपगन्तृत्वात् । तद्व्यवहारो वा न व्यवहारः । प्रमाणादिसत्ताऽभ्युपगमपुरःसरता-शून्यत्वादिति । तदा स्यादेव व्यभिचारदोषः । को नाम स्वस्थात्मैवमनुमिमीते । किं नाम यदि प्रमाणादीनि सन्ति न स्युः । तर्हि साधकानि न स्युः । असतः साधकत्वानुपपत्तेः । तेषां चासाधकत्वे तत्कार्यो व्यवहारो न निष्पद्येत । तथा च वादिता न स्यात् । अस्ति चेयम् । तस्मात्तद्धेतूनां प्रमाणादीनां सत्ताऽभ्युपगन्तव्येत्याचार्येण प्रसङ्गत्वेनाभिमतत्वात् । व्यभिचार-स्थलस्य च प्रसङ्गविषयतुल्यताऽङ्गीकृता । बाधस्तु प्रसङ्गस्यालङ्कार एवेत्युक्तम् । साधन-बाधनक्षमव्यवहारस्य प्रमाणादिसत्ताऽभ्युपगमव्याप्तत्वपक्षेऽप्युक्तदूषणमनेनैव निरस्तम् । माया-वादिनं तद्व्यवहारं वा पक्षीकृत्य विशिष्टव्यवहारकर्तृत्वेन विशिष्टव्यवहारत्वेन वा हेतुना प्रमाणादिसत्ताऽभ्युपगन्तृत्वे तत्पूर्वकत्वे वा साध्यमाने तत्स्यात् । विमतो व्यवहारो न साधनादिक्षमः । प्रमाणादिसत्ताऽभ्युपगमपूर्वकतारहितत्वादिति वा साधने कथञ्चिदन्वये पूर्वोक्तोपाधिः स्यात् । न चैवमित्युक्तम् । किञ्चायमुपाधिर्न साधनाद्भिद्यते । यदा हि प्रमाणादिसत्ता नाभ्युपगता तदा तदसत्त्वमेवाङ्गीकृतमिति स्वरूपासिद्धत्वम् । तच्च सद्वचना-

भासलक्षणविशेष एव । नन्वेतदाशङ्क्योक्तं न ब्रूमो वयमित्यादि दुरुक्तं तत् । सत्त्वासत्त्वे विहाय प्रमाणस्वरूपस्य बुद्धावारोपयितुमशक्यत्वेनोदासीनस्य तत्स्वीकारानुपपत्तेः । एवं च वदता यदनिर्वचनीयमभिप्रेतं तदग्रे निराकरिष्यते । यदप्यत्रोक्तं कीदृशीं मर्यादामित्यादि । तत्र यः प्रमाणाद्यसत्त्वमभ्युपैति । यश्च तत्सत्तां प्रतीत्यापि सत्ताऽऽद्युदासीनोऽहमिति मन्यते तं प्रतीदं दूषणमिति वदामः । न चोक्तदोषः । न हि वयं प्रमाणादिसत्ताऽभ्युपगमं कथाप्रवृत्तिकारणतयाऽवश्यं ततः पूर्वभाविनं ब्रूमः । किं नाम यो यथाकथञ्चित्कथायां प्रवृत्तस्तं विपक्षे कथाऽनुत्पत्तिप्रसङ्गं दण्डं प्रदर्श्य तत्कारणानां प्रमाणादीनां सत्तामङ्गीकारयामः । न चैवं कथान्तरप्रसक्त्यादिदोषः । प्रमाणादिसत्ताऽनभ्युपगमे कथाया एवानिष्पत्तेः । एतेन शिष्यज्ञापनमपि समाहितम् । प्रतिवादिनः कथाप्रवेशमभ्युपगम्य तत्र प्रवृत्तं प्रति प्रमितकथाकार्यबलेन कारणप्रमाणादिसत्ताया अभ्युपगन्तव्यत्वस्योक्तत्वात् । द्वितीयपक्षोक्तदोषोऽप्यसङ्गत एव । न हि वयं प्रमाणादिसत्ताऽभ्युपगममपि कथकप्रवर्तनीयवाग्व्यवहारकारणकोटौ निवेशयामः । येन तत्सत्ताऽनभ्युपगन्तॄणां वाग्व्यवहारस्वरूपं न निष्पद्येतेति प्रसङ्गः स्यात् । अपि तर्हि प्रमाणादीनामेव कथाकारणता । सा च सत्त्वाभावे नोपपद्यत इति तत्सत्त्वमङ्गीकरणीयमिति वदामः । यत्पुनः कथकवाग्व्यवहारं प्रतीत्याद्याशङ्क्योक्तम् । 'एवं वदता कथाप्रवृत्त्युत्तरकालं प्रमाणादिसत्ताऽङ्गीकारयितव्या । तथाच कथाफलस्य प्रमाणादिसत्ताऽभ्युपगमस्य न कथाकारणत्वम् । किन्तु प्रमाणैर्व्यवहर्तव्यमित्यादिव्यवहारनियमस्यैवेति । तदस्माभिरभ्युपगतमेव । यस्तु सत्ताऽभ्युपगममपि कथाकारणं ब्रूते । स एवैवं पर्यनुयोज्यः । यत्पुनर्न च प्रमाणादीनामित्यादिना कल्पनागौरवमवादि । तत्र किं प्रमाणादिसत्ताऽभ्युपगमे कल्पनागौरवमुत तत्सत्ताऽभ्युपगमस्य कारणकोटिप्रवेशने । नाद्यः । कारणत्वान्यथाऽनुपपत्त्या तत्सत्तायाः प्रमितत्वात् । प्रमितस्य परीक्षकैरङ्गीकरणीयत्वात् । द्वितीये तु संवाद एव । तृतीयेऽप्याद्यं तावदङ्गीकुर्मः । तत्रोक्तं दूषितप्रायम् । द्वितीयाङ्गीकारेऽपि न दोषः । देहात्मत्वादिकं तु पश्चाद्विचारबाध्यतया नाभ्युपगम्यत इति । यदत्रोक्तं प्रमाणादिसत्ताऽपीत्यादि । तेन किमुक्तं भवति । किं विचारसाध्यः प्रमाणादिसत्ताऽभ्युपगमो न विचारप्रवृत्तेः कारणमिति । किंवा विचारबाध्यताया एव प्रमाणादिसत्ताऽभ्युपगमप्रयोजकत्वेन व्यवहारस्याप्रयोजकत्वमिति । आद्ये संप्रतिपत्तिः । न द्वितीयः । औत्सर्गिकं प्रामाण्यं बाधकादपोद्यत इत्यत्रदर्शने तस्यैव प्रयोजकत्वात् । चतुर्थपक्षोक्तदोषोऽप्यनेनैव परिहृतः । न हि वयं प्रमाणादिसत्ताऽभ्युपगमं कथाफलनिष्पत्तिहेतुं ब्रूमः । किन्तु प्रमाणादीन्येव । तेषां च

तद्धेतुता नासतामुपपद्यत इति तत्सत्ताऽवश्यमभ्युपगमनीयेति । स्यादेतत् । नियतवाग्व्यवहार-क्रियासमयबन्धेन कथां प्रवर्तयताऽपि व्यवहारसत्ताऽभ्युपगन्तव्या । न हि सत्तामनभ्युपगम्य व्यवहारक्रियाऽभिधातुं शक्या । क्रिया हि निष्पादना । असतः सद्रूपताप्रापणमिति यावत् । प्रमाणैर्व्यवहर्तव्यमिति च नियमबन्धनं प्रमाणकरणभावस्य नियमान्तर्भावान्नियतपूर्वसत्त्वरूपं कारणत्वं प्रमाणानामनादाय न पर्यवस्यति । दूषणानां चास्तित्वेन भङ्गावधारणनियमबन्धने साधनाङ्गानां च व्याप्त्यादीनां सत्त्वेन तद्विषयस्य तत्त्वरूपताव्यवहारनियमनादौ च कण्ठोक्त्यैव तस्य तस्य सत्त्वमङ्गीकृतमिति रिक्तमिदमुच्यते । प्रमाणादीनां सत्तामनभ्युपगम्य कथाऽऽरम्भः शक्यत इत्येवमाशङ्क्य यदुक्तमेतैरपि बाधकैः कथायामारब्धायामभिमतस्य प्रसाधनीयत्वेन पूर्वोक्तबाधाया न निस्तारः स्यादिति । तदप्यनेनैव परिहृतम् । कथास्वरूपफलनिष्पत्तये स्वेच्छास्वीकृतस्यैव व्यवहारनियमस्य प्रमाणादिसत्तास्वीकार एव पर्यवसानमिति कथायां प्रवृत्तं स्वव्याघातमप्यचेतयन्तं प्रत्यस्माभिरुच्यमानत्वात् । ननु कथादेः कार्यस्य सत्त्वे कथञ्चि-त्कारणस्य प्रमाणादेः सत्त्वमङ्गीकरणीयं स्यात् । कार्यस्यैव सत्त्वाभावे किं कारणसत्तयेति चेत् । कुतः प्रमाणात्कथादिसत्ताऽभावो भवता निश्चितः । श्रुत्यादेरिति चेन्न । तस्यैवानेकातिप्रसङ्ग-गहननिविष्टत्वात् । तथाच सिद्धे तत्प्रामाण्ये कथादिकार्यासत्त्वसिद्धिः । ततोऽन्यथासिद्ध्या तर्कस्याभासतासिद्धिस्तस्यां च श्रुत्यादिप्रामाण्यसिद्धिरिति चक्रकापत्त्या नैकस्यापि सिद्धिः । असतः कारणत्वं तु सूत्रकृतैव निराकरिष्यत इत्यलं प्रसङ्गेन ।

**वा०**—अनङ्गीकुर्वतामिति वाक्यापातप्रतीतार्थे परोक्तानुपपत्तेस्तस्माद्व्यवहृतिरित्युत्तरवाक्ये प्रसङ्ग-त्वज्ञापनेन, यौगिकव्यवहृतिशब्दप्रयोगेण प्रमाणादीनां कथाव्यवहारकारणत्वज्ञापनेन च परिहृतत्वान्ना-नुपपत्तिरित्याह ॥ **तदेतदिति** ॥ अनङ्गीकुर्वतामिति व्यतिरेकव्याप्तिप्रदर्शनपरम् । तत्रापि धर्मिधर्म-प्राधान्यविवक्षा च । तथा च विवक्षाभेदेन फलितमनुमानप्रकारद्वयमाह ॥ **मायावादीति** ॥ यदि त्येतस्मिन्वाक्येऽनङ्गीकुर्वतां न वादितेत्येव हेतुसाध्यकथनं पूर्ववदुभयविवक्षा च तदपि विवक्षाभेदेन । फलिततत्प्रकारमाह ॥ **यदिति** ॥ व्यभिचारादीत्यादिपदेन बाधसङ्ग्रहः ॥ **कोनामेति** ॥ अभि-प्रायान्तरकल्पनया दूषणानि वदतः परस्यैव छलप्रसङ्ग इति सूचयति । प्रमाणादीनि न स्युर्नाङ्गीक्रियन्त इत्यनङ्गीकुर्वतामित्यस्यार्थकथनम् । उत्तरवाक्ये व्यवहृतिरिति प्रमाणानां व्यवहारकारणत्वोक्त्या लब्धस्य पूर्वमाहत्योक्तस्यापाद्यस्य कथनं तर्हीति । मिथ्यायाः साधकत्वं चेत्युक्तोपपादनप्रकारस्मारणमसत इति । व्यवहृतिरित्येतल्लब्धस्यैव कथनं तेषां चेति । तथा चेति पूर्ववाक्योक्तार्थकथनम् । नन्वत्रापादनद्वयेऽपि

यदसत्तन्न साधकं. यत्र साधकाभावस्तत्र कार्याभाव इति वा यस्य प्रमाणाद्यसत्त्वाङ्गीकारस्तेन तत्साधकत्वाभावस्याङ्गीकर्तव्यता, यस्य साधकत्वाभावाङ्गीकारस्तेन तत्कार्याभावस्याङ्गीकर्तव्यतेति वा व्याप्तेर्वक्तव्यत्वात्प्रथमकल्पद्वये बौद्धादिरीत्या व्यभिचाराद्द्वितीयद्वये च बौद्धादावेव व्यभिचारात्प्रसङ्गे च पक्षाद्यभावेन पक्षतुल्यतया च तदपरिहारान्नैतदापादनं सम्भवतीत्यतोऽनङ्गीकुर्वतामिति बहुवचनलब्धं व्यभिचारस्थलस्य प्रसङ्गविषयतुल्यत्वमुत्तरवाक्यसूचितप्रसङ्गत्वलब्धं पूर्वोपपादितम् बाधासम्भवं च स्मारयति ॥ **व्यभिचारेति** ॥ एवं च तदनेनापहसितमित्यत्रानेनेति न केवलमुत्तरवाक्यपरामर्शः, किन्तु पूर्ववाक्यस्थबहुवचनस्य, मिथ्यायाः साधकत्वं चेत्यादेरपीति द्रष्टव्यम् ॥ **उक्तदूषणमिति** ॥ बाधासिद्ध्युपाधिलक्षणमित्यर्थः । वादिशब्दस्य विशिष्टव्यवहर्तृपरतामभ्युपगम्योक्तरीत्याऽनङ्गीकुर्वतामिति वाक्यस्य व्यतिरेकव्याप्तिकथनेन, साक्षात्साध्यसाधनकथनेन वाऽनुमानपरतां विवक्षाभेदं चाश्रित्यानुमानप्रकारमाह ॥ **मायेति** ॥ **न चैवमित्युक्तमिति** ॥ आचार्यस्यात्र साधनस्यानभिमततया प्रसङ्गस्यैवाभिमतत्वात् । प्रसङ्गे च बाधासिद्ध्युपाधीनामसम्भवादिति भावः । ननु बाधासिद्ध्योस्तत्रालङ्कारत्वेऽपि कथमुपाधेरसम्भव इति चेन्न । प्रसङ्गविषयादन्यत्रोपाधिना व्यभिचारोन्नयने स्फुटव्यभिचारेणोपाधिवैयर्थ्यापातात् । उपाधिना प्रसङ्गविषये तदुन्नयनस्य च पक्षादिप्रविभागानन्तरमनुमानस्थल इवानुपपत्त्याऽऽपाद्यस्याप्रामाणिकत्वेन तदभावसाधनरूपप्रतिपक्षस्य च बाधवदलङ्कारतया प्रतिपक्षोन्नायकत्वस्याप्यसम्भवेनापादने तदसम्भवात् । न चापादनमूलभूतव्याप्तिग्रहणदशायामुपस्थितस्याव्याप्त्युन्नायकत्वेन दूषणत्वं सम्भवत्येवेति वाच्यम् । उक्तापादनमूलभूतायां, यदसन्न तत्साधकं, यत्र कारणाभावस्तत्र कार्याभाव इति वा यत्रोक्तोभयाङ्गीकारस्तत्रोक्तोभयोरङ्गीकर्तव्यतेति वा व्याप्तौ त्वदुक्तोपाधेरप्रसरात् । ननूक्तरूपायामपि व्याप्तौ, नासत्त्वं साधकत्वाभावे प्रयोजकं, किन्त्वाभासलक्षणयोगित्वमेव । एवं, न कारणाभावः कार्याभावे प्रयोजकः, किन्त्वभासलक्षणयोगित्वमेवेति वक्तुं शक्यत एवेति चेन्न । तर्हि वन्ध्यासुतवचसोऽप्यसाधकत्वायाभासलक्षणमेव व्युत्पादनीयं स्यात् । न च वन्ध्यासुतवचसोऽप्यसिद्धिरूपाभासलक्षणमेवासाधकत्वे तन्त्रमिति वाच्यम् । तत्रासत्त्वस्यैवासिद्धिरूपाभासलक्षणप्रयोजकतया प्रकृतेऽप्यसत्त्वादेव तदापत्त्याऽसत्त्वं न तन्त्रमिति वचनस्य रिक्ततापत्तेः । अकारणकार्योत्पत्तौ च व्याघातस्य कारणाभावे कार्याभावस्य सुलभत्वादिति सूचितत्वाच्चेत्याशयः । अत एवात्रापाद्यापादकस्वरूपस्य निष्कृष्य कथनं तदुपपादकप्रकारस्मरणं चेति ध्येयम् । एवं च प्रकृते आपादनमूलभूतव्याप्तावप्युपाध्यसम्भवो न तु सर्वत्रेत्येवाभिमतम् । अन्यथा सत्त्वाभावे साधकत्वं न स्यादिति वा प्रसङ्गे भ्रमः । तत्रासत्त्वमुपाधिरिति चेदित्युत्तरग्रन्थविरोधापत्तेः । न्यायसाम्येन प्रसङ्गमूलभूतव्याप्तावपि तस्यावर्जनीयत्वाच्चेति द्रष्टव्यम् । एवं प्रसङ्गत्वान्नायमुपाधिरिति मूलाभिप्रेतं परिहारमुक्त्वाऽस्तु साधनानुमानत्वं तथाऽपि नाय-

मुपाधिः सम्भवतीत्यभ्युच्चयेन परिहारान्तरमाह ॥ **किञ्चेति** ॥ अथवा साधनवदापादने तन्मूलभूतायां व्याप्तौ वाऽस्योपाधित्वशङ्कानिरासाय किमायासान्तरेण साधनेऽप्यस्योपाधित्वं न सम्भवतीत्याह ॥ **किञ्चेति** ॥ **न साधनाद्भिद्यत इति** ॥ साधनव्यापक इत्यर्थः । वक्रोक्तेः प्रयोजनं तु साधनमुपाधिं विनाऽनुपपन्नं पक्षे स्वयं सदुपाधिमप्याक्षिपतीति नोपाधेः पक्षे साधनाय यत्नान्तरं कर्तव्यमिति सूचनम् । साधनबलादेव पक्षे तत्सिद्धिमुपपादयति ॥ **यदाहीति** ॥ यद्वा प्रमाणादिसत्ताऽभ्युपगमपूर्वकताराहित्यस्य साधनतया निर्दिष्टस्यापि तृतीयप्रकाराभावेनासत्त्वाभ्युपगम एव पर्यवसानात्पर्यवसितसाधनस्योपाधिघटितशरीरतया नोपाधिः साधनाद्भिद्यत इत्युक्तम् । एवं च नोपाधिः साधनाद्भिद्यते साधनशरीराप्रविष्टो न भवतीत्यर्थः । प्रकृतसाधनस्य तत्र पर्यवसानमुपपादयति ॥ **यदा हीति** ॥ यद्वा व्यवहारस्य साधनाद्यक्षमत्वेऽसत्त्वाभ्युपगमपूर्वकत्वमेव हेतुः । तच्चोपाधिघटितशरीरमेवेत्याशयेन न साधनाद्भिद्यत इत्युक्तम् । न च हेत्वसिद्धिः । सत्ताऽनभ्युपगमेन तत्साधनादित्याशयेनाह ॥ **यदा हीति** ॥ ननु सत्त्ववदसत्त्वस्याप्यनङ्गीकारादसत्त्वाभ्युपगमस्य न प्रकृतसाधनव्यापकत्वं तत्पर्यवसानविषयत्वं वा स्वयमेव हेतुत्वं वेत्याशयेनाशङ्कते ॥ **नन्विति** ॥ उभयानङ्गीकारे तृतीयप्रकाराभावेन कथायां प्रमाणादिस्वीकार एवानुपपन्न इत्याशयेनाह ॥ **दुरुक्तमिति** ॥ ननु सत्त्वासत्त्वोभयानभ्युपगमेऽपि सदसद्वैलक्षण्यरूपतृतीयप्रकारेण प्रमाणादिस्वरूपस्य बुद्ध्यारोहेण स्वीकारोपपत्तेर्नानुपपत्तिरित्यत आह ॥ **एवं चेति** ॥ एवं प्रसङ्गत्यकथनेन भाष्यसूचितं परोक्तदूषणानां परिहारमभिधाय व्यवहृतिरिति प्रमाणानां कारणत्वोक्त्या, सत्ताऽभ्युपगमस्य कारणत्वाभावसूचनेन लब्धं परोक्तदूषणानां परिहारमुपपादयति ॥ **यदपीति** ॥ प्रथमद्वितीयपक्षयोरनङ्गीकारपराहतिं सूचयन्पर्यनुयोगविषयं तावद्दर्शयति ॥ **तत्रेति** ॥ तत्रासत्त्वमुपैति तं प्रतीति प्रथमद्वितीयानङ्गीकारस्य सूचनं । यः प्रमाणादीति असत्त्वाभ्युपगन्तुर्थश्चेति च तस्मादिति परपरिशेषितस्योदासीनस्य च पर्यनुयोगविषयत्वं च सूचयति । नन्वेवं प्रथमद्वितीयोक्तदोषाभावेऽपि तृतीयपक्षोक्ततथैवकथान्तरप्रसक्तिदोषस्तस्मादिति परिशेषितपक्षोक्तव्याघातश्च स्यादेवेत्याशङ्क्य निषेधति ॥ **न चेति** ॥ यद्येतद्दूषणाभिधानेन कथाप्रवृत्तेः प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वं साधयितुमस्माकमयं प्रयत्नः स्यात्तर्ह्यस्याः कथायाः असत्त्वाभ्युपगमेऽपि प्रवृत्तत्वादेव तद्वत्कथान्तरप्रवृत्तेरपि सम्भवात्कथाप्रवृत्तेर्न प्रमाणादिसत्ताऽभ्युपगमपूर्वकत्वं सुसाधम् । औदासीन्येन प्रवृत्तायां कथायां सत्ताऽनभ्युपगमे कथाऽप्रवृत्तिप्रतिपादने व्याघातश्च स्यात् । न चैवमिति भावेनाह ॥ **नहीति** ॥ तर्हि साधनीयान्तराभावाद्विवादः पर्यवसन्नः किमित्याशङ्कते ॥ **किं नामेति** ॥ **यथाकथञ्चिदिति** ॥ असत्त्वमभ्युपेत्य वौदासीन्येन वेत्यर्थः । कथेत्यतःपूर्वं प्रारब्धेति शेषः । एवं च कथाप्रवृत्तेः सत्ताऽभ्युपगमपूर्वकत्वस्य साधयितुमशक्यत्वेऽपि प्रमाणादीनां कथाप्रवृत्तिकारणत्वात्तेषाम-

सत्त्वे कार्यभूतप्रमितप्रारब्धकथानुत्पत्तिबाधकेन कथाकारणीभूतप्रमाणादिसत्त्वस्यासत्त्वाभ्युपगमेन वौदासीन्येन वा प्रवृत्तकथायामभ्युपगमनीयत्वप्रतिपादने कथान्तरप्रसक्तिव्याघातयोः प्रसक्तिरेव नास्तीत्याह ॥ **न चैवमिति** ॥ **एवं वदतेति** ॥ हेतुत्वेन सत्त्वाभ्युपगमानुमानपक्षे परोक्त्या मुखतः प्रतीयमानान्योन्याश्रयप्रयोजकानुवादोऽयं; तदभिप्रेतो हेतुत्वस्य सत्त्वरूपत्वाभावपक्षस्त्वसतः कारणत्वं त्वित्यादिना खण्डनमतनिरासान्ते निरसिष्यत इति द्रष्टव्यम् । यद्यपि पूर्वोत्तरवाक्यबलान्न च प्रमाणादीनामित्येतद्वाक्यं सत्ताऽभ्युपगमस्य कारणत्वे गौरवमित्येतत्परमेव भाति तथाऽप्यस्य वाक्यस्य सामान्येन प्रवृत्तत्वाद्विकल्प्य दूषयति ॥ **तत्र किमिति** ॥ **तत्रोक्तमिति** ॥ व्यवहारप्रामाणिकत्व-विचारस्य प्रमाणादिसत्ताऽभ्युपगमानधीनत्वेनोक्तचक्रकाप्रवृत्तिरिति भावः । उक्तरीत्या चक्रकपरिहार-लाभेऽपि चक्रकं नेत्येवंरूपेण प्रायशब्दः ॥ **तेन किमिति** ॥ यद्यपि लोकव्यवहारसिद्धत्वादिति तावन्न भवतीत्युत्तरवाक्यबलादप्रयोजकत्वे तात्पर्यमेव प्रतिभाति । तथाऽपि पूर्ववाक्ये विचारबाध्यत्वा-बाध्यत्वयोरनभ्युपगमाभ्युपगमोक्तेरभ्युपगमस्य विचारसाध्यत्वेऽपि पर्यवसानसम्भवादुत्तरवाक्यस्य च 'तथा चान्योन्याश्रयतया नायं पक्षः साधुरिति तृतीयपक्षनिरासोपसंहारपरत्वस्यापि सम्भवात्प्रथमकल्पप्रसक्तिः' । उत्तरवाक्योक्ताप्रयोजकत्वोपपादकत्वेनापि पूर्ववाक्यस्योपपत्तेरुत्तरवाक्यस्वारस्यानुरोधेन पराभिमतत्वाच्च द्वितीयकल्पप्रवृत्तिरिति द्रष्टव्यम् ॥ **इत्यत्र दर्शन इति** ॥ अन्यथा स्वतत्त्वभङ्गेनापसिद्धान्तापातादिति भावः ॥ **अनेनैवेति** ॥ तत्सत्ताऽभ्युपगमस्य कथाव्यवहारकारणत्वमनभ्युपगम्य प्रमाणादीनामेव तत्कारणत्वाभ्युपगमेनैवेत्यर्थः । व्याघातरूपं सत्ताऽनभ्युपगमे स्वोक्तिलब्धं बाधकमाशङ्क्य परेणोक्तं दूषणमपि पूर्वोक्तन्यायेनैव परिहृतमिति वक्तुं परोक्तमनुवदति ॥ **स्यादेतदिति** ॥ नियतत्वं समय-विशेषणम् । नियमबन्ध एव पर्यवसानवृत्त्या व्यवहारसत्तां स्वीकारयतीति भावः । ननु सत्तां विनाऽनुपपत्तिशून्यस्य कथं तत्स्वीकारहेतुत्वमित्यत आह ॥ **न हीति** ॥ किमियं राज्ञामाज्ञा नेत्याह ॥ **क्रियेति** ॥ एवमपि नानुपपत्तिलाभ इत्यत आह ॥ **असत इति** ॥ अनेन समयेन व्यवहर्तव्यमिति व्यवहारो निष्पादनीय इत्युक्त्यैव सत्त्वमिष्टं स्यात् । यतो निष्पादनं नामासतः सत्त्वप्रापणमित्यर्थः । न केवलं व्यवहारसत्त्वं स्वोक्त्यैवेष्टं प्रमाणादिसत्त्वमपि तदुक्तिबलादेवापद्यत इत्याह ॥ **प्रमाणैरिति** ॥ तृतीयया करणत्वाभिधानात्तस्य च सत्ताऽव्यतिरेकात्प्रमाणादीनां सत्त्वमनङ्गीकृत्य नियमबन्धो न पर्यवस्यतीत्यर्थः । यद्वादिव्यवहारे दोषाः सन्ति तस्य भङ्गो व्यवहर्तव्यो यस्य पुनः साधनाङ्गानि तस्य जय इति वदन्नेव पुनस्तानि न सन्तीति च वदन्कथं सभ्यः स्यादित्याह ॥ **दूषणानां चेति** ॥ साधनं हेतुस्तद्विषयस्य प्रतिज्ञातार्थस्य । तद्वैपरीत्येनासत्यत्वमादिपदार्थः । रिक्तं परस्परपरा-हतत्वेन शून्यं वचनमित्यर्थः । कथायामेवैतद्बाधकोपन्यासेन सत्ताऽभ्युपगमः साधनीयस्तदभ्युपगममन्त-

रेण च न कथाप्रवृत्तिः । तथा च सत्ताऽभ्युपगमसिद्धौ च बाधकोपन्यासस्ततश्च सत्ताऽभ्युपगम इति चक्रकमित्याह ॥ **एतैरपीति** ॥ ननु पर्यवसानोक्तेर्न किञ्चिदपि फलमित्यतः स्वव्याघातोद्बोधनमेव तत्फलमित्याशयेनाह ॥ **स्वव्याघातमिति** ॥ अन्यथासिद्ध्या तर्काभासत्वं शङ्कते ॥ **नन्विति** ॥ असतोऽपि कारणत्वसम्भवाभिप्रायेण कथञ्चिदिति । नन्वसतोऽपि साधकत्वसम्भवात्तर्केऽप्रयोजकत्वमित्यत आह ॥ **असत इति** ॥ ननु नासतोऽदृष्टत्वादित्यस्य वैभाषिकादिमतनिरासायाभावकारणतानिरासाय वा प्रवृत्तेर्न तद्विरोध इत्यत आह ॥ **अलमिति** ॥ शून्यमते साक्षात्प्राप्तासत्कारणतानिरासपरतायाः स्फुटत्वेन वैभाषिकादिमतार्थिकप्राप्तासत्कारणतानिरासपरताया अनुपपन्नत्वाद्वैभाषिकादिमतनिरासकत्वेऽप्यसत्कारणतानिरासपरत्वस्यापरिहार्यत्वाच्च विहिताकरणविशेषादर्शनादीनां प्रत्यवायभ्रमादिहेतुतादर्शनेनादृष्टत्वहेत्वसिद्ध्याऽभावकारणतानिरासकत्वानुपपत्तेश्चेति भावः । यद्वा सत्ताविशिष्टस्य कारणत्वे, सत्ताविशिष्टसत्तावृत्तौ सत्तायामपि सत्तावृत्त्यापत्त्या, सत्तोपलक्षितस्य कारणत्वेऽसत एव कारणत्वं प्राप्तमिति न सूत्रस्यासत्कारणत्वनिरासे तात्पर्यमित्यत आह ॥ **अलमिति** ॥ घटविशिष्टभूतले घटसत्त्वे घटेऽपि घटसत्त्वापत्त्या, घटोपलक्षिते तत्सत्त्वे घटशून्येऽपि तदापत्तिरित्याद्याभाससमानयोगक्षेमतया 'कथमसतः सज्जायेतेति' श्रुत्याऽ'सद्भ्यः शशविषाणादिभ्यः सदुत्पत्त्यदर्शनादिति तत्सूत्रीयस्वभाष्येण च विरुद्धतयाऽस्य युक्त्याभासत्वादिति भावः ।

स०— चार्वाकादिमते प्रमाणादीनामसत्त्वेऽपि साधकत्वमस्तीति व्यभिचार इत्यत आह ॥ **व्यभिचारेति** ॥ यदुक्तं तस्यापि पक्षत्वे बाध इति तत्राह ॥ **बाधस्त्विति** ॥ **उक्तमिति** ॥ अनङ्गीकुर्वतामित्येतद्व्याख्याऽवसरे ॥ **कथञ्चिदन्वय इति** ॥ वक्ष्यमाणरीत्या साधनव्यापकत्वात्कथञ्चिदित्युक्तम् ॥ **न चैवमित्युक्तमिति** ॥ नेदं साधनं किं तु तर्क इत्युक्तमित्यर्थः । तर्केऽप्युपाधिः किं न स्यादित्यतः कथञ्चिदित्युक्तानुपपत्तिं दर्शयति ॥ **किं चेति** ॥ न च सद्वचनाभासलक्षणायोगित्वस्य प्रमाणादिसत्ताऽनभ्युपगमपूर्वकत्वस्य च भिन्नत्वात्कथमुपाधेः साधनाभेद इति वाच्यम् । साधनव्यापकत्वप्रतिपादन एवास्य ग्रन्थस्य तात्पर्यात् । नन्वनिर्वचनीयवादिनः सत्वासत्वौदासीन्येनापि प्रमाणानां बुद्धावारोहः शक्य एवेत्यत आह ॥ **एवं चेति** ॥ निराकरिष्यते 'वैलक्षण्यं सतश्चापी'त्यादिना । नन्वत्राप्युक्तं किमेतत्कथाऽऽरम्भो न संभवत्युत कथाऽऽन्तरारम्भः । नाद्यः । आरब्धत्वादेव । नान्त्यः । प्रमाणादिसत्ताऽनभ्युपगमेऽप्येतत्कथाऽऽरम्भवत्कथाऽन्तरारम्भोपपत्तेरिति ॥ तद्दूषयति ॥ **न चोक्तदोष इति** ॥ **न चैवमिति** ॥ यदि सत्ताऽभ्युपगममन्तरेण प्रवर्तिता तत्कथा स्यात्तदैव तद्दृष्टान्तेन कथान्तरमप्येवं प्रसज्येतेति स्यात् । न चैतदस्ति । सत्ताऽनभ्युपगमे प्रारब्धाया अपि कथात्वाभावस्यापाद्यमानत्वादिति भावः । प्रमाणादि-

सत्वस्य प्रामाणिकव्यवहारसिद्धत्वे चक्रकाद्यापत्तिरुक्ता । तत्राह ॥ **तत्रोक्तमिति** ॥ सत्ताऽभ्युपगमस्य कारणकोटावप्रवेशादिति भावः ॥ **तस्यैवेति** ॥ व्यवहारस्यैवेत्यर्थः ॥ **स्यादेतदिति** ॥ वाग्व्यवहार-क्रियासमयबन्धो, वाग्व्यवहारः कर्तव्य इति समयबन्धः । नियतत्वं समयविशेषणम् । नियमबन्ध एव पर्यवसानगत्या व्यवहारसत्तां स्वीकारयतीत्याशयः । ननु सत्तां विनाऽप्युपपत्त्यभावात् न तां स्वीकारय-तीत्यत आह ॥ **न हीति** ॥ कुत इत्यत आह ॥ **क्रियेति** ॥ नन्वत्राप्यनुपपत्तिर्न प्रतीयत इत्यत आह ॥ **असत इति** ॥ अनेन समयेन व्यवहर्तव्यमिति व्यवहारो निष्पादनीय इत्युक्त्यैव सत्वमिष्टं स्यात् यतो निष्पादनं नामासतः सत्वप्रापणमित्यर्थः । न केवलं व्यवहारसत्वं स्वोक्त्यैवेष्टं प्रमाणादि-सत्वमपि त्वदुक्तिबलादापद्यत इत्याह ॥ **प्रमाणैरिति** ॥ तृतीयया करणत्वाभिधानात्तस्य च कारणविशेष-त्वात्कारणविशेषत्वस्य सत्वाव्यतिरेकात्प्रमाणादीनां सत्वमनङ्गीकृत्य नियमबन्धनमेव न पर्यवस्यतीत्यर्थः । यद्वाग्व्यवहारे दोषाः सन्ति तस्य जय इति वदन्नेव पुनस्तानि न सन्तीति वदन् कथं सभ्यः स्यादि-त्याह ॥ **दूषणानामिति** ॥ साधनस्य हेतोरङ्गानां व्याप्त्यादीनां सत्वेन तद्विषयस्य प्रतिज्ञातार्थस्य तत्व-रूपत्वता सत्यतेति यावत् । तद्वैपरीत्येनासत्यत्वमादिपदार्थः । उपसंहरति ॥ **इतिरिक्तमिति** ॥ पर-स्परपराहतत्वेन शून्यवचनमित्यर्थः । परिहरति ॥ **यदुक्तमिति** ॥ कथायामेवैतानि बाधकान्युपन्यस्य प्रतिवादिनं निगृह्य सत्ताऽभ्युपगमनं साधनीयं । तथा च न तदन्तरेण कथाप्रवृत्तिः । सत्ताऽभ्युपगमसिद्धौ कथासिद्धिस्तत्सिद्धौ बाधकोपन्यासस्ततश्च सत्ताऽभ्युपगम इति चक्रकापत्तिरित्यर्थः । नास्माभिः प्रमाणा-दिसत्ताङ्गीकारोऽपि कथाकारणमित्युच्यते । येनोक्तदोषः किं तु प्रमाणादिसत्ताऽभ्युपगमो न कथापूर्व-मपेक्षितः आवश्यककथाव्यवहारनियमेनैवानतिप्रसक्तकथाफलसिद्धेरिति वदता प्राप्तमपि स्वव्याघातमपश्यन्तं कथञ्चित्कथायां प्रवृत्तं परं प्रति कथातः पूर्वं स्वेच्छास्वीकृतस्यैव व्यवहारनियमस्योक्तरीत्या प्रमाणादि-सत्तास्वीकार एव पर्यवसानम् । तथाच प्रमाणादिसत्ताऽभ्युपगमो न कथापूर्वमपेक्षितः आवश्यकव्यवहार-नियमेनैवोपपत्तेरिति वचनं स्वव्याहतं, व्यवहारनियमस्यैवोक्तरीत्या प्रमाणादिसत्ताऽभ्युपगमपर्यवसायित्वा-दित्युच्यमानत्वात् । तथा च प्रमाणादिसत्ताऽभ्युपगमः कथापूर्वमपरिहार्य इत्याह ॥ **कथास्वरूपेति** ॥ **कथञ्चित्कारणेति** ॥ असतोऽप्यारोपितस्य सर्पादेर्भयकम्पादिसत्यकार्यजनकत्वदर्शनात्कथञ्चिदित्युक्तम् । कार्यस्यैव सत्वाभाव इतीमंशमसिच्या दूषयित्वा किं कारणसत्तयेत्युक्तमसतः कारणत्वं दूषयति ॥ **असतः कारणत्वं त्विति** ॥ निराकरिष्यते । 'नासतोऽदृष्टत्वादि'त्यत्र ।

**प०— तदेतदिति** ॥ यदत्रोक्तमित्यादिनोक्तमित्यर्थः ॥ **अनेनेति** ॥ पूर्वोक्तस्य प्रसङ्गत्व-द्योतकविपर्ययपर्यवसानपरेण तस्मादित्यादिश्लोकेनेत्यर्थः । पक्षचतुष्टयदूषणमपि क्रमेणोज्जिहीर्षुराद्यपक्षेप्या

द्यपक्षदोषं तावन्निराह ॥ **यत्तावदित्यादिना** ॥ **दूषणमिति** ॥ तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेरित्यादिनोक्तमित्यर्थः । एवमित्युक्तं व्यनक्ति ॥ **मायावादीति** ॥ **व्यभिचारस्थलस्येति** ॥ चार्वाकादेस्तद्व्यवहारस्य चेत्यर्थः ॥ **अङ्गीकृतेति** ॥ अनङ्गीकुर्वतामितिबहुवचनं प्रयुंजानेनाचार्येणेत्यर्थः । तथैव प्राग्व्याख्यानादिति भावः । तस्यापि पक्षत्वे बाध इत्युक्तं निराह ॥ **बाधस्त्विति** ॥ **त्युक्तमिति** ॥ 'तस्माद्व्यवहृतिरि'त्येतदवतारिकायामिति भावः । आद्यपक्षेऽपि द्वितीयकल्पदोषमुद्धरति ॥ **साधनबाधनेति** ॥ अनेनैव प्रसङ्गपरमूलेनैव ॥ **विशिष्टेति** ॥ साधनादिक्षमेत्यर्थः । प्रागुक्तं सद्वचनाभासलक्षणयोगित्वोपाधिं च निराह ॥ **विमतइत्यादिना** ॥ **इतिवासाधनइति** ॥ 'मायावादिनं तद्व्यवहारं वा पक्षीकृत्ये'तिपूर्वोक्तसाधनद्वयप्रकारापेक्षया वाशब्दः ॥ **कथंचिदन्वयइति** ॥ कथंचित्साध्यव्यापकत्व इत्यर्थः ॥ यत्र साधनाद्यक्षमत्वं तत्र सद्वचनाभासलक्षणयोगित्वमिति नास्ति । शशविषाणादौ प्रत्यक्षाभासादौ च साध्याव्यापकत्वात् । व्यवहारत्वादिरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वं तु संभाव्यत इति कथंचिदन्वय इत्युक्तं ॥ **नचैवमित्युक्तमिति** ॥ साधनं न भवत्यापादनमेवेत्युक्तमित्यर्थः ॥ **साधनादिति** ॥ प्रमाणसत्ताभ्युपगमपूर्वकत्वारहितत्वादिति साधनादित्यर्थः । तादृशश्चानुमानमात्रोच्छेदकतया नोपाधिरिति भावः । साधनाभेदं व्यनक्ति ॥ **यदाहीति** ॥ तदसत्त्वं प्रमाणादिव्यवहारासत्त्वमित्यर्थः ॥ **तत्स्वीकारेति** ॥ प्रमाणस्वीकारेत्यर्थः ॥ **एवंचवदतेति** ॥ सत्त्वाद्युदासीनैस्तानि स्वीकृत्येतिवदता स्वरूपासत्त्वं नाभिप्रेतं । सदसद्विलक्षणत्वरूपानिर्वचनीयत्वं यदभिप्रेतं तत् 'वैलक्षण्यं सदसतोरि'त्यादावग्रे निरसिष्यत इत्यर्थः ॥ **इत्यादीति** ॥ तथाच व्याघात इत्यन्तमित्यर्थः ॥ **न चोक्तदोषइति** ॥ व्याघातदोष इत्यर्थः । ब्रूम इत्यनन्तरं येन व्याघातदोष इति योज्यं ॥ **न चैवमिति** ॥ प्रारब्धप्रमेयान्तरकथात्यागेन प्रमाणसत्तापादने प्रकृतकथातः कथान्तरप्रसक्तिदोषः । कथान्तरेऽपि प्रमाणासत्त्ववादिनं प्रति एवमेवापादनीयमित्येवं पूर्वोक्तानेककथान्तरप्रसक्तिरित्यादिपदार्थः । 'स्यादप्येवं यदि कथकप्रवर्तनीये'त्यादिनोक्तदोषं चोद्धरति ॥ **द्वितीयपक्षोक्तेति** ॥ **द्वितीयेतुसंवादएवेति** ॥ अस्माभिरपि सत्ताऽभ्युपगमस्य कारणकोटौ प्रवेशानङ्गीकारादिति भावः ॥ **तृतीयेप्याद्यमिति** ॥ 'लोकव्यवहारोऽपि प्रमाणव्यवहारो वा पामरादिसाधारणव्यवहारो वे'त्यत्राद्यमित्यर्थः ॥ **तत्रोक्तमिति** ॥ 'विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वादि'ति तु 'यो यथाकथंचित्कथायां प्रवृत्तः तं विपक्षे कथानुत्पत्तिप्रसङ्गदण्डं प्रदर्श्ये'त्यादिना दूषितप्रायमित्यर्थः ॥ **द्वितीयेति** ॥ 'पामरादिसाधारणव्यवहारो वे'ति द्वितीयेत्यर्थः ॥ **इत्यत्रदर्शने** इत्येतस्मिन्सिद्धान्ते ॥ **तस्यैवेति** ॥ व्यवहारस्यैवेत्यर्थः । देहात्म्यैक्यादित्यपवादात्त्यज्यते । तावताऽपवादहीनस्थले तस्य मानत्वे बाधकाभावात् । वक्ष्यते च भक्तिपादे । 'उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितं । व्यभिचार्यपवादेन मानमेव भविष्यतीत्यादी'ति भावः । यदपि सत्यत्ववादिनोक्तं

पूर्वपक्षयित्वा समाधानं मायावादिनोक्तं तच्छङ्कासमाधाने द्वे अप्यनूद्य निराह ॥ **स्यादेतदित्यादिना** ॥ तदप्यनेनैव परिहृतमित्यन्तेन । व्यवहारक्रिया व्यवहारकृतिः । व्यवहारकरणविषयसमयबन्धेनेत्यर्थः ॥ **व्यवहारक्रियाऽभिधातुं शक्येति** ॥ व्यवहारकर्तव्यताऽभिधातुं शक्येत्यर्थः । एभिरपि बाधकैरि'त्यस्याभिमतस्य प्रसाधनीयत्वेनेत्यन्वयः ॥ **पूर्वोक्तेति** ॥ सत्ताऽनभ्युपगन्तुश्चार्वाकादेरपि व्यवहारदर्शनान्मायावादिनाऽपि सत्ताऽनभ्युपगमात्कथारूपकार्यलिङ्गेन तत्सत्ताऽभ्युपगमसाधने बाधस्य न निस्तार इत्यर्थः । केचित्तु पूर्वोक्तबाधकान्न निस्तार इत्यर्थ इत्याहुः ॥ **अनेकातिप्रसङ्गगहनेति** ॥ सर्वमिथ्यात्वपरत्वे स्वयं मिथ्या स्यात् । तस्य साधकत्वसाधकमपि सच्चेद्ब्रह्मातिरिक्तमद्वैतभङ्गः । ब्रह्मैव चेन्निर्विशेषस्य साधकत्वायोगः । मिथ्या चेत्तस्याप्यसाधकत्वमित्याद्यनेकातिप्रसङ्गारण्यनिविष्टत्वादसाधकत्वमिति भावः । श्रुत्यादेरसाधकत्वमेव व्यनक्ति ॥ **तथा चेति** ॥ **तर्कस्येति** । यदि प्रमाणसत्ता न स्यात्तर्हि कथाऽऽदिकार्यनिष्पत्तिर्न स्यादित्येवंरूपतर्कस्य प्रमाणसत्त्वेन विनाप्युपपत्त्याऽऽभासत्वसिद्धिरित्यर्थः ॥ **सूत्रकृतैवेति** ॥ नासतोऽदृष्टत्वादिति समयपादीयशून्यवादापाकरणाधिकरण इति भावः ।

**या०** — माध्यमिकादेः प्रमाणादिसत्ताऽनभ्युपगमेऽपि वादितोपलम्भाद्व्यभिचार इत्यत आह ॥ **व्यभिचारस्थलस्येति** ॥ प्रसङ्गतुल्यता प्रसङ्गस्थलतुल्यता । तस्याप्युक्तरीत्याऽऽपादनविषयत्वान्न व्यभिचार इति भावः । यदुक्तं तस्यापि पक्षत्वे बाध इति तत्राह ॥ **बाधस्त्विति** ॥ विशिष्टव्यवहारस्याविनाभाव इति प्रथमद्वितीयकल्पमभ्युपेत्य तत्रोक्तं दोषं परिहरति ॥ **साधनेति** ॥ **विमतो व्यवहार इति** ॥ इदं तु व्यवहारपक्षकानुमानस्य माध्यमिकादिव्यवहारे व्यभिचारपरिहाराय तत्र हेतुव्यतिरेकसाधनम् । अन्यथा कथाव्यवहारपूर्वं प्रमाणादिसत्ताऽभ्युपगम एवेद न विप्रतिपत्तेरर्थान्तरप्रसङ्ग इति द्रष्टव्यम् ॥ **कथञ्चिदन्वय इति** ॥ 'किं चायमुपाधिरि'त्यनुपदमेव वक्ष्यमाणरीत्या वस्तुगत्याऽयमुपाधिरेव न भवतीति भावेन कथञ्चिदित्युक्तमित्यवधेयम् ॥ **तच्चेति** ॥ सामान्यविशेषव्यक्त्योश्चाभेदः शिंशुपा वृक्षो घटः पृथिवीऽत्यादौ प्रसिद्ध एवेति भावः । धर्मविवक्षायां त्वभेदासम्भवेपि सामान्यधर्मस्य विशेषधर्मव्यापकतया साधनव्यापकता स्यादिति द्रष्टव्यम् । ननु सत्त्ववदसत्त्वस्याप्यनङ्गीकारान्न दो( इत्युक्तमित्याशङ्कते ॥ **नन्वेतदिति** ॥ नन्वनिर्वचनीयवादिनो मम सत्त्वासत्त्वौदासीन्येनापि प्रमाणा ( बुद्ध्यारोहः सम्भवतीत्यत आह ॥ **एवं च वदतेति** ॥ **अग्र इति** ॥ 'वैलक्षण्यं सदसतोरप्येतेन निषिध्यत' इत्यत्रेत्यर्थः । प्रमाणादिसत्त्वस्य प्रामाणिकलोकव्यवहारसिद्धत्वेऽन्योन्याश्रयत्वं स्यादित्युक्तमित्यत आह ॥ **तत्रोक्तमिति** ॥ भविष्यतीति प्रयोगात्पूर्ववर्तित्वरहितस्य कारणत्वं न सम्भवतीत्याद्यान्यकल्पस्य प्रसक्तिः । लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यत इति तावन्न भवतीति वाक्यपर्यालोचनया

द्वितीयस्येति द्रष्टव्यम् ॥ **तस्यैवेति** ॥ उत्सर्गतः प्रवृत्तलोकव्यवहारस्यैवेत्यर्थः ॥ **चतुर्थपक्षोक्तिति** ॥ प्रमाणादिसत्ताऽभ्युपगमस्य समयबन्धनेनान्यथासिद्धस्य न कारणत्वमिति यो दोषश्चतुर्थपक्षेऽभिहितः सोऽपि प्रमाणादिसत्ताऽभ्युपगमस्य कथाफलनिष्पादकतया कथापूर्वकालीनत्वस्यानङ्गीकारेणैव परिहृत इत्यर्थः । अनङ्गीकारमेव दर्शयति ॥ **न हि वयमिति** ॥ तथा च चतुर्थपक्षोक्तदूषणे इष्टापत्तिरिति भावः । ननु प्रमाणादिसत्ता कुतो नाङ्गीकार्या । द्वैतापत्तिभयादिति चेत् । तर्हि कथापूर्वं समयबन्धमात्रांगीकारेऽपि सुतरां द्वैतापत्तिः । समयबन्धकरणस्य स्वसत्ताऽभ्युपगमं प्रमाणादिसत्ताऽभ्युपगमं चानादायापर्यवसानात् । अत एव समयबन्धमात्रेणैव कथाऽऽरम्भो न प्रमाणादिसत्तामभ्युपगम्येति वचनं स्वव्याहतमित्याशङ्कते ॥ **स्यादेतदिति** ॥ **व्यवहारक्रियेति** ॥ व्यवहारकरणरूपसमयबन्धेनेत्यर्थः । तस्य स्वसत्ताऽभ्युपगम-मनादायापर्यवसानमुपपादयति ॥ **प्रमाणैरिति** ॥ **प्रमाकरणभावस्येति** । प्रमाणैरिति तृतीयया करणत्वाभिधानात्तस्य च कारणविशेषत्वादिति भावः ॥ **अस्तित्वेनेति** ॥ यस्य व्यवहारे दूषणानि सन्ति तस्य भङ्गः पराजयोऽवधार्य इति नियमबन्धन इत्यर्थः ॥ **साधनाङ्गेति** ॥ यस्य पुनः साधनस्य हेतोरङ्गानि व्याप्त्यादीनि सन्ति तस्य जयो व्यवहर्तव्यः । तद्विषयस्य प्रतिज्ञातार्थस्य तत्त्वरूपता च व्यवहर्तव्येत्येवं व्यवहारनियमनादावित्यर्थः । आदिपदेन साधनाङ्गानामसत्त्वे तद्विषयस्याप्यसत्यत्वमिति व्यवहारनियमनस्य ग्रहणम् ॥ **अङ्गीकृतमिति** ॥ दूषणानि सन्ति व्याप्त्यादिकमस्तीत्यादिवचनं तत्सत्ताऽङ्गीकारपरमेवेति भावः ॥ **रिक्तमिति** ॥ स्वव्याहतत्वादर्थशून्यं वचनमित्यर्थः । अत्र यद्यपि स्वव्याहतिरेवोक्ता प्रतीयते नापसिद्धान्तः । तथाऽपि समयबन्धस्य स्वसत्ताऽभ्युपगमपर्यवसानोपपादनं न व्याहत्यनुकूलमतः सोऽप्यत्राभिप्रेत इति गम्यत इति द्रष्टव्यम् ॥ **पूर्वोक्तबाधाय इति** ॥ तथैव कथाऽन्तरप्रसक्तिः । अन्यथाऽन्योन्याश्रय इत्युक्तबाधस्येत्यर्थः । नास्माभिः प्रमाणादिसत्ताऽङ्गीकारोऽपि कथाकारणमित्युच्यते येनोक्तदोषः किंतु प्रमाणदिसत्ताऽभ्युपगमो न कथापूर्वमपेक्षितः । आवश्यकव्यवहार-नियमेनैवानतिप्रसक्तकथायां फलसिद्धेरिति वदन्तं कथञ्चित्कथायां प्रवृत्तं प्राप्तमपि स्वव्याघातमपसिद्धान्तं चापश्यन्तं परं प्रति कथातः पूर्वं स्वेच्छास्वीकृतस्यैव व्यवहारनियमस्योक्तरीत्या समयबन्धसत्तास्वीकारे प्रमाणादिसत्तास्वीकारे च पर्यवसानं ततश्च स्वव्याघातादिकमपरिहार्यमेवेत्युच्यत इत्याह ॥ **कथा-स्वरूपेति** ॥ कार्यस्यैव सत्त्वाभाव इति इममंशमसिद्धया दूषयित्वा किं कारणसत्तयेत्यनेनोक्तमसतः कारणत्वं दूषयति ॥ **असतःकारणत्वं त्विति** ॥ अथवाऽसतः कारणत्वं यत्खण्डनकारस्याभिप्रेतं तत्सूत्रविरुद्धं चेत्याह ॥ **असत इति** । नासतोऽदृष्टत्वादित्यत्रेति शेषः ॥

श्री०—**प्रसङ्गविषयतुल्यतेति** ॥ प्रसङ्गे यो विषयो धर्मी मायावादी तत्तुल्यतेत्यर्थः ॥ **विशिष्टेति** ॥ साधनबाधनक्षमेत्यर्थः । तदुपपादयति ॥ **यदा हीति** ॥ **स्वरूपासिद्धत्वमिति** ।

तथा च प्रमाणादीनामसत्वप्राप्त्या प्रमाणादिसत्ताभ्युपगमपूर्वकतारहितत्वादिति हेतोरपि प्रमाणान्तर्गतत्वेनासत्वप्राप्त्या स्वरूपासिद्धत्वमित्यर्थः ॥ **तच्चेति** ॥ स्वरूपासिद्धत्वम् ॥ **तत्र य इति** ॥ वादीत्यर्थः **इदं दूषणमिति** ॥ यदि प्रमाणानि न सन्तीत्यादिनोक्तं दूषणमित्यर्थः ॥ **यश्चेति** ॥ प्रतिवादीत्यर्थः । ननु तर्हि यथैकेन प्रमाणादिसत्तानभ्युपगमेऽपि यदि प्रमाणादीनि न सन्तीति प्रकृतैतद्दूषणाधिकरणभूतकथारूपव्यवहाराख्यो धर्मी सिद्धस्तथैव मत्कर्तृककथान्तरप्रवृत्तिः प्रमाणादिसत्ताऽनभ्युपगमेऽपि भविष्यतीत्युक्तो दोषः स्यादेवेत्याशङ्क्य निराकरोति ॥ **न चोक्तदोष इति** ॥ कुतो न चेत्यत आह ॥ **न हीति** ॥ **ब्रूम इति** ॥ यद्येवं वयं ब्रूमस्तर्ह्येव प्रमाणादिसत्ताभ्युपगमाभावेऽप्येतद्दूषणाधिकरणकथाऽन्तरप्रवृत्त्युपपत्तिरिति दूषणमस्माकं स्यान्न चैवं ब्रूम इत्यर्थः ॥ **यथाकथञ्चिदिति** ॥ समयबन्धादिमात्रेणेत्यर्थः । प्रवृत्तो वादी । कथायां प्रवृत्तं वादिनं प्रत्येव । विपक्षे प्रमाणादिसत्तानङ्गीकारे । एवं सति यथाकथञ्चित्कथायां प्रवृत्त्यङ्गीकारे । कथान्तरप्रसक्त्यादिदोषो न च, न हीत्यर्थः । आदिपदेनस्वव्याघातग्रहणम् । स्वयमेव प्रतिवादी तत्त्ववादी प्रमाणादिसत्ताऽभ्युपगममन्तरेणापि प्रकृतकथारूपव्यवहारप्रवृत्तिमङ्गीकृत्य तत्र यदि प्रमाणादीनि न सन्ति तर्हि व्यवहार एव धर्मी न सिद्ध्येदिति दूषणाभिधाने किं न स्वव्याघातः स्यात् । न चैवम् । प्रमाणादिसत्ताऽभ्युपगममन्तरेण कथाप्रवृत्तेरस्माभिरनङ्गीकारात् । यथाकथञ्चित्प्रवृत्तं परं प्रत्येव विपक्षे बाधकप्रदर्शनेन सत्ताया अङ्गीकर्तव्यत्वस्योक्तत्वात् । न ह्येवं सति व्याघातप्रसक्तिरस्तीत्याशयः । एतेनेत्युक्तम् विशदयति ॥ **प्रतिवादिन इति** ॥ कथाप्रवेशं यथाकथञ्चित्कथायां प्रवेशम् ॥ **न कथाकारणत्वमिति** ॥ अन्योन्याश्रयादिति भावः ॥ **तृतीये आद्यमिति** ॥ लोकव्यवहारोऽपि प्रमाणव्यवहारो वा पामरादिसाधारणव्यवहारो वेत्यत्राद्यमित्यर्थः ॥ **तत्रोक्तमिति** ॥ विचारप्रवृत्त्यनन्तरं प्रमाणादिसत्ताभ्युपगमस्य प्रामाणिकव्यवहारसिद्धत्वं तदसिद्धेन प्रमाणादिसत्ताभ्युपगमेन विचारप्रवृत्तिस्तस्य विचारकारणत्वादित्युक्तं दूषितप्रायम् । सत्ताऽभ्युपगमस्य विचारकारणत्वाभावेन द्वितीयकोट्यनङ्गीकारादिति भावः ॥ **द्वितीयेति** ॥ पामरादिसाधारणव्यवहारो वेति द्वितीयपक्षेत्यर्थः ॥ **विचारसाध्य इति** ॥ प्रमाणादिसत्ता विचारबाध्या यदि भविष्यति तदा नाभ्युपगन्तव्या । यदि विचारबाध्या न भविष्यति तर्ह्यङ्गीकर्तव्येत्युक्त्या विचारप्रवृत्तिसाध्यस्य प्रमाणसत्ताभ्युपगमस्य विचारप्रवृत्तिपूर्वकालीनत्वाभावान्न विचारप्रवृत्तिकारणत्वमित्यर्थः ॥ **तथैवेति** ॥ उक्तरीत्या प्रवृत्तलोकव्यवहारस्यैवेत्यर्थः ॥ **नियतेति** ॥ नियतवाग्व्यवहारकरणरूपसमयबन्धेनेत्यर्थः । अस्तित्वेन सत्यत्वेन । भङ्गः परपक्षस्य । कथायां प्रवृत्तं स्वेच्छास्वीकृतव्यवहारनियमेन यथाकथञ्चित्कथायां प्रवृत्तम् ॥ **स्वव्याघातमिति** ॥ प्रमाणादिसत्तामनङ्गीकृत्य प्रमाणैर्व्यवहर्तव्यमिति स्वेच्छास्वीकृतव्यवहारनियमस्योक्तरीत्या सत्व एव पर्यवसानमिति स्वव्याघातः । अचेतयन्तं अपश्यन्तम् ।

**श्रुत्यादेरिति ॥** नेहनानेतिश्रुत्या सर्वस्य सत्वाभावो बोध्यते । तथाच सर्वान्तर्गतस्य कथाऽऽदेरपि सत्त्वाभावो निश्चित इत्यर्थः ॥ **अनेकातिप्रसङ्गेति ॥** 'तद्वाक्यस्याग्रतो भवेत्', 'प्रत्यक्षविरोधत' इत्युक्तानेकातिप्रसङ्गेनेत्यर्थः । तत्प्रामाण्ये नेहनानेतिश्रुतिप्रामाण्ये ॥ **अन्यथासिद्धेरिति ॥** अन्यथासिद्धिरप्रयोजकत्वम् । ब्रह्मज्ञानेतरज्ञानबाध्यत्वाभावे सत्वाभावे साधकत्वं न स्यादिति तर्के मिथ्यात्वसाधकश्रुतिविरोधेनाप्रयोजकत्वप्राप्तेरित्यर्थः ॥ **तस्य चेति ॥** तर्कस्याभासत्वेन तद्विरोधाभावादित्यर्थः ॥

**च०**— व्यभिचारस्थलस्य माध्यमिकादिव्यवहारस्य । आपत्तिधर्मिभूताद्वैतवादिव्यवहारतुल्यता । तथा च तस्याप्युक्तदिशाऽऽपादनविषयत्वान्नानैकान्त्यमिति भावः ॥ **कथंचिदिति ॥** समनन्तरमेव साधनाभेदं तस्य प्रदर्श्योपाधित्वाभावस्य व्युत्पादनाशयेन कथञ्चिदित्युक्तिः ॥ **साधनादिति ॥** प्रमाणादिसत्त्वोपगतिपूर्वकतारहितत्वादिति साधनादित्यर्थः । साधनव्यापकत्वान्नोपाधिरिति भावः ॥ **तच्चेति ॥** सामान्यधर्मावच्छिन्नस्य विशेषधर्मावच्छिन्नाभेदस्तु वृक्षः शिंशुपा, द्रव्यं घट इत्यादौ प्रसिद्ध इति भावः ॥ **निराकरिष्यत इति ॥** 'वैलक्षण्यं सदसतोरित्यादिने'ति पूरणीयम् । पर्यनुयोज्यः शङ्कनीयः । संवादः संप्रतिपत्तिः । आद्यं प्रमाणव्यवहार इति कल्पम् ॥ **चतुर्थपक्षेति ॥** अन्यथासिद्धत्वान्न तत्सत्तोपगतेः कारणत्वमित्येवंरूपः । ननु द्वैतापत्तिभिया प्रमाणादिसत्तां यदि नोपेयात्तदा विधिनिषेधाववधूय प्रत्ययायोगेन समयबन्धादेस्तद्धेतुतास्वीकारो न घटत एवेत्यादिदिशा सत्यत्ववादाभिहितं पूर्वमतीकृत्य यदभ्यधात्खण्डनकारस्तदप्यनूद्य प्रतिविधत्ते स्यादेतदित्यादिना परिहृतमित्यन्तेन । अचेतयन्तं अनभिजानानम् । सूत्रकृतैव निराकरिष्यत इति । समयचरणे 'नासतोऽदृष्टत्वादि'ति शून्यवादापाकृतिनय इति भावः । खण्डनकृन्मतनिरासः ॥

अनु०— व्यवहारसतश्चापि साधकत्वं तु पूर्ववत् ॥

सु०— स्यादेतदेवम् । यदि नेहनानेत्यादिबलेनात्माऽतिरिक्तस्य सर्वस्यासत्त्वमभ्युपगच्छामः । न चैवं किं नाम व्यावहारिकी सत्ताऽभ्युपगम्यत एव । तथा च सर्वान्तःपातिनो व्यवहारसतः प्रमाणादेः साधकत्वसंभवान्नोक्तप्रसङ्ग इत्यत आह ॥ व्यवहारसतश्चेति ॥ चशब्दो हेतौ । अपिशब्दः समुच्चये । तुशब्दोऽवधारणे । व्यवहारसतोऽपि साधकत्वं पूर्वस्यासत इव प्रतिवादिनो न सिद्धमेव यतोऽतो नोक्तप्रसङ्गनिस्तार इति । अयमर्थः । यदि व्यावहारिकं सन्नाम सदेव तदा मिथ्यात्वप्रतिपादनं व्याहतम् । फलितं चास्मन्मनोरथद्रुमेण । व्यर्थं च

व्यावहारिकपदम् । अथ तदसत्तदा किमनेनाधिकमाचरितम् । सत्त्वाभावे साधकत्वं न स्यादित्यनिष्टप्रसङ्गस्य तदवस्थत्वादिति । ननु च द्विविधं सन्मुख्यममुख्यं च । तत्र यस्य सर्वप्रकारेण बाधितत्वं नास्ति तन्मुख्यं सत्पारमार्थिकमिति च गीयते । यस्य तु सत्प्रतीतिरेव सत्ता तदमुख्यं सत् । न च ततः सत्ता सिद्ध्यति । तथा हि । किं सत्त्वाऽवगममात्रात्तत्सत्ताऽभ्युपगम्येति मन्यसेऽबाधितात्तदवगमाद्वा । नाद्यः । मरुमरीचिकाऽऽदौ जलरूपतासद्भावाभ्युपगमप्रसङ्गात् । द्वितीयेऽपि वादिप्रतिवादिमध्यस्थमात्रस्य तस्यापि कथाकाल एव बाधितत्वावगमाभावात् । अथवा कस्यचिदपि कालान्तरेऽपि च बाधितत्वबोधविरहात् । नाद्यः । अतिप्रसङ्गात् । पुरुषत्रयावगतस्याप्येकक्षणावगतस्य पुरुषान्तरेण तेनापि क्षणान्तरेऽपि बहुलं बाधदर्शनात् । न चासावर्थोऽसत्योऽपि द्वित्रादिपुरुषमात्रपूर्वजाततत्प्रतीत्यनुरोधाद्बाधदर्शने सञ्जातेऽपि तथैव सन्नित्यभ्युपगम्यते । तस्माद् द्वितीयः पक्षः परिशिष्यते । न चासावमुख्येऽस्तीति कुतः पारमार्थ्यप्राप्तिः । न च वाच्यं सत्प्रतीतेरपि प्रतीत्यन्तरमेव सत्त्वेत्यनवस्थेति । प्रतीतेः पारमार्थिकत्वात् । न हि तस्या बाधोऽस्ति । अस्ति चेत्सैव प्रतीतिरबाधिता परमार्थसती । न च प्रतीतेः स्वरूपभेदोऽस्तीत्यतो विज्ञानं ब्रह्मैव परमार्थसत् । अमुख्यं पुनर्द्वेधा । मायोपाधिकमविद्योपाधिकं चेति । तत्राऽऽद्यमम्बरादिकम् । तच्चाब्रह्मज्ञानाद्बाधदुर्धुर्येण हानादिव्यवहारनिर्वाहकत्वाद्व्यावहारिकमिति गीयते । कतिपयप्रतिपत्तृकतिपयकालतथात्वावगमादेव हि लौकिको व्यवहारः प्रतीयते । द्वितीयं शुक्तिरजतादि । तत्तु प्रतीतिसमयमात्रपरिवर्ति । न पुनर्हानादिहेतुरिति प्रातीतिकमुच्यते । तदेवं सत्त्रैविध्यादम्बरादिकं विश्वं सदपि पारमार्थिकत्वाभावान्मिथ्येति युज्यते । व्यावहारिकसत्त्वाच्च तदन्तर्गतस्य प्रमाणाऽऽदेः कथाऽङ्गतोपपद्यते । पारमार्थिकप्रातीतिकव्यावृत्त्यर्थत्वेन व्यावहारिकपदं च संभवतीति अत्रेदं वक्तव्यम् । किं पारमार्थिकसदेव सदसच्च बाधकभेदेन द्विविधमिति सत्त्रैविध्यमुत सत्येवावान्तरभेदेन । आद्ये प्रागुक्तदोषानिस्तारः । नहि सदिति ज्ञानमात्रेणासदर्थक्रियार्हम् । येन तथाविधं प्रमाणादि, कथाङ्गतां गच्छेत् । तथात्वे विषमपि पीयूषतयाऽवगतं तदर्थक्रियां कुर्यात् । बाधविलम्बस्त्वप्रयोजकः । अर्धतादवस्थ्यानिवृत्तेः । एवं ज्ञानसत्यताऽपि । शुक्तिरजतादेरपि रजतोचितार्थक्रियाकारित्वप्रसङ्गात् । यदपि तथैव लौकिको व्यवहारः प्रतीयत इति तदग्रे निराकरिष्यते । अर्थक्रियाऽप्यसतीति चेतरेतराश्रयादिना निरस्तम् । सतोऽर्थक्रियाऽसंभवादसत्येव कथंचित्साऽङ्गीकार्येति चेत् । श्रुतिप्रामाण्यनिश्चयोत्तरकालमेवैतत् । प्राक्तन्निश्चयात्परमार्थसत एवार्थक्रियेति मन्यमानः प्रतिवादी कथं बोधनीयः । अन्योन्याश्रयादिप्रसङ्गादित्युक्तम् ।

**वा०**— ननु नेहनानेतिवाक्यबलसिद्धासत्त्वप्रपञ्चान्तर्गतप्रमाणादेरसत्त्वमङ्गीकुर्वता व्यावहारिकसत्त्वस्य शङ्कितुमशक्यतया व्यावहारिकसत्त्वाप्रसक्तेस्तत्साधकत्वोपयोगनिरासकोत्तरभाष्यमसङ्गतमित्यत आह ॥ **स्यादेतदिति** ॥ नेहनानेतिवाक्यं च पारमार्थिकत्वाभावविषयमिति गूढाभिसन्धेः शङ्क्यमिति ध्येयम् । समुच्चयस्यैकेनैव सिद्ध्या चापिशब्दयोरन्यतरस्य वैयर्थ्यमित्यतः प्रकृतसङ्गतिं दर्शयितुं, प्रकृतं प्रत्येतद्वाक्यार्थस्य हेतुत्वद्योतकतया चशब्दं व्याचष्टे ॥ **चेति** ॥ इवेति वृत्तेरर्थकथनम् । प्रतिवादिन इत्यादि तल्लब्धार्थकथनम् । चशब्दद्योतितहेतुं प्रति योग्यसाध्याध्याहारोऽतो नोक्तेत्यादिः । ननु व्यावहारिकसत्त्वस्य व्यवहारनिर्वाहक्षमत्वरूपस्य पारमार्थिकसत्त्वरूपत्वात्कथं नोक्तप्रसङ्गनिस्तार इत्यतस्तस्य पारमार्थिकत्वरूपत्वपक्षमुपर्येव निरस्य सत्त्वेन व्यवहारमात्रं न तु ताऽवस्तुतः सदिति पारमार्थिकसत्त्वरूपत्वाभावपक्षं परिशेष्य तन्निरासपरत्वेन भाष्यं योजयति ॥ **अयमर्थ इति** ॥ आशयमजानानस्यैवेदमुत्तरम् । अत एव ननुचेत्यादिना तदाशयोद्घाटनेनोत्तरं भविष्यतीति द्रष्टव्यम् ॥ **फलितं चेति** ॥ सत्यस्यैव साधकत्वं नासत इत्यस्माभिः प्रतिपादनीयस्य सिद्धेरित्याशयः । ननु सत्त्वपक्षोक्तदूषणानुपमर्दकतया सत्त्रैविध्यस्य परेणानाशङ्कनीयत्वात्तन्निरासकोत्तरभाष्यमसङ्गतम् । तथा हि । सत्त्रैविध्यं वदता प्रमाणादीनां सत्त्वात्साधकत्वस्योपपादनेनासत्त्वपक्षोक्तदूषणपरिहारेऽपि सत्त्वाङ्गीकारे मिथ्यात्वप्रतिपादनं व्याहतमिति सत्त्वपक्षोक्तदूषणस्य परिहारो न कर्तुं शक्यः । न च सत्तात्रैविध्याद्व्यावहारिकसत्तासद्भावेऽपि ब्रह्मनिष्ठपारमार्थिकसत्त्वाभावेन मिथ्यात्वमिति वाच्यम् । सत्त्वाविशेषेऽपि ब्रह्मनिष्ठसत्त्वाभावेन जगतो मिथ्यात्वे ब्रह्मण्यपि जगन्निष्ठसत्त्वाभावेन तस्यापि मिथ्यात्वापत्तेरित्यतो न सत्तात्रैविध्यवादिनाऽविशेषेण सत्त्वमङ्गीक्रियते किं नाम क्वचिन्मुख्यमपरत्रामुख्यममुख्येन च न मुख्येनेवार्थगतसत्तासिद्धिरित्यभिप्रेत्य सत्त्वयोर्मुख्यामुख्यभेदेन द्वैविध्यं, तत्स्वरूपं, अमुख्येन तदसिद्धिप्रकारं च प्रतिपादयति ॥ **ननु चेत्यादिना** ॥ ननु प्रतीतेरेवार्थसाधकत्वात्सत्ताप्रतीतावपि तदसिद्धौ न काऽप्यर्थसिद्धिः स्यादित्यत आह ॥ **तथा हीति** ॥ वादिप्रतिवादिमध्यस्थानामेव बाधबोधविरहाद्वा कस्यापि बाधबोधविरहाद्वा । आद्येऽपि तेषां कथाकाल एव तदभावाद्वा कालान्तरेऽपि वा । द्वितीयेऽपि प्रतीतिकाल एव वा कदाऽपि वेति विकल्पान्मनसि निधायाह ॥ **द्वितीयेऽपीति** ॥ द्वयमप्यनैकान्त्येन निरस्यति ॥ **नाद्य इति** ॥ अनैकान्त्यमेव स्फोरयति ॥ **पुरुषेति** ॥ पुरुषत्रयावगतस्यापि पुरुषान्तरेणेत्याद्ये वाद्यादीनामेव कालान्तरेऽपीति द्वितीयस्य । एकक्षणावगतस्य तेनापि क्षणान्तर इत्यनेन वाद्यादीनामेव कथाकाल एवेत्याद्याद्यस्य द्वितीये कस्यचिदपि प्रतीतिकाल एवेत्याद्यस्य च निरासः । वैभाषिकसौत्रान्तिकयोगाचारावगतस्य स्वरसभङ्गुरत्वस्य वाद्यन्तरेण, पूर्वं सर्पतया दृष्टस्रजस्तेनैव कालान्तरे बाधदर्शनादिति भावः । ननु विगीताः प्रत्यया यथार्थाः प्रत्ययत्वात्सम्मत-

वदिति पुरुषत्रयावगतस्यापि सत्त्वेन तत्र साध्यस्यापि सत्त्वान्न व्यभिचारस्तत्राह ॥ **न चेति** ॥ द्वौ त्रयो वा द्वित्राः । त एव पुरुषा मात्राः परिमाणं यस्य तस्य पूर्वं जाता या, तस्य च तस्य वस्तुनः प्रतीतिरिति विग्रहः । बाधदर्शने सञ्जातेऽपि द्वित्रादिपुरुषमात्रपूर्वजातदर्थप्रतीत्यनुरोधादसत्योऽप्यसावर्थस्तथैव सन् । तथाभूत इति यावत् । इति न चाभ्युपगम्यत इति सम्बन्धः । तादृशावगमेन प्रातीतिकसत्त्वसाधने सिद्धसाधनमर्थसत्त्वसाधने बाधबोधविरोध इत्याशयः ॥ **तस्मादिति** ॥ द्वितीये द्वितीय इत्यर्थः । जगद्विषयकप्रतीतेः कालान्तरे बाधो भविष्यतीत्याशयेनाह ॥ **न चेति** ॥ **प्रतीत्यन्तरमेवेति** ॥ अन्यथाप्रतीतौ तद्गतसत्तास्वीकारेऽविशेषादर्थेऽपि सा स्यादित्याशयः । ननु बाधप्रतीतेः पारमार्थिकत्वे किमायातं जगत्सत्त्वप्रतीतेरित्यत आह ॥ **न चेति** ॥ साक्षिचैतन्यरूपप्रतीतेर्ब्रह्मरूपत्वादिति भावः । यद्वा ननु तथा सति सदद्वैतभङ्ग इत्यत आह ॥ **न चेति** ॥ ब्रह्मस्वरूपान्न भेदः प्रतीतेरिति भावः । सत्ताप्रतीतिमात्रान्न जगतः सत्त्वसिद्धिरित्यर्थप्रतिपादनाय प्रवृत्तेन मयाऽनवस्थापरिहाराय प्रतीतेः पारमार्थिकत्वं व्युत्पादयता ब्रह्मैव परमार्थसदित्यपि व्युत्पादितं भवतीत्याशयेन मुख्यं सदित्यस्योदाहरणमाह ॥ **अत इति** ॥ तर्हि पारमार्थिकसत्त्वाभावेन जगतो मिथ्यात्वे व्याहतिपरिहारेऽपि मिथ्यात्वाविशेषाच्छुक्तिरजतादिवत्प्रमाणादेरपि साधकत्वं न स्यादन्यथा तस्याप्यर्थक्रियाकारित्वं स्यादित्यतस्तत्राप्यवान्तरविशेषः सत्त्वत्रैविध्यं वदतोऽभिप्रेत इत्याशयेनाह ॥ **अमुख्यं पुनरिति** ॥ मायाऽविद्याभेदमाश्रित्य चैकस्या एव मूलप्रकृतेरावरणविक्षेपशक्तिविशेषाभिप्रायेण वाऽयं विभागः । तत्राम्बरादेर्हानादिव्यवहारनिष्पादककतिपयप्रतिपत्तृकतिपयकालतथात्वावगमप्रयोजकात्मज्ञानबाधवैधुर्योपपादनाय ब्रह्माश्रितमायोपाधिकत्वोक्तिः । शुक्तिरजतादेश्च हानादिव्यवहाराभावप्रयोजकप्रतीतिसमयमात्रपरिवर्तित्वोपपादनाय प्रातिस्विकतत्तज्जीवाश्रिताविद्योपाधिकत्वोक्तिः । प्रातिस्विकपुरुषप्रतीतिमात्रसिद्धतया दुःखादेराविद्यकत्वस्य परेणोक्तावपि ब्रह्मान्यज्ञानबाधवैधुर्येण तस्याविद्यकत्वाविवक्षया रजतादेरेव तथात्वेनात्रोपादानमिति द्रष्टव्यम् । नन्वब्रह्मज्ञानाद्बाधवैधुर्यस्य कथं हानादिव्यवहारप्रयोजकत्वमित्यतो बहुयत्नसाध्यबाधकीभूतब्रह्मज्ञानस्य कालान्तरीयत्वेन तदभावदशायां बहुपुरुषाणां बहुकालमर्थतथात्वज्ञानसम्भवात्तस्यैव च व्यवहारप्रयोजकत्वान्नानुपपत्तिरित्याशयेनाह ॥ **कतिपयेति** ॥ प्रतीयते सप्राङ्गं जन्यत इत्यर्थः । एवं च सत्त्वासत्त्वपक्षद्वयोक्तस्यापि दूषणस्य परिहारः सिद्ध इत्याशयेनोपसंहरति ॥ **तदेवमिति** ॥ नन्वमुख्यं सदित्युक्तेऽमुख्यः सिंह इत्यादावसिंह इवासदेव भाति । एतादृशे च सत्त्रैविध्ये, सत्त्वाभावे साधकत्वं न स्यादिति प्रसङ्गानिस्तारेण 'सत्त्रैविध्यं चे'त्युत्तरभाष्योक्तदूषणान्तरं न सङ्गतमित्यतोऽमुख्यं सदित्युक्तेऽसदिवाभिधात्वाविशेषेऽपि, रूढियोगयो रूढ्यविशेषेऽपि धेनुवागादौ गवादिशब्दानां मुख्यत्ववत्, कयाचिद्विवक्षया सत्येवावान्तरभेदेनापि

सत्त्रैविध्यसम्भवात्तत्पक्षदूषणस्यावश्यकत्वादमुख्यं सदसदिति पक्षस्य पूर्वोक्तरीत्या दुष्टत्वात्तदुपपादनप्रकारस्य च स्पष्टत्वाद्भाष्यकारेण तं पक्षमुपेक्ष्यावान्तरभेदपक्ष एव दूषणमुच्यत इत्यभिप्रेत्य पक्षद्वयं विकल्प्याद्यपक्षे पूर्वोक्तदूषणमेवातिदिश्य तदुपपादनप्रकारं चाभिधाय द्वितीयपक्षदूषणत्वेन भाष्यं योजयति ॥ **अत्रेदमिति** ॥ यद्यपि कथञ्चित्प्रथमपक्षदूषणत्वेनापि भाष्यं योजयितुं शक्यं तथाऽपि तस्य पूर्वोक्तरीत्या दुष्टत्वाददूषितपक्षदूषणतया भाष्यं योजितमिति द्रष्टव्यम् । ज्ञानमात्रेणेत्यत्र मात्रशब्दसूचितार्थसत्त्वनिषेधं सूचयति ॥ **असदिति** ॥ शुक्तिरजतादेः प्रकृतत्वेऽपि विरुद्धत्वेनात्यन्तासम्भाविततया विषपीयूषदृष्टान्तोक्तिः । ननु न सदिति ज्ञानमात्रस्यार्थक्रियाहेतुत्वप्रयोजकत्वं येनोक्तदोषः किन्त्वब्रह्मज्ञानबाधवैधुर्यसहितस्य तस्येति विषादिदृष्टान्तवैषम्यमित्यतो ब्रह्मज्ञानरूपप्रपञ्चबाधकस्य कालान्तरीयत्वं तात्कालिकबाधोपपन्नविषादिदृष्टान्तवैषम्यमित्युक्तं स्यात् । तच्चाप्रयोजकमित्याह ॥ **बाधेति** ॥ सर्वथा बाधवैधुर्येऽर्थस्यासत्त्वासम्भवेऽपि कालान्तरीयबाधाङ्गीकारेऽसत्त्वानिवृत्त्याऽर्थक्रियानुपपत्तिस्तदवस्थैवेत्याह ॥ **अर्थेति** ॥ नन्वर्थस्यासत्त्वेऽपि तत्सत्ताया अर्थक्रियां प्रत्यप्रयोजकत्वाज्ज्ञानसत्ताया एव च प्रयोजकत्वात्तस्याश्चोपपादितत्वान्नार्थक्रियाऽनुपपत्तिरित्यतो बाधविलम्बपक्षोक्तमप्रयोजकत्वं ज्ञानसत्यत्वपक्षेऽप्यतिदिशति ॥ **एवमिति** ॥ **शुक्तिरजतादेरिति** ॥ न हि तस्या बाधोऽस्तीत्युक्तोपपादकस्य तत्प्रतीतावपि साम्यादिति भावः । ननु बाधविलम्बस्य नाप्रयोजकत्वम् । व्यवहारान्यथाऽनुपपत्त्या तत्प्रयोजकत्वस्य सिद्धेरित्याशयेन परेण यदुक्तं तथैवेत्यादि तदाशङ्क्य निषेधति ॥ **यदपीति** ॥ अर्थसाध्यव्यवहारस्यार्थगतपारमार्थिकसत्त्वेनेव ज्ञानसाध्यस्य च ज्ञानपारमार्थिकसत्त्वेनैवान्यथासिद्ध्याऽन्यथोपपत्तेर्वक्ष्यमाणत्वादित्यर्थः । यद्वा त्रैकालिकाबाध्यत्वनिश्चयादेव व्यवहारस्य'उरीकृत्य च तान्सर्वान्' इत्यादिना वक्ष्यमाणत्वादिति भावः । इतरेतराश्रयत्वादिनेत्यत्रादिशब्देन चक्रकं गृह्यते । ननु ब्रह्मणोऽर्थक्रियाङ्गीकारे क्रियाऽऽवेशेन विकारित्वापत्त्या निर्विकारश्रुतिविरोधेनासम्भवाज्जगतश्च नेह नानेतिश्रुतिबलेन मिथ्यात्वादर्थक्रियायाश्च प्रतीतिसिद्धत्वाज्ज्ञानसत्यत्वब्रह्मज्ञानमात्रबाध्यत्वयोस्तत्प्रयोजकत्वाङ्गीकारेणार्थक्रियाया अप्यसत्त्वाङ्गीकारेण वा तत्र प्राप्तदूषणानि कथञ्चित्परिहृत्यासत्येव सा स्वीकर्तव्येति शङ्कते ॥ **सत इति** ॥

**स०**— प्रमाणादि परमार्थसत् अबाधितावगमगोचरत्वादात्मवदित्याशङ्क्याह ॥ **द्वितीय इति** ॥ तस्य वादिप्रतिवादिमध्यस्थमात्रस्य कथाकाले बाधितावगमाभावात्सत्ताऽभ्युपगम्यते । किंवा कदाचिदपि तदभावात् । उत कस्यचिदपि कालान्तरेऽपि बाधावगमविरहादिति विकल्पार्थः । आद्यमनैकान्त्येन दूषयति ॥ **नेति** ॥ व्यभिचारमेव स्फोरयति ॥ **पुरुषेति** ॥ पुरुषत्रयावगतस्य रसभङ्गुरत्वस्य वाद्यन्तरेण

बाध्यतादर्शनात् । तथा महान्धकारे पथि गच्छतः पुरुषत्रयस्य स्रजं दृष्ट्वा सर्पं मन्यमानस्य कालान्तरे निकटोपसर्पणेन दर्शने बाधदर्शनात्पुरुषत्रयस्यैकक्षणे अबाधितावगमत्वहेतुस्तत्र व्यभिचारीत्यर्थ । ननु विगीतः प्रत्ययो यथार्थः प्रत्ययत्वात्संप्रतिपन्नवदित्यनुमानेन पुरुषत्रयावगमस्य याथार्थ्ये तदवगतस्यापि सत्यत्वान्न तत्र व्यभिचार इत्यत्राह ॥ **न चेति** ॥ द्वौ त्रयश्च द्वित्राः, त एव आद्यो येषां ते द्वित्रादयः, त एव पुरुषास्तन्मात्रस्य पूर्वजातेति विग्रहः । प्रातीतिकत्वसाधने सिद्धसाधनमर्थसत्वसाधने बाधबोधविरोध इत्यर्थः । द्वितीयं परिशेषयति ॥ **तस्मादिति** ॥ तमेव विशदयति ॥ **न चेति** ॥ नन्वेवं चेत्सत्प्रतीतेः सत्वं नाम सत्वेन प्रतीतिरेव, एवं तस्या अपीति पूर्वपूर्वप्रतीत्यसत्वे उत्तरोत्तरप्रतीतेरप्यसत्वमित्याशङ्कते ॥ **न चेति** ॥ साक्षिचैतन्यरूपत्वेन पारमार्थिकत्वात्प्रतीतेर्नानवस्थेत्याह ॥ **प्रतीतेरिति** ॥ प्रतीतेः भ्रमत्वात्कथं पारमार्थ्यमिति चेन्न । तस्य बाधकैकसमधिगम्यत्वात्प्रकृते तदभावादित्याह ॥ **न हि तस्या इति** ॥ बाधकाभावेन पारमार्थ्यमुक्तमिदानीमभ्युपेत्यापि तत्सत्वं प्रतीतेः पारमार्थिकत्वमुपपादयति ॥ **अस्ति चेदिति** ॥ सैव बाधिकैवेत्यर्थः । ननु बाधकज्ञानस्य पारमार्थिकत्वेऽपि सत्प्रतीतेः पारमार्थिकत्वे किमायातमित्यत आह ॥ **न च प्रतीतेरिति** ॥ अथवा नन्वतीन्द्रियधर्मादिप्रतीतेर्न चैतन्यरूपत्वम् । तत्र चैतन्याभिव्यक्त्यनङ्गीकारात् । अतो धर्मादिप्रतीतेर्वृत्तिरूपाया बाधसंभवेन सत्वेन प्रतीतिरपर्यवसन्नेति वक्तव्यम् । अतस्तत्रोक्तानवस्थेत्यत आह ॥ **अस्ति चेदिति** ॥ क्वचित् धर्माद्यतीन्द्रियप्रतीताविति शेषः । अयं भावः । न धर्मादिप्रतीतेरपि सत्वेन प्रतीतिरेव सत्त्वेत्यनवस्था । सर्वस्या अपि प्रतीतेः सत्वेन प्रतीतेरनावश्यकत्वात् । कस्याश्चित्प्रतीतेर्विशेषदर्शने बाधरूपासत्वप्रतीतेरपि संभवे तत्रैव पर्यवसानात् । न च बाधरूपासत्वप्रतीतेरपि सत्वेन प्रतीतिरेव सत्त्वेति पुनरनवस्था । तस्याः बाधाभावेन परमार्थसत्वात् । अन्यथा बाध्यत्वेनाभिमतायाः पूर्वप्रतीतेरेव परमार्थसत्वप्राप्त्या तत्रैव परम्परापर्यवसानादिति । नन्वेवं ब्रह्मैव परमार्थसदिति सदद्वैतमतहानिः । घटादिप्रतीतेर्बाधप्रतीतेर्वा परस्परं ब्रह्मणश्च भिन्नत्वादित्यत आह ॥ **न च प्रतीतेरिति** ॥ घटादिप्रतीतेर्बाधप्रतीतेर्वा, न परस्परं, न वा ब्रह्मस्वरूपाद्भेदोऽस्तीत्यर्थः । अभावस्य ब्रह्मात्मकत्वात्तस्य च स्वविषयकप्रकाशरूपत्वादभावज्ञानरूपबाधप्रतीतेर्ब्रह्माभेदो युक्त इति मन्तव्यम् । तदिदमाह ॥ **विज्ञानं ब्रह्मैवेति** ॥ स्वविषयज्ञानरूपं ब्रह्मैवेत्यर्थः । आपणस्थरूप्यस्य शुक्तिरूप्यस्य चामुख्यत्वाविशेषेऽर्थक्रियाकारित्वतदभावव्यवस्था न स्यादित्यतस्तत्रापि भेदमाह ॥ **अमुख्यमिति** ॥ **प्रागुक्तेति** ॥ असत्वे साधकत्वं न स्यादिति प्रागुक्तेत्यर्थः । ननु शुक्तिरजतादेः प्रमाणादेश्चासत्वाविशेषेऽपि शुक्तिरजतादेस्तात्कालिकबाधविषयत्वेनार्थक्रियानर्हत्वेऽपि प्रमाणादेः कालान्तरीयबाधविषयत्वेनार्थक्रियाकारित्वं किं न स्यादित्यत आह ॥ **बाधविलम्बस्त्विति** ॥ अतिप्रसङ्गादिति भावः । ननु तथापि प्रपञ्चविषयकज्ञानस्य

सत्यत्वेन प्रपञ्चस्यार्थक्रियाकारित्वं स्यादित्यत आह ॥ **एवमिति** ॥ अप्रयोजिकेति शेषः । अतिप्रसङ्गं चाह ॥ **शुक्तिरजतादेरपीति** ॥ **अग्रे निराकरिष्यत इति** ॥ 'दीर्घभ्रान्तिकरी चेत्स्यादतत्वावेदकप्रमे'त्यादिना चतुर्थस्य द्वितीये ।

**प०**— चशब्दादित्रयस्योक्तार्थतामन्वयं दर्शयन्नेव योजयति ॥ **व्यवहारसतोऽपीति** ॥ षष्ठ्यन्ताद्वतिरित्युपेत्य पूर्ववदित्येतत् पूर्वस्यासत इवेत्युक्तम् । नोक्तप्रसङ्गनिस्तार इत्येतद्व्यनक्ति ॥ **यदि व्यावहारिकं सन्नामेति** ॥ तस्यापि वाद्यादिमात्रस्यापि । ननु बाधदर्शनेऽपि वाद्यादित्रयावगतोऽर्थः सत्य एवास्त्वित्यतो नेत्याह ॥ **न चासाविति** ॥ असत्योऽपि ह्यसावर्थः तथैव सन्निति न चाभ्युपगम्यत इत्यन्वयः ॥ **तत्प्रतीतीति** ॥ अर्थप्रतीतीत्यर्थः । पूर्वजातेत्यस्य तु बाधापेक्षया पूर्वोत्पन्नेत्यर्थः ॥ **सैव प्रतीतिरिति** ॥ बाधरूपप्रतीतिरित्यर्थः । ब्रह्मरूपत्वात्तस्या इतिभावेनाह ॥ **न चेति** ॥ परव्यामोहनकरी माया स्वाश्रयव्यामोहनकरी अविद्या क्रमादीशजीवयोराश्रिता । लौकिको व्यवहारो हानोपादानादिः ॥ **बाधकभेदेनेति** ॥ ब्रह्मज्ञानतदितरबाधकभेदेनेत्यर्थः ॥ **एवं ज्ञानसत्यताऽपीति** ॥ असत्त्वावान्तरभेदश्चेदुक्तदोषेण दुष्टेत्यर्थः । सदितिज्ञानमात्रेणार्थक्रियाहेतुत्वे दोषान्तरमाह ॥ **शुक्तिरजतादेरिति** ॥ **अग्रे निराकरिष्यत इति** ॥ 'अतत्वावेदकत्वं चेदप्रामाण्यं सतां मतम् । दीर्घभ्रान्तिकरी चेत्स्यादतत्वावेदकप्रमा । रज्जुसर्पादिविज्ञानादप्याधिक्यादमानते'त्यादिना चतुर्थस्य द्वितीयपाद इति भावः ॥ **निरस्तमिति** ॥ 'कुतः प्रमाणात् कथाऽऽदिसत्त्वाभावो भवता निश्चितः । श्रुत्यादेरिति चेदित्या'दिना निरस्तप्रायमित्यर्थः ॥ **सेति** ॥ अर्थक्रिया ॥ **श्रुतिप्रामाण्येति** ॥ नेहनानेति सर्वासत्त्वावबोधकश्रुतिप्रामाण्येत्यर्थः ॥ **इत्युक्तमिति** ॥ 'कुतः प्रमाणात्कथादीत्या'दिग्रन्थ एवेति भावः ।

**या०**—**सत्प्रतीतिरेव सत्तेति** । सत्ताव्यवहारहेतुर्नार्थगताऽपरा सत्ताऽस्ति । सत्ताऽवगमे सति सत्त्वाभावेन व्यवहाराभावादर्शनात् । तथा चाधिष्ठानगतैव सत्ताऽऽरोपेऽवभासते नारोप्यस्य पृथक् सत्त्वमस्तीति केषञ्चिन्मायिनां मतमिति भावः । उक्तं हि विवरणे । 'इदन्तासंसर्गवद्रजतस्य शुक्तिकासत्तासंसर्गोऽयमवभासते न रजतस्यापरं सत्त्वमि'ति ॥ **तस्यापीति** । वादिप्रतिवादिमध्यस्थमात्रस्यापीत्यर्थः । अत्रैवं विकल्पक्रमः । किं वादिप्रतिवादिमध्यस्थमात्रस्य बाधितावगमाभावो हेतुरुत कदाऽपि । एवं कस्यचिदपि प्रतीतिकाले बाधबोधविरहो विवक्षित उत कदाऽपीति विकल्पनीयम् ॥ **अतिप्रसङ्गादिति** ॥ व्यभिचारादित्यर्थः । तमेव दर्शयति ॥ **पुरुषत्रयेति** । पुरुषान्तरेण । तेन पुरुषत्रयेणैकक्षणावगतस्य क्षणान्तरे बाधदर्शनादिति आद्येऽप्याद्यस्य दूषणम् । आद्यस्य द्वितीयपक्षदूषणं द्वितीयस्य द्वितीयपक्षदूष-

णेऽन्तर्भवति । तथा द्वितीयस्य प्रथमपक्षदूषणमपि प्रथमस्य प्रथमपक्षदूषणमिति ज्ञातव्यम् । ननु विगीतप्रत्ययो यथार्थः प्रत्ययत्वात्सम्प्रतिपन्नवदिति पुरुषत्रयावगतस्यापि सत्त्वान्न व्यभिचार इत्याशङ्क्याह ॥ **न चेति** । द्वौ च त्रयश्च द्वित्रास्त आदयो येषां ते द्वित्रादयः । ते च ते पुरुषास्तन्मात्रस्य या पूर्वं जाता तस्यार्थस्य प्रतीतिरित्यर्थः । तथा चात्र प्रतीतिसत्त्वसाधने सिद्धसाधनम् । अर्थसत्त्वसाधने बाधविरोध इति भाव इत्याहुः । पुरुषत्रयावगतस्येत्यादेरुदाहरणं तु कथाकाले योगाचारसौत्रान्तिकवैभाषिकत्रयावगतस्य स्वरसंभङ्गुरत्वस्य वाद्यन्तरेण बाध्यतादर्शनात् । तथा पुरुषत्रयस्य शुक्तिकायां रजतभ्रमे कालान्तरे तस्यैव विशेषदर्शनेन बाधदर्शनादित्याद्यूह्यम् ॥ **द्वितीयः पक्ष इति** । द्वितीयस्य द्वितीयपक्ष इत्यर्थः ॥ **प्रतीतेरिति** । अन्यथा ज्ञेयवज्ज्ञानस्याप्यसत्त्वे शून्यवादप्रसङ्ग इति भावः । ननु ज्ञेयवज्ज्ञानस्यापि बाध्यत्वे शून्यवादो युक्त एवेत्यत आह ॥ **न हीति** । नन्वसिद्धो बाधाभाव इत्यत आह **अस्ति चेदिति** । न शून्यवादसम्भव इति भावः । ननु बाधरूपप्रतीतेः पारमार्थिकत्वेऽपि तद्बाधिताया वियदादिप्रतीतेर्न पारमार्थिकत्वमित्यनवस्थातादवस्थ्यमित्यत आह ॥ **न चेति** । विज्ञानतत्त्वस्याखण्डत्वादिति भावः । नन्विदं विज्ञानवादिनां मतं न वेदान्तिनाम् । तन्मते ब्रह्मण एव परमार्थसद्रूपत्वेन विज्ञानस्यापि पारमार्थिकत्वे सदद्वैतभङ्ग इत्यत आह ॥ **विज्ञानं ब्रह्मैवेति** ॥ 'विज्ञानमानन्दं ब्रह्मे'ति श्रुत्या विज्ञानब्रह्मणोरैक्यावगमान्न ब्रह्मैव परमार्थसदित्यस्य भङ्ग इति भावः । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुत्या ब्रह्मणो विज्ञानात्मकताया उक्तत्वान्नाद्वैतहानिरिति भावः । ननु वेदान्तिमते कथं वियदादिज्ञानानां ब्रह्मात्मकत्वमिति चेत् । उच्यते । तन्मते सर्वत्र वृत्तिप्रतिबिम्बितचैतन्यमेव ज्ञानमित्युच्यते न केवलमन्तःकरणपरिणामरूपं जडम् । तस्याज्ञाननिवर्तकत्वाद्यभावेन ज्ञानशब्दावाच्यत्वात् । तथाच ज्ञानशब्दवाच्यान्तर्गतविशेष्यं विशेषणांशत्यागेन सर्वत्रानुस्यूतं ब्रह्मरूपमेवेति कात्र कथन्ता । उक्तं च सर्वार्थज्ञानानामैक्यं सङ्क्षेपशारीरकटीकायाम् । 'सर्वेष्वर्थेषु यत्स्फुरणमवभासते तत्तदर्थविशेषितबुद्धिवृत्तिविशिष्टं सत् ज्ञानशब्दवाच्यं भवति । तदेव तत्तदर्थाकारबुद्धिविशेषणांशापायेनानुगम्यमानं प्रकाशमात्रस्वभावं ज्ञानशब्दस्य लक्षणं भवती'ति ॥ **बाधकभेदेनेति** ॥ ब्रह्मज्ञानतदितरज्ञानलक्षणबाधकभेदेन सत्त्वेन प्रतीयमानमेव द्विविधमित्यर्थः ॥ **अग्रे निराकरिष्यत इति** ॥ 'दीर्घभ्रान्तिकरी चेत्स्यादतत्त्वावेदकप्रमे'त्यादिना चतुर्थे निराकरिष्यत इत्यर्थः ।

श्री०— **सत्प्रतीतिरेव सत्तेति** ॥ नार्थसत्ताऽस्तीत्यर्थः । अद्वैतहानिं परिहरति ॥ **न च प्रतीतेरिति** ॥ ब्रह्मस्वरूपाद्भेदो न चेत्यर्थः । नन्वब्रह्मज्ञानाद्बाधवैधुर्ये ब्रह्मज्ञानबाध्यत्वप्राप्त्या कथं हानादिव्यवहारः । प्रत्यक्षादेर्लौकिकः प्रामाण्यव्यवहारश्चेत्यत आह ॥ **कतिपयेति** ॥ अब्रह्मज्ञानिना-

मित्यर्थः ॥ **कतिपयकालेति** ॥ ब्रह्मज्ञानात्प्रागित्यर्थः ॥ **तथात्वेति** ॥ अब्रह्मज्ञानाद्बाध्यत्ववैधुर्येण बाधविलम्बेनेति यावत् । हानादिव्यवहारनिर्वाहकत्वेन प्रामाण्यव्यवहारः प्रतीयते । तथा च ब्रह्मज्ञानबाध्यविषयकत्वेन प्रत्यक्षादेरतत्त्वावेदकं प्रामाण्यमिति भावः ॥ **आद्ये प्रागुक्तेति** ॥ व्यावहारिकसत्वमसत्प्रभेद एवेत्यङ्गीकृतं चेत्तर्हि कथाऽङ्गभूतप्रमाणादीनां व्यावहारिकसत्वाङ्गीकारेऽपि असत्वस्यैव प्राप्त्या साधकत्वं न स्यादिति प्रागुक्तदोषानिस्तार इत्यर्थः । ननु व्यावहारिकसत्वमसत्प्रभेद एव । न चोक्तदोषः । प्रमाणादिकं सदिति ज्ञानमात्रेण कथाङ्गत्वोपपत्त्या साधकत्वोपपत्तिरित्यत आह ॥ **न हीति** ॥ **पीयूषतयेति** ॥ 'पीयूषममृतं सुधेत्य'भिधानात् । तदर्थक्रियां जीवनरूपम् । व्यावहारिकसत्वस्यासत्प्रभेदत्वेऽपि ब्रह्मज्ञानबाध्यत्वेन बाधविलम्बसद्भावाद्व्यावहारिकसतां प्रमाणादीनां साधकत्व मित्यत आह ॥ **बाध्येति** ॥ **अर्थेति** ॥ बाधविलम्बेऽपि प्रमाणादीनामर्थानामसत्वरूपत्वं तावन्न निवर्तते । तथाच साधकत्वं न सम्भवतीति भावः । प्रमाणादीनामसत्प्रभेदरूपव्यावहारिकसत्वेऽपि साधकत्वं प्रमाणादिप्रतीतेः पारमार्थिकत्वादित्युक्तत्वादिति चेत्तत्राह ॥ **एवमिति** ॥ सत्यता अप्रयोजिकेति लिङ्गविपरिणामेनानुवर्तते ॥ **शुक्तीति** ॥ एतावन्तं कालं रजतज्ञानमासीदित्यनुभवेन शुक्तिरजतज्ञानस्वरूपस्यापि सत्यत्वादिति भावः ॥ **तथैवेति** ॥ बाधविलम्बप्रयुक्तो लौकिको हानादिनिर्वाहत्वव्यवहारः प्रामाण्यव्यवहारश्च भवति ब्रह्मज्ञानबाध्यविषयकत्वेनातत्त्वावेदकप्रामाण्यव्यवहारश्च प्रतीयत इति यदुक्तं तदित्यर्थः । प्रमाणादीनामसत्प्रभेदरूपव्यावहारिकसत्ताङ्गीकारे साधकत्वानुपपत्तिरसतोऽर्थक्रियाकारित्वाभावादित्युक्तमयुक्तम् । स्यादिदम् यद्यर्थक्रिया सती स्यात् । न चैवं । अर्थक्रियाया अप्यसत्वाङ्गीकारादित्यत आह ॥ **अर्थक्रियाऽपीति** ॥ **निरस्तमिति** ॥ नेह नानेति श्रुतिप्रामाण्यसिद्धौ सर्वासत्वसिध्या तदन्तर्गतार्थक्रियाया अप्यसत्वसिद्धिस्तत्सिद्धौ प्रत्यक्षादिप्रमाणविरोधाभावेन श्रुतिप्रामाण्यसिद्धिरित्यन्योन्याश्रयचक्रकादिना निरस्तमित्यर्थः । सतः परमार्थसतो ब्रह्मणः । अर्थक्रिया तत्कारित्वम् । निष्क्रियत्वं 'निष्क्रियं निष्कल'मित्यादिश्रुतेरिति भावः । असति व्यावहारिके प्रत्यक्षादौ । साऽर्थक्रिया । तत्कारित्वमित्यर्थः । परिशेषादिति भावः । एवंच कथाऽङ्गभूतप्रमाणादेः सत्यत्वाभावेऽपि साधकत्वं युक्तमिति हृदयम् ॥ **श्रुतीति** ॥ नेहनानेति श्रुतेः सर्वासत्वरूपार्थे प्रामाण्यनिश्चयेत्यर्थः ॥ **एवं तदिति** ॥ सतोऽर्थक्रियाऽसम्भवादित्युक्तपरिशेषकरणमित्यर्थः ॥ **प्रागिति** ॥ सर्वासत्वरूपार्थे नेह नानेति श्रुतेः प्रामाण्यनिश्चयात्प्रागित्यर्थः ॥ **अन्योन्याश्रयेति** ॥ श्रुतिप्रामाण्यनिश्चये परमार्थसतोऽर्थक्रियाकारित्वासिध्या कथाङ्गभूतप्रमाणादेरसतोऽपि साधकत्वसिद्धिस्तत्सिद्धावसत्वे साधकत्वं न स्यादिति तर्कस्याभासत्वसिध्या तद्विरोधाभावेन श्रुतिप्रामाण्यनिश्चय इत्यन्योन्याश्रय इत्यर्थः ।

च०— इवेति वतेरर्थकथनम् ॥ **व्यर्थं चेति** ॥ सदन्तराव्यावर्तकत्वादिति भावः ॥ **जलरूपतेति** ॥ तत्राप्यवगमसद्भावादिति भावः । बाद्यादित्रितयावगतत्वं सत्यतायामतन्त्रमित्याह ॥ **न चासावर्थ इति** ॥ **द्वितीयः पक्ष इति** ॥ पुरुषान्तरीयकालान्तरीयबाधबोधविरहाख्य इत्यर्थः । सैव बाधरूपैव । आद्यं मायोपाधिकं द्वितीयमविद्योपाधिकम् । बाधकभेदेन चरमान्तःकरणवृत्तितदितररूपबाधकभेदेन । बाधविलम्बः अखण्डार्थनिष्ठवेदान्तवाक्यजन्यनिष्प्रकारकब्रह्मप्रमारूपबाधविलम्बः ॥ **अग्रे निराकरिष्यत इति** ॥ 'दीर्घभ्रान्तिकरी चेत्स्या'दित्यादिनेति पूरणीयम् ।

अनु०— **सत्त्रैविध्यं च मानेन सिद्ध्येत्केनेति पृच्छ्यते ॥**
**तस्याप्युक्तप्रकारेण नैव सिद्धिः कथञ्चन ॥**
**वैलक्षण्यं सदसतोरप्येतेन निषिध्यते ॥**

सु०— द्वितीयं दूषयति ॥ **सत्त्रैविध्यं चेति** ॥ केनेत्यस्य परमार्थसता वा व्यावहारिकसता वा प्रातिभासिकसता वा । आद्येऽपि किमात्मेतरेणोताऽऽत्मनेत्यर्थः । पृच्छ्यतेऽस्माभिरिति शेषः । यथा मिथ्याभूतस्य साधकत्वं केन सिद्ध्येदिति पृष्टं तथेति चार्थः । व्यावहारिकसतः साधकत्वसिद्धये यदुपन्यस्तं तच्चेति वा । पृच्छाविषयत्वमेव न दोष इत्यत आह ॥ **तस्यापीति** ॥ असतः साधकस्येव तस्य सत्त्रैविध्यस्यापि कथञ्चन विकल्पितपक्षेषु कस्मिंश्चन पक्षे नैव सिद्धिः । कुतः । उक्तप्रकारेणैव । तथा हि । न तावत्परमार्थसताऽऽत्मेतरेण । द्वैताऽऽपत्तेः । नाप्यात्मनैव । तस्य निर्विशेषस्य साधकताऽयोगात् । व्यावहारिकप्रातीतिकयोस्तु स्वरूपमेवाद्यापि न सिद्धमिति । नामुख्यं सदसन्नापि सत् । येनोक्तदोषप्रसङ्गः । किन्त्वनिर्वचनीयम् । न च तदपि दुर्वचम् । सदसद्वैलक्षण्यस्यैव तत्त्वात् । तच्चोक्तविधया व्यावहारिकप्रातिभासिकभेदाद् द्विविधम् । तत्र व्यावहारिकस्य प्रपञ्चस्य सदसद्विलक्षणस्य सद्विलक्षणत्वादुपपन्नं श्रुत्यादिना मिथ्यात्वसमर्थनम् । असद्विलक्षणत्वात्तदन्तर्गतस्य प्रमाणादेः साधकत्वं चेति । स्यादेतदेवं कथञ्चिद्यदि विश्वस्य सदसद्विलक्षणत्वं स्यात् । तदेव न सिद्ध्यतीत्याह ॥ **वैलक्षण्यं सदसतोरिति** ॥ विश्वस्येति शेषः । सदसतोरिति संबन्धमात्रे षष्ठी । तथा च सदसद्भ्यामित्यर्थः ॥ एतेन । प्रमाणविकल्पनिरासेन । तथा हि । विश्वस्य सदसद्वैलक्षण्यं किं सता प्रमाणेन साध्यते । उतासता । अथ सदसद्विलक्षणेन । नाद्यः । वादिनोऽनुपपत्तेः । न द्वितीयतृतीयौ । प्रतिवादिनोऽसंप्रतिपत्तेरिति । नन्वत्र सदसद्वैलक्षण्ये

साधकत्वं न स्यादिति प्रसङ्गो वाच्यः । न च तत्र व्याप्तिः । मैवम् । साक्षिणि व्याप्त्यवधारणोपपत्तेः । सत्त्वाभावे साधकत्वं न स्यादिति वा प्रसङ्गं वक्ष्यामः । तत्रासत्त्वमुपाधिरिति चेन्न । तस्य सत्त्वाभावानतिरेकात् । तद्भङ्गस्य च प्रागनिर्वचनीयसिद्धेरशक्यत्वात् । एतेन सद्विलक्षणत्वान्मिथ्यात्वोपपादनमसद्विलक्षणत्वात्साधकत्वं चोपपन्नमिति परास्तम् । सद्वैलक्षण्येऽसत्त्वापत्या साधकत्वाभावस्यासद्वैलक्षण्ये च सत्त्वापातेन मिथ्यात्वोपपादनस्यासंभवस्यापत्तेः । प्रागनिर्वाच्यसिद्धेर्व्याप्तिद्वयनिरासायोगात् । असद्वैलक्षण्यमात्रेण हानादिव्यवहारोपपत्तौ शुक्तिरजतादावपि तत्प्रसङ्गः । मायाऽविद्यावैलक्षण्यान्नैवमिति चेन्न । तस्य निराकरिष्यमाणत्वात् । वैलक्षण्यमात्रस्य प्रकृतानुपयोगादिति । आस्तां वा सत्त्वादिविकल्पनिरासेन दूषणाभिधानम् । प्रमाणमेव प्रपञ्चानिर्वचनीयतायां नोपपद्यते । न हि नेहनानेत्यादिश्रुतिः सदसद्वैलक्षण्यलक्षणानिर्वचनीयतां विश्वस्य वक्ति ।

**वाक्यार्थचन्द्रिका**— अत्र केनेत्यस्य प्रत्यक्षादिपरत्वे पूर्वं प्रत्यक्षाद्यनिरासात्तस्यापीत्युत्तरदूषणासङ्गतिः । सता मिथ्याभूतेन वेति पूर्वोक्तप्रकारपरत्वे मिथ्याभूतस्य साधकत्वासम्भवेऽपि सत्येवावान्तरभेदेन सत्त्रैविध्यमङ्गीकृत्य तादृशसतः साधकत्वमुच्यत इति ब्रुवाणं प्रति मिथ्याभूतेनेत्यस्या विकल्पकोटेरनुपपन्नत्वात्पराभिप्रेतव्यावहारिकप्रातिभासिकयोर्विकल्पकोटावसङ्ग्रहापत्त्या च साधकतया पराभिप्रेतत्रिविधसतामेव सत्त्रैविध्यसाधकविकल्पकोटित्वमुचितमित्यभिप्रेत्य केनेत्यस्यार्थमाह ॥ **केनेति** ॥ कर्त्रनुक्तेर्योग्यकर्तारमध्याहरति ॥ **पृच्छयत इति** ॥ नन्वेतादृग्विकल्पानां पूर्वमप्रवृत्ततया समुच्चायकचशब्दानुपपत्तिरित्यतः प्रमाणविकल्पप्रश्नत्वसामान्येन समुच्चय इत्याशयेन समुच्चयविषयं दर्शयति ॥ **यथेति** ॥ अत एव पक्षान्तरमाह ॥ **व्यावहारिकेति** ॥ एकेनैव सिद्धेः, एवेति कथञ्चनेत्यनयोरन्यतरवैयर्थ्यमित्यत आह ॥ **विकल्पितेति** ॥ सता चेदद्वैतसिद्धिः स्यादित्युक्तप्रकारं मनसि निधाय न तावदिति ॥ 'अविशेषस्य साध्या साधकता पुनरि'त्युक्तप्रकारकथनं तस्येति । 'न सिद्धं चान्यसाधनमि'त्यस्य न पूर्ववन्मिथ्याभूतस्य साधनत्वं न सिद्धमिति धर्मनिषेधोऽत्रार्थोऽपि तु साधनत्वेन त्वदभिमतव्यावहरिकप्रातिभासिकस्वरूपमेवासिद्धमिति धर्मिनिषेध इत्याशयेनाह ॥ **स्वरूपमेवेति** ॥ **अद्यापीति** ॥ सत्त्रैविध्यसाधकतया सत्त्रैविध्यस्योपन्यासे आत्माश्रयादीति ध्वनयति । ननु मिथ्याभूतस्य साधकत्वनिरासावसरे विश्वसदसद्वैलक्षण्यस्य निरासोऽसङ्गत इत्यतस्तस्यापि साधकत्वोपपादकतया पराभिप्रेतत्वान्न तन्निरासासङ्गतिरित्याशयेन पराभिप्रायमुद्घाटयति ॥ **नामुख्यमिति** ॥ **किन्त्विति** ॥ यद्यप्यत्र किन्तु सदसद्विलक्षणमित्युक्तौ लाघवं तथाऽप्यनिर्वचनीयत्वं तृतीयः प्रकार इति परेषां

व्यवहारादनिर्वचनीयलक्षणान्तरनिरासेन परेण सिद्धान्तितस्य सदसद्विलक्षणत्वज्ञानबाध्यत्वरूपलक्षणद्वयस्य निरासपरतयोत्तरभाष्यस्यावतारयिष्यमाणत्वेन तदुपक्षेपाय च गौरवमाश्रितमिति ध्येयम् । अत्र सदसद्विलक्षणत्वस्य साधकत्वाद्युपयोगितया कथनात्तत्र विभागाकथने शुक्तिरजतादेरपि साधकत्वापातेनापसिद्धान्तापत्त्या सदसद्विलक्षणविशेषस्यैव साधकत्वं वक्तुं तद्द्वैविध्यमाह ॥ **तच्चेति** ॥ ननु सदसद्वैलक्षण्यस्य साधकत्वाद्युपयोगानिरासकत्वादुत्तरभाष्यमसङ्गतमित्यतः स्वरूपनिषेधस्यापि तदर्थत्वान्नासङ्गतिरित्याशयेनाह ॥ **स्यादिति** ॥ सदसद्वैलक्षण्यसिद्धावपि तस्य साधकत्वाद्युपयोगाभावस्यैतेनेत्यादिना वक्ष्यमाणत्वात्कथञ्चिदित्युक्तम् । सदसतोः परस्परवैलक्षण्यस्य सिद्धान्ततया, प्रकृतानुपयोगाच्च तन्निषेधोऽनुपपन्न इत्यत आह ॥ **विश्वस्येति शेष इति** ॥ 'अन्यारादितरर्ते' इत्यत्रान्य इत्यस्यार्थग्रहणत्वात्पञ्चमीप्राप्त्या षष्ठीनिर्देशायोग इत्यत आह ॥ **सदसतोरितीति** ॥ कर्तृत्वादिषट्कारकविवक्षायां तत्तद्विभक्तिवत्तदतिरिक्तसम्बन्धविशेषविवक्षायामेवोपपदविभक्तेः प्राप्त्या, प्रकृते च कर्तृत्वादिवत्सम्बन्धान्तरस्य विशिष्याविवक्षया सम्बन्धसामान्यस्यैव विवक्षणात् षष्ठ्युपपत्तिरिति भावः । सत्तात्रैविध्यस्यास्मिन्पक्षेऽनभ्युपगमेन पारमार्थिकव्यावहारिकप्रातिभासिकत्वादिविकल्पानां प्रकृतेऽसम्भवेन तन्निरासदूषणातिदेशासम्भवात्पूर्वत्रेवात्रापि प्रमाणविकल्पनिरासात्सामान्येऽतिदेश इत्याशयेनाह ॥ **एतेनेति** ॥ अत एवात्रोपयुक्तं प्रमाणविकल्पप्रकारं दर्शयति ॥ **तथा हीत्यादिना** ॥ **अनुपपत्तेरिति** ॥ आत्मतदितरपक्षोक्तदूषणद्वयस्य निर्विशेषसाधकत्वासम्भवाद्वैतहानिरूपस्यापत्त्योभयविधसत्पक्षानुपपत्तेरित्यर्थः ॥ **असम्प्रतिपत्तेरिति** ॥ उक्तरीत्याऽसत्साधकत्वस्य व्यावहारिकादिवत्सदसद्विलक्षणस्वरूपस्यैवासिद्धतया सदसद्विलक्षणसाधकत्वस्य चासम्प्रतिपत्तेरित्यर्थः । असम्प्रतिपत्तेरित्यनेनाभिप्रेतं प्रसङ्गं शङ्कामुखेन दर्शयंस्तत्रानुपपत्तिं शङ्कते ॥ **नन्विति** ॥ **व्याप्तीति** ॥ साधकत्वं सतस्तेनेति साक्षिणः साधकत्वोपपादनात्तत्र व्यतिरेकव्याप्त्यवधारणोपपत्तेरित्यर्थः । असत्त्वसदसद्वैलक्षण्यरूपपक्षद्वये पृथक् प्रसङ्गमभिप्रेत्य पराङ्गीकारेण द्वितीये साक्षिणि व्यतिरेकव्याप्त्या समाधायाधुना पक्षद्वयेऽप्येकरूपमेव प्रसङ्गं मनसि निधायाविशेषस्येत्युक्तरीत्या पराङ्गीकारस्यायुक्तत्वात्साक्षिणि व्याप्त्यवधारणासम्भवेऽप्यसत्येवान्वयव्याप्त्यवधारणं सुकरमित्याशयेन पक्षान्तरमाह ॥ **सत्त्वाभाव इति** ॥ यद्वा सदसद्वैलक्षण्यपक्ष एव पर्यवसानमसत्यन्वयव्याप्तिप्रदर्शनायाह ॥ **सत्त्वाभाव इति** ॥ यद्यसत्त्वं नाम सत्त्वाभावस्तदाऽऽपादकानतिरिक्ततया नोपाधित्वम् । यदि चासत्त्वमत्यन्ताभावप्रतियोगित्वं तदा तस्य सत्त्वाभावरूपापादकानतिरेकस्तदभाववत्यभावः । एवं चापादकव्यापकत्वान्नोपाधित्वमित्याशयेनाह ॥ **तस्येति** ॥ ननु सत्त्वाभाववत्यनिर्वचनीयेऽसतोऽसत्त्वस्य न तद्रूपत्वं नापि तद्व्यापकत्वमित्यतोऽन्योन्याश्रयतया नैतदुपपद्यत इत्याह ॥ **तद्भङ्गस्येति** । सद्वैलक्षण्यसिद्धावपि न साधकत्वादिसिद्धिः प्रत्युत वैपरीत्यमेवेत्याह

॥ **एतेनेति** । प्रमाणविकल्पनिरासकतर्के प्राप्तोपाधिनिरासाय सत्त्वाभावस्यासत्त्वव्याप्तिप्रतिपादनेनेत्यर्थः । असद्वैलक्षण्ये सत्त्वप्राप्तिरपि तुल्यन्यायतया तद्बललब्धैवेति द्रष्टव्यम् । अनेनैतेनेति प्रतिपादितप्रमेयमपि भाष्यमूचितमेवेति ध्वनयति । एवमसद्वैलक्षण्यस्य परोक्तं साधकताप्रयोजकत्वमभ्युपगम्य तस्य सत्त्वापादकतया तत्सिद्धान्तप्रतिकूलताऽभिहिता । अधुना परोक्तमसद्वैलक्षण्यस्य साधकत्वप्रयोजकत्वमेवानुपपन्नमतिप्रसङ्गादित्याह ॥ **असद्वैलक्षण्यमात्रेणेति** । ननु विश्वस्य मायिकत्वाच्छुक्तिरजतादेश्चाविद्यकत्वात्तन्निष्ठासद्वैलक्षण्ययोरपि तथात्वेन वैलक्षण्यमात्रत्वाभावाद्व्यवहारतदभावरूपवैलक्षण्योपपत्तिरित्याशङ्कते ॥ **मायेति** । अर्थक्रियासमर्थप्रपञ्चारोपहेतुर्माया विभ्रममात्रहेतुरविद्येति मायाऽविद्यावैलक्षण्यं तादृशकार्यविशेषसम्पादकतयाऽभिमतं किंवा स्वाश्रयाव्यामोहिनी माया तद्व्यामोहिन्यविद्येति अर्थक्रियासामर्थ्यतदभावरूपकार्यविशेषसम्पादकवैलक्षण्यमात्रम् । नाद्यः । प्रमाणाभावेन तादृशवैलक्षण्यस्य 'न चाप्येकत्वविज्ञानादि'त्यनुव्याख्यानव्याख्यानावसरे निराकरिष्यमाणत्वादित्याह ॥ **तस्येति** । न द्वितीयः । यथाकथञ्चिद्वैलक्षण्यस्य कार्ये व्यवहारसम्पादनतदभावनुपयोगेनातिप्रसङ्गानुद्धारादसद्वैलक्षण्यकथनमनुपयुक्तमित्याह ॥ **वैलक्षण्यमात्रस्य चेति** । यद्वाऽऽद्यपक्षमेव मायाऽविद्यावैलक्षण्यं वदतोऽभिमततया सिद्धवत्कृत्य तस्येत्यनेन दूषणमुक्तम् । उत्तरवाक्यं तु तथाऽपि ब्रह्मज्ञानबाध्यत्वतदितरबाध्यत्वाभ्यां व्यवहारनिर्वाहकत्वतदभावरूपविशेषः किं न स्यादित्यतो बाधविलम्बेऽप्यर्थतादवस्थ्यानिवृत्तेरित्युक्तरीत्या तादृशवैलक्षण्यं व्यवहाराद्यप्रयोजकमित्याह वैलक्षण्येतीति योज्यम् । ननूत्तरवाक्ये उक्तानुपपादनादसङ्गतिः । न च सदसद्वैलक्षण्येऽनुमानरूपप्रमाणनिरासायोत्तरवाक्यमिति वाच्यम् । प्रमाणसत्त्वादिविकल्पनिरासकदूषणान्यनुद्धृत्य परेण प्रमाणस्वरूपस्यानाशङ्कनीयत्वेन तन्निरासस्यानुचितत्वात् । श्रुतेरुपपत्तिविरोधकथनप्रसङ्गेऽनुमानस्यानिराकार्यत्वाच्चेत्यतोऽङ्गीकारवादेन प्रमाणस्वरूपस्यानिराक्रियमाणत्वादनुमानस्यापि श्रुतेरर्थविशेषे पर्यवसानहेतुतया पराभिमतत्वात्तद्दूषणमप्युपपन्नमेवेत्याशयेनोत्तरवाक्यमवतारयति ॥ **आस्तां वेति** ॥

स०— **स्यादेतदेवं कथञ्चिदिति** ॥ एतेन सद्विलक्षणत्वादित्यादिना दोषस्य वक्ष्यमाणत्वात्कथञ्चिदित्युक्तम् । ननु सदसतोरिति षष्ठीप्रयोगोऽनुपपन्नः । 'अन्याराादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्त' इत्यनेन सूत्रेणान्यार्थकशब्दयोगे पञ्चमीविधानेन प्रकृतेऽप्यन्यार्थकवैलक्षण्यशब्दप्रयोगस्य सत्त्वादित्यत आह ॥ **सदसतोरिति** ॥ अनुपपत्तेः असंप्रतिपत्तेः । यत्सदसद्विलक्षणं न तत्साधकमिति अन्वयव्याप्तिग्रहणस्थलाभावेऽपि यत्साधकं न तत्सदसद्विलक्षणमिति व्यतिरेकव्याप्तौ सदसद्विलक्षणत्वाभावसाधकत्वयोर्वादिप्रतिवादिसंप्रतिपत्त्या साक्षिण एव दृष्टान्तत्वं संभवतीत्याह ॥ **साक्षिणीति** ॥

उपाधेः साधनव्यापकतामाह ॥ **तस्येति** ॥ असत्वस्य सत्त्वाभावं विहायावस्थानाभावात् तयोः समव्याप्तत्वमिति यावत् । न चानिर्वचनीये सत्त्वाभावसत्त्वेऽपि असत्त्वाभावेन साधनाव्यापकतेत्यत आह ॥ **तद्भङ्गस्येति**॥ सत्त्वाभावासत्त्वयोर्व्याप्तिभङ्गस्येत्यर्थः। तथा चानिर्वचनीयत्वे सिद्धे सत्त्वाभावासत्त्वयोर्व्याप्तिभङ्गेन साधनाव्यापकत्वेनासत्त्वस्योपाधित्वात् सत्त्वाभावे साधकत्वं न स्यादित्यस्मदभिमततर्कस्याभासत्वसिद्धिः । तत्सिद्धौ च विरोधाभावादनिर्वचनीयसिद्धिरित्यन्योन्याश्रय इति भावः । केचित्तु ॥ **तस्येति** ॥ उपाध्यापादकयोरभेदादित्यर्थः । नन्वनिर्वचनीयवादिनोऽभेदोऽसिद्ध इत्यत आह ॥ **तद्भङ्गस्येति** ॥ इति व्याचक्षते । ननु प्रपञ्चे मायिकासद्वैलक्षण्यस्य सत्त्वेन तस्य हानादिव्यवहारनिर्वाहकत्वेऽपि शुक्तिरजतादौ असद्वैलक्षण्यस्याविद्यकत्वेन हानाद्यर्थक्रियाऽनर्हतेति शङ्कते ॥ **मायेति** ॥ **निराकरिष्यमाणत्वात्** ॥ प्रथमस्य चतुर्थे । तर्ह्यल्पकालबाध्यत्वदीर्घकालबाध्यत्वरूपवैलक्षण्यं प्रयोजकमस्त्वित्यत आह ॥ **वैलक्षण्यमात्रस्येति** ॥ सद्वैलक्षण्यान्मिथ्यात्वोपपादनमसद्वैलक्षण्याच्च साधकत्वमिति प्रकृतेऽनुपयोगादित्यर्थ इत्यप्याहुः ॥

प० — उत सत्येवावान्तरभेदेन सत्त्रैविध्यमितिकल्पदूषकतयाऽवतारयति ॥ **द्वितीयमिति** ॥ अनुक्तसमुच्चयार्थत्वमुपेत्याह । **यदुपन्यस्तं तच्चेति वेति** ॥ अब्रह्मज्ञानाबाधितत्वं कतिपयप्रतिपत्तृकतिपयकाले तथाऽवगतत्वं चेत्यर्थः । अपिपदार्थमाह ॥ **असत इत्यादि** ॥ **स्वरूपमेवेति** ॥ सदवान्तरभेदभिन्नं स्वरूपमेवासिद्धं दूरे तत्साधकत्वमित्यर्थः । विवृतमेतन्न्यायामृते सत्तात्रैविध्यभङ्गे । शङ्कते ॥ **नामुख्यमिति** ॥ अमुख्यं सदित्यनुवादः । नासत् नापि सदिति कोटिद्वयनिषेधः । 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते'इति पञ्चमीविधिसूत्रेऽन्यइत्यर्थग्रहणोक्तेः सदसद्भ्यामितिभाव्यमित्यत आह ॥ **संबन्धमात्रे षष्ठीति** ॥ प्रतियोग्यनुयोगिभावमविवक्षित्वा संबन्धमात्रे 'षष्ठी शेषे' इति सूत्रेण षष्ठीत्यर्थः ॥ **वादिनोऽनुपपत्तेरिति** ॥ आत्माऽतिरिक्तेन सता चेदद्वैतभङ्गात् । आत्मना चेन्निर्विशेषस्य साधकत्वायोगादित्यर्थः ॥ **सत्त्वेति** ॥ सत्त्वाभावे साधकं न स्यादिति प्रसङ्गं वक्ष्यामो ब्रवामेत्यर्थः ॥ **तत्रेति** ॥ सत्त्वाभावे साधकं नेत्यत्रेत्यर्थः ॥ **व्याप्तिद्वयेति** ॥ सद्वैलक्षण्येऽसत्त्वं असद्वैलक्षण्ये सत्त्वमिति व्याप्तिद्वयेत्यर्थः । असद्वैलक्षण्ये समानेऽपि मायिकत्वाविद्यकत्वाभ्यां प्रपञ्चप्रातिभासिकयोर्वैलक्षण्यान्न हानाद्यतिप्रसङ्ग इति शङ्कते ॥ **मायेति** ॥ **निराकरिष्यमाणत्वादिति** ॥ विश्वमायिकत्वादेरिति योज्यम् । 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणश्चेत्स्वतोऽन्यगे'त्यादिनाऽऽनुमानिकपादे प्रकृत्यधिकरण इति भावः । एके तु 'निर्विशेष' इत्यादावज्ञानखण्डनेन तदवान्तरभेदस्य निराकरिष्यमाणत्वादित्यर्थ इत्याहुः ॥

या० — शङ्कते ॥ **नामुख्यं सदिति ॥ उक्तविधयेति** ॥ बाधकभेदेनेत्यर्थः ॥ **संबन्धमात्रमिति** ॥ कर्तृत्वाद्यसंभवात् । 'षष्ठी शेषे' इत्यनेन षष्ठीति भावः ॥ **साक्षिणि व्याप्त्यवधारणेति** ॥ व्यतिरेकव्याप्त्यवधारणोपपत्तेरित्यर्थः ॥ **तस्य निराकरिष्यमाणत्वादिति** ॥ 'न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यत' इत्यत्रेति शेषः । उक्तं वैलक्षण्यमङ्गीकृत्यापि दूषणान्तरमाह ॥ **वैलक्षण्यमात्रस्येति** ॥ असद्विलक्षणत्वाविशेषेऽपि मायाऽविद्यारूपोपादानवैलक्षण्यमात्रस्य प्रकृतहानादिपरिहारानुपयोगादित्यर्थः । न हि घटपटयोः सत्त्वाविशेषे उपादानवैलक्षण्यमात्रेणैकत्र हानादिव्यवहाराभावो भवतीति भावः ॥

श्री० — **द्वितीयमिति** ॥ सत्येवावान्तरभेद इति द्वितीयं पक्षमित्यर्थः ॥ **तच्चेति वेति** ॥ तथाच प्रकृतत्वानुसंधानार्थश्चशब्द इति भावः । नन्वात्मेतरेण व्यावहारिकेण प्रातिभासिकेन वा प्रमाणेन सत्त्वैविध्यसिद्धिरस्त्वित्यत आह ॥ **व्यावहारिकेति** ॥ शङ्कते ॥ **नेति** ॥ अमुख्यं यत्सत्तत् असत् असदवान्तरभेदो न भवतीत्यर्थः । सत् पारमार्थिकम् ॥ **अनुपपत्तेरिति** ॥ सता चेदद्वैतभङ्गात् । आत्मना चेन्निर्विशेषस्य साधकत्वायोगादित्यर्थः ॥ **व्याप्तिरिति** ॥ भवन्मते सदसद्विलक्षणवस्त्वभावेन दृष्टान्ताभावादिति भावः । यत्सदसद्विलक्षणं न तत्साधकमित्यन्वयव्याप्तिग्रहणस्थलाभावेऽपि यत्साधकं न तत्सदसद्विलक्षणमिति व्यतिरेकव्याप्तौ सदसद्विलक्षणत्वाभावसाधकत्वयोर्वादिप्रतिवादिसंप्रतिपत्त्या साक्षिण एव दृष्टान्तत्वं संभवतीत्याशयेनाह ॥ **साक्षिणीति ॥ व्याप्तीति** ॥ व्यतिरेकव्याप्तीत्यर्थः ॥ **तस्येति** ॥ असत्त्वस्य सत्त्वाभावरूपहेत्वभिन्नत्वेन नोपाधित्वमित्यर्थः । न हि हेतुरेवोपाधिः । साधनाव्यापकत्वाभावादिति भावः । नन्वनिर्वचनीयरूपतृतीयकोटिसद्भावात्सत्त्वाभाव एवासत्त्वमिति नियमभङ्ग इत्यत आह ॥ **तद्भङ्गस्येति** ॥ ननु सद्वैलक्षण्ये च असत्त्वं असद्वैलक्षण्ये च सत्त्वमिति न व्याप्तिद्वयं युक्तमनिर्वचनीयरूपतृतीयकोटिसद्भावादित्यत आह ॥ **प्रागिति** ॥ असद्विलक्षणत्वात्साधकत्वं चोपपन्नमित्येतद्दूषयति ॥ **असदिति** ॥ नन्वसद्वैलक्षण्येऽपि मायिकत्वाद्धानादिव्यवहारहेतुत्वं प्रत्यक्षादेर्युक्तमसद्वैलक्षण्येऽप्याविद्यकत्वाच्छुक्तिरजतादेर्न हानादिव्यवहारहेतुत्वमित्याशङ्कते ॥ **मायेति** ॥

च० — **द्वितीयमिति** ॥ सत्येवावान्तरभेदेनेति द्वितीयकल्पमित्यर्थः ॥ **न च तदपीति** ॥ अनिर्वचनीयमित्यर्थः । तत्त्वात् अनिर्वचनीयरूपत्वात् । अन्यारादिति पञ्चमीविधायकसूत्रेऽन्य इत्यर्थग्रहणमित्याकरे व्यक्ततया निरूपकताप्रत्यासत्त्या भावप्रत्ययान्तोपस्थाप्यभेदान्वयिप्रतियोगित्वार्थिकया सदसत्पदप्रकृतिकपञ्चम्या भवितव्यमिति कथं षष्ठी विन्यस्तेत्यत आह ॥ **संबन्धमात्र इति** ॥ प्रति-

योगित्वत्वावच्छिन्नप्रकारताघटितधर्मावच्छिन्नजन्यताशालिशाब्दबोधतात्पर्यिका तत्सूत्रे विहिता पञ्चमी नेह विवक्षिता । किन्तु संबन्धत्वरूपव्यापकधर्मावच्छिन्नप्रकारताघटितधर्मावच्छिन्नजन्यताशाल्यन्वय-बोधतात्पर्यिका 'शेषे' इति लक्षणलक्षिता षष्ठ्येवेति भावः ॥ **व्याप्तीति** ॥ प्रकृतापादकव्यतिरेकनिरूपिता-ऽऽपाद्यव्यतिरेकनिष्ठाव्याप्तीत्यर्थः । तद्भङ्गस्य तत्प्रभेदस्य । तत्प्रसङ्गः हानादिव्यवहारप्रसङ्गः ॥ **निरा-करिष्यमाणत्वादिति** । तुरीयपादे, प्रकृतिनये, 'सा मन्ददृष्टिस्तस्यैवे'त्यादिना, प्रतिविधास्य-मानत्वादित्यर्थः । वैलक्षण्यमात्रस्य । उपादानवैलक्षण्यमात्रस्य । प्रकृतानुपयोगात् । शुक्तिरजतादौ तत्प्रसङ्गानपनोदकत्वात् ।

अनु० — **वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिनः ॥**
**असतश्चापि विश्वस्य तेनानिष्टं कथं भवेत् ॥**

**सु० — अथ मन्येत । विवादपदं सदसद्विलक्षणं ज्ञानबाध्यत्वाद्यदेवं तदेवं यथा शुक्तिरजतमित्यनुमानं विश्वस्य सदसद्विलक्षणत्वे मानम् । तद्बलाच्छ्रुतिरपि तत्रैव पर्यवस्यतीति । तदसत् । अनुमानस्याऽऽभासत्वादित्याशयवान्प्रथमप्राप्तत्वात्प्रतिज्ञां तावन्निराकरोति ॥ वैलक्षण्यं सतश्चेति ॥ चशब्दाववधारणे । अपिशब्दौ मिथः समुच्चये । अयमर्थः । किमत्र सदसच्छब्दौ भावाभाववाचिनौ । किंवा विद्यमानाविद्यमानवाचिनौ । आद्ये दूषणम् । सतो भावात्मकस्य विश्वस्यासतोऽभावाद्वैलक्षण्यमपि भावाभावभेदवादिनो मम मते स्वयं सदस्त्येव । एवमसतो-ऽभावात्मकस्य विश्वस्य सतो भावाद्वैलक्षण्यमपि भेदवादिनः स्वयं सदेव । अतस्तेन साधितेन ममानिष्टं कथं भवेत् । किं नामैवं विभागेन सदसद्वैलक्षण्यसिद्ध्याऽपि प्रतिज्ञातार्थसिद्धेरर्थान्तरता परस्य स्यादिति ॥ १ ॥ यदि च प्रत्येकं भावाभाववैलक्षण्यं विवक्षितम् । तदा सतो भावस्यापि विश्वस्य सतो भावाद्वैलक्षण्यं भावभेदवादिनो मम स्वयं सदेव । भावान्तरवैलक्षण्याङ्गीकारात् । असतोऽभावादपि वैलक्षण्यं सुतरां भावाभावभेदवादिनः स्वयं सदेव । एवमसतोऽभावस्य विश्वस्यासतोऽभावाद्वैलक्षण्यमभावभेदवादिनः स्वयं सदेव । अभावान्तरवैलक्षण्याङ्गीकारात् । सतो भावाद्वैलक्षण्यमपि सुतरां स्वयं सदेवेति तेनानिष्टं कथं भवेत् ॥ २ ॥**

वा — समुच्चयस्यैकेनैव सिद्धेश्चापिशब्दयोरुभयोर्न प्रयोजनमित्यत आह ॥ **चशब्दावित्या-दिना** ॥ सदसद्वैलक्षण्यशब्दार्थतया प्रसक्तसकलपक्षनिराकरणार्थतया मूलं व्याख्यातुमाह ॥ **अयमिति** ॥

अस्तेर्भवतेश्च समानार्थताया भूसत्तायामस् भुवीत्यादिधातुव्याख्यानसिद्धत्वाद्भवतीति भाव इति भूधातु-निष्पन्नभावशब्दस्यास्तीति सदित्यस्धातुनिष्पन्नसदित्यस्य चैकार्थत्वाद्भावशब्दरूढविधिरूपार्थेनाप्येकार्थत्व-माश्रित्य सच्छब्दस्य भावार्थत्वेऽसच्छब्दस्याभावार्थत्वमित्याशयेनाद्यकल्पः । सच्छब्दस्य विद्यमानार्थक-तया प्रसिद्धेरसच्छब्दस्य विद्यमानार्थकत्वमित्याशयेन द्वितीयः । प्रथमे प्रागभावादीनामसच्छब्दार्थत्वं द्वितीये तेषामपि सच्छब्दार्थकोटिनिवेशाच्छशविषाणादीनामसच्छब्दार्थत्वमिति विवेकः । तत्र प्रथम-कल्पसम्भावितानेककल्पदूषणपरतया मूलं योजयितुं प्रतिजानीते ॥ **आद्य इति** ॥ अत्र पृथिव्यब्विलक्षण-तेजआदिरूपद्रव्यान्तरस्येव भावाभावातिरिक्तविश्वस्य प्रतिवादिनोऽसम्मतेस्तदात्मकस्य च भावभाववि-लक्षणत्वसाधनेऽनिर्वचनीयत्वसिद्धिरिति पराशयं सिद्धवत्कृत्योत्तरदूषणानां प्रवृत्तिरिति ज्ञेयम् । विजातीय-मित्यादौ विशब्दस्य भिन्नार्थकतया प्रसिद्धेर्विलक्षणशब्दस्य भिन्नस्वरूपार्थकत्वादन्याराादितरर्त इत्यत्रान्य-इत्यर्थग्रहणं विलक्षणो देवदत्तो यज्ञदत्तादित्यभियुक्तव्याख्यानाच्च वैलक्षण्यशब्दाद्भेदप्रसक्तिः । व्यृध्य-र्थाभावेत्यत्र विशब्दस्याभावपरतया तद्व्याख्यानात् भावाभावविलक्षणशब्दभावाभावलक्षस्य णाभावपरत्वे लक्षणस्य च सन्निधानात्तच्छब्दोपस्थितस्यैव ग्रहणेन भावाभावत्वानधिकरणत्वस्य तच्छब्दात्प्रसक्तिः। उभय-त्रापि भावाभावसमुदाये भावाभाववैलक्षण्यसाधनमुत भावात्मके उभयवैलक्षण्यसाधनमभावात्मके च विश्व-स्मिन्नुभयवैलक्षण्यसाधनमिति प्रत्येकं वा । भेदपक्षे आद्यं निराकरोति ॥ **सत इति** ॥ अस्मिन्पक्षे सतो-ऽसतो भेदवादिनो वैलक्षण्यं स्वयं सदेवेत्यादीनां द्विरावृत्तिः सूचिता भवति । वस्तुन एकं प्रति सतोऽन्यं प्रत्यसत्त्वानुपपत्तेर्भेदवदिनः स्वयं सदित्यनुपपन्नमित्यतोऽभ्युपगमाभिप्रायेणेयमुक्तिरित्याशयेन मत इत्युक्तम् । स्वयमिति परकीयोपपादनानपेक्षामाह । भावाभाववैलक्षण्यस्य स्वमतसिद्धत्वोपपादनायोपात्तस्य भेदवादिन इत्यस्य तेनानिष्टमित्यत्र प्रयोजनाभावात्तद्वलब्धविशेष्यस्यैवात्रान्वय इत्याशयेन ममानिष्ट-मित्युक्तम् । अत एव पूर्वं ममेत्यध्याहृतमिति द्रष्टव्यम् । सदसद्वैलक्षण्यासिद्धिं विना प्रतिज्ञातार्था-सिद्धेस्तदभ्युपगमस्तव कथं नानिष्ट इत्याशयेन शङ्कते ॥ **किं नामेति** ॥ यद्वा ॥ अनुमाने दूषणा-नुक्तेर्मदिष्टसिद्धिरेव तवानिष्टमित्याशङ्कते ॥ **किं नामेति** ॥ विभागेनेत्येतत्कल्पस्फुटीकरणम् ॥ १ ॥ भेदपक्षे द्वितीयं निराकरोति ॥ **यदि चेति** ॥ अस्मिंश्च पक्षे सतोऽसत इत्यस्य त्रिरावृत्तिर्भेदवादिनो वैलक्षण्यमित्यस्य चतुर्वारमिति ज्ञेयम् । भावस्य भावाद्भेद एवानुपपन्न इत्यतो हेतुमुपपादयति ॥ **भावान्तरेति** ॥ सजातीयभाववैलक्षण्याभ्युपगमे विजातीयाभाववैलक्षण्याभ्युपगमस्य कैमुत्यसिद्धतां सूचयितुं सुतरामित्युक्तम् । एवमुत्तरत्रापि द्रष्टव्यम् । अत्रोत्तरोत्तरपक्षाणां पूर्वपूर्वपक्षोक्तदोषोपमर्दन प्रवृत्तेः स्फुटमेव क्रमनिमित्तम् । अत्र तेनानिष्टं कथं भवेदित्यतः परं दूषणोपपादनाभावस्थलेऽर्थान्तरतया निग्रहोऽभिमतो द्रष्टव्यः ॥ २ ॥

प०—**यदि च प्रत्येकं भावाभाववैलक्षण्यमिति** ॥ भावस्य भावादभावाच्च वैलक्षण्यमभावस्याभावाद्भावाच्च वैलक्षण्यमित्यर्थः। सत इत्यस्यासत इत्यस्य चावृत्त्या पञ्चम्यन्तत्वषष्ठ्यन्तत्वाभ्युपगमेन योजयति ॥ **तदा सतो भावस्येत्यादिना** ॥

श्री०— **प्रत्येकमिति** ॥ एकस्यैव भावरूपस्यैव प्रपञ्चस्य भावाभाववैलक्षण्यम्। एवमेकस्यैवाभावरूपस्य प्रपञ्चस्य भावाभाववैलक्षण्यं विवक्षितमित्यर्थः ॥

च०— **अर्थान्तरता परस्य स्यादिति** ॥ प्रकृतपक्षतावच्छेदकीभूतविमतिविषयत्वसामानाधिकरण्येन भावेऽभाववैलक्षण्यमभावे च भाववैलक्षण्यमवगाहमानायाः अनुमितेः द्रव्यत्वसामानाधिकरण्येन पृथिवीत्वतदभावविषयकप्रतीतिवदुपपत्त्यैकस्यां व्यक्तौ तादृग्वैलक्षण्यद्वयविषयकतदभिमतानुमितेरसिद्ध्या द्रव्यं पृथिवीत्वतदभाववदित्यनुमिमानस्येवार्थान्तरतेत्याशयः। इयं च प्रथमयोजना ॥ विमतिविषयीभूतां भावरूपामभावरूपां वैकैकां व्यक्तिं पक्षीकृत्य भाववैलक्षण्याभाववैलक्षण्योभयत्वावच्छिन्नसाधनान्न पक्षीकृतव्यक्तिभेदेन साध्यीभूतप्रातिस्विकांशसत्वेन तत्पर्यवसाननियन्त्रितार्थान्तरताऽवकाश इत्याशङ्कायामेवमपि भङ्ग्यन्तरेणोक्ततादवस्थ्यमभिधत्ते यदि चेत्यादिना भवेदित्यन्तेन। इयं च द्वितीया ॥

**सु०— भावाभाववैलक्षण्यं नाम तत्त्वानधिकरणत्वं विवक्षितमिति चेत्। तथाऽपि सतो भावस्यापि विश्वस्यासतोऽभावाद्वैलक्षण्यमभावत्वानधिकरणत्वमपि स्वयं सदेव। असतोऽभावस्य विश्वस्य सतो भावाद्वैलक्षण्यमपि भावत्वानधिकरणत्वमपि मम स्वयं सदेव। भावाभावभेदवादित्वात्। यदि हि भावेऽप्यभावत्वमभावेऽपि भावत्वमङ्गीकुर्यां कुतस्तदा भावाभावभेदवादः। तथा च कथं तेन साध्यमानेनानिष्टं मम भवेत् ॥ ३ ॥ अथ प्रत्येकं भावाभावत्वानधिकरणत्वं विवक्षितमिति मन्येत। तदा सतो भावस्यापि विश्वस्य भावाभाववैलक्षण्यं भावाभावरूपत्वानधिकरणत्वं मम स्वयं सदेव। तथाऽसतोऽभावस्यापि विश्वस्योक्तरूपं वैलक्षण्यं स्वयं सदेव। भावाभावभेदवादिनैकैकार्थस्योभयरूपताऽनङ्गीकारात्। भावे हि भावत्वमेव। नाभावत्वमपि। अभावे चाभावत्वमेव। न भावत्वमपीत्यतस्तेन साधितेनानिष्टं मम कथं भवेत् ॥ ४ ॥ अथैकैकस्य वस्तुनो भावत्वानधिकरणत्वमभावत्वानधिकरणत्वं च साध्यतया विवक्षितमिति मन्वीत। तथापि सतो भावस्यापि विश्वस्यासतोऽभावाद्वैलक्षण्यमभावत्वानधिकरणत्वं मम सदेव। एवमसतोऽभावस्यापि विश्वस्य सतो भावाद्वैलक्षण्यं भावत्वानधिकरणत्वं**

**स्वयं सदेव । भावाभावभेदवादित्वात् । अतः कथं मम तेनानिष्टं भवेत् । अंशे सिद्धार्थतया परस्य निग्रहात् । उभयसाधनाददोष इति चेन्न । असिद्धसन्निधानेऽपि सिद्धस्य तत्त्वानपायात् । विशिष्टसाधनान्नैवमिति चेन्न । तथाऽपि वैयर्थ्यानिस्तारात् ॥ ५ ॥**

वा०— द्वितीयं शङ्कते ॥ **भावेति** ॥ तत्रापि समुदिते तत्त्वानधिकरणत्वमिति प्रथमे दोषमाह ॥ **तथापीति** ॥ भावाभावभेदवादिनो भावाभावयोर्भावाभाववैलक्षण्येऽपि भावत्वाभावत्वानधिकरणत्वं कुतो धर्मिभेदेऽपि धर्मैक्यदर्शनादित्यतः प्रतिनियतविरुद्धधर्माणां धर्मिभेदहेतूनां न सामानाधिकरण्यमित्याशयेन हेतूच्छित्तिं विपक्षे बाधकमाह ॥ **यदि हीति** ॥ अत्रापि सत इत्यादेर्द्विरावृत्तिरिति ज्ञेयम् ॥ ३ ॥ द्वितीयं शङ्कते ॥ **अथेति** ॥ भावेऽभावे च प्रत्येकं भावाभावत्वानधिकरणत्वं साधयन्प्रष्टव्यः । प्रत्येकमुभयानधिकरणत्वं साध्यमुतैकैकानधिकरणत्वमाहोस्विदेकैकानधिकरणत्वे वादिप्रतिवादिसिद्धेऽपरानधिकरणत्वं विप्रतिपन्नमधिकं साध्यते । आद्येऽपि समुदितोभयानधिकरणत्वं साध्यमुत विशकलितोभयानधिकरणत्वमिति । तत्र नाद्य इत्याह ॥ **तदेति** ॥ इत आरभ्य सदसच्छब्दयोर्वैलक्षण्यमित्यनेनाप्यन्वयमभिप्रेत्य वा विवक्षावशादेव वा वैलक्षण्यमित्यस्य भावत्वाभावत्वानधिकरणत्वमिति व्याख्यातम् । भेदवादिन इत्यस्य प्रकृते हेतुत्वमुपपादयति ॥**भावेति**॥४॥द्वितीयं शङ्कते ॥ **अथेति** ॥ अत्रापि पृथगनुमानाभ्यामुभयानधिकरणत्वं साध्यते उतैकेनेति । द्वितीयेऽपि समप्राधान्येन तत्साध्यते किंवा विशेषणविशेष्यभावेनेति विकल्पान्मनसि निधायाऽऽद्यं दूषयति ॥ **तथाऽपीति** ॥ **अंश इति** ॥ भावे विवक्षितानुमानद्वयेऽभावत्वानधिकरणत्वानुमानरूपस्याभावे विवक्षितानुमानद्वये भावत्वाधिकरणत्वानुमानरूपस्यांशस्य सिद्धार्थतयेत्यर्थः । द्वितीये प्रथमं शङ्कते ॥ **उभयेति** ॥ द्वितीये द्वितीयं शङ्कते ॥ **विशिष्टेति** ॥ यद्वा विशकलितोभयानधिकरणत्वसाधनेऽपि समप्राधान्येनोभयसाधनमभिमतं किंवा विशेषणविशेष्यभावेन । नाद्य इत्याह ॥ **तथाऽपीति** ॥ एकांशस्य सिद्धत्वादिति भावः । ननु पक्षैकदेशे सम्पूर्णसाध्यसिद्धावंशतः सिद्धसाधनताया दोषत्वेऽपि सर्वस्मिन्पक्षे साध्यैकदेशसिद्ध्या तस्या अदोषत्वात्प्रकृते चोभयोर्मिलितयोः साधनान्न सिद्धार्थतेति शङ्कते ॥ **उभयेति** ॥ उभयोर्मिलितयोः पक्षत्वेऽपि पक्षतावच्छेदकनानात्वेन क्वचिदधिकरणे पक्षतावच्छेदकावच्छेदेन साध्यसिद्धावंशतः सिद्धसाधनतावदुभयोर्मिलितयोः साध्यत्वेऽपि साध्यताऽवच्छेदकनानात्वात्साध्यतावच्छेदकावच्छिन्नस्य पक्षतावच्छेदकावच्छेदेन सिद्धिरूपस्य सिद्धसाधनताबीजस्य सत्त्वादंशतः सिद्धसाधनत्वमेवेत्याशयेनाह ॥ **असिद्धेति** ॥ यत् केनचित्पक्षतावच्छेदकनानात्वे वा साध्यताऽवच्छेदकनानात्वे वा नांशतः सिद्धसाधनं पक्षताऽवच्छेदकसामानाधिकरण्येन साध्यताऽवच्छेदकाक्रान्तसाध्यसिद्धावुद्देश्यतायां सम्पूर्णमेव सिद्ध-

साधनम् । नांशतः सिद्धसाधनम् । पक्षताऽवच्छेदकावच्छेदेन साध्यताऽवच्छेदकावच्छिन्नसिद्धावुद्देश्यायामंशतोऽप्युद्देश्यसिद्धेरभावान्नांशतः सिद्धसाधनमिति दूषणमुक्तं तदनेनैव निरस्तं भवति। पक्षतावच्छेदकनानात्वस्थले क्वचिदधिकरणे पक्षताऽवच्छेदकावच्छेदेन साध्यसिद्धेर्जातत्वे साध्यतावच्छेदकनानात्वस्थले साध्यतावच्छेदकावच्छिन्नसाध्यैकदेशसिद्धिसद्भावे उक्तदूषकताबीजसद्भावेन पक्षांशे सिद्धसाधनताया दुर्वारत्वात्प्रयोजनसत्त्व एव च तथोद्देश्यतायाः कल्पनीयतया तदभावे स्वेच्छयैव तत्कल्पनाऽयोगाच्चेति । द्वितीयं शङ्कते ॥ **विशिष्टेति** ॥ **वैयर्थ्येति** ॥ न च गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वादित्यत्र तार्किकाङ्गीकृतभिन्नत्वस्येव व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वादिह च भावत्वानाधारत्वे सत्यभावत्वानाधारत्वमिति प्रतीतेरुद्देश्यत्वान्न वैयर्थ्यमिति वाच्यम् । अभेदे सत्यपि घटः कलश इति सामानाधिकरण्यदर्शनादप्रयोजकत्वनिरासाय विशिष्टधियस्तत्रोद्देश्यत्वेऽपि प्रकृते तादृशप्रयोजनादर्शनेन विशिष्टधिय उद्देश्यत्वानुपपत्तेः । न च तुच्छे ब्रह्मणि वाऽभावत्वानाधारत्वेऽपि ज्ञानबाध्यत्वादर्शनादप्रयोजकतानिरासायैव प्रकृतेऽपि तथाधिय उद्देश्यत्वमिति वाच्यम् । तुच्छादावुभयानाधारत्वेऽपि ज्ञानबाध्यत्वादर्शनेन तथाधिय उद्देश्यत्वेऽप्यप्रयोजकत्वानिरासेन तन्निरासाय विपक्षबाधकान्तरस्यैवानुसर्तव्यत्वे तेनैव भावत्वानाधारत्वमात्रसाधनेऽपि तन्निरासासम्भवेन विशेषणवैयर्थ्यस्य दुर्वारत्वादिति भावः ॥ ५ ॥

प॰—**प्रत्येकं भावाभावत्वानधिकरणत्वं विवक्षितमिति**॥ अत्र पक्षत्रयं संभवति। भावाभावरूपं यत् तत्वानधिकरणत्वं वा एकैकस्य भावत्वानधिकरणत्वाभावत्वानधिकरणत्वरूपधर्मद्वयं वा भावत्वानधिकरणत्वविशिष्टमभावत्वानधिकरणत्वं साध्यमिति वा । तत्राद्ये दोषोक्तिपरतया योजयति ॥ **तदेति** ॥ सत इति षष्ठ्यंतत्वेनावृत्तस्यार्थः ॥ **सतो भावस्यापीति** ॥ सतोऽसतश्च वैलक्षण्यमित्यस्य प्रतिपदं भावाभाववैलक्षण्यमिति । तस्याप्यर्थः ॥ **भावाभावत्वेत्यादि** ॥ असत इत्यस्य षष्ठ्यंतत्वेनावृत्तस्यार्थोऽसतोऽभावस्यापीति ॥ **उक्तरूपं वैलक्षण्यं** ॥ भावाभावरूपत्वानधिकरणत्वलक्षणमित्यर्थः ॥ **भावाभावभेदेति** ॥ भावाभावयोरन्योन्यं भेदवादिनेत्यर्थः ॥ द्वितीयमाशङ्कते ॥ **अथैकैकस्येति** ॥ भावे भावत्वानधिकरणत्वस्याभावेऽभावत्वानधिकरणत्वस्यासिद्धत्वेऽप्यभावत्वानधिकरणत्वं भावत्वानधिकरणत्वं भावेऽभावे च सिद्धमेवेति भावेनांशे सिद्धत्वोक्तिपरतया योजयति ॥ **तथापि सतो भावस्यापीति** ॥ पूर्ववत्सदसत्पदयोरावृत्तिर्ध्येया ॥ **अंशे सिद्धार्थतयेति** ॥ पृथिवी इतरभिन्ना पृथिवीत्वादित्यत्र तु जलाद्यैकैकान्योन्याभावो न पृथिवीत्वोपहिते सिद्धः । अन्यथा तत्रापि दोषः स्यादेवेति भावः । तृतीयपक्षमाशङ्कते ॥ **विशिष्टेति** ॥ साध्यताऽवच्छेदकैक्यान्नांशे सिद्धार्थतादोष इति भावः ॥ **वैयर्थ्येति** ॥

एकैकांशस्य सिद्धत्वेनासिद्धांशस्यैव परं प्रति साध्यत्वादिति भावः । अस्य वाक्यस्याप्रसिद्धविशेषणत्वे तात्पर्यमिति मिथ्यात्वनिरुक्तिभङ्गे न्यायामृते व्यक्तम् । अत उद्देश्यार्थत्वान्न वैयर्थ्यमित्यादिदोषानवकाशः ।

**या०—वैयर्थ्यानिस्तारादिति ॥** भावेऽभावत्वानधिकरणत्वांशस्याभावे भावत्वानधिकरणत्वांशस्य च सिद्धत्वेन तत्साधने व्यर्थविशेषणत्वादिकमिति भावः ॥

**श्री०—तत्त्वानधिकरणत्वमिति ॥** भावत्वाभावत्वानधिकरणत्वमित्यर्थः । भावत्वानधिकरणत्वमभावेऽभावत्वानधिकरणत्वं च भावे स्वयं सदेवेति नानिष्टमित्याह ॥ **तथाऽपीति ॥ भावाभावत्वात्तनधिकरणत्वमिति ॥** भावत्वे सत्यभावत्वं यत्तदनधिकरणत्वमित्यर्थः ॥ **उभयसाधनादिति** ॥ सिद्धस्याप्यसिद्धेन सहोच्चार्यमाणस्यासिद्धत्वमिति मया स्वीकारादिति भावः ॥ **तत्त्वेति** ॥ सिद्धत्वेत्यर्थः ॥ **विशिष्टेति** ॥ भावत्वानधिकरणत्वे सत्यभावत्वानधिकरणत्वमित्यर्थः ॥ **वैयर्थ्येति** ॥ अभावत्वानधिकरणत्वांश इत्यर्थः ॥

**च०**— ननु साध्यतया विवक्षितं भावाभाववैलक्षण्यं न भेदरूपं येन भावाभावरूपतत्तद्व्यक्तिवृत्तिप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकभेदमादायोक्तक्षत्यवकाशः अपि तु भावत्वाभावत्वरूपानुगतधर्माभावरूपमेवाधिकरणत्वांशनिवेशस्य मन्दप्रयोजनत्वादित्याशङ्कायां पूर्ववत्पक्षतावच्छेदकसामानाधिकरण्येन साध्यीकृततत्तदंशसत्वनियन्त्रितार्थान्तरताताद‌वस्थ्यमभिधत्ते ॥ **भावेत्यादि** ॥ इयं च तृतीया ॥ विमतिविषयीकृतां भावरूपामभावरूपां वैकैकव्यक्तिं पक्षीकृत्य भावत्वाभावत्वाभावसाधनान्न व्यक्तिभेदेनोक्तक्षत्यवकाश इत्याशङ्कायामेवमपि भावत्वाभावत्वोभयवृत्तिव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावमादाय सिद्धसाधनतादुर्वारेत्याह ॥ **अथेति** ॥ इयं च चतुर्थी ॥ अथ तादृशैकैकव्यक्त्युद्देश्यकभावत्वाभावत्ववृत्तिप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकाभावविधेयकानुमितेरुद्देश्यतोपगमान्नोक्तक्षत्यवकाश इत्यतस्तथापि गुणो गुणाभाववान् क्रियाभाववान् । गुणत्वादित्यादौ समूहालम्बनानुमितेरिव प्रकृतेऽपि समूहालम्बनानुमितेरुद्देश्यताप्रतीत्या तादृशानुमितौ चाभावत्वाभाववान् भाव इत्यादिसिद्धीनां विरोधितयांशे सिद्धार्थता दुष्परिहरेत्याह ॥ **अंशे सिद्धार्थतयेति** ॥ प्रकृते व्यासज्यवृत्तिधर्मावच्छिन्नैकविधेयतानिरूपिताकधर्मावच्छिन्नैकव्यक्तिनिष्ठोद्देश्यताकसमूहालम्बनात्मकानुमितेरुद्देश्यतोपगमेनैतस्याश्च तादृशसिद्ध्यप्रतिबध्यतया क्षत्यनवकाशादित्याशयेनाशङ्कते ॥ **उभयेति** ॥ नव्यमते तादृशानुमितेस्तादृशसिद्ध्यप्रतिबध्यत्वेऽपि प्राचीनमते तद्विषयकानुमितेः एतद्विषयकसिद्धेर्विरोधित्वमित्युपगमेनोक्तक्षतिताद‌वस्थ्यमाह ॥

॥ **असिद्धसन्निधानेऽपीत्यादि** । अथ भावरूपां तादृशीं व्यक्तिं पक्षीकृत्य, सामानाधिकरण्यप्रत्यासत्या अभावत्वाभावविशिष्टभावत्वाभावस्तादृशीमभावरूपां पक्षीकृत्य तादृशप्रत्यासत्या भावत्वाभावविशिष्टाभावत्वाभावः साध्यते । इत्थं च भावपक्षकानुमानेऽभावत्वाभावांशस्याभावपक्षकानुमाने च भावत्वाभावांशस्य साध्यतावच्छेदककोटिनिविष्टत्वोपगमेन साध्यत्वानुपगमेनोक्तक्षत्यनवकाशादित्याशङ्कायामेवमपि गुणकर्मान्यत्वविशिष्टसत्ताऽभाववान् गुणकर्मान्यतरत्वादित्यादौ साध्यशरीरनिविष्टविशेषणांशस्यानैकान्त्यवारकतेव प्रकृते तत्फलकतायाः दुरुपपादतया, व्यापके व्यर्थविशेषणता न दोष इति परिभाषया प्रमेयवह्निमान् धूमादित्यादाविवोपरञ्जनमात्रफलितायाश्चागतिकतयोक्तभङ्ग्यपि न श्रेयसीत्याह ॥ **विशिष्टेत्यादिना** ॥ इयं च पञ्चमी ॥ इदमेव प्रतीकमुपाददानाः भावेऽभावत्वानधिकरणत्वांशस्य सिद्धत्वेन तत्साधने व्यर्थविशेषणत्वादिकमिति भाव इत्यपि व्याचक्रिरे । अस्य पक्षस्याप्रसिद्धविशेषणत्वे तात्पर्यमिति मिथ्यात्वनिरुक्तिभङ्गे न्यायामृते व्यक्तमित्यपि स्थितम् ।

**सु० —अथ भावाभिमते भावत्वानधिकरणत्वमभावाभिमते चाभावत्वानधिकरणत्वं साध्यते । अतो नोक्तदोष इति चेन्न । तथाऽपि सतो भावस्यापि विश्वस्य सतो वैलक्षण्यं भावत्वानधिकरणत्वं मम स्वयं सदेव । कथं भावत्वभेदवादिनो नैकमेव भावत्वं सर्वभावेष्वनुगतम् । किं नाम प्रतिभावं भावत्वानि भिद्यन्ते । प्रतिपादयिष्यते चैतत् । तथा च भावोऽपि भावत्वान्तराणाधारो भविष्यति । एवमसतोऽभावरूपस्यापि विश्वस्यासतो वैलक्षण्यमभावत्वानधिकरणत्वं मम स्वयं सदेव । कथम् । अभावत्वभेदवादिनाऽभावेऽप्यभावत्वान्तराभावस्वीकारात् । तथा च तेनानिष्टं कथं भवेत् । परस्यैव सिद्धार्थताऽनिस्तारात् ॥ ६ ॥ अथ भावाभावाभिमतयोः सर्वथा भावाभावत्वे न स्त इत्यर्थो विवक्षितः । तथाऽपि सत एव भावस्यैवासतो वैलक्षण्यमभावत्वानधिकरणत्वं स्वयं सदेव नियतं भवत्येव । एवमसत एवाभावस्यैव सतो वैलक्षण्यं भावत्वानधिकरणत्वमपि स्वयं सदेव । यतस्तस्माद्विश्वस्य तेन साधितेन भेदवादिनोऽनिष्टं कथं भवेत् । इदमुक्तं भवति । यदि प्रागभावादिकं पक्षीकृत्याभावत्वानधिकरणमिति साध्यते । तदा तस्य भावत्वं प्रतिज्ञातं स्यात् । भावस्यैवाभावत्वानधिकरणत्वनियमात् । द्वौ नञौ हि प्रकृतमर्थं सातिशयं गमयतः । एवं वियदादिकं पक्षीकृत्य भावत्वानधिकरणत्वे साध्यमाने तस्याभावत्वं प्रतिज्ञातं स्यात् । अभावस्यैव भावत्वानधिकरणत्वनियमात् । भावनिषेध एव ह्यभावः । तथा च विश्वस्य भावाभावविभागस्य च परेणाभ्युपगतत्वान्न भावाभावभेदवादिनो ममानिष्टं किञ्चित् । किन्तु भावाभावव्यतिकरमात्रम् । तत्साधनं च प्रकृतानुपयुक्तमिति ॥७॥**

वा०—नन्वस्तु तर्हि प्रत्येकमेकैकानधिकरणत्वपक्षेऽपि भावेऽभावत्वानधिकरणत्वस्याभावे च भावत्वानधिकरणत्वस्य साधने, उक्तरीत्या सिद्धार्थतायामपि भावे भावत्वानधिकरणत्वस्याभावे चाभावत्वानधिकरणत्वस्य साधने न सा । अन्यथासाध्यसिद्धेरसम्भवेन नार्थान्तरताऽपि । एकैकानधिकरणत्वस्य साधनान्न वैयर्थ्यमपीत्याशयेन शङ्कते ॥ **अथेति** ॥ अत्रापि भावे भावत्वानधिकरणत्वमभावे वाऽभावत्वानधिकरणत्वं च यथाकथंचिद्विवक्षितं सर्वथा वा । नाद्य इत्याह ॥ **तथाऽपीति** ॥ ननु भावत्वाभावत्वयोरुपाधित्वेऽपि परम्परासंबद्धजातेरेवोपाधित्वाज्जात्यादेश्चानुगतप्रत्ययाद्यन्यथाऽनुपपत्त्यैकत्वस्य सिद्धत्वात्कथमेतदित्यतो जातेरपि प्रतिव्यक्तिभेदेऽप्यनुगतप्रत्ययादिनिर्वाहस्य सामान्यपरीक्षायां वक्ष्यमाणत्वान्नानुपपत्तिरित्याशयेनाह ॥ **प्रतिपादयिष्यते चैतदिति** ॥ ननु भावत्वादिभेदाङ्गीकारमात्रेण किमुक्तं भवतीत्यतो विवक्षितार्थसिद्धिरुक्ता भवतीत्याशयेनाह ॥ **तथा चेति** ॥ **सिद्धार्थतेति** ॥ यथाकथञ्चिद्भावत्वाद्यनधिकरणत्वस्य विवक्षितस्य सिद्धत्वादिति भावः ॥६॥ द्वितीयं शङ्कते ॥ **अथेति** ॥ स्वरूपार्थकस्वयंशब्दतात्पर्यकथनं नियतमिति । प्रकृतोपयुक्ततया सदित्यस्य व्याख्यानं भवतीति । एतावत्पर्यन्तं भेदवादिन इत्यत्रत्यविशेषणांशस्य हेतूपपादकत्वं ममेत्यभिप्रेतविशेष्यांशस्य तेनानिष्टमिति साध्यान्वय इत्यभिमतम् । अत्रोत्तरत्र च हेतूपपादकत्वासम्भवाद्विशिष्टस्यापि तेनानिष्टमित्यनेनान्वय इत्याशयेनाह ॥ **भेदवादिनोऽनिष्टमिति** ॥ ननु पूर्वोत्तरार्धोक्तयोर्भावस्यैवाभावत्वानधिकरणत्वमभावस्यैव भावत्वानधिकरणत्वमिति नियमयोस्तेनानिष्टमिति साध्येनान्वयः सम्भवतीति नियमद्वयोक्तावपि भावाभावयोः सर्वथा भावाभावत्वे न स्त इति साधनस्यानिष्टत्वानपायात् । न च तादृशनियमोक्तेर्भावाभावयोस्तथा साधनं बाधितमित्यत्र तात्पर्यात्कथं मां प्रत्यनिष्टता परं प्रति च कथं नानिष्टता तथा साधनस्येति वाच्यम् । तथा सति भावादेरेवाभावत्वाद्यनधिकरणत्वमित्यत्र प्रमाणप्रतिपादकोत्तरयोजनाऽन्तर्भावापत्त्या नियमोक्तिमात्रपरयोजनायां तथा तात्पर्यासम्भवात् । नियमद्वयानुपपादनाच्च नैतद्योजना युक्तेत्यतो नैतद्धेतुद्वयं प्रति तेनानिष्टमित्युक्तस्य साक्षात्साध्यत्वमपि तु साध्यान्तरं मध्येऽभिमतम् । हेतूपपादनप्रकारश्च प्रसिद्धन्यायादिसिद्धः सुलभ एवेत्याशयेन भाष्याभिप्रायमाह ॥ **इदमुक्तमिति** ॥ नन्वत्र भावत्वानधिकरणत्वे साध्ये भावस्य भावत्वाधिकरणत्वेन वाऽभावत्वानधिकरणत्वेन वा पक्षतैवमभावत्वानधिकरणत्वे साध्येऽभावस्य चाभावत्वाधिकरणत्वेन वा भावत्वानधिकरणत्वेन वा पक्षतोभयत्राप्याद्ये व्याघातापातेन भावत्वेऽभावत्वे च साध्यपर्यवसानानुपपत्त्या वक्ष्यमाणार्थान्तरानुपपत्तिः । अत एव च भावाभिमत इत्यादावभिमतपदोपादानम् । उभयत्रापि द्वितीये उत्तरयोजनान्तर्भावापत्त्या भावत्वाभावत्वयोः प्रतिज्ञातार्थपर्यवसानासिद्धिरेवेत्यतो नोभयथाऽपि तयोः पक्षताऽपि तु प्रागभावत्ववियदादित्वादिनेति नानुपपत्तिरित्याशयेनाह ॥ **प्रागभावादिकं वियदादिकमिति** ॥ अत्र भाष्यपूर्वोत्तरार्धोक्तोपपादना-

नुसारेणाभावपक्षकोक्त्यनन्तरं भावपक्षोक्तिरिति द्रष्टव्यम् । यदीत्यारभ्य स्यादित्यन्तं साध्याध्याहारः एवमुत्तरत्राप्येवमित्यादि स्यादित्यन्तम् । तत्र पूर्वोत्तरार्धोक्तनियमरूपहेत्वोरुक्तिर्भावस्यैवाभावस्यैवेति । अनधिकरणत्वमिति ह्यभावत्वनिषेध एव पर्यवस्यति । अत एव पूर्वं भावत्वाभावत्वे न स्त इत्युक्तम् । एवं च निषेधविशिष्टभावत्वनिषेधस्य विशेषणीभूतनिषेधनिषेधविषयकत्वस्य सविशेषणे हीति न्यायसिद्धत्वा-न्निषेधनिषेधत्वरूपातिशयलाभाय च नञ्द्वयसार्थक्यसम्भवान्निषेधनिषेधे भावत्वविधिरेव सिद्धो भवतीत्या-शयेनासन्न भवतीत्युक्ते च द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति सदेव भवतीति कर्मनिर्णयं मनसि निधायाह ॥ **द्वौ नञाविति** ॥ तत्प्रतिक्षेपरूपस्य तन्निष्ठासाधारणधर्मानधिकरणत्वं प्रसिद्धमेवेत्याशयेन 'भावस्य हि निषेधे तु नाभावस्य निषेधनमि'त्यनुव्याख्यानं मनसि निधायाऽऽह॥ **भावनिषेध एव हीति**॥ ननु भेदवादिन इत्यस्यानिष्टमित्यनेन संबन्धेऽपि कथमुपयोग इत्यतः प्रतिज्ञापर्यवसानलब्धस्य विश्वस्मि-न्भावाभावविभागस्य तेनानिष्टमित्युक्तसाध्ये हेतुत्वेनान्वयप्रदर्शनपूर्वकं तं घटयति ॥ **तथा चेति** ॥ विश्वस्य, भावाभावविभागस्य वाऽभावो यदि प्रतिज्ञानबलाल्लभ्येत तर्हि भावाभावविभागवादिनो ममा-निष्टप्रसङ्गेऽपि, न भावाभावविभागस्यैव प्रतिज्ञाबलाल्लाभे स इति प्रदर्शनाय भेदवादिन इत्युक्तमिति भावः । प्रागभावादेर्भावत्वादि कथं तव नानिष्टमित्याशङ्कते ॥ **किंत्विति** ॥ तस्यानिष्ट-त्वमङ्गीकरोति ॥ **भावाभावेति** ॥ मात्रशब्दसूचितं परं प्रति दूषणं स्पष्टयति ॥ **तदिति** ॥ ७ ॥

स० — **प्रतिपादयिष्यते चैतदिति** ॥ न सर्वधर्मएकोऽस्तीत्यादिना । ननु भावाभावयो-रभावत्वभावत्वाधारत्वासंभवात् भावत्वाभावत्वाधारत्वनिषेधेऽनिर्वाच्यत्वसिद्धेः कथमनिष्टं न भवे-दित्यत आह ॥ **इदमुक्तमिति** ॥

प० —सद्भेदेत्यत्र भावप्रधानत्वमुपेत्याह ॥ **भावत्वभेदवादिन इति** । नन्वनुगतधर्मस्य प्रमि-तस्य कथमपलापः । तादृशधर्माभावे शक्तिव्याप्तिकारणतानामग्रहप्रसङ्ग इत्यत आह ॥ **प्रतिपादयि-ष्यत इति** ॥ वैशेषिकाधिकरणे 'नरत्वादिकमप्येवं तत्तद्धर्मतयेयत' इत्यादिना । अनुगतधर्माभावस्तद-भावेपि व्युत्पत्त्यादिग्रहश्चोपपादयिष्यत इत्यर्थः ॥ **सर्वथा भावाभावत्वे न स्त इति** ॥ भावे भावत्वानां सर्वेषामभावः । भावत्वसामान्याभाव इति यावत् । एवमभावेप्यभावत्वसामान्याभाव इत्यर्थः । चोऽ-वधारण इत्युपेत्याह ॥ **सत एवेति** ॥ असत एवेति च । दोषोक्तेरस्फुटत्वादाह ॥ **इदमुक्तमिति** ॥ **परेणापीति** ॥ सत्यत्ववादिनाऽपीत्यर्थः ॥ **व्यतिकरमात्रमिति** ॥ विनिमयमात्रं ॥ न तु भावाभाववस्तु-नोरभाव इत्यर्थः । तदपि तवानभिमतमेव किलेत्यत आह ॥ **तत्साधनं चेति** ॥ **प्रकृतेति** ॥ अनिर्वाच्य-त्वरूपमिथ्यात्वानुपयुक्तमित्यर्थः ।

**या०—प्रतिपादयिष्यते चैतदिति** ॥ 'नरत्वादिकमप्येवं तत्तद्धर्मतयेष्यते ॥ न सर्वधर्म एकोऽस्ती'त्यत्रेत्यर्थः ॥

**श्री०—सर्वथेति** ॥ यदेकं भावत्वं भावेऽस्ति यदेकमभावत्वमभावेऽस्ति तदपि नास्तीत्येवं भावे सर्वथा भावत्वं नास्ति । अभावे च सर्वथाऽभावत्वं नास्तीति साध्यत इत्यर्थः । द्वौ नञाविति न्यायस्यात्रासम्भवादाह ॥ **अभावस्यैवेति** ॥

**च०**— ननु भावरूपां तादृशीं पक्षीकृत्य भावत्वाभाव एवाभावरूपां च तादृशीमभावत्वाभाव एव साध्यत इति नोक्तदोष इत्याशङ्कायामेवमपि भावत्वाभावत्वादीनामपि प्रातिस्विकतत्तद्व्यक्तित्वकल्पनायाः सिद्धान्ते 'नरत्वादिकमप्येवं तत्तद्धर्मतयेष्यत' इत्यत्र समर्थयिष्यमाणतया सिद्धसाधनतातादवस्थ्यं चालनीयन्यायेन दुर्वारमित्याह ॥ **अथेत्यादिनाऽनिस्तारादित्यन्तेन** ॥ इयं च षष्ठी ॥ अथ भावरूपायां तादृशव्यक्तौ यावन्ति भावत्वानि प्रत्येकं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटवत्वमभावरूपायां तादृश्यां यावन्त्यभावत्वानि प्रत्येकं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटवत्वमेव सिसाधयिषितमिति विशेषान्तरविरहेप्येकैकविशेषसमवधानेन न क्षतिरित्याशङ्कायां भावे तादृशभावत्वाभावकूटे सिसाधयिषिते अभावरूपत्वमभावे च तादृशाभावत्वाभावकूटे तस्य भावरूपत्वमेव प्रत्यज्ञासीन्नानिर्वचनीयरूपत्वमिति भावस्याभावत्वमभावस्य च भावत्वमेव पर्यवसासीन्नानिर्वचनीयत्वमित्यर्थान्तरता दुर्वारेत्याशयेनाह ॥ **अथेत्यादिनाऽनुपयुक्तमित्यन्तेन** ॥ इयं च सप्तमी ॥

**सु०— भावाभावाभिमतयोरभावभावत्वानधिकरणत्वे वादिप्रतिवादिसंमते भावाभावत्वानधिकरणत्वमप्यधिकं साध्यते । अतो नोक्तदोष इति चेन्न । यतः सतो भावस्यैव विश्वस्य वियदादेरसतो वैलक्षण्यमभावत्वानधिकरणत्वं स्वयं सदेव । प्रमितमेव । यतश्चासतोऽभावस्यैव विश्वस्य प्रागभावादेः सतो वैलक्षण्यं भावत्वानधिकरणत्वं स्वयं सदेव । अतो भेदवादिनस्तेन विपरीतेन प्रतिज्ञातेनानिष्टं कथं भवेत् । प्रतिज्ञातार्थसिद्धौ खल्वनिष्टं भवेत् । न हि प्रमाणबाधितोऽसौ सिद्ध्यति । व्यावहारिकभावत्वाभावत्वगोचरं प्रमाणं तत्त्वविषयेणानुमानेनैव बाध्यत इति चेन्न । यतोऽस्माकं तावद्भावाभावत्वविषयं प्रमाणं तत्त्वगोचरमेव । अन्यथा चक्रकादिप्रसङ्गादतिप्रसङ्गाच्चेति ॥ ८ ॥ द्वितीयेऽप्येतदेवोत्तरम् । विश्वस्य सतः सत्याद्वैलक्षण्यमपि मम स्वयं स्वमतमेव । तथाऽसतोऽविद्यमानादपि वैलक्षण्यं स्वयमेव । अतस्तेन**

**साधितेन ममानिष्टं कथं भवेत् । भवतु विश्वस्यासतः शशविषाणादेर्वैलक्षण्यं स्वमतम् । सतो वैलक्षण्यं तु कथम् । सत्त्वाङ्गीकारादिति चेन्मैवम् । सतो विद्यमानस्याप्यसतो भेदं वदतो मम यथा विश्वस्यासतो वैलक्षण्यं स्वयमेव । तथा सतोऽपि विश्वस्य सतो वैलक्षण्यं सतां भेदवादिनः स्वयमेव । सदन्तरवैलक्षण्यात् ॥ ९ ॥ सत्त्वासत्त्वानधिकरणत्वं सदसद्विलक्षणत्वमिति चेत् । तदाऽपि सतो विश्वस्यासतो वैलक्षण्यं सदसद्भेदवादिनः स्वयं सदेव । अतस्तेन साधितेन ममानिष्टं कथं भवेत् । परस्यैवांशतः सिद्धार्थता भवेत् । तर्हि सत्त्वानाधारत्वमेव साध्यत इति चेन्न । असत एव हि सतो वैलक्षण्यं सत्त्वानधिकरणत्वं भेदवादिनो मम स्वयं सदेव नियमेन भवति । तथा च विश्वस्य तेन सत्त्वानधिकरणत्वेन साधितेनासत्त्वापत्त्या परस्यैवानिष्टं भवेत् । अनिष्टप्रसङ्गेन परं निगृहीतवतो ममानिष्टं कथं भवेत् ॥ १० ॥**

वा० — नन्वभावत्वानधिकरणत्वावच्छिन्नं वियदादिकं भावत्वानधिकरणत्वावच्छिन्नं प्रागभावादिकं पक्षीकृत्य भावत्वानधिकरणत्वमभावत्वानधिकरणत्वं च क्रमेण साध्येते । एवं च वियदादौ भावत्वानधिकरणत्वस्य प्रागभावादावभावत्वानधिकरणस्य चासिद्ध्या न सिद्धार्थता । भावत्वानधिकरणादावभावत्वानधिकरणत्वादेः साध्यमानत्वे चानिर्वचनीयमनादाय भावत्वाभावत्वविषयकतया प्रतिज्ञाया अपर्यवसानान्नार्थान्तरताऽपि । साध्यकोटौ विशिष्टस्याप्रवेशान्न वैयर्थ्यमपीत्याशयेन तृतीयं शङ्कते ॥ **भावेति** ॥ अत्र पूर्ववत्सिद्धार्थताऽर्थान्तरयोरप्राप्त्या तेनेत्यस्य साधितेनेत्यर्थानुपपत्त्या प्रकृतोपयुक्तमर्थमाह ॥ **विपरीतेति** ॥ अत्र प्रतिज्ञातेनेत्युक्तिसूचितप्रतिज्ञामात्रत्वमुपपादयति ॥ **प्रतिज्ञातेति** ॥ भावस्यैवाभावत्वानधिकरणत्वेऽभावस्यैव भावत्वानधिकरणत्वे च प्रमाणोक्त्या वन्हिमत एव धूमवत्त्वं प्रमितमित्युक्ते धूमवति वन्हिमत्त्वं प्रमितमिति यथा लभ्यते तथाऽभावत्वानधिकरणे भावत्वं भावत्वानधिकरणे चाभावत्वं प्रमितमित्युक्तं भवति । अभावत्वानधिकरणत्वभावत्वानधिकरणत्वग्राहकप्रमाणयोरेव भावत्वाभावत्वविषयकत्वात् । तथा चाभावत्वानधिकरणे प्रमितं यद्भावत्वं भावत्वानधिकरणत्वे प्रमितं यदभावत्वं तदनधिकरणत्वस्य तत्रैव साधने बाध इत्याशयेनाह ॥ **न हीति** ॥ भेदवादिन इत्यस्य तेनानिष्टमित्यनेनान्वितस्योपयोगं यतोऽस्माकमित्यादिना वक्तुं तन्निवर्त्यां शङ्कां दर्शयति ॥ **व्यावहारिकेति** ॥ भावाभावभेदवादिनो मम भावत्वादिविषयकं प्रमाणं तत्त्वगोचरमेव। अन्यथा भावाभावभेदवादित्वमेव न स्यादिति भेदवादिन इत्यनेन सूचितमिति भावः ॥ **अन्यथेति** ॥ भावत्वादिगोचरप्रमाणस्यातत्त्वविषयत्वसिद्धौ बाधकाभावादनुमानसिद्धिस्तत्सिद्धौ च तेन भावत्वादिगोचरप्रमाणस्य बाधसिद्धिस्तत्सिद्धौ चातत्त्वविषयत्वसिद्धिरिति चक्रकम् । भावत्वादिगोचरप्रमाणस्यातत्त्वविषयकत्वसिद्धौ बाधकाभावादनुमानसिद्धिस्त-

सिद्धौ च तद्बाधितत्वादतत्त्वविषयत्वसिद्धिरित्यन्योन्याश्रयो वाऽतत्त्वविषयकवन्हिशैत्यानुमानेन तत्त्वविषयकौष्ण्यप्रत्यक्षस्य बाधप्रसङ्गश्चेत्यर्थः ॥ ८ ॥ द्वितीयपक्षसम्भावितकल्पदूषणपरतयापीदमेव भाष्यं योजयितुं प्रतिजानीते ॥ **द्वितीयेऽपीति** ॥ स्वयंशब्दयोः पर्यायत्वं मतमित्यध्याहारं च मनसि निधाय स्वमतमिति व्याख्यानम् । अत्र सत एव पक्षत्वेन पूर्ववत्प्रत्येकसमुदायविकल्पासम्भव इति बोध्यम् । पूर्वत्र भावाभावात्मकविश्वस्य पक्षत्वात्कथं तत्र भावाभाववैलक्षण्यमित्याशङ्कायामुभयोपपादकतया भेदवादिन इत्यस्य सम्बन्धेऽपि प्रकृते सत एव पक्षत्वेन तत्र चासद्वैलक्षण्यस्योभयवादिसम्मत्या तदंशस्योपपादननिरपेक्षत्वात्सद्वैलक्षण्यमात्रस्यैव चोपपादनीयत्वात्सदित्यस्य च भेदवादिन इत्येतत्सम्बन्धे स्पष्टतदुपपादनलाभात्स्वयमित्येव पूर्वेण सम्बद्धय सद्भेदवादिन इत्यस्य सद्वैलक्षण्ये हेतुत्वमसद्वैलक्षण्यदृष्टान्तेन प्रतिपादयितुं तथैव तन्निवर्त्यां शङ्कामुत्थापयति ॥ **भवत्विति** ॥ सतोऽपि वक्ष्यमाणरीत्या सदसत्त्वात्सत्त्वासत्त्वसमुदायानधिकरणत्वमादाय सिद्धसाधनादेः पूर्ववदसम्भवात्तदनभिधाय विशकलितसत्त्वासत्त्वानाधारत्वपक्षमेव शङ्कित्रभिप्रेततया सिद्धवत्कृत्य तद्दूषणपरतया भाष्यं योजयति ॥ **सतोऽपीति** ॥ अत्र सतोऽपि सत्त्वाधिकरणस्यापीत्यनेनांशे सिद्धसाधनतां स्फोरयति ॥ ९ ॥ अत्र सत्त्वान्तरानाधारतयाऽर्थान्तरपरतया योजनायां भाष्येऽसत इत्यस्य वैयर्थ्यापत्त्या तदनुगुणदूषणपरतया योजयति ॥ **असत एव हीति** ॥ १० ॥

स० — प्रत्यक्षस्यातत्वविषयत्वे बाधकमाह ॥ **अन्यथेति** ॥ अनुमानस्य तत्वविषयत्वे सतिप्राबल्यं तेन प्रत्यक्षस्यातत्वविषयत्वम् । ततश्च तस्य दौर्बल्येऽनुमानस्य तत्वविषयत्वमिति चक्रकम् । प्रबलप्रमाणविरोधादेव प्रत्यक्षस्यातत्वावेदकत्वं वक्तव्यम् । तथाच प्रत्यक्षस्यातत्वावेदकत्वेऽनुमानस्य तत्वावेदकत्वं तत्सिद्धौ च तत्सिद्धिरिति अन्योन्याश्रयश्चेत्यर्थः ॥ **अतिप्रसङ्गादिति** ॥ अनुमानस्याप्यतत्वावेदकत्वं सुवचमित्यतिप्रसङ्गादित्यर्थः । वह्निरनुष्णः पदार्थत्वादित्यनुमानेन प्रत्यक्षस्य बाधः स्यादित्यतिप्रसङ्गादित्यप्याहुः ॥

प० — शङ्कते ॥ **भावाभावाभिमतयोरिति** ॥ **नोक्तदोष इति** ॥ व्यतिकरमात्रदोषो नेत्यर्थः ॥ **भावत्वाभावत्वगोचरमिति** ॥ भावाभावयोः क्रमाद्भावत्वाभावत्वगोचरमिति योज्यम् ॥ **तत्वविषयेणानुमानेनैवेति** ॥ विवादपदं सदसद्विलक्षणं बाध्यत्वादितिप्रागुक्तेनेत्यर्थः ॥ **चक्रकादीति** ॥ सिद्धे च भावत्वादिगोचरमानस्यातत्वावेदकत्वे तद्बाधाभावसिद्धिः । सिद्धे च तस्मिन्ननुमानप्रामाण्यसिद्धिः । सिद्धे च तस्मिंस्तद्बाधेन भावत्वादिगोचरप्रमाणस्य व्यावहारिकसत्त्वविषयकत्वसिद्धिरित्यर्थः ।

आदिपदेन सिद्धे चानुमानप्रामाण्ये भावत्वादिप्रत्यक्षाप्रामाण्यं, तत्सिद्धौ चानुमानप्रामाण्यसिद्धिरित्येवमन्योन्याश्रयादिर्गृह्यते । एवं सति बाधमात्रोच्छेदः स्यादित्याह ॥ **अतिप्रसङ्गाच्चेति** ॥ विवृतमेतन्न्यायामृते वह्निशैत्यानुमानसाम्योक्तिवादे । इतिशब्दो भावाभावपक्षदूषणोक्तिसमाप्तौ ॥ **द्वितीयेऽपीति** ॥ सदसच्छब्दौ भावाभाववचनौ किं वा विद्यमानाविद्यमानवचनाविति प्रागुक्तद्वितीयपक्षेऽपीत्यर्थः । शङ्कते ॥ **भवत्विति** ॥ **स्वयमेवेति** ॥ स्वमतमेवेत्यर्थः ॥ **सत्त्वासत्त्वानधिकरणत्वमिति** ॥ सत्त्वानधिकरणत्वमसत्त्वाानधिकरणत्वं चेति धर्मद्वयमित्यर्थः ॥ **असतोवैलक्षण्यमिति** ॥ असत्त्वानाधारः सत्त्वानाधारः सदसदिति सदसतोरन्योन्यं भेदवादिन इत्यर्थः ॥ **अनिष्टेति** ॥ असत्त्वापत्तिरूपानिष्टेति वा व्याहत्या कस्यापि सिद्धिर्नेति वाऽनिष्टानिस्तारादित्यर्थः ॥

**या०— प्रमाणेति** ॥ भावत्वाभावत्वगोचरप्रत्यक्षादीत्यर्थः ॥ **अन्यथा चक्रकादिप्रसङ्गादिति** ॥ भावत्वाभावत्वगोचरप्रमाणस्य प्रत्यक्षादिरूपस्यातत्त्वगोचरत्वसिद्धौ तस्य दुर्बलत्वेनानुमानबाधकत्वाभावः । सति च तस्मिन्ननुमानप्रामाण्यसिद्धिस्तत्सिद्धौ च तद्विरोधेनातत्त्वगोचरत्वसिद्धिरिति चक्रकप्रसङ्गात् । बाधकाभावेऽप्यतत्त्वगोचरत्वेऽनुमानस्याप्यतत्त्वविषयत्वं सुवचमित्यतिप्रसङ्गाच्चेत्यर्थः । यद्वाऽतिप्रसङ्गादित्यस्य कालात्ययापदिष्टमात्रोच्छेदप्रसङ्गादित्यर्थः ॥

**श्री०** — भावाभावव्यतिकरो नास्तीत्याशङ्कते ॥ **भावाभावाभिमतयोरिति** ॥ **अधिकमिति** ॥ भावेऽभाव[illegible]नधिकरणत्वं प्रमितम् । तत्र भावत्वानधिकरणत्वमप्यधिकं साध्यते । तथा च भावत्वानधिकर[illegible] साध्येऽभावत्वं न प्राप्नोति । अभावत्वानधिकरणत्वस्य सम्मतत्वात् । एवमभावेऽपि द्रष्टव्य[illegible] । अतो न व्यतिकर इति भावः ॥ **विपरीतेति** ॥ भावरूपस्य प्रपञ्चस्य प्रमाणविरुद्धभावत्वानधि[illegible]त्वप्रतिज्ञानेनेत्यर्थः ॥ **भावत्वाभावत्वगोचरमिति** ॥ भावाभावयोः क्रमात् भावत्वाभावत्वगो[illegible]मिति योज्यम् ॥ **तत्त्वविषयेणानुमानेनेति** ॥ विवादपदं सदसद्विलक्षणं बाध्यत्वादिति [illegible]गुक्तेनेत्यर्थः ॥ **द्वितीयेऽपीति** ॥ सदसच्छब्दौ भावाभाववाचिनौ वा विद्यमानाविद्यमानवाचिनौ वेति प्रागुक्तद्वितीयपक्षेऽपीत्यर्थः । सत्याद्विद्यमानात् ॥ **भेदवादिन इति** ॥ सतां भेदवादिन इत्यर्थः ॥

**च०**— अथ तार्णदहनशून्यत्वविशिष्टं भौमदहनशून्यत्वविशिष्टं वा ह्रदादिकं पक्षीकृत्य तार्णदहनशून्यत्वस्य भौमदहनशून्यत्वस्य वा साधने तादृग्दहनद्वयविनिर्मुक्तता यथा सेत्स्यति तद्वत्प्रकृतेऽप्यभाव-

त्वानधिकरणत्वविशिष्टभावरूपां भावत्वानधिकरणत्वविशिष्टाभावरूपां वा तादृशीं पक्षीकृत्य भावत्वानधिकरणत्वस्याभावत्वानधिकरणत्वस्य च साधने तादृग्धर्मद्वयवैधुर्यरूपानिर्वचनीयतैव सेत्स्यतीत्यद्वैतवादिमनोरथद्रुमोऽफालीदेवेत्याशङ्कायां 'मृगतृष्णांऽभसि स्नातः खपुष्पकृतशेखरः । वन्ध्यासुतः समायाति शशशृङ्गधनुर्धरः' इत्यादिवत्प्रमाणबाधिततया न कस्यापि सिद्धिरित्याशयेनाह ॥ भावेत्यादिकप्रसङ्गाच्चेत्यन्तेन ॥ इयं चाष्टमी योजना ॥ इत उत्तरः द्वितीयेऽप्येतदेवेत्यादिः परकीयतर्काणामद्यापि गहननिविष्टत्वादित्यन्तो ग्रन्थ उक्तदिशा दर्शितयोजनाऽवसेयः ॥

सु०— अथासत्त्वानधिकरणत्वे वादिप्रतिवादिसिद्धे सत्त्वानधिकरणत्वमप्यधिकं साध्यत इति चेन्न । अनिष्टानिस्तारात् । किञ्च, न सत्त्वं नामैकमनुगतं किन्तु प्रतिवस्तु सत्त्वानि भिद्यन्ते । तत्र वियदादेरसद्वैलक्षण्ये सति सत्त्वानधिकरणत्वं साध्यमानं किमेकसत्त्वानधिकरणत्वमुतानेकसत्त्वानधिकरणत्वमथ सर्वसत्त्वानधिकरणत्वम् । किंवाऽविशेषितसत्त्वानधिकरणत्वम् । अथवा सर्वथा सत्त्वानधिकरणत्वं विवक्षितम् । नाद्यः । विश्वस्य सतोऽपि वैलक्षण्यं तावन्मम स्वयमेव सतोऽपि वैलक्षण्यं सत्त्वानधिकरणत्वमपि स्वयमेव । कथम् । सत्त्वभेदवादिनो मम सतोऽपि सत्त्वान्तरानधिकरणत्वाङ्गीकारात् । तथा च सिद्धेन तेन साध्यमानेन ममानिष्टं कथं भवेत् । एवमेव चतुर्थनिराकरणमपि व्याख्येयम् । न द्वितीयतृतीयौ । विश्वस्यासतो वैलक्षण्यमसत्त्वानधिकरणत्वं तावन्मम स्वयमेव । सतो वैलक्षण्यमनेकसत्त्वानधिकरणत्वम् । सर्वसत्त्वानधिकरणत्वमपि स्वयं सदेव । कथम् । भेदवादिनैकैकस्यार्थस्यानेकसर्वसत्त्वास्वीकारात् । स्वीकारे च भेदभङ्गः स्यात् । ततश्च तेनानिष्टं कथं भवेत् । न पञ्चमः । यतः सत एवासतो वैलक्षण्यं स्वयं सदेव । नियतमेवास्ति । यतश्चासत एव सतो वैलक्षण्यमपि नियतमेवातस्तेन साध्यमानेन विश्वस्य सदसत्त्वापत्त्या भेदवादिनः कथमनिष्टं भवेत् । मया ह्येकस्यैव सदसत्त्वमङ्गीकृतम् । स्वोपाधौ प्रतिषेधाप्रतियोगित्वात्परोपाधौ च तत्प्रतियोगित्वात् । द्वयोरपि सर्वथा प्रतिषेधात्कथं सदसत्त्वप्रसङ्ग इति चेत्तर्ह्यसत एव सतो वैलक्षण्यं स्वयं सन्नियतमेव । अतः सद्वैलक्षण्यमुक्त्वा पुनरसतोऽपि वैलक्षण्येन व्याहतेन प्रतिज्ञातेन भेदवादिनः कथमनिष्टं भवेत् । एवं सत एवासतोऽपि वैलक्षण्यं नियतमित्यसद्वैलक्षण्यमुक्त्वा पुनर्विश्वस्य सद्वैलक्षण्यप्रतिज्ञा व्याहता द्रष्टव्या । न ह्यनिर्वाच्यसिद्धेः प्रागयं विप्रतिषेधो निवारयितुं शक्यः । अस्मादेव हेतोस्तत्सिद्धिरिति चेत्तर्हि माता वन्ध्येति प्रतिज्ञा कुतो विप्रतिषिद्धा । वक्ष्यमाणहेतुनैव प्रतिज्ञातार्थसिद्धेस्तत्रापि सुवचत्वात् । 'संभावितः प्रतिज्ञाया अर्थः साध्येत हेतुने'ति

**न्यायात्तत्र हेत्वाकाङ्क्षैव नास्तीति चेत्समम् । किञ्च सत एव विश्वस्यासतो वैलक्षण्यं स्वयं सदेव । साक्षिप्रमितमस्ति । अतस्तेन बाधितेन सर्वथा सत्त्वानधिकरणत्वेन प्रतिज्ञातेन भेदवादिनः कथमनिष्टं भवेत् । अमुख्यसत्त्वावेदकं प्रमाणं तदिति चेत् । मम तावन्मुख्यमेव तत्सत्यमित्युक्तम् । परकीयप्रमाणतर्काणामद्यापि गहने निविष्टत्वादिति । केचित्तु तवानिष्टं कथं न भवेदिति व्याचक्षते । तत्र न पादादाविति प्रतिषेधस्य नञा निर्दिष्टमनित्यमिति समाधानमवसेयम् ।**

वा०— अत्र यथाकथञ्चित्सत्त्वानाधारतामादाय दूषणानुक्त्या सर्वथेत्यादिपक्षानुत्थानादुक्तदूषणनिवर्तकतया पराभिमतं पक्षमुत्थापयति ॥ **अथेति** ॥ अस्त्वसत्त्वानधिकरणत्वस्य पक्षताऽवच्छेदककोटिनिवेशस्तावता प्रतिज्ञाया असत्त्वे पर्यवसानासम्भवेऽप्युक्तदूषणस्यापरिहार एव । न हि पूर्वत्र भावत्वाभावत्वानधिकरणत्वे साध्ये भावत्वमभावत्वं वा प्रतिज्ञातं स्यादितिवदसत्त्वं स्यादिति दूषणमत्रोक्तम् । किन्त्वसत एव सत्त्वानधिकरणत्वनियमात्तदनधिकरणत्वे साध्येऽसत्त्वापत्त्या प्रतितर्कपराहतानुमानमित्यर्थान्तरमिति वा । नैतत्परिहारोऽसत्त्वानधिकरणत्वस्य पक्षतावच्छेदककोटिनिवेशमात्रेण सिध्यति । असत एव सत्त्वानधिकरणत्वनियमस्य प्रबलत्वेन सत्त्वानधिकरणत्वे साध्येऽसत्त्वप्रसङ्गस्यावर्जनीयत्वादित्याशयेनाह ॥ **अनिष्टेति** ॥ नन्वत्रासद्वैलक्षण्यस्य साध्यकोटिनिवेशो ममाभिमतः । पूर्वत्र तु भावत्वाभावत्वानधिकरणत्वयोर्विशिष्टे साध्ये वैयर्थ्यानिस्तारेण पक्षतावच्छेदककोटावेव निवेशः। न चात्रापि वैयर्थ्यं तदवस्थमिति वाच्यम् । सत्त्वानाधारत्वस्य तुच्छे सद्भावेऽपि ज्ञानबाध्यत्वादर्शनेन प्राप्ताप्रयोजकत्वस्यासद्वैलक्षण्यविशेषणेन परिहारसम्भवेन वैयर्थ्याभावेन पूर्ववैलक्षण्यात् । अत एव न्यायामृते व्यर्थविशेष्यत्वं नेत्युक्तम् । एवं चासत्त्वस्यापि निषेधेन तदप्राप्त्या नोक्तानिष्टमिति चेन्न । एवमप्यसत एव सत्त्वानधिकरणत्वनियमेनासत्त्वप्राप्तेरपरिहारेण तन्निषेधस्य च वक्ष्यमाणरीत्या व्याहत्यादिनाऽत्रानाशङ्कनीयत्वेनानुपपन्नतयोक्तानिष्टस्य तदवस्थत्वात् । अत एव विशिष्टसाध्यपक्षेऽपि सदसत्त्वापत्तिं प्रसञ्जयिष्यतीत्याशयात् । सर्वथा सत्त्वानधिकरणत्वादिपक्षाणामवश्यनिराकरणीयत्वात्पूर्ववत्पूर्वपूर्वकल्पदूषणोपमर्दकतयोत्थापयितुमशक्यत्वात्सत्त्वानधिकरणत्वमात्रसाध्यपक्षे च मूलोक्तासत्पदस्यासत्त्वापादनेन सार्थक्येऽपि तस्य वैयर्थ्यापत्त्या वक्ष्यमाणरीत्याऽर्थान्तरपरतया योजनायां तदसम्भवेनाव्यवहितनिरस्तपक्षस्य चासत्त्वानधिकरणत्वस्य पक्षविशेषत्वाभिप्राये पर्यवसानगत्या साध्यविशेषणत्वाभिप्राये च साक्षादेव विशिष्टविषयकत्वादुक्तदूषणानिस्तारेण तं प्रदूष्य विशिष्टसाध्यपक्ष एव दूषणान्तरपरतां भाष्यस्याभिप्रेत्य सम्भावितकल्पानुत्थापयितुं दूषणान्तरं प्रतिजानीते ॥ **किञ्चेति** ॥ यद्वैवं सर्वथा सत्त्वानधिकरणत्वे पराभिमतिं सिद्धवत्कृत्यानिष्टानिस्तारादित्युक्तम् । अधुना परमुखेनैव तदभिप्रायं निश्चित्य दूषयिष्याम इत्याशयेन विकल्पयति ॥ **किञ्चेति** ॥

कल्पानामसम्भावनानिरासाय पीठिकामारचयति ॥ **न सत्त्वं नामेति** ॥ सत्त्वविशेषणस्याविशेषितत्वस्य विशेषनिरूप्यत्वात्तत्पक्षानन्तर्यमविशेषितत्वपक्षस्य । सर्वथेत्यस्यानधिकरणत्वविशेषणत्वान्मुख्यतः पराभिप्रेतत्वाच्च तत्पक्षस्यान्यत्वम् ॥ **असतोऽपि वैलक्षण्यमिति** ॥ अत्रोत्तरत्र च यथास्थितमूलानुवादः । असतो वैलक्षण्यमपीत्येवं चार्थः । अत्र पदार्थभेदवादिन इत्येतावतैव सम्भवेन सदित्यस्य हेतुशरीरप्रवेशस्यानवश्यकत्वादाह ॥ **भेदभङ्गादिति** ॥ **भेदवादिन इति** ॥ सत्त्वासत्त्वव्यवस्थाङ्गीकारिण इत्यर्थः । यद्वा त्वया साध्यमानं सदसत्त्वपर्यवसन्नं यत्सदसद्वैलक्षण्यं तदङ्गीकारिण इत्यर्थः । ननु कथं नानिष्टं तस्य सदसत्त्वापादकतयैव सत्त्ववादिनं प्रत्यनिष्टत्वादित्यत आह ॥ **मया हीति** ॥ तर्हि विरोध एवमपि त्वां प्रत्यनिष्टत्वाभावे मां प्रत्यपि नानिष्टत्वमित्यत आह ॥ **स्वोपाधाविति** ॥ त्वया तु स्वोपाधावपि निषेधाङ्गीकारादिति भावः । ननु सत्त्वानधिकरणत्वोक्तावसत्त्वापत्तिस्तदा स्याद्यद्यसद्वैलक्षण्यमिति तन्न निषिध्येत । असत्त्वानधिकरणत्वोक्तौ सत्त्वापत्तिस्तदा स्याद्यदि सद्वैलक्षण्यमिति तन्न निषिध्येत तथा चैकैकनिषेधे सत्वादिलाभेऽपि उभयनिषेधस्थले सत्वादिपर्यवसानानुपपत्त्या उभयनिषेधमात्रस्य सिद्ध्याऽनिर्वचनीयसिद्धिरित्याशङ्कते ॥ **द्वयोरपीति** ॥ असत एव सद्वैलक्षण्यं सत एवासद्वैलक्षण्यमिति नियमप्राप्तसत्त्वासत्त्वयोर्निवारणस्याशक्यतया पुनस्तन्निषेधे च व्याहतिप्रसङ्गेन निषेधस्यैवानुपपत्तिरित्याह ॥ ॥ **तर्हीति** ॥ ननु नियमवशान्निषेधानुपपत्तौ निषेधान्यथाऽनुपपत्त्या नियम एव किं न परित्याज्य इत्यत उभयनिषेधस्य नियमस्येव प्रमाणान्तरेणासिद्ध्या न तद्बलेन नियमभङ्ग इत्याह ॥ **न हीति** ॥ तथा च निषेधद्वयसिद्धौ नियमभङ्गसिद्धिस्तत्सिद्धौ च व्याहत्यभावसिद्धिस्तत्सिद्धौ च निषेधद्वयसिद्धिरिति चक्रकम् । निषेधद्वयसिद्धौ नियमभङ्गेन व्याहत्यभावसिद्धिस्तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयो वेति भावः । ननु निषेधद्वयसाधकज्ञानबाध्यत्वादिहेतोर्व्याप्तिपक्षधर्मतोपेततया निषेधद्वयं विनाऽपर्यवसानात्तत्साधनाय च हेतौ प्रवृत्ते व्याहतिः प्रमाणसिद्धेऽर्थेऽकिञ्चित्करैवेति हेतुबलायत्तसाध्यसिद्धेर्व्याहत्यभावसिद्ध्यनधीनत्वान्न चक्रकादीत्याशयेन शङ्कते ॥ **अस्मादेवेति** ॥ हेतौ प्रवृत्ते साध्यसिद्धिसम्भवेऽपि सति व्याघाते हेतुप्रवृत्तिरेव न सम्भवति । अन्यथा व्याघातवार्तैवोच्छिद्येतेत्याशयेन व्याहतेर्दूषणत्वं परमुखेनैवानेतुं प्रतिबन्दीमुखेनाह ॥ **तर्हीति** ॥ भेदवादिन इत्येतद्बललब्धं समाधानं वक्तुं तन्निवर्त्यां शङ्कां दर्शयति ॥ **अमुख्येति** ॥ सदद्वैतवादिनः सदद्वैतभङ्गेन प्रपञ्चेऽपि मुख्यसत्त्वस्यानङ्गीकार्यत्वेऽपि सद्भेदवादिनो मम प्रपञ्चेऽपि मुख्यसत्त्वाङ्गीकारो नानुपपन्न इत्याशयेन भेदवादिन इत्युक्तिरिति भावः । प्रमाणं श्रुतिस्तर्को ज्ञानबाध्यत्वानुमानं दृश्यत्वादिकं चाभिमतम् । अत एव हेत्वन्तराभिधानेऽपीति वक्ष्यति । यद्वा प्रमाणे, प्रकृते श्रुत्यनुमानरूपे, तर्को, विश्वस्य सत्यत्वे ज्ञानबाध्यत्वं न स्यादित्यादिस्तदनुग्राहकोऽथवोक्तवक्ष्यमाणानां प्रमाणतदनुग्राहकतर्काणामित्यर्थः ।

स०— **अनिष्टानिस्तारादिति** । असत्त्वापत्तिरूपानिष्टानिस्तारादित्यर्थः । असत्वानधिकरणत्वे वादिप्रतिवादिसिद्ध इत्युक्तत्वात्कथमसत्वमादाय पर्यवसानमिति न वाच्यम् । असत्त्वानधिकरणत्वरूपविशेषणस्योभयसंमतत्वेऽपि तदुपादानस्य प्रतिज्ञार्थे धर्मिणि साध्ये वा अविवक्षितत्वेनासत्त्वमादाय पर्यवसानस्याप्रत्यूहत्वात् न ह्युभयसंमतं सर्वं प्रतिज्ञार्थे प्रविशत्यतिप्रसङ्गादिति भावः । अथ प्रतिज्ञार्थे साध्यविशेषणत्वेन तदुपादीयते अतो नासत्त्वापत्तिरूपमनिष्टमिति, तत्रांशतः सिद्धसाधनताया उक्तत्वात् । अपरं च दोषं तत्र वक्तुमाह ॥ **किञ्चेत्यादिना** ॥ **एवमेवेति** ॥ अविशेषितसत्त्वं नाम सन्मात्रत्वं तदनाधारत्वमेकसत्त्वानाधारत्वेऽपि भवतीत्यर्थः ॥ **भेदभङ्गप्रसङ्गादिति** ॥ अनेकसर्वगतसत्त्वानां स्वस्वाधारद्रव्याभिन्नानामेकत्राङ्गीकारे तेनाप्यभिन्नत्वापत्त्या यद्येनाभिन्नं तत्तदत्यन्ताभिन्नेनाप्यभिन्नमिति व्याप्त्या एकस्य सर्वात्मकत्वापत्त्या भेदभङ्गप्रसङ्गादित्यर्थः ॥ ननु सदसत्त्वाभ्युपगमस्य विरोधेन दूषितत्वात्कथं सिद्धार्थतेत्यत आह ॥ **स्वोपाधाविति** ॥ स्वस्य घटस्योपाधिराश्रयो भूतलादिः तस्मिन्नास्तीति निषेधप्रतियोगित्वाभावात्सत्वं परस्य पटस्योपाधावाश्रये निषेधप्रतियोगित्वादसत्त्वमित्येकस्य देशभेदात्सदसत्वे न विरुद्ध इत्यर्थः । ननु सर्वथा सत्त्वानधिकरणत्वं नाम तदितरसर्वसत्त्वानधिकरणत्वे सति तदीयसत्त्वस्याप्यनधिकरणत्वम् । घटे घटीयसत्ताया अपि प्रतिषेध इति यावत् । एवं च सत्यवादिमतेऽपि घटे परोपाध्यवच्छेदेन घटीयसत्ताप्रतिषेधः सिद्ध एव तन्तुषु घटो नास्तीति प्रतीतेरिति न तु तदीयसत्ताप्रतिषेधोऽपि सर्वथेति विशेषणमहिम्नैव सर्वाधिकरणसंबन्धी विवक्षितः । अतः कथं परोपाधिमात्रगतनिषेधमादाय पर्यवसानम् । एवमसत्त्वप्रतिषेधोऽपि सर्वथैव विवक्षितः । तेन सर्वाधिकरणसंबन्ध्यसत्त्वप्रतिषेधलाभे कथं स्वोपाधावेव सत्त्वमादाय पर्यवसानम् । अतो नोक्तसिद्धसाधनतेत्याशङ्कते ॥ **द्वयोरपि सर्वथेति** ॥ तदीयसत्त्वासत्त्वयोरित्यर्थः ॥ **केचिदिति** ॥ ते मयावेकवचनस्येत्यत्र अनुदात्तं सर्वमपादादाविति प्रतिषेधस्येत्यर्थः ॥

प०— **चतुर्थेति** ॥ अविशेषितसत्त्वेतिपक्षेत्यर्थः । स्वोपाधौ स्वाश्रये भूतलैकदेशादौ ॥ **अयं विप्रतिषेध इति** ॥ सत्त्वासत्त्वयोस्तदभावयोर्वा एकत्रानवस्थानरूपविरोध इत्यर्थः ॥ **अस्मादेवेति** ॥ बाध्यत्वाच्छुक्तिरूप्यवदिति प्रागुक्तहेतोरित्यर्थः ॥ **वक्ष्यमाणेति** ॥ माता वन्ध्येति प्रतिज्ञात्रा पुरुषेण प्रतिज्ञाऽनन्तरं स्त्रीत्वादित्यादिकं यं हेतुं स्वविवक्षितं वक्ष्यति तेन हेतुनेत्यर्थः । **सममिति** ॥ विवादपदं सदसद्विलक्षणमिति प्रतिज्ञायामपि सममित्यर्थः ॥ **असतोऽपि वैलक्षण्यमिति** ॥ न केवलं सदन्तरादित्यपेरर्थः ॥ **इत्युक्तमिति** ॥ यतोऽस्माकं तावद्भावाभावत्वविषयं प्रमाणं तत्वगोचरमेवेत्यादिग्रन्थेनेति भावः ॥ **प्रमाणतर्काणामिति** ॥ नेहनानेत्यादिप्रमाणानां बाध्यत्वादित्यादितर्काणामित्यर्थः ।

'तेमयावेकवचनस्येति' विहितादेशस्य पादादौ निषेधात्त्वानिष्टमिति निर्देशः स्यादित्यत आह ॥ **तत्र न पादादाविति** ॥ अष्टमस्याद्यपादे 'अनुदात्तं सर्वमपादादावि'त्यनुवर्तमाने तेमयावेकवचनस्येति युष्मदस्मदोस्ते मे इत्यादेशविधायके सूत्रे अपादादौ पादादौ न भवत इति निषेधादत्र त इति कथमिति शङ्कायां 'नञा निर्दिष्टमनित्यमि'त्यादेशनिषेधोऽनित्य इत्यदोष इत्युत्तरं ज्ञेयमित्यर्थः । अनित्यत्वं च इदमस्थमुरित्युकारेण ज्ञाप्यते । नविभक्तौ तुस्माइति नञा निर्दिष्टस्य नित्यत्वे हि निषेधादेव प्राक् दिशो विभक्तिरिति विभक्तिसंज्ञकथमुन्प्रत्ययस्थमकारस्य हलन्त्यमितिलोपाप्रसक्तेर्मकाररक्षणार्थकोकारो नोच्येतेति ज्ञापकत्वमुकारस्य ज्ञेयमित्येके। 'इकोचिविभक्तावि'त्यत्राज्ग्रहणेन ज्ञाप्यत इत्यन्ये । 'नलुमताङ्गस्ये'ति नञानिर्दिष्टस्य नित्यत्वे हि हेवारीत्यत्र विभक्तिनिमित्तनुमोऽप्राप्तेस्तत्र नुमभावार्थमज्ग्रहणमदोनर्थकमिति नलुमतेति नञा निर्दिष्टमनित्यमिति ज्ञायत इति । अपादादावित्यस्यार्थ किंन पादादाविति ।

या०—**सिद्धे** ॥ सतीति शेषः ॥ **अधिकं साध्यत इति** ॥ तथा चोभयसाधनान्न पूर्वोक्तदोष इति भावः ॥ **अनिष्टानिस्तारादिति** ॥ असिद्धसन्निधानेऽपि सिद्धस्य तत्त्वानपायेन पूर्वोक्तसिद्धसाधनतारूपानिष्टानिस्तारादित्यर्थः ॥ **परोपाधाविति** ॥ नन्वेकस्यैव सदसत्त्वं विरुद्धं कथमङ्गीकृतमित्यत आह ॥ **स्वोपाधाविति** ॥ स्वस्य घटस्योपाधिराश्रयो भूतलादिस्तस्मिन् घटो नास्तीति निषेधाप्रतियोगित्वात्सत्त्वं घटस्याङ्गीकर्तव्यम् । एवं परस्य पटस्योपाधावाश्रये घटो नास्तीति निषेधप्रतियोगित्वादसत्त्वमप्यङ्गीकार्यमिति नैकस्य सदसत्त्वं विरुद्धमित्यर्थः । तथाच घटादेः स्वोपाधौ सर्वथाऽसत्त्वानधिकरणत्वं परोपाधौ सर्वथा सत्त्वानधिकरणत्वं चास्तीति सिद्धसाध्यतेति भावः । न हि, सर्वथेति विशेषणमहिम्ना प्रतिषेधस्य सर्वाधिकरणसम्बन्धिता विवक्षिताऽतो नोक्तसिद्धसाध्यतेत्याशयेन शङ्कते ॥ **द्वयोरपीति** ॥ सत्त्वासत्त्वयोरित्यर्थः ॥ **वक्ष्यमाणहेतुनैवेति** ॥ मे माता वन्ध्येति प्रतिज्ञा येन कृता तेन वक्ष्यमाणो यः स्त्रीत्वादिर्हेतुस्तेनेत्यर्थः ॥ **न पादादाविति** ॥ **प्रतिषेधस्येति** ॥ तेमयावेकवचनस्येत्यत्रानुदात्तं सर्वमपादादावित्यनुवर्तत इत्यर्थः । न पादादावित्यपादादावित्यस्यार्थानुवाद इति ज्ञातव्यम् ॥

श्री०—**भेदभङ्गादिति** ॥ घटस्य पटादिनिष्ठसत्वाङ्गीकारे पटाद्यैक्यापत्त्या भेदभङ्गादित्यर्थः ॥ **यतः सत एवेति** ॥ तथा चासत्वानधिकरणत्वस्य सिद्धत्वात्तस्मिन् साध्ये सद्रूपत्वं प्राप्तमित्यर्थः ॥ **यतश्चासत इति** ॥ तथाच सर्वथा सत्वानधिकरणत्वे साध्येऽसद्रूपत्वं प्राप्तमिति सदसत्वं प्राप्तमित्यर्थः ॥ **सर्वथेति** ॥ स्वोपाधौ चेत्यर्थः । तथाऽप्येतद्विशेषणसामर्थ्यात्सदसत्वं न प्राप्नोतीत्याशयः । अस्माद्बाध्यत्वादिति हेतोः सकाशादेव । शङ्कते ॥ **सम्भावित इति** ॥ **किं च सत एवेति** ॥ सत्वेन

प्रत्यक्षादिना प्रमितस्यैवेत्यर्थः । तत् प्रत्यक्षादिप्रमाणम् । ननु नेह नानेति श्रुत्या दृश्यत्वाद्यनुमानैश्च विश्वमिथ्यात्वसिद्धेस्तदन्तर्गतप्रत्यक्षादिप्रमाणं विश्वस्यातत्त्वावेदकमेव भविष्यतीत्यत आह ॥ **परकीयेति** ॥ नेह नानेत्यादि प्रमाणानां बाध्यत्वादितर्काणाम् । तथाच श्रुत्यादिप्रामाण्ये सिद्धे विश्वमिथ्यात्वसिध्या तदन्तर्गतस्य प्रत्यक्षादिप्रमाणस्यामुख्यसत्त्वावेदकत्वसिद्धिस्तत्सिद्धौ च तद्विरोधाभावेन श्रुत्यादिप्रामाण्यसिद्धिरित्यन्योन्याश्रय इति भावः ।

च०— **न पादादाविति** ॥ 'अनुदात्तं सर्वमपादादावि'ति सूत्रघटकस्यापादादावित्यस्य 'तेमयावेकवचनस्ये'त्यादावनुवर्तनादिति भावः ॥

अनु०— **यद्युच्यतेऽपि सर्वस्मादिति सद्भेदसंस्थितिः ॥**
**सन्मात्रत्वं ब्रह्मणोऽपि तस्मात्तदपि नो भवेत् ॥**

सु०— द्वितीये दूषणान्तरमाह ॥ यद्युच्यत इति ॥ अपिशब्दो दूषणसमुच्चये । सर्वस्मादपीत्यभिविधौ वा । यदीति श्रवणात्तर्हीति ग्राह्यम् । सर्वशब्दोऽनेकार्थः । यद्यनेकस्मात्सतो वैलक्षण्यम् । अनेकसत्त्वानधिकरणत्वं विश्वस्य साध्यमित्युच्यते तर्हि सतां भेदसंस्थितिस्ततश्चापसिद्धान्तः । इदमुक्तं भवति । विश्वमनेकसत्ताऽनधिकरणमिति प्रतिजानताऽनेकसत्त्वान्यङ्गीक्रियन्ते न वा । द्वितीयेऽनेकविशेषणं व्यर्थम् । आद्येऽप्येकस्मिन्नेवार्थेऽनेकानि सत्त्वान्युताधारभेदेन । नाद्यः । वैयर्थ्यात् । द्वितीये त्विदमुपतिष्ठते ॥ सद्भेदसंस्थितिरिति ॥ अनेकसत्त्वाधिकरणताप्रतिषेधसामर्थ्यादेकैकसत्त्वस्वीकारापत्तेरिति वा । तृतीयस्य वेदं दूषणान्तरम् । यदि सर्वस्मात्सतो वैलक्षण्यं सर्वसत्त्वानधिकरणत्वं विश्वस्य साध्यतयोच्यते तर्हि सद्भेदसंस्थितिः । न ह्यनेकसदनङ्गीकारे सर्वशब्दस्य प्रयोजनमस्ति । सन्त्येवानेकानि सन्ति पारमार्थिकं त्वेकमेवेति चेन्न । तत्सिद्ध्यर्थमेवाद्यापि भवता प्रयत्नात् । तदनधिकरणत्वसाधनेंऽशेऽपसिद्धान्तात् । चतुर्थे दूषणान्तरमाह ॥ सन्मात्रत्वमिति ॥ अविवक्षितविशेषं सत्त्वं यस्माद्ब्रह्मणोऽप्यस्ति । तस्मात्कारणात्तस्मात्सतो ब्रह्मणस्तद्वैलक्षण्यम् । तत्सत्त्वानधिकरणत्वमपि विश्वस्य नोऽस्माकं मतं भवेत् । तथाच सिद्धत्वात्तदपि साध्यं नो भवेत् । अविवक्षितविशेषसत्त्वानधिकरणत्वे साध्ये ब्रह्मगतसत्त्वानधिकरणतयाऽपि प्रतिज्ञातार्थोपपत्तेरर्थान्तरतेति ।

वा०—पक्षान्तरसमुच्चायकापिशब्दबलात्पक्षान्तरदूषणपरमुत्तरवाक्यमित्येव प्रतीयते । तत् न वक्ष्यमाणरीत्या तावदेवापि तु पूर्वत्र दूषणान्तरपरमपीत्याशयेनाह ॥ **द्वितीय इति** ॥ तर्ह्यपिशब्दानुपपत्तिरित्यतो

भिन्नक्रमतया तद्योजनेत्याशयेन तदर्थं समुच्चयं घटयति ॥ **अपीति** ॥ अस्मिन्पक्षे व्यवहितान्वयप्रसङ्गादनन्तरान्वयेनार्थान्तरमाह ॥ **सर्वस्मादिति** ॥ एवं चानेकत्वावच्छिन्नसर्वसंग्रहेऽपि नैकस्यात्र पक्षे संग्रहः। सर्वसत्त्वानधिकरणत्वपक्षे तु तस्यापि संग्रह इति भेदः। अस्यैव वाक्यस्य पक्षपरिग्रहतत्तद्दूषणपरतया योजनाय तदनुकूलमध्याहरति ॥**यदीतीति**॥ द्वितीयपक्षदूषणत्वं घटयितुमाह ॥**सर्वेति**॥ एवमपि सर्वस्मादित्युक्तिमात्रेण न द्वितीयपक्षपरिग्रहस्य सिद्धिर्नापि तद्दूषणस्येत्यतः पूर्ववाक्यात्सतो वैलक्षण्यमित्यस्यानुवृत्तिमपसिद्धान्त इत्यस्याध्याहारं चाभिप्रेत्योभयं घटयति ॥ **यदीति** ॥ नन्वनेकसत्त्वाधिकरणत्वसाधने सद्भेदप्राप्तावपि न तदनधिकरणत्वसाधने साऽनेकसत्त्वानङ्गीकारेणाङ्गीकारेऽप्येकस्मिन्ननेकसत्त्वाङ्गीकारेण वा तदनधिकरणतासाधनसंभवादित्यतो भाष्यकारस्य विकल्पाभिप्रायं स्फुटत्वादेकपक्षदूषणानभिधानं चाभिप्रेत्य द्वितीयपक्षदूषणपरतया भाष्यं योजयितुमाह ॥ **इदमिति** ॥ भाष्यस्य विकल्पतदाद्यपक्षदूषणानुक्तिप्रयुक्तन्यूनतामसहमानः प्रकारान्तरेण भाष्याशयमाह ॥ **अनेकेति** ॥ एकैकस्मिन्नेकैकसत्त्वस्याप्यभावे सत्त्वमात्रस्य प्रतिषेध्यतयाऽनेकपदवैयर्थ्यापातेनानेकसत्त्वानधिकरणताप्रतिषेधोऽनुपपन्न इत्येकैकसत्त्वप्राप्तिरिति वा उक्तं भवतीत्यन्वयः। सर्वशब्दस्वारस्याय तृतीयपक्षदूषणपरतयाऽपि भाष्यं योजयति ॥ **तृतीयस्य चेति** ॥ पूर्वमनयोरेव पक्षयोर्न द्वितीयतृतीयावित्येकोक्तिवदत्रापि द्वितीयतृतीययोर्दूषणान्तरमाहेति वक्तव्ये योगविभागोऽप्येतत्स्वारस्यज्ञापनायेति। अत्रापि पूर्ववदेव सर्वशब्दवैयर्थ्यानुपपत्त्या सद्भेदप्राप्त्याऽपसिद्धान्त इत्याह ॥**न हीति**॥ अनेकसत्प्राप्तावपि पारमार्थिकानेकाप्राप्त्या नापसिद्धान्त इति कल्पद्वयेऽप्यपसिद्धान्तपरिहारमाशङ्कते ॥ **सन्त्येवेति** ॥ अनिर्वचनीयसिद्धेः पूर्वमनेकसर्वनिषेधान्यथाऽनुपपत्त्या पारमार्थिकानामेव प्राप्ते तत्पारमार्थिकत्वाभावस्यानिर्वचनीयसिद्ध्यधीनतयाऽन्योन्याश्रयादिकमित्याशयेनाह ॥ **तदिति** ॥ अस्तु वाऽपारमार्थिकानेकप्राप्तिस्तथाऽपि पारमार्थिकापारमार्थिकसर्वसत्त्वानधिकरणत्वे साध्ये पारमार्थिकसत्त्वानधिकरणत्वस्य त्वत्सिद्धान्तत्वेऽपि विश्वस्मिन्नपारमार्थिकसत्त्वस्य त्वदभिमततया तदनधिकरणत्वांशेऽपसिद्धान्तः। अपारमार्थिकसर्वसत्त्वानधिकरणत्वसाधने वाऽन्यगतापारमार्थिकसत्त्वानङ्गीकारेऽपि तत्तद्गतापारमार्थिकसत्त्वस्य तस्मिंस्त्वयाऽप्यङ्गीकारात्तदनधिकरणत्वांशेऽपसिद्धान्तः स्यादेवेत्याह ॥ **तदनधिकरणत्वेति** ॥ अस्मिन्वाक्ये सतो वैलक्षण्यमित्यस्य नानुवृत्तिस्तस्मात्तदित्यनेनैव तदर्थलाभो, विश्वस्येत्यनुवृत्तिर्द्वितीयपादस्य चानुवृत्तिरित्याशयेनाह ॥ **तस्मादिति** ॥ एवं सति सिद्धं दूषणमाह ॥ **अविवक्षितेति** ॥

स० — **अपसिद्धान्तादिति** ॥ व्यावहारिकसत्त्वानधिकरणत्वसाधनेऽपसिद्धान्तादित्यर्थः ॥ अंशे अपसिद्धान्तादिति पाठे पारमार्थिकसत्त्वानङ्गीकारेऽपि व्यावहारिकसत्त्वस्य प्रपञ्चेऽङ्गीकृतत्वेन तदुभयाभावे साध्यमानेंऽशेऽपसिद्धान्तादित्यर्थः।

प०—**द्वितीय इति** ॥ अनेकसत्त्वानधिकरणत्वमिति पक्ष इत्यर्थः ॥ **दूषणसमुच्चय इति** ॥ प्रागुक्तसिद्धसाधनत्वरूपदूषणेन सहेहोच्यमानदूषणसमुच्चय इत्यर्थः । विकल्पपूर्वकं योजनां विनैव प्रकारान्तरेण तद्धेतुत्वमाह ॥ **अनेकसत्त्वानधिकरणताप्रतिषेधेति** ॥ तृतीयस्य वेति सर्वसत्त्वानधिकरणत्वपक्षस्येत्यर्थः ॥ **अनेकानि संतीति** ॥ अनेकसत्यवस्तूनीत्यर्थः ॥ **अंशेऽपसिद्धान्तादिति** ॥ असत्त्वानधिकरणत्वांशेऽपसिद्धान्ताभावेऽपि व्यावहारिकसत्त्वानधिकरणत्वांशेऽपसिद्धान्तः । तादृशसत्त्वस्य जगति त्वया स्वीकारादिति भावः ॥ **चतुर्थ इति** ॥ अविशेषितसत्त्वेतिपक्ष इत्यर्थः । तस्मादित्यस्यावृत्तिमुपेत्यार्थमाह ॥ **तस्मात्सतो ब्रह्मण इति** ॥ तस्मात्तदपि नो भवेदित्यस्यार्थान्तरमाह ॥ **सिद्धत्वात्तदपीति**॥ 'अमानोनाः प्रतिषेध' इति निषेधार्थो नोशब्दः ।

या०— **अनेकविशेषणेति** ॥ त्वन्मत इति शेषः । तेन तत्त्ववादिमते सिद्धसाधनतापरिहारार्थत्वान्न वैयर्थ्यमिति शङ्काऽनवकाशः । न च प्रतिवादिनः सिद्धसाधनतापरिहारस्यापि मत्प्रयोजनत्वान्न वैयर्थ्यमिति वाच्यम् । सख्यामभावो निरूप्यत इति भाट्टमतानुसारिणा त्वयाऽसतां प्रतिषेध्यानामनेकसत्त्वानां परप्रसिद्धिमात्रेण प्रतिषेधस्य साधयितुमशक्यत्वादित्यभिप्रायात् । अत एवास्वरसात्प्रकारान्तरमाह ॥ **अनेकसत्त्वाधिकरणताप्रतिषेधेति** ॥ **पारमार्थिकं त्वेकमेवेति** ॥ तथा च नाद्वैतहानिरिति भावः ।

श्री०— द्वितीयेऽनेकसत्वानधिकरणत्वपक्षे ॥ **दूषणसमुच्चये** ॥ प्रागुक्तसिद्धसाधनत्वरूपदूषणेन सहोच्यमानदूषणसमुच्चय इत्यर्थः ।

**सु०— अथवा किमिदं सत्त्वं नाम । यदनधिकरणत्वं विश्वस्य साध्यते । किं सामान्यसत्त्वमुत स्वरूपसत्त्वम् । आद्यं दूषयति ॥ यद्युच्यत इति ॥ सर्वस्मात्सर्वार्थानुगतात्सामान्याद्वैलक्षण्यं तदनाधारत्वमिति यावत् । साध्यतया यद्युच्यते तदा सद्भेदसंस्थितिः । यदि सत्त्वैव नास्ति तदा तदनधिकरणत्वप्रतिज्ञा व्यर्था स्यात् । नेदं शशविषाणाधिकरणमितिवद्विप्रतिपत्तेरेवानुदयात् । सत्तासामान्याङ्गीकारे च सद्भेदो दुर्वार एव । न ह्येकाश्रयं सामान्यमस्ति । सन्ति सत्ताधिकरणानि सन्तीति चेत्तर्हि कानीति वक्तव्यानि । द्रव्यादीनीति चेत्कथं तर्हि तेषामेव तदनधिकरणत्वसाधनम् । व्यवहारतः सर्वमस्ति । परमार्थतस्तु नेति चेन्न । उक्तोत्तरत्वात् । एतच्च परमतेनोत्तरमुक्तं वेदितव्यम् । स्वमतेन तु सिद्धसाधनत्वं द्रष्टव्यम् ।**

द्रव्याद्यतिरिक्तानुगतसत्त्वसामान्यस्यैवानङ्गीकारात् । द्वितीयं दूषयति ॥ सन्मात्रत्वमिति ॥ सत्तानपेक्षं सत्त्वं सन्मात्रत्वं स्वरूपसत्त्वमिति यावत् । तद्ब्रह्मणोऽप्यस्ति यतस्तस्मात्कारणा-त्तस्माद्ब्रह्मणस्तद्वैलक्षण्यमब्रह्मत्वमपि विश्वस्य नो भवेदिति । अथवा सामान्यसत्तापक्षे दोषा-न्तरमनेनोच्यते । तथा हि सत्तासामान्यविधुरस्यापि ब्रह्मणः सन्मात्रत्वं स्वरूपसत्त्वं तावदस्ति । न पुनः सत्त्ववैधुर्यादसदनिर्वाच्यं वा ब्रह्म । तस्मात्सत्तावैधुर्यस्यासत्त्वाद्यहेतुत्वात्तत्सत्तानधि-करणत्वमपि विश्वस्य नो भवेदिति । एतेन ब्रह्मस्वरूपं सत्त्वमिति पक्षोऽपि निरस्तः । अर्थक्रियाकारित्वं ज्ञानाबाध्यत्वं वा सत्त्वमिति पक्षद्वयं स्फुटदोषत्वान्न दूषितम् । अर्थक्रिया-वैधुर्यसाधने हि बाधः स्फुट एव । परमार्थतो नास्तीत्यप्युक्तोत्तरम् । सत्यस्य नार्थक्रियेति वदता मिथ्याभूतस्यैवार्थक्रियाऽङ्गीकृतेति सिद्धान्तविरोधश्च । अर्थक्रियाविधुरस्यापि ब्रह्मणः सत्त्वात्तद्वैधुर्यं नासत्त्वादिहेतुः । अर्थक्रियाऽनधिकरणतामात्रसाधनं प्रकृतानुपयुक्तं तद्विरुद्धं च । ज्ञानाबाध्यत्ववैधुर्यं च तद्बाध्यत्वमेव । तच्च हेत्वर्थान्न भिद्यत इति स्फुटमेव । हेत्वन्तराभि-धानेऽपि वक्ष्यमाणन्यायेन बाधसिद्धार्थताद्यापत्तिः स्फुटैव । यदत्रोक्तम् । त्वयाऽपि द्वे तत्त्वे सदसदिति तत्त्वं व्यवस्थापयता यदेव सत्त्वेन व्यवस्थापितं तस्यैव मयाऽप्यङ्गीकारान्न सच्छ-ब्दार्थानिरुक्तिरिति । तदतीव मन्दम् । मया हि । क्वचित्सदिति भावो व्यवह्रियते । क्वचिच्च प्रतिपन्नोपाधौ निषेधाप्रतियोगि । क्वापि मूर्तमित्यादि तत्सर्वं च निरस्तमिति ।

वा० –अपिशब्दस्वारस्यात्पक्षान्तरनिराकरणपरतया यद्युच्यत इति श्लोकं योजयति ॥**अथवेति**॥ न च सत्त्वं भावत्वं विद्यमानत्वं वा सत्तासामान्यं वा स्वरूपसत्त्वं वेति पूर्वमेव विकल्प्याद्यद्वयदूषणपरतया वैलक्षण्यं सत-श्चेति वाक्यमवतार्य तृतीयचतुर्थदूषणपरतयैतच्छ्लोकः कुतो नावतारितइति वाच्यम् । सर्वलोकाभिधानादि-प्रसिद्ध्याश्रयेण प्रवृत्तयोर्भावत्वविद्यमानत्वकल्पयोर्वादिप्रसिद्धविभागाश्रयेण प्रवृत्तसत्तासामान्यस्वरूपसत्त्व-कल्पाभ्यां न समकक्षतेत्याशयात् । सर्वशब्दस्य सर्वार्थानुगतलक्षणामभिप्रेत्यैतत्कल्पं भाष्यारूढं करोति ॥ **सर्वस्मादिति** ॥ सर्वस्माद्वैलक्षण्यं लक्षणतया यद्युच्यत इत्यपि योजयति ॥ **साध्यतयेति** ॥ अत्र सत्ताया अनङ्गीकारेऽपि तदनधिकरणत्वस्य सुसाधत्वान्न सद्भेदसंस्थितिरिति दूषणमुपपन्नमित्यतो-ऽनङ्गीकारपक्षं बहिरेव प्रदूष्याङ्गीकारपक्षं परिशेष्य भाष्यान्तरपरत्वेन योजयितुमनङ्गीकारपक्षदूषणस्य पूर्वत्र सर्वशब्दवैयर्थ्यस्यानधिकरणत्वमात्रसाधने बाधेनानुपपन्नत्वात्प्रकारान्तरेण तं दूषयति ॥ **यदीति** ॥ **नेदमिति** ॥ 'अलीके सुमनसां मूकतैवे'ति न्यायेनाप्रसिद्धप्रतिषेधायोगादिति भावः । अन्यथा नित्यमेकमनेकसमवेतं सामान्यमिति तल्लक्षणव्याघातः । उपदेशादिनैकस्मिन्नेव सङ्गतिग्रहणाद्युपपत्त्या

वैयर्थ्यं चेत्यभिप्रेत्याह ॥ **न हीति** ॥ ततश्चापसिद्धान्त इति भावः । सत्ताऽधिकरणानेकाङ्गीकारेऽपि नापसिद्धान्त इति गूढाभिसन्धिराशङ्कते ॥ **सन्तीति** ॥ अत्र कथं तर्हीत्यादिना व्याहतिं वक्तुमन्यस्य सत्तासामान्याधिकरणत्वे विश्वस्य तदनधिकरणत्वसाधनेऽपि न व्याघात इति स्वयमन्याभावे प्रतिपादनीये किं तेन, परमुखेनैव व्याघातं व्युत्पादयिष्यामीत्याशयेनाशयमजानान इव पृच्छति ॥ **तर्हीति** ॥ शङ्किता स्वाशयमुद्घाटयति ॥ **व्यवहारत इति** ॥ **उक्तेति** ॥ तत्सिद्ध्यर्थमेवाद्यापीत्यादिनेत्यर्थः । स्वमतसिद्धदूषणप्रायेणास्यापि तथात्वभ्रान्तिं निवारयति ॥ **एतच्चेति** ॥ एतेनानङ्गीकारपक्षे स्वोक्तदूषणमपि परमतेनेति सूचयति । अत एव तत्त्वोद्योतेऽत्राप्यर्थान्तरमेवोक्तमिति ध्येयम् । कुतोऽस्य न स्वमतसिद्धत्वमत्राह ॥ **द्रव्यादीति** ॥ अनुगतग्रहणेन न ह्येकाश्रयमित्युपपादनस्य स्वासिद्धत्वं दर्शयति । कुतो नानुगताङ्गीकार इत्यतो द्रव्यातिरिक्तत्वपक्षेऽपि तत्सम्भवेऽप्यनुगतस्य द्रव्याद्यभेदे द्रव्यादेरप्यभेदापत्त्या न मत्पक्षे तत्सम्भव इति सूचयितुं द्रव्यातिरिक्तेत्युक्तम् । यद्वा स्वमतेन तु सिद्धसाधनत्वमित्युक्तमुपपादयति ॥ **द्रव्यादीति** ॥ **नो भवेदिति** ॥ तथा च स्वरूपसत्त्वानधिकरणत्वे साध्ये विश्वस्याब्रह्मत्वसिद्ध्याऽपि प्रतिज्ञार्थोपपत्तेरर्थान्तरमित्युक्तं भवति । अस्मिन्पक्षे स्वमतेन सत्तासामान्यानधिकरणत्वपक्षदूषणं यत्सिद्धसाधनत्वादि तद्भाष्यानारूढमिति तदारूढतायै सन्मात्रत्वमिति वाक्यं प्रकारान्तरेण योजयति ॥ **अथवेति** ॥ तथात्वे प्रथमपादोऽसङ्गत इत्यतस्तं सङ्गमयितुमाह ॥ **तथा हीति** ॥ **एतेनेति** ॥ स्वरूपसत्त्वानधिकरणत्वपक्षनिराकरणेनेत्यर्थः । ब्रह्मस्वरूपत्वाभावस्येष्टत्वादिति भावः । भाष्ये न्यूनतां परिहरति ॥ **अर्थेति** ॥ **स्फुटत्वादिति** ॥ बाधापसिद्धान्तार्थान्तरादीनां प्रकृतानामुपपादनप्रकारस्यात्र स्फुटत्वादित्यर्थः । एवेत्युपपादनानपेक्षत्वं दर्शयति । अपसिद्धान्तस्योपपादनसापेक्षत्वेऽप्युपपादनप्रकारस्य मिथ्यायाः साधकत्वं चेत्याद्युक्तिबललब्धतामाह ॥ **सत्यस्य नार्थक्रियेति** ॥ सन्मात्रत्वमित्येतद्द्वितीयव्याख्यासमानन्यायेनार्थान्तरमुपपादयति ॥ **अर्थेति** ॥ नन्वर्थक्रियावैधुर्यस्यासत्त्वानिर्वचनीयत्वाहेतुतायामपि नार्थान्तरता । स्वरूपेणैव तस्य त्वां प्रत्यनिष्टत्वेन तत्साधनसम्भवादित्यत आह ॥ **अर्थेति** ॥ तस्य मां प्रत्यनिष्टत्वेऽप्यनिर्वचनीयत्वाहेतुत्वे प्रमाणादीनां साधकत्वमिति प्रकृतप्रमेये तत्साधनस्यापनुयोगादर्थान्तरमेव । प्रमाणादीनां साधकत्वमिति प्रकृतविरुद्धता च तद्वैधुर्यसाधनस्येति भावः । दृश्यत्वादिरूपहेत्वन्तराभिधानेऽपि ज्ञाननिवर्त्यत्वतन्नाश्यत्वप्रतिपन्नोपाधौ त्रैकालिकसत्तानिषेधत्वरूपतदभिमतज्ञानबाध्यत्वस्य ज्ञानबाध्यत्वमिति वाक्यार्थतया वियदादेः सत्त्वेन नित्यत्वेन चाविद्योपादानकत्वाभावादिति लक्षणासम्भवादिप्रतिपादकवक्ष्यमाणन्यायेन सम्पूर्णबाधांशबाधापत्त्याऽसाधनीयत्वान्मदभिमतस्य च विज्ञातस्येत्यादिवक्ष्यमाणसिद्धसाधनार्थान्तरव्यर्थविशेषणत्वादिनाऽसाधनीयत्वान्न काऽप्यनुपपत्तिरित्याशयेनाह ॥ **हेत्वन्तरेति** ॥ **मूर्तमित्यादीति** ॥ अत्रादिपदेन सीदतीति व्युत्पत्त्याऽनित्यं

क्वचिदित्यादेर्ग्रहणम् ॥ **तत्सर्वमिति** ॥ एवं चास्मिन्पक्षे सकलपक्षोक्तदूषणप्रसङ्गः । अन्यपक्षेषु तु तत्तत्पक्षोक्तदूषणमेवेति भावः । अत एव पूर्वमतीव मन्दमित्युक्तमिति ज्ञेयम् ।

**स०**— अर्थक्रियाकारित्वं चेत्सत्त्वं तर्हि तदनधिकरणत्वं विशिष्टाभावरूपं द्वेधा पर्यवस्यति ॥ अर्थक्रियारूपविशेषणवैधुर्येण वा अर्थक्रियारूपविशेषणस्य विद्यमानत्वेऽपि तदधिकरणत्वरूपविशेष्याभावेन वेति । तत्राद्यं दूषयति ॥ **अर्थक्रियावैधुर्येति** ॥ द्वितीयं दूषयति ॥ **अर्थक्रियानऽधिकरणेति** ॥ अर्थक्रियाऽधिकरणत्वस्यैवाभावसाधनमित्यर्थः ॥ **प्रकृतानुपयुक्तमिति** ॥ प्रकृतं यन्मिथ्यात्वसमर्थनं तदुपयुक्तं न भवतीत्यर्थः । अत्र हि मिथ्यात्वसमर्थनायार्थक्रियाऽनधिकरणत्वरूपसद्वैलक्षण्यं साधनीयम् । प्रपञ्चस्य सद्विलक्षणत्वादुपपन्नं श्रुत्यादिना मिथ्यात्वसमर्थनमित्युक्तत्वात् । न चार्थक्रियाया विद्यमानतामङ्गीकृत्य प्रपञ्चस्य तदनधिकरणतामात्रसाधनेन मिथ्यात्वमुपपादयितुं हि परस्यायं प्रयत्नः । ततश्च प्रमाणादिप्रपञ्चे साधकत्वमर्थक्रियाऽधिकरणत्वरूपं प्रस्तुतमित्युक्तं स्यात् । तदनधिकरणतासाधने तु प्रकृतविरोध इत्यर्थः । बाधसिद्धार्थताद्यापत्तिः स्फुटैवेति । ज्ञाननिवर्त्यत्वस्य वा प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य वा बाध्यत्वस्य मिथ्याशब्दार्थत्वेन विवक्षितत्वे बाधः । अन्यथाविज्ञातस्य सम्यग्विज्ञानगोचरत्वरूपत्वे सिद्धसाध्यतेत्यर्थः । आदिपदेन दृष्टान्ते साध्यवैकल्यादिकम् ॥ **क्वाऽप्यमूर्तमिति** ॥ मूर्तं सदिति सम्प्रोक्तमित्युक्तेः । आदिपदात् क्वाप्युत्तमम् । 'सच्छब्द उत्तमं ब्रूयादित्यादे'रिति ज्ञातव्यम् ॥ **तत्सर्वं निरस्तमिति** ॥ निरस्तप्रायमित्यर्थः ॥

**प०**—'जात्यङ्गीकारे सद्धेतुत्वमित्यादितत्वोद्योतरीत्या योजयति ॥ **अथवेति** ॥ सत्ताऽनधिकरणत्वं प्रतिजानता सत्ताऽङ्गीक्रियते न वेति विकल्पौ हृदि कृत्वा द्वितीये दोषोक्तिपूर्वमाद्यकल्पे मूलं योजयति ॥ **यदि सत्त्वेत्यादिना** ॥ शङ्कते ॥ सन्तीति ॥ एकं क्रियापदं । अपरं शतृप्रत्ययान्तं कारकपदं ॥ **उक्तोत्तरत्वादिति** ॥ तत्सिध्यर्थमेव भवता प्रयतनादित्यादिग्रन्थेनेत्यर्थः ॥ **द्वितीयमिति** ॥ स्वरूपसत्त्वपक्षं । तस्मात्तदपीत्यादेरर्थः । तस्मात्सतो वैधुर्यस्येत्यादि । प्रागुक्तपक्षान्तरं च निराह ॥ **उक्तोत्तरमेवेति** ॥ तत्सिद्धार्थमेवेत्यादिनेति भावः । नासत्त्वादिहेतुरित्यादिपदेनानिर्वाच्यत्वग्रहः । तथा च तद्वैधुर्यसाधनेऽर्थान्तरतेति भावः । अर्थक्रियाकारित्वरूपसत्त्वानधिकरणत्वपक्षस्य भाष्ये अत्र चानिरासे हेतुद्वयं चाधिकमाह ॥ **अर्थक्रियाऽनधिकरणतामात्रेति** ॥ मिथ्याभूतस्यापि साधकत्वस्य निर्वहणं हि प्रकृतं, तस्यानुपयुक्तं प्रत्युतसाधकत्वविरुद्धं चातोऽत्र भाष्ये तदाशङ्क्य न निरस्तमिति भावः ॥ **हेत्वर्थादिति** ॥ विवादपदं सदसद्विलक्षणं ज्ञानबाध्यत्वादिति प्रागुक्तहेत्वर्थादित्यर्थः । तथा च साध्या-

विशिष्टतेति भावः ॥ **हेत्वन्तरेति** ॥ दृश्यत्वजडत्वादिहेत्वन्तरेत्यर्थः ॥ **वक्ष्यमाणेति** ॥ विवादपदं असत्त्वानधिकरणं ज्ञानाबाध्यत्वरूपसत्त्वानधिकरणं दृश्यत्वादित्याद्युक्तावपि 'ज्ञानबाध्यत्वमपित्वि'त्यत्र वक्ष्यमाणव्याघाताद्यनिस्तार इत्यर्थः ॥ **क्वापि मूर्तमिति** '॥ नासदासीन्नोसदासीदि'त्यत्र सत्पदेन पृथिव्यप्तेजोरूपं मूर्तमुच्यत इत्यर्थः । आदिपदेन 'नासतो विद्यते भावो नाभावो विद्यते सत' इत्यादौ कर्माद्युच्यते । सदेव सोम्येत्यादौ स्वातन्त्र्याद्युच्यत इत्यादि ग्राह्यम् ॥ **निरस्तमिति** ॥ भावस्यापि भावान्तरवैलक्षण्यभावत्वानधिकरणत्वादेः सिद्धत्वाद्युक्त्येति भावः ॥

**या०** — सामान्यानधिकरणत्वमित्यत्र सत्तासामान्याधिकरणताप्रतिषेधः किं सत्तासामान्यनिषेधमादाय पर्यवस्यतीत्यभिप्रेतमुताधिकरणत्वप्रतिषेधमादायेति विकल्पं मनसि निधायाद्यं दूषयति ॥ **यदि सत्तैव नास्तीति** ॥ द्वितीयं दूषयति ॥ **सत्तासामान्याङ्गीकारे चेत्यादिना** ॥ तथा चास्मिन्पक्षे द्वैतापत्तिर्बाधश्चेति दूषणद्वयमुक्तमित्यवधेयम् । अर्थक्रियाकारित्वं चेत्सत्त्वं तर्हि तदनधिकरणत्वं विशिष्टाभावरूपं द्वेधा पर्यवस्यति । अर्थक्रियारूपविशेषणवैधुर्येण वोत तस्य सत्त्वेऽप्यधिकरणत्वरूपविशेष्याभावेन वेति विकल्पं मनसि निधायाद्यं दूषयति ॥ **अर्थक्रियावैधुर्यसाधन इति** ॥ अर्थक्रियारूपपदार्थस्यैवाभावसाधन इत्यर्थः ॥ **अङ्गीकृतेति** ॥ अर्थक्रियारूपं वस्त्वङ्गीकृतमेवेति हेतोरित्यर्थः ॥ **नासत्वादिहेतुरिति** ॥ तथा चार्थान्तरतेति भावः । नार्थक्रियारूपवस्त्वभावः साध्यते येनोक्तबाधाद्यवकाशः किं त्वर्थक्रियारूपं वस्तु प्रपञ्चनिरूपितजन्यजनकभावसम्बन्धवत्त्वेनैवाङ्गीकृत्य प्रपञ्चे तदाधारतामात्रं प्रतिषिध्यत इति द्वितीयं पक्षमनूद्य दूषयति ॥ **अर्थक्रियाऽनधिकरणतामात्रसाधनमिति** ॥ मात्रपदेन जगतो जन्यजनकभावसम्बन्धेनार्थक्रियाऽङ्गीकारं सूचयति ॥**प्रकृतेति** ॥ प्रकृते यन्मिथ्यात्वसमर्थनाय सद्वैलक्ष्यण्यं तदुपयुक्तं न भवतीत्यर्थः । अत्र हि मिथ्यात्वसमर्थनायार्थक्रियाऽनधिकरतणत्वरूपसदसद्वैलक्षण्यसाधनं क्रियते । प्रपञ्चस्य सदसद्विलक्षणत्वादुपपन्नं श्रुत्यादिना मिथ्यात्वसमर्थनमित्युक्तत्वात् । न चार्थक्रियायाः प्रपञ्चनिरूपितजन्यजनकभावसम्बन्धवत्त्वेन विद्यमानतामङ्गीकृत्य प्रपञ्चस्य तदनधिकरणतामात्रसाधने मिथ्यात्वमुपपादितं भवति किन्तु ब्रह्मवत्सद्रूपत्वमेवेति भावः ॥ **तद्विरुद्धं चेति** ॥ विद्यमानार्थक्रियाजनकत्वस्य सत्यत्वव्याप्तत्वादिति भावः । हेत्वन्तरं दृश्यत्वादि ॥ **वक्ष्यमाणन्यायेनेति** ॥ 'ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन' इत्यनुपदमेव वक्ष्यमाणन्यायेन ज्ञाननिवर्त्यत्वस्य वा प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य वा बाध्यत्वस्य विवक्षितत्वे बाधः । अन्यथाविज्ञातस्य सम्यग्विज्ञानविषयत्वरूपत्वे सिद्धार्थतेत्यर्थः । आदिपदेन दृष्टान्ते साध्यवैकल्यादिकं ग्राह्यम् ॥ **क्वचिद्भाव इति** ॥ इदं च 'द्वैतत्वे सदसदि'त्यत्रैव द्रष्टव्यम् । एवं चात्रासच्छब्देनाभावरूपतत्त्वस्यैव विवक्षितत्वात् असतो नृशृङ्गादेः कथं तत्त्वाविशेषारूपतेति शङ्काऽनवकाशः ॥ **क्वचित्प्रतिपन्नेति** ॥ 'ब्रह्म सदि'त्यादावित्यर्थः ॥ **क्वापि**

**मूर्तमिति** ॥ 'नासदासीन्नोसदासीदि'त्यत्रेत्यर्थः । आदिपदेन 'ब्रह्मैव सदि'त्यादावुक्तम् । 'सच्छब्द उत्तमं ब्रूयादित्यादे'रिति द्रष्टव्यम् ॥ **तत्सर्वं निरस्तमिति** ॥ अत्र किञ्चिन्निरस्तं किञ्चिन्निरस्तप्रायमित्यर्थः । मूर्तवैलक्षण्यादेः पूर्वमनिरस्तत्वात् । मूर्तवैलक्षण्यस्य मूर्ते बाधितत्वेनामूर्ते सिद्धार्थत्वेन निरासो ज्ञातव्यः ॥

**श्री०— सन्त्येवानेकानि सन्तीति** ॥ व्यावहारिकाणीत्यर्थः ॥ **तदनधिकरणत्वेति** ॥ व्यावहारिकसत्वानधिकरणत्वेत्यर्थः ॥ **तद्विरुद्धं चेति** ॥ अर्थक्रियानिरूपितजन्यजनकभावसंबन्धं अङ्गीकृत्य तदनधिकरणत्वरूपं सद्विलक्षणत्वम् ।

**च०— सामान्यसत्वमिति** ॥ सामान्यरूपं सत्त्वमित्यर्थः । परमतेन सत्तासामान्याङ्गीकर्तृनैयायिकदिशा ॥

**अनु०—** ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिनः ॥
विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतम् ॥

**सु०— एवं प्रतिज्ञां निराकृत्य हेतुमप्यपाकरोति ॥ ज्ञानबाध्यत्वमिति ॥ न केवलं प्रतिज्ञा दुष्टा । किं नाम हेतुभूतं ज्ञानबाध्यत्वमपीत्यर्थः । तुशब्दः सिद्धान्त्यभिमताज्ज्ञानबाध्यत्वाद्व्यवच्छिनत्ति । ज्ञानबाध्यत्वं हि ज्ञाननिवर्त्यत्वं वा प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा हेतुत्वेन परस्याभिमतम् । न च प्रपञ्चे तत्प्रतिवादिनो मम सिद्धम् । अतोऽन्यतरासिद्धो हेतुरिति । नन्वीश्वरज्ञानेन प्रपञ्चनिवृत्तिस्त्वयाऽपीष्यत एव । अन्यथा तस्य संहारकर्तृत्वानुपपत्तेः । ज्ञानादिमत एव कर्तृत्वात् । सत्यम् । नैवं ज्ञाननिवर्त्यत्वं परस्याभिप्रेतम् । अपि तर्ह्यज्ञानोपादानकस्य समाने विषये विरोधिना ज्ञानेनोपादाने निवृत्ते स्वयमेव विलपनम् । यथाऽऽह । 'अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाध' इति । न चायं प्रपञ्चेऽस्माकं संमतः । किन्तु मुद्गरप्रहारादिना घटस्येवेश्वरस्य ज्ञानेच्छाप्रयत्नव्यापारैर्विनाश एव । स एव हेतुरस्त्विति चेन्न । तथाविधमपि ज्ञानबाध्यत्वं पक्षैकदेशे प्रकृत्यादौ न सिद्धं प्रतिवादिन इति भागासिद्धत्वात् । किञ्च सत्यस्यापि ज्ञानविनाश्यत्वमस्तु । न च विपक्षे किञ्चिद्बाधकमस्तीत्यतोऽप्रयोजकत्वाज्ज्ञानबाध्यत्वं न सिद्धमपि व्याप्यत्वासिद्धमपीति**

यावत् । प्रतिवादिनो मतेनेति गुडजिह्विकामात्रम् । बाधकानुपन्यासे वादिनोऽपि व्याप्यत्वासिद्धेरावश्यकत्वात् । सतो विनाशे चैतन्यस्यापि विनाशप्रसङ्ग इति चेत् । तर्हि विनाशमात्रस्य साध्यप्रयोजकत्वेन ज्ञानबाध्यत्वमसिद्धमपि । व्यर्थविशेषणासिद्धमपि स्यात् । नाश्यत्वमात्रं हेतुर्ज्ञानेति स्वरूपकथनमात्रम् । स चोक्तबाधकसानाथ्येन नाप्रयोजक इति चेन्न । सत्त्वसाम्येऽपि विनाशकारणसदसद्भावेन विशेषस्योक्तत्वात् । ननु च नेहनानाऽस्तीतिप्रतिपन्नोपाधौ श्रौतनिषेधात्मा बाधः प्रपञ्चेऽस्तीति चेन्न । श्रुत्यर्थनिर्णयोत्तरकालमेवैतत् । स एव तूपपत्तिविरोधादशक्य इत्युच्यमानत्वात् । अथवा ज्ञानबाध्यत्वमसिद्धं व्याप्तिरहितमपीति योज्यम् । तथा हि । किं त्वदभिमतं ज्ञानबाध्यत्वमत्र हेतूक्रियते किं वाऽस्मदभिमतमिति वाच्यम् । आद्यं चेदुक्तन्यायेन न सिद्धं प्रतिवादिनः । द्वितीये व्याप्तिवैधुर्यमिति । तत्कथमित्यत आह ॥ विज्ञातस्येति ॥ हि यस्मादन्यथाविज्ञातस्य सम्यग्विज्ञानमेव बाधस्तद्विषयत्वमेव तद्बाध्यत्वं मतमस्माकम् । तच्चात्मनि विपक्षे गतमिति व्याप्तिविकलमिति वाक्यशेषः । सत्योऽप्यात्मा देहाद्यात्मना विज्ञातो वेदान्तजनितसम्यग्विज्ञानवृत्तिविषय इति परेणाप्यङ्गीकार्यम् । अन्यथा अविद्यानिवृत्त्यनुपपत्तेरिति ।

वा०— अपिशब्दस्वारस्यानुरोधाज्ज्ञानबाध्यत्वरूपसाध्यान्तरनिराकरणपरमुत्तरवाक्यमित्याभाति । तथात्वे च साध्ये प्रतिवाद्यसिद्धत्वस्य भूषणत्वेन दूषणासङ्गतिरित्यतस्तत्तात्पर्यमाह ॥ एवमिति ॥ यद्यपि परेण सदसद्विलक्षणत्वस्येव ज्ञानबाध्यत्वस्याप्यनिर्वचनीयतयोक्तत्वात्सदसद्विलक्षणत्वरूपानिर्वचनीयत्वं निरस्य ज्ञानबाध्यत्वरूपं तन्निराकरोतीति साध्यान्तरनिराकरणपरतयाऽपीदं व्याख्यातुं शक्यं तथाऽपि साधकत्व मिथ्यात्वोपपादनोपयोगितया सदसद्वैलक्षण्यस्यैव प्रस्तुततयाऽनिर्वचनीयत्वसामान्यस्याप्रस्तुतत्वेन तस्य साध्यतया निर्देशा'न्नसिद्धं प्रतिवादिन' इत्यस्यास्वारस्याच्च तथा न व्याख्यातमिति ध्येयम् । ननु तर्ह्यपिशब्दानुपपत्तिः । न केवलं प्रतिज्ञाऽसिद्धा किन्तु हेतुरपीति व्याख्यानेऽप्यसिद्धेर्भूषणत्वेन प्रतिज्ञादूषणत्वाभावात्पूर्वं प्रतिज्ञायां तस्य अनुक्तेश्चानुपपत्तिरेवेत्यतो दुष्टत्वरूपसामान्ये समुच्चयमभिप्रेत्य तदर्थमाह ॥ नेति ॥ ननूत्तरवाक्ये ज्ञानबाध्यत्वस्य प्रतिवादिसम्मतत्वोक्त्या तद्विरोधोऽसिद्धत्वोक्तेरित्यत आह ॥ तुशब्द इति ॥ शुक्तिरजतादौ पराभ्युपेतयोर्ज्ञाननिवर्त्यत्वप्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपयोर्बाध्यत्वयोर्यथैकस्य वस्तुतोऽसिद्धावपि नापरस्यासिद्धिर्न तथा प्रकृते किन्तु प्रपञ्चे पराभिमतयोरुभयोरप्यसिद्धिरित्याशयेन तुशब्दलब्धविशेषस्वरूपं दर्शयन्नेवासिद्धिमुपपादयति ॥ ज्ञानेति ॥ ज्ञानेन प्रपञ्चनिवृत्तिस्त्वयाऽपीष्यतएवेतिवदन्प्रष्टव्यः। हेतुत्वेन मदभिमतस्यैवत्वदभिमतत्वान्नान्यतरासिद्धिरित्याशयः

उत स्वाभिमतज्ञाननिवर्त्यत्वस्य वैलक्षण्येऽपि यथाकथञ्चिज्ज्ञाननिवर्त्यत्वस्य त्वदभिमतत्वात्तस्यैव च मया हेतुत्वेनोपन्यासान्न प्रतिवाद्यसिद्धिरिति । नाद्यः । त्वदभिमतस्य हेतुतयोपन्यस्तस्य न मदभिमतत्वमतः प्रतिवादिनं मां प्रत्यसिद्धिरेवेत्याह ॥ **नैवमिति** ॥ **स्वयमेवेति** ॥ ज्ञानस्य पृथक् तत्र व्यापाराभाव-माद्दोपादाननिवृत्तिद्वारा प्रयोजकत्वमस्त्येवेति ज्ञाननिवर्त्यत्वमक्षतमेवेति भावः । अथवेश्वरव्यापारनिवृ-त्त्यर्थमेतदिति ज्ञेयम् । विवरणकारेण बाधलक्षणान्तरनिराकरणेनाज्ञानस्य ज्ञानेन निवृत्तिर्बाध इति तल्लक्षणमभिप्रेत्योक्तमज्ञानस्येति । तदत्र सम्मतितयोदाहरति ॥ **यथाऽऽहेति** ॥ घटादिज्ञानेन जायमानाया घटाद्यज्ञाननिवृत्तेरपि बाधत्वापत्तेराह ॥ **स्वकार्येणेति** ॥ वार्तमानिककार्यसहिताज्ञान-निवृत्तेर्बाधत्वे विपर्ययोत्पत्त्यनन्तरं मनसो विषयान्तरसञ्चारे समयान्तरे शुक्तिलोचनसंयोगजाधिष्ठानज्ञानेना-ज्ञाननिवृत्तौ वार्तमानिककार्यध्वंसाभावेनाव्याप्त्यापत्त्या प्रविलीनकार्यसहिताज्ञाननिवृत्तेर्बाधत्वे च वार्त-मानिककार्यसहिताज्ञाननिवृत्तौ तदभावेनाव्याप्त्याऽऽपत्त्यानैतल्लक्षणमित्यतः कार्यान्तराकारेण परिणताज्ञान-निवृत्तिर्बाध इत्यनुगतमुभयत्राप्यस्तीत्याशयेन वर्तमानेन प्रविलीनेन वेत्युक्तम् । अविद्यानिवृत्तिरूपपरा-भिमतद्वारप्रतियोगितयेच्छाप्रयत्नग्रहणमिति बोध्यम् । द्वितीयं शङ्कते ॥ **स एवेति** ॥ यद्यप्यत्रैता-दृशस्य तवासिद्धेरन्यतरासिद्धितादवस्थ्यमित्यपि दूषणं वक्तुं युक्तं तथाऽपि प्रतिपन्नोपाधौ त्रैकालिकनिषेध-प्रतियोगित्वमङ्गीकुर्वताऽपि स्वरूपेण ध्वंसस्येवाज्ञाननिवृत्तिप्रयुक्तविलयनं वदताऽपि मया स्वरूपेण ध्वंसोऽभ्युपगम्यत इत्यपि परेण वक्तुं शक्यत्वात्प्रतिवादिशब्दोपेतभाष्यवाक्यारूढतयाऽस्य वक्तुमशक्य-त्वाच्च तदारूढं दूषणमाह ॥ **तथेति** ॥ अनेनात्र तुशब्दो वाद्यभिमतज्ञानबाध्यत्वव्यवच्छेदार्थः । अथवा प्रतिवादिन इत्यस्य ज्ञानबाध्यत्वमित्यनेनापि सम्बन्धः । पक्ष इति योग्यतया सम्बद्धेन तुशब्दसम्बन्धः । एवं च पक्षविशेष इति सिध्यति । अपिशब्दस्य ज्ञानबाध्यत्वमित्यनेन सम्बन्ध इत्यभिप्रेत्य भाष्यं योजितं भवति । ननु चतुर्विधनाशेषु यस्य कस्यचिदपीश्वरातिरिक्ते त्वयाऽङ्गीकारान्न भागासिद्धिरित्यतस्तथात्वेऽप्यप्रयोजकत्वं स्यादेवेत्याशयेनाह ॥ **किञ्चेति** ॥ तन्निष्ठासिद्ध्युक्तेस्तद्धर्म-भूतव्याप्त्यसिद्धिविषयकत्वविवक्षामभिप्रेत्य तात्पर्यमाह ॥ **व्याप्यत्वासिद्धमिति** ॥ अन्यतरासिद्ध्यादि-वदन्यतराप्रयोजकत्वमपि दूषणमिति भ्रान्तिं निवारयति ॥ **प्रतिवादिन इति** ॥ **तर्हीति** ॥ यद्यपि सत्त्वसाम्येऽपीत्यादिना वक्ष्यमाणदूषणमादावेव वक्तुं युक्तं तथाऽपि परोक्तहेतोर्व्यर्थविशेषणासिद्धिमपि दर्शयितुं प्रकारान्तरेण भाष्यं योजितमिति ध्येयम् । तर्के विशेषव्याप्तेरभावादविशेषप्रयुक्तसामान्यव्या-प्तेश्चोक्तरीत्याऽविशेषासिद्धेरनुपपत्त्या व्याप्तिशून्योऽयं तर्काभास इत्याह ॥ **सत्त्वेति** ॥ असिद्धत्वेन प्रतिज्ञातबाध्यत्वयोर्मध्ये ज्ञाननिवर्त्यत्वरूपस्य तस्यासिद्धिमुपपाद्य प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपस्य बाध्यत्वस्यापि तामुपपादयितुं, नन्वस्तु ज्ञाननिवर्त्यत्वरूपस्य तस्यासिद्धिर्न तु प्रतिपन्नोपाधौ निषेधरूपस्य

तस्य नेह नानेति निषेधस्य जागरूकत्वात्तस्यैव च हेतुतयोपन्यास इत्याशङ्कते ॥ **नन्विति** ॥ तस्याप्यसिद्धिरेव । श्रुतेरर्थान्तरपरत्वेन तत्परत्वाभावात् । अन्यथाऽन्योन्याश्रयाद्यापत्तेरित्याशयेनाह ॥ **श्रुत्यर्थेति** ॥ ननूत्तरवाक्यमसङ्गतम् । प्रपञ्चबाध्यत्वस्य शुक्तिरजतादिवल्लौकिकव्यवहारासिद्धतया तदुपपादकतयोत्तरत्रेवात्र योजयितुमशक्यत्वादिति चेन्न । तस्यास्मदभिमतज्ञानबाध्यत्वहेतुविवक्षायां व्यभिचारप्रदर्शकत्वेन सङ्गतत्वात् । न च पूर्ववाक्यमेव पराभिमतज्ञानबाध्यत्वव्यभिचारप्रदर्शकतया किं न व्याख्यायत इति वाच्यम् । शुक्तिरजतादेर्दृष्टान्ततयाऽसतश्च ज्ञाननिवर्त्यताया उभयासम्मतत्वेन प्रतिपन्नोपाधौ निषेधप्रतियोगित्वस्य च परं प्रत्युपपादनीयत्वेन ब्रह्मणश्चोभयविधज्ञानबाध्यत्वस्योभयासम्मत्या परोक्तज्ञानबाध्यत्वस्य व्यभिचारस्थलाभावेन स्वाभिमतज्ञानबाध्यत्वस्य हेतुत्वविवक्षायामेव व्यभिचारस्य वक्तव्यतयोत्तरवाक्येन तदुपपादनाय पूर्ववाक्ये ज्ञानबाध्यत्वं न सिद्धमपीत्यंशमसिद्धयव्याप्तिरूपदूषणद्वयप्रतिज्ञापरत्वेन योजयित्वा ततो विकल्पान्विधाय विशेषार्थकतुशब्दं ज्ञानबाध्यत्वमित्यनेन योजयित्वा ज्ञानबाध्यत्वम सिद्धमित्यंशमावर्त्य पराभिमतो ज्ञानबाध्यत्वविशेषो हेतुश्चेदसिद्धः प्रतिवादिनः, स्वाभिमतस्तद्विशेषश्चेद्व्याप्तिवैकल्यमिति योजयित्वा तदुपपादकतयोत्तरवाक्यं योजनीयमित्याशयेनाह ॥ **अथवेति** ॥ अथवा प्रतिज्ञां विकल्पांश्च मनसि निधाय दूषणोक्तिमात्रपरं भाष्यमित्याशयेनाह ॥ **अथवेति** ॥ अस्मिन्पक्षेऽपिशब्दोऽनुक्तव्याप्तिवैधुर्यसमुच्चयार्थः ॥ **अन्यथेति** ॥ वेदान्तजन्यसम्यग्ज्ञानरूपवृत्तेरात्मविषयकत्वाभावे तस्याः आत्मविषयकाविद्यानिवर्तकत्वानुपपत्त्या चैतन्यमात्रस्य चाविद्याविरोधित्वाभावेनाविद्यानिवृत्त्यनुपपत्तेरित्यर्थः ।

स० — **प्रविलीनेन वेति** ॥ मुद्गरपातानन्तरं घटस्य नात्यन्तिकनिवृत्तिः, किन्तु प्रविलयमात्रमित्यभ्युपगमादतीतघटादेरपि ज्ञानादेव निवृत्तिरित्यर्थः ॥

प० — **प्रतिज्ञामिति** ॥ विवादपदं सदसद्विलक्षणमितिप्रतिज्ञां वैलक्षण्यं सतश्चेत्यादिना निराकृत्येत्यर्थः ॥ **सिद्धान्त्यभिमतादिति** ॥ अन्यथाविज्ञातस्य सम्यग्विज्ञातत्वरूपस्य वा वक्ष्यमाणदिशेश्वरज्ञाननाश्यत्वरूपस्य वा सिद्धान्त्यभिमतबाध्यत्वस्य पक्षे सत्त्वान्न सिद्धमित्ययुक्तं स्यादतः पराङ्गीकृतम् ज्ञानबाध्यत्वं त्वित्युक्तमिति भावः । 'अज्ञानस्य स्वकार्येण, वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाध' इति विवरणोक्तेराह ॥ **ज्ञाननिवर्त्यत्वं वेति** ॥ 'प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य मिथ्यात्वस्ये'ति विवरणोक्तेः । 'तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः । अविद्या सह कार्येण नासीदस्ति भविष्यती'ति सुरेश्वरोक्तेश्चाह ॥ **प्रतिपन्नेति** ॥ **यथाऽऽहेति** ॥ विवरणकार इत्यर्थः । भागासिद्धिपरत्वेनापि-

योजयितुमाह ॥ **स एवेति** ॥ अपिपदं भिन्नक्रममुपेत्य व्याप्यत्वासिद्धिपरत्वेनापि योजयति ॥ **किञ्चे-त्यादिना** ॥ **गुडजिह्विकेति** ॥ गुडयुक्तजिह्वा सैव गुडजिह्विका । बालानां कट्वादि ग्रासयितुमास्यव्या-दानार्थं जिह्वायां गुडं यथा स्थापयन्ति तद्वदिदमित्यर्थः । विपक्षे बाधकमाशङ्कते ॥ **सतो विनाश इति** ॥ **तर्हीति** ॥ आत्मनो विनाशित्व इत्यर्थः । प्रकारान्तरेण मूलार्थमाह ॥ **असिद्धमपीत्यादिना** ॥ **स एवेति** ॥ श्रुत्यर्थ एव । 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेदि'त्यादिनोपपत्तिविरोधादशक्य इत्युच्यमानत्वादित्यर्थः ॥ **परेणाप्यङ्गीकार्यमिति** ॥ अन्यथा विज्ञातत्वमात्राङ्गीकारांशसमुच्चय एवापि-पदं ज्ञेयम् । सिद्धान्तिना देहात्मैक्यारोपानङ्गीकारात् ॥ **अन्यथेति** ॥ सम्यग्ज्ञानरूपवृत्त्यविषयत्वे तद्विषयाविद्यानिवृत्तिर्न स्यात् । समानविषयकत्वेनैव ज्ञानाज्ञानयोरालोकांधकारयोरिव विरोधादिति भावः ।

या०—**सिद्धान्त्यभिमतादिति** ॥ विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतमिति वक्ष्यमाण-त्वादित्यर्थः ॥ **स्वकार्येण वर्तमानेनेत्यादि** ॥ घटाज्ञानस्य घटज्ञानेन निवृत्तिदर्शनाद्घटज्ञानमपि बाधः स्यादित्यत उक्तम् ॥ **स्वकार्येणेति** ॥ किं वार्तमानिककार्यसहिताज्ञानस्य निवृत्तिर्बाध उत प्रविलीनकार्य-सहिताज्ञानस्य । नाद्यः । विपर्ययोत्पत्त्यनन्तरकाले मनसो विषयान्तरसञ्चारः । समयान्तरे च शुक्ति-लोचनसंयोगजाधिष्ठानज्ञानेनाज्ञाननिवृत्तौ तदभावेनाव्याप्तिः । न द्वितीयः । वर्तमानकार्यसहिता ज्ञाननिवृत्तौ तदभावादित्याशङ्क्य कार्याकारेणपरिणताज्ञाननिवृत्तिर्बाध इत्यनुगतलक्षणमुभयत्राप्यस्तीत्याह॥ **वर्तमानेनेत्यादि** ॥ न च प्रविलीनस्य कथं पुनर्ज्ञानेन निवृत्तिरिति वाच्यम् । अधिष्ठानज्ञानात्प्राक् कार्यस्य कारणाकारेण नात्यन्तिकनिवृत्तिः किन्तु कारणे प्रविलयमात्रं क्रियते । तथा च प्रविलीनस्यापि कार्यस्य कारणात्मना सत्त्वादधिष्ठानयाथात्म्यज्ञानेनात्यन्तिकी निवृत्तिरुपपन्ना । अत एव मुद्गरप्रहरणादिना निवृत्ते घटादौ ब्रह्मज्ञानेन निवृत्तिर्न सम्भवतीति कथं तस्य बाध्यत्वमिति शङ्काऽनवकाश इत्यभिप्रायात् ॥ **अन्यथेति** ॥ वेदान्तजनितवृत्तिविषयत्वाभाव इत्यर्थः ॥

श्री०—**व्यर्थविशेषणासिद्धम्** ॥ ज्ञानबाध्यत्वमस्तु मिथ्यात्वं मास्तु सत्वमेवास्त्वित्यप्रयोजकत्वे शङ्किते नाशमात्रस्यैव मिथ्यात्वप्रयोजकत्वप्राप्त्या ज्ञानविशेषणं व्यर्थमित्यर्थः ॥ **उक्तबाधकेति** ॥ सतो विनाश इत्युक्तबाधकेत्यर्थः ॥ **उक्तत्वादिति** ॥ तथा चोक्तबाधकतर्कोऽयुक्त इत्याशयः ॥

सु०— अथवा दृष्टान्तं प्रत्याचष्टे ॥ **ज्ञानबाध्यत्वमिति** ॥ अपिपदेन सदसद्विलक्षणत्व लक्षणं साध्यमनिर्वाच्यत्वं समुचिनोति । तुशब्दो ज्ञानबाध्यत्वमभिमताद्व्यवच्छिनत्ति ॥

न सिद्धं शुक्तिरजतादाविति शेषः । शुक्तिरजतादेरनिर्वचनीयत्वं तावत्प्रतिवादिनो ममासिद्धम् । मयाऽत्यन्तासत्त्वेनाङ्गीकृतत्वात् । अत एव ज्ञानबाध्यत्वं मम तत्रासंमतम् । तद्धि ज्ञाननिवर्त्यत्वं परस्याभिमतम् । न चासतस्तत्संभवति । तस्य नित्यनिवृत्तत्वात् । अतः साध्यसाधनविकलोऽयं दृष्टान्ताभासः । ननु प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं बाध्यत्वमस्त्येव शुक्तिरजतादौ । मैवम् । तथा सत्यसत्त्वप्रसङ्गात् । वक्ष्यते चैतत् । यदि तर्हि न बाध्यत्वं शुक्तिरजतादेः । ( बाढम् । ननु ) सकललोकविरोधादिप्रसङ्गः । मैवम् । त्वदभिमतस्याभावेऽप्यन्यस्य बाध्यत्वस्य तत्र विद्यमानत्वात् । किं तदित्यत आह ॥ विज्ञातस्येति ॥ बाध्यत्वमिति प्रकृतप्रकृत्यर्थं बाधं तदिति सामान्येन परामृशति । केचिन्नेदं रजतमिति ह्यध्यस्तवस्त्वभावबोधं बाधमाहुः । अपरे तु शुक्तिरियमिति विरोधिभावान्तरज्ञानम् । तदुभयं प्रत्येकमव्यापकम् । शाब्दादौ द्वयोरपि बाधत्वप्रसिद्धेः । तस्मादुभयानुगतमेतदुच्यते । रजतत्वादिना विज्ञातस्य पुरोवर्तिनः शुक्तित्वादिना विज्ञानं खल्वन्यथाविज्ञातस्य सम्यग्विज्ञानं भवति । एवमसतो रजतस्य सत्त्वादिनाऽवगतस्यासत्त्वादिना विज्ञानमप्यन्यथाविज्ञातस्य सम्यग्विज्ञानं भवत्येव । सम्यग्विज्ञानं बाध इत्येवोक्ते सर्वमपि सम्यग्ज्ञानं बाधः प्रसज्येत । न च तथा व्यवहारः । तन्निवृत्त्यर्थमन्यथाविज्ञातस्येत्युक्तम् । अन्यथाविज्ञातस्य ज्ञानमित्येवोक्ते धारावाहिकभ्रमे रजतत्वेनावगतस्य शुक्तिकाशकलस्य पुनर्नागवङ्गत्वादिज्ञानेऽपि प्रसङ्गः । तन्निरासाय सम्यगित्युक्तम् । अन्यथेति । तत्स्वरूपापेक्षया । तेन घटस्यैव पटाद्यपेक्षयाऽन्यथा घटत्वेन ज्ञातस्य पुनर्घटत्वेन ज्ञाने प्रसङ्गो निरस्तः । छलप्रसङ्गात् । तथाऽपि रजतत्वेनावगतस्य शुक्तिकाशकलस्य शुक्लत्वादिज्ञाने प्रसङ्गस्तदवस्थः । एवमेकेनान्यथाविज्ञातस्य पुरुषान्तरसंबन्धिनि तस्यैव वा पुरुषस्य कालान्तरभाविन्याजानसिद्धे सम्यग्विज्ञाने प्रसङ्गोऽपीति चेन्मैवम् । बाधतिः खलु लोडने पठ्यते । तच्च ज्ञानस्यार्थस्य वाऽस्तु । न तावज्ज्ञानस्य । तस्य क्षणिकत्वेन स्वत एव लोडितत्वात् । सम्यग्विज्ञानस्याप्युत्तरज्ञानविनाश्यस्य बाधितत्वव्यवहारप्रसङ्गात् । नाप्यर्थस्य । शुक्तिशकलादेस्तादवस्थ्यात् । रजतादेर्नित्यलोडितत्वात् । अतः पूर्वज्ञानप्रसञ्जितस्यान्यथाकारस्य लोडनमिवेति वक्तव्यम् । तथा च सति कोऽतिप्रसङ्गः । तर्त्किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं ज्ञास्यते । अन्यथाविज्ञातस्येति वचनसामर्थ्यात् । अन्यथा सम्यग्विज्ञानमित्येवावक्ष्यत् । किमनेनेति । तद्विषयत्वं बाध्यत्वमिति शेषः ।

**वा०**—दृष्टान्तदूषणानुक्त्या न्यूनतां भाष्ये परिहर्तुमिदमेव भाष्यं तद्दूषणपरतयाऽपि योजयति ॥ **अथवेति** ॥ नन्वत्र शुक्तिरजतादौ साध्यवैकल्यासम्भवे साधनवैकल्यमपि न स्यात् । अत्यन्तासत्त्वेन तत्र साधनवैकल्यसम्भवे च साध्यवैकल्यमपि तत एव सम्भवति । साध्यवैकल्यसम्भवे च साधनवैकल्यमात्रोक्तिर्भाष्यकारीया न्यूनतेति न दृष्टान्तदोषो भाष्याभिमत इत्यतोऽनुक्तसमुच्चयार्थापिपदेन तस्याप्युक्तेर्न न्यूनतेत्याशयेनाह ॥ **अपिपदेनेति** ॥ ननु वक्ष्यमाणस्य वा प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपस्य वा बाध्यत्वस्य दृष्टान्ते प्रतिवादिनोऽपि सम्मत्या न तद्वैकल्यमित्यत आह ॥ **तुशब्द इति** ॥ **अभिमतादिति** ॥ दृष्टान्ते प्रतिवादिनोऽभिमतादित्यर्थः । अनभिमतादिति पाठे दृष्टान्तेऽसत्त्वेनानभिमतादित्यर्थः । अस्य दृष्टान्तदूषणपरत्वं घटयितुं योग्यमध्याहरति ॥ **शुक्तीति** ॥ असद्विलक्षणज्ञप्त्यै इत्याद्युत्तरानुव्याख्यानेऽसत्त्वेपि शुक्तिरजतादेः प्रतीत्युपपादनादिना लब्धमत्र प्रतिवादिन इत्युक्तिसूचितमत्यन्तासत्त्वं साध्यवैकल्यादौ हेतुतया योजयति **शुक्तीति** ॥ नात्र ज्ञानबाध्यत्वपदेन प्रपञ्च इव शुक्तिरजतादावुभयविधमपि तुशब्देनाभिप्रेयते किन्तु ज्ञाननिवर्त्यत्वमात्रम् । तस्यैव तत्र प्रतिवादिनाऽनभ्युपगमादित्याशयेनाह ॥ **तद्धीति** ॥ 'निवृत्तिश्चाप्रवृत्तस्य कथमेवोपपद्यत' इत्यनुव्याख्यानं मनसि निधायाह ॥ **तस्येति** ॥ ज्ञानप्रयोज्यतिरोभावादिरूपनिवृत्तेः प्रादुर्भावादिरूपप्रवृत्तिसापेक्षतयाऽसतश्च तदसम्भवादिति वाऽविद्योपादानकस्य ज्ञानेन तिरोभावादिरूपनिवृत्तेरसत्त्वेन निरुपादानकतया नित्यनिवृत्तेऽसम्भवादिति वाऽभिप्रायः । अत्र प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं दृष्टान्ते प्रतिवादिसम्मतमिति 'न सिद्धं प्रतिवादिन' इति वाक्यार्थतया तद्वैकल्यप्रतिपादनमशक्यमिति ततः पृथक्कृत्य साधनवैकल्यकथनावसरे तद्वैकल्यस्यावश्यप्रतिपादनीयत्वात्तद्वैकल्यं प्रतिपादयितुं शङ्कते ॥ **नन्विति** ॥ 'नासीदस्ति भविष्यच्चे'त्याद्यनुव्याख्यानं मनसि निधायाऽऽह ॥ **तथा सतीति** ॥ त्रैकालिकसत्तानिषेधस्य बाधत्वे सत्ताविरहव्यतिरेकेणासत्त्वस्य दुर्निरूपतयाऽऽपसिद्धान्तप्रसङ्गात्साधनवैकल्यं तदवस्थमेवेति भावः । ननु रजतादेः प्रतीतत्वेनासत्त्वानुपपत्तौ निषेधस्य सत्त्वोत्सारण एव पर्यवसानम् । न च सत्ताविरहव्यतिरेकेणासत्त्वं दुर्निरूपमिति वाच्यम् । निरुपाख्यत्वमसत्त्वमिति तन्निरूपणात् । तथा चासत्त्वानापातेनापसिद्धान्ताभावान्न साधनवैकल्यमित्यत आह ॥ **वक्ष्यते चैतदिति** ॥ असतः प्रतीत्यभावे हि सर्वमिदं भवेदिति शेषः । न चैवमि'त्यसद्विलक्षणज्ञप्त्यै' 'निषेधो ह्यप्रतीतस्ये'त्याद्यनुव्याख्याने वक्ष्यत इत्यर्थः । नन्वियता दृष्टान्तदूषणस्य पर्यवसानात्प्रकृताननुगुणं दृष्टान्ते बाध्यत्वस्योपपादकमुत्तरवाक्यमनुपपन्नमित्यतस्तन्निवर्त्यां शङ्कां दर्शयति ॥ **यदीति** ॥ आदिपदेनापसिद्धान्तसंग्रहः । यदि प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमेवासत्त्वं तर्हि सतोऽपि बाध्यत्वमस्त्विति वदता त्वयाऽसत्त्वमेव न बाध्यत्वं वक्तुं शक्यत इति सदसत्साधारणबाध्यत्वव्यवहारस्य प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेनानिर्वाह्यत्वात्स-

कललोकानुगतव्यवहारादिप्रयोजकबाध्यत्वमन्यदेव वाच्यम् । तदेव दृष्टान्तेऽहमपि प्रतिपादयिष्यामीत्याशयः। अत्र विज्ञानविषयत्वमिति निर्देष्टव्ये यद्विज्ञानमिति निर्दिशति यच्चाभावघटिततया विरोधिभावान्तरघटिततया वा निर्देष्टव्येऽन्यथाविज्ञातस्य सम्यगिति सामान्येन निर्दिशति तेन ज्ञायते उभयसाधारण्येनैव बाधलक्षणनिष्कर्षो द्रष्टव्य इत्यपि भाष्यकारस्याभिमतमिति मनसि निधाय प्रकृत्यर्थभूतोभयविधबाधस्य तदिति सामान्येन परामर्शो नपुंसकं तद्विषयत्वं बाध्यत्वमिति शेषपूरणेन च वाक्यं योजनीयमित्याह ॥ **बाध्यत्वमितीति** ॥ न चैतट्टीकाकाराशयज्ञापकाभाव इति वाच्यम् । प्रकृतप्रधानबाध्यत्वस्य तदिति परामर्शेन विज्ञानशब्दस्य च पूर्ववत्तद्विषयत्वलक्षणामात्राभ्युपगमेन व्याख्यानोपपत्तौ बाध्यत्वशब्देनोपसर्जनतया प्रकृतबाधसामान्यपरामर्शे शेषपूरणादेरेव तद्गमकत्वात् । न चैवमस्मिन्व्याख्याने कुसृष्टिरिति वाच्यम् । अधिकार्थलाभेन तस्या आदरणीयत्वात् । अत्र प्रकृत्यर्थबाधनिर्देशेन तदिति नपुंसकोपपत्तावपि वस्त्वभावबोधो बाधो विरोधिभावान्तरज्ञानं बाध इत्यनेकभिन्नलिङ्गनिर्दिष्टयोः सामान्येन परामर्शेन व्याख्याने उभयोरपि लक्ष्यत्वसूचनेन परोक्तलक्षणयोरव्याप्तिसूचनमपि सिध्यतीत्येवं व्याख्यातमिति द्रष्टव्यम् । ननु बाधस्यैकप्रकारत्वे नानेकप्रकारतया कस्याप्यभ्युपगमो नापि भिन्नलिङ्गतया निर्देश इत्यतो वादिविप्रतिपत्तिमाह ॥ **केचिदिति** ॥ ननु तैस्तैरपरस्यालक्ष्यत्वाङ्गीकारान्नाव्याप्तिरित्यतः स्थाणुरयं शब्दो द्रव्यमित्येतद्बाधकतया न स्थाणुर्न द्रव्यमिति वाक्यानुमानयोरपि पुरुषोऽयं शब्दो गुण इति वाक्यादेरपि बाधकत्वप्रसिद्ध्या प्रत्यक्षस्थले चाध्यस्तवस्त्वभावबोधे विरोधिभावान्तरभाननियमेन निर्णयासम्भवेऽपि समानन्यायतया तत्राप्युभयोरपि बाध्यत्वनिश्चयसम्भवात्पराङ्गीकारस्य चाग्रहमात्रमूलत्वादव्याप्तिः स्यादेवेत्याह ॥ **शाब्दादाविति** ॥ अन्यथाविज्ञातस्येतद्व्याख्यानरूप'मसतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वादि'ति तत्त्वनिर्णयवाक्यं मनसि निधायोक्तोभयानुगममुपपादयति ॥ **रजतत्वादिनेत्यादिना** ॥ नन्वस्य लक्षणत्वे पूर्वविशेषणाधिक्यम् । न च घटादिज्ञानानां बाधत्वनिवृत्त्यर्थं तदिति वाच्यम् । द्रव्यादिवद्बाधत्वजात्याक्रान्तस्य कस्यचिदभावात्तस्य लक्ष्यत्वेऽप्यदोषादित्यतः परीक्षकैर्लोकव्यवहारानुसारेणैव लक्षणस्य प्रणेतव्यत्वात्सम्यग्ज्ञानमात्रस्य चातथात्वाद्युक्तं विशेषणमित्याशयेन पूर्वविशेषणव्यावर्त्यं दर्शयति ॥ **सम्यगिति** ॥ विरोधिविषयत्वविवक्षायामप्यतिव्याप्तिरेवेत्याह ॥ **रजतत्वेनेति** ॥ नागं सीसं वङ्गं त्रपु ॥ **तन्निरासायेति** ॥ न च पूर्वज्ञानप्रसञ्जितान्यथाकारलोडनरूपतया तस्यापि बाधत्वेन लक्ष्यत्वात्तन्निरासो युक्त इति वाच्यम् । भ्रमविषयत्वेन शुक्तिरजतादितुल्यस्य नागवङ्गत्वादिरूपस्यान्यथाऽऽकारमात्रस्यान्यथाविज्ञातस्येत्यनेन ग्राह्यतया तल्लोडनरूपत्वस्य सम्यग्ज्ञान एव सम्भवेन तस्यैव लक्ष्यत्वेन विवक्षणीयतया भ्रमनिरासस्यावश्यकत्वात् ॥ ( अन्यथाकारलोटनरूपस्येति । लुटविलोडने भ्वादिः । अयं दिवादावपि । भाषार्थश्चुरादौ ।

प्रतिघाते घुतादौ । डान्तोऽयमित्येके । ततश्च टवर्गप्रथमान्तपाठस्तृतीयान्तपाठोऽपि साधुरेवेति बोध्यम् ) । ननु तथाऽपि न्यूनताऽतिप्रसङ्गान्तरनिरासाय विशेषणान्तरस्याप्यावश्यकत्वादित्यत आह ॥ **अन्यथेति** ॥ ननु स्वरूपापेक्षयेत्यविशेषणेनातिप्रसङ्गानिरास इत्यत: शब्दसमभिव्याहारबललब्धार्था-दर्थान्तरकल्पनया दूषणस्य छलप्रसङ्गेनानुपपत्त्या समभिव्याहारबलेनैवातिप्रसङ्गाप्रसक्तौ तदर्थं विशेषण-स्यानावश्यकत्वादित्याह ॥ **छलेति** ॥ ननु तथाऽपि न्यूनतैव स्थलान्तरेऽतिप्रसङ्गतादवस्थ्यादित्यतो बाधशब्दार्थनिर्वचनपरेणानेन वाक्येन बाधशब्दार्थपरधातुसूत्रपर्यालोचनायां पूर्वज्ञानप्रसञ्जितान्यथाकार-लोडनरूपस्य सम्यग्ज्ञानस्य लक्षणत्वेन लाभान्न दोष इत्याशयेन धातुसूत्रमुदाहरति ॥ **बाधतिरिति** ॥ नन्वस्तु लोडनं तदर्थस्तद्यथाकथञ्चिदतिप्रसङ्गविषयेऽप्यस्तीत्यतस्तन्निष्कर्षं दर्शयति ॥ **तच्चेति** ॥ **स्वत एवेति** ॥ बाधकानवतारेऽपि व्यासङ्गादित एवेत्यर्थ: । अन्यथोत्तरक्षण एव बाधकावतारानियमा-त्क्षणिकत्वानुपपत्ति: । एवं च बाधकज्ञानस्य न तत्र प्रयोजकतेत्याशय: । ज्ञाननाशप्रयोजकज्ञाने बाधकत्वं नास्त्यपि । न चात्र विवाद: । व्यवहाराभावेन निश्चयोपपत्तेरित्याशयेनाह ॥ **सम्यगिति** ॥ **नापीति** ॥ बाधोत्तरमप्यनुवृत्तेरित्याशय: । तर्हि स्मृत्यर्थ एवानुपपन्न इत्यत आह ॥ **अत इति** ॥ नन्वन्यथाकारस्यासत्त्वान्न लोडनमित्यत उक्तमिवेति । पूर्वज्ञानप्रसञ्जितान्यथाकारस्यात्त्वेऽपि तदसहन-तया ज्ञायमानत्वात्तज्जनितप्रवृत्त्यादिफलपरम्पराविघटकतया तन्निवर्तकसाम्यमिवार्थ इत्याशय: । अत एव निबन्धे उदयने'नाप्ययमेव विषयापहारो यत्तद्विषयाधिक्षेपस्वभावसमुत्पाद: स च तत्फलप्रवाहप्रक्षेतिपपर्यन्त' इत्युक्तमिति ध्येयम् । नन्वेवं स्मृत्यर्थनिष्कर्षेऽपि न शुक्लत्वज्ञानादावतिप्रसङ्गपरिहार इत्यतो लक्षणेऽस्यार्थस्याभिप्रेततया नातिप्रसङ्ग इत्याशयेनाह ॥ **तथा चेति** ॥ लक्षणे तद्वाचकपदाभावे कथमे-तल्लाभ इत्याशङ्कते ॥ **तदिति** ॥ अन्यथाविज्ञातस्येत्यत्र कर्मणि भूतप्रत्ययेन पूर्वत्वस्य प्रसञ्जितत्वस्य च लाभ: । अन्यथेत्यनेनान्यथाकारस्य लोडनमित्यस्य लाभं दर्शयति ॥ **अन्यथाविज्ञातस्येतीति** ॥ न च सर्वसम्यग्ज्ञानस्य बाधत्वप्रसक्तौ तद्व्यावृत्तये तद्विशेषणमिति वाच्यम् । तेन तद्व्यावृत्तावपि शुक्लत्वज्ञानाद्यव्यावृत्त्याऽतिप्रसङ्गापरिहारेणैकदेशमात्रव्यावृत्तेरप्रयोजकतया वैयर्थ्यानिस्तारात् । न चान्यथाज्ञानपूर्वकत्वाच्छुक्लत्वादिज्ञानादे: संग्राह्यत्वमेव भाष्याभिमतं किं न स्यादिति वाच्यम् । बाधत्वेन व्यवह्रियमाणस्यैव लक्ष्यतयाऽन्यथाज्ञानपूर्वकेऽपि शुक्लत्वादिज्ञानादौ बाधत्वेन व्यवहाराभावेन तस्याप्यसंग्राह्यत्वात् । एवमपि संग्राह्यत्वेऽविशेषात्सर्वसम्यग्ज्ञानस्यापि संग्राह्यतापत्तौ तद्व्यावृत्त्यर्थमन्यथा-विज्ञातस्येति विशेषणानुपादानप्रसङ्गादित्याह ॥ **अन्यथेति** ॥ तथा च तद्विशेषणबलेन षष्ठ्यर्थतया लोडनरूपसम्बन्धलाभान्न लक्षणे तद्वाचकपदप्रक्षेप इति भाव: । किं तद्बाध्यत्वमिति प्रश्नस्य व्यधि-करणमेतदुत्तरमित्यत आह ॥ **तदिति** ॥

स० — **नासत इति** ॥ यथोक्तम् । 'विषयस्य कुतो बाधो विद्यमानं हि बाध्यते । न हि वन्ध्यासुतो वध्यो देवदत्तो हि वध्यत' इति । 'कश्चायं बाध उद्दिष्टो न हि नाशोऽसतो भवेत् । निवृत्तिश्चाप्रवृत्तस्य कथमेवोपपद्यत' इति च । वक्ष्यते चैतत् । 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनरित्यनेन द्वितीयस्य तृतीये । ननु प्रत्यक्षरूपबाधज्ञाने उभयोरपि नियतत्वात्कथं प्रत्येकमव्यापकत्वमित्यत आह ॥ **शाब्दादाविति** ॥ आजानसिद्धे स्वभावसिद्धे । बाधशब्दो लक्ष्यवाचकः । स च यौगिकः । तदर्थ एव लक्षणवाक्येन विव्रियते । तदर्थे च विचार्यमाणेऽतिप्रसङ्गो नास्तीत्याह ॥ बाधतिः खल्विति । ननु ज्ञानस्यापि लोडनमेव बाधो भविष्यतीत्यत आह ॥ **सम्यग्ज्ञानस्यापीति** ॥ आत्मविशेषगुणानामुत्तरोत्तरेण पूर्वपूर्वस्य विनाश्यत्वनियमादिति भावः ॥ **लोडनमिवेति** ॥ तथाच गौणमेवात्र लोडनं विवक्षितं परित्यागरूपगुणस्य मुख्यार्थे भ्रमविषये च साम्यादिति भावः । अत्र अन्यथाप्रतीतिपूर्वकं तदुन्मूलनेन सम्यग्बोधो बाध इति निष्कृष्टं लक्षणम् । तत्र तदुन्मूलनं नाम तस्याः भ्रमत्वख्यापनं वा । तद्विषयस्यासत्त्वावेदनं वा । एवञ्च 'भ्रमोऽन्यदन्यथा ज्ञानं विषयीकुर्वदिष्यते । भ्रमप्रसञ्जिताकारलोडनं बाधसंज्ञितमिति संग्रहश्लोकः । पूर्वज्ञानप्रसञ्जितस्यान्यथाकारस्य लोडनमिवेत्येतदपि भाष्ये वक्तव्यं किमिति पृच्छति ॥ **तत्किमिति** ॥ नेत्याह ॥ **न हीति** ॥ अवक्तव्यत्वे कथमस्य लाभ इति पृच्छति ॥ **कथमनुच्यमानमिति** ॥ अन्यथाविज्ञातस्येति वचनसामर्थ्येनापि कथमिदं लभ्यत इत्यत आह ॥ **अन्यथेति** ॥

प० — **अनभिमतादिति** ॥ मायावाद्यनभिमतात्सिद्धान्त्यभिमतादित्यर्थः । क्वचिदभिमतादित्येव पाठः । व्याहतिनिरासाय, दृष्टान्त इत्येवानुक्त्वा, दृष्टान्तत्वेन तवाभिमत इति भावेनोक्तं ॥ **दृष्टान्ताभास इति** ॥ **वक्ष्यते चैतदिति** ॥ 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनरि'ति वियत्पादे 'पृथगुपदेशादि'त्यधिकरण इति भावः । नपुंसकत्वनिर्वाहायाऽऽह ॥ **सामान्येन परामृशतीति** ॥ **शाब्दादाविति** ॥ अग्निना सिञ्चेदित्यादिशाब्दबोधस्थले तदभावबोधनस्य वह्निः शीतः पदार्थत्वादित्यनुमाने च तद्विपरीतभावान्तरज्ञानस्य च बाधत्वदर्शनादित्यर्थः । उभयानुगतमेतदुच्यत इत्येतद्व्यनक्ति ॥ **रजतत्वादिनेति** ॥ **छलेति** ॥ अन्यथेत्यस्य तत्स्वरूपापेक्षयेत्यस्य विवक्षितत्वादभिप्रायान्तरकल्पनेनातिव्याप्तिं कथयतः छलोत्तराख्यदूषणं स्यादित्यर्थः ॥ **आजानसिद्ध इति** ॥ भ्रान्तिपूर्वकत्वं विना स्वभावसिद्ध इत्यर्थः । अतिव्याप्तिं निराकर्तुमुपोद्घातमाह ॥ **बाधतिरित्यादिना** ॥ अत इत्यन्तेन । बाधृ विलोडन इति धातुपाठादिति भावः ॥ **क्षणिकत्वेनेति** ॥ आशुविनाशित्वेनेत्यर्थः । परमतेन चैवमुक्तिः ॥ **नित्यलोडितत्वादिति** ॥ असत्त्वादिति भावः ॥

**कोऽतिप्रसङ्ग इति** ॥ तथापि रजतत्वेनेत्यादिना शङ्कितस्थलद्वयेऽतिव्याप्तिरूपदोषो नेत्यर्थः । शङ्कते ॥ **तत्किमिति** ॥ तदेतत्पूर्वज्ञानप्रसञ्जितस्यान्यथाकारस्य लोडनमिव यद्ज्ञानमस्ति स बाध इत्येतत् विज्ञातस्येत्यादिमूलवाक्ये शेषतया प्रक्षेप्तव्यं किमित्यर्थः । पूर्वज्ञानप्रसञ्जितस्यान्यथाकारस्य लोडनमिवेत्यंशबोधक पदस्य मूलवाक्येऽनुपलब्धेः । यथा पाणिनीयसूत्रेषु विवक्षितार्थस्याशेषस्याप्राप्तिस्थले वार्तिककृता तत्र-तत्र इदं वक्तव्यमिदमुपसङ्ख्येयमित्युच्यते तथेति भावः । सिद्धान्ती परिहरति ॥ **न हीति** ॥ तदेतन्नहि वक्तव्यमित्यर्थः । शङ्कते ॥ **कथमिति** ॥ तस्योत्तरमाह ॥ **अन्यथेत्यादि** ॥ इति वचनसामर्थ्या-दनुच्यमानमपि गम्यत इत्यन्वयः ॥ **अन्यथेति** ॥ अन्यथा विज्ञातस्येत्यंशेन प्राग्विवक्षितार्थस्यालाभे सम्यग्विज्ञानमेव तन्मतमित्येवं ब्रूयात्किमन्यथाविज्ञातस्येत्यंशेनेत्यर्थः ।

या० — **अनभिमतादिति** ॥ सिद्धान्त्यनभिमतादित्यर्थः । ननु ज्ञानबाध्यत्वं नाम न ज्ञाननिवर्त्यत्वं किंतु नास्ति नासीन्न भविष्यतीति बोध्यमानाभावप्रतियोगित्वम् । तच्चास्ति शुक्तिरजता-दावतो न साधनविकलतेत्याशङ्कते ॥ **ननु प्रतिपन्नेति** ॥ नोक्तप्रतिषेधप्रतियोगित्वमसत्त्वं किन्तु निरुपाख्यत्वादिकमन्यदेवातो नोक्तदोष इत्यत आह ॥ **वक्ष्यते चैतदिति** ॥ 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनः । प्रतीतिर्नासत इति वदन्नङ्गीकरोति तामि'त्यादिना निरुपाख्यत्वादेरसम्भवित्वादुक्तनिषेधप्रतियोगित्वमेवासत्त्वमङ्गीकार्यमिति वक्ष्यत इत्यर्थः । ननु यदि न बाध्यत्वं शुक्तिरजतादेस्तर्हि सकललोकविरोधादिप्रसङ्ग इत्यन्वयः । नन्विदं रजतमिति प्रत्यक्षस्येयं शुक्तिरिति ज्ञानं न साक्षाद्बाधरूपं ग्राह्याभावानवगाहित्वात् । किन्तु ग्राह्यविरहव्याप्या-वगाहित्वेनानुमानतयैव । न चानुमानस्य प्रत्यक्षबाधकता क्वापि दृष्टेष्टा वा । 'क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमि'ति वक्ष्यमाणत्वात् । अतो विरोधिभावान्तरज्ञानस्यालक्ष्यत्वान्न तत्राव्याप्तिर्दोषा-येत्यत आह ॥ **शाब्दादाविति** ॥ भ्रम इति शेषः । तथाच प्रबललिङ्गज्ञानस्य प्रत्यक्षाबाधकत्वेऽपि शाब्दानुमितिरूपभ्रमबाधकताऽस्त्येव । अत एव मीमांसायां निरवकाशलिङ्गस्य श्रुत्यादिबाधकता प्रसिद्धेति भावः । यद्वा विरोधिभावान्तरज्ञानमध्यस्तवस्त्वभावज्ञानं वा यदि प्रत्यक्षरूपं तदा तयोरन्यो-न्यविषयविषयकत्वं भविष्यति उल्लेखाभावेऽपि सन्निकर्षादिरूपसामग्रीसत्वे तज्ज्ञानसम्भवात् । न हि प्रात्यक्षिके ज्ञाने यावद्विषयीक्रियते तावदुल्लिख्यत इति नियमोऽस्ति । अत उक्तयोरुभयोरपि ज्ञानयोरु-भयविधबाधलक्षणसम्भवान्नाव्याप्तिरित्यत आह ॥ **शाब्दादाविति** ॥ शाब्दयोरनुमितिरूपयोर्वोक्तज्ञान-योरपि प्रसिद्धिबलाद्बाध्यत्वं तावदस्ति । तत्र च नान्योन्यविषयविषयकत्वं सम्भावितम् । शब्दानुप-स्थितस्य व्यापकतावच्छेदकताऽनवच्छिन्नस्य च शाब्दे बोधेऽनुमितौ चाभानात् । अतस्तत्राव्याप्तिः

स्यादेवेति भावः । विरोधिभावान्तरज्ञाने स्वबाधलक्षणमुपपाद्याध्यस्तवस्त्वभावबोधेऽपि तदुपपादयति ॥ **एवममतो रजतस्येति** ॥ नागः सीसम् । वङ्गं रङ्गम् । आजानसिद्धे स्वभावसिद्धे । न तु पूर्वज्ञान-बाधकत्वेन प्रवृत्त इत्यर्थः ॥ **बाधतिरिति** । बाधृ विलोडन इति धातुव्याख्यानादिति भावः ॥ **अस्त्विति** ॥ अङ्गीक्रियत इत्यर्थः । उत्तरज्ञानेन लोडनं विवक्षितमिति चेत्तत्राह ॥ **सम्यग्ज्ञानस्यापीति** ॥ अर्थोऽपि किं शुक्ती रजतं वेति विकल्प्योभयत्रापि दोषमाह ॥ **शुक्तिशकलादेरित्यादिना** ॥ अन्यथाऽऽकारस्य रजतस्य ॥ **लोडनमिवेति** ॥ नित्यनिवृत्तत्वेन तस्य मुख्यलोडनासम्भवाद्गौणमेव लोडन-मत्र विवक्षितम् । परित्यागरूपगुणस्य मुख्यार्थे भ्रमविषये च साम्यादिति भावः ॥ **तत्किं वक्तव्यमेतदिति** ॥ लक्षणवाक्य इति शेषः । उत्तरमाह ॥ **न हीति** ॥

श्री०—**व्यवच्छिनत्तीति** ॥ तथा च मायावाद्यभिमतमित्यर्थः । नन्वियं शुक्तिरिति ज्ञानं न लक्ष्यम् । साक्षाद्ग्राह्याभावानवगाहित्वेन । यदीदं बाधकं तर्हि तस्येदं न रजतं शुक्तित्वादिति ग्राह्याभावव्याप्यशुक्तित्वावगाहित्वेनानुमानिकतया इदं रजतमिति प्रत्यक्षबाधकत्वं न सम्भवति । 'क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमिति वक्ष्यमाणत्वात् । तथा चेयं शुक्तिरिति ज्ञानस्येदं रजतमिति ज्ञानबाधकत्वायोगेनालक्ष्यत्वान्न तत्राव्याप्तिर्दोष इत्यत आह ॥ **शाब्दादाविति** ॥ भ्रम इति शेषः । तथा चेयं शुक्तिरिति ज्ञानस्येदं रजतमिति प्रात्यक्षिकभ्रमबाधकत्वाभावेऽपि इदं रजतमिति शब्देन चाकचक्यादिमादृश्यलिङ्गकानुमित्या वा भ्रमो जातस्तत्रेयं शुक्तिरिति ग्राह्याभावव्याप्यावगाहित्वेनानु-मानरूपस्यापीयं शुक्तिरिति ज्ञानस्य शाब्दानुमानिकभ्रमबाधकत्वं प्रसिद्धमिति लक्ष्यत्वात्तत्राव्याप्तिर्भविष्य-त्येवेत्यर्थः । अत्र द्वयोरिति पदं न स्वरसम् । अथवा नन्विदं लक्षणद्वयं कथं प्रत्येकमव्यापकम् । यथा नेदं रूप्यमिति प्रात्यक्षिके बाधकज्ञाने शुक्तित्वमपि प्रतीतमेव । तथेयं शुक्तिरिति प्रात्यक्षिके बाधकज्ञाने रजताभावोऽपि प्रतीत एवेत्यन्योन्यविषयविषयकत्वमस्ति । न चोल्लेखप्रसङ्ग इति वाच्यम् । प्रात्यक्षिकज्ञाने यावत्प्रतीयते तावतः सर्वस्योल्लेखनियमाभावात् । अत एवोभयोरपि बाधकज्ञानयोरन्यो-न्यविषयविषयकत्वात्कथं प्रत्येकमव्यापकमिदं लक्षणमित्यत आह ॥ **शाब्दादाविति** ॥ इदं रजतमिति भ्रमानन्तरं नेदं रूप्यमित्याप्तवाक्यरूपशब्दतो दाहच्छेदानुमानेन बाधकज्ञानं जायते । तथेयं शुक्तिरिति शब्दतोऽनुमानेन वा बाधकज्ञानं जायते । तदा शाब्दादौ शब्देनानुमानेन वा जायमानेनेदं रूप्यमियं शुक्तिरिति ज्ञानद्वये द्वयोरपि बाधकत्वं प्रसिद्धम् । न चोक्तरीत्या शाब्दानुमानिकज्ञानयोरप्यन्योन्यविषय-विषयकत्वेनोक्तदोष इति वाच्यम् । शाब्दज्ञानस्य शक्यतावच्छेदकमात्रप्रकारकत्वनैयत्येनानुमितेश्च व्यापकताऽवच्छेदकप्रकारकत्वनैयत्येन तदधिकस्य तत्राभासमानत्वेनान्योन्यविषयविषयकत्वाभावेन प्रत्येकम-

व्यापकं भवत्येवेति भावः । विरोधिभावान्तरज्ञाने स्वबाधलक्षणमुपपादयति ॥ **रजतत्वेनेत्यादिना** ॥ असतः सत्वप्रतीतिः सतोऽसत्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रांतित्वादित्युक्तत्वादिति भावः । अध्यस्त-वस्त्वभावबोधेऽपि स्वबाधलक्षणमुपपादयति ॥ **एवमिति** ॥ **छलेति** ॥ अन्यथेत्यस्य तत्स्वरूपापेक्षयेत्यस्य विवक्षितत्वादभिप्रायान्तरकल्पनेनातिव्याप्तिं कथयतः छलोत्तरत्वदूषणं स्यादित्यर्थः । शङ्कते ॥ **तत्किं वक्तव्यमेतदिति** ॥ तदेतत्पूर्वप्रसक्तिनस्यान्यथाकारस्य लोडनमिवेत्येतदवश्यं वक्तव्यमेव, अतो विज्ञातस्येति लक्षणवाक्ये, किं किमर्थमाचार्यैः कण्ठतो नोक्तमित्यर्थः । उत्तरमाह ॥ **न हीति** ॥ एतदवश्यं लक्षणवाक्ये कण्ठतो न हि वक्तव्यमित्यर्थः । पुनः शङ्कते ॥ **नन्विति** ॥ कण्ठतोऽनुक्त-त्वेऽप्यर्थादुक्तमेवेत्याह ॥ **अन्यथेति** ॥ अनेनान्यथेति वचनेन ।

च०—**वक्ष्यति चैतदिति** ॥ पृथगुपदेशादितिनये 'नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता । यदि बाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनरि'त्यभिधास्यतीत्यर्थः ॥ **विज्ञातस्येतीति** ॥ स्वाधिकरणावृत्ति-धर्मोऽन्यपदेन, तदुत्तरप्रत्ययेन प्रकारवचने थालित्यनुशासनादभेदेन तदर्थान्वितप्रकारस्तदुत्तरलुप्तसुपा च निरूपकतया धात्वर्थान्वयिन्याधेयतया प्रकृत्यर्थविशेषिता प्रकारता । लुप्तविभक्त्यननुसंधानपक्षे तु अभेदेन धात्वर्थान्वयिप्रकारतानिरूपकमेव लक्षणयोपस्थाप्यते । तदेकदेशप्रकारतायामाधेयतया प्रकृत्यर्थोऽन्वेति । भूताधिकारीयकर्मसाधननिष्ठान्तेन धात्वर्थनिरूपितविषयतारूपकर्मताऽऽपन्नं तदुत्तरविभक्त्या च विशेष्यता-निरूपकत्वं प्रत्याप्यते । तदेकदेशविशेष्यताऽन्वितं स्वसमानाधिकरणधर्मनिष्ठप्रकारतानिरूपितत्वं सम्य-गित्यनेन । तथा च स्वाधिकरणावृत्तिधर्मनिष्ठप्रकारतानिरूपिता या सांप्रतिकध्वंसप्रतियोगित्वरूपातीतत्व-विशेषितज्ञानीयविशेष्यता तदापन्ननिष्ठा या स्वसमानाधिकरणधर्मप्रकारतानिरूपितविशेष्यता तन्निरूपक-ज्ञानं बाध इति समुदितार्थः । वाद्यन्तरोक्तलक्षणद्वयमनूद्य प्रतिविधत्ते॥ **केचिदित्यादि॥ प्रत्येकमव्या-पकमिति** ॥ अध्यस्तवस्त्वभावविषयकबोधत्वमियं शुक्तिरिति ज्ञाने विरोधिभावान्तरविषयकत्वं नेदं रजतमिति ज्ञाने अव्यापकमित्यर्थः । नन्विदं रजतमिति प्रत्यक्षं प्रतीयं शुक्तिरिति ज्ञानस्य न साक्षा-द्बाधरूपता सङ्गच्छते ग्राह्याभावानवगाहित्वादित्याशङ्कायां तदभावानवगाहित्वेऽपि तदभावव्याप्यवत्ता-ज्ञानमुद्रया तद्वत्ताज्ञानविरोधितायास्तादृशज्ञानदशायां तादृशानुमितिशाब्दबोधापत्तिवारणाय सर्वोपेततया तल्लक्ष्यताध्रौव्यादव्याप्तिः सुस्थेत्याह ॥ **शाब्दादाविति** ॥ तस्मात् वाद्यन्तरोक्तलक्षणद्वयस्याप्यव्यापक-त्वात् उभयानुगतम् दर्शितबाधद्वयसाधारणमेतत् उक्तदिशा परिष्कृतम् । विशेष्यावृत्तिरजतत्वादिना विज्ञातं यच्छुक्तिशकलं शुक्तित्वेन तदवगाहिज्ञानं, सत्त्वरूपतादृशधर्मोपरागेण ज्ञानगोचररजतादिक-मसत्त्वेन विषयीकुर्वत् ज्ञानं च परिष्कृतलक्षणविशेषितं भवतीति संग्राह्यसंग्रहः । वारणीयवारणं तु

व्यक्तमेव । पूर्वदलप्रयोजनं स्फुटयति । सम्यगित्यादिनोक्तमित्यन्तेन । सम्यक्पदप्रयोजनं दर्शयति । अन्यथेत्यादिनोक्तमित्यन्तेन । नागं वङ्गं, त्रपु सीसम् । समुदितस्याप्यविरोधिधर्मान्तरप्रकारकज्ञाने पुरुषान्तरसंबन्धिनि तदीय एव कालान्तरभाविनि चातिप्रसङ्गमाशङ्कते ॥ **तथाऽपीत्यादिना चेदित्यन्तेन** ॥ आजानसिद्धे निसर्गसिद्धे । विज्ञातस्यान्यथेति भाष्यकारीयनिर्देशस्यैवोक्तातिप्रसङ्गनिरासकतां प्रतिपिपादयिषति ॥ **बाधतिरित्यादिना** ॥ 'इक्श्तिपौ धातुनिर्देश' इति स्मृतेर्भवतेर इत्यादाविव बाधृधातुरित्यर्थः । लोडने ध्वंसानुकूलव्यापारे वर्तते । तादृशव्यापारवाचकः स धातुरित्यर्थः । नकुलोऽहिं बाधते अहेर्नकुलो बाधक इत्यादावहिप्रतियोगिकध्वंसानुकूलव्यापारकर्ता नकुल इति बोधोदयात् । तथा चेदं रजतमिति ज्ञानस्य नेदं रजतमित्यादिज्ञानं बाधकमिति वाक्यादपि तादृशज्ञानप्रतियोगिकध्वंसत्वावच्छिन्नजन्यतानिरूपकव्यापारकर्त्रित्यर्थो भायात् । तथा भाने च लक्ष्यासंग्रहः । अत्रोत्तरक्षणे बाधकानवतारेऽपि तदुत्तरोत्पन्नकामिनीजिज्ञासादिनाऽपि पूर्वोत्पन्नभ्रमविनाशोत्पत्त्या तादृशभ्रमनाशत्वावच्छिन्नं प्रति तदुत्तरोत्पन्नबाधकज्ञानत्वावच्छिन्नस्य केनापि हेतुतायाः अनङ्गीकारात् । यदि च जन्यतायां तादृशध्वंसत्वावच्छिन्नत्वमनिवेश्य ध्वंसवृत्तित्वमात्रं निवेश्यते तदा यद्यपि आत्मविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यतोपगत्या तत्संग्रहो भवति तथाऽपि घटज्ञानोत्तरपटज्ञानेनोक्तविधया घटज्ञाननाशोत्पादादतिप्रसङ्ग इत्याह ॥ **सम्यग्विज्ञानस्येत्यादि** ॥ षष्ठ्यन्तज्ञानपदस्य कर्मसाधनल्युडन्तताऽऽश्रयेण ज्ञेयपरत्वेऽपि ज्ञाननिरूपितविशेष्यतारूपविषयताऽऽपन्नपरता तादृशप्रकारताऽऽपन्नपरता वेति कल्पद्वयीमभिप्रेत्य आद्ये तादृशशुक्तिप्रतियोगिकध्वंसस्य तदानीमनुत्पादेन द्वितीये तस्यालीकत्वेन तत्प्रतियोगिकध्वंसस्य गगनकुसुमायमानतया कल्पद्वयेऽपि संग्राह्यासंग्रहो दुर्वार इत्याह ॥ **नापीत्यादि** ॥ दर्शितदिशा मुख्यार्थोरीकृतेः प्रकृतेऽयोगेन कर्तृसाधनप्रत्ययान्तबाधकपदस्य प्रवृत्तिप्रतिबन्धकत्वावच्छिन्ने लक्षणाऽऽश्रयणीया । षष्ठ्यन्तज्ञानपदस्य तादृशप्रकारताऽऽपन्नपरतैव । इत्थं च पूर्वज्ञानीयप्रकारतारूपप्रमाङ्कितत्वविशेषितालीकाकारविषयकप्रवृत्तिप्रतिबन्धकमुत्तरज्ञानमिति वाक्यार्थपर्यवसानात् । विज्ञातस्यान्यथेत्यत्रापि षष्ठ्यन्तस्य थालन्तविशेषणतया'ऽव्ययादाप्सुप' इति थालन्तोत्तरलुप्तषष्ठ्याश्च प्रवृत्तिप्रतिबन्धकत्वावच्छिन्नलक्षकतया तदर्थस्यान्योत्तरपदार्थान्वये तादृशार्थस्यैव पर्यवसानेन संग्राह्याखिलसंग्रहस्य वारणीयज्ञानानां च तादृशप्रवृत्तिप्रतिबन्धकताविरहेण वारणं च संभवतीत्याशयेनाभिधत्ते ॥ **अत इति** ॥ इत्थं च लक्षणवाक्ये दर्शितातिप्रसङ्गनिरासकपदान्तरपूरणमन्तरेणापि सामञ्जस्यान्न तदावश्यकमित्याह ॥ **सामर्थ्यादित्यन्तेन** ॥ अत्र च द्विष्टसाधनीभूतार्थगोचरभ्रमोत्तरबाधसंग्रहाय प्रवृत्तिनिवृत्त्यन्यतरप्रतिबन्धकतानिवेशेऽपि उपेक्षणीयार्थगोचरभ्रमोत्तरबाधकज्ञानस्य, इष्टसाधनताज्ञानाभावकालीनतत्साधनार्थगोचरभ्रमोत्तरतादृशज्ञानस्य चासंग्रहप्रसङ्गो दुर्वारः । तत्रेष्टसाधनताज्ञानरूपकारणविरहादेवाप्रवृत्त्युपपत्तौ तत्र

प्रवृत्तिप्रतिबन्धकस्याकल्पनादिति परीक्षकाणां समयादिति यदि वैयात्येनोच्यते तदा न्यायनयदिशा भङ्ग्यन्तरमपि दर्शयिष्यामः । तथाहि विज्ञातस्यान्यथा सम्यगिति प्रतीकार्थपरिष्कृतौ स्वाव्यवहितपूर्वक्षणावच्छेदेन स्वाधिकरणवृत्तित्वस्याद्यदलनिविष्टदर्शितातीतत्वस्थानाभिषिक्तत्वोपगमेनाद्यज्ञानद्वयस्योत्तरनिविष्टप्रकारतायां स्वावच्छेदकधर्मावच्छिन्नप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपितत्वतदभावनिरूपितव्याप्त्यवच्छिन्नत्वप्रतियोगितासंसर्गावच्छिन्नतद्व्यापकविषयतानिरूपितत्वान्यतमविशेषितत्वस्य निवेशनेनोत्तरस्य च निरासात् । अत्र स्वपदेनाद्यदलनिविष्टप्रकारतोपादेया । ग्राह्याभाववत्ता–तदभावव्याप्यवत्ता–तद्व्यापकाभाववत्ताज्ञानानां संग्रहायान्यतमपर्यन्तानुधावनम् । अथ तद्वत्ताज्ञानं प्रति तदभावनिरूपितव्याप्त्यवच्छिन्नप्रकारताशालिज्ञानत्वेन तद्व्यापकवृत्तिप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपिताभावप्रकारताशालिज्ञानत्वेन प्रतिबन्धकतायां निर्धूमत्वव्याप्यनिर्वह्नित्वमिति ज्ञानसमवहितस्य निर्वह्निश्चायमिति ज्ञानस्य धूमव्यापको वह्निरिति ज्ञानसमवहितस्य वन्ह्यभाववांश्चायमिति ज्ञानस्य समवधानदशायां च धूमवत्ताज्ञानोत्पादप्रसङ्गेन दर्शितज्ञानद्वयविशिष्टज्ञानोभयसाधारणनिर्वह्नित्वधर्मिकनिर्धूमत्वव्याप्यत्वज्ञानविशेषितनिर्वह्नित्वज्ञानत्वेन, वह्निधर्मिकधूमव्यापकताज्ञानविशेषितवन्ह्यभाववत्ताज्ञानत्वेन च प्रतिबध्यप्रतिबन्धकभावस्याकरे स्थिततया दर्शितज्ञानद्वयासंग्रहो दुर्वार इति चेत् । मैवम् । स्वाश्रयवृत्तिनिष्ठप्रकारताघटितधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रतियोगितासंसर्गावच्छिन्नस्वाश्रयावृत्तिधर्मप्रकारताघटितधर्मज्ञानवैशिष्ट्यान्यतरविशेषितज्ञानत्वविवक्षया सामञ्जस्यात् । न चैवं समूहालम्बनमादाय घटादावपि तत्तद्विषयत्वरूपबाध्यत्वलक्षणस्यातिव्याप्तिर्दुर्वारेति वाच्यम् । यादृशयादृशविषयतात्वं दर्शितान्यतरसमानाधिकरणाभावप्रतियोगिताऽवच्छेदकं तत्तदवच्छिन्नविषयिताशून्यत्वस्य ज्ञाने निवेशेनाक्षतेरित्यलं प्रपञ्चेन ।

सु० —अथवाऽनिर्वचनीयममुख्यं सदित्युक्तम् । तत्र किमिदमनिर्वचनीयत्वम् । किं निरुक्तिविरहः । किंवा निरुक्तिनिमित्तविरहः । नाद्यः । अनिर्वचनीयमित्यादिनिरुक्तेः सत्त्वेनासम्भवित्वात् । द्वितीयेऽपि निरुक्तिनिमित्तं ज्ञानमर्थो वा स्यात् । नाद्यः । ज्ञानस्योभयवादिसिद्धिसद्भावात् । न द्वितीयः । यथा प्रतिभासमर्थस्यालौकिकस्य रजतादेर्मायावादिनाऽभ्युपगतत्वादित्याशङ्क्य परेणानिर्वचनीयस्य लक्षणद्वयमभिहितम् । सदसद्विलक्षणत्वमनिर्वचनीयत्वं ज्ञानबाध्यत्वं चेति । तत्राद्यं तावन्निराकरोति ॥ वैलक्षण्यं सतश्चेति ॥ व्याख्यानानि तु पूर्ववदेव । तत्र यावत्सु पक्षेषु सिद्धार्थत्वपर्यवसानं तावत्स्वनिर्वचनीयत्वस्य सत्त्वाविरोधित्वेन न सन्प्रपञ्चः किन्त्वनिर्वचनीय इत्यारम्भासङ्गतिर्दोषोऽवगन्तव्यः । यत्र पुनर्बाधादिपर्यवसानं

तत्राव्याप्तिरवगन्तव्या । अथवाऽनिर्वचनीयत्वेन वियदादिकं शुक्तिरजतादिकं च परस्याभिमतम् । तत्र सत एव सत्त्वेन प्रमितस्यैव वियदादेर्विश्वस्यासद्विलक्षणत्वमेव स्वयं सत् । एवमसत एवासत्त्वेन प्रमितस्यैव शुक्तिरजतादेर्विश्वस्य सर्वस्याप्यारोपितस्य सद्विलक्षणत्वमेव स्वयं सत् । वियदादावसद्विलक्षणत्वमेवास्ति । सद्वैलक्षण्यं तु प्रमाणबाधितम् । तथा शुक्तिरजतादौ सद्विलक्षणत्वमेवास्ति । असद्वैलक्षण्यं तु प्रमाणविरुद्धम् । अतोऽसम्भविना तेन लक्षणेनोक्तेन कथं तेऽनिष्टं निग्रहस्थानं न भवेदित्यादियोजना द्रष्टव्या । भेदवादिन इत्यनेन मायावादिनो वियदादौ सद्वैलक्षण्याङ्गीकारः शुक्तिरजतादौ चासद्विलक्षणत्वाभ्युपगतिराग्रहमात्रमूलैवेत्यभिप्रैति ॥ यद्युच्यत इत्यत्राप्युक्तरीत्याऽसम्भवित्वादिकं ज्ञातव्यम् । सन्मात्रत्वमित्यनेनातिव्याप्तिरुच्यते । तथा हि । ब्रह्मणोऽपि सन्मात्रत्वं सत्त्वानधिकरणत्वमिति यावत् । मायावादिनाऽभ्युपगतमिति शेषः । निर्धर्मकत्वाङ्गीकारात् । असत्त्वानधिकरणत्वं तु निश्चितमेव । तस्मात्तदपि ब्रह्मापि सन्नो भवेत्किन्त्वनिर्वाच्यं प्रसज्येतेति । सत्त्वेनासत्त्वेन च विचारासहत्वमनिर्वचनीयत्वं न पुनः सत्त्वासत्वधर्मानधिकरणत्वम् । ब्रह्म तु सत्त्वेन विचारसहं कथमनिर्वचनीयं स्यादिति चेन्न । सत्त्वेनेति त्वप्रत्ययार्थस्यानभ्युपगमात् । किञ्च यो वियदादौ विचारः स ब्रह्मण्यपि समान इति कथं न तस्यानिर्वचनीयत्वम् । यथोक्तम् । 'सर्ववैलक्षण्याङ्गीकारादि'त्यादि । निराकरिष्यते चासौ दुर्विचारस्तत्र तत्रेति ॥ द्वितीयमपि लक्षणं निराकरोति ॥ ज्ञानबाध्यत्वमिति ॥ यदि ज्ञानबाध्यत्वं नामोक्तविधया ज्ञाननिवर्त्यत्वं तदा वियदादौ शुक्तिरजतादौ च न सिद्धम् । वियदादेः सत्त्वेन शुक्तिरजतादेश्चासत्वेनाविद्योपादानकत्वाभावात् । ततश्चासम्भवित्वं लक्षणदोषः । यदि पुनर्ज्ञानविनाश्यत्वमात्रम् । तथाऽपि वियदादौ नित्ये नित्यत्वादेव शुक्तिरजतादौ चासत्वान्न सिद्धमित्यव्याप्तिः । यदि च प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं तदपि वियदादौ न सिद्धमित्यव्याप्तिरेव । उपपत्तयस्तूक्ता वक्ष्यमाणाश्चानुसन्धेयाः । ननु भवताऽपि बाध्यत्वं किमप्यङ्गीकरणीयमेव । पदस्य निरर्थकत्वायोगात् । तदेवास्माकमनिर्वचनीयलक्षणं भवत्वित्यत आह ॥ प्रतिवादिनो विज्ञातस्येति ॥ प्रतिवादिनो मम मतमिति सम्बन्धः । तच्चात्मन्यनिर्वचनीयेऽप्यस्तीत्यतिव्याप्तमिति शेषः । अत्रान्यथाविज्ञानमेव भ्रान्तिः । तत्प्रसञ्जितान्यथाऽऽकारलोडनं सम्यग्विज्ञानमेव बाध इत्यवधारयता मतान्तराणि निरस्तानि वेदितव्यानि । हिशब्देन तत्र प्रमाणप्रसिद्धिं सूचयति ॥

वा० — एवं लक्षणप्रमाणाभ्यां वस्तुसिद्धावपि लक्षणस्येतरव्यावृत्तवस्तुस्वरूपोपस्थितिमात्रहेतुत्वेन प्रमाणस्यैव च तत्सत्तानिश्चायकतया प्राधान्यात्तत्क्रममनुसन्धाय सदसद्विलक्षणत्वरूपानिर्वचनीयत्वे साक्षात्प्रमाणस्य निरासाज्ज्ञानबाध्यत्वरूपे तस्मिन्हेतुनिरासन्यायेन प्रमाणनिरासलाभेनानिर्वचनीयत्वप्रमाणनिराकरणस्य वैलक्षण्यं सतश्चापीति श्लोकत्रयेण लाभाल्लक्षणानिरासप्रयुक्तभाष्यन्यूनतापरिहारायानिर्वचनीयलक्षणनिरासपरतयाऽपि तद्व्याख्याति ॥ **अथवेति** ॥ ननु मिथ्यात्वसाधकत्वोभयोपपादकतया सदसद्वैलक्षण्यप्रसक्तावपि नानिर्वचनीयत्वप्रसक्तिरिति तल्लक्षणनिरासपरतया व्याख्यानमनुपपन्नमिति चेन्न । प्रमाणनिराकरणपरतयेव लक्षणनिराकरणपरतयाऽपि भाष्यकारस्य लाभाद्भाष्ये लक्षणनिरासोऽप्यभिप्रेत एव । स च पूर्वत्र सामान्याभिप्रायाकल्पनेऽनुपपन्न इति पूर्वत्र सामान्याभिप्रायेऽवश्यं कल्पनीयेऽनिर्वचनीयत्वमपि प्रसक्तमेवेति नानुपपत्तिरित्याशयेन पूर्वं स्वयमेव दर्शितामनिर्वचनीयत्वसामान्यप्रसक्तिं सूचयति ॥ **अनिर्वचनीयमिति** ॥ ननु तथाऽपि भाष्ये न्यूनतैव । लक्षणद्वयनिराकरणेऽप्यनिर्वचनीयशब्दार्थभूतलक्षणान्तरानिराकरणादित्यत: परेण लक्षणान्तराण्याशङ्क्य निराकृत्यैतल्लक्षणद्वयस्यैव व्यवस्थापिततयाऽन्येषां परानभिप्रेततया तदभिप्रेतयोश्च दूषणान्न न्यूनतेत्याशयेन भाष्यमवतारयति ॥ **तत्रेति** ॥ अत्र निरुक्तिर्निर्वचनीयं भावेऽनीयर् । न विद्यते निर्वचनीयं यत्र तदनिर्वचनीयं निरुक्तिविरह एवेत्याशयेनाऽऽद्य: कल्प: । निर्वचनसम्बन्धि निर्वचननिमित्तमिति यावत् निर्वचनीयमिदमर्थे छ: । न विद्यते निर्वचनीयं यत्रेत्यनिर्वचनीयम् । निर्वचननिमित्तरहितं तस्य भावो निमित्तविरहोऽनिर्वचनीयत्वमित्याशयेन द्वितीय इति ज्ञेयम् । शब्दप्रयोगे करणतया ज्ञानस्य विषयतयाऽर्थस्य च निमित्तत्वाद्विकल्पयति ॥ **द्वितीयेऽपीति** ॥ विषयज्ञानं हि शब्दप्रयोगे कारणम् । तच्च त्वयाऽप्यभ्युपेयत एवेत्याह ॥ **नाद्य इति** ॥ **यथा प्रतिभासमिति** ॥ ननु रजताभ्युपगमे तदुचितार्थक्रियाप्रसङ्ग इत्यतोऽर्थक्रियानर्हत्वरूपालौकिकत्वेन रजतादिकं विशेषितम् । ननु तर्हि तदभ्युपगमो व्यर्थ इत्यतोऽसत: प्रतिभासासम्भवादस्य च प्रतिभासादाविद्यकतदभ्युपगम इत्याशयेन यथाप्रतिभासमित्युक्तम् । यद्वा तत्तदुचितार्थक्रियानर्हत्वे कुतस्तस्य रजतादित्वमित्यतस्तथा तथा प्रतिभासनादित्याशयेन तदुक्तम् । अथवाऽर्थक्रियानर्हत्वरूपालौकिकत्वोपपादकत्वहेतुसूचनाय तदुक्तिरिति ध्येयम् । यदि पूर्ववदेव व्याख्यानं तर्हि तद्बोधितानां सिद्धसाधनत्वादीनामलक्षणदोषत्वाल्लक्षणनिरासकत्वासिद्धिरित्यत आह ॥ **तत्रेति** ॥ **आरम्भासङ्गतिरिति** ॥ न ह्यत्र लक्षणदूषणं प्रधानप्रयोजनं किन्तु न सन्प्रपञ्च: किन्त्वनिर्वचनीय: । एवं च साधकत्वाद्युपपत्तिरिति परोक्तखण्डनम् । तच्च द्वेधा सम्भवति । एवंलक्षणकेऽनिर्वचनीयत्वे तस्य सत्त्वाविरोधित्वान्न सन्प्रपञ्च: किन्त्वनिर्वचनीय इति वदता च सत्त्वविरोधिन एव तस्य कथनीयत्वादुक्तासिद्धिरिति प्रतिपादनेन । अव्याप्त्यादिना लक्षणस्यासम्भवेनानिर्वचनीयत्वानुपपत्त्योक्तानुपपत्तिरिति वा प्रतिपादनेन ।

तत्र सिद्धसाधनतादिपर्यवसाने द्वितीयप्रकारेण खण्डनासम्भवेऽपि प्रथमप्रकारेण खण्डनमक्षतमेवेति भावः । बाधादीत्यत्रादिपदेन व्याहतिपरिग्रहः । पूर्वव्याख्यानाभ्युपगमे सिद्धसाधनतापर्यवसानपक्षेऽसाधारणलक्षणदोषालाभाद्बाधादिपर्यवसाने पूर्वव्याख्यानरीत्याऽव्याप्तिलाभेऽप्यसम्भवालाभात्तल्लाभाय प्रकारान्तरेण भाष्यं योजयति ॥ **अथवेति** ॥ नन्वत्र वियदादौ सद्वैलक्षण्याभावप्रतिपादनमात्रेण नासम्भवः । शुक्तिरजतादौ लक्षणसम्भवेन यावल्लक्ष्यावृत्तित्वाभावात् । न च विश्वशब्देन शुक्तिरजतादेरारोपितस्य सर्वस्यापि विवक्षिततया तत्र सद्वैलक्षण्यसत्त्वेऽप्यसद्वैलक्षण्याभावेन तत्राप्यनेनैव लक्षणाभावः प्रतिपाद्यत इति वाच्यम् । तथाऽपि यावल्लक्ष्यावृत्तित्वाप्रतिपादनेनासम्भवप्रतिपादकत्वायोगादित्यतो व्यावहारिकवियदादेः प्रातिभासिकशुक्तिरजतादेरेव च परस्यानिर्वचनीयत्वेनाभिमतत्वात्तदुभयत्र लक्षणासम्भवप्रतिपादनेऽसम्भवसिद्धिरित्याशयेनाह ॥ **अनिर्वचनीयत्वेनेति** ॥ एवं योजनाबललब्धं तत्तल्लक्ष्ये व्यवस्थितत्तदंशाभावप्रयुक्तलक्षणासम्भवं प्रदर्शयति ॥ **वियदादाविति** ॥ **इत्यादीति** ॥ यतोऽसत एव सद्वैलक्षण्यमेव स्वयं सदतः सद्वैलक्षण्योक्तावसत्त्वमुक्तं स्यात् । पुनस्तस्यासद्वैलक्षण्योक्तिर्व्याहता । एवं यतः सत एवासद्वैलक्षण्यमेव स्वयं सदतोऽसद्वैलक्षण्योक्तौ सत्त्वमेवोक्तं स्यात् । पुनस्तस्य सद्वैलक्षण्योक्तिर्व्याहता । ततश्च व्याहतेनात एवासम्भविना तेन लक्षणेनोक्तेन कथं तेऽनिष्टं न भवेदिति व्याहतिपक्षेऽप्यसम्भवपरत्वेन योजना, बाधपक्षेऽसदुक्तयोजना वा द्रष्टव्येत्यर्थः । ननु यदस्ति यच्च बाधितं तस्य भेदवादिनं प्रतीव मायावादिनं प्रत्यपि सत्त्वाद्बाधितत्वाच्च भेदवादिन इत्युक्तेर्न फलमित्यतः सदपि बाधितमपि भेदवादिनं प्रति सद्बाधितमित्युक्त्या सदपि मायावादिनं प्रति न सद्बाधितमपि मायावादिनं प्रति न बाधितमिति मायावादिनस्तदनङ्गीकारस्य प्रमाणविरुद्धाङ्गीकारस्य च सूचनात्सतोऽप्यनङ्गीकारस्य प्रमाणविरुद्धाङ्गीकारस्य च प्रमाणमूलकत्वासम्भवेनाग्रहमात्रमूलकत्वं ज्ञापयितुं तदुक्तिरित्याशयेनाह ॥ **भेदवादिन इति**॥ **उक्तरीत्येति**॥ वियदादौ सर्वानेकसत्त्वानधिकरणत्वस्य साध्यत्वपक्षे पूर्वोक्तयोजनानुसारेणापसिद्धान्तव्याहतिपर्यवसानेऽव्याप्तिः । वैलक्षण्यं सतश्चेत्यधुनोक्तयोजनान्यायेन वियदादिशुक्त्यादिविषयकतया यद्युच्यत इत्यस्य योजनान्तरे त्वसम्भवः । योजनान्तरं तु वियदादीनां शुक्तिरजतादीनां चानिर्वचनीयत्वेन तवाभिमतत्वात्तयोश्च सर्वस्मादनेकस्मात्सर्वस्माच्च वैलक्षण्यम् । सर्वानेकसत्त्वानधिकरणत्वमिति यावत् । लक्षणतया यद्युच्यत तर्ह्युक्तरीत्याऽनेकसर्वसत्त्वानभ्युपगमेऽनेकेत्यादिविशेषणवैयर्थ्यापत्त्या सद्भेदसंस्थितिः । अनेकसर्वसत्त्वाधिकारणान्यभ्युपेयानि । तेषां च वियदादिशुक्तिरजतादिव्यतिरिक्तानामभावात्तेषामेव च तदनधिकरणत्वासम्भवात्सद्वैलक्षण्यासम्भवेन वियदादावसद्वैलक्षण्यसम्भवेऽपि विशिष्टासम्भवाच्छुक्तिरजतादौ चोक्तरीत्या सद्वैलक्षण्यस्य वस्तुगत्याऽसद्वैलक्षण्यस्याप्यभावेनोभयाभावाद्विशिष्टासम्भव इति द्रष्टव्यमित्यर्थः ॥ **सन्मात्रत्वमित्यनेनेति** ॥ अतिव्याप्तिरप्युच्यत इति पाठे

पूर्ववाक्योक्तासम्भवादिसमुच्चयो वा सन्मात्रत्वमित्यस्य पूर्वव्याख्यानानुसारेण सिद्धसाधनपर्यवसाने आरम्भासङ्गत्या समुच्चयो वाऽप्यर्थो द्रष्टव्यः। अत्र सन्मात्रत्वमिति ब्रह्मणि लक्षणप्रतिपादके पादेऽसद्व्यावृत्तसत्त्वस्य सन्मात्रपदेन विवक्षायां तस्य ब्रह्मणि सत्त्वात्तद्वैलक्षण्यानुपपत्तिः। सत्त्वानधिकरणत्वं सन्मात्रत्वमिति विवक्षायामपि ब्रह्मणोऽपि लक्षणान्तःप्रविष्टसत्त्वाधिकरणतयाऽनुपपत्तिरेव। परमतानुसारेण तथोक्तौ च तदीयतयाऽङ्गीकारे ज्ञापकाभावः। असत्त्वानधिकरणत्वानुपपादनान्न्यूनता च तस्मात्तदपीति द्वितीयपादस्य ब्रह्मालक्ष्यत्वप्रतिपादकता च न स्फुटेत्यत आह ॥ **तथा हीति** ॥ भाष्योक्तातिव्याप्तेः सत्त्वासत्त्वानधिकरणत्वपक्ष एवोपपन्नत्वात्तमेव पक्षं शेषयित्वा परप्रसञ्जितपक्षान्तरं निराकर्तुं शङ्कते ॥ **सत्त्वेनेति** ॥ एवं परिशेषाभिप्रायेण भाष्यं व्याख्यातम्। अधुनैतत्पक्षदूषणमपि भाष्यारूढमेव सन्मात्रत्वं सत्त्वेन विचारासहत्वं ब्रह्मणोऽपीति योजनोपपत्तेरित्याशयेनाह ॥ **किञ्चेति** ॥ ननु भिन्नत्वाभिन्नत्वसत्त्वासत्त्वादिविकल्पेन विशिष्टादिनिरासकतर्काणां वियदादौ प्रवृत्त्या तस्य विचारासहत्वेऽपि न ब्रह्मणस्तथात्वमित्यतस्तेषां जगतीव ब्रह्मण्यपि प्रवृत्तिरप्रत्यूहा। 'सर्ववैलक्षण्याङ्गीकारादुर्घटमपि ब्रह्म प्रमाणादङ्गीक्रियत एव। जगतो भिन्नमभिन्नं वेत्यादिविकल्पस्तत्रापि युज्यत' इत्यादिना तत्त्वोद्योते भगवत्पादैरेवास्यार्थस्य निपुणतरं प्रतिपादितत्वादित्याशयेनाह ॥ **यथोक्तमिति** ॥ ननु सच्चेन्न बाध्येतासच्चेन्न प्रतीयेतेत्यादिविचारस्य वियदादाविव न ब्रह्मणि संभवः। ब्रह्मणो बाधाभावेन सत्त्वनिश्चयसम्भवादित्यतो बाधायोगात्सतइति बाधाभावत एवहि प्रतीतिर्नासतइति वदन्नित्याद्यनुव्याख्याने वियदादावपि बाधाभावादेः प्रतिपादयिष्यमाणत्वान्नानुपपत्तिरित्याशयेनाह ॥ **निराकरिष्यते चेति** ॥ अत्र स्वपराभिमतज्ञानबाध्यत्वपक्षदूषणानामेकप्रकारत्वाभावात्तत्तत्पक्षदूषणं विविच्य दर्शयति ॥ **यदीत्यादिना** ॥ अत्राविद्यानिराकरणेनाविद्योपादानकत्वाभावस्य वियदादेर्वियत्पादे स्वरूपनाशाभावस्य न हि नाशोऽसतो भवेदित्यादिनाऽसतो नाशाभावस्योपपादयिष्यमाणत्वान्नेहनानेतिवाक्यस्योपपत्तिविरुद्धत्वेन प्रतिपन्नोपाधौ निषेधप्रतियोगित्वाप्रतिपादकत्वस्योक्तत्वा'न्नासीदस्ति भविष्यच्चे'त्यादिना वक्ष्यमाणत्वाच्च नानुपपत्तिरित्याह ॥ **उपपत्तय इति** ॥ नन्वत्र शुक्तिरजतादाविव वियदादौ बाध्यत्वव्यवहाराभावेन पूर्वत्रेव व्यवहारविरोधादेरभावादुत्तरवाक्यवैयर्थ्यमित्यतः सतोऽपि बाध्यत्वमस्त्विति वदता त्रैकालिकनिषेधप्रतियोगित्वादेर्बाध्यपदार्थतया वक्तुमशक्यतया वियदादिशुक्तिरजतादिसाधारणस्यैव वक्तव्यत्वात्तस्य चानिर्वचनीयलक्षणत्वेनोक्तौ नाव्याप्त्यादिकमित्याशयेन प्राप्तशङ्कापरिहारकत्वेन तत्सङ्गमयति ॥ **नन्विति** ॥ तदेव लक्षणमस्त्विति शङ्कापरिहारो मूलान्न प्रतीयतेऽतः शेषं पूरयति ॥ **तच्चेति** ॥ ननु टीकाकारीयोऽख्यात्यादिपक्षनिरासो न सङ्गतः। भाष्यव्याख्यानं प्रतिज्ञायोद्भाव्यं बहुप्रमेयप्रतिपादनानौचित्यादित्यतो भाष्यकारेणैव ह्येवशब्दौ

प्रयुञ्जानेन सूचितप्रमेयस्य व्युत्पादनीयतया तदर्थोत्तरग्रन्थस्यातिसङ्गतत्वादित्याशयेन तच्छब्दद्वयस्य सूचितमर्थं दर्शयति ॥ **अत्रेति** ॥

स०— **निरुक्तिविरह इति** ॥ निर्वचनमेव निर्वचनीयमितिभावेऽनीयर्प्रत्यये अनिर्वचनीयपदेन निरुक्तिविरहो लभ्यत इति भावः ॥ **निरुक्तिनिमित्तेति** ॥ कर्मकारकएवानीयच्प्रत्ययविधानेऽपि निर्वचनं प्रति कर्मकारकगतकर्मत्वाविवक्षया कारकत्वमात्रविवक्षया निर्वचनसंबन्धिनिर्वचनीयमिति लभ्यते। तच्च निमित्तमपि भवति । कारणतया तत्संबन्धित्वात् । तथा विषयतया अर्थोऽपि । तयोर्विरहोऽनिर्वचनीयपदेन लभ्यत इति भावः ॥ **अलौकिकरजतादेरिति** ॥ लौकिकरजतोचितार्थक्रियाकारित्वशून्यरजतादेरित्यर्थः । बाधादीत्यादिपदेन व्याघातपरिग्रहः । आरम्भासङ्गतेरव्याप्त्याद्यन्यतरत्वाभावान्न लक्षणदोषत्वमिति तत्राह ॥ **अथवेति** ॥ **उक्तरीत्येति** ॥ अनेकसत्त्वानधिकरणत्वसर्वसत्त्वानधिकरणत्वयोरनेकसत्त्वसापेक्षत्वेन परेण कुत्रापि वक्तुमशक्यत्वादसंभवः । सर्वथा सत्त्वानधिकरणत्वस्यानिर्वचनीयैकदेशे शुक्तिरजतादौ सत्त्वेऽपि प्रपञ्चेऽभावादव्याप्तिरित्यर्थः ॥ **निर्धर्मकत्वाङ्गीकारादिति** ॥ भावरूपधर्मानङ्गीकारादित्यर्थः ॥ **वियदादौ नित्य इति** ॥ परेण कल्पमात्रावस्थायित्वरूपनित्यत्वस्यैव अभ्युपगमेऽपि ब्रह्मवत्तस्यापि नित्यत्वमुपपाद्य तत्राव्याप्तिकथनाददोषः । **रजतादौ चासत्त्वादिति** ॥ इदमप्युपपाद्यदूषणम् ॥ **पदस्य निरर्थकत्वायोगादिति** ॥ अन्यथा पदत्वमेव न स्यादिति भावः । नन्वसदादिपदानामिव निरर्थकत्वेऽपि पदत्वं किं न स्यात् । न चासत्पदस्यात्यन्ताभावप्रतियोगित्वार्थकत्वान्न निरर्थकत्वमिति वाच्यम् । अत्यन्ताभावप्रतियोगित्वमेव नासत्पदार्थः । तथा सति शशविषाणमसदित्यत्र शशविषाणमत्यन्ताभावप्रतियोगित्वमित्यर्थापत्त्याऽनन्वयापत्तेः । किन्त्वत्यन्ताभावप्रतियोगित्ववदेव । तच्चासदेवेति निरर्थकत्वेऽपि पदत्वमावश्यकमेवेति चेन्न । असदादिशब्दानां नीलादिशब्दवद्गुणशब्दत्वात् । तेषां च स्वतो गुणमात्रप्रतिपादकत्वेऽपि पदान्तरसमभिव्याहारेण तदुक्तविशेष्ये गुणसंसर्गबोधकत्वेन विशेष्यस्य तन्मुख्यार्थत्वाभावेन तस्यासत्त्वेऽपि गुणरूपमुख्यार्थस्य सत्त्वेन निरर्थकत्वाभावादिति भावः ।

प०—पूर्वमनिर्वचनीयत्वप्रमाणखण्डनपरतया व्याख्यातं वैलक्षण्यं सतश्चापीत्यादिश्लोकत्रयम् । तल्लक्षणखण्डनपरतयाऽपि व्याख्यातुमाह ॥ **अथवेति** ॥ **उक्तमिति** ॥ 'सत्त्रैविध्यं च मानेने'त्यत्रोक्तमित्यर्थः ॥ **आरम्भासङ्गतिः** ॥ उपक्रमानानुगुण्यं । आद्यपद्यं प्रकारान्तरेणाद्यलक्षणस्यासंभवोक्तिपरतया व्याचष्टे ॥ **अथवेति** ॥ चोऽवधारण इति भावेन सत एवेत्यनुवादः । सत्त्वेन प्रमितस्यैवेति व्याख्या ।

असतश्च वैलक्षण्यमित्यस्यार्थोऽसद्विलक्षणत्वमेवेति । असत एवेत्यनुवादो ध्येयः । विश्वस्येत्यनुवादः । सर्वस्यारोपितस्येति व्याख्या । सतश्च वैलक्षण्यमित्यावृत्तस्यार्थः सद्विलक्षणत्वमेवेति । तात्पर्यमाह ॥ **वियदादाविति** ॥ चतुर्थपादं व्याचष्टे ॥ **अत इति** ॥ इत्यादीत्यादिपदेन सतो घटादेः सतो वैलक्षण्यं च सदन्तरपटादिवैलक्षण्यमेव स्वयं सत् न तु सर्वात्मना सद्वैलक्षण्यं । एवमसतोऽसत्त्वेन प्रमितशुक्तिरूप्यादेरसदन्तरवैलक्षण्यमेव प्रमितं न सर्वात्मनाऽसद्वैलक्षण्यं । अतोऽसंभविना तेन लक्षणेनेत्यादियोजनाग्रहः । 'यद्युच्यतेऽपि सर्वस्मादि'तीत्यर्धश्लोकस्यापि लक्षणखण्डनपरत्वं लेशेन दर्शयति ॥

॥ **यद्युच्यत इत्यत्रापीति** ॥ **उक्तरीत्येति** ॥ मानखण्डनपरतया कृतयोजनायामुक्तरीत्येत्यर्थः । यद्वा सत्त्वेन प्रमितस्य वियदादेः असद्विलक्षणत्वमेवेत्युक्तरीत्येत्यर्थः । तथाच सर्वस्मात्सतो वैलक्षण्यं सर्वसत्त्वानधिकरणत्वादिरूपसद्वैलक्षण्यं यद्युच्यते । तर्हि सद्भेद एव प्राप्त इति वियदादौ लक्षणमसंभवि । शुक्तिरूप्यादौ सर्वसद्वैलक्षण्यभावेऽपि वियदादावभावादव्याप्तिरित्येवं ज्ञेयमिति भावः ॥ **इत्यनेनेति** ॥ इत्यर्धेनेत्यर्थः । शङ्कते ॥ **सत्वेनेति** ॥ अनभ्युपगमात् । ब्रह्मणीति योज्यं । काल्पनिकं तदस्तीति मन्वानं प्रत्याह ॥ **किञ्चेति** ॥ **यो विचार इति** ॥ सत्त्वेनासत्त्वेन नित्यत्वानित्यत्वादिना केनापि रूपेण विचारसहं नेति विचारासह इत्यर्थः ॥ **यथोक्तमिति** ॥ तत्वोद्योते । 'दृष्टस्य वस्तुनो बलवद्दृष्टिं विना नान्यद्बाधकमिति दुर्घटत्वे सुघटत्वे वा नानिवर्चनीयसिद्धिरि'ति पूर्ववाक्ये प्रमाणसिद्धेऽर्थे तर्कविरोधोऽकिञ्चित्कर इत्युक्ते तत्कथमित्याकाङ्क्षायां 'सर्ववैलक्षण्याङ्गीकारात् दुर्घटमपि ब्रह्म प्रमाणादङ्गीक्रियत एव । जगतो भिन्नमभिन्नं वेत्यादि विकल्पस्तत्रापि युज्यत' इत्यादिना जगतः सत्त्वादिदौर्घट्यवत् ब्रह्मणोऽपि दौर्घट्यमुक्तमित्यर्थः ॥ **असौ दुर्विचारः** ॥ सत्त्वेनासत्त्वेन वा विचारासहत्वरूपो दुर्विचारः प्रकृतिश्च 'नाभाव उपलब्धेः' 'पृथगुपदेशादि'त्याद्यधिकरणव्याख्याऽवसरे तत्र तत्रेत्यर्थः । **उक्तविधयेति** ॥ पूर्वयोजनायां उक्तविधयाऽज्ञानलक्षणोपादाननिवृत्तिद्वारा निवर्त्यत्वं यदीत्यर्थः । ननु वियदादेः सत्त्वे शुक्तिरूप्यादेरसत्त्वे चोपपत्तयो वाच्या इत्यत आह । **उपपत्तयस्त्विति** ॥ मिथ्यात्वमपि बन्धस्येत्यादिना उक्ताः साक्षिविरुद्धत्वं नेहनानेत्यादेर्मिथ्यात्वाप्रतिपादकत्वं तद्वादिनां कथकत्वाभावः इत्यादयः, प्रकृतिनयादौ वक्ष्यमाणाः विश्वभ्रान्त्यादेः ब्रह्माद्यधिष्ठानत्वायोगः अर्थक्रियाकारित्वायोगः श्रुत्यादिविरोध इत्यादयो ज्ञेयाः ॥

या० — **निरुक्तिनिमित्तेति** ॥ निर् पूर्वकात् वच् परिभाषण इत्यस्मात् भावेऽनीयर् प्रत्यये आद्यपक्षस्य, निर्वचनशब्दात्तस्येदमित्यर्थे छप्रत्यये तस्येयादेशे निमित्तनैमित्तिकभावस्य सम्बन्धत्वविवक्षायां द्वितीयपक्षस्य प्रसक्तिरित्याहुः ॥ **ज्ञानस्येति** ॥ मायिमते ज्ञाने ज्ञेयस्याध्यासाङ्गीकारेणाधिष्ठानरूपज्ञानस्य

सत्यत्वादिति भावः । यथा चैतत्तथोक्तमधस्तात् । खण्डनेऽप्युक्तम् । 'विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसत्त्वाभ्यामनिर्वचनीयं ब्रह्मवादिनः सङ्गिरन्त' इति ॥ **अलौकिकेति** ॥ प्रातिभासिकरजतादेर्लौकिकरजताद्युचितार्थक्रियाऽभावादेवालौकिकत्वमित्यवगन्तव्यम् । बाधादीत्यादिपदेन व्याहतिसंग्रहः ॥ **अव्याप्तिरिति** ॥ इदं च दृष्टान्ते लक्षणसद्भावमभ्युपेत्योक्तम् । अन्यथाऽसम्भव एवेति ज्ञातव्यम् । आरम्भासङ्गतिर्न लक्षणदोष इत्यरुचेराह ॥ **अथवेति** ॥ **उक्तरीत्येति** ॥ अनेकसत्त्वानधिकरणत्वसर्वसत्त्वानधिकरणत्वसत्तासामान्यानधिकरणत्वरूपलक्षणानां सद्भेदसंस्थितिरित्युक्तसद्भेदाङ्गीकारप्रसङ्गभीत्या कुत्रापि परेणोपपादयितुमशक्यत्वादसम्भव इत्यर्थः । आद्यलक्षणद्वये एकैकसत्तास्वीकारापत्तेरित्युक्तत्वेन तृतीयलक्षणे चातिरिक्तानुगतसामान्यानङ्गीकारादित्युक्त्या सिद्धसाधनताया उपपादितत्वात् आरम्भासङ्गतिरत्रादिशब्दार्थतया ज्ञातव्या ॥ **यथोक्तमिति** ॥ तत्त्वोद्योत इति शेषः । सर्ववैलक्षण्याङ्गीकारादित्यस्य चेतनाचेतनादिभावस्य परेण निर्धर्मके ब्रह्मण्यनङ्गीकारेण ब्रह्माप्यनिर्वचनीयं स्यादित्यर्थः ॥

**श्री०** — पूर्वमनिर्वचनीयत्वप्रमाणखण्डनपरतया वैलक्षण्यं सतश्चापीत्यादि श्लोकत्रयं व्याख्यातम् । इदानीं तल्लक्षणखण्डनपरतया व्याकरोति ॥ **अथवेति** ॥ निरुक्तिर्व्यवहारः । अलौकिकस्य व्यावहारिकभिन्नस्य प्रातिभासिकस्येत्यर्थः ॥ **अव्याप्तिरिति** ॥ सद्विलक्षणत्वस्याभावे सत्त्वेऽपि वियदादावभावेनाव्याप्तिरित्यर्थः । एवमसद्विलक्षणत्वेति द्रष्टव्यम् । प्रमाणबाधितत्वोपपादनाय सत एव सत्त्वेन प्रमितस्येत्याद्युक्तम् । सन्घट इत्यादिना सत्त्वेन प्रमितस्यैवेत्यर्थः ॥ **एवमसत्त्वेन प्रमितस्यैवेति** ॥ असदेव रजतं प्रत्यभादित्युत्तरकालीनानुभवादित्यर्थः । अस्यां योजनायां त इति षष्ठ्या निर्दिष्टस्य मायावादिनो विशेषणम् । भेदवादिन इति तदभिप्रायमाह ॥ **भेदवादिन इत्यनेनेति** ॥ सदसतोः प्रत्येकं भेदवादिन इत्यर्थः । सत्त्वेन प्रमितस्यापि वियदादेः सद्विलक्षणत्वाङ्गीकारेऽसत्वापत्त्याऽसत्वेन प्रमितस्यापि शुक्तिरजतादेरसद्विलक्षणत्वाङ्गीकारे सत्त्वापत्त्या सदसद्भेदवादित्वं न स्यादित्याशयः । ॥ **विचारासहत्वमिति** ॥ 'प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् । गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिन'इतिवचनादिति भावः ॥ **अनभ्युपगमादिति** ॥ सत्त्वेन विचारसहत्वं नाम सत्त्वप्रकारकविचारगोचरत्वम्। तत्र विचारसहत्वस्याङ्गीकृतत्वेऽपि स्वप्रत्ययार्थभूतसत्त्वप्रकारकत्वरूपधर्मस्यानभ्युपगमादित्यर्थः ॥ **विचार इति** ॥ निरुक्तानिर्वचनीयत्वप्रतिपादनायेत्यर्थः ॥ **समान इति** ॥ तथा च ब्रह्मणोऽप्यनिर्वाच्यत्वं स्यादित्यर्थः । कथं समान इत्यतस्तत्र तत्त्वोद्योतसम्मतिमाह ॥ **यथोक्तमिति** ॥ **उक्तविधयेति** ॥ 'ज्ञानेनाज्ञाने निवृत्ते तत्कार्यं स्वयमेव नश्यती'त्युक्तविधयेत्यर्थः । ननु वियदादेः सर्वस्याप्यविद्योपादानकत्वेन ज्ञानेनाज्ञाने निवृत्ते तत्कार्यं स्वयमेव निवर्तत इत्युक्तविधया ज्ञाननिवर्त्यत्वं सिद्धमेवेत्यत आह ॥

**वियदादेरिति** ॥ **यदि पुनरिति** ॥ ज्ञानेनाज्ञाने निवृत्ते तत्कार्यं स्वयमेव निवर्तत इत्येवंरूपं ज्ञाननिवर्त्यत्वं नाभिप्रेतं किं नाम घटस्य मुद्गरप्रहारादिवज्ज्ञानजन्यध्वंसप्रतियोगित्वमात्रमित्यर्थः ॥ **तदपीति** ॥ तथात्वेऽसत्वप्राप्तेरित्यर्थः ॥

च० — अथानुव्याख्याव्याख्यां प्रतिजानानानां ग्रन्थकृतां तदप्रत्याख्याताख्यात्यादिकल्पप्रत्याख्यानविस्तृतेरनौचितीत्याशङ्कायां ह्येवेति निपातद्वयं प्रयुञ्जानैर्मूलकारैस्तत्प्रतिविहितेर्ध्वनिततया न क्षतिरित्याशयेन तादृशार्थं दर्शयति ॥ **अत्रेति** ॥

**सु० — अथ पञ्चाख्यातिवादः ॥ ॥ इह खलु केचिद्यथार्थमेव सर्वविज्ञानमिति मन्यमाना नान्यथाख्यातिं सहन्ते । तथा हि । केयमन्यथाख्यातिर्नाम । यदि तावदन्यथापरिणते वस्तुनि ख्यातिरन्यथाख्यातिः । तदा घटादिप्रत्ययाः सर्वेऽप्यन्यथाख्यातित्वाद्भ्रमाः प्रसज्येरन् । किञ्च शुक्तिकाया रजताकारपरिणामः किं सकारण उताकारणः । न तावदकारणः । कादाचित्कत्वानुपपत्तेः । आद्ये कारणं वाच्यम् । करणदोष इति चेन्न । तस्य करणसंबन्धिनः शुक्तिकापरिणामहेतुत्वानुपपत्तेः । अन्यथा तदैव सकलार्थानां रजतरूपपरिणामप्रसङ्गात् । दुष्टकरणसंसर्गो हेतुरिति चेत्तथाऽपि किं शुक्तित्वापगमेन रजतरूपपरिणामः । किं वा तदनपगमेन । आद्ये पुरुषान्तरेणापि तदा शुक्तित्वं न प्रत्येतव्यम् । द्वितीये भ्रान्तेनापि तत्प्रत्येतव्यम् । किञ्च शुक्तित्वापगमे बाधेऽपि न तद्भायात् । अथ पुनः शुक्त्याकारेण रजतं परिणतमिति चेन्न । करणदोषस्य कारणस्याभावात् । बाधोऽप्येवं सति भ्रमः स्यात् । अपि चैतत्समस्तप्रतिपत्तृसाधारणमपि कुतो न भवेत् । यत्करणपरिणतं तेनैव गृह्यत इति चेन्न । घटादेरपि कुलालादिमात्रवेद्यतापातात् । सुखादिवदिति चेन्न । बाह्यान्तरत्वेन विशेषात् । अन्यथोक्तातिप्रसङ्गानिस्तारात् ।**

वा० — ॥ **अथ पञ्चाख्यातिवादः** ॥ अन्यथाज्ञानस्वरूपे सिद्धे तद्विशेषचिन्ताऽवसर इति तत्स्वरूपमनङ्गीकुर्वतामख्यातिवादिनां मतमनूद्य निराकर्तुं प्रसञ्जयति ॥ **इहेति** ॥ ननु बाधकाभावेन साधकसद्भावेन च सिद्धतत्स्वरूपासहनमनुचितमित्यतो बाधकसद्भावं साधकाभावं च व्युत्पादयन्नत्युल्बणत्वात्तदभिमतं बाधकं तावदाह ॥ **तथा हीति** ॥ ख्यातिर्हि ज्ञानम् । तच्चार्थावभासिप्रकाशस्तत्रान्यथात्वमर्थविशेषणम् । अन्यथाभूतेऽन्यथापरिणत इति यावत् । अर्थे ख्यातिरिति विवक्षितम् । आहो-

स्विदन्यथात्वमवभासविशेषणम् । तथा चान्यमर्थमन्यथाऽन्यात्मना वा तदसंसृष्टमन्यथा तद्विशेषणसंसृष्टतया वाऽवभासयज्ज्ञानमिति वाऽथवाऽन्यथात्वं ज्ञानविशेषणं तस्य चान्यथात्वमर्थापेक्षयाऽन्याकारत्वेन वाऽऽलम्बनापेक्षयाऽन्याकारोल्लेखितया वेति शब्दार्थानुसारेणान्यथापरिणते वस्तुनि ख्यातिरिति वा (इति शब्दार्थानुसारेणेति । ख्यातिर्हि ज्ञानमित्यादिनाऽन्याकारोल्लेखितया वेत्यन्तेनोक्तान्यथाख्यातिपदार्थपर्यालोचनया प्राप्तान्पञ्चविकल्पान्मनसि निधायेत्यन्वयः।) वस्तुनो वस्त्वन्तरात्मनाऽवभासो वाऽसम्बद्धविशेषणविशिष्टप्रतीतिर्वाऽन्याकारं ज्ञानं वाऽन्याकारोल्लेख्यन्यालम्बनं ज्ञानं वाऽन्यथाख्यातिरिति विकल्पान्मनसि निधायान्यथाख्यातिवाद्यभिमतान्तिमपक्षे संविद्विरोधप्राप्तिस्तमन्ते निधाय दुर्बलक्रमेण निराचिकीर्षुः परिणामपक्षं तावन्निराकर्तुमुत्थापयति ॥ **यदीति** ॥ अत्र प्रथमकल्पो भास्करमतानुसारेण द्वितीयतृतीयौ नैयायिकमतेन, चतुर्थो विज्ञानवादिमतेन, पञ्चमो नैयायिकाभिनवान्यथाख्यातिवादिसाधारण्येनेति द्रष्टव्यम् । घटादीत्यादिपदेन परिणामिवस्तुमात्रग्रहणम् । ननु शुक्तिकाया रजताकारपरिणामस्य घटादिपरिणामापेक्षया विलक्षणत्वात्तादृशस्यैवान्यथाख्यातिलक्षणप्रविष्टत्वान्न घटादिप्रत्ययेष्वतिव्याप्तिरित्यत आह ॥ **किञ्चेति** ॥ घटादिपरिणामवैलक्षण्यं, शुक्ते रजताकारपरिणामस्य, किमकारणकत्वेनोत सकारणकत्वेऽपि तत्कारणस्य प्रसिद्धरजतपरिणामकारणवैलक्षण्येनेति प्रश्नाभिप्रायः । भावत्वेन सकारणकत्वपक्षस्यादौ निर्देशेऽपि तद्दूषणस्य बहुत्वात्सूचीकटाहन्यायेन द्वितीयमादौ निराकरोति ॥ **नेति** ॥ शुक्तिपरिणामरूपरजतस्याकारणत्वेऽनादित्वेन शुक्तेस्तद्रजतस्य च कादाचित्कत्वानुपपत्तेरित्यर्थः । प्रथमे कारणविशेषो वाच्य इति पृच्छति ॥ **आद्य इति** ॥ यद्वाऽस्त्वयं परिणामो विलक्षणस्तथापि शुक्तिव्यतिरिक्तागन्तुककारणनिरपेक्षो वा तत्सापेक्षो वेति प्रश्नाभिप्रायः । शुक्तिमात्रनिबन्धनत्वे शुक्तौ सत्यामपि परिणामस्य कादाचित्कत्वमनुपपन्नमित्याशयेन निरपेक्षपक्षत्वं निराकरोति ॥ **नेति** ॥ आगन्तुककारणं पृच्छति ॥ **आद्य इति** ॥ एवं च परिणमित्वं स्वीकृत्य सकारणकत्वादिविकल्पोऽनुपपन्न इति दूषणमलग्नकं द्रष्टव्यम् । आगन्तुककारणविशेषोऽपि भवन्पूर्वं पश्चाच्चासतो रजतपरिणामस्य तत्प्रतीतिरूपो वा तत्प्रतीतिकारणरूपो वा सम्भावितः । तत्प्रतीतितत्कारणयोर्दोषासहितयोर्हेतुत्वेऽतिप्रसङ्गाद्दोषोऽपि कारणकोटौ निवेश्यः । तस्य च प्राधान्यं वा सहकारित्वमात्रं वा वाच्यम् । एवं च करणदोषो वा दुष्टकरणसंसर्गो वा दुष्टकरणजन्यप्रतीतिर्वाऽऽगन्तुककारणविशेष इति पक्षाः प्रादुर्भवन्तीत्याशयेनाद्यमुत्थापयति ॥ **करणेति** ॥ ननु शुक्त्यसम्बन्धिनोऽपि रजतप्रतीतिकारणसम्बन्धितया रजतरूपपरिणामहेतुत्वं करणदोषस्य स्यादेवेत्यतस्तर्हि सर्वपदार्थानां शुक्तितुल्यतया शुक्तेः रजताकारपरिणामदशायां सर्वेषामपि स स्यादित्याह ॥ **अन्यथेति** ॥ एतद्दोषपरिजिहीर्षया संसर्गं हेतुत्वेन विवक्षन्नेव द्वितीयमुत्थापयति ॥ **दुष्टेति** ॥ एवं सति पूर्वोक्तदोषपरिहारेऽपि दोषान्तरं स्यादेवेत्याह ॥

**तथाऽपीति** ॥ क्षीरादौ क्षीरत्वाद्यपगमेन दध्याकारपरिणामस्य, सुवर्णादौ तत्त्वानपगमेन कुण्डलत्वादि-परिणामस्य, दर्शनात्प्रश्नः । पुरुषान्तरेण दोषशून्येन । कुण्डलादिकारणस्यैव दोषस्य परिणाममात्रहेतु-तया कुण्डलादि पश्यता सुवर्णत्वादिकमिव शुक्तित्वं सदोषेणापि प्रत्येतव्यमेवेत्याह ॥ **द्वितीय इति** ॥ ननु विलक्षणत्वादस्य परिणामस्य यदीयदुष्टकरणसंसर्गजन्योऽयं रजताकारपरिणामस्तं प्रत्येव शुक्तित्वा-पगमोऽतो न पुरुषान्तरीयशुक्तित्वप्रत्ययविरोध इत्यतस्तर्हि भ्रान्तं प्रति शुक्तित्वं न भायादित्याह ॥ **किञ्चेति** ॥ **बाधोऽपीति** ॥ शुक्ते रजताकारपरिणामस्येव रजतस्यापि शुक्त्याकारपरिणा-माभ्युपगमेऽन्यथापरिणते ख्यातित्वाविशेषाद्भ्रान्तिरिव बाधोऽपि भ्रमः स्यादित्यर्थः । यद्वा ननु तत्रापि करणदोषोऽङ्गीक्रियत एवेति चेत्तर्हि दुष्टकरणजन्यत्वाविशेषान्न भ्रम एव केवलं भ्रमः किन्तु बाधोऽपि भ्रम एव स्यादित्याह ॥ **बाधोऽपीति** ॥ अथवा माऽस्तु करणदोषस्तथाऽपि रजतस्य शुक्त्याकारपरिणामे कारणान्तरमेव कल्पयिष्यामीत्यतस्तर्हि प्रसिद्धपरिणामविलक्षणेऽपि परिणामे दुष्टकरणसंसर्गस्याभावेन तस्य व्यभिचारितया कार्यसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयग्रस्ततया शुक्ते रजताकारपरिणामेऽपि तस्या-हेतुतयाऽन्यथा परिणते ख्यातित्वस्यैव भ्रमत्वप्रयोजकत्वापातेन बाधस्यापि तथात्वाद् भ्रमत्वं स्यादित्याह ॥ **बाधोऽपीति** ॥ पुरुषविशेषं प्रत्येव रजताकारपरिणाम इत्यङ्गीकृत्येदमभिहितम् । वस्तुतस्तु शुक्तित्वम-पगच्छतु वा मा वा मृदादिपरिणामघटादेरिव शुक्तिपरिणामरजतादेरपि परिणामत्वाविशेषाद्भ्रान्तस्येव सर्वेषामपि रजतत्वाकारभानं स्यादेवेत्याह ॥ **अपि चेति** ॥ ननु न परिणामाविशेषो, भ्रान्तकरणपरिणत-त्वस्यैव विशेषत्वादित्याशङ्कते ॥ **यदीति** ॥ **घटादेरिति** ॥ घटादिरूपपरिणामं प्रति कुलालादिकरण-स्यैव निमित्तत्वादित्याशयः । नन्वेवं घटादिवत्सुखादेरपि परिणामत्वाविशेषात्सर्वप्रतिपत्तृसाधारण्याऽऽपत्त्या पदार्थवैचित्र्यस्य त्वयाऽप्यनुसरणीयतया ममापि तत एवातिप्रसङ्गपरिहार इत्याशयेन सुखादिवत्तत्तत्करण-परिणतस्य तत्तद्ग्राह्यत्वोपपत्तिरित्याशङ्कते ॥ **सुखादिवदिति** ॥ परप्रत्यक्षायोग्यतत्तदान्तरोपादानकसुखा-देस्तत्तद्ग्राह्यत्वेऽपि सर्वप्रत्यक्षयोग्यबाह्यशुक्त्याद्युपादानकरजतादेर्घटादेरिव सर्वप्रतिपत्तृसाधारण्यमेवोचित-मित्याह ॥ **नेति** ॥ बाह्योपादानकत्वाविशेषेऽपि रजतादेस्तद्ग्राह्यत्वे घटादेरपि कुलालादिमात्र-वेद्यत्वप्रसङ्गो दुर्वारः । बाह्येऽप्यवान्तरवैचित्र्यस्य रजतादेः शुक्त्यादिपरिणामत्वादिसिद्ध्यधीनतयाऽन्यो-न्याश्रयादनुपपत्तिरित्याशयेनाह ॥ **अन्यथेति** ॥

स० — **बाधोऽपीति** ॥ शुक्तेः रजताकारत्वेन परिणतत्वेन तद्विषयकेदंरजतमिति ज्ञानस्य भ्रमत्ववत् रजतस्य पुनः शुक्त्याकारेण परिणामादन्यथापरिणते वस्तुनि ख्यातित्वान्नेदं रजतमिति बाधस्यापि भ्रमत्वं स्यादित्यर्थः ॥ **अन्यथोक्तातिप्रसङ्गेति** ॥ अन्यथा बाह्यान्तरत्वेन विशेषानङ्गीकारे शुक्ति-

रजतादेरपि सुखादिवत्पुरुषकरणनिमित्तत्वेनान्तरत्वाङ्गीकार इति यावत् । तथा सति घटादेरप्यान्तरत्वोपपत्त्या कुलालमात्रवेद्यताऽऽपातात् इत्युक्तातिप्रसङ्गानिस्तार इत्यर्थः । केचित् बाह्यान्तरत्वेन विशेषानङ्गीकारे सुखादेरपि बाह्यत्व इति यावत् सर्वे प्रतिपत्तृसाधारण्यलक्षणस्यातिप्रसङ्गस्य सुखादावपि न निस्तारः स्यादित्यर्थ इत्याहुः ।

प० —स्वोक्तरूपभ्रान्तिबाधौ प्रपञ्चयाम इति भावेनाख्यातिपक्षं तावदपाकर्तुमनुवदति ॥ **इहखलु केचिदित्यादिनाऽत्रोच्यत इत्यन्तेन** ॥ केचित्प्राभाकरा इत्यर्थः । अन्यथाख्यातिर्नामान्यथापरिणते वस्तुनि ख्यातिरुतान्यवस्तुनोऽन्यात्मनाऽवभासः असंबद्धविशेषणविशिष्टप्रतीतिर्वाऽन्यथाकारं ज्ञानं वा अन्याकारोल्लेख्यन्यालम्बनं ज्ञानं वा । तत्राद्यं परिणामपक्षं तावन्निराह ॥ **यदि तावदित्यादिना** ॥ तस्मान्न परिणामपक्षो युक्त इत्यन्तेन ॥ **अन्यथा परिणत इति** ॥ शुक्त्यादिके रजताद्यात्मना परिणते या ख्यातिः प्रतीतिः सेत्यर्थः । कारणमिन्द्रियादिकरणदोषो वा दुष्टेन्द्रियसंबन्धो वा दुष्टेन्द्रियसंप्रयोगजन्यं विज्ञानं वा । आद्यमाशङ्क्य निराह ॥ **करणदोष इति चेन्नेति** ॥ द्वितीयमाशङ्क्य निराह ॥ **दुष्टेति** ॥ **सुखादिवदिति** ॥ **चेदिति** ॥ सुखादिकं तत्पुरुषप्रयत्नसाध्यमपि न सर्वैरुपलभ्यते किन्तु तेन तेनैव तथा शुक्त्यादिपरिणामोऽपीति चेदित्यर्थः । आन्तरत्वात्सुखादेरस्तु तथात्वम् । बाह्यत्वाच्छुक्त्यादिपरिणामस्य न तथात्वमित्याह ॥ **बाह्येति** ॥ **अन्यथेति** ॥ बाह्यपरिणामत्वेऽपि तत्तन्मात्रवेद्यत्वोपगमे घटादेरपि कुलालादिमात्रवेद्यताऽऽपातादित्यर्थः ॥

या० —**अन्यथाख्यातित्वादिति** ॥ अन्यथापरिणतवस्तुविषयकत्वादित्यर्थः ॥ **शुक्तिपरिणामेति** ॥ शुक्त्यसन्निकृष्टत्वादिति भावः ॥ **भ्रान्तेनापीति** ॥ यथा मृत्त्वानपगमेन जाते घटलक्षणपरिणामे मृत्त्वमुपलभ्यते तथेत्यर्थः ॥ **बाधोऽप्येवं सतीति** ॥ पुना रजतस्य शुक्त्याकारेण परिणामाङ्गीकारे इयं शुक्तिरिति बाधोऽपि भ्रमः स्यात् । अन्यथापरिणतवस्तुविषयकत्वादित्यर्थः ॥ **समस्तप्रतिपत्तृसाधारणमिति** ॥ मृत्पिण्डपरिणामस्य घटस्य सर्वप्रतिपत्तृसाधारण्यदर्शनाद्रजतस्यापि शुक्तिपरिणामत्वे तत्स्यादिति भावः ॥ **अन्यथोक्तातिप्रसङ्गेति** ॥ अन्यथा बाह्यान्तरत्वेन विशेषानङ्गीकारे । शुक्तिरजतादेरपि सुखादिवत्पुरुषकरणनिमित्तत्वेनाऽऽन्तरत्वाङ्गीकार इति यावत् । घटादेरप्यान्तरत्वापत्त्या कुलाल मात्रवेद्यताऽऽपातादित्युक्तातिप्रसङ्गानिस्तार इत्यर्थः । केचित्तु । अन्यथा बाह्यान्तरत्वेन विशेषानङ्गीकारे सुखादेरपि बाह्यत्व इति यावत् । सर्वप्रतिपत्तृसाधारण्यलक्षणस्यातिप्रसङ्गस्य सुखादावपि न निस्तारः स्यादित्यर्थ इत्याहुः ॥

**श्री०—अन्यथेति** ॥ अधिष्ठानापेक्षयाऽन्यथा परिणते रजतादिरूपे वस्तुनि विषये ख्यातिर्ज्ञानमन्यथाख्यातिरित्यर्थः । अन्यथापरिणतवस्तुविषयकं ज्ञानमन्यथाख्यातिरिति यावत् ॥ **घटादीति** ॥ घटादिज्ञानानामपि मृदाद्यपेक्षयाऽन्यथा पृथुबुध्नोदराकारवत्तया परिणतघटादिवस्तुविषयकत्वादन्यथाख्यातित्वं स्यादित्यतिव्याप्तिरित्यर्थः ॥ **तदैवेति** ॥ रजताकारपरिणामहेतोः करणसम्बन्धिनो दोषस्य सत्त्वादित्यर्थः ॥ **कुलालमात्रेति** ॥ तद्धस्तरूपकरणपरिणतत्वादित्यर्थः ॥ **सुखादिवदिति** ॥ सुखादिकं तत्तत्पुरुषप्रयत्नसाध्यमपि न सर्वैरुपलभ्यते किन्तु तेन तेनैव । तथा शुक्त्यादिपरिणामोऽपि चेदित्यर्थः । आन्तरत्वात्सुखादेरस्तु तथा । बाह्यपरिणामत्वेऽपि तन्मात्रवेद्यत्वोपगमे घटादेरपि कुलालमात्रवेद्यत्वाऽऽपातादित्यर्थः ।

**च०**— अन्यथाख्यातिस्वरूपस्यैवालीकतया तद्विशेषविचारस्यानवसरदुस्स्थतेति प्राभाकराणामाशङ्कां प्रतिविधित्समानस्तन्मतमनुवदति ॥ इहेत्यादिकतस्मादख्यातिपक्ष एव श्रेयानित्यन्तेन । अन्यथा परिणते वस्तुनि ख्यातिरन्यथाख्यातिरिति अन्यस्यान्यात्मताऽवभासः सेति, असंबद्धविशेषणविशिष्टप्रतीतिः सेति अन्याकारं ज्ञानं सेति अन्याकारोल्लेख्यन्यालम्बनज्ञानं सेति पञ्चकल्पीमभिप्रेत्य भास्कराभिमताद्यकल्पं तावत्प्रतिविधत्ते ॥ **यदीति** ॥ **प्रसज्येरन्निति** ॥ पटाद्याकारापेक्षयाऽन्यथापरिणतवस्तुविषयकत्वाविशेषादिति भावः । परिणामस्य शुक्तिव्यतिरिक्तकारणसापेक्षत्वतदनपेक्षत्वगोचरकल्पद्वयीमभिप्रेत्य द्वितीयस्यानतियत्नसाध्यनिरसनतया तमादितः प्रत्याख्याति ॥ **न तावदिति** ॥ एतेन परिणामत्वस्य स्वकारणकत्वव्याप्यतया तद्दर्शने कल्पान्तरानुत्थितिशङ्काऽनवकाशः । आद्येऽपि शुक्त्यतिरिक्तपरिणामकारणत्वेन करणदोषोऽभिप्रेयते, दुष्टकरणसंसर्गो वा, दुष्टकरणजन्यं विज्ञानं वेति कल्पत्रयीमनुसंदधान आद्यं प्रत्याचष्टे ॥ **करणसंबन्धिन इति** ॥ **हेतुत्वानुपपत्तेरिति** ॥ कार्याभिमतवैयधिकरण्यादिति भावः । अन्यथा, तद्वैयधिकरण्येऽपि तद्धेतुत्वोपगमे । द्वितीयमपाकुरुते ॥ **दुष्टेति** ॥ उक्तक्षत्यनवकाशेऽपि क्षत्यन्तरमाह ॥ **तथाऽपीति** ॥ क्षीरादौ क्षीरत्वापगमेन दध्याकारपरिणामस्य सुवर्णादौ तत्त्वानपायेन कुण्डलाकारपरिणामस्य च दर्शनाद्विकल्पोत्थितिः ॥ **भ्रान्तेनापीति** ॥ घटे मृत्ववदिदमंशशुक्तित्वानपगमादिति भावः ॥ **बाधोऽपीति** ॥ अन्यथापरिणतवस्तुविषयत्वाविशेषादिति भावः ॥ **सुखादिवदिति** ॥ प्रथमान्ताद्वतिः यत्करणपरिणतमित्युपमेये प्रथमादर्शनात् । स्थानिवदादेश इति निर्देशात् । अन्यथा । बाह्यान्तरत्वनियन्त्रितविशेषानुपगमे ॥ **अतिप्रसङ्गानिस्तारादिति** ॥ घटादेरित्यादिना समनन्तरोक्तातिप्रसङ्गानिरासादित्यर्थः ।

सु०— किञ्च दोषवशाद्रजताकारेण परिणता चेच्छुक्तिस्तदा दोषापगमेऽपि तथैव कथं नावतिष्ठते । न हि निमित्तकारणनाशात्कार्यनाशो दृष्टः । कमलकुड्मलविकासनिमित्तसावित्र-तेजोऽपगमस्य विकासनिवृत्तिहेतुता दृष्टेति चेन्मैवम् । दलविभागो हि विकासो नाम । स च क्षणिकत्वात्तस्यैव सावित्रतेजसि निवृत्तः । संयोगप्रध्वंसस्तु न कदाऽपि निवर्तते पुनः संयोगलक्षणो मुकुलीभावस्तु शीतादिनोदनजन्य एव । स्थायित्वेऽपि विभागस्यान्यदेव तन्नाशे निमित्तमिति यत्किञ्चिदेतत् । परत्वादिवत्स्यादिति चेन्न । विप्रतिपत्तेः । किंचोत्पन्नं चेद्रजतं विनष्टं तदा तथैव प्रतीतिः स्यात् । न पुनर्नेदं रजतमिति बाधबुद्धिः । एतेन दुष्ट-करणजन्याद्विज्ञानाद्रजतजन्मेत्यपि परास्तम् । का चैवं सति दोषवाचोयुक्तिः । नहि मृदो घटाकारपरिणामस्य निमित्तं दण्डचक्रादिकं दोषत्वेन मन्यन्ते । किञ्च यस्याः प्रतीतेस्तदा-लम्बनं तत एव तज्जन्म किंवा प्रतीत्यन्तरात् । नाद्यः । परस्पराश्रयप्रसङ्गात् । उत्पन्ने हि रजते तदालम्बनायाः प्रतीतेर्जन्म, तस्यां जातायां रजतोत्पत्तिरिति । न खलु निरालम्बना प्रतीतिरुत्पद्यते । द्वितीयेऽपि किं तत्प्रतीत्यन्तरं शुक्तिकाऽऽलम्बनम् । उत शुक्तिकारजतान्तरा-लम्बनम् । अथवाऽर्थान्तरालम्बनम् । नाद्यः । सर्वत्र शुक्तिप्रतीत्यनन्तरं रजतोत्पादप्रसङ्गात् । शुक्तिरजतप्रतीतेः प्राक् शुक्तिरिति प्रतीतिनियमाभावाच्च । दुष्टकरणालोचितशुक्तिसाधारणा-कारप्रतीते रजतजन्मेति चेन्न । साधारणाकारमात्रदर्शनानन्तरं रजतप्रतीतिनियमाभावात् । कारणवैकल्यं तत्र कल्प्यत इति चेत् । स्यादेतदेवम् । यदि रजतजन्म प्रमितं स्यात् । प्रतीतिं तु प्रकारान्तरेणोपपादयिष्यामः । न द्वितीयः । पूर्वरजतस्यापि तदेव कारणमिति रजत-प्रतीतिप्रवाहाविच्छेदप्रसङ्गात् । न तृतीयः । अतिप्रसङ्गात् । तदेवं भ्रान्तिबाधयोरनुपपत्तेर्न परिणामपक्षो युक्तः ।

वा०— ननु बाह्योपादानकत्वाविशेषेऽपि तत्तद्दोषसहकृतबाह्योपादानकत्वेन घटादिवैलक्षण्या-द्रजतादेस्तत्तन्मात्रग्राह्यत्वमुपपन्नमित्यत आह ॥ **किञ्चेति** ॥ ननु दोषापगमेन तदपगमान्नावस्थानमित्यत आह ॥ **न हीति** ॥ **कमलेति** ॥ अन्यथा मुकुलीभावानुपपत्तेरिति भावः । विकासो विभागो वा तज्जन्यसंयोगप्रध्वंसो वा । नाद्यः । तस्योदाहरणत्वानुपपत्तेरित्याह ॥ **दलेति** ॥ नामेत्युदयनादिप्र-सिद्धिं सूचयति । यत्किञ्चिदुत्तरसंयोगावधित्वाद्विभागस्याशुतरविनाशित्वम् । न च यत्किञ्चिद्विभागमात्रा-वधित्वेन संयोगस्यापि तथात्वापत्तिः । यत्किञ्चिद्विभागात्संयोगनाशेऽवयसंयोगस्यापि यत्किञ्चिद्विभागेन नाशाद्द्रव्यानुत्पत्तिप्रसङ्गेनावयोरेव संयोगः तयोरेव विभागात्तत्याश्रये संयोगनाश इति स्थितिः ।

तथा चान्तराविनाशकारणाभावात्संयोगान्तरोत्पादककारणाभावात्तत्कार्यदर्शनाच्चानन्यथासिद्धसंयुक्तप्रत्ययानुवृत्तिबलेन न संयोगस्याशुतरविनाशित्वम् । विभागे च विभक्तप्रत्ययानुवृत्तेरभावाद्भावे वा संयोगाभावविषयकत्वेनान्यथासिद्धत्वाद्युक्तं यत्किञ्चिदुत्तरसंयोगावधित्वेन क्षणिकत्वम् । न च बाधकाभावान्नान्यथासिद्धिरिति वाच्यम् । कार्यस्य कर्तव्यपुरुषार्थापेक्षयोत्पादादवस्थानाच्चोत्तरविभागशब्दपूर्वसंयोगनिवृत्तिरूपविभागकार्यनिष्पत्त्यनन्तरमपि तदवस्थानानौचित्यस्यैव बाधकत्वात् । तथा च प्रयोगः । विवादाध्यासितो विभाग उत्तरसंयोगान्तस्तावतैव कृतकृत्यत्वात्कर्मवत् । कृतकृत्यस्याप्यवस्थाने प्रायणानुपपत्तिरित्युदयनोक्तक्षणिकत्वोपपादनप्रकारं मनसि निधायाह ॥ **क्षणिकत्वादिति** ॥ द्वितीयेऽपि नोदाहरणत्वमस्येत्याह ॥ **संयोगेति** ॥ ननु विकासनिवृत्तिरूपो मुकुलीभावस्तावत्सावित्रतेजोऽपगमे भवतीति प्रसिद्धम् । विकासस्योभयरूपस्योक्तरीत्या सावित्रतेजोऽपगमेन निवृत्त्यभावे तदनुपपत्तिरित्यतो न विकासनिवृत्तिर्मुकुलीभावः किन्तु दलानां पुनः संयोग एव । सोऽपि न सावित्रतेजोपगमजन्योऽपि तु शीतपार्थिवावयवसंयोगजन्य एवेति नोक्तानुपपत्तिरित्याशयेनाह ॥ **पुनरिति** ॥ ननु प्रायणानुपपत्तिरूपबाधकवशात्कर्मणः कृतकार्यस्यावस्थानानुपपत्तावपि विभागस्य कृतकार्यस्याप्यवस्थाने न बाधकमिति विभक्तप्रत्ययानुवृत्तेः संयोगाभावविषयकत्वानुपपत्तेस्तद्बलेन विभागस्यापि स्थायित्वादुक्तमनुपपन्नमित्यत आह **स्थायित्वेऽपीति** ॥ प्राथमिकमुकुलहेत्वाप्यपार्थिवकमलावयवसंयोगजन्यमुकुलीभावरूपावस्थानान्तरापत्तेरेव विकासनिवृत्तिहेतुत्वेन तेजोऽपगमस्य तदहेतुत्वात् । न च विनिगमकाभावः । तादृगवयवरहिते म्लानेकमले रात्रौ विकासानपगमस्यैव तन्नियामकत्वादिति भावः । अत एवान्यदेवेत्युक्तम् ॥ **यत्किञ्चिदिति** ॥ अनुदाहरणानामेवायमुपन्यास इति सूचयति । अपेक्षाबुद्धिसंयोगद्रव्यनाशापृथक् पृथक् । द्वाभ्यां द्वाभ्यां च सर्वेभ्यो विनाशः सप्तधाऽनयोरित्युदयनोक्तरीत्या परत्वादिनाशस्यापेक्षबुद्धिनाशजन्यत्वात्तद्वदत्रापि स्यादित्याशङ्कते ॥ **परत्वादिवदिति** ॥ द्वित्वादिबुद्धेरिव परत्वादिबुद्धेरपेक्षाबुद्धिजन्यत्वेऽपि न परत्वादेरपेक्षाबुद्धिजन्यत्वं नापि तन्नाशस्य तन्नाशनिमित्तत्वमित्यङ्गीकुर्वाणं मां प्रति तदसम्मतेरित्याह ॥ **विप्रतिपत्तेरिति** ॥ ननु परत्वादेः पूर्वं पश्चाच्च सत्त्वे प्रमाणाभावादपेक्षाबुद्धिजन्यत्वतन्नाशनाश्यत्वमेवाङ्गीकार्यमित्यत आह ॥ **किंचेति** ॥ यद्वाऽस्तु वा दृष्टान्ते यथातथा तथाऽपि तत्र विकसितमेव मुकुलमासीदितिवच्छुक्तिपरिणामभूतरजतमेव पुनः शुक्तिरासीदिति प्रतीतिरवर्जनीयेत्याह ॥ **किंचेति** ॥ शुक्ते रजताकारेण परिणामासम्भवेऽपि दुष्टकरणजन्या रजताकारसंविदेव रजताकारेण परिणमत इत्यन्यथाख्यात्येकदेशिमतं प्राग्विकल्पितं तृतीयपक्षं निषेधति ॥ **एतेनेति** ॥ अर्थस्य रजताकारेणापरिणामाच्छुक्तित्वापगमानपगमप्रयुक्तदूषणस्य संविद एव तथापरिणामाभ्युपगमात्समस्तप्रतिपत्तृसाधारण्यस्य संविदोऽपगमेन रजताकारापगमसम्भवाद्दोषाभावेऽपि तथैवावस्थानदोषस्य चाभावेऽप्युत्पन्नविनाशे तथैव प्रतीतिः

स्यान्नतु बाधबुद्धिरिति दूषणस्यापरिहार एवास्मिन्नपि पक्षे इत्यतिदेशाभिप्रायो द्रष्टव्यः । ननु दोषजन्यत्वादेव रजतपरिणामस्य तद्वशादिदं रजतमिति भ्रमबुद्धिविशेषोऽत एव नेदं रजतमिति बाधबुद्धिविशेषोऽप्युपपद्यत एवेत्यतः स्यादिदं दोषबलात्त्वदीयसमाधानं यदि दोषत्वमुपपद्येत अस्मिन्परिणाममतेन चैवं विपरीतकार्यकारिणो दोषत्वेन लोके व्यवहारेऽपि न स्वकार्यकारिणि तथा व्यवहारोऽतिप्रसङ्गादित्याह ॥ **का चैवमिति** ॥ नन्वर्थक्रियासमर्थघटाद्याकारपरिणामवैलक्षण्याद्रजताकारपरिणामस्य तद्धेतौ दोषत्वव्यवहार इत्यरुचेराह ॥ **किञ्चेति** ॥ ननु भविष्यदर्थालम्बनानुमित्यादिवदनुत्पन्नेऽपि रजते तदालम्बनप्रतीतिसंभवान्नान्योन्याश्रय इत्यतः प्रकृतरजतेऽपरोक्षत्वप्रत्ययात्तत्प्रतीतेरनुत्पन्नविषयकत्वानुपपत्तिरेवेत्याशयेनाह ॥ **न खल्विति** ॥ निरालम्बनप्रतीत्यनुपपत्त्या निरालम्बनपक्षाप्रसक्तेः प्रतीत्यन्तरग्रहणेनैव एतच्छुक्तिकारजतालम्बनत्वपक्षव्यावृत्तेः शुक्तिकातद्रजतान्तरार्थान्तरालम्बनत्वपक्षाणामेव प्राप्तेः प्राधान्यक्रमेण विकल्पयति ॥ **किं तदिति** ॥ आद्येऽपि शुक्तिकालम्बनत्वं शुक्तित्वेनासाधारणाकारेण वेदन्त्वादिशुक्तिसाधारणाकारेण वा विवक्षितम् । नाद्यः । अन्वयव्यतिरेकव्यभिचारादित्याह ॥ **सर्वत्रेत्यादिना** ॥ शुक्तित्वाऽनवभासनिमित्तकथनपूर्वं द्वितीयं शङ्कते ॥ **दुष्टेति** ॥ तत्रापि व्यभिचारमाह ॥ **नेति** ॥ व्यभिचारस्यान्यथासिद्धिं शङ्कते ॥ **कारणेति** ॥ अन्योन्याश्रयतया तां परिहरति ॥ **यदीति** ॥ इदं रजतमिति प्रतीत्यन्यथाऽनुपपत्तिसिद्धत्वाद्रजतजन्मनो नान्योन्याश्रयतेत्यतो रजतजन्मानभ्युपगमेऽपि प्रतीत्युपपत्तिरुच्यते, 'रजतमिदमिति द्वे विज्ञाने' इत्यादिना कथयिष्यतेऽतो नानुपपत्तिरित्याह ॥ **प्रतीतिं त्विति** ॥ **तदेवेति** ॥ शुक्तिरजतान्तरालम्बनप्रतीत्यन्तरमेवेत्यर्थः । समानन्यायत्वादिति भावः ॥ **अतिप्रसङ्गादिति** ॥ अर्थान्तरज्ञानस्य सर्वसाधारण्यात्सर्वेषामपि तदनन्तरं रजतप्रतीत्यापत्तेरित्यर्थः । उपपादितं दूषणं कण्ठतो दर्शयन्नेव परिणामपक्षनिराकरणमुपसंहरति ॥ **तदेवमिति** ॥

स० — ननु विकासो नाम पूर्वसंयोगध्वंसविशिष्टभाविदलसंयोगप्रागभावः । स च सावित्रतेजोनिमित्तकः । ध्वंसवैशिष्ट्यस्य तेन जननात् । विकासनिवृत्तिविशिष्टाभावरूपप्रागभावनिवृत्तिरूपपुनः संयोगलक्षणमुकुलीभाव एव पर्यवस्यति । ध्वंसनिवृत्तेरसंभवेन विशेषणवति विशिष्टाभावस्य विशेष्याभावमात्रपर्यवसायित्वात् । प्रागभावनिवृत्तिरूपमुकुलीभावे च सावित्रतेजोनिवृत्तिरेव कारणमित्याशङ्कायामाह ॥ **पुनः संयोगलक्षण इति** ॥ **अन्यदेवेति** ॥ सावित्रतेजोपगमव्यतिरिक्तं दलसमवेतं संमीलनकर्मैवेत्यर्थः । केचित्तु सीतादिनोदनजन्यसंयोगेनैव विभागनाश इत्यर्थ इत्याहुः । ननु परत्वादेरपेक्षाबुद्धिरूपनिमित्तनाशाद्वादिकुपिण्डसंयोगरूपासमवायिनाशाद्वा, निमित्तसमवायनाशाभ्यां वा, समवाय्यसमवायिनाशाभ्यां वा, असमवायिनिमित्तनाशाभ्यां वा, समवाय्यसमवायिनिमित्तनाशेभ्यो वा ।

अपेक्षाबुद्धिसंयोगद्रव्यनाशात् द्वाभ्यां द्वाभ्यां च सर्वेभ्यो विनाशः सप्तधाऽनयोरित्युदयनोक्तरीत्या सप्तधा नाशसंभवेन निमित्तनाशेनापि कार्यनाशः किं न स्यादित्याशङ्कते ॥ **परत्वादिवदिति** ॥ **विप्रतिपत्तेरिति** ॥ उक्तप्रक्रियाया अप्रामाणिकत्वादिति भावः ॥ **एतेन दुष्टकरणेति** ॥ दुष्टकरणजन्यविज्ञानेनापि शुक्तित्वापगमेन परिणामे पुरुषान्तरस्य तदानीं शुक्तित्वप्रतीत्यभावापत्तेः तदनपगमेन परिणामे च भ्रान्तस्यापि तत्प्रतीत्यापत्तेरित्यादिपूर्वोक्तदूषणेनेत्यर्थः ॥ **सर्वत्र शुक्तिप्रतीत्यनन्तरमिति** ॥ न च कारणान्तरवैकल्यात्तदनुत्पादः । रजतजन्मप्रमिति तत्कल्पनमिति वक्ष्यमाणत्वादिति भावः । ननु रजतप्रतीतिरूपकार्यान्यथाऽनुपपत्त्या तज्जन्मनः प्रमितत्वात्कारणान्तरवैकल्पकल्पनमुपपन्नमित्यत आह ॥ **प्रतीतिमिति** ॥ उच्यते इदं रजतमिति द्वे विज्ञानेषु सादिनेति शेषः ।

प० — **परत्वादिवत्स्यादिति चेदिति** ॥ यथा दूरदेशसंबन्धनिमित्तकं परत्वं समीपदेशसंबन्धनिबन्धनं त्वपरत्वं च तादृग्देशसंबन्धनाशादपैति तथेह शुक्त्यादिपरिणामभूतरजतादिरपि निमित्तनाशादपैत्वित्यर्थः ॥ **विप्रतिपत्तेरिति** ॥ अपरत्वादिजन्मनैव तन्नाशोपपत्तेरिति भावः । तृतीयं परिणामहेतुं निराह ॥ **एतेनेति** ॥ तथा प्रतीत्यभावेनेत्यर्थः । वाचोयुक्तिरित्येकं पदं । वाग्व्यवहार इत्यर्थः । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्वि'त्यलुक्समासः । निर्विषयतया प्रागुत्पन्ना प्रतीतिः पश्चाद्रजतं जनयत्वित्यत आह ॥ **न खल्विति** ॥ ननु रजतजन्मनोऽभावे इदं रजतमिति कथं प्रतीतिरित्यतः प्राभाकरः पूर्वपक्षी समाधत्ते ॥ **प्रतीतिं त्विति** ॥ 'ननु तर्हीदं रजतमित्यादिप्रत्ययानां का गतिरि'त्यादिना ग्रन्थेन ग्रहणस्मरणाद्यात्मकतयोपपादयिष्याम इत्यर्थः । शुक्तिकारजतान्तरालम्बनमिति पक्षं निराह ॥ **न द्वितीयमिति** ॥

या० — **स च क्षणिकत्वादिति** ॥ आशुतरविनाशित्वादित्यर्थः । उत्तरसंयोगावधेर्विभागस्याशुतरविनाशित्वस्य प्रत्यक्षसिद्धत्वात् । संयोगस्य तु चिरकालमनुवृत्तिरेव प्रत्यभिज्ञाबलात् । तत्कर्तव्यकार्यान्तरदर्शनाच्च । विभागे तु न प्रत्यभिज्ञा । नापि तेन कर्तव्यं कार्यान्तरमस्ति । कार्यं च विभागस्योत्तरविभागशब्दौ पूर्वसंयोगनिवृत्तिरित्येतावदेव । न ह्येतदतिरिक्तमप्यस्य प्रदेशान्तरे कर्तव्यमस्ति यदर्थं तदवस्थानमतो विभागस्य क्षणिकत्वैवाङ्गीकार्येति गुणकिरणावल्यामेतदुपपादितम् । ननु विकासो नाम न विभागः । किन्तु दलसंयोगप्रध्वंस इत्यत आह ॥ **संयोगध्वंसस्त्विति** ॥ अथैवमुच्यते । विकासो नाम पूर्वसंयोगध्वंसविशिष्टभाविदलसंयोगप्रागभावः । स च सावित्रतेजोनिमित्तकः । ध्वंसवैशिष्ट्यस्य तेन जननात् । उक्तविकासनिवृत्तिश्च विशिष्टाभावरूपा प्रागभावनिवृत्तिरूपा पुनः

संयोगलक्षणमुकुलीभाव एव पर्यवस्यति । ध्वंसनिवृत्तेरसंभवेन विशेषणवति विशिष्टाभावस्य विशेष्याभावमात्रपर्यवसायित्वात् । प्रागभावनिवृत्तिरूपमुकुलीभावे च सावित्रतेजोनिवृत्तिरेव कारणमित्याशङ्कायामाह ॥ **पुनः संयोगलक्षण इति** ॥ विभागेऽपि प्रत्यभिज्ञाबलादुक्त-क्षणिकतोपपादनेऽरुचिमतां मतमवलम्ब्याह ॥ **स्थायित्वेऽपीति** ॥ **अन्यदेवेति** ॥ सावित्रतेजोऽपगम-व्यतिरिक्तं दलसमवेतमामीलनकर्मैवेत्यर्थः ॥ **परत्वादिवदिति** ॥ परत्वापरत्वादीनां स्वनिमित्तकारणा-पेक्षाबुद्धिनाश्यत्वं यथा, तथा प्रकृतेऽपि निमित्तकारणदोषनाशाद्रजताकारपरिणामनाशः स्यादित्यर्थः ॥ **विप्रतिपत्तेरिति** ॥ अपेक्षाबुद्धेः परत्वादिज्ञानं प्रत्येव जनकता न परत्वादिकं प्रतीत्यङ्गीकारादिति भावः । यद्वा । आदावपेक्षाबुद्धिस्तथा च परत्वोत्पत्तिरनन्तरं परत्वत्वसामान्यनिर्विकल्पकं तेन चाग्रिम-क्षणेऽपेक्षाबुद्धिनाशः परत्वत्वसामान्यविशिष्टपरत्वसविकल्पकं चैकदा भवतः तदग्रिमक्षणे च परत्वगुणस्य नाशः अयं पर इति परत्वविशिष्टद्रव्यज्ञानं च युगपद्भवत इति हि परप्रक्रिया । तत्र चायं पर इति परत्वविशिष्टद्रव्यज्ञानस्य भ्रमत्वप्रसङ्गेन तज्ज्ञानोत्पत्तिकाले परत्वनाश इत्यस्यासंमतेः । न हि विशेषण-नाशदशायां तद्विशिष्टप्रत्ययः प्रमेति युक्तम् । तथा चापेक्षाबुद्धिनाशाव्यवहितोत्तरक्षणे परत्वनाशासम्भ-वाद्यभिचारेण तस्य तत्र कारणत्वं विप्रतिपन्नमित्यर्थः । विशेषणनाशदशायामप्यतद्व्यावृत्तिरूपवैशिष्ट्यस्य सत्त्वात्तज्ज्ञानं प्रमेति तु समाधानमतीव तुच्छम् । अन्योन्याभावस्य व्याप्यवृत्तित्वेन तस्यां दशायां तस्यातत्त्वेनातद्व्यावृत्तेरप्यभावात् । अन्यथा पाकरक्ते घटे श्याम इति बुद्धेरपि प्रमात्वप्रसङ्ग इत्यलं पल्लवेन ॥ **एतेनेति** ॥ निमित्तकारणनाशेन कार्यनाशाभावाद्रजतज्ञानापगमेऽपि रजतं तथैवावतिष्ठेतेत्या-दिदूषणेनेत्यर्थः ॥ **का चैवं सतीति** ॥ काचादेः साक्षाद्रजताद्यजनकत्वादिति भावः । ननु तर्हि ज्ञानमेव दोषोऽस्त्वित्यत आह । **न हीति** ॥ **उपपादयिष्याम इति** ॥ इदं रजतमिति द्वे विज्ञाने इत्यादिनेति शेषः ॥

श्री०—निमित्तकारणनाशे न कार्यनाशो दृष्ट इत्याशङ्कते ॥ **कमलेति** ॥ कमलकुड्मल-विकासे निमित्तं यत्सावित्रं तेजस्तदपगमस्येत्यर्थः ॥ सत्येवेति ॥ तथा च विभागस्य क्षणिकत्वेन स्वत एव सावित्रतेजस्सद्भावदशायामेव निवृत्ततया न तन्निवृत्तौ सावित्रतेजोऽपगमः कारणमित्यर्थः । ननु विकासो नाम न विभागः । किन्तु दलसंयोगप्रध्वंस इति चेत्तर्हि तस्य नित्यत्वेन विकासनिवृत्तेरभावान्न सावित्रतेजोऽपगमेन तन्नाश इत्याह ॥ **संयोगप्रध्वंसस्त्विति** ॥ ननु सायंकाले पुनः कमलदलानां पुनः संयोगलक्षणो यो मुकुलीभावः स सावित्रतेजोऽपगमजन्यः । तथाच पुनः प्रातस्तदपगमस्य तन्निवृत्तिहेतुता दृष्टेति चेत् तत्राह ॥ **पुनःसंयोगेति** ॥ **शीतादिनोदनेति** ॥ सावित्रतेजोऽपगमे सति शीतस्पर्शोपेतहिमादि

रूपद्रव्यजन्य एव, न सावित्रतेजोऽपगमजन्यः । तथाच निमित्तकारणनाशेन कार्यनाशे नेदमुदाहरणमिति भावः । ननु विकासो नाम विभाग एव । स च स्थायीत्यङ्गीक्रियते । तन्निवृत्तिश्च सत्येव सावित्र-तेजसि न सम्भवति । अतस्तदपगम एव तत्र कारणमिति निमित्तकारणनाशात्कार्यनाशः प्राप्त एवेत्यत आह ॥ **स्थायित्वेऽपीति** ॥ सावित्रतेजोऽपगमनानन्तरं सायंकाले प्राप्ते दलेषु शनैरामीलनरूपं कर्मोत्पद्यते । तेनैव दलविभागध्वंसो जायतेऽतः सावित्रतेजोऽपगमव्यतिरिक्तस्य कर्मणएव विभागप्रध्वंसजनकत्वान्निमित्त-कारणनाशेन कार्यनाशे नेदमुदाहरणमिति भावः ॥ **का चैवं सतीति** ॥ रजतस्य विज्ञानादुत्पन्नत्वेऽङ्गीकृते सति सत्त्वप्राप्त्या रजतविज्ञानजनकेन्द्रियादिकारणसमुदायान्तर्गतस्य काचादिदोषत्वोक्तिरयुक्ता । यदि रजतमयथार्थं स्यात्तदा तन्निमित्तस्य काचस्य दोषत्वोक्तिः सङ्गता स्यात् । न चैवम् । तस्य विज्ञाना-दुत्पन्नत्वेन सत्त्वात् । अतः काचादेर्दोषत्ववाचो युक्तिर्योगो घटना का । न काऽपीत्यर्थः । तदुपपादयति **न हीति** ॥ उत्पन्ने रजते तदालम्बनायाः प्रतीतेर्जन्मेत्ययमंशो नाङ्गीक्रियतेऽतो न परस्पराश्रयप्रसङ्ग इत्यत आह ॥ **न खल्विति** ॥ नन्विदं रजतमिति प्रतीतिरेवात्र रजतजन्मप्रमापिकेत्यत आह ॥ **प्रतीतिं त्विति** ॥ **उपपादयिष्याम इति** ॥ रजतमिदमिति द्वे विज्ञाने इत्यादिनेति शेषः ॥ **प्रवाहा-विच्छेदेति** ॥ अनवस्थेत्यर्थः ॥

च०—विकासस्य दलविभागरूपता तज्जन्यदलसंयोगप्रध्वंसरूपता वोपेयत इति कल्पद्वयमभिप्रेत्याद्येतस्य नोदाहरणीयतेत्याह ॥ **दलेति** ॥ गुणकिरणावल्यां विभागस्योत्तरसंयोगमात्रावधितयाशुतरविनाशित्वं संयोगस्य तु असमवायिकारणनाशेन द्रव्यनाशापत्त्या न तथात्वमिति निरूढमेवेत्याशयेनाह ॥ **क्षणिकत्वादिति** ॥ आशुतरविनाशित्वादित्यर्थः । द्वितीयेऽपि नोदाहरणीयतेत्याह ॥ **संयोगेति** ॥ ननु विकासस्योक्तोभय-रूपतायामुक्तदिशा सावित्रतेजोपगमस्य तादृशविकासनिवृत्तिप्रयोजकत्वाभावेन विकासनिवृत्तिरूपमुकुली-भावधर्मिकसावित्रतेजोपगमनिरूपितान्वयव्यतिरेकानुविधायित्वानुभवविरोधप्रसङ्ग इत्याशङ्कामपनिनीषति ॥ **पुनरिति** ॥ तथाच न विकासानिवृत्तिमुकुलीभावः किन्त्वेकैकदलानुयोगिकदलान्तरप्रतियोगिकसंयोग-कूटमेव । तत्तु न सावित्रतेजोपगमजन्यमपि तु शीतहिमांशुकरादिसंयोगजन्यमेवेति नोक्तक्षत्यवकाश इति भावः । अथैवमुच्यते । विकासो नाम पूर्वसंयोगध्वंसविशिष्टभाविदलसंयोगप्रागभावः । स च सावित्रतेजोनिमित्तकः ध्वंसवैशिष्ट्यस्य तेन जननात् । उक्तविकासनिवृत्तिश्च विशिष्टाभावरूपा प्राग-भावनिवृत्तिरूपपुनःसंयोगलक्षणमुकुलीभाव एव पर्यवस्यति । ध्वंसनिवृत्तेरसंभवेन विशेषणवति विशिष्टा-भावस्य विशेष्याभावमात्रपर्यवसायित्वात्प्रागभावनिवृत्तिरूपमुकुलीभावे च सावित्रतेजोनिवृत्तिरेव कारण-मित्याशङ्कायामाह । पुनः संयोगलक्षण इतीत्यप्यवतारयन्ति । विभक्तत्वप्रतीतेरनुवर्तमानायाः

प्रतियोगिप्रतीत्यसमवधानकालीनायाः । संयोगध्वंसविषयत्वं दुरुपगममिति तदनुरोधेन विभागस्य स्थायितामुपगच्छतां मतमाश्रित्याह ॥ **स्थापित्वेऽपीति** ॥ तत्तद्दलानां दलान्तरसंयोगोपधायकं सावित्र-तेजोपगमादतिरिच्यमानतत्तद्दलसमवेतमामीलनाख्यं कर्मैवेत्यर्थः । किरणावल्यामुदयनेन परत्वादेः स्वनिमित्तकारणीभूतापेक्षाबुद्धिनाशजन्यनाशप्रतियोगित्वस्य समर्थिततया तद्दिशा प्रकृतेऽपि स्यादित्याशङ्कते ॥ **परत्वादिवदिति** ॥ सिद्धान्ते द्वित्वादिबुद्धाविव परत्वादिबुद्धावेवापेक्षाबुद्धेरुपयोगो न तत्तद्विषयांश इत्यूरीकारतादृशार्थस्योत्तरवाद्यसंप्रतिपन्नतामाह ॥ **विप्रतिपत्तेरिति** ॥ यथा दूरदेशसंबन्धनिमित्तकं परत्वं समीपदेशसंबन्धनिमित्तकमपरत्वं च तादृशसंबन्धनाशादयैति तथेह शुक्त्यादिपरिणामहेतुभूतरजतादिरपि निमित्तनाशादयैतीत्यर्थः ॥ **विप्रतिपत्तेरिति** ॥ अपरत्वादिजन्मनैव । तन्नाशोपपत्तेरिति भाव इत्यपि व्याकुर्वते । तृतीयकल्पं प्रतिविधत्ते ॥ **एतेनेति** ॥ निमित्तकारणनाशस्य कार्यनाशकत्वाभावसमर्थनेनेत्यर्थः ॥ **का चैवमिति** ॥ विपरीतकार्यकारिण्येव दोषत्वव्यवहारः न तस्य कार्यकारिणीति भावः । काचादेः साक्षाद्रजतादिजनकत्वाभावादिति भाव इत्यपि स्थितम् । 'वाक्-दिकृपश्यद्य युक्तिदण्डहरेषु यथासंख्यमलुग्वक्तव्य' इति स्मृतेर्वाचो युक्तिरिति समस्तम् । **साधारणाकारेति** ॥ इदन्त्वमात्रदर्शनानन्तरमित्यर्थः ॥ **उपपादयिष्याम इति** ॥ विशिष्टगोचरविपर्ययसत्त्वानुपगमेन प्राभाकरदिशा ग्रहणस्मरणात्मकज्ञानद्वयरूपतैव तस्येत्युपपादयिष्याम इत्यर्थः ॥

**सु०—नापि वस्तुनो वस्त्वन्तरात्मनाऽवभासोऽन्यथाख्यातिरिति युक्तम् ॥ तथा हि किं वस्तुनो वस्त्वन्तरात्मता सती उतासती । आद्ये न भ्रान्तिर्नापि बाधः । सर्वेषां च सर्वं सर्वात्मना प्रतीयेत । न हि दोषः करणसंस्कारः । तथा सत्यदुष्टकरणेन न किञ्चिदुपलभ्येत । किञ्चैवं सति रजतसंवित्समीचीना शुक्तिरेवेयमिति चासमीचीनेत्यापद्येत । न द्वितीयः । असतः प्रतीत्यनुपपत्तेः । उपपत्तौ वा किं रजतस्यापि वस्तुत्वग्रहणेन । एतेनासम्बद्धविशेषणविशिष्टप्रतीतिरन्यथाख्यातिरिति निरस्तम् । असतो विशेषणसम्बन्धस्य प्रतीत्यनुपपत्तेः । उपपत्तौ वा किमसत्ख्यातिवादिभिरपराद्धम् । अथ ब्रूषेऽन्याकारं ज्ञानमन्यथाख्यातिरिति । तदसत् । समीचीनज्ञानस्याप्यान्तरबाह्यत्वादिनाऽर्थविलक्षणाकारत्वेन विभ्रमत्वापत्तेः ।**

वा० —अन्यथात्वमवभासविशेषणमिति द्वितीयकल्पं निषेधति ॥ **नापीति** ॥ ननु परिणामपक्षोक्तदूषणाप्राप्तेः कथमयुक्ततेत्यतस्तत्रोक्तभ्रान्तिबाधानुपपत्तिमत्राप्युपपादयति ॥ **तथा हीति** ॥ ननु विद्यमानाऽपि सर्वस्य सर्वात्मता करणदोषाभावान्न प्रतीयत इत्यतो विद्यमानसर्वात्मताप्रतीतौ करणदोषस्य

प्रयोजकत्वं वदता करणदोषस्य यथार्थज्ञानजनककरणशक्त्युपोद्बलकत्वरूपं तत्संस्कारकत्वमभिप्रेतं स्यात् । तच्च तस्य करणसम्बन्धियथार्थज्ञानजननशक्तिप्रतिबन्धकत्वप्रसिद्धिविरुद्धमित्याह ॥ **न हीति** ॥ ननु प्रसिद्धिनिर्मूलत्वादनादरणीयेत्यतस्तर्हि संस्कृतकरणस्याकिञ्चित्करत्वाददुष्टकरणेनान्यात्मतावच्छक्तित्वाद्यपि न प्रतीयेतेत्याह ॥ **तथा सतीति** ॥ नन्वन्यात्मताप्रतीतौ करणेन जननीयायां दोषः संस्कारो न तु प्रतीतिमात्रे । एवं च प्रतिनियतसंस्कारकल्पनायां नानुपपत्तिरित्यतो भ्रान्तिबाधविपर्यासापत्तिरूपं युक्त्यन्तरमाह ॥ **किंचेति** ॥ नन्वसत्प्रतीतिनिरासान्यथाऽनुपपत्त्यैव तत्प्रतीतिः सिद्धेत्यतस्तर्हि रजतस्याप्यवस्तुत्वे बाधकाभावेन तदङ्गीकारापत्तावसत्ख्यातिपक्षप्रवेश इत्याह ॥ **उपपत्तौ वेति** ॥ अन्यथात्वस्यावभासविशेषणत्वे द्वितीयं कल्पमतिदेशेन दूषयति ॥ **एतेनेति** ॥ तत्र तादात्म्यमसत् । अत्र च संसर्गोऽसन्नित्येतावानेव विशेषः । असत्प्रतीत्यनुपपत्तिरुभयत्र समानेत्याशयेनातिदेशार्थमाह ॥ **असत इति** ॥ अन्यथात्वं ज्ञानविशेषणमिति कल्पे आद्यमाशङ्कते ॥ **अथेति** ॥

स०— तादात्म्याभिप्रायेणाह ॥ **नापि वस्तुन इति** ॥ न चान्यस्यान्यात्मत्वे सत्यपि न तथा प्रतीतिः । सहकारिणो दोषस्याभावादित्यत आह ॥ **न हीति** ॥ दोषस्य यथार्थज्ञानसहकारित्वे संस्कारत्वमेव स्यात् न दोषत्वमित्यर्थः ॥ **किं चेति** ॥ यदि सर्वात्मवं सत्यं स्यात्तदेदं रजतमित्युभयविषयज्ञानस्य याथार्थ्यं शुक्तिरेवेयमिति रजतव्यावृत्तशुक्तिमात्रविषयस्यायाथार्थ्यमिति वैपरीत्यं च स्यादित्यर्थः । संसर्गारोपाभिप्रायेणाह ॥ **एतेन संबद्धेति** ॥

प०—अन्यस्यान्यात्मनाऽवभासोऽन्यथाख्यातिरिति द्वितीयं निराह ॥ **नापीति** ॥ **किं रजतस्यापीति** ॥ आपणादिस्थरजतस्यापीत्यर्थः । असत्त्वेऽपि रजतमितिप्रतीतेरुपपत्तेरिति भावः । तृतीयं निराह ॥ **एतेनेति** ॥ असंबद्धस्याविद्यमानसंबन्धवतो विशेषणस्य विशिष्टप्रतीतिः संबन्धप्रतीतिरित्यर्थः । चतुर्थमाशङ्कते ॥ **अथ ब्रूष इति** ॥

**या—नापि वस्तुन इति** ॥ तादात्म्यारोपाभिप्रायेणेदमित्यवधेयम् । ननु यथा भूम्यन्तर्गतं धनमञ्जनादिसंस्कृतनयनानामेव दृश्यते नेतरेषां तथा सर्वस्य सर्वात्मता न सर्वेषां प्रतीयते किन्तु दोषसंस्कृतकरणानामेवेत्यत आह ॥ **न हि दोषः करणसंस्कार इति** ॥ ननु न किञ्चिदुपलभ्येतेत्युक्तमयुक्तम् । दोषस्य कार्यविशेष एव करणसंस्कारत्वाभ्युपगमात् । अन्यथाऽञ्जनाद्यसंस्कृतकरणेन घटादिकमपि नोपलभ्येतेत्यस्वरसादाह ॥ **किञ्चैवं सतीति** ॥ **एतेनेति** ॥ संसर्गारोपाभिप्रायेणेदम् ॥ **समीची-**

नेति । अर्थस्य बाह्यत्वाज्ज्ञानस्याऽऽन्तरत्वादिति भावः । असन्यः संबन्धः समवायस्तेन संबद्धं यद्विशेषणं रजतत्वमित्यर्थः ॥

श्री०—**सर्वं सर्वात्मनेति** ॥ सर्वस्य सर्वात्मतायाः सत्त्वादित्यर्थः ॥ **रजतसंविदिति** ॥ दोषस्य करणसंस्कारत्वेन रजतसंविदःसंस्कृतकरणजन्यत्वाद्रजतसंविदेव समीचीना स्यादित्यर्थः । तार्किकं कटाक्षीकृत्याह ॥ **उपपत्तौ वेति** ॥ असतः प्रतीत्यनुपपत्त्यैव खलु रजतस्य वस्तुत्वमन्यत्र सत्त्वमङ्गीकृतम् । असतोऽपि प्रतीत्युपपत्तौ किमर्थं रजतस्यान्यत्र सत्त्वरूपं वस्तुत्वमङ्गीकार्यमित्यर्थः ।

च०— नैयायिकाभिमतौ द्वितीयतृतीयकल्पौ । तत्र तावद्द्वितीयं पराचष्टे । **नापीति** ॥ तादात्म्यसंसर्गावच्छिन्नवस्त्वन्तरनिष्ठप्रकारतानिरूपितैकवस्तुनिष्ठविशेष्यतानिरूपकावभास इत्यर्थः । **करणसंस्कार इति** ॥ भूतलान्तर्वर्तिधनादिगोचरसाक्षात्कारे चक्षुरादिना जननीये जनादेः स्वासमवधाननियन्त्रित फलानुत्पादकत्वरूपसहकारित्वस्येव प्रकृते सर्वात्मताप्रतीतौ दोषस्य तथा भावानुपगमादिति भावः ॥ **तथा सतीति** ॥ सहकार्यभावाच्छुक्तित्वादिकमपि न प्रतीयेतेति भावः । अथाञ्जनादेरिव विषयविशेषावगाहिज्ञानजनन एव दोषस्य सहकारित्वोपगमान्नोक्तक्षतिरित्यरुचेराह ॥ **किं चैवं सतीति** ॥ नैयायिकाभिमततृतीयकल्पं पराकुरुते ॥ **एतेनेति** ॥ तादात्म्यान्यसमवायादिसंसर्गावच्छिन्ना या विशेष्यता व्यधिकरणरजतत्वादिनिष्ठप्रकारकता तन्निरूपकज्ञानमित्यर्थः ॥ विज्ञानवाद्याभिमततुरीयकल्पं प्रत्याख्याति ॥ **अन्याकारमिति** ॥

सु०—अन्याकारोल्लेखिविज्ञानमन्यालम्बनमन्यथाख्यातिरिति तु विरुद्धम् । तथा हि । **न तावत्सदसद्भावमात्रेणालम्बनं सद्भावमात्रस्य सर्ववस्तुप्रत्ययसाधारण्येन सर्वप्रत्ययानां सर्वार्थालम्बनत्वापत्तेः । सर्वं सर्वज्ञता चैवं सति स्यात् । अतीतादिविषयस्य निरालम्बनतापातश्च । एतेन पुरोदेशे सद्भावेनालम्बनत्वमपि प्रत्युक्तम् । न च कारणत्वेनालम्बनम् । रूपादिज्ञानस्य चक्षुराद्यपि कारणमिति तदालम्बनत्वप्रसङ्गात् । अतीतानागतविषयत्वं च ज्ञानस्य न स्यात् । अतीतानागतयोरसत्त्वेन कारणत्वानुपपत्तेः । एतेन विषयतया कारणत्वमित्यपि निरस्तम् । आत्माश्रयत्वं चैवं सति स्यात् । विषयत्वस्यैव निरूप्यमाणत्वात् । किंचैवं विषयत्वमित्येवास्तु । किं कारणतया व्यर्थयाऽनर्थजनन्या । किं चेदं विषयत्वम् । येन यस्यातिशय उत्पद्यते स तस्य विषय इति चेत् । अतिशयो हि ज्ञातता वा स्याद्व्यवहारो वा । नाद्यः । अनभ्युपगमात् ।**

**अभ्युपगमेऽप्यतीतादिज्ञानस्य निर्विषयत्वापातात् । न ह्यसति धर्मिणि धर्मोत्पादो युज्यते । न द्वितीयः । अतदर्थिनो व्यवहारानुत्पत्तावविषयत्वापत्तेः । व्याघ्रचोरादिज्ञानानन्तरमादीयमानस्य दण्डादेरपि तद्विषयत्वप्रसक्तेश्च । यद्विज्ञानं यदाकारं तत्तदालम्बनमिति तु तथागतमतमनुधावति ।**

वा०— द्वितीयमाशङ्कते ॥ **अन्येति** ॥ **विरुद्धमिति** ॥ भासमानत्वातिरिक्तालम्बनत्वाभावादन्यावभासिज्ञानेऽन्यावभासनं संविद्विरुद्धमित्यर्थः । ननु नालम्बनमवभासित्वमपि त्वन्यदेवेति न संविद्विरोध इत्यतः पक्षान्तरप्रतिषेधेन तदेव परिशेषयितुमाह ॥ **तथा हीति** ॥ अत्र सत्त्वस्याविषयरजतादिव्यावृत्तत्वात्सर्वविषयानुगतत्वाच्च सत्त्वपक्षस्य, ज्ञानकरणत्वस्य विषयविशेषनिष्ठतया कैश्चिदन्यथाख्यातिवादिभिरभ्युपगमात्तत्पक्षस्य, ज्ञानसम्बन्ध्यतिशयत्वेन तृतीयस्य, ज्ञानकरणसम्बन्धसम्बन्धत्वेन चतुर्थस्य प्रसक्तिरिति द्रष्टव्यम् । सद्भावेऽपि यत्रकुत्रचिदेव वा पुरोदेशे वा । आद्येऽपि यदा कदाचिद्वा ज्ञानकाल एव वेति विकल्पान्मनसि निधायाद्यं तावन्निराकरोति ॥ **न तावदिति** ॥ न चेष्टापत्तिः । अनुभवविरोधादनभ्युपगमाच्च । दूषणान्तरं चाह ॥ **सर्वेति** ॥ आद्ये द्वितीयं निराकरोति ॥ **अतीतादीति** ॥ द्वितीयं निराकरोति ॥ **एतेनेति** ॥ आद्यदूषणपरिहारेण शङ्कायामाधिक्यं चेत्यतिदेशः । एवमुत्तरत्रापि । पुरोदेशवर्तिसर्वपदार्थालम्बनत्वापत्तिरत्रापि दूषणत्वेन बोध्या । हेतुत्वेनालम्बनत्वं निषेधति ॥ **न चेति** ॥ हेतुत्वं यथाकथञ्चिद्विवक्षितम् । तथा च रजतसदृशशुक्ते रजतसंस्कारोद्बोधहेतुत्वादालम्बनत्वं वा विषयतया कारणत्वेन वा । नाद्य इत्याह ॥ **रूपादीति** ॥ **एतेनेति** ॥ रूपादीत्युक्तातिप्रसङ्गपरिहारकत्वमात्रमभिप्रेत्य वा विषयत्वमालम्बनत्वातिरिक्तमिति शङ्कितुर्भ्रमेण वेदमुक्तमत एव परिहारेऽपि विषयत्वस्यैव निरूप्यमाणत्वादिति वक्ष्यतीति ध्येयम् । कारणत्वस्य लक्षणकोटावधिकस्य प्रवेशेऽपि स्वज्ञाने स्वज्ञानापेक्षाऽनपायादात्माश्रयः स्यादेवेत्याह ॥ **विषयत्वस्यैवेति** ॥ न केवलं कारणत्वविशेषणस्यातीतादिविषयाव्याप्तिसम्पादकतयाऽनर्थजनकत्वमात्रं किन्तु वैयर्थ्यमपि तदनुपादानेऽतिप्रसङ्गाभावात् । तथा च विषयत्वस्यैव लक्षणत्वे वक्तव्ये सुलभ एवात्माश्रय इत्याह ॥ **किञ्चेति** ॥ **येनेति** ॥ ज्ञानजन्यातिशयाधार इत्यर्थः । तार्किकादीन्प्रत्याह ॥ **अनभ्युपगमादिति** ॥ भट्टं प्रत्याह ॥ **अभ्युपगमेऽपीति** ॥ प्रतियोगित्वादिवदतीताऽऽदौ ज्ञातताऽप्यस्त्वित्यतो ज्ञाततादिना तस्या धर्मिसत्तासापेक्षत्वाभ्युपगमान्नैवमित्याशयेनाह ॥ **न हीति** ॥ व्यवहारोऽप्यभिलपनं हानादिर्वा । द्वयमपि निराकरोति ॥ **अतदर्थिन इति** ॥ हानदिपक्षे दूषणान्तरं चाह ॥ **व्याघ्रेति** ॥ ननु ज्ञानजन्यातिशयाश्रयत्वरूपविषयत्वासम्भवेऽपि ज्ञाने स्वाकाररूपातिशयसमर्पकत्वरूपं विषयत्वं सम्भवत्येवेत्या-

शङ्क्य तथा सति साकारविज्ञानख्यात्यापत्त्या नान्यथाख्यातिवादः समर्थितः स्यादिति भावेनाह ॥ **यदिति** ॥

स०— **एतेन पुरोदेश इति** ॥ अतीतादिविषयज्ञानस्य निरालम्बनत्वापातेनेत्यर्थः ॥ **एतेन विषयतयेति** ॥ अतीतानागतयोर्विषयतया कारणत्वाभावेनेत्यर्थः ॥ **अनर्थजनन्येति** ॥ अतीतादावव्याप्तिहेतुभूतयेत्यर्थः ।

प०—पञ्चमं निराह ॥ **अन्याकारेति** ॥ अन्याकारमुल्लिखतो ज्ञानस्यान्यालम्बनत्वं किमन्यस्य सत्त्वमात्रेण पुरोदेशे सद्भावेन वा कारणत्वेन निमित्तेन वा विषयतया कारणत्वेन निमित्तेन वा । आद्यं निराह ॥ **न तावदिति** ॥ द्वितीयं निराह ॥ **एतेनेति** ॥ अतीतादिज्ञानस्य निरालम्बनत्वापातेनेत्यर्थः । तृतीयं निराह ॥ न चेति ॥ चतुर्थं निराह ॥ **एतेनेति** ॥ अतीतादेरकारणत्वकथनेनेत्यर्थः ॥ **कारणत्वमिति** ॥ निमित्तमन्यस्यान्याकारोल्लेखिज्ञानालम्बनत्व इति योज्यम् । आलम्बनत्वं विषयत्वमेकमेवेति भावेनोक्तम् ॥ **विषयत्वस्यैवेति** ॥ आत्माश्रयादबिभ्यन्तं प्रत्याह ॥ **किं चेदमिति** ॥ अस्तु तर्हि तथैवेति वदन्तं प्रत्याह ॥ **किं चेदं विषयत्वमिति** ॥ तथागतमतमिति बौद्धमतमनुकरोति । बौद्धा हि ज्ञानमर्थाकारमिति वदन्तीति यद्विज्ञानं यदाकारमित्युक्तौ बौद्धमतप्रवेशः प्राप्नोतीत्यर्थः ॥

या०—**अन्याकारोल्लेखीति** ॥ रजताकारोल्लेखिज्ञानं वस्तुगत्या शुक्त्यालम्बनमित्यर्थः ॥ **सद्भावमात्रेणेति** ॥ सद्भाव एवालम्बनत्वरूपं विषयत्वमित्यर्थः । एवं पुरोदेशसद्भावेनेत्यत्र कारणत्वेन चेत्यत्र च पुरोदेशसद्भाव एव विषयत्वं कारणत्वमेव विषयत्वमित्यत्र तात्पर्यम् । विषयत्वस्यैव निरूप्यमाणत्वादित्याद्युत्तरग्रन्थानुगुण्यादिति द्रष्टव्यम् ॥ **अनर्थजनन्येति** ॥ अतीताद्यव्याप्तिहेतुभूतयेत्यर्थः । व्यवहारपदेनाभिलपनं वोपादानादिकं वेति विकल्पं मनसि निधायाद्यं दूषयति ॥ **अतदर्थिन इति** ॥ द्वितीये त्वाह ॥ **व्याघ्रचोराऽऽदीति** ॥

श्री०—एतेनातीतादिज्ञानस्य निरालम्बनताऽपातेन ॥ **व्याघ्रेति** ॥ व्याघ्रचोरादिज्ञानेन दण्डादावुपादानरूपातिशयस्योत्पद्यमानत्वेन दण्डादेरपि व्याघ्रादिज्ञानविषयत्वं स्यादित्यर्थः ।

च०-नैयायिकैकदेशाभिमताभिनवान्यथाख्यातितात्पर्यकपञ्चमकल्पं निरस्यति ॥ **अन्याकारोल्लेखीति**॥ रजताकारोल्लेखीत्यर्थः । अन्यालम्बनं शुक्त्यालम्बनम् ॥ **विरुद्धमिति** ॥ प्रतीयमानत्वातिरेकेणालम्बन-

त्वस्याभावेनान्यप्रतीतावन्यस्यालम्बनत्वं संविद्विरुद्धमित्यर्थः । सद्भावमात्रपदोत्तरासद्भावपदोत्तराकारणत्वपदोत्तरा च तृतीयालम्बनत्वान्विता भेदार्थिका । आद्यतृतीययोः पदार्थतावच्छेदकान्विततदर्थकत्वं द्वितीयस्यास्तस्या उत्तरपदार्थान्विततदर्थकत्वमेव । विषयत्वस्यैव निरूप्यमाणत्वादित्यग्रिमग्रन्थार्जवानुरोधात् । विषयतायां निबन्धनस्याजिज्ञासिततया निमित्तत्वार्थकत्वस्य दुरुपपादत्वात् । अनर्थजनन्या आत्माश्रयाद्यापादिकया तथा चात्माश्रय सुप्रतिपद इति भावः ॥ **येनेति** ॥ स्वोत्यादिनातिशयविशेषितत्वं स्वनिरूपितविषयत्वमित्यर्थः ॥ **अतिशयो हीति** ॥ ज्ञानस्यातीन्द्रियतां ज्ञानजनितघटत्वादिप्रकारकज्ञाततां लिङ्गकानुमानवेद्यतां चोरीकुर्वतां क्रियाजन्यफलशालित्वं कर्मत्वमभिदधानानां भट्टानां मतमनुरुध्याद्यः कल्पान्तरदिशेतरः । आद्यं प्रत्याह ॥ **अनभ्युपगमादिति** ॥ नैयायिकेनेति पूरणीयम् । भट्टदिशाऽऽह ॥ **अभ्युपगमेऽपीति** ॥ **युज्यत इति** ॥ निरधिष्ठानोत्पत्तेरयोगादिति भावः । द्वितीये अभिलपनोपादानादिभेदेन कल्पद्वयमभिप्रेत्याऽऽद्यमपहस्तयते ॥ **अतदर्थिन इति** ॥ समानविषयताप्रत्यासत्त्येच्छाभिलपनयोर्हेतुहेतुमद्भावोपगतेरिति भावः । द्वितीयमपवदति ॥ **व्याग्रेति** ॥ तथागतमतं बौद्धमतम् । ज्ञानस्यार्थाकारतामुपगच्छन्ति हि बौद्धाः ॥

**सु० —यत्सन्निकृष्टकरणेन यज्ज्ञानं जन्यते तत्तद्विषयमित्यपि न । रूपादिज्ञानस्याकाशादिविषयतापातात् । न हि रूपादिज्ञानमुत्पादयच्चक्षुराकाशादिना न सन्निकृष्यत इति युज्यते । प्रत्यभिज्ञा च तत्ताऽसन्निकृष्टकरणजन्या न तद्विषया स्यात् । न च वाक्यं वाक्यार्थेन सन्निकृष्यते । येन तज्जनितज्ञानस्य वाक्यार्थो विषयः स्यात् । आकाशादिविषयतैवं चापद्येत । लिङ्गज्ञानाच्चात्मसन्निकृष्टाज्जायमानं लिङ्गिज्ञानमात्मविषयमापद्येत । तस्माद्यज्ज्ञानं यत्प्रतिभासं तदेव तस्यालम्बनमिति मन्तव्यम् । तत्र रजतज्ञाने शुक्तिरवभासते न वेति वक्तव्यम् । अवभासत इति ब्रुवाणः श्लाघनीयप्रज्ञो देवानां प्रियः । यदि संविदि बहुमानवान्नेति ब्रूयात्तदा कथं तच्छुक्तिकालम्बनं स्यात् । किञ्च रजतमवभासते शुक्तिकालम्बनं चेदतिप्रसङ्गः कथं परिहरणीयः । ननु रजतावभासस्य रजतविषयकत्वे तेन रजतेन भवितव्यम् । कथं न भवितव्यम् । न हि सम्प्रतिपन्नसमीचीनरजतस्वीकारेऽपि निमित्तमस्त्यन्यद्रजतावभासात् । न ह्यन्यतररजतप्रतिभासपक्षपाते कारणमस्ति । नास्त्यत्र रजतमित्यपि प्रतिभासोऽस्तीति चेत् । सत्यम् । प्रतिभाससामर्थ्याद्रजताभावोऽप्यङ्गीकृत एव पुरतः । प्रतीत्योर्विरोधः स्यादिति चेन्न । यथा न विरोधस्तथा वक्ष्यमाणत्वात् ।**

वा० — **यत्सन्निकृष्टेति** ॥ ज्ञानकरणनिष्ठसन्निकर्षप्रतियोगित्वमित्यर्थः । अस्यापि प्रत्यक्षस्थलेऽतिव्याप्त्यव्याप्ती आह ॥ **रूपादीति** ॥ सामानाधिकरण्यरूपव्याप्तिशरीरप्रविष्टसंयोगसमवायादिरूपसम्बन्धस्यान्यथाख्यातिवादिभिरपि लिङ्गलिङ्गिनोः स्वीकारेण तदभावप्रयुक्ताव्याप्तेर्लिङ्गकरणतापक्षे तद्विषये वक्तुमशक्यत्वेन वाक्यस्य वाक्यार्थे शक्तेस्तार्किकादिभिरनङ्गीकारेण वाक्यकरणतापक्षे तद्विषये तत्सम्बन्धाभावप्रयुक्ताव्याप्तिमेवाह ॥ **न च वाक्यमिति** ॥ वाक्यस्थलेऽतिव्याप्तिमप्याह । **आकाशादीति** । आदिपदेन श्रोत्रग्रहणम् । यद्यपि साध्यधर्मिसन्निकृष्टलिङ्गजन्यलिङ्गिज्ञानविषयता साध्यधर्मिण्यपि लिङ्गकरणतापक्षे आपादयितुं शक्या तथाऽपि विषयताऽङ्गीकारेणापि परिहारसम्भवान्नात्रापादिता सिद्धान्तदशायां त्ववश्याभ्युपगमनीयलिङ्गज्ञानकरणताभ्युपगमेन सुपरिहारत्वाद्धर्मिणो मुख्यविषयत्वाभावाभिप्रायेणाशङ्क्य परिहृतेति द्रष्टव्यम् । यद्यपि वाक्यार्थज्ञानस्यात्मविषयता वाक्यज्ञानकरणतापक्षेऽप्यापादयितुं शक्याऽत एव न्यायामृते आदिशब्दस्तथाऽपि वाक्यकरणतापक्षेऽव्याप्त्यतिव्याप्त्योर्वाक्यस्थल उद्भावितत्वाज्ज्ञानकरणतापक्षाश्रयणेनातिव्याप्त्यनुद्भावनेऽप्यनुमानस्थले लिङ्गकरणतापक्षाश्रयणेन तदुद्भावनासम्भवात् । ज्ञानकरणताश्रयणेनातिव्याप्तिमुपपादयति ॥ **लिङ्गज्ञानाच्चेति** । लिङ्गज्ञानकरणतापक्षे सम्बन्धाभावप्रयुक्ताव्याप्तेरापादनाभावस्तु लिङ्गलिङ्गिनोः सम्बन्धसम्भवे तद्द्वारकस्तज्ज्ञानयोरपि सम्बन्धः सम्भवतीत्याशयेन बोध्यः । वाक्यज्ञानस्य तत्सम्बन्धाभावप्रयुक्ताव्याप्त्यनुद्भावनं तु वाक्यस्य तत्सम्बन्धाभावप्रयुक्ताव्याप्त्युद्भावनेनैव ज्ञानस्थलेऽपि तस्याः सिद्धतामभिप्रेत्य सिद्धान्तदशायां तु लक्षणनिष्कर्षाय सर्वदूषणान्याशङ्क्य परिहृतानीति ध्येयम् । यदर्थं विषयत्वलक्षणान्तरनिराकरणं तद्वक्तुं विषयत्वं परिशेषयति ॥ **तस्मादिति** ॥ एवं च रजतज्ञाने शुक्तेरालम्बनत्वं वदता तत्र तदवभासोऽङ्गीकार्यः । तथा च संविद्विरोध इत्याह ॥ **तत्रेति** ॥ समूहालम्बनातिरिक्ते रजतमिति ज्ञाने संवित्स्वभावविरुद्धं शुक्तेरवभासं वदतोऽलौकिकं बुद्धिवैशद्यमित्याशयेन श्लाघनीयप्रज्ञ इति परिहासः । देवानां प्रियः पशुः । अनवभासे उक्तान्यथाख्यातिर्न सिद्ध्येदित्याशयेनाह ॥ **यदीति** ॥ एतच्च संविद्विरोधस्वरूपं नयवीथ्यां स्पष्टमुक्तम् । अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते । वेद्यः स एव नान्यद्धि वेद्यं वेद्यस्य लक्षणम् । इदं रजतमित्यत्र रजतं चावभासते । तदेव तेन वेद्यं स्यान्न च शुक्तिर्वेदनात् । तेनान्यस्यान्यथाभानं प्रतीत्यैव पराहतम् । परस्मिन्भासमाने हि न परं भासते यत इति । अस्तु वा यत्किञ्चिदालम्बनत्वं रजतावभासिज्ञाने शुक्त्यनवभासेऽपि शुक्तेरालम्बनत्वे घटावभासि पटानवभासिज्ञाने पटस्य पुरोवर्तिरजतज्ञाने शुक्तेश्चालम्बनत्वापत्तिश्चेत्याह ॥ **किञ्चेति** ॥ नन्वतिप्रसङ्गादिनाऽवभासिन एवालम्बनत्वे इदं रजतमिति ज्ञानस्य रजतावभासितया तदालम्बनत्वं वक्तव्यम् । तथा चासतो विषयत्वासम्भवेन रजतस्य सत्त्वं च स्यादिति ॥ **नन्विति** ॥ असत्ख्यातिवादिनं प्रत्यस्यानिष्टत्वेऽपि मां प्रतीष्टापादनत्वात्तर्काभासोऽयमित्याह ॥

**कथमिति** ॥ रजतसत्त्वस्य न तावत्प्रामाणिकहानरूपत्वादनिष्टत्वम् । अप्रामाणिककल्पनात्वेनानिष्टत्वे च तस्याप्रामाणिकत्वं साधकप्रमाणशून्यत्वं प्रमाणविरुद्धत्वं वा । नाद्यः । तदवभासस्यैव प्रमाणत्वात् । अन्यथा वस्तुमात्रस्यासत्त्वापत्तेरित्याशयेनाह ॥ **न हीति** ॥ ननु निर्बाधकावभासस्य वस्तुसत्त्वसाधकत्वेऽपि न सबाधकस्य प्रकृतावभासस्य तथात्वमित्यतः प्रकृतेऽपि न तादृशबाधकमस्तीत्याशयेन द्वितीयं निराह ॥ **न हीति** ॥ प्रतिभासस्य विषयसत्त्वप्रयोजकत्वं वदता नास्त्यत्र रजतमिति प्रत्ययविषयोऽप्यङ्गीक्रियत एव । न च विरोधो विषयभेदादित्याह ॥ **सत्यमिति** ॥ ननु न विषयभेदः । इदं रजतमिति प्रतीत्या पुरत एव रजतसत्त्वस्य विषयीकरणादित्याशङ्कते ॥ **प्रतीत्योरिति** ॥ स्यादेतदेवं यदि नास्त्यत्र रजतमित्यस्य पुरतस्तत्सत्त्वाभावविषयकत्ववदिदंरजतमित्यस्य पुरतस्तत्सत्त्वविषयकत्वं स्यात् । न चैवम् । रजतमिदमिति द्वे विज्ञाने इत्यादिना ज्ञानद्वित्वस्योपपादयिष्यमाणत्वेन तस्य रजतस्वरूपमात्रविषयकत्वात् । तथा च विषयभेदान्न विरोध इत्याशयेनाह ॥ **यथेति** ॥

स०— रजतावभासस्य रजतविषयकत्वे असतात् न संनिकर्षायोगात्सत्त्वमावश्यकमिति शङ्कते ॥ **ननु रजतावभासस्येति** ॥ परिहरति ॥ **कथं न भवितव्यमिति** ॥ रजतस्य पुरोदेशे अभावेऽपि विप्रकृष्टो न संयोगादिप्रत्यासत्त्यनुपपत्तावपि संस्काररूपायास्तस्याः सत्त्वाद्विषयत्वोपपत्तिरिति भावः ॥ **यथा न विरोध इति** ॥ भ्रमकाले पुरोवर्तिग्रहणागृहीतभेदं अन्यत्र विद्यमानं रजतस्मरणम् । बाधकाले च पुरोदेशे विद्यमानरजताभावानुवादः । न रजततदभावप्रतीत्योर्विरोध इति वक्ष्यमाणत्वादित्यर्थः । यदि हि पुरोदेश एव रजतज्ञानं तदा परं विरोधः स्यान्नैवमिति भावः ।

प०—**यज्ज्ञानमिति** ॥ यदिति भिन्नं पदम् । ननु यस्य ज्ञानं यज्ज्ञानमितिसमासः पुनरव्याप्त्यतिव्याप्ती चाह ॥ **न च वाक्यमित्यादिना** ॥ शब्द आकाशगुणो वायुगुणो वेतिमतेनाह ॥ **आकाशादीति** ॥ आत्मसन्निकृष्टादात्मसमवेतादित्यर्थः । ज्ञानादेरात्मगुणत्वादिति भावः । देवानां प्रिय इत्येकं पदम् । अज्ञ इत्यर्थः । षष्ठस्य तृतीयपादे 'षष्ठ्या आक्रोश'इति सूत्रे 'देवानां प्रिय इति वक्तव्यम्' इति वार्तिकादलुक् । श्लाघनीयप्रज्ञ इत्यपहासः काकुस्वरेण द्योत्यते ॥ **अतिप्रसङ्ग इति** ॥ पटाद्यवभासकमपि ज्ञानं घटाद्यालम्बनं स्यादित्यतिप्रसङ्ग इत्यर्थः । शुक्तिकायामिदं रजतमिति ज्ञानस्य शुक्तिकालम्बनत्वाभावे रजतमेवालम्बनं स्यात् । तथाच रजतं वास्तवं स्यादिति शङ्कते ॥ **नन्विति** ॥ इष्टापत्तिं मन्वान उत्तरमाह प्राभाकरः ॥ **कथं न भवितव्यमिति** ॥ भवितव्यमेवेत्यर्थः । प्रतीतिविषयस्य-सत्त्वेन भाव्यमित्येतदुपपादयति ॥ **न हीति** ॥ **वक्ष्यमाणत्वादिति** ॥ ननु तर्हीत्यादिना ग्रन्थेनेद-

मिति ज्ञानादगृहीतविवेकं रजतमिति स्मरणं नास्तीहरजतमिति त्वनुभवो विवेकग्रहरूप इत्यादिरूपेण वक्ष्यमाणत्वादित्यर्थः ॥

या०—**आकाशाऽऽदिविषयतयैवेति** ॥ शब्दरूपस्य वाक्यस्याऽऽकाशसमवेतत्वादिति भावः ॥ **यत्प्रतिभासमिति** ॥ यदुल्लेखीत्यर्थः । एवमग्रेऽपि ॥ **कथं न भवितव्यमिति** ॥ एतन्मते रजतज्ञानस्य स्मृतिरूपत्वेन सत्यरजतविषयकत्वादिति भावः ॥ **यथा न विरोध इति** ॥ भ्रमकाले पुरोवृत्तिग्रहणा गृहीतभेदमन्यत्र विद्यमानरजतस्मरणं बाधकाले च पुरोदेशे विद्यमानरजताभावानुभवः अतो न रजततदभावप्रतीत्योर्विरोध इति वक्ष्यमाणत्वादित्यर्थः । यदि पुरोदेश एव रजतज्ञानं तदा परं विरोधः स्या.. चैवमिति भावः ॥

श्री०—रजतज्ञानस्य शुक्तिविषयकत्वमनुभवविरुद्धं चेत्याह ॥ **तत्रेति** ॥ देवानां प्रियो मूर्ख इत्यथः ॥ **अतिप्रसङ्ग इति** ॥ घटावभासस्यापि पटविषयकत्वं स्यादित्यर्थः । शुक्तिकायामिदं रजतमिति ज्ञानस्य शुक्तिकालम्बनत्वाभावे रजतमेवालम्बनं स्यात् । तथाच रजतं वास्तवं स्यादित्याशङ्कते ॥ **नन्विति** ॥ इष्टापत्तिं मन्वानः प्राभाकर उत्तरमाह ॥ **कथं न भवितव्यमिति** ॥ भवितव्यमित्यर्थः ।

च०— **यत्सन्निकृष्टेति** ॥ स्वकरणानुयोगिकसन्निकर्षप्रतियोगित्वं स्वनिरूपितविषयत्वमित्यर्थः ॥ **आकाशादीति** ॥ रूपादिज्ञानोत्पादकेन चक्षुरादिना गगनादेर्विभुतया संयुक्तत्वादिति भावः ॥ **ततेति** ॥ प्रत्यभिज्ञोत्पादकेन करणेन अतीतायाः तद्देशतत्कालसंबन्धित्वरूपतत्तायाः सन्निकर्षाभावादिति भावः । वाक्यार्थे व्याप्तिमाह ॥ **न हीति** ॥ आकाशादावतिव्याप्तिं दर्शयति ॥ **आकाशादीति** ॥ शब्दस्याकाशगुणत्वादिति भावः । आत्मन्यतिप्रसङ्गमभिदधाति ॥ **लिङ्गेति** ॥ देवानां प्रिय इति समस्तम् । अलुक्प्रकरणे षष्ठ्या आक्रोश इति सूत्रे देवानां प्रिय इति वक्तव्यमिति कात्यायनवचनात् ॥ **अतिप्रसङ्ग इति** । घटाद्यवभासकस्यापि पटाद्यालम्बनताऽऽपत्तेरिति भावः ॥ **कथमिति** ॥ गुरूणां मते रजतज्ञानस्य स्मृतिरूपतयाऽवास्तवरजतविषयकत्वाभावादिति भावः ॥ **यथा न विरोध इति** ॥ रजतस्मृतेः पुरोदेशवृत्तित्वानवगाहितयाऽभावांशे तद्वृत्तित्वावगाहिबाधज्ञानस्य न विरोध इत्यर्थः । ननु तर्हीत्यादिग्रन्थेनाभिधास्यमानत्वादित्यर्थः ।

सु०—**न चान्यथाख्यातिजनने कारणं पश्यामः । न च चक्षुरादिकमेव कारणम् । तस्य समीचीनज्ञानकरणतावधारणात् । न खलु जरामरणविध्वंसहेतुर्जातु सुधा तद्धेतुरपि भवति ।**

**कारणैक्ये कार्यभेदस्याकस्मिकत्वप्रसङ्गात् । न चादृष्टभेदात्कार्यभेदः । तस्य कार्यभेदनिश्चयोत्तरकालं निश्चेयत्वात् । कार्यभेदस्य च विप्रतिपन्नत्वात् । दोषसहकृतादिन्द्रियादेवान्यथाज्ञानजननमित्यप्यसत् । दोषा हि कारणानामौत्सर्गिककार्यजननसामर्थ्यं निघ्नन्ति । न तु विपरीतकार्यजननसामर्थ्यमादधति । न खलु दुष्टं कुटजबीजं वटं जनयति । किं नाम न जनयत्येव कुटजाङ्कुरम् । न च वक्तव्यं दावदहनदग्धवेत्रबीजानां कदलीकाण्डजननसामर्थ्यमुपलब्धमिति । पाकेन द्रव्यान्तरोत्पत्तेस्तेषामबीजत्वात् ।**

वा० — एवं स्वरूपानिर्वचनेनान्यथाख्यातिं निराकृत्य हेत्वसम्भवेनापि तां निराकरोति ॥ **न चेति** ॥ यद्वा ननु विशिष्टज्ञानसामग्रीबलेन तत्सिद्धेर्न ज्ञानद्वित्वकल्पनया विरोधपरिहार उपपन्न इत्यतस्तत्सामग्र्यभावमेवाह ॥ **न चेति** ॥ समीचीनज्ञानहेतुतया क्लृप्तत्वमेवकारार्थः ॥ **समीचीनेति** ॥ विरोधस्फोरणाय चक्षुरादिनाऽन्यथाख्यातिजनकम् । तद्विरोधिज्ञानसामग्रित्वात् । वादिप्रसिद्ध्या च साध्यप्रसिद्धिरिति विवक्षितानुमाने या यद्विरोधिसामग्री न सा तद्धेतुरिति सामान्यव्याप्तौ दृष्टान्तमाह ॥ **न खल्विति** ॥ अप्रयोजकतापरिहाराय कार्यवैचित्र्यानुपपत्तिरूपं बाधकमाह ॥ **कारणेति** ॥ अन्यथोपपत्तिं शङ्कते ॥ **न चेति** ॥ दोषाणां कार्यसहकारित्वमसिद्धमित्याह ॥ **दोषा हीति** ॥ तेषामपि संस्कारादिवत्कार्यान्तरजनकेन्द्रियादिसहकारित्वे दोषत्वेन प्रसिद्धिर्न स्यादिति हिशब्देनाह । ननु तेन तत्कार्याजनने तत्सामर्थ्यस्यैवाभावान्न प्रतिबन्धककल्पनेत्यतो दोषाभावदशायां तेन तज्जातीयेन वा कार्योत्पादेन तत्सामर्थ्यस्य सिद्धत्वाद्युक्त्या प्रतिबन्धककल्पनेत्याशयेनौत्सर्गिकेति विशेषणम् । दोषाः कार्यजननसामर्थ्यनाशका न विपरीतकार्यजननसामर्थ्याधायकाश्च दोषत्वादित्यनुमानयोर्दृष्टान्तं सूचयन् अन्यथा कुटजबीजस्य वटजनकत्वं स्यादित्यादिविपक्षबाधकं च दर्शयति ॥ **न खल्विति** ॥ द्वितीयानुमाने व्यभिचारमाशङ्क्य निषेधति ॥ **न चेति** ॥

स० — कारणमपि दूषयति ॥ **न चेति** ॥ नाऽपीत्यर्थः ।

प० — **जात्विति** ॥ कदाऽपीत्यर्थः ॥ **कार्यस्य चेति** ॥ अन्यथाख्यातिशब्दितभ्रमरूपकार्यस्य चेत्यर्थः । कार्यभेदस्य चेतिपाठे भ्रमप्रमारूपकार्यभेदस्य चेत्यर्थः । कुटजबीजं गिरिमल्लिकाबीजम् ॥ **दावदहनदग्धेति** ॥ वनवह्निदग्धेत्यर्थः । इति न च वक्तव्यमित्यन्वयः ।

या० — **तद्धेतुरपीति** ॥ जरामरणहेतुरपीत्यर्थः ॥ **कार्यभेदस्येति** ॥ कार्यवैलक्षण्यस्येत्यर्थः ॥ **विप्रतिपन्नत्वादिति** ॥ भ्रमरूपविलक्षणकार्यस्याधुनाऽप्यसिद्धत्वादिति भावः ॥ **दावदहनेति** ॥

तथाच दोषाणामपि दावदहनवच्चक्षुरादिकरणसहकारित्वाद्विपरीतकार्यजननसामर्थ्याऽऽधायकत्वं युक्तमिति भावः ॥ **पाकेन द्रव्यान्तरेति** ॥ पाकेन वेत्रबीजानामापरमाण्वन्तभङ्गे पुनर्द्व्यणुकादिक्रमेण तेभ्यः परमाणुभ्यः कदलीकाण्डजननाङ्गीकारेण वेत्रबीजानां कदलीकाण्डजनकत्वाभावादित्यर्थः ।

श्री०— नन्वेकस्यैव चक्षुरादेः समीचीनासमीचीनज्ञानद्वयजनकत्वमस्त्वित्यत आह ॥ **कारणैक्य इति** ॥ **कुटजेति** ॥ काजवारेत्यपभ्रष्टभाषा ॥ **पाकेनेति** ॥ दावदहनरूपतेज संयोगाख्यपाकेन वेत्रबीजनाशेन कदलीकाण्डबीजरूपद्रव्यान्तरोत्पत्तेस्तेषां वेत्रबीजानां कदलीकाण्डबीजत्वाभावादित्यर्थः ॥

च०— ननु रजतस्मृतिशुक्तिचक्षुःसन्निकर्षभेदाग्रहदोषादिघटितसामग्र्येदमंशधर्मिकरजतप्रकारकज्ञानस्यैवोदयेन ज्ञानद्वित्वोपगत्या विरोधसमाहितिर्न सङ्गच्छत इत्याशङ्कायां तादृशीं सामग्रीमेव प्रत्याख्याति ॥ **न चेति** ॥ दोषपक्षकनैसर्गिककार्यजनकसामर्थ्यविघातकत्वविपरीतकार्यजननसामर्थ्याधायकत्वाभावसाध्यक‍दोषत्वहेतुकदुष्टकुटजबीजनिदर्शनकमनुमानद्वयमभिप्रेत्याद्यानुमानेऽप्रयोजकताशङ्कानिरासाय प्रकृतसाध्याभावापादकप्रकृतहेत्वभावापाद्यकदुष्टकुटजबीजगृहीततदुभयव्याप्तिकापत्तिं दर्शयति ॥ **दोषा हीति** ॥ **औत्सर्गिकेति** ॥ नैसर्गिकेत्यर्थः । कुटजबीजं गिरिमल्लिकाबीजम् । द्वितीयानुमानेऽनैकान्त्यमाशङ्कते ॥ **दावेति** ॥ समाधत्ते ॥ **पाकेनेति** ॥ पीलुपाकप्रक्रियाऽऽश्रयणादिति भावः ।

सु०—किञ्च प्रदर्शिताकारव्यभिचारे प्रत्ययस्य सर्वत्र व्यभिचारशङ्का दुर्वारा स्यात् । तथा च कथं बाह्यार्थनिन्हवं निराकुर्मः । तथा हि ज्ञानमेव खलु सर्वत्र वस्तुव्यवस्थापकं नान्यत् । तच्चेत्क्वचिद्व्यभिचरति । तदा तत्सर्वत्र शङ्कितव्यभिचारमेव । न च तच्छङ्कापङ्कसङ्क्षालनक्षमं किञ्चिदन्यद्विज्ञानात् । तच्च सकलमपि शङ्काकलङ्कसङ्कोचितप्रभावं न प्रभवतीत्युक्तम् । ततश्च कुतो बाह्यार्थप्रत्याशा । न च वाच्यं यथा घटादेः पार्थिवस्य वह्निव्यभिचारेऽपि न धूमस्यापि तद्व्यभिचारः शङ्क्यते । एवमेकज्ञानस्यार्थव्यभिचारेऽपि न सर्वत्र व्यभिचारशङ्केति । वैषम्यात् । अस्ति हि तत्र पार्थिवत्वाविशेषेऽप्यव्यभिचारनिश्चयोपायो धूमत्वादिरेवावान्तरो विशेषः । न हि तत्र बाधकं किञ्चित् । तेनोपपद्यते तत्राश्वासः । प्रकृते तु न ज्ञानत्वावान्तरविशेषमनाश्वास निरसनक्षममीक्षामहे । न च बाधकभावाभावरूपाद्विशेषाद्व्यवस्थेति वाच्यम् । बाधकस्यापि ज्ञानत्वेन शङ्कास्पदत्वात् । न खलु बाधकस्य किमपि शृङ्गमस्ति । बाधकाभावश्चानुपसञ्जात-

**बाधभ्रमे समानः । संवादकभावाभावाभ्यां विशेष इति चेन्न । उक्तोत्तरत्वात् । संवादकमपि ज्ञानमेवेति तदपि कथं संशयास्पदं न स्यात् । तत्रापि संवादकान्तरान्वेषणेऽनवस्था कुतो न भवेत् । अङ्गीकृतश्च परेण धारावाहिकभ्रमेऽन्योन्यसंवादः । एतेन ज्ञानजन्यव्यवहारविसंवादाविसंवादलक्षणोऽपि विशेषः परास्तो वेदितव्यः । तद्विशेषग्राहिण्यपि विश्वासकारणाभावात् । अपि च प्रतीयमानोऽयं रजताकारः कुतस्त्य इति वक्तव्यम् । न तावत्पुरोवर्तिनिष्ठ इतीष्टमन्यथाख्यातिवादिनाम् । बाधविरोधश्च तथा सति स्यात् । नापि देशान्तरवर्तीति वक्ष्यामः । ततश्च ज्ञानस्य एवायमित्यापतितम् । तथा च जितं साकारविज्ञानवादिभिर्बौद्धैः ।**

वा०— नन्विदंरजतमित्यस्य विशिष्टविषयैकज्ञानत्वस्यानुभवबलेन सिद्धेः कार्यान्यथाऽनुपपत्त्या दोषाणां विपरीतकार्यजनकत्वं क्वचित्कल्पनीयमेवेत्यतः सति बाधके साधकमात्रेणार्थासिद्धेस्तदन्यथासिद्धिरेवोचितेत्याशयेनाह ॥ **किं चेति** ॥ सर्वत्र व्यभिचारशङ्कायामपि न नः काचित्क्षतिरित्यतः साधकान्तराभावाज्ज्ञानस्याप्यसाधकत्वे ज्ञानातिरिक्तार्थासिद्ध्या· स्वरूपत्वेन प्रतीयमानार्थाकारस्यालीकत्वानुपपत्त्या धीरेव तदाकारेति बाह्यार्थापलापिविज्ञानवादिनः प्रति मूकता स्यादित्याह ॥ **तथा चेति** ॥ ननु ज्ञानस्यार्थव्यभिचारे तेनार्थसिद्धिरेव न स्यान्न तु सर्वथाऽर्थासिद्धिः । प्रमेयत्वस्य वह्निव्यभिचारेऽपि धूमेन तत्सिद्धिदर्शनात् । ज्ञानस्यैव तत्साधकत्वेऽपि व्यभिचारशङ्कानिवर्तकेन तन्निवृत्तौ ज्ञानादर्थसिद्धिः सुलभैवेत्यत आह ॥ **तथा हीति** ॥ **उक्तमिति** ॥ न हि स्वप्रतिबन्धकनिवर्तकं स्वयमेवेति भावः । ननु सति विशेषदर्शने साधारणधर्मदर्शनमात्रेण न व्यभिचारशङ्काऽतिप्रसङ्गादिति शङ्कते ॥ **न च वाच्यमिति** ॥ अतिप्रसङ्गविषये विशेषदर्शनेऽपि न प्रकृते तदित्याह ॥ **वैषम्यादिति** ॥ ननु प्रकृतविशेषवदयमप्यप्रयोजक इत्यतो वक्ष्यमाणबाधकवशेन प्रकृतविशेषानुपपत्तावपि नात्र काचिदनुपपत्तिरित्याह ॥ **न हीति** ॥ नन्वत्रापि प्रमात्वादिरेव विशेष इत्यतोऽर्थाव्यभिचारिज्ञानत्वस्यैव प्रमात्वरूपत्वादर्थव्यभिचारशङ्कया तदनिश्चये उद्भाविते तेनैव शङ्कानिरासोक्तिरनुपपन्नेत्याशयेनोक्तमनाश्वासनिरसनदक्षमिति । ननु ज्ञानत्वावान्तरविशेष एव वक्तव्य इति न नियमः । शङ्कानिरासस्तु विशेषान्तरादपीत्याशयेन विशेषान्तरमाशयेन विशेषान्तरमाशङ्क्य निषेधति ॥ **न चेति** ॥ ननु बाधकत्वादेव न तत्र शङ्केत्यत आह ॥ **न खल्विति** ॥ एवं भ्रमत्वसाधकस्य बाधकवत्त्वहेतोरप्रयोजकत्वमुक्त्वा प्रमात्वसाधकस्य बाधकाभाववत्त्वहेतोर्व्यभिचारमाह ॥ **बाधकेति** ॥ न हि संवादकस्य शृङ्गमस्तीत्युक्तोपपादनप्रकारस्यात्राप्यनुसन्धेयत्वं सूचयति ॥ **उक्तेति** ॥ अधिकं वक्तुं सामान्यत उक्तं स्पष्टयति ॥ **संवादकमपीति** ॥ संवादवत्त्वं व्यभिचारि च त्वद्रीत्येत्याह ॥ **अङ्गीकृतश्चेति** ॥ संवादविसंवादौ नार्थतोऽपि

तु फलतः । एवं च संवादादेरर्थप्राप्त्यादिरूपत्वेन संवादकमपि ज्ञानमेवेत्युक्तदूषणाप्राप्तिरिति विशेष शङ्कामतिदेशेन दूषयति ॥ **एतेनेति** ॥ तत्तद्दूषणाप्रसक्तावपि तन्न्यायेन दूषणमनिवार्यमेवेत्याशयेनातिदेशार्थमाह ॥ **तदिति** ॥ ननु स्वतःप्रामाण्यवादिना प्रामाण्यग्राहके साक्षिणि साक्षित्वादिरूपविशेषस्य धूमत्वादेरिवानाश्वासनिरसनदक्षस्य स्वीकारान्न तं प्रत्यनुपपत्तिरित्यत आह ॥ **अपि चेति** ॥ रजताकारो बाह्य आन्तरो वा । आद्येऽपि पुरोवर्तिनिष्ठो देशान्तरनिष्ठो वेति विकल्पान्मनसि निधाय क्रमेण दूषयति ॥ **न तावदित्यादिना** ॥

स० — सति बाधके ज्ञानस्यार्थव्यभिचारित्वमित्यंशं तस्य बाधकत्वानुपपत्त्या प्रदूष्य बाधकाभावेऽर्थाव्यभिचारित्वमित्यंशं दूषयति ॥ **बाधकाभावश्चेति** ॥ उक्तोत्तरत्वादित्युक्तमेव प्रपञ्चयति ॥ **संवादकमपीति** ॥ सति संवादे ज्ञानस्यार्थाव्यभिचारित्वमित्यत्र व्यभिचारमाह ॥ **अङ्गीकृतश्चेति** ॥ **देशान्तरवर्तीति** ॥ नैयायिकोक्तान्यथाख्यातिनिरासावसर इति शेषः ।

प० – एवं 'साकारवादादसतो न भावात्संविद्विरोधादथ हेत्वभावादि'त्यन्यथाख्यात्यनुपपत्तौ परोक्तहेतून् विवृत्य ज्ञानस्य व्यभिचारित्वे विश्वासः किं निबन्धन इति परोक्तं व्यनक्ति ॥ **किञ्चप्रदर्शितेति** ॥ बाह्यार्थनिह्नवं बाह्यार्थापलापं । आन्तरं ज्ञानमेव घटादिबाह्यार्थात्मनाऽवभासते । वस्तुतो बाह्यभूतोऽर्थो नास्तीति बौद्धैरुच्यमाने बाह्यार्थापलापमित्यर्थः ॥ **तदिति** ॥ ज्ञानमित्यर्थः ॥ **न प्रभवतीति** ॥ शङ्कानिवर्तने अर्थसत्त्वनिश्चये वा न क्षमत इत्युक्तमित्यर्थः ॥ प्रत्याशा दुराशा । अन्ते अन्ततः ॥ **शङ्कतीति** ॥ न च वाच्यमिति पूर्वेणान्वयः । बाधकाभावोऽऽपि नाश्वासहेतुरित्याह ॥ **बाधकाभावश्चेति** ॥ उक्तोत्तरत्वादित्येतद्व्यनक्ति ॥ **संवादकमपीति** ॥ **परेणेति** ॥ अन्यथाख्यातिवादिना ॥ **अन्यथाख्यातिवादिनां** ॥ भ्रमवादिनामित्यर्थः । तथात्वे भ्रान्तित्वाभावाऽऽपत्तेरिति भावः । **वक्ष्याम इति** ॥ तार्किकाभिमतान्यथाख्यातिनिरास प्रस्तावे ॥

या० — **बाह्यार्थनिह्नवमिति** ॥ बाह्यार्थापलापमित्यर्थः । विज्ञानवादिनो हि बाह्यमर्थमपलपन्ति । तन्निराकरणं च प्रत्ययेनैव क्रियते । स चेद्व्यभिचारकलङ्कितः कथं तर्हि तन्निराकरणे क्षमः स्यादिति भावः । एतदुपपादयति ॥ **तथाहीति** ॥ उक्तोत्तरत्वादित्युक्तमेव विशदयति ॥ **संवादकमपीति** ॥ स्वमते विभ्रमाभावादाह ॥ **परेणेति** ॥ **ज्ञानजन्यव्यवहारेति** ॥ अत्र व्यवहारपदेन प्रवृत्तिरेव विवक्षितेति ज्ञातव्यम् ॥ **तद्विशेषग्राहिण्यपीति** ॥ तस्यापि ज्ञानत्वादिति भावः । तदुक्तम् । 'अहो बत महानेष प्रमादो धीमतामपि । ज्ञानस्य व्यभिचारित्वे विश्वासः किं निबन्धन इति ।

श्री०—**वह्निव्यभिचारेपीति** ॥ यत्र पटस्तत्र वह्निरिति व्याप्तेस्तन्तुषु व्यभिचारित्वादिति भाव: । **धूमस्यापीति** ॥ पार्थिवत्वाविशेषादित्यर्थ: । अवान्तरविशेष: पृथिवीत्वावान्तरजातिरूप: ॥ **तद्विशेषग्राहिण्यपीति** ॥ अविसंवादिप्रवृत्तिजनकमिदं ज्ञानमिति ग्राहिण्यपि ज्ञान इत्यर्थ: । पुरोवर्तिशुक्तिशकलम् ॥ **इष्टमिति** ॥ अन्यथाख्यातिवादिभिस्तस्यान्यत्र सत्वाङ्गीकारादित्यर्थ: ॥ **बाधविरोधश्चेति** ॥ नेदं रजतमिति पुरोवर्तिनिष्ठत्वाभावावगाहिबाधकप्रत्ययविरोधश्चेत्यर्थ: ॥ **वक्ष्याम इति** ॥ न च विप्रकृष्टेन रजतेन सन्निकर्षोऽस्तीत्यनुपदमेव वक्ष्याम इत्यर्थ: ।

च०— 'साकारवादादसतो न भानात्संविद्विरोधादथ हेत्वभावादि'ति प्राभाकराभिहितान्यथाख्यातिन्यक्कृतिहेतून्विशदीकृत्य धियामनाश्वासभयाच्च नेष्टा यतोऽन्यथाख्यातिरतो यथार्थेति ॥ अहो बत महानेष प्रमादो धीमतामपि । ज्ञानस्य व्यभिचारित्वे विश्वास: किं निबन्धन इति गुरूक्तबाधकानि स्फुटीकरोति ॥ **किं चेति** ॥ निह्नवमपलापं । आन्तरविज्ञानातिरेकेण बाह्यार्थस्यालीकतां मन्वाना विज्ञानवादिनो बाह्यार्थानपलपन्ति प्रत्ययस्याप्रामाण्यशङ्कास्कन्दिततायां कथां तादृशप्रत्ययेन ते प्रत्याख्येया इति भाव: । अथ वह्नित्वावच्छिन्ननिरूपितव्याप्यतावच्छेदकीभूतधूमत्वादिप्रतिसन्धानदशायां तद्व्याप्याव्याप्यसाधारणपार्थिवत्वादिप्रतिसंहितावपि तन्निरूपितव्याप्तितदभावकोटिकशङ्का यथा नोदेति तद्वत्प्रकृते प्रमाभ्रमोभयसाधारणज्ञानत्वादिप्रतिसन्धानेऽपि प्रमात्वव्याप्यतावच्छेदकीभूतविषयविसंवादविरहत्वावच्छिन्नस्य दर्शने कथं प्रमात्वतदभावकोटिकशङ्कोदीयादित्याशङ्कायां निदर्शने तत्समवधानेऽपि प्रकृते न तत्समवहितिरित्याह ॥ **न चेत्यादि** ॥ बाह्यै: वेदप्रामाण्यानङ्गीकर्तृभि: ।

सु०—**ननु तर्हीदं रजतमित्यादिप्रत्ययस्य का गति: । उच्यते । रजतमिदमिति द्वे ज्ञाने स्मृत्यनुभवरूपे । तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणम् । दोषवशात्तद्गतस्य शुक्तित्वसामान्यविशेषस्याग्रहणात् । तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजतस्मृतिं जनयति । सा च गृहीतग्रहणस्वभावाऽपि दोषवशादगृहीततत्तांऽशप्रमोषेण गृहीतिसरूपाऽवतिष्ठते । तथा च रजतस्मृते: पुरोवृत्तिग्रहणस्य च मिथ: स्वरूपतो विषयतश्च भेदाग्रहणात्सन्निहितरजतज्ञानसारूप्येणेदं रजतमिति भिन्ने अपि ग्रहणस्मरणे अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयत: । कुत एतदिति चेन्न । अन्यथाऽनुपपत्तेरुक्तत्वात् । किञ्चेदमिति पुरोवर्ति नयनसम्प्रयोगजं ज्ञानमनुभव इत्यविवादम् । रजतज्ञानं च न तावदिन्द्रियजम् । इन्द्रियस्य सन्निकृष्टार्थ एव ज्ञानजननसामर्थ्यात् । अन्यथा सर्वसार्वज्ञप्रसङ्गात् । न च विप्र-**

**कृष्टेन रजतेन सन्निकर्षोऽस्ति । तत्कार्यस्य साक्षात्कारस्य कदाप्यदर्शनात् । न च शुक्तिशकल सन्निकर्षादेवेन्द्रियं रजतज्ञानमुत्पादयतीति साम्प्रतम् । अतिप्रसङ्गात् । न च दोषसदसद्भावाभ्यां व्यवस्था । दोषाणां विपरीतकार्यकारिताया निरस्तत्वात् । भस्मकदोषदूषितस्य जाठरजातवेदसो बहुतराऽऽहारपरिणतिहेतुतोपलभ्यत इति चेन्न । विप्रतिपत्तेः । दोषस्यैवाऽऽहारविकारहेतुतोपपत्तेः । न च दहनकार्यं कथं दोषः करोतीति वाच्यम् । कार्येऽपि वैजात्योपलम्भात् । जाठराग्निपरिणता हि रसाः शरीरोपचयहेतवो न भस्मकपरिणतास्तथा । तस्मान्नेदमिन्द्रियजम् । न च लिङ्गाद्यनुसन्धानविधुराणामपि जायमानमनुमानाऽऽदिप्रभवमिति वक्तुं शक्यते । अतः प्रत्युत्पन्नकरणाभावेऽप्युत्पद्यमानेनानेन परिशेषात्स्मरणेनैव भवितव्यम् ।**

**व्या०**—नन्वनन्यथासिद्धेदं रजतमित्यादिप्रत्ययबलाद्बाधकानामन्यथोपपत्तिरेवोचितेत्याशङ्कते ॥ **नन्विति** ॥ रजतमित्यस्य स्मृतित्वस्यैव मुख्यतः प्रतिपाद्यत्वात्तत्प्राधान्याभिप्रायेण रजतमिति स्मृतीति चादितो ग्रहणम् । यद्वा स्मृतिशब्दस्याल्पाच्तरत्वेन पूर्वं प्रयोक्तव्यत्वे तदनुसारेण रजतमित्यस्यादितो ग्रहणमिति द्रष्टव्यम् ॥ **शुक्तित्वेति** ॥ रजताद्भेदहेतोः ॥ शुक्तित्वजातिविशेषस्याग्रहादित्यर्थः । यद्वा शुक्तित्वरूपस्येदमात्मकसामान्यं प्रति विशेषस्याग्रहादिदमिति द्रव्यमात्रग्रहणं भवतीत्यर्थः ॥ **गृहीतेति** ॥ गृहीतमिदमिति प्रकाशनस्वभावेत्यर्थः । नन्वेवं ज्ञानद्वित्वेऽभेदव्यवहारादि न स्यादित्यत आह ॥ **तथा चेति** ॥ ननु किमिदमेकैकं प्रवृत्तिहेतुर्मिलितं वा । नाद्यः । पृथक् प्रदेशे प्रवृत्तिप्रसङ्गात् । नान्त्यः । क्षणिकयोर्ज्ञानयोर्मेलनायोगादिति चेन्न । मेलनाभावेऽपि नैरन्तर्येणोत्पन्नयोरेव तथाविधप्रवृत्तिहेतुत्वोपपत्तेः । विनश्यदविनश्यतोः सहावस्थानाद्वेति भावः ॥ **सन्निहितेति** ॥ सन्निहितरजतगोचरं ज्ञानमिदमिति रजतमित्याकारयोरसंसर्गं न गृण्हाति तयोः संसृष्टत्वेनासंसर्गाभावात् । नापि स्वगतविवेकमेकज्ञानत्वादेवमेते अपि ग्रहणस्मरणे परस्परं भिन्ने अपि स्वगतभेदं न गृण्हीतो नाप्यसन्निकृष्टौ स्वगोचरौ तथैव निवेदयत इति सारूप्यम् । तथोक्तं नयवीथ्याम् । 'नन्वेवं रजताभासः कथमेष घटिष्यते । उच्यते शुक्तिशकलं गृहीतं भेदवर्जितम् ॥ शुक्तिकाया विशेषा ये रजताद्भेदहेतवः । ते न ज्ञाता अभिभवात् ज्ञाता सामान्यरूपता ॥ अनन्तरं च रजते स्मृतिर्जाता तयाऽपि च । मनोदोषात्तदित्यंशपरामर्शविवर्जितम् ॥ रजतं विषयीकृत्य नैव शुक्तेर्विवेचितम् । स्मृत्यातो रजताभास उपपन्नो भविष्यति ॥ ग्रहणस्मरणे चेमे विवेकानवभासिनी । सम्यग्रजतबोधात्तु भिन्ने यद्यपि तत्त्वतः ॥ तथाऽपि भिन्ने नाभातो भेदाग्रहसमत्वतः । सन्निहितरजतशकले रजतमतिर्भवति यादृशी सत्या ॥ भेदानध्यवसायादियमपि तादृक् परि स्फुरति । साधारणं हि रूपं तस्या अस्याश्च विद्यते तेन ॥ तन्मात्रप्रतिभाना

त्समानतामेव मन्यन्ते । तत्तुल्यव्यवहारप्रसक्तिरपि युज्यते चात' इत्यादिना । ज्ञानद्वित्वं स्मृतौ तत्ताप्रमोषोऽभेदज्ञाननिबन्धनाभेदव्यवहारादेर्भेदाग्रहनिबन्धनत्वं चेति बहुकल्पना निर्मूलेत्याशङ्कते ॥ **कुत इति** ॥ अन्यथाख्यातिबाधकानामेवैतत्कल्पनामूलत्वमित्याह ॥ **अन्यथाऽनुपपत्तेरिति** ॥ नन्वन्यथाख्यातिबाधकवशात्प्रत्ययादीनामेव गतिः कल्पनीया वा प्रत्ययादिवशादसत एवाकारस्य ख्यातिं दोषाणां च विपरीतकार्यजनकत्वं च प्रकल्प्यान्यथाख्यातिबाधकान्येव परिहार्याणीत्येवं सन्देह एव स्यान्न तु निश्चय इत्यतो रजतमित्यस्यानुभवत्वानुपपत्त्या स्मृतित्वे सिद्धे ज्ञानद्वित्वादेः सर्वस्य सिध्द्या निश्चयोपपत्तेरित्याशयेन रजतमित्यस्य स्मृतित्वे परिशेषमाह ॥ **किंचेति** ॥ रजतमिति ज्ञानं स्मृतिः अनुभवत्वे कारणाभावेऽपि उत्पद्यमानज्ञानत्वात् इति विवक्षितानुमाने नासिद्धिः । प्रत्युत्पन्न बाधकोपपन्नत्वे सति ज्ञानत्वात् । न च विशेषणासिद्धिः । विमतं नानुभवः प्रत्युत्पन्नकारणं चेन्द्रियं लिङ्गादिकं वा । आद्येऽपि तदसन्निकृष्टं सन्निकृष्टं वा । सन्निकृष्टत्वेऽप्यारोप्यरजतसन्निकृष्टं वाऽधिष्ठानशुक्तिसन्निकृष्टं वेतिविकल्पान्मनसि निधाय क्रमेण दूषयति ॥ **रजतज्ञानं चेत्यादिना ।** योगिसार्वज्ञाभ्युपगमादिष्टापत्तिनिरासायोक्तं सर्वेति । विप्रकृष्टेनेति हेतुगर्भविशेषणम् । कार्यादर्शनमात्रस्य कारणत्वाभावासाधकत्वात्कदाऽपीति विशेषणम् । नन्वाहारविकाररूपकार्यान्यथाऽनुपपत्त्यैव दुष्टजातवेदसो हेतुत्वसिद्धेर्न विप्रतिपत्तिरित्यत आह ॥ **दोषस्येति** ॥ नन्वेवं व्यभिचारान्नाग्नेरपि हेतुत्वमित्याशङ्क्य निषेधति ॥ **न चेति** ॥ तदुक्तं नयवीथ्याम् । 'उच्यतेऽनन्यगतितः स्मृतिरत्रावगम्यते । न ह्यसन्निहितं तावत्प्रत्यक्षं रजतं भवेत् ॥ लिङ्गाद्यभावाच्चान्यस्य प्रमाणस्य न गोचरः । परिशेषात्स्मृतिरिति निश्चयो जायते पुनः । तस्याः कारणसद्भावादिति ॥

स० — प्रतीतिं तु प्रकारान्तरेणोपपादयिष्याम इत्युक्तम् । तदुपपादयितुं शङ्कते ॥ **नन्विति** ॥ **तत्रेदमिनीति** ॥ अस्य च ज्ञानस्य स्वाप्रकाशस्यापि स्वस्य स्वाविषयत्वेतरस्मादविवेचकत्वस्य वक्ष्यमाणस्य विशेषानाकलनस्य च सिध्द्यर्थं दोषवशादित्युक्तम् । ननु गृहीतग्रहणस्वभावायाः स्मृतेः तद्विपरीताद्ग्रहणादगृह्यमाणाच्चार्थस्य स्वस्य च किमिति न विवेचकत्वं तत्राह ॥ **सा चेति** ॥ दुष्टमनोयोनित्वात्तद्देशकालवैशिष्ट्यं न गृह्णातीत्यविवेचकत्वम् । तथापि कथं स्वरूपतो विषयतश्च भिन्नाभ्यां संसृष्टप्रवृत्तिरिति तत्राह ॥ **तथा चेति** ॥ नन्विदमितिज्ञानमिदमंशे प्रवर्तयतु । रजतज्ञानं च रजते । रजतार्थिनः पुरोवर्तिनि प्रवृत्तिस्तु कुतस्तत्राह ॥ **स्वरूपतो विषयतश्चेति** ॥ ननु किमिदमेकैकं व्यवहारहेतु मिलितं वा । नाद्यः पृथक् पृथक् प्रवृत्तिप्रसङ्गात् । नान्त्यः क्षणिकज्ञानयोर्मेलनासंभवादिति चेन्न । मेलनाऽभावेऽपि नैरन्तर्येणोत्पत्तेरेव तथाविधप्रवृत्तिहेतुत्वोपपत्तेः विनश्यदविनश्यतोः सहावस्थानाद्वेति ॥

प०— **सामान्यविशेषस्य** ॥ जातिविशेषस्येत्यर्थः ॥ **गृहीतग्रहणस्वभावापीति** ॥ अनुभूतवस्तुविषयीकरणस्वभावाऽपीत्यर्थः ॥ **गृहीतीति** ॥ अनुभवसदृशी ॥ **सन्निहितेति** ॥ चक्षुःसन्निकृष्टरजतज्ञानं यथा तथैवेत्यर्थः ॥ **कुत इति** ॥ कस्मान्मानादेतज्ज्ञेयमित्यर्थः । विपक्षे स्म बाधादित्याह ॥ **अन्यथेति** ॥ एवं कल्पनामात्रे ॥ **अनुपपत्तेः** ॥ परिणामपक्षे भ्रान्तिबाधानुपपत्तेः । अन्यात्मना भानपक्षे चासतोनभानात् । साकारवादात्संविद्विरोधाद्धेत्वाभावादित्याद्यनुपपत्तेरुक्तत्वादित्यर्थः । परिशेषरूपप्रमाणाच्च ग्रहणस्मरणरूपं इदं रजतमिति ज्ञानमित्याह ॥ **किंचेत्यादिना** ॥ अस्तु संनिकर्ष इत्यत आह ॥ **न च विप्रकृष्टेनेति** ॥ नास्तीति कथं ज्ञायत इत्यत आह ॥ **तत्कार्यस्येति** ॥

या०—एवं 'साकारवादादसतो न भानात्संविद्विरोधादथ हेत्वभावात् । धियामनाश्वासभयाच्च नेष्टा यतोऽन्यथाख्यातिरतो यथार्थे'त्यन्यथाख्यातिबाधकसङ्ग्राहकस्वाचार्य श्लोकोक्तबाधकानि परपक्षेऽभिधाय स्वपक्षसाधनाय पूर्वपक्षमुत्थापयति ॥ **ननु तर्हीति** ॥ **गृहीतिसरूपेति** ॥ **अनुभवसदृशीत्यर्थः** ॥ अनुभवो यथा तत्ताऽनुल्लेखी तथेदं रजतस्मरणमपीति भावः ॥ **सन्निहितरजतज्ञानेति** ॥ समीचीनरजतज्ञानसादृश्येन स्वरूपतो विषयतश्च भेदाग्रहणेत्यर्थः । इयांस्तु विशेषः । ~~समीचीनरजतज्ञानसादृश्येन स्वरूपतो विषयतश्च भेदाग्रहणेत्यर्थः । इयांस्तु विशेषः~~ । समीचीनरजतज्ञानेऽविद्यमानभेदाग्रह इति । परिशेषादपि रजतज्ञानस्य स्मृतित्वं साधयितुमाह ॥ **रजतज्ञानं चेत्यादिना** ॥ भस्मकलक्षणो दोषो व्याधिरूपः ॥

श्री—अभेदव्यवहारमिदं रजतमिति तादात्म्यव्यवहारम् । सामानाधिकरण्यव्यपदेशमिदं रजतमित्येकविभक्त्यन्तपदवाच्यत्वव्यपदेशमित्यर्थः । इदन्त्वरजतत्वरूपभिन्नप्रवृत्तिनिमित्तानामिदं रजतमित्यादिशब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमित्यप्याहुः ॥ **तत्कार्यस्येति** ॥ सन्निकर्षकार्यस्येत्यर्थः ॥ **दोषस्यैवेति** ॥ न तु तद्दूषितस्य जाठरजातवेदस इत्यर्थः । तदुपपादयति ॥ **जाठरेति** ॥ प्रत्युत्पन्नेति । अव्यवहितपूर्वक्षणवर्तीन्द्रियार्थसन्निकर्षरूपकारणाभावेऽपीत्यर्थः । अनेन रजतज्ञानेन । इदं रजतमिति ज्ञानम् ॥

च०— प्राभाकरीयामन्यदीयपक्षे बाधकाभिधानभङ्गीं प्रदर्श्य तत्सिद्धान्तसमर्थनभङ्गीं प्रदिदर्शयिषाया शङ्कते ॥ **ननु तर्हीति** ॥ तत्तांशमोषेण तत्तांशविषयीकरणेन । गृहीतिसरूपा अनुभवसदृशी ॥

**स्वरूपतो विषयतश्चेति** ॥ तादृशस्मृत्यनुयोगिकतादृगनुभवप्रतियोगिकभेदस्य तादृशानुभवानुयोगिकतादृक्स्मृतिप्रतियोगिकभेदस्य रजतप्रतियोगिकेदमंशानुयोगिकभेदस्येदमंशप्रतियोगिकरजतानुयोगिकभेदस्य चाग्रहणादित्यर्थः । सन्निहितरजतज्ञानसारूप्येण । आपणस्थरजतज्ञाननिरूपिते उक्तभेदाविशेषितवस्तुविषयकत्वोक्तभेदग्रहाविषयत्वनियन्त्रितसादृश्येन । इदं तु वैशेष्यं वास्तवरजतस्थले ज्ञानविषययोर्भेदाग्रहः भेदासत्त्वनिबन्धनः प्रकृते तु तत्सत्त्वेऽपि तदग्रहः ॥ **दोषनिबन्धन इति** ॥ अभेदव्यवहारमिदं रजतमिति । ज्ञानमेकमिति व्यवहारम् । सामानाधिकरण्यव्यपदेशम् । इदमंशविशेष्यकं रजतत्वप्रकारकं चेदं ज्ञानमितिवाक्ये समानविभक्तिकअनेकपदसमभिव्याहारम् । प्रपञ्चितं चैतन्नयवीथ्यां गुरूणां मतम् । उत्तदाजाह्रश्च तानि वचनानि व्याकर्तार इति । नयनसंप्रयोगः । नयनसन्निकर्षः । रजतज्ञानरूपे धर्मिणि स्मृतित्वं पक्षान्तरप्रतिषेधविशेषितपरिशिष्यमाणत्वरूपपरिशेषेण सिषाधयिषुर्हेतुवाक्यघटकाद्यदलार्थमुपपादयति ॥ **रजतज्ञानं चेति** ॥ **अतिप्रसङ्गादिति** ॥ घटचक्षुःसन्निकर्षस्यापि पटादिचाक्षुषोत्पादकताप्रसङ्गादित्यर्थः । भस्मकदोषः आमयविशेषः ॥ **प्रत्युत्पन्नेति** ॥ रजतज्ञानं स्मृतिरूपं स्वाव्यवहितपूर्वक्षणावच्छिन्नोत्पत्तिकेन्द्रियसन्निकर्षलिङ्गपरामर्शाकाङ्क्षाज्ञानाद्यन्यतमासमवधानदशायामुत्पद्यमानत्वादित्यनुमानेन स्मृतित्वं सेत्स्यतीत्यर्थः ।

सु०—**किंचेदं स्मरणमनाकलितरजतस्यानुत्पद्यमानत्वात्सम्प्रतिपन्नस्मरणवत् । न चेदमस्मरणम् । तत्तांऽशविकलत्वात्सम्प्रतिपन्नवदिति युक्तम् । पदात्पदार्थस्मृतौहरिहरादिस्मृतौ च व्यभिचारात् किञ्चानुभूतं तावन्न समस्तं स्मर्यते । तत्तांऽशश्चातीतदेशकालसम्बन्धः स्मर्यमाणधर्मः । तथा च स्मरणं च भवतु । भवतु दोषवशात्प्रमुषिततत्तांऽशम् । न च विपक्षे बाधकं किंचिदित्यप्रयोजको हेतुः । न च नेयं स्मृतिरिन्द्रियजन्यत्वात् । तच्चेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वादिति वाच्यम् । स्मृतिबीजसंस्कारोद्बोधहेतुपुरोवर्तिसाधारणाकारग्रहण एवेन्द्रियव्यापारान्वयव्यतिरेकयोरुपक्षीणत्वात् । नन्वेवं सत्यनास्वादिततिक्तस्य शिशोस्तिक्तस्मरणानुपपत्तेः कथं तिक्तो गुड इति प्रत्यय इति चेन्न । जन्मान्तरानुभूतत्वात् । अदृष्टवशाच्च कस्यचिदेव स्मरणमुपपद्यते । अथवा नायं नियमो ग्रहणस्मरणे एवागृहीतविवेके व्यवहारादिप्रवर्तके इति किन्तु क्वचिद्ग्रहणे एव मिथोऽगृहीतभेदे । यथा पीतः शङ्ख इति । अत्र हि विनिर्यन्नयनरश्मिवर्तिनः । पित्तद्रव्यस्य पीतत्वं दोषवशाद्द्रव्यरहितं गृह्यते । शङ्खोऽपि गुणहीनः स्वरूपमात्रेण गृह्यते । तदनयोर्गुणगुणिनोरितरेतरापेक्षिणोरसंसर्गाग्रहात्सारूप्यात्पीतचिरबिल्वादिफलप्रत्ययाविशेषेणाभेदव्यवहारः सामानाधिकरण्यव्यपदेशश्च भवतः । यत्तु**

**कज्जलकालिमाग्रहणं तत्तिर्यगवस्थानात् । अस्वच्छतया नयनरश्मिप्रतिबन्धकत्वाच्च । पित्तं तु आर्जवावस्थितं काचमिव स्वच्छं न प्रतिबन्धकमिति विशेषः । एवं तिक्तो गुड इति व्यवहारोऽपि । क्वचित्पुनः स्मरणे एवागृहीतविवेके । यथा स घटस्तत्रासीदिति । अनयैव दिशाऽलातचक्रादिव्यवहाराः सर्वेऽपि निर्वाह्याः ।**

वा०— ननु दोषाणां विपरीतकार्यजनकत्वे कल्पिते प्रत्युत्पन्नदुष्टेन्द्रियजन्यत्वोपपत्तेः परिशेषोऽनुपपन्न इत्यत आह ॥ **किं चेति** ॥ प्रतिपक्षं शङ्कते ॥ **न चेति** ॥ पदार्थस्मृत्यादेः साधकाभावे स्मृतित्वस्यैवाभावापत्त्याऽवश्यवक्तव्यं स्मृतित्वादिसाधकं यत्तद्विकलत्वादेवास्यास्मृतित्वं साधयिष्यामीत्याशङ्कायामाह ॥ **किं चेति** ॥ स्मर्यमाणरजतमात्रस्यास्य कथमस्मरणमित्यत आह ॥ **तत्तांशश्चेति** ॥ प्रतिपक्षान्तरं शङ्कते ॥ **न चेति** ॥ ननु नेयं स्मरणत्वकल्पनोपपद्यते । जातमात्रस्य शिशोः थूत्कारानुमेये तिक्तो गुड इत्यादिप्रत्ययेऽस्यासंभवादित्याशङ्कते ॥ **नन्विति** ॥ स्तनपानादिप्रवृत्त्यन्यथाऽनुपपत्त्या जन्मान्तरानुभूतस्मरणस्यावश्यकल्पनीयतया नानुपपत्तिरित्याह ॥ **जन्मान्तरेति** ॥ जन्मान्तरानुभवस्य सर्वत्र सुलभत्वादनुभवाभावेन स्मरणाभावः कुत्रापि न सिद्ध्येदित्यत आह ॥ **अदृष्टेति** ॥ अस्मिन्पक्षेऽदृष्टप्रयुक्तजन्मान्तरानुभवस्य कल्पनीयतया पक्षान्तरमाह ॥ **अथवेति** ॥ अत्र तिक्तो गुड इत्यस्य प्रकृतत्वेऽपि पीतः शङ्ख इत्यादौ परेणोभयोरपि ग्रहणत्वोपपादनाद् गृह्यमाणारोपेऽसङ्कीर्णोदाहरणत्वाच्च तदतिदेशेन तिक्तो गुड इत्यस्योपपादनाय परोक्तस्थलमेवोदाहरति ॥ **यथेति** ॥ विनिर्यदिति विशेषणेन पित्तस्यार्जवावस्थितत्वं दर्शयति । गुणगुणिनोरितरेतरसापेक्षत्वोक्तिरसंसर्गाग्रहोपपादनाय । अतसीपुष्पसङ्काशनयनमण्डलान्तःस्थितकज्जलस्य तेजोवृत्तिनिरोधकतया तिर्यगवस्थानमिन्द्रियोपरिभागस्थार्थग्राहकविनिर्यन्नयनरश्मिवर्तिपित्तद्रव्यस्यार्जवावस्थितत्वम् । एवं च तद्द्वयोर्ग्रहणाग्रहणे युक्ते इत्याह ॥ **यत्त्विति** ॥ काचो हरितद्रव्यविशेषः । एतच्चोक्तं नयवीथ्याम् । 'अतसीपुष्पसङ्काशं यत्तावन्नेत्रमण्डलम् । तत्रस्थमञ्जनं यत्तत्तेजोवृत्तिनिरोधकम् ॥ मण्डलान्तरसंस्थं तु यन्नाम नयनेऽञ्जनम् । तस्यानार्जवदोषेण नीलिमा नावगम्यते ॥ इन्द्रियोपरिभागेऽपि लिप्तेन स्वच्छभावतः । पित्तेन नायनं तेजः काचेनेव न रुध्यते ॥ प्रसरन्नायनं तेजो ग्राहकं नेन्द्रियस्थितमिति' ॥ **एवमिति** ॥ एतदप्युक्तं नयवीथ्याम् । 'मधुरे तिक्तधीरेवं व्याख्याता पित्तवर्तिनः । तैक्त्यस्य रसहीनस्य गुडस्य च परिग्रहादिति' ॥ **अनयैव दिशेति** ॥ स्वप्नस्थले स्मरणानां स्वरूपतो विषयतश्च भेदाग्रहः । द्विचन्द्रस्थलेऽङ्गुल्यवष्टम्भेनेन्द्रियस्य महसो भेदे सत्येकशीतगुविषयकयोर्जातयोर्द्वयोर्ग्रहणयोः परस्परं भेदाग्रहः । ग्रहणनिष्ठद्वित्वस्य च चन्द्रेण सहासंसर्गाग्रहः । ततश्च द्वौ चन्द्राविति सामानाधिकरण्यव्यवहारः । अलातचक्रस्थले

सर्वतो द्रुतभ्रमदलातविषयकानेकग्रहणेष्वलाते तत्तद्देशसंबधानां तद्ग्रणानां च सत्यपि कालभेदे तदग्रहः । चक्रे च युगपत्सर्वदेशसंबन्धाद्भेदाभावादेव तद्ग्रहः । तथा च भेदाग्रहादेव चक्रव्यवहारः । तदुक्तं नयवीथ्याम् । 'एवं स्वप्नेऽपि वस्तूनि स्मर्यमाणानि सन्त्यपि । अनुभूतांशमोषेणि भासन्ते गृह्यमाणवत् ॥ संस्कारोद्बोधहेतुश्च तत्रादृष्टं प्रकल्प्यते । अदृष्टस्य तु हेतुत्वाज्जाग्रतस्तादृशी न धीः ॥ अवस्थाऽपि ह्यदृष्टस्य सामग्रीफलसंभवे । तथा द्विचन्द्रबोधेऽपि भिन्नमेवेन्द्रियं महः । भिन्ने जनयति प्रख्ये एकस्मिन्नेव शीतगौ । संवित्ती ते न भिद्येते तद्द्वित्वे सति मन्यते ॥ भिन्नार्थबुद्धितुल्यत्वमत्रापि खलु पूर्ववत् । स्मरतोऽप्येकतां तेन भ्रमोऽयमुपपद्यते ॥ न हि स्मृतिप्रमोषेण सर्वत्रैव भ्रमो मतः । दिङ्मोहेऽदृष्टसामर्थ्याद्दिक्स्वरूपानवग्रहात् ॥ दिगन्तरस्वरूपस्य स्मरणाच्च भ्रमो मतः । अलातचक्रेऽलातस्य भ्रमतः सर्वतो द्रुतम् ॥ निरन्तरधियो जाताश्चक्रबुद्धिसमा मताः । कालभेदस्तु शीघ्रत्वाद्धियां तासां न लक्ष्यते ॥ चक्रधीर्व्यवहारश्च तेनास्मिन्नपि युज्यते' इत्यादिना ।

स० — **पदात्पदार्थस्मृताविति** ॥ गृहीतसङ्गतिकस्य पदाज्जायमानायां पदार्थस्मृतौ तत्तांशस्य अप्रतीयमानत्वादिति भावः । जन्मान्तरानुभूतं च न स्मर्यत इति शबरस्वमिवचनादस्मर्यमाणत्वाच्च बालस्य तिक्तताम्स्मृतिः कथमिति चोदयति ॥ **नन्वेवमिति** ॥ जन्मान्तरानुभूततिक्तस्मृतिः कल्प्यत इत्याह ॥ **नेति** ॥ तर्हि जन्मान्तरानुभूतं किञ्चिदेव स्मर्यते ॥ **न सर्वमिति** ॥ कुत इत्यतः सहकारिवशादित्याह ॥ **अदृष्टवशादिति** ॥ **एवं तिक्तो गुड इतीति** ॥ जिह्वास्थतिक्तद्रव्यगतं तिक्तत्वं दोषवशाद्द्रव्यरहितं गृह्यते । गुडोऽपि माधुर्यादिगुडहीनः स्वरूपमात्रेण गृह्यते । तदनयोर्गुणगुणिनोरितरेतरसापेक्षयोरसंसर्गाग्रहात्तिक्तो गुड इति व्यवहार इत्यर्थः ॥ **क्वचित्पुनः स्मरणे एवेति** ॥ वल्मीके अयं घट इति प्रत्ययानन्तरं कालान्तरे जायमाने स्मर्यमाणे एवेत्यर्थः ॥ **अलातचक्रव्यवहार इति** ॥ भ्राम्यमाणोल्मुके चक्राकारत्वभ्रमोऽलातचक्रव्यवहारशब्देन ग्राह्यः । तत्रापि चक्रनिष्ठचक्राकारस्मरणे पुरोवर्तिग्रहणे विशिष्टव्यवहारमात्रमित्यर्थः । आदिपदेन मण्डूकवसांजनाक्तनयनस्य वंशे उरगभ्रमादिग्रहणम् । तत्राप्युक्तन्यायेन ग्रहणस्मरणरूपज्ञानद्वयात्मकत्वमुपपादनीयमिति भावः ।

प० — इदं रजतमिति ज्ञानद्वयं ग्रहणस्मरणात्मकं दोषवशादगृहीतशुक्तिविशेषं प्रमुषिततत्ताकमित्यत्रान्यथानुपपत्तिपरिशेषौ प्रमाणीकृत्यात्र पुनरविवादेदमंशज्ञानं हित्वा रजतज्ञानं स्मरणमित्यंशेऽनुमानं च प्रमाणयति ॥ **किंवदं स्मरणमिति** ॥ **इदमिति** ॥ रजतज्ञानमित्यर्थः । स्मरणमिति साध्यनिर्देशः । अनाकलितरजतस्यानुत्पद्यमानत्वादिति साधननिर्देशः । प्रतिपक्षमाशङ्क्य व्यभिचाराप्रयोजकत्वदोषाभ्यां

निराह ॥ **न चेत्यादिना हेतुरित्यन्तेन** ॥ **पदार्थस्मृतौ** ॥ व्युत्पन्नस्य पदाज्जायमानपदार्थस्मृता-वित्यर्थः । प्रतिपक्षान्तरमाशङ्क्यासिद्धिदोषेण निराह ॥ **न च नेयमित्यादिनोपक्षीणत्वादित्यन्तेन** ॥ शङ्कितासिद्धिदोषमुद्धरति ॥ **तच्चेति** ॥ इन्द्रियजन्यत्वमित्यर्थः ॥ **स्मृतीति** ॥ स्मृतिबीजं यः संस्कारो-द्बोधः तस्य हेतुभूतं यत्पुरोवर्तिनः इदंत्वादिसाधारणाकारस्य ग्रहणं तत्रैवेत्यर्थः । तथाचेन्द्रियजन्यत्व-स्यासिद्धिरेव साधकाभावादिति भावः ॥ **असंसर्गाग्रहात्सारूप्यादिति** ॥ पीतचिरबिल्वफले इदं पीत-मिति प्रत्ययस्यैकत्वेन तत्र गुणगुणिनोरसंसर्गाग्रहस्य सत्त्वाद्यथा तत्रासंसर्गाग्रहनिबन्धनः पीतमिदं फल-मित्यभेदव्यवहारसामानाधिकरण्यव्यपदेशौ भवतः तथा पीतः शङ्ख इत्यत्र ग्रहणरूपज्ञानद्वयसत्त्वेऽपि गुणगुणिनोरसंसर्गाग्रहादभेदव्यवहारादिकमित्यर्थः । नन्वेवं पीतः शङ्ख इतिवन्नयनगतकज्जलकालिम-ग्रहणेन कालः शङ्ख इत्यपि धीः कदाचित्स्यात् । पीतत्वप्रत्ययोपपादकप्रक्रियाया अत्रापि सुवचत्वात् तदग्रहणे पीतत्वाग्रहणं च स्याद्विशेषाभावादित्यत आह ॥ **यत्त्विति** ॥ अग्रहणमिति पदच्छेदः । यथा पीतः शङ्ख इति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह ॥ **एवमिति** ॥ जिह्वाग्रवृत्तिरसनेन्द्रियेण तत्रत्यतिक्तद्रव्य-गततिक्तरसमात्रस्य ग्रहे सति त्वगिन्द्रियोपनीतगुडद्रव्यतिक्तरसयोरसंसर्गाग्रहात्सारूप्यान्निम्बफलप्रत्यया-विशेषेणाभेदव्यवहार इत्यर्थः ॥ **अनयैव दिशेति** ॥ अनुभूतत्वे ग्रहणस्मरणे स्मरणरूपे वा न चेत् ग्रहणरूपे एवेत्येवमुक्तदिशेत्यर्थः ।

**या०—तथाच स्मरणं भवत्विति** ॥ धर्मिमात्रावगाहि स्मरणं भवत्वित्यर्थः । ननु धर्मं विहाय कथं धर्मिमात्रं स्मर्तुं शक्यं धर्मस्याप्यनुभूतत्वादित्यत उक्तमनुभूतं समस्तं धर्मभूतं न स्मर्यत इति । नन्वेवं जन्मान्तरानुभूतसर्वपदार्थस्मृतिः स्यादित्यत आह ॥ **अदृष्टवशाच्चेति** ॥ कस्यचि-देवेत्यनन्तरं पदार्थस्येति शेषः ॥ **स्वरूपमात्रेणेति** ॥ शङ्खत्वेनेत्यर्थः ननु यदि नयनगतपित्तद्रव्यनिष्ठं पीतत्वं चक्षुर्ग्राह्यं स्यात्तर्हि नयनगतकज्जलकालिम्नोऽपि ग्रहणं स्यादविशेषात् । ततश्च नीलः शङ्ख इत्यपि भ्रमः स्यादित्यत आह ॥ **यत्तु कज्जलेति** ॥ **तिर्यगवस्थानादिति** ॥ कज्जलस्य वक्रतयावस्थानादित्यर्थः । तेन यथा रश्मयो विनिर्गच्छन्ति तत्र न कज्जलावस्थानमपि तु नयनपार्श्वप्रदेश एवेति भावः । आर्जवा-वस्थानमभ्युपेत्याप्याह ॥ **अस्वच्छतयेति** ॥ काचमिवेत्यत्र हरितद्रव्यविशेषः काचशब्दार्थः ॥ **अलातचक्रादीति** ॥ शीघ्रभ्रमितालातज्वालास्विदं चक्रमिति व्यवहार इत्यर्थः । आदिपदेन द्विचन्द्र-दिङ्मोहगन्धर्वनगरवंशोरगादिव्यवहारसंग्रहः । तथाच द्वौ चन्द्रावित्यत्र प्रदेशविशेषगतं द्वित्वं गृहीतं सत् असंसर्गाग्रहाच्चन्द्रनिष्ठतया व्यह्रियते । मण्डूकवसाक्तनयनस्य वंशे स्मृतोरगभेदाग्रहादयमुरग इति व्यवहार इत्यादि ज्ञेयम् ।

**श्री०—अनाकलितेति** ॥ अननुभूतेत्यर्थः ॥ **एवं तिक्तोगुड इति व्यवहारोऽपीति** ॥ अत्रापि रसनेन्द्रियेण स्वनिष्ठतिक्तद्रव्यनिष्ठतिक्तत्वं दोषवशाद्द्रव्यरहितं गृह्यते । गुडोऽपि दोषवशान्माधुर्यरसहीन एव रसनेन गृह्यते । तदनयोर्गुणगुणिनोरितरेतरसापेक्षयोरसंसर्गाग्रहात्सारूप्यान्निम्बप्रत्ययाविशेषेणाभेदव्यवहारादिकं ग्रहणे एवागृहीतभेदे कुरुत इत्यर्थः ॥ **स घटस्तत्रासीदिति** ॥ स घट इत्येकं स्मरणम् । तत्रासीत् घटातिरिक्तमन्यत्किञ्चिद्वस्तु तत्रासीदित्यपरं स्मरणम् । तथाच एते स्मरण एव स्वरूपयोस्तद्विषययोर्घटतदन्यवस्तुनोश्च भेदाग्रहात्स घटस्तत्रासीदित्यतीतदेशकालविशिष्टवस्त्वैक्यावगाहित्वेन व्यवहारप्रवर्तके भवत इत्यर्थः ।

**च०**— ननु दोषाणां विपरीतकार्यजनकतायां स्थितायां समनन्तरोत्पन्नदुष्टेन्द्रियसंन्निकर्षजन्यत्वसिद्ध्या हेतोरसिद्धिरित्यरुचेः कल्पान्तरमनुसरति ॥ **किं चेति** ॥ यथाश्रुतस्य गगनादावनैकान्त्यं तु स्वयमेवाभिधास्यति । प्रतिरोधमाशङ्क्य पराकुरुते ॥ **न चेत्यादि** ॥ अनैकान्त्याप्रयोजकत्वे तत्तांशानवगाहित्वहेतोर्विशदयति । ॥ **यदादित्यादिना हेतुरित्यन्तेन** ॥ प्रतिरोधान्तरमाशङ्क्य तत्रासिद्धिमाह ॥ **न चेति** ॥ शुशोस्तिक्तत्वगोचरानुभवजनितसंस्काराविरहेण तिक्तो गुड इति भ्रमस्थले तिक्तत्वांशे स्मृतिरिति कल्पना गुरुमतेन सङ्गच्छत इत्याशङ्क्य समाधत्ते ॥ **नन्वित्यादि** ॥ स्वरूपमात्रेण शङ्खत्वेन । असंसर्गाग्रहात् । शङ्खे पीतत्वप्रतियोगिकसंसर्गाभावविषयकग्रहाभावात् । व्यपदेशः शङ्खः पीत इति वाक्ये समानविभक्तिकपदप्रयोगः ॥ **तिर्यगिति** ॥ वक्रतयेत्यर्थः ॥ **अलातचक्रादीति** ॥ द्विचन्द्रदिङ्मोहगन्धर्वनगरवंशोरगादिघटितसमुदायः समासार्थः । द्रुतालातज्वालासुचक्रमितिव्यवहारः द्वौ चन्द्रावित्यत्र(अन्यत्र)गृहीतं द्वित्वं असंसर्गाग्रहाच्चन्द्रे मण्डूकवसांजनेन वंशोरगभ्रमस्थलेपि तादृश्येव गतिरवसेया।

**सु०**—किञ्च विपर्ययमङ्गीकुर्वाणेनापि विवेकाग्रहो ग्राह्य एव । न हि विवेकग्रहे विपर्ययावकाशोऽस्ति । विरोधात् । अन्यथा विपर्ययनिवृत्त्यनुपपत्तेः । तथा च तत एव सर्वस्योपपत्तौ किं विपर्ययकल्पनया । न चान्यथाख्यातौ किमपि प्रमाणमस्ति । भेदाग्रहप्रसञ्जिताभेदव्यवहारबाधनेनैव नेदमिति विवेकज्ञानस्य बाधकत्वमप्युपपद्यते । तदुपपत्तौ चागृहीतविवेकस्य ज्ञानद्वयस्य भ्रान्तित्वमपि लोकसिद्धं सिद्धम् । तथा च प्रयोगः । विगीतप्रत्ययो यथार्थः । प्रत्ययत्वात्सम्प्रतिपन्नवत् । नन्वत्र विगीतप्रत्ययो नाम किं पुरोवर्तिनिर्विकल्पकज्ञानमुत सदृशदर्शनोत्थं रजतस्मरणम् । किं वोभयमाहोस्विद्रजतपुरोवर्त्यैक्यताज्ञानमाहोस्वित्प्रमुषितभेदं वेदनद्वयम् । तत्राद्यपक्षत्रये सिद्धसाधनता । चतुर्थे बाधाश्रयासिद्धत्वमप-

**सिद्धान्तो व्याघातश्च । पञ्चमे प्रतिवाद्याश्रयसिद्धतेति चेत् । मैवम् । अस्ति तावत्पुरोवर्ति निर्विकल्पकज्ञानम् । अस्ति च सदृशपुरोवर्तिदर्शनजनिता रजतस्मृतिः । तथाऽस्त्येव च तत्समुत्थं सविकल्पकमिदमिति वेदनात्सविवादभेदाभेदं रजतवेदनम् । तत्र विप्रतिपन्नौ भेदाभेदौ विहायेदं रजतमित्यवगममात्रमिदं रजतमित्यादिसामानाधिकरण्यव्यवहारकारणं पक्षत्वेन विवक्षितं चेत्को विरोधः । न हि विप्रतिपन्नाकारेणैव पक्षीकारः क्वचित् । मा हि भून्नित्यानित्याग्निमदनग्निमच्छब्दपर्वतपक्षीकारे प्रकृतदोषानुषङ्गाद्भङ्गोऽनुमानमुद्रायाः ॥**

वा०—एवं प्रमाणेन ज्ञानद्वित्वमुपपाद्यास्तु वोभयत्रापि कल्पना तथाऽपि कल्पनालाघवादख्याति पक्षनिश्चयोपपत्तिरित्याह ॥ **किञ्चेति** ॥ ननु प्रामाणिकं गौरवं न्याय्यमेवेत्यत आह ॥ **न चेति** ॥ यद्वा स्वपक्षे साधकं परपक्षे बाधकं चोपपाद्य साधकाभावं च परपक्षे दर्शयति ॥ **न चेति** ॥ ननु बाधकज्ञानानुपपत्तिरेव भ्रान्तौ प्रमाणमित्यत आह ॥ **भेदाग्रहेति** ॥ इतरेतराभावबोधादितरेतरभावाग्रहनिवृत्तौ तद्धेतुकव्यवहारनिवृत्तिर्बाधफलमित्यर्थः तदप्युक्तं नयवीथ्याम् । 'बाधकप्रत्ययस्यापि बाधकत्वमतो मतम्। प्रसज्यमानरजतव्यवहारनिवारणादिति' । माऽस्तु बाधकत्वानुपपत्तिर्भ्रान्तिविषयकप्रामाणिकव्यवहारानुपपत्तिस्तु तत्र प्रमाणं भविष्यतीत्यतः पूर्वोक्तार्थेनास्याप्यन्यथासिद्धिरित्याह ॥ **तदुपपत्तौ चेति** ॥ एवं सामानाधिकरण्यप्रत्ययविरोधादिरूपबाध्यानुपपत्तावन्यथाख्यातौ साधकबाधकभावाभावाभ्यां व्यवहारादेरन्यथासिद्ध्या च तादृशप्रत्ययाभावेन परिहृतायां निष्कण्टकानुमानं स्वपक्षसाधकतयोपन्यस्यति ॥ **तथा चेति** ॥ विमतिविषयतावच्छेदकानिरुक्त्या प्रामामान्तरानुपपत्तिं परिहर्तुं शङ्कते ॥ **नन्वत्रेति** ॥ अत्राद्यकल्पत्रयमुभयसम्मतप्रसक्तिमत्तत्रापि प्रत्येकमिलितभेदेनावान्तरविशेषोऽभिप्रेतः । उत्तरद्वयं तु क्रमेण वादिप्रतिवादिसम्मत्या प्रसक्तमिति द्रष्टव्यम् ॥ **निर्विकल्पकमिति** ॥ इदन्त्ववैशिष्ट्यावगाहित्वेऽपि शुक्तिरजतत्वादिजातिविशेषवैशिष्ट्यानवगाहित्वेनेयमुक्तिरिति द्रष्टव्यम् । उभयपक्षस्यान्तिमपक्षस्य चैकत्र वेदनयोः स्वरूपमात्रविवक्षयाऽपरत्र च तयोः प्रमुषितभेदत्वस्य च विवक्षया भेद इति ध्येयम् । रजतपुरोवर्त्येकताज्ञानस्य वस्तुतो वादिमतेऽभावादाश्रयासिद्धिस्तदङ्गीकारे चापसिद्धान्तोऽभिनवसिद्धान्ताभ्युपगमे व्याघात इत्याह ॥ **चतुर्थ इति** ॥ पुरोवर्तिनिर्विकल्पकरजतस्मृतिजन्ये इदमिति वेदनाभिन्ने पुरोवर्तिनि रजतत्वादिजातिवैशिष्ट्यावगाहिनि रजतवेदनेऽख्यातिवादिनां विप्रतिपत्तावप्युक्तनिर्विकल्पकस्मृत्योरेव प्रमुषितभेदत्वेऽन्यथाख्यातिवादिनां विप्रतिपत्तावपि तदुभयस्वरूपमात्रे न तावत्कस्यापि विवाद इत्याह ॥ **अस्ति तावदिति** ॥ एवं केवलमुभयसम्मताकारं प्रदर्श्य तद्विवादविषयाक्रान्ततया तमेव दर्शयति ॥ **तथेति** ॥ तदुभयसमुत्थं सविकल्पकमिदमितिवेदनाभिन्नं रजतवेदनमस्तीत्येकः । न

तादृग्वेदनं किन्तु तत्कारणत्वेन तवाप्यावश्यकं निर्विकल्पकस्मृतिरूपवेदनद्वयं तदेव प्रमुषितभेदमित्येवेत्यपरः। एवमेव भेदाभेदविवादोऽत्राभिमतो न तु तदुभयसमुत्थसविकल्पकरजतवेदने इदमितिवेदनाद्भेदाभेदविवादः। असदनुवादापत्तेः। उच्यत इत्यादिपूर्वग्रन्थेन विमतो चेत्याद्युत्तरग्रन्थेन च विरोधापत्तेः। अत एवोत्तरत्र भेद एवाख्यातिवादिभिरित्यनुक्त्वाऽपाकर्तव्यश्चेत्येतावदेव वक्ष्यतीति द्रष्टव्यम्। अतस्तत्समुत्थितमित्यत्रत्यतच्छब्दपरामर्शविषयप्रदर्शनाय प्रवृत्तेनास्ति चेदित्यादिपूर्वग्रन्थेन वादिमतेन विज्ञानस्वरूपं च दर्शितम्। तथेत्यनेन तु प्रतिवादिमतेनेति द्रष्टव्यम्। नन्वेतावताऽपि कः पक्षनिष्कर्ष इत्यतो वाद्यभिमतप्रमुषितभेदत्वप्रतिवाद्यभिमतेदंवेदनाभिन्नसविकल्पकरजतज्ञानत्वयोस्तत्तदभिमतकार्यत्वकारणत्वादीनां चाविवक्षयोभयसम्मतेदंरजतावगममात्रस्य पक्षत्वे न कोऽपि दोष इत्याशयेनाह ॥ **तत्रेति** ॥ ननु भिन्नस्याभिन्नस्य वा तादृशावगमस्य पक्षत्वे उक्तदोषानतिवृत्तिः। अवगमसामान्यस्य चानुगतावच्छेदकाभावान्न तत्त्वमित्यतोऽनुगतपक्षतावच्छेदकमाह ॥ **इदं रजतमित्यादीति** ॥ ननु भिन्नस्याभिन्नस्य वेदं रजतमित्यवगमस्य सामानाधिकरण्यव्यवहारकारणत्वात्कथं भेदाभेदौ विहाय सामानाधिकरण्यव्यवहारकारणज्ञानरूपपक्षलाभः। तयोः पक्षकोटिनिवेशे चोक्तदोषानतिवृत्तिरित्यतो भिन्नावगमस्यापि तत्त्वेनापक्षत्वेऽप्युक्तव्यवहारकारणत्वेन पक्षत्वमिष्यत एवेति नोक्तदोषानुषङ्गः। अभिन्नत्वाद्याकारेणापक्षत्वं च युक्तमेव। तस्य विप्रतिपन्नत्वेन तदाकारेण पक्षत्वस्यैवानुचितत्वात्। अन्यथाऽनुमानमात्रोच्छेदापत्तिरित्याह ॥ **न हीति** ॥ यद्वा ननु विप्रतिपन्नस्य परित्यागेऽनुमानवैयर्थ्यमित्यतो विमताकारस्य न पक्षकोटिनिवेशोऽनुमानमात्रोच्छेदप्रसङ्गात्साध्यकोटिनिवेशाच्च नानुमानवैयर्थ्यमित्याशयेनाह ॥ **न हीति** ॥ अनुमानमुद्राया भङ्गो मा भून्न भवति हि यस्मात्तस्मान्न पक्षीकार इत्यन्वयः।

स०—ननु प्रामाणिकत्वान्न गौरवदोष इत्यत आह ॥ **न चान्यथाख्याताविति** ॥ **निर्विकल्पकज्ञानमिति** ॥ इदमित्याकारं भ्रमजनकधर्मिज्ञानरूपमित्यर्थः। तस्येदंत्वप्रकारकत्वेपि शुक्तित्वादिविशेषाविषयकत्वान्निर्विकल्पकत्वोपचारः। **रजतस्मरणमिति** ॥ भ्रमकारणविशेषणज्ञानरूपमित्यर्थः। **व्याघातश्चेति** ॥ प्रमाणविरोधश्चेत्यर्थः। बाध इति यावत्। रजतपुरोवर्त्यैकताज्ञाने याथार्थ्यस्य बाधितत्वात्। अथवा रजतपुरोवर्त्यैकताज्ञानत्वस्यायथार्थवृत्तिव्याप्यत्वेनायथार्थत्वप्राप्त्या तत्र याथार्थ्यसाधने व्याघात इत्यर्थः। अत एव 'मरणं नातियत्नस्य विक्षेपेदेव युज्यते' इत्यत्र नियामको रतिमांश्चेति व्याहतमित्युक्तं। नियमनस्य विक्षेपाविनाभूतत्वात् विक्षेपस्य च रतिविरोधात्। अतो विरोधव्याप्योक्तावपि व्याहत्युक्तिरूपपन्नेतिध्येयं ॥ **नेदमिति** ॥ पुरोवर्तिनमित्यत्र नञो न विदधातीति संबन्धः ॥ **इतोदोषादिति** ॥ आद्ये सिद्धसाधनता। द्वितीये बाधः। तृतीय उभयम्। चतुर्थे प्रतिवाद्याश्रयासिद्धत्वं। पञ्चमे वाद्याश्रयासिद्धत्वमपसिद्धान्तो व्याघातश्चेति द्रष्टव्यम्।

प०—ननु भ्रमवादिना विशिष्टज्ञानादभेदव्यवहार उच्यते त्वया तु विवेकाग्रहात् । को न्वत्र विशेष इत्यत आह ॥ **किञ्च विपर्ययमिति** ॥ गृह्यमाणस्मर्यमाणयोर्विवेकाग्रहः स्वीकार्य एवेत्यर्थः ॥ **विवेकेति** ॥ पुरोवर्तिनि इदं रजतं नेति भेदग्रह इत्यर्थः । स्वाभिमतेऽर्थेऽन्यथानुपपत्तिपरिशेषानुमानानि प्रमाणान्युक्त्वा परमतमप्रामाणिकमित्याह ॥ **न चान्यथाख्यातादिति** ॥ ननु नेदं रजतमिति भेदज्ञानस्य बाधकत्वान्यथानुपपत्त्या तद्बाध्यमभेदज्ञानमुपेयं । अन्यथा तस्य बाधकत्वानुपपत्तेः । अतस्तदनुपपत्तिरेव वा भ्रमत्वेन लोके प्रसिद्धिर्वाऽन्यथाख्यातौ प्रमाणमित्यत आह ॥ **भेदाग्रहप्रसञ्जितेति** ॥ विगीतः विमतः ॥ **निर्विकल्पकमिति** ॥ शुक्तित्वाद्यसाधारणधर्माप्रकारकमिदंत्वादिसाधारणप्रकारकमित्यर्थः ॥ **वादीति** ॥ अनुमानप्रयोक्तेत्यर्थः ॥ **व्याघातश्चेति** ॥ शुक्तिरजतयोस्तादात्म्यज्ञानरूपान्यथाख्यातिर्नेति वदता तदङ्गीकारे आश्रयासिद्धत्वमपसिद्धान्तो व्याघातश्चेत्यर्थः ॥ यद्वा रजतपुरोवृत्तितादात्म्यज्ञानं पक्षीकृत्य याथार्थ्यं तादात्म्याविषयकमित्युक्ते व्याघात इत्यर्थः । **तत्समुत्थसविकल्पकमिति** ॥ रजतत्वरूपासाधारणधर्मप्रकारकमित्यर्थः । इदमितिज्ञानाद्रजतस्मृतौ पश्चादिदं रजतमिति पुनः पुरोवृत्तिरजतयोः ज्ञानजन्मेत्याशयेन तत्समुत्थमित्युक्तिः । न्यायमते विशेष्यताव्यधिकरणप्रकारमेकं ज्ञानं प्राभाकरमतेत्वगृहीतभेदं ज्ञानद्वयमिति ज्ञेयं । किन्त्वेन पक्षीकरणमित्यत आह ॥ **इदं रजतमित्यादीति** ॥ ननु मिथो भिन्नः प्रत्यय इति एक प्रत्यय इति वा पक्षीकर्तव्य इत्यत आह ॥ **न हीति** । विप्रतिपन्नधर्मेणैव पक्षीकारो न हीत्यर्थः । एवमपक्षीकारः किमर्थमित्यत आह ॥ **माहिभूदिति** ॥ अनुमानमुद्रायाः अनुमानमर्यादाया भङ्गो मा भूदित्येतदर्थमित्यर्थः । अन्यथाऽनुमानप्रयोगप्रवृत्तिभङ्गः स्यादित्यर्थः । कुत इत्यत उक्तं ॥ **नित्येत्यादि** ॥ नित्यः शब्द इति वा अनित्यः शब्द इति वा पक्षीकृत्य अनित्यत्वानिसाधने प्रकृतानां वाद्याश्रयासिद्धत्वापसिद्धान्तव्याघातरूपदोषाणामनुषङ्गात् तथाग्निमान्पर्वत इति वा अनग्निमान्पर्वत इति वा पक्षीकृत्याग्निमत्त्वादिसाधने सति प्रतिवाद्याश्रयासिद्धत्वदोषानुषङ्गादित्यर्थः ।

या०—विपर्ययाभ्युपगमे कल्पनागौरवमपि बाधकमाह ॥ **किञ्चेति** ॥ **ग्राह्य एवेति** । स्वीकार्य एवेत्यर्थः । ननु प्रामाणिकत्वान्न कल्पनागौरवं दोष इत्यत आह ॥ **न चान्यथाख्याताविति** ॥ **निर्विकल्पकज्ञानमिति** । इदमित्याकारं भ्रमजनकधर्मिज्ञानरूपमित्यर्थः । तस्येदन्त्वप्रकारत्वेऽपि शुक्तित्वादिविशेषाविषयकत्वान्निर्विकल्पकत्वोपचारः॥ **रजतस्मरणमिति** ॥ भ्रमकारणविशेषणज्ञानरूपमित्यर्थः । ननु नाश्रयासिद्धत्वं मया तादृशज्ञानानङ्गीकारादित्यत आह ॥ **अपसिद्धान्त इति** ॥ **व्याघात इति** ॥ व्याघातो विरोधः । प्रमाणबाध इति यावत् । रजतपुरोवर्त्यैकताज्ञाने याथार्थ्यं बाधितमिति भावः । अथवा

रजपुरोवर्त्येकताज्ञानत्वस्यायथार्थत्वव्याप्यत्वेनायथार्थत्वप्राप्त्या तत्र याथार्थ्यसाधने विरोधिव्याप्त्युक्त्या व्याघात इत्यर्थः । 'रमणं नातियत्नस्य विक्षेपादेव युज्यत' इत्यत्र नियामको रतिर्भ्रंश्चेति व्याहतम् । नियमनस्य विक्षेपाविनाभूतत्वात् । विक्षेपस्य च रतिविरोधित्वादिति विरोधिव्याप्त्युक्तावपि व्याहत्युक्तिरग्र इत्यवधेयम् ॥ **मा हि भूदिति** ॥ नित्यानित्यशब्दपक्षीकारेऽग्निमदनग्निमत्पर्वतपक्षीकारे च प्रकृतदोषानुषङ्गादनुमानमुद्राया भङ्गः स्यात्स मा भून्न भवेदेवेत्यर्थः । न हि विप्रतिपन्नाकारेणैव पक्षीकार इत्यन्वयः- मा भूदित्यस्यान्यथेत्यप्यर्थइत्याहुः ।

श्री० — ग्राह्यः स्वीकर्तव्यः ॥ **न हि विवेकग्रह इति** ॥ इदं रजतमिति ज्ञानविषयीभूतेदमंशरजतयोर्विवेकग्रहे सतीत्यर्थः ॥ **अन्यथेति** ॥ विवेकग्रहेऽपि विपर्ययाङ्गीकार इत्यर्थः ॥ **तत एवेति** ॥ विवेकाग्रहादेवेत्यर्थः ॥ **सर्वस्येति** ॥ विपर्ययकार्यस्य प्रवृत्त्यादेरित्यर्थः । तथाच कल्पनागौरवमिति भावः । ननु नेदं रजमिति विवेकज्ञानस्य बाधकत्वं लोकप्रसिद्धम् । तदन्यथाऽनुपपत्त्यैव तद्बाध्यान्यथाख्यातिसिद्धिरित्यतो लोकप्रसिद्धेरन्यथासिद्धिमाह ॥ **भेदाग्रहेति** ॥ ननु तथापीदं रजतमिति ज्ञानस्य लोकप्रसिद्ध्यन्यथाऽनुपपत्त्या भ्रमत्वसिद्धिरित्यत आह ॥ **तदुपपत्तौ चेति** ॥ विवेकज्ञानस्य बाधकत्वोपपत्तौ चेत्यर्थः ॥ **सिद्धमिति** ॥ ज्ञानजन्यव्यवहारस्य बाध्यत्वादेवेत्यर्थः । भ्रान्तिस्थाने भेदाग्रहस्याभिषिक्तत्वादिति भावः । तथा चायथार्थत्वव्यवहारोऽस्ति नायथार्थज्ञानमिति द्रष्टव्यम् ॥ **किंचोभयमिति** ॥ **इदमिति** ॥ निर्विकल्पकज्ञानरूपं विशेष्यज्ञानम् । विशेषणज्ञानरूपं रजतस्मरणं चेत्युभयमित्यर्थः । तथा तार्किकमते भ्रमरूपविशिष्टज्ञाने विशेषणविशेष्योभयज्ञानं कारणमेव प्राभाकरमतेऽपि तदुभयं ग्रहणस्मरणात्मकज्ञानद्वयेऽपि कारणमित्यङ्गीकृतमत उभयमिति कारणीभूतज्ञानप्रश्नोयमित्यवगन्तव्यम् । प्रमुषितभेदं वेदनद्वयमिति तत्कार्यज्ञानद्वयप्रश्नोऽतो न तयोः पक्षयोः पौनरुक्त्यमित्यनुपदमेव स्पष्टमिति ज्ञातव्यम्॥ **मा हि भूदिति** ॥ न हि भवतीत्यर्थः । अन्यथा स स्यादिति भावः ।

च० — **विगीतप्रत्यय इति** ॥ याथार्थ्यायाथार्थ्यकोटिकशङ्कास्कंदित इत्यर्थः । प्रकृतसाध्यतदभावरूपकोटिद्वयनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकाभिमतधर्मज्ञानमन्तरेणपक्षतावच्छेदकता विमते दुर्निरूपैव । घटादिप्रत्ययानामपि विशेषादर्शनदशायां दर्शितसंदेहास्कन्दिततया सिद्धसाधनाद्यापत्तेरभिमतधर्मावच्छिन्नविशेष्यताकत्वेन विमतेः । पक्षतावच्छेदकतामभिधित्समानः शङ्कते ॥ **नन्विति** ॥ **पुरोवर्तिनिर्विकल्पकज्ञानमिति** ॥ इदं रजतमिति ज्ञानमेकत्र द्वयमितिरीत्येदंत्वरजतत्वेनावगाहत एव तथा सति निर्धर्मितावच्छेदकतया नेदंरजतमिति बाध्यप्रतिबध्यत्वप्रसङ्गेन तादृशाग्रामपि तदापत्तेः । किन्तु

विशिष्टे वैशिष्ट्यमितिरीत्येदंत्वावच्छिन्ने रजतत्ववैशिष्ट्यावगाहितैवोपेयेति तादृशप्रतीतिहेतुभूतविशेष्यतावच्छेदकप्रकारकज्ञानविधयोपेतव्येदंत्वप्रकारकज्ञानमेव शुक्तित्वाप्रकारकतामात्रेणनिर्विकल्पकमित्युपचर्यत इति भावः । **रजतस्मरणमिति** ॥ विशिष्टज्ञानरूपभ्रमहेतुभूतविशेषणज्ञानरूपमित्यर्थः । तादृशमपि ज्ञानमूरीक्रियत इति वैय्यात्येनोक्तौ ॥ **अपसिद्धान्त इति** ॥ **व्याघात इति** ॥ याथार्थ्यव्यतिरेकव्याप्यतदेकताज्ञानत्वोपगमेसाध्याभावव्याप्यरूपप्रतिरोधापरपर्यायविरोध इत्यर्थः ॥ विरोधोऽपिफलतः प्रतिरोध एवेति दीधितिकारोक्तेः । समाधत्ते **अस्तितावदित्यादि** । दर्शितकोटिद्वयप्रकारतानिरूपिताया इदं रजतमित्यादिसमानविभक्तिकपदप्रयोगहेतुत्वावछिन्नविशेष्यता तया प्रत्यासत्याज्ञानत्वावच्छिन्नस्यैव पक्षतावच्छेदकत्वोपगमान्नक्षतिरित्याशयः ।

**सु०—किञ्च सिद्धस्यैव पक्षीकरणम् । विमताकारस्यापि सिद्धत्वे किं साध्येत । विमतौ च भेदाभेदौ विभ्रमगोचरविवादावसरे । भेदे हि वेदनयोरिदं वेदनम् पुरोवर्तिमात्रगोचरम् न रजतवार्तां वेत्ति । रजतवेदनमपि रजतमात्रग्राहि नेदमिति पुरोवर्तिनमनूद्य तस्यैव रजततामिदं रजतमिति विदधाति । किन्तु रजतमित्येव यस्य कस्यचिद्रजतत्वमनुसन्धत्ते । तच्च न प्रमाणविरुद्धमिति क्वान्यथाख्यातिः । अतस्तद्वादिभिरभेद एव वक्तव्योऽपाकर्तव्यश्चाख्यातिवादिभिरित्यस्त्येव विप्रतिपत्तिः । ततो विप्रतिपन्नाकारं परित्यज्येदं रजतमित्यवगममात्रपक्षीकारे न कश्चिद्दोषः । कथमन्यथाख्यातिवादीदं रजतमिति ज्ञानस्य पुरोवर्तिविषयत्वसाधनाय साधनमुपन्यस्यन्क्वितो दोषाद्विमुच्येत । अथ रजतार्थिनः शुक्तिकायां प्रवृत्तौ हेतुभूतं ज्ञानं मया पक्षीक्रियत इति चेन्मोच्चैर्वोचः परोऽपि श्रोष्यति । ईश्वरज्ञानेन सिद्धसाधनता स्यादिति चेत्तवापि बाधः कथं न स्यात् । प्रकृतप्रवृत्तिहेतुरनीश्वरज्ञानं पक्षीक्रियत इति चेन्ममापि तथैव स्यात् । त्वयेश्वरानभ्युपगमाद्व्यर्थं विशेषणमिति चेत्तर्हि मां प्रति तवापि कथं न व्यर्थम् । तथाऽपि व्याप्तिज्ञाने सिद्धसाधनतेति चेत्तत्रैव तव बाधप्रसङ्गः । इदं ज्ञानादगृहीतविवेकं रजतज्ञानमिति विप्रतिपत्तिविषयमुद्धाटयामीति चेत्सममेतन्ममापि ।**

वा०— न केवलं विमताकारस्य पक्षत्वेऽतिप्रसङ्गः किन्तु साध्यस्वरूपस्यैवालाभ इत्याह ॥ **किञ्चेति** ॥ ननु स्यादिदं यद्यनित्यत्वाग्निमत्त्वादिवदभेदाभेदयोर्विमतिविषयत्वं स्यात् । न चैवम् । किन्तु यथार्थत्वायथार्थत्वयोरेव तत् । एवं च भेदाभेदयोः पक्षकोटिनिवेशेऽपि नातिप्रसङ्गः । नापि साध्यस्वरूपालाभः । यथार्थत्वस्यैव साध्यत्वसम्भवादित्यत आह ॥ **विमतौ चेति** ॥ अख्यातिवा-

**दिभिरिति** ॥ संसर्गाभेदख्यात्यभाववादिभिरित्यर्थः । उक्तप्रकारं परेणाप्यङ्गीकारयति ॥ **कथमिति** ॥ **साधनमिति** ॥ शुक्तिप्रवृत्तिप्रयोजकज्ञानत्वतद्विषयव्यवहारजनकज्ञानत्वादिरूपं साधनमित्यर्थः ॥ **इतो दोषादिति** ॥ आद्ये पुरोवर्तिनिर्विकल्पकस्य पुरोवर्तिविषयकतायाः सिद्धत्वात्सिद्धसाधनता । द्वितीये रजतस्मरणस्य पुरोवर्तिविषयकत्वाभावस्यैव सिद्धत्वाद्बाधः । तृतीये निर्विकल्पकांशे सिद्धसाधनता स्मरणांशे बाधः । चतुर्थे प्रतिवाद्याश्रयासिद्धिः । पञ्चमे वाद्याश्रयासिद्धिरपसिद्धान्तो व्याघातश्चेत्यर्थः । अथ पूर्वपक्षी सामानाधिकरण्यव्यवहारकारणज्ञानस्य पक्षत्वमख्यातवादिनाऽपि त्याजयितुं तत्समानयोगक्षेमं तथाऽपीत्युक्तदूषणान्तरप्रसक्तिमत्पक्षान्तरमाशङ्कते ॥ **अथेति** ॥ शुक्तिप्रमायामंशतः सिद्धसाधनतावारणाय रजतार्थिन इति विशेषणम् । तद्बलाच्च रजतार्थिताजन्यत्वं प्रवृत्तेर्लभ्यते तेनोभयार्थिनः शुक्तिप्रवृत्ति-हेतुशुक्तिप्रमायां सिद्धसाधनतेत्यलग्नकं भवति । रजतप्रमायामंशतो बाधवारणाय शुक्तिकायामिति । रजतेच्छाजन्यशुक्तिप्रवृत्तिजनकरजतेच्छायामंशतः सिद्धसाधनतावारणाय ज्ञानमिति । न चैवमेव यथार्थत्वसाधनाय मया पक्षनिर्देशः क्रियत इति वाच्यम् । स्वतन्त्रोपस्थितेष्टभेदाग्रहस्य विसंवादिप्रवृत्ति-हेतुत्वं वदता त्वया कारणतावच्छेदकत्वेनेष्टज्ञानस्य तथात्वानभ्युपगमात् । इदंज्ञानस्य प्रवृत्तिमात्रहेतु-त्वाभ्युपगमेऽपि तद्याथार्थ्यस्य मां प्रति सिद्धतया सिद्धसाधनता स्यादित्याशयः शङ्कितुः । तर्हि भेदा-ग्रहहेतुत्ववादिनं मां प्रत्युक्तहेतुत एवेष्टज्ञानहेतुत्वासिद्ध्याऽऽश्रयासिद्धिः । इदंज्ञानस्य प्रवृत्तिहेतुत्वेऽपि तस्य पुरोवर्तिविषयत्वस्य मां प्रति सिद्धतया सिद्धसाधनतेति समम् । यदि च कार्याभावव्याप्याभावप्रतियो-गित्वरूपप्रयोजकत्वमेवात्र हेतुत्वमभिमतं तच्च कारणतावच्छेदकेष्टज्ञानेऽपि तवापि सममिति तस्य पुरोवर्तिविषयकत्वसाधने न कोऽपि दोष इति मतं तर्हि तस्यैव मया त्वां प्रति याथार्थ्यसाधने न कोऽपि दोष इत्याशयेन सोपहासमाह ॥ **मोच्चैरिति** ॥ **ईश्वरेति** ॥ ईश्वरज्ञानस्य कार्यमात्रकारणत्वा-दिति भावः । अत्रोत्तरोत्तरशङ्कनीयपरिहरणीयाभिसन्धिना पूर्वपूर्वशङ्कापरिहारा इति द्रष्टव्यम् ॥ **अनी-श्वरेति** ॥ अत्र जीवज्ञानमित्यर्थः । यथाश्रुतेऽप्रसिद्धविशेषणत्वेऽपि वक्तव्ये व्यर्थविशेषणत्वमात्रोक्तेर-युक्तेः । एवं व्याख्याने च पक्षतावच्छेदकाप्रसिद्ध्यभावेन व्यर्थविशेषणतामात्रोक्तेरुपपत्तिरिति कश्चित् । तन्न । व्यावर्त्याप्रसिद्धिप्रयुक्ताप्रसिद्धविशेषणस्थले व्यर्थविशेषणत्वस्यापि सम्भवेऽप्रसिद्धविशेषणत्वमेव वक्तव्यमिति निर्बन्धायोगात् । व्यावर्त्याप्रसिद्धिरूपप्रयोजकस्याश्रयासिद्धिसम्पादकत्वरूपदूषकताबीजस्य च साम्येनैक्योक्त्यैवोपपत्तौ व्यर्थविशेषणत्वाप्रसिद्धविशेषणत्वयोर्द्वयोरपि पृथगवश्यावक्तव्यत्वात् । विशेषणव्यावर्त्याप्रसिद्धौ व्यावर्त्याभावेन तद्वैयर्थ्यस्यैवोपपन्नत्वाच्च । अत एव ठक्कुरादौ सामान्यलक्षणा-द्यजन्येत्यादिविशेषणानां व्यावर्त्याप्रसिद्धिप्रयुक्तवैयर्थ्यमेव व्याख्यातमिति यथाश्रुतेनैवोपपन्नत्वात् । अत्रोक्तरीत्या पक्षकोटिप्रविष्टहेतुत्वस्य प्रयोजकत्वरूपतया प्रवृत्तिहेतुभूतेष्टसाधनतानुमितिहेतुभूतस्य

यद्रजतं तदिष्टसाधनमिति व्याप्तिज्ञानस्य प्रवृत्तिप्रयोजकतया तस्य च याथार्थ्यस्य सिद्धतयांशसिद्ध-साधनतेति शङ्कते ॥ **तथाऽपीति** ॥ नन्वेवं साधनद्वयस्याप्यनुपपत्त्या न निर्णय इत्यतः पक्षं परमुखेनैव निष्कर्षयितुं व्यवहारप्रवृत्तिप्रकारपरित्यागेन पक्षान्तरमुत्थापयति ॥ **इदं ज्ञानादिति** ॥

**स०**— शुक्तौ रजतार्थिप्रवृत्तिहेतुभूतज्ञानपक्षीकरणे प्रत्ययत्वेन हेतुना याथार्थ्यसाधनमयुक्तं प्रवृत्तेरिष्टसाधनताज्ञानसाध्यत्वेनेष्टसाधनताज्ञानस्य च रजतमिष्टसाधनं रजतत्वादित्यनुमानजन्यत्वेन तत्र यद्रजतं तदिष्टसाधनमिति व्याप्तिज्ञानस्य वक्तव्यत्वात्तस्यापि शुक्तौ रजतार्थिप्रवृत्तिहेतुत्वेन पक्षत्वापत्त्या तस्य च याथार्थ्यस्य सिद्धत्वेन सिद्धसाधनतेत्याह ॥ **तथाऽपि व्याप्तिज्ञानेनेति** ॥ विप्रतिपत्तिविषय-मिति विप्रतिपत्तिधर्मिणमित्यर्थः ।

**प०**—न केवलं सर्वत्रानुमानमात्रे प्रागुक्तदोषापातादेवमपक्षीकारः किंत्वनुमानवैयर्थ्यापाताद-पीत्याह ॥ **किं चेति** ॥ नन्वस्त्वेवं तथापि मिथो भिन्नमिदं ज्ञानमिति वाऽन्योन्यमभिन्नं ज्ञानमिति वा पक्षीकर्तुं शक्यं । भेदाभेदयोर्विमतत्वाभावात् । तथार्थत्वस्यैव साध्यत्वेन यथार्थमिदमयथार्थंवेत्येव विप्रतिपत्तेः । तथाच प्रागुक्तदोषस्तदवस्थ एवेत्यत आह ॥ **विमतौ चेति** ॥ **विभ्रमेति** ॥ भ्रान्ति-रूपज्ञानमस्ति न वेति भ्रमविषयचिन्ताप्रस्ताव इत्यर्थः । विमतत्वं व्यनक्ति ॥ **भेदे हीत्यादिना** ॥ इदं वेदनं इदमंशज्ञानं ॥ नेदमित्यत्र नेति नञो विदधातीतिक्रिययाऽन्वयः । तत्र हेतुः ॥ **रजतमात्र-ग्राहीति** ॥ तद्वादिभिः अन्यथाख्यातिवादिभिः । अभेद एवेति वेदनयोरित्यनुषङ्गः ॥ **विप्रतिपत्ति-रिति** ॥ वेदनयोर्भेद इत्यनुषञ्जनीयं । भेदाभेदयोरिति वा योज्यं । भ्रान्तित्वसाधकेनाप्येवमेव पक्षी-कर्तव्यं । नो चेदुक्तदोषस्तस्यापीत्याह ॥ **कथमन्यथेति** ॥ **ख्यातिवादी** भ्रान्तिरस्तीतिवादी । साधनमनुमानप्रयोगम् ॥ **इतो दोषात्** बाधाश्रयासिद्धत्वादिप्रागुक्तदोषात् । ख्यातिवादी स्वमते पक्षीकरणप्रकारमाशङ्कते ॥ **अथेति** ॥ **मेति** ॥ उच्चैर्मा वोचः परस्यापि श्रवणं भविष्यतीत्यपहासः । मयापि तथैव पक्षीकरणात् । इदं रजतमित्यादिसामानाधिकरण्यव्यवहारकारणमित्युक्तत्वादिति भावः यद्वा तादृक्प्रवृत्तिहेतुज्ञानमिदमिति ज्ञानं च भवतीत्यख्यातिवादिनोपगमात्तदयथार्थमिति त्वया साधने तव बाधः स्यादिति भावः । यद्वा यत्र शुक्तिका तदधस्ताद्रजतमिति श्रुतवतः शुक्तिकाज्ञानमपि रजता-र्थिप्रवृत्तिहेतुर्भवतीति तदयथार्थमितिसाधने तव बाधः स्यादिति भावः । वस्तुतस्तु तादृशं ज्ञानं अगृहीत-भेदं ज्ञानद्वयमेवेति मदुक्तमेवागतमिति भावो बोध्यः । ननूक्तव्यवहारादिकारणं ज्ञानं यथार्थमित्युक्ते कार्यमात्रकारणमीश्वरज्ञानमादाय सिद्धसाधनमिति शङ्कते अन्यथाख्यातिवादी ॥ **ईश्वरेति** ॥ अख्याति

**वादी** उत्तरमाह ॥ **तत्रापीति** ॥ ख्यातिवादिन इत्यर्थः । केनाप्येवमेव पक्षीकृत्यायथार्थमिति साधनीयत्वादिति भावः । ख्यातिवादीशङ्कते ॥ **प्रकृतेति** ॥ रजतार्थिनः शुक्तिकायां प्रवृत्तिहेतुरित्यर्थः । अख्यातिवाद्याह ॥ **ममेति** ॥ कथं न व्यर्थमित्यनन्तरं स्वरूपकथनार्थं चेन्ममापि तथास्त्विति योज्यम् । उभयसिद्धप्रयोजनवत्त्वं विशेषणदाने तन्त्रम् । न तु प्रयोजनस्योभयसिद्धत्वम् । एवञ्च मन्मते बाधपरिहारेण त्वां प्रति उपरञ्जकत्वेनार्थवत्त्वं विशेषणस्येति यदि तर्हि तत्समं ममापि । त्वां प्रति सिद्धसाधनतापरिहारेण मां प्रति चोपरञ्जकत्वेनार्थवत्त्वमस्त्विति वा योज्यं । ख्यातिवादी शङ्कते ॥ **तथापीति** ॥ ईश्वरज्ञानेन सिद्धसाधनतानिरासेपि प्रवृत्तेरिष्टसाधनताज्ञानसाध्यत्वात्तस्य चानुमितिरूपत्वेन यद्रजतं तदिष्टसाधनमिति व्याप्तिज्ञानसाध्यत्वात्प्रकृतप्रवृत्तिहेतुज्ञानं यथार्थमित्युक्ते प्रवृत्तिहेतुः यद्रजतं तदिष्टसाधनमिति व्याप्तिज्ञानमपि भवतीति तेन सिद्धसाधनतेत्यर्थः । अख्यातिवाद्याह ॥ **तत्रैवेति** ॥ तवान्यथाख्यातिवादिनः । उक्तप्रवृत्तिहेतुज्ञानमयथार्थमित्युक्ते बाधः स्यात् ॥ व्याप्तिज्ञानस्य याथार्थ्यादिति भावः । इदं ज्ञानात् इदमंशज्ञानादित्यर्थः । विप्रतिपत्तिविषयं विशेष्यतया विप्रतिपत्तिविषयम् । पक्षमिति यावत् ॥ **ममापीति** ॥ विगीतः प्रत्ययो यथार्थ इत्यनुमानप्रयोक्तुर्ममापि तथैव पक्षोऽस्त्वित्यर्थः ॥

**या० — इतो दोषादिति** ॥ पक्षविकल्परूपदोषादित्यर्थः । अत्राद्ये सिद्धसाध्यता । द्वितीये बाधः । तृतीये उभयम् । चतुर्थे प्रतिवाद्याश्रयासिद्धत्वम् । पञ्चमे वाद्याश्रयासिद्धत्वमपसिद्धान्तो व्याघातश्चेति दोषविवेको द्रष्टव्यः ॥ **तवापीति** ॥ इदं चायथार्थत्वस्य साध्यतामभिप्रेत्य न तु पुरोवर्तिविषयकत्वरूपसाध्याभिप्रायेण । तस्येश्वरज्ञानेऽपि सत्वेन बाधासंभवात् ॥ **तथाऽपि व्याप्तिज्ञानेनेति** । प्रकृतप्रवृत्तिहेत्वनीश्वरज्ञानस्य पक्षत्वेऽपि इदमिष्टसाधनमित्यनुमितिद्वारा प्रकृतप्रवृत्तिहेतुभूतं रजतत्वमिष्टसाधनत्वव्याप्यमिति यद्व्याप्तिज्ञानमस्मदादीनां तेन सिद्धसाधनतेत्यर्थः । न चोक्तव्याप्तिज्ञानं प्रवृत्तिहेतुभूतेष्टसाधनतानुमितिजनकतयाऽन्यथासिद्धं न प्रवृत्तिजनकमिति वाच्यम् । तर्हीदं रजतमिति ज्ञानस्यापि पक्षज्ञानतया लिङ्गज्ञानतया वा तादृशानुमितिजनकस्यान्यथासिद्धतया न प्रवृत्तिजनकत्वमित्याश्रयासिद्ध्यापत्तेः । अतो यथाकथञ्चित्प्रवृत्तिहेतुत्वं विवक्षितमिति वक्तव्यम् । तच्चोक्तव्याप्तिज्ञानेऽप्यस्तीति सिद्धसाधनतैवेत्यभिप्रायः ।

**श्री० — नित्यानित्येत्यादि** ॥ अनित्यं शब्दमग्निमन्तं पर्वतं पक्षीकृत्य नित्यत्वाग्निमत्त्वयोः साधने सिद्धसाधनता । नित्यं शब्दमनग्निमन्तं च पर्वतं पक्षीकृत्यानित्यत्वाग्निमत्त्वयोः साधने बाध इति दोषानुषङ्गादित्यर्थः । तत्र यथा नित्यत्वादिकं विहाय शब्दादिमात्रं पक्षीक्रियते एवमिहापीति भावः

॥ **विमताकारस्यापीति** ॥ विप्रतिपन्नाकारेण पक्षीकरणे सिद्धत्वं प्राप्तमित्यर्थः । भेदाभेदयोर्विमतत्वमुपपादयितुमाह ॥ **भेदे हीत्यादिना** ॥ उक्तरीत्या ग्रहणस्मरणात्मकतया ज्ञानयोर्भेदे हि सति क्वान्यथाख्यातिरिति सम्बन्धः । तदुपपादयति **इदं वेदनमित्यादिना** ॥ साधनमुपन्यसन्नित्यनेन वादित्वं सूचितमिति ज्ञेयम् ॥ **परोऽपि श्रोष्यतीति** ॥ श्रुत्वाऽपि सोऽपि तथैव वदिष्यतीति भावः । ननु न परेणैवं वक्तुं शक्यम् । रजतार्थिनः शुक्तिकायां प्रवृत्तिहेतुभूतं ज्ञानमीश्वरज्ञानमपि भवति । तस्य सर्वोत्पत्तिमन्निमित्तकारणत्वात्तत्र च याथार्थ्यं सिद्धमिति सिद्धसाधनता स्यादित्याशङ्कते ॥ **ईश्वरज्ञानेनेति** ॥ अख्यातिवाद्युत्तरमाह ॥ **तवापीति** ॥ ख्यातिवादिनः । ख्यातिवादी शङ्कते ॥ **प्रकृतेति** ॥ अख्यातवाद्युत्तरमाह ॥ **ममेति** ॥ ख्यातिवादी शङ्कते ॥ **तथाऽपीति** ॥

च० — **अथ रजतार्थिन इति** ॥ रजतत्वावच्छिन्ननिरूपितविषयिताघटितधर्मावच्छिन्नप्रवृत्तिनिष्ठजन्यतानिरूपितज्ञानवृत्तिजनकतावच्छेदकीभूतरजतत्वावच्छिन्ननिरूपकताकविषयितायां पुरोवर्तिनिष्ठविषयतानिरूपितत्वसाधन एव तात्पर्यमत्र विभावनीयम् । गुरूणां व्यधिकरणप्रकारकं ज्ञानमेव नास्तीति सिद्धान्तः । इच्छाप्रवृत्त्योस्तु व्यधिकरणप्रकारकत्वं तदङ्गीकृतमेवेत्याकरदर्शिनां निरूढः पन्थाः । इत्थं च रजतत्वावच्छिन्नशुक्तिवृत्तिनिरूपकताकेच्छाप्रवृत्तिनिष्ठविषयितयोरपि रजतत्वावच्छिन्ननिरूपितविषयितात्वेन तदुभयवृत्तिजनकताजन्यतयोरवच्छेदकत्वं गुरुमतसिद्धमपि भवत्येवेति नान्यतरदिशाश्रयासिद्ध्याद्यवतार इति भावः ॥ षष्ठीसप्तम्योः ज्ञानान्विताधेयताविषयितार्थत्वमुपेत्य रजतार्थिनिष्ठा या शुक्तिकाविषयिणी प्रवृत्तिस्तद्धेतुभूतं ज्ञानमिति यथाश्रुतार्थादेर्यत्र इमे रजतशुक्ती इति समूहालम्बनात् समूहालम्बनरूपतादृशेच्छा ततस्तादृश्येव प्रवृत्तिस्तत्रसिद्धसाधनताया अशक्यवारणतापातात् । अथागृहीतासंसर्गकस्यागृहीतभेदस्य वा ग्रहणस्मरणात्मकज्ञानद्वयस्य प्रवृत्तिहेतुतामुपेयुषां गुरूणां मते तादृशप्रवृत्तिहेतुज्ञानत्वसामानाधिकरण्येन ग्रहणात्मकज्ञाने पुरोवर्तिविषयकतासिद्ध्या सिद्धसाधनतापत्त्या तादृशप्रवृत्तिहेतुज्ञानत्वावच्छेदेन इतरस्यान्यथाख्यातिवादिनः सिषाधयिषिततोपेया । इत्थं च तेनैव समूहालम्बनस्थलीयक्षतेरपि नावतारः । अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन सिद्धेरविरोधित्वान्नोक्तविवक्षावश्यं भाव इति चेन्न । तुल्यदिशा ख्यातिवादिनापि तथैव सुवचतया ईश्वरज्ञानेन सिद्धसाधनता स्यादित्युत्तरग्रन्थानवतारप्रसङ्गेनोक्तदिशा समाहितेरयोगात् । प्राचीनमतेऽभिहितक्षतेर्दुर्वारत्वाच्च ॥ **तवापीति** ॥ अन्यथाख्यातिवादिनोपीत्यर्थः ॥ **बाध इति** ॥ रजतत्वावच्छिन्ननिरूपितायामीश्वरज्ञानवृत्तिविषयितायां पुरोवर्तिव्यक्तिनिष्ठविषयतानिरूपितत्वरूपसाध्याभावाद्बाध इत्यर्थः । व्याकर्तारस्तु इदं चायथार्थत्वस्य साध्यतामभिप्रेत्य न तु पुरोवर्तिविषयकत्वरूपसाध्याभिप्रायेण तस्येश्वरज्ञाने सत्त्वेन बाधाभावादिति सङ्गमयन्ति । त्वया प्राभाकरेण ।

मीमांसकानामीश्वरद्वेषित्वादिति भावः । मां प्रति प्राभाकरं प्रति । तवापि अन्यथाख्यातिवादिनोपि । तथापि प्रकृतप्रवृत्तिहेत्वनीश्वरज्ञानस्य पक्षत्वेऽपि ॥ **व्याप्तिज्ञानेनेति** ॥ इदमिष्टसाधनं रजतत्वादित्यनुमानाङ्गभूतव्याप्तिगोचरज्ञानस्य प्रकृतपक्षतावच्छेदकीभूतप्रवृत्तिहेतुत्वाक्रान्ततया तस्य च याथार्थ्यादिति भावः । दर्शितव्याप्तिज्ञानस्यान्यथासिध्या न पक्षतावच्छेदकाक्रान्ततेत्युक्तौ तु तुल्यदिशा पक्षीकृतज्ञानेपि तथात्वस्य सुवचतयाश्रयासिद्धिप्रसङ्ग इति भावः । प्रयोजकसाधारणहेतुत्वस्य पक्षतावच्छेदकघटकतायां तूक्तादवस्थ्यमिति भावः । तत्रैव व्याप्तिज्ञान एव । तादृशे उक्तदिशा व्यवहारप्रवृत्तिघटितपक्षतावच्छेदककल्पयोर्दूषिततया निर्णीतिप्रसङ्ग इत्यतः परलम्पनेनैव तन्निर्णिनीषुः भङ्ग्यन्तरमाशङ्क्य प्रतिबन्दीं परिगृह्णाति ॥ **इदं ज्ञानादित्यादि** ॥ विप्रतिपत्तिविषयं विमतिनिरूपितविशेष्यतारूपविषयताविशेषितं पक्षम् । तथा चेदमंशावगाहिज्ञानप्रतियोगिकभेदप्रकारकग्रहनिष्ठस्वनिरूपितविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावविशेषितज्ञानत्वस्यैवोभयसंप्रतिपन्नस्य पक्षतावच्छेदकत्वोरीकारात्सर्वसामञ्जस्यमिति भावः।

**सु०—किञ्च विवादाध्यासितं रजतज्ञानं रजतविषयं रजतज्ञानत्वात्सम्मतवत् । अत्रापि पूर्ववद्विमतिविषयो विवेचनीयः । स्यादेतत् । किमिदं रजतज्ञानं नाम रजतस्य ज्ञानं रजतज्ञानम् । रजतं च तज्ज्ञानं चेति वा । रजतशब्दोल्लेखिज्ञानं वा रजतार्थिनः प्रवृत्तिहेतुज्ञानं वा रजतमिति ज्ञानं वा । न प्रथमः । षष्ठ्यर्थस्य विषयविषयिभावव्यतिरेकेणासम्भवात्साध्याविशिष्टत्वात् । न द्वितीयः । उभयासिद्धेः । ज्ञानस्य निराकारत्वात् । न तृतीयः । उल्लेखार्थस्य विषयत्वेऽसिद्धेः । तज्ज्ञानजनितस्मृतिमात्रयोनित्वे पूर्वपदमात्रज्ञानेनापि रजतपदस्य स्मरणसम्भवेन व्यभिचारात् । न चतुर्थः । विवेकाग्रहवादिनामिदमिति ज्ञानस्यापि शुक्तिकाऽऽलम्बनस्य तद्धेतुत्वेन व्यभिचारात् । न पञ्चमः । पूर्वोक्तपक्षाबहिर्भावादिति । मैवम् । अन्यथाख्यातिवादिना किं शुक्तिकाज्ञानं शुक्तिविषयमन्यथाख्यातिरुच्यते । उत रजतज्ञानं शुक्तिविषयम् । आद्ये न नो विवादो यथार्थख्यातित्वात् । द्वितीये रजतज्ञानशब्देन योऽर्थः परेण विवक्ष्यते स एवास्माकं हेतुर्भविष्यति । तथा हि न तावदाद्यः कल्पः परेणाङ्गीकर्तुमुचितः । व्याघातप्रसङ्गात् । शुक्तिरजतयोरभेदप्रसङ्गाच्च । न द्वितीयः । अनभ्युपगमात् । न तृतीयः । कदाचिच्छुक्तिकाज्ञानस्याप्यन्यथासङ्केतितरजतशब्दस्मृतिहेतुत्वसम्भवेनान्यथाख्यातित्वप्रसङ्गात् । नापि चतुर्थः । यत्र शुक्तिकातदधस्ताद्रजतमस्तीति वाक्यं श्रुतवतः शुक्तिज्ञानमपि रजतार्थिप्रवृत्तिहेतुर्भवतीति तस्याप्यन्यथाख्यातितापातात् । नापि पञ्चमः । प्रागुक्तपक्षाबहिर्भावात् । अतो रजतज्ञानं नामोक्तपक्षेषु किञ्चिदङ्गीकृत्य**

तद्दोषो वा परिहरणीयः । पक्षान्तरं वोत्प्रेक्षणीयम् । तत्त्वमेव मया हेतूकरिष्यत इति यत्किञ्चिदेतत् । केचित्पुना रजतविषयं ज्ञानमित्येव हेत्वर्थमुपगम्य रजतेतराविषयत्वं साध्यमङ्गीकृत्य साध्याविशिष्टतादोषं परिहरन्ति । तदसत् । रजतघटाविति ज्ञाने व्यभिचारात् । अन्यतरासिद्धेश्च । तस्मादुक्त एव परिहारः । अपि च ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तित्वात्प्रमात्ववत् । शुक्तिका न रजतत्वेनावभासते तद्रूपेणासत्त्वात् । यद्यद्रूपेणासत्तत्तद्रूपेण नावभासते । यथा मेरुः सर्षपत्वेन । इदं रजततादात्म्यं न प्रत्येतुं शक्यमसत्त्वात्कूर्मरोमवत् । तस्मादख्यातिपक्ष एव श्रेयानिति ॥

वा०— रजतज्ञानस्य रजतविषयकत्वे साधितेऽन्यथाख्यात्यभावसिद्धिरित्याशयेनानुमानान्तरमाह ॥ **किञ्चेति** ॥ रजतस्मरणमात्रस्य पक्षत्वे सिद्धसाधनता । रजतपुरोवर्त्येकताज्ञानस्य पक्षत्वे बाधाश्रयासिद्धिरित्यतो विवादाध्यासितमित्युक्तम् । नन्वत्रापि विमतिविषयतावच्छेदकानिरुक्तिरेवेत्यत इदंज्ञानादित्युक्तविमतिविषयोद्घाटनप्रकारोऽत्रापि द्रष्टव्य इत्याह ॥ **अत्रापीति** ॥ हेत्वनुपपत्तिविषयां शङ्कामुत्थापयति ॥ **स्यादेतदिति** ॥ षष्ठीतत्पुरुषाश्रयणेन प्रथमस्य साकारवादिमताश्रयणेन द्वितीयस्य ज्ञाने शब्दभाननियमनादिमताश्रयणेन तृतीयस्योभयवादिमताश्रयणेन चतुर्थस्य मध्यमपदलोपिसमासाश्रयणेन पञ्चमस्य प्रसक्तिरिति द्रष्टव्यम् ॥ **असम्भवादिति** ॥ रजतज्ञानयोः संयोगसमवायादेरभावादिति भावः ॥ **उभयेति** ॥ साकारवादिना तथाऽङ्गीकारेऽपि वादिप्रतिवादिमतेऽसिद्धिरेवेति भावः ॥ **असिद्धेरिति** ॥ न च गृहीतशक्तिकं प्रति शब्देनार्थस्येवार्थेन शब्दस्मरणे बाधकाभावाच्चाक्षुषबोधेऽपि व्यक्त्या स्मारितः शब्दोविशेषणमत एव गोत्वस्येव शब्दस्यापि व्यक्तिविशेषणत्वात्तत्संसर्गोऽपि तादात्म्यमेवास्त्वत एवाह 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यत' इति । एवं च वाच्यवाचकतादात्म्यादर्थज्ञानस्य शब्दविषयकत्वं नासिद्धमिति वाच्यम् । चाक्षुषबोधेन तावदचाक्षुषशब्दस्यानुपनीतस्य भानम् । अर्थज्ञानानन्तरभाविस्मृत्युपनीतस्य च नार्थज्ञाने भानमुपपद्यते । न च तदुपनायकान्तरं विर्विकल्पकानङ्गीकारिणां नियमेन पूर्वमस्ति । तस्मान्न शब्दस्य व्यक्तिभाने भानम् । केवलमर्थज्ञानोत्तरं व्युत्पत्तिसमयावगतः स्मर्यते शब्दो न तस्य केनचित्संसर्गो भासते । भाने वा व्यक्तिरियं घटपदवाच्या घटजातीयत्वादित्याद्यनुमानादेव । तादात्म्यसंबन्धोक्तिस्तु नानार्थस्थले एकस्य शब्दस्यानेकतादात्म्यानुपपत्त्याऽनुपपन्नैवेत्यर्थज्ञानस्य शब्दविषयकत्वमसिद्धमेवेति भावः ॥ **तज्ज्ञानेति** ॥ उल्लेखार्थस्येत्यनुवर्तते । येन ज्ञानेन यस्य शब्दस्य स्मृतिर्जन्यते तज्ज्ञानस्य तच्छब्दस्मृतिजनकत्वमेव तच्छब्दोल्लेखित्वमित्यर्थः । ज्ञानेतरकारणजन्यशब्दस्मृति-

जनकत्वं ज्ञानेन तदुल्लेखित्वरूपमित्यतस्तज्ज्ञानजनितेति स्मृतिविशेषणम् । मात्रग्रहणेन तद्विषयकत्वं व्यावर्तयति । रजतशब्दज्ञानजनितरजतपदस्मरणयोनित्वं तज्ज्ञानेत्याद्यर्थ इति केचित् । तत्र रजतपदसङ्केतज्ञानवत एवार्थज्ञानाद्रजतपदस्मरणं नान्यस्येति द्योतयितुं तद्विशेषणमिति ज्ञेयम् ॥ **विवेकेति** ॥ सत्यपि विवेकाग्रहे प्रवृत्त्यभावेनेदंरजतमिति ज्ञानयोरावश्यकत्वाद्रजतज्ञानस्योपस्थितेष्टभेदाग्रहहेतुतावच्छेदककोटिनिविष्टत्वेनान्यथासिद्धत्वेऽपीदमिति ज्ञानस्य तदभावेन हेतुत्वं प्राभाकराणां संमतमित्याशयः । प्रतिबन्दीमुखेन हेतुं निष्कर्षयितुं तस्या अन्यथाख्यातिस्वरूपनिष्कर्षाभावेऽनुदयादन्याकारमन्यालम्बनं ज्ञानमन्यथाख्यातिरिति वदता रजतज्ञानं शुक्तिविषयं शुक्तिरजतस्थलेऽन्यथाख्यातिरिति वक्तव्यमिति पक्षं निष्कर्षयितुं पक्षान्तरं दूषणाय प्रसञ्जयति ॥ **मैवमन्यथेति** ॥ विषयविषयिभावस्यैव षष्ठ्यर्थत्वाद्धर्मिण एव विषयत्वाद्विशिष्टज्ञानस्यान्यधर्मिकस्यान्यधर्मिकत्वं व्याहतमित्याह ॥ **व्याघातेति** ॥ व्याघातभयाच्छुक्तिरजतयोरन्यत्वं वा त्याज्यमित्याह ॥ **शुक्तीति** ॥ अन्यथासङ्केतितत्वं शुक्तिरहितशुक्तिसङ्केतितत्वम् । ननु चतुर्थपक्ष एवाङ्गीक्रियते । न चोक्तदोषः । इष्टतावच्छेदकप्रकारकत्वस्य प्रवृत्तिहेतुपदेन विवक्षणात् । यद्वा शुक्त्यनुसारिरजतविषयकव्यवहारजनकत्वं रजतज्ञानत्वं विवक्ष्यतेऽतो नानुपपत्तिरिति चेत्तस्यैव हेतुत्वेऽपि न मम क्षतिरित्याशयेनाह ॥ **अत इति** ॥ धर्मिहेतुविकल्पप्रयुक्तदूषणाप्रसक्तये रीत्यन्तरमाह ॥ **अपि चेति** । सिद्धसाधनतानिरासाय साध्ये मात्रपदम् । अयथार्थव्यवहारादिवृत्तित्वसत्त्वाद्यनैकान्तिकतानिरासाय हेतौ तदिति ध्येयम् । एवं स्वपक्षसाधनमभिधायान्यथाख्यातिनिषेधाय स्पष्टमनुमानद्वयमाह ॥ **शुक्तिकेत्यादिना** ॥ तत्राद्यं संसर्गतादात्म्यसाधारणं द्वितीयं प्रतिवादिप्रसिद्ध्या पक्षसिद्धिमभिप्रेत्य प्रवृत्तं तादात्म्यासाधारणमिति द्रष्टव्यम् ॥

स०— **विवादाध्यासितमिति** ॥ न च रजतज्ञानस्य रजतविषयत्वोपपादनमसङ्गतं याथार्थ्यसाधनस्यैव प्रकृतत्वादिति वाच्यम् । यत्सन्निकृष्टकरणेनेत्यादिवक्ष्यमाणविषयत्वस्य रजते सिद्धौ तज्ज्ञाने याथार्थ्यस्यैव सिद्धत्वादिति भावः ॥ **साध्याविशिष्टत्वादिति** ॥ न च रजतविषयत्वस्य साध्यत्वाद्रजतविषयकज्ञानत्वस्य हेतुत्वान्न साध्यावैशिष्ट्यमिति वाच्यम् । साध्यवद्धेतोरपि संदिग्धत्वादित्यत्र तात्पर्यात् । रजतशब्दोल्लेखीत्यत्रोल्लेखो नाम विषयत्वं वा रजतशब्दज्ञानजनितरजतपदस्मृतिहेतुत्वं वेति विकल्पं हृदि निधायाद्यं दूषयति ॥ **उल्लेखार्थस्येति** ॥ द्वितीयं निराचष्टे ॥ **तज्ज्ञानजनितेति** ॥ रजतशब्दज्ञानजनितेत्यर्थ इत्याहुः । यद्वा रजतज्ञानजनितरजतशब्दस्मृतिजनकत्वमात्रे विवक्षिते इत्यर्थः । मात्रपदेन पूर्वोक्तविषयत्वव्यावृत्तिः । इदं च रजतशब्दस्योल्लेखः स्मृतिरस्यास्तीति निर्वचने जन्यजनकभावस्य च षष्ठ्यर्थत्वं लभ्यत इति द्रष्टव्यम् । रजतशब्दस्मृतिहेतुत्वं रजतज्ञानस्य स्फुटीकर्तुं तज्ज्ञानजनिते-

त्युक्तम् । तथा च रजतशब्दस्मृतिहेतुज्ञानत्वे रजतशब्दोल्लेखिज्ञानपदेन विवक्षित इत्यर्थः ॥ **पूर्वपद-मात्रज्ञानेनापीति** ॥ कस्मिंश्चिच्छ्लोकादौ रजतपदापेक्षया पूर्वपदश्रवणे तच्छ्लोकादिपाठवतः रजतपद-स्मरणसंभवात्तत्र पूर्वपदज्ञाने रजतविषयत्वाभावाद्व्यभिचार इत्यर्थः । **व्याघातप्रसङ्गादिति** ॥ बाध-प्रसङ्गादित्यर्थ इत्याहुः । न च रजतशुक्ती इति ज्ञाने रजतविषयकस्यापि शुक्तिविषयकत्वदर्शनान्न व्याघात इति वाच्यम् । तस्य त्वयाऽन्यथाख्यातित्वानभ्युपगमादिति भावः ॥ **पक्षान्तरमिति** ॥ सामानाधिकरण्यव्यवहारजनकज्ञानत्वमितिपक्षान्तरमुत्प्रेक्षणीयमित्यर्थः ॥ **ज्ञानत्वमिति** ॥ सिद्धसाधन-वारणाय मात्रपदम् । ज्ञानवृत्तित्वादित्युक्ते सत्तायामनैकान्त्यमयथार्थव्यवहारेऽपि तस्याः वृत्तेरत उक्तं मात्रेति ।

प०— **पूर्ववदिति** ॥ इदंज्ञानादगृहीतविवेकं रजतज्ञानमित्येवं रूपेणेत्यर्थः । उल्लेखार्थस्य उल्लेखशब्दार्थस्य ॥ **तज्ज्ञानेति** ॥ यस्य ज्ञानस्योल्लेखित्वमुच्यते तज्ज्ञानजनिता या स्मृतिः रजतशब्द-गोचरस्मृतिः तन्मात्रकारणत्वं रजतशब्दोल्लेखित्वम् । रजतशब्दस्मृतिमात्रहेतुज्ञानत्वं रजतशब्दोल्लेखि-ज्ञानत्वमिति फलितार्थः । रजतज्ञानात् संबन्धिदर्शनादितिन्यायेन रजतशब्दस्मृतेर्जननात् । न तु रजतशब्दविषयकत्वमिति मात्रशब्दार्थः ॥ **पूर्वेति** ॥ क्वचिद्वाक्यविशेषे चन्द्रचूडावास-रजताचल-वासिनेत्यादौ रजतवाचकपदापेक्षया पूर्वविद्यमानपदश्रवणेन तद्वाक्यपरिचयवतः रजतपदस्य स्मरणं भवति । इति पूर्वपदज्ञानस्य रजतपदस्मरणहेतुज्ञानत्वमस्ति । रजतविषयकत्वं नेति व्यभिचारादित्यर्थः । रजत शब्दस्मारकत्वं रजतशब्दोल्लेखित्वमित्यर्थमुपेत्याह ॥ **कदाचिदिति** ॥ **अन्यथासङ्केतितेति** ॥ शुक्ति-शब्दपर्यायतया सङ्केतितरजतशब्देत्यर्थः ॥ **यत्किञ्चिदेतदिति** ॥ मदीयहेतुखण्डनं यत्किञ्चिन्नातीव-दोषावहम् । त्वयापि तस्य निर्वाह्यत्वेनोक्तत्वात् । 'यत्रोभयोस्समो दोष' इति न्यायादिति भावः । अख्यातिवाद्येकदेशिमतमनूद्य निराह पूर्वपक्षी ॥ **केचित्पुनरित्यादिना** ॥ पुना रजतेति संहितायां 'रोरी'तिरेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽण' इति दीर्घे पुना रजतेति साधु । एवमग्रेपि बोध्यम् ॥ **अन्यतरेति** ॥ ख्यातिवादिना शुक्तिविषयत्वाङ्गीकारात् । यत्सन्निकृष्टकरणेनेत्यादिना वक्ष्यमाण-विषयत्वस्य शुक्तावेव भावेन रजतेऽभावादिति भावः ॥ **उक्त एवेति** ॥ अतो रजतज्ञानं नामेत्यादिनोक्त एवेत्यर्थः ॥

या०— **रजतं च तज्ज्ञानं चेति** ॥ रजताकारज्ञानमित्यर्थः । रजतशब्दोल्लेखित्वं नाम रजशब्दविषयकत्वं वा रजतशब्दस्मृतिहेतुत्वं वेति विकल्प्याद्यं दूषयति ॥ **उल्लेखार्थस्येति** ॥ रजत-

विषयकज्ञानस्य रजतशब्दविषयकत्वाभावेनासिद्धिरित्यर्थः । यद्यपि रजतशब्दवाच्यमिदमिति नाम सविकल्पकरूपरजतज्ञानस्य रजतशब्दविषयकत्वमस्ति तथाऽपि पक्षीकृते रजतत्वप्रकारके जातिसविकल्पकरूपे रजतज्ञाने रजतशब्दविषयत्वाभावेनासिद्धिरुक्तेत्यवधेयम् । द्वितीयं दूषयति ॥ **तज्ज्ञानजनितेति** ॥ अत्र तच्छब्देन रजतपरामर्शः तथा च रजतज्ञानजनिता या रजतरूपार्थस्मृतिस्तन्मात्रयोनित्वे तत्कारणत्वमात्रविवक्षिते सतीत्यर्थः । इदं च पक्षीभूते रजतज्ञानेऽस्ति । रजतज्ञानस्य रजतस्मृतिकारणत्वात् । मात्रपदेनपूर्वोक्तस्य विषयत्वस्य व्यावृत्तिः । रजतशब्दविषकमपि पक्षीभूतं रजतज्ञानं रजतशब्दविषकस्मृतियोनित्वाद्रजतशब्दोल्लेखीत्युपचर्यते । तादृशमेवोल्लेखित्वं हेतुतया विवक्षितं न साक्षादुल्लेखित्वमतो नासिद्धिरिति भावः । अत्र यद्यपि रजतशब्दस्मृतियोनित्वे विवक्षिते इत्येव वक्तव्यम् । तथापि तज्ज्ञानजनितेति वचनं रजतशब्दस्मृतिं प्रति पक्षीभूतरजतज्ञानस्य योनित्वं 'पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षम' इति वचनात्प्रसिद्धमेवेति दर्शयितुमिति ज्ञातव्यम् ॥ **पूर्वपदज्ञानेनापीति** । कस्मिंश्चिच्छ्लोके रजतादिपदापेक्षया पूर्वं यदि सुवर्णादिपदं निबद्धं तर्हि सुवर्णादिपदस्यपूर्वं विद्यमानस्य ज्ञानेन तदुत्तरस्य रजतादिपदस्य तच्छ्लोकाभ्यासपाटवात्स्मृतिरनुभवसिद्धेति भावः ॥ **व्याघातप्रसङ्गादिति** ॥ बाधप्रसङ्गादित्यर्थः ॥ **अन्यथासङ्केतितेति** ॥ रजतशब्दोल्लेखिज्ञानं शुक्तिविषयकमन्यथाख्यातिरित्युक्ते यत्र रजतशब्दः शुक्तावेव सङ्केतितस्तत्र शुक्तिज्ञानस्य रजतशब्दस्मृतिहेतुताऽस्तीति तादृशशुक्तिज्ञानमपि शुक्तिविषयकमन्यथाख्यातिः स्यादित्यर्थः ॥ **अन्यतरेति** ॥ रजतमिति ज्ञानस्य शुक्तिसन्निकृष्टकरणजन्यत्वेन शुक्तिविषयकत्वादिति भावः । साध्ये सिद्धसाधनतावारणाय मात्रपदम् । हेतौ मात्रपदं सत्तायां व्यभिचारं वारयितुम् अयथार्थव्यवहारेऽपि तस्याः सत्त्वेन तत्र साध्याभावसम्भवात् ॥

श्री० — ॥ **अत्रापीति** ॥ इदं ज्ञानादगृहीतविवेकं रजतज्ञानमित्यर्थः ॥ **रजतविषयमिति** ॥ पुरोवर्तिविषयत्वेऽन्यथाख्यात्यापत्तिरित्याशयः ॥ **तद्धेतुत्वेनेति** ॥ रजतार्थिनः प्रवृत्तिहेतुत्वेनेत्यर्थः ॥ **व्याघातप्रसङ्गादिति** ॥ रजतविषयकज्ञानस्य शुक्तिविषयकत्वे विरोधप्रसङ्ग इत्यर्थः ॥ शुक्तिरजतयोरैक्याभावे रजतविषयकं ज्ञानं कथं शुक्तिविषयकं स्यादित्यर्थः । तृतीयपक्षे रजतशब्दस्मृतिहेतुज्ञानमेव रजतशब्दोल्लेखिज्ञानत्वं विवक्षितं तत्र दूषणमाह ॥ **कदाचिदिति** ॥ **यत्किञ्चिदेतदिति** ॥ स्यादेतदित्यादिना यच्छङ्कते तद्यत्किञ्चित्तुच्छमित्यर्थः । किंच विवादाध्यासितं रजतज्ञानं रजतविषयं रजतज्ञानत्वादित्युक्तानुमाने हेतूक्तं रजतज्ञानं नाम किमित्येवं स्यादित्यादिना शङ्कितदोषस्य । अतो रजतज्ञानं नामोक्तपक्षेष्वित्यादिनोक्तप्रकारेणैव नान्यथेत्याशयेन कैश्चित्स्वयूथ्यैरुक्तं हेत्वर्थमनूद्य दूषयत्याख्यातिवादी ॥ **केचित्पुनरित्यादि** ॥ **यथार्थमात्रवृत्तीति** ॥ यथार्थज्ञानमात्रवृत्तीत्यर्थः ।

अत्र मात्रपदत्यागे ज्ञानत्वस्य यथार्थज्ञानवृत्तित्वस्य परेणाङ्गीकृततया सिद्धत्वात्सिद्धसाधनता स्यादतो मात्रपदम् । हेतौमात्रपदत्यागे सत्ताजातौ व्यभिचारः स्यात् । तत्र ज्ञानवृत्तित्वसद्भावेऽपि द्रव्यादावपि वृत्तित्वेन यथार्थज्ञानमात्रवृत्तित्वरूपसाध्याभावात् । अतो मात्रपदम् । ज्ञानेतरवृत्तित्वे सति तद्वृत्तित्वं मात्रशब्दार्थः । तथा च सत्तायां व्यभिचार इति द्रष्टव्यम् ।

च०—रजतशब्दोल्लेखित्वं 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यत' इति वचनात्तच्छब्दविषयकत्वमेकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति तच्छब्दविषयकस्मृतिजनकतारूपं वेति कल्पद्वयमभिप्रेत्याद्यं प्रत्याह ॥ **असिद्धेरिति** ॥ **तज्ज्ञानजनितेति** ॥ रजतज्ञानेन जनिता या रजतशब्दविषयिणी स्मृतिस्तन्मात्रनिरूपितकारणत्वरूपत्व इत्यर्थः । मात्रपदेनाद्यकल्पो व्यवच्छेद्यते । **व्याघातप्रसङ्गादिति** ॥ शुक्तिज्ञाने रजतविषयकत्वाभावेन बाधप्रसङ्गादित्यर्थः । **अन्यथासङ्केतितेति** ॥ रजतशब्दाच्छुक्तिः प्रत्येतव्येति पुरुषविशेषपरिभाषाविषयीकृतेत्यर्थः ॥ **अन्यतरेति** ॥ गुरुमते रजतमितिज्ञानस्य रजतसन्निकृष्टकरणजन्यत्वाभावेन तदविषयकतया हेतोरसिद्धिरित्यर्थः॥

**सु०— अत्रोच्यते । यत्तावदन्यथाख्यातिलक्षणं निराकृतमन्याकारोल्लेखीत्यन्तेन तदिष्टमेवास्माकम् । अन्यदन्यात्मना विषयीकुर्वज्ज्ञानमन्यथाख्यातिरित्यङ्गीकारात् । यथोक्तम् असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वादिति ॥ नन्वन्यस्यान्यात्मता सती उतासती । असतीति ब्रूमः । असतो न प्रतीतिरिति चेन्न । तस्या उपपादयिष्यमाणत्वात् । एवं सति रजतस्यापि कुतः सत्त्वमङ्गीकरणीयमिति चेन्न । को हि ब्रूते रजतं सदिति। वक्ष्यामो ह्यभिनवान्यथाख्यातिस्वरूपमुपरिष्टत्वात् ॥ ॥ अत्र केनचित्प्रलपितम् । खण्डो गौः शुक्लः पट इत्यादयः सर्व एव सविकल्पकप्रत्यया विभ्रमाः प्रसज्येरन् । सामानाधिकरण्यप्रत्ययस्य तादात्म्यालम्बनत्वात् । तस्य चात्राभावादिति । तदतीव मन्दम् ॥ तथा हि । सामानाधिकरण्यप्रत्ययो हि कयोस्तादात्म्यमवलम्बते । किं गुणक्रियाजात्यादेः द्रव्येणोत गुणादीनामेव परस्परमथ गुणाश्रयस्य क्रियाश्रयेणेत्यादि ॥ नाद्यः । असम्मतेः । न हि शुक्लः पट इत्यस्य शौक्ल्यं पट इत्यर्थोभिमतो लौकिकानाम् । न च चलति पट इत्यस्य चलनं पट इत्यर्थोऽभिमतः । नापि खण्डो गौरित्येतत्खण्डत्वं गोत्वं च पिण्ड एवेत्यनेन समानार्थम् । तथात्वे दण्डी देवदत्त इत्यस्यापि दण्डदेवदत्ततादात्म्यविषयतापत्तेः । दण्डीति शाब्दव्यवहारे भेदार्थप्रत्ययप्रयोगाज्ज्ञानमपि तादृशं कल्प्यत इति चेत्सममत्रापि । शुक्लगुणो-**

ऽस्यास्तीत्यस्मिन्नर्थेऽर्शआदिभ्योऽजित्यकारप्रत्ययविधानात् । चलतीत्यादौ तु स्फुट एव प्रकृतिप्रत्यययोरर्थभेदः । न हि गौरिति गोत्वमुच्यते तथात्वे त्वप्रत्ययवैयर्थ्यात् । अत एव शुक्लः पट इत्युक्त्वा शौक्ल्यं पटस्येति व्याकर्तारो भवन्ति ।

वा०—अन्यथाविज्ञानमेव भ्रान्तिरिति वदता भाष्यकारेणाभिप्रेतमन्यथाख्यातिलक्षणान्तर-निराकरणं पूर्वपक्षव्याजेनास्माभिर्दर्शितमित्याशयेनाह ॥ **यत्तावदिति** ॥ **इत्यन्तेनेति** ॥ अन्तशब्दो मर्यादावचनः । एतत्पर्यन्तेनेत्यर्थः । अत एवान्याकारोल्लेखीत्यसदभिमतान्यथाख्यातेरिति वक्ष्यति । अत्र पूर्वपक्षानुवादानुसारेणान्याकारोल्लेख्यन्यालम्बनं ज्ञानमन्यथाख्यातिरित्यङ्गीकारादिति वक्तव्येऽन्य-दित्यादिवचनमेतत्पक्षाभिप्रेतार्थस्यान्यथाविज्ञानं भ्रान्तिरिति भाष्यारूढताप्रदर्शनाय । तथा चान्यथे-त्येतत्सामर्थ्यलभ्यमन्यद्विषयीकुर्वदिति संयोज्य भाष्यं व्याख्यातं भवति । नन्वत्रान्यशब्दाभ्यां वस्तुमात्र-विवक्षायां वस्तुनो वस्त्वन्तरात्मनाऽवभासरूपान्यथाख्यातिलक्षणनिरासस्य पूर्वोक्तस्वाभीष्टत्वविरोधः । वस्त्ववस्तूभयग्रहणे च न सिद्धान्तीयं ज्ञापकमन्यथाविज्ञानमिति भाष्यस्य वस्तुमात्रविषयकत्वेनापि व्याख्यातुं शक्यत्वादित्यत एतद्व्याख्यानरूपतत्त्वनिर्णयस्थभाष्यकारीयवाक्यानुसारेणैतद्भाष्यं व्याख्येय-मित्याशयेन तत्स्थं वाक्यमुदाहरति ॥ **यथोक्तमिति** ॥ अत्र स्वमते पराभिमतान्यथाख्यातिवैलक्षण्यं दर्शयितुं सदसतोरसत्सत्त्वप्रतीतिरन्यथाख्यातिरित्युक्तं लक्षणं त्वन्यदित्याद्यसदुक्तरीत्यैवेति भाष्ये सदसतो-रसत्सत्त्वप्रतीत्योरन्यतरस्थलेऽन्यतरसत्त्वनियमे लक्षणेऽन्यतरवैयर्थ्यमनियमे च प्रत्येकलक्षणत्वे परस्परा-व्याप्तिर्मिलितस्य लक्षणत्वे चैकैकमात्रवत्यव्याप्तिरित्यादिचोद्यानवकाश इत्यप्यन्यदित्याद्युक्त्या सूचितमिति द्रष्टव्यम् । वस्तुनो वस्त्वन्तरात्मना अवभास इति पक्षे पूर्वपक्ष्युद्भावितं न्यायसाम्यात् अत्रापि प्रसक्तं विकल्पदूषणमसद्विलक्षणज्ञेत्याद्युत्तरभाष्येण निरस्तमित्याशयेन तद्विकल्पमाशङ्कते ॥ **नन्विति** ॥ अत्र यत्परेणोक्तं दूषणमुपपत्तौ वा किं रजतस्यापि वस्तुत्वग्रहणेनेति तस्य वस्तुत्वगर्भलक्षणप्रणेतृनैयायिकं प्रति सम्भवेऽपि नास्मान्प्रति प्रसक्तिरित्याशयेन समाधातुं तच्छङ्कते ॥ **एवमिति** ॥ ननु रजतस्य देशान्तरेऽपि सत्त्वानभ्युपगमेऽसत्ख्यातिपक्षापत्त्याऽन्यथाख्यातिपरित्याग इत्यत आह ॥ **वक्ष्याम इति** ॥ विगीतप्रत्यये भासमानस्य सर्वस्य नासत्त्वमभ्युपगम्यते येनासत्ख्यातिरपि तु सदेव शुक्तिकाशकलमत्यन्तासद्रजतात्मना भासत इति तार्किकोक्तविलक्षणान्यथाख्यातिस्वरूपं वक्ष्याम इति भावः । अनिर्वचनीयख्यातिसमर्थना-यान्यथाख्यातिलक्षणानि निराकुर्वता विवरणकारेणोक्तमेतल्लक्षणदूषणं निराकर्तुमनुवदति ॥ **अत्रेति** ॥ **केनचिदिति** ॥ निरसनीयत्वेन प्रसक्ताख्यातिवादिविलक्षणेनेत्यर्थः । अख्यातिवाद्युक्तदूषणस्य नैयायिकं प्रति सम्भवेऽपि मां प्रत्यसम्भव इत्येव । त्वदुक्तस्य तु तं प्रत्यसम्भवः वक्ष्यमाणरीत्या तेनापि तादात्म्य-

भानानभ्युपगमादित्याशयेनातीवेत्युक्तम् । यद्वा धर्माणामाश्रयेण परस्परं च भेदस्य धर्माश्रयाभेदस्य सामानाधिकरण्यप्रतीतिविषयतया स्फुटस्याज्ञानेनेदं दूषणाभिधानं परस्येत्याशयेनातीवेत्युक्तमिति बोध्यम् । ननु सामानाधिकरण्यप्रत्ययस्य तादात्म्यानालम्बनत्वे तत्रान्यथाख्यातिरेव न सिद्ध्येदिति कथं मन्दमित्यत आह ॥ **तथा हीति** ॥ सामानाधिकरण्यप्रत्ययस्य तादात्म्यालम्बनत्वेऽपि शुक्लः पटश्चलतीत्यादिप्रत्ययानां यत्तादात्म्यालम्बनता न तेषामन्यत्वं येषां चान्यत्वं न तेषां तादात्म्यालम्बनतेत्यन्यथाख्यातिवैलक्षण्यान्नातिव्याप्तिरिति वक्तुं गुणक्रियाजातीनां तदाश्रयाणां चैषु प्रत्ययेषु भानात्तादात्म्यावभासेनातिव्याप्तिं वदता च गुणादीनां स्वाश्रयैर्वा गुणादीनां परस्परं वा तदाश्रयाणां परस्परं वा तादात्म्यभानमाश्रित्यातिव्याप्तेर्वक्तव्यतया तदभिप्रायं ज्ञातुं पृच्छति ॥ **सामानाधिकरण्येति** ॥ तत्रासम्मतिरप्रयोजिकेत्यतोऽनुभवविरुद्धेऽर्थे संमतिर्न युक्तेत्याशयेनानुभवविरोधमाह ॥ **न हीति** ॥ अनुभवमतिक्रामन्तं प्रति बाधकमाह ॥ **तथात्र इति** ॥ वैषम्यं शङ्कते ॥ **दण्डीतीति** ॥ प्रत्ययस्य भेदाविनाभूतसम्बन्धार्थकतया भेदार्थत्वोक्तिः ॥ **शुक्लगुण इति** ॥ गुणवचनेभ्यो मतुपोलुग्वक्तव्य इति तदस्यास्त्यस्मिन्नित्यत्रत्येन वार्तिकेन शुक्ल इत्यस्योपपत्तावप्यन्तोदात्तत्वार्थमर्शआदिभ्योऽजित्यत्र अर्श आदिगणे वर्णादिति पाठात्तदभिप्रायेणैवमुक्तमिति द्रष्टव्यम् । [ गुणवचनेभ्य इति । गुणे तद्वति च प्रसिद्धाः शुक्लादय एव गृह्यन्ते न तु रूपादयोऽपि । शुक्लगुणोऽस्यास्तीति शुक्लः पटः । कृष्णः । तदस्यास्त्यस्मिन्निति मतुप् । गावोऽस्यास्मिन्वा सन्ति गोमान् । अस्तीति पुरुषवचने अविवक्षिते । कालस्तु विवक्षित एव । धने गते भाविनि वा धनवानयमिति प्रतीत्यभावात् । इतिशब्दो विषयविशेषलाभार्थः । तथा च वार्तिकम् । 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादय' इति । अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिविषयेषु भवन्तीत्यर्थः । भूमादिग्रहणं प्रायेण भूमादयोऽपि प्रतीयन्त इत्येवं परम् । भूमा बहुत्वम् । यस्य यावदुचितं तावदेव । निन्दायां ककुदावर्तिनी कन्या । प्रशंसायां रूपवान् । नित्ययोगे क्षीरिणो वृक्षाः । अतिशायने उदरिणी कन्या । संसर्गे दण्डी । संसर्गः संयोगः । तेन संयुक्तदण्ड एवोच्यते न तु गृहावस्थितदण्डोऽपि । ] शुक्ल इत्यादौ चलतीत्यादाविव भेदार्थप्रत्ययस्यास्फुटत्वादभेदादेव व्यवहारोपपत्तेर्न भेदज्ञानकल्पकं किञ्चिदित्यतोऽभियुक्तव्याख्यानं तद्व्यवहारस्य सम्बन्धविषयकत्वे दर्शयति ॥ **अत एवेति** ॥

स० — **अन्याकारोल्लेखीत्यन्तेनेति** ॥ शुक्तेरसद्रजतात्मताभासेऽपि रजतस्यासत्त्वेनावस्तुत्वाद्वस्तुनो वस्त्वन्तरावभास इति लक्षणस्यानभिमतत्वादन्यथाकारोल्लेखीत्यन्तेनेति युक्तम् । तेन द्वितीयलक्षणाभ्युपगमादन्यथाकारोल्लेखीत्यन्तेनेति न युक्तमिति शङ्काऽनवकाश इति ध्येयम् । उप-

**पादयिष्यमाणत्वादिति** ॥ असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हीत्यनेनेति शेषः ॥ **वक्ष्यामो हीति** ॥ यत्रारोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसदित्यादिनेति शेषः ॥ **सामानाधिकरण्यप्रत्ययो हीति** ॥ शुक्लः पट इत्यत्र शौक्ल्यं तदाश्रयः पटत्वं तदाश्रयश्चेति चतुष्टयं प्रतीयते । तत्र सामानाधिकरण्यविषयीभूतः किं शौक्ल्यरूपगुणस्य पटरूपद्रव्येणाभेदः उत शौक्ल्यरूपगुणस्य पटत्वजात्या अथ शौक्ल्याश्रयस्य पटत्वाश्रयेण । एवं चलति पट इत्यत्रापि द्रष्टव्यम् ।

प०—**इत्यन्तेनेति** ॥ अन्याकारोल्लेखिज्ञानमन्यालम्बनमन्यथाख्यातिरिति तु विरुद्धमित्यन्तेनेत्यर्थः ॥ **यथोक्तमिति** ॥ विष्णुतत्त्वनिर्णये ॥ **उपपादयिष्यमाणत्वादिति** ॥ 'असद्विलक्षणज्ञप्त्यै' इत्यादिव्याख्यावसर इति भावः । तादात्म्यतत्संसर्गमात्रमसदिति प्राचीनतार्किकरीतिं मत्वा शङ्कते ॥ **एवं सतीति** ॥ **उपरिष्टादिति** ॥ तत्रारोप्यमाणं रजतं सदेवेति केचिदातिष्ठन्त इत्यादिना तार्किकमतानुवादपूर्वं तन्निरासप्रस्ताव इत्यर्थः ॥ **अत्रेति** ॥ अविद्यमानतादात्म्यविषयकत्वेन ज्ञानस्य भ्रमत्वमित्युक्तार्थविषये केनचिद्दूषणमलग्नकमेवोक्तमित्यर्थः ॥ **इत्यादीति** ॥ क्रियाश्रयस्य जात्याश्रयेण जात्याश्रयस्य क्रियाश्रयेण गुणाश्रयेण वा क्रियाश्रयस्येत्यर्थः ॥ निर्विशेषाभेदाभिप्रायेणाह ॥ **असम्मतेरिति** ॥ **भेदार्थप्रत्ययेति** ॥ दण्डो स्यास्तीति दण्डी । 'तदस्यास्त्यस्मिन्नि'त्यर्थे 'अत इनिठनावि'तीनिप्रत्ययस्य भेदार्थबोधकस्य प्रयोगादित्यर्थः ॥ **तादृशमिति** ॥ ज्ञानव्यवहारयोरेकविषयकत्वेनैव जन्यजनकभावापन्नत्वादिति भावः ॥ **अकारप्रत्ययेति** ॥ व्यञ्जनस्य स्वरार्थत्वेनेत्संज्ञकत्वादकार इत्येवोक्तम् । तथाच यस्येतिप्रातिपदिकाकारलोपे शुक्ल इत्येव शुक्लवानित्यर्थे रूपमिति भावः । यद्यपि पञ्चमस्य द्वितीयपादे 'तदस्यास्त्यस्मिन्निति मतुबि'तिसूत्रे 'गुणवचनेभ्यो मतुपो लुग्वक्तव्यः' । शुक्लः पट इति वार्तिकान्निर्वाहो वृत्तौ दर्शितः । तथापि तत्प्रकरणे 'अर्श आदिभ्य' इतिसूत्रे वर्णादिति वृत्तौ उक्तपदस्य मञ्जर्यां वर्णवाचिनः शुक्लादिशब्दादपि अच्प्रत्ययो भवति । शुक्लोऽस्यास्तीति शुक्लः पट इत्युक्त्वा गुणवचनेभ्यो मतुपो लुग्वक्तव्य इत्येव सिद्धमेतदित्याशङ्क्य ये आद्युदात्ता वर्णवाचिनः शब्दाः तद्व्यत्यन्तोदात्तसिद्ध्यर्थमच्प्रत्ययविधानमित्युक्तत्वादर्शआदिभ्योऽजित्यनेनैव निर्वाहो दर्शितः । नापि खण्डो गौरित्युक्तमुपपादयति ॥ **न हि गौरिति** ॥

या०— अविद्यमानतादात्म्यावगाहिज्ञानस्य भ्रमत्वे कस्यचिद्दूषणमनूद्य दूषयति ॥ **अत्र केनचिदिति** ॥ **सामानाधिकरण्यप्रत्यय इति** ॥ शुक्लः पटश्चलतीत्यादिप्रत्यय इत्यर्थः । गुणादीनां द्रव्येण तादात्म्येऽनुभवविरोधं क्रमेणाह ॥ **न हि शुक्ल इत्यादिना** ॥ अतिप्रसङ्गं चाह ॥ **तथात्व इति** ॥ **स्फुट एवेति** ॥ प्रतीयत इति शेषः ॥

श्री०— **उपपादयिष्यमाणत्वात्** ॥ 'असद्विलक्षणज्ञप्त्यै इत्यत्रेति' शेषः ॥ **एवं सतीति** ॥ असतोऽपि प्रतीत्यङ्गीकार इत्यर्थः ॥ **कुतः सत्त्वमिति** ॥ अन्यत्र विद्यमानमेवान्यत्रारोप्यत इत्येवंरूपान्यथाख्यातिरङ्गीकृतेति भ्रान्त्येयं शङ्केति ज्ञातव्यम् ॥ **वक्ष्याम इति** ॥ शुक्तिकासन्निकृष्टं दुष्टमिन्द्रियं तमेवात्यन्तासद्रजतात्मनावगाहमानं ज्ञानं जनयतीत्यङ्गीकारादित्यत्रेत्यर्थः ॥ **तस्येति** ॥ तादात्म्यस्येत्यर्थः । तथाचाविद्यमानतादात्म्यावगाहिज्ञानस्य भ्रमत्वे खण्डो गौरित्यादिसविकल्पकप्रत्ययेष्वतिव्याप्तिरित्यर्थः । **चलति** चलनवान् । जातेर्द्रव्येण तादात्म्यावलम्बनत्वे उदाहरणद्वयम् ॥ **खण्डो गौरिति** ॥ खण्डत्वजातिः खण्डरूपा व्यक्तिश्चैकैवेत्यर्थः । एवं गौरित्यत्रापि गोत्वं जातिः गोरूपा व्यक्तिश्चैकैवेत्यर्थः ॥ **खण्डत्वं गोत्वं च पिण्ड एवेति** ॥ खण्डत्वं पिण्ड एव खण्डरूपा व्यक्तिरेव गोत्वं च पिण्ड एव गोरूपा व्यक्तिरेवेति योज्यम् । सामानाधिकरण्यप्रत्ययस्य गुणादेर्धर्मस्य धर्मिणा तादात्म्यावलम्बनत्वेऽनुभवविरोधमुक्त्वाऽतिप्रसङ्गञ्चाह ॥ **तथात्व इति** ॥ इत्यस्यापीति सामानाधिकरण्यप्रत्ययस्यापि ॥ **ज्ञानमपि तादृशमिति** ॥ दण्डदेवदत्तभेदविषयकमेव ज्ञानं तत्रास्ति न तु दण्डदेवदत्ततादात्म्यविषयकमतो नातिप्रसङ्गः । शुक्लः पट इत्यादौ तु भेदार्थप्रत्ययप्रयोगाभावादत्र ज्ञानं तादात्म्यविषयकमेवेति तत्रातिव्याप्तिः स्यादेवेति भावः । प्रत्ययो मत्वर्थीय इनुप्रत्ययः । तादृशं भेदावगाहि । तथाच न तादात्म्यविषयकत्वमिति भावः। **इत्यत्रार्थे** इत्यस्मिन्मतुबर्थे ॥ **अकारप्रत्ययेति** ॥ भेदार्थकेत्यर्थः । ननु गौरित्यत्र कथमर्थभेदः । भेदार्थकप्रत्ययाभावादित्यत आह ॥ **न हि गौरितीति** ॥ तथात्वे गोगोत्वयोस्तादात्म्ये ॥ **त्वप्रत्ययेति** ॥ गोर्भावो गोत्वमिति भेदार्थकत्वप्रत्ययेत्यर्थः ॥ **अत एवेति** ॥ शुक्लः पट इत्यत्र भेदार्थकमत्वर्थीयाकारप्रत्ययसद्भावादेवेत्यर्थः ।

च०— **यथोक्तमिति** ॥ विष्णुतत्त्वविनिर्णय इति पूरणीयम् ॥ **उपपादयिष्यमाणत्वादिति** ॥ असद्विलक्षणज्ञप्त्या इत्यादिनेत्युपस्कर्तव्यम् । चिरन्तननैयायिकैकदेशिमते तादात्म्यमात्रं तत्संसर्गमात्रं वा असन् शिष्टं तु सर्वं सदेवेतिवत्प्रकृतमतेऽपि तथेति विपर्यस्यन् शङ्कते ॥ **एवमिति** ॥ अलीकतादात्म्यावगाहिज्ञानस्य विपर्यासरूपत्वे वाद्यन्तरोक्तदूषणप्रत्याचिख्यासयानुवदति ॥ **अत्र केनचिदिति** ॥

**सु०—अत एव न द्वितीयः । न हि शुक्लः पटश्चलतीत्यस्य शौक्ल्यं पटत्वं चलनं चैकमित्यर्थश्चेतसि चकास्ति प्रतिपत्तॄणाम् । तथा सति दण्डी कुण्डली देवदत्त इत्यस्यापि ज्ञानस्य दण्डकुण्डलदेवदत्तत्वतादात्म्यविषयतापातात् ॥।॥ तृतीयस्तु स्यादेव । समानमेकमधि-**

करणं येषां ते हि समानाधिकरणास्तेषां भावः सामानाधिकरण्यम् । तथा च गुणादीनामाश्रयेण परस्परं च भेदः आश्रयाणां चाभेदः स्फुट एव ॥ न हि स्वयमेव स्वस्याधिकरणम् । नापि समानमधिकरणं येषामिति परस्पराभेदे युज्यते । न चाश्रयभेदे तस्य समानताऽस्ति । न च गुणाद्याश्रयस्य भेदे प्रमाणमस्ति । विशिष्टयोर्भेदेऽपि न तत् गुणाद्याश्रयः । किन्तु गुणाद्याश्रयाश्रितं वस्त्वन्तरं तत् ॥ एवञ्च यत्र भेदो न तदभेदेन प्रतिभासते यच्चाभेदेन प्रतिभासते न तत्र भेद इति क्वातिव्याप्तिः ॥ ननु गुणादीनामाश्रयेण परस्परं चाभेदो भगवतो मुनेः सिद्धान्तः । क्वचिद्भेदाभेदौ च । सामानाधिकरण्यप्रतीतिस्तु भेदनिष्ठैव व्याख्याता । तथा च पुनः शुक्लः पट इत्यादिप्रत्यया विभ्रमाः प्रसक्ताः । मैवम् । सविशेषत्वाङ्गीकारात् । विशदं चैतद्विशेषनिरूपणे व्युत्पादयिष्यामः ॥

व्या० — स्यादेवेत्येवशब्देन आश्रयाभेदभानस्य अनुभवसिद्धतां दर्शयति । ननु गुणादीनामाश्रयेण परस्परं भेद आश्रयाणां चाभेद इति कुतोऽर्धजरतीयमित्यतोऽनुभववशादिति समाधाने उक्तरीत्या सिद्धेऽपि सामानाधिकरण्यशब्दार्थविचारे क्रियमाणे प्रतीतेः सामानाधिकरण्यविषयकत्वं वदतोक्तप्रकारेण भेदादिविषयत्वस्यावश्यं स्वीकर्तव्यतया तदनङ्गीकारे तादृशप्रत्ययानुपपत्तिरिति बाधकमभिप्रेत्य सामानाधिकरण्यशब्दार्थमाह ॥ **समानमिति** ॥ नन्वेवं शब्दार्थेऽपि कथमुक्तार्थस्य स्फुटतेत्यतो बाधकोक्तिमुखेन तेन तेनांशेन तत्तदर्थसिद्धिं दर्शयति ॥ **न हीत्यादिना** ॥ नन्वेवमाश्रयतादात्म्यभानाङ्गीकारे तत्तादात्म्यस्यासत्त्वात्सामानाधिकरण्यप्रत्ययस्य भ्रमत्वं स्यादेवेत्यतस्तद्भेदग्राहकप्रमाणस्य बाधकस्याभावान्न तादात्म्यप्रतीतेर्भ्रमत्वमित्याशयेनाह ॥ **न च गुणाद्याश्रयस्येति** ॥ ननु गुणक्रियाविशिष्टयोर्भेदप्रतीतिरेव बाधिकेत्यत आह ॥ **विशिष्टयोरिति** ॥ सिद्धान्तेऽपि यत्राभेदप्रतीतिस्तत्रैव विशिष्टयोरभेदोऽन्यत्र तु भेद एवेति भावः । यदर्थमयं यत्नस्तदाह ॥ **एवं चेति** ॥ तर्हि सिद्धान्तानुसारेण पुनर्विभ्रमत्वमित्याशङ्कते ॥ **नन्विति** ॥ सिद्धान्त इत्यभ्युच्चययुक्तित्वं व्यावर्तयति ॥ **भगवत इति** ॥ वस्तुतः प्रामाणिकत्वमेव न तु तथाऽभ्युपगममात्रमिति ध्वनयति ॥ **क्वचिदिति** ॥ अयावद्द्रव्यभाविगुणादिस्थले । भवदुक्तरीतिमनुरुद्ध्यैवैतद्बाधकप्रवृत्तिरित्याशयेनाह ॥ **व्याख्यातेति** ॥ गुणादीनामाश्रयेण परस्परं सविशेषाभेदाङ्गीकारान्नानुपपत्तिरित्याह ॥ **सविशेषत्वेति** ॥ नन्वेवमपि भेदनिष्ठसामानाधिकरण्यप्रतीतेरनुपपत्तिरेवेत्यतस्तत्प्रतीतेः सविशेषविषयत्वाङ्गीकाराददोष इत्याह ॥ **सविशेषत्वेति** ॥ ननु कुतो गुणादीनां सविशेषाभेदः कुतश्चास्याः प्रतीतेस्तद्विषयकत्वं कथं च भेदनिष्ठप्रतीतेः सविशेषाभेदविषयत्वेन निर्वाहः, अन्यथा दण्डीत्यादि-

प्रत्ययानामपि सविशेषाभेदविषयकतया निर्वाहोपपत्त्या सामानाधिकरण्यप्रतीतेर्भेदनिष्ठता कुत्रापि न स्यात्, सविशेषाभेदविषयत्वे चास्याः प्रतीतेरभेदाभिभवेन भेदव्यवहारजनकत्ववद्विशेषाभिभवेनाभेदव्यवहारजनकत्वञ्च स्यात्; इत्यादिबाधकादुक्तमनुपपन्नम्; इत्यतो गुणादीनां दण्डादिवद्भेदेनानुपलम्भेन गुण्यादीनां परस्परं च सविशेषाभेदस्य विशेषस्य भेदकार्यनिर्वाहकतायाश्चाभेदभेदकार्यप्रतीत्यन्यथानुपपत्त्या जन्माधिकरणादावेतत्प्रतीतेः सविशेषाभेदविषयकत्वव्यवहारविशेषजनकत्वादेश्च सविशेषावसीयत इति वाक्यव्याख्यानावसरे समयपादे समर्थयिष्यमाणत्वान्नानुपपत्तिरित्याशयेनाह ॥ **विशदं चेति** ॥ एवं च पूर्वं भेदशब्दप्रयोगो विशेषाभिप्रायेण, दण्डीत्यादिबाधकोक्तिस्तद्वद्गुणादीनां निर्विशेषाभेदाभावाभिप्रायेण, आश्रयाभेदोक्तिर्निर्विशेषाभेदाभिप्रायेण। तथा च 'यत्र विशेषो न तन्निर्विशेषाभेदेन भासते यच्च निर्विशेषाभेदेन भासते न तत्र विशेष इति नियम' एवं चेत्यादिनाऽभिमत इति द्रष्टव्यम् । केचित्तु तार्किकमतेन पूर्वं समाधानमिति वदन्ति । तत्र विशिष्टयोरित्यादिग्रन्थास्वारस्यं बोध्यम् । अनेनात्र केनचिदित्युक्तदूषणपरिहारप्रकारस्य मूलारूढतोक्तेति द्रष्टव्यम् ।

**स०**—ननु गुणादेर्द्रव्येणाभेदेऽपि तदधिकरणत्वसंभवेन कथमधिकरणत्वोक्त्या भेदसिद्धिस्तत्राह ॥ **न हि स्वयमेवेति** ॥ गुणादीनां परस्परभेदमुपपादयति ॥ **नापीति** ॥ 'अन्यथा एषामित्यनुपपन्नमिति भावः । गुणाश्रयस्य क्रियाश्रयेणाभेदः आश्रयस्य समानत्वोक्त्या कथं लभ्यत इति तत्राह ॥ **न चाश्रयभेद इति** ॥ **व्युत्पादयिष्याम इति** ॥ जन्माधिकरण इति शेषः ।

**प०**— **चकास्तीति** ॥ चकासृ दीप्तौ भातीत्यर्थः । आश्रयेण भेदः, परस्परं च भेदः, आश्रयाणामभेदः, इत्येतत्क्रमेणोपपादयति ॥ **न हीति** ॥ आश्रयाणामिति बहुवचनमाधेयानां बहुत्वात्तदभिप्रायेणौपचारिकमिति भावः ॥ **विशिष्टयोरिति** ॥ गुणविशिष्टक्रियाविशिष्टयोरित्यादेरित्यर्थः । विशिष्टं पदार्थान्तरमिति भावेनाह ॥ **वस्त्वन्तरमिति** ॥ **क्वातिव्याप्तिरिति** ॥ मदुक्तान्यथाख्यातिलक्षणस्येति योज्यम् ॥ **भगवतो मुनेरिति** ॥ सूत्रकर्तुः भाष्यकर्तुराचार्यस्य चेत्यर्थः । तथैव तत्त्वविवेकादावुक्तेः । उभयव्यपदेशादौ वक्ष्यमाणत्वाच्चेति भावः ॥ **व्युत्पादयिष्याम इति** ॥ जन्माधिकरणे 'अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यत' इत्यादिव्याख्यावसरे कार्यकारणयोश्चेवेत्यादिसमवायनिरासकग्रन्थव्याख्यावसरे चेति भावः ॥

**या०**— गुणादीनामाश्रयेण भेदमुपपादयति ॥ **न हि स्वयमेवेति** ॥ तेषां परस्परं भेदमुपपादयति ॥ **नापि समानमिति** ॥ येषामित्युक्तबहुत्वस्य भेदव्याप्तत्वादिति भावः । आश्रयाभेदमुपपादयति ॥ **न चाश्रयभेद इति** ॥ समानता एकता ॥ **तद्गुणाद्याश्रय इति** ॥ आत्माश्रयत्वप्रसङ्गादिति भावः ।

**श्री०— तस्य** आश्रयस्य ॥ **समानताऽस्तीति** ॥ एकताऽस्तीत्यर्थः । तथा च गुणाश्रयस्य क्रियाश्रयेणाभेदस्तु स्यादेवेत्यर्थः । गुणाश्रयस्य क्रियाश्रयेण भेदे प्रमाणाभावादेव तयोरभेदोऽङ्गीकार्य इत्याह ॥ **न चेति** ॥ ननु गुणविशिष्टक्रियाविशिष्टयोर्भेदः प्रत्यक्षसिद्ध इति चेत्तत्राह ॥ **विशिष्टयोरिति** ॥ अस्माभिर्गुणाश्रयेणाभेदः कथ्यते न तु गुणविशिष्टक्रियाविशिष्टयोः । तयोस्तु भेद एव । न च वाच्यं गुणविशिष्टस्यैव गुणाश्रयत्वात् क्रियाविष्टस्यैव क्रियाश्रयत्वात् गुणाश्रयक्रियाश्रययोरभेदे विशिष्टयोरेवाभेदः प्राप्त इति । आत्माश्रयत्वप्रसङ्गेन गुणविशिष्टस्य गुणाश्रयत्वाभावात् । क्रियाविशिष्टस्य च क्रियाश्रयत्वाभावात् । तथाच विशिष्टयोर्भेदेऽपि न तद्विशिष्टं गुणाद्याश्रयः किं नाम गुणाद्याश्रयाश्रितं वस्त्वन्तरम् । तेन भिन्नाभिन्नं पदार्थान्तरमेवेति यावत् । एवं च विशिष्टयोर्भेदेऽपि गुणाद्याश्रययोरभेद एवेत्याशयः । एवं सत्यविद्यमानतादात्म्यावगाहिज्ञानस्य भ्रमत्वेन कुत्राप्यतिव्याप्तिरित्याह ॥ **एवं चेति** ॥ **यत्र भेद इति** ॥ गुणादीनामाश्रयेण परस्परं चेत्यर्थः ॥ **न तदभेदेनेति** ॥ तादात्म्यवस्त्वेनेत्यर्थः । तथाच तत्र तादात्म्यावगाहित्वं नास्तीति नोक्तलक्षणस्यातिव्याप्तिरिति भावः ॥ **गुणादीनामिति** ॥ यावद्द्रव्यभाविनां धर्माणां ज्ञानानन्दादीनामाश्रयेण जीवचैतन्येनाभेदः परस्परं चाभेदो भगवतो मुनेरानन्दतीर्थस्य सिद्धान्त इत्यर्थः ॥ **क्वचिदिति** ॥ अयावद्द्रव्यभाविनि घटतद्रूपादावित्यर्थः ॥ **व्याख्यातेति** ॥ समानमेकमधिकरणं येषां ते इत्यादिनेत्यर्थः ॥ **तथाच पुनरिति** ॥ सामानाधिकरण्यप्रतीतेरत्यन्तभेदविषयकतयैव व्याख्यातत्वेनात्यन्ताभेदस्थले भेदाभेदस्थले च सर्वत्र सामानाधिकरण्यप्रत्ययस्य भेदावगाहित्वस्यैव प्राप्त्या भगवदुक्ताभेदस्य प्रत्यक्षसिद्धस्यायुक्ततया शुक्लः पट इत्यादिप्रत्ययानामविद्यमानतादात्म्यावगाहित्वप्राप्त्या पुनरतिव्याप्तिः स्यादेवेत्यर्थः ॥ **सविशेषत्वाङ्गीकारादिति** ॥ तथा चात्यन्ताभेदस्थले सामानाधिकरण्यप्रतीतिरभेदनिष्ठैव । भेदनिष्ठतया व्याख्यानं तु सविशेषाभेदाङ्गीकारेणोपपन्नं विशेषस्य भेदकार्यकारित्वाङ्गीकारात् । यत्र तु भेदाभेदौ तत्र तु न कोऽपि दोषः । तथाच सामानाधिकरण्यप्रतीतेस्तादात्म्यावगाहित्वेऽपि तस्य तादात्म्याविद्यमानत्वाभावान्नातिव्याप्तिरिति भावः ।

**सु०— यत्पुनरन्याकारोल्लेखीत्यादिनाऽस्मदभिमतान्यथाख्यातेरनुभवविरोधं प्रतिज्ञाय तदुपपादनाय यत्सन्निकृष्टकरणेनेत्यन्तेनालम्बनलक्षणनिराकरणं कृतं तदनुमतमेवास्माकम् । यद्विज्ञानं यत्सन्निकृष्टकरणेन जन्यते स तस्य विषय इत्यङ्गीकारात् ॥ नन्वत्रापि दोषोऽभिहितइति चेन्न । सन्निकर्षस्यापि कारणतया विवक्षितत्वेन तस्यासम्बद्धत्वात् । न हि चक्षुरादेराकाशादिसन्निकर्षो रूपादिज्ञानकारणम्, नापि वाक्यस्याकाशादिसन्निकर्षो वाक्यार्थज्ञाने**

हेतुः, न च लिङ्गज्ञानस्यात्मना सन्निकर्षो लिङ्गिज्ञाननिमित्तम्; किं नामावर्जनीयसन्निधयस्ते सन्निकर्षाः । लिङ्गस्य साध्यधर्मिसन्निकर्षो लिङ्गिज्ञानकारणमिति चेन्न लिङ्गज्ञानस्य करण-तयाऽभ्युपगमात् । अनेनैव वाक्यस्य श्रोतृश्रोत्रसन्निकर्षाश्रयणेन दूषणं परास्तम् वाक्यज्ञान-स्यैव करणत्वाङ्गीकारात् । तथाऽपि प्रत्यभिज्ञायां तत्तांशेन चक्षुरादेर्लिङ्गिना च लिङ्गज्ञानस्य वाक्यार्थेन वाक्यज्ञानस्य सन्निकर्षाभावादविषयतापत्तिरिति चेन्न असन्निकृष्टज्ञापनेऽति-प्रसङ्गात् । तदनुभवजनितसंस्कारसहकृतेनेन्द्रियेण प्रत्यभिज्ञा जायते, तद्व्याप्तलिङ्गविषयेण च लिङ्गज्ञानेन लिङ्गिज्ञानमुत्पद्यते, संसर्गधर्मकपदार्थवाचिपदसमुदायरूपवाक्यविषयज्ञानेन वाक्या-र्थज्ञानं जन्यते; अतो नातिप्रसङ्ग इति चेत्तर्ह्यभ्युपगतः सन्निकर्षः । न हि संयोगादिरेव सन्निकर्षः किं नाम प्रत्यासत्तिमात्रम् ।

वा०–**इत्यन्तेनेति** ॥ अत्रापि पूर्ववदेव व्याख्यानम् ॥ **तदनुमतमेवेति** ॥ एतत्पर्यन्तं विषयत्व-लक्षणनिराकरणं पूर्वपक्षमुखेनास्माभिरेव कृतमिति ध्वनयति । **दोषो**ऽतिव्याप्त्यव्याप्तिलक्षणः । तत्राति-व्याप्तिं तावदुद्धरति ॥ **सन्निकर्षस्येति** ॥ सन्निकर्षकारणताविवक्षामात्रेण प्रत्यक्षवाक्यानुमानस्थलेषूक्तसन्नि-कर्षाणामन्यथासिद्धयोक्तातिव्याप्तेरुद्धार इत्याह ॥ **न हीत्यादिना** ॥ यद्यपि लिङ्गज्ञानस्थलेऽतिव्याप्त्युद्धारो लिङ्गिज्ञानकारणताभ्युपगमानन्तरं युक्तः । अन्यथा लिङ्गस्येत्युत्तरग्रन्थास्वारस्यापत्तेः । तथाऽप्यवर्जनीयसन्नि-धित्वरूपैकसमाधानसंभवेन लाघवमनुसृत्यात्राभिहित इति द्रष्टव्यम् । एवं कारणत्वान्तर्गतानन्यथासिद्धयंश-व्यावर्त्यं प्रदर्श्य लिङ्गपक्षसन्निकर्षस्यान्यथासिद्धत्वात्तमादाय पक्षस्य लिङ्गिज्ञानविषयत्वापत्त्याऽतिव्याप्तिरेवे-त्यतोतीतादिस्थले लिङ्गस्यातीतत्वेन तस्याकारणतया तत्सन्निकर्षस्यापि करणसन्निकर्षत्वाभावान्नातिव्याप्तिरिति परिहर्तुं ज्ञानस्य करणत्वोक्तिनिवर्त्यमाशङ्कते ॥ **लिङ्गस्येति** ॥ यद्यप्यत्र पक्षस्याप्यनुमितिविषयत्वमिष्टमेवेति शङ्का निर्दलेव भाति तथाऽपि प्रत्यक्षादिप्रमाणान्तरसिद्धस्यैव पक्षत्वनियमान्न तस्यानुमित्यसाधारणविषयत्व-मित्याशयात् । यत्तु तादृशलिङ्गधर्मितारूपसन्निकर्षाश्रयत्वेन पक्षस्यैव विषयत्वं स्यान्न तु लिङ्गिन इति तत्राव्याप्तिरित्येतत्तात्पर्यमिति । तन्न । अतिव्याप्तिप्रायपाठविरोधात् । लिङ्गज्ञानकरणताभ्युपगमेऽपि लिङ्गस्येव तज्ज्ञानस्यापि लिङ्गिना सन्निकर्षानुपपादनेन लिङ्गिन्यव्याप्तेः परिहारवाक्येनाप्यपरिहाराच्च । न च ततोऽप्यग्रिमग्रन्थेन तत्परिहार इति वाच्यम् । तथा सति तेनैवोपपत्तावेतच्छङ्कासमाधानयोरुभयोरपि वैयर्थ्यमेवेत्यास्तां तावत् । अतीतादिस्थले लिङ्गाद्यभावेऽप्यनुमित्यादिदर्शनेन लिङ्गज्ञानादेरेव करणत्व-स्यावश्याभ्युपगमनीयतया लिङ्गस्य करणत्वाभावान्नातिव्याप्तिरिति पक्षस्यासाधारण्यविषयत्वाभा-वाभ्युपगमेनैव समाधत्ते ॥ **लिङ्गज्ञानस्येति** ॥ श्रोत्रसन्निकृष्टवाक्यजन्यवाक्यार्थज्ञाने श्रोत्रस्य विषयत्वा-

पत्तिरिति वाक्यस्य करणत्वाभावेन परिहार्येत्याह ॥ **अनेनैवेति** ॥ परिहारसाम्येऽप्यस्य पृथक्करणं पक्षस्य स्वसाध्यधर्मित्वाल्लिङ्गस्य तत्सन्निकर्षापेक्षा वाक्यस्य स्वग्राहकेन्द्रियत्वाच्छ्रोत्रसन्निकर्षापेक्षेति विशेषं द्योतयितुमिति ध्येयम् । यद्यपि श्रोत्रवाक्यसन्निकर्षस्य वाक्यज्ञानजनकतयाऽन्यथासिद्धत्वेन न वाक्यार्थ-ज्ञानजकत्वमित्यपि समाधातुमुचितम् । तथाऽपि ज्ञानकरणत्वस्य स्वसिद्धान्ततया तत्र प्राप्तानुपपत्ति-परिहारार्थकोपक्षेपाय च ज्ञानकारणत्वोक्त्या वाक्यस्य कारणत्वाभावेनैव समाधानसम्भवे सन्निकर्षे विवक्षि-तकारणत्वाश्रयणेन न किमपि प्रयोजनमित्याशयात् । अयमाशयो लिङ्गज्ञानविषयेऽपि द्रष्टव्यः । एवमतिव्याप्तिं निरस्य पूर्वपक्षोद्भावितां तत्तांशेऽव्याप्तिमिदानीमुपक्षिप्तलिङ्गज्ञानवाक्यज्ञानविषये च तां सन्निकर्षोपपादनेन परिहर्तुं तच्छङ्कामुत्थापयति ॥ **तथाऽपीति** ॥ परमुखेनैव सन्निकर्षविशेषं तत्रापि द्रढयितुमसन्निकृष्टज्ञापनेऽतिप्रसङ्गात्सन्निकर्षेऽवश्याभ्युपगमनीये किं तद्विशेषचिन्तया तावतैवाव्याप्ति-परिहारादिति तावत्समाधत्ते ॥ **असन्निकृष्टेति** ॥ ननु नियामकसद्भावान्नासन्निकृष्टज्ञापनेऽप्यतिप्रसङ्ग इत्याशङ्कते ॥ **तदनुभवेति** ॥ ननु संयोगादेरनङ्गीकारान्न सन्निकर्षाभ्युपगम इत्यतोऽतिप्रसङ्गभञ्जकं नियामकं प्रत्यासत्तिपदाभिधेयं सन्निकर्ष इत्युच्यते । संयोगादेरपि सन्निकर्षत्वेन विवक्षायामेतदेव निमित्तमिति तादृशनियामकाभ्युपगमे कथं सन्निकर्षानभ्युपगम इत्याह ॥ **न हीति** ॥

**स० — यत्सन्निकृष्टकरणेनेत्यन्तेनेति** ॥ एतत्पर्यन्तेनेत्यर्थः । लिङ्गकरणतापक्षमालम्ब्य शङ्कते ॥ **लिङ्गस्य साध्यधर्मीति** ॥ तथाच लिङ्गिज्ञानमपि पक्षविषयकं स्यादिति भावः । न चानु-मितेः पक्षविषयकत्वादिष्टापत्तिः । पर्वतो वह्निमानिति ह्यनुमितिः । न तु वह्निमानित्येव तथाऽननुभवा-त्सिद्धार्थतापत्तेश्चेति चेन्न । लिङ्गिविषयकत्वांशे पक्षविषयकत्वं स्यादित्यापादनात् । एके तु असाधारण-विषयत्वस्य लक्ष्यत्वात् । व्याप्यस्य च व्यापकमेवासाधारणविषय इति कथमतिव्याप्त्यभिधानासङ्गतिः । अत एव पक्षतावच्छेदकतत्संबन्धादीनां विषयकत्वात्तत्र चोक्तलक्षणाभावादव्याप्तिरिति निरस्तम् । नहीदं विषयत्वसामान्यलक्षणम् । किन्त्वसाधारणं जन्यज्ञानविषयत्वलक्षणमिति न कश्चिद्दोष इत्याहुः । अन्ये तु लिङ्गस्य पक्षेणैव संबन्धात्साध्येनासंबन्धात्पक्षस्यैव विषयत्वं न वन्ह्यादेरिति शङ्काऽर्थः । परिहारार्थस्तु लिङ्गज्ञानस्यैव करणत्वात्तस्य च पक्षेणासंबन्धान्न तस्य विषयत्वम् । तद्व्याप्तलिङ्गविषयेण लिङ्गज्ञानेने-त्यादिवक्ष्यमाणप्रकारेण लिङ्गज्ञानस्य साध्येन संबन्धोपपत्तेस्तस्य विषयत्वोपपत्तिरित्याहुः । वाक्यज्ञानस्य कारणत्वाभ्युपगमात्तस्य च श्रोत्रेणासन्निकर्षान्न तत्रातिव्याप्तिरित्याह ॥ **अनेनैवेति** ॥

**प० — असम्बद्धत्वादिति** ॥ कारणीभूतसम्बन्धहीनत्वादित्यर्थः । आकाशादिविषयतैवं चापद्यते-त्यादिप्रागुक्तदोषं निराह ॥ **नापि वाक्यस्येति** ॥ **साध्यधर्मीति** ॥ साध्यं प्रति यो धर्मी पर्वतादिः तत्स-

न्निकर्ष इत्यर्थः । तथाच तस्यानुमितिविषयत्वं स्यादिति भावः । तदुक्तं न्यायामृते । पक्षसन्निकृष्ट-लिङ्गजानुमितिं प्रति पक्षोऽपि विषयः स्यादित्यादि । ननु नेदमनिष्टं साध्यधर्मिणोऽप्यनुमितिविषयत्वात् । यद्वक्ष्यति भक्तिपादे साध्यसिद्धेरदोषत्वोक्तिप्रस्तावेऽनुमितिविषयः पक्ष इति । मैवम् । तत्सन्निकृष्ट-करणजन्यज्ञानं प्रति सविषय इत्येवंरूपविवक्षितविषयत्वस्य साध्य एव सत्त्वेन साध्यधर्मिण्यभावात् । सन्निकर्षस्य लिङ्गे व्याप्तिरूपत्वेनाभिमतत्वात् । न हि वक्ष्यमाणदिशा यद्व्याप्तलिङ्गविषयकज्ञानजन्यं ज्ञानं यत् तत्प्रति स विषय इत्युक्तिदशायां साध्यधर्मिणो विषयत्वशङ्कावकाशोऽस्ति । न चैवं पर्वता-देरनुमितावभानं शङ्क्यम् । भानस्य विषयत्वाप्रयुक्तत्वात् । तथात्वे शुक्तिरूप्यादाविदं रूप्यमिति ज्ञाने रजतस्याभानापत्तेः। 'रजतं दृष्टमिति भ्रममात्रत्वादि'त्यादिमिथ्यात्वानुमानखण्डनटीकादौ शुक्तिरजतस्योक्त-विवक्षया विषयत्वाभावकथनात् । अत्राप्यग्रे शुक्तेरेव विषयत्वेन रजते विषयत्वाभावस्य स्पष्टत्वात् । न चातिप्रसङ्गः । रूप्यावभासादौ दोषस्यैवानुमितिविषयधर्मित्वादेर्नियामकत्वात् । अनुमितिविषयः पक्ष इत्युक्तिस्तु पर्वतादेरनुमितौ स्फुरणमात्रेण शुक्तिरूप्यस्य विषयत्वव्यवहार इव वाऽस्तु वेत्यादिवक्ष्य-माणलक्षणानुरोधेन वोपपत्तेः । केचित्तु साध्यधर्म्येव विषयः स्यादिति तात्पर्यं वर्णयन्ति । अन्ये तु लिङ्गिज्ञानांश एव धर्मी विषयः स्यादित्यभिप्रायमाहुः ॥ **लिङ्गज्ञानस्येति** ॥ अतीतादिस्थलेऽप्यनुमिति दर्शनादिति भावः । विस्तृतमेतत्तर्कताण्डवे तृतीयपरिच्छेदे ॥ **श्रोत्रेति** ॥ श्रोत्रसन्निकृष्टवाक्यजन्य-वाक्यार्थज्ञानं प्रति श्रोत्रं विषयः स्यादिति दूषणमित्यर्थः । अतिव्याप्तिं निरस्याव्याप्तिं चाशङ्क्य निराह ॥ **तथापीत्यादिना** ॥ परमुखेनैव तदनुभवेत्यादिना समाधिं वाचयितुं सन्निकर्षाभाववादिनं प्रति अनिष्टं तावदाह ॥ **असन्निकृष्टेति** ॥

**या०**—लिङ्गकरणतापक्षमालम्ब्य शङ्कते ॥ **लिङ्गस्येति** ॥ तथा च लिङ्गिज्ञानमपि पक्षविषयकं स्यादिति भावः । न चानुमितेः पक्षविषयकत्वादत्रेष्टापत्तिः । लिङ्गिविषयकत्वांशे पक्षविषयकत्वं स्यादि-त्यापादनात् । अंशभेदविवक्षायाश्चावश्यकत्वात् । अन्यथा सुरभिचन्दनमित्यादिप्रत्ययानां विशेषणांशे विशेष्ये यः सन्निकर्षस्तज्जन्यत्वाभावेनाव्याप्त्यापत्तेः । केचित्तु । तादृशलिङ्गधर्मिभावरूपकरणसन्निकर्षा-श्रयत्वेन पक्षस्यैव विषयत्वं स्यात् न लिङ्गिनः । तथा च तत्राव्याप्तिरिति अत्र तात्पर्यमाहुः ॥ **सन्नि-कर्षाभावादिति** ॥ संयोगसमवाययोरेव सन्निकर्षत्वादिति भावः ॥

**श्री०**— साध्यधर्मी पक्षः ॥ **लिङ्गिज्ञानकारणमिति** ॥ तथाच पक्षसन्निकृष्टेन लिङ्गेन न लिङ्गि-ज्ञानं जायत इति लिङ्गिज्ञानं पक्षविषयकं स्यादित्यर्थः ॥ **श्रोत्रेति** ॥ श्रोत्रसन्निकृष्टवाक्यजन्यवाक्या-र्थज्ञानं प्रति श्रोत्रं विषयः स्यादिति दूषणं वाक्यस्य कारणत्वभावेन परिहार्यमित्यर्थः ॥ **संसर्गेत्यादि** ॥ संसर्गधर्मका ये पदार्थास्तद्वाची यः पदसमुदायस्तद्रूपं यद्वाक्यं तद्विषयकज्ञानेनेत्यर्थः ।

च०— ज्ञायमानलिङ्गमनुमितिकरणमिति मतमाश्रित्यातिव्याप्तिमाशङ्कते ॥ **लिङ्गेति** ॥ अत्र साध्यपदोपादानं दृष्टान्ततयोपयुज्यते । अत्र व्याचक्षाणाः यद्यपि पक्षस्यानुमितिविषयत्वमिष्टमेवेतिशङ्का निर्दलैव भाति तथापि प्रत्यक्षादिप्रमाणान्तरसिद्धस्यैव पक्षत्वनियमात् न तस्यानुमित्यसाधारणविषयत्वमित्याशयादिति व्याचक्षते । अनयैव भङ्ग्या शङ्कमानाः इमामेव समाहितिं लिङ्गिविषयकत्वांशे पक्षविषयकत्वं स्यादित्यापादनात् । अंशभेदविवक्षायाश्चावश्यकत्वात् । अन्यथा सुरभिचन्दनमित्यादौ विशेषणांशे विशेष्ये यः सन्निकर्षः तज्जन्यत्वाभावेनाव्याप्त्यापत्तेरिति विन्यासभेदेन विवृण्वते । यद्यपि सन्निकर्षस्योभयाश्रिततया करणीभूतलिङ्गेऽप्यतिव्याप्तिशङ्का सुवचा लिङ्गोपहितलैङ्गिकभानस्याकरे प्रत्याख्यातत्वात् । तथापि सिद्धान्ते तुल्यदिशेन्द्रियादावतिप्रसङ्गवारणाय करणप्रतियोगिकत्वघटितधर्मावच्छिन्नसन्निकर्षवृत्त्याधेयतानिरूपकत्वपर्यन्तस्यावश्यं विवक्षणीयतया तत्रापि तस्याः दुर्वचत्वात् । सन्निकर्षाभावात् संयोगादिषट्कान्यतमाभावात् ॥ **तदनुभवेत्यादि** ॥ तत्तया स्वगोचरानुभवजनितसंस्कार एवालौकिकी प्रत्यासत्तिरिन्द्रियस्य स्वनिरूपितव्याप्त्यवच्छिन्नहेतुवृत्तिप्रकारताकत्वमेव साध्येन लिङ्गज्ञानस्य स्वनिरूपितप्रतियोग्यनुयोगिभावापन्नपदार्थबोधकपदघटितकूटविषयकत्वं संसर्गेण वाक्यज्ञानस्य प्रत्यासत्तेरित्यर्थः ।

**सु०—तथाऽपि रूपप्रतीतेरात्मा विषयः प्रसज्येत । तत्र मनसः करणत्वात् । आत्ममनःसन्निकर्षस्यापि रूपज्ञानं प्रति कारणत्वादिति चेन्न । असाधारणकारणस्य विवक्षितत्वात् । मनसश्च साधारणत्वात् ॥ तर्हि मनःसन्निकृष्टेन चक्षुषा जायमानं रूपज्ञानं मनोविषयमापन्नमिति चेन्न । सन्निकर्षस्याप्यसाधारणकारणतया विवक्षितत्वात् । चक्षुर्मनःसन्निकर्षो हि द्रव्यादिज्ञानसाधारणः ॥ एवमन्येऽपि क्षुद्रोपद्रवाः परिहरणीयाः ॥ तदेवं जन्यज्ञाने विषयत्वस्यान्यथाव्यवस्थितत्वाद्यज्ज्ञानं यत्प्रतिभासमित्यन्यथापरिभाषणमनुपपन्नम् । न चैवं सत्यनुभवविरोधः, रजतावभासस्य शुक्तिकासन्निकृष्टकरणजन्यत्वेन तद्विषयत्वोपपत्तेः । न चातिप्रसङ्गः, दोषजन्यत्वतदभावादिना व्यवस्थोपपत्तेः । अन्यथा रजतज्ञानादरजते प्रवृत्तावपि कथं नातिप्रसङ्गः ॥ यत्पुना रजतावभासस्येत्याद्याशङ्क्य समाधानमभिहितं तज्ज्ञानैकत्वसमर्थनेन निराकरिष्यामः ।**

वा०— करणे सन्निकर्षे चासाधारण्यं विवक्षितं तद्व्यावर्त्यं शङ्कते ॥ **तथाऽपीत्यादिना** ॥ ननु तथाऽपि चाक्षुषज्ञानावच्छिन्ने चक्षुर्मनस्संयोगस्यासाधारणत्वाच्चाक्षुषज्ञाने मनसो विषयत्वं

स्यादेव । वायुसंयोगादिजन्ये वायुस्पर्शज्ञाने वायूपनीतावयवगन्धादिज्ञाने च वायुतदवयवादेर्विषयत्वं स्यात् । कूटलिङ्गज्ञानतात्पर्यभ्रमजन्यलिङ्गिज्ञानवाक्यार्थज्ञानयोस्तद्व्याप्तविषयकत्वाद्यसम्भवेन लिङ्गयादि-विषयकत्वानापत्तिश्च । सन्निकर्षासाधारण्यविवक्षयैव रूपप्रतीतेरात्मविषयकत्वाभावसिद्धौ करणासाधा-रणत्वविवक्षाया वैयर्थ्यं चेत्यादिदोषान्नेदं लक्षणं युक्तमित्यत आह ॥ **एवमिति** ॥ अत्र केचित्तत्तदि-न्द्रियमनस्संयोगानां तत्तज्ज्ञानकरणत्वकल्पनस्यानेककारणतदवच्छेदककल्पनया गौरवकरत्वेन चाक्षुषज्ञानत्वा-वच्छिन्ने चक्षुर्मनस्संयोगस्याकारणत्वान्नाद्यदोषप्रसङ्ग इति परिहारमाहुः । तन्न । तथा सति गौरवादेव रूपचक्षुस्सन्निकर्षादेरसाधारणकारणस्याकल्पनीयतया सन्निकर्षासाधारण्यविवक्षायां रूपप्रतीते रूपविषयक-त्वाभावप्रसङ्गात् । न च यत्किञ्चिद्दण्डेन यत्किञ्चिद्घटवद्यत्किञ्चिदर्थेन्द्रियसन्निकर्षेऽप्यन्यविषयकज्ञानापत्त्या प्रागभावस्येव तत्तदिन्द्रियसन्निकर्षस्य तत्तज्ज्ञानहेतुताया अवश्याङ्गीकार्यर्थसन्निकृष्टेन्द्रिये मनस्सन्निकर्षस्य हेतुत्वाभ्युपगमेऽतिप्रसङ्गाभावेनात्र विशिष्य हेतुहेतुमद्भावस्य न कल्पना अन्यथा दण्डादावपि विशिष्य तत्कल्पनापत्तेरिति वाच्यम् । अर्थसन्निकृष्टेन्द्रियान्तरे मनस्सन्निकर्षे स्वार्थसन्निकृष्टचक्षुषि मनस्सन्निकर्षा-भावेऽपि तेन स्वार्थज्ञानापत्तिरूपातिप्रसङ्गस्यात्रापि सत्त्वात् । तस्माद्योग्यसन्निकर्षस्यैव विवक्षितत्वान्नाद्यो दोष इत्येव परिहारो युक्तः । अत एव न द्वितीयोऽपि । ज्ञानकरणस्थले तद्व्याप्ततया तल्लिङ्गकविषयत्वस्य संसर्गधर्मैकपदार्थपरतया ज्ञातपदसमुदायविषयकत्वस्य ज्ञानघटितसन्निकर्षस्य कल्पनान्न तृतीयदोषप्रसङ्गः । केचित्तु प्रत्यक्षज्ञानेऽसता रजतादिना सन्निकर्षाभावेऽप्यतीतादिना तत्सद्भाववत्कूटलिङ्गादिस्थलेऽप्यसता सन्निकर्षोऽगत्या स्वीकर्तव्य एवेति न तृतीयदोषप्रसङ्ग इत्याहुः । सन्निकर्षासाधारण्यविवक्षयोक्तानुपपत्ति-परिहारेऽपि चक्षुर्मनस्सन्निकर्षासाधारणकारणताया अधुनैवोपपादितत्वाच्चक्षुस्सन्निकृष्टमनोजन्यरूपज्ञाने चक्षुषोऽविषयत्वाय करणासाधारण्यस्यापि विवक्षणीयत्वात् । न च सन्निकर्षयोग्यताविवक्षणेनैवैतद्दोष-परिहारादसाधारण्यं न क्वापि विवक्षणीयमिति वाच्यम् । एतद्बलेनैव तद्विवक्षाया लाभादित्याशयात् । तस्मान्न चतुर्थोऽपि दोषः । तद्व्याप्तलिङ्गविषयकत्वादेः सन्निकर्षत्वेनैव लक्षणशरीरप्रवेशान्नात्माश्रयोऽपीति । ज्ञानासाधारणकारणनिष्ठासाधारणकारणसन्निकर्षप्रतियोगित्वं विषयत्वमिति निरवद्यं लक्षणमिति भावः । नन्वीश्वरज्ञानादिविषयेऽव्याप्तिस्तथाऽपि स्यादेवेत्याशङ्कां परिहरन्नुपसंहरति ॥ **तदेवमिति** ॥ रजतज्ञानस्य शुक्त्यवभासित्वेऽनुभवविरोधस्त्वदुद्भावितो रजतज्ञाने शुक्तेरेतादृशालम्बनत्वेन प्रसरतीत्याह ॥ **न चैवमिति** ॥ नन्वत्रानुभवविरोधाभावेऽप्यन्यावभासस्यान्येन्द्रियसन्निकर्षजन्यत्वेऽतिप्रसङ्गः किञ्चेत्युक्तरीत्या स्यादेवेत्याशङ्क्य निषेधति ॥ **न चेति** ॥ ननु दोषजन्यत्वादिना व्यवस्थां प्रकल्प्यातिप्रसङ्गः परिहर्तव्यो न तु शुक्तेरनालम्बनत्वकल्पनेनेत्यत्र न नियामकमिति चेत् । रजतज्ञानस्य रजतालम्बनत्वे रजतसत्त्वा-पत्तेरेव नियामकत्वादत्र परोक्तं समाधानं निराकर्तुमनुवदति ॥ **यत्पुनरिति** ॥ या चेयं प्रक्रियेत्यादिना

रजतज्ञानस्य स्मृतित्वाभावस्य प्रतिपादयिष्यमाणत्वेन रजतमितिज्ञानस्य पुरः सत्त्वविषयकत्वे वक्तव्ये नास्त्यत्र रजतमितिप्रत्ययविरोधेन रजतसत्त्वस्यानुपपन्नत्वाद्रजतावलम्बनत्वे तत्सत्त्वापत्तिरनिष्टैवेत्याह ॥ **तदिति** ॥

स०— **रूपज्ञानमिति** ॥ पटादेश्चक्षुर्विषयत्वेऽपि रूपस्यैवासाधारणविषयत्वात्तस्यैव ग्रहणम् । **सन्निकर्षस्यापीति** ॥ नन्वेवं करणासाधारणत्वविवक्षा व्यर्था । सन्निकर्षासाधारणत्वविवक्षयैवात्ममनः-सन्निकर्षमादायातिप्रसङ्गाभावात् । तस्य साधारणत्वादिति चेन्न । रूपादिसन्निकृष्टचक्षुषो यच्छब्देन विवक्षितत्वात्तत्सन्निकृष्टमनसा जन्यरूपादिज्ञाने चक्षुषोऽपि विषयत्वं स्यादिति करणेऽप्यसाधारणत्वस्या-वश्यकत्वात् । तत्र च सन्निकर्षस्यासाधारण्यात् । मनसश्च साधारणत्वात् । ननु तथापि मनः-सन्निकृष्टचक्षुर्जन्यचाक्षुषज्ञाने मनसो विषयत्वं स्यात् । तत्र मनश्चक्षुःसन्निकर्षस्यासाधारणत्वात् । चक्षु-र्लक्षणकरणस्याप्यसाधारणत्वात् । रूपादिज्ञाने असाधारणत्वाभावेऽपि चाक्षुषज्ञाने चक्षुर्मनःसन्निकर्षस्या-साधारण्यादिति चेन्न । करणभिन्नयत्सन्निकृष्टासाधारणकरणेनेति विवक्षितत्वात् । मनश्च न करणभिन्न-मिति न तत्रातिव्याप्तिः । न चैवं सन्निकर्षासाधारणत्वं व्यर्थं चक्षुर्मनःसन्निकर्षस्य करणभिन्नसन्निकर्षत्वा-भावादेवातिप्रसङ्गाभावादिति वाच्यम् । तत्सन्निकर्षस्य हेतुत्वे मानाभावात् । अवर्जनीयसन्निधित्वा-च्चास्येति भावः । तदेतदाह ॥ **एवमन्येऽपीति** ॥ केचित्तु ॥ **चक्षुर्मनःसन्निकर्षो हीति** ॥ चक्षुर्मनः-सन्निकर्षस्य इन्द्रियमनःसन्निकर्षत्वेन जन्यसाक्षात्कारत्वावच्छेदेनैव हेतुत्वात्साधारण्यमिति भावः । न च चाक्षुषत्वावच्छिन्नं प्रति हेतुत्वे असाधारण्यमपि किं न स्यादिति वाच्यम् । तथात्वे श्रवणाद्यवच्छेदेन श्रोत्रादिमनःसंयोगत्वेनाऽपि हेतुत्वस्य कल्प्यत्वेऽनेककारणताकल्पनागौरवप्रसङ्गात् । न चैवं चक्षुरर्थ-सन्निकर्षस्यापि जन्यसाक्षात्कारत्वावच्छेदेन घटादिसाक्षात्कारे इन्द्रियार्थसन्निकर्षत्वेनैव हेतुत्वेनासाधा-रण्याभावादव्याप्तिः । चाक्षुषत्वाद्यवच्छेदेन चक्षुरादीनामर्थसन्निकृष्टचक्षुष्ट्वादिनैव कारणत्वं वाच्यम् । अन्यथाऽतिप्रसङ्गात् । तथाच विनिगमनाविरहाच्चक्षुराद्यर्थसन्निकर्षाणामपि चाक्षुषत्वाद्यवच्छेदेनैव चक्षुरर्थसन्निकर्षत्वादिना हेतुत्वं वाच्यमिति प्रतिभाति । तदिदमाह ॥ **एवमन्येऽपीति** ॥ यद्वा लिङ्ग-ज्ञानस्य लिङ्गिना वाक्यज्ञानस्य च वाक्यार्थेन संबन्धानिरूपणादव्याप्तिः । न च तद्व्याप्तलिङ्गविषयत्वं लिङ्ग-ज्ञाने संसर्गधर्मकपदार्थवाचिपदसमुदायरूपवाक्यविषयत्वमेव च वाक्यज्ञाने संबन्ध इत्युक्तमिति वाच्यम् । अन्योन्याश्रयत्वादित्यत आह ॥ **एवमन्येऽपीति** ॥ यद्यप्युक्तरीत्या लिङ्गज्ञानादेर्लिङ्गादिना विषयत्वमेव संबन्धस्तथापि स इदानीमुभयसंमतेन संबन्धत्वेनैव ज्ञेयो न तु विषयत्वेनातो नोक्तदोषः । तथा च तद्व्याप्तलिङ्गसंबन्धो लिङ्गज्ञाने तत्परवाक्यसंबन्धश्च वाक्यज्ञाने सन्निकर्ष इत्येव व्यवहर्तव्यमिति परिहर-णीयमित्युक्तं भवति इति व्याचक्षते ॥ **निराकरिष्याम इति** ॥ या चेयं प्रक्रियेत्यादिनेति शेषः ॥

प०—पुनरपि स्थलान्तरेऽतिव्याप्तिमाशङ्क्य निराह ॥ **तथापि रूपेत्यादिना** ॥ नन्वथापि तद्व्याप्तलिङ्गविषयेण च लिङ्गज्ञानेनेत्यत्र वक्ष्यमाणवाक्यविषयज्ञानेन चेत्यत्र च विषयत्वनिर्वचनशरीरे-विषयत्वप्रवेशेनात्माश्रयः । नित्यज्ञानविषये चात्मतद्धर्मादौ योगिप्रत्यक्षविषयेऽतीतानागतादौ सुरभि-चन्दनमित्याद्युपनीतचाक्षुषप्रत्यक्षविषये सौरभ्यादौ चाव्याप्तिः । यत्त्वतत्त्वजात्योरभावेनाननुगमश्चेत्यत आह ॥ **एवमन्येपीति** ॥ लिङ्गज्ञानवाक्यज्ञानयोर्लिङ्गवाक्याभ्यां संबन्धस्य विषयत्वरूपतया विषयेणेत्युक्तावपि न विषयत्वेनानुप्रवेशः । किन्तु तद्व्याप्तलिङ्गसंबन्धिना वाक्यार्थपरवाक्यसंबन्धिनेत्येवंरूपेणोभय-संमतसंबन्धित्वेनैव । अतो नात्माश्रयः । नापि नित्यज्ञानविषयादावव्याप्तिः । अस्य नियतविषय-जन्यज्ञानविषयत्वमात्रलक्षणत्वेनान्यस्यालक्ष्यत्वात् । योगिप्रत्यक्षविषये च योगजधर्मस्यैव प्रत्यासत्तिरूप-त्वात् । यत्त्वादेरजातित्वेऽपि कस्य को विषय इति प्रश्नेऽस्यायं विषय इत्यननुगतस्यैव वाच्यत्वादिति ॥ **तद्विषयत्वोपपत्तेरिति** ॥ शुक्तिकाविषयत्वोपपत्तेरित्यर्थः । अन्यविषयज्ञानस्यान्यावभासत्वे दोषमाशङ्क्य निराह ॥ **न चेति** ॥ दोषजन्यत्वतदभावादिनेत्यादिपदेन प्रागुक्तानुमितिविषयधर्मित्वतदभावादिग्रहः ॥ **यत्पुनरिति** ॥ ननु रजतावभासस्य रजतविषयत्वे तेन रजतेन भवितव्यमित्याशङ्क्य कथं न भवितव्य-मित्यादिना रजतज्ञानस्य स्मृतित्वमुपेत्य तद्विषयस्य सत्त्वमुक्तम् । तत्त्वनुपपन्नमेव 'एवं सति रजतस्यापि ज्ञानविषयता प्रसज्यत' इत्यादिना ग्रन्थेन निराकरिष्याम इत्यर्थः ।

या०—**चक्षुर्मनः सन्निकर्षो हीति** ॥ नन्वेवं चक्षुषोऽपि द्रव्यादिज्ञानसाधारण्यात्कथमसाधारण्यम् । उच्यते । अत्र करणे सन्निकर्षे च नैकविधमसाधारण्यं विवक्षितम् । किं त्वनेकविधमेव । तथा हि । प्रत्यक्षरूपकरणे चक्षुरादौ चाक्षुषत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम् । अनुमानागमयोश्चानु-मितित्वशाब्दत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वमसाधारण्यम् । सन्निकर्षस्य चैकस्य भिन्नविषयकानेकज्ञानजनकत्वाभावरूपमसाधारण्यं विवक्षितम् । इदं चेन्द्रियसन्निकर्षादावस्ति । एकेन रूपेन्द्रियसन्निकर्षेणैकस्य रूपज्ञानस्यैव जननात् । घटादिज्ञानस्य घटादिसन्निकर्षजन्यत्वेन रूपेन्द्रियसन्निकर्षेणाजननात् । चक्षुर्मनःसन्निकर्षे च नास्ति । तेनैकेनैव रूपद्रव्याद्यनेक-ज्ञानजननात् । अत एवोक्तम् । चक्षुर्मनःसन्निकर्षो हि द्रव्यादिज्ञानसाधारण इति । आत्ममनः-सन्निकर्षे चेदमसाधारण्यमस्ति । वीचीतरङ्गन्यायेन शब्दोत्पत्तिमङ्गीकुर्वतां तार्किकाणां मते विभुकार्य-विशेषगुणभेदस्य समवायिकारणभेदाधीनत्वदर्शनेन प्रतिज्ञानमात्मनः संयोगानां भिन्नत्वात्सिद्धान्तेऽपि तथा । तत्तद्विषयसंबद्धमनोंऽशानामेवात्माधिष्ठितानां तत्तद्विषयकवृत्तिरूपेण परिणामाङ्गीकारात् । चक्षुषि प्रविष्टं तु मनोंऽशिरूपमेवातस्तत्संयोगस्य साधारण्योक्तिरुपपन्नेति ज्ञातव्यम् । न चैवं मनसः साधारण-

कारणत्वोक्तिविरोधः । सन्निकर्षगतासाधारण्यस्य सत्त्वेऽपि करणे विवक्षितस्य जन्यज्ञानत्वव्याप्यजात्यवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वरूपासाधारण्यस्याभावेन तदुक्तिसम्भवात् । एवं च सन्निकर्षेऽसाधारण्यविवक्षयैवात्मनो विषयत्वपरिहारसम्भवे पुनः करणेऽसाधारण्यं न विवक्षणीयं व्यर्थत्वादिति दूषणमलग्नकं वेदितव्यम् । उक्तरीत्या आत्ममनःसन्निकर्षस्याप्यसाधारण्यत्वेनोक्तदोषपरिहाराय करणेऽप्युक्तासाधारण्यस्यावश्याश्रयणीयत्वात् । मनसश्च जन्यात्मविशेषगुणत्वावच्छेदेन जनकतया साधारण्यात् । तथा चायं लक्षणवाक्यार्थः । ज्ञानासाधारणकारणनिरूपितसन्निकर्षानुयोगित्वं विषयत्वमिति । अत्र ज्ञानासाधारणकारणेति सन्निकर्षविशेषणमवधेयम् । नन्वथाऽप्यनुमितौ व्यापकतावच्छेदादेः कथं विषयत्वम् । तस्य लिङ्गज्ञानेन व्याप्तिद्वारकोक्तसम्बन्धाभावात् । एवं शाब्दे बोधेऽन्वयप्रतियोगितावच्छेदादेर्विषयत्वं न सम्भवति । तत्राप्युक्तकरणसम्बन्धाभावात् । किं चाव्याप्तिपरिहाराय लिङ्गज्ञानस्य लिङ्गिना वाक्यज्ञानस्य च वाक्यार्थेन यः सम्बन्धो निरूपितः स न युक्तः । अन्योन्याश्रयात् । विषयत्वज्ञाने तद्घटितोक्तसम्बन्धमादायाव्याप्तिपरिहारस्तस्मिंश्च सति निर्व्यूढेन लक्षणेन विषयत्वज्ञानमिति परस्परसापेक्षत्वात् । किं चेश्वरज्ञानस्याजन्यत्वेन तद्विषयाव्याप्तिरतः कथमेतदित्यत आह ॥ **एवमन्येपीति** ॥ अयमभिप्रायः । यत्तावदुक्तमनुमितौ व्यापकतावच्छेदादेः कथं विषयत्वमिति । तत्र ब्रूमः । व्यापकतावच्छेदकावच्छिन्नलिङ्गिव्याप्तलिङ्गविषयकत्वं लिङ्गज्ञानस्य लिङ्गिसम्बन्धः । तेन व्यापकतावच्छेदकादीनामप्युक्तक्रमेण लिङ्गज्ञानेन सम्बन्धोऽस्त्येवेति का कथन्ता । एवं शाब्दे बोधेऽन्वयप्रतियोगितावच्छेदकादेर्विषयत्वोपपादनायान्वयप्रतियोगितावच्छेदकावच्छिन्नत्वं सन्निकर्षप्रविष्टपदार्थे विशेषणं देयम् । यदप्युक्तमन्योन्याश्रयत्वमिति तत्र यद्यप्युक्तरीत्या लिङ्गज्ञानादेर्लिङ्गिना विषयत्वमेव सम्बन्धस्तथाऽपि स इदानीमुभयसम्मतेन सम्बन्धत्वेनैव ज्ञेयो न तु विषयत्वेनेति नोक्तदोषः । तथा च तद्व्याप्तलिङ्गसम्बन्धो लिङ्गज्ञाने तत्परवाक्यसम्बन्धश्च वाक्यज्ञाने सन्निकर्ष इत्येव व्यवहर्तव्यमिति ज्ञेयम् । ईश्वरज्ञानविषयाव्याप्तिस्तु जन्यज्ञानविषयत्वस्यैव लक्ष्यत्वान्न सम्भवतीति सर्वेऽपि क्षुद्रोपद्रवाः परिहर्तव्या इति । रजतज्ञानस्य शुक्त्यालम्बनत्वमनुभवविरुद्धमित्युक्तं तद्विघटयति ॥ **न चेति** ॥ **एवं सतीति** ॥ यद्विज्ञानं यत्प्रतिभासं तत्तद्विषयमित्यङ्गीकार इत्यर्थः । अन्यावभासस्यान्यालम्बनत्वे प्रागुक्तप्रसङ्गं विघटयति ॥ **न चातिप्रसङ्ग इति** ॥

**श्री०— तदेवं जन्यज्ञान इति** । यत्सन्निकृष्टेनेति विषयलक्षणं दूषयित्वा खलु यज्ज्ञानं यत्प्रतिभासं तदेव तस्यालम्बनमित्यन्यथा विषयलक्षणपरिभाषणं कृतं तदनुपपन्नम् । यत्सन्निकृष्टेनेत्यादिकस्यैव विषयलक्षणस्य तत्र त्वदुक्तदोषपरिहारेण व्यवस्थितत्वादित्यर्थः। ईश्वरज्ञानविषयाव्याप्तिपरिहाराय जन्यज्ञान

इत्युक्तम् । तत्र रजतज्ञाने शुक्तिरवभासते न वेत्यादिना रजतज्ञानस्य शुक्तिविषयकत्वमनुभवविरुद्धमित्युक्तम् । तन्निराकरोति ॥ **न चैवं सतीति** ॥ किंच रजतमवभासते शुक्तिकालम्बनं चेदतिप्रसङ्गः कथं परिहरणीय इत्येवमन्यावभासस्यान्यावलम्बनत्वे कथितमतिप्रसङ्गदोषमाशङ्क्य परिहरति ॥ **न चातिप्रसङ्ग इति** ॥ **दोषेति** । अन्यावभासस्यान्यविषयत्वं दोषवशादेवोपपन्नं न तथा सर्वत्रेति नातिप्रसङ्ग इत्यर्थः ॥ **यत्पुना रजतावभासस्येत्यादि** ॥ ननु रजतावभासस्य रजतविषयकत्वे तेन रजतेन भवितव्यमित्याशङ्क्य कथं भवितव्यमित्यादिना ज्ञानद्वित्वाङ्गीकारेण समाधानमभिहितमित्यर्थः । यद्विज्ञानमित्यत्र यदिति भिन्नम् । न तु यस्य विज्ञानं यद्विज्ञानमिति षष्ठीसमासः । यत्प्रतिभासं यदुल्लेखीत्यर्थः । उल्लेखित्वं चाभिलपनकारणत्वम् । यदभिलपनरूपव्यवहारकारणं ज्ञानं तद्विषयकमित्यर्थः । कारणत्वं च योग्यतारूपं न फलोपधानम् । तथात्वे रजतज्ञाने शुक्तिरवभासते न वेति वक्तव्यमित्यादिनाऽनुभवविरोध उक्त इति चेत्तत्राह ॥ **तथाऽपीति** ॥ इदन्ताकारस्य शुक्तित्वविषयतायामिति वर्तते ॥ **न कश्चिद्विरोध इति** ॥ शुक्तिनिष्ठेदमाकारस्य शुक्तिविषयतायाः सिद्धत्वादित्यर्थः । तन्निष्ठेदमाकारस्य तद्विषयकत्वे यदि विरोधः कथ्यते तदाऽतिप्रसङ्गमाह ॥ **विरोधे वेति** ॥ **अनभ्युपगच्छत इति** ॥ अनुभवविरोधेनानङ्गीकर्तुर्ज्ञानद्वयाङ्गीकारिणः प्राभाकरस्यैवेत्यर्थः ॥ **एवं सतीति** ॥ इदमाकारस्य रजतप्रतिभासविषयत्वे ॥ **न चैवमिति** ॥ असतो ज्ञानविषयत्वाभावाद्रजतस्य ज्ञानविषयत्वाङ्गीकारे सत्वप्राप्तेरख्यातिपक्षपातः स्यादित्यर्थः ॥ **ज्ञानैक्येति** ॥ ज्ञानद्वित्वाङ्गीकारे ह्यख्यातिक्षपातः स्यात् । न चैवम् । विशिष्टज्ञानस्यैकस्यैवाङ्गीकारादिति भावः ।

**च०**— करणे सन्निकर्षे चासाधारण्यनिवेशनिवर्तनीयामाशङ्कां प्रदर्श्य तन्निवेशस्य तच्छङ्कानिरसनौपयिकतामुपपादयति **तथापीत्यादिना साधारण इत्यन्तेन** ॥ **असाधारणकारणस्य विवक्षितत्वादिति** ॥ ज्ञानत्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकताश्रयत्वरूपासाधारणकारणत्वस्य करणे विवक्षिततया मनसश्च जन्यज्ञानत्वावच्छिन्नं प्रत्येव जनकतया तस्य च जातिरूपत्वाभावान्न क्षतिरिति भावः ॥ **चक्षुषेति** ॥ ज्ञानत्वव्याप्यचाक्षुषत्वावच्छिन्नजन्यतानिरूपितजनकताशालित्वाच्चक्षुषोऽसाधारण्यमिति भावः ॥ **सन्निकर्षस्यापीति** ॥ तत्तद्व्यक्तित्वावच्छिन्नज्ञानवृत्तिजन्यतानिरूपितजनकतारूपासाधारणकारणतया विवक्षितत्वादित्यर्थः ॥ **चक्षुर्मनःसन्निकर्षो हीति** ॥ तत्तदर्थेन्द्रियसंयोगादीनां तत्तज्ज्ञानवृत्तितत्तद्व्यक्तित्वावच्छिन्नजन्यतानिरूपितजनकतावच्चक्षुर्मनःसन्निकर्षस्य तादृशजनकतानङ्गीकारेण चाक्षुषत्वावच्छिन्नजन्यतानिरूपितजनकताया एवोरीकृतेर्नासाधारण्यमिति भावः । प्रागभावस्य तत्तद्व्यक्तित्वावच्छिन्नं प्रति वात्ममनःसन्निकर्षस्य तत्तदवच्छिन्नप्रत्यये हेतुत्वोपगमावश्यम्भावात्तस्यासाधारण्यं सङ्गच्छत

इति हृदयम् । विवृतं चैतद्विवृण्वानैः । इत्थं च करणसन्निकर्षासाधारण्ययोर्नानारूपत्वात् सन्निकर्षासाधारण्यविवक्षयैवात्मन्यतिप्रसङ्गवारणात्करणे तद्विवक्षणानर्थक्यशङ्कावकाशः । अथैवमपि साध्यतावच्छेदकस्यानुमितौ अन्वयितावच्छेदकस्य शाब्दबोधे व्याप्तिभ्रमजन्यानुमितौ साध्यस्य योग्यताभ्रमजन्यान्वयबोधे संसर्गस्य विषयत्वं दुरुपपादमित्यत आह ॥ **एवमिति** ॥ स्वावच्छिन्ननिरूपितव्याप्त्यवच्छिन्नहेतुवृत्तिप्रकारताकत्वस्य लिङ्गज्ञाने साध्यतावच्छेदकनिरूपितप्रत्यासत्तेः स्वावच्छिन्नैकतरव्यक्त्यनुयोगिकतादृशापरव्यक्तिप्रतियोगिकसंसर्गतात्पर्यकवाक्यविषयकत्वस्य वाक्यज्ञानेऽन्वयितावच्छेदकप्रत्यासत्तेः व्याप्तिघटकपदार्थानां सशृङ्खलविषयतानिवेशात्कूटलिङ्गस्थले तद्दिशैव योग्यताभ्रमस्थलेऽपि प्रत्यासत्तेः सूपपादतया न क्षतिरित्याशयः । लक्ष्यशरीरे ईश्वरज्ञानव्यावर्तकविशेषणनिवेशेन तत्राव्याप्तिराहित्यं ध्वनयन्निगमयति ॥ **तदेवमिति** ॥

सु०—अस्तु वा यद्विज्ञानं यत्प्रतिभासं तत्तद्विषयमित्येव व्यवस्था । तथाऽपि नानुभवविरोधः ॥ ॥ तत्किं रजतावभासस्य शुक्तित्वविषयतायामनुभवविरोधं ब्रूषे उतेदन्त्वाकारस्य ॥ आद्ये सम्प्रतिपत्तिः । न हि वयमस्मिन्प्रत्यये शुक्तित्वमवभासत इति ब्रूमो येन विरोधः स्यात् , शुक्तित्वप्रतिभासस्य रजतावभासविरोधित्वाभ्युपगमात् ॥ द्वितीये तु न कश्चिद्विरोधः । विरोधे वा समीचीनरजत इदं रजतमिति प्रतीतिर्न स्यात् । इदमाकारस्य रजतप्रतिभासविषयतामनभ्युपगच्छत एव प्रतीतिविरोधं वक्ष्यामः । एवं सति रजतस्यापि ज्ञानविषयता प्रसज्यत इति चेत् ; सत्यम् , इष्टमेवैतत् । न चैवमख्यातिपक्षपातः, ज्ञानैक्याभ्युपगमात् । नापि 'शुक्तिकारजते' इति ज्ञानं विभ्रमः प्रसज्यते रजतस्यासत्त्वाभ्युपगमात् तादात्म्यावभासाभ्युपगमाच्च । अत एवोक्तमसतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरिति । वक्ष्यति च विषयस्य कुतो बाध इत्यसतो रजततादात्म्ययोर्ज्ञानविषयतामाचार्यः । न चान्यथाख्यातिजनने कारणाभावः; इन्द्रियादेरेव तत्कारणत्वात् , समीचीनज्ञानकारणस्यापि तस्य दोषकलुषितस्य विभ्रमहेतुत्वोपपत्तेः । न च दोषाणां स्वारसिकशक्तिविरोधितामात्रमिति वाच्यम् । तथा सति समीचीनव्यवहारहेतोर्विज्ञानादयथार्थव्यवहारजन्मानुपपत्तिप्रसङ्गात् ॥ किञ्च सहकारिमात्रस्य विपरीतशक्त्यनाधायकत्वमङ्गीकर्तव्यं दोषाणामेव वा । आद्ये पशुहिंसा किं धर्मजनने स्वारसिकशक्तिमती उताधर्मजनन इति वाच्यम् । आद्ये कथं क्रतुबाह्यापि धर्मं न जनयेत् । द्वितीये कथं क्रत्वन्तर्गतापि धर्मं जनयेत् । सहकारिवशादिति चेत् अङ्गीकृतं तर्हि सहकारिणां स्वारसिकशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकत्वम् । न द्वितीयः नियामकाभावात् ।

वा०—नन्वस्य जन्यज्ञानविषयत्वलक्षणत्वेऽजन्यज्ञानविषयत्वस्यान्यादृशतयाऽनुगतविषयत्वव्यवहारानुपपत्तिः द्वेधा कल्पनापत्तिश्च । उत्तरत्रासतोऽपि प्रतीतिविषयत्वोपपादनेन विषयस्य कुतो बाध इति भाष्यकारीयेण वचनेन विरोध इति भासमानत्वस्यैव विषयत्वरूपत्वे वक्तव्ये संविद्विरोधस्तदवस्थ इत्यतस्तमेव पक्षमभ्युपगम्य संविद्विरोधं निरस्यति ॥ **अस्तु वेति** ॥ शुक्तेरालम्बनत्वेऽनुभवविरोधः किं तस्याः शुक्तित्वरूपासाधारणाकारेणापि । तथात्वे वाऽऽद्योऽनभ्युपगमपराहतः । न हि शुक्तित्वप्रतिभासस्य रजतावभासविरोधमभ्युपगच्छता रजतावभासस्य शुक्तित्वविषयत्वमभ्युपगन्तुमुचितम् । द्वितीये साधारणाकारप्रतिभासे न कश्चिद्विरोधः । न चेदन्त्वं न साधारणाकारः किन्तु शुक्तित्वमिव शुक्त्यसाधारणाकार एवेति वाच्यम् । तथात्वे सत्यस्थले इदन्त्वोल्लेखिरजतप्रतीतिर्न स्यादित्याह ॥ **तत्किमित्यादिना** ॥ किञ्च विशिष्टविषयैकज्ञानस्यानुभवसिद्धनाया अनुभव एवेति ब्रूमः । यथा हीत्यादिनोत्तरत्रोपपादयिष्यमाणतया तवैवात्रानुभवविरोध इत्याह ॥ **इदमाकारस्येति** ॥ गूढाभिसन्धिः शङ्कते ॥ **एवं सतीति** ॥ तथैव परिहरति ॥ **सत्यमिति** ॥ रजतस्य ज्ञानविषयत्वं वदता शुक्त्यविषयकरजतज्ञानविषयत्वं वा शुक्तिविषयज्ञानविषयत्वं वा वक्तव्यं गत्यन्तराभावात् । तत्राद्येऽख्यातिपक्षपक्षपातः । द्वितीये तु शुक्तिरजतोभयविषयकैकज्ञानं भ्रम इत्युक्तं स्यात् । तथा च शुक्तिरजते इति समूहालम्बनस्य भ्रमत्वापत्तिरित्याशये परेणोद्घाटिते आद्यमनभ्युपगमेन परिहरति ॥ **ज्ञानैक्येति** ॥ समूहालम्बनवैषम्योक्त्याऽतिप्रसङ्गं निरस्यति ॥ **रजतस्येति** ॥ वस्तुस्थितिमनुरुध्यांशे भ्रमरूपसमूहालम्बनादपि वैषम्यमाह ॥ **तादात्म्येति** ॥ रजतासत्त्वतत्तादात्म्यावभासाभ्युपगमं मूलसम्मत्या द्रढयति ॥ **अत एवेति** ॥ अस्तु वेत्युक्तपक्षस्य भाष्यकारीयाभिमतिज्ञापकमाह ॥ **वक्ष्यतीति** ॥ अनेन विषयत्वदूषणपरिहारप्रकारस्य मूलादेव लाभः सूचित इति द्रष्टव्यम् । एवमन्यथाख्यातिस्वरूपमुपपाद्य परोक्ततत्कारणाभावं निरस्यति ॥ **न चेति** ॥ **तथा सतीति** ॥ न च प्रामाण्यस्य स्वतस्त्वादिन्द्रियादीनां समीचीनज्ञानकारणत्वस्वाभाव्येऽपि बाधकाभावेन ज्ञानस्योभयविधव्यवहारहेतुत्वसम्भवान्न साम्यमिति वाच्यम् । असति दोषे ज्ञानस्य समीचीनव्यवहारहेतुत्वनियमेऽपि तत्स्वाभाव्याभावे इन्द्रियादीनामपि साम्यात्स्वतः प्रामाण्यमेव न स्यादित्यत्र तात्पर्यात् ।

स०— **प्रतीतिविरोधं वक्ष्याम इति** ॥ ननु सत्यस्थलीयशुक्तिरजतोभयविषयकज्ञानस्यापि सत्त्वादत्र चासत्वात् तत्रोभयोरपि प्रत्येकं भानादत्र च तादात्म्यावभासात्तदपेक्षया विशेषान्न तस्य भ्रमत्वापत्तिरित्याह ॥ **नापीति** ॥

प० — एवं रजतं दृष्टमिति भ्रममात्रत्वादित्याद्युक्त्यनुरोधेन शुक्तिरूप्यादेर्विषयत्वं नेत्युपेत्यैकं लक्षणमुक्तमिदानीं पक्षस्य शुक्तिरूप्यादेश्च विषयत्वमस्तीत्युपेत्य 'विषयस्य कुतो बाध' इत्यादिवक्ष्यमाणानुव्याख्यानानुरोधेन पक्षादिगतविषयत्वसाधारणं जन्याजन्यसर्वज्ञानविषयसाधारणं च लक्षणमाह ॥ **अस्तु वेति** ॥ यदिति भिन्नं पदम् । न तु यस्य विज्ञानं यद्विज्ञानमिति । यत्प्रतिभासं यदुल्लेखीत्यर्थः । उल्लेखित्वं चाभिलपनकारणत्वम् । यदभिलपनरूपव्यवहारकारणं ज्ञानं तद्विषयकमित्यर्थः । कारणत्वं च योग्यतारूपं न फलोपधानम् ॥ **वक्ष्याम इति** ॥ ज्ञानैकत्वसमर्थनेनेति भावः ॥ **उक्तमिति** ॥ विष्णुतत्त्वविनिर्णये ॥ **वक्ष्यति चेति** ॥ वियत्पादे पृथगुपदेशादित्येतद्व्याख्यानावसरे । एतेन क्वचित्प्रकरणादौ शुक्तिरूप्यादेर्विषयत्वं नेत्युक्तं क्वचिदस्तीत्युच्यते । अतो विरोध इति प्रत्युक्तम् । विषयत्वस्य विवक्षाभेदेनोपपत्तेरिति । न चान्यथाख्यातिजनने कारणं पश्याम इत्यादिनोक्तमुद्धरति ॥ **न चान्यथाख्यातीति** ॥ ननूक्तमत्र तस्य समीचीनज्ञानकरणतावधारणादिति तत्राह ॥ **समीचीनेति** ॥ ननु ज्ञानहेतावेवायं नियमो न त्वन्यत्रेति वादिनं प्रत्याह ॥ **किञ्चेति** ॥ **सहकारीति** ॥ मन्त्रादिरूपसहकारिवशादित्यर्थः ।

या० — ननु भवन्मते शुक्तिकाया एव विषयत्वं नासतो रजतस्य तत्तादात्म्यावभासस्य चेत्यङ्गीकारात्कथमिष्टमेवैतदुच्यत इत्यत आह ॥ **वक्ष्यति चेति** ॥ असतोऽपि रजतादेर्ज्ञानं व्यावर्तकतयोल्लिख्यमानत्वरूपं विषयत्वमस्माकमिष्टम् । यत्सन्निकृष्टेन करणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इति निरुक्तं विषयत्वं तु असतो नास्ति किन्तु शुक्तिकादावेवातो न कोऽपि विरोध इति ध्येयम् ।

श्री० — नन्वेवं शुक्तिरजतोभयविषयकमेकं ज्ञानं भ्रम इत्युक्तं स्यात् । तथाच शुक्तिरजते इति समूहालम्बनरूपं ज्ञानमपि भ्रमः स्यादित्याशङ्क्य निराकरोति ॥ **नाऽपीति** ॥ **असत्त्वेति** ॥ समूहालम्बनज्ञानविषयीभूतं तु रजतं सदिति न तस्य भ्रमत्वमिति भावः । किंच भ्रमस्थले ज्ञानैक्याभ्युपगमेऽपि तार्किकरीत्या रजतस्य सत्त्वाभ्युपगमेऽपि न समूहालम्बनसाम्यम् । भ्रमे तादात्म्यावभासस्याधिकस्याङ्गीकारादित्याह ॥ **तादात्म्येति** ॥ **वक्ष्यति चेति** ॥ पृथगुपदेशादित्यादिना चक्षुरादेः समीचीनज्ञानकारणत्वावधारणात् । न खलु जरामरणविध्वंसहेतुः सुधा जातु जरामरणहेतुर्भवतीत्यादिनोक्तं दोषं परिहरति ॥ **समीचीनेति** ॥ दोषा हि करणानामौत्सर्गिककार्यजननसामर्थ्यं निघ्नन्ति न तु विपरीतकार्यजननसामर्थ्यमप्यादधतीत्यादिनोक्तं दोषमाशङ्क्य परिहरति ॥ **न च दोषाणामिति** । व्यवहारः प्रवृत्तिः । सहकारिणां स्वारसिकशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकत्वमस्तीत्यानेतुमाह ॥ **आद्ये पशुहिंसेत्या-**

दिना । पशुहिंसा सामान्येन पशुहिंसामात्रम् ॥ **सहकारिवशादिति** ॥ विधिमन्त्रादिरूपसहकारिवशादित्यर्थः । सहकारिणाम् मन्त्राणाम् ॥ **स्वारसिकेति** ॥ क्रत्वन्तर्गतहिंसाया अधर्मजनकत्वरूपस्वारसिकशक्तिरित्यर्थः ॥ **विपरीतशक्तीति** ॥ धर्मजनकत्वरूपेत्यर्थः ।

**सु०—किञ्च काचादयोऽपि विपरीतज्ञानजनने सहकारिण एवाङ्गीक्रियन्ते । दोषत्वं त्विष्टकार्यविघातितामात्रेणोच्यते । कामुकस्य कामिनीविभ्रमेषु गुणत्वाभिमानात् । न चैवं भंजिता-(ताः) कुटजधाना वटाङ्कुरं कुतो न जनय(यं)तीति वाच्यम्, पदार्थशक्तिवैचित्र्यात्। केचिद्वस्त्वन्तरशक्तिमेव प्रतिबध्नन्ति; यथा भर्जनादयः। केचित्सहजशक्तिप्रतिबन्धेन विपरीतामपि शक्तिमादधति; यथा विषस्य मारकत्वशक्तिं प्रतिबध्यारोग्यादि(जनन)शक्तिमादधानाः पदार्थाः । गुणा एव न ते दोषा इति चेत् काचादयोऽपि गुणा एव न ते दोषा इत्युक्तमेव ।। ननु जनकस्यैव साक्षात्कारिप्रत्ययविषयत्वं दृष्टम् । न च रजतस्येदन्तादात्म्यस्य वाऽसतो जनकत्वमस्ति। तत्कथं विषयत्वमिति । मैवम् । तथा सतीश्वरज्ञानस्य नित्यस्यार्थो विषयो न स्यात् । प्रत्यभिज्ञानस्य च तत्तांशो विषयो न भवेत् । तन्निरूपकत्वादिमात्रेण विषयत्वाङ्गीकारे रजतादेरपि ज्ञाननिरूपकत्वेन विषयत्वोपपत्तेः । कथमसतो निरूपकत्वमिति चेत् । (न) । गुरूणां टीका कुरूणां क्षेत्रमितिवदुपपत्तेः । अतीतादिविषयानुमित्यादिव्यावर्तकत्वं च प्रमेयस्य न स्यात् । तत्र व्यावर्तकं कदाचिदस्ति रजतादिकं कदाऽपि नास्तीति वैषम्यमिति चेत् । तत्किं यदाकदाचित्सतः कारणत्वं पूर्वक्षणे सतो वा । नाद्यः अतिप्रसङ्गात् । द्वितीये तु किमनेन । अथ नातीतादिरर्थः स्वसामर्थ्येनानुमित्यादिकं व्यावर्तयाति येन तत्सत्तापेक्षा स्यात् ; किन्तु स्वहेतुसामर्थ्यादर्थव्यावृत्तं ज्ञानमुत्पद्यत इति चेत् । समं प्रकृतेऽपि ॥ किञ्च सत्यस्थलेऽपि न साक्षात्साक्षात्कारं प्रति कारणत्वमर्थस्य किन्त्विन्द्रियसन्निकर्षस्यैव । स च यत्रासता नोपपद्यते तत्रार्थसत्तामपेक्षत इति पारम्पर्येणैवार्थस्य कारणत्वम् ॥ ननु तर्ह्यसता रजतादिना सन्निकर्षायोगात्कथमिन्द्रियेण तज्ज्ञानजन्मेति चेन्न; शुक्तिकासन्निकृष्टं दुष्टमिन्द्रियं तामेवात्यन्तासद्रजतात्मनाऽवगाहमानं ज्ञानं जनयतीत्यङ्गीकारात् । अत एव नासत्ख्यातिप्रसङ्गः । यावत्खलु विगीते प्रत्यये भासते तस्य सर्वस्यासत्त्वेऽसत्ख्यातिः स्यात् । न चैवमित्युक्तम् ।**

वा०—पराभ्युपगमरीत्या दोषाणां विपरीतकार्यजनकत्वमुपपाद्य सहकारिप्रतिबन्धाऽपि तदुपपादयति ॥ **किञ्चेति** ॥ ननु न नियामकाभावः । दोषस्यैव नियामकत्वात् । अत एव केचित्सह-

कारिण एव केचिद्दोषा एवेति व्यवस्थाऽन्यथा सा न स्यादित्यस्वरसादाह ॥ **किञ्चेति** ॥ एवं चेष्ट-विघातित्वाद्दोषत्वव्यवहारेऽपि न दोषत्वजात्याक्रान्तः कश्चिद्दोष इति व्यवस्थैव नेत्याशयः । उक्तं काचादीनां सहकारित्वमेव पूर्वपक्ष्युक्तातिप्रसङ्गपरिहारे आकाङ्क्षाक्रमेण व्यापारयितुं परोक्तातिप्रसङ्गमाशङ्क्य निषेधति ॥ **न चैवमिति** ॥ एवमसतो ज्ञानविषयत्वे तज्ज्ञानस्येन्द्रियादिजन्यत्वे चोपपादिते तर्हीन्द्रियजन्यज्ञानांशे पुनरसतो विषयत्वानुपपत्तिरेवेत्याशङ्कानिरासायोत्तरो ग्रन्थः । एवं च विषयत्वोपपादन-दशायामेवैतदनुपपत्तिपरिहारस्यापि कर्तव्यत्वे कारणोपपादनानन्तरभावित्वमनुपपन्नमिति दूषणमल-ग्नकम् । उभयोक्त्यनन्तरमेवैतच्छङ्कोत्थानादिति द्रष्टव्यम् । ननु जनकत्वस्य साक्षात्कारप्रत्ययविषय-त्वव्यापकत्वाद्रजतादेस्तन्निवृत्तौ व्याप्यभूतविषयत्वमपिनिवर्तेतैवेत्युक्तमयुक्तमिति शङ्कते ॥ **नन्विति** ॥ व्यभिचाराज्जनकत्वसाक्षात्कारिप्रत्ययविषयत्वयोर्व्याप्यव्यापकभाव एवासिद्ध इत्याह ॥ **तथा सतीति** ॥ न च जन्यसाक्षात्कारिप्रत्ययविषयत्वं जनकत्वव्याप्यमतो न व्यभिचारः । प्रकृतस्य च जन्यसाक्षात्कारि-प्रत्ययत्वाद्रजतादेर्जनकत्वस्य निवृत्त्या तादृक्प्रत्ययविषयत्वस्यापि निवृत्तिरिति वाच्यम् । जनकत्वाभावेऽपि निमित्तान्तरेणाजन्यसाक्षात्कारविषयत्ववज्जन्यसाक्षात्कारविषयत्वस्यापि निमित्तान्तरेणोपपत्तेरप्रयोजकत्वेन जन्यत्वविशेषितस्यापि तस्य जनकत्वव्याप्यत्वासम्भवात् । अस्तु वा जन्यत्वं विशेषणं तथाऽपि विशि-ष्टस्यापि व्यभिचार इत्याह ॥ **प्रत्यभिज्ञानस्येति** ॥ ननु जनकस्यैव साक्षात्कारिप्रत्ययविषयत्वमि-त्युत्सर्गः । ईश्वरज्ञानविषयादौ च बाधकवशाज्ज्ञानं प्रति निरूपकत्वादिमात्रं विषयत्वप्रयोजकत्वेन अङ्गीक्रियतेऽतो न दोष इति चेत् । तर्हि बाधकवशादेव रजतादेरपि अपवादविषयत्वात् ज्ञानं प्रति निरूपकत्वमात्रेण तस्यापि विषयतोपपत्तेर्नानुपपत्तिरित्याह ॥ **तन्निरूपकत्वादीति** ॥ निरूपकत्वं व्यावर्तकत्वम् । आदिपदेन ज्ञानजन्यातिशययोगित्वज्ञानभाननियतभास्यमानत्वादेः सङ्ग्रहः । नित्यज्ञानविषयस्य तदंशस्य ( तत्तांशस्य ) च सत्त्वान्निरूपकत्वादिसम्भवेऽत्यन्तासतो रजतादेर्निरूपक-त्वादेरपि सम्भव इति वैषम्यं शङ्कते ॥ **कथमिति** ॥ अत्र वक्तव्यं निरूपणदशायां सत्त्वस्य निरूपकत्वे प्रयोजकतया रजतादेरत्यन्तासतस्तदभावान्न निरूपकत्वमित्याशयो वा कदाचिदपि सत्त्वस्य निरूपक-त्वप्रयोजकतयाऽत्यन्तासतस्तदभावान्निरूपकत्वासम्भव इति वा । आद्येऽपि निरूपणदशायां सत्त्वं निरू-पकत्वमात्रप्रयोजकत्वेनाभिमतं ज्ञाननिरूपकत्व एव वेति विकल्पान्मनसि निधायाद्यं दूषयति ॥ **गुरूणामिति** ॥ न द्वितीयः । असतो ज्ञानेतरनिरूपकत्ववज्ज्ञाननिरूपकत्वस्याप्युपपत्तेः । अभ्युपेत्याह । **अतीतादीति** । आद्यादिपदेनानागतग्रहणम् । द्वितीयेन शाब्दसङ्ग्रहः । चशब्देन प्रत्यभिज्ञाव्या-वर्तकतदंशसङ्ग्रहः । द्वितीयं शङ्कते ॥ **तत्रेति** ॥ कार्यकालेऽसतः कदाचित्सत्त्वस्याप्रयोजक-त्वान्न तद्वैषम्यापादकमित्याह ॥ **तत्किमिति** ॥ ननु न वयमतीताद्यर्थस्य व्यावृत्तिजननशक्ति-

मत्स्वरूपं वा व्यावृत्तिबुद्धिजननशक्तिमत्स्वरूपं वा व्यावर्तकत्वमभ्युपगच्छामो येन शक्तिमतोऽभावे शक्त्य-संभवदोषः प्रसज्येत । किन्तु ज्ञानेऽन्यस्माद्या व्यावृत्तिस्तज्जननशक्तिर्ज्ञानहेतुष्वेव । ज्ञानमन्यस्माद्या-वृत्तमिति व्यावृत्तिबुद्धिजननशक्तिस्तु ज्ञानहेत्वासादितेऽवश्याभ्युपगमनीये ज्ञाननिष्ठस्वाभाविकविशेषे एव । एवं च तदुभयविधं व्यावर्तकत्वं ज्ञानहेतुज्ञानगतस्वाभाविकविशेषयोरेव । अतीताद्यर्थे तु ज्ञानहेतुजन्य-व्यावृत्तिविशिष्टज्ञाने वा ज्ञानहेत्वासादितस्वाभाविकविशेषेण जन्यव्यावृत्तिबुद्धौ वोल्लेखित्वमात्रं व्यावर्तकत्वं विषयत्वप्रयोजकत्वेनाभ्युपगम्यते । तच्च न तत्सत्तापेक्षम् । न चैवं त्वया वक्तुं शक्यम् । अतीतादिज्ञानस्य प्रमात्वेन जन्यज्ञाने तत्ताभानोपयुक्ततत्तानुभवजन्यसंस्कारादेः सामग्रीकोटौ निवेशेन तत्र हेतुसामर्थ्यादिकल्पनासंभवेऽप्यसज्ज्ञानस्य भ्रमरूपत्वेन जन्यज्ञानेऽसद्भानोपयुक्ततत्सन्निकर्षादेरसंभवेन तस्य सामग्रीकोटावनिवेशेन न तत्रैतत्कल्पनासंभव इत्याशयेन शङ्कते ॥ **अथेति** ॥ **अर्थव्यावृत्त-मिति** ॥ अर्थनिरूपितव्यावृत्तिमदित्यर्थः । अर्थस्य व्यावृत्तिनिरूपकत्वं चोक्तविधव्यावर्तकत्वरूपमेवेति भावः । अतीतादिज्ञानस्य प्रमात्वात्समीचीनसामग्र्योत्पादितज्ञाने तादृशसामग्र्युत्पादितस्वाभाविकवि-विशेषजन्यव्यावृत्तिबुद्धौ वोल्लेखितत्वं रजतादिज्ञानस्य भ्रमत्वात्तदसमीचीनसामग्र्युत्पादितज्ञाने तादृश-ज्ञानोत्पादितज्ञानगतस्वाभाविकविशेषजन्यव्यावृत्तिबुद्धौ वोल्लेखितत्वमित्येतावन्मात्रविशेषसद्भावेऽपि स्वसा-मग्र्यासादितज्ञानोल्लेखित्वमात्रस्य व्यावर्तकत्वादिरूपतया ज्ञानसामग्रीसमीचीनत्वादेरकिञ्चित्करत्वात् शक्ति-सन्निकर्षसादृश्यादिदोषादेरेव जन्यज्ञानेऽसतो भानोपयुक्तस्य भ्रमसामग्रीकोटावपि प्रवेशेन तादृशव्यावर्त-कत्वादेरसत्यपि सत्त्वान्न काऽप्यनुपपत्तिरित्याशयेनाह ॥ **समं प्रकृतेऽपीति** ॥ इदं च सर्पभ्रमादावपि हीत्यनुव्याख्य.व्याख्यानरूपोत्तरग्रन्थे स्पष्टम् । अत एव तत्त्वोद्योतटीकायां न विषयत्वं नाम वस्तुसामर्थ्यं किं नाम करणसामर्थ्याद्यदुल्लेखिज्ञानमुत्पद्यते स विषय इत्युच्यत इत्याद्युक्तम् । एवमधिकरणत्वकर्तृत्व-कर्मत्वप्रतियोगित्वादिकमपि तादृशतादृशज्ञानसामग्र्यासादितायां तत्तदधिकरणत्वतत्तत्कर्तृत्वतत्तत्कर्मत्व-तत्तत्प्रतियोगित्वादिप्रतीतावधिकरणत्वादिनोल्लेखित्वादिमात्रं न तु वस्तुकृतम् । इदं च ननु कथमसतो भाति भास्यत इति कर्तृत्वमित्याद्येतदधिकरणोत्तरग्रन्थे साध्यधर्मोऽयं सन्नसन्वा न वोभयमित्यनुव्याख्याव्याख्यानरूपोत्तरग्रन्थेऽभावज्ञानोपयोगिज्ञानतामात्रस्य प्रतियोगित्वादिति तत्त्वोद्यो-तटीकायां स्फुटमिति दिक् । ननु तर्ह्यव्यभिचारादस्तु लौकिकसाक्षात्कारविषयत्वव्यापकत्वं जनकत्वस्य । तथा च रजतादेरसतोऽजनकस्य लौकिकसाक्षात्कारविषयत्वानुपपत्तिरेवेति चेन्न । अजनकस्याप्यतीता-देरलौकिकसाक्षात्कारविषयत्ववदजनकस्यापि निरूपकत्वादिमात्रेण लौकिकसाक्षात्कारविषयत्वाभ्युपगमे बाधकाभावेनाप्रयोजकत्वात् रजतांशेऽलौकिकत्वस्य प्रत्यभिज्ञायास्तत्तांश इवाङ्गीकर्तुमुचितत्वाच्चेति समाधाने स्थितेऽपि स्वमतेऽभिनवान्यथाख्यातिस्वरूपप्रतिपादनाय शङ्कामुत्थापयितुमुपक्षेपाय सन्निकर्ष-

जनकतयाऽन्यथासिद्धत्वान्न लौकिकसाक्षात्कारेऽपि विषयस्य जनकत्वमिति प्रकारान्तरेण समाधत्ते ॥ **किञ्चेति** ॥ अस्तु तर्हि सन्निकर्षासंभवादेवासतो विषयत्वानुपपत्तिरिति शङ्कामुत्थापयति ॥ **नन्विति** ॥ मास्तु तत्सन्निकर्षोऽधिष्ठानसन्निकर्षादेव ज्ञानोत्पत्त्युपपत्तेरित्याशयेनाभिनवान्यथाख्याति स्वरूपमाह ॥ **शुक्तिकेति** ॥ एवं सत्यन्यदपि सिद्धं फलमित्याह ॥ **अत एवेति** ॥

**स०**— ननु सहकारिणामेवेष्टविघातित्वमात्रेण दोषत्वं क्वोपलब्धमित्यपेक्षायामाह ॥ **कामुकस्येति** ॥ गुणत्वाभिमानात् । प्रकृतकार्यानुगुणत्वाभिमानात् । सहकारित्वाभिमानादिति यावत् । इत्थमग्रेऽपि गुणपदं सहकारिपदम् ॥ **उक्तमेवेति** ॥ काचादयोऽपि विपरीतज्ञानजनने सहकारित्वाभिमानादिनेति शेषः ।

**प०**—ननु दोषत्वान्यथानुपपत्तिरेव नियामिका प्रतिबन्धकरूपत्वाद्दोषस्य शक्त्यन्तराधानेन कार्यानुकूलत्वे सहकारितापत्त्या दोषत्ववाचो युक्ती रिक्ता स्यादिति मन्वानं प्रत्याह ॥ **किञ्च काचादयोऽपीति** ॥ तेषु काचादिषु कुटजधाना गिरिमल्लिकाबीजम्॥ **पदार्था इति**॥ ते च वैद्यके प्रसिद्धाः। एवमसतो नभानात्संविद्विरोधाद्धेत्वभावाच्चेत्यन्यथाख्यातौ पूर्वपक्षिणोक्तं बाधकत्रयं परिहृतम् । तत्र यदुक्तमिष्टमेवैतदिति तदयुक्तमिति शङ्कते ॥ **ननु जनकस्यैवेति** ॥ जन्यज्ञान एवायं नियम इत्यत आह ॥ **प्रत्यभिज्ञानस्य चेति** ॥ **व्यावर्तकत्वं चेति** ॥ व्यावृत्तिबुद्धिकारणत्वं चेत्यर्थः ॥ **अतिप्रसङ्गादिति** ॥ विनष्टकारणादपि कार्योत्पत्तिप्रसङ्गादित्यर्थः । अर्थव्यावृत्तं अर्थेन व्यावृत्तमित्यर्थः ॥ **प्रकृतेऽपीति** ॥ शुक्तिरूप्यादिज्ञानस्थलेऽपीत्यर्थः। ननु सत्यरूप्यादिस्थले जनकस्यैव जन्यज्ञानं प्रति विषयत्वं दृष्टमित्यतस्तत्रापि नेत्याह ॥ **किञ्च सत्येति** ॥ **कारणत्वमिति** ॥ प्रयोजकत्वमित्यर्थः । सन्निकर्षेणान्यथासिद्धस्य कारणत्वायोगात् । न चैवं चक्षुरादेरपि साक्षाद्धेतुत्वं न स्यात् । सन्निकर्षस्य व्यापारत्वेनाव्यवधायकत्वेऽर्थस्याप्येवं स्यादिति चेन्न । रूपादिज्ञानं करणसाध्यं कार्यत्वादित्यादिधर्मिग्राहकमानेन चक्षुरादेर्हेतुत्वसिद्धिवदर्थस्य तदभावात् । तदुक्तं तर्कताण्डवे प्रत्यक्षादिप्रमास्वनुगतगुणभङ्गे । चक्षुरादिवत्कारणत्वेन धर्मिग्राहकमानसिद्धोऽर्थः सन्निकर्षेणान्यथासिद्धत्वादतीतादिविषययोगिप्रत्यक्षादावसत्त्वाच्च न प्रत्यक्षप्रमाहेतुरिति ॥ **तस्य सर्वस्यासत्त्व इति** ॥ अन्यथा सदुपरागेणासदपि तादात्म्यादि भासत इति प्राचीनतार्किकमतेऽप्येष दोषः स्यादिति भावः ॥

**या०**— ननु सहकारिणामिष्टविघातित्वमात्रेण दोषत्वं क्वोपलब्धमित्यपेक्षायामाह ॥ **कामुकस्येति** ॥ **विभ्रमेष्विति** ॥ विरक्तं प्रति वस्तुतो दोषरूपेष्विति शेषः । गुणत्वाभिमानात्प्रकृत-

कार्यानुगुणत्वाभिमानात् । सहकारित्वाभिमानादिति यावत् । एवमग्रेऽपि गुणपदं सहकारिपरम् । प्रसिद्धं च परीक्षकाणां गुणपदं सहकारिविशेषपरतया प्रामाण्यं गुणजन्यमित्यादिव्यवहारादिति ज्ञातव्यम् ॥ **यथा विषस्येति** ॥ रसौषधेषु विमिश्रितवत्सनाभ्याख्यविषस्येत्यर्थः ॥ **अत एवेति** ॥ साक्षिरूपज्ञानस्य नियतयाथार्थ्यादेवेत्यर्थः ॥

**श्री०—सहकारिण एवेति** ॥ चक्षुरादिना भ्रमे जननीये काचादिदोषाणामपि मन्त्रादिवत्सहकारित्वेनैवाङ्गीकारात्सहकारीभूतानां काचादिदोषाणां युक्तं स्वारसिकशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकत्वमिति भावः । ननु काचादीनां सहकारित्वे दोषत्वप्रसिद्धिः कथमित्यत आह ॥ **दोषत्वं त्विति** ॥ इष्टं समीचीनज्ञानम् ॥ **कामिनीविभ्रमेष्विति** ॥ हावभावविलासादिष्वित्यर्थः । कामुकस्य कामिनीविभ्रमेषु ग्राम्यकर्मरूपकार्यानुगुणत्वेन सहकारित्वाभिमानेऽपि विरक्तस्य मुक्तिरूपेष्टविघातित्वेन दोषत्वं दृष्टमिति सहकारिणामपीष्टविघातित्वमात्रेणैव दोषत्वं युक्तमिति भावः । न खलु दुष्टं कुटजबीजं वटं जनयति किं नाम न जनयत्येव कुटजाङ्कुरमित्युक्तं दोषमाशङ्क्य परिहरति ॥ **न चैवमिति** ॥ सहकारिणां सहजशक्तिप्रतिबन्धेन विपरितशक्त्याधायकत्व इत्यर्थः । भर्जिता भर्जनरूपसहकारिमन्तः ॥ **गुणा एवेति** ॥ वत्सनाभ्याख्यविषस्य मारकत्वशक्तिं प्रतिबध्यारोग्यजननशक्तिमादधाना ये पदार्थास्ते गुण एव सहकारिणो न तु दोषाः । अस्माभिस्तु दोषाणामेव सर्वशक्तिप्रतिबन्धेन विपरीत शक्त्यनाधयकत्वा मुच्यत इति भावः ॥ **उक्तमेवेति** ॥ किंच काचादयोऽपीत्यादिनेत्यर्थः ॥ **जैनकस्यैवेति** ॥ विषयतया ज्ञानजनकस्यैवेत्यर्थः ॥ **न स्यादिति** ॥ जनकत्वाभावादिति भावः । तदंशस्तत्तांशः । तद्देशकालसम्बन्धरूपस्य तत्तांशस्य प्रत्यभिज्ञानकालेऽभावेन जनकत्वाभावादिति भावः । निरूपकत्वमात्रेण व्यावर्तकत्वमात्रेण ॥ **कथमसत इति** ॥ निरूपणसमयेऽभावादिति भावः ॥ **इतिवदिति** ॥ तटस्थत्वेनेत्यर्थः । प्रमेयस्यातीतादेः ॥ **अतिप्रसङ्गादिति** ॥ रासभस्यापि पटकारणत्वापत्तिरित्यर्थः ॥ **किमनेनेति** ॥ कदाचित्सत्त्वकथनेनोक्तमित्यर्थः । तथा चातीतादिविषयकानुमितिपूर्वक्षणे विषयस्य सत्वाभावाद्व्यावर्तकत्वं न स्यादिति भावः ॥ **स्वसामर्थ्येनेति** ॥ स्वसन्निकृष्टकरणजन्यत्वेनेत्यर्थः ॥ **स्वहेत्विति** ॥ अतीतादिविषयकानुमित्यादिहेतुभूतलिङ्गादिसामर्थ्यादेवेत्यर्थः । अर्थव्यावृत्तमर्थेनेतरव्यावृत्तम् । अर्थसम्बद्धमर्थनिरूपितमिति यावत् ॥ **सममिति** ॥ अत्रापि दुष्टेन्द्रियरूपज्ञानहेतुसामर्थ्यादेव रजतादिव्यावृत्तं ज्ञानमुत्पद्यत इत्यर्थः ॥ **पारम्पर्येणैवेति** ॥ ज्ञानजनकसन्निकर्षजनकतयाऽन्यथासिद्धत्वान्नार्थस्य ज्ञानजनकत्वमिति भावः । न चैवमिन्द्रियस्यापि सन्निकर्षजनकत्वेनान्यथासिद्धत्वान्न साक्षात्कारज्ञानजनकत्वम् किंतु पारम्पर्येणैव स्यादिति वाच्यम् अन्वयव्यतिरेकाभ्यामिन्द्रियस्य साक्षाज्ज्ञान-

कारणत्वावधारणात् । न चैवं विषयस्याप्यन्वयव्यतिरेकाभ्यां साक्षाज्ज्ञानकारणत्वावधारणान्नान्यथासिद्धि-रिति वाच्यम् । अतीतादौ व्यभिचारेण विषये ज्ञाननिरूपितान्वयव्यतिरेकयोरभावादित्यवधेयम् । तामेव शुक्तिकामेव । अवगाहमानं यज्ज्ञानं इदं रजतमिति ज्ञानं तज्जनयतीत्यर्थः । इदं रजतमिति ज्ञानस्या-सद्रजतविषयकत्वे शून्यवाद्यभिमतासत्ख्यातिप्रसङ्ग इति चेत्तत्राह ॥ **अत एवेति** ॥ अत एवेत्युक्तं विशदयति ॥ **यावदिति** ॥ **न चैवमिति** ॥ अस्माभिरधिष्ठानभूतशुक्तिकाकलस्य सत्यत्वाङ्गीकारात् । शून्यवादिमतेऽधिष्ठानस्याप्यसत्वादिति भावः ।

च० — **कामुकस्येति** ॥ कामिनीविभ्रमेषु कामिनीविलासेषु । विरक्तं प्रति दोषरूपेति पूरणीयम् ।

**सु०—यच्चोक्तं विषयव्यभिचारे ज्ञानस्य सर्वत्रानाश्वास इति तत् औत्सर्गिकं ज्ञानानां प्रामाण्यमपवादाद्विपर्यय इति वदताऽऽचार्येणैव परिहरिष्यते । साक्षी खलु चैतन्यरूपो नियत याथार्थ्यः कदाचिदपि संशयानास्कन्दितोऽन्तःकरणवृत्तीनां याथार्थ्यं स्वयमेव गृह्णाति, परी-क्षासहकृतस्त्वयाथार्थ्यमिति बादरायणीयं मतम् । अत एवानाश्वासनिरसनोपायो न ज्ञानेषु कश्चिद्विशेषोऽस्तीति निरस्तम् । अन्यथा परस्यापि कथं विषयव्यभिचारे व्यवहृतेर्व्यवहारान्तरे समाश्वासः स्यात् । तदभावे च कथं व्यवहारदर्शनेनान्वितार्थे व्युत्पत्तिः । क्वचिद्विवेकाग्रहे च कथमन्यत्र विशिष्टप्रत्यये विश्वासो भवेत् । तदभावे च कथं निःशङ्का प्रवृत्तिः । बाधका-भावादिना समाश्वासस्तु परोक्तरीत्यैव निरस्तः । किञ्च प्रवृत्त्युत्तरकालीनो बाधकाभावः कथं निःशङ्कप्रवृत्तावुपयुज्यते । बाधकाभावादिना विशिष्टज्ञानस्वरूपनिश्चयमङ्गीकुर्वाणः कथं स्वप्रका-शविज्ञानवादं न जह्यात् । औत्सर्गिकी प्रवृत्तिरपवादान्निवृत्तिरिति चेत् । समं प्रकृतेऽपि ॥ यदप्युक्तं विपरीतख्यातिपक्षे ज्ञानं साकारमापतेदिति । तदनुपपन्नम् । अत्यन्तासत एवाकारस्य स्फुरणाङ्गीकारात् । अन्यथा व्यवह्रियमाणस्याकारस्य बहिरभावाद्व्यवहारोऽपि तदाकारः प्रसज्येत ॥ या चेयं प्रक्रिया रजतमिदमित्यादिनोक्ता सा ज्ञानद्वित्वे रजतज्ञानस्य च स्मृतित्वे प्रमाणाभावादनुपपन्ना । विशिष्टज्ञानबाधकानां परिहृतत्वात् । अनुमानानां च दूष्यत्वात् ॥ यस्तु रजतज्ञानस्य स्मृतित्वे परिशेषोपन्यासः सोऽपि प्रत्युत्पन्न-क(का)रणदुष्टेन्द्रियादिजन्यतोपपादनात्परिशेषानुपपत्तेरयुक्तः । अनाकलितरजतस्यानुत्पद्य-मानत्वं गगनादावनैकान्तिकम् । रजतज्ञानवत एवोत्पद्यमानत्वं विवक्षितमिति चेन्न**

**तथाऽपि रजतसंस्कारव्यवहारादौ व्यभिचारात् । ज्ञानत्वे सतीतिविशेषणाददोष इति चेन्न । रजतनिर्विकल्पकज्ञानवत एवोत्पद्यमाने रजतसविकल्पकानुभवे व्यभिचारतादवस्थ्यात् । रजतसविकल्पकज्ञानवत एवोत्पद्यमानत्वं विवक्षितमिति चेन्न हानादिबुद्धिष्वनैकान्तिकताऽनिस्तारात् । संस्कारमात्रसहकृतमनोजन्यत्वोपाधिग्रस्तं चानुमानम् । न चानेनैव हेतुनाऽस्य पक्षे साधनम् व्यभिचारस्योक्तत्वात् ।**

**वा०**— अपवादाभावे ज्ञानग्राहकेण प्रामाण्यनिश्चयादपवादकसद्भावे च तदग्रहणादप्रामाण्यग्रहणान्न ज्ञानानाश्वास इत्याशयेनाह ॥ **तदिति** ॥ ननु ज्ञानग्राहकस्यापि ज्ञानत्वाद्विषयव्यभिचारशङ्कया न तेन प्रामाण्यनिश्चयः । न च तद्ग्राहकेण तत्र प्रामाण्यनिश्चयः । अनवस्थापत्तेः । न च तस्य स्वप्रकाशत्वाङ्गीकारान्नानवस्थेति वाच्यम् । तथाऽपि ज्ञानत्वप्रयुक्तानाश्वासशङ्काया अपरिहारात् । न च तस्य याथार्थ्यनियमाभ्युपगमान्न दोष इति वाच्यम् । किञ्चिद्दूरं गत्वा स्वप्रकाशत्वयाथार्थ्यनियमाभ्युपगमादप्यादावेव सर्वज्ञानानां स्वप्रकाशत्वाद्यभ्युपगमस्योचितत्वात् । अपवादकस्थले ज्ञानग्राहकस्यैवाप्रामाण्यग्राहकत्वे तस्यापि स्वतस्त्वापत्तिश्चातो नैतत्समाधानं युक्तमित्यत आह ॥ **साक्षी खल्विति** ॥ ननु साक्षी स्वयमेव याथार्थ्यं गृण्हातीत्ययुक्तम् । तथात्वे ज्ञानग्राहकेण साक्षिणा सर्वत्र प्रामाण्यग्रहणापत्त्याऽपवादाभाव इत्युक्तानुपपत्तेः संशयानुपपत्तेश्चेति चेन्न । संशयादिनिवृत्तये परीक्षापेक्षाभ्युपगमात् । न च तर्हि परीक्षानवस्था स्यादिति वाच्यम् । मनोवृत्तिविषय एव संशयप्राप्त्या तन्निवृत्त्यर्थं परीक्षायाः साक्षिसिद्धसुखाद्यवतारपर्यन्ततयाऽनवस्थाभावात् । न च मनोवृत्तिविषय इव साक्षिविषयेऽपि संशयः कुतो नेति वाच्यम् । स्वारसिकसंशयस्य विशेषादर्शनादिदोषमूलकतयाऽऽहार्यसंशयस्य च प्रथमज्ञाने दोषजन्यत्वशङ्कामूलकतया दोषाणां च ज्ञानस्य दोलायमानतया बलवद्बाधकोपनिपातेन च कल्प्यतया साक्षिदर्शनस्य च निर्णयात्मकत्वेन बाधकशून्यतया च दोषमूलकत्वासंभवान्न मनोवृत्तितुल्यतेत्याशयेनोक्तं कदाचिदपि संशयानास्कन्दित इति । न चैवं स्वतः प्रामाण्यभङ्गः । प्रामाण्यग्रहणे परीक्षानपेक्षणात् । तदिदमुक्तम् ॥ **एवेति** ॥ ननु साक्षिणो बाध्यत्वस्य क्वचिदभ्युपगमेऽपि नानिष्टमिति चेन्न । साक्षिणः क्वचिदयाथार्थ्येऽविश्वसनीयत्वापत्त्या करणदोषाद्यनिश्चयप्रसङ्गेन ज्ञानानां भ्रमत्वाभ्रमत्वनिर्धारणाभावप्रसक्त्याऽर्थतथात्वातथात्वनिर्णयाभावानुषङ्गेण हानोपादानादिव्यवहाराभावापत्त्या सर्वलोकसिद्धनिःशङ्काविसंवादिव्यवहाररूपकार्यसिद्धये कारणीभूतवस्तुतथात्वनिश्चयस्य तत्सिद्धये च कारणदोषादिनिश्चयद्वारा साक्षिणा ज्ञानानां भ्रमत्वाभ्रमत्वनिश्चयस्य तदर्थं च साक्षिणो विश्वसनीयत्वस्य तदर्थं च साक्षिणो निर्दोषत्वयाथार्थ्यनियमस्यावश्याभ्युपगन्तव्यतया बाध्यत्वं तस्य न क्वचिदपि युक्तमित्याशयेनोक्तं॥**नियतयाथार्थ्य इति**॥ ननु माऽस्तु

परीक्षानवस्था ग्राहकानवस्था तु स्यादेव । न च स्वप्रकाशत्वात्साक्षिणः स्वस्यैव स्वप्रामाण्यग्राहकत्वमिति वाच्यम् । तर्हि वृत्तिज्ञानानामेव स्वप्रकाशतायाथार्थ्यनियमाभ्युपगमेन सर्वस्योपपत्तौ साक्षिणस्तदभ्युपगमो व्यर्थ इत्यतश्चैतन्यरूप इति अन्तःकरणवृत्तीनामिति चोक्तम् । अत्रैकवचनबहुवचनाभ्यामेकस्यैव याथार्थ्यनियमाद्यभ्युपगमेन सर्वस्योपपत्तौ किमप्रामाणिकसर्वप्रमाणविरुद्धसर्वप्रत्यययाथार्थ्यनियमाद्यभ्युपगमेनेति चैतन्यरूपत्वान्तःकरणवृत्तित्वोक्त्या च साक्षिणश्चैतन्यरूपत्वात्स्वप्रकाशत्वयाथार्थ्यनियमोपपत्तावप्यन्तःकरणवृत्तीनां जडत्वान्न तत्सम्भव इति वक्ष्यमाणमुपपादनप्रकारं सूचयति । प्रामाण्यग्रहणे दोषनिवृत्त्यर्थमेव परीक्षापेक्षावन्नाप्रामाण्यग्रहे तथा किन्तु अव्यभिचारादप्रामाण्यग्रह एवेति नाप्राण्यस्वतस्त्वापत्तिरित्याशयेनाह ॥ **परीक्षेति** ॥ तत्प्रामाण्यं बादरायणस्यानपेक्षत्वादिति जैमिन्यभ्युपेतबादरायणमतरहस्यानभिज्ञस्य कथं जैमिनिसूत्रव्याख्यातृत्वमिति परिहाराय बादरायणीयमित्युक्तम् । यद्वा त्वदुक्तानाश्वासप्रसङ्गस्य गौतमीयादीन्प्रति संभवेऽपि न बादरायणीयानस्मान्प्रतीत्याशयेनैतदुक्तम् ॥ **अत एवेति** ॥ चैतन्यरूपत्वस्य ज्ञानत्वावान्तरविशेषस्योक्तत्वादेवेत्यर्थः । उत्सर्गापवादन्यायेन समाधानं परमुखेनापि दर्शयितुं प्रतिबन्दीमाह ॥ **अन्यथेति** ॥ बाधकाभावेन समाश्वासं परोक्तरीत्या निरस्य वस्तुगतिमनुरुद्ध्यापि निरस्यति ॥ **किञ्चेति** ॥ अपसिद्धान्तेनापि तन्निरस्यति ॥ **बाधकेति** ॥ एवं बाधकानि परिहृत्य न केवलं बाधकानामुक्तरीत्याऽन्यथासिद्धिः किन्त्विदं रजतमित्यादिप्रत्ययानां गत्यन्तराभावाच्चेत्याशयवान्परोक्तगत्यन्तरनिरासायाह ॥ **या चेयमित्यादिना** ॥ ननु रजतज्ञानस्य स्मृतित्वात् इदंज्ञानस्य च सर्वाविवादानुभवत्वात्प्राप्तमेव ज्ञानद्वित्वमित्यत आह ॥ **रजतेति** ॥ अन्यथाऽनुपपत्तेरुक्तत्वादित्युक्तं ज्ञानद्वित्वे प्रमाणं निरस्यति ॥ **विशिष्टेति** ॥ ननु प्रत्ययत्वाद्यनुमानान्येव तत्र प्रमाणानीत्यत आह ॥ **अनुमानानां चेति** ॥ एवं च सतीत्यादिना दूष्यमाणत्वादित्यर्थः । ननु तथाऽपि स्मृतित्वे प्रमाणाभावादित्यनुपपन्नम् । परिशेषादेरुपन्यस्तत्वादित्यतस्तत्क्रमेण निरस्यति ॥ **यस्त्वित्यादिना** ॥ ननु यथाश्रुतेऽनैकान्तिकतायामपि द्वौ नञाविति न्यायलब्धार्थविवक्षायां न सेत्याशङ्कते ॥ **रजतेति** ॥ **हानादीति** ॥ अत्रापि तद्व्यतिरिक्तेति विशेषणोपादानेऽतिप्रसङ्गाद्विशिष्टहेतोरप्रयोजकत्वापत्तेश्चेत्याशयः । उपाधौ संस्कारेति मात्रेणेति च विशेषणं पक्षे साधनाव्यापकत्वसिध्यर्थमुपाध्यभावेन साध्याभावसाधनेऽसिद्धिपरिहारार्थं चेति द्रष्टव्यम् । अनेनैव स्मृतित्वसाधनायोपात्तेनानाकलितरजतस्यानुत्पद्यमानत्वेनैव । उक्तत्वादुक्तप्रायत्वात् ।

स०— ननु विगीतः प्रत्यय इत्याद्यनुमानैर्याथार्थ्यस्य सिद्धत्वाद्विशिष्टज्ञानाङ्गीकारे तस्याऽयाथार्थ्येन अनुमानविरोधस्तत्राह ॥ **अनुमानानां चेति** ॥ एतेनेत्यादिनेति शेषः । **संस्कार-**

**मात्रसहकृतमनोजन्यत्वोपाधिग्रस्तं चेति** ॥ अत्र समव्याप्तेर्विवक्षितत्वेन प्रत्यभिज्ञायां व्यभिचार-वारणाय मात्रेत्युक्तम् । संस्कारसहकृतेत्येतदन्तं सुखादौ व्यभिचारवारणाय ( हानादाविति शेषः । ) **व्यभिचारस्योक्तत्वादिति** ॥ गगनादाविति शेषः ।

प०—**परिहरिष्यत इति** ॥ 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि अनवस्थान्यथा हि स्यादप्रामाण्यं तथान्यत'इत्यत्रैवाधिकरण उत्तरत्र । तथा 'तत्प्रा-माण्यं यथा साक्षी स्थापयत्येवमेव हि । सर्वकालेष्वपि स्थैर्याद्व्यभिचारमपोह्य चे'त्यादौ प्रकृत्यधिकरणे । 'उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् । व्यभिचार्यपवादेन मानमेव भविष्यती'ति भक्तिपादादौ च तत्र तत्र परिहरिष्यत इत्यर्थः । तत्कथमित्यतः किञ्चिद्व्यनक्ति ॥ **साक्षी खल्विति** ॥ **अत एवेति** ॥ साक्षि-गृहीतयाथार्थ्यकत्वादेवेत्यर्थः । उक्तमर्थं प्रतिबन्द्याऽपि साधयति ॥ अन्यथेत्यादिना समं 'प्रकृतेऽपी-त्यन्तेन ॥ **परोक्तरीत्यैवेति** ॥ बाधकस्यापि ज्ञानत्वेन शङ्कास्पदत्वादित्यादिनाऽत्र पूर्वपक्षग्रन्थोक्त-रीत्यैवेत्यर्थः । अपि च प्रतीयमानोऽयं रजताकारः कुतस्त्य इति वक्तव्यमित्यादिनोक्तमनूद्य निराह ॥ **यदप्युक्तमित्यादिना** ॥ **इत्यादिनेति** ॥ रजतमिदमिति द्वे ज्ञाने स्मृत्यनुभवरूपे इत्यादिनोक्तेत्यर्थः । नन्वन्यथाऽनुपपत्तेरेव मानतयोक्तत्वात्कथं मानाभाव इत्यत आह ॥ **विशिष्टेति** ॥ साकारवादासदभान-संविद्विरोधहेत्वभावरूपबाधकानामित्यर्थः । नन्वन्यथाऽनुपपत्तेरमानत्वेऽपि किञ्चेदमिति तावदित्यादिनोक्त-परिशेषादिरूपानुमानानामस्तु मानत्वमित्यत आह ॥ **अनुमानानां चेति** ॥ दूष्यत्वादित्युक्तं तदाह ॥ **यस्त्वित्यादिना** ॥ **प्रत्युत्पन्नेति** ॥ प्रागजातं तदानीमेव संपन्नं क(का)रणं यद्दुष्टेन्द्रियादि तज्जन्य-तायाः 'न चान्यथाख्यातिजनने कारणाभाव' इत्यादिना ग्रन्थेनोपपादनादित्यर्थः । यच्चोक्तं इदं स्मरणं अनाकलितरजतस्यानुत्पद्यमानत्वात्संप्रतिपन्नस्मरणवदिति । तन्निराह ॥ **अनाकलितेति** ॥ **संस्कार-मात्रेति** ॥ प्रत्यभिज्ञायां साध्यव्याप्यत्वसिद्धये समव्याप्त्यभिप्रायेण मात्रपदम् । साधनाव्यापकत्व-सिद्धये वा ॥ **अनेनैव हेतुनेति** ॥ अनाकलितेत्युक्तहेतुना रजतज्ञानवत एवेत्यादिविवक्षितहेतुना चेत्यर्थः ।

या०— **संस्कारमात्रसहकृतमनोजन्यत्वोपाधिग्रस्तं चेति** ॥ अत्र समव्याप्तेर्विवक्षितत्वेन प्रत्यभिज्ञायां व्यभिचारवारणाय मात्रपदम् । घटाद्यनुभवे व्यभिचारवारणाय संस्कारसहकृतेत्युक्तम् । वेदादिसंस्कारजन्ये कर्मादौ व्यभिचारवारणाय मनःपदम् ॥ **व्यभिचारस्योक्तत्वादिति** ॥ गगना-दाविति शेषः ॥

श्री०—किंच प्रदर्शिताकारव्यभिचारे प्रत्ययस्य सर्वत्र व्यभिचारशङ्का दुर्वारा स्यादिति यदुक्तं तदनूद्य निराकरोति ॥ **यच्चोक्तमिति** ॥ परिहरिष्यते प्रत्यक्षवच्च प्रामाण्यमित्यत्रेति भावः । तदुपपादयति ॥ **साक्षी खल्विति** ॥ नियतयाथार्थ्योपपादनाय चैतन्यरूप इत्युक्तम् । मोक्षयोग्यजीवचैतन्यसाक्षिणो याथार्थ्यनियमादित्याशयः ॥ **परीक्षेति** ॥ विसंवादरूपपरीक्षेत्यर्थः । प्रकृते तु न ज्ञानत्वावान्तरविशेषमनाश्वासनिरसनक्षममीक्षामह इति यदुक्तं तदप्यत एवापास्तमित्याह ॥ **अत एवेति** ॥ साक्षिरूपे ज्ञानेऽनाश्वासनिरसनोपायस्य चैतन्यरूपत्वप्रयुक्तनियतयाथार्थ्यरूपस्य सत्त्वादेवेत्यर्थः । ज्ञानस्य प्रदर्शिताकारव्यभिचारेण सर्वत्रार्थव्यभिचारशङ्कयाऽनाश्वासे बाधकमाह ॥ **अन्यथेति** ॥ परस्यापि मते व्यवहृतिः प्रवृत्तिः । तथा चेदं रजतमिति ज्ञानजन्याया व्यवहृतेर्विषयव्यभिचारे घटादिज्ञानजन्ये व्यवहारान्तरे समाश्वासः कथं स्यादित्यर्थः । मास्तु व्यवहारान्तरे समाश्वास इत्यत आह ॥ **तदभावे चेति** ॥ **व्यवहारदर्शनेनेति** ॥ चैत्र जलमाहरेति प्रयोजकवृद्धोदीरितवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य जलाहरणविषयप्रवृत्तिदर्शनेन पार्श्वस्थबालस्य कथमन्वितार्थे व्युत्पत्तिः स्यादित्यर्थः **क्वचिद्विवेकाग्रहे चेति** । इदं रजतमित्यादिस्थले ग्रहणस्मरणात्मकं ज्ञानद्वयं नैकं भ्रमरूपं विशिष्टज्ञानमस्ति । प्रवृत्तिस्तु स्वरूपतो विषयत एव मिथो विवेकाग्रहादेवेत्यङ्गीकार इत्यर्थः ॥ **अन्यत्रेति** ॥ अयं घट इत्यादिविशिष्टप्रत्यय इत्यर्थः । तत्रापि ज्ञानद्वयमेवाङ्गीकृत्य विवेकाग्रहादेव प्रवृत्तिरस्त्वित्यर्थः । तदभावेऽन्यत्र विशिष्टप्रत्यये विश्वासाभावे । नन्वन्यत्र विशिष्टप्रत्यये; बाधकाभावादाश्वासः । इदं रजतमित्यत्र बाधकसद्भावादनाश्वास इत्यत आह ॥ **बाधकाभावादिनेति** ॥ **परोक्तरीत्यैवेति** ॥ बाधकस्यापि ज्ञानत्वेन शङ्कास्पदत्वान्न खलु बाधकस्य किमपि श्रृङ्गमस्तीति परोक्तरीत्यैवेत्यर्थः । इतोप्यन्यत्र विशिष्टप्रत्यये बाधकाभावादिना समाश्वासस्त्वया वक्तुं न शक्यत इत्याह ॥ **किञ्चेति** ॥ तथाच निःशङ्कप्रवृत्त्यनन्तरं बाधकाभावनिश्चयः सति च तस्मिन्निःशङ्कप्रवृत्तिरित्यन्योन्याश्रय इति भावः ॥ **बाधकाभावादिनेत्यादि** ॥ त्रिपुटीप्रत्यक्षवादिनः प्राभाकरस्य मते इदमहं जानामीति ज्ञानाकारः । तत्रात्मांशवेद्यांशानां प्रतीतिमङ्गीकृत्य स्वप्रकाशत्वेन विज्ञानस्वरूपनिश्चयोऽङ्गीकृतः । बाधकाभावादिना विशिष्टज्ञानस्वरूपनिश्चयाङ्गीकारे स्वप्रकाशविज्ञानवादत्यागापत्तेरिति भावः । तदभावे च कथं निःशङ्का प्रवृत्तिरित्युक्तं तत्र शङ्कते ॥ **औत्सर्गिकीति** ॥ तथा चान्यत्रापि विशिष्टप्रत्ययेऽनाश्वासेन न निःशङ्कप्रवृत्त्यभाव इत्यर्थः ॥ **सममिति** ॥ ज्ञानानां प्रामाण्यमौत्सर्गिकमपवादाद्विपर्यय इत्यङ्गीकारादिदं रजतमिति ज्ञानस्य विषयव्यभिचारे न सर्वत्रानाश्वासप्रसङ्ग इत्यर्थः ॥ अपि च प्रतीयमानोऽयं रजताकारः कुतस्त्य इति वक्तव्यम् । न तावत्पुरोवर्तिनिष्ठ इतीष्टमन्यथाख्यातिवादिनाम् । बाधकविरोधश्च तथा सति स्यात् । नापि देशान्तरवर्तीति वक्ष्यामः । ततश्च ज्ञानस्य एवार्थमित्यापतितम् । ततश्च जितं साकारविज्ञान-

वादिभिर्बाह्यैरिति यदुदितं पूर्वपक्षावसरे तदनूद्य समाधत्ते ॥ **यदप्युक्तमित्यादिना** ॥ विपरीतख्यातिपक्षे अन्यथाख्यातिपक्षे । उक्तरीत्या ज्ञानस्य साकारत्वापादनेऽतिप्रसङ्गमाह ॥ **अन्यथेति** ॥ बहिर्बाह्यार्थे । तथा व्यवह्रियमाणोऽयं रजताकारः कुतस्त्य इति वाच्यम् । न तावद्बाह्यार्थे पुरोवर्तिनि शुक्तिकाशकलेऽस्तीतीष्टमख्यातिवादिनाम् । नापि देशान्तरवर्ति । तस्यात्र व्यवहारानुपपत्तेः । तथाच व्यवहृतिनिष्ठ एवायमित्यापतितमिति व्यवहारोऽपि तदाकारः स्यादिति भावः । ननु तर्हीदं रजतमित्यादिप्रत्ययानां का गतिः । उच्यते । रजतमिदमिति द्वे ज्ञाने स्मृत्यनुभवरूपे इत्यादिनोक्तां प्रक्रियामनूद्य दूषयति ॥ **या चेयं प्रक्रियेत्यादिना** ॥ ननु भ्रमरूपविशिष्टज्ञानाङ्गीकारे साकारवादादसतो न भानादिति कारिकोक्तबाधकानां सत्त्वाज्ज्ञानद्वित्वं रजतज्ञानस्य स्मृतित्वं चाङ्गीकार्य इत्यत आह ॥ **विशिष्टज्ञानबाधकानामिति** ॥ नन्विदं स्मरणमनाकलितरजतस्यानुत्पद्यमानत्वादित्याद्यनुमानान्येव रजतज्ञानस्य स्मृतित्वादौ प्रमाणानीत्यत आह ॥ **अनुमानानां चेति** ॥ किञ्चेदमिति तावत्पुरोवर्तिनयनसम्प्रयोगजं ज्ञानमनुभव इत्यविवादम् । रजतज्ञानं च न तावदिन्द्रियजन्यमितीन्द्रियजन्यत्वाभावमुपपाद्य लिङ्गाद्यनुसन्धानविधुराणामपि जायमानमनुमानप्रभवमिति न शक्यते वक्तुमतः प्रत्युत्पन्नकारणाभावेऽप्युत्पद्यमानेनानेन परिशेषात्स्मरणेनैव भवितव्यमित्येवं रजतज्ञानस्य स्मृतित्वे परिशेष एव प्रमाणमिति पूर्वपक्ष्युक्तमाशङ्क्य निराकरोति ॥ **यस्त्वित्यादिना** ॥ **प्रत्युत्पन्नकारणेति** ॥ अव्यवहितपूर्वक्षणवृत्तिकारणेत्यर्थः । किञ्चेदं स्मरणमनाकलितरजतस्यानुत्पद्यमानत्वादित्युक्तमनुमानं दूषयति ॥ **अनाकलितरजतस्येति** ॥ **गगनादाविति** ॥ सर्वथाऽनुत्पद्यमानत्वादेवेति भावः ॥ **संस्कारव्यवहारादाविति** ॥ तयोरनुभवजन्यत्वादिति भावः । नन्वनाकलितरजतस्यानुत्पद्यमानत्वहेतुनैवोपाधिः पक्षे साध्यतेऽतः साधनव्यापकत्वान्नायमुपाधिरित्याशङ्क्य गगनादौ व्यभिचारान्नैवं साधयितुं शक्यत इत्याह ॥ **न चानेनैवेत्यादिना** ॥

**च०— संस्कारमात्रसहकृतमनोजन्यत्वोपाधिग्रस्तं चेति** ॥ अत्र विवृण्वानाः उपाधौ संस्कारेति मात्रेति च विशेषणं पक्षे साधनाव्यापकतासिद्ध्यर्थमुपाध्यभावेन साध्याभावसाधनेऽसिद्धिपरिहारार्थं चेति विवृण्वते । अत्र समव्याप्तेर्विवक्षितत्वेन प्रत्यभिज्ञायां व्यभिचारवारणाय मात्रपदं संस्कारसहकृतेत्येतदन्तं च घटाद्यनुभवे व्यभिचारवारणायेत्यपि स्थितम् ॥ **व्यभिचारेति** ॥ गगनादाविति पूरणीयम् ।

**सु०—किञ्चेदं स्मरणत्वं साध्यं न तावत्सामान्यं गुणेषु प्राभाकरैरभ्युपगतम् । अननुभक्तमिति चेत् । तदपि किमनुभवादन्यत्वमनुभवत्वानधिकरणत्वं वा । आद्येऽनुभवस्यापि**

तत्सम्भवेन सिद्धसाधनता स्यात् । द्वितीयेऽनुभवत्वं किमिति वाच्यम् । स्मृत्यन्यत्वमिति चेन्न स्मृतावपि प्रसङ्गात् इतरेतराश्रयप्रसक्तेश्च ॥ ज्ञानसंस्कारमात्रप्रभवत्वं स्मृतित्वमिति चेन्न । मानसप्रत्यक्षजा स्मृतिरित्यस्माभिरङ्गीकृतत्वेन पक्षस्याप्रसिद्धविशेषणत्वात् दृष्टान्तस्य साध्यवैकल्याच्च । किञ्चेन्द्रियव्यापारान्वयव्यतिरेकानुविधायीदं रजतज्ञानं तत्कार्यमित्यवसीयते । तथा च बाधितविषयत्वम् । अन्वयव्यतिरेकयोरन्यत्रोपयोगान्नैवमिति चेत् । तत्किमस्य स्मृतित्वे सिद्धेऽन्यत्रोपक्षयः कल्प्यते उतैवमेव । नाद्यः तदभावात् अस्मादेवानुमानात्तत्सिद्धावन्योन्याश्रयप्रसङ्गात् । न द्वितीयः । समीचीनरजतप्रत्ययेऽपि तथात्वप्रसङ्गात् । अन्यत्रोपक्षयः शङ्कित इति चेन्न तथाऽपि सन्दिग्धकालातीतताऽनिस्तारात् । समीचीनरजतानुभवेपि कथमन्यत्रानुपक्षयो निश्चितो भवता । अनुभवत्वनिश्चयादिति चेन्न इन्द्रियव्यापारस्यान्यत्रोपयोगशङ्कयाऽनुभवत्वस्यापि सन्दिग्धत्वात् । पुरोवर्तिव्यवहारसंवादादनुभवत्वनिश्चय इति चेन्न संवादानुभवस्याप्यनिश्चितत्वात् । असति बाधके न वृथाऽन्यत्रोपक्षयः शङ्कयत इति चेत् समं प्रकृतेऽपीति ॥ एतेनाप्रत्युत्पन्नकारणप्रभवत्वं स्मृतित्वमित्यपि परास्तम् । संस्कारोत्पत्त्यनन्तरमेव जातायां स्मृतावनैकान्तिकत्वं च ॥ अनुभूतविषयत्वं स्मृतित्वमित्यपि चेन्न । द्वितीयादिभ्रमे सिद्धसाधनत्वात् साध्याविशिष्टताप्रसङ्गाच्च ॥ तत्तांशोल्लेखित्वं स्मृतित्वमिति चेन्न अनुभवबाधितत्वात् ॥ एतेन ज्ञानसंभिन्नार्थगोचरत्वमित्यपि परास्तम् ॥ अनेनैव प्रतिपक्षानुमानद्वयमपि समाहितं वेदितव्यम् । नेदं स्मृतिरिति व्यवहर्तव्यं तत्तोल्लेखादिस्मृतिचिन्हविकलत्वादिति प्रथमप्रयोगे विवक्षितत्वात् । अत एव तिक्तगुडादिप्रत्ययप्रक्रियाऽपि परास्ता ।

वा० — **किञ्चेति** ॥ यद्यपि साध्यदूषणस्य हेतुदूषणात्पूर्वभाव एवोचितस्तथाऽपि साध्यदूषणप्रसङ्गे इतरेतराश्रयादेरन्यस्यापि क्वचिद्दृष्टान्तदूषणस्य क्वचिदनैकान्तिकत्वादिहेतुदूषणस्याप्युच्यमानतया साध्यमात्रदूषणत्वाभावेन हेतुमात्रदूषणोक्त्याऽऽनन्तर्यस्यैवोचितत्वादिति भावः ॥ **अभ्युपगतमिति** । गुणत्वं न जातिरनुगततयाऽप्रत्यक्षत्वाद्व्यतिरेकेण गोत्ववत् । रूपं रूपत्वतद्व्याप्यभिन्नसत्ताव्याप्यजातिमत्त्वेनाप्रतीयमानत्वाद्गोत्ववदित्यनुमानात् । न च सामान्यवत्त्वे सति स्पर्शरहितत्वे सति द्रव्याश्रितत्वमित्यादिव्यञ्जकवशात्तदुपलब्धिरिति वाच्यम् । कर्मादिसाधारणस्य तस्य गुणत्वाव्यञ्जकत्वात्तदर्थं कर्मान्यत्वेन विशेषणे रूपान्यत्वादिनाऽपि विशेषयितुं शक्यतयाऽनपेक्षितव्यावृत्तेरतिप्रसञ्जकत्वात् । न च रत्नतत्त्वमिवोपदेशसहकृतचक्षुरादिना तदुपलब्धिः । सामान्यनियतधर्मान्तरभावेणोपदेशस्य जाति-

ग्राहकतया प्रकृते तदभावात् । अत एव न रूपत्वादेरपि जातित्वम् । चक्षुरितरबहिरिन्द्रियाग्राह्यविशेष-गुणत्वादिना रूपादिसंज्ञोपपत्तेश्चेति तेषामाशय इति भावः । अत्र नाभ्युपगतमित्यनभ्युपगममात्रोक्त्या परोक्तसामान्यत्वदूषणस्य परिहार्यत्वं सूचयति । तथा हि । परस्परविरुद्धसंयोगविभागलक्षणकार्यो-त्पादकत्वरूपव्यञ्जकव्यङ्ग्याया उत्क्षेपणादिरूपकर्मवृत्तिजातेरवश्याङ्गीकर्तव्यतया विरुद्धकार्यजनकरूपादि-गुणानां कर्मैकजातीयत्वानुपपत्त्याऽकर्मकत्वेन तद्वैलक्षण्यस्य च द्रव्यादिसाधारणतया विरुद्धकार्यजनकत्वा-विशेषेऽपि सापेक्षत्वानपेक्षत्वाभ्यां द्रव्यकर्मणोर्विजातीयत्ववत्सामान्यवत्त्वकार्यानाश्रयत्वाविशेषेऽपि विरु-द्धाविरुद्धकार्याभ्यां गुणकर्मणोरपि विजातीयत्वमावश्यकम् । एवं च कार्यानाश्रयत्वविशिष्टाविरुद्धकार्य-जनकत्वादिव्यञ्जकवशाद् गुणत्वाद्युपलब्धिरुपपन्नैव । अननुसंहितोपाधेरुपहितप्रत्ययायोगेन नोपाधि-निबन्धनत्वं रूपादिसंज्ञानामपीति गुणत्वस्य जातित्वमिति दिक् । अनुभवशब्देन काचिदनुभवव्यक्ति-रुच्यतेऽनुभवत्वावच्छिन्नं वेत्याशयेन विकल्पयति ॥ **किमिति** ॥ यद्वा नञोऽन्यार्थत्वमभावार्थत्वं चेत्याशयेन विकल्पयति ॥ **किमिति** ॥ स्मृतिशब्देन यत्किञ्चित्स्मृतिविवक्षायामाह ॥ **स्मृताविति** ॥ सर्वस्मृतिविवक्षायामाह ॥ **इतरेति** ॥ वेगादिमात्रप्रभवपतनादावतिव्याप्तिराह ॥ **ज्ञानेति** ॥ अप्रसिद्ध-विशेषणत्वस्यादोषत्वमतेऽप्याह ॥ **दृष्टान्तस्येति** ॥ नन्वस्त्वयं तर्हि केवलव्यतिरेकी । न च साधारण्य-मनुकूलतर्काभावदशायामेव तस्य दोषत्वात् । अत्र चानुकूलतर्कं व्युत्पादयिष्यामीत्यतो दूषणान्तरमाह ॥ **किंचेति** ॥ यद्वा मानसप्रत्यक्षजत्वस्य स्मृतौ परेणानङ्गीकृततयाऽस्योपपाद्यदूषणत्वाद् दूषणान्तरमाह ॥ **किंचेति** ॥ अन्यत्रानुपक्षीणत्वेनान्वयव्यतिरेकयोरविशेषणे प्रत्यक्षसिद्धलिङ्गकरणकलिङ्गिज्ञाने व्यभिचारो विशेषणे च हेतुविशेषणासिद्धिरित्याशयेन शङ्कते ॥ **अन्वयव्यतिरेकयोरिति** ॥ आद्येऽप्यस्य स्मृतित्व-सिद्धिः प्रकारान्तरेण वा यस्यानाकलितरजतस्यानुत्पद्यमानत्वस्य बाधितविषयत्वमस्माभिर्व्युत्पाद्यते तत एव वा । आद्ये आह ॥ **तदिति** ॥ द्वितीये त्वाह ॥ **अस्मादेवेति** ॥ समीचीनस्थलेऽनुभवत्वनिश्चायकस्य शङ्कानिवर्तकत्वेऽपि न प्रकृते तन्निवर्तकं किञ्चिदिति सन्दिग्धहेतुविशेषणासिद्धिः स्यादेवेत्याशङ्कते ॥ **अन्यत्रेति** ॥ हेतुसन्देहाहितसाध्यसन्देहोऽपि बाधसंशयपर्यवसन्नत्वाद्दोष एवेति भावेनाह ॥ **तथाऽपीति** ॥ समीचीनस्थले शङ्कानिवर्तकसद्भावं प्रकृते तदभावमभ्युपगम्य सन्दिग्धकालातीतत्वमुक्तम् । वस्तुतस्तु तत्रापि तन्निवर्तकमिति नोक्तातिप्रसङ्गपरिहार इति प्रकृते उपक्षयशङ्कानिवृत्तिं परमुखेनैवोपपादयितुमाह ॥ **समीचीनेति** ॥ अनुभवत्वनिश्चयोऽपीन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वप्रयुक्ततज्जन्यत्वनिश्चय-निबन्धनो वा प्रकारान्तरेण वा । नाद्य इत्याह ॥ **इन्द्रियेति** ॥ द्वितीयं शङ्कते ॥ **पुरोवर्तीति** ॥ इदानीं साम्यं वक्तुं शङ्कानिवर्तकं परमुखेनाशङ्कते ॥ **असतीति** ॥ **एतेनेति** ॥ प्रत्युत्पन्नेन्द्रियजन्य-त्वोपपादनाद्बाधितविषयत्वेनेत्यर्थः ॥ **एतेनेति** ॥ ज्ञानसंभिन्नार्थविषयकत्वाभावस्यानुभवसिद्धतया-

ऽनुभवबाधितत्वेनेत्यर्थः । ननु द्वितीयप्रतिपक्षसमाधानेऽपि न प्रथमप्रतिपक्षसमाधानं पदात्पदार्थस्मृतौ हरिहरादिस्मृतौ च व्यभिचारापरिहारादित्यत आह ॥ **नेदमिति** ॥ स्मृतित्वरूपजातेः परेणानभ्युपगमादन्यस्य चोक्तरीत्यैवानुपपत्त्या स्मृतिचिन्होपेतत्वस्यैव स्मृतित्वेन वक्तव्यतया साध्यविशेषात्तथापि न स्मृतित्वाभावसाधनं सुशकमित्यतो व्यवहर्तव्यमित्युक्तम् । तत्तोल्लेखादीत्यादिपदेन पदार्थस्मृत्यादौ तत्तोल्लेखाभावेऽपि पदार्थं स्मरामीत्यनुव्यवसायादिरूपस्मृतिचिन्हमस्त्येवेति न व्यभिचार इति सूचितं भवति ॥ **अत एवेति** ॥ ज्ञानद्वित्वे प्रमाणाभावादेवेत्यर्थः ।

**स०**— स्मृतित्वानधिकरणत्वं विवक्षितमतो न दोष इत्यत आह ॥ **इतरेतराश्रयेति** ॥ **ज्ञानसंस्कारेति** ॥ ज्ञानजन्यसंस्कारेत्यर्थः । केषाञ्चिन्मते सर्वपदार्थानां संस्काराधायकत्वमङ्गीकृतम् । अत एवाविद्यासंस्कारादज्ञानिनां प्रवृत्तिरित्यादि वदन्ति । तद्रीत्यान्यत्रातिव्याप्तिवारणाय ज्ञानपदम् । आहितस्य साध्यसन्देहस्यानुमितिप्रतिबन्धकत्वाभिप्रायेणाह ॥ **सन्दिग्धेति** ॥ **पुरोवर्तिव्यवहारसंवादादिति** ॥ पुरोवर्तिविषयकसमर्थप्रवृत्तिसमानविषयकत्वादित्यर्थः ॥ **एतेनेति** ॥ किञ्चेन्द्रियव्यापारान्वयेत्युक्तदोषेणेत्यर्थः ॥ **अनुभवबाधितत्वादिति** ॥ इदं रजतमिति ज्ञाने तत्तांशोल्लेखाभावस्यानुभवसिद्धत्वात्तद्विरोधादित्यर्थः ॥ **ज्ञानसंभिन्नेति** ॥ ज्ञानसंभिन्नपदेन ज्ञानगृहीतार्थविवक्षायां द्वितीयादिभ्रमे सिद्धसाधनता । ज्ञानविशिष्टार्थविवक्षायां चाबाधितत्वमिति भावः ।

**प०**— साध्यविकल्पेनाप्यनुमानं दूषयितुं साध्यं पृच्छति ॥ **किञ्चेदमिति** ॥ जातिर्वाऽननुभवत्वं वाऽनुभवत्वानधिकरणत्वं वा ज्ञानसंस्कारमात्रप्रभवत्वं वाऽप्रत्युत्पन्नकारणप्रभवत्वं वाऽनुभूतविषयत्वं वा तत्तांशोल्लेखित्वं वा ज्ञानसंभिन्नार्थगोचरत्वं वेत्यष्टौ विकल्पान्हृदि कृत्वा क्रमेण निराह ॥ **न तावदित्यादिनाऽनेनैवेत्यन्तेन** ॥ **अनुभवस्यापीति** ॥ रजतज्ञानस्यानुभवत्वेऽपीत्यर्थः । यत्किञ्चिदनुभवस्यानुभवान्तरादन्यत्वादिति भावः । ननु स्मृतित्वानधिकरणत्वमनुभवत्वमतो न दोष इत्यतो दोषान्तरमाह ॥ **इतरेतरेति** ॥ त्वया गुणगतजातेरनङ्गीकारेण स्मृतित्वं नामानुभवत्वानधिकरणज्ञानत्वं वाच्यम् । अनुभवत्वं च स्मृतित्वानधिकरणत्वमिति ज्ञप्तावन्योन्याश्रय इत्यर्थः ॥ **ज्ञानसंस्कारेति** ॥ ज्ञानजन्यसंस्कारेत्यर्थः । क्रियाजन्यसंस्कारमात्रप्रभवेऽतिव्याप्तिवारणाय ज्ञानेत्युक्तिः । प्रत्यभिज्ञाव्यावृत्तये मात्रेत्युक्तिः ॥ **मानसेति** ॥ 'मानसं तद्धि विज्ञानमि'ति न विलक्षणनयान्ते वक्ष्यमाणत्वादिति भावः । यद्वा प्रमाणलक्षणवाक्यानुवादोऽयम् ॥ **अप्रसिद्धेति** ॥ इदं स्मरणमिति प्रत्यभिज्ञायां ज्ञानजन्यसंस्कारमात्रप्रभवं इत्यर्थः स्यात् । तादृशप्रभवत्वं च क्वाप्यप्रसिद्धमित्यप्रसिद्धविशेषणत्वमित्यर्थः । इदं च परीत्यैव दूषणं बोध्यम् । तेन 'आश्रयव्याश्रयासिद्धि साध्यासिद्धिश्च दूषणम् । केषाञ्चिन्न च ते दोषाः'

इति भक्तिपादीयानुव्याख्यानविरोधो न शङ्क्यः । एवमग्रेऽपि ॥ **दृष्टान्तस्येति** ॥ संप्रतिपन्नस्मरणवदिति पूर्वपक्ष्युक्तस्येत्यर्थः । स्मृतिमात्रस्य मनोजन्यत्वादिति भावः ॥ **बाधितविषयत्वमिति** ॥ बाधित-साध्यकत्वं पक्षस्येत्यनुषङ्गः ॥ **अन्यत्रेति** ॥ इदमिति ज्ञानजनन इत्यर्थः । तथाच रजतमितिज्ञान-मिन्द्रियकार्यं तदन्वयव्यतिरेकानुविधायित्वादित्युक्तौ हेतोरसिद्धत्वान्न बाधितविषयत्वमिति भावः ॥ **एवमेवेति** ॥ निर्बीजमेवेत्यर्थः ॥ **अस्मादेवेति** ॥ अनाकलितरजतस्यानुत्पद्यमानत्वादित्युक्तानुमाना-देव स्मृतित्वसिद्धिरित्युक्तौ स्मृतित्वे सिद्धे इन्द्रियान्वयव्यतिरेकयोरन्यत्रोपयोगकल्पना कल्पिते चान्यत्रो-पयोगे तेन बाधितविषयत्वाभावेन निर्दोषादनुमानात्स्मृतित्वसिद्धिरित्यन्योन्याश्रयप्रसङ्गादित्यर्थः । बाधकत्वेन शङ्कितानुमानं सन्दिग्धासिद्धमिति भावेन शङ्कते ॥ **अन्यत्रेति** ॥ **सन्दिग्धकालातीततेति** ॥ पक्षे हेतुसत्त्वासत्त्वसन्देहे तत्प्रयुक्तसाध्यतदभावगोचरसन्देहस्यावर्जनीयत्वात्सन्दिग्धबाधितत्वदोषः स्यादेवे-त्यर्थः । साध्यसन्देहस्य स्वरसतो जायमानस्यानुमित्यङ्गत्वेऽप्युपाधिसन्देहाहितसाध्यसन्देहस्यैव हेतोर-प्रयोजकत्वाहितसाध्यसन्देहस्यैव च सन्दिग्धासिद्ध्याहितसाध्याभावसन्देहस्याप्यनुमितिप्रतिबन्धकत्वम-स्त्येवेति भावः । निश्चितबाधोऽपि संभवतीति प्रतिबन्दीमुखेनाह ॥ **समीचीनेति** ॥ **एतेनेति** ॥ इन्द्रियजत्वसाधकानुमानबाधितत्वकथनेनेत्यर्थः ॥ **अप्रत्युत्पन्नेति** ॥ चिरकालोत्पन्नेत्यर्थः । संस्कार-रूपकारणोत्पत्त्यनन्तरं चिरकाले स्मृतेरुत्पत्तेरिति भावः ॥ **साध्याविशिष्टतेति** ॥ अनाकलितरजतस्या-नुत्पद्यमानत्वादित्यस्य हि 'द्वौ नञावि'तिन्यायेन आकलितरजतस्यैवोत्पद्यमानत्वादिति विवक्षितमित्युक्त-त्वादस्य चानुभूतविषयत्वादित्येतदनन्यत्वादिति भावः ॥ **अनुभवेति** ॥ विप्रतिपन्नं भ्रमस्थलीयरजत-ज्ञानं पक्षीकृत्येदं ज्ञानं तत्तांशोल्लेखीतिसाधनेऽनुभवबाध इत्यर्थः ॥ **एतेनेति** ॥ अनुभवबाधेनैव ज्ञानमिलितार्थविषयकत्वं स्मृतित्वमित्यपि निरस्तमित्यर्थः ॥ **अनेनैवेति** ॥ तत्तांशोल्लेखित्वस्यानुभव-बाधितत्वकथनेनैव । तथा किञ्चेन्द्रियव्यापारान्वयव्यतिरेकानुविधायीदं रजतमितिज्ञान-मित्यादिनेन्द्रियव्यापारस्यान्यत्रोपयोगाभावकथनेनैव च । यथा क्रमं इदमस्मरणं तत्तांशविकलत्वा-त्संप्रतिपन्नवत् । नेयं स्मृतिः इन्द्रियजन्यत्वादिति प्रागुक्तप्रतिपक्षद्वयमपि समाहितमित्यर्थः । नन्वाद्यमप्रयोजकत्वेन दूषितं प्रागित्यतो यथा नाप्रयोजकत्वं तथाऽऽह ॥ **नेदमिति** ॥ हेतूच्छित्तिरेवात्र विपक्षे बाधिकेत्यर्थः । यद्वा नेदं स्मरणं तत्तांशविकलत्वादित्युक्तौ तत्तोल्लेखस्यानुभवबाधेन स्वरूपा-सिद्ध्यभावेऽपि साध्याविशिष्टता तु स्यादेव स्मृतित्वस्य तत्तोल्लिखित्वरूपत्वादित्यत आह ॥ **नेदं स्मृतिरिति व्यवहर्तव्यमिति** ॥ न च हरिहरादिस्मृतौ व्यभिचारः शङ्क्यः । तत्र पूर्वानुभूतविषयक-त्वसंस्कारजत्वादिस्मृतिचिह्नान्तरसत्त्वात् । अत एव तत्तोल्लेखादीत्यादिपदप्रयोगः ॥ **अत एवेति** ॥ ज्ञानद्वित्वे प्रमाणाभावादेवेत्यर्थः ॥

या०— **न तावत्सामान्यमिति** ॥ प्राभाकरै रूपादीनामेकैकत्वाङ्गीकारेण तैरेवानुगतव्यवहारोपपत्तौ तदर्थं तेषु गुणत्वावान्तरजातयो नाङ्गीकृता इत्यर्थः। जातेराकृतिव्यङ्ग्यत्वाद्गुणेषु च तदभावाज्जात्यभाव इत्यप्याहुः ॥ **ज्ञानसंस्कारेति** ॥ ज्ञानजन्यसंस्कारेत्यर्थः। कैश्चित्सर्वार्थानां संस्काराधायकत्वमङ्गीकृतम्। अत एव चाविद्यासंस्काराज्ज्ञानिनां प्रवृत्तिरित्यपि वदन्ति। तद्रीत्या तत्रातिव्याप्तिवारणाय ज्ञानपदम् ॥ **सन्दिग्धेति** ॥ यद्यपि बाधसन्देहस्य साध्यसन्देहपर्यवसन्नतया नानुमितिप्रतिबन्धकत्वम्। तथाऽप्याहितस्य तस्य प्रतिबन्धकत्वमस्त्येवेत्यभिप्रायेणेदमुक्तमित्यवधेयम् ॥ **पुरोवर्तिव्यवहारेति** ॥ पुरोवर्तिविषयकसमर्थप्रवृत्तिसमानविषयकत्वादित्यर्थः ॥ **एतेनेति** ॥ उक्तरीत्या बाधितविषयत्वेनेत्यर्थः ॥ **ज्ञानसम्भिन्नेत्यादि** ॥ मयेदं ज्ञातमिति विशिष्टार्थगोचरत्वमित्यर्थः। इदमपीदं रजतमित्यत्र ज्ञानस्य विशेषणतयाऽनुभवाभावाद्बाधितमेवेति भावः ॥ **तत्तोल्लेखादीति** ॥ अत्रादिपदेन संस्कारमात्रजन्यत्वं ग्राह्यम्। पदात्पदार्थस्मृतौ हरिहरादिस्मृतौ च किञ्चित्स्मृतिचिन्हमस्त्येवेति न व्यभिचार इति भावः ॥

श्री०—साध्यविकल्पेनाप्यनुमानं दूषयितुं साध्यं पृच्छति ॥ **किञ्चेदमिति** ॥ **नतावदिति** ॥ जातेराकृतिव्यङ्ग्यत्वाद्गुणानां च निराकारत्वादिति भावः ॥ **तत्संभवेनेति** ॥ इदं रजतमिति ज्ञानं स्मरणमित्यस्यानुभवान्यत्वरूपमननुभवत्वमर्थः। तथाच पक्षीभूते रजतमिति ज्ञाने घटाद्यनुभवान्यत्वस्य सिद्धत्वेन सिद्धसाध्यता स्यात्। एतादृशानुभवान्यत्वस्य स्मरणत्वोक्तौ यज्ञदत्तानुभवस्यापि देवदत्तानुभवान्यत्वस्य सत्त्वाद्घटानुभवस्यापि पटानुभवान्यत्वस्य सत्त्वात्स्मरणत्वापत्तिरिति भावः ॥ **स्मृतावपीति** ॥ यज्ञदत्तस्मृतेरपि देवदत्तस्मृत्यन्यत्वादनुभवत्वं स्यादित्यर्थः ॥ **इतरेतराश्रयेति** ॥ अनुभवत्वज्ञाने तदनधिकरणत्वरूपस्मृतित्वज्ञानं स्मृतित्वज्ञाने तदन्यत्वरूपानुभवत्वज्ञानमितीतरेतराश्रयप्रसङ्गादित्यर्थः॥ **अप्रसिद्धविशेषणत्वादिति** ॥ अस्मन्मते स्मृतेर्मानसप्रत्यक्षजन्यत्वेन संस्कारप्रभवत्वानङ्गीकारात्संस्कारप्रभवत्वरूपस्मृतित्वसाधनेऽस्माकमप्रसिद्धविशेषणत्वं स्यादित्यर्थः ॥ **दृष्टान्तस्येति** ॥ सम्प्रतिपन्नस्मरणे मानसप्रत्यक्षजन्यत्वेन संस्कारप्रभवत्वस्यानङ्गीकारेण साध्यवैकल्यं स्यादित्यर्थः ॥ **तत्कार्यमितीति** ॥ रजतज्ञानमिन्द्रियजन्यं तदन्वयव्यतिरेकानुविधायित्वादित्यनुमानादित्यर्थः। स्मृतिबीजसंस्कारोद्बोधहेतुपुरोवर्तिसाधारणाकारग्रहण एवेन्द्रियान्वयव्यतिरेकयोरुपक्षीणत्वादिति पूर्वपक्ष्युक्तमाशङ्क्य निराकरोति ॥ **अन्वयव्यतिरेकयोरिति** ॥ **अन्यत्रेति** ॥ अधिकरणभूतशुक्तिग्रहण इत्यर्थः ॥ **अस्मादेवेति** ॥ अनाकलितरजतस्यानुत्पद्यमानत्वहेतोः सकाशादेवेत्यर्थः ॥ **अन्योन्याश्रयेति** ॥ अस्मादनुमानात्स्मृतित्वे सिद्धे इन्द्रियान्वयव्यतिरेकयोरन्यत्रोपक्षयसिद्धिः। तत्सिद्धौ च रजतज्ञानस्येन्द्रियजन्यत्वसाधकानुमानस्य दुष्टत्वेन तद्विरोधाभावा-

दुक्तानुमानेन स्मृतित्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥ **तथात्वेति** ॥ तथाऽपीन्द्रियान्वयव्यतिरेकयोरधिकरणभूतभूतलग्रहण एवोपक्षीणत्वप्रसङ्गेनेन्द्रियजन्यत्वं न स्यादित्यर्थः ॥ **सन्दिग्धेति** ॥ इन्द्रियान्वयव्यतिरेकयोरन्यत्रोपक्षयशङ्कया रजतज्ञानस्य तत्कार्यत्वसन्देहेन स्मरणत्वरूपसाध्यस्यापि सन्दिग्धत्वेन सन्दिग्धकालातीतता स्यादित्यर्थः । यद्यपि बाधसन्देहस्य ग्राह्यसंशयपर्यवसन्नत्वेन नानुमितिप्रतिबन्धकत्वम् । यथाऽऽहुः । नानुपलब्धेन निर्णीतेऽर्थे न्यायः प्रवर्तते । अपि तु सन्दिग्धेऽर्थे इति । तथाऽप्यन्यत्रोपक्षयशङ्काहितस्य बाधसन्देहस्य प्रतिबन्धकत्वमेवेत्याशयेनेदं दूषणमुक्तमित्यवगन्तव्यम् ॥ **पुरोवर्तिव्यवहारसंवादादिति** ॥ पुरोवर्तिनि व्यवहारसंवादात्समर्थप्रवृत्तिजनकत्वरूपविजातीयसंवादादित्यर्थः ॥ **संवादानुभवस्यापीति** ॥ विजातीयसंवादस्यानुभवत्वमुक्तरीत्या सन्दिग्धमिति भावः । समीचीनरजतानुभवस्थले इन्द्रियान्वयव्यतिरेकयोरन्यत्रानुपक्षये निश्चित इति शङ्कते ॥ **असति बाधक इति** ॥ **प्रकृतेऽपीति** ॥ इदं रजतमित्यत्रापि येनान्वयव्यतिरेकयोरन्यत्रोपक्षयः शङ्क्यो बाधकाभावादित्यर्थः ॥ **एतेनेति** ॥ इन्द्रियान्वयव्यतिरेकानुविधायित्वेनेन्द्रियजन्यत्वस्य निर्धारितत्वेन प्रत्युत्पन्नकारणजन्यत्वस्यैव सिध्या बाधितविषयत्वेनेत्यर्थः । **संस्कारोत्पत्त्यनन्तरमेवेति** ॥ तथाच तादृशस्मृतावनाकलितरजतस्यानुत्पद्यमानत्वे सत्यपि संस्काररूपप्रत्युत्पन्नकारणप्रभवत्वस्यैव सत्वेनोक्तरूपस्मृतित्वाभावाद्व्यभिचार इत्यर्थः ॥ **द्वितीयादिभ्रम इति** । रजतमिति ज्ञानसामान्यस्य पक्षत्वेन द्वितीयादिभ्रमस्यापि पक्षत्वात्तत्रानुभूतविषयत्वसद्भावात्सिद्धसाधनतेत्यर्थः ॥ **साध्याविशिष्टतेति** ॥ यथानुभूतविषयत्वाख्यस्मृतित्वरूपं साध्यं रजतज्ञाने सन्दिग्धं तथाऽनाकलितरजतस्यानुत्पद्यमानत्वरूपो हेतुरपि सन्दिग्धः । रजतानुभववत एवोत्पद्यमानत्वस्यैव तदर्थत्वात् । तथाच साध्यसमो हेतुरित्याशयः ॥ **अनुभवेति** ॥ रजतमिति स्मरणस्य प्रमुषिततत्तांशकत्वाङ्गीकारेण तत्र तत्तांशोल्लेखित्वरूपे स्मृतित्वे साध्येऽनुभवबाध इत्यर्थः ॥ **अनुमानद्वयमपीति** ॥ इदमस्मरणं तत्तांशविकलत्वात् । सम्प्रतिपन्नवत् । नेयं स्मृतिरिन्द्रियजन्यत्वात् । तच्चेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वादित्येवं यत्स्मृतित्वसाधकानुमानस्य प्रतिपक्षद्वयमाशङ्कितं तदपि समाहितम् । इन्द्रियव्यापारान्वयव्यतिरेकयोरन्यत्रानुपक्षयस्योपपादितत्वादित्यर्थः । ननु तत्तांशोल्लिखितस्यैव स्मरणत्वेन तत्तांशविकलत्वादस्मरणमिति प्रथमप्रयोगे साध्यावैशिष्ट्यमित्याशङ्क्य व्यवहारस्य साध्यत्वान्न दोष इत्याह ॥ **नेदं स्मृतिरिति व्यवहर्तव्यमिति** ॥ अथवा नायं नियमो ग्रहणस्मरणे एवागृहीतविवेके व्यवहारादिप्रवर्तके इति । किन्तु क्वचिद्ग्रहणे एव मिथोऽगृहीतभेदे यथा पीतः शङ्ख इतीति प्रतिज्ञाय । अत्र हि विनिर्यन्नयनरश्मिवर्तिनः पित्तद्रव्यस्येत्यादिना तदुपपाद्य एवं तिक्तो गुड इति व्यवहारोऽपीति प्रक्रियोक्तां दूषयति ॥ **अत एवेति** ॥ आदिपदेन पीतशङ्खग्रहणम् । तथा च तिक्तगुडपीतशङ्खप्रत्ययप्रक्रिया विशिष्टज्ञानाङ्गीकारे बाधकाभावेन ज्ञानद्वयाङ्गीकारादेव परास्तेत्यर्थः ।

तथा च जन्मान्तरानुभुक्तां तिक्ततां स्मृत्वा गुडे आरोप्यत इति स्मर्यमाणारोपो वा जिह्वागतपित्तद्रव्यनिष्ठां तिक्ततां गृहीत्वा गुडे आरोपयतीति गृह्यमाणारोपो वेति द्रष्टव्यम् ।

च०— हेतोः सन्दिग्धविशेषणासिद्धिमाशङ्कते ॥ **अन्यत्रेति** ॥ हेतुसन्देहाहितसाध्यसन्देहोऽपि बाधसन्देहपर्यवसन्नत्वाद्दोष इत्याह ॥ **तथाऽपीति** ॥

**सु०—यदपि विपर्ययाभ्युपगमे कल्पनागौरवमुक्तम् तत् विवेकाग्रहमात्रेण प्रवृत्त्यादेरुपपत्तौ तथाऽस्तु । न चैवमिति वक्ष्यामः । किंचैवमन्त्यतन्तुसंयोगपर्यन्तं कारणकलापमुपादाय पटोऽपि नाङ्गीकरणीयः तन्मात्रेण सर्वस्योपपत्तेः । पटोऽपि प्रमितो न हातुं शक्यते । न च तेन विनैकत्वादिप्रत्ययोपपत्तिरिति चेत् विपर्ययेऽप्येवमिति कुतो गौरवम् ॥ अन्यथाख्यातौ किं प्रमाणमिति चेत् । अनुभव एवेति ब्रूमः॥(त) यथा हि पुरोवर्तिनि रजते रजतमिदमिति विशिष्टविषयमेकमेव विज्ञानं स्वप्रकाशतया वा मानसप्रत्यक्षतया वा साक्षिणा वाऽवभासते तथेदमपीति कुतोऽस्य न विशिष्टविषयैकज्ञानत्वम् । न हि ततोऽस्य मात्रयाऽपि विशेषं पश्यामः । दर्शने वाऽस्मात्प्रवृत्तिर्न स्यात् ॥ केवलमेकं तादृग्विषयसद्भावाद्यथार्थं तदभावापरमयथार्थमविशिष्टविषयमनेकमपि तद्विशिष्टविषयैकत्वेन प्रतिभासत इति चेन्न । अन्यस्यापि विशिष्टविषयैकत्वे समाश्वासासम्भवप्रसङ्गात् विपर्ययाङ्गीकारप्रसक्तेश्च । नास्त्येव विशिष्टविषयैकत्वग्राहिप्रत्यय इति चेन्न अनुभवसिद्धज्ञानापलापे स्मृत्यनुभवस्वरूपापलापप्रसङ्गात् ॥ किञ्च रजतार्थिनः शुक्तिकायां प्रवृत्तिरन्यथाऽनुपपन्नाऽन्यथाज्ञानमाक्षिपति । नन्वियं प्रवृत्तिः स्वरूपतो विषयतश्चागृहीतभेदाद्वेदनद्वयादुपपद्यतइति चेत् । कोऽयं भेदो नाम । किं स्वरूपम् उत पृथक्त्वम् उतान्योन्याभावः अथवावैधर्म्यम् । न प्रथमः स्वप्रकाशज्ञानज्ञेयप्रतिभासे तदनवभासानुपपत्तेः । न द्वितीयः गुणे गुणानभ्युपगमात् । सर्वत्र भेदाग्रहसम्भवेनान्यार्थिनोऽन्यत्र प्रवृत्तिप्रसङ्गात् । तृतीये वक्तव्यम् । किमिदंरजतत्वयोरन्योन्याभावो नावभासते उतेदंरजतयोरिति । नाद्यः अपर्यायशब्दस्मारकयोर्जातिव्यक्त्योस्तदनवभासासम्भवात् । किञ्चान्योन्याभावो नामान्योन्यस्वरूपमेव परस्य । तच्चोपलब्धमिति कथं तदनुपलम्भः । अत एव न द्वितीयः । नापि चतुर्थः रजतासम्भविनः पुरोवर्तिनीदन्त्वस्य पुरोवर्त्यसम्भविनश्च रजते रजतत्वस्य गृहीतत्वात् । इदंरजतत्वयोरसंसर्गाग्रहो विवक्षित इति चेन्न । असंसर्गो हि संसर्गस्याभावः । स चेदंरजतत्वयोः**

**स्वरूपमेव परेषाम् इति कथं तदवभासे नावभासेत । विपर्ययाभ्युपगमवादिभिरपि भेदाग्रहोऽभ्युपगमनीय एव । तत्रापि समानो दोष इति चेन्न भेदस्य स्वरूपतावन्मात्रत्वानभ्युपगमात् ।**

**वा०** — किञ्चेत्यादिना पूर्ववाद्युक्तकल्पनागौरवपर्यवसानं सूचयन्नेव तदनूद्य दूषयति ॥ **यदपीति** ॥ अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु प्रमाणसिद्धविपर्ययाभ्युपगमे कल्पनागौरवप्रसक्तिरेव नेत्यन्यथाख्यातिप्रमाणोपन्यासाय तच्छङ्कामुत्थापयितुं प्रस्तावाय प्रतिबन्दीमुखेन दूषणान्तरमाह ॥ **किं चेति** ॥ इदं रजततया प्रत्यभादिति वेदं रजततया जानामीति वाऽनुभवस्य प्रकृतस्य विशिष्टविषयकैकत्वानिश्चायकत्वे पुरोवर्तिरजतस्थलेऽपि तज्ज्ञानानुभवस्य न तन्निश्चायकत्वं स्यादविशेषादित्याह ॥ **न हीति** ॥ अत एव दृष्टान्ततया पूर्वं तदुपपादनम् । नन्वेतज्ज्ञानानुभवस्यापि विशिष्टविषयैकत्वविषयत्वे पुरोवर्तिरजतज्ञानवदेवास्यापि यथार्थत्वोपपत्त्या यायाथ्यर्यायाथार्थ्यविभागमभिलषता तदनुभवयोर्विशिष्टविषयैकत्वाविषयकत्वतदभावाभ्यां विशेषः स्वीकर्तव्य एवेत्यत आह ॥ **दर्शने वेति** ॥ कथं तर्हि उक्तदूषणपरिहार इत्यतो विशिष्टविषयैकत्वाविशेषेऽपि विषयसदसत्त्वाभ्यामेव ज्ञानयाथार्थ्यतदभावोपपत्तेर्नानुपपत्तिरित्याह ॥ **केवलमिति** ॥ ननु तथाऽपि नैतदनुभवबलादिदं रजतमिति प्रत्ययस्यान्यथाख्यातित्वसिद्धिः । एतदनुभवस्यैवान्यथात्वोपपत्तेरित्याशङ्कते ॥ **अविशिष्टेति** ॥ अत्रापि समीचीनज्ञानानुभवप्रतिबन्दीमुखेनोत्तरमाह ॥ **अन्यस्यापीति** ॥ बाधकाभावादिना समाश्वासस्तु पूर्वमेव निरस्त इति भावः । किञ्चेदंरजतमितिज्ञानस्य विशिष्टविषयैकत्वे विपर्ययप्राप्तेर्बिभ्यतैतज्ज्ञानानुभवस्य विपर्ययत्वमङ्गीकर्तव्यमेवेतीदंरजतमिति ज्ञानस्यैव तदस्तु विपर्ययाङ्गीकारस्यापरिहार्यत्वादित्याह ॥ **विपर्ययेति** ॥ नन्वङ्गीकारवादेन मया त्वदुक्तानुभवस्य कथञ्चिदुपपत्तिरुक्ता मदभिमतं त्वित्थमित्याशयेन शङ्कते ॥ **नास्त्येवेति** ॥ नन्वेवं सत्यनुभवकलह इत्यतः प्रत्यक्षे विप्रतिपद्यमानं प्रत्यर्थापत्तिमाह ॥ **किञ्चेति** ॥ ननु भेदाग्रहादेव प्रवृत्त्युपपत्तेर्न तदनुपपत्त्याऽन्यथाख्यातिसिद्धिः । ननु विषयतोऽगृहीतभेदज्ञानस्य न प्रवर्तकत्वं युक्तम् । रजतानिष्टभेदाग्रहादप्रवृत्तेः । न चेष्टेतिविशेषणाददोषः । इष्टपुरोवर्त्यनुपस्थितावपि तत्सत्त्वेन प्रवृत्त्यापत्तेः । न चोपस्थितत्वेनेष्टपुरोवर्तिनो विशेषणाददोष इति वाच्यम् । रजते नेदं रजतमितिज्ञानात्प्रवृत्त्यापत्तेः । न च स्वातन्त्र्यमुपस्थितेष्टविशेषणम् तत्किमन्याविशेषणत्वमभावाविशेषणत्वं वा । आद्ये रजतवदिदं गेहमिति ज्ञानात्प्रवृत्त्यभावापत्तिः । द्वितीये इदं रजतं गेहे नास्तीत्यादौ प्रवृत्त्यभावापत्तिः । न च पुरोवर्तिवृत्तित्वेन गृहीतभेदाविशेषणत्वं तत् । अन्यथाख्यातिभिया रजतानुभवरजतभेदस्मरणात्मता रजतभेदस्मरणात्मतया रजतभेदानुभवरजतप्रतियोगित्वस्मरणात्मतया वा त्वया कल्प्यमाने रजत एव नेदंरजतभेदस्मरणस्थले

पुरोवर्तिवृत्तित्वेन भेदस्याग्रहणात् । रजतप्रतियोगित्वस्मरणस्थले पुरोवर्तिवृत्तित्वेन भेदज्ञानेऽपि तद्विशेषणतया रजतस्याग्रहादुभयत्रापि रजतस्य पुरोवर्तिवृत्तित्वेन गृहीतभेदाविशेषणत्वरूपस्यातन्त्यसद्भावात्तत्रापि प्रवृत्त्यापत्तेः । अत एव पुरोवर्तिनिष्ठभेदे रजतप्रतियोगित्वज्ञानविषयत्वाभावस्य पुरोवर्तिनिष्ठभेदप्रकारकज्ञानविषयत्वाभावस्य वा हेतुत्वं भेदाग्रहस्य हेतुत्वं वदतो ममाभिमतमिति निरस्तम् । रजतानुभवरजतभेदस्मरणात्मके रजतभेदानुभवरजतप्रतियोगित्वस्मरणात्मके वा रजत एव नेदं रजतमित्यादावुभयत्राप्युभयविधाभावसद्भावेन तत्रापि प्रवृत्त्यापत्तेः । न च पुरोवर्त्यगृहीतासंसर्गभेदे रजतप्रतियोगिकत्वज्ञानविषयत्वाभावस्य पुरोवर्त्यगृहीतासंसर्गेष्टभिन्नत्वज्ञानाभावस्य वा हेतुत्वमभिमतम् । रजते नेदंरजतमित्यत्र रजतभेदस्मरणस्थले रजतप्रतियोगित्वेन ज्ञातभेदस्य रजते संसर्गाग्रहस्य तज्ज्ञानस्य च सत्त्वात् रजतभिन्नत्वस्य च रजतेऽसंसर्गाग्रहतज्ज्ञानस्य च सत्त्वात् प्रतिबन्धकस्यैव सत्त्वेन न तदुभयाभाव इति वाच्यम् । रजतनिष्ठभेदानुभवरजतप्रतियोगित्वस्मरणात्मके तत्रैवैतदुभयाभावमादायोक्तदोषानतिवृत्तेः । न च पुरोवर्तिनिष्ठतया ज्ञायमानभेदे रजतप्रतियोगित्वज्ञानसमानकालीनो यस्तदभावस्य हेतुत्वोक्तौ नायमतिप्रसङ्ग इति वाच्यम् । रजतानुभवरजतभेदस्मरणात्मके एतादृशाभावस्यापि सत्त्वेन तत्रातिप्रसङ्गात् । न च पुरोवर्तिनिष्ठभिन्नत्वज्ञानसमान कालीनो यस्तदसंसर्गग्रहस्तदभावस्य हेतुत्वेनायं दोष इति वाच्यम् रजतनिष्ठभेदानुभवरजतप्रतियोगिकत्वस्मरणात्मके तस्य सत्त्वेनातिप्रसङ्गानिस्तारात् । तस्मान्न भेदाग्रहस्य हेतुत्वं सुवचमिति चेन्न । प्रवृत्त्यभावनियतानां मिलितानामेतेषां सर्वेषामेकस्यैवाभावस्य हेतुत्वे दोषलेशाभावात् । एतेन भेदग्रहासंसर्गग्रहरूपाणामेषां प्रतिबन्धकानां बहुविधतया तावदभावानां हेतुत्वे गौरवमित्यपि निरस्तम् । न च ग्राह्याभावानवगाहिनो ज्ञानस्य जनकीभूतज्ञानविघटकत्वेनैव प्रतिबन्धकतया भेदग्रहस्य प्रतिबन्धकत्वं वदताऽभेदग्रहस्य प्रवृत्तिहेतुत्वं स्वीकर्तव्यमेवेति वाच्यम् । अत्यन्ताभावगर्भव्यभिचारज्ञानस्यान्योन्याभावगर्भव्याप्तिज्ञानं प्रतीव मणिमन्त्रादिवत्स्वरूपेणैव वा मत्सद्धान्ते शक्तिविघटकत्वेनैव वा भेदग्रहस्य प्रतिबन्धकत्वोपपत्तेः । तस्मान्न प्रवृत्त्यन्यथाऽनुपपत्त्याऽन्यथाख्यातिसिद्धिरित्याशयेन शङ्कते ॥ **नन्विति** ॥ अत्रागृहीतभेदाद्वेदनद्वयादिति भेदाग्रहस्यावच्छेदकत्वं वेदनद्वयस्य हेतुत्वमिति सूचनाच्चेतनव्यापाररूपप्रवृत्तेः कथमग्रहणमात्रपूर्वकत्वमिति शङ्कापहस्तिता भवति । अत्र भेदशब्दो भेदनं भेद इति व्युत्पत्त्या तत्तद्वादिप्रसिद्धार्थको वा भिद्यतेऽनेनेति व्युत्पत्त्या व्यावर्तकपरो वेति विकल्पं मनसि निधायाद्यं विकल्पयति ॥ **किमिति** ॥ स्वरूपमिति प्राभाकरमतेन । अन्योन्याभाव इति नैयायिकैकदेशिमतेन । पृथक्त्वमिति वैशेषिकमतेन । वैधर्म्यमिति करणव्युत्पत्त्याश्रयणे तत्सर्वमतेन । आद्यत्रयस्याभेदाद्वैधर्म्यस्यापि क्वचिद्भेदशब्देन व्यवहारात्स्वमतेन सर्वमपि । ज्ञेयानवभासप्रयुक्ततद्भेदाग्रहस्यप्रवृत्तिप्रयोजकतया परेणाप्यनभ्युपगमादवभासपक्षमाश्रित्यैव दूषणमाह ॥ **न प्रथम**

-**इति** ॥ ननु ज्ञानानवभासाज्ज्ञानयोर्भेदाग्रह उपपद्यत एवेत्यतः स्वप्रकाशेति ज्ञानविशेषणम् । अनभ्युपगमादित्यनुभवसिद्धस्यापलापं सूचयति ॥ **सर्वत्रेति** ॥ पृथक्त्वगुणशून्ये ज्ञानमात्रे तद्विषये च भेदाभावादेव तदग्रहसम्भवेनेत्यर्थः । संसर्गतादात्म्यारोपाभिप्रायेण विकल्पयति ॥ **तृतीय इति** ॥ अपर्यायेति जातिव्यक्त्योर्भानेऽपि तद्भेदाप्रतिभाने इदमिति रजतमित्यपर्यायशब्दस्मारकत्वं न स्यादिति हेतुगर्भं विशेषणमेतत् । परमतेन दूषणमाह ॥ **किंचेति** ॥ एवेति निर्विशेषत्वमाह । नन्वेवमपसिद्धान्त इत्यतः परस्येत्याह ॥ **अत एवेति** ॥ किञ्चेत्युक्तदूषणादेवेत्यर्थः । रजतासम्भविनः पुरोवर्त्यसम्भविन इति इदन्त्वरजतत्वयोः परस्परात्यन्ताभावसामानाधिकरण्यरूपविरुद्धत्वप्रदर्शनम् । भेदविकल्पवदसंसर्गस्यैकरूपत्वेन विकल्पाप्रसरादसंसर्गाग्रहस्य हेतुत्वेन दूषणप्राप्तिरित्याशयेन शङ्कते ॥ **इदमिति** ॥ यद्वाऽपर्यायशब्दस्मारकतया जाति व्यक्तिभेदस्य ग्राह्यत्वेऽप्यसंसर्गस्यावश्यग्राह्यत्वे नियामकाभावात्तदग्रहस्य प्रवर्तकत्वोपपत्तिरित्याशयेन शङ्कते ॥ **इदमिति** ॥ अभावमात्रस्य त्वन्मतेऽधिकरणमात्रतयोक्तदूषणानिस्तार एवेत्याशयेन दूषयति ॥ **नेति** ॥ एवशब्देन परस्येत्यनेन सूचितं स्वपक्ष एतद्दोषाप्रसरं स्पष्टयितुं भेदाग्रहस्य स्वमते प्रवर्तकत्वादेवैतद्दूषणाप्रसक्तेस्तत्परिहारसूचनमयुक्तमित्यतस्तदनुगुणां शङ्कामुत्थापयति ॥ **विपर्ययेति** ॥ यद्वा प्रतिबन्दीमुखेनैतद्दूषणं परिहर्तुं न परस्य शक्यमिति भावेन सूचितदूषणं स्पष्टयितुं प्रतिबन्दीं शङ्कते ॥ **विपर्ययेति** ॥ भेदग्रहे विपर्ययस्यैवासम्भवादिति भावः ।

**स०— न चैवमिति वक्ष्याम इति** ॥ कोऽयं भेदो नामेत्यादिनेति शेषः । ननु विषयस्याप्रमितत्वान्न पटप्रतिबन्दीत्याशङ्कते ॥ **अन्यथाख्याताविति** ॥ **नास्त्वेव विशिष्टविषयैकत्वेति** । तत्र गृहीतभेदं वेदनद्वयमेवेति वदाम इति भावः ॥ **स्मृत्यनुभवेति** ॥ इदं रजतमितिग्रहणस्मरणात्मकज्ञानद्वयापलापोऽपि स्यादित्यर्थः ॥ **गुणे गुणानभ्युपगमादिति** ॥ तथा च सर्वत्र गुणेषु स्वरूपतो विषयतश्चाविद्यमानपृथक्त्वाग्रहसंभवेन रूपज्ञानाद्रूपार्थिनो रसेऽपि प्रवृत्तिप्रसङ्ग इत्यर्थः ॥ **जातिव्यक्त्योरिति** ॥ ज्ञानयोरिति शेषः । भेदगमकासङ्कीर्णस्वरूपावगमे भेदानवगमो न युक्त इत्यर्थः । असङ्कीर्णस्वरूपज्ञानोपपादनायापर्यायशब्दस्मारकयोरित्युक्तम् । अन्यथा तन्न स्यादिति भावः ॥ **अत एवेति** ॥ स्वरूपग्रहे तदभिन्नस्यान्योन्याभावस्यापि गृहीतत्वादेवेत्यर्थः ।

**प०—गौरवमुक्तमिति** ॥ तत एव सर्वस्योपपत्तौ किं विपर्ययकल्पनयेतिग्रन्थेनोक्तमित्यर्थः ॥ **वक्ष्याम इति** ॥ नन्वियं प्रवृत्तिः स्वरूपतो विषयतश्चागृहीतभेदाद्वेदनद्वयादुपपद्यत इति चेदित्यादिना ग्रन्थेनेति भावः ॥ **किं चैवमिति** ॥ विवेकाग्रहमादाय विशिष्टज्ञानापलापे सतीत्यर्थः । न चान्यथा-

ख्यातौ किमपि प्रमाणमस्तीति पूर्वपक्षिणा यदुक्तं तदाशङ्क्योत्तरमाह ॥ **अन्यथाख्याताविति** ॥ प्राभाकरमतेनाह ॥ **स्वप्रकाशतया वेति** ॥ न्यायमतेनाह ॥ **मानसेति** ॥ स्वमतेनाह ॥ **साक्षिणा वेति** ॥ **अन्यस्यापीति** ॥ सत्यरजतविषयकस्यापीत्यर्थः । सत्यस्थलेपि अगृहीतासंसर्गकधर्मधर्मिविषयकैकज्ञानत्वमेव विशिष्टज्ञानत्वमित्युपेत्याह ॥ **नास्त्येवेति** ॥ अनुभवं प्रमाणीकृत्यान्यथानुपपत्तिं च विपर्ययस्यैकज्ञानत्वे प्रमाणयति ॥ **किं चेति** ॥ **स्वप्रकाशज्ञानज्ञेयेति** ॥ स्वप्रकाशज्ञानज्ञेययोस्त्वदभिमतग्रहणस्मरणयोर्ग्रहणज्ञेययोर्वा शुक्तिरजतयोश्चावभासे सति ज्ञानस्वरूपभेदः । तद्विषययोः स्वरूपभेदश्च न भासत इति न युक्तमित्यर्थः । वैधर्म्यमितिपक्षं निराह ॥ **नापि चतुर्थ इति** ॥ शङ्कते ॥ **विपर्ययेति** ॥ **स्वरूपतावन्मात्रत्वेति** ॥ तथाच तदवभासेऽपि भेदानवभासो युक्त इति भावः ॥

**या०— वक्ष्याम इति** ॥ कोऽयं भेदो नामेत्यादिनेति शेषः । पटवन्न विपर्ययः प्रमित इत्याशङ्कते ॥ **अन्यथाख्याताविति** ॥ **विपर्ययाङ्गीकारेति** ॥ अविशिष्टविषयमनेकं विशिष्टविषयैकत्वेन विषयीकुर्वज्ज्ञानं विपर्ययरूपमेवेति भावः ॥ **नास्त्येवेति** ॥ तत्राप्यगृहीतभेदं वेदनद्वयमेवेति वदाम इति भावः ॥ **स्मृत्यनुभवेति** ॥ इदं रजतमिति ग्रहणस्मरणात्मकज्ञानद्वयापलापोऽपि स्यादित्यर्थः ॥ **स्वप्रकाशज्ञानेति** ॥ स्वप्रकाशं यज्ज्ञानं तत्प्रतिभासे तत्र ज्ञेयस्य च प्रतिभासे सतीत्यर्थः । स्वप्रकाशज्ञाने वेद्यांशस्य प्रतीतत्वादिति द्रष्टव्यम् ॥ **गुणे गुणानभ्युपगमादिति** । तथा च सर्वत्र गुणेषु ज्ञानानां स्वरूपतो विषयतश्चाविद्यमानपृथक्त्वाग्रहसम्भवेन रूपज्ञानाद्रपार्थिनो रसेऽपि प्रवृत्तिप्रसङ्ग इत्यर्थः ॥ **जातिव्यक्त्योरिति** ॥ भेदगमकासङ्कीर्णस्वरूपावगमे भेदानवगमो न युक्त इत्यर्थः । असङ्कीर्णस्वरूपावगमोपपादनायैवापर्यायशब्दस्मारकयोरित्युक्तम् ॥ **परस्परेति** ॥ 'भावान्तरमभावो हि कयाचित्तु विवक्षये'ति तद्वचनादिति भावः ॥ **स्वरूपमेवेति** ॥ तन्मतेऽभावस्याधिकरणस्वरूपत्वादिति भावः ॥**स्वरूपतावन्मात्रत्वेति** ॥ सविशेषाभेदाङ्गीकारादित्यर्थः ।

**श्री०**— किंच विपर्ययमङ्गीकुर्वाणेनापि विवेकाग्रहो ग्राह्य एव । न हि विवेकग्रहेविपर्ययावकाशः, विरोधात् । अन्यथा विपर्ययनिवृत्त्यनुपपत्तेः । तथा च तत एव सर्वस्योपपत्तौ किं विपर्ययकल्पनयेति विपर्ययाभ्युपगमे यत्कल्पनागौरवमुक्तं तदनूद्य दूषयति ॥ **यदपीत्यादिना** । **न चैवमिति** ॥ विवेकाग्रहशब्दार्थ एव न वक्तुं शक्य इति वक्ष्याम इत्यर्थः । विवेकाग्रहादेव प्रवृत्त्युपपत्तौ किं विपर्ययकल्पनयेति गौरवमुक्तम् । तत्र प्रतिबन्दीं गृह्णाति ॥ **किंचैवमिति** ॥ विवेकाग्रहमादाय विशिष्टज्ञानापलापे सतीत्यर्थः ॥ **तन्मात्रेणेति** ॥ अन्त्यतन्तुसंयोगपर्यन्त-

कारणकलापमात्रेणेत्यर्थः ॥ **सर्वस्येति** ॥ पटकार्यस्य शीतनिवारणादेरुपपत्तेः । पटरूपकार्याङ्गीकारे गौरवं स्यादित्याशयः ॥ **प्रमित इति** ॥ प्रामाणिकत्वान्न गौरवं दोषमावहतीति भावः । तेन विना पटेन विना ॥ **एकत्वेति** ॥ एकः पट इति प्रत्ययस्तावदस्ति । स च पटरूपमेकं पदार्थं विना न सम्भवति । कारणकलापानां बहुत्वेनैकत्वप्रत्ययविषयत्वाभावादित्याशयः ॥ **एवमिति** ॥ पटवद्विपर्ययोऽपि प्रमित इति न हातुं शक्यत इति प्रामाणिकत्वान्न गौरवं दोष इति भावः । पटवद्विपर्ययो न प्रमित इति न तत्प्रतिबन्दीग्रहणं युक्तमित्याशयेन शङ्कते ॥ **अन्यथाख्याताविति** ॥ यथा सत्यरजतस्थले रजतमिदमिति विशिष्टविषयकमेकमेव ज्ञानं तद्वदिदं रजतमित्यपि विशिष्टविषयकमेकमेव विज्ञानमित्यभिप्रेत्योपपादयति ॥ **पुरोवर्तिनीत्यादिना** ॥ स्वप्रकाशतया वेति त्रिपुटीप्रत्यक्षवादिप्राभाकररीत्या, मानसप्रत्यक्षेणेति तार्किकरीत्या, साक्षिणेत्यस्मद्रीत्योक्तमित्यवगन्तव्यम् । ततः सत्यरजतस्थले इदं रजतमिति ज्ञानात् अस्य भ्रमस्थले इदं रजतमिति ज्ञानस्य । अस्मात् शुक्ताविदं रजतमिति ज्ञानात् । तथात्वे तयोर्याथार्थ्यायाथार्थ्यविभागो न स्यादित्यत आह ॥ **केवलमेकमिति ॥ तादृगिति** ॥ यथा प्रतीयते तादृशेत्यर्थः ॥ **अनेकमपि ॥ तदिति** ॥ ज्ञानद्वयमित्यर्थः ॥ **अन्यस्यापीति** ॥ सत्यरजतस्थले इदं रजतमिति ज्ञानस्यापीत्यर्थः । तदपि ज्ञानद्वयं स्यादिति भावः ॥ **नास्त्येवेति** ॥ भ्रमस्थल इति शेषः । तथाच न विपर्ययाङ्गीकारप्रसङ्ग इति भावः । तदनुभवाभाव इत्युक्तेऽनुभवस्मृतिश्च नास्तीत्युक्ते किमुत्तरमिति प्रमाणलक्षणवाक्यं मनसि निधायाह ॥ **अनुभवसिद्धेति** ॥ इदं रजतमित्यस्य विशिष्टविषयैकज्ञानत्वं साक्षिसिद्धमित्यर्थः ॥ **स्मृत्यनुभवस्वरूपेति** ॥ त्वदभिमतज्ञानद्वयस्वरूपेत्यर्थः ॥ **किं चेति** ॥ इदं रजतमिति तादात्म्यारोपानन्तरमत्र रजतत्वमिति संसर्गारोपानन्तरं चेति शेषः। अन्यथा भ्रमरूपविशिष्टविषयैकज्ञानाभावे । तत्र तादात्म्यारोपस्थले प्रवृत्त्यन्यथानुपपत्तेरन्यथोपपत्तिमाशङ्कते ॥ **नन्वियमिति** ॥ **भेदो नामेति** ॥ यदग्रहात्प्रवृत्तिस्त्वयोच्यत इत्यर्थः ॥ **स्वरूपमिति** ॥ ज्ञानयोर्ज्ञेययोश्चेत्यर्थः । वैधर्म्यं विरुद्धधर्मवत्त्वम् । स्वप्रकाशत्वं ज्ञानस्यैव विशेषणम् ॥ **इदं रजतत्वयोरिति** ॥ जातिव्यक्त्योरित्यर्थः ॥ **इदं रजतयोरिति** ॥ व्यक्त्योरेवेत्यर्थः ॥ **अत एवेति** ॥ अपर्यायशब्दस्मारकयोर्व्यक्त्योस्तदनवभासासम्भवात् । अन्योन्याभावस्यान्योन्यस्वरूपत्वेन स्वरूपोपलब्धौ तदनुपलम्भासम्भवाच्चेत्यर्थः ॥ **गृहीतत्वादिति** ॥ तथाच विरुद्धधर्माग्रहो नास्तीत्यर्थः । संसर्गारोपस्थलेऽपि प्रवृत्तेरन्यथोपपत्तिमाशङ्कते ॥ **इदं रजतत्वयोरिति** ॥ **विवक्षित इति** ॥ प्रवृत्तिजनकत्वेनेत्यर्थः ॥ **स्वरूपमेव परेषामिति** ॥ प्राभाकराणां मतेऽधिकरणातिरिक्ताभावाभावादिति भावः । तदवभासे इदं रजतत्वरूपजातिव्यक्त्योरवभासे । भेदाग्रहोऽभ्युपगमनीय एव । अन्यथेदं पदार्थे रजतभेदग्रहे प्रवृत्तिर्न स्यादित्यर्थः । **समानो दोष इति** । कोयं भेदो नामेत्यादिनोक्तो दोषः समान इत्यर्थ ॥ **भेदस्येति** ॥ तथा चेदं-

पदार्थे रजतप्रतियोगिकोऽन्योन्याभावो न गृहीत एव । न चेदंपदार्थस्वरूपस्य भेदस्य तदवभासेऽनवभासानुपपत्तिरिति वाच्यम् । भेदस्य धर्मिस्वरूपतावन्मात्रत्वानभ्युपगमात् । निर्विशेषाभेदानङ्गीकारादिति यावत् । तथाच भेदस्य धर्मिणाऽत्यन्ताभेदे सत्यपि विशेषबलादिदंपदार्थावभासेऽपि रजतभेदस्याग्रहोऽस्मन्मते युक्त एवेति भावः ।

च०— **वक्ष्याम इति** ॥ कोऽयं भेदो नामेत्यादिनेत्युपस्कर्तव्यम् । यथा हि पुरोवर्तिनि रजत इति वास्तवरजतस्थल इत्यर्थः, स्वप्रकाशतयेति प्राभाकरदिशा, मानसप्रत्यक्षेणेति नैयायिकदिशा, साक्षिणा वेति सिद्धान्तदिशोक्तम् ॥ **स्वप्रकाशज्ञानज्ञेयप्रतिभास इति** ॥ गुरूणां मितिमातृमेयरूपत्रिपुटीप्रत्यक्षवादित्वादिति भावः ॥ **परेषामिति** ॥ प्राभाकराणां मते अभावस्याधिकरणात्मकत्वादिति भावः ॥ **स्वरूपतावन्मात्रत्वेति** ॥ सविशेषाभेदोपगतेरिति भावः ।

**सु०— अथ मन्यसे पुरोवर्तिनो यः शुक्तित्वादिधर्मो रजतव्यावर्तको यश्च रजते व्यवहितदेशत्वादिधर्मः पुरोवर्तिव्यावर्तकस्तयोरग्रहणं प्रवर्तकमिति । तदसत् ॥ पुरोवर्तिनो हि शुक्तित्वाग्रहे न शुक्तिकार्थी तत्र प्रवर्तेत । रजतस्य चासन्निहितत्वादिधर्माग्रहे रजतार्थी न तत्र प्रवर्तताम् । रजतार्थिनः पुरोवर्तिनि प्रवृत्तिस्तु कुतः ॥ किञ्च भेदाग्रहादन्यार्थिनोऽन्यत्र प्रवृत्तिमाचक्षाणः प्रष्टव्यः— किमयमेव व्यवहारो भेदाग्रहादन्यस्त्वभेदग्रहात् ; उत सर्वोऽपि भेदाग्रहादिति ॥ नाद्यः । अनियतकारणतापातात् ॥ ननु च सर्वत्राभेदग्रह एव प्रवर्तकः । तत्सारूप्याद्भेदाग्रहोऽपि तथेष्यते । यथा हि । अस्ति तावत्प्रवर्तकत्वाभिमतप्रत्ययेऽप्यपेक्षितोपायपुरोवृत्त्यवगमांशयोः स्वरूपतो विषयतश्च भेदविरहादेव भेदाग्रहः । तथाऽत्राप्यविवेचकं साधारणं रूपमवगम्यते । नावगम्यते च विवेचकोऽसाधारणधर्मो वेद्ययोर्वेदनयोश्च । ततश्चैकप्रवर्तकप्रत्ययसदृशवपुरुपजनयतीदं वेदनद्वयं प्रवृत्तिमिति । मैवम् । अनियतहेतुकत्वानिस्तारात् । किञ्च प्रवर्तकसादृश्यात्प्रवृत्तिरित्यत्रैव कल्प्यते उत यद्यत्सदृशं तत्तत्कार्यकारीति सर्वत्र नियमः । नाद्यः अदृष्टकल्पनाप्रसङ्गात् । प्रवृत्तिलोभादित्थमास्थीयत इति चेन्न तस्या विपर्ययाङ्गीकारादेव सुव्यवस्थितेः । न द्वितीयः कृशानुसदृशाद् गुञ्जापुञ्जाच्छीतनिवृत्तेरदर्शनात् । नन्विदं रजतमिति यथा रजतसाध्या बुद्धी रजतसदृशाच्छुक्तिशकलाद्भवति भवताम् । तथा प्रवर्तकैकज्ञानसदृशाज्ज्ञानद्वयात्प्रवृत्तिरपि कुतो न स्यात् । मैवम् । अर्थस्य साक्षाज्ज्ञानकारणत्वानभ्युपगमात् । सादृश्यं तु काचादिवद्दोष-**

तयोपयुज्यते । अपि चेदं ज्ञानद्वयं प्रवर्तकसादृश्यमात्राद्यदि प्रवृत्तिमुपजनयेन्निवृत्तिमपि कुतो न जनयेत् । अस्ति हि तत्र निवर्तकभेदग्रहसारूप्यमभेदाग्रहणम् । ननु च यथा भेदाग्रहो भवतामभेदग्रहं जनयति तथा प्रवृत्तिमपि किं न जनयेदिति । मैवम् । वैषम्यात् । ज्ञानजनने हि कारणानां स्वातन्त्र्यं न पुरुषस्य । तानि च यादृशसामग्रीमध्यपतितानि तादृशं ज्ञानमुपजनयन्ति । न तु पुरुषाकाङ्क्षामपेक्षन्ते हेयोपेक्षणीयज्ञानजननात् । प्रवृत्तौ तु पुरुष एव स्वतन्त्रो न ज्ञानम् । स हि सत्यपि ज्ञानेऽपेक्षित एव प्रवर्तते । न तु ज्ञानं जातमित्येवोदासीनविपरीतयोरपि । तथा च भेदाग्रहदोषकलुषितानि नयनादीनि विपर्ययं जनयन्ति । न तु पुरुषः प्रवर्तकसादृश्यमात्रेण प्रवर्तितुमर्हति । तथात्वे वा निवर्तकसादृश्यात्प्रेक्षावान्निवर्तेतापीत्युक्तम् । किञ्च ज्ञानमर्थे प्रवृत्तिं किं साक्षादुपजनयति उतेच्छाप्रयत्नद्वारेण । नाद्यः । हेयोपेक्षणीययोरपि प्रवृत्तिप्रसङ्गात् । द्वितीये कथमगृहीतभेदाज्ज्ञानद्वयात्प्रवृत्तिः । पुरोवर्तिप्रवृत्तेर्हि साक्षात्कारणं प्रयत्नः, तस्य चेच्छा, तस्याश्च समीहितसाधनतानुमानम् । न च तत्संभवति । रजतत्वस्य पक्षधर्मत(ा)याऽप्रतिपन्नत्वात् । अथ रजते प्रतिपन्नेन रजतत्वेन तत्समीहितसाधनताज्ञानमुपजातं भेदाग्रह(भेदाग्रहेऽभेदग्रह)सारूप्यात्पुरोवर्तिनीच्छामुपजनयतीति चेन्न । तथा सति भेदग्रहसारूप्यादभेदाग्रहादुपेक्षाया अप्यापातादिति ।

वा० — भेदाग्रहो नाम व्यावर्तकाग्रह इति चतुर्थपक्षे विशेषं शङ्कते ॥ अथेति ॥ एवं वदन्प्रष्टव्यः । यद्व्यावर्तकधर्माग्रहस्तदर्थिनोऽन्यत्र प्रवृत्तिरित्यभिमतमुत यद्व्यावर्तकयदीयधर्माग्रहो यत्र तदर्थिनस्तत्र प्रवृत्तिरिति । अथवा रजतव्यावर्तकपुरोवर्तिनिष्ठशुक्तित्वादिधर्माग्रहो यत्र पुरोवर्तिनि तत्र रजतार्थिनः प्रवृत्तिरिति । नाद्यः । रजतव्यावर्तकपाषाणत्वादेः पुरोवर्तिन्यग्रहेण रजतार्थिनः पाषाणादौ प्रवृत्त्यापत्तेः । न द्वितीयः । पुरोवर्तिनि शुक्तित्वाग्रहणेऽपि पाषाणत्वाग्रहेण रजतार्थिनः पुरोवर्तिनि प्रवृत्त्यापत्तेः । नापि तृतीयः । अतिगौरवापत्तेः । तस्माद्यत्र यन्निष्ठधर्मग्रहणं तत्र तदर्थिनः प्रवृत्तिरित्येव वक्तव्यम् । तथा च शुक्तित्वादिधर्माग्रहणे हेत्वभावान्माऽस्तु शुक्त्यर्थिनः पुरोवर्तिनि प्रवृत्तिः । माऽस्तु वा रजतनिष्ठासन्निहितत्वाद्यग्रहणे रजतार्थिनोऽसन्निहितदेशे प्रवृत्तिः । रजतार्थिनः पुरोवर्तिनि प्रवृत्तिस्तु कुतः । पुरोवर्तिनि रजतत्वाग्रहणेन हेत्वभावादिति भावेनाह ॥ **पुरोवर्तीनो हीति** ॥ ननु भेदादेः स्वरूपतन्मात्रत्वादिकमनभ्युपगच्छतां तावद्भेदाग्रहादिस्वरूपसंभवादर्थापत्तेरन्यथासिद्धिः सुलभैव । अन्येषामपि तन्मात्रांशेऽनवभासाभ्युपगमेनान्यथासिद्धिव्युत्पादनं सुलभमेवेत्यतो भेदाग्रहमभ्युपगम्यापि तस्य प्रवर्तकत्वानुपपत्तिमाह ॥ **किञ्चेति** ॥ **अनियतेति** ॥ तथा च परस्परव्यभिचारान्नैकस्यापि

कारणत्वमित्याशयः । नन्वनियतकारणत्वं यत्र परस्परनिरपेक्षया स्वातन्त्र्येण कार्यजनकत्वं तत्रैव । यथा तृणादीनां वन्ह्यादौ । प्रकृते त्वभेदग्रहस्यैव प्रवृत्तिजनकत्वं क्वचिद्भेदाग्रहस्य तत्त्वे प्रवर्तकाभेद-ग्रहसादृश्यं निमित्तमिति प्रतिनिधिवदभेदग्रहपरतन्त्रत्वान्न भेदाग्रहस्य स्वातन्त्र्यमित्याशङ्कते ॥ **ननु चेति** ॥ भेदाग्रहोऽपीत्यस्यागृहीतभेदं वेदनद्वयमित्यर्थः । अत एव शङ्कोपसंहारे तथोक्तिः । क्वचिद्भेदविरहाद्भेदाग्रहः । क्वचिच्च सत्यपि भेदे भेदकाग्रहात्स इति भेदाग्रहप्रयोजके विशेषसद्भावेऽपि भेदाग्रहे न कश्चिद्विशेष इति भावेनागृहीतभेदत्वेन सादृश्यमुपपादयति ॥ **तथा हीति** ॥ एवं हि वदताऽप्यभेदग्रहे वेदनद्वये चानुगतमगृहीतभेदज्ञानत्वमेकं प्रवर्तकतावच्छेदकमिति वक्तुं तावन्न युक्तम् । तथात्वे उत्तरपक्षवदेकप्रवर्तकाभ्युपगमेनाभेदग्रह एव सर्वत्र प्रवर्तकस्तत्सारूप्याद्भेदाग्रहोऽपि तथेष्यत इति पक्षाभ्युपगमानुपपत्तेः। किन्त्वभेदग्रहत्वं तत्सदृशत्वं चेति द्वयं प्रवर्तकतावच्छेदकमित्येव वक्तव्यम्। तथा च कारणतावच्छेदकानेकत्वेनानियतकारणत्वप्राप्त्या परस्परसंबन्धमात्रस्याप्रयोजकत्वादित्याशयेनाह । **अनि-यतेति** । ननु तृणादिस्थले इव कार्यवैजात्यस्य वा कारणेष्वेकशक्तिकत्वस्य वा कल्पनान्नायं दोष इत्यरुचेराह ॥ **किञ्चेति** ॥ ननु प्रवृत्तिरूपकार्यान्यथानुपपत्तिसिद्धेऽर्थे नादृष्टकल्पनेत्याशङ्कते ॥ **प्रवृत्तीति** ॥ ननु विपर्ययमङ्गीकुर्वाणेनापि विषयजन्यत्वाज्ज्ञानस्य रजतसाध्यज्ञानस्य शुक्तेर्जन्माभ्युपग-च्छता नियामकान्तराभावाद्विपर्ययरूपज्ञाने प्रयोजकत्वेन तद्विषयशुक्तौ रजतसादृश्यमभ्युपेयम् । मया च प्रवृत्तिप्रयोजकत्वेन ज्ञानयोः सादृश्यमाश्रीयते । तत्र यदि मां प्रत्यदृष्टकल्पनाऽतिप्रसङ्गौ तर्हि त्वां प्रत्यपि तत्परिहारोपायस्तवेव ममापीत्याशङ्कते ॥ **नन्विदमिति** ॥ अर्थसन्निकर्षस्यैव ज्ञानकारणतयाऽसता सन्निकर्षासंभवे तत्प्रयोजकत्वेनार्थस्यान्यथासिद्धतयाऽकारणत्वान्न तत्सादृश्यं शुक्तौ ज्ञानप्रयोजकतया मया वाच्यम् । अभेदग्रहस्य प्रवृत्तिकारणत्वाद्भेदाग्रहस्य तत्सादृश्यं त्वया वाच्यमिति न साम्यमित्या-शयेनाह ॥ **अर्थस्येति** । ननु माऽस्तु ज्ञानस्य रजतसाध्यत्वेन सादृश्यकल्पना । रजतसन्निकर्षसाध्य-ज्ञानस्य शुक्तिसन्निकर्षाज्जन्माङ्गीकुर्वता तन्निमित्तत्वेन शुक्तौ रजतसादृश्यं स्वीकर्तव्यमेव । अन्यथा सादृश्याभ्युपगमवैयर्थ्यप्रसङ्गादित्यतोऽन्यसन्निकर्षसाध्यस्यान्यसन्निकर्षाज्जन्मदोषवशादित्येव मदभ्युपगमः किन्तु स दोषः क्वचिदन्यः क्वचित्सादृश्यमित्येव । अत एव पीतः शङ्ख इत्यादौ यत्र कामिलादिरूपं दोषान्तरं न तत्र विषययोः सादृश्यमाश्रीयते । त्वया त्वभेदग्रहस्यैव प्रवर्तकत्वं वेदनद्वयं तु सादृश्या-त्तथेति वदता कारणसादृश्यं सादृश्यत्वेन निमित्ततयाऽऽश्रीयत इत्यदृष्टकल्पनाऽतिप्रसङ्गौ तवैवेत्याशये-नाह । **सादृश्यं त्विति** । एवं सादृश्यस्य प्रवृत्तिप्रयोजकत्वं विकल्पेन निराकृत्य नन्वधिष्ठानं च सदृशमिति वदता त्वयापि सादृश्यस्याङ्गीकार्यत्वे दोषत्वेनान्यथा वेति वैलक्षण्यमप्रयोजकमित्यतस्तत्प्रति-बन्द्याऽपि निराचष्टे । **अपि चेति** । ननु प्रवर्तकाभेदग्रहसादृश्याद्भेदाग्रहात्प्रवृत्तौ निवर्तकभेदग्रह-

सादृश्यादभेदाग्रहान्निवृत्तिरपि स्यादित्यापादयताऽपि भेदाग्रहस्य विपर्ययोत्पादप्रयोजकतया स्वीकारात्तं प्रति मयाऽप्यापादयितुं शक्यमेव । यदि भेदाग्रहादभेदग्रहरूपविपर्ययस्तर्ह्यभेदाग्रहाद्भेदग्रहरूपसमीचीनज्ञानं किं न स्यादिति तत्र दोषादिरूपसहकारिभावाभावरूपस्तव परिहारप्रकारो ममापि सम इत्याशयेन शङ्कते । **ननु चेति** । तथा चेत्यादिना परिहारं वक्तुमुपोद्धातमाह । **ज्ञानेति** । यदि कारणानां स्वातन्त्र्यं तर्हि भेदग्रहरूपसमीचीनज्ञानमेव कुतो वोत्पादयेयुरित्याशङ्कां परिहरन्नेव तेषां स्वातन्त्र्यमुपपादयति । **तानि चेति** । यादृक्सामग्रीमध्यपतितानीति सामान्येनोक्तस्य प्रकृतारूढतया विशेषोत्कीर्तनं भेदाग्रहदोषाभ्यां कलुषितानीति । **तथा चेति** । अयमाशयः । यद्यत्कार्ये स्वतन्त्रं तदेव तत्सहकारिविशेषभावाभावाभ्यां तादृशतादृशकार्यं जनयतीति हि प्रसिद्धम् । एवञ्च ज्ञानजनने स्वतन्त्राणां चक्षुरादीनां दोषादिरूपसहकारिसद्भावे तैर्विपर्ययजननम् , अन्यथा समीचीनज्ञानजननमिति दोषसद्भावाच्छुक्तिरजतादिस्थले विपर्यय एव न तु भेदग्रहरूपसमीचीनज्ञानमिति कल्पयितुं युक्तम् । पुरुषाधीनतया ज्ञानानधीनायां तु प्रवृत्तौ प्रवर्तकज्ञानसादृश्यस्य ज्ञानगतस्य नोपयोगः । अथ पुरुष एव स्वप्रवृत्त्यर्थं प्रवर्तकसादृश्यमुपादत्त इति साम्प्रतम् । तर्हि तत्रैव विद्यमानं निवर्तकसादृश्यं कथं नोपादद्यात् । न निवर्तते च । अथ चेतनप्रवृत्तिं प्रति स्वरूपसतस्तस्यानुपयोगात्प्रवर्तकसादृश्यमालोच्य प्रवर्तते तर्हि निवर्तकसादृश्यमप्यालोच्य कथं न निवर्तेत । अन्यथा प्रेक्षावत्त्वहानेरिति न ज्ञानतुल्यता प्रवृत्तेरिति । अत एवोक्तं प्रेक्षावानिति । नन्वस्तु तर्हि पुरुषापेक्षाऽप्यधिका सहकारिणी ज्ञानं स्वतन्त्रमेव प्रवृत्तौ कारणमुपेक्षणीयादौ च सहकार्यभावादप्रवृत्तिः । न च ज्ञानस्य स्वातन्त्र्ये ज्ञानादेव साऽपि स्यादिति वाच्यम् । तस्या विषयसौन्दर्याधीनत्वात् । नन्वसुन्दरेऽपि कथं कस्यचिदिच्छा । तस्याः पुरुषस्वभावविशेषप्रयुक्तत्वादिति चेन्न । अन्ततोऽपि पुरुषोस्वभावाश्रयणे आदावेव तत्कल्पनौचित्यात्[१]। अस्तु वा ज्ञानस्य प्रवृत्तावपेक्षा सहकारिणी त्वत्पक्षे साऽपि नोपपद्यत इत्यताह ॥ **किंचेति** ॥ **अभेदग्रह(भेदाग्रहा)सारूप्यादिति** ॥ पुरोवर्तिसमीहितसाधनाभेदग्रहस्य पुरोवर्तिसमीहितसाधनभेदाविषयकत्वादगृहीतभेदवेदनद्वयस्य तदविषयकत्वेन सारूप्यादित्यर्थः ॥

स०— नन्वत्यन्तविलक्षणजन्यत्वे अनियतकारणजन्यत्वेन नानियतकारणत्वापात इति शङ्कते ॥ **ननु चेति** ॥ अपेक्षितोपायो रजतादेः । पुरोवर्तीदमाकारः ॥ **अनियतहेतुकत्वानिस्तारादिति** ॥ भेदज्ञानत्वाभेदज्ञानत्वरूपकारणतावच्छेदकभेदादित्यर्थः ॥ **अर्थस्येति** ॥ सत्यस्थले सन्निकर्षस्यैव साक्षात्कारं प्रति कारणत्वात्सन्निकर्षो यत्रासत्ता नोपपद्यते तत्रैवार्थसत्तापेक्षेति पारम्पर्येणैवार्थस्य कारणत्वमिति भावः । नन्वेवं रजतबुद्धे रजतसाध्यत्व एव सादृश्यमरजतस्य शुक्तिशकलस्यापेक्षितमिति तदुक्ति-

सार्थक्येऽपि रजतासाध्यत्वे सादृश्योक्तिर्व्यर्थेत्यत आह ॥ **सादृश्यं त्विति** ॥ **अभेदाग्रहणमिति** ॥ अभेदग्रहणे चान्यथाख्यात्यापत्तिरिति भावः ।

प०— **न तत्र प्रवर्ततामिति** ॥ स्थलविशेषस्थत्वाज्ञानादिति भावः ॥ **अयमेवेति** ॥ भ्रमस्थलीयप्रवृत्त्यादिरूपव्यवहार इत्यर्थः । **प्रवर्तकाभिमतप्रत्यय इति** ॥ इदं रजतमित्येवंरूपे सत्यरूप्यज्ञान इत्यर्थः ॥ **अपेक्षितोपायेति** ॥ इष्टसाधनावगमांशपुरोवृत्त्यवगमांशयोरित्यर्थः । साधारणं रूपम् । इदंत्वज्ञानत्वादिलक्षणमित्यर्थः ॥ **असाधारणेति** ॥ शुक्तित्वग्रहणत्वादिरूपः ॥ **एकेति** ॥ एको यः प्रवर्तकः प्रत्ययस्तत्सदृशवपुरिदं वेदनद्वयं प्रवृत्तिमुपजनयतीत्यर्थः ॥ **अत्रैव** भ्रमस्थल एव । नन्वर्थस्य सन्निकर्षद्वारैव हेतुत्वे सादृश्यान्वेषणं व्यर्थम्, तस्यार्थहेतुत्वपक्ष एवोपयोगस्य वाच्यत्वादित्यत आह ॥ **सादृश्यं त्विति** ॥ **निवर्तकेति** ॥ इयं शुक्तिः इदं तु रजतमितिज्ञानयोर्भेदग्रहाद्यत्र शुक्तौ न प्रवर्तते तत्राभेदग्रहणमस्ति विषययोर्ज्ञानयोश्चेत्यर्थः ॥ **भेदाग्रह इति** ॥ भेदाग्रहसहितचक्षुरादिकरणमित्यर्थः ॥ **पुरोवृत्तिप्रवृत्तेर्हीति** ॥ शरीरपरिस्पन्दरूपप्रवृत्तेरित्यर्थः ॥ **पक्षधर्मताया इति** ॥ इष्टसाधनतानुमाने पक्षीभूतप्रवृत्तिविषयशुक्तिकादाविष्टसाधनताप्रयोजकस्याज्ञातत्वादित्यर्थः । **भेदाग्रहसारूप्यादिति** ॥ इदं रजतमिति सत्यरजतस्थलीयेदं ग्रहरजतग्रहयोरेकत्वेन तत्र यथा ज्ञानस्वरूपतो विषयतश्च भेदाग्रहात् पुरोवर्तिनीष्टसाधनतानुमानद्वारेच्छादिकं तथाऽत्रापीत्यर्थः ।

या०— तत्र शुक्तौ । तत्र व्यवहिते रजते ॥ **किञ्चाभेदाग्रहादिति** ॥ अत्र सर्वत्र भेदाग्रहशब्देनागृहीतभेदनिष्ठपुरोवर्तिज्ञानमेव ग्राह्यम् । उत्तरग्रन्थानुसारात् । नन्वभेदग्रहे तत्सदृशे ज्ञानद्वये च भेदाविषयकत्वरूपैकधर्मावच्छेदेन प्रवृत्तिजनकताऽङ्गिक्रियते अतो न प्रवृत्तिरनियतकारणत्वमित्याशयेन शङ्कते ॥ **नन्विति** ॥ **सर्वत्रेति** ॥ संवादिप्रवृत्तावित्यर्थः । अपेक्षितोपायपदेनेष्टसाधनं रजतादि विवक्षितम् । पुरोवर्तीत्यनेनेदमंशः । भेदाविषयकज्ञानहेतुत्वस्य द्वितीयपक्षपर्यवसन्नतयाऽत्र वक्तुमशक्यत्वेनाभेदज्ञानत्वेन तत्सदृशज्ञानत्वे च हेतुत्वे वाच्ये पुनरनियतकारणत्वं प्रसज्यत एवेत्याशयवानाह ॥ **अनियतहेतुकत्वानिस्तारादिति** ॥ **अर्थस्येति** ॥ अतीतादौ व्यभिचारात् । अपरोक्षज्ञानेऽपि तज्जनकसन्निकर्षोपक्षीणत्वादिति भावः । ननु सादृश्यं तावद्भ्रमहेतुः । तच्चार्थस्य जनकत्वे जनकसादृश्यरूपत्वाभावान्न भ्रमोपयोगी स्यादित्यत आह ॥ **सादृश्यं त्विति** ॥ **अभेदाग्रहणमिति** ॥ अभेदग्रहणेऽन्यथाख्यात्यापत्तिरिति भावः ।

श्री०— भेदाग्रह एव प्रवर्तकस्तत्र भेदो नाम वैधर्म्यं विवक्षितमित्याशयेन शङ्कते ॥ **अथेति** ॥ तत्र शुक्तौ ॥ **असन्निहितत्वादिधर्माग्रह इति** ॥ व्यवहितदेशत्वादिधर्माग्रह इत्यर्थः । रजतार्थी व्यवहितरजतार्थी । तत्र व्यवहितरजते ॥ **अन्यार्थिनोऽन्यत्रेति** ॥ रजतार्थिनः शुक्तिकायामित्यर्थः । **अयमेव व्यवहार इति** ॥ रजतार्थिनः शुक्तिकायां प्रवृत्तिरेवेत्यर्थः ॥ **अन्यस्त्विति** ॥ सत्यरजतस्थले इदं रजतमिति ज्ञानानन्तरं रजतार्थिनो रजते प्रवृत्तिरूपो व्यवहार इत्यर्थः ॥ **सर्वोऽपीति** ॥ सर्वोऽपि व्यवहारः सर्वाऽपि प्रवृत्तिरित्यर्थः ॥ **अनियतेति** ॥ प्रवृत्तित्वावच्छेदेनैकस्य कारणस्यालाभादित्यर्थः । तत्सारूप्याद्भेदाविषयकत्वरूपात् । अभेदग्रहे भेदाग्रहे च भेदाविषयकत्वसद्भावादिति भावः । प्रवर्तकाभिमतप्रत्यये इदं रजतमिति सत्यरजतस्थले ॥ **अपेक्षितोपायेति** ॥ अपेक्षितमपेक्षाविषय इच्छाविषयः इष्टमिति यावत् । तस्योपायः साधनम् । इष्टसाधनं रजतमिति यावत् । पुरोवर्ती च तद्विषयकावगमांशयोरित्यर्थः । अविवेचकं अव्यावर्तकम् । साधारणं रूपं इदं रूपम् । असाधारणो धर्मः शुक्तित्वग्रहणादिरूपः ॥ **एकेति** ॥ एको यः प्रवर्तकः प्रत्ययस्तत्सदृशवपुरित्यर्थः । सदृशवपुः सदृशशरीरमिदं वेदनद्वयं प्रवृत्तिमुपजनयतीत्यन्वयः ॥ **प्रवर्तकसादृश्यादिति** ॥ भेदाग्रहादित्यर्थः । तत्र भेदाभावादेव भेदाग्रहः अत्र तु विद्यमानस्यापि भेदस्याग्रह इति द्रष्टव्यम् ॥ **अदृष्टकल्पनेति** ॥ कुत्राप्यदृष्टस्यात्रैव कल्पनेत्यर्थः ॥ **प्रवृत्तिलोभादिति** ॥ प्रवृत्तिरूपकार्यलोभात् । तदन्यथाऽनुपपत्त्येति यावत् । प्रवर्तकसादृश्यात्प्रवृत्तिरित्येवमन्यत्रादृष्टमप्यत्रैव कल्प्यत इत्यर्थः । अन्यथाऽनुपपत्तेरन्यथैवोपपत्तिमाह ॥ **तस्या इति** ॥ प्रवृत्तेरित्यर्थः । सादृश्यज्ञानं प्रवर्तकमित्याशयेन शङ्कते ॥ **नन्विति** ॥ **रजतसाध्या बुद्धिरित्यादि** ॥ रजतरूपार्थस्य विषयतया रजतज्ञानकारणत्वेन वस्तुगत्या रजतसाध्या रजतबुद्धिः । रजतसदृशाच्छुक्तिशकलाद्भवतां मते भवतीत्यर्थः ॥ **तथेति** ॥ यथा रजतसदृशस्य शुक्तिशकलस्य रजतबुद्धिजनकत्वं भवन्मते तथेत्यर्थः ॥ **प्रवर्तकैकज्ञानसदृशादिति** ॥ भेदाग्रहरूपसादृश्योपेतादित्यर्थः ॥ **अर्थस्येति** ॥ तथाच रजतसाध्यबुद्धौ रजतसदृशाच्छुक्तिशकलाद्भवति भवतामित्यस्मन्मते रजतबुद्धे रजतसाध्यत्वं यदुक्तं तदसदिति भावः। ननु रजतसादृश्यं तावद्भ्रमहेतुः । तत्र रजतरूपार्थस्य रजतबुद्ध्यजनकत्वे जनकसादृश्यरूपत्वाभावात्कथं रजतसादृश्यस्य भ्रमजनकत्वमित्यत आह ॥ **सादृश्यं त्विति** ॥ चक्षुरिन्द्रियेण भ्रमे जननीये काचादिवत्सादृश्यस्य भ्रमोपयोगित्वमात्रमेव न तु साक्षाद्भ्रमरूपज्ञानजनकत्वम् । तथा चेदं रजतमिति बुद्धौ रजतसदृशाच्छुक्तिशकलाद्भवतीति सादृश्यस्य साक्षाज्ज्ञानजनकत्वमस्मन्मते यदुक्तं तदसदिति भावः । प्रवर्तकसादृश्यं भेदाग्रहः । तत्र ज्ञानद्वये ॥ **निवर्तकेति** ॥ प्रवृत्त्यजनकेत्यर्थः । तथाच निवर्तको यो नेदं रजतमिति भेदग्रहस्तत्सादृश्यमित्यर्थः ॥ **अभेदाग्रहणमिति** ॥ यत्र निवर्तको भेदग्रहस्तत्राभेदस्याभावादेवाभेदा-

ग्रहणमस्ति । तदभेदाग्रहणमत्राप्यस्ति । अभेदग्रहे विशिष्टज्ञानरूपान्यथाख्यात्यापत्तिः स्यात् । तथाच यदि प्रवर्तकसादृश्याद्भेदाग्रहादिदं ज्ञानद्वयं प्रवृत्तिमुपजनयेत्तर्हि निवर्तकभेदग्रहसादृश्यादभेदाग्रहान्निवृत्तिरपि स्यादित्यर्थः । भेदाग्रह इदं रजतयोः । भवतां मतेऽभेदग्रहं भ्रमरूपविशिष्टज्ञानम् । भेदग्रहे भ्रम एव न स्यादिति भावः ॥ **तथेति** ॥ भवतामिति वर्तते । तथाच तद्धेतोरेवास्तु तद्धेतुत्वं किन्तेनेति न्यायेन भ्रमजनकभेदाग्रहादेव प्रवृत्त्युपपत्तौ किं प्रवृत्तिजनकतयाऽभेदग्रहरूपभ्रमाख्यविशिष्टज्ञानकल्पनयेति भावः । भेदाग्रहस्य भ्रमजनकत्वेऽपि न प्रवृत्तिजनकत्वमित्याह ॥ **मैवमित्यादिना** ॥ **यादृगित्यादि** ॥ यदि दोषघटितसामग्रीमध्यपतितानि तर्हि दुष्टं ज्ञानमुपजनयन्तीत्यर्थः । कुतः पुरुषाकाङ्क्षां नापेक्षन्त इत्यत आह ॥ **हेयेति** ॥ तदुपपादयति ॥ **स हीति** ॥ अपेक्षिते इष्टे उपादेयवस्तुनीति यावत् । विपरीतं हेयम् ॥ **तथा चेति** ॥ भेदाग्रहस्याभेदग्रहजनकत्वं यद्यप्यस्तीत्यर्थः । तथाऽपि तस्य प्रवृत्तिजनकत्वं तु नास्तीत्याह ॥ **नत्विति** ॥ प्रवर्तकसादृश्यमात्रेण भेदाग्रहरूपेण । निवर्तकसादृश्यात् निवर्तको भेदग्रहस्तत्सारूप्यात् अभेदाग्रहात् ॥ **इत्युक्तमिति** ॥ अपि चेदमित्यादिग्रन्थेनेत्यर्थः । प्रवृत्तिमुपादानादिरूपाम् । एवमुत्तरत्रापि ॥ **साक्षादिति** ॥ इच्छाप्रयत्नद्वारमन्तरेणेत्यर्थः ॥ **इच्छेति** ॥ जानातीच्छति प्रयतत इति क्रमसद्भावादित्यर्थः । प्रयत्नः शरीरव्यापारः ॥ **समीहितसाधनतेति** ॥ इष्टसाधनतेत्यर्थः । **रजतत्वस्येति** ॥ इदमिष्टसाधनं रजतत्वादितीष्टसाधनतानुमानं कार्यं तत्र सम्भवति । ज्ञानद्वयं प्रवर्तकमिति त्वत्पक्षे रजतत्वस्य पक्षीभूते पुरोवर्तिनीदंपदार्थेऽप्रतिपन्नत्वेन स्वरूपासिद्धिप्रसङ्गादित्यर्थः । रजते सत्यरजते ॥ **उपजातमिति** ॥ तत्र रजतत्वसद्भावेनासिद्ध्यभावादिति भावः । पुरोवर्तिनीदं पदार्थे उपेक्षाप्रवृत्त्यभाव इति ॥

**च०** — नन्वन्यथाख्यातिवाद्यभिमतविशिष्टज्ञाने प्राभाकरानुमतज्ञानद्वये च वेद्यवेदनप्रतियोगिकभेदाविषयकत्वमनुगतमिति तद्धर्मावच्छिन्नस्यैव प्रवृत्तिहेतुत्वोपगमान्न प्रवृत्तेरनियतकारणकतापत्तिरित्याशङ्कते ॥ **नन्विति** ॥ सर्वत्र संवादिप्रवृत्तिसामान्ये । **अनियतहेतुकत्वानिस्तारादिति** । भेदस्याधिकरणस्वरूपतया तदविषयकत्वस्य दुर्वचतया अभेदग्रहत्वं तत्सदृशज्ञानत्वं च जनकतावच्छेदकद्वयमुपेयमिति परस्परजन्यकार्ययोः परस्परधर्मावच्छिन्नयोर्व्यतिरेकव्यभिचारतादवस्थ्यमिति भावः ॥ **अर्थस्येति** ॥ अतीतादिज्ञानानुत्पादप्रसङ्गेन लौकिकालौकिकसाक्षात्कारसाधारणसाक्षात्कारत्वावच्छिन्नं प्रति वर्तमानगोचरसाक्षात्कारजनकसन्निकर्षेणान्यथासिद्ध्या चालौकिकसाक्षात्कारत्वावच्छिन्नं प्रति हेतुतोपगतिर्न सङ्गच्छत इत्याशयः । ननु रजतसन्निकर्षोत्पादनीयज्ञानस्य शुक्तिसन्निकर्षाधीनोत्पत्तिमूरीकुर्वतां रजतप्रतियोगिकशुक्त्यनुयोगिकसादृश्यमेव तद्धेतुतयाश्रयणीयं तच्चार्थस्य जनकत्वाभावे न सङ्गच्छत इत्याशङ्कायां

सादृश्यं दोषविधयैवोऽभ्युज्यते । स च दर्शितरूपस्तदन्यकामलादिरूपश्चेति न क्षतिरित्याह ॥ सादृश्यं त्विति ॥

सु०—नन्वस्तु तर्हि द्वितीयः पक्षः । तथा हि । सत्यरजते तावदस्ति रजतव्यक्तिज्ञानं रजतत्वजातिबोधश्च । न चास्त्यसंसर्गज्ञानम् । एतावतैव तत्र तदर्थिनां प्रवृत्तिः । न हि तयोस्तादात्म्यं पश्यन्ति । जातिव्यक्त्योस्तादात्म्याभावात् । न च तत्र संसर्गग्रहः प्रवर्तकः समवायो हि तयोः संसर्गः । न चासौ प्रत्यक्षः । इन्द्रियसन्निकर्षाभावात् । नाप्यनुमानतस्तदा शक्यते ज्ञातुम् । लिङ्गाभावात् । अविसंवादिव्यवहारजनकत्वविशिष्टसाकांक्षरूपरूपिसहोपलम्भो हि तल्लिङ्गम् । न चाविसंवादित्वं प्राक् प्रवृत्तेः शक्याधिगमम् । अस्ति चेदं सकलमपि प्रवर्तकं विभ्रमेऽपीति कुतो विपर्ययाभावे प्रवृत्त्यनुपपत्तिः । इदं रजतत्वाधारयोर्भेदाग्रहो वा सत्यरजते प्रवृत्तिहेतुः । अस्ति चासौ प्रकृतेऽपि । न च पुरोवर्तिनि रजतत्वाप्रतीताविच्छानुपपत्तिरिति वाच्यम् । रजतत्वेन सहागृहीतासंसर्गतया वा रजतादगृहीतभेदतया वा समीहितसाधनतानुमानोपपत्तेरिति ॥ एतदप्ययुक्तम् ॥ असंसर्गाग्रहभेदाग्रहयोः निरस्तत्वात् । किंचैवं सति सविकल्पकप्रत्यक्षोच्छेदप्रसङ्गः । वस्तुमात्रग्रहस्यासंसर्गाग्रहस्य च निर्विकल्पकसाम्यात् । रूपरूपिभावः सविकल्पके चकास्ति । निर्विकल्पके तु वस्तुस्वरूपमात्रमिति भेद इति चेत् । कोऽयं रूपरूपिभावः धर्मधर्मिणोः परस्पराकाङ्क्षाविषयत्वमिति चेत् । तत्किं तयोः स्वरूपमुतान्यत् । आद्ये तदपि निर्विकल्पके प्रकाशत एव । द्वितीये किं तदैन्द्रियकमुतातीन्द्रियम् । प्रथमे कथमविकल्पके न प्रकाशेत । द्वितीये कथं सविकल्पके प्रकाशेत । अथ तद्वस्तुदर्शनसापेक्षदर्शनं निर्विकल्पकेऽचकासदपि सविकल्पके भातीति चेत् । तर्हि न तत्संसर्गातिरिक्तमस्तीति संसर्गग्रहादेव सविकल्पकोपपत्तिः । न च निर्विकल्पकस्य प्रवर्तकत्वमस्ति । किञ्चासंसर्गाग्रहादेव सर्वत्र प्रवृत्त्यङ्गीकारे मध्यमवृद्धप्रवृत्तेरपि तथात्वेन बालस्य तदीयसंसर्गज्ञानानुमानोपायाभावात् । पदानामन्वितार्थेषु व्युत्पत्त्यनुपपत्तौ शाब्दप्रमाणोच्छेदप्रसङ्गः ।

वा०—नन्वस्त्विति ॥ प्रवृत्तित्वावच्छिन्नं प्रत्यसंसर्गभेदाग्रहयोरेव कारणत्वाभ्युपगमेनानियतकारणत्वाद्यनापत्तिरिति भावः । ननु संसर्गग्रहस्य लघुत्वात्तस्यैव सत्यस्थले प्रवृत्तिहेतुत्वं स्वीकर्तव्यमित्यतस्तदनुपपत्त्या गुरुभूतस्याप्यसंसर्गाग्रहस्यैव तद्युक्तमित्याशयेनाह ॥ तथा हीति ॥ एतावतैवेत्युक्तं परिशेषं

समर्थयितुं प्रसक्तं तादात्म्यज्ञानं संसर्गज्ञानं च क्रमेण निराचष्टे । **न हीत्यादिना** ॥ समवायस्याद्रव्यत्वेन समवायान्तराभावेन च संयोगसमवाययोरभावाद्विशेषणविशेष्यभावस्य च सम्बन्धत्वस्यैवाभावेन तस्येन्द्रियेण न सन्निकर्ष इत्याह ॥ **इन्द्रियेति** ॥ इदं रजतमित्युपलम्भः सम्बन्धविषयको (समवायेत्यर्थः) अविसंवादिव्यवहारजनकसाकाङ्क्षरूपरूपिसहोपलम्भत्वादित्यनुमानमभिप्रेत्याह ॥ **अविसंवादीति** ॥ अत्र घटः पट इति ज्ञानद्वयव्युदासायैकोपलम्भत्वादिति । घटपटाविति ज्ञानव्युदासाय धर्मधर्मिपदम् । घटरूपालोकाविति ज्ञानव्युदासाय साकाङ्क्षेति । अत्र धर्मधर्मिणोः साकाङ्क्षत्वं नाम संसर्गमर्यादया भासमानव्यावर्त्यव्यावर्तकभावापन्नत्वम् । पीतः शङ्ख इत्यादिव्युदासायाविसंवादीति । एतावतैवेत्युक्तं विशदयति ॥ **प्राक् प्रवृत्तेरिति** ॥ इदं व्यक्तिज्ञानादिकं जातिव्यक्तिसंसर्गविषयकत्वेनैव सविकल्पकस्य निर्विकल्पकाद्वैलक्षण्यं वाच्यं गत्यन्तराभावात् । संसर्गाविषयकत्वे च सविकल्पकं नास्त्येवेत्युक्तं स्यात् । तथा च निर्विकल्पकमेव प्रवर्तकमिति वक्तव्यम् । तच्चानुभवबाधितमित्याह ॥ **किञ्चेति** ॥ एवं प्रत्यक्षे संसर्गभानासम्भवादसंसर्गाग्रहादेव प्रवृत्तिरितिवदन्तं प्रति प्रत्यक्षविशेषोच्छेदमभिधायासंसर्गाग्रहादेव सर्वत्र प्रवृत्त्यङ्गीकारे शब्दप्रमाणसामान्योच्छेदं बाधकमाह ॥ **किञ्चेति** ॥

स०— **नन्वस्तु तर्हि द्वितीय इति** ॥ उत सर्वोऽपि भेदाग्रहादिति द्वितीय इत्यर्थः । ननु वैशिष्ट्यविषयकमेव ज्ञानं प्रवर्तकमस्त्वित्याशङ्क्य वैशिष्ट्यं किं तादात्म्यरूपं संसर्गरूपं वेति विकल्पं मनसि निधायाद्यं दूषयति ॥ **न हीति** ॥ द्वितीयं निराकरोति ॥ **न चेति** ॥ नापीत्यर्थः ॥ **रूपरूपिसहोपलम्भ इति** ॥ युगपद्धर्मधर्म्युपलम्भ इत्यर्थः । अत्र धर्मधर्मिणोरयुतसिद्धयोर्विवक्षितत्वान्नेह कुण्डे बदराणीत्यादौ व्यभिचारः । ननु तथापि रूपाभाववदिदमिति ज्ञानस्यापि रूपसमवायानुमापकता स्यात् । तत्रापि धर्मिण इदमंशस्य रूपलक्षणधर्मस्यापि सहोपलम्भात् । अत उक्तम् ॥ **साकाङ्क्षेति** ॥ परस्परापेक्षया धर्मधर्मिभावो विवक्षित इत्यर्थः । तत्र चेदमंशापेक्षया धर्मधर्मिभावो विवक्षित इत्यर्थः । तत्र चेदमंशापेक्षया धर्मत्वं न रूपे । किन्तु रूपाभाव इत्यर्थः । एवमपीदं रजतमितिज्ञानद्वयात्मकसहोपलम्भस्य परस्परसाकाङ्क्षेदमंशरजतत्वावगाहितया तद्बलादिदमंशरजतत्वसमवायापत्तिरत्र उक्तमविसंवादिव्यवहारजनकत्वविशिष्टेत्युपलम्भविशेषणम् । **इदं रजतत्वाधारयोर्भेदाग्रहो वेति** ॥ जातिव्यक्त्योस्तादात्म्याभावेन तत्र तादात्म्यज्ञानादेः प्रवर्तकत्वाभावेनासंसर्गाग्रहस्यैव कारणत्वेन क्लृप्तत्वादत्रापि तस्यैव हेतुत्वमिति भावः ॥ **रजतत्वाप्रतीताविच्छानुपपत्तिरिति** ॥ पक्षे हेत्वप्रतीत्येष्टसाधनतानुमानासंभवादिति भावः ॥ **रजतत्वेन सहागृहीतेति** ॥ न पक्षे हेतुज्ञानमेवानुमितिजनकम् । किन्तु हेत्वसंसर्गाग्रहो वा हेतुमद्भेदाग्रहो वेति भावः ॥ **निरस्तत्वादिति** ॥ कोऽयं भेदो

नामेत्यादिनेति शेषः ॥ **किं चैवं सतीति** ॥ विशिष्टज्ञानेऽपि संसर्गो न भासत इत्यङ्गीकार इत्यर्थः ॥ **संसर्गग्रहादेव सविकल्पकोपपत्तिरिति** ॥ तथा च विशिष्टज्ञानापत्त्या निर्विकल्पकेऽत्राभासमानस्य सविकल्पके भानासंभवेन सविकल्पकोच्छेदः स्यादित्यर्थः। नन्वस्तु सविकल्पकोच्छेदः। न च प्रवृत्त्याद्यनुपपत्तिः निर्विकल्पकादपि तदुपपत्तेरित्यत आह ॥ **न च निर्विकल्पकस्येति** ॥ **शब्दप्रमाणोच्छेद इति** ॥ मध्यमवृद्धप्रवृत्तिः संसर्गज्ञानपूर्विका प्रवृत्तित्वादितिसंसर्गज्ञानपूर्वकत्वानुमानस्यासंसर्गाग्रहजन्यप्रवृत्तौ व्यभिचारेणासंभवादित्यर्थः ।

**प०**—उत सर्वोऽपि भेदाग्रहादितिपक्षमाशङ्कते ॥ **अस्तु तर्हि द्वितीयः पक्षः** इत्यादिना **एतदप्ययुक्तमि**त्यन्तेन । संयोगस्य संयुक्तसमवायस्य वा सन्निकर्षत्वमुपेत्याह ॥ **इन्द्रियसन्निकर्षाभावादिति** ॥ विसंवादिन्यव्यभिचाराया विसंवादिव्यवहारजनकत्वविशिष्टत्युपलम्भविशेषणम् ॥ **साकाङ्क्षेति** ॥ साकांक्षौ यौ रूपरूपिणौ धर्मधर्मिणौ तयोः सहोपलम्भ इत्यर्थः ॥ **निरस्तत्वादिति** ॥ किञ्चान्योन्याभावो नामेत्यादिना ग्रन्थेनेत्यर्थः ॥ **एवं सतीति** ॥ सर्वोऽपि व्यवहारो भेदाग्रहादित्यङ्गीकारे सतीत्यर्थः । कस्तर्हि व्यवहारहेतुरित्यतो निर्विकल्पकप्रत्यय एव हेतुर्भविष्यतीतिभावेन तत्र परोक्तसामग्रीमुपपादयति ॥ **वस्तुमात्रेति** ॥ शङ्कते ॥ **रूपेति** ॥ तथाच तादृश एव व्यवहारहेतुरिति भावः । अचकासदपीति पदविभागः । नन्वेवं तर्हि सविकल्पक एव मास्तु व्यवहारस्तु निर्विकल्पकादेवास्तु । तथाच न संसर्गाग्रहस्वीकार इत्यत आह ॥ **न च निर्विकल्पकस्येति** ॥

**या०**—ननु विशिष्टज्ञानमेव प्रवर्तकं तत्र कस्मान्न भवतीत्याशङ्कायां वैशिष्ट्यं किं तादात्म्यरूपं संसर्गरूपं वेति विकल्प्याद्यं निराकरोति ॥ **न हीति** ॥ द्वितीयं दूषयति ॥ **न चेति** ॥ नापीत्यर्थः ॥ **रूपरूपिसहोपलम्भ इति** ॥ अत्र हि नीलो घट इत्याद्यनुभवः सम्बन्धिभिन्नविशेषणविशेष्यसम्बन्धविषयो विशिष्टज्ञानत्वाद्दण्डी पुरुष इति विशिष्टज्ञानवत् । न च घटाभाववद्भूतलमित्यादौ व्यभिचारः । तद्विषयकत्वे बाधकाभावे सतीति हेतुविशेषणादिति हि प्राभाकराणां समवायोऽनुमानं विवक्षितम् । तत्र विशिष्टज्ञानत्वं लिङ्गम् । तच्च न वैशिष्ट्यविषयकज्ञानत्वं तन्मते सम्भवति । समवायरूपवैशिष्ट्यस्यातीन्द्रियत्वात् । साध्यावैशिष्ट्यतापत्तेश्च । अतस्तन्मते विशिष्टज्ञानत्वं निर्वक्तुमिदमुक्तमिति ज्ञातव्यम् । अत्र रूपरूपिशब्दौ धर्मधर्मिवचनौ । भिन्नकालीनयोरिदं नीलमयं घट इति ज्ञानयोर्नीलविशिष्टज्ञानत्वपरिहाराय सहेत्युक्तम् । नीलघटाविति समूहालम्बनज्ञानेऽतिव्याप्तिपरिहाराय साकाङ्क्षेति । अत्र रूपरूपिशब्दौ भावप्रधानौ । तथाच साकाङ्क्षं परस्परापेक्षं धर्मत्वं धर्मित्वं च तयोरुपलम्भ इत्यर्थः । उक्तसमूहालम्बने चोभ-

योर्धर्मित्वमेवावभासते न परस्परनिरूपितो धर्मधर्मिभावोऽतो न तत्रातिव्याप्तिः । भ्रमस्थानाभिषिक्तग्रहणस्मरणात्मकज्ञानद्वयातिव्याप्तिवारणायाविसंवादिप्रवृत्तिजनकत्वविशिष्टेत्युक्तम् । ननु भावप्राधान्यविवक्षयैवोक्तसमूहालम्बनव्यावृत्तिर्लभ्यते । तत्र नीलरूपस्य धर्मत्वाभानादिति चेन्मैवम् । तथात्वे धर्मत्वधर्मित्वे इति समूहालम्बन एवातिव्याप्तिप्रसङ्गात् । घटाभाववद्भूतलमिति ज्ञानस्य घटविशिष्टभूतलज्ञानत्वप्रसङ्गाच्च । तत्र ह्यभावापेक्षया भूतले धर्मित्वस्य घटे धर्मत्वस्य भानात् । प्रमेयदण्डवान्पुरुष इति ज्ञानस्यापि प्रमेयत्वविशिष्टपुरुषज्ञानप्रसङ्गाच्च । दण्डापेक्षया प्रमेयत्वे धर्मत्वस्य पुरुषे धर्मित्वस्य च भानात् । अतः साकाङ्क्षेति विशेषणम् । उक्तज्ञानेषु च न परस्परापेक्षो धर्मधर्मिभावोऽतो न तत्रातिव्याप्तिरिति । नन्वेवमविसंवादिव्यवहारजनकत्वविशिष्टेत्युपलम्भविशेषणं व्यर्थमापन्नम् । भ्रमस्थानाभिषिक्तज्ञानद्वयातिव्याप्तिपरिहाराय हि तद्वक्तव्यम् । न च भिन्नज्ञानविषययो रजतत्वेदंपदार्थयोः प्रतीयमाने धर्मधर्मित्वे परस्परसापेक्षेऽतिप्रसङ्गात् । अतः साकाङ्क्षपदेनैव तत्रातिव्याप्तिपरिहारेऽविसंवादिव्यवहारजनकत्वविशिष्टेति विशेषणं व्यर्थमेवेति चेन्मैवम् । साकाङ्क्षधर्मत्वधर्मित्वविषयकत्वपदेन तद्धर्मप्रकारकतद्धर्मीविशेष्यकेच्छादिजनकत्वस्यैव विवक्षितत्वात् । तस्य च भ्रमस्थलेऽपि सत्त्वेन तत्रातिव्याप्तिवारकत्वात् । भिन्नज्ञानगोचरयोरपीदंरजतत्वयोरसंसर्गाग्रहदशायां परस्परनिरूपितधर्मत्वधर्मित्वग्रहस्वीकारे बाधकाभावादित्यप्याहुः । अत एवैतन्मते सहेति विशेषणं सार्थकम् । अन्यथा साकाङ्क्षपदेनैव क्रमभाव्यनेकज्ञानवारणे सहेत्यस्य स्वरूपकथनार्थत्वादिति सर्वमनवद्यम् ॥ **रजतत्वाप्रतीताविति** । पक्षे हेत्वप्रतीत्येष्टसाधनताऽनुमानासम्भवादिति भावः ॥ **रजतत्वेन सहागृहीतेति** ॥ न पक्षे हेतुज्ञानमेव सर्वत्रानुमितिजनकं किन्तु हेत्वसंसर्गाग्रहो वा हेतुमद्भेदाग्रहो वेति भावः ॥ **किं चैवं सतीति** ॥ विशिष्टज्ञाने संसर्गो न भासत इत्यङ्गीकार इत्यर्थः । सकलसविकल्पकोच्छेद इत्यत्रेष्टापत्तिरित्यत आह ॥ **न च निर्विकल्पकस्येति** ॥ तथा च सविकल्पकानङ्गीकारे प्रवृत्तिमात्रोच्छेदः स्यादिति भावः ।

**श्री०—द्वितीयः पक्ष इति** ॥ सर्वोऽपि व्यवहारो भेदाग्रहादिति प्राग्विकल्पितो द्वितीयः पक्ष इत्यर्थः ॥ द्वितीयपक्षे सर्वोऽपि व्यवहारो भेदाग्रहादिति तादात्म्याभिप्रायेणोक्तं संसर्गारोपे त्वसंसर्गाग्रहादित्यपि द्रष्टव्यमित्यभिप्रेत्योपपादयति ॥ **सत्यरजते तावदित्यादिना** ॥ **रजतव्यक्तिज्ञानमिति** ॥ विशेष्यज्ञानमित्यर्थः । जातिबोधो विशेषणज्ञानरूपः ॥ **न चास्तीति** ॥ रजतत्वजातिसंसर्गो रजतव्यक्तौ नास्तीति ज्ञानं नास्तीत्यर्थः ॥ **एतावतैवेति** ॥ विशेष्यज्ञानविशेषणज्ञानतदुभयासंसर्गाग्रहरूपकारणत्रयेणेत्यर्थः । तदर्थिनां रजतार्थिनाम् । प्रवर्तकतया भवदभिमताभेदग्रहस्तत्र नास्तीत्याह ॥ **न हीति** ॥ **संसर्गग्रह इति** ॥ असंसर्गाग्रहापेक्षया लघुत्वादिति भावः । तदा विशिष्टज्ञानसमये ॥ **रूपरूपीति** ॥ नीलो घट इत्याद्यनुभवः । सम्बन्धिभिन्नो विशेषणविशेष्ययोर्यः सम्बन्ध-

स्तद्विषयो विशिष्टज्ञानत्वात् । दण्डीपुरुष इति विशिष्टज्ञानवदिति प्राभाकरमते समवायसाधकमनुमानम् । दृष्टान्ते संयोगमादाय साध्यपर्यवसानम् । पक्षे तु नीलघटयोरुभयोरद्रव्यत्वेन संयोगमादाय साध्यपर्यवसानायोगात्समवायमादाय साध्यपर्यवसानं द्रष्टव्यम् । घटाभाववद्भूतलमित्यादौ व्यभिचारवारणाय तद्विषयकत्वे बाधकाभावे सतीति हेतौ विशेषणं देयम् । तत्र हेतुभूतं विशिष्टज्ञानत्वं निर्वक्ति ॥ **अविसंवादीत्यादिना** ॥ व्यवहारः प्रवृत्तिः । अत्र रूपरूपीशब्दौ धर्मधर्मिवचनौ भावप्रधानौ । साकाङ्क्षत्वं नाम परस्परापेक्षत्वम् । तथाच साकाक्षं परस्परापेक्षं धर्मधर्मित्वम् ॥ तयोः सहैकस्मिन्नेवकाले उपलम्भ इत्यर्थः । अत्र कालभेदेन जातयोरिदं नीलमयं घट इति ज्ञानयोर्विशिष्टज्ञानत्वपरिहाराय सहेत्युक्तम् । नीलघटावाविति समूहालम्बनज्ञानेऽतिव्याप्तिवारणाय साकांक्षेत्युक्तम् । उक्तसमूहालम्बने चोभयोर्धर्मित्वमेवावभासते न परस्परनिरूपितो धर्मधर्मिभाव इति नातिव्याप्तिः । एवं चेद्भ्रमस्थानाभिषिक्ते विसंवादिसंवादिप्रवृत्तिजनकेऽगृहीतभेदग्रहणस्मरणात्मके ज्ञानद्वयेऽतिव्याप्तिवारणायाविसंवादीत्यारभ्य विशिष्टेत्यन्तं विशेषणम् । इदं चोपलम्भविशेषणम् ॥ **प्राक् प्रवृत्तेः शक्याधिगममिति** ॥ तथा चाविसंवादिव्यवहारगर्भोक्तलिङ्गेन समवायज्ञानानन्तरं संसर्गग्रहप्राप्त्या प्रवृत्तिः॥ प्रवृत्त्यनन्तरं तद्गर्भलिङ्गेन संसर्गज्ञानमित्यन्योन्याश्रय इति भावः ॥ **सकलमपि प्रवर्तकमिति** ॥ इदं पदार्थरूपं विशेष्यज्ञानं रजतत्वजातिबोधस्तदुभयासंसर्गाग्रहश्चेति सामग्रीत्रयमित्यर्थः । विभ्रमेऽपीत्यनन्तरं तावन्मात्रेणैव प्रवृत्त्युपपत्तेरिति वाक्यशेषः । भेदाग्रहस्य प्रवृत्तिहेतुत्वमुपपादयति ॥ **इदं रजतत्वाधारयोरिति** ॥ रजतत्वाधारो रजतम् । रजतत्वाप्रतीतावित्यनन्तरं पक्षे हेत्वप्रतीत्येष्टसाधनतानुमानासम्भवादिति शेषः ॥ **रजतत्वसहेति** ॥ तथा चेदमिष्टसाधनं रजतत्वेन सहागृहीतासंसर्गत्वात्, रजतागृहीतभेदवस्त्वादित्यनुमानद्वयेनेष्टसाधनत्वानुमानाङ्गीकारेण रजतत्वाहेतुत्वान्नोक्तदोष इत्यर्थः ॥ **असंसर्गाग्रहभेदाग्रहयोरिति** ॥ कोऽयं भेदोनामेत्यादिना भेदाग्रहस्य, असंसर्गो हि संसर्गाभाव इत्यादिनाऽसंसर्गाग्रहस्य च निरस्तत्वादित्यर्थः ॥ **एवं सतीति** ॥ विशिष्टज्ञानरूपे सविकल्पकज्ञाने संसर्गो न भासते । किं नामासंसर्गाग्रह एव तत्र विवक्षितस्तस्मादेव प्रवृत्तिरित्यङ्गीकार इत्यर्थः । तथाच निर्विकल्पकाद्भेदाभावप्राप्त्येति शेषः । तदुपपादयति ॥ **वस्तुमात्रेति** ॥ **तदपीति** ॥ अङ्गुलित्रयवन्निर्विकल्पके धर्मधर्मिस्वरूपप्रतीतौ तत्स्वरूपभूतं परस्पराकांक्षितत्वमपि प्रतीतमेवेत्यर्थः ॥ **भातीति** ॥ निर्विकल्पके वस्तुदर्शनस्य जातत्वादिति भावः ॥ **तदिति** ॥ निर्विकल्पकेऽचकासत् सविकल्पके चकासदित्यर्थः । सविकल्पकोच्छेदप्रसङ्ग इत्यत्रेष्टापत्तिं परिहरति ॥ **न चेति** ॥ तथाच प्रवृत्तिमात्रोच्छेदः स्यादिति भावः । तथात्वेन असंसर्गाग्रहपूर्वकत्वेन ॥ **बालस्येति** ॥ पार्श्वस्थस्यव्युत्पित्सोरित्यर्थः ॥ **तदीयेति** ॥ अस्येयं प्रवृत्तिः संसर्गज्ञानपूर्विकेति मध्यमवृद्धसम्बन्धिसंसर्गज्ञानानुमानेत्यर्थः । अन्वितार्थेषु आनयनादिसंसर्गवत्सु गवादिरूपार्थेषु ॥

च०— **एतावतैव तदर्थिनां प्रकृतेरिति** ॥ असंसर्गाग्रहमात्रेणेत्यर्थः । विशिष्टज्ञानस्य प्रवर्तकोपगन्तृभिस्तादात्म्यावगाहिज्ञानस्य प्रवर्तकतासंसर्गावगाहिज्ञानस्य वेति कल्पद्वयमभिप्रेत्याद्यं प्रत्याह ॥ **न हीति** ॥ द्वितीयं प्रतिविधत्ते ॥ **न चेति** ॥ इन्द्रियेति विशेषणविशेष्यभावस्य गुरुमते संसर्गत्वानुपगतेरिति भावः ॥ **अविसंवादीति** ॥ गुणक्रियाद्युपरागेण द्रव्यादिप्रतीतौ पर्यवसानगत्या समवायविषयकतां गुरून्प्रत्यनुमिमानानां नैयायिकानां गुणक्रियाद्युपरक्तद्रव्यादिप्रतीतिः प्रतियोग्यनुयोगिभिन्नसंबन्धवृत्तिसंसर्गतानिरूपिकाविशेष्यतासमानाधिकरणधर्मप्रकारकप्रवृत्तिजनकत्वे सति विशेषणाभिमतवृत्तिप्रकारतानिरूपितद्रव्यादिविशेष्यताघटितधर्मावच्छिन्नेच्छावृत्तिजन्यतानिरूपकत्वाद्दण्डीत्यादिप्रत्ययवदित्यनुमानं स्वरूपसंबन्धमादायार्थान्तरतामपहस्तयितुं साध्यशरीरे संबन्धविशेषणतया भिन्नाङ्गनिवेशनं विसंवादिप्रवृत्तिजनके गुरुमतदिशाऽनैकान्त्यव्युदसनायाद्यदलोपादानं निर्विकल्पकादिबुद्धौ तद्वारणायोत्तरदलनिवेश इत्यादि असंवादीत्यादितलिङ्गमित्यन्तस्य फलिताशयः ॥ **रजतत्वाप्रतीताविति** ॥ इष्टसाधनतानुमापकरजतत्वहेतोः प्रकृतपक्षवृत्तित्वाग्रहे तादृशानुमित्यनुदयेन तन्नियन्त्रितप्रवृत्त्यनुदयप्रसङ्ग इति भावः । सविकल्पकोच्छेदप्रसङ्गोपधायकसामग्रीघटकापाद्यानिष्टताविघटकेष्टापत्तिमपहस्तयते ॥ **न च निर्विकल्पकस्येति** ॥

सु०— **अथैवं मन्येत । अस्त्येव व्यवहर्तुरन्वयज्ञानम् । किं नाम सदपि न प्रवृत्तावुपयुज्यते । अतो न कश्चिद्दोष इति । तत्र किं तदन्वयज्ञानं प्रवृत्तौ नियतमुतानियतमिति वाच्यम् । आद्येऽस्तु तत्प्रवृत्तावुपयोगि मा वा भूत् , अन्यथाख्यातिं विना न रजतार्थिनः पुरोवर्तिनि प्रवृत्तिरिति तावत्सिद्धम् । द्वितीये तु शब्दोच्छेदस्तदवस्थः । किञ्च नियतपूर्वभावि चाकारणं चेत्यनुपपन्नम् । प्रतिभासमानयोरसंसर्गाग्रहे सति संसर्गग्रहोऽवर्जनीयसन्निधिरिति चेन्न विपर्ययस्यापि वक्तुं शक्यत्वात् । अवश्यं चैतदेवम् । व्यवहारो हि व्यवहर्तव्योपलम्भनिबन्धनो युक्तः, न तु व्यवहरणीयविपर्ययानुपलब्धिनिबन्धनः । न हि घटव्यवहारो घटमतिक्रम्य तद्विपर्ययाप्रतिभासे सति भवति । तदमी प्रयोगाः । विमतो व्यवहारो व्यवहर्तव्यज्ञानपुरःसरो व्यवहारत्वाद्घटव्यवहारवत् । विवादपदं ज्ञानं पुरोवर्तिविषयं तद्विषयव्यवहारजनकत्वात्संमतवत् । पुरोवर्ती वा रजतज्ञानगोचरो रजतानुपायत्वे सति तदर्थिप्रवृत्तिविषयत्वात्सम्यग्रजतवत् । विवादपदं रजतज्ञानमिदं ज्ञानान्न भिद्यते प्रकाशमानाच्चतोऽप्रकाशमानभेदत्वे सति प्रकाशमानत्वात्संप्रतिपन्नरजतज्ञानवदित्यादयः ॥ किञ्च विपर्ययाभावे नेदं रजतमिति ज्ञानस्य बाधकत्वमनुपपद्यमानं तं गमयति । न हि तथात्वे बाधकत्वमस्ति ।**

**न तावद्ग्रहणनिवर्तकतया बाधकत्वम् , सर्वप्रत्ययानां तथात्वापातात् । नापि व्यवहार-विच्छेदकत्वेन; अतदर्थिनां व्यवहारानुत्पत्तौ नेदं रजतमितिज्ञानस्याबाधकत्वप्रसङ्गात्, व्याघ्रचोरादिज्ञानस्यापि प्रवृत्तिविच्छेदकत्वेन बाधकत्वप्रसक्तेश्च । न चार्थस्य व्यवहारयोग्यता-विच्छेदकत्वेन; समयान्तरेऽपि तत्र विभ्रमात्प्रवृत्त्यभावापत्तेः । न च व्यवहारप्रतिबन्धक-त्वेन; अविवेकनिवृत्तौ कारणाभावादेव व्यवहारानुत्पत्तेः प्रतिबन्धककल्पनायोगात् , व्याघ्र-चोरादिज्ञानस्य बाधकतापत्तेश्च । विमतमयथार्थं बाध्यत्वाद्व्यवहारवदिति । अत एव भ्रान्तित्व-प्रसिद्ध्याऽपि विपर्याससिद्धिः ॥ एवञ्च सति प्रत्ययत्वानुमानं कालात्ययापदिष्टं वेदितव्यम् । अदुष्टकरणजन्यत्वोपाधिग्रस्तं च ॥ एतेन रजतज्ञानत्वानुमानमपि निरस्तम् । अन्यथा विमतो व्यवहारो यथार्थो व्यवहारत्वात् , रजतविषयो वा रजतव्यवहारत्वादित्यपि स्यात् ।**

व्या०— ननु संसर्गस्य प्रत्यक्षविषयत्वासंभवादसंसर्गाग्रहादेव प्रवृत्तिं वदन्तं प्रति सविकल्पको-च्छेदशाब्दप्रमाणोच्छेदप्राप्तावपि स्वरूपेण संसर्गज्ञानमङ्गीकृत्याप्यसंसर्गाग्रहादेव प्रवृत्तिं वदन्तं मां प्रति न तावित्यख्यातिमतविशेषं शङ्कते ॥ **अथेति** ॥ संसर्गज्ञानस्य प्रवृत्तिनियतत्वे अन्यथाख्यातिसिद्धिः । अनियतत्वे च व्यभिचारेण प्रवृत्त्या संसर्गज्ञानानुमानासंभवाच्छाब्दप्रमाणोच्छेदस्तवापीत्याह ॥ **तत्रेति** ॥ प्रवृत्तिसमनियतत्वेनान्यथाख्यातिमुपपाद्य प्रवृत्तिकारणत्वेनापि तामुपपादयति ॥ **किं चेति** ॥ नन्वेवं सति न प्रवृत्तिकारणत्वनिश्चयः संसर्गज्ञानस्येत्यत आह ॥ **अवश्यं चेति** ॥ एवमसंसर्गाग्रहादि-निरासेनान्यथासिद्ध्यादिपरिहारान्निष्प्रत्यूहाः प्रयोगा इत्याह ॥ **तदमी इति** ॥ रजतार्थिप्रवृत्तिविषये रजतज्ञानागोचरे रजतोपायेऽव्यभिचारायाह ॥ **रजतेति** ॥ आदिपदेनेदं ज्ञानं रजतज्ञानान्न भिद्यते उक्तहेतोरेव विमता प्रवृत्ती रजतपुरोवर्तिविशिष्टज्ञानसाध्या रजतार्थिताजन्यपुरोवर्तिप्रवृत्तित्वादित्यादीनां संग्रहः । अत्र फलैक्येऽपि प्रकारभेदाद्भेदो द्रष्टव्यः । एवमन्यथाविज्ञानमेव भ्रान्तिरित्यंशसूचितयुक्ति-मभिधायान्यथाविज्ञातस्य सम्यग्विज्ञानमेव बाध इत्यंशसूचितं दूषणं वक्तुं वक्ष्यमाणे बाध्यत्वानुमाने अन्यथासिद्धिशङ्कानिरासायोपोद्घातमाह ॥ **किं चेति** ॥ विपर्ययाभावे कथं बाधकत्वानुपपत्तिरित्यतो विपर्ययाङ्गीकारे बाध्यलाभात्तत्प्रसञ्जितान्यथाकारलोडनेनैव बाधकत्वोपपत्तावपि तदनङ्गीकारे बाध्यालाभान्न तदुपपत्तिरित्याह ॥ **न हीति** ॥ तदर्थिनामिति विशेषणेऽप्यतिव्याप्तिरपीत्याह ॥ **व्याघ्रेति** ॥ **न चेति** ॥ व्यवहारानुपपत्तिस्थलेऽपि तद्योग्यताऽस्त्येवेति भावः ॥ **न चेति** ॥ पूर्वं व्यवहारयोग्यता-प्रतिबन्धेऽपि समयान्तरे प्रवृत्त्युपपत्तिरिति भावः ॥ **अविवेकेति** ॥ सति पुष्कलकारणे कार्यानुत्पत्ति-प्रयोजकस्यैव प्रतिबन्धकत्वादित्याशयः । यदर्थमयं प्रयत्नस्तदाह ॥ **विमतमिति** ॥ भेदाग्रहनिवर्तकत्वेन

बाधकज्ञानस्य बाधकत्वोपपत्तौ भेदाग्रहमात्रेण भ्रान्तित्वप्रसिद्ध्यन्यथासिद्धावपि तदसंभवप्रतिपादनेन पूर्वज्ञानप्रसञ्जितान्यथाकारलोडनेन तस्य बाधकत्वे वक्तव्ये पूर्वज्ञानस्याप्यन्यथाकारप्रसञ्जकत्वेनैव भ्रान्तित्वस्यैव वक्तव्यत्वाद्भ्रान्तित्वप्रसिद्ध्यन्यथाऽनुपपत्त्याऽन्यथाख्यातिसिद्धिरित्याह ॥ **अत एवेति** ॥ **एवं च सतीति** ॥ उक्तानुभवानुमानादिभिरन्यथाज्ञाने सिद्धे सतीत्यर्थः ॥ **अदुष्टेति** ॥ दुष्टकरणजन्यत्वाभाव इत्यर्थः । तेन नेश्वरज्ञानमादाय साध्याव्यापकता । करणत्वस्य च वैवक्षितत्वान्न यादृच्छिकसंवादिस्थलेऽपि सेति ध्येयम् । अनुमानद्वयेऽप्याभाससाम्यं चाह ॥ **अन्यथेति** ॥

स० — **अवश्यं चैतदेवमिति** ॥ अत्र संसर्गज्ञानस्य व्यवहारं प्रति कारणत्वस्य क्लृप्तत्वात्तस्यैव प्रवृत्तिं प्रति कारणत्वं न त्वसंसर्गाग्रहस्येत्यत्र तात्पर्यान्न प्रकृतासङ्गतिरिति बोध्यम् ॥ **अतदर्थिनामिति** ॥ अनेनैव प्रागुक्तो भेदाग्रहप्रसञ्जिताभेदव्यवहारस्य विद्यमानविषयकत्वज्ञापकत्वेन बाधकत्वमितिपक्षो निराकृतः । अतदर्थिनामभेदव्यवहारानुपपत्तौ तद्विषयासत्त्वावेदकत्वाभावेन तत्त्वानुपपत्तेः । यद्वा विमतो व्यवहारो व्यवहर्तव्यज्ञानपुरःसर इत्यादि प्रागुक्तप्रकारेणाभेदव्यवहारस्याभेदग्रहस्यासाध्यत्वोपपादनेन तस्य भेदाग्रहप्रसञ्जितत्वानुपपत्त्या तस्याः शङ्कितुमपि अशक्यत्वात्तमनाशङ्क्यैव पक्षान्तरमेव निराकृतमिति भावः ॥ **प्रतिबन्धककल्पनायोगादिति** ॥ सति पुष्कलकारणे यस्मिन्सति यन्नोपपद्यते तस्यैव तत्र प्रतिबन्धकत्वादिति भावः ॥ **अदुष्टकरणजन्यत्वोपाधिग्रस्तं चेति** ॥ दुष्टकरणाजन्यत्वोपाधिग्रस्तमित्यर्थः । अतो नेश्वरज्ञाने साध्याव्यापकता । यादृच्छिकसंवादिनि च न दुष्टकरणजन्यत्वम् । सतोरपि कर्तृकर्मणोर्यज्जातीयानन्तरं नियमेन कार्यमुत्पद्यते तत्साधनमित्येवंरूपवैवक्षिककरणत्वस्य तत्रासंभवेन दुष्टकरणजन्यत्वाभावरूपोपाधेस्तत्र सत्त्वेन न साध्या व्यापकत्वमिति भावः । केचित्तु नन्वीश्वरज्ञाने साध्याव्यापकत्वान्नास्योपाधित्वम् । न च जन्यत्वरूपपक्षधर्मावच्छिन्नसाध्याव्यापकत्वविवक्षणादीश्वरज्ञाने चावच्छिन्नसाध्याभावव्यापकत्वमिति वाच्यम् । तथापि यादृच्छिकसंवादिनि साध्याव्यापकत्वादिति चेन्न । अयादृच्छिकसंवादिजन्यज्ञानत्वरूपपक्षधर्मत्वावच्छिन्नसाध्यव्यापकत्वसंभवादित्याहुः ॥

प० — **अन्यथाख्यातिं विनेति** ॥ शुक्तौ रजतत्वसंसर्गज्ञानस्य प्राप्तत्वादिति भावः । आद्ये दोषान्तरमाह ॥ **किं चेति** ॥ **विपर्ययस्यापीति** ॥ संसर्गग्रहे सति असंसर्गाग्रहोऽवर्जनीयसन्निधिरिति त्वदुक्तविपर्ययस्यापीत्यर्थः । तर्हि विनिगमनाविरहात्संसर्गग्रह एव प्रवर्तक इत्यस्य भङ्ग इत्यत आह ॥ **अवश्यं चेदमिति** ॥ **विमत इति** ॥ शुक्ताविदं रजतमिति व्यवहार इत्यर्थः । रजतोपाये व्यभिचार-

निरासाय रजतानुपायत्वे सतीति । प्रतियोगिज्ञानाभावेनान्यथोपपत्तिवारणाय प्रकाशमानादिति । धर्म्यज्ञानेनान्यथोपपत्तिनिरासाय प्रकाशमानत्वादित्युक्तम् । विवादपदमिदं ज्ञानं रजतज्ञानान्न भिद्यते उक्ताद्धेतोरित्यादिरादिपदार्थः । हेतूनामप्रयोजकत्वनिरासाय विपक्षे बाधोच्छेद एव बाधक इति भावेन आह ॥ **किञ्च विपर्ययेति** ॥ यद्वाऽनुमानेन विपर्ययं समर्थ्यार्थापत्त्यापि तं साधयति ॥ **किं चेति** ॥ यद्वा वक्ष्यमाणप्रयोगस्याप्रयोजकत्वशङ्कानिरासायान्यथोपपत्तिं निराह ॥ **किं चेत्यादिना** ॥ तथात्वे विपर्ययाभावे । तथात्वापातात् बाधकत्वापातादित्यर्थः । समयान्तरे कालान्तरे । विमतमित्यतः प्राक् तदयं प्रयोग इति विपरिणामेनानुषङ्गः । अत्र सर्वत्र पक्षपरिष्कारः पूर्वोक्तरीत्यैव ध्येयः ॥ **अत एवेति** ॥ साधकानामुक्तत्वात् बाधकानां परिहृतत्वाच्चाभ्यां हेतुभ्यामेवेत्यर्थः ॥ **एवं च सतीति** ॥ भ्रान्तित्वस्य प्रमाणसिद्धत्वे सतीत्यर्थः ॥ **प्रत्ययत्वेति** ॥ विगीतः प्रत्ययो यथार्थः प्रत्ययत्वादिति पूर्वपक्ष्युक्तानुमानमित्यर्थः । विवादाध्यासितं (विवादपदं) रजतज्ञानं रजतविषयं रजतज्ञानत्वादिति प्रागुक्तं परकीयानुमानं च निराह ॥ **एतेनेति** ॥ कालात्ययापदिष्टादिदोषेणेत्यर्थः । शुक्तिविषयकत्वस्य साधितत्वादिति भावः । निरस्तानुमानद्वयेऽस्मदुक्तदोषेण दुष्टत्वानङ्गीकारे चाभाससाम्यरूपबाधकं चाह ॥ **अन्यथेति** ॥

या०— ननु नियतपूर्वभाविनोऽप्यन्यथासिद्धत्वादकारणत्वमुपपद्यत इत्याशङ्कते ॥ **प्रतिभासमानयोरिति** ॥ **विपर्ययस्यापीति** ॥ संसर्गग्रहे सत्यसंसर्गाग्रहोऽवर्जनीयसन्निधिरित्यपि वक्तुं शक्यत्वादित्यर्थः । नन्वेवं विनिगमकाभावादुभयोरपि कारणत्वमस्त्विति तटस्थशङ्कायामाह ॥ **अवश्यं चैतदेवमिति** ॥ तथाऽनुभवाल्लाघवाच्चेति भावः । अत्र व्यवहारपदेन प्रवृत्तिरेवाभिमताऽतो नासङ्गतिरिति ध्येयम् । अत्र प्रवृत्तिवदभिलपनस्यापि साध्यतया विवक्षितत्वात् । व्यवहारपदेनोभयमपि विवक्षितम् । अत एव पूर्वं प्रवृत्तिपदेनाभिलपनमप्युपलक्षणीयमतो नासङ्गतिरित्यप्याहुः ॥ **इदं ज्ञानान्न भिद्यत इति** ॥ अत्र प्रकाशमाने रजतस्मरणे धर्मिज्ञानाभावेनेदंज्ञानादप्रकाशमाने व्यभिचारवारणाय विशेष्यमिदंज्ञानस्यैवाप्रकाशमानतादशायां प्रतियोगिज्ञानाभावेन प्रकाशमानभेदे तत्रैव व्यभिचारवारणाय सत्यन्तमिति ज्ञातव्यम् ॥ **अविवेकेति** ॥ भेदाग्रहेत्यर्थः ॥ **प्रतिबन्धककल्पनेति** ॥ सति पुष्कलकारणे यस्मिन्सति यन्नोत्पद्यते तस्यैव तत्र प्रतिबन्धकत्वादिति भावः ॥ **अदुष्टकरणेति** ॥ अत्र दुष्टकरणजन्यत्वाभावस्यैवोपाधित्वं विवक्षितम् । अतो नेश्वरज्ञाने साध्याव्यापकता । नन्वेवमपि दुष्टकरणजन्ये याटच्छिकसंवादिनि ज्ञाने साध्याव्यापकतेति चेन्न । तादृशस्थले विद्यमानस्यापि दोषस्य जनकताऽनभ्युपगमात् । प्रामाण्यस्य स्वतस्त्वेन ज्ञानकरणमात्रेणैव तत्र यथार्थज्ञानजननात् । न च दोषस्यापवादकता । विषयसत्त्वस्य तदपवादकत्वात् ॥

श्री०— **प्रवृत्तौ नियतमिति** ॥ प्रवृत्त्यपेक्षया नियतपूर्वभावीत्यर्थः । उपयोगि जनकम् । रजतार्थिनः पुरोवर्तिनि प्रवृत्तिरन्यथाख्यातिं विना नेति तावत्सिद्धमित्यन्वयः । पुरोवर्तिनि रजतत्वसंसर्गज्ञानस्यैवान्यथाख्यातित्वात् । तस्य च प्रवृत्त्यपेक्षया नियतपूर्वभावित्वाङ्गीकारेण तां विना न प्रवृत्तिरिति तावत्सिद्धम् । तथाच सदपि न प्रवृत्तावुपयुज्यत इत्युक्तमसदिति भावः । द्वितीये अन्वयज्ञानस्य प्रवृत्त्यपेक्षया पूर्वमनियतत्वे ॥ **शब्दोच्छेद इति** ॥ मध्यमवृद्धप्रवृत्तेरपि तथात्वेन बालस्येत्यादिनोक्तरीत्येत्यर्थः ॥ **अवश्यं चैतदेवमिति** ॥ संसर्गग्रह एव प्रवर्तकोऽसंसर्गाग्रहस्त्ववर्जनीयसन्निधिरित्येतदावश्यकमित्यर्थः ॥ **व्यवहर्तव्योपलम्भनिमित्त इति** ॥ व्यवहर्तव्यज्ञानसाध्य इत्यर्थः । व्यवहर्तव्यो रजतत्वसंसर्गस्तदुपलम्भस्तद्ग्रहः ॥ **युक्त इति** ॥ लाघवादित्यर्थः । व्यवहरणीयः संसर्गः । तद्विपर्ययोऽसंसर्गस्तदनुपलब्धिस्तदग्रहस्तन्निबन्धनो न भवति गौरवादित्यर्थः । लोकेऽदर्शनादित्याह ॥ **न हीति** ॥ **घटमतिमतिक्रम्येति** ॥ घटज्ञानसाध्यत्वं विहायेत्यर्थः । तद्विपर्ययाप्रतिभासेऽघटाप्रतिभासे । घटाभावाग्रहे सतीत्यर्थः । व्यवहर्तव्यधीः संसर्गधीः । रजतार्थिप्रवृत्तिविषयत्वं रजतसाधने व्यभिचारीत्यतो रजतानुपायत्वे सतीत्युक्तम् । रजतासाधनत्वे सतीति तदर्थः ॥ **तत इति** ॥ इदं ज्ञानादित्यर्थः ॥ **संप्रतिपन्नेति** ॥ सत्यरजतस्थले इदं रजतमिति ज्ञानवदित्यर्थः । हेतौ प्रकाशमानत्वादित्येवोक्ते आपणस्थरजते इदं रजतमित्यनुभवानन्तरं देशान्तरं गतस्य तद्रजतमिति रजतस्मरणं जातमनन्तरमिदं शुक्तिकाशकलमिति च ज्ञानं जातं तदा तस्मिन्रजतस्मरणे प्रकाशमानत्वे सत्यपीदं ज्ञानाद्भेदस्यैव सत्त्वेन व्यभिचारः स्यादतः सत्यन्तम् । तथाच प्रकाशमानादिदंज्ञानात्प्रकाशमानभेदवत्त्वस्यैव सत्त्वेनाप्रकाशमानभेदवत्त्वाभावान्न व्यभिचारः । प्रकाशमानादिति पदत्यागे रजतस्मरणानन्तरमिदं शुक्तिकाशकलमिति ज्ञानं न जातम् । तदानीं तस्मिन्रजतस्मरणे इदंज्ञानरूपप्रतियोगिज्ञानाभावेन ततोऽप्रकाशमानभेदवत्त्वे सत्यपीदंज्ञानाद्भेदस्यैव सत्त्वेन व्यभिचारः स्यादत उक्तं प्रकाशमानात्तत इति । एवं च न व्यभिचारः । तावत्युक्ते यदा रजतानुभवानन्तरं रजतस्मरणमेव न जातमिदं शुक्तिकाशकलमिति ज्ञानं च जातं तदा तस्मिन्नप्रकाशमाने रजतस्मरणे प्रकाशमानात्तत इदं शुक्तिकाशकलमिति ज्ञानादप्रकाशमानभेदवत्त्वमस्ति रजतस्मरणरूपधर्मिज्ञानस्यैवाभावेन कुत्र भेदप्रकाशः स्यादतस्तत्र हेतुसत्त्वेऽपि वस्तुगत्येदं ज्ञानात्स्वरूपसद्भेदस्यैव सत्त्वेन व्यभिचारः स्यादतः प्रकाशमानत्वादित्युक्तम् । एवं च न व्यभिचार इति द्रष्टव्यम् । भेदाग्रहप्रसञ्जिताभेदव्यवहारबाधनेनैव नेदमिति विवेकज्ञानस्य बाधकत्वमुपपद्यते । तदुपपत्तौ चागृहीतविवेकस्य ज्ञानद्वयस्य भ्रान्तित्वमपि लोकसिद्धं सिद्धमिति यदुक्तं तद् दूषयति ॥ **किञ्चेत्यादिना** ॥ **तथात्व इति** ॥ विपर्ययाभाव इत्यर्थः । विपर्ययाभावेनेदंरजतमिति ज्ञानेन बाध्यं कुतो नास्तीत्यतः परिशेषमाह ॥ **न तावदिति** ॥ **अग्रहणेति** ॥ शुक्त्यज्ञानेत्यर्थः ॥ **सर्वप्रत्ययाना-**

**मिति** ॥ घटादिज्ञानानामपि घटाद्यज्ञाननिवर्तकत्वेन बाधकत्वव्यवहारापातादित्यर्थः ॥ **व्यवहारेति** ॥ प्रवृत्तिविच्छेदकत्वेनेत्यर्थः । अतदर्थिनां रजतार्थिताशून्यानाम् ॥ **अबाधकत्वेति** ॥ उत्पन्नस्यैव हि विच्छेद इति भावः ॥ **व्यवहारयोग्यतेति** ॥ प्रवृत्तिविषयत्वयोग्यतेत्यर्थः । समयान्तरे कालान्तरे ॥ **प्रवृत्त्यभावापत्तेरिति** ॥ आदाविदं रजतमिति भ्रमो जातोऽभूत् । तदनन्तरं नेदं रजतमिति बाधकप्रत्ययेनार्थे शुक्तौ प्रवृत्तियोग्यता विनष्टा । पुनः कालान्तरे तस्यामेव शुक्ताविदं रजतमिति भ्रमानन्तरं प्रवृत्तिर्भवति सा न स्यात् । पूर्वं बाधकप्रत्ययेनार्थे शुक्तिशकले प्रवृत्तिविषयत्वयोग्यताया विनष्टत्वादिति भावः ॥ **अविवेकनिवृत्ताविति** ॥ नेदंरजतमितिज्ञानेन भेदाग्रहनिवृत्तावित्यर्थः ॥ **कारणाभावादेवेति** ॥ भेदाग्रहरूपकारणाभावादेवेत्यर्थः ॥ **व्यवहारानुपपत्तेरिति** ॥ प्रवृत्त्यनुपपत्तेरित्यर्थः ॥ **प्रतिबन्धकेति** ॥ सति पुष्कलकारणे यस्मिन्सति यन्नोत्पद्यते तत्तत्र प्रतिबन्धकम् । प्रकृते च पुष्कलकारणस्यैवाभावेन प्रतिबन्धककल्पनायोगादिति भावः ॥ **बाधकत्वेति** ॥ प्रवृत्तिबाधकत्वादिति भावः । तदेवं विपर्ययाभावे बाधस्यैवाभावप्राप्त्या नेदंरजतमिति ज्ञानस्य बाधकत्वायोगात्तदन्यथाऽनुपपत्त्या विपर्ययसिद्धिरिति भावः । अनुमानं चास्ति विपर्ययसद्भावे प्रमाणमित्याह ॥ **विमतमिति** ॥ इदंरजतमिति ज्ञानमित्यर्थः । न केवलं नेदंरजतमिति ज्ञानस्य बाधकत्वान्यथाऽनुपपत्त्या विपर्ययसिद्धिः । किन्तु लोकप्रसिद्ध्याऽपीत्याह ॥ **अत एवेति** ॥ अगृहीतविवेकस्य ज्ञानद्वयस्यानुपपन्नत्वादेवेत्यर्थः ॥ **भ्रान्तित्वेति** ॥ विशिष्टविषयकभ्रमरूपैकज्ञानप्रसिद्ध्याऽपीत्यर्थः ॥ **एवं च सतीति** ॥ भ्रमरूपज्ञानसिद्धावित्यर्थः ॥ **प्रत्ययत्वानुमानमिति** ॥ विगीतप्रत्ययो यथार्थः । प्रत्ययत्वात्संप्रतिपन्नवदित्यनुमानमित्यर्थः । किं च विवादाध्यासितं रजतज्ञानं रजतविषयं रजतज्ञानत्वात्संमतवदित्युक्तानुमानं दूषयति ॥ **एतेनेति** ॥ कालात्ययापदिष्टत्वेनेत्यर्थः । रजतज्ञानस्य शुक्तिविषयकत्वेन रजतविषयकत्वाभावादिति भावः । विगीतप्रत्ययो यथार्थः प्रत्ययत्वात्संप्रतिपन्नवदित्यनुमानेन प्रत्ययस्य याथार्थ्यसाधने तथा विवादाध्यासितं रजतज्ञानं रजतविषयकं रजतज्ञानत्वात्संमतवदित्यनुमानेनेदंरजतमिति ज्ञानस्य रजतविषयकत्वसाधने प्रतिबन्दीं गृह्णाति ॥ **अन्यथेति** ॥ **विमत इति** ॥ इदं रजतमिति ज्ञानजन्य इत्यर्थः । तथा चायथार्थव्यवहारो यस्त्वयाङ्गीकृतः स न स्यादिति भावः । रजतविषयो वेत्यत्रापि विमतो व्यवहार इत्यनुवर्तते । तथाच रजतार्थिप्रवृत्तेः शुक्तिविषयतायाः परसंमतत्वेन तस्याः रजतविषयकत्वसाधने ज्ञानवत्प्रवृत्तेरपि याथार्थ्यप्राप्त्याऽयथार्थप्रवृत्त्यङ्गीकारवादभङ्गप्राप्तेरिति भावः ॥

**च०**— अवर्जनीयसन्निधिरन्यथासिद्धिः । विमतो व्यवहारः प्रकृतसाध्यतदभावकोटिकविमतिविषयीभूता प्रवृत्तिः । तुरीयानुमाने प्रतियोग्यनुयोगिज्ञानाभावनियन्त्रितभेदज्ञानाभावाधीनहेतु-

मत्ताकघटादावनैकान्त्यमपहस्तयितुं हेतुतावच्छेदकघटकतया प्रतियोग्यनुयोगिनोः प्रकाशमानत्वांश-निवेशनम् । दर्शितसाधनानामप्रयोजकतानिरसनौपयिकीं बाधकाभिमतज्ञानस्य बाधकत्वानुपपत्तिम् । विपर्याससाधिकामर्थापत्तिं वाभिधत्ते ॥ **किं चेत्यादि** ॥ तथात्वे विपर्यासानुपगमे बाधकाभिमतज्ञानस्य बाधकत्वमग्रहणनिवर्तकतया नियन्त्रितं व्यवहारविच्छेदकतानिबन्धनं व्यवहारयोग्यताविनाशकतानिघ्नं व्यवहारप्रतिबन्धकतावत्त्वं वेति कल्पचतुष्टयीमनुसन्दधानः क्रमेण प्रतिविधत्ते ॥ **न तावदित्यादिना** ॥ अग्रहणनिवर्तकतया । पुरोवर्तिनि शुक्तित्वस्य रजते वा असन्निहितत्वस्याग्रहणनिवर्तकतया ॥ **सर्वेत्यादि** ॥ घटादिप्रत्ययानामपि घटत्वाद्यग्रहणनिवर्तकतया बाधकत्वापातादित्यर्थः । व्यवहार-विच्छेदकत्वेन रजतार्थिनेष्टशुक्तिकागोचरप्रवृत्तिध्वंसप्रयोजकत्वेन ॥ **अतदर्थिन इति** ॥ इच्छाघटित-सामग्र्यभावादेव प्रवृत्तिरूपप्रतियोगिन एवानुत्पादेन तत्र बाधकज्ञानस्य तद्ध्वंसप्रयोजकत्वस्य दुरुपपाद-त्वादिति भावः । अर्थस्य इदमंशस्य । व्यवहारयोग्यताविनाशकत्वेन प्रवृत्तिविषयतावच्छेदकीभूतेदन्त्व-नाशकत्वेन । व्यवहारप्रतिबन्धकत्वेन रजतार्थिनिष्ठेदमंशविषयकप्रवृत्त्यनुत्पादप्रयोजकत्वेन ॥ **अविवेकेति** ॥ सामग्र्यभावादेव कार्यानुत्पादे तत्र कस्यचित्तदनुत्पादप्रयोजकत्वाकल्पनादिति भावः । एवं च सति निरवग्रहानुमानादिभिर्विपर्यासे सिद्धे ॥ **अदुष्टेति** ॥ दुष्टकरणजन्यत्वाभावलक्षणोपाधि-दूषितं चेत्यर्थः । तेन नेश्वरज्ञानान्तर्भावेन साध्यव्यापकताभङ्ग इति भावः । न च प्रतारकोच्चरितवाक्य-जनितान्वयबोधे दैववशसंपन्नयाथार्थ्यके साध्यव्यापकताऽभाङ्क्षीदिति वाच्यम् । तादृशान्वयबोधे दोष-हेतुत्वासंप्रतिपत्तेः । सिद्धान्ते प्रामाण्यस्य गुणाजन्यत्वेन ज्ञानसामग्रीमात्रायत्तोत्पत्तिकतयाऽऽप्त्यभावेऽपि तत्र याथार्थ्यजननात् । दोषस्तु विषयसत्तयाऽपोदित इत्यवसेयम् । अन्यथा विपर्यासानुपगमे । विमतो व्यवहारः विशेष्यताव्यधिकरणप्रकारकेच्छाप्रवृत्तिलक्षणः । गुरुमते ज्ञानस्य याथार्थ्यं नियतम् । इच्छा-प्रवृत्त्योस्तु क्वचिदयाथार्थ्यमुपगते तुल्यदिशा तदप्यनुपेतव्यं स्यादिति भावः ॥

**सु०— यदपि ज्ञानत्वं च यथार्थमात्रवृत्तीत्यादि; तत्र किमिदं ज्ञानत्वं सामान्यं वा प्रतिनियतं वा । नाद्यः वादिप्रतिवादिनोराशयासिद्धेः । द्वितीये यथार्थज्ञानवृत्तिज्ञानत्वे सिद्धसाधनता । विमतज्ञानवृत्तिज्ञानत्वपक्षीकारेऽपि मात्रेति व्यर्थं स्यात् । तत्त्यागेन च प्रति-ज्ञाने प्रथमानुमानदोष एव ॥ किञ्च यथार्थमात्रवृत्तीत्ययथार्थावृत्तित्वमात्रं विवक्षितम् उतायथार्थज्ञानावृत्तित्वम् । आद्ये सिद्धसाधनम् अयथार्थव्यवहारावृत्तित्वस्य सिद्धत्वात् । द्वितीये परस्याप्रसिद्धविशेषणता, अदुष्टसामग्रीजन्यमात्रवृत्तित्वमुपाधिश्च ॥॥ यच्च शुक्तिका रजतत्वेनावभासत इत्यादि; तदप्यसत् । मेरुः सर्षप इत्यादिवाक्यान्मेरोरपि सर्षपत्वेन प्रति-**

भासाद् दृष्टान्तस्य साध्यवैकल्यात् । अन्यथा तथाविधवाक्याभासं श्रुतवता तत्प्रतिषेधो न क्रियेताप्रसक्तत्वात् । न हि पदार्थप्रतिषेधो युक्तः ॥ अपि चैवं सत्यग्निरनुष्ण इति बाधित-विषयस्य वाक्यस्य घटः पचतीत्यपार्थकाद्भेदो न स्यात् ॥ ॥ यदपीदं रजततादात्म्यमित्यादि । तच्चायुक्तम् । तदप्रतीतावाश्रयासिद्धेः, प्रतीतौ व्याघातात् दृष्टान्तस्य साध्यसमत्वाच्चेत्यास्तां विस्तरः ॥ १ ॥

वा०— धर्मिविकल्पप्रयुक्तदूषणालाभाय ज्ञानत्वस्य पक्षतया निर्देशेऽपि तत्प्रयुक्तदूषणं स्यादेवे-त्याशयेनाह ॥ **तत्रेति** ॥ **वादीति** ॥ वादिना गुणगतजातेः प्रतिवादिना चानुगतसामान्यस्य क्वाप्य-नभ्युपगमादिति भावः । प्रथमानुमानदोषः कालात्ययापदिष्टत्वम् ॥ **अदुष्टेति** ॥ अदुष्टसामग्रीजन्य-वर्तिनि सत्तादावयथार्थज्ञानावृत्तित्वाभावेन समव्याप्तिभङ्ग इत्यतः समव्याप्तस्यैवोपाधित्वमिति पक्षे तदर्थं मात्रपदम् । दुष्टसामग्र्यजन्यमात्रवृत्तित्वमित्यर्थान्नेश्वरज्ञानत्वे साध्याव्यापकत्वम् । उपाधौ मात्रेति विशेषणं च पक्षे साधनाव्यापकत्वसिद्ध्यर्थम् । उपाध्यभावेन साध्याभावसाधनेऽसिद्धिपरिहारार्थं चेति द्रष्टव्यम् । ननु मेरुसर्षपतादात्म्यं नैव प्रतिषिध्यत इत्यतः प्रतिषेधस्यानुभवसिद्धत्वात्तादात्म्याप्रतिषेधे-ऽन्यस्याप्रसङ्गात्पदार्थप्रतिषेधो वक्तव्यः । स च पदार्थानां स्वरूपेण सत्त्वेन बाधितत्वान्न युक्त इत्याह ॥ **न हीति** ॥ यद्वाऽस्तु तर्हि प्रसक्तत्वात्पदार्थानामेव प्रतिषेध इत्यतोऽयुक्तः स इत्याह ॥ **न हीति** ॥ ननु मेरुः सर्षप इत्यस्यानन्वितत्वात्प्रतिषेध इत्यत आह ॥ **अपि चेति** ॥ तर्ह्यग्निरनुष्ण इत्यस्य मेरुः सर्षप इत्यतोऽविशेषत्वादनन्वितवाचकप्रयोगत्वादेव दुष्टत्वोपपत्तौ बाधितापार्थकयोर्भेदो न स्यादित्यर्थः । असतोऽपि प्रतीतेर्वक्ष्यमाणत्वेनासत्त्वादिहेतूनामप्रयोजकत्वादेः सुज्ञानत्वादुपरम्यत इत्याशयेनाह **आस्तामिति** ॥ यद्वैतच्चक्षुरेतच्चक्षुर्जन्ययथार्थज्ञानातिरिक्तज्ञानजनकं चक्षुष्ट्वादिन्द्रियत्वाद्वा चक्षुरन्तरवदि-न्द्रियान्तरवच्च । विमतानि पदानि स्वस्मारितार्थान्वयप्रतिपादकान्याकाङ्क्षादिमत्पदकदम्बकत्वात्संमतवदि-त्याद्यन्यथाख्यातिसाधकानुमानानां विपर्ययानभ्युपगमे प्रतिपक्षाप्रतिपत्तौ तन्निरासाय कथारम्भासंभव इत्यादिबाधकानां चोपपत्तौ तदनुपन्यासेन कथमुपरम्यत इत्यतोऽनुमानानामुपाधिप्रतिपक्षकलङ्कितत्वेन तन्निरासेन बहुयत्नसापेक्षेण न फलं परेषां तु बालतयाऽयुक्तो वाक्प्रपञ्चः । अविरुद्धसाधकबाधकयो-रुक्तरीत्या सुज्ञानत्वादुपरम एवोचित इत्याशयेनाह ॥ **आस्तामिति** ॥ १ ॥

स०— **वादिप्रतिवादिनोरिति** ॥ अनेकानुगतसामान्यस्य तत्त्ववादिनानङ्गीकारात् । प्राभाकरेणापि तार्किकमते जातेरिवानुगतव्यवहारहेतुत्वादिना रूपादेरेकत्वाभ्युपगमेन व्यक्त्यैक्यरूप-

जातिबाधकेन ज्ञानत्वजातेरङ्गीकारेण वादिप्रतिवादिनोराश्रयासिद्धेरित्यर्थः ॥ **मात्रेति व्यर्थं स्यादिति** । ननु भ्रमस्यापि धर्म्यंशे प्रमात्वेन सिद्धसाधनतापरिहारार्थं तदिति वाच्यम् । धर्म्यंशस्य तद्विषयत्वाभावात् ॥ **अदुष्टेति** ॥ ननु प्रमात्वे साध्याव्यापकत्वम् । तस्य यथार्थमात्रवृत्तित्वेऽपीश्वरज्ञाने यादृच्छिकसंवादिनि च वृत्तित्वेनादुष्टसामग्रीजन्यज्ञानमात्रवृत्तित्वाभावात् । न च दुष्टसामग्रीजन्यज्ञानमात्रवृत्तित्वाभावो विवक्षित इति न साध्याव्यापकत्वमिति वाच्यम् । तथा सति मात्रपदवैयर्थ्यापत्तेरिति चेन्न । दुष्टसामग्रीजन्यज्ञानावृत्तित्वे सति अदुष्टसामग्रीजन्यज्ञानावृत्तित्वस्यैवोक्तोपाध्यर्थत्वात् । मात्रशब्दस्य दुष्टसामग्रीजन्यज्ञानवृत्तित्वव्यावर्तकत्वेऽपि अजन्यज्ञानवृत्तित्वव्यावर्तकत्वाभावेन न साध्याव्यापकत्वमित्याशयः । केचित्तु दुष्टसामग्र्यजन्यमात्रवृत्तित्वमित्यर्थः । अतो नेश्वरप्रमात्वे साध्याव्यापकत्वमिति द्रष्टव्यम् । परमतेन चेदमुपाध्युद्भावनम् । तन्मतेश्वरानङ्गीकारात् । उपाधौ मात्रपदं च समव्याप्त्यर्थम् । अन्यथा प्रमेयत्वादौ व्यभिचारात् । तस्यायथार्थव्यवहारवृत्तित्वेन तत्र साध्याभावादिति व्याचक्षते ॥ ननु मेरोः सर्षपत्वस्याप्रसक्तत्वेऽपि मेरुसर्षपयोः प्रसक्तत्वात्तयोर्निषेधः किं न स्यादत आह ॥ **न हि पदार्थेति** ॥ **पटः पचन्तीत्याद्यपार्थकादिति** । एकवचनबहुवचनान्तयोः कर्तृक्रियावाचकपदयोरन्योन्यान्वयवदर्थबोधकत्वाभावादपार्थकत्वमिति भावः । केचित्तु । घटः पचतीति एकवचनान्तप्रतीकमुपादाय । ननु घटः पचतीति कथमपार्थकोदाहरणमनन्वितवाचकस्यैवापार्थकत्वात् । अत्र च क्रियाकारकभावेनान्वयसंभवात् । प्रत्युतेदमपि बाधोदाहरणमेवेति चेन्न पचतीत्यत्र प्रकृतिप्रत्ययार्थयोरपि प्रत्येकं प्रयोगविषयत्वेनाभिप्रेतत्वात् । तथा च घटं पचनं कर्तेत्यपार्थकादित्युक्तं भवति । इदं च कुण्डमजाजिनमित्यादिवदपार्थकमेवेति न कोऽपि दोष इत्याहुः । बाधिते तदनवतारदशायां प्रत्यायकत्वं अपार्थके तु न कदापि प्रत्ययजनकत्वमिति सर्वसंप्रतिपन्नो भेदस्तयोर्न स्यादिति भावः । **दृष्टान्तस्य साध्यसमत्वाच्चेति** ॥ पक्षसमत्वादित्यर्थः । तथा च तदप्रतीतावाश्रयासिद्धिः प्रतीतौ व्याघात इति यथा पक्षे दूषणमुक्तम् तथा दृष्टान्तेऽपि तद्दूषणं वाच्यमित्यर्थः ।

प०— ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तिधर्मत्वात्प्रमात्ववदिति पूर्वपक्षिणोक्तमनुमानान्तरं च निराह ॥ **यदपीत्यादिना** ॥ **विमतज्ञानेति** ॥ भ्रमस्थलीयज्ञानेत्यर्थः ॥ **तत्त्यागेन च प्रतिज्ञान इति** ॥ मात्रपदं हित्वा यथार्थज्ञानवृत्तीत्येव प्रतिज्ञाकरणे सति याथार्थ्यसाधकेषु यत्प्राथमिकं विगीतः प्रत्ययो यथार्थः प्रत्ययत्वादित्यनुमानं तत्रोक्तो बाधितत्वरूपो दोष एवेत्यर्थः । शुक्तिका न रजतत्वेनावभासते तद्रूपेणासत्त्वात् । यद्यद्रूपेणाऽसत् तत्तद्रूपेण नावभासते । यथा मेरुः सर्षपत्वेन । इदं रजततादात्म्यं न प्रत्येतुं शक्यं असत्त्वात्कूर्मरोमवदिति पूर्वपक्षान्ते परोक्तमन्यदपि निराह ॥ **यच्चेति** ॥

**पदार्थेति** ॥ मेरुपदस्य सर्षपपदस्य वा योऽर्थः तस्य प्रतिषेधो न युक्तः प्रमितत्वात् । किन्तु तत्तादात्म्यस्यैवेत्यर्थः । व्यक्तमुक्तमेतत्तर्कताण्डवे योग्यतावादे ॥ **एवं सतीति** ॥ बाधितस्थले संसर्गबोधाभावे सत्यनन्वितवाचकपदादिप्रयोगरूपत्वात् घटः पचति कुण्डमजाजिनं दश दाडिमानि षडपूपा इत्याद्यपार्थकवाक्याद्भेदो न स्यात् । अन्वयाप्रतीतेरुभयत्र तुल्यत्वादिति भावः ॥

**या०— वादिप्रतिवादिनोरिति** ॥ प्राभाकरैर्गुणेषु गुणत्वावान्तरजातेरनङ्गीकारात् । अस्माभिरप्यनुगतसामान्यानङ्गीकारादिति भावः ॥ **विमतज्ञानेति** ॥ इदं रजतमिति ज्ञानवृत्तिप्रतिनियतज्ञानत्वपक्षीकार इत्यर्थः ॥ **व्यर्थं स्यादिति** ॥ न च धर्म्यंशे सिद्धसाध्यतापरिहाराय तदिति वाच्यम् । विमतग्रहणेनैव तस्य पक्षत्वपरिग्रहात् ॥ **प्रथमानुमानदोष एवेति** ॥ कालात्ययापदिष्टत्वमित्यर्थः ॥ **अदुष्टसामग्रीति** ॥ दुष्टसामग्र्यजन्यमात्रवृत्तित्वमित्यर्थः । अन्यथा प्रमात्वे साध्याव्यापकता । तत्र साध्यस्य सत्त्वेऽपि तस्येश्वरज्ञानेऽपि सत्त्वेनादुष्टसामग्रीजन्यमात्रवृत्तित्वाभावात् । परमतेन वेदमुपाध्युद्भावनं तन्मते ईश्वराभावात् । उपाधौ मात्रपदं च समव्याप्त्यर्थं तत्त्यागे प्रमेयत्वादौ व्यभिचारात् । तस्यायथार्थव्यवहारवृत्तित्वेन तत्र साध्याभावात् । घटः पचतीति पाठे पचतीत्यत्र प्रकृतिप्रत्यययोरपि प्रत्येकं प्रयोगविषयत्वमभिप्रेतम् । तथा च घटः पचनकर्तेत्यपार्थकादित्युक्तं भवति । अनन्वितस्यैवापार्थकत्वात् । अन्यथा क्रियाकारकाभावेनान्वयासंभवेनेदमपि बाधोदाहरणमेव स्यात् । पचन्तीति पाठे तु स्फुटमपार्थकत्वम् ॥ **साध्यसमत्वादिति** ॥ पक्षसमत्वादित्यर्थः । तथा च तदप्रतीतावाश्रयासिद्धिः प्रतीतौ च व्याघात इति यथा पक्षे दूषणमुक्तं तथा दृष्टान्तेऽपि दूषणं वक्तव्यमित्यर्थः । यद्वा कूर्मरोम्णोऽपि भ्रान्तिविषयत्वसंभवात्साध्यं तत्र सन्दिग्धमित्याशयः ।

**श्री०**— इत्यादीत्यादिपदेन ज्ञानमात्रवृत्तित्वात्प्रमात्ववदिति हेतुदृष्टान्तग्रहणम् ॥ **असिद्धेरिति** ॥ अनुगतसामान्याङ्गीकारादिति भावः ॥ **सिद्धसाधनतेति** ॥ प्रतिनियतज्ञानत्वपक्षीकारे यथार्थज्ञानवृत्तिज्ञानत्वागृहीतत्वात्तेषां यथार्थज्ञानमात्रवृत्तित्वस्य सिद्धत्वात्सिद्धसाधनता स्यादित्यर्थः ॥ **विमतज्ञानवृत्तिज्ञानत्वेति** ॥ प्रतिनियतज्ञानत्वस्य पक्षत्वेऽपि न सिद्धसाधनता । इदं रजतमिति ज्ञानवृत्तिज्ञानत्वस्यैव पक्षीकरणादिति भावः ॥ **प्रथमानुमानदोष एवेति** ॥ विगीतप्रत्ययो यथार्थः प्रत्ययत्वात्संमतवदित्यनुमाने यो दोषः कालात्ययापदिष्टत्वरूपः स एव दोषोऽत्रापीत्यर्थः ॥ **सिद्धत्वादिति** ॥ पक्षीभूते ज्ञानत्व इति शेषः ॥ **अप्रसिद्धेति** ॥ अयथार्थज्ञानस्यैवानङ्गीकारादिति भावः । **अदुष्टसामग्रीति** ॥ ननु प्रमात्वे साध्याव्यापकता । तत्रायथार्थज्ञानावृत्तित्वे सत्यप्यदुष्टसामग्रीजन्यमात्र-

वृत्तित्वं नास्ति । तदजन्ये ईश्वरज्ञानेऽपि सत्त्वादिति चेन्न । दुष्टसामग्र्यजन्यवृत्तित्वस्य विवक्षितत्वात् । यद्वेश्वरज्ञानस्य गुणदोषाजन्यत्वेन प्रमाऽप्रमाबहिर्भूतत्वेन तत्र प्रमात्वस्यैवाभावान्न साध्याव्यापकताशङ्केति द्रष्टव्यम् । अथवा परमतेनैवेदमुपाध्युद्भावनम् । तन्मते ईश्वराभावेन साध्याव्यापकताशङ्काया एवाभावादिति मन्तव्यम् । उपाधौ मात्रपदाभावे समव्याप्तिपक्षेऽभिधेयत्वे व्यभिचारः स्यात् । तस्यादुष्टसामग्रीजन्यवृत्तित्वेऽप्ययथार्थव्यवहारेऽपि सत्त्वेन यथार्थमात्रवृत्तित्वाभावात् । अतो मात्रपदम् । अभिधेयत्वस्य दुष्टसामग्रीजन्येऽपि सत्त्वेन व्यभिचाराभावादिति द्रष्टव्यम् । एवं प्रमेयत्वेऽप्युपाधेः सत्त्वेऽप्ययथार्थव्यवहारस्वरूपस्य सत्यत्वेन तत्रापि सत्त्वेन साध्याभावाद्व्यभिचारः स्यादतो मात्रपदम् । तस्य दुष्टसामग्रीजन्यज्ञानस्वरूपस्य सत्यत्वेन तत्रापि विद्यमानत्वान्न व्यभिचार इत्यपि द्रष्टव्यम् । इत्यादीत्यादिपदेन तद्रूपेण सत्त्वात् यद्यद्रूपेणासत् तत्तद्रूपेण नावभासते । यथा मेरुः सर्षपत्वेनेत्यस्य ग्रहणम् ॥ **अन्यथेति** ॥ मेरुः सर्षप इति वाक्यान्मेरोः सर्षपत्वेन प्रतिभास एव न भवतीत्यङ्गीकारे तादृशवाक्याभासश्रवणानन्तरं मेरुः सर्षपो न भवतीति तादात्म्यरूपसंबन्धप्रतिषेधः क्रियते तन्न स्यात् । प्रतिषेधस्य प्रतियोग्यधिकरणसंसर्गज्ञानरूपप्रसक्तिपूर्वकत्वात्तस्याश्चात्राभावादिति भावः । ननु मेरुरूपस्य पदार्थस्य सर्षपरूपस्य पदार्थस्य च प्रत्यक्षसिद्धतया प्रसक्तत्वेन तत्प्रतिषेधः संभवतीत्यत आह ॥ **न हीति** ॥ प्रत्यक्षबाधादेवेति भावः । मेरुः सर्षप इति बाधितवाक्यान्मेरोः सर्षपत्वरूपान्वयज्ञानमेव नोत्पद्यत इत्यङ्गीकारे बाधकान्तरमाह ॥ **अपि चैवं सतीति** ॥ घटः पचतीति । घटः पचनकर्तेत्यर्थः । अपार्थकत्वात् गौरश्वः पुरुषो हस्तीतिवदनन्वितात् । अनन्वितमपार्थकमिति वचनात् । तथाच बाधितापार्थकवाक्यद्वयादप्यन्वयज्ञानानुत्पत्तेस्तयोर्न भेदः स्यादित्यर्थः । इत्यादीत्यादिपदेन न प्रत्येतुं शक्यम् असत्त्वात्कूर्मरोमवदित्यस्य ग्रहणम् । अत्र प्रष्टव्यम् । इदं रजततादात्म्यरूपपक्षः प्रतीतो न वा । द्वितीये आश्रयासिद्धिः । आद्ये न प्रत्येतुं शक्यत इति साधने व्याघात इत्याह ॥ **तदप्रतीतावित्यादिना** ॥ **साध्यसमत्वादिति** ॥ साध्यधर्मवत्तया साधयितुं योग्यं साध्यं पक्षस्तत्समत्वादित्यर्थः । यथा पक्षे विकल्प्य दूषणमुक्तमेवं दृष्टान्तेऽपि विकल्प्य दूषणं वक्तव्यमिति भावः । तथा हि दृष्टान्तीकृतं कूर्मरोम प्रतीतं न वा । द्वितीये दृष्टान्तरूपाश्रयस्यैवासिद्धिः । आद्ये प्रत्येतुमशक्यत्वरूपसाध्याभावेन साध्यवैकल्यमिति द्रष्टव्यम् । विस्तरः शब्दप्रपञ्चः । 'विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तर' इत्यभिधानात् ॥

च०— **वादिप्रतिवादिनोरिति** ॥ गुरुतत्त्ववादिनोरित्यर्थः । गुरुमते गुणेषु गुणत्वव्याप्यजातिर्नोपेता । सिद्धान्ते चानुगतसामान्यं नोपेतमिति हृदयम् ॥ **विमतज्ञानवृत्तीति** ॥ विपर्यास-

वृत्तीत्यर्थः ॥ **व्यर्थं स्यादिति** ॥ ज्ञानत्वस्य तद्व्यक्तित्वादिकल्पनया सिद्धसाधनतानवकाशेन मात्रपदोपादानमनर्थकं प्रसज्येतेति भावः ॥ **प्रथमेति** ॥ बाधरूप इत्यर्थः ॥ **अयथार्थव्यवहाराप्रवृत्तित्वस्येति** ॥ तादृशेच्छाप्रवृत्त्यवृत्तित्वस्येत्यर्थः ॥ **अदुष्टसामग्रीति** ॥ दुष्टसामग्र्यजन्यमात्रवृत्तित्वमित्यर्थः । जन्यस्य पर्युदस्ततामनुपेत्य सामग्र्या एव तदुपगमे प्रकृतसाध्यविशेषितेश्वरज्ञानत्वे तादृशोपाधिराहित्येन साध्याव्यापकतापातात् ॥ उपाधौ मात्रेति विशेषणं च पक्षे साधनाव्यापकत्वसिद्ध्यर्थम् । उपाध्यभावेन साध्याभावसाधनेऽसिद्धिपरिहारार्थं वेति द्रष्टव्यम् । ईश्वरद्वेषिणां मीमांसकानां दिशैवोपाधेरुद्भाविततया सामग्र्याः पर्युदस्तत्वेऽपि न क्षतिः । उपाधिशरीरे मात्रपदानुपादाने प्रमेयत्वादौ तादृशसाध्यविशेषिते उपाध्यभावेन समव्याप्तिभङ्गात् तन्निर्वाहाय तदुपादानमित्यपि व्याकुर्वते ॥ **न हि पदार्थेति** ॥ अनलीकयोस्तत्तत्पदाभिधेयमेरुसर्षपयोः प्रत्याख्यानायोगेन वाक्यतात्पर्यगोचरालीकभूततादात्म्यस्यैव प्रत्याख्यानगोचरतोपेयेति भावः । एवं सति बाधस्थलेऽपि संसर्गबोधानुपगमे ॥ **अपार्थकादिति** ॥ अनन्वितवाचकपदप्रयोगरूपात्कुण्डमजाजिनं दश दाडिमानीत्याद्यर्थकवाक्याद्बाधितार्थस्य भेदो न स्यादन्वयाप्रतीते स्थलद्वयेऽपि साम्यादिति भावः ॥ **साध्यसमत्वादिति** ॥ दृष्टान्तस्य पक्षसदृशत्वादित्यर्थः । पक्षे यथा दूषणद्वयमभिहितं तथा दृष्टान्तेऽपि तद्द्वयमभिधातव्यमित्यर्थः ॥ **इति प्राभाकरमतनिरासः** ॥

सु०— **कश्चित्पुनरेवमाह । तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्यादिश्रुतेः, समेत्यान्योन्यसंयोगमित्यादिपुराणात् , त्र्यात्मकत्वादिसूत्राच्च सर्वस्य सर्वात्मकत्वं प्रतीयते । किञ्च सोमाभावे पूतिकग्रहणं व्रीह्यभावे च नीवारग्रहणमन्यथाऽनुपपद्यमानं पूतिकनीवारयोः सोमव्रीह्यवयवसद्भावं गमयति । अपि च वस्तुनो वस्त्वन्तरसादृश्यं प्रत्यक्षत एव प्रतीयते । न च तद्द्रव्यावयवयोगादन्यत्सादृश्यं नामास्ति ॥ अतः शुक्तिकादिषु रजतादेः सद्भावाद्यथार्थ एवायं रजतप्रत्ययः । निर्देशव्यवस्थाऽर्थक्रियाव्यवस्था च भूयस्त्वादुपपद्यते । दोषवशादिन्द्रियं भूयांसमप्यंशं परित्यज्याल्पीयांसमंशं प्रकाशयतीति रजतार्थिनस्तत्र प्रवृत्तिरपि युज्यते । अपगते तु दोषे भूयस एवांशस्योपलम्भे निवर्तते । बाध्यबाधकभावोऽपि ज्ञानयोरत एवोपपद्यते ॥ पीतशङ्खादौ नयनवृत्तिपित्तसंभिन्ना नायनरश्मयः शङ्खादिभिः संयुज्यन्ते । ततः पित्तगतपीतिमाऽभिभूतः शङ्खगतशुक्लिमा न गृह्यते । अतः सुवर्णानुलिप्तशङ्खवत्पीतः शङ्ख इति प्रतीयते ॥ एवं स्वप्नस्फटिकलौहित्यमरीचिकाजलालातचक्रदर्पणमुखदिगन्तरद्विचन्द्रादिप्रत्ययाः सर्वेऽपि यथार्था बोद्धव्या इति ॥ तदिदमयुक्तम् ॥**

वा० — यथार्थख्यातिमत्वाविशेषेऽप्यवान्तरविशेषानिराकरणेन प्रभाकरमतनिरासमात्रेण न तन्निरासिसिद्धिरिति रामानुजमतनिरासाय तदुपन्यस्यति ॥ **कश्चिदिति** ॥ आदिपदेन तेजआदिभूतत्रिवृत्करणसंभावकतत्कार्याग्न्यादिरूपत्रयप्रदर्शनपरस्य यदग्ने रोहितं रूपमिति पदोदाहृतवाक्यस्य वा त्रिवृत्करणपरवाक्यान्तरस्य वोपादानम् । तत्त्वान्तरेऽपि मिश्रताप्रतिपादकत्वात्पुराणस्य भूतत्रयमात्रविषयकश्रुत्यपेक्षया अधिकविषयकत्वम् । आदिपदेन परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमिति वाक्यशेषस्य पुराणवाक्यान्तरस्य वोपादानम् । श्रुतिस्मृत्योरुक्तार्थपरतानिर्णयाय सूत्रोपादानम् । आदिपदेन तच्छेषस्य वा सूत्रान्तरस्य वा ग्रहणम् । यद्यप्येषां वाक्यानां तत्त्वमिश्रिताप्रतिपादकतया न रजतादिभ्रमे उपयोगस्तथापि तत्त्वे तत्त्वान्तरभ्रमे साक्षात्कारणमिश्रतायाः कार्यरजतादिभ्रमेऽपि परम्परयोपयोगोऽस्त्येव । अत एवाह ॥ **सर्वस्य सर्वात्मकत्वमिति** ॥ अन्यथा तत्त्वस्य तत्त्वान्तरात्मकत्वमित्यवक्ष्यत् । यथा चैतत्तथा तन्मतदूषणावसरे स्पष्टयिष्यते । भूतादित्रिवृत्करणस्य सदृशे सदृशान्तरभ्रमे उपयोगात् भूतत्रिवृत्करणश्रुत्यादिकमुपन्यस्य सदृशे सदृशान्तरभ्रमोपयोगितया श्रुतार्थापत्तिमुपन्यस्यति ॥ **किं चेति** ॥ श्रुतार्थापत्त्या व्रीह्यादिसद्भावे नीवारादौ सिद्धे शुक्त्यादौ रजतादिसद्भावः कल्पित इत्याशयः । साक्षादेव शुक्त्यादौ रजतादिसद्भावे प्रमाणमुपन्यस्यति ॥ **अपि चेति** ॥ तर्हि सर्वस्य सर्वात्मकत्वात्सर्वत्र सर्वशब्दप्रवृत्त्या सर्वस्य सर्वार्थक्रियाकारित्वापत्त्या च निर्देशादिव्यवस्था न स्यादित्यत आह ॥ **निर्देशेति** ॥ ननु तर्हि तथैव शुक्तौ रजतांशभूयस्त्वाभावेन रजतार्थिनस्तत्र प्रवृत्तिरपि न स्यादित्यत आह ॥ **दोषेति** ॥ तर्हि पश्चान्निवृत्तिर्न स्यादित्यतः प्रागभिभावकांशानुपलम्भप्रयुक्तप्रवृत्तावप्यभिभावकांशोपलम्भान्निवृत्तिः पश्चाद्युक्तैवेत्याह ॥ **अपगते त्विति** ॥ ननूभयोः सद्विषयकत्वान्न बाध्यबाधकभावोपपत्तिरित्यतोऽल्पांशभूयोंशविषयकत्वाभ्यामेव तदुपपत्तिरित्याह ॥ **बाध्येति** ॥ भूतसदृशयोर्भूतसदृशान्तरसद्भावप्रकारस्य पीतशङ्खादावनुपपत्त्या तत्र प्रकारान्तरमाह ॥ **पीतेति** ॥ पित्तद्रव्यरहितं पीतरूपं गृह्यते पित्तद्रव्यं न गृह्यते इति प्राभाकरमतम् । रूपद्रव्ये चक्षुषः सामर्थ्यात्पित्तद्रव्यमपि गृह्यत इत्येतन्मते विशेषः ॥ **एवमिति** ॥ स्वप्ने प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यतत्तत्कालावसानाश्चर्यभूततथाविधपदार्थाः सृज्यन्त इत्यर्थस्य श्रुतिस्मृतिसूत्रादिभिर्निर्णीतत्वात्तत्तत्पदार्थविषयकज्ञानं प्रमैव । विततजपाकुसुमप्रभा स्वच्छद्रव्यसंयुक्ता स्फुटमुपलभ्यत इति जपाकुसुमप्रभाभिभूततया तत्समीपवर्ती स्फटिकमणी रक्त इति प्रतीयत इति साऽपि यथार्थैव । मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरम्बुनोऽपि विद्यमानत्वादिन्द्रियदोषेण च तेजःपृथिव्योरग्रहणाददृष्टवशाच्चाम्बुनो ग्रहणाद्यथार्थत्वम् । अलातचक्रस्थलेऽप्यलातस्य द्रुतगमनेन सर्वदेशसंयोगात्पूर्वोत्तरकालभाविनोस्तत्तत्प्रदेशाश्लेषालातसंयोगयोः क्रमाग्रहणाच्च तथा प्रतीतिरुत्पद्यते । सम्यक् चक्रप्रतीतावप्यन्तरालाग्रहणपूर्वकं तत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव । इयांस्तु विशेषः ।

तत्रान्तरालाभावादग्रहणम् अत्र तु शैघ्र्यादित्यलातचक्रप्रतीतिरिपि यथार्थैव । दर्पणादिप्रतिहता नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं दर्पणदेशमुखान्तरालग्रहणपूर्वकं निजमुखादि गृह्णन्तीति दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्थैव । दिङ्मोहेऽपि दिगन्तरांशस्य दिगन्तरेऽपि सत्त्वाददृष्टवशाद्दिगन्तराग्रहेण दिगन्तरांशस्यैव ग्रहणमिति दिगन्तरे दिगन्तरप्रतीतिरपि यथार्थैव । द्विचन्द्रादावङ्गुल्यवष्टम्भेन नायनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति । तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति । द्वितीया तु चन्द्रसमीपदेशग्रहणपूर्वं स्वदेशरहितं चन्द्रं गृह्णाति । अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारविशिष्टभेदात् । अत्रैकत्वाग्रहणाच्च द्वौ चन्द्राविति प्रतीतिः । तत्र देशान्तरस्य विशेषणत्वं चन्द्रं प्रत्यप्रधानत्वमेव । तथा च चाक्षुषतेजोगतिभेदरूपसामग्रीजन्यमतिशैघ्र्याद्गृहीतभेदं ज्ञानद्वयमगृहीतैकत्वं चन्द्रमगृहीतान्तरालदेशान्तरं च निरन्तरं गृह्णातीति तत्प्रत्ययोऽपि यथार्थ एव । प्राभाकरमते नेत्रवृत्तिर्वित्तिगतद्वित्वमगृहीतभेदं गृह्णातीत्येवात्र तु देशगतद्वित्वं चागृहीतभेदं गृह्णातीति वैषम्यमित्येवं तदीयोपपादनप्रकारो बोद्धव्य इति भावः ।

स०—ननु सर्वस्य सर्वात्मकत्वे असङ्कीर्णशब्दव्यवहारार्थक्रिये न स्यातामित्याशङ्का भूयस्त्वादिति सूत्रशेषेण परिहरति ॥ **निर्देशव्यवस्थार्थक्रियाव्यवस्था चेति** ॥ ननु द्रव्ययोरन्योन्यावयवयोगोऽस्तु न तु द्रव्यगुणयोरित्याशङ्कायामाह ॥ **पीतशङ्खादाविति** ॥ एवं च संयुक्तसमवायसंबन्धेन शङ्खे पीतत्वज्ञानं प्रमेति भावः ॥ **एवं स्वप्नस्फटिकलौहित्येति** ॥ अत्र स्फटिकलौहित्यप्रत्ययस्तत्र जपाकुसुमावयवयोगेनोपपादनीयः । इतरप्रत्ययास्तु तत्तदधिष्ठाने तत्तदारोप्यद्रव्यावयवयोगेनोपपादनीया इति द्रष्टव्यम् । स्वाप्नपदार्थानामधिष्ठानं शरीरं मनो वा द्रष्टव्यम् । द्विचन्द्रप्रत्यये द्वितीयश्चन्द्रो यत्र प्रतीयते स प्रदेशविशेष एवाधिष्ठानम् । शिष्टं स्पष्टम् ।

प०— अख्यात्यवान्तरचोदनं निराह ॥ **कश्चित्पुनरिति** ॥ रामानुजादिः । तासां तेजोबन्नशब्दितदेवतानाम् । त्रिवृतं तेजोऽबन्नरूपवस्तूनामंशत्रयमेलनम् । एकैकपृथिव्यादि द्रव्यमकरोदिति षष्ठच्छन्दोगश्रुतेरित्यर्थः । 'समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति त' इति पुराणवाक्यात् । 'त्र्यात्मकत्वात्तु भूयस्त्वादि'तितृतीयाद्यपादे वक्ष्यमाणसूत्रादित्यर्थः । सर्वात्मकत्वं तेजोऽबन्नरूपभूतत्रयात्मकत्वमिति वा । त्रिवृत्त्वस्योपलक्षणत्वेन सर्वभूतात्मकत्वमिति वाऽर्थः । अर्थापत्तिं चाह ॥ **किञ्च सोमेति** ॥ ज्योतिष्टोमे हि 'सोमेन यजेत' इति सोमलतारूपद्रव्यस्य 'दर्शपूर्णमासयोर्व्रीहिभिर्यजेते'ति व्रीहिद्रव्यस्य साधनत्वेन प्राप्तत्वात् सोमादिरेव गृह्यते । कदाचित्सोमादेरभावे

पूतिकादिरूपसोमप्रतिनिधिग्रहणं याज्ञिकैर्यज्ञाङ्गत्वेन क्रियते । तदन्यथानुपपत्तिरन्यत्रान्यावयवसत्त्वे मानम् । समग्रसोमाद्यवयवानामलाभे कतिपयतदवयवलाभाय पूतिकाद्युपादानात् । तथैव पूर्वतन्त्रे षष्ठे तृतीयपादे व्युत्पादितत्वादिति भावः । प्रत्यक्षं च प्रमाणयति ॥ **अपि चेति** ॥ कथं तर्हीयं शुक्तिः इदंरजतमित्यादिनिर्देशः शुक्तिकया कटकादिरजतोचितार्थक्रियाऽभाव इत्यत आह ॥ **निर्देशेति** ॥ **अत एवेति** ॥ भूयोऽवयवज्ञानेनाल्पावयवज्ञाननिवर्तनादेवेत्यर्थः ॥ **एवं स्वप्नेत्यादि** ॥ एतच्चाग्रे दूषणावसरे स्फुटीकरिष्यामः ।

**या०** — रामानुजमतं दूषयितुमनुवदति ॥ **कश्चित्पुनरेवमित्यादिना** ॥ सर्वत्र सर्वांशानां सत्त्वेन सर्वविज्ञानानां याथार्थ्यमुपपादयितुं सर्वत्र सर्वांशानां सद्भावे तावत् श्रुतिपुराणसूत्राणि दर्शयति ॥ **तासामित्यादिना** ॥ आदिपदेन 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये'ति वाक्यं ग्राह्यम् । अत्र ह्यग्नौ त्रिरूपता प्रत्यक्षेणोपलभ्यमानोक्ता । अत्र पञ्चीकरणमपि प्रतिपादयद्वेदवाक्यमुपलक्षणया ग्राह्यम् । एवं भूतानां परस्परं मिश्रणं श्रुत्योपपाद्य तत्त्वानामपि तत्पुराणवचनेनोपपादयति ॥ **समेत्येति** ॥ 'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः । समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते' इति पुराणवाक्यस्यायमर्थः । तत्त्वानां संहतिर्द्वेधा विवक्षिता । पृथक् स्थित्यर्हसंयोगमात्ररूपा, तदनर्हविश्लेषविशेषरूपा चेति । पूर्वमेतद्द्वयाभावात्तत्त्वानि स्रष्टुं नाशक्नुवन्नित्याह ॥ **नानावीर्या इति** ॥ एतदुभयं प्राप्यासृजन्नित्याह ॥ **समेत्येति** ॥ नन्वेवमेकस्मिंस्तत्त्वे सर्वाणि तत्त्वानि सन्ति चेत्सर्वे शब्दाः सर्वत्र प्रसज्येरन्नित्यत आह ॥ **परस्परेति** ॥ परस्परमाश्रयाश्रयिभावश्च न्यूनाधिकभावनिबन्धनः । तत्कृता च व्यवस्थेति भाव इति । एवं सामान्यतः सर्वत्र सर्वांशसद्भावमुपपाद्य सदृशे सदृशान्तरसद्भावमर्थापत्त्योपपादयति ॥ **किञ्च सोमाभाव इति** ॥ प्रत्यक्षेणापीममर्थमुपपादयति ॥ **अपि च वस्तुन इति** ॥ **अत एवेति** ॥ अल्पभूयोंऽशावगाहित्वादेवेत्यर्थः । दोषवशादल्पांशग्राहि विसंवादिप्रवृत्तिजनकपूर्वज्ञानं बाध्यं दोषापगमानन्तरं भूयोंशावगाह्युत्तरज्ञानं बाधकमिति भावः । शङ्खे पीतरूपस्यांशकल्पनाऽसंभवात् प्रकारान्तरेण तज्ज्ञाने याथार्थ्यमुपपादयति ॥ **पीतः शङ्खादाविति** ॥ **सुवर्णानुलिप्तेति** ॥ तथाच परस्परासंबन्धेन शङ्खे पीतरूपावगाहित्वात्तज्ज्ञानं यथार्थमिति भावः । एवं स्वप्नेऽन्यत्रैवं यथार्था बोद्धव्या इति याथार्थ्यमात्रातिदेश एव विवक्षितो न पूर्वोक्तस्तदुपपादकप्रकारातिदेशः । स्वाप्नार्थादिषु सदृशे सदृशान्तरावयवसद्भावरूपस्य नयनगतद्रव्यसंबन्धरूपस्य वोक्तप्रकारस्यासंभवेन प्रकारान्तरेणैव तज्ज्ञानानां याथार्थ्यस्य परेण स्वग्रन्थे दर्शितत्वात् । तत्प्रकारश्च लेशतः कथ्यते । स्वाप्नार्थज्ञानं तावद्यथार्थमेव । यतः प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तद्देशकालानुभवास्तत्तत्कालावसानास्तथाभूता

एवार्थाः सृज्यन्ते। तथाहि स्वप्नविषया श्रुतिः। 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजत' इत्यादिका। स हि कर्तेति वाक्याच्च सत्यसङ्कल्पस्याश्चर्यशक्तेस्तथाविधं कर्तृत्वं नासंभावितमित्यर्थोऽवगम्यते। सूत्रकारोऽपि 'सन्ध्ये सृष्टिराह हि' 'निर्मातारं चैके पुत्रादयश्चे'ति सूत्रद्वयेन स्वप्नार्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य 'मायामत्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि'ति परमात्मैव तत्र स्रष्टेति परिहरति। स्फटिकलौहित्यमरीचिकाजलालातचक्रदिङ्मोहेषु द्रव्यान्तरसंबन्धाद्यथार्था प्रतीतिरिति निर्वाहः। स्फटिकलौहित्यं हि स्फटिकस्य जपाकुसुमसंबन्धत्वात्प्रतीयते। जपाकुसुमसंबद्धस्यापि पाषाणादेरस्वच्छत्वान्न तत्र लौहित्यं प्रतीयते। मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणाददृष्टवशाच्चाम्बुनो ग्रहणाद्ययथार्थत्वम्। अलातचक्रेऽप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगात्पूर्वोत्तरभावितत्तत्प्रदेशविशेषालातसंयोगक्रमाग्रहणात्तथा प्रतीतिरुपपद्यते। सत्यचक्रप्रतीतावपि क्रमाग्रहणपूर्वकं तत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव। इयांस्तु विशेषः। तत्र क्रमाभावादेव क्रमाग्रहणम्। अत्र शैघ्र्यात्तदग्रहणमित्यतस्तदपि यथार्थम्। दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादिकं गृह्णन्ति। तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात्तथाप्रतीतिः। अत एव तत्र सव्यदक्षिणविपर्यासप्रतीतिः मलिनत्वाल्पत्वाभिमुख्यप्रतीतिश्च यथार्था। स्वाभिमुखतया विपर्यस्तसव्यदक्षिणभावस्य दर्पणस्य मुखस्य चान्तरालग्रहणमेव तत्र न तु दर्पणादिगतसव्यदक्षिणविपर्यासादिकं मुखगततया गृह्यते। येनान्यथाख्यातिः स्यादिति। दिङ्मोहेऽपि सर्वत्र सर्वदिग्भावात्प्राच्यादिव्यवहारस्य प्रतियोग्यपेक्षत्वात्। अदृष्टवशेन तत्तद्दिगन्तरप्रतियोगिनो दिगन्तरस्य च निरन्तरभानम्। अतो यथार्थविषयत्वम्। द्विचन्द्रादिज्ञानादावप्यङ्गुल्यवष्टम्भादिभिर्नायनतेजोऽभिभवेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति। तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति। द्वितीया तु किञ्चिद्वक्रगतित्वेन चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति। अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे भवतः। ग्रहणभेदेन ग्राह्याकारभेदादेकत्र ग्रहणाभावाच्च द्वौ चन्द्राविति भवतीति विशेषः। देशान्तरस्य तद्विशेषणत्वं तु देशान्तरस्यागृहीतस्वदेशचन्द्रस्य च निरन्तरं ग्रहणेन भवति। अगृहीतस्वदेशचन्द्रस्य प्रतीयमाने समीपदेशान्तरेऽसंसर्गो न गृहीतोऽतस्तद्विशेषणमिव न तु विशेषणतया भवति। येनान्यथाख्यातिः स्यात्। तत्र सामग्रीद्वित्वं पारमार्थिकं तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं परस्परमगृहीतभेदं पारमार्थिकम्। ग्रहणद्वित्वेन चन्द्रस्यैकस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकमिति न किञ्चिदत्रायथार्थमिति।

श्री०— **गमयतीति** ॥ तथा च शुक्तावपि रजतावयवाः सन्तीति गम्यत इति भावः। ननु तर्हीदमित्यङ्गुल्या शुक्तिः कस्मान्निर्दिश्यते। रजतावयवसद्भावे तदेव रजतं निर्दिश्येतेति निर्देश-

व्यवस्था । तथा रजतावयवसद्भावे रजतोचितार्थक्रिया स्यात् । सा न भवति । प्रत्युत शुक्त्युचितै-वार्थक्रिया भवतीत्येवमर्थक्रियाव्यवस्था च नोपपद्यत इत्याशङ्क्याह ॥ **निर्देशेति** ॥ **भूयस्त्वादिति** ॥ शुक्त्यवयवानामिति शेषः । भूयांसमंशं शुक्त्यंशं तदवयवमित्यर्थः । अल्पीयांसमंशं रजतांशं तदवयव-मित्यर्थः । भूयस एवांशस्य संभिन्नाः संबद्धाः ।

च०— ज्ञानत्वावच्छेदेन याथार्थ्योपगन्तृत्वांशे रामानुजस्य गुरुकल्पत्वेऽपि प्रत्याख्यातव्य-विषयविशेषवैशेष्यसद्भावनियन्त्रितया पृथक् तत्प्रतिविधित्सया तन्मतमनुवदति **कश्चिदित्यादिकबोधव्या** इत्यन्तेन । तासां तेजोऽबन्नपदाभिधेयानां देवतानाम् । त्रिवृतं तादृशदेवतात्रयाभिमन्यमानतेजोबन्ना-ख्यांशत्रयं मिलितमेकैकपृथिव्यादिद्रव्यात्मनाऽकरोदिति छन्दोगश्रुत्यर्थोऽवसेयः । यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति तदुदाहृतं वाक्यान्तरं पञ्चीकरणप्रतिपादकवाक्यं वादिपदे-नोपदेयम् । 'समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता अण्डमुत्पादयन्ति ते' इति पुराण-वाक्यात् । सूत्रात् तृतीयाद्यपादीयात् । सर्वात्मकत्वं तेजोबन्नरूपभूतत्रयात्मकत्वम् । अर्थापत्तिमप्युक्तार्थे प्रमापयति ॥ **किञ्चेति** ॥ प्रत्यक्षमपि तत्र प्रमाणीकुरुते ॥ **अपि चेति** ॥ **अत एवेति** ॥ दोषाधीना-ल्पांशविषयीकारित्वविशेषितव्यधिकरणप्रकारकप्रवृत्तिजनकतानियन्त्रितं प्राक्तनज्ञानस्य बाध्यत्वमुत्तरस्य तु दोषविधूननोत्तरकालीनानल्पांशावगाहितानिघ्नबाधकत्वमित्युपगमादेवेत्यर्थः । दर्शितभङ्ग्याः पीतः शङ्ख इत्यत्रानुपपत्त्या तत्र भङ्ग्यन्तरमाश्रयते ॥ **पीतेति** ॥ पीतः शङ्ख इत्यादिस्थल इत्यर्थः । तथाच तादृश-प्रत्ययस्य स्वाश्रयसंयुक्तत्वसंसर्गावच्छिन्नपीतरूपवृत्तिप्रकारतानिरूपितशङ्खवृत्तिविशेष्यताकत्वात्तज्ज्ञानस्य न विपर्यासतेति भावः । स्थलान्तरेष्वपि उक्तविधाया असंभवे विधान्तरं श्रयितव्यमित्याह ॥ **एवमिति** ॥ तत्तत्पुरुषीयादृष्टानुरूपतत्तन्मात्रानुभाव्यतत्तत्कालावसानाश्रयभूतभगवदेकसृष्टपदार्थानां स्वप्नस्थले विषयत्वो-पगमादाद्ये, जपाकुसुमप्रभैव स्वच्छद्रव्यसंयुक्ता स्फुटमुपलभ्यत इति जपाकुसुमप्रभाभिभूततया तत्समीपवर्ति स्फटिकमणी रक्त इति प्रतीयत इति वोपगमात् द्वितीये, तेजःपृथिव्योरम्बुनो विद्यमानत्वादिन्द्रिय-दोषेण च तेजःपृथिव्योरग्रहणेन दोषादप्बुनो ग्रहणात्तृतीये, अलातस्य द्रुतगमनेन सर्वदेशसंयोगात्पूर्वोत्तर-कालभाविनोस्तत्तत्प्रदेशाश्लेषालातसंयोगयोः क्रमाग्रहणात्तुरीये, दर्पणादिप्रतिहता नायनरश्मयो दर्पणादि-देशमुखान्तरालाग्रहणपूर्वकं निजमुखादि गृह्णन्तीति पञ्चमे, दिगन्तरांशस्य दिगन्तरेऽपि सत्त्वाददृष्ट-वशाद्दिगन्तराग्रहेण दिगन्तरांशस्यैव ग्रहणात् षष्ठे, चाक्षुषतेजोगतिभेदरूपसामग्रीजन्यगतिशैघ्र्यादगृहीत-भेदं ज्ञानद्वयमगृहीतैकत्वं चन्द्रमगृहीतान्तरालदेशान्तरं च निरन्तरं गृह्णातीति सप्तमेऽपि याथार्थ्योप-पादनरीतिरवसेया ।

सु०— तथा हि ॥ यानि तावच्छुक्तिकादिषु रजतादिसद्भावे श्रुतिपुराणसूत्राणि पठितानि तानि तेजोबन्नादीनां मिश्रतामभिदधति; न पुना रजतादीनां शुक्तिकादौ सद्भावम्। न हि कारणसद्भावे कार्यस्य सद्भावो नियतो येनोपपत्त्याऽपीममर्थं प्रतीमः। तथात्वे शुक्तौ रजतवत्सर्वस्यापि प्रतीतिः प्रसज्येत। अदृष्टादिवशान्नैवमिति चेन्न कार्यनिश्चयोत्तरकालीनत्वादस्याः कल्पनायाः॥ श्रुतार्थापत्तिरत्यत्यन्तायुक्ता। तथा हि। पूतिकादौ सोमाद्यवयवा भूयांसः कल्प्यन्ते, उत समाः, अथाल्पीयांसः। आद्ये सोम एवासौ; तत्कथमनुकल्पः स्यात्। न हि सोमोऽपि केवलः सोमः; किन्तु सोमांशभूयस्त्ववान्। न द्वितीयः उभयदर्शनप्रसङ्गात्। तृतीयं तु कथं सोमकार्यं कुर्यात्। अन्यथा शुक्तिकाऽपि कुतो रजतार्थक्रियां न कुर्यात्। श्रुतिप्रामाण्यात्तदर्थक्रियाकारिताऽवगम्यत इति चेत्। किं तर्हि सोमावयवकल्पनया। श्रुतिप्रामाण्यादत्यन्तविविक्तानामेव वस्तूनामर्थक्रियासाम्यमुपगम्यताम्॥ सादृश्यं च सामान्यं वा धर्मान्तरं वा नान्योन्यावयवसंयोग इति वक्ष्यामः। किञ्च घृततैलयोरन्योन्यसदृशयोरन्योन्यावयवसंयोगादन्योन्यार्थक्रियया भाव्यम्। न भाव्यं च विसदृशयोर्द्रव्ययोः। किञ्च मातृमातङ्गमदिराद्यतिसादृश्यं भार्यादिष्वप्यस्तीति तदुपभोगे प्रत्यवायः स्यात्। अल्पावयवसंयोगान्नैवमिति चेत् कथं तर्हि नीवारा व्रीहिकार्यं कुर्युः। श्रुतिप्रामाण्यादिति वदतो दत्तमुत्तरम्। अपरावयवसंयोग एव सादृश्यं चेत् कथं ककारखकारयोः सादृश्यमिति चिन्त्यम्।

वा०— तथा हीति परोक्तसर्वयुक्तीनामयुक्तत्वविशदनं प्रतिज्ञाय प्रथमयुक्तेस्तावदयुक्ततामुपपादयति॥ **यानीति**॥ आदिपदेन पुराणोक्तमहदादितत्त्वसंग्रहः। तथा चास्माकं तत्त्वे तत्त्वान्तरभ्रमस्य अभावात् तत्त्वसाक्षात्कारवतां योगिनां च भ्रमस्यैवानुपपत्त्याऽस्मदादिभ्रमविषयशुक्तिरजतादौ चैतत् श्रुत्यादेरप्रयोजकत्वात्तदुदाहरणमसङ्गतमिति भावः। ननु श्रुत्यादेः साक्षाच्छुक्त्यादौ रजतादिसद्भावाप्रतिपादकत्वेऽपि तेन स सिध्यत्येव। श्रुत्यादिना तेजादीनां त्रिवृत्करणे प्रतिपादिते कार्ये कारणसद्भावनियमात्पार्थिवशुक्त्यादेरपि त्रिवृत्कृतपृथिवीकार्यतया शुक्त्यादौ तेजोंऽशस्य सत्त्वात्तैजसरजतसद्भावोऽपि तत एव सिध्यतीत्यत आह॥ **न हीति**॥ ननु पाञ्चभौतिकेष्वपि पार्थिवेषु किञ्चित्कार्यं केनचिद्भूतेन परिणामविशेषवताऽऽरब्धम्। तत्र यादृशपरिणामविशेषवद्यद्भूतप्रचुरं किञ्चित्कार्यं तादृशपरिणामविशेषवत्तद्भूतं कार्यान्तरेऽपि। यद्यपि त्रिवृत्करणदशायामवान्तरपरिणामविशेषो नास्ति तथाऽपि त्रिवृत्करणेन कार्यानुप्रविष्टस्य भूतस्य कार्यान्तरानुप्रविष्टसमानपरिणामसंभवात्। तथा च येन तेजोभूतेन प्रचुरेण परिणामविशेषवता रजतमारब्धं तत्परिणामविशेषवत्तेजोभूतं शुक्त्यादौ विद्यत इति शुक्त्यादौ रजतादिसद्भाव-

सिद्धिः । तथा त्रिवृत्करणेन शुक्त्याद्यन्तर्गततेजोंशस्य शुक्लभास्वररूपेण परिणामवतो रजतसादृश्याद्रजतावयवत्वमुपपन्नम् । रजतावयवसादृशाकारत्वमेव हि रजतावयवत्वं न तु रजतादिभ्य आनीय निवेशितत्वम् । गेहस्थापणस्थरजतयोरपीदमेव सादृश्यम् । पूतिकादिषु प्रतीयमानसोमलताद्यवयवानां संप्रतिपन्नसोमलतावयवसदृशाकारत्वमेव सोमलताद्यवयवत्वम् । एवं च शुक्त्यादौ रजतावयवसिद्धिः । अयं च पक्षः शुक्त्यादौ रजतादिसद्भावप्रतिपादनप्रसङ्गात्कथितः प्रथमपक्ष एव च प्रथमयुक्तिदूषणावसरे सङ्गतः । तथा च कथं न शुक्त्यादौ रजतसद्भावसिद्धिरिति चेत्तर्हि त्रिवृत्कृतत्वादेव शुक्तौ नानापरिणामविशेषवदंशस्य नानापरिणामविशेषवत्सुवर्णादितेजोंऽशस्य नानापरिणामविशेषवत्पाषाणादिपृथिव्यंशस्य तत्तत्सदृशावयवानां च सत्त्वाच्छुक्तौ रजतस्येवान्यस्य प्रतीतिप्रसङ्ग इत्याह ॥ **तथात्वे वेति** ॥ सिद्धे शुक्त्यादौ सर्वकार्यसद्भावे रजतादिप्रतीतिविशेषनियामकतयाऽदृष्टकल्पना तस्यां च सत्यामतिप्रसङ्गाभावात्तसिद्धिरिति परस्पराश्रयतेत्याशयेनाह ॥ **कार्येति** ॥ एवमाद्यसाधकं निरस्य किञ्चेत्युक्तसाधकस्वरूपं दर्शयन्नेव तदनुपपत्तिं प्रतिजानीते ॥ **श्रुतेति** ॥ अदृष्टादिवशाच्छुक्तेरेव प्रतीतिरित्यादिसमाधानाभासोत्प्रेक्षायाः पूर्वत्र संभावनावदत्र तथाभूतोत्प्रेक्षाया अप्यसंभव इत्याशयेनात्यन्तपदाद्वक्ष्यमाणरीत्या प्रसक्तप्रयारेष्वेकस्याप्यनुपपत्त्या श्रुत्यनुसारेण चावयवकल्पनारूपमूलस्यैव हानापत्त्या वैतत्साधकस्यात्यन्तायुक्तत्वम् । ननु पूतीकावयवानामपि सत्त्वाद्युक्तं सोमानुकल्पत्वमित्यत आह ॥ **न हीति** ॥ अनेनार्थापत्तावाक्षेपकासिद्धिरुक्ता भवति । उभयेत्यनेनानिष्टप्रसङ्ग उक्तो भवति ॥ **तृतीये त्विति** ॥ तदर्थक्रियाप्रयोजकतदंशभूयस्त्वस्याभावादुपपादकमप्रयोजकमिति भावः । नन्वंशभूयस्त्वतदभावौ नार्थक्रियातदभावप्रयोजकावपि त्वनुकल्पबोधक श्रुतिरेवेति नीवारादौ सत्सद्भावाच्छुक्तिकादौ च तदभावान्नानुपपत्तिरिति शङ्कते ॥ **श्रुतीति** ॥ **किं तर्हीति** ॥ अनेनाक्षेपकान्यथासिद्धिरुक्ता भवति । अपि चेत्युक्तसाधकनिरासाय परोक्तसादृश्यस्वरूपं खण्डयति ॥ **सादृश्यं चेति** ॥ सामान्यादिरूपत्वोक्तिमात्रेणान्योन्यावयवसंयोगरूपतानिषेधलाभ इत्याशयेन वक्ष्याम इत्युक्तम् । सामान्यपरीक्षादाविति शेषः । अश्वादिवृत्तिरासभसादृश्यस्याश्वत्वात्परत्वे सर्वाश्वानां रासभसादृश्यापत्त्याऽपरत्वे च रासभेऽप्यश्वत्वापत्त्या जातिसङ्करप्रसङ्गात्कथं सादृश्यस्य सामान्यत्वम् । अश्वरासभादिद्रव्यगुणावयवकर्मवृत्तिसामान्यानामेव सादृश्यत्वेऽश्वो रासभसदृश इत्यादिव्यवहाराणाममुख्यत्वापत्तिरिति बाधकं मनसि निधाय धर्मान्तरं वेत्युक्तम् । गौर्गवयसदृशीत्याद्यनुभवेन सादृश्यरूपधर्मान्तरस्य सिद्धत्वादित्याशयः । अस्तु वाऽन्योन्यावयवसंयोगरूपसादृश्यं तथाऽपि तत्कल्पनार्थक्रियोपयुक्ततया वाऽर्थक्रियोपयुक्तत्वमंशभूयस्त्वस्यैव सादृश्यं तु तदवयवसद्भावमात्रकल्पकमित्याशयेन वा । नाद्य इत्याह ॥ **किञ्चेति** ॥ तैलघृतादावन्योन्यार्थक्रियाकारित्वमस्त्येवेति विप्रतिपद्यमानं प्रत्यलौकिकतया तादृग्विप्रतिपत्तिशङ्काशून्यमतिप्रसङ्गमाह ॥ **किञ्चेति** ॥

द्वितीयं शङ्कते ॥ **अल्पेति** ॥ **कथं तर्हीति** ॥ नीवारेषु व्रीह्यवयवभूयस्त्वे तेषां व्रीहित्वापत्तेरित्युक्तत्वादिति भावः । ननु नीवाराणां व्रीहिकार्यकारित्वे व्रीह्यवयवसंयोगरूपतत्सादृश्यं न प्रयोजकं येन घृतादावतिप्रसङ्गापत्तिः । नापि तदवयवभूयस्त्वं येन व्रीहित्वापत्तिः किन्तु तदवयवभूयस्त्वशून्यानामपि तेषां केवलं श्रुतिबलादेव तत्कार्यकारित्वमतो नानुपपत्तिरिति चेत्तर्ह्यत्यन्तविविक्तानामेव तेषां श्रुतिबलात्तदर्थक्रियाकारितोपपत्तौ नान्योन्यावयवसंयोगरूपसादृश्यतदवयवभूयस्त्वादिकल्पना युक्तेत्याशयेनाह ॥ **श्रुतीति** ॥ **चिन्त्यमिति** ॥ आलङ्कारिकादिशास्त्रसिद्धस्य तस्यापलापानर्हत्वादिति भावः ।

स०— न च तेजोबन्नानां रजतादिकारणत्वात्कारणेषु परस्परावयवसाङ्कर्येऽपि परस्परस्य सद्भावः स्यादित्यत आह ॥ **न हि कारणसद्भाव इति** ॥ **सादृश्यं च सामान्यं धर्मान्तरं वेति** । अत्र धर्मान्तरमित्येव सिद्धान्तः । सन्मान्यमित्यभ्युच्चयः । अत एव 'गुणक्रियाजातिपूर्वा धर्माः सर्वेऽपि वस्तुनः' इति वाक्यव्याख्यावसरे टीकाकाराः पूर्वपदेन शक्तिसादृश्यविशिष्टानां ग्रहणमिति व्याचख्युः । यदि च सादृश्यं सामान्यं स्यात्तर्हि जातिपदेन सामान्यस्य गृहीतत्वात्पूर्वपदेन सादृश्यं न ग्राह्यं स्यादिति द्रष्टव्यम् ॥ **न भाव्यं च सदृशयोरिति** ॥ भारनयनरूपबलीवर्दार्थक्रिया पुरुषविशेषेणापि भवति । सा च न स्यादित्यर्थः ॥ **ककारखकारयोरिति** ॥ वर्णानां निरवयवत्वादिति भावः ।

प०— ननु तेजोऽबन्नरूपकारणानां मेलनेन सर्वकार्येषु तेजोऽबन्नकारणसत्त्वे तत्कार्याणामपि सर्वत्र सत्त्वमनुमीयत इत्यत आह ॥ **कारणसद्भाव इति** ॥ **कार्येति** ॥ सर्वत्र सर्वावयवसत्त्वरूपकार्यनिश्चयेत्यर्थः ॥ **अनुकल्प इति** ॥ 'कस्यचिन्मुख्यस्याभावेऽमुख्यस्यान्यस्योपादानमनुकल्प' इति मीमांसकैः परिभाष्यते । ननु सोमलाभे समग्रसोमावयवलाभोऽस्ति । भूयः सोमावयववतोऽन्यस्योपादाने तु सकलसोमावयवालाभेनामुख्यत्वादनुकल्प एवायमित्यत आह ॥ **न हीति** ॥ सोमेऽपि त्वदुक्तत्रिवृत्करणप्रक्रियया द्रव्यान्तरावयवसत्त्वादिति भावः ॥ **श्रुतीति** ॥ 'सोमाभावे पूतिकानभिषुणुयादि'ति श्रुतिप्रामाण्यादित्यर्थः । यद्यप्यपि चेदित्यादिना प्रत्यक्षमुक्तं तदपि निराह ॥ **सादृश्यं चेति** ॥ न्यायमतेनाह ॥ **सामान्यं वेति** ॥ स्वमतेनाह ॥ **धर्मान्तरं वेति** ॥ **वक्ष्याम इति** ॥ वैशेषिकाधिकरणे । 'न सर्वधर्म एकोऽस्ति समुदायस्तु भिन्नगः । एतादृशं च सादृश्यं पदार्थेषु पृथक्पृथक्' इत्याद्यनुव्याख्यानव्याख्यावसर इति भावः ॥ **भार्यादिष्विति** ॥ भार्यायां मातृसादृश्यम् । पितृगुरुप्रभृतिषु मातङ्गशब्दितचण्डालसादृश्यम् । घृतक्षीरादौ मदिराशब्दितमद्यसादृश्यमस्तीत्यर्थः ॥ **ककारखकारयोरिति** ॥ निरवयवत्वात्तयोरिति भावः । न च तत्र सादृश्यमेव नेति वाच्यम् । 'वर्ग्यो वर्गेण सवर्ण' इति शीक्षाग्रन्थविरोधादिति भावः ॥

**या०**— ननु पाञ्चभौतिकेष्वपि पदार्थेषु किञ्चित्कार्यं केनचित्प्रचुरेण भूतेन परिणामविशेषवता आरब्धं तत्कार्यं यादृशपरिणामयुक्तं यद्भूतप्रचुरं तादृशपरिणामवतो भूतस्य कार्यान्तरेष्वपि विद्यमानत्वात्तेषु तथाविधतत्तद्भूतप्रचुरतत्कार्यविषयबुद्धिरुपपद्यते । अतो रजतादीनां शुक्तिकादौ सद्भावः त्रिवृत्करणपञ्चीकरणाभिधायिश्रुत्यादिप्राप्त एव । यथोक्तम् । 'शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधित' इति । अतः कथमेतदित्यत आह ॥ **न हीति** ॥ **नियत इति** ॥ कारणान्तराभावेन कार्याभावसंभवादिति भावः ॥ **अदृष्टादीति** ॥ अत्रादिपदेन साधारणाकारग्रहणभेदाग्रहणदोषा गृह्यन्ते ॥ **कार्यनिश्चयेति** ॥ अदृष्टदोषादेः कार्यैकोन्नेयत्वात्कार्यस्वरूपस्य चेदानीमप्यनिर्धारितत्वान्नादृष्टादिकल्पकमत्रास्तीत्युक्तातिप्रसङ्गस्तदवस्थ एवेति भावः ॥ **धर्मान्तरं चेति** ॥ अन्याघटितं जातिवदखण्डरूपमिति समयपादे वक्ष्याम इति भावः ॥ **न भाव्यं चेति** ॥ भारनयनरूपबलीवर्दार्थक्रियारूपविशेषेणापि भवति । सा न स्यात् इत्यर्थः ॥ **ककारेति** ॥ वर्णानां निरवयवत्वादित्यर्थः ।

**श्री०**— ननु तेजोऽबन्नानां कारणानां मिश्रत्वात्तत्कार्ये शुक्त्यादावपि रजतावयवमिश्रता प्राप्तैवेत्यत आह ॥ **न हीति** ॥ कारणसद्भावे कारणे मिश्रतासद्भावे । कार्यसद्भावः कार्ये मिश्रतासद्भावः । निमित्तान्तराभावेन कार्येऽभावसंभवादित्याशयः । श्रुतार्थापत्तिः सोमाभावे पूतिकं गृह्णीयादिति श्रुतार्थापत्तिरित्यर्थः । आनुकूल्यः प्रतिनिधिः । सोमांशानां भूयस्त्वे कुतः सोमत्वमित्यतस्तदुपपादयति ॥ **न हीति** ॥ केवलः सोमांशभूयस्त्वरहितः ॥ **किं त्विति** ॥ तथा च तत्सोमांशभूयस्त्वं पूतिकेऽपि चेदङ्गीकृतं तर्हि पूतिकस्यापि सोमत्वमेव प्राप्तं न तु तत्प्रतिनिधित्वमिति भावः ॥ **उभयेति** ॥ शुक्त्यवयवानां रजतावयवानां च दर्शनप्रसङ्ग इत्यर्थः ॥ **अन्यथेति** ॥ सोमांशानामल्पीयस्त्वेऽपि पूतिकस्य यदि सोमकार्यकारित्वमुच्यते तर्हि शुक्तिकायां रजतांशानामल्पीयस्त्वेऽपि रजतकार्यकारित्वं स्यादित्यर्थः ॥ **श्रुतीति** ॥ सोमाभावे पूतिकं गृह्णीयादिति श्रुतीत्यर्थः ॥ **तदर्थक्रियेति** ॥ सोमोचितार्थक्रियाकारित्वं पूतिकस्यावगम्यत इत्यर्थः । शुक्तिकायास्तु न रजतोचितार्थक्रियाकारित्वम् । तत्र श्रुत्यभावादिति भावः । अत्यन्तविविक्तानां परस्परावयवसंबन्धशून्यानाम् । वस्तूनां सोमपूतिकादीनाम् । यदपि चेत्यादिना प्रत्यक्षमुक्तं तन्निरासायाह ॥ **सादृश्यं चेति** ॥ अन्योन्यावयवसंयोगात् त्वन्मतेऽन्योन्यावयवसंयोगसद्भावादित्यर्थः । मातृसादृश्यं भार्यायां मातङ्गश्चण्डालस्तत्सादृश्यं पितरि मदिरासादृश्यं क्षीर इति द्रष्टव्यम् ॥ **अल्पेति** ॥ भार्यादौ मात्राद्यवयवा अल्पा एव सन्तीति न तदुपभोगे प्रत्यवाय इत्यर्थः ॥ **नीवारा इति** ॥ तेष्वपि सोमावयवानामल्पीयसामेव सत्त्वादित्यर्थः । बहूनां समानां वा सद्भावे दोषस्योक्तत्वादिति भावः । पूतिके सोमावयवानामल्पानां सद्भावेऽपि तत्कार्यकारित्वं श्रुतिप्रामाण्यात्संभवतीति चेत्तत्राह ॥

**श्रुतीति** ॥ **दत्तमिति** ॥ अत्यन्तविविक्तानामेवेत्यादिनेत्यर्थः ॥ **अपरावयवसंयोग एवेति** ॥ नान्योन्यावयवसंयोगोऽतः किञ्च घृतेत्यादिनोक्तातिप्रसङ्गो नेति भावः ॥ **ककारेति** ॥ स्पर्शाक्षरत्वेन सादृश्यसद्भावादिति भावः ॥

च०— **वक्ष्याम इति** ॥ जातिवदखण्डरूपमिति समयचरणेऽभिधास्याम इत्यर्थः ॥ **दत्तमुत्तरमिति** ॥ अत्यन्तविविक्तानामेव वस्तूनामर्थक्रियासाम्यमभ्युपगम्यतामित्यभिहितमित्यर्थः ॥ **चिन्त्यमिति** ॥ वर्णानां निरवयवत्वादिति भावः ।

**सु०— रजतार्थिनः शुक्तिकायां प्रवर्तकं च किं भूयसां शुक्त्यवयवानामदर्शनमुताल्पीयसां रजतावयवानां दर्शनमुतोभयम् । नाद्यः सुप्तस्यापि प्रवृत्तिप्रसङ्गात् । द्वितीयेऽपि किं तेषामल्पीयस्त्वज्ञानम् उत भूयस्त्वज्ञानम् अथवा ज्ञानमात्रम् । आद्ये तस्या रजतत्वमेव विदितमिति कथं ततः प्रवृत्तिः । द्वितीयेऽन्यथाख्यातिप्रसङ्गः । तृतीये सदृशमात्रे प्रवृत्तिप्रसक्तिः । न तृतीयः किमपि तत्रास्तीत्यादिज्ञानादपि प्रवृत्तिप्रसङ्गात् । कथं चास्य ज्ञानस्य भ्रान्तित्वम् । अल्पांशग्रहणादिति चेत् नूनं ब्रह्मज्ञानमपि महाभ्रान्तिरापन्ना । अत एव न बाधस्य बाधकत्वमपि ॥ पित्तगतपीतिमानुलिप्तश्चेच्छङ्खः कथं तर्हि न तथा पार्श्वस्थेन दृश्यते । सूक्ष्मत्वादिति चेत् किमिदं सूक्ष्मत्वम् । अतीन्द्रियत्वं चेत् न तर्हि भ्रान्तेनापि दृश्येत । अन्यच्चेत्किमनेन । पित्तोपहतेन तु सामीप्याद्दृश्यत इति चेत् । किमिदं सामीप्यं नाम । इन्द्रियसन्निकर्षश्चेत् स तर्हि उभयोः समानः । शरीरसामीप्यं चेत्तदनुपयुक्तम् । अन्यथा परशरीरसमीपस्थानां दण्डकुण्डलादीनामदर्शनप्रसङ्गात् । पीतः शङ्खः प्रतीयत इति कोऽर्थः । किं पीतरूपवत्तयेत्युत पीतरूपद्रव्यसंयुक्ततयेति । नाद्यः अन्यथाख्यातिप्रसङ्गात् । द्वितीये अनुभवविरोधः ॥ एवमुदाहरणान्तराणि विप्रतिपन्नानि निरसनीयानीत्यलमपहसनीयप्रक्रियानिराक्रियाविस्तरेण ॥ २ ॥**

वा०—एवं युक्तित्रयमर्थक्रियाप्रयोजकतयोक्तं भूयस्त्वं च निरस्य दोषवशादित्युक्तप्रवृत्तिप्रयोजकं निरस्यति ॥ **रजतार्थिन इति** ॥ परित्यागस्यादर्शनातिरिक्तस्यैवाभावात्परित्यज्येत्यनेनोक्ते शुक्त्यवयवादर्शने तात्पर्यं वाऽल्पीयांसमित्यादिनोक्तेऽल्परजतावयवदर्शने वोभयत्रापि वेत्याशयेन विकल्पः । बाध्यबाधकभावोऽपीत्यादिनोक्ते भ्रान्तिबाधयोर्भ्रान्तिबाधत्वे निरस्यति ॥ **कथं चेति** ॥ **ब्रह्मेति** ॥

ब्रह्मणोऽतिमहत्वेनेदानीं जायमानब्रह्मज्ञानस्यात्यल्पांशग्रहणरूपत्वादिति भावः ॥ **अत एवेति** ॥ ब्रह्मज्ञानस्य भूयस्तदंशाविषयकत्वेनाबाधकत्वप्रसङ्गादिति भावः । उदाहरणान्तरं निरस्यति ॥ **पित्तेति** ॥ **किमनेनेति** ॥ परिणामाल्पत्वादेर्दर्शनादर्शनरूपभ्रान्तपार्श्वस्थवैलक्षण्याप्रयोजकत्वादिति भावः । तद्वैलक्षण्यप्रयोजकं शङ्कते ॥ **पित्तेति** ॥ **किमिदमिति** ॥ आद्ये सामीप्यतदभावरूपस्य वैलक्षण्यप्रयोजकस्यासिद्धत्वात् द्वितीये तस्य स्वरूपतः सत्त्वेऽपि तद्वैलक्षण्याप्रयोजकत्वादिति भावः ॥ **एवमिति** ॥ स्वप्नस्थलेऽर्थज्ञानयोरेव सत्त्वं वा तत्र प्रतीतजाग्रत्त्वस्यापि वा । आद्ये संप्रतिपत्तिः । द्वितीये तु तस्येश्वरसृष्टत्वेन प्रमाणाभावाद्बाधकसद्भावाच्च न तदंशे याथार्थ्यं ज्ञानस्य । जपाकुसुमप्रभास्वच्छद्रव्यसंयुक्तेतिरक्तः स्फटिक इति प्रतीयत इत्यपि न । प्रभाया गुणत्वेन गुणाद्वाऽलोकवदिति सूत्रसिद्धतया अन्यत्र टीकाकारैर्निपुणतरं प्रतिपादिततया गुणानां च द्रव्यसमवेततया तदभिन्नतया वा तत्संयोगासिद्धेः शुक्लः स्फटिक इतिवद्रक्त इति प्रतीतेरपि रक्तरूपसमवायविषयकत्वेन तदभेदविषयकत्वेन वाऽनुभवसिद्धतया रक्तद्रव्यतद्रूपसंयुक्तताविषयकताङ्गीकारेऽनुभवविरोधाच्च । तस्माद्रक्तरूपेण स्फटिकपरिणामात्तत्प्रतीतेर्यथार्थत्वमित्येव तत्त्वम् । मरीचिकाजलस्थले दिङ्मोहादिस्थले चैकत्रापरावयवसद्भावे प्रमाणाभावोपपादनेनाल्पावयवग्रहणादिमात्रेण भ्रमत्वाद्यसंभवोक्तेश्च तत्प्रतीत्योरयथार्थत्वमेव । अलातचक्रस्थले अन्तरालाभावाविषयीकरणेऽन्तरालाग्रहणतद्देशसंयुक्तवस्तुग्रहणमात्रेण कथं चक्रप्रतीतिः । न च सम्यक् चक्रप्रतीतिस्थलेऽप्येवमेवेति वाच्यम् । विप्रतिपत्तेः । अस्तु वा तत्र तथाप्रतीतेर्याथार्थ्यमत एव विप्रतिपन्नानीत्युक्तमिति । दर्पणादिस्थले च 'दर्पणग्रहता दृष्टिः परावृत्य स्वमाननम् । व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखमि'ति परोक्तचौर्येऽपि न तथोपपद्यते । परावृत्य स्वमुखग्रहणे पार्श्वस्थस्य मुखद्वयप्रतीत्ययोगादस्यां क्रियायां स्वच्छताया उपयोगाभावेन शिलाद्यभिहतानामपि नायनरश्मीनां स्वमुखग्राहकत्वापाताच्च । तस्माद्दर्पणादेः प्रतिमुखाद्यात्मना परिणामादेव तत्प्रतीतेर्याथार्थ्यम् । द्विचन्द्रादिस्थले चात्मविशेषगुणानां यौगपद्यायोगेन सामग्रीद्वयेन युगपद्ग्रहणद्वयोक्त्ययोगः । देशान्तरसंयुक्ततया चन्द्रान्तरप्रतीतेः सत्त्वेन देशान्तरस्य चन्द्रं प्रत्यप्राधान्यमात्रोक्त्ययोगश्च । अतस्तत्प्रतीतिरप्ययथार्थैव । तदेवं कासाञ्चिदयथार्थत्वात्कासाञ्चित्प्रतीतीनां याथार्थ्येऽपि प्रायस्त्वदुक्तप्रकारासंभवान्नोदाहरणान्युपपन्नानीति भावः । नन्विदं रजतमित्यादिप्रतीतीनां याथार्थ्येऽसदेव रजतं प्रत्यभादित्यनुभवविरोधः । अल्पांशग्रहणमात्रेण भ्रमत्वेऽतिप्रसङ्गश्चेत्यादिदूषणं स्पष्टमपि किं नोच्यत इत्यत आह ॥ **अलमिति** ॥

स० — **नूनं ब्रह्मज्ञानमिति** ॥ अपरिमितस्य ब्रह्मणः साकल्येन ज्ञातुमशक्यत्वादिति भावः ॥ **अत एवेति** ॥ उक्तरीत्या भ्रान्त्यसंभवादित्यर्थः ॥ **अन्यच्चेत्किमनेनेति** ॥ त्र्यणुकादिवदतीन्द्रिय-

समवेतत्वरूपं वा अल्पावयवरूपत्वं वा सूक्ष्मत्वं विवक्षितं चेत्तर्हि त्र्यणुकवदेव पार्श्वस्थेनापि दृश्येतेत्यतिप्रसङ्गस्यापरिहारात् सूक्ष्मत्वादिति वचनेन किमिति भावः ॥ **उभयोरिति** ॥ द्रष्टृपार्श्वस्थयोरित्यर्थः ॥ **उदाहरणान्तराणीति** ॥ एवं स्वप्नेत्यादिनोक्तानीत्यर्थः ॥ **विप्रतिपन्नानीति** ॥ तेषु स्वप्नस्फटिकलौहित्यदर्पणमुखप्रत्ययानां यथार्थत्वं संमतमेवेतरेषां तु याथार्थ्यमुक्तरीत्या निरसनीयमित्यर्थः ॥

प० — **अरजतत्वमेवेति** ॥ रजतावयवानां भूयस्त्वज्ञानस्यैव रजतत्वज्ञानत्वादिति भावः । उतोभयमिति पक्षं निराह ॥ **न तृतीय इति** ॥ **ब्रह्मज्ञानमपीति** ॥ सर्वस्यापि पुंसो जायमानब्रह्मज्ञानस्य ब्रह्मैकांशविषयकत्वादित्यर्थः ॥ अत एव पूर्वस्य भ्रान्तित्वानुपपत्तेरेव । यद्वा भूयोंऽशग्रहणस्य बाधत्वे सत्यरूप्यादाविदं रूप्यमिति ज्ञानस्यापि बाधत्वप्रसङ्गरूपातिप्रसङ्गादेवेत्यर्थः । याऽपि पीतशङ्खादौ त्वित्यादिनोक्ता प्रक्रिया तां निराह ॥ **पित्तगतेति** ॥ **किमनेनेति** ॥ पार्श्वस्थदर्शनानुपयुक्तेनेत्यर्थः । अतीन्द्रियत्वादन्यस्यादर्शनानुपपादकत्वादिति भावः ॥ **उभयोरिति** ॥ पीत इति पश्यतः पार्श्वस्थस्य चेत्युभयोरित्यर्थः ॥ **अन्यथेति** ॥ द्रष्टृशरीरसामीप्यस्यैव दर्शनोपयुक्तत्व इत्यर्थः ॥ **एवमिति** ॥ स्वप्नस्फटिकलौहित्यादिप्रागुक्तोदाहरणान्तराणीत्यर्थः । तथा हि । अथ रथानित्यादिश्रुतेः स्वाप्नार्थानामपीश्वरसृष्टत्वात् तद्धीः सर्वा यथार्थेत्युक्तम् । स्वप्न एवायं न जाग्रदिति बाधविरोधात् । स्फटिके रक्तकुसुमप्रभोपलम्भात्तल्लौहित्यधीर्यथार्थेत्यपि न । रक्तकुसुमसमीपस्थवस्त्वन्तरेऽपि तथोपलब्धिप्रसङ्गात् । मरीचिकासु जलावयवसत्त्वात्तद्धीरेव तत्रेति तु शुक्तिरूप्यप्रक्रियानिरासेन निरस्तम् । अलातचक्रे तु अलातस्य सर्वदेशसंयोगधीरेव न भ्रान्तिरिति तन्न । फलगुपामराणां चक्रताबुद्धेर्भ्रान्तित्वानिवारणात् । नायनरश्मयो दर्पणप्रतिहताः ग्रीवास्थमुखमेव गृह्णन्तीति तद्धीरपि यथार्थेत्यपि न । 'अत एव चोपमा' इत्यत्र निरसिष्यमाणत्वात् । दिगन्तरे दिगन्तरावयवसत्त्वात् शुक्तौ रूप्यधीरिव तद्धीरपि यथार्थेत्यपि शुक्तिरूप्यप्रक्रियानिरासेन निरस्तम् । या तु द्विचन्द्रप्रक्रिया नयनस्याङ्गुल्यवष्टम्भे हि नायनरश्मयो द्वेधा बहिर्गच्छन्ति । ऋजुतया वक्रतया च । तत्र ये ऋजवस्ते स्वदेशस्थं समीपस्थं गृह्णन्ति । ये तु वक्राः ते तु दूरदेशं व्याप्य तमेव चन्द्रं विप्रकृष्टदेशस्थं गृह्णन्तीति द्वित्वधीर्यथार्थेति । सा तु धीमात्रयाथार्थ्यसिध्युत्तरकालीनैषाऽत्यन्ताप्रामाणिककल्पना । सैव न सिद्धेत्यादिरूपेण निरसनीयेत्यर्थः ।

या० — दोषवशादित्यादिना परेण यत्प्रवृत्त्यादिकमुपपादितं तद् दूषयति ॥ **रजतार्थिन इति** ॥ बाध्यबाधकभावोऽपीत्युक्तं दूषयति ॥ **कथं चास्येति** ॥ भ्रान्तित्वं बाध्यत्वम् ॥ **नूनं ब्रह्मज्ञानमिति** ॥ अनन्तगुणस्य ब्रह्मणः केनापि साकल्येन ज्ञातुमशक्यत्वादिति भावः ॥ **अत एवेति** ॥ उक्तरीत्या

बाध्याभावादेवेत्यर्थः । ननु पूर्वस्य शुक्तिरजतादिज्ञानस्य विद्यमानविषयकत्वेऽपि बाध्यप्रवृत्तिजनकत्वमेव बाध्यत्वम् । उत्तरज्ञानस्य पूर्वज्ञानप्राप्तप्रवृत्तिनिरोधकत्वमेव बाधकत्वमिति चेन्न । प्रवृत्तेरपि विषयसत्त्वे बाध्यत्वायोगात् । न च प्रवृत्तेरपि प्रतिबद्धोत्पत्तिकत्वमेव बाध्यत्वं नाविद्यमानविषयत्वमिति वाच्यम् । एवं हि उत्पत्स्यमानप्रवृत्तिरेव बाध्या स्यान्न पूर्वमुत्पन्ना प्रवृत्तिः । न चोत्तरज्ञानजन्यध्वंसप्रतियोगित्वमेव प्रवृत्तेर्बाध्यत्वम् । अननुगमापातात् । उत्तरज्ञानजन्यप्रध्वंसप्रतियोगिनि समीचीनपूर्वज्ञानेऽपि बाध्यत्वप्रसङ्गाच्च । अतो विषयासत्त्वव्यतिरेकेण प्रवृत्तेरपि न बाध्यत्वनिर्वाहः शक्य इति नोक्तप्रकारसंभवः ॥ **तदिदमुक्तं कथं चेति** ॥ न केनापि प्रकारेणेत्यर्थः ॥ **अन्यच्चेति** ॥ त्र्यणुकादिवदतीन्द्रियावयवसमवेतत्वरूपं वाऽल्पतरावयवत्वरूपं वा सूक्ष्मत्वं विवक्षितं चेत्तर्हि त्र्यणुकादिवदेव पार्श्वस्थेनापि दृश्येतेत्यतिप्रसङ्गस्यापरिहारात् । अनेन सूक्ष्मत्वादिति वचनेन किमिति भावः ॥ **उभयोरिति** ॥ द्रष्टृपार्श्वस्थयोरित्यर्थः ॥ **अन्यथाख्यातीति** ॥ साक्षात्संबन्धेन पीतरूपभानेऽन्यथाख्यात्यापत्तिरित्यर्थः ॥ **अनुभवेति** ॥ परम्परासंबन्धेन तज्ज्ञानेऽनुभवविरोध इति भावः ॥ **एवमुदाहरणान्तराणीति** ॥ एवं स्वप्नस्फटिकलौहित्येत्यादिनोक्तानीत्यर्थः । अत्र विप्रतिपन्नानीत्युक्त्या केषाञ्चिद्यथार्थत्वं संमतमिति सूचितम् । ते च स्वप्नस्फटिकलौहित्यदर्पणमुखप्रत्यया एव । स्वप्नानां वासनोपादानकानां भगवन्निर्मितानां सत्यत्वेन तज्ज्ञानानां यथार्थत्वस्यास्मन्मतेऽपि भावात् । स्फटिकलौहित्यदर्पणमुखप्रत्यययोश्च सत्यभूतप्रतिबिम्बावगाहितया यथार्थत्वस्यान्यत्र टीकाकारैरुक्तत्वात् । अनयोः परोक्तयाथार्थ्योपपादनप्रकार एव न तु संमतः । स्फटिकमणेर्जपाकुसुमसंबन्धत्वाल्लौहित्यं प्रतीयत इत्यत्र किं साक्षात्संबन्धेन लौहित्यज्ञानं यथार्थमित्युपपादितमुत परम्परासंबन्धेन । आद्येऽन्यथाख्यातिः । द्वितीयेऽनुभवविरोध इत्युक्तदोषात् । दर्पणमुखादिप्रत्ययेऽप्युक्तप्रक्रियायां स्वच्छताया अनुपयोगेन शिलाद्यभिहतनायनरश्मीनामपि निजमुखादिग्राहकतापातात् । विप्रतिपन्नानां मरीचिकाजलालातचक्रदिगन्तरद्विचन्द्रादिप्रत्ययानां यद्दोषादृष्टविशेषाधीनग्रहणादिना याथार्थ्यमुपपादितं तदपि कार्यनिश्चयोत्तरकालीनत्वादस्याः कल्पनाया इत्युक्तदोषेण निरसनीयमिति भावेनोक्तम् ॥ **एवं निरसनीयानीति** ॥ किं च मरीचिकाजलप्रत्यये तेजःपृथिव्योरग्रहणेन यदम्बुमात्रग्रहणमुक्तं तदतीव मन्दम् । अधिष्ठानतया तत्रापि तेजःपृथिव्योरन्यतरस्य भाननियमात् । न च साधारणाकारेण तज्ज्ञानमस्त्येवेति वाच्यम् । तज्ज्ञानस्याम्बुज्ञानादभेदेऽन्यथाख्यात्यापत्तिः । भेदे ज्ञानैक्यानुभवविरोधः । यद्यलातचक्रप्रतीतिर्यदि पूर्वोत्तरभावितत्तद्देशविशेषालातसंयोगक्रमाग्रहणमात्रात्स्यात्तदा तत्तद्देशतत्तद्वस्तुसंयोगयौगपद्याग्रहणात्तत्रालातचक्रत्वप्रतीतिरपि कुतो न स्यात् । दिगन्तरे दिगन्तरसद्भावोऽप्यप्रामाणिकः । दिशो व्याप्तत्वेऽपि तद्भागानामव्याप्तत्वात् । पञ्चीकरणादेश्च भूतमात्रनिष्ठत्वात् । द्विचन्द्रादिज्ञानेऽपि स्वदेशवियुक्तचन्द्रस्य समीपदेशस्य च यद्यसंसर्गाग्रहा-

त्तज्ज्ञानयोर्भेदाग्रहाद्वा तद्विशिष्टव्यवहारस्तदा तयो: संसर्गाग्रहात्तज्ज्ञानयोश्चाभेदाग्रहात्तद्विशिष्टव्यवहारोपि किं न स्यात् । अदृष्टवशादिति तु निरस्तम् । अत्रापि ज्ञानैक्यानुभवविरोध इत्याद्यभिप्रेत्योक्तम् ॥ अलं **विस्तरेणेति** ॥

**श्री०— सुप्तस्यापीति** ॥ तदानीं दर्शनमात्रस्याभावेन भूयसां शुक्त्यवयवानामदर्शनसद्भावादिति भाव: । तेषामल्पीयसां रजतावयवानाम् ॥ **ज्ञानमात्रमिति** ॥ अल्पीयस्त्वभूयस्त्वौदासीन्येन रजतावयवज्ञानमात्रमित्यर्थः । तस्य शुक्तिशकलस्य ॥ **अरजतत्वमेवेति** ॥ रजतांशानामल्पीयस्त्वेऽरजतत्वमेव प्राप्तम् । यत्र यदंशानामल्पीयस्त्वं तत्तन्न भवतीति त्वयाऽङ्गीकृतत्वादिति भाव: । सदृशमात्रे रजतसदृशे रङ्गादौ ॥ **प्रसक्तिरिति** ॥ तथाच रजतार्थिन: शुक्तिकायां प्रवृत्तिर्न स्यादिति भाव: ॥ **न तृतीय इति** ॥ उतोभयमिति विकल्पितस्तृतीय: पक्षो नेत्यर्थ: ॥ **किमपीति** ॥ **किञ्चिदिदमिति** ॥ निर्विकल्पकज्ञानादपीत्यर्थ: । तत्रापि भूयसामवयवानामदर्शनस्याल्पीयसां दर्शनस्य च सद्भावादिति भाव: । अस्य ज्ञानस्येदं रजतमिति ज्ञानस्य ॥ **अल्पांशेति** ॥ अधिष्ठानभूतशुक्त्यल्पांशेत्यर्थ: ॥ **नूनमिति** ॥ ब्रह्मणोऽपरिच्छिन्नानन्तगुणत्वेनाल्पांशस्यापि सम्यग्गृहीतुमशक्यत्वादिति भाव: । अत एवोक्तरीत्या भ्रान्त्यसंभवादेव ॥ **तथेति** ॥ सुवर्णानुलिप्तशङ्खवत्पीतत्वेनेत्यर्थ: ॥ **सूक्ष्मत्वादिति** ॥ पीतत्वस्येति शेष: ॥ **अन्यच्चेति** ॥ अतीन्द्रियावयवसमवेतत्वमेव सूक्ष्मत्वम् । तथाच पीतत्वस्य पित्तद्रव्यरूपातीन्द्रियावयवसमवेतत्वेन सूक्ष्मत्वान्न तत्पार्श्वस्थेन गृह्यते । सुवर्णस्य चैन्द्रियकत्वेन तद्गतपीतत्वस्य निरुक्तसूक्ष्मत्वाभावात्पार्श्वस्थेन ग्रहणं युक्तमिति भाव: ॥ **किमनेनेति** ॥ अतीन्द्रियावयवसमवेतस्यापि त्र्यणुकस्य पार्श्वस्थेन ग्रहणदर्शनेन प्रकृतेऽपि तथोपपत्ते: सूक्ष्मत्वात्पार्श्वस्थेन न गृह्यत इति वचनेन किमित्यर्थ: ॥ **सामीप्यादिति** ॥ पार्श्वस्थस्य तु द्रष्टृपुरुषशरीरसामीप्यमिव सामीप्यं नास्तीति पीतत्वं न तेन गृह्यत इति भाव: ॥ **अन्यथेति** ॥ द्रष्टृपुरुषशरीरसामीप्यस्यैव दर्शनोपयोगाङ्गीकारे इत्यर्थ: ॥ **अदर्शनेति** ॥ तत्र द्रष्टृपुरुषशरीरसामीप्याभावादिति भाव: ॥ **अन्यथाख्यातीति** ॥ साक्षात्संबन्धेन पीतरूपस्य शङ्खेऽभावेन तेन संबन्धेन तत्र तद्भानाङ्गीकारे भ्रमलक्षणान्यथाख्यात्यापत्तिरित्यर्थ: ॥ **अनुभवेति** ॥ पीतरूपवद्द्रव्यसंयुक्तोऽयं शङ्ख: संयुक्तसमवायसंबन्धेन पीतरूपवानिति यावदित्येवं कस्याप्यनुभवाभावादिति भाव: ।

**च०— एवमुदाहरणान्तराणीति** ॥ स्वप्नस्फटिकेत्यादिनाऽभिहितानीत्यर्थ: ॥ **निरसनीयानीति** ॥ स्वाप्नपदार्थधर्मिकजाग्रदनुभूतपदार्थप्रतियोगिकतादात्म्याभावगोचरबाधविरोधप्रसङ्गेनाद्यप्रत्ययस्य

तादात्म्यांशे प्रमात्वं न संभवत्येव । धर्म्यंशे तादृप्यं सिद्धान्तिनापि संप्रतिपद्यते । स्वच्छद्रव्यसंयुक्ता जपाकुसुमप्रभैव रक्तः स्फटिक इति प्रतीतिगोचर इत्युपगतिरपि न साधीयसी । रक्तं स्फटिकं जानामीत्यनुव्यवसायेन तत्स्थानाभिषिक्तसाक्षिणा वा श्वेतं स्फटिकं जानामीत्यनुव्यवसायेनेव समवायसंसर्गावच्छिन्नरक्तत्वनिष्ठप्रकारताकत्वविशिष्टस्फटिकवृत्तिविशेष्यताकत्वोपरागेण तादृशव्यवसायावगाहिना न्यायनयनदिशा समवायघटितोक्तधर्मस्य तदनुपगन्तृदिशा भेदसंसर्गावच्छिन्नतत्प्रकारताकत्वघटितोक्तधर्मस्य वा अवगाढतया संयोगसंसर्गावच्छिन्नत्वस्य गुणवृत्तिप्रकारतायां परीक्षकापरीक्षिततया प्रभायाः गुणत्वस्याकरनिरूढतया तद्वृत्तिप्रकारतायां समवायावच्छिन्नत्वस्य मतान्तरदिशा भेदसंसर्गावच्छिन्नत्वस्य वाऽवगाढतया प्रभा संयुक्तं जानामीत्याकारकतापत्त्या च संयोगसंसर्गावच्छिन्नत्वावगाहनासंभवेन तदुपगतेरयोगो न शिलातलप्रतिहतनायनरश्मीनामपि निजमुखादिग्राहकतापत्त्या स्फटिकलौहित्यदर्पणमुखप्रतीत्योः परमार्थभूतप्रतिबिम्बावगाहितानियन्त्रितटीकाकृत्पादप्रदर्शितयाथार्थ्योपपादनभङ्ग्या एव श्रयणीयत्वात् । मरीचिकाजलालातचक्रदिगन्तरद्विचन्द्रादिप्रतीतीनां दोषादृष्टविशेषायत्ताग्रहणादिना याथार्थ्योपपादनदिगपि कार्यनिश्चयोत्तरकालीनत्वादस्याः कल्पनाया इत्यनेनैव प्रत्याख्यातेति नेह प्रयतितव्यम् ॥

**सु०**— अन्यस्तु मन्यते । गृह्यमाणयोर्भेदाग्राहिसविकल्पकमेकमेव विज्ञानं भ्रमः । तथा हि । रजतसंस्कारदोषसचिवमिन्द्रियं शुक्तिशकलसन्निकृष्टं रजतशुक्तीदमंशविषयं तत्संसर्गासंसर्गावनवगाहमानमेकमेव सविकल्पकज्ञानमुत्पादयति । तथा च तयोरेकविज्ञानोपारोहिणोर्भेदाग्रहादयथार्थव्यवहारः । तन्निरासादेव विवेकज्ञानं बाधकमित्युच्यते । न पुनरन्यदन्यात्मना प्रतीयत इति ॥ तदिदमनुपपन्नम् ॥ विवेकाग्रहः किं सर्वत्र प्रवृत्तिहेतुरुतात्रैवेति प्रागुक्तदोषाणामशेषाणामविशेषात् । किञ्च प्राभाकराणां वेदप्रामाण्यसिद्ध्यङ्गतयाऽस्त्यख्यातिस्वीकारे प्रयोजनमिति विद्यते भ्रमः; कणभक्षाक्षचरणपक्षपातिना त्वतस्मिंस्तदिति प्रत्ययो विपर्यय इति पूर्वाचार्यवचनमनादृत्य परमतप्रमोषः कस्मादिष्यते । असत्ख्यातिपरिहारार्थमिति चेन्न तथा सत्ययथाव्यवहारस्यापि परिहारप्रसङ्गात् । न ह्यसत्प्रत्येतुमशक्यं शक्यं तु व्यवहर्तुमित्यत्र कारणविशेषोऽस्ति । व्यवहारः प्रतीतिसिद्ध इति चेत्तर्किं विशिष्टप्रत्ययो न प्रतीतिसिद्ध इत्यलम् ॥ ननु विपर्ययाभ्युपगमे कथं वेदप्रामाण्यसिद्धिः । वेदजनितप्रत्ययेऽपि विपर्ययशङ्काप्रसरात् । सर्वस्यापि विज्ञानस्य याथार्थ्ये तु नेयं शङ्कावकाशमासादयतीति । मैवम् । तथा सति विवेकाग्रहस्याप्यनङ्गीकार्यत्वापातात् । तथा हि । न तावद्वेदवाक्यं पदार्थेषु प्रमाणम् , तेषामन्यतोऽधिगतत्वात् । नापि संसर्गे; विनाऽपि संसर्गग्रहमसंसर्गा-

**ग्रहेणैव व्यवहारान्पश्यतो वेदजनितविज्ञानेऽपि शङ्काप्रसरात् । अपौरुषेयत्वादिना सा निरसिष्यत इति चेत् ; किं तर्हि; सकललोकावसितविपर्यासनिरासेन तच्छङ्काया अपि तत एव निराकर्तुं शक्यत्वात् ; इति सिद्धमेतच्छुक्ती रजतत्वेनावभासत इति ।**

**वा०** — न्यायकल्पलतूदितमख्यातिमतान्तरमुत्थापयति ॥ **अन्यस्त्विति** ॥ एकज्ञानत्वोक्त्या प्राभाकरमताद्भेदसिद्धिः । निर्विकल्पकेऽनतिव्याप्तये सविकल्पकमिति । नेदं रजतमित्यतो व्यावृत्तये भेदाग्राहीति । घट इत्याद्येकवस्तुग्राहिविज्ञानव्यावृत्तये गृह्यमाणयोरिति । ननु शुक्तिसन्निकर्षजन्यज्ञानस्य रजतेनेन्द्रियस्य सन्निकर्षाभावेन तदजन्यत्वात्कथं तद्विषयता । न च संस्कारस्तथा । तथात्वे रजतज्ञानस्य स्मृतित्वापातेन नैकज्ञानता । संस्कारस्येन्द्रियसहकारत्वे च प्रत्यभिज्ञावदेकत्वादन्यथाख्यात्यापत्तिरित्यत आह ॥ **तथा हीति** ॥ संसर्गाविषयकत्वे कथं संसर्गविषयकव्यवहार इत्यत आह ॥ **तथा चेति** ॥ एवं व्यवहारान्यथाऽनुपपत्तिं निरस्य बाधकत्वान्यथाऽनुपपत्तिमन्यथाख्यातौ प्रमाणत्वेनोक्तं विघटयति ॥ **तदिति** ॥ विवादविषयं स्पष्टमुद्घाटयति ॥ **न पुनरिति** ॥ ज्ञानस्वप्रकाशत्वस्याभावस्य धर्म्यात्मकतायाश्चानभ्युपगमेन कोऽयं भेदो नामेत्यादिविकल्पदोषाप्राप्तेर्विकल्पं विशिनष्टि ॥ **विवेकाग्रह इति** ॥ एतन्मतासाधारणं दोषमाह ॥ **किञ्चेति** ॥ वेदप्रामाण्यसिद्ध्यङ्गत्वं च नन्वित्यादिवक्ष्यमाणशङ्काग्रन्थे स्पष्टम् । भ्रमत्वोक्तिस्तु तथा सतीत्यादितत्परिहाराभिप्रायेण । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति द्वितीयसूत्रस्थवार्तिकवचनमतस्मिन्निति । मिथ्याज्ञानमनेकप्रकारकम् । तद्यथा नित्येऽनित्यमिति निर्भये सभयमिति भाष्यमादिपदेनोपादत्ते । अपसिद्धान्त इत्यनुक्त्वा परमतप्रमोष इति वदता 'वध्यतां वध्यतां बालो नानेनार्थोऽस्ति जीवता । स्वपक्षहानकर्तृत्वाद्यः कुलाङ्गारतां गत' इति न्यायविषयतासूचनमुखेनापसिद्धान्तः सूचितो भवति । न तावत्पूर्वाचार्यवचनानादरो विशिष्टप्रत्यये साधकाभावात्तस्यानुभवसिद्धताया उपपादितत्वादिति व्यवहारप्रतिबन्दीमुखेन वक्तुं शङ्कामुत्थापयति ॥ **असदिति** ॥ तर्हि व्यवहारस्यापि परिहर्तव्यत्वात्तद्गतिकथनाय भेदाग्रहोक्त्यनुपपत्तिरित्याह ॥ **नेति** ॥ नापि बाधकसद्भावात्तदनादरस्तदभावादित्याशयेन बाधकं शङ्कते ॥ **नन्विति** ॥ अख्यातिमतत्रयेऽप्यस्यान्यथाख्यातिबाधकत्वेनाभिमतत्वात्सर्वशेषताज्ञापनाय मतत्रयनिरासान्ते तदभिमतं बाधकमाशङ्क्य निराकृतमिति ध्येयम् । एवञ्च पक्षद्वये सत्यपि साम्येऽर्धजरतीयं कुर्वता न केवलं पूर्वाचार्यवचनविरोधः सकललोकानुभवविरोधश्चाधिकः संपादितो न तु लाघवमित्याशयेनोक्तं सकलेति । आरोप्यमाणसत्त्वासत्त्वविचारस्यारोपसिद्ध्यधीनत्वादवसरसङ्गत्योत्तरविचारारम्भ इत्याशयेनाख्यातिमतत्रयनिराससिद्धं फलमाह ॥ **सिद्धमिति** ॥

स० — **गृह्यमाणयोरित्यादि** ॥ एकं विज्ञानमित्यख्यातेर्भेदः । सविकल्पकमिति च वस्तुमात्रावगाहिनो निर्विकल्पकाद्व्यावृत्तिः । नेदं रजतमित्यादिभ्यश्च भेदाग्राहीति व्यावृत्तिः । घट इत्याद्येकवस्तुग्राहिविज्ञानमितरस्माद्भेदं न गृह्णाति उक्तरूपं चेत्यतस्तन्निवृत्त्यर्थं गृह्यमाणयोरित्युक्तम् । एकैकविज्ञानेन तु भेदवत्पटादेरग्रहणात्तद्व्यावृत्तिः ॥ **वेदप्रामाण्यसिद्ध्यंगतयेति** ॥ अख्यातेरिति शेषः ॥ **विद्यते भ्रम इति** ॥ प्रयोजनमस्तीत्येवंरूपो भ्रमोऽस्तीत्यर्थः । मध्यमवृद्धव्यवहारेप्येकविज्ञानोपारोहिणोः संसर्गिणोरसंसर्गाग्रहादेव व्यवहारोपपत्तौ बालस्य संसर्गज्ञानानुमानानुदयात् शब्दप्रामाण्यभङ्गप्रसङ्गः । एवमनुमानाभास इव सदनुमानेऽपि असंसर्गाग्रहादेव संसर्गव्यवहारोपपत्तावनुमानोच्छेद इति भावेन भ्रम इत्युक्तम् ।

प० — तार्किकैकदेशिमतमनूद्य निराह ॥ **अन्यस्त्विति** ॥ **गृह्यमाणयोरिति** ॥ ज्ञायमानयोरित्यर्थः । तेन स्मर्यमाणारोपस्य संग्रहः । नत्वनुभवविषययोरित्यर्थः । रजतसंस्कारेत्यग्रेतनग्रन्थविरोधात् ॥ **तत्संसर्गासंसर्गाविति** ॥ रजतस्य शुक्तीदमंशस्य च तादात्म्यभेदावविषयीकुर्वेदित्यर्थः ॥ **अयथाव्यवहार इति** ॥ अन्यार्थिनोऽन्यत्र प्रवृत्तिरन्यस्यान्यात्मनाभिलपनं चेत्यर्थः । तन्निरासादेव भेदाग्रहनिरासादेव ॥ **सर्वत्रेति** ॥ सत्यस्थलेऽपीत्यर्थः ॥ **अत्रैवेति** ॥ भ्रमत्वेन विमतस्थल एवेत्यर्थः ॥ **प्रागुक्तेति** ॥ प्राभाकरमतदूषणोक्तिप्रस्तावे किमयमेव व्यवहारो भेदाग्रहादन्यस्त्वभेदग्रहात् । उत सर्वोऽपि भेदाग्रहात् । नाद्यः । अनियतकारणतापातादित्यादिनोक्ताद्यपक्षदोषाणां नन्वस्तु तर्हि द्वितीयः पक्ष इत्यादिनाऽनूद्योक्तद्वितीयपक्षदोषाणां चाशेषाणामविशेषादित्यर्थः ॥ **कणभक्षाक्षचरणेति** ॥ कणादाक्षपादपक्षपातिनेत्यर्थः ॥ प्राभाकराणां वेदप्रामाण्यसिद्ध्यङ्गतयाऽस्त्यख्यातिस्वीकारे प्रयोजनमिति विद्यते भ्रम इति प्रागुक्तं शङ्कोत्तराभ्यां व्यनक्ति **नन्वित्यादिति शक्यत्वादितीत्यन्तेन** ॥ **अन्यत इति**॥ प्रत्यक्षादितोऽधिगतत्वादित्यर्थः । इह खलु केचिद्यथार्थं सर्वं विज्ञानमिति मन्यमाना नान्यथाख्यातिं सहन्त इत्यादिनैतावत्पर्यन्तेन ग्रन्थेन सिद्धार्थमनुवदति ॥ **सिद्धमेतमिति** ॥ किं तदित्यत आह ॥ **शुक्तिरिति** ॥ अन्यदन्यात्मनाऽवभासत इत्यस्योपलक्षणमेतत् । उक्तं प्रमेयं क्वचित्स्थलविशेषे प्रतिपादयितुं शुक्ती रजतत्वेनेति विशिष्योक्तिः ॥

या० — तार्किकैकदेशिमतमपाकर्तुमनुवदति ॥ **अन्यस्त्विति** ॥ **गृह्यमाणयोरिति** ॥ अत्रैकं विज्ञानं विभ्रम इत्यन्यथाख्यातिमतवैलक्षण्यसूचनायोक्तम् । निर्विकल्पकव्यावृत्तये सविकल्पकमिति । नेदं रजतमिति बाधव्यावृत्तये भेदाग्राहीति । अयं घट इति ज्ञानमपि पटादिप्रतियोग्यनुपस्थितिदशायां ततो भेदाग्राहि भवत्येव । अतस्तद्व्यावृत्तये गृह्यमाणयोरिति ।

श्री०— गृह्यमाणयो रजतेदमंशयोः । तयो रजतशुक्तीदमंशयोः । उपारोहिणो रूपारूढयोः । विषययोरिति यावत् । अन्यथा व्यवहारो रजतार्थिनः शुक्तिकायां प्रवृत्तिरित्यर्थः । इदमुक्तं भवति । एतन्मते पुरतः प्रतीयमानं रजतमिदंपदार्थवत्सदेव । तदुभयविषयकं ज्ञानमप्येकमेव । एकज्ञान-विषययोरिदंपदार्थरजतयोर्भेदाग्रहादयथार्थव्यवहारोऽयथार्थप्रवृत्तिर्भवति । एकज्ञानविषययोर्भेदाग्रहप्रस-ञ्जितायथार्थव्यवहारनिरासकत्वादेव नेदंरजतमिति विवेकज्ञानं बाधकमित्युच्यते । बाधकत्वप्रसिद्ध्या चैकज्ञानविषययोरिदंपदार्थरजतयोर्विवेकाग्रहादेव तदुभयविषयकैकज्ञानस्य भ्रान्तित्वमिति लोकप्रवादः । तथा च प्राभाकरमते ज्ञानद्वयमेतन्मते तु ज्ञानमेकमित्येव भेदः । तज्जन्यप्रवृत्तेरयथार्थत्वादेव तज्जनक-मेकमिदंज्ञानं भ्रमरूपमित्युच्यते । वस्तुतस्तु न भ्रमरूपं ज्ञानमस्तीत्येवं पूर्वमतैतन्मतयोर्ज्ञानद्वित्वज्ञानैक-त्वाभ्यामेव विशेष इति द्रष्टव्यम् ॥ **प्रागुक्तविकल्पदोषाणामिति** ॥ सविकल्पकोच्छेदादृष्टकल्पनादि-दोषाणामित्यर्थः ॥ **वेदप्रामाण्यसिद्धीति** ॥ अहो बत महानेष प्रमादो धीमतामपि । ज्ञानस्य व्यभिचारित्वे विश्वासः किं निबन्धन इति तद्वचनादिदंरजतमिति ज्ञानस्याप्रामाण्ये वेदजन्यज्ञानेऽपि अप्रामाण्यशङ्का स्यादतस्तत्परिहाराय ज्ञानमात्रं यथार्थमित्यङ्गीकृत्यान्यथाख्यातिर्न स्वीकृतेत्यर्थः । भ्रम आग्रहविशेषः । कणभक्षः कणादः । अक्षचरणोऽक्षपादः । परमतप्रमोषोऽख्यातिस्वीकारेण प्राभाकर-मतचौर्यम् ॥ **असत्ख्यातीति** ॥ रजतस्यासत्त्वाङ्गीकारेऽसतोऽपि ख्यातिः प्रतीतिः प्रसज्यते । सा च न युक्ता । यदसत्तन्न प्रतीयत इति नियमादसतः प्रतीत्यन्यथाऽनुपपत्त्या रजतस्य सत्त्वमङ्गीकृतमित्यर्थः ॥ नन्वसत्ख्यात्यभावेऽसद्विषयकप्रवृत्त्यभावः कुत इत्यत आह ॥ **न हीति** ॥ **तत्किमिति** ॥ एतावन्तं कालं शुक्तिकाशकलमेव रजतत्वेनाज्ञासिषमित्युत्तरकालीनानुभवबलेनात्यन्तासद्रजतात्मकतया शुक्त्यव-गाहिभ्रमरूपविशिष्टज्ञानमप्यनुभवसिद्धमेवेत्यर्थः ॥ **पदार्थेष्विति** ॥ पदार्थविषयकप्रमाजनकमित्यर्थः । अन्यतः प्रत्यक्षानुमानाच्च । तथा चानधिगतार्थगन्तृत्वाभावादप्रामाण्यमिति भावः । संसर्गे संसर्ग-विषयकप्रमाजनकमित्यर्थः । व्यवहारान् इदंरजतमित्यादीन् ॥ **शङ्कते** ॥ वेदजन्यज्ञानात्प्रवृत्ति-स्तावद्भावयति । सा प्रवृत्तिरपि भ्रमस्थल इवासंसर्गाग्रहादेव भवतु । न विशिष्टज्ञानादित्येवं तत्रापि शङ्का स्यादित्यर्थः ॥ **सेति** ॥ वेदजन्यज्ञानादपि प्रवृत्तिरसंसर्गाग्रहादेव भवतु न विशिष्टज्ञानादिति शङ्केत्यर्थः ॥ **तच्छङ्काया अपीति** ॥ विपर्ययाङ्गीकारपक्षेऽपि वेदजनितविज्ञाने विपर्ययशङ्काया अपौरुषेयत्वेन निराकर्तुं शक्यत्वादिति भावः ॥ **रजतत्वेनेति** ॥ अत्यन्तासद्रजतात्मकत्वेनेत्यर्थः ॥

च०— न्यायकल्पतरूदीरितमख्यातिमतान्तरं दुदूषयिषुरनुवदति अन्यस्त्वित्यादिकप्रतीयत इत्यन्तेन ॥ **शुक्तीदमंशेति** ॥ शुक्तिरूपो य इदमंशस्तद्विषयमित्यर्थः । परमतप्रमोषः गुरुमतापहारः ।

अन्यतोधिगतत्वात् । यथायथं प्रत्यक्षादिजनितज्ञानविषयत्वात् ॥ **सकललोकव्यवसितेति** ॥ निश्चितेत्यर्थः ॥ **शुक्ती रजतत्वेनेति** ॥ ढ्रलोप इत्यनेनात्र दीर्घः ॥

**सु०— तत्रारोप्यमाणं रजतं सदेवेति केचिदातिष्ठन्ते । तथा हि । यद्धि यथावभासते तत्तथेत्यौत्सर्गिको न्यायः । अपवादस्तु बलवद्बाधकोपनिपातात् । तथा चेदं च रजतं च तत्तादात्म्यं चेति त्रितयमिहावभासते । इदं च रजतत्वं च तत्संसर्गश्चेति वा । तत्र रजतरजतत्वयोरिदंकारास्पदस्य च बाधकाभावान्नासत्त्वमुपपद्यते, संवादसद्भावाच्च । तत्तादात्म्यस्य संसर्गस्य वा बाधकाद्विसंवादाच्चासत्त्वमस्तु । यथोक्तम् । 'असंभवि च यावत्तु तावत्संपरिहीयतामि'ति । न च नेदं रजतमिति बाधबोधो रजतस्याप्यसत्त्वमावेदयतीति वाच्यम्; तस्य तादात्म्यमात्रगोचरत्वेनोपपत्तौ रजतगोचरत्वकल्पनायां गौरवप्रसङ्गात् । यथाहुः 'एकदेशापवादेन कल्प्यमाने च बाधके । न सर्वबाधनं युक्तमिति न्यायविदः स्थिताः' इति ॥ किञ्च रजतस्यात्यन्तासत्त्वे प्रतिभासो नोपपद्यते । स्थिते चैवं सत्त्वे बाधसमये पुरोऽदर्शनाद्देशान्तरे सत्त्वमास्थीयते । दोषदूषितं चक्षुः शुक्तिशकलमात्रसन्निकृष्टमपि विप्रकृष्टरजतात्मना तदा दर्शयतीति को दोष इति ॥ एतदप्ययुक्तम् ॥ सत्त्वेऽपि रजतस्यासदेव रजतं प्रत्यभादित्यनुभवविरोधात् । अत्रासत्त्वेऽप्यन्यत्र सत्त्वमङ्गीक्रियत इति चेन्न । अत्र प्रतीतस्यैवान्यत्र सत्त्वे मानाभावात् ।**

व्या०— तत्रासतः सज्ज्ञानाधीनत्वात्सत्पक्षस्य तत्रापि बहिःसत्त्वनिरासाधीनतयाऽन्तःसत्त्वसिद्धेर्हैतुकपरिगृहीततया च बलवत्त्वाद्बहिःसत्त्वपक्षस्य प्रथमोपस्थिततया प्रथमनिरसनं युक्तमित्याशयेनाह ॥ **तत्रेति** ॥ ननु न तावद्रजतं पुरोदेशे सत् । अदर्शनात् । नापि देशान्तरे । प्रमाणाभावादित्यतो विमतं रजतं देशान्तरे सत्पुरोऽसत्त्वे सति सत्त्वात्संमतवदिति विवक्षितं परिशेषानुमानं स्थिते चैवमित्यादिना वक्तुं तत्र विशेष्यासिद्धिशङ्कायां विमतं सत्तथा प्रतीयमानत्वादितिविवक्षितानुमाने शुक्तिरजततादात्म्यादौ व्यभिचारशङ्कायामुत्सर्गापवादविषये व्यभिचारचोदनमतिप्रसङ्गकरमित्युपोद्घातेनाह ॥ **यद्धीति** ॥ यद्वा प्रमाणाभावात्कथं सत्त्वमित्यतो विमतं सत्तथा प्रतीयमानत्वादिति विवक्षितानुमाने उक्तरीत्या व्यभिचारशङ्कानिरासकत्वेन यद्धीत्यादिग्रन्थं योजयित्वा तर्हि प्रवृत्तस्य कथं रजताप्राप्तिः कथं वा भ्रमत्वाद्युपपत्तिरित्याशङ्कानिरासकत्वेन स्थिते चेत्यादिग्रन्थो योजनीयः । ननु तर्हि बाधकसद्भावाद्रजतमप्यपवादविषय एवास्त्वित्यतो बाधकस्य तादात्म्यसंसर्गविषयकत्वेनान्यथासिद्धिं वक्तुं

तादात्म्यसंसर्गारोपभेदेन भ्रमविषयं तावन्निरूपयति ॥ **तथा चेति** ॥ नन्वेवं विषयव्यवस्था न युक्ता नियामकाभावादित्यतो नियामकोक्तिपूर्वं तामाह ॥ **तत्रेति** ॥ इदंकारास्पदस्य चेति दृष्टान्ततयोपात्तं संवादेति । बाधोत्तरमपि पुरोवर्तिप्राप्तेरिव देशान्तरे रजतस्यापि प्राप्तेरित्यर्थः ॥ **विसंवादाच्चेति** ॥ शुक्तिरजततादात्म्यसंसर्गयोः कदाऽपि कुत्राप्यप्राप्तेरित्यर्थः । बाधकसत्त्वासत्त्वयोर्विषयसत्त्वासत्त्व-प्रयोजकत्वे संमतिमाह ॥ **यथोक्तमिति** ॥ यावत्तावदित्यवधारणे । ननु बाधाभावोऽसिद्धो नेदं रजतमित्यस्यैव रजतबाधत्वादित्याशङ्कते ॥ **न चेति** ॥ तादात्म्येत्यतःपूर्वमसत्त्वेनोभयसंमतेति शेषः । बाधकस्यैकदेशविषयत्वकल्पना युक्तेत्यत्राभियुक्तसंमतिमाह ॥ **यथाऽऽहुरिति** ॥ न्यायविदो लाघव-गौरवन्यायविदः । न चैवं बाधकस्य रजतमात्रविषयकत्वमस्तु लाघवस्यैवमप्यनुग्रहादिति वाच्यम् । रजतस्य सत्त्वे तत्तादात्म्यासत्त्वोपपत्तावपि रजतस्यैवासत्त्वे तत्तादात्म्यसत्त्वस्य कथमप्यनुपपत्त्या बाधक-स्योभयविषयकत्वावश्यंभावेन गौरवापरिहारात् । संवादविसंवादसद्भावस्योक्तत्वाच्च । अत्रैव युक्त्यन्तर-मप्याह ॥ **किञ्चेति** ॥ रजतस्य सत्त्वे तद्धर्मभूतस्यासतोऽपि तादात्म्यस्य सदुपरक्ततया भानोपपत्तावपि धर्मिभूतरजतस्यैवासत्त्वेन कथमपि प्रतिभासोपपत्तिरिति भावः । ननु तर्हि यथा प्रतिभासं पुरोदेश एव रजतस्य सत्त्वापत्त्या बाधाद्यनुपपत्तिरित्यत आह ॥ **स्थिते चैवमिति** ॥ नन्वेवं रजतज्ञानस्यापरोक्षत्वा-नुपपत्तिः । विप्रकृष्टेन सन्निकर्षासंभवेन रजतसन्निकर्षाजन्यत्वात् । न च शुक्तिसन्निकर्षजन्यतया तस्यापरोक्षत्वमिति वाच्यम् । तथा सति तज्ज्ञाने रजतप्रतिभासानुपपत्तेरित्यत आह ॥ **दोषेति** ॥ भाष्यकारेण स्थलान्तरे स्फुटोदितम् । अन्यथा विज्ञानमित्यत्रापि सूचितं दोषं रजतस्य सत्त्वाङ्गीकारे दर्शयति ॥ **सत्त्वे सतीति** ॥ अनुभवेऽन्यथासिद्धिमाशङ्कते ॥ **अत्रेति** ॥ **मानाभावादिति** ॥ न च पुरोदेशेऽसत्त्वे सति सत्त्वं तस्यान्यत्र सत्त्वे प्रमाणमुपन्यस्तमिति वाच्यम् । तत्रैव हेतुविशेष्यासिद्ध्यर्थ-मनुभवविरोधोपन्यासात् । तद्बलेनानुभवसङ्कोचे च सिद्धेऽनुभवसङ्कोचे च विरोधाभावात्पुरोऽसत्त्वेनान्यत्र सत्त्वसिद्धिस्तत्सिद्धौ चैतत्सङ्कोचसिद्धिरिति परस्पराश्रयापत्त्याऽनुभवसङ्कोचाय प्रमाणान्तरमेव वक्तव्यम् । तच्च नोपपद्यत इति भावः । अत एव प्रमाणान्तरनिरासानन्तरमनुभवविरोधेन तदप्यतिदेशेन निरस्यतीति द्रष्टव्यम् ।

स० — **संवादसद्भावाच्चेति** ॥ यद्यपि पुरोवर्तिसंसृष्टतया प्रतीते रजते न संवादस्तथापि रजतमिति प्रतीतिविषये रजतमात्रांशे संवादोऽस्ति । क्वचिद्रजतमिति सामान्याकारेण प्रतीत्यन्तर-संभवादिति भावः ।

प० — **तत्रेति** ॥ एवं सिद्धे सतीत्यर्थः । केचित् प्राचीनतार्किकाः ॥ **इदंकारेति** ॥ इदं-त्वास्पदस्येत्यर्थः । परिहीयतां परित्यज्यताम् । सत्त्वेन नाङ्गीकार्यमित्यर्थः । न केवलं बाधस्यान्यथो-

पपत्त्या रजतसत्त्वे मानाभावात्सत्त्वमुपेयम् । किन्तु प्रतीत्यन्यथोपपत्त्या चेत्याह ॥ **किं चेति** ॥ तावता देशान्तरे सदिति कुत इत्यत आह ॥ **स्थिते चैवमिति** ॥ अदर्शनादिति भावः ॥ **तदिति** ॥ शुक्तिशकलमादर्शयतीत्यर्थः ॥

या०— आरोप्यस्य रजतादेरन्यत्र सत्त्वे पुरोदेशेऽसत्त्वे सति सत्त्वादिति परिशेषं प्रमाणं विवक्षुस्तत्र विशेष्यासिद्धिवारणाय तस्य सत्त्वं तावत्साधयति ॥ **यद्धि यथेत्यादिना** ॥ **संवाद-सद्भावाच्चेति** ॥ रजतमिति सामान्याकारेण प्रतीत्यन्तरसद्भावादित्यर्थः । देशान्तरे रजतप्राप्तिरूप-संवादसद्भावादित्यर्थ इत्यप्याहुः । आरोप्यस्य सत्त्वेऽर्थापत्तिमप्याह ॥ **किं चेति** ॥ **अनुभव-विरोधादिति** ॥ तथा च सत्त्वसाधकानुमानार्थापत्त्योर्बाधितविषयत्वमिति भावः ॥ **मानाभावा-दिति** ॥ तथा च नासत्त्वप्रतीतेः सङ्कोचो युक्त इति भावः ।

श्री०— **असंभवि च यावत्त्विति** ॥ रजततादात्म्यस्य रजतत्वसंसर्गस्य च सत्वं न संभवतीति । तावत्तावतः । सत्त्वं संपरिहीयतां त्यज्यतामित्यर्थः ॥ **एकदेशेति** ॥ तादात्म्यमात्रे-त्यर्थः । अनुभवस्य सङ्कोचमाशङ्कते ॥ **अत्रेति** ॥ पुरोदेश इत्यर्थः ।

**सु०— तथा हि । भ्रान्त्यनुभवो वा तत्र प्रमाणम् , बाधानुभवो वा , भ्रान्त्यनु-पपत्ति,र्बाधानुपपत्तिर्वा ॥ नाद्यः तस्याप्रमाणत्वात् , अत्रैव सत्त्वावेदकत्वाच्च ॥ न द्वितीयः तस्येह रजतनिषेधात्मनोऽन्यत्र सत्त्वासत्त्वयोरौदासीन्यात् ॥ न तृतीयः । भ्रान्तेः पुरोवर्ती-न्द्रियदोषादिभिर्विनाऽनुपपद्यमानायास्तन्मात्राक्षेपहेतुत्वात् । असत्त्वे कथं प्रतीतिरिति चेत् ; सत्त्वेऽपि कथम् । न ह्यन्यत्र सत्त्वमत्र प्रतीतेरुपकारि । इन्द्रियसन्निकर्षार्थं वा तदास्थेयम् , संस्कारसिद्ध्यर्थं वा । नाद्यः । विप्रकृष्टेन सन्निकर्षाभावात् , पुरोवर्तिसन्निकर्षमात्रेणैव भ्रान्त्यु-त्पादाङ्गीकाराच्च । न द्वितीयः । संस्कारो हि रजतानुभवमाक्षिपेत् , अनुभवश्च यथार्थो रजतसत्ताम् ; अत्र प्रतीतस्यैवान्यत्र सत्ता कुतः कल्प्या । किञ्च घटान्तरं विनष्टोत्पत्स्यमान-घटान्तरतया यदा प्रत्येति, तदा कथम् । न हि विनष्टोत्पत्स्यमानयोरन्यत्र सत्ताऽस्ति । कालान्तरेऽस्तीति चेत्सत्यम् ; न तस्या भ्रान्तावुपयोगं साक्षात्पश्यामः । संस्कारादिना हि तदुपयोगः । स च रजतान्तरानुभवमात्रेण भविष्यतीति व्यर्था तस्यैवान्यत्र सत्त्वकल्पना । एतेन प्रवृत्त्यनुपपत्तिरपि परास्ता । किञ्चासतः प्रतिभासासंभवे तादात्म्यमपि न प्रतिभासेत; तस्य कुत्राप्यभावात् । धर्मधर्मिभावस्तु वैधर्म्यमात्रम् ॥ न चतुर्थः । बाधस्यान्यत्र सत्तया**

**विनाऽनुपपत्त्यभावात् । अत्रैव रजतसत्तानिषेधानुपपत्त्याऽन्यत्र सत्त्वसिद्धिरिति चेन्न; तस्यात्रैव प्राप्तत्वेनैवोपपत्तेः ॥ एतेन यद्यथावभासते तत्तथैवेत्यादि परास्तम् । असदेव रजतं प्रत्यभादिति रजतासत्त्वप्रमाणस्योपन्यस्तत्वात् । तद्विषयसङ्कोचप्रमाणस्य निरस्तत्वात् ॥ तत्किं सर्वत्रारोप्यमत्यन्तासदेव । उच्यते । यत्रारोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसत्, यथा दूरस्थयोश्चूतपनसयोः; एक एवायं चूत इति बाधोत्तरकालमपि स्वरूपद्वयानुवृत्तेः । यत्र पुनरसन्निहितमारोप्यम् तत्र तत्तादात्म्यं चोभयमप्यसत् । उक्तन्यायेनेति ॥ तदेवं नैवंविधान्यथाख्यातिवादोऽप्युपपन्नः ॥ ३ ॥**

**वा०** — ननु कथं मानाभाव इत्यतः प्रकृते संभावितप्रमाणानि निराकर्तुं विकल्पयति ॥ **तथा हीति** ॥ प्रत्यक्षमर्थापत्तिर्वा मानं तदुभयमपि द्विरूपमिति पक्षचतुष्टयोक्तिरिति ध्येयम् । भ्रान्तेरप्रमाणत्वेनोपन्यासानर्हत्वमुक्तम् । अङ्गीकृत्यापि भ्रान्तिप्रमाणत्वमन्यत्र सत्त्वाविषयकत्वात्तत्र तदुपन्यासानौचित्यमाह ॥ **अत्रैवेति** ॥ अन्यत्र सत्त्वाद्यौदासीन्यमुपपादयितुं बाधविषयप्रदर्शनमिह रजतेति । यद्धि प्रमितं स्वयमनुपपद्यमानं स्वोपपादनाय यदपेक्षते तत्तदाक्षिपतीति व्याप्तेर्भ्रान्तेश्च स्वकारणेन विनाऽनुपपद्यमानायास्तदाक्षेपकत्वेऽपि न देशान्तरे रजतादिसत्त्वाक्षेपकत्वमित्याह ॥ **भ्रान्तेरिति** ॥ आदिपदेनेन्द्रियसन्निकर्षसंस्कारादिपरिग्रहः । पुरोवर्त्यादिवद्रजतादिसत्त्वस्यापि प्रतीतिप्रयोजकतया तदभावेन भ्रान्तिरित्याशङ्कते ॥ **असत्त्व इति** ॥ **सत्त्वे कथमिति** ॥ प्रतीतिरित्यनुवर्तते । सत्त्वस्य प्रतीत्युपयोगो न तावत्साक्षात्तददर्शनादपि तु सन्निकर्षादिसिद्धिद्वारा परम्परयैव । एवं च पुरोदेशसत्तायाः सन्निकर्षप्रयोजकत्वेन यस्यकस्यचिद्रजतस्य सत्तायाः संस्कारप्रयोजकत्वेन तत्र तत्प्रतीत्युपयोगेऽपि नान्यत्र तत्सत्तायाः पुरोदेशतत्प्रतीत्युपयोग इत्याह ॥ **न हीति** ॥ एतदेव विशदयति ॥ **इन्द्रियेति** ॥ नन्वेवं तत्प्रतीतेरपरोक्षत्वानुपपत्तिरित्यत आह ॥ **पुरोवर्तीति** ॥ मात्रपदेन रजतसन्निकर्षमात्रं व्यावर्त्यते । न तु दोषसंस्कारादिकम् ॥ **संस्कारो हीति** ॥ रजतत्वप्रकारकसंस्कार एव हि भ्रान्तिहेतुः । स च रजतत्वप्रकारकानुभवेन विनाऽनुपपद्यमानस्तमेवाक्षिपति । रजतत्वप्रकारकानुभवोऽपि यथार्थ एव स्वविषयरजतसत्ताक्षेपकोऽयथार्थस्यैतद्वदेव स्वविषयसत्तानाक्षेपकत्वात् । एवं च यत्किञ्चिद्रजतानुभवजन्यसंस्कारमात्रेण जायमानाया भ्रान्तेर्नैतत्प्रतीतरजतस्यान्यत्र सत्ताक्षेपकत्वम् । न चैतत्प्रतीतरजतानुभवजन्यसंस्कारजन्यत्वात् भ्रान्तेस्तस्या अभ्रान्तिपूर्वकत्वाच्च भ्रान्तिमूलानुभवस्य याथार्थ्यात्तदनुभवविषयस्यान्यत्र सत्त्वे अवश्यं कल्पनीयेऽत्र प्रतीतस्य देशान्तरे सत्त्वं सिद्धमेवेति वाच्यम् । यत्किञ्चिद्रजतानुभवजन्यसंस्कारेणैव भ्रान्तिसंभवेनैतद्रजतानुभवजन्यसंस्कारस्यैव भ्रान्तिहेतुत्वे कल्पकाभावेन गौरवापत्त्याऽनुभव-

विरोधाच्च नैव तत्कल्पना युक्ता । न च विशिष्टज्ञानस्य विशेषणतावच्छेदकप्रकारकविशेषणज्ञानसाध्यता-नियम एव तत्कल्पक इति वाच्यम् । लाघवेन विशेषणतावच्छेदकप्रकारकज्ञानस्यैव तत्र कारणत्वेन त्वदुक्तनियमस्यैवासिद्धेरिति भावः । अन्यत्र सत्ताया भ्रान्त्युपयोगं वदतोऽपि भ्रान्तिसमानकालीन-देशान्तरसत्ता तदुपयोगिनीत्यभिमतमुत यदा कदाचित् । नाद्यः । घटान्तरं विनष्टोत्पत्स्यमानघटान्त-रात्मतया यदा प्रत्येति तत्रारोपकाले आरोप्यस्यान्यत्र सत्ताया अभावाद्व्यभिचारः । यदा कदाचिदिति द्वितीयेऽपि यदा कदाचित्सत्तायाः साक्षाद् भ्रान्त्युपयोगादर्शनात्तज्ज्ञानजन्यसंस्कारतज्जन्यस्मरणादिद्वारेणैव उपयोग इत्यकामेनापि स्वीकर्तव्यम् । तस्य च संस्कारादे रजतारोपस्थले उक्तरीत्याऽन्यथासिद्धौ व्यर्था रजतस्यान्यत्र सत्ताकल्पनेत्याह ॥ **किञ्चेति** ॥ ननु रजतार्थिप्रवृत्ते रजतज्ञानसाध्यत्वाद्रजतस्यात्यन्तासत्त्वे तज्ज्ञानासंभवेन तत्साध्यप्रवृत्त्यनुपपत्तिरिति दूषणं च प्रतीतेर्यत्किञ्चिद्रजतानुभवजन्यसंस्कारमात्रेणोपपन्नाया देशान्तरेऽपि तत्सत्तानपेक्षत्वेनात्यन्तासत्त्वेऽप्युपपत्तेस्तत्साध्यप्रवृत्तेरपि नानुपपत्तिरित्युक्तन्यायेनैव परिहृत-मवगन्तव्यमित्याह ॥ **एतेनेति** ॥ यद्रेष्टाभेदज्ञानस्यैव प्रवर्तकत्वाद्रजतस्यात्यन्तासतोऽनिष्टत्वात् कारणा-भावेन प्रवृत्त्यनुपपत्तिदूषणं चेष्टतावच्छेदकप्रकारकाभेदज्ञानस्य प्रवर्तकत्वात्तस्य चोक्तरीत्या रजतत्व-प्रकारकानुभवजन्यसंस्कारमात्रेण संभवान्न प्रवृत्त्यनुपपत्तिरिति समाहितमवगन्तव्यमित्याह ॥ **एतेनेति** ॥ रजतस्यासत्त्वेऽपि तत्प्रतीतिं तादात्म्यप्रतिबन्ध्याऽपि घटयति ॥ **किञ्चेति** ॥ ननूक्तमत्र रजतस्य सत्त्वे सदुपरक्ततादात्म्यरूपतद्धर्मस्य प्रतिभानसंभवेऽपि न धर्मिभूतरजतस्यासतः प्रतिभानसंभव इति तत्राह ॥ **धर्मेति** ॥ पुरोवर्तीन्द्रियसन्निकर्षदोषारोप्यसंस्कारादिसामग्रीसद्भावे धर्मिणोऽप्यसतः प्रतिभासेऽनुपपत्ते-रभावात्सामग्र्यभावे च धर्मस्याप्यसतः प्रतिभासानुपपत्तेर्धर्मधर्मिभावसदुपरक्तत्वोपन्यासस्य व्यर्थत्वादिति भावः । इह सत्तानिषेधमात्रस्यान्यत्र तत्सत्ताक्षेपकत्वं वाऽन्यत्रापि तस्यासत्त्वे इहैव तन्निषेधानुपपत्त्येहैव तन्निषेधस्य वा । नाद्य इत्याह ॥ **बाधस्येति** ॥ द्वितीयं शङ्कते ॥ **अत्रैवेति ॥ तस्येति** ॥ प्रसक्त-प्रतिषेधात्मकत्वाद्बाधस्य सर्वत्रासतोऽपि रजतस्यान्यत्राप्रसक्त्याऽत्रैव च प्रसक्त्येहैव निषेधोऽन्यथासिद्ध इत्यर्थः । रजतस्य सत्त्वाङ्गीकारे बाधकतयोक्तमनुभवं परोपन्यस्तप्रमाणनिरासेऽपि व्यापारयति ॥ **एतेनेति** ॥ **असदेवेति** ॥ तथा चायमप्यपवादविषय एवेति भावः । अपवादकान्यथासिद्धिनिरासमुक्तं स्मारयति ॥ **तद्विषयेति** ॥ नन्वेवमारोप्यतादात्म्ययोरुभयोरसत्त्वमारोपमात्रे वा क्वचिदेव वा । नाद्यः । दूरस्थचूतपनसयोश्चूततादात्म्यारोपस्थले आरोप्यचूतसत्त्वस्य प्रमाणसिद्धतया तत्र तादात्म्यमात्रासत्त्वस्यैव वक्तव्यत्वात् । न द्वितीयः । उभयासत्त्वतादात्म्यमात्रासत्त्वप्रयोजकारोपोपाधिविशेषस्य दुरवधारणत्वा-न्नियामकविशेषादर्शनाच्चेत्याशयेन गूढाभिसन्धिः शङ्कते ॥ **तत्किमिति** ॥ आरोप्यसन्निहिताधिष्ठान-कारोपत्वतदसन्निहिताधिष्ठानकारोपत्वयोरुपाधित्वाद्बाधोत्तरकालीनारोप्यस्वरूपानुवृत्तितदभावयोरेव निया-

मकत्वान्न द्वितीयपक्षेऽनुपपत्तिरित्याशयेन परिहरति ॥ **उच्यत इति** ॥ एक एवायमिति तादात्म्यारोपत्वप्रदर्शनम् । चूत इति चूतस्यारोप्यत्वप्रदर्शनम् । चूतयोरेव तादात्म्यारोपस्थले चूतस्यारोप्यत्वासंभवादन्यग्रहणम् । आरोपोपपादनाय दूरस्थत्वग्रहणम् ॥ **बाधोत्तरमिति** ॥ चूतपनसाविमौ न त्वेक एवायं चूत इति बाधोत्तरमित्यर्थः ॥ **यत्र पुनरिति** ॥ नन्वारोप्यस्यासन्निहितत्वेऽपि रजते वा शुक्तिकायामेव वा गृहस्थरजतमिदमित्याद्यारोपस्थले तादात्म्यमात्रस्यासत्त्वं वक्तव्यम् । बाधोत्तरं स्वरूपद्वयानुवृत्तेस्तत्कथमेतदिति चेन्न । आरोप्यासन्निहिताधिष्ठानकारोपस्थले प्रायेणोभयारोपाभिप्रायेणैतद्ग्रन्थप्रवर्तनात् । अतः पूर्वमाकर एवाधिष्ठानासन्निहितविनष्टोत्पत्स्यमानघटयोः सतोरप्यारोप्यत्वमुक्तमिति ध्येयम् । यद्वेदं तद्रजतमित्यादौ विनष्टोत्पत्स्यमानघटादिस्थले च तादात्म्यमात्रस्यैवारोप्यत्वं यत्र चोभयारोपोऽधिष्ठानासन्निधानं चारोप्यस्य तदभिप्रायेणैतद्ग्रन्थप्रवृत्तिः । न चैवं रजतारोपेऽप्येवमेवास्त्विति वाच्यम् । बाधोत्तरं विनष्टः स उत्पत्स्यमानः स नायं स इति तद्रजतं गेहेऽस्ति नेदं तदिति स्वरूपद्वयानुवृत्तिवदत्रारोपितमन्यत्रास्ति नात्रेति प्रत्ययाभावात् । प्रत्युत नास्ति नासीन्न भविष्यतीति रजते सर्वदेशकालासंबन्धप्रत्ययेन वैषम्यात् । तदिदमुक्तमुक्तन्यायेनेति रजतासत्त्वग्राहकप्रमाणसद्भावेन तत्सङ्कोचकप्रमाणनिराकरणेन चेत्यर्थः । यद्वा गेहस्थरजतविनष्टघटादेः सत्यरजतस्य च प्रधानत्वात्तज्ज्ञानजन्यसंस्कारे सति शुक्त्यादिसन्निकृष्टेन्द्रियेणासद्रजततादात्म्यवदेतद्देशसंबन्धयसद्गेहस्थरजतैतत्कालसंबन्धयसद्विनष्टघटादितत्तादात्म्ययोरुभयोरप्यारोप उभयोरप्यसत्त्वं चेत्यारोप्यासन्निहिताधिष्ठानकारोपस्थल उभयोरप्यसत्त्वमिति यथाश्रुत एव ग्रन्थः साधुः । पूर्वग्रन्थस्याप्ययमेवाशयः । रजतं गेह एवास्ति नेदं तदित्यादिव्यवहारा अपि न सन्त्येव । सत्त्वे वा प्रधानसत्त्वाश्रयणेनौपचारिका इति द्रष्टव्यम् ॥ ३ ॥

स० — **भ्रान्त्यनुभवो वेति** ॥ भ्रान्त्यनुभवस्य रजतमात्रावगाहित्वादन्यत्र सत्त्वविषयकत्वं संभावितमिति विकल्पकोटिता । बाधानुभवस्य तु अत्र रजतनिषेधात्मनोऽन्यत्र सत्त्वावगाहित्वं संभावितमिति तत्कोटिता ॥ **भ्रान्त्यनुपपत्तिर्वेति** ॥ रजतस्यान्यत्राप्यसत्त्वे प्रतीतेरसंभवेन संस्काराभावे भ्रमानुपपत्तिरित्यर्थः । यद्वा रजतस्यासत्त्वे असतोऽप्रतीत्या भ्रान्तिरूपप्रतीतिरपि नोपपद्यत इत्यर्थः । बाधानुभवस्यान्यत्र सत्तानवगाहित्वेऽपि तदन्यथाऽनुपपत्त्या रजतस्यान्यत्र सत्त्वं सिध्यति । अत्र रजतं नास्ति इति निषेधस्यान्यत्र सत्त्वं विनाऽनुपपत्तेः । सद्भ्यामभावो निरूप्यत इति तत्सिद्धान्तादिति भावः । अथवा तद्विषयकस्यैव तत्र प्रामाण्याद्रजतस्यान्यत्र सत्त्वेऽपि रजतविषयकमेव प्रमाणं वाच्यम् । रजतविषयत्वं च भ्रान्तेर्बाधस्य वेत्यादि संभावितप्रमाणानि विकल्प्य दूषयति ॥ **तथा हीति** ॥ प्रत्यक्षमर्थापत्तिर्वेत्यर्थः । नन्विदं रजतमिति ज्ञानस्य विशिष्टज्ञानत्वाद्विशिष्टज्ञानस्य च विशेषणज्ञानजन्यत्वादेत-

द्रजतरूपविशेषणज्ञानत्वेन रजतस्मरणस्य रजतारोपं प्रति हेतुत्वादेतद्रजतस्मरणस्य चेतद्रजतसंस्कारसाध्यत्वात्तस्य च तदनुभवसाध्यत्वात्तस्य च तदिन्द्रियसन्निकर्षसाध्यत्वात्तस्य च विषयासत्त्वे असंभवात्तदन्यथाऽनुपपत्त्याऽन्यत्र सत्त्वमिति द्वितीयोस्त्विति चेत्तत्राह ॥ **न द्वितीयः संस्कारो हीति** ॥ विशेषणज्ञानमात्रस्य कारणत्वे प्रमेयमिति ज्ञानादपि विशिष्टप्रत्ययापत्त्या विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्यैव कारणत्वं वाच्यम् । तथा च लाघवाद्विशेषणतावच्छेदकप्रकारकज्ञानमात्रस्यैव तद्धेतुत्वम् । न तु तत्प्रकारकविशेषणज्ञानस्य गौरवात् । अतिप्रसङ्गपरिहारस्यैतावन्मात्रेण संभवात् । तथा च रजतारोपार्थं रजतत्वप्रकारकज्ञानस्यैव हेतुत्वेनापेक्षितत्वेन तद्रजतस्मरणस्यानपेक्षितत्वात्तत्प्रकारकस्मरणस्य च रजतान्तरानुभवजन्यसंस्कारेणापि संभवान्नान्यत्र सत्त्वसिद्धिरिति भावः । देशान्तरे सत्त्वं प्रदूष्य कालान्तरेऽपि तद् दूषयति ॥ **किं चेति** ॥ **एतेनेति** ॥ रजतसत्ताया रजतारोपं प्रति संस्कारद्वारोपयोगेन साक्षादुपयोगाभावोपपादनेन प्रतीतिद्वारकप्रवृत्तौ सत्तायाः साक्षादनुपयोगादसत्त्वेऽपि प्रवृत्तिरित्यर्थः । ननु धर्मिणोऽसत्त्वे प्रतीतिर्नोपपद्यते । तादात्म्यस्य तु धर्मत्वादसतोऽपि प्रतीतिः संभवतीत्यत आह ॥ **धर्मधर्मिभावस्त्विति** ॥ वैलक्षण्यमात्रमेतन्न प्रयोजकम् । अपरं तु विनिगमकं न किमप्यस्तीत्यर्थः ॥ **अत्रैवेति** ॥ बाधाभावस्त्वन्यथासिद्ध इत्यर्थः ॥ **यत्रारोप्यमिति** ॥ अत्र सन्निहितत्वमसन्निहितत्वस्यापि उपलक्षणम् । न चैवमुत्तरत्रासन्निहितत्वे उभयोरसत्वोक्तिविरोधः । बाधोत्तरकालं स्वरूपद्वयानुवृत्त्यभावे उभयोरसत्त्वाभिधानादित्याहुः । दूरस्थयोश्चूतपनसयोस्तादात्म्यमात्रमसदिति पूर्वेणान्वयः । कुत इत्यत आह ॥ **एक एवायं चूत इति** ॥ **बाधोत्तरकालमिति** ॥ एवं चेमौ चूताविति भ्रमाकारो द्रष्टव्यः । एक एवायं चूत इत्यनन्तरमपरस्तु पनस इति शेषः । तथा च पनसरूपाधिष्ठानवदारोप्यस्य चूतस्याबाधेन पुरोदेशे सत्यतया विषयीकरणान्नासत्वम् । रजतादिभ्रमे रजतादेः पुरोदेशे बाधेनासत्त्वस्यैव विषयीकरणादसत्त्वमेव तस्याङ्गीकार्यमिति भावः ।

प०— **सत्त्वेऽपीति** ॥ अन्यत्र सत्त्वेऽपीत्यर्थः । कुतो नोपकारीत्यतः प्रसक्तपक्षद्वयमाशङ्क्य उपकाराभावं व्यनक्ति ॥ **इन्द्रियेति** ॥ **तदिति** ॥ अन्यत्र सत्त्वमित्यर्थः । ननु भ्रान्तिहेतुसंस्कारः स्वजनकानुभवविषयमेवान्यत्रावभासयतीत्यतो नायं नियम इति भावेनाह ॥ **किं च घटान्तरमिति** ॥ गेहे घटो मया निहितः तं त्वं ग्रहाणेति चैत्रेणोक्तो मैत्रः श्वो गृहीताऽस्मीत्यवदत् । तन्मध्ये स घटो नष्टोऽन्यस्तु तत्स्थाने केनचिन्निहितः । मैत्रश्च परेद्युस्तत्र गत्वा तमेव घटं चैत्रेणोक्तघटत्वेन भ्राम्यति चेत्तदा कथमित्यर्थः । एवमुत्पत्स्यमानघटे तथा भ्रान्तिरप्युपपाद्या ॥ **एतेनेति** ॥ अन्यत्र सत्त्वस्य पुरोवर्तिनि प्रतीतावनुपयोगकथनेनेत्यर्थः । तेनैव प्रवृत्त्यनुपयोगस्यापि सिद्धेरिति भावः । यद्वा भ्रान्त्य-

नुपपत्तिनिरासेनेत्यर्थः । ननु धर्मत्वात्तादात्म्यमसदपि भासितुमर्हति न तु रजतम् तस्य धर्मित्वादित्यत आह ॥ **धर्मधर्मिभावस्त्विति** ॥ धर्मत्वं धर्मित्वमित्यर्थः । बाधानुपपत्तिर्वेति पक्षं निराह ॥ **न चतुर्थ इति** ॥ ननूक्तमसत्त्वग्राहिप्रमाणं तादात्म्यतत्संसर्गयोरेवासत्त्वग्राहि, न तु रजतस्यापि; तथात्वे रजतप्रतिभासानुपपत्तेरित्यत आह ॥ **तद्विषयेति** ॥ प्रतिभासानुपपत्तिरूपसङ्कोचकप्रमाणस्य न तृतीय इत्यादिना वैधर्म्यमात्रमित्यन्तेन निरस्तत्वादित्यर्थः ॥ **दूरस्थयोरिति** ॥ द्रष्ट्रपेक्षया दूरदेशस्थयोरेकदेशे सतोश्चूतपनसयोः दूरस्थत्वदोषेण पनसे चूततादात्म्यमारोप्यते एक एवायं चूतवृक्ष इति । चूत इतीतिशब्दस्य यत्रारोप्यमित्यादिपूर्ववाक्येनान्वयः । कुत एवं तत्रापि स्मर्यमाणारोपस्थल इवारोप्यस्य स्वरूपमप्यसत्त्वात्किं तादात्म्यमात्रासत्त्वोपगमेनेत्यत आह ॥ **बाधेति** ॥ नायं चूत एव किन्तु चूतपनसाविति बाधोत्तरकालमित्यर्थः ॥ **उक्तन्यायेनेति** ॥ असदेव रजतं प्रत्यभादित्यनुभवविरोधादित्यादिनोक्तन्यायेनेत्यर्थः ॥ **एवंविधेति** ॥ तादात्म्यमात्रं गृह्यमाणारोपे स्मर्यमाणारोपे च सर्वत्रासदित्येवंरूपान्यथाख्यातिवादः प्राचीननैयायिकोक्त इत्यर्थः ॥

**या०**—अन्योन्याश्रयायुक्तपरिशेषस्योक्तबाधप्रतीतिसङ्कोचकत्वस्य वक्तुमशक्यत्वेन सम्भावितं तत्सङ्कोचकं प्रमाणान्तरं विकल्प्य दूषयति ॥ **भ्रान्त्यनुभवो वेत्यादिना** ॥ दोषदूषितं चक्षुः शुक्तिकामात्रसन्निकृष्टमपि विप्रकृष्टरजतात्मना दर्शयतीति भ्रान्त्यनुभवस्यान्यत्रविद्यमानरजतविषयकत्वमुपपादितमस्तीति विकल्पकोटिता ॥ बाधानुभवस्य त्वभावज्ञानरूपतया तत्र चान्यत्र सत एव प्रतियोगिन उपनीतस्य भानाङ्गीकारात्तत्कोटिता ॥ **भ्रान्त्यनुपपत्तिर्वेति** ॥ अत्र प्रतीतस्य रजतस्यान्यत्राप्यसत्त्वे प्रतीतेरसम्भवेन संस्काराभावे भ्रमानुपपत्तिरित्यर्थः ॥ **बाधानुपपत्तिर्वेति** ॥ बाधानुभवस्यात्र सत्तानवगाहित्वेऽपि तदन्यथाऽनुपपत्त्याऽन्यत्र रजतस्य सत्त्वं सिध्यति । अत्र रजतं नास्तीति निषेधस्यान्यत्र सत्त्वं विनाऽनुपपत्तेः सद्भ्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यत इति तन्सिद्धान्तादिति भावः । ननु भ्रान्त्यनुभवस्य रजतसत्तांऽशे बाधाभावात्कथमप्रमात्वमित्यत आह ॥ **अत्रैवेति** ॥ स्यादेतदेवं यदि रजतं सदित्येव भ्रमाकारः स्यान्न ह्येवं किं त्वत्रैव सदिति । न ह्ययमत्राबाधितो नाप्यन्यत्र सत्तामवगाहते येन तत्सिद्धिर्भ्रान्त्यनुभवो न स्यात् । तथाच दोषदूषितं चक्षुरित्यादित्वदीयमुपपादनमप्रामाणिकमिति भावः ॥ **अत्र प्रतीतस्यैवेति** ॥ न चात्र प्रतीतस्यान्यत्र सत्त्वे विशेषणज्ञानासम्भवात्कथं तद्विशिष्टज्ञानमिति वाच्यम् । प्रमेयत्वेन दण्डज्ञाने तद्विशिष्टप्रत्ययादर्शनेन विशेषणतावच्छेदकप्रकारेण विशेषणज्ञानं हेतुरिति वक्तव्यम् । न च तत्सम्भवति गौरवात् । लाघवेन विशेषणतावच्छेदकप्रकारकज्ञानस्यैव विशिष्टज्ञानहेतुत्वात् । तदिहाप्यस्ति । यत्किञ्चिद्रजते रजतत्वप्रकारकज्ञानस्य सम्भवादित्याशयात् ।

अत्र प्रतीतस्यैवान्यत्र सत्ता कुतः कल्प्येत्यत उक्तम् ॥ **एतद्रजतस्येति** ॥ अन्यत्राप्यसत्त्वे तदनुभवासम्भवेन संस्कारस्याप्यसम्भवादित्यत आह ॥ **सद्रजतान्तरेति** ॥ ततश्चानुभवस्य समानप्रकारकतयैव संस्कारजनकत्वं न तु समानविशेष्यकत्वेनापि गौरवादिति भावः ॥ **एतेनेति** ॥ असतः प्रवृत्त्ययोग्यत्वेनात्र प्रतीतस्यान्यत्राप्यसत्त्वे प्रवृत्तेरनुपपत्तेरित्येतदपि 'न ह्यन्यत्र सत्त्वस्य साक्षात्प्रवृत्तावुपयोगं पश्यामः । संस्कारादिना हि तदुपयोग' इत्युक्तरीत्या परास्तमित्यर्थः । असत्त्वे कथं प्रतीतिरित्यत्रैव दूषणान्तरमाह ॥ **किञ्चासतः प्रतिभासासम्भव इति** ॥ नन्वसतो धर्मिण एव प्रतीतिस्तादात्म्यस्य तु धर्मत्वादसतोऽपि प्रतीतिः किं न स्यादित्यत आह ॥ **धर्मधर्मिभावस्त्विति** ॥ वैधर्म्यमात्रमेतन्नोक्ताप्रतीतिः प्रतीत्योपपादकमप्रयोजकत्वादिति भावः । एवं विमतं सत् तथा प्रतीतत्वादित्यस्य बाधितविषयत्वमभिधायाधुना व्यभिचारमप्याह ॥ **एतेन यद्यथेति** ॥ तादात्म्ये व्यभिचारेणेत्यर्थः । ननु हेतौ बाधकाभावे सतीति विवक्षितमग्रेऽतो न व्यभिचार इत्यत आह ॥ **असदेव रजतमिति** ॥ तथा चासिद्धिरिति भावः । दूरस्थयोश्चूतपनसयोस्तादात्म्यमात्रमसदिति पूर्वेणान्वयः । कुत इत्यत आह ॥ **एक एवायमिति** ॥ बाधाकारप्रदर्शनमिदम् । भ्रमस्तु इमौ चूतावित्येवमाकारो द्रष्टव्यः । एक एवायं चूत इत्यनन्तरमपरस्तु पनस इति शेषः । तथाच पनसरूपाधिष्ठानवदारोप्यस्य चूतस्याप्यबाधेन पुरोदेशे सत्यतया विषयीकरणान्नासत्त्वं । रजतादिभ्रमे तु रजतादेः पुरोदेशे बाधेनासत्त्वस्यैव विषयीकरणादसत्त्वमेव तस्याङ्गीकार्यमिति भावः ।

श्री०— **अप्रमात्वादिति** ॥ तथाच भ्रान्त्यनुभवः प्रमाणमिति व्याहतमिति भावः । रजतस्य सत्वमङ्गीकृत्याप्याह ॥ **अत्रैवेति** ॥ इदं रजतमिति भ्रान्त्यनुभवेन पुरोदेश एव रजतस्य सत्वमावेद्यते नान्यत्रेति भ्रान्त्यनुभवो रजतस्यान्यत्र सत्त्वे न मानमित्यर्थः ॥ **तन्मात्रेति** ॥ पुरोवर्तीन्द्रियदोषादिमात्रेत्यर्थः । तथाच नान्यत्र रजतसत्ताक्षेपकत्वमिति भावः ॥ **कथमिति** ॥ रजतस्यासत्यत्वे तद्विषयिणी भ्रमरूपा प्रतीतिरेव नोपपद्यते । असतः प्रतीत्यभावादतस्तदन्यथाऽनुपपत्त्याऽन्यत्र सत्त्वमङ्गीकर्तव्यमित्यर्थः ॥ तदन्यत्र सत्त्वम् । ननु भवत्पक्षेऽपि कथं भ्रमरूपज्ञानोत्पत्तिः सम्भवति । असता रजतेन सन्निकर्षायोगादिति साम्यमेवेत्यत आह ॥ **पुरोवर्तीति** ॥ तथाच रजतेन सन्निकर्षो नापेक्षित इति भावः । यथार्थो यथार्थश्चेत् । घटान्तरं वर्तमानम् । विनष्टोत्पत्स्यमानयोरारोप्यभूतयोः । तस्य कालान्तरे सत्त्वस्य तदुपपादयति ॥ **संस्कारादिना हीति** ॥ **वैधर्म्यमात्रमिति** ॥ वैलक्षण्यमात्रमेवेदं धर्मित्वं प्रतीत्युपपादकं न भवत्यप्रयोजकत्वादेवमेव धर्मत्वमपि न प्रतीत्युपपादकमित्याशयः । तस्य रजतसत्त्वस्य । अत्रैव पुरोदेश एव । उपपत्ते रजतसत्तानिषेधस्योपपत्तेरित्यर्थः । नन्वसदेव रजतं प्रत्यभादित्यनुभवादित्यनुभवरूप-

प्रमाणस्य पुरोदेश एव रजतासत्त्वावगाहित्वं नान्यत्र देशान्तरेऽपीतिविषयसङ्कोचः क्रियत इत्यत आह ॥ **तद्विषयसङ्कोचप्रमाणस्येति** ॥ अन्यत्र सत्वसाधकस्य भ्रान्त्यनुभवादिरूपप्रमाणचतुष्टयस्येत्यर्थः ॥ **निरस्तत्वादिति** ॥ 'अत्र प्रतीतस्यैवान्यत्र सत्त्वे मानाभावात् । तथा ही'त्यादिना निरस्तत्वादित्यर्थः । यत्र इदंरजतमित्यादिस्थले ॥ **उक्तन्यायेनेति** ॥ नेदंरजतमिति बाधोत्तरकालं स्वरूपद्वयानुवृत्त्यभावाद्रजतं तत्तादात्म्यं चेत्युभयमप्यसदिति भावः ॥ ॥

च०— कल्पचतुष्टयमभिप्रेत्य क्रमेण प्रतिविधत्ते ॥ **भ्रान्त्यनुभवो वेत्यादि** ॥ **तद्विषयसङ्कोचकप्रमाणस्येति** ॥ असत्पदस्य पुरोदेशमात्रासत्त्वकल्पकप्रमाणस्येत्यर्थः ।

**सु०— अपरे पुना रजतं सदेव किन्त्वन्तरेवेति मन्यन्ते । तथा हि । न तावदसदेव रजतम्, प्रतीत्यनुपपत्तेः। नापि पुरत एव सत्; भ्रान्त्यनुपपत्तेः, बाधविरोधाच्च । न च देशान्तरे सत्, प्रमाणाभावात् । अतः परिशेषाज्ज्ञानाकारमेवावतिष्ठते । किञ्चेदं ज्ञानरूपम् इन्द्रियसंप्रयोगेऽसत्यपरोक्षत्वाज्ज्ञानवत् । न च सत्यत्वे भ्रान्त्यनुपपत्तिः, आन्तरस्यैव बाह्यतयाऽवभासो भ्रम इत्यङ्गीकारात् । तस्य नेदमिति बाह्यतानिषेधेनैव बाधकस्य बाधकत्वोपपत्तिरिति ॥ एतच्चानुपपन्नम् । सत्त्वेऽसदेव रजतमित्यसत्त्वावेदकप्रत्ययविरोधस्योक्तत्वात् । असतः प्रतीत्यनुपपत्तौ च बहिष्ठताया अपि प्रतीत्यनुपपत्तिप्रसङ्गात् । तत्सत्त्वे भ्रान्तित्वानुपपत्तेः । बहिस्सत्त्वमेवासत्प्रत्ययेन निषिध्यत इति चेन्न आन्तरत्वे प्रमाणाभावात् । इन्द्रियसंप्रयोगमन्तरेणापरोक्षत्वस्य हेतोर्बाह्यतायामनैकान्त्यात् । शुक्तिसंप्रयोगेणापरोक्षतायाः स्वीकारादसिद्धेश्च । दृष्टान्तश्च साधनविकलः । ज्ञानस्यापीन्द्रियसंप्रयोगादेवापरोक्षताऽङ्गीकारात् । किञ्च गुञ्जापुञ्जादौ दहनादिसमारोपे तस्यान्तःसत्त्वे देहदाहादिप्रसङ्गः । अन्यथाऽन्तरपि तदसदित्यत्यन्तासदेवापन्नमिति नात्मख्यातिपक्षोऽप्युपपत्तिमान् ।**

वा०— एवं बहिस्सत्त्वपक्षं निराकृत्य तन्निरासाधीनसिद्धिकमन्तःसत्त्वपक्षं निरसितुमनुवदति ॥ **अपर इति** ॥ प्रमाणाभावात्तदसंभव इत्यतः प्रमाणं वक्तुं प्रतिजानीते ॥ **तथा हीति** ॥ **देशान्तर इति** ॥ बहिरिति शेषः । नन्वसत्प्रतीतेरुक्तवक्ष्यमाणन्यायसिद्धतयान्तरत्वे प्रमाणाभावाद्बहिस्सत्त्वमेवेति देशान्तरसत्त्ववादिना परिशेषस्य कर्तुं शक्यत्वाच्च नायं प्रकारो युक्त इत्यतोऽनुमानमाह ॥ **किं चेति** ॥ **इदमिति** ॥ रजतमित्यर्थः । अत्र संप्रयोगः संबन्धमात्रमभिमतं न तु तद्विशेषः संयोगादिरतो रूपादिना

नानैकान्त्यम् । न च विज्ञानवादिमते साध्यस्यापि तत्र सत्त्वान्नानैकान्त्यमिति वाच्यम् । प्रमाणाभावाद्वहिस्सत्त्वं नेति वदता भ्रमविषयस्यैव विज्ञानरूपताऽभ्युपगमेनैतद्विशेषणोपादानात् । अन्यतरानैकान्तिकत्वपरिहारार्थत्वाच्च । अधिष्ठानादिनाऽऽध्यासिकसंबन्धेनैवापरोक्षत्वाद्रजतस्य विशेषणासिद्धिपरिहारायेन्द्रियेति । तथा चेन्द्रियसन्निकर्षानधीनापरोक्षत्वादिति हेतुशरीरं सिद्धं भवति ॥ **ज्ञानवदिति** ॥ तस्य स्वतःसिद्धतया तत्र हेतुसद्भाव इति भावः ॥ **तस्येति** ॥ इदन्तानिषेधकत्वेनैव बाधकत्वोपपत्तौ रजतनिषेधकत्वस्यापि कल्पने गौरवमित्याशयः । अत एवाह ॥ **निषेधेनैवेति** ॥ परिशेषं विघटयितुमनुभवविरोधं स्मारयति ॥ **सत्त्व इति** ॥ एवं परिशिष्यमाणे बाधात्परिशेषानुपपत्तिमभिधायोक्तरीत्या सत्त्वोपपत्तौ प्रसक्तप्रतिषेधासंभवेनापि तदनुपपत्तिमाह ॥ **असत इति** ॥ अनुभवविरोधं परिहर्तुं शङ्कते ॥ **बहिरिति** ॥ **नेति** ॥ अन्यथाऽन्योन्याश्रयः स्यादिति भावः स्वनिष्ठत्वेनेन्द्रियसन्निकर्षो विशिष्यते न वा । आद्य आह ॥ **इन्द्रियेति** ॥ अन्त्य आह ॥ **शुक्तीति** ॥ **दृष्टान्तश्चेति** ॥ वृत्तिज्ञाने स्वप्रकाशताया निराकरिष्यमाणत्वादिति भावः । अङ्गीकारादित्यनेन साक्षिण इन्द्रियत्वानङ्गीकारिण एतद्दोषप्रसरेऽपि मां प्रति तदप्रसर इति सूचयति ॥ आरोपविशेषे दोषमाह ॥ **किं चेति** ॥ अन्यथा बुद्धावपि तस्यातात्त्विकत्वादन्तरसत्त्वे । अत्र शुक्तिसंप्रयोगेणेत्युक्त्येदन्ताया अनिषेधान्न कल्पनागौरवमिति । असदेव रजतमित्यनुभवोक्त्या च रजतनिषेधकत्वमेव बाधकप्रत्ययस्य युक्तमिति सूचयति ।

स०— ननु बहिरिन्द्रियासंप्रयोगे सतीति विवक्षितमतो न साधनशून्यतेत्यत आह ॥ **किं चेति** ॥ **आत्मख्यातिपक्ष इति** ॥ विज्ञानख्यातिपक्ष इत्यर्थः ॥

प०— **अपर इति** ॥ बौद्धैकदेशिनो विज्ञानात्मतत्त्ववादिन इत्यर्थः । परिशेषमुक्त्वाऽनुमानं चाह ॥ **किं चेति** ॥ इदमितिपक्षः शुक्तौ प्रतीयमानं रजतमित्यर्थः । ज्ञानरूपमिति साध्यम् । **इन्द्रियसंप्रयोगेऽसति अपरोक्षत्वादिति**॥प्रतीयमानरजतस्येन्द्रियसन्निकर्षाजन्यप्रत्यक्षविषयत्वादित्यर्थः ॥ **उक्तत्वादिति** ॥ पूर्वमतनिरासप्रस्ताव उक्तत्वादित्यर्थः । तथा चासत्त्वेनोपपत्त्या न परिशेषावतार इति भावः । तत्सत्त्वे बहिष्ठतायास्सत्त्वे । असत्त्वेऽसदेव रजतमित्यादिनोक्तदोषोद्धारमाशङ्कते ॥ **बहिस्सत्त्वमेवेति** ॥ कल्पकाभावादिति भावेनाह ॥ **आन्तरत्व इति** ॥ अनुमानं च निरसितुं किं प्रतीयमानरजतादिसन्निकर्षमन्तरेणापरोक्षत्वमभिमतमुत सन्निकर्षमात्रं विनेति हृदि कृत्वाऽऽद्य आह ॥ **इन्द्रियेति** ॥ अन्त्येऽसिद्धिरिति भावेनाह ॥ **शुक्तीति** ॥ **ज्ञानस्यापीति** ॥ स्वरूपेन्द्रियसंप्रयोगाभिव्यक्तसाक्षिरूपापरोक्षज्ञानविषयत्वस्य ज्ञानेऽपि स्वीकारादिति भावः ।

**या०— आत्माख्यातिपक्ष** इत्यत्रात्मशब्देन स्वपर्यायेण ज्ञानं विवक्षितम् ॥

**श्री०— किं चेदमिति** ॥ रजतमित्यर्थः ॥ **ज्ञानवदिति** ॥ ज्ञानेऽनुव्यवसायरूपापरोक्षज्ञानविषयत्वमस्तीति द्रष्टव्यम् ॥ **आन्तरस्येति** ॥ ज्ञानरूपत्वेनान्तरपदार्थस्येत्यर्थः । ननु बाह्यतावभासस्य भ्रमत्वे नेदंरजतमिति बाधकज्ञानस्य रजतनिषेधरूपत्वेन बाह्यतानिषेधरूपत्वाभावाद्बाधकत्वं नोपपद्यते । तथात्वे नेदं बाह्यमिति बाधोदयः स्यादिति चेत्तत्राह ॥ **तस्येति** ॥ तस्य बाधकस्येत्यन्वयः । तथाच नेदमिति रजतस्य बाह्यत्वमेव निषेध्यतयाऽभिप्रेतमिति नोक्तदोष इति भावः । सत्त्वे ज्ञानाकारस्य रजतस्यान्तःसत्त्वाङ्गीकारे । ननु न तावदसदेव रजतं प्रतीत्यनुपपत्तेरित्युक्तमिति चेत्तत्राह ॥ **असत इति** ॥ रजतस्येत्यर्थः ॥ **बहिष्ठताया अपीति** ॥ असत्त्वाविशेषादिति भावः । बहिष्ठतायाः सत्त्वात्तत्प्रतीतिः संभवतीति चेत्तत्राह ॥ **तत्सत्त्व इति** ॥ ननु रजतस्य सत्त्वाङ्गीकारेऽसदेव रजतं प्रत्यभादिति प्रत्ययविरोधो नास्तीति शङ्कते ॥ **बहिः सत्त्वमेवेति** ॥ रजतस्येत्यर्थः ॥ स्यादिदं यदि रजतस्यान्तरत्वं स्यात्तदेव न संभवतीत्याह ॥ **आन्तरत्व इति** ॥ ज्ञानरूपत्व इत्यर्थः । शुक्तिसंप्रयोगेण शुक्तिसन्निकृष्टदुष्टेन्द्रियजन्यज्ञानविषयत्वेनैवेत्यर्थः । तदुपपादयति ॥ **ज्ञानस्येति** ॥ इन्द्रियार्थसन्निकर्षजन्यत्वेनैव ज्ञानस्यापरोक्षत्वमित्यर्थः । तथाच विशेषणाभावप्रयुक्तविशिष्टाभावसद्भावात्साधनवैकल्यमित्यवगन्तव्यम् । तस्यारोपितस्य । अन्तःसत्त्वे ज्ञानरूपत्वेनान्तरत्वादिति भावः ॥ **अन्यथेति** ॥ देहदाहापत्त्यान्तरत्वानङ्गीकार इत्यर्थः ॥ **अन्तरपीति** ॥ पुरोदेशे देशान्तरे च सत्त्वस्य भ्रान्त्यनुपपत्तिप्रमाणाभावाभ्यामुक्तरीत्याऽसंभवेन बहिः सत्त्वं नास्त्येवेति भावः ॥ **आत्मख्यातिपक्ष इति** ॥ आत्मज्ञानस्वरूपमेव रजतं ख्यायत इति पक्ष इत्यर्थः ॥

**च०—** विपर्यस्तस्य बहिः सत्त्वकल्पप्रतिविधानानन्तर्येणान्तःसत्त्वकल्पं प्रतिविधित्समान आत्मख्यातिकल्पमनुवदति ॥ **अपरे त्विति** ॥ **दृष्टान्तश्च साधनविकल इति** ॥ वृत्तिज्ञाने स्वप्रकाशतायाः प्रतिविधास्यमानत्वादिति भावः । **ज्ञानस्येन्द्रियसंयोगादिति** ॥ साक्षिरूपेन्द्रियसंयोगादित्यर्थः ।

**सु०— अन्ये पुनरिदं रजतमिति प्रतीतिरसदालम्बनैवेत्यास्थिताः ॥ तथा हि । न तावदिदं सदेव, बाधबोधविरोधात् । नापि सदसत्, तत्रैव तदैव तस्यैव सदसत्त्वविरोधात् । देशकालप्रकारव्यवस्थया सदसत्त्वाङ्गीकारे घटादितुल्यतापातात् । किंचैवं सति सदिदं रजतमिति ज्ञानं भ्रान्तिर्नैव भवेत् , सत्त्वस्य विद्यमानत्वात् । सदसदात्मकं सत्त्वेन विषयीकुर्वत्कथं न भ्रान्तिरिति चेत्, तत्किमेकदेशदर्शनं भ्रान्तिः । तथा च बाधकप्रत्ययोऽप्यसत्त्वमात्रा-**

वलम्बी न कथं भ्रान्तिः। सदेवेत्यसत्त्वनिषेधाद्भ्रान्तित्वमिति चेत् तर्ह्यसदेवेति सत्त्वप्रतिषेधाद्बाधस्यापि भ्रान्तिताऽनिस्तारः। तस्मादसदेव विभ्रमालम्बनम्॥ न चासतोऽवभासानुपपत्तिः विवेकाग्रहवादस्य निरस्तत्वात्। अन्यथाख्यातिवादिभिरसत एव तादात्म्यस्य संसर्गस्य वा प्रतिभासाभ्युपगमात्। विज्ञानख्यातिवादिभिरप्यसत्याया एव बाह्यतायाः प्रतीत्यङ्गीकारात्। सत एव प्रतीतिरिति पक्षे न भ्रान्तिर्नापि बाध इति॥ अत्रेदं विवेचनीयम्॥ केयमसत्ख्यातिरिति। यदि सदेव शुक्तिकाशकलं सकलदेशकालासद्रजतात्मनाऽवगाहमानं ज्ञानमिति, तदाऽनुज्ञया वर्तामहे। यथोक्तम्। 'तस्माद्यदन्यथासन्तमन्यथा प्रतिपद्यते। तन्निरालम्बनं ज्ञानमसदालम्बनं च तदि'ति। यदि पुनरिदं रजतमित्यवभासे चकासदसदेवाखिलमिति, तदसत्; इदङ्कारास्पदस्य शुक्तिकाशकलस्य प्रागूर्ध्वं सत्त्वावगमात्। यदि च न तदिदङ्कारास्पदं तदा न भ्रान्तिबाधयोरंगुल्यग्रेण निर्दिशेन्नोपादद्यान्न परित्यजेत्॥ किञ्चास्य ज्ञानस्य कारणं वक्तव्यम्। दुष्टेन्द्रियादिकमिति चेन्न। तस्य सन्निकर्षाद्यनपेक्षस्य कारणतायामतिप्रसङ्गात्। असता च सन्निकर्षायोगात्। शुक्त्यादिना सन्निकर्षोऽस्तीति चेन्न। तथा सति तज्ज्ञानस्यावर्जनीयत्वात्। अथ संवृत्तिरेव रजतादिप्रतिभासकारणम् तदाऽन्धस्याप्यसन्निहिते शुक्तिशकले किं न स्यात्। अथ काचादिवच्छुक्तीन्द्रियसन्निकर्षोऽपि संवृत्तेः सहकारीति चेन्न। तथात्वे भूतलवच्छुक्तेरपि शुक्तित्वेनावभासप्रसङ्गात्। दोषनिमित्तः शुक्तित्वानवगमोऽपि कारणमिति चेन्न। अधिष्ठानत्वानभ्युपगमे भूतलशुक्तिशकलयोरविशेषेण कस्यानवगमःकारणमिति विवेक्तुमशक्यत्वात्॥ अपि चासदेव रजतमवभासमानं न तावदसत्त्वयैवावभासते। अर्थक्रियाऽनर्हे प्रवृत्त्यनुपपत्तेः। सत्तया प्रतिभासे त्वन्यथाख्यातिरङ्गीकृतेति शुक्तिरेव रूप्यतयाऽवभासत इति कुतो नाङ्गीकरणीयम्। तथा सत्यङ्गुल्यग्रनिर्देशादयोऽप्यनुकूलिताः स्युः। केशोण्ड्रकादिभ्रमस्तर्हि कथमिति चेत् सोऽपि तेजःप्रभृतिद्रव्यमालम्ब्यैवेति वदामः। तस्मान्नैवं विधासत्ख्यातिपक्षोऽपि साधीयान्॥ ४॥

वा०—सत्पक्षनिरासानन्तरमसत्पक्षं निरसितुमनुवदति॥ अन्य इति॥ एवेति स्वपक्षाद्वैलक्षण्यं प्रदर्शयति। सदेवेत्यन्तर्बहिःपुरोदशदेशान्तरसत्त्वोक्तिः। 'स्वरूपपररूपाभ्यां नित्यं सदसदात्मके। वस्तुनि ज्ञायते किञ्चिद्रूपं कैश्चित्कदाचने'ति रजतं स्वरूपेण सत् शुक्तुरूपेणासत् तत्र कस्यचित्सद्रूपप्रतीतिरपरस्यासद्रूपप्रतीतिरिति कस्यचित्पक्षमाशङ्क्य निषेधति॥ नापीति॥ भेदाभेदवत्सत्त्वासत्त्वयोर्विरोध एव नास्तीति वदन्तं प्रत्याह॥ किञ्चेति॥ ननु तथाऽपि परिशिष्यमाणेऽप्यनुपपत्तिरित्याशङ्कते॥ न चेति॥ प्रसक्तै-

वादिभिस्तदनुपपत्तेरनुद्भावनीयत्वमाह ॥ **विवेकेत्यादिना** ॥ एवमनूदितं पक्षं निरसितुं स्वपक्षाद्विवेचयति ॥ **अत्रेदमिति** ॥ सकलकालदेशेत्यन्यथाख्यात्यन्तरपक्षाद्विवेचनम् । अविरुद्धत्वात्कस्यचिदन्यथाख्यातिवादिन उक्तं संवादयति ॥ **यथोक्तमिति** ॥ नन्वयं घट इत्यत्रानिदङ्कारास्पदस्य भूतलस्येवानिदङ्कारास्पदशुक्तेरप्यङ्गुल्यादिनिर्देशः किं न स्यादित्यत आह ॥ **किञ्चेति** ॥ **अधिष्ठानत्वानभ्युपगम इति** ॥ यत्र शुक्तित्वानवगमः कारणतया तवाभिमतस्तत्र दोषनिमित्तकभूतलानवगमः कारणमित्यपि वक्तुं शक्यतया शुक्तित्वानवगमकारणतानिर्धारणानुपपत्त्या तदर्थं भूतलाद्विशेषेऽवश्याङ्गीकर्तव्ये तत एव शुक्तेरिदङ्कारास्पदतासिद्धिरिति भावः । ननु भूतलादधिष्ठानत्वादिरूपो विशेषोऽस्तु शुक्तेरिदङ्कारास्पदता तु रजतस्यैवास्त्वित्यत आह ॥ **अपि चेति** ॥ नन्वेतावताऽपि पक्षद्वयसाम्यान्न शुक्तेरिदङ्कारास्पदतानिश्चय इत्यतः स्वपक्षे उपोद्बलकमाह ॥ **तथा सतीति** ॥ **सोऽपीति** ॥ अन्यत्र तदभावादिति भावः ॥४॥

स०— **विवेकाग्रहवादस्येति** ॥ तथाच न तद्रीत्येदं रजतमिति ज्ञानस्य सन्मात्रविषयकत्वमिति भावः । अत्र परेषां वाक्यं संमतित्वेनाह ॥ **यथोक्तमितीति** ॥ तन्निरालम्बनमित्यस्यैव विवरणमसदालम्बनमिति ॥ **प्रागूर्ध्वं चेति** ॥ भ्रमादिति शेषः ॥ **शुक्त्यादिनेति** ॥ तन्मते प्रागूर्ध्वं च सत्यं शुक्तिकाशकलमिदंकारास्पदाभिन्नमेवेति भावः । अन्धस्यार्पीत्यनन्तरं चक्षुष्मतोऽपि वेति शेषः ॥ **सोऽपि तेजःप्रभृतीति** ॥ अत एव निबिडान्धकारे न तथा भ्रम इति भावः । आदिपदगृहीते कोलाहलदशायामपि शान्तः कोलाहल इति विभ्रमे काललक्षणाधिकरणसंग्रहाय प्रभृतिपदम् ।

प०— बौद्धैकदेशिनामसत्ख्यातिवादिनां मतं निरसितुमनुवदति ॥ **अन्ये पुनरित्यादिना न भ्रान्तिर्नापि बाध इत्यन्तेन** ॥ कुतोऽसद्विषयैव धीरित्यतः परिशेषादिति भावेन प्रसक्तं सत्त्वपक्षं सदसत्त्वपक्षं च क्रमेण निराह ॥ **न तावदित्यादिना तस्मादसदेवेत्यन्तेन** ॥ **इदमिति** ॥ इदं रजतमितिप्रतीयमानम् ॥ **बाधेति** ॥ भ्रान्तित्वायोगाच्चेत्यपि ध्येयम् ॥ **तस्यैवेति** ॥ येन धर्मेण विशिष्टस्य सत्त्वं तेन विशिष्टस्यैवासत्त्वमेवेत्येतद्विरोधान्नेत्यर्थः ॥ **घटादीति** ॥ घटादेरपि देशभेदेन कालभेदेन घटत्वपटत्वादिप्रकारभेदेन च सत्त्वासत्त्वयोर्भावात् । तथा चेयं भ्रान्तिः । घटादिधीस्तु प्रमेति न स्यादिति भावः । अस्त्वित्यतो दोषमाह ॥ **तथा चेति** ॥ **असत्त्वमात्रेति** ॥ सदसदात्मके रजते सत्त्वमात्रावगाहिनो भ्रमत्वेऽसदेवेदं रजतमभादित्यसत्त्वमात्रग्राहिणः कथं न भ्रमत्वमतो नैकदेशविषयकत्वेन भ्रमत्वमिति भावः । सदसदात्मकमितिपक्षे इदं रूप्यमिति धियो भ्रमत्वं प्रकारान्तरेणाशङ्क्य निराह ॥ **सदेवेति** ॥ परिशेषादसद्धीरुपेयेत्याह ॥ **विवेकेति** ॥ अन्यथाख्यातिवादिनाऽप्युपगतेरसद्धी-

रुपेयेत्याह ॥ **अन्यथाख्यातीति** ॥ भ्रान्तिबाधान्यथानुपपत्त्या चासतो धीरुपेयेत्याह ॥ **सत एवेति** ॥ पूर्वं रजतस्य सन्मात्रत्वे बाधाद्ययोग उक्तोऽत्र तु सत एव प्रतीताविति भेदः । एवंरूपख्यातिः तैरुपेते-त्यत्र किं ज्ञापकं येन भवतां तत्रानुमतिः स्यादित्यतः तदीयसंमतिमाह ॥ **यथोक्तमिति** ॥ चकासत् मासमानम् । नोपादद्यात् भ्रान्तिकाले । न परित्यजेत् । बाधोत्तरकालं इति भावः ॥ **अस्येति** ॥ असन्मात्रविषयकस्येत्यर्थः ॥ **तज्ज्ञानस्येति** ॥ एवं चेदं रूप्यमिति ज्ञानं शुक्तिविषयकमप्यासीदित्यस-न्मात्रविषयकमित्युक्तिभङ्ग इति भावः । भ्रमस्य साधिष्ठानत्वे बाधकमाशङ्क्य निराह ॥ **केशोण्डूका-दीति** ॥ **एवंविधेति** ॥ सदविषयकेत्यर्थः ॥

या० — **विवेकाग्रहवादस्येति** ॥ तथाच न तद्रीत्येदं रजतमिति ज्ञानस्य सन्मात्रविषयकत्व-मित्यसतोऽप्यवभासो युक्त इति भावः ॥ **शुक्त्यादिनेति** ॥ तन्मते प्रागूर्ध्वं च सत्यं शुक्तिकाशकल-मिदंकारास्पदं भिन्नमेवेति भावः ॥ **केशोण्डूकादीति** ॥ तत्राधिष्ठानाभावादिति भावः ।

श्री० — **देशकालेत्यादि** ॥ कस्मिंश्चिद्देशे कस्मिंश्चित्काले केनचित्प्रकारेण सत् । देशान्तरे कालान्तरे प्रकारान्तरेणासदित्येवं व्यवस्थया सदसत्त्वाङ्गीकारान्न विरोध इत्यर्थः ॥ **घटादीति** ॥ रजतस्य घटादितुल्यतापत्त्या तत्प्रतीतेर्न भ्रमत्वप्रसिद्धिरित्यर्थः । सत्त्वेन केवलं सत्त्वेन ॥ **सदेवेति** ॥ सदसदात्मकस्य रजतस्येति शेषः । असदेवेत्यत्राप्ययं शेषः कार्यः । अन्यत्र सदेवात्र प्रतीयत इति पक्षे बाधकमाह ॥ **सत एवेति** ॥ अन्यथासन्तं प्रतीयमानरजतापेक्षया शुक्तित्वेन सन्तम् । अन्यथा रजतत्वेन । अखिलमधिष्ठानमपीति भावः । तत् शुक्तिकाशकलम् ॥ **शुक्त्यादिनेति** ॥ मन्मते इदं कारास्पदमेवाधिष्ठानं तच्चासदेव । शुक्तिशकलं चाधिष्ठानभूतेदङ्कारास्पदाद्भिन्नं प्रागूर्ध्वं च विद्यमानं सदेव । तथाच तेन सन्निकर्षो युक्त इत्यर्थः ॥ **तज्ज्ञानस्येति** ॥ इदङ्कारास्पदभिन्नस्य शुक्तिशकल-स्येन्द्रियसन्निकृष्टत्वेनेयंशुक्तिरिति ज्ञानस्याप्यवर्जनीयत्वेनेदंरजतमिति भ्रमानुपपत्तिरिति भावः ॥ **संवृतिरेवेति** ॥ अविद्यैव रजतादिप्रतिभासे कारणं न शुक्तीन्द्रियसन्निकर्षो येनोक्तदोषः स्यादित्या-शयः । किं न स्यात् रजतादिप्रतिभासः । इन्द्रियसन्निकर्षस्य कारणत्वानङ्गीकारात्कारणीभूतायाश्च संवृतेरन्धस्यापि सत्त्वाचक्षुष्मतोऽप्यसन्निहिते शुक्तिशकले रजतप्रतीतिः स्यादिति भावः ॥ **सन्निकर्षो-ऽपीति** ॥ नान्धचक्षुष्मतोः सन्निहितासन्निहितशुक्तिसन्निकर्षोऽस्तीति भावः ॥ **भूतलवदिति** ॥ इदंरजतमिति ज्ञानसमये यथा भूतलं भूतलत्वेन प्रतीयते तथेत्यर्थः । कारणं रजतप्रतिभास इति शेषः ॥ **कस्यानवगम इति** ॥ किं शुक्तित्वानवगमो भ्रमकारणं भूतलत्वानवगमो वेति विवेक्तुमशक्यत्वाद्भिनि-

गमनाविरहादिति भावः ॥ **कुतो नाङ्गीकरणीयमिति** ॥ असतः सत्त्वेन प्रतीत्यङ्गीकारे सतोऽप्य-सत्त्वेन प्रतीतिरङ्गीक्रियतामित्यर्थः । तथासति शुक्तिरेव रूप्यतयाऽवभासत इत्यङ्गीकृते सति । निर्देशादय इत्यत्रादिपदेनोपादानपरित्यागौ ग्राह्यौ ॥ **कथमिति** ॥ तत्राधिष्ठानाभावादिति भावः ॥ **तेजःप्रभृतीति** ॥ आलोकमण्डलेत्यर्थः । तथाच तदेवानुष्ठानमिति भावः ॥

**सु० — मायावादिनो वदन्ति; अनिर्वचनीयमेव शुक्तिकादौ प्रतीयमानं रजतादिक-मिति ॥ तदनुपपन्नम् प्रमाणाभावात् ॥ शुक्तिरजतादिकमनिर्वाच्यं दोषप्रयुक्तभानत्वाद्भ्रान्ति-सिद्धतादात्म्यवदित्यनुमानं मानमत्रेति चेत् ॥ किमिदमनिर्वाच्यत्वं नाम । यन्न सन्नासन्नापि सदसत्तदनिर्वाच्यं तस्य भावस्तत्त्वमिति चेन्न शुक्तिरजतादेस्सत्त्वस्य सदसत्त्वस्य चास्माभिरनङ्गीकृत-त्वेन सिद्धसाधनत्वात् । अथासत्त्वाभावमात्रं साध्यम्; तथाऽप्यसदेव रजतं प्रत्यभादित्यनुभव-विरोधः ॥ किंचेदं दोषप्रयुक्तभानत्वं किं दोषजन्यज्ञानविषयत्वं किंवा दोषजन्यप्राकट्या-श्रयत्वम् । नाद्यः । दोषजन्येतिविशेषणवैयर्थ्यात् । असतो ज्ञानविषयत्वानङ्गीकारेण व्याव-र्त्याभावात् । किञ्च मायावादिमतेऽधिष्ठानज्ञानस्यान्तःकरणवृत्तित्वेन सत्यत्वान्न दोषजन्यत्वम् । भ्रमस्य दोषजन्यत्वेऽप्यविद्यापरिणामतया न ज्ञानत्वम् । साक्षिणस्तु जन्यत्वमेव नास्तीत्य-सिद्धो हेतुः । अपिचास्माकं ज्ञानस्यैकत्वेन तज्ज्ञानविषयताऽधिष्ठानस्याप्यस्तीति व्यभिचारः । न द्वितीयः । असिद्धेः । न चान्यद्दोषप्रयुक्तभानत्वं निरूपयितुं शक्यम् ॥ दृष्टान्तश्च साध्य-विकलः; भ्रान्तिप्रतिपन्नतादात्म्यस्यास्माभिरसत्त्वेनाङ्गीकृतत्वात् ॥ विवादपदमनिर्वचनीयं भ्रम-विषयत्वात्, यन्नैवं तन्नैवम्, यथात्मेत्यनुमानमस्त्विति चेन्न । अत्रापि सिद्धसाधनत्वाद्य-परिहारात् । अप्रसिद्धविशेषणश्च पक्षः । शुक्त्यादावात्मनि च वर्तमानतया विरुद्धश्च हेतुः ॥ विमतमनिर्वचनीयं, बाध्यत्वाद्व्यतिरेकेणात्मवदित्यनुमानं भवत्विति चेन्न । सिद्धसाधनता-बाधाप्रसिद्धविशेषणत्वानामपरिहारात् ।**

वा० — सदसत्सदसत्पक्षान्निरस्य तन्निरूप्यतयाऽधुनाऽनिर्वचनीयख्यातिं निराकरोति ॥ **मायेति** ॥ न्यायरत्नदीपावल्युक्तमनुमानं शङ्कते ॥ **शुक्तीति** ॥ शुक्तिरजतस्येव तत्तादात्म्यस्यान्यत्र सत्त्वस्य कैरप्यनभ्युपगमात्प्रतीतिमात्रेणासद्वैलक्षण्ये साधिते युक्तं दृष्टान्तत्वमित्याशयेन तादात्म्यवदि-त्युक्तम् । सत्त्वादिना विचारासहत्वमनिर्वचनीयत्वमिति तत्त्वप्रदीपिकायामुक्तं सिद्धान्तलक्षणमाशङ्कते ॥ **यन्नेति** ॥ सद्विलक्षणत्वादीनां प्रत्येकसाधने मिलितानां साधनेऽप्युक्तरित्या सिद्धसाधनमित्याह ॥

**शुक्तीति** ॥ उपलक्षणं चैतत् । विशिष्टसाधनेन वैयर्थ्यमुद्देश्यसिद्ध्यर्थत्वादेरगतिकागतित्वादित्यपि द्रष्टव्यम् ॥ **तथाऽपीति** ॥ विशिष्टसाधनेऽपीदं द्रष्टव्यम् । अनिर्वाच्यस्य प्रकारान्तरेण निर्वचनेनैतद्दोषाप्रसर इत्यतोऽस्तु यत्किञ्चित्तत् । उक्तवक्ष्यमाणरीत्या दूषणसौलभ्याद्धेतुदूषणमात्रेणाप्यनुमानं दूष्यतीत्याशयेन हेतुं दूषयति ॥ **किं चेति** ॥ भानं ज्ञानम् । बहुव्रीहिलब्धसम्बन्धो विषयत्वमिति वा भानं प्राकट्यं स संबन्धस्त्वाश्रयत्वमिति वेति विकल्पाशयः ॥ **असत इति** ॥ ब्रह्मणस्तु ज्ञानविषयत्वस्यैवाभावाद्भावे वाऽधिष्ठानत्वादिना दोषजन्यज्ञानविषयत्वस्यापि सत्त्वान्न व्यावर्त्यमित्याशयः । नन्वसतोऽपरोक्षज्ञानविषयत्वाभावेऽपि ज्ञानविषयत्वाद्व्यावर्त्यत्वमित्यरुचेराह ॥ **किञ्चेति** ॥ प्रकृते यज्ज्ञानं न तद्दोषजन्यं यच्च दोषजन्यं न तज्ज्ञानमित्याशयः । अवच्छिन्नसाक्षिणो यथाकथञ्चिद्दोषजन्यत्वाभ्युपगमेऽपि व्यभिचारो दुरुद्धर इत्याह ॥ **अपि चेति** ॥ **असिद्धेरिति** ॥ प्राकट्यस्याप्रामाणिकत्वादसच्छुक्तिरजतादेस्तदाश्रयत्वानुपपत्तेश्चेति भावः । भानशब्दस्य सौरालोकादौ प्रसिद्धत्वेऽपि प्रकृते तस्य न शङ्कानर्हत्वमपीत्याशयेनाह ॥ **न चेति** ॥ असतोऽपि प्रतीतिविषयतामुपपादयिष्यामीत्याशयेन साध्यवैकल्यमुपपादयति ॥ **भ्रान्तीति** ॥ **अत्रापीति** ॥ हेतुभेदेऽपि साध्यनिर्देशस्यैकप्रकारत्वादिति भावः । अन्वयव्यतिरेकित्वाभिमानेन प्रवृत्ते पूर्वानुमानेऽप्रसिद्धविशेषणतामनुद्भाव्य केवलव्यतिरेकित्वेन परस्यापि संप्रतिपन्नेऽस्मिन्ननुमाने तामाह ॥ **अप्रसिद्धेति** ॥ अधिष्ठानतया भ्रमविषये शुक्त्यादौ नाद्याप्यनिर्वचनीयतासिद्धिरित्याशयेनाह ॥ **शुक्त्यादाविति** ॥ तत्त्वप्रदीपिकोक्तमनुमानं शङ्कते ॥ **विमतमिति** ॥

स० — **भ्रान्तिसिद्धेति** ॥ तद्विषयीभूतेत्यर्थः । अत्र च तादात्म्ये सत्त्वाभावस्य सदसत्त्वाभावस्य च सर्वसंमतत्वादसत्त्वाभावस्यापि केनचिदभ्युपगमेन वक्ष्यमाणानिर्वचनीयत्वस्य तत्र सिद्धत्वाद् दृष्टान्तत्वेनोपादानम् । युक्त्यन्तरेणस्थापित अनिर्वचनीयत्वसाधनाभिप्रायेण वा ॥ **व्यावर्त्याभावादिति** ॥ न च ब्रह्मणि व्यभिचारपरिहारार्थं तदिति वाच्यम् । परेण तत्र ज्ञानविषयत्वानङ्गीकारेण तन्न्यायेन व्यभिचाराभावात् । मद्रीत्या विशिष्टस्यापि सत्त्वेन व्यभिचारतादवस्थ्यादिति भावः । **अविद्यापरिणामतया न ज्ञानत्वमिति** ॥ अविद्याया अप्रकाशरूपत्वेन तत्परिणामस्यापि भ्रमस्य नार्थप्रकाशात्मकज्ञानत्वं युक्तमिति भावः ॥ **सिद्धसाधनत्वानिस्तारादिति** ॥ शुक्तिरूप्यादौ सद्विलक्षणत्वसदसद्विलक्षणत्वयोः साधने सिद्धसाधनता । असद्विलक्षणत्वसाधने बाध इति भावः ॥ **अप्रसिद्धविशेषणश्चेति** ॥ न चेच्छादीनामष्टद्रव्यातिरिक्ताश्रितत्वानुमानवत्सामान्यतः प्रसिद्धिपरिशेषाभ्यां तत्प्रसिद्ध्युपपत्तेर्नाप्रसिद्धविशेषणतेति वाच्यम् । तत्र गुणत्वेन सामान्यतः क्वचिदाश्रितत्वसाधनवन्नानिर्वाच्यत्वस्य

सामान्येन साधने लिङ्गमस्तीति वैषम्यादिति भावः ॥ **शुक्त्यादाविति** ॥ न च शुक्तेरप्यनिर्वचनीयत्वात्कथं तत्र विरुद्धत्वमिति वाच्यम् । तदनिर्वचनीयत्वस्य रजतानिर्वचनीयत्वसिद्ध्युत्तरकालीनत्वेन ततः प्राग्रजतानिर्वचनीयत्वे साध्ये तदसिद्ध्यविरुद्धत्वोपपत्तेः ॥ **बाध्यत्वादिति** ॥ अत्र च न पूर्वहेतुवद्विरुद्धत्वमिति भावः ॥

प० — **दोषप्रयुक्तभानत्वाद्** इति बहुव्रीहिः । सद्वैलक्षण्यादिधर्माणां त्रयाणां प्रत्येकं साध्यत्वमित्युपेत्यांशतः सिद्धसाधनमिति भावेनाह ॥ **शुक्तिरजतादेरित्यादिना** ॥ प्रतिज्ञां निरस्य हेतुं च निराह ॥ **किं चेति** ॥ व्यर्थविशेषणत्वमुक्त्वाऽसिद्धिं चाह ॥ **किं च मायावादिमत इति** ॥ इदमंशे चेन्द्रियजन्यान्तःकरणवृत्तिरध्यस्तांशे तदजन्याविद्यावृत्तिरिति ज्ञानद्वयम् । तादात्म्यस्यापि तत्र भानाङ्गीकारान्नाख्यातित्वमिति हि तत्सिद्धान्तः । तत्राद्ये कस्य दोषजन्यज्ञानत्वमादाय रजतस्य तद्विषयत्वेन हेतुनाऽनिर्वाच्यत्वं साध्यते । किं शुक्तिरूपाधिष्ठानज्ञानमादाय । रजतभानमादाय वा । आद्ये **दोषोऽधिष्ठानेत्यादि** । सत्यत्वात् यथार्थत्वात् । ब्रह्मज्ञानेतराबाध्यत्वादिति यावत् ॥ **भ्रमस्येति** ॥ रजतावभासस्येत्यर्थः ॥ **दोषजन्यत्वेपि** ॥ अविद्यादिरूपदोषकार्यत्वेऽपीत्यर्थः । ननु रजतावभासरूपो भ्रमोऽत्र नाविद्यावृत्तिः । किन्त्वविद्यावृत्त्यभिव्यक्तशुक्त्यवच्छिन्नाधिष्ठानचैतन्यज्ञानरूपः साक्षिरूप एवेत्यत आह ॥ **साक्षिणस्त्विति** ॥ **व्यभिचार इति** ॥ तत्रासन्न सदसन्नेति साध्यांशस्य सत्त्वेऽपि सन्नेति साध्यांशस्याभावाद्व्यभिचार इत्यर्थः । प्राकट्याश्रयत्वमिति पक्षं निराह ॥ **न द्वितीय इति** ॥ ज्ञाततायास्तत्राभावादिति भावः ॥ **अत्रापीति** ॥ न सन्नाप्यसन्न च सदसदित्युक्तदिशाऽनिर्वाच्यत्वस्य त्वया वक्तव्यत्वात्तत्र च सिद्धसाधनत्वबाधव्यभिचाररूपदोषाणामपरिहारादित्यर्थः । ननु प्रत्येकं साध्यत्रयं न विवक्षितं येनांशे सिद्धसाधनत्वादिकम् । किन्तु सद्विलक्षणत्वासद्विलक्षणत्वविशिष्टं सदसद्विलक्षणत्वं साध्यते । विशिष्टं च न भवतां सिद्धम् अतो न सिद्धसाध्यत्वदोष इत्यतो दोषान्तरमाह ॥ **अप्रसिद्धेति** ॥ सिद्धान्तदिशा साध्याभावमुपेत्याह ॥ **शुक्त्यादाविति** ॥ उभयवादिसंमत्याऽऽह ॥ **आत्मनीति** ॥ तस्यापि मायिमतेऽधिष्ठानत्वेन भ्रमविषयत्वात् । सिद्धान्ते च निर्गुणत्वादिभ्रमविषयत्वोपगमादिति भावः ।

या० — एवमारोप्यस्य सत्त्वासत्त्वसदसत्त्वपक्षान्निरस्याथ सदसद्वैलक्षण्यपक्षमपि प्रतिक्षेप्तुमाह ॥ **मायावादिन इति** ॥ तादात्म्यवदिति दृष्टान्ताभिधानं स्वरीत्यैव । अत एव दूषणावसरेऽस्माभिरसत्त्वेनाङ्गीकृतत्वादिति वदिष्यति । असत इत्युपलक्षणम् । सत इत्यपि ग्राह्यम् ॥ **अविद्यापरिणामि-**

**तयेति** ॥ अविद्याया अप्रकाशरूपत्वेन तत्परिणामस्यापि भ्रमस्य नार्थप्रकाशात्मज्ञानत्वं युक्तमिति भावः ॥ **असिद्धेरिति** ॥ प्राकट्यापरपर्यायज्ञाततताया दूष्यत्वादिति भावः ॥ **बाध्यत्वादिति** ॥ अत्र च न पूर्वहेतुवद्विरुद्धत्वमिति भावः ॥

**श्री०**— ननु ज्ञानविषयत्वमात्रस्य हेतुत्वेनासति ब्रह्मणि वाऽनिर्वचनीये व्यभिचारः स्यादतो दोषजन्यत्वविशेषणं सार्थकमिति चेत्तत्राह ॥ **असत इति** ॥ सतो ब्रह्मणश्चेति द्रष्टव्यम् । हेतोः स्वरूपासिद्धिं वक्तुमाह ॥ **किं चेति** ॥ **अधिष्ठानज्ञानस्येति** ॥ इदंरजतमिति ज्ञानस्याधिष्ठानांशेऽन्तः-करणवृत्तित्वेनेत्यर्थः । **भ्रमस्येति** । रजतस्यांशे दोषजन्यत्वेऽपीत्यर्थः ॥ **अविद्यापरिणामयेति** ॥ अविद्याया अप्रकाशरूपत्वेन तत्परिणामस्य भ्रमस्य नार्थप्रकाशात्मकज्ञानत्वमित्यर्थः । ननु साक्षिणश्चैतन्य-रूपत्वेन ज्ञानत्वात्तद्विषयत्वं विवक्षितमिति चेत्तत्राह ॥ **साक्षिणस्त्विति** ॥ **जन्यत्वमेवेति** ॥ दोष-जन्यत्वन्तु दूरतोपास्तमित्यर्थः । अस्माकं मते ॥ **अत्रापीति** ॥ किमिदमनिर्वाच्यत्वं नामेत्युक्तरीत्ये-त्यर्थः ॥ **शुक्त्यादाविति** ॥ अधिष्ठानत्वेन सत्त्यतयाऽनिर्वाच्यताशून्य इत्यर्थः ॥ **वर्तमानतयेति** ॥ अधिष्ठानत्वेन भ्रमविषयत्वादिति भावः ॥

**च०**— अनिर्वचनीयत्वज्ञानौपयिकज्ञानविषयीभूतान् सत्त्वासत्त्वसदसत्त्वकल्पान्निरस्य संप्रति तत्प्रतिपत्त्यधीनप्रतिपत्तिकानिर्वचनीयत्वकल्पं प्रत्याचिख्यासुरनुवदति ॥ **मायावादिनो वदन्तीत्यादिना** ॥ न्यायरत्नदीपावल्युक्तमनुमानं दुदूषयिषुराशङ्कते ॥ **शुक्तीति** ॥ **दोषेति** ॥ बहुव्रीहिप्रकृतिको भाव-प्रत्ययः । निदर्शनं त्वद्वैतिदिशैव ग्रन्थकृतैव दृष्टान्तश्च साध्यविकलः भ्रान्तिप्रतिपन्नतादात्म्यस्यासाभि-रसत्त्वेनाङ्गीकारादित्यभिधास्यमानत्वात् । **सिद्धसाधनत्वादिति** ॥ प्रत्येकं तत्तत्साध्यसाधने मिलित-साधने चेति भावः । प्रपञ्चितं चैतदधस्तात् । चक्षुषा घटो भातीत्यादौ भ्रान्तेर्ज्ञानार्थकत्वस्य ज्ञाने घटो भातीत्यादौ विषयतार्थकत्वस्य च दर्शनेन प्रकृते विकल्पोपपत्तिः । व्यवहारे भट्टनय इति परिभाषाश्रयणात्प्राकट्येति ज्ञातताभिधायकपदनिर्देशः ॥ **वैयर्थ्यादिति** ॥ ज्ञानान्तस्य हेतुशरीरनिवेशे प्रयोजनाभावादित्यर्थः ॥ **असत इति** ॥ सत इत्यपि ग्राह्यं व्यावर्त्याभावात् । ज्ञानान्तव्यावर्त्याभावात् । **किं चेति** ॥ अद्वैतवादिनोऽपि भ्रमस्थले प्राभाकरवज्ज्ञानद्वित्वमुपगच्छन्ति । तत्राधिष्ठानं चक्षुरादिवेद्यं विपर्यस्तं तु साक्षिवेद्यमिति । तत्राधिष्ठानगोचरान्तःकरणवृत्तिरूपज्ञाने प्रातिभासिकाध्यस्तगोचरसाक्षिरूप-ज्ञाने च दोषजन्यत्वाभावेनाविद्यानिवृत्तिविवक्षायाश्च तस्या अप्रकाशरूपतयार्थप्रकाशात्मकज्ञानत्वायोगेन कर्तुमशक्यत्वादिति भावः ॥ **व्यभिचार इति** ॥ उत्तरवादिमते तस्य सत्त्वादिति भावः ॥

**असिद्धेरिति** ॥ भट्टान्यैर्ज्ञाततानुपगमादिति भावः ॥ **बाध्यत्वादिति** ॥ प्रकृतसाध्याभावनिरूपित-व्याप्तिविशेषिततारहित्येन न बाध्यत्वहेतोः पूर्ववद्विरुद्धतेति भावः ।

सु० — सदसत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वाद्रूपरसवदित्यनिर्धारित-धर्मिनिष्ठतया सामान्यतः सिद्धस्य सदसद्वैलक्षण्यस्य केवलव्यतिरेकिणा रजतधर्मिनिष्ठतयोप-संहारान्नाप्रसिद्धविशेषणतेति चेन्न । सत्त्वासत्त्वयोरत्यन्ताभावप्रतियोगितासाधने घटादावपि सत्ताद्यभावप्रसङ्गेन बाधितविषयत्वात् । यद्धि सकलदेशकालासत्तदत्यन्ताभावप्रतियोगीत्युच्यते । यथा शशविषाणादिकम् । घटादौ च सत्त्वमभावप्रतियोगित्वलक्षणमसत्त्वं च प्रत्यक्षादिसिद्धमिति कथं न बाधितविषयत्वम्। अभावप्रतियोगितामात्रसाधनेऽप्यन्योन्याभावमुपादायार्थान्तरत्वापातः। एकस्मिन्नस्त इति साध्यत इति चेत् । किमिदं सत्त्वं नाम । सत्तासामान्यं वा स्वरूपसत्त्वं वा । नाद्यः आश्रयासिद्धेः । अस्माभिरप्यनुगतसत्ताया अनभ्युपगमात् । तदभ्युपगमवादिनां च सामान्यादित्रये सत्त्वासत्त्वयोरभावादर्थान्तरतादवस्थ्यात् । न द्वितीयः यत्किंचित्स्वरूप-सत्त्वपक्षीकारे घटादौ पटादिस्वरूपसत्त्वस्यासत्त्वविशेषस्य चाभावेनार्थान्तरतानिस्तारात् । सर्वाणि-स्वरूपसत्त्वानि सर्वाणि चासत्त्वान्येकधर्मिनिष्ठसंसर्गाभावप्रतियोगीनीति साधनेऽपि स्वरूपसत्त्वस्य धर्मत्वाभावेनासिद्धिः स्यात् ॥ विशेषणत्वं धर्मत्वम् । तच्च वस्त्वन्तरापेक्षया सर्वस्याप्यस्तीति चेत् । तथा सति वस्तुत्वमात्रं हेतुरित्युक्तं स्यात् । तच्चात्मन्यभावप्रतियोगित्वरहितेऽप्यस्तीति व्यभिचारः । अपि च प्रमेयत्वादिनाऽनैकान्तिकं धर्मत्वम् । प्रमेयत्वादीनामपि सकलधर्म-रहिते ब्रह्मण्यवृत्तेः सपक्षतैवेति चेत्तर्हि तस्मिन्नेव सत्त्वासत्त्वयोरभावेन प्रकृतप्रतिज्ञातार्थपर्यव-सानादर्थान्तरता स्यात् । एकशब्देनैकत्वगुणवतो विवक्षितत्वाद्ब्रह्मणो गुणाभावान्नेति चेत् । तथाप्येकत्वगुणवद्भिर्भिन्नाधिकरणसंसर्गराहित्येन प्रतिज्ञातार्थमन्भवादर्थान्तरताऽपरिहारात् । सत्त्वमसत्त्वानधिकरणानात्मनिष्ठसंसर्गाभावप्रतियोगीति प्रतिज्ञाने न दोष इति चेन्न । प्रमेयत्वादिषु व्यभिचारात् । असत्वं सत्वानधिकरणानात्मनिष्ठसंसर्गाभावप्रतियोगी अनात्मनिष्ठसंसर्गाभावप्रतियोगिधर्मत्वाद्रूपवदित्यनुमीयत इति चेत् । किमिदमसत्त्वं नाम । अभावप्रतियोगित्वमात्रं चेत् । तदनात्मनि सर्वत्रास्तीति परेणाङ्गीकृतत्वाद-सिद्धो हेतुः । अत्यन्ताभावप्रतियोगित्वं चेत् । तदाऽपि वक्तव्यम् । किं प्रतिज्ञाहेतोरनात्म-पदेनात्मव्यतिरिक्तमात्रं विवक्षितम् । उतात्मव्यतिरिक्तं वस्तु । आद्ये शशविषाणादावनात्मनि निर्धर्मके सत्त्वासत्त्वयोरभावेनार्थान्तरत्वापातः । द्वितीये दृष्टान्तस्य साध्यविकलता । रूपादीनां

**सत्त्वानधिकरणानात्मवस्तुनिष्ठसंसर्गाभावप्रतियोगित्वस्यासम्प्रतिपत्तेः ॥ स्यादेतत् । सद्विलक्षणत्वमसत्यसद्विलक्षणत्वं च सति प्रसिद्धमेव । अतः कथमप्रसिद्धविशेषणतेति । मैवम् । विशिष्टस्याप्रसिद्धत्वात् । अन्यथा शशविषाणोल्लिखिता भूरित्याद्यप्रसिद्धविशेषणोदाहरणेऽप्येकैकदेशप्रसिद्धिव्युत्पादनसम्भवेन तदभावप्रसङ्गात् ॥ सद्विलक्षणत्वासद्विलक्षणत्वे स्वतन्त्रे साध्ये इति चेन्न । सिद्धसाधनस्योक्तत्वात् । तर्ह्यसद्वैलक्षण्यमात्रं साध्यमस्त्विति चेन्न । जगद्ब्रह्मणयोरसद्विलक्षणयोरवृत्तेर्बाध्यत्वस्यासाधारण्यापातात् । प्रतीतत्वस्य चासत्यपि वृत्तेर्वक्ष्यमाणत्वात् । बाध्यत्वविकल्पदूषणानि चोक्तवक्ष्यमाणान्यनुसन्धेयानीति नानुमानाच्छुक्तिरजतादेरनिर्वाच्यतासिद्धिः ॥ ख्यातिबाधान्यथाऽनुपपत्तिश्चानेनैव निराकृता वेदितव्या ॥**

वा०—तदुक्तमप्रसिद्धविशेषणतापरिहारं शङ्कते ॥ **सदसत्त्वे इति** ॥ अत्र च भावत्वाभावत्वे सत्त्वासत्त्वे सदसत्त्वे एकधर्मिनिष्ठौ यावत्यन्ताभावौ तत्प्रतियोगिनी धर्मत्वाद्यौ धर्मौ तावेकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनौ यथा रूपरसौ भिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगितयाऽर्थान्तरनिरासायैकधर्मीति। न चैवं बाध्यत्वानुमानवैयर्थ्यमित्यतोऽनिर्धारितेत्याद्युक्तम् । ननु घटादौ सत्त्वाद्यभावो न ममानिष्ट इत्यतो घटादेरनिर्वचनीयताया अद्याप्यसिद्धया तत्र सत्त्वाद्यभावाभ्युपगमः प्रमाणविरुद्ध एवेत्याशयेनाह ॥ **घटादाविति** ॥ असत्त्वस्य धर्मिसत्तानिरपेक्षतासाधनसापेक्षेण शशशृङ्गाद्यसत्त्वप्रामाणिकत्वोदाहरणेन किं फलम् । घटादावेव तदुदाहरणेन प्रकृतसिद्धेरित्याशयेनाभावप्रतियोगित्वलक्षणमित्युक्तम् । यद्वा सत्त्वासत्त्वयोः स्वरूपेण प्रामाणिकत्वेऽप्येकस्मिन्धर्मिण्यप्रामाणिकत्वादेकधर्मिनिष्ठात्यन्ताभावप्रतियोगिसाधनेन बाध इत्यत एकस्मिन्नपि तयोः प्रामाणिकत्वं दर्शयितुमभावप्रतियोगित्वलक्षणमित्युक्तम् । अत्यन्तपदपरित्यागेन साध्यनिर्देशे दूषणमाह ॥ **अभावेति** ॥ **एकस्मिन्निति** ॥ एवं च संसर्गाभावसाधनान्न सत्त्वाभावप्रसङ्ग इति भावः । अभ्युच्चयेन सत्ताऽभ्युपगमवादिमतेनापि दूषणमाह ॥ **तदिति** ॥ उभयथाऽपि सत्त्वासत्त्वे इति निर्देशसंभवाद्विकल्पं मनसि निधाय क्रमेण दूषयति ॥ **यत्किञ्चिदित्यादिना** ॥ ननु धर्मत्वं विशेषणताविशेषोऽनुभवैकवेद्योऽतो नासिद्धिर्नापि वस्तुत्वतुल्यतेत्यत आह ॥ **अपि चेति** ॥ **तर्हीति** ॥ न च निर्धर्मकत्वादेव सत्त्वासत्त्ववत्तदभावोऽपि ब्रह्मणि नास्तीति वाच्यम् । सत्त्वाद्यभावाभावे सत्त्वाद्यापातेनोभयाभावस्य विरुद्धत्वाच्छ्रुतिप्रतिपन्नेन विरोधशङ्केत्यस्य निर्धर्मकत्वस्य श्रुत्यर्थतासिद्ध्यधीनतयाऽन्योन्याश्रयापातेनावक्तव्यत्वात् । अन्यथा मीमांसाऽनवतारप्रसङ्गात् । सत्त्वादितदभावयोरिव प्रमेयत्वादितदभावयोरुभयोरपि ब्रह्मण्यभावापत्त्या प्रमेयत्वादेरन्यनिष्ठाभावप्रतियोगित्वाभावात् । ब्रह्मनिष्ठाभावप्रतियोगित्वस्याप्यभावे प्रमेयत्वादौ धर्मे साध्याभावेनानैकान्त्यतादवस्थ्याच्च । न चात्माश्रयात्प्रमेयत्वादेः

स्वनिष्ठाभावप्रतियोगित्वमेवेति वाच्यम् । सद्वैलक्षण्यमिथ्यात्वदृश्यत्वादिवदनन्यथासिद्धप्रतीतिबलेन स्ववृत्तितायास्तस्यावश्याङ्गीकार्यत्वादिति भावः ॥ **तथाऽपीति** ॥ एकशब्दस्यैक्यार्थकत्वे एकस्मिन्नुभयाभावसिद्धावपि सङ्ख्यार्थकत्वेऽभावद्वयस्य भिन्नाधिकरणनिष्ठतयोभयाभावसिद्ध्याऽपि साध्योपपत्तेरित्याशयः । यद्यप्यत्र वक्ष्यमाणानुमान एव पूर्वानुमान एवैकशब्दस्यैक्यैकत्वसङ्ख्यावस्वरूपार्थद्वयस्वीकारेऽप्यव्यवहितपूर्वदोषनिवृत्तेः प्रमेयत्वादौ व्यभिचारस्य च वक्ष्यमाणप्रयोगेऽप्यनिवृत्तेः प्रयोगान्तरोपादानं नावश्यकं तथाऽपि सत्त्वासत्त्वयोर्द्वयोः पक्षत्वे रूपरसयोरुभयोरपि दृष्टान्तत्वेन निर्देष्टव्यतया गौरवापातेन यत्परेण लघुप्रयोगशरीरं प्रदर्शितं तन्निरासस्यापि सूचनाय तदनुवदति ॥ **सत्त्वमिति** ॥ भिन्नाधिकरणनिष्ठतया ब्रह्मनिष्ठतया वा भावद्वयसिद्ध्याऽर्थान्तरवारणाय क्रमेणासत्त्वानधिकरणानात्मेति साध्यविशेषणे । प्रमेयत्वाद्यव्यभिचाराय वक्ष्यमाणहेतुविशेषणस्य सत्त्वपक्षकानुमाने हेत्वसिद्ध्यापादकत्वेनानुपपत्त्याऽसत्त्वपक्षकानुमानमाह ॥ **असत्त्वमिति** ॥ दूषणानां व्यवस्थितत्वात्पक्षं विकल्पयति ॥ **किमिदमिति** ॥ द्वितीयेऽपि व्यवस्थितदूषणं वक्तुं विकल्पयति ॥ **किमिति** ॥ **असंप्रतिपत्तेरिति** ॥ रूपादिसंसर्गाभावाधिकरणानात्मवस्तुनः सत्त्वानधिकरणत्वस्य तदनिर्वचनीयतासिद्ध्यधीनत्वादिति भावः । अप्रसिद्धविशेषणश्च पक्ष इति सामान्येनोक्तत्वाद्विशिष्टस्य साध्यत्वेऽप्रसिद्धविशेषणतोक्तेत्यजानानो नैकदेशप्रसिद्धिमात्रेण विशिष्टस्याप्रसिद्धत्वेऽपि तत्साधनेन तस्यादोषत्वमित्यभिमानेन वा शङ्कते ॥ **स्यादेतदिति** ॥ एवं प्रसिद्ध्युपपादयतो विशिष्टस्य साध्यत्वमभिप्रेतं स्वतन्त्रयोर्वा । नाद्य इत्याह ॥ **विशिष्टस्येति** ॥ द्वितीयं शङ्कते ॥ **सदिति** ॥ **जगदिति** ॥ जगतो बाध्यत्वस्याद्याप्यसिद्धेरिति भावः । माऽस्तु बाध्यत्वं हेतुः प्रतीतत्वमेव हेतुर्भविष्यतीत्यत आह ॥ **प्रतीतत्वस्य चेति** ॥ ख्यातिबाधान्यथाऽनुपपत्तेर्भाष्यकारेणैवोत्तरत्रातिविशदं निराकरिष्यमाणत्वात्प्रतीतेरसत्यपि वक्ष्यमाणत्वादित्यादिदूषणान्येव सामान्येन तत्रातिदिशति ॥ **ख्यातीति** ॥ नन्वस्तु सदन्यत्वमनिर्वचनीयत्वं तत्र प्रमाणं तु रजतं सदिति प्रत्यक्षम् । तथा हि । रजतमेव सद्बुद्धिविषयो वा सत्तारूपस्तद्धर्मो वा । नाद्यः । तथात्वे सद्रजतशब्दयोः पर्यायत्वापत्त्या सहप्रयोगानुपपत्तेः । प्रपञ्चमात्रानुगतसद्बुद्धे रजतमात्रविषयकत्वानुपपत्तेश्च । नापि द्वितीयः । सर्वत्र सद्बुद्धेरधिष्ठानचैतन्यविषयत्वेनोपपत्त्याऽतिरिक्तसत्तारूपधर्मे प्रमाणाभावात् । धर्मोऽपि भवन्सत्ताजातिरूपो वा बाधायोग्यत्वं वा । नाद्यः । सामान्यादौ तदसम्भवात् । नान्त्यः । उक्तरीत्या प्रपञ्चे सद्बुद्धेरधिष्ठानचैतन्यविषयत्वेन लाघवेनैकविषयत्वसंभवेनैकविषयत्वकल्पनायोगेनान्यत्र बाधायोग्यत्वाभावात् । तस्मादधिष्ठानसद्व्यक्तितादात्म्यविषयत्वमेव सद्बुद्धेर्वक्तव्यम् । तादात्म्यं च भिन्नत्वे सत्यभिन्नसत्ताकत्वमेव । गुणगुण्यादावप्येवंभावस्यैव युक्तत्वात् । एवं च तादात्म्यस्य भेदघटिततया सदधिष्ठानतादात्म्यविषयकप्रत्यक्षेण सदन्यत्वरूपानिर्वचनीयत्वसिद्धिः ।

अनुमानं चात्र मानम् । विमतं सदन्यद्बाध्यत्वाद्यन्नैवं तन्नैवं यथाऽऽत्मेति । यद्वा । एकावच्छेदेन स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमनिर्वचनीयत्वम् । तत्रानुमानं तु अव्याप्यवृत्त्यत्यन्ताभावप्रतियोगिशुक्तिरजतं स्वसमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगि दृश्यत्वात्संयोगवदिति । अत्र चोक्तविशेषणवति रजते स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसिद्धावेकावच्छेदेन स्वसंसृज्यमानाधिकरणावृत्त्यत्यन्ताभावप्रतियोगित्वरूपविशिष्टसाध्यसिद्धिः । यद्वा । न प्रपञ्चाभावो ब्रह्मातिरिक्तः । एवं च स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वमनिर्वचनीयत्वम् । तत्रानुमानं तु । स्वसमानाधिकरणात्यन्ताभावाप्रतियोगि शुक्तिरजतं स्वानधिकरणमात्रावृत्त्यन्ताभावप्रतियोगि दृश्यत्वात्संयोगादिवदिति । अत्रापि विशिष्टसाध्यसिद्धिः पूर्ववदेव । अत्यन्ताभावस्य स्वानधिकरणमात्रावृत्तित्वं च स्वाधिकरणवृत्तित्वेन वा सर्वत्रावृत्तित्वेन वा । तत्र संयोगात्यन्ताभावस्य प्रतियोग्यधिकरणवृत्तित्वात्संयोगे साध्यपर्यवसानम् । स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वेन पक्षविशेषणात्स्वाधिकरणवृत्तित्वेन पक्षे सन्ध्यपर्यवसानस्य बाधितत्वात्सर्वत्रावृत्तित्वेन सिद्ध्यत्स्वाभिमतं साध्यमादाय सिद्ध्यतीति । साध्ये मात्रपदं विना साध्याप्रसिद्धेर्न विवक्षितसाध्यसिद्धिरिति तदुपादानम् । व्यधिकरणप्रकारकत्वादेरसंभवात् । अनिर्वचनीयार्थविषयकत्वेनैव भ्रान्तिज्ञानत्वस्य वक्तव्यतया भ्रान्तिज्ञानत्वप्रसिद्ध्यन्यथाऽनुपपत्तिरपि तदनिर्वचनीयत्वे मानम् । एवं ख्यातिबाधान्यथाऽनुपपत्तिरपीत्याह तत्सर्वमनेनैवापहस्तितं भवति । तथा हि । सदिति प्रत्यक्षस्य सदन्यत्वविषयकत्वं तावद्विरुद्धम् । सद्बुद्धे रजतमात्रविषयकत्वसत्ताजातिविषयत्वासंभवेऽपि बाधायोग्यत्वविषयकत्वसंभवात् । तत्प्रपञ्चप्रतीतिविषयभूतं सच्छुक्तिरजतादिप्रतीतिविषयीभूतं त्वसदित्येव विशेषः । न च तत्प्रतीतेश्चैतन्यविषयकत्वोपपत्तौ ब्रह्मणोऽन्यत्र न तदित्युक्तमिति वाच्यम् । तर्हि नीलो घट इत्यादौ प्रतीयमाननैल्यादेरपि ब्रह्मरूपत्वापत्त्या घटादौ नैल्याद्यपि न स्यात् । घटादौ नैल्याद्यस्ति सत्त्वं तु नेत्यस्यारोपितत्वसिद्ध्यधीनतयान्योन्याश्रयात् । अन्यथा ब्रह्मैव सदन्यदसदित्यस्याव्याप्यसिद्ध्या सत्यं ज्ञानमित्यत्राप्यधिष्ठानपरत्वाभ्युपगमप्रसङ्गात् । अधिष्ठानसत्ताया एव प्रपञ्चादिनिष्ठत्वे । प्रपञ्चादेः पारमार्थिकत्वापत्तेश्च । आरोपितत्वे च नाधिष्ठाननिष्ठत्वं कल्प्यम् । न ह्यन्यथाख्यातिवादिवदनिर्वचनीयख्यातिवादिनोऽप्यारोपितस्यान्यत्र सत्त्वमावश्यकमिति वक्ष्यमाणत्वात्पारमार्थिकसत्ताया अपि प्रतीतिः पारमार्थिकत्वेन वा व्यावहारिकत्वेन वेत्याद्यनुपदवक्ष्यमाणदूषणग्रासाच्च । तादात्म्यविषयकत्वेऽपि तस्याभेदरूपत्वेन भेदघटितत्वाभावाद्गुणादावप्यभेदस्य वैशेषिकपरीक्षायामुपपादयिष्यमाणत्वाच्च । तस्मान्न प्रत्यक्षं तत्र मानम् । अनुमानेऽपि सदन्यत्वं सत्त्वाभावमात्रं साध्यमुत सत्प्रतियोगिकान्योन्याभाववत्त्वम् । नोभयमपि । उक्तरीत्या सिद्धसाधनत्वात् । द्वितीये बाध्यत्वं हेतूकृतं किमन्यथाविज्ञातस्येत्याद्यस्मदुक्तरूपमुत विनाश्यत्वमाहोस्वित्त्रैकालिकनिषेधप्रतियोगित्वरूपम् । आद्ये आत्मनि व्यतिरेकदृष्टान्ते

साधनाव्यावृत्तिः । द्वितीये तु न हि नाशोऽसतो भवेदिति वक्ष्यमाणरीत्या नाश्यत्वस्य सत्त्वव्याप्ततया विरुद्धत्वम् । तृतीये तु तादृशबाध्यत्वस्यासत्यपि सत्त्वादसतो निःस्वरूपत्वेन सदन्योन्याभावाद्यभावस्य त्वयैवोपपादनादनैकान्त्यापत्तेः । अन्यथा सदन्यत्वरूपानिर्वाच्यत्वलक्षणस्य तत्रैवातिव्याप्त्यापत्तेः । द्वितीयानुमानेऽसदेवेदं रजतमित्याद्यनुभवेन रजतस्यासत्त्वेन निरधिकरणत्वात्स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसाधने बाधः । हेतूक्तं दृश्यत्वं च वृत्तिविषयत्वं चेत् । ब्रह्मण्यनैकान्तिकत्वम् । चैतन्यविषयत्वं चेत् । शुक्तिरजतादेरपि वृत्तिविषयत्वस्यैवोपपादयिष्यमाणत्वादसिद्धिः । संयोगतदत्यन्ताभावयोरपि भिन्नाधिकरणनिष्ठतया दृष्टान्ते साध्यवैकल्यं च । दृश्यत्वेनैव संयोगवदेव साध्याभावस्यापि सुसाधत्वात्प्रतिपक्षश्च । एवमन्यदप्यूह्यम् । तृतीयानुमानेऽपि ब्रह्मणोऽत्यन्ताभावरूपत्वासम्भवेन बाधितत्वम् । हेतुदृष्टान्तदूषणं च पूर्ववज्ज्ञेयम् । भ्रान्तिज्ञानत्वसिद्धेश्चासद्विषयकत्वेनाप्युपपत्तेः । सतो बाधस्यासतोऽपि प्रतीतेश्चोपपादयिष्यमाणत्वान्नार्थापत्तिरपि अनिर्वचनीयतायां प्रमाणमिति युक्तमुक्तं प्रमाणाभावादिति । यद्वा । अनिर्वचनीयं चेत्कथं सदिति प्रतीतिः । अनिर्वचनीयमित्येव प्रतीतिः स्यादिति वक्ष्यमाणतर्के सदिति प्रतीतेरेवानिर्वचनीयप्रतीतित्वादितीष्टापादनशङ्काप्रापकतया परोदीरितप्रत्यक्षोपपादनप्रकारमुपन्यस्यानिर्वचनीयमिति कोऽर्थो व्यावहारिकमिति वा प्रातिभासिकमिति वेति विकल्पपूर्वकवक्ष्यमाणदूषणैरनुपदमस्मदुक्तदूषणैश्च तन्निरासो बोद्धव्यः ।

स० —**सदसत्त्वे इति** ॥ एकधर्मिनिष्ठौ यावत्यन्त्याभावौ तत्प्रतियोगिनी । धर्मत्वात् रूपरसवदिति प्रयोगः । ननु नात्यन्ताभावप्रतियोगित्वं साध्यते येन बाधः नाप्यन्योन्याभावप्रतियोगित्वं येनार्थान्तरता किन्त्वेकधर्मिनिष्ठसंसर्गाभावप्रतियोगित्वमेवातो नोक्तदोष इत्याशयेन शङ्कते ॥ **एकस्मिन्नस्त इतीति** ॥ तच्चात्मन्यभावप्रतियोगित्वरहित इति । आत्मनः सत्यत्वादिति भावः । **तथाप्येकत्वगुणवद्भिन्नाधिकरणेति** ॥ एकत्वगुणवत्वे सति भिन्नं यदधिकरणं तत्संसर्गराहित्येनेत्यर्थः । एकत्र सत्त्वसंसर्गाभावोपरत्रासत्त्वसंसर्गाभाव इति सिध्येदिति भावः ॥ **प्रमेयत्वादिषु व्यभिचारादिति** ॥ न च केषामपि किञ्चिन्निष्ठाभावप्रतियोगिता साध्यत इति वाच्यम् । केवलान्वयिधर्माणामप्युक्तरूपतासाधने व्यतिरेकिधर्माणां तथात्वस्य सुतरां सिद्धत्वात्सर्वे धर्माः किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिन इति साधितं स्यात्तथा च सर्वधर्मात्यन्ताभावाधिकरणत्वे व्यभिचारः । नन्वस्यापि धर्मस्य पक्षनिक्षिप्तत्वान्न दोष इति चेन्न । तर्हि कस्यचित्सकलधर्मवत्वं विरुद्धमापद्येत । ननु व्यतिरेकिधर्मत्वं हेतुरतो न प्रमेयत्वादिष्वनैकान्तिकेति चेन्न । अविरुद्धत्वस्योपाधित्वात् । तच्च परस्परप्रतिषेध्यप्रतिषेधानात्मकत्वम् । प्रतिषेधश्चात्यन्ताभाव इति न कश्चित् क्षुद्रोपद्रव इत्यपि द्रष्टव्यम् ॥ **असत्त्वं सत्त्वानधि-**

**करणेति** ॥ सत्त्वपक्षीकारे स्वरूपसत्त्वरूपस्य तस्यात्मभिन्नसकलवस्तुनिष्ठत्वेन बाधासिद्धी स्यातामतो-ऽसत्त्वं पक्षीकृतमिति ज्ञेयम् ॥ **निर्धर्मक इति** ॥ यथा सद्रूपेऽपि ब्रह्मणि निर्धर्मकत्वेन सत्त्वाभाव एव-मसद्रूपेऽपि शशविषाणादौ निर्धर्मकत्वेनासत्त्वाभाव इत्यर्थः ॥ **रूपादीनां सत्त्वानधिकरणेति** ॥ सामान्यानङ्गीकारेणात्मभिन्नवस्तुमात्रस्य स्वरूपसत्त्वाधिकरणत्वादिति भावः ॥ **सिद्धसाधनस्योक्तत्वा-दिति** ॥ सद्वैलक्षण्यरूपसाध्य इति शेषः ॥ **बाध्यत्वस्येति** ॥ बाधकज्ञानविषयत्वमात्रस्य जगद्ब्रह्मणोः सत्त्वेऽपि तस्य परानभिप्रेतत्वात्पराभिप्रेतस्य च ज्ञानत्वेन ज्ञाननिवर्त्यत्वादिरूपस्य जगद्ब्रह्मणोरप्रवेशे-नासाधारण्यमित्यर्थः । तर्हि प्रतीतत्वं हेतुरस्त्वित्यत आह ॥ **प्रतीतत्वस्य चेति** ॥ असद्विलक्षणज्ञस्यै इत्यादिनेति शेषः । तथा च तत्र व्यभिचार इति भावः ।

प० — अप्रसिद्धतां परिहर्तुं सामान्यप्रसिद्धिं साधयति ॥ **सदसत्वेति** ॥ सत्त्वासत्त्वे इत्यर्थः । सिद्धान्तिना सदसदात्मकत्वस्य क्वाप्यनङ्गीकारात् । सदात्मकमसदात्मकं चेति द्वैविध्यस्योपगमेन तं प्रत्येकस्मिन्वस्तुनि सत्त्वासत्त्वरूपधर्मराहित्यरूपमेवानिर्वाच्यत्वमिति भावेन धर्मद्वयमेव पक्षत्वेनोपात्तम् । न तु सदसदात्मकत्वरूपधर्मोऽपि । यद्वा सत्त्वासत्त्वराहित्यस्य क्वचिद्धर्मिणि साधने सदसत्त्वराहित्यमपि स्वत एव सेत्स्यतीतिभावेन द्वयोरेवोपपादनमिति ध्येयम् ॥ **एकेति** ॥ एकधर्मिनिष्ठौ यावत्यन्ता-भावौ तत्प्रतियोगिनी इत्यर्थः । सत्त्वं विद्यमानत्वं असत्त्वमभावप्रतियोगित्वमित्यर्थमुपेत्य दोषमाह ॥ **घटादावपि सत्त्वाद्यभावप्रसङ्गेनेति** ॥ कुत एवमित्यतः एवं साधने सत्त्वासत्त्वयोरलीकतापत्तेरिति भावेन तद्यनक्ति ॥ **यद्वीति** ॥ नन्वत्यन्ताभावप्रतियोगिनी इत्यत्रात्यन्तपदं परित्यज्यत इत्यत आह ॥ **अभावप्रतियोगितामात्रेति** ॥ सत्त्वासत्त्ववत्यपि वस्तुनि तदन्योन्याभावसम्भवेन त्वदभिमतोभय-राहित्यासिद्धेरर्थान्तरतेत्यर्थः । नन्वत्यन्ताभावप्रतियोगिनी इत्येव साध्यार्थः । न चैवमुक्तरूपसत्त्वा-सत्त्वयोर्नृशृङ्गवदलीकता । यथा गोत्वमश्वे नास्तीत्युक्तौ गोत्वस्य नालीकत्वमपि तु गोत्वाश्वसंसर्गस्यैवा-त्यन्ताभावप्राप्त्या संसर्गस्यालीकत्वम् । एवं सत्त्वासत्त्वयोरेकधर्मिसंसर्गस्यैव निषेधो न सत्त्वासत्त्वयोर्येन तयोरलीकत्वप्राप्त्या घटादौ तद्ग्राहकप्रत्यक्षबाध इति भावेन शङ्कते ॥ **एकस्मिन्न स्त इति साध्यत इति चेदिति** ॥ इयता ग्रन्थेन 'वैलक्षण्यं सतश्चापी'तिश्लोकस्य जगतोऽनिर्वाच्यत्वानुमान-दूषणपरतयोक्तयोजनारीत्या शुक्तिरूप्यानिर्वाच्यत्वानुमानदूषणेऽपि योजना सूचिता । एवं 'यद्युच्यतेऽ-पि सर्वसादि'त्यादेरपि शुक्तिरूप्यादेरनिर्वाच्यत्वसाधकदूषणपरतयाऽपि योजनां सूचयन्पक्षीकृतसत्त्वं विकल्प्य निराह ॥ **किमिदमिति** ॥ असत्त्वं च निःस्वरूपत्वमिति भावः ॥ **आश्रयेति** ॥ एकांश इति इति ध्येयम् । 'वैलक्षण्यं सतश्चापी'त्यत्र सदसच्छब्दयोः स्वरूपसत्त्वासत्त्वविशेषपरत्वं मत्वा तस्यार्था-न्तरपरत्वपरयोजनां सूचयन्नाह **यत्किञ्चिदिति** ॥ असत्त्वविशेषस्य निःस्वरूपत्वरूपस्येत्यर्थः ।

'यद्युच्यतेपी'त्यर्धस्य योजनान्तरं सूचयन्नाह ॥ **सर्वाणीत्यादिना** ॥ **वस्त्वन्तरापेक्षयेति** ॥ घटसत्वस्य धीरित्यादिप्रयोगे सत्त्वस्य विशेषणत्वादिति भावः । 'सन्मात्रत्वं ब्रह्मणोपी'त्यस्य वस्तुत्वमात्रत्वमित्यर्थान्तरं सूचयन्नाह ॥ **तच्चात्मनीत्यादिना** ॥ **प्रमेयत्वादिनेति** ॥ तस्य केवलान्वयिधर्मत्वेनाभावाप्रतियोगित्वादिति परैरुपगमादिति भावः ॥ **एकत्वगुणेति** ॥ एकधर्मिनिष्ठेत्यादेर्हि एकत्वगुणयुक्तधर्मिनिष्ठेत्यादिरर्थः । तथाच एकत्वगुणवती एकत्वगुणयुक्ते ये अन्योन्यभिन्ने अधिकरणे तन्निष्ठौ यावत्यन्ताभावौ एकत्र सत्त्वसंसर्गाभावो परत्रासत्त्वसंसर्गाभाव इत्येवं रूपौ तत्प्रतियोगिनी इत्यर्थसम्भवेन त्वदभिमतोभयराहित्यस्यैकत्रासिद्ध्याऽर्थान्तरतेत्यर्थः । अत्यन्ताभावेत्यस्य एकस्मिन्नस्त इतिसाध्यत इतिपूर्वग्रन्थे अप्रामाणिकसंसर्गप्रतियोगिकाभावपरत्वस्योक्ततया संसर्गराहित्येनेत्युक्तम् । **नत्वत्यन्ताभावेनेति** ॥ **असत्वेति** ॥ असत्त्वानधिकरणं यदनात्म तन्निष्ठेत्यर्थः ॥ **नदोष इति** ॥ अर्थान्तरतादोषो नेत्यर्थः । प्रमेयत्वादावव्यभिचारायसत्त्वपक्षकं प्रयोगमाह ॥ **असत्वमिति** ॥ शशनृश्रृङ्गनिष्ठाभावप्रतियोगित्वेन प्रमेयत्वादौ साध्यमस्तीतिभावः । हेत्वभावाच्च न व्यभिचार इतिभावेन हेतुं विशिनष्टि । अनात्मनिष्ठसंसर्गाभावप्रतियोगिधर्मत्वादिति । सत्त्वपक्षके ऽसत्त्वपक्षके चोभयत्र दोषमाह ॥ **आद्य इति** ॥ **असंप्रतिपत्तेरिति** ॥ अनात्मवस्तुमात्रस्य सत्त्वाधिकरणत्वादिति भावः । अप्रसिद्धिवारकसामान्यानुमानस्य खण्डितत्वात् । विमतमनिर्वचनीयं बाध्यत्वादित्यत्राप्रसिद्धिनिवारणाय प्रकारान्तरेण साध्यमाशङ्कते ॥ **स्यादेतदित्यादिना** ॥ **सिद्धसाधनस्येति** ॥ सद्वैलक्षण्याद्यंशे सिद्धसाधनस्य शुक्तिरजतादेः सत्त्वस्य सदसत्त्वस्य चास्माभिरङ्गीकृतत्वेन सिद्धसाधनत्वादितिग्रन्थेनोक्तत्वादिति भावः ॥ **बाध्यत्वस्येति** ॥ ब्रह्मज्ञानेतरनिवर्त्यत्वरूपस्येत्यर्थः । नन्वेवं प्रतीतत्वं हेतुरस्तु । जगद्ब्रह्मणोश्च दृश्यत्वेन नासाधारण्यमित्यत आह ॥ **प्रतीतत्वस्य चेति** ॥ **वक्ष्यमाणत्वादिति** ॥ असद्विलक्षणेत्याद्युत्तरग्रन्थ इति भावः । असतीत्युपलक्षणम् । ईक्षतिनयादौ ब्रह्मणोऽपीति ज्ञेयम् । तथाच तत्र व्यभिचार इत्याकूतम् । नन्वेवं बाध्यत्वमेवहेतुरस्तु । न चासाधारण्यम् । तस्य दशाविशेष एव दोषत्वेनानुकूलतर्के सत्यदोषत्वादित्यत आह ॥ **बाध्यत्वेति** ॥ 'ज्ञानबाध्यत्वमपि त्वित्यत्रोक्तानि । 'कश्चायं बाध उद्दिष्टो न हि नाशोऽसतो भवेदि'त्यादिना द्वितीये 'पृथगुपदेशादि'त्येतदनुव्याख्यानादौ वक्ष्यमाणानीत्यर्थः । विवृतानि चानिर्वाच्यत्वानुमानदूषणानि न्यायामृते प्रथमपरिच्छेदेऽनिर्वाच्यत्वानुमानभङ्गे तदर्थापत्तिभङ्गे च ॥ **ख्यातीति** ॥ असच्चेन्न ख्यायेत सच्चेन्न बाध्येत ख्यायते च शुक्तिरूप्यं बाध्यते च तेन तदुभयान्यथानुपपत्तिश्च शुक्तिरूप्यादेः सदसद्विलक्षणत्वे मानमिति निरस्तमित्यर्थः ॥ **अनेनेति** ॥ असतोऽपि ख्यातेर्वक्ष्यमाणत्वात् । सतोऽपि ब्रह्मणो विज्ञातस्यान्यथासम्यगित्युक्तबाध्यत्वसत्त्वेन व्यभिचारः कश्चायं बाध इत्यादिवक्ष्यमाणदिशा ज्ञाननिवर्त्यत्वरूप-

बाधस्य शुक्तिरूप्यादावभावात्त्रैकालिकनिषेधप्रतियोगित्वेऽसत्त्वापत्त्याऽसद्विलक्षणत्वपक्षे बाध्यते चेति विपर्ययपर्यवसानायोगादित्याद्युक्तवक्ष्यमाणबाध्यत्वादिदूषणगणेनेत्यर्थः ॥

या०—**सत्त्वासत्त्वे इति** ॥ धर्मद्वयस्य पक्षतयोक्तत्वाद्रूपरसवदिति धर्मद्वये दृष्टान्ततयोक्तमिति मन्तव्यम् । एकधर्मिनिष्ठौ यावत्यन्ताभावौ तत्प्रतियोगिनी इति द्वित्वावच्छिन्नाभावप्रतियोगित्वं साध्यतया विवक्षितम् । धर्मद्वयनिष्ठं धर्मत्वमेव हेतुतया विवक्षितम् । अन्यथैकस्मिन्व्यभिचारापत्तेः । तत्र च दृष्टान्ततया धर्मद्वयप्रदर्शनं युक्तमेवेत्याहुः । भिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वस्यास्माकं सिद्धतया सिद्धसाधनतावारणायैकधर्मीति साध्ये विशेषणमिति ज्ञातव्यम्। साध्येऽत्यन्तपदस्य विवक्षायां बाधः । अविवक्षायामर्थान्तरतेत्याह ॥ **सत्त्वासत्त्वयोरित्यादिना** ॥ **घटादाविति** ॥ अत्रादिपदेन शशशृङ्गादिकं ग्राह्यम् । एवमग्रेऽपि । नन्वसत्त्वस्य धर्म्यभावात्कुत्र प्रत्यक्षादिसिद्धत्वमित्यत उक्तम् ॥ **अभावप्रतियोगित्वलक्षणमिति** ॥ तथाच प्रतियोगित्वस्य रूपादिवद्धर्मिसत्तासापेक्षत्वाभावेन धर्म्यभावेऽपि प्रत्यक्षादिसिद्धत्वमिति भावः । ननु नात्यन्ताभावप्रतियोगित्वं साध्यते येन बाधो नाप्यन्योन्याभावप्रतियोगित्वं येनार्थान्तरता । किं त्वेकधर्मिनिष्ठसंसर्गाभावप्रतियोगित्वमेवातो नोक्तदोष इत्याशयेन शङ्कते ॥ **एकस्मिन्न स्त इतीति** ॥ **तथा सतीति** ॥ विशेषणत्वरूपधर्मत्वस्य धर्मिसाधारणत्वे धर्मधर्मिसाधारणं वस्तुत्वमेव धर्मत्वमित्युक्तं स्यादित्यर्थः ॥ **अभावप्रतियोगित्वरहित इति** ॥ तस्य पारमार्थिकत्वान्निर्धर्मकत्वाच्चेति भावः । ननु निर्विशेषे वस्तुत्वमपि नेति कथं व्यभिचार इत्यरुचेराह ॥ **अपि चेति** ॥ **तथाऽप्येकत्वेति** ॥ एकत्वगुणवन्ति यानि भिन्नानि घटपटादीनि तत्र प्रत्येकं सत्त्वासत्त्वयोः संसर्गनिषेधेत्यर्थः । निषेधाधिकरणयोर्भिन्नत्वेऽपि प्रत्येकमेकत्वगुणवत्त्वसम्भवेन त्वदभिलषितमुभयनिषेधधर्म्यैक्यं न सिध्यतीति भावः ॥ **सत्त्वमिति** ॥ अत्रात्मभिन्नशशविषाणाद्यसन्निकृष्टसंसर्गाभावप्रतियोगित्वेनार्थान्तरत्ववारणायासत्त्वानधिकरणेत्यनात्मविशेषणम् । निर्धर्मकात्मनिष्ठसंसर्गाभावप्रतियोगित्वेन अर्थान्तरत्वपरिहाराय अनात्मेति ॥ **असत्त्वमिति** ॥ अत्राप्यनात्मपदकृत्यं पूर्ववदेव सिद्धसाधनतावारणाय सत्त्वानधिकरणेत्यनात्मविशेषणम् । हेतौ च प्रमेयत्वादौ व्यभिचारवारणायानात्मनिष्ठसंसर्गाभावप्रतियोगीति धर्मविशेषणम् । तथाच व्यतिरेकिधर्मत्वं हेतुरित्युक्तं भवति ॥ **परेणेति** ॥ त्वत्प्रतिवादिनेत्यर्थः ॥ **शशविषाणादाविति** यथा सद्रूपेऽपि ब्रह्मणि निर्धर्मकत्वेन सत्त्वासत्त्वाभाव एवमसद्रूपेऽपि शशविषाणादौ निर्धर्मकत्वेनासत्त्वाभाव इत्यर्थः ॥ **रूपादीनामिति** ॥ रूपादिप्रतियोगिकसंसर्गाभावाधिकरणस्यानात्मनो गुणक्रिययोः सत्त्वाधिकरणत्वादिति भावः । किं विशिष्टस्य साध्यत्वमङ्गीकृत्य तस्यैव विशकलितप्रसिद्धिरुच्यते उत स्वतन्त्रं साध्यद्वयमिति

विकल्पं मनसि निधायाद्यं दूषयति ॥ **विशिष्टस्येति** ॥ द्वितीयं शङ्कते ॥ **सद्विलक्षणत्वेति** ॥ **सिद्धसाधनत्वस्येति** ॥ सद्वैलक्षण्यलक्षणसाध्य इति शेषः ॥ **बाध्यत्वस्येति** ॥ पराभिप्रेतस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपस्येति शेषः ॥

श्री० — **रूपरसवदिति** ॥ अत्र सत्त्वासत्त्वयोरुभयोः पक्षत्वात्तदनुसारेण दृष्टान्तद्वयमित्येतन्न स्वरसम् । तथात्वेऽनित्ये वाङ्मनसे मूर्तत्वाद्घटवदित्यत्रापि दृष्टान्तद्वयं वाच्यं स्यात् । तस्मात् दृष्टान्तद्वयस्य प्रयोजनमिदं द्रष्टव्यम् । तथाहि । अत्रैकधर्मिनिष्ठो योऽत्यन्ताभावस्तत्प्रतियोगित्वे साध्ये पक्षीभूतयोः सत्त्वासत्त्वयोरेकात्यन्ताभावप्रतियोगित्वाभावेन बाधापत्त्याऽत्यन्ताभावद्वयप्रतियोगित्वे साध्यतयावश्यं वक्तव्ये तत्र रूपस्यैकस्यैव दृष्टान्तत्वे तत्रात्यन्ताभावद्वयप्रतियोगित्वाभावेन साध्यवैकल्यापत्त्या दृष्टान्तद्वयग्रहणमिति द्रष्टव्यम् ॥ **केवलव्यतिरेकिणेति** ॥ विमतमनिर्वचनीयं बाध्यत्वाद्व्यतिरेकेणात्मवदित्यनुमानेनेत्यर्थः । तदुपपादयति ॥ **यद्धीति** ॥ घटादावित्यादिपदेन शशविषाणं ग्राह्यम् ॥ **कथं नेति** ॥ तथाच घटाद्येकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वाभावाद्बाधितविषयत्वमित्यर्थः । ननु नात्यन्ताभावप्रतियोगित्वं साध्यते । येन सत्त्वासत्त्वयोरप्रामाणिकत्वापत्त्याऽनुमानस्य प्रत्यक्षबाधः स्यात् । किं नामात्यन्तपदपरित्यागेनाभावप्रतियोगित्वमात्रमेवातो नोक्तदोष इति चेत्तत्राह ॥ **अभावेति** ॥ **सामान्यादित्रय इति** ॥ तथा चैकस्मिन्सामान्यादित्रये न सत्त इत्यपि प्राप्त्याऽर्थान्तरतेत्यर्थः । जातिश्चैतास्त्रयाश्रयेति वचनात्सामान्यादित्रये सत्तासामान्यं नास्तीति द्रष्टव्यम् । असत्त्वविशेषस्य निःस्वरूपत्वस्य ॥ **अनैकान्तिकमिति** ॥ केवलान्वयित्वेनात्यन्ताभावप्रतियोगित्वाभावादिति भावः । साध्यस्यापि सत्त्वान्न व्यभिचार इत्याशङ्कते ॥ **प्रमेयत्वादेरपीति** ॥ **तस्मिन्नेवेति** ॥ सकलधर्मरहिते ब्रह्मण्येवेत्यर्थः ॥ **भिन्नाधिकरणेति** ॥ प्रत्येकं सदसद्रूपभिन्नाधिकरणेत्यर्थः । तथा चैकत्वगुणवत्सद्रूपधर्मिनिष्ठसंसर्गाभावप्रतियोगित्वस्यासत्त्वे सद्भावात्तथैकत्वगुणवदसद्रूपधर्मिनिष्ठसंसर्गाभावप्रतियोगित्वस्य सत्त्वे सद्भावेनार्थान्तरतेति भावः । एकत्वस्य प्रतियोगित्वादिवदसत्यपि सद्भावाङ्गीकारेणेदमुक्तमित्यवगन्तव्यम् ॥ **सत्त्वमिति** ॥ अत्रानुमाने धर्मत्वमेव हेतुरिति भावः ॥ असत्त्वानधिकरणेनात्मनि सत्त्वं नास्तीत्युक्त्या तस्यानात्मनः सदसत्त्वानधिकरणत्वं प्राप्तमिति ज्ञातव्यम् । एवमेवोत्तरानुमानेऽपि बोध्यम् ॥ **रूपवदिति** ॥ अनात्मभूतगुणकर्मवाय्वादिनिष्ठत्वभावाद्दृष्टान्ते हेतुर्द्रष्टव्यः । सत्त्वानधिकरणानात्मभूतशशविषाणादिनिष्ठत्वाभावेन रूपादौ साध्यं चास्तीति द्रष्टव्यम् । अनात्मनि घटादावभावात्पक्षे हेतुरस्तीति द्रष्टव्यम् ॥ **असिद्धो हेतुरिति** ॥ पक्षीभूतेऽभावप्रतियोगित्वरूपेऽसत्त्वेऽनात्मनिष्ठसंसर्गाभावप्रतियोगित्वरूपो हेतुर्नास्ति । अनात्मन्यविद्यमानत्वं तदर्थः । अभावप्रतियोगित्वस्य चानात्मनि घटादौ

सत्त्वादिति भावः । वस्त्विति शशविषाणादिव्यावृत्तिः ॥ **शशविषाणादाविति** ॥ पक्षीभूतेऽत्यन्ताभावप्रतियोगित्वरूपासत्त्वे सत्त्वानधिकरणमात्मभिन्नं यत् शशविषाणादिकं तन्निष्ठसंसर्गाभावप्रतियोगित्वमस्ति । अत्यन्ताभावप्रतियोगित्वरूपमसत्त्वं निर्धर्मके शशविषाणादौ नास्तीति सत्त्वासत्त्वानधिकरणत्वं शशविषाणादावेव प्राप्तं न रजते इत्यर्थान्तरतेत्यर्थः । तामुपपादयति ॥ **रूपादीनामिति** ॥ रूपे आत्मभिन्नगुकर्मादिनिष्ठसंसर्गाभावप्रतियोगित्वे सत्यपि रूपादिप्रतियोगिकसंसर्गाभावाधिकरणस्यात्मभिन्नस्य गुणकर्मादेर्वस्तुनः सत्त्वेन सत्त्वानधिकरणत्वाभावात्सत्त्वानधिकरणानात्मनिष्ठसंसर्गाभावप्रतियोगित्वं नास्तीति साध्यवैकल्यमित्यर्थः ॥ **अतः कथमिति** ॥ विमतमनिर्वचनीयं बाध्यत्वादित्यनुमान इत्यर्थः । नन्वसद्विलक्षणत्वं बाध्यत्वहेतुना न साध्यते । येनासाधारण्यं स्यात् । किं नाम प्रतीतत्त्वहेतुनैवातो नोक्तदोष इत्यत आह ॥ **प्रतीतत्वस्य चेति** ॥ **वृत्तेरिति** ॥ तथा चासति व्यभिचार इति भावः ।

**च०**— अप्रसिद्धविशेषणतापरिजिहीर्षया शङ्कते ॥ **सदसत्त्वे इति** ॥ वाङ्मनसे अनित्ये इत्यादाविव प्रकृते साध्यनिष्ठनानाविधेयतानिरूपिततत्तद्वृत्तिप्रातिस्विकधर्मावच्छिन्ननानाविशेष्यताकसमूहालम्बनानुमितिरेवोद्देश्या । न तु व्यासज्यवृत्तिधर्मावच्छिन्नैकोद्देश्यताका । तथा सति पक्षतावच्छेदकीभूतव्यासज्यवृत्तिधर्मावच्छिन्ने एकसत्त्वेऽपि द्वयं नास्तीति दिशा सद्व्यक्तिवृत्तित्वावच्छिन्नाभावप्रतियोगिताया असद्व्यक्तिवृत्तितादृशाभावप्रतियोगिताया वा सिद्ध्या सिद्धसाधनताद्यापत्तेः एकधर्मिनिष्ठात्यन्ताभावनिरूपितव्यासज्यवृत्तिधर्मावच्छिन्नप्रातिस्विकप्रयोगिताद्वयस्य च तादृशधर्मावच्छेदेन दुःस्थतया तादृशप्रतियोगिताद्वयसाधनस्यासंभवदुक्तिकत्वात् । तादृशव्यासज्यवृत्तिधर्मसामानाधिकरण्येन तादृशात्यन्ताभावनिरूपितप्रतियोगिताद्विककत्वावच्छिन्नस्य बाधिततया दुःसाधत्वात् । तत्सामानाधिकरण्येन तादृशात्यन्ताभावनिरूपितव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगितात्वावच्छिन्नसाधनस्य चासत्त्वे सिद्धसाधनत्वापादकत्वात् सत्त्वासत्त्ववृत्तितत्तद्व्यक्तित्वावच्छेदेन साधने तूक्तक्षत्यवतारेण साध्यीभूतप्रतियोगितायां व्यासज्यवृत्तिधर्मावच्छिन्नत्वं निवेशनीयम् । इत्थं चैकधर्मिपदेन ब्रह्मालीकान्या व्यक्तिरेवोपादेयेत्यभिप्रेततया ब्रह्मवृत्त्यभावप्रतियोगित्वस्यासत्त्वे अलीकवृत्यभावप्रतियोगित्वस्य च सत्त्वे सिद्धावपि न क्षतिः । अत एव निदर्शनीकृतरूपरसाख्यव्यक्तिद्वयवृत्तितत्तद्धर्मावच्छिन्नाभावप्रतियोगिताद्वयप्रकारिकैव संप्रतिपत्तिः प्रकृतौपयिकीति ध्वनयितुमेव तयोर्निदर्शनीकरणं सङ्गच्छत इति विभावनीयम् । प्रतिज्ञावाक्यघटकसाध्योपस्थापकपदघटकतयात्यन्तपदनिवेशे बाधस्तदनिवेशे चार्थान्तरतेत्याह ॥ **सत्त्वासत्त्वयोरित्यादि** ॥ घटादावपीत्यादिपदेनालीकमुपादेयम् । सत्त्वादीत्यादिपदेनासत्त्वम् । घटादौ चेत्यत्राप्यादिपदेन तदुपादेयम् ॥ **अभावप्रतियोगित्वलक्षणमिति** ॥ अत्यन्ताभावप्रतियोगित्वलक्षणमसत्त्वं धर्मिसत्तानिरपेक्ष-

मलीके प्रामाणिकमित्यर्थः । प्रत्यक्षादीत्यादिपदमलीकपदाभिधेयम् अत्यन्ताभावप्रतियोगीत्यादि-वाक्यसंग्राहकम् । तथाच प्रत्यक्षेण घटे सत्यमलीके वाक्येनासत्त्वं च सिद्धमिति बाधितविषयत्व-मित्यर्थः । ननु ह्रदे वह्निर्नास्तीत्यादाविव पक्षीकृतव्यक्तिद्वये स्वप्रतियोगिकैकव्यक्त्यनुयोगिकसंसर्गरूपं यदलीकं तदभावस्यैव सिषाधयिषिततया नोक्तक्षत्यवकाश इत्याशङ्कते ॥ **एकस्मिन्नस्त इति ॥ तथा सतीति** ॥ धर्मधर्मिसाधारणविशेषणतामात्रविवक्षायामित्यर्थः । आत्मनोर्निर्धर्मतया हेतोरनागमना-न्नानैकान्त्यमित्यरुचेराह ॥ **अपि चेति** ॥ तस्मिन्नेव ब्रह्मण्येव ॥ **तथाप्येकत्ववदिति** ॥ स्वसमभि-व्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेण स्वसजातीयद्वितीयरहितत्वरूपपारिभाषिकैकत्वस्या-विवक्षिततया संख्यारूपस्यैव तस्याभिप्रेततया तस्य च व्यक्त्यानन्त्यस्थलेऽपि प्रत्येकमक्षतत्वादिति भावः । **सत्त्वमिति ॥ संसर्गाभावप्रतियोगीति** ॥ उक्तदिशा स्वप्रतियोगिकनादृशानात्मानुयोगिकालीकसंसर्ग-स्याभावे सत्त्वे साधनीय इत्यर्थः । प्रामाणिकप्रतियोगिकात्यन्ताभावानुपगमेन प्रागभावप्रध्वंसा-भावयोश्चायोगेन यथाश्रुतार्थादरस्यासंभवात् । अत्रात्मभिन्नालीकानुयोगिकसंसर्गाभावमादायार्था-न्तरत्वादिव्युदासायासत्त्वानधिकरणेत्यनात्मविशेषणमुपात्तम् । निर्धर्मकात्मानुयोगिकसंसर्गाभावमादाय तद्वारणायानात्मेत्यस्योपादानम् ॥ **असत्त्वमिति** ॥ स्वप्रतियोगिकात्मानुयोगिकसंसर्गाभावमादायार्थान्तरता-व्युदासायानात्मपदोपादानम् । सत्त्वाधिकरणीभूतानात्मानुयोगिकसंसर्गाभावमादायोक्तक्षतेरनात्मपदेनैवाप-हस्तिततया सत्त्वानधिकरणांशप्रयोजनमुपरञ्जकतयोपपादनीयम् । व्यतिरेकिधर्मत्वस्य हेतुत्वोरीकारा-त्केवलान्वयिनि च हेतुतावच्छेदकविशेषितस्याभावेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्रानैकान्त्य-लक्षणातिप्रसङ्गवारणाय साध्याभाववन्निरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नाधेयताकत्वरूपविवक्षणीयानैका-न्त्यलक्षणाभावान्नानैकान्त्यमिति भावः ।

**सु० - किञ्चानिर्वचनीयं चेद्रजतं कथं तर्हि प्रतीतिसमये सदित्युत्तरकालं चासदिति प्रतीयते । अनिर्वचनीयमित्येव प्रतीतिः कुतो न भवेत् । अधिष्ठानेदन्तासंसर्गवत्तत्सत्तासंसर्गस्यारोपात्प्रा-तीतिकसत्त्वस्य रजतेऽपि विद्यमानत्वाद्वा न सत्प्रत्ययविरोध इत्येतदनन्तरमेव निराकरिष्यते ॥ असदित्यर्थक्रियासामर्थ्यलक्षणमेव सत्त्वं निराक्रियते नात्यन्तासत्त्वं गृह्यत इति चेन्न । अर्थ-क्रियासामर्थ्यस्य तत्राप्रसक्तत्वात् । प्रसक्तौ चान्यथाख्यातिस्वीकारप्रसक्तेश्च । वक्ष्यते चैतत् । किञ्चेदं रजतं नित्यमनित्यं वा । आद्ये सर्वदोपलम्भप्रसङ्गः । द्वितीये कारणं वाच्यम् । अविद्येति चेन्न । तस्यास्त्वन्मतेऽनुपपत्तेर्वक्ष्यमाणत्वात् । किञ्चाविद्याया आत्मनिष्ठत्वात्तत्परि-णामभूतं रजतमपि प्रत्यक् प्रकाशेत । आत्मनः सर्वगतत्वाच्छुक्त्यवच्छिन्नचैतन्यस्थाविद्या-**

विवर्तभूतं तत्सम्भिन्नतया प्रतीयत इति चेन्न । तथा सति सर्वोपलब्धिप्रसङ्गात् । अपि चेद-मिन्द्रियसन्निकर्षादुपलभ्यते घटादिवत्संस्काराद्वा अतीतघटादिवत् साक्षिणा वा सुखादिवत् । नाद्यः । प्रतीतिसमय एव रजतजन्माङ्गीकारात् । न द्वितीयः । अननुभूतत्वात् । न तृतीयः इन्द्रियव्यापारान्वयव्यतिरेकानुविधानविरोधात् । अधिकरणग्रहणे तदुपक्षयान्नेति चेन्न । रजतग्रहेऽधिकरणग्रहस्योपयोगाभावात् । रजतं गृह्यमाणं साक्षिणा शुक्तिसम्भिन्नं गृह्यते । न हि शुक्तिः साक्षात्साक्षिवेद्या । व्यावहारिकत्वात् । किन्त्विन्द्रियव्यवधानेन । रजतं तु प्रातिभासिकं नेन्द्रियव्यवधानमपेक्षते । अतोऽस्ति रजतप्रतीताविन्द्रियोपयोग इति चेन्न । शुक्तिसम्भेदप्रतीतिनियमे नियामकाभावात् । किंचेन्द्रियेणाधिकरणग्रहणं रजतग्रहणं च साक्षि-णेत्यङ्गीकारे ख्यातिमतानुमतिप्रसङ्गेन प्रवृत्त्याद्यनुपपत्तिः । शुक्तितादात्म्यमपि रजतस्य साक्षिणा गृह्यते अतो नैवमिति चेन्न । तथाऽपि ज्ञानद्वयाङ्गीकारेणानुभवविरोधापरिहारात् इन्द्रियजन्यवृत्तेरपि साक्षिचैतन्यमेव फलमिति फलैक्यान्नेति चेन्न । अस्याः प्रक्रियाया निर-सिष्यमाणत्वात् ॥ अनिर्वचनीयनिराकरणं च तत्र तत्राचार्यः स्वयमेव करिष्यतीत्यलं पल्लवेन ॥ तस्मात्साधूक्तं विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्यत्र तन्मतमिति ॥ ॥

॥ इति पञ्चाख्यातिवादः समाप्तः ॥

वा०— किञ्च यदुपपादनायानिर्वचनीयत्वमाद्रियते ताभ्यामेव भ्रान्तिबाधाभ्यां विरोधोऽनुमान-स्येत्याह ॥ **किञ्चेति** ॥ रजतस्यानिर्वचनीयत्वे घटादिवत्तत्त्वप्रतीत्या विषयीकर्तव्यम् । तस्याभ्रान्तित्वेन तदप्रतीतौ च बाधप्रतीत्या वा विषयीकर्तव्यम् । न चोभयेनाप्यनिर्वचनीयत्वं विषयीक्रियते । प्रत्युत तद्विरुद्धे सत्त्वासत्त्वे एवेति तद्विरोध इति भावः । ननु यथा ह्यपुरोवर्तिनो रजतस्य पुरोवर्त्यधिष्ठानारोपा-त्पुरोवर्तित्वप्रतिभासस्तथा सद्विलक्षणरजतस्य सदधिष्ठाने समारोपात्सद्बुद्धिबोध्यत्वं न पुनः सत्त्वादिति नानुभवविरोधः । अथवा सदिदमिति प्रातिभासिकसत्त्वमनुभूयते । पारमार्थिकव्यावहारिक-वैलक्षण्यं च साध्यते इति भिन्नविषयत्वान्न तद्विरोध इत्याशङ्कते ॥ **अधिष्ठानेति** ॥ **निरा-करिष्यत इति** ॥ तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरित्यनुव्याख्यानस्य त्वदुक्तप्रकारद्वय-निरासार्थत्वेन व्याख्यास्यमानत्वादिति भावः । एवं सदिति प्रत्ययविरोधमुपपाद्यासदिति प्रत्ययविरोधं चोपपादयितुं परोक्तसमाधानाभासं शङ्कते ॥ **असदितीति** ॥ तथा च नानिर्वचनीयत्वाङ्गीकारे तद्विरोध इति भावः ॥ **तवेति** ॥ अविद्यापरिणामरूपप्रातिभासिकाभिनवरजतोत्पत्तिवादिन इत्यर्थः । नन्व-भिनवरजतोत्पत्तिमभ्युपगच्छताऽपि मयाऽर्थक्रियासामर्थ्यस्य तत्प्रतीतिविषयता स्वीक्रियत एवेत्यत आह

॥ **प्रसक्तौ वेति** ॥ ननु स्यादपसिद्धान्तो यदि प्रातिभासिकं व्यावहारिकार्थक्रियासमर्थत्वेन प्रतीयत इत्यभ्युपगम्येत । किन्तु रूप्यवदर्थक्रियासामर्थ्यस्यापि प्रतिभासिकस्यैवारोपाभ्युपगमादित्यतस्तस्याऽनिर्वचनीयत्व इत्यनुव्याख्यान एव व्यावहारिकत्वं कथं प्रतीयत इत्यादिविकल्पनिरासेनैतद्दूषणं वक्ष्यतीत्याह ॥ **वक्ष्यति चेति** ॥ ननु रजतस्य सत्स्वरूपत्वादसदित्यादिप्रत्ययस्य गत्यन्तरं कल्प्यमेवेत्यतः सत्स्वरूपत्वमेवासिद्धमित्याशयेनानुमाने प्रतिकूलतर्कपराहतिमाह ॥ **किञ्चेति** ॥ ननु मन्मतेऽविद्याऽनुपपत्तावपि तदुपपत्तिपक्षे तदुपादानकत्वे रजतस्य नानुपपत्तिरित्यतस्तत्पक्षेऽपि तदनुपपत्तिमाह ॥ **किञ्चेति** ॥ ननु देहावच्छिन्नात्माऽविद्याविवर्तभूतं न रजतं किन्तु शुक्त्यवच्छिन्नात्माऽविद्याविवर्तभूतम् । न च स एवासिद्ध इति वाच्यम् । आत्मनः सर्वगतत्वेन शुक्त्यवच्छिन्नत्वस्यापि संभवात् । अतो न बहिःप्रकाशानुपपत्तिरित्याशङ्कते ॥ **आत्मन इति** ॥ अत्र बहिष्ठेति वक्तव्ये शुक्त्यवच्छिन्नेति वचनं रजतस्य शुक्तिसामानाधिकरण्योपपादनायेति बोध्यम् । नन्विदं नित्यत्वानित्यत्वनिराकरणं तदुभयविलक्षणत्वरूपानिर्वचनीयत्वपर्यवसायितया न ममानिष्टमिति चेन्न । असत्त्वेनाप्युपपत्तेः । न च प्रतीत्यनुपपत्तिः । उपपादयिष्यमाणत्वात् । अनिर्वचनीयत्वेऽपि तदनुपपत्तिरित्याह ॥ **अपि चेति** ॥ यद्वा तत्स्वरूपस्य प्रतीतिसिद्धत्वादुक्तप्रकारयोरन्यतरद्वा प्रकारान्तरं वा कल्पनीयमेवेत्यतः सैवासिद्धेत्याशयेन तत्स्वरूपं निरस्य तदुपलब्धिमपि निरस्यति ॥ **अपि चेति** ॥ यद्वा सर्वदोपलब्धिकारणाभावादसर्वदोपलब्धिरित्यतस्तत्कारणमेवासिद्धमित्याह ॥ **अपि चेति** ॥ घटादिवदित्यादिदृष्टान्तकथनं कल्पनाप्रसक्तिसंपादनायेति द्रष्टव्यम् । यद्वा परिहारे तद्वैषम्यप्रतिपादनेन दूषणसौकर्याय पूर्वदृष्टान्ततया तदुपादानमिति ज्ञेयम् ॥ **प्रतीतीति** ॥ प्रतीतिजनकसन्निकर्षाय तत्पूर्वं सत्त्वस्यावश्यकत्वादिति भावः ॥ **अननुभूतत्वादिति** ॥ प्रतीतिमात्रसमयस्य पूर्वानुभवाभावेन संस्कारासंभवादिति भावः ॥ **रजतेति** ॥ तस्य घटादितुल्यतयाऽविकरणग्रहानपेक्षणादिति भावः ॥ **न हीति** ॥ शुक्तेः साक्षात्साक्षिवेद्यत्वे साक्षिणः सर्वदा सत्त्वाद्यावत्स्वसत्त्वमविद्यादिवत्प्रतिभासेन प्रातिभासिकत्वापातेन व्यावहारिकत्वानुपपत्तेरिति भावः ॥ **शुक्तीति** ॥ न च शुक्त्यवच्छिन्नचैतन्यस्याविद्याविवर्तत्वमेव शुक्तिसंभेदप्रतीतिनियमे नियामकमिति वाच्यम् । आत्मनः सर्वगतत्वाद् भूतलविशेषाद्यवच्छिन्नचैतन्यस्यमृदादिपरिणामघटादेः स्वोपादानमृदाद्यधिकरणभूतलविशेषसंभेदप्रतीतिनियमाभाववद्रजतस्य स्वोपादानभूताविद्यासंभेदप्रतीतिनियमावश्यंभावेऽपि भूतलादितुल्यशुक्तिसंभेदप्रतीतिनियमे कारणाभावादिति भावः । अत एवासत्ख्यातिनिरासावसरे शुक्तिभूतलयोरविशेषेणेत्युक्तम् । शुक्तेरारोपाधिष्ठानत्वाभावस्य मतद्वयेऽपि साम्यादिति । ननु रजतोपादानाविद्यायाः शुक्त्यवच्छिन्नचैतन्याधिकरणताकत्वनियमान्न शुक्तेर्घटाद्युपादानमृदाद्यनियताधिकरणभूतलादितुल्यतेति चेन्न । रङ्गादावपि रजतारोपसंभवेन तत्रापि नियमा-

भावात्कार्योपादानानियताधिकरणविशेषतुल्यतया अपरिहाराच्च । अस्तु वा यत्किञ्चिन्नियामकं तथाऽप्यधिकरणग्रहे उपक्षयकल्पनाऽनुपपन्नैवेत्याशयेनाह ॥ **किञ्चेति** ॥ प्रवृत्त्यादीत्यादिपदेन ज्ञानैक्यानुभवग्रहणम् ॥ **तथाऽपीति** ॥ तादात्म्यावभासाभ्युपगमेनाख्यातिमतप्राप्तप्रवृत्त्यनुपपत्त्यभावेऽपि तन्मतप्राप्तज्ञानैक्यानुभवविरोधोऽपरिहार्य एवेत्यर्थः । नन्वविद्यावृत्त्यन्तःकरणवृत्त्योर्भेदेऽप्यविद्यावृत्तेर्ज्ञानत्वाभावाद्रूप्याकाराविद्यावृत्तिप्रतिबिम्बितेन तदभिव्यक्तेन वेदमंशावच्छिन्नरूप्याधिष्ठानसाक्षिचैतन्येनैव रूप्यप्रकाशाभ्युपगमादन्तःकरणवृत्तेरप्यज्ञानत्वाज्ज्ञानत्वेऽपि वा तस्या अप्रकाशकत्वेनेदमाकारान्तःकरणवृत्तिप्रतिफलितेदमंशावच्छिन्नसाक्षिचैतन्यस्यैवेदमंशप्रकाशकत्वादविद्यावृत्तिफलभूतरूप्यप्रकाशकसाक्षिचैतन्यस्यैवान्तःकरणवृत्तिफलत्वेन न ज्ञानैक्यानुभवविरोधः । इदमंशरूप्योभयप्रकाशकेदमंशावच्छिन्नसाक्षिरूपज्ञानस्यैकत्वाद्भिन्नयोर्वृत्त्योश्च ज्ञानत्वाभावादित्याशङ्कते ॥ **इन्द्रियेति** ॥ यद्वाऽन्तःकरणवृत्तिफलीभूतेदमंशावच्छिन्नसाक्षिचैतन्यस्यैव स्वमायाविवर्तरजतादिसिद्धत्वेनोभयोरपीदमंशावच्छिन्नैकसाक्षिवेद्यत्वेन फलभेदाभावान्नानुभवविरोध इत्याशङ्कते ॥ **इन्द्रियेति** ॥ सम्भावितदोषेन्द्रियजन्यवृत्तेरेव रूप्यप्रकाशकत्वस्यान्यथाख्यातेः समर्थनेनोपपन्नत्वेनावश्याङ्गीकर्तव्ययाथार्थ्यनियमस्य साक्षिचैतन्यस्याविद्यमानरूप्यप्रकाशकत्वं न सम्भवतीत्यर्थस्य यत्क्वचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदित्यादिना व्युत्पादयिष्यमाणतया वृत्तिप्रतिफलनादिकल्पनाया अप्रामाणिकत्वेन प्रक्रियामात्रत्वमित्याशयेनाह ॥ **अस्या इति** ॥ यद्यपीदमंशस्येदमाकारान्तःकरणवृत्तिप्रतिबिम्बितेन वा तदभिव्यक्तेनेदमंशानवच्छिन्नेनेदमंशाधिष्ठानचैतन्येन वा वेद्यतया रूप्यस्य च रूप्याकाराविद्यावृत्तिप्रतिबिम्बितेन वा तदभिव्यक्तेनेदमंशावच्छिन्नरूप्याधिष्ठानचैतन्येन वा वेद्यतयाऽवच्छिन्नफलं तन्मतेऽपि भिन्नमेव । न हि रूप्यं प्रतीवेदमंशं प्रत्यपीदमंशावच्छिन्नमधिष्ठानम् । आत्माश्रयापातात् । नापीदमंशं प्रतीव रूप्यं प्रत्यपीदमंशानवच्छिन्नमधिष्ठानम् । इदं रूप्यमिति धीविरोधात् । अफलचिन्मात्राभेदस्तु सर्वत्राविशिष्ट इति ज्ञानैक्यानुभवविरोधस्तवदस्थ इत्यपि वक्तुं युक्तम् । तथाऽपि प्रतिफलनकल्पनाया अप्रामाणिकत्वेनैव तदुक्तनिरासोपपत्तौ तदङ्गीकारेण दूषणाभिधाने न प्रयोजनमित्याशयात् । इदमंशावच्छिन्नचैतन्यस्यैवेदंवृत्तौ रूप्यवृत्तौ च प्रतिफलनाज्ज्ञानैक्यमिति तु तस्याऽसदाकाररूप्यवृत्तौ प्रतिफलनायोगेन निरस्तम् । एतेन विषययोरैक्यापन्नतया ज्ञानैक्यमुपचरितमिति । (उपचरितमितिभातीति च विवरणोक्तमित्यन्वयः)। यथेदमंशावच्छिन्नचैतन्याविद्याविवर्तत्वाद्रूप्यमिदन्तत्वेन भाति तथेदंवृत्त्यवच्छिन्नचैतन्याविद्याविवर्तत्वाद्रूप्यज्ञानमिदंज्ञानत्वेन भातीति च विवरणोक्तं निरस्तम् । अबाधितज्ञानैक्यानुभवविरोधापरिहारादित्याशयेनोक्तमलं **पल्लवेनेति** । यद्वाऽख्यात्यादिमतदूषणानामतिबहुत्वेऽपि ग्रन्थगौरवभयादत्राकथनमित्याशयेनाह ॥ **अलं पल्लवेनेति** ॥ अख्यातिमतनिरासफलमाह ॥ **तस्मादिति** ॥ ५ ॥ इति पञ्चाख्यातिवादः समाप्तः ॥

स०— ननु यथा ह्यपुरोवर्तिनो रजतस्य पुरोवर्त्यधिष्ठाने समारोपात्पुरोवर्तित्वप्रतिभासस्तथा सद्विलक्षणरजतस्य सदधिष्ठाने समारोपात्सद्बुद्धिबोध्यत्वं न पुनः सत्त्वात् । किञ्च रजतमिति प्रातिभासिकत्वमनुभूयते । पारमार्थिकव्यवहारिकसद्वैलक्षण्यं चानिर्वचनीयत्वं साध्यते । अतो न सत्प्रत्ययविरोध इत्यत आह ॥ **अधिष्ठानेदंतासंसर्गवदिति** ॥ तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरित्यत्रेति शेषः । प्रतीतमर्थक्रियाकारित्वं प्रातिभासिकमित्यत आह ॥ **वक्ष्यते चैतदिति** ॥ तस्या निर्वचनीयत्व इत्यत्रेति शेषः ॥ **सर्वोपलब्धिप्रसङ्गादिति** ॥ शुक्तिवदेव सर्वेषामधिष्ठानतयोपलब्धिप्रसङ्ग इत्यर्थः । इन्द्रियसन्निकर्षस्तु रजतप्रतीतौ नोपयुज्यत इति वक्ष्यत इति भावः ॥ **रजतग्रहे अधिकरणग्रहस्येति** ॥ रजतस्यापि पृथक्पदार्थत्वाङ्गीकारादिति भावः ॥ **शुक्तिसंभेदेति** ॥ रजतारोपस्य शुक्त्यधिष्ठानकत्वे आरोप्यस्य सर्वत्राधिष्ठानसंभेदेनैव प्रतीयमानत्वेन शुक्तिसंभेदेनैव प्रतीतेरावश्यकत्वेऽपि त्वया तदनभ्युपगमान्न शुक्तिसंभेदेन प्रतीतिरिति भावः । केचित्तु । रजतस्य पदार्थान्तरत्वाङ्गीकारात् न शुक्तिसंभेदेनैव प्रतीतिनियमः । अन्यथा घटोऽपि शुक्तिसंभिन्नतया प्रतीयेत । शुक्त्यवच्छिन्नचैतन्याविद्याविवर्तत्वनियमेन तत्संभिन्नतया प्रतीयत इति तु निरस्तमिति भावः इत्याहुः । 'अङ्गीकारे ख्याती'त्यत्राख्यातीत्यकारप्रश्लेषः कार्यः ॥ **प्रवृत्त्याद्यनुपपत्तिरिति** ॥ रजतविशिष्टपुरोवर्तिज्ञानस्यैकस्यैव प्रवृत्त्यादिजनकत्वस्य समर्थितत्वादिति भावः ॥ **फलैक्यादिति** ॥ उभयोरप्यन्तःकरणवृत्त्यविद्यावृत्तिफलितेदमंशावच्छिन्नैकसाक्षिवेद्यत्वेन फलभेदाभावादिति भावः इत्याहुः ॥ **अस्याः प्रक्रियाया निराकरिष्यमाणत्वादिति** ॥ यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदित्यत्र शुक्तिरूप्यादेर्मानसदर्शनविषयत्वोपपादनेन साक्षिविषयत्वस्य निराकरिष्यमाणत्वादित्यर्थः ॥

प०— **अनन्तरमेवेति** ॥ तस्यानिर्वचनीयत्व इत्येतद्व्याख्यानावसर इत्यर्थः । उत्तरकालमसदिति कथं प्रतीयत इत्यस्योत्तरमाशङ्कते ॥ **असदित्यर्थक्रियेति** ॥ ननु प्रसक्तमप्यर्थक्रियासामर्थ्यमनिर्वचनीयमेवातो नान्यथाख्यातिदोषो नाप्यप्रसक्तनिषेधो नैव च सत्त्वधी विरोध इत्यत आह ॥ **वक्ष्यते चेति** ॥ 'तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरि'त्यत्रास्य पक्षस्य दूषणमित्यर्थः ॥ **वक्ष्यमाणत्वादिति** ॥ 'निर्विशेषे स्वयंभात' इत्यादिनेति भावः ॥ **प्रत्यगिति** ॥ अन्तःप्रकाशेत न बहिरित्यर्थः । विवर्तभूतं परिणामभूतं तत्संभिन्नतया शुक्तिसंभिन्नतया । एवं रजतस्याविद्यकत्वं निरस्य तत्प्रतीतिं च निराह ॥ **अपिचेति** ॥ **प्रतीतिसमयएवेति** ॥ दुष्टेन्द्रिययोगाच्छुक्त्यवच्छिन्नचैतन्यस्थमज्ञानं रूप्यात्मना तत्प्रतीत्यात्मना च परिणमत इति स्वीकारादिति भावः ॥ **इन्द्रियव्यवधानेनेति** ॥ यथा तटाकोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्य तद्वदेव चतुष्कोणाकारं भवति तथा सावयवं तैजसमन्तःकरणं

चक्षुरादिद्वारेण निर्गत्य शुक्त्यादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणम्य विषयं व्याप्य तदाकारं भवति। सेयं वृत्तिरित्युच्यते। तथाच शुक्तिग्रहणरूपवृत्त्यवच्छिन्नशुक्त्यधिष्ठानचैतन्यमन्तःकरणावच्छिन्नजीवचैतन्ये-नैकोपाध्यवच्छिन्नतयैकीभूतम्। तेन चाधिष्ठानचैतन्येन जीवचैतन्येनैकीभूतेन साक्षिशब्दितेन शुक्तिसं-भिन्नतया रूप्यं भासत इति वक्तव्यत्वादिति भावः॥ **नियामकाभावादिति**॥ शुक्त्याकारान्तःकरण-वृत्त्याऽभिव्यक्तेन वा तत्र प्रतिफलितेन वा शुक्त्यधिष्ठानचैतन्येन शुक्तिरवभासते॥ शुक्त्यधिष्ठान-चैतन्यस्याविद्यापरिणतिरूपया रूप्याकारवृत्त्याऽभिव्यक्तेन वा तत्प्रतिफलितेन वा रूप्यं भासत इति हि तव प्रक्रिया। तस्मिन्पक्षे शुक्तिसम्भेदप्रतीतिनियमे न नियामकमस्तीति भावः। ननु शुक्त्याकारपरिण-तान्तःकरणवृत्त्युपहितमेवाधिष्ठानचैतन्यमविद्यावृत्तिप्रतिबिम्बितं सत् रूप्यावभासकमिति सिद्धान्तोपगति-रेव शुक्तिसंभेदप्रतीतिनियामिकेति वदन्तं प्रत्याह॥ **किंचेति**॥ **इन्द्रियेणेति**॥ इन्द्रियजन्येदमंशवृत्त्य-भिव्यक्ताधिष्ठानचैतन्येनेत्यर्थः। अन्यथा इदमंशस्यानपरोक्षतापत्तेः। चैतन्यस्यैव तन्मतेऽपरोक्षत्वादिति ज्ञेयम्॥ **साक्षिणेति**॥ अविद्यावृत्त्युपहिताधिष्ठानचैतन्यरूपेण साक्षिणेत्यर्थः॥ **अनुभवविरोधेति**॥ ज्ञानैकत्वसमर्थनप्रस्तावोक्तरीत्येति भावः॥ **इन्द्रियजन्यवृत्तेरपीति**॥ इन्द्रियजन्येदमंशाकारवृत्त्या सादृश्यादिदोषसहितयाऽधिष्ठानचैतन्यस्याविद्यापरिणतिद्वाराऽविद्यावृत्तिप्रतिफलितरूपसाक्षिचैतन्यमेव फलं। तस्य चैकत्वादैक्यानुभवविरोधो नेत्यर्थः। **निरसिष्यमाणत्वादिति**॥ अध्यासकार्यानुपपत्तिरूपाविद्या-प्रमाणनिरासप्रस्तावे॥ **तत्र तत्रेति**॥ 'पृथगुपदेशात्' 'संध्ये सृष्टिराह ही'त्यादौ तत्रतत्रेत्यर्थः॥॥

या० — **अनन्तरमेवेति**॥ तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरित्यत्रेति शेषः॥ **अन्यथाख्यातीति**॥ अर्थक्रियाऽनर्हेऽपि प्रातिभासिकरजते व्यावहारिकरजतधर्मभूतार्थक्रियासामर्थ्यप्रतीता-वन्यथाख्यातिप्रसङ्गः। अन्यत्रान्यधर्मसंसर्ग(र्गा)ख्यातेरेवान्यथाख्यातित्वादिति भावः। ननु नान्यथाख्या-तिस्वीकारप्रसङ्गः। तत्र प्रतीतस्याप्यर्थक्रियासामर्थ्यस्यानिर्वचनीयत्वादित्यत आह॥ **वक्ष्यते चैत-दिति**॥ तस्यानिर्वचनीयत्व इत्यत्रेति शेषः॥ **वक्ष्यमाणत्वादिति**॥ 'निर्विशेषे स्वयं भाते किम-ज्ञानावृतं भवेदि'त्यादाविति शेषः॥ **तत्सम्भिन्नतयेति**॥ तदनुविद्धतयेत्यर्थ॥ **सर्वोपलब्धीति**॥ शुक्तिवदेव रजतस्यापि पराक्त्वात्सर्वेषामुपलब्धिप्रसङ्गः इत्यर्थः। गूढाभिसन्धिराह॥ **रजतग्रहणेऽधि-करणग्रहणस्येति**॥ आशयमविद्वान् शङ्कते॥ **रजतं गृह्यमाणमिति**॥ आशयमुद्धाटयति॥ **शुक्तिसम्भेदेति**॥ येनाधिकरणग्रहणे इन्द्रियोपयोगः स्यादित्यर्थः। त्वया रजतस्य पदार्थान्तरत्वा-ङ्गीकारात्। अन्यथा घटोऽपि नियमेन शुक्तिसम्भिन्नतया प्रतीयेत। शुक्त्यवच्छिन्नचैतन्याविद्यानिव-र्तकत्वान्नियमेन तत्सम्भिन्नतया प्रतियत इति तु निरस्तमिति भावः॥ **प्रवृत्त्याद्यनुपपत्तिरिति**॥

रजतत्वविशिष्टपुरोवर्तिज्ञानस्यैकस्यैव प्रवृत्त्यादिजनकत्वस्य समर्थितत्त्वादिति भावः । ज्ञानैक्यानुभवानुपपत्तिरादिशब्दार्थः ॥ **फलैक्यादिति** । इदमंशावच्छिन्नचैतन्यस्यैवेदंवृत्तौ रूपवृत्तौ च प्रतिफलनादिति भावः ॥ **निराकरिष्यमाणत्वादिति** ॥ 'यत्किचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदि'त्यत्र शुक्तिरजतादिज्ञानं न साक्षिरूपं किन्तु चक्षुरादिकरणकं मनःपरिणतिरूपमेवेति अस्याः प्रक्रियाया निराकरिष्यमाणत्वादित्यर्थः ॥

**श्री०** — प्रतीतिसमये सदिति प्रतीतिमात्रेण रजते सत्वं न सत्यं किं नामेत्यत आह ॥ **अधिष्ठानेति** ॥ अधिष्ठानगता या इदन्ता तत्संसर्गो यथा रजते आरोपितः सन्प्रतीयते इदंरजतमिति एवमधिष्ठानगता या सत्ता तत्संसर्गोऽप्यारोपित एव प्रतीयतेऽतः सदिदंरजतमिति प्रतीयत इत्यर्थः । **प्रातीतिकस्येति** ॥ प्रातिभासिकस्येत्यर्थः । सत्त्वेन प्रतीतिरेव सत्वं रजतादेर्नार्थगतं सत्त्वमस्तीति मताभिप्रायेणाधिष्ठानेत्याद्युक्तम् । अर्थगतं प्रातिभासिकं सत्त्वमस्ति । सत्त्रैविध्याङ्गीकारादिति मतानुसारेणेदमिति द्रष्टव्यम् । प्रतीत्युत्तरकालं चासदिति कथं प्रतीयत इत्युक्तं तदुपरि शङ्कते ॥ **असदितीति** ॥ **तदेति** ॥ भ्रमसमय इत्यर्थः ॥ **इदंरजतमिति** ॥ शुक्तौ प्रतीयमानमित्यर्थः ॥ **प्रत्यगिति** ॥ आन्तरत्वेन प्रकाशेतेत्यर्थः । तथाच शुक्तिसंभिन्नतया पराक्त्वेन प्रतीतिर्न सम्भवतीति भावः ॥ **अपि चेदमिति** ॥ रजतमित्यर्थः ॥ **उपयोगाभावादिति** ॥ तथा चाधिकरणभूतशुक्तिग्रहणेन नेन्द्रियव्यापारस्योपक्षय इत्यर्थः ॥ **रजतप्रतीताविति** ॥ शुक्तिसंभिन्नतया प्रतीतावित्यर्थः ॥ **इन्द्रियोपयोग इति** ॥ अधिकरणभूतशुक्तिग्रहणे इन्द्रियस्योपयोग इत्यर्थः ॥ **नियामकाभावादिति** ॥ त्वन्मतेऽविद्योपादानकप्रातिभासिकरजतस्यान्तरपदार्थत्वेन तस्य शुक्तिसंभिन्नतया प्रतीतिनियमाभावेनाधिकरणग्रहणापेक्षाया एवाभावेन न तद्ग्रहणे इन्द्रियव्यापारोपयोग इति भावः । न च वाच्यमात्मनः सर्वगतत्वाच्छुक्त्यवच्छिन्नचैतन्यस्याविद्याविवर्तत्वाच्छुक्तिसंभिन्नतया प्रतीयत इति । तथा सति शुक्तिवदेव रजतस्यापि पराक्त्वात्सर्वेषामप्युपलब्धिप्रसङ्ग इत्युक्तमिति भावः ॥ **अख्यातिमतेति** ॥ ज्ञानद्वयाङ्गीकारप्राप्त्येत्यर्थः ॥ **प्रवृत्तीति** ॥ विशिष्टज्ञानस्यैकस्यैव प्रवर्तकतायाः प्राक् समर्थितत्वादिति भावः ॥ **नैवमिति** ॥ प्रवृत्त्याद्यनुपपत्तिर्नास्तीत्यर्थः ॥ **अनुभवेति** ॥ विशिष्टज्ञानैक्यावगाह्यनुभवेत्यर्थः ॥ **फलैक्यादिति** ॥ रजताकाराविद्यावृत्तिप्रतिफलितमेव साक्षिचैतन्यमिदमाकारेन्द्रियजन्यवृत्तावपि प्रतिफलति । तदेव च फलं तदेव ज्ञप्तिरूपं ज्ञानम् । तथा चाविद्यावृत्त्यन्तःकरणवृत्त्योर्भेदेऽपि तत्प्रतिबिम्बितचैतन्ययोरेकत्वेन फलैक्यान्न ज्ञानैक्यावगाह्यनुभवविरोध इत्यर्थः । फलैक्यनिबन्धनं ज्ञानैक्यमौपचारिकमित्याशयः । उपसंहरति ॥ **तस्मादिति** ॥ विज्ञातस्यान्यथासम्यग्वज्ञानं ह्येव तन्मतमित्यत्रान्यथाज्ञानमेव भ्रान्तिस्तत्प्रसञ्जितान्यथाकारलोडनमेव ज्ञानं बाध इत्यवधारयता आचार्येण मतान्तराणां निरस्तत्वादित्यर्थः ॥ ॥

च०— **वक्ष्यते चैतदिति** ॥ 'तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरि'त्यत्रैतत्कल्पस्य दूषणमभिधास्यत इत्यर्थः ॥ **वक्ष्यमाणत्वादिति** ॥ निर्विशेषे स्वयं भात इत्यत्रेति पूरणीयम् ॥ **प्रत्यगिति** ॥ अन्तः प्रकाशेत न बहिरित्यर्थः । विवर्तभूतं परिणामभूतम् । तत्संभिन्नतया शुक्त्यनुविद्धतया सर्वोपलब्धीति । शुक्तेरिव रजतस्यापि परात्कात्सर्वेषामुपलब्ध्यापत्तिरित्यर्थः । रजतस्याविद्यकतामपास्य तत्प्रतीत्युपपादनविधात्रयं क्रमेण प्रत्यस्यति ॥ **अपि चेति** ॥ **प्रतीतिसमय एवेति** ॥ शुक्त्यवच्छिन्नचैतन्यावरकमज्ञानं दुष्टेन्द्रियसंयोगाद्रूप्यात्मना तत्प्रतीत्यात्मना च परिणमत इत्युपगमादिति भावः । अभिसन्धिमनाविर्भावयन्नाह ॥ **रजतग्रहण इति** ॥ आशयमजानानः शङ्कते ॥ **रजतं गृह्यमाणमिति** ॥ **इन्द्रियव्यवधानेनेति** ॥ यथा तटाकोदकं छिद्रान्निर्गत्य कुल्याद्वारा केदारान् प्रविश्य चतुष्कोणाद्याकारं भवति, तथा सावयवं तैजसमन्तःकरणं चक्षुरादिद्वारा निर्गत्य घटादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणम्य विषयं व्याप्य तदाकारं भवति सेयं वृत्तिरित्युच्यते । तथाच शुक्तिग्रहणरूपवृत्त्यवच्छिन्नशुक्त्यधिष्ठानचैतन्यमन्तःकरणावच्छिन्नजीवचैतन्येनैकोपाध्यवच्छिन्नतयैकीभूते न चाधिष्ठानचैतन्येनैकीभूतेन साक्षिशब्दाभिधेयेन शुक्तिसंभिन्नतया रूप्यं भासत इत्युपेयमिति भावः । आशयमाविष्करोति ॥ **शुक्तिसंभिन्नप्रतीताविति** ॥ शुक्त्याकारान्तःकरणवृत्त्यभिव्यक्तेन वा तत्प्रतिबिम्बितेन वा शुक्त्यवच्छिन्नचैतन्येन शुक्तिरेव भासते । शुक्त्यवच्छिन्नचैतन्यावरकाविद्यापरिणतिरूपरूप्याकारवृत्त्यभिव्यक्तेन वा तत्प्रतिबिम्बितेन वा तेन रूप्यं भासत इति प्रक्रियायास्तदुपगततया तस्मिन्कल्पे शुक्तिसंभेदभाननियमेन नियामकमस्तीति भावः । ननु शुक्त्याकारपरिणतान्तःकरणवृत्त्युपहितचैतन्यमविद्यावृत्तिप्रतिबिम्बितं सद्रूप्यावभासकमिति सिद्धान्तोपगतिरेव शुक्तिसंभेदप्रतीतिनियामकेत्यभिदधानं प्रति क्षत्यन्तरमभिधत्ते ॥ **किं चेति** ॥ **इन्द्रियेणेति** ॥ इन्द्रियजन्येदमंशाभिव्यक्ताधिष्ठानावच्छिन्नचैतन्येनेत्यर्थः । अन्यथा चैतन्यस्यैव तन्मते अपरोक्ष्येणेदमंशस्यापरोक्षत्वायोगात् ॥ **साक्षिणेति** ॥ अविद्यावृत्त्युपहिताधिष्ठानावच्छिन्नचैतन्यरूपसाक्षिणेत्यर्थः ॥ **अनुभवविरोधेति** ॥ विशिष्टगोचरज्ञानैकत्वावगाह्यनुभवस्य समर्थितत्वादिति भावः ॥ **इन्द्रियजन्येति** ॥ सादृश्यादिदोषसहितेन्द्रियजन्येदमंशाकारवृत्तेरधिष्ठानावच्छिन्नावरकाविद्यापरिणतिद्वाराविद्यावृत्तिप्रतिबिम्बितरूपसाक्षिचैतन्यमेव फलम् । तस्य चैक्यान्न तदनुभवविरोध इत्यर्थः ॥ **निरसिष्यमाणत्वादिति** ॥ यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदिति प्रतीकव्याख्यावसरे रजतज्ञानं चक्षुरादिकरणकमनःपरिणतिरूपमेव न साक्षिरूपमिति प्रत्याख्यास्यमानत्वादित्यर्थः ॥ **तत्रतत्रेति** ॥ पृथगुपदेशात्सन्ध्ये सृष्टिराह हीत्यादाविति पूरणीयम् ।

॥ इति पञ्चख्यातिवादः समाप्तः ॥

अनु०— असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि ॥
तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥

सु०— शुक्तिरजतादौ सदसद्विलक्षणत्वं ज्ञाननिवर्त्यत्वं च न विद्यते असत्त्वादित्युक्तम् । तदयुक्तम् । असतः प्रतीत्यभावात् । अस्य च प्रतीतत्वादित्यत आह ॥ असद्विलक्षणेति ॥ हिशब्दो हेतौ । यस्मादसद्विलक्षणत्वज्ञप्त्यै असज्ज्ञातव्यमेव तस्मादसत्प्रतीतिश्च कथं तेनासद्विलक्षणं शुक्तिरजतादिकमिति जानता निवार्यते । कथं तरां च तया रजतादेरसत्त्वं निवार्यत इति च शब्दार्थः । इदमुक्तं भवति । स्यादिदं प्रतीतत्वहेतुना शुक्तिरजतादेरसत्त्वाभावानुमानम् । यदि यदसत्तन्नप्रतीयत इति व्याप्तिः स्यात् । न चैवम् । परस्यैवासत्प्रतीतिमत्त्वेन व्याप्तिभङ्गात् । विप्रतिपन्नोऽसत्प्रतीतिमान् असद्विलक्षणमिति प्रतीतिमत्त्वात् । यो यद्विलक्षणं प्रत्येति स तत्प्रतीतिमान् । यथा घटविलक्षणः पट इति प्रतीतिमान्देवदत्तो घटप्रतीतिमानित्यनुमानात् ॥ ननु भवत्वसद्विलक्षणं रजतमिति ज्ञानं मा भूच्चासज्ज्ञानम् । न च बाधकं किञ्चिदिति चेन्न । वैलक्षण्यज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात् । कारणाभावे च कार्योत्पत्तौ नियामकाभावेन कादाचित्कत्वानुपपत्तिप्रसङ्गात् । कारणत्वं चान्वयव्यतिरेकाभ्यां गम्यते । तदिदमुक्तमसद्विलक्षणज्ञप्त्या इति चतुर्थीप्रयोगेण । अन्यथाऽसद्विलक्षणज्ञेनेत्यवक्ष्यत् ॥ किञ्चास्तां तावदन्यो व्यवहारः । असतोऽप्रतीतावसत्प्रतीतिश्च कथं तेन मायावादिना निवार्यते । न हि यो यन्न जानति स तत्सम्बन्धितया किञ्चिन्निषेधति । अयमत्र प्रयोगः । विमतोऽसत्प्रतीतिमान् तत्संबन्धिधर्मनिषेधकत्वात् । यो यत्संबन्धितया किंचिन्निषेधति स तत्प्रतीतिमान् यथा घटस्य नास्ति शौक्ल्यमिति निषेधको घटप्रतीतिमानिति । असत्प्रतीतिश्च कथं तेन निवार्यत इति व्यतिरेकप्रदर्शनं चान्वयावधारणार्थम् । असत्प्रतीतिनिषेधसामर्थ्यात्तस्यासत्प्रतीत्यभावावधारणाद्बाधितविषयतेति चेत् । तर्हि मूकोऽहमिति वचननिषेधसामर्थ्यात्तस्य वचनाभावावधारणाद्वचनप्रतीतेरपि बाधितत्वं स्यात् । स्वक्रियाविरोधात्प्रतिषेध एवायुक्त इति चेत् । समं प्रकृतेऽपि ।

वा०— ननूत्तरभाष्यमसङ्गतमित्यतोऽनिर्वचनीयतासाधकख्यातिबाधान्यथाऽनुपपत्तिनिरासोपयोग्यसत्प्रतीतिप्रतिपादनपरतया योजनायाः सतो बाधस्याप्रतिपादनेन पृथगधिकरणे स्पष्टप्रतिपादनेन चानुपपत्त्याऽसत्प्रतीतिमात्रोपपादनस्याख्यात्यादिनिरासायावश्यापेक्षत्वाच्च ज्ञानबाध्यत्वमपीति पूर्वभाष्यस्य

दृष्टान्तदूषणपरतायोजनया सङ्गततयोत्तरभाष्यं योजयति ॥ **शुक्तीति** ॥ प्रकृतार्थसिद्धेरभावेन प्रसिद्धय-र्थकत्वासंभवादुत्तरार्धेन पूर्वार्धस्यैकवाक्यतायै हिशब्दार्थमाह ॥ **हीति** ॥ पूर्वार्धोक्तहेतोः पक्षधर्मतासमर्पण-परतया तेनेति व्याख्याति ॥ **तेनेति** ॥ चशब्दस्योक्तसमुच्चायकत्वासंभवात्पूर्वसङ्गतिसूचनाय फलसमुच्च-यपरतया व्याख्याति ॥ **कथन्तरां चेति** ॥ नन्वसत्त्वाभावसाधकप्रतीतत्वानुमाने न किमप्यनेन दूषण-सिद्धं प्रत्युत विमतं नासत्प्रतीतत्वादित्युक्तेऽसद्विलक्षणत्वप्रतीतिमत्त्वाद्विमतोऽसत्प्रतीतिमानिति साधनं व्यधिकरणं चेत्यतस्तद्दर्शयन्भाष्याभिमतानुमानप्रकारं तद्बाधकपरिहारं च दर्शयति ॥ **इदमुक्तं भवतीति** । **व्याप्तिभङ्गादिति** ॥ असत्येवेति शेषः । चतुर्थीप्रयोगसूचितकार्यकारणभावानुपपत्तिरूपं विपक्षे बाधकं दर्शयितुं तन्निवर्त्याशङ्कामुत्थापयति ॥ **नन्विति** ॥ श्लोकपूरणार्थतया प्राप्तां तदन्यथासिद्धिं परिहरति ॥ **अन्यथेति** ॥ अत्र पूर्वार्धोक्तहेतोरुत्तरार्धोपादान इव तदनुपादानेऽपि योग्यतयाऽसत्त्वाभावसाधनमनुपप-न्नमिति फलेन सम्बन्धस्य सुज्ञानत्वादुत्तरार्धस्य न विशेषप्रयोजनमित्याशयेन प्रतीतिर्नासत इति वदन्नङ्गी-करोति तामिति वक्ष्यमाणदूषणान्तरपरतया तद्योजयति ॥ **किं चेति** ॥ अनेन चशब्दस्यावृत्त्या-ऽप्यर्थ इत्युक्तं भवति । अत्र हेतोः पक्षधर्मताया वाक्यार्थबलेनैव लाभात्तेनेति मायावादिस्वरूपमात्र-परतया योजयति ॥ **तेनेति** ॥ नन्वेवमभिप्रायेऽसत्प्रतीतिश्च तेन निवार्यत इति ऋजूक्तिः स्यादित्यत आह ॥ **असदिति** ॥ नन्वसत्प्रतीतौ तन्निषेधानुपपत्त्या विमतो नासत्प्रतीतिमांस्तन्निषेधकत्वादिति निषेधेनैवासत्प्रतीत्यभावावधारणात्तद्बाधोऽनुमानस्येत्याशङ्कते ॥ **असदिति** ॥ तर्हि मूकोऽहमिति निषेधस्य वचनवत्त्वेऽनुपपत्त्या नायं वक्ता तत्प्रतिषेधकत्वादिति वचनप्रतिषेधेनैव वचनाभावावधारणा-त्तद्बाधो वचनप्रतीतेरपीति स्वक्रियाविरोधवार्तैवोच्छिद्येतेत्याह ॥ **तर्हीति** ॥ ननु वचनक्रियाविरोधेन वचनप्रतिपाद्यवचननिषेधस्यैवानुपपत्तौ कस्य सामर्थ्याद्वचनाभावावधारणमिति न बाध इति चेत् । तर्ह्यसन्न प्रतीयत इति प्रतिषेधप्रतिपादनक्रियाया असत्प्रतीतिप्रापकतया तत्क्रियाविरोधेन प्रतिपादयिषिता-ऽसत्प्रतीतिनिषेधस्यैवानुपपत्त्या कस्य सामर्थ्यादसत्प्रतीत्यभावावधारणमिति न बाध इति प्रकृतेऽपि तुल्यमित्याशयेनाह ॥ **स्वक्रियेति** ॥

प० — ननु शुक्तिरूप्यमसन्न प्रतीतत्वादित्यनुमानस्य किं दूषणमनेनोक्तमित्यत आह ॥ **इद-मुक्तमिति** ॥ हेतोरप्रयोजकत्वमाशङ्क्य निराह ॥ **ननु भवत्वित्यादिना** ॥ **कारणत्वं चेति** ॥ प्रति योगिज्ञानस्येत्यनुकर्षः । चतुर्थीप्रयोगेणेत्युपलक्षणम् । ज्ञातव्यमेवेत्यन्वितैवकारेणेत्यपि ध्येयम् । चतुर्थ्या कार्यकारणभावसूचनेऽपि कारणाभावे कार्योत्पत्तौ चेत्युक्तबाधकस्यैवकारलब्धत्वादसत्प्रतीतिश्चेत्याद्यंशं प्रकारान्तरेण योजयति ॥ **किंचेति** ॥ **अन्य इति** ॥ असद्वैलक्षण्यव्यवहारोऽसत्प्रतीतौ कारणमिति ताव-

दास्तामित्यर्थः । अयं प्रयोगोऽनेन कथं लब्ध इत्यत आह ॥ **इतिव्यतिरेकेत्यादि** ॥ **अन्वयेति** ॥ विमतोसत्प्रतीतिमानित्याद्युक्तान्वयेत्यर्थः ।

**श्री०** — ॥ **इत्युक्तमिति** ॥ ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन इत्यनेनोक्तमित्यर्थः ॥ **कार्योत्पत्ताविति** ॥ अङ्गीक्रियमणायामिति शेषः ॥ **कादाचित्कत्वेति** ॥ कार्योत्पत्तेरिति शेषः । प्रतियोगिज्ञानस्य कथं वैलक्षण्यज्ञाने कारणत्वमित्यत आह ॥ **कारणत्वं चेति** ॥ **चतुर्थी प्रयोगेणेति** ॥ तादर्थ्ये हीयं चतुर्थी । तथाच तत्प्रयोगेणासद्रूपप्रतियोगिज्ञानस्यासद्वैलक्षण्यज्ञाने कारणत्वमुक्तमित्यर्थः । अन्यथा कारणत्वाविवक्षायाम् । सद्भ्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यत इति वचनात्पूर्वं प्रतियोगितयाऽसज्ज्ञानमपेक्षितमित्युक्तम् । इदानीं त्वधिकरणतया तज्ज्ञानमपेक्षितमित्याह ॥ **किञ्चेति** ॥ **तत्सम्बन्धीति** ॥ असत्सम्बन्ध्यसदधिकरणक इति यावत् । यो धर्मः प्रतीतिविषयत्वं तन्निषेधकर्तृत्वादित्यर्थः ॥ **अन्यथेति** ॥ उक्तानुमाने व्यभिचारपरिहारेणान्वयव्याप्त्यवधारणार्थमित्यर्थः ॥ **सममिति** ॥ अत्रापि स्वक्रियाविरोधादसत्प्रतीतिनिषेध एवायुक्त इत्यर्थः ॥

**सु०** — किञ्च नरशिरसि विषाणमस्तीति वाक्यं बोधकं न वा । आद्ये स बोधः सद्विषयोऽसद्विषयो वा । नाद्यः बाधाभावप्रसङ्गात् । द्वितीये कथमसतः प्रतीत्यभावः । अनिर्वचनीयार्थप्रतीतिरसाविति चेन्न । निराकृतत्वात् । अपि च शशविषाणादिकमपि चेन्नासत् तदा कुतो वैलक्षण्यं शुक्तिरजतादेराशास्यते । निरूपाख्यादिति चेत् । तर्हि तद्वैलक्षण्यं नाम सोपाख्यत्वमेव । न च तत्र कश्चिद्विप्रतिपद्यते येनायं परस्य प्रयासः सार्थकः स्यात् ॥ कश्चिदाह । नास्माद्वाक्यान्नरशिरसि विषाणबोधो जायते । किन्नाम विकल्पमात्रम् । यथोक्तम् । शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति । स प्रष्टव्यः कोऽयं विकल्पः ज्ञानमन्यद्वा । द्वितीयो द्वितीयेऽन्तर्भवति । आद्ये वस्तुशून्य इति कोऽर्थः । किं किमप्यनुल्लिखन् असदेवोल्लिखन्वा । आद्येऽनुभवविरोधः । न हि विषयानुपरक्तो घटादिवदसावनुभूयते । यो हि शशविषाणं नास्तीति न प्रतीतवान् तस्य शशविषाणशब्दाज्जायमानं ज्ञानं न गोविषाणज्ञानाद्विशिष्यते । द्वितीये सिद्धं नस्समीहितम् । नापि द्वितीयः । अनुभवविरोधात् । विमतानि पदानि स्वार्थान्वयप्रतिपत्तिजनकानि । आकांक्षासन्निधिमत्पदत्वात् । गामानयेत्यादिपदवदित्यनुमानविरोधाच्च । न च योग्यतावत्त्वमुपाधिः । प्रतिवादिप्रयुक्तपदेषु साध्याव्यापकत्वात् । तेषां च स्वार्थसंसर्गाबोधकत्वे बधिरविवादवद्वादिवचनस्य

**निर्विषयत्वापत्तेः । अत एव योग्यताराहित्येन प्रतिपक्षोऽपि परास्तः । ननु कथमसतो भाति भास्यत इति कर्तृत्वं कर्मत्वं वा समस्तसामर्थ्यविरहितत्वादिति । अथ समस्तसामर्थ्यरहितत्वमपि कथम् । भाववदभावस्यापि सद्धर्मत्वदर्शनात् । बौद्धमेवाभावाश्रयत्वं न वस्तुकृतम् अतो न विरोध इति चेत् । समं कर्तृत्वकर्मत्वयोरपि । अन्यथा जायते घट इत्यादि न स्यात् ॥ सत्कार्यवादं त्वारम्भणाधिकरणे निराकरिष्यामः ॥ अतोऽसतः प्रतीत्युपपत्तेः प्रतीतत्वान्नासच्छुक्तिरजतादिकमित्ययुक्तम् ।**

**वा०**— एवमसत्प्रतीतिश्चेत्यनुव्याख्यानमसत्प्रतीतिनिषेधेन हेतुनाऽसत्प्रतीतिसाधनपरमिति व्याख्यायाधुना नरशिरसि विषाणमस्तीत्यादिवाक्याज्जायमानाऽसत्प्रतीतिश्च कथं तेन निवार्यते न कथमपि तद्वाक्ये बोधकत्वाभावस्य तद्बोधेऽसद्विषयकत्वाभावस्यचानुपपन्नत्वादिति तदर्थमभिप्रेत्योपपादयति॥ **किञ्चेति** ॥ प्रमाणाभावेनानिर्वचनीयस्य निरस्तत्वान्नापि तद्विषयकत्वं युक्तमित्याह ॥ **निराकृतत्वादिति** ॥ अस्तु वा विमतं सदसद्विलक्षणं बाध्यत्वादित्यादि तत्र प्रमाणम्। शशविषाणादेरप्यनिर्वचनीयत्वे तदपि नोपपद्यतइत्याशयेनाह ॥ **अपि चेति** ॥ **तर्हीति** ॥ सद्वैलक्षण्यमिति सतो ब्रह्मणो वैलक्षण्यमितिवच्छशविषाणादेरप्यनिर्वचनीयत्वे निरुपाख्यादेतस्माद्विलक्षणमिति निर्देष्टुमशक्यत्वान्निरुपाख्यवैलक्षण्यशब्दस्य सोपाख्यत्वमित्येवार्थो वक्तव्य इति सिद्धार्थता स्यादिति भावः । विकल्पशब्दार्थं सम्मत्यैवाह ॥ **यथोक्तमिति** ॥ विकल्पमात्रमित्यस्य बोधरूपो विकल्पो जायते न तु विशिष्टो नरशिरसि विषाणबोध इति विकल्प एव जायते न तु बोध इत्यपि तात्पर्यसम्भवेन साधारणत्वाद्विकल्पयति ॥ **स इति** ॥ **अन्यद्वेति** ॥ इच्छादिवच्चेतोवृत्त्यन्तरं वेत्यर्थः ॥**द्वितीय इति** ॥ चेतोवृत्त्यन्तरं जायत इत्युक्त्याऽर्थबोधो न जायत इत्युक्तं स्यात् । तथा च न बोधकमिति द्वितीयपक्षान्तर्भावात् दूषणेनैव दुष्टतेत्यर्थः । वस्तुशब्दस्य विषयमात्रपरत्वमसद्विषयपरत्वं च सम्भवतीत्यभिप्रेत्य विकल्पयति ॥ **किमपीति** ॥ विषयानुपरक्तो नानुभूयत इत्युक्त्या विषयोपरक्तएव ानुभूयत इति लब्धमनुभवमभिनयेन दर्शयति ॥ **यो हीति** ॥ यद्वा न तथाऽनुभव इत्येव न किन्तु विपरीतश्चेत्याह ॥ **यो हीति** ॥ अनुभवविरोधादित्युपलक्षणम् । प्रवृत्त्यनुपपत्तेश्चेत्यपि द्रष्टव्यम् । विमतान्याकाङ्क्षासन्निधिमात्रवन्तीति सिद्धसाधनतानिरासाय पदानां वक्तृविशेषानुमापकतयाऽप्यन्वयप्रतीतिजनकत्वेन सिद्धसाधनानिरासाय स्वार्थेते । उरगस्तुरगः खदिर इत्यादिष्वनैकान्तिकताव्युदासायाकाङ्क्षेति । गामानय प्रासादं पश्येत्यत्र साकाङ्क्षयोः परस्परान्वयप्रतीत्यजनकयोर्गां पश्येत्यनयोस्तद्व्युदासाय सन्निधिमदिति । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राज्ञ इति पुरुष इति च पदयोः सन्निहितत्वेऽपि पुरुषपदनैराकाङ्क्ष्येणान्वयप्रतीत्यजनकयोस्तद्व्युदासायाकाङ्क्षेति ॥ **अत एवेति** ॥

वादिप्रयुक्तपदेष्वनैकान्त्यादेवेत्यर्थः ॥ **बौद्धमेवेति** ॥ बुद्धिहेतुकृतं न तु घटत्वादिवद्विषयहेतुकृतं नापि पाकजरूपादिवद्बुद्धिहेतुभिन्नागन्तुकस्वहेतुकृतमित्यर्थः । कर्तृत्वकर्मत्वयोर्बुद्धिहेतुकृतत्वे उपोद्घातकमाह ॥ **अन्यथेति** ॥

ननु पूर्वं सत एव कार्यस्य कारकव्यापारादिना अभिव्यक्त्यङ्गीकाराद्घटो जायत इत्यादौ नानुपपत्तिरित्यत आह ॥ **सदिति** ॥ सदित्यतः पूर्वमत्यन्तेति शेषः । नन्वत्यन्तसत्कार्यवाद्यभिमतासदकरणादिहेतुनिरासावसरे नन्वसतः कथं कर्मत्वं सतः कार्यत्वमपि कथमिति समानम् । अनेन घटो जायत इत्यपि प्रत्युक्तम् । तर्हि घटं करोतीत्यादेः कोऽर्थः । मृत्तिकां घटीकरोतीति मृत्तीका घटीभवतीति ग्रन्थेन घटो जायत इत्यादीनामर्थान्तराभ्युपगमेनोपपत्तिर्वक्ष्यते । तस्मात्प्रध्वस्तभेदादीति वाक्यव्याख्यावसरे घटो जायते घटं जनयतीत्यनुत्पन्नस्यापि कर्तृत्वं कर्मत्वं च तस्मात्कार्यस्य कारणाभेदात्प्रागुत्पत्तेर्विनाशोत्तरं च सत्त्वादेव हि युज्यते नाप्यत्यन्तासतः कारकत्वमित्यादिग्रन्थेन घटादीनां पूर्वसत्त्वेन घटो जायत इत्यादेरुपपत्तिर्वक्ष्यते । अत्र तु कर्तृत्वादेर्बौद्धत्वानभ्युपगमे घटो जायत इत्यादि न स्यादिति । तथा च कथमेषां परस्परं न विरोध इति चेत् । न तावद्वक्ष्यमाणग्रन्थयोः परस्परविरोधः । अत्यन्तसत्कार्यानभ्युपगमेऽपि कारणात्मना सत्ताऽभ्युपगमत्कारकव्यापारात्प्रागकार्यात्मकस्य कारणस्य कारकव्यापारेण कार्यरूपतापत्तेः सदसत्कार्यमते जनित्वान्मृत्तिका घटीभवतीत्यादिर्घटो जायत इत्यादेरर्थ इति न कर्तृत्वाद्यनुपपत्तिरित्यसदकरणादिहेतुनिराकरणग्रन्थाशयः । तस्मात्प्रध्वस्तभेदादीति व्याख्याग्रन्थस्य त्वात्यन्तिकसत्त्वस्योक्तरीत्याऽनेकानुपपत्तिग्रस्तत्वात्कार्यस्य कारणात्मनाऽपि सत्त्वानभ्युपगम उक्तजनिपदार्थासंभवाद्घटो जायत इति कर्तृत्वाद्यनुपपत्तिरेव । न चात्रोक्तप्रकारेण बौद्धकर्तृत्वाद्यभ्युपगमेनोपपत्तौ कारणात्मना कार्यसत्त्वासाधकतया कर्तृत्वाद्युक्तिरयुक्तेति वाच्यम् । प्रतीतिसिद्धप्रध्वस्तभेदसत्त्वस्य प्रकारान्तरेणानुपपत्त्या तदर्थतया कारणात्मना सत्त्वस्य तत एव तादृशजनिपदार्थस्य चावश्याङ्गीकार्यत्वे सिद्धे कर्तृत्वादेरपि निर्वाह इत्याशयेनाभ्युच्चययुक्तितया कर्तृत्वादेरुपन्यासात् । अत एव भाष्ये स्वशब्देन भेदग्रहणम् । आदिपदेन च कर्तृत्वादेरुपादानं न तु कर्तृत्वादेरन्यथानिर्वाहाभावाभिप्रायेण । अथवा भातीत्यादिभानादिक्रियाकर्तृत्वस्य बौद्धस्यासति व्यवहारवद्बौद्धस्य जनिकर्तृत्वस्य नात्यन्तासति व्यवहार इत्याशयेनास्यापि साधकतयोपन्यास इत्याशयः । एवञ्च वक्ष्यमाणग्रन्थयोरेकवाक्यतायां नानुपपत्तिः । अत एव सत्त्वमात्रे साध्ये सिद्धसाधनमिति पूर्वग्रन्थेनाप्यत्यन्तासतः कारकत्वमित्यत्यन्तपदमुत्तरग्रन्थेनापि वक्ष्यमाणग्रन्थाभ्यामस्य विरोधः । अत्र परं प्रति प्रतिबन्दीमुखेन च प्रवृत्त्या पराङ्गीकृतात्यन्तासत्कार्यवादस्यानुपपन्नतया वक्ष्यमाणत्वात्सदसत्कार्यवादस्य च परेणानभ्युपगमादभावाश्रयत्वादिवत्कर्तृत्वादेर्बौद्धत्वानङ्गीकारे तव घटो जायत इत्यादेरनुपपत्तिरेवेत्याशयाच्चास्मान्न कुत्रापि विरोध इति ।

स०— **निराकृतत्वादिति** ॥ भ्रान्तौ प्रतीयमानस्यानिर्वचनीयत्वसाधकदोषप्रयुक्तभानत्वादि-प्रमाणनिरासेन भ्रमस्यानिर्वचनीयार्थप्रतीतत्वस्य निराकृतत्वादित्यर्थः । बोधो न जायत इत्यत्र किं विशिष्टबोधो न जायत इत्यभिप्रेत्य विकल्पपदेन ज्ञानसामान्यमुच्यते उत बोधपदेन ज्ञानसामान्यं निषिध्य विकल्पपदेनान्यत्किञ्चिदुच्यत इत्यभिप्रेत्य विकल्पयति ॥ **कोऽयं विकल्पो नामेति** ॥ ननु कथमिति कर्तृत्वं कर्मत्वं च कारकविशेषः । कारकत्वं च क्रियानिवर्तकत्वम् । तदेतत्तुच्छस्य न संभवतीत्यर्थः ॥ **भाववदभावस्यापीति** ॥ सकलसामर्थ्यरहितत्वलक्षणाभावरूपधर्मस्यापि भावरूपधर्मव-त्सद्धर्मत्वदर्शनादित्यर्थः ॥ **बौद्धमेवेति** ॥ बुद्धिकृतमेवासत्त्वादिधर्माश्रयत्वमसतो न वास्तवमित्यर्थः । तर्हि बुद्धिकृतमेव क्रियानुकूलव्यापारवत्त्वमसतो न वास्तवमिति तुल्यमित्याह ॥ **सममिति** ॥ असतो बुद्धिकृतक्रियानुकूलव्यापारानङ्गीकारे अनिष्टमाह ॥ **अन्यथेति** ॥ ननूत्पत्तेः प्रागपि घटस्याव्यक्त-तयाऽनुपलम्भेऽपि मृदात्मना सत्त्वमस्त्येवेत्यत आह ॥ **सत्कार्येति** ॥

प०— असत्प्रतीतिश्चेत्यादेः शब्दाज्जायमाननृशिरोविषाणादिरूपासत्प्रतीतिश्च कथं माया-वादिना निवार्यत इत्यर्थान्तरं च वक्तुमाह ॥ **किञ्च नरेति** ॥ मूलस्य फलितार्थमाह ॥ **कथमसत इति** ॥ **द्वितीयो द्वितीय इति** ॥ अन्यद्वेति विकल्पो बोधकं न वेति प्राग्विकल्पितद्वितीयविकल्पेन्तर्भव-तीत्यर्थः । तद्दोषेणैव दूषितो भविष्यतीति भावः ॥ **असाविति** ॥ नरशिरसि विषाणमितिवाक्या-ज्जायमानो विकल्प इत्यर्थः ॥ **द्वितीय इति** ॥ असदेवोल्लिखन्निति पक्षेऽसतो ज्ञानमस्तीत्यस्माकमिष्टं सिद्धमित्यर्थः । न बोधकमितिपक्षं निराह ॥ **नापि द्वितीय इति** ॥ **विमतानीति** ॥ नरशिरसि विषाणमस्तीत्यादिपदानीत्यर्थः ॥ **प्रतिवादीति** ॥ तस्यानासत्त्वेन तदुक्तवाक्ये बोधकत्वसत्त्वेऽपि योग्यताविरहादिति भावः ॥ **अत एवेति** ॥ साध्याव्यापकत्वेन प्रतिवादिवाक्ये व्यभिचारापाता-देवेत्यर्थः । अभावरूपधर्मो नाश्रयसत्त्वमपेक्षत इत्यत आह ॥ **भाववदित्यादि** ॥ ननु घटस्यापि कारणे मृदि सत्त्वाद्घटो जायत इत्युक्तिर्युक्तेत्यत आह ॥ **सत्कार्येति** ॥ 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति द्वितीयाद्यपादीयाधिकरणे ॥

या०— **द्वितीयेऽन्तर्भवतीति** ॥ बोधकं नेतीति द्वितीयकल्पेऽन्तर्भवतीत्यर्थः ॥ **अनुभव-विरोधादिति** ॥ नरशिरसि विषाणं जानामीत्यनुभवविरोधादित्यर्थः ॥ **अत एवेति** ॥ प्रतिवादि-प्रयुक्तपदेषु व्यभिचारादेवेत्यर्थः ॥ **अन्यथेति** ॥ इदं च तार्किकरीत्योक्तम् । स्वमते घटस्य कारणात्मना पूर्वं सत्त्वाद्घटो जायत इत्यत्र मृद्घटीभवतीत्यर्थकत्वस्य वक्ष्यमाणत्वाच्च नेदमापादनं संभवतीति ध्येयम् । ननु घटः प्राक् सन्नेव कुलालव्यापारादभिव्यज्यतेऽतो नेदमापादनं युक्तमित्यत आह ॥ **सत्कार्यवादं त्विति** ॥

श्री०—**अनिर्वचनीयार्थप्रतीतिरसाविति** ॥ नरशिरसि विषाणमस्तीति वाक्यजन्या प्रतीतिरित्यर्थः । तथाच नरविषाणादिकमनिर्वचनीवमेव नासदिति नासतः प्रतीतिप्रसङ्ग इति भावः ॥ **निराकृतत्वादिति** ॥ अनिर्वचनीयवस्तुन एवाप्रामाणिकत्वादिति भावः ॥ **नासदिति** ॥ अनिर्वचनीयत्वेनाङ्गीकारादिति भावः । निरूपाख्यात्प्रतीत्यविषयात् ॥ **तत्रेति** ॥ शुक्तिरजतादेः प्रतीतिविषयत्व इत्यर्थः । शब्दज्ञानानुपाती शब्दजन्यज्ञानसदृशः ॥ **द्वितीये इति** ॥ नरशिरसि विषाणमस्तीति वाक्याद्विकल्पमात्रं जायते । स च विकल्पो न ज्ञानमित्युच्यते । तथा च नरशिरसि विषाणमस्तीति वाक्यं बोधकं नेति प्राग्विकल्पितद्वितीयपक्षेऽन्तर्भवतीत्यर्थः ॥ **असाविति** ॥ नरशिरसि विषाणमस्तीति वाक्याज्जायमानो विकल्प इत्यर्थः । घटायःशलाकादिवद्विषयासंबन्धो बाधो नानुभूयत इत्येतदुपपादयति ॥ **यो हीति** ॥ अयोग्यताज्ञानाभावदशायामित्यर्थः । द्वितीयेऽसदेवोल्लिखन्निति पक्षे ॥ **नापि द्वितीय इति** ॥ नरशिरसि विषाणमस्तीति वाक्यं बोधकं नेति द्वितीयः पक्ष इत्यर्थः ॥ **विमतानि पदानीति** ॥ सदिदं रजतमित्यादीनि पदानीत्यर्थः । निर्विषयत्वं निरर्थकत्वम् ॥ **कथमिति** ॥ न संभवतीत्यर्थः । कुतो न संभवतीत्यतस्तदुपपादयति ॥ **भाववदिति** ॥ भावधर्मवदित्यर्थः । अभावस्यापि अभावरूपधर्मस्यापि । सद्धर्मत्वं सतो धर्मत्वम् । सत्पदार्थधर्मिकत्वम् । तथा च यथा भावधर्माणां सद्धर्मिकत्वमेवमभावरूपस्य सकलसामर्थ्यविरहितस्यापि सद्धर्मिकत्वादसति तन्न संभवतीत्यर्थः । शङ्कते ॥ **बौद्धमेवेति** ॥ सकलसामर्थ्यविरहितत्वरूपमभावाश्रयत्वमसतो बौद्धमेव । बुद्ध्यैवास्तीति विषयीक्रियते । न वस्तुकृतं वास्तवमित्यर्थः । कुतो न वस्तुकृतमित्यतस्तदुपपादनायापि भाववदिति पूर्ववाक्यमेतच्छेषत्वेन योज्यम् । भावधर्मस्यापि सद्धर्मिकत्वेनासति वास्तवस्य तस्यायोगादित्यर्थः ॥ **सममिति** ॥ भातीत्यादौ कर्तृत्वादिकमप्यसति बौद्धमेव न वस्तुकृतमित्यर्थः ॥ **न स्यादिति** ॥ तदानीं घटस्याभावेन न जायत इति जनिकर्तृत्वव्यवहारः सर्वजनसिद्धो न स्यादित्यर्थः । तत्र च तद्बौद्धमेवेति समाधानं वाच्यम् ॥ तदसत्यपि समानमिति । कालान्तरे सत्त्वं तु नेदानीं प्रतीतेरुपकारि । तदानीमसत्त्वस्योभयत्रापि साम्यादित्याशयः ॥

च०— **अन्यद्वेति** ॥ इच्छादिवच्चेतो वृत्त्यन्तरं वेत्यर्थः ॥ **द्वितीयो द्वितीयेऽन्तर्भवतीति** ॥ ज्ञानरूपचेतोवृत्तिभिन्नतद्वृत्तिरूपतोपगतौ बोधकं नेति प्राक्तनद्वितीयकल्पान्तर्भावापत्त्या तद्दूषणेनैवेतस्यापि दुष्टता सेधिष्यतीत्यर्थः । वस्तुशब्दस्य सदसदात्मकविषयमात्रसाधारणप्रमेयत्वावच्छिन्ननिरूपितशक्तिकतया स्वनिरूपितविषयितासंसर्गावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावरूपाद्यकल्पस्य तत्पदस्य सद्रूपत्वावच्छिन्नलक्षकतामुपेत्य तत्संसर्गावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावरूपकल्पान्तरस्य चोद्भिति-

रवसेया ॥ **विषयानुपरक्त इति** ॥ स्वनिरूपितविषयितासंसर्गेण विषयाविशेषित इत्यर्थः । असौ विकल्पः । अनुभूयते अनुव्यवस्यते । तथा च तादृशसंसर्गावच्छिन्नकिञ्चिद्वृत्तिप्रकारतानिरूपितविकल्पवृत्तिविशेषताशाल्यनुव्यवसायस्यैवोदयेन दर्शितप्रत्यासत्त्या किञ्चिद्विशेषितत्वं तस्यासैत्सीदित्यर्थः । प्राग्विकल्पितं न बोधकमिति द्वितीयकल्पं निराह ॥ **नापीति** ॥ **अनुभवविरोधादिति** ॥ सामानाधिकरण्यप्रत्यासत्त्या नरशिरोनिरूपितवृत्तित्वप्रकारताकत्वविशिष्टविषाणवृत्तिविशेष्यताकत्वोपरागेण नरशिरसि विषाणमस्तीति वाक्यजनितान्वयधीविषयकानुव्यवसायविरोधादित्यर्थः । विमतानि पदानि विषयताप्रत्यासत्त्या प्रकृतसाध्यतदभावकोटिकविमतिविशेषितानि नरशिरसि विषाणमस्तीति वाक्यघटकानि ॥ **स्वार्थेति** ॥ एकतरार्थानुयोगिकापरार्थप्रतियोगिकान्वयगोचरप्रतिपत्तिजनकानीत्यर्थः ॥ **प्रतिवादीति** ॥ तत्राश्वासाभावेन तदीयवाक्ये बोधकतासत्त्वेऽपि योग्यताराहित्येन साध्याव्यापकत्वादित्यर्थः । अत एव साध्यव्यापकताराहित्यनियन्त्रितो गाधिल्वैधुर्यादेव ॥ **इतीति** ॥ भातीत्यादिकर्तृकर्मलकारजनितोपस्थितिविषयतावच्छेदकीभूतं कर्तृत्वं कर्मत्वं चेत्यर्थः ॥ **समस्तेति** ॥ निःस्वरूपस्य क्रियास्वातन्त्र्यरूपकर्तृत्वस्य प्रकृतधातूपस्थाप्यज्ञाननिरूपितविषयत्वरूपकर्मत्वस्य च धर्मिसत्तासापेक्षस्यायोगादिति भावः ॥ **भाववदिति** ॥ षष्ठ्यन्ताद्वतिरुपमेये षष्ठीदर्शनात् ॥ **बौद्धमेवेति** ॥ ययोराश्रयाश्रयिभावः । बुद्ध्यसमवधानदशायामपि वर्तते स वस्तुकृतः । ययोस्तु बुद्धिदशायामेव स बौद्ध एवेत्युच्यते । इत्थं चाद्यस्थले धर्मिसत्ताया आवश्यकत्वेऽपि नान्त्ये तदावश्यकतेति भावः ॥ **अन्यथेति** ॥ इदं च न्यायनयभङ्गीमनुसन्धानेनोक्तम् । सिद्धान्ते कारणात्मना कार्यस्य सतोपगतेर्घटो जायत इत्यस्य मृद्घटीभवतीत्यर्थकताया अभिधास्यमानतया च नायं प्रसङ्गः सङ्गच्छत इत्यवसेयम् । ननु प्राक्कारकव्यापाराद्घटोत्पन्नं सत्त्वेव तादृशव्यापारादभिव्यज्यत इत्युक्तापत्त्यनवकाश इत्यत आह ॥ **सत्कार्यवादं त्विति** ॥ अत्यन्तेत्यादिः । अविरोधलक्षणीयाद्यचरणनये तदनन्यत्वमित्यत्रात्यन्तसत्कार्यवादस्यापाकरिष्यमाणत्वादित्यर्थः ॥

अनु०— अन्यथात्वमसत्तस्माद्भ्रान्तावेव प्रतीयते ॥

**सु०—स्यादेतत् । न ब्रूमो वयमसतः प्रतीतिरेव नास्तीति किन्नामापरोक्षतया सत्त्वेन च । यथोक्तम् । न हि नरि शृङ्गं भाति गवीवेति । शुक्तिरजतादिकं चापरोक्षतया सत्त्वेनावभासते । अतः कथमसदित्यत आह ॥ अन्यथात्वमिति ॥ रजतादिकमनिर्वचनीयं प्रतिपद्यमानेनापीदंरजतयोस्तादात्म्यावभासोऽङ्गीक्रियत एव । यथोक्तम् । अध्यासो नामातस्मिंस्तदिति प्रत्यय इति । न चैवमन्यथाख्यातिप्रसङ्गः । अधिष्ठानस्य संसृष्टरूपेण मिथ्यात्वेऽपि स्वरूपेण सत्य-**

त्वम् । अध्यस्तस्य संसृष्टरूपेण स्वरूपेण च मिथ्यात्वमिति मायावादिभिरङ्गीकृतत्वात् । तथा चोक्तम् सत्यानृते मिथुनीकृत्य लोकव्यवहार इति । अन्यथाख्यातिवादिभिरधिष्ठानारोप्ययोरुभयोरपि संसृष्टरूपेणैवासत्त्वं स्वरूपेण तु सत्त्वमेवेत्यङ्गीकृतम् । इदंरजतयोस्तादात्म्यानवभासे प्रवृत्त्याद्यसम्भवश्च । तत्र यदन्यथात्वं शुक्तिकेदमंशस्य रजतत्वसंसर्गो रजतस्येदन्तासंसर्गस्तत्तावदसदेव । प्रतीयते चापरोक्षतया सत्त्वेन च । अपरोक्षावभासस्यानुभवसिद्धत्वात् । सत्त्वेनाप्रतीतौ प्रवृत्त्यनुपपत्तेश्च । न हि प्राग्बाधात्सत्यरजतेदन्तासंसर्गादयं संसर्गो मात्रयाऽपि विलक्षणोऽनुभूयते । तथा चासदपरोक्षतया सत्त्वेन च नावभासत इति व्याप्तेरन्यथात्वे भग्नत्वान्नानेन हेतुनाऽसत्त्वाभावोऽनुमातुं शक्यत इति । स्यादेवं यद्यन्यथात्वमसत्स्यात् । तत्कुत इति चेत् । शुक्तिकेदन्तारजतादिसंसर्गरूपस्यान्यथात्वस्यासत्त्वमनभ्युपगच्छतः कोऽभिप्रायः । किं तदन्यथात्वं सदिति उतानिर्वचनीयमिति । द्वितीये वक्ष्याम इत्याशयेनाद्यं दूषयति ॥ तस्मादिति ॥ एवेति तस्मादित्यनेनापि सम्बध्यते । असत्त्वादेव हि तद्भ्रान्तावेव प्रतियते । यदि सत्स्यात्तर्हि शुक्तिकादिवदभ्रान्तावपि प्रतीयेत । न चैवम् । तस्मान्न सत् । न हि कारणसामग्र्ये सति कार्यानुत्पत्तिर्युक्तेति । किञ्चान्योन्यस्मिन्नन्योन्यात्मकत्वमपि चेत्सत्स्यात्तदाऽतस्मिंस्तदिति न भवेत् । किन्तु तस्मिंस्तदिति । तथा च न तत्प्रत्ययस्य भ्रान्तित्वं स्यात् । सत्यरजतप्रत्ययवत् । तदिदमुक्तमन्यथात्वमिति भ्रान्ताविति च । उपलक्षणं चैतत् । अन्योन्यसंसर्गस्य सत्त्वे बाधोऽपि नेदं रजतमिति न स्यादित्यपि द्रष्टव्यम् ।

वा० — नन्वन्यथात्वमसदित्यादिग्रन्थो व्यर्थः । न च यदसत्तन्न प्रतीयत इति व्याप्तेर्भङ्गाय स्थानान्तरप्रदर्शकोऽयमिति वाच्यम् । उभयसिद्धासति व्याप्तिभङ्गं प्रदर्श्य प्रसाध्यासत्वेऽन्यथात्वादौ तत्प्रदर्शनस्यानुचितत्वादित्यतोऽन्यथात्वसत्त्वयोरपरोक्षतया सत्त्वेन च प्रतीयमानयोरुदाहरणेन भ्रान्ताविस्याद्युपपादेन च पराभिमतापरोक्षत्वादिविशिष्टहेतोरपि व्याप्तिभङ्गाय भाष्यकारीयोऽयं यत्न इत्यवगमाद्विशिष्टहेतुव्याप्तिभङ्गस्य चोभयसिद्धासत्यनुपपत्त्या स्थलान्तरप्रदर्शकभाष्यसार्थक्यमेवेत्याशयेन भाष्यमवतारयति ॥ **स्यादेतदिति** ॥ नन्वनिर्वचनीयवादिना मयाऽन्यथाख्यातिवादिवदन्यथात्वभानानभ्युपगमात्कथमेतदित्यत आह ॥ **रजतादिकमिति** ॥ ननु तादात्म्यावभासाभ्युपगमेऽप्यन्यथाख्यातिवादापत्त्योक्तवचनमन्यार्थमित्याशङ्कते ॥ **न चेति** ॥ अधिष्ठानस्य संसृष्टरूपेणैव मिथ्यात्वमध्यस्तस्य तु स्वरूपेणापि मिथ्यात्वमित्यभ्युपगमे संसृष्टरूपेणारोपितेऽप्यात्मनि सत्यपदमध्यस्ते चानृतपदं ज्ञापकमित्याशयेन तत्सम्मतिमाह ॥ **तथा चोक्तमिति** ॥ एवं च तादात्म्यावभासस्योभयेषामविशेषेऽप्यन्यथाख्या-

तिवादिभी रजतादेरध्यस्तस्य देशान्तरे सत्त्वाभ्युपगमेनान्यस्य वस्तुनो वस्त्वन्तरात्मना भानाभ्युपगमादन्यथाख्यातावप्यनिर्वचनीयत्वस्य मायावादिभिरभ्युपगमेन वस्त्वन्तरात्मना भानानभ्युपगमादन्यथाख्यात्यप्रसक्तिरिति भावः । न केवलं तद्वाक्यादिना तादात्म्यावभासाङ्गीकारो मायावादिनामवगम्यते किन्त्वावश्यकश्च तेषामपि तादात्म्यावभास इत्याह ॥ **इदमिति** ॥ ननु परस्परधर्मसंसर्गाध्यासस्यैव मयाऽङ्गीकारात्प्रवृत्त्यादेश्च तावन्मात्रेणोपपत्त्या न तादात्म्यावभासो मया स्वीकार्य इत्यतस्तादात्म्यशब्देन मयाऽपि स धर्मसंसर्ग एव व्यवहृत इत्याशयेन भाष्यं योजयति ॥ **तत्रेति** ॥ अत्रान्यथात्वशब्देन संसर्गोऽपि व्याख्यातव्य इत्येव तात्पर्यं न तु परेण तादात्म्याध्यासानङ्गीकारादत्रानुपपत्तेर्वा तादात्म्यं नान्यथात्वशब्दार्थ इत्यत्र । अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येति तद्भाष्यात्किञ्चेत्याद्युत्तरग्रन्थेऽन्योन्यस्मिन्नन्योन्यात्मकमित्यादिव्यवहाराच्चेति द्रष्टव्यम् । यद्वाऽध्यासभाष्ये विवरणकारेण तादात्म्याध्यासप्रतिषेधेन संसर्गाध्यासस्यैवोपपादनात्तदनुसारेणेदं व्याख्यानम् । किञ्चेत्युत्तरग्रन्थेऽपि तादात्म्यशब्दस्य संसर्गपरतया व्याख्यातत्वाल्लाघवेन तथैव व्यवहारः । अत एव पूर्वमन्यथात्वस्य पराङ्गीकारप्रतिपादनावसरे तादात्म्यशब्देनैव तद्व्यवहार इति द्रष्टव्यम् । ननु तस्मादित्युत्तरवाक्येऽन्यथात्वासत्त्वस्य भ्रान्तावेव प्रतीयमानत्वे हेतुतयोपन्यासोऽनुपपन्नः । अन्यथात्वेऽसत्त्वस्यासिद्धत्वाद्भ्रान्तावेव प्रतीयमानत्वस्य सिद्धत्वाच्च । न च विपरीतो हेतुहेतुमद्भावोऽत्र विवक्षित इति वाच्यम् । तथात्वेऽपि प्रातिभासिकत्वेनाप्युपपत्त्या भ्रान्तावेव प्रतीयमानत्वस्यासत्त्वासाधकत्वादित्यतो विपरीत एव हेतुहेतुमद्भावोऽत्र विवक्षितो वक्ष्यमाणप्रकारेणानिर्वचनीयत्वाभावसिद्धौ सत्त्वाभावे चानेन हेतुना सिद्धे सुलभाऽसत्त्वसिद्धिरित्याशयेनोत्तरवाक्यमवतारयति ॥ **स्यादेवमिति** ॥ विवक्षितहेतुहेतुमद्भावं भाष्यारूढं करोति ॥ **एवेतीति** ॥ हेतूच्छित्तिरूपं विपक्षे बाधकं कथयन्नुक्तमेव विवृणोति ॥ **असत्त्वादेव हीति** ॥ एवं भ्रान्तित्वमभ्युपगम्य भ्रान्तावेव प्रतीत्या सत्त्वं निराकृतम् । अधुनाऽन्यथात्वस्य सत्त्वे भ्रान्तित्वमेवानुपपन्नमित्याह ॥ **किं चेति** ॥ **तदिदमिति** ॥ किञ्चेत्युक्ताभिप्रायाभावे तादात्म्यमिति स्पष्टोक्त्यैव विवक्षितार्थलाभादन्यथात्वमिति निर्देशो न स्यात् । सति च तस्मिन्नतस्मिंस्तदित्यर्थसूचनेनायमभिप्रायो ज्ञायत इति भावः ॥ **उपलक्षणं चेति** ॥ भ्रान्तावेव प्रतीयमानत्वं बाधस्याप्युपलक्षणमिति भावः ।

**स०— न हि कारणसामग्र्ये सतीति** ॥ यदन्यथात्वं यदि रजतेदमंशयोः सत्स्यात्तर्हि तत्प्रमारूपं कार्यं स्यादेव समनस्केन्द्रसन्निकर्षादिरूपज्ञानसामग्र्याः सत्त्वात् । अन्यथा भ्रमानुत्पत्तिप्रसङ्गात् । केवलं तत्रान्यथात्वरूपविषयविलम्बेन प्रमाविलम्बो वक्तव्यः । सोऽपि चेदस्तीत्युच्यते तर्हि प्रमा स्यादेव । सामग्र्याः प्राप्तत्वादिति भावः ।

प० — मूले भ्रान्तावन्यथात्वस्य प्रतीतिमुपेत्य तस्यासत्त्वोक्तिर्युक्ता । भ्रान्तावन्यथात्वप्रतीतेरनिर्वचनीयख्यातिवादिनोऽसम्मतेरित्यतस्तत्र यदित्यादिना श्लोकं व्याख्यातुमुपोद्घातमाह ॥ **रजतादिकमित्यादिना** ॥ प्रतिपद्यमानेन मन्यमानेन । अन्यथाख्यातिवादिभिः प्राचीनतार्किकैः ॥ **तत्तावदिति** ॥ उक्तद्विरूपमन्यथात्वमित्यर्थः । एवेत्यस्यान्वयोक्तिः असदेवेति ॥ **अन्यथात्वेभग्नत्वादिति** ॥ उक्तद्विरूपसंसर्गस्थले त्वदुक्तव्याप्तेर्भग्नत्वादित्यर्थः । ननु सत्त्वेप्यभ्रान्तावपि कुतः प्रतीयेतेत्यत आह ॥ **न हि कारणसामग्र्य इति** ॥ कदाचित्कस्यचिदिन्द्रियसन्निकर्षादेः संभवादिति भावः ॥

या० — **अन्यथाख्यातिवादिभिस्त्विति** ॥ वस्तुनो वस्त्वन्तरात्मनाऽवभासस्यैवान्यथाख्यातिरूपत्वादिति भावः ॥ **न हि कारणसामग्र्ये सतीति** ॥ यदि रजतेदमंशयोरन्यथात्वं सत्स्यात्तर्हि ततः प्रमारूपकार्यं स्यादेव । समनस्केन्द्रियसन्निकर्षादिरूपज्ञानजनकसामग्र्याः सत्त्वात् । अन्यथा भ्रमस्यैवानुपपत्तेः । केवलं तत्रान्यथात्वरूपविषयविलम्बेन प्रमाविलम्बस्तत्र वाच्यः । सोऽपि चेदस्तीत्युच्यते तर्हि प्रमा स्यादेव । सामग्र्याः प्राप्तत्वादिति भावः ॥

श्री० — मिथुनीकृत्य संसृष्टं कृत्वा ॥ **उभयोरपीति** ॥ अधिष्ठानं स्वरूपेण सर्ववादिमते सत्यमेव अन्यत्र विद्यमानस्यैवान्यत्रारोपाङ्गीकारादारोप्यमपि स्वरूपेण सत्यमेवेत्यर्थः । मूलं योजयति ॥ **तत्रेत्यादिना** ॥ तत्र प्रतीयमानपदार्थानां मध्ये । सत्ये शुक्त्यादिवदभ्रान्तौ प्रतीतिः कुत इत्यत आह ॥ **न हीति** ॥ कारणसामग्र्ये कारणसाकल्ये ॥ **तदिदमुक्तमिति** ॥ अन्यथात्वमित्युक्त्या तदाऽतस्मिंस्तदिति न भवेदित्यापादनं सूचितं भ्रान्तावित्युक्त्या च सत्त्वे तत्प्रत्ययस्य भ्रान्तित्वं न स्यादित्यापादनं सूचितमिति द्रष्टव्यम् ।

च० — **अन्यथाख्यातिप्रसङ्ग इति** ॥ अर्थस्यार्थान्तरात्मनावभासस्यैवान्यथाख्यातित्वादिति भावः ॥ **कारणसामग्र्ये सतीति** ॥ शुक्तीन्द्रियसन्निकर्षादिघटितशुक्तिप्रमोत्पादकसामग्रीसमवधानदशायां यथा शुक्तिप्रमोत्पादो नियतस्तद्वदन्यथात्वरूपविषयाबाधतदिन्द्रियसन्निकर्षादिघटितान्यथात्वप्रमारूपफलोपधायकसामग्र्यां सत्यां तदुत्पादापत्तेर्दुर्वारत्वादिति भावः ।

**अनु० — सत्त्वस्यासत एवं हि स्वीकार्यैवप्रतीतता ॥**

सु० — **असदपरोक्षतया सत्त्वेन च नावभासत इति व्याप्तेः स्थानान्तरेऽपि व्यभिचारं दर्शयति ॥ सत्त्वस्येति ॥ एवंशब्दः समुच्चये उपमार्थो वा । हिशब्दोऽनुभवप्रसिद्धिद्योतनार्थः**

स्वीकार्यैवेति युक्त्युपेततामाह । प्रतीतता अपरोक्षतया सत्त्वेन चेति शेषः । अयमर्थः । रजतमनिर्वचनीयं मन्यमानस्यापि मते तत्किमनिर्वचनीयतया प्रतीयते । उतासत्त्वेन । अथवा सत्त्वेन । न प्रथमद्वितीयौ । तथाप्रतीत्यनुपलम्भात् । तथाप्रतीतौ प्रवृत्त्यभावप्रसङ्गाच्च । न ह्यसत्प्रातिभासिकं वा कदाचिदनेनार्थक्रियासूपयुज्यमानं दृष्टम् । येनास्यासत्त्वादिकं प्रतीत्यापि प्रवर्तेत । तस्मात्सत्त्वेनैव प्रतीयत इत्येव स्वीकार्यम् । तथा चानुभवः सदिदं रजतमिति । प्रवृत्तिश्चैवमुपपद्यते । रजतप्रतीतिमात्रात्प्रवृत्तिरिति चेन्न । उक्तानुभवविरोधात् । विधिनिषेधाववधूय प्रत्ययायोगाच्च । तथा च तत्सत्त्वं सदसदनिर्वचनीयं वा । नाद्यः अनिर्वचनीयताविरोधात् । न हि यस्य सत्त्वं सत्तदनिर्वाच्यमिति सम्भवति । द्वितीयस्तु स्यात् । ततश्च यथाऽसतोऽन्यथात्वस्यापरोक्षतया सत्त्वेन च प्रतीतता स्वीकार्या । एवमसतस्सत्त्वस्यापि विशिष्टप्रतीतता स्वीकार्यैव । तथा च यदसत्तदपरोक्षतया सत्त्वेन च नावभासत इति व्याप्तेःसत्त्वे भग्नत्वात् । एतेन हेतुना नासत्त्वाभावो रजतस्यानुमातुं शक्यत इति । आह । अपरोक्षतया सत्त्वेन च प्रतीतत्वमसत्यप्यन्यथात्वे वर्तमानमनैकान्तिकमिति यदुक्तं तदयुक्तम् । अन्यथात्वस्यासत्त्वाभावात् । शुक्तौ तावदिदन्ता सत्यैव । तत्संसर्गश्च रजते रजतत्ववदनिर्वचनीय एवारोपितः । एवं रजतत्वं च रजतेऽनिर्वचनीयं तत्संसर्गश्चेदमास्पदेऽनिर्वचनीय एवारोपितः ।

वा० — सत्त्वस्यासत इत्युत्तरवाक्यस्य पूर्वोक्तार्थफलप्रतिपादकत्वं वा कस्मिंश्चिदर्थेऽनिष्टापादनपरत्वं वा प्रतीयते । तदुभयमप्यनुपपन्नमित्यतस्तदभिप्रायमाह ॥ **असदिति** ॥ स्थानान्तरे व्यभिचारप्रदर्शनं मूलारूढं कर्तुमाह ॥ **एवंशब्द इति** ॥ समुच्चयार्थत्वेऽन्यथात्वसत्त्वयोः समकक्षता प्रतीयेत न त्वन्यथात्वप्रतीतेस्तदङ्गीकृतत्वम् । सत्त्वप्रतीतेरङ्गीकरणीयत्वं च तदुभयमपि मूलरूढं कर्तुमेवंशब्दमन्यथा व्याख्याति ॥ **उपमेति** ॥ अत एव तादात्म्यावभासोऽङ्गीक्रियत एवेत्युक्त्वा तद्वाक्यमुदाहृतम् । अत्र तु कल्पान्तरनिरासेन सत्त्वप्रतीतिं परिशेषयिष्यतीति ध्येयम् ॥ **अनुभवेति** ॥ सत्त्वानुभवप्रसिद्धेरित्यर्थो न तु सत्त्वप्रतीत्यनुभवेति । अनुभवशब्दप्रायपाठबाधापत्तेः । अत एव तथा चेदित्यादिना तथैव वक्ष्यत इति ध्येयम् ॥ **युक्तीति** ॥ सत्त्वप्रतीतेः प्रवृत्त्यन्यथाऽनुपपत्तिरूपयुक्तिसिद्धत्वादिति भावः । विशिष्टहेतोर्व्यभिचारस्य भाष्यारूढतायै शेषं पूरयति ॥ **अपरोक्षतयेत्यादि** ॥ ननु रजतानिर्वचनीयत्ववादिमते सत्त्वस्य प्रतीतेरेवाभावाद्दूरे विशिष्टप्रतीतिस्तत्सद्भावेऽपि न सत्त्वस्यासत्त्वमिति नेदं व्यभिचारस्थलमित्यतस्तदुभयमुपपादयति ॥ **अयमर्थ इति** ॥

अत्र ह्येवशब्दाभ्यां सत्त्वस्यानुभवसिद्धतायास्तत्प्रतीतेश्च युक्त्युपेततायाः कथनेन कल्पान्तरेऽनुभवाभावस्य युक्तिविरोधस्य च सूचनात्कल्पान्तरनिरासेन सत्त्वप्रतीतिपक्षपरिशेषाय कल्पान्तरनिरासे तौ व्यापारयितुं विकल्पयति ॥ **रजतमिति** ॥ ह्येवशब्दसूचितं साधकमाह ॥ **तथा चेति** ॥ युक्तेरन्यथासिद्धिं शङ्कते ॥ **रजतेति** ॥ कल्पान्तरनिरासे व्यापारितमनुभवविरोधमत्रापि व्यापारयति ॥ **उक्तेति** ॥ उपलक्षणं चैतत् । वक्ष्यमाणरीत्या प्राभाकरमतप्रवेशः स्यादिति द्रष्टव्यम् । ननु नास्त्येव सदिदं रजतमित्यनुभवोऽपि रिवदं रजतमित्येव । स च स्वरूपमात्रविषयक एवेति कथमनुभवविरोध इति चेन्न । अनुभवपलापापातात् । अस्तु वा रजतमिदमित्येवानुभवः । तथाऽपि तद्विरोधः स्यादेवेत्याह ॥ **विधीति** ॥ तथा चेदं रजतमिति विधिप्रत्ययस्यैव सत्त्वविपयकत्वमिति सत्त्वाविषयकत्वे विधिप्रत्ययत्वमेव न स्यादिति भावः । सत्त्वस्यान्यत्र दृष्टत्वान्नैयायिका दिभिरङ्गीकृतत्वाद्वाऽसत्त्वस्य च स्वमतेनानिर्वनीयत्वस्य च मायिमतेन प्रसक्तेस्तथैव विकल्पयति ॥ **तथा चेति** ॥ रजतसत्त्वस्याभ्रान्तावपि प्रतीयमानत्वात्तादात्म्यवद्भ्रान्तावेव प्रतीत्या तत्सत्त्वाभावस्य साधयितुमशक्यत्वाद्युक्त्यन्तरेण तं साधयति ॥ **अनिर्वचनीयतयेति** ॥ अनिर्वचनीयत्वे पराभिमतां युक्तिं सूचयन्नेव तं पक्षमुत्थापयति ॥ **आहेति** ॥ अन्यथात्वशब्दबोधितस्येदन्तारजतत्वसंसर्गस्य तथा सत्त्वसंसर्गस्यासत्त्वं किमिदन्तारजतत्वसत्त्वानामसत्त्वादभ्युपगम्यते आहोस्वित्तेषां सऽत्त्वेपि संसर्गाणामारोपितत्वमात्रेण । नाद्यः । सत्त्वे दन्त्वयोः शुक्तिकायां सत्त्वाद्रजतत्वस्य च रजते प्रातिभासिकत्वादसत्त्वाभावात् । न द्वितीयः । प्रातिभासिकत्वेनैवारोपितत्वोपपत्तेरित्याशयेनाह ॥ **शुक्तौ तावदित्यादिना** ॥ अत्रानिर्वचनीय इत्येव वक्तव्ये आरोपित इत्यप्युक्त्याऽधिष्ठानसत्तासंसर्गप्रतिभास एवात्र प्रातिभासिकत्वं न तु सत्त्वान्तरमित्येष पक्षोऽत्राशङ्क्यत इति सूचयति ।

स०— **तत्किमनिर्वचनीयतया प्रतीयत इति** ॥ अत्र सर्वत्रानिर्वचनीयपदेन प्रातिभासिकमेव विवक्षितम् ॥ **उक्तानुभवविरोधादिति** ॥ रजतप्रतीतिमात्रस्य प्रवर्तकत्वं नोपपन्नम् । न ह्यसत्प्रातिभासिकं वा कदाचिदनेनार्थक्रियासूपयुज्यमानं दृष्टं येनासत्त्वादिकं प्रतीत्यापि प्रवर्तेतेत्युक्तानुभवविरोधः स्यादित्यर्थः । यद्वा सदिदं रजतमित्युक्तानुभवविरोधादित्यर्थः ।

प०— **समुच्चय इति** ॥ सत्त्वस्य चेति समुच्चय इत्यर्थः ॥ **उपमार्थोवेति** ॥ यथाऽन्यथात्वस्यासत्त्वं तथा सत्त्वस्याप्यसत्त्वमित्युपमार्थ इत्यर्थः ॥ **अनिर्वचनीयमिति** ॥ प्रातिभासिकरूपानिर्वचनीयं मन्यमानस्यापीत्यर्थः ॥ **अनिर्वचनीयतया** ॥ प्रातिभासिकतया । व्यावहारिकरूपानिर्वचनीयमर्थ-

क्रियाकारि दृष्टमिति मायी वदिष्यतीत्यतोऽनिर्वचनीयशब्दार्थः प्रातिभासिकं वेति विवृतः ॥ **अनिर्वच-नीयताविरोधादिति** ॥ भ्रान्तिविषयरजतस्येति योज्यं । सत्यभूतसत्त्वाश्रयस्य सद्विलक्षणत्वायोगेन सदसद्विलक्षणत्वरूपानिर्वचनीयतानुपपत्तेरितिभावेन व्यनक्ति ॥ **नहीति** ॥ यथाऽसतोन्यथात्वस्येत्युक्त्या एवंशब्द उपमार्थ इत्युक्तं विवृतम् ॥ सत्त्वस्यापीत्यनेन समुच्चयार्थ इति विवृतं ॥ **विशिष्टेति** ॥ सत्त्वे-नापरोक्षतया प्रतीततेत्यर्थः । सत्त्वे सत्त्वरूपपदार्थस्थले इति व्याप्तेर्भग्नत्वादित्यर्थः ॥ **एतेनेति** ॥ सत्त्वे-नापरोक्षतया प्रतीतत्वहेतुनेत्यर्थः ॥ **आहेति** उक्तदोषपरिहारमाह । मायीत्यर्थः । तमनुवदति ॥ **अपरो-क्षतयेति** ॥ **अन्यथात्व इति** ॥ शुक्तिकेदमंशस्य यो रजतत्वसंसर्गः यश्च रजते इदंतासंसर्गः तदुभय-रूपान्यथात्व इत्यर्थः ॥

**या०— तत्किमनिर्वचनीयतयेति** ॥ अत्र सर्वत्रानिर्वचनीयत्वपदेन प्रातिभासिकत्वमेव विवक्षितमिति द्रष्टव्यम् ॥ **विशिष्टप्रतीततेति** ॥ अपरोक्षतया सत्त्वेन च प्रतीततेत्यर्थः ॥

**श्री०—** प्रातिभासिकमनिर्वचनीयतया प्रातिभासिकतया ॥ **सत्त्वेनैवेति** ॥ तृतीयः पक्ष इत्यर्थः ॥ **प्रतीतिमात्रादिति** ॥ न सत्त्वेनेत्यर्थः ॥ **उक्तानुभवेति** ॥ सदिदं रजतमित्युक्तानुभवेत्यर्थः । सत्वोल्लेखमन्तरेण प्रतीतिमात्रात्प्रवृत्तिरित्यङ्गीकारे सत्यमवर्जनीयमेवेत्याह ॥ **विश्वीति** ॥ **अनिर्वचनीय-तेति** । रजतस्येति शेषः । तदुपपादयति ॥ **न हीति** ॥ **तत्संसर्गश्चेति** ॥ शुक्तिगतेदन्तासंसर्गश्च रजतेऽनिर्वचनीय एवारोपित इत्यन्वयः । तत्र दृष्टान्तो रजतवदिति । यथा शुक्तौ रजतमनिर्वचनीय-मारोपितं तद्वदित्यर्थः ।

**च०— तत्किमनिर्वचनीयतयेति** ॥ प्रातिभासिकतयेति । एवमुत्तरत्राप्यनिर्वचनीयशब्दः प्रातिभासिकपरोऽवसेयः । अभिधास्यति चासत्प्रातिभासिकं वेति ॥ **रजतप्रतीतिमात्रात्** सत्त्वा-नवगाहिरजतप्रतीतितः ॥

**अनु०— तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः ॥**

**सु०— यदपि रजते सत्त्वमसदेवापरोक्षतया सत्त्वेन प्रतीयत इत्यभिहितम् । तच्चा-नुपपन्नम् । शुक्तिकायां सदेव सत्त्वं रजते प्रतीयते । न तु रजतस्य परं सत्त्वं नामास्तीत्यङ्गी-कारात् । शुक्तिकेदन्तासंसर्गवत्तत्सत्तासंसर्गस्याप्यनिर्वचनीयस्यैवारोपितस्य प्रतीयमानत्वादिति प्राग्विकल्पितं पक्षमाशङ्क्य परिहरति ॥ तस्येति ॥ इदन्तारजतत्वयोरितरेतरसंसर्गस्य तथा**

रजते शुक्तिकासत्त्वसंसर्गस्यानिर्वचनीयत्वेऽङ्गीक्रियमाणेऽनवस्थितिः स्याद्धि यस्मात्तस्मादुभयम सदेवाङ्गीकरणीयमिति पूर्वेण संबन्धः । तथा हि । संसर्गद्वमनिर्वचनीयमिति कोऽर्थः । किं व्यावहारिकमुत प्रातिभासिकमिति । नाद्यः । अनङ्गीकारात् । तथात्वे वा रजतस्यापि व्यावहारिकत्वापातात् । द्वितीये प्रातिभासिकतयैव प्रतीयते । व्यावहारिकतया वा । नाद्यः प्रवृत्त्यभावप्रसङ्गात् । न हि प्रातिभासिकमर्थक्रियासूपयुक्तं क्वचिदुपलब्धम् यतस्तद्भावं प्रतीत्यापि प्रवर्तेत । द्वितीये तु किं व्यावहारिकता सती अथासती । नाद्यः प्रातिभासिकत्वानुपपत्तेः । द्वितीयेऽपरोक्षतया सत्त्वेन चासतोऽपि प्रतीतिप्रसङ्गः । अथ सा व्यावहारिकताऽप्यनिर्वचनीयैवारोपितेत्युच्यते तदाऽनिर्वचनीयेति कोऽर्थ इत्यादेरावृत्त्यारोपपरम्परापर्यवसानापत्तिः स्यात् । यत्रैवारोपपर्यवसानं तत्रैव प्रवृत्त्यभावो वाऽसतो विशिष्टप्रतीतिर्वा प्रसज्येत ।

व्या०— नन्वत्र संसर्गद्वयस्यानिर्वचनीयत्वेऽपि व्यावहारिकत्वेन प्रतीभासिकत्वेऽपि तथैवप्रतीत्याव्यावहारिकत्वेन प्रतीतावपि व्यावहारिकतायाः सत्त्वेनासत्त्वेन वोपपत्तौ नानवस्थाप्रसङ्ग इत्यतो दूषणान्तरेण पक्षान्तरनिरासेन प्रातिभासिकस्य प्रातिभासिकव्यावहारिकत्वेन प्रतीतिपरम्पराकल्पनेऽनवस्थाप्रसङ्गं व्युत्पादयितुमाह ॥ तथा हीति ॥ अत्र संसर्गद्वयमित्युक्तिरन्यथात्वशब्दार्थतयेदन्तारजतत्वसंसर्गयोरेकत्वमित्यभिप्रेत्य । अत्र संसर्गद्वयव्यावहारिकतापक्षस्य परानभिमतत्वेऽप्यनिर्वचनीयशब्दार्थतया प्रसक्तेर्विकल्पयति ॥ किमिति ॥ प्रतीतत्वरूपप्रातिभासिकत्वस्य व्यावहारिकत्वस्य वाऽर्थनिबन्धनत्वाभावेन प्रतीतिमात्रनिबन्धनतया प्रातिभासिकत्वं वदता प्रतीतिविषयत्वस्यावश्यवक्तव्यत्वाद्व्यावहारिकत्वपक्षे प्रतीत्यविकल्पेन दूषणान्तरमेवोक्त्वा प्रातिभासिकत्वपक्षेऽपि स्वरूपेण प्रतीतेर्निराकरिष्यमाणत्वात्सत्त्वेन प्रतीतिपरिशेषमभिप्रेत्य तां विकल्पयति ॥ द्वितीयेऽपीति ॥ तदेति ॥ संसर्गद्वयव्यावहारिकताया अनिर्वचनीयत्वस्य व्यावहारिकत्वरूपस्यानङ्गीकारादङ्गीकारे वा संसर्गद्वयस्यापि व्यावहारिकत्वापत्तेः । प्रातिभासिकत्वरूपत्वे च प्रतीतेरावश्यकत्वात्प्रातिभासिकत्वेनैव प्रतीतौ प्रवृत्त्यभावप्रसङ्गेन व्यावहारिकत्वेन प्रतीतौ च तस्या व्यावहारिकताऽन्यावहारिकतायाः सत्त्वे व्यावहारिकतायाः प्रातिभासिकत्वानुपपत्त्याऽसत्त्वे चासतो विशिष्टप्रतीत्यापत्त्या व्यावहारिकतानिष्ठव्यावहारिकताया अनिर्वचनीयत्वे उक्तरीत्याऽनवस्थेत्यर्थः । ननु संसर्गद्वयस्य व्यावहारिकतायाश्च व्यावहारिकत्वासत्त्वपक्षयोरनङ्गीकारपराहतत्वेनाशङ्कनीयत्वेऽपि प्रातिभासिकस्यप्रातिभासिकत्वेन प्रतीतावसतोऽसत्त्वेन सत्त्वेन वा प्रतीत्यभ्युपगमे आरोपपरम्पराप्रसक्तेरभावान्नानवस्थेत्यत एतत्पक्षत्रयेऽनवस्थाऽप्रसक्तावप्याद्यद्वये प्रवृत्त्यभावापत्त्या तृतीये सतोऽपि विशिष्टप्रतीत्यापत्त्यैतत्पक्षत्रयं प्रदूष्य प्रातिभासिकस्य प्रातिभासिकेन व्यावहारिकत्वेन प्रतीतिपक्षं परिशेष्यानवस्थाप्रसङ्गस्यात्राभिमतत्वान्नानुपपत्तिरित्याह ॥ यत्रैवेति ॥

प०—**प्राग्विकल्पितमिति** ॥ तस्मात् भ्रान्तावेवेत्येतदवतारिकायां विकल्पितं तथा तत्सत्त्वं सत् असत् अनिर्वचनीयं वेति विकल्पितं चेत्यर्थः ॥ **प्रातिभासिकत्वानुपपत्तेरिति** ॥ संसर्गद्वयस्येत्यनुकर्षः । नहि यस्य व्यावहारिकता सती तस्य प्रातिभासिकत्वं संभवतीति भावः ॥ **विशिष्टप्रतीतिरिति** ॥ सत्त्वप्रकारकापरोक्षप्रतीतिरित्यर्थः ॥

या०— **यत्रैवारोपपर्यवसानमिति** ॥ तत्त्वस्यारोपपर्यवसानं ह्युभयत्र वक्तव्यम् । यदा सत्त्वं प्रातिभासिकतयाऽसत्त्वेन वा प्रतीयते तदा । यदा वा तदसदेव सत्त्वेन प्रतीयते तदेति । तत्राद्ये प्रवृत्त्यभावः । द्वितीये सत्त्वेनापरोक्षतया च प्रतीतिप्रसङ्ग इत्यर्थः ॥

श्री०— **इतरेतरेति** ॥ इदन्तासंसर्गो रजते रजतत्वसंसर्गश्चेदमास्पद इत्येवमितरेतरसंसर्गस्येत्यर्थः ॥ **प्रातिभासिकत्वानुपपत्तेरिति** ॥ संसर्गद्वयस्येति शेषः । न हि यस्य व्यावहारिकसत्वं तत्प्रातिभासिकमिति संभवतीति भावः ॥ **परम्पराऽपर्यवसानेति** ॥ अनवस्थेत्यर्थः । अनवस्थापरिहराय किंचिद्दूरं गत्वा संसर्गद्वयं प्रातिभासिकमिति वा वक्तव्यमसदिति वा वक्तव्यम् । तत्र प्रातिभासिकत्वे दूषणमाह ॥ **प्रवृत्त्यभाव इति** ॥ असत्त्वे दूषणमाह ॥ **असत इति** ॥

च०— **अपरोक्षतयेति** ॥ प्रतीत्यन्वयिवैशिष्ट्यप्रत्यायिका तृतीया ॥ **सत्त्वेन चेति** ॥ तदन्वितप्रकारतानिरूपकत्वावगमिका सा । तथा च सत्त्वप्रकारिकापरोक्षताविशेषिता या प्रतीतिस्तद्विषयतेत्यर्थः । विशिष्टप्रतीतता सत्त्वप्रकारकापरोक्षप्रतीतिविषयता ।

**सु०— न चेयमपर्यवसिता परम्परा सिद्धविषया । येन बीजांकुरपरम्परावद्दूषणं स्यात् । न चेयं कस्याप्यप्रतिबन्धकत्वाददोष इति वाच्यम् । पूर्वपूर्वारोपानुपपत्तावुत्तरोत्तरारोपानुपपत्तेः । प्रवृत्त्यनुपपत्तेश्च ॥ न च वाच्यं सर्वेऽप्यारोपा एककालमेव भवन्तीति । ज्ञानानां यौगपद्यायोगात् । अधिष्ठानसिद्ध्युत्तरकालीनत्वाच्चारोपस्य ॥ यथा विसर्पणविशिष्टः सर्पो रज्जावारोप्यते एवमेक एवायं विशिष्टारोप इति चेन्न । अनन्तानिर्वाच्यविशेषणविशिष्टार्थगर्भस्यारोपस्याननुभवात् । विशेषणभेदेन विशिष्टप्रत्ययभेदस्यावश्यकत्वाच्च ॥ ननु च संसर्गद्वयं न प्रातिभासिकतया प्रतीयते, नापि व्यावहारिकतया, किन्तु स्वरूपेणैव; अतो नानवस्थेति चेत् । व्यावहारिकत्वाप्रतीताविष्टाभ्युपायत्वानुमानाद्यनुपपत्तौ प्रवृत्त्यनुपपत्तेः । अन्यथा रजतावभासादेव प्रवृत्त्युपपत्तौ किं संसर्गग्रहणेनेति वदता जितं प्राभाकरेण ॥ तस्मादपरिहार्यैवेयमनवस्था ॥ तदिदमुक्तं स्यादेवेति ॥ ननु भवत्पक्षेऽपि रजतस्य प्रतीयमानं सत्त्वं सदसद्वा । नाद्यः । रजतस्यापि सत्त्वापत्तेः । द्वितीये किमसत्त्वेन प्रतीयते किंवा**

**सत्त्वेन । नाद्यः प्रवृत्त्यभावापत्तेः । द्वितीये तदपि सदसद्वेति समानो दोषः । न समानः विधिप्रत्ययस्यैव सत्त्वविशिष्टविषयत्वाभ्युपगमात् । न च सत्त्वस्यापरं सत्त्वमस्माभिरभ्युपगम्यते । किन्तु रजतविधिप्रत्ययमात्रादेव प्रवृत्त्युपपत्तेः । न चैवं परस्याभ्युपगमः । सत्त्वेऽप्यवान्तरभेदाङ्गीकारेण तत्प्रतीतिमात्रस्य प्रवृत्त्यनुपयोगित्वादिति ।**

वा०— एवकारसूचितापरिहार्यत्वोपपादनाय प्रसक्तपरिहारप्रकारानाशङ्क्य निरस्यति ॥ **न चेत्यादिना** ॥ ननूत्पत्तिज्ञप्तिप्रतिबन्धकत्वेनैवानवस्थाया दूषणत्वात्प्रकृतायाश्च तथात्वान्न दूषणत्वमित्याशयेन शङ्कते ॥ **न चेति** ॥ यद्वा ननु मूलक्षयाभावान्नानवस्थेत्यतो मूलक्षयो नाम कल्पकाभावश्चेत्कल्पकस्य रजतानिर्वचनीयत्वस्याप्रामाणिकतया कल्पकाभावः सिद्ध एवेत्याशयेनाह ॥ **न चेति** ॥ प्रयोजनपरिक्षयो मूलक्षयः इत्याशयेन शङ्कते ॥ **न चेति** ॥ घटोत्पत्त्यादेः प्रामाणिकत्वात्तस्य चाप्रामाणिके घटान्तरोत्पत्त्यादिसापेक्षत्वे तस्याप्येवमित्यनवसितपरम्परापत्त्या कारणीभूतपूर्वपूर्वोत्पत्त्यनुपपत्त्या कार्यभूतोत्तरोत्तरोत्पत्त्यनुपपत्तौ प्रामाणिकैतद्धटोत्पत्त्यभावपातेन प्रामाणिकघटोत्पत्त्यादिपरित्यागरूपप्रयोजनपरीक्षया रूपमूलक्षयात्तदनवस्थाया दूषणत्ववत्प्रकृतेऽपि संसर्गद्वयस्य प्रातिभासिकत्वं वदता पक्षान्तरासंभवाद्व्यावहारिकत्वेनैव प्रतीतेरङ्गीकार्यत्वात्तद्व्यावहारिकत्वस्य चोक्तरीत्या सत्त्वासत्त्वव्यावहारिकत्वरूपकल्पान्तरासंभवेन प्रातिभासिकत्वे वक्तव्ये प्रतीतिविषयत्वस्यावश्यकतया स्वरूपेण प्रतीतेश्च न चैवं परस्याभ्युपगम इत्यादिवक्ष्यमाणरीत्याऽसंभवात्प्रातीतिकत्वेन प्रतीतेश्च प्रवृत्त्यनुपपत्त्याऽसंभवेन व्यावहारिकत्वेन प्रतीतत्वे वक्तव्ये व्यावहारिकत्वस्य व्यावहारिकत्वेन या प्रतीतिस्तत्सापेक्षता संसर्गद्वयव्यावहारिकता प्रतीतेरुक्ता स्यात् । व्यावहारिकत्वस्य प्रतीतिकत्वाभावे व्यावहारिकत्वेन तत्प्रतीत्यभावे संसर्गद्वयस्य व्यावहारिकत्वेन प्रतीत्यनुपपत्तेः । एवं व्यावहारिकत्वे व्यावहारिकत्वस्यापि प्रातिभासिकत्वात्स्वनिष्ठव्यावहारिकत्वप्रतीतिसापेक्षप्रतीतिकत्वमिति स्वोपपत्तये कल्पनीयप्रतीत्यनुपपत्तौ स्वस्याप्यनुपपत्तिरित्यनवसितपरम्परापत्त्या संसर्गद्वयस्य प्रातिभासिकत्वानुपपत्तावप्रामाणिकप्रातिभासिकतत्सापेक्षत्वे प्रामाणिकप्रवृत्तेः परित्यागापत्त्या प्रवृत्तिरूपप्रयोजनपरिक्षयरूपमूलक्षयादेतदनवस्थाया अपि दूषणत्वं युक्तमेव । न ह्युत्पत्तिज्ञप्तिपरित्यागरूपाया एव दूषणत्वं न तु प्रवृत्तित्यागरूपाया इत्यत्र नियामकं किञ्चित् । किं तर्हि प्रामाणिकमात्रपरित्यागरूपाया इति नानुपपत्तिरित्याशयेनाह ॥ **पूर्वपूर्वेति** ॥ यद्यपि कल्पकस्य संसर्गप्रातिभासिकत्वस्यासिद्ध्याऽप्रामाणिककल्पनारूपत्वं प्रकृतानवस्थाया व्युत्पादयितुं शक्यम् । अत एव समयपादेऽप्रामाणिककल्पनारूपाया अपि प्रामाणिकपरित्यागवद्दूषणत्वं व्युत्पाद्य धर्मानवस्थां व्युत्पादयिष्यति । तथापि

प्रकृते प्रवृत्तिरूपप्रामाणिकपरित्यागस्यापि संभवादेवमुक्तमिति ध्येयम् । यद्यपि चाधिष्ठानसिद्धिरूप-प्रातिभासिकसंसर्गाद्यारोपस्याप्रामाणिकत्वात्तन्निबन्धनोत्तरोत्तरव्यावहारिकत्वाद्यारोपानुपपत्त्या प्रवृत्त्यनुपपत्ति-रित्यपि वक्तुं शक्यते । तथाऽपि तथोक्तेरप्रामाणिककल्पनायां पर्यवसानात्तस्य च सिद्धविषयत्वा-भावोक्त्या सिद्धत्वाद्यावहारिकत्वाद्यारोपनिबन्धनत्वात्संसर्गारोपस्य तदनुपपत्तौ तदनुपपत्त्या प्रवृत्तिरूप-फलक्षये प्रामाणिकपरित्यागं वक्तुमेवमुक्तमिति ध्येयम् । यद्वाऽयमेव ग्रन्थ एतदाशयेनैव वर्णनीयः । एवं चाधिष्ठानसिद्ध्युत्तरकालीनत्वादित्युत्तरग्रन्थस्वारस्यमिति द्रष्टव्यम् । ननु सत्यां परम्परायां सिद्ध-विषयत्वादिविचारः सैव नास्तीत्याशङ्कते ॥ **न चेति** ॥ नन्वारोपाणामनेकत्वानभ्युपगमाद्रज्जोरिव शुक्तेरेवाधिष्ठानत्वाच्च नोक्तदोष इत्याशङ्कते ॥ **यथेति** ॥ अनुभवे विप्रतिपद्यमानं प्रत्याह ॥ **विशेष-णेति** ॥ विशिष्टश्चासौ प्रत्ययश्चेति विग्रहः । प्रत्ययश्चाध्यासः । एवं चाध्यासस्य स्वरूपेणैकत्वे-ऽप्यनिर्वाच्यानन्तविशेषणानां भेदेन तत्तद्विशेषणविषयकत्वोपाधिना विशिष्टाध्यासस्य गगनवद्भेदस्यैक-विशेषणविशिष्टप्रतीत्यनन्तरमपरविशेषणविशिष्टाध्यासप्रतीतिरिति प्रतिपत्तिः पौर्वापर्यस्य चावश्यकत्वा-त्तन्निबन्धनानवस्था दुष्परिहरेति भावः । एतेन विशेषणभेदेन विशिष्टभेदेऽपि न विशिष्टप्रत्ययभेदः । अनेकविशेषणविशिष्टैकप्रत्ययदर्शनाद्विशिष्टवैशिष्ट्यावगाहिप्रत्ययदर्शनाच्चानेकाधिष्ठानकारोप्यकैकारोपानुप-पत्त्यभिप्रायस्य च शुक्तेरेकस्या एवाधिष्ठानतया परेणोक्तत्वात्तथैव निर्देशापत्त्या विशेषणभेदेनेत्यादिवि-न्यासायोगाच्चानुपपत्तिरिति दूषणमलग्नकं वेदितव्यम् । अत एव विवरणे सत्यानृते मिथुनीकृत्याहमिदं ममेति लोकव्यवहार इत्यत्र मिथुनीकरणलोकव्यवहारादिशब्दानध्यासपरतया व्याख्याय तद्ध्यासस्यैक-त्वात्पौर्वापर्यासंभवेऽत्र क्त्वाप्रत्ययानुपपत्तिमाशङ्क्यैकत्वेऽप्यध्यासस्य सत्यानृतेऽहमिदं ममेदमिति विशेषणभेदप्रयुक्तभेदाप्रतिपत्तितः पौर्वापर्याद्युक्तः क्त्वाप्रत्यय इति समाहितम् । तथा च तदभिप्रायेणे-यमुक्तिरिति नानुपपत्तिरिति द्रष्टव्यम् । नन्वारोपस्यानेकविशेषणविषयकत्वमपि नाभ्युपगम्यते । अतो नोक्तदोष इत्याशङ्कते ॥ **ननु चेति** ॥ परिहारान्तरासंभवात्प्रतिबन्द्याऽनवस्थां परिहर्तुं शङ्कते ॥ **नन्विति** ॥ कुतो न समान इति चेन्न । स्वरूपेणैव सत्त्वप्रतीतेर्मयाऽभ्युपगमात् । न च विधिनिषेधा-ववधूय प्रत्ययाभावात्कथं स्वरूपेण तत्प्रतीतिरिति वाच्यम् । रजतविधिप्रत्ययस्यैव सत्त्वविषयत्वाङ्गी-कारेण सत्त्वविषयकविधिप्रत्ययान्तरानङ्गीकारेण प्रतीतिपरम्पराभावान्नानुपपत्तिरित्याह ॥ **विधीति** ॥ विधिप्रत्ययान्तरानभ्युपगमे निमित्तमाह ॥ **न चेति** ॥ नन्वेवं प्रवृत्त्यनुपपत्तिरित्यत आह ॥ **रजतेति** ॥ तथा च सत्त्वे सत्त्वान्तरानभ्युपगमात्स्वरूपेणैव सत्त्वप्रतीत्यभ्युपगमाच्च सत्त्वं सदसदिति सत्त्वेनासत्वेन वा प्रतीयत इति विकल्पानवकाश इति भावः । यद्वा कुतो न समान इति शङ्कापरिहारत्वेन स्वरूपेण सत्त्वप्रतीत्यभ्युपगममुक्त्वा सत्त्वं सदिति प्रतीतेः कथं स्वरूपेणैव तत्प्रतीत्यभ्युपगम इत्यतो विधिप्रत्यय-

स्यैव सत्त्वविषयकत्वेन सत्त्वं सदिति प्रत्ययानभ्युपगमादित्याशयेनाद्यं वाक्यं योजयित्वा सत्त्वं सदिति प्रत्ययानभ्युपगमनिमित्तत्वेन न चेति वाक्यं योजयित्वा ननु माऽस्तु सत्त्वं सदिति प्रत्ययः सत्त्वविधिप्रत्ययस्यैव सत्त्वे सत्त्वविषयकत्वान्न सत्त्वस्य स्वरूपेण भानं प्रवृत्त्यनुपपत्तिश्चेत्यतो रजतेति वाक्यं योजनीयमिति ज्ञेयम् ॥ **सत्त्वेऽपीति** ॥ मम च सत्त्वावान्तरभेदानभ्युपगमेन सत्त्वप्रतीतिमात्रेण प्रवृत्त्युपपत्तिरिति भावः ।

स०— **पूर्वपूर्वारोपानुपपत्ताविति** ॥ रजतानिर्वचनीयत्वस्याद्याप्यसिद्ध्या तदारोपस्यासिद्धौ तस्य प्रवृत्तिजनकत्वाय कल्प्यमानोत्तरोत्तरव्यावहारिकत्वारोपाणामप्यसिद्ध्या प्रथमारोपात्प्रवृत्तिलक्षणं कार्यं त्वन्मते न स्यादित्यर्थः । अनन्तविशेषणकोऽयमारोपः किमेकाधिष्ठानकः । उत समूहालम्बनं चेद्रजते सत्त्वारोपस्तत्सत्त्वे व्यावहारिकतायास्तद्व्यावहारिकत्वे व्यावहारिकान्तरस्येति भिन्नाधिष्ठानकः । नाद्य इत्याह ॥ **अनन्तानिर्वाच्यविशेषणेति** ॥ नान्त्य इत्याह ॥ **विशेषणभेदेनेति** ॥ अयं भावः आरोपस्याधिष्ठानसिद्धिसापेक्षत्वेनाधिष्ठानानां च प्रातिभासिकसत्त्वेन सत्त्वप्रतिभासस्य व्यावहारिकत्वारोपं प्रति कारणत्वेन न तद्व्यावहारिकत्वप्रतिभासस्य व्यावहारिकत्वारोपं प्रति कारणत्वेन शिष्टारोपस्यासंभवादिति । केचित्तु । **विशेषणभेदेनेति** ॥ क्रमिकविशेषणभेदेन विशिष्टाभिज्ञारूपप्रत्यक्षभेद आवश्यक इत्यर्थः । अतो विशेषणभेदेऽपि दण्डी देवदत्त इत्यादिप्रत्यक्षरूपस्य क्रमिकविशेषणभेदेऽपि प्रत्यभिज्ञाप्रत्यक्षरूपस्य वा विशिष्टज्ञानस्यैक्योपलम्भात् कथमेतदिति शङ्काऽनवकाशः । अत एव सर्पज्ञानमादौ भवति । तस्मिन्नधिष्ठाने सिद्धे तत्र पश्चादभिसर्पणारोप इति तत्रापि प्रत्ययभेद एवेति न दृष्टान्तः संप्रतिपन्न इति ध्येयम् ।

प०— **पूर्वपूर्वेति** ॥ उक्तसंसर्गद्वयस्यारोपे सिद्धे तत्र सत्त्वस्यारोप इति स्यात् । न चासतः सत्त्वस्य तत्र भानानङ्गीकारे स एवारोपो युक्तः । एवं च तदनुपपत्त्या तत्र सत्त्वारोपः सत्त्वे च सत्त्वान्तरारोप इत्यादि न युक्तमित्यर्थः ॥ **प्रवृत्तीति** ॥ सत्त्वप्रतीतिनिमित्तत्वात्प्रवृत्तेः सत्त्वप्रतीतेश्च त्वन्मतेऽयोगादित्युक्तत्वादिति भावः । यद्वा संसर्गद्वये भासमानं सत्त्वमनिर्वचनीयरूपमपि न सत्त्वेन भाति । किन्तु स्वरूपेणातो नानवस्थेत्यत आह ॥ **प्रवृत्तीति** ॥ **अधिष्ठानेति** ॥ उत्तरोत्तरारोपं प्रति पूर्वपूर्वस्याधिष्ठानत्वेन तदारोपानन्तरमेवोत्तरोत्तरारोपस्य वाच्यत्वादिति भावः ॥ **विधिप्रत्ययस्यैवेति** ॥ इदं रौप्यमित्यादिप्रत्ययस्यैवेत्यर्थः ॥ **सत्त्वेष्ववान्तरभेदेति** ॥ पारमार्थिकसत्त्वं व्यावहारिकसत्त्वं प्रातिभासिकसत्त्वमिति सत्त्वेऽप्यवान्तरभेदोपगमेन तत्प्रतीतिमात्रे सत्यपि किमिदं प्रतीतं सत्त्वं प्रातिभासिकं सत्त्व-

मथ व्यावहारिकं सत्त्वमिति संदेहावस्कंदनेन निःशङ्कप्रवृत्त्यर्थं सत्त्वस्यापि सत्त्वेन भानस्यावश्यकत्वादिति भावः । न्यायामृते तु परमतेऽनिर्वाच्यस्य सत्त्वस्य सत्त्वेनाभाने प्रातिभासिकत्वासिद्धिवत् मन्मतेऽसतः सत्त्वस्य सत्त्वेनाप्रतीतौ असत्त्वसिद्धेरभावादिति प्रकारान्तरेण प्रतिबन्दी मोचिता । निपुणतरमुपपादितमेततत् असद्विलक्षणज्ञप्त्या इत्यादिनाऽनवस्थितिरित्यन्तेनोक्तं प्रमेयं ख्यातिबाधान्यथानुपपत्तिभङ्गे न्यायामृते ॥

या० — **पूर्वपूर्वारोपानुपपत्ताविति** ॥ पूर्वस्य रजतानिर्वचनीयत्वस्यैवाद्याप्यसिद्ध्या तदारोपस्यासिद्धौ तस्य प्रवृत्तिजनकत्वाय कल्प्यमानोत्तरोत्तरव्यावहारिकत्वारोपाणामप्यसिद्ध्या प्रथमारोपात्प्रवृत्तिलक्षणं कार्यं त्वन्मते नोपपद्यत इत्यर्थः ॥ **विशेषणभेदेनेति** ॥ अत्र विशिष्टप्रत्ययशब्देनोक्ततत्तद्व्यावहारिकत्वविशिष्टप्रत्यय एव विवक्षितः । विवेषणशब्देनोक्तानि व्यावहारिकत्वान्येव विवक्षितानि । तानि च प्रातिभासिकत्वात्प्रतीतिर्घटितस्वरूपाण्येव नार्थगतानि । एवं चोक्तप्रतीतिगर्भव्यावहारिकत्वरूपविशेषणानां भेदेऽङ्गीक्रियमाणे तद्घटकोक्तविशिष्टप्रत्ययभेद आवश्यक इति प्रकृताभिप्रायेणैवेदमुक्तमित्यवधेयम् । अतो दण्डकुण्डलरूपविशेषणभेदेऽपि विशिष्टप्रत्ययैक्यदर्शनात्कथमेतदिति शङ्काऽनवकाशः ।

श्री० — ॥ **यौगपद्येति** ॥ सजातीयात्मविशेषगुणानां युगपदुत्पत्त्यभावादिति भावः ॥ **अधिष्ठानेति** ॥ रजतगतशुक्तिकासत्वसंसर्गस्य यदनिर्वचनीयत्वं तद्व्यावहारिकत्वाद्यारोपेऽधिष्ठानं तस्यैवासिद्धेरिति भावः ॥ **विशेषणभेदेनेति** ॥ तथा चैक एवायं विशिष्टारोपइत्युक्तमसदिति भावः ॥ **स्वरूपेणैवेति** ॥ प्रातिभासिकत्वव्यावहारिकत्वौदासीन्येत्यर्थः ॥ **व्यावहारिकताप्रतीताविति** ॥ रजतमिष्टसाधनं व्यावहारिकरजतत्वादित्यनुमानं कार्यम् । अन्यथा रजतत्वस्य प्रातिभासिकरजतेऽपि सत्वेन व्यभिचारापत्तेः । अतो व्यावहारिकत्वं प्रतीयत इत्यङ्गीकार्यम् । अन्यथा रजतस्येष्टसाधनताऽनुमानासंभवेन प्रवृत्तिर्न स्यादित्यर्थः ॥ **अन्यथेति** ॥ संसर्गद्वयं स्वरूपेणैव प्रतीयते । तन्मात्रादेव च प्रवृत्तिरित्यङ्गीकार इत्यर्थः ॥ **रजतावभासादिति** ॥ रजतस्वरूपमात्रावभासादित्यर्थः । संसर्गग्रहेण विशिष्टज्ञानेन ॥ **तस्मादिति** ॥ प्रवृत्तिजनकीभूतेष्टसाधनतानुमितौ हेतुत्वेन व्यावहारिकताप्रतीतेरावश्यकत्वादित्यर्थः । **अनवस्थेति** ॥ तद्व्यावहारिकत्वं किं प्रातिभासिकतयैव प्रतीयते व्यावहारिकतया वेत्यादिनोक्तरीत्येत्यर्थः ॥ **सत्त्वापत्तेरिति** ॥ न हि यस्य सत्त्वं सत् तदसदिति सम्भवतीति भावः ॥ **प्रवृत्त्यभावेति** ॥ न ह्यसदर्थक्रियासूपयुज्यमानं क्वचिदनेनोपलब्धम् । येन तथात्वं प्रतीत्याऽपि प्रवर्तेतेति भावः । दोषोऽ-

नवस्थारूपः ॥ **विधिप्रत्ययस्येति** ॥ इदंरजतमिति प्रत्ययस्यैवेत्यर्थः ॥ **सत्त्वविशिष्टेति** ॥ सत्त्व-विशिष्टरजतविषयकत्वाभ्युपगमादित्यर्थः ॥ **विधिप्रत्ययमात्रादिति** ॥ तस्यैवास्मन्मते सत्त्वविशिष्टार्थ-विषयकत्वाभ्युपगमादिति भावः ॥ **तत्प्रतीतिमात्रस्येति** ॥ रजतप्रतीतिमात्रस्येत्यर्थः । अस्मन्मते सत्त्वेऽवान्तरभेदाभावे रजतविधिप्रत्ययमात्रस्यैव प्रवृत्त्युपयोगित्वमङ्गीकृतं न परमते । तेन सत्त्वे अवान्तरभेदाङ्गीकारेण रजते व्यावहारिकत्वाप्रतीताविष्टाभ्युपायत्वानुमानासम्भवेन प्रवृत्तिरेव न स्यात् । अतो व्यावहारिकत्वं प्रतीत्यैव प्रवर्तत इति वाच्यम् । तथा चोक्तरीत्याऽनवस्थेति भावः ।

**सु०—अपर आह । सदिदं रजतमिति प्रतीयमानं सत्त्वं नासत् । येनोक्तव्याप्तेर्भङ्गः स्यात् । किं नाम ब्रह्मणीव पारमार्थिकमम्बरादेरिव मायोपाधिकं व्यावहारिकं शुक्तिरजता-दावप्यविद्योपाधिकं प्रातिभासिकं सत्त्वमस्त्येवेति ॥ तदसत् । सत्त्रैविध्यस्यैव दूषितत्वात् । दूषणान्तरं चाह ॥ तस्येति ॥ तस्य सत्त्वस्यानिर्वचनीयत्वे प्रातीतिकत्वे तथैव प्रतीतौ स्वरूप-मात्रप्रतीतौ वा स्यादेवानवस्थितिः अव्यवस्थितिः । प्रवृत्तेरिति शेषः । व्यावहारिकत्वाद्याकारेण प्रतीतौ पूर्ववदनवस्थितिः स्यादेवेति । तस्मान्न वियदादिप्रपञ्चस्यानिर्वचनीयत्वमिति सिद्धम् ।**

**वा०—** अधिष्ठानसत्त्वसंसर्गारोपपक्षनिराकरणपरत्वेन तस्येति भाष्यं योजयित्वा प्रातीतिकसत्त्व-सद्भावपक्षदूषणान्तरपरत्वेन तद्योजयितुं तं पक्षमुपन्यस्य पूर्वदूषणं च स्मारयति ॥ **अपर आहेत्यादिना** ॥ अधिष्ठानसत्तासंसर्गस्य सदसद्विलक्षणत्वे तत्सत्त्वानुभवविरोधतादवस्थ्यमित्याशङ्कापरिहाराय सत्त्वत्रैविध्य-पक्षस्य विवरणे उपन्यासात्तस्य पश्चादुपादानमिति द्रष्टव्यम् । पारमार्थिकं नाम कालत्रयबाधाभावोप-लक्षितं स्वरूपं मायाशब्देन व्यावहारिकसत्त्वसम्पादिन्यविद्याऽविद्याशब्देन प्रातिभासिकसत्त्वनिर्वाहक-मज्ञानमुच्यते । यद्यपि तन्मतेऽपि मायाऽविद्ययोर्न भेदस्तथाऽप्येकस्मिन्नेव वस्तुनि विक्षेपजनकत्वावरक-त्वोपाधिना वा स्वेच्छाधीनत्वतन्नियमाभावोपाधिना वा तद्भेदाभ्युपगमादेवमुक्तिरिति ध्येयम् । इदं च हेयं मायामतेनैव सह शून्यमतं बुधैरित्यनुव्याख्यावसरे स्वयमेव वक्ष्यति । प्रातिभासिकत्वपक्षं मूलारूढं कृत्वोक्तविकल्पनिरासकत्वेन स्यादेव ह्यनवस्थितिरित्येतदावृत्त्या योजयति ॥ **तस्येत्यादिना** ॥ ननु निर्विशेष इत्यादिरज्ञानानुपपत्तिप्रतिपादको ग्रन्थोऽसङ्गत इत्यतो विषयप्रयोजनोपयुक्ततया परेणोक्तस्य बन्धाध्यासवर्णनस्य तदनुपयुक्ततां बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत इत्यनेनाभिधाय मिथ्यात्वमपि बन्ध-स्येत्यादिनैतत्पर्यन्तेन ग्रन्थेन तस्यायुक्ततोपपादिता । अधुनोपादानान्तरासम्भवप्रतिपादनपूर्वमज्ञानोपा-दानकतायास्त्वया बन्धाध्यासस्योपपादिता । तदसम्भवाच्चाध्यासानुपपत्तेः विषयप्रयोजनानुपपत्तेः

शास्त्रवैयर्थ्यमेवेत्यज्ञानाभावतइत्यादिना वक्तुमज्ञानानुपपत्तेरनेन प्रतिपादनान्नानुपपत्तिरित्याह ॥**एवमिति**॥ निर्विशेष इत्याद्यव्यवहितग्रन्थेनैवाज्ञानोपादानकत्वानुपपत्तेः कण्ठतोऽनुक्तिरित्याशयवानित्युक्तम् ।

प०— **दूषितत्वादिति** ॥ सत्त्वैविध्यं चेत्यत्रेति भावः ॥

**या०**— ब्रह्मणि वेत्यत्र ब्रह्मणि पारमर्थिकमिवाम्बरादेर्मायोपाधिकं व्यावहारिकमिवेतीवशब्दयोजना द्रष्टव्या ॥

**श्री०**–शुक्तिरजतादौ सत्त्वेन प्रतीतिरेव सत्त्वं नार्थगतं सत्त्वमस्तीत्येकं मतम् । शुक्तिरजतादावविद्योपाधिकं प्रातिभासिकं सत्त्वमस्तीत्यपरं मतम् । तत्र द्वितीयमतानुसारेण शङ्कते ॥ **अपर आहेति** ॥ अनिर्वचनीयत्व इत्यनूद्य प्रातीतिकत्व इति व्याख्यातम् ॥ **स्वरूपमात्रप्रतीताविति** ॥ प्रातिभासिकत्वव्यावहारिकत्वौदासीन्येन रजतस्वरूपमात्रप्रतीतावित्यर्थः । अत्र प्रसिद्धानवस्थाया असम्भवेनानवस्थितपदं व्याचष्टे ॥ **अव्यवस्थितिरिति** ॥ तथाच प्रातिभासिकत्वेन प्रतीतौ प्रवृत्त्यव्यवस्थितिः । रजतस्वरूपमात्रप्रतीतौ च तत्र व्यावहारिकत्वाप्रतीत्येष्टाभ्युपायत्वानुमानासम्भवेन प्रवृत्त्यव्यवस्थितिरेवेत्यर्थः ॥

अनु०— निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेत् ॥

**सु०— एवं बन्धस्याध्यस्तत्ववर्णनं प्रकृतानुपयुक्तमयुक्तं चेत्यभिधायाधुना यत्परेण मिथ्याज्ञाननिमित्त इति बन्धस्य मिथ्याभूताज्ञानोपादानकत्वमुक्तं तदप्यनुपपन्नमित्याशयवान्परमतेऽज्ञानासम्भवं तावदाह ॥ निर्विशेष इत्यादिना ॥**

**तथा हि । यत्तावत्परेण भावरूपमज्ञानमङ्गीकृतम् । तत्किं जीवाश्रयम् । उत जडाश्रयम् । अथ ब्रह्माश्रयम् ॥ नाद्यः । प्रकृत्यधिकरणे निराकरिष्यमाणत्वात् ॥ न द्वितीयः । अनभ्युपगमात् । जडस्याज्ञानकल्पितत्वेनेतरेतराश्रयत्वात् । कारणस्य कार्याश्रितत्वादर्शनाच्च ।**

**बा०**— ननु तथाऽप्यसङ्गतिरेवाज्ञानस्यानेनानिरासात् । न च वक्ष्यमाणरीत्या व्यापकीभूताश्रयादिनिरासेन तन्निरास एव सिध्यतीति वाच्यम् । तथाऽपि ब्रह्मरूपाश्रयनिरासेऽपि जीवजडरूपाश्रयसंभवेन तदनिरासान्नाज्ञानाभावसिद्धिः । न च तन्निरासोऽपि । तथात्वे किमज्ञानावृतं भवेदित्यस्यासङ्गत्यापत्तेः । न च विषयनिरासार्थं तदिति वाच्यम् । तर्हि सप्तमीनिर्देशानुपपत्तेः । न च ब्रह्माश्रितत्वपक्षे ब्रह्मविषयत्वनिराससूचनाय स इति वाच्यम् । तर्हि विशिष्य ब्रह्माश्रितत्वपक्षस्याप्यनिरासान्न्यूनतैव । न चावरणमित्युत्तरग्रन्थासङ्गतिश्चेत्यतो जीवाश्रितत्वपक्षस्योत्तरत्र निराकरिष्यमाणत्वा-

द्विशिष्य ब्रह्माश्रितत्वपक्षनिरासस्य तत्रैव सिद्धत्वाज्जडाश्रितत्वपक्षनिरासस्य च न चावरणमित्युक्तरीत्या लब्धत्वादत्र कं प्रतिबध्नात्यज्ञानं ब्रह्म जीवं जडं वेति विकल्पान्तरस्याभिप्रेतत्वात्तत्र जडपक्षनिरासाय न चावरणमित्युत्तरवाक्यस्यापि सङ्गतत्वादित्याशयेनाश्रयादिकं विकल्प्य बहिरेव किञ्चित्पक्षदूषणपूर्वकं पक्षविशेषदूषणपरतया वाक्यानि योजयति ॥ **तथा हीत्यादिना ॥**

ज्ञानाभावे वक्ष्यमाणदूषणानुपपत्तावपि न परेणोपादानतयाऽङ्गीकृतभावरूपाज्ञान इति सूचयितुं भावरूपमित्युक्तम् । यद्वा अनेन भावरूपत्वे विवरणोक्तयुक्तिं सूचयति । तथा हि । तेन ह्यज्ञानमित्यत्र नञो भावविरोध्यन्यार्थकत्वेन ज्ञानाभावभ्रान्तिज्ञानतत्संस्काराणामज्ञानशब्देनाभिधानात्तेषामेव तत्त्वावभासप्रतिबन्धेन नास्ति न प्रकाशत इति व्यवहारजनकत्वसंभवान्न भावरूपाज्ञानोपादानकाध्यासकल्पनेत्याशङ्क्योक्तं सुषुप्त्यादौ ब्रह्मस्वरूपानवभासस्यानन्यथासिद्धत्वात्तत्सिद्धिः । तत्र न तावद् ब्रह्मानवभासः स्वत एव तस्य स्वप्रकाशत्वात् । नापि पुरुषान्तरसंवेदनवद्द्रष्टुर्जीवाद् ब्रह्मणो भिन्नत्वात्तत्त्वमसीत्येकत्वश्रुतेः । नापि प्रतिबन्धवशात् । तद्धि भ्रान्तिज्ञानं वा स्यात्तत्संस्कारो वा ज्ञानाभावो वा कर्म वा स्यात् । न तावदाद्यः । सुषुप्त्यादौ मिथ्याज्ञानस्यापि लुप्तत्वात् । न द्वितीयः । रजतभ्रमसंस्कारस्य शुक्तितत्त्वावभासप्रतिबन्धकत्वादर्शनात् । न तृतीयः । स्वरूपज्ञानस्य नित्यत्वादन्यज्ञानाभावस्य स्वरूपप्रकाशप्रतिबन्धाक्षमत्वात् । अन्यथा शुक्तावपि प्रतिबन्धापत्तेः । चतुर्थेऽपि कर्माणि किमखिलं चैतन्यं प्रतिबध्नन्त्युत स्वावभासकांशं विहाय । आद्ये साधकाभावात्कर्मासिद्ध्यापत्तिः । द्वितीये त्वर्धजरतीयापत्तिरिति भावरूपमज्ञानमेव प्रतिबन्धकं वाच्यमिति । अङ्गीकृतमित्युक्त्या चाङ्गीकारमात्रमेतन्न तु युक्तमिति सूचयति । तथा हि । न तावदाद्यपक्षे दोषः । स्वप्रकाशजीवस्वरूपाभिन्नस्यापि स्वभावादेरिव ब्रह्मणोऽप्रकाशोपपत्तेः । श्रुतेरन्यार्थतायाः सूत्रकृतैव वक्ष्यमाणत्वान्न द्वितीयेऽपि । दृढभ्रान्तिजन्यसंस्कारस्य तत्त्वावभासप्रतिबन्धकतायास्तव देहात्मभ्रमादावेव दर्शनान्न तृतीयेऽपि । कर्मणां प्रतिबन्धकत्वेऽनुपपत्त्यभावाच्च । न चोक्तविकल्पदोषापत्तिः । भावरूपावरणपक्षेऽपि साम्यात् । न च तत्र स्वावभासकांशपरित्यागस्यार्धजरतीयस्याप्यहमज्ञ इत्यनुभवः कल्पक इति वाच्यम् । तस्य ज्ञानाभावविषयकताया वक्ष्यमाणत्वात् । कर्मविषयकपरोक्षानुभवस्य तत्रार्धजरतीयकल्पकत्वोपपत्तेश्च । न च संस्काररूपत्वान्न कर्मणां प्रतिबन्धकत्वमिति वाच्यम् । तेषां संस्काररूपत्वासिद्धेः । सिद्धौ वा संस्काररूपस्यापि प्रतिबन्धकत्वेऽनुपपत्त्यभावाच्च । न चैवं रजतभ्रमसंस्कारस्यापि शुक्तितत्त्वावभासप्रतिबन्धकत्वापत्तिः । दृढत्वादृढत्वाभ्यां विशेषोपपत्तेः । धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वाच्च । ज्ञानमावृत्य तु तम इति स्मरणात्तमोगुणो वाऽस्तु तत्प्रतिबन्धकः । न च तस्य ज्ञानादनिवृत्तावनिर्मोक्षप्रसङ्गः । निवृत्तौ च नाममात्रे विवाद इति वाच्यम् । नैयायिकाद्यभिमतमनआदिवत्कार्याक्षमत्वेनाप्युपपत्तौ ज्ञानानिवृत्तेरभावेन नाममात्रत्वाभावात् । अतो

नैतद्युक्त्या भावरूपाज्ञानसिद्धिरिति दिक् । न च जीवाश्रितत्वपक्षस्य जड इत्यननुवर्त्य न चावरण-मित्यनेन निरसितुं शक्यत्वात् । जड इत्यनुवृत्तावपि जडं प्रतिबध्नातीतिवज्जडाश्रितत्वतद्विषयकत्वपक्षयो-स्तेनैव निरसितुं शक्यत्वात् । तथाऽव्याख्याय बहिरेव तत्पक्षदूषणं कुत इति वाच्यम् । जीवशब्दस्य चिन्मात्रपरत्वेऽसत्य इत्याद्युक्तहेत्वयोगात् । विशिष्टपरत्वेऽपि भामत्यादौ जीवाश्रितत्वपक्षाभ्युपगमेन तेन च नेष्यत इत्युक्तहेत्वयोगाद्विवरणमतानुसारेण कथञ्चित्तदुक्तिसंभवे सकलमतानुसारेणासंभवात् । प्रकृत्यधिकरणे चान्यगा चेत्स्वतोऽन्यतेत्यादिना स्पष्टमेव जीवाश्रितत्वपक्षस्य सविस्तरं निरासान्न तथा व्याख्यातम् । नापि जडाश्रितत्वादिपक्षनिरासकतया । अप्रकाशस्वरूपस्याप्यज्ञानाश्रयविषयत्वयोरनु-पपत्त्यभावेनोत्तरवाक्योक्तहेत्वनुपपत्तेः । अतस्तदुपपत्तये विकल्पान्तरमत्र विधाय तत्रत्यजडपक्षनिरास-परत्वेनैव तद्वाक्यं योजितम् । अत एवैतादृशवाक्यरहिते उपाधिखण्डनादौ कं प्रतिबध्नातीति विकल्प-मकृत्वाऽऽश्रयविषयविकल्पमात्रदूषणपरतयैव व्याख्यानं कृतमिति द्रष्टव्यम् । अत्र ब्रह्माश्रितत्वस्य विवरणकारेणेव जीवाश्रितत्वस्य भामत्यामङ्गीकारेण तस्यापि प्राधान्यसूचनायादौ ग्रहणम् । यद्वा ब्रह्माश्रितत्वपक्षस्य भाष्ये निराकरणात्तं शेषयितुं प्रसक्तपक्षयोर्बहिरेव निराकरणीययोर्मध्ये पराङ्गीकृततया जीवाश्रितत्वपक्षस्य प्राधान्यादादौ ग्रहणम् । जीवाश्रितत्वं वदता जीवशब्देन चिन्मात्रमेवोच्यत उत तदन्यत् । नाद्यः । तस्य सर्वज्ञत्वेन समानविषयकज्ञानाज्ञानयोर्विरोधेनाज्ञानाश्रितत्वानुपपत्तेः । न च भ्रान्तेः प्रमातृत्वादेश्चाज्ञानमूलकत्वादसङ्गस्वरूपज्ञप्तेश्चाविद्यां विना विषयासङ्गतेर्भ्रान्त्या प्रमाणतः स्वरूप-प्रज्ञया वा त्रेधाऽपि सर्वज्ञत्वमज्ञानमाक्षिपत्येव न तु प्रतिक्षिपतीति वाच्यम् । अविद्यारहिते तुरीयेऽपि तुरीयं तत्सर्वदृक् सदेति सार्वज्ञश्रुतेः स्वरूपप्रज्ञयैव सार्वज्ञ्योपपत्तेः । असङ्गश्रुतिस्तु पापलेपाभावविषयत्वेन सावकाशा । भ्रान्त्यादिना सार्वज्ञ्येऽपि यादृशतादृशसार्वज्ञ्यस्यापि विशेषाज्ञानविरोधित्वेन सति तस्मिन्ननुप-पत्तेश्च । अन्यथा शुक्तिज्ञानवतोऽपि तदज्ञानं न विरुध्येतेति भ्रमानुच्छेदप्रसङ्गः । एतेन सविशेषमेव सार्वज्ञ्यमिति निरस्तम् । द्वितीयेऽपि वस्तुतो ब्रह्मान्यस्य जीवशब्देनोक्तावपसिद्धान्तः । अविद्यया-ऽऽविद्यकबुद्ध्यादिना व्यवच्छिन्नस्य तत्तत्प्रतिबिम्बितस्य वा कल्पितभेदस्य जीवशब्देनोक्तावविद्यासिद्धौ जीवसिद्धिस्तत्सिद्धौ च तदाश्रिताविद्यादिसिद्धिरित्यन्योन्याश्रयाद्यापत्तेः । न च यथा निरंशेऽप्याकाशे घटस्तटस्थ एव तमुपलक्ष्यैकदेशं संपाद्यते न संबध्यते तद्वदविद्याऽपि तटस्थैव चिन्मात्रमुपलक्ष्यैकदेशरूपं जीवं संपाद्य तत्रावतिष्ठत इति नेतरेतराश्रय इति वाच्यम् । निराश्रयाविद्यायोगेन जीवसिद्धाववविद्या-सिद्धिस्तत्सिद्धौ तदुपलक्षितजीवसिद्धिरित्यन्योन्याश्रयापरिहारात् । न च बीजाङ्कुरवददोष इति वाच्यम् । वैषम्यात् । व्यक्तिभेदेन हि तत्रादोषत्वम् । न चात्र जीवाविद्याव्यक्तिभेदोऽत्रापि व्यक्तिभेदाङ्गीकारे चक्रकानवस्थापत्तेः । न च जीवाज्ञानादेरनादित्वेनोत्पत्त्याद्यप्रतिबन्धकत्वादनवस्थादिरदोष इति वाच्यम् ।

सर्वथानपेक्षायां सत्यत्वेनापसिद्धान्तापत्त्या भ्रान्तिकल्पितत्वं वदता प्रयुक्त्यादौ परस्परापेक्षाया अवश्य-वाच्यतया तत्प्रतिबन्धकत्वेनैवान्योन्याश्रयाद्यापत्तेः । उत्पत्तिज्ञप्तिप्रतिबन्धकत्वेनैव तस्य दोषत्वे चैत्रमैत्रादे-रन्योन्यारोहणस्याप्यङ्गीकारप्रसङ्गः । न च प्रमेयत्वाभिधेयत्वादेरन्योन्यवृत्तिवदन्योन्यापेक्षोपपत्तिः । तद्वदस्याप्रमितत्वादहमज्ञ इत्यादिप्रतीतेश्च ज्ञानाभावविषयत्वेन सत्यभेदे वोपपत्तेः । अन्यथाऽन्योन्या-श्रयत्वादिः क्वापि दोषो न स्यात् । तस्मान्न जीवाश्रिताज्ञानपक्षो युक्त इति ब्रह्मणश्चेत्क सार्वज्ञ्यमित्या-दिनोपपादयिष्यत इत्याशयेनाह ॥ **नाद्यः प्रकृत्यधिकरणे निराकरिष्यमाणत्वादिति** ॥ मिथ्या-विशेषोऽपि न चावरणमित्यादिवक्ष्यमाणन्यायलब्धं दूषणं जडाश्रितत्वपक्षे प्रतिपादयति ॥ **अनभ्युप-गमादिति** ॥ तत्र निमित्तं दर्शयन्नेव हेत्वन्तरमाह ॥ **जडस्येति** ॥

**प०— प्रकृत्यधिकरण इति** ॥ 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगे'त्यादिनेति भावः ॥ **इतरेतरेति** ॥ अज्ञाने सिद्धे तेन कल्पितजडसिद्धिः । सिद्धे च जडे तदाश्रितत्वेनाज्ञानसिद्धिः । न हि निराश्रयमज्ञानं संभवतीति भावः ।

**या०—उक्तमिति** ॥ स्वग्रन्थ इति शेषः । मिथ्या च तदज्ञानं च मिथ्याज्ञानम् । मिथ्येत्यनि-र्वचनीयतोच्यते । अज्ञानमिति जडात्मिकाऽविद्याशक्तिर्ज्ञानपर्युदासीनोच्यते । तन्निमित्तस्तदुपादान इति तद्वाक्यार्थः । अत्र ज्ञानाभाववारणाय मिथ्येतिपदम् । भ्रान्तिज्ञानवारणायाज्ञानेति पदमित्याहुः ॥ **प्रकृत्यधिकरण इति** ॥ अन्यगा चेत्स्वतोऽन्यतेत्यत्रेति शेषः ॥

**श्री०— इतरेतरेति** ॥ अज्ञानसिद्धौ तत्कल्पितजडसिद्धिः । तत्सिद्धौ तदाश्रिताज्ञानसिद्धि-रितीतरेतराश्रयप्रसङ्गादित्यर्थः ॥

**च०—** निर्विशेष इत्युत्तरग्रन्थमवतारयति ॥ **एवमिति** ॥ मिथ्याज्ञानमित्यत्र कर्मधारयः ॥ **उक्तमिति** ॥ स्वग्रन्थ इति पूरणीयम् । कल्पत्रयीमभिप्रेत्य क्रमेणापनिनीषति ॥ **नाद्य इत्यादि** ॥ **प्रकृत्यधिकरण इति** ॥ अन्यगा चेत्स्वतोन्यतेत्यत्रेत्युपस्कर्तव्यम् ।

**सु०— तृतीयेऽपि वक्तव्यम् । किं तद्ब्रह्माश्रितमज्ञानं ब्रह्मैव प्रतिबध्नाति, उत जीवम्, अथ जडम् । आद्ये तस्य ब्रह्माश्रितस्य ब्रह्मावरणस्याज्ञानस्य विषयो वाच्यः । आवरणं खलु पटलादिकं क्वचिदाश्रितं किञ्चिद्विषये किञ्चित्प्रतिबध्नातीत्युपलब्धम् । तत्र ब्रह्मावरणेनाज्ञानेन ब्रह्मगतः कश्चिद्धर्मो वाऽऽव्रियते, स्वरूपमेव वा, अन्यद्वा किञ्चित् । आद्यं पक्षद्वयं निराकरोति ॥ निर्विशेष इति ॥ हेत्वर्थगर्भं विशेषणद्वयम् । किमाक्षेपे । ब्रह्मण्यावरणतयाऽङ्गीकृतेनाज्ञानेन किमावृतं भवेत् । न किमपि भवेत् । न तावद्धर्मः;**

**परेण ब्रह्मणो निर्विशेषत्वाङ्गीकारात् । नापि स्वरूपम्; स्वयंप्रकाशत्वेन नित्यसिद्धत्वात् । न हि प्रकाशमानं चावृतं चेति संभवति, आवरणकृत्याभावात् ।**

वा०— स्वयंप्रकाशमानस्य स्वनिष्ठेन स्वात्मानं प्रत्यावरकेणावृतत्वानुपपत्तावप्यन्याश्रितेनान्यं प्रत्यावरकेणावृतत्वेऽनुपपत्त्यभावात् स्वयंभात इति मूलोक्तदूषणस्य पक्षान्तरेऽनुपपत्त्या ब्रह्मविषयकत्व-पक्षेऽपि ब्रह्माश्रितत्वतत्प्रत्यावरणत्वपक्ष एव दूषणमित्याशयेन ब्रह्माश्रितत्वपक्षेऽपि विकल्पान्तरमापाद्य ब्रह्म प्रत्यावरणमिति पक्षेऽपि ब्रह्मविषयकत्वपक्ष एवेदं दूषणं योजयितुमाह ॥ **तृतीयेऽपीति** ॥ अत एव ब्रह्माश्रितत्वपक्षस्य प्रकृत्यधिकरणे निराकरणेऽप्यत्र तत्पक्षस्य ब्रह्म प्रत्यावरणमिति पक्षस्य वाऽश्रयणेनैव ब्रह्मविषयकत्वपक्षनिरासान्न तथा चोक्तमिति द्रष्टव्यम् । धर्मस्वरूपयोराव्रियमाणत्वाभावे हेत्वनुक्तिप्रयुक्त-न्यूनतां परिहरति ॥ **हेत्विति** ॥ तर्हि प्रश्नार्थककिंशब्दानुपपत्तिरित्यत आह ॥ **किमिति** ॥ ननु प्रकाशमानस्याप्यावृतत्वे को विरोध इति चेत् । आवरकेण स्वविषये क्रियमाणाऽऽवृतिः किं सिद्ध-प्रकाशनाश उतासिद्धप्रकाशानुत्पत्तिः अथवा प्रकाशस्य विषयासंबन्धो यद्वा प्राकट्याख्यतत्कार्यप्रति-बन्धो वाऽऽहोस्विन्नास्ति न प्रकाशत इति व्यवहारोऽस्ति प्रकाशत इति व्यवहाराभावो वा तदुभयव्यवहारयोग्यत्वायोग्यत्वे वा । नाद्यौ । प्रकाशस्य नित्यसिद्धत्वात् । न तृतीयः । ज्ञानस्य विषयसंबद्धस्वभावत्वात् । नापि चतुर्थः । अपसिद्धान्तात् । नापि पञ्चमषष्ठौ । चैतन्यमस्ति प्रकाशत इति व्यवहारस्यैव सत्त्वेन विपरीतव्यवहारतदभावयोरसिद्धेः । एतेनात्मतत्त्वं नास्ति न प्रकाशत इत्यादिव्यवहार आत्मनि भावरूपावरणनिमित्तकः । अस्ति प्रकाशत इति व्यवहारपुष्कलकारणे सत्यपि तद्विपरीतव्यवहारत्वात् । यन्नैवं तन्नैवं यथाऽस्ति प्रकाशते घट इति व्यवहारः । न च कारणपौष्कल्य-मसिद्धम् । नित्यसिद्धस्वप्रकाशचैतन्यातिरेकेणात्रान्यापेक्षाया अभावात् । तथा चात्मन्युक्तव्यवहारयोग्य-त्वमेवावरणकृत्यमिति निरस्तम् । अस्तीत्यादिव्यवहारस्यैव सत्त्वेन विपरीतव्यवहारासिद्धेः । यदत्रोक्तं नव्येनास्ति प्रकाशते चैतन्यमिति व्यवहारसद्भावेऽपि नाहं ब्रह्मेति सर्वेषां व्यवहारोऽहं ब्रह्मेति व्यवहार-भावश्चास्त्येवेति विपरीतव्यवहारदर्शनेन तद्योग्यतास्वरूपव्यवहारादर्शनेन तदयोग्यता चेति धर्मविशेषस्त-देवावरणमनवभासत इति शब्दैरभिधीयते । न च पुरुषान्तरसंवेदनवज्जीवब्रह्मणोर्भेदादेव भेदव्यवहारो-ऽभेदव्यवहाराभावश्चेति वाच्यम् । तस्य जीवरूपतया श्रुतिन्यायसिद्धत्वात् । न चैवं विद्यमानेऽपि तस्मिन्घटादाविव प्रमाणाभावादेव स इति वाच्यम् । तत्स्वप्रकाशताया अपि सिद्धत्वात् । तस्माद्भ्रम-विषयशुक्तिकादिविशेषस्येव ब्रह्मणोऽपि स्वप्रकाशतया यावत्स्वरूपव्यवहारसामग्र्यां सत्यामपि विपरीत-व्यवहारकार्यदर्शनोन्नेयतद्योग्यताविशेषः कुतश्चित्प्रतिबन्धकाद्भवतीति तदेवावरणं तत्प्रकाशप्रतिबन्ध-

कत्वं चाज्ञानादन्यत्र न संभतीति तदज्ञानमेवेति नानुपपत्तिरिति । तन्न । ब्रह्माभेदाद्वितीयत्वादेः प्रकाशमानब्रह्ममात्रत्वे नास्तीत्यादिव्यवहारस्यैवानुपपत्त्या तदुपपादकाज्ञानकल्पनस्यानुपपन्नत्वात् । न च तेषां प्रकाशमानात्ममात्रत्वेऽपि कल्पितभेदेनाज्ञातत्वादीति वाच्यम् । भेदकल्पनाया अज्ञानसिद्ध्यधीनत्वेन वक्ष्यमाणरीत्याऽन्योन्याश्रयापत्तेः । तथा चाद्वितीयत्वब्रह्माभेदादीनां ब्रह्मभेदे वक्तव्ये नास्तीत्यादिव्यवहारादिना तेष्वज्ञानसिद्धावपि चिन्मात्रे तादृशव्यवहारादिना नाज्ञानसिद्धिरिति चिन्मात्राज्ञानपक्षो न समर्थितः स्यात् । अद्वितीयत्वादिविशिष्टाज्ञानपक्षस्य वक्ष्यमाणरीत्याऽन्योन्याश्रयेण सुनिरस्तत्वात् । किञ्च ब्रह्माभेदादेरभावादेव तद्व्यवहाराद्यभावोपपत्तौ न तस्याज्ञानकल्पकत्वम् । यदत्रोक्तं श्रुतिन्यायसिद्धत्वात्तस्येति । तन्न । श्रुत्यन्यथासिद्धेर्न्यायानामाभासत्वस्य सविस्तरं व्युत्पादयिष्यमाणत्वात् । अस्तु वा ब्रह्मजीवाभेदादि तथाऽपि प्रमाणाभावादेव तद्व्यवहाराभावाद्युपपत्तेर्नाज्ञानसिद्धिः । न च तत्स्वप्रकाशतासिद्धेरित्युक्तमिति वाच्यम् । नास्ति न प्रकाशत इति व्यवहारविषयतामङ्गीकुर्वाणेन ब्रह्मात्मत्वमस्तीत्यादिनित्यसिद्धव्यवहारानुरोधेन स्वप्रकाशताया अनङ्गीकर्तव्यत्वात् । स्वप्रकाशब्रह्मात्मकतया स्वप्रकाशशब्दस्य च सप्रतियोगिकब्रह्माभेदादेर्निष्प्रतियोगिकब्रह्मणाऽभेदानुपपत्त्याऽनुपपन्नत्वात् । अस्तु वा स्वप्रकाशब्रह्माभेदेन स्वप्रकाशत्वम् । तथाऽपि स्वप्रकाशे तस्मिन्विपरीतव्यवहारयोग्यत्वादि विरुद्धमेव । न च प्रमाणतः स्वप्रकाशतया प्रतिपन्ने तद्विपरीतव्यवहारदर्शनकल्पितयोग्यताया अप्यनीले नभसि नीलिम्न इव मिथ्यात्वान्न विरोध इति वाच्यम् । अधिष्ठानप्रकाशे तदप्रकाशाद्यारोपस्यानुपपत्तेः । न च शुक्तित्वेनेवाद्वितीयत्वादिना न तत्प्रकाश इति वाच्यम् । अद्वितीयत्वादेस्तन्मात्रत्वेऽप्रकाशानुपपत्तेः । तद्धर्मत्वे च पूर्वकल्पान्तर्भावेन निर्विशेषत्वभङ्गापत्तेः । आविद्यकत्वे च वक्ष्यमाणान्योन्याश्रयग्रासः कल्पितयोग्यतायामप्यन्योन्याश्रय एव । न चानादित्वाददोष इति वाच्यम् । अनादिभूताया अपि तस्या जीवब्रह्मविभागादेरिवाज्ञानाधीनसिद्धिकत्वात् । अन्यथाऽनादित्वाज्जीवब्रह्मविभागस्यान्योन्याश्रयपरिहारसंभवाज्जीवाज्ञानपक्षपरित्यागेन चिन्मात्राज्ञानपक्षकक्षीकरणानुपपत्तेः । तादृशव्यवहारयोग्यतायाः कल्पितत्वे कल्पितप्रकाशकार्यस्याहं ब्रह्मेति व्यवहारस्यापत्तेश्च न चाविद्याप्रतिबन्धात्तदभावः अविद्यया क्रियमाणेन तादृशविपरीतव्यवहारयोग्यतारूपेण कल्पितेन प्रतिबन्धादकल्पितकार्यानुदयायोगात् । अन्यथा वह्नौ समारोपितगुञ्जापुञ्जेन कल्पितेन मणिना वा वास्तववन्हिकार्यदाहप्रतिबन्धापत्तेः । किञ्च स्वप्रकाशचैतन्यस्याविद्ययाऽन्यं प्रति तदप्रकाशेऽपि स्वात्मानं प्रति तदप्रकाशोऽनुपपन्नः । न हि घटाद्यावृतोऽपि दीपो न स्वयं प्रकाशते । न च कल्पितभेदजीवचैतन्यं प्रत्येव तदप्रकाशो ब्रह्म प्रत्यावरणमिति पक्षपरित्यागापत्तेर्जीवं प्रत्यावरणमिति पक्षस्य निराकरिष्यमाणत्वाच्च । न च चैतन्यस्य दीपस्येव स्वविषयकत्वाभावाद्वैषम्यम् । स्वविषयकत्वाभावे परविषयकत्वस्याप्यभावेन ज्ञानत्वानुपपत्तेः । तस्य स्वपरविषयकत्वा-

भावेनैव तादृशव्यवहाराद्यभावोपपत्तावावरणकल्पनावैयर्थ्यापत्तेः । तस्मान्नावरणकृत्यं परपक्षे युक्तमित्याशयेनाह ॥ **आवरणकृत्याभावादिति** ॥ आवरणस्यावरकस्याज्ञानस्य कृत्यं कार्यमावृतिस्तस्या अभावादित्यर्थः । अत्र परोक्तेषु केषाञ्चित्प्रकाराणामुक्ते न निर्विशेषत्वेन केषाञ्चिद्वक्ष्यमाणान्योन्याश्रयेण निराससौलभ्यादावरणकृत्याभावादिति नित्यसिद्धत्वेन सामान्यत एव केषाञ्चिन्निरासः कृत इति द्रष्टव्यम् । ननु चावरणकृत्याभावेऽपि प्रकाशमानेऽप्यस्त्ववज्ञानम् । न च वैयर्थ्यम् । अवच्छेदकविषयाज्ञाने तदवच्छिन्नाज्ञानज्ञानाद्ययोगेन त्वदुक्तमर्थं न जानामीत्यज्ञानव्यवहारान्यथाऽनुपपत्तेस्तत्र प्रमाणतया प्रमाणसिद्धार्थस्य च प्रयोजनाभावेनापन्हवेऽतिप्रसङ्गात् । न च प्रकाशाज्ञानयोर्विरोधात्तदसंभवः । साक्षिरूपज्ञानस्याज्ञानस्फोरकत्वेन विरोधाप्रसरात्कथमेतदिति चेन्न । प्रत्यक्षव्यवहारयोर्ज्ञानाभावविषयकत्वेनान्यथोपपत्तेर्वक्ष्यमाणत्वेन प्रमाणाभावात् । अवच्छिन्नज्ञानेऽवच्छेदकज्ञानहेतुताया अपि दर्शनबलकल्पनीयतया विशेषे ज्ञाते तदज्ञानधियोऽदर्शनादवच्छेदकसामान्यज्ञानस्यैवावच्छिन्नाज्ञानज्ञानादिहेतुताया यथानुभवं कल्पनीयत्वाच्च । सामान्यविशेषभावस्त्वतिप्रसङ्गभञ्जकः । यदपि साक्षिणोऽज्ञानाविरोधित्वमुक्तं तदपि न । त्वन्मते वृत्तेरज्ञप्तित्वेन साक्षिरूपज्ञानस्यैव ज्ञप्तिरूपतया न जानामीति ज्ञप्तिविरोधितयाऽनुभूयमानाज्ञानस्य साक्ष्यविरोधासिद्धेः । अन्यथा तद्वेद्यसुखादावप्यज्ञानापत्तेः । तदिदमुक्तं **न हि प्रकाशमानं चावृतं चेति संभवतीति** ।

**स०** — ध्येयम् । ··· प्रकृते च व्यावहारिकत्वानि क्रामिकान्येवेति भावः इति व्याचक्षते ॥

**ब्रह्मैव प्रतिबध्नातीति** ॥ ब्रह्मणो यथेतरविषयकं ज्ञानं न स्यात्तथाक रोतीत्यर्थः । एवमुत्तरत्रापि ।

**प०** — ब्रह्मैव प्रतिबध्नाति । ब्रह्मैवावृणोति । ब्रह्माश्रितमज्ञानं स्वाश्रयस्यैव ब्रह्मणो ब्रह्मविषयकं ज्ञानं यथा न भवति तथा करोतीत्यर्थः । एवं जीवं जडमित्यत्रापि ज्ञेयं ॥ **आवरणकृत्येति** ॥ सिद्धप्रकाशलोपरूपकृत्यस्य नित्यसिद्धप्रकाशेऽनुपपत्तेः । स्वप्रकाशे च तस्मिन्प्रकाशान्तरानपेक्षणेन प्रकाशान्तरानुपपत्तिरूपकृत्यस्याप्यभावादिति भावः । विवृतमेतन्न्यायामृतेऽविद्याविषयभङ्गे ।

**या०** — **हेत्वर्थेति** ॥ लिङ्गवचनस्य हेतुत्वाद्धेत्वर्थेति प्रयुक्तमिति ध्येयम् ।

**श्री०** — **प्रतिबध्नाति** आवृणोति । क्वचिदाश्रितं नयनाश्रितम् । किञ्चिद्विषये घटादिविषये । किञ्चित् ज्ञानादिकम् ॥ **आव्रियत इति** ॥ ब्रह्माश्रितमज्ञानं ब्रह्मगतधर्मविषयकज्ञानं प्रतिबध्नातीत्यर्थः ॥ **अन्यद्वा किञ्चिदिति** ॥ ब्रह्मान्यद्ब्रह्मावरणाज्ञानावृतमित्यर्थः ।

**च०** — **प्रतिबध्नातीति** ॥ ब्रह्मकर्तृकज्ञानानुत्पादप्रयोजकं भवतीत्यर्थः । एवमग्रेऽपि । ब्रह्मावरणस्य ब्रह्मकर्तृकज्ञानानुत्पादप्रयोजकस्य ॥ **पटलादिकमिति** ॥ नयनाद्याश्रितपटलादिकमनभ्यर्णवृत्तिगतरूपादिकर्मकजरत्पुरुषकर्तृकज्ञानानुत्पादप्रयोजकमुपलब्धमिति हृदयम् ॥ **कश्चिद्धर्मो वाऽऽव्रियत**

**इति** ॥ स्वविषयकज्ञानानुत्पादप्रयोजकतादृशाज्ञानक इत्यर्थः । पक्षद्वयनिराक्रियाहेत्वनभिहितिनियन्त्रित-न्यूनतापरिजिहीर्षयाऽऽह ॥ **हेत्वर्थेति** ॥ चतुर्णां पुरुषार्थानां दातुं शक्तश्चतुर्भुज इत्यादौ चतुर्भुज इत्यादेरिव तन्निराकृत्यौपयिकप्रकृतहेतुवाक्यद्वयोपस्थाप्यार्थद्वयप्रत्यायकपदद्वयमित्यर्थः ॥ **आवरणकृत्या-भावादिति** ॥ निष्पन्नप्रकाशप्रतिरोधस्य निष्पादनीयप्रकाशानुत्पादस्य चावरणप्रयोजनाभिमतस्य नित्य-सिद्धप्रकाशरूपे तस्मिन् दुरुपपादत्वादित्यर्थः ।

अनु०— **मिथ्याविशेषोऽप्यज्ञानसिद्धिमेव ह्यपेक्षते ॥**

सु०— **स्यादेतत् । मा भूद्ब्रह्मावरकेणाज्ञानेन स्वरूपमावृतम् । तथाऽप्यद्वितीय-त्वादिस्तद्धर्मो भविष्यति । परमार्थतो ब्रह्मणो निर्विशेषत्वेऽपि मिथ्याधर्माङ्गीकारात् । मिथ्यात्वं चाद्वितीयत्वादीनां न स्वरूपेण किं नाम धर्मत्वेनैव । यथोक्तम् । अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त इति । तत्राह ॥ मिथ्याविशेषोऽपीति ॥ नाज्ञानावृत इत्यपेरर्थः । कुत इत्यत आह ॥ अज्ञानसिद्धिमेवेति ॥ हिशब्दो हेतौ । अद्वितीयत्वादिधर्मो ह्यज्ञानावृतो भवन्न तावत्स्वरूपेण । स्वरूपस्यावरणविषयताया निरस्तत्वात् । मिथ्याभूतेन धर्मत्वेनाज्ञाना-वरणविषयतायां तु परस्पराश्रयत्वं स्यात् । यतो मिथ्याधर्मोऽज्ञानसिद्धिमपेक्षते । अज्ञानाति-रिक्तस्य मिथ्याभूतस्याज्ञानकार्यत्वाभ्युपगमात् । अज्ञानं च मिथ्याभूतविशेषमपेक्षते । निर्विषयस्यावरणस्यानुपपत्तेः ॥ एतेन ब्रह्मान्यद्ब्रह्मावरणाज्ञानावृतमिति तृतीयोऽपि निरस्तः । तस्य मिथ्यात्वेनाज्ञानसापेक्षतयाऽन्योन्याश्रयत्वात् ॥ अत एव जीवं प्रतिबध्नात्यविद्येति द्वितीयो निरस्तो वेदितव्यः ।**

वा०—ननूत्तरवाक्यमसङ्गतम् । न च मिथ्याविशेषस्याज्ञानावृतत्वनिरासाय तदिति वाच्यम् । क्षणिकत्वादिमिथ्याविशेषावरणतयाऽज्ञानस्य परेणाप्यनभ्युपगमात् । अद्वितीयत्वादीनां च मिथ्यात्वाभावा-द्यादृशतादृशविशेषस्य निर्विशेषस्य निर्विशेषत्वप्रतिकूलत्वेन परेण शङ्कितुमशक्यत्वाच्चेत्यतस्तत्सङ्गमयति ॥ **स्यादेतदिति** ॥ ननु ब्रह्मणो निर्धर्मकत्वात्कथं तद्धर्मश्चाध्यस्येत्युच्यत इत्याशङ्क्यानन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा इति पञ्चपादिकायामुक्तं तदुत्तरवाक्यमेवोपयुक्तत्वादुदाहरति ॥ **यथोक्तमिति** ॥ ब्रह्मस्वरूपभूतानामपि तेषां पृथगवभासनाद्धर्मत्वारोप इत्यर्थः । अज्ञानसिद्धिसापेक्षताऽन्यस्य नोक्तेति समुच्चयासंभवेनैकवाक्यताऽनुपपत्त्या भिन्नवाक्यतामङ्गीकृत्यापिपदार्थमाह ॥ **नेति** ॥ अस्य हेतुसमर्पकत्वं द्योतयितुमाह ॥ **हिशब्द इति** ॥ नन्वद्वितीयत्वादिधर्माणां स्वरूपेणैवावृतत्वसंभवात्कथमज्ञानसिद्धि-

सापेक्षतन्मिथ्यात्वं सिद्धवत्कृत्य दूषणाभिधानमित्यत आह ॥ **अद्वितीयत्वादिधर्मो हीति** ॥ ननु मिथ्याधर्मस्याप्यकार्यत्वात्कार्यत्वेऽपि वा स्वकारणसापेक्षत्वेनाज्ञाननिरपेक्षत्वादज्ञानस्य चानादित्वेन मिथ्याधर्मनिरपेक्षत्वात्कथमितरेतराश्रयत्वमित्यतो भाष्ये कण्ठत उक्तं मिथ्याधर्मस्याज्ञानसिद्ध्यधीनत्वमुक्तशङ्कामार्गलब्धं भाष्याभिप्रेतमज्ञानस्य मिथ्याधर्मसापेक्षत्वं चोपपादयति ॥ **यत इत्यादिना** ॥ **अत एवेति** ॥ अविद्याद्यवच्छिन्नचैतन्यरूपस्य जीवस्याविद्यासापेक्षत्वादेवेत्यर्थः । यद्यप्येतत्पक्षद्वयमुत्तरवाक्योक्तदूषणातिदेशेन दूषयितुं युक्तम् । तथाऽप्युत्तरवाक्योक्तसकलदूषणातिदेशासंभवादितरेतराश्रयमात्ररूपमिथ्याविशेषदूषणातिदेशेनैव दूषितमिति द्रष्टव्यम् ।

**स०** — नन्वद्वितीयत्वादिधर्माणामपि चैतन्याभिन्नत्वेनाङ्गीकारात्कथं मिथ्यात्वमित्यत आह ॥ **मिथ्यात्वं चाद्वितीयत्वादीनामिति** ॥ **निर्विषयस्यावरणस्यानुपपत्तेरिति** ॥ नवभाविघटविषयकज्ञानमिवाज्ञानमपि भाविमिथ्याधर्मविषयम् । पूर्वं निर्विषयमेवावतिष्ठत इति वाच्यम् । वैषम्यात् । अधिष्ठानावरणं विना भाविमिथ्याभूतधर्मकल्पनाया एवायोगेन मिथ्याभूतधर्मकल्पनापूर्वमप्यज्ञानावरणस्यावश्यकत्वात् । तस्य च विषयाभावे असंभवात् । तदिदमुक्तमावरणस्येति । एवं चाज्ञानस्यावरणत्वसिद्धौ मिथ्याविशेषसिद्धिस्तत्सिद्धौ चाज्ञानस्यावरणत्वसिद्धिरित्यन्योन्याश्रयोऽभिप्रेत इति ध्येयम् ।

**प०** — नन्वद्वितीयत्वादिधर्माणामपि चैतन्याभिन्नत्वेनाङ्गीकारात्कथं मिथ्यात्वमित्यत आह ॥ **मिथ्यात्वं चेति** ॥ **अज्ञानावरणेति** ॥ अज्ञानरूपावरणविषयतायामित्यर्थः । मिथ्याविशेषं मिथ्याभूतधर्मरूपविशेषमित्यर्थः ॥ **तृतीयोऽपीति** ॥ अथवा जडमिति प्रागुक्ततृतीयपक्षस्याग्रे विवरणेन इति तृतीयोऽपीत्युक्तम् ॥ **अत एवेति** ॥ अन्योन्याश्रयत्वादेवेत्यर्थः । जीवस्याप्यज्ञानकल्पितत्वादिति भावः ॥

**या०** — नन्वद्वितीयत्वादिधर्माणामपि चैतन्याद्भिन्नत्वाङ्गीकारात्कथं मिथ्यात्वमित्यत आह ॥ **मिथ्यात्वं चेति** ॥ **निर्विषयस्येति** ॥ न च भाविघटविषयकज्ञानमिवाज्ञानमपि भाविमिथ्याधर्मविषयं पूर्वं निर्विषयमेवावतिष्ठत इति वाच्यम् । वैषम्यात् । अधिष्ठानावरणं विना भाविमिथ्याभूतधर्मकल्पनाया एवायोगेन मिथ्याभूतधर्मकल्पनापूर्वमज्ञानावरणत्वस्यावश्यकत्वात्तस्य च विषयाभावेऽसम्भवात्तदिदमुक्तम् ॥ **आवरणस्येति** ॥ एवं चाज्ञानस्यावरणत्वसिद्धौ मिथ्याविशेषसिद्धिस्तत्सिद्धौ चाज्ञानस्यावरणत्वसिद्धिरित्यन्योन्याश्रयोऽभिप्रेत इति द्रष्टव्यम् ॥

**श्री०** — ननु ब्रह्मणो निर्धर्मकत्वात्कथं तद्धर्माणामावृतत्वमुच्यत इत्यत आह ॥ **परमार्थत इति** ॥ **मिथ्याधर्मेति** ॥ मिथ्याभूतधर्मेत्यर्थः । तस्य ब्रह्मान्यस्य ॥ **अज्ञानसापेक्षतयेति** ॥ अज्ञानकल्पितत्वादिति भावः ॥ **अन्योन्येति** ॥ अज्ञानसिद्धौ तत्कल्पितब्रह्मान्यवस्तुसिद्धिस्तत्सिद्धौ च तदावरकाज्ञानसिद्धिरित्यन्योन्याश्रयादित्यर्थः । ब्रह्माश्रितमज्ञानं ब्रह्मैव प्रतिबध्नाति । उत जीवमिति

विकल्पितो द्वितीयः पक्षोऽप्यत एवापास्त इत्याह ॥ **अत एवेति** ॥ जीवस्यापि मिथ्यात्वेनाज्ञानसापेक्षतया अज्ञानसिद्धौ जीवसिद्धिस्तत्सिद्धौ च तदावरकाज्ञानसिद्धिरित्यन्योन्याश्रयादेवेत्यर्थः ।

**च०**— चैतन्याभिन्नस्याप्यद्वितीयत्वादेर्मिथ्याभावं घटयति ॥ **मिथ्यात्वं चेति** ॥ **निर्विषयस्येति** ॥ निरादयः क्रान्ताद्यर्थे पञ्चम्येत्यनेन समासः । विषयापादानकनिष्क्रान्तिविशेषितस्येत्यर्थः । न चोत्पत्स्यमानघटादिविषयकज्ञानमिव तादृशार्थविषयकाज्ञानमपि प्राग्विषयोत्पत्तेर्विषयाविशेषितमेव सङ्गच्छत इति वाच्यम् । सति विषये तदाच्छादकमावरणं सति च तस्मिन् मिथ्याभूतधर्मकल्पना सत्यां च तस्यामावरणासिद्धिरित्यन्योन्याश्रयात् ।

**अनु०**— **न चावरणमज्ञानमसत्ये तेन चेष्यते ॥**

**सु०— मा भूद्ब्रह्मणोऽज्ञानमावरणं मा भूज्जीवस्य जडस्य तु भविष्यतीति तृतीयं निराचष्टे ॥ न चेति ॥ जड इति वक्ष्यमाणमत्रापि संबध्यते । तेनाद्यस्य चशब्दस्य संबन्धः । आवरणमिति ज्ञानाभावनिवृत्त्यर्थम् । तस्य जडेऽपि संभवात् । असत्य इति हेत्वर्थगर्भं विशेषणम् । तेन च नेष्यत इति दूषणान्तरम् । तदयमर्थः । जडस्याप्यावरणरूपमज्ञानं न संभवति । तस्य मिथ्यात्वेनाज्ञानसापेक्षतया पूर्ववदितरेतराश्रयतापातात् । कारणस्य कार्याश्रितत्वादर्शनाच्च । मायावादिनाऽपि जडावरणाज्ञानानभ्युपगमाच्च । यदाह । सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नातीति ।**

**वा०**— उत्तरवाक्यस्य जडाश्रितत्वजीवाश्रितत्वजीवप्रतिबन्धकत्वनिरासविषयकत्वप्रतीतेस्तस्य चोक्तरीत्याऽनुपपत्तेस्तद्विषयं दर्शयति ॥ **मा भूदिति** ॥ असत्य इत्यस्य हेतुसमर्पकत्वात्साधारण्याच्च तेन पक्षविशेषालाभात्पक्षविशेषविषयकत्वं मूलारूढं कर्तुमाह ॥ **जड इतीति** ॥ न चेत्यस्य निपातसमुदायत्वकल्पनाप्रसिद्धेर्न युक्तेत्याशयेन पक्षान्तरनिरासकत्वं मूलारूढं कर्तुमाह ॥ **तेनेति** ॥ अत्र वाक्ये आवरणमित्यस्य न हेतुसमर्पकत्वं युक्तमिति पराभिमतविषयविशेषसमर्पणं तत्प्रयोजनमाह ॥ **आवरणमितीति** ॥ जड इत्यनेन पक्षविशेषसमर्पणासिद्धेरसत्य इति व्यर्थमित्यत आह ॥ **असत्य इतीति** ॥ ननु नेदं जडप्रतिबन्धकत्वपक्षनिराकरणं किन्तु जडाश्रितत्वपक्षस्य । अन्यथा सप्तम्यनुपपत्तेः । असत्यत्वं च जडस्य न तत्प्रतिबन्धकत्वाभावे हेतुरप्रयोजकत्वापत्तेः । तेन च नेष्यत इत्यप्यसिद्धमित्यत आह ॥

**तदयमर्थ इति** ॥ अत्र जडस्येति तत्प्रतिबन्धकत्वपक्षनिरासविषयकत्वप्रदर्शनं तस्येत्यस्य सत्यत्वस्य हेतुत्वसमर्थनम् । सप्तम्यनुपपत्तिपरिहाराय तत्सूचितयुक्तिप्रदर्शनं कारणस्येति । यत्प्रति प्रतिबन्धनं तस्यैवाभावे तत्प्रतिबन्धकत्वानुपपत्तेस्तेन विनाऽनुपपद्यमानत्वरूपं तदाश्रितत्वमिहाभिमतं न तु तदधिष्ठितत्वरूपम् । तादृशेऽप्याश्रितशब्दप्रयोगात्तच्च कारणस्य कार्यं प्रति न युक्तमित्याश्रितत्वसमर्थकसप्तम्या सूचितमित्याशयः ।

स०— **तृतीयं निराचष्ट इति** ॥ ब्रह्माश्रितमज्ञानं जडं प्रतिबध्नातीति तृतीयमित्यर्थः । उपलक्षणं चैतत् । जडाश्रितं जडं प्रतिबध्नातीति पक्षं च निराकरोतीत्यपि द्रष्टव्यम् । अत एव कारणस्य कार्याश्रितत्वादर्शनाच्चेति ॥ अथेत्यादिश्च ग्रन्थो नानुपपन्नः । अन्यथा ब्रह्माश्रिताज्ञानस्य जडप्रतिबन्धकत्वनिराकरणावसरे तदुक्तेरसङ्गतत्वापत्तेरिति भाव इत्याहुः ॥ **पूर्ववदिति** ॥ यतो मिथ्याभूतजडमज्ञानमपेक्षते । अज्ञानातिरिक्तस्य मिथ्याभूतस्याज्ञानकार्यत्वाभ्युपगमात् । अज्ञानं च मिथ्याभूतं जडमपेक्षते तदभावे स्वस्यानुपपत्तिरिति पूर्ववदित्यर्थः ॥ **कारणस्य कार्याश्रितत्वादर्शनाच्चेति** ॥ कारणस्य कर्मोपजीव्यत्वादर्शनाच्चेत्यर्थः । अन्यथा ज्ञानस्य ब्रह्माश्रितत्वस्यैवेदानीं दूष्यमाणत्वेनासङ्गत्यापत्तेरिति ध्येयम् ॥ **जडे आवरणानभ्युपगमाच्चेति** ॥ जडं प्रत्यावरकत्वानभ्युपगमाच्चेत्यर्थः ॥

प०— **इति तृतीयं निराचष्ट इति** ॥ दोषान्तरोक्त्येति योज्यम् ॥ **तेनेति** ॥ तृतीयोऽपि निरस्त इति पूर्वग्रन्थेन न पौनरुक्त्यं ध्येयम् ॥ तेन च नेष्यत इति दूषणान्तरमित्युक्तम् । तत्किमपेक्षयेत्यतोऽसत्यपदसूचितात्प्रागस्माभिरुक्तादन्योऽन्याश्रयादिति भावेन तद्व्यनक्ति ॥ **तदयमर्थ इत्यादिना** ॥ **कारणस्येति** ॥ कारणस्य कार्योपजीवित्वादर्शनाच्चेत्यर्थः ॥ **जडावरणेति** ॥ अज्ञानस्य जडं प्रत्यावरकत्वानभ्युपगमाच्चेत्यर्थः ।

या०— **कारणस्येति** ॥ कारणस्य कार्योपजीवित्वादर्शनाच्चेत्यर्थः । अन्यथाज्ञानस्य ब्रह्माश्रितत्वपक्षस्यैवेदानीं दूष्यमाणत्वेनासङ्गत्यापत्तेरिति ध्येयम् ॥ **जडे आवरणेति** ॥ जडं प्रत्यावरकत्वानभ्युपगमाच्चेत्यर्थः ॥

श्री०— इति तृतीयं ब्रह्माश्रितमज्ञानं जडं प्रतिबध्नातीति तृतीयं पक्षम् ॥ **ज्ञानाभावेति** ॥ ज्ञानात्यन्ताभावेत्यर्थः ॥ **जडस्येति** ॥ आवरणरूपमज्ञानं जडस्य न संभवतीत्यन्वयः । जडं न प्रतिबध्नाति जडावरकं न भवतीति यावत् ॥ **इतरेतरेति** ॥ अज्ञानसिद्धौ तत्कल्पितजडसिद्धिस्तत्सिद्धौ च तदावरकाज्ञानसिद्धिरितीतरेतराश्रयापातादित्यर्थः ॥

अनु०— अप्रकाशस्वरूपत्वाज्जडेऽज्ञानं न मन्यते ॥

सु०— केन हेतुना मायावादी जडेऽज्ञानं नाङ्गीकरोतीत्यत आह ॥ अप्रकाशेति ॥ आवरणमित्यत्राप्यनुवर्तते । न मन्यते मायावादीति शेषः ॥ सति पुष्कलकारणे कार्यानुदयेन खलु प्रतिबन्धकमावरणं कल्प्यम् । जडस्याप्रकाशस्वरूपत्वादेव स्वपरग्रहणासंभवे किमावरण-कल्पनयेति परो मन्यते । यथाऽऽह । प्रमाणवैकल्यादेव तदग्रहणसिद्धेरिति । प्रमाणवैकल्या-त्प्रकाशत्स्वरूपत्वाभावादित्यर्थः । अथवा । अप्रकाशस्वरूपत्वादित्यनेन जडाश्रयत्वेऽविद्यायाः प्रतीत्यभावप्रसङ्गमाह । प्रतीतिर्हि स्वप्रकाशतया वा प्रकाशाश्रयतया वा । न तावदाद्यः अविद्यायाम् । अप्रकाशस्वरूपत्वात्तस्याः । नापि द्वितीयः । तदाश्रयस्य जडस्याप्रकाशस्वरूपत्वा-दिति । अनेन परोक्तिव्याजेन जडेऽज्ञानावरणनिराकरणे युक्त्यन्तरमुक्तं भवति । यद्यप्यत्रा-प्यप्रकाशस्वरूपत्वादित्येवालम्, तेन नेष्यत इत्यनेनान्वयोपपत्तेः । तथाऽपि तेन नेष्यत इत्यनावर्त्येयं स्वमतेनैव युक्तिरभिहितेति प्रतीतिः स्यात्तदर्थं जडेऽज्ञानं न मन्यत इत्युक्तम् ।

वा०— अनभ्युपगमासिद्धिपरिहाराय पञ्चपादिकावाक्यमुदाहरति ॥ यथेति ॥ मायावाद्यन-भ्युपगमं मूलारूढं कर्तुं शेषं पूरयति ॥ नेति ॥ अप्रकाशस्वरूपत्वस्य हेतुत्वमुपपादयितुमनुवर्तितस्या-वरणमित्यस्य तदुपपादकत्वं घटयति ॥ सतीति ॥ उदाहृतप्रतिज्ञावाक्यार्थं प्रति हेतुसमर्पकं तद्वाक्यमेव सम्मतितयोदाहरति ॥ यथाऽऽहेति ॥ नन्वस्य भवदुक्तहेतुसमर्पकत्वाभावान्न सम्मतित्वमित्यतस्तदर्थ-माह ॥ प्रमाणेति ॥ प्रमितिः प्रमाणं प्रकाश इति यावत् । तद्वैकल्यात्तद्रूपत्वभावादित्यर्थः । यद्यप्यत्र न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नातीति वाक्येऽनात्मवस्तुप्रतिभासं प्रति प्रतिबन्ध-कत्वाभावरूपप्रतिज्ञातार्थे जडेष्वित्युक्तस्याचिद्रूपत्वस्यैव हेतुत्वमचिद्रूपे प्रकाशप्रसक्तेरभावेन सति पुष्कलकारणे कार्यानुदयप्रयोजकत्वरूपप्रतिबन्धकत्वानुपपत्तेरिति तद्वाक्यव्याख्यानम् । तर्ह्यनात्मनः स्वतोऽनावृतरूपत्वेऽज्ञात इति व्यवहारानुपपत्तिरित्यतः प्रवृत्तस्य प्रमाणवैकल्यादेव तदग्रहणसिद्धेरिति वाक्यस्यानात्मविषयान्तःकरणवृत्तिवैकल्यादज्ञातव्यवहार इति न तदनुपपत्तिरिति पूर्ववाक्योक्तप्रकाश-प्रतिबन्धकत्वानुपपत्तिरयुक्ता । अचिद्रूपत्वेन स्वतःप्रकाशाप्रसक्तावपि स्वप्रकाशचैतन्यसंबन्धादस्त्येव प्रकाशप्रसक्तिरित्यत प्रवृत्तस्य प्रमाणेति वाक्यस्य प्रमाणस्य साधकस्यानावृतचैतनस्य वैकल्यात् । तथा चानावृतचैतन्यस्य विषयसाधकत्वात्तदावरणादेव विषयानवगतिसिद्धौ पृथगनात्मन्यावरणकल्पनावैयर्थ्यम् । न हि सूर्ये मेरुव्यवहिते रात्रावातपपरिहाराय छत्राद्यपेक्षितमिति व्याख्यानं विवरणाभिमतम् । तथाऽप्ये-

वमपि कैश्चिद्व्याख्यातत्वाद्वा प्रकृतोपयुक्ततया स्वयमेव वैवं व्याख्यातम् । युक्तं चैतत् । आत्मानं प्रति तद्विषयकावरणपक्षं परिशेषयितुं प्रसक्तप्रतिषेधाय प्रवृत्ते सा च न जडेष्विति वाक्ये जडेष्वित्यस्य पक्षविशेषसमर्पणपरत्वं तद्वाक्यप्रतिज्ञातार्थे हेतुसमर्पणाय प्रवृत्ते च द्वितीयवाक्ये प्रमाणवैकल्यादित्यस्य हेतुपरत्वम् । तत्र च प्रकाशस्वरूपत्वाभावादिति वक्तव्ये प्रमाणवैकल्यादिति या सामान्योक्तिः सा तत्प्रकाशप्रसक्तिः स्वतो वा प्रमाणबलाद्वा चैतन्यबलाद्वा । नाद्यः । प्रकाशस्वरूपत्वाभावात् । न द्वितीयः । प्रमाणनिवर्त्यस्यावरणस्य तत्प्रतिबन्धकत्वायोगात् । नापि तृतीयः । चैतन्यावरणादेव तत्सिद्धावनात्मनि पृथगावरणकल्पनावैयर्थ्यादिति प्रसञ्जकत्रयनिरासकहेतुत्रयं सङ्ग्रहीतुं द्रष्टव्यम् । अस्मिन्पक्षे जड इति सप्तम्या विशेषतः स्वारस्यादर्शनादप्रकाशस्वरूपत्वादिति प्रकारान्तरेण व्याख्याति॥ **अथवेति** ॥ एवं च जडाश्रितत्वपक्षं निराचष्टे ॥ **न चेति** ॥ इति पूर्ववाक्यमवतारितं भवति । यद्वा जडं प्रतिबध्नातीत्येतन्निरासाय पूर्ववाक्यं योजयित्वा तेन च नेष्यत इत्येतद्विवरणपरतयाऽप्रकाशस्वरूपत्वादिति वाक्यं योजितम् । अधुनाऽप्रकाशत्वस्वरूपत्वादित्येतन्न पूर्वविवरणं किन्तु जडाश्रितत्वरूपपक्षान्तरनिरासकमित्याशयेनाह ॥ **अथवेति** ॥ तथा चात्र जडाश्रितत्वपक्षस्य मूलारूढतयैव निरासः पूर्वत्र तूपर्येवेति ध्येयम् । आज्ञानमिति जड इति प्रकृतत्वादप्रकाशस्वरूपत्वस्य क्रमेणोभयसंबन्धे कल्पद्वयनिरासः सिद्धो भवतीत्याह ॥ न **तावादित्यादिना** ॥ एवं च जडेऽज्ञानमिति पदद्वयमावर्तनीयमर्थवशाद्विभक्तिविपरिणाम इत्युक्तं भवति ॥ **युक्त्यन्तरमिति** ॥ प्रकाशस्वरूपत्वाभावादेव स्वपरग्रहणाभावे आवरणकल्पनावैयर्थ्यरूपं जडं प्रतिबध्नातीत्यत्राविद्याप्रतीत्यभावप्रसङ्गरूपं सा जडाश्रितेत्यत्रेत्यर्थः । अन्यथा परानभ्युपगमस्य स्पष्टत्वात्तेन नेष्यत इत्येतावता पूर्वोत्तरवाक्यवैयर्थ्यमिति भावः ।

**स०— जडाश्रयत्व इति** ॥ तर्किं जीवाश्रयमुत जडाश्रयमिति प्राश्निकल्पितद्वितीयपक्ष इत्यर्थः । तथा च न तत्पक्षदूषणमुक्तरीत्या बहिरेव द्रष्टव्यम् । किन्त्वाचार्यैरेव कृतमिति भावः ।

**प०**— अज्ञानमित्यस्य जडाभावार्थत्वभ्रमनिरासायाह ॥ **आवरणमित्यत्राप्यनुवर्तत इति** ॥ ब्रह्माश्रितमज्ञानं जडं प्रतिबध्नातीति तृतीयपक्षनिरासकतया व्याख्यातमेव वाक्यं जीवाश्रयं जडाश्रयं ब्रह्माश्रयं वेति प्राश्निकल्पितद्वितीयपक्षस्योक्तदोषाद्दोषान्तरपरतया योजयति ॥ **अथवेति** ॥ प्रकाशाश्रयतया वेति बहुव्रीहिः । पूर्वमप्रकाशस्वरूपत्वादित्यस्य जडस्येत्यन्वयमुपेत्यार्थ उक्तः । इदानीमज्ञानस्येत्यन्वयमुपेत्याह ॥ **तस्या इति** ॥ अज्ञानाश्रयस्य जडस्येत्यन्वयमुपेत्याह ॥ **तदाश्रयस्य जडस्येति** ॥ पक्षद्वयेऽपि जडपदात्पूर्वमज्ञानस्य प्रतीत्यभावप्रसङ्गो नेति शेषो मूले ध्येयः । ननु जडाश्रितमज्ञानमितिपक्षस्य भवद्भिरेवानभ्युपगमादितरेतराश्रयत्वाच्चेति युक्तिद्वयेन निरस्तत्वात्पुनरत्र तन्निरासपरतया कुतो

व्याक्रियत इत्यत आह ॥ **अनेनेति** ॥ अप्रकाशेत्यर्धश्लोकेन ॥ **युक्त्यन्तर**मिति ॥ अज्ञानस्वरूपप्रतीत्य-भावप्रसङ्गरूपयुक्त्यन्तरमित्यर्थः ॥ **इति प्रतीतिः स्यादिति** ॥ तथात्वे 'न चावरणमज्ञानमसत्त्ये तेन चेष्यत'इत्यत्र पराभिमतहेत्वनुक्त्या प्रागुक्तार्थस्यासिद्धिप्रसङ्गादिति भावः ॥

**या०— जडाश्रयत्व इति** ॥ तर्कि जीवाश्रयमुत जडाश्रयमिति प्राग्विकल्पितद्वितीयपक्ष इत्यर्थः । तथा च न तत्पक्षदूषणमुक्तरीत्या बहिरेव द्रष्टव्यम् किं त्वाचार्यैरेवात्र कृतमिति भावः ॥

**श्री०— स्वपरग्रहणेति** ॥ स्वग्राहकत्वपरग्राहकत्व इत्यर्थः । यथा हि प्रदीपावरकं घटादिकं प्रकाशरूपस्य प्रदीपस्य यत्स्वग्राहकत्वं परग्राहकत्वं चास्ति तद्यथा न स्यात्तथा करोति । एवं जडावरकमज्ञानं जडस्य स्वपरग्राहकत्वाभावं सम्पादयतीति वक्तव्यम् । तन्न संभवति । दीपादिवत्प्रकाशस्वरूपत्वाभावादेवेति भावः । तथाच पुष्कलकारणमेव नास्तीति हृदयम् ॥ **तदग्रहणसिद्धेरिति** ॥ तेन स्वपराग्रहणसिद्धेस्तस्य जडस्य स्वपरग्राहकत्वाभावादिति यावत् ॥ **स्वप्रकाशतयेति** ॥ यथा दीपादीनामित्यर्थः ॥ **प्रकाशाश्रयतयेति** ॥ प्रकाशरूपं यद्वस्तु तदाश्रयतया । यथा घटादीनामित्यर्थः । लोके घटादीनां प्रकाशरूपालोकसम्बन्धेन प्रतीतिर्दृष्टा । मायिमतेऽपि घटादीनां घटाद्यवच्छिन्नस्वप्रकाशचैतन्याश्रितत्वेनैव प्रतीतिर्दृष्टेति भावः । तदाश्रयस्याविद्याश्रयस्य ॥ **अज्ञानावरणेति** ॥ अज्ञानरूपावरणेत्यर्थः ॥ **युक्त्यन्तरमिति** ॥ न केवलमन्योन्याश्रयान्नेष्यते । किन्तु स्वपरग्रहणयोग्यताभावादित्युक्तरीत्याऽपि नेष्यत इत्यर्थः ॥

**च०**— अज्ञानावरणनिराकरणे तद्रूपावरणनिराकरणे ।

अनु०— अज्ञानाभावतः शास्त्रं सर्वं व्यर्थीभविष्यति ॥

सु०— **किमतो यद्येवमित्यत आह ॥ अज्ञानाभावत इति ॥ आवरणं हि खल्वाश्रयादिमत्तया व्याप्तमुपलब्धम् यथा नयनपटलादि । अज्ञानावरणस्य चाश्रयाद्युक्तविकल्पान्यतमत्वेन व्याप्तम् । अतिरिक्तस्य शङ्कितुमप्यशक्यत्वात् । व्यापकाभावे व्याप्याभावः सुलभ एव । तथा चोक्तविकल्पानुपपत्तावाश्रयाद्यभावेऽज्ञानावरणस्याप्यभावः परमते प्रसक्तः । अज्ञानाभावे च बन्धस्य न तदुपादानत्वम् । ततश्च सर्वं शास्त्रं वेदतन्मीमांसात्मकं व्यर्थीभविष्यति । अर्थो विषयः प्रयोजनं च । प्रसङ्गस्यानिष्टत्वख्यापनायाभूततद्भावार्थस्य च्वेःप्रयोगः । मायावादिना हि शास्त्रस्य विषयप्रयोजनवत्तासिद्ध्यर्थमात्मनि मिथ्याभूताज्ञानोपादानको बन्धाध्यासो वर्णितः । अज्ञानानुपपत्तौ च तदुपादानकस्यात्मनि बन्धाध्यासस्याप्यनुपपत्तेस्तदधीना विषयप्रयोजनवत्ता च शास्त्रस्य न स्यादिति ।**

**वा०**— नपूत्तरवाक्येऽज्ञानासंभवाप्रतिपादनादसङ्गतिरित्यतो यदर्थमज्ञानासंभवोपपादनं तं बन्धस्याज्ञानोपादानकत्वासंभवं तत्फलकथनपूर्वकं कथयितुमुत्तरवाक्यमित्याह ॥ **किमत इति** ॥ नन्वेतदयुक्तम् । ब्रह्मजीवजडानामज्ञानाश्रयत्वाद्यभावप्रतिपादनेऽप्यतिरिक्ताश्रयादिनाऽप्युपपत्त्याऽज्ञाना-भावासिद्धिः । ब्रह्मादीनामाश्रयादीनामभावेनाश्रयाद्यभावस्य नियामकाभावेनासिद्धेश्च । आश्रयाद्यभावेऽपि वा गगनादेरिवाश्रयविषयशून्यस्याप्यवस्थानोपपत्तेश्च परेणाप्यज्ञानाभ्युपगमादज्ञानाभावत इति सिद्धिवदुक्तिश्च नोपपद्यते । अप्रयोजकतया ज्ञानाभावस्य शास्त्रवैयर्थ्यं प्रति हेतुत्वानुपपत्तिश्च । न चाज्ञातस्य विषयत्वमज्ञाननिवृत्तेश्च फलत्वमित्यज्ञानानुपपत्तौ तदनुपपत्तिरित्याशय इति वाच्यम् । अतोऽधिकारीत्युत्तरवाक्येन पौनरुक्त्यापत्तेः । अज्ञानस्य च मिथ्यात्वमित्यज्ञानासंभवस्योत्तरत्र प्रतिपादनीयतया तस्यासमाप्तत्वाच्च बन्धस्याज्ञानोपादानकत्वानुपपत्तेरत्रासूचनाच्च । सूचनेऽपि वा तस्या अपि न शास्त्रवैयर्थ्यापादकत्वम् । नियामकाभावात् । मायावादिशास्त्रवैयर्थ्यस्य प्रामाणिकत्वान्नानिष्टत्वमपीत्यतो वाक्याभिप्रायमाह ॥ **आवरणं हि खल्वित्यादिना** ॥ विप्रतिपन्नं प्रत्यज्ञानस्याश्रयादिमत्त्वेन व्याप्तेर्दृष्टान्ताभावेन विशेषरूपेण प्रदर्शयितुमशक्यत्वात्सामान्यरूपेण तां दर्शयितुमावरणमित्युक्तम् ॥ **अतिरिक्तस्येति** ॥ तुच्छस्येत्यर्थः । अत्रोक्तसर्वानुपपत्तिपरिहारो यथायोगं द्रष्टव्यः ।

**प०**—**उक्तविकल्पेति** ॥ जीवाश्रयं ब्रह्माश्रयं जडाश्रयं वेति । तथा ब्रह्मैव प्रतिबध्नाति-जीवं जडं वेति च प्रागुक्तविकल्पेत्यर्थः । ननु व्यर्थं भविष्यतीति वाच्ये व्यर्थीतिच्विप्रत्ययान्तप्रयोगः कुत इत्यत आह ॥ **प्रसङ्गस्येति** ॥ **अभूतेति** ॥ अभूततद्भावे, 'कृभ्वस्तियोगे संपद्य कर्तरि च्विरि'ति पाणिनिसूत्रोक्तेः अभूततद्भावेत्युक्तं । यत्र भूतपूर्वं तद्भाववाचिनः च्विप्रत्ययस्येत्यर्थः । व्यर्थशब्दात् भूधातुयोगे च्विप्रत्यये, 'अस्यच्वावि'ति व्यर्थशब्दस्य ईकारान्तादेशे च्वेः सर्वस्य चुटू इत्यादिना लोपे व्यर्थीभविष्यतीतिरूपं ज्ञेयं ॥ शास्त्रस्य न स्यादितीतिशब्दस्य इत्यनिष्टत्वख्यापनायेति पूर्वेणान्वयः ।

**श्री०**—**अभूततद्भावेति** ॥ अव्यर्थं व्यर्थत्वायायोग्यमिति यावत् ॥ **तद्व्यर्थं सम्पद्यत इति** ॥ व्यर्थीभविष्यतीत्यर्थः । तदुपपादयति ॥ **मायानादिना हीति** ॥

**अनु०**— **अज्ञानस्य च मिथ्यात्वमज्ञानादिति कल्पने ॥**
**अनवस्थितिस्तथा च स्यादन्योन्याश्रयताऽथवा ॥**

**सु०**— **किञ्चास्तु वा बन्धोऽज्ञानोपादानकस्तथाऽप्यज्ञानस्य सत्यत्वे बन्धस्यापि सत्यत्वात्सत्यस्य च ज्ञाननिवर्त्यत्वाभावाभ्युपगमाच्छास्त्रस्य वैयर्थ्यं तदवस्थमेव ॥ नन्वत एव**

अज्ञानस्यापि मिथ्यात्वमुक्तं मिथ्याज्ञाननिमित्त इति । सत्यमुक्तं दुरुक्तं तत् । तथा हि । मिथ्या चेदज्ञानं तदप्यात्मन्यारोपितमिति वक्तव्यम् । मिथ्याभूतस्याशेषस्य तथात्वाभ्युपगमात् । तथा चाज्ञानारोपः स्वाभाविकः सहेतुको वा । आद्येऽनिर्मोक्षप्रसङ्गः । स्वाभाविकस्य निवृत्त्यनुपपत्तेः । उपपत्तौ वाऽऽत्मरूपस्यापि तदापत्तेः । द्वितीयेऽपि किमात्मस्वरूपमेव निमित्तमज्ञानारोपस्य, उताज्ञानम् । नाद्यः । निष्कलङ्कैकरसाद्वितीयस्य चैतन्यस्य तदयोगात् । योगे वाऽहङ्काररजतादिसमारोपस्यापि तथात्वोपपत्तावज्ञानकल्पनावैयर्थ्यात् । चैतन्यमात्रहेतुकस्य मोक्षेऽपि प्रसङ्गाच्च । द्वितीये दूषणमाह ॥ अज्ञानस्येति ॥ मिथ्यात्वं तत एवारोपितत्वं च । अभ्युपगम इति वक्तव्ये कल्पन इति वचनमस्याभ्युपगमस्याप्रामाणिकत्वं सूचयितुम् ॥ तेनाज्ञानारोपोपादानमप्यज्ञानं सत्यं चेद्बन्धस्यापि सत्यत्वापत्तिः, आरोपितत्वे पूर्ववदज्ञानान्तरारोपोपगमादनवस्थेत्यदूषणं बीजाङ्कुरानवस्थावत्कर्मानवस्थावद्वाऽस्या अप्यनवस्थायाः सिद्धविषयत्वादित्यपास्तं भवति । न ह्यहङ्काररजताद्यारोपोपादानमज्ञानमपि प्रागारोपिताज्ञानान्तरोपादानकं तदप्येवमेवेत्यत्र किमपि प्रमाणमस्ति ॥

स्यादियमनवस्थायद्यज्ञानोपादानमज्ञानान्तरोपादानकमित्यभ्युपगच्छामः । न चैवम् । प्रथमाज्ञानस्यैव तदुपादानत्वादित्यत आह ॥ तथा चेति ॥ अज्ञानद्वयस्याप्यन्योन्योपादानत्वं शङ्कितुर्बुद्धौ परिवर्तमानं तथा च सतीति परामृश्यते । अथवा तथाशब्द उपमायाम् । चशब्दः समुच्चये । यथाऽज्ञानस्याज्ञानोपादानत्वेऽनवस्थितिः, तथाऽन्योन्याश्रयता च स्यादिति योज्यम् । दूषणसमुच्चयश्चोक्तविधया व्यवस्थित इति ॥

नन्वज्ञानस्याज्ञानोपादानकत्वेऽपि नानवस्थादिदोषः । एकमेवाज्ञानं स्वोपादानमित्यभ्युपगमादित्यत आह ॥ अथवेति ॥ आत्माश्रयतेति शेषः । अथवेत्युक्तपक्षान्तरद्योतको निपातः ॥

ननु चाज्ञानारोपस्यानादित्वात्कथमनवस्थितिप्रसङ्ग इति चेन्न । स्वाभाविकत्वसहेतुकत्वपक्षयोरन्यतरस्यावश्याभ्युपगमनीयत्वात् । अपि चानादिरेकैवाविद्येत्यभ्युपगच्छताऽपि न तावत्तस्याः स्वरूपतः सत्त्वमभ्युपगतं किं नाम प्रातिभासिकम् । न च तत्प्रतिभासोऽसङ्गस्य निष्कलङ्कचैतन्यस्य विनाऽज्ञानप्रतिभासादुपपद्यते । ततो मा नाम भूदज्ञानपरम्परादिनाऽनवस्थादिदोषः । तत्प्रतिभासपरम्परादिकृतस्तु कथं परिहरणीयः । कर्मपरम्पराप्रतिबन्दी तु मोचितैवेति ॥ न वैकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यामिति वचनादत्र छन्दोभङ्गो न शङ्कनीयः ॥ अनवस्थेति वक्तुं शक्ये यदनवस्थितिरित्याह तद्वैदिकत्वज्ञापनार्थम् ।

वा० — नन्वज्ञानमिथ्यात्वनिरासपरोत्तरवाक्यमसङ्गतम् । अज्ञानमिथ्यात्वाभ्युपगमेऽप्युक्ताश्रयाद्यनुपपत्तेः परिहर्तुमशक्यत्वेन परेण तस्यानाशङ्कनीयत्वात् । न चाज्ञानस्य सत्यत्वे तदुपादानकबन्धस्यापि सत्यत्वेन ज्ञानानिवर्त्यत्वाच्छास्त्रवैयर्थ्यमेवेति दूषणान्तरेऽस्माभिरुपन्यस्ते तत्परिहाराय तन्मिथ्यात्वं परेण शङ्कितुं युक्तमिति वाच्यम् । अज्ञानोपादानकत्वस्याधुनैव निरस्तत्वेन सिद्धान्तिना सत्यज्ञानोपादानकत्वप्रयुक्तसत्यत्वोपजीवनेन दूषणस्य वक्तुमशक्यत्वात् । अज्ञानमिथ्यात्वस्याज्ञानप्रयुक्तत्वाभावाद्वाक्यार्थोऽप्यनुपपन्न एवेत्यतोऽज्ञानोपादानकत्वाभ्युपगमेन दूषणान्तरस्य प्रवृत्तत्वान्नाद्यो दोषः । मिथ्यात्वं वदता तद्व्यापकस्यारोपितत्वस्यावश्यमङ्गीकर्तव्यतया तदारोपे स्वाभाविकत्वात्मस्वरूपनिमित्तकत्वयोः स्पष्टदूषणत्वेन परेण स्वीकर्तुमशक्यत्वादज्ञाननिमित्तिकत्वमेव वक्तव्यमित्याशयेन भाष्यप्रवृत्तेर्न द्वितीयोऽपीत्याशयेनाह ॥ **किं चेति** ॥ चेत्यस्यार्थकथनं किञ्चेति ॥ **स्वाभाविकस्येति** ॥ अनिमित्तकस्येत्यर्थः ॥ **निष्कलङ्केति** ॥ निष्कलङ्केत्यारोपाभावे हेतुः । सकलङ्कस्यापि सत्त्वादारोप इत्यतोऽद्वितीयस्येति । अस्त्वेकस्यैवोभयरूपत्वमित्यत एकरसेति । ननु निष्कलङ्कैकरसाद्वितीयस्यापि स्वभाववशादारोप इत्यत आह ॥ **योगे वेति** ॥ परमात्रसिद्धत्वस्वपरसिद्धत्वाभिप्रायेण वाऽऽत्मतदितराधिष्ठानकत्वाभिप्रायेण वाऽहङ्काररजतग्रहणम् । बीजाङ्कुरदृष्टान्तः परम्परामात्रे । एकजातीयाज्ञानपरम्परायां प्रकृतायां कर्मदृष्टान्तः । अत एवोत्तरत्र कर्मप्रतिबन्दी तु मोचितैवेत्येकमात्रोपादानमिति ध्येयम् । नन्वहङ्कारादिरूपबन्धोपादानत्वज्ञानस्याङ्गीकुर्वाणं प्रति कथं नैतत्सिद्धमित्यतस्तं प्रत्यप्यज्ञानस्य प्रागारोपिताज्ञानोपादानकत्वपरम्परा न सिद्धैवेत्याह ॥ **न हीति** ॥ **स्यादियमिति** ॥ पूर्वप्रसञ्जितदूषणपरिहारमात्रे दृष्टिमतः शङ्केति । एवमुत्तरत्रापि द्रष्टव्यम् । तथा चेति परामर्शस्वारस्यलाभात्पक्षान्तरमाह ॥ **अथवेति** ॥ नन्वेकस्मिन्पक्षे दूषणद्वयासंभवात्समुच्चयानुपपत्तिरित्यत आह ॥ **दूषणेति** ॥ अज्ञानारोपस्याज्ञानारोपसापेक्षत्वमात्रे समुच्चय इति भावः । अथवेति निपातो न तस्मिन्नेव पक्षेऽनवस्थयाऽन्योन्याश्रयत्वेन वाऽऽत्माश्रयत्वस्य विकल्पद्योतको येनानुपपत्तिः स्यात्किन्त्वनवस्थाद्यापादकपक्षापेक्षया विलक्षणस्यात्माश्रयापादानयोग्यस्य पक्षान्तरस्य द्योतक इत्याह ॥ **अथवेतीति** ॥ **स्वाभाविकत्वेति** ॥ तृतीयप्रकाराभावेनानादिभूतस्याप्यानन्दादिवदनन्याधीनत्वे वा वक्तव्येऽनन्याधीनत्वपक्षस्य च तद्वदेव निवृत्त्यभावादिनाऽनुपपत्त्या द्वितीय एवाश्रयणीये सापेक्षताया अवर्जनीयतयोक्तरीत्याऽनवस्थाद्यापत्त्याऽनादित्वोक्त्या किं कृतं स्यादिति भावः । उत्पत्त्यादिप्रतिबन्धकत्वेनैव तेषां दूषणत्वमिति वृथाऽऽग्रहिणं प्रति तुष्यत्विति न्यायेन ज्ञप्तिप्रतिबन्धकत्वमप्यस्तीत्याह ॥ **अपि चेति** ॥

स० — **किं नाम प्रातिभासिकमिति** ॥ सत्त्वेन प्रतिभासरूपं वा प्रतिभासमात्रकालीनेवेत्यर्थः । ततः किमित्यत आह ॥ **न च तत्प्रतिभास इति** ॥ ततश्च निष्कलङ्कचैतन्यस्याविद्यासंबन्धं

विना तत्प्रतिभासत्वासंभवात्तत्प्रतिभासात्पूर्वमविद्यासत्त्वं वाच्यम् । तच्च प्रतिभासरूपमेवेति तत्पूर्वमपि प्रतिभासान्तरमुक्तन्यायेन वाच्यमित्यनवस्थेति भावः ।

प० — उत्तरश्लोकमवतारयितुमाह ॥ **किञ्चेति** ॥ प्रागुक्तमेवाद्वैतिवाक्यं संघटयति ॥ **मिथ्याज्ञानेति** ॥ अन्तर्बाह्यारोपाभिप्रायेणोक्तमहङ्काररजतादीति ॥ तेनेत्यस्येत्यपास्तमित्यनेनान्वयः ॥ **उक्तविधयेति** ॥ अज्ञानस्याज्ञानान्तरमुपादानं तस्याप्यन्यदित्यङ्गीकारेऽनवस्था । अन्योन्यसापेक्षाज्ञानव्यक्तिद्वयाङ्गीकारे चान्योन्याश्रय इत्युक्तविधया व्यवस्थित इत्यर्थः ॥ **उक्तपक्षान्तरेति** ॥ एकमेवेत्यादिनोक्तेत्यर्थः ॥ **निपात इति** ॥ तेनाथेति एकः पक्षः वेति च कश्चित्पक्ष इति न भ्रमितव्यमिति भावः ॥ **अभ्युपगमनीयत्वादिति** ॥ तत्र च दोषोऽभिहित एवेति भावः ॥ **प्रातिभासिकं** प्रतिभासमात्ररूपम् । अविद्याप्रतिभास एवाविद्यायाः सत्त्वं नान्यदित्यर्थः ॥ **तत्प्रतिभासपरम्परेति** ॥ चैतन्यस्याज्ञानप्रतिभासत्वं अज्ञानप्रतिभासान्तरात् । तदपि प्रतिभासान्तरादित्येवंरूपपरम्पराकृत इत्यर्थः ॥ **मोचितैवेति** ॥ कल्पन इति पदस्वारस्यवर्णनप्रस्तावे पूर्वत्रैवेति भावः । नन्वष्टाक्षराऽनुष्टुबिति द्वात्रिंशदक्षरानुष्टुबितिश्रुत्याऽनुष्टुप्छन्दसोष्टाक्षरपादत्वेनानवस्थितिमित्थाच स्यादित्यस्य नवाक्षरत्वादनुष्टुप्छन्दसो भङ्ग इत्यत आह ॥ **न वा इति** ॥ **वैदिकत्वेति** ॥ कुमारसम्भवे 'त्रियम्बकं संयमिनं ददर्श' त्यत्र त्रियम्बकपदप्रयोगः स्वस्य वैदिकत्वद्योतनायेति तद्व्याख्याताप्यवादीत् । परन्तु तत्र वैदिकत्वमपरमार्थमिह तु परमार्थम् ।

या० — **किं नाम प्रातिभासिकमिति** ॥ सत्त्वेन प्रतिभासरूपं वा प्रतिभासमात्रकालीनं वा इत्यर्थः । ततः किमित्यत आह ॥ **न च तत्प्रतिभास इति** ॥ तथा च निष्कलङ्कचैतन्यस्याविद्यासम्बन्धं विना तत्प्रतिभासत्वासम्भवात्तत्प्रतिभासात्पूर्वमविद्यासत्त्वं वाच्यम् । तच्च तत्प्रतिभासादिरूपमेवेतितत्पूर्वमपि प्रतिभासान्तरमुक्तन्यायेन वाच्यमित्यनवस्थेति भावः ।

श्री० — **अत एवेति** ॥ शास्त्रवैयर्थ्यादेवेत्यर्थः ॥ **तदयोगादिति** ॥ कलङ्कभूताज्ञानारोपे निमित्तत्वायोगादित्यर्थः । तथात्वोपपत्तौ निष्कलङ्कचैतन्यहेतुकत्वोपपत्तौ ॥ **अज्ञानकल्पनेति** ॥ अहङ्काररजताद्यध्यासनिमित्तत्वेनेत्यर्थः ॥ **हेतुकस्येति** ॥ अज्ञानारोपस्येत्यर्थः ॥ **तेनेति** ॥ अप्रामाणिकत्वसूचनेनेत्यर्थः ॥ **कर्मानवस्थेति** ॥ कर्माधीनमिदं शरीरम् । शरीरान्तराधीनं च कर्म । तदपि पुनः शरीरान्तराधीनम् । तदपि पुनः कर्मान्तराधीनमित्येवं कर्मानवस्थेत्यर्थः । इदं कर्म पूर्वकर्माधीनम् । तदपितत्पूर्वकर्माधीनम् । तदप्येवमिति वा कर्मानवस्थेत्यर्थः। तेनापास्तं भवतीत्युक्तं विवृणोति ॥**नहीति**॥ एकस्मिन्नेव पक्षे दूषणद्वयसमुच्चयः प्रतीयतेऽत आह ॥ **दूषणसमुच्चयश्चेति** ॥ **व्यवस्थित इति** ॥ अज्ञानोपादानमज्ञानमज्ञानान्तरोपादानकमित्यभ्युपगमेऽनवस्था । अज्ञानद्वयाङ्गीकारे चान्योन्याश्रय इत्येव दूषणसमुच्चयः ।

पक्षभेदेन व्यवस्थित इत्यर्थः ॥ **अवश्याभ्युपगमनीयत्वादिति** ॥ तत्र च दूषणमुक्तमेवेत्याशयः । ननु कर्मपरम्पराऽनवस्थावदज्ञानप्रतिभासपरम्पराकृताऽनवस्थाऽपि न दोष इति चेत्तत्राह ॥ **कर्मपरम्परेति** ॥ **मोचितैवेति** ॥ कर्मपरम्पराऽनवस्था न दोषः प्रामाणिकत्वात् । यथोक्तं सूत्रकृता । न कर्माविभागादिति चेन्नानादित्वादिति । अज्ञानप्रतिभासपरम्परात्वप्रामाणिकीति भावः ॥ ॥

**च०**— तथात्वाभ्युपगमात् आरोपितत्वाभ्युपगमात् ।

**सु०—स्यादेतत् । अवश्यं तावदज्ञानमनादि भावरूपं विज्ञानविलाप्यमभ्युपगन्तव्यम्, प्रत्यक्षानुमानागमार्थापत्तिसिद्धत्वात् ॥**

**वा०**— नन्वज्ञानस्य प्रामाणिकत्वानुरोधेन कथञ्चिदाश्रयाद्यनुपपत्तिपरिहार एव गवेषणीयो न त्वनुपपत्त्याभासैः प्रामाणिकापह्नवो युक्तोऽतिप्रसङ्गात् । तथा च भाष्यकारीयं विषयाद्यनुपपत्तिप्रतिपादनमनुचितमित्यतः परोदीरितप्रमाणानि निरसितुमनुवदति ॥ **स्यादेतदित्यादिना** ॥ अत्रानादीत्यादिनाऽनादिभावत्वे सति ज्ञाननिवर्त्यत्वं पराभिमतं तल्लक्षणं सूचयति । अत्र पूर्वज्ञानव्यावृत्तयेऽनादीति । प्रागभावव्यावृत्तये भावत्व इति । तच्चाभावविलक्षणत्वम् । अनिर्वचनीये तस्मिन्नन्यस्यासम्भवात् । आत्मव्यावृत्तये निवर्त्यत्वमिति । चिरन्तननैयायिकमतेन परमाणुश्यामताव्यावृत्तये स्वमतेन जीवब्रह्मविभागादिव्यावृत्तये ज्ञानेति तच्च साक्षाद्विवक्षितमिति नोक्तदोष इति द्रष्टव्यम् । अवश्यमित्युक्तमुपपादयितुमनेकप्रमाणान्युपन्यसितुं प्रतिजानीते ॥ **प्रत्यक्षेति** ॥

**स०**— **स्यादेतदित्यादि** ॥ न हि प्रामाणिकस्याज्ञानस्य विकल्पपांसुभिराच्छादनं युक्तमित्यर्थः । प्रत्यक्षस्य ज्यैष्ठ्यात्प्रथमं तदाह ॥ **प्रत्यक्षमिति** ॥ अनादिभावरूपमित्यादिना तदज्ञानलक्षणमुक्तम् । तत्र प्रपञ्चप्रागभावं ब्रह्मस्वरूपं च व्यावर्तयितुं क्रमेण विशेषणानीति ज्ञातव्यम् ।

**प०**— नन्वज्ञानाभावत इत्ययुक्तम् । तस्यानेकप्रमाणसिद्धत्वादिति भावेन शङ्कते ॥ **स्यादेतदित्यादिनाऽत्रोच्यत इत्यन्तेन** ॥

**या०**— अनादिभावरूपमित्यादिनाऽज्ञानलक्षणमुक्तम् । तत्र प्रपञ्चप्रागभावं ब्रह्मस्वरूपं च व्यावर्तयितुं क्रमेण विशेषणानीति ज्ञातव्यम् ।

**श्री०**—लक्षणप्रमाणाभ्यां वस्तुसिद्धिर्भवति । अतोऽज्ञानस्य लक्षणप्रमाणे दर्शयति ॥ **अवश्यमित्यादिना** ॥ प्रपञ्चेऽतिव्याप्तिपरिहारायोत्तरज्ञाननिवर्त्ये पूर्वज्ञाने चातिव्याप्तिपरिहारायानादीत्युक्तम् । प्रागभावव्यावृत्त्यर्थं भावरूपमिति विशेषणम् । ब्रह्मव्यावृत्तये विज्ञानविलाप्यमिति विशेषणं द्रष्टव्यम् ।

च०— ननु बहुप्रमाणप्रत्यायिताज्ञानस्याभावप्रतिज्ञा न संगच्छत इत्याशङ्काऽपनिनीषया तदभिहितप्रमाणान्यनुवदति ॥ **स्यादेतदित्यादिना तत्कथमुच्यते ज्ञानाभावत** इत्यन्तेन ॥ अत्रानादीत्यादिना अनादित्वे सति भावत्वे सति ज्ञानजन्यध्वंसप्रतियोगित्वमिति पूर्ववाद्यभिमताज्ञानलक्षणं ध्वन्यते । विभुविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यतोपगमादुत्तरोत्पन्नज्ञाननिवर्त्यपूर्वज्ञानेतिप्रसङ्गविधूननायाद्यं सत्यन्तम् । प्रागभावे तद्व्युदासाय द्वितीयं तत् । तदभावविलक्षणत्वरूपमेव । अनिर्वचनीयत्वेनोपगते तस्मिन् भावत्वरूपभावभूतधर्मविशेषस्यानुपगतेः । आत्मनि तन्निरसनाय विशेष्यदलघटकध्वंसप्रतियोगीत्यस्योपादानम् । चिरन्तननैयायिकदिशा परमाणुश्यामतायामद्वैतिदिशैव जीवब्रह्मविभागादौ तदपहस्तयितुं ज्ञानजन्यत्वांशस्य ध्वंसांशे निवेशनम् । न चैवमपि न्यायनये परमाणुश्यामताध्वंसईश्वरज्ञानजन्यतामादायोक्ततादवस्थ्यवारणाय ज्ञानवृत्तिविषयिताघटितधर्मावच्छिन्नजनकतानिरूपकत्वपर्यन्तज्ञानजन्यत्वस्य विवक्षणीयतयोत्तरोत्पन्नगुणत्वावच्छिन्नजनकतामादाय पूर्वज्ञानेति प्रसङ्गवारणसंभवेनाद्यसत्यन्तोपादानमनर्थकमिति वाच्यम् । जन्यतायां कार्यत्वानवच्छिन्नत्वनिवेशेनैव सुनिरासत्वात् ॥

सु०— **प्रत्यक्षं तावदहमज्ञो मामन्यं च न जानामीत्यपरोक्षावभासदर्शनात् ॥ ननु ज्ञानाभावविषयोऽयमवभासः । न । अपरोक्षावभासत्वात् । अहं सुखीतिवत् । अभावस्य षष्ठप्रमाणगम्यत्वात् । प्रत्यक्षाभाववादिनोऽपि नात्मनि ज्ञानाभावावगमः संभवति । मयि ज्ञानं नास्तीति प्रतिपत्तावात्मनि धर्मिणि प्रतियोगिनि चार्थेऽवगते तत्र ज्ञानसद्भावाज्ज्ञानाभावप्रत्ययायोगात् । अनवगतेऽपि धर्म्यादौ सुतरामभावानवगमात् । षष्ठप्रमाणगोचरे फललिङ्गाभावानुमेयेऽपि ज्ञानाभावे आत्मादाववगतेऽनवगते आत्मनि ज्ञानाभावप्रतिपत्त्ययोगात् । इह च त्वदुक्तमर्थं सङ्ख्यां वा शास्त्रार्थं वा न जानामीति विषयव्यावृत्तमज्ञानमनुभूय तच्छ्रवणादौ प्रवर्तते ।**

वा०— अत्र प्राधान्यक्रमेणोद्देशात्तत्क्रमेणैवोपपादयति ॥ **प्रत्यक्षं तावदिति** ॥ अज्ञानाश्रयत्वमात्रे प्रथमस्यात्मानात्मकर्मकाज्ञानाश्रयत्वे द्वितीयस्योदाहरणमिति द्रष्टव्यम् । अन्यथासिद्धिं शङ्कते ॥ **नन्विति** ॥ भट्टं प्रत्याह ॥ **अपरोक्षेति** ॥ विमतोऽवभासो नाभावविषयोऽपरोक्षावभासत्वादहं सुखीत्यवभासवदित्यनुमानविरोधान्नाभावविषयत्वं तस्येत्यर्थः । नात्राप्रयोजकत्वं त्वया शङ्कितुं शक्यत इत्याह ॥ **अभावस्य चेति** ॥ तथा च योग्यत्वे सत्यनुपलब्ध्याख्यषष्ठप्रमाणवेद्यत्ववादिनोऽभावस्यापरोक्षत्वाभ्युपगमोऽपसिद्धान्तकर इति भावः । प्रत्यक्षाभाववादिनः प्रत्याह ॥ **प्रत्यक्षेति** ॥ कथमसम्भव इत्यत उक्तप्रतीतेर्मयि ज्ञानं नास्तीत्येतत्समानविषयकताऽवश्यं वाच्या । तथा च किं धर्मिप्रतियोगिनावनुभूय

ज्ञानाभावप्रतिपत्तिरुतानुभूय । आद्यं निराह ॥ **मयीति** ॥ द्वितीयं निराह ॥ **अनवगत इति** ॥ पूर्वत्रान्यत्र क्लृप्ताभावज्ञानकारणसद्भावेऽपि विरोधमात्रेण यदा प्रकृतज्ञानाभावप्रतिपत्त्ययोगस्तदा धर्म्यादिप्रतिपत्तेरभावज्ञानकारणत्वात्तदभावे कार्याभाव इति किमु वक्तव्यमित्याशयेन सुतरामित्युक्तम् । इदं दूषणं न केवलं प्रत्यक्षाभाववादिमते किन्तु षष्ठप्रमाणवेद्यत्ववादिमतेऽपि व्यवहारस्य फलत्वेन ज्ञानं प्रति लिङ्गत्वात्तदभावेन ज्ञानाभावोऽनुमेय इति मते चेत्याह ॥ **षष्ठेति** ॥ ननु धर्म्यादिज्ञानसद्भावेऽपि न ज्ञानाभावविषयकत्वानुपपत्तिः । यज्ज्ञानमस्ति तदतिरिक्तज्ञानाभावविषयकत्वोपपत्तेरिति चेत् । न अहमज्ञ इत्यादौ ज्ञानसामान्यविरोधी ज्ञानत्वसामान्यावच्छिन्नप्रतियोगिताकः पदार्थोऽनुभूयते । तस्य चाभावत्वे वायौ रूपाभावस्येव यावज्ज्ञानविशेषाभावरूपत्वं वा विशेषाभावकूटातिरिक्तसामान्याभावरूपत्वं वा वक्तव्यम् । यत्किञ्चिद्विशेषाभावस्य प्रतियोगिजातीयसामानाधिकरण्येन सामान्यावच्छिन्नप्रतियोगिताकत्वासम्भवात् । तथा च ज्ञानसामान्याभावस्य यावत्तद्विशेषाभावकूटस्य वा यत्किञ्चित्प्रतियोगिव्यक्तिविरोधित्वेन धर्मिज्ञानरूपप्रतियोगितदवच्छेदकविषयज्ञानसद्भावदशायामन्ततः स्वज्ञानसद्भावदशायामनुपपत्त्या धर्म्यादिज्ञानाभावदशायां च कारणाभावादेव कार्योदयासम्भवेन ज्ञानाभावावगमासम्भवस्यात्राभिमतत्वात् । भावरूपाज्ञानं तु सर्ववृत्त्यधिष्ठानतया तत्र ज्ञानवुद्धिप्रयोजकं यज्ज्ञानवत्त्वसामान्यरूपं चैतन्यं तन्निवर्त्यतया ज्ञानसामान्यविरोध्येव । अहमज्ञ इति त्वहङ्कारसमानाश्रयतया स्थूलो गच्छतीतिवदुपपद्यत इत्यहङ्कारस्याज्ञानाश्रयत्वानुपपत्तिरपि नेत्याशयः । अर्थेन सहानुभूयमानत्वादपि नाज्ञानं ज्ञानाभाव इत्याह ॥ **इह चेति** ॥ यद्वैवं ज्ञानसामान्यविरुद्धमहमज्ञ इत्यनुभवप्रसिद्धमज्ञानं भावरूपमेवेत्युक्त्वा विशेषाज्ञानमपि भावरूपमेवेत्याह ॥ **इह चेति** ॥ त्वदुक्तमर्थं न जानामीत्यर्थेन सहानुभूयमानस्य कथं तज्ज्ञानाभावत्वम् । न च तत्सङ्ख्याविशेषज्ञानाभाव एवाज्ञानं तत्राप्यस्तीति वाच्यम् । न जानामीत्यनुभवस्य नियमेन तद्विषयकत्वे सङ्ख्यां न जानामीत्यननुभवप्रसङ्गात् । तत्र सङ्ख्याभावात् । न च तत्रान्यदेव विषय इति वाच्यम् । एकप्रकारानुभवस्य नानाविषयकत्वापत्तेः । न च सर्वत्रापरोक्षज्ञानाभाव एवाज्ञानमिति वाच्यम् । नित्यपरोक्षे शास्त्रार्थभूते धर्मादावपरोक्षज्ञानासत्त्वेन धर्मादिकं न जानामीत्यननुभावापातात् । न च जानतोऽपि परपरीक्षार्थं तथोक्तिमात्रं न तु न जानामीत्यनुभव इति वाच्यम् । तथात्वे तस्य श्रवणशुश्रूषादौ प्रवृत्त्यनुपपत्तेः । न च तदसाधारणधर्मस्य वा तद्धर्मव्यवस्थापकधर्मस्य वा यज्ज्ञानं तदभाव एव तत्र विषय इति वाच्यम् । विशिष्येदं न जानामीति तस्याप्यनुभूयमानत्वात् । किञ्च यत्र कदाऽपि न विशेषज्ञानमथ च न जानामीत्यनुभवस्तत्र विशेषज्ञानप्रागभावप्रध्वंसयोर्वक्तुमशक्यतया पुरुषान्तरप्रसिद्धविशेषज्ञानात्यन्ताभावस्य चेश्वरसाधारण्येनेश्वरस्याप्यज्ञतापातेन तत्र ज्ञानाभावविषयकत्वासम्भवेन भावरूपाज्ञानविषयकत्वे वक्तव्ये क्लृप्तत्वादन्यत्रापि तद्विषयकत्वमेव युक्तमित्याशयः ।

**स०**— अहमज्ञ इति विषयानालिङ्गिताज्ञानाश्रयत्वावगाहिनी, मामन्यं च न जानामीति तु आत्मरूपविषयालिङ्गिताज्ञानाश्रयत्वावगाहिनी प्रत्यक्षप्रतीतिरुपन्यस्ता । अत्राज्ञानात्मनो ज्ञानविषयत्व-मनुभवमात्रेणैवोक्तम् । न वस्तुतः । विवरणमते अज्ञानस्य चिन्मात्रविषयकत्वात् इत्यवधेयम् । प्रत्यक्षस्याभावविषयत्वेनाप्युपपत्तेर्न भावरूपाज्ञानसिद्धिरिति शङ्कते ॥ **ननु ज्ञानेति** ॥ विमतो ज्ञानाभावविषयः । अपरोक्षत्वात् । अहं सुखीति प्रत्ययवदित्यनुमानविरोधान्नाभावविषयत्वं तस्येत्याह ॥ **नापरोक्षेति** ॥ विपक्षे बाधकाभावादप्रयोजकत्वमित्याशङ्क्य किमेतत् षष्ठप्रमाणवादिनां चोद्यम् उत प्रत्यक्षाभाववादिनां इति विकल्प्याद्यं दूषयति ॥ **अभावस्येति** ॥ योग्यत्वे सत्यनुपलब्ध्याख्यषष्ठप्रमाण-विषयत्वेनाभावस्य पारोक्ष्यं ततश्चाभावप्रत्ययस्यापरोक्षत्वभङ्गो बाधक इत्यर्थः । द्वितीयं प्रत्याह ॥ **प्रत्यक्षेति** ॥ कथमसंभव इति शङ्कायां किं धर्मिप्रतियोगिनावनुभूय ज्ञानाभावमनुभवति उताननुभूयेति विकल्प्याद्यं प्रत्याह ॥ **मयीति** ॥ द्वितीयं दूषयति ॥ **अनवगत इति** ॥ धर्म्यादिप्रतिपत्तेरभाव-प्रतिपत्तिकारणत्वात् । तदभावे कार्याभाव इति किमु वक्तव्यमित्यभिप्रेत्याह ॥ **सुतरामिति** ॥ धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योः न ज्ञानसामान्याभावावगतिरित्येतं दोषं षष्ठप्रमाणगम्यत्व-वादिमतेऽनुमेयत्ववादिमते चातिदिशति ॥ **षष्ठप्रमाणगोचरे फललिङ्गाभावानुमेये चेति** ॥ व्यवहारादिरूपज्ञानफलाभावेनेत्यर्थः । अर्थेन सहानुभूयमानत्वादप्यज्ञानं न ज्ञानाभाव इत्याह ॥ **इहेति** ॥ इहलोके त्वदुक्तमर्थं न जानामीत्यज्ञानमनुभूय प्रवर्तत इति संबन्धः । अर्थे विज्ञानेऽपि तद्गतसंख्याज्ञानाभावाभिप्रायेण व्यपदेशसंभव इत्याशङ्क्य निदर्शनान्तरमाह ॥ **संख्यामिति** ॥ संख्यायां संख्यान्तराभावात्संख्यां न जानामीत्युक्तेः । संख्याज्ञानाभावविषयत्वं विरुद्धमित्यर्थः । तत्रापि परोक्षतया ज्ञाते तदपरोक्षज्ञानाभावाभिप्रायेण व्यपदेशोपपत्तिमाशङ्क्य नित्यपरोक्षापूर्वादौ व्यप-देशस्यापरोक्षज्ञानाभावाभिप्रायत्वानुपपत्तेर्मैवमित्याह ॥ **शास्त्रेति** ॥ जानन्नेव न जानामीति ब्रूते । परपरीक्षार्थं न त्वज्ञानसंभवादित्याशङ्क्य श्रवणगुरुशुश्रूषाद्यनुपपत्त्या तत्राज्ञानं कल्प्यत इत्याह ॥ **तत्र श्रवणादाविति** ॥

**प०**—**प्रत्यक्षाभाववादिन इति** ॥ प्रत्यक्षगम्याभाववादिन इत्यर्थः । अभावबुद्धेर्धर्मिप्रतियोगि-बोधाधीनत्वेन तद्भावाभावाभ्यामभावबुद्धिर्न संभवतीत्याह ॥ **मयि ज्ञानमिति** ॥ **प्रतियोगिनि चार्थ इति** ॥ ज्ञानरूपार्थ इत्यर्थः । यद्वा प्रतियोगिनि ज्ञाने तदवच्छेदकतयाऽर्थे चेत्यर्थः । ज्ञानस्य विषयनि-रूप्यत्वेन ज्ञानं नास्तीत्यस्य त्वदुक्तार्थज्ञानं नास्ति घटज्ञानं नास्ति पटज्ञानं नास्तीत्यादिरूपार्थकत्वात् ॥ **षष्ठेति** ॥ प्राभाकररीत्या प्रतियोग्यनुपलब्धिरूपषष्ठप्रमाणगोचरे । भाट्टरीत्या ज्ञाततालक्षणफलरूपकार्याख्य-लिङ्गाभावानुमेयेऽपीत्यर्थः। भट्टमते ज्ञानस्यातीन्द्रियत्वेन तदभावस्याप्यनुमेयत्वात्। ननु प्रतियोगिन्यर्थेऽनव-

गते ज्ञानाभावरूपाज्ञानस्य ज्ञानं न संभवतीत्ययुक्तम् । अर्थस्याज्ञानेऽपि तद्ज्ञानाभावधीसंभवादित्यतो नैव मित्याह ॥ **इह चेति** ॥ विप्रतिपन्नाज्ञानविषये चेत्यर्थः । सविषयकपदार्थे विषय एव व्यावर्तक इति वादिभिरङ्गीकाराद्विषयव्यावृत्तमित्युक्तम् । विषयावच्छिन्नमित्यर्थः ॥ **तच्छ्रवणादौ** अज्ञानव्यावर्तकतयाऽनुभूयमानार्थसङ्ख्यादिश्रवणादावित्यर्थः । तच्च न ज्ञानाभावपक्षे युक्तम् । अर्थानुभावस्यैव सत्त्वादिति भावः ॥

**या०**— अहमज्ञ इति विषयानालिङ्गिताज्ञानाश्रयत्वावगाहिनी मामन्यं च न जानामीति त्वात्माऽनात्मरूपविषयालिङ्गिताज्ञानाश्रयत्वावगाहिनी प्रत्यक्षप्रतीतिरुपन्यस्ता । अत्रानात्मनोऽज्ञानविषयत्वमनुभवमवलम्ब्यैवोक्तं न तु वस्तुतः । विवरणमतेऽज्ञानस्यात्ममात्रविषयकत्वादिति ध्येयम् । विपक्षेबाधकाभावादप्रयोजकत्वमित्याशङ्क्य किमेतत् षष्ठप्रमाणवादिनां चोद्यमुत प्रत्यक्षाभाववादिनामिति विकल्पं मनसि निधायाद्यं दूषयति ॥ **अभावस्येति** ॥ योग्यत्वे सत्यनुपलब्ध्याख्यषष्ठप्रमाणविषयत्वेनाभावस्य पारोक्ष्यम् । ततश्चाभावप्रत्ययस्य परोक्षत्वभङ्गो बाधक इत्यर्थः । द्वितीयं प्रत्याह ॥ **प्रत्यक्षेति** ॥ कथमसम्भव इति शङ्कायां किं धर्मिप्रतियोगिनावनुभूय ज्ञानाभावमनुभवत्युताननुभूयेति विकल्प्याद्यं प्रत्याह ॥ **मयीति** ॥ द्वितीयं दूषयति ॥ **अनवगत इति** ॥ धर्म्यादिप्रतिपत्तेरभावप्रतिपत्तिकारणत्वात्तदभावे कार्याभाव इति किमु वक्तव्यमित्यभिप्रेत्याह ॥ **सुतरामिति** ॥ धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योरित्येतं दोषमवभास्य षष्ठप्रमाणगम्यत्ववादिमतेऽनुमेयत्ववादिमते चातिदिशति ॥ **षष्ठप्रमाणगोचरे फललिङ्गाभावानुमेये चेति** । अर्थेन सहानुभूयमानत्वादप्यज्ञानं न ज्ञानाभाव इत्याह ॥ **इहेति** ॥ इह लोके त्वदुक्तमर्थं न जानामीति ज्ञानमनुभूय प्रवर्तन्त इति सम्बन्धः । अर्थे विज्ञातेऽपि तद्गतसङ्ख्याज्ञानाभावाभिप्रायेण व्यपदेशसम्भव इत्याशङ्क्य निदर्शनान्तरमाह ॥ **सङ्ख्यामिति** ॥ सङ्ख्यायां सङ्ख्यान्तराभावात्सङ्ख्यां न जानामीत्युक्ते सङ्ख्यानां ज्ञानाभावविषयत्वं विरुद्धमित्यर्थः । तत्रापि परोक्षतया ज्ञातेऽपरोक्षज्ञानाभावाभिप्रायेण व्यपदेशोपपत्तिमाशङ्क्य नित्यपरोक्षात्पूर्वादौ व्यपदेशस्यापरोक्षज्ञानाभावाभिप्रायत्वानुपपत्तेर्नैवमित्याह ॥ **शास्त्रेति** ॥ जानन्नेव न जानामीति ब्रूते परपरीक्षार्थं न त्वज्ञानसम्भवादित्याशङ्क्य श्रवणगुरुशुश्रूषणाद्यनुपपत्त्या तत्राज्ञानं कल्प्यत इत्याह ॥ **तच्छ्रवणादाविति** ॥ अर्थज्ञानतदभावयोर्यथा न समानकालत्वं तद्वत्तदज्ञानतज्ज्ञानयोरपि ।

**श्री०**—ननु ज्ञानाभावस्याप्यपरोक्षप्रतीतिविषयत्वं किं न स्यादित्यत आह ॥ **अभावस्य चेति** ॥ षष्ठप्रमाणमनुपलब्धिरूपम् । **प्रतियोगिनि चार्थ इति** ॥ प्रतियोगिभूते ज्ञानरूपेऽर्थ इत्यर्थः ॥

**तत्रेति** ॥ आत्मनि धर्मिप्रतियोगिज्ञानसद्भावाज्ज्ञानसामान्याभावप्रतिपत्तिर्न सम्भवतीत्यर्थः । **सुतरामितीति** ॥ सद्भ्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यत इति वचनेन तदभावे ज्ञानाभावज्ञानायोगादिति भावः ॥ **फललिङ्गेति** ॥ व्यवहाररूपं यज्ज्ञानफलं तल्लक्षणं यल्लिङ्गं तदभावेन ज्ञानाभावोऽनुमेय इत्यर्थः । अनुमेयेऽपि ज्ञानाभावे ज्ञानाभावोऽनुमेय इत्यङ्गीकार इत्यर्थः ॥ **आत्मादाविति** ॥ धर्मिभूते आत्मनि प्रतियोगिभूते ज्ञाने चेत्यर्थः ।

**च०—अहमज्ञ इतीति** ॥ विषयितासंसर्गावच्छिन्नकिञ्चिद्वृत्त्यवच्छेदकत्वानिरूपकाज्ञानवृत्तिप्रकारतानिरूपकाहमर्थनिष्ठविशेष्यताका प्रथमप्रत्यक्षप्रतीतिः, अन्त्या तु तत्संसर्गावच्छिन्नस्वस्वान्यवृत्त्यवच्छेदकताकतद्वृत्तिप्रकारताकतद्वृत्तिविशेष्यताकावसेया । विवरणेनात्मनो ज्ञानविषयत्वानुपगमेऽप्यनुभवमनुरुध्य तथोक्तिरिति स्थितम् । प्रकृतावभासपक्षकज्ञानाभावविषयकत्वाभावसाध्यकापरोक्षावभासत्वलिङ्गकाहं सुखीति प्रत्ययनिदर्शनकानुमाने बाधकतर्काभावनियन्त्रिताप्रयोजकत्वशङ्कापरिजिहीर्षया शङ्कमानः कुमारभट्टः नैयायिको वेति कल्पद्वयमभिप्रेत्याद्यं प्रत्याह ॥ **षष्ठेति** ॥ तथा च योग्यत्वे सत्यनुपलब्ध्याख्यषष्ठप्रमाणवेद्यतामूरीकुर्वतोऽभावस्यापरोक्षावभासविषयत्वोपगमोऽपसिद्धान्तप्रसञ्जक इति भावः। द्वितीयं प्रत्यस्यति ॥ **प्रत्यक्षाभावेति** ॥ अभावस्योक्तावभासविषयतामुपजिगमिषताधर्मिप्रतियोगिप्रतिपत्तिसमवधानकालीनताहृशावभासविषयतोपेयते तदसमवधाने तद्विषयता वेति कल्पद्वयमनुसंदधानस्तत्समवहितिदशायां प्रतियोगितावच्छेदकावच्छिन्नस्याभावविरोधित्वादेव ज्ञानत्वावच्छिन्नप्रतियोगिताकाभावरूपविषयासत्त्वेनैव तादृशाभासगोचरता न सङ्गच्छत इत्याद्यं प्रत्याह ॥ **नापीति** ॥ द्वितीयं निरस्यति ॥ **अनवगत इति** ॥ **सुतरामिति** ॥ अभावप्रतीतिरूपफलोत्पत्तिप्रयोजकसामग्रीघटकधर्मिप्रतियोगिप्रतीत्यभावादिति भावः । षष्ठप्रमाणवेद्यतामनुमानवेद्यतां चोपगच्छतां मतेऽप्यभिहितक्षतिं प्रतिदिशति ॥ **षष्ठेति** ॥ विषयोपरागेणानुव्यवसायेन विषयीक्रियमाणाज्ञानस्य निर्विषयज्ञानाभावरूपता न घटत इत्याह ॥ **इहेति** ॥ द्वितीयान्तत्रिकस्याऽऽवर्तितजानातिनान्वयः । ल्यबन्तसप्तम्यन्तक्रियावाचकान्तराणामप्यावर्तितानामप्यन्वयः । तदिति सर्वनाम्ना त्वदुक्तार्थादित्रिकं परामृश्यते । इह लोके । अर्थगोचरज्ञानसमवहितावपि तद्वृत्तिसंख्यावगाहिज्ञानाभावनिबन्धन एव त्वदुक्तमर्थं जानामीति व्यपदेश इत्यपि सुवचतया नानेन भावरूपाज्ञानसिद्धिरित्यरुचेराह ॥ **संख्यामिति** ॥ संख्याधिकरणकसंख्यान्तरराहित्येन तज्ज्ञानविषयकज्ञानाभावपरतया तन्नयनासंभव इति भावः । संख्योपरक्तपरोक्षज्ञानसमवधानेऽपि तादृशापरोक्षज्ञानाभावनियन्त्रितः स इत्यतो नित्यपरोक्षस्थलमुदाहरति ॥ **शास्त्रार्थमिति** ॥ जानानस्यापि परपरीक्षाफक्किका न जानामीत्युक्तिरेव न न जानामीत्यनुभव इति शङ्का तु तज्ज्ञानानुकूलश्रवणशुश्रूषाद्यनुपपत्तिप्रसङ्गेनानवकाशैव । न च तदसाधारणधर्मस्य तद्धर्मव्यवस्थापकधर्मस्य वा यज्ज्ञानं तदभाव एव तत्र विषय इति वाच्यम् । विशि-

-प्येदं न जानामीति तस्याप्यनुभूयमानत्वात् । किं च यत्र कदापि न विशेषज्ञानमथ च न जानामी-त्यनुभवस्तत्र विशेषज्ञानप्रागभावप्रध्वंसयोर्वक्तुमशक्यतया पुरुषान्तरप्रसिद्धविशेषज्ञानात्यन्ताभावस्य चेश्वर-साधारण्येनेश्वरस्याप्यज्ञानापातेन तत्र ज्ञानाभावविषयकत्वासंभवेन भावरूपाज्ञानविषयकत्वे वक्तव्ये क्लृप्त-त्वादन्यत्रापि तद्विषयकत्वमेव युक्तमित्याशयोपवर्णनं स्थितम् । ननु पुरुषान्तरीयत्वघटितधर्मावच्छिन्न-प्रतियोगिताकाभावस्य विषयतायामुपगतायामेवेश्वरसाधारण्ये न तस्याप्यज्ञानप्रसञ्जनावकाशः । तदघटि-तार्थादिविशेषितज्ञानत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावस्यैव विषयत्वोपगमेनोक्तापत्त्यनवकाशात् । न च प्रतियोगिज्ञानविधया हेतुभूतस्यार्थोपहितज्ञानगोचरज्ञानस्योक्तप्रतियोगितावच्छेदकाक्रान्ततया तत्समवधानदशायां तद्धर्मावच्छिन्नाभावावगाहिनी धीः कथमुदीयादिति वाच्यम् । अर्थादिवृत्तिमुख्य-विशेष्यताघटितस्य ज्ञानवृत्तिविशेष्यत्वानिरूपितार्थनिष्ठविषयताघटितधर्मस्य वाऽवच्छेदकत्वस्य वाऽभिप्रेत-तयोक्तक्षत्यभावादिति चेन्मैवम् । दण्डी देवदत्त इति ज्ञानसमवधानदशायामपि दण्डं न जानामीति प्रतीत्यापत्त्याद्यकल्पस्य घटविशेषितं ज्ञानमिति तत्समवधानेऽपि घटं न जानामीति तदापत्त्या च द्वितीयकल्पस्याप्यसंभवात् ।

**सु० — भावरूपाज्ञानप्रत्यक्षवादे तु सत्यप्याश्रयप्रतियोगिज्ञाने ज्ञानाभावस्येव भावा-न्तरस्यापि नानुपपत्तिर्नियन्तुं शक्यते । न चाश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्यं भावा-न्तरस्याज्ञानस्य निवर्तकम् । तस्याज्ञानविषयप्रतिभासत्वात् । न हि स्वज्ञानेन स्वयं निवर्तते । नन्वज्ञानस्य व्यावर्तको विषयः कथं साक्षिचैतन्येनावभास्यते, प्रमाणायत्तत्वाद्विषयसिद्धेरिति । उच्यते । सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव । तत्र ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षते । अन्यस्तु सामान्याकारेण विशेषाकारेण वाऽज्ञानव्यावर्तकतया सदा साक्षादवभास्यत इत्युपपत्तिसहितमज्ञानप्रत्यक्षं भावरूपमेवात्मन्यज्ञानं गमयतीति सिद्धम् ।**

वा० — ननु भावरूपाज्ञानं ज्ञानसामान्यविरुद्धं चेत् । कथं न नित्यनिवृत्तं स्यात्कथं वा तदवच्छेदकार्थविषयकचैतन्येन प्रतीयेत । तस्यैव चैतन्यस्य तज्ज्ञानसामान्यरूपत्वात् । न हि प्रकाशेन तमः प्रकाश्यत इत्यत आह ॥ **भावरूपाज्ञानेति** ॥ आश्रयेति दृष्टान्तार्थमुक्तम् । यद्यपि ज्ञानसामा-न्यात्मकं चैतन्यं तदज्ञाननिवर्तकं तथाऽपि विषयापरोक्षवृत्तिप्रतिबिम्बितचैतन्यमेव ज्ञानत्वसामान्यरूप-चैतन्यात्मना निवर्तकम् । अविद्यावृत्तिप्रतिबन्धकावरणाभिभवस्य तदानीमेव सत्त्वात् । अपरोक्षवृत्त्य-न्वयव्यतिरेकाभ्यां न जानामीत्यज्ञानस्य ज्ञानसामान्यविरोधित्वानुभवेन च तथैव कल्प्यत्वात् ।

अतोऽभावस्येव भावस्यापि न स्वविषयकज्ञानेन विरोध इति भावः । किञ्चाज्ञानविषयकापरोक्षवृत्त्यनभिव्यक्तमन्तःकरणावच्छिन्नचैतन्यं नाज्ञाननिवर्तकं तत्स्फोरकत्वात् । यद्यत्साधकं न तन्मात्रं तन्निवर्तकं यथा घटज्ञानमित्यभिप्रेत्याह ॥ **न चाश्रयेति** ॥ न चाप्रयोजकत्वम् । साधकमात्रस्य निवर्तकत्वे पटादेरपि स्वज्ञानान्निवृत्तिः स्यादित्यभिप्रेत्याह ॥ **न हीति** ॥ यद्वा नन्वर्थज्ञानतदभावयोरिव तज्ज्ञानतदज्ञानयोरप्यसमानकालीनत्वमेव । एतदज्ञानं नैतज्ज्ञानसमानकालीनमेतज्ज्ञानत्वादेतज्ज्ञानाभाववदित्यनुमानादित्यतस्तत्राप्रयोजकत्वमाह ॥ **भावरूपाज्ञानेति** ॥ भावाभावयोः खल्वेककालीनत्वं विरुद्धं न तु भावयोः । न हि घटभावे पटभावानुपपत्तिरित्यर्थः । एतदज्ञानं नैतज्ज्ञानसमानकालीनमेतज्ज्ञाननिवर्त्यत्वादेतज्ज्ञानप्रागभाववदित्यत्रापि हेतुसाध्यज्ञानशब्देन वृत्तिविवक्षायां सिद्धसाध्यतामभिप्रेत्य चैतन्यविवक्षायामसिद्धिमाह ॥ **न चेति** ॥ विमतं नाज्ञाननिवर्तकं तत्स्फोरकत्वात् यद्यत्स्फोरकं न तन्निवर्तकं यथा घटज्ञानमित्यर्थ इति । नन्वज्ञानमित्यप्रतीत्या साक्षिचैतन्यस्य केवलाज्ञानभासकत्वायोगेन विषयविशेषिताज्ञानभासकत्वं वक्तव्यम् । न च तद्युक्तम् । प्रमाणगम्यत्वनियमाद्विषयस्य । अन्यथा प्रमाणवैयर्थ्यापत्तेः । तथा चासिद्धिरित्याशङ्कते ॥ **नन्विति** ॥ केवलस्य विषयस्य साक्षिवेद्यत्वाभावेऽप्यज्ञाततताविशिष्टस्य साक्षिवेद्यत्वेन नासिद्धिरित्याह ॥ **उच्यत इति** ॥ तत्र प्रमाणवैयर्थ्यं परिहर्तुं ज्ञाततयेत्युक्तमुपपादयति ॥ **तत्रेति** ॥ प्रमाणानां ज्ञातताजनकत्वान्न वैयर्थ्यमिति भावः । न च केवलस्य साक्षिवेद्यत्वाभावे विशिष्टस्यापि न तदिति वाच्यम् । अतीन्द्रियस्यापि परमाणोः परमाणुमहं जानामीति ज्ञानविशेषणतया मानसप्रत्यक्षवेद्यत्ववदुपपत्तेरिति भावः । ज्ञाततविशिष्टस्य प्रमाणव्यवधानेन चिद्भास्यत्वेऽज्ञाततताविशिष्टस्यापि सव्यवधानत्वं स्याद्विषयत्वाविशेषादित्यत आह ॥ **अन्यस्त्विति** ॥ अज्ञाततताया अनादित्वान्न तज्जनने प्रमाणापेक्षा नापि तद्बोधने विरोधः । तस्मात्केवलसाक्षिवेद्यत्वमिति भावः । नन्वज्ञानस्यानुमानाद्यविषयत्वे तदुक्तिवैयर्थ्यापत्त्या तद्विषयत्वे चावच्छेदकीभूतविषयस्याप्यनुमानादिविषयत्वात्प्रमाणविषये कथमज्ञानं साक्षिचैतन्यस्याज्ञानाविरोधित्वेऽपि प्रमाणस्य तद्विरोधित्वादिति चेन्न । परोक्षवृत्तेरज्ञाननिवर्तकत्वासम्मतेः । अन्यथाऽपरोक्षीकृतवह्नेरिव पर्वते वह्निरस्तीत्याप्तवाक्यावगतवह्निसद्भावस्यापि पुंस इदानीं पर्वते वह्निरस्ति न वेति संशयाभावापत्तेः । तदभावे च तन्मूलकस्तादृशः प्रश्नो न स्यादिति । यद्वा ज्ञाततयेति ज्ञातत्वाकारेणेत्यर्थः ॥ **प्रमाणव्यवधानमिति** ॥ एतच्च बाह्याभिप्रायेणोक्तम् । सुखादौ प्रमाणव्यवधानाभावाच्चैतन्यविषये तस्मिन्ज्ञातत्वसंभवाच्च । अन्यथा तत्र जानामिति व्यवहाराभावप्रसङ्गादिति । उपक्रान्तमज्ञानप्रत्यक्षं निगमयति ॥ **इतीति** ॥ धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योर्ज्ञानाभावप्रतिपत्त्यनुपपत्तिरुपपत्तिशब्दार्थः ।

स०— अर्थज्ञानतदभावयोर्यथा न समकालत्वं तद्वत्तदज्ञानतज्ज्ञानयोरपि । एतदज्ञानम् नैतज्ज्ञानसमानकालीनम् । एतदज्ञानत्वादेतज्ज्ञानाभाववदित्याशङ्क्याप्रयोजकत्वेन परिहरति ॥ **भावरूपाज्ञानेति** ॥ भावाभावयोः खल्वेककालत्वं विरुद्धम् । न तु भावयोः । न हि घटभावे पटभावानुपपत्तिरित्यर्थः । एतदज्ञानं नैतज्ज्ञानसमकालीनमेतज्ज्ञाननिवर्त्यत्वादेतज्ज्ञानप्रागभाववदित्याशङ्क्य किं ज्ञानशब्देन वृत्तिर्विवक्षते । उत साक्षी । नाद्यः । सिद्धसाध्यत्वादित्यभिप्रेत्य द्वितीयेऽसिद्धिमाह ॥ **न चेति** ॥ विमतं नाज्ञाननिवर्तकम् । तत्स्फोरकत्वात् यद्यत्स्फोरकं न तन्निवर्तकं यथा घटज्ञानमित्यर्थः । असिद्धो हेतुरिति शङ्कते ॥ **न हीति** ॥ घटज्ञानेन घटस्यापि निवृत्तिप्रसङ्गादित्यर्थः । असिद्धो हेतुरिति शङ्कते ॥ **नन्विति** ॥ किं साक्षिचैतन्यं घटविशेषिताज्ञानं भासयति । उत केवलम् । नाद्यः । विषयस्य प्रमाणगम्यत्वनियमात् । अन्यथा प्रमाणवैयर्थ्यात् । नेतरो ज्ञानमिति अप्रतीतेरित्यर्थः । केवलस्य साक्षिवेद्यत्वाभावेऽपि विशिष्टस्य साक्षिवेद्यत्वादज्ञानस्फोरकत्वे सिद्धमित्याह ॥ **उच्यत इति** ॥ न च प्रमाणवैयर्थ्यमपीत्याह ॥ **तत्र ज्ञाततयेति** ॥ प्रमाणानां ज्ञातताजनकत्वान्न वैयर्थ्यमित्यर्थः । न च केवलस्य साक्षिवेद्यत्वाभावे विशिष्टस्यापि न साक्षिवेद्यत्वमिति वाच्यम् । केवलस्य परमाणोर्मानसप्रत्यक्षत्वाभावेऽपि परमाणुमहं जनामीति ज्ञानविशेषणतया प्रत्यक्षविषयत्वोपगमादित्यर्थः । ज्ञाततविशिष्टस्य प्रमाणव्यवधानेन चिद्भास्यत्वे विशिष्टविषयत्वाविशेषादज्ञातताविशिष्टस्यापि स व्यवधानत्वमित्याशङ्क्याह ॥ **अन्यस्त्विति** ॥ अज्ञानव्यावर्तकताया अनादित्वान्न तज्जनने प्रमाणापेक्षा नापि तद्बोधने । विरोधात् । तस्मात्साक्षात् साक्षिवेद्यत्वमित्यर्थः । अज्ञानप्रत्यक्षतां निगमयति ॥ **इतीति** ॥ धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योर्न ज्ञानाभावप्रतिपत्तिरित्युपपत्तिशब्दार्थः ।

प०—भावरूपाज्ञानपक्षे तु युज्यत इत्याह ॥ **भावरूपेति** ॥ **नियन्तुमिति** ॥ आपादयितुमिति यावत् । कुत इत्यत आह ॥ **नचेति** ॥ न हीत्यर्थः । आश्रयः आत्मा प्रतियोगि च ज्ञानम् । तदुभयं च साक्षिवेद्यम् । ज्ञानद्वारा ज्ञानविषयोऽर्थश्च साक्षिवेद्य इति भावः ॥

या०— एतज्ज्ञानं नैतज्ज्ञानसमानकालीनमेतदज्ञानत्वादेतज्ज्ञानाभाववदित्याशङ्क्याप्रयोजकत्वेन परिहरति ॥ **भावरूपाज्ञानेति** ॥ भावाभावयोः । खल्वेककालत्वं विरुद्धं न तु भावयोः । न हि घटभावे पटभावानुपपत्तिरित्यर्थः । एतादृशज्ञानं नैतज्ज्ञानसमानकालीनमेतज्ज्ञाननिवर्त्यत्वादेतज्ज्ञानप्रागभाववदित्याशङ्क्य किं ज्ञानशब्देन वृत्तिर्विवक्ष्यते उत साक्षी । नाद्यः । सिद्धसाध्यत्वादित्यभिप्रेत्य द्वितीयेऽसिद्धिमाह ॥ **न चेति** ॥ विमतं नाज्ञाननिवर्तकं तत्स्फोरकत्वाद्यद्यत्स्फोरकं न तन्निवर्तकं यथा घटज्ञानमित्यर्थः । विपक्षे बाधकमाह ॥ **न हीति** ॥ घटज्ञानमित्यर्थः । घटज्ञानेन घटस्यापि निवृत्तिप्रसङ्गादित्यर्थः । असिद्धो हेतुरिति शङ्कते ॥ **नन्विति** ॥ किं साक्षिचैतन्यं घटविशेषिताज्ञानं भासयत्युत

केवलम् । नाद्यः। विषयस्य प्रमाणगम्यत्वनियमात् । अन्यथा प्रमाणवैयर्थ्यात् । नेतरः। अज्ञानमित्यप्रतीतेरित्यर्थः । केवलस्य साक्षिवेद्यत्वाभावेऽपि विशिष्टस्य साक्षिवेद्यत्वादज्ञानस्फोरकत्वं सिद्धमित्याह ॥**उच्यत इति** ॥ न च प्रमाणवैयर्थ्यमपीत्याह ॥ **तत्र ज्ञाततयेति** ॥ प्रमाणानां ज्ञातताजनकत्वान्न वैयर्थ्यमित्यर्थः । न च केवलस्य साक्षिवेद्यत्वाभावे विशिष्टस्यापि न साक्षिवेद्यत्वमिति वाच्यम् । केवलस्य परमाणोर्मानसप्रत्यक्षत्वाभावेऽपि परमाणुमहं जानामीति ज्ञानविशेषणतया प्रत्यक्षविषयत्वोपगमादित्यर्थः । ज्ञातताविशिष्टस्य प्रमाणव्यवधानेन चिद्भास्यत्वे विषयत्वाविशेषादज्ञातताविशिष्टस्यापि सव्यवधानत्वमित्याशङ्क्याह ॥ **अन्यस्त्विति** ॥ अज्ञातताया अनादित्वान्न तज्जनने प्रमाणापेक्षा । नापि तद्बोधने विरोधात् । तस्मात्साक्षात्साक्षिवेद्यत्वमित्यर्थः । अज्ञानस्योक्तप्रत्यक्षतां निगमयति ॥ **इतीति** ॥ धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योर्न ज्ञानाभावप्रतिपत्तिरित्युपपत्तिशब्दार्थः ॥

**श्री०**— ननु धर्म्यादिप्रतिपत्त्यप्रतिपत्तिभ्यां यथा न ज्ञानाभावप्रतिपत्तिस्तथैव भावरूपाज्ञानप्रतिपत्तिरपि न सम्भवति । धर्म्यादिज्ञानसद्भावे भावरूपाज्ञानायोगात्तदभावे तु सुतरां तज्ज्ञानायोग इत्यत आह ॥ **भावरूपाज्ञानेति** ॥ भावरूपाज्ञानं साक्षिप्रत्यक्षसिद्धमिति वादे त्वित्यर्थः ॥ **ज्ञानाभावस्येवेति** ॥ धर्म्यादिप्रतिपत्त्यपत्तिभ्यां ज्ञानाभावप्रतिपत्तिर्यथा सम्भवत्येवं भावान्तरस्य ज्ञानाभावाद्भिन्नस्य भावरूपस्याज्ञानस्य प्रतीतौ नानुपपत्तिर्नियन्तुं नियमितुं वक्तुं न शक्यत इत्यर्थः । ननु धर्मिप्रतियोगिज्ञानरूपसाक्षिचैतन्यं यथा ज्ञानाभावनिवर्तकमेवं भावरूपाज्ञानस्यापि निवर्तकमतः कथं तेन तत्प्रतिपत्तिरित्यत आह ॥ **न चेति** ॥ नहीत्यर्थः । अज्ञानस्य निवर्तकं न हि । कुतः । वृत्तेरेवाज्ञाननिवर्तकत्वादिति भावः । ननु साक्षिचैतन्यं कुतो नाज्ञाननिवर्तकमित्यतस्तस्याज्ञानस्फोरकत्वादित्याह । **तस्येति** ॥ तथा च साक्षिचैतन्यं नाज्ञाननिवर्तकमज्ञानस्फोरकत्वात् । अज्ञानविषयकप्रतिभासत्वादिति यावत् । यद्यत्स्फोरकं न तत्तन्निवर्तकम् यथा घटस्फोरकं घटज्ञानमित्यर्थः । अत्रानुमानेऽप्रयोजकतापरिहाराय विपक्षेबाधकमाह ॥ **न हीति** ॥ तत्स्फोरकस्यापि तन्निवर्तकत्वे घटस्फोरकस्य घटज्ञानस्यापि घटनिवर्तकत्वं स्यात् । न ह्येवमस्ति च । निवृत्तेरदर्शनादित्यर्थः । यदुक्तमाश्रयप्रतियोगिज्ञानरूपं साक्षिचैतन्यमिति तदयुक्तम् । यद्यप्यज्ञानाश्रयभूतात्मज्ञानरूपं साक्षिचैतन्यं भवति । तथाऽपि न प्रतियोगिज्ञानरूपं तद्भवितुं युक्तम् । भावरूपाज्ञानप्रतियोगिनः शास्त्रार्थस्य वृत्तिविषयत्वेन साक्षिचैतन्याविषयत्वादित्याशङ्कते ॥ **नन्विति** ॥ **प्रमाणेति** ॥ प्रमारूपसाक्षिचैतन्यज्ञप्तिकरणत्वेन वृत्तेः प्रमाणत्वं मन्तव्यम् । वृत्त्याऽज्ञाने निरस्तेऽधिष्ठानचैतन्यस्य प्रकाशनादिति भावः । शास्त्रार्थरूपप्रतियोगिनः साक्षात्साक्षिविषयत्वाभावेऽपि परम्परया भविष्यति । यथा परमते परमाणोः साक्षान्मानसप्रत्यक्षविषय-

त्वाभावेऽपि व्यवसायद्वारा तदवच्छेदकत्वेन परमाणुमहं जानामीति मानसप्रत्यक्षे भासते तद्वदित्याशयेन मायावादी समाधत्ते ॥ **उच्यत इति** ॥ ज्ञाततया ज्ञानावच्छेदकत्वेन । अज्ञाततयाऽज्ञानावच्छेदकत्वेन । ज्ञाततया विषयो ज्ञानावच्छेदकीभूतो विषयः । प्रमाणव्यवधानं वृत्तिव्यवधानम् । ज्ञाततायाः सादित्वेन प्रमाणानां तज्जनकत्वादित्यर्थः । तथाच वृत्तिरूपज्ञानस्य साक्षिविषयत्वेन तदवच्छेदकीभूतो विषयोऽपि तद्द्वारा साक्षिभास्य इत्याशयः । अन्योऽज्ञानावच्छेदकीभूतो विषयः । सामान्याकारेण शास्त्रार्थं न जानामीति सामान्याकारेण । विशेषाकारेण धर्मादिकं न जानामीति विशेषाकारेण ॥ **सदेति** ॥ प्रमाणप्रवृत्त्यभावदशायां सर्वदा साक्षिणाऽवभास्यत इत्यर्थः । अज्ञाततया अनादित्वान्न तज्जनने प्रमाणापेक्षेत्यर्थः । केचित्तु अज्ञानावच्छेदकीभूतविषयप्रतीतौ न प्रमाणापेक्षा । तथात्वेऽज्ञानस्यैवायोगात् । वृत्तेस्तद्विरोधित्वादित्यर्थ इत्याहुः ।

च०— ननु तद्गोचरज्ञानत्वावविच्छिन्नाभावे तदवच्छिन्ननिरूपिताधिकरणतावच्छेदककालावच्छिन्नतादृशाधिकरथतावन्निष्ठाधिकरणतानिरूपकता नेति यथा तद्वत्तद्गोचराज्ञानत्वावच्छिन्नेऽपि तादृशाधिकरणतानिरूपकत्वाभावोऽज्ञानपदवाच्यत्वेन सुसाध इत्याशङ्कामप्रयोजकत्वेल प्रतिविधत्ते ॥ **भावरूपाज्ञानेति** ॥ **भावान्तरस्यापीति** ॥ न हि घटसत्ता पटसंज्ञां विरुणद्धीत्यर्थः । एतज्ज्ञानप्रागभावं निदर्शनीकृत्य एतज्ज्ञानजनितनिवृत्तिप्रतियोगित्वेन तद्धर्मावच्छिन्ने तादृशाभावसाधनमपि ज्ञानशब्देन वृत्तेर्विवक्षायां सिद्धसाधनताप्रसङ्गेन साक्षिरूपस्याभिप्रेततायामसिद्ध्यापत्त्या न सङ्गच्छत इत्याह ॥ **न चेति** ॥ व्यावर्तकः एकतराज्ञानधर्मिकाज्ञानान्तरप्रतियोगिकव्यावृत्तिबुद्धिजनकः । सविषयकाणां विषयविनिर्मोकेण भानानुपगमेन विषयानुपहितज्ञानभानं तु दुरुपगममेव । उपाधिभूतविषयग्रहणे साक्षिणोनीशानतया तदुपहिततद्भानोरीकृतिरपि न सङ्गच्छत इत्याशयः । मुख्यविशेष्यतया बाह्यार्थावगाहनेऽनुव्यवसायस्य तत्स्थानाभिषिक्तसाक्षिणो वा स्वातन्त्र्याभावेऽपि तद्विषयज्ञानांशे विषयिताप्रत्यासत्त्या विशेषणतयावगाहने विषयासंसर्गाग्रहव्यवसायरूपोपनायकज्ञानसाचिव्यनियन्त्रितं तदस्त्येव घटमहं जानामीत्याकारानुरोधादिति यथा तद्वदज्ञानांशे तादृशप्रत्यासत्त्या तयाविधया तदवगाहनेऽपि तदस्त्येवेति न क्षतिरिति समाधत्ते ॥ **उच्यत इति** ॥ ज्ञाततया तादृशप्रत्यासत्त्या ज्ञानांशे विशेषणतया प्रमाणानां ज्ञातताजनकत्वान्न वैयर्थ्यमिति स्थितम् । अज्ञाततया अज्ञानांशे तादृशप्रत्यासत्त्या विशेषणतया अज्ञातताया अनादित्वान्न तज्जननप्रमाणापेक्षेति स्थितम् । प्रमाणव्यवधानं प्रमाणजनितव्यवसायरूपोपनायकज्ञानम् । अन्यस्तु अज्ञानविशेषणतापन्नस्तु । सामान्याकारेण पदार्थत्वाद्याकारेणाविशेषाकारेण । शास्त्रार्थत्वसंख्याद्याकारेण । अज्ञानव्यावर्तकतया एकतराज्ञानधर्मिका ज्ञानान्तरप्रतियोगिकव्यावृत्ति-

प्रतीतिजनकतया ॥ **अवभास्यत इति** ॥ बिम्बयोपनायकं प्रकृते ज्ञानमेवेति भावः । अज्ञानस्योक्तप्रत्यक्षतां निगमयति ॥ **इतीति** ॥ **उपपत्तिसहितम्** धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योर्ज्ञानाभावप्रतिपत्त्यनुपपत्तिरूपोपपत्तिसहितम् ।

**सु०—किञ्च न किञ्चिदवेदिषमिति परामर्शसिद्धसौषुप्तिकानुभवोऽप्यत्र प्रमाणम् । न च ज्ञानाभावविषयोऽयमनुभवः, अभावप्रतीतेर्धर्मिप्रतियोगिबोधपराधीनतया तदभावे तस्यानुभवितुमयोग्यत्वस्योक्तत्वात् । न च नायं सुषुप्तिकालीनानुभवपरामर्शः, किन्तु तदुत्थितस्येदानीमेव सौषुप्तिकज्ञानाभावानुमानमिति वाच्यम् ; तदनुमापकलिङ्गासिद्धेः । न च सामग्र्यभावो लिङ्गम् , तस्याप्यसिद्धेः । न च ज्ञानाभावेन तदनुमानम् , अन्योन्याश्रयतापत्तेः । न च स्मरणाभावो ज्ञानाभावे लिङ्गम् , व्यभिचारात् ।**

**वा०**— एवं विवरणोक्तं प्रत्यक्षमुदाहृत्य चित्सुखोक्तं तदुदाहरति ॥ **किञ्चेति** ॥ अननुभूते स्मरणायोगात्सुप्तोत्थितस्य न किञ्चिदहमवेदिषमिति जायमानस्मरणेनोन्नीतः सुषुप्तिकालीनोऽज्ञानानुभवश्चाज्ञाने प्रमाणमित्यर्थः । सुषुप्तिकाले धर्मिप्रतियोगिज्ञानाभावेन ज्ञानाभावानुभवासम्भवमाह ॥ **अभावेति** ॥ अनुभवपरामर्शोऽनुभवजन्यस्मरणमित्यर्थः ॥ **अन्योन्येति** ॥ सामग्र्यभावानुमानमित्यन्योन्याश्रयापत्तेरित्यर्थः ॥ **व्यभिचारादिति** ॥ अनुभूतानां बहूनामर्थानां स्मरणाभावस्य प्रसिद्धेर्विशेषतो व्यभिचारस्थलानुपादानमिति ज्ञेयम् ॥ **अनुमानमपीति** ॥ अनेनोक्तमावश्यकत्वमुपपादितं भवति । धर्म्यंशस्याज्ञानानिवर्तकत्वात्तद्व्यावृत्तये आद्यं विशेषणम् । साध्यविशेषोपादानसिद्धधर्मिविशेषस्पष्टीकरणाय द्वितीयम् । साध्ये आत्मपूर्वकत्वेनार्थान्तरतानिरासाय वस्त्वन्तरेति । चक्षुराद्यदृष्टपूर्वज्ञानस्वप्रागभावव्यावृत्तये क्रमेण पूर्वपूर्वविशेषणानि । स्वविषयस्वविषयावरकान्धकारविषयगताज्ञाततामिथ्याज्ञानव्यावृत्तये उत्तरोत्तरविशेषणानि । हेतौ धारावाहिकद्वितीयादिज्ञानव्यावृत्तयेऽप्रकाशितेति । अर्थपदं स्पष्टार्थम् । दृष्टान्ते सौरालोकस्थदीपप्रभाव्यावृत्तयेऽन्धकारेति । द्वितीयादिप्रभाव्यावृत्तये प्रथमेति ।

**स०— किं चेति** ॥ उत्थितस्य न किञ्चिदवेदिषमिति परामर्शादुन्नीतो यः सौषुप्तिकानुभवः । सोऽपि प्रमाणमित्यर्थः । अस्ति तावत्सुप्तोत्थितस्यैतावन्तं कालं न किञ्चिदवेदिषमिति परामर्शः । स च सुषुप्तकालीनमज्ञानानुभवं गमयति । अननुभूते परामर्शायोगात् । स चानुभवः तत्र प्रमाणमित्यर्थः ॥ **न च स्मरणाभाव इति** ॥ तथा च नान्योन्याश्रय इति भावः ॥ **व्यभिचारादिति** ॥ उपेक्षणीये स्मरणाभावेपि ज्ञानसद्भावादिति भावः ।

प०—**अन्योन्याश्रयतेति** ॥ सिद्धे सौषुप्तिकज्ञानाभावे सौषुप्तिकसामग्र्यभावसिद्धिः सिद्धे चतस्मिन् तेन ज्ञानाभावसिधिरित्यन्योन्याश्रयतापत्तेरित्यर्थः ॥ **व्यभिचारादिति** ॥ पूर्वेद्युरनुभूतेषु मध्ये कस्यचिदस्मर्यमाणस्य संभवादिति भावः ।

या०— **न च स्मरणाभाव इति** ॥ तथा च नान्योन्याश्रय इति भावः ॥ **व्यभिचारादिति** ॥ उपेक्षणीये स्मरणाभावेऽपि ज्ञानसद्भावादिति भावः ।

श्री०— परामर्शः स्मृतिः ॥ **ज्ञानाभावेति** ॥ न भावरूपज्ञानविषयक इत्यर्थः । तस्य ज्ञानाभावस्य ॥ **नायमिति** ॥ न किञ्चिदवेदिषमित्ययमित्यर्थः । अनुभवपरामर्शो भावरूपाज्ञानानुभवजन्यः परामर्शः स्मरणं नेत्यर्थः । येनाननुभूतस्य स्मरणायोगात्तदन्यथाऽनुपपत्त्या सुषुप्तिकाले भावरूपाज्ञानानुभवः कल्पनीयः । स्यादिति भावः ॥ **उत्थितस्येति** ॥ सुषुप्तेः सकाशादित्यर्थः । इदानीमेव जाग्रदवस्थायामेव तथा च न सुषुप्तिकाले भावरूपाज्ञानानुभव इति भावः ॥ **तदनुमापकेति** ॥ ज्ञानाभावानुमापकेत्यर्थः। **सामग्र्यभाव इति**॥ सुषुप्तिकालीनोऽहं ज्ञानाभाववान् ज्ञानसामग्रीशून्यत्वादितिसामग्र्यभावो लिङ्गमित्यर्थः ॥ **नानाभावेनेति** ॥ ज्ञानरूपकार्याभावेन ज्ञानसामग्र्यभावानुमानमित्यर्थः ॥ **अन्योन्याश्रयेति** ॥ ज्ञानाभावेन ज्ञानसामग्र्यभावानुमानम् । तेन ज्ञानाभावानुमानमित्यन्योन्याश्रय इत्यर्थः । ननु ज्ञानाभावेन ज्ञानसामग्र्यभावानुमानमङ्गीक्रियते । न ज्ञानसामग्र्यभावेनज्ञानाभावानुमानम् येनान्योन्याश्रयः स्यात् । किन्नाम स्मरणाभावरूपलिङ्गेनैवातो नान्योन्याश्रयइति भावेन शङ्कते ॥ **न च स्मरणाभाव इति** ॥ पदार्थः सुषुप्तौ नानुभूतः । इदानीमस्मर्यमाणत्वात् ॥ यन्न स्मर्यते तन्नानुभूतमिति व्याप्तेरित्यर्थः । ज्ञानाभावे सुषुप्तौ पदार्थज्ञानाभावे ॥ **व्यभिचारादिति** ॥ उपेक्षणीये स्मरणाभावेऽपि ज्ञानसद्भावाद्व्यभिचार इत्यर्थः ॥

च०— विवरणोदीरितप्रत्यक्षमुपन्यस्य चित्सुखोक्तं तदुपन्यस्यति ॥ **किं चेति** ॥

सु०— **तदेवं प्रत्यक्षसिद्धेऽज्ञानेऽनुमानमपि । विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । ततश्च ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिद्धम् ॥ अपि च न तावदज्ञानं ज्ञानाभावः अभावमानागम्यत्वात् संप्रतिपन्नवत् । अभावो ह्यभावस्य प्रत्यक्षस्य वा विषयः परेणेष्यते । अज्ञानं च न मानगम्यम् माननिवर्त्यत्वात् सम्प्रतिपन्नवत् ॥ किञ्च । विगीतं देवदत्तनिष्ठप्रमाणज्ञानं देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तानादेर्निवर्तकम् प्रमाणज्ञानत्वात् यज्ञदत्तगतप्रमाणज्ञानवत् ।**

**तम आसीत् मायां तु प्रकृतिं विद्यादित्याद्यागमोऽत्र प्रमाणम् ।**

वा०— न्यायदीपावल्युक्तमनुमानमुदाहरति ॥ **अपि चेति** ॥ उद्देश्ये ज्ञानाभावत्वाभावरूपे विशिष्टे साध्ये हेतोरप्रयोजकतानिवृत्तये हेतावभावविशेषणम् । हेत्वसिद्धिं परिहरति ॥ **अभावो हीत्यादिना** ॥ परेणेति भाट्टतार्किकावभिमतौ । अभावप्रत्यक्षे क्रमेण तदुभयाभिप्रायेणेति द्रष्टव्यम् । सम्प्रतिपन्नवच्छुक्तिरूप्यसंसर्गादिवदित्यर्थः ॥ चित्सुखोक्तमनुमानमुदाहरति ॥ **किं चेति** ॥ अत्र पक्षव्यावर्त्यकथनं पूर्ववत् । अत्र प्रागभावमादायार्थान्तरतानिरासाय प्रमाप्रागभावातिरिक्तेति । प्रमाणज्ञाननिवर्त्यस्य प्रमाप्रागभावातिरिक्तस्यानादेः परेणानभ्युपगमादप्रसिद्धविशेषणतानिरासाय देवदत्तनिष्ठेति । तथा च तादृशयज्ञदत्तनिष्ठप्रमाणप्रागभावादेः प्रसिद्धत्वान्नाप्रसिद्धविशेषणतेति । पूर्वज्ञानसुखादिव्यवच्छेदायानादेरिति । अत्र च दृष्टान्ते देवदत्तनिष्ठत्वरूपविशेषणतातिरिक्तत्वेन विशिष्टातिरिक्तयज्ञदत्तप्रमाप्रागभावनिवर्तकतया साध्यपर्यवसानं पक्षे चान्यप्रमाणज्ञानस्यान्यप्रमाप्रागभावनिवर्तकत्वासंभवेन तादृशयज्ञदत्तप्रमाप्रागभावनिवर्तकतया साध्यपर्यवसानानुपपत्त्या देवदत्तप्रमाप्रागभावस्य च तादृशविशिष्टातिरिक्तत्वायोगेन प्रागभावरूपविशेष्यातिरिक्तत्वेन तादृशविशिष्टातिरिक्तनिवर्तकतया साध्यपर्यवसाने भावरूपाज्ञानसिद्धिरिति भावः । विगीतो भ्रम एतज्जनकाबाध्यातिरिक्तोपादानको विभ्रमत्वादिति तदुक्तानुमानान्तरानुदाहरणं तु वक्ष्यमाणाध्यासान्यथाऽनुपपत्तिलब्धत्वादिति द्रष्टव्यम् ॥

स०— अवश्यपदसूचितमनुमानमाह ॥ **अनुमानमपीति** ॥ साध्यविशेषोपादानेन सिद्धस्य धर्मिविशेषस्य स्पष्टीकरणार्थं प्रमाणज्ञानमित्युक्तमिति द्रष्टव्यम् । वस्तुपूर्वकमित्युक्ते आत्मलक्षणवस्तुपूर्वकतयाऽर्थान्तरत्वं तदर्थं वस्त्वन्तरेति । चक्षुरादिव्यावर्त्यर्थं स्वदेशगतेति । अदृष्टादिकं व्यावर्तयति स्वनिवर्त्येति । उत्तरज्ञाननिवर्त्यं पूर्वज्ञानव्यावर्त्यर्थं स्वविषयावरणेति । प्रागभावव्यावृत्त्यर्थं स्वप्रागभावेति । स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्तौ विषयेणार्थान्तरता तदर्थं स्वविषयावरणेति । स्वविषयावरकान्धकारव्यावृत्त्यर्थं स्वनिवर्त्येति । विषयगताज्ञातताव्यावृत्त्यर्थं स्वदेशगतेति । मिथ्याज्ञानं व्यावर्तयितुं वस्त्वन्तरेति । अन्तरपदप्रयोजनं चिन्त्यम् । विवरणटीकानुसारेण पक्षविशेषणप्रयोजनं द्रष्टव्यम् । अथवा धर्म्यंशप्रमाणवृत्तेरिदमित्याकारा या अज्ञानानिववर्तिकाया अपरोक्षत्वाय विवादेति विशेषणम् । रूप्यादिज्ञाने बाधवारणाय प्रमाणपदम् । स्वप्रागभावं स्वोत्पादकादृष्टं स्वप्रतिबन्धकादृष्टं विषयगतमज्ञातत्वं च व्युदसितुं साध्यविशेषणानि । हेतौ द्वितीयादिज्ञानेषु व्यभिचारवारणायाप्रकाशितेति । अर्थपदं तु स्पष्टीकरणार्थं दृष्टान्ते सौरालोकप्रदेशस्थ दीपप्रभाव्यावृत्त्यर्थमन्धकारेति । द्वितीयादिप्रभायां साध्यसाधनवैधर्म्यपरिहाराय प्रथमेति विशेषणम् । **अनुमाननिगमनार्थ इतीति** ॥ अनुमानसिद्धमर्थं निगमयति ॥ **ततश्चेति** ॥ अनुमानान्तरमाह ॥ **अपि चेति** ॥ अभावमानागम्यत्वं साधयितुमाह ॥

**अभावो ह्यभावस्येति** ॥ अभावाख्यानुपलब्धिरूपप्रमाणस्येत्यर्थः । तथाप्यभावप्रमाणागम्यत्वं कथमित्याशङ्क्य मानागम्यत्वादेवाभावमानागम्यत्वं सिद्ध्यतीत्याह ॥ **अज्ञानं चेति** ॥ अनुमानान्तरमप्याह ॥ **किं चेति** ॥ साध्ये देवदत्तनिष्ठेति प्रमाणज्ञानाभावविशेषणं न प्रमाणज्ञानस्य तस्यान्तःकरणसमवेतत्वेन देवदत्तगतत्वाभावात् । देवदत्तसंबन्धित्वमात्रविवक्षायां तु यज्ञदत्तनिष्ठदेवदत्तविषयकप्रमा प्रागभावातिरिक्तदेवदत्तीयघटप्रमाप्रागभावनिवर्तकत्वेन देवदत्तप्रमायां सिद्धसाधनत्वादिति केचिदाहुः । तन्न । पक्षे देवदत्तनिष्ठेत्यस्य प्रमाणज्ञानविशेषणत्वोक्त्ययोगात् । अतस्तार्किकरीत्यैवेदमुभयत्र प्रमाणज्ञानविशेषणमुपात्तमिति न कोऽपि दोष इति प्रतिभाति । पक्षे प्रमाभावातिरिक्तानाद्यज्ञानमादाय साध्यसिद्धिः । दृष्टान्ते तु देवदत्तीयप्रमाप्रागभावभिन्नयज्ञदत्तप्रमाप्रागभावमादायेति द्रष्टव्यम् । अत्र पक्षगतविशेषणकृत्यं पूर्ववत् । प्रमाणज्ञानमात्रपक्षीकारे यज्ञदत्तप्रमायां सिद्धसाध्यतातो देवदत्तनिष्ठेति विशेषणमिति द्रष्टव्यम् । साध्ये देवदत्तनिष्ठेति विशेषणमप्रसिद्धिवारणाय यज्ञदत्तप्रमायामभावातिरिक्तानादिनिवर्तकत्वासंमतेः । प्रमाणज्ञानाभावातिरिक्तेति विशेषणं प्रागभावमादाय सिद्धसाधनतावारणाय । पूर्वज्ञानं वा मिथ्याज्ञानं वादायसिद्धसाधनतापरिहारायानादेरिति ।

प० — विवरणोक्तमनुमानमाह ॥ **विवादेति** ॥ स्वप्रागभावेत्यादिसाध्यगतवस्त्वन्तरविशेषणचतुष्टयकृत्यं प्रमाणज्ञानप्रागभावेन तदुत्पादकादृष्टेन तत्प्रतिबन्धकादृष्टेन विषयगताज्ञातत्वरूपधर्मान्तरेण चार्थान्तरतावारणमिति वादावलीन्यायामृतयोर्व्यक्तम् । दृष्टान्ते प्रदीपप्रभायां तादृशवस्त्वन्तरमन्धकारः सिद्धः । तद्दृष्टान्तेनोक्तहेतुना सिध्यद्वस्त्वन्तरं किंरूपमित्यत आह ॥ **ततश्चेति** ॥ समानः एकः आश्रयः विषयश्च यस्य तदिति विग्रहः ॥ **अभावमानागम्यत्वादिति** ॥ अभावमानयोरगम्यत्वादित्यर्थः । उपलब्ध्यभावागम्यत्वात्प्रमाणागम्यत्वादिति हेतुद्वयं बोध्यं ॥ **अभावस्येति** ॥ उपलब्ध्यभावस्येत्यर्थः ॥ **परेणेति** ॥ ज्ञानाभाववादिनेत्यर्थः ॥ **न मानगम्यमिति** ॥ अविद्याया अविद्यात्वमिदमेव हि लक्षणं । मानाघातासहिष्णुत्वमसाधारणमिष्यत'' इति सुरेश्वरोक्तेरिति भावः ॥ **संप्रतिपन्नवत्** ॥ शुक्तिरूप्यादिवदित्यर्थः । तत्त्वप्रदीपोक्तमाह ॥ **विगीतमिति** ॥ देवदत्तनिष्ठो यः प्रमाप्रागभावः तदतिरिक्तानादेर्निवर्तकमिति साध्यार्थः । चैत्रनिष्ठप्रमाप्रागभावातिरिक्तस्य देवदत्तगतप्रमाप्रागभावस्य निवर्तकत्वेनार्थान्तरनिरासाय देवदत्तनिष्ठेत्युक्तिः । पूर्वज्ञाननिवर्तकत्वेनार्थान्तरनिरासायानादेरिति । भ्रान्ताव्यभिचाराय प्रमाणेति हेतुविशेषणम् । यज्ञदत्तप्रमाणज्ञाने च दृष्टान्ते देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तस्यानादेर्यज्ञदत्तगतप्रमाप्रागभावस्य निवर्तकत्वेन साध्यं बोध्यम् । हेतोः पक्षधर्मताबलेन चानादिभावरूपं ज्ञाननिवर्त्यं किंचित्सिध्यति । तदेव चाज्ञानमिति भावः ॥

या०—साध्यविशेषोपादानेन सिद्धस्य धर्मिविशेषस्य स्पष्टीकरणार्थं प्रमाणज्ञानमित्युक्तमिति द्रष्टव्यम् । वस्तुपूर्वकमित्युक्ते आत्मलक्षणवस्तु पूर्वकतयाऽर्थान्तरत्वं तदर्थं वस्त्वन्तरेति । आत्मभिन्न-पूर्वकमित्यर्थः । चक्षुरादिव्यावृत्त्यर्थं स्वदेशगतेति । अदृष्टादिकं व्यावर्तयितुं स्वनिवर्त्येति । उत्तरज्ञान-निवर्त्यपूर्वज्ञानव्यावृत्त्यर्थं स्वविषयावरणेति विशेषणम् । प्रागभावव्यावृत्त्यर्थं स्वप्रागभावेति । स्वप्राग-भावव्यतिरिक्तपूर्वकमित्युक्तौ विषयेणार्थान्तरता । तदर्थं स्वविषयावरणेति । स्वविषयावरकान्धकार-व्यावृत्त्यर्थं स्वनिवर्त्येति । विषयगताज्ञातताव्यावृत्त्यर्थं स्वदेशगतेति । मिथ्याज्ञानं व्यावर्तयितुं वस्त्व-न्तरेतीति विवरणटीकानुसारेण पक्षविशेषणप्रयोजनानि द्रष्टव्यानि । अथवा धर्म्यंशप्रमाणव्यावृत्तेरिद-मित्याकाराया अज्ञानानिवर्तकाया अपक्षत्वाय विवादेति विशेषणम् । रूप्यादिज्ञाने बाधवारणाय प्रमाणपदम् । स्वप्रागभावं स्वोत्पादकादृष्टं स्वप्रतिबन्धकादृष्टम् । विषयगतमज्ञातत्वं च व्युदसितुं साध्ये विशेषणानि । हेतौ च धारावाहिकद्वितीयादिज्ञानेषु व्यभिचारवारणायाप्रकाशितेति । अर्थपदं तु स्पष्टीकरणार्थम् । दृष्टान्ते सौरालोकप्रदेशस्थदीपप्रभाव्यावृत्त्यर्थमन्धकारेति । द्वितीयादिप्रभासु साध्य साधनवैधुर्यपरिहाराय प्रथमेति विशेषणम् ॥ **अभावो ह्यभावस्येति** ॥ अभावाख्यस्यानुपलब्धिरूप-प्रमाणस्येत्यर्थः । साध्ये देवदत्तनिष्ठेति प्रमाणज्ञानाभावविशेषणम् । न प्रमाणज्ञानस्य । तस्मादन्तः-करणसमवेतत्वेन देवदत्तसंबन्धित्वमात्रविवक्षायां तु यज्ञदत्तनिष्ठदेवदत्तविषयकप्रमाप्रागभावातिरिक्तदेव-दत्तीयघटप्रमाप्रागभावनिवर्तकत्वेन देवदत्तप्रमायां सिद्धसाधनादिति केचिदाहुः । तन्न । पक्षे देवदत्त-निष्ठेत्यस्य प्रमाणज्ञानविशेषणत्वोक्त्ययोगात् । अतस्तार्किकरीत्यैवेदमुभयत्र प्रमाणज्ञानविशेषणमुपात्तमिति न कोऽपि दोष इति । पक्षेऽभावातिरिक्तानाद्यज्ञानमादाय साध्यसिद्धिर्दृष्टान्ते तु देवदत्तीयप्रमाप्रागभाव-भिन्नयज्ञदत्तप्रमाप्रागभावमादायेति द्रष्टव्यम् । अत्र पक्षगतविशेषणकृत्यं पूर्ववत् । प्रमाणज्ञानमात्र-पक्षीकारे यज्ञदत्तप्रमायां सिद्धसाध्यताऽतो देवदत्तनिष्ठेतिविशेषणमिति द्रष्टव्यम् । साध्ये देवदत्तनिष्ठेति-विशेषणमप्रसिद्धिवारणाय । यज्ञदत्तप्रमायामभावातिरिक्तानादिनिवर्तकत्वासम्मतेः । प्रमाणज्ञानप्राग-भावातिरिक्तेतिविशेषणं प्रागभावमादाय सिद्धसाधनतावारणाय । पूर्वज्ञानं मिथ्याज्ञानं वाऽऽदाय सिद्धसाधनतापरिहारायानादेरिति ॥

श्री०— **विवादगोचरापन्नमिति** ॥ गोचरशब्दो भावप्रधानः । विवादविषयत्वापन्न-मित्यर्थः । विमतमिति यावत् । प्रमाणज्ञानं प्रमाणजन्यं वृत्तिरूपं ज्ञानमित्यर्थः । प्रमाणज्ञानमित्ये-वोक्तौ द्वितीयादिज्ञानमादाय बाधः स्यात् । तत्र प्रथमज्ञानरूपवस्तुपूर्वकत्वे विद्यमानेऽपि तस्य वस्तुनः स्वविषयप्रकाशत्वेन तदावरणत्वाभावादतो विवादगोचरापन्नमित्युक्तम् । प्रथमज्ञानमित्यर्थः । स्वप्राग-

भावव्यतिरिक्तपदाभावे प्रागभावमादायार्थान्तरता स्यात् । स्वसत्तादशायां प्रतियोग्यजनकत्वेन स्वविषया-वरणत्वस्य प्रागभावे सत्त्वात् । स्वसत्तादशायां कार्यानुत्पादकत्वमेव हि स्वविषयावरणत्वम् । स्वनिवर्त्यत्वं च स्वविरोधित्वमेव विवक्षितं न तु स्वजन्यध्वंसप्रतियोगित्वम् । येन प्रतियोग्यापत्तेरेव प्रागभावविप्रतिपत्तित्वेन प्रागभावध्वंसस्य प्रतियोगिरूपत्वात् । प्रागभावप्रतियोगिकध्वंसस्य स्वशब्दोक्तप्रति-योगिजन्यत्वाभावेन स्वजन्यध्वंसप्रतियोगित्वरूपस्वनिवर्त्यत्वस्य प्रागभावे अभावेन न तमादायार्थान्तरतेति शङ्का स्यादित्यवधेयम् । स्वविरोधित्वरूपं स्वनिवर्त्यत्वं च प्रागभावेऽप्यस्ति । यद्वा अभावाभावो भावव्याप्य इति मते प्रागभावनिवृत्तेः प्रतियोग्यन्यत्वप्रमाणज्ञानजन्यध्वंप्रतियोगित्वं प्रमाणज्ञानप्रागभावेऽस्त्येवात-स्तेनार्थान्तरतावारणाय तद्व्यतिरिक्तपदम् । स्वविषयावरणपदत्यागे स्वोत्पादकादृष्टमादायार्थान्तरता स्यात् । तस्य फलैकनाश्यत्वेन स्वनिवर्त्यत्वघटितोक्तसाध्यसद्भावादत उक्तं स्वविषयावरणेति । तस्योत्पत्त्यनुकूलत्वेन विषयावरणत्वाभावात् । स्वसत्तादशायां कार्यानुत्पादकप्रयोजकत्वस्यैव स्वविषया-वरणपदेन विवक्षितत्वात् । तथा च न तदादायार्थान्तरता । स्वनिवर्त्यपदपरित्यागे स्वप्रतिबन्धका-दृष्टमादायार्थान्तरता । तस्याप्युक्तविशेषणोपेतवस्त्वन्तरत्वात् । स्वनिवर्त्यपददाने तु नार्थान्तरता । लोके प्रतिबन्धकनिवृत्त्यनन्तरमेव कार्योत्पत्तिदर्शनेन कार्येण प्रतिबन्धकनिवृत्त्यभावेन स्वनिवर्त्यत्वाभावात् । स्वदेशपदत्यागे विषयगताज्ञातत्वमादायार्थान्तरता स्यात् । अतः स्वदेशगतपदम् । तस्य विषयगतत्वा-देव प्रमाणज्ञानदेशभूतात्मगतत्वाभावात् । मिथ्याज्ञानमादायार्थान्तरतापरिहाराय वस्तुपदम् । मिथ्याज्ञानस्यावस्तुत्वात्तेन तद्व्यावृत्तिः । अन्तरेति स्वरूपसङ्कीर्तनं नार्थान्तरादिव्यावृत्त्यर्थमिति न तत्कृत्यान्वेषणाय मनः खेदनीयमिति ज्ञेयम् । धारावाहिकद्वितीयादिज्ञानेषु व्यभिचारवारणाय हेतावप्रकाशितार्थपदम् । दृष्टान्ते सौरालोकप्रदेशस्थदीपप्रभायां साध्यवैकल्यादिपरिहारायान्धकार इत्युक्तम् । द्वितीयादिप्रभायां साध्यसाधनवैकल्यपरिहाराय प्रथमेत्युक्तमिति पदानां सार्थक्यं द्रष्टव्यम् ॥ **अभावमानेति** ॥ अनुपलब्धिरूपषष्ठप्रमाणेत्यर्थः । सम्प्रतिपन्नवद्घटादिवत् । अभावस्यानुपलब्धि-रूपप्रमाणस्य । उक्तानुमानेऽसिद्धिं परिहरति ॥ **अज्ञानं चेति** ॥ न मानं वृत्तिः । किं नाम साक्षिणैव गम्यमिति हृदयम् । **सम्प्रतिपन्नवदिति** ॥ यद्येन निवर्त्यं न तत्तेन गम्यं यथा प्रभानिवर्त्यान्धकारो न प्रभागम्य इत्यर्थः ॥ **विगीतमिति** ॥ अत्र विगीतपदाभावे द्वितीयादिप्रमाणज्ञानमादाय बाधः स्यात् । देवदत्तनिष्ठद्वितीयादिप्रमाणज्ञानस्य देवदत्तनिष्ठपूर्वप्रमाणज्ञानप्रागभावातिरिक्तपूर्वप्रमाणज्ञाननिवर्तकत्वेऽपि तस्यानादित्वाभावात् । अतो विगीतपदम् । प्रथमं प्रमाणज्ञानमित्यर्थः । पक्षेऽनाद्यज्ञानमादाय साध्यपर्यवसानम् । दृष्टान्ते तु यज्ञदत्तप्रमाप्रागभावमादायेति विवेकः । पक्षेऽपि दृष्टान्तवदेव साध्य-पर्यवसानं बाधादेव न संभवतीति मन्तव्यम् ॥

च० — विवरणाभिहितमनुमानं दर्शयति ॥ **विवादेति** ॥ प्रकृतसाध्यतदभावकोटिकविमतिनिरूपितविषयतापन्नमित्यर्थः । धर्म्यंशगोचरप्रमाणमतेरिदमाकाराया अपक्षत्वाय विवादेति विशेषणम् । अत्र च विशेषादर्शनदशायामप्रमात्वावच्छिन्नधर्मिकप्रकृतसाध्यतदभावकोटिकसंदेहविषयतामादायाप्रमायां बाधवारणाय प्रकृतकोटिद्वयप्रकारतानिरूपितस्वसमानाधिकरणप्रमात्वावच्छिन्नविशेष्यताप्रत्यासत्त्या ज्ञानत्वावच्छिन्नस्य पक्षतावच्छेदकतां ध्वनयितुं भावसाधनल्युडन्तप्रमाणपदघटितज्ञानान्तोपादानम् । तुरीयानुमाने निदर्शनबोधकपदघटकप्रमाणपदमपि तादृशल्युडन्तम् । अत्र विवरणटीकोक्तदिशा आत्मपूर्वकतानियन्त्रितार्थान्तरतानिरसनाय वस्त्वन्तरेति । चक्षुरादिव्यावर्तनाय स्वदेशगतेति । अदृष्टमपहस्तयितुं स्वनिवर्त्येति । उत्तरज्ञाननिवर्त्यपूर्वज्ञानविधूननाय स्वविषयावरणेति । स्वप्रागभावव्यावृत्त्यर्थं स्वप्रागभावव्यतिरिक्तेति । स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्तौ विषयेणार्थान्तरतातदर्थं स्वविषयावरणेति स्वविषयावरकान्धकारापाकरणाय स्वनिवर्त्येति । विषयगताज्ञाततानिराकरणाय स्वदेशगतेति । मिथ्याज्ञानं व्यावर्तयितुं वस्त्वन्तरेति साध्यविशेषणप्रयोजनान्यवसेयानि । रूप्यादिज्ञाने बाधवारणाय प्रमाणपदम् । स्वप्रागभावं स्वोत्पादकादृष्टं विषयगतमज्ञातत्वं (च) निरसितुं साध्यविशेषणानीत्यपि कल्पान्तरं निनिबध्नन्ति । हेतुशरीरे धारावाहिकद्वितीयादिज्ञानेष्वनैकान्त्यवारणायाप्रकाशितेति । निदर्शने सौरालोकसन्निकृष्टप्रदीपप्रभाव्यावर्तनायान्धकारेति । द्वितीयादिप्रभासु साध्यवैकल्यनिरासाय प्रथमेति विशेषणम् ॥ **अभावो ह्यभावस्येति** ॥ अभावग्राहकानुपलब्धिरूपप्रमाणस्येत्यर्थः । भट्टदिशेदम् । न्यायनयदिशाऽऽह ॥ **प्रत्यक्षस्येति** ॥ मानगम्यमिति भावसाधनोऽयं ल्युट् । प्रमितिविषय इत्यर्थः । माननिवर्त्यत्वात् प्रमितिजन्यध्वंसप्रतियोगित्वात् । संप्रतिपन्नवत् शुक्तिरूप्यसंसर्गवत् । चित्सुखोक्तमनुमानमुदाहरति ॥ **किं चेति** ॥ विमतिधर्मिनावच्छेदकं स्फोरयितुं ज्ञानान्तोपादानम् । प्रागभावनिवर्तकतानियन्त्रितार्थान्तरत्वादिविधूननायातिरिक्तान्तं अतिरिक्तपदार्थतावच्छेदकीभूतभेदीयप्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशान्न द्वित्वावच्छिन्नप्रतियोगिताकभेदमादाय सिद्धसाधनतावकाशः । प्रतियोगिताव्यधिकरणत्वं वा भेदे निवेशनीयम् । अप्रसिद्धविशेषणतानिरासाय निष्ठान्तं प्रागभावविशेषणम् । यज्ञदत्तीयप्रमाप्रागभावमादाय निदर्शने साध्यस्य सूपपादत्वात् पूर्वोत्पन्नज्ञानादिनिवर्तकत्वापादितार्थान्तरतावारणायानादीति । भ्रान्तावव्यभिचाराय प्रमाणेति हेतुविशेषणम् । अद्वैतिनमेतस्याः साक्षिरूपतयाऽनादित्वेन तत्प्रागभावमादाय साध्यपर्यवसानासंभवादिति भावः । पक्षे साध्यपर्यवसानं त्वज्ञानेनैवेति भावः ।

**सु० — त्वदुक्तमर्थं न जानामीति व्यवहारान्यथाऽनुपपत्तिरपि भावरूपाज्ञानसद्भावे मानम् । न च प्रमाणतो न जानामीत्येवं परतया व्यवहारोपपत्तिः । त्वदुक्तेऽर्थे प्रमाणज्ञानं**

मम नास्तीत्यस्य विशिष्टविषयज्ञानस्य प्रमाणत्वात् । तद्विशेषणतयाऽर्थस्यापि प्रमाणेनाधिगमात्स्ववचनव्याघातापत्तेः । एतदतिरिक्तप्रमाणज्ञानं मम त्वदुक्तेऽर्थे नास्तीति च वदतो वचनव्याघातदोष एव । अस्यापि ज्ञानस्य पूर्ववदेव प्रमाणत्वात् । न च प्रमाणेन सामान्यतोऽर्थस्याधिगमेऽपि विशेषानधिगमाददोषः । विशेषस्याप्यधिगमानधिगमयोः पूर्वोक्तदोषानतिवृत्तेः । ननु भावरूपमप्यज्ञानं ज्ञाननिरस्यमभ्युपगम्यते भवद्भिः । तत्कथं ज्ञायमानेऽर्थे न जानामीति व्यवहारः । मैवम् । अस्मन्मतेऽज्ञानस्य साक्षिवेद्यतया प्रमाणाबोध्यत्वात् । प्रमाणज्ञानोदयात्प्राक् चाज्ञानविशेषितोऽर्थः साक्षिसिद्धोऽज्ञात इत्यनुवादगोचरो भवति । भवति च प्रश्नार्हः ॥ किञ्च विशुद्धब्रह्मात्मनि शुक्तिकायां चाहङ्काररजताद्यध्यासस्यार्थज्ञानात्मकस्य मिथ्याभूतस्य मिथ्याभूतमेव किञ्चिदुपादानमन्वेषणीयम् । सत्योपादानकत्वे कार्यकारणस्वभावतयाऽध्यासस्यापि सत्यत्वप्रसङ्गात् । तस्यापि मिथ्योपादानस्य सादित्वे तथाविधोपादानान्तरकल्पनाप्रसङ्गादनाद्येव तन्मिथ्योपादानमिति कल्पनीयमिति मिथ्याध्यास एव तथाविधाज्ञानोपादानकारणमन्तरेणानुपपद्यमानस्तत्कल्पयतीति ॥ किञ्च ज्ञानाद्बन्धनिवृत्तिश्रवणाद्यन्यथाऽनुपपत्तिरपि बन्धोपादानाज्ञाने प्रमाणम् ।

वा० — विवरणोक्तां चित्सुखेन समर्थितामर्थापत्तिमाह ॥ **त्वदुक्तमिति** ॥ **प्रमाणत्वादिति** ॥ यथार्थज्ञानत्वेन तस्यापि प्रमाणत्वादित्यर्थः । ननु प्रमाणतो न जानामीत्यस्यैतदज्ञानत्वग्राहिप्रमाणज्ञानव्यतिरिक्तप्रमाणज्ञानं नास्तीत्यर्थोऽतो न व्याघात इत्यत एवंविधज्ञानस्यैव पूर्वनिर्दिष्टातिरिक्तप्रमाणत्वादेतदविषयत्ववचनं व्याहतमेवेत्याह ॥ **एतदिति** ॥ **पूर्वोक्तेति** ॥ अवगतेऽवगतत्वादेवानवगते तु कारणाभावादेव सुतरां ज्ञानाभावप्रतिपत्त्ययोग इति पूर्वोक्तदोषानिवृत्तेरित्यर्थः ॥ **नन्विति** ॥ तथा च मां प्रत्युक्तव्यवहारान्यथाऽनुपपत्तिर्भावरूपाज्ञानपक्षेऽपि समेति तदङ्गीकारोऽपि न युक्तः इत्याशयः । नाज्ञाननिवर्तकं प्रमाणज्ञानं तद्बोधकं यच्चाज्ञानबोधकं साक्षिचैतन्यं तन्निवर्तकं तत्साधकत्वादिति परिहरति ॥ **मैवमिति** ॥ यत एवं पूर्वं प्रमाणज्ञानं न वृत्तं साक्षिणा चाज्ञानविशिष्टतयाऽर्थो विषयीकृतोऽतोऽनुवादप्रश्नौ घटेते इत्याह ॥ **प्रमाणेति** ॥ विवरणोक्तमर्थापत्त्यन्तरं चाह ॥ **किं चेति** ॥ **अर्थज्ञानात्मकस्येति** ॥ परमताद्वैलक्षण्यप्रदर्शनं निरालम्बनज्ञानायोगादिति भावः । अन्यथोपपत्तिं निरस्यति ॥ **सत्येति** ॥ कार्यकारणशब्दौ परिणामतद्धेतुपरौ तदनादित्वसिद्धिरपि लाघवतर्कानुगृहीततदर्थापत्त्यैवेत्याह ॥ **तस्यापीति** ॥ **तथाविधेति** ॥ अनादिभावरूपेत्यर्थः ॥ तदुक्तार्थापत्त्यन्तरमाह ॥ **किं चेति** ॥

स०— अर्थापत्तिमप्याह ॥ **त्वदुक्तमर्थमिति** ॥ अत्र त्वदुक्तमर्थमित्यनुवादबलेन तद्विषक-ज्ञानसिद्धेर्न ज्ञानाभावविषयकत्वमस्य कल्पनीयमिति भावः । पूर्वपक्ष्याशयमनूद्य दूषयति ॥ **न चेत्या-दिना** ॥ त्वदुक्तमर्थं न जानामीति यदिदं ज्ञानं तत्तावत्प्रमाणमेव यथार्थानुभवत्वात् । तथा चैतज्ज्ञान-विषयान्तर्गततयैतद्विषयभूतस्यार्थस्यापि प्रमाणज्ञातत्वात् तन्निषेधे स्ववचनविरोध इत्याह ॥ **त्वदुक्तेऽर्थे इति** ॥ **विशिष्टविषयज्ञानस्येति** ॥ व्यवहारजनकत्वेनावश्यकस्येत्यर्थः । एवमग्रेऽपि ॥ **एतदति-रिक्तेऽर्थे इति** ॥ तत्राप्येवंविधज्ञानस्य पूर्वनिर्दिष्टादतिरिक्तप्रमाणत्वादेव तदविषयत्ववचनं व्याहत-मित्यर्थः । ननु सामान्यतः प्रमितस्य विशेषतोधिगमाभावान्न व्याहतिरित्यत आह ॥ **न च प्रमाणेन सामान्यत इति** ॥ **अदोष इति** ॥ तथाच विशेषाधिगमाभावविषयत्वेनैव व्यवहारोपपत्तिरिति भावः ॥ **पूर्वोक्तदोषानतिवृत्तेरिति** ॥ विशेषाधिगमेन तदभावविषयत्वं व्याघातात् । तदनधिगमे तु सुतराम् । तदवच्छिन्नस्य ज्ञानलक्षणप्रतियोगिनो ज्ञातुमशक्यत्वात् । न हि विशेषरूपावच्छेदकाज्ञाने तदवच्छिन्ना-धिगमरूपप्रतियोगिज्ञानं संभवतीति भावः । ननु त्वन्मतेऽपि कथं ज्ञायमानेऽर्थे न जानामीति व्यवहारो यावता ज्ञानाभाववदज्ञानमपि ज्ञाननिवर्त्यमेवेति चोदयति ॥ **नन्विति** ॥ न तत्राज्ञाननिवर्तकं प्रमाण-ज्ञानं तद्बोधकमपि तु साक्षिचैतन्यम् । न च तदज्ञाननिवर्तकं तत्साधकत्वादिति परिहरति ॥ **मैवमिति** ॥ नन्वज्ञानावच्छेदकस्यार्थस्य प्रमाणाबोध्यत्वे बुद्धावनारोहात्कथं त्वदुक्तमर्थमित्यनुवादगोचरता । तत्रार्थे किं मानमिति प्रश्नार्हताचेत्यत आह ॥ **प्रमाणज्ञानोदयादिति** ॥ अज्ञानावच्छेदकतया प्रतीयमानोऽर्थः साक्षादेव साक्षिभास्यो न प्रमाणव्यवधानमपेक्षत इत्युक्तत्वादिति भावः । अर्थापत्त्यन्तरं विवरणोक्तं प्रमाणयति ॥ **किं चेति** ॥ अहङ्कारादितदवभासयोर्मिथ्यात्वासिद्धेः कथं तदनुपपत्त्या ज्ञानसिद्धिरिती-त्याशङ्क्य तात्पर्यमाह ॥ **विशुद्धेति** ॥ ज्ञानस्यैवाध्यासो नार्थस्येति मतं निरस्यति ॥ **अर्थज्ञानेति** ॥ निरालम्बनज्ञानायोगात् अर्थोऽप्यध्यस्त इति भावः । समीचीनज्ञानवद्यथार्थत्वात् नाध्यासत्वमित्या-शङ्कायामाह ॥ **मिथ्याभूतस्येति** ॥ मिथ्यात्वानुपपत्त्या मिथ्याभूतमुपादानमेष्टव्यमित्युक्तम् । तत्रा-न्यथोपपत्तिं निरस्यति ॥ **सत्योपादानत्व इति** ॥ मृज्जस्य घटस्य मृदात्मतावत्सत्योपादानस्य सत्यत्वं स्यादित्यर्थः । किं तदुपादानं सादि उतानादि । नाद्योऽनवस्थानात् । नान्त्यः तत्र प्रमाणाभावा-दित्याशङ्क्य कल्पनालाघवादनाद्येव तदित्याह ॥ **तस्यापीति** ॥ तथापि कथमज्ञानसिद्धिस्तत्राह ॥ **तस्येति** ॥

प०— **इतिव्यवहारान्यथानुपपत्तिरिति** ॥ अस्य व्यवहारस्य ज्ञानाभावपरत्वे प्रतियो-गिभूतज्ञानावच्छेदकार्थस्य ज्ञानद्वारा ज्ञातत्वाज्ञानत्वाभ्यां तथा व्यवहारायोगात् । भावरूपाज्ञानपक्षे प्रागुक्तदिशोपपत्तिरिति भावः । ननु त्वदुक्तमर्थं न जानामीत्यत्र प्रतियोगिभूतज्ञानावच्छेदक-

तयार्थस्यावगमेऽपि प्रमाणजन्यार्थगोचरज्ञानाभावेन तादृशज्ञानाभावविषयत्वेन वा सामान्यस्य ज्ञातत्वेऽपि तद्विशेषज्ञानाभावविषयकत्वेन वा न जानामीतिव्यवहारोयुक्त इत्याशङ्क्याद्यं निराह ॥ **न च प्रमाणत इति** ॥ **एतदिति** ॥ त्वदुक्तेऽर्थे ममप्रमाणज्ञानंनास्तीत्येतदतिरिक्तेत्यर्थः । द्वितीयमाशङ्क्य निराह ॥ **न च प्रमाणेनेति** ॥ अविद्या नेति वादी शङ्कते ॥ **नन्विति** ॥ भवद्भिरद्वैतवादिभिरित्यर्थः । सत्यमेव तथापि न जानामीत्यज्ञानानुभवः साक्षिरूप एव । स च भावरूपाज्ञानप्रत्यक्षवादे त्वित्यादिनोक्तदिशा नाज्ञानविरोधी किंतु प्रमाणज्ञानमेव तथा । तथाचाज्ञानावच्छेदकतया साक्षिणा ज्ञायमानेऽप्यर्थे न जानामीति व्यवहारो युक्त एवेत्याहाद्वैती ॥ **अस्मन्मत इति** ॥ अज्ञानस्येति विभागः । भ्रमरूपकार्यान्यथानुपपत्तिश्च प्रमाणमित्याह ॥ **किञ्च विशुद्धेति** ॥ तन्मतेऽर्थतद्धियोरप्यारोपितत्वादुक्तमर्थज्ञानात्मकस्येति ॥ **अध्यासस्यापीति** ॥ भावे कर्मणि च निष्पन्नोऽयं शब्दः । अध्यस्तस्य तद्भ्रान्तेश्चेत्यर्थः । इतिशब्दः त्वदुक्तमर्थमित्यादिनोक्तदृष्टार्थापत्तिद्वयोक्तिसमाप्तौ ॥ **श्रवणेति** ॥ तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रवणेत्यर्थः । आदिपदेन ज्ञानान्मोक्षश्रवणाद्यनुपपत्तिग्रहः ॥

**या० — त्वदुक्तमर्थमिति** ॥ अत्र त्वदुक्तमर्थमित्यनुवादबलेन तद्विषयकज्ञानसिद्धेर्न ज्ञानाभावविषयकत्वमस्य कल्पनीयमिति भावः ॥ **विशिष्टविषयज्ञानस्येति** ॥ व्यवहारजनकत्वेनावश्यकस्येत्यर्थः । एवमग्रेऽपि ॥ **अदोष इति** ॥ तथा च विशेषाधिगमानधिगमाभावविषयकत्वेनैव व्यवहारोपपत्तिरिति भावः ॥ **पूर्वोक्तदोष इति** ॥ विशेषाधिगमेन न तदभावविषयकत्वम् । व्याघातात् । तदनधिगमे तु सुतरां तदवच्छिन्नस्य ज्ञानलक्षणप्रतियोगिनो ज्ञातुमशक्यत्वात् । न हि विशेषरूपावच्छेदकाज्ञाने तदवच्छिन्नाधिगमरूपप्रतियोगिज्ञानं संभवतीति भावः । नन्वज्ञानावच्छेदकस्यार्थस्य प्रमाणाबोध्यत्वे तस्य बुद्धावनारोहात्कथं त्वदुक्तमर्थमित्यनुवादगोचरता तत्रार्थे किं मानमिति प्रश्नार्हता चेत्यत आह ॥ **प्रमाणज्ञानोदयादिति** ॥ अज्ञानावच्छेदकतया प्रतीयमानोऽर्थः साक्षादेव साक्षिभास्यो न प्रमाणव्यवधानमपेक्षत इत्युक्तत्वादिति भावः ॥

**श्री० — एवं परतयेति** ॥ त्वदुक्तार्थे प्रमाणज्ञानाभावविषय एवायं व्यवहारो न भावरूपाज्ञानविषय इत्यन्यथोपपत्तिरिति भावः ॥ **विशिष्टविषयज्ञानस्येति** ॥ त्वदुक्तार्थविशिष्टप्रमाणज्ञानाभावविषयकस्य ज्ञानस्येत्यर्थः ॥ **तद्विशेषणतयेति** ॥ साक्षादेतद्विशिष्टज्ञानविषयीभूतःप्रमाणज्ञानाभाव एव । तत्रावच्छेदकतया विशेषणत्वेनार्थोऽप्यधिगम्यत एवातस्तत्र प्रमाणज्ञानाभावोक्तौ स्ववचनव्याघात इत्यर्थः ॥ **एतदतिरिक्तेति** ॥ त्वदुक्तेऽर्थे प्रमाणज्ञानं मम नास्तीति विशिष्टविषयज्ञानरूपं यत्प्रमाणज्ञान-

मेतदतिरिक्तप्रमाणज्ञानाभावविषयस्यापि ज्ञानस्य प्रमाणत्वादत्र च परम्परया त्वदुक्तार्थस्यापि विशेषणतया भानात्तत्र प्रमाणज्ञानाभाववचनं पुनः स्वव्याहतमित्यर्थः ॥ **विशेषानधिगमादिति** ॥ त्वदुक्तार्थे विशेषाधिगमाभावविषय एवायं व्यवहार इति भावः ॥ **पूर्वोक्तेति** ॥ विशेषाधिगमाभावप्रतियोगिभूतो विशेषाधिगमस्तदवच्छेदकीभूतविशेषाधिगमे न तदभावज्ञानम् । व्याघातात् । अनधिगमे तु सुतराम् । विशेषरूपावच्छेदकाज्ञाने तदवच्छिन्नाधिगमरूपप्रतियोगिज्ञानाभावेन तदभावज्ञानं न संभवतीत्यर्थः । सिद्धान्ती मायावादिनं प्रति शङ्कते ॥ **नन्विति** ॥ भवद्भिर्मायावादिभिः । त्वदुक्तमर्थं न जानामीति व्यवहारस्य ज्ञानाभावविषयत्वेऽस्माभिरभिहितेऽर्थेन सहानुभूयमानत्वादज्ञानं न ज्ञानाभाव इत्युक्तम् । इदं दूषणं भावरूपाज्ञानवादेऽपि समानम् भावरूपाज्ञानावच्छेदकतयाऽर्थस्यापि ज्ञातत्वात् ज्ञायमानेऽर्थे कथं न जानामीति भावरूपाज्ञानव्यवहारइत्यर्थः । पूर्वपक्षी मायावादी परिहरति ॥ **मैवमिति** ॥ वृत्तिरूपप्रमाणाविषयत्वादित्यर्थः । यद्यज्ञानं वृत्तिरूपप्रमाणविषयः स्यात्तर्ह्यर्थस्याप्युक्तरीत्या तद्विषयतयाऽधिगतत्वात्तत्राज्ञानं विरुद्धं स्यात् । वृत्तेरज्ञानविरोधित्वात् । न चैवम् । किं नामार्थावच्छिन्नस्याज्ञानस्य साक्षिवेद्यत्वाङ्गीकारादिति भावः । नन्वज्ञानावच्छेदकीभूतार्थस्य प्रमाणाबोध्यत्वे तस्य बुद्धावनारोहात्कथं त्वदुक्तमर्थमित्यनुवादः । त्वदुक्तार्थे किं मानमिति प्रश्नश्च कथमुपपद्यत इत्यत आह ॥ **प्रमाणज्ञानोदया त्प्रागिति** ॥ **अज्ञानविशेषित इति** ॥ अज्ञानविशेषणीभूत इत्यर्थः । तथाच प्रमाणप्रवृत्त्यभावदशाया मप्यर्थेन सहैवाज्ञानस्य सदा साक्षिणाऽनुभूयमानत्वेन विरोधाभावादित्यर्थः । तथा चाज्ञानावच्छेदकीभूतार्थस्य तदा सिद्धत्वाङ्गीकारादनुवादादिकं युक्तमिति भावः । अध्यासरूपकार्यान्यथाऽनुपपत्त्याऽपि भावरूपाज्ञानसिद्धिरित्याह ॥ **किञ्चेति** ॥ निवर्तकमित्यङ्गीकारादिति भावः ।

इतिशब्दो दृष्टार्थापत्तिद्वयोक्तिसमाप्तौ ।

च० — विवरणोक्तां चित्सुखेन समर्थितामर्थापत्तिमपि तत्र प्रमाणयति ॥ **त्वदुक्तमिति** ॥ अत्र त्वदुक्तमर्थमित्यनुवादबलेन तद्विषयकज्ञानसिद्धेर्न ज्ञानाभावविषयकत्वमस्य कल्पनीयमिति भावः । त्वदुक्तार्थगोचरप्रमात्वावच्छिन्नाभावालम्बन एव तादृशव्यवहार इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ **प्रमाणत इति** ॥ ल्युट् भावसाधनः तृतीयान्ताद्धात्वर्थान्वय्यभेदार्थस्तसिः प्रमाणज्ञानं प्रमाणत्वादित्युत्तरग्रन्थानुरोधात् ॥ **विशिष्टविषयज्ञानस्येति** ॥ विषयिताप्रत्यासत्त्या त्वदुक्तार्थविशेषितं यत्प्रमारूपज्ञानमनुयोगिताप्रत्यासत्त्या तद्विशेषिताभावविषयकस्येत्यर्थः । प्रमाणत्वात् विशेष्यताव्यधिकरणाप्रकारकत्वात् । तद्विशेषणतया अभावविशेषणीभूतज्ञानविशेषणतया । प्रमाणेनावगमात् प्रमित्या विषयीकरणात् ॥ **स्ववचनेति** ॥ तादृशव्यवहारहेतुभूतोक्तज्ञानस्य प्रतियोगितावच्छेदकीभूतत्वदुक्तार्थविषयकप्रमात्वाक्रान्ततया

तद्धर्मावच्छिन्नसमवधाने तद्धर्मावच्छिन्नप्रतियोगिताकाभावरूपविषयबाधादिति भावः । त्वदुक्तेऽर्थे प्रमाणज्ञानं मम नास्तीति व्यवहारहेतुभूतज्ञानातिरिक्ततादृशज्ञानाभाव एव विषयोऽस्त्वित्याशङ्कयोक्ततादवस्थ्यमाह ॥ **एतदतिरिक्तेति** ॥ **अस्यापि ज्ञानस्येति** ॥ तादृशज्ञानातिरिक्तत्वघटितधर्मावच्छिन्नप्रतियोगिताकाभावविषयकज्ञानस्यापि तादृशप्रतियोगितावच्छेदकाक्रान्ततया तद्धर्मावच्छिन्नसमवहिते तदवच्छिन्नप्रतियोगिताकाभावरूपविषयबाधतादवस्थ्यादिति भावः । विशेषधर्मप्रकारकतादृशार्थधर्मिकप्रमात्वावच्छिन्नाभावालम्बन एव तादृशव्यवहार इत्याशयः ॥ **पूर्वोक्तेति** ॥ तादृशाभावधीहेतुभूतस्य विशेषधर्मप्रकारकत्वघटितप्रतियोगितावच्छेदकावच्छिन्नगोचरज्ञानस्य हेतुभूतविशेषधर्मावगतौ न तदभावविषयकत्वं तदनवगतौ तु सुतरां कारणाभावाधीनप्रतियोगितावच्छेदकावच्छिन्नज्ञानानुत्पादेन तादृशाभावधीविरह इति भावः । ननु विषयावच्छिन्नज्ञानगोचरज्ञानस्याज्ञाननिवर्तकतावच्छेदकीभूतविषयावगाहिज्ञानत्वाक्रान्ततया ज्ञाने विषयावच्छिन्नावगाहिस्वसमवधानकालीनज्ञानगोचरताया एव दुरुपपादतया कथं तादृशव्यवहारः सङ्गच्छतामित्याशङ्कय तन्निवर्तकतावच्छेदककोटौ वृत्तित्वस्यापि निवेशोपगमेन वृत्तित्वघटिततदवच्छेदकानाक्रान्ततया न क्षतिरिति समाधित्सते ॥ **नन्वित्यादि** ॥ **अज्ञानविशेषित इति** ॥ स्वनिरूपितविषयताप्रत्यासत्त्येति पूरणीयम् । अज्ञानावच्छेदकतया साक्षिणा विषयेऽवगाढव्ये प्रमाणव्यवधाननैरपेक्ष्यादित्यभिहितत्वादिति भावः । अर्थापत्त्यन्तरमाह ॥ **किं चेति** ॥ **अध्यासस्यापीति** ॥ भावसाधनघञन्तोयं विपर्यासवचनः कर्मसाधनघञन्तश्च विपर्यस्तवचन इति विपर्यासस्य विपर्यस्तस्य चेत्यर्थः ।

**सु०— तदेवं प्रत्यक्षादिप्रमाणतः सिद्धमज्ञानं न तावदनात्मनि सम्भवति । प्रमाणप्रयोजनयोरभावात् । अतः परिशेषादात्मन्येवाज्ञानमङ्गीकरणीयम् । तत्कथमुच्यतेऽज्ञानाभावत इति ।**

वा०— यदर्थं प्रमाणसिद्धत्वोपपादनं तदिदानीं वदति ॥ **तदेवमिति** ॥ **प्रमाणेति** ॥ इदं नीलमनेनावृतमिति हि प्रत्यक्षेण ग्रहीतव्यम् । तच्च नीले गृहीते विरोधादनवगते च सुतरामेतादृशावरणानुभवायोगः । न च नीलावगमकालेऽज्ञानावरणासंभवेऽपि विमतं नीलं पूर्वमावृतमिदानीमवगतत्वात्सम्मतवदित्यनुमानात्पूर्वकालीनावरणसिद्धिरिति वाच्यम् । इदानीमवगतत्वमात्रस्य हेतुत्वे धारावाहिकद्वितीयादिज्ञानावगते इदानीमवगतत्वसत्त्वेऽपि पूर्वकालावृतत्वाभावेन व्यभिचारात् । इदानीमेवावगतत्वस्य हेतुत्वे चेदानीमेवावगतत्वेन प्रागनवगतत्वसिद्धिस्तत्सिद्धौ चैतत्सिद्धिरितीतरेतराश्रयेण सिद्ध्यापत्तेः । न च तर्हि पूर्वापरकालसम्बन्धिविषयकप्रत्यभिज्ञाया मध्येऽनवगतिमन्तरेणानुपपत्त्या मध्ये आवृतत्व-

सिद्धिरिति वाच्यम् । सदा स्फुरत्यप्यात्मनि सोहमिति प्रत्यभिज्ञाया दर्शनेन तस्या मध्येऽनवगत्यसाधकत्वात् । न च तर्ह्यभिज्ञाप्रत्यभिज्ञयोर्मध्येऽर्थावगमे तदवगमस्य स्मृतिप्राप्तेस्तदभावेन मध्ये आवृतत्वसिद्धिरिति वाच्यम् । अनुभूयमाने स्मृतिनियमाभावेन मध्ये उत्पन्नज्ञानानामस्मरणोपपत्तेः । न च त्वदुक्तमर्थं न जानामीति विषयसंबन्ध्यज्ञानानुभवात्संबन्धस्य चावरकत्वरूपस्यैवात्मनि दृष्टतयाऽज्ञानस्यापि विषयेण स एव संबन्ध इति कथं तदपलाप इति वाच्यम् । साक्षिचैतन्येन स्वस्मिन्नध्यस्तानामज्ञानविषयतत्संबन्धानामनुभवाङ्गीकारात्संबन्धश्चाज्ञानविषययोः कार्यकारणभावो नावरणाक्रियमाणत्वरूपोऽध्यस्तस्यावरणायोगात् । प्रतीतकाले तावदावरणं व्याहतमप्रतीतकाले स्वयमेव नास्ति द्विचन्द्रादिवदध्यस्तस्य प्रतीतिमात्रशरीरत्वात् । यद्यध्यस्तमप्याक्रियते तर्हि तस्य मानागोचरत्वेन तदावरणानिवृत्तेस्तत्प्रतिभास एव न स्यात् । प्रमाणगम्यं हि वस्तु परमार्थत्वादप्रतीयमानमपि तिष्ठतीति कथञ्चिदाक्रियेत माननिवर्त्यमध्यस्तं तु कथं नामाक्रियेत । तस्मान्नास्त्यनात्मावरणे प्रमाणम् । नापि प्रयोजनम् । प्रसक्तप्रकाशप्रतिबन्धकस्यैव सर्वत्रावरणप्रयोजनत्वात् । अनात्मनि च स्वतो वा प्रमाणबलाद्वा चैतन्यबलाद्वा प्रकाशप्रसक्तेर्वक्तव्यतया जडत्वेनाद्यस्य प्रकारस्य माननिवर्त्यस्यावरणस्य तत्प्रतिबन्धकत्वायोगेन द्वितीयस्य चैतन्यावरणादेव कार्योपपत्तावनात्मनि पृथगावरणकल्पनावैयर्थ्येन तृतीयस्य च निरस्ततया प्रकाशप्रसक्तेरभावान्न तत्प्रतिबन्धः प्रयोजनमिति प्रमाणप्रयोजनयोरभावान्नानात्मन्यज्ञानं संभवतीति भावः । एवं च प्रमाणसिद्धाज्ञानापलापायोगादनात्मपक्षस्य चोक्तरीत्याऽनुपपन्नत्वादात्माश्रितत्वतद्विषयकत्वपक्षमङ्गीकृत्य तद्दूषणमविद्याविचित्रशक्त्या स्वप्रकाशस्याप्यावरणमिति कथञ्चित्परिहर्तव्यमित्याह ॥ **अत इति** ॥ अनेनाक्षेप्यं मूलं दर्शयति ॥ **तदिति** ॥

**स०— प्रमाणप्रयोजनयोरिति** ॥ अहमज्ञ इत्यादि प्रत्यक्षादिप्रमाणस्य अनात्मनि प्राप्तप्रकाशरूपप्रतिबन्धरूपावरणाभावेन तत्कार्यविक्षेपासंभवात् । प्रयोजनस्याप्यभावादित्यर्थः ॥

**या०— प्रमाणप्रयोजनयोरिति** ॥ तथा हि । न तावदज्ञानस्यानात्मावरकत्वे प्रमाणमस्ति । तत्किं प्रत्यक्षमुतानुमानमाहोस्विदर्थापत्तिः । आद्येऽपि किमनात्मन्यधिगते आवरणमधिगम्यतेऽथवाऽनधिगते । नाद्यः । नीलार्थेऽवगते तदवगमविरोधादेव तत्रावरणस्यावगन्तुमशक्यत्वात् । न द्वितीयः । नीलप्रत्ययाभावे तदावरणस्य सुतरां प्रत्येतुमशक्यत्वात् । नापि द्वितीयः । तत्प्रतिबद्धलिङ्गाभावात् । न च विमतं पूर्वमावृतमिदानीमवगतत्वात्सम्मतवदित्यनुमानमस्तीति वाच्यम् । धारावाहिकविज्ञानगम्ये इदानीमवगतत्वसत्त्वेऽपि पूर्वमावृतत्वाभावेन व्यभिचारित्वात् । न च तत्राप्युत्तरकालवैशिष्ट्यस्य पूर्वम-

ज्ञातत्वान्न व्यभिचार इति वाच्यम् । तथाऽपि विशेष्यभूतार्थे व्यभिचारात् । इदानीमेवावगतत्वं हेतुरस्त्विति चेन्न । इदानीमेवावगतत्वे सिद्धे प्रागनधिगतत्वसिद्धिस्तत्सिद्धौ चेदानीमेवावगतत्वसिद्धिरितीतरेतराश्रयत्वप्रसङ्गात् । नापि तृतीयः । अनात्मन्यज्ञानं विना कस्याप्यनुपपत्त्यभावात् । ननु पूर्वापरकालसम्बन्धिविषयिणी तावत्प्रत्यभिज्ञा दृष्टा । सा च मध्येऽनवगतिमन्तरेण नोपपद्यते । अन्यथा तत्रापि प्रत्यभिज्ञाप्रसङ्गादिति चेन्न । प्रत्यभिज्ञाया धारावाहिकज्ञानगम्येऽनात्मनि च सदावगते आत्मनि च दर्शनेनानवगत्यनापेक्षकत्वात् । ननु तथाऽपि पूर्वमवगत्यङ्गीकृतौ तद्विनाशे संस्कारस्यावश्यम्भावात्तन्मूला स्मृतिः स्यान्न च साऽस्तीत्यस्मरणमेवानवगतिकल्पकमस्त्विति चेन्न । अवगतेऽप्युपलब्धतृणादिवदस्मरणसंभवात् । न चाज्ञातो घट इत्यनुभवात्साक्षिणैवानात्मन्यज्ञानसिद्धिः । तत्र साक्षिणा स्वाध्यस्ताज्ञानस्यैव प्रतीयमानत्वाङ्गीकारात् । यथा लौहित्यमुखयोः स्फटिकप्रतिबिम्बितयोः परस्परसम्बन्धः प्रतिभासते लोहितं मुखमिति, तथा ज्ञानात्मनोरात्मन्यध्यासात्परस्परसम्बन्धप्रतिभासोपपत्तेः । तस्मान्नास्त्यनात्मन्यावरणे प्रमाणम् । नापि प्रयोजनम् । स्वयमेव प्रकाशविहीनत्वाज्जडस्य । निष्पादितक्रिये च कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायातिपातन्यायादावृतरूपेऽनात्मन्यज्ञानावरणलक्षणमतिशयं कथमादध्यादिति विवरणोक्तरीत्या प्रमाणप्रयोजनयोरभावादित्याशयः ॥

श्री०—**प्रमाणेति** ॥ जडेऽज्ञानसद्भावे प्रमाणस्य प्राप्तप्रकाशप्रतिबन्धरूपप्रयोजनस्य चाभावादित्यर्थः ।

च०— **प्रमाणप्रयोजनयोरिति** ॥ अज्ञानस्यानात्मावरकतायां प्रत्यक्षं प्रमाणत्वेन दुर्निरूपम् । अनात्मन्यगृहीते तन्निरूपितावरणत्वस्य गृहीतेऽपि विरोधात्तस्य दुर्ग्रहत्वात् । इदं प्रागावृतं सांप्रतमवगतत्वादिति तु धारावाहिकद्वितीयादिस्थलेऽनैकान्तिकम् । इदानीमेवावगतत्वं त्वितरेतराश्रयत्वादिदूषितम् । अनात्मज्ञानं विना कस्याप्यनुपपत्तेरभावेनार्थापत्तिरपि दुर्निरूपैव । प्रयोजनमपि तादृशमेव । जडत्वेन स्वतः प्रकाशस्याप्रसक्त्या माननिवर्त्यस्यावरणस्य तत्प्रतिबन्धकत्वायोगेन प्रमाणबलात्प्रसक्तेरप्यभावेन तत्प्रतिबन्धरूपप्रयोजनमपि दुरुपपादमिति भावः ।

**सु०— अत्रोच्यते ॥ यत्तावद्भावरूपाज्ञानसिद्धौ प्रत्यक्षमुपन्यस्तम् तस्य ज्ञानाभावविषयत्वे को दोषः । अभावस्य षष्ठप्रमाणविषयत्वान्नेति चेन्न प्रत्यक्षत्वस्याङ्गीकर्तुमुचितत्वात् । धर्मिप्रतियोगिज्ञानभावाभावयोरनुपपत्तिरिति चेन्न तथा सति ज्ञानाभावस्य तव सर्वथाऽप्यप्रतीतिप्रसङ्गात् । ततश्च तन्निरासप्रयासानुपपत्तिः ।**

ब्रा० — अत्र यत्परेणानादिभावत्वे सति ज्ञाननिवर्त्यत्वमज्ञानलक्षणमसूचि तस्यानादेर्निवर्त्यत्वासंभवस्य परमते व्युत्पादिततया निरस्तप्रायत्वादध्यासान्यथाऽनुपपत्तिसूचितस्य भ्रमोपादानत्वरूपलक्षणस्य तु वक्ष्यमाणरीत्याऽन्यथोपपत्तिप्रतिपादनेन सुनिरस्यत्वात्किं तदर्थं पृथक् प्रयत्नेनेत्याशयेन साक्षाद्विवरणकारोदितप्रमाणान्येव निरस्यन्प्रथमोपन्यस्तप्रत्यक्षं निराकरोति ॥ **यत्तावदित्यादिना** ॥ अभावस्य षष्ठप्रमाणगम्यत्वादिति सिद्धवदुक्तिपूर्वं प्रत्यक्षाभाववादिनोऽपीत्युक्त्याऽभावस्य षष्ठप्रमाणवेद्यत्वस्य तत्सिद्धान्तत्वं प्रत्यक्षदूषणं तु अभ्युच्चयेनेति गम्यतेऽतस्तदादौ बाधकत्वेन शङ्कते ॥ **अभावस्येति** ॥ अभावाख्यषष्ठप्रमाणं हि प्रातर्गजाद्यभावप्रत्ययस्य प्रमाणान्तरेणानुपपत्तेस्तदर्थं स्वीकर्तव्यं वा घटाद्यभावप्रत्ययार्थमेव वा । न तावदाद्यः । तत्र क्षणं ध्यात्वा नासीत्तत्र गज इति प्रतिपत्तेरभावस्याप्रत्यक्षत्वेऽपि स्मर्तुं योग्यस्मरणाभावलिङ्गानुमेयानुपपलब्धिलिङ्गकानुमानेनैव तदुपपत्तेः । साक्षिग्राह्यबुद्धिसुखाद्यभावस्य नियमेन साक्षिवेद्यत्वात्स्मरणाभावानुमापकानुपलब्ध्यन्तरानुसरणप्रयुक्तानवस्थाया अप्यप्रसक्तेः । नापि द्वितीयः । प्रतियोगिस्मरणवतः पुरोवर्तिनि जायमानस्येन्द्रियान्वयव्यतिरेकानुविधायिनोऽभावप्रत्ययस्याप्रत्यक्षफलत्वानुपपत्तेः । अपरोक्षाकारत्वस्यानुभवसिद्धत्वाद्बाधकाभावाच्चान्यत्रोपक्षयकल्पनाऽनुपपत्तेः । उपपादयिष्यते चैतत्स्फुटम् 'अर्थापत्त्युपमाभावा अनुमान्तर्गताः क्वचित् । प्रत्यक्षान्तर्गतो भावः सुखादेर्नियमेन च' इत्यनुव्याख्याव्याख्यावसरे । एवं च ज्ञानरूपप्रतियोगिन आत्मरूपधर्मिणश्च योग्यत्वात्तदभावप्रत्यक्षमुचितमित्याशयेनाह ॥ **प्रत्यक्षत्वस्येति** ॥ तर्हि प्रत्यक्षाभाववादिनं प्रत्युक्तानुपपत्तिः स्यादेवेत्याशङ्कते ॥ **धर्मीति** ॥ सामान्यविशेषविषयेण प्रत्यक्षेण वा फललिङ्गाभावानुमानेन वा चित्सुखोक्तरीत्या ज्ञानरूपलिङ्गेन वा षष्ठप्रमाणेन वा ज्ञानाभावावगमस्योक्तानुपपत्त्या त्वयैव निरस्तत्वेन साधकाभावात्तव ज्ञानाभावप्रतीत्यभावापत्तेरित्याह ॥ **तथा सतीति** ॥ न चेष्टापत्तिः । स्वयं क्वचिज्ज्ञानाभावं प्रतीत्य प्रतीत्यन्तरे प्रसक्तस्य ज्ञानाभावविषयकत्वस्य निराकर्तव्यतया तदप्रतीतौ प्रसक्तेरेवाभावेनाहमज्ञ इत्यादेस्तद्विषयकत्वनिरासानुपपत्तिरित्याह ॥ **ततश्चेति** ॥ न च मम स्वत एव ज्ञानाभावज्ञानाभावेऽपि प्रतिवादिवाक्यप्रसक्ततन्निरासाय यत्नोऽयमिति वाच्यम् । धर्मिप्रतियोगिप्रतीत्यप्रतीत्योस्तवेव प्रतिवादिनोऽपि ज्ञानाभावप्रतीत्यनुपपत्त्या तत्पूर्वकवाक्यप्रयोगानुपपत्तौ ततोऽप्यप्रसक्तेः । व्याहतादिस्थले सत्यपि व्याहत्यादौ तदज्ञानेन विपरीतज्ञानेन च वाक्यप्रयोगोपपत्तावपि सति ज्ञानज्ञाने तदभावज्ञानोत्पत्तेः सर्वथाऽनुपपन्नत्वात् । न च सत्यपि ज्ञानादिरूपधर्म्यादिज्ञाने ज्ञानाभावभ्रान्त्या तथा प्रसक्तिरिति वाच्यम् । ज्ञानरूपधर्म्यादौ ज्ञायमाने तदभावभ्रान्तेरप्यनुपपत्तेः । अन्यथा तन्निवृत्तिरेव न स्यात् । किञ्च न तावज्ज्ञानाभावस्वरूपमङ्गीकृत्याहमज्ञ इत्यादेस्तद्विषयकत्वनिराकरणम् । तत्साधकप्रतीतेरनेन तुल्ययोगक्षेमत्वादन्यथा वक्ष्यमाणरीत्याऽस्यैव तद्विषयकत्वस्याङ्गीकर्तव्यतापातात् । नापि ज्ञानाभावस्व-

रूपमेवानङ्गीकृत्य । साधकसद्भावेन बाधकाभावेन तत्स्वरूपापलापायोगात् । तथा हि । ज्ञानाभावस्वरूपमनभ्युपगच्छता कुत्रापि प्रागभावादित्रितयमपि नाभ्युपगम्यते । उत ज्ञान एव वा तत्रापि त्रितयं वा प्रागभाव एव वा । नाद्यः । पारमार्थिकत्वाकारेण प्रपञ्चे त्रैकालिकनिषेधप्रतियोगित्वं स्वरूपेण विनाशं चाङ्गीकुर्वतोऽपसिद्धान्तापत्तेः । नापि द्वितीये प्रथमद्वितीयौ । विशेषहेत्वभावात् । न च साधकाभावात्प्रागभावः कुत्रापि नाभ्युपेयत इति वाच्यम् । उत्पन्नमात्रतन्तुषु पटो नास्तीत्यादिप्रतीतेरेवतत्साधकत्वात् । न च पटादिविशेषकार्यस्य विशेषप्रागभावकार्यत्वेन पटादिसामान्यरूपकार्याभावेनात्यन्ताभाववत्प्रागभावस्य सामान्याभावत्वाभावात्पटत्वावच्छिन्नप्रतियोगिताकाभावविषयिण्यास्तस्याः कथं प्रागभावविषयकत्वमिति वाच्यम् । कार्याभावेऽप्यत्यन्ताभावस्येवाबाधितप्रतीतिसिद्धस्य तस्यापह्नोतुमशक्यत्वात् । माऽस्तु वा प्रागभावसामान्याभावस्तथाऽपि नानुपपत्तिः । तत्तत्पटत्वावच्छिन्नप्रतियोगिकपटविशेषप्रागभावस्यैव प्रतीत्या विषयीकृतत्वेन सामान्यस्य तदवच्छेदकत्वेनाविषयीकरणात्प्रतीतस्य सर्वस्य व्यवहर्तव्यतानियमाभावेन पटो नास्तीति व्यवहारस्यैकदेशविषयकत्वेनाप्युपपत्तेः । न चोत्पत्त्यनन्तरं प्रागभावस्यैवाभावात्पूर्वं च तत्तत्पटत्वादिरूपप्रतियोगितावच्छेदकविशेषाप्रतीत्या न तदवच्छिन्नाभावप्रतीतिरिति वाच्यम् । सामग्र्यादिरूपलिङ्गेन कार्यविशेषप्रतीत्युपपत्तेः एतेन प्रागभावज्ञानानुपपत्तिरपि परोक्ता समाहिता वेदितव्या । अस्तु वाऽत्र विशेषस्यावच्छेदकत्वेनाविषयीकरणम् । तथाऽपि सामान्यधर्माक्रान्तविशेषप्रतियोगिकाभावप्रतीतिरियं न तु सामान्यस्य प्रतियोगितावच्छेदकत्वविषयिणीति नानुपपत्तिः । न च सामान्यस्य प्रतियोगितानवच्छेदकत्वे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानरूपकारणाभावान्न तदभावज्ञानमिति वाच्यम् । अनन्यथासिद्धप्रतीतिबलेन सामान्यधर्माक्रान्तप्रतियोगिविशेषज्ञानमात्रस्यैव क्वचित्तद्धेतुतया कल्पनीयत्वात् । अन्यथा गौरस्तीत्यादावपि सामान्यरूपेण विशेषप्रतीत्यभावापत्तेः । सामान्यज्ञानमात्रस्य क्वचिदपि विशेषावच्छिन्नप्रतीत्यनुपयोगे विशेषज्ञानाज्ञानयोस्तदवच्छिन्नाज्ञानप्रतीत्यनुपपत्तेर्वक्ष्यमाणत्वाच्च। अस्तु वा सामान्यस्यैव विशेषाभावप्रतियोगितावच्छेदकत्वम् । घटत्वावच्छिन्नप्रतियोगिताधिकरणमात्रवृत्तिकम्बुग्रीवत्वादिसाधारणतयाऽनतिरिक्तवृत्तित्वादेरवच्छेदकपदार्थत्वाभावेन स्वरूपसम्बन्धविशेषरूपस्य तस्यानन्यथासिद्धप्रतीतिबलेन कल्पनोपपत्तेः । न च भूतले घटो नास्तीति प्रतीतिवत्तन्तुषु पटो नास्तीति प्रतीतेरत्यन्ताभावविषयत्वेनोपपत्तेः सर्वमेतदनुपपन्नमिति वाच्यम् । भूतले घटसंसर्गस्य भावित्वे तत्प्रागभावस्य भूतत्वे तद्ध्वंसस्य सर्वथाऽसत्त्वे तदत्यन्ताभावस्य भूतले घटो नास्तीति प्रतीतिविषयत्वेन तत्रात्यन्ताभावमात्रविषयकत्वाभावात्प्रकृते पटस्य भावितया तदत्यन्ताभावविषयकत्वानुपपत्तेश्च । प्रामाणिकप्रतियोगिकात्यन्ताभावस्यानुपपन्नत्वात्पटोत्पत्तिपूर्वसमये सतोऽभावस्य चात्यन्ताभावत्वे प्रागभावस्यैव नामान्तरं कृतं

स्यात् । सार्वकालिकसार्वदेशिकनिषेधस्यैवात्यन्ताभावत्वात् । न च तत्समयसंसृष्टः पटोऽप्यप्रामाणिक एवेति वाच्यम् । कालान्तरभाविपटस्यैव तत्र प्रतियोगितया भानेन तादृशसंसृष्टस्य तत्त्वेनाभानात् । कार्यकारणयोरभेदेन संसर्गाप्रसक्तेश्च । भूतले घटो नास्तीत्यत्र तु प्रामाणिकघटाभावविषयकत्वानुपपत्त्या तत्संसर्गाभावविषयकत्वकल्पनम् । तस्मात्प्रतीतेरन्यथाऽनुपपत्तेः सर्वमुपपन्नम् । घटो भविष्यतीति बुद्धेश्च प्रागभावसिद्धिः । न च तस्या गन्धानाधारसमयानाधाराभावत्वरूपप्रागभावविषयकत्वं तदा मुक्त्युपस्थापकप्रमाणाभावादनुपपन्नमिति वाच्यम् । उत्तरैकावध्यभावत्वरूपस्य तस्य तद्विषयत्वोपपत्तेः । न च प्रतियोग्युत्पत्त्युत्तरकालेऽसत्त्वे सति तत्पूर्वकाले सत्त्वरूपस्योत्तरैकावधित्वस्य सामयिकात्यन्ताभावेनाप्युपपत्तेर्न तद्विषयकभविष्यत्वबुध्या प्रागभावसिद्धिरिति वाच्यम् । सामयिकात्यन्ताभावस्योक्तरीत्या निरस्तत्वात् । अत एवायं पाकानन्तरं रक्तो भविष्यतीति बुद्ध्या घटे रक्ताश्रितत्वसंशयो न निवर्तेतेति प्रत्युक्तम् । भविष्यतीति बुद्धेः रक्तत्वं नास्तीतिविषयकत्वस्योक्तरीत्योपपन्नत्वात् । प्रागभावकालस्यैव प्राक्कालतया प्राक्काल इति व्यवहारश्च प्रागभावे मानम् । न च तर्हि घटप्रागभावः प्राक्कालेऽस्तीति व्यवहारानुपपत्तिरिति वाच्यम् । घटः स्वकालेऽस्तीतिवत्प्रागभावः स्वकालेऽस्तीत्यस्योपपत्तेः । अन्यथा भूतले घट इत्यत्रापि घटवति तदभाववति वेति विकल्पदूषणप्रसङ्गात् । प्रकारान्तरेण प्राक्कालीनत्वस्यानुपपत्तेश्च । न च प्रतियोगिध्वंसानाधारकाल एव प्राक्काल इति वाच्यम् । प्रतियोगितत्प्रागभावानाधारसमयस्यैव ध्वंसप्रतीतिविषयत्वोपपत्त्या प्रागभावमङ्गीकृत्य ध्वंसस्यापि निवारणप्रसङ्गात् । उत्पन्नस्य पुनरुत्पत्त्यभावस्य सामग्रीविरहप्रयुक्तत्वात्कारणान्तरस्य सदा सत्त्वेन प्रागभावविरहादेव तस्य वक्तव्यत्वाच्च प्रागभावसिद्धिः । अत्यन्ताभावेनोपपत्तेर्निरस्तत्वात् । उत्पन्नप्रतिबन्धकताकल्पनायाश्च दण्डाभावप्रतिबन्धकत्वकल्पनातुल्ययोगक्षेमत्वेनानुपपत्तेः । पाकजरूपरसादिभेदस्य कारणान्तराभावेन प्रागभावभेदादेव वक्तव्यतया च प्रागभावसिद्धिः । न च युगपदुत्पत्तौ प्रमाणाभावेन क्रमभावितेजःसंयोगात्पूर्वरूपादिध्वंसाद्वा तदुपपत्तिरिति वाच्यम् । रूपोत्पत्तिप्रयोजकाग्निसंयोगादधिकाग्निसंयोगस्य रसोत्पत्तिप्रयोजकत्वे नियामकाभावादेव युगपदुत्पत्तिसिद्धेः । पूर्वरूपादिध्वंसभेदस्य प्रयोजकत्वकल्पनायाश्च प्रागभावमनङ्गीकुर्वता तुल्यन्यायतया ध्वंसस्याप्यनङ्गीकार्यत्वेनानुपपत्तेः । तस्मान्न प्रागभावे साधकाभावः । ननु तथाऽपि प्रागभावाभ्युपगमे तत्त्वज्ञानाय शास्त्रानारम्भप्रसङ्गः । दुःखप्रागभावानामपरिमितत्वे तेषामनन्तैर्जन्मभिर्दुरुच्छेदतया स्पष्टमेव शास्त्रारम्भवैफल्यम् । परिमितत्वे च सत्यपि शास्त्रजन्यज्ञाननिवर्त्ये मिथ्याज्ञाने सत्यपि च देहेन्द्रियादौ दुःखप्रागभावाभावे मोक्षप्रसङ्गात्तद्वैफल्यमेव । किञ्चैवं चीर्णप्रायश्चित्तस्य निरतिशयदुःखप्रागभावमात्मनि निश्चिन्वतो मुमुक्षा न भवेत् । मुमुक्षोर्वा मुक्त्युद्देशेन ब्रह्मवधे प्रवृत्तिः स्यादिति बाधकमिति चेन्न । दुःखप्रागभावानां परिमितत्वेऽपि तत्त्वज्ञानस्य मोक्षसाधनताप्रतिपादकप्रमाणानुरोधेन मिथ्याज्ञानस्य

मोक्षप्रतिबन्धकत्वसिद्धेरप्रतिबद्धसामग्र्या एव कार्यजनकत्वस्य च प्रसिद्धत्वात् । तत्त्वज्ञानेन निवृत्तमिथ्याज्ञानस्यैव दुःखप्रागभावाभावे मोक्षो नान्यस्येति कल्पनात् । न च दुःखप्रागभावस्य दुःखकारणत्वात्कारणाभावे च स्वत एव कार्याभावेन दुःखाभावे स्वत एव सिद्धे का प्रतिबन्धकल्पनेति वाच्यम् । कारणाभावातिरिक्तकार्यस्थले तदभावमात्रस्य कार्याभावप्रयोजकत्वेऽपि कारणनिवृत्तिरूपकार्यस्थले कारणाभावस्य कार्याभावप्रयोजकत्वासंभवेन दुःखप्रागभावनिवृत्तिरूपदुःखाभावरूपमोक्षे प्रतिबन्धकाभावादेः प्रयोजकत्वकल्पनौचित्यात् । दुःखात्यन्ताभावस्य सिद्धस्यापि त्वन्मते आनन्दाभिव्यक्त्यादेरिव तत्त्वज्ञानसाध्यत्वसंभवाच्च । अपरिमितत्वेऽपि वा तेषामुक्तप्रमाणानुरोधेन मिथ्याज्ञानादिसहकृतानामेव दुःखजनकतया सहकारिविघटकत्वज्ञानाय शास्त्रारम्भोपपत्तेश्च । कृतप्रायश्चित्तस्य ब्रह्महत्यादिफलनरकाद्यभावबोधकप्रमाणानुरोधेन तस्य दुःखाभावनिश्चयवद्दुःखप्रागभावाभावनिश्चयस्यापि कार्यैकोन्नेयतया तदनिश्चयेऽपि कृतप्रायश्चित्तस्य दुःखाभावनिश्चयेन वा मुमुक्षा ब्रह्मवधे प्रवृत्तिश्च युज्यत एव । न चैतत्कल्पनापेक्षया प्रागभावस्वरूपमनङ्गीकृत्य तत्कारणत्वमेव कुतो न परित्यज्यत इति वाच्यम् । अन्यथासिद्ध्या त्वदुक्तस्याबाधकत्वेनोच्यमानत्वात्साधकानामुक्तत्वाच्च । प्रागभावानभ्युपगमे त्वद्ग्रन्थस्वारस्यविरोधाच्च । तस्मात्प्रागभावादित्रितयमप्यन्यत्र ज्ञाने चावश्यमङ्गीकर्तव्यमिति तदेतज्ज्ञानाभावप्रतीत्यभावं प्रसञ्जयता तस्यानिष्टत्वसूचनात्सूचितमिति द्रष्टव्यम् ।

प०— परोक्तं सर्वं ज्ञानाभावविषयतयोपपन्नमिति सिद्धान्तयति ॥ **अत्रोच्यत इत्यादिना** ॥ **उचितत्वादिति** ॥ उन्मीलितनेत्रस्य झडित्यभावबुद्धेरुत्पत्तेरिति भावः । ज्ञानस्य प्रत्यक्षत्वेन तदभावस्य तथात्वौचित्यादिति वाऽभिप्रायः । वक्ष्यते चैतत् 'प्रत्यक्षान्तर्गतोऽभावः सुखादेर्नियमेन तु ॥ अन्यत्र झडितिप्राप्त' इति भक्तिपादे ॥

**श्री**०—या भावरूपाज्ञानप्रतीतिः सा ज्ञानाभावविषयैवेत्यानेतुमाह ॥ **तथा सतीति** ॥ लोक-इति शेषः । धर्मिप्रतियोगिप्रतिपत्तिविकल्पेन ज्ञानाभावस्य त्वन्मतेऽपि प्रतिपत्तुमशक्यत्वादिति भावः । इष्टापत्तिरिति चेत्तत्राह ॥ **ततश्चेति** ॥ ज्ञानाभावस्य सर्वथा प्रतीत्यभावाङ्गीकारे त्वदुक्तमर्थं न जानामीति व्यवहारो न ज्ञानाभावविषयक इति ज्ञानाभावविषयकत्वनिराकरणप्रयास एवानुपपन्नः स्यात्प्रतियोगिज्ञानाभावादिति भावः ।

च०— समाधत्ते ॥ **अत्रोच्यत इति** ॥ ज्ञानलक्षणप्रतियोगिन आत्मरूपधर्मिणश्च योग्यतया तदभावप्रत्यक्षतौचितीत्याशयेनाह ॥ **प्रत्यक्षत्वस्येति** ॥ अभावस्य प्रत्यक्षविषयतामुपगच्छन्तं प्रत्यभि-

हितामनुपपत्तिं स्मारयति ॥ **धर्मीति** ॥ तथा सति धर्मिप्रतियोगिज्ञानसदसद्भावनियन्त्रितज्ञानाभावप्रतीत्यनुपपत्तौ ॥ **सर्वथाऽप्यप्रतीतिप्रसङ्गादिति** ॥ अथ कथमेतत् घटे ज्ञानं नास्तीत्यादिप्रतीत्या तदभावावगाहनेऽभिहितानुपपत्त्यप्रसरात्परात्मन्यप्युपरतेन्द्रिये तदभावप्रतीतिसौलभ्यात् । तत्र प्रतीतस्य ज्ञानाभावविषयकत्वस्याहमज्ञ इत्यादिप्रतीतौ प्रतिषेधबुद्धिसंभवादिति चेन्मैवम् । तुल्यदिशा शास्त्रस्यानध्येतॄणां जायमानानामहमज्ञः शास्त्रार्थं न जानामीत्यादिप्रतीतीनां शास्त्राध्ययनोत्पादितार्थविषयकज्ञानत्वावच्छिन्नाभावावगाहितायां क्षतिविरहात् । धर्मिप्रतियोगिज्ञानयोस्तदध्ययनानुत्पादितत्वात् । त्वदुक्तमर्थं संख्यां वा न जानामीत्यादीनां तु तत्तद्विषयकचाक्षुषत्वाद्यवच्छिन्नाभावविषयकत्वस्य सूपगमत्वात् । तत्र धर्मिप्रतियोगिज्ञानयोरचाक्षुषत्वात् । त्वदुक्तार्थे प्रमाणज्ञानं मम नास्तीति विशिष्टविषयज्ञानस्याप्यचाक्षुषत्वेन स्ववचनव्याघातानापादकत्वात् । स्थाणुं पुरुषं च यत्र संदिग्धे तत्र स्थाणुं पुरुषं च न जानामीत्यादिप्रतीतीनां तत्तद्गोचरनिश्चयत्वाद्यवच्छिन्नाभावविषयकत्ववत्तत्रतत्रत्यव्यवस्थया विशेषधर्मावच्छिन्नाभावविषयकत्वोपगत्यैव सामञ्जस्यस्य सूपपादत्वादित्याशयात् ॥

**सु०—मम साक्षिणा ज्ञानाभावप्रतीतिरिति चेत् । तर्ह्ययमेव सा भवतु ।**

**वा०**— ननु साक्षीतरप्रत्यक्षेण ज्ञानाभावप्रतीतौ ह्येतदनुपपत्तिर्मयोद्भाव्यते न तु साक्षिणा तत्प्रतीतौ । तथा च साक्षिणा ज्ञानाभावं प्रतीत्याहमज्ञ इत्यादिप्रतीतेस्तद्विषयकत्वनिरासे काऽनुपपत्तिरित्याशयेन शङ्कते ॥ **ममेति** ॥ साक्षिणा ज्ञानाभावप्रतीतिमङ्गीकुर्वता तत्प्रतीतावप्युक्तानुपपत्तीनामवश्यं परिहार्यत्वात्तत्प्रकारसाम्यादहमज्ञ इत्यादीनामेव ज्ञानाभावविषयकत्वमभ्युपगम्योक्तानुपपत्तिपरिहारस्य कर्तव्यत्वे किं प्रतीत्यन्तरानुसरणेनेत्याशयेनाह ॥ **तर्हीति** ॥ ननु ज्ञानसामान्यविरोधिनो ज्ञानत्वावच्छिन्नप्रतियोगिताकस्य पदार्थस्याहमज्ञ इति प्रतीत्या विषयीकरणात्तस्य चाभावत्वे ज्ञानसामान्याभावयावद्विशेषाभावकूटान्यतरत्वावश्यम्भावात्तयोश्च यत्किञ्चित्प्रतियोगिव्यक्तिविरुद्धत्वाद्धर्म्यादिज्ञाने च सति तदसंभवेनास्या न ज्ञानाभावविषयकत्वम् । एवं त्वदुक्तमर्थं न जानामीत्यादिप्रतीतेरप्यर्थेन सहानुभूयमानार्थविषयिण्योक्तरीत्या न ज्ञानाभावविषयकत्वमिति प्रतीत्यन्तरानुसरणं युक्तमिति चेन्न । प्रतीत्यन्तरमनुसरताऽपि । तस्याहमज्ञ इत्यत्रेव सामान्यविरोधिविषयकत्वं वा त्वदुक्तमर्थं न जानामीत्यादिवद्विशेषविरोधिविषयकत्वं वा वक्तव्यं गत्यन्तराभावात् । तदुभयमपि त्वदुक्तरीत्यैव न सम्भवतीति ज्ञानाभावविषयकं साक्षिप्रतीत्यन्तरमिति रिक्तं वचः प्रसज्येत । अत एव तदन्यतरविषयकत्वेऽपि कथञ्चिदुक्तानुपपत्तिपरिहारे कर्तव्ये तत एवैतत्प्रतीतिविषयत्वमङ्गीकृत्य कुतो न तत्परिहार इत्यत्र तात्पर्यात् । कथं चेयमनुपपत्तिः ।

धर्म्यादिज्ञानातिरिक्तज्ञानविशेषस्यैव सामान्यधर्माक्रान्ततयाऽभावप्रतियोगितया भानपक्षस्य सामान्यस्यापि स्वरूपसम्बन्धविशेषरूपस्य विशेषाभावप्रतियोगितावच्छेदकत्वस्य स्वीकारेऽनुपपत्त्यभावपक्षस्य च प्रागभाव-प्रतीत्युपपादनोक्तरीत्योपपन्नतरत्वात्कथमन्यथाज्ञानसामान्यविरोधितया प्रतीयमानपदार्थस्याज्ञानत्वमपि धर्म्यादिज्ञाने सति ज्ञानसामान्याभावस्येवाज्ञानस्याप्यनुपपत्तेः । न च विषयापरोक्षवृत्तिप्रतिबिम्बित-चैतन्यस्यैव ज्ञानत्वसामान्यरूपचैतन्यात्मनाऽज्ञानविरोधित्वमित्यज्ञानस्य ज्ञानसामान्यविरोधित्वं धर्म्यादि-चैतन्यमात्रसत्त्वेऽपि तादृशचैतन्याभावादज्ञानमप्युपपद्यत इति वाच्यम् । कल्पकाभावात् । न चापरोक्ष-वृत्त्यन्वयव्यतिरेकौ न जानामीत्यज्ञानस्य ज्ञानसामान्यविरोधित्वादनुभवश्च कल्पक इति वाच्यम् । अपरोक्षवृत्त्यन्वयव्यतिरेकयोर्वृत्तेरेवाज्ञाननिवर्तकत्वमात्रेणानुभवस्य च वृत्तेरेव सामान्यधर्माक्रान्ततया विरोधित्वेनोपपत्तौ वृत्तिप्रतिबिम्बितचैतन्तस्य ज्ञानत्वसामान्यरूपचैतन्यात्मना विरोधित्वमित्यत्राकल्पक-त्वात् । एवमनुभवमार्गमनुसरता विरोधिनिरूपकज्ञानावच्छेदकस्य अज्ञानावच्छेदकस्य च सामान्यतो ज्ञानेऽपि विशेषविषयकं भावविषयस्य रूपाज्ञानमित्येव यथानुभवं कुतो न कल्पनीयम् । तच्च ज्ञाना-भावेऽपि सममेव । किञ्चाज्ञानस्येव ज्ञानाभावस्यापि साक्षिसिद्धत्वं वदता वृत्तिप्रतिबिम्बितचैतन्यमेव ज्ञानत्वसामान्यरूपचैतन्यात्मना ज्ञानाभावविरोधि । न तु चैतन्यमात्ररूपं धर्म्यादिज्ञानमित्यपि किं न कल्पनीयं कल्पकान्वयव्यतिरेकादेरुभयत्रापि साम्यात् । न च भावयोरविरोधवद्भावाभावयोर-विरोधस्यान्यत्राक्लृप्तत्वात्सामान्यस्य विशेषाभावप्रतियोगितावच्छेदकतायाः सामान्यज्ञानमात्रेण सामान्य-धर्माक्रान्तविशेषाभावभानस्य चान्यत्राक्लृप्तत्वात्कथं तत्कल्पकत्वमिति वाच्यम् । धर्मिकल्पनान्यायेना-न्यत्राक्लृप्तस्यापि यथानुभवकल्पनायामेव लाघवात् । अन्यथा वैचित्र्यं कुत्रापि न स्यात् । भावयोरविरो-धोऽपि यथानुभवमेव कल्प्यः । अन्यथेच्छाद्वेषयोरपि विरोधो न स्यात् । एतेनार्थेन सहानुभूयमान-त्वमज्ञानप्रतिबन्द्या समाहितं वेदितव्यम् । एवं च यत्र कदाऽपि न विशेषज्ञानं न च जानामीत्यनुभवश्च तत्र विशेषज्ञानप्रागभावप्रध्वंसयोरसंभवेऽपि पुरुषान्तरीयविशेषज्ञानात्यन्ताभावस्य चेश्वरासार्वज्ञ्यापादकतया ऽनुपपत्तावपि स्वसंसृष्टविशेषज्ञानात्यन्ताभावस्येश्वरादिव्यावृत्तस्य तत्रापि संभवान्न तादृशानुभवबलादप्य-ज्ञानस्यान्यत्र क्लृप्तत्वम् । अत एव प्रागभावादिविशेषाननुपादायाभावस्येत्युक्तम् । यच्चाज्ञानस्फोरक-त्वात्साक्षिणो न तन्निवर्तकत्वमिति तज्ज्ञानाभावेऽपि समं साक्षिण एव ज्ञानाभावस्फोरकत्वात् । यच्च तत्स्फोरकत्वहेतोरसिद्धिमाशङ्क्य तत्परिहारायाज्ञातताविशिष्टविषयस्य केवलसाक्षिवेद्यत्वसमर्थनम् तदपि ज्ञानाभावेऽपि समानम् । तदिदमुक्तमियमेव साऽस्त्विति । यच्चाज्ञानस्य केवलसाक्षिवेद्यत्वेऽनुमानाद्युक्त्य-नुपपत्त्या तद्विषयकत्वे चाज्ञानावच्छेदकविषयस्याप्यनुमानेऽवश्यं भानात्प्रमाणज्ञानस्य चाज्ञानविरोधित्वाद-नुमानविषयकत्वमज्ञानस्य नोपपद्यत इत्याशङ्क्य परोक्षवृत्तेरज्ञाननिवर्तकत्वानुपपत्तेरित्याद्युक्तम् तदपि न ।

परोक्षज्ञानादपि अज्ञानं निवर्तत एव । परोक्षतो ज्ञाते न जानामीत्यननुभवात् । अनुमित्या वह्न्यज्ञानं शास्त्रश्रवणेन च धर्माद्यज्ञानं निवृत्तमित्यनुभवाच्च । न च परोक्षवृत्त्यावह्न्याद्याकारसत्तानिश्चयेनावरणाभिभवान्न जानामीत्यननुभवो ज्ञानं निवृत्तमित्यनुभवश्चेति वाच्यम् । अपरोक्षस्थलेऽप्येवं कल्पनापत्तावज्ञाननिवृत्तिस्तत्रापि नाङ्गीकर्तव्या स्यात् । अज्ञानानिवृत्तौ परोक्षे व्यवहाराद्ययोगाच्च । न च नाविद्यानिवृत्तिर्व्यवहारकारणं भ्रमादपि तद्दृष्टेरिति वाच्यम् । भ्रमस्थलेऽपि व्यवहारसमानविषयकाज्ञाननिवृत्तेरिष्टत्वात् । न च दूरस्थवृक्षे आप्तवाक्यात्परिमाणविशेषावगमेऽपि तदज्ञानविपरीतभ्रमयोर्दर्शनात् । तस्यैव चक्षुर्विषयसन्निकर्षेण परिमाणविशेषापरोक्षज्ञाने सति तददर्शनादन्वयव्यतिरेकाभ्यामपरोक्षज्ञानमेवाविद्यानिवृत्तौ कारणमिति वाच्यम् । तत्रापि परोक्षवृत्त्याज्ञाननिवृत्तावप्युपाध्यादिदोषवशात्तादृशभ्रमोपपत्तेः । न च परोक्षवृत्तेरज्ञाननिवर्तकत्वे प्रत्यक्षदृष्टवन्हेरिव पर्वतो वन्हिमानित्याप्तवाक्याल्लिङ्गाद्वाऽवगतवह्नेरपि पुंस इदानीमस्मिन्पर्वते वह्निर्न वेति सन्देहो न स्यात् । तदभावे चेदानीमस्मिन्पर्वते वह्निर्विद्यत इति प्रश्नो न स्यादिति वाच्यम् । विषयापरोक्षदशायां तत्कालतत्सत्तानियमेन साक्ष्युपनीततत्कालस्यापरोक्षप्रतीतिविषयतया तत्र सन्देहाभावेऽपि वाक्यादिजन्यपरोक्षप्रतीतिदशायां तत्कालविषयसत्ताया अनियतत्वेन वाक्यादिजन्यज्ञाने साक्षिणाऽपि तत्कालाप्रतीत्या कालविशेषाज्ञानादेव तादृशसंशयाद्युपपत्तेः । तस्मादज्ञानावच्छेदकविषयविशेषस्य सामान्यतो ज्ञानमात्रेण तदवच्छेदकतयाऽज्ञानज्ञाने भानमित्येव समाधातव्यम् । तच्च ज्ञानाभावेऽपि समानमिति नानुपपत्तिरिति तदिदं सर्वमभिप्रेत्योक्तम् । इयमेव साऽस्त्विति ।

प०— **इयमेव सेति** ॥ न जानामीत्यादिधीरेव साक्षिरूपज्ञानाभावधीर्भवत्वित्यर्थः ॥

श्री०—शङ्कते ॥ **ममेति** ॥ तथाच न सर्वथाऽप्रतीतिप्रसङ्ग इति भावः ॥ **तर्हीयमेव सेति** ॥ या साक्षिणा ज्ञानाभावप्रतीतिरङ्गीक्रियते इयमेव सा । या पूर्वं त्वयोपपादिता भावरूपाज्ञानप्रतीतिः साक्षिणा सैव भवत्वित्यर्थः । ननु धर्मिप्रतियोगिप्रतीत्यप्रतीतिभ्यां साक्षिणा ज्ञानाभावप्रतीतिर्भवतां विरुद्धेति चेन्न । भावरूपाज्ञानस्य साक्षिणा प्रतीत्यङ्गीकारपक्षेप्युक्तानुपपत्तिसाम्यात् । ननु भावरूपाज्ञानप्रतीतौ धर्मिप्रतियोगिज्ञानरूपं साक्षिचैतन्यमेव न वृत्तिरूपम् । येन विरोधः स्यात् । ज्ञानाभावप्रतीतौ तु धर्म्यादिज्ञानं वृत्तिरूपमिति तत्र ज्ञानाङ्गीकारे भवतां विरोधः स्यादिति चेन्न । यथा त्वदुक्तमर्थं न जानामीति भावरूपाज्ञानप्रतीतौ धर्म्यादिज्ञानं साक्षिरूपमित्यङ्गीकृत्य विरोधपरिहारः क्रियते तथा त्वदुक्तमर्थं न जानामीति प्रतीतिः साक्षिणा जायमाना ज्ञानाभावविषयैवेत्यङ्गीकृत्य पूर्वोक्तविरोधपरिहारमत्रैव कुर्वित ते भावः ॥

**सु०**—**सौषुप्तिकज्ञानाभावानुमानेऽपि काऽनुपपत्तिः । पक्षाप्रतीतेर्नेति चेन्न । तस्याप्यनुमानोपपत्तेः । न च ज्ञानाभावानुमाने लिङ्गाभावः । अवस्थाविशेषत्वस्यैव लिङ्गत्वसम्भवात् ।**

**वा०**— एवं विवरणोक्तप्रत्यक्षं निरोकृत्य चित्सुखोक्तमपि तन्निराकरोति ॥ **सौषुप्तिकेति** ॥ यद्यपि न किञ्चिदित्यस्य परामर्शत्वमेवाभ्युपेत्य धर्म्यादिज्ञानभावाभावप्रयुक्तानुपपत्तिर्विषयसामान्यविशेषितज्ञानस्य सुषुप्तावज्ञाननिरूपकत्वस्य त्वयेव मयाऽपि तादृशज्ञानस्यैव ज्ञानाभावनिरूपकत्वाभ्युपगमादिति समाधातुं शक्यते । अत एव मिथ्यात्वं यदि दुःखादेरितिवाक्यव्याख्यावसरेऽहंप्रत्ययस्यात्मविषयकत्वोपपादनायैतत्समानन्यायस्य सुखमहमस्वाप्समित्यस्य परामर्शत्वमेवोक्तम् । तथाऽपि मम साक्षिणेत्याद्युक्तरीत्यैवास्य प्रकारस्य सुज्ञानत्वात्परेणातियत्ननिरस्तानुमानप्रकार एव सूपपाद इत्याशयेनेदमिति द्रष्टव्यम् । ननु सुषुप्तिकालीन आत्मा ज्ञानाभाववानित्यनुमाने पक्षाप्रतीतेर्नानुमानसंभव इत्याशङ्कते ॥ **पक्षेति** ॥ अनिद्राणस्योदयास्तमययोरन्तरालकालानुभवात्तद्दृष्टान्तेन निद्राकालात्पूर्वोत्तरास्तमयोदयकालयोरपि तत्कालत्वेन हेतुनाऽन्तरालकालवत्त्वमनुमाय तस्याप्यात्मवत्त्वं कालत्वेनेतरकालवदनुमातुं शक्यत एवेत्यनुमानेन सुषुप्तिकालीनात्मरूपधर्मिप्रतीतिर्युक्तेत्याह ॥ **तस्यापीति** ॥ **अवस्थाविशेषस्यैवेति** ॥ अन्यथा साक्षिवेद्येच्छादावज्ञानासंभवेनाज्ञानरूपलिङ्गेन सुप्तिकाले इच्छादिज्ञानाभावानुमानासंभवाल्लिङ्गान्तरस्य चासंभवात्सुषुप्ताविच्छादिज्ञानाभावानुमानं न स्यादिति भावः ॥

**स०**— ननु भवत्वसत्पक्षेऽन्यथासिद्धिस्त्वत्पक्षे तु कथमनुमानगम्यत्वमस्य सौषुप्तिकात्मनस्तदाऽननुभवात् । तस्मिन्धर्मिणि ज्ञानाभावानुमानायोगात् । यथा हि प्रातश्चत्वरे गजो नासीदित्यत्र प्रातःकालीनचत्वरानधिगमे गजाभावानुमानाभाव इति शङ्कते ॥ **पक्षाप्रतीतेरिति** ॥ सुषुप्त्यवच्छिन्नात्मरूपपक्षाप्रतीतेरित्यर्थः ॥ **तस्याप्यनुमानेति** ॥ संप्रतिपन्नोदयास्तमयकालवद्विवादपदयोरप्युदयास्तमयकालयोरुदयास्तमयकालत्वेनान्तरालकालमनुमाय तत्र चात्मवत्त्वस्येतरकालवत्कालत्वेनानुमानोपपत्तेरित्यर्थः ॥ **अवस्थाविशेषस्यैवेति** ॥ बहुव्रीहितयाऽवस्थाविशेषवत्त्वस्येत्यर्थः । ततश्च तत्कालीनोऽहं ज्ञानाभाववान् अवस्थाविशेषवत्त्वात् व्यतिरेकेण जाग्रदहमिवेत्यनुमानप्रयोगो द्रष्टव्यः न च ज्ञानाभावमन्तरेणावस्थाविशेषो वक्तुमशक्य इति वाच्यम् । श्रुतिप्रसिद्धप्राज्ञपरिष्वङ्गरूपस्य वा इदानींतनेन्द्रियसंप्रसादानुमितेन्द्रियोपरमरूपस्य वा तस्य सुवचत्वात् । यदा चोक्तरीत्यानुमितकालविशेषस्यैव पक्षत्वं तदावस्थाविशेषत्वस्यैव हेतुत्वमिति द्रष्टव्यम् ॥

**प०— पक्षेति** ॥ सुप्तिकालं पक्षीकृत्य ज्ञानाभावोऽनुमेयः । सुप्तिकालस्य चाप्रतीतेर्नानुमानावकाश इत्यर्थः ॥ **तस्यापीति** ॥ जाग्रदाद्यवस्थाऽवस्थान्तरपूर्विकेत्यादिरूपेणेति भावः । विवृतमेतन्न्यायामृतेऽविद्याप्रत्यक्षभङ्गे ॥

**या०— पक्षाप्रतीतेरिति** ॥ सुषुप्त्यवच्छिन्नात्मरूपपक्षाप्रतीतेरित्यर्थः ॥ **तस्याप्यनुमानेति** ॥ सम्प्रतिपन्नोदयास्तमयकालवद्विवादपदयोरप्युदयास्तमयकालयोरुदयास्तमयकालत्वेनान्तरालकालमनुमाय तत्र चात्मत्वस्य चोत्तरकालवत्कालत्वेनानुमानोपपत्तेरित्यर्थः ॥ **अवस्थाविशेषत्वस्यैवेति** ॥ बहुव्रीहितयाऽवस्थाविशेषवत्त्वस्यैवेत्यर्थः । ततश्च तत्कालीनोऽहं ज्ञानाभाववान् अवस्थाविशेषवत्त्वाद्व्यतिरेकेण जाग्रदहमिवेत्यनुमानं द्रष्टव्यम् । न च ज्ञानाभावमन्तरेणान्योऽवस्थाविशेषो वक्तुमशक्य इति वाच्यम् । श्रुतिसिद्धप्राज्ञपरिष्वङ्गरूपस्य वेदानीन्तनेन्द्रियप्रसादानुमितेन्द्रियोपरमरूपस्य वा तस्य सुवचत्वात् । यदा चोक्तरीत्याऽनुमितकालविशेषत्वस्यैव पक्षत्वं तदाऽवस्थाविशेषत्वस्यैव हेतुत्वमिति द्रष्टव्यम् ॥

**श्री०—तस्यापीति** ॥ पक्षस्यापीत्यर्थः । सुषुप्तिप्राक्काले उदयकालत्वेन विवक्षितस्तदनन्तरकालोऽस्तमयत्वेन विवक्षितः । तथा चोदयास्तमयकालौ आन्तरालिककालोपेतौ । उदयास्तमयकालत्वात्संप्रतिपन्नसूर्योदयास्तमयकालवदित्येवान्तरालिकं कालं सुषुप्तिकालं सुषुप्तिरूपमनुमाय स काल आत्मवान् भवितुमर्हति कालत्वादितरकालवदित्यनुमानोपपत्तेरित्यर्थः ॥

**च०—पक्षाप्रतीतेरिति** ॥ सुषुप्त्यवच्छिन्नात्मरूपपक्षाप्रतीतेरित्यर्थः ॥ **तस्याप्यनुमानेनेति** ॥ अनिद्राणस्योदयास्तमययोरन्तरालकालानुभवात्तद्दृष्टान्तेन निद्राकालात्पूर्वोत्तरास्तमयोदयकालयोरपि तत्कालत्वेन हेतुनान्तरालकालवत्त्वमनुमाय तस्याप्यात्मवत्त्वं कालत्वेनोत्तरकालवदनुमातुं शक्यत एवेत्यनुमानेन सुषुप्तिकालीनात्मरूपधर्मिप्रतीत्युपपत्तेरिति भावः ।

**सु०—अनुमानं त्वसम्बद्धमेव** ॥ प्रकाशकत्वस्य ज्ञाने प्रदीपप्रभायां चैकस्याभावेनासिद्ध्यादिप्रसङ्गात् । शब्दसाम्यमात्रेणानुमाने तु गोत्वेन वागादीनामपि शृङ्गित्वादिप्रसङ्गः । तमोविरोधित्वमेकमुभयत्रास्तीति चेन्न । तमोऽप्यविद्यान्धकारो वा । नाद्यः । दृष्टान्तस्य साधनविकलत्वात् । न द्वितीयः । असिद्धेः ॥ अभावमानागम्यत्वं त्वसिद्धमेव । अज्ञानं न मानगम्यं माननिवर्त्यत्वादिति चेन्न । तथा सति तत्र प्रमाणोपन्यासवैयर्थ्यापातात् । तदभावो व्यावर्त्यत इति चेन्न । अभावव्यावर्तनं भावसाधनमित्येकार्थत्वात् ॥ तृतीयानुमानं तु घटादेरपि तत्साधनसौलभ्येन परास्तम् ।

**वा०—अनुमानं त्विति** ॥ अत्रैवशब्देन बाधादेः स्पष्टतामाचष्टे । तथा हि । अत्र यथार्थ-ज्ञानमात्रस्य पक्षत्वे साक्षिरूपसुखादिज्ञानानिवर्तकत्वेन तत्र बाधः । वृत्तेः पक्षत्वे च त्वन्मते परोक्षवृत्तौ बाध एव । अपरोक्षवृत्तेः पक्षत्वे च तत्रैव व्यभिचारः । परोक्षज्ञानान्यत्वेन हेतुविशेषणे चाप्रयोजकत्वं धारावाहिकद्वितीयादिप्रमायां बाधोऽसिद्धिश्च । न चोत्तरोत्तरक्षणावच्छिन्नतद्विषयाज्ञानं तत्रापि निवर्तत इति वाच्यम् । क्षणानामप्रत्यक्षत्वात् । तदन्यत्वेन पक्षविशेषणे वाऽऽत्मज्ञानस्य पक्षत्वेऽनात्मज्ञाने व्यभिचारः । तस्यापि पक्षत्वे त्वन्मते जडावरकाज्ञानाभावाद्बाध एव । न च तत्रापि तदवच्छिन्नचैतन्यं तत्प्रमाण-विषय इति न बाध इति वाच्यम् । रूपादिहीनस्य चैतन्यस्य चाक्षुषत्वायोगात् । साध्ये चाद्यविशेषण-वैयर्थ्यम् । ज्ञानस्यैव तन्निवृत्तत्वेन स्वनिवर्त्यपदेनैव स्वप्रागभावव्यावर्तनात् । अभावव्यावृत्त्येत्येतावतैव पूर्तौ स्वप्राक्पदवैयर्थ्याच्च । जडावरकाज्ञानाभावाद् द्वितीयविशेषणमप्यसङ्गतम् । स्वोत्पादकादृष्टव्यावृत्ते-रावरणपदेनैव सिद्ध्या स्वविषयेत्यंशवैयर्थ्यं च । वृत्तिश्चिदुपरागार्थेति मतेऽज्ञानस्य ज्ञाननिवर्त्यत्वाभावेन तृतीयमप्यसङ्गतम् । आवरणाभिभवार्था वृत्तिरिति मतान्तरेऽपि वृत्तिप्रतिबिम्बितचैतन्यघटयोराध्यासिक-संबन्धाभावेन तस्य तदविषयतयाऽज्ञाननिवर्तकत्वायोगात् । अज्ञानस्य चिन्मात्राश्रयत्वेन वृत्तेस्तत्प्रति-बिम्बितचैतन्यस्य वा तदनाधारतया चतुर्थमप्ययुक्तम् । इतरविशेषणव्यावर्त्यव्यावर्तनस्य स्वविषयावरण-पूर्वकमित्यनेनैव सिद्धेरितरवैयर्थ्यं च । प्रमाप्रागभावप्रमोत्पत्तिप्रतिबन्धकादृष्टादेरज्ञानातिरिक्तस्यावरणत्वा-भावात् । तथात्वे वा तेनैव स्वप्रकाशब्रह्मावरणसंभवाद्धेतोरप्रयोजकत्वम् । न च तमोव्युदासाय तृतीयम् । तस्य प्रमामात्रविषयावरणत्वाभावात् । तस्मान्न प्रतिज्ञा युक्तेति । अत्राह नव्यः । विवादगोचरापन्नमित्यनेन जन्यसविकल्पकाजन्यचाक्षुषघटप्रमाणज्ञानमन्धकारनिवृत्त्यव्यवहितोत्तरकालीन-चाक्षुषज्ञानं वा विवक्षितम् । परमते जन्यज्ञानमात्रस्य सविकल्पकजन्यत्वात्सविकल्पकस्य जन्यज्ञान-जन्यत्वाच्च पक्षाप्रसिद्धिवारणाय जन्यसविकल्पकाजन्येत्युभयोपादानम् । अनेन धारावाहिकद्वितीयादि-बुद्धिव्यावृत्तिः । अस्मन्मते तु धारावाहिकद्वितीयादिबुद्धिरेव नास्ति । अन्तःकरणपरिणामरूपज्ञानस्य द्रव्यतया घटादिवदेकस्यैव ज्ञानस्य तावत्समयस्थित्युपपत्तेर्न तस्य पक्षतापत्त्या बाधः । पराभिमतेश्वर-ज्ञानादिव्यावृत्तये चाक्षुषप्रमाणज्ञानेति । साध्ये च स्वशब्दः समभिव्याहृतपरः । स्वप्रागभावपदेन स्वसमानाधिकरणः प्रागभावः कथ्यते । स्वविषयावरणेति स्वजननायोग्यम् । स्वनिवर्त्येति स्वजन्यध्वं-सप्रतियोगि । स्वदेशगतेति स्वाश्रये वर्तमानम् । एवं च पक्षीभूतज्ञानस्य घटपटादिसंयोगजनकत्वसंभवा-त्तत्प्रागभावस्तन्निवर्त्य इति संयोगादिप्रागभावात्मत्वस्वजनकादृष्टेच्छाप्रागभावपूर्वकत्वेनार्थान्तरव्यावृत्तये प्रातिलोम्येनैतानि विशेषणानि । अज्ञानं चैवंभूतमिति न बाधः । स्वप्रागभावान्यत्वं चाभावान्यत्वादन्य-देवेति नाखण्डाभावे वैयर्थ्यम् । अथवा प्रमाणज्ञानप्रागभाव एव स्वप्रागभावः । स्वविषये संशयादि-

जनकतायोग्यमेव स्वविषयावरणं स्वसत्ताक्षणनियतध्वंसप्रतियोगि स्वनिवर्त्यम्। ततश्च प्रागभावोऽपि परमते विशेषादर्शनतया संशयादिजनक इति स्वप्रागभावस्वजनकादृष्टान्धकारादिव्यावृत्तये स्वप्रागभावेत्यादि- विशेषणम्। परमते मनःसंयोगपूर्वकत्वेनार्थान्तरनिवृत्तये स्वनिवर्त्येति।

अथवा पराभिमतप्रागभावान्यत्वज्ञानसमानविषयकत्वज्ञाननिवर्त्यत्वज्ञानसमानाश्रयत्व- विशिष्टाज्ञानसिद्ध्यर्थं तानि विशेषणानीति न कस्यापि वैयर्थ्यम्। एतेनापि तेन विनोद्देश्या- सिद्धेः। अज्ञानाश्रयघटावच्छिन्नचैतन्यमेवान्तःकरणावच्छिन्नमिति तन्निष्ठज्ञानस्याप्यज्ञानसमानाश्रयत्वम- बाधितमेव। घटादिचाक्षुषज्ञानस्यापि तदवच्छिन्नचैतन्यविषयत्वादज्ञानस्य ज्ञानसमानविषयकत्वं चाबाधि- तम्। अनुभवबलादरूपस्याप्यहङ्कारस्य प्रत्यक्षत्वाभ्युपगमादरूपस्याप्यात्मनश्चाक्षुषप्रत्यक्षत्वाङ्गीकारे बाधकाभावात्।

वस्तुतोऽस्मदभिमतात्मनः पराभिमतविलक्षणत्वात्सत्तातुल्यत्वेति घटः सन्नित्यादिप्रत्यक्षस्य सर्वानुभवसिद्धत्वाच्चाक्षुषत्वमविरुद्धम्। न चान्तःकरणवृत्त्यादौ विषयस्याध्यासिकसंबन्धाभावाद्घटादे- र्विषयत्वानुपपत्तिरिति वाच्यम्। घटाद्यधिष्ठानचैतन्यस्यान्तःकरण वृत्त्यवच्छिन्नत्वेनान्तःकरणावच्छिन्न- साक्ष्यभेदात्तदाध्यासिकसंबन्धस्यैव साक्षिसंबन्धत्वात्। तस्मान्नात्रानुमाने काऽप्यनुपपत्तिः। घटध्वंसा- जनकघटापरोक्षप्रमाणज्ञानं घटं न जानामीत्यनुभवविषयनिवर्तकम् घटापरोक्षप्रमाणज्ञानत्वाद्घटध्वंस- जनकप्रत्यक्षवत्। विषयनिवर्तकतयाऽर्थान्तरवारणाय पक्षे ध्वंसाजनकेति विशेषणम्। आत्मनश्चा- निवर्त्यत्वात्तन्निवर्त्यं भावरूपाज्ञानमेव। पटादिप्रत्यक्षे परोक्षज्ञाने घटभ्रमे च व्यभिचारवारणाय क्रमेण हेतुविशेषणानि। अनुद्दिष्टघटादिध्वंसे ईश्वरस्य प्रतियोगिप्रत्यक्षसंभवादतीन्द्रियस्यैन्द्रियकस्याप्यज्ञान- दशायां घटादेरस्मदादितो ध्वंसाभावादन्वयव्यतिरेकाभ्यां प्रतियोगिप्रत्यक्षं ध्वंसे कारणमिति न साध्यवैकल्यम्। नापि प्रागभावनिवर्तकतयाऽर्थान्तरता। तस्य सत्त्वेऽपि ज्ञानस्य तन्निवृत्तितया तदनिवर्तकत्वात्। निवर्तकयोग्यतासाध्येति न धारावाहिकप्रत्यक्षे बाधो व्यभिचारो वेति वा भावरूपा- ज्ञानसिद्धिः। मूलाज्ञाने तु सर्गाद्यकालीनं कार्यं जडोपादानकं कार्यत्वात्सम्मतवत्। तच्च लाघवा- देवमित्यणुव्यतिरिक्तजडोपादानसिद्धावनादित्वे सति जडोपादानत्वं भावत्वं वा ज्ञाननिवर्त्यवृत्ति- जडवृत्तित्वाद्घटत्वादिवदिति जीवत्वादेरनाविद्यकत्वे ज्ञानान्निवृत्त्यनुपपत्तेर्न तदादायार्थान्तरत्व- मित्यनुमानमिति। तत्तुच्छम्। मन्मते जन्यज्ञानमात्रस्य बुद्धिमदीश्वरजन्यत्वेऽपि तज्ज्ञानजन्यत्वा- भावात्। तज्जन्यत्वेऽपि वा निर्विकल्पकानङ्गीकारेण सविकल्पकस्य जन्यज्ञानजन्यत्वाभावेन पक्षा- प्रसिद्धेरभावेन जन्यसविकल्पकाजन्येत्युभयोपादानस्यायुक्तत्वात्। मन्मते विशेषणज्ञानस्य विशिष्टज्ञाना- जनकत्वाद्धारावाहिकद्वितीयादिबुद्धौ पूर्वपूर्वज्ञानानामजनकत्वेन तस्या अपि जन्यसविकल्पकाजन्यत्वेन

पक्षत्वापत्तौ मन्मतेन बाधतादवस्थ्यात् । धारावाहिकबुद्धावपि साक्ष्युपनीततत्तत्क्षणभानसंभवेन तत्तत्क्षणविशिष्टाज्ञाननिवर्तकत्वेन तस्याः पक्षत्वेऽपि बाधाप्रसक्त्या तद्व्यावृत्तये विशेषणोपादानानौचित्याच्च धारावाहिकबुध्यभावपक्षस्त्वनुपपन्नः । ज्ञानमेव पुनः पुनर्ज्ञायत इत्यनुभवेन तत्सिद्धेः । तदपलापे चोभयसम्प्रतिपन्नसकृज्ज्ञान इव धारावाहिकस्थलेऽप्याशुविनाशाभ्युपगमापत्त्या तावत्कालस्थितेरकल्पनीयत्वात् । साध्ये च व्यधिकरणघटपटसंयोगादिसमानाधिकरणेच्छादिप्रागभावव्यावृत्तये विशेषणोपादानं प्रागभावानभ्युपगन्तुरयुक्तमेव । न च परमतेनार्थान्तरादिव्यावृत्त्यर्थं तदिति वाच्यम् । तथा सति तन्मतेनैवाप्रकाशितार्थप्रकाशकत्वहेतोर्विशिष्टसाध्याभावेऽपि प्रागभावादिपूर्वकत्वेनाप्युपपत्त्याऽऽप्रयोजकत्वात् । वस्तुतस्तदभावेनाप्रयोजकत्वपरिहारेऽर्थान्तरस्यापि तत एवाभावाद्विशेषणवैयर्थ्यमेव । विशिष्टसाध्योपादानेऽपि पटज्ञानानन्तरभाविचाक्षुषघटज्ञाने पटज्ञानस्य घटज्ञानसमानाधिकरणप्रागभावव्यतिरिक्ततया घटज्ञानजननायोग्यतयोत्तरघटज्ञानजन्यध्वंसप्रतियोगितया घटज्ञानाश्रयगततया तत्पूर्वकत्वेनार्थान्तरतादवस्थ्यात् । अन्धकारकालीनत्वगिन्द्रियजन्यघटज्ञानोत्तरभाविनोऽन्धकारनिवृत्त्यव्यवहितोत्तरभाविचाक्षुषज्ञानस्योक्तादृशघटज्ञानपूर्वकत्वेनोपपत्त्याऽर्थान्तरतैव ।

द्वितीयपक्षेऽपि संशयविशेषदर्शनप्रागभावयोः प्रमाणज्ञानप्रागभावान्यतया तद्विषये संशयादिजननयोग्यतया प्रमाणज्ञानसत्ताक्षणनियतध्वंसप्रतियोगितया स्वाश्रयगततया च तत्पूर्वकत्वेनार्थान्तरतैव । त्वन्मतेऽपि विशेषणभेदेन विशिष्टभेदस्यावश्यकत्वाद्घटावच्छिन्नचैतन्यान्तःकरणावच्छिन्नचैतन्ययोर्भेदस्यैव वक्तव्यत्वात् । अभेदेऽपि वा घटावच्छिन्नस्याज्ञानकल्पितत्वेनान्योन्याश्रयेणाज्ञानानाश्रयत्वादज्ञानाश्रयचिन्मात्रस्य वृत्त्यादिरूपज्ञानानाश्रयत्वात्स्वाश्रयगतत्वमज्ञाने बाधितमेव । न च तथाऽप्यज्ञानाश्रयचिन्मात्रस्य ज्ञानाश्रयान्तःकरणावच्छिन्नाभेदाज्ज्ञानसमानाश्रयत्वमज्ञानस्योपपन्नमेवेति वाच्यम् । अवच्छिन्नगतमिथ्यात्वसंसारादेरप्यवच्छेद्यगतत्वापत्त्या तयोरपि भेदस्यावश्यकत्वात् । अनुभवबलादरूपस्याप्यहङ्कारस्य प्रत्यक्षत्वाभ्युपगमेऽपि सन्घट इत्यादिघटादिसत्तानुभवस्यात्मविषयकत्वाभावेऽपि विश्वसत्ताया उपपादितत्वादुपपादयिष्यमाणत्वाच्च घटादिमात्रविषयकत्वेनोपपत्त्या द्रव्यचाक्षुषतायां रूपवत्त्वस्य प्रयोजकताया विनैव बाधकं त्यागायोगाद्घटादिचाक्षुषज्ञानस्य तदवच्छिन्नचैतन्यविषयकत्वानुपपत्त्याऽज्ञानस्य ज्ञानसमानविषयकत्वमपि बाधितमेव । अन्तःकरणवृत्त्यादौ विषयताप्रयोजकाध्यासिकसंबन्धाभावात्तद्वृत्ति च वृत्तिप्रतिबिम्बितविषयाधिष्ठानचैतन्येऽज्ञाननिवर्तकत्वाभावाद्बाध एव । न च घटाद्यधिष्ठानचैतन्यस्यान्तःकरणवृत्त्यवच्छिन्नत्वेनान्तःकरणावच्छिन्नसाक्ष्यभेदात्तदध्यासिकसंबन्धस्यैव तत्संबन्धत्वमिति वाच्यम्। अधिष्ठानचैतन्यस्यावच्छिन्नाभेदासंभवस्योक्तत्वात् । अभेदेऽवच्छिन्नवदवच्छेद्यस्यापि मिथ्यात्वेनाध्यासाधिष्ठानत्वासंभवाच्च । तथात्वे वाऽध्यासाधिष्ठानत्वेन ब्रह्मणः पारमार्थिकत्वसाधनानुपपत्तेः । यच्चोद्देश्य-

सिद्ध्यर्थतया विशेषणसार्थक्यमुक्तम् । तन्न । यत्राविशेषितसाध्यं प्रति हेतोरप्रयोजकता । यथा विमतं भिन्नाभिन्नं समानाधिकृतत्वादित्यादौ । यद्विशेषणं विनाऽर्थान्तरादि वा । यथेश्वरानुमानेऽदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोगीति । तत्रैवोद्देश्यसिद्ध्यर्थत्वं वाच्यम् । न चात्रार्थान्तरादिनिवारकत्वम् । तदसंभवस्योक्तत्वात् । न च तद्विषयावरणसमयवर्तित्वे सति तन्निवर्तकत्वरूपस्याप्रकाशितार्थप्रकाशकत्वहेतोर्विशिष्टसाध्येन विनाऽनुपपत्तिरेव । अज्ञानातिरिक्तस्य ज्ञाननिवर्त्यस्य विषयावरणस्याभावात् । प्रागभावस्याप्रसिद्धत्वादन्यस्य चासंभवादिति वाच्यम् । प्रागभावस्य व्युत्पादितत्वात् । तस्य चावरणत्वाभावे स्वविषयावरणपूर्वकमित्येतावतैवोपपत्तौ शेषवैयर्थ्यस्य वज्रलेपत्वात् । अन्यथाऽनादित्वभ्रमोपादानत्वादिविशेषणानि प्रक्षिप्योद्देश्यसिद्ध्यर्थतया वैयर्थ्यसमाधानापातात् । तस्मान्नेदमनुमानमुपपन्नं तदेतदाह ॥ **असंबद्धमेवेति** ॥ तत्र बाधादेरपरिहार्यत्वादित्याशयः ।

यच्च घटध्वंसाजनकेत्यनुमानं तदपि न । अतीन्द्रियस्यापि दुरितादेः प्रायश्चित्तादिना ध्वंसस्यासदादितो जायमानत्वात्तत्रेश्वरज्ञानकल्पकाभावेनानुद्दिष्टघटादिध्वंसे च व्यभिचारेण प्रतियोगिप्रत्यक्षस्य ध्वंसाजनकत्वात् । अर्थान्तरासंभवाद्धटध्वंसाजनकेति पक्षविशेषणवैयर्थ्यम् । परोक्षज्ञानस्याप्यज्ञाननिवर्तकताया उपपादितत्वेन बाधप्रसक्तेरभावेनापरोक्षविशेषणवैयर्थ्यं च । प्रागभावनिवर्तकत्वेनाप्युपपत्त्या अर्थान्तरता च । तस्य न जानामीत्यनुभवविषयत्वानुपपत्तेः परिहृतत्वात् । न च प्रमाणज्ञानस्य प्रागभावनिवृत्तिरूपतया न निवर्तकत्वम् । अज्ञानेऽपि तुल्यत्वात् । न चाज्ञाननिवृत्तिर्भावनिवृत्तित्वादतिरिक्तैवेति वाच्यम् । धर्मिकल्पनान्यायेन क्लृप्तप्रागभावनिवृत्तावेवातिरिक्तत्वकल्पनौचित्येन भावत्वविशेषणस्याप्रयोजकतयाऽनुपादेयत्वात् । न चानवस्थादि तत्प्रयोजकतया कल्पकम् । अक्लृप्ताज्ञानकल्पनापेक्षया क्लृप्तप्रागभावादिपरम्परासिद्धविषयत्वादिकल्पनोपपत्तेः । त्वदभिमताज्ञानस्यानादित्वेन ज्ञाननिवर्त्यत्वासंभवस्योक्ततया बाधश्च । भ्रमपरोक्षज्ञानयोरज्ञाननिवर्तकत्वेन हेतावपरोक्षप्रमाणपदवैयर्थ्याच्च । अनुभवविरोधस्योभयत्र तुल्यतया परोक्षज्ञानस्येवापरोक्षज्ञानस्याप्यज्ञाननिवर्तकत्वाभावेऽपि हेतोरुपपत्त्याऽप्रयोजकत्वं च । मूलाविद्यानुमाने च प्रकृत्युपादानकत्वेनोपपत्त्याऽर्थान्तरता । न च तत्र प्रमाणाभावः । चतुर्थपादे व्युत्पादयिष्यमाणत्वात् ।

यच्चानुमानं जडोपादानत्वमित्यादि तत्र जीवत्वादिकमादायार्थान्तरता । न च तस्यानाविद्यकत्वे न ज्ञाननिवर्त्यत्वमिति वाच्यम् । सत्यस्यापि ज्ञानेन निवृत्तेरुक्तत्वादप्रयोजकत्वं च । अज्ञानकल्पितत्वस्याव्याप्यसिद्ध्या दृष्टान्ते साध्यवैकल्यं च । जडोपादानत्वादिकं सादिमात्रवृत्ति जडवृत्तित्वाद्घटत्वादिवदित्याभाससाम्यं च । तदेतदाह ॥ **अनुमानं त्वसंबद्धमेवेति** ॥ तुशब्दो विशेषार्थः । परोत्प्रेक्षितो अनुमानविशेषोऽप्यसंबद्ध एवेत्यर्थः ।

हेत्वनुपपत्त्या चानुमानस्याभासतामुपपादयति ॥ **अनुमानं त्विति** ॥

प्रदीपप्रभात्वरूपस्य ज्ञानहेतुत्वरूपस्य वा तस्य दृष्टान्ते सत्त्वेऽपि पक्षेऽभावात् । ज्ञानत्वरूपस्य च तस्य पक्षे सत्त्वेऽपि दृष्टान्तेऽभावात् । असिद्धिसाधनवैकल्यप्राप्तिरित्याह ॥ **प्रकाशकत्वस्येति** ॥ एकस्याभावेनेति वदतोऽयमाशयः । स्वविषयावरणनिवर्तकत्वाज्ञानान्धकारान्यतरनिवर्तकत्वादिरूपस्यानुगतत्वेऽपि साध्यावैशिष्ट्यापादकतया न हेतुशरीरान्तःप्रविष्टप्रकाशकत्वशब्दार्थतया विवक्षा युक्ता । साध्यावैशिष्ट्यानापादकस्य ज्ञानत्वादेश्च नानुगतत्वम् । एवं व्यवहारहेतुत्वमात्रस्येन्द्रियादौ व्यभिचारित्वेन तदर्थतयाऽविवक्षणीयत्वात् । साक्षाद्व्यवहारहेतुत्वस्य दृष्टान्ते परम्परया तस्य च पक्षेऽसत्त्वेनासिद्ध्यादितादवस्थ्यमिति । प्रकाशशब्दवाच्यत्वं प्रकाशकत्वमतो नोक्तदोष इत्यत आह ॥ **शब्देति** ॥ **एकार्थत्वादिति** ॥ उपलक्षणं चैतत् । अज्ञानाविषयकस्य तदभावव्यावर्तकत्वानुपपत्तेश्चेत्यपि द्रष्टव्यम् । आभाससाम्योक्तौ तद्दूषणानां बाधादीनामपि लाभात्किं विशिष्य तदुक्त्येत्यपि तुच्छताज्ञापनायाभाससाम्यमेव तत्त्वप्रदीपिकोक्तानुमानस्याह ॥ **तृतीयेति** ॥ अयं घटः स्वप्रागभावातिरिक्तानादिनिवर्तको घटत्वाद्घटान्तरवदित्यपि प्रयोगस्य सुलभत्वादिति भावः ॥

स॰— **प्रकाशकत्वस्येति** ॥ अत्र कश्चित् । प्रकाशशब्देन तज्जन्यव्यवहारलक्षणयाऽप्रकाशितव्यवहारहेतुत्वं हेत्वर्थः । तच्चोभयत्रानुगतमिति नासिद्ध्यादि इत्याह । तत्तुच्छम् । साक्षाद्धेतुत्वविवक्षायां ज्ञानस्यैव तथा व्यवहारहेतुत्वेन साधनवैकल्यात् । प्रयोजकत्वविवक्षायां तु चक्षुरादौ व्यभिचारादिति ॥ **तृतीयानुमानं त्विति** ॥ देवदत्तघटः देवदत्तघटाभावातिरिक्तानादेर्निवर्तकः । घटत्वात् । यज्ञदत्तघटवदिति अनुमानेन घटाभावातिरिक्तं किञ्चिदनादिभावरूपं घटनिवर्त्यमपि सिद्ध्येदित्यतिप्रसङ्गपराहतमित्यर्थः ॥

प॰— **अनुमानं त्विति** ॥ अप्रकाशितार्थप्रकाशकत्वादित्यनुमानमित्यर्थः ॥ **असिध्यादीति** ॥ ज्ञापकाप्यायकत्वरूपत्वेऽसिद्धिः । ज्ञापकत्वरूपत्वे चक्षुरादौ व्यभिचारः । ज्ञानत्वरूपत्वे साधनवैकल्यं दृष्टान्तस्येति भावः । प्रागुक्तानुमानान्तरं च निराह ॥ **अभावेति** ॥ **घटादेरिति** ॥ घटोऽयमेतद्घटप्रागभावातिरिक्तानादेर्निवर्तको घटत्वाद्घटान्तरवदिति वादावल्युक्तदिशेति भावः ॥

या॰— **प्रकाशकत्वस्येति** ॥ अत्र कश्चित् । प्रकाशशब्देन तज्जन्यव्यवहारलक्षणयाऽप्रकाशितव्यवहारहेतुत्वं हेत्वर्थः । तच्चोभयत्रानुगतमिति नासिद्धिरित्याह । तत्तुच्छम् । साक्षाद्धेतुत्वविव-

क्षायां ज्ञानस्यैव तथा व्यवहारहेतुत्वेन साधनवैकल्यात् । प्रयोजकत्वविवक्षायां तु चक्षुरादौ व्यभिचारादिति ॥ **तृतीयानुमानं त्विति** ॥ देवदत्तघटो देवदत्तघटाभावातिरिक्तानादेर्निवर्तको घटत्वाद्यज्ञदत्तघटवदित्यनुमानेन घटाभावातिरिक्तं किञ्चिदनादिभावरूपं घटनिवर्त्यमपि सिद्ध्येदित्यतिप्रसङ्गपराहतमित्यर्थः ॥

**श्री० — असिध्यादीति** ॥ पक्षीभूते ज्ञानेऽर्थप्रकाशकत्वं नामार्थप्रकाशात्मकबुद्धित्वमेव नान्यत् । प्रदीपप्रभायां चार्थप्रकाशकत्वं नामार्थप्रकाशजनकत्वमेव । एवं चार्थप्रकाशजनकत्वविवक्षायामसिद्धिः । अर्थप्रकाशात्मकबुद्धित्वविवक्षायां दृष्टान्ते साधनवैकल्यमित्यर्थः । पक्षदृष्टान्तानुगतं प्रकाशकत्वं न विद्यते । शब्दसाम्येन चेद्वाचो गोत्वाच्छृङ्गं समापतेदित्याह ॥ **शब्दसाम्यमात्रेणेति** ॥ **तत्रेति** ॥ अज्ञान इत्यर्थः ॥ **वैयर्थ्येति** ॥ तस्य साध्यज्ञस्यर्थत्वादिति भावः । अतद्व्यावृत्तिपक्षाङ्गीकारेण शङ्कते ॥ **तदभाव इति** ॥ पूर्वोक्तप्रमाणैरिति शेषः ।

**च० — अनुमानं त्विति** ॥ अत्रैवशब्देन बाधादेः स्पष्टतामाचष्ट इत्यभिधाय बाधादिकं प्रपञ्चितं प्रपञ्चकैः ॥ **प्रकाशकत्वस्येति** ॥ विषयीकारित्वरूपप्रकाशकत्वस्य पक्षवृत्तित्वेऽपि निदर्शनेऽभावाज्ज्ञानहेतुत्वरूपस्य च तस्य निदर्शनवृत्तित्वेऽपि पक्षावृत्तितयाऽसिद्धिसाधनवैकल्यप्रसङ्ग इति भावः ॥ **तृतीयानुमानमिति** ॥ नीलघटः नीलघटप्रागभावातिरिक्तानादिनिवर्तकः नीलघटत्वात्पीतघटवदित्यपि सुसाधत्वादिति भावः ॥

**सु० — त्वदुक्तमर्थं न जानामीति व्यवहारस्तु ज्ञानाभावविषयोऽपि भविष्यति ॥ अध्यासकार्यानुपपत्तिस्तु नास्त्येव, ज्ञानस्यान्तःकरणोपादानतोपपत्तेः । सत्योपादानत्वे सत्यताप्रसङ्गस्त्विष्ट एव । न हि रजतवज्ज्ञानस्यापि बाधोऽस्ति । तथात्वे याथार्थ्यमपि स्यादिति चेन्न स्वरूपसतोऽपि विषयासत्त्वेनायथार्थत्वोपपत्तेः । न हि स्वरूपसतो विषयसत्तयाऽपि भाव्यमिति नियामकमस्ति, साक्षिचैतन्ये व्यभिचारात् । अर्थस्तु रजतादिरसत्त्वात्कारणमेव नापेक्षते ॥ ज्ञानाद्बन्धनिवृत्तिस्त्वसिद्धैवेत्युक्तम् ॥ अतो नोक्तप्रमाणैर्भावरूपाज्ञानसिद्धिः ॥**

**वा० — त्वदुक्तमिति** ॥ न च सति ज्ञाने कथं तदभावव्यवहार इति वाच्यम् । प्रत्यक्षस्य ज्ञानाभावविषयकत्वप्रतिपादकन्यायेनोक्तोत्तरत्वात् । अज्ञानेऽप्यस्य पर्यनुयोगस्य साम्याच्च । न चाज्ञानस्य साक्षिवेद्यत्वेन प्रमाणाबोध्यत्वान्नानुपपत्तिरित्युक्तमिति वाच्यम् । ज्ञानाभावस्यापि साक्षिवेद्यत्वोपगमेन

परिहारसौलभ्यादित्याशयात् । अर्थज्ञानात्मकमध्यासं वदतो ज्ञानानुपपत्तिरभिमतार्थानुपपत्तिर्वा । नाद्य इत्याह ॥ **ज्ञानस्येति** ॥ पराशयमुद्धाट्य निषेधति ॥ **न हीति** ॥ अर्थोऽप्यधिष्ठानभूतात्मशक्त्यादिर्न तवाप्यनुपपद्यमानतयाऽभिमतः । रजतादिस्तु कार्यमेव नेति द्वितीयं निराह ॥ **अर्थस्त्विति** ॥ असतोऽपि प्रतीतिविषयत्वस्योपपादितत्वादिति भावः । न पूर्वार्थापत्तिवत्किञ्चेत्युक्तायां ज्ञानाद्बन्धनिवृत्तिश्रवणान्यथाऽनुपपत्तावन्यथोपपत्तिर्दोषः किन्त्वाक्षेपकस्याप्रमितत्वमेव दूरेऽन्यथोपपत्तिविचार इत्याशयेनाह ॥ **ज्ञानादिति** ॥ **उक्तमिति** ॥ बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत इत्येतद्भाष्यव्याख्यावसर उक्तमित्यर्थः । ननु प्रत्यक्षव्यवहारयोर्निर्विषयकत्वासंभवात्तद्विषयेऽवश्यं वक्तव्ये विषयत्वेन त्वदुक्तमेवाज्ञानं मयोच्यत इत्याशङ्कां परिहरन्नुपसंहरति ॥ **अत इति** ॥ यद्वोपक्रमानुसारेणोपसंहारेऽपि भावरूपेत्युक्तमिति ध्येयम् ।

**प०— ज्ञानाभावविषयोपीति** ॥ तत्रोक्तानुपपत्तिस्त्वयाऽपि समाधेया । अन्यथा त्वन्मतेऽपि ज्ञानाभावव्यवहारासिद्धिप्रसङ्गादिति भावः ॥ **नास्त्येवेति** ॥ कुत इत्यतस्तत्र किं भ्रान्तेरनुपपत्तिरुच्यते । उत रजतादिरूपार्थस्य वेति हृदि विकल्प्याद्यं निराह ॥ **ज्ञानस्येति** ॥ परमतेनाह ॥ **साक्षिचैतन्य इति** ॥ द्वितीयं निराह ॥ **अर्थस्त्विति** ॥ श्रुतार्थापत्तिं च निराह ॥ **ज्ञानादिति** ॥ **उक्तमिति** ॥ 'इत्युक्तेर्बन्धमिथ्यात्वं नैवमुक्तिरपेक्षत' इत्यत्रेति भावः । एतदपि सर्वं प्रपञ्चितमविद्यानुमानादिभङ्गेष्विति विस्तरस्तत्रैव ध्येयः ।

**श्री०**— किञ्च विशुद्धब्रह्मात्मनीत्युक्ताध्यासान्यथाऽनुपपत्तिरूपं भावरूपाज्ञानसाधकं प्रमाणमपाकरोति ॥ **अध्यासकार्येति** ॥ अध्यासरूपकार्येत्यर्थः ॥ **ज्ञानस्येति** ॥ रजताध्यासस्येत्यर्थः । तथाच मिथ्याभूतमेव किञ्चिदुपादानमन्वेषणीयमित्युक्तमसदिति भावः । सत्योपादानकत्व इत्यादिनोक्तं दूषयति ॥ **सत्योपादानत्व इति** ॥ सत्योपादानकत्व इत्यर्थः ॥ **सत्यताप्रसङ्ग इति** ॥ अध्यासरूपकार्यस्येत्यर्थः । अर्थज्ञानात्मकोभयविधाध्यासाङ्गीकारात्सत्योपादानकत्वेन सत्यत्वं किं ज्ञानस्यापाद्यते उतार्थस्य रजतस्य । आद्ये इष्टापत्तिरित्याह ॥ **न हीति** ॥ एतावन्तं कालं रजतज्ञानमासीत् । भ्रम आसीदित्यनुभवेन ज्ञानस्वरूपस्य सत्यत्वादिति भावः । तथात्वे ज्ञानस्वरूपस्यानध्यस्तत्वेन सत्यत्वे । ननु स्वरूपसत्वे विषयत्वं नियतमिति चेत्तत्राह ॥ **न हीति** ॥ **साक्षीति** ॥ साक्षिचैतन्यस्य सत्यत्वेऽपि तद्विषयस्य दुःखादेर्मिथ्यात्वादिति भावः । द्वितीये त्वापादकभूतं सत्योपादानकत्वमेवासिद्धमसत्त्वादित्याह ॥ **अर्थस्त्विति** ॥ **कारणमेवेति** ॥ सत्योपादानकत्वं तु दूरापास्तमिति भावः ॥ **इत्युक्तमिति** ॥ ज्ञानजात्तत्प्रसादादेवमुच्यत इत्यङ्गीकारादिति भावः ।

अनु०— **स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेत् ॥**

**सु०— किञ्च न वयं भावरूपाज्ञानस्य परिपन्थिनः; किं नाम परपक्षे तन्न सम्भवतीति ब्रूमः। नन्वङ्गीकृतं चेदज्ञानं तर्हि भवतोऽप्युक्तानुपपत्त्या शास्त्रवैयर्थ्यमापन्नमित्यत आह ॥ स्वभावेति ॥ स्वश्चासौ भावश्चेति स्वभावो जीवस्तदाश्रितं तदावरणं चाज्ञानमिति वादः स्वभावाज्ञानवादः। तस्य निर्दोषत्वाज्जडब्रह्माज्ञानवादोक्तदोषाभावान्न तच्छास्त्रवैयर्थ्यमस्मन्मते भवेत् ॥ तथा स्वयमेव भवत्यस्तीति स्वभावो नाज्ञानकल्पित इति यावत्। तदज्ञानवादस्योक्तेतरेतराश्रयदोषविकलत्वान्न तद्भवेत् ॥ तथा स्वः स्वतन्त्रो भावः परमात्मा स्वस्य भावो धर्मः पारतन्त्र्यादिर्वा स्वभावस्तद्विषयमज्ञानं जीवस्येति वादः स्वभावाज्ञानवादस्तस्य स्वप्रकाशे स्वविषयाज्ञानासम्भवदोषविधुरत्वान्न तद्भवेत् ॥ तथा स्वभावभूतमेवाज्ञानं न मिथ्येति वादस्यानवस्थादिदोषरहितत्वान्न तद्भवेत् ॥ तथा स्वभावेन स्वतन्त्रेण परमेश्वरेणाज्ञानं जीवस्येति वादस्य स्वप्रकाशस्वरूपाभिन्नधर्मविषयमप्यज्ञानं जीवे न युक्तमिति दोषहीनत्वान्न तद्भवेत्।**

वा०— ननु स्वभावाज्ञानवादस्येत्यादिना स्वपक्षेऽनुपपत्तिपरिहारोऽसङ्गतः। आश्रयाद्यनुपपत्त्या तत्साधकप्रमाणानुपपत्त्याऽज्ञानस्वरूपस्यैव निपुणतरं निरस्ततया तदङ्गीकारप्रसक्तेरेवाभावादित्यतोऽतोऽधिकारिविषयेत्यादिना परं प्रति वक्ष्यमाणस्याज्ञानाभावे विषयाद्यभावाच्छास्त्रवैयर्थ्यस्याज्ञानानभ्युपगमे सिद्धान्तेऽपि प्रसक्त्याऽज्ञानस्यावश्यमङ्गीकार्यत्वात्तदनुपपत्तिश्च परपक्ष एव न स्वपक्ष इत्याशयेन स्वपक्षे तदनुपपत्तिपरिहाराय प्रवृत्तस्योत्तरवाक्यस्य नासङ्गतिरित्याशयेनाह ॥ **किञ्चेति** ॥ निर्विशेष इत्यादिनोक्तमाश्रयाद्यनुपपत्तिशास्त्रवैयर्थ्यरूपं बाधकं स्वपक्षे नास्ति चेत्यर्थः। ननु भावरूपमज्ञानं निषेधतस्तव कथम्, बाधकप्रसक्तेः; इत्यत उक्तं **न वयमिति**। तर्हि कथं निषेधनमित्याशङ्कते ॥ **किं नामेति** ॥ एवं मूलाभिमतं प्रसञ्जकमुक्त्वा साक्षान्मूलव्यावर्त्यं कथयन्मूलमवतारति ॥ **नन्विति** ॥ नन्वज्ञानानभ्युपगमेऽपि वक्ष्यमाणरीत्या शास्त्रवैयर्थ्यप्राप्तेः कथमङ्गीकृतं चेदित्युक्तमित्यत आश्रयाद्यनुपपत्तिप्रयुक्ताज्ञानासंभवनिमित्तशास्त्रवैयर्थ्यं तदङ्गीकारपक्ष एवेत्याशयेनोक्तमुक्तानुपपत्त्येति। यद्वाऽज्ञानानभ्युपगमे शास्त्रवैयर्थ्यप्राप्तावपि न तदङ्गीकारे तत्प्राप्तिरित्यत उक्तमुक्तानुपपत्त्येति। भवतोऽप्युक्तदोषापत्तिरित्येव वक्तव्ये न तद्भवेदिति मूलानुसारेण शास्त्रवैयर्थ्यमिति फलकथनमिति द्रष्टव्यम्। यद्यपि ज्ञानाभावाङ्गीकारेणापि कथञ्चिद्विषयादि व्युत्पातयितुं शक्यम्। तथाऽपि स्पष्टागमेन संसाराद्यनुपपत्त्या लिङ्गेन च सिद्धे भावरूपाज्ञाने आश्रयाद्यनुपपत्तेरवश्यं परिहरणीयत्वादयं प्रयत्न इति द्रष्टव्यम्। जीवाश्रितं जीवं प्रत्यावरणमिति पक्षाभ्युपगमे पक्षान्तरोक्तदोषोऽनङ्गीकारपराहत इत्याशयेन मूलं पक्षविशेषपरिग्रहपरतया व्याचष्टे ॥ **स्वश्चासाविति** ॥ नन्वात्मनि स्वशब्दो नपुंसक एव। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये

स्वोऽस्त्रियां धने' इत्यमरकोशे तस्य नपुंसकत्वाभिधानात् । कथं तर्हि स्वे स्वा इत्यादि । तत्र स्वशब्दस्यात्मीयार्थत्वात् । अत एव तत्रात्मीया इत्यर्थ इत्येवाभियुक्तानां व्याख्यानम् । तत्कथं स्वश्चासौ भावश्चेति पुल्लिङ्गप्रयोग इति चेन्न । आत्मन्यपि स्वशब्दस्य पुंस्त्वात् । कथमन्यथा स्वे स्वा इत्यादिपुल्लिङ्गप्रयोगः । न चोक्तरीत्या तस्य सावकाशत्वम् । तथा सति विभाषा जसीति प्रकरणे स्वमात्मीये इत्येव वक्तव्यतया गुरुनिर्देशं कुर्वतः सूत्रकारस्याचातुर्यप्रसङ्गात् । तथा निर्देशं कुर्वतः सूत्रकारस्यात्मन्यपि स्वशब्दस्य पुंस्त्वाभिप्रायसिद्धेः । न चैवमुदाहृतामरसिंहोक्तिविरोधः । तत्राप्यात्मनीत्यस्य स्वो ज्ञाताविति पूर्वान्वयित्वेन स्वमित्यस्य च त्रिष्वित्युत्तरान्वयित्वेन योजनासंभवेनात्मनि स्वशब्दस्य नपुंसकत्वे तस्यानुपष्टम्भकत्वात् । 'द्यौः स्वर्गनभसोः स्वो ज्ञात्यात्मनोः स्वं निजे धने' इति हेमचन्द्रेण 'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धन' इति मेदिनीकारेण चात्मनि स्वशब्दस्य स्पष्टमेव पुंस्त्वोक्तेश्च । ततश्चात्मार्थकस्यापि स्वशब्दस्य पुंस्त्वाद्युक्तं तथा विग्रहप्रदर्शनमिति ध्येयम् ।

[ स्वमज्ञातिधनाख्यायाम् । ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा स्यात् । स्वे स्वाः । आत्मीया इत्यर्थः । आत्मान इति वा । स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धन इत्यमरः । अत्रात्मनीति पूर्वान्वयि । स्वमित्युत्तरान्वयि । स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धन इति मेदिनी । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा । आत्मात्मीयज्ञातिधनवाची स्वशब्दः तत्र ज्ञातिधनयोः पर्युदासादात्मीयौ परिशिष्टौ इत्याशयेन व्याचष्टे । आत्मीया इत्यर्थ आत्मन इति वेति । विभाषा जसीति प्रकरणे स्वमात्मीय इत्येव वक्तव्ये गुरुनिर्देशं कुर्वतः सूत्रकारस्यैवात्मवाचिस्वशब्दस्य पुंस्त्वे प्रमाणत्वादिति ज्ञेयम् । ज्ञातिधनवाचिनस्त्विति । ताच्छील्यणिनेना ज्ञातिधनयोरप्यात्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामताऽस्त्येवेति ध्वनयति । एतदर्थमेव हि सूत्रे आख्याग्रहणं कृतम् । ]

यद्यप्यत्र स्वभावाज्ञानवाद इत्येव पक्षपरिग्रहायालं पक्षविशेषपरिग्रहेणैव पक्षान्तरप्राप्तदूषणाप्रसरसूचनसंभवात्परिगृहीतपक्षदोषपरिहारार्थकयोजनायां तत्सार्थक्यवत्पक्षपरिग्रहमात्रयोजनायां तत्सार्थक्यादर्शनादिति भाति । तथाऽप्येकस्य दूषणस्य पक्षद्वयेऽपि सम्भवात्पक्षान्तरानभ्युपगमेऽप्यभ्युपगतपक्षे तद्दूषणप्रसरशङ्कानिरासार्थत्वात् । जीवपक्षेऽपि जडपक्षोक्तान्योन्याश्रयातिदेशेन तन्निरासप्रतिज्ञार्थत्वाद्वा तन्मूलस्य न वैयर्थ्यमित्याशयोऽपि तस्य जडब्रह्माज्ञानवादोक्तदोषाभावादित्यपि द्रष्टव्यः । एवमुत्तरत्रापीति ध्येयम् । यद्यपि स्वो ज्ञातावात्मनि स्वं त्रिष्वित्यभिधाने आत्मपर्यायस्वशब्दस्य नपुंसकत्वमुक्तम् । तथाऽप्यात्मशब्दपर्यायस्वशब्दस्य 'स्वातन्त्र्यात्स्व इति प्रोक्त आत्माऽयं चाततत्वत' इत्यभिधानतुल्ये परमोपनिषद्वाक्ये परमात्मनि पुल्लिङ्गप्रयोगादात्मपर्यायः पुल्लिङ्गोऽप्यस्ति, स्व इत्यभिधानं तु प्रयोगाद्यज्ञानमूलमित्याशयेन स्व

इत्युक्तम् । अनेनैवाशयेन नित्योपाध्या स्वरूपयेति वाक्यव्याख्यावसरेऽपि स्व आत्मेत्युक्तमिति द्रष्टव्यम् ।

माऽस्तु पक्षान्तरोक्ताऽनुपपत्तिः जीवाश्रितत्वतदावरणत्वपक्षोक्तानुपपत्तिस्तु स्यादेवेत्यतस्तत्पक्षोक्तदोषपरिहारसमर्पकतयाऽपि मूलं व्याचष्टे । यद्वोक्तप्रतिज्ञायां हेतुसमर्पकतयाऽपि मूलं व्याचष्टे ॥ **तथा स्वयमेवेति** । अज्ञानकल्पितत्वाभावलाभायाह ॥ **अस्तीतीति** ॥ जीवं प्रत्यावरणमिति पक्षेऽतिदेशेन जीवाश्रितत्वपक्षे च भेदोऽपि भ्रमजो यदीत्युत्तरत्र स्पष्टम् । अत्राप्युक्तन्यायेतरेतराश्रय उक्तप्राय इत्याशयेनोक्तमुक्तेति । विषयविशेषपक्षयोः परिग्रहेण पक्षान्तरोक्तदोषोऽनङ्गीकारपराहत इत्याशयेन विषयविशेषपक्षपरिग्रहपरतया मूलं व्याचष्टे ॥ **तथा स इति** ॥ अत्राभिधानमुदाहृतवाक्यमेव । ब्रह्म प्रति ब्रह्मस्वरूपमावृतमिति पक्षे पूर्वोक्तः स्वप्रकाशे स्वविषयाज्ञानासंभवरूपो दोषो जीवं प्रति ब्रह्म स्वधर्माश्चावृता इति पक्षे न प्रसरतीत्यर्थः । अज्ञानमिथ्यात्वपक्षोक्तदोषपरिहारसमर्पकतयाऽपि मूलं व्याचष्टे ॥ **यथा स्वभावेति** ॥ अत्र चानवस्थादीत्यतःपूर्वमुक्तेत्यध्याहार्यम् । तथा पाठे तु नानुपपत्तिरिति ज्ञेयम् । विषयविशेषपरिग्रहेण पक्षान्तरप्राप्तदूषणाभावेऽपि तत्र प्राप्तदूषणापरिहार एवेत्यतस्तत्परिहारसमर्पकतयाऽपि मूलं व्याचष्टे ॥ **तथा स्वभावेनेति** ॥

**प०**— उत्तरवाक्यमवतारयितुमाह ॥ **किं चेति** ॥ न परिपन्थिन इत्युक्त्या प्रागुक्तप्रत्यक्षादिकमस्माकमपि साधकमेवेत्यपि सूचितम् ॥ **स्वश्चासौ भावश्चेति** ॥ स्वइति प्रत्यगर्थः ॥ **भाव इति** ॥ तदज्ञानरूप इत्यर्थः । भुव(भू)शुद्धिचिन्तयोरिति कविकल्पद्रुमोक्त्या चिन्तार्थस्य भवतेर्णप्रत्यये रूपत्वात् । तदित्यनुवादः । शास्त्रवैयर्थ्यमिति व्याख्या ।

**श्री०**— उत्तरवाक्यमवतर्तुमाह ॥ **किञ्चेति** ॥ **उक्तानुपपत्त्येति** ॥ आव्रियमाणाभावाद्युक्तानुपपत्त्येत्यर्थः ॥ **अस्तीति** ॥ स्वभाव इत्यनन्तरं जीव इति शेषः । स्वयमेवास्तीत्यस्य तात्पर्यं नाज्ञानकल्पित इति ॥ **तद्विषयकमज्ञानमिति** ॥ परमाच्छादकस्वगुणाच्छादकमायासंज्ञमित्यर्थः ।

**सु०— एतदुक्तं भवति । नास्मन्मतेऽज्ञानाङ्गीकारे दोषोऽस्ति; येन शास्त्रस्य विषयप्रयोजनशून्यता स्यात् । जीवाश्रितं जीवावरणं चाज्ञानमित्यङ्गीकारात् । तस्य च स्वत एव ब्रह्मणो भिन्नत्वात् । ज्ञानस्वभावत्वाच्च । तस्य स्वप्रकाशस्यापि परमेश्वरेच्छया परमेश्वरे स्वधर्मेषु चाज्ञानं सम्भवत्येव ॥ यद्यपि धर्माः स्वप्रकाशचैतन्यान्न भिद्यन्ते तथाऽपि सविशेषत्वाङ्गीकारादज्ञानविषयतोपपत्तिः ॥ अज्ञानमपि सत्यमेव नाज्ञानकल्पितम् । तथाविधस्यापि निवृत्तिं वक्ष्यामः । यद्यपि जीवचैतन्यं ब्रह्मस्वधर्मप्रकाशात्मकम् तथाऽपि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिता विद्यावशान्न तथा संसारे प्रकाशयतीति ।**

वा० — नन्वज्ञानस्य जीवाश्रितत्वाभ्युपगमे ब्रह्मजडाज्ञानवादोक्तदोषानापत्त्युक्तिरयुक्ता । जीवस्य ब्रह्मात्मकत्वपक्षेऽपि ब्रह्मणश्चेत्त्वव सार्वज्ञमित्युक्तदूषणस्यापरिहारात् । ब्रह्मान्यत्वपक्षेऽपि जीवस्य तद्भेदस्य च कल्पितत्वे यो दोषो भेदोऽपि भ्रमजो यदीत्यादिना समानन्यायतया प्राप्त इतरेतराश्रयत्वरूपस्तस्य स्वयमेवास्तीत्यज्ञानकल्पितत्वाभावोक्त्या निरासेऽप्यन्यगा चेत्स्वतोऽन्यतेति दोषापरिहार एव । जडपक्षोक्तस्य न चावरणमज्ञानमसत्य इति दोषस्य जीवस्याकल्पितत्वोक्त्या निरासेऽप्यप्रकाशस्वरूपत्वादित्युक्तदोषानिरास एव । विषयविशेषकथनेन पक्षान्तरोक्तदूषणाप्राप्तावपि स्वप्रकाशस्वरूपाभिन्नधर्मविषयकाज्ञानानुपपत्तिरूपतत्पक्षप्राप्तदूषणापरिहार एव । निमित्तविशेषाकथनात् । स्वतन्त्रस्यापि परमेश्वरस्य स्वप्रकाशे स्वधर्मविषयकाज्ञानसंपादकत्ववत्स्वविषयाज्ञानसंपादकत्वप्रसङ्गस्य निमित्तविशेषेणैव समाधेयत्वात् । अन्यथा पारमेश्वरशक्त्यैव सर्वत्र निर्वाहापत्त्या निमित्तनैमित्तिकभावस्य कुत्राप्यनाश्रयणीयतापातात् । निमित्तविशेषाभिप्रायकल्पने च परमेश्वरशक्त्युक्तेरनुपयोगः । अज्ञानसत्यत्वाभ्युपगमेन तत्कल्पितत्वपक्षोक्तानवस्थादिपरिहारेऽपि तत्सत्यत्वेऽपि सत्यस्यानिवृत्त्या शास्त्रवैयर्थ्यापत्तेरपरिहाराच्च । तस्मान्नेदं मूलमुक्तदोषपरिहारक्षममित्यत आह ॥ **एतदुक्तं भवतीति** ॥ ब्रह्माश्रितत्वपक्षं परित्यज्य जीवाश्रितत्वपक्षकक्षीकरणेन जीवो परः पदार्थ इत्यर्थसूचकभावपदेन च लब्धं परिहारमाह ॥ **तस्य चेति** ॥ अस्मन्मत इति पूर्वोक्तं सर्वत्रान्वेति । एवं चान्यगा चेत्स्वतोऽन्यतेत्युक्तोऽपसिद्धान्तो नास्मन्मत इति भावः ॥ **ज्ञानस्वभावत्वाच्चेति** ॥ इदं च जीवस्य प्रमाणसिद्धत्वात्स्वभावपदेनैव ज्ञानस्वभावत्वसूचनाद्वा भाष्याभिमतमिति मन्तव्यम् ॥ अनेन जडपक्षोक्तस्याप्रकाशस्वरूपत्वादिति दोषस्यात्राप्रसर इत्युक्तं भवति । स्वस्य विषयत्वासंभवेऽपि स्वधर्माणां विषयत्वं संभवतीत्येतदर्थसूचकस्वभावपदान्तर्गतधर्मार्थकभावपदप्रयोगसूचितं निमित्तविशेषमाह ॥ **तथाऽपीति** ॥ अज्ञानस्य सत्यत्वे सत्यस्यानिवृत्त्या शास्त्रवैयर्थ्यमेवेत्युक्तानुपपत्तेः परिहारो यथा दृष्ट्या प्रसन्न इत्यादिवक्ष्यमाणरीत्या सुलभ एवेत्याह ॥ **तथाविधस्यापीति** ॥ यदि स्वरूपाभिन्नधर्मविषयकाज्ञानोपपत्तये निमित्ततया विशेष आश्रितस्तर्हि स्वभावपदार्थतया स्वतन्त्रपारमेश्वरशक्तियुत्पादनं व्यर्थमित्यतो विशेषबलादस्तु स्वरूपप्रकाशेऽपि धर्माप्रकाशस्तथाऽपि जीवचैतन्यस्यैव स्वरूपं प्रतीव ब्रह्म पारतन्त्र्यादिस्वधर्मान्प्रत्यपि प्रकाशात्मकत्वात्प्रकाशे सत्यज्ञानस्यैवायोगादप्रकाशानुपपत्तिरिति शङ्कायाः पारमेश्वराचिन्त्यशक्त्यभ्युपगमेनैव निरस्यतया तदुक्तिरित्याशयेनाह ॥ **यद्यपीति** ॥ अत्र यद्यपीति स्थलद्वये वैचित्र्यं नेदं दूषणद्वयसमाधानमितरवत्परं प्रत्युद्भावितदूषणस्य स्वपक्षे समाधानरूपमपि तु स्वपक्षप्राप्तासाधारणदूषणसमाधानमिति सूचयितुम् । यद्यपि चात्र यद्यपि जीवचैतन्यमित्यादिको ग्रन्थः समानविषयकत्वादज्ञानविषयतोपपत्तिरित्यस्यानन्तरं निवेशयितुमुचितः, अज्ञानमपीत्यादिस्तु प्रकारान्तरेण शास्त्रवैयर्थ्यसमाधानार्थोऽन्ते निवेशनीयः । तथाऽपि

वक्ष्यमाणरीत्याऽनाद्यज्ञानस्य सत्यस्येश्वरप्रसादान्निवृत्तावचिन्त्यशक्तेरुपयोगाद्वा ब्रह्म जीवधर्मप्रकाशे पारमार्थिके सति मिथ्याभूताज्ञाननिमित्ताप्रकाशोपपत्तावपि नाज्ञानसत्यत्वे तदुपपत्तिः । पारमार्थिकापारमार्थिकयोरविरोधवत्पारमार्थिकयोरविरोधासंभवादित्यज्ञानसत्यताङ्गीकारे प्राप्तानुपपत्तेरप्यनेन परिहारात्तदनन्तरं यद्यपीत्यादिग्रन्थो निवेशित इति द्रष्टव्यम् ।

प०— ननु जीवाज्ञानपक्षेऽप्यावरणकृत्याभावः । अज्ञानस्य स्वाभाविकत्वे सत्यत्वे च निवृत्त्यनुपपत्तिः । जीवधर्माणां स्वप्रकाशचैतन्याभेदेनाज्ञानविषयतानुपपत्तिरित्यतः स्वकृतयोजनापञ्चकस्याप्युपयोगं दर्शयन्नभिप्रायमाह ॥ **एतदुक्तं भवतीति** ॥ ज्ञानस्वभावत्वाच्चेत्यनेनावरणकृत्यमस्तीति सूचितम् ॥ **वक्ष्याम इति** ॥ 'यथा दृष्ट्या प्रसन्नस्सन्नि'त्यत्रेति भावः ॥

श्री०— ननु जीवाश्रितं जीवावरणं चाज्ञानमित्यङ्गीकारे ब्रह्मण्येव तदङ्गीकृतं स्यात्तयोरभेदात् । तथाच पूर्वोक्तदोष इत्यत आह ॥ **तस्य चेति** ॥ प्राप्तप्रकाशप्रतिबन्धरूपावरणकृत्यभावाज्जीवावरकमज्ञानमङ्गीकार्यमित्याह ॥ **ज्ञानस्वभावत्वाच्चेति** ॥ **परमेश्वरेणेति** ॥ अघटितघटकसामर्थ्योपेतेनेत्यर्थः । नन्वज्ञानस्य सत्यत्वे निवृत्तिर्न स्याद्ब्रह्मवदिति चेत्तत्राह ॥ **तथाविधस्यापीति** ॥ निवर्तकभावाभावाभ्यामज्ञानब्रह्मणोर्निवृत्त्यनिवृत्ती युज्येते इति वक्ष्याम इत्यर्थः ॥ **ब्रह्मस्वधर्मप्रकाशात्मकमिति** ॥ प्रकाशो ज्ञानम् । तथाच ब्रह्मविषयको यः प्रकाशस्तथा स्वरूपभूतज्ञानानंदादिधर्मविषयकश्च यः प्रकाशस्तदात्मकमित्यर्थः । तथाच तदुभयविषयकाज्ञानं जीवे न युक्तमतस्तूभयविषयः प्रकाशः संसारे स्यादिति भावः ॥

अनु०— **अविद्यादुर्घटत्वं चेत्स्यादात्माऽपि हि तादृशः ॥**

**सु०— स्यादेतत् । अस्ति तावदविद्या । सा च दुर्घटघटनास्वभावा । यथोक्तम् 'दुर्घटत्वमविद्याया भूषणं न तु दूषणम् । कथञ्चिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेत् ॥' इति । तथा चानुपपत्तिः कथं तत्स्वरूपापलापाय प्रभवतीति ॥ अत्र वक्तव्यम् । किमविद्या दुर्घटसुघटघटनास्वभावा वोत दुर्घटैकस्वभावा वा । नाद्यः । सुघटांशेऽविद्यात्वाभावप्रसङ्गात् । द्वितीये दोषमाह ॥ अविद्येति ॥ अविद्याया दुर्घटत्वं चेत्स्वभाव इति शेषः । हिशब्दस्तस्मादित्यर्थे । तादृशोऽविद्यासदृशः । मिथ्येति यावत् ॥ अयमर्थः । यद्यविद्या दुर्घटैकस्वभावा स्यात्तदा साधिष्ठाना ससाक्षिका च न स्यात् । तथात्वे सुघटत्वप्रसङ्गेनाविद्यात्वाभावप्रसङ्गात् । ततश्चात्माभावेन शून्यवादापत्तिरिति ॥ नन्वीश्वरशक्तिरपि कथम् । यावत्प्रमाणसिद्धं तावतः सुघटस्य**

**दुर्घटस्य वा घटनायां पटुरिति ब्रूमः । न चैवं त्वया वक्तुं शक्यत इत्युक्तम् ॥ सर्वस्यापि सुघटस्यापन्हवोऽनेनातिप्रसङ्गेनोपलक्षितो बोद्धव्यः ।**

वा०— ननु भावरूपाज्ञानस्वरूपोपादाने यदि न विप्रतिपत्तिरपि तु मत्पक्षे तदनुपपत्तिकथन एव तात्पर्यं तर्हि तवेव ममापि तत्परिहारोपायोऽस्तीत्याशङ्कते ॥ **स्यादेतदिति** ॥ यद्वा भावरूपाज्ञानमङ्गीकृत्य पारमेश्वराचिन्त्याद्भुतशक्तिमाश्रित्याविद्यानुपपत्तिपरिहारापेक्षयाऽविद्याचिन्त्याद्भुतशक्त्यैव तत्परिहारे लाघवमिति गूढाभिसन्धिः शङ्कते ॥ **स्यादेतदिति** ॥ अत एव पूर्वपक्षिसिद्धान्तिनौ स्वाशयं नन्वित्यादिनोद्घाटयिष्यत इति द्रष्टव्यम् । दुर्घटा विचारासहा या घटनोपपत्तिः सा स्वभावो यस्याः सा तथा । दुर्घटत्वमनुपपद्यमानत्वम् । विचारासहिष्णुत्वमिति यावत् । भूषणं स्वरूपसंपादकम् । दूषणं स्वरूपहानिकरम् । कथञ्चित्केनापि प्रकारेण । घटमानत्वे विचारसहिष्णुत्वे । अविद्यात्वं विचारासहिष्णुत्वम् । तदुक्तम् । 'नन्वविद्या स्वयंज्योतिरात्मानं ढौकते कथम् । कूटस्थमद्वितीयं च सहस्रांशुं यथा तमः ।' इत्याशङ्क्य 'सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी । सहते न विचारं सा तमो यद्वद्दिवाकरम् । अविद्याया अविद्यात्वमिदमेवात्र लक्षणम् । यद्विचारासहिष्णुत्वमन्यथा वस्तु सा भवेत् ॥' इत्यादि ॥ **तथा चेति** ॥ स्वरूपोपपादिकायास्तदपलापकत्वानुपपत्तेरित्याशयः । उदाहृतसंमतिवशात् दुर्घटैकस्वभावत्वस्य पराभिप्रेततालाभेऽप्युपक्रमे सामान्योक्तेर्दुर्घटत्वस्य भूषणत्वांशे सिद्धान्तसंमतिरस्तीत्याशयेनाप्युदाहरणोपपत्तेः । शङ्कितरि संमतिश्लोकोक्तसर्वाङ्गीकारस्य निश्चेतुमशक्यत्वेन भाष्योक्तदूषणस्य चोभयस्य भावत्वपक्षेऽनुपपत्त्या परोक्तसामान्यं विकल्प्योभयस्वभावत्वपक्षं तदुदाहृतसंमत्युक्तयुक्त्यैव निरस्य द्वितीयपक्षनिराकरणपरतया भाष्यं योजयितुमाह ॥ **अत्रेति** ॥ तथा चेत्युक्ताभिप्रायव्यञ्जनाय भाष्यपदमनूद्य विग्रहं प्रदर्शयन्नेव शेषं पूरयति ॥ **अविद्याया इति** ॥ प्रसङ्गोपपादकानुक्त्या न्यूनतां परिहरति ॥ **हीति** ॥ प्राधान्यप्रकृतदुर्घटत्वस्य न तच्छब्दपरामर्शविषयता किन्तु योग्यतयोपसर्जनीभूताया अप्यविद्याया एवेत्याह ॥ **तादृश इति** ॥ सादृश्यस्यानेकधा संभवाद्विवक्षितमाह ॥ **मिथ्येति** ॥ नन्वप्रयोजकतेष्टापादनता च तर्कस्येत्यतो मध्ये आपाद्यमध्याहृत्य तदप्रयोजकतापरिहाराय हिशब्दसूचितयुक्तिं संयोज्य द्वितीयदूषणनिरासाय तर्कफलं वक्तुमाह ॥ **अयमर्थ इति** ॥ ईश्वरशक्तेरघटितघटनास्वभावत्वस्य त्वयाऽप्यभ्युपगमात्तत्राप्यतिप्रसङ्गसाम्यमित्याशयेन प्रतिबन्दीं गृह्णाति ॥ **नन्विति** ॥ सिद्धान्ती स्वाशयं तावदाविष्करोति ॥ **यावदिति** ॥ तर्हि शशविषाणादिकमपि स्यादित्याशङ्कानिरासायैतत् । फलोपधानाभिप्रायेण चेदम् । अतो न शक्तोऽपि ह्यन्यथाकर्तुमित्यादिना विरोध इति ज्ञेयम् । इदानीं प्रतिबन्दीं मोचयति ॥ **न चैवमिति** ॥ **उक्तमिति** ॥ तथात्वे सुघटत्वप्रसङ्गेनेत्यादिनेति शेषः । स्यादविद्यात्वमात्मन इत्यतिप्रसङ्गसंग्रहायाह ॥ **सर्वस्यापीति** ॥

स०—**अविद्यात्वं दुर्घटं भवेदिति** ॥ दुर्घटघटनास्वभावत्वमविद्यात्वमित्यभिप्रेतत्वादित्यर्थः । नन्वीश्वरशक्तिरपि किं दुर्घटसुघटघटनास्वभावा किं वा दुर्घटैकस्वभावा । आद्ये गवीव शशेऽपि विषाणं जीवस्वरूप इवेश्वरस्वरूपेऽपि प्रकाशाप्रकाशौ च कुतो न घटयेत् । द्वितीये सुघटस्य तदविषयत्वेनेश्वर-शक्तेरसर्वविषयकत्वप्रसङ्गः । ईश्वरे युगपदणुत्वमहत्वघटकत्ववत्सुखदुःखज्ञानाज्ञानादिसर्वविरुद्धधर्मघटकता च स्यादित्यभिप्रेत्याक्षिपति ॥ **नन्वीश्वरशक्तिरपि कथमिति** ॥ **यावत्प्रमाणसिद्धमिति** ॥ तथा च न पूर्वोक्तातिप्रसङ्ग इति भावः ॥ **न चैवं त्वयेति** ॥ प्रमाणसिद्धोपपादकत्वस्य सुघटोपपादकत्वस्य चाविद्यायामनङ्गीकारादिति भावः ॥ **अनेनातिप्रसङ्गेनेति** ॥ स्यादात्मापि हि तादृश इत्यनेनेत्यर्थः ।

प०— **इत्युक्तमिति** ॥ सुघटांशेऽविद्यात्वाभावप्रसङ्गादिति ग्रन्थेनोक्तमित्यर्थः ॥ **सर्वस्यापि सुघटस्येति** ॥ अविद्यायाः दुर्घटैकस्वभावत्वे तन्मयस्यापि तथात्वापत्त्या घटस्य पृथुबुध्नोदराकारता पटस्यातानवितानात्मकता ज्ञानेच्छादेः सविषयकतेत्यादि न स्यादित्येवं द्रष्टव्यमित्यर्थः ॥

या०— **दुर्घटत्वमिति** ॥ विचारासहिष्णुत्वमित्यर्थः । भूषणं तत्स्वरूपाविरोधि दूषणं तत्स्व-रूपोपमर्दकम् ॥ **अविद्यात्वं दुर्घटमिति** ॥ तदुक्तम् । 'अविद्याया अविद्यात्वमिदमेव हि लक्षणं यद्वि-चारासहिष्णुत्वमि'ति । नन्वीश्वरशक्तिरपि किं दुर्घटसुघटघटनास्वभावा किंवा दुर्घटैकस्वभावा । आद्ये गवीव शशेऽपि विषाणं जीव इवेश्वरेऽपि प्रकाशाप्रकाशौ च कुतो न घटयेत् । द्वितीये सुघटस्य तद-विषयत्वेनेश्वरशक्तेरसर्वविषयकत्वप्रसङ्गः । ईश्वरे युगपदणुत्वमहत्त्वघटकत्ववत्सुखज्ञानाज्ञानादिसर्वविरुद्ध-धर्मघटकता च स्यादित्यभिप्रेत्याक्षिपति ॥ **नन्वीश्वरशक्तिरपीति** ॥ **यावत्प्रमाणसिद्धमिति** ॥ तथा च न पूर्वोक्तातिप्रसङ्ग इति भावः ॥ **न चैवं त्वयेति** ॥ प्रमाणसिद्धोपपादकत्वस्य सुघटोपपादकत्वस्य चाविद्यायामनङ्गीकारादिति भावः ॥ **अनेनातिप्रसङ्गेनेति** ॥ 'स्यादात्माऽपि हि तादृश'इत्यनेनेत्यर्थः ॥

श्री०— **दुर्घटसुघटनेति** ॥ उभयघटनास्वभावेत्यर्थः ॥ **दुर्घटैकेति** ॥ स्वयं दुर्घटैकस्वभावा दुर्घटैकघटनास्वभावा चेत्यर्थः ॥ **सुघटांश इति** ॥ सुघटस्याविद्योपपाद्यत्वाभावेन तदंशेऽविद्याया अविद्यात्वं सुघटोपपादकस्वभावत्वरूपाविद्यात्वं न स्यादित्यर्थः । ससाक्षिका द्रष्टृपुरुषसहिता ॥ **सुघट-त्वप्रसङ्गेनेति** ॥ साधिष्ठानत्वससाक्षिकत्वाभ्यामुपपाद्यत्वेन सुघटत्वप्रसङ्गेन दुर्घटैकस्वभावत्वरूपाविद्या-त्वाभावप्रसङ्गादित्यर्थः । हिशब्दस्तस्मादित्यर्थ इत्युक्तमध्याहारेण तदर्थमाह ॥ **ततश्चात्माभावेति** ॥ तस्मादित्यर्थकहिशब्दार्थानुवादस्ततश्चेत्यनेन कृतः । आत्मनो मिथ्यात्वादित्यर्थः । अविद्याधिष्ठानत्वेन

तत्साक्षित्वेन चात्मसिद्धिर्वाच्या । अविद्यायाश्च साधिष्ठानत्वे ससाक्षिकत्वे वाऽविद्यात्वानुपपत्तौ सत्यामात्मासिद्धिप्रसङ्गेन तदभाव एव प्राप्त इति भावः ॥ **कथमिति** ॥ ईश्वराचिन्त्यशक्तिरपि दुर्घटसुघटोभयघटनास्वभावा चेत्तर्हि सुघटस्यांशस्याचिन्त्यशक्त्युपपाद्यत्वाभावेन तस्याः सर्वविषयकत्वभङ्गः । दुर्घटोपपादकत्वैकस्वभावा चेत् । शशविषाणमपि घटयेदित्यर्थः ॥ **सुघटस्येति** ॥ न च सुघटस्याचिन्त्यशक्त्युपपाद्यत्वायोग इति वाच्यम् । प्रमाणप्रमितत्वादिति भावः ॥ **न चैवं त्वयेति** ॥ अविद्याया दुर्घटघटनैकस्वभावत्वाङ्गीकारादिति भावः ॥ **सर्वस्यापीति** ॥ घटस्यापि मृदभावे उत्पत्तिः स्यात् । अविद्याया अकारणकार्योत्पत्तिरूपदुर्घटघटकत्वादिति भावः ।

**अनु०—** **अतोऽधिकारिविषयफलयोगादिवर्जितम् ॥**
**अनन्तदोषदुष्टं च हेयं मायामतं शुभैः ॥**

सु०— **निर्विशेष इत्यादिनोक्तमुपसंहरति** ॥ अत इति । **परमतेऽविद्यानुपपत्तेरित्यर्थः । योगो विषयप्रयोजनयोः परस्परं शास्त्रेण च सम्बन्धः । आदिग्रहणेन स्वपक्षसाधकं प्रमाणं गृह्यते । अनन्तदोषा उक्ता वक्ष्यमाणाश्च । सति खल्वज्ञाने । अज्ञो विप्रतिपन्नः सन्दिग्धो वा शास्त्रेऽधिकारी स्यात् । अज्ञातश्च विषयो भवेत् । अज्ञाननिवृत्तिश्च फलम् । न च विषयाद्यभावे सम्बन्धः सम्भवी । अधिकार्यादिवर्जितत्वादनादरणीयं दुष्टत्वाद्धेयं च । अज्ञानमित्युपक्रम्य मायेत्युपसंहारोऽज्ञानस्यैवावस्थाभेदेन संज्ञाद्वयं न तु वस्तुभेद इति परमताविष्करणार्थः ॥ उपपादितं चैतत्परेणैवेति ।**

वा०— उत्तरत्रापि तन्मतानुपपत्तेर्वक्ष्यमाणत्वेन तन्मतनिरासोपसंहारत्वानुपपत्तेराह ॥ **निर्विशेष इत्यादिनेति** ॥ उक्तोपसंहारत्वं मूलारूढं कर्तुमाह ॥ **परमत इति** ॥ स्वभावाज्ञानवादस्येत्युक्तसूचनायेदं विशेषणम् । अयं चाविद्यानुपपत्तिलक्षणो हेतुरनुबन्धचतुष्टयाभाव एव न तु स्वपक्षसाधकाभावादौ । तदुक्तिश्चात्र प्रसङ्गात्तन्मतस्यातिक्षुद्रताख्यापनायेत्यवधेयम् । योगशब्दस्योपायसंबन्धमात्रपरतायाः प्रकृतानुपयोगाद्विवक्षितमर्थमाह ॥ **योग इति** ॥ अत्रानुबन्धचतुष्टयस्यापि स्वशब्देनोपात्तत्वेन तत्परत्वासंभवादनन्तेत्यादिना तत्पक्षे बाधकस्योक्ततया साधकाभावस्याप्यवश्यवक्तव्यत्वात्साधकपरतयाऽऽदिशब्दं व्याचष्टे॥ **आदीति** ॥ दोषाणामानन्त्यानुपपत्त्या बहुत्वार्थकतयाऽनन्तशब्दं व्याचष्टे ॥ **अनन्तेति** ॥ बहुत्वेऽतिशयद्योतनायामुख्यप्रयोग इत्याशयेनोक्तम् **उक्ता इत्यादि** । उदासीनत्वस्यापि संभवेनोपादेयताप्रयोजकाधि-

कार्याद्यभावस्य हेयताहेतुत्वासंभवाच्चशब्दं हेयं चेत्यनेन संयोज्य तत्समुच्चितं साध्यमध्याहृत्य वर्जितं दुष्टमिति श्रुतहेतोर्यथायोग्यं हेतुहेतुमद्भावं दर्शयति ॥ **अधिकार्यादीति** ॥ **अवस्थाभेदेनेति** ॥ आवरण-विक्षेपत्वरूपेण स्वातन्त्र्यकर्त्रिच्छाधीनत्वरूपेण वेत्यर्थः । ननु स्वाश्रयव्यामोहकत्वतद्वैपरीत्यरूपलक्षणभेदा-ल्लोके मायानिर्मितहस्त्यश्वादौ मायाशब्दप्रयोगवदविद्याशब्दप्रयोगाभावात्कथं न वस्तुभेद इत्यत आह ॥ **उपपादितं चेति** ॥ अनिर्वचनीयत्वे सति तत्त्वावभासप्रतिबन्धविपर्ययावभासहेतुत्वस्य तल्लक्षणत्वात्तस्य चोभयत्राविशेषात्तयोरभेद एव । न च सत्यभूतमन्त्रौषधादेरेव मायाशब्दार्थतया नेदं तत्र लक्षणमिति वाच्यम् । तत्र मायाशब्दाप्रयोगात् । द्रष्टारो हि दृष्टमिन्द्रजालमेव मायां वदन्ति न त्वदृष्टं मन्त्रा-दिकम् । मन्त्रान्वयव्यतिरेकौ तु काचादिवन्निमित्तकारणत्वेनाप्युपपन्नौ । अनिर्वचनीयेन्द्रजालादेः सत्यमन्त्राद्युपादानकत्वानुपपत्तेश्चानाद्यनिर्वचनीयमेव किञ्चित्तदुपादानं कल्पनीयम् । तस्य च मायाशब्द-वाच्यत्वमुपादानोपादेययोरभेदादेवोपपन्नमिति न तत्र लक्षणानुपपत्तिः । स्वाश्रयव्यामोहकत्वतदभावाभ्यां भेदस्त्वसिद्धः । ईश्वरस्याप्यवतारेषु मायया व्यामोहदर्शनात् । नाप्यविद्यायाः स्वाश्रयव्यामोहनियमः । जलमध्येऽधोमुखत्वेन वृक्षेष्वध्यस्तेष्वपि तदूर्ध्वमुखतायां द्रष्टुरव्यामोहात् । अथात्र तीरस्थवृक्षदर्शनजन्य-विवेकवशादव्यामोहोऽविद्यास्वभावस्तु व्यामोहक एवेति चेत् । तर्ह्यैन्द्रजालिकस्यापि प्रतीकारज्ञाना-दव्यामोहो माया तु स्वाभाव्यान्मोहिकैव । ऐन्द्रजालद्रष्टॄणां व्यामोहदर्शनात् । सति तु प्रतीकारज्ञाने तेऽपि न मुह्यन्त्येवेत्यज्ञानाश्रयत्वं न व्यामोहप्रयोजकम् । न च मायाकर्तुरिच्छामनुसरति । मन्त्रौष-धादिनिमित्तकारण एव कर्तुःस्वातन्त्र्यात् । तादृशं चेच्छानुसारित्वमविद्याया अपि दृष्टम् । नेत्रस्याङ्गु-ल्यवष्टम्भेन द्विचन्द्रभ्रमोत्पत्तेः । अविद्यास्वरूपे कर्ता न व्याक्रियत इति चेत् । सममितरत्रापि । प्रसिद्धिरपि शास्त्रीया तावदस्त्येव । भूयश्चान्ते विश्वमायानिवृत्तिरिति सम्यग्ज्ञाननिवृत्ताविद्यायां माया-शब्दप्रयोगात् । 'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नमः ॥' इति स्मृतौ मायाविद्ययोः सामानाधिकरण्येनैकत्वसिद्धेश्चेत्यादिना विवरणकारेणैतदुपपादितमित्यर्थः । परमताविष्करणं चाविद्यानिरासेन मायानिरासोऽपि सिद्ध इति सूचनायेति द्रष्टव्यम् ।

स०— ननु मायाविद्ययोः स्वाश्रयव्यामोहनाव्यामोहनरूपत्वेन भिन्नत्वात् कथमज्ञानस्य माया-त्वेनोपसंहार इत्यत आह ॥ **अज्ञानमिति** ॥ **अवस्थाभेदेनेति** ॥ प्राधान्येन विक्षेपाच्छादनभेदेन वा इच्छाधीनत्वतदधीनत्वभेनेन वा । संज्ञाद्वयमित्यर्थः । तदुक्तं विवरणे । एकस्मिन्नपि वस्तुनि विक्षेप-प्राधान्येन माया आच्छादनप्राधान्येनाविद्येति व्यवहारभेद इच्छाधीनत्वतद्वैपरीत्येन वा व्यवहारभेद इति । नन्वविद्यामाययोर्भेद एव किं न स्यादित्यत आह ॥ **उपपादितं चैतदिति** ॥ अत्र केचिदाहु-

रतो अविद्यामयमिति वक्तव्यमित्यादिना पूर्वपक्षयित्वा अनिर्वचनीयतया तत्त्वावभासप्रतिबन्धविपर्ययाभासलक्षणस्याविशेषात् न लक्षणभेदात्तयोर्भेदः । तस्याभिध्यानाद्योजनात्तत्वाभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिश्रुतौ सम्यग्ज्ञाननिवर्त्याविद्यायां मायाशब्दप्रयोगात् । 'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नमः' इत्यादिस्मृतौ मायाविद्ययोः सामानाधिकरण्येन तत्त्वज्ञानेन तर्तव्यत्वाभिधानाच्च न तयोर्भेद इत्यादि महता प्रबन्धेनोपपादितमित्यर्थः ।

**या०— अवस्थाभेदेनेति** ॥ प्राधान्येन विक्षेपाच्छादनयोर्भेदेन वा इच्छाधीनत्वतदधीनत्वयोर्भेदेन वा संज्ञाद्वयमित्यर्थः । उक्तं हि विवरणे । एकस्मिन्नपि वस्तुनि विक्षेपप्राधान्येन मायाच्छादनप्राधान्येन अविद्येति व्यवहारभेदः इच्छाधीनत्वतद्वैपरीत्येन व्यवहारभेद इति ॥ **उपपादितं चैतदिति** ॥ अत्र केचिदाहुः ॥ **अतोऽविद्यायामपीति** ॥ वक्तव्यमित्यादिना पूर्वपक्षयित्वाऽनिर्वचनीयतया तत्त्वावभासप्रतिबन्धविपर्ययावभासलक्षणस्याविशेषान्न लक्षणभेदात्तयोर्भेदः । तस्याभिज्ञानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिश्रुतौ सम्यग्ज्ञाननिवर्त्याविद्यायां मायाशब्दप्रयोगात् । 'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नमः' इत्यादिस्मृतौ मायाविद्ययोः सामानाधिकरण्येन तत्त्वज्ञानेन तर्तव्यत्वाभिधानाच्च न तयोर्भेद इत्यादिना महता प्रबन्धेनोपपादितमित्यर्थः । तथा च नास्माभिरेतदुपपादनीयमिति भावः ।

**श्री०—** विप्रतिपन्नो विपरीतज्ञानी ॥ **संभवीति** ॥ संबन्धिनामेवाभावादिति भावः । यथोक्तम् । तदभावादेव संबन्धोऽपीति । योगः शशनृशृङ्गयोरिति च ॥ **संज्ञाद्वयमिति** ॥ स्वाश्रयव्यामोहकत्वतद्व्यामोहकत्वरूपावस्थाभेदेन मायाऽविद्येति संज्ञाद्वयमित्यर्थः ॥

**सु०— जीवब्रह्मणोरेकत्वं शारीरकमीमांसाविषयो न भवतीत्यतस्तदुपपत्त्यर्थं बन्धमिथ्यात्ववर्णनमसङ्गतमित्युक्तम् । तत्सत्यत्वात्तेनेत्यादिना प्रपञ्चयति । तथा हि । जीवब्रह्मणोरेकत्वं शारीरकमीमांसाशास्त्रविषयं प्रतिपद्यमानेन वेदस्यापि तद्विषयत्वं प्रतिपत्तव्यम् । तदितिकर्तव्यतारूपत्वान्मीमांसाशास्त्रस्य । करणेतिकर्तव्यतयोरेकविषयतानियमात् । न च वेदो जीवब्रह्मणोरेकत्वं वक्ति । सर्वस्यापि मन्त्रब्राह्मणोपनिषद्रूपस्य वेदस्य भेदावलम्बनत्वावभासनात् ।**

**वा०**— ननु वेदस्य जीवब्रह्मैक्यविषयकत्वनिरासकोत्तरग्रन्थो न प्रकृतसङ्गत इत्यतो बन्धमिथ्यात्ववर्णनस्यानुपयुक्तत्वायुक्तत्वादिप्रतिपादकपूर्वग्रन्थसङ्गत्यभावेऽपि यत्सिद्धवत्कृत्य मिथ्यात्ववर्णनासङ्गतिनिरूपणं तस्मिन् जीवब्रह्मणोरेकत्वस्य मीमांसाविषयत्वाभावे उपपादकाकाङ्क्षायां तत्प्रतिपादकत्वान्नासङ्गतिरित्याशयेन प्रकृतप्रमेयं दर्शयन्नेव तत्सङ्गतिं दर्शयति ॥ **जीवब्रह्मणोरिति** ॥ **उक्तं** बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत इत्यत्रेत्यर्थः । **इत्यादिना**ऽतो यथार्थबन्धस्येत्येतत्पर्यन्तेन । ननु जीवब्रह्मैक्यस्य शारीरकमीमांसाविषयत्वाभावे हेत्वादेरनुक्त्या सत्यत्त्वात्तेनेत्यस्य नोक्तप्रपञ्चकत्वमित्यत आह ॥ **तथा हीति** ॥ उत्तरवाक्ये हिशब्देन जीवब्रह्मैक्यस्य शारीरकमीमांसाऽविषयत्वे वेदाविषयत्वस्य हेतुत्वोक्त्यभिप्रायावगमान्नानुपपत्तिरित्याशयेन वेदाविषयत्वस्य तत्र हेतुत्वं वदन्न मीमांसाविषयत्वाभावे वेदाविषयत्वस्य हेतुत्वं युक्तमप्रयोजकत्वात्स्वरूपासिद्धत्वाच्चेत्याशङ्कां परिहरति ॥ **जीवेति** ॥ हेतुशरीरे तदुपकर्तव्येतिविशेषणस्य विवक्षितत्वादैक्यविरुद्धभेदविषयकतायाः स्पष्टप्रतिभासत्वाच्च न दोषद्वयमपीति भावः ।

**स०**— बन्धमिथ्यात्ववर्णनासङ्गतिप्रतिपादनेन प्रयोजनवद्विषयस्यापि निरस्तत्वात् अनवशेषात् सत्यत्वादित्याद्यानर्थक्यमाशङ्क्याह ॥ **जीवब्रह्मणोरिति** ॥

**प०**— **असङ्गतमित्युक्तमिति** ॥ बन्धमिथ्यात्वं नैवमुक्तिरपेक्षत इत्यत्रोक्तमित्यर्थः ॥ **मन्त्रब्राह्मणेति** ॥ देवताकाण्डकर्मकाण्डब्रह्मकाण्डरूपस्येत्यर्थः ।

**सु०— ननु कथं वेदो न जीवब्रह्मणोरेकत्वपरः । मन्त्रब्राह्मणयोरतत्त्वावेदकयोरविद्वद्विषययोर्द्वैतालम्बनत्वेऽप्युपनिषदामद्वैतनिष्ठत्वात् । तत्र हि तत्त्वमसीत्यादिवाक्यं साक्षाज्जीवस्य ब्रह्मतां प्रतिपादयति । सदेव सोम्येत्यादीनि वाक्यानि तत्पदार्थस्वरूपनिरूपणपराणि तत्रैव समन्वितानि । अथ यो वेदेदं जिघ्राणीत्यादीनि त्वंपदार्थपराण्यपि तत्रैव समन्वयं प्रतिपद्यन्ते । सृष्ट्यादिकथनं च ब्रह्मणो निष्प्रपञ्चताप्रतिपादनायानुवादतयोपयुज्यते । प्राणाद्युपासनानि चान्तःकरणस्य पराग्वृत्तिनिरोधद्वारेणाद्वैतप्रतिपत्तावेवोपयुक्तानि ॥ तदेवं वेदान्तानां जीवब्रह्मणोरेकत्वं विषय इति तदुपकरणभूता मीमांसाऽपि तद्विषयैवेति युक्तम् ॥ अत्रोच्यते ॥**

**वा०**— नन्वेवं मन्त्रब्राह्मणयोः कर्मपरतया वेदान्तेष्वपि केषाञ्चिद्वाक्यानां विशिष्टजीवब्रह्मस्वरूपप्रतिपादकतया केषाञ्चित्सृष्ट्यादिप्रतिपादकतया परेषामुपासनापरतया सर्वेषामपि भेदपरत्वेन स्वरूपासिद्धिशङ्काप्रसरात् । न ब्रह्मतां वदेद्वेदो जीवस्य हीत्येतावता पूर्तेः सत्यत्वात्तेनेत्यादिर्हेतूपपादकांशो व्यर्थ इत्यतस्तद्व्यावर्त्यां शङ्कां दर्शयति ॥ **नन्विति** ॥ मन्त्रेत्यादिना तयोः शारीरकमीमांसोपकर्तव्यत्वाभावं दर्श-

यति । येषां चोपकर्तव्यत्वं तेषां साक्षात्परम्परया वैक्यविषयत्वमाह ॥ **उपनिषदामिति** ॥ तत्पदार्थस्वरूपपराणीति स्वरूपग्रहणेन विशिष्टपरत्वाभावमभिप्रैति ॥ **सृष्ट्यादीति** ॥ निष्प्रपञ्चताप्रतिपादनं चैक्यवाक्योपयोगीति स्पष्टमेवेति ज्ञेयम् ।

स० — उपनिषदामद्वैतप्रतिपादकत्वात् न सर्वस्य भेदालम्बनतेति शङ्कते ॥ **ननु कथमिति** ॥ उपनिषदामद्वैतप्रतिपादकत्वमुपपादयति ॥ **तत्र हीति** ॥ उपक्रमादिभिस्तत्रैव तात्पर्यावधारणात्, तत्प्रकरणपठितानामपि तदपेक्षितार्थबाधकत्वात्, अद्वैत एव तात्पर्यमित्यर्थः । सति अद्वैतप्रतिपादके महावाक्ये तदन्वयित्वेनान्येषामद्वैतनिष्ठत्वं स्यात् तदेव नास्तीति परिहरति ॥ **अत्रोच्यत इति** ॥

**प० — तत्रैव** जीवस्य ब्रह्मतायामेवेत्यर्थः ।

**श्री० — तत्रैव** जीवब्रह्मैक्यप्रतिपादन एव । उत्तरत्रापि तत्रैवेत्यस्यायमेवार्थः ॥

**अनु० — सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः ॥**
**न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चन ॥**

सु० — आस्तां तावदियं समन्वयप्रक्रिया । तत्त्वमसीत्यादिवेद एव तावदेकताविषयो न भवति । तथा हि । तत्त्वमसीत्यत्र त्वंपदार्थस्य जीवस्य तत्पदार्थब्रह्मता मुख्यया वृत्त्या वा प्रतिपादनीया विरोधिभागत्यागेन स्वरूपमात्रलक्षणया वा । नोभयथाऽपि सम्भवतीत्याह ॥ **सत्यत्वादिति** ॥ वेदस्तत्त्वमसीत्यादिः । कथञ्चनोक्तप्रकारद्वयेनापि । जीवस्य त्वंपदार्थस्य तत्पदार्थब्रह्मतां न वदेद्धि यस्मात्तस्मान्मीमांसाऽपि तद्विषया न भवतीति शेषः । कुतः । प्रत्यक्षेण विरोधतः । कथम् । तेन प्रत्यक्षेण दुःखादेः सत्यत्वात्सत्यत्वावधारणात् । अथवा पृथक् साध्यद्वये हेतुद्वयम् ॥ इदमुक्तं भवति । न तावत्तत्त्वमसीत्यादिवाक्यं त्वंपदमुख्यार्थस्य तत्पदमुख्यार्थैक्यप्रतिपादकमिति युक्तम् प्रत्यक्षविरोधात् । दुःखादिविशिष्टो हि त्वंपदमुख्यार्थः । तस्य निर्दुःखत्वाद्युपेततत्पदमुख्यार्थैक्यप्रतिपादने कथं न प्रत्यक्षविरोधः । स्ववचनविरोधस्य चोपलक्षणं चैतत् । नापि जहदजहल्लक्षणया । विरोध्याकारपरित्यागो हि विवक्षाभावमात्रेणोत तस्यानित्यत्वेन अथवा मिथ्यात्वेन । नाद्यः । तन्मात्रेण विरोधानिवृत्तेः । न हि पृथिवीत्वाद्यविवक्षामात्रेण क्षितिजलादेरभेदो वक्तुं शक्यते । विरोध्याकारस्याविवक्षायामप्यनपायात् । न द्वितीयः । असीति वर्तमाननिर्देशायोगात् । तथा सति तत्त्वं भविष्यसीति स्यात् । न तृतीयः । प्रत्यक्षेण दुःखादेर्विरोध्याकारस्य सत्यत्वावगमादिति ।

वा०— नन्वेवं वेदान्तानामद्वैते पर्यवसानं वदन्तं प्रति सत्यत्वादीत्यादि न सङ्गतम्। सर्वत्र प्रत्यक्षविरोधादेरयोगादित्यतो महावाक्यस्यैक्यपरत्वे निरस्तेऽन्येषां तत्परत्वाभावः स्वतः सिद्ध इत्यभिप्रेत्य भाष्यकारेण महावाक्य एव प्रत्यक्षविरोधादेरभिधानान्नानुपपत्तिरित्याशयेनाह ॥ **आस्तामिति** ॥ प्रक्रियेति तन्निराससौलभ्यं सूचयति। कथञ्चनेत्येदनुसारेण सम्भावितं कल्पद्वयं दर्शयति ॥ **तथा हीति** ॥ मन्त्रादेरैक्यपरत्वस्य परेणाप्यनङ्गीकारात्सदेवेत्यादिजीवेश्वरस्वरूपसृष्ट्यादिप्राणाद्युपासनादिवाक्यानां चेश्वरानुवादेन जीवैक्यबोधकतद्योऽहमित्यादेश्च प्रत्यक्षविरोधादिनैक्यपरत्वाभावोपपादनासम्भवादाह ॥ **वेद इति** ॥ जीवानुवादेन ब्रह्मैक्यविधायकवाक्यान्तरमादिपदसङ्ग्राह्यम्। कथञ्चनेत्यादिकस्य केनापि हेतुनेत्यर्थासम्भवात्प्रकारद्वयनिराकरणं मूलारूढं कर्तुमाह ॥ **कथञ्चनेति** ॥ प्रकृतप्रपञ्चकतासिद्धये हिशब्दबललब्धं साध्यमध्याहरति ॥ **मीमांसापीऽति** ॥ कथं प्रत्यक्षविरोध इत्यतः प्रत्यक्षेण दुःखादेः सत्यतावगमात्सत्यभूतविरुद्धधर्मविषयकं प्रत्यक्षं कथं न भेदविषयकमिति तद्विरोध इत्याशयेन प्रत्यक्षविरोधोपपादकतया तेन सत्यत्वादित्येतद्व्याचष्टे ॥ **तेनेति** ॥ मुख्यवृत्त्या विशिष्टाभेदपरत्वे विशिष्टभेदविषयकप्रत्यक्षविरोधः। लक्षणया स्वरूपाभेदपरत्वे च न प्रत्यक्षविरोधः। स्वरूपमात्रभेदस्य प्रत्यक्षेणाविषयीकरणात्। किन्तु तत्र विरोधिभागत्यागांशे दुःखादेर्विरोधिनः सत्यतायाः प्रत्यक्षेण विषयीकरणेन मिथ्यात्वरूपतस्त्यागासम्भवात्। एवं च प्रत्यक्षेण विरोधत इति नोभयत्रैकप्रकारं विशिष्टाभेदपरत्वे दुःखादेः प्रत्यक्षेण विषयीकरणादित्येतावता पूर्तेः सत्यत्वादिति नावश्यकं विरोधिभागत्यागांशे चावश्यकम्। एवं च कथञ्चित्प्रत्यक्षविरोधस्य सत्यत्वात्तेनेत्यस्य चोभयत्राप्युपयोग इत्याशयेन प्रत्यक्षविरोधत इत्यादि व्याख्याय मुख्योपयोगेन तत्तास्वारस्यानुरोधेन विशिष्टाभेदपरत्वाभावे प्रत्यक्षविरोधत इत्यस्य विरोधिभागत्यागेन स्वरूपमात्राभेदपरत्वाभावे सत्यत्वात्तेनेत्यस्य हेतुसमर्पकत्वमित्याशयेन पक्षान्तरमाह ॥ **अथवेति** ॥ ननु विशिष्टाभेदपरत्वे कथं प्रत्यक्षविरोधः। दुःखादिविशिष्टस्य तदभावविशिष्टाभेदबोधने वन्ध्या पुत्रवतीत्यादाविव स्पष्टस्ववचनविरोधस्य कथमनुक्तिः। स्वरूपाभेदपरत्वे च सत्यत्वात्तेनेत्यस्य नोपयोगः। विरोधिभागत्यागस्याविवक्षादिनाऽपि सम्भवात्तदंशेऽपि नोपयोग इत्यतो विशिष्टाभेदपक्षे प्रत्यक्षविरोधमुपपादयंस्तत्पक्षे स्ववचनविरोधस्य स्पष्टतया मुखतोऽनुक्तिः। सत्यत्वात्तेनेत्यस्य च मिथ्यात्वरूपविरोधिभागत्यागांश उपयोगः। अविवक्षानित्यत्वपक्षयोः स्पष्टदूषणतया स्थलान्तरे भाष्यकारेण निरस्ततया परानभ्युपेततया चात्रानिरास इत्याशयेन भाष्यतात्पर्यमाह ॥ **इदमुक्तं भवतीति** ॥

स०— ननु कथं नास्ति तत्त्वमसीत्यादीनां विद्यमानत्वादित्याशङ्क्य तेषां अद्वैतविषयत्वाभावं प्रतिज्ञातमुपपादयति ॥ **तथा हीति** ॥ पूर्वं तत्त्वमस्यादिवाक्यस्य मुख्यया वृत्त्या विरोधिभागत्यागेन

स्वरूपलक्षणया वा ऐक्यपरत्वाभावे प्रत्यक्षविरोधं नियामकत्वेनोक्त्वा तदुपपादकत्वेन सत्यत्वाच्चेन दुःखादेरित्येतदुपतिष्ठत इति योजितम् । अधुना तत्त्वमस्यादिवाक्यस्य मुख्यवृत्त्या ऐक्यपरत्वाभावरूपसाध्ये प्रत्यक्षेण विरोधात् इत्यस्य हेतुत्वप्रतिपादकत्वम् स्वरूपमात्रलक्षणयैक्यपरत्वाभावरूपसाध्ये तु सत्यत्वाच्चेन दुःखादेरित्यस्य हेतुसमर्पकत्वमिति पृथक्साध्यद्वये हेतुद्वयमित्याह ॥ **अथवेति** ॥ **न द्वितीयमिति** ॥ विरोध्याकारस्यानित्यत्वेऽपि इदानीमविनाशित्वात् भाविब्रह्मज्ञानविनाश्यत्वाच्चेत्यर्थः ॥

प०— पूर्वं प्रत्यक्षविरोध इत्येतदुपपादकत्वेन सत्यत्वादितिपादो व्याख्यातः । अधुना मुख्यवृत्त्या ब्रह्मतां न वदेदित्यत्र प्रत्यक्षविरोध इत्ययं हेतुः । लक्षणया विरुद्धभागत्यागेन ब्रह्मतां न वदेदित्यत्र सत्यत्वाच्चेन दुःखादेः इत्ययं हेतुरित्याह ॥ **अथवा पृथक्साध्येति** ॥ तद्व्यनक्ति ॥ **इदमित्यादिना** ॥ **स्ववचनविरोधस्येति** ॥ अपसिद्धान्तस्येत्यर्थः । पक्षद्वयं बहिरेव निरस्य तृतीयपक्षदोषं मूलारूढतया दर्शयति ॥ **न तृतीय इत्यादिना** ॥

या०— पूर्वं 'सत्यत्वाच्चेन दुःखादेः' इत्येतत्प्रत्यक्षविरोधोपपादकतया व्याख्यातमिदानीं मुख्यया वृत्त्या तत्त्वमस्यादिवेदस्यैक्यपरत्वाभावरूपे प्रथमसाध्ये प्रत्यक्षविरोधस्य हेतुत्वं जहदजहल्लक्षणया तत्परत्वाभावरूपे तु द्वितीयसाध्ये सत्यत्वाच्चेनदुःखादेरित्यस्य हेतुत्वमित्युक्तसाध्यद्वये पृथक् हेतुद्वयमित्याह ॥ **अथवा पृथगिति** ॥ तदेव दर्शयति ॥ **इदमुक्तं भवतीति** ॥ **स्ववचनविरोधस्य चेति** ॥ भिन्नोऽचिन्त्य इत्यादिस्ववचनविरोधस्येत्यर्थः । यद्वा भेदप्रतिपादकशकुनिसूत्रादिदृष्टान्ताभिधानरूपस्ववचनविरोधस्येत्यर्थः । अथवा तत्त्वंपदयोरदुःखदुःख्यादिपरतया माता वन्ध्येतिवत्स्ववचनविरोध इत्यर्थः । द्वितीयं हेतुं सङ्गमयितुं विकल्पेन पृच्छति ॥ **विरोध्याकारपरित्यागो हीत्यादिना** ॥

श्री०— **उक्तप्रकारद्वयेनेति** ॥ मुख्यवृत्त्या लक्षणया चेत्यर्थः ॥ **भविष्यसीति** ॥ विरोध्याकारस्यानित्यत्वेन यदा विनाशस्तदा तत्त्वं भविष्यसीत्यर्थः ॥

च०— **विरोधिभागपरित्यागेनेति** ॥ सर्वज्ञत्वाज्ञत्वादिरूपभेदकधर्माविवक्षयेत्यर्थः ॥ **जहदजहल्लक्षणयेति** ॥ विशेषणीभूतसर्वज्ञत्वाज्ञत्वादिपरित्यागाज्जहतीति विशेष्यभूतचैतन्यांशस्यापरित्यागादजहतीति चेयं लक्षणा व्यपदिश्यते ॥

अनु०— यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवत् ॥
ब्रह्मत्वमपि जीवस्य

सु०— ननु कथमेतत्प्रत्यक्षविरोधेन श्रुतेः प्रतीतार्थात्प्रच्यावनम्, क्वाप्येवमदर्शनात्; प्रत्युत परत्वान्निर्दोषत्वाच्च बलवत्या श्रुत्या विरुद्धं पूर्वं दोषशङ्काकलङ्कितमहं दुःखीत्यादिप्रत्यक्षमेवाप्रमाणं भवितुं युक्तमित्यत आह ॥ यजमानेति ॥ श्रुतेर्यजमानः प्रस्तर इत्यस्याः। तथा ब्रह्मत्वपि जीवस्य तत्त्वमस्यादिश्रुतेरर्थो न भवेदित्यर्थः॥ अत्रेमौ प्रयोगौ। जीवब्रह्मणोरेकत्वं न मीमांसाशास्त्रस्य विषयस्तदुपकर्तव्यवेदाविषयत्वात्। यद्यदुपकर्तव्यप्रमाणस्याविषयः न तत्तदितिकर्तव्यताविषयः यथा सम्प्रतिपन्नम्। तथा तत्त्वमस्यादिवाक्यं न प्रतीतार्थं प्रत्यक्षविरुद्धत्वात् यजमानः प्रस्तर इति वाक्यवदिति॥ अनेनैव परत्वनिर्दोषत्वयोर्यजमानः प्रस्तर इति वाक्ये व्यभिचारश्च सूचितो भवति॥ नन्वत्र निर्दोषत्वमेव नास्ति अगृहीतवृत्तित्वस्यैव दोषस्य विद्यमानत्वात्; अमुख्यवृत्त्या हीदं प्रवृत्तमिति चेत्। तर्हि तत्त्वमस्यादिवाक्यमप्येवमित्यसिद्धिः। कुतोऽत्रामुख्यवृत्तिरिति चेत् समं यजमानादिवाक्ये। प्रत्यक्षविरोधादिति वदतस्समस्समाधिः।

वा०— ननूत्तरवाक्यं न सङ्गतमित्यतोऽत्र वाक्ये जीवब्रह्मत्वयजमानप्रस्तरत्वयोर्विशिष्योपादानेन तत्र दृष्टान्तादिसमर्पकतया सङ्गत्यसंभवेऽपि वक्ष्यमाणरीत्या प्रतीतार्थत्वाभावमात्रस्यैव साध्यतया विवक्षणीयत्वात्तत्र दृष्टान्तसमर्पकतया प्रत्यक्षाप्रामाण्यसाधकश्रुतिविरोधोपपादकश्रुतिबलवत्त्वोपपादकत्वेन पराभिमतयोः परत्वनिर्दोषत्वयोर्व्यभिचारस्थलप्रदर्शकतया च सङ्गतिः संभवत्येवेति भावेन तन्निवर्त्यां शङ्कां दर्शयति॥ नन्विति॥ अत्र प्रकृतत्वाच्छ्रुतिशब्देन तत्त्वमस्यादिग्रहणे ब्रह्मत्वमपि जीवस्येत्यंशेन यजमानप्रस्तरत्वस्य तदर्थतयाऽप्रसक्ततया यजमानप्रस्तरत्वमित्यंशेऽप्रसक्तप्रतिषेधापत्तिः। योग्यतया यजमानः प्रस्तर इत्यस्याग्रहणे ब्रह्मत्वमपि जीवस्येत्यंशे तदापत्तिरित्यतो नार्थः श्रुतेर्भवेदित्यस्यावृत्त्या श्रुतिशब्दस्य च योग्यतया दृष्टान्तदार्ष्टान्तिकयोरन्यतरार्थपरत्वान्नानुपपत्तिरित्याशयेनाह॥ श्रुतेरिति॥ ननु पूर्ववाक्यात्प्रतीयमाने मीमांसा न ब्रह्मजीवैक्यविषया वेदस्य तदविषयकत्वादिति प्रयोगेऽप्रयोजकता वैयधिकरण्यं च जीवब्रह्मैक्यं न मीमांसाविषयो वेदाविषयत्वादिति प्रयोगविवक्षायामप्यप्रयोजकतैव। उत्तरवाक्ये च जीवब्रह्मत्वं न तत्त्वमसिवाक्यविषयः प्रत्यक्षविरोधाद्यजमानप्रस्तरत्ववदित्यत्र प्रकृतसाध्यस्य दृष्टान्तांशेऽप्रसक्तप्रतिषेधादनुपपत्तिः। श्रुतिशब्दस्योभयपरोक्तव्या-

ख्यानानुपपत्तिश्च । तदर्थं दृष्टान्तश्रुतेरेवोपादाने प्रकृतसाध्यस्य दृष्टान्तेऽप्रसक्तप्रतिषेध एव । तदर्थं च श्रुत्यर्थो नेत्येव साध्यकरणे परस्य पक्षे यत्किञ्चिच्छ्रुत्यर्थत्वाभावस्य सिद्धत्वात्सिद्धसाधनता । पूर्ववाक्यानुसारेण तत्त्वमसीत्यादिवेदस्य पक्षतायां जीवब्रह्मैक्यत्वविषयकत्वाभावरूपसाध्यस्य दृष्टान्तश्रुतावप्रसक्तनिषेध एवेत्यतो वाक्यद्वयाभिमतप्रयोगप्रकारं दर्शयति ॥ **अत्रेमाविति** ॥ अत्र हेतौ वेदग्रहणं प्रकृताभिप्रायेण वा पक्षे हेतूपपादनाय वा करणवाचकवेदपदोपादानादुपकर्तव्यत्वालाभसूचनाय वा सामान्यव्याप्तेर्विवक्षणान्नानुपपत्तिरित्याशयेनाह ॥ **यदिति** ॥ न केवलं यजमानप्रस्तरादिवाक्यस्य स्वपरपक्षसाधकानुमानदृष्टान्तव्यभिचारस्थलसमर्पकतयैवात्रोपादानमपि तु प्रतिबन्दीमुखत्वेनापि । एवं चाव्यभिचाराय तत्र निर्दोषत्वानभ्युपगमे पक्षेऽप्यसिद्धिरिति सूचितमित्याशयेन दृष्टान्ते हेत्वभावमाशङ्क्य प्रतिबन्द्या समाधत्ते ॥ **नन्विति** ॥

स०—**ननु कथमित्यादि**प्रत्यक्षस्य श्रुतिबाधकत्वं नोपलब्धमिति चोद्यम् । उपलब्धमित्युत्तरम् ॥ **अगृहीतवृत्तित्वस्यैवेति** ॥ अगृहीतामुख्यवृत्तित्वस्यैवेत्यर्थः । अमुख्यवृत्त्या प्रवृत्तत्वात् अमुख्यवृत्त्यग्रहणमेव दोष इत्यर्थः । प्रस्तरादिवाक्यसादृश्यं तत्त्वमस्यादिवाक्यस्योपपादयति ॥ **तर्हीत्यादि** ॥

प०— **परत्वादिति** ॥ पश्चात्तनत्वादित्यर्थः । प्रत्यक्षप्रवृत्त्यनन्तरमेव जीवब्रह्माद्वैतादिवाक्यस्य प्रवृत्तेरिति भावः ॥ **यजमानःप्रस्तरइत्यस्याइति** ॥ प्रस्तरो दर्भमुष्टिः । तत्र यजमानप्रस्तरयोर्न तादात्म्यं श्रुत्यर्थः । किंतु यजमानवत् प्रस्तर इति यजमानकार्यं प्रस्तरः करोतीति पूर्वतन्त्रे प्रथमाध्याये चतुर्थपादे 'तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवायादि'ति सूत्रेऽभिहितं ध्येयम् । नन्वनेन परत्वान्निर्दोषत्वाच्चेति परोक्तहेत्वोः को दोष उक्तः स्यादित्यत आह ॥ **अत्रेति** ॥ सत्यत्वादित्यादिसार्धश्लोके इमौ प्रयोगावभिहितावित्यर्थः । अप्रयोजकतानिरासाय तदुपकर्तव्येति हेतुविशेषणम् । **यथा संप्रतिपन्नमिति** ॥ चैत्यवन्दनादिकं न कर्मकाण्डविषय इति तदितिकर्तव्यताभूतकर्मतन्त्रस्य न विषय इत्यर्थः । हेत्वसिद्धिनिरासाय द्वितीयप्रयोगमाह ॥ **तथेति** ॥ **व्यभिचारश्चेति** ॥ न केवलं प्रतिपक्ष इति चार्थः ॥ **असिद्धिरिति** ॥ निर्दोषत्वहेतोरिति योज्यम् ।

या०— **प्रस्तरः** दर्भमुष्टिः ॥

श्री०— **परत्वादिति** ॥ अपच्छेदन्यायेन परेण पूर्वबाध इत्यर्थः । प्रत्यक्षसिद्धस्य जीवस्य श्रुत्याऽभेदप्रतिपादनात् श्रुतेः परत्वं बोद्धव्यम् । नन्वनेन परत्वान्निर्दोषत्वादिति परोक्तहेत्वोः को दोष

उक्तः स्यादित्यत आह ॥ **अत्रेति** ॥ सत्यत्वादिति साधश्लोकेऽप्रयोजकतापरिहाराय तदुपकर्तव्येति हेतुविशेषणम् । **यथा संप्रतिपन्नम्** चैत्यवन्दनादिकं न कर्मकाण्डविषय इति तदितिकर्तव्यताभूतकर्मतन्त्रस्य न विषय इत्यर्थः । हेतोरेवाभावान्न व्यभिचार इत्याशङ्कते ॥ **नन्विति** ॥ **अगृहीतवृत्तित्वस्यैवेति** ॥ अज्ञायमानमुख्यवृत्तित्वस्यैवेत्यर्थः । तदुपपादयति ॥ **अमुख्यवृत्त्या हीदमिति** ॥ अतो यजमानः प्रस्तर इति वाक्ये प्राबल्यसाधकस्य निर्दोषत्वहेतोर्न व्यभिचार इति भावः ॥ **एवमिति** ॥ तत्त्वमसीति वाक्येऽप्यगृहीतामुख्यवृत्तित्वस्यैव दोषस्य सत्त्वेन निर्दोषत्वहेतोः स्वरूपासिद्धिरित्यर्थः । अत्र तत्त्वमसीति वाक्ये ॥ **सममिति** ॥ तत्राप्यमुख्यवृत्तिः कुत इत्यर्थः । ननु यजमानप्रस्तरयोरभेदरूपमुख्यार्थस्य प्रत्यक्षविरुद्धत्वेन यजमानादिवाक्येऽमुख्यवृत्तिराश्रीयत इत्याशङ्क्याह ॥ **प्रत्यक्षविरोधादितीति** ॥ **सम इति** ॥ तत्त्वमसीति वाक्येऽपि विशिष्टाभेदरूपमुख्यार्थस्य प्रत्यक्षविरुद्धत्वादेवामुख्यवृत्तिराश्रीयत इत्यर्थः ॥

अनु०— **प्रत्यक्षस्याविशेषतः ॥**

**सु०— स्यादेतत् । न यजमानः प्रस्तर इत्यादिवाक्यस्य प्रत्यक्षविरोधमात्रेण प्रतीतार्थपरित्यागः । तथात्वे परमेश्वरावतारनिर्दोषतावाक्यस्यापि प्रत्यक्षविरोधेनार्थपरित्यागप्रसङ्गात् । किं नामोपजीव्यप्रत्यक्षविरोधात् । उपजीव्योपजीवकयोरुपजीव्यं बलवदिति हि न्यायः। ननु यजमानस्वरूपं न प्रत्यक्षविषयः शास्त्रीयत्वात्तद्भावस्य; तत्कथमुपजीव्यप्रत्यक्षविरुद्धा श्रुतिरिति चेत्; तर्हि प्रत्यक्षविरोधोऽपि कथम् । प्रत्यक्षाकारस्य प्रस्तराभेदप्रतिपादने निदर्शितेयमिति चेत्समं ममापीत्यत आह ॥ प्रत्यक्षस्येति ॥ सत्यं यजमानः प्रस्तर इति श्रुतिरुपजीव्यप्रत्यक्षविरोधात्प्रतीतार्थे न प्रमाणमिति । तथाऽपि नोक्तदोषः । अद्वैतश्रुतिबाधकतयाऽस्माभिरुन्यस्तस्यापि प्रत्यक्षस्य यजमानग्राहिप्रत्यक्षादविशेषात्; अस्याप्युपजीव्यत्वात् । प्रत्यक्षावगतं हि जीवं त्वमित्यनूद्य तस्य तदसीति ब्रह्मता विधातव्या । तदनेनोपजीव्यप्रत्यक्षविरोध एवास्माभिर्हेतूकृत इति सूचितं भवति ॥**

वा०— ननु यजमानप्रस्तरभेदग्राहिप्रत्यक्षेण जीवेशभेदग्राहिप्रत्यक्षस्योपजीव्यत्वेन अविशेषप्रतिपादनमसङ्गतम् । प्रत्यक्षविरोधमात्रस्यैव प्रतीतार्थपरित्यागप्रयोजकत्वाभ्युपगमे सिद्धान्तिनं प्रत्यनिष्टाभावेन दृष्टान्तदार्ष्टान्तिकयोरुपजीव्यत्वेन विशेषस्य परेण शङ्कितुमशक्यत्वात्प्रत्यक्षविरोधमात्रस्याप्रयोजकत्वे नियामकाभावेनोपजीव्यप्रत्यक्षविरोधस्याप्यप्रयोजकत्वमिति वक्तुं शक्यत्वाच्च यजमानप्रस्तर-

वाक्यं प्रति प्रत्यक्षे उपजीव्यत्वस्य प्रतिषेध्यसमर्पकत्वरूपस्यातिप्रसञ्जकतया शङ्कितुमशक्यत्वाद्धर्मिग्राहकत्वरूपस्य तस्य तत्रासंभवाच्चेत्यतः प्रत्यक्षविरोधमात्रस्य प्रतीतार्थपरित्यागप्रयोजकत्वाभ्युपगमे सिद्धान्तिनं प्रत्यनिष्टप्रसङ्गादुपजीव्यतद्विरोधप्रयोजकतायाश्च न्यायबलसिद्धत्वात्सिद्धान्त्यभिमतप्रत्यक्षविरोधन्यायेनैवोपजीव्यत्वस्यापि सूपपादत्वादुपजीव्यत्वेन प्रसक्तविशेषनिरासाय प्रवृत्तं भाष्यं सङ्गततरमित्याशयेनावतारयति ॥ **स्यादेतदिति** ॥ **नन्विति** ॥ न च यजमानप्रस्तरभेदग्राहिप्रत्यक्षविरोधं वदतः सिद्धान्तिनो यजमानस्वरूपं न प्रत्यक्षविषय इति शङ्का निर्दलेति वाच्यम् । उपजीव्यत्वस्य प्रकारान्तरेणासंभवात् । धर्मिग्राहकत्वेनैव तद्वाच्यमित्युपजीव्यत्वोक्तौ साक्षाद्यजमानस्वरूपग्राहकत्वलाभवद्यजमानप्रस्तरभेदग्राहकत्वोक्तौ न तल्लाभः । भेदनिरूपकतया धर्मिस्वरूपविषयीकरणस्य स्मृतप्रतियोगिविषयीकरणवत्स्मरणमात्रेणोपपत्तेरिति मन्यमानस्येव यजमानप्रस्तरवाक्यं प्रति प्रत्यक्षस्योपजीव्यत्वं परमुखेनैव द्रढीकर्तुं प्रवृत्तस्य सिद्धान्तिनोऽपि युक्तैव शङ्का । अत एव तर्हीति परिहारवाक्यस्य भेदप्रत्यक्षे प्रतियोगिन इव स्मरणमात्रेण धर्मिणोऽविषयत्वं सिद्धान्तिना त्वया न वक्तुं शक्यम् । अतिप्रसङ्गादपसिद्धान्ताच्च । धर्मिप्रत्यक्षस्य भेदप्रत्यक्षतन्त्रतायाः सिद्धान्तत्वात् । एवञ्च धर्मिणोऽप्रत्यक्षत्वे तद्भेदस्याप्यप्रक्षत्वात्तद्विरोधोक्तिरनुपपन्नेत्याशयो वर्णनीय इति ध्येयम् । **कथमिति** ॥ तथा च न तद्विरोधेन प्रतीतार्थपरित्यागे यजमानप्रस्तरवाक्यनिदर्शनं युक्तमिति भावः । यद्वा यजमानप्रस्तरभेदग्राहकत्वमात्रेण प्रत्यक्षविरोधसंभवेऽपि नोपजीव्यप्रत्यक्षविरोधसंभवः । धर्मिग्राहकत्वेनैवोपजीव्यत्वस्य वक्तव्यत्वात् । यजमानत्वविशिष्टस्यैव धर्मित्वात् । यजमानत्वस्य च दीक्षाव्रतग्रहणजन्यसंस्कारविशेषरूपस्यातीन्द्रियत्वेन प्रत्यक्षाविषयत्वेन प्रत्यक्षस्योपजीव्यत्वसंभव इति शङ्काशयः । तर्हि भेदप्रत्यक्षे धर्मिभाननियमाद्यजमानरूपधर्म्यग्रहणे तद्भेदप्रत्यक्षस्याप्यनुपपत्तिरेवेति तर्हीत्युत्तरवाक्याशयः । प्रत्यक्षाकारस्य धर्मित्वाभ्युपगमेन प्रत्यक्षविरोधोपपादने च तादृशाकारविशिष्टधर्मिग्राहकत्वेनैवोपजीव्यत्वमपीति तद्विरोधोऽपि सूपपाद एवेति तदुत्तरवाक्याशयः । एवं च परमुखेनैव धर्मिस्वरूपविशेषविवेचनायेमे शङ्कासमाधाने इति द्रष्टव्यम् । प्रत्यक्षस्याविशेषत इति सामान्यवाक्ये उपजीव्यत्वस्य प्राबल्याप्रयोजकत्वात्प्रत्यक्षयोरविशेष इत्यभिप्रायस्योपजीव्यविरोधेनेत्युत्तरवाक्यविरुद्धत्वात् । उपजीव्यत्वस्य यजमानभेदग्राहिप्रत्यक्षेप्यभावात्प्रत्यक्षयोरविशेष इत्यभिप्रायस्य च वक्ष्यमाणोपजीव्यसार्वज्ञादिवाक्यप्रायपाठविरोधात्पूर्वपक्षिणा दृढमुपपादितत्वाच्च तथाभिप्रायवर्णनानौचित्यात्प्रकृतप्रत्यक्षस्याप्युपजीव्यत्वाभ्युपगमेनैवाविशेषमुपपादयति ॥ **सत्यमित्यादिना** ॥ नन्वेतावताऽपि प्रत्यक्षविरुद्धत्वस्य हेतोः परमेश्वरनिर्दोषतावाक्ये व्यभिचारः कथं परिहृत इत्यत आह ॥ **तदनेनेति** ॥

स० — **शास्त्रीयत्वादिति** ॥ स्वरूपमात्रस्य प्रत्यक्षत्वेऽपि यजमानत्वाकारस्य कर्मानुष्ठाननिबन्धनस्य दीक्षादिविध्यधीनत्वेन शास्त्रीयत्वमित्यर्थः ॥

प० — चतुर्थपादमवतारयितुं शङ्कते ॥ **स्यादेतदित्यादिना** ॥ सिद्धान्ती चोदयति ॥ **ननु यजमानेति** ॥ **तद्भावस्येति** ॥ यजमानभावस्येत्यर्थः । दीक्षारूपसंस्कारोपेतत्वरूपं यजमानत्वं । तच्च दीक्षावबोधकशास्त्रगम्यमिति भावः । पूर्वपक्ष्येव पृच्छति ॥ **तर्हीति** ॥ सिद्धान्ती समाधानमाह ॥ **प्रत्यक्षाकारस्येति** ॥ **निदर्शितेति** ॥ 'यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेदि'त्यनेन दृष्टान्तितेत्यर्थः ॥ **ममापीति** ॥ उपजीव्यविरोधादेव प्रस्तरश्रुतेः प्रतीतार्थत्याग इतिवादिन इत्यर्थः । आकारग्राहिण एव प्रत्यक्षस्योपजीव्यत्वात् । ऐक्यवाक्ये तु नोपजीव्यप्रत्यक्षविरोध इतिभावः । प्रस्तरवाक्यवैषम्ये वाचस्पत्याद्युक्तमन्यदपि प्रत्यक्षस्य बाध्यत्वे बाधकोक्तिप्रस्तावे न्यायामृते निरस्तं बोध्यम् ॥

या० — **शास्त्रीयत्वात्तद्भावस्येति** ॥ स्वरूपमात्रस्य प्रत्यक्षत्वेऽपि यजमानत्वाकारस्य कर्मानुष्ठाननिबन्धनस्य दीक्षादिविध्यधीनत्वेन शास्त्रीयत्वादित्यर्थः ॥

श्री० — **प्रतीतार्थपरित्याग इति** ॥ येन समः समाधिः स्यादिति भावः ॥ **प्रत्यक्षविरोधेनेति** ॥ रामकृष्णादिदोषग्राहिप्रत्यक्षविरोधेनेत्यर्थः ॥ **प्रसङ्गादिति** ॥ भवन्मत इति शेषः ॥ **इति हि न्याय इति** ॥ प्रकृते तु तत्त्वमसीति वाक्येनोपजीव्यप्रत्यक्षविरोध इत्याशयः । यजमानः प्रस्तर इति श्रुतेर्नोपजीव्यप्रत्यक्षविरुद्धेति सिद्धान्ती शङ्कते ॥ **नन्विति** ॥ **शास्त्रीयत्वादिति** ॥ दीक्षाविशेषनिबन्धनस्य यजमानस्य शास्त्रीयत्वेनातीन्द्रियत्वादित्यर्थः । श्रुतिर्यजमानः प्रस्तर इति श्रुतिः । तथा च किं नामोपजीव्यप्रत्यक्षविरोधादित्युक्तमसदिति भावः । पूर्वपक्ष्युत्तरमाह ॥ **तर्हीति** ॥ यजमानः प्रस्तर इति श्रुतेरुपजीव्यप्रत्यक्षविरोधाभावे प्रत्यक्षेण विरोधतो यजमानः प्रस्तरत्वं यथा नार्थः श्रुतेर्भवेदिति यजमानः प्रस्तर इति श्रुतेः प्रत्यक्षविरोधोऽपि भवद्भिः कथमुक्त इत्यर्थः । याजमान्यस्य शास्त्रीयत्वेन तत्र प्रत्यक्षाप्रवृत्तेरिति भावः । सिद्धान्ती पुनराशङ्कते ॥ **प्रत्यक्षाकारस्येति** ॥ प्रत्यक्षसिद्धकरचरणाद्याकारस्यैवोपजीव्यत्वमङ्गीकृत्य तस्यैव प्रस्तराभेदबोधने उपजीव्यविरोधो मयाऽप्युच्यत इत्यर्थः । तत्त्वमस्यादिवाक्ये तु नैवमिति नोपजीव्यप्रत्यक्षविरोध इति भावः ॥ **उक्तदोष इति** ॥ प्रकृते उपजीव्यप्रत्यक्षविरोधो नास्तीत्युक्तप्रायो दोष इत्यर्थः ॥ **हेतूकृतेति** ॥ तत्त्वमस्यादिवाक्यं न प्रतीतार्थमुपजीव्यप्रत्यक्षविरुद्धत्वादित्यनुमाने हेतुः कृत इत्यर्थः ॥

च० — **शास्त्रीयत्वात्तद्भावस्येति** ॥ दीक्षाविशेषरूपसंस्कारोपेतत्वात्मकयाजमान्यस्य दीक्षादिविधिमात्रज्ञेयत्वादित्यर्थः ॥

अनु०— सार्वज्ञ्यादिगुणं जीवाद्भिन्नं ज्ञापयति श्रुतिः ।
ईशं तामुपजीव्यैव वर्तते ह्यैक्यवादिनी ।
उपजीव्यविरोधेन नास्यास्तन्मानता भवेत् ॥

सु०— एवं जीवमनूद्य तस्य ब्रह्मत्वं प्रतिपादयन्तीनां तत्त्वमसीत्यादिश्रुतीनामुपजीव्यप्रत्यक्षविरोधादतत्परत्वमुक्तम् । अधुना या ब्रह्मानुवादेन तस्य जीवैक्यं विदधति तासां तद्योऽहं सोऽसौ योऽसौ सोऽहमित्यादीनामुपजीव्यश्रुतिविरोधादतत्परत्वमाह ॥ सार्वज्ञ्यादीति ॥ तामिति श्रवणाद्येत्यध्याहार्यम् । सार्वज्ञ्यादिगुणं तत एव जीवाद्भिन्नमिति विरोधस्फुरणार्थम् । एव शब्देनेशस्य प्रमाणान्तरागोचरत्वमाह । हिशब्दो यस्मादित्यर्थे । अस्यास्तद्योऽहमित्याद्यायाः श्रुतेः । तत् तस्मात् तस्मिन्नर्थे इति वा ॥ तदयमर्थः । ईश्वरमनूद्य तस्य जीवाभेदं प्रतिपादयन्त्या श्रुत्या सर्वथा तावदीश्वरसिद्धिरपेक्षिता; अप्रतीतस्यानुवादायोगात् । न चेश्वरसिद्धिः श्रुतिं विना संभवति । ततो यः सर्वज्ञ इत्यादिश्रुतिरेवास्या उपजीव्येति वाच्यम् । सा चासर्वज्ञाज्जीवादीश्वरस्य भेदमेव प्रतिपादयतीति तद्विरुद्धा तद्योऽहमित्याद्या श्रुतिर्नाद्वैतवादिनीति ॥ एतेन जीवब्रह्मस्वरूपानुवादेन तदैक्यमात्रपराणां परेऽव्यये सर्व एकीभवन्तीत्यादिवाक्यानामुपजीव्यप्रत्यक्षागमविरोऽधोऽप्युक्तो वेदितव्यः ।

वा०— ननु तत्त्वमसीति वाक्ये जीवस्योद्देश्यत्वेन तत्र सार्वज्ञ्यादिवाक्यस्योपजीव्यत्वायोगात्तद्विरोधप्रतिपादकमुत्तरवाक्यमसङ्गतमित्याशङ्क्य पूर्वोत्तरवाक्ययोरन्यान्यवाक्यविषयकत्वान्नानुपपत्तिरित्याशयेनाह ॥ **एवमिति** ॥ एकवाक्यतालाभायाह ॥ **तामितीति** ॥ भिन्नादिपदाश्रवणात्कथं जीवाद्भिन्नमित्याद्युक्तिरित्यतोऽसार्वज्ञादिकं स्वस्मिन्साक्षात्कुर्वाणस्य सार्वज्ञादिबोधकवाक्यात्स्वविलक्षणवस्तुन एव प्रतीतिरित्याशयेन तदुक्तिरित्याह ॥ **तत एवेति** ॥ उपजीव्यत्वोपपादकवाक्ये जीवाद्भिन्नमित्यंशस्योपजीव्यत्वोपपादकत्वाभावाद्वैयर्थ्यमित्यत उपजीव्यविरोधेनेत्युत्तरवाक्योक्तविरोधांशे उपयोगान्न वैयर्थ्यमित्याह ॥ **विरोधेति** ॥ ईशस्य प्रमाणान्तरगोचरत्वेऽस्योपजीव्यत्वासंभवादेवशब्दसूचितमाह ॥ **एवेति** ॥ प्रसिद्ध्यर्थत्वासंभवादाह ॥ **हिशब्द इति** ॥ ऐक्यवादिनीति सामान्यशब्दस्य विशेषपरत्वं तत्र श्रुतेरित्यस्यानुवृत्तिश्चेत्याशयेनास्या इत्यस्य परामृष्टव्यं दर्शयति ॥ **अस्या इति** ॥ अपौरुषेयविरोधादाह ॥ **तत्तस्मिन्निति** ॥ यद्वैक्यरूपार्थविशेषे उपजीव्यविरोधेन सर्वथा प्रामाण्याभावोक्तिरनुपपन्ना । अर्थान्तरे प्रामाण्योपपत्तेरित्यत आह ॥ **तत्तस्मिन्निति** ॥ ननु न सार्वज्ञादिवाक्यस्य तद्योऽहमित्याद्युप-

जीव्यत्वम् । ईश्वरसिद्धेरेवानपेक्षणात् । अपेक्षणे वा प्रमाणान्तरेण तत्संभवात्कथं च तद्विरोध इत्यतोऽभिप्रायमाह ॥ **तदयमर्थ इति** ॥ एवं सत्यत्वात्तेनेति सार्वज्ञ्यादिगुणमिति वाक्यद्वयं तत्तद्वाक्ये विरोधप्रदर्शनपरतया व्याख्यायोभयमेकविषयतया व्याख्याति ॥ **एतेनेति** ॥

**सु०— ननु सर्पोऽयमित्युपजीव्यप्रत्यक्षविरुद्धमपि नायं सर्पः किन्तु रज्जुरेवेत्युपजीवकमाप्तवचनं प्रमाणं दृश्यत इति चेत् । तत्किमुपजीव्योपजीवकन्यायो व्यभिचरितत्वादकिञ्चित्कर इति वक्तुमुद्यमः, आहोस्वित्सापवाद इति । नाद्यः दहनानुष्णताऽनुमानस्य यजमानप्रस्तर इति वाक्यस्य चाप्रामाण्ये कारणान्तरस्य वक्तव्यतापातात् । द्वितीयेऽपवादो वक्तव्यः ॥ तत्त्वविषयेणोपजीवकेनाप्युपजीव्यं बाध्यत इति चेत् । तत्त्वविषयता किमेवमेव निश्चिता उत न्यायान्तरेण । नाद्यः विनिगमने कारणाभावेनानिर्णयात् । द्वितीये तदेव वाच्यम् ; किमनेन । निरसिष्यते चैतदिति ।**

वा०— अत्र मूलोक्तस्योपजीव्येनोपजीवकं बाध्यत इति न्यायस्य सापवादकतयाऽनियमत्वेऽपि प्रकृतेऽपवादाभावायुक्तं तदुदाहरणमित्याशयेन क्वचिदपवादेऽपि प्रकृते तदभावप्रदर्शनाय तदनुकूलां प्रसक्तिं दर्शयति ॥ **नन्विति** ॥ उभयथाऽपि प्रश्नाभिप्रायसंभवाद्विकल्पयति ॥ **तत्किमिति** ॥ यदि मिथ्यैव विमतो भेद इत्यनुमानेन विमुक्तश्च विमुच्यत इत्याद्यागमेन च भेदादेर्मिथ्यात्वसिद्धावभेदागमादीनां तत्त्वविषयकतासिद्धिरित्यभिमतं तद्युक्तं साधकमुदाहृत्य तेनाभेदागमादीनां तत्त्वविषयकतानिश्चयाद्भेदप्रत्यक्षादीनामतत्त्वविषयकाणां तैर्बाध इत्येव वक्तव्येऽसदुक्तन्यायवैपरीत्येन बाध्यबाधकाभावे उदाहरणप्रदर्शने न किमपि प्रयोजनं तत्त्वविषयकत्वस्यैव बाधकताप्रयोजकतयोपजीवकत्वस्याकिञ्चित्करत्वादित्याह ॥ **द्वितीय इति** ॥ अथ तदेवोच्यते । विपरीतबाध्यबाधकभावोदाहरणप्रदर्शनं तु तदपि तिष्ठतीत्येतावतैवेत्यभिमतं तर्हि तन्निरासोऽपि मिथ्यैव विमतो भेद इत्यादिपृथगधिकरणीयभाष्येणैव सेत्स्यतीत्याशयेनाह ॥ **निरसिष्यते चैतदिति** ॥

प०— **आहोस्वित्सापवाद इति** ॥ उपजीव्योपजीवकन्यायः सापवादोऽकिञ्चित्कर इत्यर्थः । ऐक्यवाक्यस्थले च स न्यायः सापवाद इति भावः ॥ **उपजीवकेनेति** ॥ ऐक्यवाक्यं हि नायं सर्प इत्याप्तवाक्यवत्तत्त्वविषयम् । जीवेश्वरग्राहिप्रत्यक्षश्रुती चोपजीव्ये अपि न तत्त्वविषये इति भावः ॥ **एवमेवेति** ॥ निर्बीजमेवेत्यर्थः ॥ **न्यायान्तरेणेति** ॥ मानान्तराप्राप्तार्थकत्वरूपापूर्वतादितात्पर्यलिङ्गरूप-

न्यायान्तरेणेत्यर्थः ॥ **तदेवेति** ॥ न्यायान्तरमेव प्राबल्यप्रयोजकतया वाच्यम् । किमनेन तत्त्वविषयकत्वकथनेनेत्यर्थः । भङ्ग्यंतरेण तदेवोच्यत इत्यत आह ॥ **निरसिष्यते चैतदिति** ॥ पृथगुपदेशादित्यादौ ॥

श्री० — **इति चेदिति** ॥ एवं तत्त्वमस्यादिवाक्येऽपि स्यादिति भावः । **सापवादः** सोत्सर्गः । प्रायिक इत्यर्थः ॥ **कारणान्तरस्येति** ॥ उपजीव्यविरोधेन हि तत्राप्रामाण्यमुच्यते । उपजीव्योपजीवकन्यायस्याकिञ्चित्करत्वे तत्राप्रामाण्ये कारणान्तरं वाच्यं स्यादित्यर्थः । तथा च कालात्ययापदिष्टमात्रोच्छेदः स्यादिति हृदयम् ॥ **तत्त्वविषयतेति** ॥ उपजीवकस्य तत्त्वविषयकतेत्यर्थः ॥ **एवमेवेति** ॥ प्रमाणं विनैवेत्यर्थः ॥ **विनिगमनेति** ॥ तथात्वे उपजीव्यस्याप्येवमेव तत्त्वविषयकत्वापत्त्या वैपरीत्यस्यापि संभवेनोपजीव्यं बाध्यत इति । तत्र निर्णयायोगादित्यर्थः ॥ **तदेव वाच्यमिति** ॥ उपजीवकस्य तत्त्वविषयकतानिश्चायकं न्यायान्तरमेव वाच्यमित्यर्थः । तथा च न्यायान्तरेण निश्चिततत्त्वविषयताकं यद्वाक्यं तेनानिश्चिततत्त्वविषयताकं वाक्यं बाध्यत इत्येव वक्तव्यम् । तत्त्वविषयकेणोपजीवकेनोपजीव्यं बाध्यत इत्येवमुपजीव्योपजीवकभावकथनेन किमित्यर्थः । व्यर्थत्वान्नायं न्यायो वाच्य इति भावः । नन्वद्वैतश्रुतेस्तत्त्वविषयकत्वनिश्चायकं यन्न्यायान्तरं तेनैव भेदश्रुतेस्तर्हि विरोधः कथ्यत इति चेत्तत्राह ॥ **निरसिष्यते चैतदिति** ॥ यद्वा परीक्षितमप्युपजीवकमपरीक्षितमुपजीव्यं बाधते । सर्पोऽयमिति प्रत्यक्षं चापरीक्षितमत उपजीवकेनैव बाध्यत इति युक्तम् । प्रकृते तु नैवम् । उपजीव्यस्य प्रत्यक्षस्य परीक्षितत्वेन शोधितत्वादिति ज्ञानपादे वक्ष्यत इत्यर्थः ॥

अनु० — **स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।**
**सादृश्ये चैकवाक् सम्यक् सावकाशा यथेष्टतः ॥**
**अवकाशोज्झिता भेदश्रुतिर्नातिबला कथम् ॥**

**सु० — किञ्च सर्वा अप्यद्वैतश्रुतयो द्वा सुपर्णेत्यादिभेदश्रुतिविरुद्धत्वान्न प्रतीतार्थे प्रामाण्यं भजन्ते । नन्वधिकबलविरोधेन हीनबलमप्रमाणं भवति । भेदश्रुतीनां च कथमद्वैतश्रुतिभ्योऽधिकबलत्वं येन तद्बाधकतोच्यत इत्यत आह ॥ स्वातन्त्र्ये चेति ॥ स्वातन्त्र्य इत्यादिका निमित्तसप्तमी । स्थानमत्यैक्ययोरिति द्वन्द्वात्परमैक्यपदं प्रत्येकमभिसंबध्यते । सम्यगिति स्वातन्त्र्यादिनिमित्तमैक्यव्यवहारसद्भावमभिप्रैति । 'तेन स्वतन्त्रामुख्यप्रयोगे प्रयोजनं वाच्यम् । न ह्यस्मदायत्तेश ब्दप्रयोगेऽकस्मादमुख्यं प्रयुञ्ज्महे' इति निरस्तम् । व्यवहारास्तु टीकाकृतोक्ता द्रष्टव्याः ।**

काऽद्वैतश्रुतिः स्वातन्त्र्यादिषु किन्निमित्तमुपादाय प्रवृत्तेत्यपेक्षायामुक्तम् ॥ यथेष्टत इति ॥ यथासम्भवमित्यर्थः । एतच्च स्पष्टीकरिष्यत्याचार्यः । वृत्तिचिन्तां च तत्रैव करिष्यामः ॥ एतदुक्तं भवति । सावकाशनिरवकाशयोर्निरवकाशं बलवत् । सावकाशा चाद्वैतश्रुतिः; विनाऽपि साक्षादद्वैतं स्वातन्त्र्यादिना निमित्तेनामुख्यार्थतयाऽपि घटमानत्वात् । भेदश्रुतिस्तु निरवकाशा; जीवेशभेदमन्तरेणार्थान्तराप्रतीतेः । अतो निरवकाशतया बलवत्या भेदश्रुत्या सावकाशतया दुर्बलाया अद्वैतश्रुतेर्बाधो युक्त इति ।

वा० — ननु निरवकाशत्वेन भेदश्रुतेः सावकाशाभेदश्रुत्यपेक्षया प्राबल्यमित्यर्थोपपादकोत्तर-वाक्यस्य पूर्वप्रकृतोपजीव्यत्वोपपादकत्वाभावादसङ्गतिरित्यतो जीवेश्वरतदुभयधर्मिकाभेदप्रतिपादकतया पराभिमतश्रुतीनां भेदकावेदनमुखेन भेदावेदकोपजीव्यप्रत्यक्षादिविरोधरूपासाधारणदूषणमुक्त्वाऽधुना अद्वैतश्रुतिमात्रस्य साक्षादपि भेदप्रतिपादकश्रुतिबाधं मनसि निधाय तदुपयुक्तप्राबल्यव्युत्पादनार्थत्वेन दूषणान्तरपरत्वान्नोत्तरग्रन्थस्य पूर्वासङ्गतिर्दोष इत्याशयेनाह ॥ **किं चेति** ॥ अत्र सावकाशताप्रयोजक-सर्वनिमित्तोपादानात्सर्वा अप्यद्वैतश्रुतय इत्यर्थोऽवगम्यते । पूर्वं सार्वज्ञादिगुणं तत एव जीवाद्भिन्न-मित्युक्त्वाऽत्र भेदश्रुतिरित्येव वचनात् 'द्वा सुपर्णे'त्यादिश्रुतिविशेषोऽत्राभिमत इति गम्यत इति द्रष्टव्यम् । स्वातन्त्र्यादीनां सावकाशत्वाधिकरणत्वाभावाच्छब्दप्रवृत्तौ निमित्ताभिधानस्यावश्यकतया तदनुपपत्तेश्चाह ॥ **स्वातन्त्र्य इत्यादिकेति** ॥ स्थानं मत्यैक्यं चेति भ्रान्तिं निरसितुमाह ॥ **स्थानेति** ॥ अत्रामुख्यार्थपरत्व-रूपसावकाशत्वे किं नाम सम्यक्त्वमित्यतोऽरूढगौण्याद्यपेक्षया रूढत्वमेव प्रकृतगौण्यादेर्मुख्यत्वमित्याशये-नाह ॥ **सम्यगितीति** ॥ यथा वशीगतग्रामं पुरुषमधिकृत्यायं ग्रामस्त्वमेवेति स्वातन्त्र्ये, यथा विद्यादिवि शिष्टं पुरुषमधिकृत्यास्मिन्ग्रामे ब्राह्मणाः सर्वेऽयमेवेति वैशिष्ट्ये, यथा गोष्ठे गाव एकीभूता इति स्थानैक्ये, पूर्वं परस्परविरुद्धा ब्राह्मणा इदानीमेकीभूता इति मत्यैक्येऽग्निर्माणवक इति सादृश्ये चाभेदव्यवहारो दृष्ट इति टीकोक्तरीत्या व्यवहारा द्रष्टव्या इत्याह ॥ **व्यवहाराश्चेति** ॥ यत्किञ्चिदद्वैतश्रुतेः स्वातन्त्र्यादिनिमित्तेषु स्वेच्छया यत्किञ्चिदुपादानेन प्रवृत्तिर्न तु नियम इति भ्रान्तिं निवारयति **यथासम्भवमित्यर्थ इति** ॥ इष्टं संभवः । कथं संभव इत्यतस्तत्त्वमसीत्यत्र सादृश्यं नान्योऽतोऽस्तीत्यत्र स्वातन्त्र्यप्राधान्ये । यद्वा तत्त्व मसीत्यत्रापि स्वातन्त्र्यप्राधान्ये । यत्र त्वस्येत्यादिकमुक्त्वा भेदवचने स्थानैक्यमत्यैक्ये निमित्तानीतीममर्थं-'सादृश्याच्च प्रधानत्वात्स्वातन्त्र्यादपि चाभिदाम् । आहुरीशेन जीवस्ये'त्युक्त्वा 'स्थानैक्यमैकमत्यं तु मुक्तस्य तु विशिष्यत' इति वदन्नाचार्यः स्फुटीकरिष्यतीत्याह ॥ **एतच्चेति** ॥ ननु सादृश्यादिनिमित्तकत्वे का वृत्तिरित्यतः सादृश्यनिमित्तकत्वे गौणी प्राधान्यस्वातन्त्र्यनिमित्तकत्वे लक्षणा स्थानैक्ये लक्षणा मत्यैक्ये

लक्षितलक्षणेति वृत्तिचिन्तामुदाहृतवाक्यव्याख्यावसरे करिष्याम इत्याह ॥ **वृत्तिचिन्तामिति**॥ ननु भेदाभेदश्रुत्योरास्तां निरवकाशत्वसावकाशत्वे तथाऽपि कुतः प्राबल्यदौर्बल्ये मूलभूतन्यायानुपन्यासात्सावकाशेत्यस्य स्वातन्त्र्यादिनिमित्तेनेत्यनेन साक्षात्संबन्धानुपपत्तिश्च । कथं च भेदश्रुतेर्निरवकाशत्वमित्यत आह ॥ **एतदुक्तं भवतीति** ॥ यद्यप्यत्रामुख्यवृत्त्या सावकाशत्वोक्तेः स्थलान्तरटीकया विरोध इवाभाति । तत्र सावकाशत्वं पुनः स्वयमर्थान्तरवाचित्वं न पुनर्लक्षणादिना कल्पनीयार्थान्तरत्वमित्युक्तत्वात् । तथाऽपि प्रकृतगौण्यादे रूढगौण्यादित्वेन शक्तितुल्यतया न विरोधः । अत एव भेदश्रुतेरपि लक्षणादिनाऽर्थान्तरसंभवेऽपि तस्य रूढिपूर्वकत्वाभावाद्भेदश्रुतेरर्थान्तराप्रतितेरित्यपि युक्तमित्यपि द्रष्टव्यम् ।

स० — **स्वातन्त्र्य इत्यादिका निमित्तसप्तमीति** ॥ चर्मणि द्वीपिनं हन्तीत्यादाविवात्रापि ऐक्यागतिप्रस्तुतैक्यरूपकर्मसद्भावान्निमित्तसप्तमीत्वोपपत्तिरिति ध्येयम् ॥ **टीककृतोक्ता द्रष्टव्या इति** ॥ यथा वशीकृतग्रामं पुरुषमधिकृत्यायं ग्रामस्त्वयमेवेति स्वातन्त्र्येऽभेदप्रयोगो दृष्टः । यथा विद्यादिविष्टब्राह्मणमधिकृत्यास्मिन्ग्रामे ब्राह्मणः सर्वोऽप्ययमेवेति वैशिष्ट्ये च । यथा गोष्ठे गाव एकीभूता इति स्थानैक्ये च । पूर्वं परस्परविभिन्नमतयो ब्राह्मणा इदानीमेकीभूता इति मत्यैक्ये च । यथाऽग्निर्माणवक इति सादृश्ये चाभेदव्यवहार इत्यर्थः ॥ **एतच्चेति** ॥ पृथगधिकरण इति शेषः । भगवत्स्वातन्त्र्यं तद्वैशिष्ट्यालम्बनत्वेन सावकाशम् । सर्वं खल्विदं ब्रह्मेत्यादिजीवजडाभ्यामभेदवचनं ब्रह्मणः । परेऽव्यये सर्व एकीभवन्तीति । परमं ब्रह्म वेद ब्रह्मैव भवतीति मुक्तेरभेदवचनं भगवत्स्थानमत्यैक्यसादृश्यैक्यालम्बनत्वेन सावकाशमिति स्पष्टीकरिष्यत्याचार्यः । नन्वेवं सादृश्यैक्यादिनाऽभेदवचनस्य सावकाशत्वे कया वृत्त्या सादृश्यैक्याद्यभिधायकत्वं तत्राह ॥ **वृत्तिचिन्तामिति** ॥

प० — **स्वतन्त्रामुख्यप्रयोगइति** ॥ मुख्यप्रयोगे स्वतन्त्रस्यामुख्यप्रयोगे प्रयोजनं वाच्यमित्यर्थः । अकस्मादित्यस्य निष्कारणमित्यर्थः । निष्कारणममुख्यं न हि प्रयुंजीमहीति न्यायस्यार्थः । सम्यगित्यनेन सूचितव्यवहारसद्भावः कथमित्यत आह ॥ **व्यवहाराश्चेति** ॥ **टीकाकृतेति** ॥ सन्न्यायरत्नावलीकृतेत्यर्थः । वशीकृतग्रामं पुरुषमधिकृत्यायं ग्रामोऽयमेवेति स्वातन्त्र्ये अभेदव्यवहारः । विद्याविशिष्टं ब्राह्मणमधिकृत्यायमेव ब्राह्मणोऽस्मिन् ग्राम इति वैशिष्ट्ये । सायं गोष्ठ एकीभूता गाव इतिस्थानैक्ये । पूर्वं परस्परविरुद्धाब्राह्मणा इदानीमेकीभूता इति मत्यैक्ये । अग्निर्माणवक इति सादृश्ये चाभेदव्यवहार इति उक्ता द्रष्टव्याइत्यर्थः ॥ **एतच्चेति** ॥ यथासंभवमित्येतत् । 'पृथगुपदेशादित्यधिकरणे 'तद्गुणसारत्वादि'ति गुणसूत्रव्याख्यावसरे 'तथापि तु चिदानन्दपूर्वास्तत्सदृशा गुणाः' इत्यादिना तत्त्व-

मसीत्यादिवाक्यं सादृश्यनिमित्तकम् । 'सर्वं खल्विदं ब्रह्मे'त्यादिकं स्वातन्त्र्यवैशिष्ट्यनिमित्तकं 'परेऽव्यय' इत्यादिकं तु स्थानैक्यादिनिमित्तकमित्यादिरूपेण स्पष्टीकरिष्यतीत्यर्थः ॥ **वृत्तिचिन्तामिति** ॥ सादृश्यस्थले गौणी । स्थानैक्यस्थले लक्षणा । मत्यैक्यस्थले लक्षितलक्षणेत्येवंरूपवृत्तिचिन्तामित्यर्थः । तावता नन्व-धिकबलेत्यादिना कृतचोद्यस्य स्वातन्त्र्येचेत्यादिना किमुत्तरं जातमित्यत आह ॥ **एतदुक्तं भवतीति** ॥

या० — **निमित्तसप्तमीति** ॥ यद्यपि चर्मणि द्वीपिनं हन्तीत्यादाविव 'निमित्तात्कर्मयोगेऽपि' इत्यनेन विहितेयं सप्तमीति न वक्तुं शक्यं कर्मयोगाभावात् स्वातन्त्र्यादेरनुद्देश्यत्वाच्च । तथाऽपि निमित्तमात्रविवक्षायामपि सप्तम्या वैयाकरणैरङ्गीकृतत्वादिदं व्याख्यानम् । कथमन्यथा 'क्ङिति चे'ति सूत्रं कित्ङिन्निमित्ते गुणवृद्धी न स्त इति तैर्व्याख्यातमिति द्रष्टव्यम् ॥ **व्यवहारास्त्विति** ॥ स्वातन्त्र्या-दिनिमित्तका व्यवहारास्तु वशीकृतग्रामं पुरुषमधिकृत्यायं ग्रामस्त्वयमेवेति स्वातन्त्र्येऽभेदप्रयोगो दृष्टः । विद्याविशिष्टं ब्राह्मणमधिकृत्यास्मिन्ग्रामे ब्राह्मणः सर्वोऽप्ययमेवेति वैशिष्ट्ये । गोष्ठे एकीभूता गाव इति स्थानैक्ये । पूर्वं परस्परं विरुद्धा ब्राह्मणा इदानीमेकीभूता इति मत्यैक्ये । अग्निर्माणवक इति च सादृश्य इति सन्न्यायरत्नावल्यां टीकाकृतोक्ता द्रष्टव्या इत्यर्थः । ननु स्वातन्त्र्येत्यादिका निमित्त-सप्तमीति कुतो विषयसप्तम्येव किं न स्यादित्यत आह ॥ **एतच्च स्पष्टीकरिष्यतीति** ॥ 'सादृश्याच्च प्रधानत्वात्स्वातन्त्र्यादपि चाभिदा । आहुरीशेन जीवस्ये'ति पृथगधिकरणीयानुव्याख्याने पञ्चमीप्रयोगेन स्वातन्त्र्यादीनां निमित्तत्वं स्पष्टीकरिष्यतीत्यर्थः । तथा च तत्रैव 'स्थानैक्यमैकमत्यं च मुक्तस्य तु विशिष्यत इत्यनेन स्थानैक्यमत्यैक्ययोर्मुक्तविषयत्वकथनेनापि स्पष्टीकरणं ज्ञातव्यम् । ननु स्वातन्त्र्यादि-निमित्तका वृत्तिः किं शक्तिरुत लक्षणोत गौणीति जिज्ञासायामाह ॥ **वृत्तिचिन्तां चेति** ॥ तत्त्वमसी-त्यादिव्यपदेशः सादृश्याद्गौणः । नान्योऽतोऽस्ति द्रष्टेत्यादिनिर्देशस्तु प्राधान्यस्वातन्त्र्याभ्यां लाक्षणिकः । द्रष्टृपदेन तत्रारोपितं वैशिष्ट्यं स्वातन्त्र्यं चोपलक्ष्यते । तथा च द्रष्टा विशिष्टः स्वतन्त्रश्चान्यो नास्तीत्यर्थः संपद्यते । यद्वा तत्त्वमसीत्यादिनिर्देशोऽपि प्राधान्यस्वातन्त्र्याभ्यां लाक्षणिकः । अत्र हि तच्छब्देन तदीयप्राधान्यस्वातन्त्र्ये लक्ष्येते पुनस्ताभ्यां तद्विषयता लक्ष्यते । ततश्च त्वत्प्रधानकस्तत्तन्त्रश्चेति वाक्यार्थो भवतीति । परेऽव्यये सर्व एकीभवन्तीत्यादिव्यपदेशस्तु स्थानैक्येन लाक्षणिकः । अत्रैव व्यपदेशे मत्यैक्यस्य निमित्तत्वेन लक्षितलक्षणेत्येवंरूपां वृत्तिचिन्तां पृथगधिकरण एव करिष्याम इत्यर्थः ॥ **साक्षा-दद्वैतमिति** ॥ मुख्यार्थतया प्रतीयमानमद्वैतमित्यर्थः । न चात्र सावकाशत्वं पुनरर्थान्तरवाचित्वमिति तत्त्वप्रकाशिकया विरोधः शङ्कनीयः । तत्र व्याख्यातृव्यापारमनपेक्ष्याभिधया वाऽभिधातुल्यया वा रूढ-लक्षणाद्यमुख्यवृत्त्या वाऽर्थान्तरप्रतिपादकत्वं सावकाशत्वमित्यभिप्रेतत्वात्प्रकृते च रूढलक्षणादेरेवोक्तत्वात् ॥

श्री० — **स्वतन्त्रेति** ॥ कुत्रापि केनाप्यकृतेऽमुख्यप्रयोग इत्यर्थः ॥

च०— **निमित्तसप्तमीति** ॥ यद्यपि 'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हत' इत्यादाविव फलसंयोगे चौत्ये निमित्तात्कर्मयोग इति लक्षणा लक्षिता प्रकृते फलसंयोगराहित्येन दुरुपपादा तथापि फलिताभिप्रायिकेयमुक्तिः । व्यक्तमेतच्छब्दकौस्तुभे । ननु क्ङितीति सप्तमीनिर्देशात्तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपतिष्ठेत । तत्र निःशब्दस्य नैरन्तर्यपरत्वाद्विशेषोच्चारणक्रियत्वादव्यवहितोच्चरितस्य निषेधः स्यान्न तु छिन्नं भिन्नमित्यादेरपीति चेत् । भवेदेवं यदि क्ङितीत्येतन्निषेध्यया क्रियया संबध्येत । इह तु गुणवृद्धिभ्यां संबध्यते । यस्य च भावेनेति सप्तमी क्रियान्तराश्रयणादौत्सर्गिकसत्ताक्षेपस्ततश्च क्ङिति सति प्रत्यये गुणवृद्धी इति संबन्धे कृते सिद्धसाध्यसमभिव्याहारन्यायेनोपक्षणीभूतसत्ताश्रयस्य निमित्तत्वमुत्सर्गतः फलति । न त्विह विशिष्य निमित्ततायां सप्तमीविधानमस्ति । न चात्र निर्दिष्टपरिभाषा संभवति । विध्यङ्गभूतानां परिभाषाणां साक्षाद्विधेयनिषेध्यक्रियान्वयिन्येव प्रवृत्तेः । इदं तु क्रियान्वयिनो विशेषणं न तु क्रियाया अतोऽत्र न परिभाषाप्रवृत्तिरिति ॥ **व्यवहारास्त्विति** ॥ स्वातन्त्र्यादिनिमित्तका इत्यादिः । वशीकृतग्रामं पुरुषमधिकृत्यायं ग्रामोऽयमेवेति स्वातन्त्र्ये, विद्याविशिष्टं ब्राह्मणमधिकृत्यायमेव सर्वो ब्राह्मण इति वैशिष्ट्ये, सायं गोष्ठे गाव एकीभवन्तीति स्थानैक्ये, पूर्वं परस्परविरुद्धा ब्राह्मणा इदानीमेकीभूता इति मतैक्ये, अग्निर्माणवक इति सादृश्ये चाभेदव्यवहाराः सन्न्यायरत्नावलीकृदुक्तदिशा द्रष्टव्या इत्यर्थः ॥ **एतच्चेति** ॥ सादृशाच्च प्रधानत्वादित्यादिकपृथगुपदेशादिति नयीयतद्गुणसारत्वादिति गुणसूत्रव्याख्यारूपप्रतीकव्याख्यावसरे पञ्चमीनिर्देशेन विषयसप्तम्यनाश्रयणेन निमित्तसप्तम्याश्रयणबीजं स्फुटीकरिष्यतीत्यर्थः ॥ **वृत्तिचिन्तामिति** ॥ सादृश्यस्थले गौणी, स्थानैक्यस्थले लक्षणा, मत्यैक्यस्थले लक्षितलक्षणेत्येवंरूपां वृत्तिचिन्तामित्यर्थः । साक्षादद्वैतम् मुख्यार्थतया प्रतीयमानमद्वैतम् ॥

**अनु०— अज्ञानासंभवादेव मिथ्याभेदो निराकृतः ॥**

**सु०— ननु भेदश्रुतिरपि सावकाशा मिथ्याभेदपरत्वादिति चेत् । कोऽयं मिथ्याभेदो नाम । किमसन् उतानिर्वचनीयः । नाद्यः अनङ्गीकारात् । द्वितीये दोषमाह ॥ अज्ञानेति ॥ अज्ञानातिरिक्तमनिर्वचनीयमज्ञानकार्यमिति हि परसम्मतम् । न चाज्ञानं तन्मते संभवतीत्युक्तम् । ततो मिथ्याभेदासंभवान्न तदर्थत्वं भेदश्रुतेरिति ॥ ननु भेदश्रुतिरनुवादिनीत्युक्तम् । यथा नानुवादिनी तथा वक्ष्यते ॥ किञ्च प्रमितस्यानुवादो भ्रान्तिसिद्धस्य वा । नाद्यः अनभ्युपगमात् । अभ्युपगमे वा तत्प्रमाणप्रतिरोधोऽद्वैतश्रुतेः । न द्वितीयः । अज्ञानासंभवेन निरस्तत्वात् । एतेनापूर्वताविरहाद्दुर्बला भेदश्रुतिरिति निरस्तम् ।**

त्रा०—मिथ्यात्वस्यासत्त्वरूपत्वेऽज्ञानासंभवेनेत्यस्य मिथ्याभेदनिरासे हेतुत्वानुपपत्तेस्तं पक्षमुपर्येव निरस्य पक्षान्तरदूषणपरतया मूलं संयोजयितुं विकल्पयति ॥ **कोऽयमिति** ॥ नन्वस्मिन्पक्षेऽप्यप्रयोजकतया हेतुहेतुमद्भावासंभव एवेत्यत आह ॥ **अज्ञानेति** ॥ प्रकारान्तरेण सावकाशत्वं शङ्कते ॥ **नन्विति** ॥ **वक्ष्यत इति** ॥ 'न च मानान्तरोपेयं ब्रह्म तद्भवति कचिदि'ति वक्ष्यत इत्यर्थः । 'येन मानेन चोपेयं भेदस्तेनावगम्यत' इत्यनुव्याख्यान'मज्ञानासंभवादेवे'त्येतदनुव्याख्यानं च मनसि निधाय व्यवस्थितदूषणेनानुवादत्वपक्षे संभावितकल्पद्वयं निराह ॥ **किञ्चेति** ॥ **एतेनेति** ॥ अनुवादासंभवव्युत्पादनाय प्रमाणान्तराद्यसिद्धिव्युत्पादनेनेत्यर्थः ।

प०—**अनुवादिनीत्युक्तम्** ॥ अद्वैतवादिभिरिति योज्यम् ॥ **वक्ष्यत इति** ॥ पृथगुपदेशादित्यत्र द्वितीये । 'न च मानान्तरोपेयं ब्रह्म तद्भवति कचिदि'त्यादिना वक्ष्यत इत्यर्थः । एतेन अनुवादिनी नेति वक्ष्यत इति कथनेन किञ्चेति विकल्पपूर्वं दूषणकथनेन चेत्यर्थः ॥

या०— **तथा च वक्ष्यत इति** ॥ 'न च मानान्तरोपेयं ब्रह्म तद्भवति कचिदि'त्यत्रेति शेषः । ननु भेदश्रुतिरनुवादिनीत्युक्तशङ्कापरिहारायापि मूलं व्याचष्टे ॥ **किञ्चेति** ॥ **एतेनेति** ॥ भेदस्य प्रमाणान्तराप्राप्तत्वकथनेनेत्यर्थः ।

श्री०— **तत्प्रमाणेति** ॥ येन प्रमाणेन प्रमितस्तत्प्रमाणेत्यर्थः ॥ **निरस्तत्वादिति** ॥ अज्ञानस्यैवासंभवेन तत्कार्यभ्रान्तेरेव त्वन्मतेऽसंभवादित्यर्थः ॥ **एतेनेति** ॥ भेदस्य प्रमाणान्तराप्राप्तत्वेनैवेत्यर्थः ॥

च०— **तथा वक्ष्यत इति** ॥ पृथगुपदेशादितिनये 'न च मानान्तरोपेयं ब्रह्म तद्भवति कचिदि'त्यादिनाऽभिधास्यत इत्यर्थः ॥

**अनु०— अतो यथार्थबन्धस्य विना विष्णुप्रसादतः ।**
**अनिवृत्तेस्तदर्थं हि जिज्ञासाऽत्र विधीयते ॥**

**सु०— परकृतापव्याख्याप्रत्याख्यानमुपसंहरन्परदोषं पश्यसि त्वमात्मदोषं न पश्यसीत्याभाणकविषयता भवतामापन्ना; यतः सूत्रव्याख्यानमुपक्रम्य परापव्याख्याननिराकरणेऽप्यसङ्गतिर्नालोचितेत्याशङ्कां परिहर्तुं सूत्रार्थमनुवदति ॥ अत इति ॥ अस्मदुक्तः सूत्रार्थो न तावच्छिष्याणां चेतसि स्थिरो भवति यावत्परकृतापव्याख्यामापातरमणीयां पश्यन्ति । अतस्तदपकरणमपि सूत्रार्थस्थिरीकरणार्थतया सङ्गततरमिति भावः ।**

वा० — ननु सूत्रार्थप्रतिपादकोत्तरवाक्यं व्यर्थम् । सूत्रार्थस्य जिज्ञास्योऽयं विधीयते जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यत इत्यादिनोक्तत्वान्न चानुवादो वैयर्थ्यादित्यत आह ॥ **परेति** ॥ अस्मिन्पक्षेऽत उक्त एव सूत्रार्थ इत्येव वक्तव्यमधिकं व्यर्थमित्यत आह ॥ **अथवेति** ॥ यद्वैतावतो ग्रन्थस्योक्तसूत्रार्थदृढीकरणार्थतया सङ्गतत्वमिति प्रतिपादयितुमेतद्वाक्यमिति व्याख्यातम् ।

प० — **परकृतेति** ॥ आद्यसूत्रोक्तविषयादिनाऽर्थात्सिद्धं बन्धमिथ्यात्वमिति जिज्ञासासूत्राभिमतं बन्धमिथ्यात्वमिति यत्परकृतमपव्याख्यानं तस्य 'इत्युक्तेर्बन्धमिथ्यात्वं नैवमुक्तिरपेक्षत'इत्यादिना यत्प्रत्याख्यानं कृतं तदुपसंहरन्सूत्रार्थमनुवदतीत्यर्थः । सूत्रार्थानुवादे किं फलमित्यतः शङ्कापरिहारः फलमितिभावेनोक्तम् ॥ **परदोषमित्यादि** ॥ परस्याध्यासभाष्यकारिणः सूत्रार्थानुपयुक्तमध्यासभाष्यकरणमसङ्गतमिति दोषो 'बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत'इत्यादिनोक्तः । स च दोषो भवतामपि प्राप्तः सूत्रार्थानुपयुक्तस्यैव परमतनिरासस्य कृतत्वात् । एवं च 'परदोषं पश्यसी'ति गाधाविषयता प्राप्तेत्यर्थः । मूलेऽत इत्यस्य प्रत्यक्षादिसाधकभावाद्बाधकाभावाच्चेति स्पष्टत्वात्त.ह.र्थमेवाह ॥ **अस्मदिति** ॥

श्री० — **असङ्गतिर्नालोचितेति** ॥ तन्निराकरणस्य सूत्रार्थत्वाभावादिति भावः ॥

सु —अथवाऽज्ञानां ज्ञानदो विष्णुरित्यादिबन्धमिथ्यात्वनिराकरणं तत्सत्यत्वसमर्थनं च सूत्रगतातःशब्दस्यैव वर्णकान्तरमित्यतो नासङ्गतमिति दर्शयन्सूत्रेऽप्यस्यार्थस्योपयोगं दर्शयति ॥ **अतो यथेति** ॥ अत्रेयमाशङ्का । अतो ब्रह्मजिज्ञासेति खलु सूत्रखण्डेन मोक्षस्य भगवत्प्रसादैकसाध्यत्वान्मुमुक्षुणा तदर्था ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । एतदयुक्तम् । मोक्षो बन्धनिवृत्तिमात्रम्; न पुनरभ्युदयावाप्तिः, स्वर्गादिवदनित्यतापातात् । बन्धश्च मिथ्याभूत एव; तरति शोकमात्मविदिति ज्ञाननिवर्त्यत्वश्रवणस्याप्यन्यथाऽनुपपत्तेः । न खलु सत्यं ज्ञानेन निवर्तते; सत्यशृङ्खलाबन्धस्य तथात्वादर्शनात् । न च मिथ्याभूतस्य निवृत्तौ कस्यचित्प्रसादोऽपेक्षणीयः, रजतादिनिवृत्तौ तथाऽनुपलम्भात्; किं नाम यदज्ञानकल्पितोऽयं बन्धस्तज्ज्ञानमेव । ततो न भगवत्प्रसादार्था जिज्ञासा मुमुक्षुणा कर्तव्येति ॥ सेयमाशङ्काऽतःशब्देनापेक्षितार्थसाधकहेतुसूचकेन निराकृतेति ॥

तदर्थं विष्णुप्रसादार्थम् । अत्र सूत्रे ।

**वा०**— अधुना सूत्रार्थगतातःशब्दार्थकथनपर एवायं सर्वोऽपि ग्रन्थ इत्याशयेनातःशब्दार्थान्तरकथनस्य प्रकृतोपयोगप्रदर्शनपरतयैतद्वाक्यं व्याख्याति ॥ **अथवेति** ॥ ननु नार्थान्तरमतःशब्दस्य वक्तव्यम् । उक्तेर्थेऽनुपपत्त्यभावादित्यतोऽर्थान्तरकथनेन निवर्त्यामेतद्ग्रन्थसूचितामुक्तार्थेऽनुपपत्तिं दर्शयति ॥ **अत्रेयमाशङ्केति** ॥

**प०**— **वर्णकान्तरमिति** ॥ 'जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यत' इत्युक्तव्याख्यानापेक्षया बन्धसत्यत्वार्थपरत्वरूपव्याख्यानान्तरमित्यर्थः । ननु कथं बन्धसत्यत्वरूपातःशब्दार्थस्योपयोग इत्यत आह ॥ **अत्रेयमाशङ्क्त्यादिना** ॥ अत्रेत्यस्य प्रागुक्तसूत्रार्थ इत्यर्थः । तमेव व्यनक्ति ॥ **अतो ब्रह्मेत्यादिना** ॥ **भगवत्प्रसादेति** ॥ जिज्ञासोत्थज्ञानजन्यप्रसादसाध्यत्वोक्तावपि इह तन्मात्रोपयोगादेकदेशानुवादः । एकेति कर्मण एव व्यावृत्तिः ॥ **तदर्थेति** ॥ ज्ञानजन्यप्रसादार्थेति ध्येयम् । नन्वत इति सर्वनाम्नः प्रकृतपरामर्शित्वादप्रकृतबन्धसत्यत्वपरामर्शित्वं कथमित्यत उक्तम् ॥ **अपेक्षितेति** ॥ यावता विना जिज्ञासाविधानं न भवति यावता च भवति तावतस्सर्वस्य सङ्क्षेपेणाभिधायकतया हि सूत्रेऽतः शब्दः प्रयुक्तः । अन्यथाऽत इत्यस्य व्यर्थताऽऽपत्तेः । अत इत्युक्तेऽप्यपेक्षितहेत्वन्तराणां तेनालाभेन जिज्ञासाविधानस्य कुण्ठितत्वात् । न च बन्धसत्यत्वं विना ज्ञानद्वारा जिज्ञासाजन्यप्रसादफलकत्वं युक्तम् । तच्च प्राक्साधितम् । अतो बन्धनिवृत्तिरूपमोक्षहेतुप्रसादफलकत्वान्यथाऽनुपपत्त्या लब्धं बन्धसत्यत्वमत इति सौत्रातःपदेन परामृश्यत इति नाप्रकृतपरत्वदोष इति भावः । एतेन वक्ष्यमाणसिद्धार्थेव्युत्पत्त्याद्यर्थकत्वमपि समाहितं ध्येयम् ॥ मूले विधीयत इति विधानं नामेष्टोपायत्वज्ञापनमेवेत्युक्तं सन्न्यायरत्नावल्याम् ॥

**या०**— पूर्वयोजनायां यथार्थेति बन्धविशेषणं न स्वरसमतो योजनान्तरमाह ॥ **अथवेति** ॥

**श्री०**— **वर्णकान्तरमिति** ॥ व्याख्यानान्तरमित्यर्थः ; उपयोगप्रकारमेव दर्शयति ॥ **अत्रेयमाशङ्क्त्यादिना** ॥ **अपेक्षितार्थेति** ॥ बन्धमिथ्यात्वनिराकरणतत्सत्यत्वसमर्थनरूपापेक्षितार्थेत्यर्थः ॥

**च०**— **वर्णकान्तरम्** व्याख्यानान्तरम् ।

**अनु०**— यथा दृष्ट्या प्रसन्नः सन्राजा बन्धापनोदकृत् ॥
एवं दृष्टः स भगवान्कुर्याद्बन्धविभेदनम् ॥

**सु०— ननूक्तमत्र सत्यश्चेद्बन्धो न निवृत्तिमर्हतीति तत्राह ॥ यथेति ॥ दृष्ट्या प्रेमातिशययुक्तया । सन् उत्तमः कृपालुत्वादिगुणवान् । स तथाविधगुणः ॥ ननु विषमोऽयमुपन्यासः ; सादिरयं निगडादिबन्धो राज्ञा निवर्त्यताम् । अनादिरयं कथं निवर्त्यत इति । तत्रोक्तं भगवानिति । अघटितघटकानन्तैश्वर्यादिगुणवानित्यर्थ इति ।**

वा०— दृष्टिमात्रस्य प्रसादसाधनत्वमलौकिकमित्यत आह ॥ **दृष्ट्येति** ॥ असतोऽत्र दृष्टान्तत्वाप्रसक्तेः सत्त्वोक्तिर्व्यर्थेत्यतः सत्पदार्थकथनपूर्वकं प्रकृतोपयोगितयाऽभिप्रेतार्थमाह ॥ **सन्निति** ॥ तादृशगुणविशिष्टत्वस्यैवात्र हेतुत्वमित्याशयेन तस्य पक्षधर्मतां सूचयितुं स इति तत्पदं तदर्थतया व्याख्याति ॥ **स इति** । एवं च भगवान्स्वभक्तेषु प्रसीदति प्रेक्षावत्पुरुषत्वाद्राजादिवत् । भगवान्स्वभक्तबन्धमोचकस्तेषु प्रसन्नत्वात्तद्वदेवेति प्रयोगोऽत्र सूचितो भवति ।

प०— **कृपालुत्वेति** ॥ ननु तृतीयस्य द्वितीयपादे 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुजि'ति सूत्रे कृपू सामर्थ्य इत्यत आलुच्प्रत्ययस्याविधानात्कथं कृपालुशब्दप्रयोगः । न चात्र सूत्रे शकारेत्संज्ञकलुप्रत्ययस्य विधानेनापि तस्य सिद्धत्वेन 'तिङ् शित्सार्वधातुकमि'ति सार्वधातुकसंज्ञायां 'कर्तरि शबि'ति शपि सति गुणेऽयादेशे च 'अतो दीर्घो यञी'ति दीर्घे च सति ण्यन्तानां स्पृहीत्यादीनां स्पृहयालुरित्यादिरूपसिद्धावपि आलुच्ग्रहणं शयालुरित्यादिरूपसिद्ध्यर्थमिति मञ्जर्यामुक्तत्वात्कृपि धातोरपि आलुचि कृते 'संज्ञापूर्वको विधिरनित्य इति 'पुगन्तलघूपधस्य चे'ति प्राप्तगुणाभावे च सति कृपालुशब्दनिष्पत्तिरिति वाच्यम् । तथात्वे 'कृपो रो ल' इत्युक्तलत्वाभावस्य दयावत्स्वरूपार्थलाभस्य चानुपपत्तेः । मैवम् । 'कर्कर्यालुर्गलन्तिके'त्यमरोक्तेरालुशब्दस्य कलशवाचितया कृपाकलशार्थत्वेन कृपालुशब्दनिर्वाहात् । तथैव गीताभाष्यटीकोक्तेः । यद्वा कृपां लाति आदत्त इति कृपापदोपपदात् ला आदान इति धातोर्डुप्रत्यये कृपालुरिति निष्पत्तिः । 'विप्रसंभ्यो ड्व संज्ञायामि'त्यत्र 'मितद्र्वादिभ्य उपसंख्यानमि'त्युक्तेः । 'षिद्भिदादिभ्योऽङि'त्यत्र 'कृपेः संप्रसारणं चे'ति भिदादिगुणसूत्रेण कृपकृपायामिति धातुरूपस्य कृपेर्लाक्षणिकत्वेन कृपो रोल इत्यत्राग्रहणमित्यष्टमे वृत्तावुक्तत्वेन लत्वाभावोऽर्थानुगमश्च । 'स्याद्दयालुः कारुणिकः कृपालुः सूरतस्समा' इत्यमरव्याख्याने बन्दिघटीये दुर्घटवृत्त्यादौ च कृपां लातीत्यत्र साधुत्वोक्तेः । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणे'ति स्मृतिं हृदि कृत्वाऽऽह ॥ **अघटितघटकानन्तैश्वर्यादीति** ॥ इति द्वितीयमतःशब्दव्याख्यानम् ॥

**सु०— एवं मीमांसाप्रयोजनसमर्थनार्थत्वेनात:शब्दं द्वेधा व्याख्याय विषयसमर्थन-परतयाऽपि व्याख्याति ॥ कार्यता चेत्यादिना ॥**

**व्या०**—एतावताऽत:शब्दस्यैक एवार्थ: प्रतिपादित इति भ्रान्तिं निरस्यन्नेवोत्तरग्रन्थस्याप्युत्सूत्रार्थ-प्रतिपादकत्वभ्रान्तिं पूर्ववत्प्रयोजनसमर्थनपरत:शब्दार्थकथनरूपत्वमिति भ्रान्तिमपि निराकर्तुं पूर्वोत्तर-प्रकरणयोरसङ्कीर्णतां दर्शयति ॥ **एवमिति** ॥

**स०**— कार्यता चेत्याद्युत्तरग्रन्थसन्दर्भस्योक्तानुवादपूर्वकं तात्पर्यमाह ॥ **एवं मीमांसेति** ॥

**प०— एवं मीमांसाप्रयोजनेत्यादि** ॥ ब्रह्मजिज्ञासेत्यत्र जीवान्यविषयसमर्पकब्रह्मशब्दादिनैव जीवान्यब्रह्मसिद्धौ तज्ज्ञानतत्प्रसादद्वारा मोक्षरूपफलसिद्धावपि तेषां मोक्षप्रसादज्ञानानां प्रत्येकं कर्म-जन्यत्वशङ्कया जिज्ञासारूपमीमांसाप्रयोजनत्वाप्राप्तावन्यजन्यत्वशङ्काया 'दु:खजन्मप्रवृत्तिदोषमिथ्याज्ञाना-नामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति न्यायसूत्रदिशा प्रसादनैरपेक्ष्यशङ्काया:, तथा मिथ्याभूत-बन्धनिवृत्तिरूपमोक्षस्य ज्ञानादेव संभवेन प्रसादानपेक्षणात् प्रसादद्वारा मोक्षफलकत्वमयुक्तमिति शङ्कायाश्च निरासेन; ज्ञानप्रसादद्वारा मोक्षरूपप्रयोजनसमर्थनार्थत्वेन जिज्ञासयैव ज्ञानं, ज्ञानादेव च प्रसाद:, प्रसादादेव मोक्ष इत्येतदर्थकतया; तथा बन्धसत्यत्वार्थकतया च; **द्वेधा** 'ज्ञानी प्रियतमोऽतो मे' इत्यादिना 'इत्युक्ते-र्बन्धमिथ्यात्वम्' इत्यादिना च व्याख्यायेत्यर्थ: ॥ **विषयेति** ॥ विषयसमर्थने हेतुभूता या शब्दस्य सिद्धार्थप्रमापकत्वरूपा युक्ति: तत्परतयेत्यर्थ: । विषयसमर्थनं हि द्वेधा भवति । स्वप्रकाशप्रत्यगर्था-भिन्नत्वाद्ब्रह्मणो न विषयत्वमिति प्रमेये आरोपितान्यथाकारशङ्कानिरासेन, तथा ब्रह्मप्रमाणे आरोपिता-न्यथाकारशङ्कानिरासेन चेति । द्वितीयमपि त्रेधा शब्दस्यैवार्थसंस्पर्शशून्यत्वान्न प्रामाण्यं कुतस्तद्विशेष-वेदस्येति शङ्कानिरासेन, वाक्यार्थबोधोपायाभावान्न वेदस्य प्रामाण्यमितिशङ्कानिरासेन, प्रामाण्येऽपि न सिद्धार्थे प्रामाण्यमिति कुतस्तेन विषयसिद्धिरितिशङ्कानिरासेन चेति । एवं चतुर्षु विषयसमर्थनप्रकारे-ष्वाद्य: 'ओतत्ववाची ह्योङ्कार' इत्यादिना ॐकारब्रह्मशब्दयोर्जीवभेदकगुणपूर्तिवाचकत्वव्याख्यानपरेण दर्शित: । द्वितीयस्तु 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि' इत्यत्र अत:शब्दस्य वेदादिशब्दप्रामा-ण्यार्थपरत्वव्याख्यानेन । तृतीयस्तु 'शक्तिश्चैवान्विते स्वार्थे' इत्यत्र शब्दस्यान्वितार्थशक्तत्वादित्येवं-रूपार्थपरत्वव्याख्यानान्तरेण प्रदर्शयिष्यते । चतर्थस्तु वेदादे: सिद्धार्थे ब्रह्मणि प्रामाण्यादित्येवंरूपार्थ-परत्वव्याख्यानरूपेण 'कार्यता चे'त्यादिना प्रदर्शयिष्यत इति विषयसमर्थनपरतयेत्युक्तम् ॥

या० — जैमिनीया इत्यनेन पूर्वत्रेवोत्तरत्रापि न स्वयूथ्यानां बादरायणादीनां मतं निराक्रियते किन्तु वियूथ्यानां प्राभाकराणां मतमिति दर्शयति ॥

श्री० — **द्वेधेति** ॥ अतः भगवत्प्रसादसाध्यमोक्षलक्षणप्रयोजनस्य सत्त्वात्; अतो बन्धस्य सत्यत्वादिति द्वेधा व्याख्यायेत्यर्थः ॥

च० — इयता ग्रन्थसन्दर्भेणातःशब्दस्यैकमेवार्थं प्रत्यपीपददिति विपर्यासमुत्तरग्रन्थस्यापि प्रयोजनसमर्थनतात्पर्यकताविपर्यासं च पराचिकीर्षति ॥ **एवमित्यादि** ॥

**सु० — अत्र जैमिनीया मन्यन्ते । विध्यर्थवादमन्त्रात्मकः समस्तोऽप्याम्नायः कार्यनिष्ठ एव; न वस्तुतत्त्वनिष्ठः । स चाथातो धर्मजिज्ञासेत्यादिना मीमांसितः । तत्कथं ब्रह्ममीमांसारम्भसम्भवः ॥ कार्यनिष्ठतैव कथमिति चेत् । इत्थम् । अनेकपदात्मकवाक्यश्रवणादनेकार्थप्रतीतावपि वाक्यस्य तावदेकत्र तात्पर्यं कल्प्यम् । अन्यथैकवाक्यताऽसम्भवात् । यत्परः शब्दः स शब्दार्थ इति च शाब्दाः । वाक्यतात्पर्यविषयश्च स एव; यत्प्रतिपादनेन वाक्यपर्यवसानं, यत्प्रतिपादनाय च पदार्थान्तरोपादानम् । तथाभूतश्च कार्यात्मैव । न हि गौरश्वः पुरुषो हस्तीति वा देवदत्तः पचतीति वा पर्यवसितमनुभूयते; किन्तु देवदत्त गामानयेत्यादिकार्यनिष्ठमेव । अतः कार्यमेव सर्वत्र वाक्यार्थः ॥ तत्र लिङादिप्रत्ययः साक्षात्कार्यताऽभिधायी; पदान्तराणि तु तत्प्रतीतये तदन्वितस्वार्थानभिदधति तत्पराण्येव । एवं कार्यान्तरविधुराणि वाक्यान्तराण्यपि तदेकवाक्यतामापद्यन्ते । अनेनैव न्यायेनाम्नायोऽप्यशेषः कार्यताबोधे पर्यवसितः ॥**

या० —कार्यता चेत्युत्तरग्रन्थव्यावर्त्यमनुग्राह्यप्रमाणाभावेन विषयाक्षेपपूर्वपक्षं दर्शयितुं गुरुमतमुपन्यस्यति ॥ **अत्रेति** ॥ एतावता ग्रन्थकलापेनेव नोत्तरेणैतत्सूत्रवृत्तिकाररूपस्यैकदेशिमतनिराकरणमपि तु मीमांसान्तरवृत्तिकारमतनिराकरणमिति सूचनाय जैमिनीया इत्युक्तम् । एवं चैतावत्पर्यन्तं निरसनीयतया प्रसक्तैर्मायावादिभिरपीष्टसाधनताया एव विध्यर्थत्वस्य कार्यतायास्तदतिरिक्तत्वाभावस्य चाभ्युपगमेन न तान्प्रति तत्साधनमुपपन्नमिति शङ्कावकाशो न इति ध्येयम् । विधेः कार्यपरत्वस्यावश्याभ्युपेयत्वान्मन्त्रार्थवादयोश्च तच्छेषत्वनियमात्तदतिरिक्ताम्नायस्य चाभावाद्युक्तं समस्ताम्नायस्य कार्यनिष्ठत्वमिति दर्शयितुं विध्यर्थवादमन्त्रात्मक इति विशेषणम् । लिङादिचतुष्टयान्यतमप्रत्ययोपेतं वाक्यं विधिः । स्तुत्यादिरर्थवादः । मन्त्र इत्यभियुक्तप्रयोगविषयो मन्त्रः । ननु माऽस्तु वस्तुतत्त्वनिष्ठ आम्नायः । कार्यनिष्ठस्यैव

तस्यानुग्राह्यप्रमाणत्वात्कथं ब्रह्मजिज्ञासाक्षेप इत्यत आह ॥ **स चेति** ॥ ननु स्वस्वार्थप्रतिपादकानेकपदात्मकवाक्यस्यैकार्थनिष्ठत्वमेव दुर्लभम् । कुतस्तद्विशेषकार्यनिष्ठत्वम् । एकार्थनिष्ठत्वेऽपि वा सिद्धार्थनिष्ठत्वेनाप्युपपत्तेः कुतः कार्यनिष्ठत्वमित्याशयेन शङ्कते ॥ **कार्येति** ॥ **अन्यथेति** ॥ 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादि'त्युक्तेरिति भावः । उपोद्घातकान्तरं चाह ॥ **यत्पर इति** ॥ यद्वाऽस्त्वेकार्थतात्पर्यम् । एकार्थनिष्ठत्वरूपवाक्यार्थत्वे किमायातमित्यत आह ॥ **यत्पर इति** ॥ शब्दार्थो वाक्यार्थः । एवं आद्यां शङ्कां निरस्य द्वितीयां निरस्यति ॥ **वाक्येति** ॥ पर्यवसानम् आकाङ्क्षानिवृत्तिः । तर्हि पदान्तरवैयर्थ्यमित्यत आह ॥ **यत्प्रतिपादनायेति** ॥ पूर्वपदप्रसञ्जिताकाङ्क्षापूरकत्वं हि साकाङ्क्षत्वमिति भावः । एतादृशत्वं न सिद्धस्येति दर्शयितुं साकाङ्क्षत्वेन व्यावर्त्यमुभयमतसाधारणं स्वमतमात्रसिद्धं चोदाहरणमाह ॥ **न हीति** ॥ यद्वा सिद्धान्ते इष्टसाधनादिसिद्धविशेषबोधनेन वाक्यपर्यवसानेऽपि न तत्सिद्धमात्रबोधनेनेति द्वितीयोदाहरणस्याप्युभयसिद्धत्वमेव । उभयोदाहरणं त्वेकत्र पूर्वपदप्रसञ्जिताकाङ्क्षापूरकत्वाभावेनापरत्र तत्सद्भावेऽपि श्रोत्रनाकाङ्क्षिताभिधायकत्वेन वाक्यापर्यवसानमिति भेदेनेति द्रष्टव्यम् ॥ **सर्वत्रेति** ॥ लोके वेदे चेत्यर्थः । ननु कार्यस्यापदार्थत्वे तत्र लक्षणाया अप्यनुपपत्तेः पदार्थस्यैव वाक्यार्थत्वान्न कार्यस्य वाक्यार्थत्वमित्यत आह ॥ **तत्रेति** ॥ यद्वा कार्यस्यैव वाक्यार्थत्वे पदात्मकत्वाद्वाक्यस्य तत्रत्यपदानां पर्यायत्वापत्तिरित्यत आह ॥ **तत्रेति** ॥ तर्हि पदान्तराणां कार्यपरत्वं न स्यादित्यत आह ॥ **पदान्तराणीति** ॥ तत्र प्रकृतिनियोगप्रतिपत्त्यनुबन्धित्वपरतया विषयत्वेन नियोगनिवर्तकतया करणत्वेन च धात्वर्थमभिधत्ते तदन्यानि च तद्विशेषणनामधेयनियोज्याभिधायकानि तत्रैव व्यापृतानीत्यर्थः । नन्वस्त्वेवं विधेः कार्यपरत्वं न त्वङ्गमन्त्रार्थवादादिवाक्यानामित्यतोऽङ्गवाक्यानां प्रधानसन्निधौ श्रुतानामनुवादाशङ्काकलङ्किततया कार्यान्तरशून्यानामानर्थक्यापत्त्या ग्राहकगृहीतानां प्रधानकार्यान्वितस्वार्थप्रतिपादकत्वेन मन्त्राणां च कार्याङ्गभूतार्थस्मारकत्वेनार्थवादानां च कार्यनियुज्यमानपुरुषरुच्युत्पादनेन कार्यपरत्वमप्रत्यूहमित्याह ॥ **एवमिति** ॥ नन्वेवमपि न वेदान्तानां कार्यपरत्वसिद्धिरित्यतस्तेषामपि मन्त्रार्थवादादिन्यायेन कर्मकर्तृस्वरूपप्रतिपादकत्वेन तद्देवताप्रतिपादकत्वेन वा कार्यपरत्वमेवेत्याह ॥ **अनेनैवेति** ॥ यद्वा स्वर्गकामो यजेतेत्यादिकर्मविध्येकवाक्यतका कर्मकाण्डस्य कार्यपरत्ववदात्मा ज्ञातव्य इति प्रतिपत्तिविध्येकवाक्यतया वेदान्तानामपि कार्यपरत्वमेवेत्याह ॥ **अनेनैवेति** ॥

**स०**— मतद्वयसाधारणमेतद्दूषणमिति दर्शयितुं जैमिनीया इत्युक्तम् । कार्यनिष्ठत्वं सर्ववेदस्य विवृणोति ॥ **इत्थमिति** ॥ विभागे साकाङ्क्षाणां पदानामर्थभेदे सत्यपि प्रयोजकैक्ये एकवाक्यत्वम् ।

तस्मादेकत्रैव तात्पर्यं वाच्यम् । अनेकत्र तात्पर्ये वाक्यभेदप्रसङ्गात् । अनेकेषां प्रतीतावपि यत्र शब्दस्य तात्पर्यं स एव शब्दार्थः । न प्रतीतमात्रम् । तत्रापि कुत्र तात्पर्यमित्याकाङ्क्षायां यत्परत्वे आकाङ्क्षा निवर्तते यदर्थत्वमितरपदार्थानां तत्रैव तात्पर्यम् । तादृशं च कार्यमेव नान्यत् । अन्वयव्यतिरेकाभ्यां तस्य वाक्यपर्यवसानहेतुत्वात् । तस्मात् स एव सर्ववेदार्थ इति ॥ **न हि गौरश्व इति** ॥ इदं च दृष्टान्तत्वेनोपात्तम् । अत एव पूर्वो वा शब्द उपमार्थः । द्वितीयस्त्वप्यर्थ इत्यवधेयम् । ननु शब्दार्थस्यैव वाक्यार्थत्वात् अपदार्थत्वे च लक्षणानर्हत्वात् इत्याशङ्क्य लिङादिपदवाच्यत्वं कार्यस्य तदन्वयित्वेनेतरपदार्थानामाह ॥ **तत्रेति** ॥ **पदान्तराणि त्विति** ॥ कार्यप्रतीत्युपयोगीनि विषयनियोजनव्यावृत्तिप्रत्यायकानि । ॥ **एवमिति** ॥ कर्तृशरीरनिवर्तकसामवायिकाङ्गप्रतिपादकानि व्रीहीनवहन्तीत्यादीनि फलोपकारि-आरादुपकारकाङ्गवाक्यानि प्रधानसन्निधावनुवादशंकाकलङ्कितत्वात् कार्यान्तरविधुराणि । आनर्थक्यापत्तेः ग्राहकगृहीतत्वात् कार्यपराणि । अर्थवादानामपि कार्ये नियोज्यमानपुरुषप्रयत्नोत्पादहेतुत्वेनोपयोगः । मन्त्राणामप्यनुष्ठेयार्थोपस्थापकत्वेन कार्योपयोगितेत्यर्थः । कर्मकाण्डस्य क्रियापरत्वेप्युपनिषदां सिद्धब्रह्मपरत्वमेवेत्याशङ्क्याह ॥ **अनेनैवेति** ॥ एतच्चोपरिष्टाद्विवृतं भविष्यति ॥

प० — **जैमिनीयाः** जैमिनीयत्वमात्मनो मन्यमाना इत्यर्थः ॥ **कार्यनिष्ठ एवेति** ॥ स्वर्गादिजनकपरमापूर्वशब्दितकार्यपर एवेत्यर्थः । यद्यप्येषा शङ्का ॐपदप्रयोगात्प्रागेव निरस्ता तथापि तस्यैव प्रपञ्चनमित्यदोषः । तथा चोक्तं पूर्वत्र । 'स एव भर्गशब्दार्थ' इत्यादेरभिप्रायान्तरोक्तिप्रस्तावे ग्रन्थकारैरेव 'वक्ष्यते चैतद्विस्तरेण कार्यता चेत्यादिने'ति ॥ **कथमितीति** ॥ अनेकपदात्मकवाक्यप्रयोगे सत्यनेकपदार्थानामेवान्योन्यसंसृष्टानां प्रतीत्या प्राधान्येन कार्यप्रतीतेरभावादिति भावः । शक्यार्थानामनेकत्वेऽपि तात्पर्यविषयः कार्यरूपार्थ एवेति भावेनाह ॥ **इत्थमित्यादिना** ॥ शाब्दाः शब्दमर्यादाऽभिज्ञाः । कार्यवादिनोऽर्थाध्याहारवादित्वात् पदार्थान्तरेत्युक्तम् न तु पदान्तरेति । गवादिरूपपदार्थान्तरेत्यर्थः ॥ **कार्यात्मैवेति** ॥ कृतिसाध्यवस्तुरूप एवेत्यर्थः । कुत इत्यत आह ॥ **न हीति** ॥ अस्त्वेवं लोके, वेदे तु कथमित्यत आह ॥ **अतः कार्यमेव सर्वत्रेति** ॥ लोके वेदे चेत्यर्थः । लोके धात्वर्थरूपकार्यमेव वाक्यार्थः । वेदे तु यागादिधात्वर्थजन्यापूर्वरूपकार्यमित्येतावान् भेद इति भावः । यत्प्रतिपादनेन वाक्यार्थपर्यवसानमित्येतल्लौकिकवाक्ये उपपाद्य यत्प्रतिपादनायेत्युक्तमुपपादयितुं विवेकमाह ॥ **तत्रेति** ॥ पर्यवसानान्यथाऽनुपपत्त्या कार्यस्य वाक्यार्थत्वे सतीत्यर्थः । लौकिकवाक्यार्थ इति वाऽर्थः ॥ **लिङादीति** ॥ लोट्तव्यलेट्प्रत्यया आदिपदार्थः ॥ **कार्यतेति** ॥ लोके हि लिङादिप्रत्ययस्य कार्यत्वमभिधेयमित्यङ्गीकृत्य कार्यतेत्युक्तम् । पदान्तराणीत्युपलक्षणम् । धातु-

रूपप्रकृतिरपि लिङादिना कार्यत्वप्रतीतये तदाधारतया तदन्वितमानयनमभिदधाना तत्परैवेत्यपि ध्येयम् । यद्वा कार्यताभिधायीत्यस्य धात्वर्थनिष्ठकार्यताभिधायी धात्वर्थरूपकार्याभिधायीति यावत् ॥ **तत्प्रतीतये तदन्वितेति** ॥ गवानयनं कार्यमित्येवंरूपेण तदन्वितस्वार्थानभिदधानानीत्यर्थः ॥ **कार्यतेति** ॥ कृतिसाध्यत्वादिरूपकार्यताऽऽधारभूतापूर्वे पर्यवसित इत्यर्थः ।

**या० — विध्यर्थवादेति** ॥ तथा तथाऽभियुक्तप्रसिद्धिरेव विध्यादीनां लक्षणमिति द्रष्टव्यम् । ॥ **अन्यथेति** ॥ अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे इति वचनादिति भावः ॥ **पर्यवसानमिति** ॥ आकाङ्क्षापूर्तिरित्यर्थः । ननु गौरश्व इत्यादौ क्रियावाचिपदाभावादेवापर्यवसानमित्यत आह ॥ **देवदत्त इति** ॥ एवं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिप्रधानवाक्यानां कार्यपरतामभिधायेदानीं सन्निपत्योपकारकाङ्गवाक्यानां व्रीहीनवहन्तीत्यादीनां फलोपकारकाङ्गवाक्यानां इडो यजतीत्यादीनामपि कार्यपरतां दर्शयति ॥ **एवं कार्यान्तरविधुराणीति** ॥ उक्तानि द्विविधान्यप्यङ्गवाक्यानि प्रधानसन्निधानात्कार्यान्तरविधुराणि आनकयापत्तेर्ग्राहकगृहीतत्वात्प्रधानकार्यपराणीत्यर्थः । नन्वेवमप्यर्थवादमन्त्रोपनिषदां कथं कार्यपरतेत्यत आह ॥ **अनेनैव न्यायेनेति** ॥ अशेषोऽप्याम्नाय इति सम्बन्धः । ततश्चार्थवादानां नियुज्यमानपुरुषप्रोत्साहनहेतुत्वेन मन्त्राणां त्वनुष्ठेयार्थस्मारकत्वेनोपनिषदां च कर्तृभूतात्मस्वरूपप्रतिपादकतया कार्यताबोधे पर्यवसानमित्यर्थः । यद्वा समस्ताम्नायस्य कार्यनिष्ठतैव कथमिति चेदिति शङ्कायां अनेनैव न्यायेनेत्यादिनोत्तरं वक्तुं लौकिकवाक्ये तावत्कार्यताबोधपर्यवसानं दर्शयति ॥ **अनेकपदात्मकवाक्येत्यादिना** ॥ **सर्वत्रेति** ॥ लौकिकवाक्य इत्यर्थः ॥ **वाक्यान्तराणीति** ॥ अवान्तरलौकिकवाक्यानीत्यर्थः । अत्र यथास्थित एव सम्बन्ध इति स्वारस्यं ज्ञातव्यम् ।

**श्री० — यत्पर इति** ॥ यत्रार्थे तात्पर्योपेत इत्यर्थः । गौरश्वः पुरुषो हस्तीति वेत्यत्र वाशब्द उपमायाम् । वा विकल्पोपमानयोरिति वचनात् । तथाच गौरश्वः पुरुषो हस्तीति वाक्यं यथा क्रियावाचकपदाभावान्न पर्यवसितं तथा देवदत्तः पचतीति वाक्यमपि न पर्यवसितम् । क्रियावाचकपदसद्भावेऽपि कार्यतावाचकपदाभावादिति भावः ॥ **लिङादिप्रत्यय इति** ॥ आदिपदेन लोट्तव्यप्रत्ययपञ्चमलकाराणां ग्रहणम् । अभिदधति सन्तीति शेषः ॥

**च० —** गुरुमतं दर्शयति ॥ **विध्यर्थवादेति** ॥ लिङ्लोट्तव्यप्रत्ययपञ्चमलकारान्यतमघटितं वाक्यं विधिः । स्तुत्यादिरर्थवाद उत्तमामन्त्राणास्यन्ततत्त्वांरूपादिमान् मन्त्र इत्यभियुक्तप्रसिद्धिगोचरो वा मन्त्र इत्यर्थः । कार्यनिष्ठता । बहुव्रीहिप्रकृतिकस्तल् । कार्यतात्पर्यकता । अन्यथा एकार्थतात्पर्य-

कत्वानुपगमे । यत्पर: यत्तात्पर्यक: । उदाहरणद्वयं क्रियावाचकसमभिव्याहारतद्राहित्यनिबन्धनं पर्यवसितमाकाङ्क्षानिवृत्तिमत् ॥ तत्रेति ॥ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिप्रधानवाक्यघटक इत्यर्थः । पदान्तराणि स्वर्गकामादिपदानि । कार्यान्तरविधुराणि अङ्गमन्त्रार्थवादवाक्यानि ।

सु०— किञ्च प्रत्याय्यप्रत्यायकभावसम्बन्धग्रहणलक्षणव्युत्पत्त्यपेक्षो हि शब्दोऽर्थमवबोधयतीत्यविवादम् । अन्वयव्यतिरेकाभ्यां तथाऽवगमात् । व्युत्पत्तिश्च वृद्धव्यवहारदर्शनादेव । वृद्धव्यवहारश्च कार्यप्रतिपत्तिनिबन्धन इति कार्यप्रतिपादकतैव युक्ता ॥ तथा हि । जलं चैत्र आहरस्वेति प्रयोजकवृद्धवाक्यश्रवणात्प्रयोज्यवृद्धस्य विशिष्टार्थविषयां प्रवृत्तिं दृष्ट्वा व्युत्पत्स्यमानोऽन्यो बाल एवमाकलयति । स्वाधीनाऽस्य प्रवृत्तिः सा मद्वद्बुद्धिपूर्विकेति ॥ पुनस्तस्यायं विमर्शो जायते । या चास्य प्रवृत्तिहेतुभूता बुद्धिः सा यद्विषया सती मम प्रवृत्तिहेतुस्तद्विषयैवेति । तदेवमनुमानद्वयमेतत् । वृद्धस्य स्वतन्त्रा प्रवृत्तिर्धर्मिणी । बुद्धिपूर्विकेति साध्योधर्मः । स्वतन्त्रप्रवृत्तित्वात्, मदीयस्वतन्त्रप्रवृत्तिवत् । तथा वृद्धस्य प्रवृत्तिहेतुभूता बुद्धिर्धर्मिणी । यद्विषयैव बुद्धिर्मम प्रवृत्तिहेतुभूता तद्विषयैवेति साध्यो धर्मः । प्रवृत्तिहेतुभूतबुद्धित्वात्, मदीयप्रवृत्तिहेतुभूतबुद्धिवदिति ।

पुनश्च तस्यायं विमर्शः प्रवर्तते । यद्विषया सा बुद्धिः प्रवृत्तिहेतुभूता तद्वस्त्वनेन शब्देन बोध्यते तद्भावे भावात् । मम तु मानान्तरेण तद्बोध इत्यावयोर्विशेषः । तेन यद्बुद्ध्वा प्रवृत्तिर्मम तदनेन शब्देन बोध्यत इति शब्दस्य प्रवृत्तिहेतुभूतार्थबोधकतामवधारयति । पुनश्च कोऽसौ प्रवृत्तिहेतुभूतोऽर्थः शब्दाभिधेय इति निर्धारयितुं स्वात्मनि प्रतिपन्नं प्रवृत्तिहेतुभूतार्थमनुसन्धत्ते । तत्र न तावदहं क्रियामात्रं फलमात्रं वा क्रियाफलसम्बन्धमात्रं वा बुद्ध्वाप्रवृत्तः; किन्तु कार्यतामेव । ममेदं कार्यमिति प्रतीत्य हि सर्वत्र प्रवृत्तोऽस्मि ।

आस्तां तावदन्या क्रियाऽन्ततः स्तनपानादिकमपि यावन्मया कार्यतया नावधारितं न तावत्तत्राहं प्रवृत्त इति स्वप्रवृत्तेः कार्यताबोधपूर्वकत्वं निश्चित्य प्रवर्तमानं चैत्रं दृष्ट्वा अनुमिनोति चैत्रोऽपि कार्यबोधात्प्रवर्तत इति ॥ चैत्रस्य प्रवृत्तिर्धर्मिणी । कार्यबोधपूर्विकेति साध्यो धर्मः । बुद्धिपूर्वप्रवृत्तित्वात्, मदीयप्रवृत्तिवदिति ॥ लिङादयश्च प्रवृत्तिहेतुभूतार्थाभिधायकाः कार्यमेवाभिदधतीति वाक्यस्य तावत्सामान्यतः कार्यपरतामवधार्य लिङाद्यावापे कार्यतावगतिदर्शनात् तदुद्धारे चादर्शनात्त एव कार्यतावगतिं कुर्वन्ति । पदान्तराणि च तदन्वितांस्तांस्तानर्थान् । इत्यावापोद्धाराभ्यामवगच्छति ॥

**एतेन शब्दस्तद्व्यापारो वा प्रवर्तक इति निरस्तम्। बालेन स्वप्रवृत्तौ तयोः कारणतयाऽनवधृतत्वात्। तथाविधस्यैव परप्रवृत्तावधारणात्॥ किञ्च शब्दस्यैव प्रवर्तकत्वे सर्वेऽपि तच्छ्राविणः प्रवर्तेरन्॥ याऽपीयं शङ्खादिशब्दश्रवणानन्तरं प्रवृत्तिः साऽपि पुरुषाभिप्रायानुमानादेव; न साक्षात्॥ रागद्वेषयोर्यद्यपि प्रवर्तकत्वमस्ति, यथाऽऽह प्रवर्तनालक्षणा दोषा इति; तथाऽपि सत्तयैव न तु ज्ञाततया। ज्ञानं त्वबुभुत्सितग्राह्यतयाऽवर्जनीयसन्निधिः। अतो न वाक्ये बोध्यतया तौ कल्प्येते। किन्तु कार्यमेवेति तदेव वेदार्थः।**

वा०—एवं 'कार्यता चे'त्यारभ्या'काङ्क्षासन्निधिर्योग्यता यतः। तस्मिन्नेव समस्तश्चये'त्यन्तग्रन्थनिरस्यं परोक्तं स्वपक्षे साधकं परपक्षे बाधकमुपन्यस्य कार्यपदादिवाच्यकार्यस्य वाक्यस्थेन केनचित्पदेन लक्षणया बोधनेऽपि वाक्यस्य कार्यपरत्वसंभवाल्लिङादीनां कार्याद्यभिधायकत्वं न कल्प्यमिति शङ्कां शक्तिग्राहकप्रमाणबलात्सिद्धार्थस्य न कल्पनेति परिहर्तुं'मिष्टे व्युत्पत्तिरिष्यत' इति ग्रन्थनिरस्यं परोक्तसाधकादिकं दर्शयति॥ **किं चेति**॥ वृद्धो व्युत्पन्नः। व्यवहारो वाक्योच्चारणप्रवृत्त्यादिरूपतच्चेष्टा। बालोऽव्युत्पन्नः। वक्ष्यमाणानुमाने पक्षहेतुसिद्ध्यर्थमाह॥ **जलमिति**॥ नन्विमौ विशेषौ न प्रत्यक्षागमाविति स्पष्टमेव, नाप्यनुमानं तादृशलिङ्गाभावादित्यत आह॥ **तदेवमिति**॥ उन्मत्तप्रवृत्त्यंशे बाधवारणाय स्वतन्त्रेति। हेतौ च तत्रैव व्यभिचारवारणाय तत्॥ **यदिति**॥ प्रवृत्तिहेतुभूतमद्बुद्धिसमानविषयेत्यर्थः। स्वबुद्धौ शब्दजन्यत्वाभावेन स्वबुद्धिदृष्टान्तेन शब्दजन्यत्वानुमानासंभवात्प्रकारान्तरेण तत्प्रकारं दर्शयति॥ **पुनश्चेति**॥ दृष्टान्ते वक्ष्यमाणसाध्यसिद्ध्यर्थमनुसन्धानप्रकारं दर्शयति॥ **पुनश्चेति**॥ **तत्र न तावदिति**॥ क्रियाफलबोधयोर्वर्तमानापदेशादौ क्रियाफलसाध्यसाधनभावरूपसंबन्धस्य च भूतादौ प्रवृत्तिव्यभिचारादिति भावः। अन्यथासिद्धत्वान्न प्रवृत्तेर्बुद्धिपूर्वकत्वानुमानमुपपद्यत इत्याशङ्कां निरस्यति॥ **एतेनेति**॥ शब्दो लिङादिस्तद्व्यापारोऽतिरिक्त एव कश्चिद्वा वर्णमात्रसाधारणोऽभिधारूपो वा लिङादिमात्रसाधारणः प्रवर्तनारूपो वा सर्वोऽप्यनभिधेयाभिधेयरूपेण द्विविध इति भावः॥ **बालेनेति**॥ उपलक्षणं चैतत्। शब्दस्यानभिधेयरूपतद्व्यापारस्य च प्रवर्तकत्वे सङ्गतिग्रहणापेक्षा च न स्यात्। अप्रामाणिकश्च तादृशोव्यापारः। अभिधेयव्यापारस्य परिस्पन्दरूपस्यामूर्ते विभौ विभुगुणे वा शब्दे संभवात्। प्रयत्नरूपस्य च तस्याचेतने शब्देऽनुपपत्तेरतिरिक्तस्य शब्दभावनारूपाभिधादेरप्रामाणिकत्वादित्यपि द्रष्टव्यम्। ननु ध्वन्यात्मकशब्दस्यापि प्रवर्तकत्वं दृष्टं किमु तदा वर्णात्मकशब्दस्य तदित्याशङ्कायामाह॥ **याऽपीति**॥ अन्यथा पुरुषाभिप्रायानभिज्ञानामपि तच्छ्रवणानन्तरं प्रवृत्त्यापत्तेरिति भावः। ज्ञानान्वयव्यतिरेकात्सत्तयैवेति कथमवधारणमित्यतो रागादौ सति ज्ञानव्यतिरेकेण कार्यव्यतिरेकादर्शनादित्याह॥ **ज्ञानं त्विति**॥

स०—स्यादेषा प्रक्रिया यदि लिङादीनां कार्याभिधायिता प्रमिता स्यात् । न चैतदस्तीत्याशङ्क्य लिङादिवाच्यत्वं कार्यस्योपपादयति ॥ **किञ्चेति** ॥ **स्वाधीनास्य प्रवृत्तिरिति** ॥ विष्टिगृहीतप्रवृत्तिवारणाय स्वाधीनेति । एतदर्थमेवाग्रे स्वतन्त्रपदमपि ॥**प्रवृत्तिहेतुबुद्धित्वादिति**॥ अत्रोपेक्षाज्ञाने व्यभिचारवारणाय प्रवृत्तिहेतुभूतेति विशेषणम् ॥ **तत्र न तावदहमिति** ॥ कृत्यसाध्यादौ विशकलितक्रियादिज्ञानेऽपि प्रवृत्त्यभावेन व्यभिचारादिति भावः ॥ **तद्व्यापार इति** ॥ अभिधानरूपः शब्दव्यापार इत्यर्थः । पदार्थोपस्थितिरिति यावत् ॥ **न तु ज्ञाततयेति** ॥ तत्र न तयोः प्रवर्तकज्ञानविषयत्वं येन ताभ्यामन्यथासिद्धिः स्यादिति भावः । ननु रागादीनां न सत्तामात्रेण प्रवर्तकत्वं ज्ञानान्वयव्यतिरेकानुविधानादित्यत आह ॥ **ज्ञानं त्विति** ॥ ज्ञानं स्वसामग्र्यां सत्यां अबुभुत्सितं गृह्यत इति ज्ञानसंबन्धोऽन्यथासिद्ध इत्यर्थः ॥

प०— एवं पर्यवसानानुपपत्तिं वेदस्य कार्यपरत्वे प्रमाणमुक्त्वा लोकसिद्धकार्यव्युत्पत्तिं च प्रमाणं 'इष्टे व्युत्पत्तिरिष्यत' इति वक्ष्यमाणव्यावर्त्यं व्युत्पत्तिप्रकारोपपादनपूर्वमाह ॥ **किञ्चेति** ॥ **अविवादमिति** ॥ विवादाभावोऽविवादम् । 'अर्थाभावे यदव्ययमि'त्यव्ययीभावे 'अव्ययीभावश्चे'ति नपुंसकता ॥**विशिष्टार्थेति**॥ इतरव्यावृत्तजलरूपार्थविषयामित्यर्थः ॥ **धर्मिणीति** ॥ साध्यं प्रति धर्मिभूतेत्यर्थः ॥ **अनेन शब्देनेति** ॥ चैत्र जलमाहरस्वेति शब्देनेत्यर्थः ॥ **मानान्तरेणेति** ॥ प्राग्भवीयानुभवजन्यसंस्कारादिरूपेणेत्यर्थः ॥ **क्रियामात्रमिति** ॥ भोजनादिक्रियामात्रं तृप्त्यादिरूपफलमात्रं तयोर्जन्यजनकभावरूपसंबन्धमात्रं वेत्यर्थः ॥ **निश्चित्येति** ॥ अनुमिनोतीतिक्रिययाऽस्यान्वयः । भट्टमतं निराह ॥ **एतेन शब्द इति** ॥ व्यापारो भावना ॥ **पुरुषाभिप्रायेति** ॥ आगन्तव्यमित्येवं कार्यताभिप्रायानुमानादेवेत्यर्थः ॥ **यथाहेति** ॥ नैयायिक इति योज्यम् । दोषाः रागद्वेषमोहाः ॥ **ज्ञानं त्विति** ॥ रागादेरिति योज्यम् ।

या०—एवं कार्यता च न काचिदित्यादिग्रन्थनिवर्त्यपूर्वपक्षं दर्शयित्वाऽधुनेष्टे व्युत्पत्तिरिष्यत इति ग्रन्थनिवर्त्यं पूर्वपक्षं दर्शयिष्यति ॥ **किञ्चेति** ॥ वृद्धशब्दो व्युत्पन्नपरः । स्वाधीनेति विष्टिगृहीतप्रवृत्तिवारणाय । एतदर्थमेवाग्रे स्वतन्त्रपदमपि ॥ **प्रवृत्तिहेतुभूतेति** ॥ एतच्च विशेषणं पक्षे उपेक्षाबुद्धेरपि पक्षत्वे तत्र बाधासिद्धिवारणाय हेतौ च तत्र व्यभिचारवारणायेति ज्ञातव्यम् ॥**क्रियामात्रमित्यादि**॥ चन्द्रमण्डलहरणादिरूपक्रियातत्फलतत्साधनताज्ञानेऽपि प्रवृत्त्यभावेन व्यभिचारादिति भावः ॥ **शब्दस्तद्व्यापारो वेति** ॥ अत्र शब्दपदेन लिङादय एव विवक्षिताः । तेषामेव प्रवर्तकत्वस्य संभावितत्वात् । व्यापारपदेन चाभिधैव विवक्षितेत्याहुः । वस्त्ववस्तु विधिनिषेधात्मकः शब्द एव पुरुषस्य प्रवृत्तिं निवृत्तिं च

भावयन् शब्दभावनेत्युच्यते । लिङादियुक्तेषु वाक्येषु द्वे भावने अवगम्येते शब्दात्मिकार्थात्मिका चेति । यथाश्रुतवाक्यानुसारी कश्चित्पक्षः लिङादिभिर्नञ्समभिव्याहृतलिङादिभिश्च बोधितः । प्रवर्तनानिवर्तनात्मकः शब्दस्य व्यापारः शब्दभावना । लोके हि प्रेषणाध्येषणादिभिः प्रवर्तकस्य पुरुषस्य व्यापारो गामानयेत्यादिवाक्येषु प्रवृत्तिनिवृत्तिहेतुत्वेनावगतः । अपौरुषेयवेदे तु वक्तृपुरुषव्यापारासंभवाच्छब्दस्यैव स व्यापार इत्यन्यः पक्ष इत्यभिप्रेत्य शब्दस्तद्व्यापारो वेत्युक्तम् ॥ **किञ्चेति** ॥ तथा चाव्युत्पन्नानामपि बोधः स्यादिति भावः । उक्तं चैतन्मीमांसकैः । 'तत्र शब्दः स्वरूपेण वायुवच्चेत्प्रवर्तकः । प्रमाणत्वं विहन्येत नियमाच्च प्रवर्तयेदि'ति । ननु विमतः शब्दः प्रवृत्तिजनकस्तदभिप्रायकशब्दत्वाच्छङ्खादिशब्दवदित्यनुमानाल्लिङादिरूपे शब्दे प्रवृत्तिजनकत्वसिद्धेः कथमेतदित्यत आह ॥ **यापीऽति** ॥ तथाच साध्यवैकल्यमिति भावः ।

**श्री०— प्रत्याय्येत्यादि** ॥ वाच्यवाचकभावसंबन्धेत्यर्थः ॥ **विशिष्टार्थेति** ॥ इतरविलक्षणजलाहरणविषयामित्यर्थः ॥ **अन्यो बाल इति** ॥ पार्श्वस्थस्तृतीय इत्यर्थः ॥ **स्वाधीनेति** ॥ स्वेच्छाधीनेत्यर्थः । स्वतन्त्रेत्यस्यायमेवार्थः । यष्टिगृहीतप्रवृत्तिवारणायेदमुक्तमिति मन्तव्यम् ॥ **तद्भावभावित्वादिति** ॥ शब्दसद्भावे सति वस्तुबोधस्य जायमानत्वादित्यर्थः ॥ **मानान्तरेणेति** ॥ स्तनपानादिप्रवृत्तिहेतुभूतवस्तुबोधः प्रमाणान्तरेण शब्दव्यतिरिक्तेन जात इत्यर्थः । स्तनपानादिप्रवृत्तौ शब्दाभावादिति भावः । एतेनेयुक्तमेव विशदयति ॥ **बालेनेति** ॥ तयोः शब्दतद्व्यापारयोः ॥ **तथाविधस्यैवेति** ॥ बालेन स्वप्रवृत्तौ कारणतयाऽवधृतस्यैवेत्यर्थः । ननु शब्दस्य प्रवर्तकत्वं दृष्टम् । युद्धे शङ्खादिशब्दश्रवणसमनन्तरं प्रवृत्तिदर्शनादित्यतस्तत्रापि न साक्षाच्छब्द एव प्रवर्तकः किं नामानुमानविधयैवेत्याह ॥ **याऽपीयमिति** ॥ अयं युद्धकर्तव्यत्वाभिप्रायवान् । तत्सूचकशब्दकर्तृत्वादित्यनुमानादेवेत्यर्थः । तथाऽपि न कार्यस्य प्रवर्तकत्वमित्याशङ्कते ॥ **रागद्वेषयोरिति** ॥ **प्रवर्तना लक्षणा इति** ॥ प्रवर्तकत्वस्वरूपा इत्यर्थः । यथाहुः । प्रवर्तनालक्षणाः स्युर्दोषा रागादयश्च त इति ॥ **ननु ज्ञाततयेति** ॥ कस्य ज्ञानं प्रवर्तकमिति प्रवर्तकज्ञानविषय एवेदानीं विचार्यत इत्यर्थः ॥ **सन्निधीति** ॥ रागद्वेषयोर्ज्ञातैकसत्त्वादिति भावः ।

**च०—** स्वाधीनास्वेच्छाधीना । विष्टिगृहीतप्रवृत्तिव्युदसनायैतदुपादानम् । उपरिष्टात्स्वतन्त्रपदमपि तत्फलकमेव । प्रवृत्तिहेतुत्वस्य पक्षतावच्छेदककोटिनिवेशनमुपेक्षाबुद्धौ बाधासिद्धिविधूननाय । हेतुतावच्छेदकशरीरे तत्रानैकान्त्यमपहस्तयितुम् । क्रियामात्रं चन्द्रमण्डलाहरणादिसाधारणव्यापारत्वावच्छिन्नं फलमात्रम् । संयोगविभागादिरूपम् । संबन्धमात्रम् । जन्यजनकभावादिरूपम् । विधान्तरेणैव प्रवृत्त्युपपत्त्या न तस्याः बुद्धिपूर्वकतानुमानं सङ्गच्छत इत्याशङ्कां प्रतिविधत्ते॥ **एतेनेति॥ शब्दस्तद्व्यापारो**

**वेति** ॥ लिङादिवर्णसामान्यसाधारणोभिधारूपो लिङादिमात्रासाधारणप्रवर्तनारूपो वेत्यर्थः ॥ **सर्वेपीति** ॥ अव्युत्पन्ना अपीत्यर्थः । शङ्खादिशब्दं निदर्शनीकृत्य तदभिप्रायशब्दत्वेन लिङादिशब्दे प्रवृत्तिजनकत्वसाधनं साध्यवैकल्यान्न सङ्गच्छत इत्याह ॥ **यापीति** ॥

**सु० — अपि च यद्यपि बोधकत्वेनैव प्रामाण्यम् । तथाऽपि वाक्यप्रयोगस्य परार्थत्वात्परप्रवृत्तिनिवृत्त्यौपयिक एवार्थो वाक्यबोध्योऽङ्गीकार्यः । कार्यमेव तथाविधमित्युक्तमिति तत्रैव सर्ववेदपर्यवसानादनुग्राह्यप्रमाणाभावान्न ब्रह्ममीमांसारम्भः संभवतीति ॥**

**वा०** — 'अथेष्टमाकाङ्क्षत' इत्यादिनिरस्यं साधकान्तरं दर्शयति ॥ **अपि चेति** ॥ प्रवर्तकान्तरनिरासेन कार्यस्य प्रवर्तकत्वमुक्तं स्मारयति ॥ **उक्तमिति** ॥

**प०** —'इष्टमाकाङ्क्षत' इति वक्ष्यमाणव्यावर्त्यं प्रवृत्त्याद्यर्थत्वान्यथानुपपत्त्या च कार्यनिष्ठत्वमुपेयमित्येतदाह ॥ **अपिचेति** ॥

**या०** — इष्टमाकाङ्क्षत इत्यादिग्रन्थनिवर्त्यपूर्वपक्षं दर्शयति ॥ **अपि चेति** ॥

**श्री०** —ननु प्रवृत्तिनिवृत्त्युपयुक्तार्थबोधजनकत्वेनैव चेत्प्रमाणानां प्रामाण्यं तर्हि उदासीनतृणादिज्ञानजनकप्रत्यक्षप्रामाण्यं न स्यादिति चेत् । सत्यम् । यथावस्थितार्थबोधजनकत्वेनैव प्रत्यक्षादिप्रामाण्यं न प्रवृत्त्याद्युपयुक्तार्थबोधकत्वेनेवेति । तथाऽपि शब्देनैवमित्याह ॥ **यद्यपीत्यादिना** ॥

**च०** — इष्टमाकाङ्क्षत इत्यादिप्रतीकनिवर्तनीयशङ्कांशं दर्शयति ॥ **अपि चेति** ॥

**अनु० — कार्यता च न काचित्स्यादिष्टसाधनतां विना ॥**

**सु० — अत्रोच्यते । स्यादेतदेवम् । यदि वेदो ब्रह्मनिष्ठो न भवेत् । न त्वेवम् । तन्निष्ठत्वे प्रमाणस्योदितत्वाद्बाधकाभावाच्च ॥ ननूक्तमत्र कार्यताबोध एव वाक्यस्य पर्यवसानं न सिद्धार्थबोध इत्यतः कार्यमेव वाक्यार्थो न सिद्धस्वरूपं ब्रह्मेति । सत्यमुक्तम् । सा चेद्वाक्यार्थपर्यवसानोपयोगिनी कार्यता सिद्धविशेषस्य स्यात्तदा तस्यापि वाक्यार्थत्वे कीदृशो दोषः स्यादित्याशयवान्कार्यतां तावन्निर्धारयति ॥ कार्यता चेति ॥ चशब्दो व्याख्यानान्तरसमुच्चयार्थः । गवानयनादौ या कार्यता वाक्यपर्यवसानहेतुः सा तावदिष्टसाधनातिरिक्ता नास्तीति प्रतिज्ञा ॥**

व्या०— ननु कार्यता चेत्यादिग्रन्थः प्रकृतासङ्गतः। न चोक्तबाधकपरिहाराय स इति वाच्यम्। वेदस्य सिद्धार्थनिष्ठत्वे प्रमाणानुपन्यासेन न्यूनतापत्तेः। कार्यताया इष्टसाधनतातिरेका-भावोक्तिमात्रेणोक्तबाधकत्रितये कस्याप्यपरिहाराच्चेत्यत उत्तरग्रन्थाभिप्रायमाह ॥ **अत्रोच्यत इत्या-दिना** ॥ उदितत्वादियुक्त्येदानीमनुक्तिर्न न्यूनतापादिकेत्युक्तं भवति। वाक्यपर्यवसानोपयोगिनीति सिद्धविशेषस्येति चोक्त्याऽऽद्यबाधकपरिहारोऽयमिति सूचयति। चशब्दस्य प्रकृतनिषेध्यसमुच्चायकत्वा-संभवादतःशब्दव्याख्यानान्तरत्वस्य भाष्यारूढतासंपादनाय च तं व्याख्याति ॥ **चशब्द इति** ॥ भगवन्निष्ठकार्यतेष्टसाधनतातिरिक्ता नास्तीत्यर्थपरत्वे वक्ष्यमाणनिषिद्धस्य समत्वत इत्यादिदूषणस्यासङ्गते-स्तदिष्टं साधनमिति सामान्योपसंहारमुखेन साधनमिष्टस्य भगवानिति भगवत इष्टसाधनत्वाद्युक्त्यसङ्गतेश्च भगवदतिरिक्तविषयतया व्याख्याति ॥ **गवानयनादाविति** ॥ यद्वा घटादिनिष्ठजन्यतादिरूपकार्यताया लिङाद्यर्थतया परेणाप्यनुक्तत्वाद्गवानयनादिधात्वर्थनिष्ठकार्यताया एव वाक्यपर्यवसानोपयोगितयोक्तत्वा-त्तस्या एवेष्टसाधनातिरिक्तत्वाभावप्रतिज्ञानायाह ॥ **गवानयनादाविति** ॥ आद्यबाधकपरिहारस्य भाष्या-रूढतां दर्शयितुमाह ॥ **वाक्येति** ॥

स०— **प्रमाणस्योदितत्वादिति** ॥ स एव सर्ववेदार्थ इत्यादिनेति शेषः ॥ **सिद्धविशेष-स्येति** ॥ इष्टेष्टसाधनानिष्ठोदासीनभेदेन सिद्धस्यानेकविधत्वेन तत्र चानिष्टोदासीनयोरभिप्रेतकार्यत्वा-त्संभवेऽपि इष्टत्वेष्टसाधनत्वावच्छिन्नेष्टेष्टसाधनरूपसिद्धविशेषस्य कार्यत्वसंभवाद्ब्रह्मणश्च तद्रूपत्वात्तत्र वाक्य-पर्यवसानोपपत्तिरिति भावः ॥ **चशब्द इति** ॥ सूत्रस्थातःशब्दस्य व्याख्यानान्तरसमुच्चयार्थ इत्यर्थः। ननु कथं सिद्धस्य कार्यरूपत्वमित्यत आह ॥ **गवानयनादाविति** ॥

प— **प्रमाणस्येति** ॥ 'स एव भर्गशब्दार्थ' इत्यादौ पूर्वत्र ओमिति ब्रह्मेत्यादिश्रुत्या विष्णु-वाचितया प्रसिद्धोङ्कारस्य स्रवतीत्यादिश्रुतिसिद्धसूत्रादिमस्य ब्रह्मणि मानत्वोक्त्या व्याहृतिगायत्रीपुरुषसूक्त-द्वारा तद्व्याख्यानरूपसर्ववेदानां ब्रह्मनिष्ठत्वेन पुरुषसूक्तादिव्याख्यानरूपप्रमाणस्योक्तत्वादित्यर्थः ॥ **बाध-केति** ॥ पूर्ववाद्युक्तबाधकत्रयस्याप्यभावाच्चेत्यर्थः। तत्कथमित्यत आद्यं बाधकमाशङ्क्य तन्निरासकतया मूलं योजयति ॥ **नन्वित्यादिना** ॥ अन्ये तु बाधके 'इष्टे' इत्यत्र 'इष्टमि'त्यत्र च निरसिष्येते इति भावः ॥ **सिद्धविशेषस्येति** ॥ इष्टसाधनादिरूपसिद्धविशेषस्येत्यर्थः ॥ **कीदृश इति** ॥ न कोपि दो इत्यर्थः ॥ **व्याख्यानान्तरेति** ॥ अतःशब्दस्य प्रयोजनसमर्थनाय कृताज्ज्ञानादिद्वारा मोक्षफलकत्वार्थक-त्वव्याख्यानाद्बन्धस्य सत्यत्वपरत्वव्याख्यानाच्च विषयसमर्थनायापेक्षितं वेदान्तानां यत्सिद्धार्थप्रमापकत्वं

तत्परत्वरूपव्याख्यानान्तरसमुच्चयार्थ इत्यर्थः । कार्यता इष्टसाधनतेत्येका व्याख्या । इष्टतेत्यपरा । तथाचेष्टसाधनतां विनेतिवत् इष्टतां विनेत्यपि समुच्चयार्थ इत्यर्थ इत्येके ॥

या० — **प्रमाणस्योदितत्वादिति** ॥ तद्व्याख्येयोङ्कारवाचित्वरूपप्रमाणस्योदितत्वादित्यर्थः ॥ **सिद्धविशेषस्येति** ॥ केषाञ्चिदिष्टरूपस्य केषाञ्चिदिष्टसाधनरूपस्य भगवत इत्यर्थः ॥ **व्याख्यानान्तरेति** ॥ सौत्रात:शब्दस्येति शेषः ।

श्री० — **बाधकाभावाच्चेति** ॥ ब्रह्मनिष्ठत्वाङ्गीकारेण बाधकाभावाच्चेत्यर्थः ॥

च० — समाधत्ते ॥ **अत्रोच्यत इति** ॥ **उदितत्वादिति** ॥ ब्रह्मधर्मिकसर्ववेदप्रतिपाद्यत्वसाध्यकतद्व्याख्यायोङ्कारवाच्यत्वहेतुकानुमानरूपप्रमाणस्योक्तत्वादित्यर्थः । सिद्धविशेषस्य अधिकारिभेदेनेष्टरूपस्येष्टसाधनरूपस्य चेत्यर्थः । **व्याख्यानान्तरेति** ॥ सूत्रघटकात:शब्दस्येति पूरणीयम् ॥

अनु० — **कार्यं न हि क्रियाव्याप्यं निषिद्धस्य समत्वतः ॥**

**सु० — कुत इत्यतोऽन्यस्या अनुपपत्तेरित्यभिप्रेत्य प्रसक्तान्पक्षान्निराचष्टे ॥ कार्यमिति ॥ कार्यमिति हि कृत्यप्रत्ययान्तः शब्दः । कृत्याश्च कर्मणि स्मर्यन्ते । तयोरेव कृत्यक्तखलर्था इति । कर्म च तदुच्यते यत्कर्तुः क्रियाऽऽप्तुमिष्टतमम् । तथा च क्रियया विशेषेणाप्यं कार्यं, तद्भावः कार्यतेति प्राप्नोति । न च सत्संभवति; निषिद्धस्यापि ब्राह्मणहननादेः क्रिययाऽऽप्तुमिष्टतमत्वसाम्यात् । तदपि कार्यमस्त्विति चेन्न; तत्रापि कार्यताबुद्धिप्रसङ्गात् । अस्त्येव निषिद्धताबोधात्प्रागिति चेत् , परतोऽपि किं न स्यात् । न हि निषिद्धताबोधे ब्राह्मणहननादेः क्रियया व्याप्यताऽपगता । तन्मात्रं च कार्यतेति कथं निषेधज्ञानादपि परतो न स्यात्कार्यताबोधः । सति च तस्मिन्प्रवर्तेत; तस्यैव प्रवर्तकत्वाभ्युपगमात् ॥**

वा० — कार्यशब्दात्क्रियाव्याप्यत्वपक्षस्य योगतः प्रसक्तिं दर्शयति ॥ **वा कार्यमितीति** ॥ क्रिययाऽऽप्तमिष्टतमं क्रियया प्राप्यम् । इष्टापत्तिपरिहाराय समत्वत: कार्यताबुद्धिविषयतया साम्यप्रसङ्गादित्यर्थमभिप्रेत्य मूलं योजयति ॥ **तत्रापीति** ॥ तत्रापीष्टापत्तिपरिहाराय निषिद्धस्य निषिद्धत्वेन बुद्धस्य क्रियाव्याप्यतासाम्यादित्याशयेनापि तदेव मूलं योजयति ॥ **न हीति** ॥ तत्रापीष्टापादनत्वपरिहारायाह प्रवृत्तिसाम्यप्रसङ्गादिति तन्मूलं योजयति ॥ **सति चेति** ॥ यद्वा निषिद्धस्य समत्वत इत्युक्तिलब्धाभिप्रायकथनेनेष्टापादनपरिहारोऽयमिति द्रष्टव्यम् ।

स०— **प्रसक्तान्** कार्यपदार्थत्वेनेति शेषः ॥ **तयोरेव कृत्यक्तखलर्था इति** ॥ निषिद्धत्वचोदनानन्तरं क्रियाव्याप्यत्वाभावान्न कार्यत्वधीरित्यत आह ॥ **न हीति** ॥

प०— **कृत्यप्रत्ययेति** ॥ ण्यत्प्रत्ययान्त इत्यर्थः । डुकृञ्करण इत्यस्य 'ऋहलोर्ण्यदि'त्युक्तण्यत्प्रत्यये अचोञ्णितीतिवृद्धौ कार्यमिति निष्पत्तेः । ण्यत्प्रत्ययस्य च 'कृत्याः प्राङ्ण्वुल'इति सूत्रेण कृत्यसंज्ञकत्वात् ॥ **कृत्याश्चेति** ॥ कृत्यसंज्ञकाः प्रत्यया इत्यर्थः ॥ **तयोरेवेति** ॥ 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति पूर्वसूत्रप्रकृतभावकर्मणोरेव कृत्यसंज्ञकप्रत्ययः क्तप्रत्ययः खलर्थप्रत्ययश्च भवतीति पाणिनिसूत्रेण च स्मर्यन्त इत्यर्थः ॥ **कर्तुः क्रिययेति** ॥ 'कर्तुरीप्सिततमं कर्मेति पाणिनिस्मरणादिति भावः ।

या०— **प्रसक्तानिति** ॥ कार्यशब्दार्थतयेति शेषः ॥ **कृत्यप्रत्ययान्त इति** ॥ ण्यन्तत्वादिति भावः ॥ **तयोरेवेति** ॥ कृत्यक्तखलर्थाश्च भावकर्मणोरेव स्युरिति सूत्रार्थः ॥

श्री०— **कृत्यप्रत्यय इति** ॥ कृत्याः प्राङ्ण्वुल् इति सूत्रेण ण्वुल्तृचावित्यतःपूर्वं विहितानां प्रत्ययानां कृत्यप्रत्ययोक्तेर्ण्यत्प्रत्ययस्यापि तथात्वेन कृत्यप्रत्ययत्वात्तदन्तोऽयं शब्द इत्यर्थः । तथा च कृञ् करणे ञकारोऽनुबन्धार्थः । अस्मात् ण्यत्प्रत्यये णकारतकारलोपे णित्वादादिवृद्धौ कार्येति रूपम् ॥ व्याप्यता प्राप्तुमिष्टता ॥

च०— **प्रसक्तानिति** ॥ कार्यपदप्रतिपाद्यतयेत्युपस्कर्तव्यम् ॥ **कृत्यप्रत्ययान्त इति** ॥ प्राङ्ण्वुलः कृत्य इत्यस्याधिकृततया ऋहलोर्ण्यदित्यनुशिष्टण्यन्तोऽपि कृत्यत्वादिति भावः ॥ **तयोरेवेति** ॥ सूत्रघटकसर्वनाम्नो भावकर्मणोरिति प्रकृततदुभयपरामर्शकत्वादिति भावः । कर्तुरीप्सिततमं कर्मेति सूत्रार्थमनुवदति ॥ **यत्कर्तुरिति** ॥

अनु०— **न भविष्यत्क्रिया कार्यं स्रक्ष्यतीश इति ह्यपि ॥**
**कार्यं स्यात्**

सु०— **न भविष्यत्क्रियेति ॥ देवदत्त कृतः किं त्वया कटः क्रियते वेति पृष्टः प्रत्याह न मया कृतो नापि क्रियते किन्तु कार्य इति । तेन प्राप्नोति भविष्यत्क्रिया कार्यं भविष्यत्त्वावच्छिन्नं क्रियात्वं क्रियागतं भविष्यत्त्वं वा कार्यतेति । तदपि नोपपद्यते । कुत इत्यत आह ॥ स्रक्ष्यतीति ॥ हिशब्दो हेतौ । तथा सतीति शेषः । भविष्यत्क्रिया कार्यमित्यङ्गीकारे हि यस्मादीशो विश्वं स्रक्ष्यति देवदत्तो ग्रामानेष्यतीति वाक्यात्प्रतिपन्नं भविष्य-**

**त्सर्जनादिकमपि कार्यं प्रसज्येत तस्मान्नेति । न च तदपि कार्यं लिङ्गादिवाच्यताऽङ्गीकारात् । किञ्च परसम्बन्धिन्यां वाक्यादितोऽवगतायां भविष्यत्क्रियायां परस्य ममेदं कार्यमिति प्रत्ययोऽपि किं न स्यात् । न हि परं प्रति सा न क्रिया नापि न भविष्यन्तीति । तन्मात्रशरीरा च कार्यताप्रवृत्तिरपि तत्र परस्य प्रसज्येत ॥**

वा० — भविष्यत्क्रियायाः कार्यशब्दाद्रूढ्या प्रसक्तिं दर्शयितुं प्रयोगं दर्शयति ॥ **देवदत्तेति ॥ लिङादीति** ॥ धात्वर्थनिष्ठं कार्यं लिङादिबोध्यमिति परोक्तेरिति भावः ।

स० — **लिङादिवाच्यत्वाङ्गीकारादिति** ॥ कार्यत्वस्येति शेषः । तथा च कार्यत्वस्य लिङ्लोट्तव्यप्रत्ययवाच्यत्वेन स्रक्ष्यतीत्यस्य लृट्त्वेन न कार्यत्ववाचकत्वमित्यर्थः ।

प० — देवदत्तेति संबुद्ध्यन्तम् ॥

या० — **किन्तु कार्यं इतीति** ॥ तथाच भविष्यत्त्वावच्छिन्नक्रियायां कार्यशब्दो रूढ इति रूढ्यैतत्पक्षप्रसक्तिरिति भावः ॥ **लिङादीति** ॥ कार्यताया इति शेषः ।

श्री० — **अङ्गीकारादिति** ॥ स्रक्ष्यतीत्यादौ लिङादेरभावादिति भावः ॥ **परसंबन्धिन्यामिति** ॥ वस्तुगत्या देवदत्तेन कटः कार्योऽस्ति । तत्र परसंबन्धिन्यां देवदत्तसंबन्धिन्यां भविष्यत्क्रियारूपकार्यतायां मया कटः कार्योऽस्तीत्येवं देवदत्तवाक्याद्यज्ञदत्तेनावगतायां सत्यां परस्य यज्ञदत्तस्य ममेदं कार्यमिति प्रत्ययः स्यादित्यर्थः । ननु यज्ञदत्तं प्रति सा न भवतीति चेत्तत्राह ॥ **न हीति** ॥ ननु भवत्येव तत्रापि कार्यताबोध इति चेत्तत्राह ॥ **प्रवृत्तिरपीति** ॥ प्रवर्तकस्य कार्यताज्ञानस्य सत्त्वादित्यर्थः ।

च० — देवदत्त इति सम्बुद्ध्यन्तम् ॥ **कृतेति** ॥ निष्ठात्वं भूताधिकारीयत्वं चेति निष्ठायां धर्मद्वयम् । तत्र प्रथमरूपावच्छिन्नोपस्थापितकर्मतारूपनिष्ठार्थतावच्छेदके निरूपितत्वप्रत्यासत्त्या प्रकृत्युपस्थाप्याद्वितीयरूपावच्छिन्नोपस्थापितसांप्रतिकध्वंसप्रतियोगित्वात्मकातीतत्वरूपविशेषणविशेषिता कृतिरन्वेति ॥ **क्रियते वेति** ॥ लट्त्वं कर्माख्यातत्वं चेति रूपद्वयमाख्याते ॥ तत्र प्रथमरूपावच्छिन्नप्रत्यायितवर्तमानत्वरूपविशेषणाविशेषिता प्रकृतिप्रत्यायितकृतिर्द्वितीयरूपावच्छिन्नप्रत्यायितकर्मलकारार्थतावच्छेदकीभूतकर्मतायां स्वनिरूपितत्वप्रत्यासत्या विशेषणतयाऽन्वेति । **किन्तु कार्यं इतीति** । कट इति पदमनुषञ्जनीयम् । सांप्रतिकप्रागभावप्रतियोगित्वरूपभविष्यत्वे कृत्यप्रत्ययस्य शक्तिग्राहकपाणिनीयाद्यनुशासनवैधुर्येपि तत्तुल्यकक्षापन्नदर्शितव्यवहारावधृततन्निरूपितशक्तिकतया तद्विशेषितकृतिकर्मीभूतः कट इति बोधः । कृञः शचेति सूत्रानुशिष्टशकारात्किन् प्रत्ययान्तौ क्रियावृत्तिशब्दौ तत्र कृतिशब्दः क्वचित्कर्मसाधनः समधि-

गतस्तत्तुल्यकक्षापन्नः क्रियाशब्दोऽपि क्वचित्कर्मसाधनो भवत्येव भावादावित्येव व्याख्यानात् । तथा च मौलक्रियाशब्दस्य कर्मसाधनप्रत्ययाततां ध्वनयितुं किन्तु कार्य इति निरदिक्षत् । निर्देक्ष्यति च कर्तव्यमितिशब्दादेष्यत्कालीनताप्रतीतेरुक्तत्वादिति । एकपदोपस्थापितयोरपि परस्परं विशेषणविशेष्यभावेन व्युत्पत्तिवैचित्र्येणान्वयदर्शनात् । पृथदुपस्थाप्यैकतरभविष्यत्त्वस्यापरतादृशकृतिकर्मणि विशेषणतयान्वयमभिप्रेत्य परिष्कुरुते ॥ **भविष्यत्वावच्छिन्नमिति** ॥ एवं भविष्यत्सर्जनादिकमपि कार्यं प्रसज्येतेत्यपि समञ्जसमेवेति विभावनीयम् । भविष्यत्क्रियायाः कार्यशब्दाद्रूढ्या प्रसक्तिं दर्शयितुं प्रयोगं दर्शयति देवदत्तेतीत्यप्यवतारितम् किन्तु कार्य इतीति प्रतीकमुपादाय । तथा च भविष्यत्वावच्छिन्नक्रियायां कार्यशब्दो रूढ इति रूढ्यैतत्पक्षप्रसक्तिरिति भाव इत्यपि स्थितम् ॥ **लिङादीति** ॥ कार्यताया इत्यादिः ।

अनु० — नैव चाकर्तुमशक्यं कार्यमिष्यते ॥
साम्यादेव निषिद्धस्य

**सु०— नैव चेति ॥ कृत्याश्चेत्यावश्यकार्थे कृत्याः स्मर्यन्ते । आवश्यकत्वं चाकर्तुमशक्यत्वम् । तथा चाकर्तुमशक्यं कार्यं तद्भावश्च कार्यतेति प्रसक्तम् । तच्च प्रामाणिकैर्नैवेष्यते । कुतः । निषिद्धस्य परनारीगमनादेरप्यकर्तुमशक्यत्वसाम्यादेव । भवति हि कस्यचिदतिकामाद्याक्रान्तचेतसो न पराङ्गनागमनेन ब्राह्मणस्य वा हननेन विना स्थातुं शक्नोमीति बुद्धिः । न च तत्कार्यमेव; तस्यैव श्रुतशास्त्रस्यापि कार्यताबुद्धिप्रसङ्गात् । आस्तिककामुको ह्यकार्यमेवेदमकृत्वा स्थातुं नोत्सह इति मन्यते ।**

वा०— अत्रापि योगेन प्रसक्तिं दर्शयति ॥ **कृत्याश्चेति** ॥

**प०—कृत्याश्चेति** ॥ तृतीये 'आवश्यकाधमर्ण्ययोर्णिनिरि'ति पूर्वसूत्रात्प्रकृतावावश्यकेऽर्थे कृत्याश्चेति सूत्रेण कृत्यविधानादिति भावः ॥

**या०—कृत्याश्चेत्यावश्यकेति** ॥ 'आवश्यकाधमर्ण्ययोर्णिनिरि'ति पूर्वसूत्रादावश्यकाधमर्ण्ययोरित्येवेत्यनुवृत्तेः काशिकायामुक्तत्वादिति भावः । ननु श्रुतशास्त्रस्यास्तिककामुकस्य तत्र कार्यताबुद्धिरिष्टैवेत्यत आह ॥ **आस्तिककामुको हीति** ॥

**श्री०**— अत्रापीष्टापत्तिं परिहरति ॥ **आस्तिककामुको हीति** ॥ तस्मान्न तस्य कार्यताबुद्धिरिति भावः ॥

**च०**— **कृत्याश्चेत्यावश्यकेति** ॥ आवश्यकाधमर्ण्ययोर्णिनिरित्यतः आवश्यकाधमर्ण्ययोरित्यंशस्यानुवृत्तिं कृत्याश्चेत्युत्तरसूत्रे वामनः काशिकायामभ्यधादिति भावः ।

**अनु०**— **तदिष्टं साधनं तथा ॥**
**कार्यम्**

**सु०**— **यत एवं न पक्षान्तरसंभवः; तस्मादिष्टत्वमिष्टसाधनत्वं वा कार्यतेत्युपसंहरति ॥ तदिति ॥ अत्रेष्टग्रहणादुपक्रमेऽपि तद्ग्राह्यम् ।**

**ननु 'कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयत' इति परोदीरितं कार्यलक्षणं कुतो न शङ्कितमिति चेन्न । अनेनैव गतार्थत्वात् । तथा हि । किमिदं प्रत्येकं लक्षणमुत मिलितम् । आद्ये कृतिसाध्यत्वस्योक्तो दोषः, कार्यं न हि क्रियाव्याप्यमिति । कृतिप्राधान्यं च किमुच्यते । प्रयत्नोद्देश्यत्वमिति चेत् । तत्किं मुख्यमुतामुख्यम् । आद्यं त्विष्टत्वमेव । द्वितीयं त्विष्टसाधनत्वमेवेत्यङ्गीकृतमेव । न द्वितीयः कृतिसाध्यताविशेषणस्य व्यर्थत्वात् ।**

**वा०**— अस्योपसंहारत्वं घटयितुमाह ॥ **अत्रेति** ॥ ननु परेण कण्ठोक्तं कार्यलक्षणमनिरस्यौत्प्रेक्षिकलक्षणनिरसनं भाष्यकारस्य न चातुरीमावहतीति शङ्कते ॥ **नन्विति** ॥ कृतिसाध्यमित्युक्ते भावार्थे प्रसक्तिरित्यतः प्रधानमित्युक्तम् । तावत्युक्ते फलतः कृतिसाध्यमिति कार्यं न हि क्रियाव्याप्यमिति तदिष्टं साधनं तथेति च निरासाङ्गीकाराभ्यां तदभिमतलक्षणदूषणादेरप्युक्तप्रायत्वान्न पृथगवचनमनौचित्यावहमित्याशयेनाह ॥ **अनेनैवेति** ॥ विशिष्टलक्षणत्वस्य पराभिमतत्वेऽपि साधारणात्कृतिसाध्यं प्रधानमिति परवाक्यात्पराभिप्रायविशेषस्य निश्चेतुमशक्यत्वाद्विकल्प्य तस्योक्तभाष्येण गतार्थतामुपपादयति ॥ **तथा हीति** ॥ कृतिसाध्यत्वमात्रस्य कार्यत्वे स्वकृत्यसाध्येऽपि तस्य सत्त्वेन तत्राप्रवृत्तये स्वकृतिसाध्यत्वस्य तथात्वे वा जीवनादृष्टजन्यस्वकृतिसाध्यप्राणपञ्चकसञ्चारेऽपि तस्य सत्त्वेन तत्राप्रवृत्तये इच्छाधीनस्वकृतिसाध्यत्वस्य तथात्वे वा सुखदुःखाभावरूपफलस्यापि परम्परया कृतिसाध्यत्वात्तत्राप्रवृत्तये साक्षात्कृतिसाध्यत्वस्य च शरीरचेष्टादिद्वारा कृतिसाध्ये लौकिके पाकादौ वैदिके यागादौ यागादिद्वारा कृतिसाध्ये

नियोगे चाभावेन तत्र प्रवृत्तये च चिकीर्षाधीनस्वकृतिसाध्यत्वस्य तथात्वे वा भोजनचिकीर्षाजन्यश्रमेऽप्रवृत्तये स्वविषयकचिकीर्षाजन्यकृतिसाध्यत्वस्य तथात्वे वा कलञ्जभक्षणपरनारीगमनादिरूपनिषिद्धेऽपि स्वविषयचिकीर्षाजन्यकृतिसाध्यत्वस्यापि सत्त्वेन तस्यापि कार्यत्वापातेन तत्रापि प्रवृत्त्यापत्तिदोषो दुष्परिहर एव। एवञ्चान्तिमपक्षातिरिक्तपक्षेषु दोषान्तरसंभवेऽप्यन्तिमपक्षादोषस्य सर्वत्र संभवात्तेनैव सर्वनिरासोपपत्तौ किं दोषान्तरगवेषणयेत्याशयेनाह ॥ **अद्य इति** ॥ अविशेषितस्योक्तरीत्या विशेषितस्य वा कृतिसाध्यत्वस्य मूलोक्तो निषिद्धे प्रवृत्तिप्रसङ्गदोषो वज्रप्रहर एवेत्यर्थः। यद्यपि कृतिसाध्यतार्हत्वं कार्यत्वमित्यपि परेण वक्तुं शक्यम्। तथाऽपि प्रवृत्त्यविषयाद्व्यावृत्तस्य प्रवृत्तिविषयानुगतस्य चेष्टसाधनत्वातिरिक्तस्यार्हत्वस्याभावादिष्टानुत्पत्तिप्रसञ्जकाभूनाभावप्रतियोगिभूता या कृतिस्तद्विषयताप्रयोजकरूपवत्त्वलक्षणस्यार्हत्वस्य चेष्टासाधनाकरणे इष्टानुत्पत्तेरभावेनेष्टसाधनासाधारणस्य तादृशरूपस्यासंभवात् इष्टसाधनासाधारणस्यापि अननुगमेन भोजनत्वयागत्वादिरूपस्यासंभवात् इष्टसाधनाकरणस्यैवेष्टानुत्पत्तिप्रसञ्जकत्वेन भोजनाद्यनुगतस्येष्टसाधनत्वस्यैव तादृशरूपस्य वक्तव्यत्वादिष्टसाधनत्वं कृतिसाध्यत्वमित्युक्तं स्यात्। तथा च कृत्युद्देश्यत्वस्येष्टसाधनत्वे पर्यवसानेन भाष्यकारीयतदङ्गीकारस्य वक्ष्यमाणतया तन्न्यायेनैतादृशकृतिसाध्यत्वाङ्गीकारोऽपि सूचित इति द्रष्टव्यम्। एतादृशकृतिसाध्यत्वस्य कृत्युद्देश्यतानतिरिक्तया प्रत्येकलक्षणत्वस्यमिलितलक्षणस्याप्ययोग इति द्रष्टव्यम्। उद्देश्यत्वं हि फलत्वम्। तथा च प्रयत्नोद्देश्यत्वेष्टत्वेष्टसाधनत्वयोश्च घटकीभूतेच्छाप्रयत्नयोः पुरुषनिष्ठयोर्भेदेऽपि सुखनिष्ठस्य प्रयत्नोद्देश्यत्वस्य मुख्यस्येष्टत्वातिरिक्तस्य यागादिनिष्ठस्यामुख्योद्देश्यत्वस्येष्टसाधनातिरिक्तस्याभावात्तयोश्च भाष्यकृता तदिष्टं साधनमित्यङ्गीकृतत्वान्न तदनुक्तिरित्याह ॥ **तत्किमित्यादिना** ॥ इष्टसाधनतामात्रस्य कार्यत्वरूपत्वं लिङर्थत्वं चेत्यङ्गीकारे दोषाभावेन कृतिसाध्यत्वस्य कार्यत्वरूपत्वे दोषोक्तेश्च कृतिसाध्यत्वविशेषणस्य वैयर्थ्यमित्याह ॥ **कृतीति** ॥

स०— **प्रयत्नोद्देश्यत्वमिति** ॥ यदिच्छया प्रयत्नः तदुद्देश्यत्वमित्यर्थः। आद्यं त्विष्टमेवेत्यादेरयं भावः। अनन्यार्थतयेच्छाविषयस्यैव मुख्यतः प्रयत्नोद्देश्यत्वात् फलस्यैव तादृशत्वात्। तद्विवक्षायां इष्टत्वमेव लभ्यते। अन्यार्थतया प्रयत्नोद्देश्यत्वविवक्षायां इष्टसाधनस्येष्टार्थमित्यविषयीभूतस्यामुख्यतः प्रयत्नोद्देश्यत्वस्य सत्त्वात्। तद्विवक्षायां इष्टसाधनत्वमेव लभ्यत इति ॥ **कृतिसाध्यताविशेषणस्य व्यर्थत्वादिति** ॥ इष्टसाधनत्वमेव लिङर्थः। न तु कृतिसाध्यत्वमपीत्येवाभिप्रेतम्। तत्त्वनिर्णयादौ तु तस्य लिङर्थत्वाभावेऽपि तज्ज्ञानस्यापि करणत्वस्यावश्यकत्वेन तदुक्तिः। न तु तस्यापि लिङर्थत्वाभिप्रायेणेति न तद्विरोध इति ध्येयम्।

प० — **उपक्रमे इति** ॥ इष्टसाधनतां विनेत्यत्रेष्टतां विनेत्यपि ग्राह्यमित्यर्थः । मूले तदित्यस्य तस्मादिति, इष्टमेवेत्यस्येष्टत्वमिति, साधनं तथेत्यस्येष्टसाधनत्वमिति, कार्यमित्यस्य कार्यत्वमित्यर्थस्यावतारिकायामेवोक्तत्वान्न व्याख्यातं मूलमिति ध्येयम् ॥ **अनेनैवेति** ॥ मूलकृदुक्तविकल्पेनैवेत्यर्थः ॥ **उक्त-इति** ॥ 'कार्यं न हि क्रिये'ति कल्पस्य 'निषिद्धस्य समत्वत' इति यो दोष उक्तस्स एवेत्यर्थः ॥ **व्यर्थत्वादिति** ॥ अत्र कर्मनिर्णयतत्वनिर्णयटीकाभ्यां विरोधनिरासस्तर्कताण्डवे कृतिसाध्यत्वविशिष्टेष्टसाधनत्वस्य विधित्वभङ्गे ध्येयः ॥

या० —**उक्तदोष इति** ॥ एतेन यद्यपि कृतिसाध्यत्वमात्रस्य स्वकृत्यसाध्ये परकृतिसाध्ये सत्त्वेन स्वनिष्ठकृतिसाध्यत्वस्य च जीवनादृष्टजन्यस्वकृतिसाध्ये प्राणपञ्चकसञ्चारेऽपि सत्त्वेनेच्छाधीनस्वनिष्ठकृतिसाध्यत्वस्य च फलरूपे सुखे दुःखाभावे च परम्परया सत्त्वेन तत्र प्रवृत्तिप्रसङ्गात् । साक्षात्तादृशकृतिसाध्यत्वस्य च शरीरचेष्टादिद्वारा कृतिसाध्ये लौकिके पाकादौ वैदिके यागादौ चाभावेन तत्राप्रवृत्तिप्रसङ्गान्न कार्यतारूपत्वम् । तथाऽपि स्वविषयकचिकीर्षाधीनकृतिसाध्यत्वं कार्यत्वम् । सुखादौ चेच्छामात्रमुद्देश्यत्वात् । न तु चिकीर्षातो न तत्र प्रवृत्तिप्रसङ्गः । भोजनचिकीर्षाधीनकृतिजन्यश्रमे प्रवृत्तिप्रसङ्गवारणाय स्वविषयकेति चिकीर्षाविशेषणम् । श्रमस्तु भोजनविषयकेच्छाधीनकृतिसाध्य एवातो न तत्र प्रवृत्तिप्रसङ्ग इति यत्तैरुच्यते तदपि निरस्तं वेदितव्यम् । कलञ्जभक्षणादावपि स्वविषयकचिकीर्षाधीनकृतिसाध्यत्वस्य सत्त्वेनास्यापि 'निषिद्धस्य समत्वत' इत्युक्तदूषणलङ्घनाजङ्घालुत्वात् ॥ **प्रयत्नोद्देश्यत्वमिति** ॥ यदिच्छया प्रयत्नस्तदुद्देश्यं तच्चानन्यार्थतयेष्यमाणं मुख्यमिष्टं सुखादिरूपम् । अन्यार्थतयेष्यमाणं त्वमुख्यमिष्टसाधनरूपमित्यर्थः ॥ **अङ्गीकृतमेवेति** ॥ एतेन कृति साध्यतार्हत्वमेव कार्यत्वं तच्च निषिद्धे कलञ्जभक्षणादौ तु सम्भवति ॥ निषेधे ज्ञाते तत्र कृतिसाध्यतार्हत्वस्याननुभवात् । तथाच कथमुक्तपरिशेषः सम्भवतीति । तदपि निराकृतं वेदितव्यम् । प्रवृत्त्यविषयाद्विषभक्षणादितः साक्षादिष्टात्सुखादितश्च व्यावृत्तस्य सुखाद्यर्थमिष्टेषु प्रवृत्तिविषयेषु लौकिकवैदिकभोजनयागादिष्वनुवृत्तस्य चेष्टसाधनत्वादन्यस्यार्हत्वस्याभावेनास्याप्यस्माभिरङ्गीकृतत्वात् । न च यदकरणे इष्टानुत्पत्तिप्रसङ्गस्तत्त्वमेवार्हत्वमिति वाच्यम् । एवं हीष्टानुत्पत्तिप्रसञ्जकीभूताभावस्य प्रतियोगिभूता या कृतिस्तद्विषयताप्रयोजकरूपवत्त्वमर्हत्वमित्युक्तं स्यात् । तच्च रूपं भोजनाद्यनुगतमन्यत्रासंभवतीतीष्टसाधनत्वात्मकमेव । इष्टसाधनाकरणस्यैव कारणाभावत्वेनेष्टानुत्पत्तिप्रसञ्जकत्वात् । तदेव च परिशिष्यमाणमङ्गीकृतमिति कथं परिशेषासिद्धिरिति ॥

श्री० —**उपक्रमेऽपीति** ॥ कार्यता च न काचित्स्यादिष्टसाधनतां विनेत्यत्रार्थाद्दृष्टेष्टसाधनतां विनेति ग्राह्यमित्यर्थः ।

च० — अस्य निगमनवाक्यतां घटयति ॥ **अत्रेति** ॥ अथ प्राभाकराभिहितकार्यतालक्षणमप्रेत्याख्यायौत्प्रेक्षिकतल्लक्षणानि प्रतिविदधानानां भाष्यकृतामनदीप्णुतापद्यत इत्याशङ्कां प्रतिविधित्सयाऽनुवदति ॥ **नन्विति** ॥ **मुख्यमिति** ॥ फलान्तरानुद्देश्यककृतिनिरूपितोद्देश्यताख्यविषयतापन्नमित्यर्थः ॥ **अमुख्यमिति** ॥ तदुद्देश्यकतन्निरूपिततादृशविषयतापन्नमित्यर्थः । इष्टमेव सुखमेव । इष्टसाधनमेव सुखसाधनीभूतस्रगादिकमेव ।

**सु० — एतेनैतदपि निरस्तम् । यदुक्तम् । 'फलसाधनता नाम या सा नैव हि कार्यता । कार्यता कृतिसाध्यत्वं फलसाधनता पुनः । कारणत्वं फलोत्पादे ते भिद्येते परस्परमि'ति ॥ ननु सत्यपि चन्द्रमण्डलादाविष्टसाधनत्वे न कार्यताबुद्धिरिति चेत् । केयं कार्यताबुद्धिः । इष्टसाधनताबुद्धिस्तदतिरिक्ता वा । आद्ये कथं सा नास्ति । द्वितीयो न , अनिरूपणात् ।**

**ननु कार्यज्ञानं प्रवर्तकं नेष्टसाधनज्ञानमिति चेन्न असिद्धेः । अतीतादौ प्रवृत्तिप्रसङ्ग इति चेन्न तस्येदानीमिष्टसाधनत्वाभावात् । अन्यथाऽतीतकार्येऽप्ययं प्रसङ्गस्तुल्य ।**

न्या० — कार्यताफलसाधनतयोरेकार्थनिष्ठत्वेऽपि कार्यतायाः कृतिसाध्यतारूपत्वात्फलसाधनतायाश्च फलोत्पादकारणतारूपत्वात्तयोर्भेद एवेति शालिकानाथोक्तमपि कार्यतायाः कृतिसाध्यत्वरूपत्वाभावस्येष्टसाधनतारूपत्वस्य च व्युत्पादनेन निरस्तमित्याह ॥ **एतेनेति** ॥ ननु चन्द्रमण्डलादौ सत्यपीष्टसाधनत्वे कार्यताबुद्धेरभावेनेष्टसाधनतामात्रस्य कार्यतारूपत्वाभावे सिद्धे चन्द्रमण्डलादिरूपेष्टसाधनव्यावृत्त्यर्थत्वेनैव कृतिसाध्यताविशेषणस्य सार्थक्यमित्याशयेन शङ्कते ॥ **नन्विति** ॥ तत्र कार्यताबुद्ध्यभावोऽसिद्ध इत्याह ॥ **केयमिति** ॥ ननु प्रवर्तकज्ञानविषयस्यैव कार्यत्वात्कृतिसाध्येष्टसाधनताज्ञानस्यैव प्रवर्तकत्वेनेष्टसाधनताज्ञानमात्रस्यातिप्रसञ्जकतयाऽप्रवर्तकत्वात्कथं विशेषणवैयर्थ्यमित्याशयेन गूढाभिसन्धिः शङ्कते ॥ **नन्विति** ॥ अतिप्रङ्गस्य कृतिसाध्यत्वाविशेषणेऽपि सुपरिहरत्वादिष्टसाधनत्वज्ञानमात्रस्याप्रवर्तकत्वासिद्धेरिति गूढाभिसन्धिरेव परिहरति ॥ **असिद्धेरिति** ॥ उभौ स्वाभिसन्धिमुद्धाटयतः ॥ **अतीतादावित्यादिना** ॥ ननु चन्द्रमण्डलादौ कार्यताबुद्धिप्रसङ्गमतिरिक्तकार्यताया अनिरूपणेनेष्टसाधनताबुद्धेश्चेष्टतयेष्टापादनतया निरस्यातीतादौ प्रवृत्तिप्रसङ्गं चेदानीमिति विशेषणेन निरस्य कृतिसाध्यत्वरूपविशेषणस्य वैयर्थ्यव्युत्पादने कृतिसाध्यत्वविशिष्टेष्टसाधनताया कार्यतारूपत्वोक्त्या तदतिप्रसङ्गद्वयपरिहारकतत्त्वनिर्णयकर्मनिर्णयटीकाभ्यां विरोध इति चेन्न । कृतिसाध्येष्टसाधनतायाः कार्यपदार्थत्वप्रवर्तकत्वाभ्युपगमेऽपि न क्षतिः । इष्टसाधनतातिरिक्तकृत्युद्देश्यतारूपायाः कालत्रयानवमृष्टविधिरूपाया वा परा-

भिमतकार्यतायाः कार्यपदार्थत्वप्रवर्तकत्वयोरनभ्युपगमादित्यभ्युपगमवादेन निर्णयटीकयोः प्रवृत्तत्वात् । इह तु कार्यता च न काचित्स्यादित्यनुव्याख्यानानुसारेण कृतिसाध्यत्वविशेषणवैयर्थ्यं प्रतिज्ञाय तदुपपादनाय वस्तुस्थितिमनुरुद्ध्य प्रकारान्तरेणातिप्रसङ्गयोः परिहृतत्वात् । कर्मनिर्णयटीकायां कृतिसाध्यत्वैकार्थसमवायमात्रमिष्टसाधनतायास्तज्ज्ञानमात्रस्यैव प्रवर्तकत्वमित्येवंपरत्वसंभवाच्च । नचैवमिदानीमिति विशेषणेन भूताद्यतिप्रसङ्गनिरासेऽपि चन्द्रमण्डलादाविदानीमिष्टसाधनत्वसद्भावात्प्रवृत्तिप्रसङ्गो दुर्वार इति वाच्यम् । कृत्यसाध्यताज्ञानाभावदशायामिष्टापत्तेः । तज्ज्ञानदशायां तु तस्यैव प्रतिबन्धकत्वात् । न चैवं कृतिसाध्यताज्ञानस्यावश्यकत्वमिति वाच्यम् । कृत्यसाध्यताज्ञानाभावे कृतिसाध्यत्वज्ञानाभावेऽपीष्टसाधनताज्ञानमात्रेण प्रवृत्त्या व्यभिचारेण तस्यानावश्यकत्वात् । न च साक्षादविरोधिनो ज्ञानस्य जनकीभूतज्ञानविघटकत्वेनैव प्रतिबन्धकतया कृत्यसाध्यत्वज्ञानस्य प्रतिबन्धकत्वे कृतिसाध्यत्वज्ञानस्य हेतुत्वमनिवार्यमिति वाच्यम् । फलेच्छाया अभावे फलं दैवादन्यकृतितो वा भवत्वितीच्छायां वा कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञाने सत्यपि कृत्या फलं साधयिष्यामीति कृतिसाध्यत्वप्रकारकफलेच्छाया अभावेन प्रवृत्त्यभावेन तादृशेच्छाया आवश्यकत्वात्प्रवृत्तिजनकीभूतफलेच्छाविघटकत्वेन वाऽत्यन्तान्योन्याभावगर्भव्याप्तिज्ञानेऽन्योन्यात्यन्ताभावगर्भव्यभिचारज्ञानस्यैव मणिमन्त्रादिवत्स्वरूपेण वा प्रतिबन्धकत्वोपपत्त्या जनकीभूतज्ञानविघटकत्वनियमाभावेन कृतिसाध्यत्वज्ञानहेतुतानापत्तेः । अन्यथा बलवदनिष्टानुबन्धित्वज्ञानस्य प्रतिबन्धकतया तादृशानिष्टाननुबन्धित्वज्ञानस्यापि प्रवृत्तिहेतुता स्यात् । न चेष्टापत्तिः । तादृशज्ञानाभावेऽपि बलवदनिष्टानुबन्धित्वज्ञानाभावमात्रेणेष्टसाधनताज्ञानादेव प्रवृत्तेरनुभवसिद्धत्वात् । बलवदनिष्टानुबन्धित्वज्ञानस्य चोक्तावश्यकफलेच्छाविघटकत्वेन प्रतिबन्धकत्वं तादृशफलेच्छाभावेनैव च विषसम्पृक्तभोजनादावप्रवृत्तिश्च । एवञ्च कृतिसाध्यताज्ञानस्याहेतुत्वाद्युक्तमुक्तं कृतिसाध्यत्वविशेषणस्य वैयर्थ्यादीति दिक् ॥ **अन्यथेति** ॥ कार्यताज्ञानस्य प्रवर्तकत्वं वदताऽप्यतीतकार्ये प्रवृत्तिप्रसङ्गस्येदानीमिति विशेषणविवक्षां विना प्रकारान्तरेण परिहर्तुमशक्यत्वादिति भावः ।

स० — **एतेनेति** ॥ कार्यं न हि क्रियाव्याप्यमित्यादिना कृतिसाध्यत्वस्य कार्यत्वनिराकरणेनेत्यर्थः । तथा च यत्कार्यतारूपं कृत्युद्देश्यत्वं न तत्फलसाधनत्वात् भिन्नं यत्तु भिन्नं कृतिसाध्यत्वं न तत्कार्यत्वमिति तस्य फलसाधनत्वतो भेदकथनम् । व्यधिकरणमिति भावः । यद्यपि यागादिरूपमेकमेववस्तुकृतिसाध्यं फलसाधनं च । तथापि तन्निष्ठयोः कृतिजन्यत्वफलजनकत्वात्मकयोः कृतिसाध्यत्वफलसाधनत्वयोर्धर्मयोर्भेद एवेति श्लोकार्थः ॥ **नन्विति** ॥ ततश्च नेष्टसाधनत्वं कार्यत्वमिति तयोर्भेद इत्यर्थः । नन्वतीतादौ प्रवृत्तिप्रसङ्गेनेष्टसाधनताज्ञानस्याप्रवर्तकत्वात् कार्यताज्ञानस्य च प्रवर्तकत्वात्

इष्टसाधनतातिरिक्तं कार्यत्वमवश्यमङ्गीकार्यमित्यभिप्रायेण गूढाभिसन्धिः शङ्कते ॥ **ननु कार्यताज्ञानमिति** ॥ कृतिसाध्यतादिरूपकार्यताज्ञानस्यापि प्रवर्तकत्वे अतीतादौ प्रवृत्तिप्रसङ्गेन तत्परिहारायेदानीं कृतिसाध्यताज्ञानस्यैव तथात्वस्य परेणाङ्गीकार्यत्वात्तन्न्यायेनेदानीमिष्टसाधनताज्ञानस्यातीतादावभावेन प्रवृत्त्यभावोपपत्त्या तस्यापि प्रवर्तकत्वान्नेष्टसाधनत्वकार्यत्वयोर्भेद इत्यभिसन्धाय गूढाभिसन्धिरेव परिहरति ॥ **असिद्धेरिति** ॥ इष्टसाधनताज्ञानस्याप्रवर्तकत्वासिद्धेरित्यर्थः । पूर्वपक्षी स्वाशयमुद्घाटयति ॥ **अतीतादाविति** ॥ सिद्धान्त्यपि स्वाशयमुद्घाटयति ॥ **तस्येति** ॥ **अन्यथेति** ॥ नन्वतीतस्येदानीं कृतिसाध्यत्वाभावेन तद्विवक्षयातीते प्रवृत्तिप्रसङ्गनिराकरणेन कृतिसाध्यताज्ञानस्य संभवेऽपि इदानीमिष्टसाधनताज्ञानस्य चन्द्रमण्डलादावपि सत्त्वेन तत्र प्रवृत्तिप्रसङ्गेन इष्टसाधनताज्ञानस्य प्रवर्तकत्वमनुपपन्नमिति चेन्न । कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वेन तदभावे इदानीमिष्टसाधनताज्ञानस्य प्रवर्तकत्वोपपत्तेः ।

प०—**एतेनेति** ॥ कृतिसाध्यत्वस्य निषिद्धेऽपि समत्वादितिकथनेनेत्यर्थः । न **कार्यताबुद्धिरिति** पदच्छेदः ।

या०— **एतेनेति** ॥ कृतिसाध्यत्वस्य कार्यतारूपत्वनिराकरणेनेत्यर्थः । तथाच कृतिसाध्यत्वस्योक्तरीत्याकार्यतारूपत्वाभावेनात्र तस्य फलसाधनताभेदकथनं प्रकृतानुपयुक्तमिति भावः । यद्यपि यागादिरूपमेकमेव वस्तु कृतिसाध्यं फलसाधनं च । तथाऽपि तन्निष्ठयोः कृतिजन्यत्वफलजनकत्वात्मकयोः कृतिसाध्यत्वफलसाधनत्वयोर्धर्मयोर्भेद एवेति श्लोकार्थः । तस्मिन्सत्यप्यस्यासत्त्वाद्भेद एव तयोरित्याशयेन शङ्कते ॥ **नन्विति** ॥ यद्यपि न कार्यतेत्येव वक्तव्यम् । तथाऽपि तदुपपादनाय बुद्धिप्रतिषेध इति ज्ञातव्यम् । प्रवर्तकज्ञानविषयत्वतदभावरूपविरुद्धधर्माधिकरणत्वात्तयोर्भेद आवश्यक इत्याशयेन शङ्कते ॥ **ननु कार्यज्ञानमिति** ॥ **असिद्धेरिति** ॥ इष्टसाधनज्ञानस्यापि प्रवर्तकत्वेनोक्तहेतोरसिद्धिरित्यर्थः ।

श्री०— फलसाधनत्वं नाम किमित्याशङ्कायां फलोत्पादे कारणत्वमेवेत्याह ॥ **कारणत्वमिति** ॥ **ते भिद्येते इति** ॥ फलसाधनत्वं कार्यतारूपं कृतिसाध्यत्वं च भिन्नमेवेत्यर्थः ॥ **एतेनेति** ॥ कृतिसाध्यत्वरूपकार्यत्वस्य निषिद्धत्वस्य समत्वतः इत्यनेन निराकरणेनेत्यर्थः । इष्टसाधनत्वं न कार्यतेत्याशङ्कते ॥ **ननु सत्यपीति** ॥ **ननु कार्यज्ञानमिति** ॥ तथाच नेष्टसाधनत्वं कार्यत्वमित्यर्थः । इष्टसाधनत्वं कार्यत्वमित्यर्थः ॥ **असिद्धेरिति** ॥ कार्यताज्ञानस्य प्रवर्तकत्वासिद्धेरित्यर्थः । इष्टसाधनताज्ञानस्य प्रवर्तकत्वे बाधकमाशङ्कते ॥ **अतीतादाविति** ॥ अतीतभोजनादावित्यर्थः ॥ **इदानीमिति** ॥

विशेषणं तवाप्यावश्यकमित्याह ॥ **अन्यथेति** ॥ कार्ये भोजने । अयं प्रसङ्गः प्रवृत्तिप्रसङ्गः । तर्हि चेदानीं कृतिसाध्यत्वं नास्तीति प्रवृत्तिप्रसङ्गः परिहर्तव्यः सोऽस्माकमपि तुल्य इत्यर्थः ॥

च० — कार्यताफलसाधनतयोः सामानाधिकरण्येऽपि कार्यतायाः कृतिसाध्यतारूपत्वात्फलसाधनतायाश्च तदुत्पादकारणतारूपत्वान्न तयोरन्योन्यतादात्म्यमिति प्राभाकरैकदेश्युक्तमपि कृतिसाध्यत्वस्य कार्यतारूपत्वनिराकरणेनैव प्रतिविहितमित्याह ॥ **एतेनेति** ॥ उक्तदिशा कृतिसाध्यतायाः कार्यतानात्मकतया तत्र फलसाधनताभेदप्रतिपादनं मन्दप्रयोजनमिति भावः । परस्परसमानाधिकरणयोस्तयोरन्योन्यं भेद एवेति कारिकार्थोऽवसेयः । कार्यता नेष्टसाधनतारूपा । तत्समानाधिकरणाभावप्रतियोगित्वादित्याशङ्कते ॥ **नन्विति** ॥ कार्यताराहित्यस्य सप्रमाणतां ध्वनयितुं बुद्धिपर्यन्तानुधावनम् । कार्यतेष्टसाधनतेन्योन्यप्रतियोगिकभेदवत्यौ प्रवृत्तिहेतुभूतज्ञानविषयत्वतदविषयत्वरूपविरुद्धधर्माधिकरणत्वाद्दहनतुहिनवदित्याशङ्कते ॥ **नन्विति** ॥ **असिद्धेरिति** ॥ इष्टसाधनताज्ञानस्यापि प्रवृत्त्यौपयिकत्वादिति भावः ।

**सु० — किञ्च कृतिसाध्यत्वं कृत्युद्देश्यत्वमिष्टसाधनत्वं चेत्येकार्थसमवायिनस्त्रयो धर्माः । तत्र कृतिसाध्यतावच्छिन्नं कृत्युद्देश्यत्वं कार्यत्वम् ; तदवगमस्त्विष्टसाधनतावगमनिबन्धन इति परस्य मतम् । यथाऽऽह 'किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् । फलसाधनता तत्र कारणं तेन कार्यते'ति । तथा चेष्टसाधनताज्ञानात्प्रवृत्ताविव कार्यताऽवगमेऽपि कथं नातीतादावतिप्रसङ्गः ।**

न्या० — एवमिष्टसाधनताज्ञानस्य प्रवर्तकत्वेऽतिप्रसङ्गस्य कार्यज्ञानस्य प्रवर्तकत्वेऽप्यतिप्रसङ्गस्तुल्य इति प्रतिबन्ध्येदानीमिति विशेषणस्यावश्यकतोपपादनेन परिहार उक्तः । अधुनेष्टसाधनताज्ञानस्य कार्यताज्ञानप्रयोजकत्वं वदता त्वयाऽप्यतीतादौ कार्यताज्ञानप्रसङ्गपरिहारायेदानीमितीष्टसाधनाताज्ञानस्यावश्यविवक्षणीयतया तुल्यन्यायतया तज्ज्ञानस्य प्रवर्तकत्वेऽप्यतिप्रसङ्गपरिहारः सुशक इति प्रकारान्तरेण प्रतिबन्द्या तदावश्यकतामाह ॥ **किं चेति** ॥ **यथाऽऽहेति** ॥ फलसाधनता नामेत्यादिना फलसाधनताकार्यतयोर्भेद उक्तः । तत्र फलसाधनताकार्यतयोर्भेदे फलसाधनेष्वेव कथं कार्यतामतिनियम इत्याशयेन शङ्कते ॥ **किन्त्विति** ॥ तयोर्भेदेऽपि फलसाधनेष्वेव कार्यतामतिनियम उपपद्यते यतो यत्कर्म कार्यतां व्रजेत्तत्स्वयं क्लेशरूपमेव । न हि दुःखाकरस्य कार्यतोपपद्यतेऽतः फलसाधनताकार्यतायां

ज्ञप्तिकारणमित्याश्रीयतेऽतो नियमोपपत्तिः । तदेव विवृणोति ॥ **तेनेति** ॥ अथवा फलसाधनता कथं तत्र कारणं प्रवृत्तिकारणत्वेन केषाञ्चित्तदभ्युपगमादित्यतस्तेनेति । तेन कार्यताऽस्य भवति न प्रवृत्तिरिति शालिकानाथ इष्टसाधनताज्ञानस्य कार्यताज्ञानहेतुतामाहेत्यर्थः ।

**स०**— यत्रेष्टसाधनत्वेन प्रवृत्तिप्रसङ्ग आपादितो भवता । तत्रेष्टसाधनं भवन्मतेन कार्यत्वाविनाभूतमिति प्रवृत्तिप्रसङ्गः तदवस्थ इत्याशयेनाह ॥ **किं चेति** ॥ **यथाहेति** ॥ कर्मणां क्लेशरूपत्वात् । फलसाधनत्वाभावे कार्यतानुपपत्तेः । कार्यत्वनिष्पादनार्थं फलसाधनाज्ञापकत्वेनाश्रीयते । न च ज्ञाप्यज्ञापकयोरभेद इत्यर्थः ॥ **तेन कार्यतेति** ॥ अनुमेयेति शेषः ॥ **तथा चेति** ॥ इष्टसाधनत्वज्ञाप्यं कार्यत्वं इष्टसाधनेऽतीतादौ स्यादेवेति भावः ।

**प०**— परमुखेनैवातीतादावप्रसङ्गादि वाचयति ॥ **किञ्चेत्यादिना** ॥ **परस्येति** ॥ प्राभाकरस्येत्यर्थः ॥

**या०**— ते मिथेते परस्परमिति पूर्वश्लोके कृतिसाध्यत्वस्यैव कार्यतारूपत्वोक्तौ कथं तर्हि यागादेः क्लेशरूपस्य कृतिसाध्यत्वं ज्ञातव्यमित्यभिप्रेत्य शङ्कते ॥ **किं त्विति** ॥ उत्तरमाह ॥ **फलसाधनतेति** ॥ तत्र कृतिसाध्यताज्ञाने । एतदेव विवृणोति ॥ **तेन कार्यतेति** ॥ ज्ञातव्येति शेषः । यद्वा यतः फलसाधनता तत्र कारणं प्रयोजकमतस्तेन प्रयोज्यभूता कार्यतानुमेयेत्यर्थः ।

**श्री०**— **तेन कार्यतेति** ॥ इष्टसाधनत्वेनोक्तरूपा कार्यतानुमेयेति शेषः ॥ **प्रवृत्ताविवेति** ॥ इष्टसाधनताज्ञानस्य प्रवर्तकत्वाङ्गीकारे यथाऽतीतादौ प्रवृत्तिप्रसङ्गरूपोऽतिप्रसङ्गः समायाति, एवं तेन कार्यतानुमेयेति पक्षेऽप्यतीतभोजनादावपीष्टसाधनतासद्भावेन कार्यतानुमानापत्तिरित्यर्थः ।

**च०**— इदानींतनकृतिसाध्यताज्ञानस्य यथा त्वया प्रवर्तकतावश्योपेया; तद्वदिदानींतनेष्टसाधनताज्ञानस्य सा ममापि सुवचेति समाधाय संप्रति ज्ञाप्यज्ञापकभावमुपगच्छतेदानीमिति यथा विशेषणं पूर्यते तद्वन्मयापि तत्पूरणं सुकरमित्याशयेनाह ॥ **किं चेत्यादि** ॥

**सु०— न तत्रेष्टसाधनतामात्रं गमकं किन्तु कृतिसाध्यतावच्छिन्नम्; गम्यं तु कृत्युद्देश्यत्वमात्रमिति चेत् । तथाऽपि भूताद्यतिप्रसङ्गानिवारणात् । न हि भूतादिकं न कृति-**

साध्यम् । तथा सति कथं तत्ततो जातम् ॥ तथाऽपि नेदानीं कृतिसाध्यमिति चेत् । इष्टसाधनत्वमपि तथेति व्यर्थं विशेषणम् ॥ गम्यगमकयोः कथं न भेद इति चेन्न । तद्भावस्यैवानभ्युपगमात् ॥ ननु तथा सति लोकविरोधः स्यात् । तथा हि । लौकिका हीदं मे कार्यमित्युक्त्वा कुत इति पृष्टा इष्टसाधनत्वादिति हेतुमाचक्षत इति चेन्न । द्विविधं खलु कार्यमिष्टमिष्टसाधनं च । तत्रेष्टसाधनत्वादिति विवक्षितकार्यव्याख्यानं लौकिकानाम् ॥

किञ्च प्रथममिष्टसाधनताज्ञानं ततश्चेच्छा ततः प्रयत्नस्ततः परिस्पन्द इत्यात्मन्येवैकार्थविषया धर्मा जायन्ते । न त्वर्थे कश्चिदतिशयोऽनुभूयते । योऽभिमतसाधनतयाऽनुमीयत इति ॥

वा० — इदानीमित्यविवक्षायामपि प्रकारान्तरेणातिप्रसङ्गपरिहारसंभवान्न प्रतिबन्दीग्रहणं युक्तमित्याशङ्कते ॥ **न तत्रेति** ॥ प्रकारान्तरासंभवमाह ॥ **तथाऽपीति** ॥ कृतिसाध्यत्वरूपविशेषणं विवक्षित्वाऽपीदानीमिति विवक्षाया आवश्यकत्वे इष्टसाधनत्व एव तद्विवक्षयाऽतिप्रसङ्गपरिहारसंभवे कृतिसाध्यत्वविशेषणं गमके व्यर्थमित्याह ॥ **इष्टेति** ॥ ननु माऽस्तु कृतिसाध्यत्वमिति विशेषणमिदानीमिष्टसाधनत्वमेवास्तु कार्यतागमकम् । तथाऽपि गम्यगमकभावादेव भेदसिद्धेरिष्टसाधनतैव कार्यतेत्युक्तहानिरेवेत्याशयेन शङ्कते ॥ **गम्येति** ॥ कार्यत्वेष्टसाधनत्वयोर्गम्यगमकभावं वदता त्वयाऽपीष्टसाधनत्वे इदानीमिति विशेषणं विवक्षणीयमिति प्रवर्तकत्वेऽपि तद्विवक्षया नातिप्रसङ्ग इत्यत्रैव तात्पर्यं न तु तयोर्गम्यगमकभावेऽपीत्याशयेनाह ॥ **तद्भावस्येति** ॥

एवं गम्यगमकाभावानभ्युपगमे बाधकमुद्धृतम् । अधुनेष्टसाधनताज्ञानेच्छाप्रयत्नपरिस्पन्दानामेकार्थविषयाणां क्रमिकाणामात्मन्येव जायमानतया तत्तद्विषयत्वस्य तत्तत्सामग्रीजन्यस्य तत्सिद्धिनिबन्धनसिद्धिकस्येष्टसाधनतासाध्यविषयनिष्ठातिशयरूपत्वाभावाद्विषयनिष्ठस्य कृतिसाध्यत्वस्य च कार्यतागमककोटौ त्वया निवेशस्याभ्युपगमादिष्टसाधनतागम्यत्वासंभवाच्च कृत्युद्देश्यत्वस्य चेष्टयागादिनिष्ठस्येष्टसाधनत्वातिरिक्तस्याभावेन त्वदभिमतकालत्रयानवमृष्टकार्यस्य चासत्कल्पनाया वक्ष्यमाणत्वाच्च गम्यस्यैवाभावादेकयोर्गम्यगमकभाव इति तदभ्युपगमे बाधकमाह ॥ **किञ्चेति** ॥

स० — ननु कृतिसाध्यत्वे सति कृत्युद्देश्यत्वस्य इष्टसाधनत्वं गमकमिति न ब्रूमः । येनातीतादौ गमकवति गम्यत्वापत्तेरतिप्रसङ्गः स्यात् । किन्तु कृत्युद्देश्यत्वमात्रस्य कृतिसाध्यत्वे सतीष्टसाधनत्वं गमकम् । तथा चातीतादौ कृतिसाध्यत्वाभावात् विशिष्टज्ञापकाभावात् गम्यं कृत्युद्देश्यत्वमपि नास्तीति शङ्कते ॥

॥ **नेति** ॥ विशिष्टज्ञापकाभावः अतीतादावसिद्ध इत्याह ॥ **न हीति** ॥ **व्यर्थविशेषणमिति** ॥ कृतिसाध्यत्वरूपमित्यर्थः । ननु कार्यत्वे इष्टसाधनत्वस्य हेतुत्वस्य लोकसिद्धत्वात् कथं तयोरभेद इति गूढाभिसन्धिः शङ्कते ॥ **गम्यगमकयोरिति** ॥ तथैव परिहरति ॥ **तद्भावस्येति** ॥ पूर्ववादी स्वाशयमुद्घाटयति ॥ **तथा सतीति** ॥ तथैव सिद्धान्त्यप्याह ॥ **नेति** ॥ वर्तमानेऽप्यर्थेऽयमर्थ इष्टसाधनमित्यादिज्ञानम् । न त्वर्थे कश्चिदतिशय इत्याह ॥ **किं चेति** ॥ साधनेच्छाप्रयत्नरूपप्रवृत्तिप्रयोजको यागादाविष्टसाधनत्वातिरिक्तकृत्युद्देश्यत्वरूपो धर्मो नास्त्येव फलस्यैवोद्देश्यत्वेन तत्साधने स्वत एवोद्देश्यताया अभावात् । तदुद्देश्यताया उद्देश्यसाधनतापर्यवसायित्वात् यागादाविष्टसाधनत्वेन कृत्युद्देश्यत्वानुमानं न संभवति साध्यहेत्वोरभेदेन सन्दिग्धासिद्धेरिति भावः । एतदेवाभिप्रेत्य कर्मनिर्णयटीकायां केवलमिच्छाप्रयत्नोपाधी भिद्येते न त्वर्थे कश्चिदतिशयोऽनुभूयत इत्युक्तम् ॥

**प०— व्यर्थं विशेषणमिति** ॥ कृतिसाध्यत्वावच्छिन्नत्वविशेषणमित्यर्थः । विवृतमेतत्सर्वं निपुणतरं कार्यताज्ञानस्य प्रवर्तकत्वभङ्गे तर्कताण्डवे द्वितीयपरिच्छेदे ॥

**या०— मतान्तरमाशङ्कते** ॥ **न तत्रेष्टसाधनतामात्रेति** ॥ **व्यर्थमिति** ॥ आवश्यकेनेदानीमिति विशेषणेनैव भूतादावतिप्रसङ्गभङ्गे सति तन्निवृत्त्यर्थं कृतिसाध्यताविशेषणं व्यर्थमित्यर्थः । न तु प्रवर्तकज्ञानेऽपीदं विशेषणं व्यर्थमित्यर्थः । इदानीमिष्टसाधने चन्द्रमण्डलादावतिप्रसङ्गभङ्गाय कृतिसाध्यत्वविशेषणस्यापि प्रवृत्त्यर्थमावश्यकताया अन्यत्रोक्तत्वात् । अत एवास्य वाक्यस्य कृतिसाध्यैकार्थसमवेतेष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तेरिति कर्मनिर्णयटीकया कृतिसाध्येष्टसाधनतायाः कार्यतापरपर्यायत्वादिति विष्णुतत्त्वनिर्णयटीकया च न विरोधः । अत्रापि प्रवर्तकज्ञाने कृतिसाध्यत्वविशेषणस्य चन्द्रमण्डलादावनतिप्रसङ्गायावश्यकत्वस्याभिप्रेतत्वात् । वैयर्थ्योक्तेश्च भूताद्यतिप्रसङ्गवारणमात्राभिप्रायकत्वात् । अन्ये तु निर्णयटीकयोः प्रवर्तकज्ञाने कृतिसाध्यत्वविशेषणमावश्यकमित्यभिप्रायः । सुधायास्तु कृतिसाध्यत्वस्य लिङाद्यर्थतायामेव वैयर्थ्यं न प्रवर्तकज्ञानेऽपीत्यभिप्रायः । अत एव लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति कर्मनिर्णये भगवत्पादीयवचनमित्याहुः । यद्वा इष्टसाधनताज्ञानमेव प्रवर्तकं न कृतिसाध्यत्वमपि प्रवर्तकज्ञाने विवक्षितं व्यर्थत्वात् । न चैवं तक्षकचूडामण्याहरणादौ प्रवृत्तिप्रसङ्गः । तत्कृतिसाध्यताज्ञानदशायां प्रवृत्त्यापादने इष्टापत्तेः । तदसाध्यत्वज्ञानदशायां त्वावश्यक्याः कृत्या फलं साधयिष्यामीति कृतिसाध्यत्वप्रकारिकायाः फलेच्छाया अभावादेवाप्रवृत्तेः । न हि साधने कृत्यसाध्यत्वेन ज्ञाते फले कृतिसाध्यत्वं ज्ञातुं शक्यम् । न च फलस्य कृतिसाध्यत्वाज्ञाने फले तत्प्रकारिकेच्छा-

युक्ता । न च कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानस्य प्रवर्तकत्वाङ्गीकारेणैव सामञ्जस्ये नोक्तफलेच्छाया आवश्यकत्वमिति वाच्यम् । उक्तविशिष्टज्ञाने सत्यप्युक्तफलेच्छारहितस्य चेतनस्याप्रवृत्तेः । दृश्यते हि फलं दैवादन्यकृतितो वा मम सिध्यत्वितीच्छायामुक्तविशिष्टज्ञाने सत्यप्युक्तफलेच्छाभावेन प्रवृत्त्यभावः । एवं च यागादेः कृतिसाध्यताज्ञानं फलं कृत्या साधयिष्यामीति कृतिसाध्यत्वप्रकारिका या आवश्यकी-फलेच्छा तदुत्पादनोपक्षीणं न तु प्रवर्तकम् । तथाच कृतिसाध्यत्वज्ञानस्य साक्षात्प्रवृत्त्युपयोगनिषेधकोयं ग्रन्थः । निर्णयटीके तु परम्परया तदुपयोगपरे इति न विरोधः । नन्वेवमपि क्रियायाः कृतिसाध्यत्वज्ञानं प्रवृत्त्यमर्थमावश्यकम् । अन्यथोक्तफलेच्छाया एवासंभवादिति चेत् । सत्यम् । न तु द्विविधप्रत्यय-जन्यम् । क्रियायाः कृतिसाध्यत्वस्य कृत्यन्वयव्यतिरेकगम्यत्वेन तत्र लिङादिशक्तेरकल्पनात् । न हि यजेतेत्यादिशब्दः स्वर्गादिकामस्य यागादिः कृतिसाध्य इत्याह । किं त्विष्टसाधनमित्येव । तत्र शक्तः प्रवर्ततेऽशक्तस्तु नेत्येवानुभवसिद्धम् । किञ्च कृतिसाध्यत्वे सतीष्टसाधनत्वं न लिङाद्यर्थः । साध्यत्व-साधनत्वयोः प्रतियोगिभेदेन कालभेदेन चाविरोधेऽपि सकृत्प्रयुक्तेन लिङादिना वृत्तिं विनोपस्थित्यसंभ-वात् । नन्वेवमपि सविषान्नभोजनादौ निषिद्धेऽगम्यागमनादौ च प्रवृत्तिप्रसङ्ग इति चेन्न । विकल्पा-सहत्वात् । तथाहि । किमगम्यागमनादिजन्ये सुखादावौत्कट्येन तज्जन्ये दुःखे यस्य द्वेषो नास्ति तस्य प्रवृत्तिरापाद्यते, यस्य तज्जन्ये दुःखे द्वेषौत्कट्येन तज्जन्ये सुखे नेच्छा तस्य वा । नाद्यः रागान्धस्य प्रवृत्तिदर्शनेनेष्टत्वात् । न द्वितीयः तत्रेष्टसाधनत्वस्यैवाभावात् । इष्टसाधनत्वं हीच्छाविषयसाधनत्वम् । तत्कथं तज्जन्ये सुखे इच्छाविरहे भवेत् । न चैवमिच्छाज्ञानस्यापि प्रवर्तकत्वापत्तिः । न हि इच्छाविषय-साधनमेतदिति ज्ञानं प्रवर्तकं येनोक्तदोषः । किंनाम स्वरूपसती यत्रेच्छा तत्साधनताज्ञानमेव । इदं चाचार्याभिप्रेतमेव । कथमन्यथा 'कार्यं न हि क्रियाव्याप्यं निषिद्धस्य समत्वत' इत्यादिना क्रिया-व्याप्यत्वादेर्निषिद्धसाम्येन कार्यतारूपत्वं निराकृत्य 'तदिष्टं साधनं तथा कार्यमि'तीष्टसाधनत्वयोः कार्यतारूपत्वमुक्तमुपपन्नं स्यात् । एतेनेष्टसाधनताज्ञानं न प्रवर्तकम् । परेष्टसाधनमिति ज्ञानेऽपि प्रवृत्त्य-भावात् । नापि स्वेष्टसाधनमिति ज्ञानम् । इष्टसामान्यत्वज्ञानेनेष्टविशेषस्वर्गादिसाधनयागादावप्रवृत्तेः । किन्तु स्वर्गो मेऽस्त्वित्यादीच्छाप्रकारीभूतस्वर्गादिविशिष्टं प्रति साधनत्वेन ज्ञानम् । एवंच प्रवर्तकज्ञाना-नामननुगम इति निरस्तम् । स्वरूपसदिच्छाविषयसाधनत्वज्ञानत्वेन तेषामनुगमात् । एतेन निषिद्धादौ प्रवृत्तिप्रसङ्गपरिहाराय चिन्तामणिकारेणोक्तं बलवदनिष्टाननुबन्धित्वेन वेष्टोत्पत्तिनान्तरीयकदुःखाधिक-दुःखाजनकत्वेन वेष्टोत्पत्त्यनान्तरीयकदुःखाजनकत्वेन वा विशिष्टमेवेष्टसाधनत्वं विधिप्रत्ययगम्यं प्रवर्तकम् । अत्र यद्यप्याद्ये बलवत्त्वमनुगतमेकं नास्तीति द्वितीयेऽप्यक्लेशरूपे रामस्मरणादौ तत्साध्येष्टोत्पत्तिनान्तरीयकं दुःखमप्रसिद्धमिति शङ्का । तथाऽपि तृतीये न काऽपि शङ्केति । तदपि तुच्छम् । उक्तरीत्या प्रवृत्ता-

ववश्यापेक्षितायाः फलेच्छाया एव तत्राभावेन स्वरूपसदिच्छाविषयसाधनत्वज्ञानस्यैवाभावेनाप्रवृत्त्युपपत्तौ उक्तविशेषणत्रयस्यानपेक्षितत्वात् । तस्माल्लिङादिना यागादाविष्टसाधनतयाऽवगते यागादिर्मत्कृतिसाध्यो मत्कृतिं विनाऽसत्त्वादिति मानान्तरेणात्र कृतिसाध्यतावगमे स्वर्गादिफलं कृत्या साधयिष्यामीति फलेच्छायां च सत्यां यागादौ प्रवृत्तिर्भवतीत्यनुभवादनन्यलभ्यमिष्टसाधनत्वमेव विधिप्रत्ययबोध्यं साक्षादेव प्रवर्तकम् । कृतिसाध्यत्वं तु मानान्तरगम्यं तस्य न साक्षात्प्रवर्तकत्वं किं तूक्तफलेच्छाजनकतयान्यथासिद्धमिति साधूक्तं कृतिसाध्यताविशेषणस्य व्यर्थत्वादिति ॥ केचित्तु तक्षकचूडामण्याहरणादौ कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति कृतिसाध्यत्वज्ञानं प्रतिबन्धकनिरासोपक्षीणमतो न तत्साक्षात्प्रवृत्तिजनकं किं त्विष्टसाधनत्वज्ञानमेवेत्यस्य वाक्यस्य भावमाहुः । तच्चिन्त्यम् । इष्टसाधनताज्ञानस्यापि प्रवृत्तिप्रतिबन्धकत्वेनेष्टसाधनताज्ञानमपि प्रतिबन्धकनिरासोपक्षीणमिति वक्तुं शक्यत्वात् ।

श्री० — अतिप्रसङ्गपरिहारमाशङ्कते ॥ **न तत्रेति** ॥ गमकं कार्यतानुमापकम् । येनातीतादावपि तेन कार्यतावगमापत्तिरित्यर्थः ॥ **भूतादीति** ॥ अतीतादीत्यर्थः । कृतिसाध्यत्वविशेषणमपि तत्रास्तीत्याह ॥ **न हीति** ॥ ततो जातं कृतितो जातम् ॥ **व्यर्थमिति** ॥ इदानीमिति विशेषणेनैव भूताद्यतिप्रसङ्गपरिहारस्य जातत्वात्कृतिसाध्यत्वविशेषणं व्यर्थमित्यर्थः । अस्मन्मते इष्टसाधनत्वस्यैव कार्यत्वे चन्द्रमण्डलादावपि प्रवृत्तिप्रसङ्ग इति न वाच्यम् । प्रवर्तकाभावात् । कृतिसाध्यत्वे सति कृत्युद्देश्यत्वरूपकार्यतायाः प्रवर्तकत्वाङ्गीकारात् । तस्याश्च तत्राभावात् । तथा च लिङ्वाच्यं कार्यत्वमिष्टसाधनत्वं प्रवर्तककार्यत्वाद्भिन्नम् । प्रवर्तककार्यत्वं च ततो भिन्नमित्येवं कार्यद्वयमङ्गीकृतमिति न कश्चिद्दोषः । कार्यता च न काचित्स्यादिष्टसाधनतां विनेत्येतदयुक्तमिति शङ्कते ॥ **गम्यमगमकयोरिति** ॥ कार्यत्वं गम्यम् । इष्टसाधनत्वं गमकम् । तथा च कथं तयोरैक्यमित्यर्थः ॥ **तद्भावस्यैवेति** ॥ गम्यगमकभावस्यैवेत्यर्थः । व्याख्याने बीजमाह ॥ **द्विविधमिति** ॥ योऽतिशयः कार्यताख्यः ॥ **अभिमतसाधनतयेति** ॥ इष्टसाधनत्वेन हेतुनाऽनुमीयेतेत्यर्थः ।

च० — **व्यर्थं विशेषणमिति** ॥ आवश्यकेनेदानीमिति विशेषणेनैव भूताद्यतिप्रसङ्गवारणात्तत्फलककृतिसाध्यत्वविशेषणमनर्थकमिति भावः । प्रवृत्तिहेतुभूतज्ञानं तु कृतिसाध्यत्वावच्छिन्नेष्टसाधनताविषयकमेव । कर्मनिर्णयटीकायां तत्त्वनिर्णयटीकायां च तथैव समर्थितत्वात् । कृतिसाध्यत्वस्य लिङाद्यर्थतायामेव वैयर्थ्यमिति व्याकर्तॄणामेकपन्थाः । अन्यस्तु वैयर्थ्योक्तिश्च भूताद्यतिप्रसङ्गवारणमात्राभिप्रायकत्वादिति ॥

अनु०— साधनमिष्टस्य भगवानिष्टदेवता ॥
मुख्येष्टं वा सुमनसाम्

सु०— अस्तु वा वाक्यपर्यवसानस्य कारणं कार्यमिष्टमिष्टसाधनं वा; ततः किमित्यत आह ॥ साधनमिति ॥ मीमांसाविषयस्य ब्रह्मणो वक्तव्यत्वे किमुच्यते भगवानिति । तत्रोक्तम् ॥ इष्टदेवतेति ॥ मीमांसाविषयत्वेनेष्टदेवता ब्रह्मैव भगवानित्यर्थः ।

इष्टसाधनमपीष्टं भवति अतो मुख्येत्युक्तम् । निरुपाधिकमित्यर्थः ॥ नन्विष्टस्य सुखादेः साधनं भवतु भगवान्निरुपाधिकेष्टस्तु कथमित्यत आह ॥ सुमनसामिति ॥ पुरुषार्थान्तराभिलाषाऽकलुषितमनसामित्यर्थः ॥ यथाप्रकृतमिष्टसाधनमिष्टं चानूद्य भगवानिति विधानान्न लिङ्गव्यत्यासदोषः । यथा यदिदं दृष्टं स स्थाणुरिति ॥ एवं यदिष्टमिष्टसाधनं वा वाक्यपर्यवसानकारणं स भगवानिति ।

वा०— फलवत्साधनेऽपीच्छाया जातत्वेन तद्विषयत्वस्योभयत्र साम्यान्मुख्यग्रहणेन कथं तद्व्यावृत्तिरित्यतोऽभिप्रेतार्थमाह ॥ निरुपाधिकमित्यर्थ इति ॥ सुखदुःखाभावेतरस्य भगवतो निरुपाधिकेष्टत्वमयुक्तमित्याशङ्कते ॥ नन्विति ॥ सुखाद्यभिलाषिणां सुखादेर्निरुपाधिकेष्टत्वेऽपि तदभिलाषदोषशून्यानां भगवदभिलाषिणां भगवतो निरुपाधिकेष्टत्वं युक्तमित्याह ॥ पुरुषार्थेति ॥ नन्वत्र भगवतो विशेष्यत्वाद्विशेषणानां च विशेष्यनिघ्नत्वाद्भगवानिष्टसाधनो मुख्येष्टश्चेति वक्तव्ये साधनमिति मुख्येष्टमिति चानुपपन्नमित्यत इष्टेष्टसाधनयोरनुवाद्यत्वेन भगवत्त्वस्य विधेयत्वेन तस्य विशेष्यत्वाभावन्न लिङ्गव्यत्यासदोष इत्याशयेनाह ॥ यथाप्रकृतमिति ॥ इष्टेष्टसाधनयोरनुवाद्यत्वेऽपीष्ट इष्टसाधन इत्येवानुवादसंभवे किमित्यन्यथाऽनुवादो विशेष्यान्तराभावेन भगवत एव विशेष्यत्वेनोक्तदोषपरिहारादित्यतो वाक्यपर्यवसानकारणं यत्कार्यं प्रकृतं तद्विशेषणत्वेन भगवद्विशेषणत्वाभावात्प्रकृतानुसारेण चानुवादाद्युक्तो नपुंसकेनानुवाद इत्याशयेन यथाप्रकृतमिति विशेषणं तदाशयमजानानं प्रति दृष्टान्तपूर्वमाशयं स्पष्टयति ॥ यथेति ॥ अत एव वाक्यपर्यवसानकरणं कार्यमिष्टमिष्टसाधनं वेत्यवतारिकादशायामुक्तमत्रापि दार्ष्टान्तिके वाक्यपर्यवसानकारणमित्युक्तमिति द्रष्टव्यम् ।

स०— न लिङ्गव्यत्यासदोष इति ॥ अन्यथाऽनियतलिङ्गस्य विधेयस्योद्देश्यसमानलिङ्गत्वेन भगवानिष्ट इति पुल्लिङ्गं स्यादिति भावः ॥

**या०**—ननु भगवानित्यनूद्येष्टेष्टसाधनत्वयोर्विधेयत्वे नपुंसकलिङ्गानुपपत्तिः । अनियतलिङ्गस्य विधेयस्योद्देश्यसमानलिङ्गत्वनियमादित्यत आह ॥ **इष्टमिष्टसाधनं वाऽनूद्येति** ॥ भगवच्छब्दस्य च नियतलिङ्गत्वान्नोद्देश्यसमानलिङ्गत्वमिति भावः । यद्यपि यौगिकस्य तस्याप्यनियतलिङ्गत्वमेव । भगवान्कुबेरो भगवती राजमहिषी भगवद्राजकुलमित्यादिप्रयोगदर्शनात् । तथाऽपि हरौ रूढस्य तस्य नियतलिङ्गत्वमभिप्रेत्यैतदुक्तमित्यवधेयम् । नन्विष्टेष्टसाधनशब्दयोरनियतलिङ्गत्वादिष्टेष्टसाधन इत्येव कस्मान्नोक्तमित्यत उक्तम् ॥ **यथाप्रकृतमिति** ॥ पूर्वं कार्यविशेषणतया नपुंसकलिङ्गेनैव तयोः प्रकृतत्वात्तथैवानुवाद इति भावः । नियतलिङ्गस्य विधेयस्य नोद्देश्यसमानलिङ्गत्वनियम इत्यत्र दृष्टान्तमाह ॥ **यदिदमिति** ॥

**श्री०**— मूले कोन्वपरः प्रिय इत्यत्र प्रिय इष्ट इत्यर्थो द्रष्टव्यः ।

**च०**— भगवच्छब्दस्योद्देश्योपस्थापकतायां विधेयवाचकपदयोः क्लीबतानुपपत्तिः प्रसज्यते । अनियतलिङ्गविधेयपदस्योद्देश्यपदसमानलिङ्गकतानियमादिष्टेष्टसाधनपदयोरुद्देश्यपरत्वोपगमे तु परमात्मवाचकभगवच्छब्दस्य नियतलिङ्गत्वादर्थान्तरे पुल्लिङ्गत्रयसाधारण्येऽपि क्षत्यभावेन विधेयवाचकता पुंसो भगवच्छब्दस्य सङ्गच्छत इत्याह ॥ **न लिङ्गव्यत्यासदोष इति** ॥ नियतलिङ्गस्य विधेयपदस्य नोद्देश्यपदसमानलिङ्गकतानियम इत्यत्र निदर्शनमाह ॥ **यदिदमिति** ॥

**अनु०**— **प्रेयस्तदिति च श्रुतिः ।**

**प्राणबुद्धिमनःखात्मदेहापत्यधनादयः ॥**
**यत्संपर्कात्प्रिया आसंस्ततः को न्वपरः प्रियः ।**
**इत्यादिवाक्यैः**

**सु०**— मुख्येष्टत्वं भगवतोऽस्तीत्यत्र संभावनैवोक्ता कुतः प्रमाणात्तन्निश्चय इत्यत आह ॥ **प्रेय इति** ॥ न केवलं संभावना, श्रुतिश्चात्रास्तीति चशब्दः । प्रेयोऽतिशयेन प्रियम् । अतिशयश्च निरुपाधिकत्वम् । 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्माच्च सर्वस्मादन्तरतरं यदयमात्मे'त्युदाहृतश्रुतावात्मनो जीवस्य प्रियतमत्वमुच्यत इति प्रतिभाति; ततो विस्पष्टैः पुराणादिवाक्यैर्भगवतो मुख्येष्टत्वं प्रतिपत्तव्यमित्याह ॥ **प्राणेति** ॥ प्राणः शारीरो वायुः । बुद्धिर्मनश्चान्तःकरणवृत्ती । खानीतरेन्द्रियाणि । आत्मा जीवः ।

वा०— सुमनसामित्यनेनैव प्रमाणोक्तेः प्रेयस्तदित्यादेर्वैयर्थ्यमित्यतस्तदभिप्रायमाह ॥ **मुख्येष्ट त्वमिति** ॥ निरुपाधिकप्रियत्वं श्रुत्यारूढं कर्तुं प्रेयःशब्दं तदनुगुणतया तावद्व्याख्याति ॥ **प्रेय इति**॥ यद्वा प्रियशब्दाद्विभज्योपपदे ईयसुनि प्रियस्थिरेत्यादिना प्रियशब्दस्य प्रादेशे प्रेय इति सम्पद्यत इत्याशयेन तदर्थकथनपूर्वकं श्रुतिं प्रकृते सङ्गमयति ॥ **प्रेय इत्यादिना** ॥ [ द्विवचनविभज्योपपदे तरबीयसुनौ । द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । येन पदेन द्वावर्थावुच्येते तद् द्विवचनं तत्कथं करणे ल्युट् । द्वयोरर्थयोर्वचनं द्विवचनम् । कर्मणि षष्ठ्याः समासः । विभक्तव्यं विभज्यम् । द्विवचनं च विभज्यं चेति द्वन्द्वः । तस्योपपदेन कर्मधारयः । तेन द्व्यर्थवाचके विभजनीयवाचके चोपपदे सतीत्यक्षरार्थः । तच्च विग्रहवाक्य एव युज्यते । वृत्तौ गतार्थत्वान्नावश्यकम् । एवं स्थिते उपपदग्रहणं स्पष्टार्थम् । द्विवचनोपपदोदाहरणमयमनयोरतिशयेन लघुर्लघुतरो लघीयान् । विभज्योपपदोदाहरणमुदीच्याः प्राच्येभ्यः पटुतराः पटीयांस इति । प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रपद्राघिवृन्दाः ॥ प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिष्वित्यर्थः । ] प्राणखशब्दयोर्मुख्यवाय्वाकाशपरत्वे प्रिया आसन्नित्यस्यानुपपत्तेरिच्छादिपरित्यागेन ज्ञानस्यैव विशिष्य ग्रहणानुपपत्त्या बुद्धिशब्देन मनोग्रहणे पुनरुक्तेरात्मशब्देन च देहमनोग्रहणस्य च तत एवासंभवादीश्वरग्रहणे च यत्सम्पर्कादित्यस्यानुपपत्तेः प्राणादिशब्दान्व्याख्याति ॥ **प्राण इत्यादिना** ॥

स०— **संभावनैवोक्तेति** ॥ सुमनसामित्यनेनेत्यर्थः । पुरुषार्थान्तराभिलाषाऽकलुषितमनसां भगवान्निरुपाधिकेष्टो भवितुमर्हतीत्युक्तत्वादित्यर्थः ।

प०— **संभावनैवेति** ॥ सुमनसामित्यनेनेति भावः ॥ **श्रुताविति** ॥ वाजसनेयश्रुतौ । मूले इत्यादिवाक्यैरित्यस्य 'मुख्येष्टं वे'त्यनेनान्वयः ।

या०—**संभावनैवेति** ॥ सुमनसामित्यनेनेत्यर्थः । तेन पुरुषार्थान्तराभिलाषाऽकलुषितमनसां भगवान्निरुपाधिकेष्टो भवितुमर्हतीत्युक्तत्वादिति भावः ॥ **अतिशयेन प्रियमिति** ॥ प्रियशब्दाद् द्विवचनविभज्योपपदे तरबीयसुनावित्यतिशयार्थे पुत्रादित्यादिरूपे विभज्ये उपपदे ईयसुन्प्रत्यये प्रियस्थिरेत्यादिना प्रियशब्दस्य प्रादेशे च सति प्रेय इति रूपमिति भावः ।

च०— **संभावनैवेति** ॥ सुमनसामित्यनेनेत्यादिः । औत्कट्यानौत्कट्याङ्कितकोटिद्वयावगाहिनी संभावनेत्यर्थः ॥ **अतिशयेन प्रियमिति** ॥ द्विवचनविभज्योपपदे तरबीयसुनावित्यतिशयार्थे पञ्चम्यन्ते पुत्रपदादिरूपविभज्ये उपपदे प्रियशब्दप्रकृतिकेयसुनि प्रियस्थिरेति प्रियशब्दस्य प्रादेशे प्रेय इति रूपं निष्पद्यत इति भावः ॥

अनु०— आकाङ्क्षासन्निधियोग्यता यतः ॥
तस्मिन्नेव समस्तस्येति

**सु०—किमतो यद्येवमीश्वर इष्ट इष्टसाधनीभूतश्चेत्यत आह ॥ आकाङ्क्षेति ॥ इतिशब्द-स्तस्मादित्यर्थे । स एव सर्ववेदार्थ इत्यनेन संबन्धः ॥ यत्खलु येन जिज्ञासितं यच्च सन्निहितं यच्च प्रतीतान्वययोग्यं तत्तं प्रति प्रतिपादनीयं शब्देन । अजिज्ञासितत्वाद्धि नापिपासुं प्रति जलाशयोपदेशः क्रियते । सत्यामपि जिज्ञासायां दाक्षिणात्यस्य पिपासोरसन्निहितत्वादस्ति गीर्वाणतरङ्गिण्यां शीतलं जलमिति नोपदिश्यते । सतोरपि जिज्ञासासन्निधानयोरयोग्यत्वान्ना-काशपानं विधीयते ॥ तथा च परमेश्वरस्येष्टेष्टसाधनत्वात्समस्तस्यापि वेदाधिकारिणोऽस्ति तस्मि-न्नाकाङ्क्षा जिज्ञासा । अस्ति च सन्निधिः; सर्वगतत्वात् । योग्यता च बाधकप्रमाणाभावात् । यत एवं तस्मात्स एव सर्ववेदार्थो भवितुं युक्तः ॥ कार्ये जिज्ञासाद्यभावं दर्शयितुमेवशब्दः । तच्चो-पपादयिष्यते । तेन स एव सर्ववेदार्थ इत्यवधारणमुपपद्यते ।**

वा०— उक्तं प्रति फलप्रतिपादकत्वमस्य वाक्यस्य दर्शयितुमितिशब्दं व्याख्याय तत्सम्बन्धं च दर्शयति ॥ **इतिशब्द इति** ॥ आकाङ्क्षितत्वादेः सर्वत्रेदार्थत्वेन व्याप्तेर्विशिष्य दर्शयितुमशक्यतया सामान्यमुखेन तामाह ॥ **यत्खल्विति** ॥ अत्र पदप्रयोज्यजिज्ञासाविषयत्वयोग्यज्ञानजनकतावच्छेदक-रूपवत्स्वरूपपूर्वपदजनिताकाङ्क्षापूरकत्वरूपाकाङ्क्षायाः पदोपस्थित्यनुकूलवक्तृव्यापारे निष्फलान्वयबोध-विरोधिव्यवधानाभावरूपाविलम्बितोच्चारितत्वरूपासत्तेश्च कार्येऽपि परेण कथञ्चिदुपपादनीयत्वात्तस्मिन्नेवेति मूलोक्तावधारणानुपपत्तेस्तदुपपत्तये जिज्ञासितार्थप्रतिपादकत्वरूपाकाङ्क्षायाः सन्निहितार्थप्रतिपादकत्वरूपा-सत्तेश्चात्र विवक्षितत्वाद्विरक्तं प्रति वाणिज्योपदेशादिव्यावर्तकतया तयोरपि वाक्यप्रामाण्योपयोगितया तयोश्च विष्णावेव भावान्नानुपपत्तिरित्याशयेन तादृशाकाङ्क्षादेः सामान्यतः प्रमाणवाक्यप्रतिपाद्यत्वेन व्याप्तिमुपपादति ॥ **अजिज्ञासितत्वादित्यादिना** ॥ एवमाकाङ्क्षितत्वादेर्व्याप्तिमुपपाद्योक्तेष्टसाधनत्वस्या-काङ्क्षितत्वमात्रे हेतुत्वमासत्तियोग्यताहेत्वोः प्रसिद्धत्वाद्व्याप्येऽकथनमित्यभिप्रेत्य स्वयं तद्धेतुप्रदर्शनपूर्वं हेतुहेतुमद्भावं प्रदर्शयति ॥ **तथा चेति** ॥ कार्ये जिज्ञासाभावे गामानयेत्यादौ लिङादिव्युत्पत्तिर्न स्यादित्यतोऽस्मदभिमतकार्ये तस्याः पश्चाद्भावित्वस्य सिद्धे व्युत्पत्त्यनुसारित्वेन गौणतायाः परोक्तकार्ये व्युत्पत्त्यभावस्य च दृष्ट्या ज्ञातपदार्थस्येत्यादिना वक्ष्यमाणत्वात्प्राथमिकजिज्ञासायाः कार्येऽसंभवाभि-प्रायेण वा परोक्तकार्ये सर्वथा जिज्ञासाभावेन वैवकारोपपत्तेर्न विरोध इत्याशयेनाह ॥ **उपपादयिष्यते चेति** ॥ अवधारणफलमाह ॥ **तेनेति** ॥

स०—**तच्चोपपादयिष्यत इति** ॥ 'वर्तमानमतीतं च भविष्यदिति च क्रमात्। आकाङ्क्षादियुतं यस्मादि'त्यत्र 'कार्यकालत्रयासंबद्धत्वस्य परेणाभ्युपगतत्वात् न तत्र जिज्ञासे'त्यादिनोपपादयिष्याम इत्यर्थः।

प०—**तस्मादित्यर्थ इति** ॥ इतिशब्दस्य हेत्वर्थत्वात्। पूर्वत्र यत इति श्रवणात्तस्मादित्यर्थ इत्युक्तम् ॥ **इत्यनेन संबन्ध इति** ॥ सोऽयं पुरुष इत्यपि। स एव सर्ववेदार्थ इति पूर्वेण संबन्ध इत्यर्थः। तस्यैवाक्षेपसमाध्योरिह प्रस्तुतत्वादिति भावः। आकाङ्क्षादिमत्त्वमात्रेण कथं सर्ववेदार्थत्वमित्यतो व्यनक्ति ॥ **यत्खल्विति** ॥ विशेषणत्रयस्य क्रमेण कृत्यमाह ॥ **अजिज्ञासितत्वाद्धीत्यादिना** ॥ **इष्टेष्टसाधनत्वादिति** ॥ इष्टत्वादिष्टसाधनत्वाच्चेत्यर्थः। अधिकारिभेदेनेति भावः। आकाङ्क्षेत्यनुवादः। जिज्ञासेति व्याख्या ॥ **उपपादयिष्यत इति** ॥ 'वर्तमानमतीतं चे'त्यादाविति भावः।

या०—ननु वचनमात्रेण कथं जिज्ञासाद्यभावदर्शनमित्यत आह ॥ **तच्चोपपादयिष्यत इति** ॥ जिज्ञासाद्यभावदर्शनमित्यर्थः। वर्तमानमतीतं चेत्यनुपदमेवेति शेषः ॥

च०—**तच्चोपपादयिष्यत इति** ॥ कार्ये जिज्ञासाद्यभावदर्शनमित्यर्थः ॥

अनु०— इष्टे व्युत्पत्तिरिष्यते ॥

**सु०—ननु तथाऽपि नेश्वरे वेदस्य प्रामाण्यं संभवति। केवलसिद्धार्थे व्युत्पत्त्यभावात्। कार्य एव लोके व्युत्पत्तिदर्शनात्। लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायात्। कार्यान्वितत्वेन व्युत्पत्त्यङ्गीकारे चेश्वरस्याप्राधान्यप्रसङ्गेन स एवेत्यवधारणानुपपत्तेः। यद्यपीष्टत्वमिष्टसाधनत्वं च कार्यत्वम्। तच्चास्तीश्वरस्येत्युपपादितम्। तथाऽपि नैतावता व्युत्पत्तिसंभवः। वृद्धचेष्टैकलिङ्गत्वाद्व्युत्पत्तेः। वृद्धचेष्टायाश्च कृतिसाध्यार्थे नियतत्वात्। न हि चन्द्रादावकृतिसाध्येष्टसाधने प्रवृत्तिरस्ति। न चेश्वरस्य कृतिसाध्यताऽस्ति येन तत्र प्रवृत्तिं दृष्ट्वा व्युत्पद्येतेत्यत आह ॥ इष्ट इति ॥ केवलसिद्धमात्रे व्युत्पत्त्यभावेऽपीष्टे सिद्धविशेषे व्युत्पत्तिरिष्यत एव। प्रामाणिकैरिति शेषः।**

वा०—ननूत्तरवाक्ये सिद्धे व्युत्पत्त्युपपादनमनुपपन्नम्। उक्तरीत्या वेदस्य सिद्धार्थपरत्वव्युत्पादने तत्र व्युत्पत्तेरपि सिद्धत्वात्। न च लोके कार्य एव व्युत्पत्तेर्वेदेऽपि तथात्वमिति वाच्यम्। लोक-

वेदयोः सत्यपि वर्णभेदे केनचित्स्वरच्छान्दसवर्णागमलोपविकारविपर्ययाध्यायानध्यायादिधर्मभेदेन जराराजपदयोरिव क्रमभेदेन व्यपदेशभेदात्स्पष्टभेदसुम्यूपादिशब्दसाहचर्याच्च लोकवेदयोः पदानामन्यत्वादुत्ताना वै देवगवा वहन्तीति दर्शनाच्चार्थान्यत्वमिति लोके कार्ये व्युत्पत्तावपि वेदस्य सिद्धे व्युत्पत्तिसंभवात्कार्य एव व्युत्पत्तावपि कार्यान्विततया सिद्धे प्रामाण्यसंभवाच्च । इष्टसाधनतातिरिक्तकार्याभावस्याधुनैव व्युत्पादितत्वाच्च । तस्मान्नोत्तरभाष्यं सङ्गतमित्यतस्तत्सङ्गमयति ॥ **नन्विति** ॥ यत्रार्थप्रतीत्यौपयिकधर्मभेदो यथा पूर्वपदप्रकृतिस्वरत्वे बहुव्रीह्यर्थत्वमन्तोदात्तत्वे स्वार्थवृत्तित्वं स्मृतितो ब्रह्मब्राह्मणादिषु न्यूनातिरिक्तवशाज्जराराजादिषु क्रमान्यत्वादर्थान्यत्वावसायः तत्र पदभेदोऽभ्युपगम्यत एव । नैवं लोकवेदयोरर्थौपयिकधर्मभेदोऽस्ति । अनियतस्वराणां नियतस्वराणां चार्थान्यत्वस्य स्मृतितो लोकतो वाऽनवगमात् । एवं देवासः त्मनेत्यादिषु लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि तद्रूपस्यार्थान्तरानवगमात्किञ्चिद्रूपभेदेऽपि लौकिकप्रत्यभिज्ञानात्सत्यपि केषाञ्चिद्भेदे सर्वेषां भेदस्याप्रामाणिकत्वात्पदैक्ये च तदर्थावगमादुत्तानादिवचनस्य देवगवीरनूद्योत्तानवहनादिविधानपरत्वाल्लोकवेदयोः पदपदार्थानामैक्यस्य प्रयोगवचनाभावादर्थैकत्वमविभागादित्यधिकरणे सिद्धत्वाल्लोके कार्यपरत्वे वेदेऽपि तत्परत्वमपरिहार्यमित्याशयेन तत्सूत्रवार्तिकमुदाहरति ॥ **लोकेति** ॥ सिद्धे व्युत्पत्त्यभावे चोदिते किमसङ्गतमुच्यते इष्ट इतीत्यतः सिद्धविशेषाभिप्रायेणोपात्तेष्टपदतात्पर्यमाह ॥ **केवलेति** ॥

स०— **केवलसिद्धार्थ इति** ॥ अकृतिसाध्येष्टसाधन इत्यर्थः ॥ **कार्य एवेति** ॥ कृतिसाध्येष्टसाधन एवेत्यर्थः । कार्य एव व्युत्पत्तिदर्शनादित्यस्य पराभिप्रेतमर्थमज्ञात्वोक्तरीत्येष्टसाधनत्वरूपकार्यत्वस्य सत्त्वेन तत्र व्युत्पत्तिरिति भावेन शङ्कते ॥ **यद्यपीति** ॥ **तथापीति** ॥ तथा च न तावन्मात्रं कार्यत्वमित्यर्थः ॥

प०—द्वितीयमपि बाधकमाशङ्क्य निराह ॥ **नन्वित्यादिना** ॥ **लोके व्युत्पत्तिदर्शनादिति** ॥ तत्प्रकारश्च कार्यताचेत्येतदवतारिकायामेव प्रपञ्चित इति भावः ॥ **चेष्टेति** ॥ देहस्पन्दादिरूपप्रवृत्तिः ॥

या०— **लोकावगतसामर्थ्य इति** ॥ प्रथमाध्यायस्य तृतीयपादे चिन्तितम् । वैदिकौ पदपदार्थौ लौकिकाभ्यां पदपदार्थाभ्यामन्यौ उत नेति संशयेऽन्यावेव । कुतः रूपभेदात् । पदे तावद्रूपभेदो दृश्यते । आत्मशब्द आकारादित्वेन लोके नियतः वेदे तु क्वचिदाकाररहितः पठ्यते । प्रयतन्तु

पुरुत्मनेति । ब्राह्मणा इति लोके वेदे त्वन्यथा पठ्यते ब्राह्मणासः पितर इति । अर्थभेदोऽपि स्फुटः । उत्ताना वै देवगवा वहन्तीति श्रूयते । मनुष्यगावस्त्ववाञ्चो वहन्ति । वेदे वनस्पतिर्हिरण्यवर्णः । तथा च श्रूयते देवेभ्यो वनस्पते हवींषि हिरण्यवर्णः प्रति वस्तेऽर्थमिति । तस्माल्लोकवेदयोः पदपदार्थावन्याविति पूर्वपक्षे च सति सिद्धान्तितम् । य एव लौकिकाः पदपदार्थास्त एव वैदिकाः । तथा हि । वर्णास्तावन्नित्यास्तेषां यथा प्रयोक्तृपुरुषभेदेऽप्येकैकपुरुषस्य बहुकृत्व उच्चारणभेदेऽपि त एवामी वर्णा इति प्रत्यभिज्ञानादैक्यं तथा यानि लोके गवाग्न्यादिपदानि तान्येव वेदेऽधीयमानानीत्यबाधितप्रत्यभिज्ञया पदैकत्वमभ्युपेयम् । त्मना देवास इत्यादिपदभेदस्तु काचित्कः । नैतावता बहुतरप्रत्यभिज्ञागतं पदैक्यमपोढुं शक्यम् । अन्यथा सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञातं देवदत्तैक्यमपि देशादिभेदमात्रेणापोह्येत । पदैक्येन चार्थैक्यमवश्यंभावि । अन्यथा वेदे पृथग्व्युत्पत्त्यभावेनाबोधकत्वं प्रसज्येत । यूपावहनादिशब्दानां तदर्थानां वाऽलौकिकत्वेऽपि प्रसिद्धपदसमभिव्याहारात् व्युत्पत्तिः सिध्यति । उत्तानवहनादिकं त्वर्थवादः । अस्तु वा तथा वहनम् । तथाऽप्युत्तानादिशब्दास्तदर्थाश्च लोकसिद्धा एव । तस्माद्य एव लौकिकाः पदपदार्थास्त एव वैदिका इति । एतदभिप्रायकं वार्तिकम् । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक' इति । अत एवाह ॥ **नियमादिति** ॥ एतदधिकरणन्यायादित्यर्थः । सिद्धमात्र इत्यत्र मात्रशब्दः कार्त्स्न्यार्थः ।

श्री०—सामर्थ्यम् वाचकत्वम् । ननु केवलसिद्धेऽर्थे व्युत्पत्त्यभावेऽपि कार्यान्विते व्युत्पत्तिरङ्गीक्रियत इति चेत्तत्राह ॥ **कार्यान्वितत्वेनेति** ॥ प्रधानं यत्तदन्वितव्युत्पत्तिरित्यङ्गीकार्या । तथाच कार्यान्विते व्युत्पत्तिरित्यङ्गीकारे कार्यस्यैव प्राधान्यं प्राप्तं नेश्वरस्येत्यर्थः ॥

च०—**लोकावगतसामर्थ्य इति** ॥ प्रमाणलक्षणे स्मृतिचरणे । प्रयोगचोदनाभावादर्थैकत्वमिति भागादिति दशमाधिकरणे । वाचकप्रसङ्गाद्वाच्यविशेषोत्र चिन्त्यत इति प्रासङ्गिकी सङ्गतिः । लौकिकेभ्यः शब्देभ्योऽर्थेभ्यश्च वैदिकाः शब्दा अर्थाश्च भिन्ना उत त एवेति सन्देहे एते लौकिका एते । वैदिका इति व्यपदेशभेदात् ब्राह्मणा सः पितरः सौम्यास इति ब्राह्मणाः सौम्या इति लौकिकेभ्यो रूपभेदादुत्तानावैदेवगवा वहन्तीति देवगवानामुत्तानवाहित्वोक्त्याऽधोवाहिलौकिकबलीवर्देभ्यो अर्थान्यत्वस्य स्फुटत्वादन्य एवेति पूर्वपक्षे प्राप्ते वर्णानामैक्यप्रत्यभिज्ञानात्तदात्मकपदानामप्यैक्येनेव लोकवेदयोः पदैक्यादेव चार्थैक्यम् । व्यपदेशभेदस्त्वप्रयोजकः अर्थभेदोपाधिकभेदस्यैव शब्दभेदकल्पकत्वेनात्र तदभावात् । काचित्कव्यपदेशादिभेदमात्रेण बहुस्थलेषु प्रत्यभिज्ञावगतशब्दैक्यबाधायोगात् । उत्ताना

इत्यादेस्तु यज्ञद्रव्यार्थत्वेन देवसंबन्धिनो ये मनुष्याणां गावस्तत्स्तुत्यर्थत्वेन नार्थभेदोपीति सिद्धान्तितम् । सूत्रार्थस्तु व्रीहिभिर्यजेतेत्यादिप्रयोगचोदनानां भावात्तासां च शब्दार्थैक्यपक्ष एवार्थप्रत्यायकतोपपत्तेरर्थैकत्वमिति शब्दैकत्वस्याप्युपलक्षणमेतदिति । एतत्सूत्रीयमेव लोकावगतेति वार्तिकमुदाजहारेत्यवसेयम् । सिद्धमात्रे सिद्धसामान्ये ॥

अनु० — अत्त्यपूपांस्तव भ्रातेत्यादावावापतोऽपि च ॥
उद्वापाद्वर्तमानत्वादाकाङ्क्षादिबलादपि ॥
बालो व्युत्पत्तिमभ्येति

सु० — तत्कथमित्यत आह ॥ अत्तीति ॥ इत्यादौ वाक्ये प्रयुक्ते सति व्युत्पत्तिमेतीति संबन्धः । अपिशब्दचशब्दावावापोद्वापयोरितरेतरयोगे वर्तेते । आदिग्रहणेनाङ्गुलिप्रसारणभ्रूविक्षेपच्छोटिकावादनादिकमुच्यते । अयमर्थः । छोटिकावादनादिनाऽव्युत्पन्नमभिमुखीकृत्यापूपानदन्तं तद्भ्रातरमङ्गुलीप्रसारणादिना प्रदर्श्य देवदत्त तव भ्राताऽयमपूपानत्तीति वाक्ये प्रयुक्तेऽपूपादिपदार्थानां वर्तमानत्वेन प्रतिसंबन्धिनां प्रत्यक्षत्वोपपत्तेः । इष्टत्वेनाकांक्षाया जिज्ञासायाः संभवात् । पदसमुदायस्यार्थसमुदाये तावत्सामान्यतः शक्तिमवधार्य पुनस्तव भ्राता पयः पिबतीति प्रयोगान्तरे यदर्थप्रक्षेपे यच्छब्दप्रक्षेपो यदर्थोद्धारे च यच्छब्दोद्धारः स तस्य वाचक इति विशेषतोऽप्यवधारयतीति किमनुपपन्नम् । तथेयं तव माताऽयं तव पितेत्यादिवाक्ये प्रयुक्तेऽपि पूर्ववद्व्युत्पत्तिः संभवति ।

किञ्च देवदत्त पुत्रस्ते जात इति वाक्यश्रवणसमनन्तरं विकसितवदनं देवदत्तमवलोक्य पार्श्वस्थो व्युत्पित्सुस्तेन लिङ्गेन देवदत्तस्य हर्षोदयमनुमाय तस्य चात्मदृष्टान्तेन प्रियार्थज्ञानं हेतुमवगम्य तस्य च शब्दश्रवणे सत्येव भावाच्छब्दस्य सामान्यतस्तत्र शक्तिं विदित्वा प्रियार्थं स्वदृष्टं पुत्रजन्म परित्यज्यान्यस्य कल्पनायोगात्तदेवेति ज्ञात्वा पुनरावापोद्वाराभ्यां विशेषतोऽप्यवगच्छति ।

यदत्रोक्तमतीतानागतवर्तमानानामनेकेषां प्रियाणां संभवाद्विशेषावधारणानुपपत्तिरिति । तदयुक्तम् । सन्निहितस्वदृष्टपरित्यागेनान्यकल्पनानुपपत्तेरुक्तत्वात् । तत्रैव प्रियासुखप्रसवादीनां संभवेऽपि प्रयोगान्तरेष्वावापोद्वाराभ्यां विशेषावधारणं युज्यते । अन्यथा गामानयेति प्रयुक्तो दण्डादिकमप्याददानो दृश्यत इति कथं तवापि विशेषावधारणम् ।

यदुक्तं यावती सिद्धार्थपरादपि वाक्याद्व्युत्पत्तिः सा सर्वा प्रथमभाविकार्यव्युत्पत्त्यनन्तरभावित्वात्कार्यव्युत्पत्तिरेवेति । तन्निरासायोक्तं बालोऽपीति ॥ यद्यपीह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यादिवाक्ये व्युत्पन्नेतरपदार्थो ज्ञातविभक्त्यर्थश्चाविदितमधुकरप्रातिपदिकार्थो यं मधुपानकर्तारं पश्यति तं मधुकरशब्दार्थं जानाति, तथा पिकः कोकिल इत्युपदेशाद्व्युत्पद्यते, तथा सास्नादिमान्गौरिति वाक्याद्व्याप्तिमवधार्य सास्नादिमति पिण्डे गोशब्दवाच्यतामनुमिनोतीत्येवमादिरानन्तरिकी व्युत्पत्तिः; तथाऽपि व्युत्पादिता बालस्याप्युक्तविधया संभवत्येव ॥ किञ्चास्या व्युत्पत्तेरनन्तरभावित्वेऽपि कार्यव्युत्पत्त्यधीनत्वं कुतः । कमलादिपदानामुक्तरीत्या योग्यान्वितस्वार्थ एव व्युत्पत्त्युपपत्तेरिति ।

वा० — इत्यादिवाक्यस्य व्युत्पत्त्यनधिकरणत्वेऽपि तत्प्रयोगस्य व्युत्पत्तिहेतुत्वमस्तीत्याशयेन प्रयुक्तपदाध्याहारं सतिसप्तमीत्वं च प्रदर्शयन्नेव व्यवहितत्वादन्वयं च दर्शयति ॥ **इत्यादाविति** ॥ परस्परनिरपेक्षपदार्थानामेकस्मिन्प्रतिसंबन्धिन्यन्वये हि समुच्चयः । न चात्रावापोद्वापयोः परस्परनिरपेक्षयोर्व्युत्पत्तिप्रयोजकत्वमपि तु सापेक्षयोरेवेति समुच्चयासंभवादितरेतरयोगोऽत्र द्रष्टव्यः । स हि परस्परापेक्षाणामवयवभेदानामपगमेन समुच्चयरूपतामापन्नानामेकस्मिन्नर्थेऽन्वये भवति यथा देवदत्तयज्ञदत्ताभ्यामिदं कार्यमिति । न ह्येकापाये तद्भवति । उद्भूतावयवभेदत्वाच्च द्विवचनादिकमिति । तथा चात्रापिचशब्दयोः समुच्चयार्थत्वानुपपत्तावपीतरेतरयोगार्थत्वोपपत्तिरित्याशयेनाह ॥ **अपिचशब्दाविति** ॥ आकाङ्क्षादीत्यत्रादिपदेन योग्यतासत्त्योर्ग्रहणे तयोः शब्दबोधोपयोगित्वेन व्युत्पत्त्युपयोगाभावात्पूर्वपदप्रसञ्जिताकाङ्क्षापूरकत्वरूपाकाङ्क्षायाश्चान्वयबोधोपयोगित्वेऽपि जिज्ञासाया एवात्राकाङ्क्षापदेन ग्रहणेन तस्या अग्रहणाद्व्युत्पत्त्युपयोगिनस्तत्त्वनिर्णये स्वशब्देनोपात्तस्याङ्गुलिप्रसारणादेरेवादिशब्देनोपादानं युक्तमित्याशयेनादिपदसङ्ग्राह्यं दर्शयति ॥ **आदीति** ॥ यद्वा वर्तमानत्वोक्त्यैव प्रतिसंबन्धिनां प्रत्यक्षत्वोपपत्त्या सन्निधेरर्थाद्योग्यतायाश्च सिद्धत्वेनादिपदस्य तदर्थकत्वासंभवात्प्रकृतोपयुक्ततत्सङ्ग्राह्यकथनमेतत् । अत एवात्र तत्सङ्ग्राह्यमन्यदुक्त्वा वर्तमानमतीतं चेति वाक्ये आकाङ्क्षादीत्यादिपदेन योग्यतासन्निधिग्रहणं वक्ष्यतीति ध्येयम् । यद्वा न केवलं योग्यतासत्त्योः सजातीययोरेवादिपदसङ्ग्राह्यत्वं किन्तु व्युत्पत्त्युपयोग्यङ्गुलिप्रसारणादेर्विजातीयस्यापि दर्शयितुमिदमिति द्रष्टव्यम् । अत्र छोटिकावादनादेर्वर्तमानत्वस्य च नोपयोगो दृश्यते । आकाङ्क्षाया आवापोद्वापयोश्चैकप्रकारेण शक्तिबोधोपायत्वं च प्रतीयतेऽतस्तदर्थविशेषे तेषामुपयोगं दर्शयति ॥ **अयमर्थ इति** ॥ इत्यादावित्यादिपदसङ्गृहीतं समानन्यायं प्रयोगान्तरं तत्त्वनिर्णये कण्ठतः उपात्तं दर्शयति ॥ **तथेति** ॥ विजातीयप्रवृत्तिप्रकारं सिद्धविषयं

प्रयोगान्तरमप्यादिपदसङ्ग्रहीतमित्याशयेनाह ॥ **किञ्चेति** ॥ अपिशब्दस्य बाल इत्यनेनान्वयमभिप्रेत्य तत्सूचितेन सिद्धे व्युत्पत्तेः प्राथमिकत्वेन व्यावर्त्यं दर्शयति ॥ **यदुक्तमिति** ॥ इत्यादौ सिद्धे व्युत्पत्तेः प्राथमिकत्वमिति विशेषोक्त्याऽन्यत्र कार्यव्युत्पत्तेरपि प्राथमिकत्वमनुमतम् । तथाऽपि नास्माकं क्षतिः । क्वचित्सिद्धे व्युत्पत्तेः प्राथमिकत्वसिद्ध्या कार्यव्युत्पत्तित्वमेव सर्वस्या इति पराभिमतासिद्धेरित्याशयेन तदुदाहरणं दर्शयति ॥ **यद्यपीति** ॥ अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु तत्रापि न कार्यव्युत्पत्तेः प्राथमिकत्वं सिद्धे व्युत्पत्तेरेव प्राथमिकत्वं भाष्ये इत्यादीत्युदाहरणप्रदर्शनमात्रं न तु विशेषोक्तौ तात्पर्यं कल्प्यमित्याशयेनाह ॥ **किञ्चेति** ॥

स० — **इतरेतरसमुच्चये वर्तेत इति** ॥ यत्र परस्परापेक्षयैकक्रियान्वयः तत्रेतरेतरसमुच्चयः यथा देवदत्तयज्ञदत्ताभ्यां कृतमित्यादाविति भावः ॥ **यद्यपीह प्रभिन्नेत्यादि** ॥ अनेन बालोऽपीत्यपि-शब्दो यद्यपि तथापीत्यर्थतया योजित इति द्रष्टव्यम् । वस्तुतस्तु कार्यव्युत्पत्तिशून्योऽपीति तदर्थः । यद्यपीत्यादिकं तु तत्सूचितमिति ज्ञेयम् ॥ अत्र प्रभिन्नेत्यादिना प्रत्यक्षेण, तथा पिक इत्यनेनागमेन, तथा सास्नादीत्यनेनानुमानेन च क्रमादानन्तरिकी व्युत्पत्तिर्दर्शितेति ज्ञेयम् । आनन्तरिकी कार्यव्युत्प-त्त्यनन्तरभाविनी ॥ **बालस्याप्युक्तविधयेति** ॥ उक्तविधया प्रथममपि संभवतीति भावः ॥

प० — **छोटिकावादनेति** ॥ अङ्गुलीद्वयाग्रमेलनेन क्रियमाणः शब्दः । इत्यादावित्युक्तादि-पदार्थं व्यनक्ति ॥ **तथेयन्तवेत्यादिना** ॥ तथेति मूलपदानुकारितया 'त्तेमयावेकवचनस्ये'ति न शङ्क्यम् । 'वा ल्यपी'त्युक्तेः अवगम्येति साधु ॥ **यदत्रोक्तमिति** ॥ प्राभाकरैः स्वग्रन्थे उक्तमित्यर्थः ॥ **उक्तत्वात्** ॥ पूर्ववाक्य इति भावः ॥ **प्रियासुखेति** ॥ प्रियायाः सुखप्रसवेत्यर्थः ॥ **यदुक्तमिति** ॥ स्वग्रन्थ इति ज्ञेयम् । न तु पूर्वपक्ष्यनुवादप्रस्ताव इति भ्रमितव्यम् । अप्येतीत्यत्रस्यापिपदं संयोज्याह ॥ **बालोपीति** ननु 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धा'इत्युपायान्तरमपि व्युत्पत्तावुक्तम् । तच्च प्राथमिककार्यव्युत्पत्त्यधीनम् । अन्यथोपाया-न्तराद्व्युत्पत्तिग्रहो न स्यादित्यतस्तदनूद्य समाधत्ते ॥ **यद्यपीत्यादिना** ॥ **आनन्तरिकीति** ॥ तथाच व्यवहारतो जायमानव्युत्पत्तेः प्राथमिकत्वात्सैव प्रदर्शिता मूलकारैरिति भावः ॥ **व्युत्पादितेति** ॥ व्युत्पत्तिरित्यनुकर्षः । ननूक्तं प्रथमं कार्ये व्युत्पत्त्यभावे उपायान्तरादपि व्युत्पत्तिर्न स्यादिति तत्राह ॥ **किञ्चास्या इति** ॥ **योग्यान्वित इति** ॥ तत्प्रकारश्चाग्रे 'शक्तिश्चैवान्विते स्वार्थ' इत्यादौ वक्ष्यत इति भावः ।

या० — **यद्यपीह प्रभिन्नेत्यादि** ॥ अनेन बालोऽपीत्यपिशब्दो यद्यपि तथाऽपीत्यर्थतया योजित इति द्रष्टव्यम् । अत्र प्रभिन्नेत्यादिना प्रत्यक्षेण तथा पिक इत्यनेनागमेन तथा सास्नादीत्यनेनानुमानेन च क्रमादानन्तरिकी व्युत्पत्तिर्दर्शितेति ज्ञेयम् । आनन्तिरिकी कार्यव्युत्पत्त्यनन्तरभाविनी ॥ **बालस्यापीति** ॥ प्रथममपीति शेषः ।

श्री० — **संभवादिति** ॥ तथा चान्यस्य कल्पनायोगादित्ययुक्तमिति भावः ॥ **विशेषावधारणेति** ॥ पुत्रजन्मरूपविशेषावधारणेत्यर्थः ॥ **प्रयोगान्तरेष्विति** ॥ यद्यपि हर्षहेतूनामानन्त्यात्प्रियासुखप्रसवादीनामपि हेतुत्वं संभवतीति न पुत्रजन्मन एव निमित्तत्वं कल्पयितुं शक्यते । तथाऽपि यदा तव प्रिया सुखेन प्रसूतेति प्रयोगान्तरे प्रियादिपदानामावापः पुत्रादिपदानामुद्वापस्ततस्तदैव प्रियासुखप्रसवादीनां हेतुत्वमवगच्छति नान्यदा । अतः पुत्रस्ते जात इति वाक्यश्रवणानन्तरभाविनि हर्षे पुत्रजन्मैव निमित्तमिति विशेषावधारणं युक्तमित्यर्थः । प्रयुक्तः प्रयोजकवृद्धोदीरितः । विशेषावधारणमानयनादिरूपकार्यपरत्वावधारणम् । तथाच सन्निहितगवानयनं विनाऽन्यस्य कल्पनाऽनुपपत्तेर्युक्तं विशेषावधारणमिति वक्तव्यम् । तन्ममापि सममिति भावः ॥ **बालोऽपीतीति** ॥ तथाच सिद्धार्थपरतद्वाक्यात् व्युत्पत्तिरेव बालस्य प्राथमिकीत्याशयः ॥ **आनन्तरिकी व्युत्पत्तिरिति** ॥ कार्यव्युत्पत्यनन्तरभाविनी कार्यव्युत्पत्त्यधीना कार्यान्वितसिद्धव्युत्पत्तिः । **पश्चाद्भवति** बालस्य प्रथममित्यर्थः ॥ **व्युत्पादितेति** ॥ अस्त्यपूपांस्तव भ्रातेत्यादिना व्युत्पादितेत्यर्थः ॥ **उक्तविधयेति** ॥ छोटिकावादनादिनेत्याद्युक्तविधयेत्यर्थः । किं चास्या व्युत्पत्तेः कार्यव्युत्पत्त्यधीनत्वमेव नास्तीत्याह ॥ **किञ्चेति** ॥ ननु कार्यव्युत्पत्त्यधीनत्वाभावे कमलादिपदानां कार्यान्विते व्युत्पत्त्यभावप्रसङ्गेन बोधकत्वं स्यादित्यत आह ॥ **कमलादिपदानामिति** ॥ **योग्यान्वितस्वार्थ एवेति** ॥ सामान्यतो योग्येतरान्विते स्वार्थे व्युत्पत्तिमङ्गीकृत्य पदान्तरसमभिव्याहारेण विशेषान्विते व्युत्पत्त्युपपत्तेरित्यर्थः ।

च० — **यद्यपीह प्रभिन्नकमलोदर इति** ॥ विकसितेत्यर्थः ॥ मौलोऽपि शब्दो यद्यपितथापीत्यर्थतया योजित इति ध्येयम् ॥ क्रमेण प्रत्यक्षागमानुमानैरानन्तरिकी व्युत्पत्तिः समर्थितेत्यवसेयम् ॥

अनु० — नानयेत्यादिवाक्यतः ॥

सु० — **एवं सिद्धार्थे व्युत्पत्तिसंभवमभिधायेदानीं परव्युत्पादितं व्युत्पत्तिप्रकारं निराकर्तुमाह ॥ नानयेति ॥ देवदत्त गामानयेत्युत्तमवृद्धवाक्यश्रवणात्प्रवृत्तं मध्यमवृद्धमुपलभ्य**

**प्रवृत्तिलिङ्गेन तस्य प्रवर्तकबोधमनुमाय तस्य स्वात्मदृष्टान्तेन कार्यताविषयत्वमवधार्य ततः शब्दानन्तरभावित्वेन शब्दजत्वं ज्ञात्वा पुनरावापोद्धाराभ्यां लिङादेः साक्षात्कार्यवाचित्वमन्येषां शब्दानां तदन्वितस्वार्थवाचित्वमवगच्छतीति यदुक्तं तन्नेत्यर्थः ।**

**वा०** — नानयेत्याद्युत्तरग्रन्थेनापि स्वपक्षव्युत्पादनं क्रियत इति भ्रान्तिं निवारयितुं तत्प्रतिपाद्यमाह ॥ **एवमिति** ॥ यद्वाऽसदुदाहृतादस्त्यपूपांस्तव भ्रातेत्यादेरेव सिद्धे व्युत्पत्तिर्न तु गामानयेत्यादिवाक्यतः सिद्धे व्युत्पत्तिरित्यर्थप्रतिपादकत्वमुत्तरवाक्यस्य भाति । तदयुक्तम् । अप्रसक्तप्रतिषेधानुपपत्तेरुत्तरव्युत्पादनानानुगुण्याच्चेत्यतस्तदभिप्रायं दर्शयति ॥ **एवमिति** ॥ गामानयेत्यावाक्यमात्रस्यागमविधया परेण व्युत्पत्तिसाधकत्वानभ्युपगमादसंभवाच्च पराभिमततद्वाक्यमूलकमध्यमवृद्धादिव्यवहारस्यैवात्र विवक्षा । सा च पुनर्दृष्टैव शब्दश्रुदित्युत्तरवाक्ये पराभिमतप्रक्रियैकदेशोत्कीर्तनेन समग्रप्रक्रियोपलक्षणाज्ज्ञायत इत्याशयेन पराभिमतव्युत्पत्तिप्रकारं दर्शयति ॥ **देवदत्तेति** ॥

**प०** — पूर्वपक्षदशायामुक्तं सर्वं संग्रहेणानुवदति **देवदत्तेत्यादिना** ॥ **यदुक्तमिति** ॥ कार्यता चेत्येतदवतारिकायाम् ।

**श्री०** — **उत्तमवृद्धः** प्रयोजकवृद्धः । **मध्यमवृद्धः** प्रयोज्यवृद्धः । **तस्य** बोधस्य ॥

**अनु०** — आनीयमानदृष्टैव व्युत्पत्तेः संभवे सति ।
एष्यदानयनायायं कुत एव प्रतीक्षते ॥

**सु०** — **कुत इति चेत्कल्पकाभावात् । तथा हि । प्रौढमतीनामपि दुरधिगमयाऽनया प्रक्रियया बालो व्युत्पद्यत इति किं सिद्धार्थे व्युत्पत्त्यनुपपत्त्या कल्प्यते, किंवा संभवत्यामपि सिद्धार्थव्युत्पत्तौ तदनादरेण व्युत्पित्सुरेवैतां गरीयसीं प्रक्रियामाश्रयतीति । नाद्यः । सिद्धार्थे प्राथमिकव्युत्पत्तिसंभवस्योक्तत्वात् । द्वितीयं दूषयति ॥ आनीयमानेति ॥ प्रयोजनार्थिनो हि प्रयोजन एव निर्बन्धो न तूपायविशेषे । तत्रोपायानेकत्वे च गुरुं परित्यज्य लघुमाश्रयते, न तु लघुं परित्यज्य गुरुमितिस्वात्मन्येव तावत्सिद्धम् । व्युत्पित्समानेऽप्येवं कल्पयितुं युक्तम् । तत्र देवदत्तो गामानयति तव भ्राताऽपूपानत्तीति पदानामानीयमानाद्यमान-**

**गवादिदर्शनेनैवोक्तरीत्या व्युत्पत्तिर्लघीयसी; वर्तमानत्वेन कालान्तरभाव्यर्थप्रतीक्षाभावात्, तावत्पर्यन्तं शब्दानुसन्धानप्रयासाभावाच्च। देवदत्त गामानयेत्यादिपदानामेष्यदानयनादौ व्युत्पत्तिस्तु गरीयसी; वाक्यश्रवणानन्तरं तावत्तदनुसन्धानस्यागामिकार्थप्रतीक्षणस्य च प्रयाससाध्यत्वात्। तत्र गवादिशब्दव्युत्पत्त्यर्थं लघीयांसमुपायमनादृत्यैष्यदानयनप्रतीक्षादिकं गरीयांसमुपायं व्युत्पित्सुरनुतिष्ठतीति कल्पना निर्मूलैवेति।**

वा०— नन्वानीयमानदृष्ट्यैवेत्यनेन परोक्ते व्युत्पत्तिप्रकारे कीदृग्बाधकमुच्यत इति न स्पष्टं ज्ञायत इत्यतः कल्पकाभावोऽनेनोच्यते। एतादृशव्युत्पत्तिप्रकारकल्पकं हि भवत्सिद्धे व्युपत्त्यनुपपत्तिर्वा व्युत्पित्सोरेतादृशप्रकारादरणं स्वेच्छयैवेति तदिच्छा वा संभाविता नान्यत्किञ्चित्। तत्र च संभवे सतीत्यनुवादमुखेन सूचितेन सिद्धे व्युत्पत्तिसंभवहेतुनाऽऽद्यपक्षनिवृत्तिः समग्रेण च द्वितीयपक्षनिवृत्तिरित्याशयेनोत्तरमूलं प्रश्नपूर्वं तल्लब्धहेतुकथनतदुपपादनादिपूर्वकमवतारयति ॥ **कुत एतदिति चेदिति** ॥ ननु भवदुक्तप्रकारानादरेण व्युत्पित्सुरेव गुरुभूतमप्यसदुक्तं कार्यव्युत्पत्तिप्रकारमेवाश्रयतीत्याशङ्किते स्वपरोक्तप्रकारयोर्लाघवगौरवव्युत्पादकं मूलमिदं न सङ्गतमित्यत एतत्प्रकारस्य व्युत्पत्तिरूपप्रयोजनोपायत्वेनोपायानां च स्वत एवोपादेयत्वाभावेन प्रयोजनस्येव स्वाभाविकाग्रहविषयत्वाभावादनेकोपायसाध्यप्रयोजनोपायेषु समेषु कस्यचिदेव स्वेच्छयोपादानेऽपि लघुगुरूपायेषु गुरुपरित्यागेन लघूपादानस्य स्वानुभवसिद्धत्वात्स्वानुभवसिद्धस्यैव च प्रकारस्य व्युत्पित्सावपि कल्पनीयत्वात्स्वानुभवविरुद्धस्यापि कल्पने कार्यज्ञानस्य स्वप्रवृत्तिप्रयोजकत्वेऽपि परप्रवृत्तावन्यस्यापि प्रयोजकत्वसंभवेन कार्यव्युत्पत्तेरेवासिद्धेर्लघूपायपरित्यागेन गुरूपायाश्रयणस्य च स्वानुभवविरुद्धत्वेनाकल्पनीयतया तादृशेच्छा न कल्पनार्हेत्याशयेन स्वपरोक्तप्रकारयोर्लाघवगौरवकथनं भाष्यकारीयं सङ्गततरमित्याशयेन प्रथमवक्तव्यं कथयन्नेव तत्सङ्गततया भाष्यं योजयति ॥ **प्रयोजनार्थिन इत्यादिना** ॥ आनीयमादृष्ट्येत्येष्यदानयनायेति चैकवाक्यस्थपदविषयकमिति भ्रान्तिवारणाय देवदत्तो गामानयतीत्यादौ देवदत्त गामानययेत्युत्तरत्र वाक्यविशेषोपादानम्। संभवे सतीत्यनेन सूचितं हेतुमाह ॥ **उक्तरीत्येति** ॥ नन्वानीयमानदृष्ट्या व्युत्पत्तिर्न पूर्वमुक्तेत्यतः सा स्वसमानन्यायतया सिद्धा तथा चानीयमानादिशब्द उपलक्षणपर इत्याशयेन तव भ्राताऽपूपानत्तीत्यद्यमानेति चोक्तम्। आनीयमानेति वर्तमानार्थकशानच्प्रयोगलब्धं वर्तमानत्वं ( पुनर्दृष्ट्यैवेत्येवकारसूचितयोर्गुरुत्वे हेतुकथनेन ) कुत एव प्रतीक्षत इत्यनेन लब्धयो कालान्तरभाव्यर्थप्रतीक्षा तावत्पर्यन्तशब्दानुसन्धानप्रयासाभावयोर्लाघवहेत्वोर्हेतुरित्याशयेनाह ॥ **वर्तमानत्वेनेत्यादि** ॥ एवमेष्यत्पदसूचितं गौरवे हेतुद्वयमाह ॥ **वाक्येति** ॥

या० — व्युत्पित्सुरेव एतां गरीयसीं प्रक्रियामाश्रयतीति हि स्वात्मदृष्टान्तेन कल्पनीयं वादिना। स्वात्मनि च प्रयोजनेच्छायां तत्र यद्यनेके तुल्या उपायास्तदा येन केनापि उपायेन प्रयोजनसंपादन एव निर्बन्ध आग्रहः। न तूपायविशेषे विनिगमकाभावात्।। यदि च लघुगुरुभूतानेकोपायास्तदा गुरुं परित्यज्य लघूपाय एवाग्रहो न तु वैपरीत्येनेति विद्धम्। अतो व्युत्पित्सावप्येवमेव कल्पनीयमितोऽन्यथा-कल्पना तु निर्मूलैवेति मूलाशयं वक्तुमाह ॥ **प्रयोजनार्थिनो हीत्यादिना ॥ उपायविशेष इति।** तुल्येष्वनेकेषूपायेषु सत्स्विति शेषः ॥ **उपायानेकत्व इति** ॥ लघुगुरुभूतोपायानेकत्व इत्यर्थः।

**अनु० — व्युत्पन्नो वर्तमाने तु क्रियाशब्दे भविष्यति ॥**
**पुनर्दृष्ट्यैव शब्दश्रुत्पश्चाद्व्युत्पत्तिमेष्यति ॥**

**सु० — तत्किं प्रयत्नगौरवाद्भविष्यत्क्रियायां तदन्वितेषु च व्युत्पत्तिर्नास्त्येव। तथा सति तच्छब्दव्यवहारोऽपि कथमित्यत आह ॥ व्युत्पन्न इति ॥ वर्तमाने वर्तमानार्थे क्रिया-शब्दे आनयतीत्यादौ युत्पन्नोऽर्थसंबन्धज्ञानवान्भविष्यति भविष्यदर्थे क्रियाशब्दे देवदत्त गामानयेत्यादिशब्दश्रुत्पुनर्दृष्ट्या गवानयनस्य। अयमर्थः। वर्तमानायां क्रियायां तदन्वितेषु चार्थेषु गामानयतीत्यादिपदानां संबन्धं प्रथमतोऽवगच्छति। भविष्यत्क्रियायां तु पश्चादान-येत्यादिपदानां संबन्धं जानाति त्वदुक्तरीत्यैवेत्येव ब्रूमः। न तु सर्वथा तत्र व्युत्पत्त्यभावम्। अतो न काचिदनुपपत्तिरिति। शब्दश्रुत्पुनर्दृष्ट्येति परोक्तप्रक्रियानुवादः।**

**वा०** — नन्वेष्यदानयनादेर्गरीयस्त्वेनानादरणमुक्त्वोत्तरवाक्ये तदभ्युपगमोऽनुपपन्न इत्यतस्तद-भ्युपगमे कारणं दर्शयन्नुत्तरवाक्यमवतारयति ॥ **तत्किमिति** ॥ आनयतीत्यादिवदानयेत्यादिक्रियाशब्द-स्यापि वर्तमानत्वेन भविष्यत्त्वानुपपत्तेः शब्दयोर्वर्तमानत्वादिकथनस्य प्रकृतानुपयोगाच्च वर्तमानादिपदमर्थ-परतया व्याख्याति ॥ **वर्तमान इत्यादिना** ॥ व्युत्पत्तिशब्दस्य वाच्यवाचकोभयज्ञानपरत्वाच्छब्दे वाचकत्वज्ञानवानित्येतावतैव पूर्तेस्तावन्मात्रार्थतया व्युत्पन्नपदं व्याख्याति ॥ **व्युत्पन्न इति** ॥ ननु परोक्तप्रकारेण कार्यव्युत्पत्तिस्वीकारे उक्तगौरवात्तदनुपपत्तिरतिरिक्तप्रकारेण तत्स्वीकारे तु पुनर्दृष्ट्यैवेत्यादि-परोक्तप्रकारानुवादानुपपत्तिरित्यत आह ॥ **अयमर्थ इति** ॥

**प०** — पदानि योजयन्नेवार्थमाह ॥ **वर्तमानइत्यादिना** ॥ तात्पर्यार्थमाह ॥ **अय-मर्थ इति** ॥

**श्री० — तच्छब्दव्यवहार इति**। भविष्यदानयनक्रियार्थकानयेत्यादिशब्दव्यवहार इत्यर्थः ॥

अनु०— वर्तमानमतीतं च भविष्यदिति च क्रमात् ॥
आकाङ्क्षादियुतं यस्माद्विधेर्व्युत्पादनं कुतः ॥

सु०— एवं लिङादीनां स्वार्थे व्युत्पत्तिः पश्चात्तनीत्युक्तम् । पराभ्युपगते तु कार्ये न कदाचिदपीत्याह ॥ वर्तमानमिति ॥ यस्माद्वर्तमानादिक्रमेण कालत्रयसंबन्ध्येव वस्त्वाकांक्षासन्निधियोग्यतायुक्तं च भवति । आकाङ्क्षाद्युपेत एव च व्युत्पत्तिः । न ह्यजिज्ञासितेऽर्थे प्रवृत्तिसहस्रदर्शनेऽपि व्युत्पद्यन्ते । कार्यं च कालत्रयासंबद्धं परेणेष्यते । तस्मादाकांक्षादिविरहाद्विधेः कार्यापरनाम्नो व्युत्पादनं व्युत्पत्तिर्लिङादिवाच्यताज्ञानं कुतस्संभवतीति ॥ अथवा लिङादिशब्दो विधिस्तस्य व्युत्पादनं कार्ये व्युत्पत्तिः कुत इति योज्यम् ॥ अत्र कालसंबन्ध्येवेति वक्तव्ये क्रमप्रदर्शनमुत्तरार्थम् ॥ किञ्च कालत्रयानवमर्शो विधेः किम् अर्थतः किंवा शब्दतः । आद्ये शशविषाणादिवत्तस्य सत्त्वमेवासंभावितम् । व्युत्पत्तिस्तु तद्विषये लिङादीनां कुतः । द्वितीये घटादितुल्यत्वात्कालत्रयानवमृष्टो विधिरिति विशेषाभिधानं व्यर्थम् । अनुभवविरुद्धं चैतत् । कर्तव्यमिति शब्दादेष्यत्कालीनताप्रतीतेरुक्तत्वात् ।

वा०— त्वदुक्तरीत्यैवेति परोक्तप्रक्रियानुवादफलकथनम् । नन्वधुनैव लिङादीनां कार्ये व्युत्पत्तिं स्वीकृत्योत्तरवाक्ये तन्निरासे पूर्वोत्तरविरोध इत्यत उत्तरवाक्याभिप्रायमाह ॥ एवमिति ॥ वर्तमानादिकालसंबन्धित्वस्य व्युत्पत्तिव्याप्याकाङ्क्षादिव्याप्यत्वस्य मूलतः प्रतिभासात्कालसंबन्धित्वव्यतिरेकेण कथमाकाङ्क्षादिव्यतिरेकोक्तिः । आकाङ्क्षादेर्व्युत्पत्तिव्याप्यतायाः मूलेऽनुक्तेर्निर्मूलत्वाच्च न तदभावेन व्युत्पत्त्यभावः । कालत्रयासंबद्धत्वं च कार्यस्यासिद्धमित्यतस्तदुपपादयति ॥ यस्मादिति ॥ तथा च कालसंबन्धित्वस्याकाङ्क्षादिव्यापकत्वं मूलाभिप्रेतमाकाङ्क्षाद्युपेत एव च व्युत्पत्तिरित्यस्यार्थाल्लाभस्तदुपपादकं च प्रसिद्धं कालत्रयासंबन्धित्वं च पराङ्गीकारसिद्धमित्युक्तं भवति । व्युत्पत्तिघटकशक्तिरूपसंबन्धस्य पदधर्मत्वेन षष्ठीस्वारस्याय पदपरत्वेन विधिशब्दं व्याख्यातुं पक्षान्तरमाह ॥ अथवेति ॥ उत्तरार्थमिति ॥ वर्तमानार्थभविष्यदर्थयोराकाङ्क्षादिक्रमे उक्ते तद्व्युत्पत्त्योर्वक्ष्यमाणः पूर्वापरीभावः सुबोध इति भावः । किञ्च भाष्यकारीयमाकाङ्क्षादिमुखेन व्युत्पत्त्यभावोपपादनमभ्युपगमवादेन । वस्तुतस्तु कालत्रयासंबन्धित्वमात्रेण व्युत्पत्त्यभावोपपादनं सुशकम् । तथा हि । कार्यस्य कालत्रयासत्त्वरूपमर्थतः कालत्रयासंबन्धित्वं वा कालत्रयसंबन्धानुपस्थापकशब्दबोध्यत्वरूपं शब्दतः कालत्रयासंबन्धित्वं वा । तत्राद्यं शशविषाणा-

दिवदसत्त्वापादकतया व्युत्पत्तिविरोधि । द्वितीयं तु घटादिशब्दात्त्रिषु कालेष्वेकसंबद्धस्याप्रतीतेर्घटादिसाधारण्यान्न विशिष्य वक्तव्यमनुभवविरुद्धं चेत्याशयेनाह ॥ **किं चेति** ॥ इष्टसाधनत्वरूपकार्यत्वस्यैव लिङादिवाच्यत्वेन तस्यैव तव्यप्रत्ययबोध्यत्वेन क्रियागतैष्यत्कालीनत्वस्य च लिङादिवाच्यकार्यरूपत्वाभावेन तस्य कार्यत्वेन तव्यप्रत्ययाबोध्यत्वेऽपि रूढ्या विशिष्टकर्तव्यशब्दस्यैष्यत्कालीनत्वबोधकत्वेन बाधकमित्याशयेन प्रयोगप्रदर्शनेन रूढेः न भविष्यत्क्रिया कार्यमिति भाष्यव्याख्यावसरे उक्तत्वादित्याह ॥ **कर्तव्यमितीति** ॥

स० — **कार्यं च कालत्रयासंबद्धं परेणेष्यत इति** ॥ कार्यपराणां लिङादीनां वर्तमानादिकालविशेषाबोधकत्वादिति भावः ॥ **क्रमप्रदर्शनमिति** ॥ वर्तमानमादावाकाङ्क्षादियुतं पश्चादतीतादिरूपमेव वर्तमानमिति क्रमप्रदर्शनमित्यर्थः ॥ **उत्तरार्थमिति** ॥ दृष्ट्या ज्ञातपदार्थस्येत्यादौ कथ्यमानो यः वर्तमानव्युत्पत्तिकार्यव्युत्पत्त्योः पूर्वापरभावप्रयोजककार्यकारणभावः तं सूचयितुं क्रमादित्युक्तमित्यर्थः । क्रमोऽपि वर्तमानव्युत्पत्तेः प्राथमिकत्वाभिप्रायेणैव । न त्वतीतानागतव्युत्पत्त्योरपि पूर्वापरभावाभिप्रायेणेति ध्येयम् ॥ **किमर्थत इति** ॥ किं कार्यं कालत्रयासंबन्धीति यावत् ॥ **किंवा शब्दत इति** ॥ तद्वाचकशब्दः कालत्रयासंबद्धमर्थं प्रतीपादयतीति वा विवक्षितमित्यर्थः ॥ **घटादितुल्यत्वादिति** ॥ घटादिशब्दोऽपि न कालत्रयमध्येऽन्यतमकालावच्छिन्नवस्तुवाचीत्यर्थः ।

प० — **उत्तरार्थमिति** ॥ दृष्ट्येत्युत्तरवाक्ये पूर्वं वर्तमाने पश्चादनागतादावाकाङ्क्षाक्रमेण व्युत्पत्तिक्रमस्य वक्ष्यमाणत्वात्तदुपयोगित्वार्थमित्यर्थः ॥ **किंवा शब्दत इति** ॥ शब्देन प्रतिपाद्यत इति वेत्यर्थः ॥ **उक्तत्वादिति** ॥ 'न भविष्यत्क्रिया कार्यमित्येतद्व्याख्यावसरे उक्तत्वादित्यर्थः ॥

या० — **कार्यं च कालत्रयासंबद्धमिति** ॥ अभूद्भवति भविष्यतीत्यादिवत्कार्यपराणां लिङादीनां वर्तमानादिकालविशेषबोधकत्वानङ्गीकारादिति भावः ॥ **क्रमप्रदर्शनमिति** ॥ क्रमादित्यनेन वर्तमानमादावाकांक्षादियुतं पश्चादतीतादिरूपमवर्तमानमिति यत्क्रमप्रदर्शनं तद्दृष्ट्या ज्ञातपदार्थस्येत्युत्तरवाक्ये वर्तमानावर्तमानार्थकशब्दव्युत्पित्त्योर्यः पौर्वापर्यनियामकः कार्यकारणभावः प्रतिपाद्यते तदुपपादनार्थमित्यर्थः । अत्र वर्तमानार्थकशब्दव्युत्पत्तेरवर्तमानार्थकशब्दव्युत्पत्त्यपेक्षया प्राथमिकत्वरूपक्रम एव तात्पर्यम् । न त्वतीतभविष्यदर्थकशब्दव्युत्पत्त्योरप्यवान्तरक्रमे इत्यवधेयम् । 'विधेर्व्युत्पादनं कुत'इत्यंशस्य प्रकारान्तरेणाभिप्रायमाह ॥ **किञ्चेति** ॥ **किमर्थत इत्यादि** ॥ कालत्रयानवमृष्टो विधिरिति

तद्वाक्यस्य किं लिङादिप्रत्ययार्थो यः कार्यापरनामा विधिः स कालत्रयासंबद्ध इत्यर्थो विवक्षितः, किंवा लिङादिप्रत्यय एव विधिः स पचतीत्यादाविव वर्तमानादिकालान्यतमकालावच्छिन्नवस्तुवाची नेत्यर्थ इति विकल्पार्थः ॥ **घटादितुल्यत्वादिति** ॥ घटादेरपि शब्दतः कालत्रयानवमर्शस्य सत्त्वादित्यर्थः । तथा च घटादिशब्दोऽपि न वर्तमानकालाद्यन्यतमकालावच्छिन्नवस्तुवाची किन्तु घटादिमात्रवाचीति लिङादेर्घटादिशब्दतुल्यतापत्तिरिति भावः ॥ **उक्तत्वादिति** ॥ 'न भविष्यत्क्रिया कार्यमि'त्येतद्वाक्यव्याख्यानावसरे 'देवदत्त कृतः किं त्वया कटः क्रियते वेति पृष्टः प्रत्याह  न मया कृतो नापि क्रियते किन्तु कार्य इति । तेन प्राप्नोति भविष्यत्क्रियाकार्यमिती'त्यादिनेत्यर्थः ।

श्री०—**पराभ्युपगते तु कार्य इति** ॥ इष्टसाधनतातिरिक्ते कार्य इत्यर्थः । **वक्तव्य इति** ॥ कालसंबन्ध्येवाकाङ्क्षादियुक्तमिति वक्तव्य इत्यर्थः ॥ **आद्य इति** ॥ लिङादिप्रत्ययार्थभूतो यो विधिः कार्यापरनामा तस्य कालत्रयासंबद्धत्वपक्ष इत्यर्थः ॥ **द्वितीय इति** ॥ लिङादिप्रत्यय एव विधिः । स पचतीत्यादौ यथा वर्तमानकलावच्छिन्नवस्तुवाची तथा न भवतीति द्वितीयपक्ष इत्यर्थः ॥ **घटादीति** ॥ यथा घटशब्दो वर्तमानकालाद्यवच्छिन्नवस्तुवाची न भवति । पचतीत्यादाविव घट इत्यत्र कालभासकपदाभावात्तथा लिङादिशब्दोऽपीत्येवं तस्य घटादिशब्दतुल्यताप्राप्त्या तद्वत्प्रवर्तकत्वं न स्यादिति भावः ॥ **विशेषाभिधानमिति** ॥ घटादिशब्दानामपि तथात्वेन विधिरेव कालत्रयानवमृष्ट इति विशेषाभिधानं व्यर्थमित्यर्थः ॥

च०— **कार्यं च कालत्रयासंबद्धमिति** ॥ लुङ्लट्लङादीनामिव लिङ्लोट्कृत्यप्रत्ययपञ्चमलकाराणामतीतादिकालविशेषान्यतमाभिधायकत्वानुपगतेरिति ॥ **भावक्रमप्रदर्शनमिति** । दृष्ट्या ज्ञातपदार्थस्येत्युत्तरवाक्ये पौर्वापर्यनियामकः कार्यकारणभावः प्रतिपाद्यते तदुपादानायेत्यर्थः । विधेर्व्युत्पादनं कुत इत्यंशस्य विधान्तरेणाशयं प्रकाशयति ॥ **किं चेति** ॥ कालत्रयानवमृष्टोविधिरिति वाक्यस्य लिङादिप्रत्याय्यमानः कालत्रयसंबन्धविनिर्मुक्त इति लिङाद्यन्यतमस्त्त्रिकानभिधायक इति वाऽभिप्रेतार्थ इति कल्पद्वयमनुसंदधानः क्रमेणापहस्तयते ॥ **कालेति** ॥ **घटादितुल्यत्वादिति** ॥ घटादिशब्दतुल्यत्वादित्यर्थः ।

**अनु०—  दृष्ट्या ज्ञातपदार्थस्य स्यादाकाङ्क्षा भविष्यति ॥**
**व्युत्पत्तिः प्रथमा तस्माद्वर्तमाने(ऽ)गते ततः ॥**

सु०— यदप्युक्तं वर्तमानार्थक्रियादिशब्दव्युत्पत्त्यनन्तरभाविनी भविष्यदर्थक्रिया-शब्दव्युत्पत्तिरिति । तदयुक्तम् । व्युत्पत्तिसंभवे प्राथमिकत्वस्यैवोपपत्तावानन्तरिकत्वकल्पनायां नियामकाभावादित्यत आह ॥ दृष्टेति ॥ प्रथमत एवानागतार्थे जिज्ञासाप्रतीक्षयोरसंभवान्न व्युत्पत्तिरित्युक्तम् । वर्तमानार्थस्य तु दृष्टिसंभवेन जिज्ञासोपपत्तौ प्रतीक्षाऽऽयासासंभवाच्च प्रथमं व्युत्पत्तिस्ततो ज्ञातः पदस्यार्थो येन तस्य वर्तमानक्रियायां तदन्वितेषु चार्थेषु व्युत्पन्नस्य पश्चाद्भविष्यतीत्यतीते चाकांक्षा स्यात् । देवदत्तो गामानयतीत्यादिपदानां वर्तमानक्रियायां तदन्वितेषु व्युत्पत्तौ जातायां देवदत्त गामानयेत्युक्ते गवादिपदानामानयतेश्च ज्ञातार्थत्वेनो-र्वरितप्रत्ययार्थमात्रे जिज्ञासाप्रतीक्षा च स्यात् । तस्माद्वर्तमानार्थव्युत्पत्तेराकाङ्क्षादिजननद्वारेण कारणत्वेन भविष्यदाद्यर्थव्युत्पत्तेश्च कार्यत्वात्पौर्वापर्योपपत्तिरिति ॥ अगतेऽनागत इत्यर्थः ।

वा०— ननूत्तरवाक्ये आन्तरिकत्वं कार्यव्युत्पत्तेर्न व्युत्पादनीयम् अधुनैव कार्ये व्युत्पत्त्यभाव-प्रतिपादनात् । प्राथमिकत्वे नियामकाभावे आनन्तरिकत्वस्यैव सिद्धेश्चेत्यनस्तद्व्यावर्त्यशङ्कामुत्थापयति ॥ यदुक्तमिति ॥ आनन्तरिकत्वं व्युत्पादयताऽनन्तरं कार्यजिज्ञासादि भवतीतिवत्प्रथमं न भवतीत्यापि वक्तव्यतया तदनुक्त्या भाष्ये न्यूनतेत्यत एष्यदानयनायायं कुत एव प्रतीक्षत इत्युक्त्या तत्सिद्धेर्न न्यूनतेत्याशयेन पूर्वसिद्धमनुवदति ॥ प्रथमत एवेति ॥ दृष्टेत्यनेन सूचितं वर्तमानार्थे व्युत्पत्तेः प्राथमिकत्वे हेतुं दर्शयति ॥ जिज्ञासेति ॥ पदार्थज्ञानस्य कार्यव्युत्पत्तौ हेतुत्वलाभेऽपि किमागतं वर्तमानार्थव्युत्पत्तेरित्यत आह ॥ ततो ज्ञात इति ॥ भाष्योक्तं हेतुहेतुमद्भावं विशदयति ॥ देवदत्त इति ॥ नन्वस्तु तर्ह्याकाङ्क्षायां तस्याः कारणत्वं कार्यव्युत्पत्तौ किमायातमित्यत आह ॥ तस्मादिति ॥ वर्तमानार्थव्युत्पत्तेरित्यर्थः । अगतशब्दस्यातीतव्यावर्तकत्वभ्रान्तिं निराकरोति ॥ अगत इति ॥

स०— उत्तरार्थमित्युक्तं दर्शयितुमाह ॥ यदुक्तं वर्तमानेत्यादि ॥ तथा चोत्तरत्र वक्ष्यमाण-व्युत्पत्तिक्रमोपपादनार्थमिति तद्वाक्यार्थ इत्युक्तमेव ।

प०— अगते गत इति च द्वेधा पदविभागमुपेत्यार्थमाह ॥ भविष्यत्यतीते चेति ॥ नन्वत्र भविष्यतीत्येतस्य कथं लाभ इत्यत आह ॥ अगते अनागत इति ॥

अनु०— इष्टमाकाङ्क्षते सर्वो न प्रवृत्तिमपेक्षते ॥
अपरोक्षं परोक्षं वा ज्ञानमिष्टस्य साधनम् ॥
क्वापि चेष्टा तदर्था स्याद्वृत्तिर्हि रसवित्तये ॥

सु०— यदप्युक्तं प्रवृत्तिनिवृत्त्यौपयिकार्थशासनाच्छास्त्रत्वम् । न च सिद्धार्थबोधस्तथा । अतः कार्यबोधस्यैव तद्भावात्कार्यपरत्वं वेदस्येति ॥ तत्र वक्तव्यम् । किं प्रवृत्त्यादिकमेव वेदस्य मुख्यं प्रयोजनम् उतावान्तरप्रयोजनम् । नाद्य इत्याह ॥ इष्टमिति ॥ पुरुषापेक्षितं हि प्रयोजनं भवति; अन्यस्यानिरूपणात् । पुरुषश्च इष्टावाप्तिमनिष्टनिवृत्तिं चापेक्षते, न प्रवृत्ति-निवृत्ती; क्लेशरूपत्वात् । अतो न तयोर्मुख्य प्रयोजनतेति ॥ अस्तु प्रयोजनत्वमिष्टानिष्ट-प्राप्तिप्रहाणयोः तत्साधनं प्रवृत्तिनिवृत्ती इत्यवान्तर प्रयोजनमिति द्वितीयं दूषयति ॥ अपरोक्ष मिति ॥ ज्ञानमेवेष्टावाप्तिसाधनं न प्रवृत्त्यादिकमित्यर्थः ॥

तत्किं नोपदेष्टव्यैव क्रिया । न । क्वचिज्ज्ञानार्थत्वादित्याह ॥ क्वापीति ॥ तत्कथ-मित्यत आह ॥ अत्तिर्हीति ॥ अत्तिश्चर्वणादिरूपा क्रिया । रससाक्षात्काराय भवति ।

वा०— उत्तरग्रन्थस्याव्यवहितपूर्वेणासङ्गतेः पूर्वपक्ष्युक्ततृतीयदूषणनिरासकत्वेन तं व्याख्यातुं तत्स्मारयति ॥ यदपीति ॥ प्रवृत्त्यादेः प्रयोजनत्वस्य पराभिमतत्वेऽपरोक्षमित्यादीष्टसाधनान्तरप्रतिपाद-नमुखेन प्रवृत्त्यादेरिष्टसाधनत्वाभावप्रतिपादकोत्तरग्रन्थासङ्गतेः प्रयोजनसाधनत्वस्य तथात्वे त्विष्टमाकाङ्क्षत इति पूर्वग्रन्थासङ्गतेस्तदुभयानुसारेण प्रवृत्त्यौपयिकत्वोक्तेः साधारण्यात्तां विकल्प्य तत्तत्कल्पदूषणपरतया भाष्यं योजयति ॥ तत्रेति ॥ इष्टादेः प्रयोजनत्वादौ वक्तव्ये किमसङ्गतमाकाङ्क्षितत्वाद्युच्यत इत्यतो लाघवाय हेतुकथनमुखेन तदेवोच्यत इत्याह ॥ पुरुषेति ॥ विशिष्योक्तिलब्धावधारणेन प्रकृतसिद्धिरि-त्याह ॥ ज्ञानमेवेति ॥ ननूत्तरवाक्ये ज्ञानार्थतया क्रियाङ्गीकारो व्यर्थ इत्यतः क्रियोपदेशान्यथाऽनुप-पत्त्या स इत्याशयेनाह ॥ तत्किमिति ॥ अत्तिश्चर्वणादिक्रियेति ॥ एतच्चात्तिर्हीति मूलेऽत्तिरिति धातुनिर्देशस्तेन च तदर्थक्रिया लक्ष्यत इत्यभिप्रायेण व्याख्यानं न त्वयं धात्वर्थनिर्देशः । तथा सति क्तिनि अदो जग्धिर्ल्यप्तिकितीति जग्ध्यादेषप्रसङ्गादत एवात्तिमङ्गागनेतृतामित्येतद्व्याख्यावसरेऽत्तिमदन-कर्तृत्वं धातुनिर्देशोऽयं तेन तदर्थस्य कर्ता लक्ष्यत इति टीकाकारै ऋग्भाष्यटीकायामभिहितमिति ध्येयम् । उभयविधज्ञानप्रस्तावाददनप्रस्तावाददनादिक्रियायाश्चोभयार्थत्वाभावादाह ॥ रसेति ॥

स०— सिद्धविशेषेष्टार्थशासनादेव शास्त्रत्वं न प्रवृत्तिनिवृत्त्यौपयिकार्थशासनात् ।

प०— तृतीयमपि बाधकमनूद्य निराह ॥ यदप्युक्तमिति ॥ कार्यताचेत्येतदवतारिकाया-मुक्तमित्यर्थः । नोपदेष्टव्या क्रिया किमितिप्रश्नं निराह ॥ नेति ॥ तत्र हेतुमाह ॥ क्वचिदित्यादि ॥

**या०— ज्ञानमेवेष्टावाप्तिसाधनमिति** ॥ न च लोके ज्ञानेनेच्छा तया प्रयत्नस्तेन चेष्टावाप्ति-र्दृश्यत इत्यवधारणानुपपत्तिरिति वाच्यम् । प्रयत्नानन्तरं विषयभोगं विनेष्टावाप्त्यसंभवादित्याशयात् ॥ **तत्कथमिति** ॥ क्वचिद्वेदोपदिष्टक्रियाया ज्ञानार्थत्वं कथं, लोके क्रियाया ज्ञानार्थत्वस्य क्वाप्यदर्शना दित्याशयः ॥ **अत्तिर्हीति** ॥ धातुनिर्देशोऽयम् । तेन चवर्णक्रिया लक्षणीयेत्याशयः । अन्यथा अदो जग्धीति जग्ध्यादेशप्रसङ्ग इति ध्येयम् ।

**श्री०— न प्रवृत्त्यादिकमिति** ॥ तथा चेष्टानिष्टप्राप्तिप्रहाणसाधनत्वाभावेन प्रवृत्तिनिवृ-त्त्योरवान्तरप्रयोजनत्वं न संभवतीत्यर्थः ॥ **क्रियेति** ॥ क्रियापरपर्याया प्रवृत्तिरित्यर्थः ॥ **ज्ञानार्थत्वा-दिति** ॥ इष्टावाप्त्यादिसाधनीभूतज्ञानसाधनत्वमेव न साक्षादिष्टावाप्त्यादिसाधनत्वमित्यर्थः ॥ **भव-तीति** ॥ अत्रादनरूपक्रियाद्वारा रससाक्षात्कारहेतुत्वं रसनेन्द्रियस्यैव न साक्षात्क्रियायाः । तथात्वे तस्याः प्रमितिकरणत्वेन प्रमाणत्वापत्तेरिति द्रष्टव्यम् । हेतुत्वे तात्पर्यं न कारणत्वे इति ज्ञेयम् । तथा च तद्वन्निवृत्तकर्मादिरूपा प्रवृत्तिरप्यपरोक्षज्ञानसाधनमिति भावः ।

**च०— ज्ञानमेवेष्टावाप्तिसाधनमिति** ॥ शास्त्रैकवेद्यतात्पर्यकमिदम् । चक्षुरादिवेद्यस्थले तु जानातीच्छति यतत इति दर्शनादवधारणानुपपत्तेरिति ध्येयम् ॥

अनु०— **वाक्यार्थज्ञानमात्रेण क्वचिदिष्टं भवेदपि** ॥

**सु०— नन्वभिमतरसादिसाक्षात्कारस्यैवेष्टसाधनत्वं दृष्टम् । तत्कथं परोक्षं वा ज्ञान-मिष्टस्य साधनमुक्तमित्यत आह ॥ वाक्यार्थेति ॥ अपिशब्दो वाक्यार्थज्ञानमात्रेणापीति संबध्यते । क्वचिदिति पुत्रस्ते जातः पिता ते राजा वर्तत इत्यादौ ॥ यद्यप्यभिमतार्थानुमिति-ज्ञानमपीष्टसाधनम् । तथाऽपि प्रकृतानुपयोगात्तन्नोक्तम् ।**

**बा०—** परोक्षं वेत्युक्त्यैव लब्धत्वाद्वाक्यार्थज्ञानमात्रेणेत्युत्तरवाक्यवैयर्थ्यमित्यत आह ॥ **नन्विति** ॥ अत्तिरितिक्रियाविशेषोपादानलब्धार्थकथनमभिमतेत्यपिशब्देन समुच्चयक्रियान्तराभावान्न भवेदित्यस्य च विरुद्धतयाऽसमुच्चेयत्वात्क्वचिन्न भवेदित्यस्याविरुद्धत्वेऽपि क्वचिदित्यनेनैव सिद्धतया-ऽवक्तव्यत्वादपिशब्दो भिन्नक्रम इत्याह ॥ **अपिशब्द इति** ॥ क्वचिदित्युक्तमनुभवारोढायाभिनयेन

दर्शयति ॥ **क्वचिदितीति** ॥ क्रमेणेष्टावाप्त्यनिष्टनिवृत्तिसाधनबोधजनकवाक्योदाहरणे वाक्यार्थज्ञानस्य विशिष्योपादानेन पूर्वं परोक्षपदमपि तन्मात्रपरमित्यनुमितेर्व्यावृत्तिरभिमतेति भ्रान्तिं निवारयति ॥ **यद्य-पीति** ॥ वाक्यार्थज्ञानस्यैव विशिष्योपादानप्रयोजनमाह ॥ **तथाऽपीति** ॥ **प्रकृतेति** ॥ अभिप्रेतवाक्य-योजनांश इत्यर्थः ।

अत्र च प्रवृत्तिनिवृत्त्योर्मुख्यप्रयोजनत्वं वाऽवान्तरप्रयोजनत्वं वा नास्तीत्येव वक्तव्ये यदिष्टानिष्ट-प्राप्तिपरिहारयोर्मुख्यप्रयोजनत्वस्य परोक्षापरोक्षज्ञानयोस्तत्साधनत्वस्य क्रियाया ज्ञानार्थत्वस्य च कथनं तेनोक्तरीत्या वाक्यपर्यवसानोपयोगिकार्थताया आकाङ्क्षादेश्च ब्रह्मण्येव सत्त्वेन तस्य वाक्यार्थताया उपपादितत्त्वात्तत्परोक्षापरोक्षज्ञानयोरेवेष्टावाप्त्यनिष्टपरिहारसाधनत्वादुपासनादिविधीनां तदापरोक्ष्यार्थत्वाच्च ब्रह्मण्येव सर्ववेदतात्पर्यसिद्धिरिति सूचितम् । तेन च लिङादेः कार्यवाचकत्वे पदान्तरस्य तदन्वित-स्वार्थाभिधायित्वं वाक्यान्तरस्य च तदेकवाक्यत्वं मन्त्रार्थवादादीनामपि तदन्विततार्थाभिधायित्वमित्युक्त-रीत्या सर्ववेदस्य कार्यपरत्वलाभेऽपि ब्रह्मण एव वाक्यपर्यवसानोपयोगीष्टसाधनत्वरूपकार्यताया आकाङ्क्षादि-मत्त्वेन वाक्यार्थत्वस्य च प्रतिपादनेऽपि तत्र विध्यादिरूपवेदयोजनाप्रकाराप्रतिपादनात्कथं प्रवृत्त्याद्यौप-यिकार्थपरस्य सर्ववेदस्य तत्परत्वसिद्धिरित्याशङ्का परिहृता भवतीति ध्येयम् ।

प०—**प्रकृतानुपयोगादिति** ॥ वेदादिशब्दजन्यस्य साक्षात्काररूपस्य वा ब्रह्मज्ञानस्येह प्रकृ-तत्वात्तदनुपयोगादित्यर्थः ।

श्री०— इष्टसाधनत्वं सुखसाधनत्वम् ॥ **दृष्टमिति** ॥ तथा च तद्वदपरोक्षज्ञानमेव मोक्षरूपे-ष्टसाधनमिति वक्तव्यमित्याशयः ॥ **इत्युक्तमिति** ॥ परोक्षज्ञानस्येष्टसाधनताया अदृष्टत्वादिति भावः ॥ **वाक्यार्थज्ञानमात्रेणेति** ॥ शब्दजन्यवाक्यार्थविषयकपरोक्षज्ञानमात्रेणेत्यर्थः ॥ **अनुमितिज्ञानमपीति** ॥ लिङ्गजन्याभिमतार्थानुमितिरूपपरोक्षज्ञानस्यापीष्टसाधनत्वेन तदपि वक्तव्यम् । शब्दजन्यपरोक्षज्ञानमात्र-ग्रहणं किमर्थमित्यर्थः ॥ **प्रकृतेति** ॥ लिङादिशब्दप्रसङ्गे तस्यानुपयुक्तत्वादिति भावः ॥ **स्वप्राधनेति** ॥ अनन्यशेषत्वेनेत्यर्थः ॥ **न च प्रयोजनशेषतयेति** ॥ अधमाधिकारिणः प्रति परमेश्वरो मोक्षरूपप्रयो-जनशेषतयोपदिश्यत इत्यङ्गीकारे मोक्षरूपप्रयोजनस्यैव प्राधान्यप्राप्त्या तच्छेषत्वेनेश्वरस्याप्राधान्यं प्राप्तमित्यर्थः ॥ **प्रतिपत्तावपरार्थत्वादित्यादि** ॥ आत्मा वा अरे द्रष्टव्य इत्यादिवेद ईश्वरस्वरूपप्रति-पत्तिं तावत्स्वप्राधान्येनैव जनयति नान्यशेषत्वेनाप्राधान्येनेश्वरप्रतिपत्तिरेव च प्रमाणमूलम् । एवं च वेदेन स्वप्राधान्येनेश्वरप्रतिपत्तौ जातायां सत्यां पश्चात्स ईश्वर उत्तमाधिकारिणः प्रतीष्टत्वेनाधिकारिणः

प्रतीष्टसाधनत्वेन प्रतिपाद्यत इति व्याख्यातृभिरेव वेदाभिप्रायो विचार्यत इति नोक्तदोष इति भावः ॥ **प्रतिपत्तेरेवेति** ॥ अपरार्थप्रतिपत्तेरेवेत्यर्थः ॥

८—च०— मौलोत्तिरिति तिपा धातुनिर्देशस्तेन च वर्णादिरूपा क्रिया लक्ष्यत इति हृदयम् । तेनादोजग्धिर्ल्यप्तिकितीति न जग्धादेशप्रसङ्गः ।

**सु०— अयमत्राशयः । यो हि सात्त्विकप्रकृतिर्लोकप्रदाद्यत्कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो ज्ञात्वा स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशाच्चान्यदगणयन्वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्रधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव संभवतीति तदर्थं कर्मविधयः ॥ अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते; तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थ इति ॥ न च प्रयोजनशेषतयेश्वरस्याप्राधान्यम् प्रतिपत्तावपरार्थत्वात् । प्रतिपत्तेरेव प्रमाणफलत्वात् ।**

वा०— ननु कथमेतत् । स्वरूपमात्रपरवाक्याभावात्सामान्यतो ब्रह्मस्वरूपे सिद्धे विशेषजिज्ञासायां ब्रह्मस्वरूपं विशिष्टं वाक्येन बोधनीयम् । तच्चाशक्यम् । सामान्यज्ञानोपायाभावात् । ब्रह्मज्ञानादेरिष्टादिसाधनत्वे ज्ञाते कथञ्चिद्ब्रह्मविशेषजिज्ञासोदयेऽपि स्वत एव जिज्ञासाऽनुदयाच्च । न च ब्रह्मण एवेष्टसाधनत्वात्तज्जिज्ञासोदय इति वाच्यम् । तदापरोक्ष्यस्येष्टादिसाधनत्वोक्तिव्याघातात् । न च तदापरोक्ष्यस्येष्टसाधनतयैव तज्जिज्ञासेति वाच्यम् । तर्हीष्टसाधनज्ञानविषयत्वमात्रापत्तौ मुख्येष्टत्वाभावेन वाक्यार्थज्ञानमात्रेणेत्युक्त्यनुपपत्तेः । कथं च वाक्यार्थभूतब्रह्मज्ञानमात्रेणेष्टोत्पत्तिरननुभवात्कथं च वाक्यार्थभूतब्रह्मज्ञानमात्रेणावाप्तपरमानन्दं प्रत्युपासनादिविधीनां प्रवृत्तिः । साक्षात्कारादेरेवेष्टसाधनत्वे तदर्थतया ब्रह्मणः प्रतिपादने चेष्टसाधनस्यैव मुख्यप्रतिपाद्यत्वात्साक्षात्कारस्यैव मुख्यतो वेदबोध्यत्वं ब्रह्मणस्तु तच्छेषतयेत्यापत्तेः ॥ तस्मात्कथं ब्रह्मणो वेदमुख्यार्थत्वमित्यतोऽत्रेष्टतयेष्टसाधनतया चाधिकारिभेदेन द्वेधा ब्रह्मणो वेदमुख्यार्थत्वमभिमतम् । तत्र ब्रह्मणोयं प्रतीष्टत्वं तस्य सामान्यज्ञानविशेषजिज्ञासयोः प्रयोजनाननुसंधानेऽपि ब्रह्मणि सूपपादत्वात्तं प्रति स्वप्राधान्येनेव ब्रह्मबोधनं वेदेनोपपद्यते । वाक्यार्थज्ञानमात्रेण

परानन्दप्राप्तिश्च तस्यैव । तत्साक्षात्कारमात्रेच्छुं तं प्रति तदर्थतयोपासनादिविधीनामप्युपपत्तिः । यं प्रतीष्टसाधनत्वं सुखदुःखप्राप्तिप्रहाणेच्छुं तत एव तत्साधनजिज्ञासुं च तं प्रति सुप्रसन्नो भगवानेव तत्साधनतया वेदेन बोध्यते । तत्र च प्रसादरूपतद्व्यापारसाधनतया साक्षात्कारस्तदर्थतया चोपासनादिविधिप्रवृत्तिरिति तं प्रत्यपि स्वप्राधान्येनैव ब्रह्म बोध्यते न तु प्रतिपाद्यान्तरशेषतया । अस्यैवेष्टसाधनत्वेन मुख्यप्रतिपाद्यत्वात् । एवं चोभयविधाधिकारिणं प्रति स्वप्राधान्येन ब्रह्मबोधनमुपपद्यत एवेति वेदवाक्यानां योजना द्वेधा विवक्षितेत्याशयेनाह ॥ **अयमत्राशय इति** ॥ अन्यत्राविद्यमानं लोकप्रवादादिना कर्तृसामान्यज्ञानं कथमस्येत्यतो मूलकारणमाह ॥ **सात्त्विकेति** ॥ प्रयोजनाभावे सामान्यज्ञानमात्रेण न विशेषजिज्ञासादीत्यतः प्रयोजनवशात्स्नेहमाहात्म्यज्ञानयोरपि विशेषजिज्ञासाप्रयोजकत्वमिति वक्तुं स्नेहादिकारणोत्कीर्तनं स्वतनुभवनादेः कर्तारमिति । अत्रादिशब्दोक्तसकलकर्तृत्वस्य माहात्म्यज्ञानकारणत्वमिति द्रष्टव्यम् । प्रयोजनानुसन्धाने स्नेहादिमात्रेण कथं जिज्ञासेत्यतः पुरुषार्थान्तरकलुषितमानसानां तथा न तु शुद्धमनसामित्याशयेन सुमनसामित्युक्तसंभावकस्य सनिमित्तस्य कथनं तत्संस्कारवशादन्यदप्यविगणयन्त्रर्तत इति । पूर्वेण जिज्ञासाप्रतिपादनम् । अनेन सन्निधेश्च प्रतिपादनमिति द्रष्टव्यम् । अनेनैव वैराग्यातिशयः पूर्वेण ज्ञानभक्ती चाधिकारिविशेषणानि सूचितानि । अनेन वाक्यार्थज्ञानमात्रेण प्राप्तपरानन्दावाप्तिश्च समाहिता । दृश्यन्ते हि प्रयोजनानुसंधाना अपि स्नेहविशेषमात्रेण प्रियादिकुशलजिज्ञासवः तत्सुखवार्ताश्रवणमात्रेण प्राप्तपरमानन्दा लोकेऽपि । दृश्यते चान्यसुखाद्यजनकं स्वपुत्रदर्शनं स्वसुखदमिति । यथाकथञ्चित्प्रयोजनशेषतया प्रतिपादनेऽप्राधान्यमेवेत्याशङ्क्य निषेधति ॥ **न चेति** ॥ प्रमाणस्य साक्षात्फलं प्रमितिरेव । तत्र प्राधान्यं च तत्फलभूतप्रमित्यनन्तरशेषत्वाभावमात्रेणैवेति तदफलशेषत्वं न तत्फलप्राधान्यविघातकमिति भावः ।

**स०**— क्वापि प्रवृत्तिनिवृत्तिविषयक्रियोपदेशस्तु साक्षात्कारायैवेत्युक्त्या सूचितां स्वमते वेदयोजनां तत्रैव सर्ववेदपर्यवसानात् 'अनुग्राह्यप्रमाणाभावात् न ब्रह्ममीमांसारम्भः संभवती'ति पूर्ववक्ष्युक्तनिरासायाह ॥ **अयमात्राशय इति** ॥ इयं च योजना एकान्तभक्ताभिप्रायेण । तदितरभक्ताभिप्रायेणाह ॥ **अथवेति** ॥

**प०**— ननु परेण सर्वस्य वेदादेः कार्य एव तात्पर्यस्य वर्णितत्वाद्भवद्भिः सिद्धे व्युत्पत्त्युपपादनेन समस्तवेदराशेः कथं ब्रह्मण्येव तात्पर्यमुपपादितं भवतीत्यत आह ॥ **अयमत्राशयइति** ॥ केषांचिदिष्टं केषांचिदिष्टसाधनं भगवानित्युक्तम् । तत्राद्यानुरोधेन वाक्यान्वयप्रकारमाह ॥ **यो हीत्यादिना** ॥

द्वितीयानुरोधेनाह ॥ **अथवेति** ॥ **य इति** ॥ सात्त्विकप्रकृतिरित्यनुकर्षः । अन्त्यपक्षे दोषमाशङ्क्य निराह ॥ **न च प्रयोजनशेषतयेति** ॥ प्रयोजनार्थतयेत्यर्थः ॥ **प्रतिपत्ताविति** ॥ यथा ज्योतिष्टोमादिकं प्रतिपाद्यमानं स्वर्गादिफलशेषत्वेनैव 'ज्योतिष्टोमेन स्वर्गकामोयजेते'त्यादिनाऽवगम्यते ॥ तथा 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादौ प्रतिपत्तिवेलायां परार्थत्वेनाप्रतीत्या प्रतिपत्तौ वेदेन जनितव्यायां ब्रह्मणोऽपरार्थत्वादित्यर्थः ॥ **प्रमाणेति** ॥ वेदरूपप्रमाणेत्यर्थः ।

**या०** — ननु सत्यम् मिष्टमाकाङ्क्षते सर्व इति; तथाऽपि न वेदरूपशास्त्रस्य भगवत्परत्वं युक्तम् । तस्य सर्वान्प्रतीष्टत्वाभावादतत्साधनत्वाच्च, कर्मप्रतिपादकवेदभागस्य भगवत्परत्वाप्रतीतेश्चेति शङ्कामपाकुर्वन् 'क्वापि चेष्टा तदर्था स्यादि'ति श्लोकेन सूचितां स्वमते वेदयोजनामाह ॥ **अयमत्राशय इत्यादिना** ॥ अनेन तत्रैव सर्ववेदपर्यवसानादिति यत्पूर्वपक्षिणोक्तं तदपि निरस्तमिति ज्ञातव्यम् । यो हि सात्त्विकप्रकृतिरित्याद्यधिकारिविशेषणैर्भगवतः सर्वेष्टत्वाभावेऽप्यधिकारिविशेषान्प्रतीष्टत्वमस्तीत्युपपादितमिति ज्ञातव्यम् । धर्मिज्ञानाभावे तत्र स्नेहस्यैवासंभवादाह ॥ **लोकप्रवादादित्यादिना** । स्नेहमाहात्म्यज्ञानाभ्यामित्यनेन भक्तिरूपं तद्विशेषज्ञानार्थमुत्कण्ठितमानस इत्यनेन शमरूपं सात्त्विकप्रकृतिरित्यनेनैव दमरूपमन्यदगणयन्नित्यनेन इहामुत्र फलभोगविरागरूपमधिकारिविशेषणमुक्तमिति ज्ञातव्यम् । इयं च योजनोत्तमभक्ताभिप्रायेणातो न मुमुक्षुत्वरूपमधिकारिविशेषणमत्रोक्तम् । अत एव तदितरभक्ताभिप्रायेण योजनान्तरमाह ॥ **अथवेति** ॥ अत्र विशेषणद्वयेन मुमुक्षुत्वरूपमधिकारिविशेषणमुक्तम् । इदमुपलक्षणम् । शमदमादिकमपि ग्राह्यम् । तेन भगवतः सर्वान्प्रतीष्टसाधनत्वाभावेऽपि चेतनविशेषान्प्रतीष्टसाधनत्वमस्त्यतस्तद्बोधनाच्छास्त्रस्यार्थवत्त्वमुपपादितं भवतीति ज्ञातव्यम् ।

**च०** — अयमाशय इति आद्ययोजनायां मुमुक्षुत्वं नाधिकारिविशेषणम् तेषां मुमुक्षुत्वस्याभावात् । अथवेति योजनायां तु उप्रत्ययान्तद्वयेन तस्य तद्विशेषणत्वं प्रत्याप्यत इति ध्येयम् ।

**अनु०** — **न च मुमुक्षुवद्ब्रह्मादावतात्पर्यं श्रुतेर्भवेत्**
**यत्किञ्चित्करणस्यापि यज्ञतैवान्यथा भवेत् ॥**
**तस्मादुपासनार्थे च स्वार्थे तात्पर्यवद्भवेत् ॥**

**सु०** — **एवमकार्यशेषतया स्वप्रधाने ब्रह्मणि वेदस्य प्रामाण्यसंभवाद्युक्ता ब्रह्मजिज्ञासेत्युक्तम् । इदानीमस्तु वा कार्यपरत्वं वेदस्य । तथाऽप्यात्मानमुपासीतेत्युपासनाकार्ये कर्मका-**

रकतया प्रतीतस्य ब्रह्मणः स्वरूपं प्रतिपादयतां सत्यं ज्ञानमित्यादिवाक्यानां तत्र प्रामाण्य-संभवाद्युक्ता ब्रह्मजिज्ञासेति पक्षान्तरं समर्थयमानो विधिपरेभ्योऽपि वाक्येभ्यो वस्तुतत्त्व सिद्धिर्भवतीत्यत्र परसंप्रतिपन्नं निदर्शनमाह ॥

॥ न चेति॥ आदिग्रहणाद्यूपादयस्सर्वस्याम्नायस्य कार्यपरतां मन्यमानस्यापि मते यूपाहव-नीयादिस्वरूपे श्रुतेरप्रामाण्यं तावन्न भवेत् ; किन्तु यूपे पशुं बध्नातीति बन्धनाय यूपे विनि-युक्ते तस्यालौकिकत्वात्कोऽसौ यूप इत्यपेक्षायां 'खादिरो यूपो भवति। यूपं तक्षति । यूपमष्टा-स्रीकरोती'ति वाक्यैस्तक्षणादिविधिपरैरपि संस्काराविष्टं विशिष्टसंस्थानं दारु यूप इति गम्यत एव । एवं स्रुक्स्रुवादयोऽपि द्रष्टव्याः ॥ अप्रामाण्यमिति वक्तव्येऽतात्पर्यमिति वचनं यत्परेण प्रत्यक्षादिवैधर्म्यं शास्त्रस्योक्तं तन्निरासार्थम् ।

कुतो न भवेदित्यत आह ॥ यत्किञ्चिदिति ॥ अन्यथा यूपाहवनीयादिवाक्यानां यूपादिस्वरूपे तात्पर्याभावे । यत इति शेषः ।

किमतो यद्येवम् ; स्रुक्स्रुवन्द्यादावपि श्रुतेस्तात्पर्यमस्तीत्यत आह ॥ तस्मादिति ॥ यस्मा-त्कार्यान्वितत्वेन यूपाहवनीयादिशब्दानां स्वार्थे तात्पर्यमस्ति । तस्मात्तत्समानन्यायेनोपासना-कार्यार्थत्वेन सत्यं ज्ञानमित्यादिवेदवाक्यं च स्वार्थे सकलगुणक्रियाद्युपेते ब्रह्मणि तात्पर्ययुक्तं भवेत् ।

वा० — ननु नच स्रुक्स्रुवेत्याद्युत्तरवाक्ये स्रुगादावप्रकृते श्रुतेस्तात्पर्यप्रतिपादनमसङ्गतम् । न च तस्मादुपासनार्थं चेत्यादिनोपासनाकार्यशेषतया ब्रह्मणि वेदप्रामाण्यस्योपपादनात्तदुपयोगान्नासङ्गतिरिति वाच्यम् । स्वप्रधाने ब्रह्मणि वेदतात्पर्यकथनावसरे तद्विरुद्धार्थप्रतिपादनायोगादित्यतस्तत्सङ्गमयति ॥ एवमिति ॥ अत्रादिपदसङ्ग्राह्यं लौकिकप्रमाणासिद्धं केवलवैदिकपदार्थजातमेवेत्याशयेनाह ॥ आदीति ॥ परसंप्रतिपत्तिं दर्शयितुमाह ॥ सर्वस्येति ॥ तावच्छब्दो नेदं दार्ष्टान्तिकाभिधानमपि तु दृष्टान्तोपपादनमिति नासङ्गतिरित्याशयस्य मूलारूढतासंपादनाय । ननु विधिपराणां वाक्यानां यूपादि-स्वरूपे तात्पर्याङ्गीकारः परकीयः केन प्रकारेणेत्यतस्तं दर्शयति ॥ किन्त्विति ॥ चतुर्जुहु गृह्णाति स्रुवेणाभिघारयति यदाहवनीये जुहोतीत्यादौ चतुर्ग्रहणाद्यर्थं जुह्वादौ विनियुक्तेऽलौकिकत्वात्किं तज्जुह्वादीत्याकाङ्क्षायां पर्णमयी जुहूर्भवति खादिरः स्रुवो भवत्यभ्युदिते सूर्ये प्रातरादधातीत्यादिभिः पर्णमयीत्वादिविधिपरैरपि जुह्वादिस्वरूपविशेषसिद्धिरपि द्रष्टव्येत्याह ॥ एवमिति ॥ प्रामाण्यस्यैव प्रस्तुतत्वात्कार्यशेषतया तदुपपादनायाप्रामाण्यं नेति वक्तव्येऽतात्पर्यमिति वचनं यत्परेणोक्तं 'न प्रत्यक्षा-

दिवदर्थबोधकत्वमात्रेण वाक्यस्य प्रामाण्यं किन्तु तात्पर्यविषयीभूतार्थप्रतिपादकत्वेनैव । तात्पर्यविषयीभूतश्चार्थो यः प्रवृत्तिनिवृत्त्यौपयिककार्यात्मा स एव न तु सिद्धरूप' इति तदयुक्तम् सिद्धस्यापि यूपाहवनीयादेस्तात्पर्यविषयकत्वेन कार्यस्यैव तात्पर्यविषयत्वाभावादित्यर्थसूचनायेत्याह ॥ **अप्रामाण्यमितीति** ॥ ननु यद्येवं परसंप्रतिपत्तिस्तर्हि यत्किञ्चिदित्युत्तरवाक्ये विपक्षे बाधकोक्तिरश्लिष्टेत्यतो वैयात्यादिदमनङ्गीकुर्वाणं प्रति बाधकप्रदर्शनं नानुपपन्नमित्याशयेनाह ॥ **कुत इति** ॥ यत्किञ्चित्करणस्यापि यज्ञतैवान्यथा भवेदिति यत्किञ्चित्करणस्य यज्ञतैवान्यथा विपरीता भवेदिति यत्किञ्चित्करणस्य यज्ञताया वैपरीत्यमापद्यत इति भात्यतोऽन्यथापदार्थं कथयन्नेवास्य बाधकपरत्वप्रदर्शनायाध्याहारेण पूर्वसंबन्धं सूचयति ॥ **अन्यथेति** ॥ स्रुगादौ तेषां वाक्यानां तात्पर्यस्य ब्रह्मणि सत्यज्ञानादिवाक्यतात्पर्ये हेतुत्वासंभवात्समानन्यायेनेत्युक्तम् । कार्यशेषतामानेतुं कार्यपदम् । ननु स्वरूपमात्रसिद्धावपि न गुणादिसिद्धिरित्यतः सकलगुणाद्युपेतस्यैव स्वार्थत्वादित्याशयेन सकलेत्याद्युक्तम् ।

स०— ननु कार्यनिराकरणमध्ये न च स्रुक्स्रुवाहवनीयादावित्यादेरसङ्गतिरित्यत आह ॥ **एवमकार्यशेषेत्यादिना** ॥ कार्यपरत्वे वेदप्राधान्यं ब्रह्मण्यापन्नमित्यत उक्तम् ॥ **कर्मकारकतया प्रतीतस्येति** ॥ उद्देश्यत्वात्प्राधान्यमित्यर्थः ॥ **अप्रामाण्यमिति वक्तव्य इति** ॥ शब्दस्य तात्पर्यविषयीभूतार्थप्रतिपादकत्वेनैव प्रामाण्यं वक्तव्यम् । तात्पर्यविषयीभूतार्थस्तु कार्यमेव । प्रत्यक्षादेस्तु बोधकत्वेनैव प्रामाण्यमिति । यद्वैधर्म्यं तन्निरासार्थमित्यर्थः । स्रुक्स्रुवादीनां सिद्धरूपाणामपि तात्पर्यविषयत्वस्य सूचितत्वादिति भावः । केचित् । प्रत्यक्षादिवैधर्म्यपदेन प्रामाण्यातिरिक्ततात्पर्याख्यविलक्षणधर्मत्वमुच्यते तन्निरासार्थः प्रमाणबोध्यार्थे तस्य प्रमाणस्याभेदः । अवान्तरतात्पर्याभावे तेन सिद्धेरेवायोगादिति भाव इत्याहुः । अपरे तु प्रत्यक्षादीनां सिद्धार्थबोधकत्वेऽपि न शास्त्रस्य तथात्वम् । प्रवृत्तिनिवृत्त्युपयोग्यर्थबोधकत्वाच्छास्त्रस्येति यत्प्राभाकरेणोक्तं तन्निरस्तम् । शास्त्रस्यापि सिद्धार्थबोधकत्वाभावे यूपादिपदार्थाभावप्रसङ्गादित्याहुः । अन्ये तु यद्यपि प्रत्यक्षादौ बोधकत्वेनैव प्रामाण्यं तथापि वाक्यप्रयोगस्य परार्थत्वात्परप्रवृत्तिनिवृत्त्यौपयिक एवार्थो वाक्यबोध्याङ्गीकार्य इति शास्त्रस्य प्रत्यक्षादिवैधर्म्यं यत्परेणोक्तं तन्निरासार्थमित्यर्थः । स्रुक्स्रुवाहवनीयादिरूपेऽर्थे परप्रवृत्त्याद्यनुपयुक्ते वाक्यस्य तात्पर्याभावे तत्राप्रामाण्यमेव । तात्पर्यविषय एव वाक्यस्य प्रामाण्यात् । प्रत्यक्षादौ तु नैवमिति परोक्तं दूषयितुं स्रुक्स्रुवादौ प्रामाण्यसमर्थनाय तात्पर्यमेव साधयतीति भाव इत्याहुः ॥

प०— **तस्य(यूपस्य)ाऽलौकिकत्वादिति** ॥ संस्कारविशेषविशिष्टकाष्ठविशेषरूपत्वेन तक्षणाऽष्टाश्रीकरणादेर्लोकतोऽनवगतत्वादिति भावः ॥ **एवं स्रुवस्रुवादयोऽपीति** ॥ चतुर्जुह्वां गृह्णाति स्रुवेण

अभिघारयति यदाहवनीये जुहोतीत्यादिवाक्यैश्चतुर्ग्रहणाद्यर्थं जुह्वादौ विनियुक्तोऽलौकिकत्वात्किं जुह्वादीत्याकाङ्क्षायां पर्णमयी जुहूर्भवति खादिरः स्रुवो भवत्यर्धोदिते प्रातरादधातीत्यादिवाक्यैः पर्णमयीत्यादिविधिपरैरपि स्रुक्स्रुवादिस्वरूपं गम्यत एवेति भावः ॥ **प्रत्यक्षादिवैधर्म्यमिति** ॥ प्रत्यक्षादेः सिद्धार्थबोधकत्वेन प्रामाण्यसंभवेऽपि शास्त्रस्य सिद्धरूपकार्यपरत्वेनैव प्रामाण्यमिति यद्वैधर्म्यमित्यर्थः ॥ **तन्निरासार्थमिति** ॥ तथात्वे यूपस्रुवादिपदार्थानामसिद्धिप्रसङ्गादतः प्रत्यक्षादिनेव शास्त्रेणापि सिद्धरूपोऽप्यर्थः सिद्ध्यति । तात्पर्यविषयश्च तादृशोऽप्यर्थ इति वाच्यमिति भावः ॥

या० — **यूपादय इति** । अत्रादिपदेनापूर्वदेवतास्वर्गादिकं ग्राह्यम् । यतस्तदपि विधिपरेणैव शास्त्रेण समर्थ्यते ॥ आहवनीयादिस्वरूप इति । अत्रादिपदेन गार्हपत्यदक्षिणाग्न्योर्ग्रहणम् । अनेन मूलस्थं वन्हिपदमाहवनीयादिपरमित्युक्तं भवति ॥ **एवं स्रुक्स्रुवादयोऽपीति** ॥ चतुर्जुह्वां गृह्णाति स्रुवेणाभिघारयति यदाहवनीये जुहोतीत्यादिवाक्यैश्चतुर्ग्रहणाद्यर्थं जुह्वादौ विनियुक्तेऽलौकिकत्वात्किं तज्जुह्वादीत्याकाङ्क्षायां पर्णमयी जुहूर्भवति खादिरः स्रुवो भवति । अर्धोदिते प्रातरादधातीत्यादिवाक्यैः पर्णमयीत्यादिविधिपरैरपि स्रुक्स्रुवादिस्वरूपं गम्यत एवेति भावः ॥ **यत्परेण प्रत्यक्षादिवैधर्म्यमिति** ॥ यद्यपि प्रत्यक्षादौ बोधकत्वेनैव प्रामाण्यम् । तथाऽपि वाक्यप्रयोगस्य परार्थत्वात्परप्रवृत्तिनिवृत्त्यौपयिक एवार्थो वाक्यबोध्योऽङ्गीकार्य इति ग्रन्थेन शास्त्रस्य प्रत्यक्षादिवैधर्म्यं परेणोक्तम् तन्निरासार्थमित्यर्थः । अतात्पर्यं नेत्युक्त्या ह्ययमर्थोऽवगम्यते । सत्यम् । प्रत्यक्षादाविव न वाक्येऽपि बोधकत्वेनैव प्रामाण्यम् । अतस्तद्वैधर्म्यं शास्त्रस्येति, किन्तु तत्तात्पर्यविषयीभूतार्थबोधकत्वेनैव । तात्पर्यविषयीभूतश्चार्थो न प्रवृत्तिनिवृत्त्युपयुक्तः कार्यात्मैव सर्वत्र किन्तु स्रुक्स्रुवादिरूपः सिद्धोऽपि । अन्यथा तदसिद्धिप्रसङ्गात् । अतः शास्त्रस्य स्रुक्स्रुवादिरूपसिद्धेऽपि तात्पर्यसमर्थनेन तद्बोधकत्वेनापि प्रामाण्यात्प्रत्यक्षादिवैधर्म्यसंभवे यत्प्रवृत्तिनिवृत्त्यौपयिकार्थबोधकत्वेनैव तस्य प्रत्यक्षादिवैधर्म्यं परेणोक्तं तन्निरस्तं भवति ॥

श्री० — **अष्टास्रीकरोतीति** ॥ अष्टभिरास्रैर्धाराभिर्युक्तं करोतीत्यर्थः ॥ **वक्तव्यं इति** ॥ स्रुक्स्रुवादेः सिद्धार्थत्वेन तद्बोधकवाक्यानामनधिगतार्थबोधकत्वाभावेनाप्रामाण्यं मीमांसकेनोच्यते । तन्न भवेदिति वक्तव्यमित्यर्थः ॥ **यत्परेणेत्यादि** ॥ स्रुक्स्रुवादावतात्पर्यं श्रुतेर्न भवेदित्युक्त्या परेण स्रुक्स्रुवादौ सिद्धार्थे श्रुतेस्तात्पर्यं नास्तीत्युक्तं भवति । तथा च तात्पर्यविषयीभूतप्रवृत्तिनिवृत्त्युपयुक्तकार्यस्वरूपप्रतिपादकत्वं शास्त्रस्यास्ति न प्रत्यक्षस्य । तस्य तात्पर्यविषयीभूतार्थप्रतिपादकत्वाभावादित्येवं

शास्त्रस्य प्रत्यक्षादिवैधर्म्यप्रतिपादनप्रसङ्गे यजेतेत्यादिविधिपरशास्त्रस्य प्रवृत्त्याद्युपयुक्तकार्यस्वरूपप्रतिपादकत्वेन तत्रैव तात्पर्यम् । स्रुक्स्रुवयूपाहवनीयादिप्रतिपादकशास्त्रस्य च प्रवृत्त्याद्युपयुक्तकार्यस्वरूपप्रतिपादकत्वाभावान्न स्रुक्स्रुवादौ तात्पर्यमित्येवं स्रुक्स्रुवादौ श्रुतेरतात्पर्यमुक्तं तन्निरासार्थमतात्पर्यं नेत्युक्तमित्याशयः ।

च०— यूपादय इत्यादिशब्दः स्वर्गापूर्वदेवतादिसंग्राहकः। आहवनीयादीत्यादिशब्दः गार्हपत्यदक्षिणाग्निपरिग्राहकः । **यत्परेण प्रत्यक्षादिवैधर्म्यमिति** । वाक्यप्रामाण्यं न प्रत्यक्षादेरिवार्थबोधकतामात्रनियन्त्रितं किन्तु तात्पर्यविषयीभूतप्रवृत्तिनिवृत्त्यौपयिककार्यप्रतिपत्तिजनकतानिबन्धनमेवेति वाक्यस्य प्रत्यक्षाद्वैलक्षण्यप्रतिपादनं प्राभाकरीयं न सङ्गच्छते कार्यानात्मनोऽपि यूपाहवनीयादेस्तात्पर्यविषयतया कार्यस्यैव तत्तेतिनियमस्य निर्बीजत्वादिति भावः ।

सु०— **ननु विषमोऽयमुन्यासः । यूपादिस्वरूपाभावे पशुबन्धादिकार्यमेव न निष्पद्यत इति तत्स्वरूपेऽपि तात्पर्यमवश्याश्रयणीयम् । न चैवमुपासनं विना कर्मकारकसत्तया नोपपद्यते, आरोपिताकारेणापि संभवादिति । मैवम् । पार्थिवद्रव्यमात्रे बन्धनसंभवेन खादिरत्वादावतात्पर्योपपत्तेः । तदप्यपूर्वत्वादविरुद्धत्वाच्च गृह्यत इति चेत् समं प्रकृतेऽपि । अथ खादिरत्वाद्यभावेनापूर्वोत्पत्तिरिति चेन्न । श्रुतेस्तत्र प्रामाण्यस्याद्याप्यनिश्चयात् । अविद्यमानार्थोपासनेऽपि फलाभावस्य साधयिष्य माणत्वात् ।**

वा०— भाष्यकारेण साम्योक्त्या सूचितं पराभिमतवैषम्यनिरासप्रकारं दर्शयति ॥ **ननु चेत्यादिना** ॥ यद्वेतिशब्दोत्रयेऽग्नावितीत्याद्युत्तरग्रन्थस्य वैषम्यपरिहाराय प्रवृत्तत्वात्तत्सूचितवैषम्यान्तरपरिहारप्रकारव्युत्पादनार्थत्वात्तत्प्रसञ्जकत्वाद्वा ननु चेत्यादिग्रन्थ उत्तरवाक्यशेषो द्रष्टव्यः । अधिकरणस्वरूपे सर्वथा तात्पर्यानभ्युपगमे बन्धनादिकार्यस्वरूपानिष्पत्त्या कार्यतात्पर्यमेव न निष्पद्यत इत्यन्यथाऽनुपपत्तिरूपबाधकसद्भाववदुपासनाकर्मस्वरूपे तदनभ्युपगमेन बाधकमित्याशयः । तथाऽपि खादिरत्वादावतात्पर्ये बाधकाभावात्तदसिद्धिप्रसङ्ग इत्याह ॥ **पार्थिवेति** ॥ ननु माऽस्तु कार्यस्वरूपानिष्पत्तिरूपान्यथाऽनुपपत्तिः खादिरत्वादितात्पर्ये मानम् । तथाऽप्यन्येन प्राप्तेः, प्रमाणान्तरविरोधस्य वाऽतात्पर्यप्रयोजकत्वात्तदभावात्प्रतीतिविषये खादिरत्वादावपि तात्पर्यमित्याशङ्कते ॥ **तदपीति** ॥ ननु खादिरत्वादावतात्पर्ये कार्यस्वरूपानिष्पत्तेरभावेऽतात्पर्यप्रयोजकशून्यत्वे सति प्रतीतिविषयत्वस्य च प्रकृतसाम्येऽपि बन्धनाद्यनुपपत्त्या कस्यचित्प्राप्तावपि खादिरत्वाद्यभावेऽपूर्वानुत्पत्तेरपूर्वानुत्पत्तिरेव तत्रातात्पर्ये

बाधिकेत्याशङ्कते ॥ **अथेति** ॥ खादिरादौ तात्पर्यसिध्यधीनत्वात्तस्यापूर्वसाधनताया अन्योन्याश्रयापत्तिरित्याह ॥ **श्रुतेरिति** ॥ अस्तु वाऽपूर्वानुत्पत्तिवत् तत्फलानुत्पत्तेरत्रापि तात्पर्यसाधकत्वमित्याह ॥ **अविद्यमानेति** ॥

म० — **अथेति** ॥ बन्धनविधिना दारुमात्राक्षेपेऽपि विशिष्टस्यैव काष्ठस्यापूर्वसाधनत्वादपूर्वं च येन केनापि बन्धनेन भवतीत्यर्थः ॥ **श्रुतेस्तत्रेति** ॥ खादिरो यूपो भवतीत्यादिवाक्यानां खादिरत्वादौ तात्पर्ये सिद्धे खादिरत्वाभावेऽपूर्वाभावसिद्धिः तत्सिद्धौ च खादिरादिवाक्यस्य तत्र तात्पर्यसिद्धिरितीतरेतराश्रयादित्यर्थः । अन्ये तु । तत्र खादिरत्वादेरपूर्वजनकत्वे इत्यर्थः । शब्दानां कार्यपरत्वे खादिरो यूपो भवतीत्यादिवाक्यानां विशिष्टयूपस्वरूपपरत्वेन यूपस्वरूपे सिद्धे तस्यापूर्वनिष्पादकत्वसिद्धिः । अपूर्वनिष्पादकत्वसिद्धौ तदन्यथाऽनुपपत्त्योदाहृतवाक्यानां खादिरत्वादिविशिष्टद्रव्यपरत्वसिद्ध्या यूपादिस्वरूपसिद्धिरित्यन्योन्याश्रय इति भाव इत्याहुः । अपूर्वार्थत्वमङ्गीकृत्य प्रकृतेऽपि तथास्त्वित्याह ॥ **अविद्यमानेति** ॥ विशिष्टफलावाप्त्यर्थं सत्यज्ञानादिगुणवत्त्वनारोपिते ब्रह्मस्वरूपेऽपि सत्यज्ञानादिपदानां तात्पर्यं यूपादिन्यायेन भवेदेवेत्यर्थः ॥

प० — **अपूर्वत्वादिति** ॥ मानान्तराप्राप्तत्वादपूर्वजनकत्वाद्वेत्यर्थः ॥ **प्रकृतेऽपीति** ॥ गुणकर्मादिविषयेऽपीत्यर्थः ॥ **साधयिष्यमाणत्वादिति** ॥ चतुर्थाद्यपादे 'न प्रतीकेन हि सः' इत्यत्रेति भावः ॥

या० — **श्रुतेस्तत्रेति** ॥ तत्र खादिरत्वादेरपूर्वजनकत्व इत्यर्थः । सर्वशब्दानां कार्यमात्रपरत्वे खादिरादिस्वरूपबोधकाभावेनासिद्धेः कथं तेनापूर्वनिष्पत्तिर्बोधनीया । तथा च खादिरो यूपो भवतीत्यादिवाक्यानां विशिष्टयूपस्वरूपपरत्वेन तैर्यूपस्वरूपे सिद्धे तस्यापूर्वनिष्पादकत्वसिद्धिः । तत्सिद्धौ च तदन्यथाऽनुपपत्त्योदाहृतवाक्यानां खादिरत्वादिविशिष्टद्रव्यपरत्वसिद्ध्या यूपादिस्वरूपसिद्धिरित्यन्योन्याश्रय इति भावः । खादिरत्वादीनामपूर्वार्थत्वमङ्गीकृत्य प्रकृतेऽपि तथाऽस्त्वित्यत आह ॥ **अविद्यमानेति** ॥ खादिरत्वाद्यभावेऽपूर्वरूपफलाभाववत्प्रकृतेऽप्यात्मस्वरूपकर्मकारकाभावेऽविद्यमानार्थोपासनया फलाभावादुपासनायाः फलजनकत्वायात्मादिस्वरूपेऽपि तात्पर्यमङ्गीकार्यमेवेति भावः ।

श्री० — कर्मकारकसत्तया विनोपासनं कथमुपपद्यत इत्यत आह ॥ **आरोपिताकारेणापीति च तदपीति** ॥ खादिरत्वाद्यपीत्यर्थः । अपूर्वत्वात् प्रमाणान्तरेणाप्राप्तत्वात् ॥ **गृह्यत इति** ॥ तथा ॥

तत्र तात्पर्यमस्तीत्याशयः ॥ **सममिति** ॥ तथाच सत्यज्ञानादिवाक्यस्यापि सकलगुणक्रियाद्युपेते स्वार्थे उपासनाविषयतया कर्मकारकभूते ब्रह्मण्यपि तात्पर्यमङ्गीकार्यमपूर्वत्वादविरुद्धत्वाच्चेत्यर्थः ॥ **तत्रेति** ॥ खादिरत्वादेरपूर्वजनकत्व इत्यर्थः । सर्वशब्दानां कार्यपरत्वेन खादिरादिस्वरूपबोधकाभावेनासिद्धतयाऽपूर्वजनकत्वबोधकत्वायोगादिति भावः ॥ **फलाभावस्येति** ॥ उपलक्षणमेतत् । विपरीतफलस्य चेत्यादिद्रष्टव्यम् । उक्तं चैतज्जैमिनिनाऽपि । अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्यामिति । अचेतनं नोपास्यं फलाभावात् । असत्यमयोग्यं च नोपास्यमुक्तफलाभावाद्विपरीतफलसद्भावाच्चेति जैमिनिसूत्रार्थो द्रष्टव्यः ।

च० — तत्र प्रामाण्यस्य खादिरत्वादौ प्रामाण्यस्य ।

अनु० — इति शब्दोन्वयेऽग्नावित्यप्युन्नीते स्मृतिर्भवेत् ॥
इतिशब्दव्यपेतानि ह्यपि सन्ति वचांस्यलम् ॥
आत्मानमेवेत्यादीनि योगेऽग्नावपि तत्समम् ॥

सु० — ननु श्रुतिरेवात्मादिस्वरूपे तात्पर्याभावं गमयति ॥ आत्मेत्येवोपासीतेत्यादाविति-शब्दसंबन्धात् । इतिशब्दो हि वैपरीत्ये वर्तते । न वेति विभाषेति यथा शब्दप्रकरणे नवेति शब्दयोर्विभाषासंज्ञायां वैपरीत्यवाचिनेतिशब्देन तावर्थपरौ व्यवस्थाप्येते; तथेहाप्यर्थप्रकरणे श्रुतेनेतिशब्देनात्मनः स्वरूपेणोपासनासंबन्धं निवार्य स्मृतिमात्रेण संबन्धो ज्ञाप्यते । तत्कथमात्मसिद्धिर्वेदादिति चेन्न । अत्रेतिशब्दस्य प्रकारवाचित्वात् । विपक्षे बाधकमाह ॥ इति-शब्दोन्वय इति ॥ आत्मादिशब्दैरितिशब्दस्य वैपरीत्यवाचिनो योगे व्याख्यायमानेऽग्नौ जुहोतीत्यादावपि वैपरीत्यार्थे इतिशब्दे योजितेऽग्नेरपि स्वरूपेण होमान्वयो न स्यात् । किन्तु स्मृतिमात्रेणेति ।

नन्वग्नौ जुहोतीत्यत्रेतिशब्द एव नास्ति तस्य वैपरीत्यार्थत्वं कुत इति चेन्न । तर्हि उपासनावाक्यानामपीतिशब्दविधुराणां बहुलमुपलम्भात्स्वार्थे तात्पर्योपपत्तिरित्याह ॥ इति शब्देति ॥ अलं बहूनीति शेषः ।

सत्यम् । तथाऽपि तत्राध्याहारः क्रियत इत्यत आह ॥ योग इति ॥ योगे इतिशब्दस्याध्याहृतस्य योजने । अग्नौ जुहोतीत्यत्रापि तद्योजनं समम् । आत्मादिशब्दात्परतो यद्यश्रुतेति शब्दोऽध्याह्रियते तदाऽग्न्यादिशब्दात्परतोऽपि कुतो नाध्याह्रियत इत्यर्थः ॥

वा०— नन्वितिशब्द एवात्र नास्ति । अस्तु वा स तथाऽपि कथं तस्य परपक्षसाधकत्वं सिद्धान्तिनः प्रत्यनिष्टत्वं च येनोत्तरवाक्ये दृष्टान्ते तत्साम्योपादानं सङ्गच्छेतेत्यत आह ॥ नन्विति ॥ इतिशब्दस्यपदार्थवैपरीत्यार्थत्वं व्याकरणसंमत्या दर्शयति ॥ न वेतीति ॥ शब्दप्रकरण इत्यनेन स्वं रूपं शब्दस्येति शब्दपदार्थताप्रापकं सूचयति । न वेतिशब्दयोरित्युक्त्या नायं प्रतिषेधार्थो नवेत्येकनिपातः । ( न वेति विभाषा । निषेधविकल्पयोर्विभाषा संज्ञा स्यादिति सूत्रार्थः । स्वं रूपं शब्दस्याशब्दसंज्ञा । शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विनेति सूत्रार्थः ) । विभाषा दिक्समास इति प्रकृते न बहुव्रीहाविति प्रतिषेधवैयर्थ्यापत्तेः । प्रदेशेषु नशब्द एवोपादेयश्च स्यात् । सङ्ख्यावाचकनवशब्दस्य वा प्रत्ययस्त्रीवाचकस्य वा नवाशब्दस्योपादाने प्रदेशेष्वनुपपत्तिरेव । अतो निपातसमुदायस्यैवेदं ग्रहण-मिति परोक्तयुक्तिं सूचयति ॥ अर्थपराविति ॥ प्रतिषेधविकल्परूपार्थपरावित्यर्थः । ( विभाषा दिक्समासे बहुव्रीहौ । अत्र सर्वनामता वा स्यात् । उत्तरपूर्वस्यै उत्तरपूर्वायै । न बहुव्रीहौ बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात् । त्वकं पिता यस्य त्वत्कपितृकः । अहकं पिता यस्य मत्कपितृकः । कृते बहुव्रीहो निषेधो व्यर्थः । उपसर्जनीभूता न सर्वादय इति वक्ष्यमाणत्वात् । भाष्यकारस्तु त्वकत्पितृको मकत्पितृकः इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ ) । यद्यपि प्राप्तविभाषास्थले स्वरितञित इत्यादिना नित्यमात्मनेपदे प्राप्ते विभाषोपपदेनेति विभाषा विधीयते । विभाषाशब्दश्च विकल्पार्थतया प्रसिद्धः । तया च भावांशस्य सिद्धत्वादभावमात्रपरत्वम् । अप्राप्तविभाषायामप्यभावांशस्य स्थितत्वा-द्भावांशमात्रपरत्वं च निषेधविकल्पयोः संज्ञाऽकरणेऽपि सिध्यतीति तयोः संज्ञाकरणमनर्थकम् । तथाऽपि विभाषा श्वेरित्यत्र विधिमुखेन प्रवृत्तौ पित्स्वेव विभाषया संप्रसारणं स्यात् । कित्सु तु यजादित्वा-न्नित्यमेव स्यात् । प्रतिषेधमुखेन प्रवृत्तौ कित्स्वे विकल्पेन तस्मान्न पित्सु । एकवाक्यत्वाच्च न पित्सु विधिमुखेन कित्सु निषेधमुखेन प्रवृत्तिर्युक्तेति । प्रतिषेधविकल्पयोः संज्ञायां कृतायां पूर्वं प्रतिषेधे कित्सु प्रवृत्ते किदकिदाख्यो लिट् सर्व एव समीकृतोभवति । ततो विकल्पः सर्वत्र विधिमुखेन पक्षे संप्रसारणं संपादयतीत्यस्त्येव संज्ञाकरणे विभाषा श्वेरित्यादौ प्रयोजनमेतच्चाकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तत इति पक्षे प्रयोजनं प्रतिलक्ष्यम् विभाषा श्वेरित्यस्य व्यापारे तु क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन प्रवृत्तिरिति न संज्ञाकरणप्रयोजनम् । तथा चाकृतिपक्षे प्रतिषेधविकल्पार्थौ नवाशब्दाविति शब्दोव्यवस्था-पयति तथेत्यर्थः । ( स्वरितञितः कर्त्रभिप्राये क्रियाफले । स्वरितेतो ञितश्च धातोरात्मनेपदं कर्तृगामिनि क्रियाफले । यजते । सुनुते । अपाद्वदः । न्यायमपवदते । कर्त्रभिप्राय इत्येव । णिचश्च । कारयते । समुदाङ्भ्यो यमोऽग्रन्थे । व्रीहीन्संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते । अग्रन्थे

किम् । उद्यच्छति वेदम् । अधिगन्तुमुद्यमं करोतीत्यर्थः । कर्त्रभिप्राय इत्येव । अनुपसर्गात् ज्ञः । गां जानीते । विभाषोपपदेन प्रतीयमाने । स्वरितञित इत्यादिपञ्चसूत्र्यामात्मनेपदं विहितम् । तत्समीपोच्चरितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात् । स्वं यज्ञं यजति यजते वा । स्वं व्रीहिं संयच्छति संयच्छते वा । स्वां गां जानाति जानीते वा । टुओश्विगतिवृद्ध्योः । श्वयति । विभाषा श्वेः । श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च । शुशाव शुशुवतुः । श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः । तेन लिट्यभ्यासस्येति संप्रसारणं न । शिश्वाय । शिश्वियतुः। यजादित्वादिति । वचिस्वपियजादीनां किति । वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात्कितीत्यर्थः । लिट्यभ्यासस्योभयेषाम् । वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि ) । शब्दप्रकरण इत्यनेन पदार्थवैपरीत्यमात्रे दृष्टान्तो न तु तत्रेवात्रापि शब्दपदार्थकत्वनिरासेनार्थपदार्थकत्वमिति सूचयति । स्मृतिमात्रेणेत्यनेन नात्रार्थपदार्थकत्वप्रहाणेन शब्दपदार्थकत्वमभिमतमपि तु प्रसिद्धस्वरूपार्थकत्वपरित्यागेन स्मृतिविषयत्वाकारेण ग्रहणमिति सूचयति । नन्वेवमाशङ्का न मूलेन प्रतिबन्दीग्रहणमात्रेण सुपरिहारा । वैपरीत्यार्थकत्वाभावेऽर्थान्तराभावादितिशब्दस्य वैयर्थ्यापत्तेरित्ययोऽत्रेतिशब्दस्यार्थान्तरं मूलाभिप्रेतं बहिरेव द्रष्टव्यम् । मूलं तु विपक्षबाधकोक्तिपरमित्याशयेनाह ॥ **अत्रेति** ॥ उक्तमर्थं मूलारूढं कर्तुं मूलं व्याख्याति ॥ **आत्मादीति** ॥ अलमित्यस्य वचांसीत्यनेनान्वयेऽर्थे विशेषालाभात्तदर्थमध्याहृतेनान्वयमाह ॥ **अलमिति** ॥

स०— **यथेति** ॥ न वा शब्दयोः निषेधविकल्पार्थयोः स्वं रूपं शब्दस्याशब्दसंज्ञेति स्वरूपग्रहणे प्राप्ते स्वाभाविकमेवार्थपरत्वमिति शब्दो ज्ञापयतीत्यर्थः । सूत्रार्थस्त्वित्थम् । नेति निषेधो वेति विकल्पः निषेधेन समीकृतेऽर्थविकल्पः प्रवर्तते विकल्पो हि द्विविधः नित्यतया प्राप्तस्य सर्वथा प्राप्तस्य चेति द्विविधोऽप्ययं निषेधपूर्वक एव । नित्यप्राप्तिस्थले चेद्विकल्पः प्रवर्तते तदा सर्वथा इदं नित्यप्राप्तं न किन्तु पक्ष एवेति । यत्र च सर्वथाऽप्राप्तौ विकल्पात्तत्रापि इदं सर्वथाऽप्राप्तं न किन्तु पक्ष एवेति इतिशब्दोऽर्थपर एव स्वीकार्यः । अन्यथा स्वरूपमिति परिभाषया न वा शब्दयोरेव विभाषासंज्ञायां विभाषा जसीत्यादौ न वा शब्दयोरेव ग्रहणप्रसङ्गः तथाच निषेधपूर्वको यो विकल्पः तस्य विभाषा संज्ञा स्यादिति ।

प०— **वैपरीत्य इति** ॥ यस्माच्छब्दात्परत इति शब्दः श्रुतः तस्य शब्दस्य प्रकरणप्राप्तार्थं प्रच्याव्य तद्विपरीतार्थपरत्वं संपादयतीत्यर्थः । क्वोपलब्धमेतदित्यत आह ॥ **न वेति विभाषेति यथेति** ॥ व्याकरणे प्रथमस्याद्यपादे न वेत्यादिसूत्रे न वा शब्दात्परत्र श्रुतेति शब्दे दृष्टमेतदित्यर्थः ।

तत्कथमित्यतो महाभाष्योक्तप्रकारेण तदनुवदति ॥ **शब्देति** ॥ 'क्तक्तवतू निष्ठे'त्यादिरूपेण शब्दस्वरूपं गृहीत्वा तस्य संज्ञाविधानप्रकरणे न वा विभाषेत्युक्तौ नेति वेति यौ शब्दौ तयोर्विभाषेति संज्ञा प्राप्नोति प्रकरणबलात् । तथा च विभाषेत्यादिकार्यस्थले विभाषा भवतीत्युक्ते न वा शब्दौ भवतीत्यर्थस्यापत्त्येष्टसिद्धिर्न स्यादतः प्राकरणिकार्थवैपरीत्यवाचिनेतिशब्देन निषेधविकल्पार्थपरौ व्यवस्थाप्येते इत्यर्थः ॥ ॥ **प्रकारेति** ॥ 'इति हेतुप्रकरणप्रकारादिसमाप्तिष्वि'त्यभिधानादिति भावः । आहवनीये जुहोतीत्यस्यार्थानुवादोऽयमग्नौ जुहोतीत्यादावपीति । यदग्नौ जुहोतीत्यपि समिधमित्यस्य वाऽयमनुवादः ॥ **इतिशब्दविधुराणामिति** ॥ 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'आत्मानमेव लोकमुपासीते'त्यादीनामिति भावः ॥

या० — **न वेति शब्दयोरिति** ॥ नवाशब्दयोर्निषेधविकल्पार्थयोः 'स्वं रूपं शब्दस्याशब्दसंज्ञे'ति शब्दस्वरूपग्रहणे प्राप्ते स्वाभाविकमेवार्थपरत्वमितिशब्दो द्योतयतीत्यर्थः । इतिशब्दः काकाक्षिन्यायेनोभाभ्यां संबध्यते । स च 'पदार्थविपर्यासकृत्तेनार्थ एवेह संज्ञी संज्ञा चे'ति भाष्ये तस्य व्याख्यातत्वादिति भावः । सूत्रार्थस्त्वित्थम् । नेति निषेधो वेति विकल्पार्थो निषेधेन समीकृतेऽर्थे विकल्पः प्रवर्तते । विकल्पो हि द्विविधः । नित्यतया प्राप्तस्य सर्वथाऽप्राप्तस्य चेति । द्विविधोऽप्ययं निषेधपूर्वक एव । नित्यप्राप्तिस्थले चेद्विकल्पः प्रवर्तते तदा सर्वथेदं नित्यप्राप्तं न किन्तु पक्ष एवेति । यत्र च सर्वथाऽप्राप्तौ विकल्पस्तत्रापीदं सर्वथाऽप्राप्तं न किन्तु पक्ष एवेति । इतिशब्दोऽत्रार्थपर एव स्वीकार्यः । अन्यथा स्वं रूपमिति परिभाषया नवाशब्दयोरेव विभाषासंज्ञायां विभाषा जसीत्यादौ नवाशब्दयोरेव ग्रहणप्रसङ्गात् । तथा चार्थपरत्वस्यावश्यकत्वान्निषेधपूर्वको यो विकल्पस्तस्य विभाषासंज्ञा स्यादिति वैपरीत्यमात्रेऽयं दृष्टान्त इत्यवगन्तव्यमतो नासङ्गतिः । अलमित्यस्य समभिव्याहृतपदैरन्वयो न स्वरसतया प्रतीयतेऽतस्तदन्वययोग्यं पदं पूरयित्वा तेनान्वयं दर्शयति ॥ **अलं बहुनेति शेष इति** ॥

श्री० — उन्नय इत्यस्यार्थमाह ॥ **योग इति** ॥ योजन इत्यर्थः ॥

च० — **नवेतिशब्दयोरिति** ॥ स्वं रूपं शब्दस्याशब्दसंज्ञेति अग्नेर्ढगित्यादाविव शब्दस्वरूपग्रहणे प्राप्ते तस्य संज्ञाविधानप्रकरणे नवाविभाषेत्युक्तौ नेति वेतिशब्दौ तयोर्विभाषा संज्ञा प्राप्नोति प्रकरणबलात्तथाच विभाषाकार्यस्थले विभाषाभवतीत्युक्ते न वा भवतीत्यस्यापत्येष्टसिद्धिर्न स्यात् । अतः प्राकरणिकार्थवैपरीत्यवाचिनेति शब्देन निषेधविकल्परूपार्थपरौ व्यवस्थाप्येते इत्यर्थः ॥ **प्रकारेति** ॥ इति हेतुप्रकरणप्रकारादिसमाप्तिष्वित्यभिधानादिति भावः । वचः पदप्रकृतिकजसोऽस्तिप्रकृतिकस्य झेर्वात्रित्वपर्यवसायिताभ्रान्त्यपनुत्तये बहूनीतिपदस्योपस्कार्यतया तेनैवालमित्यस्यान्वेतव्यतास्वारसिकी न समभिव्याहृतपदैरिति मन्वानोऽलमित्यस्य योजनां दर्शयति ॥ **अलं बहूनीति शेष इति** ॥

अनु० — एकवाक्यत्वयोगे तु वेदस्यापि ह्यशेषतः ॥
वाक्यभेदो न युक्तः स्याद्योगश्च स्यान्महाफले ॥

सु० — एकदेशिनस्त्वेवं परिहारमाहुः । सत्यं कार्यनिष्ठो वेदस्तथाऽपि न सर्वः । वेदान्तास्तु परिनिष्ठितस्वरूपेऽपि ब्रह्मणि प्रमाणम् । अथातो धर्मजिज्ञासेति कार्यनिष्ठवेदभागे विचारितेऽपि वस्तुतत्त्वनिष्ठवेदान्तविचाराय शारीरकमीमांसारम्भस्संभवतीति ॥ सोऽयमयुक्तः परिहारः ।

तथा हि । वेदान्ता ब्रह्मनिष्ठा अपरो वेदभागः कार्यनिष्ठ इति वाक्यभेदः किमेकवाक्यत्वासंभवात्कल्प्यते उतैकवाक्यत्वसंभवेऽपि ॥ न तावत् द्वितीयः कल्पनागौरवप्रसङ्गादित्याह ॥ एकवाक्यत्वेति ॥ अशेषतोऽपीति संबन्धः । हिशब्दः कल्पनागौरवादिप्रसङ्गं हेतुं सूचयति ।

आद्यं दूषयति ॥ योगश्चेति । अशेषतोऽपि वेदस्यैकवाक्यतया योगो घटना च स्यादेव । यथोक्तं पुरस्तात् । वक्ष्यति च । 'अतो ज्ञानफलान्येव कर्माणी'ति ॥ किञ्च कृत्स्नोऽपि वेदः कार्यनिष्ठ इति वदन्तं प्रत्येकस्यापि वाक्यस्य परिनिष्ठितवस्तुप्रतिपादकत्वप्रतिपादने यः प्रयासस्तेनैव कृत्स्नस्यापि वेदस्य तथात्वे संभवति किं वाक्यभेदकल्पनया । दृष्टो हि तस्यार्थः कर्मावबोधनमित्याद्यभियुक्तवाक्यानुरोधादिति चेत् । तर्हि वेदोपरा वेदान्ता इत्यभियुक्तवाक्यं परमास्तिकेन भवताऽनुरोधव्यं स्यात् । उपक्रमादिना कार्यनिष्ठतावगमादेवमिति चेन्न । अवान्तरवाक्येऽप्युपक्रमाद्यानुगुण्यस्य संभवात् । अधिकारादिविरोधादिति चेन्न । तथा सत्युपनिषत्स्वपि वाक्यभेदप्रसङ्गादिति ॥

वा० — ननु कार्यव्युत्पत्त्यादिना सर्वस्यापि वेदस्य कार्यपरतया एवोपपादितत्वेनैकवाक्यताऽभ्युपगमाच्च प्रत्युत्तरवाक्योक्ता वाक्यभेदानुपपत्तिरयुक्तेत्यतः स्वमतेन स्वप्रधानतयोपासनाविधिशेषतया च सर्वस्यापि वेदस्य ब्रह्मपरत्वमुभयथा व्युत्पाद्य कार्यपरत्वं सर्वस्य वेदस्येयता ग्रन्थेन निरस्य सर्वस्य वेदस्य कार्यपरत्वं वदन्तं प्रति वृत्तिकारान्तराणां परिहारप्रकारनिरासायोत्तरग्रन्थः प्रवृत्त इति नानुपपत्तिरित्याशयेनाह ॥ एकदेशिनस्त्विति ॥ नन्वत्रैकवाक्यत्वयोगेऽपीत्येकवाक्यतां सिद्धवत्कृत्य योगश्च स्यादिति तस्या एव साध्यतोक्तिरनुपपन्नेत्यतो विकल्प्य तत्तत्कल्पनिरासकतया ग्रन्थं योजयितुं तावत्प्रतिजानीते ॥ सोऽयमिति ॥ वेदस्यापीत्यपिशब्दस्य यथास्थितसंबन्धानुपपत्तेरशेषत इत्यनेनाभिव्याप्त्यर्थस्य तस्य

संबन्ध इत्याशयेनाह ॥ **अशेषतोऽपीति** ॥ हेत्वनुक्त्या न्यूनतापरिहाराय तत्सूचकतया हिशब्दं योजयति ॥ **हिशब्द इति** ॥ आदिपदेनैकवाक्यतया संप्रतिपन्नसकलस्थलेष्वपि वाक्यभेदकल्पनापातेन न कोऽप्यर्थः सिध्येदित्यतिप्रसङ्गस्योपादानम् ।

नन्वत्रापि हेत्वनुक्त्या न्यूनता स्यादेवेत्यतो वाक्यार्थज्ञानमात्रेणेत्येतद्व्याख्यावसरेऽयमाशय इत्यादिना स्वप्राधान्याभ्युपगमेनोक्तं तस्मादुपासनार्थं चेत्यादिना चोपासनादिविधिशेषतयाऽपि प्रतिपादितमेकवाक्यताघटनाप्रकारं स्मारयति ॥ **यथोक्तमिति** ॥ **वक्ष्यते चेति** ॥ तत्रापि कर्मणो ज्ञानार्थताप्रतिपादनेन कर्मब्रह्मकाण्डयोरेकवाक्यतायाः स्पष्टप्रतिपादनादिति भावः । एकवाक्यस्य सिद्धार्थप्रतिपादकत्वव्युत्पादनप्रयासेनेति शेषपूरणेन वैकं वाक्यं प्रतिपादकं यस्य सिद्धस्येत्येकवाक्यं सिद्धं तस्त्वस्य योगे संभवे केनचिदायासेन कस्यचिद्वाक्यस्य सिद्धार्थपरत्वव्युत्पादन इति यावत् । तेनैव न्यायेनाशेषतोऽपि वेदस्यैकवाक्यतायोगे सतीत्येकवाक्यतायोग इत्यस्यावृत्त्या वा दूषणान्तरपरत्वेन मूलं योजयति ॥ **किञ्चेति** ॥ यद्वा मूलोक्तन्यायेन लब्धं स्वयमेव दूषणान्तरमाह ॥ **किञ्चेति** ॥ वेदाध्ययनस्यादृष्टार्थत्वादर्थज्ञानस्यानपेक्षितत्वाद्वेदमधीत्य स्नायादिति स्मृत्यनुरोधेन वेदाध्ययनानन्तरं गुरुकुलान्निवृत्तेर्मीमांसारम्भानुपपत्तिमाशङ्क्य शाबरभाष्ये उक्तं दृष्टो हीति । तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टोऽर्थो वर्तते स चार्थज्ञानाद्वारक एवेत्यर्थग्रहणादिपरम्परयाऽध्ययनस्य कर्मावबोधः फलमिति स्मृतिबाधेन धर्ममीमांसारम्भोपपत्तिरिति हि तदर्थः । तथा च वेदस्य तद्वाक्यानुरोधेन कर्मावबोधकत्वसिद्धेः कथं सर्वस्य ब्रह्मपरत्वाभ्युपगमेनैकवाक्यतावक्तुं शक्यत इत्याशयेन शङ्कते ॥ **दृष्टोहीति** ॥ यद्यप्यत्र तर्हि तद्वाक्यानुसारेण सर्वस्यापि कर्मपरत्वमभ्युपगम्यैकवाक्यत्वमेव वक्तव्यं न तु वेदान्तानां वस्तुतत्त्वनिष्ठत्वाभ्युपगमेन भिन्नवाक्यत्वम् । अन्यथाऽभियुक्तवाक्यविरोधापरिहारादित्येव दूषणं वक्तुं युक्तम् । तथाऽपि कर्मशब्दो विचार्यतया प्रकृतकर्मकाण्डाभिप्रायेण । वस्तुतस्त्वर्थावबोधकत्वं वेदस्येत्येतावदेवैतद्वाक्याभिप्रेतमिति न वेदान्तानां ब्रह्मावबोधकत्वाभ्युपगमेऽपि तद्विरोध इति पञ्चपादिकादावुक्तत्वात्तद्दूषणमनुक्त्वा दूषणान्तरमाह ॥ **तर्हीति** ॥ भूप्रदेशेषूषरभूमिवद्वेदेषु वेदान्ता व्यर्थो भाग इत्यर्थः । उक्तरीत्या युक्तिबाधितस्य तद्वाक्यस्याप्रामाण्यान्नानुसरणीयत्वमिति भावः । माऽस्तु तद्वाक्यानुसरणमुपक्रमादिवशात्प्रतीतस्य कर्मकाण्डे कर्मपरत्वस्य नापलापो युक्त इत्याशङ्कते ॥ **उपक्रमादिनेति** ॥ अधिकारादीति कर्मण्यैहिकामुष्मिकफलकामस्य ब्रह्मविद्यायां च तदुभयभोगविरक्तस्याधिकारः । आदिपदेनैकत्र स्वर्गाद्यनित्यं फलमपरत्र मोक्षरूपं नित्यं फलमिति फलभेदसङ्ग्रहः । तर्हि उपनिषत्स्वपि कर्माङ्गभूतोद्गीथाद्युपासनानां सविशेषब्रह्मविद्यायाश्च नित्याफलकत्वादविद्वदधिकारिकत्वाच्चैकवाक्यता न स्यादित्याह ॥ **तथा सतीति** ॥ यदि चोपासनादीनां यत्किञ्चिद्द्वारेण निर्विशेषज्ञानार्थतयैकवाक्यत्वं तर्हि नित्यादिकर्मणामपि चित्तशुद्धिद्वारा काम्यादीनामप्यनित्य-

फलकत्वादिकथनेन वैराग्यजननाद्विद्वारा निर्विशेषज्ञानार्थतया कर्मकाण्डस्यापि वेदान्तैरेकवाक्यता स्यादिति भावः ।

स०—**पुरस्तादिति** ॥ वाक्यार्थज्ञानमात्रेणेत्यत्र यमाशय इत्यादिनेति शेषः । दृष्टो हि तस्यार्थ इत्यस्यायमर्थः । वेदाध्ययनस्यादृष्टार्थत्वात् अर्थज्ञानस्यानपेक्षितत्वात् वेदमधीयादिति वेदाध्ययनानन्तरं गुरुकुलान्निवृत्तमीमांसारम्भानुपपत्तिरित्याशङ्क्योक्तम् ॥ **दृष्टो हीति** ॥ तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टोर्थो विद्यते स चार्थज्ञानद्वारक एवेति अक्षरग्रहणादिपरम्परयाध्ययनस्य कर्मावबोधः फलमिति स्मृतिबाधे न मीमांसारम्भणीयेति । तथा चैतदभियुक्तवाक्यपर्यालोचनया न कृत्स्नवेदस्य परिनिष्ठितवस्तुपरत्वमपि तु कर्मकाण्डस्य कार्यरूपकर्मावबोधार्थत्वमेव वक्तव्यमिति भावः ॥ **एवमिति चेदिति** ॥ कर्मकाण्डस्य वेदान्तापेक्षया भिन्नवाक्यत्वमिति भावः ॥ **अवान्तरवाक्येऽपीति** ॥ कर्मकाण्डवेदान्तयोरेकवाक्यत्वमेव । उपक्रमाद्यनुगुण्यं तु कर्मकाण्डस्यावान्तरवाक्यत्वेऽप्युपपद्यत इति भावः । यद्वा कर्मकाण्डावान्तरवाक्यार्थेऽप्युपक्रमाद्यानुगुण्यं तु संभवात्कर्मकाण्डेऽपि वाक्यभेदः स्यादित्यर्थः । ननु कर्मकाण्डे स्वर्गकामोऽधिकारी वेदान्ते मुमुक्षुः । स्वर्गकाममुमुक्षयोश्च नैकस्मिन्संभवो विरोधात् । मुमुक्षौ स्वर्गकामाभावात् स्वर्गकामे च मुमुक्षाया अभावात् अतो विरुद्धाधिकारिकमिदं वाक्यद्वयं नैकवाक्यतामापद्यत इत्याशङ्कते ॥ **अधिकारादिविरोधादिति** ॥ आदिपदेन स्वर्गमोक्षलक्षण-फलभेदो द्रष्टव्यः ॥ **तथा सतीति** ॥ मध्वादिविद्यासु वस्वादिपदेच्छुरधिकारी । सदेव सोम्येत्यादि विद्यासु मुमुक्षुरधिकारीति विरुद्धाधिकारित्वात् वेदान्तेऽप्येकवाक्यत्वं न स्यादिति भावः ।

प०— **एकदेशिन इति** ॥ ब्रह्मतन्त्रव्याख्यातृषु मध्ये केचन मायावादिन इत्यर्थः ॥ **यथोक्तं पुरस्तादिति** ॥ अयमत्राशय इत्यादिपूर्वग्रन्थेन द्वेधा वाक्यान्वयस्योक्तत्वादिति भावः । मीमांसक-वाक्यानुरोधाद्वाक्यभेदः कल्प्यत इति मायावादी शङ्कते ॥ **दृष्टो हीति** ॥ तस्य कर्मकाण्डरूपवेदस्य कर्मावबोधनरूपेणेत्यर्थः । प्रयोजनं दृष्टमिति तदीयवाक्यस्यार्थः ॥ **वेदोषरा इति** ॥ निष्फलवेद भागा इत्यर्थः । भवता मायावादिना । तथाच वेदान्तेतिकर्तव्यताभूतब्रह्मतन्त्रभाष्यमपि त्वया न कार्यं स्यादिति भावः । परमास्तिकेनेत्युपहासः ॥ **एवमिति** ॥ वाक्यभेदकल्पनेनेत्यर्थः ॥ **अवान्तरेति** ॥ सर्ववेदस्य ब्रह्मपरमहावाक्यैकवाक्यतयैकवाक्यत्वेऽपि तज्ज्ञानाङ्गकर्मप्रतिपादकतया ब्रह्मकाण्डस्य ब्रह्मपर-महावाक्ये अवान्तरवाक्यभूतेऽप्युपक्रमाद्यानुगुण्यसंभवादित्यर्थः । कर्मकाण्डस्य फलकामनाधिकारिकत्वा-दनित्यफलत्वाद्वेदान्तानां निष्कामाधिकारिकत्वान्नित्यफलकत्वाच्च विरोधान्नैकवाक्यतेति शङ्कते ॥ **अधि-कारेति** ॥ **उपनिषत्स्वपीति** ॥ पुत्री पशुमानित्यादीनामत्रापि श्रवणादिति भावः ।

या० — **यथोक्तमिति** ॥ वाक्यार्थज्ञानमात्रेणेत्यत्रायमाशय इत्यादिनेति शेषः । शङ्कते ॥ **दृष्टो हीति** ॥ अस्यायमर्थः । स्वाध्यायोऽध्येतव्य इति विधेरक्षरग्रहणमात्ररूपाध्ययनविधायकत्वेऽप्य-दृष्टद्वारा स्वर्गार्थत्वसंभवादर्थज्ञानस्यानपेक्षितत्वान्न तदर्थकर्ममीमांसारम्भः संभवतीत्याशङ्कायामुक्तम् ॥ **दृष्टो हीति** ॥ तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टार्थोऽस्ति । 'लभ्यमाने फले दृष्टे नादृष्टपरि-कल्पने'ति वचनात् । कर्मज्ञानं च न विचारमन्तरेण संभवतीति मीमांसारम्भः संभवतीति । अत्र यद्यपि दृष्टो हि तस्यार्थः प्रयोजनवदर्थावबोधनमित्येव वक्तव्यम् । तथाऽपि धर्मजिज्ञासायाः प्रकृतत्वा-द्धर्मस्य च कर्मत्वात्कर्मावबोधनमित्युक्तमिति ज्ञातव्यम् । तथा चैतदभियुक्तवाक्यानुसाराद्विधिप्रतिषेधा-त्मकस्यैव वेदभागस्य कार्यरूपपरत्वमुच्यते न कृत्स्नस्यापीत्याशयः ॥ **वेदोषरा इति** ॥ वेदेषूषरा वेदोषराः । वेदमध्ये निष्फला इत्यर्थः । तथा च निष्फलवेदान्तानामविचार्यत्वान्न वाक्यभेदकल्पना युक्तेति भावः ॥ **एवमितीति** ॥ कर्मकाण्डस्य वेदान्तापेक्षया भिन्नवाक्यत्वमिति भावः ॥ **अवान्तर-वाक्येऽपीति** ॥ कर्मकाण्डगतावान्तरवाक्येऽप्युपक्रमाद्यानुगुण्यासंभवात्कर्मकाण्डेऽपि वाक्यभेदप्रसङ्ग इत्यर्थः । ननु कर्मकाण्डे स्वर्गकामोऽधिकारी वेदान्ते तु मुमुक्षुः । स्वर्गकाममुमुक्ष्वोश्च नैकस्मिन्संभवो विरुद्धत्वात् । अतो विरुद्धाधिकारिकमिदं काण्डद्वयं नैकवाक्यतामापाद्यत इत्याशङ्कते ॥ **अधिकारादि-विरोधादिति** ॥ आदिपदेन फलविरोधो ग्राह्यः । स्वर्गमोक्षयोर्नश्वरानश्वरयोरेकफलत्वासंभवात् ॥ **उपनिषत्स्वपीति** ॥ मध्वादिविद्यासु वस्वादिपदेच्छुरधिकारी सदेव सोम्येत्यादिरूपासु विद्यासु मुमुक्षुरे-वाधिकारीति विरुद्धाधिकारिकत्वाद्विरुद्धफलकत्वाच्च वेदान्तेष्वप्येकवाक्यत्वं न स्यादिति भावः ।

श्री० — **आहुरिति** ॥ अत्र जैमिनीया मन्यन्त इत्यादिना कार्यपरत्वमुपपाद्य कार्य एव सर्ववेदपर्यवसानादनुग्राह्यप्रमाणाभावान्न ब्रह्ममीमांसारम्भः सम्भवतीति शङ्काया रामानुजा एवं परिहारमा-हुरित्यर्थः ॥ **एकस्यापि वाक्यस्येति** ॥ ॥ वेदान्तभागगतस्यैकस्यापि वाक्यस्येत्यर्थः ॥ **परिनिष्ठि-तवस्त्विति** ॥ ब्रह्मरूपसिद्धार्थेत्यर्थः ॥ **कृत्स्नस्यापीति** ॥ कर्मकाण्डस्येत्यर्थः ॥ **तथात्व इति** ॥ सिद्धार्थब्रह्मपरत्व इत्यर्थः । कर्मकाण्डस्य ब्रह्मप्रतिपादकत्वं न सम्भवतीत्यतो वाक्यभेदकल्पना कार्येत्या-शङ्कते ॥ **दृष्टो हीति** ॥ तस्य कर्मकाण्डस्य कर्मावबोधनमेव स्पष्टं दृष्टोऽर्थोऽतो न तस्य ब्रह्मप्रतिपादकत्वं तत्प्रतिपादने सामर्थ्याभावादिति भावः । अनुरोद्धव्यं अनुसर्तव्यम् । तथाच वेदेषु मध्ये वेदान्तभागा-नामूषरभूमिवत्फलसाधनत्वाभावेन निष्फलत्वोक्त्या तद्विचारो न कर्तव्यः स्यादित्यर्थः । नन्वथाऽपि कर्मकाण्डस्य वेदान्तभागापेक्षया भिन्नवाक्यत्वमङ्गिकार्यम् । कुत इति चेत्तत्राह ॥ **उपक्रमादिनेति** ॥ उपक्रमादीनां वाक्यभेदसाधकत्वेऽतिप्रसङ्ग इत्याह ॥ **अवान्तरवाक्येऽपीति** ॥ कर्मकाण्डगतावान्तर-वाक्येऽपीत्यर्थः ॥

च०— **यथोक्तमिति** ॥ वाक्यार्थज्ञानमात्रेणेति प्रतीकव्याख्यावसरेऽयमाशय इत्यादिनेति पूरणीयम् । अध्ययनविधेर्ज्ञानकामाधिकारप्रतिषेधेन कल्पस्तु विधिसामर्थ्यात्स्वर्गो विश्वजिदादिवदिति वचनादहृष्टार्थाध्ययनविधायकत्वेनाधीत्य स्नायादिति गुरुकुलान्निवृत्तेर्मीमांसारम्भो न घटत इत्याशङ्क्य शबरे स्वाम्यभाविष्टभाष्ये दृष्टो हीति । तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टार्थोऽस्ति स चाक्षरग्रहणादिपरंपरयोपजायमानः फलमिति स्मृतिबाधया मीमांसारम्भः सङ्गच्छत इति तदर्थः । इत्थं च वेदस्य कर्मावगमकतया कृत्स्नस्य तस्य ब्रह्मतात्पर्यकत्वोपगमेनैकवाक्यता दुर्वचेत्याशयेनाशङ्कते ॥ **दृष्टो हीति** ॥ फलवदर्थावबोधनमित्येवाभिधातव्यत्वेऽपि धर्मस्यैव कर्मत्वात्कर्मावबोधनमित्युक्तिः । वेदोषराः वेदेषु निष्फलभूप्रदेशाश्रिताः तादृशानामविचार्यतया वाक्यभेदकल्पना न सङ्गच्छत इत्याशयः । एवमिति चेत् । कर्मब्रह्मकाण्डयोर्भिन्नवाक्यत्वमिति चेत् । कर्मब्रह्मकाण्डैकवाक्यतापत्ते स्वर्गमुक्तिकामरूपविभिन्नाधिकारिकत्वादित्यभिप्रेत्याशङ्कते ॥ **अधिकारेति** ॥ उपनिषत्स्वपीति । मध्वादिविद्यानां वस्वादिपदप्रेप्सुरधिकारी तत्पदप्राप्तिः फलं सदेवेत्यादिविद्यानां तु मोक्षकामः स मोक्षश्च तदिति वैरूप्यात्तदेकवाक्यता दुरुपगमा प्रसज्यत इति भावः ।

सु०— **अपर आह । भवति कृत्स्नस्यापि वेदस्यैकवाक्यता । सा चात्मज्ञानस्य स्वर्गादिफल(कर्म)शेषतयाऽस्तु । देहव्यतिरिक्तात्मज्ञानव्यतिरेकेण पारलौकिककर्मप्रवृत्त्यनुपपत्तेः । अथवा कर्माङ्गभूतदेवतानुस्मरणार्थमात्मप्रकरणमस्तु । तत्र फलश्रुत्यादिकमर्थवादोऽस्तु । यथोक्तम् । 'आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न तु चोदितम् । कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते । विज्ञाते चास्य पारार्थ्ये याऽपि नाम फलश्रुतिः । साऽर्थवादो भवेदेव न स्वर्गादेः फलान्तरमि'ति । तत्राह ॥ महाफल इति ॥ महाफले ॥ महत्फलं कैवल्यं यस्मात्तन्महाफलं ब्रह्म तस्मिन्नेवाशेषतो वेदस्य योगः संबन्धः स्यात् । न पुनरल्प(फले)के कर्मणि । प्रयाजादिषु तथा दर्शनात् ।**

बा०— ननु भिन्नवाक्यतामङ्गीकुर्वाणेनाल्पफलेऽप्यैकवाक्यताऽनभ्युपगमान्महाफल इति व्यर्थमित्यतो मीमांसकमतनिरासाय तदित्याशयेन तद्व्यावर्त्यं मतमनुवदति ॥ **अपर इति** ॥ एकदेशिव्यतिरिक्त इत्यर्थः । पृथक् फलवत्तया श्रुतस्य कथमन्यशेषत्वमित्यत आह ॥ **तत्रेति** ॥ अत्रार्थे भट्टवार्तिकसंमतिमाह ॥ **यथोक्तमिति** ॥ ज्ञानस्य न मोक्षसाधनत्वं प्रमाणाभावादिति । ज्ञानं मोक्षनिमित्तं च गम्यते नेन्द्रियादिनेत्यनेनोक्तम् । तर्हि वेदस्तत्र मानं स्यादित्यतो द्विविधं ह्यात्मज्ञानमुपनिषत्सूपदिश्यते

देहाद्विवेकज्ञानम् । अविनाशी वा अरेऽयमात्मेत्यादि । आत्मानमुपासीतेति प्राणायामाद्यङ्गोपेतमुपसना-त्मकं च । तत्र साङ्ख्यादिभिर्मोक्षसाधनत्वेनाश्रितं विवेकज्ञानं तावन्न वेदेन मोक्षार्थं चोदितमित्याशयेन न च साङ्ख्यादिविज्ञानं मोक्षदत्वेन चोद्यत इति पूर्ववाक्येन ज्ञापयित्वा नन्वात्मा ज्ञातव्य इति विधावप्यपुनरावृत्तिर्वाक्यशेषे श्रूयत इत्याशङ्कायामुक्तमात्मेति ॥ तर्हि वैयर्थ्यमित्यत आह ॥ कर्मेति ॥ विवेकज्ञानस्य पारलौकिकफलेषु ज्योतिष्टोमादिषु प्रवृत्तिरध्ययनस्येव दृष्टं फलं संभवति नादृष्टफलापेक्षेति भावः। निर्ज्ञाते च ज्ञानस्य कर्मप्रवृत्तिहेतुतया कर्माङ्गभूतदेवतानुसरणार्थतया वा कर्मफलस्वर्गाद्यर्थत्वे वाक्यशेषस्था फलश्रुतिः पर्णमयीन्यायेनार्थवादमात्रं स्यान्न स्वर्गादेः फलान्तरं बोधयितुमलमित्याह ॥ निर्ज्ञाते चेति ॥ अयं च विवेकज्ञानविषयः प्रकारः । उपासनात्मकज्ञानस्य कर्मणि पुरुषे वा दृष्टप्रयो-जनाभावाददृष्टापेक्षायां श्रुत्याद्यभावेन क्रत्वर्थत्वाभावाद्वाक्यशेषोपनीताभ्युदयनिःश्रेयसफलकतया रात्रि-सत्रन्यायेन पुरुषार्थत्वमेवेति व्याकरणाधिकरणोक्तप्रकारस्तूपासनात्मज्ञानविषयः । अत्र च पक्षे विधिशेष-त्वेनैकवाक्यत्वं द्रष्टव्यम् । ननु ब्रह्मपरत्वेनैकवाक्यता पूर्वमुक्ता तत्कथमुच्यते महाफल इति फलपरत्वैक-वाक्यता । नापि फलं प्रतिपाद्यं येन तत्परत्वैकवाक्ययोक्तिः सङ्गच्छेतेत्यत आह ॥ महदिति ॥ प्रया-जादिष्विति ॥ अन्यथा दर्शपूर्णमासयोरङ्गत्वं प्रयाजादीनामेव प्रकरणित्वमिति स्यादिति भावः । एवं परोक्तपरिहारनिरासपरत्वेनैतद्वाक्यव्याख्यानपक्षे इति ब्रूयादित्युत्तरवाक्यसङ्गतिरेवमभिमता । एवं परोक्त-परिहारं निरस्य पुनः पर्वोक्तमेवानुसन्दधन्ननु ब्रह्मकाण्डे क्वचिदितिशब्दस्यान्यत्राध्याहारकल्पकस्य सद्भावेऽपि कर्मकाण्डे क्वचिदपीतिशब्दस्याभावेन कल्पकाभावाद्योगेऽप्यभाविति न युक्तमित्यतः कर्मकाण्डेऽपि तत्सद्भावं प्रतिपादयति ॥ इति ब्रूयादितीति ॥

स० — ननु यद्येवमेकवाक्यत्वमेव वक्तव्यमित्याग्रहः । तदोपनिषदामपि कार्यपरत्वेनैव तदस्त्विति कस्यचिन्मतमाशङ्कते ॥ अपर आहेति ॥ नन्वेवं ब्रह्मविदाप्नोति परमिति आत्मप्रकरणस्य स्वर्गातिरिक्तमोक्षफलकत्वश्रुतिः कथमुपपद्यते । प्रयोजनान्यत्वात् । प्रकरणान्यत्वमिति न्यायादित्यत आह ॥ तत्रेति ॥ स्वर्गादिव्यतिरिक्तफलस्यासंभवात् द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादिति न्यायात् । फलश्रुतेस्तुतिमात्रपरत्वेनार्थवादत्वान्न स्वार्थे तात्पर्यमिति भावः ॥ न स्वर्गादेः फलान्तरमिति ॥ स्वर्गादिकं विहाय नात्मविद्यायाः फलान्तरमस्तीत्यर्थः ॥ प्रयाजादिष्विति ॥ न हि दर्शपूर्णमासादियागविधायकवाक्यानां प्रयाजादिवाक्यार्थेऽवान्तरापूर्वलक्षणस्वल्पफलक इति प्रयाजादौ महातात्पर्यलक्षणः संबन्ध इत्यस्ति अपि तु प्रयाजादिवाक्यानामेव स्वर्गलक्षणमहाफलक-दर्शपूर्णमासादिना कर्तव्यतायामित्यर्थः । फलवत्सन्निधावफलं तदङ्गमिति न्यायात् प्रयाजादीनां फला-

श्रवणात् फलवद्दर्शपूर्णमासाद्यङ्गत्वम् । गोदोहनेन पशुकामः प्रणयेदित्यादौ फलश्रवणेऽपि श्रुत्यादिना गोदोहनादीनामङ्गत्वनिश्चयात् नाल्पपशुमात्रं फलमिति भावः ।

**प०**— सर्वस्यैकवाक्यतामुपेत्य कर्मपरतयैकवाक्यतां वदतो मीमांसकैकदेशिनो निरीश्वरवादिनो मत माह । **अपर आहेति ॥ अस्यपारार्थ्य इति** ॥ आत्मज्ञानस्य कर्माङ्गत्वे विज्ञात इत्यर्थः ॥ अत्रात्म पदेनैतन्मते जीव एव ग्राह्यः । **फलश्रुतिरिति** ॥ 'तरति शोकमात्मविदि'त्यादिफलश्रुतिरित्यर्थः । अर्थवादी भवेदित्येकं पदम् । स्वर्गादेः स्वर्गादितः । फलान्तरमात्मज्ञानस्य नेत्यर्थः ॥ **प्रयाजादिष्विति** ॥ 'समिधो यजति' 'तनूनपातं यजती'त्यादिवाक्योक्तेषु प्रयाजादिनामकयज्ञेषु दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेतेतिश्रुतस्वर्गादिफलवति दर्शादिकर्मण्यंगाङ्गिभावेन योगस्य दर्शनादित्यर्थः । यद्वा क्रतूपकाररूपाल्पफलकप्रयाजादिषु वाक्यापर्यवसानेन प्रधानकर्मणि महाफलहेतावेव वाक्यपर्यवसानस्य दर्शनादित्यर्थः ॥

**या०**— ननु यद्येवमेकवाक्यत्वमेव वक्तव्यमित्याग्रहस्तदोपनिषदामपि कार्यपरत्वेनैव तदस्त्विति कस्यचिन्मतमाशङ्कते ॥ **अपर आहेति** ॥ नन्वेवं 'तरति शोकमात्मवित्' 'ब्रह्मविदाप्नोति परं' 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत' इत्यत्रात्मप्रतिपादकस्य वेदान्तभागस्य स्वर्गातिरिक्तमोक्षफलकत्वश्रुतिः कथमुपपद्यत इत्यत आह ॥ **तत्र फलश्रुत्यादिकमिति** ॥ आदिपदेन स्मृत्यादेर्ग्रहणम् । तथा च न तस्य स्वार्थे तात्पर्यमिति भावः ॥ **न स्वर्गादे फलान्तरमिति** ॥ स्वर्गादिकं विहाय नात्मविद्यायाः फलान्तरमस्तीत्यर्थः ॥ **प्रयाजादिष्विति** ॥ अनेन कर्म नान्यशेषतया वेदप्रतिपाद्यमल्पफलकत्वात्प्रयाजाद्यङ्गकलापवत् । ब्रह्म वाऽनन्यशेषतया वेदप्रतिपाद्यं महाफलत्वाद्दर्शादिवदिति प्रयोगौ सूचिताविति ज्ञातव्यम् । अदर्शनादिति छेदे तु दर्शपूर्णमासादिविधायकवाक्यानामिडो यजतीत्यादिवाक्यप्रतिपाद्येऽवान्तरापूर्वलक्षणस्वल्पफलके प्रयाजादौ महातात्पर्यलक्षणसंबन्धस्यादर्शनादित्यर्थो द्रष्टव्यः । इदमुपलक्षणम् । प्रत्युत प्रयाजादिवाक्यानामेव स्वर्गलक्षणमहाफलके दर्शादौ महातात्पर्यलक्षणसंबन्धस्य दर्शनादित्यपि द्रष्टव्यम् ॥

**श्री०**— **आत्मज्ञानस्येति** ॥ जीवज्ञानस्येत्यर्थः । तदुपपादयति ॥ **देहेति** ॥ **देवतेति** ॥ ईश्वरोऽपि देवताशब्देन ग्राह्यः ॥ **आत्मप्रकरणमिति** ॥ आत्मशब्देन देवता ईश्वरश्च ग्राह्यः । तथाच प्राणो वा आशाया इत्यादिदेवताप्रकरणमात्मा वा अरे द्रष्टव्य इत्यादिरूपमीश्वरप्रकरणं चेत्यर्थः । देवतानामीश्वरस्य च यज्ञभागभोक्तृत्वेन यज्ञे ईज्यतया यज्ञादिकर्माङ्गत्वादिति भावः । नन्वीश्वरप्रकरणस्याप्युक्तरीत्या कर्माङ्गत्वेन स्वर्गार्थत्वे । तरति शोकमात्मवित् । ब्रह्मविदाप्नोति परमित्याद्युपनिषद्भागे ईश्वर-

ज्ञानस्य स्वर्गातिरिक्तमोक्षरूपप्रयोजनप्रतिपादनं कथं सङ्गच्छत इत्यत आह ॥ **तत्रेति** ॥ तरतीत्याद्युपनिषदेकदेश इत्यर्थः ॥ **फलश्रुतीति** ॥ ब्रह्मज्ञानस्य मोक्षरूपफलश्रवणमित्यर्थः । तथाच न स्वार्थे तात्पर्यमिति भावः । आत्मज्ञानस्य देवतेश्वरयोर्ज्ञानस्य । अस्य आत्मज्ञानस्य । पारार्थ्ये स्वर्गार्थत्वे । फलश्रुतिः ब्रह्मज्ञानस्य मोक्षार्थत्वश्रुतिः । उपसंहरति ॥ **नेति** ॥ स्वर्गादेरन्यत् आत्मविद्यायाः फलान्तरं नास्तीत्यर्थः ॥

च० — उपनिषदामपि कार्यपरत्वेनैकवाक्यतामभियोगेनाभिदधानस्य कस्यचिन्मतं दुदूषयिषुरनुवदति ॥ **अपर आहेति** ॥ फलश्रुत्यादिकं स्वर्गातिरिक्तकैवल्यरूपफलश्रुत्यादिकम् । न तस्य तत्र तात्पर्यमिति भावः ।

**सु० — अथवा योगेऽग्नावपि तत्सममिति न युक्तम् । संभवति खलूपासनावाक्ये क्वचिदात्मेत्येवोपासीतेतीतिशब्दश्रवणादविद्यमानेतिशब्देष्वप्युपासनावाक्येष्वितिशब्दाध्याहारः । न च कर्मप्रकरणे क्वचिदपीतिशब्दोऽस्ति; येन तदभावस्थानेऽध्याहारो भविष्यति । अत्रैव विधिवाक्ये श्रवणात्कर्मकाण्डेऽपि तथाऽध्याहारः किं न स्यादिति चेन्न । वेदान्तानां कर्मकाण्डस्य च भिन्नवाक्यत्वादित्यत आह ॥ एकवाक्यत्वेति ॥**

वा० — एवं योगेऽग्नावपीति इति ब्रूयादिति इति वाक्ययोरेकविषयकयोर्मध्यस्थत्वेऽपि परोक्तपरिहारनिरासस्य मूलारूढतालाभादेकवाक्यत्वयोगेऽपीति वाक्यं भिन्नवाक्यतया व्याख्यातम् । इदानीं पूर्वोत्तरवाक्यैकवाक्यतया व्याख्यानेऽपि परपरिहारनिरासस्यार्थतः सिद्धिं मन्वानः पूर्वैकवाक्यतया व्याख्यातुं प्रकारान्तरेण सङ्गमयति ॥ **अथवेति** ॥ अथवाऽस्य वाक्यस्य द्वेधा योजनाऽप्यत्राभिमता । एवं च परोक्तपरिहारनिरासस्य कण्ठत एव सिद्धिरेकवाक्यता च । अत एव पूर्वकल्पे उत्तरवाक्यसङ्गत्यकथनम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

**अनु० — इति ब्रूयादिति वचो गतमग्नौ समीपगम् ॥**
**कल्पनागौरवं चेत्स्यात्पृथक्तात्पर्यकल्पने ॥**
**कल्पनागौरवादेव पदार्था न स्युरेव हि ॥**

**सु० — अस्तु वा कर्मब्रह्मकाण्डयोर्वाक्यभेदस्तथाऽप्यग्न्यादिशब्दात्परमितिशब्दाध्याहारो युज्यते । कर्मप्रकरणेऽपि क्वचिदितिशब्दश्रवणादित्यभिप्रेत्याह ॥ इति ब्रूयादिति ॥**

**न गिरा गिरेति ब्रूयादिति वचोऽग्नावित्यस्य समीपगम् । गतमवगतमित्यर्थः ॥ नन्वत्रेतिशब्दः शब्दस्वरूपग्रहणार्थ इति सत्यम् । अत एवार्थप्रकरणे शब्दस्वीकारार्थे वैपरीत्यवाचीत्युक्तमिति । तथाऽपि नोपासनाकर्मतया ब्रह्मणः सिद्धिः । ब्रह्मप्रतिपादकवाक्यानां ह्युपासनाकार्यत्वे तावत्तात्पर्यमावश्यकम् । ब्रह्मस्वरूपेऽपि तात्पर्यमित्यङ्गीकारे तु कल्पनागौरवप्रसङ्गादित्यत आह ॥ कल्पनेति ॥ एवं तर्हि यूपाहवनीयादिवाक्यानामपि पशुबन्धादिकार्ये तात्पर्यं तावदावश्यकम् । यूपादिस्वरूपेऽपि पृथक् तात्पर्यकल्पने कल्पनागौरवं स्यात् । ततश्च वेदात्तदसिद्धौ प्रमाणान्तराभावाद्यूपादिपदार्थाभाव एव प्रसज्यत इत्यर्थः ।**

ब्रा०— नन्वस्मिन्पक्षे कर्मकाण्डे इतिशब्दसद्भावप्रतीकोत्तरवाक्यासङ्गतिः । एकवाक्यताप्रतिपादकपूर्ववाक्येनैवोक्तशङ्कापरिहारादित्यतस्तत्सङ्गमयति ॥ **अस्तु वेति** ॥ ननु प्रतीकग्रहणार्थतयेतिशब्दप्रसिद्धेः प्रकृतेऽपि गिरागिराशब्दस्वरूपग्रहणार्थकत्वेन वैपरीत्यार्थकत्वाभावादग्नावित्यादौ तदध्याहारेऽपि न प्रसिद्धार्थपरित्यागेनार्थान्तरलाभ इति न प्रतिबन्दीसिद्धिरित्याशङ्कते ॥ **नन्विति** ॥ किमेतावता किमयं नार्थप्रकरणे शब्दस्वीकारार्थो येन वैपरीत्यार्थत्वं न स्यात् । प्रतीकग्रहणमपि वैपरीत्यार्थकत्वेनैवेति प्रतिबन्दीसिद्धिरित्याशयेन समाधत्ते ॥ **सत्यमिति** ॥ यद्वा ननु गिरागिरेति ब्रूयादित्यत्रेतिशब्दस्य शब्दस्वरूपार्थकत्वेन स्वरूपार्थत्वपरित्यागेन स्मृतिमात्रपरत्वाभावेन वैपरीत्यवाचित्वाभावात्कथं तदध्याहारेऽप्यग्नेः स्मृतिमात्रेण होमान्वयः स्यादित्युक्तसिद्धिरित्याशङ्कते ॥ **नन्वत्रेति** ॥ एवमप्यर्थप्रकरणेऽर्थस्वरूपस्यैव पदार्थत्वात्तत्परित्यागेन शब्दस्वरूपार्थत्वाभ्युपगमे कथं न वैपरीत्यवाचित्वम् । श्रुतस्थले शब्दस्वरूपार्थकत्वेन वैपरीत्यार्थकत्वम् । अध्याहृतस्थले च स्मृतिविषयत्वार्थकत्वेनेति विशेषस्त्वप्रयोजकः । स्वरूपार्थकत्वपरित्यागेन वैपरीत्यार्थकत्वस्योभयत्राविशिष्टत्वेन वैपरीत्यार्थकत्वमात्रे उदाहरणस्याभिप्रेतत्वादित्याशयेनाह ॥ **सत्यमिति** ॥ इतिशब्दस्य प्रकारवाचित्वमनभ्युपगम्य वैपरीत्यार्थत्वान्नात्मस्वरूपे तात्पर्यमित्यभ्युपगमे इतिशब्दश्रवणान्नाग्निस्वरूपे तात्पर्यमिति बाधकपरिहारपरपूर्वग्रन्थसङ्गत्यभावेऽप्यात्मस्वरूपे तात्पर्याभ्युपगमे बाधकान्तरपरिहारार्थत्वान्नोत्तरग्रन्थासङ्गतिरित्याशयेनाह ॥ **तथाऽपीति** ॥ ननु घटादिपदार्थाङ्गीकारे न किञ्चित्कल्पनागौरवमित्यतः प्रकृताभिप्रायेण योजयति ॥ **एवं तर्हीति** ॥ ननु कल्पनागौरवाद्वाक्यतात्पर्याभावेन वाक्यात्तदसिद्धावपि प्रमाणान्तरेणैव तत्सिद्धिसंभवात्पदार्था न स्युरित्यनुपपन्नमित्यत आह ॥ **ततश्चेति** ॥

स०— **न गिरा गिरेति ब्रूयादिति** ॥ यज्ञायज्ञावोऽग्नये गिराऽगिरा च दक्षसे इति मन्त्रः यदा यज्ञेषु पठ्यते तदेतिकर्तव्यतारूपमिदम् ब्राह्मणमिति ज्ञातव्यम् ॥ **शब्दस्वरूपग्रहणार्थ**

**इति** ॥ तथा चास्येतिशब्दस्याग्नौ जुहोतीत्यत्राध्याहारे तत्रापि शब्दस्वरूपग्रहणार्थ एवेतिशब्दः स्यात् । एवं चाग्ने स्मृतिमात्रेण होमान्वय इति प्रागुक्तोर्थो नायातमिति भावः । इतिशब्दो हि वैपरीत्यमात्रे शक्तः । स च विपरीतोर्थो न गिरागिरेत्यत्र शब्दस्वरूपं अग्नावित्यत्र तु स्मृतिरेवेत्यन्यदेव तत् । वैपरीत्यार्थं तूभयत्राविशिष्टमेवेत्याशयेन परिहरति ॥ **अत एवार्थप्रकरण इति** ॥

**प०— न गिरा गिरेति ब्रूयादिति वच इति** ॥ ज्योतिष्टोमप्रकरणे यज्ञायज्ञीयेन स्तुवीतेति स्तोत्रसाधनत्वेन प्राप्ते 'यज्ञायज्ञावोऽग्नये गिरागिरा च दक्षसे । प्र प्रवयममृतं जात वेदसं प्रियं मित्रं न शंसिषमि'ति मन्त्रे गिरागिरेत्यक्षरस्थाने इराइरेत्यक्षरस्थापनं कृत्वा तेन समायुक्त-स्तोत्रं कार्यमितिभावेन न गिरागिरेति ब्रूयात् । ऐरं कृत्वोद्गायेदिति वाक्यं पठ्यते । तथैव नवमाद्य-पादान्तेऽभिधानात् । तथाच ज्योतिष्टोमाख्यकर्मप्रकरण एवेतिपदश्रवणमस्तीति 'आहवनीये जुहोती'ति 'अग्नौ जुहोतीत्याहवनीयाग्निसमीपमितिपदमस्ति आहवनीये जुहोतीत्यादावाहवनीय इति जुहोती-त्यध्याहारेणेतिपदान्वयेऽग्निस्मृतिमात्रेण होमः स्यादित्यर्थवैपरीत्यवाचकत्वमितिशब्दस्योक्तम् । तदिहनेति वाऽत्रैवाध्याहृतस्थलेऽप्यग्निस्वरूपपरः स्यादिति भावेन वाऽऽशङ्कते ॥ **नन्वत्रेति** ॥ **उक्तमिति** ॥ पूर्वग्रन्थे उक्तमित्यर्थः ॥

**या०— शब्दस्वरूपग्रहणार्थ इति** ॥ तथा चास्येति शब्दस्याग्नौ जुहोतीत्यत्राध्याहारे तत्रापि शब्दरूपग्रहणार्थ एवेतिशब्दः स्यात् । एवं चाग्निशब्द एव होमान्वयप्राप्त्याऽग्नेः स्मृतिमात्रेण होमान्वयः इति प्रागुक्तोऽर्थो गत इति भावः । इतिशब्दो हि पदार्थवैपरीत्यमात्रे शक्तः । स च विपरीतोऽर्थो न गिरा गिरेत्यत्र शब्दस्वरूपमेव । अग्नावित्यत्र तु स्मृतिरेवेत्यन्यदेतत् । यत्र यस्य विपरीतार्थस्यान्वययोग्यता तत्र तस्य ग्राह्यत्वात् । वैपरीत्यार्थत्वं तूभयत्राविशिष्टमेवेत्याशयेन परिहरति ॥ **अत एवार्थप्रकरण इति** ॥ **आवश्यकमिति** ॥ अन्यथाऽस्तु वा कार्यपरत्वं वेदस्येत्यभ्युपगमानुपपत्ते-रिति भावः ।

**श्री०— ॥ शब्दरूपग्रहणार्थ इति** ॥ तथाच न गिरा गिरेति शब्दं न ब्रूया दित्यर्थः ॥ **वैपरीत्यवाचीत्युक्तमिति** ॥ इतिशब्दस्य पदार्थवैपरीत्यमात्रे शक्तत्वान्न गिरा गिरेत्यत्र वैपरीत्यं शब्दः । अत्र तु वैपरीत्यं स्मृतिरेवेति भावः ॥

अनु० — प्रमाणावगतत्वं चेत्तात्पर्याणां तथैव हि ॥
तस्मात्पदार्थे वाक्यार्थे तात्पर्यमुभयत्र च ॥

सु० — ननु यूपादिषु तद्वाक्यानां तात्पर्याणि प्रमाणसिद्धानि । न तु कल्प्यते । येन खलु वाक्येन यस्यार्थस्य प्रमितिरुत्पद्यते तत्तत्परमित्युच्यते । यूपादिवाक्याच्च यूपादिज्ञानं तावदुत्पद्यते । न चायं संशयः एकाकारनियतत्वात्, न च विपर्ययः बाधकाभावात्, न चानुवादोऽयम् अप्राप्तत्वात्; तत्कथं कल्पनागौरवम्; कथं च यूपादिपदार्थाभाव इत्याशङ्क्याह ॥ प्रमाणेति ॥ तथैव हि तर्हि ब्रह्मवाक्यानां ब्रह्मणि तात्पर्यं प्रमाणावगतमिति न कल्पनागौरवमिति शेषः ।

कल्पनागौरवं परिहृत्योपसंहरति ॥ तस्मादिति ॥ सत्यज्ञानादिपदानां पदार्थे ब्रह्मणि वाक्यार्थे कार्ये चोपासनादावित्युभयत्र तात्पर्यं ग्राह्यम् । पदार्थ इत्यवान्तरवाक्यार्थोपलक्षणम् ।

वा० — ननु कल्पनागौरवपरिहारोपायानुक्तेन प्रतिबन्दीमात्रेणार्थसिद्धिरित्यतः परमुखेनैव तत्परिहारोपायं वक्तुं प्रतिबन्दीग्रहणमित्याशयेनोत्तरभाष्यं सङ्गमयति ॥ नन्विति ॥ अनेन यूपाहवनीयादिवाक्यं यूपादिपरं तत्प्रमितिजनकमिति यावत् । तत्प्रमितिजनकत्वातिरिक्ततात्पर्याभावात्संशयविपर्ययानुवादाभिन्नज्ञानजनकत्वात्संमतवदित्यनुमानं तात्पर्ये प्रमाणमुक्तं भवति । अनुवादत्वं प्राप्तार्थविषयकत्वमभिमतम् । यद्वाऽनुवादभिन्नत्वे सति संशयविपर्ययान्यज्ञानजनकत्वादिति हेतुशरीरं विवक्षितम् । एवं प्रमाणविशेषस्वरूपकथनेन प्रमाणावगतत्वं चेदिति मूले प्रमाणस्वरूपविशेषानुक्त्या शङ्कासमाधानयोराभासत्वमपहस्तितं भवति । तथैव हीत्येतावन्मात्रेण पूर्तेः प्रकृतोपयोगितयाऽध्याहारेण योजयति ॥ तथैव हीति ॥ बाधकानामद्याप्यपरिहारादुपसंहारोऽनुपपन्न इत्यत आह ॥ कल्पनेति ॥ तस्मादुपाससनार्थं चेति पूर्ववाक्ये उपासनारूपकार्यशेषतया ब्रह्मणि प्रामाण्यस्योपक्रान्तत्वात्तदनुसारेणोपसंहारवाक्ये पदार्थवाक्यार्थशब्दौ तदर्थतया व्याख्याति ॥ पदार्थे ब्रह्मणीत्यादिना ॥ उत्तरत्र महावाक्यावान्तरवाक्यविभागकथनात्तदनुसारेण महावाक्यैकदेशसङ्गत्या पदार्थपदमवान्तरवाक्योपलक्षणतया व्याख्याति ॥ पदार्थे इतीति ॥

प० — तथैव हीति ॥ येन खलु वाक्येनेत्युक्तप्रकारेणेत्यर्थः । ननु पदार्थे ब्रह्मणि तात्पर्यं चेत्तर्हि सत्यब्रह्मादिपदानां पर्यायता सत्यादिपदव्यर्थता ब्रह्मणि सत्यत्वादिधर्मसंसर्गासिद्धिश्च स्यादित्यतो वा पृथगेवेत्युत्तरवाक्यसङ्गत्यर्थं वाऽऽह ॥ पदार्थ इति ॥ सत्यं ब्रह्म ज्ञानं ब्रह्मेत्याद्यवान्तरवाक्यार्थे सत्यत्वाद्यन्वयरूपे इत्यर्थो ध्येय इति भावः ।

या०— यूपादिवाक्यं यूपादिपरं तत्प्रमितिकरणत्वात्संप्रतिपन्नवाक्यवदित्यभिप्रेते तात्पर्यसाधकानुमाने स्वरूपासिद्धिपरिहाराय सामान्यसिद्धिपरिशेषावाह ॥ **यूपादिवाक्याचेत्यादिना** ॥ अप्राप्तत्वादित्यनन्तरं तथा परिशेषात्प्रमारूपमेव तत्सिध्यतीति वाक्यशेषः । संस्काराविष्टस्य विशिष्टसंस्थानस्य वरुाणः पदमात्रतोऽसिद्धेराह ॥ **पदार्थ इत्यवान्तरेति** ॥

**अनु०— पृथगेव च वाक्यत्वं पृथगन्वयतो भवेत् ॥**
**अवान्तरत्वाद्वाक्यानां वाक्यभेदो न दूषणम् ।**

**सु०— ननु तत्रा(थाऽ)पि सत्यज्ञानादिवाक्यानां कथं स्वार्थे तात्पर्यम् । सत्यत्वे हि विधातव्ये ज्ञानत्वादीनामनुवादेन भाव्यम्; ज्ञानत्वे च विधातव्ये सत्यत्वादीनाम् । न चैतत्संभवति युगपदाकारद्वयविरोधात् । मैवम् । सत्यं ब्रह्म, ज्ञानं ब्रह्मेति पृथगन्वयेन पृथग्वाक्यत्वाङ्गीकारादित्याह ॥ पृथगेवेति ॥**

**तर्हि वाक्यभेददोष इत्यत आह ॥ अवान्तरत्वादिति ॥ एकवाक्यत्वे संभवति स्वतन्त्रवाक्यभेदकल्पनैव दोषो न त्ववान्तरवाक्यभेदः । तथात्वे क्वापि महावाक्यं न स्यात् ।**

वा०— **युगपदिति** ॥ एकान्वयप्रयुक्तैकवाक्य इत्यर्थः ॥ **आकारेति** ॥ अनुवाद्यत्वविधेयत्वयोर्विरुद्धत्रिकद्वयापादकत्वेनैकत्र विरुद्धत्वादित्यर्थः ॥ **पृथगिति** ॥ पृथगन्वयप्रयुक्तपृथग्वाक्यत्वस्वीकारादित्यर्थः ।

स०— **युगपदाकारद्वयविरोधादिति** ॥ अनुवाद्यत्वं उद्देश्यत्वं, प्राधान्यं विधेयत्वं, उपादेयत्वं गुणत्वं चेति त्रिकद्वयमेकस्मिन् विरुद्धमिति भावः ॥

प०— यज्ज्ञानं ब्रह्म तत्सत्यं ब्रह्म तज्ज्ञानमित्यादिरूपेण यत्सत्यं तज्ज्ञानं तद्ब्रह्मेति वाऽन्वयं मत्वा शङ्कते ॥ ॥ **नन्वित्यादिना** ॥ **तथात्व इति** ॥ अवान्तरवाक्यभेदाभाव इत्यर्थः । भिन्नावान्तरवाक्यसमुदायरूपत्वान्महावाक्येति भावः ॥

या०—**युगपदाकारद्वयेति** ॥ एवं सत्यैकस्यैकदैवोद्देश्यत्वविधेयत्वयोः प्राप्त्या तदुभयानुबन्धिविरुद्धत्रिकद्वयमापद्येत । उद्देश्यत्वे हि सिद्धत्वमनुवाद्यत्वं प्रधानत्वं चेति त्रिकम् । विधेयत्वे च साध्यत्वमननुवाद्यत्वं गुणत्वं चेति त्रिकमापद्यते । इदं त्रिकद्वयमेकस्यैकदा विरुद्धमिति लोके प्रसिद्धमेवेति ॥ **स्वतन्त्रवाक्यभेदेति** ॥ महावाक्यभेदेत्यर्थः ॥

**श्री०— आकारद्वयेति** ॥ एकस्यैवानुवाद्यत्वविधातव्यत्वरूपाकारद्वयेत्यर्थः ॥ **स्वतन्त्र-वाक्यभेदेति** ॥ महावाक्यभेदेत्यर्थः ॥ **तथात्व इति** ॥ अवान्तरवाक्यभेदस्य दोषत्वे तत्समुदायरूप-महावाक्यमपि दुष्टत्वान्नाङ्गीकार्यं स्यादित्यर्थः ॥

**च०— युगपदाकारद्वयेति** ॥ एकस्यैवोद्देश्यविधेयभावोपगमे सिद्धत्वानुवाद्यत्वप्रधानत्वरूपो-द्देश्यानुबन्धित्रिकस्य साध्यत्वाननुवाद्यत्वगुणत्वरूपविधेयानुबन्धित्रिकस्य चान्योन्यविरुद्धस्यैकत्र समावेशः प्रसज्यत इत्याशयः । एकैकश्येन एकैकशः गोपदविनिर्मुक्त एव श्रुतिपाठ इति शाखान्तराभिप्रायेण विशेष्यवाचकपदपूरणेन वाऽयं निर्देशस्तन्त्रचूडामण्यादिचिरन्तननिबन्धेषु तादृगानुपूर्वीदर्शनादितिस्थितम् । एको गुणवचनोऽवयववृत्त्या द्रव्यवचनादाविति तत्तत्प्रकृतिकतृतीया श्रुतिभिः प्रत्येकं धातूपस्थाप्यान्वित-करणताप्रत्यापनात् ।

अनु०— अङ्गीकृतत्वादपि तैः पदानां च पृथक् पृथक् ॥
क्रियापदेनान्वयस्य वाक्यभेदो हि दूषणम् ॥

**सु०— किञ्च परेणाप्येवमङ्गीकृतमित्याह ॥ अङ्गीकृतत्वादिति ॥ अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्यादौ तैर्मीमांसकैरपि पदानामरुणयेत्यादीनां क्रीणातीत्यादि-क्रियापदेनैकैक(श्येना)स्यान्वयोऽङ्गीकृतः । अनुवादविधानयोर्युगपद्विरोधभयादरुणादीनां गवादिभिस्त्वाकाङ्क्षादिवशात्पाष्ठिकान्वयोऽभ्युपगतः । ततश्च तेषामपि वाक्यभेदो दूषणं प्रस-ज्येत ॥ तत्रैतावदेव वक्तव्यम् । महावाक्यभेद एव दोषो नावान्तरवाक्यभेद इति । तदस्माक-मपि समानमिति ।**

**वा०**— न केवलमस्माभिरेव युगपदाकारद्वयविरोधपरिहाराय वाक्यभेदप्रयोजकमन्वयपार्थक्य-मङ्गीक्रियतेऽपि तु परेणापि तदङ्गीकृतमित्याह ॥ **किञ्चेति** ॥ **एवमिति** ॥ युगपदाकारद्वयविरोध-परिहारकवाक्यभेदप्रयोजकमन्वयपार्थक्यमित्यर्थः ॥

**अरुणयैकहायिन्या पिङ्गाक्ष्या गवा सोममित्यादि** ॥ अत्र प्रसिद्धशाखायामरुणयैकहायिन्या पिङ्गाक्ष्या क्रीणातीत्येवं पाठेप्यत्रैवमुदाहरणं शाखान्तराभिप्रायेण प्रकरणलब्धार्थानुवादाभिप्रायेण वा । यथा शाबरभाष्यादावरुणयैकहायिन्या पिङ्गाक्ष्येत्युदाहरणम् । अत एव तन्त्रचूडामणौ सुधायामिव पाठ

उदाहृत इति द्रष्टव्यम् । क्रीणातीत्यादावित्यादिपदेन सप्तदशप्राजापत्यान्पशूनालभेतेत्यादेर्जातियौगिकशब्दसमभिव्याहृतामूर्तरूपरसगन्धस्पर्शसङ्ख्यापरिमाणार्थकशब्दोपेतवाक्यसंग्रहः ॥ **अरुणयेत्यादीनामिति** ॥ अत्रादिपदेन स्वसमभिव्याहृतैकहायिन्यादिपदानामादिपदसंगृहीतवाक्यस्थकारकपदानां च संग्रहः । क्रीणातीत्यादीत्यादिपदेनालभेतेत्यादिक्रियापदसंग्रहः । एकैकश्येनेति स्वार्थे भावप्रत्ययः ॥ **अन्वयोऽङ्गीकृत इति** ॥ अरुणप्रातिपदिकपरतृतीयाश्रुतेः क्रियाकरणत्वरूपसंबन्धाभिधायकत्वादारुण्यैकहायिनीद्रव्यसंबन्धस्य च वाक्यार्थत्वाच्छ्रुतेस्तदपेक्षया बलवत्त्वाद्युक्तस्तत्संबन्धाङ्गीकार इति युक्त्या आरुण्यक्रियान्वयस्य विगानाभावेनैकहायिनीक्रियान्वस्य च तेन स्वीकृतत्वादिति भावः ।

नन्वारुण्यस्यामूर्तत्वेन श्रुतिप्राप्तस्यापि क्रयकरणत्वस्यानुपपत्तेः । आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन श्रुतिबाधे वाक्यीयस्यापि गुणद्रव्यान्वयस्यैव स्वीकर्तव्यतया कथमारुण्यक्रियान्वयस्वीकारस्तेषामित्यत एकहायिनीकरणकक्रयस्य विधेयत्वेन तच्छरीरप्रविष्टैकहायिन्यास्तस्मिन्नेव वाक्ये गुणं प्रत्यनुवाद्यत्वस्य विरुद्धत्रिकद्वयापादकत्वेनानुपपन्नतया वाक्यीयगुणद्रव्यान्वयास्वीकारेण श्रुतिप्राप्तक्रियाकारकान्वयस्वीकार एव तेषामुचित इत्यभिप्रायेणाह ॥ **अनुवादेति** ॥ नन्वरुणगुणपरिच्छिन्नैकहायिनीद्रव्येण कुर्यादित्येकान्वयप्रयुक्तैकवाक्यत्वस्य तैरङ्गीकृतत्वात्कथं पृथगन्वयस्वीकारस्तेषामित्यतोऽरुणया क्रीणातीति साधनत्वेन गुणविधायकशब्देन यथाऽनेन साधयितुं शक्यते तथा कुर्यादिति सामान्यतो गुणस्य क्रयसाधनत्वेऽभिहितेऽमूर्तत्वेन साक्षात्तस्य क्रयसाधनत्वाशक्तेर्द्रव्यपरिच्छेदमुखेन क्रयसाधनत्वसंभवात्किं तत्परिच्छेद्यमिति परिच्छेदकस्य गुणस्य परिच्छेद्यद्रव्याकाङ्क्षायामेकहायिन्या क्रीणातीति शब्देन चैकहायिन्याः क्रयसाधनत्वे बोधितेऽपरिच्छिन्नद्रव्यस्य क्रयसाधनत्वानुपपत्त्या परिच्छेद्यद्रव्यस्य परिच्छेदकगुणाकाङ्क्षायां समानवाक्योपात्तद्रव्यगुणयोः परस्परान्वययोग्यत्वाच्च पाष्ठिको विशिष्टान्वय इत्येकान्वयप्रयुक्तैकान्वयत्वस्य पृथगन्वयस्वीकारोपजीव्यकत्वान्न तद्विघातकत्वमित्यभिप्रेत्याह ॥ **अरुणादीनामिति** ॥ आकाङ्क्षादीत्यादिपदेन योग्यतासन्निध्योः परिग्रहः ।

ननु मीमांसकैरन्वयभेदाङ्गीकारेऽपि क्रीणातिपदार्थभूतक्रयभावनाया एकत्वेन पदैकवाक्यताया एव स्वीकाराद्वाक्यभेदस्य च भावनाभेदनिबन्धनत्वान्न वाक्यभेदापत्तिरित्यतः क्रियाभेदस्यापि क्रियान्वयभेदद्वारैव वाक्यभेदप्रयोजकत्वात्क्रियाभेदाभावेऽपि तदन्वयभेदे वाक्यभेदोऽङ्गीकर्तव्य एव । अन्यथा युगपदाकारद्वयविरोधापरिहारादित्याशयेनाह ॥ **ततश्चेति** ॥ एवं च यत्कस्यचिन्मतमित्यन्यथानुवाद इति वल्गनं तदेवान्यथावादरूपमिति बोध्यम् । तदीयान्वयभेदाभ्युपगमस्यानूदितत्वात्तस्य च तद्ग्रन्थपर्यालोचनायां स्पष्टत्वात् । वाक्यभेदस्य चापादितत्वात्तस्य चोक्तरीत्या पूर्वोत्तरपर्यालोचनायां सुशकत्वात् । अत एवान्वयोऽभ्युपगत इति वाक्यभेदः प्रसज्येतेति चोक्तम् । एतेनैव चैतद्दूषणपरिजिहीर्षयाभ्युपगत-

मित्येतदभ्युपगमनीयमिति व्याख्याय विशिष्टविधिपक्षेऽपि भामत्युक्तरीत्या वाक्यभेदः स्यादेवेति केषाञ्चित्समाधानं निरस्तम्। अन्वयभेदाभ्युपगमस्य तदीयस्य स्पष्टत्वेनाभ्युपगमनीयमित्यन्यथाकरणे निमित्ताभावात्। विशिष्टविधेरेकवाक्यत्वमङ्गीकृत्यैवान्वयभेदेनावान्तरवाक्ययोर्भेदस्याकरे स्पष्टप्रतिभासाच्चेत्यास्तां तावत्।

स॰— **एकैकस्यैवेति** ॥ एकैकश इति स्वरूपे प्रकृतिनिमित्ते भावप्रत्ययः। अत्रारुणया पिङ्गाक्ष्यैकहायिन्या सोऽमं क्रीणातीति श्रुतिपाठः। तत्रारुणाशब्दो गुणवचनः। पिङ्गाक्षैकहायनीशब्दौ यौगिकौ सामानाधिकरण्यादेकद्रव्यवचनौ तच्च द्रव्यं किमित्यपेक्षायां गोरूपमेव विवक्षितमिति दर्शयितुं विशेष्यपदमध्याहृत्य पठितमिति द्रष्टव्यम्। अत्रारुणयेत्यादीनां प्रत्येकं क्रयसाधनत्वं प्रतीयते। प्रत्येकं तृतीयाश्रवणात्। अन्यथा तद्वैयर्थ्यापत्तेरिति भावः। ननु नात्र प्रत्येकं क्रयसाधनत्वमुच्यते एतद्वाक्यात्। किन्त्वेकहायनीं क्रयसाधनत्वेन तृतीयया विहितामनूद्य तस्यामारुण्यादिकं पदद्वयेन विधीयते। विशेषणयोश्च विशेष्यानुसारित्वात् तृतीयोपपत्तिरित्यत आह ॥ **अनुवादविधानयोरिति** ॥ अयमर्थः। अत्र हि यदेकहायनीक्रयसाधनत्वेन विहिता। तदा तस्या विधेयत्वानुबन्धिगुणत्वादिकं प्राप्तम्। पुनस्तदैव तदनुवादेनारुण्यादिविधानेऽनुवाद्यत्वानुबन्धिप्राधान्यादिकमपि तस्याः स्यात्। न चैतद्युक्तम्। एकस्मिन् युगपद्विरुद्धधर्मसमावेशायोगात्। क्रमाङ्गीकारे चावृत्तिप्रसङ्गः अत एतद्वयात्र विशेषणविशेष्यभावेन अन्वयः। किन्तु प्रत्येकमेवेति वक्तव्यमिति। ननु न प्रत्येकमन्वयोऽस्माभिरभ्युपगतः। किन्तु यद्यप्येवं प्रत्येकमन्वयः श्रुत्या प्रतीयते। तथापि नासावव्यवधानेन युक्तः आरुण्यस्य गुणस्यामूर्तत्वेन साक्षात्क्रसाधनत्वानुपपत्तेः। न च श्रुत्या प्रतीतं हातुं युक्तम्। अतो हायनवदारुण्यादिकमपि गोद्रव्यमवच्छिनत्ति। तच्च द्रव्यं साधनमिति तद् द्वारारुण्यादेः क्रयेणान्वयोऽङ्गी कृतोऽतः कथं वाक्यभेद इत्यत आह ॥ **आरुण्यादीनां गवादिभिरिति** ॥ **आकाङ्क्षादिवशादिति** ॥ तदन्यथानुपपत्त्येत्यर्थः। आदिपदाद्योग्यतापरिग्रहः। आरुण्यादिकं ह्यवच्छेदकमवच्छेद्यमपेक्षते। अवच्छेद्यं च गवादिकमारुण्यमवच्छेदकमित्यवच्छेद्यावच्छेदकतया परस्परमाकाङ्क्षितत्वं द्रष्टव्यम् ॥ **पार्ष्टिकान्वय इति** ॥ पश्चादर्थापत्तिबलादेव द्रव्यावच्छेदकत्वेनान्वयः प्रतीयते न स शाब्दस्तथात्वे युगपदाकारद्वयविरोधात्। शाब्दस्तु प्रत्येकान्वयः। स एव चास्माभिर्निर्दर्शित इत्यर्थः। अयमत्राभिप्रायः। सत्यमेवं भवदभ्युपगम इति। तथापि पूर्वमारुण्यादीनां श्रुत्या प्रत्येकं यत्क्रयसाधनत्वं प्रतीतं तन्न परित्यक्तम्। किन्त्वव्यवधानमावश्यकद्रव्यमपहाय। तदेव प्रत्येकं क्रयसाधनत्वमुपपादितम्। अतः प्रत्येकमन्वयो नाङ्गीकृत इति रिक्तं वचः। यथाहुः भवदीयाः। तृतीयया गुणस्यैव करणत्वं क्रयं प्रति विस्पष्टं गम्यते तच्च द्रव्यद्वारेण युज्यत इति।

अत एव श्रौतप्रत्येकान्वयस्याङ्गीकृतत्वाभिप्रायेणैकैकस्यैनान्वयोऽङ्गीकृत इति उक्तमिति न कोऽपि क्षुद्रोपद्रव इति ।

केषाञ्चित्समाधानप्रकारोऽयम् ॥ **एकैकस्यैवेति** ॥ अरुणया क्रीणाति एकहायन्या क्रीणाति इत्येवमेकैकस्येत्यर्थः । ननु एकहायन्या क्रीणातीति क्रयसाधनत्वेन विहितैकहायन्यनुवादेन तत्र अरुणयेत्यारुण्यविधानोपपत्तौ अरुणया क्रीणातीत्यारुण्यस्य क्रीणातिनान्वयाऽभ्युपगमे किं मानमित्यत आह ॥ **अनुवादविधानयोरिति** ॥ एकहायन्याक्रयसाधनत्वस्य अप्राप्तत्वे तत्क्रयसाधनत्वेन एकहायन्या विधानत्वात् एकहायनीमेवानूद्य आरुण्यविधाने एहकायन्या अनुवाद्यत्वस्यापि अङ्गीकर्तव्यत्वात् एकस्मिन्नुच्चारणे एकस्यैव अनुवाद्यत्वविधेयत्वयोश्च विरुद्धत्रिकद्वयापत्त्या असंभवादरुणयेत्यस्य क्रीणातिनैवान्वय इति भावः । युगपदित्यस्य एकस्मिन्नेवोच्चारण इत्यर्थः ॥ **अरुणादीनामिति** ॥ अरुणया पिङ्गाक्ष्या गवैकहायन्या सोऽमं क्रीणातीत्यत्र द्रव्यगुणयोः तृतीयाश्रुत्या साधनत्वप्रतीतेः तथा अपरिच्छिन्नस्य द्रव्यस्य क्रयसाधकत्वानुपपत्तेः । द्रव्यगुणयोरवच्छेद्यावच्छेदकत्वस्वाभाव्यात् । योग्यतया पश्चात्तनः । आरुण्यगुणपरिच्छिन्नेन द्रव्येण कुर्यादित्येवंरूपः परस्परेणान्वयः । परेणाभ्युपगत इत्यर्थः । न न्वत्र क्रयभावनाया विधेयत्वेन अप्राप्ते तु विधीयेरन् बहवोऽप्येकयत्नत इत्युक्तरीत्या आरुण्यविशिष्टक्रयभावना रूपक्रियैक्येन क्रियाभेदनिबन्धनवाक्यभेदाप्राप्तेः तन्मतमित्यन्यथानुवादोऽयमिति चेन्न । अरुणया क्रीणातीत्यविशिष्टस्य क्रयभावनारूपक्रियान्वयाप्रतीतौ अवच्छेद्यत्वेन द्रव्यस्य अवच्छेदकत्वेन च गुणस्य आकाङ्क्षाया एव अभावेन तन्निबन्धनस्य विशिष्टक्रयभावनान्वयबोधस्यैव असंभवेन तत्प्रयोजकत्वेन अविशिष्टक्रियान्वयप्रतीतेरपि अवश्यमङ्गीकर्तव्यत्वात् । अविशिष्टक्रियान्वयस्यैव च अवान्तरवाक्यार्थत्वादवान्तरवाक्यभेदोपपत्तेः आरुण्यविशिष्टक्रयभावनारूपक्रियैक्येन महावाक्यभेदस्यैव परिहारात् ।

**एकैकश्येनेति** ॥ एकैकश इति स्वरूपे प्रवृत्तिनिमित्ते भावप्रत्ययः ॥ **अरुणादीनामिति** ॥ अरुणया पिङ्गाक्ष्या गवैकहायिन्यासोमं क्रीणातीत्यत्र द्रव्यगुणयोस्तृतीयाश्रुत्या साधनत्वप्रतीतेः पृथक्पृथक् क्रियान्वयावश्यंभावात् । अवच्छेद्यविधुरस्य गुणस्य मूर्तत्वाक्रियान्वयानुपपत्तेर्द्रव्यगुणयोरवच्छेद्यावच्छेदकस्वाभाव्याद्योग्यतया पश्चात्तनः परस्परेणान्वयः परेणाभ्युपगत इत्यर्थः ।

प० — **एकैक(श्येनान्व)स्यान्वयोऽङ्गीकृत इति** ॥ तृतीयाध्यायस्याद्यपादेऽर्थैकत्वे द्रव्यगुणयोरेकधर्म्यनियमः स्यादित्यधिकरणे ज्योतिष्टोमप्रकरणगतमरुणयेत्यादिवाक्यमुदाहृत्य तथैवोक्तत्वादिति भावः ॥ **अनुवादेति** ॥ 'गवा सोमं क्रीणाती'ति क्रयसाधनत्वेन गोर्विधानं या गौः क्रयसाधनत्वेन विहिता तदनुवादेनारुणया गवेत्यारुण्यविधाने सति क्रयं प्रति गोस्साधनत्वेन विधानं आरुण्यादिविधि

प्रत्यनुवादविधानयोर्यौगपद्ये सति नामधेयपादीयवाजपेयाधिकरणोक्तदिशा विधेयत्वानुवाद्यत्वयोरन्योन्य-प्रतिद्वन्दीभूतत्वेन सहानवस्थितयोरेकत्र समावेशलक्षणविरोधः स्यात् । तथा विधेयत्वसमानाधिकरणस्य गुणत्वोपादेयत्वरूपधर्मद्वयस्यानुवाद्यत्वसमानाधिकरणत्वेन प्रधानोद्देश्यत्वरूपधर्मद्वयस्य वाऽन्योन्यप्रतिद्वन्द्वी-भूतस्यैकत्र समावेशलक्षणविरोधः स्यादिति विरुद्धत्रिकद्वयसमावेशलक्षणविरोधभयादित्यर्थः । एवं तर्ह्य-स्मिन्नेव वाक्ये खले कपोतन्यायेन तृतीयान्तपदचतुष्टयस्य प्रत्येकं युगपत्क्रीणातिनाऽन्वये वाक्यचतुष्टयं प्राप्नोतीत्यत आह ॥ **अरुणादीनामिति** ॥ अरुणया पिङ्गाक्ष्येत्येवमादिरूपेण विशेषणविशेष्यभावापन्न-तया आरुण्यादिविशिष्टगोरूपवस्तुना क्रीणातीत्येकवाक्यता पश्चात्तनी अङ्गीकृतेत्यर्थः ।

या० — **क्रीणातीत्यादिक्रियापदेनेति** ॥ आदिपदेन सप्तदशप्राजापत्यान्पशूनालभेत चतुरश्चतुरो मुष्टीन्निर्वपतीत्याद्यमूर्तगुणवाचकवाक्यसङ्ग्रहः । सप्तदशत्वस्य चतुष्ट्वस्य वाऽमूर्तत्वेन साक्षा-त्क्रियान्वयासंभवादित्याह ॥ **एकैकस्येवेति** ॥ स्वार्थे कप्रत्ययः । एकैकश इत्यर्थः । अरुणया पिङ्गा-क्ष्यैकहायिन्या सोमं क्रीणातीत्येव श्रुतिपाठः । तादृशं च द्रव्यं गोरूपमेव विवक्षितमिति दर्शयितुं गवेति विशेष्यपदं पठितमिति वदन्ति । वस्तुतस्तु गवेत्यादिपदमेतच्छ्रुतिगतमेव । अत एव तन्त्रचूडा-मण्यादिचिरन्तननिबन्धेष्वेवमेव पाठो दृश्यते । तत्रारुणशब्दोऽन्वयव्यतिरेकाभ्यां गुणवचनः । पिङ्गा-क्ष्यैकहायिनीशब्दौ यौगिकौ सामानाधिकरण्यादेकद्रव्यवाचिनौ । ततश्च द्रव्यगुणयोरुभयोः पृथक् तृतीयाश्रुत्या प्रत्येकं क्रयसाधनत्वं प्रथमं प्रतीयते । अन्यथा तृतीयाविभक्तिवैयर्थ्यापत्तेः । ननु नात्र गुणद्रव्ययोः प्रत्येकं क्रयसाधनत्वमुच्यते येनान्वयभेदेन वाक्यभेदापादने इदमुदाहरणं स्यात् । किन्त्वे-काहयिनीं क्रयसाधनत्वेन विहितामनूद्य तस्यामारुण्यं विधीयते । विशेषणविभक्तेश्च विशेष्यानुसारित्वा त्तृतीयोपपत्तिरित्यत आह ॥ **अनुवादविधानयोरिति** ॥ यदा ह्येकहायिनी क्रयसाधनत्वेन विहिता तदा तस्या विधेयत्वानुबन्धिगुणत्वादिकं प्राप्तम् । पुनस्तदैव तदुद्देशेनारुण्यविधाने उद्देश्यत्वानुबन्धि-प्राधान्यादिकमपि तस्याः स्यात् । न चैतद्विरुद्धत्रिकमेकदैकत्राङ्गीकर्तुमुचितम् । अत एतद्भयाद्द्रव्य-गुणयोः प्रत्येकमेव क्रयेणान्वय इति तैरपि वक्तव्यमिति भावः । नन्वेवं द्रव्यगुणयोः प्रत्येकं क्रयान्वये-ऽङ्गीकृते आरुण्यस्य गुणत्वेन साक्षात्क्रयसाधनत्वासंभवाद्बाधितार्थकं वाक्यमापद्येत । अतो हायिनव-दक्षिवच्चारुण्यमपि गोद्रव्यमवच्छिनत्ति । तच्च द्रव्यं साधनमिति तद्द्वाराऽऽरुण्यस्य क्रयान्वय एक एव प्रतीयत इत्यस्तु । ततश्च कथमिदमुक्तार्थोदाहरणं स्यादित्यत आह ॥ **अरुणादीनां गवादिभिरिति** ॥ नात्रारुण्यस्य प्रथममेव द्रव्यावच्छेदकतया क्रयान्वयः प्रतीयत इति तेषामङ्गीकारः । किन्तु प्रथमं द्रव्यगुणयोः प्रत्येकं तृतीयाश्रुत्या क्रयसाधनतयाऽन्वयः प्रतीयते । श्रुतेर्बलवत्त्वेन शीघ्रोपस्थापकत्वात् ।

ननु वाक्यबललभ्यो द्रव्यगुणयोः परस्परमन्वयोऽपि तदैव प्रतीयते श्रुत्यपेक्षया वाक्यस्य दुर्बलत्वात् । किन्तु प्रथमावगतारुण्यक्रयसाधनतानिर्वाहाय स पश्चादेव प्रतीयत इत्येव तेषामङ्गीकारः । अतो युक्तमिदमुदाहरणमित्यर्थः । यथोक्तम् । 'तृतीयया गुणस्यैव कारणत्वं क्रयं प्रति । विस्पष्टं गम्यते तच्च द्रव्यद्वारेण युज्यत इति । अन्यत्राप्युक्तम् । अवगतक्रयशेषत्वनिर्वाहस्तु द्रव्यगुणयोः अन्योन्याकाङ्क्षाबलात् पार्ष्टिकसंबन्धाङ्गीकारेणैव सन्निहितक्रयार्थिकहायिन्यवच्छेदद्वाराऽस्त्विति। नन्वेवं द्रव्यगुणयोः पार्ष्टिकान्वयस्वीकारेऽरुणादिशब्दानां गवादिद्रव्येषु लक्षणाप्रसङ्ग इत्यत उक्तम् । **आकाङ्क्षादिवशादिति** ॥ आदिपदाद्योगतासत्तिपरिग्रहः । अयं भावः । आरुण्यादिकमवच्छेदकं हि अवच्छेद्यमपेक्षते । अवच्छेद्यं च गवादिकमित्यवच्छेद्यावच्छेदकयोः परस्परमाकाङ्क्षावशाद्योग्यतादेश्चावच्छेद्यावच्छेदकभावेनैव द्रव्यगुणयोरन्वयो न तु सामानाधिकरण्येन येन लक्षणा स्यात् । गुणं हि साधनत्वेन विदधच्छब्दो यथाऽनेन शक्यते साधयितुं तथा कुर्यादित्याह । स च द्रव्यपरिच्छेदमुखेन शक्नोति साधयितुं नान्यथा । तेनायमर्थो भवति । आरुण्याद्यवच्छिन्नेन द्रव्येण कुर्यादिति । अतो न कोऽपि दोष इति । नन्वस्त्वेवमारुण्यादीनां क्रयसाधनतया प्रथमं प्रत्येकमन्वयः श्रौतत्वात्तैरङ्गीकृत इति । तथाऽपि किं प्रकृत इत्यत आह ॥ **ततश्चेति** ॥ वाक्यभेदाख्यं दूषणं स्यादित्यर्थः । वाक्यभेदादिति पाठे वाक्यभेदप्राप्त्या तल्लक्षणं दूषणं स्यादित्यर्थः । अत्र कश्चिदाह । भावनाभेदेनैव वाक्यभेदस्य दृष्टत्वात् । प्रकृते च वाक्यभावनाया एकत्वान्नावान्तरवाक्यभेदोऽत्राङ्गीकृत इति । तत्तुच्छम् । न ह्रीदं भाट्टान्प्रत्यापाद्यते किन्तु प्राभाकरान् । तैरन्वये भिन्ने वाक्यं भिद्यत एवेति नियमस्याङ्गीकृतत्वात् । यथाहुः । अन्वितपदात्मकं हि वाक्यम् । तत्र कथं नान्वये भिन्ने भिद्येतेति । अतो न कोऽपि क्षुद्रोपद्रव इति ।

श्री० — **एकैकांशेनेति** ॥ अरुणया क्रीणाति एकहायिन्या क्रीणाति पिङ्गाक्ष्या क्रीणातीत्येवमेकैकांश इत्यर्थः ॥ **पार्ष्टिकान्वय इति** ॥ आदौ तृतीयया बोधितं गुणरूपारुण्यस्य क्रयसाधनत्वं बाधितमिति पश्चादाकाङ्क्षादिवशाद्गवादिना क्रयेणान्वयः स्वीकृत इत्येवं गवादिभिरन्वयः पार्ष्टिकः पृष्ठभागीयः पाश्चात्य इत्यर्थः । आदावरुणया क्रीणातीत्याद्यन्वयबोधोऽङ्गीकृतः पश्चादरुणया गवा क्रीणातीत्यन्वयबोधः स्वीकृत इति भावः ॥

च० — ननु न तुल्यकक्षापन्नतृतीया त्रिकस्यापि धात्वर्थान्वितकरणत्वप्रत्यायकत्वमूरीक्रियते किन्त्वेकहायनीपदप्रकृतिकाया एव । शिष्टद्विकस्य विशेषणवाचकपदोत्तरविभक्तित्वमेवोपेयत इति तदानर्थक्येऽपि न क्षतिरिति नेदं वाक्यभेदोदाहरणं सङ्गच्छत इत्यत आह ॥ **अनुवादविधानयोरिति** ॥ क्रयसाधनत्वेनैकहायन्याः विधानदशायां विधेयत्वानुबन्धिगुणत्वादित्रिकं प्रासाङ्क्षीत् । पुनस्तामुद्दिश्य

तस्य विधाने उद्देश्यत्वानुबन्धिप्राधान्यादित्रिकमिति विरुद्धत्रिकद्वयसमावेशापत्त्या निखिलानां कारकतृतीयात्वमुपेत्य क्रमेण दर्शितदिशाऽन्वयबोधस्य तैरप्युपेतव्यत्वादिति भावः ॥ **अरुणादीनामिति** ॥ आरुण्यादीनाममूर्तत्वेन साक्षात्क्रियायां करणत्वेनान्वयस्य बाधिततया द्रव्यपरिच्छेदकतयैवानुपपत्तिप्रतिसंधाननिबन्धनो विशिष्टवैशिष्ट्यावगाह्यन्वयबोध उदीच्यस्तैरुपगत इति भावः ।

अनु०— प्रत्यक्षादिविरोधे तु गौणार्थस्यापि संभवात् ॥
अतात्पर्यं पदार्थेऽपि न कल्प्यमविरोधतः ॥

**सु०— स्यादेतत् । तथाऽपि वेदान्तपदानां स्वार्थेषु तात्पर्यं नोपपद्यते । प्रत्यक्षादिविरोधात् । तथा हि । विज्ञानमानन्दं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म, तत्त्वमसीत्यादौ ब्रह्मानुवादेनानन्दादित्वमद्वितीयत्वं च विधीयत इति व्याख्येयम् । ब्रह्म च प्रत्यक्षादिसिद्धो जीवः । न च तस्यैतद्रूपत्वं प्रत्यक्षादिकं सहते, तेन तद्विपरीतोल्लेखनादित्यत आह ॥ प्रत्यक्षादिविरोध इति ॥ न तावत्सर्वत्र प्रत्यक्षादिविरोधः । सत्यं ज्ञानमित्यादिवाक्यानां जीवातिरिक्तेश्वरविषयत्वाङ्गीकारात् । तत्त्वमस्यादिवाक्यानां प्रत्यक्षादिविरोधेऽपि न स्वार्थे तात्पर्याभावः कल्पनीयः । प्रतीतार्थस्य प्रत्यक्षादिविरोधादेवाग्निर्माणवक इत्यादेरिवामुख्यार्थकल्पनोपपत्तेः । न ह्याभिधानिक एव स्वार्थो नान्य इति कस्यचिदभ्युपगमः । न च गौणार्थे तात्पर्याङ्गीकृतौ कश्चिद्विरोधोऽस्ति । ननु गौणार्थाङ्गीकारेऽपि जीवस्य आनन्दादिरूपत्वमङ्गीकार्यम् ; तच्च प्रत्यक्षादिविरुद्धम् । मैवम् । अविद्यावरणतिरोभावसंभवात् । तदिदमुक्तमविरोधत इति ।**

**वा०—** ननु स्वार्थे वेदान्तानां प्रत्यक्षादिविरोधप्राप्तमतात्पर्यं परिहर्तुं गौणार्थपरत्वप्रतिपादकमुत्तरवाक्यमव्यवहितपूर्वग्रन्थासङ्गतमनुपपन्नं च प्रत्यक्षविरोधाप्रसक्तेरित्यतो बाधकान्तरपरिहारतया तत्प्रवृत्तिरित्याशयेन प्रत्यक्षादिविरोधमुपपादयन्नेव तत्सङ्गमयति ॥ **तथाऽपीति** ॥ परमते पदार्थवाक्यार्थपरत्वेन विभागाद्वाक्यद्वयस्य स्वशब्देनोपादानम् । यद्वा प्रकृतत्वात्सत्यज्ञानादिवाक्योपादानम् । गौणार्थपरत्वेनावश्यं प्रतिपादनीयत्वेनोत्तरवाक्याभिप्रेततया तत्त्वमसीत्यस्येति द्रष्टव्यम् । अत्र प्रत्यक्षादिविरोधे सति गौणार्थत्वं न तु तदभावस्थल इत्यभिप्रायकेण प्रत्यक्षादिविरोध इत्यनेन क्वचित्प्रत्यक्षादिविरोधो नास्तीति सूचितम् । तेन च सत्यज्ञानादिवाक्येनानुपपत्तिरित्याशयेनाह ॥ **न तावदिति** ॥ ननु कथमेतद्ब्रह्म चेत्युक्तदोषापरिहारादित्यतस्तदेवासिद्धमित्याशयेन तद्विषयं दर्शयति ॥

**सत्यमिति** ॥ यद्वा स्पष्टत्वाद्भाष्यकारोऽपेक्षितं स्वयमेव सत्यज्ञानादिवाक्यविषयकानुपपत्तिपरिहारं दर्शयति ॥ **न तावदिति** ॥ व्यवहितत्वाद्धेतुसाध्यसमर्पकपदानां विविच्य तदर्थमाह ॥ **तत्त्वमसीत्यादीति** ॥ वाक्यार्थे कार्ये परेण तात्पर्यानभ्युपगमादपिशब्दो भिन्नक्रमेण योजितः । अतःशब्दव्याख्या प्रतीतार्थस्येत्यादि । तत्त्वमसीत्यादौ लाक्षणिकार्थस्याप्यभ्युपगमाद्गौणशब्दोऽमुख्यार्थपरतया व्याख्यातः । नन्वस्तु गौणाद्यर्थकल्पना तथाऽपि स्वार्थे तात्पर्याभाव एवेत्यत आह ॥ **न हीति** ॥ पदवृत्तिबोधितस्यैव स्वार्थत्वम् । अन्यथा लाक्षणिकादेर्वाक्यार्थान्वयो न स्यादित्युपपत्तिविरोधान्नाभिधानिकस्यैव स्वार्थत्वमित्येव न किन्तु तथाऽभ्युपगमेऽपि न कस्यचिदिति सूचनायाभ्युपगमशब्दः । नन्वत इत्यनेनैव हेतुकथनादविरोधत इति व्यर्थम् ॥ **अत इति** ॥ प्रत्यक्षादिविरोधादमुख्यार्थकल्पनामुक्त्वा तदभावकथनं विरुद्धं चेत्यतोऽतःशब्दोक्तस्य प्रतीतार्थे प्रत्यक्षादिविरोधस्य गौणाद्यर्थाङ्गीकारे हेतुत्वेनोक्तावपि गौणाद्यर्थाङ्गीकारे विरोधाभावस्याविरोधपदेनोक्तत्वादपौनरुक्त्यमविरोधश्चेत्याशयेनाविरोधत इत्यस्यार्थमाह ॥ **न चेति** ॥ ननु तत्र विरोधप्रसक्तेरेवाभावात्तद्वैयर्थ्यमित्यतस्तत्र विरोधप्रसक्तिं दर्शयति ॥ **नन्विति** ॥

प० — **कश्चिद्विरोध इति** ॥ 'रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेदि'त्यादिकर्मनिर्णयवाक्यं तु तत्रैव सम्यग्व्याख्यातवन्त इति न तद्विरोधोऽपीति । मूले पदार्थेऽपीत्यस्य सत्यं ब्रह्मेत्याद्यवान्तरवाक्यार्थेऽपीति पूर्वोक्तदिशा व्यक्तत्वादर्थो नोक्तः ॥

श्री० — **जीवातिरिक्तेति** ॥ अस्मिन्परे भारः । तथाच ब्रह्म च प्रत्यक्षादिसिद्धो जीव इत्युक्तमयुक्तमिति भावः । नन्वमुख्यार्थस्य पदार्थत्वाभावात्कथममुख्यार्थकल्पनेत्यत आह ॥ **न हीति** ॥ आभिधानिकोऽभिधानसिद्धो मुख्य इत्यर्थः । स्वार्थः पदानामर्थः ॥

अनु० — **अतो ज्ञानफलान्येव कर्माणि ज्ञानमेव हि ॥**
**मुख्यप्रसादद्ं विष्णोर्जिज्ञासायाश्च तद्भवेत् ॥**
**कर्तव्या तेन जिज्ञासा श्रुतिप्रामाण्ययोगतः ॥**

सु० — **योगश्च स्यान्महाफल इत्युक्तं प्रपञ्चयन्नुक्तार्थमुत्सूत्रितत्वभ्रमनिरासायातःशब्दारूढं कुर्वन्नुपसंहरति ॥ अत इति ॥ अत्र ज्ञानफलान्येव कर्माणीत्युक्तप्रपञ्चनम् । अतः श्रुतिप्रामाण्ययोगतो ब्रह्मणि श्रुतिप्रामाण्यस्योपपन्नत्वाज्जिज्ञासा कर्तव्येत्युपसंहारः । न विषय-**

**सद्भावमात्रेण जिज्ञासोपपत्तिरित्यत उक्तं प्रयोजनसंबन्धं स्मारयति ॥ ज्ञानमेव हीति ॥ हि यस्माज्ज्ञानमेव विष्णोर्मुख्यप्रसाददम्; जिज्ञासाया एव तज्ज्ञानं भवेत्; तेन; न तु विषयादिसिद्धिमात्रेणेति । मुख्यप्रसादो मोक्षहेतुप्रसादः । कर्माणि तु जिज्ञासाजनकत्वेन ज्ञानफलानीत्युक्तानीति न विरोध इति ।**

**वा०** — ननूत्तरवाक्यस्योपसंहाररूपत्वे ज्ञानफलानि कर्माणीत्यस्यानुक्तत्वादुपादानायोगः । एतत्प्रतिपादनपरत्वे चेतरांशवैयर्थ्यम् । उपसंहारस्यातः श्रुतिप्रामाण्यं युज्यत इत्येतावतैव पूर्तेर्जिज्ञासा कर्तव्येत्यादिवैयर्थ्यं च । कथं च भाष्यकारेण स्वयमुपपादितस्य श्रुतिप्रामाण्ययोगस्य सौत्रप्रतिज्ञाया हेतुत्वेनान्वयकथनमित्यतस्तदभिप्रायमाह ॥ **योगश्च स्यादिति** ॥ अत इति सौत्रपदानुवादेन श्रुतिप्रामाण्ययोगत इति व्याख्यानम् । अनेन भाष्ये उभयोपादानवैयर्थ्यमित्यपि परास्तम् । एवं च सौत्रातःशब्दार्थस्यैव श्रुतिप्रामाण्ययोगस्य जिज्ञासाकर्तव्यत्वे हेतुत्वेनोक्ततया नोक्तानुपपत्तिरिति सूचयतोत्सूत्रितत्वभ्रमो निरस्तो भवति । यद्वा श्रुतिप्रामाण्ययोगे पूर्वं भाष्यकारोक्तसाधकादीनामतःशब्देनोपादानम् । तथा चोक्तयुक्त्या श्रुतिप्रामाण्ययोगत इत्यर्थः । अत्र प्रतिज्ञातजिज्ञासाकर्तव्यत्वे श्रुतिप्रामाण्ययोगस्य हेतुत्वेनोक्तेरेव सौत्रप्रतिज्ञाहेतुसमर्पकातःशब्दार्थत्वसिद्धिरिति तदुक्त्यैवास्य हेतोः सौत्रातःशब्दार्थत्वसूचनादुत्सूत्रितत्वभ्रमनिरास इति द्रष्टव्यम् । एवं चातःशब्दस्य सूत्रगतस्य व्याख्यानायानुवादे उपसंहारत्वज्ञापकं नात्र किञ्चिदित्यपि परास्तं भवति । अथाऽपि ज्ञानमेवेत्यादेर्वैयर्थ्यमेवेत्यतस्तत्प्रयोजनमाह ॥ **न चेति** ॥ प्रयोजनाभावशङ्कापरिहारकत्वं फलस्य दर्शयितुं मुख्यपदं व्याख्याति ॥ **मुख्येति** ॥ ननु जिज्ञासाया ज्ञानजनकत्वे ज्ञानफलानि कर्माणीत्युक्तविरोध इत्यत आह ॥ **कर्माणीति** ॥

**स०** — ब्रह्मणि श्रुतिप्रामाण्यस्योपपन्नत्वादित्यनन्तरमनुग्राह्यप्रमाणस्य प्राप्तत्वादिति शेषः । ननु यदि जिज्ञासा ज्ञानजनिका तर्ह्यतोज्ञानफलान्येवेत्यत्र कथं कर्मणां ज्ञानजनकत्वमुक्तमत आह ॥ **कर्मणां त्विति** ॥

**प०** — **उक्तार्थम्** कार्यता चेत्यादिनोक्तार्थमित्यर्थः ॥ **अत्रेति** ॥ श्लोक इत्यर्थः ॥ अत इति सौत्रपदानुवादः । तस्य श्रुतिप्रामाण्ययोगत इत्येतद्व्याख्यानमिति दर्शयति ॥ **अतः श्रुतिप्रामाण्ययोगत इति** ॥ तस्याप्यर्थमाह ॥ **ब्रह्मणीति** ॥ सिद्धरूपेऽपि ब्रह्मणीत्यर्थः ॥ **उपसंहार इति** ॥ तेन न पुनरुक्ततादोष इति भावः ॥ **न विषयेति** ॥ विषयसमर्थनपरतयाऽप्यतःशब्दं व्याचष्ट इति कार्यता चेत्यादेरवतारितत्वेन सिद्धरूपे ब्रह्मणि वेदस्य प्रामाण्यादित्येतदर्थकतयाऽतःशब्दव्याख्याने विषयसद्भावस्य

प्राप्तत्वाद्विषयसद्भावमात्रेणेत्युक्तम् ॥ **उक्तं प्रयोजनसंबन्धमिति** ॥ 'ज्ञानी प्रियतमोऽतो मे' इत्यादिनोक्तमित्यर्थः । ननु 'जिज्ञासायाश्च तद्धेतुदि'ति 'कर्माणि ज्ञानफलानी'ति द्वयं विरुद्धमित्यत आह **कर्माणीति** ॥

**या०**— ब्रह्मणि श्रुतिप्रामाण्यस्योपपन्नत्वादित्यनन्तरमनुग्राह्यप्रमाणस्य प्राप्तत्वादिति शेषो ज्ञातव्यः । ननु यदि जिज्ञासा ज्ञानजनिका तर्हि अतो ज्ञानफलान्येवेत्यत्र कथं कर्मणां ज्ञानजनकत्वमुक्तमत आह ॥ **कर्माणि त्विति** ॥

**श्री०**—**उत्सूत्रितत्वेति** ॥ सूत्रादुद्गतम् । तदनारूढमिति यावत् । तत्त्वभ्रमनिरासायेत्यर्थः ॥ **श्रुतिप्रामाण्यस्योपपन्नत्वादिति** ॥ तथाच ब्रह्ममीमांसानुग्राह्यप्रमाणस्य प्राप्तत्वात् । यदुक्तं पूर्वपक्षिणा कार्य एव सर्ववेदपर्यवसानादनुग्राह्यप्रमाणाभावान्न ब्रह्ममीमांसारम्भः संभवतीति; तदसदिति भावः ॥ ॥ **विषयसद्भावमात्रेणेति** ॥ तथात्वे काकदन्तपरीक्षाया अपि कर्तव्यत्वं स्यादिति भावः ॥ **तेनेति** ॥ ज्ञानरूपप्रयोजनसद्भावेनेत्यर्थः । सर्वं वाक्यं सावधारणमिति न्यायेन तेनैवेत्यवधारणमभिप्रेत्य तद्व्यावर्त्यं दर्शयति ॥ **न त्विति** ॥ ननु जिज्ञासाया ज्ञानजनकत्वे ज्ञानफलान्येव कर्माणीति कथं कर्मणां ज्ञानजनकत्वमुक्तमित्यत आह ॥ **कर्माणि त्विति** ॥ अन्तःकरणशुद्धिद्वारेणेति भावः ॥

**च०**— जिज्ञासायाश्चेति चशब्दएवार्थ इत्यभिप्रेत्याह ॥ **जिज्ञासाया एवेति** ॥ जिज्ञासाया एव ज्ञानजनकत्वोपगमे ज्ञानफलानि कर्मणीति वचनं विरुणद्धीत्यत आह ॥ **कर्माणीति** ॥

**सु०**— ननु शब्दस्यैव तावत्प्रामाण्यं दुर्लभम् । तथा हि । प्रमाकरणं हि प्रमाणम् । प्रमाकरणं च तदुच्यते यस्मिन्सति प्रमा भवत्येव नासति । सत्यपि शब्दे न प्रमा जायते । तत्कथं प्रमाकरणं स्यात् ॥ किञ्च प्रमाणं हि विषयसद्भावेन व्याप्तम् । विषयश्च द्वेधा । अपरोक्षः परोक्षश्च । तत्रापरोक्षः प्रत्यक्षसिद्धः । परोक्षस्त्वनुमानवेद्य इति विषयाभावान्न प्रमाणं शब्दः ॥ अपि च यत्प्रमाणं तद्विज्ञानात्मकं दृष्टम् । यथा धूमज्ञानम् । अविज्ञानात्मकश्च शब्दोऽतो न प्रमाणम् ॥ एवं बाह्यकरणप्रत्यक्षत्वादात्मन्यनाश्रितत्वाच्च; घटवत् ॥ आकाशगुणत्वाच्च तत्परिमाणवत् ॥ किञ्च किं शब्दोऽर्थेन संबद्धस्तं बोधयति, उतासंबद्धः । आद्ये संबन्धस्तादात्म्यं, संयोगः, समवायो वा । न प्रथमः । (वन्ह्या)अग्न्यादिशब्दोच्चारणे सति मुखदाहादिप्रसङ्गात् । वर्तमानस्य शब्दस्यातीतादिनार्थेन तादात्म्येऽर्थस्यापि वर्तमानतापत्तिः । शब्दस्य वाऽतीतत्वादिप्राप्तिः । न द्वितीयः गुणत्वात् । द्रव्यत्वेऽपि मूर्तस्य क्रिययार्थसंयोगेऽन्तरावस्थितार्थविषयत्वापत्तिः । सर्वगतत्वे तु सर्वार्थप्रतिपादकत्वप्रसङ्गः । सर्वथाऽतीतादिना

**संयोगानुपपत्तौ तदप्रतिपादकत्वं स्यात् । न तृतीयः आकाशगुणस्यान्यत्र समवायायोगात् । सर्वशब्दानामाकाशार्थतापत्तेश्च । द्रव्यस्यापि मूर्तस्य वा अमूर्तस्य वा न घटादिना समवायो युज्यते । असंबद्धस्य च बोधकत्वे नियामकाभावात्सर्वोऽपि सर्वं बोधयेत् ॥ किञ्च आप्तानाप्तयोर्नद्यास्तीरे पञ्चफलानि सन्तीति वाक्ययोरस्ति कश्चिद्विशेषो न वा । नाद्यः । अनुपलम्भात् । पुरुषे विशेषोऽस्तीति चेन्न तस्य वाक्योच्चारण एवोपक्षीणत्वेन तदुत्पाद्यज्ञानेऽनुपयोगात् । द्वितीये तु कथमेकस्यार्थविसंवादोऽपरस्य तु संवादः । अतः संभावनामात्रेण शब्दात्कृष्यादाविव प्रवृत्तिः ।**

वा०—ननु वेदप्रामाण्यप्रतिपादनमुत्तरवाक्येऽयुक्तमसङ्गतेः । शब्दप्रामाण्ये च सति विशिष्य-वेदाप्रामाण्यप्रापकाभावाच्च । न च शब्दाप्रामाण्यप्रतिपादनमेवेतदिति वाच्यम् । असङ्गत्यपरिहारात् । तदप्रामाण्यप्रापकाभावाच्चेत्यतस्तत्सङ्गमयितुं शब्दाप्रामाण्ये प्रापकं वक्तुं प्रतिजानीते ॥ **नन्विति** ॥ नन्वेतादृशबाधकस्य सर्वत्र संभवात्करणमात्रोच्छेदप्रसङ्ग इत्यत आह ॥ **किञ्चेति** ॥ **विषयेति** ॥ न च विषयाभावेऽप्यतीतानागतगोचरानुमानयोगिप्रत्यक्षयोः प्रामाण्येन विषयसद्भावस्य प्रामाण्याव्यापकत्वान्न तन्निवृत्त्या प्रामाण्यनिवृत्तिरिति वाच्यम् । अत्र विषयशब्देनालम्बनस्य विवक्षितत्वात्तस्य च तत्रापि सत्त्वादिति भावः ॥ **परोक्षस्त्विति** ॥ न चानुमानवदागमस्यापि परोक्षार्थविषयकत्वमेवास्त्वन्यथाऽऽगमप्रामाण्यमभ्युपगम्यानुमानेऽप्येतादृशप्रत्यवस्थानं सुलभमिति वाच्यम् । परचित्तवृत्त्याद्यसङ्कीर्णविषयसद्भावेनानुमानप्रामाण्यस्यावश्यकत्वे सकलपरोक्षार्थसंवेदनस्य तेनैवोपपत्तावसङ्कीर्णविषयाभावेन नागमप्रामाण्यमिति भावः । ननु शब्दस्यापि बोधकत्वादसङ्कीर्णो विषयोऽपि कल्पनीय इत्यतः स्वयमप्रकाशात्मकस्यान्यप्रकाशकत्वमेवानुपपन्नमित्याशयेनाह ॥ **अपि चेति** ॥ विज्ञानमेव प्रमाणं प्रत्यक्षस्थलेऽपीन्द्रियजन्यज्ञानस्यैव प्रामाण्यं नत्विन्द्रियादेरिति मतेनेदम् । अत एव न्यायवार्तिके यत्प्रमाणं तद्विज्ञानात्मकं यथा प्रत्यक्षमित्युदाहृतम् । अत एव च परिहारदशायामत्रापि यथेन्द्रियमिन्द्रियसन्निकर्षो वा प्रत्यक्षं विज्ञानकरणत्वादविज्ञानात्मकमपि प्रमाणमिति दृष्टान्तकथनावसरे विज्ञानकरणत्वादिति हेतूपादानम् । एवं चात्रापि यथा प्रत्यक्षमिति वक्तव्ये करणप्रसङ्गाद्यथा धूमज्ञानमित्येवोक्तमिति ध्येयम् । मानसप्रत्यक्षलिङ्गज्ञानव्यावृत्त्यै बाह्येति । घटवदित्युक्त्याऽन्यथा घटस्यापि प्रमाणत्वं स्यादित्युक्तं भवति । अविज्ञानात्मकत्वेनाप्रामाण्येऽपि घट एवान्वयदृष्टान्तः । आकाशो महत्प्रत्ययविषयो महत्त्वपरिमाणवत्त्वादित्यादौ लिङ्गतयाऽऽकाशपरिमाणस्य प्रमाणत्वेऽपि लिङ्गतानाक्रान्तस्य तस्य न प्रमाणत्वमिति न तत्रानैकान्तिकता । अन्यथा सङ्ख्याया अपि क्वचिल्लिङ्गत्वोपपत्त्या तस्या अपि दृष्टान्तत्वं न स्यात् । तथा च

सङ्ख्यां दृष्टान्ततयोपादाय परिमाणेऽनैकान्तिकत्वोद्भावनं केषाञ्चिद्वार्तिककारादीनामनुचितमिति दर्शयितुं सङ्ख्यया आदित्वेऽपि तामनुपादाय परिमाणं दृष्टान्ततयोपादत्ते ॥ **तत्परिमाणवदिति** ॥ उक्तहेतूनां विपक्षे बाधकाभावादप्रयोजकताशङ्काऽऽक्रान्ततया तच्छङ्कानास्पदं हेतुमाह ॥ **किञ्चेति** ॥ वन्ह्यादीत्यादिशब्देन शस्त्रादि । दाहादीत्यत्र मुखपाटनादि ग्राह्यम् । दूषणान्तरमाह ॥ **वर्तमानस्येति** ॥ ननु शब्दो द्रव्यं साक्षादिन्द्रियसंबन्धत्वात्सङ्ख्यावत्त्वाच्च घटवत् । श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वान्मनोवदित्यादिना शब्दस्य द्रव्यत्वस्थितेर्गुणत्वमसिद्धमित्यत आह ॥ **द्रव्यत्वेऽपीति** ॥ एवं मूर्तत्वामूर्तत्वपक्षयोः पृथग्दूषणमभिधाय पक्षद्वयेऽप्येकं दूषणमाह ॥ **सर्वथेति** ॥ मूर्तत्वपक्षेऽमूर्तत्वपक्षेऽपीत्यर्थः । प्रथमे द्वितीयकल्पं निषेधति ॥ **असम्बद्धेति** ॥ ननु संबन्धाभावेन शब्दस्याबोधकत्वे तद्बोधात्प्रवृत्तिसंवादो न स्यादित्यतोऽस्य बोधकत्वं वदताऽपि संवादविसंवादहेतोर्निरूपयितुमशक्यत्वात्प्रवृत्तेः संभावनामात्रहेतुकत्वं क्वचित्संवादस्य काकतालीयत्वमकामेनापि स्वीकर्तव्यमित्याशयेनाह ॥ **किञ्चेति** ॥ **तस्येति** ॥ पुरुषस्य वाक्योत्पाद्यज्ञानेऽप्युपयोगाङ्गीकारे त्वन्मतेनापौरुषेयवाक्ये पुरुषाभावेन तस्य बोधकत्वं न स्यादिति भावः ॥

स०—**तत्कथं प्रमाकरणं स्यादिति** ॥ अनेन शब्दो न प्रमाणमिति व्यवहर्तव्यः प्रमित्यजनकत्वात् इति प्रयोगः सूचितो भवति । अन्यथा साध्याविशिष्टता स्यादिति ध्येयम् ॥ **यत्प्रमाणं तद्विज्ञानात्मकमिति** ॥ परोक्षविषयप्रमाणोऽयं नियम इति भावः ॥ **बाह्यकरणप्रत्यक्षत्वादिति** ॥ बाह्यकरणाख्यप्रत्यक्षविषयत्वादित्यर्थः । अन्तःकरणवेद्यलिङ्गज्ञाने व्यभिचारपरिहारार्थं बाह्येति विशेषणम् । अनुमानरूपबाह्यकरणवेद्ये तस्मिन्नेव व्यभिचारवारणाय प्रत्यक्षपदम् । स्वातन्त्र्येण बाह्यार्थज्ञापकजातीयं बाह्यकरणमिति परस्याशयः । शब्दार्थयोस्तादात्म्याङ्गीकारे दोषान्तरमाह ॥ **वर्तमानस्येति** ॥ संयोगः संबन्ध इति पक्षेऽपि किं शब्दो गुणो द्रव्यं वा नाद्य इत्याह ॥ **नेति** ॥ द्रव्ययोरेव संयोग इति नियमादिति भावः । द्वितीये किं परिच्छिन्नपरिमाणः सर्वगतो वा । आद्ये क्रियावत्त्वात् व्यवहितघटेन संबध्यमानो घटशब्दो मध्यस्थितपदेनापि संबध्येतेत्याह ॥ **द्रव्यत्वेऽपीति** ॥ द्वितीयं दूषयति ॥ **सर्वेति** ॥ द्वितीये किं मूर्तोऽमूर्तो वा । पक्षद्वयेऽपि दोषमाह ॥ **द्रव्यस्यापीति** ॥ प्रथमविकल्पे द्वितीयविकल्पं दूषयति ॥ **असंबद्धयोरिति** ॥

प०— सिद्धार्थपरत्वरूपं तृतीयमतःशब्दव्याख्यानम् ॥ ॥ शब्दाप्रामाण्यवादिबौद्धमतमनुवदति ॥ **नन्वित्यादिना** ॥ एवकारतात्पर्यमुपसंहारे व्यक्तम् । प्रकृताभिप्रायमाह ॥ **प्रमाकरणं हीति** ॥ शब्दइति योज्यम् । अन्वयव्यभिचारान्न प्रमाकरणत्वमिति भावेन बौद्धमतरीत्या व्यतिरेकव्याप्त्युपनयरूपावयवद्वयोक्तिपूर्वं निगमयति ॥ **प्रमाकरणं चेति** ॥ निर्विषयत्वाच्च न प्रमाणं शब्द इत्याह

॥ **किञ्चेति** ॥ अविज्ञानात्मकत्वाच्च न प्रमाणं शब्द इति व्यतिरेकोदाहरणोपनयपूर्वमाह ॥ **अपि चेति** ॥ **एवमिति** ॥ वक्ष्यमाणहेतुत्रयेणापि शब्दो न प्रमाणमित्यर्थः । हेतूनाह ॥ **बाह्येति** ॥ हेतुद्वये दृष्टान्तः **घटवदिति** ॥ उक्ताप्रामाण्यसाधकषड्ढेतूनामप्रयोजकत्वनिरासाय प्रामाण्यपक्षे बाधकमाह ॥ **किं शब्द इत्यादिना** ॥ **गुणत्वादिति** ॥ शब्दस्येति योज्यम् । द्रव्यत्वेपीत्यत्राप्येवं योज्यम् । किं मूर्तः उत सर्वगतः शब्दः । आद्ये आह ॥ **मूर्तस्येति** ॥ अन्त्ये आह ॥ **सर्वगतत्वे त्विति** ॥ **आकाशार्थतेति** ॥ सर्वशब्दानामाकाशसमवेतत्वेन समवायस्य सत्त्वादाकाशमात्रार्थत्वं स्यादित्यर्थः । तृतीयपक्षेदोषान्तरमाह **द्रव्यस्यापीति** ॥ **घटादिनेति** ॥ अयुतसिद्धत्वाभावात् । तथाचाकाशेतरसर्वपदार्थप्रतिभास एव शब्दात्स्यादिति भावः । प्राग्विकल्पितासंबन्धपक्षं निराह ॥ **असंबद्धस्येति** ॥ प्रामाण्यपक्षे बाधकान्तरं चाह ॥ **किञ्चाप्तेति** ॥ **पुरुषे विशेष इति** ॥ आप्तत्वानाप्तत्वे इति भावः ॥ **तदिति** ॥ शब्दोत्पाद्यज्ञान इत्यर्थः ॥ **संभावनेति** ॥ उत्कटकोटिकसंदेहेत्यर्थः ॥

**या०— यस्मिन्सतीति** ॥ अविलम्बेनोत्पादकत्वं करणत्वमभिप्रेत्येदमुक्तमिति ज्ञातव्यम् ॥ **न प्रमा जायत इति** ॥ व्युत्पत्तिविधुराणामिति शेषः ॥ **तत्कथमिति** ॥ अनेन शब्दो न प्रमाणमिति व्यवहर्तव्यः प्रमित्यजनकत्वादिति प्रयोगः सूचितो भवति । अन्यथा साध्याविशिष्टता स्यादिति ध्येयम् । यद्यपि बौद्धमतेऽविसंवादिविज्ञानमेव प्रमाणं न करणम् । तथाऽपि पररीत्येदमुक्तमिति द्रष्टव्यम् । अत एव स्वमतेनाह ॥ **यत्प्रमाणं तद्विज्ञानात्मकमिति** ॥ **सर्वशब्दानामिति** ॥ समवायेन तद्बोधकत्वाङ्गीकारादिति भावः । द्वितीयं दूषयति ॥ **असम्बद्धेति** ॥ ततः किमित्यत आह ॥ **अत इति** ॥ अनियतसंवादित्वादित्यर्थः । तथा च निष्कम्पप्रवृत्त्यजनकत्वान्न शब्दः प्रमाणमिति भावः ।

**श्री०— बाह्यकरणप्रत्यक्षत्वादिति** ॥ बाह्यकरणजन्यज्ञानविषयत्वादित्यर्थः । न प्रमाणमित्यनुवर्तते । यत्प्रमाणं तद्बाह्यकरणप्रत्यक्षं न भवति । यथा विज्ञानम् । शब्दस्तु न तथाऽतो घटादिवदप्रमाणमित्यर्थः ॥ **आकाशार्थतेति** ॥ येन समवायस्तद्बोधकत्वाङ्गीकारात्सर्वेषामपि शब्दानामाकाशार्थतापत्तेः आकाशविषयकतापत्तेः । आकाशबोधजनकतापत्तेरिति यावदित्यर्थः । अतः शब्दात्संभावनामात्रेणेत्यन्वयः । उत्कटकोटिकः संशयः संभावना । तथाच शब्देन संभावनैव जायते । तन्मात्रेणैव प्रवर्तते इत्येवं शब्दस्य संशयजनकत्वेन प्रमाजनकत्वाभावान्न शब्दः प्रमाणमित्यर्थः ॥

**च०—** वेदप्रामाण्यसमर्थनपरोत्तरमूलं सङ्गमयितुमाशङ्कते ॥ **नन्विति** ॥ **यस्मिन्सतीति** ॥ फलायोगव्यवच्छिन्नं कारणं करणमिति मतमाश्रित्येदं भवत्येवोत्पद्यत एव । **न प्रमेति** ॥ शक्त्यप्रतिसन्दधानानामित्यादिः ॥ **तत्कथमिति** ॥ एतेन शब्दपक्षकप्रमानिरूपितकरणत्वाभावसाध्यकस्वघटितसामग्रीसमवधानकालीनप्रमानुत्पादकत्वलिङ्गकन्यायप्रयोगो ध्वन्यते । तत्कथमित्यवतार्य शब्दो न प्रमाणमिति

व्यवहर्तव्यस्तत्प्रमित्यजनकत्वादिति प्रयोगः सूचितो भवति । अन्यथा साध्याविशिष्टता स्यादित्यपि स्थितम् । शब्दो न प्रमाणं निर्विषयत्वादित्यभिप्रेत्याह ॥ **किं चेति** ॥ तद्धर्मिकतत्साध्यकज्ञानान्यत्व(ादि)-हेतुकघटादिनिदर्शनकानुमानमभिप्रेत्याह ॥ **अपि चेति** ॥ घटं निदर्शनीकृत्य तद्धर्मिणि तत्साधकहेतुद्वयं गगनपरिमाणं निदर्श्य तादृशमाकाशगुणत्वं चाभिप्रेत्याह ॥ **एवमिति** ॥ विषयासन्निकृष्टत्वेनापि तत्र तत्सुसाधमित्याह ॥ **किं चेति** ॥ अनाप्तप्रणीतवाक्यावैशेष्येणापि तत्र सुसाधमित्यभिदधाति ॥ **किंचेति**॥ एकस्य अनाप्तप्रणीतस्य विसंवादः अप्रामाण्यमपरस्य आप्तप्रणीतस्य । संवादः प्रामाण्यप्रवृत्तिजनकत्व-लिङ्गकप्रतिरोधानुमानमाशङ्क्य तस्य कृष्यादिगोचरप्रवृत्तिजनकज्ञाने नैकान्त्यमभिधत्ते ॥ **अत इत्यादि** ॥ निशःङ्कप्रवृत्तिजनकत्वं सिद्धमेवेति भावः ॥

**अनु०— प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि ॥**

**सु०— तदेवं शब्दस्यैवाप्रामाण्यात्कुतस्तद्विशेषस्य वेदस्य प्रामाण्यं, कुतस्तरां सिद्धरूपे ब्रह्मणि, कुतस्तमां च तन्मीमांसारंभ इत्यत आह ॥ प्रत्यक्षवच्चेति ॥ चशब्दो व्याख्यानान्तर-द्योतकः । न केवलं सिद्धविषयत्वं प्रामाण्यं चेति वा । अनुमानवच्चेति वा । हेतुसमुच्चये वा ॥ तथा हि ॥ शब्दाज्ज्ञानमुत्पद्यते न वा । नेति पक्षेनुभवविरोधः, स्वक्रियाविरोधश्च । न शब्दोऽर्थप्रत्यायक इति ब्रूते; परप्रत्यायनार्थं च शब्दमेव प्रयुङ्क्त इति । आद्ये स बोधः संशयो विपर्ययो वा । नाद्यः एकाकारनियतत्वात् । न द्वितीयः बाधबोधविरहात् । सर्वत्रापि बाधाभ्युपगमे स्वप्रयुक्तवाक्यस्य तद्भावाभावयोस्स्वव्याघातात् ॥ एवं व्यवस्थिते प्रयुज्यते । शब्दः प्रमाणं संशयविपर्ययाजनकत्वे सति ज्ञानजनकत्वात् प्रत्यक्षादिवदिति । न हि प्रत्यक्षादेः(अ)पि अन्यत्प्रामाण्यनियामकमस्ति ॥ नन्विदमेव प्रामाण्यमिति साध्याविशिष्टत्वम् । न । याथार्थ्यं प्रामाण्यमिति वक्ष्यमाणत्वात् ।**

वा०— एवं शब्दाप्रामाण्यमुपपाद्य तत्प्रकृते बाधकत्वेन दर्शयन्भाष्यमवतारयति ॥ **तदेव-मिति** ॥ **व्याख्यानान्तरत्वेति** ॥ सौत्रातःशब्दसम्बन्धीति शेषः । अस्मिन्पक्षे वाक्यस्थपदैरन्वयाला-भादाह ॥ **न केवलमिति** ॥ अत्रापि भिन्नक्रमत्वं दोष इत्यत आह ॥ **अनुमानवच्चेति** ॥ प्रत्यक्ष-रूपैकदृष्टान्तोक्त्या योग्यताबलादनुमानदृष्टान्ततायाः प्रत्येतुं शक्यत्वात्सर्वथा हेत्वनुक्तिप्रयुक्तन्यूनतापरि-हारायतत्सूचकतया चशब्दं व्याख्याति ॥ **हेत्विति** ॥ कोऽत्र हेतुरित्यतो योग्यताबलात्संशयविपर्यया-

जनकत्वे सति ज्ञानजनकत्वमेवेत्याशयेन बोधकत्वमेवानभ्युपगच्छन्तं प्रत्यसिद्ध्यापत्त्या हेतोरुपपादनीयत्वाद्विशेषणविशेष्यासिद्धिपरिहारेण हेतुमुपपादयितुं प्रतिजानीते ॥ **तथा हीति** ॥ प्रत्यायनार्थं शब्दप्रयोगक्रियाया शब्दस्य प्रत्यायनसाधनता प्राप्तेति शब्दो नार्थप्रत्यायन इति वाक्यार्थस्यार्थप्रत्यायकत्वाभावस्य तादृशक्रियया विरोध इत्याशयेन स्वक्रियाविरोधमुपपादयति ॥ **न शब्द इति** ॥ **सर्वत्रापीति** ॥ सर्वं शब्दजन्यं ज्ञानं बाधितं सर्वः शब्दोऽप्रमाणमित्यादि स्वप्रयुक्तशब्दजन्यबोधस्य बाधितत्वे शब्दजन्यज्ञानादेरबाधितत्वाद्यापत्तिः । अबाधितत्वे त्वस्यैवाबाधितत्वेन प्रतिहतप्रमाणत्वात्सर्वशब्दजन्यज्ञानबाधितत्वादिरूपस्याभिमतासिद्धिरिति स्वव्याघातादित्यर्थः । यद्वा शिष्यादीन्प्रति तद्बोधाय त्वत्प्रयुक्तयत्किञ्चिद्वाक्यजन्यज्ञानस्य बाधितत्वे तद्वाक्यप्रयोगानुपपत्तिः । अबाधितत्वे च सर्वत्रापि बाध इत्युक्तहानिरिति भावः । विपक्षबाधकसूचनेनाप्रयोजकत्वं परिहरति ॥ **न हीति** ॥

**स०**— स्वक्रियाविरोधमुपपादयति ॥ **न शब्द इति** ॥ **सर्वत्रापीति** ॥ सर्वत्रापि बाधोऽस्तीति भवत्प्रयुक्तं वाक्यम् बाधितमबाधितं वा । आद्ये अर्थप्रत्यायिकं न स्यात् ततश्च तत्प्रयोगो व्यर्थः स्यात् । द्वितीये वाक्यं बाधितमिति वचनं कथं स्यादित्यर्थः ॥

**प०**— **व्याख्यानान्तरेति** ॥ अतःशब्दस्य प्रयोजनसमर्थनाय कृतज्ञानप्रसादद्वारा मोक्षफलकत्वोक्तिपरत्वबन्धसत्यत्वपरत्वरूपव्याख्यानद्वयात् तथा विषयसमर्थनाय कृताद्वेदानां सिद्धब्रह्मपरत्वोक्तिपरत्वरूपव्याख्यानाच्च वेदानां यथार्थज्ञानजनकत्वरूपं यत्प्रामाण्यं तदर्थकत्वरूपव्याख्यानांतरद्योतक इत्यर्थः । हेतुसमुच्चय इत्युक्तं व्यनक्ति ॥ **तथाहीत्यादिना** ॥ **एवं व्यवस्थित इति** ॥ बोधकत्वे संदेहाद्यजनकत्वे च सिद्धे सत्यनुमानमुच्यत इत्यर्थः । प्रत्यक्षादिवदित्युक्त्याऽनुमानवच्चेत्युक्तमपि विवृतं ध्येयम् । हेतोरप्रयोजकत्वं निराह ॥ **नहीति** ॥ याथार्थ्यं यथार्थज्ञानजनकत्वम् ॥ **वक्ष्यमाणत्वात्** ॥ नविलक्षणत्वादित्यधिकरणे ॥

**या०** – **व्याख्यानान्तरेति** ॥ अतःशब्दस्येति शेषः ॥ **स्वप्रयुक्तवाक्यस्येति** ॥ सर्वत्रापि बाधोऽस्तीति वाक्यस्येत्यर्थः । आद्ये एतद्वाक्यातिरिक्तशब्दानामबाधितार्थकत्वेन प्रामाण्यप्राप्त्या द्वितीयेस्यैव शब्दस्य प्रामाण्यप्राप्त्या शब्दो न प्रमाणमिति प्रतिज्ञाव्याघात इत्यर्थः ॥ **वक्ष्यमाणत्वादिति** ॥ युक्तिपाद इति शेषः ॥

**श्री०**— **हेतुसमुच्चये वेति** ॥ संशयविपर्ययाजनकत्वाख्यहेतुसमुच्चये वा चशब्द इत्यर्थः ॥ **अनुभवेति** ॥ शब्दादर्थं प्रत्येमीत्यनुभवविरोधः ॥

च०— **कुतस्तरामित्यादि** ॥ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्ष इति घादाम् ॥ **प्रत्यक्षव-च्चेतीति** ॥ तस्यैवेति षष्ठ्यन्ताद्वतिरुपमेये षष्ठीदर्शनात् ॥ **व्याख्यानान्तरत्वेति** ॥ मयूरव्यंसकादि-त्वात्समासः । अतःशब्दस्येत्यादिः ॥ **स्वप्रयुक्तवाक्यस्येति** ॥ सर्वत्रापि बाधोऽस्तीत्यानुपूर्वीकस्येत्यर्थः । तद्भावे स्वातिरिक्तशब्दमात्रप्रामाण्यापत्त्या तदभावे च स्वस्यैव तदापत्त्या शब्दो न प्रमाणमिति प्रतिज्ञा-व्याघात इत्यर्थः । सन्देहविपर्यासजनकेऽनैकान्त्यविधूननाय हेतुभूताभावप्रतियोगिनि निरूपितत्व-प्रत्यासत्त्या विशेषणीभवत्प्रत्यायकपदद्वयोपादानम् । ज्ञानसामान्यानुत्पादकैतद्वारणाय विशेष्यदलम् । ननु यौगपद्येन घटो द्रव्यमिन्द्रियाणि भौतिकानि नवेति वाक्यद्वयश्रवणादव्यवहितोत्तरक्षणोत्पन्नांशिकसंशया-त्मकान्वयबोधजनके घटो द्रव्यमित्यत्र हेत्ववृत्त्या प्रकृतपक्षतावच्छेदकसामानाधिकरण्येनासिद्ध्यापत्त्या लोहितो वह्निर्लोहिता जपेति समूहालम्बनांशिकविपर्यासात्मकान्वयधीजनके लोहिता जपेत्यत्र तत्प्रसङ्गेन च नायं हेतुः साधीयान् । न च परोक्षज्ञानं निश्चयात्मकमेवेति सिद्धान्तान्नाद्यस्थले तदापत्तिः समञ्जसेति वाच्यम् । तत्सिद्धान्तस्थनैयायिकेनान्तस्तद्धर्मो ऽदेशादित्यादौ विरुद्धेन्द्रादिनानाकोटिप्रापकाणां बलाबल-निश्चयासमवधानदशायामनवधारणज्ञानेन सिद्धान्त्यभिमतावधारणासिद्ध्या पूर्वपक्षोपगमेन सिद्धान्तिनाऽपि व्याख्यातत्वान्न च संशयविपर्ययपदाभ्यां प्रकृतप्रामाण्यसन्देहतद्विपर्यययोरेव विवक्षणान्न क्षतिरिति वाच्यम् । तथा सति दुष्टेन्द्रियादावनैकान्त्यस्य दुर्वारतापत्तेरिति चेन्मैवं कोटिद्वयप्रकारताघटितधर्माव-च्छिन्नसन्देहवृत्तिजन्यतानिरूपितजनकत्वाभावे सति स्वव्यधिकरणवृत्तिप्रकारतानिरूपितविशेष्यताघटित-धर्मावच्छिन्नविपर्यासवृत्तिजन्यतानिरूपितजनकत्वाभावस्याभिप्रेतत्वात् । दर्शितस्थलयोश्च तादृशहेतुसत्ताया निरवग्रहतयोक्तक्षत्यनवकाशात् । न च नीलो घट इत्यादिवाक्यानां प्रमाभ्रमसाधारणभेदसंसर्गावच्छिन्न-नीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दधीत्वाद्यवच्छिन्नं प्रत्येव हेतुतायाः स्थिततया भ्रमीयविशेष्यताया अप्यवच्छेदकतया तादृशासिद्धिर्दुष्परिहरेति वाच्यम् । स्वसमानाधिकरण-वृत्तिप्रकारतानिरूपितविशेष्यत्वानवच्छिन्नत्वस्यापि तादृशजन्यतायां निवेशात् । न च लोहितो वह्नि-रित्यन्वयबोधे यत्र वह्नित्वेन जपैवाभात् तादृशविपर्यासवृत्तिजन्यतायां स्वसमानाधिकरणवृत्तिप्रकारता-निरूपितजपावृत्तिविशेष्यताया अप्यवच्छेदकतया तत्रानैकान्त्यं दुर्वारमिति वाच्यम् । स्वसमानाधि-करणपदेन स्वावच्छेदकाधिकरणवृत्तित्वस्याभिप्रेतत्वात् । लौहित्यस्य च तादृशतया क्षत्यभावादिति निपुणतरं सुधीभिर्भावनीयम् ॥ **साध्याविशिष्टत्वमिति** ॥ अथ स्वावच्छेदकाभिमतधर्माधिकरणवृत्ति-प्रकारतानिरूपितविशेष्यताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकत्वं हि प्रामाण्यं हेतूकृतं तु नैवमिति कथमेतच्छङ्कावतार इति चेन्मैवम् । सन्देहविपर्यासान्यज्ञानत्वस्यैव प्रमारूपत्वेन तद्धेतुत्वेऽवधृते प्रामाण्य-मप्यवधृतमेव । ग्राहकसामग्रीयौगपद्यनियमादित्याशयात् ॥ **वक्ष्यमाणत्वादिति** ॥ युक्तिचरण इत्यादिः ।

सु० — **यदुक्तं सत्यपि शब्दे प्रमानुदयादप्रमाणं शब्द इति । तदयुक्तम् । सत्यपि चक्षुषि रूपज्ञानानुत्पत्तेस्सत्यपि धूमेऽग्निज्ञानानुदयात्प्रत्यक्षानुमानयोर(प्य)प्रामाण्यप्रसङ्गात् ॥ अथ ब्रूषे नेन्द्रियमात्रं प्रत्यक्षं किन्त्वन्तःकरणाधिष्ठितं विषयसन्निकृष्टं च । तथा न धूममात्रमनुमानम् अपि तु व्याप्तिपक्षधर्मतावत्त्वेनानुसंहितम् । न च तस्मिन्सति न प्रमोत्पद्यत इति । तर्हि वयमपि ब्रूमो न शब्दमात्रं प्रमाणम् , किन्तु श्रुतोऽनुस्मृतसंबन्धश्च । न चैवंविधे शब्दे सति न प्रमोत्पद्यते ॥ तथा च शब्दमात्रपक्षीकरणे सिद्धसाधनम् । विशिष्टशब्दपक्षीकारे चासिद्धिरिति ॥ तदिदमुक्तम् ॥ प्रत्यक्षवच्चेति ॥**

वा० — एवं स्वपक्षसाधनकथनपरत्वेन मूलं व्याख्याय यथा प्रत्यक्षानुमानयोरेतद्बाधकपरिहारेण प्रामाण्यं तथा शब्देऽपीत्यर्थमभिप्रेत्यैतद्बाधकपरिहारेऽप्येतदेव मूलं व्यापारयिष्यन्प्रत्यक्षानुमानयोरेतद्बाधकाप्रसक्तौ तत्परिहारप्रकारस्यानुपपन्नत्वे तत्प्रकारस्य शब्देऽसंभवे वा तथा मूलस्य योजयितुमशक्यत्वात्प्रत्यक्षादौ तत्प्रसक्त्यादि दर्शयितुमाह ॥ **यदुक्तमित्यादिना** ॥ एवमुत्तरत्रापि द्रष्टव्यम् । अत्र चक्षुषीति धूम इति वत् उदाहरणतयैवोपादानं न तु चाक्षुषप्रत्यक्षस्येत्यादिवक्ष्यमाण इवात्रापि प्रत्यक्षमात्रोपादानसंभवाभिप्रायेणेति बोध्यम् । अनुस्मृतसंबन्धश्चेत्यत्र चशब्देनाकाङ्क्षादिमत्तया प्रतिसंन्निहितत्वरूपानुक्तस्यापि समुच्चयो द्रष्टव्यः । नन्वेतावताऽपि शब्दो न प्रमाणं सत्यपि तस्मिन्प्रमाऽनुदयादित्यनुमाने निष्कृष्य दूषणं नोक्तं स्यादित्यतो विकल्प्य कल्पभेदेनाभिमतदूषणं योजयति ॥ **तथा चेति** ॥

स० — **विशिष्टशब्दपक्षीकार इति** ॥ श्रुतानुस्मृतसंबन्धशब्दपक्षीकार इत्यर्थः ॥ **तदिदमुक्तमिति** ॥ चशब्दस्य अनुमानवदित्यर्थकतया व्याख्यातत्वादिति भावः । एवमग्रेऽपि ।

प० — **विशिष्टशब्दपक्षीकारे चेति** ॥ श्रुतमनुस्मृतसंबन्धं च शब्दं पक्षीकृत्य तादृशशब्दो न प्रमाणं प्रमाव्यभिचारित्वादित्युक्तौ त्वसिद्धिरित्यर्थः ॥ **प्रत्यक्षवच्चेतीति** ॥ चशब्दादनुमानवदिति च ग्राह्यम् ।

या० — **विशिष्टशब्दपक्षीकार इति** ॥ श्रुतानुस्मृतसंबन्धशब्दपक्षीकार इत्यर्थः ॥ **असिद्धिरिति** ॥ सत्यपि शब्दे न प्रमा जायत इत्युक्तप्रमाजनकत्वहेतोरसिद्धिरित्यर्थः ॥ **तदिदमुक्तमिति** ॥ चशब्दस्यानुमानमित्यर्थकतया व्याख्यातत्वादिति भावः । एवमग्रेऽपि ॥

च० — **अनुसंहितं** व्याप्तिपक्षधर्मताप्रकारकानुसंधानविषयीभूतम् ॥ **विशिष्टशब्दपक्षीकार इति** ॥ विषयताप्रत्यासत्त्या शक्तिग्रहावच्छिन्नशब्दपक्षीकार इत्यर्थः ।

सु०— यदुक्तं विषयाभावान्न शब्दः प्रमाणमिति । तदप्ययुक्तम् । तथा सति चाक्षुषप्रत्यक्षस्याप्यप्रामाण्यप्रसङ्गात् । तस्यापि हि परोक्षोऽपरोक्षो वा विषयः । नाद्यः तस्यानुमानविषयत्वात् । न द्वितीयः तस्य श्रोत्रादिविषयत्वादिति वक्तुं शक्यत एव ॥ तत्र चैवं वक्तव्यम् । उत्पद्यते तावच्चक्षुषा शुक्लोऽयं पट इति प्रमा । तथा चापरोक्षत्वेऽपि विषयस्य श्रोत्राद्यविषयत्वाद्युक्तं तत्र चक्षुषः प्रामाण्यम् ॥ किञ्च प्रयोजनाभावेन न स्पष्टदृष्टं वस्तु निराकर्तुं शक्यते सर्वापलापप्रसङ्गात् ; किन्तु वस्तुदर्शनात्प्रयोजनमपि किञ्चित्कल्पनीयमिति । तदेतच्छब्देऽपि समानम् । परोक्षोऽपि स तादृशः कश्चिद्विषयो यो नानुमानस्य विषय इति वक्ष्यामः ॥ एतदप्युक्तम् ॥ प्रत्यक्षवदिति ॥

तथाऽपि चक्षुरादीनां प्रत्यक्षत्ववच्छब्दानुमानयोरेकजातीयत्वं स्यादिति चेत् । तत्किं सर्वथोत यथाकथञ्चित् अथानुमानत्वेन । नाद्यः चक्षुरादावप्यभावात् । न द्वितीयः इष्टापादनात् । न तृतीयः वैलक्षण्यस्यापि वक्ष्यमाणत्वात् ॥ किंचैवं विषयविकल्पेन शब्दनिराकरणे शब्दमुपादायानुमानमपाकुर्वन्तं प्रति किं वक्तव्यम् । अनुमानाप्रामाण्ये सकललोकव्यवहारोच्छेदप्रसङ्गात् । परचित्तवृत्त्याद्यसङ्कीर्णविषयदर्शनात्परोक्षविषयत्वेऽपि शब्दाद्भिन्नं तदङ्गीकरणीयमिति वाच्यमिति चेत् ; सममेतच्छब्देऽपि । एतदपि चशब्देनोक्तमनुमानवदिति ।

वा०— अत्रापरोक्षविषयकप्रमाणान्तराभावेन प्रत्यक्षमात्रे परोक्षादिविकल्पमुखप्रवृत्तदूषणानुपपत्तेः परोक्षेऽवान्तरभेदविवक्षया शब्दप्रामाण्यस्य व्युत्पादयिष्यमाणत्वाच्च प्रत्यक्षेऽवान्तरभेदविवक्षया तद्दूषणं तत्परिहारं च प्रवर्त्य तद्वदेव परोक्षेऽप्यवान्तरभेदविवक्षया तत्परिहारसाम्यं व्युत्पादयिष्यन्मूलस्थप्रत्यक्षपदं तद्विशेषपरमित्याशयेनाह ॥ चाक्षुषेति ॥ एवं विशिष्यासङ्कीर्णविषयं प्रदर्श्य सामान्यतोऽसङ्कीर्णविषयकल्पनाप्रकारं दर्शयति ॥ किं चेति ॥ चक्षुषा जायमानघटादिज्ञानस्यानुभवसिद्धत्वात्त्वगादिनाऽपि तत्सिद्ध्या प्रयोजनाभावेन चक्षुषः प्रामाण्यनिरासे प्रयोजनशून्यस्पष्टदृष्टवस्तुमात्रापलापापत्त्याऽसङ्कीर्णविषयकल्पनया तत्सिद्धिः प्रयोजनतया कल्पनीयेति भावः । धर्माधर्मस्वर्गनरकादिप्रमायाः शब्दाज्जायमानत्वात्परोक्षत्वेऽपि विषयस्यानुमानाविषयत्वाद्युक्तं तत्र शब्दप्रामाण्यम् । वन्हिः पर्वतेऽस्तीत्याद्याप्तवाक्याज्ज्ञानादेः स्पष्टदृतयाऽपलापानर्हत्वात्तदनुसारेणापूर्वविषयस्यापि कल्पनीयत्वाच्चेति समाधानं शब्देऽपि समानमित्याह ॥ तदेतदिति ॥ ननु रूपादेः श्रोत्राद्यविषयत्ववद्धर्मादेरनुमानाविषयत्वानुपपत्तेरसङ्कीर्णविषयाभावान्न चक्षुषा शब्दस्य साम्यमित्यतः शास्त्रयोनिसूत्रे धर्मादावप्यतीन्द्रियार्थे ईश्वररूपात्यलौकिकार्थे च केवलानुमानप्रवृत्त्यभावस्योपपादयिष्यमाणत्वान्नानुपपत्तिरित्याशयेनाह ॥ परोक्षोऽपीति ॥

**वैलक्षण्यस्यापीति** ॥ शब्दे व्याप्तिबलेनार्थगमकत्वाभावस्य वाक्यवाक्यार्थयोर्देशतः कालतश्चान्वयव्यतिरेकाभावादिप्रतिपादनेन युक्तिपादे प्रतिपादयिष्यमाणत्वादित्यर्थः। अनुमानं परोक्षविषयकमित्यङ्गीकृत्य शब्दमपाकुर्वाणं प्रति चक्षुष्ट्वादेरिवानुमानेऽवान्तरजातेरभावेन चक्षुरादिवदवान्तरभेदविवक्षया विकल्पानुपपत्तेर्विषयविकल्पेनानुमाननिराकरणानुपपत्त्याऽनुमानवदिति मूलस्य योजयितुमशक्यत्वाच्छब्दमुपादायानुमानमपाकुर्वाणेन त्वां प्रत्येव विकल्प्य दूषणे यस्त्वदीयः परिहारस्तत्साम्यमनुमानमादाय शब्दप्रामाण्यं निराकुर्वाणं प्रत्यपीत्याशयेनानुमानवदिति मूलं योजयति ॥ **किंचेति** ॥

**स०— न तृतीयः वैलक्षण्यस्यापि वक्ष्यमाणत्वादिति** ॥ गौरवं कल्पनेन्यथेत्येतदनुव्याख्यानव्याख्यानावसर इति शेषः।

**प०**— एवं वक्तव्यमित्यस्य कल्पनीयमित्यनेनान्वयः। **प्रयोजनाभावेनेति** ॥ अनुमानविषयश्रोत्रादिविषयाभ्यां विषयान्तरकल्पने प्रयोजनाभावेनेत्यर्थः ॥ **वक्ष्यामः** ॥ न विलक्षणत्वनये 'न हि धर्मादिसिद्धिः स्यादि'त्युत्तरवाक्ये। 'आसमन्ताद्गमयति धर्माधर्मौ परं पदम्। यच्चाप्यतीन्द्रियं त्वन्यत्' इत्युपासनापादे चेति भावः ॥ **वक्ष्यमाणत्वादिति** ॥ 'स्वत एवागमस्य हीत्यत्र स्वतः स्वेनैव रूपेण नत्वनुमानत्वेनेति व्याख्यानेन वक्ष्यमाणत्वादित्यर्थः ॥

**या०— सर्वापलापेति** ॥ स्पष्टदृष्टकण्टकशौक्ल्याद्यपलापप्रसङ्ग इत्यर्थः ॥ **वक्ष्याम इति** ॥ उपासनापादे आ समन्ताद्गमयति धर्माधर्मौ परं पदम् यच्चाप्यतीन्द्रियं त्वन्यदित्यत्रेति शेषः ॥ **सर्वथेति** ॥ सर्वधर्मैरित्यर्थः ॥ **वक्ष्यमाणत्वादिति** ॥ युक्तिपादादौ व्याप्त्यादिप्रतिसन्धानाभावेऽपि प्रमापकत्वरूपवैलक्षण्यस्य वक्ष्यमाणत्वादित्यर्थः ॥

**श्री०**— ननु घटे शौक्ल्यमेव नास्ति। प्रयोजनाभावादतो न तत्प्रत्यक्षस्य विषय इत्यत आह ॥ **किञ्चेति** ॥ **सर्वेति** ॥ कण्टकशौक्ल्यादीत्यर्थः ॥ **किं त्विति** ॥ तथाच घटशौक्ल्यसद्भावात्तच्चक्षुषो विषय इति कल्पनीयमित्याशयः ॥ **चक्षुरादीनामिति** ॥ चक्षुःश्रोत्रादीनामपरोक्षज्ञानजनकत्वसाम्येन प्रत्यक्षत्ववच्छब्दानुमानयोरपि परोक्षज्ञानजनकत्वसाम्यादेकजातीयत्वं स्यादित्यर्थः ॥ **चक्षुरादाविति** ॥ चक्षुष्ट्वश्रोतृत्वादिना वैजात्यसद्भावेन सर्वथैकजातीयत्वाभावादित्यर्थः ॥ **इष्टापादनादिति** ॥ अत्रापि प्रमाणत्वेनैकजातीयतायाः सत्त्वादित्याशयः ॥

**च०— सर्वापलापेति** ॥ स्फुटप्रतीतकण्टकशौक्ल्याद्यपलापेत्यर्थः ॥ **वक्ष्याम इति** ॥ उपासनाचरणे आसमन्ताद्गमयति धर्माधर्मौ परं पदमित्यत्रेत्यादिः ॥ **वक्ष्यमाणत्वादिति** ॥ युक्तिपादे व्याप्त्यादिप्रतिसन्धानाभावकालीनफलोत्पादकतारूपवैधर्म्यस्याभिधास्यमानत्वादित्यर्थः ॥

सु०— यच्चाविज्ञानात्मकत्वान्न शब्दः प्रमाणमिति । तदप्ययुक्तम् । यथेन्द्रियमिन्द्रियसन्निकर्षो वा प्रत्यक्षमविज्ञानात्मकमपि विज्ञानकरणत्वात्प्रमाणम्, तथा शब्दस्याप्युपपत्तेः ॥ किञ्च धूमाद्यनुमानस्याविज्ञानात्मकस्यापि प्रामाण्यं दृष्टमिति शब्दस्य कथं न स्यात् ॥ अथ न धूमादिकमेवानुमानं किं नाम तज्ज्ञानम् । यथाऽऽहुः प्रमाणविदः; लिङ्गपरामर्शोऽनुमानमिति । तर्हि शब्दमात्रं न प्रमाणम् किन्तु तज्ज्ञानमेवेत्यसिद्धिः ॥ एतदप्याह प्रत्यक्षवच्चेति ॥

एतेन बाह्यकरणप्रत्यक्षत्वादात्मन्यसमवेतत्वादित्यपि हेतुद्वयं निरस्तं वेदितव्यम् । बाह्यकरणप्रत्यक्षस्यापि धूमवत्प्रामाण्योपपत्तेः । आत्मन्यसमवेतस्यापि प्रत्यक्षवदनुमानवच्च तत्संभवात् । ज्ञानाङ्गीकारेण व्यभिचारपरिहारे शब्दोऽपि ज्ञानात्मेत्यसिद्धिरेवेति ।

यदप्याकाशगुणत्वादिति । तदसिद्धम् । वर्णात्मा हि शब्दः प्रमाणम् । न चासावाकाशगुणस्तत्त्वविदाम् ॥ अत्र च प्रत्यक्षवच्चेति व्यतिरेकदृष्टान्तः । यथा प्रत्यक्षस्य नाकाशगुणत्वं तथा शब्दस्यापीति तस्य प्रामाण्यं न विहन्यत इति । अप्रयोजकाश्चैते हेतवो विपक्षे बाधकाभावादवगन्तव्याः ।

वा०— **यथेन्द्रियमिति** ॥ इन्द्रियादेरविज्ञानात्मत्वेऽपि विज्ञानकरणत्वात्प्रमाणत्वं भाववत्करणेऽपि प्रमाणशब्दस्यानुशासनादिसिद्धत्वादिति भावः । एवं प्रत्यक्षस्याविज्ञानात्मकस्यापि प्रामाण्यमुपपाद्य तत्साम्येनाविज्ञानात्मकस्यापि शब्दस्य प्रामाण्योपपत्तावविज्ञानात्मकत्वमप्रयोजकमित्याशयेन प्रत्यक्षवदिति योजितम् । अनुमानस्थलेऽनुमानस्येवाविज्ञानात्मकस्यापि शब्दस्य प्रामाण्योपपत्तावप्रयोजकत्वं ज्ञानात्मकत्वे चानुमानस्य शब्दस्यापि तद्वदेव ज्ञानात्मकत्वादसिद्धिरित्यपि परिहार इत्याशयेनानुमानवदिति योजयति ॥ **किं चेति** ॥ **ज्ञानाङ्गीकारेणेति** ॥ अनुमानमात्रविषयकपरिहारोऽयम् । यद्वा प्रत्यक्षस्थलेऽपीन्द्रियादिजन्यज्ञानमेव प्रमाणं नेन्द्रियादिकमिति वैयात्यमात्रप्रवृत्तं प्रति प्रत्यक्षविषयकोऽयं परिहार इति द्रष्टव्यम् ॥

स०— इन्द्रियधूमयोरात्मसमवेतत्वाभावेऽपि तज्ज्ञानस्यात्मसमवेतत्वाभावात् । तदेव हि प्रमाणमित्याशङ्क्याह ॥ **ज्ञानाङ्गीकारेणेति** ॥ **शब्दोपीति** ॥ शब्दलक्षणप्रमाणतयाऽभिमतोऽपीत्यर्थः ॥ **अत्र च प्रत्यक्षवच्चेति व्यतिरेकदृष्टान्त इति** ॥ शब्दरूपपक्षे आकाशगुणत्वरूपहेतुव्यतिरेके प्रत्यक्षादिकं दृष्टान्त इत्यर्थः । पूर्वतनप्रयोगेषु बाह्यकरणप्रत्यक्षत्वादि प्रत्यक्षादिकं पक्षे व्यभिचारोपपादनाय दृष्टान्तत्वेनोपात्तम् । अत्र तु पक्षे हेतुव्यतिरेकोपपादनायोपादीयत इति भावः ॥ **अत एव हि यथा प्रत्यक्षस्येति** ॥ **प्रामाण्यं न विहन्यत इति** ॥ साधकाभावादिति भावः ॥

प० — **प्रमाणविद इति** ॥ तार्किकाः ॥ **प्रत्यक्षवच्चेतीति** ॥ अत्रापि चशब्देनानुमानवदिति गृह्यते । एवमग्रेऽपि । धूमादिलिङ्गरूपार्थाभिप्रायेणाह ॥ **अनुमानवच्चेति** ॥ ननु धूमादिर्नानुमानम् । येन तत्रात्मासमवेतत्वहेतुसत्त्वेऽप्यप्रामाण्याभावाद्यभिचारः स्यात् । किन्तु धूमादिज्ञानमेव । तच्च न्याय-मतरीत्याऽऽत्मसमवेतमेवातो न दोष इत्यत आह ॥ **ज्ञानाङ्गीकारेणेति** ॥ **शब्दोऽपि ज्ञानात्मेति** ॥ शब्दः प्रमाणमित्यस्य शब्दज्ञानं प्रमाणमित्यर्थ इति हेतोरसिद्धिः । शब्दज्ञानस्याप्यात्मसमवेतत्वादित्यर्थः । पररीत्येदं दूषणमिति ध्येयम् । 'परसिद्धैर्दूषणमि'त्युक्तेः । स्वरीत्या तु प्रमाणभूतानुमित्यादौ व्यभिचारो ध्येयः । वृत्तिज्ञानमात्रस्यान्तःकरणाश्रितत्वात् । असिद्धिरित्युपलक्षणम् । चक्षुरादीन्द्रियप्रत्यक्षप्रमाणे तथापि व्यभिचारापरिहारादित्यपि ध्येयम् । व्यतिरेकेत्युक्तमेव व्यनक्ति यथेति । शब्दस्यापीतीतिशब्दो हेत्वर्थः । यथा प्रत्यक्षस्याकाशगुणत्वं नास्तीति कृत्वा प्रामाण्यं न विहन्यते । तथा शब्दस्यापि तन्नास्तीति प्रामाण्यं न विहन्यत इत्यर्थः । यद्वा इत्यन्तेन दृष्टान्तविवरणम् । ततश्च किमित्यत उक्तम् ॥ **तस्येत्यादि** ॥

या० — **व्यतिरेकदृष्टान्त इति** ॥ शब्दरूपपक्षे आकाशगुणत्वरूपहेतुव्यतिरेके प्रत्यक्षादिकं दृष्टान्त इत्यर्थः । पूर्वयोजनासु परोक्तहेतूनां व्यभिचारोपपादनाय प्रत्यक्षादिकं हेत्वन्वये दृष्टान्ततयोपा-त्तम् । अत्र तु परोक्तहेतोरसिद्धिव्युत्पादनाय तद्धेतुव्यतिरेक इति ध्येयम् । अत एवाह ॥ **यथा प्रत्य-क्षस्येति** ॥ **प्रमाण्यं न विहन्यत इति** ॥ प्रामाण्यहानिसाधकहेतोरसिद्धत्वादिति भावः ॥

श्री० — **प्रामाण्योपपत्तेरिति** ॥ धूमवत्प्रमाकरणत्वोपपत्तेरित्यर्थः । तथाच धूमे व्यभिचार इति भावः ॥ **ज्ञानाङ्गीकारेणेति** ॥ न धूमः प्रमाणं किन्तु तज्ज्ञानम् । तत्र च बाह्यकरणप्रत्यक्षत्व-रूपहेतोरेवाभावात् न व्यभिचार इति भावः ॥ **असिद्धिरिति** ॥ तथाच न शब्दः प्रमाणं किन्तु तज्ज्ञानमेव । तथा चासिद्धिरिति भावः ॥ **नाकाशगुणत्वमिति** ॥ तथाच तस्याकाशगुणत्वाभावेऽपि यथा प्रामाण्यं न विहन्यते तथा तस्य द्रव्यभूतस्य वर्णात्मकशब्दस्याप्याकाशगुणत्वाभावेऽपि प्रामाण्यं न विहन्यत इत्यर्थः ॥

च० — **व्यतिरेकदृष्टान्त इति** ॥ पक्षे हेतुव्यतिरेकांशे प्रत्यक्षादिकं निदर्शनीकृतमित्यर्थः । प्राक्तनयोजनायामुक्तहेतूनामनैकान्त्योपपादनाय प्रत्यक्षादिकमन्वयनिदर्शनतयोपेतम् ॥ **न विनिहन्यत इति** ॥ दर्शितहेतोरेवासिद्धत्वादिति भावः ॥

सु०— यच्चोक्तं शब्दस्यार्थेन संबन्धोऽस्ति न वेति। तत्रास्तीति ब्रूमः। स च तादात्म्यादेरसंभवेऽन्यो भविष्यति। यथा खलु चक्षुरादेः प्रत्यक्षस्यासंबद्धस्य ग्राहकत्वेऽतिप्रसङ्गात्तादात्म्यादेरसंभवात्कार्यवशादेव घटादिना संयोगः कल्प्यते। श्रोत्रस्य शब्देन संयोगाद्यसंभवात्समवायः। अनुमानस्य च धूमादेरग्न्यादिना संयोगादेरव्याप्त्यतिव्याप्त्यादिनाऽसंभवाद्व्याप्यव्यापकभावः कल्पितः। एवं शब्दस्यासंबद्धस्य गमकत्वेऽतिप्रसङ्गात्तादात्म्यादेरसंभवात्संबन्धान्तरं कल्पनीयम्। न पुनः स्पष्टदृष्टतत्कार्यापलापो युक्तः॥ तदिदमाह॥ प्रत्यक्षवच्चेति॥ स च संबन्धः पारमेश्वरः सङ्केत एवेत्येके। स्वाभाविकः प्रत्याय्यप्रत्यायकत्वलक्षण इत्यपरे। तत्र कः संबन्धो विवक्षित इत्यपेक्षायामुक्तम्॥ स्वत एवेति॥ स्वाभाविकेनैव संबन्धेनेत्यर्थः। तदुक्तं जैमिनिना 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति। वक्ष्यति चाचार्यः 'नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिध्यत' इति।

वा०— उक्तेति॥ द्रव्यत्वेऽपीति सुधाऽवतारिकायामुक्तेत्यर्थः॥ न चासाविति॥ उक्तानुमानद्वयेन प्रत्यभिज्ञया कूटस्थनित्यताप्रतिपादकागमैश्च नित्यव्यापकवर्णानामतादृशाकाशगुणत्वासंभवादिति भावः॥ तदिदमिति॥ अनेन प्रत्यक्षवदित्यस्य प्रत्यक्षानुमानयोः किञ्चित्संबन्धासंभवेऽपि संबन्धान्तरकल्पनया प्रामाण्यवच्छब्दस्यापीति व्याख्यानं सूचितं भवति। एवं संबन्धासंभवादगमकत्वं शब्दस्येति वदन्तं प्रति स्पष्टदृष्टकार्यानुसारेण प्रत्यक्षादिदृष्टान्तेन संबन्धसामान्यमभ्युपेयम्। तद्विशेषचिन्ता त्वार्द्रकवणिजो वहित्रचिन्तावद्व्यर्थैवेत्युक्तम्। अस्तु वा सा विशेषस्यापि सुनिरूपत्वान्न क्षतिरित्याशयेन स्वत एवेति मूलं तत्संबन्धविशेषसमर्पकतया योजयितुं तद्व्यावर्त्यशङ्कोत्थापनाय तत्प्रसञ्जकतया मतभेदमाह॥ स चेति॥ औत्पत्तिक इति॥ उत्पत्तिमारभ्य प्रवृत्तोऽनागन्तुकः स्वाभाविक इति यावत्॥ तदेतदिति॥ प्रत्यक्षानुमानयोः स्वत एव प्रामाण्यं स्वाभाविकशक्त्यादिना गमकत्वं यथाऽऽगन्तुकसन्निकर्षादिना व्युत्पाद्यते तथा शब्दस्यापि संबन्धानुसन्धानेन तद्व्युत्पाद्यमिति मूलं व्याख्येयमिति भावः। अत्र प्रत्यक्षादिकरणसाम्योक्त्या करणत्वादस्य वन्हि दृष्टान्तवैषम्येऽपि न क्षतिरिति सूचितं भवति॥

स०— अव्याप्त्यतिव्याप्त्यादिनेति॥ अनुमेयसंयुक्तमनुमानमित्युक्ते धूमादौ सत्त्वेऽपि रूपरसादौ प्रमेयत्वाभिधेयत्वादौ अव्याप्तिः। रासभादावव्याप्येऽपि सत्त्वादतिव्याप्तिः। तथा पर्वतादावतिव्याप्तिश्च स्यात्। अनुमेयसमवेतमित्युक्ते धूमाद्यनुमाने असत्त्वेनाव्याप्तिः। वह्निरूपादौ चातिव्याप्तिः

तादात्म्यरूपसंबन्धाङ्गीकारे चासंभवः । साध्ये चातिव्याप्तिश्च स्यादित्यर्थः ॥ **औत्पत्तिकस्त्विति** ॥ वाच्यवाचकभावलक्षणशब्दार्थसंबन्धः । स्वाभाविक इत्यर्थः । शब्दार्थौ यदोत्पन्नौ ततःप्रभृत्यागत इत्यर्थः ।

प०—बाधकाभावादित्यस्यासिद्धिनिरासाय प्रागुक्तबाधकान्यनूद्य निराह ॥ **यच्चोक्तमित्यादिना** ॥ **अव्याप्तीति** ॥ रूपरसादौ ॥ **पारमेश्वरः सङ्केत इति** ॥ अस्माच्छब्दादयमर्थो बोद्धव्य इति परमेश्वरेच्छारूप इति तार्किका इत्यर्थः ॥ **औत्पत्तिकस्त्वितिति** ॥ विवृतश्चैतत्सूत्रार्थः प्राक् 'दृश्यते ब्रह्मसूत्राणां प्रामाण्यं त्रिविधं महदि'त्येतत्सुधावाक्यविवृतिप्रस्तावे ॥ **वक्ष्यति चेति** ॥ आनुमानिकपादे ॥ नैवेति पदच्छेदः ।

या०— **अव्याप्त्यतिव्याप्त्यादिनेति** ॥ संयोगस्य रसस्य रूपेण प्रमेयत्वस्याभिधेयत्वेन चासंभवादव्याप्तिः पाषाणादेरप्यग्न्यादिना संयोगस्य सत्त्वादतिव्याप्तिः । एवं समवायस्याप्यादिपदगृहीतस्य धूमस्याग्निनाऽसत्त्वेनाव्याप्तिः । अग्न्यव्याप्तेष्वग्न्यवयवेष्वपि सत्त्वेनातिव्याप्तिरित्यर्थः ॥ **औत्पत्तिकस्तु शब्दस्यार्थेनेति** ॥ यद्यप्यौत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रामाण्यं बादरायणस्यानपेक्षितत्वादित्येतावज्जैमिनिसूत्रम् । तथाऽपीतरांशस्य प्रकृतानुपयोगादनुदाहरणमिति ज्ञातव्यम् ॥

श्री०— **अव्याप्त्यतिव्याप्तीति** ॥ अव्याप्तिरसार्वत्रिकता । अतिव्याप्तिरतिप्रसक्तता । रसाद्रूपानुमानेन रसस्य रूपेण संयोगाभावादव्याप्तिः । पाषाणादेरग्न्यादिना संयोगसद्भावात्तेनाप्यग्न्यनुमानापत्तिरित्यतिव्याप्तिः । एवमादिपदगृहीतस्य समवायस्य धूमस्याग्निनाऽभावादव्याप्तिः । अग्न्यव्याप्तेऽग्न्यवयवेऽप्यग्निसमवायस्य सत्वात्तेनापि अग्न्यनुमानापत्त्याऽतिव्याप्तिः । इष्टापत्तिरिति चेत् । न । व्याप्त्यभावेनाग्न्यवयवेनाग्न्यनुमानासंभवात् । तथाहि । यत्राग्न्यवयवस्तत्राग्निरिति न तावद्दैशिकी व्याप्तिः । अग्न्यवयवस्य स्वावयवे सत्त्वेन तत्राग्न्यभावेन व्यभिचारात् । नापि यदाऽग्न्यवयवस्तदाऽग्निरिति कालिकी व्याप्तिः । अग्न्यनुत्पत्तिदशायामग्न्यवयवसद्भावेऽप्यग्न्यभावेन व्यभिचारादिति ध्येयम् । संबन्धान्तरं वाच्यवाचकभावरूपम् ॥ **तत्कार्येति** ॥ अर्थज्ञानरूपकार्येत्यर्थः ॥ एके तार्किकाः । अपरे जैमिन्यादयः ॥

च०— **औत्पत्तिक इति** ॥ नैसर्गिक इत्यर्थः । इदं तु जैमिनिसूत्रखण्डम् ॥

सु०— ननु यदि शब्दस्य स्वाभाविकी वाच्यविषया शक्तिस्तदा व्युत्पन्नवदव्युत्पन्नोऽपि शब्दादर्थं प्रतीयात् । न ह्यग्निरविदितशक्तिर्न दहतीति । मैवम् । यथा प्रत्यक्षस्य चक्षुरादेः स्वाभाविक्यां रूपप्रतीतिजननशक्तौ सत्यामप्यागन्तुकसन्निकर्षापेक्षया रूपप्रत्यायकत्वम् , यथा च लिङ्गस्य सत्यपि स्वाभाविके साध्यसंबन्धे तदनुसंधानापेक्षयैव गमकत्वम् एवं शब्दस्यापि; सत्यप्यर्थेन स्वाभाविके संबन्धे विदितसंबन्धस्यैव बोधकत्वं नान्यथेति नियमात् ॥ तदेतदप्याह ॥ प्रत्यक्षवच्चेति ॥

अथापि स्यात् । स्वाभाविकोऽपि संबन्धः, किं सर्वेषां शब्दानां सर्वैरर्थैरुत कस्यचिच्छब्दस्य केनचिदर्थेन । नाद्यः शब्दार्थव्यवस्थाऽनुपपत्तिप्रसङ्गात् । न द्वितीयः ऋष्यार्यम्लेच्छानामनियमाभावप्रसङ्गात् । तथा हि । यवशब्दमार्या दीर्घशूके प्रयुञ्जते, यवशब्दाद्दीर्घशूकमेव प्रतिपद्यन्ते । म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते, प्रियङ्गुमेव प्रतिपद्यन्ते । त्रिवृच्छब्दमार्या लताविशेषे प्रयुञ्जते, ऋषयोऽन्यत्रेत्येवमादिरनियमः स्वाभाविक्यां शब्दाशक्तौ न स्यात् न हि प्रदीपो रूपप्रकाशनशक्तो रसमपि कदाचित्प्रकाशयति । साङ्केतिकत्वे त्वनियमो युज्यते, पुरुषेच्छाधीनत्वात् तस्याश्चानियतत्वात् चेष्टासङ्केतवदिति ॥ अत्रोच्यते—

न वयं क्वचिदपि शब्दस्य सङ्केताद्बोधकत्वं नास्तीति ब्रूमः; किन्त्वर्थविशेषे स्वाभाविकी च शक्तिरस्तीति । तथा च स्वाभाविक्या शक्त्या क्वचिद्बोधः क्वचित्सङ्केतादित्यनियमो युज्यते ॥ अथवोभयत्र स्वाभाविकी शक्तिरस्तु; व्युत्पत्तिवशाद्व्यवहारनियमसंभवात् ।

वा०— शब्दार्थेति ॥ कुतश्चिदेव कश्चिदेवार्थः प्रतीयते न तु सर्वस्मात्सर्व इति शब्दार्थव्यवस्था सर्वेषां सर्ववाचकतायां न स्यादित्यर्थः ॥ अनियमेति ॥ प्रयोगप्रतिपत्त्योरिति शेषः । यत्रार्थे यस्य शब्दस्य स्वाभाविकी शक्तिस्तस्य तत्रैव सर्वेषां प्रयोगाद्यापत्त्या तदन्यत्र केषामपि प्रयोगादि न स्यादित्यर्थः ॥ ऋषयोऽन्यत्रेति ॥ स्तोत्रीयानुवाक इत्यर्थः । कुतो न स्यादित्यतोऽन्यत्र स्वाभाविकशक्तस्यान्यप्रकाशकत्वे रूपप्रकाशनशक्तेर्दीपस्य रसप्रकाशनत्वापातेनातिप्रसङ्ग इत्याह ॥ न हीति ॥ नन्वसंबद्धस्य शब्दस्य गमकत्वेऽतिप्रसङ्गेन स्वाभाविकशक्तेरावश्यकत्वे तत्र प्राप्तदोषः सर्वैरपि कथञ्चित्परिहर्तव्य एवेत्यतः स्वाभिमतपक्षे न कोऽपि दोष इत्याह ॥ साङ्केतिकत्वपक्ष इति ॥ कस्यचिच्छब्दस्य केनचिदर्थेन स्वाभाविकः संबन्ध इति द्वितीयपक्षमभ्युपगम्य तत्रोक्तदोषं सङ्केतस्यापि बोधकत्वाङ्गीकारेण परिहरति ॥ न वयमिति ॥ अत्र शक्तिसङ्केतोभयाङ्गीकारे विजातीयद्वये बोधकत्वाङ्गीकारापत्तेरेकजातीयस्यैव बोधकत्वकल्पनं युक्तमित्याशयेनाद्यपक्षतुल्यं पक्षमभ्युपैति ॥ अथवेति ॥ न सर्वशब्दानां

सर्वार्थैः स्वाभाविकः संबन्धो येनोक्तातिप्रसङ्गः, किन्तु यत्र प्रयोगादिकं तत्र सर्वथेति परिहारं सूचयति ॥ **उभयत्रेति** ॥ नन्वेवमपि सैन्धवादिशब्दवत्सर्वेषामुभयार्थप्रतीत्याद्यापत्त्या ऋष्यार्यम्लेच्छेषु कस्यचित्कुत्रचिदेव प्रयोगादेरनुपपत्तिस्तदवस्थैवेत्यतस्तेषां तेषां तत्तदर्थस्वाभाविकसंबन्धमात्रज्ञानं न त्वन्यार्थे विद्यमानस्यापि स्वाभाविकसंबन्धस्येति न नियमानुपपत्तिरित्याशयेनाह ॥ **व्युत्पत्तीति** ॥

**स०— स्वाभाविक्यां शब्दशक्ताविति** ॥ एकस्मिन्नेवार्थ इति शेषः । न स्यादित्यनन्तरं किन्तु सर्वेषां एकस्माच्छब्दादेकस्य शक्यार्थस्यैव प्रतिपत्तिरिति नियम एव स्यादिति पूरणीयम् ॥ **अथवोभयत्रेति** ॥ दीर्घशूकादौ प्रियंग्वादौ चेत्यर्थः । ननु यवशब्दस्य दीर्घशूक इव प्रियंगावपि यदि स्वाभाविकी शक्तिस्तदा आर्याणामेव यवशब्दश्रवणे दीर्घशूकव्यवहार इति नियमो न स्यात् । तथा म्लेच्छानामेव प्रियंगुव्यवहार इति नियमो न स्यादित्यत आह ॥ **व्युत्पत्तिवशादिति** ॥ अत एव यस्योभयत्र व्युत्पत्तिरस्ति तस्योभयार्थव्यवहारोऽपि दृश्यत इति भावः ।

**प०—** सङ्केतवादी शङ्कते ॥ **अथापीति** ॥ दीर्घशूको नाम गोधूमसदृशधान्यविशेषः । प्रियंगुस्तु सूक्ष्मधान्यविशेषः ॥ **अन्यत्रेति** ॥ त्रिवृदभिष्वि(ष्वबि)त्यादिस्तोत्रियानवके ॥ **चेष्टासङ्केतवदिति** ॥ भ्रूनयनहस्तादिचेष्टानामर्थविशेषे संकेतं कृत्वा व्यवहरन्ति नयनादिभाषणचतुरा लोके । तत्र यथा पुरुषभेदेन स च सङ्केतो नानार्थप्रत्यायकत्वेनानियतस्तथाऽसावपि अस्माच्छब्दादयं बोध्य इतीच्छारूपसङ्केत एवानियत इत्यर्थः । 'शास्त्रस्था वा तन्निमित्तत्वादि'ति यववराहाधिकरणोक्तरीत्या समाधिमाह ॥ **न वयमिति** ॥ ननु क्वचित्सङ्केतेन प्रयोगप्रत्यययोरङ्गीकारे तेनैव सर्वत्र तयोरुपपत्तौ किमपूर्वशक्तिकल्पनयेत्यतः सर्वत्र शक्त्यैवार्थबोधकत्वं शब्दस्येत्याह ॥ **अथवेति** ॥ तर्ह्यार्याणामपि प्रियंगुव्यवहारो म्लेच्छानां दीर्घशूकव्यवहारश्च स्यादित्यत आह ॥ **व्युत्पत्तीति** ॥

**या०— ऋषयोऽन्यत्रेति** ॥ स्तोत्रीयानवक इत्यर्थः ॥ **स्वाभाविक्यां शब्दशक्ताविति** ॥ एकस्मिन्नेवार्थ इति शेषः । न स्यादित्यनन्तरं किन्तु सर्वेषामेकस्माच्छब्दादेकस्य शक्यार्थस्य प्रतिपत्तिरिति नियम एव स्यादिति पूरणीयम् ॥ **अथवोभयत्रेति** ॥ दीर्घशूकादौ प्रियङ्ग्वादौ चेत्यर्थः । ननु यवशब्दस्य दीर्घशूक इव प्रियङ्गावपि यदि स्वाभाविकी शक्तिस्तदाऽऽर्याणामेव यवशब्दश्रवणे दीर्घशूकव्यवहार इति नियमो न स्यात् । तथा म्लेच्छानामेव प्रियङ्गुव्यवहार इति नियमो न स्यादित्यत आह ॥ **व्युत्पत्तिवशादिति** ॥ अत एव यस्योभयत्र व्युत्पत्तिरस्ति तस्योभयार्थव्यवहारोऽपि दृश्यत इति भावः ।

श्री० — **प्रतीयादिति** ॥ स्वाभाविक्याः शक्तेः सद्भावादित्याशयः । ननु स्वाभाविकशक्तौ सत्यामपि शब्दे तस्या अज्ञातत्वेनाज्ञातशक्तिकाच्छब्दान्नार्थप्रत्यय इत्यत आह ॥ **न ह्यग्निरिति** ॥ सत्यपि स्वाभाविके साध्यसंबन्ध इति स्वाभाविकसंबन्धरूपव्याप्तौ सत्यामपीत्यर्थः ॥ **तदनुसन्धानेति** ॥ व्याप्त्यनुसन्धानेत्यर्थः । सङ्केतवादी शङ्कते ॥ **अथाऽपीति** ॥ नन्वेकस्मिन्नेवार्थे शब्दस्य शक्तौ सत्यामप्यन्यमप्यर्थं कदाचित्प्रकाशयतीति ऋष्यार्यम्लेच्छानामनियमो युक्त इत्यत आह ॥ **न हि प्रदीप इति** ॥ **तस्याश्चेति** ॥ पुरुषेच्छाया इत्यर्थः ॥ **चेष्टेति** ॥ चेष्टायां वर्णसङ्केतवदित्यर्थः । करपल्लववदिति यावत् ।

च०— **व्युत्पत्तिवशादिति** ॥ यस्यार्थद्वयेऽपि तादृशशक्तिप्रतिपत्तिरस्ति तस्योभयार्थ-व्यवहारोऽपीति भावः ।

**सु०— यथा खलु शुक्तिसन्निकृष्टेन चक्षुषा कश्चिच्छुक्तिकां प्रतिपद्यते कश्चिद्रजतम् । न चैतावता चक्षुषोऽर्थप्रत्यायकत्वमस्वाभाविकं दोषसहकारिसदसद्भावाभ्यामनियमसंभवात् । यथा कृतकत्वाल्लिङ्गात्कश्चिदनित्यतां प्रत्येति, कश्चिन्नित्यताम् । अन्यथा विरुद्धहेत्वाभासानव-सरप्रसङ्गात् । तावता न तस्यास्वाभाविकं गमकत्वम् ; अनियमस्य संबन्धग्रहणदोषभावाभावा-भ्यामुपपन्नत्वात् । तथा शब्दस्यापि शक्त्यनुसार्यननुसारिव्युत्पत्तिलक्षणसहकारिवशादनियमेऽपि स्वाभाविकशक्तिसद्भावः संभवतीति ॥ तदिदमाह ॥ प्रत्यक्षवच्चेति ॥**

**इयांस्तु विशेषः । शब्दस्सङ्केतादपि प्रमापकः । नैवं चक्षुरादि । तेन संवादविसं-वादोपपत्तिरिति ।**

वा०— एवं पक्षद्वयमुपपाद्य कस्यचित्क्वचिदेव शक्तिरित्याद्यपक्षे यत्परेण प्रतीपदृष्टान्तेनैकत्र स्वाभाविकशक्तिमतो न परप्रकाशकत्वे वा न तत्र स्वाभाविकशक्तिरिति दूषणमुक्तम् । तस्य प्रदीपादे-स्तादृशसहकार्यभावेन रसाद्यप्रकाशत्वेऽपि प्रमाकरणान्तरे स्वार्थप्रमाजननशक्तिमत्यपि दोषादिसहकारिव-शादन्यार्थज्ञानजनकतादर्शनाच्छब्दस्याप्येकत्र स्वाभाविकशक्तिमतः सहकारिवशादन्यार्थज्ञानजनकतोपपत्ति-रिति परिहारं प्रत्यक्षवदिति मूलसूचितं विवक्षुराह ॥ **यथा खल्वित्यादिना** ॥ न च सन्निधानाद्यथे-त्यादिग्रन्थोऽव्यवहितपक्षोपपादकत्वेन किं न व्याख्यात इति वाच्यम् । तथात्वे उभयत्र स्वाभाविक संबन्धे व्यवहारनियमस्यैवोपपादनीयत्वेनानियमोपपादनासङ्गतेरुभयत्र स्वाभाविकशक्तौ प्रत्यक्षादेः प्रमा-प्रमोभयजननशक्तेः स्वाभाविकत्वापातेनाप्रामाण्यस्यापि स्वतस्त्वापत्तेश्चोभयत्र स्वाभाविकाशक्तौ व्युत्पत्ति-

द्वयस्यापि शक्त्यनुसारित्वेन शक्त्यनुसार्थननुसारीत्युत्तरग्रन्थासङ्गतेश्चोभयत्र शक्तिपक्षे सङ्केतप्रसक्तेरभावेन विसंवादाप्राप्त्या चेयांस्तु विशेष इत्याद्यनुपपत्तेश्च । न चैवमुभयत्रेति पक्षस्य सर्वादौ वाऽऽद्यपक्षोपपादान्ते वा निवेशः स्यादिति वाच्यम् । दोषरूपसहकारिलाभे प्रत्यक्षादीनामप्रमाजनकत्वमेव । तदभावे प्रमाजनकत्वमेवेति सहकारिवशप्रयुक्तनियमस्यापि दृष्टतया प्रकृतेऽपि व्युत्पत्तिवशाद्व्यवहारनियमोपपत्तिरित्यर्थस्यापि यथेत्यादिग्रन्थेन सूचिततया व्युत्पत्तिवशाद्व्यवहारनियमस्य तत्पक्षोपपादकस्याप्यनेनोपपादनलाभात्तदनन्तरभावोपपत्तेः ॥ **अर्थप्रत्यायकत्वमिति** ॥ अर्थप्रमापकत्वमित्यर्थः । अर्थशब्दो वा विषयविशेषपर इति बोध्यम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥ **अन्यथेति** ॥ कृतकत्वात्कस्यापि नित्यत्वाप्रतीतौ तत्पूर्वकप्रयोगानुपपत्त्या विरुद्धहेत्वाभासोच्छेदप्रसक्तेरिति भावः । नन्वेवं दोषसहकृतप्रत्यक्षादिजन्यज्ञानस्याप्रमात्वेन विसंवादित्ववच्छक्त्यननुसारिव्युत्पत्तिसहकृतशब्दजन्यज्ञानस्याप्रमात्वाद्यापत्तिरित्यत आह ॥ **इयांस्तु विशेष इति** ॥

स०— ननु स्वाभाविक्या शक्त्या क्वचिद्बोधकः क्वचित्सङ्केतादित्युक्तमयुक्तम् । सर्वत्रापि सङ्केतेनैव नियमोपपत्तौ क्वचित्स्वाभाविकशक्तिकल्पनस्यान्याय्यत्वात् । कथं चैकत्रैव शब्दशक्तिकल्पनेऽशक्यस्यान्यस्य तस्मात्प्रतीतिरित्याशङ्कायामाद्यं पक्षं दृष्टान्तमुखेनोपपादयति ॥ **यथा खलु शुक्तिसन्निकृष्टेनेत्यादिना** ॥ **एतावतेति** ॥ अशक्यरजतप्रत्यायकत्वं वर्तत इत्येतावतेत्यर्थः । अर्थप्रत्यायकत्वं शुक्तिप्रत्यायकत्वम् । नन्वत्रापि शुक्तिसन्निकृष्टचक्षुषः कथं शक्याशक्योभयार्थप्रत्यायकत्वरूपोऽनियम इत्यत आह ॥ **दोषसहकारीति** ॥ **कश्चिन्नित्यतामिति** ॥ सामानाधिकरण्यभ्रमात् कृतकत्वहेतोरशक्यामेव नित्यतां प्रत्येतीत्यर्थः ॥ **अन्यथेति** ॥ सामानाधिकरण्यभ्रमेण नित्यत्वप्रतीत्यभावे । गमकत्वं अनित्यगमकत्वम् । अनियमस्येत्येतत्पूर्ववद्योज्यम् ॥ **शक्त्यननुसारिव्युत्पत्तीति** ॥ सङ्केतग्रहेणेत्यर्थः ॥ **अनियमेपीति** ॥ शक्याशक्योभयार्थप्रतीतावपीत्यर्थः ॥ **स्वाभाविकः शक्तिसद्भाव इति** ॥ क्वचिदर्थ इति शेषः । यवादिशब्दानां म्लेच्छादिसङ्केतग्रहः रूपसहकारिवशादशक्यार्थप्रत्यायकत्वेऽपि क्वचिच्छक्त्यनुसारिव्युत्पत्तिवशाच्छक्यार्थस्यापि प्रतिपत्तौ तत्र शक्तिकल्पनं युज्यत एवेति भावः ॥ **सङ्केतादपीति** ॥ देवदत्तादिपदे तथा दर्शनादिति भावः ॥ **नैवं चक्षुरादीति** ॥ तत्र दोषस्य सहकारित्वेन तज्जन्यज्ञानस्याप्रमात्वमित्यर्थः । व्युत्पत्तेः शक्त्यननुसारित्वं नाम स्वतःशक्तेर्थद्विषयकत्वं तज्ज्ञानरहितत्वमिति द्रष्टव्यम् ॥

प०— नन्वेवं पूर्वतन्त्रे यवशब्देन प्रियंग्वादिव्यवहारोऽसाधुरित्युक्तमित्यतो दीर्घशूकविषयिणीमेव शब्दशक्तिं दोषवशादन्यविषयतया व्युत्पाद्य व्यवहरन्ति । शब्दश्च व्युत्पत्तिमनुसृत्यार्थं बोधयतीति तस्य साधुत्वं युक्तमिति दृष्टान्तपूर्वं व्यनक्ति ॥ **यथेति** ॥ **दोषसहकारीति** ॥ दोषरूपसहकारीत्यर्थः ॥

**संबन्धेति** ॥ व्याप्यव्यापकाभिमतयोः संबन्धग्रहणेत्यर्थः ॥ **प्रत्यक्षवच्चेतीति** ॥ चशब्दादनुमानवदिति पूर्ववत् गृह्यते । नन्वेवं प्रत्यक्षादिवदर्थविसंवादोऽपि प्रियंम्वादिव्यवहारे स्यादित्यत आह ॥ **इयांस्त्विति** ॥

या०— ननु क्वचित्स्वाभाविक्या शक्त्या बोधकः क्वचित्सङ्केतादित्युक्तमयुक्तम् । सर्वत्रापि सङ्केतेनैवानियमोपपत्तौ क्वचित्स्वाभाविकशक्तिकल्पनस्यान्याय्यत्वात् । कथं चेकत्रैव शब्दशक्तिकल्पनेऽशक्यस्यान्वस्य तस्माच्छब्दात्सङ्केतरूपसहकारिबलादपि प्रतीतिरित्याशङ्कायामाद्यं पक्षं दृष्टान्तमुखेनोपपादयति ॥ **यथा खलु शक्तिसन्निकृष्टेनेत्यादिना** ॥ **एतावतेति** ॥ अशक्यरजतप्रत्यायकत्वं वर्तत इत्येतावतेत्यर्थः । अर्थप्रत्यायकत्वं शुक्तिप्रत्यायकत्वम् । नन्वत्रापि शुक्तिसन्निकृष्टचक्षुषः कथं शक्याशक्योभयार्थप्रत्यायकत्वरूपोऽनियम इत्यत आह ॥ **दोषसहकारीति** ॥ **कश्चिन्नित्यतामिति** ॥ कृतकत्वहेतोर्नित्यत्वसामानाधिकरण्यभ्रमात्तेनाशक्यानामेव नित्यतां कश्चित्प्रत्येतीत्यर्थः ॥ **अन्यथेति** ॥ सामानाधिकरण्यभ्रमेण नित्यत्वप्रतीत्यभाव इत्यर्थः । गमकत्वं अनित्यत्वगमकत्वम् । अनियमस्येत्येतत्पूर्ववद्योज्यम् ॥ **शक्त्यनुसारिव्युत्पत्तीति** ॥ सङ्केतग्रहरूपेत्यर्थः ॥ **अनियमेऽपीति** ॥ शक्याशक्योभयार्थप्रतीतावपीत्यर्थः ॥ **स्वाभाविकशक्तिसद्भाव इति** ॥ क्वचिदर्थ इति शेषः ॥ **सङ्केतादपीति** ॥ देवदत्तादिपदे तथात्वस्य क्लृप्तत्वादिति भावः ॥ **नैवं चक्षुरादीति** ॥ तत्र सहकारिणो दोषस्याप्रमाजनकत्वेनैव क्लृप्तत्वादिति भावः ॥

श्री०—रजतं तत्रारोपितं रजतम् ॥ **अन्यथेति** ॥ कृतकत्वस्य नित्यत्वप्रतीतिजनकत्वाभाव इत्यर्थः ॥ **तावतेति** ॥ कृतकत्वहेतोरशक्यनित्यताप्रत्यायकत्वमस्तीत्येतावतेत्यर्थः । नन्वनित्यत्वसमानाधिकृतस्य कृतकत्वहेतोः कथं शक्याशक्योभयार्थप्रत्यायकत्वरूपोऽनियम इत्यत आहः ॥ **अनियमस्येति** ॥ संबन्धग्रहणे व्याप्तिग्रहणे । व्याप्तिग्रहणे दोषाभावाभावाभ्यामित्यर्थः ॥

च०— अथार्थनिरूपितनैसर्गिकशक्तिप्रतिसन्धानेन पुरुषं विशेषपरिभाषाप्रतिसंहित्या च तृणारणिमणिन्यायेनान्वयबोधोपगमे परस्परजन्यस्थलीयव्यतिरेकव्यभिचारवारणाय कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशप्रसङ्गेन सार्वत्रिकपरिभाषानुसंहितिहेतुतोपगतिरेव श्रेयसी । परिभाषास्थलेऽर्थस्याशक्यतापत्त्या शक्यस्यैवान्वयबोधे भानमिति मर्यादात्ययेन कथं सहकारिसामर्थ्यादन्वयधीरित्याशङ्कायामाद्यकल्पं निदर्शनद्वयप्रदर्शनेन संघटयति ॥ **यथेत्यादि** ॥ **अन्यथेति** ॥ कृतकत्वस्य नित्यत्वसामानाधिकरण्यभ्रमेण तदप्रत्यायकत्वे ॥ **अनियमेऽपीति** ॥ शक्याशक्योभयार्थगोचराधिगतावपीत्यर्थः ॥ **स्वाभाविक इति** ॥ अर्थविशेष इत्यादिः ॥

**सु०— ननु ये स्वाभाविकं संबन्धमास्थिषत शब्दार्थयोस्तेषामपि नैष सत्तामात्रेणावगमाङ्गम् । अपि तु विज्ञातस्सन् । विज्ञाने चास्यायमर्थस्य वाचक इति वाऽस्मादयं बोद्धव्य इति वा सङ्केत एवोपायः । वृद्धव्यवहारोऽपि गवादिशब्दानां देवदत्तादिशब्दवत्सङ्केतपूर्वक एव । तद्वरमस्तु सङ्केत एव । कृतमत्र स्वाभाविकेन संबन्धेन । तन्मात्रादेव प्रयोगप्रतिपत्तिव्यवहाराणामुपपत्तेः ।**

**वा०**— स्वाभाविकसंबन्धमभ्युपगच्छता तद्ग्रहोपायत्वेन सङ्केतस्यैव वक्तव्यत्वात्तेनैव प्रयोगाद्युपपत्तौ तदर्थतया स्वाभाविकसंबन्धकल्पने गौरवमित्याशङ्कते ॥ **नन्विति** ॥ नन्वस्तु तावत्सामयिकेषु देवदत्तादिशब्देष्वेवम् । ये पुनरिदं प्रथमव्यवहारप्रवृत्तास्तेषु कथं समयापेक्षेत्यत आह ॥ **वृद्धव्यवहारोऽपीति** ॥ गवादिशब्दा अपि समयाधीनवृत्तयः पदत्वाद्देवदत्तादिपदवदित्यर्थः । न चानादितयाऽप्येतदुपपत्स्यते प्रलये विच्छेदादिति भावः ।

**स०— सङ्केत एवोपाय इति** ॥ घटादिशब्दानां घटादावेव कुतः स्वाभाविकः संबन्धः पटादावपि किं न स्यादित्यतिप्रसङ्गभञ्जकस्यान्यस्याभावादित्यर्थः । न च सङ्केतोऽपि घटादावेव कुत इत्यतिप्रसङ्गतादवस्थ्यम् । स्वतन्त्रेच्छाया नियोक्तुमशक्यत्वात् । तथाच घटादिशब्दः घटादिना स्वभावेनैव संबद्धः । ईश्वरेण तद्वाचकतया सङ्केतितत्वादित्यनेन प्रकारेण शङ्क्यत एव शक्त्यवगमोपाय इति भावः ॥ ननु स्वाभाविकसंबन्धावगमादिकं वृद्धव्यवहारादेव भविष्यति । अतो न सङ्केतस्योपजीव्यतेत्यत आह ॥ **वृद्धव्यवहारोपीति** ॥ यथा पिण्डविशेषे देवदत्तादिशब्दसङ्केते पित्रादिना कृते पश्चात्प्रयोजकवृद्धादिव्यवहारः तच्छक्तिज्ञापकः प्रवर्तते । तथा गवादिशब्देष्वपि कस्यचित्सङ्केतानन्तरमेव वृद्धव्यवहारः तच्छक्तिज्ञापनाय प्रवर्तत इत्यर्थः । अन्यथोक्तातिप्रसङ्ग इति भावः ।

**प०**—सङ्केतवाद्यभिमतचोद्यमनुवदति ॥ **ननु ये स्वाभाविकमि**त्यादिना **अत्र ब्रूम** इत्यन्तेन ॥ **इति वा सङ्केत इति** ॥ परमेश्वरेच्छाधीनो यः सङ्केतः तज्ज्ञानमेवोपाय इत्यर्थः । **वृद्धव्यवहार एव** शक्तिज्ञानोपायोऽस्त्वित्यत आह ॥ **वृद्धेति** ॥

**या०— सङ्केत एवोपाय इति** ॥ अस्माच्छब्दादयमर्थो बोधव्य इत्यादिवाक्यादवगत इति शेषः । स्वाभाविकसंबन्धस्य शक्तिरूपत्वेन प्रत्यक्षादिना ज्ञातुमशक्यत्वादिति भावः । **ननु स्वाभाविक-**

संबन्धविज्ञानं वृद्धव्यवहारादेव भविष्यति । अतो न सङ्केतस्य तत्रोपजीव्यतेत्यत आह ॥ **वृद्धव्यवहारोऽपीति** ॥ यथा पिण्डविशेषे देवदत्तादिशब्दसङ्केते पित्रादिना कृते सति पश्चात्प्रयोजकवृद्धादिव्यवहारस्तज्ज्ञापकः प्रवर्तते तथा गवादिशब्देष्वपि कस्यचित्सङ्केतानन्तरमेव वृद्धव्यवहारस्तज्ज्ञापनाय प्रवर्तत इत्यर्थः । तथा च गवादिशब्दाः साङ्केतिकाः शब्दत्वाद्देवदत्तादिशब्दवदित्यनुमानसिद्धसङ्केतज्ञापक एव सर्वत्र वृद्धव्यवहारो न क्वापि स्वाभाविकसंबन्धज्ञापक इति भावः ॥

**श्री०— सत्तामात्रेणेति** ॥ अज्ञात एवेत्यर्थः । अस्मात् शब्दात् । अयम् अर्थः ।

**च०—** गवादिशब्दधर्मिकसाङ्केतिकत्वसाध्यकशब्दत्वलिङ्गकदेवदत्तादिशब्दनिदर्शनकानुमानमभिप्रेत्याह ॥ **वृद्धव्यवहारोऽपीति** ॥ तथा च सङ्केतग्राहक एव वृद्धव्यवहारो न नैसर्गिकसंबन्धावगमक इति भावः ॥

**सु०— नन्वयं सङ्केत एव केषाञ्चिच्छब्दानामसति स्वाभाविकार्थसंबन्धे न शक्यः कर्तुम् । निर्दिश्य ह्यर्थं ब्रूयादयमस्माद्बोद्धव्य इति । न च निर्देशोऽसति स्वाभाविके संबन्धे केषाञ्चिच्छब्दानां सिध्यति । सङ्केताधीने तु वाचकत्वे सर्वेषां शब्दानामकृतसमयत्वात्किं केन निर्दिशेत् । तस्मात्सङ्केतकरणमेव स्वाभाविकसंबन्धं प्रतिपादयति शब्दानाम् ॥ मैवम् ॥ सर्गादिभुवां महर्षिदेवतानां परमेश्वरानुग्रहाद्धर्मज्ञानवैराग्यैश्वर्यसंपन्नानां परमेश्वरस्य तावत्सुकर एव सङ्केतः कर्तुम् । तद्व्यवहाराच्चास्मदादीनामपि सुग्रहः सङ्केतः । तथा हि । वृद्धवचनानन्तरं तच्छ्राविणो वृद्धान्तरस्य प्रवृत्तिहर्षशोकभयादिप्रतिपत्तेस्तद्धेतुं प्रत्ययमनुमिमीते बालस्तस्य सत्स्वप्यन्येष्वभूतस्य वाक्यश्रवणसमनन्तरं भवतो वाक्यश्रवणहेतुतामवगच्छति । तदवयवानां च पदानामावापोद्धारभेदेन तत्तदर्थप्रत्ययजननोपायत्वदर्शनात् । तेषु तेष्वर्थेषु तेषां पदानां वाचकत्वं च कल्पयति । एवं पदावयवेषु प्रकृत्यादिष्वपि द्रष्टव्यम् । स्वाभाविकीं शक्तिमभ्युपगच्छताऽप्येषा प्रक्रियानुसारिणीया । साऽपि न सत्तामात्रेणावगमाङ्गमित्युक्तम् ।**

वा०—स्वाभाविकसंबन्धाभावे सङ्केतकरणस्यैवासंभवाद्विपरीतमुपजीव्योपजीवकत्वमिति शङ्कते ॥ **नन्वयमिति** ॥ निर्देशो हि शब्देनैव । स च स्वाभाविकसंबन्ध एव संभवति । तस्य पूर्वमपि सत्त्वात् । न तु सङ्केतेन । तस्य पूर्वमसत्त्वादित्याह ॥ **न चेति** ॥ **अकृतसमयत्वादिति** ॥ सृष्ट्यादाविति शेषः । तथा च प्रलये विच्छेद एवानुपपन्न इति भावः । सङ्केतकरणं किमस्मदादीनां परमेश्वरस्य वाऽस्मदादीन्प्रत्य शक्यमुत परमेश्वरस्यापि देवादीन्प्रत्यपीति । नाद्यः इष्टापत्तेः । नापि द्वितीयः, महर्षिदेवादीनां धर्मादि-

संपत्त्या सर्गाद्यकालीनपदार्थान्परमेश्वरं च साक्षात्कर्तुं समर्थत्वात्तान्प्रति परमेश्वरेणाङ्गुल्यादिनैव तांस्ता-नर्थान्निर्दिश्य शब्दविशेषसङ्केतस्य स्वेच्छयैव कर्तुं शक्यत्वेन शब्देनैव तन्निर्देशानावश्यकतया स्वाभाविक-संबन्धानपेक्षणात् । अस्मान्प्रति सङ्केतकरणं च नावश्यकम् । तद्व्यवहारसिद्धतत्सङ्केतज्ञानमात्रेणास्मादा-दिप्रयोगाद्युपपत्तेरित्याह ॥ **सर्गादिभुवामित्यादिना** ॥ तान्प्रति महेश्वरेणायमस्यार्थस्य वाचक इत्यस्मादयमर्थो बोद्धव्य इति वा गवादिपदानां सास्नादिमदर्थेषु सङ्केतः सुकर इत्यर्थः । कथमतीन्द्रि-येश्वरप्रत्यक्षं तदुपदेशादिकं च तेषामित्यतः परमेश्वरानुग्रहादित्यादि विशेषणम् । प्राथमिकसङ्केतत्व-ज्ञापनाय सर्गादीति । ननु तर्हि शक्तिपक्ष एवास्तु । एतादृशप्रक्रियाया सङ्केतग्रहपक्षस्य गौरवकरत्वा-दित्यर्थः ॥ **स्वाभाविकीमिति** ॥ स्वाभाविकशक्तिवादिनाऽपि तद्ग्रहोपायत्वेन सङ्केतस्य तद्ग्रहोपायतया चास्याः प्रक्रियाया अवश्यानुसर्तव्यत्वेनातिगौरवमिति भावः ।

स० — **निर्दिश्य ह्यर्थं ब्रूयादिति** ॥ न च सङ्केतस्येच्छारूपत्वान्न तत्र शब्दनिर्देशाद्यपेक्षेति वाच्यम् । अत्र परं प्रति सङ्केतकरणं नाम सङ्केतज्ञापको योऽस्माच्छब्दादयमर्थो बोद्धव्य इत्युपदेशः तत्करणमेव विवक्षितम् । तत्र च शब्दनिर्देशादिकमस्त्येवेत्याशयात् । एवमग्रेऽपि सङ्केतकरणं यत्रोच्यते तत्र तज्ज्ञापकोपदेशकरणमेव व्याख्येयम् । तेन सङ्केतस्येश्वरेच्छारूपस्यानादित्वेन कथं करणमिति शङ्का-नवकाशोऽपीति ध्येयम् ॥ **सुकर एव सङ्केतः कर्तुमिति** ॥ ऋष्यादीनां सर्वज्ञत्वेन भगवन्निष्ठसर्वशब्द-सङ्केतग्रहणमुपदेशाभावकालेऽप्यस्तीति ॥ **सर्वेषामकृतसमत्वात् किं केन निर्दिशेदिति** ॥ उक्तदोषाभावा-दिति भावः । न चैवं तान् प्रति सङ्केतकरणं व्यर्थम् । संप्रदायप्रवर्तनार्थत्वात् । अथवा यदा सर्वज्ञ एव कश्चिदसर्वज्ञं परं प्रति स्वसङ्केतज्ञापनायोपदिशति । तदा तं प्रति युगपत्सर्वशब्दसङ्केतानां बोधयितुमशक्यत्वा-त्क्रमेणैव तेषां बोधनीयत्वे तत्राद्योपदेशे निर्देशार्थं केषाञ्चिच्छब्दानां स्वाभाविकोऽर्थेन संबन्धोऽपेक्षणीयः स्यात् । न चैवम् । किं तु ईश्वरस्य महर्ष्यादीनां च सर्वज्ञत्वात् युगपदेवोपदेशः ॥ न च महर्ष्या-दीनां कथं सार्वज्ञमिति वाच्यम् । योगजधर्मवत्वात् । विषयरागरूपप्रतिबन्धाभावाच्च । इदं चेश्वरानुग्रहादेव तेषां भवति । तथा चेश्वरः सर्गादावुत्पन्नान् सर्वज्ञान्महर्ष्यादीन् प्रति युगपदेव तेभ्यस्तेभ्यः सर्वेभ्यः शब्देभ्यः ते तेऽर्था बोद्धव्या इत्युपदिशतीत्यङ्गीकारे न कोऽपि विरोधः । न च तेभ्य इत्यादीनामेतदुपदेशगतानां शब्दानामिदानीमकृतसमयत्वात्कथमत्र निर्देश इति वाच्यम् । स्वाध्यायोऽध्येतव्य इतिवदेतदुपदेशनिर्दिष्टशब्दाना मप्यनेनैवोपदेशेन कृतसमयत्वात् । अत एवैतादृश-दुर्घटज्ञानसामर्थ्योपपादकमैश्वर्यं तेषामुक्तमिति ॥ **तद्व्यवहाराच्चेति** ॥ महर्ष्यादीनां प्रयोज्यवृद्धं प्रति व्यवहारादित्यर्थः । इदमुपलक्षणम् । तदुपदेशाच्चेत्यपि ग्राह्यम् । वाचकत्वम् सङ्केतम् । ननु कुत

एषा प्रक्रिया तेनानुसारिणीयेत्यत आह ॥ **सापीति** ॥ तदवगमोपायश्चोक्तरीत्या सङ्केत एव । तत्करणार्थं चोक्तप्रक्रियाऽनुसरणीयेति भावः ।

प० — शक्तिवादी शङ्कते ॥ **नन्वयमिति** ॥ **केषांचिदिति** ॥ इदमादिपदानाम् । सङ्केतवादी निराह ॥ **मैवमिति** ॥ **सर्गादीति** ॥ सर्गादौ जातान्महर्षिप्रभृतीन्प्रति प्रत्यक्षेण दृष्टार्थे सङ्केतः सुकर एव । तत्र शब्देन निर्देशानपेक्षणादिति भावः । विसंवादादिव्यवहाराभावसूचनाय धर्मज्ञानवैराग्यसंपन्नानामित्युक्तिः ।

या० — **निर्दिश्य ह्यर्थं ब्रूयादिति** ॥ न च सङ्केतस्येच्छारूपस्याशब्दात्मकत्वान्न निर्देशापेक्षेति वाच्यम् । अत्र परं प्रति सङ्केतकरणं नाम सङ्केतज्ञापको योऽस्माच्छब्दादयमर्थो बोद्धव्य इत्युपदेशस्तत्करणमेव विवक्षितम् । तस्य च शब्दत्वेन निर्देशापेक्षाऽस्त्येवेत्याशयात् । एवमग्रेऽपि सङ्केतकरणं यत्रोच्यते तत्र तज्ज्ञापकोपदेशकरणमेव विवक्षितम् । तेन सङ्केतस्येश्वरेच्छारूपस्य अनादित्वेन कथं करणमिति शङ्काऽनवकाशोऽपीति ध्येयम् ॥ **सुकर एव सङ्केतः कर्तुमिति** ॥ ऋष्यादीनां सर्वज्ञत्वेन भगवन्निष्ठसर्वशब्दसङ्केतग्रहणमुपदेशाभावकालेऽप्यस्तीति सर्वेषामकृतसमयत्वात्किं केन निर्दिशेदित्युक्तदोषाभावादिति भावः । न चैवं तान्प्रति सङ्केतकरणं व्यर्थम् । अदृष्टार्थत्वात्संप्रदायप्रवर्तनार्थत्वाच्च । अत्र सार्वज्ञोपपादनायैव धर्मवैराग्योपादानम् । योगजधर्मरूपप्रत्यासत्त्यभावे विषयविशेषरागरूपप्रतिबन्धकसद्भावे वा सर्वविषयकज्ञानोत्पत्त्ययोगात् । रागाभावोपपादकमैश्वर्यमित्यवगन्तव्यम् । नन्वेवं तेषामपीश्वरसाम्यप्रसङ्ग इत्यत उक्तम् ॥ **परमेश्वरानुग्रहादिति** ॥ **तद्व्यवहाराच्चेति** ॥ महामहर्ष्यादीनां प्रयोज्यवृद्धं प्रति व्यवहारादित्यर्थः । इदमुपलक्षणम् । तदुपदेशाच्चेत्यपि ग्राह्यम् । अत एवाग्रे उपदेशादिनैवेति वक्ष्यति । गामानयेत्यादौ प्रवृत्तिप्रतिपत्तिः । पुत्रस्ते जात इत्यादिषु हर्षप्रतिपत्तिः । पुत्रस्ते मृत इत्यादौ शोकप्रतिपत्तिः । सर्पोऽस्तीत्यादौ भयप्रतिपत्तिः । आदिपदात्तृणमस्तीत्यादावौदासीन्यप्रतिपत्तिर्ग्राह्या । वाचकत्वं सङ्केतम् । ननु कुत एषा प्रक्रिया तेनानुसरणीयेत्यत आह ॥ **साऽपीति** ॥ तदवगमोपायश्चोक्तरीत्या सङ्केत एव । तद्ग्रहणाय चोक्तप्रक्रिया तेनाप्यनुसरणीयेति भावः ॥

श्री० — ये स्वाभाविकसंबन्धमास्थिषत शब्दार्थयोस्तेषामपि तज्ज्ञाने उक्तरूपः सङ्केत एवोपाय इत्युक्तं दूषयितुं सिद्धान्ती शङ्कते ॥ **नन्वयमिति** ॥ यदर्थमेतदुक्तं तदाह ॥ **सङ्केताधीने त्विति** ॥ अकृतसमयत्वादकृतसङ्केतत्वात् । सर्गादिभुवामित्यादि कर्मणि षष्ठी । तस्य तद्धेतुप्रत्ययस्य । पदानामावापेन तत्तदर्थप्रत्ययस्य जननदर्शनात् । उद्वापेन तत्तदर्थप्रत्ययस्यापायदर्शनादिति योज्यम् ।

च॰— **निर्दिश्य ह्यर्थमिति** ॥ सङ्केतस्येच्छारूपत्वेन शब्दानात्मकतया उच्चारणरूपनिर्देश-नैरपेक्ष्येऽपि तादृशसङ्केतग्राहकस्यास्माच्छब्दादित्याद्यानुपूर्वीकस्य शब्दतया तद्रूपनिर्देशापेक्षास्तीति भावः । एवं सङ्केतकरणमित्यत्रापि तादृशसङ्केतग्राहकशब्दोच्चारणमित्यर्थोऽवधेयः । तेन सङ्केतस्येश्वरेच्छारूपतया-ऽनादित्वेनोत्पादनरूपतत्करणायोग इति शङ्कानिरवकाशैव ॥ **सुकर इति** ॥ ईषदितिकर्मसाधनखलन्तोऽयं तेषां सार्वज्ञ्यादुपदेशमन्तरेणापि भागवतसङ्केताधिगमसत्त्वेन किं केन निर्दिशेदिति क्षत्यनवकाशादिति भावः ॥ **तद्व्यवहाराच्चेति** ॥ प्रयोज्यवृद्धावबोधोद्देश्यकमहर्ष्यादिव्यवहारादित्यर्थः । तदुपदेशादि-समुच्चायकश्चशब्दः ॥ **भयादिप्रतिपत्तेरिति** ॥ द्वन्द्वगर्भबहुव्रीहिगर्भस्तत्पुरुषः ॥ **हेतुतामिति** ॥ तदन्वय-व्यतिरेकित्वादिहृदयं तत्प्रक्रियानुसरणस्य तदवगमाङ्गत्वं स्मारयति ॥ **सापीति** ॥

सु॰— **स्यादेतत् । यदि शब्दानां साङ्केतिकः संबन्धो न स्वाभाविकः; कृतं तर्हि साध्वसाधुविभागपरेण व्याकरणेन । स्वाभाविकं हि यस्य वाचकत्वं स शब्दः साधुरसाधुश्चेतरः। सामयिकत्वे तु सर्व एव साधवोऽसाधवो वा स्युः । मैवम् । परमेश्वरसमयपरिपालनार्थत्वात् । तथा च येषां पदानां येष्वर्थेषु परमेश्वरेण कृतः समयस्तानि तत्र साधूनि; असाधूनि चेतरत्रेति विभागाय व्याकरणमर्थवदिति ।**

वा॰— स्वाभाविकसंबन्धपक्षे साध्वसाधुविभागस्य स्वाभाविकसंबन्धोपेतानां गवादिपदानां साधुत्वं तद्रहितानां गाव्यादीनामसाधुत्वमिति कर्तुं शक्यत्वेऽपि सङ्केताधीनवाचकत्वपक्षे गाव्यादिशब्दा-नामिव गवादिशब्दानामपि सङ्केतितत्वाविशेषेण साध्वसाधुविभागो न कर्तुं शक्य इत्याह ॥ **स्वाभाविकं हीति** ॥ यद्यप्यत्र न स्वाभाविकवाचकत्वादिकमेव साधुत्वादिकमभेदेन व्याप्यव्यापकभावा-नुपपत्तेः । नापि साधयति बोधयतीति व्युत्पत्त्या बोधकत्वं साधुत्वम् । गाव्यादीनामपि साधुत्वापत्तेः । नापि शक्तत्वं तत् । विकरणानामनर्थकतया पचतीत्यादौ तेषामसाधुत्वापत्तेः । लाक्षणिकानामपि लक्ष्ये-ऽशक्ततयाऽसाधुत्वापत्तेश्च । क्वचिच्छक्ततया साधुत्वे तु हयदरिद्रशक्ताश्वास्वशब्दयोर्दरिद्राश्वयोरपि साधुता स्यात् । नापि वृत्तिमत्त्वं तत् । द्योतकनिपातानामसाधुत्वापत्तेः । औपसन्दानिकी शक्तिरेव द्योतनीति चेत् । प्रोत्तरजित्व-घोत्तरटत्व-योरविशेषेण विनिगमनाविरहाच्छक्तताप्राप्तौ व्यासज्यवृत्तिशक्तौ विश्रान्तेः । ततश्च द्विर्वचनाद्यव्यवस्थापत्तिः । नापि जातिविशेषः साधुत्वम् । कत्वादिना सङ्करापत्तेः । एवं च साधुत्वस्यानिरुक्त्या व्याप्यव्यापकभावावधारणमनुपपन्नमिवाभाति । तथापि 'अनपभ्रष्टतानादिर्यद्वाऽभ्युदय-योग्यता । व्याक्रिया व्यञ्जनीया वा जातिः काऽपीह साधुता ।' तत्र शक्तिवैकल्यादिप्रयुक्तमन्यथो-

च्चारणमपभ्रष्टता तदभावोऽनपभ्रष्टता । सैव हि साधुता । सा चार्थविशेषान्तर्भाविनैव । तथा हि । यमर्थं शक्त्या लक्षणया वा बोधयितुं द्योतयितुं वा यादृक् शब्दोऽनादिः प्रयुक्तः स तस्मिन्नर्थे दोषादन्यथात्वं प्राप्तोऽसाधुरन्यथा तु साधुरनादिता वाऽभ्युदययोग्यता वा रत्नतत्त्ववच्छास्त्रपरिशीलनशालिभिर्गम्यो जातिविशेषो वा साधुता । न च जातिसङ्करो दोषः । दूषकताबीजाभावेनोपाधिसङ्करवत्तस्याप्यदोषत्वादिति वैयाकरणाद्युक्तरीत्या साधुत्वादेर्निर्वक्तुं शक्यत्वात्तस्य स्वाभाविकसंबन्धव्यापकतोपपद्यत एव । लाक्षणिकादावपि परम्परया स्वाभाविकसंबन्धप्रयोज्यताऽस्त्येवेति नानुपपत्तिरिति भावः । गवादिपदानां गाव्यादिपदानां च सङ्केतितत्वाविशेषेऽपि गवादीनां परमेश्वरसङ्केतितयाऽन्येषां तदभावेन सङ्केतेऽप्यवान्तरविशेषसद्भावात्परमेश्वरसङ्केतितानां साधुत्वमन्येषामसाधुत्वमिति परमेश्वरसङ्केतपरिपालनार्थतया व्याकरणसार्थक्यं सङ्केतपक्षेऽपि संभवत्येवेत्याह ॥ **परमेश्वरेति** ॥

स॰— **सामयिकत्व इति** ॥ साङ्केतिकत्व इत्यर्थः ॥ **सर्वेऽपि साधव इत्यादि** ॥ अपभ्रंशा अपि साधवः स्युः साधुशब्दा वाऽपभ्रंशवदसाधवः स्युः साङ्केतिकत्वस्योभयत्राविशेषादिति भावः ।

प॰— सिद्धान्ती शङ्कते ॥ **स्यादेतदिति** ॥ पूर्ववादी निराह ॥ **मैवमिति** ॥

या॰— **सामयिकत्व इति** ॥ साङ्केतिकत्व इत्यर्थः ॥ **सर्वेऽपि साधव इत्यादि** ॥ अपभ्रंशा अपि साधवः स्युः साधुशब्दा वा अपभ्रंशवदसाधवः स्युः साङ्केतिकत्वस्योभयत्राविशेषादिति भावः ॥

श्री॰— पुनः सिद्धान्ती शङ्कते **स्यादेतदिति** ॥ **स्वाभाविकं हीत्यादि** ॥ एवं विभाग प्रतिपादनाय हि व्याकरणशास्त्रं प्रवृत्तमस्तीत्यर्थः ॥ **स्युरिति** ॥ तथाच साध्वसाधुविभागपरं व्याकरणशास्त्रं व्यर्थमेव स्यादित्यर्थः ॥ **परमेश्वरसमयेति** ॥ परमेश्वरकृतसङ्केतेत्यर्थः ।

च॰— नैसर्गिकसंबन्धव्यवतिष्ठापयिषुराशङ्कते ॥ **स्यादेतदिति** ॥ **सामयिकत्व इति** ॥ साङ्केतिकत्व इत्यर्थः ॥ **सर्व इति** ॥ अप्रभ्रंशा अपि साधवः स्युरनपभ्रंशाश्चासाधवः स्युस्तद्विभागो न स्यादिति भावः ।

**सु॰— अत्र ब्रूमः ॥ परस्यापि मते किमीश्वरसङ्केत एवावगमाङ्गम् उतास्मदादीनामपि ॥ आद्ये कथमृष्यार्यम्लेच्छानामनियताः प्रयोगप्रत्ययव्यवहाराः ॥ किञ्चेश्वरसङ्केतोऽपि गृहीत एवावगमाङ्गं न स्वरूपेण । व्युत्पन्नवदव्युत्पन्नस्यापि प्रतिपत्ति(तीति)प्रसङ्गात् । तद्ग्रहश्च त्वदुक्तरीत्योपदेशादिनैव । तथा चास्त्वस्मदाद्युपदेश एव । किमदृष्टेश्वरसङ्केतकल्पनयेति समानम् । अस्मदादिभिरपि पूर्वतनस्सङ्केतो ज्ञाप्यत एव न तु क्रियत इति चेत् । तर्ह्यस्मन्मतेऽपि वृद्धेन स्वाभाविकी शक्तिर्ज्ञाप्यत एव । नत्वपूर्वसङ्केतः क्रियत इति तुल्यम् ॥ द्वितीये तु**

**व्याकरणादिवैयर्थ्यम् । व्यवहारमात्रं हि शब्दप्रयोजनम् । तच्चेश्वरानीश्वरसङ्केतयोः समानम् । अदृष्टार्थमिति चेन्न । प्रमाणाभावात् । श्रुत्यादेः सङ्केतशक्तिपक्षोदासीनत्वात् । किञ्च चरमभाविनं सहकारिणमुपदेशादिकमुपादाय शक्तिप्रत्याख्यानेऽतिप्रसङ्गः ।**

वा० — ऋष्यादिप्रयोगादीनामनियमानुपपत्तिप्रसङ्गव्याकरणादिवैयर्थ्यं च सङ्केतपक्षेऽपि प्रतिपादयितुं विकल्पयति ॥ **परस्यापीति** ॥ **आद्य इति** ॥ ईश्वरसङ्केतस्यैकमात्रविषयकत्वेन सर्वविषयकत्वाभावादेकत्रैव ऋष्यादीनां सर्वेषां प्रयोगापत्त्याऽनियतप्रयोगाद्यनुपपत्तिः । ईश्वरसङ्केतस्य सर्वविषयकत्वेनेश्वरोपदेशपूर्वकवृद्धव्यवहारादिना सैन्धवादिशब्दवदनेकत्र सर्वेषामपि प्रयोगापत्त्याऽनियतप्रयोगाद्यनुपपत्तिरेव । तेषां तदन्यत्र सङ्केताज्ञानकल्पने च तदन्यत्र व्यवहारादि पश्यतामपि तथाऽप्रयोगाद्यनुपपत्तिरेवेति भावः ।

ननु केषाञ्चित्सङ्केतान्तराज्ञानादन्येषां चाज्ञानपूर्वकस्वपूर्वपूर्वव्यवहाराद्याग्रहेणान्यत्र सङ्केताभावज्ञानाद्वाऽन्यत्राप्रयोग इत्यतो दूषणान्तरमाह ॥ **किञ्चेति** ॥ **तथा चेति** ॥ शक्तिज्ञापकसङ्केतमादाय शक्त्यपलापे सङ्केतज्ञापकास्मदाद्युपदेशादिना सङ्केतापलापोऽपि स्यादित्यर्थः । ननु नास्मदादीनां सङ्केतकारकत्वं येनास्मदाद्युपदेश एवायमस्मात्पदाद्बोद्धव्य इत्याद्याकारकोऽवगमाङ्गं स्यादपि तु पूर्वतनतज्ज्ञापकत्वमेवातः सङ्केत ईश्वरीय एक एव कल्प्यत इत्याशङ्कते ॥ **अस्माभिरपीति** ॥ तर्हीश्वरस्य वृद्धानामपि न सङ्केतकारकत्वमपि त्वीश्वरज्ञापितस्वाभाविकशक्तिज्ञापकत्वमेवेति न सङ्केतेनापि शक्त्यपलाप इति तुल्यमित्याह ॥ **तर्हीति** ॥ **द्वितीये त्विति** ॥ अस्मदादिसङ्केतस्याप्यवगमाङ्गत्वे तेनापि प्रयोगाद्युपपत्त्या शब्दप्रयोजनसिद्ध्या तेषामपि साधुत्वेनेश्वरसङ्केतितानामेव साधुत्वनियमाभावेन साध्वसाधुविभागाभावेन पारमेश्वरसमयपरिपालनस्यानावश्यकतया साध्वसाधुविभागपरव्याकरणवैयर्थ्यमेवेति भावः । ननु प्रयोगप्रत्ययादिजनकत्वेनैव न शब्दस्य साधुत्वमपि त्वदृष्टजनकत्वेन । तच्चेश्वरसङ्केतितानामेवेति तदन्येषामसाधुत्वात्तद्विभागाय व्याकरणमित्याशङ्कते ॥ **अदृष्टार्थमिति चेदिति** ॥ ईश्वरसङ्केतितानामेवादृष्टजनकत्वेन साधुत्वमित्यत्र प्रमाणाभावान्नैवमित्याह ॥ **प्रमाणभावादिति** ॥ ननु साधुभिर्भाषितव्यम् । साधूनेव प्रयुञ्जीत न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द इत्यादिश्रुत्यादिकं तावत्साधूनामेव प्रयोज्यत्वमसाधूनां तदभावं बोधयति तच्च शब्दस्य प्रयोगप्रत्ययादिजनकत्वेनैव साधुत्वे सर्वेषामपि प्रयोगादिजनकत्वादनुपपन्नमित्यदृष्टजनकतयैव वाच्यम् । तच्चानीश्वरसङ्केतितानां न हि कल्पयितुं युक्तम् । न च प्रकारान्तरेण साधुत्वं शक्यव्युत्पादनमिति तादृशश्रुत्यादिकमेवेश्वरसङ्केतितानामेवादृष्टजनकतया साधुत्वकल्पकमित्यतः स्वाभाविकशक्तिमतामेवादृष्टजनकत्वेन साधुत्वं तदन्येषामसाधु-

त्वमित्यभिप्रायेणापि श्रुत्याद्युपपत्तिर्न तेनेश्वरसङ्केतितानामेव साधुत्वसिद्धिरित्याह ॥ **श्रुत्यादेरिति** ॥ किञ्च स्वाभाविकशक्तौ व्युत्पन्नवदव्युत्पन्नस्यापि शब्दार्थावगमे प्राप्ते पश्चाज्ज्ञापकतया सहकारित्वेन कल्पितोपदेशादिना शक्तेरेवापलापे सन्निकर्षव्याप्त्युपदेशादिनेन्द्रियव्याप्त्यादेरप्यपलापप्रसङ्ग इत्याह ॥ **किञ्चेति** ॥

स०—**उतास्मदादीनामपीति** ॥ ईश्वरव्यतिरिक्तानामपीत्यर्थः ॥ **त्वदुक्तरीत्येति** ॥ सर्गादिभुवां महर्षिदेवतानामीश्वरोपदेशादिनैवेत्यर्थः ॥ **अस्मदाद्युपदेश एवेति** ॥ ईश्वरातिरिक्तपुरुषकर्तृकोपदेश एव कृतसङ्केतज्ञापकोस्त्वित्यर्थः । देवदत्तपदवदिति भावः ॥ **अस्मदादिभिरपीति** ॥ ईश्वरव्यतिरिक्तैर्देवादिभिरित्यर्थः ॥ **तर्ह्यस्मिन्मतेऽपि वृद्धेनेति** ॥ अत्र वृद्धशब्देन प्रथमं व्यवहारादिना शक्तिज्ञापको भगवानेव विवक्षितः । तथा च यदुक्तं वृद्धव्यवहारोपीत्यादि तदयुक्तमिति भावः । स्वाभाविकसंबन्धस्यानादित्वान्नोक्तातिप्रसङ्गोऽपीति ॥ ननु साधुभिर्भाषितव्यमिति श्रुत्यादेः का गतिरित्यत आह ॥ **श्रुत्यादेरिति** ॥ **उपदेशादिकमुपादायेति** ॥ अत्र यद्यपि चरमभाविनं सङ्केतमुपादायेति वक्तव्यम् । पूर्वं तथैवाशङ्कितत्वात् । तथाप्यस्मदाद्युपदेश एव किमदृष्टेश्वरसङ्केतकल्पनयेत्यत्रेष्टापत्तिचोदनेऽप्यतिप्रसङ्गं वक्तुमेवमुक्तमिति द्रष्टव्यम् ॥ **अतिप्रसङ्ग इति** ॥ अतन्तुसंयोगादीनामेव पटादिजनकत्वोपपत्तौ तन्त्वादावपि पटादिजनकत्वशक्तिर्न कल्पनीयेत्यतिप्रसङ्ग इत्यर्थः ।

प०—**अदृष्टार्थमितिचेदिति** ॥ व्याकरणनिगमनिघण्ट्वादिकमिति योज्यम् । ईश्वरपर्यायकृतसङ्केतज्ञानेन व्यवहारे दृष्टमस्तीति तत्प्रतिपालनपरव्याकरणादिकमप्यदृष्टार्थं भविष्यतीति भावः । ईश्वरादिसङ्केतज्ञानस्यैवादृष्टार्थत्वमप्रामाणिकं येन तत्परिपालनद्वारा व्याकरणाद्यपि तथा स्यादिति भावेनाह ॥ **प्रमाणाभावादिति** ॥ ननु 'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवतीति ब्राह्मणेन । न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द'इत्यादिश्रुत्या । 'यस्तु प्रयुङ्क्ते कुशलो विशेषैः शब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैरित्यादिस्मृत्या च साध्वसाधुशब्दज्ञानप्रयोगयोरर्थानर्थयोरुक्त्या परमेश्वरसङ्केतज्ञानपूर्वकं व्यवहारेऽदृष्टं नान्यथेति परिकल्प्यत इत्यत आह ॥ **श्रुत्यादेरिति** ॥ **चरमभाविनं सहकारिणमुपदेशमिति** ॥ तथाहि वृद्धव्यवहारानन्तरमित्यादिनोक्तवृद्धव्यवहाररूपोपदेशमित्यर्थः ॥ **अतिप्रसङ्ग इति** ॥ दण्डचक्रादिसहकारिसंपत्तिमादाय घटादिकार्यापलापोऽपि स्यात् । क्षितिसलिलादिसहकारिसंपत्तिमादाय बीजस्याङ्कुरजननसामर्थ्यापलापप्रसङ्गात् । अन्त्यन्तन्तुसंयोगसहकार्युपादाय पटापलापोऽपि स्यादित्यर्थः ।

या०— **उतास्मदादीनामिति** ॥ ईश्वरव्यतिरिक्तानामपीत्यर्थः ॥ **त्वदुक्तरीत्येति** ॥ सर्गादिभुवां महर्षिदेवतानामुपदेशादिनैवेत्यर्थः ॥ **अस्मदाद्युपदेश एवेति** ॥ अस्मदादिकृतसङ्केतज्ञापक इति शेषः । देवदत्तपित्रादिवदीश्वरातिरिक्ता महर्ष्यादयः स्वकृतमेव सङ्केतमुपदेशादिना ज्ञापयन्तीत्यस्त्विति भावः ॥ **अस्मदादिभिरिति** ॥ ईश्वरव्यतिरिक्तैर्महर्ष्यादिभिरित्यर्थः ॥ **वृद्धेनेति** ॥ अत्र वृद्धशब्देन प्रथममुपदेशादिना शक्तिज्ञापको भगवानेव विवक्षित इति ज्ञेयम् । ननु साधुभिर्भाषितव्यमिति श्रुत्यादेः का गतिरित्यत आह ॥ **श्रुत्यादेरिति** ॥ **उपदेशादिकमुपादायेति** ॥ अत्र यद्यपि चरमभाविनं सङ्केतमुपादायेत्येव वक्तव्यम् । पूर्वं तथैवाशङ्कितत्वात् । तथाऽप्यनवगतस्य सङ्केतस्यागमकत्वात्तदवगमकमुपदेशादिकमावश्यकमित्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यम् ॥ **अतिप्रसङ्ग इति** ॥ चरमकारणानामन्त्यतन्तुसंयोगादीनामेव पटादिजनकत्वोपपत्तौ तज्जनकतन्त्वादौ पटादिजनकत्वमपि न कल्पनीयं स्यादित्यतिप्रसङ्ग इत्यर्थः ॥

श्री०—ये स्वाभाविकसंबन्धमास्थिषत शब्दार्थयोस्तैरपि तदवगमाय सङ्केतोऽङ्गीकार्यः । तथाच तेनैव प्रयोगादेरुपपत्तौ किं स्वाभाविकसंबन्धेनेति पूर्वं क्षिप्ता यथोक्तं तन्न्यायेनैव परमेश्वरसङ्केतस्यैवावगमाङ्गत्वं यैरङ्गीक्रियते तैरपि तदवगमायेश्वरातिरिक्तानामुपदेशोऽङ्गीकार्यः । तथाच तेनैव सर्वत्र प्रयोगादेरुपपत्तौ किमीश्वरसङ्केतकल्पनयेति वक्तुमाह ॥ **अत्र ब्रूम इत्यादिना** ॥ अवगमोऽर्थावगमः ॥ **अस्मदादीनामिति** ॥ अत्रास्मदादिशब्द ईश्वरातिरिक्तमहर्ष्यादिपरः । एवमुत्तरत्रापि ॥ **कथमिति** ॥ ईश्वरसङ्केतस्य सर्वान्प्रत्यविशिष्टत्वादित्यर्थः ॥ **स्वरूपेणेति** ॥ अगृहीत एवेत्यर्थः ॥ अगृहीतस्यैवेश्वरसङ्केतस्यार्थावगमाङ्गत्वे बाधकमाह ॥ **व्युत्पन्नवदिति** ॥ अन्यथेति शेषः । ईश्वरसङ्केतस्य स्वरूपसतः सत्त्वादित्यर्थः ॥ **उपदेशादिनैवेति** ॥ स्वर्गादिभुवामृष्यादीनामुपदेशादिनैवेत्यर्थः ॥ **समानमिति** ॥ ननु ये स्वाभाविकसंबन्धमास्थिषतेत्यादिना स्वाभाविकसंबन्धपक्षे यद्दूषणमुक्तं तत्परमेश्वरसङ्केतपक्षेऽपि समानमित्यर्थः । शङ्कते ॥ **अस्मदादिभिरिति** ॥ पूर्वतर ईश्वरकृतः ॥ **द्वितीय इति** ॥ न केवलमीश्वरसङ्केत एवावगमाङ्गं किं त्वीश्वरातिरिक्तानामिति पक्ष इत्यर्थः । तदुपपादयति ॥ **व्यवहारमात्रं हीति** ॥ साधुभिर्भाषितव्यमिति वचनात्साधुशब्दव्यवहारमात्रमित्यर्थः ॥ **तच्चेति** ॥ व्याकरणशास्त्रप्रयोजनभूतं व्यवहारमात्रमित्यर्थः ॥ **समानमिति** ॥ ईश्वरतदतिरिक्तकृतयोरुभयोरपि सङ्केतयोर्व्यवहारमात्रस्यैव प्रयोजनत्वेन व्याकरणशास्त्रस्येश्वरातिरिक्तकृतसङ्केतपरिपालनार्थत्वस्यापि प्राप्त्या येषां पदानां येष्वर्थेषु परमेश्वरकृतः समयस्तानि तत्र साधून्यसाधूनि चेतरत्रेति भागाय व्याकरणमर्थवदितियत्परमेश्वरमात्रकृतपरिपालनार्थत्वं व्याकरणशास्त्रस्योक्तं तदयुक्तमित्यर्थः । नन्वस्तु अस्मदाद्युपदेश एव किमदृष्टेश्वरसङ्केतकल्पनयेति समानमिति यदुक्तं तदयुक्तम् । परमेश्वरसङ्केतकरणस्यादृष्टार्थत्वेन स्वाभाविकशक्तिज्ञापकत्वाभावा-

दित्यभिप्रेत्य शङ्कते ॥ **अदृष्टार्थमिति चेदिति** ॥ वृद्धव्यवहारोऽपि गवादिपदानां देवदत्तादिशब्दव-त्सङ्केतपूर्वक एव । तद्वरमस्तु सङ्केत एव कृतमत्र स्वाभाविकसंबन्धेनेति यदुक्तं तद्दूषयति ॥ **किञ्चेति** ॥ **चरमभाविनमिति** ॥ अयं सङ्केत एव केषाञ्चिच्छब्दानामसति स्वाभाविकेऽर्थसंबन्धे न शक्यः, 'निर्दिश्य ह्यर्थं ब्रूयादस्माच्छब्दादयमर्थो बोद्धव्य इति । न च निर्देशोऽसति केषाञ्चिच्छब्दानां स्वाभाविक-संबन्धे सिध्यती'त्युक्तत्वात्; सङ्केतः स्वाभाविकशक्त्यपेक्षया चरमभावीत्यर्थः ॥ **उपदेशादिकमिति** ॥ सहकारिभूतोपदेशादिसिद्धं सङ्केतमित्यर्थः । अज्ञातस्य सङ्केतस्यार्थागमकत्वादुपदेशादेरेव तद्ग्राहकतया सर्गादिभुवामित्यादिना परेणोक्तत्वादुपदेशादिकमित्युक्तम् । वस्तुस्तु चरमभाविनं सङ्केतमित्येव वाच्य-मिति द्रष्टव्यम् ।

च० — साङ्केतिकत्वकल्पेऽपि ऋष्यादिप्रयोगानियमानुपपत्तिं व्याकरणादिनैरर्थक्यं चाभिधित्स-मानो विकल्पयति ॥ **परस्यापीति** ॥ **त्वदुक्तरीत्येति** ॥ स्वर्गादिभुवामित्यादिनेत्यादिः ॥ **अस्मदा-द्युपदेश एवेति** ॥ ज्ञापक इत्युपस्कृतेनान्वेति ॥ **अदृष्टेश्वरेति** ॥ अतीन्द्रियेश्वरेत्यर्थः । परमेश्वरा-दतिरिच्यमानाः महर्ष्यादयः स्वस्वरचितसङ्केतानेव पाणिन्यादिवदुपदिशन्तीत्याशयः । अस्मदादिभि-रीश्वरव्यतिरिक्तैर्महर्ष्यादिभिः । अस्मन्मतेऽपि सार्वत्रिकसङ्केतहेतुतानुपगन्तृमतेऽपि । वृद्धेन प्रथममुप-देष्ट्रा भगवतैव । द्वितीये तु ईश्वरातिरिक्तसङ्केतोऽप्यवगमाङ्गमिति कल्पे तु श्रुत्यादेरिति साधूनेव प्रयुञ्जीत नासाधूनित्याद्यानुपूर्वीकत्वादेरित्यर्थः ॥ **उदासीनत्वादिति** ॥ शक्तिसङ्केतोभयबोधकपदसमभि-व्याहाराभावादिति भावः ॥ **अतिप्रसङ्ग इति** ॥ सन्निकर्षेणेन्द्रियस्य परामर्शेन व्याप्तिधियः पदार्थस्मृत्या पदज्ञानस्यान्यतन्तुसंयोगादिनेव पटाद्युत्पत्तौ तन्त्वादेरपि पटजनकत्वस्याप्यपह्नवप्रसङ्ग इत्यर्थः ।

**सु० — अथौत्पत्तिकशक्तिसद्भावे किं प्रमाणम् । अर्थावबोधस्य स्वरूपसहकारिभ्यां शब्दसङ्केताभ्यामेवोपपत्तेरिति ॥ उच्यते । किं स्वरूपसहकारिव्यतिरिक्तातीन्द्रिया शक्तिः क्वापि नाङ्गीक्रियते । उत शब्द एव ॥ आद्ये वक्ष्यामः । द्वितीयेऽधुनातनास्तावन्न सङ्केतयि-तार इति तवापि संमतम् । न च लोकोत्तरे सङ्केतयितरि प्रमाणमस्ति । तथा च स्वभाव एवायं शब्दानामिति गम्यते । गवादिशब्दाः साङ्केतिकाः शब्दत्वाद्देवदत्तादिशब्दवदिति चेत् । किमत्र साङ्केतिकत्वमात्रं साध्यम् उत सास्नादिमत्यर्थे । आद्ये सिद्धसाधनम् । गुप्तभाषणादौ मया गोशब्दस्य घटेऽपि सङ्केतितत्वात् । द्वितीये व्यभिचारः । न हि सर्वेऽपि शब्दाः सास्नादिमति पिण्डे सङ्केतिता इत्यत्र प्रमाणमस्ति । गोशब्दः सास्नादिमत्यर्थे सङ्केतितः**

**तत्र प्रयुज्यमानशब्दत्वात् गाव्यादिशब्दवदिति चेन्न असाधुशब्दत्वस्योपाधित्वात् । साधनावच्छिन्नसाध्यव्यापकत्वेनाप्युपाधित्वस्य वक्ष्यमाणत्वात् । अन्यथाऽस्मदादिविशेषणप्रक्षेपोऽपि प्रतिज्ञायां प्रसज्येतेति ॥ तदेवं शब्दस्यार्थसंबन्धसंभवान्नाप्रामाण्यम् ।**

न्या० — ननु स्वाभाविकशक्तेः प्रामाणिकत्वे तद्बलाद्वृद्धोपदेशादेस्तज्ज्ञापकत्वकल्पनं श्रुत्यादेरन्यथासिद्धिकल्पनमतिप्रसङ्गोक्तिरुक्तरीत्या बाधकपरिहारश्चोपपद्यते; तदेव तु कथमित्याशङ्कते ॥ **अथेति** ॥ अर्थावबोधान्यथाऽनुपपत्तिमन्यथयति ॥ **अर्थेति** ॥ अतीन्द्रियशक्तिमात्रानभ्युपगमप्रयोजिकायाः स्वरूपसहकारिभ्यामन्यथोपपत्तेरुक्तत्वाच्छब्दतत्सङ्केताभ्यामिति चोक्तेर्विकल्प्य दूषयति ॥ **किमिति** ॥ **आद्ये वक्ष्याम इति** ॥ लिङ्गपादे शक्तिसद्भाव एव तु क्रियादिनित्यता ज्ञेयेत्यनुव्याख्याव्याख्यावसरे स्वरूपसहकारिसमवधानातिरिक्ता शक्तिरेव नास्तीति केचित्तेषां श्रुत्यादिविरोध इत्यादिनेत्यर्थः । द्वितीये तु शब्दस्यास्याबोधकत्वासंबद्धबोधकत्वानुपपत्त्या सङ्केतस्याप्यनुपपत्तौ परिशेषात्स्वाभाविकशक्तिसिद्धिरित्याह ॥ **द्वितीये चेति** ॥ ननु सर्वविप्रतिपन्नशब्दानां पक्षीकारात्कुत्र व्यभिचार इत्यतो घटादिशब्दानां सास्नादिमत्यर्थे साङ्केतिकत्वस्य तत्कार्यादर्शनेनाकल्पनीयत्वात् । तद्व्यतिरिक्तानां पक्षीकारे तेषां सास्नादिमत्यर्थे साङ्केतिकत्वस्य परेणाप्यनभ्युपगमात्तत्रैव व्यभिचार इत्याशयेन तत्र साध्याभावं व्युत्पादयति ॥ **न हीति** ॥ तत्तच्छब्दानामेव पूर्वत्रेवात्रापि पक्षत्वे व्यभिचारनिरासाय हेतुविशेषणं वक्तुं प्रयोगान्तरं दर्शयति ॥ **गोशब्द इति** ॥ सास्नादिमत्यर्थे सङ्केतितचेष्टाविशेषे गुप्तभाषादौ तत्र सङ्केतितघटादिशब्दे च साध्याव्यापकत्वादाह ॥ **साधनेति** ॥ ननु साधनावच्छिन्नसाध्यव्यापकस्य नोपाधित्वम् । उपाधेः पक्षादिप्रविभागोत्तरकालं प्रतिपक्षोन्नायकत्वेनैव दूषकतयोपाध्यभावेन साधुशब्दत्वेन सास्नादिमत्यर्थे साङ्केतिकत्वाभावे साध्ये गुप्तभाषणादौ गवि सङ्केतिते घटादिशब्दे व्यभिचारापत्त्या दूषकताबीजासंभवादित्यत उक्तं वक्ष्यमाणत्वादिति । यदवच्छिन्नसाध्ये य उपाधिस्तद्विशेषणावच्छिन्नसाध्याभावस्योपाध्यभावेन साधनसौलभ्याद्यथा समवायः समवेतः संबन्धत्वात्संयोगवदित्यत्र साधनावच्छिन्नसाध्यव्यापकस्य कृतकत्वस्योपाधित्वात्समवायः संबन्धत्वे सति समवेतत्वेन हीनोऽकार्यत्वादिति साधनं तथा गवादिशब्दाः सास्नादिमत्यर्थे प्रयुज्यमानत्वे सति तत्र सङ्केतितानां साधुशब्दत्वादिति प्रकृतेऽपि प्रयोगसंभवात् । न च साध्ये विशेषणवैयर्थ्यम् । शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादित्यादाविव व्यभिचारवारकतया सार्थक्यादित्यर्थस्य युक्तिपादे साध्यव्यापकवैलोम्यमव्याप्तिरित्यनुव्याख्याव्याख्यावसरे वक्ष्यमाणत्वादित्यर्थः । न चैवमुपाध्यभावेनावच्छिन्नसाध्याभावसिद्धावपि तस्यावच्छेदकाभावेनाप्युपपत्त्या पक्षे न शुद्धसाध्याभावसिद्धिरिति वाच्यम् । अवच्छेदकी-

भूततत्रप्रयुज्यमानत्वाभावस्य पक्षे बाधिततया साध्यरूपविशेष्याभावमादायैव साध्यपर्यवसाने वक्तव्ये पर्यवसानगत्या शुद्धसाध्याभावस्यैव सिद्धेरित्याशयः । एवं सत्यपि वैयात्यमात्रेण यः शुद्धसाध्यव्यापकस्यैवोपाधित्वं मन्यते तं प्रत्याभाससाम्यमाह ॥ **अन्यथेति** ॥ तत्रागत्यैतादृशोपाधेरेव स्वीकर्तव्यत्वादित्याशयः ।

**स० — किं स्वरूपसहकारिव्यतिरिक्ता शक्तिः क्वापि नाङ्गीक्रियते उत शब्द एव । आद्ये वक्ष्याम इति** ॥ शक्तिसद्भाव एव तु क्रियादिनित्यताङ्गेयेत्यनुव्याख्यानव्याख्यानावसर इति शेषः ॥ **असाधुशब्दत्वस्येति** ॥ धेन्वादिशब्दानां पक्षतुल्यत्वान्न तत्र साध्याव्यापकत्वम् । यादृशतादृशसाधुत्वस्य पक्षेऽपि सत्त्वेन साधनव्यापकत्वपरिहाराय शब्दग्रहणम् । साक्षादिमत्यर्थे सङ्केतितचेष्टाविशेषे साध्याव्यापकत्वमित्यत आह ॥ **साधनावच्छिन्नेति** ॥ प्रयोगस्य शब्दधर्मत्वान्नोक्तदोषः । ननु तथापि साक्षादिमत्यर्थे सङ्केतितघटशब्दादौ साध्याव्यापकत्वम् । न च तस्यापि साङ्केतिकत्वादसाधुशब्दत्वमस्त्येवेति वाच्यम् । तथात्वे गवादिशब्दानामपि सङ्केतितत्वपक्षे तथात्वापत्त्या साधनव्यापकत्वप्रसङ्गादिति चेत् । न । गवादिशब्दानां साक्षादिमत्यर्थे परमेश्वरेण सङ्केतितत्वेन साधुत्वेऽपि घटशब्दस्य तत्रास्मदादिभिः सङ्केतितत्वेनासाधुशब्दत्वात्साध्यव्यापकत्वोपपत्तेः । केचित्तु । उभयसंप्रतिपन्नसाधुत्वोपेतशब्दभिन्नशब्दत्वस्योपाधित्वात् । सङ्केतितघटादिशब्दानां मन्मते साधुत्वानङ्गीकारादिति भावः । इत्याहुः । शुद्धसाध्यव्यापक एवोपाधिरित्याशङ्क्याह ॥ **अन्यथेति** ॥ ईश्वरसङ्केतवत् असत्सङ्केतोऽपि तेनैव साध्यः स्यात् । उपाधेः त्वयैव परिहृतत्वेन शङ्कितुमशक्यत्वात् । दोषान्तरस्य चाभावात् । भावे वा ईश्वरसङ्केतसाधनेप्यविशेषादिति भावः ।

**प०** — ननु घटपटादि कार्यं प्रमितमिति नापलापार्हम्; शक्तिर्न प्रमितेति शङ्कते ॥ **अथेति** । **वक्ष्याम इति** ॥ लिङ्गपादे । 'इति पैङ्गिश्रुतिः प्राह शक्तिसद्भाव एव त्वि'त्याद्यनुव्याख्याव्याख्यावसर इति भावः । गोपिण्डे केनचित्सङ्केतितचेष्टाविशेषे साध्याव्यापकत्वादाह ॥ **साधनावच्छिन्नेति** ॥ **वक्ष्यमाणत्वादिति** ॥ द्वितीयाद्यपादे 'न विलक्षणत्वादि'तिनये 'साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य च' इत्येतद्व्याख्यावसर इति भावः ॥ **अन्यथेति** ॥ साङ्केतिकत्वस्यासाधुशब्दत्वनिबन्धनत्वाभावे गोशब्दः साक्षादिमत्यर्थेऽस्मदादिभिः सङ्केतितः तत्र प्रयुज्यमानशब्दत्वादित्यपि प्रयोगप्रसङ्गेन त्वदभिमतपारमेश्वरसङ्केत इत्यस्यासिद्धिप्रसङ्गादिति भावः । प्रपञ्चितमेतत्सङ्केतपक्षखण्डनं तर्कताण्डवे द्वितीयपरिच्छेदे ।

या०— **वक्ष्याम इति** ॥ लिङ्गपाद इति शेषः । लोकोत्तरसङ्केतयितृसद्भावे पूर्वपक्षावसरे वृद्धव्यवहारोऽपीत्यादिनोक्तमनुमानमेव मानमाशङ्कते ॥ **गवादिशब्दा इति** ॥ प्रसिद्धबाधसहकृतं पुनरनुसन्धीयमानमिदमेवानुमानमप्रसिद्धेश्वरकृतसङ्केतमादाय पर्यवस्यतीत्याशयः ॥ **द्वितीये व्यभिचार इति** ॥ घटादिशब्देष्विति शेषः । ननु तेऽपि कदाचित्केनचित्तत्र सास्नादिमति पिण्डे सङ्केतिता एवेत्यत आह ॥ **न हीति** ॥ ननु प्रतिज्ञायां बहुवचनश्रवणाद्घटादिशब्दानामपि पक्षत्वप्रतीत्या कथं तत्र व्यभिचारोद्भावनमिति चेन्न । घटादिशब्देष्वेवमेव प्रत्येकं तेषु तेष्वर्थेषु साङ्केतिकत्वं साधनीयमिति सूचयितुमेव बहुवचनं न तु तेषामप्यत्र पक्षत्वलाभायेत्याशयात् । न चैवमुत्तरानुमानपौनरुक्त्यम् । हेतुभेदात् ॥ **तत्र प्रयुज्यमानेति** ॥ तथा च घटादिशब्देषु व्यभिचार इति भावः । सास्नादिमदित्यर्थे सङ्केतितचेष्टाविशेषे साध्याव्यापकत्वमित्यत आह ॥ **साधनावच्छिन्नेति** ॥ **वक्ष्यमाणत्वादिति** ॥ युक्तिपाद इति शेषः । शुद्धसाध्यव्यापकस्यैवोपाधित्वं न साधनावच्छिन्नसाध्यव्यापकस्येत्यभिमाने बाधकमाह ॥ **अन्यथाऽस्मदादीति** ॥ न चात्र बाधः । ईश्वरातिरिक्तस्याप्रसिद्धस्यैव कस्यचित्सङ्केतयितुः सिद्धिप्रसक्त्या भवदभिलषितेश्वरसङ्केतसिद्धिर्न भविष्यति । उपाधिभयस्य त्वयैव त्याजितत्वात् । दोषान्तरस्य चाभावादित्याशयात् ॥

श्री०— नन्वर्थावबोधान्यथाऽनुपपत्तिरेव शक्तिसद्भावे प्रमाणमित्यतोऽर्थापत्तेरन्यथैवोपपत्तिमाह ॥ **अर्थावबोधस्येति** ॥ शब्दस्वरूपसहकारिभूतसङ्केताभ्यामित्यर्थः ॥ **क्वापीति** ॥ वन्ह्यादावपीत्यर्थः । वन्ह्यादिस्वरूपकरतलानलसंयोगरूपसहकारिभ्यामेव कार्योपपत्तेर्वन्ह्यादावपि दाहानुकूलातीन्द्रियाद्रिशिष्टधर्मरूपा शक्तिर्नाङ्गीक्रियत इति भावः । सहकार्यभावमुपपादयति ॥ **अधुनातना इति** ॥ **तथा चेति** ॥ शब्दानां सकाशाज्जायमानोऽयमर्थावबोधः स्वभाव एव । शब्दानामर्थावबोधजनकत्वरूपा शक्तिः शब्दस्वरूपमेवेति यावदिति गम्यत इत्यर्थः ॥ **अन्यथेति** ॥ अवच्छिन्नसाध्यव्यापकस्योपाधित्वमनङ्गीकृत्यानुमानस्य साधुत्वाङ्गीकार इत्यर्थः ॥ **अस्मदादीति** ॥ गोशब्दः सास्नादिमत्यर्थेऽस्मदादिभिः सङ्केतित इत्यपि प्रतिज्ञायां विशेषणप्रक्षेपसंभवान्नानेनानुमानेनेश्वररूपलोकोत्तरसङ्केतयितृपुरुषसिद्धिरिति भावः ॥ **अर्थसंबन्धेति** ॥ स्वाभाविकशक्त्यैवार्थबोधकत्वसंभवादित्यर्थः ॥

च०— **वक्ष्याम इति** ॥ लिङ्गचरण इत्यादिः । प्रसक्तानामात्मबोधकत्वासंबद्धबोधकत्वसङ्केतकल्पनाप्रत्याख्याने सति नैसर्गिकी शक्तिरेवासैत्सीदित्याह ॥ **द्वितीये चेति** ॥ पूर्ववादिमतप्रदर्शनावसरे वृद्धव्यवहारोऽपीत्यादिनाऽभिहितं लोकोत्तरसङ्केतयितृपर्यवसायकमनुमानमाशङ्कते ॥ **गवा-**

दिशब्दा इति ॥ लाघवप्रतिसंधानदशायां व्यापकतानवच्छेदकरूपेणापि भानं यथोपेतं तद्वदभौमवह्नि-शून्यस्तार्णदहनशून्यो वा पर्वत इत्यादिबाधप्रतिसन्धानदशायां वह्नित्वावच्छिन्ननिरूपितव्याप्त्यवच्छिन्न-हेतुवृत्तिप्रकारताशालिपरामर्शादपि धूमव्यापकताऽनवच्छेदकीभूतभौमवह्नित्वतार्णदहनत्वाद्यवच्छिन्नविधेय-ताकानुमितेरप्युपगततया प्रकृते तादृशबाधप्रतिसंहितिसहकारादलौकिकेश्वरसङ्केतविषयत्वमवगाहमानैवानु-मितिरुदेश्यतीति भावः ॥ **द्वितीये व्यभिचार इति** ॥ घटादिशब्देष्वित्यादिः घटादिशब्देऽनैकान्त्य-विधूननाय लक्षणातिसन्धानाभावकालीनसास्नादिमद्व्यक्तिविषयकान्वयधीजनकत्वतात्पर्यकं तत्र प्रयुज्य-मानेतिपदं हेतुवाक्यघटकतयोपात्तम् । सास्नादिमद्व्यक्तिसङ्केतितचेष्टाविशेषे साध्याव्यापकतया नोपाधित्व-मित्यत आह ॥ **साधनावच्छिन्नेति** ॥ **वक्ष्यमाणत्वादिति** ॥ युक्तिपाद इत्यादिः । शुद्धसाध्य-व्यापकस्यैवोपाधित्वं न किञ्चिदवच्छिन्नतद्व्यापकस्येत्यभिहितावाभाससाम्यरूपं बाधकमभिधत्ते ॥ **अन्यथा अस्मदादीति** ॥ तत्रानापत्त्यैतादृशोपाधेरेव स्वीकर्तव्यत्वादित्याशयात् । साङ्केतिकत्वस्य साधुशब्द-निबन्धनत्वाभावे गोशब्दः सास्नादिमत्यर्थेऽस्मदादिभिः सङ्केतितस्तत्र प्रयुज्यमानशब्दत्वादित्यपि प्रयोग-प्रसङ्गेन त्वदभिमतपारमेश्वरसङ्केत इत्यस्य सिद्धिप्रसङ्गादिति भाव इत्यपि स्थितम् ।

सु० — यत्पुनरुक्तमाप्तानाप्तप्रयुक्तयोरित्यादि । तदप्यसारम् । प्रत्यक्षवदेवोपपत्तेः । चक्षुरादिप्रत्यक्षं हि क्वचिद्यथार्थज्ञानं क्वचिदयथार्थज्ञानं जनयदपि प्रमाणमङ्गीक्रियत एव । दोषसदसद्भावाभ्यां तत्र भेद इति चेत्, तर्ह्यत्राप्यनाप्तवक्तृसदसद्भावाभ्यां भेदो भविष्यति । वक्ता वाक्योच्चारण एवोपयुज्यत इति चेन्न । यतस्तदेवाविषये प्रयुञ्जानो दुष्टं करोति निशा तमसिमाकाशे प्रयुञ्जान इव । अन्यथाऽनुमानमप्यप्रमाणं स्यात् । कृतकत्वं हि शब्दानित्यत्व-साधने साध्वसाधु चान्यत्वयत्नविनोऽनुष्णत्वसाधने । तत्कस्माद्विशेषात् । व्याप्तिपक्षधर्मता-भावाभावाभ्यामिति चेन्न । कालातीतत्वस्य पृथग्दूषणताया वक्ष्यमाणत्वात् । अतोऽविषयवृत्ति-त्वतदभावरूप एव विशेषो वक्तव्यः । स च समानः शब्देऽपीति । तदिदमुक्तम् ॥ प्रत्यक्ष-वच्चेति ॥

एतद्दोषभयात्केचित् शब्दस्यानुमानेऽन्तर्भावमिच्छन्ति । अपरे पुनरपौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य वेदस्य शब्दतयैव प्रामाण्यम्; पुरुषवचसां त्वनुमानतयेत्यातिष्ठन्ते ॥ तदुभयमप्य(त एवा)युक्तम् । किन्तु प्रत्यक्षवदनुमानवच्च शब्दमात्रस्यापि प्रामाण्यं स्वतः स्वेनैव रूपेण न त्वनुमानत्वेन । अत एव श्रुतेः प्रकृतत्वेऽपि सर्वशब्दपरिग्रहायागमस्येत्युक्तम् । हिशब्दस्तत्र प्रमाणप्रसिद्धिद्योतकः । तच्चोत्तरत्र वक्ष्यामः ॥

वा०— वाक्ये स्वाभाविकदोषाणामभावाद्वक्तृपुरुष एव स्वाज्ञानादिवशादविषये वाक्यं प्रयुञ्जानस्तत्राविषयवृत्तित्वरूपं दोषं संपादयतीति युक्तं तस्यानाप्तवक्तृकत्वेनाप्रामाण्यमित्याह ॥ **यत इति** ॥ अन्यथाऽविषयवृत्तित्वस्यादोषत्वे । अविषयवृत्तित्वस्य दोषत्वं वदता व्याप्त्यसिद्ध्योर्दोषत्वस्य स्वीकार्यत्वात्तेनैवोपपत्तावविषयवृत्तित्वस्य तत्रापि न दोषत्वमित्याशयेन शङ्कते ॥ **व्याप्तीति** ॥ अत्र वक्तव्यम् । अविषयवृत्तित्वं तत्र नास्त्येव वा विद्यमानमप्यन्यथासिद्धतया न दोष इति वा । नाद्यः सर्वन्यायानां धर्म्यादिग्राहकत्वेन प्रत्यक्षागममूलत्वादुपजीव्यप्रबलप्रत्यक्षादिविरुद्धन्यायाभासानां तदपहृतविषयेत्वेनाविषये प्रमाजननासामर्थ्येनाविषयवृत्तिताया दोषत्वस्यावश्यकत्वात् । न द्वितीयः । सर्वं तेजोऽनुष्णं कृतकत्वादित्यादौ पक्षादन्यत्र व्यभिचाराभावेनासिद्ध्यभावेन च दोषान्तराप्राप्तेः । पक्षे च व्यभिचाराप्रसक्तेः पक्ष एव बाधेन साध्याभावस्य निश्चयात्पक्षस्यैव विपक्षत्वात्तस्यैव विपक्षत्वात्तत्रैव व्यभिचारेण व्याप्तिभङ्गस्य चोपजीव्येनाविषयवृत्तित्वेनैवानुमानस्य दुष्टत्वे जघन्यप्रतिपत्तिकस्याननुसरणीयत्वात् । एवं च व्याप्तिग्रहणसमये हेतुमति क्वचित्साध्याभावोपस्थितौ तदानीं विषयस्य बुद्धावनारोहाद्व्याप्तिभङ्गस्य पुरःस्फूर्तिकत्वाच्च । दोषत्वेऽपि परार्थप्रयोगोत्तरमविषयवृत्तित्वमेव दोष इति कालातीतस्य पृथग्दूषणताया भक्तिपादे 'प्रत्यक्षागममूलास्तु न्यायाः सर्वे भवन्ति हि । न्यायाभासा अमूलाःस्युर्न्यायस्यान्यस्य तौ पुनः । अदृष्टे व्यभिचारे तु साधकं तदिति स्फुटम् । ज्ञायते साक्षिणैवाद्धा मानबाधे न तद्भवेत् ।' इत्यनुव्याख्याव्याख्यावसरे वक्ष्यमाणत्वादनुमानेऽविषयवृत्तित्वं दोष एवेत्याह ॥ **कालातीतताया इति** ॥

अत्र स्वत एवेत्यागमस्येति चोक्त्या व्यावर्तितमतद्वयनिरासेऽप्युक्तयुक्तिमेव योजयितुं तन्मतद्वयमुपन्यस्यति ॥ **एतदिति** ॥ **अत एवेति** ॥ यद्दोषभयादागमत्वेन सर्वागमस्य च प्रामाण्यत्यागस्तद्दोषाणां परिहृतत्वादेवेत्यर्थः । न वाक्यं वाक्यार्थेऽनुमानम् । वाक्यवाक्यार्थयोर्देशतः कालतश्चान्वयव्यतिरेकाभावात् । वाक्यं वाक्यार्थवद्वाक्यत्वादित्यत्र वाक्यार्थमात्रसाधने विशेषप्रतिपत्तेर्निर्निबन्धनत्वापत्त्या विशेषसाधने च पूर्वं विशेषप्रतिपत्तौ वाक्यवैयर्थ्यापत्त्या तदप्रतिपत्तौ चाप्रसिद्धविशेषणतापत्त्या विशेषस्यान्यत्राभावेनानैकान्तिकत्वान्मतुबर्थानुपपत्तेश्च नायमनुमानप्रकारो युक्तः । विमतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाण्याकाङ्क्षादिमत्पदकदम्बकत्वादिति च न । विनाऽप्यन्वयप्रमितिं दैवात्प्रयुक्तेष्वाकाङ्क्षादिमत्स्वनैकान्त्यात् । आप्तप्रयुक्तत्वेन हेतुविशेषणे च साध्यार्थस्य हेतुप्रवेशापत्तेः । पुरुषविशेषप्रयुक्तत्वस्य चाध्यापकप्रयुक्तेऽनैकान्त्यात् । मूलप्रमाणानुमाने चापौरुषेये वेदेऽनुपपत्तेरित्यादिनाऽऽगमस्यानुमानत्वेन प्रमाणत्वाभावस्य व्युत्पादयिष्यमाणतया पदानामन्विताभिधाने शक्तेः पदानामेव च वाक्यत्वाद्वैदिकपदानामेव च लौकिकत्वाभावे लोकवेदाधिकरणविरोधापत्त्या वक्तुः पदज्ञान एवोपयोगित्वेन लोकवेदयोः प्रकारभेदानुपपत्त्यादिना वेदस्यागमत्वेन पौरुषेयस्यानुमानत्वेन प्रामाण्यमिति प्रकारस्य

निरस्यमानतया च पर्यवसानगत्या सर्वागमस्यागमत्वेन प्रामाण्यसिद्धिरित्याशयेन हिशब्दं तदर्थतया योजयति ॥ **हिशब्द इति** ॥ युक्तिपादे भगवत्पादोदितप्रत्यक्षानुमानादिव्युत्पादनावसरेऽवसितमनुमानं निर्दोषं वाक्यमित्यादिना प्रमाणं व्युत्पादयिष्याम इत्याशयेनाह ॥ **तच्चेति** ॥

स० — **तच्चोत्तरत्र वक्ष्याम इति** ॥ एतदपि गौरव कल्पनेऽन्यथेत्येतद्व्याख्यानावसर एवेति द्रष्टव्यम् ।

प० — **यत्पुनरुक्तमिति** ॥ प्रत्यक्षवच्चेत्यादेरवतारिकायामुक्तमित्यर्थः ॥ **अन्यथेति** ॥ विषयवृत्तित्वतदभावाभ्यां प्रामाण्याप्रामाण्यव्यवस्थाऽनङ्गीकार इत्यर्थः । तदेव व्यनक्ति ॥ **कृतकत्वं हीति** ॥ **अग्नीति** ॥ अग्निरूपस्थूलावयविन इत्यर्थः । परमाण्वादेरनुष्णतासाधने बाधस्याप्रसक्तेरेवमुक्तम् । ॥ **व्याप्तीति** ॥ कृतकत्वं चानुष्णत्वेन न व्याप्तं नापि संदिग्धसाध्यवत्पक्षवृत्तित्वरूपपक्षधर्मतोपेतमिति । अनुष्णत्वसाधने तदुभयहीनत्वात् । शब्दानित्यत्वसाधने तदुभयवत्त्वात्साधुत्वादिकं तस्य सेत्स्यतीति भावः । एवं हि अविषयवृत्तित्वरूपकालातीतत्वं नाम दोषो न स्यात् । अस्तु को दोष इत्यत आह ॥ ॥ **कालातीतत्वस्येति** ॥ **वक्ष्यमाणत्वादिति** ॥ युक्तिपादे 'विरोधोऽपि त्रिधैव स्यात्प्रतिज्ञार्थविरुद्धते'-त्येतद्व्याख्यावसर इति भावः ॥ **प्रत्यक्षवच्चेतीति** ॥ अनुमानवच्चेति चार्थः ॥ **एतद्दोषेति** ॥ आप्तानाप्तवाक्ययोर्विशेषानुपलम्भेन प्राप्ताप्रामाण्यदोषभयादित्यर्थः ॥ **तच्चोत्तरत्र वक्ष्याम इति** ॥ गौरवं कल्पनेऽन्यथे'त्यस्य चतुर्थव्याख्यावसरे केचिदाहुरित्यादिग्रन्थेनेति भावः । न विलक्षणत्वनये स्मृतिप्रामाण्यप्रस्तावे 'स्मृतिः प्रत्यक्षमैतिह्यमनुमे'ति श्रुत्यादेः सुधायां वक्ष्यमाणत्वादिति भावः ॥

या० — **वक्ष्यमाणत्वादिति** ॥ युक्तिभक्तिपादयोरिति शेषः ॥ **वक्ष्याम इति** ॥ युक्तिपाद इति शेषः ॥

श्री० — **अग्न्यवयविन इति** ॥ अग्निरूपावयविन इत्यर्थः ॥ **व्याप्तिपक्षधर्मताभावाभावाभ्यामिति** ॥ कृतकत्वेऽनित्यत्वनिरूपिता व्याप्तिरस्ति पक्षधर्मता चास्ति । कृतकत्वे पक्षधर्मतासद्भावेऽपि नानुष्णत्वनिरूपिता व्याप्तिरस्ति । अग्न्यवयवे द्व्यणुके व्यभिचारापत्तेरित्यर्थः ॥ **स चेति** ॥ उक्तरूपो विशेष इत्यर्थः ॥ **शब्देऽपीति** ॥ वक्ता तदेव वाक्यमविषये प्रयुञ्जानो दुष्टं करोतीति भावः ॥ **एतद्दोषभयादिति** ॥ आप्तानाप्तप्रणीतयोर्वाक्ययोरस्ति कश्चिद्विशेषो न वेत्युक्तदोषभयादित्यर्थः ॥ **अनुमानेऽन्तर्भावमिति** ॥ एतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि । आकाङ्क्षादिमत्पदकदम्बकत्वात् । गामानय दण्डेनेत्यादिपदकदम्बकवदित्यनुमानेन वक्तृज्ञानावच्छेदकतया संसर्गस्य सिद्धेरनुमानविधयैव प्रामाण्यं न शब्दत्वेनेत्यनुमानेऽन्तर्भावमिच्छन्तीत्यर्थः ॥ **शब्दतयैव प्रामाण्यमिति** ॥

वेदस्यापौरुषेयतया वक्तुरेवाभावेनोक्तानुमानाद्वक्तृज्ञानावच्छेदकतया संसर्गसिद्धिः । तत्र वक्तुं न शक्यत इत्यर्थः ॥ **स्वेनैव रूपेणेति** ॥ शब्दत्वेनैवेत्यर्थः ।

च० — **वक्ष्यमाणत्वादिति** ॥ युक्तिभक्तिपादयोरित्यादिः ॥ **वक्ष्याम इति** ॥ युक्तिपाद इत्यादिः ।

**सु० – ननु तथाऽपि वेदस्य प्रामाण्यं नोपपद्यते । अनृतव्याघातपुनरुक्तदोषात् ॥ तथाहि ॥ अनृतमप्रमाणं दृष्टम् । यथा विप्रलम्भकवाक्यम् । अनृतश्च वेदः पुत्रकामेष्टयनुष्ठानेऽपि फलानुपलब्धेः ॥ व्याहतं चाप्रमाणम् । यथोन्मत्तवाक्यम् । व्याहतश्चायमतिरात्रे षोळशिनं गृह्णाति, नातिरात्रे षोळशिनं गृह्णाति; उदिते जुहोति, अनुदिते जुहोतीत्यादि ॥ पुनरुक्तं चाप्रमाणम् । पुनरुक्तिश्च वेदे त्रिः प्रथमामन्वाहेत्यादिदर्शनादिति ॥ तदिदमप्ययुक्तम् ।**

**तथा हि । किं वेदमात्रं पक्षीकृत्यैतैर्हेतुभिरप्रामाण्यं साध्यते उत तदेकदेशम् । नाद्यः। यथा कस्यचित्प्रत्यक्षस्यानुमानस्य वाऽनृतत्वादौ सत्यप्यन्यस्य प्रामाण्यमेवं वेदस्यानृतादिभागपरिहारेण प्रामाण्योपपत्तेः । अन्यथा हेतूनां भागासिद्धिप्रसङ्गात् । द्वितीये त्वास्तां विप्रतिपन्नो वेदभागः । संप्रतिपन्नवेदभागमीमांसा कथमनुपपन्ना ॥ अथ वेदत्वात्तस्यापि वेदभागस्याप्रामाण्यं साधयामीति मन्यसे । तन्न । यथा हि कस्यचित्प्रत्यक्षस्यानुमानस्य वाऽप्रामाण्येऽप्यन्यस्य प्रामाण्यं न प्रत्यक्षत्वादिमात्रेण विहन्यते; तथा वेदस्यापि । अन्यथा सर्वप्रत्यक्षानुमानाविषयप्रसङ्गः ।**

वा० — वेदप्रामाण्यं विशेषयुक्त्याऽऽक्षिपतोऽपीदमेवानुव्याख्यानमुत्तरमित्याशयेन तदाक्षेपप्रकारमनुवदति ॥ **नन्विति** ॥ **तथाऽपीति** ॥ शब्दस्य प्रमाणत्वोपपादनेन तदप्रामाण्यप्रयुक्ताप्रामाण्यशङ्कानिरसनेऽपीत्यर्थः । प्रामाण्यमविपरीतार्थप्रतिपादकत्वम् । अनृतत्वमयथाभिधानम् । विरुद्धार्थोपस्थापकत्वेन पदयोर्वाक्ययोर्वा सहासंभवो व्याघातः । पूर्वोक्ताभिधानं पुनरुक्तं प्रत्येकं चैतेषां हेतुत्वम् । एकवचनं चैकार्थसाधकत्वेन । तत्त्वनिर्णयटीकायां निरर्थकत्वादीनामन्येषामप्रामाण्यहेतुतयोपादानेप्यत्रानृतत्वादीनां त्रयाणामेवोपादानं तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्य इति गौतमसूत्रे त्रयाणामेवोपादानाद्वा निरर्थकत्वस्य व्याघातनिरासकेणापाततः सर्वथा वेति विकल्पनिरासकन्यायेनापाततो नैरर्थक्यमनैकान्तिकं शक्तितात्पर्यापरिज्ञानादर्थाप्रतिपत्तेः सर्वथा नैरर्थक्यमसिद्धमित्येवंरूपेण नैरर्थक्यस्यानृतत्वनिरासकन्यायेन प्रमाणान्तरविसंवादस्य पौनरुक्त्यनिरासकन्यायेन च प्रमाणान्तरसिद्धार्थत्वस्य सुपरि-

हारत्वात्संवादराहित्यस्य चाविद्धत्वादपूर्वतासंपादकत्वेनादोषत्वाच्च पृथगुपादानस्यानावश्यकत्वाद्वा युक्तं तत्त्वनिर्णयटीकायां तु स्पष्टत्वाय तदुपादानमिति । अत एव तत्रानृतत्वादिदोषपरिहारातिदेशादिना नैरर्थक्यादिनिरास इति द्रष्टव्यम् । व्याप्तिपक्षधर्मता शून्यत्वान्नैतेषामप्रामाण्यहेतुत्वमित्यत आह ॥ **तथाऽपीति** ॥

बौद्धमते उदाहरणोपनययोर्द्वयोरेवावयवत्वात्तथैवोदाहरति ॥ **अनृतमित्यादिना** ॥ वेदः पुत्रकामः पुत्रेष्ट्या यजेतेत्यादिः ॥ **अतिरात्र इत्यादि** ॥ ज्योतिष्टोमसंस्थाविशेषोऽतिरात्रः । षोडशी ग्रहविशेषः । तत्र पूर्ववाक्यविहितं ग्रहणमुत्तरवाक्ये प्रतिषिध्यते । उपदेशातिदेशाभ्यां सोमे आज्यभागप्राप्तेरभावेन प्रतिषेधपर्युदासयोरसंभवात्सोमस्य यथाज्यभागौ न कर्तव्यौ तथा पशावपीति न सोम इत्यस्य न पशावित्येतदर्थवादत्वेऽपि प्रकृते पूर्ववाक्येनैव प्राप्त्याऽप्राप्तेरभावादप्राप्तविषयकविधेरेवार्थवादत्वेन नातिरात्र इत्यस्य नार्थवादता । सामान्यविषये विधौ विशेषविषयो नञ पर्युदासरूपेण विधिवाक्यशेष इति यजतिषु येयजामहङ्करोति नानुयाजेषु येयजामहङ्करोतीत्यादावनुयाजव्यतिरिक्तयजतिषु येयजामहङ्करोतीत्यर्थनिष्पत्त्याऽनुयाजेषु येयजामहस्याविहितत्वादेव विहितप्रतिषेधत्वाभावेन नानुयाजेष्वित्यस्य पर्युदासत्वेऽपि प्रकृते विधिनिषेधयोरुभयोरपि विशेषविषयकत्वेनातिरात्रव्यतिरिक्तेऽतिरात्रे षोडशिनं गृह्णातीत्यर्थानुपपत्त्या पर्युदासासंभवात्पूर्ववाक्यविहितप्रतिषेधरूपत्वमेव नातिरात्र इत्यस्य वक्तव्यं तथाच व्याहतिरिति भावः । विधिनिषेधयोर्व्याघातमुदाहृत्य विध्योरेव व्याघातमुदाहरति ॥ **उदित इति** ॥ अग्निहोत्रं जुहोतीति वाक्यविहितहोमानुवादेनैकं वाक्यमुदितं कालं विधत्ते । अपरमनुदितम् । न चैक एव होमस्तदा तदशक्यः कर्तुम् । न च कालरूपगुणानुरोधेन प्रधानीभूतहोमानुवृत्तिर्युक्ता । न चोदितादिवाक्ये होमाभ्यासः श्रूयते । अतः परस्परव्याघातादप्रामाण्यमेवेति । अत्र वात्स्यायनीयभाष्ये उदिते होतव्यमनुदिते होतव्यं समयाध्युषिते होतव्यमिति विधाय श्यामोऽस्याहुतिमभ्यवहरति य उदिते जुहोति शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति श्यामशबलौ वास्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोतीति वेदः स्वयमेव व्याहरतीत्युदितहोमादिविधिवाक्यानां निन्दाभिर्व्याघात इत्युक्तम् । तद्वार्तिके चाग्निहोत्रं जुहोतीति विधिवाक्यस्योदितादिहोमकालनिन्दावाक्यैर्व्याघातः । उदितादिहोमकालानां निन्दया प्रतिषेधादन्यकालस्य चाभावादित्युक्तम् । तदुभयानुसारेणादिपदेन निन्दावाक्यानामग्निहोत्रविधायकवाक्यस्य च ग्रहणम् । परिहारदशायां वाक्यद्वयग्रहणेन विधिनिन्दावाक्यद्वयग्रहणं व्याख्येयम् । एवं चातिरात्र इति श्रौतविधिनिषेधयोरुदाहरणम् । उदित इति तु निन्दायाः प्रतिषेधव्याप्तत्वाद्विधिनिन्दालैङ्गिकप्रतिषेधयोरुदाहरणमिति द्रष्टव्यम् । यद्वोदितानुदितवाक्ययोर्विरोधत्वेऽप्युक्तरीत्या साक्षाद्व्याघातसंभवे तद्भाष्यकारीयं विधिनिन्दालैङ्गिकप्रतिषेधयोर्व्याघातव्युत्पादनमयुक्तम् । वार्तिककारीयं

तद्व्युत्पादनं त्वत्यन्तायुक्तम् । उदितादिकालानां निन्दया प्रतिषेधेऽपि मध्याह्नापराह्णसायाह्नादिकालाना-मप्रतिषिद्धत्वेन नाग्निहोत्रविधिवाक्यस्य कालविशेषनिषेधपरवाक्यैर्व्याघातः । न चोदयानन्तरभाविकालस्यै-वोदितकालत्वान्मध्याह्नादीनामप्युदितकालत्वेन प्रतिषेधविषयत्वमेवेति वाच्यम् । मध्याह्नादिषूदितव्यव-हाराभावेनोदयाव्यवहितोत्तरकालस्यैवोदितशब्देनोक्ततया तेषु प्रतिषेधाप्रसक्तेः । एवं च पक्षद्वयस्यायुक्त-त्वादेवोक्तरीत्या व्याघातोपपादनमभिप्रेत्योदितानुदितवाक्ययोरेवोपादानमिति द्रष्टव्यम् । आदिपदेन चैवंजातीयकवाक्यान्तरस्याकाशादिसादित्वानादित्वप्रतिपादकवाक्यान्तरस्योपादानम् । अत एव च वक्ष्यति ॥ यथा चासिद्धिस्तथा सूत्रकृदेव वक्ष्यतीति ॥ पुनरुक्तिश्चेति ॥ प्रथमोत्तमयोस्त्रिरभिधानेन पुनरुक्तत्वम् ॥

भागासिद्धिं वक्तुं प्रत्यक्षवच्चेति मूले यथा तत्सूचकं भवेत्तथा योजयति ॥ नाद्यो यथेति ॥ अनृतादिभागपरिहारेणेति भागासिद्धेर्मूलसूचितत्वसूचनम् । अत्र दृष्टान्तकथनमुपपत्तिसंभावकत्वेन । प्रामाण्योपपत्तेर्नाद्यः सर्वपक्षीकरणपक्षो नेत्यन्वयः । एवं मूलं व्याख्याय तत्सूचितं दूषणमभिनयेन वक्तुमाह ॥ अन्यथेति ॥ सर्ववेदपक्षीकरण इत्यर्थः । यद्यप्यत्र क्वचिदनृतत्वादिना वेदमात्राप्रामाण्य-साधने सर्वत्रानृतत्वेन वा तत्साधने प्रत्यक्षादेरपि तत एव तत्साधने सौलभ्यात्सर्वप्रत्यक्षानुमानविलय-प्रसङ्गेनोत्तरत्रेवात्राप्याभाससमानयोगक्षेमत्वं वक्तुं शक्यम् । तथाऽपि वक्ष्यमाणरीत्या सुज्ञानत्वाद्दृष्टान्तो-क्तिमात्रेण तत्सूचनसंभवादन्ते तदुक्तेः सर्वशेषत्वाच्चात्र तदनुक्तिः ॥ द्वितीये त्विति ॥ प्रकृतमीमांसा-प्रवृत्तिप्रतिबन्धकत्वाभावात्तत्साधनमारम्भासङ्गतमिति भावः ॥ अथेति ॥ अयमथशब्दः शङ्कार्थक आनन्तर्यार्थकश्च । अनृतत्वादिना वैदिकदेशेऽप्रामाण्यानुमानानन्तर्यं च तदर्थः । एवं च दृष्टान्तसिद्धिः सूचिता भवति । तथा च नासङ्गतिरिति भावः । अत्रापि विवक्षितं दूषणं वक्तुं तथा मूलं योजयति ॥ यथा हीति ॥ दृष्टान्तोक्तिबललब्धमर्थमभिनयेनाह ॥ अन्यथेति ॥

प० ज्योतिष्टोमसंस्थासु सप्तस्वेकं कर्मातिरात्राख्यम् । षोळशीनाम ग्रहविशेषः । एकत्र विधिनिषेधयोः व्याघातः । उदिते जुहोतीत्यादौ विध्योरेव ॥ त्रिःप्रथमामिति ॥ त्रयोदशैका-दशसंमितार्थाः यत्र ऋचः सामधेन्यः तत्र त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यावृत्त्या सप्तदशपञ्चदश वा सामधेन्यो भवन्ति । पाञ्चदश्यं प्रकृतौ निवेशयति; साप्तदश्यं विकृतौ; उभयोरेकत्र विरोधादिति स्थितिः । तत्रावृत्तिं स्वयमेव वेदो विदधातीति अप्रमाणम् ।

प० —ननु तथापीति॥ शब्दस्यार्थेन स्वाभाविकसंबन्धेऽनाप्तवाक्याद्विशेषे च सत्यप्यनुमानाद्बहि-र्भावेऽपीत्यर्थः ॥ अतिरात्र इति ॥ ज्योतिष्टोमस्याग्निष्टोमात्यग्निष्टोमोक्थ्यषोळ(ड)श्यतिरात्राप्तोर्यामवाजपेय-

भेदेन सप्त संस्थाः । तत्रातिरात्रसंज्ञके ज्योतिष्टोमयागे षोडशिनामकं सोमपात्रं गृह्णातीति किञ्चिद्वाक्यम् । न गृह्णातीत्यपरम् । अहोरात्रप्रकरणे शाखाभेदेन उदिते जुहोति अनुदिते जुहोतीतिवाक्यद्वयं श्रुतम् । त्रिः प्रथमामिति दर्शपूर्णमासप्रकरणे पञ्चदश सामिधेनीर्विधाय एकादश ऋचः पठित्वा त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश संपद्यन्त' इति श्रुतम् । प्रथमां प्रथमपठितां ऋचं त्रिरनुवदेदित्यर्थः ॥ **अन्यथेति** ॥ अनृताननृतादिरूपोभयविधवाक्यपक्षीकारेऽनृतत्वादिहेतूनां भागासिद्धिरित्यर्थः ॥

**या० — अतिरात्रे षोडशिनमिति** ॥ ज्योतिष्टोमसंस्थास्वतिरात्राख्यैका संस्था । षोडशी नाम षोडशाक्षरार्धर्चवच्छन्दोविशेषः । नन्वयं नानुयाजेष्वित्यत्रेव पर्युदासो वा न तौ पशौ करोतीत्यत्र न सोम इतिवदर्थवादो वाऽस्तु न प्रतिषेधः । अतो न व्याहतिरत्रेति चेत् । मैवम् । न तावदयं पर्युदासः । पर्युदासो हि भवन् अनतिरात्रे गृह्णाति षोडशिनमिति स्यात् । अषोडशिनमतिरात्रे गृह्णातीति वा । प्रकारान्तराभावात् । पक्षद्वयेऽप्यतिरात्रे षोडशिनो विधानानर्थक्यात् । नाप्ययमर्थवादः । पूर्ववाक्यप्राप्त्याऽर्थप्रतिषेधरूपत्वे संभवत्यर्थवादत्वकल्पनायोगात् । वाक्यस्य विधिनिषेधरूपत्वासंभवे ह्यर्थवादत्वं कल्प्यम् । न सोमेऽध्वर इत्यत्र त्वर्थवादत्वमेव । दर्शपूर्णमासयोराज्यभागावग्नीषोमाभ्यां यजतीत्याज्यभागौ विधाय तौ न पशौ करोतीति निषिध्य पश्चान्न सोमेऽध्वर इति श्रूयते । अयं च न पर्युदासः प्रतिषेधो वा संभवति । सोमस्योपदेशातिदेशाभ्यामाज्यभागप्राप्त्यभावात् । तस्मान्न पशावित्यस्यायमर्थवादः । यथा सोमस्याज्यभागावेवं पशावपीति । इत्थं महाभागावाज्यभागौ सोमेऽक्रियमाणौ तावत्र पशौ न क्रियेते इति स्तुतिरूपत्वसंभवात् । अत्र चाप्राप्तिसद्भावात्प्रतिषेधत्वमेव । ततश्च व्याहतिः । न च व्याहतिभयात्प्रतिषेधत्वासंभवेऽर्थवादरूपत्वमेवाश्रयणीयमिति वाच्यम् । अर्थवादत्वेऽपि व्याहतिसाम्यात् । अपशवो वाऽन्यो गोऽश्वेभ्य इत्यत्र पश्वन्तरनिषेधेन गवामश्वानां च स्तुतिर्दृष्टा । इह तु स्तुत्यस्तावकयोरेकविषयत्वेन षोडशिनिषेधेन षोडशिन एव स्तुतौ स्पष्टव्याहतिः । अतो विकल्पेन प्रतिषेधकत्वमेव वरमाश्रयितुमिति सिद्धान्तितं मीमांसकैः । न च तद्युक्तम् । विकल्पस्याष्टदोषदूषितत्वात् । अतो व्याहतत्वेनाप्रामाण्यमेवेत्याशयात् ॥ **उदिते जुहोतीति** ॥ पूर्वं विधिनिषेधयोः व्याघात उक्तः । अत्र तु विध्योरेवेति ज्ञातव्यम् ॥ **त्रिः प्रथमामिति** ॥ अत्रादिपदेन त्रिरुत्तमामित्यस्य ग्रहणम् । उत्तमां अन्तिमाम् । अत्र प्रथमोत्तमऋचोरावृत्तिं स्वयमेव वेदो विदधातीति पौनरुक्त्यमिति भावः । यथा कस्यचिदित्यादेरयमर्थः । अत्र वेदत्वसामानाधिकरण्येन कुत्रचित्साध्यसिद्धेरुद्देश्यत्वेऽनृतादिभागे हेतूनां पक्षधर्मताबलेनोद्देश्यसाध्यसिद्धेर्जायमानत्वेन तत्र भागासिद्धेरप्रतिबन्धकत्वेऽपि सर्ववेदाप्रामाण्यासिद्ध्याऽर्थान्तरता । अन्यथा वेदत्वावच्छिन्ने सर्वत्र साध्यसिद्धेरुद्देश्यत्वे तदवच्छिन्ने सर्वत्र

हेतूनां पक्षधर्मताया उक्तरूपसाध्यसिद्ध्युपपादिकाया अभावेन भागासिद्धिप्रसङ्ग एव दोष इति । केचित्तु अनृतादिनिष्ठधर्मविशेषत्वस्य हेतुत्वेऽर्थान्तरता । अन्यथाऽनृतत्वादेरेव हेतुत्वे भागासिद्धिप्रसङ्ग इत्याहुः। वस्तुतस्तु किं वेदमात्रं पक्षीकृत्येत्यत्र न प्रतिज्ञाविषयत्वरूपं पक्षत्वं विवक्षितं किन्तु विमतिविषयत्वरूपम् । तथा किं वेदमात्रेऽप्रामाण्यविमतिदशायामेतैर्हेतुभिरनृतादिवेदभागानेव प्रतिज्ञायां निर्दिश्याप्रामाण्यं साध्यते । उत तदेकदेशे तद्विमतिदशायाम् । आद्ये सामान्ये विप्रतिपत्तौ विशेषे तत्साधनेऽर्थान्तरता । अन्यथाऽर्थान्तरतापरिहाराय सर्वस्यापि वेदस्य प्रतिज्ञायां निर्देशे भागासिद्धिप्रसङ्ग इति योज्यम् ॥

श्री० — **तथाऽपि** शब्दस्यार्थेन स्वाभाविकसंबन्धेनाप्तवाक्याद्विशेषे च सति अनुमानाद्बहिर्भावेऽपीत्यर्थः ॥ **अनृतत्वादौ सत्यपीति** ॥ विसंवादादौ सत्यपीत्यर्थः ॥ **अन्यथेति** ॥ अनृतादिभागस्य तद्व्यतिरिक्तस्यापि वेदभागस्यानृतत्वादिहेतुभिरप्रामाण्ये साध्ये भागासिद्धिप्रसङ्ग इत्यर्थः ॥ **साधयामि इति** ॥ अनृतादिभागदृष्टान्तेनेति शेषः ॥

च० — विधान्तरेण वेदप्रामाण्यदुरुपपादताशङ्काया अपि समाधायकं प्रकृतप्रतीकमेवेत्याशयेन तच्छङ्कां दर्शयति ॥ **नन्विति** ॥ तथापि पूर्वोक्तदिशा अप्रामाण्यशङ्कानिरसनेऽपि । अतिरात्र इति ज्योतिष्टोमीयसंस्थाविशेषेतिरात्रः । षोडशी ग्रहविशेषः । तत्रातिरिक्तसंस्थाके ज्योतिष्टोमयागे षोडशिनामकं सोमपात्रं गृह्णातीति किञ्चिद्वाक्यं न गृह्णातीत्यपरम् । विधिनिषेधयोर्व्याहतिमुपपाद्य विध्योरेव तामुपपादयति ॥ **उदित इति** ॥ अग्निहोत्रप्रकरणे शाखाभेदेनोदिते जुहोतीत्यादिवाक्यद्वयं श्रुतम् । **त्रिः प्रथमामिति** ॥ दर्शपूर्णमासप्रकरणे पञ्चदशसामिधेनीर्विधायैकादशऋचः पठित्वा त्रिः प्रथमामन्वाह त्रिरुत्तमान्ताः पञ्चदश प्रपद्यन्त इति श्रुतम् । प्रथमां प्रथमपठिताम् ऋचं त्रिरनुवदेदित्यर्थः । उत्तमामन्तिमाम् । अत्र प्रथमोत्तमर्चोरावृत्त वेदः स्वयमेव विधत्त इति पुनरुक्तिरिति भावः ॥ **वेदमात्रमिति** ॥ वेदत्वव्यापकत्वविशिष्टसंसर्गावच्छिन्नाप्रामाण्यवृत्तिविधेयताकानुमितेरुद्देश्यतोपेयते तदविशेषिततदवच्छिन्नतादृशविधेयताकानुमितेर्वेति विकल्पाशयः । प्रत्यक्षवच्चेतिप्रतीकेण प्रकृतहेतोर्भागासिद्धिर्ध्वन्यत इत्याशयेन तथा योजयति ॥ **नाद्येति** ॥ अन्यथेत्याद्युपपत्तेरित्यन्तेन ॥ **अनृतत्वादाविति** ॥ अविद्यमानार्थविषयकत्वादावित्यर्थः ॥ **अन्यथेति** ॥ प्रकृतपक्षतावच्छेदकीभूतवेदत्वावच्छेदेनानुमितेरुद्देश्यतोपगमे । तादृशानुमित्यौपयिकप्रकृतपक्षतावच्छेदकव्यापकत्वविशिष्टहेतुतावच्छेदकसंसर्गावच्छिन्नहेतुवृत्तिप्रकारताकपरामर्शाभावेन तादृशानुमित्यनुत्पादप्रसङ्ग इति भावः ॥ **द्वितीये त्विति** ॥ प्रकृतपक्षतावच्छेदकसामानाधिकरण्येनानुमित्युद्देश्यताकल्पस्य च सामान्यधर्मावच्छेदेन विप्रतिपत्त्यननुगुण्यप्रसङ्गेनार्थान्तरतापातादित्याशयः ।

सु० — किंचेदमनृतत्वम् । अर्थव्यभिचारित्वमिति चेत् । नन्विदमेवाप्रामाण्यमिति साध्याविशिष्टता । न चानृतत्वमेकदेशेऽपीति सूत्रकार एव वक्ष्यति ।

व्याघातेन चाप्रामाण्यं साधयन्किं वाक्यद्वयं पक्षीकुर्यादुतैकमेव । नाद्यः । व्याहतयोः प्रत्यक्षयोरनुमानयोर्वा मध्येऽन्यतरप्रामाण्यसंभववद्वाक्ययोरप्यन्यतरप्रामाण्यसंभवात् । न द्वितीयः अनिश्चितदशायामन्यतरप्रत्यक्षादिवत्पक्षीकृतस्यापि प्रामाण्यसंभवात् ॥ अपि च व्याघातोऽप्यापाततः सर्वथा वा । नाद्यः । आपाततो व्याघातवतोऽपि प्रत्यक्षादेरिव वेदस्यापि प्रामाण्यसंभवात् । न द्वितीयः । प्रत्यक्षादाविवासिद्धेः । यथा चासिद्धिस्तथा सूत्रकृदेव वक्ष्यति ।

पौनरुक्त्येऽपि प्रत्यक्षादिवद्वेदप्रामाण्यं संभवति । न ह्येकस्मिन्नर्थे संप्लवमानं प्रत्यक्ष-मनुमानम् वाऽप्रमाणं भवति । अर्थवैपरीत्ये हि तत्स्यात् । न हि प्रत्यक्षेण गृहीतो घटः पुनर्गृह्यमाणः पटो भवति । नापि कृतकत्वेनानित्यतयाऽनुमितः शब्दस्तीव्रादिधर्मोपेतत्वेन पुनस्तथाऽनुमीयमानो नित्यो भवति । तथा शब्देऽपि ॥ वैयर्थ्यं तु कथंचिच्छङ्क्येत । तच्चा-भ्यासानुवादादिरूपेण व्याकुर्वद्भिरेव वृद्धैः परिहृतमिति ।

वा० — एवमनृतत्वादिहेतुत्रयं साधारणदूषणेन प्रदूष्य प्रत्येकदूषणेनापि दूषयति ॥ **किञ्चेत्या-दिना** ॥ नन्वविपरीतार्थाप्रतिपादकत्वमप्रामाण्यमनृतत्वं चायथाभिधानमित्युक्तमित्यत आह ॥ **न चेति** ॥ बोधकवेदे प्रामाण्यस्यौत्सर्गिकत्वादकारणकार्योत्पत्त्यसंभवेनाप्रामाण्यकारणदोषाभावेऽप्रामाण्यस्यासंभवा-दनन्यथासिद्धापौरुषेयतया स्वतो दोषशून्यवाक्यरूपवेदे पुरुषदोषनिबन्धनदोषाभावेनापवादकाभावेन प्रामाण्ये निश्चिते सामग्रीवैकल्यप्रतिबन्धकसद्भावाभ्यामन्यथासिद्धफलविसंवादस्य पुत्रकामादिवाक्य-बोध्यपुत्रेष्टिसाध्यसाधनभावाविघातकतया तद्वाक्येऽयथाभिधानाभावेन तादृशानृतत्वस्याप्यसिद्धतया यादृ-शतादृशफलव्यभिचारमात्रस्यायथाभिधानानापादकतया नानृतत्वेन वेदाप्रामाण्यमित्येतत्प्रमेयं नित्यत्वस्वतः-प्रामाण्यरूपपाशुपतादिस्मृतिवैलक्षण्यं न विलक्षणत्वादित्यत्र वदन्सूत्रकार एव वक्ष्यतीत्यर्थः ।

**व्याहतयोरिति** ॥ तथा च सन्दिग्धकालातीतत्वमिदं रजतमिति प्रत्यक्षादिविरुद्धत्वेनेदं रजतमिति प्रत्यक्षादावनैकान्तिकत्वं चेति भावः ॥ **अनिश्चितेति** ॥ तथा च सन्दिग्धबाध इति भावः ॥ **आपातेति** ॥ तथा चानैकान्त्यमिति भावः ॥ **असिद्धेरिति** ॥ न तावत् षोडशीग्रहणाग्रहणवाक्ययो र्व्याघातः । नातिरात्र इत्यस्य पर्युदासार्थत्वादत्वासंभवेऽपि प्रतिषेधत्वसंभवात् । नन्वत एव विधिप्रति-षेधयोर्विरोध इत्युक्तमिति चेन्न । यदा विधिस्तदा न प्रतिषेधो यदा प्रतिषेधस्तदा न विधिरिति विधि-

निषेधयोः परस्परबाधकत्वेन पक्षे एकस्य मिथ्याप्रत्ययत्वकल्पनात् । न च विधिप्रतिषेधयोः सर्वदा प्राप्तिरिति वाच्यम् । प्रयोगवचने एककल्पग्रहणेनेतराग्रहणोपपत्तेः । प्रतिषेधावैयर्थ्यायाग्रहणेऽपि क्रतुसिद्धेः। विध्यर्थवस्त्वायानुष्ठाने फलभूयस्त्वस्य च कल्पनेनोभयोपपत्तेः । नाप्युदितादिवाक्ये परस्परमग्निहोत्रं जुहोतीत्यनेन च विरोधः । अग्निहोत्रं जुहोतीतिवाक्यविहितहोमानुवादेन कालत्रयविधिपराणामेषां वाक्यानां परस्परार्थप्रतिषेधकत्वाभावात्। यद्यपि चैको होमः समुच्चयेन तदा तदा न शक्यः कर्तुम्। तथाऽपि विकल्पेन करिष्यते । व्यवस्थिते वस्तुनिविकल्पासंभवेऽप्यनुष्ठानेऽनागतोत्पाद्ये विधिप्रतिषेधविकल्पानामविरोधात् । अत एवाह गौतमः । उभयप्रतिषेधानभिधानादिति ॥ नाप्येषां निन्दावाक्यैर्विरोधः । 'न हि निन्दा'-न्यायेनेतरस्तुत्यर्थतयाऽऽधानकाले नियमपरिगृहीतोदितादिकालातिक्रमेऽभ्युपेतकालातिक्रमेण तद्विषयतया वा निन्दाद्युपपत्तेः । अत एवाह गौतमः । अभ्युपेत्य कालभेदे दोषवचनादिति । जैमिनिरपि प्रक्रमाद्वा नियोगेनेति । नाप्याकाशादिसादित्वानादित्ववाक्यानां विरोधः । व्यवस्थया तत्राप्यविरोधोपपत्तेरिति भावः । यद्यपि ग्रहणाग्रहणोदितादिवाक्येषु व्याघातपरिहारः सूत्रकृता न वक्ष्यते तथाऽपि शब्द-जातस्य सर्वस्य यत्प्रमाणश्च निर्णय इत्युक्तत्वादाकाशादिसादित्वानादित्वादिगुणोऽपसंहारानुपसंहारादि-श्रुतीनां व्याहतिपरिहाराय व्यवस्थाविकल्पादिकं गौण्यसंभवात्, अरूपवदेव हि तत्प्रधानत्वात्, प्रकाश-वच्चावैयर्थ्यं, न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्, पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत्, मन्त्रादि-वद्वा विरोधः, इत्यादिसूत्रैः प्रतिपादयता सूत्रकृताऽन्यत्रापि विरोधपरिहाराय व्यवस्थादिकमनुसर्तव्य-मित्यर्थस्याभ्यनुज्ञानात्सर्वत्रापि वेदे व्याघातः सूत्रकृता परिहृत एवेत्याशयेनाह ॥ **यथा चेति** ॥

ननु प्रत्यक्षादौ प्रवृत्तस्य प्रत्यक्षान्तरादेरप्रामाण्याभावेऽपि शब्दप्रामाण्ये सप्रयोजनत्वस्य व्यापक-त्वात्पुनरुक्तेश्च वैयर्थ्येन तन्निवृत्तौ तद्याप्यप्रामाण्यनिवृत्तिरावश्यकीत्याशङ्कायामाह ॥ **वैयर्थ्यं त्विति** ॥ कथञ्चिदिति सूचितं परिहारमाह ॥ **तच्चेति** ॥ समिधो यजतीत्यादावभ्यासः कर्मभेदतात्पर्यद्योतनार्थः । क्वचिच्च गुणविधानाद्यर्थोऽनुवादः । एवं च सप्रयोजनत्वान्न वैयर्थ्यमित्यर्थः । यद्वाऽनर्थकोऽभ्यासः पुनरुक्तम्। सार्थकोऽभ्यासोऽनुवादः । एवं चैकादशसामिधेनीनामुत्पत्तौ पठितानां प्रथमोत्तमयोस्त्रिर्वचनं सामिधेनीनां पञ्चदशत्वं मन्त्रोक्तं संपादयत्सप्रयोजनमिति गौतमादिभिरनुवादोपपत्तेश्चेत्यादिभिः सूत्रैः परिहृतमित्यर्थः । अस्मिंश्च पक्षे तद्वाप्याद्युक्तरीत्याऽभ्यासानुवाद इत्यस्यानुवादरूपोऽभ्यास इत्यर्थः ।

**स० — न चानृतत्वमेकदेशेपीति** ॥ कर्तृकर्मादिसाद्गुण्ये फलनियमेन तद्वैगुण्यनिबन्धनमेव फलादर्शनमिति द्वितीये वक्ष्यतीत्यर्थः ॥ **यथा चासिद्धिस्तथेति** ॥ न विलक्षणाधिकरणे वेदस्य नित्यत्वेन पुरुषदोषनिबन्धनदोषशून्यताकथनेन षोडशि ग्रहणाग्रहणयोर्विकल्पेन उदितानुदितहोमयोरधिकारिभेदेनो-पपत्तौ सर्वथा व्याघाताभावेनासिद्धिरिति वक्ष्यतीत्यर्थः ।

प०— **नन्विदमेवेति** ॥ इदमेव खल्विति खलर्थे ननुशब्दः । अरे इति संबोधनार्थे वा । न चेति चकारः किञ्चेत्यर्थे ॥ **सूत्रकार इति** ॥ नविलक्षणत्वनये दृश्यते चेति गुणसूत्रेणेति भावः ॥ **अन्यतरप्रामाण्यसंभवादिति** ॥ तथाच तत्वनिर्णयटीकोक्तदिशा सन्दिग्धकालातीतत्वस्य सन्दिग्धानैकान्तिकत्वस्य चा(वा)पातः । स्वारसिकसाध्यसंदेहस्यादोषत्वेऽप्यप्रयोजकत्वाहितपक्षीयसाध्यसन्देहस्य दोषत्वादिति भावः । एवमग्रेऽपि ध्येयम् ॥ **प्रत्यक्षादाविवेति** ॥ अयं घटो द्रव्यमिति न शुक्ल इति प्रत्यक्षयोः पर्वतोऽग्निमान्धूमवत्त्वान्न तरुमान्पाषाणमात्रराशित्वादित्यनुमानयोर्यथा तथेत्यर्थः ॥ **वक्ष्यतीति** ॥ उपासनापादे द्वितीयनये । 'उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने चे'ति । 'न वा प्रकरणभेदात्परोवरीयस्त्वादिवदि'ति च सूत्राभ्यामुक्तोपसंहारानुपसंहारयोस्तदनुगुणवाक्ययोश्च व्याघातनिरासाय 'प्राप्तेश्च समञ्जसमि'ति तृतीयनयेऽधिकारिभेदेन द्वयोश्च सामञ्जस्योक्त्या षोडशिग्रहणाग्रहणोदितानुदितहोमादिवाक्यानामपि व्याघातो नेतिप्राप्तत्वात्सूत्रकृदेव वक्ष्यतीत्युक्तम् । उपसंहारानुपसंहारादिबोधकवाक्यानामेवात्रोदाहर्तव्यत्वेऽपि कर्मकाण्डगतवाक्योदाहरणं वाद्यन्तरैरुदाहृतत्वात्प्रसिद्धत्वाच्च । यद्वा 'न वियदश्रुतेरि'त्यादिद्विपाद्यामशेषवाक्यव्याहतेः परिहरिष्यमाणत्वात्सूत्रकृदित्युक्तम् ॥ **वृद्धैरिति** ॥ जैमिनीयप्रभृतिभिर्वेदप्रामाण्यवादिभिः । प्रमाणसंप्लवश्च दार्ढ्यहेतुरेवेत्यादिवदद्भिराचार्यैरपीत्यर्थः ॥

या०— **वक्ष्यतीति** ॥ कर्तृकर्मादिसाद्गुण्ये फलनियमेन तद्वैगुण्यनिबन्धनमेव फलादर्शनमिति न विलक्षणत्वादित्यत्र वक्ष्यतीत्यर्थः ॥ **अन्यतरप्रामाण्यसंभवादिति** ॥ तथा च बाध इति भावः ॥ **पक्षीकृतस्यापि प्रामाण्यसंभवादिति** ॥ तथा च सन्दिग्धकालातीतत्वमिति भावः । यद्यपि बाधसंशयो ग्राह्यसंशयपर्यवसन्न इति नानुमितिप्रतिबन्धकः । तथाऽपि स्वारसिकस्य तस्य तथात्वेऽपि हेतोरन्यथासिद्धिशङ्कारहितस्य तत्र प्रतिबन्धकत्वमस्त्येवेति ज्ञातव्यम् ॥ **वक्ष्यतीति** ॥ न विलक्षणत्वादित्यत्रोक्तन्यायेन वेदस्य प्रामाण्ये सिद्धे षोडशिग्रहणाग्रहणयोरनन्यगत्या विकल्पाश्रयणेनोदितानुदितहोमयोश्चाधिकारिभेदेनोपपत्तौ सर्वथा व्याघाताभावेनासिद्धिरिति वियत्पादे वक्ष्यतीत्यर्थः । तत्रोपलक्षणया सर्वेषां श्रुतिगतपरस्परविरोधानां परिहृतत्वादिदमपि तत्रोक्तमेवेत्यभिप्रेत्यैवमुक्तमिति ज्ञातव्यम् । तदुक्तम् । 'अथाशेषसमाम्नायविरोधापकृतिं प्रभुः । करिष्यन्' इति । वस्तुतो न वैयर्थ्यम् । अतिगहनप्रमेयस्यैकेन प्रमाणेन बुद्धावनारोहादत उक्तम् ॥ **कथं चिदिति** ॥ **अभ्यासेति** ॥ अभ्यासस्य तात्पर्यनिर्णयार्थत्वादनुवादस्य चाधिकविधानार्थत्वान्न वैयर्थ्यमिति भावः । आदिपदेन सप्रयोजनावृत्तिविधिरूपेणेति ग्राह्यम् । तेन त्रिः प्रथमामन्वाहेति वाक्यमपि प्रथमोत्तमऋचोरावृत्तिं प्रयोजनविशेषापेक्षयैव विदधातीति न तत्रापि वैयर्थ्यमित्युक्तं भवति । तथा हि अग्निसमिन्धनप्रकाशिका ऋचः सामिधेन्यस्ता-

श्चैकादश श्रूयन्ते । पञ्चदशसामिधेनीरन्वाहेति च विधिः । तत्रैकादशऋचां प्रथमोत्तमो ऋचो त्रिवृत्त्या पाञ्चदश्यं सम्पादयितुमिदं वाक्यं प्रवृत्तम् । अतो न व्यवृर्थाऽऽत्तिविधायकमिति । वृद्धैः गौतमादिभिः ॥

श्री० — **नन्विदमेवेति** ॥ इदमेवार्थव्यभिचारित्वमेवाप्रामाण्यम् । ननु खल्वित्यर्थः । पुनरुक्तेऽर्थवैपरीत्यं नास्तीत्याह ॥ **न हि प्रत्यक्षेणेति** ॥ **तीव्रत्वादीति** ॥ तीव्रत्वमन्दत्वादिरूपधर्मोपेतत्वेन पुनस्तथाऽनित्यत्वेनानुमीयमान इत्यर्थः ॥

च० — **वक्ष्यतीति** ॥ फलनियमस्य कर्तृकर्मादिसाद्गुण्यनियन्त्रिततया तद्वैगुण्यनिबन्धनमेव फलादर्शनमिति न विलक्षणत्वादिति नयेऽभिधास्यतीत्यर्थः ॥ **अन्यतरप्रामाण्येति** ॥ तथा च प्रकृतपक्षतावच्छेदकीभूतद्वित्वसामानाधिकरण्येन बाधप्रतिसंधानदशायां तदवच्छेदेनानुमितिः कथमुदीयादिति भावः ॥ **पक्षीकृतस्यापीति** ॥ बाधसंशयो हि स्वारसिकाहितसन्देहभेदेन द्वेधा तत्राद्यस्य पक्षतादिरूपस्याप्रतिबन्धकत्वेऽपि हेतोरन्यथासिद्धिसन्देहाहितस्यानुमितिप्रतिषेधकतया तादृशी संन्दिग्धकालातीतता स्यादिति भावः ॥ **वक्ष्यतीति** ॥ न वियदश्रुतेरित्यादिद्विपाद्यां निखिलवाक्यव्याहृतीनां सूत्रकृता प्रतिविधास्यमानतया न भाष्यटीकाकृत्कर्तृकतत्प्रतिविधानयत्नावश्यंभाव इत्याशयः ॥ **वृद्धैरिति** ॥ अभ्यासस्य तात्पर्यावधारकतयानुवादस्य चाधिकविधानफलकतया न वैयर्थ्यमित्याद्यभिदधानैर्जैमिनिप्रभृतिभिरानर्थक्यं प्रतिविहितमित्यर्थः ।

**सु० — नन्वस्त्वेवं वेदस्याप्रामाण्यपरिहारः । प्रामाण्यं तु कुतः । न ह्यप्रामाण्यप्रतिक्षेप एव प्रामाण्यम् । घटादावभावादिति । ज्ञानकरणस्य सतोऽप्रामाण्ये निरस्ते स्वत एवेति ब्रूमः । तदिदमुक्तम् आगस्येति । आगम्यतेऽवगम्यतेऽनेनेत्यागमः ॥ ये हि न्यायविदः प्रत्यक्षविशेषस्यानुमानस्य च प्रामाण्यं स्वत एवेत्यङ्गीकृत्यागमप्रामाण्यस्वतस्त्वं नाङ्गीकुर्वन्ति तान्प्रति प्रत्यक्षवच्चेति दृष्टान्तोपादानम् । हिशब्दः प्रमाणत्वहेतुसूचकः ॥ ये तु प्रमाणमात्रस्य प्रामाण्यं स्वतो नेति मन्यमाना आगमप्रामाण्यस्वतस्त्वे विप्रतिपद्यन्ते तान्प्रति प्रत्यक्षवच्चेति प्रत्यक्षानुमानयोरपि प्रसङ्गात्स्वीकारार्थमुक्तमिति ज्ञातव्यम् ।**

वा० — नन्वस्मिन्पक्षे वेदस्येति वक्तव्यं नागमस्येति स्वत एवेति च व्यर्थम् । न च प्रामाण्योपपादनाय तदिति वाच्यम् । अप्रामाण्ये परिहृते प्रामाण्यस्यैव सिद्धतया तदनुपपत्त्यप्रसक्त्या तदु-

पपादनावश्यकत्वादित्यतस्तदनुपपत्तिप्रकारं दर्शयति ॥ **नन्विति** ॥ उत्तरमाह ॥ **ज्ञानकारणस्येति** ॥ प्रामाण्यमित्यनुवर्तते । स्वत इत्यत: परमुत्पाद्यत इति शेष: । यद्वोत्पद्यते ज्ञायते चेति शेष: । कुत इति पूर्ववाक्यमप्युत्पत्तिज्ञप्त्याक्षेपपरत्वेन व्याख्येयम् । तथा च स्वत एव ज्ञानजननशक्त्युत्पादकेनैव तथा ज्ञानजकत्वग्राहकेणैव यथार्थज्ञानजनकत्वरूपं प्रामाण्यमुत्पद्यते ज्ञायते चेत्यर्थ: । नात्र पूर्वत्रेव वाक्यैकदेशस्यैवोपयोग: प्रत्युत समग्रस्यापीत्याशयेन प्रत्यक्षवचेत्यंशं मतभेदेन द्वेधा सङ्गमयति ॥ **ये हीत्यादिना** ॥ यद्यपि प्रत्यक्षज्ञानमर्थादुत्पद्यमानमपि न गृहीताव्यभिचारादुत्पद्यतेऽपि तु सत्तामात्रेणावस्थितादेव । एवमिन्द्रियादीन्यपि न गृहीताव्यभिचाराणि । व्यभिचारीणि चार्थेन । शब्दज्ञानं तु नार्थादुत्पद्यते । न च शब्दस्यार्थाव्यभिचार इति न तयो: स्वतोऽर्थाव्यभिचारग्रहणमिति प्रवृत्तिसामर्थ्यं तज्जातीयत्वं वाऽर्थाव्यभिचारायाश्रवणीयम् । तथाऽप्यनुमानोपमानधर्मिज्ञानानुव्यवसायानां स्वत एव तद्व्याप्तिपक्षधर्मतावत्त्वग्राहकेणैवानुमाने कारणत: स्वरूपतश्च व्यभिचारशङ्कानिरासात् । उपमानेऽप्यतिदेशवाक्यसादृश्यज्ञानयो: प्रामाण्यावधारणेनानुव्यवसायेऽप्यज्ञानाननुव्यवसायेन धर्मिज्ञानेऽप्यभ्रान्तत्वनियमेन तच्छङ्कानिरासादित्याशयेन विमतं ज्ञानमर्थाव्यभिचारिसमर्थप्रवृत्तिजनकत्वाद्यदि पुनरेवं नाभविष्यन्न समर्थां प्रवृत्तिमकरिष्यद्यथा प्रमाणाभास इति व्यतिरेक्यन्वयव्यतिरेकी वा । अनुमानस्य स्वत:प्रमाणतयाऽन्वयस्यापि संभवादिति । तथा चानुमानस्य परतो निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यम्। अनुमेयाव्यभिचारिलिङ्गसमुत्थत्वात् । एतेनोपमानं व्याख्यातमित्यादि च प्रमाणतोऽर्थप्रतिपत्ताविति प्रथमभाष्यव्याख्यानावसरे न्यायवार्तिकटीकायां वाचस्पतिनोक्तमिति भाव: ।

प० — **स्वत एवेति ब्रूम इति** ॥ ज्ञानजननसामर्थ्यादेवेत्यर्थ: ॥ **आगम्यत इति** ॥ आङ्पूर्वाद्गमे: 'ग्रहवृद्निश्चिगमश्चे'त्यप्प्रत्यय इति भाव: । आसमन्ताद्गमयति धर्माधर्मौ परं पदम्' इत्युपासनापादे भगवत्पादीयकर्तृव्युत्पत्तिप्रदर्शनस्याप्येवमेव तात्पर्यस्य वक्ष्यमाणत्वान्न तद्विरोध इति भाव: ॥ **प्रत्यक्षविशेषस्येति** ॥ अनाशङ्कितदोषधर्म्यंशादिप्रत्यक्षस्येत्यर्थ: ॥

या० — **तदिदमुक्तमिति** ॥ ज्ञानकरणत्वमागमपदेनोक्तमित्यर्थ: ॥ **प्रत्यक्षविशेषस्येति** ॥ गृहीतप्रामाण्यकप्रत्यक्षसमानविषयकप्रत्यक्षस्येत्यर्थ: । अथवा धर्मिप्रत्यक्षस्येत्यर्थ: । अत्रोभयत्र व्याप्त्यादिविमर्शेन जातायामनुमितावपि प्रामाण्ये कदाऽपि संशयासंभवान्न स्वतस्त्वे बाधकमस्तीति तेषामाशय: । वक्ष्यते चैतत् । अत्र मूले प्रत्यक्षपदं तद्विशेषपरमित्यवगन्तव्यम् ॥ **ये तु प्रमाणमात्रस्येति** ॥ प्रत्यक्षविशेषानुमानयोरपि प्रामाण्ये संशयाभावेनैव स्वतस्त्वव्यवहार: पूर्वेषां न तु स्वाश्रयग्राहकग्राह्यत्वेन । मनसो बहिरस्वातन्त्र्येणानुव्यवसायस्य व्यवसायविषयतद्वत्त्वादिसत्त्वाऽपि निश्चयरूपत्वाभावादित्येतेषामाशय: ॥

श्री०— नन्वप्रामाण्याभावः प्रामाण्यमिति चेत्तत्राह ॥ **न ह्यप्रामाण्येति** ॥ **घटादाविति** ॥ घटादावप्रामाण्याभावे सत्यपि प्रामाण्याभावादिति भावः। अप्रामाण्ये निरस्ते स्वत एव प्रामाण्यमित्यस्य घटादावभावादाह ॥ **ज्ञानकरणस्य सत इति** ॥ ज्ञानकरणत्वेन निश्चितस्येत्यर्थः ॥ **प्रत्यक्षविशेषस्येति** ॥ धर्म्यंशप्रत्यक्षस्येत्यर्थः। सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति वचनेन धर्म्यंशे सन्देहाभावात्तत्प्रामाण्यं स्वत एवेत्यर्थः ॥ **अनुमानस्येति** ॥ अनुमितेरित्यर्थः। भावेऽपि ल्युटो विधानादिति भावः। धूमवान्पर्वतोऽग्निमानिति लिङ्गोपहितलैङ्गिकभानपक्षे व्याप्यवति व्यापकप्रकारकत्वस्य वह्निमति वह्निप्रकारकत्वरूपप्रामाण्यव्याप्यत्वेन तस्यानुमितौ भावान्न तत्प्रामाण्ये सन्देह इति तत्प्रामाण्यं स्वत इत्यर्थः ॥ **प्रसङ्गादिति** ॥ आगमप्रामाण्यस्वतस्त्वसाधनप्रसङ्गात्प्रत्यक्षानुमानप्रामाण्ययोरपि स्वतस्त्वं साधयितुमेव प्रत्यक्षवच्चेति प्रत्यक्षानुमानग्रहणं कृतं न तु पूर्वत्रेव दृष्टान्ततयेत्यर्थः। अत्र वतेरस्वारस्यम्। यद्वाऽऽदौ प्रत्यक्षानुमानप्रामाण्ययोः स्वतस्त्वमुपपाद्य पश्चात् दृष्टान्तत्वेन तदुपादानं कार्यमिति प्रसाध्याङ्कोऽयं दृष्टान्त इति ज्ञातव्यम् ॥

च०— **तदिदमुक्तमिति** ॥ आङ्उपसृष्टगमेर्ज्ञानार्थतया तत्प्रकृतिकप्रत्ययस्य च करणसाधनतया तादृशप्रकृतिप्रत्ययसमभिव्याहारादेव ज्ञाननिरूपितकरणतापन्नप्रत्यायनादिति भावः ॥ **प्रत्यक्षविशेषस्येति** ॥ न्यायवार्तिकटीकायां गृहीतप्रामाण्यकप्रत्यक्षसमानविषयप्रत्यक्षस्य धर्मिप्रत्यक्षस्य वा विमतं ज्ञानमर्थाव्यभिचारि समर्थप्रवृत्तिजनकत्वादित्यनुमानस्य च एतेनोपमानं व्याख्यातमित्यादि च प्रमाणतोऽर्थप्रतिपत्ताविति भाष्यव्याख्यावसरे स्वत एव प्रामाण्यं वाचस्पतिरूरीचकारेति भावः।

**सु०—ननु किमिदं प्रमाणानां प्रामाण्यस्य स्वतस्त्वम् ॥ उच्यते ॥ प्रत्यक्षानुमानागमास्तज्जनितं विज्ञानं च प्रमाणम् ॥ तत्र ज्ञानस्य यथार्थ्यलक्षणं प्रामाण्यं तस्य ज्ञानजनक(सामग्री)मात्राधीनजन्मत्वं स्वतस्त्वम् ॥ करणानां च ज्ञानजननशक्त्यैव तद्याथार्थ्यजनकत्वं स्वस्त्वतम्। तथा ज्ञानगतयाथार्थ्यस्य ज्ञानग्राहकमात्रग्राह्यत्वं स्वतस्त्वम् ॥ करणानां तु ज्ञप्तौ स्वतस्त्वं नाङ्गीक्रियते; तत्स्वरूपस्य यथायथं प्रत्यक्षादिवेद्यत्वात्, यथार्थज्ञानजनकत्वस्यानुमानवेद्यत्वात्। अथवा तेषामपि ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयस्य ग्राह्यत्वं स्वतस्त्वमिति ॥**

वा०—ननु स्वतस्त्वमित्यत्र स्वशब्दस्य स्वपरत्वं वा स्वीयपरत्वं वा। आद्ये स्वजन्यत्वं तदित्युक्तं स्यात्। द्वितीयेऽपि स्वाश्रयज्ञानजन्यत्वं वा स्वाश्रयज्ञानसामग्रीजन्यत्वं वा ज्ञानसामग्रीजन्याश्रितत्वं वा ज्ञान-

सामग्रीमात्रजन्याश्रितत्वं वा । नाद्यः पौर्वापर्यासंभवेन स्वस्य स्वहेतुत्वानुपपत्तेः । न द्वितीयः । ज्ञानस्य गुणत्वेन स्वप्रामाण्यं प्रति समवायिकारणत्वासंभवात् । न तृतीयः । प्रामाण्यस्योपाधिरूपत्वे स्मृतित्वान धिकरणज्ञानस्य बाधात्यन्ताभावस्तत्त्वमिति वक्तव्यम् । तस्य चात्यन्ताभावरूपस्य न जन्म संभवति नापि जातिरूपत्वे तस्य जन्मसंभवः । नापि चतुर्थः । अप्रामाणस्यापि स्वतस्त्वप्रसङ्गात् । पञ्चमेऽपि मात्र-ग्रहणेनाप्रमां व्यावर्तयताऽप्रमासामग्रीरूपदोषासाहित्यद्वारेण तदभावसाहित्यमपि ज्ञानसामग्र्यां त्रिवक्षित-दोषासाहित्यमात्रम् । नाद्यः । परतःप्रामाण्यवादिमतानुप्रवेशापातात् । नापि द्वितीयः । विशेष-दर्शनस्य भ्रमनिवृत्तिहेतुत्वेन तद्विपर्ययस्य भ्रमहेतुत्ववद्दोषासहकृतज्ञानसामग्रीजन्यं ज्ञानमप्रमेत्यङ्गीकुर्वता प्रमां प्रति दोषाभावस्य हेतुताया अनिराकार्यत्वात् । न चेश्वरप्रमायामिव दोषाभावस्यावर्जनीयसन्निधि-तया न प्रमात्वप्रयोजकत्वमिति वाच्यम् । नित्यद्रव्येषु द्रव्यत्वस्य गुणवत्त्वप्रयुक्तत्ववद्दोषाभावगर्भसामाग्र्य-जन्यत्वेऽपीश्वरज्ञानस्य तत्र प्रमात्वस्य दोषाभावप्रयुक्तत्वोपपत्तेः । न च दोषाभावस्याभावत्वाद-कारणत्वम् । विशेषदर्शनाभावस्य भ्रमहेतुत्ववद्विहिताकरणस्य प्रत्यवायहेतुत्ववच्च तदुपपत्तेः । तस्मान्न स्वतस्त्वं निर्वक्तुं शक्यमिति स्वत एवेत्यनुपपन्नमित्याशङ्कते ॥**नन्विति** ॥

अत्र करणप्रामाण्ये प्रसक्तेऽपि तत्स्वतस्त्वस्य ज्ञानप्रामाण्यस्य ज्ञानसामग्र्यन्यगुणादि-जन्यत्वेऽनुपपत्त्या तत्स्वतस्त्वाधीनतया ज्ञानप्रामाण्यस्वतस्त्वव्युत्पादनेन करणप्रामाण्यस्वतस्त्वव्युत्पादने सौलभ्यमित्याशयेन करणप्रामाण्यप्रसङ्गाज्ज्ञानप्रामाण्यमपि व्युत्पादयिष्यन्करणफलभेदेन प्रमाणद्वैविध्यं तावदाह ॥ **प्रत्यक्षेति** ॥ अत एव शङ्काग्रन्थोऽपि सामान्येन प्रवृत्त इति द्रष्टव्यम् ॥ **याथार्थ्यलक्षण-मिति** ॥ करणप्रामाण्यवैलक्षण्यप्रदर्शनार्थैतत् । याथार्थ्यं चार्थं ज्ञेयमनतिक्रम्य वर्तमानत्वं, ज्ञेयाव्यभि-चारित्वं, विषयस्य ज्ञेयतायामुपाधित्वे सति ज्ञेयं यथाभूतं सत्तथाभूतसदेकगोचरत्वमिति यावत् । एतादृश याथार्थ्यरूपं ज्ञानप्रामाण्यमित्यर्थः ॥ **ज्ञानेति** ॥ जनकं सामग्री । कचित्सामग्रीशब्दोपेतपाठोऽपि । मात्रपदेन ज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयव्यतिरिक्तगुणदोषतदभावव्यवच्छेदः । एवं च ज्ञानजनकजन्यत्वे सति यत्तदतिरिक्तजन्यत्वं तदभावः स्वतस्त्वम् । तच्चाजन्येश्वरादिज्ञानप्रा माण्येऽपि संभवत्येव । यद्वा जन्यज्ञानप्रामाण्यस्वतस्त्वनिरुक्तिरेवेयमिति ज्ञेयम् । अथवा जनका-दिशब्दस्योत्पत्त्यभिव्यक्तिसाधारणप्रयोजकादिमात्रपरत्वमेवेति द्रष्टव्यम् । अप्रामाण्यं तथाऽन्यत इति वाक्यव्याख्यानावसरे दोषाभावकारणताया निरासान्न पूर्वोक्तपरतस्त्वापत्तिदोष इति भावः ॥ **करणानां चेति** ॥ याथार्थ्यजनकत्वं याथार्थ्यजननं ज्ञानजननशक्त्यैव न तु तदतिरिक्तशक्त्येति ज्ञानजननशक्त्य-भिन्नतद्याथार्थ्यजननशक्तिमत्त्वं करणानां स्वतस्त्वमित्युक्तं भवति । यद्वा याथार्थ्यजनकत्वम् याथार्थ्यजन-नशक्तिः सा ज्ञानजननशक्त्यैवेति सहयोगे तृतीया । तथा च सा ज्ञानजननशक्त्या सहितैवेति

तद्वत्सहजत्वं लभ्यते। एवं च ज्ञानजननशक्तिवत्सहजतद्याथार्थ्यजननशक्तिमत्त्वं स्वतस्त्वमित्युक्तं भवति। यद्यपि ज्ञानप्रामाण्यस्य ज्ञानजनकमात्रजन्यत्वं स्वतस्त्वमितिवत्करणप्रामाण्यस्य यथार्थज्ञानजनकत्वस्य करणजनकमात्रजन्यत्वं स्वतस्त्वमित्येव वक्तुं युक्तम्। करणजनकस्यैव तन्निष्ठज्ञानतद्याथार्थ्यजननशक्तिजनकत्वात्। अत एवोत्तरत्र करणस्वरूपतत्प्रामाण्यग्राहकयोर्भेदेन करणप्रामाण्यस्य ज्ञप्तौ परतस्त्वोक्तेरिव अत्रोत्पत्तौ तदुक्त्यभावः। तथाऽपि करणजनकस्यैव तद्याथार्थ्यजनकत्वेऽपि न क्षतिः। करणनिष्ठज्ञानयाथार्थ्यजननशक्तेस्तन्निष्ठज्ञानजननशक्त्यभेदमात्रेण तद्वत्सहजत्वेनैव वा स्वतस्त्वोपपत्तेः। परन्तु करणजनकस्यैव तद्याथार्थ्यजनकत्वं प्रकृतेऽधिकं लब्धं, न तु तेन विना स्वतस्त्वहानिः। अत एवाथ वेत्यादिना ज्ञप्तिप्रामाण्यस्वतस्त्वं करणग्राहकतत्प्रामाण्यग्राहकयोर्भेदेऽपि करणनिष्ठज्ञानजनकत्वतद्याथार्थ्यग्राहकयोरभेदमात्रेण व्युत्पादयिष्यते। ज्ञानप्रामाण्यस्य तु ज्ञानजनकातिरिक्तजन्यत्वे स्वतस्त्वहानिरेवेत्याशयेन ज्ञानप्रामाण्यस्वतस्त्वविलक्षणतया करणप्रामाण्यस्वतस्त्वोक्तिर्युक्तैवेति ध्येयम्।

**तथेति**॥ ज्ञानग्राहकेत्यत्र ज्ञानपदेन याथार्थ्यस्येतिसन्निधानाद्ग्राह्यप्रामाण्याश्रयो ज्ञानं विवक्ष्यते ग्राहकशब्देन तद्विषयीकरणशक्तिमान्साक्ष्येव विवक्षित। मात्रपदेन च साक्षिनिष्ठाप्रामाण्यग्रहणशक्तेस्तन्निष्ठज्ञानग्रहणशक्तिभिन्नत्वं वा भिन्नत्वेऽपि वाऽऽगन्तुककारणान्तरसापेक्षत्वं वा निवार्यते। ग्राह्यत्वं च विषयीक्रियमाणत्वम्। साक्षीति वक्तव्ये ज्ञानग्राहकेति वचनं साक्षिनिष्ठप्रामाण्यग्रहणशक्तेर्यद्भेदो वा यदपेक्षयाऽऽगन्तुकत्वं वा मात्रपदेन निरस्यं तस्या ज्ञानविषयीकरणशक्तेर्लाभाय। एवं च स्वनिष्ठग्राह्यप्रामाण्याश्रयज्ञानविषयीकरणशक्त्यभिन्ना वा तद्वत्सहजा वा या प्रामाण्यग्रहणशक्तिस्तद्वत्साक्षिविषयत्वं स्वतस्त्वमित्युक्तं भवति। अत एव ज्ञानं विषयीकुर्वता साक्षिणा प्रामाण्यविषयीकरणायान्यापेक्षामात्रनिरासस्याभिप्रेतत्वादेव ज्ञानग्राहकेत्यत्र सामान्यविवक्षायां परतस्त्ववादिनाऽपि ज्ञानग्राहकेणैव प्रामाण्यग्रहणस्वीकारात्साक्षिरूपविशेषविवक्षायां च तदतिरिक्तानुमानादिनापि स्वतस्त्ववादिमतेऽपि प्रामाण्यग्रहान्मात्रपदानुपपत्तिरित्यादिदूषणमलग्नकं वेदितव्यम्।

स०— जन्यज्ञानत्वावच्छिन्नम् उत्पत्तौ स्वतस्त्वं निर्वक्ति ॥ **ज्ञानजनकेति** ॥ प्रमातदितरसाधारणधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयातिरिक्तानपेक्षत्वमित्यर्थः। अन्यथा गुणदोषयोरपि ज्ञानजनकत्वेन परतः पक्षसाधारणत्वापत्तेरिति ध्येयम्। ज्ञप्तौ तन्निर्वक्ति ॥ **ज्ञानग्राहकेति** ॥ अत्र ज्ञानग्राहकपदेन ग्राह्यप्रामाण्याश्रयविषयकाप्रतिबद्धानुव्यवसायो विवक्षितः। मात्रपदेनोक्तानुव्यवसाये यावत्त्वं लभ्यते। तथा चाप्रतिबद्धयावत्स्वाश्रयग्राहकानुव्यवसायग्राह्यत्वं पर्यवस्यति ॥ यथा श्रुते प्रामाण्यानुमितेरपि ज्ञानग्राहकत्वेन तदतिरिक्तानपेक्षत्वस्य न्यायमतसाधारण्येन सिद्धसाधनतापत्तेरिति

ध्येयम् । अत्र ग्राह्यप्रामाण्यस्याप्रामाण्यकारणादिना प्रतिबद्धानुव्यवसायग्राह्यत्वाभावेन बाधवारणायाप्रतिबद्धेति विशेषणम् । न्यायमतेऽप्यनुव्यवसायविशेषग्राह्यत्वं प्रामाण्यस्यास्तीति सिद्धसाधनतावारणाय यावदित्यनुव्यवसायविशेषणम् । ग्राह्यप्रामाण्ये यावदनुव्यवसायग्राह्यत्वस्य बाधितत्वात्स्वाश्रयग्राहकेति । स्वाश्रयग्राहकज्ञानमात्रविवक्षायां ज्ञानं गुणः घटज्ञानमित्यादिशब्दजन्यस्वाश्रयग्राहकज्ञानग्राह्यत्वाभावेन पुनर्बाध एवातोऽनुव्यवसायेति । अनुव्यवसायशब्देन च प्रत्यक्षमेव विवक्षितमतो न कोऽपि दोष इति ॥ **यथायथमिति** ॥ इन्द्रियस्वरूपस्यानुमानेन, लिङ्गस्वरूपस्य प्रत्यक्षादिना, आगमस्वरूपस्य श्रोत्रेण वेद्यत्वादित्यर्थः ॥ **अथवा तेषामपीति** ॥ ज्ञप्तिस्तु परत एवेति पद्धतिवाक्यं तु स्वाश्रयीभूतकरणग्राहकमात्रग्राह्यत्वरूपं स्वतस्त्वं नेत्यभिप्रेत्य प्रवृत्तमिति न तेनास्य विरोध इति द्रष्टव्यम् । अत्र उत्पत्तौ ज्ञप्तौ च स्वतस्त्वसाधकानुमानद्वये पूर्ववत्प्रतिज्ञापदव्याख्यानं द्रष्टव्यम् ।

प०— **प्रमाणमिति** ॥ इह विवक्षितमिति योज्यम् ॥ **याथार्थ्यलक्षणमिति** ॥ तत्स्वरूपं च युक्तिपादे विवरिष्याम इति भावः । उत्पत्तौ स्वतस्त्वं निर्वक्ति ॥ **ज्ञानजनकेति** ॥ न चेदं नित्यज्ञानप्रामाण्येऽव्याप्तमिति वाच्यम् । तज्जनितं च ज्ञानं प्रमाणमिह विवक्षितमिति प्रागुक्ततया जन्यज्ञानप्रामाण्यस्यैवेह लक्ष्यत्वात् । न चैवमपीदं रजतमिति भ्रमरूपज्ञाने ज्ञानजनके सत्यपि प्रामाण्यानुत्पत्तेरन्वयव्यभिचारान्न ज्ञानजनकमात्राधीनजन्मत्वमिति वाच्यम् । ज्ञानजनकमात्राधीनजन्मत्वमित्यस्य तदधीनजननयोग्यत्वमित्यर्थात् । फलोपधानविवक्षायामपि केवलं जनकं जनकमात्रं प्रामाण्यविरोधिसामग्र्यसमवहितज्ञानजनकाधीनजन्मत्वमिति मात्रपदव्याख्यानात् । नन्वेवं यत्किञ्चिज्ज्ञानजनके विरोधिसामग्र्यसमवहिते सत्यपि प्रामाण्यजन्मनोऽभावात् अन्वयव्यभिचारान्न तदधीनजन्मत्वं तस्येति वाच्यम् । ज्ञानजनकेत्यत्र ज्ञानजन्मरूपफलोपधानस्य वा मात्रपदेन कार्त्स्न्यार्थत्वस्यापि वाऽभिप्रेतत्वेन ज्ञानसामग्र्यधीनेत्यर्थस्य लाभात् । न चैवमपि परं प्रतिसाधने सिद्धसाधनतैव प्राप्नोति । परेण गुणजन्यत्ववादिनापि विरोधिसामग्र्यसमवहितज्ञानसामग्र्यधीनत्वस्याप्यङ्गीकारादिति वाच्यम् । कैवल्यार्थेन मात्रपदेन तदेकाधीनजन्मत्वस्य लाभादिति भावः । ज्ञप्तावाह ॥ **तथेति** ॥ **ज्ञानग्राहकमात्रेत्यादि** ॥ व्याख्यातं चैतद्वाक्यं त्रेधा तर्कताण्डवे । पद्धत्युक्तदिशा करणस्वरूपतत्प्रामाण्यग्राहकयोर्भेदाविवक्षया परतस्त्वमुक्त्वा विवक्षाभेदेन स्वतस्त्वमप्यस्तीत्याह ॥ **अथवेति** ॥

या०— ननु वेदस्य प्रामाण्यं कुत इति प्रश्ने स्वत एवेत्युत्तरमयुक्तम् । स्वशब्दस्य स्वरूपार्थत्वे प्रामाण्यपरत्वे च प्रामाण्यादेवेत्यर्थलाभेनात्माश्रयत्वप्रसङ्गात् । स्वीयार्थत्वे तु अन्यस्यादर्शनेन प्रामाण्ये

कारणं तज्ज्ञापकं वा स्वीयं वाच्यम् । एवं च प्रामाण्यं स्वकारणादुत्पद्यते स्वज्ञापकाच्च ज्ञायत इत्युक्तं स्यात् । न चेदं संभवति । कुत इत्यनेन तयोरेव कारणज्ञापकयोरेव पृष्टत्वादित्यभिप्रेत्य शङ्कते ॥ **ननु किमिदमिति** ॥ नात्र स्वशब्दः प्रामाण्यपरः स्वरूपार्थश्च येनोक्तदोषः किन्तु तदाश्रयपरः स्वीयार्थश्चेत्यभिप्रेत्योत्तरं वक्तुमाह ॥ **उच्यत इत्यादिना** ॥ **तज्जनितं च विज्ञानमिति** ॥ अत्र यद्यपि प्रकृतत्वात्करणप्रामाण्यमेव विचार्यतया ग्राह्यं न ज्ञानप्रामाण्यम् । तथापि ज्ञानगतयाथार्थ्यरूपप्रामाण्यानिर्णये तद्घटितकरणप्रामाण्यस्यैवाभावेन धर्म्यलाभे प्रकृतविचारस्यैवानुत्थानाद्वा प्रसङ्गाद्वा ज्ञानप्रामाण्यमपि विचार्यतया गृहीतमित्यवगन्तव्यम् ॥ **ज्ञानजनकसामग्रीमात्रेति** ॥ स्वाश्रयज्ञानसामान्यसामग्रीमात्रप्रयोज्यत्वमुत्पत्तौ स्वतस्त्वमित्यर्थः ॥ **करणानां चेति** ॥ यद्याथार्थ्यलक्षणं प्रामाण्यं तस्येत्यन्वयः । यथार्थज्ञानसाधनत्वरूपस्य करणप्रामाण्यस्य स्वाश्रयनिष्ठज्ञानजननशक्त्यभिन्नत्वमेवोत्पत्तौ स्वतस्त्वमित्यर्थः॥

**ज्ञानगतयाथार्थ्यस्येति** ॥ तद्वति तत्प्रकारकत्वरूपस्येत्यर्थः ॥ **ज्ञानग्राहकमात्रेति** ॥ अत्र ज्ञानग्राहकशब्देन ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकसाक्षिज्ञानं विवक्षितम् । ग्राह्यशब्देन तद्विषयत्वयोग्यता । एवं च ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकसाक्षिज्ञानविषयत्वयोग्यत्वं ज्ञप्तौ स्वतस्त्वमित्युक्तं भवति । अत्र साक्षीत्युक्त्या घटज्ञानमस्तीत्यादिशब्दजन्यमप्रतिबद्धघटज्ञानविषयं ज्ञानं प्रति घटज्ञानप्रामाण्यस्याविषयत्वात् बाध इति शङ्का ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयिकेत्युक्त्या घटज्ञानं गृह्णता साक्षिणा पटज्ञानप्रामाण्यस्याग्रहणाद्बाध इति शङ्का निरस्ता । प्रतिबन्धकदशायामपि करतलादौ दाहजननयोग्यतावत् प्रामाण्ये साक्षिग्रहणयोग्यतायाः सत्त्वात् । यथोक्तम् । साक्ष्येव ज्ञानं तत्प्रामाण्यं च विषयीकर्तुं क्षमः किन्तु प्रतिबद्धो ज्ञानमात्रं गृहीत्वा प्रामाण्यग्रहणस्य नेष्ट इति । नन्वेवं मात्रपदं व्यर्थमापन्नमिति चेन्न । अवधारणपरस्य तस्य साक्षिणि ज्ञानत्वग्रहणशक्तिवत्प्रमात्वग्रहणशक्तिरपि सहजेति प्रदर्शनार्थत्वात् । यद्वा ज्ञानग्राहकशब्देन साक्षितदितरसाधारणज्ञानं विवक्षितम् । मात्रशब्देनावधारणार्थेनोभयसिद्धप्रामाण्यविषयकव्यवच्छेदः कार्त्स्न्यार्थेनाप्रतिबद्धसर्वानुव्यवसायसङ्ग्रहश्च विवक्षितः । तेनोभयसिद्धप्रामाण्याविषयकज्ञानभिन्नज्ञानविषयत्वनैयत्यं स्वतस्त्वमिति लभ्यते । अत्र प्रामाण्याविषयकज्ञानभिन्नेत्युक्त्या घटोऽयमिति घटादिविषयकप्रत्यक्षज्ञानं प्रति ज्ञानं गुण इत्यादिशब्देन घटज्ञानमित्यादिशब्देन जन्यं ज्ञानविषयकज्ञानं प्रति प्रतिबद्धानुव्यवसायं प्रति च स्वतस्त्वपक्षेऽपि प्रामाण्यस्याविषयत्वेन विषयत्वनैयत्यसाधने बाध इति शङ्का निरस्ता । उक्तस्य त्रिविधस्यापि ज्ञानस्य प्रामाण्याविषयकत्वेन तद्भिन्नत्वाभावादुभयसिद्धेत्युक्त्या न्यायमतेऽप्रतिबद्धस्याप्यनुव्यवसायस्य प्रामाण्याविषयकत्वेन तद्भिन्नत्वाभावात् । सिद्धान्त्यभिप्रेतस्याप्रतिबद्धानुव्यवसायं प्रति विषयत्वस्यासिद्ध्याऽर्थान्तरमिति शङ्का निरस्ता । अप्रतिबद्धानुव्यवसायस्य न्यायमते प्रामाण्याविषयकत्वेऽपि मन्मते तदभावेनोभयसिद्धात्प्रामाण्याविषयकाद्भिन्न-

त्वसंभवात् । नैयत्यमित्युक्त्या न्यायमतेऽपि प्रामाण्यस्यैवंविधा प्रामाण्यानुमितिं प्रति कचिदनुव्यवसायं प्रति च विषयत्वात्सिद्धसाधनमिति शङ्का व्युदस्तेति ध्येयम् ॥ **प्रत्यक्षादिवेद्यत्वादिति** ॥ इन्द्रियाणामतीन्द्रियत्वेनानुमानवेद्यत्वाल्लिङ्गशब्दयोस्तज्ज्ञानयोर्वा प्रत्यक्षवेद्यत्वादित्यर्थः ॥ **अनुमानवेद्यत्वादिति** ॥ कारणत्वस्यान्वयव्यतिरेकगम्यत्वादिति भावः । नन्वेवं ज्ञानकरणस्य सतोऽप्रामाण्ये निरस्ते स्वत एवेति ब्रूम इति पूर्वोक्तसिद्धान्तविरोध इत्यत आह ॥ **अथवेति** ॥ ज्ञानप्रामाण्यवत्करणप्रामाण्यस्य स्वाश्रयग्राहकग्राह्यत्वरूपं स्वतस्त्वं नेत्येव पूर्वमुक्तं न तु सर्वथा करणप्रामाण्यस्य स्वतस्त्वं नेति । स्वाश्रयनिष्ठज्ञानजनकत्वग्राहकमात्रग्राह्यत्वरूपस्य ज्ञप्तौ स्वतस्त्वाङ्गीकारात् । अतो न पूर्वोक्तविरोधो, नापि पद्धतिविरोध इति द्रष्टव्यम् । तत्रापि करणप्रामाण्यस्य स्वाश्रयग्राहकग्राह्यत्वरूपं स्वतस्त्वं नेत्येव तात्पर्यात् ॥

च०— ननु वेदस्य प्रामाण्यं कुत इति प्रष्टारं प्रति स्वत एवेति प्रतिवचनमसङ्गतम् । स्वशब्दस्य स्वरूपपरतायां प्रामाण्यपरतायां च प्रामाण्यादेवेत्यर्थपर्यवसित्यात्माश्रयताप्रसङ्गेन स्वीयपरतायां च प्रामाण्यकारणाद्युत्पद्यते । ज्ञापकाज्ज्ञायत इति पर्यवसितप्रतिवचनस्य प्रश्नावैशेष्यापत्त्या समञ्जसमेतदित्याशङ्कते ॥ **नन्विति** ॥ स्वशब्दः प्रामाण्याश्रयपरस्तदीयपरश्चेत्याशयेन समाधत्ते ॥ **उच्यत इति** ॥ **प्रमाणमिति** ॥ करणसाधनल्युडन्ततायां प्रत्यक्षानुमानादिवाचकः भावसाधनतदन्ततायां च तज्जनितविज्ञानवाचक इत्यवसेयम् । करणप्रामाण्यस्यैव विचार्यतया प्रकृतत्वेऽपि प्रसङ्गात्फलप्रामाण्यमपि तथा परिगृहीतम्। उत्पत्तौ स्वतस्त्वं निर्वक्ति ॥ **ज्ञानजनकेति** ॥ जन्यज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वावच्छिन्नकारणतानिरूपितकार्यताशालित्वे सत्यनित्यप्रमात्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छेदकाच्छिन्नकारणतानिरूपितकार्यताविनिर्मुक्तत्वं फलगतप्रामाण्यस्योत्पत्तौ स्वतस्त्वमित्यर्थः । तज्जनितं ज्ञानं प्रमाणमिह विवक्षितमिति पूर्वोक्त्या जन्यज्ञानप्रामाण्यस्यैवेह लक्ष्यतया नित्यज्ञानप्रामाण्येऽव्याप्तिशङ्का निर्दलैव । ज्ञानजनकसामग्र्यां विरोधिसामग्र्यसमवहितत्वस्यापि निवेशाद्भ्रमात्मकज्ञाने प्रामाण्यानुत्पादेपि न क्षतिः । करणगतप्रामाण्यस्यापि तदाह ॥ **करणानां चेति** ॥ यथार्थज्ञानजनकत्वरूपकरणगतप्रामाण्यस्य ज्ञानजननशक्त्यभिन्नस्वजननशक्तिकत्वमुत्पत्तौ स्वतस्त्वमित्यर्थः ।

फलगतस्य ज्ञप्तौ तदाह ॥ **तथेत्यादि** ॥ स्वनिष्ठग्राह्यप्रामाण्याश्रयज्ञानविषयीकरणशक्त्यभिन्ना तद्वदनैसर्गिकी वा या प्रामाण्यग्रहणशक्तिस्तद्वत्साक्षिविषयत्वं स्वतस्त्वमिति पर्यवस्यति । स्फुटीकृतं चैतत्तर्कताण्डवविवरणरूपभावरत्नमण्डनेऽस्माभिः ॥ **प्रत्यक्षादिवेद्यत्वादिति** ॥ इन्द्रियाणामतीन्द्रियत्वेन अनुमानवेद्यत्वाल्लिङ्गशब्दयोस्तज्ज्ञानयोर्वा प्रत्यक्षवेद्यत्वादित्यर्थः । करणस्वरूपतत्प्रामाण्यग्राहकयोर्भेदविवक्षया पद्धतिदिशा करणगतप्रामाण्यस्य परतस्त्वमभिधाय भङ्ग्यन्तरेण तत्स्वतस्त्वमप्यभिधत्ते ॥ **अथवेति** ॥ ज्ञानजनकत्वग्राहकातिरिक्ताग्राह्यत्वे सति तद्ग्राहकग्राह्यत्वं स्वतस्त्वमित्यर्थः ।

**सु०— उत्पत्तौ स्वतस्त्वं कुत इति चेत् । प्रामाण्यं ज्ञानकारणातिरिक्तकारणानपेक्षम् अप्रामाण्येतरज्ञानधर्मत्वात् ज्ञानत्ववदित्यनुमानात् ॥ न च प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वात् अप्रमावदिति सत्प्रतिपक्षत्वम्; ईश्वरप्रमायां बाधादसिद्धेश्च ॥ तदतिरिक्तप्रमापक्षीकारेऽपि किं ज्ञानस्यैवंविधत्वेनोत प्रमात्वस्य अथवा तत्संबन्धस्य साध्यपर्यवसानम् । नाद्यः । व्याघातात् ॥ द्वितीये च प्रमात्वं जातिरन्यद्वा । जातित्वे बाधः । अकार्यत्वात् । अन्यत्वे भावोऽभावो वा । नाद्यः ज्ञाने जात्यतिरिक्तभावानभ्युपगमात् । न द्वितीयः । प्रध्वंसातिरिक्तस्य तस्याजन्यत्वात् , प्रध्वंसस्य चात्रासंभवात् । नान्त्यः । संयोगस्य गुणेऽसंभवात् , समवायस्य चाकार्यत्वात् । एतेन प्रमात्वपक्षीकारेणापि प्रयोगो निरस्तः ॥**

वा०— **प्रामाण्यमिति** ॥ ज्ञानप्रामाण्यमित्यर्थः । साध्ये ज्ञानकरणमिति ज्ञानसामान्यसामग्री विवक्षिता । तेन न यत्किञ्चिज्ज्ञानकारणातिरिक्तेन्द्रियादिसापेक्षत्वाद्बाधः । हेतौ तु रूपादावव्यभिचाराय विशेष्यम् । अप्रामाण्ये तद्वारणायाप्रामाण्येतरेति । अत्र चाप्रामाण्यपदेन प्रामाण्यविरोधिनोऽप्रामाण्यसमनियतस्य दोषजन्यत्वादेस्तद्व्याप्यसंशयात्वादेश्च लाभात्तद्व्यावृत्तेरप्यप्रामाण्येतरेत्यनेनैव सिद्धेस्तद्व्यावृत्त्यर्थं विशेष्ये ज्ञानैकधर्मत्वादिति विवक्षणीयमिति कस्यचिन्मतं निरस्तं वेदितव्यम् ॥ **न चेति** ॥ अत्र ज्ञानत्वरूपसामान्यावच्छिन्ने प्रमात्वावच्छिन्नरूपपक्षातिरिक्ते च ज्ञाने कार्यत्वहेतोरव्यभिचाराय हेतौ तद्विशेषत्वादिति विशेष्योपादानमिति ज्ञेयम् । गुणरूपे ज्ञाने द्रव्यगुणकर्मविशेषाणामनभ्युपगमात्समवायस्य च प्रमात्वनिरूपितत्वेन तद्रूपत्वानभ्युपगमात्समवाये प्रमात्वसङ्केतस्य च संबन्धपक्षोक्तदूषणेनैव दुष्टत्वादुपाधिरूपसामान्यस्य च परम्परासंबद्धा जातिरेवोपाधिरिति पक्षे जातिकोटिप्रवेशात्पक्षान्तरे च तस्य धर्मिस्वरूपत्वेन ज्ञानवृत्तित्वासंभवान्न जात्यन्यभावपक्षसंभव इत्याह ॥ **नाद्यो ज्ञान इति** ॥ प्रध्वंसस्यात्र प्रमायामसंभवेन ज्ञानहेत्वतिरिक्तहेत्वधीनत्वेनाभिमतं यत्प्रमाधर्मिभूतप्रमात्वं तद्रूपत्वासंभव इत्याह ॥ **प्रध्वंसस्य चेति** ॥ एतेन प्रमात्वस्य जातितदन्यरूपत्वासंभवप्रतिपादनेन ।

स०— **ज्ञानहेत्वतिरिक्तहेत्वधीनेति** ॥ प्रमाऽप्रमासाधारणधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयातिरिक्तकारणजन्येत्यर्थः । अतः परतस्त्वनयेऽपि प्रत्यक्षरूपज्ञानप्रामाण्यस्यापि अनुमितिरूपज्ञानजनकलिङ्गज्ञानातिरिक्तचक्षुर्जन्यत्वेन सिद्धसाधनतेति शङ्काऽनवकाशः । **कार्यत्वे सति तद्विशेषत्वादिति** ॥ ईश्वरज्ञानवारणाय सत्यन्तम् । व्यभिचारवारणाय विशेष्यम् । अथवा निर्विकल्पके

व्यभिचारवारणायैतत् । सप्रकारकज्ञानत्वं च तदर्थः ॥ **व्याघातादिति** ॥ ज्ञानस्य ज्ञानहेत्वतिरिक्त-जन्यत्वं व्याहतमित्यर्थः ॥ **प्रध्वंसस्येति** ॥ प्रमात्वं प्रध्वंसरूपं चेत् तर्हि प्रध्वंसस्य प्रतियोगिसमवायि-नियतत्वेन ज्ञानस्य प्रमात्वप्रतियोगिसमवायिदेशत्वाभावेन ज्ञाने तदसंभव इत्यर्थः ॥ **एतेन प्रमात्वपक्षी-कारेणापीति** ॥ प्रमात्वं ज्ञानहेत्वतिरिक्तहेतुप्रयोज्यम् ज्ञानत्वव्याप्यधर्मत्वादप्रमात्ववदितिप्रयोगोऽपि निरस्त इत्यर्थः । प्रमात्वस्य जातित्वेन नित्यत्वात् न हेतुप्रयोज्यत्वरूपसाध्यं तत्रेतिबाधस्यात्राप्यपरि-हारेणेत्यर्थः ।

प०— **प्रामाण्यमिति** ॥ जन्यज्ञाननिष्ठसाक्षाद्यथावस्थितज्ञेयविषयीकारित्वरूपमित्यर्थः । ज्ञानजनकमात्राधीनजन्मत्वमित्यत्रावधारणार्थमात्रपदेन लब्धार्थोक्तिः ज्ञानकारणातिरिक्तेत्यादि । अति-रिक्तकारणं च गुणो दोषाभावश्च ध्येयः । इत्यनुमानादितीतिशब्दः प्रभृत्यर्थः । अनुमानान्तराणि च तर्कताण्डवे व्यक्तानि ॥ **असिद्धेश्चेति** ॥ तत्र कार्यत्वरूपविशेषणाभावेन विशिष्टहेतोरभावादीश्वरज्ञान-भागेऽसिद्धेरित्यर्थः । संबन्धस्यैवंविधत्वेनेति पक्षं निराह ॥ **नान्त्य इति** ॥ **प्रमात्वपक्षीकारेणापीति** ॥ प्रमात्वं ज्ञानकारणातिरिक्तकारणाधीनं कार्यज्ञानविशेषधर्मत्वात् भ्रमत्ववदिति प्रयोगोऽपि प्रमात्वविकल्प-दूषणेन निरस्त इत्यर्थः ॥

या०— **प्रामाण्यमिति** ॥ ज्ञानप्रामाण्यमित्यर्थः । अन्यथा करणप्रामाण्यस्यापि पक्षत्वप्राप्त्या अंशे बाधप्रसङ्गात् ॥ **ज्ञानकरणातिरिक्तेति** ॥ ज्ञानसामान्यसामग्रीभिन्नकारणानपेक्षमित्यर्थः । अतः प्रमाया अपि ज्ञानत्वेन तत्कारणस्य गुणस्य ज्ञानकारणत्वेन तदतिरिक्तानपेक्षत्वस्य न्यायमतेऽपि सत्त्वेन सिद्धसाधनतेति शङ्काऽनवकाशः ॥ **अप्रामाण्येतरेति** ॥ अप्रामाण्ये व्यभिचारवारणायाप्रामाण्येतरेति विशेषणम् ॥ घटत्वादौ व्यभिचारवारणाय ज्ञानधर्मत्वादिति विशेष्यम् । न चैवमपि प्रामाण्याभावे व्यभिचारः । अप्रामाण्यपदस्य प्रामाण्यविरोधिमात्रपरत्वात् ॥ **कार्यत्वे सतीति** ॥ इदं चेश्वरज्ञाने व्यभिचारवारणाय । जन्यज्ञानत्वावच्छिन्ने व्यभिचारवारणाय विशेष्यम् । अथवा निर्विकल्पके व्यभिचारवारणायैतत् । सप्रकारकज्ञानत्वं च तदर्थः ॥ **व्याघातादिति** ॥ ज्ञानस्य ज्ञानहेत्वतिरिक्त-जन्यत्वं व्याहतमित्यर्थः ॥ **जात्यतिरिक्तेति** ॥ जात्यतिरिक्तभावधर्मानभ्युपगमादित्यर्थः । तेन गुण-त्वादिजातिसमुदायस्य ज्ञानेऽपि सत्त्वात्कथमेतदिति शङ्काऽनवकाशः । समवायसंबन्धरूपत्वेनाधर्मत्वात् । प्रमात्वस्य च धर्मत्वेन समवायभिन्नत्वात् । समवायत्वे वा तस्यापि जातिवदकार्यत्वेनोक्तदोषतादवस्थ्यात्। द्रव्यगुणकर्मविशेषाणां च द्रव्यमात्रधर्माणां ज्ञानेऽसंभवात् । प्रमेयत्वादेर्गुणे संभवेऽपि तस्य परम्परा-

संबद्धजातिरूपत्वेन तदतिरिक्तत्वाभावात्साक्षात्संबन्धेन च प्रमेयाद्यतिरिक्तत्वाभावादिति भावः ॥ **प्रध्वंसस्य चात्रेति** ॥ प्रमात्वं प्रध्वंसरूपत्वं चेदप्रमात्वमेव तत्प्रतियोगीति वाच्यम् । अन्यस्य तथात्वसंभवात् । न च तत्संभवति । ध्वंसप्रतियोगिनोः सामानाधिकरण्यनियमेन प्रमारूपज्ञानेऽप्रमात्वस्य प्रतियोगिनः कदाऽप्यभावेन तद्ध्वंसस्याप्यसंभवादिति भावः । यद्यपीदं दूषणं प्रागभावरूपत्वेऽपि संभवति । तथाऽपि लाघवाय तत्राजन्यत्वमेव बाधकमुक्तमित्यवगन्तव्यम् ॥ **एतेन प्रमात्वपक्षीकारेणेति** । प्रमात्वं ज्ञानहेत्वतिरिक्तहेत्वधीनं ज्ञानत्वव्याप्यधर्मत्वादप्रमात्ववदिति प्रयोगेऽपि प्रमात्वं जातिरन्यद्वेति विकल्प्य दूषणेन निरस्त इत्यर्थः ।

श्री० — **ज्ञानस्यैवंविधत्वेनेति** ॥ प्रमात्वविशिष्टप्रमैव प्रमाशब्दार्थः । अत एवं पर्यवसानं युक्तम् । ज्ञानस्य प्रमाया इत्यर्थः ॥ **व्याघातादिति** ॥ प्रमाया अपि ज्ञानत्वेन ज्ञानहेतुजन्यत्वेन तदतिरिक्तहेतुजन्यत्वाभावेन व्याघातो द्रष्टव्यः ॥

च० — प्रामाण्यस्यौत्पत्तिकस्वतस्त्वोपगमे बीजमाशङ्कते ॥ **उत्पत्ताविति** ॥ **प्रामाण्यमिति** ॥ जन्यप्रमात्वमित्यर्थः ॥ **ज्ञानेत्यादि** ॥ जन्यज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणतातिरिक्तकारणतानिरूपितकार्यतानवच्छेदकमित्यर्थः । यथा श्रुतार्थस्य प्रमाया अपि ज्ञानत्वेन गुणस्य तद्धेतुतया तदतिरिक्तनैरपेक्ष्यस्य न्यायनयेऽपि सिद्धत्वेन सिद्धसाधनतापत्त्याऽसंभवात् । दर्शितपरिष्कृतौ तु तादृशकरणतातिरिक्तगुणत्वावच्छिन्नकारणतानिरूपितकार्यतायां जन्यप्रमात्वस्यावच्छेदकतयोक्तक्षत्यनवकाशात् ॥ **अप्रामाण्येतरेति** ॥ तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारत्वरूपाप्रमात्वातिरिक्तेत्यर्थः । तादृशकारणतातिरिक्तदोषत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदके दर्शिताप्रमात्वेऽनैकान्त्यवारणायेतरान्तम् । तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वात्मकप्रमात्वाभावरूपाप्रामाण्यपदार्थस्य कस्यापि जन्यतानवच्छेदकतया तत्र नानैकान्त्यशङ्कावकाशः । अप्रामाण्यपदेन प्रामाण्यविरोधिनोऽप्रामाण्यसमनियतदोषजन्यत्वादेस्तद्व्याप्यसंशयत्वादेश्च लाभात् तद्व्यावृत्तेरप्यप्रामाण्येतरेत्यनेनैव सिद्धेस्तद्व्यावृत्त्यर्थं विशेष्ये ज्ञानैकधर्मत्वादिति विवक्षणीयमिति कस्यचिन्मतं निरस्तं ज्ञेयमित्येको व्याचक्षाणानां पन्थाः । न चैवमपि प्रामाण्याभावे व्यभिचारः । अप्रामाण्यपदस्य प्रामाण्यविरोधिमात्रपरत्वादित्यप्यन्यः । तेषां घटत्वादौ व्यभिचारवारणाय निरूपकताप्रत्यासत्त्या धर्मपदार्थतावच्छेदकीभूतवृत्त्यन्वयिप्रत्यायकज्ञानपदोपादानम् । प्रत्यक्षचिन्तामण्यादिदिशा परतस्त्ववादिनां प्रतिरोधानुमानमाशङ्क्य निराचष्टे ॥ **न चेति** ॥ जन्यज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणतातिरिक्तकारणतानिरूपकेत्यर्थः । निदर्शने दोषत्वावच्छिन्नकारणतानिरूपकतया साध्यं सङ्गमनीयम् । पक्षे तु गुणत्वावच्छिन्नकारणतानिरूपकत्वमादायेति ध्येयम् । ईश्वरज्ञानेऽनैकान्त्यविधूननायाद्यदलोपादानम् । ज्ञानत्वावच्छिन्ने तदपहस्तयितुमुत्तरदलमुपात्तमिति स्थितम् । निर्विकल्पके

व्यभिचारवारणायैतत् । सप्रकारकज्ञानत्वं च तदर्थ इत्यपि न्यभांत्सुः । उक्तनिर्गलितमेतेनेत्यादिना प्रतिविधास्यन् तावत् यथाश्रुतं प्रतिविधत्ते ॥ **ईश्वरेत्यादिना** ॥ तथा च प्रकृतपक्षतावच्छेदकसामानाधिकरण्येन बाधासिद्धी स्यातामिति भावः । जन्यत्वांशस्य प्रकृतपक्षतावच्छेदककोटिनिवेशेऽपि विशिष्टविधिनिषेधव्यपदेशयोर्विशेष्यविशेषणसंबन्धान्यतमावलम्बित्वस्य तात्पर्यभेदेन दर्शनात्प्रकृतेऽपि कल्पत्रयीमभिप्रेत्य क्रमेणापहस्तयते ॥ **तदित्यादिना** ॥ **जात्यतिरिक्तभावेति** ॥ द्रव्यानात्मके ज्ञाने द्रव्यगुणकर्मविशेषान्यतमात्मकस्यायोगेन समवायस्य प्रमात्वनिरूपितस्य निरूपकानात्मकतया संबन्धकल्पोक्तदोषदूषिततया च प्रमेयत्वाद्युपाधिरूपसामान्यस्य स्वावच्छिन्ननिरूपितविषयत्वादिरूपपारम्पर्येण जातिरूपतया तदनुपगमकल्पेपि तस्य धर्मिस्वरूपतया ज्ञानवृत्तित्वायोगेन जात्यन्यभावधर्मानुपपत्तिरिति भावः । प्रध्वंसस्य चात्रेति द्रव्यस्यैव ध्वंसप्रागभावाधारतानियमेनैतस्य तदनात्मकतया तदनाधारत्वादिति भावः । निबन्धान्तरे तु ध्वंसप्रागभावयोः प्रतियोगिसमानदेशतानियमेनाप्रमात्वानधिकरणप्रमारूपज्ञाने अप्रमात्वप्रतियोगिकध्वंसाधारताया दुरुपगमत्वात् तत्प्रतियोगिकप्रागभावानाधारतायामप्येतस्यैव बीजत्वेऽप्यत्यन्तान्योन्याभावयोस्तदनाधारताबीजभूताजन्यत्वमपि तत्र लाघवाद्व्यापारितमिति स्थितम् ॥ **प्रमात्वपक्षीकारेणेति** ॥ अनित्यप्रमात्वं कार्यतावच्छेदकं बाधकं विना कार्यमात्रवृत्तिधर्मत्वादप्रमात्ववत् । नीलघटत्वं तु न विशिष्टं कार्यतावच्छेदकं प्रत्येकानुगतप्रयोजकद्वयादेव विशिष्टसिद्धेरर्थप्रमाजग्रस्तत्वात् । तथा अनित्यप्रमात्वमप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं भ्रमावृत्तिकार्यतावच्छेदकत्वात् घटत्ववत् । चाक्षुषप्रमात्वं चाक्षुषप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकम् । चाक्षुषभ्रमावृत्तिकार्यतावच्छेदकत्वात् घटत्ववत् । अनित्यरजतप्रमात्वं रजताप्रमाकरणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं रजतभ्रमावृत्तिकार्यतावच्छेदकत्वात् घटत्ववदित्यादयः प्रयोगाः प्रत्यक्षचिन्तामणौ निरूढाः द्रष्टव्याः ।

**सु० — अस्तु जातिः प्रमात्वम् । तथाऽपि ज्ञानकारणातिरिक्तकारणजन्यैव व्यक्तिः प्रमात्वाधार इति तात्पर्यमिति चेन्न । साऽपि व्यक्तिः किं ज्ञानमेवोत सातिशयम् । अतिशयोऽपि भावोऽभावो वेति पक्षाबहिर्भावात् ॥ किञ्चातिरिक्तं कारणं गुण एव वक्तव्यः । स चाप्तोक्तत्वमेव शब्दे । न च तस्यान्वयव्यतिरेकौ प्रामाण्यमनुकरोति । वेदापौरुषेयत्वस्य वक्ष्यमाणत्वात् ।**

वा० — ननु प्रमात्वस्य जातित्वेऽपि तत्पक्षीकृत्य ज्ञानकारणातिरिक्तकारणजन्यव्यक्तिमात्रनिष्ठत्वासाधनान्न बाध इत्याशङ्कते ॥ **अस्त्विति** ॥ ननु प्रमात्वस्य कथं जातित्वाभ्युपगमः । साक्षात्कारि-

त्वादिना परापरभावानुपपत्तेः । जातेर्व्याप्यवृत्तित्वेन भ्रमादौ तदभावापत्त्या सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति यौक्तिकपरिभाषानुपपत्तेश्चेति चेन्न । विभ्रमादाविन्द्रियसंप्रयोगजन्यत्वादिरूपोपाधिमात्रेण साक्षात्कारित्वादिव्यवहारोपपत्त्या तत्र साक्षात्कारित्वादेरभावेन व्यभिचाराभावात्प्रमात्वस्य साक्षात्कारित्वव्यापकत्वोपपत्तेर्भ्रमादौ प्रमात्वाभावेऽप्यबाहितानुभवत्वादिमात्रेण परिभाषोपपत्तेश्च । न चैवं सर्वत्र प्रमाव्यवहारस्योपाधिनैवोपपत्त्या कृतं जातिकल्पनयेति वाच्यम् । गौर्गौरित्यादिव्यवहारस्यैव प्रमिणोमीत्यबाधितानुगतव्यवहारस्यानुगतजातिनिबन्धनताया औत्सर्गिकत्वात् । अन्यथा गोत्वादिजातिव्यञ्जकोपाधिनैव व्यवहारोपपत्त्या गोत्वादिजातिरपि न स्यादित्याशयः । अत्र ज्ञानत्वप्रयोजकहेत्वतिरिक्तहेतुजत्वस्य ज्ञानसामान्यसामग्र्यतिरिक्तसामग्रीजन्यत्वस्यानित्यज्ञानत्वावच्छिन्नकार्यतान्यकार्यत्वप्रतियोगिककारणजन्यत्वस्य चोक्तहेतुना साधनमनित्यप्रमाया जन्यत्वेन प्रमाप्रमोभयहेतुभिन्नहेतुजन्यत्वस्य प्रमाप्रमान्यतरत्वेन प्रमाप्रमान्यतरप्रतिबन्धकजन्यत्वस्यानित्यानुभवत्वेन स्वविरोध्यनुभवत्वेन स्वविरोध्यनुभवप्रतिबन्धकजन्यत्वस्याप्रमादिजातीयकार्यत्वेनाप्रमाव्यावृत्तधर्मावच्छिन्नकार्यताप्रतियोगिककारणजन्यत्वस्याप्रमाकारणविजातीयकारणजन्यत्वस्य वा साधनमतिरिक्तकारणादिजन्यत्वरूपसाध्यपर्यवसानं ज्ञानस्य प्रमात्वस्य तत्संबन्धस्य तथात्वेन वेत्यादिपक्षनिरासेन निरस्तप्रायम् । अनित्यप्रमात्वमनित्यज्ञानत्वावच्छिन्नकार्यताप्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकम् । अनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वादप्रमात्ववदिति तु तादृशकार्यताश्रयो ज्ञानमेव वा सातिशयं तद्वेत्याद्युक्तदूषणेनानित्यप्रमात्वस्याजातित्वाज्ज्ञाने जात्यतिरिक्तभावानभ्युपगमादित्युक्तदूषणेन च निरस्तमित्युदयनमताच्चिरन्तनमतानि न पृथगाशङ्क्य निरस्तानीति द्रष्टव्यम् ।

प्रकारान्तरेण बाधं वक्तुमाह ॥ **किञ्चेति** ॥ दोषाभावकारणताया निरसिष्यमाणत्वादिति भावः ननवस्त्वतिरिक्तकारणं गुण एव । स च शब्दे योग्यता तत्प्रमा वेति न कोऽपि दोष इति चेन्न । योग्यता किं शब्दप्रतिपाद्यसंसर्गस्य सत्त्वमुत तदविनाभूतं धर्मान्तरम् । नाद्यः । विषयसत्त्वस्य प्रमात्वान्तर्गतत्वेन तद्धेतुत्वायोगेन प्रत्यक्षादिप्रमास्वपि विषयसत्त्वसद्भावात्त्वदुक्तशाब्दासाधारण्यासंभवेनाप्रमाया अपि विषयासत्त्वस्यैव दोषत्वापातेन शाब्दप्रमां प्रति शाब्दप्रमाया वा तद्विषयस्य वाऽजनकत्वेन च तादृशसत्त्वरूपयोग्यतायास्तत्प्रमाया वा गुणत्वासंभवात् । नापि द्वितीयः । तदविनाभूतधर्मान्तरं चानन्वयप्रमाविरहो वाऽनन्वयप्रतियोगितावच्छेदकधर्मशून्यत्वं वा वाच्यम् । न च तद्युक्तम् । निर्दोषत्वे सति तयोस्तत्प्रमयोर्वा व्यतिरेकेण शाब्दप्रमाव्यतिरेकादर्शनेन तयोर्गुणत्वकल्पकाभावात् । अन्यथा प्रत्यक्षादावपि विषयसत्त्वाविनाभूतविषयासत्त्वप्रमाविरहाद्गुणत्वापत्त्याऽप्रमाया अपि विषयासत्त्वाविनाभूतविषयाभावप्रमाविषयासत्त्वावच्छेदकधर्मवत्त्वयोस्तत्प्रमयोर्वा दोषत्वापत्त्येन्द्रियार्थसन्निकर्षादेर्गुण-

त्वस्य काचादेर्दोषत्वस्याप्यभावापत्तेः । एवं च ग्राह्यप्रमाया वा विशेष्यनिष्ठविशेषणज्ञानस्य वाऽविद्यमानासंसर्गाग्रहस्य वा प्रमामात्रसाधारणस्य विषयसत्त्वपर्यवसन्नस्य विषयसत्त्वघटितप्रमां प्रति हेतुत्वासंभवेन गुणत्वानुपपत्त्याऽसाधारण्यस्य योग्यतादेरप्युक्तरीत्या तत्त्वानुपपत्त्या परिशेषादाप्तोक्तत्वमेव शब्दासाधारणगुणत्वेन वक्तव्यमित्याशयेनाह ॥ **स चेति** ॥ यद्यपि विप्रलम्भकवाक्यजन्यायां शुकादिवाक्यजन्यायां च यादृच्छिकसंवादेन प्रमायामस्यापि व्यभिचारेणान्वयतिरेकाभावो व्युत्पादयितुं शक्यत एव । तथाऽपि वक्ष्यमाणमूलोक्तवेदापौरुषेयत्वयुक्त्या तन्निरसनं युक्तमित्याशयेनाह ॥ **वेदेति** ॥

**स०**— ननु तत्प्रयोजनत्वं न तज्जन्यत्वादिरूपं येन बाधः । किन्तु तज्जन्यव्यक्तिवृत्तित्वमेवातो न पूर्वदोष इत्याशङ्कते ॥ **अस्तु जातिः प्रमात्वमिति** ॥ **अतिशयोऽपीति** ॥ न चायमतिशयो जातिरूपः जातेरेव पक्षत्वेनाश्रयकोटावपि जातेः प्रवेशे आत्माश्रयापत्तेरिति भावः ।

**प०**— **जन्यैव व्यक्तिः प्रमात्वाधार इति** ॥ ईश्वरज्ञानं च गुणदोषाभ्यामजन्यत्वान्न प्रमा नाप्यप्रमाऽतो न बाध इति भावः ॥ **न च तस्येति** ॥ तस्येत्यावर्तते । तस्य शब्दस्य प्रामाण्यं तस्याप्तोक्तत्वगुणस्यान्वयव्यतिरेकौ तन्निरूपितान्वयव्यतिरेकाविति यावत् ॥ **वक्ष्यमाणत्वादिति** ॥ अपि वेदानामित्यादिनाऽनुपदमेवेति भावः ॥

**या०**— ननु हेत्वधीनत्वं नाम न तज्जन्यत्वमत्र विवक्षितं किन्तु तज्जन्यव्यक्तिवृत्तित्वमेवातो न पूर्वदोष इत्याशङ्कते ॥ **अस्तु जातिरिति** ॥ **अतिशयोऽपीति** ॥ न चायमतिशयो जातिरूपः । जातेरेव पक्षत्वेन तदाश्रयेऽपि तत्प्रवेशे आत्माश्रयत्वापातात् ॥ **आप्तोक्तत्वमेव शब्द इति** ॥ आप्तिरेव शाब्दप्रमायां गुण इत्यर्थः । कुत इति चेत् । अन्यस्यासंभवात् । तथा हि । न तावच्छब्दप्रमायां योग्यता तत्प्रमा वा गुणः । तर्हि तत्र प्रष्टव्यम् । योग्यता किं प्रतिपाद्यसंसर्गसत्त्वं किंवा तदविनाभूतं धर्मान्तरमिति । नाद्यः । शाब्दप्रमायां शाब्दप्रमाया वा तद्विषयस्य वाऽजनकत्वात् । विषयसत्त्वस्य प्रमात्वान्तर्गतत्वेन तद्धेतुत्वायोगाच्च । नान्त्यः । प्रत्यक्षादावपि विषयसत्त्वाविनाभूतस्य गुणत्वेन जनकत्वे मानं नेति चेत् । समं प्रकृतेऽपि । किञ्च शाब्दी संसर्गप्रमा नियमेन संसर्गव्याप्यधीजन्या चेदनुमितिः स्यात् । नापि वक्तृयथार्थवाक्यार्थज्ञानं तत्पार्थं वा । तयोरसार्वत्रिकत्वादाप्त्यन्तर्भावाच्चेति ।

**श्री०**— **ज्ञानमेवेति** ॥ केवलं प्रमारूपं ज्ञानमेवेत्यर्थः ॥ **उत सातिशयमिति** ॥ केवलं ज्ञानमेव न भवति । किन्तु प्रमाविशिष्टं प्रमारूपं ज्ञानमित्यर्थः । विमतं विकर्तृकं शरीर्यजन्यत्वादित्यनुमाने शरीरिविशेषणस्यासिद्धिवारकत्वेन वैयर्थ्यं तार्किकैरुद्भाव्यते तन्न स्यादित्यर्थः ॥

**च०**— **आप्तोक्तत्वमेव शब्द इति** ॥ आप्तिरेव शाब्दप्रामाण्ये गुण इत्यर्थः ।

**सु० — ज्ञप्तौ स्वतस्त्वेऽपि प्रामाण्यं ज्ञानग्राहकमात्रग्राह्यमप्रामाण्येतरज्ञानसमवेतधर्मत्वात् ज्ञानत्ववत् ॥ न च प्रामाण्यं परतो ज्ञायते, अनभ्यासदशायां सांशयिकत्वादप्रामाण्यवदिति वाच्यम्; व्यर्थविशेषणत्वात्। असिद्धिपरिहारार्थमिति चेन्न तथाऽनभ्युपगमात्। यथोक्तं स्वयमेव एकामसिद्धिं परिहरतो द्वितीयाऽऽपन्नेति। अन्यथा शरीराजन्यत्वहेतोरपि विशेषणवैयर्थ्यं नोद्भाव्येत ॥ अथानभ्यासदशायामिति प्रतिज्ञाविशेषणम्। तथाऽपि स्वतःप्रमाणतया त्वदभ्युपगतधर्मिप्रत्यक्षानुमानोपमानेष्वपि संशयादिदर्शनेनानैकान्त्यमिति।**

वा० — **ज्ञप्ताविति** ॥ अत्र साध्यनिष्कर्षो निरुक्तिनिष्कर्षोक्तरीत्या द्रष्टव्यः। यद्यपि दोषादिदशायां जायमानं संशयादिकं स्वतस्त्वाविघातकमित्यप्रयोजकत्वमपि वक्तुं शक्यम्। तथाऽपि तस्यौत्सर्गिकप्रामाण्यग्रहणादिशक्तिव्युत्पादकोत्तरग्रन्थरीत्या सुग्रहत्वाद्दूषणान्तरमाह ॥ **व्यर्थेति** ॥ अनभ्युपगमं व्युत्पादयितुं बौद्धधिक्कारीयमुदयनवाक्यं संवादयति ॥ **यथोक्तमिति** ॥ स्वयमेवेत्युक्त्यैकामसिद्धिमित्यादि स्वयमेवोक्त्वा पुनरेतादृशानुमानप्रयोक्तुः स्वोक्तविस्मरणशीलतां सूचयति। स्वरूपासिद्धिं परिहरतो व्याप्यत्वासिद्धिरापन्नेति तद्वाक्यार्थः ॥ **तथाऽपीति** ॥ धर्मिधर्मभावाद्यपलापाय बहिष्ठ्वारोपवादिनां बौद्धानां धर्मिज्ञानमप्रमाणमिति विपर्यासदर्शनादनुमानोपमाने अप्रमाणमिति चार्वाकस्य विपर्यासदर्शनात्तद्विप्रतिपत्त्याऽन्येषां तत्प्रामाण्यादौ संशयादिदर्शनादित्यर्थः।

स० — ज्ञानगते घटत्वाद्यभावे व्यभिचारवारणाय ज्ञानसमवेतेत्युक्तमिति द्रष्टव्यम् ॥ **परतो ज्ञायत इति** ॥ उक्तानुव्यवसायातिरिक्तप्रमाणेनैव ज्ञायत इत्यर्थः। अन्यथा प्रामाण्यस्य ज्ञानग्राहकानुव्यवसायातिरिक्तप्रामाण्यानुमित्यादिग्राह्यत्वस्य स्वतस्त्वनयेऽपि सत्त्वात्सिद्धसाधनता स्यादिति ॥ **तथा अनभ्युपगमादिति** ॥ व्याप्तिग्रहानुपयुक्तविशेषणस्य व्याप्यस्वरूपे प्रवेशानङ्गीकारादित्यर्थः ॥ **एकामसिद्धिमिति** ॥ स्वरूपासिद्धिमित्यर्थः ॥ **द्वितीयापन्नेति** ॥ व्याप्तिज्ञानासिद्धिरापन्नेत्यर्थः। व्यभिचारावारकविशेषणघटितावच्छेदकावच्छिन्ने व्याप्यज्ञानात् व्याप्तत्वासिद्धिरित्यर्थः। नीलधूमत्वावच्छेदेनापि व्याप्तिसद्भावादिति द्रष्टव्यम् ॥ **धर्मिप्रत्यक्षानुमानोपमानेष्विति** ॥ तेष्वपि तद्ग्राहकाप्रामाण्यसंशयजन्यसंशयदर्शनेनेत्यर्थः।

प० — **तथाऽनभ्युपगमादिति** ॥ असिद्धिपरिहारार्थत्वस्य हेतुविशेषणत्वेनानभ्युपगमादित्यर्थः। उदयनसंमतिमाह ॥ **यथोक्तमिति** ॥ एकामसिद्धिं स्वरूपासिद्धिम्। द्वितीया व्याप्यत्वासिद्धिः।

विशेषणयुक्तविशिष्टधर्मस्य नीलधूमत्वादेरिव गुरुत्वेन तदवच्छेदेन व्याप्तिग्रहे प्रमाणाप्रवृत्तेरिति भावः ॥ **शरीरेति** ॥ विमतं क्षित्याद्यकर्तृकं शरीराजन्यत्वादिति प्रयोग इति भावः ॥ **त्वदभ्युपगतेति** ॥ उदयनाभ्युपगतेत्यर्थः ॥ **धर्मीति** ॥ इदंत्वप्रकारकेदंविशेष्यकेदंत्ववैशिष्ट्यगोचरप्रत्यक्षेत्यर्थः । तत्रापि परतस्त्वोपगन्तृनवीनखण्डनप्रकारश्च तर्कताण्डवे ध्येयः ।

**या० — प्रामाण्यमिति** ॥ प्रमात्वमित्यर्थः । अतो न करणप्रामाण्यादिकमादाय बाधशङ्का । ज्ञानग्राहकमात्रग्राह्यमित्येतत्पूर्ववद् द्वेधा व्याख्येयम् । ज्ञानगतेष्वौपाधिकसादृश्यौपाधिकधर्मेषु व्यभिचारवारणाय समवेतेत्युक्तम् । अप्रमात्वमपि जातिरिति मते तत्र व्यभिचारवारणाय प्रामाण्येतरेति धर्मविशेषणम् । स्वमतेसमवायाभावात्परीत्यैवायं हेतुरिति द्रष्टव्यम् । वस्तुतस्तु स्वाश्रयीभूतज्ञानविषयकानुव्यवसायत्वायोग्योपाध्यघटितज्ञानधर्मत्वादित्यत्र तात्पर्यात्स्वमतेनैवायं हेतुरित्याहुः । न च स्वमते सादृश्यस्याखण्डत्वादेवमपि तत्र व्यभिचार इति वाच्यम् । प्रतियोग्युपस्थितसमवेतस्यापि साक्षिवेद्यत्वेनान्यदा तद्योग्यतासत्त्वेन तत्र साध्यस्यापि सत्त्वात् ॥ **तथाऽनभ्युगमादिति** ॥ असिद्धिवारकविशेषणस्य व्याप्तिग्रहानुपयोगेन सार्थकत्वानभ्युपगमादित्यर्थः ॥ **एकामिति** ॥ स्वरूपासिद्धिमित्यर्थः ॥ **द्वितीयाऽऽपन्नेति** ॥ व्याप्त्यज्ञानसिद्धिरापन्नेत्यर्थः । व्यभिचारवारकविशेषणघटितावच्छेदकावच्छिन्ने व्याप्त्यज्ञानात् । न तु व्याप्यत्वासिद्धिरित्यर्थः । नीलधूमत्वाद्यवच्छेदेनापि व्याप्तिसद्भावादिति द्रष्टव्यम् ॥

**धर्मिप्रत्यक्षानुमानोपमानेष्विति** ॥ तत्प्रामाण्येष्वित्यर्थः । तथा तत्प्रामाण्येष्वपि तद्ग्राहकाप्रामाण्यसंशयजन्यसंशयदर्शनेनेत्यर्थः । अनुव्यवसायोऽप्यत्र ग्राह्यः । न ह्यजानन् जानामीति प्रत्येति । न वा घटे ज्ञाते पटं जानामीति । अतोऽनुव्यवसायत्वस्य प्रामाण्ये नियतत्वात्तत्प्रामाण्यं स्वत एवेति परैरङ्गीकृतत्वात् । ज्ञानपदेन धर्मिप्रत्यक्षादिसमकक्षतया तस्य गृहीतत्त्वाच्च । यद्वा स्वारसिक एवात्र सर्वत्र संशयः । ज्ञानत्वरूपसाधारणधर्मदर्शनादेः संशयकारणस्य संभवात् । ननु ज्ञानत्वाविशेषेऽपि धर्मिप्रत्यक्षादिकं स्वार्थपरिच्छेदात्मकमेवोत्पद्यते । तत्सामग्र्याऽर्थतथात्वाव्यभिचारात् । अतस्तत्प्रामाण्ये न कदाऽपि संशयोऽतः स्वत एव तेषां प्रामाण्यम् । प्रत्यक्षशाब्दज्ञाने तु नायोगव्यच्छेदात्मकेऽपि तु आरोपानारोपसाधारणविषयावभासिनी । अतस्तत्प्रामाण्यसंशयसंभवेन परतस्त्वमिति चेन्न । अस्य विभागस्यैवासंमतेः । धर्मिप्रत्यक्षस्य तावच्छून्यवाद्युत्प्रेक्षितप्रामाण्याभाससन्दर्शनेऽवधारणरूपताकथं वक्तुं शक्या । कूटलिङ्गजानुमितेर्भ्रमत्वदर्शनेनानुमितेरप्यनुमेयाव्यभिचारिलिङ्गसमुत्थत्वनियमाभावेन नावधारणरूपता । एवमुपमानस्यापि । अगवयेऽपि गोसादृश्यभ्रमेण गवयशब्दवाच्यत्वभ्रमसंभवात् । अनुव्यवसायस्यापि मानसस्याप्रमात्वादौ प्रमात्वग्राहिभ्रमत्वात् । अन्यथा प्रत्यक्षशाब्दज्ञानेऽपि कुतो न स्वार्थावधारणरूपे

इति । यत्तु न धर्मिप्रत्यक्षादौ प्रामाण्यसंशय उत्पद्यते तत्प्रमाण्यव्याप्यानां धर्मिज्ञानरूपैस्तदनुव्यवसायैर्ग्रहणात् । तथा हि । धर्मिप्रत्यक्षत्वे धर्मप्रत्यक्षत्वमेव प्रामाण्यव्याप्यम् । एवमनुव्यवसायेऽनुव्यवसायत्वेन तत्प्रामाण्यव्याप्यम् । तदुभयं तत्तदनुव्यवसायेन सुग्रहम् । अनुमितौ च व्याप्यवति व्यापकप्रकारकज्ञानत्वमेव तत्प्रामाण्यव्याप्यम् । तच्च लिङ्गोपहितलैङ्गिकभानपक्षेऽनुमित्युपनीतं तदनुव्यवसायगृहीतमेव । एवमुपमितौ सादृश्याद्यतिदेशवाक्यार्थोपहितवाच्यत्वभानपक्षे गोसादृश्यादिमति गवयादिशब्दवाच्यप्रकारकज्ञानत्वरूपस्य तत्प्रामाण्यव्याप्यस्योपमित्युपनीतस्य तदनुव्यवसायेन ग्रहणमिति सर्वत्र विशेषदर्शने सद्भावान्न प्रामाण्यसंशय इति । तत्तुच्छम् । व्याप्यत्वप्रकारकव्याप्यज्ञानस्यैव संशयविरोधित्वेन व्याप्यदर्शनमात्रस्य तदविरोधित्वात् । अन्यथा तैलं पृथ्वी न वेति संशयो न स्यात् । न च प्रकृते धर्मिप्रत्यक्षाद्यनुव्यवसायास्तत्तत्प्रामाण्यव्याप्यत्वेन तत्तत्प्रामाण्यव्याप्यविषयाः किन्तु वस्तुतस्तत्प्रामाण्यव्याप्यविषयका एवेति तत्र सर्वत्र संशयसंभवात् । भ्रमरूपानुव्यवसायस्योपपादितत्वेनानुव्यवसायत्वस्य तत्प्रामाण्यव्याप्यत्वासंभवाच्च । अनुमित्यादिप्रामाण्यव्याप्यस्य व्याप्यवद्विशेष्यकत्वघटितस्य तदनुव्यवसाये स्वातन्त्र्येण भानाङ्गीकाराच्च । अन्यथा सर्वत्रानुव्यवसायस्यैवं प्रामाण्यग्राहकत्वप्रसङ्गेन स्वतस्त्वं स्यादिति । अतः साधूक्तं संशयदर्शनेनेति ॥

च० — औत्पत्तिकं प्रामाण्यस्वतस्त्वं समर्थ्य ज्ञप्तावपि तत्समर्थयते ॥ **ज्ञप्तावित्यादि** ॥ **प्रामाण्यमिति** ॥ भावसाधनल्युडन्तप्रकृतिकोऽयं भविष्यन् प्रमात्वमित्यर्थः ॥ **ज्ञानग्राहकमात्रग्राह्यमिति** ॥ ग्राह्यप्रामाण्याश्रयतज्ज्ञानविषयकसाक्षिज्ञानविषयत्वयोग्यत्वं स्वतस्त्वमित्यर्थः । ज्ञानं गुणः घटज्ञानं गुण इत्यादिशब्दजनितान्वयधीविषयतानापन्नतया प्रामाण्यस्य बाधवारणाय साक्षीति प्रकृतप्रामाण्यानाश्रयज्ञानान्तरावगाहिसाक्षिज्ञानेन घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारत्वरूपघटत्वघटितप्रामाण्यस्यानवगाहनेन तद्विधूननाय ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकेति चोपात्तम् । प्रतिबन्धदशायामपि प्रामाण्यसाक्षिग्रहणयोग्यतानपायिन्येव । स्वयमेव गतिसमर्थोऽपि गज इत्यादिना तथैवोक्तेः । अथवा गृह्णातीति विषयीकरोतीति व्युत्पत्त्या साक्षितदितरसाधारणज्ञानं विवक्षितम् । इत्थं चोभयसिद्धप्रामाण्याविषयकत्वकज्ञानभिन्नज्ञानविषयत्वनैयत्यं स्वतस्त्वमित्यर्थः । प्रामाण्यविरोध्युपस्थित्यादिसमवधानकालीनानुव्यवसायमादाय बाधवारणाय भिन्नान्तम् । अप्रतिबद्धानुव्यवसायस्य सिद्धान्ते संग्रहायोग्येति । तस्य न्यायनये तथा सिद्धत्वेऽपि उत्तरवादिनये तथा असिद्धताविरहेण तेन रूपेणोभयसिद्धं यत्तदन्यत्वस्य तत्राक्षतत्वात् । न्यायनयेपि प्रामाण्यानुमितिविषयतामादाय सिद्धसाधनतावारणाय नैयत्यमिति ॥ तादृशाविषयकज्ञानभिन्नज्ञानत्वव्यापकस्वनिरूपितविषयितात्वावच्छिन्नकत्वमिति फलितार्थः । हेतुवाक्यशरीरे न्यायनयदिशा जातित्वेनोरीकृते अप्रमात्वेनैकान्त्यवारणायेतरपदमुपात्तम् । घटत्वादौ तद् व्युदसनाय

ज्ञानधर्मत्वादिति । ज्ञानवृत्तिप्रमेयत्वादौ तदपाकरणाय समवेतेति । पूर्ववादिदिशैवायं हेतुस्तेन सिद्धान्ते समवायानुपगमान्नान्यतरासिद्धिप्रसङ्गः । वस्तुतस्तु स्वाश्रयीभूतज्ञानविषयकानुव्यवसायविषयत्वायोग्यो-पाध्यघटितज्ञानधर्मत्वादित्यत्र तात्पर्यात्स्वमतेनैवायं हेतुरित्याहुरित्यपि व्याचक्षते ॥ **तथाऽनभ्युपगमा-दिति** ॥ हेतुतावच्छेदकघटकविशेषणानां व्यभिचारवारकतयैव सार्थक्यं नासिद्धिवारकतयेति परिभाषोपगतेरित्यर्थः । अत्रार्थे बौद्धधिक्कारीयमुदयनवचः प्रमाणयति ॥ **यथोक्तमिति** ॥ एकामसिद्धिं स्वरूपासिद्धिम् । द्वितीया व्याप्यत्वासिद्धिरित्युदयनवचनार्थः ॥ **द्वितीयापन्नेति** ॥ व्याप्यज्ञानासिद्धि-रापन्नेत्यर्थः । व्यभिचारावारकविशेषणघटितावच्छेदकावच्छिन्ने व्याप्त्यज्ञानात् । न तु व्याप्यत्वा-सिद्धिरित्यर्थः । नीलधूमत्वाद्यवच्छेदेनापि व्याप्तिसद्भावादिति द्रष्टव्यमित्यपि व्याकुर्वते ॥ **अन्यथा** तद्घटकस्य असिद्धिवारणफलकत्वस्याप्युपगमे ॥ **नोद्भाव्येतेति** ॥ विमतं विकर्तृकमिति प्रतिज्ञाय हेतूकृत इत्याशयः । आद्यक्षणावच्छिन्नो घटो गुणसामान्याभाव वानित्यादाविव पक्षतावच्छेदकघटक-त्वोपगमान्न क्षतिरित्याशङ्क्याह ॥ **तथापीति** ॥ **धर्मिप्रत्यक्षानुमानोपमानेष्विति** ॥ तत्प्रामाण्ये-ष्वित्यर्थः । जगदलीकतानलीकत्वप्रत्यक्षान्यप्रामाण्यानुपगन्तृत्वतदुपगन्तृत्वादिविप्रतिपत्तिजन्मनः प्रामा-ण्यावगाहिज्ञानधर्मिकप्रामाण्यसन्देहाहितस्य तत्तत्कोटिनिरूपितव्याप्त्यवच्छिन्नकिञ्चिद्वृत्तिप्रकारताशालि-निर्णयाभावरूपविशेषादर्शनसमवहितसाधारणधर्मदर्शनादिघटितसामग्रीजनितस्वारसिकस्य वा सन्देहस्य धर्मिप्रत्यक्षानुमानोपमानप्रामाण्येषु दर्शनादित्यर्थः ।

अनु०— अनवस्थाऽन्यथा हि स्यात्

सु० — **ज्ञप्तौ स्वतस्त्वानभ्युपगमे बाधकमाह ॥ अनवस्थेति ॥ अवश्यवेद्यत्वानभ्युप-गमान्नानवस्थेति चेत् । निःशङ्कप्रवृत्ताववश्यवेद्यत्वात् । तथा हि । ज्ञानं तावदबुभुत्सित-ग्राह्यतया तीव्रसंवेदनम् । ज्ञाते च तस्मिन्प्रामाण्याप्रामाण्यानुपलब्धौ कथं संशयो न स्यात् । सति च प्रामाण्यसंशये अर्थसंशयोऽपि कथं न स्यात् (कथं च प्रामाण्यसंशयेऽर्थसंशयोऽपि न स्यात्) तथा च कथं निःशङ्का प्रवृत्तिः स्यात् ॥ तथाऽप्यनुमानात्प्रामाण्यग्रहणमनुमिति(ते)श्च स्वतः-प्र(प्रा)माण(ण्य)मिति कथमनवस्थेति चेन्न । धर्मिलिङ्गदृष्टान्तद्वारिकायास्तस्या अनिवारणात् ॥ किञ्चानुमितिप्रामाण्यं येन ज्ञानेन विषयीक्रियते । तस्यापि प्रामाण्यमन्येनेति कथं नानवस्था ।**

**ननु स्वतःप्रामाण्येऽपि कथं नानवस्था इत्थम् । साक्षी खलु वृत्तिज्ञानग्राहकः । स एव च तत्प्रामाण्यं गृह्णातीति तेषां स्वतः प्रामाण्यम् । स च स्वप्रकाशः स्वप्रामाण्यपि गृह्णा-तीति तस्य स्वतःप्रामाण्यम् । तस्य यथार्थत्वनियमान्नाहार्यसंशयविषयत्वमपीति ।**

वा० — परोक्तमनवस्थापरिहारं निरसितुं प्रवर्तनीयेन यत्नेनैवानवस्थाप्रतिपादनप्रकारः सुबोध इत्याशयेन परोक्तपरिहारमाशङ्कते ॥ **अवश्येति** ॥ अर्थनिश्चयमात्रेण प्रवृत्त्युपपत्तेरर्थसन्देहेऽपि प्रवृत्तिदर्शनाच्च न प्रामाण्यमवश्यवेद्यमिति भावः । कृष्यादावर्थसन्देहात्प्रवृत्तावपि बहुवित्तव्ययायाससाध्ये पारात्रिकफलके यागादौ निष्कम्पप्रवृत्तये प्रामाण्यमवश्यं वेद्यमित्याह ॥ **निःशङ्केति** ॥ ननूक्तमत्रार्थनिश्चयादेव निःशङ्कप्रवृत्त्युपपत्तिरिति चेन्न । शङ्खः पीतत्वेनैव भातीत्यनुभवेनैकाकारनियते संशयान्यज्ञानरूपे शङ्खः पीत इत्यादिनिश्चये सत्यपि पीतार्थिनः प्रवृत्त्यदर्शनेन प्रामाण्यनिश्चयस्यावश्यकत्वात् ॥ न चाप्रामाण्याज्ञानमप्यर्थनिश्चयस्यसहकारीति वाच्यम् । अप्रामाण्यप्रामाण्यात्यन्ताभावतद्व्याप्यदोषजन्यत्वादिज्ञानाभावानामनेकेषां सहकारित्वकल्पनायां गौरवात् । प्रामाण्यनिश्चयस्यैकत्वेन लघुत्वात् । अभावानां प्रामाण्यनिश्चयविरोध्यभावत्वेनैकत्वे त्वावश्यकत्वाल्लाघवाच्च प्रामाण्यनिश्चयस्य कारणत्वकल्पनाया एव युक्तत्वात् । न चार्थनिश्चयस्यैव प्रवृत्तिहेतुत्वेऽपि पीतः शङ्ख इत्यादावप्रामाण्यज्ञानं प्रतिबन्धकमिति वाच्यम्, साक्षादविरोधिनो ज्ञानस्य जनकीभूतज्ञानविरोधित्वेनैव प्रतिबन्धकतया प्रामाण्यनिश्चयस्य कारणताया एव प्राप्तेः । प्रामाण्यशङ्कोत्तरनिःशङ्कप्रवृत्तौ प्रामाण्यनिश्चयस्य करणताया आवश्यकत्वाच्च तत्र प्रामाण्यशङ्कानिरासोपक्षयकल्पनायाश्चाभावानां कारणत्वकल्पनोक्तगौरवादिना निरस्तत्वात् । प्रामाण्यशङ्कानिरासे प्रामाण्यनिश्चयोपयोगेऽपि तस्यावश्यकत्वादनवस्था स्यादेव । न च बहुवित्तव्ययायाससाध्येऽपि धर्मिज्ञानकोटिस्मरणाद्यभावेनैव प्रामाण्यशङ्काद्यभावोपपत्तेर्न तत्रापि प्रामाण्यनिश्चयस्यावश्यकतेति वाच्यम्; धर्मिज्ञानाद्यभावानुपपत्तेरित्यशयेनाह ॥ **तथा हीति** ॥ यद्वा नन्वर्थनिश्चयादेव प्रवृत्त्युपपत्तौ न प्रामाण्यनिश्चयापेक्षा । न च प्रामाण्यसन्देहे तदाहितार्थसन्देहोऽवर्जनीय इत्यर्थनिश्चय एवानुपपन्न इति वाच्यम् । धर्मिज्ञानाद्यभावेनैव प्रामाण्यसन्देहाभावोपपत्तावर्थनिश्चयाविघातादित्यत आह ॥ **तथा हीति** ॥ अत्र वक्तव्यं न तावद्धर्म्यज्ञानं युक्तम् । योग्यस्य धर्मिणो ज्ञानस्य मनः संयुक्तात्मसमवायरूपसंप्रयोगवत्त्वेनैवोत्पत्त्या ज्ञानत्वेन ज्ञानज्ञानसामग्र्याः सत्त्वात् । ननु ज्ञानज्ञाने बुभुत्साया हेतुत्वात्तस्याश्चासार्वत्रिकत्वान्न ज्ञानज्ञानमित्यत उक्तमबुभुत्सितेति । सुखादिवज्ज्ञानस्यापि योग्यात्मविशेषगुणत्वादिति भावः । उपलक्षणं चैतत् । ज्ञानत्वरूपसाधारणधर्मदर्शनस्य यागादौ निष्कम्पप्रवृत्त्यर्थं प्रामाण्यादिविशेषबुभुत्सायाश्च सत्त्वेन कोटिस्मरणसामग्र्याश्च सत्त्वेन तदस्मरणमपि नोपपद्यत इत्यपि द्रष्टव्यम् । प्रामाण्याप्रामाण्यानुपलब्धावित्यनेन विशेषादर्शनसद्भावमाह । न च विषयान्तरसञ्चारादसन्देह इति वाच्यम् । यागादौ निष्कम्पप्रवृत्तिहेत्वसन्देहप्रयोजकविशेषावधारणाय विषयान्तरसञ्चारस्यैव निरोद्धव्यत्वात् । न हि प्रेक्षावन्तो बहुवित्तव्ययायाससाध्ये साधनत्वानिश्चये विषयान्तरसञ्चारसंपादितासन्देहमात्रेण चैत्यवन्दनादौ प्रवर्तन्ते तदेतदाह ॥ **कथं संशयो न स्यादिति** ॥

ज्ञानग्राहकातिरिक्तेन प्रामाण्यग्रहणपक्षे ह्यनवस्थोक्ता । न च सा युक्ता । ज्ञानान्तरप्रामाण्यस्य परतस्त्वेऽपि प्रामाण्यग्राहकानुमितेः स्वतःप्रमाणतया तत्प्रामाण्यस्यानुमितिग्राहकग्राह्यतया ज्ञानग्राहकातिरिक्ताग्राह्यत्वेन तत्रैव पर्यवसन्नानवस्थेति शङ्कते ॥ **तथाऽपीति** ॥ एतावता फलमुखानवस्थापरिहारेऽपि धर्मिलिङ्गव्याप्त्यादिज्ञानप्रामाण्यानिश्चयेऽसिद्ध्यादिप्रसङ्गेन तन्निश्चयायानुमित्यन्तरानुसरणे तज्जनकलिङ्गादिज्ञानप्रामाण्यनिश्चयस्याप्युक्तरीत्यैवावश्यकत्वे तदर्थं लिङ्गाद्यन्तरं तज्ज्ञानप्रामाण्यनिश्चयश्च स्वीकार्यः । एवं तत्र तत्रापीति करणमुखानवस्था स्यादेवेत्याह ॥ **धर्मीति** ॥ अङ्गीकृत्य चेदमुदितम् । अनुमितिप्रामाण्यस्य स्वतस्त्वेनानुमितिग्राहकातिरिक्ताग्राह्यत्वेऽपि तत्प्रामाण्यस्यानुमितेः स्वप्रकाशत्वाभावेन स्वेनैव ग्रहणानुपपत्त्या स्वग्राहकेणैव प्रामाण्यग्रहणे वक्तव्येऽनुमितिग्राहके प्रामाण्यस्यानुमित्यन्तरेणैव ग्राह्यतया तदनुमितिप्रामाण्यस्यापि तदनुमितिग्राह्यतावाच्या । एवं तत्र तत्रापीति फलमुखानवस्थाऽपि स्यादेवेत्याह **किञ्चेति** ॥ नन्वेवमनुमितिग्राहकेण अनुमितिप्रामाण्यग्रहणेऽपि यद्यनवस्था तर्हि त्वन्मतेऽपि सा स्यादेव । त्वयाऽपि ज्ञानग्राहकातिरिक्ताग्राह्यत्वमात्रस्य स्वतस्त्वेनोक्तत्वात्तस्य चोक्तरीत्याऽनवस्थानिवारकत्वाभावादित्याशयेन शङ्कते ॥ **नन्विति** ॥ मन्मते वृत्तिज्ञानग्राहकस्य साक्षिणो वृत्तिज्ञानातिरिक्तत्वेन वृत्तिज्ञाने स्वातिरिक्तसाक्षिरूपग्राहकान्तरापेक्षायामपि वृत्तिज्ञानग्राहकातिरिक्तग्राहकानपेक्षणमात्रेण वृत्तिज्ञानप्रामाण्यस्य स्वतस्त्वं वृत्तिज्ञानप्रामाण्यग्राहकस्य च ज्ञानग्राहकस्य स्वस्यैव स्वप्रामाण्यग्राहकत्वेन साक्षिणः स्वप्रकाशत्वेन स्वस्यैव स्वप्रामाण्यग्राहकतया ज्ञानग्राहकान्तरानपेक्षणे तत्रैव पर्यवसानेनानवस्थाभावश्चेति न कोऽपि दोष इत्याह ॥ **साक्षीति** ॥ ननु साक्षिणा स्वप्रामाण्ये गृहीतेऽपि प्रामाण्यग्राहकसाक्षिण्येव प्रामाण्यसन्देहाहितः साक्षिगृहीते स्वप्रामाण्येऽपि सन्देहः स्यादेवेत्यत आह ॥ **तस्येति** ॥

**प०**— तीव्रप्रवेदनमिति बहुव्रीहिः । शीघ्रं ज्ञायत इत्यर्थः । नन्वर्थनिश्चयादस्तु प्रवृत्तिः निःशङ्केत्यत आह ॥ **सति चेति** ॥ **धर्मिलिङ्गदृष्टान्तेति** ॥ प्रत्यक्षज्ञानप्रामाण्यमनुमेयं चेदनुमितिप्रामाण्यस्य ज्ञानग्राहकज्ञानवेद्यत्वेऽपि प्रामाण्यानुमितिजनकानुमाने धर्मिलिङ्गदृष्टान्ताः तज्ज्ञानप्रामाण्यं चानुमानान्तरेण गृह्यते चेत्तत्राप्येवमित्यनवस्थेत्यर्थः ॥ **आहार्येति** ॥ केनचिदाहितसंशयविषयत्वमपि नेत्यर्थः ॥

**या०**— **निःशङ्कप्रवृत्ताविति** ॥ बहुवित्तव्ययायाससाध्य इति शेषः । ननु तत्राप्यर्थनिश्चय एव हेतुः । समानविषयकत्वादावश्यकत्वाच्च । न तु प्रामाण्यनिश्चय इति चेन्न । पीतः शङ्ख इति

निश्चये सत्यपि पीतार्थिनः प्रवृत्त्यभावात् । न चाप्रामाण्यादिज्ञानाभावरूपसहकारिविरहादप्रवृत्तिरिति वाच्यम् । अप्रामाण्यप्रामाण्याभावदोषजन्यत्वादिशङ्काद्यभावानां गुरूणामनेकेषां कारणत्वकल्पनापेक्षया लघुभूतस्यैकस्य प्रामाण्यनिश्चयस्यैव कारणत्वकल्पनौचित्यात् । प्रामाण्यनिश्चयविरोध्यभावत्वेन तेषामेकत्वे त्वावश्यकत्वात्प्रामाण्यनिश्चय एव तत्र हेतुरस्तु । किञ्चाप्रामाण्यादिज्ञानाभावकूटस्य प्रतिबन्धकाभाव-त्वेनैव हेतुता वाच्या । ग्राह्याभावानवगाहिनां च ज्ञानानां प्रतिबन्धकत्वे जनकीभूतज्ञानविघटकत्वेनैव वक्तव्येऽर्थनिश्चयस्य पीतः शङ्ख इत्यादौ तत्सत्त्वेऽपि सत्त्वेन तद्विघटनीयत्वासंभवात् । तद्विघटनीयस्य प्रामाण्यनिश्चयस्य हेतुत्वसिद्धेः । ननु तथाऽपि ज्ञानस्य बुभुत्सितग्राह्यत्वाद्बुभुत्सायाश्च सार्वत्रिकत्वाद्ध-र्मिज्ञानाभावेनैव संशयाभावे प्रामाण्यं नावश्यत्रेद्यमित्यत आह ॥ **ज्ञानं तावदिति** ॥ स्यादेतदेवं यदि ज्ञानस्य बुभुत्सितग्राह्यत्वं स्यात् । न चैवं । किन्तु तस्य सुखादिवद्योग्यात्मविशेषगुणत्वेनाबुभुत्सित-ग्राह्यत्वमेव । अन्यथा बुभुत्साया ज्ञानरूपधर्मिज्ञानसाध्यत्वेनानवस्थाप्रङ्गात् । वर्तमानस्वीयज्ञाने बुभुत्साया अदर्शनाच्च । तथा च त्वन्मते योग्यस्य धर्मिणो ज्ञानस्य मनःसंयुक्तात्मसमवायरूपसंयोगव-त्त्वेनोपपत्त्या ज्ञानत्वेन ज्ञानसामग्र्याः सत्त्वात् । मन्मते च साक्षिणः सदा सत्त्वान्न धर्म्यज्ञानं संभवतीति भावः । अत एवाह ॥ **तीव्रसंवेदनमिति** ॥ **कथं संशयो न स्यादिति** ॥ न च कोट्यस्मरणात्संशयाभावः । ज्ञानत्वरूपसाधारणधर्मदर्शने बहुवित्तव्ययायाससाध्ये यागादौ निष्कम्प-प्रवृत्त्यर्थं प्रामाण्यादिरूपकोटिबुभुत्सायाश्च सत्त्वे तदस्मरणायोगात् । नापि विषयान्तरसञ्चारादसन्देहः । उक्तरूपे यागादौ निष्कम्पप्रवृत्तिहेत्वसन्देहप्रयोजककोटिविशेषावधारणाय विषयान्तरसञ्चारस्यैव-निरोद्धव्यत्वात् । न हि प्रेक्षावन्तो बहुवित्तव्ययायाससाध्ये साधनत्वानिश्चयेऽपि विषयान्तरसञ्चार-संपादितासन्देहमात्रेण प्रवर्तमाना दृश्यन्ते । ततश्च कथं संशयो न स्यादित्यापादनं युक्ततरमिति ज्ञातव्यम् ॥ **धर्मिलिङ्गेति** ॥ धर्मिलिङ्गदृष्टान्तादिज्ञानप्रामाण्यनिश्चयेऽसिद्ध्यादिप्रसङ्गेन तन्निश्चयार्थं पुनरनुमानान्तरमङ्गीकरणीयम् । धर्म्याद्यन्तरं तज्ज्ञानप्रामाण्यनिश्चयश्च स्वीकार्यः । एवं तत्र तत्रापीति कारणमुख्यनवस्था स्यादिति भावः ।

श्री० — **धर्मिलिङ्गदृष्टान्तद्वारिकाया इति** ॥ फलमुखानवस्थाभावेऽपि कारणमुखानवस्था स्यादेवेत्यर्थः ॥

च० — **अवश्येति** ॥ रजतादिप्रवृत्तित्वावच्छिन्नं प्रति गृहीतप्रामाण्यकत्वाविशेषितरजतादि-विषयकज्ञानत्वावच्छिन्नस्यैव हेतुतोपेयत इति प्रामाण्यग्रहानवश्यंभावान्नानवस्थेत्याशयः ॥ **निःशङ्केति** ॥ बहुवित्तव्ययायाससाध्यविषयिण्यामित्यादिः । अत्रायमसन्धिः । अप्रामाण्यज्ञानास्कन्दितज्ञानात्प्रवृत्त्यादि-कार्यानुत्पत्त्या गृहीतप्रामाण्यकज्ञानत्वेनैव प्रवृत्त्यादिहेतुत्वमुपगन्तव्यम् । एवं प्रामाण्यग्रहस्याप्यप्रामाण्य-

ज्ञानास्कन्दितस्याकिञ्चित्करतया तत्रापि गृहीतप्रामाण्यकत्वमवश्यं निवेशनीयम् । एवं तादृशप्रामाण्यग्रहादावपीति परतःप्रामाण्यग्रहकल्पे प्रवृत्त्यादिजनकज्ञानेऽनुमानाद्यधीनप्रामाण्यग्रहोऽभ्यर्थयितव्यः । तत्रापि तथाविधप्रामाण्यग्रहान्तरमित्यनवस्था प्रसज्येत । सिद्धान्ते तु प्रवर्तकज्ञानस्यैव स्वीयप्रामाण्यादिविषयकतया न प्रामाण्यग्रहान्तरापेक्षा । न च प्रामाण्यग्रहानपेक्षणेपि विषयानवस्थितिः स्वतस्त्वमतेऽपि दुर्वारैव । घटज्ञाने घटत्वघटितप्रामाण्यावगाहित्वस्येव प्रामाण्यादिघटितप्रामाण्यधारावगाहित्वस्य स्वीकरणीयत्वात् । तदनुपगमे गृहीतप्रामाण्यके प्रामाण्यज्ञानविरहेण प्रवृत्त्याद्यनुदयापत्तिरिति वाच्यम् । एकज्ञानस्य प्रामाणिकप्रामाण्यधारावगाहित्वोपगमे क्षतिविरहात् । परं परतःपक्षे प्रवर्तकज्ञानादावानुमानिक एव प्रामाण्यग्रहो वाच्यस्तत्र च गृहीतप्रामाण्यकलिङ्गज्ञानमपेक्षितम् । तत्र प्रामाण्यग्रहोऽपि गृहीतप्रामाण्यकलिङ्गादिज्ञानान्तरादित्येवंरीत्याऽनवस्थित्याऽनवस्थितलिङ्गादिज्ञानतत्प्रामाण्यधारापेक्षणेनापि सा तदवस्था । न चाप्रामाण्यज्ञानानास्कन्दितज्ञानत्वेनैव हेतुतोपेयते न गृहीतप्रामाण्यकत्वघटितधर्मपुरस्कारेण । सन्देहसाधारणाप्रामाण्यज्ञानत्वावच्छिन्नाभावनिवेशापेक्षया निश्चितप्रामाण्यकत्वस्य गुरुशरीरतयेति न क्षतिरिति वाच्यम् । भ्रमत्वप्रमात्वाभावतद्व्याप्यदोषजन्यत्वादिग्रहाभावानां कारणतावच्छेदककोटिनिवेशापत्त्या गौरवेण दुर्निवेशत्वात् तदपेक्षया प्रामाण्यनिश्चयस्यैकत्वेन लाघवादित्याद्याकरोक्तदिशा प्रामाण्यस्यावश्यवेद्यत्वादिति । अथ स्वनिरूपितधर्मितापन्नज्ञानावगाहिज्ञानोत्पादकबुभुत्साया असार्वत्रिकतया तन्नियन्त्रितधर्मिज्ञानाभावेन प्रामाण्यसन्देहानुत्पादनेनैव प्रवृत्तिसिद्धेः प्रामाण्यस्य नावश्यवेद्यतेत्यत आह ॥ **ज्ञानं तावदित्यादि** ॥ बुभुत्सायाः ज्ञानाख्यधर्मिज्ञानसाध्यत्वेनानवस्थाप्रसङ्गेनाबुभुत्सितग्राह्यत्वस्यैवोपेतव्यतया व्यवसायात्ममनोयोगविषयासंसर्गाग्रहादिघटितसामग्र्या अक्षततया धर्मिज्ञानसंभावनोक्तसिद्धान्ते च साक्षिणः सार्वकालिकतया धर्मिज्ञानं सूपपादमिति भावः ॥ **अनुपलब्धाविति** ॥ विशेषादर्शनसहकृतसाधारणधर्मदर्शनादिघटितसामग्रीसद्भावोऽनेनाभिप्रेयते ॥ **कथं संशयो न स्यादिति** ॥ विषयान्तरसञ्चारादिरूपप्रतिबन्धकराहित्यादिति भावः ।

अनु०— अप्रामाण्यं तथाऽन्यतः ॥

**सु०— ननु यदि प्रामाण्यमुत्पत्तौ ज्ञप्तौ च स्वतः स्यात् तर्हि बौद्धादिवाक्यजनितमपि ज्ञानं प्रमाणं स्यात् । अस्ति हि तत्र ज्ञानहेतुः; अन्यथा ज्ञानमपि न स्यात् । तथा प्रमाणतया ज्ञायेत ज्ञानग्राहकसद्भावात् । अस्तु तदपि प्रमाणमिति चेत्; तस्य वेदविरोधित्वात् । वेदविरोधिनः प्रामाण्ये पुनर्वेदप्रामाण्यं न स्यात्, वस्तुनो द्वैरूप्यं वाऽऽपद्येतेति सर्वथा मीमांसा-**

**ऽनुपपत्तिरित्यत आह ॥ अप्रामाण्यमिति ॥ तथाशब्दः समुच्चये । नायं नियमो यज्ज्ञानकरण-मिन्द्रियं लिङ्गं शब्दो वा प्रामाण्यमेवोत्पादयतीति । किं नामेन्द्रियादीनामौत्सर्गिकी शक्तिः प्रामाण्यजन्ने; दोषापवादादप्रामाण्यमपि जनयत्येव । दोषाणां सहजशक्तिप्रतिबन्धेन विपरीत-कार्यजननसामग्रीनिवेशात् । तर्हि दोषाभावः प्रामाण्यस्य कारणमित्यायातमिति चेन्न; तथा सत्युपसर्गापवादयोः क्वाप्यभावप्रसङ्गात् । तथा न ज्ञानग्राहकस्य साक्षिणोऽयं नियमः यत्प्रमाणतयैव गृह्णातीति, किन्तु प्रवृत्त्यसामर्थ्यादिनाऽपवादकस्य सद्भावेऽप्रामाण्यमपि गृह्णात्येव ; औत्सर्गिकत्वात्प्रामाण्यस्वतस्त्वस्येति ।**

वा०— ननु वेदस्य प्रामाण्यं कुत इत्याशङ्कापरिहाराय तत्स्वतस्त्वोपपादनस्यैव सङ्गतत्वात्तस्य च कृतत्वादप्रामाण्यपरतस्त्वोपपादनार्थकोत्तरवाक्यमसङ्गतम् । न चोक्तस्वतस्त्वे बाधकत्वेन बौद्धादिवाक्य-जनितज्ञानप्रामाण्ये परेण प्रसञ्जिते तन्निरासायोत्तरवाक्यं सङ्गतमिति वाच्यम् । स्वतस्त्ववादिनं प्रति तस्यानिष्टत्वाभावेन तेन तस्यानिरसनीयत्वादित्यतस्तत्सङ्गमयति ॥ **नन्विति** ॥ विरुद्धयोर्द्वयोः प्रामाण्या-नुपपत्त्या वेदविरुद्धत्वाद्बौद्धागमस्याप्रामाण्यमङ्गीकार्यम् । वेदविरोधिनोऽपि तस्य प्रामाण्याङ्गीकारे वेदस्य वा प्रामाण्यं नाभ्युपेयमित्याह ॥ **तस्येति** ॥ विरुद्धोभयप्रामाण्याभ्युपगमे बाधकमाह ॥ **वस्तुन इति** ॥ प्रामाण्यस्वतस्त्वस्यैवोपपादितत्वेन तस्य दोषायत्तत्वाभावादप्रामाण्यपरतस्त्वे प्रामाण्यस्य दृष्टान्तत्वानुपपत्त्या यथा प्रामाण्यं स्वतस्तथाऽप्रामाण्यं परत इत्यभिप्राये चोपमास्वारस्यहानेः प्रामाण्यस्वतस्त्व एवानुपपत्तेः शङ्कितत्वेन तस्याद्याप्यसिद्धेश्चोपमार्थत्वानुपपत्त्या समुच्चयार्थतया तथाशब्दं व्याचष्टे ॥ **तथेति** ॥

ननु सामग्रीसद्भावाद्बौद्धादिवाक्ये प्रामाण्योत्पत्तिज्ञप्त्योः प्रप्रसञ्जिततयोः किमसङ्गतं कारणान्तरा-दप्रामाण्ययुच्यते । न च बौद्धादिवाक्ये उत्तरवाक्येन तत्प्रसङ्गं निरसितुमुपोद्घाततया ज्ञाने कारणान्त-रादप्रामाण्यमुत्पाद्यते ज्ञायते चेत्यनेन वाक्येन प्रतिपाद्यत इति वाच्यम् । तर्हि कारणान्तरादप्रामाण्यवत्प्रा-माण्यासामग्र्याः सत्त्वाज्ज्ञाने तदपि स्यात् । परस्परप्रतिबन्धान्नैकमपि वा स्यात् । न चाप्रामाण्यकारणेनैव प्रामाण्यसामग्र्यः प्रतिबन्ध इति वाच्यम् । तर्हि ज्ञानसामग्र्या एव प्रामाण्यसामग्रीत्वाज्ज्ञानमपि न स्यादित्युक्तत्वात् । न चाप्रामाण्यकारणस्य प्रामाण्यांश एव ज्ञानसामग्रीप्रतिबन्धकत्वमिति वाच्यम् । तस्यैवानुपपत्तेः । न हि ज्ञानकारणमिन्द्रियादि तद्वति तत्प्रकारकत्वादिशून्यं ज्ञानस्वरूपमेवोत्पादयत्य-प्रामाण्यकारणं तु तत्र तदभाववति तत्प्रकारकत्वमुत्पादयतीति वाक्यं युक्तम् । ज्ञानत्वरूपस्यैव तेन विनाऽनिर्वाहात् । नापीन्द्रियादिविलक्षणैव काचिदप्रामाण्यसामग्र्यप्रामाण्यविशिष्टं ज्ञानमुत्पादयन्ती प्रामाण्यविशिष्टज्ञानसामग्रीमिन्द्रियादिरूपां प्रतिबध्नातीति युक्तम् । तादृशसामग्र्या अप्रसिद्धेरित्यत

इन्द्रियादिरूपज्ञानसामग्र्युत्पादितज्ञानेऽप्रामाण्योत्पादकत्वमात्रं कारणान्तरस्य नोच्यते । न वाऽप्रामाण्यविशिष्टज्ञाने सामग्र्यन्तरं कल्प्यतेऽपि तु प्रामाणसामग्रीभूतेन्द्रियादीनामेव दोषरूपाप्रामाण्यकारणसहकृतानामप्रामाण्यविशिष्टज्ञानजनकत्वमुच्यत इति न कोऽपि दोष इत्याशयेनाह ॥ **नायमिति** ॥ तर्हीन्द्रियादीनां प्रामाण्यवदप्रामाण्यजनकत्वाभ्युपगमे स्वतस्त्वादिहानिरित्याशयेन शङ्कते ॥ **किन्नामेति** ॥ इन्द्रियादीनामुभयजनकत्वेऽपि प्रामाण्यजननशक्तेः सहजत्वमप्रामाण्यजननशक्तेरनन्याहितत्वमित्येतावन्मात्रेण स्वतस्त्वपरतस्त्वविभागस्याभिप्रेतत्वान्नापसिद्धान्त इत्याशयः । ननु प्रामाण्यजनने सहजशक्तिमतां कथं तदजनकत्वं कथं च सहकारिमात्रेण तद्विपरीतकार्यजनकत्वं चेत्यत आह ॥ **दोषाणां चेति** ॥ न च मण्यादिवद्दोषाणां सहजशक्तिप्रतिबन्धकत्वेऽपि सहजशक्तिमतां तद्विपरीतकार्यसंपादकत्वं कथं तेषामिति वाच्यम् । अख्यातिमतनिरासावसरे दोषवैचित्र्यस्योपपादितत्वेनादोषत्वात् । न च यादृच्छिकसंवादिस्थले सत्यपि दोषे प्रामाण्यस्यैव जननात्कथं तस्य सहजशक्तिप्रतिबन्धकत्वमिति वाच्यम् । विषयसत्त्वस्योत्तेजकतया तदभावविशिष्टदोषस्यैव प्रतिबन्धकत्वादिकल्पनात् । तत्र चोत्तेजकसद्भावेनादोषत्वात् । इमं मा दहेत्यादौ मन्त्रादेरुद्देश्यव्यक्तिविशेष इव विषयसत्त्वाभावस्थल एव दोषाणां प्रतिबन्धकत्वकल्पनाद्यादृच्छिकसंवादिस्थले केवलप्रतिबन्धकाभावस्यापि सत्त्वाच्च न हि जात्यैव कश्चिद्दोष इति भावः । तर्हि प्रतिबन्धकाभावस्य कारणत्वाद्दोषाभावापेक्षायां ज्ञानजनकातिरिक्तापेक्षया स्वतस्त्वहानिरित्याशङ्कते ॥ **तर्हीति** ॥ प्रतिबन्धकाभावे कारणत्वेन कारणभूतदण्डाभावादौ च प्रतिबन्धकत्वेनाव्यवहाराच्च सामग्रीवशेन प्रसक्ते औत्सर्गिकत्वस्य सत्यपि पुष्कलकारणे यद्वशात्कार्याभावो विपरीतकार्यं वा तस्यापवादकत्वस्य च सर्वसिद्धत्वात् । प्रतिबन्धकाभावस्यापि कारणत्वे तस्यापि सामग्रीकोटिप्रवेशापत्त्या सर्वसिद्धोत्सर्गापवादापलापः स्यादित्याह ॥ **तथा सतीति** ॥ न चानन्यथासिद्धान्वयव्यतिरेकसिद्धं दोषाभावस्य कारणत्वं कथं नेति वाच्यम् । तर्हि दण्डत्ववद्दार्ढ्यादेरपि कारणत्वकल्पनापत्तेः । लोके कारणत्वाव्यवहारेण तत्रान्यथासिद्धिकल्पने च प्रतिबन्धकाभावेऽपि तदव्यवहारेणौत्सर्गिककार्यापवादकविरहरूपत्वरूपान्यथासिद्धेरपि परिशेषत्वात्प्रतिबन्धकाभावस्य प्रयोजकत्वमात्रं तु स्वीक्रियत एव । एवञ्च भाष्यटीकायास्तदभिप्रायेण प्रवृत्तत्वान्न तद्विरोधः । यद्वाऽऽप्तोक्तत्वरूपगुणजन्यत्वस्येव दोषाभावजन्यत्वस्यापौरुषेयत्वाविघातकत्वादपौरुषेयत्वसाधनस्यैव च तत्र प्रस्तुतत्वात्प्रकृताभिप्रायेणाभ्युपगमवादेन तत्र दोषाभावकारणतोक्तिः । अत्र तु प्रामाण्यस्वतस्त्वस्यैवोपपादनीयतया तदर्थं वस्तुस्थितिकथनमिति द्रष्टव्यम् । उक्तप्रकारं ज्ञप्तावप्युपपादयति ॥ **तथेति** ॥

स०— ननु तर्हि उभयोः प्रामाण्यमस्त्वित्यत आह ॥ **वस्तुनो द्वैरूप्यं वेति** ॥ **तथा सति उत्सर्गापवादयोरिति** ॥ न हिंस्यात्सर्वभूतानीत्यत्राप्यविहितहिंसात्वावच्छेदेनाकर्तव्यतानियम एव स्यान्नो-

त्सर्गः । प्रमाणावगतस्य सव्यभिचारनियमस्योत्सर्गशब्दार्थत्वात् । एतादृशोत्सर्गाभावे च तन्नियमे व्यभिचारप्रदर्शनार्थं प्रवृत्तापवादस्याप्यसंभवः उक्तरीत्या व्यभिचारस्यैव संभवादिति भावः ॥

प० — **उत्सर्गापवादयोः क्वाप्यभावप्रसङ्गादिति** ॥ यस्य कस्य हि स्वसामग्रीबलप्रसक्तिस्तदौत्सर्गिकम् । सत्यामपि सामग्र्यां यद्वशात्तदभावो विपरीतकार्यं च भवति तत्तस्यापवादकं दोषाभावस्यापि सामग्रीकोटिप्रवेशे सति दोषसत्त्वस्थले कार्याभावस्य विपरीतकार्यस्य च तत्सामग्र्यभावविपरीतसामग्रीसद्भावाभ्यामेवोपपत्त्या सत्यां तत्सामग्र्यामित्यादेरभावादुत्सर्गापवादः क्वापि न स्यादित्यर्थः । देवताधिकरणे भाष्यटीकयोर्दोषाभावस्य कारणत्वाभ्युपगमे तात्पर्यं दोषाभावहेतुत्वभङ्गे तर्कताण्डवे व्यक्तमिति न तद्विरोधोऽप्यत्र शङ्क्यः ॥ **अप्रामाण्यमपि गृह्णातीति** ॥ तत्वनिर्णयटीकायां वादावल्यां चाप्रामाण्यमनुमेयमित्युक्तेस्तात्पर्यं तर्कताण्डवे प्रथमं प्रामाण्यानुमित्यसंभववादे व्यक्तमिति न तद्विरोधोऽप्यत्राशङ्क्यः ।

या० — ननु तर्हि उभयोः प्रामाण्यमस्त्वित्यत आह ॥ **वस्तुनो द्वैरूप्यं वेति** ॥ **तथा सति उत्सर्गापवादयोरिति** ॥ सोपाधिकव्यभिचारः प्रमाणसिद्धनियमो ह्युत्सर्गः । तन्नियमे तादृशव्यभिचार एव चापवादः । यथा हिंसात्वावच्छेदेनाकर्तव्यतानियमो न हिंस्यात्सर्वभूतानीति प्रमाणसिद्धः । यागीयहिंसाया विहितत्वेन निमित्तेन व्यभिचारी च । एवं च प्रकृते यद्यपवादकतया प्रसिद्धदोषाभावमपि ज्ञानजनकसामग्र्यां निवेश्य तस्याः प्रामाण्यजनकत्वं नियतमित्युच्येत । तर्हि सर्वत्राविहितहिंसाद्यवच्छेदेनाकर्तव्यतादीनां नियम एव स्यान्नोक्तरूप उत्सर्गः । तदभावे च तन्नियमव्यभिचाररूपापवादोऽपि न स्यादित्यर्थः । केचित्तु यदि दोषाभावोऽपि प्रामाण्यजनकतयेष्यते तर्हि सर्वत्र प्रतिबन्धकाभावः कारणमित्यभिमतं स्यात् । दोषस्य प्रामाण्ये प्रतिबन्धकत्वात् । न च तत्संभवति । तथा सत्युत्सर्गापवादयोः क्वाप्यभावप्रसङ्गात् । तथा हि । उत्सर्गो हि बाधकैकापोद्यनियमः । स च प्रतिबन्धकाभावस्य कारणत्वाभ्युपगमेन युज्यते । प्रतिबन्धकाभिमतकालीनकार्याजननस्य कारणाभावप्रयुक्तत्वेन बाधकप्रयुक्तत्वाभावात् । अपवादो हि सति पुष्कलकारणे कार्यानुत्पादप्रयोजकः । सोऽपि प्रतिबन्धकाभावस्य कारणत्वाभ्युपगमे न युज्यते । प्रतिबन्धकालीनकार्यजननस्य कारणाभावप्रयुक्तत्वादित्येतत्फक्किकार्थमाहुः । नन्वेवं दोषाभावस्य प्रमां प्रत्यजनकत्वे 'अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथानुमा । आगमोऽदुष्टवाक्यं च' इति ब्रह्मतर्केण 'निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम् । निर्दोषोपपत्तिरनुमा । निर्दोषः शब्द आगमः' इति प्रमाणलक्षणेन दोषाभावस्य कारणत्वे च नास्माकमनिष्टम् । तावता वेदापौरुषेयत्वाव्याघातादिति तत्त्वप्रकाशिकया विरोध इति चेन्न । फलसकरणं चक्षुरादिकमादायैव दोषाभावस्य प्रमां प्रति नियतपूर्वभावित्वग्रहेण दण्डगतदीर्घत्वादिवत्कारणतावच्छेदकत्वमात्रेणैव प्रमायां दोषाभावोपयोगो न कारणतया-

ऽपीति तद्ग्रन्थाभिप्रायात् । एनेन प्रमायां गुणस्य दोषाभावस्य वाऽजनकत्वे ज्ञानसामग्रीमात्रजन्यत्वे चाऽप्रमापि प्रमाविशेषः स्यादिति परेषां दूषणमप्यपास्तं वेदितव्यम् । दोषाभावस्य प्रमायां कारणतया अनपेक्षितत्वेऽपि अवच्छेदकतयाऽपेक्षितत्वात् । ततश्च प्रमात्वप्रयोजिकाया अदुष्टसामग्र्या भ्रमेऽभावान्न प्रमात्वप्रसक्तिः । अन्यथा दावाग्निदग्धवेत्रबीजजन्यकदल्यङ्कुरोऽपि वेत्राङ्कुरविशेषः स्यादिति । यथा नीलरूपसामग्रीजन्यस्यापि चित्ररूपस्य न नीलरूपविशेषत्वम्, यथा च विरुद्धनिश्चयद्वयसामग्रीजन्यस्य संशयस्य न निश्चयविशेषत्वम्, यथा च पाकजरूपसामग्रीजन्यस्य रसादेर्न रूपविशेषत्वम्, तथा भ्रमस्यापि न प्रमाविशेषत्वमित्यप्याहुः ।

श्री० — **अन्यथेति** ॥ ज्ञानहेतोरेवाभावे बौद्धवाक्याज्ज्ञानमेव न स्यादित्यर्थः । भवतु प्रमाणं किं तत इत्याह ॥ **तथेति** ॥ अस्तु तर्हि उभयोरपि प्रामाण्यमिति चेत्तत्राह ॥ **वस्तुन इति** ॥ ईश्वर-धर्मादिरूपवस्तुनः सत्त्वासत्त्वादिरूपविरुद्धधर्मद्वयालिङ्गितत्वरूपं द्वैरूप्यमापद्येतेत्यर्थः ॥ **मीमांसानुपपत्तिरिति** ॥ वेदविरोधिनः प्रामाण्ये वेदस्याप्रामाण्यापत्त्याऽनुग्राह्यप्रमाणाभावेन मीमांसारम्भानुपपत्तिरित्यर्थः ।

च० — उभयोरपि प्रामाण्योपगमे बाधकमभिधत्ते ॥ **वस्तुनो द्वैरूप्यमिति** ॥ विरुद्धधर्मद्वय-वत्ता प्रसज्यत इत्यर्थः ॥ **उत्सर्गापवादयोरिति** ॥ दण्डाभावादेर्यथा घटादिकं प्रति न प्रतिबन्धकता-व्यवहारस्तद्वत्प्रतिबन्धकाभावस्यापि न कारणत्वेन व्यवहार इति स्वसामग्रीवशेन प्रसक्तेः औत्सर्गिकत्वस्य सत्यामपि सामग्र्यां यन्नियन्त्रितः कार्यानुत्पादः विपरीतकार्योत्पादो वा तस्यापवादकत्वस्य सर्वोपेततया । प्रतिबन्धकाभावस्यापि कारणत्वे तस्यापि सामग्रीकोटिनिवेशापत्त्या निखिलतन्त्रसिद्धोत्सर्गापवादापलापः स्यादिति भावः । अथोक्तदिशा दोषाभावस्य प्रमानिरूपितजनकताप्रतिविहितौ श्रीमद्भाष्यटीकायां देवतानये दोषाभावस्य कारणत्वेनास्माकमनिष्टं तावता वेदापौरुषेयत्वस्याव्याघातादिति विन्यासो विरुणद्धीति चेन्मैवम् । इन्द्रियादिवृत्तिप्रमानिरूपितजनकतायां दोषाभावस्यावच्छेदकत्वे तात्पर्यकत्वा-त्तद्विन्यासस्य न विरोधगन्ध इति व्याकुर्वाणाः ।

अनु० — **मिथ्याज्ञप्तिप्रलम्भादेस्तेन वेदविरोधि यत् ॥**
**न मानम्**

सु० — **किमतो यद्येवमित्यत आह ॥ मिथ्याज्ञप्तीति ॥ यत एवमप्रामाण्यं परतस्तेन कारणेन, मिथ्याज्ञानविप्रलम्भापटुकरणत्वलक्षणादपवादाद्वेदविरोधि यज्ज्ञानं तदप्रमाण-मेवोत्पद्यते न प्रमाणम् । बाधकप्रत्ययाच्चापवादादप्रमाणमेव गृह्यत इति नोक्तदोषः ॥**

**वा०**— नन्वस्तु दोषादप्रामाण्यं बौद्धादिवाक्ये दोषाभावादप्रामाण्यं न युक्तमित्याशङ्कोत्तरत्वेन उत्तरभाष्यं योजयति ॥ **किमत इति** ॥

**प०**— अध्याहारेणार्थमाह ॥ **अप्रमाणमिति** ॥ यद्वा न मानमपीत्यन्वयेनापि पदार्थमाह **अप्रमाणमिति** ॥

**अनु०**— अपि वेदानामङ्गीकार्या हि नित्यता ॥

**सु०— ननु मिथ्याज्ञानादिमूलत्वं तेषां कुतः कल्प्यते । वेदविरोधित्वादित्युक्तम् । वस्तुनो द्वैरूप्यासंभवात् । पौरुषेयेषु तत्संभवाच्च । अथ वेदस्यैव तत्कुतो न कल्प्यमिति चेत्, वेदस्यापौरुषेयत्वेन पुरुषदोषमूलत्वासंभवादित्याह ॥ अपीति ॥**

**अथवा कुतोऽप्रामाण्यस्य दोषकारणत्वम् । अन्वयव्यतिरेकाभ्यामिति चेत् । हन्त तर्हि गुणान्वयव्यतिरेकित्वात्प्रामाण्यमपि तज्जन्यं स्यात् । न । वेदस्यापौरुषेयत्वेन तदभावादित्याह ॥ अपि वेदानामिति ॥ अपिः समुच्चये । प्रामाण्यं नित्यताऽपीति । हिशब्देन वाचा विरूप-नित्ययेत्यादिश्रुतिप्रसिद्धिं द्योतयति ॥**

**अत्र नित्यताशब्देनापौरुषेयता विवक्षिता । नित्यताया बौद्धागमेष्वपि सत्त्वात् । यस्मान्नित्यताऽङ्गीकार्या तस्मान्नोक्तदोष इति वा ।**

**वा०**— नन्वेवमपि वेदानामिति वाक्यं प्रकृतासङ्गतमित्यतो मिथ्याज्ञपीति वाक्ये बौद्धागमादीति वक्तव्ये वेदविरोधीति वचनं बौद्धागमादेर्मिथ्याज्ञानादिमूलकत्वे युक्तिसूचकत्वेनेत्यभिप्रेत्य तर्हि वैपरीत्यं किं न स्यादित्याशङ्कायां वेदस्य तद्वैलक्षण्यप्रतिपादकतयोत्तरवाक्यं सङ्गमयति ॥ **नन्विति** ॥ वेदविरोधित्वेऽपि तेषां मिथ्याज्ञानादिमूलकत्वं कुत इति वदतः किं वेदविरोधित्वेऽपि न तेषां मिथ्याज्ञानादिमूल-कत्वमित्याशयः आहोस्विद्वेदविरोधाविशेषाद्वेदस्यापि तत्किं न स्यादिति । आद्येऽपि वेदस्येव तेषामपि प्रमाणत्वमभिमतमुत तेषु तदसंभावितमिति । नाद्य इत्याह ॥ **वस्तुन इति** ॥ नद्वितीय इत्याह ॥ **पौरुषेयेष्विति** ॥ तृतीयं शङ्कते ॥ **अथेति** ॥ एवं मिथ्याज्ञपीत्येतद्वाक्यसङ्गततयोत्तरवाक्यं व्याख्याय प्रतिपक्षानुमाने किञ्चित्युक्तबोधोपपादनायाप्रामाण्यं तथाऽन्यत इत्यादिपूर्वसङ्गतितयाऽपि तद्व्याख्याति ॥ **अथवेति** ॥ यथाश्रुतापिशब्दस्य वैयर्थ्यान्नित्यतेत्यनेनान्वयं दर्शयंस्तदर्थमाह ॥ **अपिरिति** ॥ इति समुच्चयेऽपिरित्यन्वयः । वेदप्रामाण्यमङ्गीकृत्य तन्नित्यत्वे विप्रतिपद्यमानान्प्रति नित्यत्वश्रुतिसूचकं हिशब्दं

व्याख्याति ॥ **हिशब्देनेति** ॥ इतरान्प्रति तूपपत्तिं वक्ष्यतीति भावः ॥ **नित्यताया इति** ॥ एवं चाविवक्षायां वेदस्य बौद्धागमादिवैलक्षण्यं नोक्तं स्यादिति भावः । वक्ष्यमाणोपपत्त्यैवोभयान्प्रत्यपि वेदापौरुषेयत्वस्य सिद्धेः अपि वेदानामित्यादिग्रन्थस्योक्तोपपादकत्वं भाष्यारूढं कर्तुं नोक्तदोष इत्यध्याहारेण हिशब्दं हेत्वर्थतया व्याख्याति ॥ **यस्मादिति** ॥

स० — **नित्यताया बौद्धागमेष्विति** ॥ पुराणवदीश्वरबुद्धौ प्रलयेऽपि सत्त्वादिति भावः । **तस्मान्नोक्तदोष इति वेति** ॥ हिशब्दार्थ इत्यर्थः ।

प० — द्वयोः प्रामाण्यं किं न स्यादन्यतराप्रामाण्येऽपि बौद्धागम एव दोषादिकल्पनं कुत इत्यत आह ॥ **वस्तुन इति** ॥ धर्मब्रह्मादिवस्तुन इत्यर्थः ॥ **बौद्धागमेष्वपि सत्त्वादिति** ॥ ईश्वरबुद्धिघटितवर्णक्रमरूपानुपूर्व्याः कदाप्यनाशादिति भावः ॥ वेदप्रामाण्यसमर्थनम् ॥

या० — गूढाभिसन्धिराह ॥ **पौरुषेयेष्विति** ॥ आशयमविद्वान् शङ्कते ॥ **अथेति** ॥ आशयमुद्घाटयति ॥ **वेदस्येति** ॥ **अन्वयव्यतिरेकाभ्यामिति** ॥ न च यादृच्छिकसंवादिनि लिङ्गविभ्रमे भ्रान्तप्रकारकवाक्यादौ च सत्यप्रमाया अभावादन्वयव्यभिचार इति वाच्यम् । इमं मा दहेदित्यादौ मन्त्रादेरुद्देश्यव्यक्तिविशेष इव लिङ्गभ्रमादेरपि यत्र विषयसत्त्वाभावस्तत्रैव दोषत्वात् । न चैवमावश्यकत्वाद्विषयासत्त्वमेव सर्वत्र दोषः स्यादिति वाच्यम् । अप्रामाण्यस्य विषयासत्त्वघटितत्वेन तत्र तस्य हेतुत्वे आत्माश्रयत्वप्रसङ्गात् ॥ **नित्यताया बौद्धागमेष्विति** ॥ 'अनादिकालतो वृत्ताः समया हि प्रवाहतः । न चोच्छेदस्तु कस्यापि समयस्ये'त्युक्तेरिति भावः । नोक्तदोष इति वेत्यनन्तरं हिशब्दार्थ इति शेषः ॥

श्री० — वेदविरोधिनोऽपि प्रामाण्ये बाधकमाह ॥ **वस्तुन इति** ॥ हिशब्दस्यार्थान्तरमाह ॥ **यस्मादित्यादि** ॥ इति वा हिशब्दार्थ इत्यर्थः ।

च० — **अन्वयव्यतिरेकाभ्यामिति** ॥ न च दैववशसंपन्नसंवादिकूटलिङ्गपरामर्शस्थले भ्रान्तप्रतारकप्रणीतवाक्ये च दोषसमवधानेऽप्यनुमित्यन्वयबोधयोरप्रमात्वादर्शनान्नैतन्निरूपितान्वयव्यतिरेकानुविधायितेति वाच्यम् । विषयसमवधानस्थले तस्य दोषत्वस्यैवानुपगतेरिति स्थितम् ॥ **बौद्धाद्यागमेष्वपीति** ॥ एवमविवक्षायां वेदस्य बौद्धागमादिवैलक्षण्यं नाभिहितं स्यादिति भावः । अनादिकालतो वृत्ताः समया हि प्रवाहतः । न चोच्छेदोस्ति कस्यापि समस्येत्युक्तेरिति भाव इत्यप्यर्थापयन्ति । ईश्वरबुद्धिघटितवर्णक्रमानुपूर्व्याः कदाप्यनाशादिति भाव इत्यप्याशयं प्रकाशयन्ति ॥ इति वेदप्रामाण्यसमर्थनम् ।

**सु०— ननु कोऽयं वेदः; किञ्च तस्यापौरुषेयत्वम् । क्रमविशेषविशिष्टवर्णा वेदस्तस्य नियतैकप्रकारत्वमपौरुषेयत्वम् । स्वतन्त्रपुरुषपूर्वकत्वाभाव इति यावत् ।**

वा०—ननु किमिदं वेदत्वम् । न तावद्वाक्यत्वमदृष्टविषयवाक्यत्वं वा । बौद्धादिवाक्यानामपि तत्प्राप्तेः । नाप्यदृष्टविषयकप्रमाणवाक्यत्वम् । मन्वादिवाक्यानामेव तत्प्राप्तेः । नाप्यपौरुषेयवाक्यत्वम् । पक्षतावच्छेदकसाध्ययोरभेदापत्तेः । नापि वैदिकशब्दलक्षणोपेतत्वम् । भारतादिष्वपि तस्य सत्त्वात् । नापि वेदव्यवहारगोचरत्वम् । इतिहासादिष्वपि तद्भावात् । नापि मुख्यतद्गोचरत्वम् । वेदत्वस्यैवानिर्णयेन व्यवहारमुख्यत्वामुख्यत्वानिश्चयात् । नापि वर्णमात्रत्वम् । अक्रमव्युत्क्रमोच्चरितेष्वपि तत्त्वप्रसङ्गात् । नापि क्रमवद्वर्णत्वम् । भारतादावपि सत्त्वात् । किञ्च स क्रमो वर्णनिष्ठ उच्चारणनिष्ठो वोपलब्धिनिष्ठो वा । आद्येऽपि स किं देशतः कालतो वा देशकालाद्यनुपाधिकः पौर्वापर्यलक्षणो वर्णरूपवस्तुनिष्ठ एव वा । नाद्यौ । वर्णानां नित्यसर्वगतत्वात् । न तृतीयः । विरोधात् न । ह्युभयोरेकस्मिन्काले राजा जार इति प्रयोगसमये एकस्यैव जकारस्य रेफात्पूर्वापरभाव एकदैव युक्तः । नापि द्वितीयः । उच्चारणतत्क्रमयोः श्रोत्राविषयत्वाद्वेदस्य च श्रोत्रग्राह्यत्वात् । न तृतीयः । उपलब्धिनिष्ठत्वे चान्यधर्मत्वात्क्रमस्य वर्णानां तद्वत्त्वानुपपत्तेः । उपलब्धिनिष्ठक्रमोपलक्षितवर्णानां वेदत्वे चा कदाचित्संबन्धिन एवोपलक्षणत्वाद्वेदस्य च सदा क्रमवत्त्वेनोपलम्भेनोपलक्षणत्पपक्षानुपपत्तेः । अस्तु वा क्रमविशिष्टवर्णा एव वेदः । तथाऽपि न तस्यानादित्वरूपमपौरुषेयत्वमुपपद्यते । उपलब्धेर्जन्यत्वेन तद्गतक्रमस्यापि जन्यत्वात् । अत एव न पुरुषपूर्वकत्वाभावरूपमपि तदिति अपि । वेदानामित्युक्तमयुक्तमित्याशङ्कते ॥ **नन्विति** ॥ अत्रैकवचनप्रस्तावादपि वेदस्येति वक्तव्ये वेदानामिति बहुवचनप्रयोगेणापौरुषेयतेति वक्तव्ये नित्यतेति तद्व्याख्यानेन च सूचितं परिहारमाह ॥ **क्रमेति** ॥ अत्र विशेषग्रहणेन भारतादिव्यावृत्तिः । तद्विशिष्टत्वं च विशिष्टक्रमोपेतबुद्धिविषयत्वम् । न चैवं पदादिभावस्याभिव्यक्तिघटितत्वे इदमेकं पदमित्यादिप्रतीतिः श्रावणी न स्यात् । पदाद्युपाध्यभिव्यक्तेरश्रावणत्वादिति वाच्यम् । मानसोपनीतस्याभिव्यक्तिक्रमस्य श्रावणत्वोपपत्तेः । नियतैकप्रकारत्वं च पूर्वोत्तरकल्पेष्विति न भारतादिसाधारण्यम् । कथमस्यापौरुषेयशब्दार्थत्वमित्यतस्तत्तात्पर्यमाह ॥ **स्वतन्त्रेति** ॥

स०— उत्पत्त्यनन्तरं नियतैकप्रकारत्वं मन्वादिवाक्येष्वप्यस्तीत्यत आह ॥ **स्वतन्त्रपुरुषेति** ॥

प०— धर्माधर्मादिबोधकवाक्यादिरूपं चेद्वेदवाक्यं बौद्धादिवाक्यमपि तथा स्यादिति भावेन पृच्छति ॥ **ननु कोऽयमिति** ॥ वर्णानां नित्यसर्वगतानां स्वतःक्रमस्यायोगेन उच्चारणादिक्रियादि-

घटितत्वेनैव वाच्यत्वात्तस्य चाध्येतृपुरुषजन्यत्वादिति भावेन प्रश्नः किञ्च तस्यापौरुषेयत्वमिति । नियतैकप्रकारत्वं प्रागुक्तदिशा नित्यभूतबौद्धागमादिष्वप्यस्तीत्यतो व्यनक्ति ॥ **स्वतन्त्रेति** ॥ आधुनिकाध्यापकेन स्वबुद्धिस्थपूर्वपूर्वदिवसीयक्रमानुसारेणोत्तरोत्तरदिवसेष्विवेश्वरेणापि स्वबुद्धिस्थप्रवाहानादिपूर्वपूर्वकल्पीयक्रमानुसारेणैवोत्तरोत्तरकल्पेष्वपि वेदस्योच्चारितत्वेन पुराणादिक्रम इव वेदक्रमे स्वातन्त्र्याभावात्स्वतन्त्रपुरुषपूर्वकत्वाभाव इत्युक्तम् ।

**या०— ननु कोऽयमिति** ॥ यो बौद्धागमव्यावृत्ततयाऽभिमतः सोऽयं वेदः को न कोपि । वर्णानामुभयत्राविशेषादिति भावः । ननु क्रमविशिष्टा वर्णा वेद इत्यत आह ॥ **किञ्च तस्येति** ॥ न किमपि क्रमस्य जन्यत्वेन पुरुषाप्रणीतत्वासंभवादिति भावः । उत्पत्त्यनन्तरं नियतैकप्रकारत्वं बौद्धागमेष्वप्यस्तीत्यत आह ॥ **स्वतन्त्रपुरुषेति** ॥

**श्री०—** उत्पत्त्यनन्तरं नियतैकप्रकारत्वस्य बौद्धाद्यागमेष्वपि सत्त्वादाह ॥ **स्वतन्त्रपुरुषेति** ॥ सजातीयोच्चारणमनपेक्ष्योच्चारयिता पुरुषः स्वतन्त्रस्तत्पूर्वकत्वाभाव इत्यर्थः । ईश्वरोऽपि पूर्वकल्पे उच्चारितवेदमपेक्ष्य तत्सारूप्येणैवास्मिन्कल्पेऽप्युच्चारयतीति सोऽप्यस्मन्मते महोपाध्याय एवेति भावः ।

**च०—** आनुपूर्वीविशेषविशिष्टपदघटितत्वस्य बौद्धागमादावप्यविशेष्येण तद्विलक्षणवेदस्वरूपं दुर्वचमित्याशङ्कते ॥ **नन्विति** ॥ **किञ्च तस्येति** ॥ चोप्यर्थे । तस्यापौरुषेयत्वमपि किं रूपमित्यर्थः । क्रमविशेषविशिष्टाः आनुपूर्वीविशेषविशिष्टाः । बौद्धागमादीनामप्युत्पादानन्तरं नियतैकप्रकारताऽस्त्येवेत्यत आह ॥ **स्वतन्त्रपुरुषेति** ॥

अनु०— **न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचित्** ॥

**सु०— अत्रोपपत्तिमाह ॥ न हीति ॥ क्वचिदिति निमित्तसप्तमी; केनापि प्रमाणेन इत्यर्थः । उत्तरवाक्योपक्रमे वा ॥ अस्ति तावद्धर्माधर्मस्वर्गनरकादिकं सर्ववादिसंप्रतिपन्नम् । यस्तु तन्नाङ्गीकरोति चार्वाकस्तं प्रत्युपपादयिष्यमाणत्वात् । तच्च प्रमाणोपेतं वस्तुत्वाद्घटवत् । न हि विना प्रमाणेन धर्मादिसिद्धिविनिश्चयः सर्ववादिनां भवितुमर्हति, अतिप्रसङ्गात् ।**

**वा०— अत्रेति** ॥ वेदनित्यत्व इत्यर्थः । यद्यपि न हीत्यादिना कथ्यमानसामान्यसिद्धिपरिशेषयोर्धर्मादिप्रतिपादककिञ्चिदपौरुषेयवाक्यसाधकत्वेऽपि विशिष्य वेदरूपापौरुषेयवाक्यसाधकत्वाभावेन वेदापौरुषेयत्वसंभावकत्वेऽपि न तद्दुपपत्तित्वम् । अत एव तत्त्वनिर्णयटीकायामेतयोः सामान्यसिद्धिपरि-

शेषयोस्तत्संभावकत्वमेवोक्तमित्युपपत्तिमप्याहेत्यनुपपन्नमिवाभाति । तथाऽपि न हीत्यादिग्रन्थस्य न केवलमेतत्सामान्यसिद्धिपरिशेषप्रतिपादकत्वमपि तु वेदातिरिक्तानां केषाञ्चिद्धर्मादिव्यवस्थापकत्वाभावात् केषाञ्चित्तद्व्यवस्थापकत्वेऽपि कर्तृप्रसिद्धिमत्त्वाद्धर्मादिव्यवस्थापकापौरुषेयवाक्यं वेद एवेत्यत्र तात्पर्यमित्यभिप्रेतार्थाभिप्रायेणोपपत्तित्वोक्तेः श्लिष्टत्वात् । तत्त्वनिर्णयटीयाकां तु 'न चापौरुषेयं वाक्यमेव नास्तीति वाच्यम् ।' इत्युपक्रमवाक्यबलादपौरुषेयत्वं च स्वत एव सिद्धं वेदकर्तुरप्रसिद्धेरिति वेदापौषेयत्वे परिशेषस्य मूलकारेण पृथक् प्रतिपादनाच्च । तदभावे सर्वसमयाभिमतेत्यादिवाक्यानां संभावनापरत्वेन व्याख्यानं कृतं न तु तद्ग्रन्थस्यैव वेदापौरुषेयत्वपर्यन्तत्वं वर्णितम् । अत्र तु तद्वैलक्षण्यात्तत्पर्यन्तत्वं वर्णनीयमेव । अत एवोत्तरत्र तेषां वाक्यानां तथाभावं वर्णयिष्यतीति द्रष्टव्यम् । क्वचिच्छब्दस्य देशविशेषार्थकत्वेऽनुपयोगात्प्रकृतोपयोगितया व्याख्यातुं सप्तम्यर्थं तावदाह ॥ **क्वचिदितीति** ॥ धर्मादिसद्भावे प्रमाणान्तराभावस्य प्रसिद्ध्यर्थकहिशब्देनैव सुबोधत्वात्सप्तमीस्वारस्यलाभाच्च क्वचिदित्येतदुत्तरवाक्यान्वितं वेत्याह ॥ **उत्तरेति** ॥ ननु धर्मादिकमपौरुषेयशब्दप्रमाणकमिन्द्रियलिङ्गपौरुषेयशब्दाप्रमाणकत्वे सति सप्रमाणकत्वात् । यद्यदप्रमाणकत्वे सति सप्रमाणकं तत्तदितरप्रमाणकं यथा संमतम् । न चाप्रसिद्धविशेषणत्वं सामान्यव्याप्तिरुक्तत्वेन व्याप्तौ सत्यां तस्यादोषत्वादित्यभिप्रेतेऽनुमाने आश्रयासिद्धिविशेषणविशेष्यासिद्धिप्राप्तिः कथमेतदित्यतो धर्मादिरूपाश्रयस्य तत्सिद्धेश्च सिद्धवदनुवादेन विशेषनिषेधेन अर्थतःप्राप्तसामान्यसिद्धेरभिप्रायेण च सूचितमाश्रयविशेष्यासिद्ध्योः परिहारं केनापीति सूचितं विशेषणासिद्धिपरिहारं हीति सूचितं तत्सर्वोपपादनप्रकारं च दर्शयति ॥ **अस्ति तावदित्यादिना** ॥ आदिग्रहणेनातीन्द्रियविषयत्वं पक्षतावच्छेदकमिति सूचयति ॥ **वादिनामिति** ॥ समयिनामित्यर्थः । अप्रामाणिकाभ्युपगमे समयित्वमेव तेषां न स्यात् । न ह्यप्रामाणिकविषयः समयश्चेत्युपपन्नमिति भावः ॥

**या० — अत्रोपपत्तिमिति** ॥ वेदापौरुषेयत्वे सामान्यसिद्धिपरिशेषरूपामुपपत्तिमाहेत्यर्थः । यद्यपि वक्ष्यमाणोपपत्तिरपौरुषेयं वाक्यमेकमस्तीत्यत्रैव; न तु वेदापौरुषेयत्वे; नित्यवाक्यं विनेति सामान्यत एवेत्युक्तत्वात् । विष्णुतत्त्वनिर्णयटीकायां 'न चापौरुषेयं वाक्यमेव नास्तीति वाच्यम् । तदभावे सर्वसमयाभिमतधर्माद्यसिद्धेरि'त्यादिग्रन्थस्य वाक्यत्वापौरुषेयत्वयोः सामानाधिकरण्यमात्रसिद्ध्यर्थकतया व्याख्यातत्वाच्च । तथाऽपि तच्चापौरुषेयं वाक्यं वेद एव परिशेषादिति वक्ष्यमाणत्वेन परिशेषान्तरसहकृतेयमेवोपपत्तिर्वेदापौरुषेयत्वसाधिका अत्राभिप्रेता । तत्त्वनिर्णयटीकायां तु तन्मूले वेदा पौरुषेयत्वस्याग्रे पृथक् साधितत्वात्तथैव व्याख्यातम् । अत्र तु तदभावादिदमेव मूलं वेदापौरुषेयत्वसाधकोपपत्तिपरतया व्याख्यातमिति ध्येयम् । **उपपादयिष्यमाणत्वादिति** ॥ अधर्मवादिनो वाक्यमप्रयोजनमेव हीत्यत्रेति शेषः ।

च०— **अत्रोपपत्तिमिति** ॥ सामान्यसिद्धिपरिशेषरूपामित्यर्थः । तत्वनिर्णयटीकायां 'न च अपौरुषेयं वाक्यमित्युपक्रम्यापौरुषेयत्वं च स्वत एव सिद्धं वेदकर्तुरप्रसिद्धेरि'ति निगमनेन तदेतस्य परिशेषपरतां तदभावे सर्वसमयाभिमतेत्यादिवाक्यानां संभावनाद्यपरतां व्याचख्युः । प्रकृते तु तादृश-निगमनवाक्यान्तरराहित्येन न हीत्यादिवाक्यस्यैव परिशेषपरता तत्संभावनापरतापूर्विकाभिप्रेतेति व्याख्यासिषुरिति ध्येयम् ॥ **उपपादयिष्यमाणत्वादिति** ॥ अधर्मवादिनो वाक्यमप्रयोजनमेव हीत्यादिनेत्यादिः ॥

**सु०— तदेवं सामान्यतःसिद्धं प्रमाणं न तावत्प्रत्यक्षम् । तद्धि बाह्यं मानसं वा स्यात् । न तावद्बाह्यम् , तस्य रूपादिमति द्रव्ये तत्समवेतगुणकर्मसामान्येष्वेव प्रवर्तमानत्वात् । नापि मानसम् , सुखादिवद्धर्मादावनुभवानुव्यवसायात् ; अन्यथा सुखमनुभवामीतिवद्धर्म-मनुभवामीति स्यात् । स्वर्गादीनां तु विप्रकृष्टत्वान्न प्रत्यक्षगोचरता । न च योगादिसिद्धानां प्रत्यक्षमस्मदतीन्द्रियार्थविषयमिति वाच्यम् , तेन तेषां कथञ्चिद्धर्मादिसिद्धावप्यस्माकं तन्निश्चयोपायाभावात् । न ह्यन्यप्रत्यक्षेणान्यस्य निश्चयोऽनुष्ठानं वा संभवति ॥ नाप्यनुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । सामान्यतो दृष्टेन कथञ्चित्तत्स्वरूपमात्रसिद्धावपि साधनफलसंबन्ध-रूपस्तद्विशेषोऽनुष्ठानयोग्यो नानुमातुं शक्यः । न हीदृशयज्ञदानादिभिरुपजनितो धर्मः फलमीदृशं जनयतीत्यादयः सूक्ष्मतरा विशेषास्सर्ववादिभिरनुष्ठीयमानाः शक्यानुमानाः ॥ वाक्यमपि न पौरुषेयं धर्मादिनिश्चयाय प्रभवति । पुरुषाणामज्ञानसंशयविप्रलम्भापटुकरणत्वस्य बहुलमुपलम्भेन धर्माद्युपदेष्टर्याश्वासानुपपत्तेः ।**

**तदेवमपौरुषेयवाक्यं विना धर्मादिनिश्चयासंभवात्सामान्यसिद्धिपरिशेषाभ्यामपौरुषेयं किमपि वाक्यं धर्मादिप्रतिपादकमस्तीति सर्ववादिभिरभ्युपेयमिति ।**

वा०—**तस्येति** ॥ घ्राणश्रोत्ररसनानां गन्धशब्दरसरूपनियतविषयत्वाच्चक्षुःस्पर्शनयोश्च रूपादिम-द्रव्यतद्गुणादावेव प्रवर्तनादिति भावः । धर्मादौ विवदमानं प्रति योगिप्रत्यक्षस्याप्यसिद्धिरेवेत्याशयेन कथञ्चिदिति । अत एव तत्त्वनिर्णयटीकायां तस्याप्यपौरुषेयवाक्यं विनाऽसिद्धेरित्युक्त्वा किञ्चेत्यादि-नाऽस्माकं तन्निश्चयाभावोक्तिः । नन्वस्माकमुपायाभावाद्धर्माद्यनिश्चयेऽपि योगिप्रत्यक्षात्तत्सिद्धिरप्रत्यूहा । न हि वस्तुसिद्धिः सर्वप्रत्यक्षसापेक्षेत्यतोऽस्मदीयं धर्माद्यनुष्ठानं नास्मदीयतन्निश्चयेन विना संभवतीत्या-शयेनानुष्ठानं वेत्युक्तम् । **सामान्यतो दृष्टेनेति** ॥ देवदत्तशरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे

सति देवदत्तभोगहेतुत्वात् देवदत्तप्रयत्नजन्यस्रगादिवदिति वा कार्यवैचित्र्यान्यथानुपपत्तिरूपेण वेष्टापूर्तयोः प्रेक्षावत्प्रवृत्तेः फलेन विनाऽनुपपत्तिरूपेण वा सामान्यतो दृष्टेनेत्यर्थः । देवदत्तशरीरादेर्देवदत्तविशेषगुण-जन्यत्वं साक्षात्साध्यं परम्परया वा । नाद्यः । धर्माधर्मयोरप्यारम्भकप्रेरणादिरूपेणैवोपयोगाङ्गीकारात् । देवदत्तशरीरं न साक्षाद्देवदत्तविशेषगुणजन्यं शरीरत्वाद्यज्ञदत्तशरिरवदिति प्रतिपक्षाच्च । द्वितीये तु जन्मान्तरीयप्रयत्नाराधितदेवताद्वारेणोपपत्तेरर्थान्तरता । देवदत्तविशेषगुणजन्यतया विनाऽप्याकाशादेरिव ईश्वरेच्छया देवदत्तस्य भोगहेतुता संभवतीत्यप्रयोजकता च । कार्यवैचित्र्यं च दृष्टकारणवैचित्र्येणोप-पद्यते । आदिकालीनं च तत्प्रागभाववैचित्र्येण । प्रेक्षावत्त्वं च तदंशेऽसिद्धमित्यभिप्रायेण कथञ्चिदि-त्युक्तम् ॥ वाक्यान्मुखतः प्रतीयमानं वेदापौरुषेयत्वरूपप्रकृतार्थसंभावककथनरूपं वाक्यतात्पर्यमाह ॥ **तदेवमिति** ॥

**स०**— ननु धर्माधर्मयोरतीन्द्रियत्वेनाननुव्यवसायेऽपि स्वर्गनरकयोः सुखदुःखरूपत्वेन तदनु-व्यवसायोपपत्तिरित्यत आह ॥ **स्वर्गादीनामिति** ॥ ननु देवदत्तशरीरादिकं देवदत्तविशेषगुणजन्यम् । कार्यत्वे सति देवदत्तस्यैव भोगहेतुत्वात् देवदत्तप्रयत्नजन्यस्रगादिवदित्यनुमानेन धर्मादिसिद्धिः स्यादित्यत आह ॥ **सामान्यतो दृष्टेनेति** ॥ अस्य प्रत्यक्षायोग्यार्थानुमापकत्वात् सामान्यतो दृष्टत्वम् । यथाहुस्तदयोग्यार्थमुत्तरमिति ॥ देवदत्तादिशरीरादिकं धर्मातिरिक्तविशेषगुणजन्यमित्यपि साधयितुं शक्यत्वेनातिप्रसङ्गित्वान्नैवमनुमानं युक्तमित्याशयेन कथञ्चिदित्युक्तम् । यद्वा । ज्योतिष्टोमादिकं धर्मादिसाधनम् । तदुद्देश्येन प्रेक्षावद्भिः क्रियमाणत्वात् । यत् यदुद्देशेन प्रेक्षावद्भिः क्रियते तत् तत्साधनम् । यथा कृष्यादिकं धान्यादिसाधनमिति सामान्यतो दृष्टेन धर्मादिसिद्धिर्भविष्यतीत्यत आह **सामान्यतो दृष्टेनेति** ॥ वैशेषिकादिभिः साध्याप्रसिद्धेः दूषणत्वाङ्गीकारान्नैवमनुमातुं शक्यत इति कथञ्चिदित्युक्तम् ।

**प०**— **सामान्यतो दृष्टेनेति** ॥ चैत्रदेहश्चैत्रविशेषगुणजन्यः चैत्रभोगायतनत्वात् । चैत्र-प्रयत्नजन्यपुष्पमालादिवदिति सामान्यतो दृष्टानुमानेनेत्यर्थः ॥ **सामान्यसिद्धिपरिशेषाभ्यामिति** ॥ धर्माधर्मस्वर्गनरकादिकं प्रमाणोपेतं वस्तुत्वाद्घटवदित्युक्तप्रमाणसामान्यसिद्ध्या, तद्धि न तावत्प्रत्यक्ष-मित्यादिनोक्तपरिशेषेण चेत्यर्थः ।

**या०**— ननु धर्माधर्मयोरतीन्द्रियत्वेनाप्रत्यक्षत्वेऽपि स्वर्गनरकयोः सुखदुःखरूपत्वेन तदनुभवितृ-शरीराणां च महत्त्वसमानाधिकरणोद्भूतरूपत्वेन कुतो न प्रत्यक्षत्वमित्यत आह ॥ **स्वर्गादीनामिति** ॥ **तेषां कथञ्चिदिति** ॥ योगिसद्भावस्य सर्वैरनङ्गीकृतत्वात्कथञ्चिदित्युक्तम् । वस्तुतस्तु केचिद्योगिनोऽपि व्यवहितं प्रकृष्टं च योग्यमेव साक्षात्कुर्वन्ति न त्वयोग्यधर्मादिकमपि । 'यत्राप्यतिशयो दृष्टः स स्वार्था-

नतिलङ्घनात् । दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोतृवृत्तिते'ति वचनादित्याहुः । एतन्मतनिरासाभावे योगिनामपि न प्रत्यक्षेण धर्मादिसिद्धिः संभवतीत्यभिप्रेत्य कथञ्चिदित्युक्तमिति द्रष्टव्यम् । ननु देवदत्त-शरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तस्यैव भोगहेतुत्वात् देवदत्तप्रयत्नजन्यस्रगादिव-दित्यनुमानेन धर्मादिसिद्धिः स्यादित्यत आह ॥ **सामान्यतो दृष्टेनेति** ॥ अस्य प्रत्यक्षायोग्यार्थानुमाप-कत्वात्सामान्यतो दृष्टत्वम् । यथाहुः । 'तदयोग्यार्थमुत्तरमिति । देवदत्तशरीरादिकं धर्माद्यतिरिक्तद्वि-शेषगुणजन्यमित्यपि साधयितुं शक्यत्वेनातिप्रसङ्गिकत्वान्नैवमनुमातुं युक्तमित्याशयेन कथञ्चिदित्युक्त-मित्याहुः । यद्वा देवदत्तशरीरादेर्देवदत्तविशेषगुणजन्यत्वं किं साक्षात्साध्यमुत परम्परया । नाद्यः । धर्माधर्मयोरप्यारम्भकप्रेरणादिरूपेणैवोपयोगाङ्गीकारात् । द्वितीये तु जन्मान्तरीयप्रयत्नाराधितदेवताद्वारे-णोपपत्तेरर्थान्तरतेत्यादिदूषणस्य युक्तिपादे वक्ष्यमाणत्वात्कथञ्चिदित्युक्तम् । वस्तुतस्तु ज्योतिष्टोमादिकं धर्मादिसाधनं तदुद्देशेन प्रेक्षावद्भिः क्रियमाणत्वात् । यद्यदुद्देशेन प्रेक्षावद्भिः क्रियते तत्तत्साधनं यथा कृष्यादिकं धान्यादिसाधनमिति सामान्यतो दृष्टेन धर्मादिसिद्धिर्भविष्यतीत्यत आह ॥ **सामान्यतो दृष्टेनेति** । वैशेषिकादिभिः साध्याप्रसिद्धेर्दूषणत्वाङ्गीकारान्नैवमनुमातुं शक्यमिति ज्ञापयितुं कथञ्चिदि-त्युक्तमिति व्याख्येयम् ।

**श्री०**— ननु धर्ममनुभवामीत्यनुव्यवसायाभावेऽपि यन्न दुःखेन संभिन्नमित्यादिवचनात्स्वर्ग-नरकयोः सुखदुःखरूपत्वेन तद्विषयकानुव्यवसायः संभवतीत्यत आह ॥ **स्वर्गादीनामिति** ॥ सामान्य-सिद्धिपरिशेषाभ्यां धर्माधर्मादिकं प्रमाणोपेतं वस्तुत्वाद्घटवदिति सामान्यसिद्ध्या न हि तावत्प्रत्यक्ष-मित्यादिनोक्तपरिशेषेण चेत्यर्थः ॥

**च०**— **सामान्यतो दृष्टेनेति** ॥ देवदत्तशरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तभोगहेतुत्वात् । देववत्तप्रयत्नजन्यस्रगादिवदिति वा कार्यवैचित्र्यान्यथानुपपत्तिरूपेण वेष्टापूर्तयोः प्रेक्षावत्प्रवृत्तेः फलेन विनाऽनुपपत्तिरूपेण वा सामान्यतो दृष्टेनेत्यर्थापन्नं स्थितम् । निगमयति ॥ **तदेवमिति** ॥

**अनु०**— **अविप्रलम्भस्तज्ज्ञानं तत्कृतत्वादयोऽपि च ॥**
**कल्प्या गौरवदोषेण पुंवाक्यं ज्ञापकं न तत् ॥**

**सु०— स्यादेतदेवम् ; यदि धर्मादिकं पुरुषवचसा न निश्चेतुं शक्येत । शक्यते तु बुद्धर्षभजिनकपिलपशुपतिप्रभृतिप्रणीतागमादवधारयितुम् । न च तेष्वनाश्वासकारणमस्ति ।**

परमाप्तत्वेन विप्रलम्भादिशङ्काऽविषयत्वादित्यत आह ॥ अविप्रलम्भ इति ॥ अविप्रलम्भो विप्रलम्भाभावः । तज्ज्ञानं धर्मादिप्रमितिः । तत्कृतत्वं तेन पुरुषेण कृतत्वम् । आदिग्रहणात्करणपाटवं कृपालुत्वमैश्वर्यमित्यादीनां ग्रहणम् । चो यस्मादित्यर्थे । ज्ञापकं निश्चायकम् । धर्मादेरिति शेषः ।

भवेदेवं यदि बुद्धादीनामाप्तत्वं निश्चितं स्यात् । न चैवम् प्रमाणाभावात् । वक्तव्यार्थतत्त्वज्ञानं विप्रलम्भाभावो विवक्षा करणपाटवं चेत्येतत्खल्वाप्तत्वं नाम । न चैताः परचित्तवृत्तयोऽस्माकमध्यक्षाः । नापि तत्रानुमानं प्रवर्तते । वाक्यं तु पौरुषेयमुक्तानुपपत्तिग्रस्तम् । अपौरुषेयं तु नाङ्गीक्रियते । अतः केवलमविप्रलम्भादयः क्वचित्पुंसि कल्प्या एव । न चाप्तत्वकल्पनामात्रेणास्य विवक्षितवाक्यस्य तत्प्रणीतत्वं सिध्यति । अतः क्वचिद्वाक्ये तत्प्रणीतत्वमपि कल्प्यमेव ॥ यस्मादेवं तत्तस्मात्कल्पनागौरवदोषेण पुरुषवाक्यं न धर्मादिनिश्चायकम् । न हि लोके विना प्रमाणेन कस्यचित्पुरुषस्याप्तत्वं प्रकल्प्य कस्यचिद्वाक्यस्य तत्प्रणीततां कल्पयित्वा तदर्थनि(र्ण)श्चयं कुर्वन्तः प्रेक्षावन्तो दृश्यन्ते; किन्तु प्रमाणतः प्रामाण्यं निश्चित्यैव । यद्यपि क्वचिदल्पायाससाध्ये विपक्षेऽनर्थातिशयहीनेऽपि कर्मणि वाक्यप्रामाण्यमनिश्चित्यापि प्रेक्षावतामस्ति प्रवृत्तिः, तथाऽपि महायाससकलवित्तव्ययादिसाध्येऽर्थे न प्रामाण्यानिश्चयेन कल्पनया वा प्रवृत्तिरिति ।

वा० — नन्वज्ञानादिसंभवान्न पौरुषेयवाक्याद्धर्मादिनिश्चय इति पूर्ववाक्येनैव बोधिततया विशेषप्रापकाभावात्पुनः कल्पनागौरवेण पौरुषेयवाक्याद्धर्मादिनिश्चयानुपपत्तिप्रतिपादकोत्तरवाक्यवैयर्थ्यमित्यतः कचिदित्युक्त्याऽऽप्ततादेः कल्पनीयतोक्त्या च सूचितं पुरुषविशेषस्याप्ततया तद्वाक्याद्युक्तो धर्मादिनिश्चय इति विशेषप्रापकमस्तीत्याशयेनोत्तरवाक्यमवतारयति ॥ **स्यादेतदेवमिति** ॥ विरोधित्वाद्यसंभवेनाभावार्थकस्यापि नञो ज्ञापकात्समासोपपत्तिरित्याशयेनाह ॥ **अविप्रलम्भ इति** ॥ सिद्धिं प्रति गुणतया प्रकृतस्यापि धर्मादेर्योग्यतया तच्छब्देन परामर्श इत्याह ॥ **तज्ज्ञानमिति** ॥ बुद्धिस्थस्यात्रापि वाक्ये पुमित्यादिना निर्दिष्टस्य योग्यतया तत्कृतमिति तच्छब्देन परामर्श इत्याह ॥ **तत्कृतत्वमिति** ॥ आप्ततयाऽऽश्वासकारणत्वं पराभिमतमित्याशयं मूलारूढं कर्तुमाप्तताशरीरान्तर्गतं करणपाटवं तदन्तर्गतविवक्षुत्वप्रयोजकं कृपालुत्वं तदन्तर्गतधर्मादिसाक्षात्कारादिप्रयोजकमैश्वर्यं च मूलस्थादिपदार्थतया व्याख्याति ॥ **आदीति** ॥ अपिशब्देनैव समुच्चयसिद्धेस्तादित्येतत्प्रतिसंबन्धिसमर्पकतया चशब्दं व्याख्याति ॥ **च इति** ॥ सर्वथाज्ञापकत्वाभावस्य बाधितत्वात्तदुक्तेरनुपयोगाच्च ज्ञापकपदार्थं कथयन्नेव प्रकृतोपयोगितया शेषं पूरयति ॥ **ज्ञापकमिति** ॥

नन्वविप्रलम्भादिकल्पनाया दोषत्वोक्तिरयुक्ता । तथात्वे सर्वस्यापि कल्पनीयत्वात्पदार्थमात्रासत्त्वापत्तेः । न चाप्रामाणिककल्पनैव दोषो न प्रामाणिककल्पनाऽतो न पदार्थासत्त्वापत्तिः । अत्र तु प्रमाणाभावात्केवलकल्पनैवेति दोष इति वाच्यम् । बुद्धाद्याप्ततादावपि प्रमाणाभावासिद्धेरित्यतो भाष्यकारीयाप्ततेर्ति वक्तव्येऽविप्रलम्भस्तज्ज्ञानमित्युक्तिर्न केवलं कल्प्यानेकत्वप्रतिपादनायापि त्वाप्तिस्वरूपविवरणेन तस्य परचित्तवृत्तितया परप्रत्यक्षाद्यविषयत्वेन प्रमाणाभावोपपादनायैवेत्याशयेन प्रमाणाभावोपपादनपूर्वं कल्पनामात्रत्वमुपपादयति ॥ **भवेदेवमित्यादिना** ॥ ननु सति प्रमाणे कल्पनया अदोषत्ववत्तदभावेऽपि तत्किं न स्यादित्यतोऽतिप्रसङ्गान्न तथेत्याशयेनाह ॥ **न हीति** ॥ ननु माऽस्त्वर्थनिश्चयः । न चैवं प्रवृत्त्यनुपपत्तिः । सन्देहेन कल्पनया वा तदुपपत्तेरित्याशङ्क्य निराकरोति ॥ **यद्यपीति** ॥

स०— **कृपालुत्वमैश्वर्यं चेत्यादीनामिति** ॥ अत्र कृपालुत्वेनाविवक्षोपपादिता । ऐश्वर्येणाप्तेः परमत्वमुक्तमुपपादितम् । आदिग्रहणाद्धर्मवैराग्ययोः ग्रहणम् । ताभ्यां च क्रमेण विवक्षितार्थतत्त्वज्ञानाविप्रलम्भयोरुपपादनं ज्ञातव्यम् ।

प०— नन्वाप्तत्वेनैव हेतुना सर्वदोषाभावनिश्चयसंभवे कथमेवमुक्तिरित्यतोऽभिप्रायमाह ॥ **भवेदेवमित्यादिना** ॥

या०— विप्रलम्भभेदस्यानाप्तसाधारण्यादाह ॥ **विप्रलम्भाभाव इति** ॥ अविप्रलम्भपरामर्शभ्रमवारणायाह ॥ **धर्मादीति** ॥ ज्ञानमात्रस्यानाप्तसाधारण्यात्प्रमितिरिति व्याख्यातम् । अत्र कृपालुत्वं विवक्षोपपादकम् । ऐश्वर्यमाप्तेरुक्तस्य परमत्वस्योपपादकम् । आदिग्रहणाद्धर्मवैराग्ययोर्ग्रहणम् । ताभ्यां च क्रमेण विवक्षितार्थतत्त्वज्ञानविप्रलम्भयोरुपपादनमिति ज्ञातव्यम् ॥ **विपक्ष इति** ॥ अकरण इत्यर्थः ॥

च०— नञ् इति सूत्रे अर्थाभावेऽव्ययीभावेन सहार्थं विकल्प्यते । रक्षोहागमलब्धसन्देहाः प्रयोजनमद्रुतायामसंहितमिति भाष्यवार्तिकप्रयोगात् । तेनानुपलब्धिरविवादो विघ्नमित्यादिसिद्धमिति पाणिनीयानां समाहितिमनुसन्दधान आह ॥ **अविप्रलम्भो विप्रलम्भाभाव इति** ॥

**सु०—ननु च धर्मादिकं कस्यचित्प्रत्यक्षं वस्तुत्वाद्घटवदिति सामान्यतस्तावद्धर्मादिद्रष्टा सिद्धः । स च नास्मदादिस्संभवति, अस्मदादीनां धर्मादिदर्शनस्य बाधितत्वात् । न चार्हतादयस्तथा, तेषां तत्र तत्र स्खलद्वचनत्वेन तदनुपपत्तेः । तस्मात्परिशेषतो भगवान् बुद्ध एव धर्मादिसाक्षात्कारवानवसीयते । धर्मादिसाक्षात्कारवतश्च तस्य न रागद्वेषादिदोषास्संभवन्ति, अज्ञानमूलत्वात्तेषाम् । रागादिदोषरहितस्य न विप्रलम्भसंभवः, तस्य तत्का-**

र्यत्वात् । न ह्येवमेव कश्चित्कश्चिद्विप्रलब्धुमिच्छति । न चैवम्भूत आत्मीयहिताहितप्राप्तिपरिहारसाधनमविदुषो नानाविधव्यसनसागरे निमग्नान् जन्तूनवलोकयन्ननुपदिश्य स्थातुमर्हति । न चैवम्भूतस्य महानुभावस्य करणानामपाटवं संभावयितुमपि शक्यम् । यदस्मदादिष्वपि प्रायेणासंभावितम् । अतः सामान्यतस्तदीयधर्माद्युपदेशे सिद्धे प्रसिद्धपरित्यागेनाप्रसिद्धकल्पनानुपपत्तेः बौद्धागम एवासाविति सिध्यति । तथाच तदुक्तप्रकारेण धर्माद्यवगतौ क्वास्ति कल्पनागौरवम् । विवक्षितार्थतत्त्वज्ञानादेः सर्वस्यापि तत्र प्रमितत्वादिति बौद्धाः ॥ एवमार्हतादीनां स्वागमप्रामाण्यप्रसाधनप्रकारो द्रष्टव्यः ।

वा० — ननु प्रमाणाभावेन बुद्धादीनामाप्तत्वाद्यभाव उक्ते प्रत्यक्ष इत्याद्युपन्यासोऽसङ्गतः । न च सामान्यतो धर्मादिद्रष्टृसाधकस्याप्यस्य परिशेषेण बुद्धादीनां धर्मादिसाक्षात्कारसाधन उपयोगान्नासङ्गतिरिति वाच्यम्।सामान्यसिद्धेरस्मदादिविषयत्वेनोपपत्त्या परिशेषासिद्धेः । सर्वेषां तीर्थङ्कराणां च धर्मादिसाक्षात्काराभ्युपगमे च तद्वाक्यसिद्धस्य धर्मादित्वे तेषां विरुद्धवादित्वेन वस्तुविकल्पप्राप्तेः । सर्वेषामेकप्रकारेण परिशेषानुपपत्तेश्च । एकस्यैव धर्मादिसाक्षात्कारे चान्यप्रतिषेधे हेत्वभावेन, परिशेषानुपपत्तेरेतच्छङ्काया सर्वसाधारण्यानापत्तेश्च । अस्तु वा सामान्यसिद्धिबलात्परिशेषेण कचिद्धर्मादिसाक्षात्कारसिद्धिः । न तावताऽप्याप्तत्वसिद्धिः । अविप्रलम्भविवक्षापटुकरणत्वानां सामान्यसिद्धिबलादसिद्धेः । न च परिशेषसिद्धधर्मादिसाक्षात्कारबलात्तत्सिद्धिरिति वाच्यम् । अप्रयोजकत्वेन तेन तदसिद्धेः । तत्कृतकत्वं तु विवक्षितवाक्यस्य न कथमपि सिध्यतीतिसङ्गतमुत्तरवाक्यमित्यतस्तत्सङ्गमयति ॥ **ननु चेति** ॥ **न चार्हतादय इति** ॥ एवञ्चाभिमानिकस्तेषां तेषां तीर्थङ्करान्तरप्रतिषेध इति भावः । ततः सामान्यत इत्यादिना विवक्षितवाक्यस्य तत्कृतकस्वव्युत्पादनमेवमार्हतादीनामिति पृथक् पृथगेव तेषां तेषां परिशेषप्रकारोऽतो नोक्तानुपपत्तिरिति भावः ।

स० — **अनुपदिश्य स्थातुमर्हतीति** ॥ तथा च विवक्षासिद्धिरिति भावः ।

या० — **अनुपदिश्य स्थातुमिति** ॥ तथा च विवक्षासिद्धिरिति भावः ॥

अनु० — **प्रत्यक्षः कस्यचिद्धर्मो वस्तुत्वादिति चोदिते ॥**
**न बुद्धो धर्मदर्शी स्यात्पुंस्त्वादित्यनुमाहतिः ॥**

सु० — **तदेवं पौरुषेयवचनाद्धर्मादिसिद्धौ परिशेषानुपपत्तेर्नापौरुषेयवाक्यसिद्धिरित्याशङ्क्याह ॥ प्रत्यक्ष इति ॥ उक्ताशेषशङ्कासमुच्चयार्थश्चशब्दः । उदिते पूर्वपक्षिणा तं प्रति**

**सिद्धान्तिना वक्तव्यमिति शेषः । किं वक्तव्यमित्यत आह ।। न बुद्ध इति ॥ अनुमाहतिः परिशेषानुमानस्येति शेषः । अयमर्थः । न तावद्धर्मादिः कस्यचित्प्रत्यक्षो वस्तुत्वादित्यनेनैव सामान्यानुमानेन बुद्धस्य धर्मादिदर्शित्वसिद्धिः; किन्तु परिशेषतः । न च परिशेषोऽनुमानाद्भिद्यते । तस्य चोक्तानुमानप्रतिहतत्वेन न प्रामाण्यमुपपद्यते । तदनुपपत्तौ च तदुपजीविनोऽविप्रलम्भादिसाधनस्य गर्भस्रावेणैव गतत्वान्न दूषणान्तरमन्वेषणीयमिति पुनः कल्पनागौरवं तदवस्थमिति ।**

**वा०**— चोदित इत्यस्यैकपदत्वसंभवेऽप्युक्ताभिप्रायं मूलारूढं कर्तुमनुक्तसमुच्चयार्थतया चशब्दं पृथक्कृत्य व्याख्याति ॥ **उक्तेति** ॥ सामान्यसिद्धेर्न विशेषविषयेण प्रतिपक्षसंभव इत्यतः शेषपूरणेन व्याख्याति ॥ **अनुमेति** ॥ ननु प्रत्यक्षः कस्यचिद्धर्म इत्यनुमानमाशङ्क्य तद्दूषणमनुक्त्वा परिशेषे तदुपन्यासोऽसङ्गतो नापि स युक्तः । अनुमाने प्रतिपक्षसंभवे परिशेषे तदनुपपत्तेः । अविप्रलम्भादिसाधने तु दोषानुक्तिरेवेत्यसङ्गतमेतदित्यत आह ॥ **अयमर्थ इति** ॥ सामान्यसिद्धिर्न विवक्षितार्थसाधिका साक्षात् किन्तु परिशेषद्वारैव । तस्मिंश्च दूषिते विवक्षितासिद्ध्या वैयर्थ्यमेव सामान्यसिद्धौ दूषणमेवेति भावः ।

**स०**— **परिशेषानुमानस्येतीति** ॥ धर्मादिद्रष्टृत्वं बुद्धनिष्ठमन्यत्र वृत्तौ बाधकोपपन्नत्वे सति क्वचिद्वृत्तिमत्त्वादिति परिशेषानुमानस्येत्यर्थः ।

**प०**— **उक्ताशेषशङ्कासमुच्चयार्थश्चशब्द इति** ॥ स च नास्मदादिः संभवतीत्यादिनोक्ताशेषशङ्केत्यर्थः ।

**या०**— **परिशेषानुमानस्येति** ॥ धर्मादिद्रष्टृत्वं बुद्धनिष्ठमन्यत्र वृत्तौ बाधकोपपन्नत्वे सति क्वचिद्वृत्तिमत्वादिति परिशेषानुमानस्येत्यर्थः ॥

**श्री०**— **परिशेषानुपपत्तेरिति** ॥ न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचिदित्युक्तपरिशेषानुपपत्तेरित्यर्थः ॥

**च०**— **परिशेषानुमानस्येति शेष इति** ॥ धर्मादिद्रष्टृत्वधर्मिकबुद्धनिष्ठत्वसाध्यकान्यवृत्तित्वबाधकविशेषितकिञ्चिद्वृत्तिमत्त्वलिङ्गकपरिशेषानुमानस्येत्यर्थः ।

**सु०— ननु धर्मादिः कस्यचित्प्रत्यक्षो वस्तुत्वा(द्घटव)दिति सामान्यानुमानं तावददुष्टम् । तस्य च बुद्धे न चेत्पर्यवसानं, तदा किं पुरुषान्तरे तदास्थीयते किंवा न कुत्रापि । नाद्यः पुंस्त्वस्य व्यभिचारप्रसङ्गात् । न द्वितीयः सामान्यसिद्धिव्याघातात् ॥ उच्यते ॥ अस्मदादिषु कुतो न सामान्यपर्यवसानमास्थीयत इति वाच्यम् । बाधितत्वादिति चेत्; कथं तर्हि बुद्धेऽपि पर्यवसानम् । ततश्च धर्मादिद्रष्टृत्वं बुद्धतदितरान्यतरवृत्तित्वेन व्याप्तम् व्यापकाभावात्स्वयमपीति नास्तीति सिद्धम् ॥ एतेन धर्मादिद्रष्टृत्वं बुद्धनिष्ठमन्यत्र वृत्तौ बाधकोपपन्नत्वे सति क्वचिद्वृत्तिमत्त्वादिति परिशेषानुमानस्याश्रयासिद्धिविशेष्यासिद्धी सूचिते भवतः ।**

**वा०**— नन्वेवं सामान्यसिद्धेः स्वतो दोषरहितत्वेन विशेषे पर्यवसानस्यावश्यकत्वात्पुरुषान्तरे पर्यवसानस्य पुंस्त्वहेतोस्तत्रैव व्यभिचारापादकत्वेनासंभवाद्बुद्धेऽपि पर्यवसानानङ्गीकारे सामान्यसिद्धित्व-व्याघातात्परिशेषदूषणस्याभासत्वमुपपाद्य सामान्यसिद्धिर्व्युत्पादनीया । तथा च मदभीष्टसिद्धिरित्याशयेन शङ्कते ॥ **नन्विति** ॥ भ्रान्तोऽसि न हि वयं सामान्यसिद्धेरदुष्टत्वमङ्गीकृत्य परिशेषमाभासीकुर्मो येनैवं पर्यनुयोगः । अपि तु बाधादस्मदादिषु सामान्यसिद्धिपर्यवसानाभाववद्बुद्धेऽपि तत एव पर्यवसानासंभवा-त्सामान्यसिद्धिर्व्यापकानुपलम्भबाधितेत्येव ब्रूमः । वैयर्थ्योक्तिस्तु मुख्यतः । तथा च कथमेतदाशङ्कावकाश इत्याशयेनाह ॥ **उच्यत इति** ॥ **एतेनेति** ॥ सामान्यसिद्धेरेव दुष्टत्ववर्णनेनेत्यर्थः ।

**प०**— सामान्यसिद्धिरेव नास्ति येन सामान्यसिद्धिव्याघात आपाद्येतेति भावेनाह ॥ **उच्यत इत्यादिना ॥ आश्रयासिद्धिविशेष्यासिद्धी इति** ॥ क्वचिदपि पर्यवसानायोगेन धर्मादिद्रष्टृत्वस्या-सिद्धेः । क्वचिद्वृत्तित्वस्य बाधेन विशेष्यासिद्धिरित्यर्थः ।

**या०— नास्तीति सिद्धमिति** ॥ तथा च बाधितत्वात्सामान्यानुमानस्यादुष्टत्वमेवानुपपन्नमिति भावः ।

**श्री०— सूचिते भवत इति** । बुद्धतदितरवृत्तित्वरूपव्यापकाभावोक्त्या क्वचिद्वृत्तिमत्त्व-रूपविशेष्यासिद्धिः सूचिता । स्वयमपि नास्तीति धर्मादिद्रष्टृत्वरूपव्याप्यस्याभावोक्त्या आश्रयासिद्धिः सूचितेति ज्ञातव्यम् ॥

**च०— नास्तीति सिद्धमिति** ॥ तथा च गगनकुसुमायितमिति भावः ॥

118a

सु० — ननु सामान्यासिद्धिबलात्पुंस्त्वमाभासीकुर्मः किंवा पुंस्त्वबलात्सामान्यसिद्धिर्बाधिता भवत्विति सन्दिह्यते । अस्तु तावत्सन्देहः । तावताऽपि परानुमानस्यानिश्चायकत्वं सिध्यति । विशेषावधारणायां सामान्यानुमानस्य प्रत्यक्षतासामग्रीसद्भावेन सोपाधिकत्वादाभासत्वं युक्तम् । तस्यापि पक्षे साधनेऽस्मदादिप्रत्यक्षत्वस्याप्यापातः । उद्भूतरूपादिरूपत्वात्तस्य । साध्यव्यापकत्वादिनैवोपाधित्वे व्यतिरेकाभावो न दोषाय । सामान्यानुमानदूषणस्यागमबाध इति चेन्न । तस्य पौरुषेयस्योक्तविधया प्रामाण्यानिश्चयात् । अपौरुषेयस्य चानङ्गीकृतत्वात् ॥

वा० — ननु पुंस्त्वादिबलात्सामान्यसिद्धेर्बाधितत्वे सामान्यसिद्धिबलादनैकान्तिकत्वाप्रयोजकत्वादिना पुंस्त्वस्याभासता किं न स्यादित्याशङ्कते ॥ **नन्विति** ॥ नैतावताऽपि त्वदभीष्टसिद्धिरित्याह ॥ **अस्त्विति** ॥ ननु माऽस्तु पौरुषेयवाक्येन धर्मादिसिद्धिरिति मदभीष्टसिद्धिः । अनयोरन्यतराभासत्वानिश्चये पौरुषेयेण न धर्मादिनिश्चय इति तत्रापि न सिध्यतीत्यत आह ॥ **विशेषेति** ॥ ननूपाधिव्यतिरेकसाध्यव्यतिरेकयोः पक्षादन्यत्र संभावने साधनवति पक्षे साध्यव्यापकोपाधिव्यावृत्त्या साध्यव्यावृत्त्यापातेन व्यभिचारोन्नायकतया वा स्वाव्यावृत्त्या पक्षे साध्यव्यावृत्तिसाधनेन प्रतिपक्षोन्नायकतया वोपाधेर्दूषणत्वसंभवेऽपि प्रकृतोपाधिव्यतिरेकस्यान्यत्रादर्शनेन कथं दोषत्वमित्यतः केवलान्वयिस्थले व्यतिरेकाभावेऽपि व्याप्यव्यापकताग्रहवद्व्यतिरेकशून्यस्यापि साध्यव्यापकत्वादेः संभवेन साध्यव्यापकताद्यविघातकत्वात् । अन्यत्र व्यतिरेकाभावेऽपि साध्यव्यापकत्वसाधनाव्यापकत्वनिश्चये साधनवत्यपि पक्षे व्यापकोपाधिव्यावृत्त्या व्याप्यसाध्यव्यावृत्त्या व्यभिचारोन्नायकत्वस्य यो यद्व्यापकव्यावृत्तः स तद्व्याप्यव्यावृत्त इति सामान्यतोऽन्वयव्याप्तेः साध्योपाध्यन्वयव्याप्तेरेव तद्व्यतिरेकयोर्व्यतिरेकव्याप्तित्वाच्च प्रतिपक्षोन्नायकत्वस्यापि संभवान्नानुपपत्तिरित्याह ॥ **साध्येति** ॥ यद्वा ननु व्यतिरेकिधर्मत्वस्योपाधिलक्षणत्वात्कथं व्यतिरेकशून्यस्यास्योपाधित्वमित्यतोऽनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकरूपस्यैवोपाधिलक्षणतया वक्तव्यत्वात् । व्यतिरेकिधर्मत्वस्य चातथात्वेन साध्यव्यापकत्वादेरेव तादृशत्वेन वक्तव्यत्वे आवश्यकत्वात्तेनैवोपाधित्वोपपत्तौ व्यतिरेकाभावोऽकिञ्चित्कर इत्याशयेनाह ॥ **साध्येति** ॥ **सामान्यानुमानदूषणस्येति** ॥ अत्र परिशेषविघटनद्वारा दूषणस्य पुंस्त्वादिरूपस्य साक्षाद्दूषणस्य व्यापकानुपलब्धिबाधस्योपाधिव्यतिरेकरूपस्य च सङ्ग्रहाय दूषणस्येति सामान्यनिर्देशः । अन्यथा विशिष्यैव निर्दिशेत् । आगमेन बुद्धादेर्धर्मादिसाक्षात्कारप्रतिपादनादिति भावः ॥

**स०**— ननु पक्षे प्रत्यक्षसामग्रीसद्भावसाधने तस्यास्मदादिप्रत्यक्षत्वं कथमापद्यत इत्यत आह ॥ **उद्भूतरूपादिरूपत्वात्तस्येति** ॥ उपाधेरित्यर्थः । आदिपदेन महत्त्वादिकम् । तथा च महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्यास्मदादिप्रत्यक्षत्वव्याप्यत्वेन तस्य पक्षे साधने तद्व्यापकस्यास्मदादिप्रत्यक्षत्वस्याव्यापार इति भावः । अनेन पक्षे उद्भूतरूपादिरूपप्रत्यक्षसामग्रीसाधनेऽस्मदादिप्रत्यक्षत्वमुपाधिरित्युक्तं भवति । ननु कस्यचित्प्रत्यक्षत्वे साध्ये न प्रत्यक्षसामग्रीसद्भावस्योपाधित्वं युक्तम् । तयोः व्यतिरेकयोः पक्षादन्यत्राभावेनोक्तोपाधेः साध्याभावाविनाभाव्यभावत्वस्याभावादित्यत आह ॥ **साध्यव्यापकत्वादिनैवेति** ॥ यद्वा ननूपाधेः प्रतिपक्षोन्नायकत्वात् यत्र प्रत्यक्षसामग्रीविरहः तत्र प्रत्यक्षत्वाभाव इति उपाधिव्यतिरेकस्य साध्यव्यतिरेकव्याप्तत्वं ग्राह्यम् । तच्च न संभवति । अतीन्द्रियमात्रस्य पक्षत्वात् । ऐन्द्रियकमात्रस्य विपक्षत्वेन सपक्षाभावात् । कथं प्रत्यक्षसामग्रीविरहस्योपाधित्वमित्यत आह ॥ **साध्येति** ॥ प्रतिपक्षेऽन्वयव्याप्त्यसंभवेऽपि व्यतिरेकव्याप्तिः संभवति । साध्योपाधिव्याप्तेरेव तत्र व्यतिरेकव्याप्तत्वादिति भावः ।

**प०**— उत्तरमाह ॥ **अस्त्विति** ॥ **सामान्यानुमानस्येति** ॥ धर्मादिकं कस्यचित्प्रत्यक्षं वस्तुत्वादित्यस्य प्रत्यक्षसामग्रीसद्भावरूपोपाधिग्रस्तत्वादित्यर्थः । प्रत्यक्षसामग्रीसद्भावमात्रेण धर्मादेः कथमस्मदादिप्रत्यक्षत्वापादनमित्यत आह ॥ **उद्भूतेति** ॥ उद्भूतरूपसमानाधिकरणमहत्त्ववत्त्वादिरूपत्वात्प्रत्यक्षसामग्रीसद्भावस्येत्यर्थः । तस्यैव चास्मदादिप्रत्यक्षत्वे प्रयोजकत्वादिति भावः । ननु कथमस्योपाधित्वम् । व्यतिरेकवत एव तथात्वात् । न चात्र यत्र प्रत्यक्षसामग्रीसद्भावाभावस्तत्र प्रत्यक्षत्वाभाव इति व्यतिरेकः संभवति । अतीन्द्रियमात्रस्य पक्षत्वादित्यत आह ॥ **साध्येति** ॥ विपक्षे व्याघातः आदिपदार्थः ।

**या०**— ननु पक्षे योगजधर्मादिप्रत्यासत्तिरूपप्रत्यक्षसामग्रीसद्भावसाधने तस्यास्मदादिप्रत्यक्षत्वापादनं कथमित्यत आह ॥ **उद्भूतरूपादिरूपत्वादिति** ॥ **तस्येति** ॥ उक्तोपाधेरित्यर्थः । ततश्च अयमर्थः । नात्र प्रत्यक्षसामग्रीमात्रमुपाधितयोच्यते येनोक्तापादनानुपपत्तिः । किन्तु या सामग्री घटादौ तद्गुणादौ वा सपक्षे प्रत्यक्षताप्रयोजकतयोभयवादिसिद्धा महत्त्वसामानाधिकरणोद्भूतरूपादिरूपा तद्वत्समवेतत्वरूपा च सैव 'सा च धर्मादिकमि'ति प्रतिज्ञाभागगतेनादिशब्देनोक्ते देवदत्तादिशरीरादौ धर्मादौ वा यदि परेणाङ्गीक्रियते तर्हि स्यादेवास्मदादिप्रत्यक्षत्वस्यापि तत्रापत्तिरिति । अनेनोक्ते पक्षे उद्भूतरूपादिरूपप्रत्यक्षसामग्रीसाधनेऽस्मदादिप्रत्यक्षत्वमुपाधिरित्युक्तं भवति । नन्वतीन्द्रियमात्रस्यात्र

पक्षतया विवक्षितत्वेन तदन्यत्र च सर्वत्र साध्योपाध्योरेव सत्त्वेन तदुभयव्यतिरेकयोर्व्याप्तेः कुत्रापि ग्रहीतुमशक्यत्वात् साध्याभावाविनाभावित्वाभावात्कथं प्रत्यक्षसामग्रीसद्भावस्योपाधित्वमित्यत आह ॥ **साध्यव्यापकत्वादिनैवेति** ॥ तथा चोपाधेः साध्यव्यापकत्वेनैव ज्ञानमावश्यकं दूषकतौपयिकत्वात्; न साध्याभावव्याप्याभावप्रतियोगित्वेनापि, गौरवादिति भावः ॥

**श्री०— सामान्यसिद्धीति** ॥ धर्मादिकं कस्यचित्प्रत्यक्षं वस्तुत्वादित्यादेरिति सामान्यसिद्धिबलादित्यर्थः ॥ **पुंस्त्विति** ॥ बुद्धस्य धर्मद्रष्टृत्वाभावसाधकं पुंस्त्वहेतुरित्यर्थः ॥ **परानुमानस्येति** ॥ सामान्यसिद्ध्यनुमानादेरित्यर्थः ॥ **सामान्यानुमानदूषणस्येति** ॥ धर्मादेः कस्यचित्प्रत्यक्षत्वसाधकानुमानदूषणस्य बुद्धधर्मादिद्रष्टृत्वाभावसाधकस्य पुंस्त्वहेतोरित्यर्थः । बुद्धादेर्धर्मादिद्रष्टृत्वसाधक आगमः किं पौरुषेय उतापौरुषेय इति विकल्प्य क्रमेण दूषणमाह ॥ **तस्येत्यादिना** ॥

**च०— उद्भूतरूपादिरूपत्वात्तस्येति** ॥ उक्तोपाधेरित्यर्थः । एतेन धर्मादिकं धर्मीकृत्य प्रत्यक्षसामग्रीसद्भावसाधने प्रत्यक्षत्वमुपाधिरित्यभिहितं भवति । ननु 'साध्याभावाविनाभावी स उपाधिर्यदत्यय' इत्युदयनमते साध्याभावनिरूपितव्याप्तिविशेषिताभावप्रतियोगिन एवोपाधित्वोपगत्या प्रकृते चातीन्द्रियसामान्यस्य पक्षतया तदन्यस्मिंश्च साध्योपाध्योरेव सत्त्वेन तद्व्यतिरेकयोर्व्याप्तेर्दुर्ग्रहतयोपाधिता दुर्निरूपेत्याशङ्कायां नव्यैरुदयनोक्तभङ्गीमवज्ञाय साध्यव्यापकत्वविशेषितसाधनाव्यापकतामात्रस्यैव तल्लक्षणत्वसमर्थनेन तादृग्लक्षणस्य च प्रकृतेऽप्यक्षततया न क्षतिरित्याह ॥ **साध्येति** ॥

**सु०— स्यादेतदेवं यदि बुद्धादीन्पक्षीकृत्यानुमानम् । ईश्वरवादिनं प्रति तु कथम् । ईश्वरो हि तनुभवनादीनां कार्यत्वेन कर्ता सिद्ध्यन् सर्वज्ञ एव सिद्धः । यथा चेश्वरपक्षीकारेण सर्वज्ञतासाधनेऽपि नाश्रयासिद्धिधर्मिग्राहकविरोधौ, तथाऽऽचार्य एव शास्त्रयोनिसूत्रे वक्ष्यति ।**

**तदेवं धर्मादिसिद्ध्यन्यथाऽनुपपत्त्याऽपौरुषेयं वाक्यं किमपि सर्वैर्वादिभिरभ्युपेयमिति स्थितम् । तच्चापौरुषेयं वाक्यं वेद एव, परिशेषात् । तदतिरिक्तानि हि कर्तृप्रसिद्धिमन्ति । न च धर्मादिव्यस्थापराणि । न चैवं वेद इति भावः ।**

**नन्वेवं सति वेदादेव सर्वेषां धर्मादिप्रतिपत्तिरित्यायातम् । सत्यमेवमेतत् । किन्तु धर्मादिस्वरूपे वेदात्प्रतीते तद्विशेषेषु तमतिक्रम्य स्वमतिदोषाद्वादिनां विप्रतिपत्तयः प्रतीयन्त इति ।**

**वा०—वक्ष्यतीति** ॥ वनकुस्त्वादिरूपेण पक्षभूतस्य चेशितुरित्यादिनेति शेषः । एवं संभावकयुक्तिं समर्थ्योपसंहरति ॥ **तदेवमिति** ॥ पूर्वमुपसंहारदशायामभ्युपेयमितीदानीं च स्थितमिति वैचित्र्येण पूर्वं प्रमाणोपन्यासमात्रमिदानीं च तत्समर्थनेन दृढीकरणमिति सूचयति । एवं मुखतः प्रतीतां संभवयुक्तिमुक्त्वा 'अपि वेदानामङ्गीकार्या हि नित्यता, न हि धर्मादिसिद्धिः स्यादि'त्यादिना तात्पर्यतो लब्धां वेदनित्यत्वे उपपत्तिमाह ॥ **तच्चेति** ॥ अथवाऽपौरुषेयवाक्यविषयिणीं सामान्यसिद्धिं मुखतः प्रतिपादितामुपपाद्य वेदापौरुषेयत्वविषयकमभिप्रायतो लब्धं परिशेषमाह ॥ **तच्चेति** ॥ गूढाभिसन्धिः-शङ्कते ॥ **नन्विति** ॥ तथैवोत्तरमाह ॥ **सत्यमिति** ॥ प्रमापकप्रमाणस्यैकत्वे धर्मादौ वादिनां मतभेदो न स्यादित्याशयेन शङ्किता स्वाशयमुद्घाटयति ॥ **किन्त्विति** ॥

**स०**— उत्तरमाह ॥ **यथेश्वरपक्षीकारेणेत्यादिना** ॥ ततः अत्रापीश्वरो न सर्वज्ञः पुंस्त्वादित्यनुमानबाधस्तदवस्थ एवेत्युत्तरमादावुपस्कर्तव्यम् । नन्वत्रेश्वरः सिद्धो न वा । नेति पक्षे आश्रयासिद्धिः, आद्ये धर्मिग्राहकमानबाध इत्याशङ्कापरिहाराय यथाचेत्यादिवाक्यं योज्यम् ॥ **वक्ष्यतीति** ॥ वनकुस्त्वादिरूपेण पक्षभूतस्य चेशितुः किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखमिति वक्ष्यतीत्यर्थः । तथाचेश्वरस्य नेश्वरत्वेन पक्षत्वं अतो नोक्तदोषः । किन्तु प्रसिद्धकर्तृरहितवनकुस्त्वेनेत्युक्तं भवति ।

**प०**— ननु बुद्धादीन्पक्षीकृत्य पुंस्त्वहेतुना सार्वज्ञ्याद्यभावसाधने आश्रयासिद्ध्यादेरभावेऽपि तार्किकं प्रति ईश्वरो न सर्वज्ञः पुंस्त्वादिति साधने तदसिद्धिसिद्धिभ्यां आश्रयासिद्धिधर्मिग्राहकप्रमाबाधौ स्यातामिति शङ्कते ॥ **स्यादेतदिति** ॥ **न च धर्मादिव्यवस्थापराणीति** ॥ धर्मादिव्यवस्थापराणि न चेत्यर्थः । धर्माधर्मस्वरूपज्ञानं धर्मादिशब्दस्य तत्र सङ्केतज्ञानं धर्मादिशब्दव्यवहारश्च वेदबाह्यानां न स्यादिति भावेन शङ्कते ॥ **नन्वेवमिति** ॥ विदिताभिप्राय उत्तरमाह ॥ **सत्यमिति** ॥

**या०— ईश्वरवादिनं प्रतीति** ॥ तेनोक्तसामान्यसिद्धिपरिशेषाभ्यामीश्वरसार्वज्ञ्यं न साध्यते येन पुंस्त्वादित्यनुमाहतिः स्यादिति भावः । तर्हि कथं तन्मते सार्वज्ञ्यसिद्धिरित्यत आह ॥ **ईश्वरो हीति** ॥ अत्र चेश्वरो न धर्मदर्शी पुंस्त्वादित्यनुमानं धर्मिग्राहकमानबाधितम् । अन्यथाऽऽश्रयासिद्धमिति भावः । उत्तरमाह ॥ **यथा चेश्वरेति** ॥ **वक्ष्यतीति** ॥ 'वनकुस्त्वादिरूपेण पक्षभूतस्य चेशितुः । किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखमि'त्यत्र न क्षित्यादिसर्वकर्तृत्वेन तस्य पक्षता येनोक्तदोषः । किन्तु प्रसिद्धकर्तृरहितवनकुस्त्वेनैव । तथा च न पुंस्त्वानुमाने धर्मिग्राहकमानबाधादिकमिति वक्ष्यतीत्यर्थः ॥

श्री० — परिशेषमुपपादयति ॥ **तदतिरिक्तानि हीति** ॥ वेदातिरिक्तानीत्यर्थः ॥ **न चैवं वेद इतीति** ॥ किन्तु कर्तृप्रसिद्धिशून्यो धर्मादिव्यवस्थापरश्चेत्यर्थः ॥ **प्रतीत इति** ॥ सामान्यत इति शेषः ॥ **तद्विशेषेष्विति** ॥ केशोल्लुण्ठनसप्तघटिकातः प्राग्भोजनादिरूपेषु धर्मविशेषेष्वित्यर्थः । तं वेदम् । प्रतीयन्ते विस्तृता भवन्ति ।

च० — **शास्त्रयोनिसूत्रे वक्ष्यतीति** ॥ वनकूर्त्वादिरूपेणेत्यनुव्याख्याव्याख्यावसरे न क्षित्यादिसर्वकर्तृत्वेन तस्य पक्षता येनोक्तदोषः किन्तु प्रसिद्धकर्तृरहितवनकूर्त्वेनैव । तथा च न पुंस्त्वानुमाने धर्मिग्राहकमानबाधादिकमित्यभिधास्यतीत्यर्थः ।

**सु० — ननु वेदस्यापि सकर्तृकत्वमनुमानागमसिद्धम् । तथा हि । वेदवाक्यानि पौरुषेयाणि वाक्यत्वात्कालिदासवाक्यवत् इति । अयं कालो वेदव्यतिरिक्तेदानींतनत्वरहित-पौरुषेयवान्कालत्वात् अन्यकालवत् । आकाशो वेदव्यतिरिक्ताकाशनिष्ठत्वरहितपौरुषेयवान् द्रव्यत्वात् तन्तुवत् । श्रोत्रं वेदव्यतिरिक्तश्रोत्रग्राह्यत्वरहितपौरुषेयग्राहकम् । इन्द्रियत्वात् चक्षुर्वत् । प्रजापतिर्वा इदमेक एवाग्र आसीत् नाहरासीत् न रात्रिरासीत् । स तपोऽतप्यत तस्मात्तपस्तेपानाच्चत्वारो वेदा अजायन्तेति । तत्कथम् परिशेषाद्वेदस्यापौरुषेयतासिद्धिरिति ॥**

वा० — वेदापौरुषेयत्वसाधनस्य बाधं प्रतिपक्षं वा शङ्कते ॥ **नन्विति** ॥ **अयं काल इति** ॥ वेदव्यतिरिक्तं यदिदानीन्तनं तत्त्वरहितपौरुषेयवानिति साध्यार्थः । एवमुत्तरत्रापि । अत्र सर्वत्र विशिष्ट-व्यतिरेकिषु विशेष्याभावायत्तविशिष्टाभावमादाय दृष्टान्ते साध्यपर्यवसानं पक्षे च तमादाय साध्यपर्य-वसानस्य बाधितत्वाद्विशेषणाभावायत्तविशिष्टाभावमादाय साध्यपर्यवसाने वेदापौरुषेयत्वसिद्धिरिति भावः । आद्यानुमानदृष्टान्तेऽन्यकालभवं वस्तु पौरुषेयम् । द्वितीये पटतन्तुरूपादि । तृतीये रूपादि । तत्र पौरुषेयत्वोक्तिरौपचारिकी तद्वाक्य एव दृञः स्मरणादिति ध्येयम् । आश्रयासिद्धिरित्या-दिपदेन धर्मिग्राहकविरोधग्रहणम् । अनयोश्च व्यवस्थितदूषणत्वमिति द्रष्टव्यम् ॥

स० — **अयं काल इति** ॥ वर्तमानकाल इत्यर्थः । वेदव्यतिरिक्तं यदिदानींतनम् । तत्त्वरहित-पौरुषेयो वेद एव तद्वानित्यर्थः । अत्रातीतादिकालस्य पक्षत्वे सिद्धसाध्यतावारणायायमित्युक्तम् । साध्ये पौरुषेयवानित्युक्ते सिद्धसाध्यता । अत इदानींतनत्वरहितेत्युक्तम् । तावत्युक्ते बाधः । अस्मिन्काले

विद्यमानस्य पौरुषेयस्येदानींतनत्वेन तद्राहित्यासंभवात् । अतो वेदव्यतिरिक्तत्वरूपविशेषणम् । तथा चास्मिन्काले विद्यमाने वेदरूपे पौरुषेये इदानींतनत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्याद्विशिष्टराहित्यमिति न बाध इत्यर्थः । वेदरूपपौरुषेयवानित्येवोक्तौ दृष्टान्ते साध्यवैकल्यम् । अन्यकाले पौरुषेयवेदवत्त्वासंमतेः । अतो विशिष्टव्यतिरेकगर्भता । एवं चान्यकालगतपौरुषेये इदानींतनत्वरूपविशेष्याभावेन विशिष्टाभावो दृष्टान्तेऽप्यस्तीति न साध्यवैकल्यमिति भावः । एवमग्रेऽपि विशिष्टव्यतिरेकगर्भताप्रयोजनं द्रष्टव्यम् । एवमाकाशपक्षकानुमाने पौरुषेयवानित्येवोक्तौ सिद्धसाध्यता । अत आकाशनिष्ठत्वरहितेत्युक्तम् । तावन्मात्रोक्तौ बाधः । आकाशगते पौरुषेये आकाशनिष्ठत्वराहित्यासंभवात् । अतो वेदव्यतिरिक्तेत्याकाशनिष्ठविशेषणम् । एवं चाकाशगते वेदरूपपौरुषेये शब्दे आकाशनिष्ठत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्याद्विशिष्टराहित्यमस्तीति न बाधः । दृष्टान्ते तु तन्तुगतपटलक्षणपौरुषेये पूर्ववद्विशेष्याभावेन विशिष्टाभावगर्भसाध्यमस्तीति द्रष्टव्यम् । श्रोत्रपक्षकानुमानेऽपि पौरुषेयग्राहकत्वमात्रोक्तौ सिद्धसाधनतातः श्रोत्रग्राह्यत्वरहितेत्युक्तम् । तावत्युच्यमाने बाधः । श्रोत्रग्राह्यपौरुषेयस्य श्रोत्रग्राह्यत्वराहित्यासंभवात् । अतो वेदव्यतिरिक्तेति श्रोत्रग्राह्यविशेषणम् । तथा च श्रोत्रग्राह्ये वेदरूपे पौरुषेये श्रोत्रग्राह्यत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्याद्विशिष्टराहित्यमस्तीति न बाधः । दृष्टान्ते तु चक्षुर्ग्राह्ये रूपादिलक्षणे पौरुषेये विशेष्याभावेन पूर्ववद्विशिष्टभावगर्भं साध्यमस्तीति द्रष्टव्यम् ॥ **तेपानादिति तप इति** ॥ तेपानस्तस्माल्लिटः कानच् वेति कानच् ।

प० — **वेदव्यतिरिक्तेति** ॥ वेदव्यतिरिक्तं यदिदानींतनलौकिकवाक्यादि तस्य भावः वेदव्यतिरिक्तेदानींतनत्वं तद्रहितो यः पौरुषेयः तद्वान्वेदान्येदानींतनान्यपौरुषेयवानिति यावत् । यद्यपि वेदान्येदानींतनत्वरहितः पौरुषेयः अतीतागामिकालीनो लौकिकवाक्यपदादिर्वेदश्च भवति । तत्रातीतादिपदार्थवत्त्वस्य बाधात्तादृशवेदत्वेनैव पक्षे साध्यपर्यवसानम् । दृष्टान्ते चेदानींतनपदार्थान्यतत्कालीनपदार्थवत्त्वेन साध्यं ध्येयम् । अत्र पौरुषेयवानित्युक्तौ वेदव्यतिरिक्तपौरुषेयवानित्युक्तौ वा सिद्धसाधनता अतो विशिष्टसाध्योक्तिः । एवमुत्तरत्र प्रयोगद्वयेऽप्यर्थो बोध्यः । तन्तुवदिति । तत्रोक्तरूपपटवत्त्वेन साध्यं बोध्यम् । चक्षुर्वदित्यत्र तादृशरूपग्राहकत्वेन साध्यं ध्येयम् ।

या० — **अयं काल इति** । वर्तमानकाल इत्यर्थः । वेदव्यतिरिक्तं यदिदानीन्तनत्वरहितपौरुषेयवेदरूप एव तद्वानित्यर्थः । अत्रातीतादिकालस्य पक्षत्वे सिद्धसाध्यतावारणायायमित्युक्तम् । साध्ये

पौरुषेयवानित्येवोक्ते सिद्धसाध्यता । अत इदानीन्तनत्वरहितेत्युक्तम् । तावत्युक्ते बाधः । अस्मिन्काले विद्यमानस्य पौरुषेयस्येदानीन्तनत्वेन तद्राहित्यासम्भवात् । अतो वेदव्यतिरिक्तेदानीन्तनत्वविशेषणम् । तथा चास्मिन्काले विद्यमाने वेदरूपे पौरुषेये इदानीन्तनत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्याद्विशिष्टराहित्यमुपपन्नमिति न बाधः । वेदरूपपौरुषेयवानित्येवोक्तौ दृष्टान्ते साध्यवैकल्यम् । अन्यकाले पौरुषेयवेदस्त्वासम्मतेः । अतो विशिष्टव्यतिरेकगर्भता । एवं चान्यकालगतपौरुषेये इदानीन्तनत्वरूपविशेष्याभावेन विशिष्टाभावो दृष्टान्तेऽप्यस्तीति न साध्यवैकल्यमिति भावः । एवमग्रेऽपि विशिष्टव्यतिरेकगर्भताप्रयोजनं द्रष्टव्यम् । एवमाकाशपक्षकानुमाने पौरुषेयवानित्येवोक्तौ सिद्धसाध्यता । अत आकाशनिष्ठत्वरहितेत्युक्तम् । तावन्मात्रोक्तौ बाधः । आकाशगते पौरुषेये आकाशनिष्ठत्वराहित्यासम्भवादतो वेदव्यतिरिक्तेत्याकाशनिष्ठविशेषणम् । एवं चाकाशगते वेदरूपपौरुषेयशब्दे आकाशनिष्ठत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्याद्विशिष्टराहित्यमस्तीति न बाधः । दृष्टान्ते तु तन्तुगतपटलक्षणपौरुषेये विशेष्याभावेन विशिष्टाभावगर्भं साध्यमस्तीति द्रष्टव्यम् । श्रोत्रपक्षकानुमानेपि पौरुषेयग्राहकत्वमात्रोक्तौ सिद्धसाध्यता । अतः श्रोत्रग्राह्यत्वरहितेत्युक्तम् । तावन्युच्यमाने बाधः । श्रोत्रग्राह्यपौरुषेयस्य श्रोत्रग्राह्यत्वराहित्यासंभवादतो वेदव्यतिरिक्तेति श्रोत्रग्राह्यविशेषणम् । तथा च श्रोत्रग्राह्ये वेदरूपे पौरुषेये श्रोत्रग्राह्यत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणविरहाद्विशिष्टराहित्यमस्तीति न बाधः । दृष्टान्ते तु चक्षुर्ग्राह्ये रूपादिलक्षणे पौरुषेये विशेष्याभावेन विशिष्टाभावगर्भं साध्यमस्तीति द्रष्टव्यम् ॥

श्री० — पौरुषेयवान् द्रव्यत्वात्तन्तुवदित्यादि । पटादिरूपपौरुषेयत्वं तन्तावस्तीत्यर्थः अत्र पटादीनां पौरुषेयत्वोक्तिरुपचारात्पुरुषशब्दात्तत्कृतवाक्यादिष्वेव ढञः स्मरणादिति द्रष्टव्यम् । एवमेव गीताभाष्यटीकायां न ह्यपौरुषेये पौरुषेयाज्ञानादय इत्यत्र समाहितमस्तीत्यवगन्तव्यम् ।

च० — अयंकाल इति ॥ सामानाधिकरण्यप्रत्यासत्त्या वेदव्यतिरिक्तत्वविशिष्टं यदिदानींतनत्वं तद्रहितपौरुषेयवानित्यर्थः । निदर्शने साध्यसङ्क्रमनदशायां विशेष्याभावनिबन्धनविशिष्टाभाववान् कालान्तरीणः शब्दस्तमादाय पक्षे तत्सङ्क्रमनदशायां तु तादृशो वेद एव । विशेषणाभावनिबन्धनविशिष्टाभाववत्वात् । तथा च वेदस्य पौरुषेयत्व एव साध्यपर्यवसानमिति भावः । एवमग्रेऽपि निदर्शने पक्षे च साध्यसङ्क्रमनरीतिरवसेया ॥

सु०— मैवम् । अनुमानानां विपक्षे बाधकाभावेनाप्रयोजकत्वात् । पौरुषेयत्वे कर्तुराप्त्यनिश्चयेन ततो धर्माद्यनिश्चयापत्तेरुक्तत्वाच्च ।

ईश्वरः प्रमावान् पुरुषत्वादहमिव; ईश्वरो न विप्रलिप्सावान् ईश्वरत्वात्, न यदेवं न तदेवम्, यथाऽहम्; इति ईश्वरस्याप्तत्वसिद्धिरिति चेन्न । पुरुषत्वेनाप्रमाविप्रलिप्सयोरपि साधनसौलभ्यात् । आश्रयासिद्ध्यादेश्च परिहरिष्यमाणत्वात् ।

किञ्च प्रमावत्त्वमात्रसाधने सिद्धसाधनम् तावताऽऽप्तत्वासिद्धेः । न ह्यनाप्तः कदाचित् प्रमावान्न भवति ॥ अप्रमात्त्वव्युदाससाधने दृष्टान्तस्य साध्यविकलता हेतोरनैकान्त्यं च ॥ ईश्वरत्वहेतुश्च सपक्षादपि घटादेर्व्यावृत्तेरसाधारणः पूर्ववत्सिद्धसाधनश्च ॥ यथार्थचिख्यापयिषा नियतिसाधने च बुद्धर्षभादीश्वरावतारेष्वपि विप्रलिप्सादर्शनाद्बाधः ॥ अशरीरत्वेन सत्प्रतिपक्षतां च सूत्रकार एव वक्ष्यति ।

किञ्चाप्तत्वेऽपीश्वरस्य वेदाः तत्प्रणीता इत्यत्र न प्रमाणम् ॥ ननु वेद ईश्वरप्रणीतः वेदत्वाद्व्यतिरेकेण गगनवदिति चेन्न एवमनीश्वरप्रणीतत्वस्यापि शक्यसाधनत्वात् । स्मृतीतिहासपुराणेभ्यः सपक्षेभ्योऽपि व्यावृत्तत्वेनासाधारणत्वाच्च । तेषामपि पक्षत्वे भागासिद्धेः । वेदादित्वस्यैकरूपस्याभावेन हेतूकर्तुमशक्यत्वात् । अतीन्द्रियविषयवाक्यत्वं हेतुरस्त्विति चेन्न जिनादिवाक्येषु व्यभिचारात् । तान्यपि पक्षतुल्यानीति चेत् तथात्वे व्यर्थविशेषणत्वात् । वाक्यत्वमात्रं हेतुरस्त्विति चेन्न ईश्वरप्रणीतशब्देन तदाप्तिपूर्वकतासाधने बौद्धादिवाक्ये व्यभिचारात् । ईश्वरनिमित्ततामात्रसाधने तु प्रामाण्यासिद्धिरिति ।

किञ्चेश्वरः सर्गादौ यं वेदं निर्मायैकस्मै शिष्यायोपदिशति तमेवान्यस्मा उपदिशति, उत वेदान्तरं निर्मायेति वक्तव्यम् ॥ तमेवेति चेत् । कुतोऽयं भवतो निर्णयः । प्रथमरचितस्य अविस्मरणाद् वृथा वेदान्तरकल्पकाभावाच्चेति चेत् । तत्किं पूर्वकल्पे रचितं वेदं व्यस्मार्षीदीश्वरो येनात्र पुना रचयतीति कल्प्यते । एवं पूर्वतरपूर्वतमादिकल्पेष्वपीत्यनादितैव ज्यायसी । एवं तर्हि पुराणादीनामप्यपौरुषेयता स्यादिति चेत् । स्याद्यदि तेषामविगानं सकर्तृकत्वे प्रमाणं न स्यात् । प्राक्तनेषु पुराणादिषु प्रतीतिपरिवर्तिषु किमर्थं पुना रचनमिति चेन्न । ईश्वरप्रवृत्तेः स्वप्रयोजनाभावस्य वक्ष्यमाणत्वात् । परप्रयोजनानि तु सूक्ष्माण्युत्प्रेक्षितुं न वयं स्थूलदृश्मानः प्रभवामः । किं नाम प्रमितं कार्यमनुसृत्य प्रयोजनसद्भावमात्रं संभावयामः । अन्यथा कण्टकशौक्ल्याद्यपलापप्रसङ्ग इति ।

वा० — **पूर्ववदिति** ॥ न ह्यनाप्तः कचिद्विप्रलिप्साभाववान्न भवतीति भावः ॥ **वक्ष्यतीति** ॥ पाशुपतसमयनिरासकाधिकरण इति शेषः ॥ **तेषामिति** ॥ स्मृत्यादीनां मनुव्यासादिकृतत्वेऽपीश्वरकृतकत्वासिद्धेरिति भावः ॥ **तान्यपीति** ॥ कुलालादिकृतघटादीनामीश्वरकृतत्ववज्जिनादिकृतानामपि तेषामीश्वरकृतत्वं सिषाधयिषितमेवेति भावः । तर्हि लौकिकवाक्यानामपि तादृशत्वादतीन्द्रियविषयकेतिविशेषणं व्यर्थमित्याह ॥ **तथात्व इति** ॥

स० —नन्वीश्वरस्यासिद्धत्वे आश्रयासिद्धिःसिद्धत्वे धर्मिग्राहकमानबाध इत्यत आह ॥ **आश्रयासिद्ध्यादेरिति** ॥ वनकृत्त्वादिरूपेणेत्यत्रेति शेषः ॥ **सूत्रकार एव वक्ष्यतीति** ॥ अन्तवत्त्वमसर्वज्ञता वेत्यनेनेति शेषः ॥ **तान्यपि पक्षतुल्यानीति चेदिति** ॥ ईश्वरस्य सर्वोत्पत्तिमन्निमित्तत्वादिति भावः ॥

प० — तर्कपराहतिं चाह ॥ **पौरुषेयत्व इति** ॥ नन्वीश्वरोऽसिद्धश्चेदाश्रयासिद्धिः सिद्धश्चेद्धर्मिग्राहकप्रमाणबाध इत्यत आह ॥ **आश्रयासिद्ध्यादेश्चेति** ॥ वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुरित्यादिना शास्त्रयोनिसूत्रे परिहरिष्यमाणत्वादित्यर्थः ॥ **पूर्ववदिति** ॥ प्रमावानिति प्रयोगे न ह्यनाप्तः कदाचित्प्रमावान्न भवतीत्युक्तदिशाऽनाप्तेऽपि कदाचिद्विप्रलिप्साभावसंभवादिति भावः ॥ **वक्ष्यतीति** ॥ अन्तवत्त्वमसर्वज्ञता वेति समयपादीयपाशुपताधिकरणगुणसूत्रे ईश्वरस्य शरीरमस्ति चेदीश्वरस्यान्तवत्त्वं परिच्छिन्नत्वं न चेदसर्वज्ञता स्यादिति । वक्ष्यमाणत्वादिति भावः ॥ **अनीश्वरप्रणीतत्वस्यापीति** ॥ ईश्वरप्रणीताङ्कुरादौ व्यतिरेकव्याप्तिसंभवादिति भावः । ननु वेदादित्वं हेतुरस्त्वित्यत आह ॥ **वेदादित्वस्येति** ॥ कार्यमात्रमीश्वरप्रणीतमेवेति भावेन शङ्कते ॥ **तान्यपीति** ॥ अतीन्द्रियविषयेति विशेषणं व्यर्थम् । वाक्यत्वमात्रस्यैवाव्यभिचारादिति भावः । अविगानं सकर्तृकत्वे प्रमाणं न स्यादिति । यदि स्पष्टं सकर्तृकत्वबोधकम् । पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु । क्रियन्तेऽतस्त्वनित्यानि तदर्थाः पूर्वसर्गवदित्यादिप्रमाणं यदि न स्यात्तदा स्यात्त्वदुक्तम् । तत्सत्त्वे तु कथं तेषामपौरुषेयत्वमिति भावः ॥ **वक्ष्यमाणत्वादिति** ॥ न प्रयोजनवत्त्वादित्यधिकरणे ॥ **अन्यथेति** ॥ फलाभावेन प्रमितापलाप इत्यर्थः ॥ **अपौरुषेयपदप्रक्षेपेणेति** ॥ दृष्टान्तेऽन्यकाले तादृशाकाशादिमत्त्वेन साध्यसंभवादिति भावः ॥

या० — **प्रमावानिति** ॥ अनेन विवक्षितार्थतत्त्वज्ञानसिद्धिरिति ज्ञेयम् । नन्वीश्वरस्यासिद्धत्वे आश्रयासिद्धिः सिद्धत्वे धर्मिग्राहकमानबाध इत्यत आह ॥ **आश्रयासिद्ध्यादेरिति** ॥ वनकृत्त्वादिरूपेणेत्यत्रेति शेषः ॥ **वक्ष्यतीति** ॥ अन्तवत्त्वमसर्वज्ञता वेत्यत्रेति शेषः ॥ **पक्षतुल्यानीति** ॥ ईश्वरस्य

सर्वोत्पत्तिमत्कर्तृत्वाज्जिनादिवाक्येष्वपीश्वरप्रणीतत्वस्य विद्यमानत्वेन तेषामपि पक्षतुल्यत्वान्न व्यभिचार इति भावः ।। **वक्ष्यमाणत्वादिति** ।। न प्रयोजनवत्त्वादित्यत्रेति शेषः ।।

श्री० — ईश्वरस्य विवक्षितार्थतत्त्वज्ञानसाधनायानुमानमाह ।। **ईश्वरप्रमावानिति** ।। **साध्यविकलतेति** ।। दृष्टान्तीकृते स्वस्मिन्नप्रमायाः सत्त्वेन तदभावाभावादित्यर्थः ।। **अनैकान्त्यं चेति** ।। स्वस्मिन्विप्रलम्भके च व्यभिचार इत्यर्थः ।। **ईश्वरत्वहेतुश्चेति** ।। विप्रलिप्साभावसाधक इत्यर्थः ।। **पूर्ववत्सिद्धसाधनश्चेति** ।। विप्रलिप्साभावसाधने सिद्धसाधनम् । तावताऽप्याप्तत्वासिद्धेः । न ह्यनाप्तः कदाचिद्विप्रलिप्सावान्न भवतीति पूर्ववदीश्वरः प्रमावानित्यत्र प्रमावत्त्वमात्रसाधने यथा सिद्धसाधनं तथाऽत्रापि सिद्धसाधनः सिद्धसाधको हेतुरित्यर्थः ।। **प्रामाण्यासिद्धिरिति** ।। विप्रलम्भकवाक्येऽपीश्वरस्य निमित्तकारणत्वादिति भावः ।। **स्थूलदृश्वान इति** ।। स्थूला दृक् येषां ते स्थूलदृश्वान इत्यर्थः ।। **अन्यथेति** ।। स्वपरप्रयोजनाभावेन पुराणानां प्रमाणसिद्धपुनारचनानिराकरण इत्यर्थः ।। **कण्टकेति** ।। ईश्वरस्य कण्टकशौक्ल्यनिर्माणेनापि स्वपरप्रयोजनयोरभावादित्यर्थः ।।

च० — **परिहरिष्यमाणत्वादिति** ।। वनकृत्त्वादिरूपेणेत्यादिनेत्यादिः ।। **वक्ष्यतीति** ।। अनवत्त्वमसर्वज्ञता वेत्यत्रेत्यादिः ।। **वक्ष्यमाणत्वादिति** ।। न प्रयोजनवत्त्वादित्यत्रेत्यादिः ।।

सु० — **विशिष्टव्यतिरेकिणश्च पौरुषेयपदस्थानेऽपौरुषेयपदप्रक्षेपेण सत्प्रतिपक्षाः ।**

**कालपदेन च काल एवाभिधीयते तदुपाधयो वा । आद्येऽयमित्यन्यकालवदिति चायुक्तम् । द्वितीये कालोपाधिना वेदस्य संबन्धानिरूपणाद्बाधितविषयत्वम् ।। आकाशनिष्ठत्वं चाकाशसमवेतत्वं तत्संयुक्तत्वं वा । आद्ये वेदव्यतिरिक्तेनाकाशसमवेतत्वरहितेन तन्त्वादिना अर्थान्तरता, संयोगवृत्त्याकाशस्य तद्वृत्तोपपत्तेः । द्वितीये त्वाकाशसमवेतैरसंयोगविभागद्वित्वादिभिरर्थान्तरत्वम् । आकाशनिष्ठत्वं तद्वृत्त्वं च समवाय एवेति चेन्न अप्रसिद्धविशेषणत्वात्पक्षस्य । अस्माभिस्समवायानङ्गीकारात् । दृष्टान्तस्य साध्यवैकल्याच्च ।। किञ्च वर्णास्तावन्नित्यद्रव्यत्वान्न क्वचित्समवेताः । क्रमस्तु वर्णधर्म इति बाधितविषयता च ।। श्रुतिस्तु सत्प्रतिपक्षा न निश्चयाय भवति । किञ्च ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यादित्यनीश्वररचितत्वमपि श्रावयन्त्याः कथमस्या न सत्प्रतिपक्षता । संप्रदायप्रवर्तकत्वेनेयं सावकाशेति चेत् । तर्हि द्वे अपि न्यायोपेतनित्यत्वश्रुत्यनुरोधेन तथा किं न स्याताम् इति ।**

वा०— एवं सर्वानुमानसाधारण्येनाप्रयोजकत्वप्रतिकूलतर्कपराहती उक्त्वा विशिष्टव्यतिरेकिमात्रासाधारणं दूषणमाह ॥ **विशिष्टेति** ॥ तत्रापि तत्तदनुमानासाधारणदूषणान्याह ॥ **कालपदेनेत्यादिना** ॥ **सम्बन्धानिरूपणादिति** ॥ शब्दरूपगुणतयाऽङ्गीकृतस्य द्रव्यस्य वा वेदस्थसूर्यगत्यादिरूपोपाधिना संयोगस्य समवायस्य च त्वयाऽनङ्गीकारात्स्वरूपासंबन्धादेश्च संबन्धत्वस्यैवासंभवादिति भावः ॥ **किञ्चेति** ॥ स एवायं गकार इति प्रत्यभिज्ञया श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वान्मनोवदित्यनुमानेन तैर्वर्णैरित्याद्यागमैश्च तेषां नित्यत्वादेः सिद्धिरिति भावः ॥ **श्रुतिस्त्विति** ॥ अङ्गीकार्या हि नित्यतेत्यत्र हिशब्दसूचितवाचा विरूपनित्ययेतिनित्यत्वप्रतिपादकश्रुत्या सत्प्रतिपक्षेत्यर्थः । अनीश्वराणामनन्तवेदप्रणयनस्यासंभावितत्वात्संभावितार्थकेश्वरप्रणीतत्वश्रुतिविरोधेनानीश्वरप्रणीतत्वश्रुतिः सावकाशेत्याशङ्कते ॥ **सम्प्रदायेति** ॥ यदि संभावनामूलत्वेन बलवत्त्वं तर्हि नित्यत्वश्रुतेर्न्यायोपेततया सुतरां बलवत्त्वमित्याशयेनाह ॥ **न्यायेति** ॥ सामान्यसिद्धिपरिशेषरूपन्यायोपेतेत्यर्थः ।

स०— **दृष्टान्तस्येति** ॥ पटस्य तन्त्वात्मकत्वेन तन्तुषु तद्वृत्त्वासंमतेरिति भावः ॥ **वर्णधर्म इति** ॥ तथा च न तत्समवाय आकाश इति बाधितविषयतेत्यर्थः ॥ **श्रुतिस्तु सत्प्रतिपक्षेति** ॥ वाचा विरूपनित्ययेत्यादिभिरिति शेषः ॥

प०— **इति चायुक्तमिति** ॥ त्वन्मते कालस्याखण्डत्वादिति भावः ॥ **संबन्धेति** ॥ पौरुषेयवानिति मतुप्प्रत्ययोक्तसंबन्धानिरूपणादित्यर्थः ॥ **समवाय एवेति चेदिति** ॥ तथा च तन्त्वादिना संयोगविभागादिना च नार्थान्तरता । आद्ये समवायवृत्त्या तन्त्वादिमत्त्वाभावात् । अन्त्ये समवेतत्वराहित्याभावादिति भावः ॥ **साध्यवैकल्याच्चेति** ॥ अत्रापि समवायानङ्गीकारादित्यनुकर्षः ॥ **श्रुतिस्त्विति** ॥ प्रजापतिर्वा इत्यादि प्रागुक्तश्रुतिस्तु वाचाविरूपनित्ययेत्यादिश्रुत्या सत्प्रतिपक्षेत्यर्थः । तद्रीत्याऽपौरुषेयत्वमुपेत्यापि प्रतिपक्षमाह ॥ **किञ्चेति** ॥ **न्यायोपेतेति** ॥ प्रागुक्तधर्मादिसाधकसामान्यपरिशेषरूपन्यायोपेता वाचा विरूपनित्ययेत्यादिश्रुतिर्या तदनुरोधेनेत्यर्थः ॥

या०— **दृष्टान्तस्येति** ॥ पटस्य तन्त्वात्मकत्वेन तन्तुषु तद्वृत्तासम्मतेरिति भावः ॥ **वर्णधर्म इतीति** ॥ तथा च न तत्समवाय आकाशे इति बाधितविषयतेत्यर्थः ॥ **सत्प्रतिपक्षेति** ॥ वाचा विरूपनित्ययेत्याद्याभिरिति शेषः ।

श्री०—**अपौरुषेयपदप्रक्षेपेणेति** ॥ अयं कालो वेदव्यतिरिक्तेदानीन्तनत्वरहितापौरुषेयवान् । कालत्वादन्यकालादिवदित्याद्यनुमानत्रये पौरुषेयपदस्थानेऽपौरुषेयपदप्रक्षेपेण सत्प्रतिपक्षत्वं द्रष्टव्यम् ।

तथाहि । दृष्टान्तभूतातीतकालनिष्ठेऽपौरुषेये आकाशादौ वेदव्यतिरिक्तत्वरूपविशेषणे सत्यपीदानीन्तनत्वरूपविशेष्याभावाद्विशिष्टाभावः । पक्षीभूतवर्तमानकालनिष्ठेऽपौरुषेये वेदे इदानीन्तनत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणाभावाद्विशिष्टाभावो द्रष्टव्यः । आकाशपक्षकद्वितीयानुमानेऽपि दृष्टान्तभूततन्तुनिष्ठेऽपौरुषेये तन्तुत्वे वेदव्यतिरिक्तत्वरूपविशेषणे सत्यप्याकाशनिष्ठत्वरूपविशेष्याभावाद्विशिष्टाभावः । पक्षीभूताकाशनिष्ठापौरुषेये वेदे आकाशनिष्ठत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणाभावाद्विशिष्टाभावो द्रष्टव्यः । श्रोत्रपक्षकतृतीयानुमानेऽपि दृष्टान्तभूतचक्षुर्ग्राह्येऽपौरुषेये रूपत्वे वेदव्यतिरिक्तत्वरूपविशेषणसद्भावेऽपि श्रोत्रग्राह्यत्वरूपविशेष्याभावाद्विशिष्टाभावः । पक्षीभूतश्रोत्रग्राह्येऽपौरुषेये वेदे श्रोत्रग्राह्यत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणाभावाद्विशिष्टाभावो द्रष्टव्यः ॥

**काल एवेति** ॥ अखण्ड इत्यर्थः ॥ **तदुपाधय इति** ॥ तरणिपरिस्पन्दरूपा इत्यर्थः ॥ **आद्येऽयमित्यन्यकालवदिति** ॥ अखण्डकालेऽयं वर्तमानः कालः । अन्योऽतीतः काल इति विभागायोगादिति भावः । आकाशस्य तन्त्वादिना समवायाभावादिति भावः । आकाशस्य संयोगादिरूपपौरुषेयवत्त्वं केन संबन्धेन । येनार्थान्तरता स्यादित्यत आह ॥ **आकाशसमवेतैरिति** ॥ **समवाय एवेति** ॥ तथा चाकाशसमवेते संयोगादिरूपेऽपौरुषेयवेदव्यतिरिक्तत्वाकाशसमवेतत्वरूपयोर्विशेषणविशेष्ययोरुभयोरपि सत्वेन विशिष्टाभावासंभवान्न तैरर्थान्तरतेति द्रष्टव्यम् ॥ **साध्यवैकल्यं चेति** ॥ दृष्टान्तीकृते तन्तौ समवायेन पटरूपपौरुषेयत्वं नास्ति । तयोरभेदादतः साध्यवैकल्यमिति भावः । आकाशनिष्ठत्वं तद्वत्त्वं च समवाय एवेति पक्षे दूषणान्तरमाह ॥ **किञ्चेति** ॥ आकाशसमवेते पौरुषेयवेदे वेदव्यतिरिक्तत्वरूपविशेषणाभावप्रयुक्तविशिष्टाभावमादाय साध्यपर्यवसानं वाच्यम् । तत्र किं वेदशब्देन वर्णा विवक्षिता उत तन्निष्ठ आनुपूर्वीरूपः क्रमविशेष इति विकल्प्याद्ये दूषणमाह ॥ **वर्णास्तावदिति** ॥ द्वितीये दूषणमाह ॥ **क्रमस्त्विति** ॥ तथा चाकाशे वेदशब्दाभिप्रेतक्रमसमवायवत्त्वं बाधितमिति भावः ॥ **अस्या इति** ॥ प्रजापतिर्वा इदमेक आसीदिति सर्वेश्वरप्रणीतत्वं प्रतिपादयन्त्याः श्रुतेरित्यर्थः ॥ **द्वे अपीति** ॥ ईश्वरानीश्वररचितत्वप्रतिपादकतयाऽभिप्रेते प्रजापतिर्वा ऋग्वेद एवेति द्वेऽपि श्रुतीत्यर्थः ॥ **न्यायोपेतेति** ॥ न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचिदित्युक्तन्यायोपेतेत्यर्थः ॥ **नित्यत्वश्रुतीति** ॥ वाचा विरूपनित्ययेत्यादिनित्यत्वश्रुतीत्यर्थः ॥

**च० — दृष्टान्तस्येति** ॥ तन्तुपटयोरभ्युपगत्याधाराधेयभावानुपगतेरिति भावः ॥ **वर्णधर्म इतीति** ॥ तथा च न तन्निरूपितसमवाय आकाश इति बाध इति भावः ॥ **सत्प्रतिपक्षेति** ॥ वाचा विरूपनित्ययेत्यादि श्रुतिभिरिति पूरणीयम् ॥

सु०— ननु वर्णा एव तावदनित्यास्तत्कुतस्तदात्मकस्य वेदस्य नित्यत्वमिति । मैवम् । न हि वयं वेदं कूटस्थनित्यं ब्रूमः किन्तु नियतैकप्रकारम् । तत्र को वर्णनित्यत्वस्योपयोगः । वस्तुतत्त्वविचारकं प्रति तु वर्णानां कूटस्थनित्यत्वं भगवत्पादैरेवान्यत्रोपपादितमित्यास्तां विस्तरः ।

अत्राह कश्चिद्वेदः संस्कृतोऽसंस्कृतो वा बोधकः । न तावद् द्वितीयः सर्वदा बोधकत्वप्रसङ्गात् । आद्ये संस्कारकेष्वस्याश्वासकारणाभावात्सर्वमिदं गजस्नानमिति ॥ तदिदमयुक्तम् । संस्कारकाः खलूच्चारयितारो व्याख्यातारश्च वेदस्य । तत्राद्येषु तावदविगीतसंवाददर्शनेनाश्वासो युज्यते । द्वितीयेषु तु लोकावगतां शब्दशक्तिं लौकिकानेव तात्पर्यावगमोपायाननुसरत्सु कथमनाश्वास इति यत्किंचिदेतत् ।

वा०— तर्हि कथं तत्त्वनिर्णये तदुपपादनमित्यत आह ॥ वस्तुतत्त्वेति ॥ वस्तुतत्त्वमत्रापि व्युत्पादनीयमेवेत्यत आह ॥ आस्तामिति ॥ यद्वा ननु गूढकर्तृके वाक्ये व्यभिचारान्न परिशेषो युक्त इत्यतोऽन्यत्र भगवत्पादैरेव तत्परिहारस्य निपुणतरमभिधानान्न विस्तरो युक्त इत्याह ॥ आस्तामिति ॥

सर्वमिदमिति ॥ कर्तृषु विश्वासकारणाभावाद्धर्मादिनिश्चयायापौरुषेयत्वाङ्गीकारेऽपि संस्कारकेषु विश्वासकारणाभावात्पुनस्तदनिश्चयापातेनापौरुषेयत्वाङ्गीकारो धूलिनिर्हरणार्थं गजस्नानं पुनर्धूलिप्रक्षेपेणेव व्यर्थ इत्यर्थः । इति यदेतत्किञ्चित्क्षुद्रमित्यर्थः । अतो न भाष्यकारेण कण्ठतो निराकृतमिति भावः ।

स०— वर्णानां जन्यत्वमभ्युपेत्य समाधत्ते ॥ नियतैकप्रकारमिति ॥ अन्यत्रेति ॥ विष्णुतत्त्वनिर्णयादावित्यर्थः । ननु वैदिकमहमादिपदं स्वतन्त्रवक्तृपरम् । अहमादिपदत्वात् संमतवत् इत्यनुमानाद्वेदस्य सकर्तृकत्वसिद्धिरिति चेन्न । अपौरुषेयेऽपि वेदे मन्त्रलिङ्गप्रकरणादिना यजमानाद्यभिप्रायप्रवेशस्यास्माभिरङ्गीकारात् । अन्यथा त्वन्मतेऽपि वेदे शरीरं मे विचर्षणमित्यादौ स्वतन्त्रवक्तुरीश्वरस्यैवाहमादिशब्दार्थत्वापातात् । ननु वेदे स्वतन्त्रवक्तुरभावे इच्छाघटिततात्पर्यासंभवादुपक्रमादिना तन्निर्णयानुसरणं न स्यात् । तथाच श्रुतिकुमार्यास्तात्पर्यरूपगर्भ एव पुंयोगे लिङ्गमिति चेन्न । तत्प्रमितिशेषत्वरूपस्य तात्पर्यस्यास्मदभिमतत्वेन तस्येच्छादिघटितत्वानङ्गीकारात् । द्रष्टृपुरुषेच्छामादायैवेच्छाघटिततात्पर्यस्याप्यपौरुषेये वेदे संभवाच्चेत्याद्यभिप्रेत्याह ॥ आस्तां विस्तर इति ॥ वेदः संस्कृत इति ॥ सलक्षणमुच्चारितः ससंप्रदायं व्याख्यातो वेत्यर्थः ॥

प०— **अन्यत्रेति** ॥ तत्त्वनिर्णये तदेवेदं वचनमिति प्रत्यभिज्ञानादित्यादिग्रन्थेनोपपादितमित्यर्थः । प्रपञ्चितमेतद्वर्णनित्यत्वं वेदापौरुषेयत्वं च तर्कताण्डवे प्रथमपरिच्छेदे ॥

या०— वर्णानां जन्यत्वमभ्युपेत्य समाधत्ते ॥ **नियतैकप्रकारमिति** ॥ **अन्यत्रेति** ॥ विष्णुतत्त्वनिर्णयादावित्यर्थः । ननु वैदिकमहमादिपदं स्वतन्त्रवक्तृपरम् । अहमादिपदत्वात् संमतवत् इत्यनुमानाद्वेदस्य सकर्तृकत्वसिद्धिरिति चेन्न । अपौरुषेयेऽपि वेदे मन्त्रलिङ्गप्रकरणादिना यजमानाद्यभिप्रायप्रवेशस्यास्माभिरङ्गीकारात् । अन्यथा त्वन्मतेऽपि वेदे शरीरं मे विचर्षणमित्यादौ स्वतन्त्रवक्तुरीश्वरस्यैवाहमादिशब्दार्थत्वापातात् । ननु वेदे स्वतन्त्रवक्तुरभावे इच्छाघटिततात्पर्यासंभवादुपक्रमादिना तन्निर्णयानुसरणं न स्यात् । तथा च श्रुतिकुमार्यास्तात्पर्यरूपगर्भ एव पुंयोगे लिङ्गमिति चेन्न । तत्प्रमितिशेषत्वरूपस्य तात्पर्यस्यास्मदभिमतत्वेन तस्येच्छादिघटितत्वानङ्गीकारात् । द्रष्टृपुरुषेच्छामादायैवेच्छाघटिततात्पर्यस्याप्यपौरुषेये वेदे संभवाच्चेत्याद्यभिप्रेत्याह ॥ **आस्तां विस्तर इति** ॥ **संस्कृत इति** ॥ सलक्षणमुच्चारितः ससंप्रदायं व्याख्यातो वेत्यर्थः ॥

श्री०— **अनित्या इति** ॥ विकारिकत्वेन तज्जन्यत्वात्तन्नाशेन नाशाच्च न क्रमविशिष्टवेदस्य कूटस्थनित्यत्वमित्यर्थः ॥ **नियतैकप्रकारमिति** ॥ नियतानुपूर्वीविशेषविशिष्टमित्यर्थः ॥ **उपयोग इति** ॥ वर्णानामनित्यत्वेऽपि तदात्मकस्य नियतैकप्रकारताया अनपायादित्यर्थः ॥ **अन्यत्रेति** ॥ न चोच्चारणकाल एवेत्यादिना तत्त्वनिर्णय इत्यर्थः ॥ **सर्वमिदं गजस्नानमिति** ॥ वेदप्रामाण्यादिसमर्थनमित्यर्थः । वेदप्रामाण्यादिके समर्थितेऽपि संस्कृतासंस्कृतादिविकल्पेनार्थबोधकत्वासंभवाद्व्यर्थमेव तत्समर्थनम् । पुनर्धूलीप्रक्षेपेण गजस्नानवदिति भावः । शक्तिं योगरूढिरूपाम् । तात्पर्यावगमोपायान् उपक्रमादीन् ॥

च०— वर्णानामनित्यत्वमुपेत्य समाधत्ते ॥ **नियतैकेति** ॥ **अन्यत्रेति** ॥ विष्णुतत्त्वविनिर्णयादावित्यर्थः । ननु वेदस्य पौरुषेयत्वानङ्गीकारे इच्छारूपतात्पर्यस्य दुरुपपादतया तत्प्रतिसन्धानाधीना अन्वयधीः कथं तत्रोदीत्यादित्याशङ्कायां तत्प्रमितिशेषवस्त्वरूपतात्पर्यस्य सिद्धान्तेऽभिप्रेतस्येच्छारूपतानुपगतेः । तत्तद्द्रष्टृपुरुषेच्छारूपस्य वा तस्यापौरुषेयत्वेऽपि तत्र सूपपादत्वाच्चेत्याह ॥ **आस्तामिति** ॥

अनु०— अधर्मवादिनो वाक्यमप्रयोजनमेव हि ॥

सु०— स्यादेतदेवं धर्मादिकमभ्युपगच्छन्तं प्रत्यपौरुषेयवाक्यसमर्थनम् । यस्तु धर्मादिकमेव नाङ्गीकरोति चार्वाकस्तं प्रति कथम् । निराश्रयत्वादिति चेन्न । यतस्तेनाप्यङ्गीकारयाम इत्याशयवानाह ॥ अधर्मवादिन इति ॥ धर्माद्यतीन्द्रियार्थानभ्युपगन्तुरित्यर्थः । वाक्यं शास्त्रम् । अप्रयोजनमित्युपलक्षणम्; निर्विषयं चेत्यपि द्रष्टव्यम् । हिशब्दो यस्मादित्यर्थे । तस्मात्तेनापि धर्मादिकमङ्गीकार्यमिति शेषः । एतच्चाभ्युपगमेऽप्यर्थाभावादित्यत्रैव व्युत्पादयिष्यामः ।

वा०— ननु चार्वाकनिराकरणं न प्रकृतसङ्गतमित्यतस्तत्सङ्गमयति ॥ स्यादेतदिति ॥ नन्वधर्मवादिनः समानन्यायतया धर्माद्यतीन्द्रियाभ्युपगन्तृत्वात्तं प्रतीदं दूषणं न चार्वाकं प्रति तस्यातादृशत्वादित्यत आह ॥ धर्मादीति ॥ यद्वा धर्माद्यभाववादिनं प्रति न निर्विषयत्वाद्यापादनं युक्तं तस्यैव विषयत्वादुत्तरवाक्याननुगुण्याच्चेत्यत आह ॥ धर्मादीति ॥ ननु तदीययत्किञ्चित्तद्वाक्यवैयर्थ्यं नानिष्टमित्यत आह ॥ वाक्यमिति ॥ उपलक्षणमिति ॥ इदं च प्रयोजनपदं रूढिमाश्रित्य । यौगिकत्वे तु योगत एव विषयस्यापि लाभः । तथा चोक्तं तत्त्वनिर्णयटीकायाम् । चार्वाकेण धर्मादिकमङ्गीकरणीयमित्यस्य शेषपूरणेन मूलारूढतां दर्शयितुं तदुपयुक्ततया हिशब्दं व्याचष्टे ॥ हिशब्द इति ॥ नन्वतीन्द्रियाङ्गीकारेऽप्यैन्द्रियकस्यैव विषयादेः संभवात्कथमेतदापादनमित्यत आह ॥ एतच्चेति ॥

प०— इत्यत्रेति ॥ समयपादीयतृतीयेऽधिकरणे ॥

या०— अङ्गीकारेऽपीति । लिङ्गदर्शनानन्तरं लैङ्गिकव्यवहारः संभावनामात्रात्संवादेन च प्रामाण्याभिमानस्तत्रेति तेनाङ्गीकारादेवमुक्तमिति मन्तव्यम् ॥

श्री०— निराश्रयत्वादिति ॥ धर्मादिकं प्रमाणोपेतं वस्तुतत्वादित्यनुमानं न युक्तम् तं प्रत्याश्रयासिद्धत्वादित्यर्थः ॥

अनु०— धर्माभावोऽपि नो तेन प्रत्यक्षावगतो भवेत् ॥
अतः संशयसंपत्तौ वाक्यं प्रत्यक्षवत्प्रमा ॥

सु०— **किञ्च मा भूद्धर्मादिकम्** । धर्माद्यभावस्तावच्चार्वाकेणाङ्गीकृत एव । तमाश्रित्यापौरुषेयवाक्यं तेनाङ्गीकारयाम इत्याशयवानाह ॥ धर्माभावोऽपीति ॥ तेन चार्वाकेण(न) । धर्माभावोऽपि प्रत्यक्षावगतो न भवेत् । अनुमानन्तु नाङ्गीकृतम् । अङ्गीकारेऽपि न तद्विषयम् । यतोऽतो धर्माद्यभावावगमाय वाक्यं प्रत्यक्षमिव प्रमाणमङ्गीकरणीयम् । तच्चोक्तविधयाऽन्यस्मिन्ननाश्वासादपौरुषेयमेवेति ।

ननु घटाद्यभावमिव धर्माद्यभावमपि प्रत्यक्षमेव कुतो न गोचरयेत् । मैवम् । अयोग्यतया चक्षुषा रसस्येव प्रत्यक्षेण सतोऽप्यग्रहणोपपत्तेः । किं योग्यताविशेषणेन; यत्प्रत्यक्षेण सर्वथा नोपलभ्यते तन्नास्त्येवेति निश्चीयत इति चेत् । स्यादेतदेवम् । यद्यत्र वादिनो न विप्रतिपद्येरन् । यदि च चक्षुरादिना रसादिकमयोग्यतया न गृह्यत इति न स्यात् । सत्यां तु वादिविप्रतिपत्तौ, सति चायोग्यतया क्वचिदनुपलम्भे, प्रत्यक्षानुपलब्धिः संशयमेव संपादयति 'किमनुपलम्भान्नास्ति धर्मादिकमुत वाद्यन्तरोक्तरीत्या चक्षुषाऽनुपलभ्यमानो रसो रसनेनेव अयोग्यतया प्रत्यक्षेणानुपलभ्यमानमपि प्रमाणान्तरादस्ती'ति । न हि न्यायमतिक्रम्य स्वसमयमात्रेण संशयोत्तारो युज्यते । एतत्संशयनिरासार्थमपि वाक्यं प्रमाणमङ्गीकरणीयम्; यथा प्रत्यक्षयोग्येऽर्थे स्थाणुर्वा पुरुषो वेति संशयनिवृत्तये विशेषप्रत्यक्षमिति ॥ तदिदमुक्तं संशयसंपत्तौ सत्यामिति ॥ तदेवमपौरुषेयत्वाद्वेदस्य कर्तृदोषमूलत्वाभावेन स्वत एव प्रामाण्यमिति सिद्धम् ।

वा०— ननु धर्माद्यवगमार्थत्वेनापौरुषेयवाक्याङ्गीकरणप्रसङ्गे धर्माद्यभावावगमार्थतया तदङ्गीकरणं प्रकृतासङ्गतमित्यतो 'ननु माऽस्तु धर्मादिकमतीन्द्रियं विषयादि तथाऽपि न शास्त्रस्य निर्विषयत्वाद्यापत्तिः । धर्माद्यभावादेरेव विषयादितासंभवादि'ति परेणाशङ्किते किमस्माकं धर्मादिविषयकेण प्रकृतानुपयुक्तेनाग्रहेण विषयादित्वादिना त्वदभिमतधर्माद्यभावादिसाधकतयैवापौरुषेयवाक्यमङ्गीकारयाम इत्याशयेनोत्तरग्रन्थप्रवृत्तेर्नासङ्गतिरित्याशयेनाह ॥ **किञ्चेति** ॥ तेनेति धर्माद्यनभ्युपगन्तृपरामर्शस्य निष्प्रयोजनत्वाद्विशेष्यमात्रपरामर्श इत्याह ॥ **तेनेति** ॥ नन्वतो वाक्यमिति परिशेषोऽनुपपन्नः । अनुमानानिरासादित्यतः स्पष्टतया भाष्यकृतोऽपेक्षितं तन्निरासप्रकारं दर्शयति ॥ **अनुमानं त्विति** ॥

संशयसंपत्तावित्यस्य प्रसक्तिं दर्शयितुं न प्रत्यक्षावगत इत्यत्रानुपपत्तिं शङ्कते ॥ **नन्विति** ॥ नन्वनुपलब्धिविरुद्धा वादिविप्रतिपत्तिर्न संशयाय भवतीत्यतोऽनुपलब्धेः सावकाशत्वमाह ॥ **यदि चेति** ॥ **वादिविप्रतिपत्ताविति** ॥ वादिनां धर्मादिसत्त्वाभिमान इत्यर्थः ॥ **अस्तीतीति** ॥ अनेन वादिविप्रतिपत्तिः क्वचिदयोग्यताप्रयुक्ता दर्शनयोर्मिलितयोरनुपलब्धेरस्तित्वकोटिसाहचर्यप्रापकतया साधारणत्वसंपादकत्वेन संशयोपयोग उक्तः । नास्तित्वकोटिसाहचर्यस्य च स्पष्टत्वादनुपपादनम् । ननु यत्प्रत्यक्षेण नोपलभ्यते तन्नास्त्येवेति नियमादेव संशयनिवृत्तिः स्यादित्यत उक्तरीत्या संशयप्रापकन्यायप्राप्तसंशयस्य स्वसमयाभ्युपेतनियममात्रेणापन्हवेऽतिप्रसङ्ग इत्याशयेनाह ॥ **न हीति** ॥ अन्यथा चक्षुरेकप्रत्यक्षवादिनाऽपि केनचित्तदनुपलम्भाद्रसाद्यभावं वदता जीयेतेति भावः । प्रत्यक्षयोग्येऽप्यर्थे संशयनिवृत्तये विशेषानुसरणं प्रत्यक्षवदिति मूलोक्तमुक्तेऽर्थे संभावकत्वेनाह ॥ **यथेति** ॥

**स०— न हि न्यायमतिक्रम्येति** ॥ संशयकोटिप्रापकन्यायमतिक्रम्येत्यर्थः । संशयकोटिप्रापकन्याययोः प्रबलत्वान्न तन्मूलकः संशयः समयमात्रनिवर्त्य इति भावः ॥

**प०— न तद्विषयमिति** ॥ प्राक् प्रतियोगिनो धर्मादेरानुमानिकत्वनिरासेनेति भावः ॥ **धर्माद्यभावमपीति** ॥ प्रतियोग्यनुपलब्ध्येति योज्यम् ॥ **सतोऽपीति** ॥ धर्मादिरिति शेषः ॥ **न्यायमतिक्रम्येति** ॥ रसस्येवायोग्यतया विद्यमानोऽपि धर्मादिर्नोपलभ्यत इति न्यायमतिक्रम्य प्रत्यक्षेणानुपलम्भान्नास्तीति स्वसिद्धान्तमात्रेण संशयनिवृत्तिर्न हि युज्यत इत्यर्थः ॥ वेदापौरुषेयत्वसमर्थनम् ॥

**या०— न तद्विषयमिति** । यथा धर्मादिकं केवलानुमानेन साधयितुं न शक्यमित्युक्तं तथा तदभावोऽपि नानुमानेन साधयितुं शक्यो लिङ्गाभावादिति भावः ॥ **नास्त्येवेति निश्चीयत इति** ॥ शशविषाणादिकमिवेति शेषः । अत्र धर्मादिकं किं नास्तीत्युतास्तीत्येव सन्देहः । तत्राद्यकोटिप्रापकमुक्तम् ॥ **अनुपलम्भादिति** ॥ न ह्यनुपलभ्यमानं शशविषाणादिकमस्तीति सन्दिह्यतेऽतः कथमयं संशयः इत्याशङ्कायां तद्वैलक्षण्यप्रदर्शनाय द्वितीयकोट्युपपादकमुक्तम् ॥ **वाद्यन्तरोक्तरीत्येति** ॥ न वाद्यन्तरोक्तत्वमात्रेण वस्तुसत्त्वसिद्धिः किन्तु प्रमाणादेव । अन्यथा शून्यादेरपि सिद्धिप्रसङ्गात् । अतः कथमेतत् द्वितीयकोटिप्रापकमित्यत उक्तम् ॥ **प्रमाणान्तरादिति** ॥ तत्संभावनार्थमुक्तम् ॥ **चक्षुषाऽनुपलभ्यमानोऽपीत्यादि** ॥ तदेतत् द्वितीयकोटिप्रापकद्वयं क्रमेणोपपादयितुं यद्यत्र वादिन इत्यादिकः प्राक्तनो ग्रन्थ इत्यवधेयम् ॥ **न हि न्यायमतिक्रम्येति** ॥ संशयकोटिप्रापकन्यायमतिक्रम्येत्यर्थः । तथा च संशयकोटिप्रापकन्याययोः प्रबलत्वान्न तन्मूलकः संशयः समयमात्रनिवर्त्य इति भावः ॥

श्री०— **प्रत्यक्षेणेति** ॥ सतोऽपि धर्मादेरयोग्यत्वात्प्रत्यक्षेणाग्रहणोपपत्तेरित्यर्थः । तथा च योग्यस्यानुपलब्धिरभावग्राहिका साऽत्र नास्तीति भावः । विशेषप्रत्यक्षं पुरुषत्वव्याप्यकरादिदर्शनम् ॥ **इति वेदापौरुषेयत्वसमर्थनम्** ॥

च०—**संशयोत्तार इति** ॥ सन्देहनिरास इत्यर्थः ॥ **स्वत एवेत्यादि** ॥ सप्रपञ्चमुत्पत्तिज्ञप्त्योर्गुणग्राहकान्तरनैरपेक्ष्यस्य समर्थितत्वादिति भावः ॥

**सु०— ननु तथाऽपि न वेदः प्रमाणम् । स हि पदार्थेषु वाक्यार्थे वा प्रमाणं भवेत् ॥ न तावत्पदार्थेषु, तेषां प्रागवगतत्वात् । अनवगमे च व्युत्पत्त्यभावप्रसङ्गात् । व्युत्पत्तेर्वाच्यवाचकसंबन्धज्ञानरूपत्वात् । संबन्धज्ञानस्य संबन्धिज्ञानपूर्वकत्वनियमत्वात् । व्युत्पत्त्यनपेक्षायां चातिप्रसङ्गात् । यद्यपि याथार्थ्यमेव प्रामाण्यं नागृहीतग्राहकत्वम् , तथाऽपि परार्थानुमानस्येव शब्दस्यापि परबोधनार्थं प्रवृत्तत्वेन न ज्ञातज्ञापकता न्याय्या । ननु पुरुषदोषोऽयम् यज्ज्ञातज्ञापनाय शब्दोच्चारणम् । वेदे त्वपौरुषेये ज्ञातज्ञापनेनापि किं दुष्यति । न किंचित् । अनुपादेयत्वं तु स्यात् । तथा च न तन्मीमांसारम्भ इति ॥ नापि वाक्यार्थे प्रमाणम् । तद्बोधजननोपायाभावात् । वर्णपदपदार्थतदनुभवस्मृतीनां प्रत्येकं समुदितादिनां चोपायत्वासंभवात् ॥ स्यान्मतं क्रियापदेन कारकपदेन वा साकाङ्क्षे स्वार्थेऽभिहिते यदेव पदान्तरेण योग्यं प्रतियोगिपदार्थान्तरं सन्निधाप्यते तदेव तस्य संबन्धित्वेनावतिष्ठत इति । सत्यमेवं वस्तुगतिः । अवगतिस्तु तत्संबन्धस्य किंनिबन्धनेति चिन्त्यते । पदं हि स्वार्थं क्रियात्वेन कारकत्वेन वा युक्तं प्रतिपादयतु; तत्संबन्धिताबोधस्तु निर्निबन्धन एव ॥ अङ्गीकृत्य चेदमुदितम् ; प्रकृतिप्रत्ययार्थसंबन्धबोधनिबन्धनादर्शनात् ॥ एतेनाकाङ्क्षासन्निधियोग्यतावत्पदैरभिहिताः पदार्था एव वाक्यार्थौ(र्था)भवन्तीत्यपि निरस्तम् । वाक्यार्थावगते कारणानिरूपणात् ॥**

वा०— ननु शक्तिश्चैवेत्यन्वितशक्तिव्युत्पादनमुक्तासङ्गमित्यतोऽतःशब्दव्याख्यानान्तरं तदित्याशयेन तत्प्रयोजनं दर्शयन्प्रकारान्तरेण प्रामाण्यानुपपत्तिमाशङ्कते ॥ **नन्विति** ॥ पदार्थवाक्यार्थयोरेव शब्दविषयतया प्रसक्तेः पदार्थानां प्रमाणान्तरावगतत्वेन शब्दविषयत्वानुपपत्तेर्वाक्यार्थस्यानवगतत्वेऽप्युपायाभावेन शब्दस्य तद्बोधकत्वानुपपत्तेर्विषयाभावान्न तस्य प्रामाण्यमिति भावः । पूर्वं प्रामाण्यस्वरूपव्युत्पादनमिदानीं तद्विषयबोधोपायविचार इति द्रष्टव्यम् ॥ **तथाऽपीति** ॥ याथार्थ्यमिति प्रमाणलक्षणे यथार्थपदबललब्धनिर्दोषत्वस्य ज्ञेयविषयीकारिविशेषणतयाऽभिमतत्वात्तद्व्यवस्थितदोषाभावस्य च तदर्थतया

शब्दे च ज्ञातज्ञापकत्वस्य च दोषत्वात् न ज्ञातज्ञापके सामान्यलक्षणमिति भावः । ननु ज्ञातज्ञापकत्वस्य शब्दप्रवृत्तिप्रयोजकपरप्रयोजनाननुसन्धानादिरूपदोषवत्पुरुषप्रणीतत्वापादकतया दोषत्वापादनीयासंभवेन वेदे कथं तस्य दोषत्वमित्याशङ्कते ॥ **नन्विति** ॥ परार्थवाक्यस्य परं प्रत्युपादेयार्थबोधकत्वेनैव प्रमाणत्वात्फलवत एवोपादेयत्वेन फलवत्त्वस्य वाक्यप्रामाण्यव्यापकत्वात्फलाननुसन्धानादेः पुरुषदोषत्वस्यापि तन्निमित्तकत्वात् । ज्ञातज्ञापके च फलवत्त्वनिवृत्तौ तद्व्याप्यवाक्यप्रामाण्यस्यापि निवृत्तिरेवेत्याशयेनाह ॥ **अनुपादेयत्वं हीति** ॥ तदनुभवेत्यत्र तदिति वर्णादीनां त्रयाणामपि परामर्शः । एतच्च वाद्यन्तरोक्तस्फोटाद्युपायनिरासावसरे स्फुटीभविष्यति । नन्वानयेत्यादिक्रियापदेन क्रियात्वेन क्रियायामुपस्थापितायां क्रियायाः कारकमापेक्षत्वात्तदाकाङ्क्षापूरकेण घटमित्यादिकारकपदेन कारकत्वेनोपस्थाप्यमानं कारकमपि तत्क्रियाकारकमेवोपस्थाप्यते । एवं घटमित्यादिकारकपदेनापि कारकत्वेन कारके उपस्थापिते कारकस्य क्रियासाकाङ्क्षत्वादानयेत्यादिपदान्तरेण क्रियात्वेन तत्क्रियैवोपस्थाप्यते । एवञ्च पदार्थान्तरसंबन्धिपदार्थान्तरस्यैव वाक्यार्थत्वात्पदानामेव वाक्यार्थबोधोपायत्वात्कथं तदभाव इत्याशङ्कते ॥ **स्यान्मतमिति** ॥ वस्तुत आनयेत्युपस्थापितक्रियायास्तदीयत्वेऽपि घटमित्युपस्थापितकारकस्य च वस्तुतस्तत्क्रियासंबन्धित्वेऽपि क्रियाकारकपदाभ्यां शक्तिसद्भावेन क्रियात्वकारकत्वयुक्तक्रियाकारकमात्रबोधनेन क्रियायां तत्कारकसम्बन्धित्वस्य कारके च क्रियासंबन्धित्वस्य च वस्तुतो विद्यमानस्याप्यशक्ततयाऽबोधनात्तस्यैव च वाक्यार्थत्वात्तद्बोधोपायो नोक्त एवेत्याह ॥ **सत्यमिति** ॥ **क्रियात्वेनेति** ॥ आख्यातप्रत्यायार्थत्वेनेत्यर्थः । **कारकत्वेनेति** ॥ द्वितीयाद्यर्थकर्मत्वादिनेत्यर्थः । ननु यदि प्रकृतिप्रत्ययार्थान्वितस्वार्थप्रतिपादकत्वं प्रत्ययप्रकृत्योरभ्युपेतं तर्हि तन्न्यायेनैव पदानामपि परस्परान्वितार्थप्रतिपादकत्वमभ्युपेयमेव अर्धजरतीयानुपपत्तेः । तथाच पदेष्वेव तत्पर्यनुयोगानुपपत्तिरित्यत आह ॥ **अङ्गीकृत्य चेति** ॥ प्रकृतिप्रत्ययार्थसंबन्धबोधमङ्गीकृत्य क्रियात्वेन कारकत्वेन वा युक्तं प्रतिपादयत्वित्युक्तम् । वस्तुवस्तु प्रकृतिप्रत्ययार्थसंबन्धबोधोपायोऽप्येतत्तुल्यतया नास्त्येवेत्यर्थः ॥ **वाक्यार्थीभवन्तीति** ॥ परस्परसंबद्धा भवन्तीत्यर्थः । पूर्वमुत्तरपदोपस्थापितस्य संबन्धित्वमुक्तमिदानीं सर्वपदोपस्थापितानां परस्परसंबन्धित्वमुच्यत इति विशेषः । पदार्थानां वस्तुनः परस्परसंबन्धित्वेऽपि पदैः पदार्थमात्राभिधानात्तत्संबन्धबोधोपायानुक्तिरेवेत्याह ॥ **वाक्यार्थेति** ॥

**स०— प्रत्येकं समुदितानां चेति** ॥ प्रत्येकं हेतुत्वे इतरवैयर्थ्यम् । आशुतराविनाशिनां क्रमिकाणां च न समुदायः संभवतीति भावः । यद्यपि पदार्थेषु समुदयः संभवति । आशुविनाशित्वाभावात् । तथाप्यज्ञातपदार्थानां हेतुत्वेऽतिप्रसङ्गाज्ज्ञातानामेव तद्वाच्यम् । तेषां च न समुदायः

संभवतीति ध्येयम् ॥ **स्यान्मतमिति** ॥ वाक्यार्थे ज्ञानोपायाभावादित्युक्तमबुद्ध्वा शङ्केयम् । अन्यथा वाक्यार्थज्ञानोपायस्य वक्तव्यत्वात् वाक्यार्थज्ञानस्यानुभवसिद्धत्वोक्त्यसङ्गतत्वादिति ज्ञेयम् । एवमेतेनेत्यपि व्याख्येयम् ॥ **तत्संबन्धिताबोध इति** ॥ क्रियाकारकसंबन्धबोध इत्यर्थः ॥ **अङ्गीकृत्य चेदमिति** ॥ पदं स्वार्थं प्रतिपादयतीत्येतदङ्गीकृत्योक्तम् । वस्तुतस्तु पदस्यापि प्रकृतिप्रत्ययात्मकत्वेन पदार्थस्यापि तदुभयार्थसंसर्गरूपत्वेन तद्बोधस्य च निर्निबन्धनतया न पदं स्वार्थप्रतिपादकमिति भावः ॥

**प०—** यदपि जिज्ञासासूत्रावतारिकायां वेदापौरुषेयत्वे किञ्च शब्दस्यैव प्रामाण्यं दुर्घटं अर्थसंस्पर्शशून्यत्वात् वाक्यार्थप्रत्यायनप्रकारानिरूपणादित्यादि चोद्यमुक्तं तद्विवृण्वन् शक्तिश्चेत्येतदवतारयति ॥ **ननु तथापीत्यादिना** ॥ किं दुष्यतीति प्रश्नस्योत्तरमाह ॥ **न किंचिदिति** ॥ तदनुभवस्मृतीनामित्यस्य तदनुभवजन्यस्मृतीनामित्यर्थः ॥ **उपायत्वासंभवादिति** ॥ प्रत्येकं व्यभिचारान्मेलनायोगाद्वाक्यार्थबोधस्याशाब्दत्वापाताच्चेति भावः ॥

**या०—प्रत्येकं समुदितानां चेति** ॥ वर्णपदविषयकाणामनुभवानां पदार्थविषयकस्मृतीनां च प्रत्येकं हेतुत्वे इतरवैयर्थ्यम् । आशुतरविनाशिनां क्रमिकाणां च न समुदायः संभवतीति भावः ॥ **सम्बन्धित्वेनावतिष्ठत इति** ॥ संबन्धित्वेन ज्ञायत इत्यर्थः । तथा च पूर्वपदसमभिव्याहृतं साकाङ्क्षं पदान्तरमेव वाक्यार्थबोधकमिति शङ्कितुरभिप्रायः ॥ **किंनिबन्धनेति** ॥ सत्यं साकाङ्क्षपदान्तरेणान्वयो ज्ञायत इति । तथाऽपि तस्य पदस्यान्वये शक्त्यभावात्कथं तदुपस्थापकत्वमसन्निकृष्टस्य करणस्यक्रियाजनकत्वेऽतिप्रसङ्गादिति परिहाराभिप्रायः । एतदेवोपपादयति ॥ **पदं हीति** ॥ **प्रतिपादयत्विति** ॥ तत्र शक्तत्वादिति भावः ॥ **तत्सम्बन्धितेति** ॥ परस्परं क्रियाकारकभावसंसर्गबोधस्तु निर्निबन्धनः । पदस्य स्वार्थ इवात्र शक्त्यभावादिति भावः ॥ **अङ्गीकृत्येति** ॥ पदं हि स्वार्थं प्रतिपादयत्वित्येतदङ्गीकृत्योक्तम् । वस्तुतस्तु पदस्य प्रकृतिप्रत्ययात्मकत्वेन तदर्थस्य तदुभयार्थसंसर्गत्वेन तेन तद्बोधस्य निर्निबन्धनतया न पदं स्वार्थप्रतिपादकमिति भावः ॥ **वाक्यार्थीभवन्तीति** ॥ तथा च तदवगतिराकाङ्क्षादिमद्भिः समभिव्याहृतैर्भवतीत्येतन्मताशयः ॥ **कारणानिरूपणादिति** ॥ पदानां स्वार्थेष्विव वाक्यार्थीभूतेषु आकाङ्क्षादिविशिष्टेषु स्वार्थेषु शक्त्यनङ्गीकारादिति भावः ॥

**श्री०— पदार्थेष्वित्यादि** ॥ तद्विषयकप्रमाजनकमित्यर्थः ॥ **प्रागवगतत्वादिति** ॥ शब्दप्रवृत्तेः प्रागेव प्रत्यक्षादिनाऽवगतत्वादनधिगतार्थगन्तृत्वाभावेनाप्रामाण्यं स्यादित्यर्थः ॥**अतिप्रसङ्गादिति**॥

शब्दप्रवृत्तेः प्रागेव प्रत्यक्षादिनाऽवगतत्वादनधिगतार्थगन्तृत्वाभावेनाप्रामाण्यं स्यादित्यर्थः ॥ व्युत्पन्नवद-व्युत्पन्नस्यापि शब्दाद्बोधप्रसङ्ग इति भावः ॥ **याथार्थ्यमेवेति** ॥ तथा च पदार्थानां प्रागवगतत्वेऽपि यथावस्थितार्थबोधकत्वरूपं प्रामाण्यं वेदस्याक्षतमेवेत्यर्थः ॥ **तथा चेति** ॥ वेदस्यानुपादेयत्वे सतीत्यर्थः **इदमुदितमिति** ॥ आनयेति क्रियापदस्य गामिति कारकपदस्य च साकाङ्क्षस्वार्थाभिधायकत्वं यदुक्तं त्वया तदङ्गीकृत्य सत्यमेवमित्यादिना समाधानमुदितमित्यर्थः ॥ **प्रकृतीति** ॥ आनयेत्यादिपदावयवभूतप्रकृति-प्रत्ययेत्यर्थः ॥

**च०**— विधान्तरेण वेदप्रामाण्यस्य दुरुपपादतामाशङ्कते ॥ **नन्विति** ॥ **प्रत्येकं समुदितानां चेति** ॥ आशुतरविनाशिप्रातिस्विकरूपावच्छिन्नानां कार्याव्यवहितपूर्वक्षणावच्छेदेन सत्त्वासंभवात् । मेलनस्याप्ययोगादिति भावः । क्रियापदेन धात्वर्थाभिधायकेन धातुना । कारकपदेन कर्मादिवाचकपदेन । साकाङ्क्षेऽन्वयिनि । सन्निधाप्यते उपस्थाप्यते । संबन्धित्वेन संबन्धप्रतियोगित्वेन । उपतिष्ठते प्राप्नोति । तथा च समभिव्याहाररूपाकाङ्क्षाविशिष्टं पूर्वोत्तरपदद्वयं वाक्यार्थबोधान्वयावबोधकमित्याशङ्कितुराशयः । अवगतिः प्रतीतिः ॥ **किं निबन्धनेति** ॥ पूर्वोत्तरपदयोरन्वयांशे शक्तिविरहेणाशक्यस्यान्वयबोधे भानो-पगमेऽतिप्रसङ्गादिति भावः । तदेव विशदयति ॥ **पदं हीति** ॥ **प्रतिपादयत्विति** ॥ तत्र शक्तत्वादिति हृदयम् ॥ **निर्निबन्धन इति** ॥ तत्र शक्तिमति संधानरूपनियामकराहित्यादित्यभिसन्धिः ॥ **अङ्गी-कृत्येति** ॥ पदस्य स्वार्थप्रतिपादकत्वमङ्गीकृत्यैव तुष्यत्विति पूर्वमुक्तम् । तदपि दुरुपगममेव । पदस्य प्रकृतिप्रत्ययसमुदायात्मकतया तदर्थस्य तदेकतरार्थानुयोगिकापरार्थप्रतियोगिकसंसर्गरूपतया तत्प्रत्यायन-स्यापि निःसाधनतया पदमपि न स्वार्थप्रत्यायकमिति भावः ॥ **प्रकृतिप्रत्ययार्थसंबन्धेति** ॥ प्रकृत्यर्था-नुयोगिकप्रत्ययार्थप्रतियोगिकसंबन्धप्रतीतिनियामकादर्शनादित्यर्थः ॥ **वाक्यार्थीभवन्तीति** ॥ तथा च तेषामेव संसृष्टलक्षणवाक्यार्थात्मकतया समभिव्याहारविशेषरूपाकाङ्क्षाविशेषिताखिलपदाधीनैव वाक्यार्थ-प्रतीतिरित्येतन्मततात्पर्यम् ॥ **तत्कारणानिरूपणादिति** ॥ पदानां संसृष्टलक्षणे संसर्गलक्षणे वा वाक्यार्थे शक्त्यनुपगतेरिति भावः ॥

अनु०— शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ॥
अतोऽन्विताभिधायित्वम्

सु०— अतोऽनियतनिमित्तकत्वादौत्प्रेक्षिक एव वाक्यार्थबोध इत्यप्रामाण्यं वेदस्येत्यत आह ॥ शक्तिश्चेति ॥ चशब्दोऽतःशब्दव्याख्यानान्तरसमुच्चयार्थः, यत इत्यर्थे वा । एवशब्दस्यान्वित एवेति संबन्धः । अयमर्थः । वृद्धव्यवहारादिना हि शब्दशक्त्यवधारणम् । न च पदार्थस्वरूपमात्रे व्यवहारादिकं युज्यते, किन्तु पदार्थान्तरान्विते । अतो व्यवहारादिना शब्दशक्तिमवधारयताऽर्थान्तरान्वित एव स्वार्थोऽनुभूयत इत्यङ्गीकरणीयम् । यद्यप्येकस्मिन् प्रयोगे गौरानयनान्वितः प्रतीयतेऽपरस्मिन्बन्धनान्वितोऽन्यस्मिंश्च दर्शनान्वित इति पदार्थान्तरतदन्वयव्यभिचारः; तथाऽप्यव्यभिचारिणि योग्येतरान्विते स्वार्थे शक्तिग्रहणमुपपद्यत एव । न हि विशेषाणां व्यभिचारेण त्यागे सामान्यस्याव्यभिचारिणो निर्निबन्धनस्त्यागो युज्यते । यत एवं व्युत्पत्तिसमयेऽन्वित एव स्वार्थे शब्दानां शक्तिरनुभूयतेऽतोऽन्वितस्वार्थाभिधायित्वं शब्दानामभ्युपेयम् । शक्तिग्रहणानुरोधित्वादभिधानस्य ॥ यदा च पदैरेवान्वितस्वार्थप्रतिपादनं तदा वाक्यार्थ एवावबुद्ध इति कथं तद्बोधस्य निर्निबन्धनता । गुणप्रधानभावेनान्योन्यान्विताः पदार्था वा तदन्वयो वा वाक्यार्थ इति प्रामाणिकैरङ्गीकृतत्वादिति ।

वा०— यत इत्यर्थे वेति ॥ अस्मिन्पक्षे सन्निहितान्वयलाभ इति द्रष्टव्यम् । नन्वन्विते शक्त्यनुभवस्य परं प्रत्यसिद्धतया तदुपन्यासोऽनुचितोऽनुपपन्नश्चान्विते शक्त्यध्यवसायः । व्यभिचारादिपर्यालोचनायां तदसंभवात् । अस्तु वाऽन्वितस्वार्थाभिधायकत्वं पदानाम् । तथाऽपि वाक्यार्थबोधे उपायानुक्त्याऽसङ्गतिश्चेत्यत आह ॥ अयमर्थ इति ॥ व्यवहारादिना शब्दशक्तिमवधारयताऽनुभवः अकामेनापि स्वीकर्तव्यत इत्यर्थः ॥ यद्यपीति ॥ तथा च सत्यपि तादृशव्यवहारे परीक्षकैर्व्यभिचारिपदार्थान्तरतदन्वयपरित्यागेनाव्यभिचारिणि स्वार्थमात्रे शक्तेः कल्पनीयतयाऽनुभवोऽसिद्ध इति भावः । ननु किमिति व्यभिचारिणोरपि पदार्थान्तरतत्संसर्गयोरनुमतं रूपमापाद्यानुगतशक्तिकल्पनानिर्बन्ध इत्यत उपस्थितसामान्यस्य परित्यागे विशेषस्यैव निमित्तस्य व्यभिचारादेरभाव एव तत्र निमित्तमित्याशयेनाह ॥ ॥ न हीति ॥ उपलक्षणं चैतत् । अन्वयसामान्ये शक्त्यभावे विशेषजिज्ञासानुपपत्तिश्चेत्यपि द्रष्टव्यम् । यतोऽत इत्युक्तं हेतुहेतुमद्भावं घटयति ॥ शक्तीति ॥ असङ्गतिं परिहरति ॥ यदा चेति ॥ पदार्थानामेव वाक्यार्थत्वे तेषामनेकत्वाद्वाक्यभेदापत्तिरित्यतः प्रधानपदार्थस्यैकत्वान्नानुपपत्तिरित्याशयेनोक्तं गुणेति ।

वाक्यार्थबोधकरणप्रसङ्गे ध्वन्यादिविलक्षणवर्णसमूहात्मकपदग्रहणस्यैव युक्तत्वादिति भावः । यद्यपि शक्तं पदमिति पक्षे प्रकृतिप्रत्यययोरपि पदत्वमस्ति । तथाऽपि सुप्तिङन्तमित्यनुरोधेन तत्र पदव्यवहारस्य प्रायिकत्वाभिप्रायेणैतदिति द्रष्टव्यम् ।

प०— **अनियतनियामकत्वादिति** ॥ शक्तिरूपनियतनिमित्तकत्वाभावादित्यर्थः । औत्प्रेक्षिक एव उत्कटैककोटिकसंशयरूप एवेत्यर्थः ॥ **व्याख्यानान्तरेति** ॥ अन्वितार्थबोधकत्वार्थकत्वरूपव्याख्यानान्तरेत्यर्थः ॥ **अनुभूयत इति** ॥ शब्दशक्तिरिति योज्यम् । चशब्दो यत इत्यर्थ इत्युक्तम् । तद्व्यनक्ति ॥ **यत एवमिति** ॥

या०— **अनियतनिमित्तकत्वादिति** ॥ शक्तिरूपनियतनिमित्ताभावादित्यर्थः ॥ **अप्रामाण्यमिति** ॥ संसर्गप्रमितिजनकत्वाभावः प्राप्त उत्प्रेक्षायाः प्रमितत्वादित्यर्थः ॥

श्री०— **औत्प्रेक्षिक एवेति** ॥ मेघसन्देशादाविव वाक्यार्थबोधस्योत्प्रेक्षामूलकत्वमेवेति वेदस्य तत्प्रमापकत्वं नास्तीत्यर्थः ॥

च०— **अनियतनिमित्तकत्वादिति** ॥ शक्तिप्रतिसन्धानात्मकनियतनियामकराहित्यादिति भावः । औत्प्रेक्षिकः संभावनात्मकः । विशेषाणां व्यभिचारेण बन्धनत्वानयनत्वादिविशेषधर्मावच्छिन्नानां व्यभिचारेण । सामान्यस्य योग्येतरत्वरूपसामान्यधर्मावच्छिन्नस्य ।

सु०— अत्र पदानामित्यनभिधाय शब्दानामिति वदता प्रकृतिप्रत्यययोरप्यन्विताभिधानसामर्थ्यं सूचितम् ।

केचिदाहुरेकमेव पदमन्विताभिधायीतराणि तु पदानि तत्प्रतियोगिसन्निधापनमात्र एव व्याप्रियन्ते । तच्च प्रथमं वा प्रधानं वेति । तन्निरासार्थं शब्दानामिति बहुवचनम् ॥ तथा हि । यदेकत्र प्रयोगे प्रथमं तदेवान्यत्राप्रथममन्यत्र तु प्रथममिति न पदानां प्राथम्यनियमोऽस्ति । तथा च प्रथमं पदमिति वदता सर्वाण्यप्यन्विताभिधायीन्यङ्गीकृतानीति किमत्र वक्तव्यम् ॥ प्रधानत्वमपि पदस्य किमुच्यते । यदर्थप्रतिपादनपराणीतरपदानि तत्प्रधानमिति चेत्, तर्हि वाक्यभेदेन प्राधान्यस्याव्यवस्थितत्वात्सर्वपदानामन्विताभिधानसामर्थ्यमेवायातम् । आख्यात-

पदं प्रधानमिति चेन्न, दध्ना जुहोतीत्यादिगुणविधानेष्वनुपपत्तेः। आख्यातपदरहितेष्वप्यन्वयप्रत्ययदर्शनाच्च। न हि परिणतिसुरसं पनसफलमित्यादावन्वयो न प्रतीयत इति युक्तम्। अनुभवविरोधात्। न च तत्राध्याहारः। स हि लोकप्रतीत्यनुरोधाद्वाऽऽश्रयणीयः स्वसमयानुरोधाद्वा। नाद्यः लोकप्रतीतेः पर्यवसितत्वात्। न द्वितीयः तस्यैव निर्मूलत्वात्। समयान्तरानुरोधेन तत्परित्यागस्यापि संभवात्।

ये तु विशेषान्वाय एव शक्तिः पदानामित्यास्थिषत, तन्मतनिरासायान्वित इति सामान्येनोक्तम्। उपपत्तिं तु वक्ष्याम इति।

वा०—**बहुवचनमिति** ॥ अन्यथा 'स्वत एवागमस्य हि, वाक्यं प्रत्यक्षवत्प्रमे'त्यादाविवात्रापि प्रथमप्राप्तैकवचनमेव प्रयुञ्जीतेति भावः। प्राथम्यप्राधान्ययोरन्विताभिधायकतानियामकत्वे तयोः प्रयोगपर्यायेण बहुशब्देष्वपि सत्वात्सर्वेषामन्विताभिधायकत्वं प्राप्तमिति बहुवचनेन सूचितां युक्तिमुपपादयति ॥ **तथा हीति** ॥ प्राथम्यानियमस्यैव प्राधान्यानियमस्य परं प्रत्यसिद्धतया तमुपपादयितुं प्राधान्यस्वरूपं पृच्छति ॥ **प्रधानत्वमपीति** ॥ अरुणयेत्यादौ सकलकर्मकरणावच्छिन्नक्रयस्यैव प्राधान्येन प्रतिपादनादारुण्यादीनां तदन्वयितया प्रतिपादनादाख्यातपदं प्रधानमिति शङ्कते ॥ **आख्यातपदमिति** ॥ आख्यातोपेतक्रियापदमित्यर्थः ॥ **दध्नेति** ॥ क्रियापदस्य गुणाश्रयसमर्पकतया गुणवाचकदध्यादिपदापेक्षयाऽप्राधान्यमिति भावः। एवं शब्दानामिति प्रकृतिप्रत्ययसूचितभावमभिधायान्वित इत्यस्य संबन्धिकशब्दतया संबन्धिविशेषोपादाने कर्तव्ये तदकरणेन सूचितं भावमाह ॥ **ये त्विति** ॥ **उपपत्तिं त्विति** ॥ पदान्तरवैयर्थ्यपरस्पराश्रयत्वानन्त्यप्रयुक्तशक्तिग्रहाशक्यतादिरूपानुपपत्तिमनुपदमेव तदीयतत्समाधाननिरासपूर्वकस्वीयतत्समाधानकथनावसरे वक्ष्याम इत्यर्थः।

स०— **आख्यातपदं प्रधानमिति चेदिति** ॥ क्रियानिष्पत्त्यर्थत्वेनैव कारकापेक्षणात् क्रियापदस्यैव विधेयपरत्वाच्च तस्येत्यभिप्रायः ॥ **दध्ना जुहोतीत्यादीति** ॥ अत्र जुहोतीति यत्तद्धेत्यर्थस्य विवक्षितत्वेन क्रियापदस्य दधिलक्षणगुणभूतकारकविधानार्थत्वेन अनुवादपरत्वान्न प्राधान्यमिति भावः।

प०— **तर्हि वाक्यभेदेनेति** ॥ गामानयेत्यादिवाक्ये आनयनपदार्थप्रतिपादनपरत्वेपि गोपदस्य गौः शुक्ला कुब्जा बहुक्षीरेत्यादिवाक्यान्तरे च गोरूपार्थप्रतिपादनपरत्वमन्येषामित्येवं रूपेण प्राधान्यस्य वक्तृविवक्षाभेदेनाव्यवस्थितत्वादित्यर्थः ॥ **दध्ना जुहोतीत्यादिगुणविधानेष्विति** ॥ गुणो नाम याग-

साधनद्रव्यम् । अग्निहोत्रप्रकरणे श्रुतमिदं वाक्यं जुहोतीत्यनेन प्रकरणप्राप्तहोममनूद्य जुहोतीति यत् तत् दध्ना दधिरूपद्रव्येणेति गुणं विदधातीत्याख्यातांतपदस्यानुवादत्वेन गुण एव तात्पर्याद्गुणपदस्यैव प्राधान्यादिति भावः । यवाग्वा जुहोति पयसा जुहोतीत्यादिरादिपदार्थः ॥ **वक्ष्याम इति** ॥ भक्तिपादे उभयव्यपदेशादित्यस्यानुषङ्गिकार्थोक्तिप्रस्तावे । कर्तृशब्दे ह्यभिहिते धर्मसामान्यवेदनात् । विशेषधर्मसामान्यवेदनात् । 'विशेषधर्ममन्विच्छन्किमित्येव हि पृच्छति । गुणक्रियादिधर्माणां विशेषे कथिते पुनः । निराकाङ्क्षो भवेद्यस्माच्छब्दा अन्वितवाचकाः ।' इत्यत्रेति भावः ।

या०—**आख्यातपदमिति** ॥ क्रियानिष्पत्त्यर्थत्वेनैव कारकापेक्षणात्क्रियापदस्य विधेयपरत्वाच्च प्राधान्यं तस्येत्यभिप्रायः ॥ **दध्ना जुहोतीति** ॥ अत्राग्निहोत्रं जुहोतीति प्राप्तं होममनूद्य दध्याख्यगुणविधानात्क्रियापदस्य दधिलक्षणकारकविधानार्थत्वेनानुवादत्वान्न प्राधान्यमिति भावः । आदिपदादूर्ध्वमाघारयतीत्यादिकं ग्राह्यम् । तत्राप्याघारयतीत्यादिना प्राप्तमाघारादिकमनूद्योर्ध्वतादिगुणो विधीयते ॥ **वक्ष्याम इति** ॥ अनुपदमेवेति शेषः ॥

श्री०— **दध्नेति** ॥ तत्र जुहोतीति यत् तत् दध्नेत्येवं जुहोतीत्यनुवादेन दधिरूपगुणविधानादाख्यातपदं न तत्र प्रधानमिति भावः । तदेव दर्शयति ॥ **न हीति** ॥

च०— सन्निधानमात्र एव उपस्थापनमात्र एव ॥ **आख्यातपदमिति** ॥ लकारप्रकृतित्वापन्नमित्यर्थः । अरुणयेत्यादौ कर्मकरणादिनिखिलकारकावच्छिन्नक्रमस्यैव प्राधान्येन प्रतिपादनादारुण्यादीनां तदन्वयितया प्रतिपादनाल्लकारप्रकृतित्वापन्नस्यैव प्राधान्यमिति भावः ॥ **दध्नेति** ॥ गुणीभूतदध्यादिरूपविधेयबोधकपदस्य तत्र प्राधान्येन अग्निहोत्रं जुहोतीति वाक्यविहितोद्देश्यभूततदाश्रयावगमकक्रियापदस्येति भावः ॥ **आस्थिषतेति** ॥ प्रत्यज्ञासिषुरित्यर्थः । आङः स्थः प्रतिज्ञान इति स्मृतेः ॥ **वक्ष्याम इति** ॥ समनन्तरमित्युपस्कर्तव्यम् ॥

**सु०— ननु यदि गामानयेत्यादिवाक्ये गामिति पदेनैवानयनान्वितः स्वार्थोऽभिहितस्तदाऽऽनयेति पदं व्यर्थमुक्तार्थत्वात् । आनयेति पदेनानयत्यर्थेऽभिहिते सत्यानयत्यर्थान्वितः स्वार्थो गोपदेनाभिधीयते । तेनानयेति पदस्य न वैयर्थ्यमिति चेत् । तर्ह्यानयेति पदं केवलं स्वार्थमात्रमाचक्षाणमनन्विताभिधायि प्राप्तम् । यथा चेदमनन्विताभिधायि तथा पदान्तरमपि स्यादिति दत्तजलाञ्जलिरन्विताभिधानवादः । अथानयेति पदेनापि गोपदेनाभिहितेनार्थेनान्वितः स्वार्थोऽभिधीयते तदा यावत्पूर्वं पदं स्वार्थं, नाभिधत्ते तावत्तदुत्तरपदस्य**

**पूर्वपदार्थान्वितस्वार्थाभिधानं नास्ति । यावच्चोत्तरपदं स्वार्थं नाभिधत्ते तावत्पूर्वपदस्योत्तरपदार्थान्वितस्वार्थप्रतिपादनं न संभवतीत्यन्योन्याश्रयत्वम् । न च वाच्यं परस्परनिरपेक्षाणि पदानि प्रथमं पदार्थाननन्वितानभिधाय पश्चादन्योन्यान्वितांस्तानेवाभिदधतीति क्वेतरेतराश्रयत्वमिति । द्विरभिधानकल्पनाया अप्रामाणिकत्वात् । अचेतनेषु विरम्य व्यापारानुपपत्तेश्च ॥ किञ्च पदानामन्वितेष्वर्थेषु शक्तिर्गृहीता चेत्तथाविधानेव प्रथममभिदध्युः । न चेत्पश्चादपि कथमभिदध्युरिति ।**

वा०—अत एव विशेषान्विताभिधाने एतद्दोषप्रसरेऽपि सामान्यान्विताभिधाने न तत्प्रसर इति वक्तुं सामान्यविशेषान्विताभिधानयोः साधारणशङ्कां दर्शयति ॥ **नन्विति** ॥ ननु गामानयेत्यत्रानयेत्यनेनानयत्यर्थेऽनभिहितेऽपि गोपदमानयत्यर्थान्वितं स्वार्थमभिधत्तेऽभिहित एव वा । नाद्य इत्याह ॥ **यदीति** ॥ **उक्तेति** ॥ आनयेतिपदबोधनीयानयत्यर्थस्यान्वयप्रतियोगितया गोपदेनैव बोधनादित्यर्थः । न च सामान्यान्विताभिधानपक्षे एकेन पदेन योग्येतरान्वितस्वार्थमात्राभिधानेऽपि विशिष्यानयेत्यर्थान्वितस्वार्थानभिधानात्तदभिधानाय पदान्तरसार्थक्यात्कथं तत्पक्षेऽयं दोष इति वाच्यम् । पदान्तरसार्थक्यायावश्याङ्गीकर्तव्यविशेषान्विताभिधानेऽपि पदान्तरेण विशेषेऽभिहित एवान्येन तदन्वितमभिधीयतेऽनभिहिते वेत्यभिहितानभिहितविकल्पदोषयोस्समत्वादिति भावः । द्वितीयं शङ्कते ॥ **आनयेतीति** ॥ आनयेति पदं केवलं स्वार्थं बोधयत्युत गवान्वितम् । आद्य आह ॥ **तर्हीति** ॥ द्वितीयं शङ्कते ॥ **अथेति** ॥ गोपदाभिहितेनेति विशेषणमन्योन्याश्रयस्फुटीकरणायेति ध्येयम् । ननु प्रथमं पदानां परस्परनिरपेक्षाणां केवलस्वार्थाभिधायकत्वान्नेतरेतराश्रयत्वम् । पश्चादन्विताभिधायकत्वान्नापसिद्धान्तश्चेत्याशङ्कते ॥ **न चेति** ॥ **द्विरभिधानेति** ॥ पदत्वप्रयोजकाभिधायकत्वस्यैकवाराभिधानेनैवोपपत्तेरिति भावः । न केवलं द्विरभिधानं प्रमाणशून्यमुपपत्तिविरुद्धं चेत्याह ॥ **विरम्येति** ॥ ननूभयशक्तियुक्तस्यापि पुरुषस्यैकानन्तरमन्यकार्यस्येवोभयाभिधानशक्तानामपि पदानामेकानन्तरमन्याभिधानाङ्गीकारे न कोऽप्युपपत्तिविरोध इत्यतः पुरुषस्य चेतनत्वादिच्छाक्रमेण कार्यक्रमसंभवेऽपि नाचेतनपदेषु तत्संभव इत्याशयेनोक्तम् ॥ **पदानामिति** ॥ अचेतनेष्वित्येव क्वचित्पाठः ॥

स०— नात्र परस्पराश्रयावतारः परस्परनिरपेक्षाणि प्रथमं पदानि पदार्थावसंसृष्टानभिधाय पश्चादन्योन्यान्वितांस्तानेव पदार्थानभिदधतीत्याह ॥ **न च वाच्यमिति** ॥ न केवलं द्विरभिधानकल्पनायां मानाभावः अपि तु प्रमाणविरोधश्चेत्याह ॥ **पदानामिति** ॥

प०— न च वाच्यमित्यस्य क्वेतरेतराश्रयत्वमित्यनेनान्वयः ।

**श्री०— उक्तार्थत्वादिति ॥** आनयेत्यर्थस्य गोपदेनैवोक्तत्वादित्यर्थः । नन्वानयेति पदेनानयेत्यर्थमात्रं नाभिधीयते । येनान्विताभिधानवादस्य दत्तजलाञ्जलित्वं स्यादित्याशङ्कते ॥ **अथानयेति पदेनापीति ॥** आनयेति पदं केवलं स्वार्थमाचक्षाणमनन्विताभिधायिप्राप्तमित्युक्तमसदिति भावः । पूर्वपदं गोपदम् । स्वार्थं आनयनान्वितस्वार्थम् । उत्तरपदम् आनयेति पदम् । स्वार्थं गवान्वितस्वार्थम् । तथा च गोपदस्यानयनान्वितस्वार्थाभिधायकत्वसिद्धावानयेति पदस्य गवान्वितस्वार्थाभिधायकत्वसिद्धिस्तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रय इत्याशयः ॥ **विरम्यव्यापारेति ॥** स्थित्वा स्थित्वा प्रतिपादनरूपविरम्यव्यापारस्य चेतनधर्मत्वादित्यर्थः ॥ **गृहीतेति ॥** अनुभूतेत्यर्थः ॥

सु०— **अत्र विशेषान्विताभिधानवादिनः परिहारमाहुः । प्रथमं पदानि साहचर्यवशादनन्वितस्वार्थान्स्मारयन्ति । पश्चादितरेतरस्मारितेनार्थेनान्वितस्वार्थानभिदधतीति न पदान्तरवैयर्थ्यम् । नापीतरेतराश्रयत्वमिति । एतदप्यसारम् । सर्वदैव हि पदान्यन्वितेनैव स्वार्थेन गृहीतसाहचर्याणि न केवलेन । तानि कथं केवलं पदार्थमात्रं स्मारयितुमीशते । यथाऽनुभवं हि स्मरणेनोत्पत्तव्यम् । न तु परीक्षकप्रयोजनमनुसृत्य । न हि पदं पदार्थमात्रप्रतिपत्तये प्र(युज्ञ)युज्यते । किन्तु व्यवहाराय । स चान्वित एवेत्यन्वितानामेव पदार्थानां पदेभ्यः स्मरणं स्यात् । तथा च गां पश्येति प्रयोगे गोपदेन पूर्वानुभूतानयनान्वितस्वार्थस्य स्मारितत्वात् पश्येति पदमनाकाङ्क्षितार्थमसङ्गतं स्यात् । एवं प्रासादं पश्येत्यत्र प्रासादान्वितस्वार्थाभिधायकत्वात्पश्येति पदस्य न गोपदं तेन संबध्येत । तथा च वाक्यार्थः क्वापि परिनिष्ठितो न सिध्येत् ॥ न च वक्तव्यमव्यभिचाराद्गोपदं स्वार्थमात्रं स्मारयति नार्थान्तराणि । तेषां व्यभिचारित्वादिति । पदवभ्यासादरप्रत्ययैराहितस्य संस्कारस्य प्रबोधव(य)तः स्मरणहेतुत्वात् । तत्प्रबोधस्य च व्यभिचारिण्यप्यर्थान्तरे प्रणिधानसाहचर्यादिजन्मनोऽविशेषात् । न हि स्मरणमनुमानमिवसाहचर्य नियममपेक्ष्योत्पद्यते । धूमदर्शनादग्निवद्रसवत्पाकादिप्रदेशस्य स्मरणदर्शनात्।**

**एतेनैतदपि निरस्तम् । यथा पदानां स्वार्थेष्वभ्यासातिशयो न तथाऽर्थान्तरेषु । तेषां व्यभिचारित्वात् । तथा च स्वरूपमात्रेणैव पदेभ्यः स्मारिताः पदार्था आकाङ्क्षादिमन्तः पदैरन्विता अभिधीयन्त इति न परस्पराश्रयत्वम् । नापि पदान्तरानाकाङ्क्षेति । स्मरणास्यानुभववारनियमानपेक्षत्वात् । अन्यथा धूमदर्शनान्महानसादिस्मरणानुपपत्तिप्रसङ्गः । न हि यावान्धूमस्याग्नावभ्यासातिशयस्तावान्महानसे । तस्मादपरिहार्यमितरेतराश्रयत्वमिति ।**

वा०— **साहचर्येति** ॥ स्वार्थैः सहेति शेषः । स्मारयन्तीत्युक्त्या द्विरभिधानकल्पनाऽपि नेति सूचयति । प्रथमं स्वार्थमात्रेण साहचर्यग्रहोऽनन्तरमन्वितेनेति साहचर्यग्रहक्रमात्स्मरणाभिधानयोः क्रम इति शङ्कानिरासाय सर्वदैव हीत्युक्तम् । नन्वस्तु प्रथममन्वितेनैव साहचर्यग्रहस्तथाऽपि तथा स्मारकत्वे पदान्तरवैयर्थ्यापातेन स्वार्थमात्रस्मारकत्वं तेषां विचारे सत्यवसीयत इत्यत आह ॥ **यथानुभवं हीति** ॥ अन्वितेनैव स्वार्थेन गृहीतसाहचर्याणीत्युक्तमुपपादयति ॥ **न हि पदमिति** ॥ नन्वस्त्वन्वितपदार्थस्मारकत्वं तथाऽपि को दोष इत्यतस्तर्हि त्वदुक्तकेवलस्मारकत्वहानिरिति दूषणे स्थित एव दूषणान्तरमाह ॥ **तथा चेति** ॥ यद्यप्यत्रैकेनैव पदेन यथास्मरणमन्वितस्वार्थाभिधानात्पदान्तरवैयर्थ्यं स्यादित्यपि दूषणं वक्तुमुचितं तथाऽपि तस्याभिधानमुखेन प्राप्त्या स्मारकत्वपक्षासाधारणदूषणेन तान्पक्षान्प्रदूष्याभिधायकत्वपक्षमेव परिशेष्य तत्र पूर्वोक्तवैयर्थ्यान्योन्याश्रयत्वादितादवस्थ्यव्युत्पादने तात्पर्यान्न तथोक्तमिति द्रष्टव्यम् । पूर्वानुभूतेत्यतःपूर्वं गामानयेति प्रयोग इति शेषः । एवमित्यतःपरं तस्मिन्नेव गां पश्येति प्रयोग इति शेषः । एवं च गामानयेति प्रयोगे गोपदस्यानयनान्वितगोत्वेन साहचर्योपलम्भाद्गां पश्येति प्रयोगेऽपि कारकाभिधायिगोपदमानयनान्वितमेव स्वार्थं स्मारयेदिति पश्येति पदमनाकाङ्क्षिताभिधानमसङ्गतं स्यात् । एवं तस्मिन्नेव प्रयोगे गोपदमपि पश्येत्यनेन क्रियावाचिनाऽनाकाङ्क्षितार्थस्मारकमसङ्गतं स्यात् । पश्येति पदस्य प्रासादं पश्येति प्रयोगान्तरे प्रासादान्वितस्वार्थसाहचर्यदर्शनादिति भावः । उक्तामव्यवस्थां सर्ववाक्येष्वतिदिशति ॥ **तथा चेति** ॥ ननु न साहचर्यमात्रं स्मारकत्वे तन्त्रमपि त्वव्यभिचरितं तत् । एवं च स्वार्थेनेव पदार्थान्तरेणाव्यभिचरितसाहचर्याभावान्न तत्स्मारकत्वं किन्तु स्वार्थमात्रस्मारकत्वमिति नाव्यवस्थेति शङ्कते ॥ **न चेति** ॥ भूयोदर्शनाद्याहितसंस्कारोद्बोधादिस्वसामग्रीप्राप्तस्मरणे व्यभिचारादिकमकिञ्चिकरमित्याह ॥ **पटु इति** ॥ सकृद्गृहीते तडिदादौ पटुप्रत्ययः कुण्डिकादावभ्यासप्रत्ययः । अद्भुतेष्वादरप्रत्ययः । अभ्यासादरोऽभ्यासातिशय इति कश्चित् । तथाऽप्यबुद्धस्य न स्मृतिजनकत्वमित्यतः प्रबोधवत इति । ननु व्यभिचारिणि स्मरणसामग्र्यैव नास्तीत्यत आह ॥ **तत्प्रबोधस्य चेति** ॥ प्रणिधानं मनोऽवधानम् । साहचर्यमेकदेशकालसंबन्धः । आदिपदेन लिङ्गलक्षणाभ्याससादृश्यादिग्रहणम् ॥ **एतेनेति** ॥ संस्कारोद्बोधप्रयोजकोऽभ्यासेऽप्यतिशयितः स्वार्थ एवेति तन्मात्रस्मरणमिति भावः ।

स०— **सहचर्यवशादिति** ॥ पदानां स्वार्थसहचर्यवशादेव तत्स्मारकत्वं न शक्तिवशादतो न द्विरभिधानादिति भावः । केचित्तु । ननु न प्रथममभिधायकानि येन द्विरभिधानं प्रसज्येत किन्तु प्रथमं पदार्थेषु स्मृतिरेव जायते । साहचर्यदर्शनात् । सहचरितानि हि प्रथमं पदार्थैः पदानि

अनुभूतानि देवदत्तदर्शनादिव यज्ञदत्ते । अनन्तरं तु संसृष्टदशायां स्मारितानां पदार्थानां अभिधान-मित्येतदाशङ्क्य परिहरति । अत्र विशेषान्विताभिधानवादिन इत्यादिनेत्याहुः । अन्वितपदार्थे सहचर्य-मेवोपपादयति ॥ **न हि पदमिति** ॥ व्यवहारसमर्थसंसृष्टपदार्थैः साहचर्यात्तादृगर्थस्मारकपदानां पदार्थमात्रस्मारकत्वमसिद्धमित्युक्तम् । अङ्गीकारे च दूषणान्तरमाह ॥ **तथा चेति** ॥ यदा गामानयेति प्रासादं पश्येति च पूर्वमन्वयो गृहीतः तदनन्तरं यदि तं प्रति गां पश्येति प्रयोगः तदा अत्रत्यपदद्वयं परस्परमनाकाङ्क्षितार्थं स्यादिति समुदायार्थः । उक्तामव्यवस्थां सर्ववाक्येष्वतिदिशति ॥ **तथा चेति** ॥ सहचर्याविशेषेपि पदार्थान्तरवैषम्यं शङ्कते ॥ **न च वक्तव्यमिति** ॥ व्यभिचारो हि भूयो दर्शनाद्याहित-संस्कारोद्बोधात्तु उत्पद्यमाना स्मृतिर्नान्वितपदार्थयोर्विशिष्य इत्याह ॥ **न त्वभ्यासेति** ॥ सकृद्-गृहीतेऽपि तटिदादौ पटुप्रत्ययः । घटादावभ्यासप्रत्ययः । अद्भुतेष्वादरप्रत्ययः । तथाप्यनुद्बुद्धस्य न स्मृतिजनकत्वमिति ॥ **अतः प्रबोधवत इति** ॥ ननु भावनोद्बोधो न तथा व्यभिचारिणि यथा अव्यभिचारिणि पदार्थमात्र इत्यत आह ॥ **तत्प्रबोधस्येति** ॥ प्रणिधानसहचर्यादिभ्यो जन्म यस्य तस्येत्यर्थः । आदिपदेनाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रयिसंबन्धानन्तर्यवियोगैककार्यविरोधातिशय-व्याप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्माणां संग्रहः । अयमर्थः । प्रणिधानं मनोऽव-धानम् । सहचर्यं हस्तिहस्तिपदौ । अभ्यासो घटादौ लिङ्गाद्याप्तिसंस्कारस्य प्रबोधः । लक्षणं धवल-छत्रादिचिह्नं राजादिसंस्कारोद्बोधकं सादृश्यं शुक्तिरजतादौ परिग्रहः स्वीकारः कलत्रादिसंस्कारस्य एवमाश्रयाश्रयिणावपि परस्परसंस्कारस्य संबन्धः सहचारः । अनन्तर्ये पूर्वतनपदार्थसंस्कारस्य वियोगः । कामिन्यादौ एकस्मादुत्पन्नकार्याणां अन्यतमदन्यसंस्कारस्य अविरोधः सर्पनकुलादौअतिशयेनातिशयिनोः व्याप्यव्यापकयोः व्यवधानम् । प्रियतमान्यव्यवहिते सुखदुःखादि । तज्जातीयस्य तद्धेतोश्च । अर्थित्वमर्थनीये । क्रियारागः क्रियाशक्तिः । स्वविषयस्य धर्माधर्मौ । शुभाशुभविषयसंस्कारोद्बोधकौ इति ॥ **रसवत्याकाशादिप्रदेशस्येति** ॥ महानसचत्वरादिप्रदेशस्येत्यर्थः ॥

प०— नन्वित्यादिना कृतचोद्यस्य वयं त्वित्यादिना परिहारमग्रे विवक्षुर्मतान्तरमनूद्य निराह **अत्र विशेषेति** ॥ **साहचर्यवशादिति** ॥ स्वस्ववाच्यपदार्थसाहचर्यवशादित्यर्थः ॥ **स्वार्थमात्रमिति** ॥ पदार्थान्तरानन्वितं स्वार्थमित्यर्थः ॥ **नार्थान्तराणीति** ॥ आनयनबन्धनादिरूपार्थान्तराण्यन्वयप्रतियोगि-भूतानि नोपस्थापयति । गवादिप्रदप्रयोगवेलायामानयनपदप्रयोगस्य बन्धनादिपदप्रयोगस्य वा नैयत्याभावेन तेषां व्यभिचारत्वादित्यर्थः । व्यभिचारिणि संस्कारबोधो वा कथमित्यत आह ॥ **तत्प्रबोधस्य चेति** ॥ इत्येतत्परास्तमित्यत्रैतेनेतिपरामृष्टं हेतुं व्यनक्ति ॥ **स्मरणस्येति** ॥ **वारेति** ॥ द्विवारं त्रिवारमित्येव-मावृत्तिनियमेत्यर्थः । तथाच सकृदनुभवेष्यर्थान्तरस्मृतिर्भवत्येवेति भावः ॥

या०— **साहचर्यवशादिति** ॥ पदानां यद्यप्यर्थैर्न सामानाधिकरण्यरूपं साहचर्यं संभवति । तथाऽपि स्ववाच्यैकदेशत्वरूपं संबन्धमात्रं साहचर्यपदेनात्र विवक्षितमिति ज्ञातव्यम् । तथा च पदानां स्वार्थस्मारकत्वमुक्तसंबन्धवशादेव न शक्तिवशादतो न द्विरभिधानमिति भावः ॥ **नापीति** ॥ अन्वितार्थाभिधायकत्वादिति भावः ॥ **तथा च गां पश्येतीति** ॥ येन गामानयेति प्रासादं पश्येति च पूर्वमन्वयो गृहीतस्तं प्रति यदि गां पश्येतिप्रयोगस्तदा तत्पदद्वयं परस्परमनाकाङ्क्षितार्थं स्यादिति समुदायार्थः ॥ **क्वापीति** ॥ पूर्वगृहीतसङ्गतिकपदोपेतेषु पूर्वगृहीतार्थकभिन्नवाक्येष्वित्यर्थः ॥ **अव्यभिचारादिति** ॥ यद्गोपदं तदुक्तपदेन स्वार्थवदिति न्यायादन्यथा पदत्वस्यैवानुपपत्तेरित्यर्थः । यद्वाऽभ्यासेत्यादि । पटुर्योऽभ्यासस्तस्य योऽतिशयस्तत्प्रत्ययैरित्यर्थः । यद्वा सकृदेवोत्पन्नो विद्युदादिप्रत्ययः पटुप्रत्ययः कुण्डिकादिप्रत्ययोऽभ्यासप्रत्ययोऽतद्भुप्रत्यय आदरप्रत्ययस्तैरित्यर्थः ॥ **प्रणिधानेति** ॥ प्रणिधानं मनोऽवधानम् । आदिपदेन गौतमसूत्रोक्ताभ्यासलिङ्गलक्षणसादृश्यादिसङ्ग्रहः ॥ **रसवत्पाकादिप्रदेशस्येति** ॥ महानसादिप्रदेशस्येत्यर्थः ।

श्री०— **यथानुभवमिति** ॥ अन्वितेनैव स्वार्थेन साहचर्यस्य गृहीतत्वात्तदनुसारेणैव स्मरणेनोत्पत्तव्यमित्यर्थः ॥ **परीक्षकप्रयोजनमिति** ॥ पदान्तरवैयर्थ्यपरिहारान्योन्याश्रयपरिहाररूपं प्रयोजनमित्यर्थः । तानि कथं केवलं पदार्थमात्रं स्मारयितुमीशत इत्युक्तमुपपादयति ॥ **न हीति** ॥ **अन्वितानामेवेति** ॥ अन्वितत्वेनानुभूतानामेवेत्यर्थः ॥ **स्वार्थमात्रमिति** ॥ तथाच गोपदेन पूर्वानुभूतानयनान्वितस्वार्थस्य स्मारितत्वादित्युक्तममदिति भावः ॥ **प्रत्ययैराहितस्येति** ॥ अनुभवैर्जन्यस्येत्यर्थः ॥ **प्रबोधवत इति** ॥ उद्बुद्धस्येत्यर्थः । प्रणिधानं चिन्ता । सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इति वचनादिति भावः ॥ **अविशेषादिति** ॥ अव्यभिचारिणि स्वार्थे व्यभिचारिण्यप्यर्थान्तरे समानत्वादित्यर्थः । तथा च व्यभिचरितार्थान्तरस्मरणमपि भविष्यत्येवेति भावः । ननु स्मरणस्यानुमानवत् साहचर्यनियममपेक्ष्योत्पद्यमानत्वाद्गोपदस्य च स्वार्थमात्रेण नियतसाहचर्यसद्भावात्तत्स्मारकत्वमेव न तु आनयनादिरूपव्यभिचरितार्थस्मारकत्वम् । तेनार्थेन गोपदस्य नियतसाहचर्याभावादित्यत आह ॥ **न हि स्मरणमनुमानमिवेति** ॥ कुतो न हीत्यत आह ॥ **धूमेति** ॥ धूमस्य महानसप्रदेशेनाविनाभावाभावात् धूमदर्शनानन्तरं तत्स्मरणमनुभवसिद्धं न स्यादिति भावः । अभ्यासातिशयो नाम वारं वारं पदेन तदर्थानुभवः ॥ **स्वरूपमात्रेणेवेति** ॥ स्मारिता इत्यन्वयः । न पूर्वमत इव साहचर्यवशात्पदानां पदार्थस्मारकत्वमुच्यते । किं नाम पदानामभ्यासवशादेव स्वरूपमात्रेणैव परस्परमन्वितत्वेनैव पदार्थस्मारकत्वमुच्यत इति पूर्वमतभेदो द्रष्टव्यः । एतेनेत्युक्तं विशदयति ॥ **स्मरणस्येति** ॥ **अनुभववार-**

**नियमेति** ॥ अनुभवावृत्तिनियमेत्यर्थः । अभ्यासातिशय इति यावत् ॥ **तस्मादिति** ॥ गवादिपदानां साहचर्यवशादभ्यासवशाच्च केवलार्थस्मारकत्वरूपपक्षद्वयस्यानुपपन्नत्वादानयपदान्वितस्वार्थस्मारकत्व एव वाच्ये गां पश्येति वाक्यार्थपरिनिष्ठाया असंभवेन पदानामन्वितस्वार्थाभिधायकत्वमेव वाच्यम् । तथा च अपरिहार्यमेवान्योन्याश्रयत्वं पदान्तरवैयर्थ्यं चेत्यर्थः ॥

**च०— साहचर्यवशादिति** ॥ स्वबोध्यैकदेशसंबन्धादित्यर्थः । अर्थनिरूपितसामानाधिकरण्यस्य शब्देषु बाधात् । तथा च पदानां स्वार्थस्मृतिजनकत्वं दर्शितसंसर्गाधीनमेव न शक्त्यधीनमिति न द्विरभिधानप्रसङ्ग इति भावः ॥ **क्वापीति** ॥ प्राक्तनसंसर्गग्रहविषयीभूतपदघटितेषु प्राग्गृहीतार्थक-वाक्यभिन्नवाक्येष्वित्यर्थः ॥ **अव्यभिचारादिति** ॥ तादात्म्येन गोपदत्वावच्छिन्नस्य शक्तिसंबन्धेन स्वार्थव्याप्यत्वादिति भावः । प्रणिधानं मनोवधानम् । साहचर्यमेकदेशकालसंबन्धः । आदिपदं सादृश्यादिग्राहकम् ॥

**सु०— वयं तु ब्रूमः । स्यादिदं विशेषान्वितत्वाभिधानवादिनां दूषणम् । सामान्यान्विताभिधाने तु नायं दोषः । प्रत्येकं हि पदान्याकाङ्क्षितसन्निहितयोग्येतरान्वितस्वार्थाभिधान-समर्थानि न पदान्तरमपेक्षन्त इति नेतरेतराश्रयत्वम् । विशेषान्वयप्रतिपत्त्यर्थं च पदान्तरसमभिव्याहारोपयोगः । अत एव सामान्यान्विताभिधानवादे वाक्यार्थविशेषाप्रतिलम्भ इति निरस्तम्, पदान्तरसमभिव्याहाराद्विशेषप्रतिपत्त्युपपत्तेः । येऽपि विशेषान्विताभिधान-माचक्षते तैरपि प्रतियोगिनां तदन्वयानां चाऽऽनन्त्यात्सङ्गतिग्रहण एव पुरुषायुषपर्यवसानभयात् सामान्योपाधौ शक्तिग्रहणमङ्गीकरणीयम् ॥ नन्वेवं तर्हि किमनया सामान्यान्विताभिधान-शक्त्याऽपि । पदानि स्वार्थमात्रे शक्तिमन्ति पदान्तरसमभिव्याहारवशाद्विशेषान्वितमेव बोध-यन्तीत्यङ्गीकारोपपत्तेरिति चेन्न । सङ्गतिग्रहणसमये सामान्यान्विताभिधानशक्तेर्गृहीतत्वात् । पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसान एव हेतुर्न पुनरविद्यमानशक्त्याधान इति ॥ ननु तथाप्यन्विताभिधाने समभिव्याहृतपदानां पुनरुक्तिदोष इति चेन्न, अन्वयभेदात् । आनयनान्वितो गौर्गवान्वितमानयनमित्यनयोर्हि स्फुटो भेदः ॥ आर्थिकी तु पुनरुक्तिरदूषणम् । यश्चार्थादर्थो न स चोदनार्थ इति न्यायात् । विशेषप्रतिपत्त्यङ्गतयोपयोगाच्चेति ॥**

**वा०—** ननु विशेषान्वयप्रतिपत्त्यर्थं पदान्तरोपयोग इतरेतराश्रयत्वाभावप्रयोजकपदान्तरनिर-पेक्षतायै सामान्यान्विताभिधायकत्वं च त्वयाऽपि कल्पनीयम् । मया चाव्यभिचारात्स्वार्थमात्रस्मारकत्वं

परस्परसमभिव्याहाराद्विशेषान्विताभिधायकत्वं कल्प्यत इति कल्पनायां न कोऽपि विशेष इत्यतः सामान्यशक्तिग्रहणप्राप्तसामान्यान्विताभिधानस्य त्वां प्रत्यावश्यकत्वाच्च कल्पनाधिक्यमेवेत्याह ॥ **येऽपीति** ॥ यद्यप्यव्यभिचारात्स्वार्थमात्रस्मारकत्वं परोक्तमनुपदमेव निरस्तं सामान्यान्विताभिधानं चानुभवसिद्धमित्यप्युक्तं तथा च न साम्यप्रसक्तिः । तथाऽप्यस्मदभिमतसामान्यान्विताभिधानप्रयोजक-सामान्यशक्तिग्रहणं तवाप्युपजीव्यमिति कल्पनायमपि न साम्यमित्याशयेनैतदुक्तमिति ध्येयम् । यद्वा ननु शक्तिग्राहकप्रमाणस्य वृद्धव्यवहारादेर्विशेषविषयकतया सामान्यान्विते शक्तिग्रहानुपपत्तेः कथं तच्छक्त्यभ्युपगमेनोक्तदूषणपरिहार इत्यतः शक्तिग्राहकप्रमाणस्य विशेषविषयत्वेऽप्यावापोद्वापादिना व्यभिचरितविशेषानपहायाव्यभिचरितसामान्यान्वित एव शक्तेः परीक्षकैर्व्यवस्थापनात् । एवम्भावो विशेषान्विताभिधानवादिनाऽप्यङ्गीकार्य एव । अन्यथा विशेषान्विते शक्तिग्रहानुपपत्तिरित्याह ॥ **येऽपीति** ॥ ननु पदान्तरसमभिव्याहाराद्विशेषान्वयप्रतिपत्त्यङ्गीकारे पदार्थशक्तिमात्रं किं नाभ्युपेयेता-न्वितशक्तिकल्पनापेक्षया केवलपदार्थशक्तिपक्षस्य लघुत्वात् । पदान्तरसमभिव्यवहारानुसरणस्य चोभयत्रा-विशेषादित्याशङ्कते ॥ **नन्विति** ॥ प्रथमं गृहीताऽपि गौरवात्कार्यान्वितशक्तिरिवान्यलभ्यत्वबाधकाद-न्वितशक्तिः परित्यज्यतामित्यत आह ॥ **पदान्तरेति** ॥ स्वार्थमात्रशक्तानां पदानां पदान्तरसमभिव्या-हारो विशेषत एवान्वयबोधकत्वोपयुक्तं शक्त्यन्तरमुत्पादयतीति मन्यसे आहोस्वित्तेन शक्त्यन्तरानुत्पादे पदार्थमात्रशक्तानां पदानां सर्वथाऽन्वये शक्तिशून्यानामपि पदान्तरसमभिव्याहाररूपसहकारिवशादन्वय-बोधकत्वमिति । नाद्य इत्याह ॥ **पदान्तरेति** ॥ हीत्यस्य न्यायस्य प्रसिद्धतां सूचयति । द्वितीये-ऽप्येतदेवोत्तरं पदान्तरेति । तदा सामान्यस्य सामान्यविषयकशक्तेर्विविशेषविषकत्वरूपे विशेषपर्यवसान एव पदान्तरसमभिव्याहारो हेतुर्न पुनरविद्यमानशक्त्याधाने सर्वथाऽन्वये शक्त्यभावेऽपि विशेषान्वय-बोधकत्व इत्यर्थः । अत एव पदान्तरसन्निधानाहितशक्त्यन्तराणीति पद्धतिरपि पदान्तरसन्निधानेनाहितं पर्यवसितं शक्त्यन्तरं शक्तिविशेषो येषां तानि पदान्तरसन्निधानप्राप्तविशेषविषयताकसामान्यशक्तीनीति यावदिति व्याख्येया । तर्कताण्डवे तु पक्षान्तरसन्निधानमेवाहितशक्त्यन्तरलब्धसहकार्यन्तरं येषामित्यर्थ इत्युक्तम् । केचित्तु पद्धत्यनुसारात्पदान्तरसमभिव्याहारस्य शक्त्यन्तराधायकत्वमेव; सुधा तु पदान्तर-समभिव्याहारात्पूर्वमन्वयसामान्ये शक्तिर्नेत्येतन्निषेधपरेति न विरोध इत्याहुः । तन्न । शक्तिद्वयाङ्गीकारे गौरवाद्विशेषपर्यवसान एव हेतुरित्यस्वारस्याच्चेति द्रष्टव्यम् । नन्वन्विताभिधानपक्षे गोपदेन गौरिव आनयनस्यानयेति पदेनानयनस्येव गोरप्यभिधानात्पुनरुक्तिरिति शङ्कते ॥ **नन्विति** ॥ पदद्वयेनोभयोप-स्थापनेऽपि गोपदेनानयनप्रतियोगिकगोधर्मिककर्मत्वस्यानयेति पदेन च गोप्रतियोगिकानयनधर्मिकक्रिया-त्वस्योपस्थापनात्तयोश्च भिन्नभिन्नप्रतियोगिकानुयोगिककर्मत्वक्रियात्वयोरेकैकेनैवान्येनानुपस्थापनेनोप-

स्थापनीयान्वयभेदेनापौनरुक्त्यमित्याह ॥ **अन्वयेति** ॥ एतदेव विशदयति ॥ **आनयनेति** ॥ नन्वन्वयद्वयस्यैकैकेनोपस्थापनेऽपि कारकपदोपस्थापितक्रियाप्रतियोगिककर्मत्वादेः क्रियायां कारकप्रतियोगिकक्रियात्वेन विनाऽनुपपत्त्या तथा क्रियापदोपस्थापितकारकप्रतियोगिकक्रियात्वस्य कारके क्रियाप्रतियोगिककर्मत्वादिना विनाऽनुपपत्त्यैकैकपदेनैकैकोक्त्यैवान्यथाऽनुपपत्त्याऽन्यस्यापि सिध्या पदान्तरेणापि पुनस्तदभिधाने पौनरुक्त्यं स्यादेवेत्यतोऽन्यथाऽनुपपत्तिबललब्धस्याशब्दतया न शाब्दपौनरुक्त्यमित्याह ॥ **आर्थिकी त्विति** ॥ ननु तथाऽप्यन्यथाऽनुपपत्तिलब्धेऽप्यर्थे पूर्वत्वाभावेनानुपादेयता पदान्तरस्य स्यादेवेत्यतः सप्रयोजनत्वान्नानुपादेयतेत्याह ॥ **विशेषेति** ॥

स०— **सामान्यस्य विशेषपर्यवसान एव हेतुरिति** ॥ नन्वेवं पदान्तरसन्निधानाहितशक्त्यन्तराणि । विशेष्यतोऽप्यन्वितान् स्वार्थानभिदधातीति पद्धतिविरोध इति चेत् । न । पदान्तरसन्निधानमेवाहितशक्त्यन्तरं लब्धसहकार्यन्तरं येषामित्यर्थकत्वात्तद्वाक्यस्य अनयैव रीत्याऽहिकुण्डलाधिकरणीयमपि विशेषतोऽन्वितार्थप्रतिपत्तिस्तु परस्परसन्निधानाहितशक्तिभिः पदैर्भवतीति वाक्यमपि व्याख्येयम् । शक्तिद्वयाङ्गीकारे गौरवस्य वक्ष्यमाणत्वादिति द्रष्टव्यम् । यद्वा सुधाया एव पदान्तरसमभिव्याहारात्पूर्वं अन्वयसामान्ये शक्तिर्वेत्येतन्निषेधपरत्वेन तद्विरोधाभावादिति ध्येयम् । नन्वन्विताभिधाने घटमानयतीत्यादौ कारकपदेनान्वयप्रतियोगितया क्रियायाः क्रियापदेनापि तत्प्रतियोगितया कारकस्याभिधानात् पौनरुक्त्यमिति शङ्कते ॥ **ननु तथापीति** ॥ आनयनान्वितो गौरित्युक्त्यैव गवान्वितमानयनमित्यर्थस्य लब्धत्वेन पुनर्गवान्वितमानयनमित्यभिधाने आर्थिकी पुनरुक्तिरित्यत आह ॥ **आर्थिकी त्विति** ॥ नन्वेवमपि पदान्तरवैयर्थ्यं एकेनैवोत्तरान्वितस्वार्थोपस्थापनात् विशेषणविशेष्यविपरिवर्तिमात्रेण अवैयर्थ्ये दण्डो पुरुषः पुरुषस्य दण्ड इत्यत्राप्येकस्य वैयर्थ्यं न स्यादित्यत आह ॥ **विशेषप्रतिपत्त्यङ्गतयेति** ॥ पदान्तरसमभिव्याहाराभावे विशेषान्वयप्रतिपत्त्ययोगस्य पूर्वमुक्तत्वेन तदर्थतयोपयोगाच्च न वैयर्थ्यं पदान्तरस्येत्यर्थः ।

प०— **पुरुषायुषेति** ॥ पञ्चमान्त्यपादे अचतुरविचतुरसुचतुरस्त्रीपुंसेत्यादिना पुरुषायुषेतिनिपातनात्साधुः ॥ **न पुनरविद्यमानशक्त्याधान इति** ॥ हेतुरित्यनुकर्षः । ननु पद्धतौ प्रत्येकं सामान्यतो योग्यान्वितस्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोप्यन्वितान्स्वार्थानभिदधातीत्युक्तत्वात् तद्विरोध इति चेन्न । पदान्तरसन्निधानमेवाहितशक्त्यन्तरं लब्धसहकार्यन्तरं येषामिति पद्धतिवाक्यस्यार्थकथनेन विरोधपरिहारस्य तर्कताण्डवे द्वितीयपरिच्छेदेऽन्विताभिधानबाधकोद्धारग्रन्थे कृत-

त्वात् ॥ **चोदनार्थो वाक्यार्थः** ॥ आर्थिकपुनरुक्तेरदोषत्वेपि पदान्तरं व्यर्थं तु स्यादित्यत आह ॥ **विशेषेति** ॥ तत्तद्विशेषोपस्थापनरूपप्रयोजनान्तरेण पदान्तरस्योपयुक्तत्वादित्यर्थः । यानि तु घटं नयतीत्यादौ कारकपदेनान्वयप्रतियोगितयाक्रियायाः क्रियापदेनापि तत्प्रतियोगितया कारकस्याभिधानात्पर्यायता स्यादित्यादीन्यन्विताभिधानबाधकानि तानि बाधकदशकोद्धारग्रन्थे तर्कताण्डवे निरस्तानि ॥ अन्विते शक्तिः ॥

**या०** — नन्वेवं पदान्तरसमभिव्याहारो व्यर्थः । न च विशेषान्वयप्रतिपत्त्यर्थं सः । पदान्तरसमभिव्याहारेण विशेषान्वयप्रतिपत्त्यनुकूलशक्त्यन्तराधानाङ्गीकारे विशेषान्विताभिधानवादस्यान्तत आश्रयणीयत्वप्रसङ्गेन प्रथमत एव किमिति तदनङ्गीकार इत्यत आह ॥ **पदान्तरसमभिव्याहार इति** ॥ नन्वेवं पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान्स्वार्थानभिदधतीति पद्धत्या विशेषतः अन्वितार्थप्रतीतिस्तु परस्परसन्निधानाहितशक्तिभिः पदैर्भवतीत्यहिकुण्डलाधिकरणीयसुधया च विरोधः । तत्रोभयत्र पदान्तरसमभिव्याहारेण शक्त्यन्तराधानस्योक्तत्वादिति चेन्न । अभ्युपगमवादेनैव तत्र तथोक्तत्वात् । न चैवमन्ततो विशेषान्विताभिधानवादाङ्गीकारप्रसङ्गः । प्रभाकरमत इव तत्र स्वाभाविकशक्तेरनङ्गीकारात् पश्चादाहितां शक्तिमुपेत्यापि विशेषान्वयप्रतिपत्तिरुपपादनीया । न तदर्थं तत्र प्रथमत एव स्वाभाविकी शक्तिः कल्पनीया । अन्योन्याश्रयत्वादतिप्रसङ्गादिति तद्ग्रन्थाभिप्रायः । वस्तुतस्तु शक्तिद्वयाङ्गीकारे कल्पनागौरवस्य वक्ष्यमाणत्वात्स्वाभाविक्याः सामान्यान्वयशक्तेरेव विशेषान्वयपर्यवसानाङ्गीकारेणैव विशेषान्वयप्रतिपत्त्युपपादनं युक्तन्तरमित्येतद्ग्रन्थाशय इति न कोऽपि विरोधः । अन्ये तु पदान्तरसन्निधानमेवाहितशक्त्यन्तरलब्धसहकार्यन्तरं येषामित्यर्थकत्वात्पद्धतिवाक्यस्य परस्परसन्निधानरूपलब्धसहकारिभिरित्यर्थकत्वाच्चाहिकुण्डलाधिकरणीयसुधावाक्यस्येति न कोऽपि विरोध इत्याहुः ॥ **अन्वयभेदादिति** ॥ न चैवं वाक्यभेदप्रसङ्गः । पदार्थस्थानीयान्वयभेदेऽपि तद्बोधमात्रेण नैराकाङ्क्ष्याभावेन गोकर्मकानयनानुकूला कृतिरिष्टसाधनमिति वाक्यार्थीभूतान्वयस्याभेदेनैकवाक्यत्वसंभवात् । ननु गोपदेनानयनान्वितो गौरित्युक्त्यैव गवान्वितमानयनमित्यर्थस्य लब्धत्वेन पुनः गवान्वितमानयनमित्यनेनाभिधाने आर्थिकी पुनरुक्तिः स्यादित्यत आह ॥ **आर्थिकी त्विति** ॥ नन्वथाऽपि वैयर्थ्यमित्यत आह ॥ **विशेषप्रतिपत्तीति** ॥ पदान्तरसमभिव्याहाराभावे विशेषान्वयप्रतिपत्त्ययोगस्य पूर्वमुक्तत्वेन तदर्थकतयोपयोगान्न वैयर्थ्यं पदान्तरस्येत्यर्थः । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः ॥

**श्री०** — **स्यादिदमिति** ॥ अन्योन्याश्रयत्वं पदान्तरवैयर्थ्यं चेति दूषणद्वयं विशेषान्विताभिधानवादिनामेव स्यादित्यर्थः ॥ **सामान्योपाधाविति** ॥ अस्मदभिहिते योग्येतरान्वितस्वार्थरूप इत्यर्थः ॥ **पुनरुक्तीति** ॥ गोपदेनानयनान्वितो गौरित्युक्तेर्गवान्वितमानयनमित्यस्यापि तथैव लब्धत्वादानयेत्यनेनापि

पुनर्गवान्वितमानयनमित्यभिधाने पुनरुक्तिदोष इत्यर्थः । अत्र पुनरुक्तिः किं शब्दतोऽर्थतो वा । नाद्य इत्याह ॥ **अन्वयभेदादिति** ॥ तमेवोपपादयति ॥ **आनयनेनान्वित इति** ॥ द्वितीये त्वाह ॥ **आर्थिकी त्विति** ॥ अदूषणत्वेऽपि वैयर्थ्यं तु स्यादेवेत्यत आह ॥ **विशेषप्रतिपत्तीति** ॥ स्पष्टप्रतिपत्तीत्यर्थः ॥ पदान्तराणामिति शेषः ।

च०— **पुरुषायुषेति** ॥ अचतुरविचतुरेतिसूत्रेऽजन्ततया निपातनात्साधुताऽवसेया । ननु गामानयेत्यादौ गोपदप्रत्यायितान्वयएवानयपदेनापि प्रत्येतव्य इति पुनरुक्तिरित्याशङ्कायामानयनप्रतियोगिकान्वयस्य गोपदेन लाभः गोप्रतियोगिकस्य त्वानयनपदेनेति न क्षतिरित्याह ॥ **अन्वयभेदादिति** ॥ नन्वानयनान्विता गौरित्युक्त्यैव गवान्वितमानयनमित्यर्थस्य लब्धतया पुनरानयेत्यनेनाभिधाने पौनरुक्त्यं तदवस्थमित्यत आह ॥ **आर्थिकी त्विति** ॥ **विशेषप्रतिपत्तीति** ॥ पदान्तरसमभिव्याहारमन्तरेण विशेषरूपावच्छिन्नप्रतियोगिकान्वयप्रतिपत्त्ययोगस्य प्रागभिहिततया न पदान्तरनैरर्थ्यक्यमित्यर्थः ।

अनु०— **गौरवं कल्पनेऽन्यथा ॥**

सु०— **एवं स्वमतेन परिहारमभिधाय ये तु प्रत्यस्तमितवर्णपदविभागं वाक्यमेव स्फोटाख्यं वाक्यार्थप्रतिपादकमित्याहुस्तन्मतं निराकरोति ॥ गौरवमिति ॥ अन्यथा कल्पने निरवयं वाक्यं वाक्यार्थस्य बोधकमिति कल्पने; गौरवं स्यात् । वाक्यमेव खल्वेवंविधं विना प्रमाणेन कल्पनीयम् , तस्य च वाक्यार्थप्रत्यायनशक्तिरपि कल्पनीयेति ।**

वा०— ननूत्तरत्रान्यथाकल्पने गौरवाभिधानमनुपपन्नम् । उपायान्तरेण वाक्यार्थबोधं वदन्तं प्रति तत्संभवेऽप्यनियतनिमित्तकत्वादौत्प्रेक्षिको वाक्यार्थबोध इत्यप्रामाण्यं वेदस्येति ब्रुवाणं मां प्रत्यन्विताभिधानानङ्गीकारेऽपि गौरवाप्रसरादित्यतो नेदं गौरवाभिधानं पूर्वपक्षिणं प्रति येनोक्तदोषः स्यादपि तूपायान्तरवादिनो वादिनः प्रतीत्याशयेनोत्तरवाक्यमवतारयति ॥ **एवमिति** ॥ यद्यपि परमते वर्णपदवाक्याखण्डपदवाक्यस्फोटभेदेन पञ्चव्यक्तिस्फोटाः वर्णपदवाक्यस्फोटभेदेन त्रयो जातिस्फोटा इत्यष्टौ स्फोटाः । अत एवोत्तरत्र पदार्थेत्यादिना पदस्फोटमपि व्युत्पादयिष्यति । तथाऽपि वाक्यार्थप्रतिपत्तिहेतोरेव प्रस्तुततया वाक्यस्फोटस्यैव तादृशत्वात्तस्यैवोपादानमुत्तरत्र पदस्फोटव्युत्पादनं च प्रसङ्गादित्यवधेयम् । यद्यपि ताल्वादिस्थानोद्भववायवीयध्वनिविशेषाभिव्यक्तवर्णात्मकपदैः स्वसमवेतवाक्य-

स्फोटोऽभिव्यज्यते । स च व्यक्तौ वाक्यार्थं प्रत्याययतीति खण्डवाक्यस्फोटोऽपि पराभिमतस्तथाऽप्य-खण्डवाक्यस्फोटपक्षस्य मुख्यतया तदभिमतत्वात्तदुपादानम् । प्रत्यस्तमितेत्यारोपितवर्णपदविभागं निरवयवमिति यावत् । यथा चैतत्तथा वक्ष्यते ॥

**प०**— प्रत्यस्तमितेत्यादिबहुव्रीहिः । गगनवदखण्डमिति यावत् । वाक्यशब्दितं स्फोटाख्यं विभुद्रव्यं पदाभिव्यङ्ग्यमिति ज्ञेयम् ॥ **वाक्यमेवेति** ॥ वाक्यशब्दितं स्फोटरूपद्रव्यमेव धर्मि कल्पनीय-मित्यर्थः ।

**या०**— **प्रत्यस्तमितेति** ॥ अपगतवर्णपदविभागमित्यर्थः । अखण्डमिति यावत् । वर्णपद-विभागस्तु तत्राविद्यया कल्पित एवावभासत इत्याशयः ॥ **वाक्यमेवेति** ॥ पदसमुदायाभिव्यङ्ग्यं वाक्यरूपं स्फोटाख्यं तत्त्वमेकमस्ति । तदेव वाक्यार्थप्रतिपादकमित्याशयः ॥

**च०**— वाक्यस्फोटस्यैव वाक्यार्थप्रत्यायकतामुपगच्छतां वैयाकरणानां मतनिरासपरतयाऽपि योजयति ॥ **एवमिति** ॥ **प्रत्यस्तमितेति** ॥ द्वन्द्वगर्भतत्पुरुषगर्भबहुव्रीहिः । वर्णपदविभागविनिर्मुक्त-मित्यर्थः । तद्विभागादिकं अखण्डस्फोटाख्यब्रह्मण्यध्यस्तमिति भावः । वैयाकरणमते वर्णपदवाक्याखण्ड-पदवाक्यस्फोटभेदेन व्यक्तिस्फोटपञ्चकस्य वर्णपदवाक्यस्फोटभेदेन जातिस्फोटत्रिकस्य चोरीकारेण स्फोटा-ष्टकं तत्सिद्धान्तस्तथापि वाक्यार्थप्रत्यायनौपयिकतया वाक्यस्फोट एवानूदितः । उपरिष्टात्पदस्फोटव्युत्पादनं तु प्रासङ्गिकमिति स्थितम् ।

**सु०— ननु कथं स्फोटस्याप्रामाणिकत्वं पदार्थवाक्यार्थप्रतिपत्त्यन्यथाऽनुपपत्त्या पदवाक्य-स्फोटयोः प्रतिपन्नत्वात् ॥ तथा हि ॥ यदि हि न पदातिरिक्तं वाक्यम्, पदं च न वर्णाति-रिक्तं तदाऽर्थप्रत्यय एव न स्यात् । वर्णा हि न प्रत्येकमर्थप्रत्ययमुपजनयन्ति तथाऽननुभवात् श्लेषवर्णवैयर्थ्यप्रसङ्गाच्च । समुदायश्च तेषां न संभवति एकवर्णसमयेऽन्यस्याभावात् । नित्यत्वेऽपि न तेषां प्रतीतिरनुवर्तते । अप्रतीयमानानां प्रत्यायकत्वे सर्वदा पदार्थप्रतीतिप्रसङ्गः । न हि प्रतीत्या प्रतीयमानानां सर्वथाऽप्रतीयमानानां च कश्चिद्विशेषः । न च पूर्वानुभूता वर्णाः स्मृत्यारूढा अर्थप्रतीतिहेतव इति वाच्यम् । स्मृतीनामप्यनुभवानुसारेणक्रमिकत्वा-ज्ज्ञानयौगपद्यप्रतिषेधाच्च । अथ पूर्वपूर्वसंस्कारसहितोत्तरोत्तरानुभवैराहितोऽतिपटीयान्संस्कारो निखिलवर्णविषयामेकामेव स्मृतिमुपजनयतीति मतम् । तदा क्रमो न स्यात् । पौर्वापर्यलक्षणः**

**क्रमो हि प्रतीत्यङ्गम् । स च देशतः कालतो वा वर्णेषु सर्वगतेषु नित्येषु न संभवति । बुद्धिक्रमस्तु वाच्यः । स चैकस्मृतिसमारूढानां वर्णानां नास्तीत्यर्थप्रत्ययानुपपत्तिः । क्रमस्यानङ्गत्वे च सरो रसो नवं वनं राजा जारा नदी दीनेत्यादावर्थभेदप्रत्ययो न स्यात् । अतो वर्णेभ्योऽनुपपद्यमानोऽर्थप्रत्ययस्तदतिरिक्तं स्फोटमवस्थापयति । स च स्वरूपग्राहकेण प्रमाणेनार्थप्रत्यायनशक्तिमानखण्ड एवावगत इति कथं कल्पनागौरवमिति ।**

वा० — **एकेति** ॥ शान्तः कोलाहलः श्रुतपूर्वो गकारो नास्तीति प्रत्यक्षेण वर्णोऽनित्यो भावत्वे सति कृतकत्वादित्याद्यनुमानेन सर्वदाऽनुपलब्ध्योच्चारणे सत्येवोपलब्ध्या च वर्णानामनित्यत्वादिति भावः । शान्तः कोलाहल इति प्रतीतेर्ध्वनिविषयत्वाच्छ्रुतपूर्वगकारो नास्तीति प्रतीतिस्वरूप एव विप्रतिपत्तेः । अनुमानस्य च स एवायं गकार इति प्रत्यभिज्ञाबाधितत्वाच्छ्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वान्मनोवदिति प्रतिपक्षितत्वात्सर्वदाऽनुपलब्धेश्च व्यञ्जकाभावेनोपपत्तेर्वर्णानां नित्यत्वमेवेत्यत आह ॥ **नित्यत्वेऽपीति** ॥ वर्णव्यञ्जकोच्चारणस्य प्रतिनियतत्वेनाशुतरविनाशित्वेन क्रामिकत्वेन च तज्जन्यप्रतीतेरपि तादृशत्वेनैकप्रतीतिकालेऽपरप्रतीत्यभावादर्थप्रतीतिपर्यन्तमननुवृत्तेश्चेति भावः । ननु माऽस्त्वेकप्रतीतिकालेऽपरप्रतीतिर्मा च भूदर्थप्रतीतिपर्यन्तमनुवृत्तिः । तथाऽपि पूर्वं प्रतीतेर्जातत्वमात्रेणार्थप्रतीत्युपपत्तिरित्यत आह ॥ **अप्रतीयमानानामिति** ॥ ननु पूर्वं सर्वदा वर्णप्रतीतेरभावात्कथमेतदापादनं कथं च पूर्वं प्रतीतिसत्त्वेऽप्रतीयमानत्वोक्तिरित्यत आह ॥ **न हीति** ॥ अर्थप्रतीत्यव्यवहितपूर्वकालासत्त्वे पूर्वं जाताया अप्यकिञ्चित्करत्वमेवेति भावः । एकैकवर्णानुभवजन्यसंस्काराणां निरपेक्षाणामेव तत्तत्स्मृतिकारणतया यावन्तो वाक्यस्थितवर्णास्तावत्स्मृतिजनकत्वम् । तत्रापि क्रामिकानुभवजन्यत्वात्क्रामिकतावत्स्मृतिजनकत्वमेवोचितमिति पुनर्व्यवधानमेवेत्याशयेनाह ॥ **स्मृतीनामपीति** ॥ क्रमावधारणेऽपि युगपत्तावत्स्मृतिजनकत्वं वा प्रसज्येतेत्याशयेनाह ॥ **ज्ञानेति** ॥ चक्षुरादिनिरपेक्षसंस्कारस्य स्मृतिकारणत्वेऽपि संस्कारनिरपेक्षचक्षुरादेरवलोकनकारणत्वेऽपि मिलितयोः प्रत्यभिज्ञाजनकत्ववन्मिलितानां संस्काराणामेकस्मृतिजनकत्वं न विरुद्धमित्याशयेन शङ्कते ॥ **अथेति** ॥ यद्यपि पूर्वपूर्ववर्णानुभवजन्यसंस्कारसचिवान्त्यवर्णसन्निकृष्टश्रोत्रेणाखिलवर्णविषयकैकानुभवजननसंभवात्तदाशङ्काप्युचिता । तथाऽपि संस्काराणां स्मरणप्रत्यभिज्ञाने प्रत्येव कारणत्वेऽप्येतादृशानुभवं प्रति न कारणतेति पराशयाद्वा तदनुभवस्यापि शक्तिस्मरणादिना व्यवहितत्वाद्वाऽनाशङ्कनमिति द्रष्टव्यम् । ननु समूहालम्बनप्रतीतिविषयाणामप्येकपङ्क्त्युपविष्टानां क्रमवत्किं न स्यादित्यत आह ॥ **पौर्वापर्येति** ॥ एवं कल्पनागौरवपरिहाराय स्फोटस्य प्रामाणिकत्वमुपपाद्य तदीयार्थप्रत्यायनशक्तेरपि तदुपपादयति ॥ **स चेति** ॥

स०— नन्वप्रतीयमानायां प्रत्यायकत्वेऽतिप्रसङ्गात्कदाचित्प्रतीतिरङ्गीकर्तव्या तेषां प्रतीत्यनुवृत्तिस्तु शाब्दबोधसमये कुत इत्यत आह ॥ **न हि प्रतीत्या प्रतीयमानानामिति** ॥ पूर्वं प्रतीत्य पश्चादप्रतीयमानानां सर्वथा प्रतीयमानानां च को विशेषः । न कोऽपि । अतोऽतिप्रसङ्गस्तदवस्थ एव स्यादिति भावः ॥ **अखण्ड एवेति** ॥ प्रत्यस्तमितवर्णपदविभाग इत्यर्थः । तेन नास्माकमुक्तप्रत्येकसमुदायविकल्पतद्दोषावकाश इति सूचयति ।

प०— अनित्यत्वमुपेत्याह ॥ **एकवर्णसमय इति** ॥ **न प्रतीतिरनुवर्तत इति** ॥ क्षणिकत्वात्प्रतीतीनामुत्तरवर्णोच्चारण काल एव पूर्वपूर्वप्रतीतेर्नष्टत्वादिति भावः । ननु प्रतीतिनाशेपि प्रतीतानां बोधकत्वोक्तौ कथमति प्रसङ्ग इत्यत आह ॥ **नहीति** ॥ प्रतीत्येति ल्यबन्तम् । अप्रतीयमानानामिति विभागः ॥ **ज्ञानयौगपद्येति** ॥ ज्ञानानात्मविशेषगुणतया पूर्वपूर्वज्ञानानामुत्तरोत्तरात्मविशेषगुणनाश्यत्वेन निवर्त्यनिवर्तकभावापन्नत्वेन क्षणिकत्वेन च यौगपद्यस्य प्रतिषिद्धत्वाच्चेत्यर्थः ॥ **अर्थभेदप्रत्ययो न स्यादिति** ॥ वर्णानामविशिष्टत्वे तद्भेदेनार्थभेदायोगादिति भावः । धर्मिधर्मयोरन्यतरकल्पनमपि नेत्याह ॥ **स चेति** ॥

या०— **पदवाक्यस्फोटयोरिति** ॥ अत्र पदस्फोटोपादानं प्रसङ्गात्तस्यापि निराकरणायेति ज्ञातव्यम् । नन्वप्रतीयमानानां ज्ञापकत्वेऽतिप्रसङ्गात्कादाचित्प्रतीतिरङ्गीकार्या । तेषां प्रतीत्यनुवृत्तिस्तु शाब्दबोधसमये कुत इत्यत आह ॥ **न हि प्रतीत्येति** ॥ पूर्वं प्रतीत्य पश्चादप्रतीयमानानामित्यर्थः । तथा चातिप्रसङ्गस्तदवस्थ एव स्यादिति भावः । एवं वाक्यमेव खल्वेवंविधं विना प्रमाणेन कल्पनीयमित्युक्तदोषं परिहृत्येदानीं तस्य च वाक्यार्थप्रत्यायनशक्तिरपि कल्पनीयेत्युक्तदोषं परिहरति ॥ **स च स्वरूपग्राहकेणेति** ॥ ननु स्फोटस्यापि वर्णपदादिविभागोपेतत्वे उक्तदोषसाम्यमित्यत उक्तम् ॥ **अखण्ड एवेति** ॥ प्रत्यस्तमितवर्णपदविभाग एवेत्यर्थः । अतो नास्मन्मते उक्तदोष इति भावः ॥

श्री०— अनेकवर्णस्मृतीनां यौगपद्याङ्गीकारे त्वाह ॥ **ज्ञानेति** ॥ सजातीयात्मगुणानां यौगपद्यायोगादिति भावः ॥ **तदेति** ॥ एकस्मृतिविषयत्व इत्यर्थः ॥ **नास्तीति** ॥ स्मृतिरूपाया बुद्धेरेकत्वेन तत्र क्रमाभावादिति भावः ॥ **प्रमाणेनेति** ॥ अर्थप्रत्यायकत्वान्यथाऽनुपपत्त्यैव स्फोटस्य कल्प्यमानत्वेन प्रतीतौ बहुमानाङ्गीकारादिति भावः ॥

सु०— तत्र ब्रूमः । किमयं स्फोटः स्वयं प्रतीतो वाक्यार्थपदार्थप्रत्यायकः किंवा स्वरूपेण । आद्ये किमनयाऽर्थापत्त्यैव तत्प्रतीतिरुत प्रमाणान्तरेण । नाद्यः । इतरेतराश्रयप्रसङ्गात् । प्रतीते हि स्फोटेऽर्थप्रतीतिस्तस्यां च सत्यां तदन्यथाऽनुपपत्त्या स्फोटप्रतीतिरिति । न द्वितीयः तदभावात् ॥ नन्वेकं पदमेकं वाक्यं शब्दादर्थं प्रत्येमीत्येकार्थावलम्बिनी प्रत्यक्षप्रतीतिरस्तीति चेत् । इयमेव विचार्यताम् । किमेषा प्रत्यस्तमितवर्णपदविभागमेकं शब्दतत्त्वमवगाहते किंवा वर्णादिभेदमपि । आद्यस्तु प्रतीतौ बहुमानवता नाङ्गीकर्तुमुचितः । द्वितीयेऽपि किं वर्णादयस्तस्यारम्भका उत व्यञ्जकाः । नाद्यः । नित्यत्वाभ्युपगमात् । द्वितीये किं ते प्रत्येकं तस्य व्यञ्जकाः किंवा समुदिता इति पूर्ववद्दोषाः । यस्त्वत्र प्रतीकारः सोऽर्थ एव कल्प्यतामिति पुनर्गौरवमेव । पूर्वपूर्ववर्णाभिव्यक्तं शब्दतत्त्वमुत्तरोत्तरैर्विशदं व्यज्यते नैवमर्थे कल्पना युक्तेति चेन्न । एकरसे वैशद्यावैशद्ययोरर्थगतयोरयोगात् । ज्ञानगतयोश्चाननुभवात् ॥ अथ वर्णादयस्तत्र कल्पिताः प्रतिभान्तीति मतम् ॥ तदिदमायातमप्रतीतं शशविषाणं तत्त्वं गवादिविषाणानि तु तत्र कल्पितानि प्रतिभान्तीति । ऐक्यप्रतीतिबलादित्थमास्थीयत इति चेन्न । भेदप्रत्ययबलाद्वनादिप्रत्ययवदैक्यप्रत्यय(स्यो)स्यैवौपाधिकत्वोपपत्तेः । उपाधिश्चैकार्थप्रत्यायकत्वम् । न चैकार्थप्रत्यायकत्वेनैकत्वप्रत्ययः । ततश्चैकार्थप्रत्यय इति परस्पराश्रयत्वम् । एकार्थप्रत्यायनस्य समयग्राहकप्रमाणादेव सिद्धत्वात् ।

वा०— पूर्ववदिति ॥ प्रत्येकपक्षे वर्णान्तरवैयर्थ्यं समुदायस्तु न संभवतीति दोष इत्यर्थः । यथा रत्नपरीक्षकस्य पुनः पुना रत्नतत्त्वं वीक्षमाणस्य पञ्चषाणि रत्नदर्शनानि प्रत्येकं रत्नस्वरूपमवगाहमानान्यपि न सहसैव समानासमानजातीयव्यावृत्तरत्नतत्त्वमवभासयन्ति किन्तु पूर्वपूर्वदर्शनजनितभावनासचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति रत्नतत्त्वं तथा व्यञ्जयन्तोऽपि प्रत्येकमिमे वर्णा न द्रागेव स्फुटतरं स्फोटमवभासयितुमीशतेऽपि त्वल्पं पूर्वपूर्वाभिव्यक्तिजनितसंस्कारसचिवोत्तरोत्तराभिव्यक्तिक्रमेणान्योन्यो वर्णः स्फुटतरं स्फोटज्ञानमाधत्त इति न वैयर्थ्यं द्वितीयादीनाम् । नापि पूर्वेषाम् । तदभावे तदभिव्यक्तिजनितसंस्काराभावेनान्त्यवर्णस्यासहायतया व्यक्तावाभासहेतुत्वासंभवात् । इयं च कल्पना स्फोट एव युक्ता नार्थे स्फोटस्य शब्दत्वेन श्रावणप्रत्यक्षतया प्रत्यक्षगोचरस्य व्यक्तितारतम्यभावत्वेन दृष्टत्वात् । मानान्तरगम्यार्थस्य तु शब्दाद्व्यक्तमेव वा प्रतीतिरप्रतीतिरेव वेति न साम्यमित्याशङ्कते ॥ पूर्वपूर्वेति ॥ तन्मते ध्वनीनामेव स्फोटव्यञ्जकत्वेऽपि वर्णादयस्तस्यारम्भका व्यञ्जका वेति विकल्पमुखेन प्रवृत्तेस्तदनुसारेण वर्णाभिव्यक्तमित्युक्तमिति द्रष्टव्यम् । सामान्यविशेषतत्त्वानां सर्वांशानां

वाऽनुभूयमानता हि वैशद्यम् । सामान्यमात्रस्य किञ्चिदंशानां वाऽनुभवोऽवैशद्यम् । न च निखिल-सामान्यविशेषविरहिणो निरंशस्य स्फोटस्य तादृशवैशद्यावैशद्ये संभवतः । नापि पूर्वपूर्ववर्णैरस्फुटमुत्तरोत्तरै-र्विशदं तज्ज्ञानं कस्याप्यनुभवसिद्धम् । अतो नेदं वैलक्षण्यं युक्तमित्याशयेनाह ॥ **एकरस इति** ॥ ननु वर्णादिविभागो न प्रतीयत इति नोच्यते येन प्रतीतिविरोधः स्यात् । नापि वर्णादीनां स्फोटोत्पादक-व्यञ्जकत्वे येन तत्पक्षोक्तदोषः । अपि त्ववश्यं किलार्थप्रतिपत्त्यर्थं क्षणभङ्गुरवर्णव्यतिरिक्तस्फोटोऽभ्यु-पगन्तव्यः । स च केनचिदभिव्यङ्ग्यः । तत्राभिव्यञ्जकत्वं तावत् ध्वनिषूभयसम्प्रतिपन्नम्; तव तद्वर्णानां मम तु स्फोटस्येत्येव विशेषः । न च ध्वनिभिरेव स्फोटाभिव्यक्तिसिद्धावतिरिक्तवर्णकल्पनया किञ्चिदस्ति प्रयोजनम् । प्रत्युत कल्पनागौरवमेवाधिकम् । ततो यथा नित्यनिरतिशयचिदानन्दैकरसे ब्रह्मण्यसदप्यना-द्यनिर्वाच्याविद्यावशात्सदिवाभाति तथाऽनवयवे नित्ये स्फोटाख्ये शब्दब्रह्मण्यशेषमिदं जगदसदप्यनाद्यवि-द्यया सन्नपि वर्णपदविभागः प्रतीयते । तदभिव्यक्तिः पुनर्वृत्त्या चैतन्याभिव्यक्तिरिव ध्वनिभिराश्रीयत इति सिद्धान्तरहस्यमिति नानुपपत्तिरित्याशङ्कते ॥ **अथेति** ॥ अप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च मतद्वयम-प्यनुपपन्नमित्याशयेनार्थान्तरन्यासेनाभाससमानयोगक्षेमतामाह ॥ **तदिदमिति** ॥ एकं पदमेकं वाक्य-मित्यबाधितप्रतीतेः स्फोटं विनाऽनुपपत्त्या स्फोटस्य प्रामाणिकत्वात्तद्बलात्तत्कल्पनायां नाभाससाम्य-मित्याशङ्कते ॥ **ऐक्येति** ॥ सर्वत्रैक्यप्रत्ययस्यैवमन्यथासिद्ध्या तद्बलात्क्वाप्यैक्यं न सिध्येदिति शङ्का-परिहाराय भेदप्रत्ययबलादित्युक्तम् ।

**स०— एकार्थावलम्बिनीति** ॥ नैकेषु वर्णेष्वेकं पदमिति तथाऽनेकेषु पदेष्वेकं वाक्यमिति च प्रतीतिस्तदतिरिक्तमेकमर्थमवगाहत इत्यर्थः । **आद्यस्तु प्रतीतौ बहुमानवता नाङ्गीकर्तुमुचित इति** ॥ एतावत्पदसमूहात्मकमिदमेकं वाक्यं एतावद्वर्णसमूहात्मकमिदमेकं पदमिति पदविभागस्य वर्णविभागस्य च अनुभवसिद्धत्वादिति भावः । ननु न वर्णादयस्तात्त्विकाः ये नारम्भका अभिव्यञ्जका वा इति विकल्पदोषप्रसक्तिः । किन्त्वविद्यमानास्तत्रारोपिता एव प्रतिभान्तीत्याशयेन शङ्कते ॥ **अथ वर्णादयः तत्रेति** ॥ **ऐक्यप्रतीतिबलादिति** ॥ एकं पदमित्याद्येक प्रतीतिबलादित्यर्थः ।

**प०— प्रतीतौ बहुमानवतेति** ॥ एतावद्वर्णसमूहात्मकमिदमेकं पदं एतावत्पदकदम्बात्मकमेकं वाक्यमिति वर्णपदादिविभागस्यानुभवसिद्धत्वादिति भावः ॥ **यस्त्वत्र प्रतीकार इति** ॥ पूर्वपूर्ववर्णा-द्यनुभवजनितसंस्कारसहकृतान्त्यवर्णेनानुभूयमानेन स्फोटोऽभिव्यज्यत इति त्वयोक्तदोषप्रतीकार इति वाच्यम्, तादृशोऽन्त्यवर्ण एवार्थावबोधहेतुः कल्प्यतामित्यर्थः ॥ शब्दतत्त्वं स्फोटाख्यम् । तद्वैशद्यादिकं

स्फोटरूपार्थे कल्प्यते अथ तज्ज्ञानेन द्वयमपीति क्रमेण निराह ॥ **एकरस इत्यादिना** ॥ **तत्रेति** ॥ स्फोटाख्यशब्दे ॥ **ऐक्येति** ॥ एकं पदमेकं वाक्यमिति पदादावैक्यप्रतीतीत्यर्थः । स्फोटस्यैकत्वात् । वर्णानां पदे पदानां च वाक्येऽनेकत्वेनैक्यप्रत्ययस्याधिष्ठानगतैक्यारोपेण विनाऽयोगादिति भावः ॥ **समयग्राहकप्रमाणादिति** ॥ पदपदार्थसङ्केतग्राहकवृद्धव्यवहारादिरूपप्रमाणादेवेत्यर्थः ।

या० — **एकार्थावलम्बिनीति** ॥ अनेकेषु वर्णेष्वेकं पदमिति तथाऽनेकेषु पदेष्वेकं वाक्य-मिति प्रतीतवर्णातिरिक्तं पदातिरिक्तं वैकमर्थमवगाहत इत्यर्थः । ननु वर्णादयस्तात्त्विका येनारम्भका-भिव्यञ्जका वेति विकल्पदोषप्रसक्तिः । किं त्वविद्यमानास्तत्रारोपिता एव प्रतिभान्तीत्याशयेन शङ्कते ॥ **अथवर्णादयस्तत्रेति** ॥ **ऐक्यप्रतीतिबलादिति** ॥ एकं पदमेकं वाक्यमिति प्रतीतिबलादित्यर्थः ॥ **भेदप्रत्ययस्येति** ॥ वर्णानां बहुत्वेन भेदस्यानुभवसिद्धत्वादिति भावः ॥ **वनादिप्रत्ययवदिति** ॥ यथाऽनेकेषु तरुष्वेकं वनमिति प्रत्यय एकस्थानस्थितत्वरूपोपाधिनिमित्तकस्तद्वदित्यर्थः ।

श्री० — **नाङ्गीकर्तुमुचित इति** ॥ स्फोटत्वेन रूपेणाप्रतीयमानत्वादित्यर्थः ॥ **अर्थ एवेति** ॥ यथा प्रत्येकं समुदितविकल्पेन वर्णानां स्फोटव्यञ्जकत्वं न संभवतीति स्फोटेऽस्मदुक्तदोषस्य यः प्रतीकारः क्रियते स प्रतीकारो 'वर्णा न प्रत्येकमर्थप्रतीतिमुपजनयन्ति, नापि समुदिता' इत्युक्तदोषपरिहारार्थ एव क्रियतामित्यर्थः । स प्रतीकारोऽर्थे कल्पयितुं न शक्यत इत्याशङ्कते ॥ **पूर्वपूर्वेति** ॥ **ऐक्यप्रत्ययेति** ॥ अनेकेषु वर्णेष्वेकं पदमनेकेषु पदेष्वेकं वाक्यमिति प्रतीतिबलादेकस्मिन्स्फोटे वर्णादय आरोपिताः प्रतिभान्तीत्याश्रीयत इत्यर्थः ॥ **अप्रतीतमिति** ॥ स्फोटत्वेन रूपेणाप्रतीयमानस्य तस्य शशविषाणतुल्य-त्वादिति भावः ॥ **भेदप्रत्ययबलादिति** ॥ वर्णानां पदानां च बहुत्वस्यानुभवसिद्धत्वेन तद्बलादित्यर्थः । **समयग्राहकप्रमाणादेवेति** ॥ पदपदार्थसङ्केतग्राहकवृद्धव्यवहाररूपप्रमाणादेवेत्यर्थः ।

च० — अनूदितं मतं प्रतिविधत्ते ॥ **अत्र ब्रूम इति** ॥ **एकरस इति** ॥ निरवयव इत्यर्थः ॥

सु० — **एकार्थप्रत्यायनं च नानुपपन्नम् एकस्मृतिसमारूढानां तदुपपत्तेः । अनुभव-क्रमोपहितानामेव तेषां स्मृत्याऽवगाहनान्न क्रमव्युत्क्रमयोरविशेषापत्तिः । अत एवार्थापत्तिरपि परास्ता वेदितव्या । अन्यथोपपत्तेरुक्तत्वात् ।**

**अप्रतीतस्य तु प्रत्यायकत्वेऽतिप्रसङ्गः ॥ तस्मात्सुष्ठूक्तं गौरवं कल्पनेऽन्यथेति ॥**

**वा०**— यद्यपि पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णविषयकश्रोत्रजन्यसदसदनेकवर्ण-विषयकैकानुभव एवार्थप्रत्ययनाय पद्धत्युक्तरीत्या वक्तुं युक्तः। तथाऽपि मौनिश्लोकलिप्यादिदर्शनादि-स्थले समूहालम्बनस्मृतेरेव वक्तव्यतया सर्ववर्णविषयकैकानुभवस्थले च तस्य शक्तिस्मृतिव्यवहिततया-ऽर्थप्रत्यायनाव्यवहितसमूहालम्बनस्मृतेरेव वक्तव्यतया तदुपारूढताभ्युपगमेनैव परिहारमाह ॥ **एक-स्मृतीति** ॥ वर्णानामेकबुद्ध्यारोहाङ्गीकारे क्रमस्यानङ्गत्वमुक्तं स्यात्। तथा च राजा जारेत्यादावर्थ-भेदो न प्रतीयेतेत्युक्तदोष इत्यत आह ॥ **अनुभवेति** ॥ न चानुभवक्रमरूपोपाधेः पूर्वाननुभवान्न स्मृतिविषयत्वमिति वाच्यम्। क्रमिकतत्तद्वर्णानुभवानन्तरं क्रमविशिष्टानुभवानामेव साक्षिणाऽनुभवो-पपत्तेः। केचित्तु स्मृतिरनेकवर्णमात्रविषयिणी वर्णेषु च न स्वतः क्रमः किन्तु क्रामिकानुभवविषयत्वमेव क्रमः। तथा च वर्णस्मृतिवत्तेषु क्रामिकानुभवविषयत्वमपि स्वरूपेणार्थप्रत्यायने निमित्तम्। न च निमित्तकारणस्यापि ज्ञानं कारणमिति न तदनुभवापेक्षा। वस्तुतः क्रामिकानुभवविषयवर्णानां स्मृतेरर्थ-प्रत्यायनाङ्गत्वाभ्युपगमात्। न च क्रमव्युत्क्रमयोरविशेषोऽपीत्याहुः। ननूक्तरीत्या वर्णानामिव तन्निष्ठ-क्रामिकानुभवविषयत्वस्यापि साक्ष्यनुभूतस्य स्मृतिविषयत्वोपपत्तेः। स्वरूपेण स्फोटोऽर्थप्रत्यायक इति द्वितीयं निराकरोति ॥ **अप्रतीतस्येति** ॥

**स०**— तदा क्रमो न स्यादित्युक्तं दोषं परिहरति ॥ **अनुभवक्रमोपहितानामेवेति** ॥ अनु-भवक्रमोपहितक्रमानामेवेत्यर्थः। अनुभवक्रमजन्यो वर्णक्रमः प्रतिभासत इति भावः। तेनानुभवक्रमस्य कथं वर्णधर्मत्वेन भानमिति शङ्काऽनवकाशः। ननु क्रमः पूर्वमननुभूतः कथं स्मृत्या विषयीक्रियत इति चेत्। क्रमोत्पन्नानुभवाहितक्रमिकसंस्कारबलादननुभूतवर्णक्रमस्यापि प्रतिभासाङ्गीकारात्। न ह्यनुभूतं एव स्मर्यत इति नियमस्तथा सत्यतीतत्वस्यापि स्मृतावप्रतिभासप्रसङ्गादिति ॥ **अर्थापत्तिरपीति** ॥ अर्थप्रत्ययान्यथानुपपत्तिरित्यर्थः ॥ **अन्यथोपपत्तेरिति** ॥ एकस्मृतिसमारूढेभ्यो वर्णादिभ्योऽर्थप्रत्ययोप-पत्तेरुक्तत्वादित्यर्थः ॥ **किं वा स्वरूपेणेति** ॥ प्राग्विकल्पितं द्वितीयपक्षमनूद्य दूषयति ॥ **अप्रतीतस्य त्विति** ॥ अतिप्रसङ्गो बधिरस्यापि शाब्दबोधलक्षणः।

**प०**— प्रागुक्तदोषान्निराह ॥ **एकार्थेत्यादिना** ॥ **अर्थापत्तिरपीति** ॥ ऐक्यप्रतीत्यन्यथा-नुपपत्तिरूपार्थापत्तिरपि। अत एवेत्युक्तं व्यनक्ति ॥ **अन्यथेति** ॥ ऐक्यप्रत्ययस्यौपाधिकत्वोपपत्तेरित्युक्त-त्वादित्यर्थः। यद्वा पदार्थवाक्यार्थप्रतीत्यन्यथानुपपत्तिरूपार्थापत्तेरपि। शक्तिश्चैवान्विते स्वार्थ इति त्रिपाद्यामन्विताभिधानकथनेनान्यथोपपत्तेरुक्तत्वादित्यर्थः। किं वा स्वरूपेणेति प्राग्विकल्पितद्वितीयपक्षे दोषमाह ॥ **अप्रतीतस्येति** ॥ स्फोटस्येति योज्यम्। सर्वदार्थप्रतीतिरूपातिप्रसङ्ग इत्यर्थः ॥

**या०**—तदा क्रमो न स्यादित्युक्तदोषं परिहरति ॥ **अनुभवक्रमेति** ॥ अनुभवक्रमोपहितक्रमाणामेवेत्यर्थः । अनुभवानां क्रमिकत्वात्तदुपाधिकः क्रमो वर्णेषु प्रतिभासत इति भावः । तेनानुभवक्रमस्य कथं वर्णधर्मत्वेन भानमिति शङ्काऽनवकाशः । न च क्रमः पूर्वमननुभूतः कथं स्मृतिविषय इति वाच्यम् । क्रमोत्पन्नानुभवाहितक्रमिकसंस्कारबलादननुभूतस्यापि वर्णक्रमस्य प्रतिभासाङ्गीकारात् । न ह्यनुभूतमेव स्मर्यत इति नियमः । तथा सत्यतीतत्वस्यापि स्मृतावप्रतिभासप्रसङ्गात् । यद्यपि वर्णेषु न दैशिकः कालिको वा क्रमः संभवति । व्याप्तत्वान्नित्यत्वाच्च । नापि वस्तुनिबन्धनः । एकदैव जारा राजेति प्रयोगे जकारस्य पौर्वापर्यायोगात् । नापि बुद्ध्यादिगत एव क्रमो वर्णेष्ववभासत इति युक्तम् । वर्णपदादिगतस्य क्रमस्य श्रावणत्वानुभवाद्बुद्धिक्रमस्य चातथात्वात् । न चारोपित एव वर्णेषु क्रम इति युक्तम् । पदवाक्यादेरत्यन्तासत्त्वापत्तेः तथाऽपि बुद्धिक्रमजन्यो वर्णेष्वौपाधिकः कश्चन क्रमोऽस्त्येव । क्रमस्तु वर्णधर्म इति स्पष्टं पूर्वोक्तत्वात् । न च स कीदृश इति वाच्यम् । यथा कालनिबन्धनक्रमापेक्षया देशनिबन्धनस्तत्तद्वस्तुगतः क्रमो विलक्षणोऽनुभूयमानो विशिष्य वक्तुमशक्योऽपि कैश्चिदङ्गीक्रियते तथा बुद्धिक्रमनिबन्धनो वर्णपदादिगतानुपूर्वीरूपः श्रोत्रेणानुभूयमानो वक्तुंशक्योऽप्यङ्गीकार्यः । न हि सर्वत्र क्रमशब्द एकार्थक इति प्रतिभाति । अन्येतु तत्तद्वर्णादिविषयकबुद्धिक्रम एव वर्णपदादिक्रमो नातिरिक्तः । न चैवं क्रमस्य श्रावणत्वासंभवः । साक्ष्युपनीतस्यैव तस्य तत्र भानाङ्गीकारादित्याहुः ॥ **अर्थापत्तिरपीति** ॥ अर्थप्रत्ययान्यथाऽनुपपत्तिरित्यर्थः ॥ **अन्यथोपपत्तेरिति** ॥ अनुभवक्रमोपहितक्रमवद्भ्य एकस्मृतिसमारूढेभ्यो वर्णादिभ्योऽर्थप्रत्ययोपपत्तेरुक्तत्वादित्यर्थः । किंवा स्वरूपेणेति प्राग्विकल्पितं द्वितीयपक्षमनूद्य दूषयति ॥ **अप्रतीतस्य त्विति** ॥ अतिप्रसङ्गो बधिरस्यापि शाब्दबोधप्रसङ्गलक्षणः ।

**श्री०**— ननु शब्दादर्थं प्रत्येमीत्येकार्थप्रत्यायकत्वान्यथाऽनुपपत्त्या स्फोटः सिद्धः । तदभावे एकार्थप्रत्यायनस्यैवानुपपत्तेरित्यत आह ॥ **एकार्थप्रत्यायनं चेति** ॥ येन तदन्यथाऽनुपपत्त्या स्फोटः कल्प्येतेत्याशयः । तथाच स्फोटाभावेऽप्यस्मन्मते नानुपपन्नं किं तूपपन्नमेवेत्यर्थः । तदुपपादयति ॥ **एकस्मृतीति** ॥ समारूढानाम् । तदुपपत्तेरेकार्थप्रत्यायकत्वोपपत्तेः । नन्वेकस्मृतिविषयत्वे तद्विषयकस्मृतिरूपायां बुद्धौ क्रमाभावेन वनं नवमित्यादौ वर्णानां क्रमव्युत्क्रमयोरर्थविशेषबोधायोगेनाविशेषेणैकार्थबोध एव स्यादित्यत आह ॥ **अनुभवक्रमोपहितानामिति** ॥ तदुपहितक्रमवतामित्यर्थः ॥ **न क्रमव्युत्क्रमयोरिति** ॥ स्मृतौ क्रमाभावेऽपि तज्जनकपूर्वानुभवे वर्णेषु क्रमस्योत्पन्नत्वादिति भावः ।

**सु०— अन्ये त्वाहुः स्मर्यमाणा वर्णमालैव वाक्यार्थबोधजननीति । तदप्यसत् । सा हि व्युत्पत्तिसहाया वा तथा स्यादन्यथा वा । अन्यथा चेदतिप्रसङ्गः । आद्ये पदतदर्थाव-बोधस्याश्रितत्वात्किं तयेति गौरवमेव । किञ्च क्रमोपेतानां द्वित्राणां पञ्चषाणां वा वर्णानां स्मरणमुपपद्यते । महावाक्यस्थानां शतसहस्रसङ्ख्यानां तु स्मरणं दुःश(शं)कमेव । किमभ्यासस्य दुष्करमिति चेन्न । गत्यन्तराभावे त्वेवमेतत् । सति तु सुखोपाये न प्रयासगौरवकल्पना युक्तेति । एतदप्युक्तं गौरवं कल्पनेऽन्यथेति ॥**

वा०— एवं वैयाकरणाभिमतं पक्षं निराकृत्य मीमांसकैकदेशिमतं निराकर्तुमनुवदति ॥ **अन्ये त्विति ॥ अन्यथा चेदिति** ॥ व्युत्पत्त्यनपेक्षायां पदतदर्थानुसन्धानाभावेन संबन्धिरूपदार्थज्ञाना-भावेऽपि तत्संसर्गरूपवाक्यार्थज्ञानाभ्युपगमेऽतिप्रसङ्ग इत्यर्थः । यद्वा व्युत्पन्नवदव्युत्पन्नस्यापि वर्णमाला-स्मरणाविशेषाद्वाक्यार्थबोधप्रसङ्ग इत्यर्थः ॥ **आद्य इति** ॥ तत्तत्पुरुषप्रयुक्ततत्तदभिप्रायानुसारिवाक्याना-मानन्त्याद्वाक्यार्थस्यापूर्वत्वाच्च तत्तद्वाक्यस्थवर्णमालाया वाक्यार्थेषु व्युत्पत्तेरसंभवेन व्युत्पत्त्यपेक्षां वदता तन्मालान्तर्गततत्तद्वर्णेषु पदत्वानुसन्धानस्य ततस्तत्तत्पदार्थानुसन्धानस्यावश्याश्रयणीयतया तत एव वाक्यार्थबोधोपपत्तौ वर्णमालायास्तद्बोधकत्वकल्पने गौरवमित्याशयः । वाक्यस्थवर्णमालास्मरणमभ्युपेत्य दूषणमुक्तम् । वस्तुतस्तु तदेवाशक्यमित्याह ॥ **किञ्चेति** ॥

प०— **अन्यथा चेदतिप्रसङ्ग इति** ॥ अव्युत्पन्नस्याप्यर्थबोधप्रसङ्ग इत्यर्थः ॥ **सति तु सुखोपाय इति** ॥ अन्विते शक्त्युपेतपदरूपोपाये सतीत्यर्थः ॥

या०— मीमांसकैकदेशिनां मतमनूद्य दूषयति ॥ **अन्ये त्वाहुरित्यादिना ॥ पदतदर्थाव-बोधस्येति** ॥ अन्यथा व्युत्पत्तिरेव न संभवतीति भावः ।

श्री०— सा वर्णमाला । तथा वाक्यार्थबोधजननी ॥ **पदतदर्थावबोधस्येति** ॥ पदानां तद-र्थानां चानवगमे वर्णमालासहायभूताया वाच्यवाचकभावसंबन्धरूपाया व्युत्पत्तेरेवायोगेन केवलायाः स्मर्यमाणवर्णमालाया वाक्यार्थबोधजकत्वायोगात्तदर्थं व्युत्पत्तिरूपसहायाङ्गीकारे पदतदर्थावबोधस्याश्रितत्वा-दन्वितस्यैव पदार्थत्वेन वाक्यार्थावबोधस्यावबुद्धत्वात्किं तया स्मर्यमाणवर्णमालयेत्यर्थः । लघूपाये पदैनैवा-न्वयबोधरूपे उपाये ॥

च०— मीमांसकैकदेशिमतं प्रत्याचिख्यासुरनुवदति ॥ **अन्ये त्विति** ॥

सु०— अपरे तु वाक्यान्त्यवर्णं वाक्यार्थस्य प्रतिपादकमाचक्षते ॥ तदप्ययुक्तम् ॥ स हि केवलो वा तथा स्यात् । पूर्ववर्णसंबन्धस्मरणेनानुगृहीतो वा । आद्ये पूर्ववर्णोच्चारणवैयर्थ्यम् अतिप्रसङ्गश्च । द्वितीयेऽनुभूयमानः स्मर्यमाणो वा । नाद्यः । सबन्धस्मृतिव्यवहितस्यानुभवस्य तदाऽनवस्थानात् । द्वितीये तु किमनेन प्रयत्नगौरवेण ॥ स्मृतिस्था वर्णाः पदत्वेनानुसंहिता वाक्यार्थमवगमयन्तीत्येव वक्तव्यम् ॥ तदिदमुक्तम् गौरवं कल्पनेऽन्यथेति । पूर्ववर्णसंस्कार एवोपयोगी न स्मृतिरिति चेन्न । तथा सति पदानुसन्धानासंभवेन संबन्धस्य स्मरणाभावप्रसङ्गादिति ॥

वा०—जरन्नैयायिकमतं निराकर्तुमनुवदयति ॥ **अपरे त्विति** ॥ **अनुगृहीत इति** ॥ सहकृत इत्यर्थः ॥ **अतिप्रसङ्गश्चेति** ॥ अन्त्यवर्णश्रवणमात्रेण वाक्यार्थबोधप्रसङ्ग इत्यर्थः । तदा वाक्यार्थबोधसमये । तत्तद्वर्णानुभवजनितसंस्कारैस्तत्स्मरणं ततः पदानुसन्धानं ततः पूर्ववर्णसंबन्धस्मरणमेवं पूर्वपूर्वपदानुभवजनितसंस्कारैस्तत्पदस्मरणं ततः पूर्वपदसंबन्धस्मरणं ततःपदार्थस्मृतिरित्याद्यनेककल्पनाया एकस्मृत्युपारूढानां सर्ववर्णानां पदत्वेनानुसंहितानां वाक्यार्थबोधकत्वकल्पनापेक्षाऽतिगुरुत्वमित्याह ॥ **किमनेनेति** ॥ ननु पूर्ववर्णसंस्कारोऽन्त्यवर्णमात्रस्मरणं वाक्यार्थबोधोपयोगितयाऽभ्युपगम्यतेऽतो न गौरवमिति शङ्कते ॥ **पूर्ववर्णेति** ॥ सर्ववर्णविषयैकस्मृत्यनभ्युगपमे संस्कारस्य स्मृतिमात्रजनकतया पूर्ववर्णसंस्कारमात्रेण तेषु पदत्वानुसन्धानासंभवेन पूर्ववर्णसंबन्धस्मरणरूपस्य त्वदुक्तस्यान्त्यवर्णसहकारिणोऽप्यभावप्रसङ्ग इत्याह ॥ **तथा सतीति** ॥ उपलक्षणं चैतत् । उक्तरीत्या पूर्ववर्णसंस्कारस्य वैयर्थ्यात् तदर्थस्य पूर्ववर्णोच्चारणस्य वैयर्थ्यमित्यपि द्रष्टव्यम् ॥

या०— जरन्नैयायिकमतमनूद्य निराकरोति ॥ **अपरे त्वित्यादिना** ॥ **पूर्ववर्णस्मरणसम्बन्धेनेति** ॥ पदत्वानुसन्धानेनेत्यर्थः ॥ **पूर्ववर्णसंस्कार एवेति** ॥ तथा च स्मृतिस्था वर्णा इत्येतन्न युक्तमिति भावः । **सम्बन्धस्मरणस्येति** ॥ शक्तिस्मरणस्येत्यर्थः ।

श्री०— **पूर्ववर्णसंबन्धस्मरणेनेति** ॥ पूर्ववर्णानां पदत्वानुसंधानानन्तरं तच्छक्तिस्मरणेनेत्यर्थः ॥ **अतिप्रसङ्ग इति** ॥ अन्त्यवर्णश्रोतॄणां सर्वेषामपिवाक्यार्थबोधः स्यादित्यर्थः ॥ **अनुभूयमान इत्यादि** ॥ वाक्यांत्यवर्णः स्वयमनुभूयमानः पूर्ववर्ण संबन्धस्मरणेनानु गृहीतः सन्वाक्यार्थप्रतिपादक इत्यर्थः ॥ **संबन्धस्मृतीति** ॥ शक्तिस्मरणेत्यर्थः ॥ **अनवस्थानादिति** ॥ अन्त्यवर्णानुभवानन्तरं पूर्वानुभूतवर्णस्मरणेन

भाव्यम् । तेन तेषु पदत्वानुसंधानेन तस्य पदस्य शक्तिस्मरणेन भवितव्यम् । तथाच वर्णस्मरणपदत्वानुसंधानतच्छक्तिस्मरणैरन्त्यवर्णानुभावस्य नष्टत्वेन वाक्यार्थबोधसमयेऽन्त्यवर्णानुभवानवस्थानान्नानुभूयमानोऽन्त्यवर्णो वाक्यार्थप्रतिपादक इत्यर्थः ॥ **प्रयत्नगौरवेणेति** ॥ पूर्ववर्णसंबन्धस्मरणानुगृहीतान्त्यवर्णस्मरणस्य वाक्यार्थबोधकत्वाङ्गीकारे गौरवमित्यर्थः । तर्हि लाघवं कथमित्यत आह ॥ **स्मृतिस्था इति** ॥ अनुभवक्रमोपहितक्रमवन्त इति शेषः ॥ **संस्कार एवेति** ॥ तथा च स्मृतिस्था वर्णा इत्युक्तमसदिति भावः । ॥ **पदेति** ॥ पदत्वेत्यर्थः । संबन्धः शक्तिः ॥

च० — प्राचीननैयायिकमतमपाचिकीर्षुरनुवदति ॥ **अपरे त्विति** ॥

**सु० — केचिदाहुः । यो यानि पदानि प्रयुङ्क्ते स तत्पदार्थसंसर्गप्रतिपादनाभिप्रायवानिति सामान्येन स्वात्मनि नियमे प्रतीते पश्चात्पदसमूहप्रयोगाद्वक्तुस्तत्पदार्थसंसर्गप्रतिपादनाभिप्रायावगतिद्वारेण पदेभ्यो वाक्यार्थानुमानमिति ॥ इदमप्यनुपपन्नम् ॥ तथा हि । पदसमुदायमात्रप्रयोगाद्वा संसर्गज्ञानानुमानमुताङ्गादिमत्त्वे सति । नाद्यः व्यभिचारात् । द्वितीये तु तथाविधपदैरेव वाक्यार्थावगतेर्वक्तृज्ञानानुमाने बकबन्धरीतिप्रयास एवेति ॥ तदिदमप्याह गौरवं कल्पनेऽन्यथेति ॥**

वा० — वैशेषिकपक्षं निराकर्तुमनुवदति ॥ **केचिदिति** ॥ **द्वितीये त्विति** ॥ एवेत्यस्य साक्षादित्यर्थः ॥ **बकबन्धरीतिप्रयास इति** ॥ बकबन्धसमानन्यायमित्यर्थः । बकग्रहणे क उपाय इति केनचित्पृष्टे खरतरदिनकरसंपर्कद्रुततन्मस्तकनिहितनवनीतबिन्दुभिर्नयनयोः पूर्णतायां तद्ग्रहणं सुकरमिति कश्चित्प्रवदति । न च तदुपपद्यते । बकग्रहणमन्तरेण तन्मस्तके नवनीतप्रक्षेपानुपपत्तेस्तस्मिन्स्वयं गृहीते च तत्प्रक्षेपोऽपि मुधैवेति न्यायाभिप्रायः । बकबन्धरीतिव्युत्पादनाय वक्तृज्ञानानुमान इत्युक्तम् ॥

स० — **पदेभ्यो वाक्यार्थानुमानमिति** ॥ संसर्गाभिप्रायकपदेभ्य इत्यर्थः । तथा चैतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि । तदभिप्रायकपदकदम्बकत्वादित्यनुमाने वक्तृज्ञानावच्छेदकतया वाक्यार्थसिद्धिरिति भावः । एतदनुमानेऽसिद्धिवारणाय पूर्वानुमानमत एवाभिप्रायगतिद्वारेणेत्युक्तमिति द्रष्टव्यम् ॥ **बकबन्धरीतिप्रयास इति** ॥ बकबन्धरीतिमेवमाहुः । बको धार्य इति पृष्टः कश्चिदाह ॥

बकशिरसि नवनीतं स्थापनीयं तस्य च तपनकिरणतप्तस्य बकचक्षुःप्रवेशेन तदनन्तरं बको धार्य इति ॥ अत्र यथा नवनीतस्थापनार्थं गतेनैव बकस्य धर्तुं शक्यत्वान्नवनीतस्थापनानन्तरं बकधारणे प्रयासगौरवं तथा प्रकृतेऽपीत्यर्थः ।

प० — **नाद्यः व्यभिचारादिति** ॥ गौरश्वःपुरुषो हस्तीत्यादिवाक्ये ॥ **बकबन्धरीतीति** ॥ बको नाम पक्षी मया कथं ग्राह्य इति केनचित्पृष्टे अन्यो वदति क्वचिदुपविष्टस्य बकस्य शिरसि नवनीते स्थापिते सति आतपेन द्रवीभूतेन चक्षुरन्तःप्रविष्टेन तेन चक्षुषो निमीलने सति बको बन्धनीय इति । इयं बकबन्धनरीतिः । नवनीतस्थापनकाल एव बकबन्धनसंभवे तदुक्तरीतिर्यथा प्रयासस्तथाऽयमपीत्यर्थः ।

या० — वैशेषिकादिमतं निराकर्तुमनुवदति ॥ **केचिदाहुरिति** ॥ **अभिप्रायावगतिद्वारेणेति** ॥ अभिप्रायानुमितौ वाक्यार्थस्तदवच्छेदकतयैवावभासते न साक्षादित्यर्थः ॥ **पदेभ्य इति** ॥ तत्प्रयोगादित्यर्थः । तथा च विमतो वक्ता एतत्पदार्थसंसर्गप्रतिपादनाभिप्रायवान् एतत्समुदायप्रयोक्तृत्वादित्यनुमानमत्र विवक्षितमित्यवधेयम् । इदमुपलक्षणम् । एतत्पदार्थसंसर्गज्ञानवानित्यपि साध्यमत्र विवक्षितम् । अत एव संसर्गज्ञानानुमानमित्यग्रे व्यवहारः । तत्र चाभिप्रायानुमानमित्यस्याप्युपलक्षणमतो न विरोध इत्यवधेयम् ॥ **उक्ताकाङ्क्षादिमत्त्व इति** ॥ आकाङ्क्षादिमत्त्वविशिष्टपदसमुदायप्रयोगाद्वा इत्यर्थः ॥ **व्यभिचारादिति** ॥ आकाङ्क्षादिशून्यपदसमुदायप्रयोक्तरीति शेषः । तथा च यो यानि पदानि प्रयुङ्क्त इत्युक्तसामान्यनियमो व्यभिचारेण दुष्ट इति भावः ॥ **बकबन्धरीतीति** ॥ बकबन्धरीतिमेवमाहुः । कथं बको धार्य इति पृष्टः कश्चिदाह । बकशिरसि नवनीतं स्थापनीयं, तस्य च तपनकिरणसन्तप्तस्य बकचक्षुःप्रवेशोऽनन्तरं बको धार्य इति । अत्र यथा नवनीतस्थापनार्थं गतेनैव बकस्य धर्तुं शक्यत्वान्नवनीतस्थापनानान्तरं बकधारणे प्रयासगौरवं तथा प्रकृतेऽपीत्यर्थः ।

श्री० — **वाक्यार्थानुमानमिति** ॥ एतानि वैदिकानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि । आकाङ्क्षादिमत्पदकदम्बकत्वाद्गामानय शुक्लां दण्डेनेत्यादिपदवदित्यनुमानेन वक्तृज्ञानावच्छेदकतया संसर्गसिद्धिः । पदानामनुमानविधयैव संसर्गबोधकत्वं न तु शाब्दत्वेनेत्यर्थः । तथा च वाक्यार्थो न शाब्द इत्याशयः ॥ **प्रयास एवेति** ॥ तथा च हेतुज्ञानसमय एव वाक्यर्थस्यावबुद्धत्वात्तेनाभिप्रायमनुमाय तदवच्छेदकत्वेन पुनरनुमानेन संसर्गबोधाङ्गीकारे बकबन्धरीतिप्रयासतुल्यः प्रयासः प्राप्त इत्यर्थः ॥

च० — वैशेषिकमतं प्रतिविधित्समानोऽनुवदति ॥ **केचिदाहुरिति** ॥

**सु०**— अभिहितान्वयवादिनो वदन्ति । पदाभिहिताः पदार्था एवाकाङ्क्षादिवशादन्योन्यान्वयं बोधयन्तीति ॥ तैरपि हि पदार्थानामन्वयबोधकत्वं क्वाप्यनुपलब्धं तावत्कल्पनीयम् । ननु 'पश्यतः श्वेतमारूपं हे(हे)षाशब्दं च शृण्वतः । खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः ॥' इत्युक्तन्यायेनास्त्येव पदार्थानामन्वयबोधकत्वमिति चेन्न अनुमानादर्थापत्तेर्वा तत्रान्वयप्रतीतेः । तथा हि । एतेषां पदार्थानामेकाधिकरणतयाऽवगतानां वा प्रत्यायकत्वं विशकलिततया वा । आद्येऽनुमानत्वम् । द्वितीये तत्रार्थान्तराभावो निश्चितो न वा। आद्येऽर्थापत्तिर्भवताम् अस्माकमनुमानमेव । द्वितीये त्वनध्यवसाय एव । प्रमाणान्तरावगतानां पदार्थानामन्वयबोधकत्वादर्शनेऽपि पदैरभिहितानां तत्किं न स्यादिति चेत् । तर्हि न केवलं पदार्थानामन्वयबोधकत्वशक्तिकल्पनम् किन्तु पदानां पदार्थाभिधानशक्तिस्तेष्वन्वयबोधकत्वाधानशक्तिश्च कल्पनीया । पदानां पदार्थेषु साहचर्यमात्रेण स्मारकत्वाङ्गीकारेऽपि शक्तिद्वयं कल्पनीयमेव ॥ तदिदमुक्तम् । गौरवं कल्पनेऽन्यथेति ॥

**वा०**— प्रमाणान्तरावगतेषु पदार्थेषु क्लृप्तमन्वयबोधकत्वं पदाभिहितेष्वप्यास्थीयते वा पदाभिहितेष्वेव वा तत्कल्प्यते । नाद्यः इत्याह ॥ **तैरपीति** ॥ ननु मानान्तरावसेयानां पदार्थानामन्वयबोधकत्वं क्लृप्तमेव । अनवधारिताश्रयविशेषस्य प्रत्यक्षदृष्टश्वैत्यस्याप्रतिपन्नगुणविशेषस्य हेषाशब्दानुमितस्याश्वत्वस्य खुरनिष्पेषशब्दानुमितधावनस्येत्येतेषां प्रत्यक्षानुमानरूपप्रमाणान्तरसिद्धानां गुणक्रियाजातिरूपाणामर्थान्तरसाकाङ्क्षाणां योग्यानां पदार्थानामन्वयबोधकत्वदर्शनादिति शङ्कते ॥ **नन्विति** ॥ आरूपं श्वेतं कञ्चित्पदार्थमव्यक्तमगवाश्वादिरूपम् । पदार्थानामित्यतःपूर्वं दर्शनसिद्धरूपस्य श्रवणश्रुतहेषाखुरनिष्पेषशब्दानुमिताश्वत्वजातिगतिरूपक्रिययोश्चेति शेषः । किं येनैव पुरुषेण श्वैत्यसमानाश्रयौ हेषाध्वनिखुरनिष्पेषशब्दाववगतौ तस्यैवेयं श्वेतो धावतीति संसर्गधीरुत यस्य तथाऽनध्यवसायस्तस्यापीति । यदि तावदप्रत्ययाकलितहेषाध्वनिपादविहारनिर्घोषापादानस्यैतदुच्यते । तदपि तस्यार्थान्तराभावस्यानिश्चयो यदि तदा विशिष्टसंसर्गप्रतीत्यभ्युपगमे प्रतितीविरोधः । स ह्येवं प्रतिपद्यते । भवितव्यमस्मिन्देशे नूनमश्वेन भाव्यं च केनचिद्धावतेति । न पुनः श्वेतोऽश्वो धावतीति । अथाश्वसंबन्धिनमेव खुरपुटटङ्कारवमभ्यासपाटववशादवैति । तदाऽसावश्वसंबन्धिनीमेव वेगवतीं गतिमनुमिनोति न पुनः केवलामेवावगम्यान्वयं पदार्थसामर्थ्येनावबुध्यते । योऽप्यस्मिन्देशेऽश्वादन्यो नास्तीति निश्चत्य पारिशेष्याच्छाब्दापादानानध्यवसायेऽपि हेषादिध्वनेः श्वैत्यसामानाधिकरण्यमध्यवस्यति । तस्यापि गृहादर्शन इव बहिर्भावावगतौ प्रमाणद्वयविरोधरूपार्थापत्तिरेव । योऽयं श्वेतः स एवाश्व इत्यत्र तव मानम् । मम तु विशिष्टहेतुरूपमनुमानमेव

तत्र मानम् । यस्तु श्वैत्यसमानाधिकरणौ ह्रेषाध्वनिखुरपुटटङ्कारवावध्यवस्यति तस्य श्वेतद्रव्यवर्तिनि वेगवद्गमनसमानाधिकरणाश्वत्वे श्वेतोऽयं धावदश्वो भवितुमर्हति ह्रेषाध्वनिखुरनिष्पेषशब्दवत्त्वादित्यनुमानमेवावयोरिति प्रमाणान्तरासंबद्धावगतपदार्थानां न कदाचिदन्योन्यसंबन्धबोधकत्वमनुमानार्थापत्तिव्यतिरेकेण प्रतीतमित्याशयेनाह ॥ **तथा इति** ॥ **एतेषामिति** ॥ प्रत्यक्षज्ञाप्याव्यक्तश्वेतरूपजातिक्रियाज्ञापकह्रेषाखुरनिष्पेषशब्दलक्षणानामित्यर्थः ॥ **विशकलिततयेति** ॥ स्वरूपमात्रेणावसितानामित्यर्थः ॥ **आद्यइति** ॥ यत्र तत्रितयं तत्राश्वत्वमिति व्याप्तिमपेक्ष्य गमकत्वादित्यर्थः ॥ **आद्य इति** ॥ अर्थान्तराभावैतदन्यतरग्राहकप्रमाणद्वयविरोधेन तवार्थापत्तिः । अर्थान्तराभावविशिष्टैतदन्यतरस्याश्वत्वाविनाभावेन ममानुमानमित्यर्थः ॥ **अनध्यवसाय एवेति** ॥ विशिष्टपदार्थान्वयबोध एवेत्यर्थः । द्वितीयं शङ्कते ॥ **प्रमाणान्तरेति** ॥

स०— यद्यप्यन्योन्याश्रयादिदोषो नास्ति तथापि अभिहितपदार्थेभ्य एव संसर्गसिद्धौ पदानामपि सामर्थ्यकल्पनाया **गौरवदूषणमित्यभिहितान्वयवादी शङ्कत** इत्याह ॥ **अभिहितान्वयवादिन इति** ॥ यदि हि पदार्थानां संसर्गबोधकत्वं स्यात् तर्हि तदपहाय पदानामपि सामर्थ्यकल्पनायां गौरवं स्यादेव । न तु तदस्ति प्रमाणान्तरगृहीतपदार्थेष्वदर्शनादित्याह ॥ **तैरपीति** ॥ उक्तं च नाथेन । किन्तु ये तेषां न दृष्टैषा शक्तिः मानान्तरागतौ । कल्प्याविशिष्टार्थपरपदसंस्पर्शभावितेति । प्रमाणान्तरगृहीतानामप्यस्त्येव संसर्गबोधकत्वमिति शङ्कते ॥ **ननु पश्यतः श्वेतमारूपमिति** ॥ अत्र हि दृश्यमानं श्वेतरूपं श्रूयमाणौ ह्रेषाखुरनिष्पेषशब्दौ । वाक्याभावेऽपि श्वेतोऽश्वो धावतीति संसर्गबुद्धिं जनयन्ति । तेन ज्ञायते प्रतीतानामर्थानामेवान्वयबोधकत्वं न पदार्थानामिति । अत एव क्वाप्यनुपलब्धमित्यसदिति भावः ॥ **आद्येऽनुमानत्वमिति** ॥ अयं श्वेतः धावदश्वः ह्रेषाखुरनिष्पेषवत्त्वादित्यनुमानत्वमित्यर्थः । एवमग्रेऽपि ॥ **द्वितीये त्वनध्यवसाय एवेति** ॥ श्वेतोऽश्वो धावतीत्यध्यवसायो न भवत्येवेत्यर्थः । यत्र तत्र यमेकत्रावगतं तत्राश्वत्वं दृष्टमिति व्याप्त्या बोधकत्वादनुमानत्वमित्यर्थ इत्यप्याहुः ॥ **शक्तिद्वयं कल्पनीयमेवेति** ॥ पदार्थानामन्वयबोधकत्वशक्तिः । तेषामन्वयबोधकत्वाधानशक्तिश्चेति शक्तिद्वयं कल्पनीयमित्यर्थः ।

प०— भट्टमतमनूद्य निराह ॥ **अभिहितेति** ॥ पदार्थानामभावेऽपि पदार्थानामेव ज्ञातानामन्वयबोधकत्वमुपलब्धमिति नानुपलब्धकल्पना दोष इति शङ्कते ॥ **नन्विति** ॥ श्वेतं आरूपमिति विभागः । किञ्चिच्छ्वेतं रूपं पश्यत इत्यर्थः । अन्धकारावृतप्रदेश इति ध्येयम् ॥ **ह्रेषेति** ॥ अश्वध्वनेर्ह्रेषेति नाम । ह्रेषाख्यशब्दमित्यर्थः ॥ **खुरनिष्पेषशब्दं चेति** ॥ शृण्वत इत्यन्वयः खुरनिष्पेषशब्दरूपोऽर्थो धावनान्वयस्य ह्रेषाशब्दरूपोर्थोऽश्वान्वयस्य श्वेतरूपपदार्थो रूपान्वयस्य बोधक इति

श्वेतोऽश्वो धावतीति धीर्जायत इति पदार्थानामेव स्वज्ञानरूपव्यापारद्वाराऽन्वयबोधकत्वमित्यर्थः । स्वमतेनाह ॥ **अनुमानादिति** ॥ परमतेनाह ॥ **अर्थापत्तेर्वेति** ॥ **आद्ये अनुमानत्वमिति** ॥ अयं श्वेतः धावदश्वः हेषाखुरनिष्पेषशब्दवत्त्वात् । संमतवदितिप्रयोगप्रसङ्गादिति भावः ॥ **अर्थापत्तिर्भवता मिति** ॥ अर्थान्तराभावे सति श्रूयमाणहेषाखुरनिष्पेषशब्दान्यथानुपपत्तिरूपार्थापत्त्या तत्रत्यश्वेतस्य धावदश्वत्वप्रतीतिर्भाट्टानामित्यर्थः ॥ **तदिदमुक्तमिति** ॥ अन्यथाकल्पने पदाभिहितपदार्थानामेवान्वयबोधकत्वकल्पने शक्तिद्वयाङ्गीकारगौरवमिति मूलार्थ इति भावः । विस्तृतमेतदभिहितान्वयभङ्गे तर्कताण्डवे ।

**या०**— भाट्टमतं दूषयितुमनुवदति ॥ **अभिहितान्वयवादिन इति** ॥ पदार्थानामन्वयबोधकत्वं क्वाप्यनुपलब्धं कल्पनीयमित्येतदसहमानः शङ्कते ॥ **ननु पश्यत इति** ॥ श्वेतरूपं आ ईषत्पश्यत इत्यर्थः । श्वेतरूपमेव पश्यति न व्यक्तिविशेषसंसृष्टतयेति दर्शयितुमिदमिति ज्ञातव्यम् । यद्यपि पूर्वमुपस्थितानां प्रतीयमानान्वयप्रतियोगिनामेव पदार्थानामन्वयबोधकत्वमत्र प्रदर्शनीयम् । न येषांकेषाञ्चित् । अतिप्रसङ्गात् । हेषाखुरनिष्पेषशब्दौ च न श्वेतोऽश्वो धावतीति प्रकृतान्वयप्रतियोगिनौ । तथाऽपि पदार्थानामन्वयबोधकत्वे प्रतीयमानान्वयप्रतियोगित्ववत्तादृशान्वयप्रतियोगितावच्छेदकसामानाधिकरणत्वमपि तन्त्रतो नातिप्रसङ्ग इत्यभिप्रेत्याश्वत्वसमानाधिकरणस्य हेषाशब्दस्य धावनकर्तृत्वसमानानाधिकरणस्य खुरनिष्पेषशब्दस्य चान्वयबोधकत्वमात्रं प्रदर्शितमित्यवधेयम् ॥ **उक्तन्यायेनेति** ॥ उक्तनिदर्शनेनेत्यर्थः । तथा च यथा वाक्याभावेऽपि प्रमाणान्तरोपस्थितानां श्वेतादिपदार्थानामन्वयबोधे कारणत्वमुपलब्धं तथा पदोपस्थापितानामपि पदार्थानामन्वयबोधकारणत्वमस्तु न पदार्थानामिति भावः ॥ **अनुमानादिति** ॥ तथा च तत्रार्थानामन्वयबोधकारणत्वमनुमानादितयैव न पदार्थतयाऽनुमानमात्रोच्छेदप्रसङ्गात्ततश्च पदार्थानामन्वयबोधकरणत्वेनेदं निदर्शनमिति भावः ॥ **एषामिति** ॥ श्वेतरूपहेषाशब्दखुरनिष्पेषशब्दरूपार्थानामित्यर्थः । विशकलिततयेत्यत्र समानाधिकरणतयाऽनवगममात्रं विवक्षितं न तु व्यधिकरणतयाऽवगमोऽपि । तथा सति वक्ष्यमाणार्थापत्तेरनुमितेर्वाऽसंभवादित्यवधेयम् ॥ **आद्येऽनुमात्वमिति** ॥ उभयमतेऽपीति शेषः । सामानाधिकरण्यावगमेन हेतूकर्तुं शक्यत्वादिति भावः । अत एव सामानाधिकरण्यावगमाभावेऽर्थापत्तिर्भवतामिति वक्ष्यति । अनुमानं चेत्थम् । अयं श्वेतो धावदश्वो भवितुमर्हति । हेषाखुरनिष्पेषवत्त्वासंप्रतिपन्नवदिति । अत्र धावति गर्दभे बद्धेऽश्वे च व्यभिचारवारणाय हेतौ क्रमेण विशेषणद्वयम् ॥ **आद्येऽर्थापत्तिरिति** ॥ प्रमाणद्वयविरोधादिति भावः ॥ **अनुमानमेवेति** ॥ यद्यप्यत्र हेषाखुरनिष्पेषयोः सामानाधिकरण्यानवगमादुक्तहेतुरसिद्धस्तथाऽपि एते श्वेतादयः पदार्था धावदश्वधर्मिका निश्चिततद्भिन्नाश्रयाभावकत्वे सत्याश्रितत्वात् । यद्यद्भिन्नाश्रयाभाव-

कत्वेन निश्चितमाश्रितं च तत्तदाश्रितं यथा घटत्वमित्यनुमानं विवक्षितमतो न दोषः ॥ **अनध्यवसायेति** श्वेतोऽश्वो धावतीत्यध्यवसायो न भवत्येवेत्यर्थः ॥ **शक्तिद्वयमिति** ॥ पदानां पदार्थेष्वन्वयबोधकत्वाधानशक्तिः पदार्थानामन्वयबोधकत्वशक्तिश्चेति शक्तिद्वयमित्यर्थः ।

**श्री०—अर्थापत्तिर्भवतामिति** ॥ श्वेतरूपहेषादयः पदार्था विशकलिततयाऽवगम्यन्ते । तत्र च खराश्वतर्यादिपदार्थान्तराभावश्च निश्चितः । तदन्यथाऽनुपपत्त्या धावदश्वधर्मिका एवैते पदार्था इत्यर्थापत्तिर्भवतां भाट्टानां मते; अस्मन्मते त्वनुमानमेवेति न पदार्थानां तत्रान्वयबोधकत्वमित्यर्थः । अनुमानप्रकारस्त्वित्थम् । अयं श्वेतो धावमानाश्वो भवितुमर्हति हेषाखुरनिष्पेषशद्बवत्त्वात् संप्रतिपन्नधावदश्ववदिति । अत्र खुरनिष्पेषशद्बवत्त्वमात्रं धावति गर्दभे व्यभिचारि । तत्र धावमानत्वे सत्यप्यश्वत्वरूपविशेष्याभावेन विशिष्टाभावरूपसाध्याभावात् । अतो हेषेत्युक्तम् । हेषा स्यात्तुरगध्वनिरित्यभिधानान्न व्यभिचारः । हेषावत्त्वमात्रं बद्धेऽश्वे व्यभिचारि । तत्राश्वत्वे विद्यमानेऽपि धावमानत्वरूपविशेषणाभावेनविशिष्टाभावरूपसाध्याभावात् । अत उक्तं खुरनिष्पेषशद्बवत्त्वादिति । यद्यपि बद्धेऽश्वेऽपि खुरनिष्पेषशब्दोऽस्ति । तथाऽपि धावदश्वनिष्ठखुरनिष्पेषशद्बविशेष एव विवक्षित इत्यदोषः ॥ **पदैरभिहितानामिति** ॥ तथा च परम्परया शाद्बत्वमिति भावः ॥ **अन्वयबोधकत्वाधीनशक्तिरिति** ॥ केवलपदार्थानामन्वयबोधकत्वाभावेऽपि पदैरभिहितानां तु पदार्थानां भविष्यतीत्युक्त्या पदार्थेष्वन्वयबोधकत्वाधानशक्तिः पदानां प्राप्तेत्यर्थः ॥ **स्मारकत्वाङ्गीकारेऽपीति** ॥ तथा च पदानां न स्वार्थे शक्तिरिति शक्तित्रयं न कल्प्यत इत्यर्थः ।

च०— पदाभिहितपदार्थकरणकान्वयबोधवादिनां भाट्टानां मतमपनिनीषुरनुवदति ॥ **अभिहितान्वयवादिन इति** ॥

**सु०— ननु चान्विताभिधानवादिनोऽपि पदार्थेऽन्वये च शक्तिकल्पनाद्गौरवं समानमिति चेन्न; एकयैव शक्त्याऽन्वितार्थस्यैवाभिधानाङ्गीकारात् । तथाऽपि सामान्यान्विताभिधानवादे पदानामौत्सर्गिकी सामान्यान्वये शक्तिः पदान्तरसन्निधानाच्चागन्तुकी विशेषविषया शक्तिः पदान्तरे च तदाधानशक्तिरिति शक्तित्रयं कल्पनीयमिति चेन्न; आकाङ्क्षितसन्निहितयोग्यान्विताभिधानशक्तेरेकस्या एव पदान्तरसमभिव्याहारबलेन विशेषपर्यवसानस्योक्तत्वात् । ननु च पदकदम्बकश्रवणसमनन्तरं कुतश्चिन्मानसापराधादनुपजनितपदार्थस्मृतेर्वाक्यार्थप्रत्ययानुदयादुदयाच्चोपजातपदार्थस्मृतेरन्वयव्यतिरेकाभ्यां पदस्मारितपदार्थानां वाक्यार्थप्रत्या-**

**यकत्वमवसीयत इति । मैवम् । सङ्गतिस्मरणभावाभावाभ्यामन्यथोपपत्तेः । पदनिचयश्रवण-वाक्यार्थबोधावन्तरा पदार्थस्मृतीनामेवानभ्युपगमात् । एकैकपदश्रवणे पदार्थस्मृतिरस्ति ताव-दिति चेत् । किं तावता । किं सहकारिविरहिणो यत्कार्यं तदेव सहकारिलाभेऽपि । तथात्वे संस्कारस्येन्द्रियसहकारिलाभेऽपि प्रत्यभिज्ञानुभवजनकत्वं न स्यात् । किञ्च पदार्थबोध्यत्वे वाक्यार्थस्यानुमेयस्येवाशाब्दत्वम् । पदार्थाख्यसप्तमप्रमाणाङ्गीकारे गौरवं च स्यादिति ॥ तदेत-दाह गौरवं कल्पनेऽन्यथेति ।**

वा०— **एकयैवेति** ॥ न च केवलपदार्थशक्तिकल्पनापेक्षया विशिष्टशक्तिकल्पने गौरवमेवेति वाच्यम् । त्वद्वच्छक्तिद्वयकल्पनाभावादित्यत्र तात्पर्यात् ॥ **आकांक्षितेति**॥ आगन्तुकविशेषविषयकशक्ते-रेवाभावे आधेयशक्तेरेवाभावेन पदान्तरतदाधायकत्वशक्तेरप्यभाव इति भावः ॥०॥ नन्वन्वयव्यतिरेकाभ्यां पदार्थस्मृतेरन्वयबोधकत्वे सिद्धे प्रमाणान्तरावगतानां तेषां तदभावात्पदैरभिहितानामेव तत्कल्पनेति प्रमाणसिद्धेऽर्थे गौरवं न दोषायेति शङ्कते ॥ **नन्विति** ॥ **सङ्गतीति** ॥ तथा चान्वयव्यतिरेकयो-रन्यथासिद्ध्या न तद्बलात्पदार्थानां वाक्यार्थप्रत्यायकतानिश्चय इत्यर्थः । तर्हि मध्ये पदार्थस्मृतेर्वैयर्थ्य-मित्यत आह ॥ **पदेति** ॥ यद्वाऽङ्गीकृत्येदमुदितम् । वस्तुतस्तु मध्ये पदार्थस्मृतेरेवाभावादन्वय-व्यतिरेकौ दूरोत्सारितावित्याह ॥ **पदेति** ॥ अथवा सङ्गतिभावाभावाभ्यां वाक्यार्थप्रत्ययस्यान्यथोपपत्तेः । पदनिचयश्रवणवाक्यार्थबोधावन्तरा पदार्थस्मृतीनामेवाभावात्तदन्वयव्यतिरेकौ दूरोत्सारितावित्येकवाक्य-तया योजना द्रष्टव्या ॥ **एकैकेति** ॥ एवं चात्र क्लृप्ततया पदनिचयश्रवणस्थलेऽपि सा कल्प्यत-इति भावः ॥ **किं तावतेति** ॥ कल्पकाभावान्न कल्पना युक्तेत्यर्थः । गौरवशाब्दत्वादिदोषपरिजिही-र्षया पराभिहितो यः परिहारस्तन्निरासकतया न चाशक्त्येत्यादिभाष्यं योजयितुं तद्दोषमाह ॥ **किञ्चेति** ॥

स०— ननु सङ्गतिस्मरणभावाभावाभ्यामन्यथोपपत्तेरित्ययुक्तम् । यत्र व्यासङ्गदशायां वाक्यार्थ-बोधो न जायते तत्र पदार्थस्मरणाभावादेव तदभाव इति मयाऽपि वक्तुं शक्यत्वादित्यत आह ॥ **पदेति** ॥ पदनिचयश्रवणेत्यत्र शक्तिस्मरणमपि विवक्षितम् ।

प०— **उक्तत्वादिति** ॥ शक्तिश्चैवेत्यादित्रिपादीव्याख्यावसरे उक्तत्वादित्यर्थः ॥

**तदेतदाहेति** ॥ अन्यथा कल्पने पदार्थानामेवान्वयबोधकत्वकल्पने । प्रत्यक्षानुमानोपगमाना-गमार्थापत्त्यभावरूपप्रमाणषट्कादपि पदार्थाख्यसप्तमप्रमाणाङ्गीकारे गौरवं स्यादिति मूलार्थ इति भावः ॥

या०— **एकैकपदश्रवण इति** ॥ अवाक्यस्थपदश्रवण इत्यर्थः ॥ **प्रत्यभिज्ञानुभवेति** ॥ प्रत्युत तदपि स्मृतिजनकत्वमेवस्यादिति भावः ॥

श्री०— ननु पदस्मारितपदार्थानामेवान्वयबोधकत्वमङ्गीकार्यमन्वयव्यतिरेकाभ्यां तथाऽवगमादित्याशङ्कते ॥ **ननु चेति** ॥ मानसापराधो विषयान्तरसञ्चाररूपः ॥ **सङ्गतिस्मरणेति** ॥ पदनिचयस्मरणानन्तरं शक्तिस्मरणे सति वाक्यार्थबोधस्य जायमानत्वेन पदार्थस्मृतिं विनाऽन्यथाशक्तिस्मरणेन वाक्यार्थबोधस्योपपत्तेर्न पदार्थस्मृतिस्तदर्थं कल्प्येत्यर्थः । तदेवोपपादयति ॥ **पदनिचयेति** ॥ **अस्ति तावदिति** ॥ अवाक्यस्थपदश्रवणे पदार्थस्मृतिरेव भवति । न वाक्यार्थबोध इत्यनुभवसिद्धम् । तथा च पदार्थस्मृतीनामेवानभ्युपगमादित्युक्तमसदिति भावः । ननु सहकारिविरहिणः साधनस्य सकाशाद्यत्कार्यं तदेव सहकारिलाभेऽपि कुतो न भवतीत्यत आह ॥ **तथात्व इति** ॥ इन्द्रियसंन्निकर्षादिरूपसहकार्यभावदशायां संस्कारस्य स्मृतिमात्रजनकत्वेऽपीन्द्रियसन्निकर्षादिरूपसहकारिलाभे प्रत्यभिज्ञानजनकत्वं दृष्टं तन्न स्यात् । किं नाम तदानीमपि स्मृतिमात्रजनकत्वमेव स्यात् । न ह्येवमस्त्यतः प्रकृतेऽपि शक्तिस्मृतिरूपसहकार्यभावदशायामवाक्यस्थैकपदश्रवणस्य पदार्थस्मृतिमात्रजनकत्वेन वाक्यार्थबोधजनकत्वाभावेऽपि शक्तिस्मृतिरूपसहकारिसंपत्तौ सत्यां वाक्यार्थबोधजनकत्वमेव भविष्यति । न पदार्थस्मृतिजनकत्वमिति भावः ।

अनु०— न चाशक्त्याभिधायित्वम्

सु०— **नायं दोषः । पदानामेव पदार्थप्रतिपादनावान्तरव्यापाराणामन्वयप्रतिपादकत्वाङ्गीकारात् । न ह्यवान्तरव्यापारस्य व्यवधायकत्वमस्तीति चेत् । किमन्वयेऽप्यर्थवत्पदानां शक्तिरस्ति न वा । नास्तीति चेत्तत्राह ॥ न चाशक्त्येति ॥ न च तत्राशक्तं तदभिधत्त इति संभवति व्याघातादतिप्रसङ्गाच्च । तथा च तदवस्थं वाक्यार्थस्याशाब्दत्वं सप्तमप्रमाणापत्तिश्चेति भावः ।**

वा०— ननु चक्षुषो ज्ञानजननेऽर्थसन्निकर्षस्येव पदानामन्वयबोधजनने पदार्थप्रतिपादनमवान्तरव्यापार इत्येव कल्प्यते न त्वन्वयबोधकरणानां पदार्थानां पदबोधितत्वमात्रम् । येन प्रत्यक्षदृष्टधूमाद्यनुमितवन्ह्यादेरप्रत्यक्षत्ववदन्वयस्याशाब्दत्वं पदार्थानां प्रमाणान्तरत्वं च स्यात् । पदानां च कारणत्वस्य

क्लृप्तत्वात्कल्पनागौरवं च नेत्याशयेन शङ्कते ॥ **नायमिति** ॥ गौरवाशब्दत्वादिरूपः । शक्त्यनङ्गीकाराङ्गीकारविषययोर्वाक्ययोरेकविषयकत्वासंभवाद्विकल्पमुखेनोत्थापयति ॥ **किमन्वय इति** ॥ उभयत्र शक्तिपक्षे दोषं दृष्ट्वाऽन्वयपरत्वं वदतस्तन्मात्रे शक्तिरित्याशयः ।

स०— **नायं दोष इत्यादि** ॥ यथोक्तम् । 'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् । वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फलेति । वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् । पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनमि'ति । एतदप्युक्तम् न चाशक्त्येत्यादि ॥ अशक्त्याऽसहचर्यात्स्वार्थस्मारकत्वेन तत्र पदानां शक्त्यभावेऽपि अन्वयपरत्वरूपं वाऽन्वयलक्षकत्वरूपं वाभिधायित्वमुक्तरीत्या नेत्यनुव्याख्यानयोजना द्रष्टव्या ।

प०— **अतिप्रसङ्गाच्चेति** ॥ घटोऽस्तीत्यस्य पटोऽस्तीत्याद्यर्थाभिधायकत्वप्रसङ्गादित्यर्थः ॥

श्री०— **नायं दोष इति** ॥ शक्तिद्वयकल्पनारूपो दोषोऽशाब्दत्वरूपो दोषः पदार्थानां प्रमाणान्तरत्वरूपो दोषश्च नेत्यर्थः ॥ **व्याहतत्वादिति** ॥ अभिदधत इत्युक्त्या शक्तेरेव प्राप्तत्वादित्यर्थः ॥ **अतिप्रसङ्गाच्चेति** ॥ घटपदेन पटावबोधोऽपि स्यादित्यर्थः ।

च०— **अतिप्रसङ्गादिति** ॥ घटपदस्यापि गगनपदयोराधाराधेयभावसंबन्धस्मृतिसाचिव्येन गगनस्मारकतया तदभिधायकत्वप्रसङ्गादित्यर्थः ॥

**अनु०— प्रवृत्तिश्च द्विधाऽन्यथा ॥**

**सु०— अथ पदार्थेष्वन्वये चास्ति पदानां शक्तिः । तदा पदार्थानन्वयं च युगपत्प्रतिपादयन्ति उत क्रमेण । नाद्यः अन्विताभिधानप्रसङ्गात् पदार्थप्रतिपादनस्यावान्तरव्यापारत्वानुपपत्तेश्च । द्वितीये दोषमाह ॥ प्रवृत्तिश्चेति ॥ द्विधा प्रवृत्तिर्विरम्यव्यापारः । प्रसज्यत इति शेषः ॥ साहचर्यात्स्वार्थान्स्मारयन्त्यन्वयपराणि पदानि अतो न दोष इति चेन्न पदार्थाविषयाणां केवलतदन्वयपरत्वानुपपत्तेः ।**

वा०— स चानुपपन्न इत्याह ॥ **पदार्थेति** ॥

प०— **द्विधा प्रवृत्तिरित्यस्यार्थो** विरम्यव्यापार इति । अन्यथेति मूलपदस्य क्रमेण प्रतिपादयन्ति चेदित्यर्थोऽवतारिकायामेव व्यक्तोऽतो नोक्तः ॥ **साहचर्यादिति** ॥ हस्तिहस्तिपयोः साहचर्यादन्यतरदर्शनेऽन्यतरस्मृतिरेवं पदानि पदार्थे शक्तिविधुराण्यपि साहचर्यादर्थान्स्मारयन्तीति कारकपदम् । पदार्थाविषयाणां शक्त्या पदार्थाप्रतिपादकानामित्यर्थः ।

या॰— **अतो न दोष इति** ॥ द्विरभिधानाभावान्न विरम्यव्यापाररूपो दोष इति भावः ॥ **केवलतदन्वयेति** ॥ तथाऽनुभवाभावादतिप्रसङ्गाच्चेति भावः ॥ **पदार्थाविषयाणामिति** ॥ तदनभिधायिनामित्यर्थः ।

श्री॰— युगपत्प्रतिपादने दोषान्तरमाह ॥ **पदार्थेति** ॥ पदार्थानामन्वयस्य च शक्त्या क्रमेण प्रतिपादकत्वे खलु विरम्यव्यापारः स्यान्न चैवमस्तीत्याशङ्कते ॥ **साहचर्यादिति** ॥ हस्तिहस्तिपयोः साहचर्यादन्यतरदर्शनेनान्यतरस्मृतिरेवं पदानि पदार्थशक्तिविधुराण्यपि साहचर्यादर्थान् स्मारयन्तीति कारकपदम् ॥ **अन्वयपराणीति** ॥ अन्वये शक्त्या तात्पर्यवन्तीत्यर्थः ॥

**सु॰— अन्वयो लक्ष्यत इति चेत् । तर्हि पदार्थेषु साहचर्यात्स्मारकत्वमात्रमन्वये तु लक्षणैवेति पदानां न कुत्राप्यभिधानवृत्तिरिति स्यात् । तदभावे च न लक्षणापि संभवति । तद्द्वारत्वात्तस्याः । एतदप्युक्तं न चाशक्त्याभिधायित्वमिति । स्मारकत्वमेवाभिधायकत्वमिति चेन्न अतिप्रसङ्गादिति ।**

**तस्मात्पदैरेव वाक्यार्थप्रत्ययसंभवाद्युक्तं वेदप्रामाण्यमित्यतो युक्ता ब्रह्मजिज्ञासेति सिद्धम् ॥**

वा॰— ननूभयत्रैकत्र वा शक्त्यङ्गीकारे उक्तदूषणप्राप्तावपि न मन्मते तदवकाशः । विशिष्टार्थप्रत्यायनार्थप्रयुक्तपदकदम्बसमभिव्याहारान्यथाऽनुपपत्त्या पदस्मारितानामर्थानामन्योन्यान्वितानां पदलक्ष्यतयाऽङ्गीकारादित्याशङ्कते ॥ **अन्वय इति** ॥ पदार्थान्वये शक्त्यङ्गीकारे पदार्थेषु शक्तिप्राप्तेरनिष्टत्वेऽप्यन्वये लक्षणायां पदार्थेष्वपि लक्षणापत्तिर्नानिष्टेति भावः । नन्वभिधायकत्वं नाम न शक्यार्थप्रतिपादकत्वं किन्तु स्मारकत्वमात्रम् । तथा चाभिधानवृत्तेरभावेऽपि नानुपपत्तिः । न च शक्यार्थप्रतिपादकत्वरूपाभिधानवृत्तेर्वाच्यार्थानुपपत्तिवाच्यार्थसंबन्धद्वारा लक्षणोपयोगात्तदभावे लक्षणैव न स्यादिति वाच्यम् । 'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुमि'त्यादौ, लोके 'वायुर्वै क्षेपिष्ठा देवते'त्यादौ वेदे चान्वयानुपपत्त्यादेरभावेऽपि निष्प्रयोजने वाक्यप्रामाण्यानुपपत्त्या प्रतीयमानवाक्यार्थत्यागेन शूरादित्वं संपदो हेतुरित्याद्यर्थस्य लक्षणादर्शनेन वाच्यार्थानुपपत्त्यादेर्लक्षणायामतन्त्रत्वात्तस्माद्वाक्याप्रामाण्यापत्तिरेव लक्षणाबीजम् । तस्याश्च विशिष्टार्थप्रयुक्तसमभिव्याहृतानां पदानां स्मारितार्थमात्रपरत्वे प्राप्ते स्मरणरूपाभिधानवृत्तेरेव लक्षणाबीजत्वान्न शक्तिः प्रयोजिकेत्याशयेन शङ्कते ॥ **स्मारकत्वमेवेति** ॥ नेति पदवदर्थानामपि पदस्मारकत्वादभिधायकत्वापत्तिरित्यर्थः । न च शब्दज्ञानमभिधाव्यापारः । अर्थस्मृत्यर्थमेव पदप्रयोगात् । न ह्यर्थज्ञानं तथा । तत्तत्कार्यार्थ-

मप्यर्थोपादानात् । तथा चाभिधाव्यापारोपेतानां पदानामेवाभिधायकत्वं नार्थानामिति वाच्यम् । मध्येऽर्थस्मृतेरनभ्युपगमेन पदप्रयोगस्य तदर्थत्वासंमतेः । अर्थस्मृत्यर्थमेव लौकिकानां पदप्रयोगेऽपि नियामकत्वेन शक्तेरङ्गीकर्तव्यत्वाच्च । एतेन पदेष्वेव लौकिकानामभिधायकत्वव्यवहारान्नार्थानामभिधायकत्वमिति निरस्तम् । तन्मूलतयैव शक्तेरङ्गीकार्यताया उच्यमानत्वादिति भावः ।

स०— ननु पदार्थस्मारकत्वमेव तदभिधायकत्वमतो न कुत्राप्यभिधानवृत्तिः स्यादित्युक्तमयुक्तमित्याशयेन शङ्कते ॥ **स्मारकत्वमेवेति** ॥ **अतिप्रसङ्गादिति** ॥ धूमादिपदस्य सहचर्यवशान्महानसादिस्मारकत्वासंभवेन तदभिधायकत्वप्रसङ्गादित्यर्थः ।

प०—ननु मास्त्वभिधावृत्तिः किमनिष्टमित्यत आह ॥ **तदभावे चेति** ॥ **तद्द्वारत्वादिति** ॥ मुख्यार्थसंबन्धद्वारत्वाल्लक्षणाया इत्यर्थः ॥ **एतदपीति** ॥ अशक्त्या साहचर्येणाभिधायित्वं पदार्थस्मारकत्वं तथाऽशक्त्या लक्षणयाऽभिधायकत्वं न चेति मूलार्थ इति भावः । ननु अशक्तस्याभिधायकत्वे व्याघात इत्युक्तमयुक्तमिति भावेन शङ्कते ॥ **स्मारकत्वमेवेति** ॥ **अतिप्रसङ्गादिति** ॥ हस्तिशब्दस्यापि हस्तिपस्मारकत्वेन तदभिधायकत्वं स्यादित्यर्थः । शक्तिश्चेत्यादेः प्रकृतोपयोगं दर्शयन्नुपसंहरति ॥ **तस्मादिति** ॥ तस्यैव विवरणं पदैरेव वाक्यार्थप्रत्ययसंभवादिति ॥ अभिहितान्वयादिपक्षखण्डनम् ॥ अतःशब्दव्याख्यानं समाप्तम् ॥

या०— ननु पदार्थविषयाणां पदानां केवलान्वयाभिधायकत्वरूपतत्परत्वानुपपत्तावपि तल्लक्षकत्वरूपं तत्परत्वमुपपद्यत एवेत्याशङ्कते ॥ **अन्वयो लक्ष्यत इति** ॥ कथञ्चिद्वृत्तिविषयत्वान्न वाक्यार्थस्य शाब्दत्वापत्तिरिति भावः ॥ **एतदप्युक्तमिति** ॥ अत्राशक्यसाहचर्यात्स्वार्थस्मारकत्वेन तत्र पदानां शक्त्यभावेऽपि केवलान्वयवाचकत्वरूपं वाऽभिधायित्वमुक्तरीत्या नेत्यनुव्याख्यानयोजना द्रष्टव्या । ननु स्वार्थाभिधायकानामेव पदानां तदन्वयलक्षकत्वम् । अतो नोक्तदोष इति चेत् । अत्र प्रष्टव्यम् । पदानां स्वार्थाभिधायकत्वं किं तत्रशक्तत्वरूपं विवक्षितमुत पूर्वोक्तं तत्स्मारकत्वरूपमेवेति । नाद्यः । उक्तरीत्याऽन्वयेऽपि शक्तिसंभवे वृथा वृत्तिद्वयकल्पनायां गौरवात् । द्वितीयमाशङ्कते ॥ **स्मारकत्वमेवेति** ॥ **अतिप्रसङ्गादिति** ॥ धूमादिपदस्य स्वार्थसाहचर्यवशाद्वन्ह्यादिस्मारकत्वेन तदभिधायकत्वप्रसङ्गादित्यर्थः ॥

च०— **युक्ता ब्रह्मजिज्ञासेति स्थितमिति** ॥ वेदप्रामाण्यस्य निरवग्रहं समर्थितत्वादिति भावः ॥

सु॰ एवं तावद्ब्रह्मजिज्ञासाकर्तव्यत्वोपयुक्तं युक्तिजातमतःशब्दार्थत्वेन व्याख्यातम् । तेनाथशब्दार्थमेवातःशब्दार्थतया हेतुत्वेन व्याख्यातवतां वृत्तिकाराणमिव नास्माकं पुनरुक्तिदोष इत्युक्तं भवति ।

वा॰— एतत्सर्वमित्याद्युत्तरग्रन्थे भाष्यकारेणातःशब्दस्योक्तार्थत्वेऽनुपपत्तेः परिहारादेतेन चोपलक्षणतया न्यायानुपपत्तिपरिहारस्यापि सूचनाद्वृत्तिकारान्तरोक्तार्थपरित्यागेन किमित्यर्थान्तरकल्पनेत्यनुपपत्तिं तावत्परिहर्तुं पूर्वप्रकरणार्थानुवादमुखेन भूमिमारचयति ॥ **एवं तावदिति** ॥ यद्वैतत्सर्वमित्युत्तरग्रन्थेऽप्रकृतानामेषां हेतूनां न प्रकृतपरामर्शकातःशब्दार्थत्वं युक्तमित्याशङ्कायाः परिहारात्प्रकृतत्वादिधर्मविषयकतच्छङ्कायाश्चातःशब्दस्योक्तार्थत्वे सिद्ध एव प्रसाराद्वृत्तिकारान्तरोक्तार्थसंभवेनाप्रसिद्धार्थकल्पनं युक्तम् । पौनरुक्त्येन तदनुपपत्तौ च वेदप्रामाण्यविषये तवापि तत्साम्यमिति नोक्तार्थत्वं युक्तमिति धर्मिस्वरूपविषयशङ्कया प्रतिबन्धेन प्रथमत एवानवसरग्रस्ततयाऽनुपपत्तिपरिहारावसरे भाष्योक्तानुपपत्तिपरिहारात्पूर्वं वृत्तिकारान्तरैरतःशब्दार्थोक्तावपि भाष्यकारैरर्थान्तरोक्त्या पौनरुक्त्येन परोक्तार्थानुपपत्तेः सूचनात्प्रकारान्तरेण स्वपक्षेऽपि पौनरुक्त्यापत्तौ पौनरुक्त्येन परोक्तार्थत्यागानुपपत्तेस्तदन्यथाऽनुपपत्त्या प्रकारान्तरप्रसक्ततत्परिहारस्यापि सूचनात्सूचितमर्थं प्रतिपादयितुं भूमिमारचयति ॥ **एवं तावदिति** ॥ अत्र वृत्तिकाराणामिति न केवलं भास्करादीनामेव ग्रहणं किन्तु तथा व्याख्याने पुनरुक्तिमुद्भाव्यापवादशङ्कानिरासकत्वेन तत्परिहारमभिदधतां विवरणकारादीनामपीति ज्ञेयम् । अथशब्दार्थे विरागादौ हेतुसमर्पकतयाऽतःशब्दं व्याचक्षाणस्य भामत्यादेश्चैतदुपलक्षणम् । अथशब्दार्थानधिकाभिधायिनाऽप्यतःशब्देनाभ्यधिकाशङ्कानिरासेऽथशब्देनैव तन्निरासंभवात्पौनरुक्त्यतादवस्थ्यमित्याद्यदूषणमतः शब्देनेव विरागादिस्वरूपोपस्थापकाथशब्देनैव तद्बोधकप्रमाणोपस्थापनसंभवेन साधनस्वरूपालाभशङ्कापरिहारादतःशब्देनापि तत्परिहारे पौनरुक्त्यतादवस्थ्यमिति द्वितीयदूषणमपि पौनरुक्त्योपपादनेनैव सूचितम् । धर्मजिज्ञासानन्तर्यविशिष्टे ब्रह्मजिज्ञासाकर्तव्यत्वरूपे विशिष्टे साध्ये कर्मणामल्पास्थिरफलकत्वसहितो ब्रह्मज्ञानस्यानन्तस्थिरफलकतापातप्रतीतिरूपो विशिष्टो हेतुरतःशब्देन बोध्यत इति रामानुजीयव्याख्यानं त्वेतत्सर्वमिति मूलवाक्यावतारिकारूपे स्यादिति ग्रन्थेऽतःशब्दो हि प्रकृतस्य हेतुतामाहेत्यत्रातःशब्दस्याप्रकृतपरामर्शकत्वासंभवसूचनेन निरस्तप्रायमिति न वृत्तिकारान्तरपक्षनिरासप्रयुक्ता न्यूनतेति द्रष्टव्यम् ।

स॰— अथशब्दार्थमेव अधिकारिविशेषणस्य शमदमादेर्विचारहेतुत्वमेवेत्यर्थः । अतःशब्दार्थतयेत्युक्तं विशदयति ॥ **हेतुत्वेनेति** ॥ शमादेर्विचारहेतुत्वेनेत्यर्थः । वृत्तिकाराणां भास्करादीनाम् ।

प०— इतःपरं स्वयं भगवतेति पर्यन्तं अतःशब्दस्योक्तहेतुपञ्चकपरामर्शित्वानुपपत्तिनिरासः क्रियते ॥ **युक्तिजातमिति** ॥ मोक्षजनकप्रसादहेतुज्ञानोत्पादकत्वबन्धसत्यत्ववेदादिशब्दगतसिद्धार्थपरत्व-प्रामाण्यान्विताभिधायित्वरूपयुक्तिजातमित्यर्थः ॥ **अथशब्दार्थमेवेति** ॥ अथाधिकारादिसाधनसंपत्त्य-नन्तरम् । अतः अधिकारादेः संपन्नत्वादिति व्याकुर्वतामित्यर्थः ।

या०— **अथशब्दार्थमेवेति** ॥ अधिकारिविशेषणतया पूर्ववृत्तस्य शमादेर्ब्रह्मविचारहेतुत्वमेवे-त्यर्थः । अतः शब्दार्थतयेत्युक्तं विशदयति ॥ **हेतुत्वेनेति** ॥ आनन्तर्याभिधानमुखेनाथशब्दप्रतिपादित-हेतुत्वस्फुटीकरणार्थोऽतःशब्दः । अन्यथा स्फुटीकरणार्थमतःशब्दाभावेऽथशब्दस्य मङ्गलाद्यर्थान्तरपरता-शङ्काऽपि स्यादिति तेषां भावः ।

श्री०— **हेतुत्वेनेति** ॥ अथाधिकार्यादिसंपत्त्यनन्तरमतोऽधिकार्यादिसंपत्तेर्विद्यमानत्वादित्येवं हेतुत्वेनेत्यर्थः ॥

सु०— तथा हि । अथशब्दस्तावदानन्तर्याभिधानमुखेन हेतुतयैव पूर्ववृत्तमवगमयति । आनन्तर्यमात्रस्य विफलत्वात् अतोऽथशब्देनैव प्रकृतस्य हेतुत्वसिद्धेर्नातःशब्दोऽपेक्षितः । अथ-शब्दस्य हेतुत्वमार्थिकं नाभिधेयमिति चेत् । सत्यम् । तथाऽप्यार्थिके तात्पर्यात् । तस्यैव च वाक्यार्थेऽन्वयात् ॥ पूर्वमीमांसाव्याख्यातृभिरप्येवमेव व्याख्यामिति चेत् । किमेतावता । न हि पराङ्गं दग्धमिति स्वाङ्गदाहदुःखं निवर्तते । न चायमस्माकमस्ति दोषः । अथशब्दो हि जिज्ञासाजनकमधिकारि(त्वं,स्थं धर्ममनधिकारित्वशङ्कानिरासायानुवदति, अतःशब्देन तु विषय-प्रयोजनसिध्यङ्गभूतं न्यायकलापं सूत्रकारः स्वयमाचष्टे; इति कुतः पौनरुक्त्यम् ॥ अत एव पुनरुक्तिभयादथात इत्येकमेव पदं येऽभ्युपगतवन्तस्तेऽपि निरस्ता भवन्ति । अर्थभेदसंभवे अप्रसिद्धकल्पनानुपपत्तेः ।

ननु वेदप्रामाण्यादिकं पूर्वमीमांसायामुपपादितम् अतः किमर्थमत्र पुनः सूत्रितमिति चेन्न । तदुपजीवित्वस्याप्रतिज्ञातत्वात् । एतन्मीमांसोपजीविनी खलु सेति पुराणे पठ्यते 'शब्दजातस्य-सर्वस्य यत्प्रमाणश्च निर्णय' इति । तथाऽपि 'न विलक्षणत्वादि'त्यादिना वेदप्रामाण्यादेः सम-र्थनान्न तदतःशब्दार्थ इति चेन्न । एतत्प्रपञ्चत्वात् । क्वचिदर्थनिर्णये तात्पर्याच्च । तथा च वक्ष्यति 'स्वरूपनिर्णयायैवेति' 'यत्र तन्निर्णयमि'ति च । तथाऽपि कार्यपरत्वनिराकरणं नातः-शब्दार्थस्तस्यानुपदमेव 'तत्तु समन्वयादि'ति निराकरिष्यमाणत्वादिति चेन्न । जगज्जन्मादि-कारणतया शास्त्रयोनित्वस्य तत्रेतरनिरासेन ब्रह्मणि समर्थनात् । न हि कार्यवादिनः कार्यं तथाऽभ्युपयन्ति येन तत्र तन्निराकरणं सङ्गच्छेत ।

वा० — नन्वानन्तर्यमात्रवाचकाथशब्दस्य न हेतुत्वसमर्पकत्वमित्यत आह ॥ **तथा हीति** ॥ **आनन्तर्यमात्रस्येति** ॥ जिज्ञासापुष्कलकारणास्तित्वप्रतिपत्तौ प्रवृत्तिसंभवादन्यथाऽसंभवादिति भावः । आनन्तर्यमात्रोक्तेर्वैफल्येनाथशब्दार्थतो हेतुत्वलाभेऽप्यथशब्दस्यानन्तर्यमात्राभिधायित्वादतःशब्दस्य हेतुत्वमात्राभिधायित्वादभिधेयार्थभेदान्न पौनरुक्त्यमित्याशङ्कते ॥ **अथशब्दस्येति** ॥ आनन्तर्यमात्रस्याथशब्दाभिधेयत्वेऽपि तत्र तस्यातात्पर्यादार्थिके च तात्पर्यात्तदर्थेनैवाथशब्दस्यार्थवत्त्वमित्याह ॥**तथाऽपीति**॥ तात्पर्यविषयीभूतार्थेनैवार्थवत्त्वे नियामकमाह ॥ **तस्यैवेति** ॥ अन्यथा लक्षणास्थलेऽप्यभिधेयेनैवशब्दस्यार्थवत्त्वापत्त्या लक्षणोच्छेदापत्तेरिति भावः । व्याख्यातृसंप्रदायानभिज्ञतावदेकमेतादृशं निराकरणमिति शङ्कते ॥ **पूर्वेति** ॥ अज्ञानमूलकत्वान्न स संप्रदाय इत्याह ॥ **किमिति** ॥ **अथशब्दो हीति** ॥ अत्र जिज्ञासाजनकमित्युत्तरत्र सिद्ध्यङ्गभूतमित्युक्त्याऽथशब्देन च जिज्ञासाकारकस्यातःशब्देन च तत्प्रमाणस्योक्तिरित्यधिकारिस्थं धर्ममनुवदतीति विषयप्रयोजनसिध्यङ्गभूतं न्यायकलापं सूत्रकारः स्वयमाचष्ट इत्युक्त्या च शान्तो दान्त इत्यादिश्रुत्याद्युक्ताधिकारिस्थधर्मानुवादकत्वमात्रमथशब्दस्यातःशब्दस्य तु स्वयमेव विषयादिसिद्ध्यङ्गभूतवेदप्रामाण्यादिरूपन्यायकलापसूचकत्वमिति वैलक्षण्यमित्युक्तं भवति ॥ ॥ **अर्थभेदेति** ॥ अनेनासन्मतरीत्याऽर्थभेदसंभवेऽथशब्दोक्तहेतुत्वोपपादकत्वेन वाऽथशब्दसमर्पितविरागादिस्वरूपलाभसंपादकत्वेन वा विवरणाद्युक्तातःशब्दव्याख्यानमलग्नकमिति सूचितं भवति । नन्वेवं पुनरुक्तिपरिहाराय यतमानस्याथशब्देन पुनरुक्त्यभावेऽपि पूर्वमीमांसादिना तदपरिहारात्सर्वमिदं गजस्नानमित्याशङ्कते ॥ **नन्वित्यादिना** ॥ अप्रतिज्ञातत्वादित्यनेन तथाप्रतिज्ञातवतामिव नास्माकं मते तादृक्पर्यनुयोगार्हतेति सूचयति । ननु माऽस्तु तथा प्रतिज्ञा । वस्तुतस्तदुपजीवित्वात्पुनरुक्तिस्तदवस्थैवेत्यत आह ॥ **एतदिति** ॥ यद्वा तदुक्तार्थस्यात्रोक्तिमात्रेणास्य तेन पौनरुक्त्ये अनेन तस्य पौनरुक्त्यापत्ताऽस्य तदुपजीवित्वं वक्तव्यम् । तच्च रामानुजीयानामिवास्मत्प्रतिज्ञानुसारेणोत वास्तवाभिप्रायेणाहोस्वित्तदुपजीवनेनैवोपपत्तौ पुनःसूत्रणमयुक्तमिति । नाद्यः इत्याह ॥ **तदिति** ॥ न द्वितीय इत्याह ॥ **एतदिति** ॥ तृतीयपक्षं च पूर्वमीमांसायां तन्निरूपणस्यातीवसङ्गतिशून्यत्वात्तदुपजीवनं न युक्तमित्याशयेनात एव न तत्रोक्तस्यात्रोपजीवनमित्युत्तरग्रन्थेन निराकरिष्यतीति द्रष्टव्यम् । इत्यादिनेत्यादिपदेनाभिमान्यधिकरणस्यद्वितीयाध्यायीयतृतीयचतुर्थपादयोश्च ग्रहणम् । साधारणं परिहारमभिधाय तृतीयादिपादांशे विशेषेण तमाह ॥ **क्वचिदिति** ॥ अर्थनिर्णये वियदाद्युत्पत्त्यादिरूपप्रमेयनिर्णये । अत्र तत्पादद्वयभाष्यं ज्ञापकत्वेनाह ॥ **यथेति** ॥ पूर्वपक्षी स्वकृतापव्याख्यानानुसारेण शङ्कते ॥ **तथाऽपीति** ॥ तस्यैवासङ्गतत्वान्न तदनुरोधेन पौनरुक्त्यशङ्कोचितेत्याह ॥ **न जगदिति** ॥

**स०**— ननु स्यादेतदेवं यदि भास्करादिभिरित्थं व्याख्यातं स्यात् । नैतदस्ति । किन्त्वथ शमादिसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येत्युक्ते; कुतः, न हि रासभसंपत्त्यनन्तरं घटः कर्तव्य इत्याशङ्कायां नाधिकारिविशेषणतया प्रकृतस्य शमादेः रासभतुल्यता तस्य जिज्ञासाहेतुत्वादित्यतःशब्देनोच्यत इति । सति चैवं क्व पौनरुक्त्यं इत्यत आह ॥ **तथा हीति** ॥ सत्यमेवं तैर्व्याख्यातमिति तथापि शमाद्यानन्तर्य-विचारस्य यदाऽथशब्देनोक्तं तदा शमादेस्तन्नियतपूर्ववर्तित्वरूपं हेतुत्वं लब्धमेव । अन्यथाऽऽनन्तर्यकथनं व्यर्थमापद्येत । तस्य च पुनरतःशब्देनाभिधाने कथं न पौनरुक्त्यम् । न चोक्तशङ्कानिरासायातःशब्द इति वाच्यं हेतुत्वस्याथशब्देनैव लाभे शङ्काया एवानुदयादित्याशयः ॥ **न विलक्षणत्वादित्यादिनेति** ॥ आदिपदेन समस्ताध्यायग्रहणम् । तत्र ह्युक्तार्थे युक्त्यादिविरोधपरिहारेण वेदप्रामाण्याद्युपपादनात् । **क्वचिदर्थनिर्णय इति** तृतीयचतुर्थपादयोरित्यर्थः । स्वरूपनिर्णयायैवेत्यस्य पूर्ववाक्यं 'करिष्यन्नधिदैवा-धिभूतजीवपरात्मनामि'ति । यत्र तन्निर्णयमित्यस्य च पूर्ववाक्यं 'श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते' इति ।

**प०**— कथं तेषां पौनरुक्त्यमित्यत आह ॥ **अथशब्दस्तावदिति** ॥ **पूर्ववृत्तमिति** ॥ यदनन्तरं ब्रह्मजिज्ञासा कर्तव्येत्युच्यते । तत्पूर्वसंपन्नमानन्तर्यप्रतियोगिभूतं वस्तु जिज्ञासाकर्तव्यतायां हेतुत्वेनावगमयति । अन्यथा यत्किञ्चिदानन्तर्यस्य कार्यमात्रेपि संभवेनाथानन्तरमिति न वक्तव्यमेव स्यात्फलाभावादिति भावः ॥ **तस्यैवेति** ॥ तात्पर्यविषयस्येत्यर्थः । वाक्यार्थे जिज्ञासाकर्तव्यत्वादि-रूपार्थे ॥ **एवमेवेति** ॥ अथाध्ययनानन्तरं अतः अध्ययनस्य निर्वृत्तत्वाद्धर्मजिज्ञासाकर्तव्येत्यर्थः ॥ **अनधिकारित्वशङ्कानिरासायेति** ॥ यद्यपि ब्रह्मादिपदेन चिदचिद्विलक्षणविषयसिद्ध्यैव तज्ज्ञानादिद्वार-मोक्षफलसिद्ध्या मुमुक्षुरधिकारी सिद्ध इत्यनधिकारिकत्वशङ्काविषयार्पकब्रह्मपदादिनैव निरस्ता तथापि मुमुक्षुमात्रस्याधिकारित्वे स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरेत्यादिविरोधेन प्राप्ताया पुनर्निरधिकारिकत्व-शङ्का तस्याः निरासाय मुक्तियोग्यत्वाध्ययनशमादिरूपा साधारणधर्मरूपमधिकारित्थं धर्मविशेषं मन्दा मध्योत्तमत्वेन त्रिविधा ह्यधिकारिण इत्यादिभाष्योक्तवचनजातेनापशूद्राधिकरणन्यायेन च अध्ययनमात्रवत इति ज्ञानपादीयाधिकरणोक्तन्यायेन च प्राप्तमनुवदतीत्यर्थः ॥ **विषयप्रयोजनेति** ॥ अतः पदस्य हि मोक्षहेतुप्रसादजनकज्ञानकारणत्वात् । बन्धस्य सत्यत्वात् । वेदस्य सिद्धार्थवस्तुपरत्वात् । वेदस्य प्रामाण्यात् । अन्विताभिधायकत्वाच्चेत्येवं युक्तिपञ्चकपरत्वेनातःशब्दः पञ्चधा व्याख्यातः । तत्राद्यद्वयं प्रयोजनसिद्ध्यङ्गभूतम् । अन्त्यत्रयं तु विषयसिद्ध्यङ्गभूतमितिविषयप्रयोजनसिद्ध्यङ्गभूतन्यायकलाप-मित्युक्तम् ॥ **तेऽपि निरस्ता इति** ॥ एवमत इति भिन्नं पदमुपेत्याप्यपौनरुक्त्याऽर्थान्तरं वदन्तो वाचस्पतिप्रभृतयोऽपि चन्द्रिकायां निरस्ता ध्येयाः । रामानुजप्रक्रियामनुसृत्य शङ्कते ॥ **ननु वेदेति** ॥

**पुराण इति** ॥ भाष्योक्तस्कान्दपुराण इत्यर्थः । शब्दजातस्येति कर्तरि षष्ठी । यः शब्दसमूहैः क्रियमाणो निर्णयो यत्प्रमाणः यद्ब्रह्मसूत्रमूलक इत्यर्थः । अन्यार्थं तु जैमिनिरित्याद्युक्तविस्तृतिरूपत्वात् पूर्वतन्त्रस्यैतदुपजीवित्वं ध्येयम् ॥ **क्वचिदिति** ॥ द्वितीयाध्यायतृतीयचतुर्थपादयोर्वेदवचसामन्योन्य-विरोधपरिहारेण प्रामाण्यसमर्थनं तदर्थनिर्धारणाभिप्रायमित्यर्थः ॥ **वक्ष्यतीति** ॥ वियत्पादोपक्रमे 'अथाशेषसमाम्नायविरोधापाकृतिं प्रभुः । करिष्यन्नधिदैवाधिभूतजीवपरात्मनाम् । स्वरूपनिर्णयायैव वचनानां परस्परम् । पादेनानेनाविरोधं दर्शयत्यमितद्युतिरि'ति । तथा द्वितीयस्य चतुर्थपादोपक्रमे च । 'श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते । यत्र तन्निर्णयं देवस्सुविशिष्टोपपत्तिभिः । करोती'ति च वक्ष्यतीत्यर्थः ॥ **तत्रेति** ॥ तत्तु समन्वयादित्यत्रोपक्रमादिबलेन वेदतात्पर्यस्य ब्रह्म निर्णेष्यमाणत्वादिति भावः । यद्वा सिद्धार्थबोधने फलाभावात्कार्यपरत्वं वेदान्तानामिति शङ्का तत्त्वित्यत्र निरस्यत इति रामानुजीयशङ्का सिद्धान्तरीत्या परिहार इति ध्येयम् ॥

**या०**— इममेव पराभिप्रायं पौनरुक्त्योपपादनाय विशदयति ॥ **तथाहीत्यादिना** ॥ **नातः-शब्दोऽपेक्षित इति** ॥ तथा च तदुक्तौ पौनरुक्त्यमिति भावः । अथशब्दस्यानन्तर्यमात्राभिधायित्वा-दतःशब्दस्य च हेतुत्वाभिधायित्वान्न पौनरुक्त्यमिति शङ्कते ॥ **अथशब्दस्येति** ॥ अनभिधेयत्वमङ्गी-करोति ॥ **सत्यमिति** ॥ तर्हि न पौनरुक्त्यं तत्राह ॥ **तथाऽप्यार्थिक इति** ॥ अभिधेये आनन्तर्यमात्रे-तात्पर्यस्य वैफल्यप्रसङ्गेनासम्भवादिति भावः । आर्थिकार्थे तात्पर्येऽपि तस्यानभिधेयत्वान्न पौनरुक्त्यमित्य-त्राह **तस्य चेति** ॥ तात्पर्यविषयस्यैवेत्यर्थः । तथा च तात्पर्यविषयीभूतप्रमेयैक्यात्पौनरुक्त्यं स्यादेवेति भावः । न च मङ्गलाद्यर्थान्तरपरताशङ्कानिरासरूपप्रयोजनसद्भावान्न पौनरुक्त्यमित्याशङ्कनीयम् । वाक्यार्थे समन्वयाभावादिना तच्छङ्काया अत्रानवतारादिति पूर्वमेवोक्तत्वात् । अन्यथा ब्रह्मादिशब्देष्वपि जात्यादिपरताशङ्कापरिहाराय पदान्तरप्रयोगप्रसङ्गादिति ॥ **एवमेवेति** ॥ आनन्तर्याभिधानमुखेन स्वाध्याया-ध्ययनस्य धर्मजिज्ञासाहेतुत्वमथशब्देनोक्तमतःशब्देन स्फुटीक्रियत इति व्याख्यातमित्यर्थः ॥ **अप्रतिज्ञा-तत्वादिति** ॥ अथशब्देनाप्रतिपादनादित्यर्थः । यथा रामानुजीयादिभिरथशब्दाभिधेयानन्तर्यावधिभूत-कर्मज्ञानस्य पूर्वमीमांसासाध्यत्वेनैतन्मीमांसायास्तदुपजीवित्वमुक्तं न तथाऽस्माभिरुक्तम् । अथशब्दान-न्तर्यावधिभूतस्यास्मदभिमतस्याधिकारिविशेषणस्य शमादेः पूर्वमीमांसानपेक्षत्वादिति भावः ॥ **न विलक्षणत्वादित्यादिनेति** ॥ अत्रादिपदेन समस्ताध्यायग्रहणम् । तत्र ह्युक्तार्थे युक्त्यादिविरोधपरिहारेण वेदप्रामाण्योपपादनात् । नाभाव उपलब्धेर्वैधर्म्याच्च न स्वप्नादिवत् पृथगुपदेशादित्यादिना च द्वितीय-पादोपात्तस्य प्रपञ्चमिथ्यात्वनिराकरणतत्सत्यत्वजीवेशभेदादेः समर्थनादित्यर्थः ॥ **क्वचिदर्थेति** ॥

तृतीयचतुर्थपादयोरित्यर्थः । स्वरूपनिर्णयायैवेत्यस्य पूर्ववाक्यं 'करिष्यन् अधिदैवाधिभूतजीवपरमात्मनाम्' इति । यत्र तन्निर्णयमित्यस्य च पूर्ववाक्यं 'श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यत' इति ॥ **निराकरिष्यमाणत्वादिति** ॥ कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते यावताऽऽम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यक्रियार्थत्वादिति शङ्कापरिहाराय तत्तु समन्वयादिति सूत्रस्य परेण व्याख्यातत्वात्तदनुसारेणेयमाशङ्केति ध्येयम् ।

**श्री० — आनन्तर्यमात्रस्येति** ॥ अकारणानन्तर्यस्येत्यर्थः ॥ **अत इति** ॥ कारणानन्तर्यस्यैव वक्तव्यत्वादित्यर्थः ॥ **ताभ्यामुपयन्तीति** ॥ जगज्जन्मादिकारणतया शास्त्रयोनित्वेनेत्यर्थः ॥

**अनु० —** एतत्सर्वं तर्कशास्त्रे ब्रह्मतर्के हि विस्तरात् ॥
उक्तं विद्यापृथक्त्वात्तु संक्षेपेणात्र सूचितम् ॥

**सु० —** स्यादेतत् । तथाप्येतदयुक्तम् । अतःशब्दो हि प्रकृतस्य हेतुत्वमाह । न पुनर्वेदप्रामाण्यादिकमेव साक्षात् । न चात्र तत्प्रकृतम् । अस्यैव प्रथमवाक्यत्वात् । पूर्वमीमांसाप्रकृतोपजीवनं तु नेष्यत एव । न च कार्यनिराकरणं तत्प्रकृतम् । तत्कथमस्यार्थस्यातःशब्दार्थतया व्याख्यानम् । अन्यथोत्सूत्रिताभिधाने भाष्यत्वव्याघातः ॥ किञ्चायमर्थो ब्रह्मजिज्ञासाकर्तव्यतायामत्यन्तोपयुक्तो विस्तरादेव पूर्वमीमांसायामिव वक्तव्यः सूत्रकृतैव । अत इति सङ्क्षेपेण कस्मादुक्त इत्याशङ्काद्वयं परिहरति ॥ **एतत्सर्वमिति** ॥ यस्मादित्यर्थे हिशब्दः । तुशब्दस्यात्र स्थिति संबन्धः । तस्मादित्यर्थे वा । यस्मादेतत्सर्वं प्रमेयं ब्रह्मतर्काभिधेयतर्कशास्त्रे विस्तरादुक्तम् । तस्मादत्र मीमांसोपक्रमेऽत इति सङ्क्षेपेण सूचितमित्यनेन शङ्काद्वयमपि परास्तम् । ब्रह्मतर्कोक्तत्वेन प्रकृतत्वादिदं(दतः)शब्देन परामर्शो युज्यते । तत्रैव विस्तरेणोक्तत्वादत्र सङ्क्षेपकरणं चोपपद्यत इति ।

ग्रन्थान्तरोक्तस्य कथमत्र प्रकृतत्वम् । तथात्वे वा कुतो न पूर्वमीमांसोक्तपरामर्शोऽयमिष्यत इत्यत उक्तम् ॥ **तर्कशास्त्र इति** ॥ तर्कशास्त्रं हि मीमांसाङ्गमिति वक्ष्यति ॥ ब्रह्मतर्के विस्तरेणोक्तत्वमत्र सङ्क्षेपकरणस्य घटकमात्रं न नियामकम् । तत्र विस्तरेणोक्तस्यात्रापि विस्तरेणोक्तौ बाधकाभावात्प्रस्थानभेदेनापुनरुक्तेरित्यत उक्तम् ॥ **विद्येति** ॥

वा०— उत्तरमूलस्य बुद्ध्या विवेकेन शङ्काद्वयपरिहारकत्वेन योजयितुं शक्यत्वात्तदनुसारेण शङ्काद्वयमुत्थापयति ॥ **स्यादेतदिति** ॥ पूर्वमीमांसायामिवेत्युक्तिरुत्तरत्र तदनौचितीं प्रदर्शयितुमुपक्षेपायेति द्रष्टव्यम् । हिशब्दस्य यस्मादित्यर्थकत्वस्यावश्यकत्वाद्धेतुहेतुमद्भावेन व्याख्याने नात्रत्यतुशब्दस्य विशेष-प्रयोजनमित्यत आह ॥ **तस्मादित्यर्थे वेति** ॥ **इदंशब्देनेति** ॥ यद्यप्येतदोऽनित्युक्तत्वादत इत्येतदो-रूपमित्येतच्छब्देनेत्येव वक्तव्यम् । तथाऽप्येतदोऽनित्यत्रेदम इशित्यत इदम इत्यनुवृत्तिरस्त्वित्याशयेन वाऽयं प्रकृतोऽत इतिशब्द इदंशब्द इत्याशयेन वेदंशब्देनेत्युक्तमिति द्रष्टव्यम् । तर्कशास्त्र इत्यस्य तत्सिद्धेरिति वक्ष्यमाणमीमांसाङ्गत्वयुक्तिसूचकत्वेनोक्तशङ्कापरिहारकत्वमित्याह ॥ **तर्केति** ॥

स०—**इदंशब्देन परामर्श इति** ॥ अयं चासौ शब्दश्च इदंशब्दः तेन सौत्रातःशब्देनेत्यर्थो लभ्यते । तेनातःशब्दस्यैतदोऽशित्यनेनैतदोऽशित्यादेशे निष्पन्नतया कथमिदंशब्देनेत्युक्तमिति शङ्का-ऽनवकाशः । एवमग्रेऽपि । अथत्रेदम इश् इत्यतः एतदोशितिसूत्रे इदंशब्दस्यानुवृत्तेर्वक्तुमशक्यत्वात् । इदम्शब्दादपि अशुप्रत्ययोपपत्तौ अत इत्यस्येदं रूपत्वसंभवात् इदंशब्देनेति युक्तमिति ।

प०—**एतदिति** ॥ पञ्चधाऽतःशब्दस्य व्याख्यानमध्ये यदाद्यं ज्ञानी प्रियतमोऽतो मे इत्यादिना कृतं मोक्षहेतुप्रसादजनकज्ञानकारणार्थकत्वरूपं व्याख्यानं तस्य 'इत्यादेर्न हरिं विना । ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि क्वचिदि'त्यत्रोक्तदिशोपपन्नत्वेऽपि बन्धसत्यत्वाद्यर्थचतुष्टयपरत्वव्याख्यानमयुक्त-मित्यर्थ. ॥ **प्रकृतस्य हेतुत्वमाहेति** ॥ अत इति एतच्छब्दस्य पञ्चम्यर्थकतसिलन्तस्य रूपम् । एतस्मादित्यर्थे पञ्चम्यास्तसिलिति पञ्चम्यास्तसिलादेशे एतदोशिति प्रातिपदिकस्याशादेशे अत इति निष्पन्नत्वात् । तथा चात इति प्रातिपदिकाकारेण प्रकृतं परामृश्य तसिल्प्रत्ययेन हेतुत्वं जिज्ञासा-कर्तव्यतां प्रतिवक्तीत्यर्थः ॥ **न पुनर्वेदप्रामाण्यादिकमिति** ॥ यद्यपि बन्धसत्यत्वादिकमिति वक्तव्यं तथाऽप्यतो यथार्थबन्धस्येत्येतद्व्याख्यानावसरे बन्धमिथ्यात्वमाशङ्क्य सेयमाशङ्काऽतःशब्देनापेक्षितार्थहेतु-सूचकेन निराकृतेति ग्रन्थेन बन्धसत्यत्वपरामर्शित्वमुपपादितं मत्वा प्रामाण्यादीत्येवोक्तम् । आदिपदेन वा तस्य संग्रहः । नन्वेवं तेनैव न्यायेन वेदप्रामाण्यादिपरामर्शित्वमपि नानुपपन्नमिति चेत् सत्यम् । प्रकारान्तरेणाप्युक्तार्थपरामर्शित्वोपपादनायेयमाशङ्क्येति अदोषः ॥ **तत्प्रकृतमिति** ॥ पूर्वमीमांसाप्रकृतं च नेत्यर्थः । तत्र कार्यपरत्वस्यैव पूर्वमीमांसकैः वर्णनादिति भावः ॥ **अतःशब्देन परामर्शो युज्यत इति** ॥ क्वचिदिदंशब्देनेत्यपि पाठः । स च लेखकदोषमूलो ध्येयः । अयं चासौ शब्दश्च इदंशब्द-स्तेन अतःशब्देनेति यावदिति वाऽर्थो ध्येयः ।

**या०**— अभ्युपेत्याह ॥ **न च कार्यनिराकरणमिति** ॥ एवमग्रेऽपि ॥ **वक्ष्यतीति** ॥ 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥' इत्यत्रेति शेषः ।

**श्री०**— **अयमर्थ इति** ॥ वेदप्रामाण्यादिरूप इत्यर्थः ॥

**च०**—**अतःशब्दो हि प्रकृतस्य हेतुत्वमाहेति** ॥ एतदोऽनति प्रकृत्यंशस्यानादेशे तत्प्रकृतिकपञ्चम्याश्च पञ्चम्यास्तसिलिति तसिलादेशे निष्पन्नोऽतःशब्दः । सर्वनामरूपप्रकृत्यंशोपस्थाप्यस्य प्राचीनमते ज्ञापकत्वरूपं हेतुत्वं नव्यमतदिशा ज्ञानज्ञाप्यत्वं वा आहेत्यर्थः । प्रपञ्चितं चैतच्चन्द्रिकाभावदीधितावस्माभिः । **तर्कशास्त्रं हि मीमांसाङ्गमिति वक्ष्यतीति** ॥ 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनमि'त्यत्रेत्यादिः ॥

**सु०**— **एतदुक्तं भवति । अस्ति तावत्तर्कमीमांसाविद्ययोः पृथक्त्वम् । वेदाः सर्वाङ्गानि सत्यमायतनमिति पृथक् श्रवणात् । वेदाश्चत्वारः सर्वाङ्गानीति पुराणस्मृतितर्कशास्त्रसहितानि षडङ्गानि गृह्यन्ते । सत्यमिति मीमांसा । तथा च चतुर्दशविद्यास्थानान्युक्तानि भवन्ति । तदर्थं च व्युत्पाद्यभेदेनावश्यम्भवितव्यम् । ततश्च प्रमेयव्युत्पादनपरे मीमांसाशास्त्रे तर्कशास्त्रव्युत्पाद्यं वेदप्रामाण्यादिकं यदि विस्तराद्व्युत्पाद्येत तदा विद्याभेदो न स्यात् । संक्षेपेण सूचने तु नायं दोषः । प्रायिकत्वाद्विद्याभेदस्य ॥ सर्वथाऽन्योन्यासंस्पर्शेऽङ्गाङ्गिभावानुपपत्तेः । अतोऽत्रास्य सर्वस्य संक्षेपकरणमेवोचितमिति ॥ अनेन जैमिनीयानां प्रमाणलक्षणादिनिरूपणं नातीव मीमांसायां सङ्गतमिति सूचितं भवति । अत एव न तत्रोक्तस्यात्रोपजीवनमिति ।**

**वा०**— ननु विद्यापृथक्त्वोक्तेस्तत्रोक्तस्यात्र विस्तरेणोक्तौ बाधकाभावादिति पूर्वोक्तदोषपरिहाराक्षमत्वमित्येव नापि त्वपौनरुक्त्यसंपादकत्वेन प्रतिकूलत्वमेवेत्यतस्तदभिप्रायं विद्यापृथक्त्वे साधकं वदन्नेवाह ॥ **इदमुक्तं भवतीति** । यद्यपि 'ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम् । मूलरामायणं चैव पुराणं भगवत्परम् । वेदा इत्युच्यते सद्भिः शिक्षाद्यं स्मृतयस्तथा । अङ्गानि सत्यं मीमांसा तद्विद्यायतनं त्रयमि'ति तलवकारोपनिषद्भाष्योदाहृत एतद्व्याख्यानरूपे प्रमाणे पुराणादीनां वेदशब्देन ग्रहणमङ्गशब्देन तु शिक्षादीनां स्मृतिशब्दोक्तधर्मशास्त्रस्यैव ग्रहणमित्युक्तं तर्कशास्त्रस्य तु न केनापि ।

तथाऽपि वेदान्तरङ्गतया वेदशब्देन गृहीतानामपि पुराणादीनामितिहासपुराणाभ्यां वेदं समुपबृंहयेदित्युक्त-रीत्या वेदार्थप्रतिपत्तिहेतुतया सर्वाङ्गानीत्यत्रत्यसर्वशब्दस्वारस्यानुरोधेन च शिक्षादिवदङ्गशब्देनैव ग्रहणं युक्तम्। 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश'त्युक्तरीत्या न्यायशब्दोक्ततर्कशास्त्रस्याप्युपलक्षणत्वेन प्रमाणे ग्रहणम्। वेदशब्दश्च मुख्यवृत्त्या चतुष्टयमात्रपर इत्यभिप्रेत्योपनिषद्वाक्यं व्याख्याति ॥ **वेदा इत्यादिना** ॥ अत्र पुराणशब्दः प्रमाणानुसारेण भारत-पञ्चरात्रमूलरामायणानामुपलक्षणमिति बोध्यम्। 'निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम्। श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयैतया। सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चये' इति प्रमाणं मनसि निधाय सत्यमिति मीमांसेति भाष्यमनुकरोति। नन्वेषामेव कुतोऽत्रोपपादनं कुतश्च प्रमाणानुक्तस्यापि तर्कशास्त्रस्यात्र सङ्ग्रह इत्यत आह ॥ **तथा चेति** ॥ अन्यथा यथास्थितप्रमाणानुसारेणाधिक्यस्य वा पुराणस्य भारतादित्रयस्य चैकत्वविवक्षायां त्रयोदशत्वस्य वा प्राप्त्या चतुर्दशविद्यास्थानानि नोक्तानि स्युरिति भावः। नन्वेवं सङ्क्षेपेण सूचनमपि न स्यात्। एवं च प्रायिकत्वस्याप्यनाश्रयणेन मुख्य एव विद्याभेदः सिध्येदित्यत आह ॥ **सर्वथेति** ॥

**स०— अत एव न तत्रोक्तस्येति** ॥ असङ्गतप्रतिपादकत्वादेवेत्यर्थः।

**प०— इति पृथक्श्रवणादिति** ॥ तलवकारोपनिषदि श्रवणादित्यर्थः। कथमत्र मीमांसाया-स्तर्कशास्त्रात्पार्थक्योक्तिरित्यतस्तद्वाक्यं व्यनक्ति ॥ **वेदाश्चत्वार इति** ॥ यद्यपि 'ऋग्यजुःस्सामाथर्वाख्याः पञ्चरात्रं च भारतम्। मूलरामायणं चैव पुराणं भगवत्परम्। वदा इत्युच्यते सद्भिः शिक्षाद्यं स्मृतय-स्तथा। अङ्गानि सत्यं मीमांसा तद्विद्यायतनं तथे'ति तलवकारभाष्येऽन्यथा वेदादिस्वरूपमुक्तम्। तर्कशास्त्रं च नोक्तम्। तथापीहानुग्राह्यप्रमाणानां वेदपदेन ग्रहणं वेदोपबृंहकत्वेन तदङ्गत्वात्पुराणादेः अङ्गपदस्वारस्येन सर्वाङ्गानीत्यनेन पुराणादीनां ग्रहणम्। अनुक्तस्यापि तर्कस्योपलक्षकत्वमुपेत्य वा शिक्षाद्यमित्यत्राद्यपदेन वा ग्रहणमभिप्रेत्य व्याख्यानान्तरमित्यदोषः। षडङ्गानि शिक्षाकल्पो व्याकरणं निरुक्तं छन्दोज्योतिषमिति षडङ्गानि। 'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दशे'ति स्मृतिं हृदि कृत्वाह ॥ **तथाच चतुर्दशेति** ॥ **अनेनेति** ॥ ब्रह्मतर्कस्याङ्गत्व-कथनेनेत्यर्थः ॥ **प्रमाणलक्षणादिनिरूपणमिति** ॥ तद्धि पद्धत्यादौ व्यक्तम् ॥

**या०—** नन्वत्र कथं मीमांसायास्तर्कशास्त्रात्पार्थक्योक्तिरित्यतस्तद्वाक्यं व्याचष्टे ॥ **वेदाश्चत्वार इति** ॥ नन्विदं व्याख्यानं 'ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम्। मूलरामायणं चैव पुराणं भगवत्परम्। वेदा इत्युच्यते सद्भिः शिक्षाद्यं स्मृतयस्तथा। अङ्गानि सत्यं मीमांसा तद्विद्यायतनं

त्रयम्' इति तलवकारभाष्योदाहृतप्रमाणविरुद्धम् । तत्र पुराणस्य वेदान्तर्भावकथनात् । तर्कशास्त्रस्याकथनाच्चेत्यत आह ॥ **तथा च चतुर्दशेति** ॥ तथा च 'पुराणन्यायमीमांसाधर्मशास्त्राङ्ग-माश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥' इति प्रमाणान्तरोक्तविद्यास्थानविवक्षा-माश्रित्य प्रकृतोपयोगार्थमित्थं व्याख्यातम् । एवं च प्रमाणद्वयबलाद्विवक्षाभेदेन व्याख्यानद्वयमपि श्रुत्यभिप्रेतमिति भावः ॥ **प्रायिकत्वादिति** ॥ प्राधान्याभिप्रायकत्वादित्यर्थः । तथा च योऽर्थो यत्र प्राधान्येन प्रतिपाद्यते सा विद्या तदर्थेति भावः । ननु किं प्रायिकत्वाङ्गीकारेण विद्याभेदभङ्ग-भयात्सङ्क्षेपेणापि सूचनं नाङ्गीकार्यमित्यत आह ॥ **सर्वथाऽन्योन्येति** ॥ **जैमिनीयानामिति** ॥ जैमिनीयानामित्युक्त्या प्रमाणलक्षणादिकं सूत्रार्थतया शबरादिभिरेव वर्णितम् । न तत्सूत्रकारस्य जैमिनेरभिप्रेतमिति सूचयति ॥ **अत एवेति** ॥

अनु०— प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः ॥
मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥

सु०— तदेव प्रपञ्चयति ॥ **प्रमाणेति** ॥

अथवा विद्यापृथक्त्वादित्युक्तम् । तत्रास्तु तर्कमीमांसाविद्ययोः पृथक्त्वम् तथाप्यत्र विस्तरेण वेदप्रामाण्यव्युत्पादने को दोष इत्याशङ्क्य; विद्यापृथक्त्वं च व्युत्पाद्यपृथक्त्वादेव, तच्चै-तदित्याह ॥ प्रमाणेति ॥ प्रमाणानि प्रत्यक्षादीनि त्रीणि । न्यायोऽनुमानाङ्गभूता व्याप्तिः ।

अथवा न्यायो व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनात्मकस्तर्कः । तस्यानुमानात्मकत्वेऽपि प्रमाणानुग्राहकत्वातिशयवत्त्वज्ञापनाय पृथगुक्तिः ।

अथवा प्रमाणे प्रत्यक्षमागमश्च, न्यायोऽनुमानं, तस्य मीमांसायामभ्यर्हितत्वाद्भेदेनोप-न्यासः ।

अथवा प्रमाणानां प्रत्यक्षादीनां न्यायः प्रकारः स्वरूपसङ्ख्याविषयव्यवस्था । तस्य सच्छिक्षोद्देशलक्षणविभागपरीक्षाभिर्निरूपणम् । तर्कशास्त्रत इति तृतीयार्थे तसिः । तुशब्दो मीमांसा त्विति संबध्यते । तत्सिद्धैस्तर्कशास्त्रव्युत्पादितैः । मेयशोधनं प्रमेयस्यारोपिताकार-निराकरणेन स्वरूपनिरूपणं क्रियते । मीमांसाशास्त्रत इति शेषः । अयं व्युत्पाद्यभेदो न स्याद्यदि मीमांसाशास्त्रेऽपि वेदप्रामाण्यादिकं विस्तराद्व्युत्पाद्येत । तदभावे च विद्याभेदोऽपि न स्यात् । अतः सङ्क्षेपेणैवास्य सूचनमत्र युक्तमिति भावः ॥ अत्र तत्सिद्धैरिति वदता तर्क-शास्त्रस्य मीमांसाङ्गत्वमुक्तम् । तेन तत्र प्रकृतस्यात्र परामर्शो नानुपपन्न इति सूचितं भवति ।

**वा०**—एवं विद्यापृथक्त्वोक्त्या तदुपपादकस्य प्रतिपाद्यपृथक्त्वस्यार्थतो लाभमभिप्रेत्य तयोरुपपाद्योपपादकताप्रकारं प्रदर्श्य प्रतिपाद्यपृथक्त्वस्वरूपप्रदर्शनेन तत्प्रपञ्चकतया प्रमाणेति वाक्यं योजितम् । अधुना पूर्ववाक्योक्ते विद्यापृथक्त्वे हेतुत्वेन प्रतिपाद्य पृथक्त्वमभिप्रेत्य तत्स्वरूपं प्रमाणेतिवाक्येनोच्यत इत्युत्तरवाक्यस्वारस्यानुरोधेन पक्षान्तरमाह ॥ **अथवेति** ॥ अङ्गिप्रायेऽङ्गोपादानं न स्वरसमित्यत आह ॥ **अथवेति** ॥ पृथगुक्तेः प्रयोजनेऽवश्यवक्तव्ये किमनुमानविशेषोपादानेन तत्सामान्यस्यैव ग्रहणमस्तु । एवं च न्यायपदस्वारस्यमधिकम् । पूर्वपक्षे न्यायपदस्य प्रमाणपदस्य चास्वारस्यमित्याशयेनाह ॥ **अथवेति** ॥ प्रयोजनोत्प्रेक्षाशून्यमुभयपदस्वारस्योपेतं पक्षान्तरमाह ॥ **अथवेति** ॥ अत्र न्यायसच्छिक्षाशब्दयोरपौनरुक्त्यायार्थभेदमाह ॥ **न्याय इत्यादिना** ॥ पञ्चमीतसिलो हेतुत्वमात्रलाभेऽपि कारणत्वं मूलारूढं कर्तुमाह ॥ **तृतीयार्थ इति** ॥ मेयशोधनस्य मुख्यस्यासंभवादुपचारेण प्रकृतोपयुक्तमर्थमाह ॥ **मेयेति** ॥ तर्कशास्त्रात्प्रतिपाद्यभेदकथनावसरे प्रमेयान्तरप्रतिपादकत्वे प्रतिपाद्ये मीमांसाया वक्तव्ये स्वप्रतिपाद्याभेदकथनं नोपपद्यत इत्यतः शास्त्रत इत्यस्यानुषङ्गेण व्याख्याति ॥ **शास्त्रत इतीति** ॥ तथा च मीमांसाशास्त्रत इति समासैकदेशोक्तिर्भाष्य इति भावः । उक्तस्य प्रतिपाद्यभेदस्य तात्पर्यमाह ॥ **अयं चेति** ॥

**स०**— **मीमांसाशास्त्र इति शेष इति** ॥ अत्र शास्त्रत इत्येव शेषः । न तु समग्रस्य । मीमांसेत्यस्य श्रवणात् । तथा च मूले मीमांसाशब्दोऽविभक्तिकप्रातिपदिकनिर्देश इति सूचितं भवति । पूर्वं तुशब्दो मीमांसा त्विति संबन्धत इत्युक्तिस्तु यथास्थिताभिप्रायेण । वस्तुतस्तु मीमांसाशास्त्रतस्तु इति तुशब्दसंबन्धो द्रष्टव्यः । यद्वा मेयशोधनं मीमांसेति सामानाधिकरण्यम् । मेयशोधनलक्षणा मीमांसा तु मीमांसाशास्त्रतः क्रियत इति योजना । अस्मिन् पक्षे तुशब्दस्य मीमांसेत्यनेनैव संबन्धः क्रियत इति पदस्यानुवृत्तिः । मीमांसाशास्त्रत इत्येतावतः शेषत्वमिति द्रष्टव्यम् ।

**प०**— **तृतीयार्थे तसिरिति** ॥ प्रतियोगे पञ्चम्यास्तसिरित्यत्र आद्यादिभ्य उपसंख्यानमित्यत्र सर्वविभक्त्यर्थे तसेरुक्तत्वात् आद्यादेश्चाकृतिगणत्वादिति भावः । आद्यादिभ्यः प्रथमादिभ्य इत्यर्थ इत्येके । मेयशोधनरूपं मीमांसाविचारणं मीमांसाशास्त्रेण क्रियत इति मूलयोजनामुपेत्याह ॥ **मीमांसाशास्त्रत इति शेष इति** ॥ मीमांसेति प्रातिपदिकमात्रनिर्देशः । शास्त्रत इत्येव शेष इत्येके ॥

**श्री०**— **तच्चैतदिति** ॥ तच्च विद्यापृथक्त्वम् । एतद्वक्ष्यमाणमित्यर्थः । मीमांसा मेयशोधनमित्यत्र क्रियत इत्यन्वयस्वारस्याय मीमांसपदमनूद्य तदनन्तरमध्याहार्यं दर्शयति ॥ **मीमांसाशास्त्रत इति शेष इति** ॥ तथाच मीमांसाशास्त्रतस्त्वित्यन्वयः ।

अनु०— ब्रह्मतर्कं च भगवान्स एव कृतवान्प्रभुः ॥

सु०— ननु ममद्वीर्घवद्वेत्यादिना तर्कशास्त्रं निराकरिष्यते । तत्कथं तस्य ब्रह्ममीमांसाङ्गत्वम् । विरुद्धयोरङ्गाङ्गिभावस्य व्याहतत्वात् । तथा च कथं तत्रोक्तस्यात्रेदंशब्देन परामर्शः । कथं च ततो भेदसिद्धये व्युत्पाद्यभेदोपपादनम् । प्रमाणत्वाप्रमाणत्वाभ्यामेव तद्भेदस्य सिद्धत्वादित्यत आह ॥ ब्रह्मतर्कं चेति ॥ स प्रभुर्यो मीमांसासूत्रकृदित्यर्थः । एव शब्देन न कणादाक्षपादादिप्रणीतं तर्कशास्त्रमत्राङ्गतयाऽङ्गीक्रियते; अतो नोक्तदोष इति सूचयति ॥

वा०— ननु ब्रह्मतर्कं चेत्युत्तरवाक्ये सूत्रकृत्प्रणीतत्वेन तर्कशास्त्रस्याङ्गत्वेनोपादानव्युत्पादनमयुक्तम् । अन्यस्याप्रसक्तेः । प्रसक्तौ वा तस्यापि ग्रहणे बाधकाभावादित्यतस्तत्प्रसक्तिं तदुपादाने वक्ष्यमाणनिराकरणानुपपत्तिं निराक्रियमाणस्याप्यङ्गत्वेऽनुपपत्तिं पूर्ववाक्योक्तव्युत्पाद्यभेदे चानुपपत्तिं दर्शयन्नुत्तरवाक्यमवतारयति ॥ नन्विति ॥ उक्तदूषणपरिहारायैवकारःयच्छेद्यं दर्शयति ॥ एवेति ॥ यदत्राङ्गत्वेन विवक्षितं ब्रह्मतर्काभिधं तर्कशास्त्रं तद्यो ब्रह्ममीमांसासूत्रकृद्भगवान्स एव प्रभुः कृतवानित्यङ्गत्वेन विवक्षितं सूत्रकृदित्युक्त्या यत्सूत्रकृत्कृतं तदेवाङ्गत्वेनात्र विवक्षितमिति सिध्यति । तथा चेतरव्यावृत्तिलाभ इति भावः ।

या०— सूत्रे तस्यानुक्तत्वाद्भाष्यादेरसङ्गतार्थत्वादिति भावः ॥ इदंशब्देन परामर्श इति ॥ अयं चासौ शब्दश्चेदंशब्दः । ततश्च सौत्रातःशब्देनेत्यर्थो लभ्यते । तेनातःशब्दस्यैतदोशित्यनेन एतदः अश् इत्यादेशो निष्पन्नतया एतच्छब्देन परामर्श इति वक्तव्यम् तत्कथमिदंशब्देनेत्युक्तिरिति शङ्कानवकाश इति ध्येयम् ।

अनु०— पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात् ॥
उद्धृत्य पञ्चसाहस्रं कृतवान्बादरायणः ॥

सु०—ननु कथं सूत्रकृता कृतो ब्रह्मतर्क इत्युच्यते । ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितमिति तस्यान्यकृतत्ववचनात् । न च वाच्यं विष्णुकृतोऽप्येकोस्तु, अयमपरः किं व्यासकृतो ब्रह्मतर्को न स्यादिति; भगवत्कृतस्य तस्याप्रामाण्ये कारणाभावात् । अत्राप्यनाश्वासप्रसङ्गाच्च । प्रामाण्ये तु व्यर्थं व्यासस्यैकविषये ग्रन्थान्तरनिर्माणमित्यत आह ॥ पञ्चाशदिति ॥

ननु च कथं विस्तारादिति । प्रथने वावशब्द इति प्रतिषेधात् । मैवम् । पञ्चाशद्भिः कोटिभिः श्लोकैर्विस्तारः प्रपञ्चो यस्यार्थस्य तस्मात्किञ्चिदर्थमुद्धृत्य पृथक्कृत्य तत्प्रतिपादकं, पञ्चसहस्राणि परिमाणमस्येति पञ्चसाहस्रं, ग्रन्थं कृतवानिति व्याख्यानात् । यद्यपि व्यासो न विष्णोरन्य इति परिहारोऽत्र वक्तुं शक्यत एव तथाऽपि वस्तुस्थितिज्ञापनाय भगवतो व्यासस्य पृथग्ग्रन्थरचने प्रयोजनमभिहितमिति ज्ञातव्यम् । अत एव विष्णुनेत्यस्य विवरणाय नारायणतनावित्युक्तम् । तथा च नारायणावतारे विष्णुना कृतादिति योजना ॥ अथवा नञा निर्दिष्टमनित्यमिति वचनात्पञ्चाशत्कोटि(टयो)विस्तारो यस्य ग्रन्थस्येत्यपि युक्तम् । तथा च कृतादिति मुख्यमेव भवति । अन्यथा लाक्षणिकं व्याख्येयमिति ।

वा०— उत्तरवाक्ये व्यासस्य ग्रन्थान्तरनिर्माणप्रयोजनाभिधानात्तद्व्यावर्त्यशङ्कामुत्थापयितुं प्रसञ्जयति ॥ नन्विति ॥ प्रथन इति ॥ वावुपपदे शब्दाविषयके कथने वाच्ये स्तृञो घञिति सूत्रार्थः । तथाच ॠदोरबित्यपैव भवितव्यमित्याशयः । [ प्रथने वावशब्दे । विपूर्वात्स्तृणातेर्घञशब्दविषये प्रथने । पटस्य विस्तारः । विस्तारस्तिर्यगायतिः । प्रथने किम् । तृणस्य विस्तरः । अशब्दे किं ग्रन्थविस्तरः । ॠदोरप् । नायं तकारः किन्तु दकारः । करः । गरः । शरः । यवः । लवः । स्तवः । पवः । निरभ्योः पूल्वोरित्याद्यारम्भादित्याशयेन दीर्घान्तानप्युदाहरति लवः पव इति । स्तृञ आच्छादने । स्तृणातिप्वादीनामिति ह्रस्वः शिति । ] ॥ तत्प्रतिपादकमिति ॥ योग्यतया संबन्धितमिति द्रष्टव्यम् ॥ पञ्चसाहस्रमिति ॥ तदस्य परिमाणमित्यण् । अत्र सङ्ख्यायाः संवत्सरसङ्ख्यस्य चेति सूत्रे सङ्ख्यायाः उत्तरस्य संवत्सरपदस्य सङ्ख्यायाश्च ञिति णिति किति प्रत्यये परतोऽचामादेरचः स्थाने वृद्धिविधानादुत्तरपदवृद्धिरिति द्रष्टव्यम् । [ सङ्ख्यायाः संवत्सरसङ्ख्यस्य च । सङ्ख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ । द्विसांवत्सरिकः । द्वे षष्टी भृते द्विषाष्टिकः । परिमाणान्तरस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे काले परिमाणस्याग्रहणार्थम् । तेन द्वैमासिक इत्युत्तरपदवृद्धिर्न । ] ॥ अत एवेति ॥ वस्तुस्थितिकथनस्य भाष्याभिमतत्वादेवेत्यर्थः । अन्यथा नारायणतनावित्यस्य प्रयोजनान्तराभावाद्वैयर्थ्यमेव स्यादिति भावः ।

स०— विष्णुकृतव्यासकृततर्कशास्त्रद्वयमङ्गीक्रियते चेत् विष्णुकृतस्याप्रामाण्यमङ्गीक्रियते वा उत प्रामाण्यमिति विकल्पौ मनसि निधाय क्रमेण दूषयति ॥ भगवत्कृतस्य तस्येत्यादिना ॥ प्रथने वावशब्द इति प्रतिषेधादिति ॥ प्रथने गम्यमाने विपूर्वात् स्तृणातेः घञ्प्रत्ययो भवति । तच्च-

त्प्रथनं न शब्दविषयं भवतीति प्रतिषेधादित्यर्थः ॥ **अथवा नञा निर्दिष्टमनित्यमिति** ॥ अशब्द इत्यत्र नञा निर्दिष्टमित्यर्थः ॥ **अत एव विष्णुनेत्यस्येति** ॥ अत एव वस्तुस्थितिज्ञापनार्थमभिहितत्वा-देवेत्यर्थः । अन्यथा नारायणतनावित्यस्य प्रयोजनाभावादिति भावः । अनेन नारायणस्य विष्ण्ववता-रत्वकथनेन व्यासस्यापि तत्सूचनाद्यद्यपीत्याद्युक्तं प्रमेयं ज्ञापितं भवतीति ध्येयम् ॥ **लाक्षणिकं व्याख्येयमिति** ॥ कृतादित्येतत्प्रकाशितादिति व्याख्येयमित्यर्थः ॥

**प०—वचनादिति** ॥ द्वितीये गीतातात्पर्योक्तनारदीयवचनादित्यर्थः । एवं वादिनस्तव मते विष्णुकृतं तर्कशास्त्रमप्रमाणमुत प्रमाणमिति विकल्पं हृदि कृत्वा आद्ये आह ॥ **भगवत्कृतस्येति** ॥ अन्त्ये आह ॥ **प्रामाण्ये त्विति** ॥ प्रथने वावशब्द इति प्रतिषेधादिति । तृतीयस्य तृतीयपादे प्रेस्त्रो-ऽयज्ञ इति पूर्वसूत्रात्स्तृञ् आच्छादन इति धातुमनुवृत्य वौ विशब्दउपपदे स्तृधातोः घञ्प्रत्ययो भवति । प्रथने अशब्दे शब्दाविषयविस्तीर्णत्वे गम्यमाने । शब्दविषये गम्यमाने तु घञ्न भवति । ऋदो-रबित्यप्प्रत्यय एव भवतीत्युक्तत्वेन शब्दविषयप्रथने घञ्प्रत्ययप्रतिषेधादित्यर्थः ॥ **वस्तुस्थितिज्ञापनायेति** ॥ वस्तुगत्या व्यासकृतब्रह्मतर्कस्यान्यत्वज्ञापनायेत्यर्थः ॥ **प्रयोजनमभिहितमिति** ॥ सङ्क्षेपेणात्र सूचित-मित्यनेनेत्यर्थः ॥ **अत एवेति** ॥ वस्तुस्थितिज्ञापनार्थं प्रवृत्तत्वादेवेत्यर्थः । अन्यथा नारायणतनावित्यस्य प्रयोजनाभावादिति भावः ॥ **विष्णुनेत्यस्येति** ॥ ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितमिति वाक्य-गतस्येत्यर्थः ॥ **नञा निर्दिष्टमिति** ॥ अशब्दे शब्दाविषये, शब्दविषये प्रथने तु नेति नञ निर्दिष्टमित्यर्थः । अनित्यत्वज्ञापकमुक्तं तेनानिष्टमित्येतद्व्याख्यानावसरेऽस्माभिः ॥ **कृतादितिमुख्य-मेवेति** ॥ शब्दनिष्ठस्यैव कृतत्वस्य लाभादिति भावः ॥ **अन्यथेति** ॥ पूर्वव्याख्याने लाक्षणिकं शब्दनिष्ठं कृतत्वम् । अर्थे कृतत्वासंभवात्कृतादित्येतत्प्रकाशितादिति व्याख्येयमित्यर्थः । उपलक्षणमेतत् । किञ्चिदर्थमुद्धृत्य तत्प्रतिपादकमित्यध्याहारकल्पनापि पूर्वव्याख्यान इति लक्षणया व्याख्येयमित्यर्थः ।

**या०— प्रथने वाविति** ॥ प्रथने गम्यमाने विपूर्वात् स्तृणातेः घञ्पत्ययो भवति तच्चेत्प्रथनं शब्दविषयं न भवतीति शाब्दविषयप्रथने घञः प्रतिशेधादित्यर्थः ॥ **वस्तुस्थितिज्ञापनायेति** ॥ वस्तु-गत्या व्यासकृतब्रह्मतर्कस्यान्यत्वज्ञापनायेत्यर्थः ॥ **अत एवेति** ॥ वस्तुस्थितिज्ञापनार्थं प्रवृत्तत्वादेवेत्वर्थः । अन्यथा नारायणतनावित्यस्य प्रयोजनाभावादिति भावः ॥**विष्णुनेत्यस्येति**॥ ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितमिति वाक्यगतस्येत्यर्थः ॥ **अन्यथा लाक्षणिकमिति** ॥ अर्थे कृतत्वासंभवात्कृतादित्येतत्प्रका-शितादिति व्याख्येयमित्यर्थः । उपलक्षणं चैतत् । किञ्चिदर्थमुद्धृत्य तत्प्रतिपादकमित्यध्याहारकल्पनाऽपि पूर्वव्याख्यान इति ज्ञेयम् ॥

**श्री०**— अन्यकृतत्वेऽपि व्यासभिन्नविष्णुकृतत्ववचनादित्यर्थः । विष्णुकृतब्रह्मतर्कभिन्नस्य ब्रह्मतर्कस्य व्यासकृतत्वे किं विष्णुकृतस्य ब्रह्मतर्कस्याप्रामाण्यं विवक्षितं प्रामाण्यं वा । आद्ये आह ॥**भगवत्कृतस्येति**॥ विष्णुकृतस्य ब्रह्मतर्कस्येत्यर्थः । अत्रापि व्यासकृतब्रह्मतर्केऽपि । उभयोरपि भगवत्कृतत्वेन तत्कृतत्वाविशेषादस्याप्यप्रामाण्यं स्यादिति भावः । द्वितीये त्वाह ॥ **प्रामाण्ये त्विति** ॥ विष्णुकृतब्रह्मतर्के विद्यमाने सति वेदप्रामाण्यादिरूपैकप्रमेयविषय एव । पुनर्व्यासस्य ग्रन्थान्तरनिर्माणं व्यर्थमित्यर्थः ॥ **प्रथन इति** ॥ तथाच विपूर्वकात् स्तृधातोरशब्दे प्रथने शब्दविषयप्रथनाविवक्षायामर्थविषयकप्रथनविवक्षायामिति यावत् । घञ्प्रत्यये घकारञकारयोर्लोपे अकारमात्रे उर्वरिते सति विस्तृ अ इति स्थिते ऋवर्णस्याचोञ्णितीति ञित्वादिवृद्धौ विस्तार्+अ=विस्तारेति रूपम् । तत्र शब्दविषयप्रथनविवक्षायां घञः प्रतिषेधेन तत्प्रयुक्तवृद्ध्यप्राप्तौ विस्तरादित्येव स्यान्न तु विस्तारादितीति भावः । अत्र शब्दविषयप्रथनं न विवक्षितं किं त्वर्थविषयकमेवातो घञि वृद्धौ विस्तारादिति युक्तमित्याशयेन विग्रहं दर्शयति ॥ **पश्चाशङ्किरिति** ॥ यथोक्तममरकोशे । विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तर इति ॥ **परिहार इति** ॥ ननु कथं सूत्रकृता कृतो ब्रह्मतर्क इत्युच्यते 'ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितमि'त्यन्यकृतत्ववचनादिति शङ्काया इति शेषः ॥ **नारायणावतार इति** ॥ विष्णुना मूलरूपिणा नरनारायणावतारे कृतादित्यर्थः ॥ **नञा निर्दिष्टमिति** । अशब्द इति नञा निर्दिष्टस्यानित्यत्वेन शब्दविषयप्रथनविवक्षायामपि घञ्प्रत्यये विस्तारादिति युक्तमित्यर्थः ।

**च०**— **प्रथने वाविति** ॥ शब्दाविषयके प्रथने गम्यमाने विपूर्वात् स्तृणातेर्घञ् इति सूत्रार्थः ॥

**अनु०**— **अतस्तदर्थं सङ्क्षेपादत इत्यभ्यसूचयत् ॥**

**सु०**— **शङ्काद्वयपरिहारमुपसंहरति ॥ अत इति ॥ यतोऽयमर्थो ब्रह्मतर्कोक्तो ब्रह्मतर्कश्च मीमांसाङ्गमतस्तदर्थं प्रकृतत्वादत इत्यभ्यसूचयदिति युज्यत इत्याद्यशङ्कापरिहारस्योपसंहारः । यतस्तर्कमीमांसाशास्त्रयोर्भेदः स च व्युत्पाद्यभेदाधीनोऽतस्तदर्थं तर्कशास्त्रव्युत्पाद्यमेतमर्थमत इति सङ्क्षेपादेवाभ्यसूचयन्न विस्तरेणेति द्वितीयशङ्कापरिहारस्येति ।**

**वा०**— शङ्काद्वयपरिहारोपसंहारत्वोपपत्तये त इति तत्पद्योग्यपरामर्शविषयोपदर्शकयच्छब्दोपेतवाक्यमध्याहृत्य निष्कृष्टहेतुस्वरूपं दर्शयन्नेव वाक्यं योजयति ॥ **यतोऽयमर्थ इत्यादिना** ॥ सङ्क्षेपादि-

र्युक्तिबलादेवावधारणलाभमभिप्रेत्य तद्व्यावर्त्यं दर्शयति ॥ **नेति** ॥ ननु प्रकृतत्वोपपादनाय ग्रन्थोक्तत्वे वक्तव्येऽनुभवसिद्धत्वोक्तिरसङ्गतेत्यत आह ॥ **वक्त्रिति** ॥ अत्रात इति परामर्शविषयस्य यतोऽनुभवत: सिद्धमिति मूल एव दर्शितत्वाच्छङ्काद्वयपरिहारोपयुक्तनिष्कृष्टहेतुस्वरूपमात्रप्रदर्शनम् । **प्रकृतत्त्वादिति** स्फुटत्वादिति ।

**प०— शङ्काद्वयेति** ॥ एतत्सर्वमित्यादिग्रन्थावतारिकायां कृतं यच्छशङ्काद्वयं तस्य य: परिहार: एतत्सर्वं तर्कशास्त्र इत्यादिना कृत: तमुपसंहरतीत्यर्थ: ।

**श्री०— शङ्काद्वयमिति** ॥ अप्रकृतत्वविस्तराकरणरूपं शङ्काद्वयमित्यर्थ: ॥

**अनु०— यतोऽनुभवत: सर्वं सिद्धमेतदतोऽपि च ॥**

**सु०— प्रकारान्तरेण शङ्काद्वयं परिहरति ॥ यत इति ॥ वक्तृश्रोतृबुद्धौ परिवर्तमानं हि साक्षात्प्रकृतमित्युच्यते । ग्रन्थोक्तत्वं तु तल्लिङ्गतयैव तथा । एतच्च सर्वं प्रपञ्चसत्यत्वादिकं यतोऽनुभवत एव सिद्धमतोऽपि प्रकृतत्वादत इति परामृश्य हेतुत्वेन कथनं युज्यत इति । यत एतद्बन्धसत्यत्वादिकमनुभवसिद्धं सर्वेषामतोऽतिस्फुटत्वादप्यत इति संक्षेपादेवाभ्यसूचयत् न विस्तरेणेति ।**

**श्री०— तल्लिङ्गतयेति** ॥ बुद्धिप्रकृतत्वज्ञापकतयेत्यर्थ: ।

**अनु०— देवैश्च दुर्गमार्थेषु व्यापृतो नातिविस्तृतिम् ॥**
**चकार**

**सु०— एवं शङ्काद्वयं प्रकारद्वयेन परिहृत्य द्वितीयशङ्कां प्रकारान्तरेणापि परिहरति ॥ देवैश्चेति ॥ सुगमज्ञानानन्तरं दुर्गमज्ञानं प्राणिनां सुकरमिति सुगमप्रमाणादिस्वरूपं ब्रह्मतर्कादौ व्युत्पाद्येदानीं देवैर्निमित्तैस्तत्प्रार्थनयेति यावत् । दुर्गमार्थेषु वेदेषु तदर्थमीमांसायां व्यापृत: प्रवृत्तो यतो भगवान्व्यासोऽतश्चानवसरतयाऽस्य प्रमेयस्य नातिविस्तृतिं चकार । संक्षेपाद(तइत्य)भ्यसूचयदिति प्रकृतेऽपि पुनर्नातिविस्तृतिं चकारेति साध्याभिधानं प्रकृतत्वोपपादननिरासार्थम् । अन्यथा साध्यद्वयस्यापि प्रकृतत्वात्तदर्थमप्येतद्वाक्ययोजनायां शिष्याणां मन:खेद: स्यादिति । पूर्वं तु शास्त्रभेदसिद्धये विस्तरो न कृत इत्युक्तम् इदानीं त्वप्रसक्तत्वादिति भेद: ।**

**वा०**— अत्र दुर्गमार्थेषु व्यापृत इत्युक्त्या प्रमाणादिस्वरूपं सुगमत्वादनवसराच्च सर्वथा न प्रतिपादितवानिति प्रतीयते । तथा च पूर्वोक्तविरोधो ब्रह्मतर्के विस्तरेण प्रमाणादिप्रतिपादनप्रतिपादक-प्रमाणान्तरविरोधश्च । अतः सुगमं ब्रह्मतर्कादौ प्रमाणादिस्वरूपं विस्तरेण प्रतिपाद्येदानीं दुर्गमार्थेषु व्यापृत इति व्याख्येयमित्यभिप्रेत्य सुगमस्यादौ व्युत्पादने निमित्तं दर्शयन्वाक्यं योजयति ॥ **सुगमेति** ॥ देवप्रेष्यत्वशङ्कां व्यावर्तयितुं देवैरिति व्यापृत इति च व्याख्याति ॥ **देवैरित्यादिना** ॥ दुर्गमार्थवेदेषु प्रवृत्तिर्न ब्रह्ममीमांसायां विस्तरेण प्रमाणादिस्वरूपनिरूपणे निमित्तमित्यतस्तच्छब्देनात्र मीमांसैवाभि-प्रेतेत्याह ॥ **तदर्थेति** ॥ ननु देवप्रार्थनया दुर्गमार्थमीमांसाव्यापृतत्वोक्त्या न कोऽपि विस्तराकरणे हेतुरुक्तः । न चानवसरत्वोक्तिरिति वाच्यम् । प्रमाणादिस्वरूपस्यापि मीमांसाप्रमेयोपपादनोपयुक्तत्वेन प्रतिबन्धकत्वाभावात् । प्रतिपाद्यभेदसिद्ध्यर्थत्वोक्त्याऽप्यर्थादनवसरत्वस्यैव लाभाच्च । न च पूर्वोक्तहेता-वेव तात्पर्यमिति वाच्यम् । पौनरुक्त्यापत्तेरित्यत आह ॥ **पूर्वं त्विति** ॥ तथा च विस्तरेणात्र प्रमाणादिप्रतिपादने पूर्वं शास्त्रभेदासिद्धिरुक्ता । इदानीं तु श्रोतृप्रयोजनोद्देशविरोध इति स्फुटोऽर्थ-भेदः । अत्राप्रसक्तत्वं देवैर्व्यापृत इत्यनेन सूचितमिति द्रष्टव्यम् ।

**स०**—**प्रकृतत्वोपपादननिरासार्थमिति** ॥ पूर्ववत्प्रकृतत्वस्यापि उपपादनमत्र क्रियत इति शङ्कानिरासार्थमित्यर्थः । ननु प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्र इत्यादिना अस्य मीमांसाशास्त्र-प्रयत्नपरत्वेन यदि प्रमेयपरेऽपि प्रमाणं स्वरूपं विस्तरेण प्रतिपाद्येत तर्हि भेदो न स्यात् । अतः तदर्थं सङ्क्षेपेणोक्तमित्युक्तम् । इदानीमपि देवैश्च दुर्गमार्थेष्वित्यर्थपरत्वेनैव भेदस्योच्यमानत्वेन पौनरुक्त्यमित्यत आह ॥ **पूर्वन्त्विति** ॥ नात्रार्थेष्वित्यत्र भारः किन्तु व्यापृत इत्यत्रैव भारः ।

**प०**— **प्रकृतत्वोपपादननिरासार्थमिति** ॥ अप्रकृतपरामर्शित्वं कथमतःशब्दस्येति प्रथमशङ्का-निरासार्थमतःपदपरामृश्यमानस्य प्रकृतत्वं प्रतिपादयितुं यतोऽनुभवतः सिद्धमित्यादिग्रन्थो यथा प्रवृत्तः तथाऽयमपीति भ्रमनिरासार्थमेव प्रवृत्तमिति दर्शयितुमित्यर्थः ॥ **साध्यद्वयस्यापीति** ॥ अतःपदपरामर्श-विषयस्य प्रकृतत्वं सङ्क्षेपेणार्थकथनं चेत्येवंरूपसाध्यद्वयस्यापीत्यर्थः ॥ **पूर्वं त्विति** ॥ एतत्सर्वं तर्कशास्त्र इत्यादौ ॥ **अप्रसक्तत्वादिति** ॥ प्रसङ्गानुकूल्यविरहादित्यर्थः ।

**या०**—**अप्रसक्तत्वादिति** ॥ प्रसङ्गानुकूल्यविरहादित्यर्थः ।

**श्री०**— **प्रकृतत्वोपपादनेति** ॥ अप्रकृतत्वात्कथमुक्तार्थजातस्यातःशब्देन परामर्श इति शङ्कापरिहाराय यत्प्रकृतत्वोपपादनं तन्निरासार्थमित्यर्थः । अन्यथा पुनः साध्यानभिधाने ॥ **साध्यद्वय-स्यापीति** ॥ प्रकृतत्वोपपादनातिविस्तराकरणरूपसाध्यद्वयस्यापीत्यर्थः ॥ **तदर्थमपीति** ॥ सङ्क्षेपतः सूचने निमित्तोपपादनवत्प्रकृतत्वोपपादनायामपीत्यर्थः ।

अनु०— एता ह्यवज्ञेया युक्तयः प्रतिपक्षगाः ।

सु०— **विस्तराकरणे कारणान्तरमप्याह ॥ एता इति ॥ यस्मादेताः प्रतिपक्षगा बन्धमिथ्यात्वादौ प्रतिवादिनोपन्यस्ता युक्तयोऽवज्ञेयाः । निर्दलत्वात् । अतोऽपि सूत्रकारस्तन्निराकरणे नातिविस्तृतिं चकार । किन्तु हेयताज्ञापनाय संक्षेपं चक्रे । अस्माभिस्तु तामेव निर्दलतां दर्शयितुं किञ्चित्प्रपञ्चितमिति भावः ।**

वा०— यदि वस्तुतः प्रतिपक्षगतत्वं तर्हि नावज्ञेयमित्यतः प्रतिवादिनोपन्यस्तयुक्तय इत्युक्तम् । अतोऽपीत्यादिना चशब्दस्य नातिविस्तृतिं चकारेत्यस्य चानुवृत्तिं च सूचयति । तर्हि सङ्क्षेपेण निरासोऽपि न कर्तव्य इत्याशङ्कते ॥ **किन्त्विति** ॥ तर्हि भाष्यकारेणापि न विस्तरतो निरस्या अहेयताज्ञापनापत्त्या सूत्रकारविरुद्धाचरणापत्तेरित्यतो भाष्यकाराभिप्रायमाह ॥ **अस्माभिस्त्विति** ॥

स०— **प्रपञ्चनं(प्रवचनं ?)** पौनरुक्त्यमिति भावः ॥

श्री०— ननु तर्हि बन्धमिथ्यात्वं नैव मुक्तिरपेक्षित इत्यादिना बन्धमिथ्यात्वनिराकरणं भवद्भिः कस्मात्प्रपञ्चेन कृतमित्यत आह ॥ **अस्माभिस्त्विति** ॥ **तामेवेति** ॥ सूत्रकाराभिप्रेतामेवेत्यर्थः ।

अनु०— प्रत्यक्षेक्षाक्षमः पक्षं कमेवात्राभिवीक्षते ॥
तस्मादक्षमपक्षत्वान्मोक्षशास्त्रेऽभ्युपेक्षितः ॥

सु०— **नन्वस्त्ववैदिकैर्बौद्धादिभिरुत्प्रेक्षितानां युक्तीनामवज्ञेयत्वं वैदिकैरुक्तास्तु नावज्ञामर्हन्ति समूलत्वेन सदलत्वात् । अतः कथमेतदित्यत आह ॥ प्रत्यक्षेति ॥ प्रत्यक्षशब्देन स्पष्टप्रतीत्युपलक्षणम् । प्रत्यक्षा च सेक्षा च स्पष्टा प्रतीतिस्तस्यामप्यक्षमः । स्पष्टं हि प्रतीयते दुःखादिसत्यत्वादिकं तदपि यो द्रष्टुं न शक्नोति । सोऽत्र मीमांसाविषये कमेव पक्षं प्रतिकूलमभिवीक्षते । उत्प्रेक्षते । न कमपि । तस्मादक्षमपक्षत्वान्मोक्षशास्त्रे वेदे प्रवृत्तोऽप्याग्रहात् उपेक्षित एव सूत्रकृता न तु विस्तरेण निराकृत इति ।**

वा०—मोक्षशास्त्र इत्यनेन वेदे प्रवृत्त्युक्त्या सूचितां शङ्कां निरसितुमुत्तरवाक्यमवतारयति ॥ **नन्विति** ॥ ननु प्रत्यक्षेक्षाक्षमत्वोक्तिरयुक्ताऽतःशब्दार्थतयोक्तयुक्तिजातस्य सर्वस्यापि प्रत्यक्षप्रतीतिमात्रविषयत्वाभावादित्यत आह ॥ **प्रत्यक्षशब्देनेति** ॥ अत्र प्रत्यक्षशब्दः स्पष्टतापरः । ईक्षाशब्दश्च

प्रतीतिपर इति भावः । तस्यामपीत्यनेन सूचितं कैमुत्यं प्रकृतानुगुणतयोपपादयति ॥ **स्पष्टं हीति** ॥ अत्रेत्यस्य संबन्धसत्यत्वादिविषयत्वेऽनन्वयप्रसङ्गादाह ॥ **अत्रेति** ॥ अभिवीक्षत इत्यस्य प्रत्यक्षप्रतीत्यर्थकत्वे कैमुत्यानुपपत्तेरतीन्द्रिये तदनुपपत्तेश्चाह ॥ **अभिवीक्षते उत्प्रेक्षत इति** ॥ मोक्षशास्त्र इत्यस्य मीमांसाविषयकत्वे पूर्वपक्ष्युक्तवैदिकत्वस्य गतिर्नोक्ता स्यात् मोक्षशास्त्र इत्युक्तेर्वैयर्थ्यं चेत्यतः प्रकृतोपयोगितया प्रवृत्तोऽप्याग्रहादित्यध्याहरन्नेव वेदविषयकतया मोक्षशास्त्र इत्येतद्व्याख्याति ॥ **वेद इत्यादिना** ॥

स०— लौकिकप्रवेदनीये साक्षात्त्वावच्छिन्नप्रतीतिनियमादाह ॥ **प्रत्यक्षशब्देन स्पष्टप्रतीत्युपलक्षणमिति** ॥ प्रतीतिमात्रोपलक्षणमित्यर्थः । दध्युपघातकत्ववत् स्पष्टत्वमेव शक्यसंबन्ध इति प्रापणम् ॥ **स्पष्टेति** ॥ स्पष्टसामान्यमेव लक्ष्यं; प्रतीतिः तु अक्षशब्दसमभिव्याहारादिति ज्ञेयम् ।

प०— प्रत्यक्षपदेन तन्मात्रोपादानं वारयति ॥ **स्पष्टप्रतीत्युपलक्षणमिति** ॥ **प्रवृत्तोऽप्याग्रहादिति** ॥ आग्रहात्प्रवृत्तोऽपीत्यन्वय इत्येके । उत्तरेणान्वय इत्यन्ये ॥ ॥ अतःशब्दस्यानेकार्थपरामर्शित्वसमर्थनम् ॥ ॥

या०— सर्वस्य प्रपञ्चस्य प्रत्यक्षत्वाभावादाह ॥ **प्रत्यक्षशब्देनेति** ॥ प्रत्यक्षेक्षाशब्देनेत्यर्थः । तथा च प्रत्यक्षशब्देन स्पष्टत्वमीक्षा शब्देन च प्रतीतिमात्रमुपलक्ष्यत इति ज्ञेयम् । अत एवाह ॥ **प्रत्यक्षा च सेत्यादि** ॥ **तस्यामप्यक्षम इति** ॥ तादृशप्रतीतिरूपक्रियाकर्ता नेत्यर्थः । एतदेव दर्शयति ॥ **स्पष्टं हीत्यादिना** ॥ स्वर्गमात्रपर्यवसितमिति मीमांसककटाक्षेणोक्तम् । तन्मतस्यापि पूर्वमतःशब्देन निराकृतत्वात् । वस्तुतस्तु तमित्यनेन वेदैकदेशकर्मकाण्डपरामर्शेन मायावाद्यप्यत्र विवक्षित इत्यवधेयम् ॥

श्री०— **समूलत्वेनेति** । वेदमूलकत्वेनेत्यर्थः ॥

**सु०— इदमुक्तं भवति । यो हि लौकिकप्रवेदनीयमप्यर्थं न जानाति तस्या लौकिकार्थे वेदेऽधिकार एव नास्ति । तथाऽपि तत्र वैयात्यात्प्रवृत्तोऽवज्ञामेवार्हति न तु प्रतिपक्षिभावमिति । मोक्षशास्त्र इत्यनेनापि तस्य वेदविचारानधिकारं सूचयति । वेदो हि मोक्षशास्त्रमिति प्रसिद्धः । तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्परास्सर्व एवेति श्रुतेः । तं च स्वर्गमात्रपर्यवसितं वदन्कथमत्राधिक्रियते । न हि तत्प्राप्यमविद्वांस्तेन च पथा प्रतिष्ठमानो नोन्मत्त इति सर्वं सुस्थम् ।**

**तदनेनातःशब्दो हेत्वर्थ इति भाष्यं स्पष्टीकृतं भव(ती)ति ।**

वा०— ननु स्पष्टप्रतीतबन्धसत्यत्वाद्यज्ञानेऽपि वैदिकोक्तयुक्तीनां नावज्ञेयमित्यस्य किमायातम्। न च वैदिकत्वमेवासिद्धमित्यभिप्रेतम्। वेदप्रवृत्त्यैव तत्सिद्धेः। न च वेदानधिकारोऽत्राभिप्रेतः। नियामकाभावात्। वेदप्रवृत्त्यन्यथाऽनुपपत्त्यैव तत्सिद्धेश्च। यथाकथञ्चित्प्रवृत्तस्यावज्ञेयत्वानुपपत्तेश्चेत्यतो मूलाभिप्रायमाह ॥ **इदमुक्तं भवतीति** ॥ ननु स्पष्टत्वाय वेद इत्येव वक्तव्ये मोक्षशास्त्र इत्युक्तेर्न प्रयोजनविशेषं पश्याम इत्यतस्तत्प्रयोजनं दर्शयति ॥ **मोक्षशास्त्र इत्यनेनापीति** ॥ **तं चेति** ॥ अनेन वेदान्तानां मोक्षपरत्वेऽपि कर्मकाण्डस्य स्वर्गमात्रपर्यवसितत्वं वदन्मायी न स्वर्गादेः फलान्तरमिति सर्वस्यापि वेदस्य स्वर्गमात्रपर्यवसितत्वं वदन्मीमांसकोऽपि वेदानधिकार्येवेति सूचितं भवति ॥ **तदनेनेति** ॥ ज्ञानी प्रियतमोऽतो म इत्यारभ्यैतत्पर्यन्तेनेत्यर्थः।

श्री०— **तं च स्वर्गमात्रेति** ॥ मोक्षोद्देशेन भगवत्प्रतिपादनपराणां सर्ववेदानां मध्ये कर्मकाण्डं स्वर्गमात्रपर्यवसितं वदन्तित्यर्थः ॥ **तत्प्राप्यमिति** ॥ वेदप्रतिपाद्यं तत्प्रयोजनं चाविद्वानित्यर्थः ॥ **तेन च पथेति** ॥ वेदरूपमार्गेणेत्यर्थः। आत्मनो वैदिकत्वं वदन्निति यावत्। संहता मिलिताः ॥ **ताश्चेति** ॥ शच्याद्या इत्यर्थः। सम्यग्विधप्रकारेण। एधि अस्तीत्यर्थः। एधीति अस् भुवीति धातो रूपम्।

अनु०—

स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम् ॥
स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि ॥
आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् ॥
मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा ॥
अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत् ॥

सु०— एवमतःशब्दव्याख्यानमुपपाद्य स्वयं भगवतेत्यादिना क्रमप्राप्तं ब्रह्मशब्दार्थं समर्थयते।

जिज्ञास्योऽयं विधीयत इति ब्रह्मशब्दो विष्णुविषयो व्याख्यातः। तदनुपपन्नम्। ब्रह्मशब्दस्य जातिजीवकमलासनशब्दराशिषु वृद्धप्रयोगादिसिद्धत्वात्। ननु भगवत्यपि ब्रह्मशब्दो वृद्धप्रयोगादिसिद्धः। तथाऽप्यनेकार्थेषु शक्तियुक्तस्य विवक्षाज्ञापकप्रमाणाभावेन भगवत्परत्वावधारणायोगादित्याशङ्क्य यथाऽनेकार्थोऽपि गोशब्दः प्रकरणवशादर्थविशेषपरोऽव-

धार्यते तथाऽनेकार्थोऽपि ब्रह्मशब्दः सूत्रकृता विष्णुविषय एव प्रयुक्त इति प्रकरणवशाज्ज्ञायत इति परिहारं विवक्षुर्ब्रह्मशब्दस्य विष्णौ प्रकृतत्वं तावदाह ॥ स्वयमिति ॥

नन्वथातो ब्रह्मजिज्ञासेत्येतदेवादिसूत्रम् । अस्मादपि पूर्वसूत्रस्य विद्यमानत्वे तदादि(त्वेन)व्याख्यानप्रसङ्गात् । अन्यथा प्रथमातिक्रमे कारणाभावादकुशलाः सर्व एव व्याख्यातारः प्रसज्जेरन् । तत्कथमस्मात्सूत्रात्पुरा विष्णुर्ब्रह्मेत्येतत्स्वयं भगवता सूत्रकृतोदितमित्युच्यत इति; तत्राह ॥ स विष्णुरिति ॥ तेनेति भगवतेत्यनेन संबध्यते । येनेदं शास्त्रं कृतं तेनैवेत्यर्थः । सत्यमेतदेव ब्रह्ममीमांसाशास्त्रस्यादिसूत्रम् । किन्तु दैवीमीमांसाशास्त्रस्यान्ते 'स विष्णुराह हि । तं ब्रह्मेत्याचक्षते' इतिसूत्रद्वयेन विष्णुः ब्रह्मेत्युदितम् । तदनन्तरमेव चाथातो ब्रह्मजिज्ञासेति सूत्रितत्वात्पुरोदितमिति युज्यत इति । ये तु देवमीमांसाशास्त्रस्वरूपे तदनन्तरमेतत्सूत्रप्रणयने विप्रतिपद्यन्ते तेषां पुराणादिप्रसिद्धिविरोधं हिशब्देन दर्शयति ।

ननु देवतामीमांसाशास्त्रं शेषपैलाभ्यां कृतमिति पुराणादौ प्रसिद्धं तत्कथमुच्यते भगवतोदितमिति तत्राह ॥ आद्यन्तमिति ॥ अथातो दैवीत्यादिरुदाहृतोन्तश्चाद्यन्तम् । यतस्तदाज्ञया कृतमतोऽञ्जसैव कृतमित्यनेनानेककर्तृकत्वान्न कन्थायितत्वमस्य शङ्कनीयमित्याह । अयं च विशेषो विशेषवाक्यादिभिरवगन्तव्य इति ।

अस्त्वेवं ब्रह्मशब्दस्य विष्णुविषयतया प्रकृतत्वं ततः किमित्यत आह ॥ अत इति ॥ यतो देवतामीमांसाऽन्तिमसूत्रद्वयं भगवता कृतम् । अतस्तत्रैव सूत्रद्वये ब्रह्मशब्दार्थस्य विष्णुत्वसिद्धेर्विष्णुतायाः प्रकृतत्वात् अथातो ब्रह्मजिज्ञासेत्यत्रापि ब्रह्मेति विष्णुमेवासूचयत्सूत्रकार इति ज्ञायते । अतो जिज्ञास्योऽयं विधीयत इत्युचितमेव व्याख्यानमिति ।

वा०— ननु ब्रह्मशब्दस्य विष्णुविषयताया अनुक्तत्वेन धर्मिण एव बुद्ध्यनारोहात्तस्या एव वक्तव्यत्वे प्रथमत एव समर्थनमयुक्तम् । अनुपपत्त्यभावाच्च । ब्रह्मशब्दस्य विष्णुविषयतायाः प्रकृतत्वोपपादनं चायुक्तम् । अतःशब्दस्येव ब्रह्मशब्दस्य प्रकृतपरामर्शकत्वाभावादित्यतोऽतस्तत्रैव विष्णुत्वसिद्धेर्विष्णुमेव ब्रह्मेत्यसूचयदित्यनेन सूचितमनुपपत्तिप्रकारं दर्शयन्नेवोक्तबाधकानि परिहरति ।**ब्रह्मशब्द इति**॥ भगवदुदितत्वं न सूत्रकारीयब्रह्मशब्देन परामर्शप्रयोजकमित्यतो भगवतेति व्याख्यातं सूत्रकृतेति । अत एव तेनेत्यपि तथैव व्याख्याति ॥ **येनेति** ॥ उदाहृतसूत्रमात्रस्य विवक्षितार्थासाधकत्वादर्थतोऽनूदितद्वितीयं सूत्रमुदाहरति । हिशब्दस्य हेतुपरत्वायोगाल्लोकप्रसिद्धेश्चाभावादाह ॥ **ये त्विति** ॥ आद्यन्तं भगवता कृतं मध्यं शेषपैलाभ्यां कृतमित्येतावतैवोक्तशङ्कापरिहारात्तदाज्ञयाऽञ्जसैवेत्यस्य वैयर्थ्यं परिहर्तुं

तत्प्रयोजनमाह ॥ **यत इति** ॥ विशेषवाक्यादिभिरित्यत्रादिपदेन तदानीन्तनप्रत्यक्षैतिह्ययोः संग्रहः। ब्रह्मशब्दस्य विष्णुवाचकतायाः परेणाप्यङ्गीकृतत्वात्प्रकृतोपयुक्तमर्थमाह ॥ **विष्णुताया इति** ॥ उक्तशङ्कापरिहारत्वज्ञापनाय विष्णुमित्यध्याहृत्यैवकारस्य तेनाप्यन्वयं प्रदर्शयति ॥ **विष्णुमेवेति** ॥

प०— **एवमिति** ॥ एतत्सर्वं तर्कशास्त्र इत्याद्युक्तप्रकारेणेत्यर्थः ॥ **प्रकृतत्वमिति** ॥ प्रकरणप्राप्तत्वं तावदाहेत्यर्थः ॥ **उदाहृतोऽन्तश्चेति** ॥ स विष्णुराह हीत्यन्तश्चेत्यर्थः । अयं च विशेष इति । उक्तदिशाऽनेककर्तृकत्वविशेष इत्यर्थः । न पुनरेकस्मिन्नेव वाक्य इति प्रयोज्यत्वमित्यनुषङ्गः ॥

अनु०— **दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः ॥**
**गुणा नारा इति ज्ञेयास्तद्वान्नारायणः स्मृतः ॥**

**सु०— एवं मीमांसाशास्त्रसंप्रदायज्ञान्प्रति सौत्रब्रह्मशब्दस्य विष्णुपरत्वे युक्तिमभिधाय अधुना मन्दान्प्रति ब्रह्मशब्दस्य निरुच्यमाननारायणशब्दसमानार्थताप्रतीतिमप्यत्र युक्तिं विवक्षुर्नारायणशब्दं तावन्निर्वक्ति ॥ दोषेति ॥ अत्र छिद्रशब्दोपपादानं दृष्टान्तत्वेन । पर्यायत्वं पर्यायेण क्रमेण प्रयोज्यत्वं न पुनरेकस्मिन्नेव वाक्य इत्यर्थः । यथोक्तं 'पर्यायेणैव ते यस्माद्वदन्त्यर्थान्न संहताः । पर्यायत्वं ततस्सर्वपर्यायाणां प्रतिष्ठितमि'ति । तेनैकार्थत्वमिति सिध्यति । एकार्थत्वे हि पर्यायत्वं स्यात् । एतच्चाभिधानप्रयोगाभ्यामभ्युपेयम् ।**

**यतो दोषार शब्दयोः पर्यायत्वम् । यतश्च नञ् तद्विरुद्धार्थवाची । ततो नारा इति पदेन दोषविरुद्धा गुणाः प्रोक्ता इत्यर्थः । तद्वान्नारायण इत्यनेन नाराणामयनमिति विग्रहं सूचयति । अत्र गुणविशेषानुक्तेः सर्वगुणपरिपूर्णत्वं नारायणशब्दार्थ इत्युक्तं भवति ॥**

वा०— ननु तथाऽपि देवमीमांसाशास्त्रस्य कर्ममीमांसावच्छास्त्रान्तरत्वात्तत्प्रकृतत्वस्य नात्रोपयोगित्वमित्यतः सकलवेदमुख्यामुख्यार्थप्रतिपादानोपयोगिसकलवेदविचारात्मकत्वमेतन्मीमांसाया एव । तस्यां च परममुख्यार्थब्रह्मस्वरूपप्रतिपादनेऽभिनिविष्टायां यथा विस्तरेण ब्रह्मस्वरूपप्रतिपादनं न तथा कर्मदेवताप्रतिपादनं किन्तु सङ्क्षेपेणैवेति वेदैकदेशामुख्यार्थकर्मदेवतास्वरूपयोरत्र सङ्क्षिप्य प्रतिपादितयोर्विस्तरेण प्रतिपादकत्वादेव देवकर्ममीमांसयोः शास्त्रान्तरत्वम् । देवमीमांसाया भगवत्कृतत्वं चाधिकमिति ब्रह्मतर्कादिवत्तस्या अङ्गत्वानपायात्तत्प्रकृतस्यात्र परामर्शो युक्त इति मीमांसाशास्त्रसंप्रदायज्ञान्प्रत्युक्तयुक्तेरप्रत्यूहत्वमेव । मीमांसात्रयमपि प्रत्येकप्रमेयप्रतिपादकं न पुनरुक्तरीत्याऽङ्गाङ्गिभावोपपन्न-

मित्याग्रहवतो मन्दान्प्रत्युक्तयुक्तेर्वक्तुमशक्यत्वेऽपि युक्त्यन्तरमेव भविष्यतीत्याशयेन मन्दान्प्रति युक्त्यन्तरप्रतिपादनाय प्रवृत्तमुत्तरमूलंत दाशयमुद्घाटयन्नवतारयति ॥ **एवमिति** ॥ पूर्वं कर्ममीमांसोक्तानुपजीवनोक्तिस्तु तद्भाष्यादौ प्रामाण्यादिप्रतिपादनपरतयाऽऽद्याध्यायन्याख्यानमसङ्गतमिति तद्भाष्याद्यस्वारस्याभिप्रायेणेति द्रष्टव्यम् । नन्वस्तु पर्यायत्वं तावताऽपि न समानार्थकतासिद्धिरित्यत आह ॥ **तेनेति** ॥ भिन्नार्थत्वे वाक्यभेदेनैव नियतप्रयोगो न स्यादिति भावः ।

नञोऽभावार्थत्वस्यापि संभवाद्भाष्योक्तहेतुमात्रस्य गुणा नारा इति साध्यसाधकत्वासंभवाद्भाष्ये न्यूनांशं पूरयति ॥ **यतश्चेति** ॥ ननु तथाऽपि न ब्रह्मशब्दसमानार्थत्वं तस्य गुणपूर्त्यभिधायित्वस्य वक्ष्यमाणत्वादित्यत आह ॥ **अत्रेति** ॥

**सु० — ननु नञ्समासे नलोपो नञ इति प्राप्नोति । न । नभ्राडित्य(ादिष्व)स्य वक्तव्यत्वात् ॥ अथवाऽमानोनाः प्रतिषेध इति गणपठितनसमासोऽयमित्यदोषः ॥ पूर्वपदात्संज्ञायामग इति णत्वम् ॥ ल्युटष्टित्करणसामर्थ्यादयनशब्दोऽत्राधिकरणे त्रिलिङ्ग इति पुल्लिङ्गत्वोपपत्तिः ।**

**वा० — नन्विति** ॥ तथा च तस्मान्नुडचीति नुटि अनरायण इति स्यादिति भावः । अस्याप्यभियुक्तप्रयोगत्वेनोपसङ्ख्येयत्वमित्याह ॥ **नभ्राडित्यादिष्विति** ॥ ननु स्त्रैणार्थ इत्यत्र स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति विहितस्य नञो नलोपाभावार्थं नलोपो नञ इति सूत्रे रात्रेः कृति विभाषेत्यतोऽनुवृत्तविभाषाया व्यवस्थितविभाषात्वस्य न्यास एवोक्तत्वेन नारायण इत्यत्र तत एव नलोपभावसिद्धेरुपसङ्ख्यानकल्पनं न युक्तमिति चेन्न । प्रत्ययञित्वस्य वृद्धिस्वरयोश्चरितार्थत्वान्निपातञित्वस्याचरितार्थत्वान्नञ्ग्रहणेन सूत्रे प्रत्ययप्रसक्तेरेवाभावात्पूर्वपदत्वेन नञ्विशेषणाद्वा नञः पूर्वपदत्वाभावादेव स्त्रैणार्थ इत्यत्र नलोपाप्रसक्तिरिति पदमञ्जर्यामुक्तत्वेन स्त्रैणार्थ इत्यस्यान्यथासिद्धतया विभाषाग्रहणानुवृत्तेरभावेन तथा समाधानस्याशक्यत्वात् । चन्द्रिकायां तदङ्गीकारस्तु किं तद्गुणदोषचिन्तया न्यासस्यापि वृत्तिव्याख्यानत्वात्तदुक्तरीत्याऽप्यस्मदभिलषितसिद्धिरित्यभिप्रेत्येति द्रष्टव्यम् ॥ निर्वचनान्तरेणापि नारायणशब्दाभियुक्तप्रयोगोपपत्तेर्नोपसङ्ख्यानकल्पना युक्तेत्यतः पक्षान्तरमाह ॥ **अथवेति** ॥

**पूर्वपदादिति** ॥ पूर्वपदस्थान्निमित्तादगकारादुत्तरस्य णत्वमिति सूत्रार्थः ।

ननु यदनान्तमकर्तरीति कर्तृव्यतिरिक्तकारके यदनप्रत्ययान्तं तत्तृतीये नपुंसकमिति लिङ्गानुशासनसूत्रेऽनप्रत्ययान्तस्य नपुंसकताया नियमितत्वात्साध्यतेऽनेनेति साधनमधिक्रियते अस्मिन्नित्यधिकरणमित्यादौ

साधनादिशब्दानां नित्यनपुंसकताया एवोपलम्भादत्रायनशब्दस्याधिकरणसाधनत्वेऽपि नपुंसकतैव युक्ता । न च करणाधिकरणयोश्चेत्यत्र नपुंसके भावे क्त इत्यतो भावग्रहणाननुवृत्त्या सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति परिभाषया नपुंसक इत्यंशस्यापि निवृत्तेर्विशेष्यनिघ्नतया लिङ्गत्रयेऽपि करणाधिकरणादौ ल्युडनुशासनसंभवान्न नपुंसकत्वनियम इति वाच्यम् । तथात्वे साधनादिशब्दानां नियतलिङ्गत्वाभावप्रसङ्गात् । यदनान्तमकर्तरीत्यस्य विशेषविषयकत्वाच्च परिभाषाया अनित्यतामाश्रित्य करणाधिकरणयोश्चेत्यत्र नपुंसकानुवृत्तेरावश्यकत्वात् । तथा च नारायण इति पुल्लिङ्गानुपपत्तिरित्यत आह ॥ **ल्युटष्टित्करणसामर्थ्यादिति** ॥ न च सामर्थ्याश्रयणं निर्बीजमिति वाच्यम् । आस्थानमास्थानी करणं करणी प्रमाणं प्रमाणी राजधानं राजधानीत्यभियुक्तप्रयोगाणामेव तत्र बीजत्वात् । अत एव टिड्ढाणञ्द्वय इति सूत्रे लटो ह्यनुबन्धकत्वाट्टिद्ग्रहणेन ग्रहणे निरस्ते तर्हि तत एव ल्युटोऽप्यग्रहणं प्रसज्येतेत्याशङ्किते लटष्टित्त्वस्य टेरेत्वेन चरितार्थत्वात् ल्युटष्टित्त्वस्याचरितार्थत्वात् तद्ग्रहणे टित्त्ववैयर्थ्यापत्त्या ङीबर्थमेव टित्करणमित्युक्तत्वेन टित्करणसामर्थ्यमाश्रितम् । इदं च बाहुलकमनाश्रित्य समाधानम् । अत एव केचिद्बाहुलिकमाश्रित्य त्रिलिङ्गतां व्युत्पादयन्ति । तेषां बाहुलकाश्रयणेन ङीबादिकं व्युत्पादनीयमिति क्लेश इति द्रष्टव्यम् ।

स०—**न लोपो नञ इति** ॥ ततश्च तस्मान्नुडचीति नुडागमेऽनरायण इति स्यादिति भावः ॥ **न समास इति** ॥ न नञ्समासः येन नलोपादिप्राप्तिरिति भावः ॥ नन्वेवमयनशब्दस्य ल्युडन्तस्य क्लीबत्वनियमात् कथं नारायण इति पुल्लिङ्गत्वमित्यत आह ॥ **ल्युटष्टित्करणसामर्थ्यादिति** ॥ अयं भावः । अत्र हि ङीबर्थं टित्करणमित्यभिप्रेतम् । कथमन्यथा इध्मप्रव्रश्चनी गोदोहनी इत्युपपद्यतेति । तज्ज्ञायते पुल्लिङ्गस्य ल्युडन्तस्य करणेऽधिकरणे च न नियमेन नपुंसकत्वमेवेति । अन्यथा कथं स्त्रीप्रत्ययानयनायेमं प्रत्ययं टितं कुर्यादिति । तथापि पुल्लिङ्गत्वमिति कुत इति चेत् टित्करणेन नपुंसकत्वनियमे त्याजिते प्रयोगानुसारेण पुल्लिङ्गत्वस्यापि संभवात् । अत एव लिङ्गानुशासने इध्मप्रव्रश्चनः गोदोहन इत्यप्युदाहृतमिति ज्ञातव्यम् ।

प०—**नञ्समासे नलोपो नञ इति प्राप्नोतीति** ॥ द्वितीयाध्यायद्वितीयपादे नञितिसूत्रं नञुत्तरपदेन समस्यत इति तस्यार्थः । तथा च नञिति सूत्रेण नञोऽरपदेन समासे सति सवर्णदीर्घे च नारेति रूपं नञश्च तदन्यतदभावतद्विरुद्धरूपार्थत्रयवाचितया प्रकृते विरुद्धार्थकत्वमुपादायारविरुद्धा नारा गुणा इति व्याख्यानेऽसुराविद्यादिशब्देष्विव नलोपो नञ इति सूत्रेण नकारलोपः प्राप्नोतीत्यर्थः । षष्ठस्य तृतीयपादे 'नलोपो नञ' इति सूत्रं नञः न लोपः नकारस्य लोपो भवतीत्युत्तरपदे पर इति तस्यार्थः।

शङ्कां निराह ॥ **नेति** ॥ कुत इत्यत आह ॥ **नभ्राडित्यादिष्विति** ॥ 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्ये'ति सूत्रेण नभ्राडित्यादिष्वेकादशशब्देषु नञ्प्रकृत्या भवति नलोपं न प्राप्नोतीत्यर्थ इत्युक्तत्वात् । नभ्राडित्यादिषु शब्देषु मध्ये नारायणशब्दमपि पठित्वा तत्रत्यनकारोऽपि प्रकृत्या भवतीति वक्तव्यत्वादित्यर्थः ॥ चन्द्रिकायां तु प्रकारान्तरेण समाधिरुक्तः ॥ **नसमास इति** ॥ निषेधार्थकनशब्देन सहारशब्दस्य सुप्सुपेति समास इत्यर्थः । तथा चायं नञ्न भवतीति 'नलोपो नञ' इति न प्राप्नोतीति भावः । नन्वेवं अराणां निषेध एव नारेति पदेन सिद्ध्येन्न तु गुण इति चेन्न । प्रयोगानुरोधेन विरोधार्थकस्यापि नारशब्दस्य गुणवाचित्वस्य कल्प्यत्वाद्वा लक्षणया तद्विरोधिनो ग्रहणाद्वा गुणलाभादिति भावः । यत्तु निषेधार्थकनशब्दो नास्तीति चिन्तामणिवचनं तत्तु तर्कताण्डवविवृतौ नञर्थनिर्णयवादे निरस्तमस्माभिरिति ध्येयम् । अत्रापि गणपरिपठितेत्युक्त्या चापोढं 'चादयोऽसत्व' इति सूत्रोक्तचादिगणे नञं पृथक्पठित्वा अमानोनाः प्रतिषेध इत्यस्य पाठात् । ननु समानस्थले सत्यप्यैकपद्ये 'रषाभ्यां नो णस्समान पद' इत्यष्टमांत्यपादीयणत्वविधायकसूत्रे विवक्षितस्य समानमेव पदं समानपदं न कदापि पूर्वोत्तरपदव्यवहारभागित्येवंरूपसमानपदत्वस्यात्राभावात्कथं णत्वमित्यत आह ॥ **पूर्वेति** ॥ पूर्वपदस्थान्निमित्तादुत्तरपदस्थनकारस्य णत्वं भवति संज्ञायां विषये, गकारवतस्तु न भवतीत्यर्थः । ननु तृतीयस्य तृतीयपादे 'नपुंसके भावे क्त' इत्यतो नपुंसक इत्यनुवर्तमाने 'ल्युट्च' 'करणाधिकरणयोश्चे'ति ल्युटो विधानेन नारायणमिति नपुंसकेन भाव्यमित्यत आह ॥ **ल्युट इति** ॥ टित्करणं हि टिड्ढाणञित्यादिना ङीबर्थम् । यदि ल्युडन्तस्य नपुंसकत्वमेव स्यात्तर्हि स्त्रीत्वाभावात्तन्निमित्तकङीबर्थं टित्करणमनर्थकमेव स्यात् । तेन ज्ञायते लिङ्गान्तरमस्तीति सामान्यतो ज्ञापनात्पुलिङ्गतोपपत्तिरित्यर्थः ॥ **अधिकरण इति** ॥ प्रकृताभिप्रायः कोऽसावनुमानो नामेति करणेऽपि भूवादिसूत्रमहाभाष्ये पुलिङ्गप्रयोगदर्शनात्करणाधिकरणयोश्चेति सूत्रे ल्युटोऽनुक्तत्वेऽपि पूर्वत्र ल्युट्चेत्यत्र नपुंसके भावे इत्यनुवर्तमानेन तत्र टित्करणकृत्याभावात्करणाधिकरणसूत्र एवानुवर्तितस्थले तस्य कृत्यं वाच्यमित्येवमुक्तमिति ध्येयम् ।

**या०— नलोपो नञ इतीति** ॥ नञो नस्य लोपः स्यादुत्तरपद इति सूत्रार्थः । अब्राह्मण इत्युदाहरणम् । ततश्च 'तस्मान्नुडची'ति नुडागमेऽनश्च इत्यादाविवानरायण इति स्यादिति भावः ॥ **न भ्राडित्यादिष्विति** ॥ 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्ये'ति सूत्रे नभ्राडित्यादिषु नञ्प्रकृत्या भवतीत्युक्तत्वात्प्रामाणिकप्रयोगबलेन नारायणशब्दस्यापि तत्रोपसङ्ख्येयत्वादित्यर्थः । उपसङ्ख्यानस्य वैयाकरणैरकृतत्वादाह ॥ **अथवेति** ॥ **न समास इति** ॥ गणपरिपठितो

यो नशब्दस्तेन सह नैकधेत्यादाविव सुप्सुपेति नित्यसमास इत्यर्थः । नित्यं क्रीडेत्यतो नित्यमित्यनुवर्तत इत्युक्तत्वात् ॥ **अदोष इति** ॥ अस्य नशब्दस्य ञकारानुबन्धाभावात्तदनुबन्धवत एव नस्य तत्र लोपविधानादनरायण इत्यनिष्टरूपापत्तिरूपो दोषो नेत्यर्थः ॥ **पूर्वपदात्संज्ञायामिति** ॥ पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति संज्ञायां न तु गकारव्यवधाने इति सूत्रार्थः । द्रुणसः खरणसः शूर्पणखा इत्याद्युदाहरणम् । अग इत्युक्तत्वात् ऋगयनमित्यादौ न भवति । नन्वत्र रषाभ्यामित्यनेनैव कस्मान्न णत्वमुक्तम् । न च नारायणपदस्य पदद्वयसमासरूपत्वेन समानपदत्वाभावः । समासस्याप्येकविभक्त्यन्तत्वेन समानपदत्वसंभवादिति चेत् । उच्यते । रषाभ्यामित्यत्र समासरूपैकपदव्यावर्तनायाखण्डैकपदलाभायैव समानेति विशेषणस्याभिप्रेतत्वात् । अन्यथा दुर्नामा रामनामेत्यादावपि तेन णत्वप्रसङ्गः । यथाहुः । पद इत्यनेनैव सामर्थ्यादेकपदत्वे लब्धेऽपि समानग्रहणं यत्समानमेकं पदं न कदाचिद्भिन्नं तत्रैव यथा स्यादित्येवमर्थं तेनाखण्डपद एव भवति न समासपद इति । अतोऽत्र समासे तेनाप्राप्तं णत्वं संज्ञात्वाद्विधीयते । रामनामेत्यादौ तु समासत्वेऽप्यसंज्ञात्वान्न णत्वप्रसङ्ग इति ॥ नन्वेवमयनशब्दस्य ल्युडन्तस्य नियमेन नपुंसकत्वात्तदन्तस्य नारायणशब्दस्यापि नपुंसकतापत्तिः । न च भाव एव तस्य नपुंसकता नाधिकरणादिकारकेऽपीति वाच्यम् । यदनान्तमकर्तरीति लिङ्गानुशासनेऽधिकरणादिकारकेऽनान्तस्य नपुंसकताविधानेन तदन्तस्यायनशब्दस्यापि तथात्वस्यावर्जनीयत्वात् । अयनं वर्त्म मार्गाध्वपन्थान इत्यमरकोशेऽपि भावभिन्ने नपुंसकस्यैव प्रयोगाच्चेत्यत आह ॥ **ल्युटष्टित्करणेति** ॥ अत्र हि इध्मव्रश्चनी गोदोहनीत्यादौ ङीबर्थं टित्करणमित्यभिप्रेतम् । तेन ज्ञायते ल्युडन्तस्य करणेऽधिकरणे च न नियमेन नपुंसकत्वमेवेति । कथमन्यथोक्तोदाहरणे स्त्रीप्रत्ययानामिमं प्रत्ययं टितं कुर्यादिति । तथाऽपि पुलिङ्गत्वं कुत इति चेत् । उक्तरीत्या टित्करणे नपुंसकत्वनियमे त्याजिते प्रयोगानुसारेण पुलिङ्गत्वस्यापि संभवात् । अत एव लिङ्गानुशासने इध्मव्रश्चनः गोदोहन इत्यप्युदाहृतम् । अधिकरण इति च प्रकृतत्वादेवोक्तमिति ज्ञातव्यम् ॥

च०— **नलोपो नञ इतीति** ॥ नञो नस्य लोपः स्यादुत्तरपदे परत इति सूत्रार्थः । तथाच 'तस्मान्नुडचि, लुप्तनकारान्नञो नुडागमस्स्यादचि परत' इति नुडागमेऽनश्व इत्यादिवदनरायण इति रूपं निष्पद्येतेति भावः ॥ **नभ्राडित्यादिष्विति** ॥ अभियुक्तप्रयोगबलेन 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' इति सूत्रे नारायणशब्दोऽप्युपसंख्येय इत्यर्थः। स्त्रैणार्थ इत्यादौ नलोपापत्तिविधूननाय 'नलोपो नञ' इति सूत्रे 'रात्रेः कृती'त्यतोऽनुवृत्तविभाषायाः व्यवस्थितविभाषात्वस्य न्यास एवोक्त्या प्रकृतेऽपि सामञ्जस्यान्नोपसंख्यानावश्यंभाव इति शङ्का पदमञ्जर्यामचरितार्थानुबन्धक-

निपातस्यैव 'नलोपो नञ' इति सूत्रे ग्रहणादूवृद्धिस्वरचरितार्थानुबन्धकप्रत्ययाग्रहणाद्विभाषानुवर्तनानावश्यकतायाः समर्थिततया निर्दलैव। चान्द्रिकी तदुपपत्तिस्तु वृत्तिव्याख्यारूपन्यासगुणदोषचिन्तनस्यानाश्रयणेनाभिलषितसिद्धिमभिप्रेत्येति स्थितम् ॥ पाणिनीयैरनुपसंख्यातत्वादाह ॥ **अथवेति** ॥ **गणपरिपठितेति** ॥ 'चादयो सत्वे' इति सूत्रे चादिगणे नञ पृथक्पठित्वा 'अमानोनाः प्रतिषेध'इति पठितेन नशब्देन नैकधेत्यादाविव 'नित्यं क्रीडे'त्यतो नित्यमित्यनुवर्त्य सुप्सुपेति नित्यसमासोपगमेन नञ एवाभावेन न नलोपापत्तिरिति भावः ॥

'तत्पुरुषः समानाधिकरणः कर्मधारय' इति सूत्रे 'एकपद्यं एकस्वर्यं एकविभक्तित्वं च। अस्ति तादर्थ्यात्तच्छब्दं तत्पुरुषार्थानि पदानि तत्पुरुष' इति भाष्यव्याख्यावसरे 'पदशब्देनार्थ उच्यते ऐकार्थ्यमित्यर्थः। अथवा समासाद्विभक्त्युत्पत्तौ सत्यां ऐकपद्यमुच्यते ॥ **एकविभक्तित्वमिति**। एककारकत्वमित्यर्थः' इति कैयटोक्त्या अयतेर्ल्युटयनादेशे निष्पन्नायनशब्दनारपदयोः समासस्य पदत्वेन रेफनकाररूपनिमित्तनिमित्तिनोरेकपदस्थतया रषाभ्यामित्यनेनापि नारायणपदे णत्वसूचनशङ्का तु तुल्यन्यायेन दुर्नामरामनामेत्यादिषु णत्वव्युदसनाय निमित्तिमत्पदभिन्नपदाघटितत्वरूपसमानपदतायाः शब्दरत्नादिषु परिष्कृततया पद इत्येतावतैव सामर्थ्यादेकपदत्वे लब्धे यत्समानग्रहणं यत्समानमेवपदं न कदाचिद्भिन्नं तत्रैव यथा स्यादित्येवमर्थं तेनाखण्डपद एव भवति न समास इति भाष्योक्त्या च न सङ्गच्छत; इत्यभिप्रेत्य समाधत्ते ॥ **पूर्वपदादिति** ॥ पूर्वपदस्थान्निमित्तात्परस्य गकारानन्तरितस्य नकारस्य णकारादेशः संज्ञाविषये भवतीति सूत्रार्थः। एवं च दर्शिताखण्डपदताविरहेऽपि द्रुणसः खुरणस इत्यादाविव णत्वं युक्तमित्याशयः। अग इत्यस्य प्रयोजनं तु ऋगयनमित्यादिव्यावृत्तिः। चर्मनासिकं इत्यादि व्यावृत्त्यर्थं संज्ञायामिति विशेषणम्।

अत्र यद्यपि णत्वं दुर्लभम्। अत्र सूत्रे णत्वस्यादर्शनात्। न च रषाभ्यां नोणः समानपद इति सूत्रान्नोण इत्यनुवर्तत इति वाच्यम्। रषाभ्यामितिसूत्रेण ग्रहणस्य प्रत्याख्यातत्वात्। अत एव पदान्तस्य मूर्धन्य इति(?) सूत्रे उत्तरार्थं मूर्धन्यग्रहणं कर्तव्यमित्यभिधाय रषाभ्यां नो णः समानपद इत्यभिधाय अत्र णकारग्रहणं न कर्तव्यं भवति। अत्रायमर्थः। पदान्तस्य नेति प्रतिषेधो न वक्तव्यो भवति। अथवांताभिसंबन्धं मूर्धन्यग्रहणमनुवर्तत इत्यभ्यधान्महाभाष्ये। तथाप्यत्र च णत्वग्रहणं मूर्धन्योपलक्षणं द्रष्टव्यम् ॥

अत्र जगज्जननादिकर्तृत्वसर्वोत्तमत्वादिकं शिवस्याभिलषता 'नारायणो वा इदमेक एवाग्र आसीदि'ति श्रौतनारायणपदवाच्यतां शिवस्य शङ्कमानेन नव्येन नारायणपदस्य शिवसंज्ञात्वाभावेन

पूर्वपदादित्यनेन णत्वस्य दुरुपपादतायामपि नारे अयनं यस्येति व्यधिकरणबहुव्रीहौ 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरि'ति परिभाषया सुबुत्पत्तेः प्रागयनशब्दस्य सप्तम्यन्तेन समासे निमित्तानधिकरणानिमित्तिमत्पदाघटितत्वरूपसमानपदत्वस्य सत्त्वान्नारायणशब्दस्य शिवे संज्ञात्वाभावेऽपि णत्वोपपत्तिरिति अभिहितं तदबोधविलसितमिति गुरुपादाः । तथाहि । गतिकारकोपपदानां कृद्भिः सह समासवचनमिति परिभाषायां कारकपदेन 'कर्तृकरणे कृता बहुलमि'तिविहितकारकविशेषसमासस्यैव प्रतिपदोक्तपरिभाषया ग्रहणेन नारे अयनं यस्येत्यादि 'अनेकमन्यपदार्थे' इति कारकविशेषपदाघटित-सूत्रविहितसमासस्य सर्वथा अग्रहणात् । यथा वा 'विभाषा दिक्समासे' इति सूत्रेण या पूर्वा सा उत्तरा यस्याः उन्मुधायाः तस्यै उत पूर्वायै इत्यादौ सर्वनामसंज्ञापरिहारार्थं 'दिङ्नामान्यन्तराले' इति सूत्रविहितकारकसमासस्यैव ग्रहणं भाष्यकारैरादृतं तथेहापि विशेषकारकसमास एव ग्राह्यः । न चात्र बाधकाभावादस्तु सामान्यस्य ग्रहणमिति वाच्यम् । इह हि दध्नि सेको यस्मात्तद्दधिसेकमित्यादिव्यधि-करणबहुव्रीहौ षत्वनिषेधार्थं परिभाषाप्रवृत्तये कारकविशेषसमासस्यैवाश्रयणीयत्वात् । एवं च नारे अयनम् इत्यादि व्यधिकरणबहुव्रीहौ परिभाषामवलम्ब्य णत्वव्युत्पादनं कथं व्यधिकरणेतरबुद्धीनां रोचतान्तराम् । किञ्च गन्धर्वगानमित्युक्तपरिभाषासमाश्रयणेन निमित्तानधिकरणानिमित्तिमत्पदाघटि(क)-तत्वरूपसमानपदत्वाश्रयणेन णत्वप्राप्तौ परिभाषाया अनित्यत्वमाश्रयणीयम् । एवमपि ऋगयनमित्यत्र णत्वप्राप्तौ निपातनाण्णत्वाभाव इत्युपेतव्यमेव । तदपेक्षया 'अणृगयनादिभ्य' इति निपातनात् णत्वशास्त्रे परिभाषाया अप्रवृत्तिरेव लाघवात् ज्ञाप्यताम् । एवं च गन्धर्वगानं ऋगयनमित्यादिसकलोदाहरणेष्वपि निपातनादेव णत्वाभावः समभांत्सीदिति क्वचिदनित्यत्वं क्वचिन्निपातनमिति अनेकप्रयोजककल्पना-भावाल्लाघवम् । एवं च नारायण इत्यत्रापि निपातनसामर्थ्यात्परिभाषाऽप्रवृत्तौ कथं णत्वं प्रत्याशा । व्यधिकरणबहुव्रीहिवादे तीरे भवनं यस्यासौ तीरभवनः, पूरयानः, ग्रामगमनः, इत्यादौ तव नये णत्वं दुर्वारम् ।

मम तु विशेषसमासाश्रयणात् ऋगयनादिभ्य इति निर्देशेन णत्वप्रकरणे प्रवृत्तेरज्ञापनाद्वा नैतादृशस्थले परिभाषोपतिष्ठत इति सुबुत्पत्तेः प्राक्समासाभावान्निमित्तानधिकरणानिमित्तिमत्पदाघटितत्वरूप-समानपदत्वमस्तीति मैव णत्वमुक्तोदाहरणेष्वतिप्रसाङ्क्षीत् । किञ्च 'अग्रग्रामाभ्यां नयतेर्णो वाच्य' इत्यपि वार्तिकं न णत्वप्रकरणे परिभाषाप्रवृत्तिं सहते । यदि हि स्याण्णत्वप्रकरणे परिभाषा तदा अग्रणी-र्ग्रामणीरित्यादौ सुबुत्पत्तेः प्राक्समासाश्रयणे निरुक्तसमानपदत्वं समभांत्सीदेवेति रषाभ्यामित्यनेनैव णत्व-सिद्ध्यर्थमेवेदं वार्तिकं स्यात् । तेन जानीमहे न णत्वप्रकरणे परिभाषा प्रवर्तत इति ॥ यदवादि । किं चेह प्रतिपदोक्तपरिभाषाया अनुपस्थितेरपि उक्तपरिभाषायाः सामान्यविषयकत्वमेव । न चानुपस्थितिः

असिद्धा प्रयोजनाभावादेव तत्सिद्धेः। अत एव तद्धितेति सूत्रे कृद्ग्रहणे परिभाषा नोपतिष्ठते प्रयोजनाभावादिति वैयाकरणा इति । तन्न गतिकारकेति परिभाषायां प्रतिपदोक्तपरिभाषानुपस्थितौ दधिसेकमित्यादौ षत्वन्तीरभवनमित्यादौ णत्वं दुर्वारमेव स्यादिति तदर्थं प्रतिपदोक्तपरिभाषायाः सप्रयोजनत्वेन प्रयोजनाभावोक्तेरज्ञानविजृंभितत्वात् ।

णत्वं रमानाथपदैकगोचरं पदे गिरीशः सहसाऽभ्यधाद्यतः ।
बुधा अत्र मानं प्रतिलाभशून्यस्त्रिदोषदुष्टः स्वयमेव नष्टः ॥ इत्यलं प्रपञ्चेन ॥

लिङ्गानुशासने नपुंसकाधिकारे भावे ल्युडन्त इत्यनेन भाववचनल्युडन्तस्यैव क्लीबन्तानुशासनात् । इध्मप्रव्रश्चनः कुठारः गोदोहनी स्थालीति प्रत्युदाहृततया भूवादयो धातव इत्यत्र 'अशक्या क्रिया पिण्डीभूता निदर्शयितुम् । यथा गर्भो निर्लुठितः। साऽसावनुमानगम्या । कोऽसावनुमानः इति ।' भाष्यव्याख्यानावसरे 'यो भावे ल्युट् स नपुंसकः अन्यत्र त्वभिधेयवशादनियतलिङ्ग' इति कैयटोक्त्या च ल्युट् चेत्यत्र नपुंसके भावे क्त इत्यतः नपुंसके भाव इत्यनयोरनुवृत्तावपि करणाधिकरणयोश्चेत्यत्र सन्नियोगशिष्टपरिभाषाविरोधेन भाव इत्यननुवृत्त्य नपुंसक इत्यनुवर्तनायोगेन यदनान्तमकर्तरि तत्तृतीये कर्तृव्यतिरिक्तकारके पदेऽनप्रत्ययान्तं तृतीये नपुंसकलिङ्गे भवतीत्यमरस्य भाववचनानां तद्विषयकत्वोपपत्त्या च करणं करणी प्रमाणं प्रमाणी इत्याद्यभियुक्तप्रयुक्त्या टिड्ढाणञ् इति सूत्रे ब्यनुबन्धकलटःष्टेरेत्वार्थककतया चरितार्थटकारकतया टित्वेन व्यावर्तनीयतेवाचरितार्थटकारकल्युटो व्यावर्तनीयताविरहेण प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुमिति भाष्यप्रामाण्येन ङीबर्थटित्वसाफल्याय च अधिकरणसाधनल्युडन्तायनशब्दस्य त्रिलिङ्गतैव युक्तेत्यभिप्रेत्य समाधत्ते ॥ ल्युट इति ॥ कृत्यल्युट इति सूत्रे बहुलग्रहणेनापि त्रिलिङ्गता सेत्स्यति बहूनर्थान् लाति आदत्ते बहुलमिति व्युत्पत्तेराकरे स्थितत्वात् ॥

अनु०— ब्रह्मशब्दोऽपि हि गुणपूर्तिमेव वदत्ययम् ॥

**सु—एवं नारायणशब्दं निरुच्य स एव ब्रह्मशब्दार्थ इत्याह ॥ ब्रह्मशब्दोऽपीति॥ हिशब्देन अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा इत्यादिप्रसिद्धिं द्योतयति । एव शब्देन सर्वात्मकत्वादिपरापव्याख्यां सर्वप्रमाणविरुद्धां व्यावर्तयति ॥ ॥ अयमिति ॥ सूत्रप्रयुक्तः ।**

वा० — ननु गुणपूर्तिवद्देशादिपूर्तेरपि ब्रह्मशब्दार्थत्वे बाधकाभावात्सिद्धान्ते तथाऽभ्युपगमाच्च तद्व्यावृत्त्यर्थकैवकारानुपपत्तिरित्यतोऽनभिमतव्यवच्छेदार्थकतया तं व्याख्याति ॥ **एवशब्देनेति** ॥ बृहतेर्वृद्ध्यर्थकत्वान्निरङ्कुशमहत्त्वार्थकेन तेन सकलवस्त्वभेदरूपवस्तुपूर्तेरप्युक्तत्वादिति परव्याख्यानादिति भावः । आदिपदेन सर्वात्मकत्वाद्युक्तिलब्धाद्वितीयत्वादिपरिग्रहः । सौत्रब्रह्मशब्दस्य विष्णुविषयत्वविप्रतिपत्तेस्तस्यैव विष्णुविषयत्वसमर्थनस्य मूलारूढतां दर्शयितुमयमिति तद्विषयतया व्याख्याति ॥ **अयमितीति** ॥

या० — **सर्वात्मकत्वादिपरव्याख्यामिति** ॥ यद्यपि ब्रह्मशब्दान्नित्यशुद्धबुद्धमुक्तस्वभावं सर्वशक्तिसमन्वितं प्रतीयते, बृहधातोरर्थानुगमादित्येव परेण व्याख्यातम् तथाऽपि पञ्चपादिकारैणैतद्भाष्यव्याख्यानावसरे यदि ब्रह्मातिरिक्तं वस्तु किञ्चित्स्यात्तदा तद्रूपविकलत्वाद्ब्रह्मणोऽल्पत्वं स्यात् । तच्च निरतिशयमहत्त्वपराद्ब्रह्मशब्दादेवापास्यते । तस्मादेकरसमद्वैतं वस्तु ब्रह्मपदात्प्रतीयत इत्युक्तम् । तदभिप्रायेण सर्वात्मकत्वादित्युक्तम् । आदिपदाद्देशादिकृताल्पतानिराकरणं बुद्धत्वादिकं च ग्राह्यम् ॥ **सर्वप्रमाणविरुद्धमिति** ॥ सर्वात्मकत्वं हि चेतनभेदाभावेऽचेतनमिथ्यात्वे च पर्यवस्यति । अत एवैकरसमद्वैतमित्युक्तम् । तदुभयं च सर्वप्रमाणविरुद्धमित्यर्थः । एवमादिशब्दोपात्तस्य देशादिपरिच्छेदाभावस्य देशादेरभावात्तत्कृतः परिच्छेदो नास्तीति यत्तदीयमुपपादनं तदपि सर्वप्रमाणविरुद्धमिति द्रष्टव्यम् ॥

च० — **सर्वात्मकत्वादीति** ॥ त्रिविधपरिच्छेदाभावरूपमहत्त्वार्थेन ब्रह्मशब्देनैव सर्वात्मकतालाभादिति व्याख्यातत्वादिति भावः । प्रपञ्चितं चैतत् चन्द्रिकायाम् ।

अनु० — **अतो नारायणस्यैव जिज्ञासाऽत्र विधीयते ॥**

**सु० — किमतो यद्येवमित्यत आह ॥ अत इति ॥ यतो ब्रह्मशब्दो नारायणशब्दसमानार्थोऽतो ब्रह्मजिज्ञासा कर्तव्येति वाक्येन नारायणस्यैव जिज्ञासा विधीयत इति ज्ञायत (इत्यत) इत्यर्थः ।**

अनु०— सिद्धत्वाद्ब्रह्मशब्दस्य विष्णौ स्पष्टतया श्रुतौ ॥

**सु०— यस्तूक्तामर्थसमाख्यां निर्वचनान्तरदर्शनान्नानुमन्यते । तं प्रत्युपपत्त्यन्तरमाह ॥ सिद्धत्वादिति ॥ तदेव ब्रह्म परमं कवीनामित्यस्यां श्रुतौ ब्रह्मशब्दस्य विष्णौ स्पष्टतया मुख्यतया सिद्धत्वाच्च सौत्रो ब्रह्मशब्दो विष्णुपर इति ज्ञायत इत्यर्थः ॥ एतदुक्तं भवति । मुख्यामुख्ययोर्हि मुख्यस्तावद्ग्राह्यः, शक्तिवशात्तस्यैवादौ बुद्धिसन्निधानात् । तदनुपपत्तौ त्वमुख्यः । दृष्टं चैतदुभयं गङ्गायां जलं गङ्गायां घोष इत्यादौ । ब्रह्मशब्दश्च विष्णावेव मुख्यः । तदेव ब्रह्मेति श्रुतेः । अत्र हि विष्णोरन्यस्य ब्रह्मत्वं निषिध्यते । त(त्र)तो ब्रह्मशब्दस्य विष्णावेव शक्तिर्नान्यत्रेति व्याख्यानाङ्गीकारेऽभिधानादिविरोधः स्यात् । अतो मुख्यवृत्तिर्विष्णावेव नान्यत्रेति व्याख्यानमुचितम् ॥ न चात्र सूत्रे ब्रह्मशब्देन मुख्यार्थस्य विष्णोः परिग्रहे बाधकमस्ति । अतः प्रकरणादिसद्भावेऽसद्भावे वा विष्णुपर एवायं ब्रह्मशब्द इति ज्ञायत इति ।**

**वा०**—ननु श्रुतौ ब्रह्मशब्दस्य विष्णुविषयतायाः स्पष्टत्वमात्रेण न सौत्रस्य तस्य विष्णुविषयत्वं सिध्यतीत्यतोऽस्य मुख्यामुख्यन्यायसूचकत्वेन तद्बलात्तत्सिद्धिरित्याशयेन स्पष्टताशब्दं मुख्यार्थतया व्याख्याति ॥ **स्पष्टतयेति** ॥ ननु मुख्यस्यैव सौत्रब्रह्मशब्देनोपादाने न नियामकम् । तथात्वे ब्रह्मैव सन्नित्यत्रापि जीवोपादानं न स्यात् । कथं चानया श्रुत्या विष्णौ तस्य मुख्यत्वसिद्धिः । अतोऽन्ततः प्रकरणादेरनुसर्तव्यत्वे मुख्यत्वोक्तेर्वैयर्थ्यमित्यत आह ॥ **एतदुक्तं भवतीति** ॥

**प०— अर्थसमाख्यां** नारायणशब्दार्थसमाख्याम् । ननु श्रुतौ मुख्यत्वोक्तावपि अत्र स्थले मुख्यस्य ग्रहणं कुतः, श्रुतौ वा कथं मुख्यत्वस्य स्पष्टत्वं मुख्यपदाभावादित्यत आह ॥ **एतदुक्तं भवतीति** ॥ **अतो मुख्यवृत्तिरिति** ॥ परममुख्यवृत्तिरित्यर्थः ॥ मुख्यवृत्तेर्बृहज्जातिजीवकमलासने-ष्वाद्यभिधानसिद्धत्वेन तन्निरासायोगात् ॥ **प्रकरणादीति** ॥ 'स विष्णुराह ही'त्यादिविष्णोर्ब्रह्मशब्दार्थ-परत्वोक्तिपरब्रह्मप्रकरणादीत्यर्थः । आदिपदेन श्रुतिलिङ्गादिपरिग्रहः ।

**या०— निर्वचनान्तरदर्शनादिति** ॥ नारायणशब्दस्य आपो नारा इति प्रोक्ता इति स्मृत्यादिसिद्धनिर्वचनान्तरदर्शनादित्यर्थः ॥ **मुख्यवृत्तिरिति** ॥ परममुख्यवृत्तिरित्यर्थः । अतो नात्र अभिधानादिविरोध इति ध्येयम् ॥

**च०— निर्वचनान्तरदर्शनात्** ॥ आपो नारा इति प्रोक्ता इति स्मार्तनिर्वचनान्तरदर्शनात् ॥ **मुख्यवृत्तिरिति** ॥ परममुख्यवृत्तिरित्यर्थः ॥

अनु०— अम्भस्यपार इत्युक्तो नारायणपदोदितः ॥
आपो नारा इति ह्याह

सु०— स्यादेतत् । यदि तदेव ब्रह्मेत्यस्यां श्रुतौ तच्छब्दपरामृष्टो विष्णुर्भवेत्तदेव कुत इत्यत आह ॥ अम्भसीति ॥ तदेव ब्रह्मेत्यस्य ह्यम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयानित्युपक्रमवाक्यम् अत्र नारायणपदोदित एवोक्तः ॥ एतदुक्तं भवति । अम्भस्यपार इत्युपक्रमवाक्यं तावन्नारायणपरम् नारायणशब्दसमानार्थत्वात् । तथा च प्रकृतपरामर्शं परित्यज्याप्रकृतपरामर्शाङ्गीकारायोगात्तदितिपरामृष्टो विष्णुरेवेति ।

अम्भस्यपार इति वाक्यं कथं नारायणपदसमानार्थमित्यत आह ॥ आप इति ॥ हि यस्मात् 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इति स्मृतिरप्सु स्थितत्वं नारायणशब्दार्थमाह । तस्मादपारेऽम्भसि स्थित इति वाक्यं नारायणशब्दसमानार्थं भवतीति ।

वा०— ननु तदेवेत्यत्र विष्णोः परामर्शविषयतोपपादनायाम्भस्यपार इत्युपक्रमवाक्ये नारायण पदोदितत्वोक्तिरसङ्गता साक्षाद्धेतोरनुक्तत्वात् । नारायणपदोक्तिमात्रेण व्यवहितस्यापि हेतोरलाभादित्यत आह ॥ एतदुक्तं भवतीति ॥

प०— ननु तच्छब्दपरामृष्टो विष्णुः कुत इति प्रश्न अम्भसीति वाक्योक्तो नारायण इति व्यधिकरणम् । तत्रोक्तस्य नारायणत्वं निर्बीजमित्यत आह ॥ एतदुक्तं भवतीति ॥ इति ह्याहेत्यत्राध्याहारमाह ॥ इति स्मृतिरित्यादि ॥

अनु०— स एवाप्स्वन्तरीरितः ॥
कामतो विधिरुद्रादिपददात्र्या स्वयं श्रिया ॥
योनित्वेनात्मनः

सु०— किञ्च शाखान्तरे मम योनिरप्स्व१न्तरिति विष्णुरेवाप्स्वन्तरीरितस्तत्समाख्यानाच्चाम्भस्यपार इत्युपक्रमवाक्यं विष्णुपरमित्याह ॥ स एवेति ॥ स्यादेतत् । यदि मम योनिरिति शाखान्तरस्थमपि वाक्यं विष्णुपरं स्यात्तदेव कुत इत्यत आह ॥ स्वयमिति ॥

श्रीशब्दोऽन्यत्राप्युपचाराद्वर्तते । यथोक्तम् 'ताश्चेन्द्रधर्मनासत्यसंश्रयाच्छ्रिय ईरिताः' इति । तद्व्युदासार्थं स्वयमित्युक्तम् । महालक्ष्म्या मम योनिरित्यात्मनः कारणत्वेनेरितत्वादप्स्वन्तरित्युक्तो विष्णुरेव ॥ भवेदेतत् । यदीदं श्रीवाक्यं स्यात्तदेव कुतो निश्चेयम् । अम्भृणी वा वागात्मानं तुष्टावेत्यम्भृणीवाक्यत्वस्योक्तत्वादित्यत आह ॥ कामत इति ॥ अत्र हि यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामित्यादिनाऽस्या अम्भृण्या वाचः स्वेच्छामात्रेण ब्रह्मरुद्रादिपददातृत्वं प्रतीयते । न चैतच्छ्रियं विनाऽन्यस्या युक्तमन्यासां ब्रह्मसृष्टत्वात् । अतः परशक्तेः श्रिय एवेदं वाक्यमिति निश्चीयते ॥ अथवा श्रियाऽऽत्मनो योनित्वेनोक्तत्वादप्स्वन्तरिति विष्णुरेवोच्यत इत्युक्तम् तन्न श्रीयोनित्वस्य ब्रह्मरुद्राद्यन्यतमस्मिन्संभवात्; इत्याशङ्काऽपनोदाय कामत इत्यादिविशेषणमुक्तम् ।

वा०— श्रियोक्तत्वादित्युक्ते स्वयमित्यस्यानुक्तिसिद्धत्वात्स्वयमिति व्यर्थमित्यतो मुख्यत्वं स्वयंशब्दार्थ इत्यभिप्रेत्य तद्व्यावर्त्यमाह ॥ **श्रीशब्द** इति ॥ पूर्वं श्रिया स्वकारणत्वेनोक्तत्वादिति हेतोरसिद्धिपरिहारकत्वेन कामत इत्यादिविशेषणं योजितम् । अधुना तस्यैव हेतोरप्रयोजकत्वपरिहारकतयाऽपि तदेव योजयति ॥ **अथवेति** ॥

प०— स एवेत्यादि योजयति ॥ **किं चेति** ॥ **यथोक्तमिति** ॥ भारततात्पर्यनिर्णये अष्टादशेऽध्याये । ताः शचीशामलोपानाम्न्यः । अम्भ्रणी वाक् अम्भ्रणीनामिका वागित्यर्थः ॥

अनु०— विष्णोस्तिष्ठन्तीत्युदितस्य च ॥
यस्मिन्देवा अधीत्युक्त्वा

सु०— एवं नारायणशब्दसमाख्ययाऽम्भृणीसूक्तसमाख्यया चाम्भस्यपार इत्युपक्रमवाक्यस्य विष्णुविषयत्वं समर्थ्य तदेव ब्रह्मेति परामर्शस्य तद्विषयत्वं समर्थितम्; हेत्वन्तरेणापि समर्थयते ॥ **विष्णोरिति** ॥ सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणीत्यैतरेयश्रुतावाज्ञाधृतमहदादिदेवतासमूहत्वेनोदितस्य विष्णोरत्रापि यस्मिन्निदं सञ्च विचैधि सर्वं यस्मिन्देवा अधि विश्वे निषेदुरिति सर्वदेवाश्रयत्वमुक्त्वा तदेव ब्रह्मेत्यब्रवीदिति संबन्धः ॥ अयमर्थः । तदेव ब्रह्मेति परामर्शविषयो हि यस्मिन्देवा इति सर्वदेवाश्रयत्वेन प्रतीयते । तच्च शाखान्तरे सप्तार्धगर्भा इति विष्णुधर्मत्वेनावगतम् । अतोऽपि तदिति परामृश्यमानो विष्णुरेवेति ।

वा॰— विष्णोरित्युत्तरवाक्यस्याप्युपक्रमस्य विष्णुविषयत्वसमर्थनार्थत्वभ्रान्तिं निवारयितुं पूर्वोत्तरप्रकरणविषयं विविच्य दर्शयति ॥ **एवमिति** ॥ एवमुत्तरत्रापि पूर्वशेषत्वभ्रान्तिनिवारणायावतारितेति द्रष्टव्यम् । अनेनोक्तहेतुस्वरूपस्य स्पष्टाप्रतीतेराह ॥ **अयमर्थ इति** ॥

प॰— **सप्तेति** ॥ आर्धगर्भा आसमन्तात् ऋद्धब्रह्माण्डगर्भाः सप्त महदहङ्कारपञ्चमहाभूतदेवताः भुवनस्य रेतो रतिप्रदस्य विष्णोः प्रदिशा आज्ञया विधर्मणि विविधधारणकर्मणि तिष्ठन्तीति श्रुत्यर्थं हृदि निधायाह ॥ **आज्ञाधृतेत्यादि** ॥ **अत्रापीति** ॥ उपनिषद्यपीत्यर्थः । मूले इत्युक्त्वेति क्त्वाप्रत्ययान्तस्यान्वयमाह ॥ **उक्त्वा तदेव ब्रह्मेत्यब्रवीदिति संबन्ध इति** ॥ तदेव ब्रह्म चाब्रवीदिति श्रवणेऽपि चशब्द इति शब्दार्थ इति वक्ष्यमाणत्वाद्ब्रह्मेतीत्यनुवादः ॥

अनु॰— **समुद्रं स्थानमेव च ॥**

सु॰— **लिङ्गान्तरमाह ॥ समुद्रमिति ॥ यमन्तः समुद्रे कवयो वयन्तीत्यस्य पुरुषस्य समुद्रस्थानं चोक्त्वा तदेव ब्रह्मेत्यब्रवीत्तस्मादपि समुद्रस्थानत्वलिङ्गाद्विष्णुरेव परामर्शविषय इति गम्यते । एवशब्देन समुद्रस्थानत्वं मम योनिरप्स्व१न्तःसमुद्र इत्यादिश्रुतेरन्यत्रानवकाशमित्याह । विष्णोरेव यत्समुद्रस्थानत्वमिति योजना ।**

वा॰— विष्णोरित्यनुवर्तितेनैवकारसंबन्धेन योजनां प्रदर्शयितुमेवकारव्यावर्त्यमाह ॥ **एवशब्देनेति** ॥

प॰— **कवयो वयन्तीति** ॥ जानन्तीत्यर्थः । नन्वेवशब्देनान्यत्रानवकाशमाहेत्ययुक्तम् । स्थानपदेनान्वितेन तादृशार्थालाभादित्यत आह ॥ **विष्णोरेवेत्यादि** ॥ अनेन विष्णोरिति षष्ठ्यन्तस्य समुद्रं स्थानमेव नाम चाक्षरमित्येवेत्यत्रापि संबन्ध इत्युक्तं भवति ॥

श्री॰— ननु समुद्रस्थानं कथं विष्णोर्लिङ्गमित्यतो मूले भावप्रधानो निर्देश इत्यभिप्रेत्याह ॥ **विष्णोर्यत्समुद्रस्थानत्वमिति** ॥ विष्णोर्यत्समुद्ररूपस्थानवत्त्वं तदुक्त्वेत्यर्थः ।

अनु०— नाम चाक्षरमित्येव ऋच इत्युदितं तु यत् ॥

सु०— युक्त्यन्तरमाह ॥ नाम चेति ॥ यदक्षरे परमे प्रजा इत्यस्याक्षरमिति नाम चोक्त्वा तदेव ब्रह्मेत्यब्रवीत् । अतश्च विष्णुरेव तदिति परामृश्यते ॥ अक्षरनामान्यस्य किं न स्यादित्यत उक्तमेवेति । विष्णोरेवेत्यन्वयः ॥ तत्कुत इत्यत आह ॥ ऋच इति ॥ ऋचोऽक्षरे परमे व्योमन्निति यदक्षरनाम वामनसूक्ते विष्णौ प्रयुक्तमिति । तुशब्देनाक्षरनाम्नो विनाशाभावार्थतालक्षणं विशेषं द्योतयति । न हि विष्णोरन्यस्याविनाशित्वं संभवतीति वियदधिकरणे वक्ष्यते ।

वा०— समुच्चयार्थकचशब्दस्य वैयर्थ्यात्प्रकारसमर्पणस्यावश्यकत्वादब्रवीदिति क्रियां प्रति वाक्यस्यैव कर्मत्वौचित्याच्चेतिशब्दार्थतया चशब्दं व्याचष्टे ॥ ब्रह्मेतीति ॥

प०— यदिति यस्मादित्यर्थे । मूले नाम चाक्षरमित्येव ऋच इत्यत्र 'ऋत्यक' इति सूत्रेण विकल्पेन प्रकृतिभावस्य स्पष्टत्वादनुक्तिः ।

या०— वियदधिकरण इति ॥ तत्र ब्रह्मव्यतिरिक्तस्य सर्वस्योत्पत्तिरेव यद्यपि वक्ष्यते न तु विनाशित्वं तथाऽप्युत्पत्तिमतो भावस्य विनाशित्वं नियतमिति तदपि तत्र विवक्षितमित्यभिप्रेत्यैवमुक्तम् । अत एव तत्त्वप्रकाशिकायामुत्पत्तिमत्त्वाल्लीयन्त इति सिद्धमित्युक्तम् ॥

च०— वियदधिकरणे वक्ष्यत इति तत्रेशान्यसामान्यस्योत्पत्तिमात्रसमर्थनेऽपि जनिमतो नाश-नैयत्यादित्याशयेनेयमुक्तिः । अत एव उत्पत्तिमत्त्वाल्लीयन्त इति सिद्धमिति तदभिध्यानादिति टीकोक्तिः ॥

अनु०— यतः प्रसूतेत्युक्त्वा च तदेव ब्रह्म चाब्रवीत् ॥ १ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्याये जिज्ञासाधिकरणं समाप्तम् ॥

सु०— लिङ्गान्तरमाह ॥ यत इति ॥ यतः प्रसूता जगतः प्रसूतीति प्रकृतिकारणत्वं चास्य पुरुषस्योक्त्वा तदेव ब्रह्मेत्यब्रवीत् । प्रकृतिकारणत्वं च मम योनिरप्स्व१न्तस्तस्मादव्यक्त-मुत्पन्नं त्रिगुणं द्विजसत्तमेत्यादिश्रुतिस्मृतिषु विष्णोरेव प्रसिद्धम् । अतः स एव तदिति परामर्शगोचर इति ॥ ब्रह्म चेति चशब्द इतिशब्दार्थे ।

तदेवं तदेव ब्रह्मेतिवाक्यस्य विष्णुविषयत्वाद्ब्रह्मशब्दो विष्णावेव मुख्य इति स्थिते सौत्रोपि ब्रह्मशब्दस्तत्पर एवेति सिद्धम् ॥

प०— ब्रह्मान्यच्चाब्रवीदिति भ्रमनिरासाय निपातानामनेकार्थत्वादाह ॥ **चशब्द इति शब्दार्थ इति** ॥

श्री०— **यतः प्रसूतेति** ॥ सिसृक्षुत्वविशेषं तत्साक्षाद्भगवदिच्छया प्राप्तेष सृष्ट्युदितेत्यर्थः ॥

सु०— अत्र केनचित्प्रलपितं श्रौतस्य ब्रह्मशब्दस्य जात्यादिकमर्थान्तरमाशङ्क्य यद्भाष्यकारीयं निराकरणं तदनुपपन्नम् । यतः सूत्रकार एव जन्माद्यस्य यत इति जगज्जन्मादिकारणं ब्रह्मेति वक्ष्यति । न हि जात्यादेर्जगज्जन्मादिकारणताऽस्तीति ॥ तदतीव मन्दम् । सौत्रब्रह्मपदश्रवणे जात्यादिप्रतिभास एव न भवतीति वा तन्निराकरणमकर्तव्यम् उत जातोऽपि प्रतिभासो लक्षणसूत्रपर्यालोचनया निवर्तत इति । नाद्यः गृहीतसङ्गतेरर्थान्तरप्रतिभासस्यावर्जनीयत्वात् । द्वितीये त्वयाऽप्यर्थान्तरप्रतिभासस्तन्निराकरणं चाङ्गीकृतमेव । तथाप्युत्तरवाक्यपर्यालोचनां विहाय किं युक्त्यन्तरान्वेषणेनेति चेन्न । प्रथमप्राप्तं स विष्णुराह हीत्यादिवाक्यं विहाय किमुत्तरान्वेषणेनेत्यपि वक्तुं शक्यत्वात् । न चोत्तरसूत्रपर्यालोचनया अयं निर्णयो न कार्य इत्युक्तं भाष्यकृता । तस्माद्यत्किञ्चिदेतत् ।

वा०—भाष्यकारस्य ब्रह्मशब्दार्थसमर्थने केनचिदुद्भावितामचातुरीमाशङ्क्य परिहरति ॥ **अत्रेति** ॥ **सौत्रेति** ॥ न चैतत्पक्षाप्राप्तिर्यतः सूत्रकार एवेत्यादिना स्वयमेव द्वितीयपक्षमात्रविषयकस्वाभिप्रायप्रकटनादिति वाच्यम् । प्रकारस्य प्रकारान्तरादूषकत्वस्य सर्वसिद्धत्वेऽप्येवमाशङ्कमानस्याशङ्कैव नोदेति । अथाप्याशङ्का चेदुत्तरसूत्रपर्यालोचनयैव तत्परिहार इत्यभ्युच्चयेनापि तदुक्तेः संभवेन सूत्रकारीयपरिहारादेतच्छङ्काया एवानुदय इति तत्पक्षाभिप्रायस्यापि संभवादित्याशयात् । उत्तरसूत्रालोचनया परिहारस्य सूत्रानारूढपरिहारापेक्षयाऽन्तरङ्गत्वादिति युक्तिं सूचयति ॥ **युक्त्यन्तरेति** ॥ अत एव ततोऽप्यन्तरङ्गतां परिहर्ता दर्शयति ॥ **प्रथमेति** ॥ ननु परिहारान्तरं पूर्वसूत्रान्वेषणेन कृतवता भाष्यकृतार्थात्प्रकारान्तरं दूषितमेव भवतीत्यतः प्रकारस्य प्रकारान्तरादूषकत्वन्यायविरोधस्तर्हीत्याशयेनाह ॥ **न चेति** ॥

प०— नन्वेवं जन्मादिसूत्रेण निर्णयो विरुध्यत इत्यत आह ॥ **न चोत्तरसूत्रेति** ॥

श्री०— **निवर्तत इति** ॥ तथाच भाष्यकारीयं तन्निकारणं व्यर्थमिति भावः ॥

सु०— एतेनैतदपि निरस्तम् । यत्परेण तत्किं ब्रह्म प्रसिद्धमप्रसिद्धं वा, प्रसिद्धं चेन्न जिज्ञास्यमप्रसिद्धत्वे न जिज्ञासितुं शक्यमित्याशङ्कय, प्रसिद्धमेव ब्रह्म ब्रह्मशब्दात्सर्वस्य आत्म(क)त्वाच्च । तथाऽपि देहात्मत्वादिविप्रतिपत्तिसद्भावाज्जिज्ञास्यमित्युक्तम्। ब्रह्मजिज्ञासापदेन हि सकलजगज्जन्मादिकारणस्य भगवतो नारायणस्य जिज्ञासा विधीयत इत्युपपादितम् । तत्र जीवात्मनि प्रसिद्धिविप्रतिपत्तिव्युत्पादनस्य कोऽवसरः । जीवात्मनो ब्रह्मत्वजिज्ञासा ब्रह्मजिज्ञासेति चेन्नैवं सूत्रकार आहेत्यलम् ।

तदेवमधिकारिविषयप्रयोजनाभिसंबन्धवत्त्वाद्ब्रह्मजिज्ञासा कर्तव्येत्यारम्भणीयमिदं शास्त्रम् इति सिद्धम् ॥ ॥

॥ इति श्रीमन्न्यायसुधायां जिज्ञासाधिकरणं समाप्तम् ॥ १ – १-१॥

वा०— एतेनेति ॥ पूर्वोत्तरसूत्रानुसारेण सकलजगज्जन्मादिकारणस्य विष्णोर्ब्रह्मशब्दार्थत्वव्युत्पादनेनेत्यर्थः ॥ प्रसिद्धं चेदिति ॥ प्रमाणान्तरप्रसिद्धस्य शास्त्रविषयत्वासंभवादिति भावः ॥ अप्रसिद्धत्व इति ॥ सामान्यतोऽप्यज्ञातस्य बुद्ध्यनारूढतया जिज्ञासितुमशक्यत्वादिति भावः ॥ ब्रह्मशब्दादिति ॥ वैदिकब्रह्मशब्दस्य निरर्थकत्वायोगात्स्वर्गादिपदवत्कस्यचिदर्थस्य कल्प्यत्वे प्रसिद्धपदसमभिव्याहारेण निगमनिरुक्तव्याकरणाद्यनुसारेण शब्दार्थविषयस्य कल्प्यत्वाद्वृद्ध्यर्थकबृहधातुनिष्पन्नस्य तस्य प्रकरणोपपाद्यताभावेन निरङ्कुशमहत्त्वरूपार्थसिद्धेर्ब्रह्मशब्दादेव तत्सिद्धिरित्याशयः ॥ सर्वस्यात्मत्वाच्चेति ॥ सर्वोऽप्यात्मास्तित्वं प्रत्येत्यहमस्मीत्यात्मा च ब्रह्मेति भावः । देहात्मवादीत्यादिपदेनेन्द्रियमनोबुद्धिशून्यविज्ञानसङ्घातात्मत्वादिविप्रतिपत्तिपरिग्रहः । एतेनेति परामर्शविषयं प्रदर्शयति ॥ ब्रह्मजिज्ञासापदेनेति ॥

नारायणस्येति ॥ स विष्णुराह हि तं ब्रह्मेत्याचक्षत इति स्वोपपादितप्रकारेण लब्धस्य सकलजगज्जन्मादिकारणस्येति वक्ष्यमाणसूत्रानुसारेण लब्धस्य ब्रह्मशब्दार्थस्य कथनं तत्रेति । तथा चान्यस्य जिज्ञास्यत्वेनान्यत्र प्रसिद्ध्यादिव्युत्पादने वैयधिकरण्यमित्यर्थः । न चात एवात्मैव ब्रह्मेत्युक्तमिति वाच्यम् । उत्तरसूत्रादौ जीवादिव्यावृत्तजगज्जन्मादिकारणत्वोक्त्यादिना जिज्ञास्यस्य पूर्वसूत्रे विष्णुत्वेनोक्तस्य ब्रह्मणो जीवात्मकत्वाशयस्य दुराशामात्रत्वादात्मब्रह्माभेदस्याद्याप्यसिद्धतया ब्रह्मोद्दिश्यात्मभेदविधानाय ब्रह्मण्येव तयोर्वक्तव्यत्वाच्चेति भावः । ननु ब्रह्मजिज्ञासापदस्य न भवदुक्तोऽर्थः किन्तु जीवात्मनो ब्रह्मत्वजिज्ञासेत्येव तथा च नानुपपत्तिरित्याशङ्कते ॥जीवेति॥ लोके निश्चितेन धर्मिणैवानिश्चितेन प्रकारेण विशिष्य विचारपदप्रयोगात्सूत्रे जीवपदं श्रूयेत । धर्मजिज्ञासेत्यादाविव श्रुतस्य ब्रह्मपदस्य कस्य कथं विचार

इति प्रथमाकाङ्क्षितप्रधानधर्मिपरत्वसंभवे तत्त्यागेन तद्विपरीतप्रकारपरत्वे त्वप्रत्ययो वा श्रूयेत । न चैवं श्रूयतेऽपि तु ब्रह्मजिज्ञासेति ब्रह्मण एव धर्मित्वं श्रूयतेऽतो न त्वदुक्तोऽर्थो युक्त इत्याह ॥ नैवमिति ॥ किञ्चोत्तरसूत्रे सूत्रकारेण जीवादिव्यावृत्तं जगत्कारणत्वं ब्रह्मलक्षणत्वेनोच्यते । त्वत्पक्षेऽपि हि शारीरश्चोभयेऽपि हि भेदेनैनमधीयत इत्यादिना जन्मादिसूत्रोक्तलक्षणस्य जीवे निषेधात् । तच्चास्मदुक्तार्थ एवोपपद्यते । अन्यथा धर्मिण्यतदारोपनिवृत्त्यर्थत्वाल्लक्षणस्योत्तरसूत्रे जीवस्यैव ब्रह्मत्वेन लक्षणं वदेत् । न चैवमुत्तरसूत्रे सूत्रकार उक्तवानित्याह ॥ नैवमिति ॥ ननु मुक्तोपसृप्यव्यपदेशादित्यादौ भावप्राधान्येन निर्देशो भवद्भिरपि व्याख्यायत एव । तथाऽत्रापि व्याख्याने काऽनुपपत्तिः । उत्तरसूत्रे वक्ष्यमाणं जगत्कारणत्वं तटस्थलक्षणम् । आनन्दादि तु स्वरूपलक्षणम् । तच्च न जीवव्यावर्तकमिति न द्वितीयानुपपत्तिरपीत्यत आह ॥ अलमिति ॥ जीवात्मत्वस्य ब्रह्मणि प्रमाणतो निश्चये तदर्थकतया व्याख्याने शाब्दानुपपत्तेरकिञ्चित्करत्वेऽपि शब्दबलादेव तथा व्याख्याने शाब्दानुपपत्तेर्बाधकत्वेनोच्यमानत्वादुत्तरसूत्रोक्तलक्षणतटस्थत्वनिरासस्य वक्ष्यमाणरीत्या सुलभत्वात् । उक्तवक्ष्यमाणरीत्या जीवब्रह्माभेदस्याप्रामाणिकत्वप्रमाणविरुद्धत्वादेर्निश्चेतुं शक्यत्वाच्चोपरम एवोचितो न तु निर्दलमतनिरासाय बहुयत्नो युक्त इत्याशयः ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां वेदव्यासतीर्थपूज्यचरणानां शिष्येण विद्याधीशयतिना विरचितायां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ वाक्यार्थचन्द्रिकायां जिज्ञासासूत्रं समाप्तम् ॥

स० — **अप्रसिद्धत्वेन जिज्ञासितुं शक्यमिति** ॥ आश्रयस्यैवाज्ञानादिति भावः ॥ **सर्वस्य आत्मत्वाच्चेति** ॥ सर्वस्य पुरुषस्येति शेषः । प्रतीति भाति इत्यपि शेषः । कुत आत्मत्वात् । चेतनस्वरूपत्वादित्यर्थः॥ तथाच सर्वोऽप्यात्मा अस्तित्वं प्रत्येति । न कोऽपि नाहमस्मीती भावः ॥ तेनेत्युक्तं विवृणोति ॥ **ब्रह्मजिज्ञासापदेनेति** ॥ नारायणस्य जिज्ञासानुग्राह्यप्रमाणभूतेन वेदेन सामान्यतः सिद्धावपि नानाविधविप्रतिपत्तिकलुषितत्वेन जगत्कारणत्वगुणपूर्णत्वादिनाऽसिद्धतया तथा जिज्ञासाविधानमप्युपपद्यत इत्युपपादितमित्यर्थः । अतः तत्किं ब्रह्मप्रसिद्धं वेत्यादि विकल्पदूषणं नास्माकमिति भावः ॥ **नैवं सूत्रकार आहेति** ॥ यदि जीवात्मनो जिज्ञासां प्रति धर्मित्वं सूत्रकृदभिप्रेतवान् तदा जीवात्मानं धर्मित्वेनोपादद्यात् । नैवं सूत्रकार उपाददादिति भावः । अथवा यदि जीवात्मनो ब्रह्मत्वेन जिज्ञासा सूत्रकारस्याभिप्रेता स्यात् तदोत्तरत्र जीवात्मनो ब्रह्मत्वेन जिज्ञासां कुर्यात् । नैवं सूत्रकारः कृतवानिति यद्ब्रह्मजिज्ञासापदेन सूत्रकारो नैतावन्तमर्थमाह । अस्मदिष्टार्थः । सूत्रजिज्ञासापदस्य पूर्वोत्तरसूत्रपर्यालोचनादिनोपपादित एवेति भावः ॥

प० — **एतदपीति** ॥ यत्परेण जिज्ञास्यमित्युक्तं एतदपि ब्रह्मशब्दार्थो नारायण एवेत्यर्थ-कथनेनैव निरस्तमित्यर्थः । एतेनैवेत्युक्तं व्यनक्ति ॥ **ब्रह्मजिज्ञासापदेनेति** ॥ **नैवं सूत्रकार आहेति** ॥ लोकेऽपि निश्चितेन धर्मिणाऽनिश्चितेन प्रकारेण विशिष्य विचारपदप्रयोगेन ब्रह्मजिज्ञासेत्युक्त्या ब्रह्मण एव जिज्ञासाधर्मित्वप्रतीत्या जीवात्मधर्मिकजिज्ञासाया अप्रतीतेः । अन्यथा जीवात्मजिज्ञासेत्यवक्ष्यदिति भावः ॥ **इत्यलमिति** ॥ तद्विस्तरश्चन्द्रिकायां बोध्यः । फलोक्त्या सूत्रार्थमुपसंहरति ॥ **तदेवमिति** ॥ इति जिज्ञासाधिकरणं संपूर्णम् ॥ ॥

या० — **प्रसिद्धं च तदिति** ॥ 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः' इति अक्षपादवचनादिति भावः । अन्ये तु यदि प्रसिद्धं वेदान्तवाक्यजन्यज्ञानेन विषयीकृतम् तर्हि न जिज्ञास्यम् । निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायातिपातादित्याहुः ॥ **अप्रसि-द्धत्वे न जिज्ञासितुं शक्यमिति** ॥ बुद्धावनारूढस्य विचारासंभवात् । यद्यपि प्रत्यक्षादिप्रमाणैर्विचारा-नपेक्षैरत्यन्तानधिगतार्थ एव प्रतीयते । तथाऽपि यत्र विचारापेक्षया प्रमाणेन वस्तु प्रतिपाद्यते तत्रा-प्रतिपन्नमुद्दिश्य विचारानुपपत्तेः प्रतिपन्न एव विचारदर्शनाच्च नाप्रतिपन्नं विचारधर्मीत्याहुः । अन्ये त्वनु-भूतेहि प्रिये भवतीच्छा न तु सर्वथाऽननुभूतपूर्व इति अत्र भावमाहुः ॥ **ब्रह्मशब्दादिति** ॥ मीमांसा-प्रवृत्तेः पूर्वमपि वेदान्तेभ्य आपाततो ब्रह्मावगतमस्तीति भावः ॥ **सर्वस्यात्मत्वाच्चेति** ॥ अत्र सर्वस्य प्रसिद्धमेव ब्रह्मेत्यन्वयः । तथाच सर्वस्येत्येतत्प्रतिज्ञाविशेषणं न तु हेतुविशेषणम् । वैयर्थ्यात् । आत्मत्वादिति हेतौ च ब्रह्मण इति शेषः । ततश्च सर्वो ह्यात्माऽस्तित्वं प्रत्येति न नाहमस्मीति । यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् सर्वो लोको नाहमस्मीति प्रतीयात् । आत्मा च ब्रह्मेत्यर्थः ॥ **देहात्म-त्वादिविप्रतिपत्तीति** । आदिपदादिन्द्रियाण्येवात्मेत्यन्ये । मन इत्यपरे । विज्ञानमात्रं क्षणिकमित्येके । शून्यमित्यपरे । अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे । भोक्तैव केवलं न कर्तेत्यपरे । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञ इति केचित् । आत्मा स भोक्तुरित्यपरे । इति परोदाहृतविप्रतिपत्ति-संग्रहः । एतेनेत्युक्तं विवृणोति ॥ **ब्रह्मजिज्ञासापदेनेति** ॥ सकलजगज्जन्मादिकारणस्येत्युत्तरसूत्रपर्यालो-चनया सिद्धमर्थमभिप्रेत्य नारायणस्येत्येतदम्भस्यपार इत्याद्युपपादनमभिप्रेत्येति द्रष्टव्यम् । तथा च जीवभिन्नस्यैव ब्रह्मणो जिज्ञासा विधीयत इत्युपपादितमिति भावः ॥ **नैवं सूत्रकार इति** ॥ सूत्रकारस्य एतदर्थविवक्षाज्ञापकं पूर्वोत्तरवाक्यादिकं नास्तीति भावः । अस्मन्मते च वेदेनेश्वरस्योक्तरूपस्यापाततः सिद्धत्वेऽपि नानाविधविप्रतिपत्तिनिरासाय जिज्ञासारम्भः सार्थक एवेति जिज्ञास्योऽयं विधीयत इत्यत्रोक्तं ज्ञातव्यम् ॥ अधिकरणार्थमुपसंहरति ॥ **तदेवमिति** ॥ इति जिज्ञासाधिकरणं समाप्तम् ॥ १–१–१ ॥

श्री०—**आत्मत्वाच्चेति** ॥ जीवाभिन्नत्वादित्यर्थः । जीवस्य चाहमिति नित्यसिद्धत्वादित्यर्थः । तर्हि तस्य न जिज्ञास्यत्वमित्यत आह ॥ **तथापीति** ॥ **जिज्ञासा विधीयत इति** ॥ जीवान्यधर्मिक-गुणपूर्णत्वप्रकारिका जिज्ञासेत्यर्थः ॥ **इदं शास्त्रमिति** ॥ जिज्ञासाकरणीभूतन्यायग्रथनात्मकमित्यर्थः । इति जिसाधिकरणम् ॥

च०— **देहात्मत्वादिविप्रतिपत्तीति** ॥ आदिपदादिन्द्रियाण्येवात्मेत्यादेः संग्रहः एतेनेत्यत्र प्रकृयंशोपात्तं विशदयति ॥ **ब्रह्मजिज्ञासेति** ॥ अधिकरणार्थं निगमयति ॥ **तदेवमिति** ॥ ॥

सौधाध्ययनदुर्बोधगिरः काश्चित्समासतः । कृष्णशर्मा मन्दकृते व्याकृतार्यप्रसत्तितः ॥

॥ इति श्रीजिज्ञासाधिकरणव्याख्या सौधचषकनाम्नी कार्ष्णी समाप्ता ॥

॥ श्रीगुरुराजप्रसीद ॥

—०—०—

इति

**श्रीमद्बादरायणविरचितानां** वेदार्थनिर्णायकानां **श्रीमद्ब्रह्मसूत्राणां**
**श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य** द्वितीयव्याख्यानस्य **श्रीमदनुव्याख्यानस्य**
**श्रीजयतीर्थविरचितायां** विषमपदवाक्यार्थविवृतौ टीकायां **श्रीमन्न्यायसुधायां**
**टिप्पणीषट्कसमेतायां**
**प्रथमाध्याये प्रथमपादे** प्रथमं **जिज्ञासाधिकरणम्**
संपूर्णम् ।
अनेन कर्मणा
एतद्ग्रन्थप्रतिपाद्यः
**समस्तगुर्वन्तर्गतभारतीरमणमुख्यप्राणान्तर्गतसीतापतिश्रीमन्मूलरामचन्द्रः**
**प्रीयताम्** ।
प्रीतो भवतु ॥
**श्रीकृष्णार्पणमस्तु** ॥

कायेन वाचा मनसेन्द्रियैर्वा बुध्याऽऽत्मना वाऽनुसृतःस्वभावम् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥

|| श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ||

जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## टिप्पणीषट्कोपेता

|| श्रीगुरुभ्यो नमः || || हरिः ॐ ||

( अथ उत्तरसूत्रादिसमस्तशास्त्रस्य प्रथमसूत्रेण सङ्गतिप्रदर्शनम् )

**सु०— हरिः** ॐ || ॐ || जन्माद्यस्य यतः || ॐ || **प्रथमसूत्रे विहिता ब्रह्मजिज्ञासा जन्मादिसूत्रैः क्रियते ।**

ब्र०सू०— **|| ॐ || जन्माद्यस्य यतः || ॐ ||**

वा०— || ॐ || **जन्माद्यस्य यतः** || ॐ || नन्वन्तःसमुद्रगमित्युत्तरभाष्यमसङ्गतम् । न चोत्तरसूत्रतात्पर्यप्रतिपादनं तदिति वाच्यम् सन्दर्भसङ्गत्याकाङ्क्षायाः प्राथमिकत्वादुत्तरसूत्रेणावान्तरसङ्गतेश्चावश्यवक्तव्यत्वात्तामनुक्त्वा तात्पर्यमात्रकथने न्यूनत्वापत्तेः इत्यतः स्पष्टत्वात्तत्सन्दर्भसङ्गत्यकथनम् । तात्पर्यकथनेनैवावान्तरसङ्गतिसूचनान्न न्यूनता इत्याशयेन भाष्यकृदभिप्रेतामुभयविधसङ्गतिं दर्शयन्नुत्तरभाष्यमवतारयति **प्रथमसूत्र इति** || **विहितेति** । प्रतिज्ञातेत्यर्थः । एवं च प्रतिज्ञातोक्त्या प्रपञ्च्यप्रपञ्चकभावः सङ्गतिरित्युक्तं भवति । यद्वा विषयादिमत्त्वोपपादनेन कर्तव्यत्वेन प्रतिपादितेत्यर्थः । एवं च प्रथमसूत्राभावे शास्त्रारम्भासिद्ध्या उत्तरसूत्रादिसमस्तशास्त्रस्य प्रथमसूत्रेण हेतुहेतुमद्भावलक्षणा सङ्गतिरिति सन्दर्भसङ्गतिकथनमेतदिति द्रष्टव्यम् ।

स०— || ॐ || **जन्माद्यस्य यतः** || ॐ || पूर्वाधिकरणसङ्गतिं दर्शयति **प्रथमसूत्रे विहितेति** ।

**प०**— || ॐ || **जन्माद्यस्य यतः** || ॐ || उत्तरसन्दर्भस्य पूर्वानन्तर्ये बीजं वदन्नभिधेयमाह **प्रथमेति** || **विहितेति** । कर्तव्यत्वेन बोधितेत्यर्थः || **जन्मादिसूत्रैरिति** । एतेनेक्षतेरित्यादिसूत्रैर्ब्रह्म विचार्यत इति वदन्तो निरस्ताः । व्यक्तं ह्येतत्समन्वयसूत्रे चन्द्रिकायाम् ।

---

१. वा. र. अत्र सन्दर्भसङ्गत्याकाङ्क्षाया एव प्राथमिकत्वात्सन्दर्भसङ्गतेरुत्तरसूत्रेणावान्तरसङ्गतेश्चावश्यवक्तव्यत्वात्तामिति पाठः स्वरस एव ।

**या०**— ॥ ॐ ॥ **जन्माद्यस्य यतः** ॥ ॐ ॥ सङ्गतिं दर्शयति **प्रथमसूत्र इत्यादिना** ॥ **जन्मादिसूत्रैरिति** । 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इत्येतदन्तैरित्यर्थः ।

**च०**— ॥ ॐ ॥ **जन्माद्यस्य यतः** ॥ ॐ ॥ वर्तिष्यमाणाधिकरणे वृत्ताधिकरणनिरूपितां सङ्गतिं दर्शयति **प्रथमसूत्र इत्यादिना** ॥ **विहितेति** । विधायकप्रत्ययाधीनकर्तव्यत्वप्रकारकप्रतिपादन-क्रियाकर्मीभूतेत्यर्थः । धातोः फलावच्छिन्नव्यापारार्थकतामते धात्वर्थताऽवच्छेदकीभूतफलान्वय्याधेयता द्वितीययेव प्रकृतेऽपि व्युत्पत्तिवैचित्र्येण तदेकदेशविधायकप्रत्ययान्वयिनी घटकता सप्तम्या प्रत्याप्यते । कर्मलकारप्रकृतिभूतधातूपस्थाप्योत्पादनक्रियान्वयिनी करणता तृतीयया । एवं च शास्त्रारम्भसमर्थक-प्रथमसूत्रेणानावृत्तिसूत्रान्तस्य हेतुहेतुमद्भावलक्षणा सङ्गतिरभिहिता भवति । विहितेत्यस्य प्रतिज्ञातेत्यर्थता-मुपेत्य प्रपञ्च्यप्रपञ्चकभावः सङ्गतिरित्यपि स्थितम् ।

( इति प्रथमसूत्रेण उत्तरसूत्रादिसमस्तशास्त्रस्य सङ्गतिप्रदर्शनम् )

( अथ लक्षणविशिष्टलक्ष्यप्रतिपादनम् )

**सु०**— **स्वरूपसाधनफलजिज्ञासा हि ब्रह्मजिज्ञासोच्यते** ॥ **ब्रह्मण इति कर्मणि षष्ठीपरिग्रहेऽपि प्रधानेनाप्रधानोपलक्षणस्याङ्गीकृतत्वात् साधनादिजिज्ञासामन्तरेणाकाङ्क्षानुप-रमाच्च तत्र साधनफलयोर्ब्रह्मोपहितत्वात् ब्रह्मणश्च स्वप्रधानत्वात् अभ्यर्हितत्वेन तत्स्वरूप-जिज्ञासैव प्रथमं प्राप्ता । स्वरूपजिज्ञासा च लक्षणप्रमाणाभ्यां (सं)भवति । तत्रापि लक्षणेन स्वेतरसमस्तवस्तुव्यावृत्ततया स्वरूपे प्रतिपादिते प्रमाणाकाङ्क्षा जायत इति लक्षणस्यैव प्राथम्यं युक्तम् । इत्याशयवान् सूत्रतात्पर्यमाह** अन्तःसमुद्रगमिति ।

**अनु०**— ॥ ॐ ॥ **जन्माद्यस्य यतः** ॥ ॐ ॥

अन्तःसमुद्रगं विश्वप्रसूतेः कारणं तु यत् ॥
सूक्तोपनिषदाद्युक्तं जन्माद्यस्येति लक्ष्यते ॥

**वा०**— नन्वाद्याध्यायाभ्यां समन्वयाविरोधयोस्तृतीयचतुर्थाभ्यां तु साधनफलयोर्विचार्यत्वेन ब्रह्मजिज्ञासायाः क्वाप्यननुष्ठानान्नेदं सङ्गतिकथनमुपपन्नमित्यत आह **स्वरूपेति** ॥ ननु ब्रह्मजिज्ञासेत्यत्र कर्मणि षष्ठीपरिग्रहेण स्वरूपजिज्ञासाया ब्रह्मजिज्ञासात्वप्राप्तावपि साधनादिजिज्ञासाया न ब्रह्मजिज्ञासा-त्वलाभः, तल्लाभे वा प्रतिज्ञातत्वाविशेषात्साधनादिजिज्ञासातः स्वरूपजिज्ञासायाः प्राथमिकत्वे न नियामकमस्ति, अस्तु वा स्वरूपजिज्ञासायाः प्राथमिकत्वं लक्षणादिजिज्ञासायास्तु किमायातम् । तस्याः कथञ्चिल्लक्षणादिजिज्ञासात्वेऽपि लक्षणजिज्ञासायाः प्रमाणजिज्ञासापूर्वभावो नियामकशून्य एवेत्यत

आह **ब्रह्मण इतीत्यादिना** ॥ ब्रह्मज्ञानसाधनं ब्रह्मज्ञानफलमिति प्रमाणादिस्वरूपप्रतिपत्तेर्ब्रह्मज्ञानाधीनज्ञानत्वं **ब्रह्मोपहितत्वम्** । **ब्रह्मणः स्वप्रधानत्वं** स्वरूपप्रतिपत्तौ साधनादिज्ञानानधीनत्वम् । प्रमाणादिस्वरूपविचारसाधनस्यान्यार्थत्ववद्ब्रह्मस्वरूपविचारसाधनस्यान्यार्थत्वाभावात्स्वरूपतः प्रधानत्वं च अभ्यर्हितत्वम् । हेत्वन्तरं चैतत् ॥ **तत्रापीति** । व्यावृत्तस्वरूपस्य बुद्ध्यनारोहे तत्र प्रमाणाकाङ्क्षानुदयादिति भावः ।

**स०**— ननु प्रथमसूत्रे विहिता ब्रह्मजिज्ञासा उत्तरसूत्रैः क्रियत इत्युक्तमयुक्तम्, कथयिष्यमाणसाधनादिजिज्ञासाया ब्रह्मजिज्ञासात्वाभावात् इत्यत आह **स्वरूपेति** ॥ कर्मणिषष्ठीपरिग्रहे ब्रह्मण एव जिज्ञासाकर्मत्वप्राप्तिः न साधनादेरित्यत आह **ब्रह्मण इति कर्मणिषष्ठीपरिग्रहेऽपीति** । प्रधानेनाप्रधानस्येति शक्यसंबन्धकथनम्, तात्पर्यानुपपत्तिर्बीजमिति भावः । कीदृशं ब्रह्म, कथं च ज्ञानं साधनं, कीदृशो मोक्षः, इत्याकाङ्क्षात्रयमुदेति; तत्र च यदि ब्रह्मजिज्ञासामात्रमेव क्रियेत तदा 'समन्वयाविरोधाभ्यां सञ्जाते वस्तुनिर्णये । किं मया कार्यम्' इत्येवंरूपाया आकाङ्क्षाया अनुपरमाच्च तदन्यथाऽनुपपत्त्या च साधनादिजिज्ञासाऽपि ब्रह्मजिज्ञासोच्यत इति पूर्वेण संबन्धः । **उच्यत** इत्यस्याभिप्रेयत इत्यर्थः । यद्वा कर्मतया प्रधानभूतब्रह्मपदेन अप्रधानयोः साधनफलयोः उपलक्षणाङ्गीकारादित्यर्थः । साधनफले स्वपदेनोपादाय ब्रह्मैव किं नोपलक्ष्यत इत्याशङ्कापरिहाराय प्रधानेनेत्याद्युक्तम् । एतेन गुणप्रधानभावरूपः शक्यसंबन्धोऽप्युक्तो भवति ॥ लक्षणास्वीकारप्रयोजकीभूतमुख्यार्थानुपपत्तिमप्याहुः ॥ **साधनादिजिज्ञासामिति** । ब्रह्मस्वरूपे जिज्ञासया निर्णीतेऽपि किं मया कार्यमित्याकाङ्क्षाया अनुपरमाच्चेत्यर्थः ॥ **तत्र साधनफलयोरिति** । ब्रह्मज्ञानसाधनं ब्रह्मज्ञानफलमिति ब्रह्मोपहितत्वेन तज्ज्ञानाधीनज्ञानत्वादित्यर्थः ॥ **जिज्ञासा च लक्षणप्रमाणाभ्यां संभवतीति** । न च लक्षणस्यैव केवलव्यतिरेकिहेतुविशेषत्वेन तस्यैव प्रमाणत्वात् पुनः प्रमाणान्तरं व्यर्थमिति वाच्यम् लक्ष्यनिष्ठतया ज्ञातस्यैव लक्षणस्य प्रमाणत्वेन तद्विशिष्टप्रमाणस्यापेक्षितत्वादिति भावः ।

**प०**— पूर्वोत्तराध्यायद्विकद्वयस्य पौर्वापर्ये बीजं सूचयन्नस्य नयस्य द्वितीयत्वे बीजं वदन्भाष्यमवतारयति **स्वरूपेति** ॥ ननु शेषषष्ठ्या निषेधेन कर्मणि षष्ठ्याः स्वीकारेण स्वरूपजिज्ञासाया एव प्राधान्येन प्राप्त्या साधनफलजिज्ञासायाः कथं प्राप्तिरित्यत आह **ब्रह्मण इतीति** ॥ उपलक्षणे बीजमाह **साधनादीति** । यद्वाऽऽकाङ्क्षाबलात्तल्लाभ इति भावेनाह **साधनादीति** । ब्रह्मज्ञानाय विचारः कार्य इत्युक्ते केन साधनेन कस्मै फलायेत्याकाङ्क्षायाः साधनफलविचारं विनाऽनिवृत्तेरित्यर्थः ॥ **ब्रह्मेति** । ब्रह्मज्ञानसाधनं ब्रह्मज्ञानफलमिति ब्रह्मनिरूपितत्वादित्यर्थः ॥ साधनफलयोरित्युक्त्या तयोः पौर्वापर्यात्तद्विचारपरयोरुत्तरयोरध्याययोरपि पौर्वापर्ये बीजं सूचितम् ॥ **प्रथमप्राप्तेति** । तद्विचारः पूर्वाध्यायद्वये क्रियत इति भावः ।

**या०**— नन्विदमयुक्तम्, तृतीयचतुर्थयोः साधनफलजिज्ञासाकरणेन ब्रह्मजिज्ञासाऽकरणात् इत्यत आह **स्वरूपसाधनेति** ॥ ननु 'जिज्ञास्योऽयं विधीयते' इति 'ब्रह्मजिज्ञासा'इत्यत्र कर्मणि षष्ठी व्याख्याता; तेन ब्रह्मस्वरूपकर्मिकैव जिज्ञासा पूर्वं विहितेति प्राप्नोति न साधनफलयोः। यदेयं शेषषष्ठी तदैव परब्रह्मसंबन्धिनोः साधनफलयोरपि जिज्ञासा पूर्वं विहिता स्यात्; सा च नेष्टा। अतः कथमेतदित्यत आह **ब्रह्मण इतीति** ॥ **प्रधानेनेति**। राजाऽयं गच्छतीत्यादौ राजपदेनाप्रधानपरिवारादेरिव कर्मतयाऽभ्यर्हितत्वेन च प्रधानं ब्रह्म, तत्प्रतिपादकेन ब्रह्मपदेनाप्रधानयोः साधनफलयोरप्युपलक्षणाङ्गीकारात् साधनफलजिज्ञासे अपि पूर्वं विहिते इत्यर्थः। साधनफले स्वपदेनोपादाय ब्रह्मैव कुतो न लक्ष्यत इत्याशङ्कापरिहाराय प्रधानेनेत्युक्तम्। एतेन गुणप्रधानभावरूपः शक्यसंबन्धोऽप्युक्तो भवति ॥ लक्षणास्वीकारे प्रयोजनमप्याह **साधनादीति**। ब्रह्मस्वरूपे जिज्ञासया निर्णीतेऽपि किं मया कार्यमित्याकाङ्क्षाऽनुपरमाच्चेत्यर्थः। नन्वेवं जिज्ञासात्रयस्यापि पूर्वं विहितत्वेन ब्रह्मस्वरूपजिज्ञासाया एव कुतः प्राथम्यमित्यत आह **तत्र साधनफलयोरिति**। ब्रह्मज्ञानसाधनं ब्रह्मज्ञानफलमिति साधनफलयोर्ब्रह्मोपहितत्वेन तज्ज्ञानाधीनज्ञानत्वादित्यर्थः ॥ **स्वप्रधानत्वादिति**। अनन्याधीनत्वादित्यर्थः। अत्र हेतुमाह **अभ्यर्हितत्वेनेति** ॥ यद्वा। चन्द्रिकोक्तप्रकारेण स्वप्रधानत्वादित्यस्य साधनादिज्ञानाधीनज्ञानत्वाभावादित्यर्थः ॥ **अभ्यर्हितत्वेनेति**। स्वरूपजिज्ञासायाः प्राथमिकत्वे हेत्वन्तरम् ॥ **प्रमाणाकाङ्क्षेति**। लक्षणविशिष्टे स्वरूपे या प्रमाणाकाङ्क्षा सा न लक्षणविशिष्टस्वरूपाप्रतिपादने भवितुमर्हतीति भावः।

**श्री०**— ॥ ॐ ॥ **जन्माद्यस्य यतः** ॥ ॐ ॥ **शब्दादिति**। 'ब्रह्मजिज्ञासा'इत्यत्र समासे उपसर्जनतया प्रकृतस्य ब्रह्मण इत्यर्थः ॥ 'मम योनिः'इत्यंभ्रणीसूक्तम्। 'सप्तार्धगर्भा' 'ऋचो अक्षरे' इति वामनसूक्तम्।

**च०**—नन्वाद्यद्विकस्य समन्वयाविरोधयोरुत्तरद्विकस्य च फलसाधनयोरेव प्रतिपादकाभिमततया ब्रह्मविचारस्य क्वाप्यनुपलम्भेन नेयं सङ्गत्यभिहितिः सङ्गच्छत इत्याशङ्कायामाह **स्वरूपेति**।

ननु सूत्रघटकब्रह्मजिज्ञासेतिखण्डे सुपो धात्विति लुप्ताशैषिकी षष्ठीति कल्पे फलसाधनजिज्ञासयोः स्वज्ञानसाधनविषयकत्वस्वज्ञानसाध्यफलविषयकत्वसंबन्धितया ब्रह्मसंबन्धित्वलाभेऽपि सिद्धान्तिना तत्कल्पमवज्ञाय जिज्ञास्योऽयं विधीयत इति निर्देशेन, कर्मणि षष्ठ्येव तेन सूत्रेण लुप्तेति कल्पस्यैव आश्रिततया स्वरूपजिज्ञासायाः ब्रह्मकर्मकजिज्ञासात्वानपायेन तत्संग्रहेऽपि फलसाधनजिज्ञासयोस्तदपायितया तदसंग्रहप्रसङ्ग इत्याशङ्कायां राजाऽसौ गच्छतीत्यादौ राजपदेन सपरिवारो राजा यथा लक्ष्यते तद्वत्प्रकृतेऽपि ब्रह्मपदेन फलसाधनोपहितब्रह्मण एव लक्षिततया न क्षतिरित्याह **ब्रह्मण इतीति**। फलसाधनाभिधायकपदे निर्दिश्यैव ब्रह्म कुतो न लक्षितमिति शङ्काऽपनुत्तये प्रधानपदोपादानम्। तदर्थस्तु

प्रधानवाचकपदेनैवेति ॥ **अप्रधानोपलक्षणस्येति** । अप्रधानघटितधर्मावच्छिन्नोपलक्षणस्येत्यर्थः । राजाऽसौ गच्छतीत्यादौ राजत्वावच्छिन्नवाचकपदस्य परिवारविशेषितराजत्वावच्छिन्नलक्षकतावद्ब्रह्मत्वावच्छिन्नवाचकपदस्यापि लक्षणप्रमाणसाधनफलोपहितब्रह्मत्वावच्छिन्नलक्षकत्वस्योपगमान्न फलसाधनजिज्ञासयोरप्रतिज्ञाततताप्रसङ्ग इति भावः । 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति वचनेन घटत्वावच्छिन्नवाचकघटपदस्य नीलघटत्वेनान्वयबोधतात्पर्येण प्रयोगदशायां स्वशक्यनिरूपिततादात्म्यरूपसंबन्धो नीलघटत्वावच्छिन्ने यथा तद्वत्प्रकृतेऽपीत्यर्थः । उक्तं हि चन्द्रिकायां 'स्वपक्षे, कर्मणिषष्ठ्यामपि प्रमाणसाधनप्रयोजनादिपरिकरयुक्तस्यैव ब्रह्मणो जिज्ञासाकर्मत्वान्न प्रमाणादिविचारस्याप्रतिज्ञाततताप्रसङ्ग' इति । एतेन गुणप्रधानभावरूपः शक्यसंबन्धोऽप्युक्तो भवतीत्यपि व्याचक्षते ॥ लक्षणोपगतेः फलमभिधत्ते **साधनादीति** । 'किं मया कार्यमित्येव स्याद्बुद्धिरधिकारिणः' इत्युक्तेरिति भावः ॥ विशेषणचतुष्टयविशेषितजिज्ञासायाः प्रतिज्ञातत्वे उत्तरतद्द्वयजिज्ञासाया अपि प्रतिज्ञाततया तुल्यकक्षापन्नतज्जिज्ञासाद्वयमन्तरेण विशेष्यजिज्ञासाप्राथम्यं निर्बीजमित्याशङ्कायां तद्बीजं दर्शयति **तत्रेति** । **साधनफलयोरिति** । विषयिताप्रत्यासत्त्या ब्रह्मावच्छिन्नं यज्ज्ञानमनुकूलतासंमर्गेण तदवच्छिन्नसाधनस्य ॥ तादृशप्रत्यासत्त्या तद्विशेषितं यत् तज्जन्यतासंबन्धेन तदवच्छिन्नफलस्य चेत्यर्थः ॥ **ब्रह्मोपहितत्वादिति** । स्वावच्छिन्ननिरूपितविषयितात्वावच्छिन्नव्यापकब्रह्मत्वावच्छिन्ननिरूपितविषयितात्वावच्छिन्नकत्वरूपब्रह्मघटितत्वकत्वादित्यर्थः । ब्रह्मज्ञानसाधनं ब्रह्मज्ञानफलमिति प्रतीत्योरुक्तदिशा रक्तदण्डवानितिवद्विशिष्टप्रतियोगिकवैशिष्ट्यावगाहितया तत्र च विशेषणतावच्छेदकप्रकारकनिर्णयविधया, विशिष्टबुद्धौ विशेषणज्ञानविधया वा ब्रह्मज्ञानस्य हेतुत्वादिति भावः ॥ **स्वप्रधानत्वादिति** । फलसाधनगोचरप्रतिपत्तिनियन्त्रितप्रतिपत्तिकत्वाभावादित्यर्थः ॥ **अभ्यर्हितत्वेनेति** । इदं च हेत्वन्तरम् । ब्रह्मस्वरूपं फलसाधनगोचरजिज्ञासाप्रागभावकालीनजिज्ञासाविषयस्तत्प्रतिपत्त्यसमवधानकालीनप्रतिपत्तिगोचरत्वादभ्यर्हितत्वाच्चेत्यनुमानद्वयं ध्वन्यते ।

**लक्षणप्रमाणाभ्यामिति** । तृतीया वैशिष्ट्यार्थिका । तदुभयविशेषितविषयिणी या जिज्ञासा सैव स्वरूपजिज्ञासापदाभिधेया न ततोऽन्येति स्वरूपजिज्ञासा तदुभयोपहितवस्त्ववगाहिनीत्यर्थः ॥ **तत्रापीति** । लक्षणप्रमाणयोर्मध्य इत्यर्थः ॥ **प्रमाणाकाङ्क्षेति** । एकधर्मावच्छिन्नविषयकज्ञानाद्धर्मान्तरावच्छिन्नविषयेच्छोत्पादवारणाय समानधर्मितावच्छेदककज्ञानेच्छयोर्हेतुहेतुमद्भावस्य स्थिततया विषयिताप्रत्यासत्त्या लक्षणोपहितार्थविशेषितप्रमितिसाधनज्ञानत्वावच्छिन्नविषयकेच्छायां तद्धर्मावच्छिन्नविषयकज्ञानस्य हेतुतया तादृशज्ञानस्य च धर्मितावच्छेदकघटकीभूतलक्षणोपहितार्थज्ञाननिबन्धनतया लक्षणविशेषिताप्रतिपादने सा दुरुत्पादेति भावः ।

सु० — **समुद्रस्यान्तः अन्तःसमुद्रम्, तद् गच्छति इति** अन्तःसमुद्रगम् । विश्वप्रसूतेः **मूलप्रकृतेः** । सूक्तम् अम्भ्रणीसूक्तं वामनसूक्तं च । उपनिषद् **'अम्भस्यपारे' इत्यादिका** । आदिग्रहणात् **'आपो नाराः' इत्यादिका स्मृतिः** । **अन्तःसमुद्रगत्वादिना यत्सूक्ताद्युक्तं तत् 'जन्माद्यस्य यतः' इति सूत्रेण;** लक्ष्यते **स्वेतरसमस्तवस्तुव्यावर्तकधर्मवत्तया प्रतिपाद्यते ॥** **निर्विशेषस्वरूपमात्रमिह** जन्मादिसूत्रे **लक्ष्यतयाऽभिप्रेतमिति केचिद्याचक्षते, तन्निरासा(र्थम्)य 'अन्तःसमुद्रगम्' इत्यु(त्याद्यु)क्तम् ॥ अत्र हि सूत्रे यत इति श्रवणात्तदिति लभ्यते । तच्च** शब्दादुपसर्जनतया **प्रकृतत्वेऽप्यर्थतः** प्राधान्याद्ब्रह्मैव संबध्यते । **न चामुख्यं ब्रह्म जात्यादिक-मिह** लक्ष्य**मिति परस्यापि संमतम् । मुख्यं तु ब्रह्म सविशेषमेव, समुद्रान्तर्गतत्वाद्यनेक-विशेषणविशिष्टं वस्तूक्त्वा तदेव ब्रह्म परमं कवीनामिति तस्यैव मुख्यब्रह्मत्वाभिधानादिति ।**

**तदिदमाह 'ब्रह्मणो लक्षणमाह'इति** भाष्येण ।

वा० — समुद्रगमित्यनेनान्वयेऽन्तःशब्दस्य वैयर्थ्यादाह **समुद्रस्येति** । प्रसूतिशब्दवैयर्थ्यादाह **विश्वेति** । भाष्यकारीयोक्तोपपादनानुसारेण सूक्तादिशब्दान्व्याख्याति **सूक्तमित्यादिना** ॥ लक्षणया बोध्यत इति प्रतीतिनिवारणाय प्रकृतोपयुक्ततया लक्ष्यत इत्यस्यार्थमाह **स्वेतरेति** ॥ विशेषणान्तरोपा-दानेनापि सविशेषत्वलाभेऽप्यन्तःसमुद्रगत्वादीनामेव विशिष्योपादानं सविशेषत्वोपपादनप्रकारविशेष-लाभार्थमित्यभिप्रेत्य मुख्यं (ही)त्वित्यादिना तदुपपादयितुम् अस्तु ब्रह्मशब्दमुख्यार्थत्वं सविशेषस्य तथापि लक्षणसूत्रे ब्रह्मशब्दाभावाल्लक्षणं निर्विशेषस्यैव किं न स्यादित्याशङ्कापरिहारकत्वेन तत्पीठिकारूपं स्वपरसम्मताध्याहारानुषङ्गादिकं दर्शयति **अत्र हीत्यादिना** ॥ **तच्चेति** । अध्याहृततच्छब्दविशेष्यं त्वित्यर्थः ॥ **तदिदमिति** । ब्रह्मणो विशेष्यत्वेन संबन्धादिकमित्यर्थः ।

स० — **आदिग्रहणादापो नारा इत्यादिकेति** । आदिशब्देन 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति स्मृतिर्ग्राह्या ॥ **शब्दादुपसर्जनतयेति** । पूर्वसूत्रे ब्रह्मजिज्ञासेति समासोपसर्जनतया प्रकृतत्वादित्यर्थः । यथा 'राजपुरुषा' इत्युक्ते 'तस्य राज्ञ' इति बुद्ध्या निष्कृष्टस्य परामर्शः, एवमिहापि बुद्ध्या निष्कर्षे गुणत्वबुद्ध्यभावात् परामर्श इत्यर्थः ।

प० —समुद्रगस्यान्तः अन्तःसमुद्रगमित्यन्यथाप्रतीतिं निराह **समुद्रस्यान्तरन्तःसमुद्रमिति** । 'अव्ययं विभक्ति'इत्यादिनाऽव्ययीभावः ॥ उक्तमित्यन्तमूलस्यावैयर्थ्यायाह **निर्विशेषेति** ॥ सूत्रे सवि-शेषमेवोच्यत इत्यत्र किं ज्ञापकमित्यत आह **अत्र हीत्यादिना** ॥ **तच्चेति** । जन्मादिकारणतया तत्प-देनोच्यमानमित्यर्थः ॥ **शब्दादिति** । राजपुरुष इत्यादौ राज्ञ इव ब्रह्मजिज्ञासेति **पूर्वसूत्रे षष्ठीनिर्दिष्ट-**

तया षष्ठ्यन्तशब्दादुपसर्जनतयेत्यर्थः ॥ **अर्थत इति** । जिज्ञास्योऽयं विधीयत इत्युक्तदिशा ब्रह्मज्ञानायेत्युद्देश्यविशेषणतयाऽर्थतः प्राधान्यादित्यर्थः ॥ **परस्यापीति** । निर्विशेषब्रह्मेह सूत्रे लक्ष्यत इति वदतोऽपीत्यर्थः ।

या०— समुद्रगस्यान्तरन्तःसमुद्रगमित्यन्यथाप्रतीतिनिरासायाह **समुद्रस्यान्तरिति** ॥ **शब्दादुपसर्जनतयेति** । पूर्वसूत्रे ब्रह्मजिज्ञासेति समासे जिज्ञासोपसर्जनतया ब्रह्मणः प्रकृतत्वेऽपीत्यर्थः ॥ **तदिदमिति** । उक्तरीत्या सङ्गतिं मनसि निधाय सूत्रतात्पर्यमित्यर्थः ॥

श्री०— **शब्दादिति** । ब्रह्मजिज्ञासेत्यत्र समासे उपसर्जनतया प्रकृतस्य ब्रह्मण इत्यर्थः ॥ **परस्यापि** निर्विशेषमिह सूत्रे लक्ष्यत इति वदतोऽपीत्यर्थः ॥

च०— समुद्रगपदेनाव्ययीभावेऽन्तःशब्दवैयर्थ्यापत्त्या समुद्रशब्देन तं प्रदर्श्य कर्तृसाधनडप्रत्ययान्तस्य कर्तृकर्मणोरित्यनुशिष्टाव्ययीभावप्रकृतिकया कर्मणि षष्ठ्या समासमभिप्रेत्याह **समुद्रस्येति** । 'सुपो धातु..'इत्यव्ययीभावप्रकृतिकसुपो लोपे अन्तःसमुद्रगमित्यसैत्सीदिति भावः ॥ **मूलप्रकृतेरिति** । क्तिनः करणसाधनत्वादिति भावः ॥ **तच्चेति** । अध्याहृतपदोपस्थाप्यमित्यर्थः ॥ **शब्दादुपसर्जनतयेति** पूर्वसूत्रघटकसमासावयवभूतब्रह्मशब्दात् लुप्तविभक्त्यनुसन्धानपक्षे जिज्ञासान्वितकर्मत्वविशेषणतया, तदनुपगन्तृमते व्युत्पत्तिवैचित्र्येण स्ववृत्तिकर्मतानिरूपकत्वरूपभेदसंसर्गेणान्वये जिज्ञासाविशेषणतया, नामार्थयोरिति व्युत्पत्त्यादरेण तत्पुरुषे पूर्वपदे संबन्धिनि लक्षणोपगमे जिज्ञासान्वितसंबन्धिविशेषणतयेत्यर्थः । ज्ञानजन्येच्छा तज्जन्यसंस्कार इत्यादौ शाब्दप्राधान्यमतन्त्रीकृत्यार्थिकप्राधान्यादरेण ज्ञानपरामर्शोपगमादिति भावः ॥ **तदिदमिति** । उक्तदिशा अभिहितसूत्रतात्पर्यमित्यर्थः । ब्रह्मणो विशेष्यत्वेन संबन्धादिकमित्यप्यर्थापयन्ति ।

( इति लक्षणविशिष्टलक्ष्यप्रतिपादनम् )

( अथ लक्षणस्य लक्ष्यधर्मतोपपादनम् )

**सु०— ननु च बृहद्ब्रह्मेति समस्तगुणपूर्णत्वं ब्रह्मत्वं प्रसिद्धमेव; तत्किं लक्षणान्तरेण ॥ सत्यम् । तथाऽपि तदुपपादनार्थमेतदित्यदोषः । प्रसिद्धेन ह्यसाधारणेन धर्मेणाप्रसिद्धं वस्तु समस्तव्यावृत्ततयाऽवगन्तव्यम् । न च परमेश्वरस्य समस्तगुणपूर्णत्वं प्रसिद्धम्, येन लक्षणतया निर्देष्टुं शक्यते । अनेन तु लक्षणेन लक्षिते ब्रह्मणि समस्तगुणपूर्णत्वमपि प्रधानलक्षणं सिद्ध्यति, अविनाभावा(वित्वा)त् ।**

**वा०**— अत्र सृष्टिरित्युत्तरवाक्ये जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणस्य प्रसिद्धत्वोक्त्या लक्षणान्तरस्याप्रसिद्धिः सूचिता । न च लक्षणान्तरमप्रसक्तमिति वाच्यम् ब्रह्मशब्दयौगिकप्रवृत्तिनिमित्तत्वेनैव तत्प्रसक्तेः । एवं च ब्रह्मशब्दबललब्धलक्षणसंभवेऽतादृशलक्षणाभिधानेन सूत्रकारानौचित्यं निरस्तं भवतीत्याशयेन लक्षणान्तरप्रसक्तिं, प्रधानलक्षणत्वेन तस्याप्यत्राभिप्रेतत्वं, तदप्रसिद्धिं, प्रसिद्धताया लक्षणत्वोपयोगम्, अस्य लक्षणस्य तत्साधकत्वं च दर्शयन्नेवाकाङ्क्षाक्रमेणोत्तरवाक्यमवतारयति **ननु चेत्यादिना** ।

**प०**— **प्रसिद्धमेवेति** । 'बृहन्तो ह्यस्मिन् गुणाः' इत्यादाविति भावः ॥ 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तम्'इत्यानन्दमयनयानुव्याख्यानोक्तं हृदि कृत्वाऽऽह **तदुपपादनार्थमेतदितीति** । तस्य लक्ष्यधर्मतोपपादनार्थमित्यर्थः ॥ कथमित्यत आह **प्रसिद्धेनेति** ॥ **न च परमेश्वरस्य समस्तगुणसंपूर्णत्वं प्रसिद्धमिति** । लोके क्वाप्यदर्शनेनासंभावनापराहतत्वात् इति भावः ॥ **अनेन त्विति**। जगज्जन्मादिकारणत्वेनेत्यर्थः । एतच्च कार्यस्य घटादेः कर्त्रविनाभावदर्शनेन महदादिसर्वकार्यकर्ता नासंभावितो वक्ष्यमाणदिशाऽनेकप्रमाणप्रमितश्चेत्यनुपदमेव विवरिष्यत इति भावः ॥ 'कर्तृत्वात्सगुणं ब्रह्म'इति भागवतोक्तिं हृदि कृत्वाऽऽह **अविनाभावित्वादिति** ।

---

**या०**— **समस्तगुणपूर्णत्वमिति** । पूर्णत्वमेव ब्रह्मशब्दार्थः । इतरद्योग्यताबललभ्यमिति ध्येयम् ॥ **प्रसिद्धमेवेति** । व्याकरणादिनेति शेषः ॥ **लक्षणान्तरेणेति** । निर्वचनलभ्यस्यैवान्तरङ्गस्य लक्षणत्वसंभवे किं तदविनाभूतलक्षणान्तरेणेत्यर्थः ॥ **तदुपपादनार्थमिति** । तस्य लक्ष्यधर्मतोपपादनार्थमित्यर्थः ॥ **प्रसिद्धेन हीति** । लक्ष्यनिष्ठतया प्रसिद्धेन हीत्यर्थः । तथा च निर्वचनलभ्यस्य गुणपूर्णत्वस्य व्याकरणादिना प्रसिद्धत्वेऽपि लक्ष्यभूतजीवव्यतिरिक्तेश्वरनिष्ठतया प्रसिद्ध्यभावान्न प्रथमं तल्लक्षणतयोच्यत इति भावः ।

**च०**— **बृहदिति** । बृहेः पूर्त्यर्थकतया मन्प्रत्ययस्य चाश्रयार्थकतया पूर्त्याश्रयमात्रलाभेऽपि तन्निरूपकतापन्नाखिलगुणानां प्रमाणान्तरजनितेशधर्मिकतदबाधप्रतिसंधानसाचिव्येन लाभ इत्यवसेयम् ॥ **प्रसिद्धेन हीति** । लक्ष्यवृत्तित्वेनेत्यादिः । प्रकृतिप्रत्ययसमभिव्याहारनियन्त्रितोपस्थितिगोचरगुणकर्तृकपूर्तिकर्मत्वस्य पाणिनीयदिशा प्रथितत्वेऽपि लक्ष्याभिमतजीवान्यव्यक्तिवृत्तितया विश्रुतत्वाभावेनाऽऽदितस्तल्लक्षणतया दुर्वचमिति भावः ।

---

१. वा.र. — (ब्रह्मशब्दबललब्ध)लक्षणसंभवे तदनभिधाय ब्रह्मशब्दबलेनालभ्यं यल्लक्षणं तदभिधानेन प्राप्तं यत्सूत्रकारस्यानौचित्यं तन्निरस्तमित्यर्थः ।

**सु०— ननु जन्मादिकं वा लक्षणत्वेनात्राभिमतम् तत्कारणत्वं वा ॥ नाद्यः तस्य प्रपञ्चधर्मत्वात् । न द्वितीयः ब्रह्मवत्तदीयजगज्जन्मादिकारणत्वस्याप्यप्रसिद्धत्वात् । न च अनुमानात्तत्सिद्धिः उत्तरसूत्रविरोधात् ॥ अतः कथमेतदपि लक्षणम् । इत्यत आह सृष्टिरिति ।**

**अनु०—** सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षावपि ह्यासु श्रुतिषूक्ता हरेः सदा ॥

**जगज्जन्मादिकारणत्वमेव लक्षणम् । अस्य प्रत्यक्षादिप्रमाणसिद्धतया प्रकृतस्य समस्तप्रपञ्चस्य, यथासंभवं जन्मादि, यतो भवति, तद्ब्रह्म; इति संबन्धात् ॥ न चैतदपि अप्रसिद्धम्, यतः अस्य जगतः सृष्ट्यादयः, आसु श्रुतिषु प्रसिद्धासु भाष्योदाहृतासु, हरेरुदिताः । सदेत्यविगानं सूचयति ॥ न च वाच्यं समस्तगुणसंपूर्णता च श्रुतिप्रसिद्धैवातः सैव लक्षणत्वेनोच्यतामिति, तस्याः श्रुतिप्रसिद्धाया अप्यसंभावनाशङ्काग्रस्तत्वात् । जगज्जन्मादि-कारणत्वं तु श्रुतिप्रसिद्धं युक्त्याऽप्यनुगृह्यत इति द्वितीये वक्ष्यते । सकलगुणपूर्णतायां तु युक्तिर्जगज्जन्मादिकारणत्वमेवेत्येतदेवादौ वक्तव्यमिति ।**

**वा०—जन्मादिकं वेति** । अत्र लक्षणसूत्रे यतोऽस्येत्यस्योपसर्जनत्वेन जन्मादीत्यस्य विशेष्यतया प्राधान्येन प्रतीतेस्तस्यैव लक्षणत्वपक्षस्य प्रसक्तिः । यतस्तद्ब्रह्मेति संबन्धविवक्षया द्वितीयस्येति बोध्यम् ॥ अस्येत्यस्य भाष्ये संबन्धेन अस्य सृष्ट्यादयो हरेरुक्ता इत्युक्त्या भाष्यकारेण जन्मादिकारणत्व-स्यैव तल्लक्षणत्वसूचनेन सूचितां सूत्रयोजनामाह **अस्येति** ॥ सृष्ट्यादीनां सदातनत्वाभावात्सदेत्यस्य सृष्ट्यादय इत्यनेन वैयर्थ्यादुदिता इत्यनेन चान्वयासंभव इत्यतः, उदिता इत्यनेनैवान्वयः, अविगानं च तदर्थः, सप्रयोजनत्वाच्च न वैयर्थ्यम्; इत्यभिप्रेत्य तत्सूचितमर्थमाह **सदेतीति** ॥ अविगानेन श्रुत्युदितत्वसूचनेन लब्धं प्रयोजनं वक्तुं तन्निवर्त्यां शङ्कां दर्शयति **न च वाच्यमिति** ॥ **युक्त्याऽप्य-नुगृह्यत इति** । 'न तु दृष्टान्तभावात्' इत्यादिना सूत्रकारेणैवानुग्राहकयुक्तिकथनादिति भावः ।

**प०— उत्तरेति** । तत्र कारणत्वस्य शास्त्रैकसमधिगम्यत्वोक्तेरिति भावः ॥ **एतदपीति** । न केवलं संपूर्णगुणत्वमित्यपेरर्थः ॥ प्राग्विकल्पितयोर्द्वितीयमङ्गीकरोति **जगदिति** ॥ तत्सूत्रारूढं दर्शयितुं सूत्राक्षरार्थमाह **अस्येति** ॥ **तद्ब्रह्मेतिसंबंधादिति** । तल्लाभप्रकारश्च प्रागेवोक्तः ॥ 'हिशब्दो हेतौ' इत्युपेत्य श्लोकं योजयति **यत इत्यादिना** ॥ हरेः सकाशादिति सन्न्यायरत्नावल्युक्त्या हरेरिति पञ्चम्यन्तमुपेत्याह **अस्येति** । इयं शेषोक्तिः अनुवृत्तिर्वा । तस्यार्थो जगत इति ॥ **सृष्ट्यादय इति** । मूले सुधायां च प्रयोजकव्यापारवाचिना सृष्ट्यादिशब्देन प्रयोज्यव्यापारो जन्माऽऽदिर्लक्षणया बोध्यः ।

तथैव चन्द्रिकोक्तेः ॥ **भाष्येति** । 'य उ त्रिधातुपृथिवीम्' इत्यादिभाष्योक्तास्वित्यर्थः ॥ **अविगान-मिति** । सर्वकारणवाक्यानां ब्रह्मकारणत्वे विरोधाभावमिति वा । सृष्टिवेलायां न स्थितिः स्थितिदशायां न सृष्टिसंहारौ संहृतिवेलायां न सृष्ट्यादि, विरोधात्; किन्तु कालभेदेनैव सृष्ट्यादि; इति रामानुजाद्युक्तदिशा न भवति । स्रष्टृत्वादयो गुणाः सदैव सन्ति हराविति स्रष्टृत्वादिधर्माणां सर्वेषामपि सार्वकालीनत्वोक्त्या ऽविरोधमिति वाऽर्थः । तत्प्रपञ्चितं चन्द्रिकायां रामानुजमतनिराकरणप्रस्तावे ॥ **द्वितीय इति** । अध्याय इति योज्यम् । तत्र चेतनत्वसर्वस्वातन्त्र्यसर्वशक्तिमत्त्वादियुक्तीनां वक्ष्यमाणत्वादिति भावः ॥ गुण-पूर्तिरप्येवं स्यादित्यत आह **सकलेति** ।

**या०— द्वितीये वक्ष्यत इति** । 'श्रुतेस्तु शब्दमूलत्वात्', 'आत्मनि चैवं विचित्राश्च हि', 'सर्वोपेता च तद्दर्शनात्', 'विकरणत्वान्नेति चेत्तदुक्तम्', 'न प्रयोजनवत्त्वात्'इत्याद्यधिकरणेषु वक्ष्यत इत्यर्थः । यद्वा । 'न तु दृष्टान्तभावात्'इत्येतत्सूत्रव्याख्यानरूपे 'उत्पत्तिनाशकारी हि बुद्धिमान् दृश्यते क्वचित् । तद्दृष्टान्तेन सर्वत्र कर्ता किं नानुमीयते ॥' इत्यादावित्यर्थः ॥ **जगज्जन्मकारणत्वमेवेति** । यद्यपि सकलगुणपूर्णत्वेऽपि 'सर्वधर्मोपपत्तेश्च'इत्यत्र स्वतन्त्रत्वरूपा युक्तिरन्या द्वितीये वक्ष्यते, तथाऽपि स्वसत्तादौ परानपेक्षत्वरूपस्वातन्त्र्योपपादकतया तत्रापि जगज्जन्मादिकारणत्वमेव वक्तव्यमित्यभिप्रेत्यैतदुक्त-मित्यत्रध्येयम् ।

---

**श्री०— असम्भावनाशङ्केति** । सन्ति खलु तेऽप्यर्था ये प्रमाणप्रमिता अप्यसंभावनया अपोद्यन्ते; यथा देवगवानामुत्तानानां वहनमिति भावः ॥

**च०— द्वितीये वक्ष्यत इति** । युक्तिचरणे श्रुतेस्तु शब्दमूलत्वादित्यादिकयोगैरित्यादिः ।

**सु०— आद्यस्य हिरण्यगर्भस्य जन्म यतस्तद्ब्रह्मेति सूत्रं व्याचक्षते केचित् । जन्म आदिर्यस्यावस्थानस्य तज्जन्मादीत्यपरे । जगत्पालको हि भगवान्विष्णुरिति प्रसिद्धिः । अन्ये तु जन्मादीति तद्गुणसंविज्ञानबहुव्रीहिमुपादाय सृष्टिस्थितिभङ्गं समासार्थ इति व्याकुर्वते ॥ तदिदमयुक्तम् । श्रौतं हि ब्रह्मणो लक्षणमिहोच्यते, श्रुतयश्च कृत्स्नस्यापि प्रपञ्चस्य सृष्ट्या-द्यष्टककारणं परमेश्वरमभिदधति; इत्यतः सृष्ट्याद्यष्टकं जन्मादिपदार्थ इति भावेनाह** सृष्टिरिति ।

**वा०**—एवं हरेः सकाशाज्जगत्सृष्ट्यादयः श्रुतिषूक्ता इत्युक्तिसूचितार्थं व्युत्पाद्य सौत्रादिशब्दार्थ-तया स्थित्यादिकथनेन जन्माद्यस्येति पदच्छेदसूचनेन तेषां चाष्टानामुपादानेन सूचितमर्थं व्युत्पादयितुं तद्व्यावर्त्यमपव्याख्यानमित्याशयेन तत्स्वरूपं दर्शयति **आद्यस्येति** ॥ **तद्गुणेति** । तदा बहुव्रीह्यर्थोऽन्य-पदार्थो गृह्यते तस्य गुणत्वेन संविज्ञानं यत्र समासे स तथा । सर्वस्य विशेषणत्वे समासायोगात्तदैक-

देशस्तथा । एवं च विशेष्यैकदेशं विशेषणं कृत्वा समास इत्यर्थः । सृष्टिस्थितिभङ्गमिति नपुंसकलिङ्गं तु जन्मादीति सूत्रानुसारेण समाहारविवक्षयेति द्रष्टव्यम् । अत्र तद्गुणेतिविशिष्यग्रहणेनाऽव्यवहितपूर्वमतद्गुणसंविज्ञानः स इति सूचयति ॥ श्रुतिषु कृत्स्नप्रपञ्चसृष्ट्याद्यष्टककारणत्वोक्तावपि सूत्रे हिरण्यगर्भजन्मादिमात्रोक्तौ न किञ्चिद्बाधकमिति हेत्वप्रयोजकत्वशङ्काऽनुत्थानाय पीठिकामारचयति **श्रौतं हीति** । सङ्कोचकारणाभावाद्योग्यतया संबद्धकृत्स्नप्रपञ्चस्य सृष्ट्यादेरित्यर्थकथनेनास्येति पदच्छेदसूचनेनाद्यस्य, सृष्ट्याद्यष्टकमिति चोत्तरद्वयस्य, निराससूचनम् ।

स० — **जन्म आदिर्यस्यात्रस्थानस्येति** । अत्र अतद्गुणसंविज्ञानबहुव्रीहिः ॥ **तद्गुणसंविज्ञानेति** । ते समस्यमानपदार्था गुणा उपसर्जनभूता संविज्ञायन्ते प्रधानभूतान्यपदार्थेन सहान्वये पदान्तरपदार्थान्विततया स्वीक्रियन्ते यस्मिन्बहुव्रीहौ स तद्गुणसंविज्ञान इत्यर्थः ।

प० —नन्वेवं यथासूत्रं सृष्ट्यादिर्यासु श्रुतिषु हरेरुदित इति वाच्येऽनेकधाऽऽदिपदार्थोक्तिरुपयोगं न पश्याम इत्यतस्तदनुरोधेनान्यथाऽप्यवतारयति **आद्यस्येत्यादिना** ॥ अतद्गुणसंविज्ञानबहुव्रीहिमुपेत्य तस्य प्रसिद्धिमाह **जगत्पालको हीति** । 'विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः' इत्यादौ प्रसिद्धिरित्यर्थः ॥ **तद्गुणेति** । तस्य गुणभूतस्यान्यपदार्थे संविज्ञानं यस्मिन्बहुव्रीहौ स तद्गुणसंविज्ञानबहुव्रीहिः; तमुपादायेत्यर्थः । सृष्टिस्थितिभङ्गमिति समाहारः ॥ **इहेति** । सूत्रे ॥ **श्रुतयश्चेति** । 'यतो वा इमानि भूतानि' इति 'य आत्मानमन्तरो यमयति' इति 'त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इत्येवं ग्राश्चन्द्रिकोक्ता द्रष्टव्याः । आद्यश्रुतौ सृष्टिस्थितिप्रलयमोक्षाणाम्, 'य' इत्यत्र नियमनस्य, 'त्वम्' इत्यत्र ज्ञानाज्ञानबन्धमोक्षाणां श्रवणात् ॥ यद्वा सन्न्यायरत्नावल्युक्ताः 'यतः प्रसूता जगतः प्रसूती' 'सर्वे निमेषा जज्ञिरे' 'यस्मिन्निदं सं च विचैति सर्वम्' इत्यादयो नारायणानुवाकस्थाः श्रुतयो ग्राह्याः ॥

या० — **जगत्पालको हीति** । तथा च अतद्गुणसंविज्ञानबहुव्रीहिरिति भावः ॥ **तद्गुणसंविज्ञानेति** । तच्छब्देन बहुव्रीह्यर्थोऽन्यपदार्थ उच्यते; तस्य गुणत्वेन संविज्ञानं यस्मिन्समासे स तथोक्तः । सर्वस्य विशेषणत्वे समासासंभवात्समासार्थैकदेशो विशेषणमिति लभ्यत इति कल्पतरौ व्याख्यातम् । विवरणेऽपि अनेनैवाभिप्रायेण विशेष्यैकदेशमेव विशेषणं कृत्वा समासस्तद्गुणसंविज्ञानः, यथा 'लम्बकर्णो देवदत्तः' इत्यत्र देवदत्तैकदेशमेव विशेषणं कृत्वा देवदत्तो बोध्यत इत्युक्तम् । प्रकृते च यद्यपि समासार्थभूता जन्मस्थितिभङ्गाख्यास्त्रयोऽपि विशेष्यास्तथाऽपि तदेकदेशस्य जन्मनो विशेषणत्वविवक्षयाऽयं समास-

स्तद्गुणसंविज्ञान इत्युच्यत इति भावः ॥ जन्म आदिर्ययोः स्थितिभङ्गयोस्तौ जन्मादी इत्यन्यपदार्थो यदि विशेषणरूपेण विवक्ष्यते तर्हि जन्मादी अस्येति निर्देशे गौरवं स्यात्तन्मा भूदिति सामान्यविवक्षया नपुंसकप्रयोगः सूत्रे कृतः । तत्र नपुंसकैकवचनप्रयोगार्हं समाहारमाह **सृष्टिस्थितिभङ्गमिति** ।

**श्री०** — **श्रुतयश्चेति** । 'यतो वा इमानि भूतानि' इति, 'य आत्मानमन्तरो यमयति' इति, 'त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इत्येवंरूपाश्चन्द्रिकोक्ता ज्ञातव्याः ।

**च०** — **तद्गुणसंविज्ञानेति** । तस्मिन् गुणस्तद्गुण इति विग्रहोपगमेन समासशक्तिविषयतापन्नान्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नस्तद्गुणपदेनाभिधीयते स सम्यक्समभिव्याहृतपदार्थान्तरान्वयितया विज्ञायतेऽनेनेति व्युत्पत्त्या समभिव्याहृतपदार्थान्तरान्वयविषयतानिरूपितदर्शितप्रकारतापन्ननिष्ठविषयताशालिशाब्दधीजनकत्वं तद्गुणसंविज्ञानत्वम् । तद्यथा लम्बकर्णमानयेत्यादौ आनयनक्रियायां कर्णादेरप्यन्वयात् । चित्रगुमानयेत्यादावानयनक्रियायां स्वामिन एवान्वयेन गवामनन्वयादतद्गुणसंविज्ञान इति तस्य व्यपदेशः । एवं च जन्मादीत्यत्र स्थितिभङ्गयोरेव ब्रह्महेतुकतापत्त्या जन्मनोऽन्यहेतुकताप्रसङ्गेनातद्गुणसंविज्ञानो नोपपद्यते । तद्गुणसंविज्ञानतायां समासार्थीभूतसमुदायविशेषणतापन्नसमुदायिभूतजन्मनोऽपि ब्रह्महेतुकतासिध्या सामञ्जस्यमित्याशयः ॥ **सृष्टिस्थितिभङ्गमिति** । यद्यपि जन्मस्थितिभङ्गानां त्रयाणां समासजनितशाब्दधीविषयतया भङ्गपदस्य बहुवचनान्ततैव न्याय्या । तथाप्येकस्थानावस्थितमहीरुहेषु संहत्यवच्छिन्नेषु एकवचनान्तवनपदव्यपदेशदर्शनेन प्रकृतेऽपि संहत्यवच्छिन्नानां समासार्थतया समाहारोगाधिकृत्वेन 'सर्वो द्वन्द्वः विभाषयैकवद्भवति' इति कात्यायनोक्त्या चैकवचनस्याप्युपपत्तेः । समुदायसमुदायिनोरैक्येन विशेषशक्त्याहितभेदेन चान्यपदार्थवतिपदार्थत्वे घटनीये इति भावः । प्रपञ्चितं चैतत्सर्वादीनीति सूत्रे शब्दकौस्तुभे । तस्यान्यपदार्थस्य गुणानां वतिपदार्थरूपाणां विशेषणानां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञान इत्यादिना । अत्र व्याचक्षणाः "तच्छब्देन बहुव्रीह्यर्थोऽन्यपदार्थ उच्यते । तस्य गुणत्वेन संविज्ञानं यस्मिन् समासे स तथोक्तः । सर्वस्य विशेषणत्वे समासासंभवात्समासार्थैकदेशो विशेषणमिति लभ्यत इति कल्पतरौ व्याख्यातम् । विवरणेप्यनेनैवाभिप्रायेण विशेष्यैकदेशमेव विशेषणं कृत्वा समासस्तद्गुणसंविज्ञानः, यथा 'लम्बकर्णो देवदत्तः' इत्यत्र देवदत्तैकदेशमेव विशेषणं कृत्वा देवदत्तो बोध्यत इत्युक्तम् । प्रकृते च यद्यपि समासार्थभूताः जन्मस्थितिभङ्गास्त्रयोऽपि विशेष्यास्तथापि तदेकदेशस्य जन्मनो विशेषणत्वस्य विवक्षयाऽयं समासस्तद्गुणसंविज्ञान इत्युच्यत इति भावः" इति व्याचक्षते ।

**सु०— ननु सृष्ट्यादिहेतुत्वं प्रत्येकं ब्रह्मलक्षणम् उत मिलितम् । आद्येऽनेक-लक्षणोक्तिवैयर्थ्यम् । न द्वितीयः । एकैकस्य व्यभिचाराभावात् । संभवे व्यभिचारे च विशेषणमर्थवत् ।** इत्यत आह सृष्टिरिति ॥ **अत्रासमासकरणेन प्रत्येकं लक्षणत्वं सूचयति । न चानेकलक्षणोक्तिवैयर्थ्यम् । जिज्ञास्यब्रह्मणो हि सर्वव्यावृत्तये लक्षणमत्रोच्यते । न चैकमेव सर्वत्र जिज्ञासाविधायकश्रुतिषु लक्षणं श्रूयते । किं त्वासु ब्रह्मजिज्ञासाविधात्रीषु श्रुतिषु क्वचित्सृष्टिः क्वचित्स्थितिरित्यष्टकं जिज्ञास्याद्धरेर्विश्वस्योक्तमित्यनेकलक्षणोक्त्युपयोगः ।**

वा०— **संभवे व्यभिचारे च विशेषणमर्थवदिति** । यद्विशेषणं लक्ष्यमात्रे संभवतीत्य-व्याप्त्यसंभवव्यावर्तकत्वसूचनं, यदनुपादाने व्यभिचार इत्यतिव्याप्तिव्यावर्तकत्वसूचनमिति भावः ॥ अत्र भाष्यकारीयज्ञापकस्यास्पष्टत्वात्स्वयमेवाह **अत्रेति** । अत्रापि पूर्ववदेवाप्रयोजकत्वशङ्कानिरासाय पीठिका-रचनं **जिज्ञास्येति** । अत्रासमासकरणेन न केवलं प्रत्येकलक्षणत्वसूचनं किन्तु तदुपपादनप्रकारस्यापीत्या शयेनोपपादकांशे क्वचित्सृष्टिः क्वचित्स्थितिरित्युक्तम् ।

स०— **संभवे व्यभिचारे चेति** । यद्धर्मपुरस्कारेण विशेष्यमुपात्तं तद्धर्मवति कुत्रचिदसंभवः उपात्ते तु संभवश्चेत् तर्हि सार्थकमित्यर्थः । नीलमुत्पलमिति यथा ।

प०— नन्वथापि 'सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा यत' इतिभाष्योक्तिवदत्राप्य-नुभाष्ये तथैव वक्तव्येऽसमासेन निर्देशो निर्बीज इत्यतः तदनुरोधेनान्यथाप्यवतार्य तात्पर्यमाह **ननु सृष्ट्यादीत्यादिना ॥ संभवे व्यभिचारे चेति** । पीतःशङ्ख इति विशेषणं नोपादेयम्, असंभवात् । अतो यद्विशेषणं संभवति, यदभावे च व्यभिचारः अलक्ष्ये वृत्तिः पूर्वतनस्य, तद्विशेषणम् तत्रार्थवदितीह विवक्षितार्थो ध्येयः । इत्यनेकलक्षणोक्त्युपयोग इति ॥ एतच्चोपलक्षणम् । आद्यपद्यव्याख्यानावसरोक्त-दिशा विभवार्थोऽनेकलक्षणोक्तिरित्यपि ज्ञेयम् ।

चा०— **संभवे व्यभिचारे चेति** । यस्य विशेषणस्य विशेष्ये संभवस्तत्सजातीये व्यभिचारो व्यतिरेकश्च तदेव विशेषणं सजातीयव्यावर्तकतया सार्थकमिति भावः । यथा नीलोत्पलमित्यादौ नैल्यादि । प्रकृते च न जन्मादिकर्तृत्वेन सजातीये क्वचित्स्थित्यादिकर्तृत्वव्यतिरेकोऽस्ति । येन तद्व्यावर्तकतया स्थित्यादिकर्तृत्वं सार्थकं स्यादित्यर्थः । यद्वा यस्य विशेषणस्य विशेष्ये संभवः, यद्व्यतिरेके च विशेष्यनिष्ठधर्मस्य व्यभिचारोऽतिव्याप्तिः तदेव विशेषणं सार्थकमित्यर्थः ।

च०— **संभवे व्यभिचारे चेति** । यादृशलक्षणवाक्यघटकपदबोध्यस्य विशेषणस्य प्रकृत-लक्ष्यतावच्छेदकाभिमतधर्मावच्छेदेनावस्थितिः प्रकृतलक्ष्यतावच्छेदकाभिमतधर्मव्यापकधर्मपुरस्कारेण प्रकृतलक्ष्यसजातीये व्यभिचारो व्यतिरेकश्च तद्विशेषणमव्याप्त्यादिदोषत्रयव्युदासाख्यफलवदित्यर्थः । अत्र च संभवपदेनाव्याप्त्यसंभवव्यावृत्तिर्ध्वन्यते । व्यभिचारपदेन चातिप्रसङ्गनिरास इति ध्येयम् ।

सु०— अथवा “ ‘तद्विजिज्ञासस्व तद्ब्रह्म’ इति जिज्ञास्ये वस्तुनि ब्रह्मशब्दश्रवणात्तेन च तस्य समस्तगुणपूर्णता(त्वा)भिधानाज्जीवस्य (च) तदभावाज्जिज्ञास्यं वस्तु जीवातिरिक्तमिति पूर्वसूत्रे अभिहितम् । तत्र सन्देहः तद्ब्रह्मेत्ययं ब्रह्मशब्दः किं प्रसिद्धार्थपर उतार्थान्तरपर इति । न हि ब्रह्मशब्दो गुणपूर्तिवाचीत्येतावता सर्वत्र तत्परो भवति, शक्तितात्पर्ययोरन्यत्रापि सत्त्वात् । तद्यदि ब्रह्मशब्दोऽयं प्रतीतार्थो न स्यात् तदैव (ए)तस्य गुणपूर्णतापरत्वं संभवतीत्यर्थवानेवायं विचारः । तत्र प्रसिद्धार्थ(पर) एवायं ब्रह्मशब्द इति पूर्वः पक्षः; लाघवात् । जीवो हि स्वरूपतः प्रसिद्धः तत्र ब्रह्मशब्दस्य शक्तिरप्यभिधानादि(ना)तः प्रसिद्धा (सिद्धा) । केवलं तात्पर्यं कल्प्यम् । तच्च शक्तिवशादेव प्रतीते त्यागकारणाभावादेव सिद्धम् । जात्यादिकं यद्यपि प्रसिद्धम् तथाऽपि तस्य सुप्रसिद्धत्वेन तद्विजिज्ञासस्वेति जिज्ञास्यत्वानुपपत्तेः परित्यागः । कमलासनस्या(पि )प्रसिद्धत्वेऽपि न तस्य जिज्ञास्यत्वम् प्रयोजनाभावात् । भावेऽपि तस्योपासनायत्तत्वात् । उपासनायाश्चारोपितरूपेणापि संभवात् । जीवस्य स्वरूपतः प्रसिद्धत्वेऽपि देहादितोऽतिविविक्ततया न प्रसिद्धिः ॥ अप्रसिद्धार्थत्वे तु तस्यार्थस्य, तद्वाचितायाः, तत्र तात्पर्यस्य च कल्प्यत्वाद्गौरवम् ॥ अतो जीवपर एवायं ब्रह्मशब्दः ॥” इत्येवं प्राप्ते ‘जन्माद्यस्य (यतः)’ इति प्रतिविहितं सूत्रकारेण । अनेन कथमुक्ताशङ्कापरिहारो जात इत्याशङ्क्याह सृष्टिरिति ।

आसु श्रुतिषु जिज्ञासाविधात्रीषु ‘तद्विजिज्ञासस्व तद्ब्रह्म’ ‘य आत्मा सोऽन्वेष्टव्यः’ इत्याद्यासु जिज्ञास्याद्ब्रह्मात्मादिशब्दवाच्यात् विश्वस्य सृष्ट्यादिकं भवतीत्युच्यते, ‘यतो वा इमानि भूतानि जायन्ते’ इत्यादिपूर्वोत्तरवाक्यैः । सृष्ट्यादयश्च विश्वस्यासु श्रुतिषु भाष्योदाहृतासु हरेरेवोक्ताः । न (च ते) जीवे संभवन्ति । अतः प्रसिद्धार्थे बाधकसद्भावात् तद्ब्रह्मेत्यादिब्रह्मादिशब्दोऽलौकिकस्य हरेरेव प्रतिपादको न जीवस्य, इति युक्तं तस्य तेन गुणपूर्णत्वाभिधानमित्यभिप्रायः सूत्रकारस्य; इति भावः ॥

वा०— तत्तदुचिततयाऽऽसु श्रुतिष्वित्यादेः सर्वशेषत्वेनान्वयेऽपि तत्तदंशसूचिततत्तच्छङ्कापरिहारपरत्वेनैषां प्रकाराणां मिलितानां निष्कृष्टसूत्रतात्पर्यप्रतिपादकत्वेन पक्षान्तरत्वाभाववन्नोत्तरयोजनाया अंशविशेषसूचितत्वं किन्तु विशिष्टस्यापि पूर्वपक्षनिरासकत्वेन पक्षान्तरत्वमेवेत्याशयेनाह **अथवेति** ॥ पूर्वाधिकरणेनास्याक्षेपिकी सङ्गतिरिति दर्शयन्पूर्वाधिकरणतात्पर्यमाह **तद्विजिज्ञासस्वेति** ॥

ननु योगेन ब्रह्मशब्दस्य गुणपूर्तिवाचितायाः प्रदर्शितत्वेन तस्यार्थान्तरपरतायाः सिद्धत्वान्नेत्थं सन्देह इति व्यर्थोऽयं विचार इत्यत आह **न हीति** । योगेनेति शेषः । अप्रसिद्धार्थपरत्वसंभवेऽपीति

च । सर्वत्रेति त्वेकत्रापि न तत्परत्वं किमु सर्वत्रेति कैमुत्यसूचनायेति ज्ञेयम् । प्रसिद्धार्थपरत्वसंभवेऽपि योगेनालौकिकार्थवाचित्वं संभवतीत्येतावताऽलौकिकार्थपरत्वं न हि क्वापि दृष्टं घटादिशब्दानामप्यलौकिकार्थपरत्वापत्तेरित्याशयः ॥ तद्वाचित्वात्तत्र तात्पर्यमिति च शक्तितात्पर्ययोरेकत्वाद्वोच्यते शक्तेस्तात्पर्याविनाभावाद्वा । नोभयथाऽपीत्याह **शक्तीति** । अन्यत्वाद्भिन्नत्वात् । शक्त्या लक्षणादिना वा प्रतिपादकत्वरूपत्वात्तात्पर्यस्येति भावः । अन्यत्वादित्यस्य शक्तेस्तात्पर्येण विनाऽपि सत्त्वादित्यप्यर्थः । गङ्गाशब्दस्य प्रवाहे शक्तावपि गङ्गायां घोष इत्यत्र तदप्रतिपादकत्वेन व्यभिचारादिति भावः ॥ तर्हि स्वर्गापूर्वादिपदानामप्यलौकिकार्थपरत्वाभावेन तदसिद्धिरेव स्यादित्यतस्तत्र प्रसिद्धार्थासंभवेन वैदिकपदानर्थक्यासंभवेनालौकिकार्थपरत्ववदत्रापि प्रसिद्धार्थासंभव एवाप्रसिद्धार्थत्वं कल्पनीयमिति प्रसिद्धार्थासंभवव्युत्पादनपर्यन्तं सन्देहानिवृत्त्या विचारसार्थक्यमेवेत्याह **तद्यदीति** । एवञ्च तद्ब्रह्मेत्ययमिति विशिष्य निर्देशस्तस्य प्रस्तुतत्वाभिप्रायेण न तु प्रयोगान्तरे तस्यार्थान्तरपरत्वाङ्गीकाराभिप्रायेण । तथा च नैतद्वाक्यानां पूर्वपक्षविरोधः । पूर्वपक्षीयायास्तद्वाचितायाः कल्प्यत्वोक्तिस्तु रूढेरभावाद्देशकालवस्त्वपरिच्छेदरूपवृद्ध्यर्थबृहतेर्निष्पन्नस्य ब्रह्मशब्दस्य गुणपूर्तेरेवाप्रसिद्धत्वेन अयोग्यतया वा 'अथ कस्मात्'इत्यत्र गुणशब्दस्य देशापरिच्छेदादिपरत्वेनाप्युपपत्तेः श्रुतिबलाद्वा तदर्थत्वासिद्धेश्चेति द्रष्टव्यम् ।

यद्वा योगेन गुणपूर्तिवाचितायाः प्रतिपादितत्वेनार्थान्तरपरत्वस्य निर्णीतत्वान्न सन्देह इति शङ्काया उक्तरीत्या तद्वाचित्व एव विप्रतिपत्तेरित्येवोत्तरमभिप्रेतम् । तथा च सन्देहादर्थवानेव विचारः । ब्रह्मशब्दस्य तद्वाचित्वमन्यत्रार्थान्तरपरत्वं चाङ्गीकृत्यापि न तद्वाचकत्वादिमात्रेण सर्वत्र तत्परत्वसिद्धिरित्यतोऽपि विचारसार्थक्यमेवेत्याह **न हीति** ॥ अथ यथाश्रुतमेव सर्वम् । यदि न तद्वाचित्वमात्रेण तत्परत्वसिद्धिः कथं तर्हि तत्सिद्धिरित्यत आह **तद्यदीति** । एवं च पूर्वपक्षप्रवृत्तिरभिप्रेतोत्तराभिप्रायेण न त्वङ्गीकारवादाभिप्रायेण । तत्त्वप्रकाशिकायां तु तद्वाचित्वाद्यभ्युपगमेनैव पूर्वपक्षः प्रदर्शितः । अत एव न्यायविवरणटीकायां पक्षद्वयमपि प्रदर्शितमिति ध्येयम् ।

यद्वा । सन्देहावसरे सन्देहबीजत्वेन सिद्धान्त्यभिमतगुणपूर्तिवाचित्वं, क्वचित्तत्परत्वाङ्गीकारेऽपि पूर्वपक्षस्य सिद्धान्त्यभिमतोन्मूलनेन प्रवृत्तेस्तत्र तद्वाचित्वादेः कल्प्यत्वोक्तिरुपपन्नेति द्रष्टव्यम् । चन्द्रिकायां तु 'ब्रह्मशब्दो गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेत्यतो वाचकत्वे सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेर्नैत्थं सन्देहः किन्तु तात्पर्यसन्देह एव प्रदर्शनीय इति परिहर्तुमेतद्वाक्यमत एव सन्देहावसर एव कृतम्' इत्युक्त्वा 'जीवे संभवद्गुणपूर्तेर्ब्रह्मशब्दप्रवृत्तिनिमित्तत्वाङ्गीकारेण पूर्वपक्षप्रवृत्तिर्वा' इति पक्षान्तरमुक्तम् ।

जीव एवायमिति न्यायविवरणीयावधारणानुसारेण परिशेषं दर्शयितुं प्रसक्तं प्रतिषेधति **जात्यादिकमिति** । आदिपदेन शब्दराशिग्रहणम् । तस्येत्युपलक्षणम् । तत्प्रामाण्यादेश्चेत्यपि द्रष्टव्यम् । सुशब्देन लोकतः शास्त्रान्तरतश्च प्रसिद्धिं सूचयति ॥ **जीवस्येति** । एवंच जिज्ञासामात्रानाक्षेपेऽपि सिद्धान्त्यभिमतजिज्ञासाक्षेपेण पूर्वपक्ष इत्याशयः । न च शक्त्यभावेऽपि लक्षणादिना तात्पर्यसंभवात्सिद्धान्तिनं प्रति शक्तेः कल्प्यत्वोक्तिरयुक्तेति वाच्यम्, लक्ष्येऽर्थे योगासंभवेन तदधीनगुणपूर्त्यसिद्धेः सिद्धान्तिना लक्षणादेर्वक्तुमशक्यत्वात् ॥

**अत इति** । एवंच यत्र दुःखेन संभिन्नमित्यादिरूपबाधकवशात्स्रक्चन्दनादिरूपप्रसिद्धार्थपरित्यागेन स्वर्गपदादेरप्रसिद्धार्थकल्पनावत्प्रकृतेऽपि वाक्यशेषोक्तबाधकवशात्प्रसिद्धार्थपरित्यागेनाप्रसिद्धार्थकल्पनं युक्तमिति भावः ।

**स०**— ननु गुणपूर्तिवाचकस्यास्य ब्रह्मशब्दस्य कथं प्रसिद्धाल्पगुणजीवपरत्वसन्देहो युज्यत इत्यत आह **न हि ब्रह्मशब्द इति** । नन्वेवं क्वचिद्ब्रह्मशब्दस्य गुणपूर्णवस्तुवाचकत्वे पूर्वपक्षिणाङ्गीकृते तस्यार्थस्य कल्प्यत्वात्कल्पनागौरवमिति वक्ष्यमाणगौरवं कथं घटत इति चेत् । उच्यते । वेदान्तरीत्या ह्यत्र पूर्वपक्षः । तथाच व्यवहारदशायां च यत्र 'तदेव ब्रह्म परमं कवीनाम्'इत्यादौ समुद्रान्तस्थितत्वादिलिङ्गबलाद्गुणपूर्णवस्तु ब्रह्मशब्दात् प्रतीयते तत्र प्रतीयतां नाम । प्रकृते बाधकाभावात् । अत एव तद्ब्रह्मेत्ययं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः । पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतमिदम् । परमार्थतस्तु न प्रसिद्धजीवव्यतिरिक्तं ब्रह्मास्ति प्रमाणाभावात् । सर्वस्य वेदान्तस्याखण्डचिन्मात्रपरत्वात् अतस्तत्कल्पने कल्पनागौरवमेवेत्याशयात् । चन्द्रिकायां तु "अयं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः, पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतिं दर्शयितुमेव । न तु क्वचिद्ब्रह्मशब्दस्य विष्णुवाचित्वाङ्गीकारेण पूर्वपक्ष इति दर्शयितुम् । तथात्वे सिद्धान्तिनं प्रति अर्थादेः कल्प्यत्वोक्तेरनुपपत्तेः । तथा चात्र पूर्वपक्षे सर्वत्र ब्रह्मशब्दस्य न विष्णुपरत्वमित्येव विवक्षितम्, न तु तद्ब्रह्मेति वाक्यगतब्रह्मशब्दस्यैव । 'न हि ब्रह्मशब्द' इति वाक्यं तु क्वचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं; किन्तु 'ब्रह्मशब्दो गुणपूर्तिवाची न वा इत्येव सन्दिह्यतां किं तात्पर्यसन्देहेन' इति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेः नेत्थं सन्देहः, किन्तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुम्; अत एवै तद्वाक्यं सन्देहावसर एव कृतम्" इत्युक्तम् ॥ ननु शक्तितात्पर्ययोरेकत्वात् शक्तिसिद्धौ तात्पर्यस्यापि सिद्ध्या कथं विवक्षितार्थासिद्धिरित्यत आह **शक्तितात्पर्ययोरन्यत्रापि सत्त्वादिति** ।

**उपासनायाश्चेति** । तथा च न वस्तुतत्त्वव्यवस्थापिकया जिज्ञासया कृत्यमिति वाक्यशेषः । जीवस्य तु देहातिरिक्ततया विचार्यतयैव जिज्ञासा । न तूपासनं, स्वस्य स्वयं उपासनाऽयोगादिति भावः ।

न चैवं जिज्ञासाक्षेपो, जीवस्यैव तद्विषयत्वसंभवादिति वाच्यं, विशिष्टाधिकारिकमोक्षफलकजीवान्यधर्मिक-पूर्णत्वप्रकारकपूर्वसूत्रोक्तजिज्ञासाक्षेपोपपत्तेः इति भावः । यद्वा देहाद्यन्यतया जीवस्य जिज्ञासामङ्गीकृत्य सिद्धान्त्यभिमतजिज्ञासाक्षेप इति द्रष्टव्यम् ॥ **तद्वाचिताया इति** । न च सिद्धान्ते लक्षणादिनापि तात्पर्यसंभवात्तद्वाचितायाः कल्प्यत्वोक्तिरयुक्तेति वाच्यम् । लक्ष्येऽर्थे योगासंभवेन तदधीनगुणपूर्त्य-लाभेन वाच्यतायाः सिद्धान्तिभिरवश्यं वाच्यत्वात् । न चावयवशक्तेः क्लृप्तत्वेन कल्प्यत्वोक्तिरयुक्ता । गुणपूर्तेरेवाभावेन तत्र बृहतेः शक्त्यक्लृप्तेरिति भावः ।

**अलौकिकस्य हरेरेवेति** । 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् ॥' इति श्रुतेः स्वर्गशब्दस्य चन्दनादिरूपप्रसिद्धार्थत्यागेन अप्रसिद्धार्थपरत्ववत् ब्रह्मशब्दस्यापि यतो वेत्यादिवाक्यशेषात् प्रसिद्धार्थत्यागेनालौकिकार्थपरत्वोपपत्तिरिति भावः ॥ **तस्य तेनेति** । तस्य हरेः तेन ब्रह्मशब्देनेत्यर्थः । न च विष्णोरपि उपासनासाध्यत्वात् उपासनायाश्च अविद्यमानार्थविषयत्वात् किं विद्यमानचर्चारूपविचारेणेति वाच्यम्, उपासनाया अविद्यमानार्थविषयत्वे विद्यमानार्थविषयकश्रवणमननजन्यत्वायोगेन तत्समानार्थकायास्तस्या विद्यमानार्थविषयत्वावश्यंभावात् ।

**प०**— नन्वेवं सृष्टिरित्यादेरुक्तव्याख्यानत्रयेऽपि 'जन्माद्यस्य यतः' इतिसूत्रं श्रुत्यन्तरप्रसिद्धा-नेकलक्षणोक्तिपरमिति व्याख्यातं स्यात् । न च तद्युक्तम्, तथात्वे न्यायेन वेदार्थविषयकसंशयविपर्यय-निरासपूर्वं तन्निर्णयरूपोपकाराजनकत्वेनागमवद्बोधकतापत्त्या वेदेतिकर्तव्यतारूपन्यायसूत्रत्वभङ्ग इत्यतो योजनान्तरमप्याह **अथवेति** ॥ यद्वा 'इत्यनेकलक्षणोक्त्युपयोगः' इत्ययुक्तम् । स्वेतरसर्वव्यावृत्ततया जिज्ञास्यवस्तुनोऽवधारणाय हि लक्षणकथनम् । तच्चैकत्र श्रुतौ उक्तैकलक्षणोक्त्यापि संभवतीत्यतो, नैवं, जिज्ञासाविधायकनानावाक्येषु जिज्ञास्यस्य जीवत्वेन तदन्यपरत्वाभावशङ्कायां तत्र तत्र वाक्ये जिज्ञास्यस्य सामानाधिकरण्येन क्वचित्सृष्टिः क्वचित्स्थितिरित्येवं जीवव्यावर्तकधर्माणाम् अष्टानां श्रवणात्तन्मध्येऽन्य-तमस्यानुपादाने तद्धर्मोपेतवाक्ये जिज्ञास्यस्य जीवान्यत्वासिद्धेः सर्वोपादानं सार्थकमिति भावेन योजना-न्तरमाह **अथवेति** ॥

**तद्ब्रह्मेत्ययं ब्रह्मशब्द इति** । वैदिकब्रह्मशब्दमात्रस्यात्र संशयधर्मित्वम् । तद्ब्रह्मेत्ययमिति विशिष्य संशयधर्म्युक्तिः पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतिं दर्शयितुमेव न तु तत्रैव सन्देहः । अन्यत्र विष्णुवाचित्वा(भावा)भ्युपगमोऽस्तीति न भ्रमितव्यम् । तथैव चन्द्रिकोक्तेः । अन्यथा धर्मिकल्प-नोक्तिपरोत्तरग्रन्थविरोधात् ॥ **प्रसिद्धार्थेति** । जीवपर इत्यर्थः ॥ ननु ब्रह्मशब्दः गुणपूर्तिवाची नवेत्येव संदिह्यतां किं तात्पर्यसन्देहेनेत्यत आह **न हीति** । वाचकत्वसिद्धावपि तात्पर्यासिद्ध्या तात्पर्यकोटिक-सन्देह एव दर्शनीय इति भावः ॥ **अन्यत्रापीति** । परस्परपरिहारेणापि सत्त्वादित्यर्थः ॥ **आरोपे-**

**तेति** । तथाच तत्त्वपरे शास्त्रे न तस्य विचार्यतेति भावः ॥ जीवपक्षे कथं जिज्ञासोपपत्तिः तस्याप्यहं-धीसिद्धत्वात् । 'जातमात्रा मृगा गाव' इत्यादिना भक्तिपादे 'देहादन्योऽनुभवत आत्मा भाति'इत्यादिना समयपादे च वक्ष्यमाणदिशा देहादिविविक्तत्वेनापि सिद्धत्वात्; इत्यत आह **जीवस्येति** ॥ सिद्धान्तकोटौ बाधकमाह **अप्रसिद्धार्थत्वे त्विति** ॥ **तद्वाचिताया इति** । वाचित्वाभावेपि लक्षणया तात्पर्यसंभवेपि सिद्धान्तिना लक्षणानङ्गीकारात्तद्वाचिताया अपि कल्प्यत्वोक्तिः ।

**य आत्मेति** । 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोन्वेष्टव्यः स विजिज्ञासितव्य' इति छान्दोग्याष्टमाध्यायगतवाक्यम् । ब्रह्मात्मादिशब्दवाच्यादित्यनन्तरं हरेरिति मूलपदं योज्यम् । अस्येत्यध्याहृतस्यार्थो विश्वस्येति । इत्युच्यत इत्ययुक्तम् तद्विजिज्ञासस्वेत्याद्युपात्तवाक्येऽनुपलम्भादित्यत आह **इत्यादिपूर्वोत्तरवाक्यै-रिति** ॥ तद्विजिज्ञासस्वेत्यस्य यतो वा इत्यादिपूर्ववाक्यम् । य आत्मेत्यस्य तु अपहतपाप्मेत्याद्युत्तर-वाक्यम् । तत्र च 'अपहतः पाप्मा यस्मात्'इत्यादिबहुव्रीह्युपगमेन मोक्षो हरेर्भवतीत्येतज्ज्ञेयम् । एवं श्रुत्यन्तरेऽपि ध्येयम् । तावता जिज्ञास्यं जीवान्यत्कुतः जीव एव कुतो नेत्यतो योजनाऽन्तरमाह **सृष्ट्याद्यश्चेति** ॥ **भाष्येति** । य उ त्रिधान्वित्यादिश्रुतिष्वित्यर्थः । हरेस्सदेत्यन्वये लब्धार्थमाह **हरेरेवेति** । हरेरितीदानीं षष्ठ्यन्तं बोध्यम् । हिशब्दस्य यस्मादिति हेत्वर्थकत्वबलेन लब्धार्थमाह **अत इति** । तस्यैवार्थः प्रसिद्धार्थे बाधकसद्भावात् इति । अलौकिकस्येति विभागः । एतेनासु विचार-विधात्रीषु श्रुतिसूक्तास्तद्ब्रह्मेत्यादिशब्दाः हरेस्सदा वाचका इत्यपि मूलयोजना सूचिता ।

**या०**— ननु ब्रह्मशब्दस्य 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति श्रुत्या गुणपूर्ति वाचकतया पूर्वमुक्तत्वात्कथमल्पगुणजीवपरत्वकोटिसन्देहहेतुको विचारो युज्यत इत्यत आह **न हि ब्रह्मशब्द इति** । सत्यं ब्रह्मशब्दो गुणपूर्तिवाची तथाऽपि, सर्वत्र प्रसिद्धार्थेऽपि, न समस्तगुणपूर्तिपरः । किं त्वप्रसिद्धार्थ एव । प्रसिद्धार्थे तु विवक्षिते संभवद्गुणपूर्तिपर एव भविष्यति । अतो युक्तः संशय इत्याशयः । एतेन सर्वत्रेति वचनेन क्वचिद्ब्रह्मशब्दस्य समस्तगुणपूर्णवस्तुवाचिताङ्गीकारावगमात्तस्यार्थस्य कल्प्यत्वादिति वक्ष्यमाणं कल्पनागौरवमेतद्वाक्यार्थेन विरुद्धमिति शङ्का निरस्ता । सर्वत्रेत्यस्य सर्वेषु ब्रह्मशब्दोपेतेषु वाक्येष्वित्यर्थकत्वे हि तथा स्यात् । न चैवं किन्तु प्रसिद्धाप्रसिद्धार्थयोरित्यर्थकत्वस्य प्रदर्शितत्वात् । एतदेव दर्शयति **तद्यदीति** ॥ **प्रसिद्धार्थपर एवायमिति** ॥ ननु वक्ष्यमाणकल्पना-गौरवेण ब्रह्मशब्दस्य कुत्राप्यसिद्धार्थपरत्वं नास्तीति पूर्वपक्ष्याशयावगमात्कथमेवं विशिष्य पूर्वपक्षोपक्रमा-दिरिति चेत् । उच्यते । पूर्वोक्तजिज्ञासाक्षेपेण सङ्गतिं दर्शयितुं तावदयं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः कार्यः । अन्यथा सङ्गतेर्दर्शयितुमशक्यत्वात् । तदनुसारेणैव पूर्वपक्षोपक्रमोपसंहारावपि

विशिष्योक्ताविति न काऽप्यनुपपत्तिः । चन्द्रिकायां तु न हि ब्रह्मशब्द इति वाक्यं क्वचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं किन्तु ब्रह्मशब्दो गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्ये सन्देहेनेति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिद्ध्या विवक्षितार्थासिद्धेर्नैत्थं सन्देहः किन्तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुमत एवैतद्वाक्यं सन्देहावसर एव कृतमित्युक्तम् ॥ **अप्रसिद्धत्वेऽपीति** । तस्य देवत्वेनातीन्द्रियत्वादिति भावः ॥ **उपासनायाश्चेति** । तथा च न वस्तुतत्त्वव्यवस्थापकतया तज्जिज्ञासया कृत्यमिति भावः ॥ **न प्रसिद्धिरिति** । तथा च तद्विजिज्ञासस्वेत्यत्र जीवस्यैव देहाद्यन्यतया जिज्ञास्यताविध्यङ्गीकारात् न पूर्वसूत्रोक्ता सिद्धान्त्यभिमता जीवातिरिक्तब्रह्मजिज्ञासाक्षेपे युक्तेति निरस्तम् ॥ **तद्वाचिताया इति** । लक्षणादिना तात्पर्योक्तौ गुणपूर्त्यलाभेन, योगेन वाच्यताया सिद्धान्तिनाऽवश्यं वाच्यत्वादिति भावः ॥

**अलौकिकस्य हरेरेवेति** । 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् ॥' इति श्रुतेः स्वर्गशब्दस्य चन्दनादिरूपप्रसिद्धार्थत्यागेनाप्रसिद्धार्थपरत्ववद्ब्रह्मशब्दस्यापि यतोवेत्यादिवाक्यशेषात्प्रसिद्धार्थत्यागेनालौकिकार्थपरत्वोपपत्तिरिति भावः ॥

**श्री०— जीवो हीति** । धर्मिकल्पनातो धर्मकल्पना लघीयसीति भावः ॥ ननु ब्रह्मशब्दस्य प्रसिद्धजीवभिन्नार्थान्तरपरत्वं किं न स्यादित्याशङ्क्य तत्र बाधकमाह **अप्रसिद्धार्थत्वे त्विति** ॥

**च०— अर्थान्तरपर इतीति** । श्रौतब्रह्मशब्दधर्मिकजीवतात्पर्यकत्वार्थान्तरतात्पर्यकत्वकोटिकसन्देह इत्यर्थः ।

ननु ब्रह्मशब्दस्य गुणपूर्त्यभिधायकतायाः प्रागभिहिततया तस्यार्थान्तरतात्पर्यकत्वावधृत्या ताद्रूप्यविनिर्मुक्तजीवतात्पर्यकत्वकोटिकसन्देहस्यैवानवतारेण कथं तन्निबन्धनो विचारः सङ्गच्छत इत्याशङ्कायामाह **न हि ब्रह्मशब्द इति** । अवयववृत्त्या अप्रसिद्धार्थपरत्वसंभवेऽपीति पूरणीयम् । **इयं च** फक्किका पूर्ववादिनो ब्रह्मशब्दस्य काचित्कगुणपूर्त्यभिधायकत्वोरीकारेण नैव प्रववृते । तथा सति तस्यार्थस्य, तद्वाचितायाः, तत्र तात्पर्यस्य च कल्प्यत्वादित्युत्तरग्रन्थासाङ्गत्यप्रसङ्गात् । किन्तु यथा अश्वकर्णादिशब्दा अवयववृत्त्याऽर्थविशेषवाचकत्वेन केनचिदङ्गीकृता इत्येतावता प्रसिद्धार्थतात्पर्यकत्वसंभवे योगेन तद्वाचकता न सेधिष्यति तेषां, तद्वत् सिद्धान्तिना ब्रह्मशब्दस्यावयववृत्त्या अलौकिकार्थवाचकतायामूरीकृतायामपि तादृशालौकिकार्थतात्पर्यकताप्रसिद्धार्थपरत्वसंभवे न सेत्स्यत्येव तस्य, अन्यथा दर्शितातिप्रसङ्गस्य दुर्वारत्वात्; इति संभवद्गुणपूर्त्यवच्छिन्नतात्पर्यकतैवोपेयेति तादृशसन्देहस्यानन्तरायतया तन्निबन्धनोयं विचारः सङ्गच्छत एवेत्याशयः । इत्थं च दर्शिता गुरुपादोक्तसरणिः ॥ सर्वत्रेति तु एकत्रापि न तत्परत्वम् किमु सर्वत्रेति कैमुत्यसूचनायेति ज्ञेयम् । प्रसिद्धार्थसंभवेऽपि योगेनालौकिकार्थवाचित्वं

प्रभवतीत्येतावता अलौकिकार्थपरत्वं न हि कापि दृष्टम् । घटादिशब्दानामप्यलौकिकार्थपरत्वापत्तेरित्याशय इति वाक्यार्थचन्द्रिकाकृताम् ॥ चन्द्रिकाकृतां च 'इदं वाक्यं क्वचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं किन्तु गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिध्या विवक्षितार्थासिद्धेर्नेत्थं सन्देहः किं तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुमत एवैतद्वाक्यं सन्देहावसरे कृत'मिति निरूढं पन्थानमनुरुन्धानेत्यवसेयम् ॥ अत्र व्याचक्षाणाः "ननु ब्रह्मशब्दस्याथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा इति श्रुत्या गुणपूर्तिवाचकतायाः पूर्वमुक्तत्वात् कथमल्पगुणजीवपरत्वकोटिकसंदेहहेतुको विचारो युज्यत इत्यत आह **न हि ब्रह्मशब्द** (इति) इत्यवतार्य; सत्यं ब्रह्मशब्दो गुणपूर्तिवाचीति तथापि सर्वत्र प्रसिद्धार्थेऽपि न समस्तगुणपूर्तिपरः किं त्वप्रसिद्धार्थ एवं । प्रसिद्धार्थे तु विवक्षिते संभवद्गुणपूर्तिपर एव भविष्यति । अतो युक्तः संशय इत्याशयः । एतेन सर्वत्रेति वचनेन क्वचिद्ब्रह्मशब्दस्य समस्तगुणपूर्णवस्तुवाचिताङ्गीकारावगमात्तस्यार्थस्य कल्प्यत्वादिति वक्ष्यमाणं कल्पनागौरवमेतद्वाक्यार्थेन विरुद्धमिति शङ्का निरस्ता । सर्वत्रेत्यस्य सर्वेषु ब्रह्मशब्दोपेतेषु वाक्येष्वित्यर्थकत्वे हि तथा स्यात् । न चैवं किं तु प्रसिद्धाप्रसिद्धार्थयोरित्यर्थकत्वस्य प्रदर्शितत्वात् । एतदेव दर्शयति **तद्यदीति** ॥ **प्रसिद्धार्थपर एवायमिति** । ननु वक्ष्यमाणकल्पनागौरवेण ब्रह्मशब्दस्य कुत्राप्यप्रसिद्धार्थपरत्वं नास्तीति पूर्वपक्षस्याशयावगमात्कथमेवं विशिष्य पूर्वपक्षोपक्रम इति चेन्न । उच्यते । पूर्वोक्तजिज्ञासाऽऽक्षेपेण सङ्गतिं दर्शयितुं, न तावदयं ब्रह्मशब्द इति विशिष्य संशयधर्मिनिर्देशः कार्यः; अन्यथा सङ्गतेर्दर्शयितुमशक्यत्वात् तदनुसारेणैव पूर्वपक्षोपक्रमोपसंहारौ विशिष्योक्ताविति न काऽप्यनुपपत्तिः । चन्द्रिकायां तु न हि ब्रह्मशब्द इति वाक्यं क्वचिद्गुणपूर्तिवाचिताङ्गीकारेण न प्रवृत्तं किं तु ब्रह्मशब्दो गुणपूर्तिवाची न वेत्येव सन्दिह्यतां किं तात्पर्यसन्देहेनेति शङ्कायां वाचकत्वे सिद्धेऽपि तात्पर्यासिध्या विवक्षितार्थासिद्धेर्नेत्थं सन्देहः, किं तु तात्पर्यसन्देह एव दर्शनीय इति परिहर्तुम् । अत एवैतद्वाक्यं सन्देहावसर एव कृतमित्युक्तम्" । इति व्याचक्षते ।

**अप्रसिद्धत्वेऽपीति** । तस्य देवत्वेनातीन्द्रियत्वादिति हृदयम् ॥ तस्येति प्रयोजनपरामर्शकं पूर्वोत्तराभ्यां तन्त्रावृत्त्याद्याश्रयणेनान्वेति ॥ **उपासनायाश्चेति** । अर्थपारमार्थ्यावगमिका जिज्ञासा मन्दप्रयोजनेति भावः ॥ **न प्रसिद्धेरिति** । तथाच देहाद्यन्यत्वोपगमेन जीवधर्मिकजिज्ञासाया एव तद्विजिज्ञासस्वेति वाक्यघटकविधिविहितत्वोपगत्या नोत्तरवाद्यभिमता जीवान्यत्वविशेषितब्रह्मधर्मिकजिज्ञासा सङ्गच्छत इति पूर्ववादिमतप्रवृत्तिरिति भावः ॥ **तद्वाचिताया इति** । लक्ष्येऽर्थे यद्यपि तात्पर्यं सूपगमं तथापि तत्रावयववृत्त्यभावेन गुणपूर्त्यसिध्या लक्षणाया दुरुपगमत्वादिति भावः ।

**बाधकसद्भावादिति** । 'यन्न दुःखेन' इत्यादिवाक्यशेषोदीरितधर्मान्वयानुपपत्त्या स्वर्गशब्दस्य स्रगादिरूपप्रसिद्धार्थानुपगमेनालौकिकार्थतात्पर्यकतेव प्रकृतेऽपि 'यतो वा' इति वाक्यशेषाभिहितधर्मान्वया- नुपपत्तिप्रसङ्गेन प्रसिद्धार्थपरित्यागेनातादृशार्थतात्पर्यकतैवोपेयेति भावः ॥

( इति लक्षणस्य लक्ष्यधर्मत्वोपपादनम् ।)

( अथ अतिव्याप्तिपरिहारः । )

**सु०— ननु कथं जगत्सृष्ट्यादिकारणत्वं हरेरेव स्यात्, यावता 'हिरण्यगर्भः समवर्तताग्रे', 'एको रुद्रो न द्वितीयाय तस्थे', 'इमाँल्लोकानीशत ईशनीभिः', 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिश्रुतिषु हिरण्यगर्भादीनां तत्प्रतीयते; इत्यत आह** सृष्टिरिति । **आसु श्रुतिषु परेणोदाहृतासु हिरण्यगर्भ इत्याद्यास्वपि विश्वस्य सृष्ट्यादयो हरेरेवोक्ता न तु ब्रह्मरुद्रादिभ्य इति न लक्षणस्यातिव्याप्तिरिति ।**

**तत्कथमित्यत आह** यं नामानीति ।

अनु०— यं नामानि विशन्त्यद्धा यो देवानामिति ह्यपि ॥
श्रुतेर्नामानि सर्वाणि विष्णोरेव यतस्ततः ॥

**अनेन 'नामानि सर्वाणि यमाविशन्ति' इत्यादिश्रुतिमुपादत्ते । अद्धेत्याङो- ऽर्थकथनम् । 'यो देवानां नामधा एक एव' इत्यपि प्रसिद्धश्रुतेः नामानि सर्वाणि हिरण्यगर्भ इत्यादीनि, विष्णोरेव यतः, ततः, हिरण्यगर्भ इत्यादिषु श्रुतिषु विश्वस्य सृष्ट्यादयो हरेरेव उक्ता इति पूर्वेण संबन्धः ।**

**वा०—** एतद्वाक्यसङ्गतत्वेनोत्तरवाक्यं योजयितुमतिव्याप्तिशङ्कापरिहारप्रतिज्ञापरत्वेनेदमेव वाक्यं योजयति **नन्विति** । यावतेत्यस्य यत इत्यर्थः ।

श्रुतिगतस्य सर्वाणीत्यस्याङश्चानुपादानादर्थत उपादाने वक्तव्ये कस्येदमुपादानमिति न ज्ञायत इत्यतोऽव्ययत्वेनान्तरङ्गतयाऽव्यवधानाच्चाङ इदं ग्रहणमित्याह **अद्धेतीति** । पूर्वोक्तप्रतिज्ञोपपादकहेतु- कथनरूपत्वमस्य दर्शयितुं पूर्वेण संबन्धमाह ॥ **तत इति** ।

**स०— यावतेति** । यत इत्यर्थः ।

**प०—** लक्षणानामतिव्याप्तिनिरासकत्वेनापि योजयति **ननु कथमित्यादिना** । यावतेति यस्मादित्यर्थे भिन्नक्रमतयाप्यपिपदान्वयमुपेत्याह **इत्याद्यास्वपीति** । हरेरेवेति पञ्चमी । ब्रह्मरुद्रादिभ्य इति प्रतियोगिनि पञ्चमीनिर्देशात् । 'इति ह्यपि । श्रुतेः' इत्यत्र हिशब्दार्थमाह **प्रसिद्धश्रुतेरिति** ॥

या०— प्रसिद्धश्रुतेरित्यत्र प्रसिद्धेति हिशब्दार्थकथनम् ॥

श्री०— **द्वितीयायेति** । द्वितीयतयाऽवस्थानाभावान्यो न तस्य इत्यर्थः । विभक्तिव्यत्ययेन द्वितीय इत्यर्थ इत्यप्याहुः ।

**सु०— ननु यथा हिरण्यगर्भादिशब्दान्विष्णुविषयान्व्याख्याय हिरण्यगर्भ इत्यादिश्रुतयो विष्णौ योज्यन्ते तथा विष्ण्वादिशब्दान्हिरण्यगर्भादौ व्याख्याय भाष्योदाहृताः श्रुतयोऽन्यविषयतया कुतो न योज्यन्त इत्यत आह** अत इति ।

**अनु०—** अतो न मुख्यतो नाम तदन्यस्य हि कस्यचित् ॥

**अतो 'नामानि विश्वाभि न सन्ति लोके' 'यो देवानां नामधा एक एव' इति प्रतिषेधात्, परमेश्वरादन्यस्य नामैव नास्ति । दूरे विष्ण्वादिनामेत्यर्थः ॥ नामाभावे व्यवहार विलोपादिप्रसज्यत इत्यत उक्तम्** मुख्यत इति ।

वा०— अत इत्युदाहृतश्रुत्योराद्यश्रुत्यर्थपरामर्शे विवक्षितार्थासिद्धेस्तदुदाहरणसन्निधापितपूर्ववाक्यार्थस्य द्वितीयश्रुनाववधारणवललब्धार्थस्यायं परामर्श इत्याह **अत इति** ॥ सामान्यनिषेधस्य कैमुत्यसूचनेन प्रकृतोपयोग इत्याह **नामैवेति** ॥

प०— **भाष्योदाहृतेति** । 'य उ त्रिधातु' इत्यादयः ॥ **विश्वेति** । विश्वानीत्यर्थः ।

( इति अतिव्याप्तिपरिहारः । )

( अथ असंभवपरिहारः । )

**सु०— ननु तथाऽपि विष्णावसंभवीदं लक्षणम् । 'जनितोत विष्णोः' इत्यादौ तस्य जन्मादिदोषश्रवणात् । न हि जन्मादिदोषवतोऽस्मदादेरिव जगज्जन्मादिकारणत्वं संभवति । इत्यत आह** गुणा इति ॥

**अनु०—** गुणाः श्रुता इति ह्यस्मान्न दोषोऽर्थः श्रुतेर्भवेत् ॥

**''गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का । चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाङ्गैर्हि तथा प्रतीताः ॥' इत्यस्माद्वाक्यात् विष्णोर्जन्मादिदोषो 'जनितोत विष्णोः' इत्यादिश्रुतेरर्थो न भवेद्धि यस्मात्तस्मान्नासंभवीदं लक्षणम् ।**

इदमुक्तं भवति । वाक्यार्थावगमे हि व्याख्यानं मुख्यकारणम्; यथाहुः 'व्याख्यानतो विशेषप्रतिपत्तिः' इति । तत्रापि यदीयं व्याख्येयं तदीयमेव चेद्व्याख्यानं तदा सुतरां

**ततोऽर्थावगतिः । तत्र 'गुणाः श्रुताः' इति श्रुतिरेव सर्वश्रुतीर्व्याख्याति । सर्वाः श्रुतयो विष्णोरनन्तानलौकिकानेव गुणान्व(र्णय)दन्ति न कुत्रापि दोषान् । दोषवादप्रतीतिस्तु शब्दशक्तितात्पर्यापरिज्ञाननिमित्तैवेति ॥ एवं श्रुत्यैव सर्वासु श्रुतिषु व्याख्यातासु कथं तद्विरुद्धंदोषपरतया व्याख्यानं युज्यते । तस्माद्विष्णुरिति यजमानस्य यज्ञस्य वा नाम । तौ सोमाद्भवत इति सोमो जनितोत विष्णोरित्युच्यत इत्यादि व्याख्येयमिति ।**

वा०—ननु लक्षणातिव्याप्तिनिरासावसरे श्रुतेर्दोषपरत्वाभावव्युत्पादनमसङ्गतमित्यतो जन्माद्यस्येत्युपसंहारभाष्ये एवकारप्रहाणेन योजनेऽसंभवपरिहारस्याप्यभिप्रेतत्वादसंभवपरिहाराय दोषश्रुतेर्गतिकथनं नासङ्गतमित्याशयेनोत्तरवाक्यमवतारयति । **नन्विति** ॥

ननु 'गुणाः श्रुताः' इत्यनुसारेण दोषश्रुतेः स्वार्थप्रहाणे न किञ्चिन्नियामकं वैपरीत्यस्यापि संभवात् । न च व्याख्यानरूपत्वमेव तथेति वाच्यम् । व्याख्यानानुसारेणार्थकथनस्यापि नियामकशून्यत्वादन्यथाव्याख्यानस्यापि संभवाच्च । कथं चास्य दोषवचनव्याख्यानरूपत्वम् । तदनुसारेणास्याः स्वार्थप्रहाणे निर्विषयत्वापत्त्याऽप्रामाण्यापत्तिश्चेत्यत आह **इदमुक्तं भवतीति** ॥ अत्र परिभाषां प्रमाणयति **यथाऽऽहुरिति** । 'एकशतं षष्ठ्यर्थाः' इति 'अस्तेर्भूः' इत्यादौ यत्रानेकेषां योगानां प्रसक्तिस्तत्र स्थाने षष्ठी ग्राह्येति नियमार्थं प्रवृत्ते 'षष्ठी स्थानेयोगा' इति सूत्रे (स्थानेन योगो यस्या इति विग्रहः । निपातनादेत्वम् ) स्थान इत्युक्तेऽप्यनन्तरे वा समीपे वेति सन्देहात्तन्निवृत्तये 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति भाष्यकारेणोक्तम् । व्याख्यानेन विशेषप्रतिपत्तिरर्थविशेषनिश्चयो भवत्येव न तु सन्देहाल्लक्षणाभावः । एवं 'स्थान इति व्याख्यास्यामः' ततश्चार्थनिश्चय इति भाष्यकृता व्याख्यानस्यार्थावगतिहेतुताया उक्तत्वादिति भावः ॥ अन्यथाव्याख्यानसंभवं शङ्कितं निराचष्टे **तत्रापीति** ॥ श्रुता अश्रुताश्चेत्येतत्तात्पर्यकथनम् **अनन्तानिति** ॥ सुविरुद्धा इत्येतत्तात्पर्यकथनम् **अलौकिकानिति** । लोकरीत्या विरुद्धानित्यर्थः । श्रुता इत्यस्य सङ्कोचकाभावात्सर्वपरत्वमभिप्रेत्य सर्वाः श्रुतय इत्युक्तम् ॥ श्रुताश्च दोषा न सन्तीत्युक्ते श्रुतानां कथमसत्त्वमित्यतोऽर्थैर्हि तथा प्रतीताः श्रुत्युक्ततया प्रतीता इत्येव । न तु वस्तुतः श्रुतयो दोषान्वदन्तीति स्वयमेव व्याख्यानात्तदनुसारेण दोषाः श्रुता न सन्तीत्यस्य श्रुतयो दोषान्नैव वदन्तीति व्याख्याने आवश्यके तत्प्रायपाठाच्छ्रुता गुणाः सन्तीत्यस्यापि श्रुतयो गुणान्वदन्तीति व्याख्यानं कृतम् । नैवात्र शङ्का इत्येतत्तात्पर्यम् **एवेति** ॥ अचिन्त्याश्च तथैव दोषा इत्येतत्तात्पर्यकथनम् **न कुत्रापीति** ॥ अज्ञेत्यादितात्पर्यम् **दोषेत्यादि** ॥ तर्हि वाक्यस्य निर्विषयतयाऽप्रामाण्यापत्तिं परिहरन्नेवोपसंहरति **तस्मादिति** । यद्यपि सोमादिशब्दवाच्यान्मूलरूपादवताररूपप्रादुर्भावपरतया

सन्न्यायरत्नावल्यामिदं व्याख्यातं तथाऽपि सोमादिपदानां प्रसिद्धार्थपरत्वेऽपि 'अतो दोषवचो यत्र तद्भावयमवरं वदेत्'इति ऋग्भाष्यानुसारेण 'यज्ञो वै विष्णुः' 'पशवः शिपिः'इत्यादिश्रुत्या विष्णुशब्दस्य यज्ञादिनामत्वेनैवमपि व्याख्यातुं शक्यमिति भावेन व्याख्यानान्तरमेतदिति द्रष्टव्यम् ।

स०— **व्याख्यानतो विशेषप्रतिपत्तिरिति** । न हि सन्देहादलक्षणं भवति । पुनः प्रमाणान्तरेण (निष्पत्ते) निश्चयोत्पादात् । न्यायादागमात् वा शब्दशक्तिरुपबृंहणायेत्यर्थः ॥ **सर्वाः श्रुतयो विष्णोरनन्तानिति** । अनेन गुणा एव श्रुताः श्रुतिषु प्रतिपादिता इति वाक्ययोजना सूचितेति ज्ञातव्यम् । अश्रुता अपि गुणाः सन्तीत्यनेन लब्धमर्थं दर्शयति अनन्तानिति । सुविरुद्धा अचिन्त्या इत्येतत्तात्पर्यकथनम् अलौकिकानिति । 'न कुत्रापि दोषान्' इत्यनेन दोषा श्रुताः श्रुतितात्पर्यगोचरा नैवेति योजनोक्ता भवति । 'अज्ञैर्हि तथा प्रतीताः'इत्येतत्तात्पर्यमाह **दोषवादप्रतीतिरिति** ॥ **तौ सोमाद्भवत इति** । सोमेन यजेतेति तत्सोमस्य यागसाधनत्वश्रवणात् ॥ यजमानत्वमपि यागाधीनमिति प्रसिद्धमिति भावः ।

प०— सुविरुद्धाश्चेति लोकदृष्ट्या । अश्रुता अपि रमादिचिन्त्यास्तदचिन्त्याश्चेत्यर्थः । श्रुता अपि दोषा न सन्ति । श्रुतत्वे कथं नेत्युक्तिरित्यत उक्तम् **अज्ञैर्हि तथा प्रतीता इति** । ननु गुणाः श्रुता इति श्रुत्युक्तमात्रेण कथमुक्तशङ्कानिरास इत्यत आह **इदमुक्तं भवतीति** । 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः' इति श्रुतौ सोमस्य प्रकृतत्वादाह **सोमाद्भवत इतीति** । जनितोत विष्णोरितिवाक्यं तु सोमादिशब्दवाच्यात् क्षीराब्धिशयनान्मूलरूपाद्विष्णुशब्दाभिधेयप्रादुर्भावरूपस्य विवक्षयोपपन्नमिति सन्न्यायरत्नावल्युक्तिं हृदि कृत्वाह **इत्यादि व्याख्येयमिति** ।

या०— **सर्वाः श्रुतय इति** ॥ अनेन गुणा एव श्रुताः श्रुतिषु प्रतिपादिता इति योजना सूचितेति द्रष्टव्यम् । अश्रुता अपि गुणाः सन्तीत्यनेन लब्धमर्थं दर्शयति **अनन्तानिति** । सुविरुद्धा अचिन्त्या इत्येतत्तात्पर्यकथनम् **अलौकिकानिति** । न कुत्रापि दोषा इत्यनेन दोषाः श्रुताः श्रुतितात्पर्यगोचरा नैवेति योजनोक्ता भवति । अज्ञैर्हि तथा प्रतीता इत्येतत्तात्पर्यप्रदर्शनम् **दोषवादप्रतीतिरिति** ॥ **तौ सोमाद्भवत इति** ॥ सोमेन यजेतेति सोमस्य यागसाधनत्वश्रवणाद्यजमानत्वस्यापि सोमाधीनयागसापेक्षत्वादिति भावः ॥

**श्री०**— लक्षणस्यासंभवमाशङ्कते **ननु तथापीति** ।

**च०**— व्याख्यानस्य वाक्यार्थावगतिहेतुतायां महाभाष्यकारीयां परिभाषां प्रमाणयति **यथा-ऽऽहुरिति** । 'षष्ठी स्थानेयोगा'इति सूत्रं व्याचक्षाणेन भाष्यकृता "एकशतं षष्ठ्यर्थाः, यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्तीति ।', 'शब्दस्यापि शब्देनानन्तरादयोऽभिसंबन्धाः । अस्तेर्भूर्भवतीति सन्देहः स्थाने अनन्तरे समीपे वेति ।', 'सर्वसन्देहेषु चेदमुपतिष्ठते । 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति।' स्थान इति व्याख्यास्यामः ।" इत्यनेन व्याख्यानस्य विशेषार्थगोचरनिश्चयहेतुत्वेन तदप्रतिसंहितिदशायां सन्देहान्न लक्षणाभासता इत्यभिहिततयाऽस्मदुक्तं समञ्जसमिति भावः ॥ 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः । जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः'इति श्रुतौ पूर्वं सोमस्य प्रकृतत्वादाह **सोमाद्भवत इतीति** ॥ 'जनितोत विष्णोरिति वाक्यं तु सोमादिशब्दवाच्यात् क्षीराब्धिशयनान्मूलरूपाद्विष्णुशब्दाभिधेयप्रादुर्भावरूपस्य विवक्षयोपपन्नमिति सन्न्यायरत्नावल्युक्तं हृदि कृत्वाऽऽह 'इत्यादि व्याख्येयमिति' इत्यपि निबन्धान्तरीयो विन्यासः ।

**सु०**— **युक्त्यन्तरमाह** प्रीत्येति ।

**अनु०**— प्रीत्या मोक्षपरत्वाच्च तात्पर्यं नैव दूषणे ॥

**वेदो हि जीवानां मोक्षमुद्दिश्य प्रवृत्तः 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते ।' इति श्रुतेः । स च भगवत्प्रीत्येकसाध्यः 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण ।' इति श्रुतेः । अतो भगवत्प्रीत्युत्पादनद्वारा मोक्षं साधयता वेदेन तदेव जीवान्प्रति बोधनीयं यद्बोधे(धने)न जीवेषु भगवत्प्रीतिर्भवति । तथा च कथं परमेश्वरदूषणे तात्पर्यं स्यात् । दूषण-ज्ञानस्य प्रीतिसाधनत्वाभावात् । न हि लोके स्वदोषज्ञातरि प्रीतिर्दृष्टेति ।**

**वा०**—अत्र मोक्षपरत्वस्य तत्प्रतिपादकत्वरूपत्वे मोक्षस्य विषयत्वापत्त्या । 'दूषणे नैव तात्पर्यम्' इत्यस्यालग्नकत्वापत्तेस्तद्विवक्षितमर्थं सप्रमाणकमाह **वेदो हीति** । स्वर्गादिकं भवदप्यवान्तरमेव प्रयोजनमिति भावः । प्रीत्येत्यभिप्रेतं सप्रमाणकमाह **स चेति** ॥ **अत इति** । न हि शास्त्रं साक्षात्प्रयोजनस्य कारकं किन्तु विषयप्रतिपादनद्वारैवेति भावः ॥ **यद्बोधनेनेति** । अभिमतप्रयोजनसाधनं च विषयतामश्नुत इति भावः ।

**प०**—**युक्त्यन्तरमिति** । न दोषोऽर्थः श्रुतेर्भवेदित्यत्र श्रुतिकृतव्याख्यानापेक्षया वेदानां भगवत्प्रीतिद्वारा मोक्षार्थं प्रवृत्तत्वरूपयुक्त्यन्तरमित्यर्थः ॥ **तेषामिति** 'अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः । तेषाम्'इति वैशेषिकनये वक्ष्यमाणश्रुतेरित्यर्थः ॥

सु०— भगवत्प्रीतिद्वारा मोक्षं साधयतो वेदस्य तद्दूषणे तात्पर्यं स्यात् न युक्तं चेत्क तद्युक्तमित्यत आह सर्वेषामिति ।

अनु०— सर्वेषामपि वाक्यानां महातात्पर्यमत्र हि ॥

प्रकृतदोषविरुद्धत्वेन गुणाः श्रुता इति वाक्येन वा बुद्धिसन्निधापिता गुणा अत्रेति परामृश्यन्ते। हिशब्देन तज्ज्ञानस्येश्वरप्रीतिहेतुत्वं सूचयति ॥

ननु प्रयोजनमनुसृत्य वेदस्य प्रतीतविषयपरित्यागेनाप्रतीतविषयान्तराङ्गीकारोऽयमयुक्तः । तथात्वे पुरुषार्थविरोधिनो दुर्गन्धादिग्राहकस्य घ्राणादेस्तदविषयत्वप्रसङ्गात् । सुगन्धादिविषयत्वप्रसङ्गाच्च । इत्यत आह तद्विरोध इति ।

अनु०— तद्विरोधे न मानत्वं फलं मुक्तिर्हि वाक्यतः ॥

विषमोऽयमुपन्यासः । प्रत्यक्षानुमाने हि प्रयोजनोद्देशेन न प्रवृत्ते किन्तु स्वहेतूपनिपातमात्रादेवार्थं बोधयतः । वाक्यं तु श्रोतृपुरुषार्थोद्देशेनैव प्रवृत्तं तदनुगुणमेव विषयं प्रतिपादयेत् । उद्दिष्टपुरुषार्थविरोधिनि तु विषये प्रवर्तमानं कथं प्रमाणं स्यात् । यथा स्वर्गोद्देशेनाग्निहोत्रं विधाय 'को हि तद्वेद यद(द्य)मुष्मिंल्लोकेऽस्ति वा न वा' इति स्वर्गे संशयं कुर्वद्वाक्यम् ॥ प्रकृते च वाक्यतः सर्वेभ्यो वेदवाक्येभ्यः साध्यं फलं जीवस्य संसारान्मुक्तिरेव श्रुत्यादिप्रसिद्धा । परमेश्वरदोषप्रतिपादनस्य मोक्षविरोधे(न) न वेदवाक्यानां तत्र प्रामाण्यं युज्यत इति ।

वा०— 'फलं मुक्तिर्हि वाक्यत' इत्यत्र वाक्यग्रहणेन वाक्यस्य फलविरोधे न मानत्वमित्युक्त्या मानान्तरे फलविरोधोऽप्रयोजक इति वैषम्यं सूचितम् । तदुपपादयितुं तत्सूचनप्रयोजनं शङ्कामुखेन दर्शयति नन्विति ॥ यथेति । प्रवर्ग्यप्रकरणे 'अतीकाशान्करोति' इत्येतत्सन्निधौ 'को हि तद्वेद यद्यमुष्मिंल्लोक' इति वाक्यस्य श्रुतत्वेऽपि स्वर्गफलकत्वेन तत्तत्कर्मविधायकसकलविरोधित्वादस्य वाक्यस्याग्निहोत्रमित्युक्तोद्दिष्टस्वर्गरूपप्रयोजनविरोधित्वात्स्वर्गसंशये यथा नैतस्य तात्पर्यमित्यर्थः । संशयादावस्याप्रामाण्ये दृष्टान्तत्वं न तु सर्वथा । प्रवर्ग्यकाले प्राग्वंशमण्टपे धूमाकलितलोचनानामृत्विजां शास्त्रसिद्धकालान्तरभाविफलापेक्षया प्रत्यक्षधूमनिवृत्तिसाधनसद्यःफलातीकाशकरणेच्छुत्वादतीकाशस्तुतौ तात्पर्ये तत्र प्रामाण्यस्येष्टत्वात् । एवं चापौरुषेयवाक्यस्य सर्वथाऽप्रामाण्ये कथं दृष्टान्तत्वमिति प्रत्युक्तम् ।

स०— को हि तद्वेदेति । यद्यपीदं वाक्यं प्राग्वंशाख्यपत्नीशालायां धूमजनितदुःखप्रहाणाय 'दिक्ष्वतीकाशान् करोति' इति वाक्यविहितातीकाशाख्यच्छिद्राणामावश्यकत्वाय तत्स्तुतिपरमेव, तात्कालिफलप्रेप्सुत्वात्पुरुषाणां न स्वर्गसंशयपरम्, अतः प्रमाणमेव, न ह्यपौरुषेयतयाऽनाशङ्कितदोषे वेदेऽप्रामाण्यं संभावयितुमपि शक्यम्; तथाप्युद्दिष्टफलविरोधित्वादापाततः प्रतीयमाने स्वर्गसंशयरूपेऽर्थे न प्रमाण-

मित्यर्थः । अत एवाह **संशयं कुर्वदिति** । अपाततःसंशयविधायकमित्यर्थः ॥ **यथा स्वर्गेति** । ननु कथमपौरुषेयं वाक्यं उद्दिष्टफलविरोधित्वेनाप्रामाण्ये दृष्टान्तत्वेनोदाहृतम् । मैवम् । उद्देश्यफलविरोधित्वेन संशयविधायकत्वाख्याया प्रामाण्य एव अप्रामाण्यमभिलषितम् प्राग्वंशाख्यशालायां धूमजनितदुःखप्रहाणाय 'दिक्ष्वतीकाशान् करोती'ति वाक्यविहितातीकाशाख्यच्छिद्रस्तुतिपरत्वं तात्कालिकफलप्रेप्सुत्वात्पुरुषाणामिति न स्वर्गसंशयतात्पर्यमिति वक्तव्यं तद्वदत्रापि भगवत्प्रीतिसाध्यपुरुषार्थविरोधिनि दूषणे न तात्पर्यमित्येतावता दृष्टान्तत्वम् ।

**प०— को हीति** । तत्को हि वेद न कोऽपि । तदिति किमित्यत आह **यदीति** । अमुष्मिन्लोके परलोके स्वर्गशब्दितं सुखं यद्यस्ति यदि वा न इति को हि वेद इति संशयं कुर्वद्वाक्यं यथा न प्रमाणमित्यर्थः । अत एव पूवतन्त्रेऽर्थवादाधिकरणसूत्रे 'शास्त्रदृष्टविरोधात्'इत्यत्र को हीति वाक्यमज्ञानसंशयादिकुर्वदप्रमाणमित्युक्तं पूर्वपक्षे । 'फलं मुक्तिर्हि वाक्यत' इत्येतद्योजयति **प्रकृते चेति** ॥ **श्रुत्यादीति** । 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते'इत्यादिश्रुत्यादीत्यर्थः ।

**या०— को हि तद्वेदेति** । यद्यपीदं वाक्यं प्राग्वंशाख्यपत्नीशालायां धूमजनितदुःखप्रहाणाय दिक्ष्वतीकाशान् करोति'इति वाक्यविहितातीकाशाख्यच्छिद्राणामावश्यकत्वाय तत्स्तुतिपरमेव तात्कालिकफलप्रेप्सुत्वात्पुरुषाणां न स्वर्गसंशयपरमतः प्रमाणमेव । न ह्यपौरुषेयतयाऽनाशङ्कितदोषे वेदेऽप्रामाण्यं संभावयितुमपि शक्यम् । तथाऽप्युद्दिष्टफलविरोधित्वादापाततः प्रतीयमाने स्वर्गसंशयरूपेऽर्थे न प्रमाणमित्यभिप्रेत्येदमुक्तमिति ध्येयम् । अत एवाह **संशयं कुर्वत् इति** ॥ आपाततः संशयप्रतिपादकमित्यर्थः ॥

**श्री०— पुरुषार्थविरोधिन इति** ॥ पापापादकत्वादिति भावः ॥ **सुगन्धादीति** । तन्मात्रेत्यर्थः । पुण्यरूपपुरुषार्थानुकूलत्वादित्यर्थः ।

**सु०— ननु याथार्थ्यं प्रामाण्यं न फलवत्त्वम् । सत्यम् । तस्यैव याथार्थ्यस्य विषयविशे(षा)षेऽवधारणोपायत्वेन फलस्यानुसरणात् । फलाविरोधिनि विषये वाक्यानां याथार्थ्यस्यनिश्चितत्वात् । वक्ष्य(ति)ते चैतत्प्रयोजनाधिकरणे ।**

**नन्वस्तु पौरुषेयाणां वाक्यानामियं व्यवस्था । पुरुषो हि परप्रयोजनेन प्रयुक्तो वाक्यमुच्चारयंस्तदीयहिताहितप्राप्तिपरिहारानुगुणार्थमेव वदेत्; तद्विरुद्धं तु वदन्ननवधेयवचनः स्यात् । अपौरुषेयं तु स्वभावादेवार्थं प्रतिपादयति प्रत्यक्षादिवदेव । तत्र बाधकप्रत्ययादेव विषयप्रच्यावनं युक्तम् न प्रयोजनवैगुण्येनेति ॥ मैवम् । प्रयोजनानुद्देशिनोऽनुपादेयत्वप्रसङ्गात् । यथा पुरुषाभावेऽप्यर्थं प्रतिपादयति तथा प्रयोजनोद्देशोऽपि कथं न स्यात् ।**

**किञ्च न मोक्षोद्देशेन वेदप्रवृत्तिरानुमानिकी किन्तु स्वयमेव वेदेनोच्यते । तथा चाग्निना सिञ्चेदितिवद्योग्यताविरहादप्रामाण्यमपरिहार्यम् ।**

**सिद्धान्तविशेषं तूत्तरत्र वक्ष्यामः ।**

**वा०**— ननु विषयविशेषे याथार्थ्यावधारणोपायत्वं फलस्य कुतः । तथात्वे फलविधुराणां प्रत्यक्षादीनां याथार्थ्याभावापत्तेः । 'फलवत्त्वं न चास्माभिः प्रामाण्यं हि विवक्षितम् । तृणादिदर्शने किञ्च फलवत्त्वं निगद्यते' इति भाष्यवचनविरोधापत्तेश्चेत्यतो वाक्यानां फलाविरोध्यर्थे नैव याथार्थ्य-निश्चयान्नानुपपत्तिरित्याह **फलेति** ॥ ननु वाक्य एवायमपि निर्बन्धः कुत इत्यतः सङ्गतिग्रहणसापेक्षस्यैव वाक्यस्य बोधकत्वात्पदानां चेष्टसाधन एव गृहीतसङ्गतिकत्वाद्युक्तः परार्थवाक्य एवायं निर्बन्ध इत्याशयेन फलवत्त्वस्य वाक्यप्रामाण्यव्यापकतायाः स्पष्टं भाष्यकारेणैव 'याथार्थ्यमेव मानत्वमपि वाक्यं प्रयोजकं मानत्वमेति'इत्यादिना व्युत्पादनान्नानुपपत्तिरित्याह **वक्ष्यते चेति** ॥ ननु वाक्यस्य स्वयमचेतनस्य पुरुषाभावे प्रयोजनोद्देशः कथमुपपद्यत इत्यतोऽर्थप्रतिपादनस्य पुरुषव्यापारत्वादर्थप्रतिपत्तिकरणस्य वाक्यस्य पुरुषा-भावेऽपि प्रतिपादकत्ववत्प्रयोजनोद्देशोऽपि स्यादेवेति प्रतिबन्द्या तावत्समाधत्ते **यथेति** ॥ ननु प्रतिपत्ति-करणे वाक्ये प्रतिपादकत्वमुपचारेणैवोच्यते प्रयोजनोद्देशस्याप्यौपचारिकत्वे प्रकृतप्रयोजनासिद्धिरित्यतः श्रुतिसिद्धे प्रयोजनोद्देशे काऽनुपपत्तिरित्याशयेनाह **किञ्चेति** ।

---

ननु तथाऽप्यचेतने प्रयोजनोद्देशः कथमिति सुहृद्भावेन पृच्छन्तं प्रति 'द्रष्टारो वेदवाचो हि सन्ति वाच्यानि चाञ्जसा । नित्यो द्रष्टा च वाच्यश्च भगवानेव च स्वयम्'इत्यादिना द्रष्टृपुरुषाण-वक्ष्यमाणात्तत्प्रयोजनोद्देशोऽपि नानुपपन्न इत्याशयेनाह **सिद्धान्तविशेषं त्विति** ॥ यद्वा । ननु तथाऽपि प्रतिपादकत्वप्रतिबन्दी तावद्भ्रमः । किञ्च श्रुतिसिद्धोऽपि प्रयोजनोद्देशः कथमचेतने व्युत्पादनीय इति सुहृद्भावेन पृच्छन्तं प्रत्याह **सिद्धान्तविशेषं त्विति** । नोत्पादकमेव कारकम् । तथा सत्यस्ति गगनमित्यादौ गगनादीनामकारकत्वप्रसङ्गात् । किन्तु धात्वर्थाश्रयः कर्ता तद्विषयः कर्मेत्यादि,आकाङ्क्षा-नाकाङ्क्षे एव च तदन्वितत्वानन्वितत्वयोः प्रयोजके न तु कार्यत्वाकार्यत्वे । अत एव कश्चिद्धातुः कर्माद्यन्वितः कश्चिन्नेति युज्यत इति सिद्धान्तविशेषं 'नित्यवागपि, वाच्यवक्तृविहीना स्यात्'इत्यनुव्या-ख्यानाशयत्वेन वक्ष्याम इत्यर्थः । एवं चापौरुषेयवेदेऽपि वक्तृसद्भावेन प्रतिपादकत्वप्रयोजनोद्देशादि युज्यत इत्येव परिहारः । अत एव 'नित्यवागपि, वाच्यवक्तृविहीना स्यादि'त्यापादनं 'द्रष्टारोही'त्यादिना तदुपपादनं चोत्तरत्र युज्यते । अन्यथा तदनुपपत्तेः । परं प्रति तु प्रयोजनोद्देशतदनङ्गीकारयोः श्रुत्यादि-रूपसाधकानुपादेयत्वप्रसङ्गरूपबाधकोक्तिः प्रतिबन्दीमात्रेणोपपत्तौ किमधिकेनेति नैतत्परिहारोक्तिरिति भावः ।

स० — **तस्यैवेति** । एकस्यैव वाक्यस्यानेकार्थप्रसक्तौ कस्मिन्नर्थे याथार्थ्यमिति सन्देहे यस्मिन्नर्थे प्रतिपादिते वाक्यस्य सफलत्वं तस्मिन्नर्थे याथार्थ्यमिति नियमस्यैवाभावात् फलानुसरणं व्यर्थमित्यत आह **फलाविरोधिनीति** ॥ ननु फलाविरोधिन्येव विषये वाक्यानां याथार्थ्यस्य निश्चितत्वादिति वदतां कोऽभिप्रायः? किं फलवत्त्वमपि याथार्थ्यं, उत फलवत्त्वं याथार्थ्यव्यापकम् । नाद्यः विषयसत्त्वमात्रेण याथार्थ्योपपत्तौ फलवत्त्वस्याप्रयोजकत्वात्, न द्वितीयः तृणादिदर्शनस्य फलवत्त्वाभावेऽपि याथार्थ्यस्याङ्गीकृतत्वादित्यत आह **वक्ष्यति चैतदिति**। 'नात्र फलवत्त्वं प्रामाण्यं अपि तु तत् व्यापकम् । न च तृणादिदर्शने व्यभिचार इति वाच्यं, वाक्यप्रामाण्यस्यैव व्याप्यत्वाङ्गीकारात्। न च व्यभिचारतादवस्थ्यमत्रापीति वाच्यं, गृहीतसङ्गतिकानामेव पदानां बोधकत्वेन सङ्गतेश्चेष्टसाधन एव गृहीतत्वात् याथार्थ्यस्य विषयविशेषव्यवस्थापकत्वाच्च । यत्र याथार्थ्यं तत्र फलवत्त्वमितिव्याप्तेर्व्यभिचाराभावात् । उक्तं व्यापकत्वं याथार्थ्यस्य' इत्येतत्प्रमेयं प्रयोजनाधिकरणे वक्ष्यत्याचार्य इत्यर्थः । ननु तथापि ज्ञातज्ञापकवाक्ये व्यभिचार इति चेन्न जिज्ञासितयोग्यसन्निहितार्थप्रतिपादकस्यैव वाक्यत्वेन विवक्षितत्वेन ज्ञातज्ञापके वाक्ययाथार्थ्यलक्षणविशिष्टव्याप्यस्यैवाभावेन नानुपपत्तिरिति भावः ॥ यद्वा नन्वस्तु फलाविरोधिविषयप्रतिपादकत्वं वाक्यानां तथाप्यवान्तरफलभूतस्वर्गाविरोधिनि धर्मादौ तात्पर्यमस्तीत्यत आह **वक्ष्यते चैतत्प्रयोजनाधिकरणे इति** । 'मानत्वमेति तत्रापि यत्संपूर्णप्रयोजनम्' इति वक्ष्यत इत्यर्थः । संपूर्णप्रयोजनं महत्प्रयोजनमित्यर्थः । तथा च तदविरोधिन्येव वाक्यस्य तात्पर्यं वाच्यमिति सिद्धमिति भावः

ननु प्रयोजनोद्देशस्येच्छाविशेषत्वात् तस्य च वक्तृपुरुषद्वारैव वक्तव्यत्वात् वेदस्यापौरुषेयत्वात् कथं प्रयोजनोद्देशित्वमित्यत आह **यथा पुरुषाभावेपीत्यादिना** । श्रुतस्यैव शब्दस्य बोधकत्वेन, श्रवणस्य च उच्चारणाभावे असंभवात्, असंभवित्वेन चोच्चारकाभावात् अर्थबोधकत्वं न स्यात् । तत्र यः प्रकारः स ममापि सम इति भावः ।

नन्वेतावता प्रयोजनानुद्देशिनो अनुपादेयत्वेऽपि नाप्रामाण्यमित्याशङ्कयायोग्यत्वेनाप्रामाण्यमप्युपपादयन् अयोग्यतायाः प्रमाणबाधरूपत्वेन प्रयोजनोद्देशेन प्रवृत्तिग्रहस्य प्रत्यक्षस्याभावेन 'विमतं वेदवाक्यं प्रयोजनोद्देशेन प्रवृत्तिमत् वाक्यत्वात् संमतवत्'इत्यनुमानस्य चाप्रयोजकत्वशङ्कायां प्राबल्याभावेन बाधकत्वासंभवात् कथं अयोग्यत्वमित्याशङ्क्य 'तेषां दुःखप्रहाणाय' इति वेदवाक्येनैव प्रयोजनोद्देशेनप्रवृत्तेर्गृहीतत्वात् तस्य च प्राबल्येन तद्विरोधेनायोग्यत्वात् अप्रामाण्यमपरिहार्यमित्यभिप्रेत्याह **किंचेति** ।

नन्वस्तु प्रतिबन्द्या प्रतिवादिमुखमुद्रणम् अपौरुषेयस्य वेदस्य कथं प्रयोजनोद्देशेन प्रवृत्तिरित्यत आह **सिद्धान्तविशेषं तूत्तरत्र वक्ष्याम इति** । अपौरुषेयवेदेपि द्रष्टृपुरुषाभिप्रायप्रवेशोऽस्तीति ।

'द्रष्टारो वेदवाचो हि सन्ति वाच्यानि चाञ्जसा' इति ज्ञानपादे वक्ष्याम इत्यर्थः ॥ अपरे तु अभ्युपेत्य चेदमुदितं; वस्तुतस्तु वेदेपि द्रष्टृपुरुषाणां वक्ष्यमाणत्वेन प्रयोजनोद्देशादिकं उपपद्यत एवेत्याशयेनाह **सिद्धान्तविशेषमिति** । द्रष्टृपुरुषसद्भावमित्यर्थः । उत्तरत्र, 'द्रष्टार'इत्यादिक एव ।

प० — **विषयविशेषेति** । एकस्माद्वाक्यादर्थद्वये प्रतीते कुत्रार्थे तात्पर्यमिति जिज्ञासायां फलवत्त्वादस्मिन्नेवार्थे तात्पर्यमित्येवं विषयविशेषावधारणोपायत्वेनेत्यर्थः ॥ **वक्ष्यत इति** । 'मोक्षार्थाः श्रुतयो यस्मात्स च तस्य प्रसादत'इत्यादिना 'यत्संपूर्णप्रयोजनम् ।'इत्यन्तग्रन्थेनेति भावः । अनवधेयवचनोऽश्रद्धेयवचन इत्यर्थः ॥ **अनुपादेयत्वेति** । एतेन न मानत्वमित्यस्यानुपादेयत्वमित्यर्थ उक्तो भवति ॥ ननु प्रयोजनोद्देशस्येदं मे भूयादित्येवंरूपेच्छाविशेषत्वात्कथमपौरुषेये वेदे तदुद्देशितेत्यत आह **यथेति** । यथा स्वतन्त्रपुरुषाभावे शब्दगतया सहजशक्त्याऽर्थप्रतिपादनं तथा तत्प्रमितिशेषत्वरूपं यत्परमतात्पर्यं तद्विषयत्वमेव तदुद्देशित्वं नेच्छाघटितमिति भावः ॥ मानत्वमित्यस्य प्रामाण्यमित्येवार्थमुपेत्याह **किंचेति** ॥ **आनुमानिकीति** । वेदः प्रयोजनोद्देशिप्रवृत्तिमानुपादेयवाक्यत्वात्संमतवदित्यनुमानसिद्धेत्यर्थः ॥ 'फलं मुक्तिर्हि वाक्यत'इत्यस्यार्थमाह **किं तु स्वयमेव वेदेनोच्यत इति** । तेषां दुःखप्रहाणायेत्यादिवेदेनेत्यर्थः ॥ तात्पर्यमाह **तथा चेति** । तद्विरोध इत्यापादकं योज्यम् ॥ ननु तर्हि स्वर्गादिप्रयोजनेनैव प्रयोजनवत्त्वमस्त्वित्यत आह **सिद्धान्तेति** । यद्वा याथार्थ्यस्यैव मानत्वोपगमात्कथमेवमित्यत आह **सिद्धान्तेति** ॥ **उत्तरत्रेति** । प्रयोजनाधिकरणे 'याथार्थ्यमेव मानत्वमपि वाक्यं प्रयोजकम् । मानत्वमेति(व) तत्रापि यत्संपूर्णप्रयोजनम् ॥' इत्यत्र पदानामिष्टसाधन एव गृहीतसङ्गतिकत्वादित्यादिनेति भावः ।

या० —**वक्ष्यते चैतत्प्रयोजनाधिकरण इति** । पदानामिष्टसाधन एव गृहीतसङ्गतिकत्वात्सङ्गतिग्रहणसापेक्षस्यैव वाक्यस्य बोधकत्वात् । इष्टरूपफलाभावे च तदयोगादित्युपपादकमन्यदपि तत्र वक्ष्यत इत्यर्थः ॥ यद्वा नन्वस्तु फलाविरोधिविषयप्रतिपादकत्वं वाक्यानां तथाऽप्यवान्तरफलभूतस्वर्गाविरोधिनि धर्मादौ तात्पर्यमस्त्वित्यत आह **वक्ष्यते चैतत्प्रयोजनाधिकरण इति** । 'अपि वाक्यं प्रयोजकम् । मानत्वमेति तत्रापि यत्संपूर्णप्रयोजनम्'इति वक्ष्यत इत्यर्थः । संपूर्णप्रयोजनं महाप्रयोजनमित्यर्थः । तथा च तदविरोधिन्येव वाक्यस्य महातात्पर्यं वाच्यमिति सिद्धमिति भावः ।

'जनितोत विष्णोः'इत्यादिवाक्यस्योद्दिष्टप्रयोजनविरोध्यर्थकत्वेनाप्रामाण्यमापादितम् । तत्र प्रयोजनोद्देशव्यापकपौरुषेयत्वस्य वेदेऽभावात्तद्व्याप्यप्रयोजनोद्देशस्यापि तत्राभावे उक्तापादकासिद्धिरित्यभिप्रेत्याशङ्कते **नन्वस्तु पौरुषेयाणामिति** ॥ ननु वेदो न प्रयोजनोद्देशवान् अपौरुषेयवाक्यत्वादिति वेदे प्रयोजनोद्देशाभावसाधनं न युक्तम् । वेदः प्रयोजनोद्देशवान् अर्थप्रतिपादकत्वाल्लौकिकवाक्यवदिति

प्रत्यनुमानपराहतत्वादित्याशङ्कायामाह **अपौरुषेयं त्विति** ॥ तथा च प्रत्यक्षादौ व्यभिचारात्स्वभावे-नान्यथासिद्धेश्च नोक्तानुमानपराहतिशङ्कावकाश इति भावः ॥ नन्वेवं वेदस्य स्वभावादेवार्थप्रत्यायकत्वे को हि तद्वेदेत्यादिवाक्यानामुद्दिष्टप्रयोजनवैगुण्येन विषयप्रच्यावनमनुपपन्नं स्यादित्याशङ्कायामिष्टापत्ति-मुत्तरमाह **बाधकप्रत्ययादेवेति** ॥ **अनुपादेयत्वप्रसङ्गादिति** । तथा च वेदः प्रयोजनोद्देशवान् उपादेयवाक्यत्वादित्यनुमानमत्राभिप्रेतम् । तत्र चानुकूलतर्कोक्तिरियमिति ज्ञातव्यम् । ततश्च नोक्तापाद-कासिद्धिरिति भावः । ननूक्तापौरुषेयत्वानुमानेन सत्प्रतिपक्षताऽस्येत्यत आह **यथा पुरुषाभाव इति** । यथा वेदस्यार्थप्रतिपादकत्वं स्वाभाविकं तथा प्रयोजनोद्देशोऽपि स्वाभाविक एवास्तु । वाक्य-प्रयोजनोद्देशस्य तत्साधकार्थपरत्वरूपत्वात् । तस्य च स्वाभाविकत्वे बाधकाभावात् । तथा चापौरुषेय-त्वानुमानमप्रयोजकमन्यथासिद्धं चेति भावः ।

नन्वस्तूक्तानुमानेन वेदे प्रयोजनोद्देशसिद्धिः । तथाऽपि न मोक्षरूपप्रयोजनोद्देश-सिद्धिः । तत्साधकाभावात् । तथा चापादकासिद्धिरेव । न च वेदो मोक्षोद्देशेन प्रवृत्तिमान् तदितरा-निच्छूपादेयत्वादिति सामान्यव्याप्तिमूलकमनुमानमेव तत्साधकं भविष्यतीति वाच्यम् । अस्यापि 'जनि-तोत विष्णोः'इत्यादिश्रुत्यर्थविरुद्धार्थविषयकत्वेन बलवत्या तया बाधितत्वादित्यस्वरसादाह **किञ्चेति** ॥ **स्वयमेव वेदेनेति** । 'तेषां दुःखप्रहाणाय'इत्यादिरूपेणेत्यर्थः । अत्र स्वयमेव न तु व्याख्यातृप्रयत्न-मनपेक्ष्येत्यनेनास्य निरवकाशतासूचनेन प्राबल्यमुपपादितमिति ज्ञातव्यम् ॥ **अपरिहार्यमिति** । मोक्षो-द्देशेन वेदप्रवृत्तेरानुमानिकत्वे कथञ्चिज्जनितोत विष्णोरित्यादिश्रुतेः प्रबलतया बाधकत्वेनापादका-सिद्ध्याऽप्रामाण्यं परिहर्तुं शक्यम् । न श्रौतत्वे । तस्याः श्रुतेर्निरवकाशतया बलवत्त्वेन तद्बाधिताया दोष-श्रुतेर्योग्यताविरहेणाप्रामाण्यं न परिहर्तुं शक्यमिति भावः ।

अभ्युपेत्य चेदमुदितम् । वस्तुतस्तु वेदेऽपि द्रष्टृपुरुषाणां वक्ष्यमाणत्वेन प्रयोजनोद्देशादिकमुपप-द्यत एवेत्याशयेनाह **सिद्धान्तविशेषमिति** । अपौरुषेयेऽपि द्रष्टृपुरुषसद्भावमित्यर्थः । उत्तरत्र 'द्रष्टारो वेदवाचो हि सन्ति वाच्यानि चाञ्जसा'इति ज्ञानपादे ।

श्री०— **किञ्च न मोक्षोद्देशेनेति** । मोक्षोद्देशेन वेदप्रवृत्तेः; 'वेदो मोक्षोद्देशेन प्रवृत्तिमान् तदितरानिच्छूपादेयत्वात्'इत्यनुमानसिद्धत्वं यद्युच्यते, तर्ह्यनुमानापेक्षया श्रुतेः प्रबलत्वेन, 'जनितोत विष्णो'रित्यादिश्रुतिविरोधेन तत्प्रीतिद्वारा मोक्षोद्देशित्वं न स्यात् । न ह्येवमुच्यते । किं नाम,'यस्य प्रसादात्' 'तेषां दुःखप्रहाणाय'इति श्रुत्या स्वयमेवोच्यत इत्यर्थः ॥ **तथा चेति** । मोक्षरूपप्रयो-जनोद्देशाभाव इत्यर्थः ॥ **योग्यतेति** । 'तेषां दुःखप्रहाणाय', 'यस्य प्रसादात्'इत्यादिश्रुतीनां बाधितार्थकत्वादप्रामाण्यमित्यर्थः ।

( इति असंभवपरिहारः । )

( अथ अव्याप्त्यतिव्याप्त्यसंभवाभावोपपादनम् । )

**सु०— ननु मा भूच्छ्रुतिबलेनातिव्याप्तिरसंभवश्च लक्षणस्य; शैवादिपुराणैस्तु भविष्यति, तेष्वन्येषां जगत्कारणत्वस्य विष्णोरुपसर्जनत्वस्य चाभिधानात् । न च तेषामपि श्रुतिवदन्यार्थत्वम्, तात्पर्यलिङ्गविरोधात् । इति चेन्न; तेषां श्रुतिविरुद्धार्थे प्रामाण्यानुपपत्तेः । यथाऽऽह जैमिनिः 'विरोधे त्वनपेक्षं स्यात्' इति । पौरुषेयतया शङ्कितदोषस्यापौरुषेयवाक्यविरोधेऽप्रामाण्यस्य न्याय्यत्वात् । रुद्रादीनां जगज्जन्मादिकारणत्वं विष्णोरुपसर्जनत्वं चानेकश्रुतिविरुद्धम् । ताश्च तत्र तत्रोदाहरिष्यामः ॥** इत्याशयवानाह न पुराणेति ।

**अनु०—** न पुराणादिमानत्वं विरुद्धार्थे श्रुतेर्भवेत् ॥

**वा०**—पुराणादीनां विशिष्यनिराकरणबीजतया पूर्वन्यायवैषम्यं दर्शयति **न चेति** ॥ माऽस्तु पूर्वपरिहारसाम्यं तथाऽप्यप्रामाण्येन तद्विरोधस्याकिञ्चित्करत्वमेव परिहार इत्याह **तेषामिति** ॥ **विरोधे त्विति** । श्रुतिविरोधे स्मृतिप्रामाण्यमनपेक्ष्यमनादरणीयं स्याद्धि यस्मादसति विरोधे मूलश्रुत्यनुमानमुक्तं न तु सतीति सूत्रार्थः । यथा सर्ववेष्टनस्मृतेः स्पर्शश्रुतिविरोधेनाप्रामाण्यमिति ॥ न केवलं जैमिनिसूत्रं प्रत्यक्षश्रुतिविरोधे श्रुत्यनुमानानुपपत्तिरूपतत्सूचितन्यायबलादेवैतत् युक्तं च तथेत्याह **पौरुषेयतयेति** ।

**स०— ननु मा भूदिति** । शैवादिपुराणे यदा विष्णोरिवान्यस्यापि जगत्कारणप्रतिपादनं तदाऽतिव्याप्तिरिति भावः ॥ असंभवं प्रतिपादयति **तेष्वन्येषामिति** ॥ **विरोधे त्वनपेक्षं स्यादिति** । ज्योतिष्टोमे सदोनामकमण्टपमध्ये काचिदौदुम्बरी शाखा निखन्यते । तस्याश्च वाससा वेष्टनं स्मर्यते 'औदुम्बरी सर्वा वेष्टयितव्या' इति । इयं स्मृतिः प्रमाणं न वेति संशये इयं स्मृतिः प्रमाणं अष्टकादिस्मृतिष्विव मूलभूतवेदानुमापकत्वात् इति प्राप्ते 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इत्यनेन प्रत्यक्षवेदवचनेन स्पर्शविधायकेन विरुद्धत्वात्कालात्ययापदिष्टं मूलवेदानुमानम् । न च सर्ववेष्टने साक्षात्स्पर्शः संभवति । परम्परास्पर्शनस्य च भूमिस्पर्शनेनापि सिद्धेः स्पर्शविधिवैयर्थ्यप्रसङ्गः । स्पर्शनार्थं द्वित्राङ्गुलपरित्यागेन वेष्टनेऽपि सर्वशब्दसङ्कोचापातः । अतः सर्ववेष्टनस्मरणं प्रत्यक्षस्पर्शनश्रुतिविरोधेन निर्मूलं विप्रलम्भकवाक्यवदप्रमाणमेवेति सिद्धान्तः । ततश्चायं सूत्रार्थः, स्मरणं प्रत्यक्षश्रुतिविरोधेऽनपेक्षमनादरणीयं स्यात् असति प्रत्यक्षश्रुतिविरोधे मूलश्रुत्यनुमापकं अष्टकादिस्मरणमिति ॥ अत्रैव मतान्तरम् । स्पर्शसर्ववेष्टनविषययोः प्रत्यक्षानुमितश्रुत्योः परस्परविरोधादुभयोरप्यप्रामाण्यमिति प्राप्ते अनुमानस्य कालात्ययापदिष्टत्वेन विरुद्धश्रुत्यभावेन स्पर्शनश्रुतिः स्वार्थे प्रमाणम् । अथ पुरुषान्तरप्रत्यक्षो वेदः सर्ववेष्टनस्मृतेर्मूलमित्युच्यते । मैवम् । परप्रत्यक्षात्स्वप्रत्यक्षस्य विस्रम्भणीयतया परप्रत्यक्षमनादृत्यात्मीयप्रत्यक्षेणैव व्यवहारः क्रियते, अतोऽत्र स्पर्श एवानुष्ठीयते न तु सर्ववेष्टनमिति फलतोऽप्रामाण्यं श्रुतिविरुद्धानां स्मृतीनामिति । एतन्मते सूत्रार्थस्तु

श्रुतिस्मृत्योर्विरोधे यत्प्रमाणान्तरानपेक्षश्रुतिवाक्यं तदेव ग्राह्यम् । असति ह्यात्मप्रत्यये परप्रत्ययानुमान-क्लेशाश्रयणमिति द्रष्टव्यम् । स्मरणं प्रत्यक्षश्रुतिविरोधे अनपेक्षमनादरणीयं स्यात् । असति श्रुति विरोधे मूलश्रुत्यनुमापकमिति । तथाहि श्रुतानां प्राामाण्यसिद्ध्यर्थं वेदानुमापकत्वं वक्तव्यं प्रत्यक्षश्रुत्याऽन्यथाप्रतीतौ च तद्विपरीतानुमानं न संभवति । न ह्यग्नेः प्रत्यक्षेणान्यथाप्रतिपन्नस्यानौष्ण्यं अनुमातुं शक्यते । न च वचनद्वयप्रामाण्यविकल्पः; तस्याष्टदोषदुष्टत्वात् । बृहद्रथन्तरं वा पृष्ठं भवति इत्यैच्छिक-विकल्पः । यदा बृहदनुतिष्ठासितं तदा रथन्तरश्रुतेरननुष्ठीयमानत्वलक्षणाप्रामाण्यं प्रतीतप्रामाण्यत्यागश्च, यदा रथन्तरमनुष्ठातुं युक्तं तदा स्वीकृतप्रामाण्यत्यागः परित्यक्तप्रामाण्यस्वीकारः । एवं बृहच्छ्रुतेरपि । इत्यष्टदोषदुष्टो विकल्पो गत्यभावे स्वीक्रियते । न चेहागतिरस्ति नापि सबलत्वमनयोरिति स्मृत्यप्रामाण्यमिति । यथा औदुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुतिविरुद्धा औदुम्बरी वा सर्वा वेष्टयितव्या इत्यादिः स्मृतयोऽप्रमाणं स्पर्शवेष्टनयोर्विरुद्धत्वात् परम्परास्पर्शनस्य भूमिस्पर्शनेनापि सिद्धेः स्पर्शनविधिवैयर्थ्यप्रसङ्गात् द्वित्राङ्गुलिपरित्यागेन वेष्टनेऽपि सर्वशब्दसङ्कोचः स्यादिति ।

प० —**श्रुतिबलेनातिव्याप्तिरसंभवश्चेति** । लक्षणस्य 'हिरण्यगर्भः समवर्तताग्रे'इत्यादिश्रुतिभिः ब्रह्मादिष्वतिव्याप्तिः । 'जनितोत विष्णोः'इत्यादिश्रुत्या विष्णावसंभवश्चेत्यर्थः ॥ **तात्पर्यलिङ्गविरोधादिति** । शिवादिकारणत्व एव यान्युपक्रमादीनि तात्पर्यलिङ्गानि तद्विरोधादित्यर्थः ॥ **यथाऽऽहेति** । आद्यस्य तृतीयपादीयद्वितीयाधिकरणे 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्'इतिसूत्रेण स्मृतीनां श्रुतिविरोधे सति तत्स्मृतिजातम् अनपेक्षम् अनादर्तव्यम् अप्रमाणमिति यावत् ॥ नन्वेवं स्मृतीनां मूलभूत-श्रुत्यनुमापकत्वेन प्रामाण्योक्तिपरेण 'धर्मस्य शब्दमूलत्वात्'इति पूर्वाधिकरणेन विरोध इत्यत्र उक्तम् 'असति ह्यनुमानम्'इति । प्रत्यक्षश्रुतिविरोधेऽसति स्मृत्या मूलश्रुत्यनुमानमुक्तमिति सूत्रार्थः । तन्मात्रस्य प्रकृतोपयोगाद्विरोधे त्वनपेक्षं स्यादित्येवोक्तम् ॥ **तत्रतत्रेति** । आनन्दमयनये तदनन्यत्वादिनये साङ्ख्यनये पत्युर्नयादावित्यर्थः ॥

या० —**विरोधे त्वनपेक्षं स्यादिति** । ज्योतिष्टोमे सदोनाममण्टपस्य मध्ये काचिदौदुम्बरीशाखा निखन्यते । तस्याश्च वाससा वेष्टनं स्मर्यते । 'औदुम्बरी सर्वा वेष्टयितव्या'इति । इयं स्मृतिः प्रमाणमष्टकादिस्मृतिवन्मूलभूतवेदानुमापकत्वादिति प्राप्ते औदुम्बरीं स्पृष्ट्वोद्गायेदित्यनेन प्रत्यक्षवेदवचनेन स्पर्शविधायकेन विरुद्धत्वेन कालात्ययापदिष्टं मूलवेदानुमानम् । न च सर्ववेष्टने साक्षात्स्पर्शः संभवति । परम्परास्पर्शनस्य च भूमिस्पर्शनेनापि सिद्धेः स्पर्शविधिवैयर्थ्यप्रसङ्गः । स्पर्शनार्थं द्वित्राङ्गुलिपरित्यागेन वेष्टने सर्वशब्दसङ्कोचापातः । अतः सर्ववेष्टनस्मरणं प्रत्यक्षस्पर्शनश्रुतिविरोधेन निर्मूलं विप्रलम्भकवाक्यवदप्रमाणमेवेति सिद्धान्तः । ततश्चायं सूत्रार्थः । स्मरणं प्रत्यक्षश्रुतिविरोधेऽनपेक्षम् अनादरणीयं स्यात् ।

असति प्रत्यक्षश्रुतिविरोधे मूलश्रुत्यनुमापकमष्टकादिस्मरणमिति । अत्रैव मतान्तरम् । स्पर्शसर्ववेष्टनविषययोः प्रत्यक्षानुमितश्रुत्योः परस्परविरोधादुभयोरप्यप्रामाण्यमिति प्राप्तेऽनुमानस्य कालात्ययापदिष्टत्वेन स्पर्शनश्रुतिः स्वार्थे प्रमाणम् । अथ पुरुषान्तरप्रत्यक्षो वेदः सर्ववेष्टनस्मृतेर्मूलमित्युच्येत । मैवम् । परप्रत्यक्षात्स्वप्रत्यक्षस्य विस्रम्भणीयतया परप्रत्यक्षमनादृत्यात्मीयप्रत्यक्षेणैव व्यवहारः क्रियते । अतोऽत्र स्पर्श एवानुष्ठीयते न तु सर्ववेष्टनमिति फलतोऽप्रामाण्यं श्रुतिविरुद्धानां स्मृतीनामिति । एतन्मते सूत्रार्थस्तु श्रुतिस्मृत्योर्विरोधे यत्प्रमाणान्तरानपेक्षं श्रुतिवाक्यं तदेव ग्राह्यम् । असति ह्यात्मप्रत्यये परप्रत्ययानुमानक्लेशाश्रयणमिति द्रष्टव्यम् ।

च० —यथाऽऽह **जैमिनिरिति**। प्रमाणलक्षणे द्वितीयचरणे 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि'त्यत्र, ज्योतिष्टोमे सदोनामकमण्डपमध्ये काचिदौदुम्बरीशाखा निखन्यते तस्याश्च वाससा वेष्टनं स्मर्यते । 'औदुम्बरी सर्वा वेष्टयितव्या' इति । एतत्स्मृतिधर्मिकप्रामाण्याप्रामाण्यकोटिकसन्देहे अष्टकादिस्मृतिवन्मूलीभूतश्रुत्यनुमापकतयेयं स्मृतिः प्रमाणमिति पूर्वपक्षे प्राप्ते । औदुम्बरीं स्पृष्ट्वोद्गायेदिति स्पर्शविधायकप्रत्यक्षश्रुतिविरोधेन मूलीभूतश्रुत्यनुमानं बाधितमेव; सर्ववेष्टने साक्षात्स्पर्शायोगात् , भूस्पर्शेनापि पारम्पर्येण स्पर्शसिध्या विधिनैरर्थ्यापातात्, स्पर्शनार्थं द्वित्राङ्गुलपरित्यागेन वेष्टने च सर्वशब्दस्य सङ्कोचप्रसङ्गात् । अतः सर्ववेष्टनस्मृतिः स्पर्शनप्रतिपादकप्रत्यक्षश्रुतिविरुद्धा मूलराहित्येन विप्रलम्भकवाक्यवदप्रमाणमिति सिद्धान्तितम् ॥ सूत्रार्थस्तु स्मृतीनां श्रुतिविरोधे सति तत्स्मृतिजातमनपेक्षमनादर्तव्यमप्रमाणमिति यावत् । **असति ह्यनुमानमिति** । प्रत्यक्षश्रुतिविरोधे असति स्मृत्या श्रुत्यनुमानं युक्तमिति ।

सु० — **ननु शैवपुराणादीन्यपि श्रुतिमूलानि तत्कथं श्रुतिविरोधेनाप्रमाणानीत्यत आह** दर्शनान्तरेति ।

**अनु०** — दर्शनान्तरमूलत्वात्

**पुराणादीनां न श्रुतिमूलत्वमिति शेषः । तथा चोक्तं मोक्षधर्मे 'शैवान्पाशुपताचक्रे' इति ।**

प० — **शैवानिति** । व्यक्तमेतद्दशमे भारततात्पर्यनिर्णये ।

सु० — **तथाऽपि पाशुपतादीनां श्रुतिमूलत्वे पुराणादीना(मेव)मपि तत्स्यादित्यत आह** मोहार्थमिति ।

**अनु०** — मोहार्थं च

**दर्शनान्तराणि कृतानीति शेषः । तथा च विप्रलम्भमूलत्वमुक्तं भवति ।**

सु०— निर्निमित्तं प्राणिनां मोहमुत्पादयन्तः प्रत्यवायिनः प्रसज्येरन् । न च पर-व्यामोहनेन किमपि महत्प्रयोजनमस्ति यदाशया प्रत्यवायमपि न गणयेयुः । अतो नेदमुचित-मित्यत उक्तम् हरेराज्ञयेति ।

अनु०— आज्ञया हरेः ॥

ह(रेराज्ञा)र्याज्ञानुष्ठानान्न प्रत्यवायोऽस्ति किन्तु महाप्रयोजनावाप्तिश्चेति सुप्रसिद्धम् । न च हरेः प्रत्यवायः प्रयोजनापेक्षा वेश्वरत्वादिति भावः । तदुक्तम् 'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः । चकार शास्त्राणि विभुर्ऋषयस्तत्प्रचोदिताः । दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु' इति ।

वा०— 'मोहार्थं चाज्ञया' इति वाक्यस्य पुराणादिकर्तृव्यासस्य हर्याज्ञाकरणायोगाद्दर्शनान्तर-विषयकतया तद्वाक्यं योजयितुं तद्व्यावृत्त्यर्थमाह तथाऽपीति ।

स०—सुप्रसिद्धमिति ॥ हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यत इत्यादिनेति शेषः ।

प०—'तच्छास्त्रसमयेन तु' इत्यस्योत्तरश्लोकेनान्वयः ॥ इति सुप्रसिद्धमिति । 'हर्याज्ञाकरणा-देव पुण्यमेभिरवाप्यते ।' इति भारततात्पर्यनिर्णयान्तिमाध्याये ॥ तदुक्तमिति । द्वितीये गीताभाष्ये उक्तमित्यर्थः ।

या०— 'तच्छास्त्रसमयेन त्वित्यस्य चक्रुः' इत्युत्तरेणान्वयः ।

सु०—किञ्च रुद्रादीनां जगत्कारणत्वे विष्णवाद्यशेषनामवत्त्वं स्यात्, अन्यथा विष्णवा-दीनां जगत्कारणत्वाद्यभिधायिनां(दधतां) वाक्यानां विरोधपरिहारो(रायो)पायाभावेन निर्णयानुपपत्तेः । न च तेषां सर्वनामताऽस्ति, तत्र प्रमाणाभावात् । अतो न जगत्कारणत्वमपि तेषाम् । इत्याऽऽह न सर्वनामतेति ।

अनु०— न सर्वनामताऽन्येषां श्रुतावुक्ता हि कुत्रचित् ॥

ननु पद्मपुराणादौ विष्णुनामानि शिवे प्रतीयन्त इति । मैवम् । यो देवानामिति श्रुतिविरुद्धस्य पुराणादेरनादरणादित्यभिप्रायेण 'श्रुतौ' इत्युक्तम् ।

वा०— पुराणादिप्रामाण्यनिरासेन रुद्रादिजगत्कारणत्वरूपप्रमेयं निरस्य प्रकारान्तरेण तत्प्रमेयनिरासकतयोत्तरवाक्यसार्थक्यं दर्शयति किञ्चेति ।

सु० — अपि च जगत्कारणेनाज्ञानादिदोषरहितेन भवितव्यम् दोषिणोऽस्मदादिव-ज्जगत्कारणत्वानुपपत्तेः । निर्दोषत्वं च भगवतो हरेरेव नान्येषाम् । अतः स एव जगज्जन्मा-दिकर्ता न रुद्रादिः इत्याह अदोषेति ।

अनु०— अदोषवचनाच्चैव नियमेन हरेः श्रुतौ ।

दोषवचनाभावाददोष(त्व)वचनाच्चेत्यर्थः । एवशब्दो हरेरेवेति संबध्यते ।

तदुपपादयति अज्ञानमिति ।

अनु०— अज्ञानं पारतन्त्र्यं च प्रलयेऽभाव एव च ॥
अशक्तिश्चोदिताऽन्येषां सर्वेषामपि च श्रुतौ

अभाव एव, न त्वनभिव्यक्तिमात्रमित्यर्थः । अपिरभिव्याप्तौ । चशब्दो हेतौ । तस्माद्धरेरेवेति युक्तमिति ॥ श्रुतीश्च पाशुपताधिकरणादुदाहरिष्यति ।

वा० — एवशब्दस्य समुच्चयार्थकचशब्दविरोधाद्भिन्नक्रमतया प्रकृतोपयोगं दर्शयति एवेति ॥ तदिति । हरेरेवेत्येतदर्थः ।

प० — दोषवचनाभावादिति । जनितोत विष्णोरित्यस्यान्यार्थतावर्णनादिति भावः ।

सु० —एवं सौत्रस्य विष्णुलक्षणस्याव्याप्तिप्रसक्त्यभावादतिव्याप्तिमसंभवं च परिहृत्यो-पसंहरति जन्मादीति ।

अनु०— जन्माद्यस्येति तेनैतद्विष्णोरेव स्वलक्षणम् ॥

तेनोक्तप्रकारेण जन्माद्यस्येत्युक्तं जगज्जन्मादिकारणत्वं विष्णोः संभवति नान्येषाम् । अतोऽसंभवाद्यभावाद्विष्णोर्लक्षणं युक्तमिति योज्यम् ।

स० — एवं सौत्रस्य विष्णुलक्षणस्येति । नन्वव्याप्तेः परेणानाशङ्कितत्वात्परिहारो माऽस्तु तथापि सकलजगज्जन्मादिकारणत्वस्यैव लक्षणत्वात् तस्य च प्रलयकालेऽभावात् कथं नाव्याप्तिरिति चेन्न कारणत्वस्य शक्तिरूपत्वेन शक्तेश्चेश्वररूपत्वादव्याप्त्यभावादित्युक्तमिति भावः ॥

प० — अव्याप्तिप्रसक्त्यभावादिति । लक्ष्यस्यैकव्यक्तित्वादिति भावः ॥

या० — अव्याप्तिप्रसक्त्यभावादिति । लक्ष्यभेदाभावादिति भावः ॥

च० — अव्याप्तिप्रसक्त्यभावादिति । लक्ष्याभिमतव्यक्तेः स्वबोधकपदसमभिव्याहृतपदार्थ-संसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेण स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वकत्वादिति भावः । तेन लक्ष्यानन्त्यस्थलेऽपि प्रातिस्विकैकत्वसत्वेऽपि न क्षतिः ॥

( इति अव्याप्त्यतिव्याप्त्यसंभवाभावोपपादनम् । )

( इति स्वमतेन सूत्रव्याख्यानम् । )

( अथ मायावाद्युक्तैक्यस्य सूत्रकारैरेव निराकृतता )

**सु० – एवं स्वमतेन सूत्रं व्याख्याय तत्परिशुद्धये मायावादिनां मते लक्षणसूत्रारम्भ एवानुपपन्न इति वक्तुं यत्तै(परै)रभिहितं 'जगज्जन्मादिकारणत्वं न लक्ष्यब्रह्मणः स्वरूपान्तर्गत लक्षणं किन्तु तटस्थमेव । त्रैविध्यमत्र संभवति मायाविशिष्टं ब्रह्म कारणमिति वा, मायाशक्तिमत्कारणमिति वा, जगत्कारणं तु मायैव तदाश्रयतया ब्रह्म कारणमिति वेति । सर्वथाऽपि जगत्कारणत्वं बाह्यमेव, न साक्षात्स्वरूपान्तर्गतमेव ।' इति; तदेतदनुपपन्नम् इति भावेनोक्तं 'स्वलक्षणम्'इति । स्वरूपान्तर्गतमेवेदं ब्रह्मणो जगज्जन्मादिकारणत्वं न मायावाद्युक्तरीत्या तटस्थमित्यर्थः।**

वा०—ननु कारणत्वस्यास्वरूपत्वाप्रसक्तेः स्वलक्षणत्वोक्तिवैयर्थ्यम् । न च परोक्ततटस्थलक्षणत्वनिरासाय सेति वाच्यम् । तस्यापि वैयर्थ्यात् । न च 'अतो जीवैक्यमपि'इत्यादिना परमते लक्षणसूत्रानारम्भन्युत्पादनाय सेति वाच्यम् । तस्यापि प्रयोजनाभावादित्यतः स्वव्याख्यानपरिशुद्ध्यर्थत्वात्तस्येत्याशयेन स्वलक्षणमित्येतदवतारयति **एवमिति**।। नन्वानन्दादिवत्कारणत्वस्यापि स्वरूपत्वसंभवे कुतस्तटस्थत्वोक्तिस्तेषामित्यतो निरवयस्य ब्रह्मणः शुद्धस्यैवोपादानत्वासंभवेन विवर्ताधिष्ठानत्वस्यैव वक्तव्यतया तदन्यस्य जगद्रूपेण विक्रियमाणस्यानिर्वचनीयमायान्यस्याभावादसंभवात् । सत्तारूपेण स्फूर्तिरूपेण वाऽनुगततया ब्रह्मण उपादानत्ववत्कार्येऽनुगत्या तस्या अप्युपादानत्वे ब्रह्मलक्षणस्य मायायामतिव्याप्तिमाशङ्क्य मुख्योपादानस्य जगत्कारणत्वं स्वरूपलक्षणम् । औपचारिकोपादानस्य तु तटस्थलक्षणम् । तत्र स्वरूपलक्षणतयाऽभिमतस्य न तावन्मायायामतिव्याप्तिस्तस्या लक्ष्यान्तःपातित्वाज्जगत्कारणत्वस्य तु तटस्थलक्षणरूपेण मायायामवृत्तेर्न तटस्थलक्षणस्याप्यतिव्याप्तिरित्याशयेन मुख्यामुख्योपादानस्वरूपं मतभेदेन व्युत्पादयितुं विवरणोक्तं त्रैविध्यमनुवदति **त्रैविध्यमत्र संभवतीति** । रज्ज्वाः संयुक्तसूत्रद्वयवत्समप्रधानत्वेन मायाब्रह्मणी उपादानम् । तत्र सत्तास्फूर्त्यंशयोर्ब्रह्मण उपयोगो जाड्यविकारांशयोस्तु मायाया इति केषाञ्चित्पक्षानुसारेण प्रथमः कल्पः । मायाख्यशक्तेरप्राधान्यं ब्रह्मण एव प्राधान्यमिति द्वितीयपक्षाभिप्राय इति कश्चित् । 'देवात्मशक्तिं स्वगुणैर्निगूढाम्'इति श्रुतिबलान्मायाख्या शक्तिरेव साक्षादुपादानं शक्तेश्च नियमेन शक्तिमत्पारतन्त्र्याच्छक्तिमति ब्रह्मण्यर्थादुपादानत्वं पर्यवस्यतीति तदभिप्राय इत्यपरः । आरोपितमायाया धिष्ठानब्रह्मस्वरूपमन्तरेण वस्तुतः स्वरूपान्तराभावान्मायाया एव साक्षादुपादानत्वेऽपि तदधिष्ठानत्वेनब्रह्मणोऽप्युपादानत्वमवर्जनीयमिति तृतीयकल्पाभिप्रायः । अत्राद्यपक्षे मायाविशिष्टब्रह्मणो मुख्योपादानत्वं द्वितीयतृतीययोस्तु मायाया एव । पक्षत्रयेऽपि शुद्धब्रह्मण औपचारिकमेवोपादानत्वमिति विवेक इति भावः ।

स० — **मायाविशिष्टं ब्रह्मेति** । रज्वाः सूत्रद्वयवदित्यर्थः ॥ **मायाशक्तिमदिति** । माया लक्षणहेतूपरागवदित्यर्थः। यथा मृदश्चक्रादिहेतुसमवहितस्यैव । तत्र मायाब्रह्मणोः समप्राधान्यम् । अत्र तु ब्रह्मणः प्राधान्यं मायाया उपसर्जनत्वं विवक्षितमिति भावः॥ **तदाश्रयतयेति** । कार्पासांशुर्यथा तन्तुद्वारा पटोपादानं तथा ब्रह्मापि मायाद्वारेत्यर्थः ॥

प० — स्वलक्षणमित्यत्र स्वपदस्य कृत्यं व्यनक्ति **एवं स्वमतेनेत्यादिना** ॥ **मायाशक्तिमदिति** । मायाशक्त्युपलक्षितमित्यर्थः ॥

या० — **मायाविशिष्टं ब्रह्मेति** । रज्ज्वाः सूत्रद्वयवदित्यर्थः ॥ **मायाशक्तिमदिति** । मायाख्यसहकारिसमवहितमित्यर्थः । अत्रापि मायाविशिष्टं ब्रह्म कारणमित्येव विवक्षितम् । किन्तु पूर्वत्र मायाब्रह्मणोः समप्राधान्यं विवक्षितम् । अत्र तु ब्रह्मणः प्राधान्यं मायाया उपसर्जनत्वमिति न पूर्वाभेद इत्याहुः ॥ **तदाश्रयतयेति** । अंशुर्यथा तन्तुद्वारा पटोपादानं तथा ब्रह्मापि मायाद्वारा जगदुपादानमित्यर्थ इति केचित् । सकलजगदुपादानमायाऽधिष्ठातृब्रह्मातोजगत्कारणमित्युच्यत इत्यप्यस्याभिप्रायमाहुः ।

श्री० — **तदुपपादयतीति** । हरेरेवादोषवचनादित्युक्तेऽन्येषां दोषवचनादित्यस्य एवकारमहिम्न लब्धत्वात् एवकारलब्धं प्रमेयमुपपादयतीत्यर्थः । अत एव हरेरेवेति युक्तमिति वदिष्यति ।

च० — **मायाविशिष्टमिति** । तुल्यकक्ष्यापन्नसूत्रद्वयस्य रज्जुहेतुतेव तादृशयोर्मायाब्रह्मणोर्विश्वहेतुतेत्यर्थः ॥ **मायाशक्तिमदिति** । स्वोपसर्जनीभूतमायाशक्त्याख्यसहकारिसमवहितमित्यर्थः ॥ **तदाश्रयतयेति** । प्राधान्येन जगदुपादानं मायैव ब्रह्म तु तदाश्रयतया तदुपादानमित्युपचर्यत इति भावः ।

सु० — तत्कुत इत्यत आह अस्येति ।

अनु० — अस्योद्भवादिहेतुत्वं साक्षादेव स्वलक्षणम् ॥
कृष्णध्यानच्छलेनैव स्वयं भागवतेऽब्रवीत् ॥

**अस्य सर्वस्यापि विश्वस्योद्भवादिहेतुत्वं ब्रह्मणः स्वलक्षणमेवेति सूत्रकारो भागवते साक्षादेव स्पष्टमेवाब्रवीत् 'एकं(यत्तत्) परं ज्योतिरनन्यमद्वयं स्वसंस्थया नित्यनिरस्तकल्मषम् । ब्रह्माख्यमस्योद्भवनादिहेतुभिः स्वलक्षणैर्लक्षितभावनिर्वृ(ति)तम् ॥' इति । तथा च सूत्रकाराभिप्रायानवबोधनिबन्धनमेव परेषां तटस्थलक्षणव्याख्यानमिति ।**

**ननु मै(नै)वं सूत्रकारोऽब्रवीत्; किन्तु परप्रतीत्यनुवादोऽयम्, 'ब्राह्मे मुहूर्त उत्थाय वार्युप स्पृश्य माधवः । दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥' इति पूर्ववाक्ये कृष्णानुष्ठितध्यानस्य प्रकृतत्वात् । इत्यत उक्तम् कृष्णेति ॥ कृष्णध्यानानुवादमिषेण स्वयमेवाब्रवीदिति ।**

**वा०— एकं परमित्यादि ।** एतच्च 'स्वरूपमसरत्कृष्ण एकं स्वस्मिन्नभेदतः । अतत्तन्त्रस्य राहित्यादनन्यं सदृशोज्झितेः । अद्वयं नित्यनिर्वृत्या भावनिर्वृतिमीश्वरम्' इति तन्त्रभागवतवाक्योपन्यासेनाचार्यैः स्पष्टमन्यत्र व्याख्यातमिति न स्वयं व्याख्यातमिति ज्ञेयम् ॥ भागवते तथेत्युक्त्या सूत्रस्य तटस्थलक्षणपरतया व्याख्याने किं दूषणमुक्तमित्यत आह **तथा चेति ।**

**प०— भागवत इति ।** दशमस्कन्धे ॥ **परम्** विलक्षणम् । **अनन्यम्** अन्तर्भेदरहितम् । **अद्वयं** समाधिकरहितम् । **स्वसंस्थया** स्वरूपभूतस्थित्या । **अस्य** जगतः । **उद्भवनादिहेतुभिः** जन्मादिहेतुत्वलक्षणैः । **स्वलक्षणैः** स्वरूपभूतधर्मैः । लक्षितं भावनिर्वृतिरूपं चेत्यर्थः । **भावो** ज्ञानम् । **निर्वृतिरानन्दः ।** तद्रूपमिति यावत् । आत्मानमिति पूर्वश्लोकस्थात्मविशेषणत्वाद्भावनिर्वृतिमित्युक्तम् । ज्योतिरित्यस्यापि ज्योतीरूपमित्यर्थः । अत एवानन्यमिति साधु । अन्यथाऽनन्यदिति स्यात् ।

**या०—** एकं परं ज्योतिरित्येव पाठो न तु यत्तत्परं ज्योतिरिति । 'स्वरूपमसरत्कृष्ण एकं स्वस्मिन्नभेदतः । अतत्तन्त्रस्य राहित्यादनन्यं तादृशोज्झितेः । अद्वयं नित्यनिर्वृत्या भावनिर्वृतमीश्वरमि'ति श्रुतिगीतातात्पर्योदाहृतप्रमाणादस्यार्थोऽवगन्तव्यः ।

**श्री०—**एकं परं ज्योतिरित्येव पाठो न तु यत्तत्परं ज्योतिरिति । एकं परं ज्योतिरिति श्लोकार्थस्तु 'स्वरूपमसरत्कृष्ण एकं स्वस्मिन्नभेदतः । अतत्तन्त्रस्य राहित्यादनन्यं समतोज्झितेः । अद्वयं नित्यनिर्वृत्या भावनिर्वृतमीश्वरम् ।' इति श्रुतिगीतातात्पर्योदाहृतप्रमाणानुसारेण द्रष्टव्यः । भावः सत्ता, सा च विशेषानुक्तेः सार्वकालिकी विवक्षिता; इति भावेन नित्येति भावशब्दो व्याख्यातः । तथाच भावनिर्वृतं सर्वदा विद्यमानानन्दरूपमित्यर्थः ।

**च०— एकं परमित्यादि ।** 'स्वरूपमसरत्कृष्ण एकं स्वस्मिन्नभेदतः । अतत्तन्त्रस्य राहित्यादनन्यं सदृशोज्झितेः । अद्वयं नित्यनिर्वृत्या भावनिर्वृतिमीश्वरम् ।' इति तन्त्रभागवतवाक्योपन्यासेन भगवत्पादा एवैतत्पद्यं व्याख्यासिषुरिति टीकाकृत्पादा न व्याकार्षुरिति ध्येयम् ।

**सु०— अयमाशयः ॥ परकृतानुवादो हि पुराणकर्तुर्द्वेधा संभवति । निराकरणार्थं वा यथा 'यावत्स्याद्गुणवैषम्यम्' इत्यादि, एवं शिष्टैरनुष्ठितत्वादन्यैरप्यनुष्ठेयम् इति विधानार्थं वा यथा 'त्रित्वे हुत्वाऽथ पञ्चत्वम्' इत्यादि ॥ तत्राद्यः पक्षस्तावत्प्रकृते न संभवति अनिराकृतत्वात् । साक्षाद्भगवदवतारस्य कृष्णस्य चेत्प्रतिपत्तिर्निराकरणमर्हति कुतस्तर्हि व्यासप्रतिपत्तौ**

समाश्वासः । ध्यानमेवेदं न ज्ञानमिति चेत् तर्हिक ज्ञानविपरीतं ध्यानमिति नियमः । तथा सति ध्यानार्थिनः श्रवणमननापेक्षा न स्यात् । न च तटस्थं लक्षणं स्वरूपतया ध्यातव्यमिति क्वचिद्विधिर्वा प्रयोजनं वा श्रूयते ॥ तस्माद् द्वितीयः पक्षः परिशिष्यते । तथा च सूत्रकारस्येदं कथं न मतम् । अन्यथा श्वेतकेतूद्दालकाख्यायिकया प्रतिपादितत्वादद्वैतमपि न श्रुत्यभिप्रायः स्यात् । 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेहं ब्रह्मास्मि' इत्यपि परोपासनानुवादो न स्वार्थे तात्पर्यवान् स्यात् 'अथ योऽन्यां देवतामुपास्ते' इत्युपासनाप्रकरणत्वात् । तथा च बहुविप्लवः स्यात् ॥ तस्मात्सूत्रकारस्यैवायमभिप्रायो यज्जगज्जन्मादिकारणत्वं ब्रह्मणः स्वरूपान्तर्गतमेव लक्षणमिति ॥ तथा च विस्पष्टतदीयवाक्यान्तरबलादस्यापि सूत्रस्य स्वरूपलक्षणपरत्वमेवेति ।

**वा०**— नन्वनूद्यमानस्यापि स्वमतत्वे परमतस्यापि स्वमतत्वापत्तेरित्यतिप्रसङ्ग इत्यतो निरासार्थानुवादस्य स्वमतत्वानापादकत्वेऽपि शिष्टैरनुष्ठानादन्यैरप्येवमनुष्ठेयमिति विधानार्थानुवादस्य स्वमतत्वापादकत्वे विरोधाभावात्प्रकृते चाद्यपक्षासंभवेन द्वितीयस्यैवाश्रयणान्नानुपपत्तिरिति छलपदेनैवकारेण च सूचितमाशयमाह **अयमाशय इति** ॥ कल्पद्वयप्रसञ्जकप्रदर्शनम् **यथेति** । 'तावन्नानात्वमात्मनः नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि । यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् । य एतत्समुपासीरंस्ते मुह्यन्ति शुचाऽर्पिताः' इति वाक्यशेषोपादानायादिपदम् । तत्र यावत्स्यादित्यनुवादो य एतदिति निषेधाय । अत एव 'यावत्स्याद्गुणवैषम्यमित्यादि य उपासीरंस्ते मुह्यन्ति' इति तात्पर्यनिर्णय उक्तमिति भावः ॥ **यथा त्रित्व इति** । 'वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या त्वपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् । त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः' इति वाक्ये, प्राणमपाने, तं व्याने, समानोदानौ तेषु, तांश्च मूलप्राणे' इति तात्पर्यानुसारादुमाया रुद्रे, तस्य प्राणे, तस्यापाने, तस्य व्याने, उदानसमानयोः प्राणापानव्यानेषु त्रिषु, पञ्चानामपि मुख्यवायुरूपाणामेव प्राणादीनामेकस्मिन्मूलप्राणे लयस्य मरणकाले शिष्टचिन्तितस्यान्यचिन्तनविधानार्थोऽनुवादो यथेत्यर्थः । ननु त्रित्वे हुत्वेत्यादेः प्रतीत्यनुवादत्वात्तद्विषयस्य सत्त्वेपि प्रकृतस्य ध्यानानुवादत्वान्न तद्विषयस्य सत्त्वमित्याशङ्कते **ध्यानमेवेदमिति चेदिति** ॥ विध्याद्यभावाचादृशध्यानासंभवश्चेत्याह **न चेति** ॥ अनुवादविषयत्वमात्रेणार्थस्य तदनभिप्रेतत्वेऽतिप्रसङ्गमाह **अन्यथेति** ॥ध्यानानुवादविषयस्य तथात्वे तमाह **तद्धैतदिति** ॥ अपव्याख्याने बाधकतयोक्तं भागवतवाक्यं स्वव्याख्यानोपोद्बलकत्वेन व्यापारयति **तथा चेति** ।

**स०**— **यथा यावत्स्यादित्यादि** । 'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि । यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम्' इत्यनेन गुणवैषम्यं

सृष्टिसंसार इति यावत् । तथाच संसारदशायामेव भेदपारतन्त्र्यभयानि भवन्ति । मुक्तौ तु परमात्माभेद एवेति पूर्वपक्षानुवादं कृत्वा 'य एतत्समुपासीरन् ते मुह्यन्ति शुचाऽर्पिताः'इति तत्पक्षस्य निन्दितत्वेन तन्निराकरणमवगम्यते । तथा च पुराणकर्तुः निराकरणायानुवादे इदमुदाहरणमुक्तमिति द्रष्टव्यम् ॥

**यथा त्रित्वे हुत्वाऽथेति** । अत्र यद्यपि 'वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् । त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः । सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये'इति श्लोकद्वयमप्युदाहार्यम् । धर्मकृतलयचिन्तनानुष्ठेयताप्रतिपादकत्वात् । तथापि त्रित्वे हुत्वाथेति द्वितीयश्लोकस्योदाहरणेन न केवलं लयमात्रं चिन्तनीयतयाऽत्र विवक्षितं किन्तु सृष्टिरपि । यत्तेषां ब्रह्मपर्यन्तविलयोत्पत्तिचिन्तनम् । 'ब्रह्मयज्ञ इति प्रोक्तः सर्वसंसारमोचकः'इति वचनात् । सा च द्वितीयश्लोकान्तिमपादप्रतिपाद्यब्रह्मात्मादिक्रमेणैवेति ज्ञापयितुं कृतमित्यवधेयम् । ततश्च विश्वरूपाद्ब्रह्मणो हृदि स्थितस्यात्मनो जनिश्चिन्तनीया । तस्मात्प्राणस्य । तस्माच्च तत्स्वरूपभूतानि प्राणादीनि पञ्चरूपाणि जातानीति चिन्तनीयानि । समानोदानयोश्च प्राणापानव्यानैर्जनिः प्राणस्यापानादपानस्य च व्यानाज्जनिश्चिन्तनीया । प्राणात् मनोनामकस्य रुद्रस्य जनिः । तस्माद्वागात्मिकाया उमायाः जनिश्चिन्तनीया एतद्वैपरीत्येन भागवते लयाभिधानं उपलक्षणतयेति ज्ञातव्यम् । ततश्च वाचनिकलयक्रमोपपादकमिमं उपलक्षितं सृष्टिक्रमं सूचयितुं चरमश्लोकप्रतीकग्रहणं कृतम् । ततश्च श्लोकद्वयस्यायमर्थः । वाचं वागभिमानिनीं उमां मनसि तत्कारणे तदभिमानिनि रुद्रे जुहाव, लीयत इति चिन्तितवान् ॥ एवमग्रेऽपि । तन्मनः प्राणे इतरे इतरस्मिन् अपाने परं प्राणं धृत्या धैर्येण सोत्सर्गं सवृत्तिकं अपानं तत्परत्वे । धर्मिप्रधानो निर्देशः । एवमग्रेऽपि । तदपेक्षया पूर्ववर्तिनि व्याने अजोहवीत् । त्रित्वे त्रिषु प्राणापानव्यानेषु अथ अनन्तरौ उदानसमानौ लीयेते इति हुत्वा ध्यात्वा तच्च तदपि पञ्चत्वं पञ्चापि प्राणादीन् एकत्वे एकस्मिन् मुख्ये मूलप्राणेऽजुहोत् मुनिर्मननशीलो धर्मः सर्वं पूर्वोक्तं सर्वं आत्मनि स्वहृदि स्थिते विष्णावजुहोत् आत्मानमव्यये विनाशरहिते ब्रह्मणि सर्वगते तदभिव्यक्तिकारणे विष्णावजुहोदित्यन्वय इति । वस्तुतस्तु तस्मिन्नर्थे मुनिरिति कर्तृवाचिपदसद्भावात्तदेवोदाहृतमिति ज्ञातव्यम् ॥ न नु तत्र निराकरणादेरदर्शनेऽपि निराकरणार्थानुवादः किं न स्यादित्यत आह **साक्षादिति** ॥ न कृष्णस्य प्रतिपत्तिरियम् । अपि तु ध्यानमेव । तस्य चाविद्यमानविषयकत्वमपि संभावितमिति भावः ॥ **तथा सतीति** । ज्ञानविपरीतमेव ध्यानमिति सर्वत्र नियमाङ्गीकारे ध्यानस्यारोपिताकारेणापि संभवात् तदर्थं विद्यमानार्थविषयकश्रवणमननापेक्षा न स्यादिति भावः । यद्वा ध्यानस्य श्रवणमननजनितज्ञानसमानाकारत्वात् तस्य च प्रमात्वाद्विद्यमानविषयकत्वमेव ध्यानस्य वाच्यमिति भावः । इदं च ध्यानस्य ज्ञानभिन्नत्व-

मङ्गीकृत्योक्तम् । वस्तुतस्तु ज्ञानविशेष एव ध्यानमिति द्रष्टव्यम् ॥ ननु प्रमाणप्रयोजनबलात् ध्यानरूपत्वमेवाङ्गीक्रियत इत्यत आह **न च तटस्थं लक्षणमिति** ॥ ननु नानुवादमात्रस्य स्वार्थे तात्पर्याभावः । अपि तु उपासनानुवादस्यैवेत्यत आह **तद्वैतत्पश्यन्निति** ॥ ननूपासनानुवादस्य तात्पर्यानङ्गीकारेऽपि प्रतीत्यनुवादस्य स्वार्थे तात्पर्याङ्गीकारात् प्रकृते च 'अहं ब्रह्मास्मि'इति वाक्यस्यानुवादपरत्वेऽपि प्रतीत्यनुवादत्वादद्वैते तात्पर्यमुपपन्नमित्यत आह **अथ योऽन्यामिति** ॥ **तथाच बहुविप्लव इति** । बहूपद्रवः स्यात् । ततश्च वाक्यार्थः कुत्रापि न सिध्येदिति भावः ।

**प०— यावत्स्यादिति** । 'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि । १ । यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् । य एतत्समुपासीरन् ते मुह्यन्ति शुचार्पिताः ।' इत्येकादशस्कन्धे दशमाध्याये मतान्तरं । ते मुह्यन्ति'इत्यादिनिन्दया निराकरणार्थं 'यावत्'इत्यादिनाऽनूद्यत इत्यर्थः ॥ **त्रित्व इति** । 'वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् । १ । त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः । सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये । २ ।' इति प्रथमस्कन्धगतपञ्चदशेऽध्याये मृतिकाले धर्मराजकृतलय चिन्ताऽनूद्यते । तस्यार्थः वाचं वागभिमानिनीमुमां मनसि मनोभिमानिनि रुद्रे जुहाव उमाया रुद्रे लयो भवतीति चिन्तितवानित्यर्थः । तत् मनः प्राणे जुहाव । परं मनसः परं प्राणं च इतरस्मिन्नपाने जुहाव । धृत्या मनस एकाग्रतया सोत्सर्गं सवृत्तिकमपानं तत्परत्वे तस्मादपानात्पूर्वभाविनि व्यानेऽजोहवीत् । अथापानव्यानलयचिन्तानन्तरम् अवशिष्टावुदानसमानौ त्रित्वे त्रित्वसङ्ख्याविशिष्टेषु प्राणापानव्यानेषु हुत्वा लयं विचिन्त्य पञ्चत्वं पञ्चत्वसङ्ख्याविशिष्टान्प्राणापानव्यानोदानसमानांश्चैकत्वे एकत्वसङ्ख्याविशिष्टे मूलप्राणे अजुहोत्। सर्वं पूर्वोक्तं समस्तम्, आत्मनि स्वहृदि स्थिते विष्णौ अजुहवीत् । तं चात्मानम् । अव्यये नाशहीने ब्रह्मणि सर्वगते विष्णावजुहवीदिति ॥ अयुक्तं च निराकरणमित्याह **साक्षादिति** ॥ ननु कृष्णस्य चेत्प्रतिपत्तिरित्याद्युक्तमयुक्तम् । 'दध्यौ प्रसन्नकरण'इति पूर्वोक्तध्यानप्रकारस्यैव 'यत्तत्परं ज्योतिः' इत्यादिनाऽनुवादात् । ध्यानस्य च ज्ञानविषयविपरीतविषयकत्वनियमादिति भावेनाऽऽशङ्क्य निराह **ध्यानमेवेदमित्यादिना** ॥ ननु तटस्थमेव लक्षणं स्वरूपलक्षणत्वेन ध्यातव्यत्वात्कृष्णेन तथा ध्यातमित्यत आह **न च तटस्थमिति अन्यथेति** । अनुवादत्वमात्रेणानभिमतत्व इत्यर्थः । श्वेतकेतूद्दालकाख्यायिकाया अप्यनुवादत्वाविशेषादिति भावः ॥ ननु तत्रोपासना न श्रूयत इत्यत आह **अथ योऽन्यामिति** ।

**या०—यथा यावत्स्यादित्यादि** । 'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि । यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ।' गुणवैषम्यं सृष्टिः । संसार इति यावत्

तथा च संसारदशायामेव भेदपारतन्त्र्यभयानि भवन्ति । मुक्तौ परमात्माभेद एवेत्ययं परमतानुवादः । 'एतत्समुपासीरन् ते मुह्यन्ति शुचाऽर्पिता' इति निराकरणार्थमित्यर्थः ॥ **यथा त्रित्वे हुत्वाऽथेति** । अत्र यद्यपि, 'वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या ह्यपानं सोत्सर्गे तत्परत्वे ह्यजोहवीत् । त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः । सर्वमात्मन्यजुहवीत् ब्रह्मण्यात्मानमव्यय' इति श्लोकद्वयस्य धर्मकृतलयचिन्तानुवादरूपत्वात् । तत्संग्रहाय वाचं जुहाव मनसीत्यादीत्येव प्रतीकग्रहणमुचितम् । प्रथमातिक्रमे कारणाभावात् । तथाऽप्यत्रोक्तलयक्रमविपरीतेन ब्रह्मात्मादिक्रमेण सृष्टिरपि चिन्तनीयतया ऽभिप्रेतेति सूचयितुं चरमश्लोकप्रतीकग्रहणं कृतम् । 'एतेषां ब्रह्मपर्यन्तं विलयोत्पत्तिचिन्तनम् । ब्रह्मयज्ञ इति प्रोक्तः सर्वसंसारमोचक' इति वचनात् । ततश्च श्लोकद्वयस्यायमर्थः । वाचं वागाभिमानिनीमुमां मनसि तत्कारणे तदभिमानिनि रुद्रे जुहाव लीयत इति चिन्तितवान् । एवमग्रेऽपि । तन्मनः प्राणे । इतरे इतरस्मिन् अपाने परं प्राणम् । धृत्या धैर्येण । सोत्सर्गे सवृत्तिकमपानम् । तत्परत्वे धर्मप्रधानो निर्देशः । एवमग्रेऽपि । तदपेक्षया पूर्ववर्तिनि व्यानेऽजोहवीत् । त्रित्वे त्रिषु प्राणापानव्यानेषु । अथ अनन्तरौ । उदानसमानौ लीयत इति हुत्वा ध्यात्वा । तच्च तदपि । पञ्चत्वं पञ्चापि प्राणादीन् एकत्वे एकस्मिन्मुख्ये मूलप्राणेऽजुहोत् । मुनिर्मननशीलो धर्मः । पूर्वोक्तं सर्वमात्मनि स्वहृदिस्थे विष्णावजुहोत् । आत्मानमव्यये नाशरहिते ब्रह्मणि सर्वगते तदभिव्यक्तिकारणे विष्णावजुहोदित्यन्वय इति ॥ **ध्यानमेवेदमिति** । न कृष्णस्य प्रतिपत्तिरियमपि तु ध्यानमेव । तच्च मानसक्रियारूपमविद्यमानेऽप्यर्थे भवतीति भावः ॥ किं सर्वत्र ध्यानं ज्ञानविपरीताकारमेवेति नियममाश्रित्येदमुच्यते उत ध्यानं ज्ञानसमानाकारमित्युत्सर्गः । क्वचिद्योषितमग्निं ध्यायीतेत्यादिप्रमाणे योषित्परित्यागादिरूपे प्रयोजने च सति ज्ञानविपरीताकारमपि भवतीति विकल्पं मनसि निधायाद्यं दूषयति **तत्किं ज्ञानेति** । अत्र ज्ञानपदेन प्रमैव विवक्षिता ॥ **तथा सतीति** । ध्यानस्य ज्ञानविषयतत्त्वविपरीतविषयत्वनियमे ध्यानरूपतत्त्वनिश्चयार्थश्रवणमननयोरतत्त्वविषयध्यानानुपयोगित्वात् । ध्यानार्थिनः श्रवणमननापेक्षा न स्यादित्यर्थः ॥ द्वितीयं दूषयति **न च तटस्थमिति** । इदं च ध्यानस्य ज्ञानभिन्नत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु ज्ञानविशेष एव ध्यानमिति द्रष्टव्यम् ॥ ननु तत्त्वमसीति वाक्यमुद्दालकोक्तानुवादरूपमपि नोद्दालकध्यानानुवादरूपमतस्तत्स्वार्थे तात्पर्यवदेव । प्रकृते तु तथाऽतो न स्वार्थे तात्पर्यवदित्यत आह 'तद्धैतत्पश्यन्' इति ।

**श्री०— समाश्वास इति** । व्यासस्यापि भगवदवतारत्वादिति भावः ।

**च०—यथा यावत्स्यादित्यादि** । 'यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि ॥' यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् । य एतत्समुपासीरंस्ते मुह्यन्ति

शुचाऽर्पिताः ॥' इति निरासायेत्यर्थः । गुणवैषम्यपदप्रतिपाद्यसंसारदशायामेव भेदभयपारतन्त्र्याणि मुक्तिदशायां तु ब्रह्मात्माभेद एवेत्यन्यदीयमतानुवादस्तत्प्रतिविधानार्थ इति भावः ॥ **त्रित्वे हुत्वाऽथेति** । 'वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् । त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः । सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यय इति वाक्ये प्राणमपाने, तं व्याने, उदानसमानौ तेषु, तांश्च मूलप्राण इति तात्पर्योक्त्या उमायाः रुद्रे तस्य प्राणे, तस्यापाने, तस्य व्याने, उदानसमानयोः प्राणापानव्यानेषु त्रिषु, पञ्चानामपि मुख्यवायुरूपाणामेव प्राणादीनामेकस्मिन् मूलप्राणे, लयस्य मृतिकाले अभियुक्तैश्चिन्तिततयाऽन्यैरपि तथा चिन्तनीयमिति विधानफलकानुवादो यथेत्यर्थः । मुनिः मननशीलो धर्मः पूर्वोक्तं सर्वमात्मनि स्वहृदयस्थे विष्णावजुहोत् । आत्मानमव्यये नाशरहिते ब्रह्मणि व्याप्ते तदभिव्यक्तिहेतुभूते विष्णावजुहोदित्यन्वयोऽवसेयः ॥ **ध्यानमेवेदमिति** । नेयं कृष्णस्य प्रतिपत्तिः किं तु मानसक्रियारूपं ध्यानमेव, तच्च विषयसत्त्वमन्तरेणापि सङ्गच्छत इति भावः ॥ ध्यानत्वावच्छेदेन ज्ञान विपरीताकारत्वमभिप्रेयते किं वा तत्सामानाधिकरण्येन योषितमग्निं ध्यायीतेत्यादिप्रमाणयोषित्परित्यागात्मकप्रयोजनयोः सद्भावेन विपरीताकारत्वमिति कल्पद्वयीमभिसन्दधानः आद्यं प्रतिविधत्ते । **तत्किमिति** ॥ द्वितीयं प्रत्याह **क्वचिदिति** ॥ ननु ध्यानानुवादस्यैव वस्तुतथात्वानुपगमेनोद्दालकोक्तानुवादस्य तादृशानुवादताविरहेण तत्र वस्तुतथाभावोपगमेऽपि न क्षतिरित्यत आह **तद्वैतदिति** ।

---

**सु० — यत एवं जगज्जन्मादिकारणत्वं स्वलक्षणमत्र सूत्रे ब्रह्मणोऽभिधीयते, ततो न परमतेऽस्य सूत्रस्यारम्भ एवोपपद्यते । इत्याह** अत इति ।

**अनु० —** अतो जीवैक्यमपि स निराचक्रे जगद्गुरुः ॥

**लक्षणं हि सजातीयविजातीयव्यवच्छेदार्थं भवति । यथाऽऽह 'समानासमानजातीयव्यवच्छेदो वा लक्षणार्थः' इति । तथा चानेन लक्षणेन सजातीयाज्जीवाद्विजातीयाज्जडाच्च ब्रह्म व्यावर्तितं सूत्रकारेण । जीवैक्यनिराकरणसूत्रस्यारम्भः कथं जीवैक्यवादिनां स्यात् । स्याद्यदीदं कथञ्चित् (स्यात्कथञ्चिद्यदीदं) तटस्थलक्षणं स्यात् । स्वरूपलक्षणमिति चोपपादितम् ।**

**वा० —** लक्षणोक्त्या जीवैक्यनिराकरणं विशदयति **लक्षणं हीति** ॥ सूत्रस्य जीवैक्यनिरासकत्वप्रतिपादकभाष्याभिप्रेतमपव्याख्यानदूषणमाह **जीवैक्येति** ॥ स्वरूपलक्षणत्वोपपादनस्यसूत्रानारम्भोपयुक्तत्वं पूर्वमुक्तमुपपादयति **स्याद्यदीति** । तटस्थलक्षणस्यापि जीवव्यावर्तकत्वमेवेति तटस्थत्वोक्तेर्वैयर्थ्यमाशङ्क्य परोक्तं यत्समाधानं तस्याभासतया व्युत्पादयिष्यमाणत्वाभिप्रायेण कथञ्चिदित्युक्तम् ।

स०— **समानासमानेति** । अन्यथा गोर्विषाणित्वं पशुत्वादिकं वा स्वलक्षणं स्यादिति भावः ॥ **स्यात्कथञ्चिदिति** । तटस्थत्वेऽपि व्यावर्तकत्वस्योपपादयिष्यमाणत्वात्कथञ्चिदित्युक्तम् ।

**सु०— स्यादयमद्वैतिनामनुपपन्नो लक्षणारम्भो यदीदं जीवव्यावृत्त्यर्थं लक्षणमुक्तं स्यात् । जडमात्रव्यावृत्त्यर्थं तु लक्षणे व्याख्यायमाने कथं जीवैक्यवादिनां लक्षणसूत्रारम्भोऽनुपपन्न इत्यत** आह न हीति ।

**अनु०—** न हि जन्मादिहेतुत्वं जीवस्य जगतो भवेत् ॥

**यत्र हि लक्षणं नास्ति तत्सर्वं तद्व्यावर्त्यमङ्गीकरणीयम् । अन्यथा लक्षणस्याव्याप्तिप्रसङ्गात् । न चेदं लक्षणं जीवस्यास्ति । तत्कथमसावनेन न व्यावर्त्यत इति ।**

**वा०—** ननु जीवे जन्मादिहेतुत्वाप्राप्तेस्तदभावप्रतिपादकोत्तरवाक्यमसङ्गतमित्यतस्तद्व्यावर्त्यं दर्शयंस्तत्सङ्गमयति **स्यादयमिति** ॥ **यदीदमिति** । जीवस्यापि लक्ष्यत्वान्न तद्व्यावृत्तिरिष्टेति वा लक्षणस्यापि तत्र सत्वान्न तेन तद्व्यावृत्तिरिति वाऽऽशयः ॥ तत्राद्यमाशयं निराचष्टे **यत्रेति** ॥ मूलात्साक्षाल्लब्धं द्वितीयाशयनिरासमाह **न चेदमिति** । सर्वज्ञत्वसर्वशक्तित्वादिराहित्यादिति भावः ।

---

**सु०— किञ्चानेन लक्षणेन यदि जीवो न व्यावर्त्यते; किन्तु सोऽपि लक्ष्यान्तर्गतः । तथा सति लक्षणस्य जीवेऽतिव्याप्तिमाशङ्क्येतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरिति सूत्रकारीयं तन्निराकरणमसङ्गतं स्यात् । न हि लक्ष्य एवातिव्याप्तिर्लक्षणस्य केनापि शङ्क्यते । कथञ्चिच्छङ्कायां वा तस्यापि लक्ष्यत्वाङ्गीकारं परित्यज्य तत्र न लक्षणनिराकरणं क्रियत इत्याशयवानाह** हिताक्रियेति ।

**अनु०—** हिताक्रियादिदोषं च वक्ष्यत्येव स्वयं प्रभुः ॥

**यद्यपि परेणापि जीवस्य लक्षणव्यावर्त्यत्वमङ्गीकृतमेव, यथाऽऽह 'सर्वज्ञं सर्वशक्तिं विहायान्यतः परपरिकल्पितात्प्रधानादेरचेतनाच्चेतनादपि परिच्छिन्नज्ञानक्रियाशक्तेः संसारिणो हिरण्यगर्भादुत्पत्त्यादि न संभावयितुमपि शक्यते' इति; तथाऽपि न्यायेनोपपादयितुमिदमुक्तमिति ॥**

**वा०—** ननु हिताक्रियादीत्युत्तरवाक्ये यदि पूर्ववाक्योक्तस्य जीवे लक्षणाभावस्योपपादनं तर्हि पूर्वत्र साक्षाद्धेत्वनुक्त्याऽत्र चशब्दास्वारस्यम्, यदि च निर्गुणत्वं चेत्युत्तरवाक्यवत्प्रकारान्तरेण सूत्रानारंभप्रतिपादकत्वं तर्हि वाक्यात्तत्प्रतिपादनादर्शनादर्थासङ्गतिरित्यतो जीवस्य लक्ष्यत्वलक्षणाव्यावर्त्यत्वाभ्युपगमे

पूर्ववाक्यार्थलब्धः, तर्हि लक्षणस्य तत्राव्याप्तिरित्येव न केवलं दोषोऽपि तूत्तरसूत्रविरोधश्चेत्यर्थप्रतिपादनाय प्रवृत्तत्वान्नासङ्गतिरित्याशयेनोत्तरवाक्यमवतारयति **किंचेति ॥** जीवे जगत्कारणत्वादेः परेणानुक्तत्वेनानुक्तोपालम्भत्वाद्भाष्यकारस्य जीवे जगत्कारणत्वनिरासोऽचातुरीमावहतीत्याशङ्क्य निराकरोति **परेणापीति** ॥

**प०— इदमुक्तमितीति** । 'न हि जन्मादिहेतुत्वम्'इत्यादिकमुक्तमित्यर्थः ॥

( इति मायावाद्युक्तैक्यस्य सूत्रकारैरेव निराकृतता ॥ )

( अथ मायावाद्युक्तस्य निर्गुणत्वस्यापि सूत्रकारैरेव निराकृतता ।)

**सु०— इतोऽपि मायावादिनां न ब्रह्मलक्षणसूत्रारम्भः संभवतीत्याह** निर्गुणत्वं चेति ।

**अनु०—** निर्गुणत्वं च तेनैव निषिद्धं प्रभुणा स्वयम् ॥

**लक्षणवाक्यं हि साक्षाल्लक्ष्यस्यासाधारणधर्मसंसर्गं प्रतिपादयदर्थादितरव्यावृत्तिं प्रतिपादयति । ततोऽनेनापि लक्षणवाक्येन ब्रह्मणो जगज्जन्मादिकारणत्वेन तदविनाभूतैः सर्वज्ञत्वादिभिश्च संसर्गः प्रतिपादनीयः । तथा च निर्विशेषत्वं ब्रह्मणोऽनेन सूत्रेण निषिद्धम् । निर्विशेषत्ववादिनां च निर्विशेषत्वं निषेधतः सूत्रस्यारम्भः कथमुपपद्यत इति ।**

वा०— पूर्ववाक्यवदस्यापि जीवकारणत्वनिरासे हेत्वन्तरप्रतिपादकत्वभ्रान्तिं निराकरोति **इतोऽपीति** ॥ ननु लक्षणवाक्यस्येतरव्यावृत्तिप्रतिपादकत्वेऽपि धर्मसंसर्गाप्रतिपादकत्वाल्लक्षणीभूतधर्मसंसर्गप्रतिपादकत्वेऽपि वा सर्वज्ञत्वादिगुणसंसर्गाप्रतिपादकत्वात्कथं लक्षणसूत्रस्य निर्गुणत्वनिषेधकत्वोक्तिः परमसाध्यस्यानुक्तेर्न्यूनता चेत्यत आह **लक्षणवाक्यं हीत्यादिना ।**

**स०— लक्षणवाक्यं हीति ।** यदि गवि सास्नादिमत्वं नाम धर्मो न विद्यते कथं तदा लक्षणं स्यात् । लक्ष्यस्य ह्यसाधारणधर्मो लक्षणम् । कथं च तत् स्वालक्ष्यं व्यवच्छिन्द्यात् । अन्यथैकशफत्वादिकं गां व्यवच्छिन्द्यादिति भावः ।

श्री०— निर्गुणत्वमित्यस्यार्थो निर्विशेषत्वमिति ।

**सु०— स्यादियं जीवब्रह्मणोरेकत्वं ब्रह्मणश्च निर्गुणत्वमङ्गीकुर्वतां लक्षणसूत्रारम्भानुपपत्तिः । यद्यनेन सूत्रेण जगज्जन्मादिकारणत्वं ब्रह्मणः स्वलक्षणमुच्यते । न चैवं किन्तु तटस्थमेव । न हि तथाविधं जगज्जन्मादिकारणत्वं जीवब्रह्मणोरेकत्वं वा ब्रह्मणो निर्गुणत्वं वा विरुणद्धि ॥**

**ननु स्वलक्षणत्वे प्रमाणमुक्तम् । मैवम् । स्वस्य लक्षणानि स्वलक्षणानीति वा । सु सम्यक् स्वरूपान्तर्गत्या न लक्षणानीति वा तदर्थोपपत्तेः ॥ तर्हि यतोऽस्य जन्मादि सा माया**

तदाश्रयो ब्रह्मेति निर्देशः स्यात् । न तु जन्माद्यस्य यतस्तद्ब्रह्मेति । मैवम् । यत्र घोषः सा गङ्गेतिवल्लक्षणया प्रयोगोपपत्तेः ॥ ननु तटस्थेनापि जगज्जन्मादिकारणत्वेन ब्रह्मणो जीवैक्यं निर्गुणत्वं च (नि)विरुध्यते । काकनिलयनत्वं हि परेण तटस्थं लक्षणमुदाहृतम् । तस्य लक्ष्यान्तर्भावे काकाधिकरणत्वमपि गृहशब्दार्थः स्यात् । ततश्च काकविगमे गृहैकदेशभङ्गबुद्धिः स्यात् इति । तत्र काकाधिकरणत्वं तदनधिकरणेभ्यो गृहं व्यावर्तयति न वा । नेति पक्षेऽनुभवविरोधस्तदभिधानवैयर्थ्यं च । आद्ये ब्रह्मलक्षणमपि कथं न जीवव्यावृत्तिं करोति । कथं च तत्संबन्धेन सगुणं न भवतीति । मैवम् । यो हि कार्यकारणसङ्घातादविविक्तं कर्तृत्वभोक्तृत्वदोषसंसर्गिणमात्मानं मत्वा मृषैव क्लिश्यति स जीवो व्यावर्त्यत एवते(अने)न लक्षणेन । तत्र यश्चैतन्यधातुः स ब्रह्मणो न भिद्यत इत्यभ्युपगमे विरोधाभावात् । न च सत्यस्य प्रपञ्चस्य कारणभूतायाः सत्याया मायाया आश्रयो ब्रह्मेति सूत्रार्थो येन ब्रह्मणः सविशेषत्वं स्यात् । किन्तु यदवष्टम्भो विश्वो विवर्तः प्रपञ्चस्तद् ब्रह्मेति सूत्रार्थः । सति चैवं सूत्रार्थे कथं जीवब्रह्मणोरेकत्वं ब्रह्मणो निर्गुणत्वं च विरुध्यत इति ।

वा०—नन्वैक्यान्यथाऽनुपपत्त्या सूत्रेऽमुख्यार्थस्य परेणानुक्ततया भेदाङ्गीकारेण मुख्यार्थसंभवप्रतिपादकं भेदेनैवेत्युत्तरवाक्यमसङ्गतम् । न च मुख्यार्थसंभवे लक्षणाश्रयणानुपपत्तावस्माभिरुक्तायामैक्यान्यथाऽनुपपत्त्या मुख्यार्थासंभवः प्रतिपादनीय एव परेणेति वाच्यम्। निराश्रयतया तथाऽस्मदुक्तेरेवानुपपत्तेः। न च तटस्थेन जगत्कारणत्वेनात्र सूत्रे लक्षणया ब्रह्म प्रतिपाद्यत इति परोक्तिरेवाश्रय इति वाच्यम् । स्वलक्षणत्वस्य प्रमाणोदाहरणेन प्रतिपादिततया तेन तटस्थत्वस्यानाशङ्कनीयत्वात् । तटस्थस्यापीतरव्यावर्तकतया स्वसंबन्धेन सगुणत्वापादकतया चैकत्वनिर्गुणत्ववादिनां सूत्रारम्भानुपपत्त्यशामकतया वैयर्थ्येन तदीयतटस्थत्वोक्त्यनुपपत्तेश्च । न च स्वरूपलक्षणस्य जीवस्वरूपव्यावर्तकत्वेऽपि तटस्थस्य विशिष्टव्यावर्तकत्वेन स्वरूपव्यावर्तकत्वाभावात्स्वरूपाभेदवादिनां न तटस्थलक्षणसूत्रारम्भानुपपत्तिः । प्रपञ्चतत्कारणमायादेः सर्वस्य ब्रह्मविवर्तत्वार्थकत्वाच्च सूत्रस्य, न निर्गुणत्ववादिनां तदारम्भानुपपत्तिश्चेति व्युत्पादनाय तदीयतटस्थत्वोक्तिः श्लिष्टेति वाच्यम् । तथा सति सिद्धान्ते विवर्तत्वादेरपि निरस्तत्वापातात् । तटस्थत्वं वदतो लक्षणाया अवश्यवक्तव्यत्वे बीजाभावाच्चेत्यत उक्तानुपपत्तिपरिहारेण पराभिप्रायं सम्यगनूद्योत्तरक्रमं दर्शयन्नाकाङ्क्षाक्रमेणोत्तरवाक्यं सङ्गमयति **स्यादियमित्यादिना** ॥

उक्तं शङ्काभिप्रायं मूलारूढं कर्तुं यदीत्यापादकमध्याहृत्य मूलं योजयति **यदीति** । एवकाराभिप्रायं वक्तुं तद्व्यावर्त्यां शङ्कामुत्थापयति **नन्विति** । एवकाराभिप्रेताभेदाप्रामाणिकत्वोपपादकतयाऽपीदमेव मूलं व्याख्यातुं तदाक्षेपं दर्शयति **नन्विति** ।

स०— **नहीति** । अन्यधर्मस्यान्यनिष्ठतया कथनं न युक्तमित्याशयः ॥ **यत्र घोष इति** । अत्र घोषाद्यधिकरणसामीप्यं गङ्गाया लभ्यते । अन्यथा गङ्गाघोषाधिकरणयोः सामानाधिकरण्यासंभवात् । एवमत्रापि जन्मादिकारणमायात्वं न ब्रह्मणः संभवतीति मायाश्रयत्वं लक्ष्यत इत्यर्थः ॥ काकनिलयनत्वस्य तटस्थत्वमुपपादयति **तस्य लक्ष्यान्तर्भाव इति** । काकनिलयनत्वस्य लक्ष्यभूतगृहस्वरूपत्व इत्यर्थः ॥ **यो हि कार्यकारणसङ्घातादिति** । कार्यो देहः कारणानींद्रियाणि । **तत्सङ्घातादिति** । तत्समूहात् । अविविक्तं कृष्णोऽहं काणोऽहं इत्यविभक्तम् ॥ **तत्र यश्चैतन्यधातुरिति** । चैतन्यांश इत्यर्थः । ननु प्रपञ्चस्य सत्यत्वेन तत्करणीभूतमायाया अपि सत्यत्वेन प्रपञ्चकारणीभूतमायाया आश्रयो ब्रह्मेति सूत्रार्थः । कथं न ब्रह्मणः सविशेषत्वमित्यत आह **न च सत्यस्येति** ॥ **यदवष्टम्भ इति** । यद्ब्रह्म अवष्टम्भोऽधिष्ठानं यस्य स तथोक्तः ।

प०— 'भेदेनैव तु' इत्यादिकमवतारयितुं शङ्कामाह **स्यादियमित्यादिनाऽत्रोच्यत इति पर्यन्तेन** ॥ **तटस्थमेवेति** । ब्रह्माश्रितमायागतमेव न ब्रह्मगतमित्यर्थः । यद्वा काकवत्त्वमिवोपलक्षणमेवेत्यर्थः ॥ **लक्षणयेति** । यथा 'सा गङ्गा'इति गङ्गापदं तीरं लक्षणया बोधयति तथा 'तद्ब्रह्म'इत्यत्र तत्पदमपि लक्षणया तदाश्रयं ब्रह्म बोधयतीत्युपपत्तेरित्यर्थः । यद्वा यत्रेत्यत्र यत्पदं गङ्गार्थं सदपि लक्षणया यथा यत्तीर इत्यर्थकं तथा यत इति पदं यदधिष्ठितमायात इत्यर्थकमित्यर्थः ॥ तटस्थलक्षणपरत्वेऽप्यैक्यवाद्यननुकूलत्वमस्य सूत्रस्याशङ्कते **नन्वित्यादिना** ॥ काल्पनिकभेदमाश्रित्य समाधत्ते **मैवमित्यादिना** । कार्येति देहेन्द्रियान्तःकरणादि । कारणमविद्यादोषो रागादिः । ऐक्यप्रातिकूल्यमस्य नेत्युक्त्वा निर्गुणत्वप्रतिकूलतापि नेत्याह **न च सत्यस्येति** । विश्वः समस्तः विवर्तः । अन्यथाप्रतीयमानः प्रपञ्चो यदवष्टम्भो यदधिष्ठानक इत्यर्थः ।

या०— **तर्हीति** । तटस्थलक्षणत्व इत्यर्थः ॥ **यत्र घोष इति** । अत्र यथा तच्छब्दस्य लक्षणया तत्संबन्धाद्गङ्गेत्यर्थो लभ्यते तथा यतो जन्मादि तद्ब्रह्मेत्यत्रापि तदाश्रयो ब्रह्मेत्यर्थलाभ इति भावः ॥ काकनिलयनत्वस्य तटस्थत्वमुपपादयितुं तस्य स्वरूपलक्षणत्वे बाधकमाह **तस्येति** । काकनिलयनत्वस्य लक्ष्यभूतगृहस्वरूपत्व इत्यर्थः ॥ **विवर्तत इति** । एकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासो विवर्तशब्दार्थ इत्याहुः ।

श्री०— **स जीव इति** । विशिष्ट इत्यर्थः । चैतन्यधातुः विशिष्टान्तर्गतं विशेष्यांशरूपचैतन्यमित्यर्थः ॥ ननु त्वद्रीत्यैवास्तु सूत्रार्थः । तथाऽपि सत्यभूतप्रपञ्चकारणीभूता या सत्यभूता माया तदाश्रयत्वे ब्रह्मणः सविशेषत्वं स्यादेवेत्यत आह **सत्यस्येति** ॥ **यदवष्टम्भ इति** । अवष्टम्भः अधिष्ठानम् । विवर्तः कल्पितः । तथाचास्य जन्मादि यतो मायायाः सकाशाद्भवतीत्यस्य विश्वः

समस्तः प्रपञ्चो विवर्तो मायाकल्पित इत्यर्थस्तदाश्रयो ब्रह्मेत्यस्य तदारोपाधिष्ठानमित्यर्थः । एवं च मायाकल्पितप्रपञ्चारोपाधिष्ठानं ब्रह्मेति सूत्रार्थ इति भावः ।

च०—**तर्हि यतोऽस्येति**। तटस्थलक्षणत्वोपगतावीदृग्विन्यासः स्यादित्यर्थः॥ **यत्र घोष इति** । तत्र यथा तत्पदस्य तीरसंनिधिप्रवाहलक्षकता तद्वत्प्रकृतयत्तदोर्नित्यसंबन्धाद्यत्पदसमभिव्याहारलब्धतत्पदस्यापि तदाश्रयलक्षकतया सामञ्जस्यमिति भावः । काकाश्रयत्वस्य तटस्थताप्रतिपिपादयिषया तस्य स्वरूपलक्षणत्वोपगतौ बाधकमभिधत्ते **तस्येति** । काकनिलयनत्वस्य लक्ष्याभिमतगृहरूपत्व इत्यर्थः । यदवष्टम्भः यदधिष्ठानकः । विवर्तः विपर्यासविषयीभूतः । यादृशाधिष्ठानवृत्तिविपर्यासीयविशेष्यतानिरूपितप्रकारतापन्नो विश्वस्तद्ब्रह्मेति फलितार्थः ।

**सु०— अत्रोच्यते। आस्तां तावत्(एषा) प्रपञ्चस्य विवर्तताऽऽदिवार्ता प्रमाणाभावात् प्रकृत्यधिकरणे निराकरिष्यमाणत्वाच्च । तटस्थेन जगज्जन्मादिकारणत्वेनात्र सूत्रे लक्षणया ब्रह्म प्रतिपाद्यत इति कुतोऽङ्गीकरणीयम् । मुख्यार्थासंभवे हि लक्षणाश्रयणं दृष्टम् । न तावद् ब्रह्मणो जगज्जन्मादिकारणत्वस्य बाधकं प्रत्यक्षं तदगोचरत्वात् । नाप्यनुमानम् श्रुतिबाधितत्वात् । नाप्यागमः तस्याक्लिष्टकारित्वाद्यर्थतया सावकाशत्वात् ।**

**नन्वर्थापत्त्येदमवसीयते। जीवब्रह्मणोरेकत्वं तावदावश्यकम् । न च जगज्जन्मादिकारणत्वस्य स्वलक्षणत्वे तत्संभवति । अतोऽन्यथाऽनुपपत्त्या मायागतमेवेदं लक्षणम् । जन्माद्यस्य यतस्तद् ब्रह्मेति लक्षणयोच्यत इति कल्प्यत इति । तत्राह भेदेनैवेति ।**

**अनु०— भेदेनैव तु मुख्यार्थसंभवे लक्षणा कुतः ॥**

**यदि जीवब्रह्मणोरेकत्वपरिरक्षणाय यथाश्रुतं सूत्रार्थं परित्यज्य लक्षणाऽऽश्रीयते तर्हि जीवब्रह्मणोर्भेदेनैवाङ्गीकृतेन सूत्रस्य मुख्यार्थसंभवे लक्षणा कस्मादाश्रयणीया ।**

स०— **मुख्यार्थासंभवे हीति** । कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीति कुण्डपाय्ययनाख्यसत्रे अग्निहोत्रधर्मा लक्ष्यन्ते मासाग्निहोत्रस्य मुख्याग्निहोत्रत्वासंभवात् बाधकात् । न चेह बाधकमस्तीत्यर्थः ॥ अस्तु तर्हि निष्कलमित्यागमो बाधकमित्यत आह **नापीति** ।

प०— 'ब्रह्म न कर्तृ निष्क्रियत्वात्' इत्याद्यनुमानं बाधकमित्यत आह **नाप्यनुमानमिति** । 'निष्कलं निष्क्रियम्' इत्यादिरागमोऽस्तुबाधक इत्यत आह **नाप्यागम इति** ॥ दशमतात्पर्ययुक्तां 'अकर्माक्लिष्टकारित्वात्' इत्यादिस्मृतिं हृदि कृत्वाऽऽह **तस्येति** ॥ **इदमिति** लक्षणस्य तटस्थत्वमित्यर्थः ॥ तामेव दर्शयति **जीवब्रह्मणोरित्यादिना** ।

**श्री०— लक्षणयेति** । तदाश्रयो ब्रह्मेत्यस्य लक्षणया लाभादित्यर्थः ॥ **अनुमानमिति** । ब्रह्म न जगत्कारणं चेतनत्वाद्देवदत्तवदित्यनुमानमित्यर्थः ॥ **श्रुतीति** । यतो वा इमानि । स हि सर्वस्य कर्तेत्यादिश्रुतीत्यर्थः ॥ **आगम इति** । 'निष्कलं निष्क्रियम्'इत्यागम इत्यर्थः । निष्क्रियशब्देन क्रियावेशात्मकत्वरूपकर्तृत्वाभावोक्तेरिति भावः ॥ **अर्थापत्त्येति** । जीवब्रह्मणोरेकत्वस्यावश्यकत्वान्यथाऽनुपपत्त्येत्यर्थः ।

**च०— तस्याक्लिष्टेति** । अकर्माऽक्लिष्टकारित्वादिति दशमतात्पर्योदाहृतस्मृतेरिति भावः ।

**सु० —नन्वभेदमुपादाय सूत्रे लक्षणा वाऽऽश्रयणीया भेदमुपादाय मुख्यवृत्तिर्वेति सन्दिह्यते । वयं तु ब्रूमः द्वितीयः पक्ष एव श्रेयानिति, अप्रामाणिकत्वाज्जीवब्रह्मणोरेकत्वस्य । न (हि)अप्रामाणिकपरिरक्षणाय वाक्यानां जघन्यवृत्तिराश्रीयमाणा क्वचि(दुपलब्धेति)दपि दृष्टेति । तदिदमुक्तं** भेदेनैवेति ।

**सु०— ननु कथं जीवब्रह्मैक्यमप्रामाणिकम् । तत्त्वमसीत्यादिश्रुतिसिद्धमि(त्वादि)ति चेन्न । उपपत्तिपराहतत्वात् । तथा हि । तच्छब्दे(ब्दस्य) मुख्यार्थो यः, 'सदेव सोम्य'इत्यादिना प्रकृतः प्रेक्षापूर्वं तेजोऽबन्नादीनां स्रष्टा सर्वासां प्रजानां मूलमायतनं प्रतिष्ठा च सकलावद्यगन्धविधुरोऽपरिच्छिन्नगुणाकरः परमात्मा, यश्च त्वंपदमुख्यार्थः प्रत्यक्ष(ादि)सिद्धोऽल्पशक्तिः पराधीनो दोषकलुषितोऽवच्छिन्नज्ञानादिगुणः, तावुपादायानेन वाक्येनैक्यमुच्यते, उत विरुद्धभागत्यागेन लक्षणया वा । नाद्यः । परस्परविरोधेन योग्यताविरहे जरद्गवादिवाक्यवदाभासत्वप्रसङ्गात् । द्वितीये दोषमाह** भेदेनैवेति ।

**सिंहो देवदत्त इत्यादिवत्सामानाधिकरण्यमात्रं गौणमुपादाय जीवब्रह्मणोर्भेदे(ना)नैवाङ्गीकृतेन पदद्वयस्य मुख्यार्थ(त्व)संभवे(न) जहदजहल्लक्षणा कुत आश्रयणीयेति ।**

**वा०—** अत्र मूलान्निष्कृष्टदूषणाप्रतीतेस्तद्दर्शयन्नेव लक्षणापक्षस्यैव मूले दूषणात्परानभिमतमपि मुख्यार्थाभेदपरत्वपक्षं प्रसक्ततयोपर्येव विकल्प्य प्रदूष्य च पक्षान्तरे मूलं योजयितुमाह ॥ **उपपत्तीति** ॥ यद्यप्येतत्सत्यत्वाचेनेत्यादिनोक्तमेव तथाऽपि कथं नित्यगुणस्येत्याद्यधिकोक्तेः प्रकृतोपयुक्ततयोक्तार्थस्मरणाच्चापौनरुक्त्यमिति द्रष्टव्यम् ।

**सामानाधिकरण्यमात्रमिति** । विशेष्यविभक्तिसजातीयविशेषणविभक्तिमात्रमित्यर्थः । नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थत्वेन तत्परित्यागेन

सादृश्यार्थोपादाने तस्या एव मुख्यार्थपरित्यागेन गौणत्वप्राप्तेः । एवं च सामानाधिकरण्यस्य गौणत्वेऽपि विभक्तिद्वयबाधेनानेकबाधादत्र मात्रमित्युत्तरत्र द्वयस्येति त्यजेदेकमिति न्यायोक्तिश्चायुक्तेति निरस्तं भवति । अत्र मात्रमिति द्वयस्येति चैकत्वानेकत्वरूपवैलक्षण्योक्तिः । पदद्वयस्येत्यत्र पदशब्दस्य प्रकृत्यर्थकत्वात्सामानाधिकरण्यशब्देन च विशेषणविभक्त्यर्थख्यातत्वात्तदुभयोक्त्या प्रकृतिविशेषणविभक्तिरूपप्राधान्याप्राधान्यरूपतदुक्तिः । अमुख्यवृत्तिरित्येवोभयत्र वक्तव्ये गौणं लक्षणयेत्युक्तिर्गौण्यां सादृश्यस्यान्तर्गणिकभेदे सत्यपि सादृश्यत्वेन रूपेणानुगते तात्पर्यमित्येकार्थघटादिशब्दवत्तात्पर्यविषये द्राग्धीः, लक्षणायां तु क्वचित्संबन्धे तात्पर्यं, क्वचित्तद्द्वारा पूतत्वे, क्वचित्तच्छीतलत्वादाविति वैरूप्यान्नानार्थाक्षादिशब्दवद्विलम्बेन तद्धीरिति गौण्यपेक्षया लक्षणाया जघन्यत्वसूचनाय । एकदेशपरित्यागेनैकदेशान्तरस्वीकारार्थंजहदजहदित्युक्त्या च प्राक् त्यक्तस्य स्वीकारस्त्वदुक्तलक्षणायां, गौणीपक्षे त्वत्यक्तस्य स इति तत्सूचयति । यद्यपि सिंहस्याध्ययनमित्यादौ सिंहप्रातिपदिकस्यैव तत्सादृश्यरूपामुख्यार्थत्वं तथापि समानाधिकरणविशेष्यान्तराभावेनानन्यगत्या तत्र तथात्वेऽपि प्रकृतेऽप्रधानविशेषणविभक्तेरेवामुख्यार्थत्वोपपत्तौ प्रधानामुख्यतास्वीकारस्यानुचितत्वादिति प्रकृताभिप्रायेणैतद्ग्रन्थप्रवर्तनात् । तत्राप्यस्येति विशेष्याध्याहारे चेयमेव गतिः । अत एव सिंहो देवदत्त इत्यादिवदित्युक्तम् । न चाभेदस्यान्वयतया भानान्न विशेषणविभक्त्यर्थत्वमिति वाच्यम् । विशेषणविभक्तेः साधुत्वार्थमङ्गीकृत्यान्वयतयाऽभेदभानाभ्युपगमानौचित्यात् ।

---

अन्यथा राज्ञः पुरुष इत्यत्रापि षष्ठ्याः साधुत्वार्थकताऽऽपत्त्याऽन्वयतयैव संबन्धो भासत इत्यपि स्यात् । चन्द्रिकायां तु शक्यतावच्छेदकेन रूपेणाभेदस्य सामानाधिकरण्यमुख्यार्थत्वाद्गौणार्थतावच्छेदकेन सादृश्येनाभेदस्य तदमुख्यार्थत्वात्तदभिप्रायेण टीकायां सामानाधिकरण्यगौणतोक्तिर्न तु तत्पदादिरूपप्रकृतेर्न सादृश्ये गौणीत्यभिप्रायेणेत्युक्तम् । तत्तु सिंहस्याध्ययनं सिंहो देवदत्त इत्यादावेकरूपतालाभाय टीकोक्तमात्रादिपदास्वारस्यं सोढ्वेति द्रष्टव्यम् । उक्तरीत्या टीकोक्तपक्षस्यातिस्वरसत्वात् । अत एव तर्कताण्डवे एवमेव सुधाभिप्रायवर्णनमिति द्रष्टव्यम् ।

प० — सूत्रस्य मुख्यार्थोक्तिपरतया 'भेदेनैव तु' इति वाक्यं व्याख्याय श्रुतेर्मुख्यार्थत्वोक्तिपरतयापि व्याख्यातुमवतारयति **ननु कथमिति** ॥ तदित्यस्य को मुख्यार्थ इत्यतश्छान्दोग्ये षष्ठे तत्त्वमसीत्यतः पूर्ववाक्ये प्रकृतमाह **सदेवेत्यादिना** ॥ 'तदैक्षत बहुस्यां प्रजायेय' इति 'तत्तेजोऽसृजत' इत्यादिवाक्योक्तमाह **प्रेक्षेति** ॥ 'सन्मूलाः सोम्येमाः सदायतनाः सत्प्रतिष्ठा' इत्यादिनोक्तमाह **सर्वासामिति** । सृष्टिस्थितिमुक्तिकर्ता चेत्यर्थः । तत्सत्यं स आत्माऽनयोरर्थः **सकलेत्यादि** ॥ **गौणमिति** । सादृश्यपरमित्यर्थः । 'सामानाधिकरण्यमात्रं गौणम्' इत्यादेस्तात्पर्यमुक्तं चन्द्रिकायां पृथगुपदेशादित्यधिकरणे । सामानाधिकरण्यमात्रं गौणमित्यस्य, तत्पदं कर्तृत्वादिविशिष्टब्रह्मपरमेव तत्त्वंपदयोः सामानाधिकरण्यं तु

नाभेदपरमिति नाभिप्रायः, अपि तु तत्त्वमसीत्यत्र तत् तत्सदृश इति तत्पदेनैव गौण्या वृत्त्या सादृश्ये लब्धेऽन्योन्यान्वितानेकप्रकृतिनिष्ठैकविभक्तिरूपसामानाधिकरण्यार्थस्य मुख्यस्य तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण ब्रह्माभेदस्य जीवेऽसत्त्वेऽप्यमुख्यस्य चेतनत्वादिरूपेणाभेदस्य सत्त्वात्सामानाधिकरण्येनाऽमुख्याभेदलाभ इत्येवाभिप्राय इति ॥ **जहदजहल्लक्षणेति** । ओहाक् त्यागे त्यजदत्यजल्लक्षणेत्यर्थः । कर्तृत्वादिधर्मांशत्यागाच्चैतन्यांशस्यात्यागादिति भावः ॥

**या०— सकलावद्यगन्धविधुर इति** । इदं च 'तत्सत्यम् । स आत्मा'इत्यत्रत्यसाधुभावार्थकसत्यशब्दतात्पर्यकथनम् ॥ तत्रत्यस्यैवात्मशब्दस्य व्याख्यानम् **अपरिच्छिन्नगुणाकर इति** ॥ तेजोऽबन्नानां स्रष्टृत्वेन लब्धस्य पूर्णशक्तित्वस्य प्रतियोगितयाऽऽह **अल्पशक्तिरिति** ॥ सर्वासां प्रजानां मूलमायतनं प्रतिष्ठा चेत्यनेन लब्धस्यापराधीनत्वस्य प्रतियोगितयोक्तम् **पराधीन इति** ॥ **सिंहो देवदत्त-इत्यादिवदिति** । न चात्र सिंहपद एव गौणी वृत्तिर्न सामानाधिकरण्य इति वाच्यम् अप्रधानप्रत्ययार्थस्वारस्याय प्रधाने प्रातिपदिके गौणीकल्पनस्यान्याय्यत्वादित्यभिप्रायात् । वक्ष्यते चैतत्पृथगधिकरणे ।

**च०— सिंहो देवदत्त इत्यादिवदिति** । अत्र सामानाधिकरण्यमात्रमिति विशेष्यविभक्तिसजातीयविशेषणविभक्तिमात्रमित्यर्थः । नीलं घटमानयेत्यादौ विशेष्यविभक्त्या कर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थत्वेन तत्परित्यागेन सादृश्यार्थोपादाने तस्या एव मुख्यार्थपरित्यागेन गौणत्वप्राप्तेः। एवं च सामानाधिकरण्यस्य गौणत्वेऽपि विभक्तिद्वयबाधनानेकबाधादत्र मात्रमिति उत्तरत्र द्वयस्येति त्यजेदेकमिति न्यायोक्तिश्चायुक्तेति निरस्तं भवति । अत्र मात्रमिति द्वयस्येति चैकत्वानेकत्वरूपवैलक्षण्योक्तिः पदद्वयस्येत्यत्र पदशब्दस्य प्रकृत्यर्थकत्वात्सामानाधिकरण्यशब्देन च विशेषणविभक्तेर्व्याख्यातत्वात्तदुभयोक्त्या प्रकृतिविशेषणविभक्तिरूपप्राधान्याप्राधान्यरूपतदुक्तिः अमुख्यवृत्तिरित्येवोभयत्र वक्तव्ये गौणं लक्षणेत्युक्तिः गौण्याः सादृश्यस्यान्तर्गणिकभेदे सत्यपि सादृश्यत्वेन रूपेणानुगते तात्पर्यमित्येकार्थघटादिशब्दतात्पर्यविषये द्राक्धीः । लक्षणायां तु क्वचित् संबन्धे तात्पर्यं क्वचित्तद्वारा पूतत्वे क्वचिच्छीतलत्वादाविति वैरूप्यान्नानार्थाक्षादिशब्दवद्विलम्बेन तद्धीरिति गौण्यपेक्षया लक्षणाया जघन्यत्वसूचनया एकदेशपरित्यागेनैकदेशान्तरस्वीकारार्थकजहदजहदित्युक्त्या च प्राक्त्यक्तस्य स्वीकारस्त्वदुक्तलक्षणायां गौणीपक्षे त्वत्यक्तस्य स इति तत्सूचयति । यद्यपि सिंहस्याध्ययनमित्यादौ सिंहप्रातिपदिकस्यैव तत्सादृश्यरूपामुख्यार्थत्वं तथापि समानाधिकरणविशेष्यान्तराभावेनान्यगत्या तत्र तथात्वेपि प्रकृतेऽप्रधानविशेषणविभक्तेरेवामुख्यार्थत्वोपपत्तौ प्रधानामुख्यतास्वीकारस्यानुचितत्वादिति प्रकृताभिप्रायेणैतद्ग्रन्थप्रवर्तनात् । तत्राप्यस्येति विशेष्याध्याहारे चेयमेव गतिः । अत एव सिंहो देवदत्त इत्यादिवदित्युक्तम् । न चाभेदस्यान्वयतया भानात्, न विशेषणविभक्त्यर्थत्वमिति वाच्यम् । विशेषणविभक्तेः साधुत्वार्थत्वमङ्गीकृत्यान्वय-

तयाऽभेदभानाभ्युपगमानौचित्यात् । अन्यथा राज्ञः पुरुष इत्यत्रापि षष्ठ्याः साधुत्वार्थकताऽपष्ठ्याऽन्वयतयैव संबन्धो भासत इत्यपि स्यात् ॥ चन्द्रिकायां तु शक्यतावच्छेदकेन रूपेणाभेदस्य सामानाधिकरण्यमुख्यार्थत्वात् गौणार्थतावच्छेदकेन सादृश्येनाभेदस्य तदमुख्यार्थत्वात्तदभिप्रायेण टीकायां सामानाधिकरण्यगौणतोक्तिर्न तु तत्पदादिरूपप्रकृतेः न सादृश्ये गौणीत्यभिप्रायेणेत्युक्तम् । तत्तु सिंहस्याध्ययनं सिंहो देवदत्त इत्यादावेकरूपतालाभाय टीकोक्तमात्रादिपदास्वारस्यं सोढ्वेति द्रष्टव्यम् । उक्तरीत्या टीकोक्तपक्षस्यातिस्वरसत्वात् । अत एव तर्कताण्डवे एवमेव सुधाभिप्रायवर्णनमिति द्रष्टव्यमिति वाक्यार्थचन्द्रिकाकृतां निरूढपन्थाः । सिंहो देवदत्त इत्यादिवदिति । न चात्र सिंहपद एव गौणीवृत्तिर्न सामानाधिकरण्य इति वाच्यम् अप्रधानप्रत्ययार्थस्वारस्येन प्रधाने प्रातिपदिके गौणीकल्पनस्यान्याय्यत्वादित्यभिप्रायात् । वक्ष्यते चैतत् पृथगधिकरणे ।

**सु०— ननु किं सामानाधिकरण्यं मुख्यमुपादाय तत्त्वंपदयोर्लाक्षणिकत्वं व्याख्येयम् । किंवा सामानाधिकरण्यं गौणं गृहीत्वा तत्त्वंपदयोर्मुख्यार्थता व्याख्यातव्येति सन्देहे न विनिगमनायां हेतुरस्ति । न नास्ति । त्यजेदेकं कुलस्यार्थे इति न्यायस्य विद्यमानत्वात् । तात्पर्यलिङ्गानां तत्र तत्र भेद एवानुगुण्यस्य व्युत्पादितत्वात् । तदिदमुक्तं भेदेनैवेति ।**

वा०— अत्राप्येवकारसूचितन्यायप्रदर्शनाय तन्निवर्त्यां शङ्कामुत्थापयति **नन्विति** ॥ (**तात्पर्यलिङ्गैरिति** ॥ 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इत्युक्तैरित्यर्थः ।) ननु तात्पर्यलिङ्गैस्तत्त्वमसीत्यस्याभेदपरत्वे निर्णीते कथं न्यायमात्रेण भेदपरत्वमित्यतः एकविज्ञानेन सर्वविज्ञानरूपस्यैकमेवाद्वितीयमित्यादेश्चोपक्रमस्य स्वपरपक्षानुगुण्यानानुगुण्ययोः प्रकृत्यधिकरणे निपुणतरं प्रतिपादयिष्यमाणत्वात् । ऐतदात्म्यमित्याद्युपसंहारस्य तत्त्वमसीत्येतत्तुल्ययोगक्षेमत्वात्तत्त्वमसीत्यभ्यासस्य च सत्यत्वाचेनेति पूर्वत्रात्र पृथगधिकरणे च तयोः (तयोरिति । स्वपरपक्षानुगुण्यानानुगुण्ययोरित्यर्थः । एवमुत्तरत्र ।) प्रतिपादनादपूर्वतायाश्च पूर्वत्र 'न च मानान्तरोपेय'मित्याद्युत्तरत्र तयोः प्रतिपादनात् 'सम्पत्स्यत' इति 'तस्य तावदेव चिरमि'ति फलार्थवादयोर्भेद एव स्वारस्यस्य स्पष्टत्वात्तत्त्वमसीत्यस्य परोक्तार्थे उपपत्तिविरोधस्य स्वोक्तार्थे तदानुगुण्यस्य चानेकस्थलेषु व्युत्पादनान्न तद्बलादभेदपरत्वं युक्तमित्याशयेनाह **तात्पर्येति** ।

स०— **त्यजेदेकं कुलस्यार्थे इति** । यथा प्रामाणिकानेकपरिरक्षणायाप्रयोजकस्यैकस्य परित्यागस्तथा प्रामाणिकभेदपरिरक्षणाय सामानाधिकरण्यं गौणमङ्गीकृत्य तत्त्वंपदयोर्मुख्यार्थता ॥ व्याख्यातव्येति विनिगमनमस्तीति भावः । नचैक्य एव तात्पर्यलिङ्गानामानुगुण्यस्य सत्वेन तस्यैव प्रामाणिकत्वात्तत्परिरक्षणाय वैपरीत्यं कुतो न व्याख्येयमित्यत आह **तात्पर्यलिङ्गानामिति** ।

प० — तत्रतत्रेति । तत्वनिर्णयादौ ।

या० — त्यजेदेकमिति । इदमुपलक्षणम् । प्रत्ययापेक्षया प्रातिपदिकस्य प्राधान्यमपि विनिगमकं द्रष्टव्यम् । न च सामानाधिकरण्यस्याप्यनेकविभक्तिरूपत्वेन कथमेकत्वमिति वाच्यम् प्रातिपदिकद्वयनिष्ठत्वेन ज्ञातैकविभक्तेरेवाभेदबोधकत्वेन सामानाधिकरण्यशब्दार्थत्वात् अत एवोक्तं ब्रह्मतर्के 'नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः । ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति' इति । केचित्तु नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थकत्वेन सामानाधिकरण्यरूपत्वात्सर्वत्राप्येवमित्यभिप्रेत्यैतदुक्तमित्याहुः ।

च० — त्यजेदेकमिति । इदमुपलक्षणं प्रत्ययापेक्षया प्रातिपदिकस्य प्राधान्यमपि विनिगमकं द्रष्टव्यम् । न च सामानाधिकरण्यस्याप्यनेकविभक्तिरूपत्वेन कथमेकत्वमिति वाच्यम् । प्रातिपदिकद्वयनिष्ठत्वेन ज्ञातैकविभक्तेरेवाभेदबोधकत्वेन सामानाधिकरण्यशब्दार्थत्वात् । अत एवोक्तं ब्रह्मतर्के । 'नामादि प्राणपर्यन्तमुभयोः प्रथमात्वतः । ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति'इतीत्यपि व्याकुर्वते । नामादि प्राणपर्यन्तमिति ब्रह्मतर्कवचन उभयोरेकप्रथमाप्रकृतित्वानभिधानेन तदपि प्रातिपदिकद्वयप्रकृतिकैकविभक्तिरित्यर्थे नोपोद्बलकम् । चन्द्रिकायां "लक्षणावृत्तौ हीत्यादिना । परमते पदद्वयलक्षणा । मम तु तत्पदमात्रे गौणी । तत्राल्पबाधेनैवोपपत्तौ बहुबाधोऽन्याय्य इति भावः । टीकायां सामानाधिकरण्यस्य गौणत्वोक्तेस्तत्पदं सर्वकर्तृत्वादिविशिष्टब्रह्मपरमेव । तत्वंपदयोः सामानाधिकरण्यं तु नाभेदपरं किं तु सादृश्यपरमिति नाभिप्रायः । सिंहस्याध्ययनमित्यादौ सामानाधिकरण्याभावेऽपि सिंहप्रातिपदिकस्यैव सदृशे गौणत्वात् । सन्न्यायरत्नावल्यां तत्वमसीत्यत्र जगत्स्रष्टृपरामर्शिनस्तच्छब्दस्यैव त्वंशब्दवाच्ये गौणवृत्त्याश्रयणेन तत्वंपदयोरुभयोरपि लक्षणाश्रयणस्य पराहतत्वादित्युक्तत्वाच्च । अपि तु तत्पदेनैव गौणवृत्त्या सादृश्ये लब्धे परस्परान्वितानेकप्रातिपदिकनिष्ठैकविभक्तिरूपसामानाधिकरण्यार्थस्य मुख्यस्य तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण ब्रह्माभेदस्य जीवेऽसत्वेऽपि अमुख्यस्य चेतनत्वादिरूपेणाभेदस्य सत्वात् सामानाधिकरण्येनाभेदलाभ इत्येवाभिप्रायः । अस्ति सिंहश्चैत्र इत्यत्रापि चैत्रे सिंहत्वेन रूपेण सिंहाभेदाभावेऽपि शूरत्वेन तदभेदः । एतदेवाभिप्रेत्यानुव्याख्याने 'अतोऽभेदवदेवैताः श्रुतयः प्रवदन्ति हि । पौराणानि च वाक्यानि सादृश्याभेदसंश्रया'दिति । 'चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते । अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचिदि'ति चोक्तं यद्यपि तच्छब्दस्य तत्सदृशेऽर्थे सति तस्य गौणार्थतावच्छेदकेन सादृश्येनैव रूपेण त्वंपदार्थजीवाभेदो मुख्य एव । तथापि शक्यतावच्छेदकेन ब्रह्मत्वेनाभेदो न मुख्य एवेति द्रष्टव्यमि"ति व्याख्यातम्। तत्तु टीकोक्तमात्रादिपदास्वारस्यापादकमित्यभिसन्दधाना एव तर्कताण्डवे। "अत्रोक्तं सुधायाम् । 'अतोऽभेदवदेवैताः श्रुतयः प्रवदन्ति हि । पौराणानि च वाक्यानि सादृश्या-

भेदसंश्रयादित्यनुव्याख्यानव्याख्यावसरे ''तत्वमसीत्यत्र गौणी चेत्प्रधानं पदद्वयं मुख्यार्थं सामानाधिकरण्यमात्रे सादृश्ये जघन्या । लक्षणा चेत्पदद्वयं अमुख्यार्थम् । सामानाधिकरण्यमात्रं मुख्यमिति प्रधानबाधादनेकबाधाच्च लक्षणा जघन्येति । अयं च न्यायो यद्यपि तत्वमसीत्यादिवाक्य एव सिंहश्चैत्र इत्यत्र सिंहसंबन्धिनि सिंहसदृशे चैत्रे लक्षणा चेत्सिंहप्रातिपदिकस्यैव बाधेनानेकबाधाभावात् । तथाप्येकस्यापि प्रधानस्य बाधात्तत्रापि लक्षणा जघन्येति ज्ञेयम् । न च सामानाधिकरण्यबाधेऽप्यनेकविभक्तिबाध इति वाच्यम् । नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थकत्वेन तन्मात्रबाधात् । बहुत्वप्रयुक्तबलादपि स्वभावप्रयुक्तबलस्य बलवत्वाच्च प्रातिपदिकप्राधान्यं च प्रयाजशेषेणेत्यादौ सिद्धम् । न च लक्षणायामपि गङ्गापदं मुख्यार्थमेव सप्तम्येव प्रवाहस्यैव परम्परया घोषाधारतायाममुख्येति वाच्यम् । प्रवाहस्य परम्परयापि अनाधारत्वात् । तीराधारताया एवाभिप्रेतत्वाच्च । अनुव्याख्यानोक्तं सादृश्यस्य गौणाभेदत्वं तु चैत्रे शूरत्वेन सिंहाभेदे सत्यपि औत्सर्गिकस्य पदार्थतावच्छेदकसिंहत्वेनाभेदस्याभावात् । उक्तं ह्यनुव्याख्याने । चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते । अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचित्''इति । सन्न्यायरत्नावल्यां तु तत्त्वमसीत्यत्रापि जगत्स्रष्टृपरामर्शिनस्तच्छब्दस्यैव त्वंशब्दवाच्ये जीवे गौणवृत्त्याश्रयणेन तत्वंपदयोरुभयोरपि लक्षणाश्रयणस्य पराहतत्वादिति तत्पदस्यैव गौणत्वमुक्तं तदपि तत्त्वमसीत्यादि प्रस्तुतपरमेव फलतः सुधोक्तसादृश्याभेदपर्यवसितं च । सुधायामपि सिंहस्याध्ययनमित्यादौ सामानाधिकरण्याभावात् सिंहप्रातिपदिकमेव सदृशे गौणमि''त्यन्तेन सौधसामानाधिकरण्यमात्रमिति विन्यासस्रामंजस्यं संपादयन्तः, सति सामानाधिकरण्ये तस्यैव गौणीवृत्तिस्तदभावस्थले च प्रातिपदिकस्येति सिद्धान्तम् प्रातिष्ठिपन् । तत्र च 'नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थकत्वेन तन्मात्रबाधात्'इत्यादिग्रन्थेन सामानाधिकरण्यस्थले विशेषणविशेष्यवाचकप्रकृतिकविभक्तिभेद एव तर्कताण्डवादिसौवाकरसिद्धः भाष्यकैय्यटदीधित्यादितन्त्रान्तरसिद्धश्चेत्यवसेयम् ।

**सु० — किञ्च विरोध्याकारपरित्यागेन स्वरूपमात्रलक्षणया 'तत्त्वमसि' इति वाक्यं जीवब्रह्मणोरेकत्वं प्रतिपादयतीत्यत्र विरोध्याकारपरित्यागो नाम न तावदविवक्षामात्रमित्युक्तं प्राक् ॥ अथ सोऽयं देवदत्त इत्यादिवद्विरोध्याकारस्यानित्यत्वम् ।** तत्राह कथमिति ।

अनु० — कथं नित्यगुणस्यास्य स्यादैक्यं गुणहानतः ॥

**नित्यगुणत्वं चेश्वरस्य लिङ्गपादे साधयिष्यते । अस्येश्वरस्येत्युपलक्षणम् । जीवेऽपि पारतन्त्र्यादिदोषाणां नित्यत्वात् । यथोक्तं पुराणे 'अल्पशक्तिरसार्वज्ञम्' इति ।**

वा० — **प्रागिति** । सत्यत्वात्तेनेत्येतद्व्याख्यावसर इत्यर्थः । एवं च तत्प्रकारस्यात्राप्युपलक्षणेन बोद्धव्यत्वान्न भाष्ये न्यूनतेति भावः ॥ **नित्यगुणत्वं चेति** । 'ज्ञानं नित्यमि'त्यादिप्रमाणोदाहरणेन 'नित्यत्वादि'त्यादिना बाधकपरिहारेण चेत्यर्थः ॥ जीवस्यापि प्रकृतत्वेऽप्यस्येत्येकवचनादीश्वरस्य गुणित्वेन जीवस्य च दोषित्वेन नित्यगुणस्येत्यनुसाराद् गुणशब्दस्य धर्ममात्रपरत्वेऽपीश्वरधर्मनित्यताया उपपादयिष्यमाणत्वेन नित्यगुणस्येति सिद्धवदुक्तिसम्भवाच्चास्येत्येतदीश्वरमात्रपरतया व्याख्याय तर्हि जीवगुणहानेन नित्यगुणस्यापीश्वरस्य न जीवैक्यानुपपत्तिरित्यतोऽस्येत्यस्य जीवोपलक्षणतां दर्शयंस्तद्दोषनित्यतोपपादकं च दर्शयति **अस्येश्वरस्येति** ॥ पुराणे महाविष्णुपुराणे । तद्वाक्यं पठति **अल्पशक्तिरसार्वज्ञमिति** । पारतन्त्र्यमपूर्णता । 'उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः । 'स्वाभाविकं तयोरेतन्नान्यथा स्यात्कदाचन । वदन्ति शाश्वतावेतावत एव महाजनाः ॥' इति तद्वाक्यशेषः ।

स० —**अल्पशक्तिरसार्वज्ञ्यमितीति** । 'अल्पशक्तिरसार्वज्ञ्यं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः । स्वाभाविकं तयोरेतन्नान्यथा स्यात्कदाचन ॥ वदन्ति शाश्वतावेतावत एव महाजनाः ॥' इति महाविष्णुपुराणे यथोक्तमित्यर्थः ॥

प० — **प्रागिति** । प्रथमाधिकरणे 'सत्यत्वात्तेन दुःखादेः' इत्यादिव्याख्यानावसरे ॥ **लिङ्गपाद इति** । 'ज्ञानं नित्यं क्रिया नित्या' इत्यादिनोत्तरपादे साधयिष्यत इत्यर्थः ॥ **पुराण इति** । 'अल्पशक्तिरसार्वज्ञ्यं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः । १ । स्वाभाविकं तयोरेतन्नान्यथा तु कथञ्चन ।' इति द्वितीयगीतातात्पर्योक्तमहाविष्णुपुराण इत्यर्थः ।

या० — **प्रागिति** । प्रथमाधिकरण इत्यर्थः ॥ **अल्पशक्तिरिति** । 'अल्पशक्तिरसार्वज्ञ्यं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ॥ स्वाभाविकं तयोरेतन्नान्यथा स्यात्कदाचन । वदन्ति शाश्वतावेतावत एव महाजनाः ॥' इति विष्णुपुराण इत्यर्थः ।

श्री० — **सोऽयं देवदत्त इतिवदिति** । तद्देशकालविशिष्टैतद्देशकालविशिष्टयोरैक्यायोगाद्विरोध्याकारपरित्यागेनैक्यं बोध्यते । तत्र विरोध्याकारपरित्यागो नामानित्यत्वमेवेत्याशयः ॥ **लिङ्गपादे** 'ज्ञानं नित्यं क्रिया नित्ये'त्युत्तरपादे ॥

च० — **प्रागिति** । 'जिज्ञासानये सत्यत्वात्तेन' इति प्रतीकव्याख्यावसर इत्यर्थः ॥ **अल्पशक्तिरिति** । 'अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः । स्वाभाविकं तयोरेतन्नान्यथा स्यात् कदाचन । वदन्ति शाश्वतावेतावत एव महाजनाः ॥' इति महाविष्णुपुराणे अभिहितमित्यर्थः ।

सु०— ननु च विरोध्याकारपरित्यागेन जीवस्य ब्रह्मैक्यमित्यस्यार्थो न विरोध्याकाराविवक्षामात्रेणेति नाप्यनित्यत्वेनेति । किन्तु निर्गुणेन ब्रह्मणा जीवस्यैक्यमित्येवेति चेन्न । निर्गुण(त्व)स्यैव निरूपयितुमशक्यत्वात् । तथा हि । तन्निर्गुणं किं सगुणादीश्वराद्भिन्नमुताभिन्नम्(वा) । द्वितीये तस्यापि सगुणत्वप्रसङ्गेन निर्गुणत्वव्याघातः । आद्ये दोषमाह सदैवेति ।

अनु०— सदैव गुणवत्त्वेऽस्य भिन्नं स्यान्निर्गुणं सदा ॥

यदि निर्गुणं सगुणादत्यन्तभिन्नं तर्ह्यस्य सगुणस्य नित्यं सगुणत्वात्तस्मान्नित्यमेव निर्गुणं भिन्नं प्रसज्येत । तथा च न कदाचिदपि कैवल्यं स्यादिति ।

वा०— नन्वविवक्षाऽनित्यत्वपक्षयोर्दूषितत्वान्मिथ्यात्वपक्षस्य च न चेत्यादिना दूषयिष्यमाणत्वात्सदैवेत्युत्तरमूलं व्यर्थमित्यतोऽत्र मूलोक्तस्य सगुणस्य सदा सगुणत्वात्सगुणान्नित्यमेव निर्गुणं भिन्नं स्यादिति दूषणस्य निर्गुणं सगुणादत्यन्तभिन्नमिति पक्ष एव सम्भवात्तत्कल्पप्रसक्तेश्च निर्गुणेन जीवैक्यमिति पराभिप्रायं विनाऽसंभवात् । तत्र च निर्गुणं सगुणाभिन्नमिति प्रसक्तपक्षान्तरस्य च स्पष्टदूषणतया न चेत्यादिवक्ष्यमाणरीत्या तद्दूषणलाभाच्च भाष्यकारेणोपेक्षणाद्गूढाभिसन्धेः परस्य निर्गुणेन जीवैक्यमिति पक्षनिरासाभिप्रायोऽन्वयनान्नासङ्गतिरित्याशयेनोत्तरमूलमवतारयति नेति ॥ अत एव तदनुकूलमापादकमध्याहरति यदीति ॥ गुणवत्त्व इत्यस्यापादकसमर्पकताभ्रान्तिं वारयितुं गुणवत्त्व इत्यस्य सतिसप्तमीत्वमभिप्रेत्य तदभिप्रायमाह सगुणत्वादिति ॥ आपाद्यस्यानिष्टतां दर्शयितुं योग्यं तत्फलमापाद्यमध्याहरति तथा चेति ।

या०— गूढाभिसन्धिराह किन्तु निर्गुणेनेति । तथा च मिथ्यात्वेनैव गुणानां परित्याग इति भावः ॥ कैवल्यमिति । अद्वितीयब्रह्मावस्थानरूपमित्यर्थः ।

श्री०— इत्येवेति । तथाच विरोध्याकारपरित्यागो नाम तस्य मिथ्यात्वमेवेत्याशयः । कैवल्यं निर्गुणब्रह्मभावरूपम् ॥

च०— कैवल्यमिति । अद्वितीयब्रह्मतादात्म्यापत्तिरूपमित्यर्थः ।

सु०—ननु स्वभावतो निर्गुणमेवारोपितैर्मिथ्यागुणैः सगुणमिति बालैरभिलप्यते । आरोपितनीलिम्ना गगनमिव नीलत्वेन । आरोपप्रवाहस्य चानादिनित्यतया सदा सगुणत्वं च नानिष्टम् । तथा च मिथ्याभूतविरोध्याकारपरित्यागेनैक्योपदेशोऽपि नानुपपन्नः । नीरूपं गगनमिति यथा । यथा वा यदिदं रजतं सा शुक्तिरित्येवं परेण स्वाभिसन्धावुद्घाटिते सत्याह न चेति ।

अनु० — न च मिथ्यागुणत्वं स्यादनिर्वाच्यस्य दूषणात् ॥

**मिथ्येत्यसदुच्यतेऽनिर्वचनीयं वा । नाद्यः । अनङ्गीकारात् । न द्वितीयः । अनिर्वाच्यस्य प्रथमसूत्र एव निराकृतत्वात् । अतो गुणराहित्यलक्षणं निर्गुणत्वं न सर्वथा शक्यनिरूपणम् ।**

**ननु गुणादिपञ्चकस्य निर्गुणत्वं पदार्थविदो मन्यन्ते । मन्यन्ताम् । न हीदानीं निर्गुणवस्तुनिराकरणं प्रस्तुतम् । किं नामाद्वैतिना निर्गुणं ब्रह्म निरूपयितुमशक्यमिति । गुणशब्देना(चा)त्र धर्ममात्रं प्रकृतम् । तद्गुणादिष्वपि सर्वसंमतम् । गुणादीनां च सगुणत्वं परमाण्वारम्भनिरासे वक्ष्यते ।**

**ननु (च) 'साक्षी चेता केवलो निर्गुणश्च' इति निर्गुणं ब्रह्म श्रूयते । मैवम् । उक्तानुपपत्तिपराहतत्वेनार्थान्तरपरत्वात् । अन्यथा साक्षित्वादीनामपि धर्मत्वाद्व्याघातश्च । साक्षाद्द्रष्टा हि साक्षी । यथाऽऽह पाणिनिः । साक्षाद्द्रष्टरि संज्ञायामिति ।**

वा० — न चेत्यादि न पक्षान्तरनिराकरणं किन्तु सामान्योक्त्यभिसन्ध्युद्घाटनेन निर्गुणं सगुणाभिन्नमिति द्वितीयपक्षाङ्गीकारेण तत्रोक्तदूषणे परेण निरस्ते तन्निराकरणमित्याशयेनावतारयति **नन्विति** । अत्र स्वभावतो मिथ्यागुणैरिति व्याघातपरिहारः । असद्गुणैः सगुणत्वानुपपत्तिरित्यत उक्तमारोपितैरिति ॥ आरोपमात्रेणापि तद्वत्त्वमसंभावितमित्यतः संभावककथनम् **आरोपितेति** । आरोपस्य कादाचित्कत्वाद् गुणनित्यताप्रतिपादकश्रुतिविरोध इत्यत उक्तमारोपितेति ॥ तर्हि निर्गुणस्य गुणानां मिथ्यात्वे भेदप्रसक्तेरभावादैक्योपदेशवैयर्थ्यमित्यत उक्तं **तथा चेति** । अत्रापि संभावककथनं **नीरूपमिति** ॥ ननु नायमैक्योपदेशोऽपि तु गगने रूपाभावप्रतीतिमात्रमित्यतः प्रकृतोपयोगितया संप्रतिपन्नं दृष्टान्तमाह **यथा वेति** । यद्वा । विरोध्याकारनिवृत्तेरपि तत्र भानादैक्योपदेशमात्रे पूर्वदृष्टान्तः । विरोध्यैक्योपदेशवत्प्रतीयमानविरोध्याकारपरित्यागेन विशेष्यैक्योपदेशो द्वितीयो दृष्टान्त इति द्रष्टव्यम् ॥ निर्गुणेन ब्रह्मणा जीवैक्यमिति परकीयसामान्योक्तेः प्रसक्तिमात्रेण पक्षान्तरमस्माभिर्निरस्तम् । वस्तुतस्तु तथोक्तेरयमेवाभिप्राय इति सूचयति **स्वाभिसन्धाविति** । पराभिमतद्वितीयपक्षप्राप्तदूषणनिरासकस्यापि न चेति मूलनिवर्त्यमिथ्यात्वपक्षस्य सदेवेत्याद्यपक्षदूषणनिरासकत्वस्यापि संभवात्तदानन्तर्यं न चेति मूलस्य नानुपपन्नम् । अनेनाविवक्षादिपक्षनिराकरणमपि प्रसक्तिमात्रेणेति सूचितं भवति ॥ ननु निर्गुणस्वरूपनिराकरणं पदार्थविन्मतविरुद्धमिति गूढाभिसन्धिः शङ्कते **नन्विति** ॥ निर्गुणमात्रनिरासे तन्मतविरोधेऽपि निर्गुणब्रह्मनिरासे न तन्मतविरोध इति तथैवोत्तरमाह **न हीति** ॥ ननु निरासकन्यायतौल्ये तन्निरासोऽपि प्राप्त एव, तत्परिहारोपाय एव च ममापीति पराशयं ज्ञात्वा तथापि वैलक्षण्यान्नानु-

पपत्तिपरिहारसाम्यमित्याशयेनाह **गुणशब्देनेति** ॥ वस्तुगतिमनुरुद्ध्येदं मतवैलक्षण्यमुपपादितं तदभिप्रेतं निर्गुणत्वं चाप्रामाणिकमेवेत्याह **गुणादीनां चेति** ।

**प०— कैवल्यमिति** । केवलत्वं निर्गुणभाव इति यावत् । सगुणस्येत्यनुकर्षः ॥ **बालैरिति** । विशेषानभिज्ञैरित्यर्थः ॥ गुणराहित्यलक्षणं निर्गुणत्वमित्यस्य वैशेषिकपरिभाषितगुणशून्यत्वमर्थ इति मन्वानो मन्दः शङ्कते **गुणादिपञ्चकस्येति** । गुणकर्मसामान्यविशेषसमवायरूपपञ्चकस्य । पदार्थविदो नैयायिकाः ॥ **शक्यमितीति** । प्रस्तुतमित्यनुकर्षः । अत्रेदानीम् अभिमतं निर्गुणत्वं गुणादिपञ्चकेऽपि नेत्याह **गुणशब्देनेति** । पारिभाषिकरूपादिचतुर्विंशतिगुणराहित्यमपि नेत्याह **गुणादीनां चेति** । वैशेषिकाधिकरणे समयपादे वक्ष्यत इत्यर्थः ॥ **उक्तानुपपत्तीति** । निर्गुणस्यैव निरूपयितुमशक्यत्वादित्यादिनोक्तानुपपत्तीत्यर्थः । यद्वा 'न च मिथ्यागुणत्वं स्यादनिर्वाच्यस्य दूषणात्'इत्युक्तानुपपत्तीत्यर्थः ॥ **अर्थान्तरेति** । प्राकृतगुणराहित्यरूपार्थान्तरत्वादित्यर्थः । व्याख्यातैषा श्रुतिः कर्मनिर्णयटीकायाम् ॥ **अन्यथेति** । धर्मसामान्यनिषेधे ॥ **यथाऽऽहेति** । पञ्चमस्य द्वितीयपादे 'साक्षाद्द्रष्टरि' इति साक्षाच्छब्दरूपादव्ययाद्द्रष्ट्रर्थे संज्ञायां विषये इनिप्रत्यये 'अव्ययानां भमात्रे टिलोपः' इति टिलोपश्च भवतीत्यर्थः ।

**या०— द्वितीयं** पक्षमङ्गीकृत्य तत्रोक्तं विरोधं परिहर्तुं शङ्कते **नन्विति** ॥ विरोध्याकारबाधदशायामैक्योपदेशमुदाहरति **नीरूपमिति** ॥ तदबाधदशायां तमुदाहरति **यथा वेति** । रजतं रजततया तव प्रतीयमानं सा शुक्तिरेवेति भ्रान्तं प्रति कश्चिदाप्त उपदिशतीत्यर्थः ॥ निर्गुणब्रह्मनिराकरणमुपसंहरति **अत इति** । अत्र गुणराहित्यलक्षणमित्युक्तिर्गुणशब्दोदितसकलशुभराहित्यलक्षणमासुरत्वमेव निर्गुणत्वं परिशेषेण साधयितुं प्रसक्तप्रतिषेधायेति ज्ञातव्यम् । यद्वा । तत्त्वमसीति श्रौतैक्यनिर्देशस्य नीरूपं गगनमिति दृष्टान्तः । जन्माद्यस्येति सौत्रैक्योपदेशस्य वक्ष्यमाणरीत्या यथा वेति द्वितीयो दृष्टान्तः । एवमग्रे धर्मराहित्यलक्षणमित्युक्तेरपि प्रयोजनं ज्ञेयम् ॥ **सर्वथेति** । तदाश्रयस्य सगुणस्य निर्गुणस्य वा ब्रह्मणो वक्तुमशक्यत्वादित्यर्थः ।

ननु माऽस्तु सगुणस्य तद्भिन्ननिर्गुणस्य वा ब्रह्मणस्तदाश्रयत्वम् तथाऽपि गुणादिपञ्चकमेव तदाश्रयो भविष्यतीत्याशयेन प्रकृतमनालोचयन्मन्दः शङ्कते **ननु गुणादिपञ्चकस्येति** ॥ **न हीति** । गुणशब्देन वैशेषिकाभिमतगुणविवक्षायां तद्राहित्यरूपं निर्गुणत्वं ब्रह्मणि न संभवतीत्येव ब्रूमो न क्वापि तन्न संभवतीति । येन गुणादिपञ्चकोदाहरणं सङ्गतं स्यादिति भावः ॥ अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु गुणशब्देन धर्ममात्रमेव विवक्षणीयम् ॥ सदेव सोम्येत्यादिना प्रकृततेजोऽन्नादिस्रष्टृत्वादिरूपधर्मजातस्यैव तच्छब्दपरामर्शविषयतया प्रकृतत्वाद्धर्मराहित्यरूपं च निर्गुणत्वं न

क्कापि संभवति गुणादेरपि सधर्मकत्वात्; इत्याह **गुणशब्देन चात्रेति** ॥ गुणशब्देन वैशेषिकाभिमत-गुणविवक्षायामपि तद्राहित्यरूपं निर्गुणत्वं न क्कापि संभवति ॥ गुणादिपञ्चकस्यापि सङ्ख्यापृथक्त्वादि-रूपगुणवत्त्वस्य वैशेषिकपरीक्षायां वक्ष्यमाणत्वादित्याह **गुणादीनां चेति** ॥

**साक्षाद्रष्टरीति** । साक्षाच्छब्दोऽव्ययम् । तस्मादिनिप्रत्ययो भवति । द्रष्टरि वाच्ये संज्ञाग्रहण-मभिधेयनियमार्थम् । तथा च साक्षीत्युपद्रष्टैवोच्यते न दाता न गृहीता चेति सूत्रार्थः । अत्र च प्रकृतिवदनुकरणं भवतीति सूत्रे पञ्चम्यलुक् । उदाहरणे च 'अव्ययानां भमात्रे टिलोपः' इति ज्ञेयम् ॥

**श्री०— नीलत्वेनेति** । तेन वास्तवं नीरूपत्वं न विहन्यत इति भावः ॥ **नीरूपमिति** । आरोपितनैल्याकारपरित्यागानन्तरं विचार्यमाणे नीरूपमित्यर्थः ॥ **सा शुक्तिरिति** । आरोपितरजताकार-परित्यागानन्तरं विचार्यमाणे शुक्तिरेवेत्यर्थः ॥ **साक्षाद्रष्टरीति** । साक्षाच्छब्दाद्द्रष्टर्यभिधेये इनिप्रत्यये 'अव्ययानां भमात्रे टिलोपः' इति भसंज्ञकस्य टि**भूतस्य आत् इ** यस्य लोपे साक्ष् इन् साक्षिन् इति 'नकारान्तं प्रातिपदिकं द्रष्टव्यम् ।

**च०—** अभिन्नत्वकल्पमुपेत्य तत्रोक्तक्षत्यपनिनीषया शङ्कते **नन्विति** ॥ विरोध्याकार-परित्यागदशायामैक्योपदेशं निदर्शयति **नीरूपमिति** ॥ तस्य बाधप्रतिसन्धानदशायां तं निदर्शयति **यथा वेति** । रजतं रजतत्वप्रकारकप्रतीतिगोचरं; सा शुक्तिरिति भ्रान्तोद्देश्यकं भ्रान्तिज्ञस्य वच इत्यर्थः ॥

---

**यथाह पाणिनिरिति** ॥ साक्षादित्यव्ययात् द्रष्टर्यभिधेये 'इनि प्रत्यये । अव्ययानां भमात्रे टिलोप इति टिलोपे साक्षीतिरूपं निष्पद्यत इति भावः ॥

**सु०— एवं धर्मराहित्यलक्षणं निर्गुणत्वं निराकृतमप्याग्रहमात्रेण योऽङ्गीकरोति तं प्रति सोल्लुण्ठमाह** निर्गुणत्वमिति ।

**अनु०—** निर्गुणत्वं तदा च स्यादासुरत्वं न चान्यथा ॥

**तदा च युक्त्या निर्गु(णे)णत्वे निराकृतेऽपि यदि निर्गुणत्वं परस्मै रुचितं स्यात् तर्हि गुणशब्दोदितसकलशुभराहित्यलक्षणमासुरत्वमेव स्यात् । अन्यथानिरूपयितुमशक्यत्वस्योक्त-त्वात् । तेनैक्यं च मायावादिनामनुमन्यामह इति । एतेन ब्रह्मणो निर्गुणत्वादस्य लक्षणस्य यत्तटस्थत्वमुक्तम् । न हि नानाविधकार्यक्रियावेशात्मत्वं तत्प्रसवशक्त्यात्मकं वा जिज्ञास्यविशुद्ध-ब्रह्मान्तर्गतं भवितुमर्हतीति । तदपि निरस्तं वेदितव्यम् । निर्गुण(त्व)स्यैव निराकृतत्वात् ॥ यच्चोक्तम् 'नेदं ब्रह्मणो विशेषणम् प्रपञ्चोपाधित्वेन निरुपाधिकब्रह्मस्वरूपान्तर्गतत्वायोगात्' इति; तदुत्तरत्र निराकरिष्यत इति ।**

वा०— ननु निर्गुणत्वस्य निरासादुत्तरग्रन्थवैयर्थ्यम् । दूषणान्तरपरत्वे च तस्यैव वक्तव्यतयाऽसुरत्वोक्तिश्चायुक्तेत्यत आह **एवमिति** । नैयायिकाभिमतनिर्गुणत्वस्यापि प्रस्तुतत्वात्तावन्मात्रस्यासुरत्वानापादकत्वाद्धर्मेत्याद्युक्तम् ॥ आग्रहं मूलारूढं कर्तुं तदा चेत्येतत्तदर्थतया व्याख्याति **तदा चेति** ॥ निर्गुणत्वमुपजीव्य परकीयं लक्षणं, तटस्थत्वोपपादने प्रकारान्तरमपि, निर्गुणत्वनिरासेनैव निरस्तमिति न तदनिरासप्रयुक्तन्यूनतेत्याशयेनाह **एतेनेति** । नानाविधकार्यक्रियावेशात्मत्वं नानाविधकार्यगोचरक्रियाऽऽश्रयत्वमित्यर्थः ॥ प्रकारान्तरेण परकीयं तटस्थत्वोपपादनं च सर्वज्ञत्वादीनां सोपाधिकत्वमाशङ्क्य ज्ञानादिप्रतिबन्द्या निरसिष्यमाणत्वात्प्रतियोगिसापेक्षस्याप्यैक्यस्य ब्रह्मस्वरूपतायास्तन्मते वक्ष्यमाणत्वाच्च तन्न्यायेन निरस्तप्रायमित्याह **यच्चोक्तमिति** । 'सर्वापेक्षतया सर्वज्ञत्वमित्येव तन्न हि । इति चेच्चेतनत्वं च ज्ञत्वं न ज्ञेयवर्जितम्'इत्याद्युत्तरत्रेत्यर्थः ।

स०— **परस्मै रुचितमिति** ॥ 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी ॥ **तदुत्तरत्र निराकरिष्यत इति** ॥ 'अन्यापेक्षा यदि स्युष्टे सत्त्वं देशकालगा' इति भक्तिपादे निराकरिष्यते इत्यर्थः ।

प०— सोल्लुण्ठम् सोपहासम् ॥ **परस्मै रुचितमिति** । 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी । यत्तटस्थत्वमुक्तं तन्निरस्तमित्यन्वयः ॥ तटस्थत्वोक्तिपरं वाक्यं पठति **न हि नानेति** ॥ **तत्प्रसवेति** । नानाविधकार्यजनकेत्यर्थः ॥ **विशेषणमिति** । स्वरूपलक्षणमित्यर्थः ॥ **उत्तरत्रेति** । अतोऽनन्तगुणं ब्रह्म'इत्यत्र ब्रह्मस्वरूपविशेषण(षय)त्वोपगमेन तन्मात्रत्वानङ्गीकारेण निराकरिष्यत इति भावः ।

या०— **परस्मै रुचितमिति** । 'रुच्यर्थानां प्रीयमाणः' इत्यनेन चतुर्थीति ज्ञातव्यम् ॥ **क्रियावेशात्मकत्वमिति** । क्रियाश्रयत्वमित्यर्थः । अनेन कर्तृत्वरूपं तत्प्रसवं शक्त्यात्मकत्वं वेत्यनेनोपादानत्वरूपं कारणत्वमुक्तमिति ज्ञातव्यम् ॥ **विशेषणमिति** । स्वरूपमित्यर्थः ॥ **प्रपञ्चोपाधित्वेनेति** । प्रपञ्चसापेक्षत्वेनेत्यर्थः ॥ **उत्तरत्रेति** । भक्तिपादे 'अन्यापेक्षा यदि स्युष्टे सत्त्वं देशकालगा । देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते ॥' इत्यत्र सत्ताया अपि देशकालरूपपरापेक्षत्वाद्ब्रह्मस्वरूपान्तर्गतत्वं न स्यादिति निराकरिष्यत इत्यर्थः ।

श्री०— सोल्लुण्ठं सोपहासम् ॥ **असुरत्वमेव स्यादिति** । निर्गुणत्वमसुरत्वमेकमेव स्यादित्यर्थः ॥ न चान्यथेति मूलाभिप्रायमाह **अन्यथा निरूपयितुमिति** । निर्गुणत्वस्येति शेषः । तथाच सकलशुभराहित्यं विहायान्यथा प्रकारान्तरेण निर्गुणत्वं न च नैव निरूपयितुं शक्यमिति मूलार्थो द्रष्टव्यः **तेनैक्यं चेति** । निर्गुणैक्यं नामासुरैक्यमित्यर्थलाभादित्यर्थः ।

च० — **परस्मै रुचितमिति** । 'रुच्यार्थानां प्रीयमाणः' रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः संप्रदानं स्यात् । हरये रोचते भक्तिरित्युदाहरणम् । तद्वदिदमपि बोध्यम् ॥ **क्रियावेशात्मकत्वम्** क्रियाश्रयत्वम् **प्रसवशक्त्यात्मकत्वम्** । तदुत्पादशक्त्याश्रयत्वम् । एतेन कारणत्वमुपादानतारूपमिति ध्वन्यते ॥ **विशेषणम्** स्वरूपम् । **प्रपञ्चोपाधित्वेन** मिथ्याभूतप्रपञ्चघटितत्वेन ॥ **निरुपाधिकेति** । मिथ्याभूतपदार्थाघटितेत्यर्थः ॥ उत्तरत्र भक्तिपादे 'अन्यापेक्षा यदि स्युष्टे'इत्यादिना सत्ताया अपि देशकालरूपपरापेक्षतया ब्रह्मस्वरूपान्तर्गतत्वं न स्यादिति निराकरिष्यत इत्यर्थः ।

( इति तदुक्तस्य धर्मराहित्यलक्षणनिर्गुणत्वस्य सत्रकारैः निषेधः । )

( अथ तदुक्तस्य 'गुणगुणिनोः अन्यत्वानन्यत्वाभ्याम् अनिरूपणम्'इत्यस्य दुष्टता । )

सु० — **यदपि गुणगुणिनोरन्यत्वानन्यत्वाभ्यामनिरूपणादिति लक्षणस्य तटस्थत्वादिसिद्धये परेणोक्तं तद्दूषयितुमनुवदति** लक्ष्यलक्षणयोरिति ।

अनु० — लक्ष्यलक्षणयोर्भेदोऽभेदो वा यदि वोभयम् ।

**यदत्र जगज्जन्मादिकारणत्वं मु(ख्य)खतो लक्षणमभिहितं सर्वज्ञत्वादिसमस्तगुणवत्त्वं चाभिप्रायव्या(प्रा)प्तमित्युक्तम् । तदुभयमपि लक्षणं लक्ष्याद्ब्रह्मणो भिन्नमभिन्नं भिन्नाभिन्नं वा । नाद्यः । मेरुमन्दरवल्लक्ष्यलक्षणभावस्य गुणगुणिभावस्य चानुपपत्तेः । संबन्धसद्भावान्नेति चेत् (न) तस्यापि संबन्धिभ्यामन्यत्वानन्यत्वाभ्यामनिरूपणात् । न द्वितीयः । अनेकैरभिन्नस्य ब्रह्मणोऽप्यनेकत्वापत्तेः । तथा चैकमेवेति श्रुतिविरोधात् । लक्षणानां वैकत्वमापद्येत । तथा च 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः पुनरुक्तिदोषप्रसङ्गः । लक्ष्यलक्षणभावो गुणगुणिभावश्चाभेदे नोपपद्यते । प्रसिद्धेन ह्यप्रसिद्धं लक्षणीयम् । न च तदेव तदैव प्रसिद्धमप्रसिद्धं चेति युक्तम् । गुणी च गुणवान्भवति । न च स्वेनैव तद्वान्भवति । न तृतीयः । परस्परविरोधात् । अतोऽशक्यनिरूपणत्वान्नेदं ब्रह्मस्वरूपान्तर्गतं लक्षणम् । किन्तु तटस्थमेव । न च तटस्थेन तेन ब्रह्मणोऽद्वितीयत्वभङ्गः । यद्रजतमित्यभात्सा शुक्तिरितिवन्मिथ्याभूतेनापि प्रपञ्चकारणत्वेनोपलक्षणयोगादिति ।**

वा० — तटस्थत्वादीत्यादिपदेनानिर्वाच्यत्वग्रहणम् ॥ **तदुभयमपीति** । 'लक्ष्यलक्षणयोः'-इत्यत्र लक्षणपदेन न केवलं जन्मादिकारणत्वस्यैवोपादानं किं तु'अतोऽनन्तगुणम्'इत्युत्तरग्रन्थानुसारेण समस्तगुणत्वस्यापीति भावः । एतदभिप्रायेणैव पूर्वमपि तथाऽभिप्रायकथनमिति द्रष्टव्यम् ॥ ननु तटस्थलक्षणस्यापि सत्यत्वेऽद्वैतहानिः, मिथ्यात्वेऽनेन व्यावृत्त्यसिद्ध्या तदुक्तिवैयर्थ्यापत्तिः; इत्यतः पूर्वमनभ्युपगमेनापाकृत्य मिथ्याभूतस्यापि व्यावर्तकत्वं दृष्टान्तोक्त्या संभावयति **न चेत्यादिना** ।

सु० — **तस्यापीति** । यदि तस्य संबन्धिभ्यामन्यत्वं तर्हि लक्ष्यलक्षणभावाद्युपपतिः । अभिन्नत्वे तस्य स्वरूपत्वेन पुनस्तदनुपपत्तिरेवेति भावः ।

प० — **इत्युक्तमिति** । स्वरूपलक्षणवादिना सिद्धान्तिनोक्तमित्यर्थः ॥ **अन्यत्व नन्यत्वाभ्यामनिरूपणादिति** । अन्यत्वे संबन्धसंबन्धिनोः संबन्धान्तरेण भाव्यम् । तत्राप्येवमित्यनवस्थानात् । अनन्यत्वे संबन्धसंबन्धित्वव्याघातादिति भावः ॥ **पुनरुक्तीति** । 'यतो वा'इतिश्रुतौ उक्तजन्मस्थितिभङ्गरूपलक्षणत्रयस्याप्येकत्वेन 'इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति'इत्येषामेकार्थत्वादिति भावः ॥ **इतिवदिति** । यज्जगज्जन्मादिकारणत्वेन प्रतीतं तद्ब्रह्म इत्येवंरूपेण मिथ्याभूतकारणत्वेनोपलक्षणसंभवात्; इत्यर्थः ।

या० — **तटस्थत्वादीति** । आदिपदेन मिथ्यात्वसंग्रहः ॥ **तद्दूषयितुमिति** । अनेन मूले गुणगुणिनोरित्युपलक्षणया ग्राह्यमिति सूचयति । यद्यपि विवरणकारेण गुणगुणिभावानुपपत्तिरेव दर्शिता न लक्ष्यलक्षणभावानुपपत्तिः; तथाऽपि सा तदभिप्रेतेति वा, तदीयैः कैश्चिदुक्तेति वाऽत्रानूदितेति द्रष्टव्यम् ।

श्री० — **मेरुमन्दरवदिति** । अत्यन्तं भिन्नयोः संबन्धाभावादिति भावः ॥ **पुनरुक्तीति** । सर्वेषां लक्षणानामेकत्वात् यतो वेत्यनेनोक्तं सृष्टिकर्तृत्वं, येन जातानि जीवन्तीत्यादिनोक्तं स्थितिकर्तृत्वादिकं चैकमेवेति पुनरुक्तिरित्यर्थः ॥ **तटस्थेनानेनेति** । तटस्थस्यापि प्रपञ्चकारणत्वरूपलक्षणस्य सत्यत्वादिति भावः ॥ **मिथ्याभूतेनापीति** । यन्मिथ्याभूतजगज्जन्मादिकारणत्वेनोपलक्षितं तद्विचार्यमाणे ब्रह्मैवेत्यर्थकरणेन तटस्थलक्षणस्यापि मिथ्यात्वेन सत्यत्वानङ्गीकारान्नाद्वितीयत्वभङ्ग इत्यर्थः ।

सु० — **एवमनूद्य निराकर्तुमारभते** इति पृष्ट इति ।

**अनु०** — इति पृष्टे

**वक्तव्यमिति शेषः । पृष्ट इत्युपलक्षणम् । दूषिते चेत्यपि ग्राह्यम् । दूषणानामत्यन्तासंबद्धत्वात्पृष्ट इत्येवोक्तम् । किं वक्तव्यमिति ।**

वा० — दूषणस्यापि परेणोक्तत्वात्प्रश्नमात्रे प्रतिबन्दीग्रहणानुपयोगाच्च भाष्येऽनुवादे न्यूनतापरिहाराय पृष्ट इत्युपलक्षणतया व्याख्याति **पृष्ट इति** ॥ लक्षणाप्रयोजनमाह **दूषणानां चेति** ।

श्री० — इति पृष्टे वक्तव्यमित्युक्तम् । तत्र किं वक्तव्यमित्याशङ्क्योत्तरमाह **किं वक्तव्यमितीत्यादिना** ।

सु० — तत्र जगज्जन्मादिकारणत्वादीनां धर्माणां भेदाभावेऽपि विशेषस्य सद्भावात्तद्बलेन सर्वमुपपद्यत इति वक्तुं निर्भेदवस्तुनि परेण विशेषस्यानङ्गीकृतत्वात् घटादीनां च मिथ्यात्वेनाङ्गीकृतानामनुदाहरणत्वात्सत्य एव वस्तुन्यसावुपपादनीय इति मन्वान आह तदेति ।

अनु० — तदैक्यस्य गतिरेव न विद्यते ॥

यद्येवं पृष्ट्वा लक्षणं दूषयसि तदैक्यस्य गतिर्निरूपणप्रकारो न विद्यते ।

अयमभिप्रायः । द्विविधं हि वाक्यं मायावादिना तत्त्वावेदकमङ्गीकृतम् । एकं जीवब्रह्मणोरैक्यपरं महावाक्यम् । यथा तत्त्वमसीत्यादि । अपरं तत्स्वरूपपरमवान्तरवाक्यम् । यथा सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि । तदुभयमपि सविशेषाभिन्नवस्तुनिष्ठं परेणाङ्गीकारणीयम् । गत्यन्तराभावात् ।

वा० — ननु परेण विकल्प्य दूषणे कृतेऽन्यतमपक्षाभ्युपगमेन पक्षान्तरप्रतिपादनेन वा समाधानं वक्तव्यम् । प्रतिबन्दीग्रहणं त्वसङ्गतम् । न च तत्रत्यप्रकारेण स्वप्रमेयसमर्थनाय प्रतिबन्दीग्रहणमिति वाच्यम् । तन्मतस्य दुष्टत्वे वा प्रकारान्तरेण तत्समाधाने वा स्वमतस्य दुष्टत्वापरिहारात् । न च भेदाभावेऽपि विशेषबलात्सर्वमप्युपपद्यत इति स्वमतेन समाधानमिति वाच्यम् । तर्हि तस्यैव वक्तव्यत्वेन प्रतिबन्दीग्रहणानुपपत्तेः । प्रतिबन्दीग्रहणे वा प्रसिद्धघटादिपरित्यागेनैक्यपर्यन्तधावनानुपपत्तेरित्यतः 'अतोऽनन्तगुणम्' इत्यादिना भेदाभावेऽपि विशेषबलात्सर्वमुपपद्यत इति स्वमते समाधानस्य वक्ष्यमाणत्वात् । तस्य च विशेषस्य परेण क्वाप्यनङ्गीकारेण प्रतिबन्दीमुखेनैवाङ्गीकारयितव्यत्वात् । परस्याप्येतदनुपपत्तिपरिहारकप्रकारान्तराभावात्स्वमतदुष्टतायाश्च परेणाङ्गीकर्तुमशक्यत्वात्परमुखेनैव विशेषमानेतुं प्रतिबन्दीग्रहणस्यावश्यकत्वाद्घटादीनां चानिर्वाच्यतया परेणाभ्युपगतानां भिन्नत्वादिनाऽनिरूपणीयत्वस्य परं प्रत्यनिर्वाच्यतासाधकत्वेन तदनुपपत्तिपरिहारकविशेषाकल्पकत्वेन घटादेरुदाहरणतानुपपत्तेर्युक्तमैक्यपर्यन्तधावनम्; इत्याशयेन वक्ष्यमाणं साक्षात्स्वपक्षसमाधानं सूचयन्नेव प्रतिबन्दीप्रतिपादकोत्तरवाक्यतात्पर्यमाह **तत्रेति** ॥ **निर्भेदेति** । भेदाभावे तत्कार्यनिर्वाहकविशेषस्य परेणानङ्गीकृतत्वादित्यर्थः । यदिवोभयं तदेत्यस्यार्थं वदन्नेव प्रकृतोपयोगाय गतिशब्दं निरूपणप्रकारपरतया व्याख्याति **यदीति** । अत्रैक्यस्येति सामान्योक्तावप्युत्तरत्राभेदे, शास्त्रप्रतिपाद्यत्वाभावस्य त्वमसीत्यंशवैयर्थ्यस्य भेदे, शास्त्रातत्त्वावेदकत्वस्य सत्यादिपदानां पर्यायत्वस्य पदान्तरवैयर्थ्यस्येत्येवमादीनां वाक्यनिष्ठानामेव दोषाणां वक्ष्यमाणत्वान्महावाक्यावान्तरवाक्यार्थतया पराभ्युपेतैक्यसत्यत्वादेरेव चोपादानात् । महावाक्यावान्तरवाक्यैरैक्यसत्यत्वादिधर्मिणं सिद्धवत्कृत्य 'एकधैव' इत्यादिश्रुत्या चैक्यादेर्ब्रह्माभेदं च सिद्धवत्कृत्य तत्र चानुपपत्तीरभिधाय तदुभयान्यथाऽनुपपत्त्यैव च विशेषस्य परमुखेनानेयत्वाद-

न्यथाऽनुपपत्त्या भेदादिपक्षवदैक्यादौ तदभेदपक्षे च परेण त्यक्ते तन्मुखेनैव विशेषस्यानेतुमशक्यत्वाच्चोत्तरग्रन्थाद्यनुसारेण वाक्यपरतामैक्यादिशब्दस्याभिप्रेत्य भाष्याभिप्रायमाह **अयमभिप्राय इति** ।

प०— **इतिवक्तुमिति** । 'अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यते' इत्यनेन वक्तुमित्यर्थः । अस्फुटत्वादाह ॥ **अयमभिप्राय इति** । नास्तीतीतिशब्दस्येत्ययमभिप्राय इत्यन्वयः ।

श्री०— निर्भेदे वस्तुनि ब्रह्मणि । वस्तुनिष्ठं वस्तुप्रतिपादकम् ।

**सु०— तत्र तावदाद्यस्य गत्यन्तरं नास्ति । कथमिति चेत् उच्यते । तत्त्वमसीत्यादिवाक्यप्रतिपाद्यमैक्यं किं तत्पदलक्षिताच्चैतन्यादभिन्नमुत भिन्नमथ भिन्नाभिन्नमिति वाच्यम् ।**

**परेणाङ्गीकृतत्वेन प्राधान्यादभेदपक्षं तावदादौ निराकरोति** ऐक्याभेद इति ।

**अनु०—** ऐक्याभेदे न शास्त्रेण ज्ञेयं तत्स्वप्रकाशतः ।

**ऐक्यस्य चैतन्यस्वरूपाभेदेऽङ्गीक्रियमाणे तदैक्यं तत्त्वमसीत्यादिना शास्त्रेण प्रतिपाद्यं न स्यात् । कुतः स्वरूपस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात् । तन्मात्रस्वरूपत्वाच्चैक्यस्य । न हि प्रकाशमानमेव शास्त्रप्रतिपाद्यम् । वैयर्थ्यप्रसङ्गात् ॥ किञ्चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वं परेणाङ्गीकृतम् तथा च स्वप्रकाशचैतन्यात्मकं (च) शास्त्रप्रतिपाद्यं चेति व्याहतम् ॥ अथ शास्त्रं नैक्यं प्रतिपादयति किन्तु भेदभ्रमं निराकरोति; यथोक्तम् सिद्धं तु निवर्तकत्वादिति । न । ऐक्ये प्रकाशमाने भेदभ्रमस्यैवानवकाशात् । तच्चाप्रतिपत्तेर्भ्रान्तिहेतुत्वात् । ऐक्यं न प्रकाशत इति चेन्न । स्वप्रकाशचैतन्यमात्रत्वविरोधात् । अविद्यावशात्स्वप्रकाशस्याप्यनवभास इति चेन्न सर्वथाऽप्यनवभासप्रसङ्गात् । तथा चाधिष्ठानानवभासेऽविद्यारोपस्याप्यनुपपत्तेः । न ह्यखण्डे वस्तुन्यंशतोऽविद्यावरणं संभवति । असंभवनीयावभासचतुराऽविद्येति चेत् । तर्हि सा जडेष्वेव कुतो नाङ्गीकार्या । अनुपपत्तेस्तुल्यत्वात् ॥ तथा च 'सा न जडेषु वस्तुषु' इत्ययुक्तम् ॥ न शास्त्रेण ज्ञेयं तदित्युपलक्षणम् । शास्त्रप्रतिपाद्यत्वेऽपि तत्पदेनैव सिद्धत्वात् । त्वमसीति व्यर्थमित्यपि द्रष्टव्यम् ॥ तदित्येतावता न भेदभ्रमनिवृत्तिः । अतस्त्वमसीति सार्थकमिति चेन्न । तत्पदेनै(वै)क्यस्य प्रतिपादितत्वादैक्यप्रतीतौ च भेदभ्रमस्य निरस्तत्वात् । अन्यथा कदाऽप्यनिवृत्तिप्रसङ्गात् ॥ तत्पदेनैक्यस्याप्रतिपादितत्वे तदुपलक्षितचैतन्यमात्रत्वानुपपत्तिः ॥ ननु कथं तर्हि सोऽयं देवदत्त इति वाक्यम् । अत्रापि विशेषानङ्गीकारेऽनुपपत्तिरेवेति ।**

**वा०**— ऐक्यस्य तत्पदवाच्यचैतन्याभेदे तच्छास्त्रप्रतिपाद्यत्वाभावस्य परं प्रतीष्टत्वादुत्तरदूषणासङ्गतेश्चाह **तत्पदेति** ॥ व्यावृत्त्यादिरूपप्रयोजनवद्यथाकथञ्चिच्छास्त्रज्ञेयत्वभ्रान्तिनिरासाय शास्त्रपदसमभिव्याहारेण ज्ञेयपदार्थमाह **प्रतिपाद्यमिति** ॥ पराभ्युपेतस्वप्रकाशशब्दार्थमादाय व्याहतिरूपदूषणान्तरप्रतिपादकत्वेन मूलस्य प्रकारान्तरेण व्याख्यास्यमानत्वात् । स्वविषयप्रकाशत्वरूपं स्वप्रकाशशब्दप्रसिद्धार्थं मनसि निधाय तस्य शास्त्रप्रतिपाद्यत्वाभावेन हेतहेतुमद्भावं व्युत्पादयितुं साक्षात्तत्साध्यं दर्शयति **स्वरूपस्येति** । न चावेद्यत्वं नाम फलाव्याप्यत्वं, वृत्तिव्याप्यत्वं त्वङ्गीक्रियत इति शास्त्रप्रतिपाद्यत्वसंभवान्न व्याहतिरिति वाच्यम् । त्वदभ्युपेतफलाप्रामाणिकत्वस्य वक्ष्यमाणत्वेन वृत्त्यव्याप्यत्वस्यैवावेद्यत्वपदार्थतया वक्तव्यत्वात् । वृत्तिव्याप्यत्वाङ्गीकारे च दृश्यत्वादेर्व्यभिचारापत्तेश्चेत्याशयात् ॥ ननु न सामग्री बुद्धिमती येन स्वकार्यस्यान्येन कृतत्वात्स्वयं न प्रवर्तेत । न हि छिन्ने छिदाऽन्तरवत्प्रकाशमाने प्रकाशान्तरासंभवः । अतः प्रकाशमानस्याप्यस्तु शास्त्रप्रतिपाद्यत्वमित्यत आह **न हीति** ॥ तथाऽप्यनुपादेयत्वं स्यादेवेत्याह **वैयर्थ्येति** । स्वप्रकाशत्वरूपभाष्योक्तहेतुबलादेव परकीयव्याहत्यादिपरिहारप्रकारान्निराकरोति **अथेत्यादिना** ॥ मूले न्यूनतां परिहरति **न शास्त्रेणेति** ॥ ननु तदेतद्देशकालविशिष्टदेवदत्तयोरैक्यस्य देवदत्तमात्रत्वाद्देवदत्तदर्शनेनैव तत्सिद्ध्या वाक्यवैयर्थ्यम् । एकपदेनैव वा तत्सिद्धेः पदान्तरवैयर्थ्यं चेति सोऽयं देवदत्त इति वाक्येऽप्यनुपपत्तेस्तत्परिहारन्यायेन ममापि परिहारसौलभ्यान्न त्वदुक्तविशेषाङ्गीकार इत्याशङ्कते **नन्विति** ।

**स०**— **किञ्चावेद्यत्व इति** ॥ न च फलाव्याप्यत्वस्यैवावेद्यत्वशब्दार्थत्वेन वृत्त्यविषयत्वस्यावेद्यत्वशब्दार्थत्वेनानङ्गीकारात् ऐक्यस्य वृत्तिविषयत्वेनाङ्गीकृतत्वात् कथं व्याहतिरिति वाच्यम् । फलस्यैव निरूपयितुमशक्यत्वेन वृत्तिविषयत्वस्यैव तत्त्वेनाङ्गीकर्तव्यत्वात् तदात्मकमैक्यं शास्त्रप्रतिपाद्यमिति कथं न व्याहतिरिति भावः ॥ **सिद्धं त्विति** ॥ चैतन्यस्य स्वप्रकाशत्वेऽप्यारोपिताकारनिवर्तकत्वाच्छास्त्रस्यार्थवत्त्वं सिद्धमिति ॥ **अनुपपत्तेस्तुल्यत्वादिति** ॥ यत्प्रकाशप्राप्तिस्तस्यैक्यस्यापि प्रकाशेनावरणीयाभावादावरणानुपपत्तिः यदि च प्रतिबन्धस्तर्हि सर्वस्यापि प्रतिबन्धेन प्रकाशप्राप्तेरेवाभावप्रसङ्गः । एवंच प्राप्तप्रकाशप्रतिबन्धरूपावरणकृत्याभावलक्षणानुपपत्तेरचेतनेऽपि तुल्यत्वादित्यर्थः ।

**प०**— **तावदिति** । अवान्तरवाक्यस्य गतिर्नेति सत्यज्ञानादिकेप्येवमित्यत्र वक्ष्यमाणत्वात्तावच्छब्दः । ननु स्वकर्मकप्रकाशात्मकत्वरूपस्वप्रकाशत्वं न परेणाङ्गीकृतम् । येनायं दोषः स्यादित्यतः तद्रीत्यापि दोषोक्तिपरतया व्याचष्टे **किञ्चावेद्यत्व इति** ॥ **सिद्धं त्विति** । ऐक्यस्य स्वप्रकाशात्मस्वरूपत्वेन सदा प्रकाशमानत्वेऽपि शास्त्रस्योपादेयत्वं सिद्धमेव । शास्त्रस्य भेदभ्रमनिवर्तकत्वादित्यर्थः । शास्त्रस्य भेदभ्रमनिवर्तकत्वेनोपादेयताशङ्कां निराह **नेति** ॥ **स्वरूपस्यापीति** । ऐक्य-

स्येति योज्यम् ॥ **सर्वथाऽप्यनवभासेति** । आत्मनोऽप्यनवभासप्रसङ्गादित्यर्थः ॥ **अविद्याऽऽरोपस्यापीति** । तथाचाविद्यावशादैक्यानवभासोक्तिरयुक्ता स्यात् । अविद्याया एवानुपपत्तेरिति भावः । नन्वात्मस्वरूपांशेऽविद्यावरणं नास्ति किन्त्वैक्यांश एवेत्यत आह **नहीति** ॥ **अनुपपत्तेस्तुल्यत्वादिति** । अधिष्ठानानवभास इत्यादिनोक्ताया इत्यर्थः । असंभावनीयेत्याद्युक्तपरिहारस्यापि तुल्यत्वादित्यपि ज्ञेयम् ॥ **इत्ययुक्तमिति** । इति यत्त्वयोक्तं तदयुक्तमित्यर्थः । **तत्पदेनैक्यस्य प्रतिपादितत्वादिति** । तत्पदबोध्यचैतन्यस्वरूपत्वादैक्यस्येति भावः ॥ **तदुपलक्षितेति** । तल्लक्षणया तत्पदबोधितेत्यर्थः ॥ **ननु कथमिति** । तस्मिन् वाक्ये स इति तत्पदेनैव देवदत्तस्वरूपस्य तदभिन्नस्यैक्यस्य च बोधितत्वेन शिष्टपदवैयर्थ्यापत्तिरिति भावः ॥ **अत्रापीति** । सोऽयमितिवाक्यबोध्याभेदस्थलेऽप्यैक्यस्य पिण्डस्य च सविशेषाभेदानङ्गीकार इत्यर्थः ।

**या० — अवेद्यत्वे सतीति** । अत्र घटादावतिव्याप्तिपरिहारायावेद्यत्वे सतीति विशेषणम् । अतीन्द्रियव्यावृत्तयेऽपरोक्षव्यवहारेति विशेष्यम् ॥ **सिद्धं तु निवर्तकत्वादिति** । शास्त्रस्य सार्थक्यं सिद्धमेव । भेदभ्रमनिवर्तकत्वादिति तद्वाक्यार्थः ॥ **स्वप्रकाशचैतन्यस्यापीति** । स्वप्रकाशचैतन्याभिन्नस्यापीत्यर्थः ॥ **सर्वथेति** । चैतन्यस्यापीत्यर्थः ॥ ननु जडेषु प्रकाशप्राप्तेरेवाभावेन प्राप्तप्रकाशप्रतिबन्धरूपावरणकृत्याभावान्नाविद्या तत्राङ्गीकार्येत्यत आह **अनुपपत्तेरिति** । यदि प्रकाशप्राप्तिस्तर्ह्यैक्यस्यापि प्रकाशेन तत्प्रतिबन्धानुपपत्तिः । यदि च प्रतिबन्धः सर्वस्यापि प्रतिबन्धेन प्रकाशप्राप्त्यभाव इति प्राप्तप्रकाशप्रतिबन्धरूपावरणकृत्याभावरूपानुपपत्तेश्चेतनेऽपि तुल्यत्वादित्यर्थः । यद्वा । अनुपपत्तिपदेन तत्परिहारो लक्ष्यते । तथा चासंभावनीयावभासचतुराऽविद्येति परिहारस्य जडेष्वपि तुल्यत्वादित्यर्थः ॥ नन्वेवं सोऽयं देवदत्त इति वाक्येऽपि तत्पदेनैव देवदत्ताभिन्नस्यैक्यस्य सिद्धत्वादयमित्यादिपदवैयर्थ्यप्रसङ्ग इत्याशयेन शङ्कते **ननु कथमिति** ।

**श्री० — तत्त्वाप्रतिपत्तेरिति** । वस्तुनो यत्तत्त्वं तदप्रतीतेरित्यर्थः । तथा चैक्याप्रतिपत्तौ किल भेदभ्रमो वक्तव्यः । सा नास्तीत्याशयः ॥ **स्वरूपस्यापीति** । चैतन्यस्वरूपस्याप्यैक्यस्येत्यर्थः ॥ **सर्वथाऽपीति** । चैतन्यस्यापीत्यर्थः ॥ इष्टापत्तिरिति चेत्तत्राह **तथा चेति** ॥ नन्वैक्यस्य चैतन्याभेदेऽपि चैतन्यांशेऽविद्या नाऽऽवरणं किन्त्वैक्यांश एवेत्युच्यत इत्यत आह **न हीति** । अखण्डे निरंशे ॥ **अन्यथेति** । ऐक्यप्रतीतावपि भेदभ्रमानिरास इत्यर्थः ॥ **तदुपलक्षितेति** । तत्पदप्रतिपाद्यसार्वज्ञ्याद्युपलक्षितेत्यर्थः ।

**च०— अवेद्यत्वे सतीति ।** घटादावनतिप्रसङ्गायाद्यदलोपादानम् । अतीन्द्रिये तद्विधूनना-योत्तरदलोपादानम् ॥ **सिद्धं तु निवर्तकत्वादिति ।** भेदगोचरविपर्यासनिवर्तकत्वाच्छास्त्रस्यार्थवत्वं सिद्धमिति तत्फक्किकार्थोऽवसेयः ।

ननु सोऽयं देवदत्त इति वाक्येपि तत्पदेनैव देवदत्ताभिन्नस्यैक्यस्य प्रतीत्या अयमित्यादिपद-वैयर्थ्यं प्रसज्येतेत्यभिसन्धिना शङ्कते **ननु कथमिति ।**

**अनु०—** भेदे मिथ्यात्वतो भेदसत्यत्वं स्याद्बलादपि ॥

**सु०— द्वितीयं निराकरोति** भेद इति । **ऐक्यस्य स्वरूपाद्भेदेऽङ्गीक्रियमाणेऽपसिद्धा-न्तस्तावत् । तत्त्वमस्यादिवाक्यस्याखण्डार्थनिष्ठताया मायावादिनाऽङ्गीकृतत्वात् । मिथ्यात्व-प्रसङ्गोऽपरो दोषः, चैतन्यातिरिक्तस्य सर्वस्य मिथ्यात्वाङ्गीकारात् । अन्यथाऽद्वैतेनैव सत्येना-द्वैतव्याघातात् । ऐक्यमिथ्यात्वे किन्नश्छिन्नमिति चेन्न । मिथ्यात्वतो न शास्त्रेण ज्ञेयं तदि-त्यनुवर्तनात् । अन्यथा तत्त्वमस्यादिशास्त्रस्यातत्त्वावेदकत्वं स्यात् । किञ्च जीवब्रह्मणोरैक्यस्य मिथ्यात्वतस्तद्भेदसत्यत्वमपि स्यात् । कुतः बलाद्व्याप्तिबलादित्यर्थः । ननु न कुत्रापि सत्यो भेदोऽस्माभिरभ्युपेयते तत्कथं व्याप्तिः । मैवम् । आस्तां तावत्परमार्थचिन्ता । ययोर्दूरस्थ-योर्वनस्पत्योरैक्यं मिथ्या तयोर्भेदः सत्य इति दृष्टम् । अथवा यस्य स्वरूपेण सतो योऽभावो मिथ्या तस्य तद्विपरीतः सत्यो यथा ब्रह्मणोऽनृतत्वादेर्मिथ्यात्वे सत्यत्वादिकं सत्यमिति सामान्यव्याप्त्याश्रयणेन प्रसङ्गोपपत्तिः यथाहुः 'परस्परविरोधे तु न प्रकारान्तरस्थितिः' इति ।**

**वा०—** भेद इत्यनुवादमात्रसूचितमपिशब्दस्य 'मिथ्यात्वं च'इत्यत्रापि संबन्धे बुद्ध्या विवेकेन वा सूचितमपसिद्धान्तमाह **ऐक्यस्येति** ॥ मूले कण्ठोक्तमिथ्यात्वप्रसङ्गं दूषणान्तरपरतया योजयति **मिथ्यात्वेति** ॥ मिथ्यात्वप्रसङ्गसाध्यं दूषणं सूचयता मिथ्यात्वप्रसङ्गस्येष्टापत्तिः परेण शङ्कितुं शक्येति सूचितम् । तां शङ्कते **ऐक्येति** ॥ 'मिथ्यात्वतः' इत्यस्यानुवृत्तेन संबन्धेऽतत्त्वावेदकत्वस्यापि मूलारूढ-तालाभादाह **न मिथ्यात्वत इति** ॥ मूले कण्ठतः प्रतीतं 'मिथ्यात्वतः' इत्यस्य 'भेदसत्यत्वम्'इत्यनेन संबन्धमुपपादयति **किंचेति** ॥ व्यावहारिकपारमार्थिकत्वविभागस्याद्याप्यसिद्धत्वादर्थक्रियाकारित्वरूपव्या-वहारिकत्वेन त्वदभ्युपेतस्येव पारमार्थिकतया म(त)दभ्युपगतमात्रस्य च व्याप्तिः सुखदर्शनीयेत्याह **आस्तामिति** ॥ यद्वैतदस्वरसादेवाह **अथवेति** ।

**स०— अथवा यस्य स्वरूपेणेति ।** ननु गजस्य प्रामाणिकत्वं प्रति यत्रकुत्र गजसत्त्वस्यैव प्रयोजकत्वेन तस्यैव तद्विरोधित्वे यत्रकुत्रचिदसत्वं स्यादित्यापादने इष्टापत्तेरिति भावः ।

**प०— द्वितीयमिति** । तत्पदलक्षिताच्चैतन्याद्भिन्नमैक्यमिति पक्षमित्यर्थः । मूलोक्तमुपलक्षणं मत्वाऽऽह **अपसिद्धान्तस्तावदिति** । मिथ्यात्वत इत्यनुवादलब्धमाह **मिथ्यात्वप्रसङ्ग इति** ॥ **अन्यथेति** । चैतन्याद्भिन्नस्याद्वैतस्य सत्यत्वेऽद्वैतेनैव ऐक्येनैव सत्येनाद्वैतस्य सदेकमेव तत्त्वमित्यस्य व्याघातादित्यर्थः । मूलं योजयति ॥ **मिथ्यात्वत इति** । दोषान्तरविवक्षयोत्तरान्विततयाऽपि योजयति ॥ **किञ्चेति** । अपीत्यस्यान्वयोक्तिः सत्यत्वमपीति ॥ **न प्रकारान्तरेति** । परस्परविरुद्धयोरन्यतरस्थितिं विना प्रकारान्तरेण स्थितिर्नेत्यर्थः । तथा च विरुद्धयोरन्यतरस्य मिथ्यात्वेऽन्यतरस्य सत्यत्वं स्यादेवेति भावः ।

**या०— अनुवर्तनादिति** । अन्यथा अपिशब्दवैयर्थ्यमिति भावः ॥

**श्री०— अखण्डार्थनिष्ठताया इति** । निर्भेदार्थनिष्ठत्वरूपाखण्डार्थनिष्ठताया इत्यर्थः । तथा च ब्रह्मस्वरूपभिन्नैक्यरूपार्थप्रतिपादकत्वाङ्गीकारे उक्तरूपाखण्डार्थत्वहानिरिति भावः ॥ **सर्वस्येति** । तन्मध्ये ऐक्यस्यापि पतितत्वादिति भावः ॥ चैतन्यातिरिक्तस्य सर्वमध्यपतितैक्यस्य मिथ्यात्वानङ्गीकारे बाधकमाह **अन्यथाऽद्वैतेनैवेति** । मिथ्यात्वतस्तदैक्यं शास्त्रेण न ज्ञेयमित्यस्याभिप्रायमाह **अन्यथेति** । ऐक्यस्य मिथ्यात्वाङ्गीकार इत्यर्थः ॥ **तत्कथं व्याप्तिरिति** । ययोरैक्यं मिथ्या तयोर्भेदः सत्य इति व्याप्तिरित्यर्थः ।

---

**च०—विशेषणप्रतीतिमन्तरेणेति** । विशेषणज्ञानासमवधानदशायां विशिष्टप्रतीत्यापत्तिवारणाय विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानत्वावच्छिन्नस्य हेतुतायाः स्थितत्वादिति भावः । अत्रायमभिसन्धिः । भेदो हि न व्यसनतया मन्दप्रयोजन एवोरीक्रियते । अपि तु धर्माभिमतैक्यस्य धर्मितयाऽभिमतब्रह्मणश्च विशेषणविशेष्यभावाधाराधेयभावादिनिर्वाहायैव । स चाप्रतीयमानस्तत्र नेष्ट इति तत्प्रतीतिरवश्यापेक्ष्यैव । सा च विशेषणतया विशेष्यतया वा भेदमवगाहमानैवेति पूर्वपूर्वभेदप्रतीतेरवश्यमपेक्षितत्वादिति ॥ **अनवस्थाऽपीति** । स्फुटत्वादिति भावः ।

**सु०— तृतीयं निराचष्टे** भेदाभेदाविति ।

**अनु०—** भेदाभेदौ यदि

**जीवब्रह्मणोरैक्यस्य स्वरूपाद्भेदाभेदौ यद्यङ्गीक्रियेते** । तदा वक्तव्यं **तौ किं चैतन्यादभिन्नावुत भिन्नौ अथ भिन्नाभिन्नाविति** ॥ आद्ये चैतन्यस्यापि द्वित्वं **तयोर्वैकत्वमित्याद्यापद्येत** । **द्वितीययोर्दोषमाह** तदेति ।

**अनु०—** तदा स्यादेव ह्यनवस्थितिः ॥

हिशब्देनानवस्थाव्युत्पादनस्य स्पष्टतामाचष्टे । तथा हि । स भेदः किं भेदिभ्यां भिन्नोऽभिन्नो भिन्नाभिन्नो वा । प्रथमे सोऽपि भेदस्तथेत्यनवस्था । द्वितीये शब्दपर्यायत्वादयो दोषाः । तृतीयस्तु तृतीयेऽन्तर्भवति । तत्राप्युक्तविधयाऽनवस्थैवेति ।

ननु भेदस्य भेदान्तरं भेदाभेदयोश्च भेदाभेदान्तरमित्येतावता नानवस्था । उत्पत्तिज्ञप्तिप्रतिबन्धकत्वाभावादिति चेन्न । विशेषणप्रतीतिमन्तरेण विशिष्टप्रत्ययानुपपत्त्या ज्ञप्तिप्रतिबन्धकत्वात् । तदिदमुक्तं स्यादेवेति । यद्यपि भेदाभेदाङ्गीकारे विरोधो वक्तुं शक्यते तथाऽपि स्फुटत्वान्नोक्तः । एवमैक्यस्य स्वरूपाद्भेदपक्षेऽनवस्थाऽपीति ।

वा०—भेदाभेदयोश्चैतन्याभेदपक्षेऽनवस्थितेरसंभवाद्विकल्प्याभेदपक्षे लक्षणानां लक्ष्याभेदे परोक्तन्यायेनोपर्येव दूषणमभिधाय भेदभेदाभेदपक्षदूषणतया मूलं योजयति **जीवेति** ॥ भेदस्य भेदाभेदयोश्चाभेदपक्षेऽनवस्थाऽनुपपत्तेराह **तथा हीति** । 'पर्यायत्वादयः' इत्यत्रादिपदेन भेदभेदिभावानुपपत्त्यादेर्ग्रहणम् ॥ **तत्रापीति** । तावपि भेदाभेदौ भेदाभेदिभ्यामभिन्नौ उत भिन्नौ अथ भिन्नाभिन्नाविति विकल्प्याभेदपक्षे तयोरेकत्वादिकमापाद्य भेदपक्षेऽपि स भेदो भेदिभ्यां भिन्नोऽभिन्नो भिन्नाभिन्नो वेति विकल्प्य भेदपक्षेऽनवस्थामापाद्याभेदपक्षे पर्यायत्वादिकमापाद्य भेदाभेदपक्षं परिशेष्य पुनस्तद्दूषणं तावपि भेदाभेदावभिन्नौ भिन्नौ भिन्नाभिन्नौ वेत्युक्तरीत्या ज्ञातव्यमित्यर्थः ॥ **विशेषणप्रतीतिमन्तरेणेति** । विशेषणविशेष्यभावादिप्रतीतये खलु भेदोऽभ्युपगम्यते । स च प्रतीयमान एव । तद्धेतुस्तत्प्रतीतिश्च विशेषणादिभावेनेवेत्युत्तरोत्तरभेदप्रतीतेरवश्यमपेक्षितत्वादिति भावः ॥ भेदाभेदाङ्गीकारे विरोधस्यैक्यस्य स्वरूपाद्भेदपक्षेऽनवस्थायाश्चासंभवाद्भाष्यकारीयानुक्तिरिति भ्रान्तिं निवर्तयति **यद्यपीत्यादिना** ।

स०— **विशेषणप्रतीतिमन्तरेण विशिष्टप्रत्ययानुपपत्त्येति** । ननु विशेषणीभूतभेदप्रतीतेरावश्यकत्वेऽपि न तस्य तद्भेदान्तरमपि ज्ञेयम् । न हि विशेषणीभूतो भेदोपि भिन्नोऽयं भेद इति प्रतीयते । येन तस्य तद्भेदान्तरस्यापि विशेषणतया तत्प्रतीतेरप्यावश्यकत्वेनानवस्था किन्तु अनयोर्भेद इति । तथा च कथमनवस्थेति चेन् न । विशेषणीभूतभेदस्येतरसङ्कीर्णतया ज्ञाने विशेषणत्वस्यानयोर्भेद इति सङ्कीर्णव्यवहारस्य वाऽयोगेन असङ्कीर्णतया ज्ञातव्यत्वे भिन्नत्वेनैव ज्ञानस्य प्राप्तत्वात् भिन्नत्वातिरिक्तासङ्कीर्णताया अभावादित्यभिप्रेतत्वात् । एवं विशेषणीभूतभेदाभेदगतं भेदाभेदान्तरमप्यवश्यं ज्ञातव्यम् । न हि सङ्कीर्णतया ज्ञातस्य विशेषणत्वं नाप्यत्यन्तविविक्ततया । अभिन्नयोरपि, भेदविशेषणत्वप्रसङ्गात्; दण्डसंबन्धस्य न देवदत्तविशेषणत्वत्; अतो विशेषणत्वान्यथानुपपत्त्यैव भेदाभेदवत्वज्ञानमावश्यकमिति तत्राप्यनवस्था दुष्परिहरेति द्रष्टव्यम् ।

प०— **तृतीयं** तत्पदलक्षितचैतन्यादैक्यं भिन्नाभिन्नमिति पक्षम् ॥ **स्वरूपादिति** । चैतन्यस्वरूपादित्यर्थः ॥ **इत्याद्यापद्येत इति** । तच्छब्दपर्यायत्वं अन्यतरमात्रपरिशेषापत्तिश्चेत्यादिपदार्थः ॥ **भेदिभ्यामिति** । चैतन्यरूपवस्तुना भेदाभेदाख्यवस्तुना चेत्यर्थः ॥ **शब्देति** । चैतन्यशब्दभेदशब्दाभेदशब्दानां पर्यायत्वं चैतन्याद्यन्यतरपरिशेषत्वभेदाभेदयोरेकत्वभेदानेकत्वरूपदोषा इत्यर्थः ॥ **तृतीय इति** । भेदिभ्यां भेदो भिन्नाभिन्न इति पक्षः । ऐक्यं चैतन्याद्भिन्नाभिन्नमिति पक्षेऽन्तर्भवति । तथा च तद्दोषेणैव दुष्टो भवतीति भावः । तत्र वा को दोष इत्यत आह **तत्रापीति** ॥ **विशेषणेति** । चैतन्यादैक्यं भिन्नाभिन्नमिति विशिष्टप्रतीतिर्हि विशेषणत्वेन भेदाभेदभानमपेक्षते । विशेषणत्वेन भेदाभेदभानं च भेदाभेदरूपविशेषणस्य विशेष्यभूतैक्यस्य च भेदस्य वा भेदाभेदस्य वा भानाभावेऽनुपपन्नम् । तद्भानमपि विशेषणत्वेन तज्ज्ञानं विना नेत्येवमुत्तरोत्तरभेदादिभानं विना पूर्वपूर्वभेदादिभानं न युक्तमिति ज्ञप्तिप्रतिबन्धकत्वाद्दोष एवेत्यर्थः ॥ **अनवस्थापीतीति** । स्फुटत्वान्नोक्तेति योज्यम् ।

या०— **विशेषणप्रतीतिमन्तरेणेति** । ननु विशेषणीभूतभेदप्रतीतेरावश्यकत्वेऽपि न तद्गतं भेदान्तरमपि ज्ञेयम् । न हि विशेषणीभूतो भेदोऽपि भिन्नोऽयं भेद इत्येव प्रतीयते । येन तद्गतभेदान्तरस्यापि विशेषणतया तत्प्रतीतेरप्यावश्यकत्वेनानवस्था । किन्त्वनयोर्भेद इत्येव । एवं विशेषणीभूतयोर्भेदाभेदयोर्ज्ञानस्यावश्यकत्वेऽपि न तद्गतभेदाभेदान्तरमप्यवश्यं ज्ञेयम् । विशेष्यतयाऽपि तयोर्ज्ञानसंभवात् । तथाच कथमनवस्थेति चेन्न । विशेषणतया वा विशेष्यतया वा वस्तुप्रतीतेस्तद्गतभेदप्रतीत्यभावेऽसंभवात् । अन्यथा दण्डपुरुषयोः कदाचिदभेदभ्रमो न स्यात् । (तस्मा)स्याच्च कदाचिदभिन्नयोरपि विशेषणविशेष्यभावभ्रमः । तथा च भेदस्य विशेषणतया वा विशेष्यतया वा प्रतीतिस्तद्गतभेदप्रतीतिसापेक्षैवेति सुस्था ज्ञप्तिप्रतिबन्धकानवस्थेति । एवं भेदाभेदयोरपि नाप्रतीतभेदाभेदयोर्विशेषणतया विशेष्यतया वा भानमिति तत्राप्यनवस्था ज्ञप्तिप्रतिबन्धिका । विशेषणविशेष्ययोर्भेदस्य तावज्ज्ञानमुक्तरीत्या आवश्यकमपरभेदस्य च परेण तदुभयसंसर्गस्थानाभिषिक्तत्वेनाभ्युपगमात् । तस्य च ज्ञातस्यैव विशिष्टधीनियामकत्वं नाज्ञातस्येति वैशेषिकपरीक्षायां वक्ष्यमाणत्वादिति ॥ **अनवस्थाऽपीति** । स्फुटत्वान्नोक्तेत्यर्थः ।

श्री०— **शब्देति** । चैतन्यशब्द-भेदशब्द-भेदाभेदशब्दानां पर्यायत्व-चैतन्याद्यन्यतरपरिशेषत्व-भेदभेदाभेदयोरेकत्वरूपदोषा इत्यर्थः ॥ **तृतीये इति** । भेदिभ्यां भेदो भिन्नाभिन्न इति पक्षः । ऐक्यं चैतन्याद्भिन्नाभिन्नमिति पक्षेऽन्तर्भवति । तथा च तद्दोषेणैव दोषो भविष्यतीति भावः । तत्रैवैक्ये को दोष उक्त इत्यत आह **तत्रापीति** ॥

सु०— नन्वैक्यं चैतन्याभिन्नमपि स्वनिर्वाहकत्वात्स्वाभाविकप्रकाशेनाप्रकाशितत्वमात्मनो निर्वक्ष्यति(हिष्यति)। यद्वा स्वरूपेणैक्यस्य भेदाभेदौ स्ताम्। तयोश्च भेदाभेदान्तराभावेऽपि स्वविर्वाहकत्वाद्व्यवहारोपपत्तिरिति चेन्न। विशेषानभ्युपगमे स्वनिर्वाहकत्वस्यापि वक्तुमशक्यत्वादित्यभिप्रायेणाह स्वनिर्वाहकतेति।

अनु०— स्वनिर्वाहकता चेत्स्यात्

ऐक्यस्य भेदाभेदयोर्वा स्वनिर्वाहकता यद्यङ्गीकृता स्यात्। तदा पृच्छामः स्वस्य निर्वाहकं हि स्वनिर्वाहकं तस्य भावः स्वनिर्वाहकता। स्वस्येति च कर्मणि षष्ठी। कर्तृकर्मणोः कृतीति वचनात्। तथा चैकस्यैवैकस्यामेव निर्वाहक्रियायां कर्मकर्तृत्वलक्षणं निर्वाह्यत्वं निर्वाहकत्वमित्युक्तंभवति। तन्निर्वाह्यत्वं निर्वाहकत्वं च परस्परं धर्मिणा क्रियया चात्यन्ताभिन्नमु-(तात्यं)त भि(न्नाभि)न्नमिति।

आद्ये दोषमाह वाह्यमिति।

अनु०— वाह्यं वाहकमित्यपि ॥
पर्यायो भेदवान्वा स्यादनवस्थोभयत्र च ॥

---

निर्वाह्यमिति निर्वाहकमिति अपिशब्दान्निर्वाहणमित्यपि शब्दसमूहः पर्यायः प्रसज्येत एकार्थत्वात्। न च तेषां शब्दानां कश्चित्पर्यायत्वं मन्यते।

द्वितीयमनूद्य दूषयति भेदवानिति।

वाशब्दो यद्यर्थे। यदि निर्वाह्यत्वादिरर्थः परस्परं धर्मिणा च भेदवान् स्यात्तदा तद्भेदद्वयस्य भेदिस्वरूपमात्रत्वे पर्यायत्वादिदोषप्रसङ्गाद्भेदान्तरवदित्यङ्गीकरणीयम्। तथा च परस्परं भेदं धर्मिभेदं वाऽऽश्रित्योभयत्रानवस्था स्यादिति।

वा०— ननु स्वनिर्वाहकत्वपक्षदूषणमयुक्तम् उक्तदूषणापरिहारेण परेण तस्यावक्तव्यत्वात्सिद्धान्ते विशेषस्य स्वनिर्वाहकताऽङ्गीकारात्। स्वव्याहतं च तद्दूषणमित्यत 'ऐक्याभेदे न शास्त्रेण'-इत्युक्तदूषणस्य भेदाभेदपक्षेऽनवस्थायाश्च परिहारेण परेणापि तस्य वक्तव्यत्वमेव विशेषानभ्युपगम एव तदनुपपत्तिप्रतिपादनान्न स्वव्याहतिरपीत्याशयेनोत्तरवाक्यमवतारयति नन्विति। उक्तपक्षयोर्मूलारूढतायै योग्यधर्म्यध्याहार ऐक्यस्य भेदाभेदयोर्वेति॥ ननु निर्वाहकत्वस्य शब्दाल्लाभेऽपि निर्वाह्यस्य कथं

लाभ इत्यतः समासावयवकर्मषष्ठ्येत्याशयेनाह **स्वस्येति** । अपिपदबललब्धोक्तिः ॥ **धर्मिणेत्यादि** । भेदवान्वेति पूर्वकल्पे दूषणान्तरपरत्वप्रतीतेः कल्पान्तरदूषणपरत्वं मूलारूढं करोति **वाशब्द इति** । निर्वाह्यत्वादीत्यादिपदेन निर्वाहकत्वनिर्वाहक्रिययोर्ग्रहणम् । तद्भेदद्वयमित्युभयत्रेत्यनुसारात्त्रयाणां धर्माणां भेदस्य परस्परभेदत्वेन क्रोडीकारेण धर्मिभेदस्य पृथक्कारेणेति द्रष्टव्यम् । भेदद्वयस्य भेदिस्वरूपत्वे मूलोक्तानवस्थाऽसंभवेन पूर्ववाक्यात्पर्याय इत्यनुवर्त्य तत्पक्षे दूषणं योजयित्वा भेदवानित्यावर्त्य भेदान्तरवत्त्वपरतया तद्व्याख्याय तत्रानवस्था द्रष्टव्येत्याशयेनोभयत्रेत्येतद्विषयं दर्शयन्नेव वाक्यं योजयति **भेदीत्यादिना** ।

प० — **निर्वहिष्यतीति** । निर्वक्ष्यतीति वाच्ये इडागमो लेखकदोषमूलो वा निर्वचनार्थभ्रमनिरासाय कृतो वेति ध्येयम् ॥ **व्यवहारोपपत्तिरिति** । भिन्नाभिन्नमैक्यं चैतन्यादित्यादिविशिष्टव्यवहारोपपत्तिरित्यर्थः ॥ **कर्तृकर्मणोः कृतीतिवचनादिति** । निर्वाहकशब्दस्य ण्वुल्प्रत्ययान्तत्वात्तस्य च 'कृदतिङि'त्यनेन कृत्संज्ञत्वात्तद्योगे कर्तरि कर्मणि च षष्ठी भवतीति पाणिनिवचनादित्यर्थः ।

या० — **कर्तृकर्मणोः कृतीति** । कृद्योगे कर्तरि कर्मणि च षष्ठी स्यादिति सूत्रार्थः । व्यासस्य कृतिः भारतस्य श्रवणमित्युदाहरणम् । अत्र च निर्वाहशब्दस्य ण्वुलन्तत्वात् ण्वुलश्च तृतीयधात्वधिकारे विहितस्य कृत्त्वादिति भावः ।

---

च० — **कर्तृकर्मणोः कृतीतिवचनादिति** । कृद्योगे कर्तरि कर्मणि षष्ठी स्यादिति सूत्रार्थः । उदाजह्रुश्च 'शोभना खलु पाणिनेः सूत्रस्य कृतिः' इति । तृतीयस्य धात्वधिकारेविहितस्य ण्वुलः कृदतिङितिकृत्त्वात्तद्दशकृत्समभिव्याहाराधीना सुपो धात्विति लुप्ता समासरूपप्रातिपदिकावयवभूता स्वादौतरा षष्ठी निरूपकत्वाप्रत्यासत्त्या निर्वहणक्रियाऽन्वितकर्मत्वार्थिकेत्याधेयतया प्रकृत्यर्थविशेषितं यत्कर्मत्वं तन्निरूपकनिर्वहणक्रियाकर्त्रित्यर्थः पर्यवस्यतीतिभावः ।

सु० -- **एवं विशेषानभ्युपगमे महावाक्यार्थानुपपत्तिमभिधायावान्तरवाक्येऽपि तामतिदिशति** सत्येति ।

अनु० — सत्यज्ञानादिकेऽप्येवं

**सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिकेऽवान्तरवाक्येऽप्येवं विकल्प्य दूषणमभिधानीयमित्यर्थः ॥ तथा हि । सत्यज्ञानादिकं परस्परं ब्रह्मणा चात्यन्ताभिन्नं वा भिन्नं वा भिन्नाभिन्नं वा । नाद्यः । तथा सति स्वप्रकाशब्रह्मात्मकस्य तस्य सत्यज्ञानादिशास्त्राप्रतिपाद्यत्वप्रसङ्गात् । सत्यज्ञानादिपदानां पर्यायत्वापत्त्या सहप्रयोगानुपपत्तिप्रसङ्गाच्च । न द्वितीयः । अपसिद्धा-**

त्वात् । मिथ्यात्वापत्त्या शास्त्रस्यातत्त्वावेदकत्वप्रसङ्गाच्च । अज्ञानत्वादेः सत्यत्वापत्तेश्च । न तृतीयः । अनवस्थाप्रसङ्गात् । स्वनिर्वाहकत्वस्य चोक्तविधया निर्वक्तुमशक्यत्वादिति ॥

वा०— तत्तन्मूलसूचितान्यतिदिष्टविकल्पदूषणानि प्रतिपादयति तथा हीति ।

प०— महावाक्येति । तत्त्वमसीतिवाक्येत्यर्थः । प्रागुक्तविकल्पान् तद्दोषांश्च व्यनक्ति तथाहि सत्यज्ञानादिकमित्यादिना ।

श्री०— अज्ञानत्वादेरिति । ज्ञानत्वादेर्ब्रह्मभिन्नत्वेन मिथ्यात्वाङ्गीकारात्परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वेन ज्ञानत्वादेर्ब्रह्मणि सत्यत्वं स्यादित्यर्थः ॥

सु०— ननु सत्यज्ञानादीनां परस्परं ब्रह्मणा चात्यन्तमभेद एव । न च तावता सत्यज्ञानादिपदानां पर्यायत्वम् । वाच्यार्थभेदसद्भावात् । परापरसामान्यवाचिनां सगुणब्रह्मवाचिनां वा तेषां परब्रह्मणि लक्षणया प्रवृत्त्यङ्गीकारात् । न च वाच्यं सत्यपदेन लक्षितस्यैव ज्ञानपदेन लक्षणायां वैयर्थ्यम्, अधिकलक्षणायां च नाखण्डार्थतासिद्धिरिति । लक्ष्यार्थभेदाभावेऽप्यारोपितासत्यत्वादिव्यावृत्त्यर्थत्वेन पदान्तराणां सप्रयोजनत्वात् । अत एव न शास्त्रवैयर्थ्यम् ॥ स्वप्रकाशेऽप्यारोपिताकारव्यावृत्त्यर्थत्वेन शास्त्रस्य सप्रयोजनत्वादिति चेन्न । किं ब्रह्मविशेषणत्वेनासत्यत्वादिव्यावृत्तिबोधः प्रयोजनमुच्यते । किंवा स्वतन्त्र एव व्यावृत्तिबोधः ।

वा०— परापरेति । कुम्भाद्यनुगतसत्ता परा जातिः । अन्तःकरणवृत्त्युपधानलब्धभेदचिदानन्दविशेषानुगते ज्ञानानन्दत्वे चापरजाती । एवं च सत्यज्ञानानन्दादिशब्दानां लक्ष्यार्थभेदेऽपि क्रमेणोक्तजातिवाचित्वान्न पर्यायत्वमिति कल्पतरावुक्तत्वादिति भावः ।

स०— परापरसामान्यवाचिनामिति । सत्यपदं व्यापकीभूतसत्तासामान्यवाचि ज्ञानानन्दपदे तद्व्याप्यज्ञानत्वादिवाचिनी । इदं च जातावेव शक्तिरिति भाट्टमतमाश्रित्योक्तमिति द्रष्टव्यम् ।

प०— परापरसामान्येति । सत्ताशब्दितसत्यत्वरूपव्यापकजातिज्ञानत्वादिरूपव्याप्यजातिवाचिनां सत्यज्ञानादिशब्दानामित्यर्थः । न च वाच्यमित्यस्य सिद्धिरित्यनेनान्वयः । अत एवेत्युक्तं व्यनक्ति स्वप्रकाशेऽपीति । 'सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्म' इत्यादिशास्त्रस्य हि ब्रह्म असत्यं न अज्ञानं न, परिच्छिन्नं नेत्याद्यर्थकत्वेनारोपितासत्यत्वाद्याकारव्यावृत्त्यर्थत्वेन प्रयोजनवत्त्वादित्यर्थः ।

या०—परापरसामान्यवाचिनामिति । सत्यपदं व्यापकीभूतसत्तासामान्यवाचि ज्ञानानन्दपदे तद्व्याप्यज्ञानत्वादिवाचिनी । इदं च जातावेव शक्तिरिति भाट्टमतमाश्रित्योक्तमिति द्रष्टव्यम् ॥ तार्किकादिमतेनाह सगुणं ब्रह्मेति ।

श्री०— **अधिकेति** । सत्यपदेन लक्षितादधिकस्य विशेषस्य ज्ञानपदेन लक्षणायामित्यर्थः ॥ ॥ **अखण्डार्थतेति** । निर्विशेषार्थनिष्ठत्वरूपातिखण्डार्थतेत्यर्थः ।

च०—**परापरसामान्यवाचिनामिति** । जातावेव पदानां शक्तिमुपगच्छतां भाट्टानां मते सत्यपदस्य व्यापकघटादिसाधारणसत्ताजातिवाचित्वाज्ज्ञानानन्दादिपदानां व्याप्यभूतज्ञानत्वानन्दत्वादिजातिवाचित्वान्न तत्पदानां पर्यायत्वमिति व्यवहारे भट्टनय इति परिभाषामुपेयुषा कल्पतरुकृताऽभिहितत्वादिति भावः ।

सु०— **आद्ये दोषमाह** न व्यावृत्त्येति ।

अनु०— न व्यावृत्त्या प्रयोजनम् ॥

व्यावृत्तस्याविशेषत्वे

**इत्थंभूतलक्षणे तृतीया । ब्रह्मविशेषणत्वेनासत्यत्वादिव्यावृत्तिलक्षणं प्रयोजनं सत्यादिपदानां त्वया वक्तुं न शक्यते ॥ कुत इत्यत आह** व्यावृत्तस्येति । **व्यावृत्ततया प्रतीतस्य ब्रह्मणोऽविशेषत्वे सतीत्यर्थः । अभावविशेषाङ्गीकारे च भावविशेषैः किमपराद्धम् ।**

**द्वितीयं दूषयति** न व्यावृत्त्येति । **व्यावृत्तेर्व्यावृत्तस्य ब्रह्मणोऽविशेषत्वे सा स्वतन्त्रा व्यावृत्तिर्न प्रयोजनम् । अजिज्ञासितत्वात् । मुमुक्षुणा ब्रह्म वा तद्धर्मो वा जिज्ञासितव्यः । तत्र व्यावृत्तिर्न ब्रह्म । तस्य भावरूपत्वादेकत्वान्निरुपाधिकत्वाच्च । ब्रह्मधर्मोपि न चेत्कथं मुमुक्षुणा जिज्ञास्येत । अजिज्ञासितबोधनं च कथं प्रयोजनं स्यादिति ।**

वा० अत्र क्रियाऽनुपादानाद्व्यावृत्ते स्वयं प्रयोजनत्वेन प्रयोजनान्तराहेतुतया कर्तृकरणहेतुषु तृतीयानुपपत्तेराह **इत्थंभूतेति** कञ्चित्प्रकारं प्राप्त इत्थंभूतस्तस्य लक्षणं चिन्हं तत्र तृतीयेत्यर्थः । तथा च प्रयोजनत्वस्वरूपप्रकारं प्राप्तसत्यादिपदानां व्यावृत्तिरूपप्रयोजनमेव चिह्नम् । अनेनैव तेषां प्रयोजनवत्त्वादिति भावः । व्यावृत्तनिरासपरे व्यावृत्तस्येति सिद्धवदनुवादानुपपत्तेराह **व्यावृत्ततयेति** । तथा च ब्रह्मणः सखण्डत्वापत्त्याऽपसिद्धान्त इति भावः । न चात्र व्यावृत्तिवैशिष्ट्यस्यार्थिकतया शब्दार्थस्य न सखण्डत्वं यश्चार्थादर्थो न स चोदनार्थ इति न्यायात् 'मानान्तरादपोहस्तु न शब्दस्तेन स स्मृतः' इति सुरेश्वरोक्तेश्चेति वाच्यम् । आर्थिकेनापि विशेषेण ब्रह्मणोऽखण्डत्वहानेरपरिहारात्तस्या एव चापादनात् । अनन्तपदेनान्तवद्व्यावृत्तेः साक्षादुक्तेश्च । शब्दस्य व्यावृत्तिवैशिष्ट्येऽतात्पर्ये आर्थिकव्यावृत्तेरप्यसिद्धेश्च । स्वरूपमात्रस्य सिद्धतया तत्रातात्पर्यात् । व्यावृत्तिविशिष्टेऽप्यतात्पर्ये तात्पर्यविषयशून्यतयाऽप्रामाण्यापातेनागतिकतया सत्यादिपदानामपि व्यावृत्तिवैशिष्ट्ये तात्पर्याभ्युपगमे शब्दस्यापि

सखण्डार्थतापत्तेश्च । उपलक्षिते तात्पर्याभ्युपगमेऽपि काकवद्गृहमित्यादिवत्सखण्डार्थताऽपरिहाराच्चेति ॥ **अभावेति** । परमसिद्धान्तपरित्यागेऽपि नेह नानेति श्रुतिविरोधस्य दुर्वारत्वात्तत्परिहारोपायस्य च भावविशेषेष्वपि साम्यादिति भावः । ननु व्यावृत्तेर्ब्रह्मविशेषत्वेऽपि ब्रह्मरूपत्वात्प्रयोजनत्वजिज्ञासितत्वाभावोक्तिरनुपपन्नेत्यतो व्यावृत्त्येत्यावर्तितस्य पञ्चम्यर्थत्वेन षष्ठ्यर्थत्वेन च विपरिणतस्य व्यावृत्तस्येत्यनेनाविशेषत्व इत्यनेन चान्वये भावक्तान्तस्य व्यावृत्तस्यैवावृत्त्या कर्मक्तान्तेन तेनैवान्वये वा व्यावृत्तेर्व्यावृत्तस्येति व्यावृत्तेर्ब्रह्मविशेषत्वाभाव इति वाऽर्थस्य लाभे ब्रह्मरूपव्यावृत्तिपक्षस्य व्यावृत्तेर्ब्रह्मविशेषत्वपक्षस्य च दूषणमपि सिध्यतीत्याशयेनाह **व्यावृत्तेरिति** । व्यावृत्त्यतिरिक्तस्येत्यर्थः । ब्रह्मणोऽविशेषत्व इत्येतल्लब्धार्थकथनं स्वतन्त्रेति । योग्यं हेतुमध्याहरति **अजिज्ञासितत्वादिति** । अत एव तथैव विकल्पयति **मुमुक्षुणेति** । व्यावृत्तेर्व्यावृत्तस्येत्यनेन सूचितहेतूनाह **तस्येति** । व्यावृत्तेरन्यादृशत्वादिति भावः ।

स० — **इत्थंभूतलक्षणे तृतीयेति** । ननु कञ्चनप्रकारं प्राप्त इत्थंभूतस्तल्लक्षणे तज्ज्ञापके तृतीया स्यादिति ह्यस्यार्थः । यथा छात्रेणोपाध्यायमद्राक्षीदिति । अत्र सत्यादिपदप्रयोजनरूपं प्रकारं प्राप्तं प्रयोजनं व्यावृत्तिरेव सा कथं तज्ज्ञापिका अभेदादित्याशङ्कापरिहारायोक्तं व्यावृत्तिलक्षणं प्रयोजनमिति । तथाचाभेदेऽपि सामान्यविशेषरूपयोस्तयोरवच्छेदकभेदेन शिंशुपा वृक्ष इत्यत्रेव ज्ञाप्यज्ञापकाभावो युक्तः विशेषस्य सामान्यज्ञापकत्वादिति ध्येयम् । केचित्तु असत्यादिव्यावृत्तिबोधकत्वरूपप्रकारान्तरं प्राप्तानां सत्यादिपदानां व्यावृत्तिश्चिह्नमिति तत्र तृतीयेत्याहुः ॥ **व्यावृत्तेर्व्यावृत्तस्येति** । व्यावृत्तेरविशेषत्व इत्यन्वयः अविशेषत्व इत्यर्थः ।

प० — **इत्थंभूतलक्षण इति** । कञ्चित्प्रकारं प्राप्त इत्थंभूतस्तस्य लक्षणे ज्ञापके तृतीया भवति । छात्रेणोपाध्यायमद्राक्षीदित्यत्रोपाध्यायत्वप्रकारं प्राप्तस्य छात्रशब्दितः शिष्यो ज्ञापक इति तत्र तृतीयोक्ता पाणिनिना । तथेहापि व्यावृत्त्या व्यावृत्तिरूपचिह्नेनेत्यर्थत्वादेवमुक्तम् । यद्वा इत्थंभूतस्य यल्लक्षणं तत्र तृतीयेत्यर्थवत् इत्थंभूतं यल्लक्षणं तत्र तृतीयेत्यप्यर्थमुपेत्यैवमुक्तम् । विशेषणत्वरूपप्रकारान्तरं प्राप्ते व्यावृत्तिरूपे लक्षणे तृतीयेत्यर्थोऽत्र ध्येयः । विशेषणीभूता व्यावृत्तिः प्रयोजनं नेत्यत्र फलितोऽर्थः । उक्तं च तृतीयेऽध्याये ऋग्भाष्यटीकायां सप्तदशे वर्गे 'अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम्'इत्येतद्भाष्यस्य 'व्याप्तया गिरा जरायै संस्तुतित्वेन तृतीया भावरूपिणी'इत्यस्य व्याख्यावसरे 'जरायै' इत्यत्र जरयेति व्यत्ययमुपेत्य तृतीयाया इत्थंभूतलक्षणत्वमभ्युपेत्य जरया संस्तुत्या संस्तुतित्वेन स्तुतित्वरूपेणोपेतया' इति । तदेव व्यनक्ति **ब्रह्मेति** । नन्वसत्यादिव्यावृत्तीनां अभावरूपत्वात्तासां ब्रह्मविशेषणत्वेऽपि न निर्विशेषत्वाङ्गीकारभङ्गः । भावविशेषाङ्गीकाराभावादित्यत आह **अभावेति** । व्यावृत्तेरितिपदद्वयमध्याहृत्य मूलं योजयति **व्यावृत्तेरविशेषत्वे सतीति** । विशेषणाभावत्वे सतीत्यर्थः । किं प्रति इत्यतो व्यावृत्तस्ये-

त्यनूद्य ब्रह्मण इति विशेष्यमुक्तम् । 'न व्यावृत्त्या प्रयोजनम्' इत्यस्यार्थः सा स्वतन्त्रेत्यादि ॥ **निरुपाधिकत्वाच्चेति** । अन्यानिरूपितत्वादित्यर्थः । व्यावृत्तयस्त्वभावरूपत्वादनेकरूपत्वात्सोपाधिकत्वाच्चेत्युक्तत्रितयविपरीता इति भावः ।

**या०**—ननु कर्तृकर्मणोस्तृतीयेति कर्तृकर्मणोस्तृतीया विहिता । न चात्र व्यावृत्तेः कर्तृत्वं करणत्वं वा सम्भवति । अतः कथं तृतीयेत्यत आह **इत्थम्भूतलक्षण इति** ॥ ननु कञ्चन प्रकारं प्राप्त इत्थम्भूतस्तल्लक्षणे तज्ज्ञापके तृतीया स्यादिति ह्यस्यार्थः । यथा छात्रेणोपाध्यायमद्राक्षीदिति । अत्र सत्यादिपदप्रयोजनत्वरूपं प्रकारं प्राप्तं प्रयोजनं व्यावृत्तिरेव सा कथं तज्ज्ञापिकाऽभेदादित्यत उक्तम् **व्यावृत्तिलक्षणं प्रयोजनमिति** । तथा चाभेदेऽपि सामान्यविशेषरूपतयाऽवच्छेदकभेदेन शिंशुपारूपो वृक्ष इत्यत्रेव ज्ञाप्यज्ञापकभावो युक्तो विशेषस्य सामान्यज्ञापकत्वादिति ध्येयम् । यद्वा । प्रयोजनवत्त्वरूपं प्रकारं प्राप्तानां सत्यादिपदानां व्यावृत्तिज्ञापिकेति । तत्र तृतीयेत्यर्थः । अभेदेऽपि सामान्यविशेषभावेन ज्ञाप्यज्ञापकभावोऽत्रापि विवक्षित इति ॥ **किमपराद्धमिति** । अत्र कश्चित्तु "अभाववैशिष्ट्यस्याऽऽर्थिकत्वेन न शाब्दार्थस्य सखण्डत्वम् । 'यश्चार्थादर्थो न स चोदनार्थः' इति न्यायात् । 'मानान्तरादपोहस्तु न शाब्दस्तेन संस्मृतः' इति सुरेश्वरोक्तेश्च" इत्याह तत्तुच्छम् । आर्थिकेनापि विशेषेण ब्रह्मणोऽखण्डत्वहानेः । अनन्तशब्देनान्तवद्व्यावृत्तेः साक्षादुक्तेश्च । सत्यादिपदानां सत्यत्वादिरूपव्यावर्तकधर्मवैशिष्ट्यातात्पर्ये आर्थिकव्यावृत्तेरप्यसिद्धेर्वक्ष्यमाणत्वाच्चेति ॥ **व्यावृत्तेर्व्यावृत्तस्येति** । अत्र व्यावृत्तेरविशेषत्व इत्यन्वयः । अविशेषणस्य इत्यर्थः ॥ **निरुपाधिकत्वाच्चेत्यनन्तरं** व्यावृत्तेस्त्वभावरूपत्वादनेकत्वात्सोपाधिकत्वाच्चेति पूरणीयम् ॥

**च०**—चैत्रेण चक्षुषा दृश्यते घट इत्यादाविव क्रियावाचकपदसमभिव्याहाराभावेन कर्तृत्वकरणत्वार्थकत्वायोगेन कथं व्यावृत्तिपदोत्तरा तृतीयेत्यतस्तां घटयति । **इत्थंभूतलक्षण इति** ॥ अथ जटाभिस्तापस इत्यादौ जटापदोत्तरतृतीयोपस्थापितज्ञाप्यत्वस्य निरूपितत्वप्रत्यासत्त्या प्रकृत्यर्थविशेषितस्याश्रयतासंसर्गेण तापसपदार्थतावच्छेदके तापसत्वे अन्वयितावच्छेदकरूपेणानुपस्थिते समभिव्याहृतपदार्थान्तरान्वयायोगेन एकदेशान्वयानुपगमेन वा संपन्नो व्रीहिरित्यादौ स्वाश्रयप्रकृत्यर्थतावच्छेदकरूपपारम्पर्येण व्रीहावेव व्रीहिपदोत्तरैकवचनार्थैकत्वान्वयवत्तापस एव वा तादृशपारम्पर्येणान्वयोपगमेन कञ्चन प्रकारं प्राप्तस्य ज्ञापके द्योत्ये तृतीयेति सूत्रोदाहरणत्वस्य सुसङ्गतत्वेपि प्रकृते प्रयोजनत्वरूपप्रकारे प्रमाया व्यावृत्तेर्ज्ञापकत्वाभावेन एतत्सूत्रोदाहरणत्वं दुःसङ्गममिति चेन्न । अत्र व्याचक्षाणाः "कञ्चन प्रकारं प्राप्त इत्थंभूतस्तस्य लक्षणं चिन्हं तत्र तृतीयेर्थः । तथाच प्रयोजनवत्त्वरूपं प्रकारं प्राप्तानां सत्यादिपदानां व्यावृत्तिरूपप्रयोजनमेव चिह्ममनेनैव तेषां प्रयोजनवत्त्वादिति भावः ।" इति व्याचक्षते ।

“अत्र सत्यादिपदप्रयोजनत्वरूपं प्राप्ता व्यावृत्तिरेव तज्ज्ञापिकापि सैव । अभेदेऽपि सामान्यविशेषरूपतया ऽवच्छेदकभेदेनायं वृक्षः शिंशुपा इत्यत्रेव ज्ञाप्यज्ञापकभावो युक्तः” इत्यपि व्याकुर्वते । **किमपराद्ध-मिति** । अत्रार्थिकं व्यावृत्तिवैशिष्ट्यं न शब्दार्थस्याखण्डार्थताभङ्गाय प्रभवतीतिशङ्का आर्थिकविशे-षेणाप्यखण्डत्वभङ्गेनानन्तपदेनान्तवद्व्यावृत्तेः साक्षादेवाभिधानेन सत्यत्वादिव्यावर्तकधर्मवैशिष्ट्यमन्तरेण तन्नियन्त्रितव्यावृत्त्यसिद्धेश्चाभिधास्यमानतया च निर्दलैव ।

सु० — **किञ्च सत्यादिपदानि ब्रह्मणि किं सत्यत्वादिधर्मानभिदधत्यसत्त्वादिव्यावृत्ति-प्रयोजनानि । उतान्यथा वा ।**

**नाद्यः अनङ्गीकारादित्याह** न व्यावृत्त्येति । **व्यावृत्तस्य ब्रह्मणोऽविशेषत्वेऽङ्गीकृते सति, विशेषणाभिधानमुखेन व्यावृत्तिः पदानां प्रयोजनमिति वक्तुं न शक्यत इत्यर्थः ।**

**द्वितीयं दूषयति** न व्यावृत्त्येति । **व्यावृत्तस्य ब्रह्मणोऽविशेषत्वे सत्यत्वादि-धर्माप्रतिपादन इति यावत् । असत्यत्वादिव्यावृत्तिः पदानां प्रयोजनमिति वक्तुं न शक्यते । न हि तीरे नदीत्वमनभिदधतो नदीपदस्यानदीत्वव्यावृत्तिः प्रयोजनं संभवति । विरोध्या-कारसमर्पणेन हि विरोध्याकारान्तरं व्यावर्तनीयम् ॥**

**यदुक्तं शास्त्रं चारोपिताकारव्यावृत्त्या स्वप्रकाशेऽपि प्रयोजनवदिति । तदप्यनेनैव निरस्तम् ॥ निर्विशेषे स्वयंप्रकाशमाने विरोध्याकारारोप एवानुपपन्न इति चोक्तम् ।**

वा० — न च सत्यत्वादेरतात्पर्यविषयस्यापि प्रागभिधाकाले प्रतीतिमात्रेण लक्ष्यस्य तद्व्यावृत्ति-सिद्धिरिति वाच्यम् । नद्यां घोष इत्यत्र तीरस्यानदीतोऽपि व्यावृत्तिसिद्ध्यापत्तेरित्याशयेनाह **न हि तीर इति** । व्यावृत्तेर्ब्रह्मविशेषणत्वस्वातन्त्र्याभ्यां सत्यादिपदैः सत्यत्वादिसमर्पणमुखान्यथात्वाभ्यां च व्यावृत्ति-बोधप्रकारस्य निरासेनैक्याभेद इत्युक्तदूषणपरिहारः परकृतोऽप्ययुक्त इति सिद्धमित्याह **यदुक्तमिति** । उक्तदूषणं चात्र स्मारयति **निर्विशेष इति** ।

प० — **अभिदधतीति** शत्रन्तम् । अभिदधानानीत्यर्थः ॥ **तदप्यनेनेति** । व्यावृत्तिर्विशेषणं वा स्वतन्त्रा वेत्यादिविकल्पपूर्वकदूषणेनेत्यर्थः । ‘ऐक्याभेदे न शास्त्रेण ज्ञेयं तत्स्वप्रकाशतः’ इत्यत्र महा-वाक्यार्थखण्डनप्रस्तावोक्तदोषान्तरं च स्मारयति **निर्विशेष इति** ।

श्री० — अभिदधति सन्तीति शेषः ॥ **न हि तीरे नदीत्वमिति** । नदीपदलक्ष्यार्थे तीरे नदीत्वार्पणाभावेनैव नदीपदस्य तीरेऽनदीव्यावृत्तिबोधकत्वं नास्ति एवं सत्यादिपदलक्ष्यार्थे ब्रह्मण्यपि सत्य-त्वाद्यर्पणाभावेनासत्यादिव्यावृत्तिबोधकत्वं नेत्यर्थः ॥ अत एव न शास्त्रवैयर्थ्यमित्यादिनोक्तं दूषयति **यदुक्तमिति** ॥ **अनेनेति** । ‘न व्यावृत्त्या प्रयोजनम्’ इत्यनेनेत्यर्थः ॥ दूषणान्तरमाह **निर्विशेष इति** ।

सु०—एवं विशेषानङ्गीकारे वाक्यद्वयस्यानुपपत्तिमभिधायोपसंहरति तदिति ।

अनु०— तदखण्डं च खण्डितम् ॥

तत्तस्मादखण्डं निर्विशेषं वाक्यद्वयप्रतिपाद्यमित्येतन्मतं खण्डितं दूषितं वेदितव्यमित्यर्थः ।

प०— वाक्यद्वयस्येति । महावाक्यावान्तरवाक्यरूपवाक्यद्वयस्येत्यर्थः ।

श्री०— वाक्यद्वयस्य महावाक्यावान्तररूपवाक्यद्वयस्य ।

सु०—स्वक्रियाविरुद्धं च निर्विशेषत्ववचनमित्याह निर्विशेषत्वमिति । यथा मूकोऽह-

अनु०— निर्विशेषत्वमेतेन मूकोऽहमितिवद्भवेत् ॥

मित्येतत्स्वक्रियाविरुद्धम् । वक्तृत्वाभावो ह्यनेनोच्यते वचनक्रियया च वक्तृत्वमिति । तथा निर्विशेषं ब्रह्मेति स्वक्रियाविरुद्धं भवेत् । कथम् । एतेन निर्विशेषत्वेन विशेषेणापतितेन हेतुना । विशेषाभावो हि निर्विशेषं ब्रह्मेति वाक्येन प्रतिपादयितुमिष्टः । प्रतिपादनक्रियया च विशेषाभावलक्षणो विशेषः प्राप्नोतीति । अयमपि विशेषो निर्विशेषमित्यनेन निराक्रियत इति कुतस्तत्रापि स्वक्रियाविरोधः । प्रतीतिविरोध इति चेत् । तर्ह्येतद्वचनकर्तृत्वमपि मूकोऽहमित्यनेन निराक्रियत इति कुतस्तत्रापि स्वक्रियाविरोधः । प्रतीतिविरोध इति चेत् । समस्समाधिः । परबोधनोपायाभावाद्विशेषाभाव उपादीयते न तु ब्रह्मविशेषतयेति चेत् । अत्रापि परबोधनोपायाभावादेवेदं वचनम् । वस्तुतस्त्वसौ मूक एवेत्यस्तु । निर्विशेषम् इत्यस्य विशेषनिरास एव तात्पर्यम् । न निर्विशेषत्वविशेषविधौ । अतः कथं विरोध इति चेत् । तर्हि मूकोऽहमित्यस्यापि वक्तृत्वनिरासे तात्पर्यम् । नैतद्वचनवक्तृत्व इति कुतस्तत्रापि विरोधः । न तत्र स्ववचनविरोधः । किन्तु स्वक्रियाविरोध इति चेत् । प्रकृतेऽपि किमन्योऽभिहित इत्यास्तां प्रपञ्चः । तदिदमुक्तं मूकोहमितिवदिति ।

वा०— ननु सर्वविशेषान्निराकुर्वता निर्विशेषमित्यनेन विशेषाभावरूपविशेषस्यापि निरासान्न प्रतिपादनक्रियाप्राप्तः कश्चिद्विशेषोऽस्त्यतः कथं स्वक्रियाविरोध इति शङ्कते अयमपीति ॥ निर्विशेषमिति सर्वविशेषनिरासान्न प्रतिपादनक्रियाप्राप्तः कश्चिद्विशेषोऽस्तीति वदन्प्रष्टव्यः सर्वविशेषाणामनेन निरासान्न विशेषाभावप्रतिपादनक्रिया नापि तत्प्राप्तो विशेष इति मन्यसे आहोस्वित्सत्यामपि तत्प्रतिपादनक्रियायां तस्या विशेषाप्रापकत्वमिति । द्वितीयेऽपि तस्या अन्यथासिद्धत्वात्तदप्रापकत्वमुत निर्विशेषमिति वाक्यस्य निर्विशेषत्वरूपविशेषविधौ तात्पर्याभावाद्वा । अत्राद्ये पक्षे स्वयमेव प्रतीतिविरोधं वक्तुं शक्येऽपि मूले मूकोऽहमित्युक्तिसामर्थ्येन प्रतिबन्दीग्रहणस्य प्रस्तुतत्वात्तन्मुखेनैव प्रतीतिविरोधं वक्तुं

मूकोऽहमित्यत्राप्येतत्साम्यमुपपादयति **तर्हीति** । सर्ववचनवक्तृत्वाभावं वदता मूकोऽहमित्यनेनैतद्वचनवक्तृत्वस्यापि निरासेनैतद्वचनक्रियायास्तत्प्राप्तवक्तृत्वस्याप्यभावेन तत्रापि स्वक्रियाविरोधो न स्यादित्याशयः । मूकोऽहमित्यनेनेन तन्निराकरणमात्रेण न प्रतीतिसिद्धवचनक्रियातत्प्रयुक्तवक्तृत्वयोरपलापो युक्तः । अतोऽत्र स्वक्रियाविरोधः स्यादेवेति चेत्तर्हि निर्विशेषमिति निराकरणमात्रेण न प्रतीतिसिद्धप्रतिपादनक्रियातत्प्राप्तविशेषापलापो युक्तोऽतोऽत्रापि स्वक्रियाविरोध इत्याह **प्रतीतीति** । विशेषाभावप्रतिपादनोपायान्तराभावात्तदुपायत्वेन प्रकृततयाऽन्यथासिद्धायाः प्रतिपादनक्रियाया न विशेषप्रापकत्वमिति द्वितीये आद्यं शङ्कते **परेति** । तर्हि वक्तृत्वाभावबोधनोपायान्तराभावेन तदुपायत्वेन प्रवृत्ततयाऽन्यथासिद्धेर्वचनक्रियाया अपि न वक्तृत्वप्रापकत्वमिति तत्रापि स्वक्रियाविरोधो न स्यादित्याह **अत्रापीति** । निर्विशेषमित्यस्य विशेषविधावतात्पर्यात्तन्निरास एव च तात्पर्यान्न तत्प्रतिपादनक्रियाया विशेषप्रापकत्वमिति द्वितीये द्वितीयं शङ्कते **निर्विशेषमित्यस्येति** । साम्येन समाधत्ते **तर्हीति** । ननु निर्विशेषमिति वाक्यबलादेव विशेषाभावस्य तद्रूपविशेषस्य च प्राप्तेरेकप्रकरणप्राप्तयोरुभयोरेकत्र तात्पर्यं नान्यत्रेति स्ववचनविरोधपरिहारे कर्तुं शक्येऽपि मूकोऽहमित्यनेन वक्तृत्वाभावमात्रप्राप्तेर्वचनक्रियया च वक्तृत्वप्राप्तेर्न वाक्यतात्पर्यभावाभावाभ्यां स्वक्रियाविरोधपरिहारो युक्त इति न साम्यमित्याशयेन शङ्कते **न तत्रेति** । अत्रापि वाक्याद्विशेषाभावस्यैव प्राप्तिः प्रतिपादनक्रिययैव च विशेषस्येत्युक्ततया साम्यमेवेत्याह **प्रकृतेऽपीति** । वैलक्षण्यप्रकाराप्रतिपादनेऽप्यत्र स्ववचनविरोध एव, मूकोऽहमित्यत्र तु स्वक्रियाविरोध एवेत्याग्रहमात्रस्योपेक्षणीयतैव युक्तेत्याशयेनाह **आस्तामिति** । अथ चैवं वैलक्षण्याभासव्युत्पादने प्रकारान्तरेण परेण कृते तन्निरासकसाम्यप्रकारः शिष्यैरेवोह्यतामित्याशयेनाह **आस्तामिति** ।

**प०**— यथा मूकोऽहमित्येतत्स्वक्रियाविरुद्धं तथा निर्विशेषं ब्रह्मेति स्वक्रियाविरुद्धमित्यन्वयः । दृष्टान्तस्य स्वक्रियाविरोधमुपपादयति **वक्तृत्वाभाव इत्यादिना** । अनेन मूकोऽहमिति वाक्येन । एतद्वाक्योच्चारणक्रियया त्वित्यर्थः । शङ्कोत्तराभ्यां स्वक्रियाविरोधमेव व्यनक्ति **अयमपीति** ।

**या०**— निर्विशेषमित्यत्र स्ववचनविरोध एवोक्त इति मत्वा शङ्कते **निर्विशेषमित्यस्येति** ॥ गूढाभिसन्धिरुत्तरमाह **तर्हि मूकोऽहमित्यस्यापीति** ॥ अभिसन्धिमुद्घाटयति **प्रकृतेऽपीति** ।

**सु०**— **यदर्थमयं प्रयत्नस्तदाह** अभिन्नेपीति । **अत उक्तप्रकारेण महावाक्यावान्तर-**

**अनु०**— अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यतः ।

**वक्ययोरन्यथाऽनुपपत्तिबलाद्भेदरहितेऽपि ब्रह्मण्ययमनुपपत्तिशान्तिहेतुर्विशेषो नाम शक्ति-**

विशेषोऽङ्गीकरणीयः प्राप्नोति । इदमुक्तं भवति । महावाक्यप्रतिपाद्यमैक्यमवान्तरवाक्यप्रतिपाद्यं च सत्यत्वादिकं ब्रह्मणा परस्परं चाभिन्नमेव । एकधैवानुद्रष्टव्यमित्याद्येकरस(त्व)-प्रतिपादकश्रुतेः । न चोक्तदोषः । यतो भेदहीनेऽपि वस्तुन्यस्ति कश्चिच्छक्तिविशेषो येन प्रकाशमानमपि न प्रकाशत इत्यादि युज्यते । स च विशेषोऽनयैवार्थापत्त्याऽवगम्यत इत्येव त्वया वक्तव्यमिति ।

वा०— अत इत्यस्य व्याख्या **उक्तप्रकारेणेत्यादि** । ननु वस्तुसिद्धेः प्रमाणायत्तत्वात्कथं बलाद्विशेषसिद्धयुक्तिरित्यतो महावाक्यावान्तरवाक्यान्यथाऽनुपपत्तिरूपप्रमाणस्यैव बलशब्देन विवक्षितत्वान्नानुपपत्तिः इत्याह **महावाक्येति** । ननु विशेषेऽप्रस्तुतत्वादयमिति निर्देशानुपपत्तिरित्यतस्तस्यानुपपत्तिशान्तिहेतुत्वं मूलारूढं कर्तुं विवक्षितार्थमाह **अयमिति** । ऐक्यादेर्ब्रह्माभेदपक्षे उक्तानुपपत्त्या भेदादिपक्षवदभेदपक्षस्यापि त्याज्यत्वस्यैवापातेन विशेषासिद्धया यथास्थितानुपपत्तेरभिन्नेऽपीत्यनुवादेनाभेदपक्षपरिग्रहस्य सिद्धवदनुवादेनैकधैवेत्यादितत्प्रमाणस्य सूचनात्तत्र प्राप्तानुपपत्तिपरिहारकतया विशेषस्योपन्यासाद्विशेषप्रमाणत्वेन चैक्याद्यभेदप्रमाणतदनुपपत्तिप्रमाणरूपोभयान्यथाऽनुपपत्तेरेवाभिमतत्वान्नानुपपत्तिरिति भाष्याशयमाह **इदमुक्तं भवतीति** । त्वया वक्तव्यमित्यनेन नेदं ब्रह्माभिन्नजीवैक्यादौ विशेषबलादनुपपत्तिपरिहारप्रतिपादनं वस्तुवृत्ताभिप्रायेण येन भाष्यकारस्यापसिद्धान्तः स्यात् । किन्तु प्रतिबन्दीं घटयितुं परं प्रति वक्तव्यशिक्षणमिति सूचयति ।

प०— **अयं प्रयत्न इति** । लक्ष्यलक्षणयोर्भेद इत्यादिना महावाक्यार्थावान्तरवाक्यार्थखण्डनप्रयत्न इत्यर्थः ॥ **शक्तिविशेषो** वस्तुसामर्थ्यविशेषः । **उक्तदोषो**ऽभेदपक्षोक्तदोषः ।

श्री०— **अनयैवार्थापत्त्येति** । प्रकाशमानस्याप्यप्रकाशनान्यथाऽनुपपत्त्येत्यर्थः ॥

सु०— नन्वङ्गीकृतेऽपि विशेषे नानुपपत्तिशान्तिः । सोऽपि हि विशेषो यदि वस्तुनो भिन्नस्तर्हि भेदानवस्थादि दोषः स्यादभिन्नत्वे च विशेषतद्वद्भावानुपपत्तेस्तादवस्थ्यादित्यत आह विशेषेति । विशेषविशेषिणोश्चाभेद एवाङ्गीकरणीयः । विशेषबलाच्च विशेषतद्वद्भावोऽप्युपपादनीय इति शेषः । तथाऽपि विशेषपरम्परयाऽनवस्था स्यादित्यत आह स्वनिर्वाहकतेति । स एव विशेषो विशेषान्तरमन्तरेण विशेषतद्वद्भावं च घटयति । एकस्यैव निर्वाह्यत्वं निर्वाहकत्वं च तद्बलादेव सिद्ध्यतीत्यङ्गीकरणीयमिति ।

अनु०— विशेषतद्वतोश्चैव स्वनिर्वाहकता भवेत् ॥

**वा०**—ननु विशेषस्याङ्गीकारितत्वादुत्तरवाक्यं व्यर्थमित्यतस्तद्व्यावर्त्यां शङ्कां दर्शयति **नन्विति**। ननु तर्हि विकल्पितपक्षान्यतराङ्गीकारेण तद्दूषणपरिहारेण समाधानं कर्तव्यं स्वनिर्वाहकोक्तिरयुक्ता। स्वनिर्वाहकत्वोक्तेरनवस्थापरिहारकत्वेनानवस्थायाश्च भेदपक्षे प्रसक्त्या तदङ्गीकारेणान्यने चापसिद्धान्तापातादित्यतो विशेषतद्वतोरिति वाक्यं पृथक्कृत्य तत्र पक्षविशेषाङ्गीकारं तदुपपादनप्रकारं चाध्याहृत्य तत्र विशेषपरम्पराप्राप्तानवस्थापरिहारकतयोत्तरवाक्यं योजनीयमित्याशयेनाह **विशेषेत्यादिना**॥ तावताऽपि 'वाह्यं वाहकमित्यपि पर्यायः' इति दूषणं न प्रसज्यत इत्याह **एकस्यैवेति**।

**स०**— **स एव विशेष इति**। यथा घटप्रकाशनायानीतः दीपः स्वप्रकाशमपि स्वशक्त्यैव साधयेत् तथा भेदव्यवहारायाङ्गीकृतः विशेषोऽपि स्वीयव्यवहारनिर्वाहाय न विशेषान्तरमपेक्षते। अत एव दीपस्य प्रकाशत्वमिव स्वनिर्वाहकत्वं चास्यैव युक्तियुक्तम् न घटादेरित्यर्थः। न च सर्वभेदकार्यकारित्वे भेदस्यैव विशेष इति नामान्तरमिति शङ्क्यं एकसत्वेप्यपरनाशास्य भेदासाधारणकार्यस्याविशेषेऽनङ्गीकारेण सिंहासनारोहाख्यराजासाधारणकार्यातिरिक्तसकलकार्यकर्तरि मन्त्रिणि राजप्रतिनिधित्ववत् भेदप्रतिनिधित्वस्यैव न्यायप्राप्तत्वात्॥

**सु०**— नन्वभिन्ने वस्तुनि भेदकार्यनिर्वाहकत्वं विशेषस्य कुतः प्रमाणात्(तः) सिद्धमित्यत आह भेदहीने त्विति। तुशब्दोऽवधारणे। अपर्यायशब्दान्तरनियामक इत्यशेषभेदकार्यनिर्वा-

**अनु०**— भेदहीने त्वपर्यायशब्दान्तरनियामकः॥
विशेषो नाम कथितः

हकत्वोपलक्षणम्। एतदुक्तं भवति। जीवब्रह्मैक्यादीनामेकधैवेत्यादिश्रुत्या चैतन्यस्वरूपमात्रत्वं प्रतीयते। चैतन्ये स्वप्रकाशतया सिद्धेऽप्यसिद्धिरपर्यायशब्दवेद्यत्वम्, चैतन्यप्रकाशस्य नाविद्यानिवर्तकत्वमद्वैतज्ञानस्य तन्निवर्तकत्वमित्यर्थक्रियाविशेषः। चैतन्यमेकं सत्यत्वादीन्यनेकानीति सङ्ख्यावैलक्षण्यमित्यादिभेदकार्याणि चावगम्यन्ते। एतदुभयान्यथाऽनुपपत्त्या भेदरहितेऽपि चैतन्ये भेदप्रतिनिधिस्तत्कार्यकारी कश्चिदतिशयोऽस्तीति कल्प्यते। गत्यन्तराभावात्। तथा चार्थापत्त्या स्वरूपग्राहिण्या भेदकार्यनिर्वाहक एव(च)ासौ सिद्ध इति किं तत्र प्रमाणान्तरान्वेषणेनेति। अनेनैव विशेषस्य लक्षणं चोक्तं भवति। भेदहीनेऽप्यनुपचरितभेदव्यवहारनिमित्तं विशेष इति।

**वा०**— अपर्यायशब्दान्तरमात्रनियामकत्वे कार्यान्तरानुपपत्तिसाम्याद्विशेषाभ्युपगमवैयर्थ्यमित्यत आह॥ **अपर्यायेति**। नन्वेतावता विशेषस्य भेदकार्यनिर्वाहकत्वे किं प्रमाणमुक्तं भवतीत्यतो विशेषस्व-

रूपग्राहकार्थापत्त्या भेदकार्यनिर्वाहकतयैव तत्सिद्धेर्न तत्र पृथक् प्रमाणं गवेषणीयमिति मूलाभिप्रायं वक्तुमभिन्नेऽपीत्युक्तार्थापत्तिस्वरूपं विवेचयति **इदमुक्तं भवतीति** । स्वस्वकार्याकारिणि भृत्यपुत्रादौ नायं भृत्यो नायं पुत्र इत्यादिव्यवहारस्य विशेषानिमित्तकत्वादनुपचरितेति व्यवहारविशेषणम् ।

स० — **अनुपचरितेति** । पदार्थस्य स्वरूपमित्यादिव्यवहारहेतुव्यावृत्त्यर्थमनुपचरितेति व्यवहारविशेषणम् । न चापर्यायशब्दान्तरनियामकत्वेन तत्रापि विशेषोऽनुसर्तव्य इति वाच्यं अनन्यथासिद्धापर्यायशब्दान्तरनियामकत्वस्य विशेषकार्यतयाऽभिप्रेतत्वेन न घटत्वव्यावृत्तिलक्षणप्रवृत्तिनिमित्तभेदेन प्रकृते अन्यथासिद्धेः । न चास्योपचरितत्वे मानाभावः घट एव स्वरूपमिति मुख्यव्यवहारसत्वात् । न चानन्दं ब्रह्मण इत्यत्रापि विज्ञानमानन्दं ब्रह्मेति व्यवहारनिरुद्धत्वादुपचरितमिति वाच्यं अभेदस्य मानान्तराप्राप्तत्वेन भेदबोधन एव विज्ञानमितिश्रुतेश्चरितार्थत्वेन संबन्धव्यवहारबाधन एव तात्पर्यादिति द्रष्टव्यम् । पुरुष एव पुरुषोचितकार्यकारित्वाभावेनौपचारिके नायं पुरुष इति व्यवहारे अतिव्याप्तिपरिहारायानुपचरितपदम् ।

प० — **अनयैवेति** । ऐक्यस्य एकधेत्यादिश्रुतिभेदकार्यरूपोभयान्यथानुपपत्तिरूपार्थापत्त्येत्यर्थः । व्यक्ता चैषाऽग्रेपि भेदहीनेप्यनुपचरितभेदव्यवहारनिमित्तमिति । घटपटनिष्ठभेदेऽतिव्याप्तिनिरासाय भेदहीनेऽपीत्युक्तिः । राहोः शिर इत्याद्युपचरितव्यवहारहेतौ अतिव्याप्तिनिरासायानुपचरितेति । घटादिव्यवहारहेतुघटत्वादावनतिव्याप्तये भेदव्यवहारेत्युक्तिः ।

या० — **अनुपचरितेति** । अशक्तपुरुषे पुरुषकार्यकारित्वाभावेनोपचरिते नायं पुरुष इत्यादिभेदव्यवहारे यन्निमित्तं पुरुषकार्यकारित्वाभावरूपं तत्रातिव्याप्तिवारणायानुचरितेत्युक्तमिति द्रष्टव्यम् ॥

सु० — **एवमद्वैतवादिना विशेषमङ्गीकारयित्वाऽन्यानप्यङ्गीकारयति** सोऽस्तीति ।

अनु० —     सोऽस्ति वस्तुष्वशेषतः ॥

**न केवलं ब्रह्मणि मायावादिना विशेषोऽङ्गीकरणीयः । किं नाम प्रपञ्चसत्यतावादिभिरप्यशेषद्रव्येषु स विशेषोऽङ्गीक(र्तव्यः)ार्यः । तथा हि पटस्तच्छौक्ल्यं च तावन्न भिद्येते । अङ्गुलीद्वयवद्भेदेनानुपलम्भात् । अयुतसिद्धत्वादिति चेत् । किमयुतसिद्धत्वं नाम । अवश्यमाश्रयाश्रयिभावेनावस्थानमिति चेत् । किमेतावता भेदेन न प्रतेतव्यम् । नापि कुण्डमिव पटोऽधिकरणत्वेन बदराणीव शौक्ल्यमाधेयत्वेन परिस्फुरति । किं नाम तदेव तदिति । न चैषा प्रतीतिर्भ्रान्तिः । बाधकाभावात् । शौक्ल्यपटयोर्भेदावगाहिनी प्रत्यक्षप्रतीतिर्हि बाधिका भवेत् । अनुमानादीनामभेदप्रत्यय(क्ष)रोधेनोत्थानस्यैवासंभवात् । न च भेदावगाहिनी प्रत्यक्ष-**

प्रतीतिरस्तीत्युक्तम् । तेन प्रत्यक्षत एव सिद्धः पटशौक्ल्ययोरभेदः । दृश्यन्ते च भेदकार्याणि, पटशौक्ल्यबुद्ध्योरन्यूनानतिरिक्तविषयत्वाभावः, तच्छब्दयोरपर्यायत्वं अपर्यायशब्दस्मारकत्वं, जलाहरणाद्यर्थक्रियाभेदः, पटमानयेत्युक्ते यत्किञ्चिच्छुक्लानानयनं, शुक्लमानयेत्युक्ते नियमेन पटस्यानानयनम्, अपटः पट इतिवदशुक्लः पट इत्यनयोर्विरोधाभावः, अन्धस्यापि पटोऽयमिति वच्छुक्लोऽयमिति च प्रतीत्यनुत्पत्तिः, शुक्लाप्रतिप्रत्तिवत्पटाप्रतिपत्त्यभावः, महारजनसंपर्केण शुक्लत्ववत्पटस्या(स्या)वृतत्वाभावः, पटवद्वा शौक्ल्यस्याप्यनावृतत्वाभावः; इत्येवमादीनि। न चैषा प्रतीतिर्भ्रान्तिः । बाधितत्वाभिमानस्याप्यभावात् । व्यवहाराद्यविसंवादाच्च तदेतयोरभेदभेदकार्यप्रतीत्योरन्यथाऽनुपपत्त्या निर्भेदेऽपि पटेऽस्ति कश्चिदतिशयो भेदप्रतिनिधिर्यद्वशादिदं सर्वं समञ्जसं स्यादित्येव कल्पनीयम् । स चातिशयोऽभिन्नेऽपि विशेषकत्वाद्विशेष इति गीयते । एवमन्यत्रापि द्रव्ये विशेषः प्रतिपत्तव्यः ।

ननु भेदाभेदाङ्गीकारेणानुपपत्तेः शमनात् किं विशेषेणेति चेन्न । परस्परविरुद्धयोर्भेदाभेदयोरेकत्रावस्थानघटनाया(म)पि विशेषस्याप्यङ्गीकरणीयत्वात् । प्रतीतत्वात्को विरोध इति चेत् । सत्यम् । प्रतीतिरपि कथमुपपन्नेति चिन्तायां वस्तुस्वभावातिशयस्यानुसरणीयत्वात् । भेदाभेदानवस्थापरिहारार्थमपि विशेषाङ्गीकारस्यावश्यकत्वस्योक्तत्वादिति ।

---

**वा०**—सत्यत्ववादिनं प्रति ब्रह्मण्येव विशेषो व्युत्पादनीय इति न निर्बन्धः किन्तु सर्वत्रापीत्याशयेनाशेषत इति व्युत्पादयितुं प्रपञ्चसत्यत्ववादिभिरिति विशेषणम् ॥ **अवश्यमिति** । नियमेनेत्यर्थः । सम्बन्धविनाशस्य सम्बन्धिविभागस्य च कालान्तरेऽप्यभावेनेति यावत् । पटतच्छौक्ल्ययोः कुण्डबदरयोश्च भेदे संबन्धे च समाने कालान्तरभाविनः सम्बन्धविनाशस्य सम्बन्धविभागादेर्वा प्रत्यक्षप्रतीत्यप्रयोजकतयाऽऽश्रयाश्रयिभावेनावस्थानतौल्याच्चद्वदेव भेदेनोपलम्भः स्यादेव । न हि यावद्यावद्द्रव्यभाविश्यामतास्थले श्यामतादशायां प्रतीतिवैलक्षण्यानुभवः कस्यचिदित्याशयेनाह **किमेतावतेति** ॥ आश्रयाश्रयिभावेन प्रतीतिमभ्युपेत्येदमुक्तं वस्तुतस्तु न तथा प्रतीतिरपि त्वभेदेनैवेत्याह **नापीति** ॥ **अनुमानादीनामिति** । अन्यथा कालात्ययापदिष्टोच्छेद एव स्यादिति भावः । असञ्जातबाधस्थलवदुपपत्तिं निरस्यति **व्यवहारादीति** ॥ **एवमिति** । तन्तुपटादिबुद्धीनां भिन्नघटादिबुद्धितो वैलक्षण्यं तावदनुभूयते । तच्च न तावत्सम्बन्धविषयत्वेन । कुण्डबदरादिबुद्धितोऽपि वैलक्षण्यानुभवात् । नापि संयोगान्यसंबन्धविषयत्वेन । घटतज्ज्ञानतदभावादिबुद्धितोऽपि वैलक्षण्यानुभवात् । नापि स्वरूपप्रत्यासत्तिसंयोगान्यसम्बन्धविषयत्वेन । घटतद्धर्मिकान्योन्याभावादिबुद्धेर्घटपटादिबुद्धितो वैलक्षण्याभावापातात् । नाप्ययुतसिद्धिविषयत्वेन । आश्रयाश्रयिभावनियमो ह्ययुतसिद्धिः । तत्र च तदानीन्तनाश्रयाश्रयिभावः

कुण्डबदरादिबुद्धावपि भाति । नियमस्तु न तन्तुपटादिबुद्धावपि । न हि प्रत्यक्षा तन्तुपटादिधीस्तन्तुपटसम्बन्धनाशो वा तन्तुपटविभागो वा न भविष्यतीत्याकारा । नापि कुण्डबदरादिधीस्तयोः सम्बन्धनाशो वा कुण्डबदरादिविभागो वा भविष्यतीत्याकारा । नापि समवायविषयत्वेन । उक्तरीत्या सम्बन्धनित्यत्वस्य सम्बन्ध्ययुतसिद्धत्वस्य वा तत्रास्फुरणात् । तस्मादभेदविषयत्वेनैव वैलक्षण्यं वाच्यम् । अत एव ह्यातानवितानात्मकास्तन्तव एव पट इत्यादिरेव प्रत्ययो न त्वाश्रयाश्रयिभावेन कस्यचित् । दृश्यन्ते च भेदकार्याणि तन्तुपटबुद्ध्योरन्यूनातिरिक्तविषयत्वाभावः, तच्छब्दयोरपर्यायत्वम्, अपर्यायशब्दस्मारकत्वं, शीतनिवारणाद्यर्थक्रियाभेदः, सामानाधिकरण्यव्यवहार इत्येवमादीनि । न चैतयोर्बाधोऽस्ति येन भ्रान्तित्वं शङ्क्येत । तदेतयोरभेदभेदकार्यप्रतीत्योरन्यथाऽनुपपत्त्या तत्रापि विशेषः प्रतिपत्तव्य इत्यर्थः । भाष्यकारोक्तान्यथाऽनुपपत्तिं समर्थयितुमन्यथोपपत्तिं शङ्कते **नन्विति** । यद्वा मीमांसकेनापि विशेषमङ्गीकारयितुं तन्मतेनान्यथोपपत्तिं शङ्कते **नन्विति** ॥ उक्तयुक्तिं स्मारयति **भेदाभेदेति** ।

स० — **अंगुलीद्वयवदिति** । न चैकपात्रनिक्षिप्तक्षीरनीरादौ अंगुलीद्वयवद्भेदेनानुपलम्भात् भेदो न स्यादिति वाच्यं तत्रापि हंसादीनां भेदेनोपलम्भस्य विद्यमानत्वादितिभावः । न च भूतले घटाभाव इत्यत्र दोषतादवस्थ्यमिति वाच्यं, ततोऽपि वैलक्षण्यस्य शुक्लः पट इत्यत्रानुभूयमानत्वात् ॥ **पटमानयेत्युक्त इति** । इदं चैकमेवरूपं अनुगतमिति प्राभाकरमतानुसारेणोक्तमिति ध्येयम् ॥ **अशुक्लः पट इति** । अशौक्ल्यं पट इत्यर्थः इति प्रतिभाति ।

प० — **अङ्गीकारयित्वेति** । अङ्गीकारशब्दात् 'तत्करोति तदाचष्टे' इति णिचि कृते ण्यंतात्क्त्वाप्रत्यये रूपम् । अङ्गीकार्य, इति शङ्कानवकाशः । **अस्ती**त्यस्य तात्पर्यमाह **अङ्गीकर्तव्य इति** ॥ अर्थापत्तेरन्यथोपपत्तिमाशङ्क्य निराह **ननु भेदाभेदाङ्गीकारेणेति** ॥ **एकत्रेति** । यस्य येन भेदाभेदौ तत्र वस्तुनीत्यर्थः ॥ **उक्तत्वादितीति** । 'भेदाभेदौ यदि तदा स्यादेव ह्यनवस्थितिः' इत्यादाविति भावः ।

या० — **अस्ति** इत्यस्य तात्पर्यमङ्गीकर्तव्य इति । अन्यथाऽन्यानप्यङ्गीकारयतीत्युक्तस्यालाभ इति द्रष्टव्यम् ॥ **अयुतसिद्धत्वादिति** । तथा चोक्तानुमानेऽन्यथासिद्धिरिति भावः ॥ **अवश्यमिति** । कुण्डबदरादिव्यावृत्त्यर्थमिदम् । नियमेनेत्यर्थः । अत्राविनश्यतोरिति विशेषणीयम् । तेन विनश्यदवस्थयोराश्रयाश्रयिभावेनावस्थानाभावादव्याप्तिरितिनिरस्तम् । यथाहुः 'तावेवायुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः अविनश्यदेकमपराश्रितमेवावतिष्ठत' इति । ननु कथमेतत् । अविनश्यतोरित्यस्य हि विनश्यताशून्ययोरित्यर्थो वर्णनीयः । अन्यथोक्ताव्याप्त्यपरिहारात् । तथा च नित्यायुतसिद्धयोरप्रसिद्धेः । न च ययोर्द्वयोः सत्त्वदशायामिति विवक्षितम् । भूतलघटाभावयोरप्ययुतसिद्धताप्रसङ्गात् । न च

भावयोरित्यपि विवक्षितम् । कालघटत्वयोरपि तत्त्वप्रसङ्गादिति चेन्न । उभयस्थित्यवच्छिन्नकालावच्छेदेन नियताधारताप्रयोजकीभूतसम्बन्धातिरिक्तसम्बन्धाश्रयत्वमेवायुतसिद्धत्वमित्यत्र तात्पर्यात् । एतेन प्रलयकाले व्यक्त्यभावेऽपि जातेः सत्त्वात्कथं तयोराश्रयाश्रयिभावेनावस्थानमिति निरस्तम् । उभयस्थित्यवच्छिन्नकालावच्छेदेन तत्रापि तत्सत्त्वात् । इदमयुतसिद्धत्वं भेदोपलम्भानुकूलमेव न प्रतिकूलमतो नोक्तान्यथासिद्धिरित्याशयेनाह **किमेतावतेति** ॥ येनान्यथासिद्धिरुक्ता तदयुतसिद्धत्वमसिद्धं चेत्याह **नापि कुण्डमिवेति** ॥ ननु विरुद्धधर्माधिकरणत्वरूपमनुमानं तदन्यथाऽनुपपत्तिरूपार्थापत्तिर्वा वैशेषिकसमयरूप आगमो वा तयोर्भेदे मानमित्यत आह **अनुमानादीनामिति** ॥ **अन्यूनातिरिक्तेति** । पटं विना शौक्ल्यबुद्धेर्बलाकाऽऽदौ शौक्ल्यं विना पटबुद्धे रक्तपटादौ सत्त्वादिति भावः ॥ **जलाहरणाद्यर्थक्रियेति** । अतद्गुणसंविज्ञानबहुव्रीहिणा शीतनिवारणाद्यर्थक्रिया ग्राह्येति वा घटशौक्ल्ययोरित्यादिपाठमपेक्ष्य चेदमिति ज्ञातव्यम् ॥ **घटमानयेत्युक्त इत्यादि** । नन्वत्र ययोः पटशुक्लरूपव्यक्तिविशेषयोरभेदः प्रत्यक्षसिद्धः । न तयोरेतानि भेदकार्याणि किन्तु पटशौक्ल्यसामान्ययोः तयोश्च नाभेदः प्रत्यक्षसिद्धः । न हि पटमात्रं शुक्लमात्राभिन्नमिति कस्यचित्प्रतीतिरस्ति । तथा च कथमेतत्सङ्गतमिति चेत् । उच्यते । सत्यं, पटशौक्ल्यसामान्याश्रितानीमानि भेदकार्याणीति । तथापि नासङ्गतिः । व्यक्तिविशेषाभेदविषयकेणापि पटशौक्ल्यसामान्यव्यक्त्योरपि अभेदावगाहनस्य प्राप्तेः । विशेषव्यक्तिरूपातिरिक्तस्य सामान्यव्यक्तिस्वरूपस्यैवाभावात्पटत्वशुक्लत्वयोरपि धर्मत्वेन पटशौक्ल्यरूपधर्म्यभिन्नत्वात् । उक्तं हि भगवत्पादैः । 'व्यावृत्तं यच्च सामान्यं तदेव स्याद्विशेषतः' इति । एतद्व्याख्यावसरे सुधायामप्येवमेवोक्तम् । 'व्यावृत्तस्वरूपाभिन्नस्य प्रतिनियतसामान्याकारस्याभ्युपगमेन विशेषसामान्यरूपं सर्वमपीष्यत' इति । तथा च शुक्लः पट इति सामान्याकारेणाभेदावगाहिनी प्रत्यक्षप्रतीतिः सामान्ययोरप्यभेदमवगाहत इति तदाश्रितभेदकार्यप्रदर्शनं नासङ्गतम् । यदत्रोक्तम् पटमात्रं शुक्लमात्राभिन्नमिति न प्रतीयत इति तत्तथैव । उक्तरीत्या सामान्ययोरभेदे तत्र भेदकार्यनिर्वाहकविशेषानङ्गीकारेऽस्यापि भेदकार्यस्यानुपपत्तेः । नन्वस्तु सिद्धान्त इत्थं समाधानम्, प्रकृते तार्किकादीन्प्रति कथमिदं सङ्गतमिति चेन् । तान्प्रत्यपि पटशौक्ल्यव्यक्त्योर्भेदानुपलम्भेनादावभेदं प्रसाध्य तदाश्रितयोः पटत्वशुक्लत्वसामान्ययोरपि तेनैव हेतुना स्वाश्रयाभेदे सिद्धे तेन परस्परमपि तरुत्ववृक्षत्वयोरिवाभेदमापाद्य तदाश्रितभेदकार्यान्यथाऽनुपपत्त्युद्भावनात् । यद्वा । पटशुक्लविशेषयोरत्यन्ताभेदे पटशुक्लसामान्ययोरपि अत्यन्ताभेदः प्राप्नोति । घटघटयोरिव विशेष्यसामान्ययोरत्यन्ताभेदस्याप्रतीत्या विशेषानङ्गीकारे विरुद्धयोर्भेदाभेदयोश्च समाधातुमशक्यत्वस्य वक्ष्यमाणत्वेन

च विशेषानतिरिक्तसामान्यस्यैव वक्तव्यत्वादिति भावः ॥ ननु तर्ह्यतिशय एव कल्पनीयो न विशेष इत्यत आह स चातिशय इति ।

श्री०— अन्यूनेति । समानविषयत्वाभावः । पटबुद्धौ प्रतीयमानः शौक्ल्यबुद्धौ न प्रतीयते । तत्र प्रतीयमानः पटबुद्धौ न प्रतीयत इति भावः ।

सु०— ननु सर्ववस्तुषु यद्यस्ति विशेषः, स च वस्तुनो न भिद्यते, प्राप्तं तर्हि सकलवस्तूनामैक्यमित्यत आह विशेषा इति ।

अनु०— विशेषास्तेऽप्यनन्ताश्च परस्परविशेषिणः ॥
स्वनिर्वाहकतायुक्ताः सन्ति वस्तुष्वशेषतः ॥

ते प्रकृतस्वरूपा विशेषा, अशेषतो वस्तुष्वनन्तेषु द्रव्येष्वनन्ता एव सन्ति । न पुनरेक एव सर्वत्रातो नोक्तदोषः । सोऽस्तीत्येकवचनं तु समुदायापेक्षया प्रयुक्तमिति भावः । नन्वेकैकस्मिंश्च द्रव्ये विशेषोऽप्येकैकोऽस्ति तदा पटो महाञ्छुक्लश्चलतीति विचित्रानेकव्यवहारानुपपत्तिः । न ह्येकस्मादविचित्रस्वभावाद्विचित्रानेककार्योत्पत्तिर्दृष्टा । तथा सत्याकस्मिकत्वप्रसङ्गात् । ततश्च विशेषाङ्गीकारो व्यर्थः स्यादित्यत आह विशेषा इति ।

तेऽप्युक्तलक्षणा विशेषा अशेषतोऽपि वस्तुषु प्रत्येकमनन्ताः सन्त्यतो नोक्तदोषावकाशः अनन्ता इत्युपलक्षणम् । यत्र यावन्तो व्यवहारास्तत्र तावन्तो विशेषा इति ज्ञातव्यम् ।

प्रतिद्रव्यमनेकत्वे विशेषाणां परस्परं भेदेन भाव्यम् । भेदाविनाभूतत्वादनेकत्वस्य । तथा च भिन्नानां द्रव्याभेदे द्रव्यस्यापि भेदप्रसङ्ग इत्यत आह परस्परेति । परस्परविशेषवत्त्वेनैवानेकत्वं संभवति । विशेषस्य भेदकार्यकारिताया उक्तत्वादिति भावः ।

विशेषाणामपि विशेषान्तराङ्गीकारेऽनवस्थेत्यत आह स्वनिर्वाहकतेति । पूर्वं द्रव्येण विशेषस्याभेदचिन्ता इदानीं तु परस्परमिति स्फुटोऽर्थभेदः । सर्वं चैतद्विशेषस्वरूपसाधकार्थापत्त्यैव सिद्धमिति न पृथक् प्रमाणमुक्तम् । न हि स्वयमनुपपन्नमनुपपत्त्यन्तरशान्त्यै प्रभवति । किन्तु यथायथोपपद्यते तथातथैव स्वरूपग्राहिण्याऽर्थापत्त्यैव कल्प्यते । यद्यपि विशेषः प्रत्यक्षोऽपि भवति । 'येन प्रत्यक्षसिद्धेन' इति वक्ष्यमाणत्वात् । तथाऽपि विप्रतिपन्नो न तन्मात्रेण बोधयितुं शक्यत इत्यर्थापत्तिरुपन्यस्तेति ।

**वा०**— सोऽस्तीत्येकवचनाद्भ्रान्तः शङ्कते **नन्विति** ॥ न चैवं सोऽस्तीत्यनेन विरोध इत्यतः शङ्कामूलं विघटयति **सोऽस्तीतीति** ॥ एकस्मिन्नप्यनेकविशेषप्रतिपादनपरतया विशेषास्तेऽपीत्येतदेव योजयितुं तद्व्यावर्त्यशङ्कां दर्शयति **नन्विति** ॥ नन्वीश्वरस्यानन्तधर्मवत्त्वात्तत्र तावद्विशेषसत्त्वेऽपि नाशेषवस्तुष्वनन्तविशेषा इत्यत आह **अनन्ता इत्युपलक्षणमिति** । सङ्ग्राहकमुपलक्ष्यतावच्छेदकमाह **यत्रेति** ॥ 'विशेषतद्वतोश्चैव स्वनिर्वाहकता भवेत्' इत्यनेनापाततः प्राप्तां पौनरुक्त्यशङ्कां परिहरति **पूर्वमिति** ॥ ननु प्रतिज्ञामात्रेण भाष्यकारेणोक्तं 'विशेषास्तेऽपि'इत्यादि प्रमाणानुक्तौ कथं सिध्यतीत्यत आह **सर्वं चैतदिति** । प्रथमप्राप्तप्रत्यक्षपरित्यागेनार्थापत्त्युक्त्या प्राप्तां भाष्यकारस्याचातुरीं परिहरति **यद्यपीति** ।

**स०**— ननु 'विशेषतद्वतोश्चैव'इत्यनेनैव स्वनिर्वाहकत्वस्य प्रतिपादितत्वेन पुनः'स्वनिर्वाहकतायुक्ता' इत्यनेनापि स्वनिर्वाहकत्वस्यैव प्रतिपादनात् पौनरुक्त्यमित्यत आह **पूर्वं द्रव्येणेति** । तथापि पूर्वं विशेषस्य द्रव्येणाभेदमङ्गीकृत्य तत्र विशेषविशेषिभावनिर्वाहकस्वनिर्वाहकत्वमुपपादितम् इदानीं परस्पराभेदमङ्गीकृत्य तत्र भेदकार्यनिर्वाहार्थं स्वनिर्वाहकत्वमुपपादितमिति न दोष इति भावः ॥

**प०**—सोऽस्तीत्युक्त्या एक एव विशेषः सर्ववस्तुष्वनुगत इतिभ्रान्तः शङ्कते **ननुसर्ववस्तुष्विति** ॥ **ऐक्यमिति** । घटाद्यभिन्नविशेषाभिन्नत्वात्सर्ववस्तूनां यो यदभिन्नधर्माभिन्नः स तदभिन्न इति व्याप्तेरिति भावः ॥ असंभावनानिरासायाह **अनन्ता इत्युपलक्षणमिति** ॥ अपौनरुक्त्यायाह **पूर्वमिति** । 'विशेषतद्वतोश्च' इत्यादावित्यर्थः ॥ 'सर्वं चैतत्' इत्याद्युक्तं व्यनक्ति **नहीति** ॥ **येनेति** । येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् । भावाभावविभागेन यं विना न कथञ्चन । एतादृशे विशेषेऽस्मिन्को द्वेषो वादिनां भवेत् ॥' इति वैशेषिकनये वक्ष्यमाणत्वादित्यर्थः ।

**या०**— सोऽस्तीत्येकवचनेन भ्रान्तः शङ्कते **ननु सर्वेति** ॥ ननु पूर्वमेकस्यैव विशेषस्योक्तत्वात्ते विशेषा इति बहूनां परामर्शः कथमित्याशङ्कायां न बहुत्वस्य परामर्शः । किन्तु विशेषस्वरूपस्यैवेत्याह **ते प्रकृतस्वरूपा इति** ॥ **यत्र यावन्न इति** । इदं च भगवदितरचेतनज्ञेयविशेषानपेक्ष्यैवोक्तम् । अतो घटादावपि स्वभिन्नानां सूक्ष्मरजसां कालक्षणानामीश्वरगुणानां चानन्तानां सत्त्वात् । तत्प्रतियोगिकत्वरूपानन्तविशेषविशिष्टभेदस्मकरेनानन्तविशेषप्राप्त्येदमनुपपन्नमिति चोद्यानवकाश इति ध्येयम् । यद्वा । तत्तत्प्रतियोगिकत्वानामनन्तत्वेऽपि तेषां भेदधर्मत्वेन प्रतिद्रव्यं च भेदस्यैकत्वेन घटादौ द्रव्येऽनन्तभेदकार्याणामभावः । अनन्तपरमाणुकालसम्बन्धस्यापि अनित्यघटादावभावात् । यद्यपीश्वगनन्तानन्तरूपगुणकर्मसम्बन्धः सर्वस्यास्ति । तथाऽपि तत्तन्निरूपितत्वानामनन्तत्वेऽपि न सम्बन्धानन्तत्वम् । भेदवदनन्तप्रतियोगिकत्वस्यैकस्यापि सम्बन्धस्योपपत्तेः । प्रतियोगिभूतगुणकर्मसु भेदाभावाच्चेति द्रष्टव्यम् ।

**श्री०— प्राप्तं तर्हीति** । यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तेरित्यर्थः ॥ **महानित्यादि**, महत्वादिधर्मवान् ॥ 'सन्ति वस्तुष्वशेषतः' इति वक्ष्यमाणं 'विशेषास्तेऽप्यनन्ताश्च' इत्यनन्तरं सम्बध्यत इत्याशयेन योजयति **तेऽप्युक्तलक्षणा विशेषा इत्यादि** । मूले 'स्वनिर्वाहकतायुक्ताः सन्ति' इत्यस्य स्वनिर्वाहकत्वरूपधर्मयुक्ताः सन्तीत्यर्थो द्रष्टव्यः ॥ **भेदप्रसङ्ग इति** । अनेकाभिन्नत्वादिति भावः ॥

**सु०— यदर्थं तदैक्यस्येत्यादिना सर्वत्रादिभिर्विशेषोऽङ्गीकारितस्तदिदानीमाह** अत इति ।

**अनु०** — अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यते ॥

**निर्भेदमपि ब्रह्मातो विशेषसामर्थ्यादनन्तगुणं भण्यत इति ॥ यत्परेण पृष्टं लक्ष्य, लक्षणयोर्भेद इत्यादि तस्येदमुत्तरम्** ब्रह्म निर्भेदमिति । **यदत्रोक्तमनेकलक्षणाभिन्नस्यानेकत्वप्रसङ्गः, लक्षणानां वाऽनेकत्वानुपपत्तिः, शब्दपर्यायत्वं, गुणगुणित्वाद्यनुपपत्तिरिति; तस्योत्तरं- निर्भेदमप्यतो विशेषाद्गुणानामनन्तत्वं, ब्रह्मणश्चैकत्वम्, अनन्ता गुणा अस्येति गुणगुण्यादिभावो, ब्रह्म च गुणाश्चेत्यपुनरुक्तभणनं च युज्यते इति । अत्र जगज्जन्मादिकारणत्वमिति वक्तव्येऽनन्त गुणमिति वचनमिदं सूत्रमनन्तगुण(वत्)त्वमेव ब्रह्मणो लक्षणमभिप्रेत्य तत्साधनाय जगज्जन्मादि- कारणत्वलक्षणं प्रतिपादयितुं प्रवृत्तमिति सूचयितुम्** ।

**तदेवं जगज्जन्मादिकारणत्वस्य स्वलक्षणत्वे बाधकाभावान्न तटस्थत्वकल्पनं युक्तमिति सिद्धम्** ॥

**वा०**— एवं योग्यमन्वयं प्रदर्श्य पक्षपरिग्रहतद्दूषणपरिहारभाष्यांशौ विविच्य दर्शयति **यत्परेणेति** ॥ **वक्तव्य इति** । सूत्रानुसारात्स्वोक्तमानुसाराच्चेत्यर्थः ।

**प०**— **भणनमिति** । कथनमित्यर्थः ।

**सु०—अत्राह । किमर्थं लक्ष्यलक्षणयोरभेदमङ्गीकृत्य विशेषबलेन सर्वव्यवहारसमाधानं क्रियते । भेद एव कस्मान्नाङ्गीक्रियते । गुणगुणिभावस्तु समवायसंबन्धाद्भविष्यति । यदि च सूत्रकारेण समवायो निराकरिष्यत इति नाङ्गीकाराऽर्हस्तदा गुणगुणिनोरेव स कश्चित्तादृशः स्वभावभेद इत्यङ्गीकरणीयम् । न हि पटादौ भेदाभावेऽपि विशेषबलाद्व्यवहारविशेषदर्शन- मात्रेण ब्रह्मण्यपि तथा कल्पयितुं युक्तम् । निश्चायकप्रमाणाभावात् । निश्चायकप्रमाणोपन्यास- सार्थं हि संभावना कल्प्यते । यथाऽऽहुः 'संभावितः प्रतिज्ञाया अर्थः साध्येत हेतुना । न**

तस्य हेतुर्निर्माणमुत्पत्तरेव यो मतः' इति । न पुनः संभावनैवार्थ(स्य )साधिकेत्यत आह एवं धर्मानिति ।

अनु०— एवंधर्मानिति श्रुत्या तदभेदोऽप्युदीर्यते ॥ १-१-२ ॥

**अपिशब्दाद्विशेषोऽपि । अत्र हि ब्रह्मधर्माणां पृथक् दर्शननिन्दयाऽभेदोऽवगम्यते । धर्मानिति च धर्मबहुत्वोक्त्या सविशेषत्वम् । न च धर्मानित्यनुवादमात्रम् । श्रुतिं विना तद-सिद्धेः । मूलश्रुत्यङ्गीकारे सैव विशेषाभिधात्री भविष्यतीति प्रमितमेतन्निर्भेदमेव ब्रह्म विशेष-बलादेव नानाव्यवहारालम्बनमिति ।**

वा०— ब्रह्मतद्गुणादीनामभेदे पूर्वं प्रमाणानुपन्यासादुत्तरत्र तदुपन्यासात्तद्व्यावर्त्यतया भेदेना-न्यथासिद्धिशङ्कामुत्थापयति **अत्राहेति** ॥ लक्षणादीनां ब्रह्मणाऽभेदमभ्युपगम्य विशेषबलेनैव तदनुपप-त्तिनिरासो गत्यन्तराभावाद्वा पटादौ क्लृप्ततया वा । आद्यं निषेधति **भेद एवेति** । ननु पटादौ भेदाभावेऽपि विशेषबलादेव व्यवहाराणामुपपादनादन्यत्र क्लृप्ततया ब्रह्मण्यपि तथा कल्पना युक्तेति द्वितीयं निराह **न हीति** ॥ **निश्चायकेति** । अस्याश्च सम्भावनात्वादिति भावः । सम्भावनाया निश्चायकप्रमाणोपन्यासार्थत्वे सम्मतिं दर्शयति **यथाऽऽहुरिति** ॥ अत्र साक्षादभेदोक्तिभ्रान्तिं निराकरोति **अत्र हीति** । धर्मबहुत्वोक्त्येत्यत्र धर्मत्वोक्त्या तेषां बहुत्वोक्त्या चेत्यर्थः ।

---

या० — पटादौ भेदाभावेऽपि विशेषबलाद्भेदव्यवहार इत्यस्तु प्रमितत्वात्, न ब्रह्मणि; तत्र भेदेनैव व्यवहारोपपत्तौ सविशेषाभेदकल्पकाभावादिति मन्वानमुत्थापयति **अत्राहेति** ॥ **लक्ष्यलक्षणयोरिति** । इदमुपलक्षणम् । गुणगुणिनोरित्यपि द्रष्टव्यम् ॥ प्रकृते ब्रह्मणीति शेषः ॥ **स्वभावभेद इति** । स्वरूप-सम्बन्धविशेष इत्यर्थः । तथा च ब्रह्मणि गुणभेदेऽपि स्वरूपसम्बन्धविशेषेणैव गुणगुणिभाव इति भावः ॥ ननु घटादौ सविशेषाभेदस्य समर्थितत्वाद्ब्रह्मण्यपि तथैव कल्पनीयं सम्भावितत्वात्, सम्भावनया अपि विप्रतिपन्नार्थसिद्धेर्लोके बहुलमुपलम्भात् । इत्यत आह **न हि पटादाविति** ॥ **अनुवादमात्र-मिति** । तथा च न धर्मबहुत्वे तात्पर्यं यदर्थं विशेषः कल्पनीय इति भावः ।

श्री०— **श्रुतिं विनेति** । प्राप्तस्यैवानुवाददर्शनादीश्वरनिष्ठधर्मबहुत्वस्य श्रुतिं विना प्राप्त्यसिद्धेरि-त्यर्थः ॥ **मूलश्रुतीति** । ईश्वरधर्मबहुत्वप्रापकेत्यर्थः ॥ इति **जन्माधिकरणम्** ॥ ॥ १-१-२ ॥ छ ॥

**सु०— अत्र यत्परेण जगत्कारणत्वं किं ब्रह्मणो निमित्तत्वमेवोतोपादानत्वमेवाथो-भयमपीति विमृश्य तृतीयः पक्षः (परि)गृहीतः । उपादानत्वं च परिणामित्वेनेति कश्चित् । प्रपञ्चभ्रमाधिष्ठानमात्रत्वेनेत्यपरः । तदेतत्सर्वं प्रकृत्यधिकरणे निपुणतरं निराकरिष्यते ।**

वा०— अत्र परेण विरुद्धप्रमेयान्तरे प्रतिपादितेऽपि तदनिरासप्रयुक्तां भाष्यकारस्य न्यूनतां निरस्यति **अत्रेति** ॥ १-१-२ ॥ छ ॥

या०— नन्वत्र निर्णीतं जगत्कारणत्वं यदि परीत्योपादानत्वरूपम् । तर्हि न तेन गुणपूर्णता सिध्यति । तस्य च परिणामरूपत्वेऽल्पगुणजगदभेदेनाल्पगुणप्राप्तेः । भ्रमाधिष्ठानरूपत्वे तु गुणानामेवाप्राप्तिर्दूरे तत्पूर्णत्वस्य; इत्यत आह **अत्र यत्परेणेत्यादिना** ॥ अत्र यद्यपि मायावादिनाऽत्रायं विमर्शो न स्पष्टमभिहितः किन्तु प्रकृत्यधिकरण एव । तत्रापि ब्रह्म किं निमित्तमेवोतोपादानमपीति द्विकोटिक एव विमर्शः प्रदार्शितो न त्रिकोटिकः । तथाऽपि तदभिप्रेतानुवादो व्याख्यातृकारान्तरोक्तो वा त्रिकोटिको विमर्शोऽत्र प्रदर्शित इति द्रष्टव्यम् ॥ १-१-२ ॥ छ ॥

च०— अत्राद्वैतवादिप्रदर्शितप्रतीतप्रमेयान्तराप्रतिविहितिनियंत्रितभाष्यकृन्न्यूनतापरिजिहीर्षया तदनुवदति **अत्र यत्परेणेति** ॥ प्रतिविधत्ते **तदेतदिति** ।

**सु०— तस्मादुक्तलक्षणद्वयोपपन्नं ब्रह्म नारायणाख्यं मुमुक्षुणा जिज्ञास्यमिति स्थितम् ॥**

**॥ इति जन्माधिकरणम् ॥ १-१-२ ॥ छ ॥**

प०— कण्ठोक्तमार्थिकं चाधिकरणार्थं फलोक्त्योपसंहरति **तस्मादिति** । जगज्जन्मादिहेतुत्वानन्तगुणत्वरूपलक्षणद्वयेत्यर्थः ॥ १ । १ । २ ॥

च०— एतन्नयार्थं निगमयति **तस्मादिति** ॥ छ ॥ इति जन्माधिकरणव्याख्या ॥

( इति मायावाद्युक्तस्य निर्गुणत्वस्यापि सूत्रकारैरेव निराकृतता ॥ )

**( इति एतल्लक्षणस्य तटस्थत्वकल्पनायाः अयुक्तत्वम् ॥ )**

तदूक्तोपदेशात्स्वयं प्रमाणत्वमनुमापयेत्



( अथ जगत्कारणत्वस्य पाशुपताद्यागमानुमानावष्टम्भेन अतिव्याप्तिशङ्का । )

**सु०— ॥ ॐ शास्त्रयोनित्वात् ॐ ॥ जगज्जन्मादिकारणत्वं परब्रह्मणो विष्णोर्लक्षणमभिहितम् । तस्य हरहिरण्यगर्भादिचेतनेषु प्रधानाद्यचेतनेषु च पाशुपताद्यागमानुमानावष्टम्भेनातिव्याप्तिमाशङ्क्यात्र परिहरति भगवान्सूत्रकारः ॥**

**वा०— ॐ शास्त्रयोनित्वात् ॐ ॥** अधिकरणप्रतिपाद्यस्य सङ्गतेश्च स्पष्टत्वात्पूर्वपक्षाद्युक्त्या ज्ञातुं शक्यत्वाच्च भाष्यकारानुक्तमधिकरणप्रतिपाद्यं ससङ्गतिकमाह **जगदिति** । उक्तलक्षणस्यातिव्याप्तिपरिहारेण समर्थनादनन्तरसङ्गतिरिति भावः ।

**प०— ॥ ॐ शास्त्रयोनित्वात् ॐ ॥** पूर्वेणाधिकरणेनास्याधिकरणस्य सङ्गतिफले आह **जगदिति ॥ परिहरतीति** । शास्त्ररूपप्रमाणोक्त्येति योज्यम् ।

**च०— ॥ॐ शास्त्रयोनित्वात् ॐ ॥** प्रकृतनयप्रतिपाद्यप्रमेयस्य प्राक्तननयनिरूपितैतन्नयाधिकरणकसङ्गतेश्च प्रौढमतीनां सुगमतया पूर्ववादिमतप्रवर्तनादिना सुप्रतिपदतया च भाष्यकारानभिहितत्वेपि तादृङ्मतीतरसुप्रतिपदत्वाय तादृशसङ्गतिविशेषिततादृशप्रमेयमभिधत्ते **जगदिति** । तथाच पूर्वनयनिरूपितैतन्नयवृत्तिराक्षेपिकी सङ्गतिरिति भावः ।

---

**सु०— तत्र पूर्वपक्षमारचयति शैवाद्येति ।**

**शिवेन रचितः शैवः । आदिग्रहणाद्धिरण्यगर्भादिरचिता गृह्यन्ते । तैः संप्राप्तं तदुक्तसाधनानुष्ठानसंप्राप्तम् । दृष्टं दृष्टिः प्रत्यक्षमिति यावत् । तत्सिद्धं दृष्टगं । फलेन तु तद्वाक्यस्य प्रामाण्यमनुमायेति शेषः । प्रमाणत्व इति विषयसप्तमी । दृष्टफलार्थं साधनानि विदधद्वाक्यं तावत् प्रमाणतयाऽनुमीयते । केन लिङ्गेन । फलेन । तस्य पक्षासंबन्धिनोऽनुमापकत्वं कथमित्यत उक्तं शैवाद्यागमसंप्राप्तेति । अज्ञानासिद्धिं परिहर्तुमुक्तं दृष्टगेनेति । तुशब्दोऽनुमानद्वये हेतुविशेषद्योतकः । ईशवाक्यत्वत इत्यत्रादिशब्दो योज्यः ॥ अयमर्थः । द्विविधो हि शिवप्रणीत आगमः । कश्चित् प्रत्यक्षयोग्यसंपदादिफलमुद्दिश्य साधनानि विदधत् । अपरस्तु स्वर्गापवर्गाद्यप्रत्यक्षफलानि विदधानः शिवस्य जगज्जन्मादिकारणत्वसर्वज्ञत्वसर्वशक्तित्वसत्यसङ्कल्पत्वाद्यशेषगुणपूर्णत्वं निरवद्यत्वं च प्रतिपादयति । तत्राद्यस्तावत्प्रमाणम् । तदुक्तसाधनानुष्ठाने सति प्रत्यक्षत एव फलदर्शनात् ।**

**तदयं प्रयोगः । विमत आगमः प्रमाणं सफलप्रवृत्तिजनकत्वात् चरकसुश्रुतादिवत् । यद्यप्रमाणमभविष्यत् न समर्थां प्रवृत्तिमकरिष्यद्विप्रलम्भकवाक्यवत् । तदुक्तम्**

'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्' इति । ततश्च तत्प्रणेतुः शिवस्य परमाप्तत्वमवधार्य तद्दृष्टान्तेन तत्प्रणीतस्य द्वितीयस्याप्यागमस्य प्रामाण्यमवसीयते । अत्र च प्रयोगः । विप्रतिपन्न आगमः प्रमाणं शिववाक्यत्वात्संप्रतिपन्नवदिति । विपक्षे शिवस्यानाप्तत्वप्रसङ्गो बाधकः ।

तदेवमनुमितप्रामाण्येन शैवागमेन शिवस्य जगज्जन्मादिकारणत्व(स्य)ाभिधानान्नेदं लक्षणं विष्णोरुपपद्यत इति शैवाः ॥ अनयैव दिशा तत्तदागमप्रामाण्यं प्रसाध्य तत्तद्देवतावादिनां प्रत्यवस्थानानि द्रष्टव्यानि ॥

उपलक्षणं चैतत् । अनुमानेनापि शिवादीनां जगज्जन्मादिकारणत्वं सर्वज्ञत्वादिकं शक्यसाधनम् । तथा हि । क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवत् । विवादाध्यासितं कर्म प्रयत्नाधारजम् कर्मत्वात्संप्रतिपन्नवत् । विप्रतिपन्ने पृथिव्युदके, प्रयत्नवता धृते, गुरुत्वे सत्यपातित्वात्, संप्रतिपन्नवत् । क्षित्यादिकं प्रयत्नवद्विनाश्यम् (वि)नाश्यत्वात्संप्रतिपन्नवत् । इत्यादिभिरनुमानैर्विश्वोदयस्थितिलयकर्तरि सामान्यतः सिद्धे अस्मदादीनां तदसंभवात् भगवांश्छिव एव परिशेषाज्जगज्जन्मादिकर्ता सिध्यति । यथा च (वि)चित्रादिकार्यदर्शनात्तदनुगुण एव कर्ता कल्प्यते एवं विचित्रानेककार्यदर्शनात्(नेन) कल्प्यमानोऽपि कर्ता तदनुगुणः सार्वज्ञादिमानेव सिध्यति । अथवा क्षित्यादीनां कर्तेत्येतदन्तर्गतमेव सर्वज्ञत्वादिकं न यत्नान्तरमपेक्षते । निमित्तोपादानफलाद्यभिज्ञस्य तदनुगुणेच्छाप्रयत्नवत एव कर्तृत्वात् । एवं हिरण्यगर्भादिष्वपि परिशेषेण जगत्कारणत्वं योज्यमिति ॥

त्रा०—'शिवादिभ्योऽण्' इत्यपत्येऽणो विधानात्प्रकृते च तदर्थानुपयोगात्तत्कृतग्रन्थेऽत्र शिवशब्दादण् द्रष्टव्य इत्याह **शिवेनेति** । (कृते ग्रन्थे इत्यनेन सूत्रेण तत्कृते ग्रन्थेऽस्मिन्नर्थे । अत्र शैवेत्यत्रेत्यर्थः) ॥ आगमानां फलं प्रति कारकत्वाभावादाह **तदुक्तेति** ॥ फलेनेत्यस्य प्रमाणत्वेऽनुमीयत इत्यनेनान्वयस्य जगत्कारणत्वाद्यदृष्टार्थवाक्ये फलेन प्रामाण्यानुमानासंभवेन बाधिततयेशवाक्यत्वत इति हेत्वन्तरोक्त्यनुपपत्तेश्च दृष्टार्थवाक्यप्रामाण्यासाधने तद्वाक्योपमयेत्यस्यानुपपत्तेश्च फलेन त्वित्यस्यानन्तरं योग्यमध्याहरति **फलेन त्विति** ॥ एवं पदार्थं व्याख्याय तद्वाक्योपमयेत्येतल्लब्धं दृष्टार्थवाक्यप्रामाण्यानुमानस्य प्राथमिकत्वं वदन्नेव वाक्यार्थमाह **दृष्टेति** ॥ **शैवादीति** । **दृष्टगेनेति** । विशेषणयोरन्यतरवैयर्थ्यपरिहाराय्योक्तार्थं मनसि निधाय पृथक तद्व्यावर्त्यमाह **तस्येत्यादिना** ॥ शैवादीत्यादिशब्दानुसारादाह **ईशेति** ॥ ननु शैवागमस्यैकत्वात्तदुपमया कथं तत्र प्रामाण्यानुमानं कथं च सर्वत्राविद्यमानेन व्यधिकरणेन च फलेन तदनुमानम् । ईशवाक्यत्वोक्तेश्च न प्रयोजनम् । कथं च हेतोरप्रयोजकतापरिहारः कथं चानेन

शिवादीनां जगत्कारणतासिद्धिरित्यत आह **अयमर्थ इति** ॥ उक्तेऽर्थे सम्मतित्वेन पक्षिलभाष्याद्यवाक्यं प्रमाणयति **तदुक्तमिति** ॥ **अर्थवदिति** । नित्ययोगे मतुप् । नित्यता चार्थाव्यभिचारिता । अर्थाव्यभिचारिता च देशकालान्तरावस्थान्तरेष्वविसंवादोऽर्थस्वरूपप्रकारयोस्तदुपदर्शितयोः । तत्र हेतुः केवलव्यतिरेकी ॥ **प्रवृत्तिसामर्थ्यादिति** । समर्थप्रवृत्तिजनकत्वादित्यर्थः । प्रमाणस्य समर्थप्रवृत्तिजनकत्वं च न साक्षात्किन्त्वर्थप्रतिपादनद्वारेत्युक्तम् ॥ **प्रमाणतोऽर्थप्रतिपत्ताविति** । उत्तरानुमाने विपक्षबाधकतया शिवस्यानाप्तत्वप्रसङ्गं वक्तुं पूर्वानुमानपर्यवसानं दर्शयति **ततश्चेति** ॥ आदिशब्दाभिप्रायमाह **अनयैवेति** ।

अनुमानत इति भाष्ये 'न पृथक् चानुमेश्वरे' इति सिद्धान्तानुव्याख्यानं च मनसि निधायाह **उपलक्षणं चैतदिति** ॥ आकाशेऽव्यभिचाराय **गुरुत्वे सतीति** । अत्र न्यायविवरणटीकोक्तपक्षान्तरेणासम्भवपर्यन्तत्वपूर्वपक्षे तदनुसारेणातिव्याप्तिपर्यन्तत्वपूर्वपक्षे च शिव एवेत्येवकारो विष्णुव्यावर्तकतयाऽपिव्याख्येयः । श्रुतेः स्वप्रामाण्यनिषेधकत्वात्तदुक्ते कर्तरि नानुमानं पर्यवस्यति किन्तु स्वप्रधानकागमोक्त इति पूर्वपक्षाशयो वर्णनीयः । अन्यथाऽनुमानस्याप्यन्यथासिद्धत्वे शिवकारणत्वेऽनन्यथासिद्धप्रमाणाभावेनानन्यथासिद्धविषयश्रुत्या प्रतिपक्षानुपपत्याऽतिव्याप्तेः शङ्कितुमप्यशक्यत्वात् । तथा चानुमानस्य शिवादिमात्रविषयकत्वेऽपि विष्णुमात्रविषयकश्रुत्यादिसाम्याभिमानेनातिव्याप्तिपर्यन्तः पूर्वपक्षस्तस्य श्रुत्याद्यपेक्षया प्राबल्याभिमानेनासम्भवपर्यन्तः स इति द्रष्टव्यम् । अत्र परिशेषसूचनं च पुंस्त्वहेतुबलादिति प्रतिपक्षोक्त्येति द्रष्टव्यम् । वनकृत्त्वादिरूपेणेति प्रतिपक्षोक्त्या सूचितं सर्वज्ञत्वादिसाधनं द्वेधा व्युत्पादयति **यथा चेत्यादिना** ॥ नन्वेवं परिशेषे हिरण्यगर्भादीनां जगत्कारणत्वासिद्धिरित्यतो विप्रलम्भादिमूलत्वाभावभावाभ्यां स्वस्वेतरागमयोः प्रामाण्यतदभावाभिमानेन सर्वेषां परिशेषसिद्धिरप्रत्यूहेत्याशयेनाह **एवमिति** ।

स० — **हेतुविशेषद्योतक इति** । हेतुव्यावृत्तिद्योतक इत्यर्थः ॥ **चरकसुश्रुतादिवदिति** । चरकं वैद्यशास्त्रं सुश्रुतं शाकुनशास्त्रमितिवदन्ति ॥ **प्रमाणतोऽर्थप्रतिपत्ताविति** । प्रमाणतोऽर्थे प्रतिपन्नेऽपि यावत्प्रवृत्तिसामर्थ्यं तत्र न ज्ञायते तावत्तत्रार्थवत्त्वं तद्घटितं प्रामाण्यं न निश्चीयते, किन्तु प्रवृत्तिसामर्थ्यात्समर्थप्रवृत्तिजनकत्वात्प्रमाणत्वेनाभिमतं ज्ञानं अर्थवत् प्रामाण्यवदवसीयत इति शेषः ॥ **विवादाध्यासितं कर्मेति** । द्व्यणुकासमवायिकारणसंयोगजनकपरमाणुकर्मेत्यर्थः ॥ स्थितिकर्तृत्वसाधनायाह **विप्रतिपन्ने पृथिव्युदक इति** । भूसागरावित्यर्थः । आकाशे व्यभिचारवारणाय सत्यन्तम् । **इत्यादिभिरनुमानैरिति** । 'कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः । वाक्यात्सङ्ख्याविशेषाच्च साध्यो विश्वकृदव्ययः ॥' इतिकारिकायामुक्तानि परित्यज्यान्यानि आदिशब्दग्राह्याणि ।

प० — भावे निष्ठेत्युपेत्याह **दृष्टं दृष्टिरिति** । केन लिङ्गेनेत्यस्योत्तरं फलेनेति ॥ **इत्यत उक्तमिति** । फलजनकसाधनबोधकत्वरूपसंबन्धसिद्ध्यर्थमुक्तमित्यर्थः ॥ **अनुमानद्वय इति** । दृष्टान्ते दार्ष्टान्तिके च प्रामाण्यसाधकानुमानद्वये यथाक्रमं सफलप्रवृत्तिजनकत्वशिववाक्यत्वरूपहेतुविशेषद्योतक इत्यर्थः ॥ **चरकेति** । वैद्यग्रन्थविशेषः ॥ विपक्षे बाधकतर्कमाह **यदीति** ॥ न्यायसूत्रसंमतिमाह **तदुक्तमिति** ॥ 'अनुमानतोऽन्ये न कल्पनीयाः' इति भाष्यं मनसि कृत्वाऽऽह **उपलक्षणं चैतदिति** । शैवाद्यागमेत्यादिनाऽऽगमावष्टम्भेन शिवादीनां जगत्कारणत्वसाधनमित्यर्थः ॥ सृष्टिकर्तृत्वस्थितिकर्तृत्वलयकर्तृत्वेष्वनुमानान्याह **क्षित्यादिव मित्यादिना** ॥ **कर्मेति** । आद्यकालीनं परमाणुकर्मेत्यर्थः ॥ ननु कथमस्य शिवत्वं सार्वज्ञ्यादेरभावात् इत्यत आह **यथा चेति** ।

**या० —** ॥ ॐ **शास्त्रयोनित्वात्** ॥ ॐ ॥ ननु शैवाद्यागमेत्यत्र न कर्मधारयः । शिवादिभ्योऽणित्यनेनापत्यार्थे शिवादिभ्योऽण्प्रत्ययस्य विहितत्वेनागमानां चानपत्यत्वेन सामानाधिकरण्याभावात् । षष्ठीतत्पुरुषत्वे तु शिवाद्यपत्यकृतानां स्कान्दादीनामेव प्राप्त्या पाशुपताद्यप्राप्तिप्रसङ्गात् । अतः कथमेतदित्यत आह **शिवेन रचित इति** । तथा चात्र नापत्यार्थकोऽयमण्प्रत्ययः । किन्तु **'कृते ग्रन्थे'** इत्यनेन विहितस्तत्कृतग्रन्थार्थकोऽण्प्रत्यय इति भावः ॥ कर्मणि प्रत्यये त्वेतद्यर्थमतो व्याचष्टे **दृष्टं दृष्टिरिति** ॥ **अनुमानद्वय इति** । अनुमानद्वयकरण इत्यर्थः । अनुमानद्वयकरणे तुशब्दसूचितं हेतुविशेषं दर्शयति **द्विविधो हीति** । तथा च शिवप्रणीतागमस्य द्वैविध्यमेवानुमानद्वयकरणे हेतुरिति भावः ॥ **चरकसुश्रुतौ** वैद्यकग्रन्थविशेषौ ॥ अत्र न्यायभाष्यसम्मतिमाह **तदुक्तमिति** । अत्र प्रमाणमर्थवदिति नित्ययोगे मतुप् । नित्यता चाव्यभिचारिता । तेनार्थाव्यभिचारीत्यर्थः ॥ अत्र हेतुः **प्रवृत्तिसामर्थ्यात्** । समर्थप्रवृत्तिजनकत्वात् । प्रवृत्तिजनकत्वं तु न प्रमाणस्य साक्षात् किं त्वर्थप्रतिपत्तिद्वारेणेत्याह **प्रमाणतोऽर्थप्रतिपत्ताविति** । अर्थास्यापेक्षितोपायताप्रतिपत्तिश्चार्थप्रतिपत्तिशब्देनेह विवक्षिता तस्यामित्यर्थः ।

अनुमानतोऽन्ये न कल्पनीया इति भाष्यं मनसि निधायाह **उपलक्षणं चैतदिति** ॥ **विवादाध्यासितं कर्मेति** । द्व्यणुकासमवायिकारणसंयोगजनकं परमाणुकर्मेत्यर्थः ॥ स्थितिकर्तृत्वसाधनायाह **विप्रतिपन्ने पृथिव्युदके इति** । भूसागरौ इत्यर्थः । गुरुत्वे सति इत्याकाशादौ व्यभिचारवारणाय । पतनदशायां फलादौ व्यभिचारवारणाय विशेष्यम् । अत्र गुरुत्वप्रतिबन्धकवेगसंयोगयोरभावे सति इत्यपि विशेषणीयम् । तेन न वेगवति शरादौ वृक्षसंयोगवति फलादौ व्यभिचार इति ध्येयम् ॥ **सम्प्रतिपन्नवदिति** । गगनतलगतखगशरीरादिवदित्यर्थः ॥ **विनाश्यत्वादिति** । स्वत एव विनाशिनो घटविशेषादेः पक्षतुल्यत्वान्न व्यभिचार इति ध्येयम् ॥ **शिव एव परिशेषादिति** । जगत्कारणादिकं शिवनिष्ठमन्यत्रानुपपत्तौ सत्यां किञ्चिन्निष्ठतया प्रमितत्वादिति परिशेषादित्यर्थः । न चात्र विष्ण्वादिनि-

त्वोपपत्त्या विशेषणासिद्धिः । सामान्यतो विश्वोदयादिकर्तृसाधकानुमानस्य स्वप्रामाण्यनिषेधकश्रुत्युक्ते कर्तरि न पर्यवसानम् । किंतु शैवाद्यागमोक्त एवेत्याशयात् ॥ **तदनुगुण एवेति** । तदनुकूलज्ञानादिमानित्यर्थः । कारणत्वं कारणत्वादि । एवमग्रेऽपि ।

च०— ननु शिवशब्दप्रकृतिकाण्प्रत्ययस्य 'शिवादिभ्योऽणि'ति लक्षणलक्षितापत्यप्रत्यायकतया तत्कृतत्वार्थकषष्ठ्या समस्तेनागमपदेन शिवापत्यभूतस्कन्दादिरचितागमा एव प्रतीयेरन् न तु पाशुपतागम इत्याशङ्कायां 'कृते ग्रन्थे' इत्यनुशिष्टतत्कृतग्रन्थार्थकाण्प्रत्ययस्यैव शिवशब्दप्रकृतिकत्वोपगमेन शैवपदेन पाशुपतागमप्रत्यायनात्तेन कृतबहुव्रीहिणा तद्गुणसंविज्ञानेन तादृशागमस्कान्दागमादिघटितसमुदायावगतिः सङ्गच्छत इत्याह **शिवेन रचित इति** ॥ **दृष्टं दृष्टिरिति** । 'नपुंसके भावे क्तः' इति भावे क्त इति भावः ॥ **अनुमानद्वय इति** । पक्षे निदर्शने चानुगतमनुमानद्वये सफलप्रवृत्तिजनकत्वशिववाक्यस्वरूपहेतुविशेषद्वयं ध्वनयितुमित्यर्थः ॥ विदधत् शत्रन्तः, 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः । विदधानः शानजन्तः, प्रकृत्यंशस्य ङित्वात् तद्द्वयम् । **वाक्यवदिति** । प्रथमान्ताद्वतिः उपमेये प्रथमादर्शनात् । 'स्थानिवदादेशोऽनल्विधौ' इतिवत् । असंयोगाल्लिट्किद्भवति अपिसार्वधातुकं ङिद्भवति । अब्रह्मदत्तं ब्रह्मदत्त इत्याह । तेन मन्यामहे ब्रह्मदत्तवदुभयं भवतीत्यादिभाष्यकारीयनिर्देशाच्च । 'तत्र तस्येव' इत्यादीनां प्रायिकतया व्याख्यातत्वात् ॥ **अनुमानद्वय इति** । पक्षे निदर्शने चानुगतमनुमानद्वये सफलप्रवृत्तिजनकत्वशिववाक्यस्वरूपहेतुविशेषद्वयं ध्वनयितुमित्यर्थः । चरकपदं सुश्रुतपदं च भिषजां ग्रन्थविशेषसंज्ञे । अभिहितार्थे न्यायभाष्यं प्रमाणयति । **तदुक्तमिति** ॥ **उपलक्षणं चैतदिति** । 'अनुमानतोऽन्ये न कल्पनीयाः' इति भाष्यप्रतीकमभिसन्धायैतत् । **विवादाध्यासितं कर्मेति** । प्रकृतसाध्यतदभावकोटिकविमतिविषयीभूतं द्व्यणुकोत्पादप्रयोजकपरमाणुद्वयसंयोगारम्भकपरमाणुगतकर्मेत्यर्थः । जगत्कर्तृत्वपर्यवसायीदमनुमानद्वयम् । स्थितिकर्तृत्वसाधकमनुमानमाह **विप्रतिपन्न इति** । गगनादावनैकान्त्यमपहस्तयितुमाद्यदलं पतनदशावच्छिन्नफलादौ तद्विधूननायोत्तरदलम् । अत्र गुरुत्वकार्यभूतपतनप्रतिबन्धकवेगसंयोगवृत्तिप्रातिस्विकधर्मावच्छिन्नाभाववत्त्वे सतीत्यपि हेतुशरीरे निवेश्यम् । तेन वेगवति शरादौ, प्रयत्नवति पतत्रिणि, नानैकान्त्यावकाशः । स्फुटीभविष्यति चैतदुपरिष्टात् । संहर्तृत्वसाधकमनुमानमाह **क्षित्यादिकमिति** ॥ **शिव एव परिशेषादिति** । इदमनुमानजातं स्वप्रामाण्यनिषेधकश्रुत्युक्ते कर्तरि न पर्यवस्यति किन्तु पाशुपताद्यागमोक्त इत्याशयेनेदम् । तेन दर्शितानुमानानां विष्णोरपरिपन्थितया परिशेषानुपपत्तिरिति शङ्काऽनवकाशः ।

(इति जगत्कारणत्वस्य पाशुपताद्यागमानुमानावष्टम्भेन अतिव्याप्तिशङ्का ॥)

अप्रामाण्यानुमाने स्यात् — — — — ॥



( अथ शैवाद्यागमप्रामाण्यसाधकानुमाननिरासः । )

**सु—एवमागमादनुमानाच्चान्येषां जगज्जन्मादिकारणत्वे प्राप्ते प्रतिविहितं सूत्रकृता । आगमादनुमानतो वाऽन्ये जगत्कारणत्वेन न कल्पनीयाः । कुतः । शास्त्रयोनित्वात् । ऋग्यजुस्सामाथर्वांश्चेत्यादिनोक्तं शास्त्रं योनिः कारणमभिव्यञ्जकं प्रमाणमस्येति शास्त्रयोनि तस्य भावः शास्त्रयोनित्वं तस्मात् । एतदुक्तं भवति । जगज्जन्मादिकारणस्य वस्तुनो वेदादिशास्त्रैकसमधिगम्यत्वेन शैवाद्यागमानुमानागोचरत्वान्न तैरन्येषां जगत्कारणत्वं कल्पनीयम् । किन्तु शास्त्रं यस्य जगत्कारणत्वमाचष्टे स एव तथाऽभ्युपगन्तव्य इति ॥**

**वा०**— ननु प्राप्तपक्षव्यावर्तकत्वेन सूत्रमवतार्य तदर्थभावयोरकथनात्कथमेतद्व्याख्यानमित्यतः सूत्रभाष्याभ्यां सर्वस्य सिद्धत्वात्सौत्रहेत्वसिद्धिपरिहाररूपपरोक्तागमप्रामाण्यसाधकनिरासायैतद्भाष्यमित्याशयेन प्रतिज्ञादिकमवश्यवक्तव्यं दर्शयन्नेव तत्सङ्गततयाऽनुव्याख्यानं योजयितुमाह **एवमिति** ।

**प०**— साध्यमध्याहृत्य तत्र हेतुत्वेन सूत्रं योजयति **आगमादनुमानतो वेत्यादिना** । एतेन भाष्यानुभाष्ययोर्विरोधोऽपि प्रत्युक्तः । उपलक्षणतयोभयत्र द्वयोरपि ग्राह्यत्वादिति दर्शितम् ॥ **इत्यादिनोक्तमिति** । भाष्योक्तप्रमाणेनोक्तमित्यर्थः ॥ कथमनेनोक्तशङ्कानिरास इत्यत आह **एतदुक्तं भवतीति** ॥ **जगज्जन्मादिकारणस्य वस्तुन इति** । एतेन पूर्वसूत्रेऽध्याहृतं तदितिपदं तस्येति षष्ठ्यन्ततया विपरिणम्यानुवर्तत इति सूचितम् ।

**सु०**— **स्यादेतत् । यदि शास्त्रैकसमधिगम्यत्वं सौत्रो हेतुः सिद्धः स्यान्न चैवम् । प्रत्यक्षागम्यत्वेऽपि शैवाद्यागमैरनुमानैश्चोक्तविधया जगत्कारणत्वस्य निश्चेतुं शक्यत्वात्; इत्याशङ्क्य सौत्रहेतुसिद्धये शैवाद्यागमगम्यत्वं तावन्निराचिकीर्षुस्तत्प्रामाण्यसाधकं परोपन्यस्तमनुमानमपाकरोति** इति चेदिति ।

**तद्व्यः प्रत्यक्षावगतश्चासौ व्यभिचारः फलव्यभिचारश्च सोऽस्यास्तीति तद्व्यभिचारि वाक्यं तेन दृष्टान्तभूतेन शिवादीनां जगत्कारणत्वा(वगमहेतुभूता)गमस्येशवाक्यत्वादिना हेतुनाऽप्रामाण्यानुमितिश्च स्यात् । एतदुक्तं भवति । यदि प्रत्यक्षसंवादेन दृष्टार्थानां शिवादिवाक्यानां प्रामाण्यमनुमाय तद्दृष्टान्तेनादृष्टार्थानामपि शिवादिवाक्यत्वेन हेतुना प्रामाण्यमनुमीयते, तर्हि दृष्टार्थेष्वेव वाक्येषु यत्प्रत्यक्षत एव फलव्यभिचारवद्दृश्यते तस्य, विमतमप्रमाणमसमर्थप्रवृत्तिजनकत्वाद्विप्रलम्भकवाक्यवदित्यप्रामाण्यमनुमाय, तद्दृष्टान्तेन शिवादिवाक्यत्वादिहेतुनैवादृष्टार्थानामपि, विमतान्यप्रमाणानि शिवादिवाक्यत्वात् संप्रतिपन्नवदित्यप्रामाण्यमनुमातुं**

शक्यत एव । न हि दृष्टार्थं सर्वमेव शिववाक्यं समर्थप्रवृत्तिजनकम् । विफलप्रवृत्तिजनकस्यापि बहुलमुपलम्भात् । ननु तदपि वाक्यं प्रमाणमेव । फलव्यभिचारस्तु कर्तृकर्मादिवैगुण्यनिमित्त इति चेत्तर्हि तदपि वाक्यमप्रमाणमेव फलसंवादस्तु काकतालीयो वा जगद्व्यामोहकानां शिवादीनां गुडजिह्विका वेत्यस्तु । प्रामाण्ये हि सुदृढनिरूढे व्यभिचारस्य कर्त्रादिवैगुण्यं कारणं कल्पनीयम् । फलाव्यभिचारेणैव प्रामाण्यं परिकल्पयतः स्फुटमितरेतराश्रयत्वम् । शिववाक्यत्वं फलसंवादिन्यनैकान्तिकमिति चेन्न । तवापि फलविसंवादिन्यनैकान्त्यात् । किञ्च यः शिवागमस्यादृष्टार्थस्याप्येवं प्रामाण्यं मन्यते स हिरण्यगर्भाद्यागमानामपि प्रामाण्यमङ्गीकरोति न वा । नाद्यः । परस्परविरुद्धयोरुभयोः प्रामाण्यायोगात् । न द्वितीयः । अनुमानप्रकारस्य समानत्वे वैषम्यानुपपत्तेः । अथ तदनुमानमप्रयोजकं हिरण्यगर्भवाक्यत्वेऽप्यागन्तुकेन विप्रलम्भादीनां दोषेणैकस्याप्रामाण्यसंभवादिति चेत् । समं समाधानम् । अनेनैव न्यायेन चैत्यवन्दनादिवाक्यानामपि प्रामाण्यं शक्यसाधनम् । न हि तद्वक्ता कदाऽपि सत्यं नावादीत् । तदेवं शैवाद्यागमप्रामाण्यस्याशक्यसाधनत्वान्न तेन जगत्कर्ता सिध्यति(इति) ।

वा०— प्रत्यक्षागम्यत्वेऽपीत्यनेन शास्त्रैकसमधिगम्यत्वरूपं हेतुं साधयतोऽवश्यनिरसनीयप्रत्यक्षगम्यत्वानिरासप्रयुक्तन्यूनता पूर्वपक्षिणाऽपि तदभ्युपगमान्न प्रसज्ज्यत इति सूचयति ।

---

बहुव्रीहिपक्षे मतुपो वैयर्थ्यात्समासान्तरात्स इत्याह तद्व इत्यादिना । 'न कर्मधारयान्मत्वर्थीय' इत्यस्यापि 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादय' इत्येतन्मूलकत्वात्तस्य च शब्दगतगौरवप्रयुक्तत्वाद्गौरवस्यापि प्रयोजनाभाव एव दोषत्वात्प्रकृते च तद्वद्व्यभिचारेणेत्येतदपेक्षया तद्वद्व्यभिचारिणेत्यत्र शब्दाधिक्याभावात्तद्वतेन व्यभिचारेणेत्यर्थान्तरभ्रान्तिनिवारणरूपप्रयोजनसत्वाच्च 'न कर्मधारयात्' इति निषेधविषयता नास्त्येवेत्याशयः । तद्वद्व्यभिचारस्य हेतुत्वभ्रान्तिनिरासाय दृष्टान्तभूतेनेति । हेत्वभावप्रयुक्तन्यूनतापरिहारायेशेति ॥ ननु प्रतिबन्दीं गृह्णता सर्वसाम्यस्य वक्तव्यत्वात्कथमेतदित्यत इति चेदिति सूचितमापादकं स्पष्टयन्पूर्ववत्क्रमेणानुमानद्वयप्रकारं पूर्वपक्षानुमानवैषम्यनिरासप्रकारं च व्युत्पादयितुमाह **एतदुक्तं भवतीति** ॥ तद्व इत्यनेन सूचितमाह **न हीति** ॥ हेत्वन्यथासिद्ध्या वैषम्यं शङ्कते **नन्विति** ॥ **काकतालीयो वेति** । बालव्यामोहकानां गुडजिह्विकावज्जगद्व्यामोहकानां फलसंवाद इति त्वदनुमानेऽप्यन्यथासिद्धिरित्याह **जगदिति** ॥ नन्वेवं वेदेऽपि फलव्यभिचारस्य कर्त्रादिवैगुण्यप्रयुक्ततोक्तिस्तत्र कल्प्यमानाऽयुक्ता स्यादित्यतोऽपौरुषेयत्वेन प्रामाण्यसिद्ध्यनन्तरं तत्कल्पनाया इतरेतराश्रयताऽनापादकतया फलाव्यभिचारेणैव प्रामाण्यकल्पनायाश्च तदापादकतया न वेदसाम्यमित्याशयेनाह **प्रामाण्ये हीति** ॥ किञ्च हिरण्यगर्भाद्यागमानामपि प्रामाण्यस्य समानन्यायतयाऽवश्याभ्युपगमनीयत्वात्तद्विरुद्धत्वाच्छैवा-

गमप्रामाण्यासिद्धिः तत्राप्रामाण्यप्रयोजकव्युत्पादने च तत्प्रकारस्य शैवागमेऽपि साम्यात्तस्यापि प्रामाण्यासिद्धिरित्युभयथाऽपि प्रामाण्यासिद्धिरित्याह **किञ्चेति** । अनेनागमान्तरप्रामाण्ये तद्व्यभिचारिणाऽगमान्तरसिद्धार्थव्यभिचारित्वेन तद्विरुद्धार्थत्वेन त्वदागमाप्रामाण्यानुमा च स्यात्, आगमान्तराप्रामाण्ये च तद्व्यभिचारिणा प्रत्यक्षसिद्धार्थव्यभिचारिणाऽऽगमान्तरेण दृष्टान्तभूतेन तत्समानन्यायतयेति यावत् त्वदागमस्याप्यप्रामाण्यानुमितिः स्यादिति योजनया मूलात् ध्वनितोऽयमर्थ इति सूचयति ॥ आभाससमानयोगक्षेमत्वाच्च नैवं साधनं युक्तमित्याह **अनेन न्यायेनेति** । अनेन च तद्व्यभिचारिणाऽऽभासतया निर्णीतचैत्यवन्दनादिवाक्येन दृष्टान्तभूतेन तत्समानन्यायतयेति यावत्, अप्रामाण्यानुमा च स्यात्; इति योजनां ध्वनयति ।

**स०— गुडजिह्विकेति** ॥ पिचुमन्दपत्रभक्षणार्थं प्ररोचकत्वेन गुडादिकं दीयते; सेयं गुडजिह्विका । न चैवं पुत्रकामः पुत्रेष्ट्या यजेतेत्यादिदृष्टफलविधायकवेदवाक्येषूक्तफलादर्शने कर्तृकर्मादिवैगुण्यनिमित्तकत्वं फलादर्शनस्य कल्प्यमानं कथमित्याशङ्क्याह **प्रामाण्ये हीति** ॥ वेदस्यापौरुषेयत्वेनैव प्रामाण्यं निश्चितं न भवन्मत इव फलाव्यभिचारेणातस्तत्र कर्त्रादिवैगुण्यनिमित्तकत्वं फलादर्शनस्य कल्पयितुं शक्यमिति भावः ।

**प०— तद्धेत्वादिमूलमुत्सूत्रमिति**भ्रमनिरासाय सौत्रहेतुसाधनपरतयाऽवतारयितुं शङ्कामाह **स्यादेतदिति** ॥ नन्वेवं कथं तर्हि सिद्धान्ते 'न विलक्षणत्वा'दित्यधिकरणे वेदादौ फलविसंवादः कर्त्रादिवैगुण्यनिमित्तक इति समाधास्यत इत्यत आह **प्रामाण्ये हि सुदृढनिरूढ इत्यादि** ॥ **इतरेतराश्रयत्वमिति** । सिद्धे प्रामाण्ये फलव्यभिचारस्यान्यनिमित्तकत्वकल्पनम् । सिद्धे च तस्यान्यनिमित्तत्वे फलसंवादेन प्रामाण्यकल्पनमित्यन्योन्याश्रयत्वमित्यर्थः । विमतान्यप्रमाणानि शिववाक्यत्वादिति प्रागुक्तप्रयोगे दोषमाशङ्क्य प्रतिबन्द्योत्तरमाह **शिववाक्यत्वमित्यादिना** ॥ **तत्रापीति** । शिववाक्यत्वेन प्रामाण्यमनुमिमानस्यापीत्यर्थः ॥ कथं तर्हि निर्णय इत्यतः प्रतिबन्दीमुखेनाप्रामाण्यमेव निर्धारयति **किञ्च यः शिवागमस्येत्यादिना** । प्रामाण्यसाधकानुमानमितोऽप्यप्रयोजकमित्याह **अनेन न्यायेनेति** । तत्र फलसंवादिवाक्यमेव नास्ति । येन तद्दृष्टान्तेन बुद्धवाक्यत्वेन हेतुना प्रामाण्यानुमितिः स्यादित्यत आह **न हीति** ।

**या०— बहुव्रीह्याश्रयणे इनिप्रत्ययो व्यर्थः स्यादतः कर्मधारयमाह तद्ध इति** । बहुव्रीहिनिर्वाह्येऽपिप्रयुक्तोऽयमिनिर्भूमाऽर्थः । अतो 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादय' इत्यस्याप्रसङ्ग इति ध्येयम् ॥ नन्वेवं पुत्रकामः पुत्रकामेष्ट्या यजेतेत्यादिदृष्टफलविधायकवेदवाक्येषूक्तफलादर्शने कर्तृकर्मादिवैगुण्यं निमित्तं भवद्भिः कल्प्यमानं कथमित्याशङ्कायामाह **प्रामाण्ये हीति** । वेदस्य प्रामाण्यमपौरुषे-

यत्वेन सुदृढनिरूढं शिवादिवादिवाक्यस्य तु नेति भावः ननु तत्रापि प्रामाण्यं फलाव्यभिचारेणैव सुदृढनिरूढमिति कल्प्यते इत्यत आह **फलाव्यभिचारेणैवेति** ।

श्री० — ॥ ॐ **शास्त्रयोनित्वात्** ॐ ॥ **ननु तदपीति** । विफलप्रवृत्तिजनकं वाक्यमपीत्यर्थः ॥ **तदपि वाक्यमिति** ॥ समर्थप्रवृत्तिजनकं वाक्यमपीत्यर्थः ॥ **फलाव्यभिचारेणैवेति** । विमत आगमः प्रमाणं समर्थप्रवृत्तिजनकत्वादित्यनुमानस्योक्तत्वादित्यर्थः ॥ **स्फुटमिति** । फलाव्यभिचारेण प्रामाण्यसिद्धिस्तत्सिद्धौ च फलव्यभिचारस्य कर्तृकर्मादिवैगुण्यनिमित्तत्वपरिकल्पनायाः संभवेन फलाव्यभिचारसिद्धिरितीतरेतराश्रयत्वं स्फुटमित्यर्थः ।

च० — व्यभिचारपदस्य तद्रूपदेन कृतबहुव्रीहितायामिनिप्रत्ययवैयर्थ्यापत्त्या कर्मधारयादिनिमाश्रयते **तद्** इति । 'कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने' इत्यादिपरीक्षकप्रयोगोपलम्भेन 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इत्यस्यानित्यत्वादित्यवसेयम् ।

( इति शैवाद्यागमप्रामाण्यसाधकानुमाननिरासः ॥ )

( अथ जगत्कारणत्वे अनुमानानवकाश इति व्युत्पादनम् । )

**सु० — मा भूच्छैवाद्यागमाज्जगज्जन्मादिकर्तृसिद्धिः । उक्तानुमानैस्तु भविष्यति । तत्कथं शास्त्रैकसमधिगम्यत्वं जगत्कारणस्येति चेत् । किं शास्त्रानुसार्यनुमानं जगत्कारणे प्रमाणमुच्यते । उत स्वतन्त्रम् । आद्यस्त्वङ्गीक्रियत एव । तेनास्मत्पक्षस्यैव सिद्धेः । शास्त्रस्य भगवदेकनिष्ठतायाः समन्वयसूत्रे वक्ष्यमाणत्वात् ॥ द्वितीयं दूषयति न पृथगिति ।**

अनु० — न पृथक् चानुमेश्वरे ॥

**ईश्वरे जगत्कारणे पृथक् स्वतन्त्रानुमा च न मानमित्यर्थः । तथा हि । यत्तावत्सामान्यतो जगत्कर्तृत्वसिद्धावनुमानम् तत्र किं कारणादिसाक्षात्कारवत्कर्तृपूर्वकत्वं साध्यम् । सकर्तृकत्वमात्रं वा । आद्ये दृष्टान्तस्य साध्यवैकल्यम् । न हि कुलालादिर्घटादिकारणानि धर्माधर्मादीनि साक्षात्कुरुते । अत एव कदाचित्प्रतिहतेच्छो भवतीति चेत् । किमेतावता । साध्यवैकल्यापरिहारात् । कथञ्चिदस्य हेतुविशेषणत्वे साधनवैकल्यं च दृष्टान्तस्य स्यात् । केवलव्यतिरेकी तर्ह्ययमस्त्विति चेन्न । विशेषणासिद्धेः । द्वितीये सिद्धसाधनम् । अदृष्टवतां जीवात्मनामेव कर्तृत्वोपपत्तेः । तेषां कारणानभिज्ञत्वान्नेति चेन्न । कुलालादीनामकर्तृत्वप्रसङ्गात् । अदृष्टाधिष्टात्राऽपि केनचिद्भाव्यमिति चेन्न । अधिष्ठातृकृत्याभावात् । न तावन्नोदनादिकम् । अद्रव्यत्वात् । न चातिशयजन्म । गुणे गुणान्तरानुपपत्तेः । न चातीन्द्रियाधेयशक्तिः ।**

अनभ्युपगमात् । न च सहकारिसमवधानम् । अदृष्टादेव तदुपपत्तेः । नापि कार्यकारित्वम् । तस्यादृष्टस्वभावत्वात् । तदुत्पत्त्यनन्तरमेव किं न कुर्यादिति चेत् न । प्रबलादृष्टान्तरप्रतिबन्धादिनेति वदामः । किञ्च कार्यत्वं पक्षे कुतः सिद्धम् । अभूत्वाभावित्वादिति चेन्न । तस्यैव कार्यत्वात् । कथञ्चिद्भेदेऽपि भागासिद्धत्वात् । न खलु गिरिसागरादीनामभूत्वाभावित्वमस्माभिरुपलभ्यते । तर्हि द्रव्येषु तावत्सावयवत्वात्कार्यत्वसिद्धिरस्त्विति चेन्न । सावयवत्वं (हि) समवायिकारणवत्त्वमुत परिणामिकारणवत्त्वम् वा । आद्ये प्रतिवाद्यसिद्धिः । द्वितीये वाद्यसिद्धिः । किञ्च यस्य कार्यत्वमात्रे(ऽपि) विप्रतिपत्तिः स कथं कारणवत्तामेवाभ्युपेयात् । ननु क्षित्यादीनां प्रत्यक्षत एव प्रदेशवत्त्वमनुभूयते । अन्यथा कथं भूतले घटभावाभावौ युगपत्संभवत इति चेन्न । तर्ह्येवमाकाशादीनामपि कार्यत्वप्रसङ्गात् । कथमन्यथा (गगने) पक्षिणो भावाभावौ युगपदिति तत्रापि वक्तुं शक्यत्वात् । संयोगस्य स्वात्यन्ताभावसमानाश्रयत्वादेवमिति चेत् । समं प्रकृतेऽपि । खननादिना येषां विभागो नोदनादिना च येषां संयोगस्ते क्षित्यादीनामवयवाः प्रत्यक्षसिद्धा इति चेत् । तर्किं संयोगविभागिसजातीयद्रव्यान्तरवत्त्वं सावयवत्वमित्युक्तं भवति उत तदारब्धत्वम् । आद्ये परमाणुभिर्व्यभिचारः । द्वितीये व्यर्थविशेषणत्वं पूर्ववदसिद्धिश्चेति । एतेन विवादाध्यासितं कर्म प्रयत्नाधारजमित्येतदपि निरस्तम् । यदपि पृथिव्युदके प्रयत्नवता धृते इत्यनुमितम् । तदपि पूर्ववत्सिद्धसाधनम् । किञ्च संयोगवेगप्रयत्नवददृष्टमपि कस्माद्गुरुत्वप्रतिबन्धकं न कल्प्यते । अपातित्वं च सन्दिग्धासिद्धम् । महत्त्वेन पतनानुपलम्भसंभवात् । एतेन चरमानुमानमपि निरस्तम् । क्षित्यादिकं विकर्तृकम् अनुपलभ्यमानकर्तृकत्वाद्गगनवदित्यादिना सत्प्रतिपक्षता च सर्वानुमानानाम् । अनुपलभ्य(मान)त्वं चास्मदुपलब्ध्ययोग्यत्वमिति न कश्चित्क्षुद्रोपद्रवः । परसुखादौ व्यभिचार इति चेन्न । तस्यानुमानादुपलब्धेः । तर्हि क्षित्यादिकर्ताऽप्यनुमानादुपलभ्यत इति चेन्न । अनुमानादीश्वरोपलब्धावस्मदनुमानस्य दुष्टत्वम् । तथा चानुमानादीश्वरोपलब्धिरितीतरेतराश्रयप्रसङ्ग(त्व)ात् । अनयैव दिशा सर्वाणि जगत्कारणमात्रसाधनानि स्वतन्त्रतानुमानानि निरसनीयानि(इति) ।

वा०—'न पृथक् चानुमेश्वरे' इति वाक्यं स्वतन्त्रानुमाननिरासकतया योजयितुं तद्व्यावर्त्यं दर्शयन्नेव पृथक्पदप्रयोजनं च दर्शयति **मा भूदित्यादिना** । जगत्कारणतासाधकानुमानस्य साम्प्रतं निरसनीयत्वात्कारणत्वपरतयेश्वरशब्दं व्याख्याति **ईश्वर इति** ॥ अत्र पृथगित्युक्तिसूचितदूषणानि वक्तुं प्रतिजानीते **तथा हीति** । कारणादीत्यादिपदेन कार्यक्रियाफलादीनां ग्रहणम् । अप्रतिहतेच्छत्वस्य हेतुविशेषणत्वाद्धेतोश्च केवलव्यतिरेकित्वेन घटादेरन्वयदृष्टान्ततयाऽनुपादानान्न साध्यवैकल्यादीति गूढा-

भिसन्धिः शङ्कते **अत एवेति** ॥ अभिसन्धिमजानान इवोक्तदूषणापरिहारादसङ्गतिमाह **किमेतावतेति** ॥ साधनवैकल्यं वक्तुं किञ्चिदभिसन्धिमुद्घाटयति **कथञ्चिदिति** । वक्ष्यमाणविशेषणासिद्ध्यभिप्रायेण कथञ्चिदिति विशेषणम् ॥ स्वाभिसन्धिमुद्घाटयति **केवलेति** ॥ **तेषामिति** । कारणाभिज्ञत्वस्य कर्तृत्वरूपत्वात्तद्व्यापकत्वाद्वेति भावः ॥ चेतनानधिष्ठिताचेतनादृष्टस्य कार्याजनकत्वादधिष्ठातृत्वेनेश्वराभ्युपगमस्यावश्यकत्वे किमदृष्टमादाय सिद्धसाधनोद्भावनफलमित्याशयेन शङ्कते **अदृष्टेति** ॥ अतिशयोऽपि गुणादिकं वाऽऽश्रयशक्तिर्वेति विकल्पं मनसि निधाय क्रमेण दूषयति **गुण इत्यादिना** ॥ अधिष्ठातृकृत्यन्तरं शङ्कते **न च सहकारीति** । प्रतिबन्धादिनेत्यत्रादिपदेन कालविशेषस्यादृष्टस्यैव तादृशस्वभावविशेषस्य वोपादानम् । न च, न कारणादिसाक्षात्कारवत्कर्तृपूर्वकत्वं वा सकर्तृकत्वमात्रं वा साध्यं किन्तूपादानसाक्षात्कारवत्कर्तृपूर्वकत्वम् । एवं च न साध्यवैकल्यादि । नाप्यदृष्टमादाय सिद्धसाधनमिति वाच्यम् । तावता सार्वज्ञासिद्धेः, उपादानत्वस्य समवायिकारणरूपत्वे समवायस्योत्तरत्र निरासाद्बाधितविषयत्वं, परिणामिकारणत्वरूपत्वे त्वां प्रत्यसिद्धविशेषणत्वमित्यादिदूषणं च सावयवत्वविकल्पनिरासकन्यायेनोन्नेतुं शक्यमेवेत्यशयात् । ननु कार्यत्वं कृतिविषयत्वम्, अभूत्वाभावित्वं च प्रागभावावच्छिन्नसत्तायोगित्वमतो भेद इत्यत आह **कथञ्चिदिति** । कृतिविषयत्वस्य साध्यकोटिनिविष्टतया न हेतुत्वं युक्तमित्याशयेनोक्तं कथञ्चिदिति । अत्र प्रसिद्धकर्तृशून्योद्भिज्जगिरिदरीवर्त्यङ्कुरादीनामभूत्वाभावित्वाभ्युपगमेन भागासिद्धत्वोक्तिः ॥ **द्रव्येषु तावदिति** । भागासिद्धिनिरासायैतत् । कार्यद्रव्याश्रितगुणत्वादिना तद्गुणादीनां कार्यत्वं पश्चात्साधयिष्यामीत्याशयः ॥ अवयवसंयुक्तत्वस्य पटावयवतन्तुसंयुक्ताकाशादौ, अवयवसमवेतत्वस्य जात्यादौ, द्रव्याश्रितद्रव्यत्वस्य च वारिनिहितपार्थिवपरमाणौ, द्रव्यसमवेतद्रव्यत्वस्य द्व्यणुकसमवायवत्पार्थिवपरमाणौ व्यभिचारस्य स्पष्टत्वात्, समवायवृत्त्या द्रव्याश्रितत्वस्य चोर्ध्वाधरीभावासम्भवेन पक्षेऽसिद्धेः, मध्यमपरिमाणत्वस्य चाकार्यत्वेऽप्यनुपपत्त्यभावेनाप्रयोजकत्वस्य च स्पष्टत्वात्, अवयवसमवेतत्वस्य च समवायिकारणत्व एव पर्यवसानात्पक्षान्तरमनाशङ्क्य द्वयमेव विकल्प्य दूषयति **सावयवत्वं चेति** । ननु न तत्र पक्षिणो भावाभावावपि तु संयोगस्य, तयोश्च न विरोध इति शङ्कते **संयोगस्येति** ॥ **व्यर्थेति** । आरब्धत्वमात्रस्याव्यभिचारादिति भावः ॥ **एतेनेति** । अदृष्टजनकप्रयत्नाधारजीवानादाय सिद्धसाधनत्वेनेत्यर्थः ॥ **किञ्चेति** । दूषणान्तरं तदनुमाने वक्तुं यदपीति योगविभागः ॥ **एतेनेति** । अदृष्टद्वारा जीवानामेव विनाशकत्वस्यापि सम्भवादिति भावः ॥ ननु सर्वैरनुपलभ्यमानकर्तृकत्वं सन्दिग्धासिद्धं कैश्चिदनुपलभ्यमानकर्तृकत्वं तु घटादावनैकान्तिकमित्यत आह **अनुपलभ्यमानत्वं चेति** ॥ **अनयैव दिशेति** सर्गाद्यद्व्यणुकासमवायिकारणं परमाणुकर्म, चेतनपूर्वकम् कर्मत्वान्मच्छरीरकर्मवत् । ब्रह्माण्डादिकं प्रयत्नवदधिष्ठितं धृतिम-

स्त्वात् । सा च गुरुणो द्रव्यस्यापतनात् । घटादिनिर्माणं, स्वतन्त्रपुरुषविश्रान्तं, निर्माणत्वात्स्वेच्छालिपिनिर्माणवत् । द्व्यणुकादिपरिमाणकारणतयाऽवश्याभ्युपेयं परमाणुद्वयादि, अपेक्षाबुद्धिसापेक्षं द्वित्वादित्वाद्घटपटद्वित्वादिवदित्याद्यनुमानान्यपि, प्रथमस्यादृष्टद्वारा चेतनपूर्वकत्वेन सिद्धसाधनत्वात्, द्वितीयस्य च प्रयत्नवता धृतेत्यनेन तुल्ययोगक्षेमत्वात्, तृतीयस्य चाप्रयोजकत्वादीश्वरानङ्गीकारिणा कुलालादेरेव तत्तत्कार्यस्वातन्त्र्याभ्युपगमेन सिद्धसाधनत्वाच्च, चतुर्थस्याप्यप्रयोजकत्वात्, सर्वेषु प्रतिसाधनसौलभ्याच्चेत्युक्तदिशैव निराकार्याणीत्यर्थः ।

स० — अस्यानुमानस्य केवलव्यतिरेकित्वेन साध्यवैकल्यं परिहर्तुं तत्र कार्यत्वहेतोः व्यतिरेकस्य दृष्टान्तेऽभावेन कथं केवलव्यतिरेकित्वमित्याशङ्क्य हेतावप्रतिहतेच्छेतिविशेषणस्याभिप्रेतत्वेन घटादौ कुलालादेरप्रतिहतेच्छकार्यत्वाभावेन युक्तो घटादौ हेतुव्यतिरेको युक्तं च हेतोः केवलव्यतिरेकित्वमिति गूढाभिसन्धिराशङ्कते **अत एव कदाचिदिति** ॥ अभिसन्धिमनूद्योत्तरमाह **किमेतावतेति** ॥ किञ्चिदभिसन्धिमुद्घाटयति **कथञ्चिदिति** ॥ संपूर्णाभिसन्धिमुद्घाटयति **केवलव्यतिरेकीति** । विशेषणासिद्धेरित्यर्थः । जगत्कर्तुरप्रतिहतेच्छत्वस्यासिद्धेरित्यर्थः । अत एव प्राक् कथञ्चिदित्युक्तम् । ननु सकर्तृकत्वमात्रमेव साध्यं तथाऽपि न दोषः । कुतः । कारणाभिज्ञत्वस्य व्यापकत्वेन तस्य च कुलालादावभावेन व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वेन तद्व्यापकीभूतकारणाभिज्ञत्वस्याभावेन तद्व्याप्यभूतसकर्तृकत्वस्याप्यभावेन न दोष इत्यभिप्रेत्य शङ्कते **तेषामिति** । तस्य व्यापकत्वाङ्गीकारे कुलालादावपि तदभावापत्त्या न तस्य व्यापकत्वमित्यभिप्रेत्योत्तरमाह **कुलालादीनामिति** ॥ **कथञ्चिद्भेद इति** । कृतिसाध्यत्वमेव कार्यत्वमिति साध्यभूतकार्यत्वस्य पृथङ्निर्वचनेऽपीत्यर्थः । एवं चेदुक्तकार्यत्वानुमानेनेश्वरसिद्ध्युपपत्तौ सर्तृकत्वानुमानं व्यर्थमित्यभिप्रेत्य कथञ्चिदित्युक्तमिति द्रष्टव्यम् । यद्वाऽभूत्वाभावित्वस्यात्मनः सत्तासंबन्धरूपत्वेन कार्यत्वस्य च प्रागभावप्रतियोगिरूपत्वेन कथञ्चिद्भेद इत्युक्तमिति ज्ञेयम् । **द्वितीये व्यर्थविशेषणत्वमिति** ॥ संयोगविभागिसजातीयद्रव्यविशेषणं व्यर्थमित्यर्थः । तत्त्याग आह **पूर्ववदसिद्धिश्चेति** ॥ तदारब्धत्वस्य तत्समवायिकारणकत्वे प्रतिवाद्यसिद्धिः । तत्परिणामित्वे वाद्यसिद्धिरित्यर्थः । **एतेनेति** । प्रयत्नाधारजमित्यत्र तदुपादानसाक्षात्कारवत्प्रयत्नाधारजमिति विवक्षितं उत प्रयत्नाधारमात्रजमिति । आद्ये साध्यवैकल्यम् । द्वितीये सिद्धसाधनमिति । प्रयत्नाधारजमित्यत्र पक्षद्वयस्य प्रसक्तत्वेन विकल्पदूषणस्यावकाशः । प्रयत्नवता धृते इत्यत्र तु धार्यमात्रज्ञानस्यावश्यकत्वेन तदुपादानसाक्षात्कारस्यानपेक्षितत्वेन धार्यज्ञानस्य च कुलालादौ सत्त्वेन साध्यवैकल्याभावात् । विकल्प्य दूषणद्वयस्यासंभवेन पृथगाशङ्क्य एकेनैव दूषणेन दूषितमिति बोध्यम् । गुरुत्वे सत्यपातित्वहेतोरन्यथासिद्धिमप्याह **किञ्चेति** । पतनविरोधी ऊर्ध्वशाखाया अधस्तनशाखासंयोगः, मध्ये शरपात-

विरोधी वेगः, पाषाणपतनविरोधी हस्तादिना धारणप्रयत्न इति विवेकः । गुरुत्वप्रतिबन्धकं गुरुत्व-कार्यपतनप्रतिबन्धकम् । एतेन प्रयत्नवान् यो जीवः तद्विनाश्यत्वसंभवेन सिद्धसाधनत्वेनेत्यर्थः ।

प०— **उक्तेति** । कार्यत्वाद्यनुमानैरित्यर्थः । ननु यदि वेदादिशास्त्रं शिवादिकारणतां ब्रूयात्तर्हि-तदनुसार्यनुमानमपि शिवादेरेव कारणतां वदेदिति कथं तेन भवत्पक्षस्य सिद्धिरित्यत आह **शास्त्रस्येति** ॥ ईश्वरेऽनुमानागम्यतोक्तेः प्रकृतानुपयोगाद्विवक्षितमर्थमाह **जगत्कारण इति** ॥ **अनुमा चेति** । न केवल-मागम इति चार्थः ॥ **कथञ्चिदस्य हेतुविशेषणत्व इति** । धर्मादिसाक्षात्कारपूर्वककृतिजन्यत्वादिति हेतुविशेषणत्व इत्यर्थः ॥ विशेष्यांशमादाय साध्यावैशिष्ट्यनिरासः शक्य इति भावेन कथञ्चिदित्युक्तम् **तर्हीति** । अन्वयव्याप्तौ साधनवैकल्यपक्ष इत्यर्थः । घटादौ व्यतिरेकव्याप्तिसंभवादिति भावः ॥ **अदृष्टवतामिति** । न्यायमते सर्वस्यापि यथायथं तत्तज्जीवोपभोग्यतया जीवादृष्टनिर्मितत्वेनादृष्टद्वारा जीवानामेव कर्तृत्वोपपत्तेरित्यर्थः ॥ न चातिशयजन्मेत्युक्तम् । स चातिशयः किं गुणोऽथ शक्तिरुत सहकारिसमवधानं अथ कार्यकारित्वमिति विकल्पान्क्रमेण निराह **गुण इति** । न्यायमतेऽदृष्टस्य गुणत्वा-दिति भावः ॥ **अनभ्युपगमादिति** । तार्किकमत इति योज्यम् । तार्किकाभिमतस्येश्वरानुमानिकत्व-स्यात्रापाकरणप्रस्तावादिति भावः ॥ **तदुत्पत्तीति** । स्वजन्मोत्तरक्षण एवेत्यर्थः । **अभूत्वाभावित्वा-दिति** । प्रागविद्यमानस्येदानीं विद्यमानत्वाद्धेतोः कार्यत्वं सिद्धमित्यर्थः ॥ **कथञ्चिदिति** । कृतिघटित-त्वात्कार्यत्वस्य ततः कथञ्चिद्भेद इत्यर्थः ॥ ननु सावयवत्वं नाम कारणवत्त्वं ब्रूमः, तच्च त्वन्मते परिणामि-कारणवत्त्वं मन्मते समवायिकारणवत्त्वं अतो न दोष इति वदन्तं प्रत्याह **किञ्चेति** । कुतस्तद्विषवत्त्वशे-मित्येवकारार्थः ॥ **परमाणुभिर्व्यभिचार इति** । परमाणूनामपि परमाण्वन्तरसंयोगविभागवत्त्वेनोक्त-रूपहेतुसत्त्वेऽपि कार्यत्वाभावाद्व्यभिचार इति भावः ॥ **व्यर्थेति** । आरब्धत्वमात्रस्य कार्यत्वाव्यभिचारा-दिति भावः ॥ **पूर्ववदिति** । अभूत्वाभावित्वादिति हेतोरिवेत्यर्थः । तत्रोक्तसाध्यावैशिष्ट्याद्यनु-सन्धानाय पूर्ववदित्युक्तिः । कार्यत्वादिहेतुनिरासप्रपञ्चनं चेश्वरवादे तर्कताण्डवे व्यक्तम् ॥ **एतेनेति** । अदृष्टद्वारा जीवात्मभिः सिद्धसाधनत्वदोषेणेत्यर्थः ॥ **पूर्ववत्सिद्धसाधनमिति** । अदृष्टवज्जीवात्मभि-स्सिद्धसाधनमित्यर्थः ॥ **संयोगेति** । द्वन्द्वान्तस्थो वतिः संयोगवत्प्रयत्नवदिति प्रत्येकमन्वेति । संयोगा-दिना प्रतिबद्धं गुरुत्वं यथा न पतनहेतुः तथा जीवादृष्टप्रतिबद्धमपि न पतनहेतुः स्यात् । एवं च प्रयत्नवानीश्वरो नाङ्गीकार्य इति भावः ॥ ननु तथात्वे पतमानपतत्रिशरीरवदुपलम्भः स्यादित्यत आह **महत्त्वेनेति** ॥ **एतेन चरमेति** । क्षित्यादिकं प्रयत्नवद्विनाश्यं विनाशित्वादित्येतदपि हेतौ संदिग्धा-सिद्धत्वदोषेण निरस्तमित्यर्थः ॥ ननु यत्किञ्चित्पुरुषानुपलभ्यमानत्वं(भ्यत्वं) वा सर्वानुपलभ्यमानत्वं-(भ्यत्वं) वा । आद्यं व्यभिचारि अन्त्यं संदिग्धासिद्धम्; इत्यत आह **अनुपलभ्यमानत्वं**(अनुपलभ्यत्वं)

चेति । असदुपलब्ध्यविषयत्वमिति वक्तव्ये यद्योग्यत्वमित्याह तदस्मदनुमानाविषये देशान्तरगतपर-सुखादौ व्यभिचारवारणाय । तत्रास्मदनुमितिविषयत्वाभावेऽपि तद्योग्यत्वस्य सत्त्वादिति बोध्यम् ॥ **तथा चेति** । अस्मदनुमानस्य दुष्टत्वे सतीत्यर्थः । यानि 'कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः । वाक्यात्सङ्ख्याविशेषाच्च साध्यो विश्वकृदव्ययः' इत्युदनयनोक्तानुमानान्तराणि तैर्विश्वकर्तृसिद्धिरस्त्वित्यत आह **अनयैवेति** ॥ **निरसनीयानीति** । निरासप्रकारश्च तर्कताण्डवे व्यक्तः ।

या० — गूढाभिसन्धिराह **अत एवेति** । अप्रतिहतेच्छेति हेतुविशेषणमित्यभिसन्धिर्गूढ इति द्रष्टव्यम् । अविदिताशय इव परिहरति **साध्यवैकल्येति** ॥ ननु न साध्यवैकल्यं स्वतो दोषः किन्तु व्यभिचारादिरूपतया । यथाऽऽह । 'साधारणो विरुद्धो वा दृष्टान्ते साध्यवर्जितः' इति । तथा च व्यभिचारपरिहारायाप्रतिहतेच्छकार्यत्वादिति हेतुर्विवक्षितोऽतो नोक्तदोष इति परेण स्वाभिसन्धावुद्घाटिते सत्याह **कथञ्चिदिति** । अस्येत्यनेन प्रकृतप्रतिहतेच्छपरामर्शेनोक्तदोषापरिहारात्कथं तस्य हेतुविशेषणत्वमित्यत उक्तम् **कथञ्चिदिति** । उक्तरीत्या निषेधद्वारा विशेषणत इत्यर्थः ॥ वस्तुतस्त्वप्रतिहतेच्छत्वाधुनाऽप्यसिद्धत्वान्न तस्य हेतुविशेषणत्वमुचितमित्याशयेन कथञ्चिदित्युक्तमिति द्रष्टव्यम् ॥ **तेषां कारणानभिज्ञत्वादिति** । तथा च कारणाभिज्ञत्वमेव कर्तृत्वम् । तच्च न जीवानामतो न सिद्धसाधनमिति भावः ॥ **कुलालादीनामिति** । तथा च साध्यवैकल्यमिति भावः ॥ **अदृष्टाधिष्ठात्रेति** ।

---

अदृष्टद्वारा जीवात्मनामेव कर्तृत्वमादाय सिद्धसाधनतामाशङ्कमानेनाप्यन्ततोऽदृष्टाधिष्ठातृतयेश्वरोऽङ्गीकार्यः । चेतनस्याधिष्ठातुरभावेऽचेतनस्य स्वतःकारणताया क्वाप्यदर्शनात् । तथा चादावेव साक्षात्कर्तृतया-प्राप्त ईश्वरः कस्मादपोद्यत इति भावः ॥ नोदनं संयोगविशेषः । आदिपदेन परिस्पन्दः ॥ **न चातिशयेति** । देवताधिष्ठानेन प्रतिमायामिवेति भावः । अदृष्टे जायमानोऽप्यतिशयो न तावद्गुणकर्मद्रव्यरूपः गुणे तेषामभावात् नापि सामान्यविशेषसमवायरूपः । तेषां जन्माभावात्; इत्याशयेनाह **गुणो गुणाद्यन्तरेति** ॥ **कथञ्चिद्भेद इति** । कृतिसाध्यत्वं कार्यत्वमिति साध्यभूतकार्यत्वस्य भेदेऽपीत्यर्थः । एवं चेदुक्तकार्यत्वानुमानेनैवेश्वरसिद्ध्युपपत्तौ सकर्तृकानुमानवैयर्थ्यप्रसङ्ग इत्यभिप्रेत्य कथञ्चिदित्युक्तम् ॥ **द्वितीये व्यर्थविशेषणत्वमिति** । संयोगविभागीति सजातीयद्रव्यविशेषणं व्यर्थमित्यर्थः ॥ तत्त्यागे त्वाह **पूर्ववदसिद्धश्चेति** । तदारब्धत्वस्य तत्समवायिकारणत्वरूपत्वे प्रतिवाद्यसिद्धिः । तत्परिणामरूपत्वे वाद्यसिद्धिरिति पूर्ववदसिद्धिरित्यर्थः ॥ **एतेनेति** । जीवानामेवादृष्टद्वारा कर्मजनकप्रयत्नाधारत्वसंभवात्सिद्धसाधनत्वेनेत्यर्थः । गुरुत्वप्रतिबन्धकं गुरुत्वकार्यपतनप्रतिबन्धकम् । यथा वृक्षसंयोगः फलपतने, वेगः शरीरादिपतने, प्रयत्नो गगनतलगतखगशरीरादिपतने प्रतिबन्धकः । तथा पृथिव्युदकयोः पतने क्लृप्तानां तेषामभावेऽपि जीवादृष्टमेव प्रतिबन्धकमित्यस्तु । धर्मिकल्पनाऽतो धर्मकल्पना लघीय-

सीति न्यायात् । तथा चोक्तानुमानस्यान्यथासिद्धिरिति भावः ॥ इत्यादिनेति । विवादाध्यासितं कर्म, न प्रयत्नाधारजम्, अनुपलभ्यमानस्वजनकप्रयत्नाधारकत्वात्, संप्रतिपन्नवत् । सम्प्रतिपन्ने पृथिव्युदके, न प्रयत्नवता धृते, अनुपलभ्यमानस्वजनकप्रयत्नवत्कत्वात्, संप्रतिपन्नवत् । क्षित्यादिकं, प्रयत्नवद्विनाश्यं न, अनुपलभ्यमानस्वविनाशकप्रयत्नवत्कत्वात्, सम्प्रतिपन्नवदिति सत्प्रतिपक्षानुमानान्यादिपदोपात्तानि ज्ञातव्यानि ॥ नन्वीश्वरस्य योगिभिरुपलम्भादसिद्धिरित्यत आह अनुपलभ्यमानत्वं चेति । अस्मदुपलब्ध्यविषयत्वमिति वक्तव्ये यद्योग्यत्वमित्याह तदस्मदनुमानाद्यगोचरे देशान्तरगतपरसुखादौ व्यभिचारवारणाय । तत्रास्मदनुमितिविषयत्वस्याभावेऽपि तद्योग्यत्वस्य सत्त्वादित्यवगन्तव्यम् ॥ ननूक्तसिद्धसाधनतापरिहारायानुमानान्तराणि सामान्यजगत्कर्तृसाधकानि बहूनि सन्ति । तथा हि । अदृष्टाद्वारकस्वोपादानगोचरजन्यभिन्नानि समवेतानि जन्यानि । स्वजन्यादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगिभिन्नोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि । स्वजनकादृष्टोत्तरोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि वा, अपरोक्षज्ञानचिकीर्षाप्रयत्नविषयीभवदुपादानानि वा , समवेतत्वे सति प्रागभावप्रतियोगित्वात् । भावकार्यत्वाद्वा । घटवत् । अत्र पक्षे जन्यानीत्येवोक्ते ध्वंसस्यापि पक्षत्वेनांशे बाधः । तस्योपादानाभावात् । तन्निवृत्त्यर्थं समवेतानीत्युक्तम् । तावत्युक्ते घटादेरपि पक्षत्वेनांशे सिद्धसाधनम् । तन्निवृत्त्यर्थं जन्यभिन्नानीति । तावत्युक्तेऽङ्कुरादेरपि जन्यत्वादाश्रयासिद्धिः । तन्निवृत्त्यर्थं जन्यकृतीति । तावत्युक्ते शब्दफूत्कारादेः पक्षता न स्यात् । तस्य शब्दादिनिमित्तभूतमृदङ्गताल्वादिगोचरास्मदादिनिष्ठकृतिजन्यत्वात् । तदर्थं स्वोपादानगोचरेति । तज्जनकास्मदादिनिष्ठकृतेर्निमित्तीभूतमृदङ्गादिगोचरत्वेऽप्युपादानीभूताकाशादिगोचरत्वाभावात् । तावत्युक्ते कालीरूपादेः पक्षता न स्यात् । तस्य स्वोपादानीभूतशरीरगोचरकृतिजन्यत्वेन तद्भिन्नत्वाभावात् । तदर्थमदृष्टद्वारकेति । कालीकृतिस्त्वदृष्टद्वारैव रूपजनिकेति न दोषः । सा ये यद्यपि ज्ञानचिकीर्षाकृतीनां मध्ये एकैकोक्तावपीश्वरसिद्धिस्तथाऽपि यावदभिमतविशेषगुणसिद्ध्यर्थं त्रितयोक्तिः । अपरोक्षपदं तूपादानज्ञानस्यापरोक्षत्वेनैव हेतुत्वाद्व्यापकतासिद्ध्यर्थम् । उपादानगोचरपदं तु ध्वंसव्यावृत्तसकर्तृकत्वसिद्ध्यर्थम् । तावत्युक्ते सिद्धसाधनम् । अङ्कुरादेरपि स्वजनकादृष्टजनकयत्किञ्चिदुपादानभूतहविरादिगोचरज्ञानादिमदस्मदादिजन्यत्वात् । तदर्थमदृष्टेत्यादिभिन्नान्तं ज्ञानादिविशेषणम् । एवं च न सिद्धसाधनम् । कारणप्रागभावस्य कार्यप्रागभावं प्रति व्याप्यत्वेनास्मदादिनिष्ठादृष्टजनकज्ञानादिप्रागभावस्य स्वजन्यादृष्टप्रागभावं प्रति व्याप्यत्वेन तद्भिन्नत्वाभावाद् । अत्र यद्यप्यदृष्टजनकभिन्नेत्युक्तेऽप्यस्मदादिभिर्न सिद्धसाधनम् । तथाऽपीश्वरज्ञानादेरप्यदृष्टजनकत्वाद्बाधः स मा भूदिति वक्रोक्तिः । एवं च न बाधः । ईश्वरज्ञानादेरनादित्वेन प्रागभावप्रतियोगिभिन्नत्वात् । तावत्युक्ते दृष्टान्तस्य साध्यवैकल्यम् । कुलालनिष्ठस्य घट-

जनकज्ञानादिप्रागभावस्य तन्निष्ठविहितादिक्रियान्तरादिनोत्पत्स्यमानादृष्टप्रागभावं प्रति व्याप्यत्वात्। तदर्थं स्वजन्यत्वेनादृष्टं विशेषितम्। एवं च न साध्यवैकल्यम्। उत्पत्स्यमानादृष्टस्य घटोत्पादनविषयकज्ञानादिजन्यत्वाभावात्। द्वितीयसाध्येऽसदादिभिः सिद्धसाधनवारणाय स्वजनकादृष्टोत्तरेति तृतीये च विषयीभवदितिविशेषणम्। तथा विमतं परमाण्वादि, चेतनाधिष्ठितं स्पन्दते, जडत्वाच्छरीरवदित्यादीति। तथा च कथमेतदित्यत आह **अनयैव दिशेति**। अत्र कारणशब्दः कर्तृपरः। अनुपलभ्यमानकर्तृत्वेन सत्प्रतिपक्षत्वात्। उक्तानुमानैरुपलब्धावन्योन्याश्रयादित्युक्तदिशेत्यर्थः। यद्वा। प्रसङ्गादाह **अनयैव दिशेति** केवलानुमानवादिभिर्यानि जगदुपादानकारणसाधनानि यानि चादृष्टादिनिमित्तकारणसाधनान्युच्यन्ते तानि सर्वाण्यप्यनयैव रीत्या निरसनीयानीत्यर्थः॥

श्री० — **केवलेति**। कारणादिसाक्षात्कारवत्कर्तृपूर्वकत्वरूपसकर्तृकत्वाभावस्याप्रतिहतेच्छकार्यत्वाभावस्य च घटे सत्वादित्यर्थः॥ **विशेषणेति**। एतदनुमानप्रवृत्तेः पूर्वमप्रतिहतेच्छत्वरूपविशेषणस्येश्वरेऽसिध्याऽस्मान्प्रति विशेषणासिद्धिरित्यर्थः॥ **अदृष्टादेवेति**। तथाच नेश्वरेण कृत्यमिति भावः। गुणादौ सावयवत्वाभावेन कार्यत्वसाधनायोगात् द्रव्येत्युक्तम्॥ **कारणवत्तामेवेति**। समवायिकारणवत्त्वादिकं दूरोत्सारितमिति भावः॥ **प्रदेशवत्त्वमिति**। इदमेव च सावयवत्वमिति तस्यासिद्धिरिति भावः॥ **आकाश(गगन)दीनामपीति**। तथाच व्यभिचार इति भावः॥ हेतोरभावान्न व्यभिचार इत्यत आह **कथमन्यथेति**। गगनेऽपि प्रदेशवत्त्वरूपसावयवत्वानङ्गीकार इत्यर्थः॥ **पक्षिणो भावाभावाविति**। इह पक्षी नेह पक्षीति पक्षिसंयोगभावाभावावित्यर्थः॥ **संयोगस्येति**। एवञ्च गगने पक्षिसंयोगभावाभावावच्छेदकत्वेन प्रदेशो न कल्पनीय इति हेतोरेवाभावान्न कार्यत्वसाधनप्रसङ्ग इत्याशयः॥ **एवमिति**। पक्षिसंयोगभावाभावौ गगने युक्तावित्यर्थः॥ **समभिति**। घटसंयोगभावाभावावच्छेदकत्वेन भूतलेऽपि प्रदेशवत्त्वं न कल्पनीयमिति स्वरूपासिद्धिरिति भावः॥ **परमाणुभिरिति**। एकस्य परमाणोः संयोगिविभागिसजातीयद्रव्यान्तरं परमाण्वन्तरम्। तद्वत्त्वस्य विद्यमानत्वेन व्यभिचार इत्यर्थः॥ **एतेनेति**। जीवात्मनामेवादृष्टद्वारा विनाशकत्वोपपत्त्याऽर्थान्तरत्वेनेत्यर्थः॥ **अस्मदनुमानस्य दुष्टत्वमिति**। स्वरूपासिद्धत्वेन दुष्टतया सत्प्रतिपक्षत्वासंभवेनैतद्विरोधाभावात्कार्यत्वानुमानस्य समीचीनतासिद्धिरित्यर्थः।

च० — साधनवैकल्यस्याभिधित्सया स्वाशयमीषदाविर्भावयति **कथञ्चिदिति**। अप्रतिहतेच्छत्वस्य संप्रत्यसिद्धतया कथञ्चिदिति॥ **विशेषणासिद्धेरिति**। अप्रतिहतेच्छत्वरूपविशेषणस्यैवासिद्धौ तद्धटितहेतोरप्यप्रसिद्ध्या 'सद्व्यामभावो निरूप्यते' इति नियमेन विशिष्टहेतुव्यतिरेकस्याप्रसिद्ध्या तन्निरूपितव्याप्तेः साध्यव्यतिरेके दुर्ग्रहत्वादिति भावः॥ नोदनं संयोगविशेषः। परिस्पन्दसंग्राहकमादिपदम्।

अदृष्टस्याद्रव्यतया गुणकर्मद्रव्यरूपातिशयायोगेन सामान्यविशेषसमवायानां च जनिराहित्येन नादृष्टेऽतिशयोत्पाद इत्याह **गुण इत्यादि** । **एतेनेति** । जीवानामेवादृष्टद्वारा द्व्यणुकासमवायिकारणसंयोगोत्पादकपरमाणुकर्मजनकयत्नाश्रयत्वसंभवनियन्त्रितसाधनत्वेनेत्यर्थः ॥ संयोगः पत्रादिपतने, इषुपतने वेगः अम्बरतलवर्तिपतत्त्रिपतने प्रयत्नः प्रतिबन्धकोऽवसेयः ।

**सु०— यच्च शिवादीनां जगत्कारणत्वे परिशेषानुमानं तदपि किं शास्त्रानुसारि किंवा केवलम् । नाद्यः । शास्त्रस्य भगवदेकपरतया वक्ष्यमाणत्वात् । द्वितीयं दूषयति** न पृथक् चेति ।

**ईश्वरे शिवे जगत्कर्तरि च पृथगनुमानं न मानमित्यर्थः ॥ तत्कथमित्यत** आह पुंस्त्वेति ।

**अनु०—** पुंस्त्वहेतुबलादेव पूर्वोक्तेनैव वर्त्मना ॥

**पूर्वोक्तेन(एव) वर्त्मना शैवागमप्रामाण्यानुमाननिराकरणमार्गेणैव । सत्प्रतिपक्षत्वेनैवेत्यर्थः । एवकारो न दूषणान्तरान्वेषणेन वृथा मनः खेदनीयं स्फुटदोषे सतीति द्योतयति ।**

**वा०—** अत्र पुंस्त्वहेतुबलादित्युक्तस्य सामान्यानुमानप्रतिपक्षताया विभिन्नधर्मिकत्वादिनाऽसम्भवादार्थिकप्रतिपक्षतायामप्याश्रयासिद्धिधर्मिग्राहकबाधयोः प्राप्तेस्तदर्थतया वनकुक्कुरत्वादिरूपेणेति वक्ष्यमाणप्रकाराश्रयणे प्रथमातिक्रमे कारणाभावेन तस्यात्रैवोक्तिप्रसङ्गात्सर्वज्ञत्वादौ विशिष्य दूषणमुक्त्वा परिशेष एव तदनुक्तिप्रयुक्तन्यूनताप्राप्तेश्च पुंस्त्वहेतुबलादित्यस्य परिशेषे प्रतिपक्षप्रतिपादनपरतां प्रतिपादयिष्यंस्तत्परतयाऽपि 'न पृथक् चानुमेश्वरे' इति वाक्यं योजयति **यच्चेति** ॥ अत एवेश्वरशब्दस्य शिवे रूढिं जगत्कर्तृत्वे योगं चाश्रित्य विशेषविषयतां मूलारूढां करोति **ईश्वर इति** ॥ पूर्वोक्तेनैवेत्यस्य सामान्यानुमानानां भाष्याभिप्रेतदूषणगणेषु प्रतिपक्षस्य स्वयमुक्तत्वेऽप्यागमप्रामाण्यानुमाननिरास इव भाष्यकारेणैव विशिष्यप्रतिपक्षानुक्तेरव्यवहितपरत्वासम्भवाद्व्यवहितपरामर्शकत्वेन तद्योजयति **पूर्वोक्तेनेत्यादिना** ॥ अतिदेशस्य सामान्यविषयत्वाभिप्रायं दर्शयति **सत्प्रतिपक्षत्वेनैवेत्यर्थ इति** ।

**प०—** प्राक्सामान्यानुमाननिरासकतया योजितमेव वाक्यं परिशेषानुमाननिरासकतयाऽप्यवतारयं व्याचष्टे **यच्चेति** । ईश्वर इत्यस्य प्रतिपदं शिव इति । प्रकृतोपयोगायाह **जगत्कर्तरीति** । शिवो जगत्कर्तेत्यस्मिन्नर्थे चेत्यर्थः ।

**सु०— ईशवाक्यत्वं कथमत्र हेतुः स्यादित्यत आह** पुंस्त्वेति ।

**पूर्वोक्तेन(एव) वर्त्मनेति सत्प्रतिपक्षतामात्रमतिदिष्टम् । न तु स हेतुरिति भावः ।**

**अयमत्र प्रयोगः । शिवो न जगत्कारणं पुंस्त्वाद्देवदत्तवदिति ॥ ननु शिवः केन**

प्रमाणेन सिद्धः । अथ परिशेषतो जगत्कर्तृत्वं तस्मिन्ननुमिमानस्य तवापि कुतः सिद्धः । लोकप्रवादादिनेति चेत् । ममापि तथेत्यस्तु । भवदभिमते ब्रह्मणि हेतुरनैकान्तिक इति चेन्न । केवलानुमानवादिनं प्रत्यनीश्वरवादाङ्गीकारेण प्रत्यवस्थानात् । ननु जगत्कारणत्वं शिवनिष्ठमन्यत्रानुपपत्तौ सत्यां किञ्चिन्निष्ठतया प्रमितत्वादिति हि परिशेषानुमानम् । तत्कथमस्यायं प्रतिपक्ष इति चेन्न । विरुद्धार्थसाधनमात्रेण प्रतिपक्षसंभवात् । प्रयोगतोऽप्येकधर्मनिष्ठतायाः प्रमाणप्रयोजनशून्यत्वात् अन्यथैवंविधार्थिकप्रतिपक्षाणामन्यत्रानन्तर्भावेनादूषणत्वप्रसङ्गात् । न चैवमस्त्विति वाच्यम् । प्रतिरोधकत्व(स्याप्रतिबन्धकत्व)स्यानुभवसिद्धत्वात् । नन्वेवं सति सामान्यसिद्धिरनुपपन्नाऽऽपद्यत इति चेत् । आपद्यताम् । तदनुमानानां दूषितत्वात् ।

वा०— अभिप्रायमजानानस्य शङ्कोत्तरतया हेतुविशेषोक्तिं योजयति **ईशेति** ॥ उक्ताभिप्रायोक्त्या शङ्कां विघटयति **पूर्वोक्तेनेति** ॥ अस्य च प्रतिपक्षत्वेऽनुपपत्तिं परिहर्तुमनुपपत्त्यादेः प्रतिप्रयोगप्रकारदर्शनेन विनाऽप्रसङ्गात्प्रयोगप्रकारं दर्शयति **अयमत्रेति** ॥ ननु शिवासिद्धावाश्रयासिद्धिस्तत्सिद्धौ च जगत्कारणत्वेनैव तत्सिद्धेर्धर्मिग्राहकबाधो मदनुमाने च शिवस्यापक्षत्वान्नैतद्दूषणावकाश इति दूषणं मनसि निधाय यथेश्वरत्वं सर्वज्ञानादिघटितजगत्कर्तृत्वादिकमेव नान्यत्, तथा शिवत्वमेव न जगत्कारणत्वं किन्तु देवविशेषत्वमेव शिवत्वं तथा च सर्वज्ञत्वादिघटितजगत्कर्तृत्वादिसिद्धिरीश्वरसाधकेनैवेतीश्वरः किञ्चिज्ज्ञः पुंस्त्वादित्यनुमाने धर्मिग्राहकविरोधादिप्राप्तौ तन्निमित्तप्रयत्नसार्थक्येऽपि शिवसाधकागमानुमानादेरुक्तौ तस्य शिवस्वरूपवज्जगत्कर्तृत्वादिसाधकत्वाद्धर्मिग्राहकविरोधोक्तिसम्भवेऽपि शिवस्वरूपमात्रग्राहकप्रमाणोक्तौ न धर्मिग्राहकविरोधो वक्तुं शक्यत इति धर्मिग्राहकविरोधमीश्वरः किञ्चिज्ज्ञ इत्युत्तरानुमान इव स्पष्टमनुक्त्वा सामान्येन प्रमाणमेव पृच्छति **नन्विति** । एवं चोत्तरत्र धर्मिग्राहकविरोधं स्पष्टमुक्त्वा तन्निवृत्तये यत्नान्तरमाचरितम् । अत्र त्वन्यथेति वैषम्यमयुक्तमिति निरस्तमिति द्रष्टव्यम् ॥ एवं तर्हि शिवस्यापक्षत्वेऽपि साध्यविशेषणतया तत्प्रवेशस्यावश्यकत्वात्तदप्रसिद्धावप्रसिद्धविशेषणता प्रसिद्धौ च तेनैव शिवे जगत्कर्तृत्वसिद्धेः परिशेषानुमानवैयर्थ्यमिति दूषणं साधनानुमानेऽपि मया वक्तुं शक्यत एवेति मनसि निधाय शिवस्वरूपमात्रे प्रमाणोदाहरणे वैयर्थ्यादेर्वक्तुमशक्यत्वात्स्वयमपि सामान्यमुखेन समाधत्ते **अथेति** ॥ ननु शिवस्वरूपमात्रविषयकलोकप्रवादानुमानादेर्मयाऽपेक्षणान्नाप्रसिद्धविशेषणता नापि वैयर्थ्यादीति शङ्कते **लोकेति** ॥ तर्हि मयाऽपि तादृशस्यैवापेक्षणान्न धर्मिग्राहकविरोधो नाप्याश्रयासिद्धिरिति समाधत्ते **ममापीति** ॥ त्वत्पक्ष इव न मत्पक्षेऽनैकान्त्यप्रसर इति वैषम्यान्तरं शङ्कते **भवदिति** ॥ मदभिप्रायाज्ञानेन त्वयोद्भावितस्य न मत्पक्षेऽपि प्रसर इति समाधत्ते **केवलेति** ॥ एकधर्मिकप्रयोगाभावेन

सत्प्रतिपक्षत्वस्यैवाभावाद्वैषम्यादिविचारो दूरोत्सारित इत्याशयेन शङ्कते **नन्विति** ॥ शङ्कामूलं विघटयति **प्रयोगतोऽपीति** ॥ **प्रतिरोधकत्वस्येति** । एवमप्यदूषणत्वे हेत्वाभासलक्षणस्यातिव्याप्तिः । दूषणत्वेन त्वत्सम्मतानामप्यदूषणत्वापत्तेश्चेति भावः ॥ नन्वन्यथा सामान्यसिद्धित्वव्याघाताद्विशेषान्तरविषयत्वेन परिशेषे त्वयाऽपि वाच्ये तत्राप्येतद्दूषणसाम्यात्तत्परिहारस्य च ममापि साम्यान्नेदं युक्तमिति शङ्कते **नन्वेवं सतीति** ॥ ईश्वरमभ्युपगम्य सामान्यसिद्धिबलेन तत्साधनस्य मदभिप्रेतत्वे कथञ्चित्साम्यप्रसक्तावप्यनीश्वरवादाङ्गीकारेण सामान्यसिद्धिमपि निराकुर्वतो मम नैतत्साम्यप्रसक्तिरिति समाधत्ते **आपद्यतामिति** । नन्वित्यारभ्य बलादित्येतद्व्यावर्त्यकथनमपि द्रष्टव्यम् ।

**स०— आर्थिकेति** । अर्थतः एकधर्मिनिष्ठाः । प्रतिपक्षाः, आर्थिकप्रतिपक्षा इत्यर्थः ।

**प०— (अनीश्वरवादाङ्गीकारेणेति** । शास्त्रगम्यत्वाभावाङ्गीकारेणेत्यर्थः । स एव पुंस्त्वशब्दार्थः । तथा च न ब्रह्मणि व्यभिचार इति भावः ॥) **अयं प्रतिपक्ष इतीति** । शिवो न जगत्कारणमिति प्रयोग इत्यर्थः । पक्षसाध्यादिभेदादिति भावः ॥ **प्रमाणेति** । प्रमाणप्रयोजनाभ्यां शून्यत्वादित्यर्थः ॥ **अन्यत्रेति** । असिद्ध्यादिहेत्वाभासान्तर इत्यर्थः ॥ **प्रतिबन्धकत्वस्येति** । अनुमितिं प्रतीति योज्यम् ॥ **नन्वेवमिति** । परिशेषानुमानस्य दुष्टतया सामान्यस्य शिवे पर्यवसानाभावे सति कार्यत्वादिहेतुभिः कर्तृसामान्यसिद्धिर्न युज्यत इत्यर्थः ॥ **तदिति** । कर्तृसामान्यसाधकानुमानानामित्यर्थः ।

**या०— तत्कथमस्येति** । समानधर्मिकत्वाभावादिति भावः ॥ **एवंविधार्थिकेति** । अर्थत एवैकधर्मिनिष्ठा न प्रयोगतस्तेषामित्यर्थः । तानि च शब्दोऽनित्यः कृतकत्वादित्यत्रानित्यत्वं शब्दनिष्ठात्यन्ताभावप्रतियोगि जात्यन्यत्वे सति शब्दमात्रवृत्त्यन्यधर्मत्वात् शब्दान्योन्याभाववत् घटरूपवच्च । शब्दनिष्ठात्यन्ताभावो वाऽनित्यत्वप्रतियोगिकः शब्दवृत्तिनित्याभावत्वात् शब्दनिष्ठान्योन्याभाववदित्यादीनि सांव्यावहारिकाणि द्रष्टव्यानि । प्रयोगतोऽपि धर्म्यैक्यनिर्बन्धः परेणापि त्याज्यः । कथमन्यथा केवलान्वयिन्यसत्प्रतिपक्षत्वसम्भवः । तत्र सत्प्रतिपक्षत्वप्रसक्तेरेव तत्पक्षेऽसम्भवात् । न हि शब्दोऽभिधेयो न भवतीति सत्प्रतिपक्षप्रयोगः सम्भवति । अभिधेयभेदस्याप्रसिद्धेः । धर्मैक्यनिर्बन्धाभावे तु अभिधेयत्वं शब्दनिष्ठात्यन्ताभावप्रतियोगीत्यादिरूपेण विशेषादर्शनदशायां तत्रापि सत्प्रतिपक्षप्राप्तिसंभवात् । उक्तं च गङ्गेशोपाध्यायेन । न पक्षैक्यमपि तन्त्रम्, विरोधस्यैव दूषकत्वात्, अधिकस्य व्यर्थत्वादिति । अस्य केवलान्वयिन्यपि सम्भव इति च ।

**श्री०— विरुद्धार्थेति** । तथाहि । घटः पटो न भवतीत्युक्ते घटे प्रतियोगितावच्छेदकभूतं पटत्वं नास्तीत्यर्थलाभेनान्योन्याभावस्यात्यन्ताभावव्याप्यतया शिवो न जगत्कारणमिति शिवे जगत्कारण-

प्रतियोगिकान्योन्याभावे साधिते सति शिवे प्रतियोगितावच्छेदकभूतं जगत्कारणत्वं नास्तीत्यर्थलाभेन जगत्कारणत्वं शिवनिष्ठमित्येतद्विरुद्धार्थसाधकत्वेनार्थिकप्रतिपक्षत्वमस्येति ध्येयम् ॥ **सामान्यसिद्धिरिति ।** क्षित्यादिकं सकर्तृकमित्यादिरूपा सामान्यसिद्धिः कर्तारमादाय पर्यवस्यति न कमपीति व्यर्थैवापत्तेत्यर्थः ।

**सु०— किमतो यद्येवमिति चेत् ; सिद्धः सौत्रहेतुरित्याह** शास्त्रयोनित्वमिति ।

अनु०— शास्त्रयोनित्वमेतेन कारणस्य बलाद्भवेत् ॥

**एतेनोक्तप्रकारेण । कारणस्य जगत इति शेषः । बलात्प्रकारान्तरेणासिद्धिबलात् ।**

**वा०—** बलादिति पृथक् श्रवणाद्बलशब्दार्थभूतप्रकारान्तरासिद्ध्युपपादकातिदेशार्थकत्वेनैतेनेति व्याचष्टे **एतेनेति** ॥ बलान्तरस्यासम्भवाद्व्याप्त्यादिरूपस्य तस्य प्रकृतानुपयोगात्तदुपयुक्तं बलशब्दार्थमाह **बलादिति ।**

**प०— यद्येवमिति ।** इति चेदित्यादिग्रन्थेनोक्तदिशा जगत्कारणस्यागमानुमानाभ्यामगम्यत्वे सतीत्यर्थः ।

**सु०— जगत्कारणस्यानुमानावेद्यत्वं श्रुतिभिरपि सिद्धमित्याह** नावेदविदिति ।

अनु०— नावेदविन्न तर्केण मतिरित्यादिवाक्यतः ॥
तर्को ज्ञापयितुं शक्तो नेशितारं कथञ्चन ॥

**'नावेदविन्मनुते(दं)तं बृहन्तम् ।' 'नैषा तर्केण मतिरापनेया ।' 'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति' इत्यादिवाक्यतः, इति ज्ञायत इति शेषः । तर्क इत्यनुमानमात्रोपलक्षणम् । ईशितारं जगत्कारणं(त्कर्तारम्) । कथञ्चन सामान्यतो विशेषतश्च ।**

**वा०—** योगमाश्रित्येशितारमिति व्याख्याति **ईशितारमिति ।** उभयविधानुमानावेद्यतायाः श्रुत्युक्तताप्रदर्शनाय प्रवृत्तं कथञ्चनेत्येतत्तदर्थतया व्याख्याति **कथञ्चनेति** ॥

**प०—** 'कथञ्चन' इत्यनन्तरं पदद्वयाध्याहारमाह **इति ज्ञायत इति शेष इति ।** दूषणानुमानमात्रभ्रमनिरासायाह **तर्क इति ।** प्रकृतोपयोगायेशितृशब्दार्थमाह **जगत्कारणमिति ।**

**या०—** प्रकृतोपयोगार्थमाह **ईशितारं जगत्कारणमिति ।**

**सु०— यदपि कार्यत्वादिहेतोः पक्षधर्मताबलादन्यस्माद्वाऽनुमानादीश्वरस्य सार्वज्ञ्यादिसिद्धिरिति तदपि प्रतिपक्षदुष्टत्वादयुक्तमित्याह** वनकृत्त्वादीति ।

अनु० — वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः ॥
किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखम् ॥

**नन्वत्रैवं प्रयोक्तव्यम्, ईश्वरः किञ्चिज्ज्ञः पुंस्त्वाद्देवदत्तवदिति । तत्रेश्वरः प्रमितो वा न वा । आद्ये येन प्र(यत्प्र)माणेन सिद्धस्तेनैव तस्य सार्वज्ञसिद्धेर्धर्मिग्राहक(प्रमाण)विरोधः । द्वितीये त्वाश्रयासिद्धिः । तत्कथमुच्यते ईशितुः किञ्चिज्ज्ञत्वं च पुंस्त्वेन साधयितुं शक्यं हीति तत्राह सुखमिति । तत्कथमित्यत उक्तं** वनकृत्त्वादिरूपेण पक्षभूतस्येति। **प्रसिद्धकर्तृरहितं वनं सकर्तृकं कार्यत्वादित्यादिना यो वनादिकर्ता सिद्धः तेनैवाकारेण तं पक्षीकृत्य प्रयोगे नकोऽपि दोष इत्याशयः । वनकृत्त्वं पर्वताधारकत्वमित्यादिरूपो धर्मस्तेनोपेतस्य । न हि वनकर्तेत्येतावत सर्वज्ञ इति लभ्यते । प्रसिद्धवनकर्तुरसर्वज्ञत्वात् । स एवक्षित्यादिकर्तेति कथं न सार्वज्ञ्यमिति चेन्न । तद्भावे प्रमाणाभावात् । न हि कार्यत्वादिहेतुः कर्तारमिव तस्य सर्वत्रैकत्वं गमयितुं शक्नोति । लाघवादेकत्वमाश्रीयत इति चेत्(न) । लोकदर्शनानुसारेण कर्तारं कल्पयतो गौरवाश्रयणस्यैवो(स्यो)चितत्वात् । लोके हि गजगवयगर्दभादीनां घटदीनां च निर्मातारो विजातीया एवोपलभ्यन्ते । न च वनकर्ता किञ्चिज्ज्ञ इति साधने किमीश्वरस्येति वाच्यम् । तस्य चेश्वरतायाः परेणा । अन्यथा वनकर्तरि सिद्धे किमीश्वरसिद्धावायातमित्यपि स्यात् ।**

**वा०** — वनकृत्त्वादीत्युत्तरग्रन्थस्योक्तोपपादकताभ्रान्तिनिरासाय तत्प्रतिपाद्यमाह **यदपीति** ॥ वनकृत्त्वादिरूपेणेति प्रयोगप्रकारविशेषप्रदर्शनात्तद्व्यावर्त्यशङ्काग्रन्थे प्रसक्तप्रकारं प्रदर्श्य तत्रानुपपत्तिमुद्भावयति **नन्वत्रेति** ॥ नन्वत्र प्रसिद्धवत्कर्तृपक्षीकारे सिद्धसाधनता अप्रसिद्धतत्पक्षीकारे त्वाश्रयासिद्धिरिति नायमपि प्रकारो युक्त इत्यत एवं प्रयोगप्रकारप्रदर्शकभाष्याभिप्रेतमाश्रयासिद्धिपरिहाराय तत्साधकानुमानान्तरोपजीवनप्रकारमाह **प्रसिद्धेति** ॥ ननु वनकर्त्रादीनां पक्षत्वे तथैवोक्तिप्रसङ्गेनैतादृशोक्तौ गौरवं, वनकृत्त्वादिस्वरूपस्य पक्षत्वाभिप्राये बाध इत्यत आदिपदार्थं दर्शयन्नेव विवक्षितमर्थमाह **वनकृत्त्वमित्यादिना** । ननु वनकर्तुः पक्षत्वेऽपि धर्मिग्राहकविरोधतादवस्थ्यमिति गूढाभिसन्धिना शङ्किते स्वयमभिप्रायमजानान इव परिहारमाह **न हीति** । ननु वनकर्तुर्मानेन सार्वज्ञासिद्धावपि वनकर्तुः क्षित्यादिकर्तुश्चैकत्वक्षित्यादिकर्तुश्च सार्वज्ञ्यस्य तदनुमानेन सिद्धत्वादेतद्धर्मिणो वनकर्तुरपि सार्वज्ञं सिद्धमेवेति क्षित्यादिकर्त्रनुमानमनुपजीव्य वनकर्त्रनुमानोपजीवनेऽपि वह्न्यनुष्णत्वानुमान इव धर्मिग्राहिजातीयविरोधः स्यादेवेति स्वाभिसन्धिमुद्धाटयति **स एवेति** । वन्हिजातीयैकतायाः प्रामणिकत्वेन तत्र तथात्वेऽपि, वनकर्तुः क्षित्या-

दिकर्तुश्चैकतायां न प्रमाणमिति न साम्यमित्यत्शयेन समाधत्ते **तद्भाव इति** ॥ ननु वनकर्तुरेव क्षित्यादिकर्तृत्वे क्षित्यादिकर्तुरीश्वरत्वाद्वनकर्तुरसार्वज्ञे साधिते, क्षित्यादिकर्तुस्तत्प्रासावपि, तयोर्भेदे वनकर्तुरनीश्वरत्वात्तद् सार्वज्ञसाधनं नास्माकमनिष्टसाधनमित्याशङ्कते **न चेति** । प्रसिद्धकर्तृशून्यवनकर्तुरीश्वरताया अकामेनापि त्वया वाच्यत्वादन्यथा क्षित्यादिकर्तुरपीश्वरता न स्यात्समानन्यायत्वादिति भावेनाह **तस्य चेति** ॥ नेदमस्माभिरुपपादनीयं परेणैव तादृशानुमानानामीश्वरसाधकतयोपन्यासादित्याशयेनाङ्गीकृतत्वादित्युक्तं विशदयति **अन्यथेति**। अत्र वनकर्तृसाधकानुमानोपजीवनेन प्रवृत्तेनास्मदीयेनेश्वरकिञ्चिज्ज्ञतासाधकानुमानेन क्षित्यादिकं सकर्तृकं कार्यत्वादित्यनुमानेन पर्यवसानगत्येश्वरसार्वज्ञ्यसिद्धेः प्रतिपक्षोऽयं न तु वनकर्तृत्वानुमानस्य तस्य सार्वज्ञ्येऽपर्यवासनात्पर्यवसाने वा धर्मिग्राहकविरोधापत्तेः । न च वनकर्तुः क्षित्यादिकर्तृभेदे नानेन क्षित्यादिकर्तृरसार्वज्ञ्येसिद्धिरिति वाच्यम् । तस्येश्वरसार्वज्ञ्ये पर्यवसानेनास्यापीश्वरासार्वज्ञसाधकत्वेन परं प्रत्यनिष्टतया प्रतिरोधकत्वोक्तेरुपपन्नत्वादिति द्रष्टव्यम् ।

**स०—नन्वत्रैवं प्रयोक्तव्यमिति** । इयमाशङ्का पक्षधर्मताबलात्सार्वज्ञ्यसिद्धिरितिपक्षे द्रष्टव्यम्- अनुमानान्तरात्सार्वज्ञ्यसिद्धिपक्षे वक्ष्यमाणधर्मिग्राहकविरोधासंभवात् धर्मिग्राहकप्रमाणेन च कर्तृत्वमात्रस्यैव सिद्धेरिति ध्येयम् ।

**प०**— (ईश्वरः सार्वज्ञ्यादिगुणवान् सर्वजगत्कर्तृत्वात् व्यतिरेकेण कुलालवदित्यनुमानं हृदि कृत्वाह **अन्यस्माद्वेति** । यद्यपि पक्षधर्मताबलादपि व्यापकस्य पक्षीयतामात्रं सिध्यति तथापि नाधिकदिति पृथगुक्तिरिति भावः ॥) कर्तेत्येतदन्तर्गतमेव सर्वज्ञत्वमित्येतदपि निराह **न हि कर्तेति** ॥ क्षित्यादिकर्तेत्युक्त्या तल्लाभोऽस्तीति भावेनाशङ्क्य निराह **स एवेति** ।

**या०—पक्षधर्मताबलादिति** । यावता विना पक्षे न साध्यपर्यवसानं तावत्सर्वमपि पक्षधर्मतालभ्यं न तु व्यापकतावच्छेदकावच्छिन्नस्य पक्षसम्बन्धमात्रमिति भावः ॥ **अन्यस्माद्वेति** । ईश्वरः सार्वज्ञ्यादिगुणवान् सर्वजगत्कर्तृत्वात् व्यतिरेकेण देवदत्तवदित्यस्मादित्यर्थः । पक्षधर्मताबलादपि व्यापकतावच्छेदकावच्छिन्नस्य पक्षीयत्वमात्रं सिध्यति नाधिकमतिप्रसङ्गादिति भावः ॥ **नन्वत्रेति** । इयमाशङ्का पक्षधर्मताबलात्सार्वज्ञसिद्धिरिति पक्षे अनुमानान्तरात्तत्सिद्धिरितिपक्षे वक्ष्यमाणधर्मिग्राहकविरोधासम्भवादिति ध्येयम् ॥ **स एव क्षित्यादिकर्तेति** ॥ तथा च धर्मिग्राहकमानविरोधस्तदवस्थ एवेति- भावः । यद्यप्यत्र यद्धर्मिग्राहक वनकर्तृसाधकमनुमानं न तत्र क्षित्यादिकर्त्रैक्यादिकं भासते, यत्र च स्थापनायां क्षितिवनादिसर्वकर्त्रैक्यादिकं भासते न तद्धर्मिग्राहकतया सिद्धान्त्यभिमतम्; अतो न धर्मिग्राहकमानविरोधशङ्का । तथापि कर्त्रैक्यादिसाधकस्थापनानुमानस्य पूर्वं प्रवृत्तत्वात् तदुपनीतं कर्त्रैक्यादिकं वनकर्तृसाधके धर्मिग्राहकेऽनुमाने भासते एवेति शङ्कितुरभिमानोऽतो धर्मिग्राहकमानविरोधशङ्का

युक्तैवेति । स्यादेतदेवं कथञ्चित् यदि पूर्वप्रवृत्ते स्थापनानुमाने कर्त्रैक्यादिभानं स्यात् । तदेव न सम्भवतीत्याह **तद्भाव इत्यादिना** ।

**श्री०— तेनोपेतस्येति** । तेन वनकृत्त्वादिरूपेणेत्यनन्तरमुपेतस्येति शेष इत्युक्तं भवति ॥ ननु प्रसिद्धकर्तृरहितं वनं सकर्तृकमित्युक्त्यैव सर्वज्ञत्वमिति लाभेन तस्य किञ्चिज्ज्ञत्वसाधने धर्मिग्राहकमानबाध इत्यत आह **न हीति ॥ स एवेति** । वनकर्त्रैवेत्यर्थः ॥ **तद्भावे इति** । प्रसिद्धकर्तृरहितवनकर्तुरेव क्षित्यादिकर्तृत्वभाव इत्यर्थः ॥ ननु कार्यत्वहेतुबलादेव वनकर्तुरेव क्षित्यादिकर्तृत्वं सिध्यति । अनेककर्तृकल्पने गौरवापत्तेरित्यस्ति प्रमाणमिति चेत्तत्राह **न हीति** ।

**सु०— न केवलं किञ्चिज्ज्ञत्वसाधनं सुकरम् । किन्तु स्वकृतकार्याज्ञत्वमपि शक्यसाधनमित्याशयेनाह** वृक्षकृदिति ।

**अनु०—** वृक्षकृन्नाखिलं वृक्षं वेत्ति पुंस्त्वाद्धि चैत्रवत् ॥

**वृक्षकृदिति पूर्ववद्धर्मिग्राहकविरोधाश्रयासिद्धिपरिहारायोक्तम् । प्रसिद्धकर्तृरहितेत्यपि योज्यम् । अन्यथा सिद्धसाधनताप्रसङ्गात् । अखिलमित्यारम्भकावयवसङ्ख्यापलपरिमाणविशेषसहितम् । अस्मदादीनां विप्रतिपन्नवृक्षज्ञानमात्रसद्भावादनैकान्त्यपरिहारायाखिलमित्युक्तम् । हीति विपक्षे बाधकाभावं सूचयति । न हि यो यत्कर्ता स सकलं तज्जानातीति नियमः । कुलालादावभावात् । अनुपयोगाच्च तज्ज्ञानस्येति ।**

**अनेनैव न्यायेन सर्वत्र प्रतिपक्षसंभवात् सत्यसङ्कल्पत्वाशरीरित्वनित्यज्ञानेच्छाप्रयत्नत्वदुःखादिराहित्यादिकमपि नानुमानेन साधयितुं शक्यमित्याशयवानाह** इत्यादीति ।

**अनु०—** इत्याद्यनुमया स्पर्धि नानुमानं परेशितुः ॥

शक्र विज्ञापने

**आदिशब्दः प्रकारवचनः । परेशितुः सत्यसङ्कल्पत्वाद्युपेतस्य ।**

**वा०—** वृक्षकृदित्युत्तरवाक्येऽपि प्रकारान्तरेण किञ्चिज्ज्ञत्वमेवोच्यत इति तस्यात्यन्तमुपयोगाभाव इति शङ्का तत्राप्यवान्तरविशेषप्रतिपादकत्वेन परिहरन्नखिलपदतात्पर्यलब्धं तदभिप्रायमाह **न केवलमिति** ॥ नन्वेकस्याखिलत्वानुपपत्त्याऽनेकविवक्षायां चैकरचनानुपपत्तेस्तस्य जात्यभिप्राये च वृक्षकर्तुस्तत्स्वरूपज्ञानस्यावश्यकत्वेन तदभावसाधने बाधापत्त्या नाखिलत्वविशेषणमुपपन्नमित्यत एकस्मिन्नपि विवक्षाविशेषेणाखिलत्वमुपपादयति **अखिलमितीति** ॥ **विपक्ष इति** । विप्रतिपन्ने पक्षे उदाहृते प्रतिपक्षानुमान इति यावत् । प्रतिकूलतर्करूपबाधकाभावम् । यद्वोदाहृतप्रत्यनुमाने बाधकत्वेन परेण

वक्तव्ये, यद्यखिलज्ञो न स्यात्तर्हि कर्ता न स्यादिति प्रतिकूलतर्के, विपक्षे बाधकाभावं, सूचयतीति हि, शब्दार्थः । ततश्च तर्कस्याप्रयोजकतेति भावः ॥ अथवैतस्य यत्र कर्तृत्वेन सार्वज्ञ्यसाधकानुमाने प्रतिपक्षता तत्र विपक्षे बाधकाभावं सूचयतीत्यर्थः । ततश्च तस्याप्रयोजकत्वमित्यस्य प्राबल्यवर्णनेन बाधकसूचनम् । न हि प्रतिपक्षो यावज्जीवं प्रतिपक्ष इति भावः ॥ बाधकभाव इत्येव पाठे तु न काऽप्यनुपपत्तिः । अस्मदनुमाने प्रतिकूलतर्करूपं साधनानुमाने च विपक्षे बाधकं भवद्यद्यखिलतज्ज्ञो न स्यात्तर्हि तत्कर्ता न स्यादित्याकारकं वक्तव्यं तत्र व्याप्त्यभाव इत्याह **न हीति** ॥ कुत इत्यतः प्रसिद्धकर्तृणां पुंसामखिलतत्कार्यज्ञानाभावस्य दृष्टत्वात्तत्कार्यकरणेऽखिलतज्ज्ञानस्यानुपयोगेन चाखिलतज्ज्ञानाभावः पुंस्सु निश्चित इति हिशब्दसूचितं हेतुं दर्शयति **कुलालादावित्यादिना** ॥ इत्यादीत्युत्तरवाक्यस्य किञ्चिज्ज्ञत्वसाधकप्रतिपक्षान्तरपरत्वे तदुक्तेर्विशेषप्रयोजनाभावात्सत्यसङ्कल्पत्वादिनिरासस्य मूलानारूढताऽऽपाताच्च पूर्वन्यायातिदेशेन विषयान्तरनिरासपरतया वाक्यं व्याख्याति **अनेनैवेति** ॥ तर्हि प्रभृत्यर्थकादिशब्दानुपपत्तिरित्यत उक्तन्यायातिदेशस्य मूलारूढतायै आदिपदं व्याख्याति **आदिशब्द इति** ॥ जगत्कारणत्वरूपोक्तविषयान्यस्य विषयविशेषस्य मूलारूढताऽर्थमाह **परेशितुरिति** ।

प० — **प्रसिद्धकर्त्रिति** । प्रसिद्धकर्तृरहितं यद्वनं तद्वदिति ध्येयमित्यर्थः ॥ **विपक्ष इति** । परोक्ताखिलज्ञत्वविपक्षेऽखिलज्ञत्वाभाव इत्यर्थः ॥ बाधकाभावं व्यनक्ति **न हि यो यत्कर्तेति** ।

या० — ननु तत्कर्तृत्वादेव तदखिलवेत्तृत्वं सिद्धमतः सत्प्रतिपक्षमेतदित्यत आह **हीति विपक्ष इति** । विपक्षे प्रतिपक्षे । तत्साधकानुमान इति यावत् । बाधकभावं व्याप्त्यभावरूपं सूचयतीत्यर्थः । तमेव दर्शयति **न हीत्यादिना** । बाधकाभावमिति पाठे तु शङ्किते सत्प्रतिपक्षानुमाने पक्षस्य विपक्षत्वे साध्याभाववत्त्वे बाधकाभावादप्रयोजकत्वं सूचयतीत्यर्थः । एतदेव दर्शयति न हीत्यादिनेति योज्यम् । यद्वा । विपक्षे सार्वज्ञ्यसाधकानुमानप्रतिपक्षभूतपुंस्त्वानुमाने विरोधिप्रबलप्रमाणाभावं सूचयतीत्यर्थः । ननु वृक्षकर्तृत्वमेव साकल्येन वृक्षानभिज्ञत्वे बाधकमित्यत आह **न हीति** । आदिशब्दस्य प्रभृत्यर्थकत्वे पूर्वोक्तस्यासार्वज्ञ्यसाधकानुमानस्य सत्यसङ्कल्पाद्यनुमाने प्रतिपक्षत्वं प्रतिभाति । तच्च न सम्भवतीत्यतोऽन्यथा व्याचष्टे **आदिशब्द इति**

श्री० — **योज्यमिति** । वृक्षेत्येतत्पूर्वं योज्यमित्यर्थः ॥ **विमतिपन्नेति** । प्रसिद्धकर्तृरहितवृक्षेत्यर्थः ॥ **ज्ञानमात्रेति** । सामान्याकारेणेत्यर्थः ।

सु०— आभाससमानयोगक्षेमं चेश्वरानुमानजातमित्याह चातिप्रसङ्ग इति ।

अनु०— चातिप्रसङ्गोऽनुमयेदृशा ॥

ईदृशा आगमादिसहायसंपदमपहायात्यन्तातीन्द्रियार्थे(षु) प्रयुज्यमानया अनुमया अतिप्रसङ्गश्चभवतीत्यर्थः। अतिप्रसङ्गमेव दर्शयति वस्तुत्वादिति ।

अनु०— वस्तुत्वात्तुरगः शृङ्गी पुष्पवत्खं सुतैर्युता ॥
चित्रिणी च रसः षष्ठो रसत्वात्सोत्तरो भवेत् ॥

चित्रिणी वन्ध्या । षष्ठो रसो रसान्तरवानित्युक्ते प्रथमादिरसेन सिद्धसाधनं स्यात् । सप्तमरसवानित्युक्ते अप्रसिद्धविशेषणता स्यात् । अतः सोत्तर इत्युक्तम् । ईश्वरानुमानस्य प्रमाणतायामेतेषामपि प्रामाण्यं स्यादिति शेषः । ननु वस्तुत्वं घटादावनैकान्तिकमिति चेन्न । तस्यापि पक्षत्वात् । तुरगशृङ्गादीनामनुपलम्भबाध इति चेत् । क्षित्यादिकर्तुरप्येवमेव । अयोग्यत्वान्नोपलभ्यत इति चेत् । तुरगविषाणमपि एवम(मेवा)स्तु । न च(नु) विषाणं नाम महत्त्वे सत्युद्भूतरूप(ः) शरीरावयवविशेषः । स कथमुपलब्ध्ययोग्यः स्यादिति चेत् । कर्ताऽपि तर्हि कुलालादिरिव महत्त्वे सत्युद्भूतरूपशरीरवान्कथमुपलब्ध्ययोग्यो भविष्यति । अशरीरत्वान्नोपलभ्यत इति चेत् । रूपाभावात्तुरगविषाणमपि तथाऽस्तु । विषाणं रूपवदेवेति चेत् । कर्ताऽपि शरीरवानेव । शरीरं कर्तृत्वेऽनुपयुक्तमिति चेत् न । किमुपयोगेन । न हि तदुत्पत्त्या व्याप्तिर्बौद्धानामिव भवताम् । धर्मादिमत्त्वं शरीरित्वे प्रयोजकमिति चेन्न । तस्यापि कर्तृत्वेन साधनादिति ॥ ननु कथमत्र प्रयोक्तव्यम् । अनुमानत्वं यदि कार्यत्वादौ वर्तेत तदा तदविशिष्टे वस्तुत्वादौ(अपि) वर्ततेत्येवमिति ।

वा०— अव्यवहितपूर्वविषय एवोत्तरवाक्यस्यातिप्रसङ्गपरत्वमिति भ्रान्तिं निवारयन्नेवाभाससमानयोगक्षेमत्वरूपं प्रसङ्गस्वरूपं च दर्शयति आभासेति ॥ ईदृशानुमयेत्यस्योक्तप्रतिपक्षानुमानपरत्वे तस्यातिप्रसङ्गरूपत्वाभावाद्वक्ष्यमाणानुमानपरत्वे चेदृशेत्यस्य वैयर्थ्यात्तयाऽऽभाससाम्यं यदनुमानानामुच्यते तावदीश्वरविषयकानुमानानां विवक्षाया अलाभाच्च तदनुमानजातस्य मूलारूढतायै न पृथक् चानुमेश्वर इत्युक्तागमादिसहायशून्यातीन्द्रियार्थविषयानुमानमात्रपरामर्शपरतया तद्व्याख्याति आगमादीति ॥ आभाससाम्यस्यातिप्रसङ्गरूपताया मूलाभिमतत्वं दर्शयति अतिप्रसङ्गमेवेति ॥ चित्ररूपवस्त्रियः पुत्रयुतत्वसाधनं नाभास इत्यत आह चित्रिणीति ॥ अनुमानस्वरूपमात्रपरस्यास्य वाक्यस्यातिप्रसङ्गस्वरूपे तात्पर्यसिद्धये आपाद्यापादकस्वरूपप्रदर्शकमुचितं शेषं पूरयति ईश्वरानुमानस्येति ॥ साम्योक्त्या सूचितं वैषम्यपरिहारं वक्तुं वैषम्यं शङ्कते नन्वित्यादिना । प्रतिज्ञादूषणबाधपरिहारस्य प्राथम्येऽपि, सूचीकटाह

न्यायेनाल्पत्वाद्धेतुदूषणानैकान्तिकपरिहारस्य, प्राथम्यमनुसृतं। शरीरमित्यप्रयोजकत्वस्य, धर्मादिमत्त्वमित्यन्यथासिद्धेः, शङ्केति द्रष्टव्यम्॥ नन्वनुमानस्य प्रमाणविशेषत्वादीश्वरानुमानानामनुमानत्वाभ्युपगमे प्रामाण्यस्यैवाभ्युपगमात्तदभ्युपगम्येश्वरानुमानस्य प्रमाणतायामित्यापादकत्वनिर्देशेनानुपपत्तिः। आभासत्वाभिमतस्य चानुमानत्वाभ्युपगमेऽनिष्टत्वाभावेनैषामपि प्रामाण्यं स्यादित्यापादनानुपपत्तिश्चाप्रयोजकता च दृष्टान्ताभावश्चेति कथमेतदित्याशङ्कते **ननु कथमिति**। न पृथक् चानुमेश्वर इत्यारभ्य नान्या स्यादनुमा तत इति पूर्वोत्तरवाक्ययोर्धर्मिभूतानुमाया एव निर्देशात्तदनुसारेणेश्वरानुमानस्य प्रमाणतायामेषामपि प्रामाण्यं स्यादिति शेषपूरणे व्याख्यातेऽपि प्रयोगप्रकार एवमभिमत इत्याह **अनुमानत्वमिति**।

स०— **नहि तदुत्पत्त्येति**। तन्तूनां पटोत्पादकत्वव्याप्तत्वेपि, कर्तृत्वस्य शरीरोत्पाद्यत्वाभावात् तद्व्याप्तत्वाभाव इति न वाच्यम्। यद्यदुत्पाद्यं तत्तद्व्याप्यमिति उत्पत्तिनिमित्तिका बौद्धानामेव व्याप्तिर्न तु भवतां, रूपरसादौ व्याप्त्यङ्गीकारादिति भावः॥

प०— **न हि तदुत्पत्त्या व्याप्तिरित्यादि**। तदभिन्नयोः कार्यकारणयोश्च व्याप्तिरिति बौद्धमतम्। तथा च यथा बौद्धानां हि कार्यकारणयोरेव व्याप्त्यङ्गीकारो न तथा भवतां तार्किकाणाम्। तथा च नित्यज्ञानेच्छाकृतिषु शरीरस्याजनकत्वेपि चैत्रादावन्यत्र व्याप्तिदर्शनेनेहापि व्याप्तिबलात्स्यादेव शरीरमित्यर्थः।

---

या०— **तदुत्पत्त्येति**। तत्तादात्म्यं वा तदुत्पन्नत्वं वा तद्व्याप्यत्वे निमित्तं, नान्यदिति बौद्धमतं, न भवतामतादृशस्यापि रसादे रूपादिव्याप्यत्वोपलम्भादित्यर्थः। ननु यदीश्वरानुमानं प्रमाणं स्यात्तदोक्तानुमानजातमपि प्रमाणं स्यादित्युक्तावतिप्रसङ्गरूपतर्के वैय्यधिकरण्यम्, आपाद्यापादकयोः प्रकारान्तरं च न मूले प्रतीयत इत्याशयेन पृच्छति **नन्वत्रेति**। यद्यपि यद्येनाविशिष्टं तत्तथेति व्याप्तौ सत्यां न वैय्यधिकरण्यं तथाऽपि तुष्यत्विति न्यायेन मूलाभिप्रेतं सामानाधिकरण्यं दर्शयति **अनुमानत्वं यदीति**।

श्री०— ईदृक् शब्दस्य तृतीया ईदृशेति॥ (**पूर्ववदिति**। कार्यत्वविप्रतिपन्नं प्रत्यन्यत्वस्यासिद्धत्वादित्युक्तरीत्येत्यर्थः।) ईदृश्येति भाष्ये छान्दसत्वाददोषः॥ **अनुपयुक्तमिति**। तथा च यः कर्ता स शरीरवानेवेति नेत्यर्थः॥ **न हि तदुत्पत्त्येति**। यदि कार्यकारणभावोपेतयोरेव धूमवह्न्योरिव व्याप्तिः स्यात्तदैव कर्तृत्वे शरीरं न जनकमिति तयोर्जन्यजनकभावाभावात्कर्तृत्वाङ्गीकारेऽपि शरीरेण किं, शरीरस्य कर्तृत्वाजनकत्वादिति वक्तुं शक्येत। न ह्येवम्। अतादृशयोरपि रूपरसयोरविनाभावदर्शनादेवं प्रकृतेऽपि शरीरकर्तृत्वयोर्जन्यजनकभावाभावेऽप्यविनाभावसद्भावात्कर्तृत्वाङ्गीकारे शरीरं प्राप्तमेवेत्याशयः।

सु० — ननु विचारशास्त्रमारभ्य जगत्कारणेऽनुमानानवकाशव्युत्पादनं व्याहतमित्याशङ्कां परिहरन्नुपसंहरति उपक्रमादीति ।

अनु० — उपक्रमादिलिङ्गेभ्यो नान्या स्यादनुमा ततः ॥ ३ ॥

आगमानुगृहीतानुमानोपलक्षणमेतत् । आगमानुग्रहे हि सर्वाण्येतान्यनुमानान्येव । पक्षधर्मतादीनामङ्गानामपौरुषेयतया स्वतः प्रमाणेन शास्त्रेण सिद्धेः । प्रतिपक्षादीनां च तद्विरोधेन बाधादिति सङ्क्षेपः । तदेवं जगत्कारणत्वस्य (णस्य) शास्त्रैकसमधिगम्यत्वान्नानुमानादिना लक्षणस्यातिव्याप्तिकथनं युक्तमिति सिद्धम् ॥ छ ॥

वा० — ननूपक्रमादीत्यादिशब्देन तात्पर्यज्ञापकत्वेन वाक्यार्थज्ञानोपयुक्तत्वेन च सजातीयानामुपसंहारादीनां श्रुत्यादीनां च ग्रहणेन तदन्येषामीश्वरानुमानादीनां न मानत्वमित्युपक्रमादीति वाक्येनोच्यत इति भाति; तथात्वे जगत्कारणेऽनुमानानवकाशव्युत्पादनव्याहतिशङ्काया न निरासः, न पृथक् चानुमेश्वर इत्यत्रत्यपृथगित्यस्य वैयर्थ्यं च, 'न तु दृष्टान्तभावात्' इत्येतत्सूत्रार्थतयेश्वरादिसाधककार्यत्वादिहेतूपन्यासानुपपत्तिश्च; इत्यत 'आगमानुगृहीता तु मानमेषाऽनुमाऽपि तु' इत्यनुव्याख्यानं मनसि निधाय विजातीयैतादृगनुमानोपलक्षणतयोपक्रमादिशब्दं व्याख्याति आगमेति ॥ ननूक्तरीत्याऽसिद्धिप्रतिपक्षादिप्रसक्तेः कथमागमानुग्रहमात्रेणानुमानत्वमित्यतः 'अक्षजागममूलस्य स्यादेवास्य प्रतिष्ठितिः' इत्यनुव्याख्यानं मनसि निधायागमोपकारं दर्शयति आगमेति । प्रथमादिपदेन व्याप्त्यादेः संग्रहः । द्वितीयादिपदेनोपाध्यादीनाम् ॥ ननु 'उपाधिप्रतिपक्षौ तु क्व नामातीव दुर्वचौ' इत्युक्तेः सर्वत्र प्रतिपक्षादेरवकाशान्नेदमर्धजरतीयं युक्तमित्याशङ्कानिरासः 'अन्यथाऽस्याप्रतिष्ठा च स्ववाचा व्याहतैव हि' इत्युत्तरवाक्योक्तव्याहत्या द्रष्टव्य इत्याह इति सङ्क्षेप इति ॥ छ ॥ छ ॥

प० — विचारशास्त्रम् । अनुमानरूपन्यायनिबन्धनशास्त्रम् ॥ कर्मनिर्णये युक्तिश्चेत्यादिग्रन्थे कर्तृत्वादौ कार्यत्वादीनां अनुमानानामङ्गीकारादाह आगमानुगृहीतेति ॥ संक्षेप इति । विस्तरस्तु तर्कताण्डवे ॥ छ ॥

श्री० — उपलक्षणमेतदिति । उपक्रमादिलिङ्गेभ्यः उपक्रमादिलिङ्गोपेतागमानुगृहीतेभ्योऽनुमानेभ्यः इत्यर्थो द्रष्टव्यः ।

( इति जगत्कारणे अनुमानानवकाशः इति व्युत्पादनम् ॥ )

( अथ अत्र परकीयभाष्यस्य अपव्याख्यानत्वम् । )

सु०—अत्र केचित् शास्त्रस्य योनिरिति व्याचक्ष(कुर्व)ते ॥ तदनुपपन्नम् प्रकृतानुपयोगात् । न हि शास्त्रकारणत्वं जगत्कारणत्वे हेतुः । व्याप्त्यदर्शनात् । पूर्वसूत्रे जगत्कारणत्वेन प्रतीतं सार्वज्ञं ब्रह्मणो वेदकारणत्वेन स्फुटीक्रियत इति चेन्न । वेदस्यापि सकलजगदन्तर्भावात् । कथं चानन्तपदार्थात्मकस्य प्रपञ्चस्य कर्तृत्वेन न स्फुटं तदेकदेशवेदकारणत्वेन स्फुटीभविष्यति सार्वज्ञम् । अथ जगत्कारणत्वं प्रधानादिव्युदासेन ब्रह्मण्येव साधयितुं हेतुत्वेनोक्तं सार्वज्ञं शास्त्रयोनित्वेन साध्यत इति चेन्न । असिद्धिप्रसङ्गात् । न हि ब्रह्मणो जगत्कारणत्वमनङ्गी कुर्वाणो वेदकारणत्वमङ्गीकरोति । आगमेन साध्यत इति चेत् । तर्हि जगत्कारणत्वमेव तेन किं न साध्यते । ईक्षत्यधिकरणादिना जन्मादिसूत्रस्य पुनरुक्तताप्रसङ्गाच्च ॥ जगत्कारणत्वेन सर्वज्ञत्वं न सिध्यति वेदाकर्तृत्वादित्याशङ्क्येदमुक्तमिति चेन्न । तथा सति प्रतिज्ञामात्रत्वप्रसङ्गात् । वियदादिविषयेप्येवमाशङ्काप्रसङ्गात् । वियदधिकरणादौ साऽपि निराकरिष्यत इति चेत् न । तर्हि तेनैवेदं गतार्थं स्यात् ।

किञ्च वेदकर्तृत्वाभावे(न) सार्वज्ञ्यं न संभवतीति शङ्कैव निर्दला । न हि तत्कर्त्रैव तज्ज्ञातव्यमिति नियमोऽस्ति । किञ्च वेदकर्तृत्वं कथं सार्वज्ञ्यसाधकम् । यो यावदर्थप्रतिपादकस्य वाक्यस्यप्रणेता स ततोऽप्यधिकमर्थं जानात्येव । यथा पाणिन्यादिः । अयं चाशेषार्थप्रतिपादकस्य शास्त्रस्य प्रणेताऽतः कथं न सर्वज्ञ इति चेत् न । किमिदं वेदप्रणेतृत्वं नाम । किं प्रमाणान्तरेणार्थमुपलभ्य स्वेच्छया (पदादिनि)बन्ध(न)कर्तृत्वं किं वोच्चारणमात्रम् । आद्ये पौरुषेयत्वापत्तिः । द्वितीये सार्वज्ञ्यासिद्धिः । उपाध्याय(ादि)वत् । रज्जौ भुजङ्गवद्ब्रह्मण्यारोपितो वेद इति चेत् । कथं तर्हि पाणिन्यादिदृष्टान्तः । न हि पाणिनावारोपितं व्याकरणम् । कथं चैवं सति सार्वज्ञ्यसिद्धिः । तस्यैव विज्ञानशक्तिविवर्तत्वाच्छास्त्रस्येति चेत्(न) । वियदादीनामपि प्रकाशशक्तिप्रसङ्गात् । अविद्यागतावरणादिशक्तेरपि ब्रह्मणि तात्त्विकत्वप्रसङ्गात्(च) । किञ्च वेदे ज्ञानकरणत्वशक्तिर्ब्रह्मणि च तत्कर्तृत्वशक्तिरिति किं केन सङ्गतम् । कुत्र चेदमुपलब्धमारोप्यगता शक्तिरारोपाधिष्ठाने वास्तवीति । तस्मादपव्याख्यानमेव तदित्युक्त एव सूत्रार्थः ॥ १-१-३ ॥

वा०— नन्वेतावता ग्रन्थेन कारणस्य प्रमाणान्तरागम्यत्वेन शास्त्रैकसमधिगम्यत्वव्युत्पादनं भाष्यकारीयं तदा युक्तं स्याद्यदि शास्त्रैकसमधिगम्यत्वं सूत्रार्थः स्यात् । न चैवम् । परोक्तरीत्या समासप्राबल्याच्च सूत्रस्यान्यार्थत्वादिति शिष्यहार्दशङ्कां परिहर्तुमर्थान्तरानुपपत्तिं दर्शयितुं तमनुवदति अत्र केचि-

**दिति** ॥ पूर्वसूत्रेण लक्षणेऽभिहिते लक्षणविशिष्टे प्रमाणस्यैवाकाङ्क्षितत्वेन वेदकारणत्वादेरनाकाङ्क्षितत्वादाकाङ्क्षादिवशादेव वाक्यार्थस्यावधेयत्वाद्योनिशब्दं प्रमाणवाचिनमङ्गीकृत्य बहुव्रीहिवशादसदुक्तार्थस्यैव प्रकृतोपयोगेऽपि, प्रकृतानुपयोगान्नायं वाक्यार्थ इत्याह **प्रकृतेति** ॥ ननु शास्त्रकारणत्वं पूर्वसूत्रोक्तजगत्कारणत्वे हेतुत्वेनानेनोच्यतेऽतो नानाकाङ्क्षिताभिधानमित्यत आह **प्रकृतेति** ।

हेतुत्वेनोपयोगाभावं दर्शयति **न हीति** ॥ हिशब्दार्थं प्रपञ्चयति **व्याप्तीति** । उपलक्षणं चैतत् । एकदेशकारणत्वेन समुदायकारणत्वानुमानेऽतिप्रसङ्गाच्चेत्यपि द्रष्टव्यम् । न च नायं निश्चयहेतुः किं त्वशक्यस्रष्टेर्वेदस्य स्रष्टुः सर्वजगत्स्रष्टृत्वं सम्भवतीति सम्भावनाहेतुरिति वाच्यम् । अधिकेनाल्पस्य सम्भावनेऽप्यल्पेनाधिकस्यासम्भावनादिति भावः ॥ श्रुतेर्जगत्कारणत्वे हेतुत्वेनासङ्गतावपि तदुक्त्यर्थलभ्यसार्वज्ञे हेतुत्वेनान्वयान्नासङ्गतिरित्याशङ्कते **पूर्वेति** ॥ जगदेकदेशवेदस्रष्टृत्वेन सार्वज्ञसिद्धावन्तर्भावितवेदस्य जगतः स्रष्टृत्वेन सुतरां सार्वज्ञं सिद्ध्यत्येवेत्यर्थादपि जन्मादिसूत्रेणैव सार्वज्ञस्य स्फुटं प्रतीतत्वेन पुनर्हेत्वाकाङ्क्षाया अभावेनासङ्गतिस्तदवस्थैवेत्याह **वेदस्यापीति** ॥ एवमपि पूर्वसूत्रोक्तजगत्कारणत्वेन स्फुटं सार्वज्ञाप्रतीतौ शास्त्रकारणत्वोक्त्याऽपि न तत्प्रतीतिरित्येतदुक्तिरयुक्तैवेत्याह **कथं चेति** । उपलक्षणं चैतत् । पूर्वसूत्रेऽर्थलब्धसर्वशक्त्यादित्यागेन सार्वज्ञस्यैव स्फोरणे निमित्ताभावाच्चेत्यपि द्रष्टव्यम् । न च 'अस्य महतो भूतस्य निःश्वसितं' इति श्रुत्या नामरूपात्मकस्य सर्वस्यापि प्रपञ्चस्य निःश्वसितवदप्रयत्नसाध्यब्रह्मकार्यत्वोक्तेस्तादृशश्रुत्युदाहरणेन सर्वशक्त्याद्यपि दृढीकृतमेवेति वाच्यम् । श्रुत्यन्तरस्यापि सूत्रसूचितत्वसम्भवेनास्या एव सूत्रोपात्तत्वे नियामकाभावात्सार्वज्ञे कण्ठत एव शास्त्रयोनित्वरूपसाधकमभिधाय तत्सूचितप्रमाणेनार्थतः सर्वशक्त्यादिसाधने निमित्ताभावाच्चेत्याशयात् ॥ ननु न पूर्वसूत्रेणार्थतो लब्धस्य सार्वज्ञस्य स्फुटीकरणार्थमिदं येनोक्तदोषः स्यात्किन्तु प्रधानादिव्युदासेन जगत्कारणत्वं ब्रह्मण्येव साधयितुं हेतुत्वेनोक्तं सार्वज्ञं शास्त्रयोनित्वेन साधयितुमिदम्, अतः सार्वज्ञस्यैव विशिष्य साधनमुपपन्नम्; इति शङ्कते **तथेति** ॥ आगमेन शास्त्रयोनित्वं तेन च सार्वज्ञ्यं प्रसाध्य तेनान्यव्युदासेन ब्रह्मणि जगत्कारणत्वसाधनाद्वरं श्रुत्यैवान्यव्युदासेन ब्रह्मण्येव जगत्कारणत्वसाधनमित्याह **तर्हीति** । ईक्षत्यधिकरणादीत्यादिपदेन चतुर्थपादोपादानम् ॥ ननु प्रधानादिव्युदासेन ब्रह्मण्येव जगत्कारणत्वसाधकतया सार्वज्ञ्यसिद्धेरावश्यकत्वाज्जगत्कारणत्वेन सार्वज्ञ्यं न सिद्ध्यति वेदाकर्तृत्वादिति शङ्कया च जगत्कारणत्वेन सार्वज्ञसिद्धेरसम्भवाद्वेदकारणत्वेन सार्वज्ञ्यसिद्ध्यर्थमिदमुच्यते । अयमेव जगत्कारणत्वेनास्फुटं सार्वज्ञ्यं स्फुटीक्रियत इत्यस्याभिप्राय इत्याशयेन शङ्कते **जगदिति** ॥ तर्हि नोक्तशङ्काया अनेन परिहारो वेदकारणत्वे हेतोरनुपन्यासादित्याह **तथा सतीति** । तर्हि 'यावद्विकारं तु विभागः' इत्यादिसूत्रोक्तैर्भिन्नत्वादिसाधारणहेतुभिर्ब्रह्मेतरसर्वानित्यताया वियदधिकरणादौ प्रतिपादनेन तेनैव तच्छ-

ङ्क निवृत्तेस्तदर्थत्वे तेनास्य गतार्थता स्यादित्याह **तर्हीति** । न चात एव हेतुमनुपन्यस्य प्रतिज्ञामात्रमुक्त-शङ्कानिरासमूचनाय कृतमिति वाच्यम्, वियदादिविषयेऽपि तथा प्रतिज्ञायाः कर्तव्यत्वात्स्वद्भाष्येऽस्य महत इत्यादिप्रमाणोपन्यासानुपपत्तेश्च । न च तर्ह्यत्र श्रुत्या शास्त्रयोनित्वसाधनं तत्र युक्त्येति न गतार्थतेति वाच्यम्, वियदादिकारणत्व इवैतत्कारणत्वेऽपि श्रुत्यादेस्तत्रैवोपन्यसनीयतया वैलक्षण्ये निमित्ताभावात् । अन्यथा वियदादिविषये श्रुत्युपन्यासायात्र यत्नः कर्तव्यः स्यादिति भावः ॥ एतेन 'अथवा वेदनित्यत्वाद्ब्रह्मणो विश्वयोनिता । नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यते' इति सार्वज्ञ्यप्रस-ङ्गमपहाय जगत्कारणत्वासम्भवशङ्कापरिहारकत्वेन सूत्रसार्थक्यप्रकारः कल्पतरूक्तो निरस्तो वेदितव्यः । प्रतिज्ञामात्रत्वप्रसङ्गस्य वियदादिवैलक्षण्याभावप्रयुक्तदोषस्य चापरिहारात् ॥ एवं च सार्वज्ञ्यसिद्ध्यर्थं शास्त्रयोनित्वेऽवश्यं वाच्ये एतच्छङ्कापरिहारोऽप्यनुषङ्गतः सिध्यतीत्येव कल्पतरुतात्पर्यं न तु सार्वज्ञ्यसि-द्ध्यर्थतामस्यापहायैतत्सूत्रस्यैतच्छङ्कानिरासकत्वमेवेत्यत्रेति केनचिदुक्तं निरस्तम् । अस्य सार्वज्ञ्यसिद्ध्यर्थताया निरस्तत्वान्निराकरिष्यमाणत्वाच्च प्रतिज्ञामात्रेण शङ्ककाया अपरिहारादानुषङ्गिकतासिद्धेरनुपपत्तेश्चेति प्रधानादिव्युदासेन ब्रह्मण्येव जगत्कारणत्वं साधयितुं हेतुत्वेनोक्तसार्वज्ञ्यं शास्त्रयोनित्वेन साध्यत इत्यभि-प्रायस्य वेदाकर्तृत्वाज्जगत्कारणत्वेन सर्वज्ञत्वं न सिध्यतीत्यभिप्रायस्य च सूत्रावतारिकावसरे विवरण-ग्रन्थात्स्पष्टप्रतिभासेऽपि चन्द्रिकायां तत्तदाशङ्कापरिहारौ तु पक्षान्तरनिरासेनार्थत एतदभिप्राये दूषण-लाभाभिप्रायेणेति द्रष्टव्यम् ।

सर्वपक्षसाधारणं दूषणमाह **किञ्च वेदकर्तृत्वमिति** । एतेन यद्भामतीविवरणयोर्जगत्कारणत्वेन सिद्धे सार्वज्ञ्ये शास्त्रयोनित्वं हेत्वन्तरमुच्यत इत्युक्तं तदपि निरस्तं भवति ॥ **यो यावदिति** । वेदः स्वविषयाधिकज्ञानवत्प्रणीतो वाक्यप्रमाणत्वात्पाणिन्यादिशास्त्रवदिति वा ब्रह्म वेदविषयादधिकविषयज्ञं तत्कर्तृत्वात्पाणिन्यादिवदिति वा प्रयोगप्रकारो द्रष्टव्यः । सर्वावभासकवेदकर्तृत्वेन पक्षधर्मताबलात्सार्वज्ञ्य-सिद्धिरित्याशयेन तदनुगुणतया व्याप्तिस्वरूपं प्रदर्श्य पक्षधर्मतास्वरूपमपि दर्शयति **अयं चेति** । यद्यपि सकलवेदकर्तृत्वहेतूकरणबलात्सकलवेदार्थविषयत्वमीश्वरज्ञानस्य सिध्यतीति तावतैव तस्य सार्वज्ञ्य-सिद्धेरधिकविषयत्वविशेषणं व्यर्थम् । अद्यतनपुरुषपाणिगतवराटकसङ्ख्यादिज्ञानस्य चाधिकविशेषणेनाप्य-सिद्धिरेव । इक्षुक्षीरगुडादिमाधुर्यादिविशेषाणां शब्दाबोध्यानुभवमात्रगोचराणां ज्ञानस्य सिद्ध्यर्थं तदुपादाने च तादृशाधिकविशेषविषयत्वेन साध्यस्योपपत्त्याऽर्थान्तरापत्तिस्तथाऽपि सकलवेदार्थाभिज्ञत्वमेव साध्यम् । सामान्यव्याप्तिबलात्स्वप्रयुक्तवाक्यार्थाभिज्ञत्वमात्रसिद्धावपि विशिष्य सकलवेदार्थाभिज्ञत्वसिद्धिः सकल वेदकर्तृत्वहेतुपक्षधर्मताबललभ्या । वेदार्थाधिकाऽद्यतनवृत्तान्ताद्यभिज्ञत्वसिद्धिस्तु स्वतः सर्ववेदार्थगोचर-मीश्वरज्ञानमन्यदपि गोचरयेदिति न्यायसाम्यात् । अधिकविषयत्वस्य साध्यानुप्रवेशनं तु, पाणिनीयादि-

दृष्टव्याप्तिबलादधिकविषयत्वमपि सेद्धुमर्हति, किमुत वेदार्थविषयत्वमिति कैमुतिकन्यायेन सिषाधयिषित-साध्यसिद्धिदाढर्यार्थमिति परस्याशयः । यद्यप्येकार्थमात्रज्ञेन प्रयुक्ते प्रतीयमानानेकार्थकवाक्ये स्वविषय-ज्ञानवत्प्रणीतत्वस्याप्यभावेन व्यभिचारस्तद्वदुपपत्त्या चार्थान्तरता, दुष्करकरणसमर्थस्यापि सुकरकरण-सामर्थ्याभावदर्शनेन वेदार्थाभिज्ञस्यापि पाणिगतवराटकाद्यज्ञानोपपत्त्या न्यायबलेनापि तज्ज्ञ.नालाभश्चेत्या-दिदूषणमपि वक्तुमुचितम् तथाऽपि यत्परेणैतदनुमानहेतौ विकल्पदूषणमाशङ्क्य समाधानमभिहितं तन्निरा-सेन तदेव तदचातुरीं प्रदर्शयितुमुद्भावयति **किमिदमिति ॥ रज्जाविति** । एवञ्च वेदारोपाधिष्ठानत्वं तत्प्रणेतृत्वमित्युक्तं भवति । तर्हि दृष्टान्ते साधनवैकल्यमित्याह **कथं तर्हीति** । कार्याध्यस्तयोरुभयोः-कारणाधिष्ठानाधीनत्वमात्रेण तदुक्तौ तूभयानुगताधीनताया निर्वक्तुमशक्यत्वाच्छब्दसाम्यमात्रेण दृष्टान्तता-याश्चातिप्रसञ्जकत्वेनायुक्तत्वादिति भावः । अप्रयोजकत्वं चाह **कथं चेति** । वियदादीनामित्यादि-पदेनाविद्यादिग्रहणम् । ननु कार्यगतत्वेन निश्चितशक्तेः कारणशक्तिं विनाऽनुपपत्तावपि कारणगतसर्व-शक्तेः कार्यगतत्वनियमानभ्युपगमात्कथमेतदित्यतः साऽप्यनुपपत्तिर्नास्तीत्याह **अविद्यादीति** । प्रकृते कार्यकारणयोरेकशक्तिकत्वमभ्युपगम्य तन्नियमाभावव्युत्पादनं कृतं वस्तुतस्तु तदेव नास्तीत्याह **किञ्चेति** । न च बोधकत्वमात्रमुभयानुगतमस्तीति वाच्यम् । एकत्र बोधकत्वं नाम तत्करणत्वमेव । अपरत्र तत्कर्तृत्वमेवेत्यर्थभेदे सति शब्दसाम्यमात्रस्याप्रयोजाकत्वादित्याशयः ॥ किञ्च प्रसिद्धोपादानोपादेययोरेक शक्तिमत्त्वस्य क्वचिद्दर्शनेऽपि त्वदभिमताधिष्ठानाध्यस्तयोस्त्वनयोर्न क्वचिदपि दृष्टमित्याह **कुत्र चेति ॥ तस्मादिति** । तथा च भाष्यकारीयः शास्त्रैकसमधिगम्यत्वसाधनायासो युक्त एवेति भावः ॥ १-१-३ ॥

स० — **तस्यैव विज्ञानशक्तीति** । अत एव शास्त्रमर्थप्रकाशकम् । तथा च रौप्यगता या शक्तिः सा सर्वाप्यधिष्ठानगतैव नान्येति शङ्कितुरभिप्रायः ।

प० — अद्वैतमतं प्रत्याचष्टे **अत्र केचिदिति ॥ वेदस्यापि सकलजगदन्तर्भावादिति** । तथा च पूर्वसूत्र एव वेदकारणत्वस्यापि प्राप्त्या पुनरिह तदुक्तौ पौनरुक्त्यं स्यादिति भावः ॥ दोषान्तरं चाह **कथं चेति । हेतुत्वेनोक्तमिति** । पूर्वसूत्रे जगत्कारणत्वेनोक्तमित्यर्थः । अथ जगत्कारणत्वं प्रधानादिव्युदासेनेत्याद्युक्तार्थे दोषमाह **ईक्षतीति** । तत्रापीक्षणरूपहेतुना प्रधानकारणत्वनिरासादिति भावः । आदिपदेनानुमानिकमप्येकेषामित्यस्य ग्रहणम् ॥ **इदमिति** । शास्त्रयोनित्वादित्येतदित्यर्थः ॥ **प्रतिज्ञामात्रत्वेति** । शास्त्रयोनित्वे प्रमाणस्य सूत्रेऽनुपन्यासादिति भावः ।

**इतिनियमोऽस्तीति** । घटाद्यकर्तुरपि घटादिज्ञानदर्शनादिति भावः ॥ शङ्कते **तस्यैवेति** । ब्रह्मणो या विज्ञानशक्तिः तयैव ब्रह्म शास्त्रत्वेन भ्रमविषयत्वमापद्यत इति शास्त्रस्य ब्रह्मविज्ञानशक्ति-

विवर्तत्वं । अत आरोप्ये वेदे विज्ञानजनकत्वादधिष्ठानेपि ब्रह्मणि विज्ञानशक्तिः सत्यभूतोपेयेति सार्वज्ञ्यसिद्धिरिति भावः ॥ **वियदादेरपि शास्त्रस्येव विज्ञानशक्तिविवर्तत्वस्य** वाच्यत्वाच्छास्त्रस्येव तस्याप्यर्थज्ञानजनकत्वं स्यादित्याह **वियदादीनामपीति** ॥ आरोप्यगता शक्तिरधिष्ठानेऽवश्यमङ्गीकार्येत्यत्र दोषान्तरमाह **अविद्यादीति** ॥ **तत्कर्तृत्वेति** । ज्ञानकर्तृत्वेत्यर्थः । आरोपितवेदस्य ज्ञानजननशक्तित्वेप्यधिष्ठाने विज्ञानशक्तिसिद्धिर्नास्ति । येन सार्वज्ञसिद्धिः स्यादिति भावेनाह **कुत्र चेदमिति** ॥ १ । १ । ३ ॥

**या०** — सूत्रवाक्यादापाततः प्रतीयमानं हेतुत्वं दूषयति **न हीति** **व्याप्त्यदर्शनादिति** । वेदादिप्रणेतुरन्यस्याभावेन दृष्टान्ताभावादिति भावः ॥ भाष्योक्तां सङ्गतिमाशङ्कते **पूर्वसूत्र इति** । विवरणोक्तां सङ्गतिमाशङ्कते **अथेति** ॥ **हेतुत्वेनोक्तमिति** । **पूर्वसूत्र इति शेषः** । ईक्षत्यधिकरणादिनेत्यत्रादिपदेनानुमानिकमप्येकेषामिति चेदित्यादीनां ग्रहणम् । विवरणोक्तमेव सङ्गत्यन्तरं शङ्कते **जगत्कारणत्वेनेति** ॥ **तेनैवेदमिति** । 'प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः' इत्यादिसूत्रार्थतया त्वदुक्तन्यायसाम्यादिति भावः ॥ ॥ मीमांसकमतानुसारेणोदाहरणादित्वेन तद्भाष्याभिप्रेतमनुमानमनुवदति **यो यावदर्थेति** । इदमिहानुमानं । ब्रह्म, वेदविषयादधिकविषयज्ञं, तत्कर्तृत्वादिति । ननु सकलवेदकर्तृत्वरूपहेतुबलात्सकलवेदार्थविषयत्वमीश्वरज्ञानस्य सिध्यतीति तावतैव तस्य सार्वज्ञ्यसिद्धेरधिकविषयत्वं विशेषणान्तरं किमर्थम् । न च तावता तस्य सार्वज्ञं न सिध्यति । अवेदप्रतिपादिताद्यतनवृत्तान्ताद्यभिज्ञत्वस्य तेनासिद्धेरिति वाच्यम् । अधिकविषयत्वविशेषणेनापि तदसिद्धेरिति चेत् । उच्यते । सकलवेदार्थाभिज्ञत्वमेवेह साध्यम् । पक्षधर्मताबलात्सार्वज्ञसिद्ध्युक्तिरिति तन्मताभिप्रायः । वेदार्थाधिकाद्यतनवृत्तान्ताद्यभिज्ञतासिद्धिस्तु स्वतः सर्ववेदार्थगोचरमीश्वरज्ञानमन्यदपि सर्वं गोचरयेदिति न्यायसाम्यात् । अधिकविषयत्वस्य साध्यानुप्रवेशनं तु पाणिनीयादिदृष्टव्याप्तिबलादधिकविषयत्वमपि सेद्धुमर्हति किमुत वेदार्थविषयत्वमिति कैमुत्यादिन्यायेन सिषाधयिषितसाध्यदार्ढ्यार्थमनुमानप्रवृत्त्यनन्तरभाविन्यायलभ्यार्थानुवादरूपं चेति ज्ञातव्यम् ॥ सार्वज्ञसिद्धिमाशङ्कते **तस्यैव विज्ञानशक्तीति** । अयं भावः । अस्ति तावत्कार्ये शास्त्रे प्रकाशनसामर्थ्यम् । तच्चोपादानकारणधर्म एव । प्रदीपगतप्रकाशनसामर्थ्यस्य वह्निधर्मतादर्शनात् । कार्योपादानयोः शक्तिद्वयकल्पनाऽयोगात् । एवं च सर्वार्थप्रकाशनसमर्थत्वात्सर्वज्ञं ब्रह्मेति । कारणगतैव शक्तिः कार्य इति नियमस्यान्वयव्यभिचारमाह **वियदादीनामिति** ॥ व्यतिरेकव्यभिचारमाह **अविद्या(दि)गतेति** ॥ वह्निदीपादावेकशक्तिकत्वसम्भवेऽपि न प्रकृते तत्संभव इत्याह **किञ्च वेद इति** ॥ **कुत्र चेदमिति** । वह्निश्च न दीपारोपाधिष्ठानभूतः । अतस्तदुदाहरणं प्रकृतासङ्गतमेवेति ॥ ॥ १-१-३ ॥ छ ॥

**श्री०**— ननु कथं निर्दलत्वं यो यत्कर्ता तेनैव तस्य ज्ञातत्वाद्ब्रह्मणश्च वेदाकर्तृत्वे वेदज्ञानं न स्यादित्यत आह **न हीति** । तथात्वे कुलालकृतघटस्य कुविन्दादिनाऽज्ञेयत्वप्रसङ्गादित्याशयः । एवं चान्यकृतस्यापि वेदस्य ज्ञानमीश्वरस्य संभवतीति ध्येयम् । अधिष्ठानगता शक्तिरारोप्ये भवतीत्यस्य व्यभिचारेणासंभवेऽप्यारोप्ये शक्तिर्या प्रतीयते सा शक्तिः सर्वाप्यधिष्ठानगतेति नियमस्य व्यभिचाराभावादित्यत आह **अविद्येति** । अविद्यायाश्चैतन्ये आरोपितत्वादिति भावः ॥ **ब्रह्मणीति** । ब्रह्मचैतन्यस्य प्रकाशकत्वेन तत्रावरणशक्त्यभावादिति भावः ॥ अस्तु वाऽधिष्ठानगता शक्तिरारोप्ये । आरोप्यगता शक्तिरधिष्ठाने प्रतीयत इति नियमः; तथाऽपि न ब्रह्मणः सार्वज्ञं सिद्ध्यतीत्याह **किञ्चेति** । न ह्यधिष्ठानगता ज्ञानकर्तृत्वशक्तिरारोप्ये वेदेऽस्ति । न वाऽऽरोप्यवेदगता ज्ञानाकरणत्वशक्तिरधिष्ठानेऽस्तीति ब्रह्मगतविज्ञानकर्तृत्वशक्तिविवर्तत्वस्य वेदेऽभावान्न तेन सार्वज्ञसिद्धिरिति भावः ॥ **कुत्र चेति** । भुजङ्गगतभयजनकत्वशक्ते रज्जावभावादिति भावः ॥ छ ॥ १-१-३ ॥ छ ॥

**च०**— अद्वैतवादिव्याख्याप्रत्याचिख्यासया तामनुवदति **अत्र केचिदिति** । तदीयभाष्यभाषितां सङ्गतिमाशङ्कते **पूर्वसूत्र इति** । वैवरणिकीं सङ्गतिं शङ्कते **अथेति** । अत्रेत्थमनुमिमानानामाशयः । पाणिन्यादौ निखिलपाणिनीयादिकर्तृत्वान्निखिलपाणिनीयप्रतिपाद्यार्थज्ञानवत्ता यथा तद्वद्ब्रह्मण्यपि निखिलवेदकर्तृत्वरूपहेतोः पक्षवृत्तित्वबलान्निखिलवेदप्रतिपाद्यार्थज्ञानवत्ता निखिलवेदजनितान्वयधीनिरूपितविषयतात्वावच्छिन्नव्यापकस्वनिरूपितविषयतात्वावच्छिन्नकज्ञानवत्तारूपा सिध्यतीति । स्वनिरूपितविषयतात्वावच्छिन्ने तादृशान्वयधीनिरूपितविषयतात्वावच्छिन्नाभावसमानाधिकरणत्वनिवेशफलकस्याधिकविषयकत्वविशेषणस्योपादानं मन्दप्रयोजनमेव । न च सार्वज्ञसिद्धिफलकं तद्विशेषणोपादानमिति वाच्यम् । तादृशवेदजनितान्वयबोधाविषयीभूतानामद्यतनपुरुषपाणिगतवराटकसङ्ख्यादीनां शब्दाबोध्यानुभवगोचरेक्षुक्षीरादिमाधुर्यादिविशेषाणां तादृशाद्यतनवृत्तान्तादीनां च ज्ञानस्य तद्विशेषणोपादानेनाप्यसिध्या सार्वज्ञसिद्धिफलकत्वस्य दुरुपपादत्वात् । दुष्करकण्टकाद्यदनकर्तर्यपि सुकररम्भाफलादनकर्तृत्वाभावदर्शनेन दुष्करातीन्द्रियार्थविषयीकरणचणमीश्वरज्ञानं सुकराद्यतनपुरुषपाणिगतवराटकसङ्ख्यादिविषयीकरणे कथं नेष्ट इत्युक्तिरप्यसमञ्जसैव । यथाश्रुते साध्यशरीरे तादृशविशेषणनिवेशनं तु पाणिन्यादौ दृष्टव्याप्तिबलादधिकविषयत्वमपि सेद्धुमर्हति किमुत वेदार्थविषयत्वमिति कैमुत्येन सिषाधयिषितसाध्यसिद्धिदार्ढ्यार्थमिति स्थितमिति । भङ्ग्यन्तरेण सार्वज्ञसिद्धिमाशङ्कते । **तस्यैव विज्ञानशक्तीति** । तदाश्रितविज्ञानशक्तिजन्यत्वादित्यर्थः । ब्रह्मणः कार्यभूते शास्त्रे वर्तमाना निखिलार्थप्रकाशनशक्तिस्तदुपदानभूतब्रह्मगततादृशशक्तिनियन्त्रितैव । प्रदीपगतप्रकाशनशक्तेस्तदुपादानवह्निधर्मतादर्शनेन कार्योपादानयोरेकशक्तिमत्त्वानियमादित्थं च वेदसर्वार्थप्रकाशनशक्त्यनुरोधेन तादृशशक्तिमद्ब्रह्मेति तस्य सार्वज्ञम-

सैत्सीदेवेति भावः। अभिहितनियमस्यान्वयव्यभिचारमाह **वियदादीनामिति**। व्यतिरेकव्यभिचार-माह **अविद्यादिगतेति**। वह्निदीपयोरेकशक्तिमत्तायां प्रकृते ब्रह्मवेदयोरेकशक्तिमत्त्वैव दुरुपपादेत्याह **किञ्चेति**। वन्हेर्दीपारोपाधिष्ठानत्वायोगेन तदुदाहरणमपि प्रकृतासङ्गतमित्याह **कुत्र चेदमिति**। अपव्याख्याप्रतिविहितिं निगमयति **तस्मादिति**॥

# इति शास्त्रयोनित्वाधिकरणम्

१-१-३.

सु० — ॐ तत्तु समन्वयात् ॐ ॥ **अस्तु शास्त्रैकसमधिगम्यं जगत्कारणम् । तथाऽपि शास्त्रत एवान्येषां हरहिरण्यगर्भादीनां प्रधानादीनां च जगत्कारणत्वप्रतीतेरतिव्यापकमिदं लक्षणम् । न च तच्छास्त्रं विष्णुपरमिति वाच्यम् । अभियुक्तैः शिवादिपरत्वेन व्याख्यातत्वात् । यद्यपि नामानि सर्वाणीत्यादिश्रुत्या शिवादिनाम्नां विष्णौ शक्तिमात्रमवसीयते । तथाऽपि न तात्पर्ये प्रमाणमस्ति । यत्परः शब्दः स शब्दार्थ इति हि न्यायः । न च शक्तिमात्रेण तात्पर्यं कल्पयितुं युक्तम् । अतिप्रसङ्गात् । अन्यत्र तात्पर्य(स्य च )ज्ञापकमभियुक्तव्याख्यानमस्तीत्युक्तम् । तस्मादलक्षणमेतदित्याशङ्क्य परिहृतं सूत्रकृता** तत्तु समन्वयादिति ।

## ब्र .सू.- ॥ ॐ तत्तु समन्वयात् ॐ ॥

वा० — ॥ ॐ **तत्तु समन्वयात्** ॐ ॥ शास्त्रयोनित्वेन कारणत्वस्य नातिव्याप्तिरिति पूर्वाधिकरणफलस्य शास्त्रयोनित्वेऽपि कारणत्वस्यातिव्याप्तिरेवेत्याक्षेपादाक्षेपिकीं पूर्वाधिकरणेनास्य सङ्गतिं सूचयन्नेव न च पाशुपतशास्त्रोदितत्वादिशास्त्रप्रतिपाद्यत्वे कारणमिति न्यायविवरणं मनसि निधाय स्पष्टत्वादत्रानुक्तं पूर्वपक्षमारचयति **अस्त्विति** । अत्र प्रथमादिपदेन तत्तद्वाद्यभिमतानां चेतनानां द्वितीयेन चाचेतनानां ग्रहणम् ॥ यद्यपि न्यायविवरणे प्रतीतेरादिपदेनोपादानाद्व्याख्यानेऽविश्वासशङ्कानिरासाय प्रतीत्यनुसरणेन प्रतीतिसध्रीचीनश्रुत्युक्तटीकायां पूर्वपक्षो दर्शितः, तथाऽपि तत्रत्यादिपदस्वारस्याय व्याख्यानप्रतीतिभ्यां निरपेक्षाभ्यामपि पूर्वपक्षो दर्शयितुं शक्य इत्याशयेन प्रतीतिमननुसृत्य तच्छास्त्रोदितत्वादिति वक्तव्ये पाशुपतादिशब्दप्रयोगेण लब्धमभियुक्तत्वमविश्वासशङ्कानिरासकत्वेन योजयन्नेव तदुक्तं हेतुं विष्णुपरत्वे बाधकतया योजयति **अभियुक्तैरिति** । 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिशास्त्रं शिवस्य मोक्षदत्वादिपरमिति तदागमेषूक्तत्वाद्व्याख्येयस्य व्याख्यानानुसारितायाश्च सुप्रसिद्धत्वादिति भावः ॥ जन्माधिकरणे 'यं नामानि विशन्त्यद्धा' इत्यादिना भाष्योक्तमेतच्छङ्कापरिहारमन्यथासिद्धं कर्तुं शङ्कते **यद्यपीति** । आदिपदेन 'यो देवानां नामधा' इत्यस्य ग्रहणम् ॥ **तथापीति** । न तावत् 'सर्वे वेदा यत्पदमामनन्ति'इत्यादिश्रुतिस्तत्र मानम् । तस्याः शिवे वेदतात्पर्यमित्येवंपरतया तदागमे व्याख्यातत्वात् । नापि 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादीतिहासो वा पञ्चरात्राद्यागमो वा तत्र मानम् तथाऽपि प्रतिपक्षापत्त्या विष्णावेव तात्पर्यमित्यवधारणासिद्धेः । नाप्युपक्रमादिस्तत्र मानम् । 'श्रद्धजुव्हती'त्युपक्रमस्य इति तु पञ्चम्यामाहुतावाप' इत्युपसंहारस्य च 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति जीवप्रापकोपसंहारस्य ब्रह्मशब्दाभ्यासस्य च 'जीवाद्भवन्ति भूतानि'इति जीवशब्दाभ्यासस्य ब्रह्मपरत्वेऽपूर्वतायाश्च 'असतः सदजायत' इत्यसतः सदुत्पत्त्यावपूर्वताया ब्रह्मानुत्पत्तौ फलस्य च कर्मसु

पश्वादिफलस्य 'कर्मणा ज्ञानमातनोति, ज्ञानेनामृतीभवति' इत्याद्यर्थवादस्य च तत्त्वमसीत्यादावभेदपरत्वेऽर्थवादस्य भेदे उपपत्तेश्च सत्त्वात्तेषां च परस्परविरुद्धत्वेनोभयानुसारेण तात्पर्यनिश्चयस्याशक्यत्वादेकप्रहाणेनापरेण तन्निश्चये च तत्र तत्र तस्य तस्य तात्पर्यव्यभिचारेण नैकस्यापि तात्पर्यनिश्चायकत्वम् । न चैकेनापरबाधनिश्चयः । बाध्यबाधकभावप्रयोजकप्राबल्यदौर्बल्ययोर्नियामकाभावेन निश्चेतुमशक्यत्वात् । तथा च तात्पर्ये न किमपि प्रमाणमिति भावः ॥ ननु माऽस्तु तात्पर्यं तथाऽपि शक्तिविषयत्वमात्रेण शब्दार्थत्वसिद्धिरित्यत आह **यत्पर इति** ॥ ननु माऽस्तु प्रमाणान्तरं शक्तिरेव तत्र मानं भविष्यतीत्याशङ्क्य निषेधति **न चेति** ॥ **अतिप्रसङ्गादिति** । गङ्गायां घोष इत्यस्य प्रवाहे तात्पर्यापत्तेरित्यर्थः ॥ प्रतिपक्षस्योभयत्र तात्पर्ये प्रमाणाभावमात्रेणोपपत्तावपि स्वपक्षेऽभ्युच्चयेनाधिक्यमुपपादयति **अन्यत्रेति** ॥ **तस्मादिति** । उपलक्षणं चैतत् । शास्त्राद्रुद्रादीनां कारणत्वप्रतीतेरबाधितप्रतीत्या तात्पर्यस्यापि निश्चेतुं शक्यत्वाच्छास्त्रातिरिक्तस्य च साधकत्ववद्बाधकत्वस्याप्यभावाद्विष्णोर्जगत्कारणत्वसाधकस्य रुद्रादेः कारणत्वनिषेधकशास्त्रस्य च वैपरीत्यस्यापि संभवेन शङ्कितुमशक्यत्वेन बाधकाभावादतिव्याप्तिरिति पूर्वपक्षोऽप्यत्राभिमतः । अत एव व्याख्यानसमकक्षतया प्रतीतिं वक्ष्यतीति बोध्यम् ।

प०— ॐ **तत्तु समन्वयात्** ॐ ॥ मूले सूत्रार्थस्यैव भाषणेन सूत्रस्य गमनिकानुक्तेः पूर्वाधिकरणफलाक्षेपपूर्वं पूर्वपक्षं वदन्सूत्रं स्वयमवतारयति **अस्त्वित्यादिना** ॥ **हरेति** । 'एक एव रुद्रो न द्वितीयोऽवतस्थे (एको रुद्रो न द्वितीयाय तस्थे,' 'हिरण्यगर्भः समवर्तताग्रे' 'प्रधानादिदम्' 'आविरासीत्' 'जीवाद्भवन्ति भूतानि' इत्यादिशास्त्रतो हरादेः प्रतीयत इत्यर्थः ॥ ननु न प्रतीतिमात्रादर्थसिद्धिः, तथात्वे यजमानः प्रस्तर इत्यादौ ऐक्याद्यर्थसिद्धिप्रसङ्गात्; किन्तु वाक्यतात्पर्यविषयत्वादेव; तथा च कथमेतत्; इति भावेनाशङ्क्याह **न चेति** । अभियुक्तैः पशुपत्यादिभिः संप्रतिपन्नैरित्यर्थः ॥ **न तात्पर्ये प्रमाणमस्तीति** । उपक्रमादिकं हि प्रमाणतया वक्तव्यम् । तत्तु न तात्पर्यनिर्णायकम् । अन्योन्यं बलाबलनिर्णयासंभवादिति भावः ॥ **अतिप्रसङ्गादिति** । गङ्गायां घोष इत्यादावपि प्रवाहादौ तात्पर्यकल्पनाप्रसङ्गादित्यर्थः ॥ कथं तर्हि रुद्रादिकारणत्वेऽपि तात्पर्यमित्यत आह **अन्यत्रेति** । व्याख्यानं पाशुपताद्यागमरूपम् । ननु 'नारायणो वा इदमग्र आसीदि'त्यादौ विष्णोरपि कारणत्वं प्रतीयते । न च तच्छिवादिपरम् । अभियुक्तविष्ण्वादिकृतपञ्चरात्रादिना विष्णुपरत्वेन व्याख्यानात् । विष्णोरपि कारणत्वं सिद्धमिति चेत् । अस्त्वेवं कालादिभेदेन द्वयोरपि कारणत्वोपपत्तेरित्येतावान् ग्रन्थोऽत्र तस्मादित्यतः प्राक् योज्यः । तेनातिव्यापकमिदं लक्षणमिति प्राचीनो ग्रन्थस्साधुः । सौत्रोऽवधारणार्थस्तुशब्दश्च समञ्जसो भवतीति ध्येयम् ।

या०— ॥ ॐ तत्तु समन्वयात् ॐ ॥ **तथाऽपि न तात्पर्य इति** । ननु शक्त्यतिरिक्तं किं तात्पर्यम् । तात्पर्यवृत्तेरतिरिक्ताया अन्यत्र निराकृतत्वादिति चेत् । सत्यमेवम् । तथाऽपि तयोरस्ति भेदः । पदस्य सामान्यत इतरान्विते या वृत्तिः सा शक्तिः । एतस्या एव पदान्तरादिसमभिव्याहारेण विशेषान्वयप्रमाजनकत्वे पर्यवसानं वा तदाहितशक्त्यन्तरं वा तात्पर्यमिति । तथा च तत्प्रमितिजनकत्वमेव तात्पर्यशब्दार्थ इत्यवगन्तव्यम् ॥

श्री०— ॐ तत्तु समन्वयात् ॐ ॥ **अतिप्रसङ्गादिति** । भोजनसमये सैन्धवमानयेति पदस्याश्वे शक्तेः सत्वेऽपि तत्र न तात्पर्यमपि तु लवणे इत्यस्ति तदपि न स्यादित्यर्थः ।

च०— ॐ तत्तु समन्वयात् ॐ ॥ जगज्जन्मादिहेतुत्वस्य शास्त्रजन्यप्रमितिविषयत्वरूपशास्त्रयोनित्वेन तदुपरक्ततादृशप्रमितिविषयतानापन्ने शिवादौ लक्षणस्य नातिप्रसङ्ग इति पूर्वनयफलस्य शिवादीनामपि तद्धेतुत्वोपरक्ततादृशप्रमितिविषयतापन्नतया तत्र तस्यातिप्रसङ्गः स्यादेवेत्याशङ्कनात्पूर्वनयनिरूपितैतन्नयवृत्तिराक्षेपिकी सङ्गतिरिति ध्वनयन्नेव न च पाशुपतशास्त्रोदितत्वादिशास्त्रप्रतिपाद्यत्वे कारणमिति न्यायविवृतिमनुसन्दधानः स्फुटत्वनियन्त्रितभाष्यकृदनभिहितताकपूर्ववादिमतमप्रौढमनीषविनेयानुजिघृक्षया विशदयति **अस्त्विति । शास्त्रत एवेति** । **'एको रुद्रो न द्वितीयाय तस्थे'** 'हिरण्यगर्भः समवर्तताग्रे' 'जीवाद्भवन्ति भूतानि' 'प्रधानादिदमाविरासीत्' इत्यादित इत्यर्थः । अत्र प्रथमतद्गुणसंविधानघटकादिपदेन तत्तद्धर्मोपरागेण तद्वाच्यभिमतचेतनानां द्वितीयेन तादृशेन तेन तादृशाचेतनानां परिग्रहः । **तथापि न तात्पर्य इति** । अत्र शक्त्यतिरिक्तात्पर्यवृत्तेस्तर्कताण्डवादौ प्रत्याख्याततया कथमेतदिति शङ्कमानाः 'सत्यमेवं, तथापि तयोरस्ति भेदः; पदस्य सामान्यत इतरान्विते स्वार्थे या वृत्तिः सा शक्तिः, तस्या एव पदान्तरादिसमभिव्याहारेण विशेषान्वयप्रमाजनकत्वे पर्यवसानं तदाहितशक्त्यन्तरं वा तात्पर्यमिति । तथा च तत्प्रमितिजनकत्वमेव तात्पर्यशब्दार्थ इत्यवगन्तव्यम्'इति व्याकर्तारः समादधति । यत्परः यत्तात्पर्यकः । **अतिप्रसङ्गादिति** । लक्षकपदानां लक्ष्यार्थेऽपि तात्पर्यप्रसङ्गादित्यर्थः । स्वपक्षे आधिक्यं तद्बाधनौपयिकमुपपादयति । **अन्यत्रेति** । शिवादावित्यर्थः । पूर्ववादिमतं निगमयति । अत्र चानुपपदं प्रतीति व्याख्यानयोरिति प्रतीतेर्व्याख्यानतुल्यकक्ष्यापन्नतया निर्देशेन शास्त्रोत्पादितशिवादि धर्मिकजगज्जन्मादिहेतुत्वोपरक्ताबाधितप्रतीत्या तत्र तात्पर्यस्याप्यवधृत्या शास्त्रान्यस्य साधकत्वबाधकत्वौदासीन्याद्विष्णोस्तद्धेतुत्वसाधकस्य शिवादेस्तत्प्रतिविधायकस्य च वैपरीत्यस्यापि सुशङ्कतयाबाधकाभावादतिप्रसङ्ग इत्यपि पूर्ववादिमतावतारोऽवसेयः ।

**सु० — तत्रान्वयपदार्थमाह** त एवेति ।

**अनु० —** त एवान्वयनामानः

**उपक्रमादय एवान्वीयन्ते शक्तितात्पर्यगोचरेण संबध्यन्ते तथा ज्ञायन्त इति यावत् वाक्यान्येतैः इत्यन्वयनामानः । अत्रोपक्रमादिप्रसिद्धपदं परित्यज्य यौगिकान्वयपदपरिग्रहणेने-(हेणे)दं सूचयति । न शास्त्रतात्पर्यावगतावापातप्रतीतिर्व्याख्यातृवचनं वा लिङ्गम् । किन्तूप-क्रमादय एव । तेषामव्यभिचारित्वात् । प्रतीतिव्याख्यानयोस्तु व्यभिचारित्वात् । यत्रापि प्रतीव्याख्याने न व्यभिचरतस्तत्राप्युपक्रमाद्यनुसन्धानपूर्वकत्वेनैव न तु स्वतः । अत उपजीव्य-त्वादुपक्रमादीनामेव तात्पर्यलिङ्गत्वमिति । तदिदमाह** त एवेति ।

**वा० —** उपक्रमादिलिङ्गेभ्य इति पूर्ववाक्ये लिङ्गशब्दोपसर्जनस्यापि बुद्ध्या विवेकेनोपक्रमादे-रेवात्र तच्छब्देन परामर्शोऽतः पुल्लिङ्गोपपत्तिरित्याशयेनाह **उपक्रमादय एवेति** ॥ नामग्रहणोत्थरूढि-मात्राभिप्रायभ्रान्तिं निवारयति **अन्वीयन्त इति** ॥ तथा चोपक्रमादीनां तात्पर्यज्ञानकारणत्वोक्त्या पूर्व-पक्षनिरासः सिद्धो भवतीत्याह **अत्रेति** ॥ ननु यादृशतादृशप्रतीतिव्याख्यानयोस्तात्पर्यव्यभिचारेऽपि नाबाधितप्रतीतिमानान्तराविरुद्धव्याख्यानयोस्तद्व्यभिचारः अन्यथा यादृशतादृशोपक्रमादेरपि तद्व्यभिचारा-त्तेषामपि तात्पर्यज्ञानकरणत्वाभावापत्तेः; तथा च प्रतीत्याद्यवज्ञानेनोपक्रमादीनामेवान्वयपदेन तात्पर्य-ज्ञानकारणत्वोक्तिरनुपपन्ना; इत्याशङ्कायाः 'त एव' इत्यवधारणेन सूचितं परिहारं दर्शयति **यत्रापीति** ।

**प० —** रूढेरभावाद्योगमाह **अन्वीयन्त इति** । अनुपूर्वादिण्गतावित्यतः करणे 'एरच्' इत्यच्प्रत्यये सत्यन्वय इति रूपनिष्पत्तिरिति भावः ॥ उपक्रमादीनामविद्यमानसंबन्धकारक(ण)त्वा-भावादाह **तथा ज्ञायन्त इति** । संबद्धतया ज्ञायन्त इत्यर्थः ॥ **अत्रेति** । सूत्रे ॥ **सूचयतीति** । सूत्रकार इति शेषः ॥ **व्याख्यातृवचनं वेति** । वेदगतोपक्रमाद्यननुगुणं यत्पशुपत्यादिरूपव्याख्यातॄणां पाशुपतादिग्रन्थरूपवचनं तदित्यर्थः । वाशब्दद्वयमन्योन्यनिरपेक्षं सत्प्रत्येकमेव पूर्वपक्षप्रापकं न टीका-यामिव मिलितमिति सूचयति **अव्यभिचारित्वादिति** । तात्पर्याव्यभिचारित्वादित्यर्थः ॥ ननु प्रतीतिव्याख्यानयोस्तात्पर्यव्यभिचारित्वोक्तिरयुक्ताप्रतीतेः पञ्चरात्रादिव्याख्यानस्य च विष्णुकारणत्वे वेदस्य यत्तात्पर्यं तदव्यभिचारित्वदर्शनादित्यत आह **यत्रापीति** ।

**या० — तेषामव्यभिचारित्वादिति** । अन्वयपदेनोक्तयोगेनाव्यभिचरितसम्बन्धस्य सूचनादिति भावः ॥

**श्री० —** गोचरेण अर्थेन ॥ **तथेति** । शक्तितात्पर्यविषयार्थसम्बद्धत्वेन । तत्प्रतिपादकत्वेने-त्यर्थः ।

च० — इत उत्तरम् । 'भावे 'अकर्तरि च कारके' इत्येतत् 'कृत्यल्युटो बहुलमि'ति यावत् द्वयमप्यनुवर्तत इत्युक्त्या 'एरजि'त्यत्र तदनुवर्तनादनुपसृष्टस्येणः करणसाधनाच्प्रत्ययमभिप्रेत्य व्याचष्टे **एतैरित्यन्वयनामान** इति । शक्तितात्पर्यगोचरेण शक्तितात्पर्यविषयत्वेन । **तेषामव्यभिचारित्वादिति** । अन्वयपदेनावयववृत्त्याऽव्यभिचरितसंबन्धस्य ध्वनितत्वादिति भावः ।

**सु०** — **सूत्रवाक्यं योजयति** तैरिति ।

**अनु०** — तैः सम्यक् प्रविचारिते ।

मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य नापरः ॥ १-१-४ ॥

**अनेनान्वयादित्येकवचनं समुदायार्थमित्युक्तं भवति । तेन च तेषामविरोधं सूचयति । संशब्दार्थः सम्यगिति । तस्य च प्रविचारित इत्यध्याहृतक्रियया संबन्धो दर्शितः । ननु च प्रतीतिव्याख्यानवदुपक्रमादीनामपि क्वचित्तात्पर्यव्यभिचारदर्शनात्कथं लिङ्गत्वमित्याशङ्कानिरासाय सम्यक् प्रविचारित इत्युक्तम् । उपक्रमादीनां श्रुत्यादीनां च सन्निकर्षविप्रकर्षाभ्यां सावकाशत्वादिना च बलाबलविनिश्चयपुरस्सरं विरोधे बलवता दुर्बलबाधया वाक्यार्थविमर्शः सम्यक् प्रविचारणम् । तेन नोपक्रमादिमात्रं लिङ्गमुच्यते । येन व्यभिचारोद्भावनं मङ्गच्छेत । किन्तु सम्यक् प्रविचारलक्षणावान्तरव्यापारोपेता एवोपक्रमादयः । न च ते क्वचिद्व्यभिचरन्तीत्युक्तं भवति । प्रविचारित इति भावे क्तः । प्रविचारे कृते सतीति । शास्त्रे प्रविचारिते सतीति वा । एतदवगम्यत इति वाक्यशेषः । मुख्यार्थ इत्यावृत्त्या संशब्दस्यार्थान्तरम् । सर्वेत्यपि संशब्दार्थ एव । शास्त्रस्यार्थ इति शास्त्रयोनीति पूर्वसूत्रादनुवृत्तस्य व्याख्यानम् । भगवान्विष्णुरिति तच्छब्दार्थः । तुशब्दोऽवधारणे । तद्व्याख्यानं नापर इति ।**

वा० — बहुषु सूत्रकारीयसमुदायविवक्षाया न प्रयोजनमित्यतस्तद्दर्शयति **तेन चेति** ॥ **क्वचिदिति** । एतद्विवरणं पूर्वपक्षदशायां कृतमनुसन्धेयम् ॥ **उपक्रमादीनामिति** । उपक्रमादिष्वेकैकस्थले सन्निपातस्यैवाभावादेकार्थसन्निपाते च विरोधस्यैवाभावात् । एकत्र प्रकरणे विरुद्धार्थयोरुभयसन्निपाते स्वस्वरूपे उपक्रमसापेक्षस्याप्युपसंहारस्य व्याख्यानरूपत्वेन स्पष्टत्वादुपक्रमोपमर्देन प्रवृत्त्योपक्रमवद्बाधकाभावमपेक्ष्य साशङ्कितप्रवृत्तेरभावाच्च तात्पर्यावगतावन्यनिरपेक्षतया झटिति तद्धेतुत्वात् । उपक्रमस्य चोपसंहारविरोधे प्रामाण्यानुपपत्त्या तदविरोधेन तदनुसार्येऽर्थे तात्पर्यज्ञापने विलम्बेन विप्रकर्षात् । एकवारोक्त्यपेक्षया बहुवारोक्त्या झटिति तात्पर्यज्ञानदर्शनेनैकोक्तिमात्रोपसंहारादेरभ्यासापेक्षयाऽविप्रकर्षात् । अपूर्वार्थबोधार्थप्रयुक्तवाक्यस्य प्राप्तार्थापेक्षयाऽप्राप्तार्थलाभे तत्रैव झटिति तात्पर्यावगमात् । परप्रयोजनो-

द्देशेन प्रवृत्तवाक्यस्याप्राप्तापेक्षया प्राप्तेऽपि सफले झटिति तदवगमात् । फलमात्रोक्त्यपेक्षया करणाकरणयोरिष्टानिष्टकथनरूपार्थवादोपेते झटिति तात्पर्यज्ञानदर्शनात् । उपक्रमादिसद्भावेऽप्युपपन्न एवार्थे तात्पर्यदर्शनोपपत्तेःसर्वमूलत्वात्तात्पर्यावगतावुत्तरोत्तरेषां सन्निकर्षात्पूर्वपूर्वेषां विप्रकर्षादुपक्रमादिषूत्तरोत्तरेषां स्वभावप्राबल्यमिति भावः । श्रुत्यादीनां त्वीशानाधिकरणटीकोक्तरीत्या स्पष्टमेव पूर्वपूर्वप्राबल्यम् ॥ नन्वेवमुपक्रमादीनां श्रुत्यादीनां च विपरीतोऽपि बाध्यबाधकभावस्तत्र तत्र कथमिष्यते तद्विरोध इत्यत उत्सर्गोऽयमित्याह **सावकाशत्वादिना चेति** ॥ एवं पदार्थमुक्त्वाऽनेनोक्तशङ्कानिरासिसिद्धिप्रकारं दर्शयति **तेनेति** ॥ प्रविचारित इत्यत्र विशेष्यानुक्तिन्यूनतां तस्यैव विशेष्यपदत्वप्रदर्शनेन परिहरति **प्रविचारित इति** । विशेषणपदत्वमङ्गीकृत्य विशेष्यपदाध्याहारेण शास्त्रस्येत्यावृत्तस्य विपरिणामेन वा तां परिहरति **शास्त्र इति** । शास्त्रविचारस्य विष्णुमुख्यार्थत्वादिकारकत्वाभावादाह **एतदिति** ॥ **सर्वेत्यपीति** । अत्राप्यावृत्त्येति बोद्धव्यम् । अत्र सर्वत्वमुख्यत्वयोः संशब्दार्थतयाऽनुव्याख्याने व्याख्यातत्वात्तयोश्च शास्त्रार्थत्वार्थकपूर्वसूत्रानुवृत्तशास्त्रयोनिपदेनान्वये प्रतिज्ञाकोटिनिवेशापत्त्या पूर्वसूत्रे च तयोरप्रतिज्ञाततया तदन्वयासम्भवेनान्वयपदेनैवान्वयः । एवञ्च सौत्रान्वयपदस्योपपत्त्यादिवच्छक्तितात्पर्यलक्षणसम्बन्धोऽप्यर्थः । त एवान्वयनामान इति तु शक्तितात्पर्यगोचरेण सम्बद्धतया ज्ञायन्त इति व्याख्यातत्वाद्बुद्ध्या विवेकेनोभयविषयकं ज्ञातव्यम् ।

**स० — ॐ तत्तु समन्वयात् ॐ** ॥ **उपक्रमादीनामपि क्वचिदिति** । उपक्रमादेर्यत्र प्रबलश्रुतिलिङ्गादिना बाधस्तत्रेत्यर्थः ।

**प० — तेन चेति** । सौत्रैकवचनेनेत्यर्थः । तद्धि एकत्वं गमयति । तत्रैकत्वं भिन्नदेशस्थानां उपक्रमोपसंहारादीनामेकार्थप्रतिपादकत्वरूपैकोपाधिग्रस्तत्वेनैव वाच्यम् । नान्यथेति नानार्थप्रतिपादकत्वाभावरूपमविरोधं सूचयतीत्यर्थः ॥ भावे निष्ठां मत्वाह **अध्याहृतक्रिययेति** । सूत्रेऽन्वयादित्येव पूर्तौ समित्युक्तिर्व्यर्थेत्यतः तस्य कृत्यं व्यनक्ति **ननु चेति** ॥ **क्वचिदिति** । प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेत्यादिब्रह्मविद्यायामियं विद्या प्राणपरा प्राणोपक्रमवत्त्वादित्यत्र; तथा 'ह्वयाम्यग्निं प्रथमं स्वस्तये' इत्यादिसावित्रसूक्ते इदं सूक्तमग्निपरं तदुपक्रमवत्त्वादित्यादौ चोपक्रमस्य; तथा ब्रह्मवल्लीरूपब्रह्मविद्यायां 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति च जीवोपसंहारस्य जीवपरत्वे व्यभिचारः । तथा 'इतरव्यपदेशात्' इत्यत्र 'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः' इत्यत्राभ्यासस्य जीवपरत्वे व्यभिचारः; तथा 'असद्वा इदमग्र आसीत्ततो वै सदजायत' इत्यत्रापूर्वतायाः सन्नाम्नो विष्णोः जनिपरत्वे व्यभिचार; तथा 'उद्भिदा यजेत पशुकामः' इत्यादिषु फलवत्त्वस्य काम्यकर्मपरत्वे व्यभिचारः; 'उत्क्रमिष्यत एवं भावात्' इत्यादौ ज्ञानाङ्गत्वस्य वक्ष्यमाणत्वात् । तथा यावन्न विमोक्ष्येऽथ संपत्स्यत इत्याद्यर्थवादस्याद्वैतप्रकरण-

गतस्याद्वैतपरत्वे व्यभिचारः । तथा 'उपवयन्तं भुञ्जाम' इत्यर्थवादस्यासद्विद्याया अग्निपरत्वव्यभिचार इत्यादि द्रष्टव्यम् ॥ **सन्निकर्षविप्रकर्षाभ्यामिति** । एतत्सूत्रे शब्दादेवेत्यत्र च श्रीमद्भाष्यटीकायामुक्तरीत्येत्यर्थः । कर्मणि निष्ठामभ्युपेत्यानुवर्त्यमानशास्त्रयोनिपदस्थेन शास्त्रपदेन बुद्ध्या विविक्तेनान्वयमाह **शास्त्र इति** ॥ **एतदवगम्यत इति शेष इति** । मुख्यार्थे इत्यतः प्रागिति योज्यम् । उत्तरार्धोक्तमेतच्छब्दार्थः । अत्रार्थपदस्य बुद्ध्या विविक्तस्य शास्त्रस्येत्यनेनान्वयं वक्ष्यति । वचनवृत्तिरूपं मुख्यत्वमेवावर्तितसंशब्दस्यार्थ इति ज्ञेयम् । अत एवाग्रे सम्यग्वचनवृत्त्येत्यनुवादः ॥ **मुख्यार्थ इतीति** । संशब्दस्यावृत्त्या मुख्यार्थ इत्यर्थान्तरमित्यर्थः । प्राक् सम्यगित्येकस्यार्थस्योक्तत्वादिति भावः ।

**या०—क्वचित्तात्पर्यव्यभिचारदर्शनादिति** । यथा प्रथमे श्रवणादित्यत्र श्रद्धां जुह्वतीत्युपक्रमस्याश्वप्रतिग्रहेष्टिनये वेदोपक्रमाधिकरणे चोपसंहारस्यात्राप्यानन्दमयाधिकरणे तस्यैष एव शारीर आत्मेति जीवप्रापकोपसंहारस्य इतरव्यपदेशादित्यत्र जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चला इत्याद्यभ्यासस्यासम्भवस्तु सतोऽनुपपत्तेरित्यत्रासद्वा इदमग्र आसीत्ततो वै सदजायतेति वाक्येन ब्रह्मणोऽसत उत्पत्त्यङ्गीकारेऽपूर्वताया उत्क्रमिष्यत एवम्भावादित्यत्र काम्यकर्मप्रकरणे श्रुतानां स्वर्गादिफलानां पृथगुपदेशादित्यत्र येनाश्रुतमित्याद्यभेदप्रापकार्थवादस्य तत्रैवाभेदसाधकोपपत्तेरपि तात्पर्यव्यभिचारदर्शनादित्यर्थः ॥

---

**सन्निकर्षविप्रकर्षाभ्यामिति** । अर्थसन्निकर्षविप्रकर्षाभ्यामित्यर्थः । इदं च श्रुत्यादीनामेव । श्रुत्यादेर्लिङ्गाद्यपेक्षयाऽर्थसन्निकर्षेण प्राबल्यस्य श्रुत्याद्यपेक्षया लिङ्गवाक्यादेरर्थविप्रकर्षेण दौर्बल्यस्य च तत्त्वप्रकाशिकादावुपपादितत्वात् । सावकाशत्वादिना चेत्येतत् सर्वविषयम् । तत्रादिपदेन निरवकाशत्वमुपक्रमादीनां व्याख्यानव्याख्येयभावादिकं च ग्राह्यम् ॥ **मुख्यार्थ इत्यावृत्त्येति** । अत्रार्थपदस्य बुद्ध्या विविक्तस्य शास्त्रस्येत्यनेनान्वयं वक्ष्यति । वचनवृत्तिरूपं मुख्यत्वमेव चावर्तितसंशब्दार्थ इति ज्ञेयम् । अत एवाग्रे तत्र सम्यग्वचनवृत्त्येत्येवानुवादः ।

**श्री०—समुदायेति** । अस्माभिर्जातिस्थाने तस्याभिषिक्तत्वादिति भावः ॥ **तेन चेति** । समुदायापेक्षत्वचनेनेत्यर्थः ॥ **तेषामिति** । एकवचनस्य समुदायार्थत्वे उपक्रमादीनां समुदायो नामैकस्मिन्नर्थे प्रतिपादकतयाऽवस्थानमेकार्थप्रतिपादकत्वरूपमुक्तं स्यात् । न च विरुद्धानामेकत्रार्थे प्रतिपादकतयाऽवस्थानं सम्भवतीत्येवं तेषामुपक्रमादीनां विरोधः सूचित इति ध्येयम् । **अध्याहृतक्रिययेति** । 'उपसर्गाः क्रियायोगे' इत्युक्तत्वादिति भावः । सन्निकर्षः साक्षाद्विप्रतिपन्नार्थनिष्ठत्वं विप्रकर्षस्तदभावः । संशब्दस्यावृत्त्येत्यन्वयः ।

**च०**— **क्वचित्तात्पर्येति** । 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'त्यादिब्रह्मविद्यायामियं विद्या प्राणपरा प्राणोपक्रमवत्वादित्यत्र, तथा 'ह्वयाम्यग्निं प्रथमं स्वस्तये' इत्यादि सावित्रसूक्ते इदं सूक्तमग्निपरं तदुपक्रमवत्वादित्यादौ चोपक्रमस्य, तथा ब्रह्मवल्लीरूपब्रह्मविद्यायां 'तस्यैष एव शारीरआत्मा यः पूर्वस्ये'ति जीवोपसंहारस्य जीवपरत्वे व्यभिचारः, तथा 'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः जीवे तु लयमृच्छन्ति न जीवात्कारणं परमि'त्यत्राभ्यासस्य जीवपरत्वे व्यभिचारः, तथा 'असद्वा इदमग्र आसीत्ततो वै सदजायत'इत्यत्रापूर्वतायाः सन्नाम्नो विष्णोर्जनिपरत्वे , व्यभिचारः, तथा 'यावन्न विमोक्ष्येथ संपत्स्यत' इत्याद्यर्थवादस्याद्वैतप्रकरणगतस्याद्वैतपरत्वे व्यभिचारः, तथा 'उपवयं तं भुञ्जाम' इत्यर्थवादस्यास्मद्विद्याया अग्निपरत्वव्यभिचार इत्यादि द्रष्टव्यमिति स्थितम् । **सन्निकर्षविप्रकर्षाभ्यामिति** । प्रकृतसूत्रीयायां शब्दादेवेतिसूत्रीयायां च श्रीमद्भाष्यटीकायामेव प्रपञ्चितमेतत् विशेष्यवाचकपदसमभिव्याहारवैधुर्यात् 'नपुंसके भावे क्तः' इति भावसाधनतामभिप्रेत्य योजयति **प्रविचारित इति** ।

**सु०**— **तथा चैवं सूत्रयोजना। अन्वयादुपक्रमादिलिङ्गसमुदायात् शास्त्रे सम्यक् प्रविचारिते सति सर्वशास्त्रस्य भगवत्येव सम्यग्वचनवृत्त्याऽन्वयाच्छक्तितात्पर्यलक्षणसंबन्धावगमात्तद्विष्ण्वाख्यं ब्रह्मैव जगज्जन्मादिकारणत्वेन शास्त्रयोनि न तु हरहिरण्यगर्भादय इति । अनन्तगुणपरिपूर्णत्वं हि प्रधानलक्षणम् । तत्र च शास्त्रं प्रमाणीक्रियमाणं वचनवृत्त्या सर्वमेव च युक्तम् । लक्षणादिना वृत्तौ वाच्यार्थगुणालाभात् । वाच्ये तद्गुणप्रसङ्गाच्च । एवं कतिपयवाक्यैरनन्तगुणाप्रतिपादनात् । वाक्यान्तरविषयस्य च तद्गुण(व)त्त्वप्रसङ्गाच्च । अतः संशब्दस्यावृत्तिरुपपन्ना ।**

**वा०**— अनुवृत्तशास्त्रयोनिपदस्य तु शास्त्रजन्यप्रमाविषयत्वमर्थ इत्यभिप्रेत्य सूत्रयोजनां दर्शयति **तथा चेति** । तत्त्वप्रकाशिकायां तूपक्रमादिलिङ्गैः सम्यक् निरूप्यमाणे तदेव शास्त्रगम्यमिति भाष्ये मुख्यत्वसर्वत्वयोः संशब्दार्थत्वेनाव्याख्याततत्वात्तदनुसारेण तैश्च सम्यक् शास्त्रे विचार्यमाणे ब्रह्मैव शास्त्रगम्यं प्रतीयत इत्येवोक्तम् । चन्द्रिकायां च तदनुसारेणान्वयशब्द उपपत्त्यादिमात्रपरतया व्याख्यात इति द्रष्टव्यम् । ननु स्यादियं योजना यदि संशब्दस्यावृत्त्योक्तोभयार्थत्वं स्यात्, न **चैवम्** तद्ब्रह्मैव जगत्कारणत्वेन शास्त्रयोनीति प्रतिज्ञातार्थस्य शास्त्रैकदेशस्य लक्षणया तत्परत्वेऽप्युपपत्तेः इत्यतस्तदुपपादयति **अनन्तेत्यादिना** ।

**प०**— अन्वयपदस्य संपदस्य शास्त्रपदस्य चावृत्तिमुपेत्य योजनामाह **तथा चैवमिति** ॥ प्रविचारित इति शेषोक्तिः ॥ **शास्त्रयोनीति** । परममुख्यया वृत्त्या कृत्स्नशास्त्रजन्यप्रमाविषय इति साध्यार्थः । तेन मुख्यया वृत्त्या एकदेशे कर्मदेवतादिप्रमाजननाविरोधः । ननु संशब्दस्यावृत्तिमुपेत्य

कात्स्न्यार्थत्वं मुख्यार्थत्वं च किमर्थमुपेयम् । कारणवाक्यानामेव यथाकथञ्चिद्ब्रह्मपरत्वोक्तिमात्रेण जन्मादिसूत्रोक्तलक्षणस्यादुष्टतोपपत्तेरित्यत आह **अनन्तेति** ॥ **सर्वमेव चेति** । शास्त्रमित्यनुषङ्गः ॥ वचनवृत्त्या सर्वमेव चेत्युक्तं द्वयं क्रमेण व्यनक्ति **लक्षणादिनेति** ।

**या०**— संशब्दस्यावृत्तिद्वयमुपपादयति **अनन्तगुणेत्यादिना** । **वाच्ये तद्गुणेति** । तथा चातिव्याप्तिरिति भावः ।

**श्री०**— वचनवृत्त्येत्येतदुपपादयति **लक्षणादिनेति** । शास्त्रस्येति शेषः । तत्तत्पदवाच्यार्थस्य गुणस्यालाभेनानन्तगुणपूर्णत्वलक्षणस्यासम्भव इति भावः ॥ **वाच्य इति** । किञ्चिदर्थवाचकस्यैव कुत्रचिल्लक्षणा दृष्टेति तत्पदवाच्येऽन्यस्मिन्वक्तव्ये तस्मिन्वाच्य एवार्थे तद्गुणलाभेनानन्तगुणवत्त्वलक्षणस्यातिव्याप्तिरिति भावः ॥ सर्वमेवशास्त्रमित्युक्तमुपपादयति **अप्रतिपादनादिति** । तथा चोक्तानन्तगुणवत्त्वलक्षणस्यासम्भव इत्याशयः । वाक्यान्तरविषयस्य तत्प्रतिपाद्यस्यान्यस्य ॥ **तद्गुणवत्त्वेति** । तद्वाक्यप्रतिपाद्यगुणवत्त्वेत्यर्थः । तथा चातिव्याप्तिरिति भावः ।

**च०**— कर्मसाधननिष्ठात्वोपगमेऽपि सप्तम्यन्तशास्त्रपदपूरणेन समभिव्याहृतषष्ठ्यन्तशास्त्रपदस्यावृत्तिमुपेत्य षष्ठ्याः सप्तमीत्वं प्रकल्प्य वा विशेषणवाचकपदतया योजनां दर्शयति **शास्त्र इति** । कर्मणि निष्ठामुपेत्यानुवर्तमानेन शास्त्रयोनिपदस्थेन शास्त्रपदेन बुद्ध्या विविक्तेनान्वयमाह **शास्त्र इति** इत्यपि स्थितम् ।

---

**सु०**— ननु जन्माद्यस्य यत इति यच्छब्दश्रवणात्तद्ब्रह्मेति प्रकृतम् । तदेवात्र मण्डूकप्लुत्याऽनुवर्तिष्यते । किं पुनरत्र तद्ग्रहणेन । मैवम् । तुशब्दस्तावदत्रेतरव्यावृत्त्यर्थमुपादेयः । न च तस्य तदित्यनुक्तौ अन्वयः प्रत्येतुं शक्यते । यतोऽवधारणं ततोऽन्यत्र निषेध इति वचनात् । न चानुवृत्तेनान्वयप्रतीतिर्भविष्यतीति वाच्यम् । अनेनान्वयादित्यनेनैव संबन्धप्रतीतिप्रसङ्गात् । तत्रोपयोगाभावाच्चेति चेन्न । प्रतीतिव्याख्याननिरासार्थत्वोपपत्तेः । अन्वयपदादेव तत्सिद्धिरिति चेन्न । तस्योपक्रमादीनां लिङ्गत्वप्रतिपादन एव चरितार्थत्वसंभवात् । अतः सार्थकं सूत्रे तद्ग्रहणम् । संशब्देन सकलपदानां लक्षणया ब्रह्मप्रातिपदिकार्थमात्रपरत्वमुच्यत इति व्याख्यानमखण्डार्थनिरासेन निरस्तम् । निराकरिष्यते चोत्तरत्रेति नेह निराकृतम् ।

**वा०**— नन्वितरव्यावृत्त्यर्थकावधारणार्थकतुशब्देनेतरव्यावृत्तिप्रतीत्या किं तस्यान्यान्वयेनेत्यतो यदवधारणं यदन्वितं तस्य तदितरव्यावृत्तिप्रत्यायकत्वेऽपि न केवलस्य यत्किञ्चिदितरव्यावृत्तिप्रत्यायकत्वम् इत्यत्र नियामकं वचनमुदाहरति **यत इति** । पार्थ एव धनुर्धर इत्यादौ तथा दर्शनादिति भावः ।

संशब्दापव्याख्याननिरासप्रयुक्तन्यूनतां परिहरति **संशब्देनेति** ॥ **निरस्तमिति** । जन्माधिकरण इति शेषः ॥ **निराकरिष्यते चेति** । 'कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम् । योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः ॥' इत्यादिनेत्यर्थः ।

**स०** — यतोऽवधारणं यत्पदसमभिव्याहृतं तत्पदार्थान्यस्मिन् विशेषणपदार्थनिषेधः । यथा पार्थ एव धनुर्धर इति पार्थान्यस्मिन् धनुर्धरत्वनिषेधः । इदं विशेष्यसङ्गतावधारणविषयमित्यवगन्तव्यम् ॥ **अन्वयपदादेवेति** । उक्तरीत्या यौगिकादित्यर्थः ॥

**प०** — सौत्रतत्पदवैयर्थ्यमाशङ्क्य समाधत्ते **नन्वित्यादिना** ॥ **मण्डूकप्लुत्येति** । यथा मण्डूकः उत्प्लुत्योत्प्लुत्य गच्छति । एवं तत्पदं शास्त्रयोनिसूत्रमुत्प्लुत्य तत्रासंबद्धयेहानुवर्तिष्यत इत्यर्थः । यद्यपि पूर्वसूत्रेपि तत्पदं षष्ठ्यन्ततया विपरिणम्य संबध्यत एव अन्यथा जगत्कारणस्य शास्त्रयोनित्वादित्यन्वयो न स्यात्, तथापि प्रथमान्ततत्पदाभिप्रायेण मण्डूकप्लुत्येत्युक्तम् ॥ **इतरेति** । रुद्रादिव्यावृत्त्यर्थमित्यर्थः । महातात्पर्यविषयत्वेनेति योज्यम् ॥ मास्तु तत्पदेनान्वय इत्यतस्तथात्वे जगद्धेतुत्वेन शङ्कितरुद्रादिव्यावृत्तिर्न सिद्ध्येदिति भावेनाह **यत इति** । यत्रेत्यर्थः ॥ **अनुवृत्तेनेति** । तत्पदेनेति योज्यम् ॥ **निरस्तमिति** । जन्मादिसूत्रे ॥ **उत्तरत्रेति** । ईक्षत्यधिकरणे ॥

**या०** — **यतोऽवधारणमिति** । यतोऽवधारणं यदर्थपरपदसमभिव्याहृतमवधारणं ततोऽर्थादन्यस्मिंस्तत्फलमवधारणफलं व्यवच्छेदप्रतीतिरूपं भवतीत्यर्थः । यथा पार्थ एव धनुर्धर इत्यत्र पार्थवाचकपदसमभिव्याहृतावधारणेन पार्थान्यस्मिन्धनुर्धरत्वव्यवच्छेदप्रतीतिर्भवति । इदं विशेष्यसङ्गतावधारणविषयमित्याहुः । प्रकृते च तदित्यनुक्तावव्यनिरूपणात्तदन्यस्याप्रतीतौ तत्र व्यवच्छेदान्वयः प्रत्येतुं न शक्य इति भावः ॥ **अन्वयपदादेवेति** । उक्तरीत्या यौगिकादन्वयपदादव्यभिचारसूचनेन व्यभिचारिणोः प्रतीतिव्याख्यानयोर्निरासोऽर्थात्सिद्ध्यतीत्यर्थः । **उत्तरत्रेति** । भक्तिपाद इत्यर्थः ।

**श्री०** — नन्वव्यवहितपूर्वसूत्रे तद्ब्रह्मेत्यस्याननुवृत्तत्वाज्जन्मादिसूत्रेऽनुवृत्तेन तेनात्रान्वयप्रतिपत्तिः कथमित्यत उक्तम् **मण्डूकप्लुत्येति** ॥ **अत्र तद्ग्रहणेनेति** । अत्र सूत्रे तच्छब्दग्रहणेनेत्यर्थः । तुशब्दः सौत्रः ॥ **इतरेति** । नापर इत्युक्तरीत्येत्यर्थः । तस्य इतरव्यावृत्त्यर्थकतुशब्दस्य । कुत इत्यत आह **यत इति** । यत्पदसमभिव्याहृतमवधारणमित्यर्थः । अत्र च तत्पदाभावेऽवधारणार्थकतुशब्दस्य पदसमभिव्याहाराभावादिति भावः ॥ **अनुवृत्तेनेति** । प्रकृतेन तद्ब्रह्मेत्यनेनानुवृत्तेनेत्यर्थः ॥ **अन्वयेति** । तद्ब्रह्मैवेतीत्यन्वयेत्यर्थः ॥ **भविष्यतीति** । तुशब्दस्येति शेषः ॥ **श्रुतेनेति** । तथा चान्वयादेवेत्येव सम्बन्धप्रतीत्या न तद्ब्रह्मेत्यनेन सम्बन्धः प्रतीयतेऽतस्तद्ग्रहणं सूत्रे युक्तमेवेत्यर्थः ॥ **तत्रेति** । तुशब्दस्यान्वयादित्यनेन सम्बन्धे उपयोगाभावात्तद्ब्रह्मेत्यनेनैव

सम्बन्धो विज्ञातो भविष्यतीति तद्ग्रहणं न युक्तमित्यर्थः । प्रतीतिः शास्त्रतात्पर्यावगतौ । आपातप्रतीतिर्व्याख्यातुर्वचनं वा न लिङ्गम् । तयोर्व्यभिचारित्वात्किन्तूपक्रमादय एव तेषामव्यभिचारित्वादित्येवं प्रतीतिव्याख्याननिरासार्थत्वेन समन्वयादेवेत्यनेन सम्बन्धे उपयोगोऽस्तीति तेनैवान्वयप्रतीतिसम्भवात्तद्वारणार्थं तद्ग्रहणं सार्थकमित्यर्थः ॥ **अन्वयेति** । शक्तितात्पर्यप्रतिपादकत्वेन वाक्यान्येतैर्ज्ञायन्त इति यौगिकान्वयपदादेव प्रतीतिव्याख्याननिरासिद्धेः समन्वयादित्यनेन तुशब्दस्य सम्बन्धकरणे उपयोगाभावात्तद्ब्रह्मेत्यनेनैवानुवृत्तेन सम्बन्धप्रतीतिसम्भवाद्ग्रहणं व्यर्थमित्यर्थः ॥ **तस्येति** । यौगिकान्वयपदस्येत्यर्थः । तथा च वाक्यानां शक्तितात्पर्यविषयीभूतार्थप्रतिपादकत्वरूपे साध्ये उपक्रमादीनां लिङ्गत्वमित्येवं तेषां उपक्रमादीनां लिङ्गत्वप्रतिपादन एव यौगिकान्वयपदस्योक्तरीत्या चरितार्थत्वेनान्यथासिद्धत्वान्न प्रतीतिव्याख्याननिरासोपयोगित्वमस्ति । प्रतीतिव्याख्याननिरासश्चावश्यकस्तदर्थं च समन्वयादित्यनेन सम्बन्धकरणे उपयोगसद्भावात्तेनैवान्वयप्रतीतिः स्यात्नानुवृत्तेन तद्ब्रह्मेत्यनेनातः सूत्रे तद्ग्रहणं सार्थकमिति भावः ॥ छ ॥ १-१-४ ॥

च० —**मण्डूकप्लुत्येति** । मण्डूका यथा उत्प्लुत्योत्प्लुत्य गच्छन्ति एवमधिकारा अपीति महाभाष्यकृदुक्तेरिति भावः । **यतोऽवधारणमिति** । यत्पदार्थोपस्थापकविशेष्यवाचकपदसमभिव्याहृतमवधारणार्थकं तत्पदोपस्थाप्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदवति तत्पदसमभिव्याहृतपदान्तरोपस्थाप्यप्रतियोगिकव्यवच्छेदप्रतीतिरूपं फलं भवतीत्यर्थः । यथा पार्थ एव धनुर्धर इत्यादौ पार्थवाचकपदसमभिव्याहृतावधारणार्थकैवकारेण पार्थत्वावच्छिन्नप्रतियोगिताकभेदवति धनुर्धरपदोपस्थाप्यनिष्ठतादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकव्यवच्छेदप्रतीतिर्भवतीत्यर्थः । इदं च विशेष्यवाचकपदसमभिव्याहृतावधारणार्थकस्थलाभिप्रायकमिति स्थितम् । प्रपञ्चितं चैतन्न्यायामृतमाधुर्यामस्माभिः । प्रकृते च तत्पदसमभिव्याहाराभावे प्रतियोग्यनुपस्थित्या तत्प्रतियोगिकभेदविशेषिताधिष्ठानानुपस्थित्या तत्र समभिव्याहृतपदार्थान्तरप्रतियोगिकव्यवच्छेदस्य दुष्प्रतिपदत्वादिति भावः । **अन्वयपदादेवेति** । दर्शितदिशावयववृत्त्यान्वयपदादेवाव्यभिचारस्य ध्वनिततया व्यभिचीर्णप्रतीतिव्याख्यानव्युदासस्यार्थात्सिद्धेरित्यर्थः । **उत्तरत्र** भक्तिपादे ।

**सु० — तदेवं जगज्जन्मादिकारणत्वेन मुख्यया वृत्त्या वर्णपदवाक्यात्मकाशेषशास्त्रप्रतिपाद्यं नारायणाख्यं ब्रह्मैवेति सुस्थं लक्षणमिति सिद्धम् ॥ १-१-४ ॥ छ ॥**

वा० — चतुर्थपादीयज्योतिरधिकरणोक्तसमन्वयस्याप्रतिज्ञाततताशङ्कामुपसंहारव्याजेन परिहरति **तदेवमिति** ॥ १-१-४ ॥

प०— फलोक्त्योपसंहरति **तदेवमिति** ॥ १-१-४ ॥

या०— नारायणाख्यमेवेत्येवकारान्वयः। न तु हरहिरण्यगर्भाख्यमित्यर्थः। अत्र विष्ण्वाख्यमिति वक्तव्ये यन्नारायणाख्यमिति वचनं तद्ब्रह्मशब्दव्याख्यानसूचनायेत्यवगन्तव्यम् ॥ १-१-४ ॥छ॥

च०— तुरीयपादीयज्योतिर्नयव्युत्पादयिष्यमाणसमन्वयस्याप्रतिज्ञातताशङ्कां निगमनमिषेणापहस्तयते **तदेवमिति** ॥

## इति समन्वयाधिकरणम्

१-१-४.

सु०— ॥ ॐ ईक्षतेर्नाशब्दम् ॐ ॥ वचनवृत्त्यैव सकलशास्त्रप्रतिपाद्यं ब्रह्मेत्युक्तम् तदाक्षिप्य समाधातुमिदमधिकरणमारभ्यते ।

तथा हि । 'यतो वाचो निवर्तन्ते' 'अशब्दमस्पर्शम्' इत्यादिश्रुतेः, 'शब्दो न यत्र पुरुकारकवान्'इत्यादिस्मृतेश्च ब्रह्म अवाच्यमवसीयते । वचनवृत्तिश्च द्रव्यगुणक्रियाजातिनिमित्ता । न च ब्रह्मणो द्रव्यादियोगोऽस्ति । 'केवलो निर्गुणश्च' 'निष्कलं निष्क्रियं शान्तम्' इत्याद्यागमात् । तत्कथं तस्य वाच्यता संभवति । औपनिषदत्वं (तु) च लक्षणया वृत्त्या संभवन्न वाच्यतामपेक्षते । अतोऽवाच्यत्वाद्ब्रह्मणो न वचनवृत्त्या शास्त्रगम्यत्वमिति ॥ अपर आह न सर्वशास्त्रप्रतिपाद्यत्वं ब्रह्मणः संभवति निश्चयोपायाभावात् । उपक्रमादयो हि तन्निश्चयोपायाः। तैश्चास्मदाद्यधिगतशास्त्रस्य कथञ्चिद्ब्रह्मविषयतावधारणेऽप्यस्मदनधिगतशास्त्रस्य तत्परतावधारणायोगात् । 'अनन्ता वै वेदाः' इति श्रुतेरनन्तं हि शास्त्रमवगम्यते । न चानन्तशास्त्राधिगमोऽस्माकं कल्पकोटिशतैरपि संभवति । विफलश्च शास्त्रैकदेशस्य ब्रह्मपरत्वाध्यवसायः । एकदेशान्तरे तद्विपरीतप्रतिपादनस्यापि शङ्कनात् । न च वस्तुनि विकल्पः संभवति इति अत्रापि सन्देहः समास्कन्दति; इत्यतो न सर्वशास्त्रप्रामाण्याज्जगज्जन्मादिकारणं समस्तगुणपरिपूर्णं ब्रह्म सिद्ध्यति ॥ इत्येवं प्राप्ते अवाच्यत्वशङ्कां तावन्निराचष्टे सूत्रकारः ईक्षतेर्नाशब्दमिति ॥

---

## ब्र. सू.०— ॥ ॐ ईक्षतेर्नाशब्दम् ॐ ॥

तद्व्याचष्टे ईक्षणीयत्वत इति ।

वा०— ॥ ॐ ईक्षतेर्नाशब्दम् ॐ ॥ अनन्तरसङ्गतिं दर्शयन्नधिकरणप्रतिपाद्यं च सूचयति वचनवृत्त्यैवेति । तदा (तच्छब्देनेत्यर्थः) वचनवृत्ते साकल्यस्य च परामर्शः । तेन संशब्दार्थस्य वाच्यत्वस्य कार्त्स्न्यस्य वेहाक्षिप्य समाधानादनन्तरसङ्गतिः । 'गतिसामान्यात्' इत्यस्य संशब्दार्थनमर्थनरूपतयैक्यादेकाधिकरणान्तर्भाव इति सूचितं भवति । अशब्दमित्यादेः शब्दादिगुणशून्यं शब्दाविषयश्चेत्यर्थः । पुरुकारकवान् कर्मत्वाद्यर्थकद्वितीयादिविभक्त्युपेत इति क्रियार्थः । क्रियाप्रतिपादक इति सुबन्ततिङन्तग्रहणेन शब्दमात्रप्रवृत्त्यभाव उक्तो भवति ।

ननु श्रुतेरर्थान्तरस्यापि संभवेन सावकाशत्वात्कथमेवमित्यतो 'दृष्टा गुणक्रियाजातिरूढयः शब्दहेतवः । नात्मन्यन्यतमास्त्वेषां तेनात्मा नाभिधीयते ॥' इत्युक्तिमनुरुद्ध्य प्रवृत्तिनिमित्ताभावात्कथं वाच्यत्वमिति श्रुतिस्वाभिमतार्थोपोद्बलकयुक्तिमाशङ्कते वचनवृत्तिश्चेति । केवलोऽद्वितीय इति द्रव्यगुणक्रियाजातीनां चतुर्णामपि योगस्य सामान्येनाभावोक्तिः । निर्गुणो निष्क्रिय इति गुणक्रिययोर्विशेषेण

निष्कलं निरवयवमित्यवयवभूतद्रव्ययोगस्य शान्तमपरिणामीति कार्ययोगस्येति द्रष्टव्यम् । यद्यपीह भाष्यकारेण गतिसामान्यादिति सूत्रं न व्याख्यायते । तथाऽप्यधिकरणसङ्गतिकथनदशायां तदवतारिकारूपपूर्वपक्षकथनदशायां चाधिकरणान्तर्गतसूत्रसङ्गत्यादिकथने नानुपपत्तिरित्याशयेन पूर्वं तत्सूत्रसङ्गतिं प्रदर्श्य तन्निवर्त्यपूर्वपक्षं च दर्शयति **अपर आहेति** । **एकदेशान्तरे** विपरीतप्रतिपादनशङ्कया वस्तुविकल्पासंभवेनात्रापि सन्देहः समास्कन्दतीति वक्ष्यमाणानुसारेण कथञ्चिदित्युक्तम् ॥ **अस्मदनधिगतेति** । स्वरूपस्यैवानवधारणे तदुपक्रमाद्यवधारणस्य दूरोत्सारितत्वादिति भावः ॥ **अस्माकमिति** । अल्पायुःप्रजानामित्यर्थः ॥ नन्वस्मदधिगतशास्त्रस्य ब्रह्मविषयत्वावधारणमात्रेणास्मदभिमतसिद्धेः किं सर्वस्य तदवधारणेनेत्यत आह **विफलश्चेति** । चशब्दस्तुशब्दार्थ ऽध्यवसाय इत्यनेन संबद्ध्यते ॥ नन्वेकदेशान्तरेऽन्यस्यापि जगत्कारणत्वप्रतिपादने विष्णोस्तदभावप्रतिपादने वाऽस्तु तदुभयानुसारेणोभयोर्जन्मादिकारणत्वं विष्णोस्तद्भावाभावौ वा को दोष इत्यतो जगत्कारणत्वस्य तत्प्रयुक्तसर्वोत्तमत्वस्य चोभयत्राङ्गीकारे एकैकत्र तत्कारणत्वकार्यत्वयोस्तदुत्तमत्वानुत्तमत्वयोश्च प्राप्त्या तयोर्भावाभावयोश्च सिद्धस्वरूपत्वादनुष्ठाने विकल्पसंभवेऽपि सिद्धे वस्तुनि विकल्पो न संभवतीत्याशयेनाह **न चेति** ।

**स०** — ॐ **ईक्षतेर्नाशब्दम्** ॐ ॥ नन्वस्तु एकदेशान्तरे विपरीतप्रतिपादनशङ्का तथाप्यस्मदधिगतशास्त्रैकदेशे ब्रह्मपरत्वाध्यवसाये किं बाधकमित्यत आह **न च वस्तुविकल्प इति** । सर्वोत्तमवस्तुद्वयायोगादिति भावः ।

---

**प०** — ॐ **ईक्षतेर्नाशब्दम्** ॐ ॥ आक्षेपिकीं सङ्गतिमाह **वचनवृत्त्येति** ॥ वचनवृत्त्यैवेत्येतदंशाक्षेपप्रकारं तावद्व्यनक्ति **यतो वाच इत्यादिना** । 'अशब्दम्' इति श्रुत्यन्तरम् । न विद्यते शब्दो वाचको यस्य तदिति विग्रहोऽग्रे व्यक्तः । 'शब्दो न यत्र' इति भागवतवाक्यम् ॥ ब्रह्मणो वाच्यत्वे युक्तिं चाह **वचनवृत्तिश्चेति** । औपनिषदत्वमुपनिषत्प्रतिपाद्यत्वम् ॥ सकलशास्त्रगम्यमित्येतदंशाक्षेपप्रकारमाह **अपर आहेति** ॥ एकदेशनिर्णयेनालं किं सर्वाधिगमेनेत्यत आह **विफलश्चेति** ॥ अयुक्तश्च शास्त्रैकदेशस्यापि ब्रह्मपरत्वाध्यवसाय इत्याह **एकदेशेति** । ततश्च किमित्यत आह **न च वस्तुनि विकल्प इति** । वस्त्वेवमनेवं भवतीति विकल्प इत्यर्थः ॥ **अत्रापीति** । एकदेशाधिगतेपि वस्तुनीत्यर्थः ॥ **अवाच्यत्वशङ्कां तावदिति** । द्वितीयशङ्का तु 'गतिसामान्यात्' इत्यनेन निराकरिष्यते । तद्व्याख्यानं चोपासनापादे तृतीये करिष्याम इति भावः ।

**या०** — ॥ ॐ **ईक्षतेर्नाशब्दम्** ॐ ॥ **पुरुकारकवानिति** भावप्रधानो निर्देशः । तथा च यत्र विषये शब्दः पुरु साकल्येन कारकवान्प्रतिपादकत्ववानित्यर्थः । यत्र येन कारकवान् कर्मकारकवानिति वा ॥ 'गतिसामान्यादि'ति सूत्रनिवर्त्यपूर्वपक्षं दर्शयति अपर आहेत्यादिना । नन्वस्त्वेकदेशा-

न्तरे विपरीतप्रतिपादनशङ्का तथाऽप्यस्मदधिगतशास्त्रैकदेशे ब्रह्मपरत्वाध्यवसाये किं बाधकमित्यत आह **न च वस्तुनीति**। विकल्पो नानात्वम्। सर्वो वस्तुद्वयायोगादिति भावः।

**श्री०— ॐ ईक्षतेर्नाशब्दं ॐ॥ इत्युक्तमिति**। संशब्देनेति शेषः। कल्पकोटिशतैः कल्पानां कोटिशतैः।

**च०— ॐ ईक्षतेर्नाशब्दम् ॐ॥** पूर्वनयनिरूपितामेतन्नयवर्तिनीमाक्षेपिकीं सङ्गतिं दर्शयन्नेव प्रकृतनयप्रतिपाद्यं ध्वनयति **वचनवृत्त्येति**। शक्तिवृत्त्येत्यर्थः॥ **तदाक्षिप्येति**। पूर्वसूत्रघटकोपसर्गांशेन वाच्यत्वकार्त्स्न्ययोरुपस्थापिततया तादृशशक्तिवृत्त्यधीनकृत्स्नशास्त्रजनितप्रतीतिविषयत्वमाशङ्क्येत्यर्थः। वचनवृत्त्यैतदंशाशङ्कनभङ्गीं तावद्दर्शयति **यत इति**॥ **निवर्तन इति**। यन्निष्ठत्वनिरूपितप्रतिपादकता-संसर्गावच्छिन्नप्रतियोगिताकाभावप्रतियोगिन्यो वाच इत्यर्थः॥ **पुरस्कारकत्वानिति**। यत्रेति सप्तम्या तृतीयात्वविपरिणामेनाभेदः प्रत्याप्यते। कारकशब्दश्च लक्षणया कर्मकारकत्वावच्छिन्नपरः 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति वचनात्। तथाच यदभिन्नकर्मकारकवान्नेत्यर्थः। शास्त्रे साकल्यांश-निवर्तनीयां गतिसामान्यादिति सूत्रावतरणिकारूपां शङ्कां दर्शयति **अपर आहेति**। विकल्पः विरुद्ध-धर्मद्वयसमावेशः।

---

**सु०— अत्र ईक्षतेरिति धातुनिर्देशः। न चाविवक्षितार्थं शब्दमात्रं ब्रह्मणो वाच्यत्वे हेतुर्भवितुमर्हतीति तदर्थोऽनेनोपलक्ष्यते। न च ब्रह्मसंबन्धीक्षणमप्यत्र हेतुर्भवति अतिप्रसङ्गात्। संबन्धश्च न कर्तृत्वादिरूपः श्रुत्याद्युपगमात् विशेषे बाधकाभा(व)च्च)वप्रसङ्गाच्च। अत ईक्षणं ब्रह्मकर्मकमेव हेतुत्वेन वाच्यम्। न चैतदपि युक्तम् व्यधिकरणत्वप्रसङ्गात्। तस्मादीक्षणकर्मत्वमेव हेतुतया विवक्षितम्; इत्याशयेनोक्तम् ईक्षणीयत्वत इति।**

**अनु०— ॥ ॐ ईक्षतेर्नाशब्दम् ॐ॥**

**ईक्षणीयत्वतो विष्णुर्वाच्य एव**

**तदित्यनुवर्तते। तेन विष्णुरित्याह। न विद्यते वाचकः शब्दो यस्य तदशब्दम्। अवा-च्यमित्यर्थः॥ वाच्यमिति वक्तव्ये नावाच्यमिति वचनं 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति वचनादवधारणार्थमित्यभिप्रेत्योक्तं वाच्य एवेति॥ नन्ववधारणमपि किमर्थम्। उच्यते। तत्त्वनिर्णयार्थं हि न्यायसूत्रम्। निर्णयश्च स्वपरपक्षसाधनोपालम्भाभ्यामेव भवति। नान्य-तरमात्रेण। यथोक्तम्। विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति। तदत्रावधारणे कृते वाच्यत्वविधिरवाच्यत्वनिषेधश्चेत्युभयमपि श्रुत्यर्थाभ्यां प्रतिज्ञातं स्यात्। उभयसाधनार्थ-**

क्षणीयत्वहेतुर्विज्ञायते । तथा च निर्णयो भवेत् । वाच्यमिति तु प्रतिज्ञाते परपक्षप्रतिषेधो कृतः स्यात् । न च तदर्थमन्यत्सूत्रमस्ति । अतो युक्तोऽयं निर्देशः ॥ एवमन्यत्रापि दितव्यम् ।

इदमुक्तं भवति । ब्रह्म वाच्यं भवितुमर्हति; न पुनरवाच्यमीक्षणकर्मत्वाद्घटवत् । क्षणीयत्वं च ब्रह्मणः 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' 'आत्मन्येवात्मानं श्येत्' इत्यादिश्रुतिसिद्धमिति ।

ननु ब्रह्मणो वाच्यत्वाभावे किं बाधकम् । ईक्षणीयत्वं न स्यात् । तथा च ब्रह्मज्ञाना-भावेन शास्त्रवैयर्थ्यमनिर्मोक्षश्च स्यादिति चेन्न । वाच्यत्वस्याव्यापकत्वादीक्षणीयत्वस्याव्या-प्यत्वाच्च । न ह्यव्यापकनिवृत्तिरव्याप्यनिवृत्तिमापाद(यति)यितुं शक्नोति । ईक्षणीयत्वं हि त्यक्षानुमानागमतदाभासनिमित्तं व्यापकं युक्तम् । वाच्यत्वं च शब्दवृत्तिविशेषोपाधिकं व्याप्यमेवेति ॥ मैवम् । न तावदिदं मोक्षार्थमुपदिष्टं ब्रह्मेक्षणं प्रमाणाभासजन्यम् । भ्रान्ते-विद्यानिवर्तकत्वाभावात् । नापि प्रत्यक्षानुमानजम् । शास्त्रैकसमधिगम्यतायाः साधितत्वात् । तथा च प्रकारान्तराभावे सति यदि ब्रह्म वाच्यमपि न भवेत्तदेक्षणीयमपि न भवेदिति बाधकं संभवत्येव । न च व्याप्त्य(भा)संभवः । व्यतिरेकसंभवात् । यत् यत्कारकाविषयः तत् तत्क्रि-याऽविषयः यथा कुठाराद्यविषयो गगनं न छिदाविषय इति सामान्यव्याप्तिसंभवाच्च ।

वा॰— भाष्योक्तमर्थं मूलारूढं कर्तुमाह **अत्रेत्यादिना** ॥ **ईक्षतेरिति धातुनिर्देश इति** । धातोरनुकरणमित्यर्थः । नन्वीक्षतेरिति कथं शब्दरूपनिष्पत्तिः । न चेक्षधातोः 'इक्श्तिपौ धातुनिर्देशे' इति स्मरणात् श्तिपि 'कर्तरि शप्' इति शपि तच्छब्दनिष्पत्तिरिति वाच्यम् । 'कर्तरि शप्' इति कर्त्रर्थे सार्वधातुके परत एव शपो विधानात् । श्तिपः शित्त्वेन सार्वधातुकत्वेऽपि (तिङ्शित्सार्वधातु-कमिति स्मृतेरिति भावः) कर्त्रर्थत्वाभावात् 'कर्तरि शप्' इति शपः प्राप्त्यसंभवादिति चेन्न । श्तिपः शित्करणसामर्थ्येन सार्वधातुकमात्रे परतोऽपि शपोऽभ्युपगमादित्येके । तन्न । पिबतिर्ग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्याऽऽत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वेन तत्सामर्थ्यस्य कल्पयितुमशक्यत्वात् । वस्तुतस्तूपसर्गात्सुनोति सुवति ध्यायतेः संप्रसारणं चेति निर्देशादेव कर्तर्यपि श्तिप्सिद्धयेक्षतिरिति शब्द-निष्पत्तेः संभवात् ॥ मुख्यार्थानुपपत्तिं दर्शयति **न चेति** ॥ ननु यत्र मुख्येक्षणं नास्ति ततो मुख्यार्थ-स्येक्षतिधातोरपि व्यावृत्तेरर्थवद्धातोरपि लिङ्गत्वसंभवादीक्षतिपदस्य धातुपरत्वेऽपि नानुपपत्तिरित्यतोऽर्थस्य ब्रह्मणो व्यावृत्त्यवगमं विना तद्वाचकस्य धातोस्ततो व्यावृत्त्यवगमासंभवेन प्रथमोपस्थितार्थस्यैव तल्लिङ्गत्व-मुचितमित्याशयेनाविवक्षितार्थं शब्दमात्रमित्युक्तम् ॥ **तदर्थ इति** । विषयविषयिभावरूपशक्यसंबन्ध-

सूचनम् । इतिकर्तव्यताविधिशून्यसौरादियागानां पूर्वप्राप्तप्रतीतिकर्तव्यतयैवेतिकर्तव्यताकत्वमित्यर्थ-प्रतिपादके इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वमिति सप्तमस्थजैमिनिसूत्रे यजतेरिति निर्देशात्सूत्रकाराणा-मर्थविवक्षया धातुप्रयोगस्य प्रचुरत्वेन रूढलक्षणात्वेन न प्रयोजनसापेक्षत्वमस्या इति प्रयोजनाप्रदर्शनमिति द्रष्टव्यम् । ननु तर्हि तदैक्षतेत्यादिस्ताद्दशश्रुतिरेवोपादीयतामित्यत आह **विपक्ष इति ॥ व्यधिकर-णत्वेति** । पुरुषनिष्ठेक्षणस्य ब्रह्मनिष्ठवाच्यत्वव्यधिकरणत्वादित्यर्थः । यद्यप्यन्यकर्मकपुरुषनिष्ठेक्षणस्य ब्रह्मणो वाच्यत्वेन विनाऽनुपपत्तेरभावाद्ब्रह्मकर्मकस्यैव तस्य चेति ब्रह्मकर्मकत्वोपजीवनेन व्याप्तौ सत्यां न व्यधिकरणासिद्धेर्दोषत्वम् । तथाऽपीक्षणस्य ब्रह्मकर्मकत्वमुपजीवता ब्रह्मण ईक्षणकर्मत्वस्यावश्याभ्युपगम-नीयत्वात्तदुक्त्यैव च व्यधिकरणासिद्धेर्दोषत्वाग्रहणं प्रत्यपि वैयधिकरण्यपरिहारसंभवे किमिदानीं तद्दोषत्वाभावव्युत्पादनेनेत्याशयेन तद्दोषत्वाभिधानात् ॥ **तस्मादिति** । ईक्षणमेव हेतुः पक्षधर्मताप्रयोज-कसंबन्धश्च कर्मत्वलक्षण इति वा लक्षितलक्षणया सौत्रेक्षतिशब्दस्येक्षणकर्मत्वमर्थ इति वाऽस्याशयो द्रष्टव्यः ।

वाच्य एवेति भाष्यस्य सूत्रव्याख्यानतां दर्शयितुं तदनुगुणतया सौत्राशब्दशब्दं व्याख्याति **न विद्यत इति** । एवेत्यस्य सूत्राक्षरार्थत्वं दर्शयति **वाच्यमितीति ॥ द्वौ नञाविति** । 'सविशेषणे हि' इति न्यायेनावाच्यमित्यभावविशिष्टवाच्यविशेषणस्य नञो विशेषणीभूताभावविषयत्वे समभिव्याहृतं वाच्यमेव नञ्द्वयार्थः । तर्हि तद्वैयर्थ्यमित्यतो वाच्यमिति तल्लाभेऽपि नञ्द्वयेन निषेधनिषेधरूपातिशय-स्यापि लाभादवधारणसिद्धिरित्याशयः । अत्र न्यायसूत्रसम्मतिमाह **यथोक्तमिति** । अत्र पक्षप्रतिपक्ष-शब्दाभ्यां तत्साधनोपलम्भो लक्ष्यते । विमर्शशब्देन साधनोपलम्भविषयौ संभवासंभवौ द्विवचनेन मेलनम् । तथा च संभवासंभवविषयीभूताभ्यां तत्साधनोपालम्भाभ्यां स्वपरपक्षसाधनोपालम्भाभ्यां स्वपरपक्षसाधनोपालम्भसंभवासंभवाभ्यामिति यावत् मिलिताभ्यां ताभ्यामर्थावधारणं निर्णय इति तर्क-विषयनिर्णयलक्षणमेतत् । प्रत्यक्षादिसाधारणनिर्णयस्य त्वर्थावधारणमात्रं लक्षणमिति द्रष्टव्यम् ॥ **श्रुत्यर्थाभ्यामिति** । अभावाभावो भाव इति नञ्द्वयस्यापि समभिव्याहृतार्थवाचकत्वं वैयर्थ्यान्यथाः ऽनुपपत्त्या चेतरनिषेधसिद्धिरिति पक्षे नावाच्यमित्यत्र वाच्यत्वविधिः श्रौतः अवाच्यत्वनिषेधस्त्वार्थिकः । अभावाभावो भावव्याप्य इति नञ्द्वयस्य निषेधनिषेधमुखेन समभिव्यहृतार्थज्ञापकत्वमिति पक्षे तु विपरीत श्रौतार्थिकभाव इति द्रष्टव्यम् । यद्वा । नेदं नञ्द्वयस्थलाभिप्रायेणापि तु 'वाच्य एव । वह्निमानेव' इत्याद्यवधारणस्थलमात्राभिप्रायेण नञ्द्वयमप्यवधारणार्थं प्रकृतमित्येव । वाच्य एवेत्यादौ च श्रुत्या वाच्यत्वविधिरार्थिक इतरनिषेध इति द्रष्टव्यम् ।

**उत्तरवाक्योक्त**विपक्षे बाधकनिवर्त्योऽप्रयोजकत्वशङ्काप्रसक्तये एतद्वाक्याभिमतानुमानप्रकारं दर्शयन्नेव भाष्योक्तरीत्या तद्धेत्वसिद्धिपरिहारं चाह **इदमुक्तं भवतीति** ॥ ननु न चान्यथेति ब्रह्मणो वाच्यत्वाभावे लक्ष्यत्वानुपपत्तिरूपविपक्षबाधकपरोत्तरवाक्यमयुक्तम् । इष्टापत्त्या तर्काभासत्वात् । न चेक्षणीयत्वरूपहेतूच्छित्तिलक्षणविपक्षबाधकस्योत्तरवाक्याभिमततया तत्रावाच्यस्यापि लक्षणयेक्षणोपपत्तौ परेण शङ्कितायामवाच्यत्वे लक्ष्यत्वानुपपत्तिकथनान्नेष्टापत्तिशङ्केति वाच्यम् । वाच्यत्वस्येक्षणीयत्वव्यापकतया व्यापकनिवृत्त्या व्याप्यनिवृत्तेरापादयितुं शक्यतयाऽन्यथोपपत्तिशङ्काऽनवकाशात् । न चेक्षणीयत्वस्य प्रत्यक्षादिवस्तुनिमित्तकतया वाच्यत्वस्य विशेषोपाधिकृतया तथा व्याप्यव्यापकभावस्यैवानुपपत्त्या न व्याप्यनिवृत्त्या व्यापकनिवृत्तिरापादयितुं शक्येत्यन्यथोपपत्तिशङ्कोदय इति वाच्यम् । तथा सति प्रत्यक्षादिनापीक्षणोपपत्तिशङ्कासंभवेन विशिष्यलक्षणयैव तदुपपत्तिशङ्कानिरासाय भाष्यकारीययत्नानुपपत्तेरित्यत 'औपनिषदत्वान्नावचनेनेक्षणम्' इति भाष्यदिशा प्रत्यक्षादिनाऽन्यथोपपत्तिपरिहारप्रकारस्य सुगमत्वादेतदनुपपत्तिपरिहारस्य च सर्वशब्दावाच्यस्य लक्षणायुक्तेरिति भाष्येऽस्पष्टत्वाद्युक्तोऽत्रैव मूलकारीयो विशिष्य यत्न इत्याशयेन विपक्षबाधकप्रश्नपूर्वं हेतूच्छित्तिरूपविपक्षबाधकं तद्व्याप्यव्यापकभावानुपपत्तिशङ्कां भाष्यदिशा तत्परिहारप्रकारं ततो लक्षणयोपपत्तिशङ्कां च दर्शयन्नेव तन्निवर्तकतयोत्तरमूलं योजयति **नन्वित्यादिना** ॥ आपाद्यस्यानिष्टत्वं दर्शयितुमाह **तथा चेति** ॥ न तावत्स्पष्टदृष्टव्यभिचारेणानयोर्व्याप्यव्यापकभावानुपपत्तिरपि तु ब्रह्मण्येवेक्षणमन्यथा किं न स्यादिति शङ्कया सेति वाच्यम् । सा च ब्रह्मेक्षणस्य भाष्योक्तदिशा प्रकारान्तरेणानुपपन्नतया शङ्का न युक्तेत्याह **न तावदित्यादिना** । उपदिष्टमितीक्षणमेवासिद्धमिति शङ्कानिरासाय मोक्षार्थमित्युक्तिप्रयोजनकथनं भ्रान्तेरिति । तथा चौपनिषदत्वादिति भाष्यमुपलक्षणमित्युक्तं भवति ॥ **प्रकारान्तराभावे सतीति** । प्रमाणाभासप्रत्यक्षानुमानरूपेक्षणनिमित्तकारकविषयत्वे सतीत्यर्थः । तथा च वाच्यत्वाभावमात्रस्यापादकत्वासंभवेऽपि प्रकारान्तरासंभवविशिष्टस्य तस्यापादकतायां नोक्तानुपपत्तिरिति भावः । यदीक्षणीयं तत्प्रकारान्तरासंभवे सत्यवाच्यमपि नेति व्यतिरेकव्याप्तेर्घटादावेव सुप्रसिद्धत्वादन्वयव्याप्तिग्रहणस्थलाभावेऽपि नानुपपत्तिरित्याह **व्यतिरेकेति** ॥ सामान्यव्याप्तेः सुज्ञानत्वाच्च नानुपपत्तिरित्याह **यद्वदिति** । अत्र तर्कमूलव्याप्तिकथनावसरे प्रकारान्तराभावस्यापि कारकाविषय इति व्याप्यकोटिंनिवेशसूचनेन कारकान्तराभावे सतीत्यस्य ब्रह्मरूपपक्षविशेषणत्वमभिप्रेतमिति भ्रान्तिः परिहृता भवति । तथा चात्र पूर्वप्रदर्शितो वाच्यत्वेक्षणीयत्वयोरेव साध्यसाधनभावो न तु प्रकारान्तराभावे सतीत्यस्य हेत्वादिविशेषणत्वं स्पष्टदृष्टव्यभिचाराद्यभावात् अप्रयोजकत्वपरिहाराय विशेषणप्रक्षेपस्य चायुक्तत्वाद्विपक्षबाधकतर्के च सामान्यविशेषयोर्विपरीतव्याप्यव्यापकभावानुपपत्त्या व्यापकनिवृत्त्या व्याप्यनिवृत्तेरापादयितुमशक्यतया तदुप-

पादनायापादके विशेषणप्रक्षेपोऽभिमतः । तत्त्वप्रकाशिकायां तु 'औपनिषदत्वात्' इति भाष्यस्वारस्यानुरोधेन विशिष्टेक्षणीयत्वान्यथानुपपत्तिपरिशेषयोः कथनम् । अत्र त्वीक्षणीयत्वतो विष्णुर्वाच्य एवेत्यनुव्याख्यास्वारस्यानुसारेण केवलयोः साध्यसाधनभावो विपक्षबाधकतर्के च विशेषणप्रक्षेपोऽभिमत इति बोध्यम् ।

स०— **श्रुत्यननुगमादिति** । 'पुरि शयं पुरुषमीक्षते' इति पुरुषस्येक्षणकर्मतयोक्तत्वादिति भावः ॥ **अवधारणार्थमिति** । इतरकोटिव्यवच्छेदकसाहित्येन प्रकृतार्थावगाहिनिश्चयोत्पादार्थमित्यर्थः । अत एव 'प्रकृतमर्थं सातिशयं गमयत' इत्युक्तम् । इतरकोटिव्यवच्छेदलक्षणातिशयसाहित्येनेत्यर्थः ॥ **नन्ववधारणमपीति** । एतादृशज्ञानजनकप्रतिज्ञा किमर्थं कर्तव्येत्यर्थः । न्यायसारोक्तसंमतिमाह **विमृश्य पक्षेति** । विमृश्यशब्देन सन्देहो गृह्यते । विमृश्य सन्देहं संपाद्येत्यर्थः । अत्र पक्षप्रतिपक्षशब्दौ स्वपक्षसाधनपरपक्षोपालम्भनपरौ तथाच सन्देहपूर्वं स्वपक्षसाधनपरपक्षोपालम्भाभ्यामुन्नीयमानमर्थावधारणं निर्णय इत्यर्थः । परार्थनिर्णयस्येदं लक्षणम् । तेन स्वपक्षे साधनादिविना करस्थितामलकनिर्णये नाव्याप्तिरिति द्रष्टव्यम् ॥ नन्वेवं नञ्द्वयोपेततया प्रतिज्ञाकरणे परपक्षे प्रतिक्षेप एव प्रतीयते न स्वपक्षविधिः, तत्प्रापकपदाभावात् इत्याशङ्कापरिहरन्नवधारणार्थमित्युक्तमुपपादयति **तदत्रावधारणे कृत इति** । उक्तावधारणरूपज्ञानजनकनञ्द्वयप्रयोगे सूत्रकृता कृत इत्यर्थः ॥ **श्रुत्यर्थाभ्यामिति** । यथायोग्यं संबन्धो न यथाक्रमम् । वाच्यत्वविधेरुक्तप्रतिज्ञायामार्थिकत्वात् । नन्वेवं वाच्यत्वविधेरार्थिकत्वे परपक्षप्रतिक्षेपस्य च श्रुतत्वस्य प्रथमप्रतीत्यापत्त्या अप्राप्तकालत्वप्रसङ्ग इत्याशङ्कापरिहाराय सूत्रकाराभिमतप्रयोगप्रकारं दर्शयति **इदमुक्तं भवतीत्यादिना** ॥ शङ्कते **ईक्षणीयत्वं न स्यादिति** ॥ **सामान्यव्याप्तिसंभवश्चेति** । प्रकृते च शब्दलक्षणकारकाविषयो ब्रह्म । न तज्जन्ये ईक्षणरूपक्रियाविषय इति व्याप्त्यनुगमो द्रष्टव्यः ।

प०— **अत्रेति** । सूत्रे ॥ **तदर्थ इति** । धात्वर्थो दर्शनरूप इत्यर्थः । अर्थोऽनेनोपलक्ष्यत इत्यनुक्त्वा तदर्थ इति शक्यसंबन्धद्योतनार्थम् ॥ **श्रुत्यननुगमादिति** । पुरुषमीक्षत इति श्रुतौ पुरुषस्येक्षणकर्मतयोक्तत्वादित्यर्थः ॥ **विपक्ष इति** । ब्रह्म वाच्यं ईक्षणकर्तृत्वात् इत्यत्र अस्त्वीक्षणकर्तृत्वं मास्तु वाच्यत्वम् इत्यत्र बाधकाभाव इत्यर्थः ॥ **अवधारणार्थमिति** । अशब्दमिति प्रागुक्तश्रुत्यनुगमाय चेत्यपि ध्येयम् । तेन वाच्यमेवेति कुतो न सूत्रितमिति । तथा तत्तु इति पूर्वसूत्रात्तुशब्दमनुवर्त्य तत् वाच्यं तु इति योजनायामपि वाच्यमेवेतिलाभादीक्षतेर्वाच्यमित्येव सूत्रणीयमिति च चोद्यं निरस्तं ध्येयम् । तत्पदान्वितावधारणार्थतुशब्दस्य तत्पदान्वयभङ्गेनान्यत्रान्वये तत्त्वित्याध्यायसमाप्तिप्रतिनयं साध्यार्पकतयाऽनुवृत्त्यनापत्तेश्चेति ॥ **अवधारण(णार्थ)मपीति** । अवधारणार्थकनञ्द्वयमपीत्यर्थः । **यथोक्तमिति** । तार्किकैः ॥ **विमृश्येति** । पक्षप्रतिपक्षाभ्यां विमृश्य जायमानं अर्थावधारणमित्यर्थः ॥

**श्रुत्यर्थाभ्यामिति** । यथाक्रममन्वयः । सूत्रे नाशब्दमित्युक्तेर्वाच्यमेवेति विन्यासस्याभिमतत्वात् । अत एव चाग्रे ब्रह्म वाच्यं न अवाच्यमेव इति चेत्युक्तम् । **एवमन्यत्रापीति** । 'हेयत्वावचनाच्च' 'अन्यत्राभावाच्च न तृणादिवत्' 'अम्बुवदग्रहणात्तु न तथात्वम्' इत्यादावित्यर्थः । यद्वा अन्यत्रापि आनन्दमय इत्यादौ तस्त्वित्यवधारणकृत्यं ध्येयमित्यर्थः ॥ कथमत्र प्रयोग इत्यत आह **इदमुक्तं भवतीति** । ईक्षणकर्मत्वात् ज्ञानकर्मत्वादित्यर्थः ॥ हेतोरसिद्धिं निरस्याप्रयोजकतामाशङ्कते **ननु ब्रह्मण** इत्यादिना **नैवमिति**पर्यन्तेन । सिद्धान्ती हेतूच्छित्तिबाधकमाशङ्कते **ईक्षणीयत्वं न स्यादित्यादिना** ॥ पूर्ववादी निराह **इति चेन्नेति** । अव्यापकत्वादिकमेव व्यतिरेकमुखेन व्यनक्ति **ईक्षणीयत्वं हीति** ॥ **वृत्तिविशेषेति** । शक्तिरूपेति भावः ॥ **न च व्याप्त्यभाव इति** । वाच्यत्वरूपसाध्याभावस्य शब्दैकजन्यत्वविषयत्वरूपहेत्वभावेन सह व्याप्त्यभाव इत्यर्थः । सर्वस्यापि वस्तुनो वाच्यत्वेन साध्याभावस्य क्वाप्यभावादिति भावः । यत्र शब्दैकसमधिगम्यत्वं तत्र वाच्यत्वं यथा धर्मादीति दृष्टान्तसंभवाद्व्यतिरेकव्याप्तिसंभवादित्युक्तम् ॥ **तत्क्रियाऽविषय इति** । तज्जन्यक्रियाया अविषय इत्यर्थः ।

**या०— धातुनिर्देश इति** । 'इक्श्तिपौ धातुनिर्देशे' इति स्मरणादिति भावः ॥ तदर्थ इति शक्यसम्बन्धद्योतनार्थम् ॥ **श्रुत्यननुगमादिति** । 'पुरुषमीक्षते' इति श्रुतौ पुरुषस्येक्षणकर्मतयोक्तत्वादिति भावः ॥ **अवधारणार्थमिति** । अवधारणस्यैवकारस्यार्थ इति कोटिव्यवच्छेदरूपो यस्य तदवधारणार्थमित्यर्थः ॥ **अवधारणमपीति** । अवधारणार्थकं नञ्द्वयमपीत्यर्थः ॥ न्यायसूत्रसम्मतिमाह **यथोक्तमिति** । विमृश्य संशय्य पक्षप्रतिपक्षाभ्यां स्वपक्षसाधनपरपक्षोपालम्भाभ्यामर्थतत्त्वावधारणं निर्णय इति सूत्रार्थः । अत्र संशयोत्तरनिर्णयस्यैव लक्ष्यत्वेनाभिमतत्वात् । करतलामलकादिनिर्णयेऽव्याप्तिकथनमसङ्गतम् । परपक्षशब्देन च स्वानभिमतपक्षो ग्राह्यः । न तु परोदीरित एवातः स्वस्यैव विमर्शानन्तरं जायमाने निर्णये पराभावादव्याप्तिशङ्काऽनवकाश इति ध्येयम् ॥ नन्वेवं नञ्द्वयेन प्रतिज्ञाकरणे परपक्षप्रतिषेध एव प्रतीयते न स्वपक्षविधिस्तत्प्रापकपदाभावादित्याशङ्कां परिहरन् अवधारणार्थमित्युक्तमुपपादयति **तदत्रावधारण इति** । अवधारणार्थकनञ्द्वयप्रयोगे सूत्रकृता कृत इत्यर्थः ॥ **श्रुत्यर्थाभ्यामिति** । अत्र यथायोग्यं सम्बन्धो न यथाक्रमम् । वाच्यत्वविधेरुक्तप्रतिज्ञायामार्थिकत्वात् ॥ **एवमन्यत्रापीति** । 'अन्तस्तद्धर्मोपदेशादि'त्याद्यधिकरणेष्वपि पृथक् परपक्षोपालम्भादर्शनात् । तस्त्वित्यनुवर्तितावधांरणेन प्रतिज्ञाते परपक्षोपालम्भेऽपि तद्धर्मोपदेशादिरेव हेतुरिति वेदितव्यम् । यत्र द्वितीयाद्यध्यायेषु प्रतिज्ञायामवधारणं न दृश्यते । तत्रापि तदध्याहारेण सिद्धान्तहेतुरुभयसाधनार्थो वेदितव्य इत्यर्थः । अतो न तत्र निर्णयलक्षणाव्याप्तिरिति भावः ॥ नन्वत्र वाच्यत्वविधेरार्थिकत्वे परपक्षोपालम्भस्यैव प्रथमप्रतीत्याऽप्राप्तकालत्वप्रसङ्गादित्याशङ्कापरिहाराय सूत्रकाराभिप्रेतप्रयोगप्रकारं दर्शयति **इदमुक्तं भवतीत्या-**

**दिना** । लाघवाय सूत्रस्य तथात्वेऽपि प्रयोगसमये वाच्यत्वमेव प्रथमं प्रतिज्ञायां वक्तव्यम् । अतो नोक्तदोष इति सूत्रकाराशय इति भावः ॥ शङ्कते ॥ **ईक्षणीयत्वं न स्यादिति** । नन्वीक्षणीयत्ववाच्यत्वयोरुभयोरपि केवलान्वयित्वेन समव्याप्ततया कथं वाच्यत्वस्याव्यापकत्वादित्यादिकमित्यतस्तदभिप्रायमाह **ईक्षणीयत्वं हीति** । अनयैव विवक्षयेक्षणीयत्वस्याव्यापकत्वं चोक्तम् । न तु व्यभिचारदर्शनेनेति भावः ॥ सत्यमीक्षणीयत्वं बहुविशेषनिमित्तकं व्यापकमेव भवितुं युक्तमिति तथाऽपीतरविशेषप्रतिषेधसहकृतम् तद्वाच्यत्वव्याप्यमपि भवितुमर्हतीत्यत ईक्षणीयत्वं न स्यादिति बाधकाभिधानं युक्तमेवेत्याह **न तावदिदमित्यादिना** ॥ **सामान्यव्याप्तीति** । प्रकृते च शब्दलक्षणकारकविषयो ब्रह्म न तज्जन्येक्षणरूपक्रियाविषय इति व्याप्त्यनुगमो द्रष्टव्यः ॥

**श्री० — तदर्थ इति** । ईक्षतिधात्वर्थरूपमीक्षणमित्यर्थः ॥ **विपक्ष इति** । ईक्षतिकर्तृत्वाद्यदि वाच्यत्वं साध्येत तदाऽस्त्वीक्षणकर्तृत्वं मास्तु वाच्यत्वमित्यप्रयोजकताशङ्कायां बाधकाभावादित्यर्थः ॥ **व्यधिकरणत्वेति** । ब्रह्मवाच्यमीक्षणस्य ब्रह्मकर्मकत्वादिति व्यधिकरणत्वेत्यर्थः ॥ **वाच्यत्वाभाव इति** । ईक्षणीयत्वमङ्गीकृत्य वाच्यत्वाभावाङ्गीकार इत्यर्थः । अप्रयोजकताशङ्कायामिति यावत् । सिद्धान्ती हेतूच्छित्तिमेव बाधकमाशङ्कते **ईक्षणीयत्वमिति** । ब्रह्मणो वाच्यत्वाभाव इति वर्तते ॥ **तथा चेति** । ईक्षणीयत्वाभाव इत्यर्थः ॥ **ब्रह्मज्ञानेति** । ब्रह्मकर्मकज्ञानेत्यर्थः ॥ **वाच्यत्वस्येति** । यदि ईक्षणीयत्वस्य वाच्यत्वं व्यापकं स्यात्तदा व्यापकीभूतवाच्यत्वाभावेन व्याप्यभूतेक्षणीयत्वाभावस्यापादनं सम्भवति । न चैवमित्यर्थः । अव्यापकनिवृत्तरव्यापकीभूतवाच्यत्वनिवृत्तिः । अव्याप्यनिवृत्तिमव्याप्यभूतेक्षणीयत्वनिवृत्तिम् । तथात्वेऽयोगोलके धूमनिवृत्त्या वन्हिनिवृत्तिरपि स्यादित्यतिप्रसङ्ग इति भावः ॥ ईक्षणीयत्वस्य व्याप्यत्वाभावमुपपादयति **ईक्षणीयत्वं हीति** । व्यापकं वाच्यत्वापेक्षयाऽधिकवृत्तित्वादिति भावः । **वृत्तिविशेषः** शक्तिरूपशब्दवृत्तिविषयत्वरूपं वाच्यत्वमित्यर्थः । तथा चेक्षणीयत्वापेक्षया न्यूनवृत्तित्वेन वाच्यत्वस्याव्यापकत्वात्तदभावेऽपि प्रत्यक्षादिनेक्षणीयत्वं सम्भवतीति भावः ॥ **मोक्षार्थमिति** । **अविद्या**निवृत्तिरूपमोक्षार्थमित्यर्थः ॥ **व्याप्त्यभाव इति** । वाच्यत्वस्य केवलान्वयित्वेन तदभावस्य कुत्राप्यभावेन तर्के व्याप्त्यभावादिति भावः ॥ **व्यतिरेकेति** । यत्रेक्षणीयत्वं तत्र वाच्यत्वं यथा घट इति व्यतिरेकव्याप्तिः सम्भवतीति भावः ॥ **तत्क्रियेति** । तत्कारकजन्यक्रियेत्यर्थः

**च० — धातुनिर्देश इति** । 'इक्श्तिपौ धातुनिर्देशे वक्तव्यौ' इति कात्यायनोक्तेरिति भावः । धातुस्वरूपप्रत्यायकेन श्तिबन्तेन स्ववाच्यधातुवाच्यत्वसंबन्धसत्त्वेनेक्षणं लक्ष्यते तस्य च स्वनिरूपितकर्मतासंसर्गेण हेतुत्वमीक्षणकर्मत्वस्य हेतुत्वमिति चानर्थान्तरमित्यभिप्रेत्याहोक्तमित्यन्तेन ॥ **द्वौ नञाविति** । 'व्यर्थं सत्किञ्चिज्ज्ञापयति' इति परिभाषया नञ्द्वयाविनिर्मोकेप्यर्थप्रतीतौ जायमानायां

समासघटकप्राथमिकनञा समभिव्याहृतो द्वितीयो नञ्,स्वाभावासामानाधिकरण्यरूपातिशयं प्रकृतेऽर्थे ध्वनयतीत्याशयः । तेन 'भूतले घटो न पटश्च न' इत्यादावप्येतन्न्यायसञ्चारापत्तिरिति क्षत्यनवकाशः । न चैवमपि भूतलमस्नेहं न जलं गन्धवदित्यादौ दर्शितन्यायसञ्चारापत्तिः 'भूतले घटो नेति न' इत्यादौ उक्तन्यायसञ्चारानापत्तिश्च दुर्वारैवेति वाच्यम् । प्रतियोगितासंसर्गावच्छिन्नकिञ्चिद्धर्मावच्छिन्नप्रकारतानिरूपिताभावत्वाद्यवच्छिन्नविशेष्यतारूपेण तदवच्छिन्ना वा तादृशसंसर्गावच्छिन्ना या प्रकारता तन्निरूपितस्वोपस्थाप्यतावच्छेदकावच्छिन्नविशेष्यताशालिशाब्दबोधौपयिकाकाङ्क्षाशाली नञ्,स्वोपस्थाप्यार्थे तादृशप्रकारतापन्नाभावासामानाधिकरण्यरूपातिशयं प्रकाशयतीत्यत्र तात्पर्यात् । तेन 'चैत्रमैत्रौ दण्डं वहत' इत्यादावेकत्वविशिष्टदण्डकर्मकवहनक्रियाकर्तृत्वं चैत्रमैत्रोभयत्वावच्छेदेन यथा प्रतीयते तद्वत्प्रकृतेऽपि नञ्द्वयत्वावच्छेदेनैकार्थगमकत्वं भायात् । तत्तु बाधितम् । प्रथमनञा बोध्याभावादतिरिक्ताभावस्य भावरूपस्य द्वितीयनञ्बोध्यत्वादिति निरस्तं वेदितव्यम् ॥ **अवधारणार्थमिति** । परपक्षप्रतिक्षेपसाहित्येन स्वपक्षाधिगमार्थमित्यर्थः । प्रकृतप्रतीकमुपाददाना अवधारणार्थकं नञ्द्वयमपीत्यर्थ इत्यप्यार्तीथपन् ॥ अभिहितार्थे न्यायसूत्रं प्रमाणयति **यथोक्तमिति** । विमृश्य संशय्य पक्षप्रतिपक्षाभ्यां वादिप्रतिवाद्यभिमतविधिनिषेधकोटिभ्याम् । तथा च तादृशकोटिद्वयवृत्तिविरोधघटितधर्मावच्छिन्नप्रकारताशालिसन्देहोत्तरकालीनार्थावधारणत्वं निर्णयलक्षणमिति समुदितार्थः । अत्र च तादृशसन्देहोत्तरकालीननिर्णयपदवाच्यत्वस्य लक्ष्यतावच्छेदकतामुपेत्य सन्देहानुत्तरकालीननिर्णयेऽव्याप्तिर्निरसनीया । कथाफलीभूतनिर्णयेतरेषु विशेषादर्शनसाधारणधर्मदर्शनादिघटितसामग्रीनिष्पाद्यस्थाणुत्वादिसन्देहोत्तरकालीनपुरुषत्वादिनिर्णयेषु कोटिद्वये वादिप्रतिवाद्यभिमतत्वाभावनिबन्धना व्याप्तिस्तत्र तादृगंशानिवेशेनैव परिहरणीया । न तूक्तदिशा नञ्द्वयस्य प्रतिज्ञावाक्यघटकतायां तदधीनान्वयबोधे परपक्षप्रतिविहितिरेव भायात् , न स्वपक्षविधिस्तत्प्रत्यायकपदराहित्यादित्याशङ्कायां श्रूयमाणपदसमभिव्याहारेण परपक्षप्रतिषेधो भासते उदीच्यबोधेऽर्थात्स्वपक्षविधिरित्याशयेन समाधत्ते **तदत्रावधारण इति** । उक्तदिशावधारणफलकनञ्द्वयघटितसौत्रविन्यासाश्रयण इत्यर्थः ॥ **श्रुत्यर्थाभ्यामिति** । यथायोग्यं संबन्धो न यथाक्रमं वाच्यत्वविधेरुक्तप्रतिज्ञायामार्थिकत्वात् । अभावाभावो भाव इति नञ्द्वयस्यापि समभिव्याहृतार्थवाचकत्ववैयर्थ्यान्यथाऽनुपपत्त्या चेतरनिषेधसिद्धिरिति पक्षे नावाच्यमित्यत्र वाच्यत्वविधिः श्रौतः अवाच्यत्वनिषेधस्त्वार्थिकः अभावाभावो भावव्याप्य इति नञ्द्वयस्य निषेधनिषेधमुखेन समभिव्याहृतार्थज्ञापकत्वमितिपक्षे तु विपरीतः श्रौतार्थिकभाव इत्यपि स्थितम् ॥ **एवमन्यत्रापीति** । परपक्षप्रतिविधायकनञादिसमभिव्याहारविनिर्मुक्तेष्वन्तरित्यादिनयेषु तत्तु समन्वयात् इत्यतस्तादृशतुशब्दसर्वनाम्नोराऽध्यायसमाप्ति प्रधानसूत्रेष्वनुवृत्तेः समर्थिततया समीहितं सेत्स्यतीति ध्येयम् । यादृशस्थले नावधारणार्थकपदसमभिव्याहारस्तत्र

तत्पूरणेनैव निर्वाह इति भावः । नन्वेवं सति सूत्रघटकपदविन्यासेनानाकाङ्क्षितपरपक्षप्रतिषेधावगाहि ध्र-न्वयधीरेवोदीयादित्यप्राप्तकालताप्रसङ्ग इत्याशङ्कापरिजिहीर्षया सूत्रकृदभिप्रेतस्थापनाभङ्गीं दर्शयति **इदमुक्तं भवतीत्यादि** ॥ लाघवानुरोधेन सूत्रघटकपदानुपूर्व्यास्तादृशत्वोपगमेऽपि स्थापनायां प्रतिज्ञा-घटकतया वाच्यपदमेव निर्देष्टव्यं प्राथम्येनातो नोक्तक्षतिरिति सूत्रकृदाशय इति भावः । अत एव अथशब्दानुशासनमिति भाष्यप्रतीकव्याख्यावसरे अथशब्दः प्रारम्भस्य द्योतकः न तु वाचकः निपात-त्वात् चादिवदित्याद्याकरप्रयोगः सङ्गच्छत इति भावः ॥ शङ्कते **ईक्षणीयत्वं न स्यादिति** । वाच्यत्वेक्ष-णीयत्वयोः केवलान्वयित्वेन परस्परममनियततया वाच्यत्वस्याव्यापकत्वादित्यादिकं सौवं कथं सङ्गमनीय-मित्यतः स्वाशयमाविर्भावयति **ईक्षणीयत्वं हीति** । वाच्यत्वस्याव्यापकत्वोक्तिर्नेक्षणीयत्वसमानाधिकरणा-भावप्रतियोगित्वदर्शननिबन्धना किन्तूक्तविवक्षाविशेषनियन्त्रितैवेति भावः । शब्देतरजन्यज्ञानविषयत्व-बाधसहकृतं ज्ञानविषयत्वं वाच्यत्वव्याप्यं भवतीति बाधकाभिधानं सङ्गच्छत इत्याह **न तावदिद-मित्यादिना** ॥ **व्यतिरेकसंभवादिति** । दर्शितबाधसहकृतशब्दज्ञानविषयत्वरूपापाद्यव्यतिरेकस्य वाच्यत्वरूपापादकव्यतिरेकस्य च व्याप्यव्यापकभावसंभवादित्यर्थः ॥ **सामान्यव्याप्तीति** । कारक-विषयत्वाभावत्वस्य क्रियाविषयत्वाभावत्वस्य च शब्दरूपकारकविषयत्वाभावत्वज्ञानरूपक्रियाविषयत्वाभ्यां सामान्यधर्मत्वादिति भावः ।

---

**सु० — ननु मा भूत्प्रमाणाभासैः प्रत्यक्षानुमानाभ्यां चेक्षणं ब्रह्मणः, मा च भूद्वाच्यम्; तथाऽपि शब्दलक्ष्यतयेक्षणीयं च भविष्यति; तथा च विपक्षे बाधकाभावादप्रयोजको हेतुः; इत्यत आह** न चेति ।

**अनु० —** न चान्यथा ॥

लक्ष्यत्वं क्वापि दृष्टं हि

**हि यस्मादन्यथा वाच्यत्वाभावे लक्ष्यत्वं क्वापि न दृष्टम् । तस्मादवाच्यत्वे ब्रह्मणो लक्ष्यत्वा(योगा)भावाल्लक्षणयाऽपि नेक्षणीयत्वमिति शेषः । केनचिच्छब्देन वाच्यमेव हि तीरादिकं केनचिल्लक्ष्यं दृष्टमिति ।**

**वा० —** ननु शब्दवचनवृत्त्यविषयस्यापि लक्षणया शब्दवृत्तिविषयत्वसंभवात्प्रकारान्तरासंभवो-ऽसिद्ध इति नेदं बाधकमित्याशङ्कते **नन्विति** ॥ फलमाह **तथा चेति** ॥ ननु वाच्यत्वाभावे लक्ष्यत्वा-दृष्ट्युक्तिमात्रेण न किञ्चिदपि विपक्षबाधकमुक्तं भवतीत्यतस्तदुक्तिलब्धं विपक्षे बाधकं तत्फलतयोक्ताशङ्का-निवृत्तिं च शेषपूरणेन मूलार्थतया दर्शयति **तस्मादिति** । ननु विपक्षबाधकतर्कव्याप्तिर्न सुग्रहेत्यतोऽन्यथा ।

न दृष्टमित्येतन्मूलल्कधां व्यतिरेकव्याप्तिं दर्शयति **केनचिदिति**। एतद्विशेषणं च गङ्गापदलक्ष्यस्यापि तीरस्य तत्पदवाच्यत्वाभावादयुक्तमित्यतो न लक्षकपदवाच्यत्वमेव लक्ष्यस्य वयमाशास्महेऽपि तु तदन्यत्किञ्चित्पदवाच्यत्वमतो न दोष इति सूचनाय। यद्वा। तत्पदवाच्यत्वाभाव एव तल्लक्ष्यत्वं दृष्टमिति कथं न दृष्टमित्युक्तिरित्यतः स्वाभिप्रायप्रकटनाय केनचिदित्यादि। अनेन वाच्यत्वाङ्गीकारे लक्ष्यत्वस्य सूपपादत्वान्न प्रतिप्रसङ्ग इत्यपि सूचितं भवति।

प०— न तावदित्यादिना ईक्षणीयत्वहेतोरप्रयोजकत्वं हि कारणान्तरजन्यज्ञानविषयत्वनिमित्तं वृत्त्यन्तरविषयत्वनिमित्तं च। तत्राद्यं शास्त्रयोनिसूत्रादिपर्यालोचनया सुपरिहरमिति स्वयं परिहृत्य द्वितीयाप्रयोजकत्वचोद्यनिवर्तकतया मूलमवतारयति **ननु मा भूदित्यादिना**। वाच्यत्वस्य लक्ष्यत्वाव्यापकत्वात्कथं तदभावेन लक्ष्यत्वाभावापादनमित्यत आह **केनचिच्छब्देनेति**।

या०— ननु वाच्यत्वस्य लक्ष्यत्वाव्यापकत्वात्कथं तदभावेन लक्ष्यत्वाभावापादनमित्यत आह **केनचिच्छब्देनेति**। वह्निमानेव धूमवानित्यादौ वन्ह्यादेरिव वाच्यमेव लक्ष्यमित्युक्ते वाच्यत्वस्य व्यापकतोक्ता भवतीति ज्ञातव्यम्। यद्वा। गङ्गाशब्दावाच्यमपि तीरं तल्लक्ष्यं दृष्टमित्युक्ततर्के व्यभिचार इत्यत आह **केनचिच्छब्देनेति**। तथा च वाच्यत्वसामान्याभावस्यापादकतयाऽत्र विवक्षितत्वान्नोक्तव्यभिचार इति भावः।

---

**सु०— नन्ववाच्यमपि लक्ष्यं किं न स्यात्। ततश्च विपक्षे बाधकाभावादप्रयोजकोऽयं प्रसङ्गहेतुः; इत्यत आह** किं तदिति।

**अनु०—　　　किं तदित्यनवस्थितिः ॥**

**अन्यथेत्यनुवर्तते। यद्यवाच्यमपि ब्रह्म लक्ष्यमित्यङ्गीक्रियते; तदा किं तदिति जिज्ञासाप्रवृत्तावनवस्थितिः (स्यात्)। इदमुक्तं भवति। लाक्षणिको हि शब्दो न श्रुतमात्रोऽर्थान्तरे धियमुपजनयति तत्रागृहीतशक्तित्वात्। किन्तु वाच्यार्थ(र्थे)बुद्धिमुत्पाद्य तदनुपपत्तिदर्शने सति। न तावताऽपि। वाच्यार्थानुपपत्तिदर्शनस्य तत्त्यागमात्रहेतुत्वात्। किं नामार्थान्तरस्य स्वरूपतो वाच्यार्थसंबन्धितया चावगतौ सत्याम्। गङ्गादिशब्देन हि स्वरूपतो गङ्गादिसंबन्धितया चावगतमेव तीरादिकं लक्ष्यं दृष्टम्। नानवगतस्वरूपं कूर्मरोमादि। नाप्यन्यसंबन्धितयाऽवगतं तीरादि। तथा च वैदिकशब्दलक्ष्यत्वे ब्रह्मणः प्रतीतिरङ्गीकार्या। न च तीरादिवत्प्रत्यक्षादिना तस्य प्रतीतिः (संभवति)। ततो लाक्षणिकशब्दे प्रयुक्ते वाच्यार्थेऽनुपपत्तिं पश्यतो लक्षणीयेऽर्थे किं तद्यदनेन लक्ष्यमिति जिज्ञासायां शब्द एव प्रयोक्तव्यः। तेनापि चेन्न वाच्यं**

**किन्तु लक्ष्यमेव तर्हि पुनः किं तदिति जिज्ञासाया अनिवृत्तत्वाच्छब्दान्तरमेव वाच्यम् । तेनापि चेल्लक्ष्यमेव पुनर्जिज्ञासैवेत्यपर्यवसानं स्यात् । पूर्वपूर्वलक्षणाऽसिद्धावुत्तरोत्तरलक्षणाऽसिद्धे- र्मूलक्षतिः । यदि च केनचिच्छब्देन वाच्यं स्यात्तदा तदुक्तावुपरतजिज्ञासो लाक्षणिकार्थं प्रतीयात् । वाच्यत्वेऽपि संबन्धग्रहणाय पूर्वसिद्धेरपेक्षितत्वेनानवस्थितेरिति चेन्न । अभिमान्य- धिकरणे वक्तव्यत्वात् । तस्माद्विपक्षेऽनवस्थालक्षणबाधकसद्भावादवाच्यत्वे लक्ष्यत्वं न स्यादिति युक्तोऽतिप्रसङ्ग इति ।**

वा० — 'किं तदित्यनवस्थितिः' इत्यापाद्यं प्रत्यापादकस्य मूलारूढतायै अन्यथेत्यनुवर्त्य प्रकृतो- पयोगितया तदर्थमाह **अन्यथेति** । किं तदित्यस्यानवस्थाप्रकारप्रदर्शकत्वाभावादनवस्थाप्रयोजकप्रदर्शकत्वं दर्शयति **जिज्ञासाप्रवृत्ताविति** ॥ ननु जिज्ञासाप्रवृत्तौ तन्निवृत्तये लक्षकशब्द एव प्रयोक्तव्ये खल्वनवस्था स्यात् । न चैतदस्ति । नियमेन जिज्ञासाप्रवृत्तौ नियामकाभावात् । न च लक्ष्यार्थप्रतीतिपूर्वकत्वा- ल्लक्षणाया लक्ष्यार्थजिज्ञासानियम इति वाच्यम् । शक्तिस्थल इव लक्षणास्थलेऽपि शब्दश्रवणमात्रेण वा शक्यार्थानुपपत्तिप्रतिसन्धानसहकृतेन वा तेनार्थप्रतीत्युपपत्त्या पूर्वं लक्ष्यार्थप्रतीतेर्नियामकाभावेनानावश्य- कत्वात्तदावश्यकत्वेन जिज्ञासाप्रवृत्तौ वा तीरादिवत्प्रत्यक्षादिनाऽपि लक्ष्यार्थप्रतीत्युपपत्त्या न शब्द एव प्रयोक्तव्य इति नियमः । तत्प्रयोगनियमे वा वाचकशब्दप्रयोगेनाप्युपपत्तौ लाक्षणिकशब्दप्रयोगनियमो- ऽप्यनावश्यक एव । तस्याप्यावश्यकत्वे परम्परामात्रसद्भावेऽपि मूलक्षयाभावान्नानवस्था । अथाऽपि तदापत्तौ शक्तिपक्षेऽपि तस्यास्तुल्यत्वात् । वाच्यत्वपक्षोऽप्ययुक्त एवेति नेदमापादनं युक्तमित्यतो मूलाभिप्रायमाह **इदमुक्तं भवतीति** । अत्र 'लाक्षणिको ही'त्यादिनाऽन्यथासिद्धिशङ्कानिरासः । 'गङ्गादिशब्देन ही'त्यादिनाऽन्वयव्यतिरेककथनम् । तथा चानन्यथासिद्धान्वयव्यतिरेकाभ्यां लक्ष्यार्थ- प्रतीतेः कारणत्वसमर्थनमिति द्रष्टव्यम् ॥ **पूर्वपूर्वेति** । लक्षणाप्रयोजकप्रतीतिकारणत्वेन कल्प्यमान- लक्षणायाः पूर्वत्वं प्रयोज्यायाश्चोत्तरत्वम् तथा च पूर्वपूर्वलक्षणाऽसिद्धयोत्तरोत्तरलक्षणाया अप्यसिद्धया ब्रह्म शब्दगम्यमिति प्रामाणिकस्य हानिरिति प्रयोजनपरिक्षय इति वा, सर्वशब्दावाच्यं ब्रह्म, लक्षणया शब्दगम्यमित्यस्य प्रामाणिकत्वे हि तद्बलात्तत्प्रयोजकतया लक्षणान्तरं कल्पनीयं स्यादिति कल्पकलक्षणायाः पूर्वत्वं कल्प्यायाश्चोत्तरत्वम् तथा च कल्पकीभूतपूर्वपूर्वलक्षणाऽसिद्धौ कल्प्यभूतोत्तरोत्तरलक्षणाया असिद्धिरिति कल्पकपरिक्षयो वा मूलक्षय इत्यर्थः ॥ **संबन्धग्रहणायेति** । संबन्धज्ञानस्य संबन्धिज्ञान- पूर्वकत्वादित्याशयः ॥ **अभिमान्यधिकरण इति** । 'शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः' इत्यभिमान्यधिकरणे लोकतो गृहीतसङ्गतिकावयवार्थे संसर्गस्य यौगिकेन शब्देन समासेन वाऽपूर्वस्यैव प्रतीतेस्तत्र व्युत्पत्तेरनपेक्षणात् ब्रह्मणश्चसंसृष्टावयवार्थरूपतया तत्प्रतीतिसंभवस्य वक्ष्यमाणत्वादित्यर्थः ।

न चैवं मत्पक्षेऽपि लक्षणाप्रयोजकब्रह्मप्रतीत्युपपत्तिरिति वाच्यम् । त्वया ब्रह्मणः संसर्गरूपत्वस्य संसृष्टरूपत्वस्य वाऽनभ्युपगमेन तस्य वाक्यार्थरूपत्वाभावाद्वाक्यस्याखण्डार्थनिष्ठतायाश्च निरस्तत्वादित्यनुपदमेव वक्ष्यमाणत्वादिति भावः ।

प्र० — **प्रसङ्गहेतुरिति** । प्रसञ्जनहेतुरापादकमिति यावत् । वस्तुतस्तु प्रसङ्गसहितो हेतुः । तथाच प्रसङ्गस्याप्रयोजकत्वे हेतोरप्यप्रयोजकत्वमित्यर्थः । अन्यथा हेतुशब्दवैयर्थ्यापत्तेरिति द्रष्टव्यमित्याहुः । **अभिमान्यधिकरण इति** । 'शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः' इति वक्ष्यमाणत्वादित्यर्थः । यौगिकैः शब्दैर्वाक्यार्थमर्यादयाऽपूर्वार्थोपस्थितौ तत्रेतरपदशक्तिग्रहोऽस्मन्मते संभवति । नैवं त्वया वक्तुं शक्यते । ब्रह्मणोऽखण्डस्या संसर्गभेदरूपतया वाक्यार्थरूपत्वाभावादित्याशयः ।

प० — **प्रसंगहेतुरिति** । प्रसङ्गरूपहेतुः दूषणानुमानमित्यर्थः ॥ अन्यथेत्यनुवर्तत इत्युक्तं तस्यार्थमाह **यद्यवाच्यमपि ब्रह्म लक्ष्यमित्यङ्गीक्रियेतेति** ॥ स्वव्याघातकोऽयं तर्क इति शङ्कते **वाच्यत्वेऽपीति** ॥ **पूर्वसिद्धेरिति** । संबन्धस्य द्विनिष्ठत्वेन संबन्धज्ञानस्य संबन्धिज्ञानाधीनत्वात् शब्दरूपसंबन्धिनः प्रत्यक्षत्वेऽपि ब्रह्मरूपसंबन्धिन औपनिषदत्वेन शब्देनैव पूर्वं तत्सिद्धेर्वाच्यत्वेन तत्राप्येवमित्यनवस्थेत्यर्थः ॥ **अभिमान्यधिकरण इति** । यौगिकानां शब्दानां वाक्यतुल्यतया पृथक् सङ्गतिग्रहणानपेक्षत्वादित्यादिसमाधानानां 'शास्त्रोक्तवस्तुनश्चैव(स्त्वेव) व्युत्पत्तिः शास्त्रलिङ्गतः' इत्येतद्व्याख्याप्रस्तावे वक्ष्यमाणत्वादिति भावः । वक्तव्यत्वादित्यनेन तदधिकरणव्युत्पाद्यमिदमिति दर्शितम् । युक्तोऽतिप्रसङ्ग इत्यादौ अतिप्रसङ्गशब्दः प्रसङ्गपर्यायः । तथा च न 'अति'इत्यस्याधिक्यशङ्केति भावः ।

या० — **प्रसङ्गहेतुरिति** । प्रसङ्गरूपो हेतुर्दूषणानुमानमिति यावत् । प्रसङ्गः प्रसञ्जनम् । तत्र हेतुरापादकमित्यन्ये । वस्तुतस्तु प्रसङ्गसहितो हेतुः प्रसङ्गहेतुः । उभयोरप्यप्रयोजनत्वमित्यर्थः । ईक्षणीयत्वहेतोरप्रयोजकत्वशङ्कायां लक्ष्यत्वं न स्यादिति प्रसङ्गोऽभिहितः । अस्य चाप्रयोजकत्वे हेतोरप्रयोजकत्वं तदवस्थमेवेत्याशयः ॥ **अभिमान्यधिकरण इति** । 'शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः' इत्यत्र यौगिकैः शब्दैर्वाक्यमर्यादयाऽपूर्वार्थोपस्थितौ तत्रेतरपदशक्तिग्रहोऽतो नानवस्थेति वक्ष्यमाणत्वादित्यर्थः । नैवं परेण वक्तुं शक्यम् । ब्रह्मणोऽखण्डस्यासंसर्गभेदरूपतया वाक्यार्थरूपत्वाभावादित्याशयः । युक्तोऽतिप्रसङ्ग इत्यादावतिप्रसङ्गशब्दः प्रसङ्गशब्दपर्यायः अतो'ऽती'त्यस्य वैयर्थ्यशङ्काऽनवकाश इति ध्येयम् ।

श्री० — **प्रसङ्गहेतुरिति** । अवाच्यत्वे लक्ष्यत्वं न स्यादिति प्रसङ्गे हेतुरापादकभूतमवाच्यत्वमप्रयोजकमित्यर्थः ॥ **पूर्वपूर्वलक्षणाऽसिद्धाविति** । एवं लक्षणापरम्पराश्रयणे तत्रैव कालपर्यवसानापत्त्या मूलभूतप्रकृतलक्षणायाः कर्तुमवकाशाभावेन मूलक्षयकरत्वादनवस्था दूषणमित्याशयः ॥ सम्बन्धेति ।

एकेन पदेन ब्रह्मणो वाच्यत्वं ज्ञातव्यम् । तत्र वाच्यत्वस्य सम्बन्धरूपत्वेन सम्बन्धज्ञाने च सम्बन्धिज्ञानस्य कारणत्वात्सम्बन्धिभूतब्रह्मज्ञानेन भाव्यं तज्ज्ञानं च न प्रमाणान्तरेणेति पदेनैव वाच्यम् । तदपि वाचकमेव । तेन च पुनर्वाच्यत्वे ज्ञातव्ये तस्य सम्बन्धरूपत्वेन सम्बन्धिज्ञानापेक्षायामनवस्था स्यादिति भावः । वैदिकपदानां यौगिकतया तैरपूर्वार्थोपस्थित्यङ्गीकारेण तत्र शक्तिग्रहस्याङ्गीकारात् । यथा सहस्राक्षादिपदैरन्यत्र गृहीतसङ्गतिकैः सहस्राण्यक्षाणि यस्येत्यपूर्वार्थोपस्थितौ सत्यां यः सहस्राक्षः स इन्द्र इति तत्रेन्द्रादिपदशक्तिग्रहो भवति एवं चक्रपाण्यादिशब्दैरन्यत्र गृहीतसङ्गतिकैश्चक्रं पाणौ यस्येत्यपूर्वार्थोपस्थितौ सत्यां यश्चक्रपाणिः स ब्रह्मपदवाच्य इति तत्र ब्रह्मादिपदशक्तिग्रह इति नानवस्थेति भावेनाह **अभिमानीति** ।

**च० — अभिमान्यधिकरण इति** । 'शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः' इत्यनुव्याख्याव्याख्यावसरे यौगिकशब्दानां वाक्यतुल्यतया पृथक्सङ्गतिग्रहणानपेक्षत्वादित्यादिमाहितीनामभिधास्यमानत्वादित्यर्थः । अद्वैतिनये तु ब्रह्मणोऽखण्डतया संसर्गसंसृष्टान्यतरलक्षणवाक्यार्थरूपताराहित्येन नैवं सुवचमिति भावः ॥ **युक्तोऽतिप्रसङ्ग इति** । अतिप्रसङ्गशब्देनाऽऽपत्तिरभिधीयते । आपत्तिवचनप्रसङ्गपदपर्यायत्वादतिप्रसङ्गपदस्य न 'अति' इत्यस्य वैयर्थ्यशङ्कावकाश इति स्थितम् ।

---

**सु० — नन्विक्षुक्षीरगुडादीनां विशेषास्तावद्विद्यन्ते । अनुभवसिद्धत्वात् । न च ते केनापि शब्देन वाच्याः । तद्वाचकशब्दाभावात् । तथाऽपि लक्ष्या दृश्यन्ते । अन्यथा तत्र वाग्व्यवहाराभावप्रसङ्गात् । अतोऽवाच्यत्वे लक्ष्यत्वं न स्यादिति प्रसङ्गः प्रशिथिलमूलः । यथोक्तम् 'इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् । भेदस्तथाऽपि नाख्यातुं सरस्वत्याऽपि शक्यते' इति । यथा (च) माधुर्यादिविशेषाणामवाच्यानामपि प्रतीततामात्रेण लक्ष्यत्वम् । तथा ब्रह्मणोऽवाच्यस्यापि स्वयंप्रकाशत्वेन प्रसिद्धस्य लक्ष्यत्वं संभवतीत्यत आह** माधुर्यादीति ।

**अनु० —** माधुर्यादिविशेषाश्च तच्छब्दैरुदिताः सदा ॥

**तच्छब्दैर्माधुर्यादिविशेषशब्दैः । सदेत्यवधारणार्थे । उदिता वाच्या एवेति ॥ ननु माधुर्य(आदि)विशेषशब्दः साधारणः । किमेतावता । न हि गोशब्दोऽनेकार्थ इति न कस्यापि वाचकः । तथा च लक्षकोऽपि न स्यात् । वाच्यार्थद्वारत्वाल्लक्षणायाः । ननु (च) वाचकत्वं पदधर्मः । माधुर्यादिविशेष इति च न पदं किन्तु वाक्यमेव । अनेकपदात्मकत्वात् । तथा च कथं तच्छब्दैरुदिता इति । मैवम् । ऐकपद्यमैकस्वर्यं च समासप्रयोजनमिति शाब्दैरङ्गीकृतत्वात् । अथवा तच्छब्दैः सूदशास्त्रादिप्रसिद्धैर्वाचकशब्दैरुदिता इति व्याख्येयम् । तथा**

**चोक्तम् 'विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् । गुडस्य पनसादीनां निर्हारीत्यभिधीयते ॥' इति । यथा च ध्वनिविशेषाणां मन्दव्युत्पत्तिभिरविदिता अपि श्रुतिस्वरजातिरागादिशब्दा वाचकाः सङ्गीतशास्त्रप्रसिद्धाः तथा माधुर्यादिविशेषाणामपि तत्तदधिकृतशास्त्रेषु प्रसिद्धा वाचकाः शब्दाः कथं न स्युः । ततश्च 'इक्षुक्षीरगुडादीनां' इति वचनमात्मनो व्युत्पत्त्यभावख्यापनार्थं शारदानिन्दया प्रत्यवायार्जनार्थं च । अतो न प्रशिथिलमूलोऽतिप्रसङ्ग इति । यदपि स्वप्रकाशतया सिद्धत्वाद्ब्रह्मणो लक्ष्यत्वोपपत्तिरिति तदुपरिष्टान्निराकरिष्यते(ति) ।**

वा०— ननु माधुर्यादाववान्तरविशेषस्यैवाभावाद्भावे वा तस्य शब्दवाच्यत्वेऽप्यनुपपत्तेरभावाद्भावे वाऽलक्ष्यत्वस्यापि संभवेन तत्र व्यभिचारादिप्रसक्तेरभावादुत्तरभाष्यं व्यर्थमित्यतस्तत्प्रसक्तिं दर्शयति **नन्विति ॥ तद्वाचकशब्दाभावादिति** । माधुर्यादिविशेषशब्दस्य च साधारणत्वेन वाक्यत्वेन चावाचकत्वादन्यस्य चाभावादित्याशयः । प्रशिथिलमूलो व्याप्तिरूपमूलशून्य इत्यर्थः ॥ **यथोक्तमिति** । इक्ष्वादिमाधुर्यस्य यद्यपि महदन्तरं महान्विशेषो वर्ततेऽनुभवसिद्धत्वात् । तथाऽपि स भेदो विशेषः एवंरूप इति नाख्यातुं शक्यत इत्यर्थः । न केवलं माधुर्यादिविशेषे व्यभिचाराद्व्याप्तिशून्यत्वं प्रसङ्गस्य, किन्तु या चावाच्यस्य ब्रह्मणो लक्ष्यत्वानुपपत्तिस्त्वदभिमता साऽपि न । अवाच्यत्वेऽपि स्वप्रकाशतया लक्षणाप्रयोजकप्रतीत्युपपत्त्या ब्रह्मणो लक्ष्यत्वोपपत्तेः । न चावाच्ये प्रतीतिमात्रेण न लक्ष्यत्वमिति वाच्यम् । माधुर्यादिविशेषवदेवोपपत्तेरित्युक्तानुपपत्तिपरिहारसंभवाच्चायमप्रसङ्ग इत्याह **यथा चेति** । अत्र माधुर्यादिविशेषाणां वाच्यताया मूले प्रतिपादनेनोक्तोभयविधशङ्कापरिहारः सिद्ध्यतीत्याशयेन शङ्काग्रन्थे उभयनिवेश इति द्रष्टव्यम् । एतेन प्रकारान्तरेण प्रतीत्यनुपपत्तौ सत्यां वाच्यत्वस्याप्यभावस्यालक्ष्यत्वं प्रत्यापादकतयाऽभिमतत्वान्माधुर्यादिविशेषे प्रकारान्तरेण प्रतीतेः सत्त्वेन विशिष्टस्य तस्य न व्यभिचार इति शङ्काऽप्यपहस्तिता भवति । तर्हि ब्रह्मण्यपि प्रकारान्तरेण प्रतीत्युपपत्त्या विशिष्टस्य तस्यासिद्ध्यापत्तेरिति ।

शब्दार्थसंबन्धस्य स्वाभाविकत्वात्सिद्धतया सदेति व्यर्थमित्यतस्तदर्थं दर्शयन्नन्वयं च दर्शयति **सदेतीति** । अवधारणलब्धमनुपपत्तिसमाधानं दर्शयितुमनुपपत्तिप्रकारं दर्शयति **नन्विति** । माधुर्यादिशब्दवन्माधुर्यादिविशेषशब्दस्य माधुर्यादिविशेषत्वेन रूपेण विशेषमात्रवाचकत्वेऽपि तत्तदवान्तरविशेषत्वाकारेण तद्वाचकत्वाभावात्तादृशवाचकविशेषाभावप्रसङ्गेनास्योदाहरणं युक्तम् । अन्यथा माधुर्यादिशब्द एव किं नोदाहृत इत्याशयः । माधुर्यत्वादिवन्न माधुर्यादिविशेषत्वमेकं सामान्यं येन माधुर्यादिशब्दतुल्यताऽस्य स्यात् । किन्तु गवादिशब्दवन्नानार्थ एवायं माधुर्यादिविशेषशब्दः । न चैकविशेषसमर्पकत्ववद्विशेषान्तरसमर्पकत्वस्यापि भावेन साधारण्यमभिमतं न त्वेकसामान्यावच्छिन्नवस्तुवाचकत्वमिति

वाच्यम् । नानार्थगवादिशब्देऽपि सत्त्वेन तस्यावाचकत्वाप्रयोजकत्वात् । एवं च गवादिशब्दानां धेनुत्ववाक्त्वादिनानाप्रवृत्तिनिमित्तावच्छिन्नतत्तद्व्यक्तिविशेषवाचकत्ववन्माधुर्यादिविशेषशब्दस्याप्यनुभवसिद्धं तत्तदवान्तरविशेषावच्छिन्नव्यक्तिविशेषवाचकत्वमेवेति नैतदुदाहरणस्यासङ्गतिरित्याह **किमेतावतेति** ॥ **तथा चेति** । तादृशसामान्याभावेन तदवच्छिन्नवाचकत्वाभावाद्विशेषावच्छिन्नवाचकत्वस्याप्यभावेऽवाचकस्य लक्षकताऽपि न स्यादित्याशयः । नन्वस्यावाचकत्वं न साधारणत्वात्किं त्वपवादत्वात् । लक्षकता त्वर्धमन्तर्वेतु अदि'इत्यादौ दृष्टत्वाद्वाक्यरूपस्यापि तस्य युक्तेत्याशयेन शङ्कते **ननु चेति** । यद्वा । अवधारणनिवर्त्यमनुपपत्त्यन्तरं शङ्कते **नन्विति** ॥ **ऐकपद्यमिति** । समर्थं समस्यत इत्युक्तम् । सामर्थ्यं च द्विविधम् । व्यपेक्षैकार्थीभावश्चेति । तत्कतरस्मिन्सामर्थ्ये समासो भवतीत्याशङ्क्योक्तमैकपद्यमिति । एकः संभिन्नस्वरूपः पांसूदकवदविभागापन्नोऽर्थः । पद्यते गम्यते येन तदेकपदं तस्य भाव ऐकपद्यम् । एकार्थीभाव इति यावत् । समासस्य समस्यमानस्य समाससंज्ञाया वा प्रयोजनं प्रयोजक इत्यर्थः । एकार्थीभावे समासः स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशात्परस्परसंबन्धरूपायां व्यपेक्षायां तु वाक्यमिति भावः । ऐकपद्यमेकसुबन्तत्वं समाससंज्ञाप्रयोजनमित्यर्थ इति केचित् । तन्न । तस्य प्रातिपदिकसंज्ञाप्रयोजनत्वात् । साऽपि समाससंज्ञयैव सम्पद्यत इति चेन्न । अर्थवत्प्रातिपादिकमित्येव तत्सिद्धेः । (अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं स्यात । अर्थवदधातुः । प्रत्ययं प्रत्ययान्तं चेति । प्रत्ययस्यैव पर्युदासे कृत्तद्धितेति सूत्रेण कृत्तद्धितान्तस्य विधानं व्यर्थं स्यात् । न च तत्रापि तदन्तं न ग्राह्यमिति वाच्यम् । अर्थवदित्यनुवृत्तिसामर्थ्यात्तदन्तग्रहात् । न चार्थवदित्यस्य पूर्वसूत्रे चरितार्थता । धातुप्रत्ययपर्युदासेनैव तल्लाभात् । तस्मात्प्रत्ययान्तं वर्जयित्वेत्युचितमेव । यदि तु प्रत्ययो न पर्युदस्येत तर्हि सात्पदाद्योरिति सूत्रे सादितिग्रहणं व्यर्थं स्यात् । अर्थवदिति किम् । धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत् । अधातुरिति किम् । अहन् । लोपो मा भूत् । न च कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासोऽस्त्विति वाच्यम् । प्रत्ययलक्षणेनोक्तपर्युदासाप्रवृत्तेर्ङि संबुद्ध्योरिति निषेधेन ज्ञापितत्वात् । कथमन्यथा राजेत्यादौ नलोपः स्यात् । अप्रत्यय किम् । हरिषु । करोषि । अत्र सुप्तिपोर्मा भूत् । अप्रत्ययान्तः किम् । तत्रैव विभक्तिविशिष्टयोर्मा भूत् ) । कृत्तद्धितेत्यत्र समासग्रहणं हि नियमार्थं न विध्यर्थमिति स्थितत्वात् । एकार्थीभाव एवैकपद्यम् । तच्च समासप्रयोजनमित्यपि न । एकार्थीभावस्य समासकरणत्वेन तत्प्रयोजनत्वाभावात् । ऐकस्वर्यमित्यपि प्रायिकम् । अन्तेतवै इत्यादौ तवैचान्तश्च युगपदिति द्वैस्वर्यविधानात्तस्मादेकार्थीभावे समासो व्यपेक्षायां वाक्यमित्येवार्थः । तथा चैकार्थत्वेन पदत्वस्य शाब्दैरुक्तत्वात्समासस्य वाक्यत्वाभावाद्वाचकत्वं युक्तमिति भावः ॥ अनेकानुपपत्तिनिरासनिरपेक्षं पक्षान्तरमाह **अथवेति** ॥

ननु कथमभिधानाद्यप्रसिद्धानां तेषां तद्वाचकतोक्तिरित्यतोऽसंभावनां परिहरति **यथा चेति** ॥ **तत्तदधिकृतेष्विति** । सूदादिशास्त्रेष्वित्यर्थः ॥ यथा चेत्युक्तं दूषणं दृष्टान्ते वाच्यत्वोपपादनेन निरस्तमिति दार्ष्टान्तिके विशिष्य दूषणार्थमनुवदति **यद्पीति** ॥ **तदुपरिष्टादिति** । एतदधिकरणान्ते 'यदि तत्स्यादगोचरम्' इत्यादिनाऽऽचार्य एव निराकरिष्यतीत्यर्थः ।

स० — **तदुपरिष्टान्निराकरिष्यत इति** । 'यदि तत्स्यादगोचरम्' इत्यादिनेति शेषः ।

प० — द्वितीयप्रघट्टकैतरेयभाष्योक्तमाह **विशदमिति** ॥ **तदुपरिष्टान्निराकरिष्यत इति** । 'विज्ञेयवाच्यलक्ष्यत्वपूर्व'इत्यादिव्याख्यावसरे ।

या० — पक्षादिप्रविभागोत्तरं क्रियमाणा व्यभिचारशङ्का, यथा विपक्षे हेतुः साध्यं विनाऽस्ति तथा पक्षेऽपि साध्यं विनैवास्त्विति पक्षेऽप्युपपादनीया । अन्यथा वैयर्थ्यात् । तथैव कथकसम्प्रदायाच्च । न चैवं प्रकृते सम्भवति माधुर्यादिविशेषाणां प्रतीतत्वेन लक्ष्यत्वसम्भवेऽपि ब्रह्मणः प्रतीत्यसम्भवेन लक्ष्यत्वासम्भवस्योक्तत्वादित्याशङ्कां परिहरन् पक्षेऽपि व्यभिचारशङ्कामुपपादयति **यथा चेत्यादिना** ॥ **साधारण इति** । तथा च यथा घटशब्दः सर्वत्र नीलघटादौ प्रयुज्यमानो नैल्यादिविशिष्टं विशेषं लक्षणयैवोपस्थापयति तथा माधुर्यादिविशेषशब्दोऽपि सर्वविशेषेषु प्रयुज्यमानस्तत्तद्विशेषान् लक्षणयैवोपस्थापयत्यतो नोक्तव्यभिचारपरिहार इति भावः अत्र साधारणत्वं किं घटादिशब्दवत्सामान्याकारमात्रवाचकत्वं किंवा गवादिशब्दवदनेकार्थत्वम् । नाद्यः असिद्धेः । माधुर्यादिविशेषशब्दस्य तत्तद्विशेषमात्रोपस्थापकत्वानुभवेन सर्वसाधारणसामान्याकारोपस्थापकत्वाभावात् । न द्वितीयः गवादिशब्देषु व्यभिचारादित्याह **किमेतावतेत्यादिना** । एतेन सर्वत्र प्रयोगमात्रसाधारण्यमित्यपि निरस्तम् । गवादिशब्देष्वेव व्यभिचारात् ॥ **ऐकपद्यमिति** । तथा चानेकपदात्मकेऽपि समास एकपदत्वमप्यस्त्येवेति भावः ॥ नन्विदं पारिभाषिकं समासे पदत्वं न वाचकत्वोपयोगि । वाक्यस्य वाचकतायाः केनाप्यनङ्गीकृतत्वादित्यस्वरसादाह **अथवेति** ।

श्री० — **अन्तरमिति** । यद्यपि महदन्तरं महान्भेदोऽस्ति तथाऽपि स भेद इति योज्यम् ॥ इष्टापत्तिरिति चेत्तत्राह **तथा चेति** ।

च० — **प्रशिथिलमूल इति** । व्याप्यव्यापकभावानापन्नापाद्यापादकक इत्यर्थः ॥ **ऐकपद्यमिति** । तथा च पाणिनीयैरनेकपदघटितसमास ऐकपद्यमप्यूरीकृतमिति भावः । पारिभाषिकपाणिनीयाङ्गूरीकृतसामासिकैकपद्यस्य वाक्यस्य वाचकतायाः परीक्षकैरनङ्गीकृततया वाचकत्वौपयिकता नेत्यरुच्या कल्पान्तरमाश्रयते **अथवेति** । अनेकानुपपत्तिनिरासनिरपेक्षं पक्षान्तरमाह **अथवेति** इत्यप्यवतारितम् ।

सु०— नन्ववाच्योऽपि नदीतीरफलसंसर्गलक्षणो वाक्यार्थो लक्ष्यो नद्यादिपदैरुप-लक्ष्यते । यथोक्तम् 'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितिः ।' इति । तथा च व्याप्त्यभावादप्रयोजकोऽयं प्रसङ्गः । वाक्यार्थश्च ब्रह्माभ्युपेयते न पदार्थः । अतो लौकिक-वाक्यार्थवदवाच्यमपि लक्ष्यं किं न स्यादित्यत आह वाक्यार्थोऽपीति ।

अनु०— वाक्यार्थोऽपि हि वाक्यार्थशब्देनैवोदितो भवेत् ॥

एवशब्दस्योदित इति(अनेन) संबन्धः । वाक्यार्थशब्दस्य वाक्यार्थवाचकत्वेऽन्यत्तद्वाच्यं वाच्यम् । न ह्यस्माभिर्लक्ष्यकेनैव शब्देन वाच्यत्वमाशास्यते । किन्तु केनचिच्छब्देन वाच्यमेव केनचिच्छब्देन लक्ष्यमिति भावः । अयं चाङ्गीकारवादो ज्ञेयः । अन्विताभिधानस्य सम-र्थितत्वात् । ब्रह्मणो वाक्यार्थत्वं तु संसर्गत्वस्य संसृष्टत्वस्य वाऽनङ्गीकारादयुक्तम् । वाक्यस्या-खण्डार्थनिष्ठताया निरस्तत्वात्(इति) ।

वा०— भट्टवार्तिकसंमतिमाह यथोक्तमिति । 'न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः' इति पूर्वार्धोक्तं पदानां वाक्यार्थबोधकत्वरूपं सामर्थ्यमुपपादयितुं लोकवेदयोर्वाक्यार्थस्य पदलक्ष्यत्वमुत्तरार्धेनानेनोच्यते । न केवलमुत्तरमूलं वाक्यार्थे व्यभिचारशङ्कानिवर्तकं किन्तु वाक्यार्थन्यायप्राप्ताप्रयोजकत्वशङ्कान्तरनिवर्तकं चेत्याशयेनाह वाक्यार्थश्चेति । एतेन वाक्यार्थस्य अवाच्यस्य लक्ष्यत्वेऽपि पदार्थभूतब्रह्मणो नावाच्यस्य लक्ष्यत्वम् । तथा च पदार्थत्वविशिष्टा-वाच्यत्वरूपापादकस्य न व्यभिचार इति शङ्काऽप्यपहस्तिता भवतीति द्रष्टव्यम् ॥ ननु वाक्यार्थस्य वाक्यार्थशब्दवाच्यत्वं कुतः । तथात्वेऽपि वाक्यगतपदवाच्यत्वं तु नैव प्राप्तमित्ययुक्तमेतदित्यत एवकारसूचितं भावमाह वाक्यार्थशब्दस्येति । वाक्यार्थश्च ब्रह्माभ्युपेयत इति द्वितीयदूषणं दृष्टान्ते वाच्यत्वोक्त्या निरस्तमपि दार्ष्टान्तिके विशिष्यदूषणेन निराकरोति ब्रह्मण इति ।

स०— ननु न संसर्गादेरेव वाक्यार्थत्वम् । प्रकृष्टादिवाक्येऽखण्डचन्द्रादिस्वरूपस्यापि वाक्यार्थत्वदर्शनात् । प्रकृते ब्रह्मणोऽप्यखण्डतयाऽस्तु वाक्यार्थत्वमित्यत आह वाक्यस्याखण्डार्थ-ताया इति ।

प०— वाक्यार्थ इति । 'नदीतीरे पञ्चफलानि सन्ति' इति वाक्यार्थ इत्यर्थः ॥ अयं चेति । 'नदीतीरे पञ्च फलानि सन्ति' इति वाक्यार्थो नद्यादिपदैर्लक्ष्यत इति वाद इत्यर्थः ॥ समर्थितत्वादिति । 'शक्तिश्चैवान्विते स्वार्थे' इत्यादिना जिज्ञासाधिकरणे पदानामेव पदार्थेऽन्वय-रूपवाक्यार्थे च शक्तेः प्रतिपादितत्वादित्यर्थः । वाक्यार्थश्च ब्रह्माभ्युपेयत इत्युक्तं निराह ब्रह्मण इति ॥

**अनङ्गीकारादिति** । अखण्डत्वभङ्गभियेति भावः । ननु वाक्यार्थो न संसर्गरूपो न संसृष्टरूपश्च किन्त्वखण्ड एवातो न दोष इत्यत आह **वाक्यस्येति** । जन्मादिसूत्रे निरस्तत्वादिति भावः ।

**या०**— वाक्यादेव लक्षणया वाक्यार्थबोध इति वदतां मीमांसकैकदेशिनां मतमाश्रित्य तत्र व्यभिचारमाशङ्कते **नन्ववाच्योऽपीत्यादिना** ॥ ननु नदीतीरफलसंसर्गलक्षणो वाक्यार्थः, वाक्यार्थपदवाच्योऽपि नद्यादिपदैर्न वाच्यः, किन्तु लक्ष्य एवातो न व्यभिचारपरिहार इत्यत आह **न ह्यस्माभिरिति** ॥ **अन्विताभिधानस्येति** । तथा च शक्त्यैवान्वयबोधोपपत्तौ तदर्थं लक्षणाङ्गीकारो न युक्त इति भावः ॥ **समर्थितत्वादिति** । 'शक्तिश्चैवान्विते स्वार्थे' इत्यत्रेति शेषः ॥ ननु संसर्गादिरेव न वाक्यार्थः । प्रकृष्टादिवाक्येऽखण्डचन्द्रादिस्वरूपस्यापि वाक्यार्थत्वदर्शनात् । तथा प्रकृतेऽखण्डरूपतया ब्रह्मणोऽपि वाक्यार्थत्वमस्त्वित्यत आह **वाक्यस्याखण्डार्थनिष्ठताया इति** ॥ **निरस्तत्वादिति** । द्वितीयाधिकरण इति शेषः ॥

**श्री०**— **अयं चेति** । इतरपदार्थसंसर्गरूपवाक्यार्थस्य पदलक्ष्यत्वमङ्गीकृत्य समाधिरङ्गीकारवाद इत्यर्थः ।

**च०**— ननु स्वबोध्यसंबन्धोपलक्षणेत्यभिदधानानां मीमांसकानां मते गभीरायां नद्यां घोष इत्यादौ गभीरायां नद्यामित्यस्यैव गभीरनदीतीरे लक्षणोपगमात्प्रकृतेऽपि तद्दिशा सामञ्जस्यमित्याशङ्कते **नन्विति** । भट्टानां वार्तिकं प्रमाणयति **यथोक्तमिति** । 'न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेपि पदानि नः' इति पूर्वार्धाभिहितं, पदानां वाक्यार्थबोधकत्वरूपसामर्थ्योपपादनाय लोकवेदयोर्वाक्यार्थस्य पदलक्ष्यत्वत्वं, उत्तरार्धेन अनेनाभिधीयत इति हृदयम् ॥ **समर्थितत्वादिति** । 'शक्तिश्चैवान्विते स्वार्थे' इत्यत्रेत्यादिः । तथा चान्वयोऽपि शक्य एवेति भावः ॥ **निरस्तत्वादिति** । जन्मादिनय इत्यादिः । प्रकृष्टप्रकाशश्चन्द्र इत्यादावप्यखण्डार्थनिष्ठत्वं न संप्रतिपन्नमिति भावः ।

**सु०— एवं व्यभिचारं निरस्य सुस्था प्रसङ्गमूलभूता व्याप्तिरित्याह** नावाच्यमिति ।

**अनु०**— नावाच्यं तेन किञ्चित्स्यात्

**लक्ष्यमिति शेषः ॥ अथवा ब्रह्मणोऽवाच्यत्वे तस्य वस्तुत्वमेव न स्यात् । यतोऽवाच्यं किञ्चिदपि नास्ति इतिप्रसङ्गान्तरसूचनमिदम् ।**

**वा०**— एवं तेनेत्येतत्स्वारस्यानुरोधेन लक्ष्यमित्यध्याहृत्य मूलमुपसंहारपरतया व्याख्यायेदानीं किञ्चिच्छब्दस्वारस्यानुरोधाद्विशेषार्थलाभाच्चातिप्रसङ्गान्तरसूचकतयाऽपि तद्व्याख्याति **अथवेति** ।

**श्री०**—**यतोऽवाच्यमिति** । यस्मात्कारणाद्यत्किञ्चिदवाच्यं तत्सर्वं नास्ति । अत्यन्तासदवस्त्विति यावत् । यथा शशविषाणमित्यर्थः ॥

**सु०—ननु 'यतो वाचो निवर्तन्ते' इत्याद्यागमविरोधात्कालात्ययापदिष्टमीक्षणीयत्वेन वाच्यत्वसाधनम् । प्रसङ्गानां च विपर्ययापर्यवसानमिति ॥ स्यादेतदेवम् । यदि ब्रह्मावाच्यत्वं श्रुत्यर्थः स्यात् । न चैवम् । तथा व्याख्याने स्वक्रियाविरोधापत्तेरित्याह** यत इति ।

अनु०— यत इत्यादिकैर्वदन् ॥

अवाच्यत्वं कथं ब्रूयान्मूकोऽहमितिवत्सुधीः ॥

**यत इत्यादिशब्दैर्ब्रह्मोक्त्वा (हि) तस्यावाच्यत्वं वाच्यम् । अन्यथा यस्यकस्यचिदवाच्यताऽऽपत्तेः । तथा च यत इत्यादिकैः पदैर्ब्रह्मैव वदन्कथं पुनस्तस्यावाच्यत्वं श्रुत्यर्थतया ब्रूयात् । मूकोऽहमितिवत्स्वक्रियाविरोधात् । सुधीरिति विपरीतलक्षणया परस्याकोविदत्वमाह ।**

वा०—ननु यत इत्यादिकैरित्युत्तरभाष्यमुक्तार्थोपपादनाभावाद्व्यर्थम् । न च परोक्तावाच्यत्वसाधकश्रुतिनिरासार्थत्वान्न तद्वैयर्थ्यमिति वाच्यम् । स्वपक्षसाधकानामद्याप्यसमाप्ततया तन्निरासानवसरात्, 'अभुतत्वादवाच्यं तत्, इत्यादिनाऽर्थान्तरकथनेन निरसिष्यमाणत्वाच्च, वदन् ब्रूयादित्यादिना वादिदूषणस्यैव प्रतीयमानतया साधकनिरासादर्शनाच्चेत्यतोऽस्मदुक्तसाधकविघटनाय परोपन्यस्तश्रुतेस्तदभिमतार्थे दूषणोद्भावनेन तद्विघातकत्वाभावप्रतिपादनार्थत्वात् श्रुत्यर्थतया तथा व्याख्यातृदोषाभिधानमुखेन तस्य श्रुत्यर्थत्वाभावस्यैव प्रतिपादनान्न काऽप्यनुपपत्तिरित्याशयेन तद्वाक्यमवतारयति **नन्विति** ॥ ननु यत इत्यादिशब्दैर्ब्रह्मण उक्तेरनावश्यकत्वान्न स्वक्रियाविरोध इत्यतो भाष्यकारेण वदन्निति सिद्धवदुक्त्या सूचितं तदनुक्तौ बाधकं वक्तुमाह **यत इत्यादिशब्दैरिति** ॥ श्रुत्यर्थतयेत्युक्त्या श्रुत्यर्थत्वनिरासस्य भाष्यारूढतासूचनेनासङ्गतिः परिहृता भवति । दृष्टान्तोक्त्या स्पष्टलब्धदूषणप्रदर्शनं स्वक्रियेति । यद्यस्य दूषणपरता तर्हि सुधीरित्येतद्विरोध इत्यत आह **सुधीरिति** ।

**या०— प्रसङ्गानां चेति** । लक्ष्यत्वं न स्यादित्येकः प्रसङ्गः । अनवस्थारूपो द्वितीयः । वस्तुत्वमेव न स्यादिति तृतीयः । अतो बहुवचनमिति द्रष्टव्यम् ।

**च०— प्रसङ्गानां चेति** । लक्ष्यत्वाभावानवस्थावस्तुत्वाभावापादकापत्तीनामित्यर्थः ।

**सु०—स्यादेवं स्वक्रियाविरोधो यदि यत इत्यादिशब्दैर्ब्रह्म वचनवृत्त्योक्त्वा तस्यावाच्यत्वमुच्यते । नत्वेवम् । किं नाम यत इत्यादिशब्दैर्लक्ष्यमेवेत्यतः क्वास्ति स्वक्रियाविरोध इत्यत** आह येनेति ।

**अनु०—** येन लक्ष्यमिति प्रोक्तं लक्ष्यशब्देन सोऽवदत् ॥

ब्रह्म लक्ष्यमिति वदताऽपि लक्ष्यशब्दवाच्यत्वं तस्याङ्गीकर्तव्यम् । तथा च किं शब्दान्तरेणापराद्धम् । अथ लक्ष्यशब्देनापि लक्ष्यते न तूच्यत इति ब्रूयात्तदा किं तदित्यपेक्षायां शब्दान्तरं ब्रूयादित्यनवस्था स्यात् । अथ यावत्पदजातं ब्रह्मणि प्रयुज्यते तत्सर्वमपि लक्षणयैवेति परिहारे कुतोऽनवस्थेति चेन्न । अनवबोधात् । न हि प्रश्नपरिहारक्रमनिमित्तेयमनवस्था येन सकृदेवोत्तरेण निवर्तेत किन्तु लक्षणायाः प्रतीतिपूर्वकत्वाच्छब्देन विना प्रत्यायकान्तराभावात्तत्रापि लक्षणाऽऽश्रयणे मूलक्षयात् । अतः स्वक्रियाविरोधान्नेदं श्रुतिव्याख्यानमिति नानुमानादेः कश्चिद्दोषः । अविरुद्धं तु व्याख्यानमुत्तरत्र करिष्यत इति ।

वा०—यत्किञ्चिच्छब्दलक्ष्यत्वस्य स्वक्रियाविरोधाशामकत्वेन परेणावक्तव्यत्वाधेन लक्ष्यमित्येतद्यत इत्यादिशब्दविषयमिति दर्शयंस्तेनोक्तदूषणपरिहारं च दर्शयंस्तन्निवर्तकतयोत्तरमूलमवतारयति स्यादेवमिति ॥ एवं तर्ह्यन्यथा यस्यकस्यचिदवाच्यत्वापत्तेरिति बाधकमुक्तमेवेत्याशङ्कते किं नामेति ॥ यत इत्यादिशब्दैरिति । शक्त्या ब्रह्मानुक्तावपि लक्षणया तदुक्तेर्नोक्तं बाधकमिति भावः ॥ नन्वस्तु लक्ष्यशब्दवाच्यत्वं तथाऽपि यत इत्यादिशब्दावाच्यत्वान्न तदुपजीवनेन प्रवृत्तः स्वक्रियाविरोध इत्यतो लक्ष्यशब्दवाच्यत्वं वदतो भाष्यकारस्य न तावन्मात्रे तात्पर्यं येन स्वक्रियाविरोधो नोपपादितः स्यादपि तु लक्ष्यशब्दवाच्यत्वाभ्युपगमेऽवाच्यत्वभङ्गस्य तुल्यत्वात्समानन्यायतया यतइत्यादिशब्दवाच्यत्वमकामेनाप्यङ्गीकर्तव्यं स्यात् ततश्च स्वक्रियाविरोध इत्याशयेनाह तथा चेति । अत्र भाष्यकारेण लक्ष्यशब्दवाच्यत्वपक्षं सिद्धवत्कृत्वोक्तं स्वक्रियाविरोधमुपपादयितुं 'पुनःपुनर्लक्षाणायामपि स्यादनवस्थितिरि'ति भक्तिपादीयां 'किं तदि'त्यव्यवहितपूर्वां वाऽनुव्याख्यां मनसि निधाय लक्ष्यशब्दलक्ष्यत्वपक्षं दूषयितुमनुवदति अथेति । किं तदित्यनवस्थितिरित्याद्यनुव्याख्याऽभिप्रेतानवस्थाप्रकारं पूर्वदर्शितमपि स्पष्टं दर्शयितुं तदनवबोधनिमित्तकभ्रान्तिप्रयुक्तपरकीयानवस्थापरिहारप्रकारं शङ्कते अथेति । एवं च लक्ष्यशब्दलक्षणापक्षस्यानवस्थादोषदुष्टतया तद्वाच्यत्वपक्षेऽभ्युपगमनीये समानन्यायतया यत इत्यादिशब्दवाच्यताप्राप्त्या स्वक्रियाविरोधसिद्धिरित्युपसंहरंस्तत्फलं दर्शयति अत इति । अर्थान्तराभावेन श्रुत्यप्रामाण्यापत्त्या स्वक्रियाविरोधः कथञ्चिदुभयसमाधेय इत्यत आह ॥ अविरुद्धं त्विति ।

प०—उत्तरत्रेति । 'अद्भुतत्वादवाच्यम्'इत्यत्रेत्यर्थः ।

या०—उत्तरत्रेति । 'अद्भुतत्वादवाच्यं तत्'इत्यत्र' इत्यर्थः ।

श्री०—तत्रापि प्रत्यायकशब्दान्तरेऽपि पुनर्ब्रह्मणि लक्षणात्वाश्रयण इत्यर्थः ॥ मूलक्षयादिति । एवं लक्षणापरम्पराश्रयणे तत्रैव कालपर्यवसानापत्त्या मूलभूताया ब्रह्मशब्दलक्षणायाः कर्तुमवकाशाभावेन मूलक्षयकरत्वादनवस्थादूषणमेवेत्यर्थः । परंपराऽनङ्गीकारे मूलक्षयप्राप्त्या अनवस्था-

दूषणमित्यर्थ इत्यप्याहुः ॥ ननु 'यतो वे'त्यादिश्रुतेर्मदीयव्याख्यानं स्वक्रियाविरुद्धं चेत् किं तद्विरुद्धं व्याख्यानमित्यत आह **अविरुद्धं त्विति** ।

च० — **उत्तरत्रेति** । 'अद्भुतत्वादवाच्यं तत्'इत्यत्र इत्यर्थः ।

**सु० — इतश्च न ब्रह्मणि श्रुतानां वैदिकानां सर्वशब्दानां लक्षणाश्रयणं युक्तमित्याह** एकस्यापीति ।

**अनु०** — एकस्यापि हि शब्दस्य गौणार्थस्वीकृतौ सताम् ॥
महती जायते लज्जा यत्र तत्राखिला रवाः ॥
अमुख्यार्था इति वदन्यस्तन्मार्गानुवर्तिनाम् ॥
कथं न जायते लज्जा वक्तुं शाब्दत्वमात्मनः ॥

**यत्र वेदे सतां विदुषामेकस्यापि शब्दस्य मुख्यार्थपरित्यागेनामुख्यार्थस्वीकृतौ कृतायां (सत्यां) महती लज्जा जायते । तत्राखिला अपि शब्दा अमुख्यार्था इति वदन्यस्तस्यात्मनः शाब्दत्वं शब्दशक्तितात्पर्यज्ञत्वं वक्तुं कथं लज्जा न जायते । केभ्यस्तन्मार्गानुवर्तिनां शब्दशक्तितात्पर्यानुसारिणां विदुषां सकाशादिति योजना । तस्य व्याख्यातुर्मार्गमनुवर्तमानानां (च) कथं न जायते लज्जेति वा । तथा सत्यात्मनामिति बहुवचनान्तं पदमध्याहार्यम् । ननु न तावन्मुख्यार्थपरित्यागेनामुख्यार्थस्वीकार एव लज्जाहेतुः । तथा सति 'गङ्गायां घोषः' 'कुण्डपायिनामयने मासमग्निहोत्रं जुहोति'इत्यादावमुख्यार्थग्रहणाभावप्रसङ्गात् । किं नाम मुख्यार्थे संभवत्येवामुख्यार्थस्वीकारो दोषः । मुख्यार्थो हि शक्तिग्रहणवशात्प्रथमं बुद्ध्यारूढो भवति । विना च प्रथमातिक्रमे कारणं जघन्यप्रतिपत्तिस्वीकारे कथमनौचित्यं नभवेत् । यत्र तुमुख्यार्थे बाधकमस्ति तत्र तदपरित्याग एव लज्जाहेतुः । 'गङ्गायां घोषः' 'सिंहो देवदत्तः' इत्यत्र गङ्गादिशब्दस्य मुख्यार्थाङ्गीकार(स्य ) एव दोषः (दुष्टत्वदर्शनात्) । तत्कथमेतत् । सत्यमेवैतत् । प्रकृतेऽपि न मुख्यार्थस्वीकारे बाधकमस्तीत्याचार्यो मन्यते । बाधिकायाः श्रुतेर्निर्गुणत्वोपपत्तेश्च निरस्तत्वादिति ।**

वा० — उत्तरवाक्यतात्पर्यानवबोधात्त केवलं सर्वशब्दानां ब्रह्मणि लक्षणाश्रयणेऽनवस्थामात्रमनौचित्यं चेति तत्तात्पर्यमाह **इतश्चेति** । अप्रसक्ततयाऽवैदिकशब्दानां ब्रह्मणि लक्षणया प्रवृत्तेः परेणाप्यनङ्गीकारादखिला इत्यनुपपन्नमित्यतो यत्र तत्रेति यद्भाष्य उक्तं तत्तात्पर्यकथनं वैदिकानामिति । अनेन वैदिकशब्दलक्षणाऽऽश्रयणस्यातिजघन्यतां सूचयति । कर्मकाण्डगतानां ब्रह्मकाण्डेऽप्युपासनादिपराणां

न परे ब्रह्मणि लक्षणाश्रितेत्यत उक्तं **ब्रह्मणि श्रुतानामिति** । अनेन वेदेऽखिला अपीत्यस्यापि सङ्कोचः सूचितो भवति । प्रकृतोपयोगितया सच्छब्दव्याख्यानं **विदुषामिति** । अमुख्यार्थस्य जघन्यप्रतिपत्तिकतया तत्स्वीकारस्य लज्जाहेतुतायाः प्रथमोपस्थितमुख्यार्थपरित्यागकारणाभावप्रयुक्ततया लज्जाहेतुताप्रयोजकत्वेन तस्याप्यत्र विवक्षणीयत्वे कारणाभावे सति मुख्यार्थपरित्यागस्यापि लज्जाहेतुत्वमित्याशयेनोक्तम**मुख्यार्थेति** । अत एवोत्तरत्र तथैवोपपादयिष्यतीति बोध्यम् । अत्र समानन्यायतयाऽमुख्यार्थ इत्युत्तरभाष्यानुरोधेन च गौणशब्दो लक्षणाऽऽदिसाधारण इत्याशयेनोक्तम**मुख्यार्थेति** । शाब्दत्वमित्यस्यापि प्रकृतोपयोगितया व्याख्यानं **शक्तीति** । विदुषामित्यनेन सतामित्यस्यात्राप्यनुवृत्तिं सूचयति । सकाशादिति षष्ठ्यर्थकथनम् । यच्छब्दप्रकृतस्यैव तच्छब्दपरामर्शे परामर्शस्वारस्यमित्याशयेनाह **तस्येति** ॥ **तथा सतीति** । तथा च तस्यात्मनः शाब्दत्वं तेषां चात्मनां शाब्दत्वं वक्तुमिति योजना सूचिता भवति । यत इति श्रुतिनिरासानन्तरं भाष्यकारेणैतद्दूषणोक्त्या सूचितेन मुख्यार्थस्वीकारे बाधकाभावविषयकस्वाभिप्रायेण निवर्त्यां शङ्कां दर्शयन्नेव मुख्यार्थत्यागामुख्यार्थस्वीकारयोरनौचित्यहेतुत्वं शङ्कामुखेनैव दर्शयति **नन्विति** । सर्वत्रायमेव न्याय इति दर्शयितुं लौकिकवैदिकयोः क्रमेणोदाहरणकथनं गङ्गायामित्यादि । यद्वा लक्षणागौण्योः क्रमेणोदाहरणमेतत् । कुण्डपायिनामयनं नाम सत्रम् । अत एव 'उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्' इति । सप्तमे, सामानाधिकरण्यनिमित्तकत्वान्नामत्वस्य तस्य चोभयत्रापि भावादुभयत्रापि मुख्यनामत्वसंभवान्न गौणत्वकल्पनयाऽतिदेशकत्वमिति पूर्वपक्षयोभयनामत्वे शब्दस्यानेकादृष्टशक्तिकल्पनाप्रसङ्गेनावश्यभाविन्यन्यतमगौणत्वे, यत्र गुणाः सन्ति तत्र मुख्यत्वं, तद्गुणयोगादितरत्र गौणत्वम्, न हि निर्गुणे मुख्यस्यान्यत्र गौणता घटते । वाच्यगुणयोगेन हि वृत्तेर्गौणत्वं निर्गुणे तु वाच्ये कथं गौणत्वम् । तस्मान्नैमित्तिके मुख्योऽन्यत्र गौणोऽग्निहोत्रशब्दोऽतोऽग्निहोत्रवज्जुहोतीति वाक्यार्थ इत्यग्निहोत्रशब्दस्य मासाग्निहोत्रे नैयमिकाग्निहोत्रधर्मातिदेशेन गौणता प्रतिपादितेति ॥ **तत्कथमेतदिति** । श्रुत्यादेः प्रकृते बाधकत्वादिति भावः ॥ **निर्गुणत्वेति** । जन्माधिकरणे तस्या निरस्तत्वादिति भावः ।

स० — **कुण्डपायिनामयन इति** । कुण्डपायिनामयनाख्ये सत्रे 'मासमग्निहोत्रं जुहोति' इति श्रूयते, तत्राग्निहोत्रशब्दः नित्याग्निहोत्रपरः, उत कर्मान्तरपर इति सन्देहः । कर्मान्तरपक्षे द्रव्यदेवताकल्पनागौरवप्रसङ्गात् नित्याग्निहोत्रविधायक इति प्राप्ते अस्य नित्याग्निहोत्रप्रकरणत्वाभावात् मासादिगुणकमिदं कर्मान्तरमेव विधीयते । तत्राग्निहोत्रशब्दो यद्यपि स्वाभिधेयनित्याग्निहोत्रपर इति वक्तुं शक्यते मासादिगुणकस्य कर्मविशेषस्य नित्याग्निहोत्रत्वासंभवात् । तथाप्यग्निहोत्रवज्जुहोतीति गौण्या

वृत्त्या नित्याग्निहोत्रधर्मातिदेशपर इति सिद्धान्तितम् । अमुख्यार्थग्रहणस्य च लज्जाहेतुत्वे तदपि न स्यादित्यर्थः ।

प०—**कुण्डपायिनामयन इति** । कुण्डपायिनामयनं नाम कश्चित्सत्रयागः । तत्रैकमासं क्रियमाणकर्मविशेषस्याग्निहोत्रमिति नाम, अग्निहोत्रमिवाग्निहोत्रमिति गौणमित्युक्तं पूर्वतन्त्रे 'उक्तं क्रियाभिधानं तत् श्रुतावन्यत्र विधिप्रदेशः स्यात्' इति सप्तमाध्यायतृतीयपादीयाद्यनये । तथा चाग्निहोत्रपदेन मुख्यार्थनित्याग्निहोत्रत्यागेन गौणार्थग्रहणं तत्र न स्यादित्यर्थः ॥ (**एवमेवेति** । निष्कारणमेवेत्यर्थः ।) दोष इत्युक्तं व्यनक्ति **मुख्यार्थो हीति** ॥ **दुष्टत्वदर्शनादिति** । घोषानन्वयत्वरूपदुष्टत्वेत्यर्थः ॥ **श्रुतेरिति** । 'यतो वाच' इत्यादिश्रुतेः 'यत इत्यादिकैर्वेदन्' इत्यादिना निरस्तत्वात् । अवाच्यत्वसाधकनिर्गुणत्वरूपोपपत्तेश्च जन्मादिसूत्रे निरस्तत्वादित्यर्थः ।

या०— **कुण्डपायिनामयन इति** । कुण्डपायिनामयनाख्ये सत्रे 'मासमग्निहोत्रं जुहोति' इति श्रूयते । इदं नित्याग्निहोत्रात्कर्मान्तरपरमेवेति तृतीये स्थितम् । तत्रैवान्या चिन्ता । किमग्निहोत्रशब्दो नित्याग्निहोत्रधर्मानिहातिदिशेत्र वेति । तत्र यद्ययं गौणः स्यात्तदाऽग्निहोत्रवज्जुहोतीत्यतिदिशेद्धर्मान् । न त्वयं गौणः । जुहोतिसामानाधिकरण्यस्यात्रापि तुल्यत्वेन नामधेयत्वात् । अग्निदेवताविधानार्थत्वाद्वा । अतो नातिदिशेदिति प्राप्ते सिद्धान्तः– न तावदत्राग्निदेवता विधातुं शक्या । प्रकृतिविकारभावाभावेन चतुर्थीसमासासम्भवात् । तत्र सिद्धे कर्मभेदेऽनेकार्थत्वस्यान्याय्यत्वात्, एकत्राग्निहोत्रशब्दो मुख्यः अन्यत्र गौणोऽङ्गीकार्यः । नित्याग्निहोत्रे च नामप्रवृत्तिनिमित्तस्याग्निदेवतासम्बन्धस्य भावात्तत्रैव मुख्यता । अतः परशब्दः परत्र मुख्यसादृश्यमुपादाय प्रवर्तते । तत्सिद्ध्यर्थं नित्यधर्मानतिदिशेदिति । सप्तमेऽत्रत्याग्निहोत्रशब्दो गौण इति समर्थितम् । तदपि न ग्राह्यं स्यादित्यर्थः । आदिपदात् 'सोमेन यजेत'-इत्यादौ मत्वर्थलक्षणाऽपि न ग्राह्या स्यदिति ग्राह्यम् ॥ **निरस्तत्वादिति** । प्रथमाधिकरणे श्रुतेर्द्वितीयाधिकरणे निर्गुणत्वस्य निरस्तत्वादित्यर्थः ।

श्री— **तस्य व्याख्यातुरिति** । इति वदन्यस्तस्य व्याख्यातुः सङ्करस्य मार्गमनुवर्तमानानामित्यर्थः । तन्मार्गानुवर्तिनामिति यस्य विशेषणस्यापेक्षितं विशेष्यपदमध्याहरति **तथा सतीति** । एवं व्याख्याने सतीत्यर्थः । तथा च तन्मार्गानुवर्तिनामात्मनां विवरणकारादीनां शाब्दत्वं वक्तुमित्यर्थः । अस्मिन्व्याख्याने आत्मन इति पदमुद्धरितम् । तस्येत्थं योजना । आत्मनश्चैवं व्याख्यातुः शङ्करस्यापि शाब्दत्वं वक्तुं कथं न लज्जा जायत इति ॥ **तत्क्रमेदिति** । प्रकृते च ब्रह्मणः शब्दमुख्यार्थत्वग्रहणे 'यतो वाच' इति श्रुते'र्लक्ष्यलक्षणयोर्भेद' इत्युक्तनिर्गुणत्वोपपत्तेश्च बाधिकायाः सत्वेन मुख्यार्थसम्भवाभावादमुख्यार्थस्वीकारो न दोषायेत्याशयः ।

च०— कुण्डपायिनामयन इति। कुण्डपायिनामयनं नाम कश्चित्सत्रयागः। तत्रैकमासं क्रियमाण-कर्मविशेषस्याग्निहोत्रमिति नाम। अग्निहोत्रमिवाग्निहोत्रमिति गौणमित्युक्तं पूर्वतन्त्रे। सप्तमाध्यायस्य तृतीयपादे 'क्रियाभिधानं तत् श्रुतावन्यत्र विधिप्रदेशः स्यात्' इत्याद्यनये। तथा चाग्निहोत्रपदेन मुख्यार्थनित्याग्निहोत्रत्यागेन गौणार्थग्रहणं तत्र न स्यादित्यर्थः।

सु०— अत्राह। द्वे ब्रह्मणी। निर्गुणं सगुणं च। तत्र निर्गुणं नित्यशुद्धबुद्धमुक्त-स्वभावं परिपूर्णम्। तदेव मायाशबलितं तत्कृतैश्वर्यादिधर्मवत्तया सगुणमुच्यते। मायायाश्चा-निर्वाच्यतया तदवच्छिन्नस्य न तथाभावस्तात्त्विक इति न कूटस्थत्वहानिः। तत्र सगुणमेव परा-त्परं पुरिशयं पुरुषमीक्षत इत्यादावीक्षणीयत्वेनोच्यते। ततश्चेक्षणीयत्वं वाच्यत्वेन विना नोप-पद्यते चेत्सगुणं वाच्यमस्तु न निर्गुणम्। तस्येक्षणीयत्वे प्रमाणाभावात्। न ह्यन्यगतेन व्याप्येनान्यत्र व्यापकसिद्धिः। अतिप्रसङ्गात्। न च परात्परमित्यादीन्येव निर्गुणविषयाणि-ज्ञापकाभावात्। न च वाच्यं मा भूदनुमानेन निर्गुणस्य वाच्यत्वसिद्धिः। पक्षीकृते लिङ्गा-भावात्। लिङ्गवति सिद्धसाधन(त्व)ात्। तथाऽपि 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति' इत्यादिश्रुतिबलाद्वाच्यत्वं निर्गुणस्य सेत्स्यतीति। मायाशबले गृहीत-सङ्गतयस्सर्वे वेदा लक्षणया यत्पदमामनन्तीत्यर्थोपपत्तेः। न चावाच्यस्य लक्षणाऽनुपपत्तिदोषः प्रसिद्धतामात्रेण लक्षणोपपत्तेः। सगुणप्रतीत्यैव च निर्गुणस्य तत्स्वभावभूतस्य सर्वात्मनः स्वतः सिद्धत्वात्। न च तदेवेक्षणीयत्वं येन वाच्यत्वापत्तिः। किन्तु प्रमेयत्वम्। न च स्वप्रका-शस्य प्रमेयत्वमिति॥ तदेतदाशङ्क्य परिहरति सूत्रकारः गौणश्चेन्नात्मशब्दादिति।

ब्र. सू.— ॥ ॐ। गौणश्चेन्नात्मशब्दात्। ॐ॥

" 'परात्परम्' इत्यादिश्रुतिषु गौण एवात्रेक्षणीयत्वेनोच्यते। अतस्स एव वाच्योऽस्तु न, निर्गुणः। तस्येक्षणीयत्वे प्रमाणाभावात्। परात्परमित्यादिश्रुतीनां च तत्परत्वे ज्ञापका-भावात्। किन्तु लक्ष्य एवासौ''इति चेन्न। आत्मशब्दात्। उपलक्षणमेतत्। ईक्षणीये वस्तु-न्यात्मब्रह्मपुरुषादिशब्दश्रवणात्। तेषां च पूर्णाभिधायित्वेन निर्गुणज्ञापकत्वादिति।

भवेदात्मादिशब्दः पूर्णार्थवाची। तथाऽपि यत्र दृश्ये वाच्ये (च) वस्तुनि प्रयुज्यते तत्र सगुणविषय एवेति नियमाङ्गीकारे को दोष इत्याशङ्कापरिहारार्थं (अपरं) सूत्रम् तन्निष्ठस्य मोक्षोप-देशादिति।

ब्र. सू.— ॥ ॐ। तन्निष्ठस्य मोक्षोपदेशात्। ॐ॥

**नायं नियमो युज्यते। 'यस्यानुवित्तः प्रतिबुद्ध आत्मा' 'तरति शोकमात्मवित्' इति(आदौ) दृश्यात्मनिष्ठस्य मोक्षोपदेशात्। न हि गौणात्मनिष्ठस्य मोक्ष उपपद्यत इति।**

**वा०**— आत्मब्रह्मादय इत्युत्तरानुव्याख्यानं गौणश्चेदिति तन्निष्ठस्येति सूत्रयोर्यथास्थितप्रतीयमानतात्पर्यकथनपरमिति भ्रान्तिनिरासाय भाष्यरीत्या प्रतीयमानतात्पर्यस्य स्फुटत्वात्तात्पर्यान्तरप्रतिपादकमेतदनुव्याख्यानमिति प्रतिपादयिष्यन् भाष्यरीत्या स्फुटप्रतीयमानतात्पर्यं कथयितुमुत्तरो ग्रन्थः।

नन्वत्र सौत्रशङ्काग्रन्थे सगुणस्य दृश्यत्वं वाच्यत्वं च न निर्गुणस्येति शङ्कितुराशयः प्रतीयते। तत्र निर्गुणात्सगुणं भिन्नमभिन्नं वाऽभिमतम्। भिन्नत्वे 'सदैव गुणवत्त्वेऽस्य भिन्नं स्यान्निर्गुणं सदा' इत्युक्तरीत्या कैवल्यानुपपत्तिदोषः। 'एकधैव'इत्यादिश्रुतिविरोधश्च। अभिन्नत्वे कूटस्थत्वहानिरिति पूर्वोक्तदोषात्कथमेतच्छङ्कावकाशः। सगुणस्येक्षणवाच्यत्वाङ्गीकारे च सिद्धान्ते सगुणस्य विष्णोरेवेक्षणेन वाच्यत्वस्य सिषाधयिषितत्वात्कथं तद्विरोधित्वम्। पराभिमतनिर्गुणस्यासत्कल्पस्य तेन लक्ष्यत्वाभ्युपगमेऽपि न सिद्धान्तिनोऽनिष्टं किञ्चित्। परात्परमित्यादिश्रुतेर्निर्गुणविषयत्वस्यापि संभवेन गौणस्यैवेक्षणेन वाच्यत्वं न निर्गुणस्येति शङ्कितुमशक्यं च। तस्याः सगुणमात्रविषयकत्वे वाऽनुमानेन निर्गुणस्य वाच्यत्वासिद्धावपि सर्वे वेदा इत्यादिश्रुतिबलात्तत्सिद्धिः संभवेदेव। श्रुतेर्लक्षणाऽऽदिविषयत्वेन सावकाशत्वे वा वाच्ये प्रकारान्तरेण प्रतीत्यसंभवेन लक्षणानुपपत्तिर्दोष एव। यथाकथञ्चित्प्रतीत्युपपादने च तत एवेक्षणीयत्वलाभाद्वाच्यत्वसाधनं सुकरमिति नायं सूत्रोक्ताक्षेपप्रकारः सदल इत्यतोऽस्मदभिमतस्य विष्णोरेवसत्त्वादिगुणशून्यतयानिर्गुणत्वेन परेण व्यवह्रियमाणत्वात्तस्यैव मायासंबन्धेन सगुणतया सगुणभेदेऽपि गुणानामनिर्वाच्यमायासंबन्धप्रयुक्ततया कूटस्थत्वहानिकरत्वाभावात्। अभेदेऽपि व्यावहारिकभेदेन सगुणेक्षणेन निर्गुणस्य वाच्यत्वाप्राप्तेरीक्षणश्रुतेश्च निर्गुणज्ञापकाभावेन सगुणमात्रविषयत्वेनानुमानासंभवाच्छ्रुतेश्च लक्षणादिविषयकत्वेनापि सावकाशत्वात्स्वप्रकाशतया प्रतीतेरप्युपपत्तेः। स्वप्रकाशत्वस्य चेक्षणीयत्वरूपत्वाभावात्सदल एव पूर्वपक्ष इति तदाशयमाह **अत्राहेति**। शुद्धमित्यादेर्मायाऽतीतं बोधस्वरूपं सत्त्वादिगुणसंबन्धशून्यं सर्वशक्तिपरिपूर्णमित्यादिरर्थः॥ एवं गौणनिर्गुणस्वरूपां भूमिं सिद्धवत्कृत्येदानीं शङ्काप्रकारं विशदयति **तत्रेति**। ज्ञापकाभावादिति सिद्धान्तीयज्ञापकोक्तिव्यावर्त्यकथनम्॥ **तथाऽपीति**। अनेन पूर्वसूत्रे सर्वे वेदा इति श्रुत्याद्यपि वाच्यत्वसाधकतया सूत्राभिमतमीक्षणीयत्वरूपन्यायस्य तु तदुपोद्बलकतयोक्तिरत एव भाष्ये श्रुतिस्मृत्योरेतत्सूत्रव्याख्यानावसरे उदाहरणमिति सूचितं भवति॥ नन्ववाच्ये लक्षणानुपपत्तेरुक्तत्वात्र तथा श्रुतिसावकाशत्वव्युत्पादनं युक्तमित्याशङ्क्य निषेधति **न चेति**। ननु लोके सगुणस्यैव प्रसिद्धत्वात्कथमेतदित्यतः सगुणस्य लोकप्रसिद्धिमेव निर्गुणप्रसिद्धित्वेनोपपादयति **सगुणेति**। यद्वा पूर्वं ब्रह्मशब्दादिना प्रसिद्धिरुक्ताऽधुना सगुणस्य स्वप्रकाशप्रतीतिमेव च तत्प्रतीति-

त्वेनाह **सगुणेति** ॥ सगुणप्रतीत्या कथं निर्गुणप्रतीतिरित्यत उक्तम् **तदिति** । तदपि कुत इत्यतो निर्गुणस्य सर्वात्मकत्वादित्याशयेनोक्तम् **सर्वेति** ॥ **स्वत इति** । स्वप्रकाशतयेत्यर्थः ॥ **किं त्विति** । वृत्तिप्रतिबिम्बितचैतन्यादिरूपफलव्याप्यत्वरूपप्रमेयत्वरूपत्वादीक्षणीयत्वस्येत्यर्थः ॥ **स्वप्रकाशस्येति** । फलाव्याप्यस्येत्यर्थः । अनेन 'गौण आत्मा दृश्यो वाच्यश्च । न निर्गुण इति युक्तम्' इति भाष्याभिप्रायो वर्णितो भवति ।

उक्तमभिप्रायं सूत्रारूढं कर्तुमाह **परादिति** । अत इत्यनेन भाष्ये दृश्यो वाच्यश्चेत्यनयोर्हेतुहेतुमद्भावेनान्वयो द्रष्टव्य इत्युक्तं भवति । गौणपदप्रयोगबललब्धार्थकथनं न निर्गुण इति । सिद्धान्तीयज्ञापकोक्तिबलेनोक्तप्रतिज्ञायां हेतुकथनं तस्येत्यादि । किन्तु लक्ष्य एवेति 'सर्वे वेदाः' इत्यादिश्रुत्याद्यन्यथासिद्धिसूचनम् । वक्ष्यमाणश्रुत्यन्तरस्य युक्तिसौकर्यार्थं च । अत्र प्रायः पूर्वपक्षस्पष्टीकरणम् तात्पर्यान्तरकथनावसरे वक्ष्यमाणरूपणसौकर्यार्थं चेति द्रष्टव्यम् । अत्र सूत्रे परात्परमितीक्षतिधात्वनुगतिमद्वाक्ये विद्यमानपुरुषपदं विहाय तत्र विद्यमानस्याप्यात्मशब्दस्योपादानं, यस्मिन्कस्मिंश्चिदपि ज्ञानकर्मत्वबोधकवाक्ये निर्गुणज्ञापकोक्तिमात्रेणेक्षणेन निर्गुणस्य वाच्यत्वसिद्धेर्न वाक्यविशेष एव तज्ज्ञापकं वक्तव्यमिति निर्बन्ध इति सूचयितुं, न तु परात्परमिति वाक्ये तदभावादित्याशयेनाह **उपलक्षणमिति** । अत एवोत्तरसूत्रनिरस्यशङ्काग्रन्थे दृश्ये वस्तुनि प्रयुज्यमानात्मादिशब्दस्य सगुणविषयत्वनियमाभ्युपगमः । अत एव च तत्र परिहारेऽपि यत्किञ्चिदीक्षणीयत्वबोधकवाक्यनिष्ठस्य तन्निष्ठस्य मोक्षोपदेशस्योक्तिरिति द्रष्टव्यम् ।

स० — **किन्तु प्रमेयत्वमिति** । प्रमाणजन्यज्ञानविषयत्वमित्यर्थः ।

प० — ईक्षणीयत्वहेतोर्ग्रथिकरणासिद्धिनिरासकतया गौणश्चेदितिसूत्रमवतारयितुमाह **अत्रा-हेत्यादि**ना । शुद्धेति जडमिश्रम् । बुद्धेति ज्ञानस्वभावः । तथाभाव सगुणभावः ॥ मा भूद्वाच्यत्वसिद्धिः इत्येतद्व्यनक्ति **पक्षीकृत इति** ॥ वाच्यत्वे युक्तेरिवागमस्यापि साधनत्वेनाभिमतत्वात्तमप्याशङ्क्य निराह पूर्ववादी तथापीत्यादिना ॥ **सर्वात्मन इति** । सर्वजीवस्य अहमितिसाक्षिसिद्धत्वादित्यर्थः । प्रमेयत्वं प्रमाणजन्यवृत्तिविषयत्वम् ।

या० — तत्स्वभावभूतत्वोपपादनायैव सर्वात्मन इत्युक्तम् ॥ **किन्तु प्रमेयत्वमिति** । प्रमाणजन्यज्ञानविषयत्वमित्यर्थः **स्वप्रकाशस्येति** । परानपेक्षप्रकाशस्येत्यर्थः ॥ छ ॥ छ ॥

श्री० — ननु मायायाः सत्यत्वे तदवच्छिन्नस्यसगुणत्वं सत्यमेव स्यात् । तथा च कूटस्थत्वहानिरित्यत आह **मायायाश्चेति** ॥ **न कूटस्थत्वहानिरिति** । न ह्यारोपितेन नीलिम्ना गगनस्य नीरूपत्वमपैतीति भावः । कुतो मा भूदित्यतस्तदुपपादयति **पक्षीकृत इति** । ईक्षणीयत्वस्य निर्गुणे स्वरूपासिद्धि-

रित्यर्थः ॥ ननु तर्हि यत्रेक्षणीयत्वहेतुरस्ति सगुणे तस्यैव पक्षत्वमभिप्रेतमिति चेत्तत्राह **लिङ्गवतीति** । सगुणे वाच्यत्वस्य सिद्धत्वादित्यर्थः ॥ **लक्षणोदपत्तेरिति** ॥ तथा च शब्दशक्त्यैव प्रतीतत्वं नापेक्षितमित्याशयः । ननु निर्गुणस्य यथाकथञ्चिद्वा प्रसिद्धिः कथमस्तीत्यतस्तदुपपादयति **सगुणेति** । विशिष्टप्रतीतौ विशेष्यस्यापि प्रतीतत्वादिति भावः ॥ ननु निर्गुणस्य स्वतः सिद्धत्वं तावत्त्वयैवोपपादितम् । स्वतः सिद्धत्वमेव चेक्षणीयत्वमिति निर्गुणस्येक्षणीयत्वं त्वयैवाङ्गीकृतमतः स्वतःसिद्धत्वरूपेक्षणीयत्वान्यथाऽनुपपत्त्या वाच्यत्वं प्रसक्तमेव । तथाच निर्गुणस्येक्षणीयत्वे प्रमाणाभावादित्युक्तमयुक्तमित्याशङ्क्य निषेधति **न च तदेवेति** । तथात्वे घटादावसाधारण्यापत्तेरिति भावः ॥ **प्रमेयत्वमिति** । प्रमाणजन्यज्ञानविषयत्वमित्यर्थ ॥ **स्वप्रकाशस्येति** । प्रमाणावेद्यस्य प्रमाणाजन्यज्ञानविषयत्वाख्यं प्रमेयत्वं व्याहतमिति भावः ।

ॐ **गौणश्चेन्नात्मशब्दात्** ॐ ॥ तत्परत्वे, मुख्यया वृत्त्या निर्गुणवाचकत्वे । श्रुतीनां निर्गुणवाचकत्वाभावे उपनिषदां ब्रह्मकाण्डत्वभङ्ग इत्याशयेन पृच्छति **किन्त्विति** ॥ उत्तरयति **लक्ष्य एवासाविति** । निर्गुण इत्यर्थः ।

**सु०** — अत्र प्रथमसूत्रे परात्परमित्यादिषु वाक्येषु निर्गुणज्ञापकोक्त्या हेतुसिद्धिस्समर्थिता । ज्ञापकस्य चान्यथासिद्धिरुत्तरसूत्रे परिहृतेत्येतावत्सूत्रद्वयतात्पर्यं स्फुटमवगम्यते । अधिकं विवक्षुराह आत्मेति ।

**अनु०** — ॐ **गौणश्चेन्नात्मशब्दात्** ॐ । ॐ **तन्निष्ठस्य मोक्षोपदेशात्** ॐ ॥

आत्मब्रह्मादयः शब्दाः साक्षात्पूर्णाभिधायिनः ॥
जन्मादिकारणं ब्रह्म लक्षितं च यदा तदा ॥
वन्ध्यापुत्रोपमं मायाशबलं वाच्यमित्यपि ॥
कल्पयित्वा विना मानं लक्ष्यं शुद्धं वदन्पदैः ॥
आत्मशब्दोदितस्यैव ज्ञानं मुक्तावसाधनम् ॥
आह श्रुतपरित्यागः स्याच्चास्याश्रुतकल्पना ॥
स्यात्सर्वत्र च

**यो वादी** तदेतदनिर्वाच्यमायाख्याज्ञानशबलं किञ्चिद्ब्रह्म कल्पयित्वा तदेव वैदिकैरशेषपदवाच्यमित्यपि कल्पयित्वा मायातीतं शुद्धं सर्वज्ञं सर्वशक्तिपरिपूर्णमस्मदभिमतं परं ब्रह्म पदे-

लक्ष्यमिति वदन्वदति । अस्य वादिनः श्रुतपरित्यागस्सर्वत्र सर्ववाक्येषु स्यात् । कथम् । वचनवृत्त्यैव प्रथमप्रतीतस्य शुद्धस्य ब्रह्मणो विना कारणेन परित्यागात् । कथं शुद्धस्य प्रतीतत्वम् । आत्मब्रह्मादिशब्दानां वेदे श्रवणात् । आत्मब्रह्मादिशब्दाश्च साक्षाद्वचनवृत्त्या पूर्णाभिधायिनो यदा यस्मात्तदा तस्मात् श्रुतपरित्याग इति ।

न केवलं श्रुतपरित्यागः किन्तु सर्वत्रापि वाक्येष्वश्रुतकल्पनं च स्यात् । कथम् । मायाशबलस्य ब्रह्मणो वन्ध्यापुत्रोपमत्वात् । तत्कथम् । विना मानम् । मानाभावात् । तदपि कथम् । श्रुतिष्वात्मब्रह्मादिशब्दश्रवणात्तेषां च पूर्णाभिधायित्वेन मायाशबलाविषयत्वात् ॥ ननु युष्माभिरेव जन्मादिसूत्रे मायाशबलस्य लक्ष्यत्वेनाङ्गीकृतत्वात्कथं (तत्)वन्ध्यापुत्रोपमःमिति । मैवम् । प्रथमसूत्रे जिज्ञास्यतयोक्तस्य सर्वज्ञस्य सर्वशक्तेः परब्रह्मण एवास्माभिर्जगज्जन्मादिकारणत्वेन लक्षितत्वाङ्गीकारादित्याद्यसूत्रतात्पर्यम् । आत्मशब्दोदितस्येति द्वितीयस्य । आत्मादिशब्दः पूर्णार्थोऽपि दृश्ये श्रुतो गौणविषय इति नियमं यो ब्रवीति स तथाविधात्मशब्दोदितस्य ज्ञानं मुक्तिसाधनमेवाह । गौणात्मज्ञानस्य मोक्षसाधनत्वानुपपत्तेः । तथा चास्य श्रुतपरित्यागः स्यात् । ह्यात्मज्ञानस्य मोक्षसाधनतया 'यस्यानुवित्तः' इत्यादौ श्रुतत्वादिति ।

न त्वेवमापादिते श्रुतपरित्यागाश्रुतकल्पने शक्याङ्गीकारे इत्याह यत्रेति ।

अनु० — यत्रैकमपि लोको जुगुप्सते ॥

यत्र ययोर्मध्ये एकमपि प्रसक्तम् । किमुभयमिति शेषः ।

वा० — अधिकतात्पर्यकथनावसरे परोक्तसगुणवाच्यत्वनिर्गुणलक्ष्यत्वबाधकत्वेन श्रुतहान्यश्रुतकल्पनाप्रसङ्गस्य प्रयोजनतया वक्ष्यमाणत्वात्तदङ्गीर्णतायै ज्ञापकोक्त्या हेत्वसिद्धिपरिहारं ज्ञापकान्यथासिद्धिपरिहारं च प्रयोजनतया दर्शयति अत्रेति ॥ अत्र श्रुतपरित्यागाश्रुतकल्पनोपपादकानां सङ्करेणोपपादनाद्विभज्य तदन्वयं दर्शयति यो वादीत्यादिना । वदन्नित्येतद्दूलब्धकथनं वादीति । लटः शतृशानचावप्रथमासमानाधिकरण इत्यत्र ( लटः शतृशानचावप्रथमासमानाधिकरणे । अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः । शबादि । पचन्तं चैत्रं पश्य । पचमानं चैत्रं पश्य । ) तदीयव्याख्यानरीत्या पर्युदासाश्रयणेन द्वितीयान्तादिसामानाधिकरण्याभिप्राये तस्य प्रकृतेऽभावाद्वदन्निति शत्रनुपपत्तिः । गीताभाष्यटीकोक्तरीत्या प्रसज्यप्रतिषेधाश्रयणेन प्रथमासामानाधिकरण्यनिषेधमात्राभिप्राये चास्येत्येतत्प्रतिसंबन्धितया वदन्नित्यस्यानुवाद्यसमर्पकताद्योतनाय यो वादीत्यध्याहारस्यावश्यकत्वात्प्रथमासामानाधिकरण्येन शत्रनुपपत्तेरित्यतो लट्ग्रहानुवृत्तौ ( लडिति । यद्यपि प्रथमान्तं प्रकृतं तथाऽपि

षष्ठ्या विपरिणम्यत इति भावः । ) पुनर्लङ्ग्रहणेन ( पुनरिति । एवं हि पुनर्विधिः सम्पद्यते । स च प्रथमेनाप्राप्तेऽपि क्वचित्प्रवृत्त्यर्थ इति भावः । उपलक्षणमिदम् । अप्रथमान्तेन सामानाधिकरण्याभावेऽपीत्यर्थः । तेन कुर्वतोऽपत्यं कौर्वतः । कुर्वतो भक्तिः कुर्वद्भक्तिः । कुर्वाणभक्तिरिति प्रत्ययोत्तरपदयोरपि सिद्ध्यति । शानच् । आने मुक् । अक्रस्वातो मुक् । पचमानः । ) क्वचित्प्रथमासमानाधिकरणेऽपि भवत्यतोऽस्ति ब्राह्मणः सन्ब्राह्मण इत्याद्युपपन्नमित्युक्तत्वात्प्रथमासमानाधिकरणे नानुपपत्तिरित्याशयेन यो धादीत्यध्याहृत्य तत्रैवानुवादसमाप्तिद्योतनाय वदन्निति व्याख्याति वदतीति । अनिर्वाच्येतिविशेषणेन परोक्तकूटस्थत्वहानिपरिहारस्य मूलारूढत्वस्य प्रदर्शनम् । ब्रह्मेति ब्रह्मद्वैविध्यसूचनम् । वैदिकैरित्यश्रुतकल्पनोपपादकेनानुक्तोपालम्भनिरसनम् । अस्तो यत्किञ्चित्पदवाच्यत्वेऽपि न क्षतिरित्यशेषैरिति । परभिमतशुद्धस्य निर्विशेषत्वेनासत्कल्पत्वेन वेदेऽश्रुततया तस्य लक्ष्यत्वेऽपि न श्रुतहानिरिति शुद्धमित्यनेनाभिमतं स्वाभिमतं ब्रह्मेत्याह **शुद्धमित्यादिना** । श्रुतपरित्यागस्य वाक्यनिष्ठदूषणत्वादाह **सर्वत्रेति** । आत्मब्रह्मादय इत्यनुव्याख्यानोक्तहेतुबललब्धं श्रुतहानिप्रसङ्गं साक्षादुपपादकं दर्शयति ॥ **वचनवृत्त्यैवेति** । शुद्धस्य साक्षात्प्रकृतत्वोपपादकस्यैतदनुव्याख्याबललब्धस्य योग्यस्याध्याहार आत्मेति । तस्य हेतुत्वमसमर्थनार्थतयाऽनुव्याख्यानोक्तं हेतुं योजयति **आत्मेति** । 'यदा तदेति हेत्वर्थे कालार्थे चापि भण्यत' इत्यभिधानानुसारेणोक्तं यस्मात्तस्मादिति ।

---

मानाभावोपपादकत्वेनात्राप्यात्मब्रह्मादय इत्यनुव्याख्यानोक्तहेतुर्दृष्टव्य इत्याशयेन श्रुतिष्वात्मशब्दाश्रवणे तेषां पूर्णत्वाभिधायकत्वोक्तिवैयर्थ्यात् तद्बललब्धं श्रुतिष्वात्मादिशब्दश्रवणस्य मानाभावं प्रति साक्षाद्धेतुत्वं पूर्ववदेवात्राप्यभिमतमित्याशयेनाह **श्रुतिष्विति** । पूर्णत्वाभिधायकत्वोक्तिफलकथनं मायेति । ब्रह्मशब्दप्रयोगसूचितयुक्तिकथनं प्रथमेत्यादि । आत्मशब्दोदितज्ञानस्य मया मुक्त्यसाधनताया अनुक्तेरनुक्तोपालम्भोऽयमित्यतोऽनुव्याख्यानेऽस्येत्येतद्बलात्तच्छब्दाध्याहारेण सूत्रनिवर्त्यनियमानङ्गीकर्तुस्तत्प्रतिसंबन्धित्वमित्याशयेन योग्यप्रतिसंबन्ध्याहारेण तदनुक्तिनिरासायाह **आत्मादिशब्दा इति** । तथार्थः । इत्यस्यात्मशब्दविशेषणत्वे दृश्ये श्रुत इति तदर्थः । आत्मशब्दोदितविशेषणत्वे तु दृश्य इति तदर्थः । एवकारसूचितहेतुकथनं गौणेति ॥ ननु मुक्त्यसाधनोक्तिमात्रं न दोष इत्यतः श्रुतपरित्यागमात्रं तत्फलतया प्रसज्य तदुपपादकतया सूत्रं योजयति **तथा चेत्यादिना** ।

आपाद्यानिष्टत्वप्रदर्शनायोत्तरानुव्याख्यानमित्याह **न चैवमिति** । यत्रेत्यस्यैकपरामर्शकत्वे निर्धारणासंभवादर्थान्तरानुपपत्तेश्चाह **तयोरिति** । आपादितत्वस्य मूलारूढतायै प्रसक्तमित्युक्तम् । यद्वा । श्रुतहान्यादेर्व्यभिचारादिवन्न स्वरूपेण दूषणत्वं किन्तु तर्करूपेणैवेति तत्प्रसञ्जनमेव दूषणमित्याशयेनैवमुक्तम् । उभयानिष्टत्वस्य मूलारूढतायै अपिशब्दबललब्धं योग्यमध्याहरति **किञ्चेति** ।

प०— अधिकं श्रुतहान्यादिकं दोषं सूत्रार्थतया विवक्षुरित्यर्थः। मूलपदानि योजयति **यो वादीत्यादिना** ॥ वदन्नित्यस्यार्थो वदतीति ॥ **इत्याद्यसूत्रतात्पर्यमिति**। 'यो वादी' इत्यादिनोक्तं प्रमेयं 'गौणश्चेत्' इतिसूत्रतात्पर्यमित्यर्थः॥ **द्वितीयस्येति**। 'तन्निष्ठस्य मोक्षोपदेशात्' इतिसूत्रस्येत्यर्थः।

या०— ॥ ॐ **गौणश्चेन्नात्मशब्दादिति** ॥॥ ॐ **तन्निष्ठस्य मोक्षोपदेशादिति** ॐ ॥ **अधिकमिति**। श्रुतहान्यश्रुतग्रहरूपमधिकं दोषं सूत्रार्थतया विवक्षुराहेत्यर्थः॥ **ननु युष्माभिरेवेति**। यद्यप्यस्माभिः सगुणं ब्रह्मैव जन्मादिसूत्रे लक्ष्यमित्यभिहितं न तु मायाशबलम् तथाऽपि स्वमते मायाशबलस्यैव सगुणत्वात्। सगुणस्य लक्ष्यत्वाङ्गीकारे भवद्भिरपि मायाशबलस्यैव तदङ्गीकृतमिति भ्रान्तस्येयमाशङ्केति ध्येयम्।

श्री०— ॐ **तन्निष्ठस्य मोक्षोपदेशात्** ॐ ॥ **ज्ञापकोक्तयेति**। आत्मशब्दादिरूपेत्यर्थः॥ **हेतुसिद्धिरिति**। ईक्षणीयत्वाख्यहेतुसिद्धिरित्यर्थः॥ **गौणात्मज्ञानस्येति**। गुणबद्धात्मज्ञानाद्गुणनिवृत्तिरूपमोक्षानुपपत्तिरित्यर्थः॥ ननु गौणज्ञानस्य मोक्षहेतुत्वं न श्रुतमेव। येन श्रुतहानिः स्यादित्यत आह **दृश्यात्मेति**। गौणात्मेत्यर्थः॥

---

सु०— अथ लोकजुगुप्सितमपीदमुभयं न दूषणं ममेत्यभ्युपेयात्तत्राह नियमेनेति।

अनु०— नियमेनोभयं स्याद्धि यस्य स्वपरयोर्मते ॥
अलङ्कृतः सदैवायं दुर्घटैरेव भूषणैः।

**अस्माभिरापाद्यते परेणाङ्गीक्रियते। न हि लोकजुगुप्सितं नामैकं प्रतिज्ञाहान्यादिकमिव निग्रहस्थानमस्ति। लोकस्याव्यवस्थितत्वात्। 'गतानुगतिको लोकः' इति वचनादिति मन्वानेनेति स्वपरयोर्मत इत्यनेन। यस्य नियमेनोभयमिदं स्यादयं दुर्घटैरङ्गीकारानर्हैर्भूषणैर्विपरीतलक्षणया दूषणैरलङ्कृतः स्यात्। यदि श्रुतमपि विशुद्धं ब्रह्म परित्यज्यते तर्हि सकलोऽपि वेदार्थस्त्यज्यतामविशेषात्। यदि चाश्रुतमपि मायाशबलं ब्रह्म कल्प्यते। तदा चैत्यवन्दनादेः स्वर्गसाधनत्वादे(दिकम)पि कल्पनी(यं)यत्वं स्यात्। विशेषाभावादित्याशयः।**

वा०— ननु लोकजुगुप्सिताङ्गीकारप्रसक्तेरेवाभावात्तत्रानिष्टप्रतिपादकोत्तरवाक्यमसङ्गतमित्यत स्तत्सङ्गमयति **अथेति**॥ ननु स्वमतेन श्रुतहान्यादिप्रसक्तेरेवाभावात्परं प्रति तदापादनेऽपि तन्मतेन तदप्रसक्तेः स्वपरयोर्मतेनेत्यनुपपन्नमित्यत आह **अस्माभिरिति**। अनेनापादनीयतयाऽस्मदभिमतत्वं स्वमतेनेत्यस्यार्थः। परेणाङ्गीक्रियमाणत्वं च परमतेनेत्यस्येत्याशयः। यद्वा। स्वशब्दस्य समभिव्या-

हृतपरत्वापादनीयतयाऽसदभिमतत्वं परमतेनेत्यस्यार्थः । परेणाङ्गीक्रियमाणत्वं च स्वमतेनेत्यस्येति द्रष्टव्यम् । पराङ्गीकारमुपपादयति **न हीति** । अनेन शङ्काभिप्राय उक्तो भवति । दुर्घटस्योद्भावनाऽसंभवादाह **अङ्गीकारानर्हैरिति** । दूषणापादनावसरे परं प्रति भूषणापादनं न युक्तमित्यत आह **विपरीतेति** । श्रुतहान्यश्रुतकल्पनयोरङ्गीकारेऽयुक्तं स्यादिति दूषणान्तरस्यापादयितुमशक्यतया श्रुतहान्यश्रुतकल्पनयोरेव चापादनानुपपत्त्या कथमेतदित्यतः प्रकृतश्रुतविशेषहान्यादेरापादकत्वेन परं प्रत्यनिष्टश्रुतविशेषहान्यादेरापाद्यत्वेन विवक्षायां न कोऽपि दोष इत्याशयेनैतदनुव्याख्यानसूचितमतिप्रसङ्गमाह **यदीत्यादिना** । व्याप्त्युपपादनमविशेषादिति ।

**स०**— स्वपरयोर्मत इत्येतदुपपादयति **अस्माभिरापाद्यत इति** । जुगुप्सितं परेणाङ्गीक्रियत इति संबन्धः ।

**प०**— स्वपरयोर्मत इत्यनेन दोषद्वयस्योभयसंमतिरुक्ता । तत्कथमित्यतोऽस्माभिरापाद्यमानत्वादसत्संमतत्वं परेणाङ्गीक्रियमाणत्वात्परसंमतत्वमितिभावेनाह **अस्माभिरिति** ॥ अङ्गीकारे परस्य किं बीजमित्यत आह **न हीत्यादिना मन्वानेनेत्यन्तेन** । इतिमन्वानेनाङ्गीक्रियते इति पूर्वेणान्वयः । उपपादितं मूलारूढं दर्शयति **इति स्वपरयोर्मतेनेति** ।

**या०**— स्वपरयोर्मत इत्येतदुपपादयति **अस्माभिरापाद्यत** इत्यादिना ॥ जुगुप्सितं कथं परेणाङ्गीक्रियत इत्याशङ्कापरिहाराय पराभिप्रायमाह **न हीत्यादिना इतिमन्वानेनेत्यन्तेन** । इति मन्वानेन परेणाङ्गीक्रियत इति सम्बन्धः ।

**सु०—न केवलं श्रौतस्य परमात्मनस्त्यागेऽतिप्रसङ्गमात्रम् । महाप्रत्यवायोऽप्यस्तीत्याह** अन्धमिति ।

**अनु०**— अन्धन्तमो नित्यदुःखं तस्य स्याद्वसनद्वयम् ॥

**अन्धयतीत्यन्धम् । अलङ्कृतस्य वसनाभ्यां भाव्यम् । 'वस्त्रहीनमलङ्कारं घृतहीनं तु भोजनम् । भावहीनं तु सल्लापं न प्रशंसन्ति पण्डिताः ॥' इति वचनात् । अतो वसनद्वयमिदं स्यादिति परिहासः । अत्र प्रमाणमाह** अनन्दा इति ।

**अनु०**— अनन्दा नाम ते लोका अन्धेन तमसावृताः
तांस्ते प्रेत्याभिगच्छन्ति येऽविद्वांसो बुधो जनाः ।
असुर्या नाम ते लोका अन्धेन तमसावृताः ॥
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥
इत्यादिश्रुतयो मानं शतशोऽत्र समन्ततः ॥

न विद्यते नन्द आनन्दो येषु ते अनन्दाः ते इति प्रसिद्धाः । बोधनाद्बुधेदस्तस्मादपि येऽविद्वांसो वेदेन मुख्यया वृत्त्या प्रतिपादितमपि परमात्मस्वरूपमपलपन्त इत्यर्थः । सुष्ठु-रमणविरुद्धत्वादसुरप्राप्यत्वाच्चासुर्याः । आत्महनो वेदवाच्यपरमात्मत्यागिनः । अत्र उक्तार्थे । समन्ततः सर्वास्वपि शाखासु ।

वा०— दूषणकथनावसरेऽन्धन्तम इत्यादि किमुच्यत इत्यतस्तत्तात्पर्यमाह **न केवलमिति** । प्रत्यवायोऽप्यस्तीत्याहेति मूलव्याख्यावसरे गीताभाष्यटीकोक्तरीत्या प्रत्यवायशब्दोऽनिष्टपरः । यद्वा । एतन्मूलानुसारेणागत्या तत्र तथा व्याख्यानेऽप्यनिष्टमिति वक्तुं शक्ये बलादेवंप्रयोगस्यानुचितत्वादत्रा-निष्टोक्त्या प्रत्यवायस्तद्धेतुभूतो गम्यते । तस्य च महत्वान्महाप्रत्यवायलाभ इत्याशयो द्रष्टव्यः । अचेतनस्य तमसोऽन्धत्वासंभवादाह **अन्धयतीत्यन्धमिति** । वसनोक्ति परिहासोपयोगितया सङ्गमयति **अलङ्कृतस्येति** । नित्यदुःखमित्यस्य तमोविशेषणत्वेऽपि तद्विशेषणबलात्तमोरूपस्थलस्य तत्रत्यदुःखस्य च पृथक्त्वविवक्षयैकस्य तमस एवोर्ध्वाधरभागविवक्षया वा द्वित्वं द्रष्टव्यम् । अलङ्कारवसनोक्तितात्पर्यमाह **परिहास इति** ।

'नित्यदुःखस्वरूपत्वादनन्दं तत्तमो मतम्' इति 'तेऽपि यान्ति तमो घोरं नित्योद्रिक्ता-सुखात्मकम्' इति च बृहद्भाष्यं मनसि निधायानन्दशब्दं व्याख्याति **न विद्यत इति** । एवं च नित्य दुःखस्वरूपत्वाद्युक्तिस्तत्तात्पर्यबललब्धेति भावः । यद्यपि नन्दविरुद्धदुःखमनन्दं तद्येषु तेऽनन्दा इत्यपि व्याख्याने तदुक्तिरर्थकथनमेव भवति । तथाऽपि प्रतिपत्तिगौरवापत्तिभयेनैवमुक्तम् । पूर्वं लोकविशेषस्या-प्रकृतत्वे तच्छब्देन परामर्शासम्भवात्तमस्त्वस्यालाभाच्च त इति पुनः श्रुतत्वादगौनरुक्त्या च प्रसिद्ध्यर्थतया तच्छब्दं व्याख्याति **त इतीति** । यद्यपि 'बोधके विद्यमानेऽपि ये विदुर्न परं हरिम्' इति 'बोधनाज्ज्ञानवान् बुत्स्यात्तत्सकाशाच्च ये हरिम्' इति च तद्भाष्ये बुच्छब्दं ज्ञानिपरमभिप्रेत्याविद्वांसोबुधो जना इति वाक्यं प्रकारान्तरेण व्याख्यातं तथाऽपि बोधकर्तरीव तत्करणेऽपि कर्तृत्वविवक्षया बोधक इति बोधयतीत्या-दिशब्दानां बहुलं प्रयोगात् 'इत्यादिश्रुतयो मानं शतशोऽत्र' इत्येतदनुव्याख्यानस्वारस्यानुरोधाद्बृहद्भा-ष्योक्तसमानन्यायत्वाच्च प्रकृतोपयोगितया व्याख्याति **बोधनादित्यादिना** ॥ असुर्यशब्दव्याख्यानरूपमी शावास्यभाष्यं प्रायोऽनुकरोति **सुष्ठ्विति** । सुष्ठु रमणं सुर्यं तद्विरुद्धमहादुःखवत्त्वादित्यर्थः । सुर्यविरुद्ध-मसुर्यं तद्येषु तेऽसुर्या इत्यर्थः । असुराणां प्राप्यत्वादित्यनेन सकलसुखराहित्यमुपलक्ष्यते । असुरैर्यायन्ते तेऽसुर्या इति ॥ 'महादुःखैकहेतुत्वात्प्राप्यत्वादसुरैस्तथा । असुर्या नाम ते लोकास्तान्यान्ति विमुखा हरौ' इति तद्भाष्ये आत्महन इत्येतदर्थेनयोक्तस्य हरौ वैमुख्यस्यैवमपि सम्भवात्प्रकृतोपयोगितयाऽऽत्महन इत्येतद्व्याख्याति **आत्महन इति** ॥ अत्रेत्यस्य समन्तत इत्यनेन सम्बन्धे आसु सर्वासु शास्त्रास्विति

भ्रान्तिनिरासायोक्तेऽर्थे प्रमाणत्वस्य मूलारूढतायै चाह अत्रेति । अनेकशाखास्थवाक्योदाहरणात्तदनुसारेण समन्तत इति व्याख्याति समन्तत इति ।

**स०— महाप्रत्यवाय इति ।** महाननर्थ इत्यर्थः ।

**प०—** पञ्चम्यन्तत्वेन बुध इतिपदं व्याचष्टे **बोधनादिति** । बोधजनकत्वादित्यर्थः । बुध्यतेः क्विप् ॥ श्रुतिगीतातात्पर्योक्तार्थमाह **सुष्ठिति** ।

**या०— महाप्रत्यवाय इति ।** यद्यपि मूले नित्यदुःखाविर्भावरूपं फलमेवोच्यते न प्रत्यवायः । तथाऽपि कार्योक्त्या कारणमप्युक्तप्रायमेवेत्यभिप्रेत्यैवदुक्तमित्यवगन्तव्यम् ॥ छ । छ ॥

**श्री०— भाव्यमिति ।** यथोक्तं मन्न्यायरत्नावल्यां 'वस्त्रहीनालङ्कारस्यानुचितत्वात्' इति ॥ अनुचितत्वमेवोपपादयति **वस्त्रहीमिति** ॥ **वमनद्धमिमिति** । अन्धन्तमस्तत्रत्यं नित्यदुःखं चेत्युभयमुत्तरीयं प्रधानवस्त्रं च स्यादित्यर्थः । यथोक्तं तत्रैव 'अन्धन्तमो नित्यदुःखं चोत्तरीयप्रधानवस्त्रत्वेन स्वीकुर्यात्' इति ।

**सु०— दृश्ये वस्तुनि श्रुत आत्मशब्दो गौणपर इति नियमं हेत्वन्तरेणापाकुर्वन्सूत्रं पठित्वा सूत्रे साध्यनिर्देशाभावेन साकाङ्क्षं वाक्यं पूरयति** हेयत्वेति ।

**ब्र.सू.— ॥ ॐ ॥ हेयत्वावचनाच्च ॥ ॐ ॥**

**अनु०—** ॐ ॥ हेयत्वावचनाच्च ॐ ॥

हेयत्वावचनाच्चैव नात्मा गौण श्रुतौ श्रुतः ॥

**एवशब्दो नैवेति संबध्यते । दृश्यत्वेनेति शेषः ।**

**वा०—** उत्तरवाक्ये सूत्रव्याख्यानादर्शनात्तद्वैयर्थ्यमित्यतः सूत्रप्रतिपाद्यं प्रदर्शयन्नेवोत्तरवाक्यतात्पर्यमाह **दृश्य इति** ॥ चशब्देन विरोधादेवकारं भिन्नक्रमतया व्याख्याति **एवशब्द इति** ॥ श्रुतौ श्रुतस्य सर्वस्यात्मनो गौणत्वेन मयाऽप्यङ्गीकाराद्धेयत्वावचनेन गौणत्वाभावसाधने सिद्धसाधनतेत्यतः पराभिमतनियमाभावसाधनमेतदित्याशयेन सूत्रनिष्ठ्यनियमस्य मूलारूढतायै शेषं पूरयति **दृश्यत्वेनेति शेष इति** ।

**सु०— एवं सूत्रस्वरूपं निर्धार्य व्याचष्टे** तमेवेति ।

**अनु०—** तमेवैकं जानथान्या वाचो मुञ्चथ चेति ह ॥

उक्त आत्मा कथं गौणो हेयपक्षे ह्यसौ श्रुतः ॥

दृश्य आत्मा गौण एवेति नियममङ्गीकुर्वाणेन 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ, अमृतस्यैष सेतुः' इति श्रुतोऽप्यात्मा गौणोऽङ्गीकरणीयः। तस्य तं जानथेति दृश्यत्वश्रवणात्। कथं चायं गौणोऽङ्गीकर्तुं शक्यः। यतोऽसौ गौणो मुमुक्षुणा हेयेषु 'अन्या वाचो विमुञ्चथ' इति श्रुतः। अस्य च हेयत्वावचनात्। प्रत्युत तमेवैकं जानथेत्युपादेयत्ववचनाच्च (इति)। चशब्दो वाक्यार्थद्वयसमुच्चयार्थः। हेत्याश्चर्ये।

वा०—ननु तमेवैकमिति वाक्यश्रुतस्यात्मनो गौणत्वाभावेऽपि न ममानिष्टं किञ्चिदिति तत्साधनमनुपपन्नमित्यतो नियमभङ्गेन कथं नानिष्टमित्याशयेन सूत्रार्थभूतभाष्यं सङ्गमयितुं पीठमारचयति दृश्य आत्मेति ॥ सौत्रहेयत्वावचनबललब्धमन्यहेयत्ववचनं भाष्यकारेण हेतुतया निर्दिष्टं प्रकृतसाध्ये हेतुत्वेन सङ्गमयन्नेवोदाहृतश्रुत्यंशे योग्यतया श्रुत इत्येतदन्विततया च दर्शयति यत इति ॥ धर्मितया निर्दिष्टस्य श्रौतात्मनोऽसाविति परामर्श इति भ्रान्तिनिरासाय 'कथं गौण' इति निषेधप्रतियोगितया प्रकृतगौणस्यायं परामर्श इत्याह असौ गौण इति ॥ 'अमृतस्यैष सेतुः' इति वाक्यशेषबलेन हेयत्वं घटयति मुमुक्षुणेति ॥ पक्षशब्दः कोटिपर इत्याशयेन हेयेष्विति तात्पर्यकथनम् ॥ गौणहेयत्ववचनमात्रं नैतस्य गुणत्वाभावसाधकमित्यतः साक्षात्सूत्रोक्तहेतुं सङ्गमयति अस्य चेति। अस्यापि यत्किञ्चिदन्यत्वादेतदेव हेयत्ववचनमिति तदवचनमसिद्धमित्यतः सूत्रे नञो भिन्नक्रमत्वेन सूचितं चशब्देन वा समुच्चितं 'तमेवैकम्' इतिश्रुत्यंशोदाहरणेन भाष्यकारेण सूचितमुपादेयत्ववचनं च हेतुतया व्यापारयति प्रत्युतेति ॥ भाष्ये चशब्दो न श्रुत्युक्तक्रियाद्वयसमुच्चयार्थो वैयर्थ्यापत्तेः किन्तु कथमयं गौणोऽङ्गीकर्तुं शक्य इति साध्ये समुच्चितयोर्हेतुत्वज्ञापनायेति 'अन्या वाचो विमुञ्चथ' 'तमेवैकं जानथ' इति वाक्यार्थभूतगौणहेयत्वदृश्यात्महेयत्वयोः समुच्चयार्थ इत्याह चशब्द इति ॥ हेत्याश्चर्य इति। उपादेयत्वेन श्रुतस्य दृश्यात्मनो हेयत्वेन श्रुतगौणत्वं वदन्नद्भुत इति भावः।

प०—च शब्द इति। मुञ्चथ चेति चशब्द इत्यर्थः। 'तमेवैकं जानथ' इति 'अन्या वाचो विमुञ्चथ' इति वाक्ययोः यावर्थौ, 'अस्य च हेयत्वावचनात्' इत्यादिनोक्तौ, तद्द्वयसमुच्चयार्थ इत्यर्थः ॥ आश्चर्य इति। अगौणतया प्रतीतमपि गौणं वदतीत्याश्चर्य इत्यर्थः। एवं वक्तारो दुर्लभा इति भावः।

या०— ॐ हेयत्वावचनाच्च ॐ ॥ उपादेयत्ववचनाच्चेति। अनेनाहेयत्ववचनाच्चेति सूत्रयोजनोक्तिरिति द्रष्टव्यम् ॥

श्री०— ॐ हेयत्वावचनाच्च ॐ ॥ सूत्रस्वरूपं निर्धारयति साध्यभागपूरणेन सूत्रवाक्यं निराकाङ्क्षं कृत्वेत्यर्थः ॥ वाक्यार्थद्वयेति। अस्य हेयत्वावचनात्। प्रत्युत तमेवैकमित्यहेयत्ववचनात्

उपादेयत्ववचनादिति यावदित्येको वाक्यार्थः । 'अन्या वाच' इत्यन्येषां हेयत्ववचनादित्यपर इति वाक्यार्थद्वयेत्यर्थः ।

सु— ननु गौणानामपि ब्रह्मादिदेवतानामुपादेयत्वं वक्ष्यति अङ्गावबद्धास्त्वित्यादौ । अतोऽनैकान्तिकोऽयं हेतुरित्यत आह परिवारतयेति ।

अनु०— परिवारतया ग्राह्या अपि हेयाः प्रधानतः ॥

सत्यं विष्णुपरिवारतया ग्राह्या ब्रह्मादयः(ग्राह्याः) । तथाऽपि प्रधानत्वेन हेया एव । प्राधान्येन चोपादेयत्वमत्र हेतुत्वेन विवक्षितम् । अमृतस्यैष सेतुरिति वाक्यशेषात् । अतो न व्यभिचार इति ।

वा०— परिवारतयेत्युत्तरवाक्याभिप्रायत्वेन भाष्याभिमतं यत्प्राधान्येनोपादेयत्वस्य हेतुत्वं तत्र प्राधान्यरूपहेतुविशेषणप्रयोजनं दर्शयन्नुत्तरवाक्यमवतारयति नन्विति । एवं च मायावाद्यभिमतस्या स्वदभिमतेश्वरजीवादि विलक्षणस्य ब्रह्मणो गौणस्येतरगीयत्ववाच्यत्वयो पराभिमतत्वे तस्याधिकता त्पर्यकथनदशायामनुभाष्यकारीया वन्ध्यापुत्रो पमत्वाद्युक्तिः, जीवादिरूपगौणात्मत्वाभिप्राये च हेयत्वा द्युक्तिरिति न पूर्वोत्तरविरोधः । भाष्ये तु गौणात्मनो वन्ध्यापुत्रोपमत्वाद्युक्त्यभावात्तदनुसारेण तत्त्वप्रकाशि कायां गौणश्चेदित्येतद्व्याख्यावसरे जीवाख्य इति विशिष्यैवोक्तिरिति द्रष्टव्यम् ॥ प्रकृतोपयोगितयाऽन्वयं दर्शयति सत्यमिति ॥ प्राधान्यविवक्षाज्ञापकेन श्रौतज्ञापकमाह अमृतस्येति ।

प०— अङ्गेति । अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्' इत्युपासनापादीयाधिकरणे अङ्गैरङ्गदेवैरवबद्धाः संबद्धा अङ्गदेवताभूतब्रह्मादिविस्य इति यावत् । उपासनाः परिचर्यादय कार्या इति वक्ष्यमाणत्वादिति भावः ॥ अनैकान्तिकेति । निर्गुणव्यभिचारीत्यर्थः । प्रधानत इति भावप्रां धानं मत्वाऽऽह प्रधानत्वेनेति ।

या०— ननु गौणानामपीति । ननु गौणशब्देन मायाशबलस्य पूर्वमुक्तत्वादत्र जीवानां ग्रहणं कथमिति चेत् । उच्यते यत्र हेयत्वादिकमुच्यते तत्र सर्वथा निर्गुणं न वाच्यम् । किन्तु मायाशबलं वा गुणबद्धा जीवा वा वाच्या इत्यभिप्रायः पूर्वपक्षिणोऽतो न विरोध इति ज्ञातव्यम् ॥ अनैकान्तिको हेतुरिति ॥ निर्गुणेन व्यभिचारीत्यर्थः ॥ अमृतस्यैष इति । एष परमात्माऽमृतस्य मोक्षस्यार्थे सेतुर्मुख्याश्रयः । अतः प्राधान्येन स एव ज्ञेय इति तद्वाक्याभिप्रायः । अतोऽस्य प्रकृत सङ्गतिरिति ध्येयम् ॥ छ ॥ छ ॥

---

१. वा.र.— गौणश्चेदि आदि ...य धि...तात्पर्यकथनदशायाम् ।

सु०— एवमात्मशब्दस्य निर्गुणविषयत्वमुपपाद्य निर्गुणस्यैव वाच्यत्वं समर्थितम् । हेत्वन्तरेणास्यैवार्थस्योपपादकम् 'स्वाप्ययात्'इति सूत्रं व्याचष्टे पूर्णस्येति ।

ब्र.सू.— ॥ ॐ । स्वाप्ययात् । ॐ ॥

अनु०— ॥ ॐ स्वाप्ययात् ॐ ॥

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।
इति स्वस्यैव पूर्णस्य पूर्णेऽप्यय उदाहृतः ॥

**पूर्णस्येत्यस्यां श्रुतौ तावत्कस्यचिन्महाप्रलये स्वस्य स्वस्मिन्नेवाप्ययो नान्यत्रलीनभाव उदाहृतः । स्वाप्ययशब्दश्च सौत्र उपलक्षणमात्रम् । पूर्णत्वमप्युदाहर्तव्यम् । ताभ्यामसौ निर्गुण इति ज्ञायते । श्रुत्युक्तत्वाच्च वाच्य इत्यतो निर्गुणस्य वाच्यत्वसिद्धिरिति ।**

वा०— पूर्वसूत्रवदुत्तरसूत्रस्यापीक्षणीयस्य गौणत्वनिरासकत्वमेव न तु प्रधानसाध्यहेतुसमर्पकत्वमिति भ्रान्ति निरसितुं पूर्वसूत्रचतुष्टयस्यैकहेतुसमर्थनपरत्वमुत्तरस्य तु वाच्यत्वहेत्वन्तरसमर्पकत्वं च दर्शयन्नेव भाष्यमवतारयति **एवमिति** । अत्र, इति स्वस्यैव पूर्णस्य पूर्णेऽप्यय उदाहृत इत्यनुव्याख्यानानुसारेण पूर्णत्वविशिष्टस्य पूर्णत्वविशिष्टे लयस्य विशिष्टस्यैव निर्गुणत्वसाधकत्वं प्रतीयते । तच्च स्वस्य स्वस्मिन्नप्ययमात्रस्य तत्साधकत्वोपपादकभाष्येण पूर्णत्वमात्रस्य तत्साधकत्वोपपादकेन 'कथं मायाव्यवच्छिन्न' इत्युत्तरानुव्याख्यानेन विरुद्धमतोऽत्रापि स्वाप्ययमात्रस्यैव हेतुत्वमभिमतं पूर्णस्य पूर्ण इत्युक्तिस्तु सौत्रहेतोरुपलक्षणत्वज्ञापनाय न तु विशिष्टहेतुत्वमभिप्रायेणेत्याशयेन भाष्यं व्याख्याति **पूर्णस्येत्यादिना** ॥ सौत्रोपपादनस्य साक्षात्साध्यं परमसाध्यं च दर्शयन्प्रकृतोपयोगं दर्शयति **ताभ्यामित्यादिना** ।

स०— **श्रुत्युक्तत्वाच्च वाच्य इति** । 'पूर्णमदः पूर्णमिदमि'ति श्रुत्युक्तत्वाच्चेत्यध्याहृतसूत्रं वाच्यतासाधनाय प्रवृत्तम् । अस्याः श्रुतेः सगुणपरतानिरासाय स्वाप्ययादिति सूत्रं प्रवृत्तम् । अत एव तत्र चशब्दाभाव इति द्रष्टव्यम् ।

प० ननु सौत्रस्वाप्ययहेतोः तदुपलक्षितपूर्णत्वहेतोश्च 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते'इतिश्रुत्युक्तो निर्गुण इति साध्येनैवान्वयेन वाच्यत्वरूपसाध्येनान्वयाभावात्कथमस्यैव वाच्यत्वस्यैवोपपादकं 'स्वाप्ययात्' इति सूत्रमिति पूर्वमवतारितमित्यतः परंपराभिप्रायेणेति भावेन हेत्वन्तरमध्याहृत्याऽऽह **श्रुत्युक्तत्वाच्चेति** । एतेन हेत्वन्तरत्वे चशब्दः स्यादिति निरस्तम् । पूर्णमद इत्यादिश्रुत्युक्तत्वाच्चेति वाच्यत्वे हेतुत्वाशयेन हेत्वन्तरेणेति पूर्वोक्तिसंभवात् ॥ नन्वेवमीक्षणीयत्वादिति प्रधानहेतोर्हि श्रुत्यैकजन्यज्ञानविषयत्वादित्यर्थस्याभिमतत्वात्तेनास्य हेतोरविशेषः । श्रुत्युक्तत्वादि-

त्यस्यापि श्रुतिजन्यज्ञानविषयत्वादित्यर्थकत्वादिति चेन्न । तत्र तु श्रुतिसामान्यजन्यज्ञानविषयत्वादात्मावाच्य इत्यर्थस्य अत्र स्वाप्ययपूर्णत्वरूपधर्मद्वयोपेतपूर्णमद इत्यादिश्रुतिविशेषजन्यज्ञानविषयत्वान्निर्गुण आत्मा वाच्य इत्यर्थस्याभिमतत्वेन सामान्यविशेषरूपतया पौनरुक्त्याभाव इति तात्पर्यात् । एवं श्रुतत्वाच्चेत्यत्रापि ध्येयम् ।

या० — ॥ ॐ **स्वाप्ययात्** ॐ ॥ **उपपादकमिति** । वक्ष्यमाणरीत्या परम्परयोपपादकमित्यर्थः ॥ **श्रुत्युक्तत्वाच्च इति** । अत्र वाच्यतासाधनाय 'श्रुत्युक्तत्वाच्च' इति सूत्रमध्याहार्यम् । 'पूर्णमदःपूर्णम्'इति श्रुत्युक्तत्वाच्च वाच्यो निर्गुण इति तदर्थः । अस्या अपि श्रुतेः सगुणपरता किं न स्यादिति शङ्कानिरासाय स्वाप्ययात् इति सूत्रम् । अत एव तत्र चशब्दाभाव इति सम्प्रदायः । छ ॥ छ ॥

**सु० — ननु स्वाप्ययः पूर्णत्वं च सगुणस्य किं न स्यात् । मैवम् । सगुणस्य स्वाप्ययानुपपत्तिस्तावद्भाष्य एवोक्ता । पूर्णत्वानुपपत्तिमाह** कथमिति ।

**अनु० —** कथं मायाव्यवच्छिन्नः पूर्णो मुख्यतया भवेत् ॥

**व्याघातादिति भावः ।**

**वा० —** उत्तरानुव्याख्याने स्वाप्ययानुपपत्त्यव्युत्पादनं न स्वाप्ययस्याहेतुत्वान्नापि तस्य सगुणाविषयत्वशङ्काऽनवकाशात्किन्तु भाष्ये स्वाप्ययानुपपत्तेः 'न हि गौण आत्मनि निर्दोषस्य लयः' इति प्रतिपादनादतो न तस्य हेतुत्वेऽपि तदनुपपत्त्यप्रतिपादनप्रयुक्तन्यूनतेत्याशयेनोत्तरवाक्यमवतारयति **नन्विति** ।

**प० — भाष्यएवेति** ॥ न हि गौण आत्मनि निर्दोषस्य लय इति भाष्य इत्यर्थः । व्याख्यातं च तद्भाष्यटीकायां । यद्ययं स्वाप्ययवान् गौणस्तर्हि स निर्गुणश्चोभौ प्रलये लयहीनौ तिष्ठत उतैकस्मिन्नन्यस्य लयो भवति । नाद्यः । इदं वा अग्रे नैव किंचनासीदित्यादिविरोधात् । द्वितीयेऽपि न तावद्गौणस्य निर्गुणे लयः । तस्य स्वाप्ययेनानस्थाऽभ्युपगतेः । तथा च निर्गुणस्य सगुणे लयो वाच्यः । स चाशक्यः । गौणात्मनि निर्दोषस्य सत्वादिगुणहीनस्य शुद्धस्य'यत्प्रयंति'इत्यादिश्रुतिविरोधेन लयानुपपत्तेरिति ।

**श्री० —** ॥ ॐ **स्वाप्ययात्** ॐ ॥ स्वस्मिन्नेव पूर्ण एव । लीनभावो लीनत्वम् । नान्यत्र लीनभावोऽन्यत्र लीनत्वाभाव इत्येवकारव्यावर्त्यप्रदर्शनम् ॥ **भाष्य एवेति** । न हि गौणात्मनि निर्दोषस्य लय इति भाष्य इत्यर्थः । स्पष्टमेतत्तत्त्वप्रकाशिकायाम् ॥ **व्याघातादिति** । सगुणस्य मायाऽवच्छिन्नत्वादेव न देशतः पूर्णत्वं व्याहतेः । अवच्छिन्नस्य अनित्यत्वादेव न कालतः पूर्णत्वं व्याहतेः । अवच्छिन्नस्य अनित्यत्वादेव न कालतः पूर्णत्वं व्याघातात् । तादृशस्य गुणतोऽपि पूर्णत्वमनुभवादिविरुद्धमिति

द्रष्टव्यम् । यथोक्तं सन्न्यायरत्नावल्याम् 'पूर्णमद' इत्यादिनाऽऽत्मशब्दार्थस्य ब्रह्मणो मूलरूपस्यावतार-रूपस्य च त्रिविधं श्रूयमाणं पूर्णत्वं मायाऽवच्छिन्नस्य प्रतिपाद्यत्वे व्याहतं स्यादिति ।

सु० — अत्र गतिसामान्यादिति **सूत्रं न तावद्ब्रह्मणो वाच्यत्वसमर्थनार्थम् । किन्तु शास्त्रस्यानन्तत्वान्न सर्वशास्त्रप्रतिपाद्यत्वं ब्रह्मणो निश्चेतु शक्यमित्याशङ्कितदोषपरिहारार्थमित्यतः प्रकरणशुद्ध्या व्याचिख्यासुस्तदुल्लङ्घितवान् । व्याख्यास्यति चैतदुत्तरत्र । सूत्रकारस्यापि प्रकरणसाङ्कर्यस्यैतदेव प्रयोजनम् यदाक्षेपद्वयसमाधानस्य पूर्वसूत्रस्थसंशब्दार्थसमर्थनमेकमेव प्रयोजनमिति सूचनम् । तेन चावृत्त्या संशब्दस्यानेकार्थताज्ञापनम् । अन्यथैकेनार्थेन चरितार्थस्यार्थान्तरं न ज्ञायेत । तथा च न लक्षणद्वयस्य शास्त्रीयता स्यादिति ।**

वा० — पूर्वपक्षदशायामाक्षेपद्वयं कृतं यद्भङ्गिस्तदयुक्तमेतदधिकरणे द्वितीयाक्षेपपरिहारादर्शनात् इत्यतः तदाक्षेपपरिहारार्थकसूत्रस्य भाष्यकारेणात्राव्याख्यातत्वान्नानुपपत्तिरित्याशयेन तदुल्लङ्घने निमित्तं दर्शयति **अत्रेति** । शुद्धिरसाङ्कर्यम् । तर्हि न्यूनतेत्यत आह **व्याख्यास्यति चेति** । सूत्रकाराचातुरीं प्रयोजनसद्भावेन परिहरति **सूत्रेति** ॥ **अनेकार्थताज्ञापनमिति** । उपक्रमादिनिष्ठसम्यक्त्वस्यैव शब्दनिष्ठमुख्यवृत्तिसाकल्ययोरपि तदर्थत्वज्ञापनमित्यर्थः ॥ **एकार्थेनेति** । सम्यक्त्वरूपेणेत्यर्थः ॥ **तथा चेति** । सम्यक्त्वज्ञापनमात्रेण जगत्कारणत्वस्य शास्त्रीयतासिद्धावप्यनन्तगुणपूर्णत्वस्य शास्त्रीयता मुख्यत्वसाकल्याज्ञापने न सिध्येदित्यर्थः ।

स० — **प्रकरणशुद्ध्येति** । वाच्यत्वपराण्येव सूत्राणि व्याचिख्यासुरित्यर्थः । अन्यथा मध्ये पाठक्रममनुसृत्य गतिसामान्यादितिसूत्रव्याख्याने वाच्यत्वसमर्थनप्रकरणं परित्यक्तमिति प्रतीतिः स्यादिति भावः । ननु तर्हि तत्सूत्रव्याख्यानाभावान्न्यूनतेत्यत आह **व्याख्यास्यति चेति** । 'कथं समन्वयो ज्ञेयः स्वल्पशाखाविदां नृणामि'त्यादिना तृतीये व्याख्यास्यतीत्यर्थः । ननु सूत्रकारेणापि सर्वशाखाप्रतिपाद्यत्वसमर्थनपरं 'गतिसामान्यात्' इति सूत्रं वाच्यत्वसमर्थनप्रकरणमध्ये किमर्थं निवेशितमित्याशङ्कायामाह **सूत्रकारस्यापीति** ॥ **आक्षेपद्वयसमाधानस्येति** । पूर्वपक्षिणा कृतं, ब्रह्मणो न वाच्यत्वं युक्तं, न वा सर्वशास्त्रप्रतिपाद्यत्वं युक्तमिति यदाक्षेपद्वयं तत्समाधानस्यास्मिन्नधिकरणे क्रियमाणस्येत्यर्थः । **अनेकार्थताज्ञापनमिति** । 'मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य नापरः' इत्यनेन 'मुख्यवाच्यत्वसर्वशास्त्रप्रतिपाद्यत्वरूपानेकार्थता' इत्यर्थः ॥ **अन्यथेति** । प्रकरणसाङ्कर्याभाव इत्यर्थः । प्रकरणसाङ्कर्ये हि किमर्थमेवमुक्तमित्यूहोदये प्रोक्तानेकार्थता ज्ञायते नान्यथेति भावः ॥ **लक्षणद्वयस्येति** । जगज्जन्मादिकारणत्वस्य समस्तगुणपूर्णत्वस्य चेत्यर्थः । यदि वाच्यत्वरूपमर्थान्तरं न ज्ञायेत तदा लक्षणया सर्वशास्त्रप्रतिपाद्यत्वसंभवेन वाच्यार्थगुणालाभेनोक्तलक्षणद्वयस्य न शास्त्रात्सिद्धिः संभवति । यदि वा

सर्वशास्त्रप्रतिपाद्यत्वरूपमर्थान्तरं न ज्ञायेत तदापि शाखान्तरेऽन्यस्यापि वाच्यत्वशङ्कयोक्तलक्षणद्वयस्य न शास्त्रादध्यवसायः संभवतीति भावः ।

प०— **प्रकरणशुद्धयेति** । वाच्यत्वप्रकरणमविच्छेदेन व्याचिख्यासुरित्यर्थः । पाठक्रममनुसृत्य गतिसूत्रव्याख्याने वाच्यतासमर्थनप्रकरणं विच्छिद्येतेतिभावः ॥ **उत्तरत्रेति** । उपासनापादे ॥ **तेनेति** । सूचनेनेत्यर्थः ॥ न ज्ञायेत चेत्तन्मा विज्ञायीत्यत आह **तथाचेति** । गुणपूर्णत्वलक्षणस्य जगत्कारणत्वलक्षणस्य चेत्यर्थः ।

या०— **ॐ गतिसामान्यात् ॐ** ॥ **प्रकरणशुद्धयेति** । वाच्यत्वप्रकरणमविच्छेदेन व्याचिख्यासुरित्यर्थः । अन्यथा पाठक्रममनुसृत्य मध्ये 'गतिसामान्यात्'इति सूत्रव्याख्याने वाच्यत्वसमर्थनप्रकरणं विच्छिद्येतेति भावः ॥ ननु तर्हि सूत्रव्याख्यानाभावान्न्यूनतेत्यत आह **व्याख्यास्यति चेति** । 'कथं समन्वयो ज्ञेयः स्वल्पशाखाविदां नृणाम्'इत्यादिनोपासनापादे व्याख्यास्यति चेत्यर्थः ॥ सूत्रकारेणापि विष्णोरेवानन्तगुणत्वेन सर्वशाखाप्रतिपाद्यत्वमिति प्रतिपादयत्'गतिसामान्यात्'इति सूत्रं तत्किमर्थं वाच्यत्वसमर्थनप्रकरणमध्ये निवेशितमित्याशङ्कायामाह **सूत्रकारस्यापीति** ॥ **आक्षेपद्वयसमाधानस्येति** । पूर्वपक्षिणा कृतं, ब्रह्मणो न वाच्यत्वं युक्तम् , न वा सर्वशास्त्रप्रतिपाद्यत्वमिति यदाक्षेपद्वयं तत्समाधानस्यास्मिन्नधिकरणे क्रियमाणस्येत्यर्थः ॥ **अनेकार्थताज्ञापनमिति** । 'मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य नापर'इत्यनेनोक्तवाच्यत्वसर्वशास्त्रप्रतिपाद्यत्वरूपानेकार्थताज्ञापनार्थमित्यर्थः ॥ **अन्यथेति** । प्रकारणसाङ्कार्यभाव इत्यर्थः । प्रकरणसाङ्कर्ये हि किमर्थमेवमुक्तमित्यूहोदये नोक्तानेकार्थता ज्ञातुं शक्या नान्यथेति भावः ॥ **लक्षणद्वयस्येति** । जगज्जन्मादिकारणत्वस्य समस्तगुणपूर्णत्वस्य चेत्यर्थः । यदि वाच्यत्वरूपोऽर्थो न ज्ञायेत तदा लक्षणयाऽपि सर्वशास्त्रप्रतिपाद्यत्वसम्भवेनोक्तलक्षणद्वयस्य न शास्त्रात्सिद्धिः । यदिवा सर्वशास्त्रप्रतिपाद्यत्वरूपमर्थान्तरं न ज्ञायेत तदाऽपि शाखान्तरेऽन्यस्यापि वाच्यत्वशङ्कयोक्तलक्षणद्वयस्य न शास्त्राद्ध्यवसाय इति भावः । इदमुपलक्षणम् । शाखान्तरे सत्त्वादिगुणयुक्तेऽप्यात्मशब्दो मुख्यतयोच्यतां तज्ज्ञानान्मोक्षादिश्चोच्यताम् । अतश्च नात्मशब्दादिना निर्गुणस्येक्षणमिति शङ्कानिरासकत्वाच्च गतिसामान्यस्य वाच्यत्वसाधकेक्षत्यधिकरणान्तर्गतिः । अत एव भाष्यकृता गतिसूत्रं 'न च कासुचिच्छाखास्वन्यथोच्यते' इति सामान्यपरतयैव व्याख्यातम् । सूत्रकृता च वाच्यत्वसाधकात् 'श्रुतत्वाच्च'इत्यस्मात्प्रागेव गतिसामान्यादित्येतन्निवेशितमिति चन्द्रिकोक्तप्रयोजनमपि द्रष्टव्यम् ॥ छ ॥

श्री०—॥ **आवृत्त्येति** । 'मुख्यार्थो भगवान्विष्णुः सर्वशास्त्रस्य' इत्युक्तरीत्याऽऽवृत्त्येत्यर्थः । न ज्ञायतां को दोषः इत्यत आह **तथा चेति** ।

च० — प्रकरणशुद्ध्येति । वाच्यत्वप्रकरणमविच्छेदेन व्याचिख्यासुरित्यर्थः । पाठक्रममनुरुन्धानो मध्ये गतिसामान्यादिति सूत्रं यदि व्याकुर्यात्तदा वाच्यत्वसमर्थनप्रकरणं विच्छिद्येतेतिभावः । व्याख्यास्यति चेति । 'कथं समन्वयो ज्ञेयः स्वल्पशाखाविदां नृणाम्'इत्यादिना साधनलक्षणे उपासनाचरणे व्याकरिष्यति चेत्यर्थः ।

सु० — उपपत्त्यन्तरेण निर्गुणस्य ब्रह्मणो वाच्यत्वमुपपादयितुं सूत्रम् श्रुतत्वाच्चेति ।

ब्र. सू. — ॥ ॐ । श्रुतत्वाच्च । ॐ ॥

तस्यार्थः । 'एको देवः' इत्यस्यां श्रुतौ निर्गुणस्य ब्रह्मणः श्रुतत्वाच्चास्य वाच्यत्वमुपपन्नमिति ।

अत्र श्रुतोऽपि सगुणः किं न स्यादित्यत आह पदं चेति ।

अनु० — ॥ ॐ श्रुतत्वाच्च ॐ ॥

पदं च निर्गुण इति कथं गौणं वदिष्यति ॥

अत्र हि वाक्ये केवलो निर्गुणश्चेति श्रूयते । निर्गुण इति च पदं कथं गौणं वदिष्यति । व्याहतत्वात् । अतो न सगुणोऽत्र श्रुत इति ।

---

वा० — यद्वा मुख्यार्थत्वसाकल्यरूपयोरनयोरकार्थज्ञापनेऽपि न गुणपूर्णतासिद्धिरिति तदाशयेनायं ग्रन्थो योज्यः । न पूर्ववत्सूत्रव्याख्यानपरमुत्तरभाष्यमपि तु तदुक्तहेतूपपादकमित्याशयेन सूत्रमवतार्य तदर्थं स्वयं दर्शयंस्तदुपपादकतया भाष्यमवतारयति उपपत्त्यन्तरेणेति । निर्गुणपदस्य गौणावाचकत्वेऽप्येतत् श्रुतिप्रतिपादितस्य गौणत्वं किं न स्यादित्यतो भाष्याभिमतं पाठमारचयति अत्र हीति । भाष्यं योजयति निर्गुण इतीति । सगुणस्य हीत्यादिना स्वयमेव व्याघातमुपपादयिष्यति ।

श्री० — ॐ श्रुतत्वाच्च ॐ ॥ श्रुतत्वाच्चेति । निर्गुणपदेनैवेति शेषः ।

सु० — सत्यमस्यां श्रुतौ निर्गुणादिपदप्रतिपाद्यं निर्गुणं ब्रह्मेति । किन्तु लक्षणयैव । तथा च कथमनेन निर्गुणस्य वाच्यत्वसिद्धिः । न च वाच्यं निर्गुणशब्देन निर्गुणं चेल्लक्ष्यं तर्हि तद्वाच्यं वाच्यम् । वाच्यार्थद्वारत्वाल्लक्षणायाः । न च सगुणं निर्गुणपदवाच्यम् । व्याघातात् । सगुणस्य निर्गुणत्वं तथा सति स्यादिति । गुणाभावविशिष्टस्य वाच्यत्वाङ्गीकारात् । निर्विकल्पकस्वरूपमात्रयोपलक्ष्यत्वात् । एकमेव हि निर्विशेषं वस्तु परमसूक्ष्मं गुणाभावाद्युपाधिभिरीषत्स्थूलं जातम् । गुणाद्युपादिभिस्तु स्थूलतरमित्यतो निर्गुणशब्देन गुणाभावविशिष्टवाच्यद्वारा

स्वरूपमुपलक्ष्यमिति न कश्चिद्विरोधः । एवं पूर्णादिपदानामपि लक्षणाप्रकारो द्रष्टव्य इत्याशङ्क्योक्तमेव परिहारं न विस्मरेत्याह गुणाभावेति ।

अनु० — गुणाभावोपलक्ष्यं चेत्पदं तदपि वाचकम् ॥

निर्गुणपदेन गुणाभावविशिष्टवाच्यद्वारोपलक्ष्यं चेच्छुद्धं ब्रह्म मन्यस इत्यर्थः । अपि तथाऽपि, तत्पदं लक्ष्यपदम् । ब्रह्मणो वाचकमङ्गीकरणीयम् । तथा च वाच्यत्वमेवापतितमित्यर्थः ।

वा० — अत्रोत्तरवाक्ये गुणाभावस्यार्थस्योपलक्षकत्वासम्भवान्निर्गुणपदस्य प्रकृतस्योपलक्षकत्वमुच्यते । तच्च न गौणस्य पलक्ष्यत्वाभिप्रायेण तर्हि 'पदं तदपि वाचकम्' इति परिहारासङ्गतेः । नापि निर्गुणस्योपलक्ष्यत्वाभिप्रायेण निर्गुणस्यैतच्छ्रुतिप्रतिपाद्यत्वमनभ्युपगच्छतस्तदुक्तेर्वैयर्थ्यात् । अभ्युपगमे कथं तस्य प्रकृतोपयोगः । कथं च तदभ्युपगमः । अनेकानुपपत्तिग्रस्तत्वादित्यतस्तदभ्युपगमं परस्य, तत्फलं, निर्गुणोपलक्ष्यमिति वक्तव्ये गुणाभावग्रहणसूचितं तदनुपपत्तिपरिहारं च दर्शयंस्तच्छङ्कानिवृत्तये येन लक्ष्यमिति प्रोक्तमित्यादिपरिहारसाधकत्वेनोत्तरवाक्यमवतारयति सत्यमित्यादिना । सगुणस्य हीति । निर्गुणादप्रवृत्तिनिमित्तस्य निर्गुणत्वस्य सगुणेऽसत्त्वे तत्पदवाच्यत्वानुपपत्तेरित्यर्थः । गुणाभावविशिष्टस्यापि वाच्यत्वे लक्ष्यस्वरूपालाभ इत्यत आह निर्विकल्पकेति ब्रह्मणी । ननु सगुणं निर्गुणं चेति वदता तृतीयं कथमुच्यते । किञ्च तद्गुणाभावविशिष्टं सगुणोपलक्ष्याभ्यां भिन्नमभिन्नं वा । अभिन्नं चेद्विरोधो वाच्यत्वलक्ष्यत्वव्यवस्थाऽनुपपत्तिश्च । भिन्नं चेदेकधैवेत्यादिश्रुतिविरोधः । तत्कथमेतदित्यत औपाधिकभेदाद्यत्रस्योपपत्तिः स्वाभाविकतदभावाच्च न विरोध इत्याशयेनाह एकमेव हीति ।

पूर्णादिपदानामपि परिच्छेदाभावविशिष्टवाच्यद्वारा स्वरूपोपाधिलक्षकत्वाल्लक्षणया तेषां वाक्यानां निर्गुणपरत्वेऽपि न तैर्वाच्यत्वसिद्धिरिति पूर्वसूत्राभिप्रेतहेत्वाक्षेपोऽप्यत्राभिमत इत्याशयेनाह एवमिति । आदिपदेन स्वाप्ययात्मादिशब्दग्रहणम् । पदान्तरस्य वाचकत्वानुक्त्या समुच्चायकत्वासंभवात्प्रकृतोपयोगितया तदर्थमाह अपि तथाऽपीत्यादिना । पूर्ववत्स्वक्रियाविरोधादेर्वक्तुमशक्यत्वात्फलतयाऽपसिद्धान्तमेवाह तथा चेति ।

प० — उत्तरवाक्यमवतारयितुं शङ्कामुत्थापयति सत्यमित्यादिना द्रष्टव्य इत्यन्तेन ॥ न च वाच्यमिति । अस्य, तथा सति स्यादिति न च वाच्यमित्यन्वयः ।

या — ॐ श्रुतत्वाच्च ॐ ॥ निर्विकल्पकेति । अभावरूपा अपि विशेषा यत्र प्रकारीभवितुं नार्हन्ति तादृशस्वरूपस्येत्यर्थः । नन्वेवं ब्रह्मभेदेऽद्वैतहानिरित्यत आह एकमेव हीत्यादिना ॥ परमसूक्ष्ममिति । केनापि प्रकारेण विशिष्टतया ज्ञातुमशक्यमित्यर्थः । निर्विकल्पकस्वरूपमिति यावत् ॥ ईष-

त्स्थूलमिति । आदावभावरूपकतिपयधर्मविशिष्टतयाऽधिकारिबुद्ध्या विषयीक्रियत इत्यर्थः ॥ गुणादीति । गुणक्रियाजात्यादिरूपैरपरैरपि विशिष्टतया ज्ञायत इत्यर्थः । एकमेव वस्त्वारोपितैरल्पैर्बहुभिर्वा विशेषैः क्रमेण विशिष्टतया ज्ञायत इत्येव न तु तत्र भेदोऽङ्गीक्रियतेऽतो नोक्तदोष इति भावः । एतेनानाद्यपरिच्छिन्ने ब्रह्मणि कथं स्थूलसूक्ष्मादिव्यवहारः, कथं वा जात इति व्यवहार इति निरस्तम् । तथा तथा ज्ञानजन्मन एव विवक्षितत्वात् ।

श्री० — व्याघातमेवोपपादयति सगुणस्य हीति । तथा सति सगुणस्य निर्गुणपदवाच्यत्वे ॥ निर्विकल्पकस्वरूपस्येति । विशेष्यांशभूतस्येत्यर्थः ॥ एवमिति । पूर्णत्वादिविशिष्टवाचकेन पूर्णादिपदेन निर्विकल्पकस्वरूपं लक्ष्यमित्यङ्गीकारादित्यर्थः ।

**सु० — ननु लक्ष्यपदेनापि ब्रह्म लक्ष्यमेव न वाच्यमिति चेन्न । अनवस्थाया उक्तत्वात् । किञ्च निर्गुणपदलक्ष्यमित्यनेनापि लक्ष्यत्वे किमस्य वाच्यम् । न तावदन्यत् । तत्र निर्गुणपदस्यैवाश्रवणेन तल्लक्ष्यपदस्य दूरोत्सारितत्वात् । शुद्धं चेत्किं लक्षणया ॥ किञ्चैवं यद्यद्ब्रह्मतया प्रतिपाद्यते तत्तदब्रह्मेति वदता साधु समर्थितो ब्रह्मवाद इत्याशयेनानधिकरणार्थमुपसंहरति अत इति ।**

**अनु० —** अतोऽनवस्थितिमुखसर्वदोषमहास्पदम् ॥

कथमेतन्मतं सद्भिराद्रियेत विचक्षणैः ॥

---

**एतन्मतं ब्रह्मणोऽवाच्यत्वमतम् । अनादरणे च सिद्धं सर्वशब्दमुख्यार्थत्वं ब्रह्मण इति शेषः ।**

**वा० —** ननु प्रसङ्गकाभावात्कथमनवस्था, कथं च दूषणस्वरूपाप्रदर्शने सर्वेत्युक्तिमात्रेण तत्सिद्धिरित्यतः प्रसङ्गकं दर्शयन्सर्वशब्दस्य बहुत्वार्थकमभिप्रेत्य दूषणत्रयं दर्शयन्नुत्तरभाष्यमवतारयति **नन्विति** । अधिकरणार्थोपसंहारत्वस्य मूलारूढतायै सामान्यपदं विशेषपरतया व्याख्याति **एतन्मतमिति** ॥ ननु तन्मतानादरणोपसंहारस्य नाधिकरणार्थोपसंहारत्वमत आह **अनादरणे चेति** ।

**प० —** तदनादरणे किं भवतां फलमित्यत आह **अनादरणे च सिद्धमिति** ।

**या० — न तावदन्यदिति** । ईषत्स्थूलं स्थूलतरं नेत्यर्थः ।

**श्री० —** अब्रह्म, शुद्धब्रह्म न भवति, किन्तु वचनवृत्त्या प्रतिपाद्यमन्यदेवेति वदतेत्यर्थः । ननु कथमनेनाधिकरणार्थोपसंहारः । ब्रह्मणः सर्वशब्दमुख्यार्थत्वमेव ह्यधिकरणार्थः । न हि स उपसंह्रियते । किन्त्ववाच्यत्वमतानादरणम् । न ह्येतदीक्षत्यधिकरणार्थ इत्यत आह **अनादरणे चेति** ।

सु० — एवमीक्षतेर्नाशब्दमित्यारभ्य श्रुतत्वाच्चेत्यन्तानि सूत्राणि स्वमतेन व्याख्याय परेषां व्याख्यानं प्रत्याख्याति न चेति ।

अनु० — न च साङ्ख्यनिराकृत्यै सूत्राण्येतान्यचीक्लृपत् ॥

भगवान्

"सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिनाशकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम् । तत्र साङ्ख्या मन्यन्ते । यानि ब्रह्मणो जगत्कारणत्वप्रतिपादकतयाऽभ्युपगतानि 'सदेव सोम्येदमग्र आसीत्' इत्येवमादीनि वाक्यानि तानि सर्वाणि त्रिगुणमचेतनं प्रधानमेव जगत्कारणं प्रतिपादयन्ति । कुतः । ब्रह्मणो ज्ञानक्रियाशक्तिरहितत्वात् । ज्ञानक्रियाकार्यदर्शनोन्नेयसद्भावे हि ते । न च ज्ञानक्रिये चिदात्मनः स्तः । तस्यापरिणामित्वात् । एकत्वाच्च । त्रिगुणे तु प्रधाने परिणामिनि न तयोरसंभवकारणमस्तीत्यतस्तदेव 'सदेव सोम्येदमग्रे' इत्यादौ जगत्कारणतया प्रतिपाद्यत इत्येवं प्राप्ते प्रतिविधीयते ईक्षतेर्नाशब्दम् इति । न साङ्ख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तवाक्येष्वाश्रयितुम् । अशब्दं हि तत् । कथमशब्दत्वम् । ईक्षतेः । तदैक्षत बहुस्यां प्रजायेयेति, तत्तेजोऽसृजत' 'स ऐक्षत लोकानुसृजा इति, स इमांल्लोकानसृजत', 'स ईक्षां चक्रे, स प्राणमसृजत' इति श्रुतेश्च जगत्कारणस्य । न चाचेतनस्य प्रधानस्येक्षितृत्वं संभवति । नन्वयमीक्षतिर्गौणो व्याख्येयः । तत्तेज ऐक्षत ता आप ऐक्षन्तेति गौणप्रायपठितत्वात् । यथा ह्यासन्नपतनं कूलमालक्ष्य कूलं पिपतिषतीत्युपचारो दृष्टः । तथाऽऽसन्नसर्गे प्रधानेऽप्यैक्षतेत्युपचारो भविष्यतीत्यतः परिहारं पठति गौणश्चेन्नात्मशब्दात् । अप्तेजसोरिवाचेतनेऽपि प्रधाने गौणोऽयमीक्षतिरित्यसत् । कुतः । आत्मशब्दात् । अनेन जीवेनात्मनेति । न हि जीवश्चेतनोऽचेतनस्य प्रधानस्यात्मा संभवति । स आत्मा तत्त्वमसीति च । न हि चेतनस्य श्वेतकेतोरचेतनैक्यबोधनमुपपन्नम् । अथोच्येत । अचेतनेऽपि प्रधाने भवत्यात्मशब्दः । आत्मनः सर्वार्थकारित्वात् । यथा राज्ञः सर्वार्थकारिणि भृत्ये ममात्मा भद्रसेन इत्यात्मशब्ददर्शनादिति । तत्रोत्तरम् तन्निष्ठस्य मोक्षोपदेशात् । नैवमात्मशब्दालम्बनं प्रधानं कल्प्यम् । स आत्मा तत्त्वमसीति श्वेतकेतोस्तन्निष्ठामुपदिश्य तस्य तावदेव चिरमिति मोक्षोपदेशात् । न ह्यचेतननिष्ठस्य मोक्षो युक्तः । स्यादेतत् । ब्रह्मैव ज्ञीप्सितम् । तच्च न प्रथमं सूक्ष्मतया शक्यं श्वेतकेतुं ग्राहयितुमिति तत्संबद्धं प्रधानमेव स्थूलतयाऽऽत्मत्वेन ग्राह्यते । अरुन्धतीमिवातिसूक्ष्मां दर्शयितुं तत्संनिहितां स्थूलतारकां दर्शयन्तीयमरुन्धतीति । अस्यां शङ्कायामुत्तरम् हेयत्वावचनाच्च । एवं सति स्थूलतारावन्नायमात्मेति हेयत्वं ब्रूयात् । न चैवमब्रवीत् । अतो नैषा कल्पना युक्ता ।

चशब्द एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधं समुच्चिनोति। स्वाप्ययात्। सच्छब्दवाच्य प्रस्तुत्य स्वं ह्यपीतो भवतीन्युच्यते। न ह्यचेतने चेतनस्याप्ययः सुप्तौ लये च सम्भवति। अतश्च न प्रधानं सच्छब्दवाच्यम्॥ गतिसामान्यात्। यदि च कश्चिदप्यचेतनं प्रधानं जगतः कारणमुच्येत वेदान्तेषु। तथा सति कथञ्चिदीक्षणादिकं कल्प्येत। न चैवम्। अतो वेदान्तोत्पाद्याया गतेरवगतेरैकरूप्याच्च न प्रधानं जगत्कारणमिति॥ श्रुतत्वाच्च। स कारणं कारणाधिपाधिप इति साक्षात्सर्वज्ञस्येश्वरस्य जगत्कारणत्वं श्रूयते। अतश्च न प्रधानं जगत्कारणं वेदान्तवेद्यम्। ज्ञानक्रियाशक्ती त्वपरिणामिनोऽपीश्वरस्य सवितुरिव युज्येते। इत्येवं साङ्ख्यनिराकरणायैतानि सूत्राणि भगवान्सूत्रकारश्चकार॥''इति यन्मायावादिनो वदन्ति तन्नेत्यर्थः। कुतो नेति चेत् न। सूत्राक्षराणामनानुगुण्यात्।

वा०- ननु सूत्रव्याख्यानस्योपसंहारेण समापितत्वात्किं 'न च'इत्यादिनाऽप्रसक्तं सूत्राणां साङ्ख्यमतनिरामकत्वं निरस्यत इत्यतस्तात्पर्यमाह **एवमिति**। एतानीत्यस्यातीतसर्वसूत्रपरामर्शकत्वभ्रान्तिनिरासाय तत्परामृश्यं दर्शयति **ईक्षतेरित्यादिना व्याख्यायेत्यन्तेन**॥ स्वमतेन सूत्रव्याख्यानाकरणप्रयुक्तन्यूनताभावमपव्याख्याप्रत्याख्यानस्य स्वव्याख्यानदार्ढ्यार्थतां च सूचयति साङ्ख्यनिराकृत्यै इति मूले सामान्ये नोक्तत्वात्प्रकारादर्शने दूषणानां दुर्ज्ञेयत्वात्तं दर्शयति **सर्वज्ञमित्यादिना**। अपव्याख्याता पूर्वपक्षोपक्षेपयातीतसूत्रार्थमनुवदति **सर्वज्ञमिति**। पूर्वपक्षे ब्रह्मणि निराकार्ययोर्विशेषणयोर्ग्रहणमिति ध्येयम्। ननु श्रुतिसिद्धेऽस्मिन्प्रमेये का नामानुपपत्तिरित्यतः श्रुतिसिद्धत्वासिद्धिं पूर्ववाद्यभिमतां दर्शयति **तत्रेति**। तत्र तादृग्विशेषणविशिष्टतया ब्रह्मणो वेदान्तवेद्यत्वे। प्रधीयतेऽस्मिन् जगदिति प्रधानं ब्रह्मापि भवतीत्यतस्त्रिगुणमिति विशेषणम्। परिणामयोग्यताप्रतिपादनायाचेतनमिति। एवेति ब्रह्मप्रतिपादकताव्यवच्छेदाय। सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो जगत्कारणत्वसम्भवे कुतस्तदप्रतिपादकत्वमित्याशङ्कते **कुत इति**। यस्य हि किञ्चिन्मात्रजननशक्तिः किञ्चिन्मात्रज्ञानशक्तिर्वा न सम्भवति कुतस्तस्य सर्वविषयजननशक्तिः सर्वविषयकज्ञानं च भवेतामित्याशयेनाह **ब्रह्मण इति**। ज्ञानक्रिययोः शक्ती ताभ्यां रहितत्वादित्यर्थः। न तावद् ब्रह्मणो ज्ञानक्रियेऽनित्ये। तथा सति ब्रह्मणस्तदात्मना परिणामो वक्तव्यः। स चायुक्तः। ब्रह्मणश्चेतनत्वादित्याशयेन चिदात्मनइति हेतुगर्भविशेषणम्। तस्य ज्ञानक्रिययोरभावे हेतुत्वं घटयति **तस्येति**। चैतन्यरूपस्य तस्य परिणामो नोपपद्यत इत्यर्थः। ननु च ब्रह्मणो ज्ञानक्रिये नित्ये। न च ते प्रति सर्वज्ञो जानाति करोतीति ब्रह्मणः स्वातन्त्र्यानुपपत्तिः। सर्वज्ञ इत्यादिषु कर्त्रर्थप्रत्यययोर्ज्ञानाद्याश्रयत्वमात्रेणोपपद्यते। सविता प्रकाशते चैत्रः पश्यति करोतीत्यादौ धात्वर्थाश्रयत्वमात्रस्यापि तदभिधेयत्वदर्शनात्। तथा चापरिणामिनोऽपि ज्ञानगुणः प्रयत्नगुणश्च किं न स्यातामित्यत आह **एकत्वाच्चेति**।

एकरूपत्वान्निर्गुणत्वादित्यर्थः । अथवैकत्वादित्यपरिणामित्वसाधनम् । निरवयवत्वादिति यावत् । तथाऽपि प्रधानं प्रतिपादयन्तीति कुत इत्यत आह **त्रिगुण इति** । सौत्रनशब्दं व्याचष्टे **न साङ्ख्येति** । तत्र सौत्रम् अशब्दमित्येतद्धेतुतया योजयति **अशब्दं हि तदिति** । सदेवेत्यत्र सच्छब्दस्यैव तच्छब्दत्वान्नाशब्दत्व-मित्याशङ्कते **कथमिति** । सौत्रपदमवतार्य व्याकरोति **ईक्षतेरिति** । श्रुतोपादानस्य चेतनत्वार्थमाह **तदै-क्षतेति** । तस्योपादानत्वार्थमाह **बहुस्यामिति** । ईक्षणफलमाह **तदिति** । एवमुत्तरत्रापि द्रष्टव्यम् । छन्दोगश्रुतिवत् श्रुत्यन्तरमपि प्रधानवादविरोधीत्याह **स ऐक्षतेत्यादिना** । ननु गौणमुख्ययोर्मुख्यस्यैव ग्राह्यत्वात्कथं गौणग्रहणमित्यतो 'यत्प्राये श्रूयते यच्च तत्ताद्दगवगम्यते । भाक्तप्राये श्रुतमिदमतो भाक्तं प्रतीयते' इति भामत्युक्तां युक्तिमाह **तत्तेज इति** । गौणप्राये गौणप्रकरणे । उपचारनिमित्तप्रदर्शनपूर्वकम-चेतने चेतनवदुपचारं दृष्टान्तेनोपपादयति **यथा हीति** । प्रत्यासन्नसर्ग इति कार्योन्मुखत्वरूपोपचारनि-मित्तप्रदर्शनम् । अनेन पूर्वसृष्ट्यनुभूतेन जीवेन प्राणधृतिहेतुनाऽऽत्मना स्वरूपेणेत्यर्थः । अस्यां श्रुतौ सच्छब्दवाच्यपरदेवतायाः जीवात्मना तेज आदिदेवताः प्रविश्य नामरूपे व्याकरवाणीत्येवमीक्षणप्रकारः कथ्यते । तत्र जीवशब्दस्य चेतनार्थत्वादात्मशब्दस्य च स्वरूपार्थकत्वादचेतनस्य प्रधानस्य चेतनात्म-त्वायोगान्न सच्छब्दं प्रधानमित्याशयेनाह **न हीति** । जीवशब्दार्थश्चेतन इति, अचेतनस्य प्रधानस्य चेतनः आत्मा चेतनात्मत्वमिति यावत्, न हि संभवतीत्यर्थः । स आत्मा तत्त्वमसीति तु श्रुतिः सदणि-मानमात्मानमात्मशब्देनोपदिश्य चेतनं श्वेतकेतुं प्रति तत् सत् ते स्वरूपमिति तस्यात्मत्वेनोपदिशति । तच्च सतोऽचेतनत्वे नोपपद्यत इत्याह **न हीति** । चेतनस्य श्वेतकेतोरचेतनैक्यबोधनमचेतनस्यात्मत्वेनोपदेष्टुं न ह्युपपन्नमित्यर्थः एवञ्च सति चेतनस्वरूपत्वबोधकात्मशब्दरूपनियामकविशेषेण तस्य मुख्येक्षितृत्वनिर्णयेन विषयाभावात् । तादृङ्नियामकविशेषे गौणेक्षित्रप्तेजःप्रायपाठोऽकिञ्चित्कर इति भावः । नन्वचेतन-स्यापि प्रधानस्य श्वेतकेतोरात्मत्वेनोपदेशो नानुपपन्नः । आत्मशब्दस्यापि गौण्या वृत्त्या प्रवृत्तत्वादित्या-शङ्कते **अथेति** । गुणयोगं दर्शयति **आत्मन इति** । प्रधानं ह्यात्मनो भोगापवर्गौ कुर्वदुपकरोतीति भावः । प्रयोजनाभावात्स्वायत्तन्यायविरोधपरिहाराय रूढिं दर्शयति **यथेति** । पूर्वसूत्रान्नञनुषङ्गेन योग्यतत्प्रतियोगिसमर्पणेन प्रतिज्ञां दर्शयति **नैवमिति** । तत्त्वमसीत्युक्तैक्यप्रमित्या सर्वबन्धनिवृत्त्या देहादिदृष्ट्यनुपपत्तिशङ्कायां भोगेन प्रारब्धनिवृत्तिपर्यंतं प्रारब्धकर्मणा तद्दृष्टानुवृत्तिप्रतिपादकेन 'तस्य तावदेव चिरम्' इति वाक्येन श्वेतकेतोस्तदैक्यज्ञानस्य मोक्षसाधनतालाभादिति भावः । सतोऽचेतनत्वे च तदनुपपत्तिरित्याह **न हीति** । हेयत्वावचनादित्यस्य भामत्युक्तपरिचोदनां दर्शयति **स्यादेतदिति** ॥ **चशब्द इति** । भोग्यवर्गोपादानत्वात्प्रधानस्य तज्ज्ञानेन भोग्यवर्गज्ञानादिसंभवेऽपि भोक्तृवर्गानुपपादाना-त्तज्ज्ञानासंभवेन प्रतिज्ञाविरोध इत्यर्थः । स्वशब्देन प्रस्तुतः सच्छब्दवाच्य आत्मा परामृश्यते ।

अपिपूर्वस्येतेर्लयार्थत्वं च प्रभवाप्ययादित्यादिप्रयोगसिद्धम्। एवञ्च स्वपितीति जीवे प्रसिद्धस्य स्वपितीति नाम्नो निर्वचनार्थं प्रवृत्ते स्वं ह्यपीतो भवतीति वाक्ये स्वशब्दस्य स्वरूपार्थकत्वे सच्छब्दवाच्याचेतनस्य जीवस्वरूपत्वानुपपत्तेः। स्वशब्दस्यात्मीयपरत्वेन प्रधानार्थकत्वे वाऽचेतने प्रधाने पुरुषस्य लय इत्युक्तस्याप्त-त्वायुक्तमित्याह **न हीति** ॥ **यदि चेति**। वेदान्तेष्वपि यदि भिन्ना कारणावगतिरभविष्यत्क्वचिच्चेतनं ब्रह्म जगतः कारणमिति क्वचिच्चाचेतनं प्रधानमिति, क्वचिदन्यदेवेति, तर्हि प्रधानकारणवादानुरोधेनापीक्षण-श्रवणमकल्पयिष्यत्। नैवम्। समानैव हि सर्ववेदान्तेषु कारणावगतिः। यथाऽग्नेर्ज्वलतः सर्वा विष्फु-लिङ्गाविप्रतिष्ठेरन्। एवमेवास्मादात्मनः सर्वे प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका इति सर्वे वेदान्ता आत्मकारणत्वमेव दर्शयन्तीति भावः। तस्य सर्वेश्वरत्वं वक्तुं श्रुतौ कारणाधिपा-धिप इति विशेषणमुपात्तम्। कारणानामिन्द्रियाणामधिपा जीवास्तेषामधिप इति तदर्थः। तदैक्षतेतीक्षण-मात्रं जगत्कारणस्य श्रुतं न तु सर्वविषयं जगत्कारणसंबन्धितयाऽर्थात्सर्वविषयमवगतम्। श्वेताश्वतरोप निषदि तु 'ज्ञः कालकालो गुणी सर्वविद्यः' इति प्रस्तुत्य स कारणमिति परामर्शात्, सर्वज्ञ ईश्वरो जगत्कारणमिति साक्षादुक्तमिति विशेषं सूचयति **साक्षात्सर्वज्ञस्येश्वरस्येति**। स्वतो नित्यस्यापि ज्ञानस्य तत्तदर्थावच्छिन्नस्य कार्यत्वात्तत्र स्वातन्त्र्यं प्रत्ययार्थो ब्रह्मणः सिध्यति दाह्यप्रकाश्यसंयोगे सवितुर्दाह-प्रकाशस्वातन्त्र्यवदित्याशयेन वाऽपरिणामिनोऽपि सवितुः प्रकाशाश्रयत्वमात्रेण प्रकाशयति प्रकाशत इत्यादिव्यपदेशवज्ज्ञाननित्यत्वेऽपि तदाश्रयत्वमात्रेण जानातीत्यादिस्वातन्त्र्यव्यपदेशोपपत्तिरित्याशयेन वा पूर्ववाद्युक्तानुपपत्तिं परिहरति **ज्ञानेति**।

अत्र 'न हि' इत्यादिना मूलेन परपक्षे सूत्राक्षरानानुगुण्यस्यापि प्रतिपादनादत्रापि 'एतानि' इति तत्सूचनात्तदर्थं सूत्राणां साङ्ख्यमतनिरासार्थत्वप्रकारमनूदितमेवंशब्दाध्याहारेण मूलेन सङ्गमयति **एव-मिति**। अपव्याख्याननिरासस्य मूलारूढतायै यदित्यादि। अस्य वाक्यस्य साङ्ख्यनिराकृत्यै न ह्येतानि सूत्राणि भगवानचीक्लृपदसङ्गतत्वादित्यपि तात्पर्यम्। एवं साङ्ख्यनिराकृत्यै 'न हि एतानि' इत्येतेषा-मेवं व्याख्याने च साङ्ख्यमतनिरासार्थता न संभवतीत्येतदर्थस्य सूत्राक्षरानानुगुण्येऽपि तात्पर्यम्। तत्र 'न हि' इत्याद्यव्यवहितोत्तरवाक्यस्यासङ्गतिप्रतिपादकत्वानुपपत्त्या तत्प्रतिपादनस्य 'समन्वये प्रतिज्ञाते' इत्युत्तरवाक्ये स्पष्टत्वाच्च सूत्राक्षरानानुगुण्यप्रतिपादनपरतया 'न हि' इति वाक्यं योजयितुं स्पष्टतया ज्ञातुं शक्यत्वान्मूलानुक्तां शङ्कापूर्वं तदनानुगुण्यप्रतिज्ञां दर्शयति **कुत इत्यादिना**।

स०— शक्तिराहित्यं कथं ज्ञातव्यमित्यत आह **ज्ञानक्रियाकार्यदर्शनेति**। ज्ञानक्रियालक्षणं यदुभयं शक्तिकार्यं तद्दर्शनेन शक्तिद्वयसद्भावोऽनुमेय इत्यर्थः॥ **तस्यापरिणामित्वादिति**। तथाच अपरिणामिन एकस्य च ब्रह्मणः कार्यवत्त्वमेव न, सुतरां तद्विशेषज्ञानक्रियावत्त्वमिति भावः॥ **एकत्वाति**।

सत्वादेरनेकात्मकस्यैवकारणत्वोपलम्भादिति भावः ॥ **त्रिगुणत्वेति** । अत एव अनेकात्मके इत्यपि द्रष्टव्यम् ॥ **ज्ञानक्रियाशक्ती त्विति** । शक्त्योर्जन्यत्वे हि परिणामापेक्षा, इमे तु नित्ये इति भावः । ननु नित्यत्वे कथं 'इदं जानाति' 'इदं करोति' इत्यादिव्यपदेश इत्युक्तम् **सवितुरिवेति** । यथा प्रततोष्णप्रकाशेऽपि 'सविता इदं दहति' 'इदं प्रकाशयति इति व्यपदेशस्तथेत्यर्थः । यथा पूर्वं विद्यमानक्रियाश्रयस्यापि सवितुः कादाचित्कविषयावच्छेदकमात्रेणोक्तो व्यवहारस्तथा प्रकृतेऽपीति भावः ।

प०— पराभिमताधिकरणशरीरमनुवदति **सर्वज्ञमित्यादिना** ॥ **उक्तमिति** । पूर्वाधिकरणे उक्तमित्यर्थः ॥ **ज्ञानक्रियाकार्येति** । ज्ञानक्रिययोर्यत्कार्यं तद्दर्शनानुमेयसत्ताके ज्ञानक्रिये इत्यर्थः । अपरिणामित्वाज्ज्ञानात्मना न परिणामः । एकत्वान्नानेकात्मना परिणाम इत्यर्थः ॥ साध्याध्याहारेण सूत्रार्थमनुवदति **न साङ्ख्येति** ॥ **अशब्दं हि तदिति** । शब्दाप्रतिपाद्यत्वादिति हेतुगर्भविशेषणमिति भावः ॥ 'स ऐक्षत' इति श्रुत्यन्तरम् । 'स ईक्षां चक्रे' इत्यपि वाक्यान्तरम् । द्वितीयसूत्रमवतार्यार्थ मनुवदति **ननु** इत्यादिना **उपपन्नमित्यन्तेन** । गौणप्राये गौणसन्निधौ ॥ गौणत्वप्रकारं व्यनक्ति **यथा हीति** । 'अनेन जीवेनात्मनेति' इत्यस्य आत्मशब्दात् इति सूत्रांशेनान्वयः ॥ **इति चेति** । आत्मशब्दादित्यन्वयः । तृतीयसूत्रमवतार्य तदर्थमाह **अथेत्यादि युक्त इत्यन्तेन** । यथा यजमानकार्यकारित्वाद्यजमानशब्दः प्रस्तरे 'यजमानः प्रस्तरः' इति प्रयुज्यते तथा आत्मनो जीवस्य ये सर्वे अर्थास्तत्कारित्वात्प्रधानस्यात्रात्मशब्दो युक्त इति भावेनाह **आत्मनः सर्वार्थकारित्वादिति** । चतुर्थसूत्रमवतार्य तदर्थमाह **स्यादेतदित्यादिना समुच्चिनोतीत्यन्तेन** । ज्ञीप्सितं ज्ञापयितुमिष्टम् ॥ **ग्राह्यत इति** । श्वेतकेतुरिति शेषः । णिचि कर्मणि रूपम् ॥ **एकविज्ञानेनेति** । 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति वाक्येन एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते । तच्च ब्रह्मण एव प्रतिपाद्यत्वे संभवति । प्रधानस्य प्रतिपाद्यत्वे तु विरुध्यत इत्यर्थः ॥ पञ्चमसूत्रं पठित्वाऽर्थमाह **स्वाप्ययादिति** ॥ षष्ठार्थमाह **गतीति** ॥ सप्तमार्थमाह **श्रुतत्वाच्चेति** ॥ **सवितुरिवेति** । प्रत्यहमपरिणामिनः सवितुर्यथा सर्वप्रकाशनादिशक्तिस्तथेत्यर्थः ॥ **स्वसिद्धेनेति** । सूत्रकारसिद्धेनेत्यर्थः ।

या०— जगत्कारणमित्युपलक्षणम् । सर्वशक्ति सर्वज्ञं चेत्यपि द्रष्टव्यम् । प्रतिपादयन्तीत्यतःपरं सर्वजननशक्तेरचेतने स्वविकारविषयायाः सार्वज्ञस्यापि तस्मिन्सर्वज्ञानकारणीभूतसत्त्वात्मके संभवादित्युपपादनं न ब्रह्मेति प्रतिज्ञा चाध्याहार्या ॥ **ज्ञानक्रियेति** । सामान्ययोर्ज्ञानक्रियाशक्त्योरभावे तद्विशेषयोः सर्वजननज्ञानशक्त्योरभावोऽपि कैमुत्येनैव सिद्ध इति भावः । अतो नासङ्गतिः । उक्तं च भामत्याम् 'ज्ञानक्रियाशक्त्यभावाद्ब्रह्मणोऽपरिणामिनः । न सर्वशक्तिविज्ञाने प्रधानेत्वस्ति संभवः' इति । ज्ञानक्रियाशक्त्यभाव एव कुत इत्यत आह **ज्ञानक्रियेति** ॥ **न च ज्ञानक्रिये इति** । कार्यभूत इति शेषः । अत्र

क्रियाशब्देन प्रयत्नो ग्राह्यः । नन्वपरिणामिन्यपि ज्ञानगुणः प्रयत्नगुणश्च किं न स्यातामित्यत आह **एकत्वाच्चेति** । एकरूपत्वान्निर्गुणत्वादित्यर्थः । अथवा अपरिणामित्वं साधयत्यनेन । निरवयवत्वादिति यावत् । निरवयवत्वं च कृत्स्नप्रसक्त्यधिकरणपूर्वपक्षन्यायेन परिणामित्वबाधकमिति ध्येयम् ॥ **आसन्नपतनमिति** । निश्चितपतनमित्यर्थः । तेन 'आशङ्कायामचेतनेषूपसङ्ख्यानमि'त्युक्तत्वात् कथमयमुपचार इति शङ्काऽनवकाशः ॥ **आत्मा संभवतीति** । आत्मा हि नाम स्वरूपं नाचेतनप्रधानस्य चेतनो जीवः स्वरूपं भवितुमर्हतीत्यर्थः । विधान्तरेण हेतुं व्याचष्टे ॥ **स आत्मेति** । यः सदाख्यः प्रकृतोऽणिमा स आत्मा सर्वस्य निरुपचरितं रूपम् । हे श्वेतकेतो त्वं च तदेवात्मरूपमेवासीत्येवं चेतनस्य श्वेतकेतोरात्माभेदो बोध्यते । आत्मत्वेनोपदिष्टं च यदि प्रधानं स्यात्तर्हीदमनुपपन्नार्थकं स्यादित्यर्थः । कथमित्यत आह **न हि चेतनस्येति** । तथा च चेतनस्यात्मशब्दान्न तस्य प्रधानतेत्यर्थः । आत्मत्वेन ग्राह्यत इत्यनन्तरं श्वेतकेतुरिति शेषः ॥ **चशब्द इति** । तथा चानुक्तसमुच्चायक इत्युक्तं भवति । अयमर्थः । सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येत । कारणविज्ञानाद्धि सर्वं विज्ञातमिति प्रतिज्ञातम् । 'येनाश्रुतं श्रुतं भवति'इत्यारभ्य 'यथा सौम्यैकेन मृत्पिण्डेन' इत्यादिदृष्टान्तानभिधाय 'एवं सौम्य स आदेशो भवति' इति वाक्योपक्रमे श्रवणात् । न च सच्छब्दवाच्ये प्रधाने भोग्यवर्गकारणे हेयत्वेनाहेयत्वेन वा विज्ञाते भोक्तृवर्गो विज्ञातो भवति । अप्रधानविकारत्वाद्भोक्तृवर्गस्य । तस्मात्प्रधानस्यैवात्मतया ग्रहणे प्रतिज्ञाविरोध इति चशब्देनाह सूत्रकार इति । **स्वमपीत इति** । स्वशब्देनेहात्मोच्यते । यः प्रकृतः सच्छब्दवाच्यस्तमपीतो भवति । अपिगतो भवतीत्यर्थः । अपिपूर्वस्येतेर्लयार्थत्वप्रसिद्धेः । न चास्यानाद्यन्तस्य स्वाभाविको लयः संभवति किन्त्वौपाधिक एव । देहेन्द्रियमनोरूपस्थूलसूक्ष्मोपाध्यपगमो हि सुप्तिलययोर्जीवस्य भवति । तेनासौ तदा प्रलीन इवेति स्वमपीतो भवतीत्युच्यते । वस्तुतस्त्वैक्यमेवाप्यय इत्यत्राभिप्रेतम् । तच्च प्रधानग्रहणे न संभवतीत्याह **न ह्यचेतन इति** ॥ **साक्षात्सर्वज्ञस्येति** । तदैक्षतेत्यत्रेक्षणमात्रं जगत्कारणस्य श्रुतं न तु सर्वविषयम् । तथाऽपि जगत्कारणसंबन्धितया तदर्थात्सर्वविषयमवगतम् । श्वेताश्वतरोपनिषदि सर्वज्ञ ईश्वरो जगत्कारणमिति साक्षादुक्तमित्यर्थः । 'ज्ञः कालकालो गुणी सर्वविद्यः' इति प्रकृत्य सकारणमिति परामर्शात् । जगत्कारणस्य सर्वज्ञताऽत्र साक्षादुक्तेति द्रष्टव्यम् । तस्य सर्वेश्वरत्वमाह **कारणाधिपेति** । कारणानामधिपाः स्वामिनो जीवास्तेषामधिप इत्यर्थः । 'न तस्य कश्चिज्जनिता न चाधिपः' इति वाक्यशेषाद्धिरण्यगर्भादिव्यावृत्तिरित्यवगन्तव्यम् । ब्रह्मणो ज्ञानक्रियाशक्तिरहितत्वादिति पूर्वपक्ष्युक्तानुपपत्तिं परिहरति **ज्ञानक्रियाशक्ती त्विति** । ज्ञानक्रियारूपधर्मावित्यर्थः । कार्यत्वे हि तयोः परिणामापेक्षा । तौ च नित्यौ ब्रह्मस्वरूपभूतौ चातो न निर्गुणत्वविरोधोऽपीति भावः ॥ नन्वेवमपि न ब्रह्मणः सार्वज्ञादिकंसंभवति । प्रकृत्यर्थसंभवेऽपि प्रत्ययार्थस्य कत्वस्यासंभवात् । क्रियायां

स्वतन्त्रकारकं खलु कर्ता । न च नित्यक्रियायाः कारकं संभवति । दूरे तद्विशेषः कर्ता । तथा च 'तदैक्षत' 'इदं सर्वमसृजत' इत्यादिस्वातन्त्र्यव्यपदेशानुपपत्तिरित्यत उक्तम् **सवितुरिवेति** । पूर्वं विद्यमानक्रियाश्रयस्यापि सवित्रादेर्यथा सविता प्रकाशते चैत्रः पश्यति स्वपिति ईक्षति करोतीत्यादिस्वातन्त्र्यव्यपदेशात्तत्तत्कर्तृत्वावभासस्तथा ब्रह्मणोऽपीति भावः । 'इदं च भाष्योक्तमापातत एव । ज्ञानस्वभावे तदाश्रयत्वस्यापि वास्तवस्यासंभवात् वस्तुनस्तु ब्रह्मस्वभावभूतस्य नित्यस्यापरिच्छिन्नस्यापि ज्ञानादेस्तद्विषयोपाधिभेदेन कल्पितभेदस्यानित्यत्वं कर्तृत्वं चास्त्येव । अतस्तत्र स्वातन्त्र्यलक्षणं कर्तृत्वमुपपन्नम् । इदं च कूटस्थे उदासीनस्वभावे ब्रह्मणि न वास्तवं किन्त्वविद्याकल्पितमेव भासत' इति भामत्युक्तं समाधानं द्रष्टव्यम् ।

**श्री०** — **उपचारेति** । ननु कथमयमुपचारः । पिपतिषतीति सन्नन्तो हि शब्दः । इच्छायां सन्निन्युक्तसनोऽसंभवेऽप्याशङ्कायामचेतनेषूपसंख्यानं श्वा मुमूर्षतीति यथेति संभावनायामिच्छारहितेष्वपि सनो विधानात् । श्वा मुमूर्षतीति लोकसंभावनाविषयो जात इतिवदत्रापि कूलं पिपतिषतीति लोकसंभावनाविषयो जात इति संभावनायां द्योत्यायां सनः संभवेनोपचारायोगादिति चेत् । सत्यम् । अत्रासन्नपतनमित्यस्य निश्चितपतनमित्यर्थः । तेनाशङ्कायामित्यस्य वार्तिकस्यात्राप्रसक्तिरेव । पतनस्य निश्चयेनात्र पतनाशङ्काया अभावेनैतद्वार्तिकस्यात्राप्रवृत्तेर्युक्तमुपचारत्वम् ॥ **भविष्यतीति** । तथा च तदैक्षतेत्यस्य सर्गे आसन्ना जाता, कार्योन्मुखा जातेत्यर्थः ॥ **सर्वार्थेति** । जीवस्याभीष्टसर्वपुत्रादिपदार्थाकारेण प्रधानस्यैव विकृतत्वात् । तथा च गौणोऽयमात्मशब्दः प्रधाने इति भावः ॥ **ज्ञीप्सितम्** जीवाभिन्नत्वेन ज्ञापयितुमिष्टम् । ग्राहयितुं जीवाभिन्नत्वेनेति शेषः । तत्संबद्धं ब्रह्मसंबद्धम् । ऐकरूप्यात् ब्रह्ममात्रविषयकत्वात् ।

**च०** — इयता ग्रन्थसन्दर्भेण स्वमतेन सूत्रव्याख्यानुव्याख्याग्रन्थं विशदीकृत्य परापव्याख्याप्रत्याख्यानरूपग्रन्थव्याचिकीर्षयाऽवतारयति **एवमीक्षतेरित्यादि** ॥ **प्रतिपादयन्तीति** । सर्वजननशक्तेर्विकारविषयायाः अचेतने सर्वज्ञानहेतुभूतसर्वात्मके सार्वज्ञ्यस्य च संभवात्, ब्रह्मणि च चिद्रूपे सत्त्वाद्यनात्मके तयोरसंभवादिति हृदयम् ॥ **न च ज्ञानक्रिये इति** । सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्य विशेषधर्मावच्छिन्नप्रतियोगिताकाभावनियततया ज्ञानत्वक्रियात्वरूपसामान्यधर्मावच्छिन्नाभावे सर्वज्ञानत्वसर्वप्रयत्नत्वरूपविशेषधर्मावच्छिन्नाभावस्य कैमुत्यसिद्धत्वादिति भावः । अभिहितं चैतत् भामत्याम् 'ज्ञानक्रियाशक्त्यभावाद्ब्रह्मणोऽपरिणामिनः' इति ॥ **सूत्राक्षराणामननुगुणत्वादिति** । तदभिहितार्थस्य सूत्राक्षरानुपूर्वीमहिमाधीनान्वयधीविषयत्वाभावादित्यर्थः । **शब्दगोचरत्वं** शब्दवृत्तिशक्तिलक्षणाऽन्यतरवृत्त्यनिरूपकत्वम् । **शब्दावाच्यत्वम्** शब्दशक्त्यविषयत्वम् । अवैदिकत्वम्

वेदगतपदजनितान्वयबोधाविषयत्वम् । **कारणतया अवैदिकत्वम्** वेदगतपदजनिता कारणत्वप्रकारिका या अन्वयधीस्तदविषयत्वम् ।

सु० — तथा हि । अशब्दं हि तदिति हेतूकृतमशब्दत्वं नाम शब्दागोचरत्वं वा शब्दावाच्यत्वं वा अवैदिकत्वं वा कारणतयाऽवैदिकत्वं वा । सर्वत्राप्यसिद्धिरित्याह नहीति । असौ

अनु० — नह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसौ ॥

सांख्यः । स्वसिद्धेन हेतुनेदं निराकरणमिति चेन्न । यतोऽसौ सूत्राकारोऽशब्दत्वं प्रधानेनाङ्गीकरोति । उपपादयिष्यते चैतत् । किञ्चाद्यपक्षे प्रधानस्यासत्त्वमभिप्रेतमुत प्रमाणान्तरवेद्यत्वम् । आद्ये तदुपपादनायेक्षतेरुपन्यासोऽनुपपन्नः । अत एव नोत्तरः । द्वितीयो ब्रह्मण्यनैकान्तिकः । तृतीयचतुर्थयोः साध्याविशिष्टत्वम् । किं चेक्षणेनैव नेति प्रतिज्ञातार्थसिद्धावशब्दं हि तदिति मध्ये हेत्वन्तरकल्पनं व्यर्थम् । ईक्षितृत्वं चेक्षणगुणयोगित्वम् । तद्ब्रह्मण्यपि गौणमेव निर्गुणत्ववादिनाङ्गीकरणीयम् । तथाच गौणश्चेदिति व्यर्थम् । किंचेक्षतेर्गौणत्वकल्पनस्य बाधकाभावमनुक्त्वाऽऽत्मशब्दादित्यसंगतम् । परेण प्रायपाठो बाधक उपन्यस्तस्तदविरोधाय वैषम्यमुच्यत इति चेन्न । तेजोऽबन्नानामपि देवतात्वेन प्रायपाठविरोधात् । तन्निष्ठस्य मोक्षोपदेशादित्यत्र किं प्रधानैक्योपदेशानुपपत्तिर्वा विवक्षिता । तज्ज्ञस्य मोक्षानुपपत्तिर्वा । आद्ये ब्रह्मपक्षेपि समानो दोषः । न हि जीवस्यापि ब्रह्मैक्योपदेशो युक्त इत्युक्तमधस्तात् । द्वितीयस्त्वनुपपन्न एव । अनात्मविवेकार्थमनात्मज्ञानस्यावश्यकत्वात् । आत्मशब्दस्य गौणत्वे चोदिते बाधकाभाव एव वक्तव्यः । हेयत्वावचनादित्यस्य परिचोदनैवानुपपन्ना । न हि सांख्योऽद्वैतज्ञानार्थं प्रधानोपदेशं मन्यते । हेयत्वावचनं चानैकान्तिकम् । अन्नमयप्राणमयादीनामब्रह्मत्वेऽपि हेयत्वावचनाच्च । उत्तरोत्तरब्रह्मत्ववचनं तत्र ज्ञापकमिति चेत् (न) । अत्रापि तथाविधज्ञापकसौलभ्यात् । प्रतिज्ञाविरोधस्तु ब्रह्मवाद एव न प्रधानवादे । प्रधानस्य सर्वात्मकत्वाभ्युपगमात् । भोक्तृवर्गस्य न प्रधानात्मकत्वमस्तीति चेत् । सत्यम् । ब्रह्मणस्तु न किञ्चित् । एतेन स्वाप्ययोऽपि निरस्तः एकीभावस्य ब्रह्मपक्षेऽप्यभावात् परिष्वङ्गमात्रस्य प्रधानेऽपि सम्भवात् । ब्रह्मविषयं गतिसामान्यं परस्यासिद्धमेव । ईक्षणादिना तज्ज्ञापने प्रथमसूत्रेण गतार्थता । अत एव श्रुतत्वादित्यसिद्धम् । गतार्थं च गतिसामान्येनेत्येषा दिक् ।

वा० अशब्दत्वस्वरूपाज्ञाने मूलोक्तासिद्धेर्दुर्ज्ञानत्वात्कारणवाक्ये प्रधानप्रतिपादकशब्दाभावस्य पराभिमतत्वेऽपि दूषणभिया पक्षान्तरकक्षीकारस्यापि संभवेन तदभिप्रायस्य निश्चेतुमशक्यतया सामान्य-

शब्दत्वाच्चाशब्दत्वविकल्पपूर्वं तत्परिहारसमर्पकतया मूलं योजयति **तथा हीत्यादिना** । शब्दशब्दः सामान्यपरो वेदरूपविशेषपरो वा । आद्येऽपि प्रतिपादकत्वेन न विद्यते शब्दो यस्येति वा, वाचकत्वेन न विद्यते शब्दोऽस्येति वा; द्वितीयेऽपि सर्वथा वेदासिद्धत्वं वा कारणतया तदसिद्धत्वं वेति कल्पान्मनसि निधाय विकल्पयति **अशब्दं हीति** । समासोपसर्जनतया प्रकृतस्यापि साङ्ख्यस्य बुद्ध्या विवेकेन परामर्श इत्याह **असाविति** ॥ **स्वसिद्धेनेति** । परं प्रति स्वशब्दत्वं साधयिष्यामीति भावेनैवेक्षतेरुपन्यास इति भावः ॥ **यतोऽसाविति** । अत्र च सन्निहितपरामर्श उक्तानुपपत्त्यभावश्चेति भावः। ननु सूत्रकारेणैव 'महतः परमव्यक्तम्' 'अजामेकाम्' इत्यादिषु प्रधानपरत्वमाशंक्य तेषां तत्परत्वाभावस्य 'आनुमानिकम्'इत्याद्यधिकरणेषु व्युत्पादितत्वेन चतुर्थपादे तदशब्दत्वप्रतिपादनात्कथमेतदित्यतस्तदपव्याख्यानस्य 'न शब्दवाच्यतैवात्र' इत्यादितदधिकरणानुव्याख्याने निरस्यतया नानुपपत्तिरित्याशयेनाह **उपपादयिष्यते चैतदिति** । नन्वयं तत्सूत्रव्याख्याकलह इत्यतोऽनुपपन्नस्याशब्दत्वस्य न सूत्रकाराङ्गीकारार्हतेत्याशयेन तदनुपपत्तिं दर्शयति **किञ्चेति** । यद्वा । चतुर्विधेऽप्याद्यस्य तदसाधकहेतूपन्यासेन सूत्रकारानभिमतत्वाद्द्वितीयादेश्च स्पष्टदूषणतया न सूत्रकाराङ्गीकारार्हतेत्याह **किञ्चेति** । शब्दागोचरत्वं निरुपाख्यत्वमित्याशयेनाद्यः । शब्दशब्दस्य प्रमाणविशेषार्थकत्वादेकविशेषनिषेधे तदितरविशेषाभ्यनुज्ञानमित्याशयेन द्वितीयः कल्पः ॥ **आद्य इति** । ईक्षितृत्वरूपचेतनधर्मस्य यत्र कारणवाक्ये श्रवणं

---

तत्कारणवाक्यस्य तेनाचेतनप्रधानपरत्वाभावसिद्धावपि यत्र तदश्रवणं तत्कारणवाक्येन वा वाक्यान्तरेण वा प्रमाणान्तरेण वा प्रधानसिद्धेरीक्षितृत्वेनासिद्ध्याऽसत्त्वरूपसाध्यासाधकत्वात्तदुपन्यासोऽनुपपन्न इति प्रमाणाभावरूपतद्धेतूपन्यास एव कर्तव्य इति भावः ॥ **अत एवेति** । प्रमाणान्तरवेद्यत्वरूपसाध्यसाधनाय तद्धेतोरेवोपन्यसनीयतयोक्तरीत्येक्षितृत्वस्य स्वश्रवणोपेतकारणवाक्यस्य प्रधानपरत्वाभावसाधकत्वेऽपि तदनुपेतकारणवाक्येन वाऽकारणवाक्येन वा प्रतिपाद्यत्वासाधकत्वेन शब्दातिरिक्तप्रमाणवेद्यत्वासाधकत्वादेवेत्यर्थः ॥ **तृतीयचतुर्थयोरिति** । वेदासिद्धत्वरूपतृतीयस्य, कारणत्वेन वेदान्तावेद्यत्वरूपसाध्यापेक्षया सामान्यत्वेऽपि तस्य साध्यवत्सन्दिग्धत्वेन, चतुर्थस्य तु साध्यानतिभिन्नत्वेनाहेतुत्वमिति भावः । अत्राद्यद्वयनिराकरणं न ह्यङ्गीकरोतीत्यनेन तृतीयचतुर्थनिराकरणं तूभयविधमशब्दत्वं न ह्यङ्गीकरोति साङ्ख्यः किन्तु साध्यवत्सन्दिग्धं वा साध्यानतिभिन्नं वेति तात्पर्यकेणानेनैव वाक्येन सूचितमिति द्रष्टव्यम् । ननु साङ्ख्येनासिद्ध्यावुद्भावितायां तत्साधकतया सूत्रे ईक्षत्युक्तेः कथमसिद्ध्युद्भावनमित्यतस्तर्हीक्षितृत्वेनैव प्रतिज्ञातार्थसाधनसंभवेऽपि परम्पराश्रयणमचातुर्यावेदकमेवेत्याह **किञ्चेति** । कल्पनमित्यनेनास्मदुक्तरीत्या साध्यप्रतियोगिसमर्पणयोग्यस्य नञोऽन्वयसंभवे प्रतियोग्यध्याहारेण हेतुविभक्तिशून्यस्य हेतुत्वेन कल्पनमप्रामाणिकमिति सूचयति । इदमपि दूषणमशब्दत्वस्यासिद्धिबोध-

कैतद्वाक्यसूचितमेवेति द्रष्टव्यम् । एतानि सूत्राणि साङ्ख्यमतनिरासाय नाचीक्लृपदिति प्रतिज्ञायैकस्मि न्सूत्रेऽनुपपत्तिं प्रदर्शयता भाष्यकारेणोपलक्षणतया सूत्रान्तरानुपपत्तेरप्यभिप्रेततया तां दर्शयति **ईक्षितृत्वं चेति** । गौणश्चेदितिसूत्रमीक्षितृत्वस्य गौणत्वनिरासेन मुख्यत्वप्रतिपादनाय प्रवृत्तं तत्तदा सार्थकं यदि सिद्धान्ते तस्य मुख्यत्वं स्यात् । न चैवमतो व्यर्थं तदिति भावः । नन्वीक्षितृत्वस्यावास्तवत्वेऽप्युपाध्य- वच्छिन्ने ब्रह्मणि तन्मुख्यमेव । नैतावताऽचेतने प्रधाने तद्युक्तम् । चैतन्यसामानाधिकरण्येनैव तत्प्रतीत्याऽचेतनेऽवास्तवस्यापि तस्याभावात्तत्र गौणमिति कथं सूत्रवैयर्थ्यमिति चेन्न । तदवास्तवताया अद्याप्यसिद्धत्वात् । अन्यथा केवलचेतने तदप्रतीत्याऽचेतनावच्छिन्नचेतने तत्प्रतीतेर्वक्तव्यत्वे, नियाम- काभावेन तस्या एव प्रतीतेश्चेतनावच्छिन्नाचेतननिष्ठतद्विषयकत्वोपपत्तेर्विपरीतगौणमुख्यभावस्याप्यापत्त्या गौणश्चेदिति सूत्रानुपपत्तिरेवेत्याशयात् । नन्वीक्षितृत्वस्य गौणत्वनिरासे न सूत्रस्य तात्पर्यमपि तु गौणे- क्षणोपजीवनेन प्रधानपरत्वशङ्काया आत्मशब्देन तत्परत्वनिरासमात्र इति चेन्न । तथा सत्यप्रयोजक- स्येक्षणस्य प्रथमसूत्र एवानुपन्यसनीयत्वात् । आत्मशब्दरूपपरिहारासङ्गतिं प्रायपाठं निरसितुमाह **चिश्चेति** ॥ **वैषम्यमिति** । सति अस्तेजसोश्चेक्षितृत्वमुख्यतानिर्णायकचेतनात्मत्वार्थकात्मशब्दसदसद्भावरूप- मित्यर्थः ॥ **नेति** । देवताशब्दस्याप्यात्मशब्दवच्चेतनमात्रपरत्वादिति भावः ॥ **तन्निष्ठस्येति** । यदि ह्यचेतनं सच्छब्दवाच्यं तदसीति ग्राहयेन्मुमुक्षुं चेतनं सन्तमचेतनोऽसीति तदा शास्त्रमप्रमाणं स्यादित्या- दिनैतत्सूत्रार्थकथनदशायां प्रधानैक्यानुपपत्तेः परेण प्रतिपादनान्मोक्षोपदेशस्य च तदुपपादकाभ्युच्चययुक्ति- त्वेनाप्युपपत्तेराद्यस्य, द्वितीयकल्पस्य तु सूत्रानुरोधात्स्पष्टमेव प्रसक्तिरिति द्रष्टव्यम् । तथा च निष्ठाशब्द ऐक्यपरो वा स्थितिमात्रपरो वेति भावः ॥ **तज्ज्ञस्येति** । प्रधानज्ञस्येत्यर्थः ॥ **अधस्तादिति** । सत्यत्वाचे- नेत्यादिनेत्यर्थः ॥ **तथाविधेति** । सदुक्त्यनन्तरं तन्मे विजानीहि भूय एव मा भगवो विज्ञापयत्वि- त्याद्युक्त्वा दृष्टान्तान्त ाद्युक्तिरूपज्ञापकस्यात्रापि संभवात् । तस्यान्यथासिद्धौ चान्नमयादिष्वप्यन्यथा- सिद्धिसंभवादिति भावः । अत एव तथाविधेत्युक्तम् । अप्ययशब्दार्थो लयोऽपि ध्वंसरूपस्य तस्या- संभवादेकीभावो वा परिष्वङ्गमात्रं वेति विकल्पं मनसि निधायाह **एकीभावस्येति** ॥ **दिगिति** । ब्रह्मकारणत्वप्रतिपादकवाक्यमात्रोदाहरणेऽपि सर्ववेदान्तोत्थाद्यावगतेरेकरूपत्वावेदकवाक्यस्यास्माभिरिव त्वयाऽनुदाहरणादुदाहृतवाक्यस्थात्मशब्दस्य प्रधानेऽपि सावकाशत्वात्सर्वज्ञकारणतायाः श्रुतत्वेऽपि मुख्य- सार्वज्ञस्य ब्रह्मण्यप्यभावादारोपितस्य च प्रधानेऽपि भावाचन्द्रिकोक्तदूषणान्तरस्यापि संभवाच्च नेदं व्याख्यानं युक्तमित्यर्थः ।

स० — **उपपादयिष्यते चैतदिति** । चतुर्थपाद इति शेषः ॥ **अत्रापि तथाविधज्ञापक- सौलभ्यादिति** । अत्रापि मृद्दृष्टान्तेऽभिहिते 'तद्धास्य विज्ञौ' इति ब्रह्मज्ञानवचनेन पूर्वोक्तस्याब्रह्मत्वमिति

वक्तुं शक्यमिति भावः । यद्वा सदेव सौम्येत्यादिना प्रतिपादितस्याब्रह्मत्वे 'कथं नु भगवः स आदेशो भवति' इति पुनः प्रश्नकरणमेव ज्ञापकं वक्तुं शक्यमिति भावः ॥ **प्रतिज्ञाविरोध इति** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोध इत्यर्थः । तदेव दर्शयति **एकीभावस्येति** ॥ **ब्रह्मविषयमिति** । प्रधानं कारण वाक्यप्रतिपाद्यं वेदान्तोत्पाद्यमतेर्ब्रह्मविषयत्वादित्यभिप्रेतत्वेन तत्र वेदान्तोत्पाद्यमतेर्ब्रह्मविषयत्वं परस्यासिद्धं कारणवाक्योत्पाद्यमतिविषयत्वस्य परेण प्रधान एवाङ्गीकारादिति भावः । ननु कारणवाक्येषु ईक्षणादेः श्रवणात्तस्य प्रधाने असंभवेन तदुत्पाद्यगतिविषयत्वस्यापि ब्रह्मण्येवाङ्गीकर्तव्यत्वेन सर्ववेदान्तोत्पाद्यगति-विषयत्वस्य ब्रह्मण्येव सत्त्वेन नासिद्धिरित्याशङ्क्याह **ईक्षणादिनेति** ॥ **अत एवेति** । ब्रह्मविषयग तिसामान्यस्य परं प्रत्यसिद्धत्वादेवेत्यर्थः । सकारणं कारणाधिपाधिपेत्यत्रापि प्रधानमेव प्रतिपाद्यमिति परो वदिष्यतीति भावः ॥ **गतार्थं चेति** । श्रुत्यवष्टम्भेन ब्रह्मकारणत्वस्य गतिसामान्यादित्यत्रैव समर्थितत्वादिति भावः ।

प० — 'न ह्यशब्दम्' इत्येतदेव वाक्यं तन्निराकरणपरतयापि योजयति **यतोऽसाविति** । **उपपादयिष्यत इति** । चतुर्थपादे 'न शब्दवाच्यतैवात्र प्रधानस्य निषिध्यते' इत्यादिनेति भावः ॥ **किञ्चाद्ये प्रधानस्येति** । शब्दागोचरत्वपक्ष इत्यर्थः ॥ **तदुपपादनायेति** । असत्त्वोपपादनायेत्यर्थः ॥ **अत एवेति** । प्रमाणान्तरवेद्यत्वोपपादनायेक्षत्युपन्यासस्यायुक्तत्वादेवेत्यर्थः ॥ **द्वितीय इति** । शब्दावाच्यत्व-हेतुरित्यर्थः । तादृशस्यापि ब्रह्मणो वेदान्तेषु कारणतया प्रतिपाद्यत्वोपगमादनैकान्तिको हेतुरिति भावः ॥ **तृतीयचतुर्थयोरिति** । अवैदिकत्वहेतोः कारणतयाऽवैदिकत्वहेतोश्च कारणतया वेदान्ताप्रतिपाद्यत्व-रूपसाध्येनैकार्थत्वादिति भावः ॥ **नेतीति** । प्रधानं न कारणतया वेदान्तवेद्यमिति प्रतिज्ञार्थसिद्धा-वित्यर्थः । शङ्कते **परेणेति** ॥ **इदमिति** । आत्मशब्दादित्येतदित्यर्थः । 'तत्तेज ऐक्षत' इत्यादा-वात्मशब्दाभावादिति भावः ॥ **देवतात्वेनेति** । अभिमानित्वेन तथा वक्ष्यमाणत्वादिति भावः ॥ **अधस्तादिति** । 'यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत्' इत्याद्यधिकरण इत्यर्थः । सौत्रो मोक्षोप-देशादिति हेतुश्चायुक्त इत्याहुः ॥ **आत्मशब्दस्येति** । अथोच्येतेत्येतत्सूत्रावतारिकायामुक्तदिशा गौणत्वे शङ्कित इति भावः ॥ **परिचोदनैवेति** । अवतारिकारूपाशङ्कायुक्तेत्यर्थः । पूर्वपक्षीभूतः सांख्यो ह्येवं स्थूलारुन्धतीन्यायेनाशङ्कत इति वाच्यम् । न चैवं संभवतीत्याह **न हीति** । प्रधानं नात्मेति हेयत्वावचनात् प्रधानमेवात्मत्वेन सूक्ष्मब्रह्मज्ञानार्थमुच्यत इति नेति प्रागुक्तसूत्रार्थं च प्रत्याह **हेयत्वावचनं चेति** ॥ **हेयत्वावचनादिति** । अन्नमयादिना ब्रह्मत्वेनरूपवचनाभावादित्यर्थः । उपलक्षणं चैतत् पुच्छरूपब्रह्मज्ञानार्थं ब्रह्मत्वेनोपदेशसत्त्वाच्चेति पूर्वोक्तसाध्याभावोऽपि ध्येयः ॥ **उत्तरोत्तरेति** । अन्नमयस्याब्रह्मत्वे 'ये प्राणं ब्रह्मोपासते' इति प्राणमयस्य ब्रह्मत्ववचनं ज्ञापकम् । एवं प्राणमयस्याब्रह्मत्वे

मनोमयस्य ब्रह्मत्ववचनं ज्ञापकमित्येवं ज्ञेयम् ॥ **अत्रापीति** । सदेव सोम्येत्यादिप्रकरणेऽपि सच्छब्दार्थस्याब्रह्मत्वे भूय एव मा भगवान्विज्ञापयत्वित्यादिप्रश्नप्रतिवचनपौनःपुन्यरूपज्ञापकसौलभ्यादित्यर्थः ॥ **प्रतिज्ञाविरोधस्त्विति** । हेयत्वावचनाच्चेति चशब्दसमुच्चितैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधस्त्वित्यर्थः ॥ **न किञ्चिदिति** । भोग्यात्मत्वभोक्त्रात्मकत्वयोर्मध्य इत्यर्थः । जडैक्यस्य त्वयानङ्गीकाराद्ब्रह्मैक्यस्य च यजमानप्रस्तरत्वमित्यादिना अस्माभिर्निरस्तत्वादिति भावः ॥ **एषा दिगिति** । अयं भावः । सिद्धान्ते किं प्रधानं सदेवेत्यादिवाक्यबोध्यं नेति निरस्य विशिष्टब्रह्मणः परिणामित्वमेतद्वाक्यबोध्यमित्युच्यते किं वा कर्तृत्वं बोध्यमिति । यद्वा शुद्धस्य भ्रमाधिष्ठानत्वं बोध्यमिति । नाद्यद्वितीयौ । विशिष्टे सदेवेत्यादिवाक्योक्तसत्त्वायोगात्पूर्वसूत्रेऽखण्ड एव समन्वयस्य प्रतिज्ञातत्वेनात्राखण्डस्यैव वाच्यत्वाच्च । द्वितीये वैयधिकरण्यं च । न हि प्रधानं परिणामीति प्राप्ते ब्रह्म कर्तृत्वसिद्धान्तो युक्तः । अत एव न तृतीयः । प्रधानं परिणामीति प्राप्तेऽधिष्ठानं ब्रह्मेत्यस्य व्यधिकरणत्वादित्यादिरूपेण चन्द्रिकोक्तदिशा ध्येयः ।

या०—**उपपादयिष्यत इति** । 'सर्वत्रैवेतिहासेषु पुराणेषु च सङ्ग्रहात्' इत्यादिना चतुर्थपाद इति शेषः ॥ **किञ्चाद्यपक्षे प्रधानस्येति** । आद्यपक्षस्य किं प्रधानासत्त्वे पर्यवसानमुत तस्य प्रमाणान्तरवेद्यत्वे इति विकल्पार्थः ॥ **ईक्षतेरुपन्यास इति** । ईक्षतिना हि तत्समभिव्याहृतशब्दविशेषागोचरत्वमेव सिध्यति । न च तावता प्रधानस्यासत्त्वमुपपादितं भवति । तदसमभिव्याहृतशब्दैस्तत्सत्त्वसिद्धिसंभवादित्यर्थः । एवं प्रमाणान्तरवेद्यत्वोपपादनायापि नेक्षतेरुपन्यासो युक्तः । ईक्षतेः प्रधानस्य स्वासमभिव्याहृतशब्दप्रमाणकत्वमादायाप्युपपन्नत्वेन तस्य शब्देतरप्रमाणवेद्यतोपपादनासामर्थ्यादित्याशयेनाह ॥ **अत एवेति** ॥ **अनैकान्तिक इति** । जगत्कारणतया वेदान्तवेद्यत्वाभावरूपसाध्यस्यावाच्ये ब्रह्मण्यभावादिति भावः **साध्याविशिष्टत्वमिति** । तृतीयपक्षे साध्यवत्सन्दिग्धत्वेन साध्याविशिष्टत्वमिति द्रष्टव्यम् ॥ **व्यर्थमिति** । अत्र कश्चिदाह । प्रकृत्यर्थस्येक्षणस्य प्रधाने गौणताशङ्कायां न प्रकृत्यर्थस्य गौणताङ्गीकारो युक्तः ब्रह्मपक्षे प्रत्ययार्थस्य कर्तृत्वस्य गौणत्वेऽपि प्रकृत्यर्थस्येक्षणस्य मुख्यत्वात् । प्रकृतेः प्रथमश्रुतत्वनिरपेक्षत्वाभ्यां प्रबलत्वेन तदमुख्यताया जघन्यत्वादित्यत्र तात्पर्यात्तत्सूत्रं व्यर्थमित्याह । तत् स्वसिद्धान्तविस्मरणविजृम्भितमित्युपेक्षणीयमेव । त्वन्मते ब्रह्मणोऽवाच्यत्वेन प्रकृतेरप्यमुख्यत्वादिति ॥ **तदविरोधायेति** तद्विरोधाभावायेत्यर्थः ॥ दूषणान्तरमाह **आत्मशब्दस्येति** ॥ **अद्वैतज्ञानार्थमिति** । यद्यपि ब्रह्मैव जीप्सितमित्युक्तत्वाद्ब्रह्मज्ञानार्थमित्येव वक्तव्यम् । तथाऽपि स आत्मा तत्त्वमसीतीहोपदिष्टं स्यादित्यादितद्भाष्यादद्वैतज्ञानार्थत्वस्यावगमादेवमुक्तमित्यवगन्तव्यम् ॥ **उत्तरोत्तरेति** । 'प्राणो ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजानात्' इत्याद्युत्तरोत्तरवचनमित्यर्थः ॥

**अत्रापि तथाविधेति** । अत्रापि चरमदृष्टान्तेऽभिहिते तद्धास्य विजज्ञाविति ब्रह्मज्ञानवचनमेव पूर्वोक्तस्याब्रह्मत्वज्ञापकं सुलभमित्यर्थः **परस्येति** । साङ्ख्यस्येत्यर्थः ॥ **अत एवेति** । ब्रह्मविषयगति-सामान्यस्य परं प्रत्यसिद्धत्वादेवेत्यर्थः । सकारणं कारणाधिपेत्यत्र च प्रधानमेव प्रतिपाद्यमिति परो वदिष्यतीति भावः ॥ **गतार्थं चेति** । श्रुत्या ब्रह्मकारणत्वस्य गतिसामान्यादित्यत्र समर्थितत्वादिति भावः । दिगर्थस्तु चन्द्रिकायां द्रष्टव्यः ।

**श्री०**— शब्दागोचरत्वं शब्दाप्रतिपाद्यत्वम् । **स्वसिद्धेन** सूत्रकारेणेदं निराकरणं स्वमतसिद्धेन हेतुना कृतमित्यर्थः । **बाधकाभावमिति** । ईक्षतेर्गौणत्वं न कल्प्यं मुख्यार्थे बाधकाभावादित्यनुक्त्वेत्यर्थः । शङ्कते **परेणेति** ॥ **वैधर्म्यमिति** । आत्मशब्दबलेन सतश्चेतनत्वावगमेनेक्षतेर्मुख्यत्वमेवेति न गौणप्राय-पाठविरोध इति भावः ॥ **देवतात्वेनेति** । तथा च नन्वयमीक्षतिर्गौणो व्याख्येयः 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इतिगौणप्रायपठितत्वादित्यस्यायुक्तत्वेन प्रायपाठविरोधस्यैवाभावेन गौणश्चेदिति व्यर्थमेवे-त्याशयः ॥ **बाधकाभाव एवेति** । न तु तन्निष्ठमोक्षोपदेश इत्यर्थः । चशब्दार्थे निरस्यति **प्रतिज्ञेति** । ब्रह्मविज्ञानेन न सर्वविज्ञानं संभवति । सर्वस्य ब्रह्मविकारत्वाभावेन ब्रह्मात्मकत्वाभावादिति भावः ॥ **न किञ्चिदिति** । सांख्यमते भोक्तृवर्गस्य प्रधानात्मकत्वाभावेऽपि भोग्यवर्गस्य तावदङ्गीकृतमेव । त्वन्मते तु भोक्तृवर्गस्य भोग्यवर्गस्य वा ब्रह्मविकारत्वासंभवेन तदात्मकत्वं नैव संभवतीत्यर्थः ॥ स्वाप्ययो नाम किमेकीभाव उत परिष्वङ्गमात्रमिति विकल्प्य क्रमेण दूषयति **एकीभावस्येत्यादिना** ॥ **प्रधाने अपीति** । लिङ्गदेहपरिष्वङ्गसद्भावात्तस्यापि प्रधानत्वादिति भावः । असिद्धमन्यतरासिद्धम् । ईक्षति-कर्तृत्वेन गतिसामान्यं ज्ञाप्यत इत्यत आह **ईक्षणेति** ॥ **प्रथमसूत्रेणैवेति** । ईक्षतेर्नाशब्दमितिसूत्रेणैव इत्यर्थः ।

**च०**— (पृ. १२२८ पं. २६) शब्दगोचरत्वं ·····(पृ. १२२९ पं. २) विषयत्वम् ।

**सु०**— **अस्तु वा यथाकथञ्चित्सूत्रगमनिका । तथाऽपि प्रकृतसङ्गतिपर्यालोचनयाऽत्र वाच्यत्वसमर्थनमेवोपपन्नं न सांख्यनिराकरणमित्याह** समन्वय इति ।

**अनु०**— समन्वये प्रतिज्ञाते शब्दगोचरतैव हि ॥

प्रथमप्रतिपाद्या स्यात्

**तत्तु समन्वयादिति समस्तस्यापि शास्त्रस्य ब्रह्मणि समन्वये प्रतिज्ञाते सति यद्यपि मुख्यया वृत्त्या शब्दगोचरता सांख्यनिराकरणं चेत्युभयमपि प्रतिपाद्यं भवति । उभया-भावेऽपि समन्वयानुपपत्तेः तथाऽपि शब्दगोचरतैव प्रथमप्रतिपाद्या स्यात् हि यस्मात्तस्मादेवात्र**

प्रतिपाद्यते न सांख्यनिराकरणम् । तत्पुनरीक्षतिकर्मव्यपदेशात्स इत्यादौ करिष्यत इति ।

कुतश्शब्दवाच्यतायाः प्रथमप्रतिपाद्यत्वमित्यत आह तदभाव इति ।

अनु०— तदभावे कुतोऽन्वयः ॥

अवाच्यत्वे हि ब्रह्मणि शब्दसम्बन्ध एवानुपपन्नः । जगत्कारणत्वादिवाक्यविचारस्तु दूरे । सांख्यनिराकरणाभावे तु सृष्ट्यादिवाक्यानामेव समन्वयानुपपत्तिः । अतः प्रथमं वाच्यत्वसमर्थनेन समन्वयसम्भावनायां सत्यां वाक्यविशेषनिष्ठस्य विचारस्य पश्चादवसर इति ।

वा०—ननु समन्वये प्रतिज्ञात इत्यादिना 'न ह्यशब्दत्वम्' इत्यादिवत्सूत्राक्षरानानुगुण्याप्रतिपादनात्तस्य प्रकृतासङ्गतिः । 'न च साङ्ख्यनिराकृत्यै' इत्यंशसूचितपराभिमताधिकरणप्रयोजननिरासोपपादनस्यासङ्गतिप्रतिपादनेन क्रियमाणत्वान्नासङ्गतिरिति वाच्यम् । तदुक्तार्थस्याक्षरानानुगुण्येनार्थत्वाभावे सिद्धे तदर्थकत्वोपजीवनप्रवृत्तासङ्गत्युद्भावनस्यानुचितत्वादित्यतः सूत्राणां तदर्थकत्वाभ्युपगमे नासङ्गत्युक्तिरित्याशये गेतरवाक्यमवतारयति अस्तु चेते ॥ ननु शब्दगोचरताया अधिकरणसङ्गतिकथनावसरोक्तरीत्या समन्वयोपयोगेन प्रतिपाद्यत्वेऽपि साङ्ख्यमतनिरासस्य प्रतिपाद्यत्वे न नियामकम् । आनन्दमयोऽभ्यासादित्यादौ तत्प्रतिपादनानुपलब्धेश्चेति प्रथमग्रहणानुपपत्तिरित्यतस्तदुपपादयति तत्त्विति ॥ हिशब्दलब्धं योग्यं मूलाभिमतं साध्यं दर्शयति सैवेति ।

विशेषविचारोपयुक्तसामान्यसंभावकत्वरूपां मूलाभिप्रेतां शब्दवाच्यत्वप्रतिपादनस्य प्राथमिकत्वे युक्तिं वक्तुं मूले कण्ठत उक्तमसंभावनाप्रकारमुपपादयति अवाच्यत्वे हीति । कुत इत्येतद्बललब्धकथनमेतेति । अस्त्ववाच्यत्वे शब्दसंबन्धानुपपत्तिः किं तावता साङ्ख्यमतनिराकरणस्य प्राप्तमित्यतोऽनवसरग्रस्तत्वमित्याशयेनाह जगदिति । वाक्यविशेषसंबन्धविचार इति यावत् ॥ नन्वस्तु जगत्कारणत्वादिवाक्यविचारस्य दूरत्वं साङ्ख्यनिराकरणस्यानवसरग्रस्तत्वं कथमित्यतस्तस्य विशेषविचारार्थत्वादित्याह साङ्ख्येति ।

श्री०— गमनिका व्याख्या ।

सु०— ननु वाच्यत्वाभावेऽपि लक्षणया वृत्त्या समन्वयो भविष्यतीत्यवाच्यत्वाक्षेपं निर्दलतयोपेक्ष्य सूत्रकारेणादौ साङ्ख्यमतं निराकृतमित्यङ्गीकारे कथमसङ्गतिरित्यत आह कथं चेति ।

अनु०— कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम् ॥

स्यादेवम् । यदि सूत्रकारः शब्दानां ब्रह्मणि लक्षणामभिप्रेयात् । न चैतदस्ति । यदि सूत्रकारो ब्रह्मणि शब्दानां लक्षणामभिप्रैति । तदा कथं समन्वयं ब्रूयात् । किन्त्वन्वयमात्रं

ब्रूयात् । समन्वयं चाब्रवीत् । तेन ज्ञायते न लक्षणा सूत्रकारस्याभिप्रेता किं नाम मुख्यवृत्ति-रेवेति ।

वा०— ननु समन्वयोक्त्या लक्षणापक्षनिरासस्य न प्रकृतसङ्गतिः । सांख्यनिरासे सूत्रकारस्यानवसरस्यापरिहारादित्यत उत्तरवाक्यं प्रकृतेन सङ्गमयति नन्विति । लक्षणावादिनं मायावादिनं प्रत्युक्त दूषणेन कथमुक्तशङ्कापरिहार इत्यतो वादशब्दस्याभिप्रायार्थकत्वं लक्षणावादिशब्दस्य सूत्रकारपरत्वं यदीत्यध्याहारेण तस्यानुवाद्यसमर्पकत्वं कथमित्यादेस्तु विधेयसमर्पकत्वम् एवं चोक्तशङ्कापरिहारसिद्धिरित्याशयेन मूलाभिप्रेतं फलं कथयन्नेव मूलं योजयति स्यादेवमित्यादिना ।

सु०— समन्वयं ब्रुवता कथं मुख्यवृत्तिरभिप्रेतेति ज्ञायत इत्यत आह योऽसाविति ।

अनु०— योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः ॥

समीचीनो (हि)अन्वयः समन्वयः । स च शब्दस्य वाच्यार्थ एव घटते । तत्रैव साक्षाच्छक्तिमत्त्वात् । लक्ष्यार्थे तु वाच्यार्थद्वारेणान्वयो न समीचीनः । अतः समन्वयशब्दं प्रयुञ्जानेन सूत्रकृता वाच्यवाचकभाव एव प्रतिज्ञात इति ज्ञायते । स चावाच्यत्वशङ्कानिरासमन्तरेण सर्वथाऽप्यसंभाविनः स्यादिति वाच्यत्वसमर्थनमेव प्राथमिकमिति ॥ इदं चाभ्युपगम्योक्तम् लक्षणावादेऽन्वय एव नोपपद्यते । कुतः समन्वयः । अवाच्ये लक्षणाऽसंभवस्योक्तत्वादिति ।

सत्यम् । समीचीनोऽन्वयः समन्वयः । समीचीनता तु तात्पर्यवत्ता । सा च लाक्षणिकेऽप्यर्थे शब्दानां संभवतीति न समन्वयसिद्ध्यर्थं वाच्यत्वं समर्थनीयमिति चेन्न । संशब्दस्यार्थान्तरं व्याख्यायापि जघन्यवृत्त्या लक्षणया समन्वयाश्रयणनिर्बन्धे कारणाभावात् ।

वा०— योऽसावित्युत्तरवाक्यं न वस्तुस्थितिकथनार्थं प्रवृत्तं येनासङ्गतं स्यात्किन्तूक्तहेतुसाध्ययोर्हेतुहेतुमद्भावोपपादनार्थमित्याशयेनाह समन्वयमिति । प्रस्तुतत्वादभिप्रेत इत्येव वक्तव्ये प्रतिज्ञात इत्युक्तिरवाच्यत्वशङ्काप्रसङ्गकसूचनाय । समन्वयशब्दरूपविशेषोक्त्यनुपपत्त्युक्त्याऽन्वयसामान्यमभ्यनुज्ञातम् । तच्च वस्तुगतिमनुरुद्ध्येतिभ्रान्तिं निवारयति इदं चेति । ननु निर्गुणे समन्वयस्याप्रतिज्ञातत्वादिना निरसनं कथञ्चित्समन्वयसूत्रे कर्तव्यमपि कथमसङ्गतमत्रोत्तरवाक्येन क्रियत इत्यत संशब्दस्यार्थान्तरं प्रकल्प्य लक्षणापक्षेऽपि समन्वयशब्दोपपत्त्या वाच्यत्वस्यासमर्थनीयत्वे परेण शङ्किते कारणाभावेन संशब्दार्थान्तरकल्पनया लक्षणाश्रयणाऽऽयोगेऽस्याभिव्यक्ते तत्कारणत्वेन निर्गुणे समन्वयप्रतिज्ञाने परेण शङ्किते तन्निरासान्न प्रकृतासङ्गतिरित्याशयेनोत्तरवाक्यमवतारयति सत्यमिति ।

प०— उक्तमवाच्ये लक्षणाऽसंभवमनालोच्य शङ्कते सत्यं समीचीनोऽन्वय इति ।

या०— उक्तमवाच्ये लक्षणाऽसम्भवमनालोच्य शङ्कते सत्यमित्यादिना ॥

सु०— नन्वस्ति कारणम् । तत्तु समन्वयादिति निर्गुणे हि ब्रह्मणि समन्वयः सूत्रकृता प्रतिज्ञातः । न च तत्र शब्दानां वचनवृत्तिः संभवति । तस्या द्रव्यादिसंबन्धनिबन्धनत्वात् । निर्गुणे च तदभावात् । अतो ज्ञायते लक्षणाऽऽश्रिता सूत्रकृतेति । एवं च सति संशब्दस्याप्युक्त एवार्थो निश्चीयत इति । स्यादप्येवम् । यदि निर्गुणे समन्वयः प्रतिज्ञातः स्यात् । न चैवम् । तथा हि किमत्र निर्गुणस्य प्रकृतत्वात्तदिति तत्परामर्शोऽङ्गीक्रियेयते । उत सगुणस्य प्रकृतत्वेऽपि तत्परामर्शासंभवेन जहदजहल्लक्षणया निर्गुणपरामर्शोऽभ्युपेयते ॥ आद्यं दूषयति जन्मादीति ।

अनु०— जन्मादिकारणे साक्षादाह देवः समन्वयम् ॥
उक्तं तदेव जिज्ञास्यं क्वावकाशोऽत्र निर्गुणे ॥

अत्र तत्तु समन्वयादिति सूत्रे । निर्गुणे समन्वयस्यावकाशः प्रसङ्गः क्वास्ति । नास्तीत्यर्थः । कुतः । यतोऽत्र त्रिसूत्र्यामतीतायाम् । निर्गुणे विषयसप्तमीयम् । निर्गुणस्यावकाशः (प्रसङ्गः) क्वास्ति । न क्वापीत्यर्थः । कथम् । लक्षणसूत्रे जन्मादिकारणत्वेन लक्षिते हि ब्रह्मणि शास्त्रं प्रमाणमभिधाय तस्य समन्वयमाह सूत्रकारः । न च तन्निर्गुणं जन्मादिकारणत्वगुणयोगात् । ननु जन्मादिकारणत्वं तटस्थमेव सत्ब्रह्म लक्षयतीति ब्रूमः । अतो लक्षणसूत्रे प्रकृतं निर्गुणमेवेत्यत उक्तं साक्षाज्जन्मादिकारण इति । उपपादितं चेतत्तत्रैव ।

मा भूल्लक्षणसूत्रे निर्गुणस्य प्रकृतत्वम् । प्रथमसूत्रे जिज्ञास्यतयोक्तं निर्गुणमेव । न हि तस्य कश्चिद्धर्मः श्रूयत इति न वाच्यम् । यतस्तदेव, जन्मादिसूत्रे जन्मादिकारणत्वेन लिलक्षयिषितमेव, जिज्ञास्यमुक्तम् । न ह्यन्यजिज्ञास्यतया प्रतिज्ञायान्यस्य लक्षणमुच्यते । अनुपयोगादिति ॥

वा०— अत्र तत्तु समन्वयादिति निर्गुणे समन्वयप्रतिज्ञोपपादनाय प्रकृतत्वान्निर्गुणस्य तदिति परामर्शविषयत्वं वदन्तं प्रति हि जन्मादिकारण इत्युत्तरवाक्ये निर्गुणस्याप्रकृतत्वे व्युत्पादिते न हि तेनैव सगुणस्य प्रकृतत्वेऽपि तत्परित्यागेन निर्गुणस्य तदिति परामर्शविषयत्वमिति वक्तुं शक्यते येन बाधकाभावेन प्रकृतसगुणपरित्यागानौचित्यप्रतिपादकमुत्तरवाक्यं तं प्रत्येव सङ्गच्छेतेत्याशयेन निर्गुणे समन्वयप्रतिज्ञानरूपसामान्योक्तेरुभयथाऽपि संभवाद्विकल्प्य तत्तत्कल्पनिरासपरत्वेन पूर्वोत्तरवाक्ये योजयति तथा हीत्यादिना । तदिति निर्गुणस्य परामर्शाभावस्य तत्प्रयोजकस्य पूर्वत्र तदप्रकृतत्वस्य च मूलारूढतायै मूलस्थप्रतिज्ञाभागमावृत्त्या द्वेधा योजयति अत्रेत्यादिना । प्रसङ्गः प्रतिज्ञातता । तदिति निर्गुणपरामर्शाभावेन तत्समन्वयस्य प्रतिज्ञातता नेत्यर्थः । एतदन्तर्भावेन त्रिसूत्रीत्वभ्रान्तिनिरासायाती-

तायामिति । प्रसङ्गः प्रसक्तिः । उपस्थितिरिति यावत् । सूत्रत्रये नैकत्रापीत्यभिव्याप्तौ कापीत्यपि: । सूत्रेऽप्रकृतत्वं मूलारूढं कर्तुं जन्मादिकारण इत्यस्य सूत्रव्यापारप्रदर्शकत्वं दर्शयति लक्षणसूत्र इति । कापीत्युक्तिलब्धं तृतीयसूत्रव्यापारं दर्शयति शास्त्रमिति ॥ तस्येति । शास्त्रस्येत्यर्थ । जन्मादिकारण इत्येतदर्थपरमपीत्यभिप्रेत्य तन्निर्गुणत्वाभावहेतुसमर्पकतयाऽपि योजयति जन्मादीति । साक्षादित्यस्यान्येनान्वये प्रकृतानुपयोगादभिमतान्वयं प्रदर्शयितुं तद्व्यावर्त्यमाह नन्विति । उक्तं तदेव जिज्ञास्यमिति विशिष्योक्तिप्रयोजकतया शङ्कायां बीजविशेषं दर्शयति न हीति । एतच्छङ्कानिवर्तकहेतोर्मूलसूचितस्य लाभाय तदेवेति परामर्शविषयं दर्शयति जन्मादिति ।

प०— अत्रेत्यनूद्यार्थमाह अत्र तत्तुसमन्वयादिति सूत्र इति । कावकाशोत्रेत्येतदेव वाक्यं प्रकारान्तरेण योजयति यतोत्रेति । तदेवेत्यनुवादः जन्मादीत्यादि व्याख्या ।

सु०— द्वितीयं दूषयति कथं चेति ।

अनु०— कथं चासंभवस्तस्य मुख्यार्थस्य निराकृतौ ॥

तस्यानुक्रान्तायां त्रिसूत्र्यां प्रकृतस्य मुख्यार्थस्य वाच्यस्य समन्वयविषयतया त्यागेऽसंभवः कथम्, न कथञ्चिदित्यर्थः । अतो निर्गुणसमन्वयस्याप्रतिज्ञातत्वान्न लक्षणाऽऽश्रयणमत्र युक्तम् । किन्तु प्रथमप्राप्तया मुख्यवृत्त्यैवेति । तदर्थ एव संशब्दोऽपीति ।

वा०— प्रकृतस्यापि सगुणस्य परित्याग इति द्वितीयपक्षस्य मूलारूढतायै तस्येत्यादिकं तदनुगुणतया व्याख्याति तस्येत्यादिना ।

प०— द्वितीयमिति । सगुणस्य प्रकृतत्वेपि इत्यादिनोक्तपक्षमित्यर्थः ॥

श्री०— निराकृतावित्यस्य व्याख्यानं समन्वयविषयतया त्याग इति ।

च०— त्रिसूत्र्यामिति । द्विगोरिति ङीप् ।

सु०— किञ्च निर्गुणं चेदत्र तच्छब्देन परामृश्यते । तदा तत्र लक्षणाऽपि न संभवतीति व्यर्थं समन्वयसूत्रमापन्नमिति वक्तुं निर्गुणस्याप्रमेयत्वं तावत्साधयति मानेनेति ।

अनु०— मानेन केन विज्ञेयमवाच्याज्ञेयनिर्गुणम् ॥

निर्गुणं वस्तु केन मानेन विज्ञेयम् । न केनापि । कुतः । अज्ञेयत्वात् । ज्ञेयमेव हि प्रमेयं दृष्टं घटादि । शब्दप्रमाणाविषयत्वेऽवाच्यत्वं हेतुः वाच्यस्यैव तद्विषयत्वदर्शनात् । चत्वाङ्गीकारे च निर्गुणत्वव्याघातात् ।

वा०— तच्छब्देन निर्गुणपरामर्शे संभावितपक्षद्वयस्य निरस्ततया वक्तव्यान्तराभावादुत्तरवाक्य-वैयर्थ्यमित्यतो वक्ष्यमाणदूषणान्तरसाधकहेतुसमर्थनपरतया न वैयर्थ्यमित्याशयेन तद्योजयति किञ्चेति । यद्यप्यमेयं चेदित्युत्तरवाक्येऽमेयत्वमेव हेतुत्वेनोच्यते तथाऽप्यज्ञेयत्वेनात्र तत्साधनादमेयत्वस्याज्ञेयत्वमात्रत्वे तेन तत्साधनानुपपत्तेर्मानेनेत्यत्रोक्तत्वाच्चाप्रमेयत्वमेव तत्राभिमतमित्याशयेनाप्रमेयत्वमित्युक्तम् । यद्यप्यवा-च्याज्ञेयनिर्गुणवस्तुनि प्रमाणाभावप्रतिपादनपरत्वमस्य वाक्यस्य भाति । तथाऽपि निर्गुणस्यैवावाच्याज्ञेय-योरत्र्यवधानेनाप्रकृतत्वादव्यवहितनिरासपरत्वस्यैव श्लिष्टत्वादुत्तरवाक्ये चामेयत्वस्यैवापादकत्वेनोपादानाद्वि-ज्ञेयवाच्यलक्ष्यत्वपूर्वेत्युत्तरवाक्ये निर्गुणासत्त्वस्य प्रमाणाभावेनोपपादयिष्यमाणत्वाच्चेदमप्रमेयत्वसाधकपरतया व्याख्यातम् । यद्यपि चावाच्यादिहेतुप्राये निर्गुणं पठितम् । तथाऽपि बुद्ध्या विवेकेन साध्यधर्मिसमर्पकम् । तद्धेतुप्रायपाठस्तु निर्विशेषत्वरूपनिर्गुणत्वस्य हेतुभूताज्ञेयत्वाद्युपपादकत्वस्यापि भावात्; इत्याशयेनाह निर्गुणमिति । ज्ञेयत्वस्य सामान्यतया प्रमेयत्वरूपविशेषव्यापकत्वाद्युक्तं व्यापकनिवृत्त्या व्याप्यनिवृत्ति-साधनमित्याशयेनाह ज्ञेयमेव हीति । शब्दप्रमाणविषयत्वस्यैव पराभिमततया विशेषहेतुना तदभाव-साधनमित्याशयेनावाच्यत्वं तत्र हेतुत्वेन योजयति शब्देति ॥ वाच्यस्यैवेति । अवाच्ये लक्षणाया असंभवस्योपपादितत्वादिति भावः । निर्गुणस्य हेतुप्रायपाठसूचितमर्थं ज्ञेयत्वादीति ।

श्री०— अज्ञेयत्वादिति । ज्ञेयत्वं सामान्यं प्रमाणज्ञेयत्वं विशेषः । सामान्याभावेन च विशेषाभावः साध्यत इत्यदोषः ॥ ज्ञेयमेव हीति । अज्ञेयत्वान्न प्रमाणगम्यमित्यत्र व्यतिरेकव्याप्तौ वह्निमत्त्वादेव धूमवत्त्वमितिवद्व्याप्यव्यापकभावो द्रष्टव्यः । हेत्वन्तरमाह । शब्देति । स्वरूपत इतरपदा-र्थानन्वितत्वेन ।

सु०— अस्त्वप्रमेयमेव निर्गुणं ब्रह्म; ततः किमित्यत आह अमेयं चेदिति ।

अनु०— अमेयं चेन्न शास्त्रस्य तत्र वृत्तिः कथञ्चन ॥

निर्गुणं ब्रह्मामेयं चेदङ्गीकृतम् । तर्ह्यमेयत्वात्तत्र शास्त्रस्य कथंचनलक्षणयाऽपि वृत्तिर्न संभवतीति समन्वयसूत्रं व्यर्थमेव प्राप्तम् । लक्षणा हि लक्ष्यार्थप्रमितिपूर्विका दृष्टा । न हि तीरं स्वरूपतो गङ्गासंबन्धित्वेन च प्रमाणतोऽप्रतिपन्नं गङ्गाशब्देन ज्ञाप्यते । लाक्षणिकोऽपि हि शब्दो लक्ष्यप्रमोत्पादाय प्रयुज्यते । अन्यथा प्रयोजनान्तराभावेन वैयर्थ्यप्रसङ्गात् । तथा चाप्रमेये हेतुफलयोरसंभवात्कथं लक्षणासंभवः । ननु प्रसिद्धिरेव लक्षणाहेतुर्न प्रमाणप्रसिद्धिः विशेषणवैयर्थ्यात् । तथा च स्वतः सिद्धे कथं लक्षणा न संभवतीति । एवं तर्हि सुतरां लक्षणा नोपपद्यत इति वक्ष्यति ॥ ननु लाक्षणिकाः शब्दा लक्ष्यप्रमामनुत्पादयन्तोऽपि विपरीताकार-व्यावर्तनेन(एव) प्रयोजनवन्तो भविष्यन्तीति । न । निराकृतत्वादिति ।

वा० — कथञ्चनेत्यस्य शक्त्या लक्षणया वेति व्याख्यानस्य शक्तेः परानभिमतिपराहततया अश्लिष्टत्वात्कथमपि त्वदभिमता या लक्षणा तयाऽपीति व्याख्यानं कृतम् । आपाद्यस्यानिष्टत्वाय प्रकृतोपयोगिसमन्वयसूत्रवैयर्थ्यरूपतत्फलं प्रदर्शितम् । अप्रमेयत्वस्य लक्षणाऽनुपपत्तिप्रयोजकत्वं कारणफलयोरसंभवेनोपपादयति **लक्षणा हीति** । परोक्तरीत्या कारणफलसंभवस्य वक्ष्यमाणरीत्योक्तरीत्या च सुनिरस्यत्वाभिप्रायेण मूलकारेणानिरस्तम् । तत्संभवं स्वयमाशङ्क्योक्तवक्ष्यमाणरीतिमेव तन्निरासकतया सूचयति **नन्वित्यादिना** । अमेयत्वमुपपाद्य लक्षणानुपपत्तिरिदानीमभिधेया । स्वप्रकाशत्वेऽपि स्वेनैव प्रकाशान्तराविषयत्वेन शब्दाविषयत्वस्य परेणैवोक्ततया तद्विशेषलक्षणादिविचारो दूरोत्सारित इत्याशयेन सुतरामित्युक्तम् ॥ **वक्ष्यतीति** 'यदि तत्स्यादगोचरम्' इति स्वप्रकाशत्वे शास्त्राविषयत्वप्रतिपादनेनेत्यर्थः । विपरीताकारव्यावृत्तेरब्रह्मतया ब्रह्मधर्मत्वस्याप्यभावे मुमुक्षुजिज्ञास्यतया तस्याः प्रयोजनत्वासंभवस्य 'न व्यावृत्त्या प्रयोजनम्' इत्यादिना निराकृतत्वादित्याह **नेति** ।

स० — अर्णवशब्दस्य नित्यपुलिङ्गत्वात्कथं गुणार्णवमिति युज्यत इतिशङ्कायामस्य पचाद्यजाद्यन्तत्वात्त्रिलिङ्गत्वोपपत्तेरित्याह **अर्णव इवाचरतीत्यादिना** । 'सर्वप्रातिपदिकेभ्यः क्विबाचारे' इति वचनादर्णवशब्दादाचारार्थे क्विपि कृते तस्य 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां 'नन्दिग्रहिपचादिभ्य इत्यनेन पचादित्वेन कर्तर्यच्प्रत्यये कृते चार्णव इवाचरतीत्यर्थकोऽर्णवशब्दस्त्रिलिङ्ग इत्यर्थः । अत एव अर्णव इवाचरतीत्यर्णवशब्द इत्यन्वयो द्रष्टव्यः । अन्यथा क्विपि आचारमात्रार्थेनाच तीत्याचारकर्तृत्व प्रदर्शनायोगादिति द्रष्टव्यम ।

प० — **हेतुफलयोरिति** । लक्ष्यवस्तुनः स्वरूपेण मुख्यार्थसंबन्धित्वेन चोपस्थितिरूपहेतोः लक्ष्यार्थप्रमितिरूपफलस्य चासंभवादित्यर्थः ॥ वक्ष्यतीति । 'यदि तत्स्यादगोचरम्' इत्यादिग्रन्थेनेति भावः ॥ अमेयत्वेऽपि लक्षणाफलनाशङ्कते **ननु लाक्षणिका इति** । शङ्कां निराह **नेति** ॥ तत्र हेतुमाह **निराकृतत्वादिति** । सत्यज्ञानादिकेप्येवं न व्यावृत्त्या प्रयोजनमित्यादिना जन्मादिसूत्र इति भावः ।

या० — **एवं तर्हि सुतरामिति** । स्वतः सिद्धिर्नाम प्रमाणान्तरव्यावृत्तिरेव परस्याभिप्रेता । तस्यां च सत्यां सुतरां लक्षणा नोपपद्यते । लक्ष्यज्ञानरूपप्रयुक्तकारणाभावात । लक्षणया शब्दबोध्यत्वाङ्गीकारे च शब्दलक्षणप्रमाणवेद्यत्वापातेन फलासम्भवाच्चेत्यभिप्रायः ॥ **वक्ष्यतीति** । यदि तत्स्यादगोचरमित्यात्रेति शेषः ॥ अमेयत्वेऽपि लक्षणाफलमाशङ्कते **ननु लाक्षणिका इति** ॥ **निराकृतत्वादिति** । सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनमित्यत्रेति शेषः ।

श्री० — अप्रमेये लक्षणायां लक्ष्यार्थप्रमितिरूपहेत्वभावमुपपाद्य फलाभावमुपपादयति । **लाक्षणिको हीति** ॥ **लक्ष्यप्रमोत्पादायेति** । लक्ष्ये तीरादौ घोषादितीरपदार्थान्वितत्वप्रमोत्पादायेत्यर्थः । तेन लक्ष्यार्थप्रमितेरेवास्या एव कारणत्वं फलत्वं च विरुद्धमिति कथमेतदिति चोद्यानवकाशः ॥ **लक्षणेति** । सत्यादिपदानां लक्षणायाः सम्भवादित्यर्थः ॥ **भविष्यन्तीति** । तथा च नात्र प्रकृते फलासम्भव इत्याशयः ।

च० — **हेतुफलयोरिति** । लक्ष्यार्थप्रमितिपूर्वकलक्षणायाः हेतुभूतायाः फलीभूताया लक्ष्यप्रमायाश्चाभावेनेत्यर्थः ।

सु० — **निर्गुणे समन्वयं निराकृत्य व्यतिरेकमुखेनोपसंहरति** तस्मादिति ।

अनु० — तस्माच्छास्त्रेण जिज्ञास्यमस्मदीयं गुणार्णवम् ॥
वासुदेवाख्यमद्वन्द्वं परं ब्रह्माखिलोत्तमम् ॥

**यतो निर्गुणे समन्वयो नोपपन्नः । तस्मादस्मदीयं सगुणमेव परं ब्रह्म शास्त्रेण जिज्ञास्यमङ्गीकरणीयम् ॥ ननु पूर्वं विष्णोर्जिज्ञास्यत्वमुक्तम् । इदानीं तु सगुणस्य ब्रह्मण इति विरोध इत्यत उक्तम्** वासुदेवाख्यमिति । **तथाऽपि प्राक् सगुणस्य** हेयत्वादिकमभिहितम्, **इदानीं तु जिज्ञास्यत्वमिति कुतो न विरोध इत्यत उक्तम्** गुणार्णवमिति । **पूर्वमनिर्वचनीयाविद्यावच्छिन्नस्य सगुणस्याप्रामाणिकत्वम् प्राकृतसत्त्वादिगुणबद्धस्य हेयत्वादिकं चाभिहितम् । इदानीं तु ज्ञानानन्दाद्यनन्तगुणार्णवत्वेन सगुणं परब्रह्मोपादेयमुच्यत इति को विरोधः ॥ अर्णव इवाचरतीति क्विपि कृतेऽर्णवतेः पचाद्यचि कृतेऽर्णवशब्दः त्रिलिङ्गः साधुः ॥ नन्वेकमेवाद्वितीयमिति ब्रह्मणो निर्गुणत्वमभिधीयते, अतः कथं गुणार्णवत्वमित्यत उक्तम्** अद्वन्द्वमखिलोत्तममिति । **अद्वन्द्वमसमम् । समाधिकरहित्यं श्रुत्यर्थ इत्यर्थः ।**

वा० — नन्वप्रतिज्ञातोपसंहारो न युक्त इत्यत आह **निर्गुण इति** । उपसंहारस्य व्यतिरेकमुखत्वं मूलारूढं दर्शयितुमस्मदीयमित्यनूद्य सगुणमेवेत्युक्तम् । उक्तहेतोर्जिज्ञास्ये कारकत्वाभावादङ्गीकरणीयमित्युक्तम् । अस्मदभिमतपरब्रह्मत्वोक्त्यैव वासुदेवाख्यत्वगुणार्णवत्वसिद्ध्या तद्विशेषणवैयर्थ्यमित्यत उक्तविरोधपरिहारं तत्प्रयोजनतया दर्शयति **नन्वित्यादिना** । गुणार्णवमिति ज्ञानानन्दाद्यनन्तगुणवत्त्वोक्त्योभयव्यावृत्तिलाभ इत्याशयेनाह **इदानीमिति** । पुमानित्यधिकारे देवासुरात्मस्वर्गगिरिसमुद्रनखकेशेति लिङ्गानुशासनसूत्रे समुद्रनाम्नां पुलिङ्गत्वविधानादर्णवशब्दस्य पुलिङ्गत्वाद्गुणार्णवमित्यनुपपन्नमित्यतः 'सर्वप्रातिपदिकेभ्यः क्विब्वाचारे' इत्यर्णवप्रातिपदिकादाचारक्विप्यर्णवतीति कर्त्रर्थे पचाद्यचि

च निष्पन्नस्यार्णवशब्दस्य यौगिकत्वेन विशेष्यनिघ्नत्वाद्ब्रह्मशब्दविशेषणतया नपुंसकोपपत्तिरित्याह **अर्णव इति** । शीतोष्णादिराहित्यस्याद्वन्द्वपदार्थत्वेऽल्पार्थत्वम् । अद्वितीयपदव्याख्यानत्वानुपपत्तिश्च । 'अतः समो द्वितीयः स्याददद्वितीयोऽसमत्वत' इत्यद्वितीयपदस्य समराहित्यार्थकतया तद्भाष्यव्याख्यानं मनसि निधायाह **अद्वन्द्वमसममिति** । उक्तशङ्कापरिहारस्य मूलारूढतायै अद्वितीयपदव्याख्यानरूपपदोपादानेन मूलसूचितमर्थमाह **समेति** । यद्यप्यसमत्वमद्वितीयशब्दार्थत्वेनोक्त्वा 'साधिकः कुत एव स्यादित्याह परमश्रुति' रित्यधिकराहित्यस्य कैमुत्यलब्धत्वं तद्भाष्य एवोक्तम् । तथाऽपि समनिषेधाददद्वितीयपदबललब्ध-त्वाददद्वितीयपदार्थतयाऽधिकराहित्योक्तिरिति द्रष्टव्यम् । अनेनैवाभिप्रायेण पृथगधिकरणे एतत् श्रुतिव्या-ख्यानावसरेऽद्वितीयं समाधिकरहितमिति वक्ष्यतीति ध्येयम् ।

प०— **इति क्विपि कृत इति** । 'उपमानादाचार' इतिप्रकरणे 'सर्वप्रादिपदिकेभ्यः क्विबि-त्येके, इतिवार्तिकेनेति भावः । क्विपि कृते सनाद्यन्ता धातव इतिधातुसंज्ञायां तिपि कृते अर्णवतीति-रूपम् । तस्य षष्ठीनिर्देशोऽर्णवतेरिति । क्विबन्तार्णवशब्दात् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच इतिसूत्रेणा च्प्रत्यये पररूपे अर्णवेति रूपमिति भावः ।

या०— **परं ब्रह्मेति** । न तु मायाशबलमित्यर्थः ॥ नन्वर्णवशब्दस्याभियुक्तप्रयोगेषु नित्य-पुलिङ्गतादर्शनात्कथं गुणार्णवमितिप्रयोग इत्याशङ्कायामाह **अर्णव इवेति** । सर्वप्रातिपदिकेभ्यः क्विब्वा-चार इति वचनादर्णवशब्दादाचारर्थे क्विपि कृते तस्य सनाद्यन्ता धातव इति धातुसंज्ञायां 'नन्दिग्रहिपचा-दिभ्यो ल्युणिन्यच' इत्यनेन पचादित्वेन कर्तर्यच्प्रत्ययो द्रष्टव्यः । अन्यथा क्विप आचारमात्रार्थत्वेनाचर-तीत्याचारकर्तृत्वप्रदर्शनायोगादिति द्रष्टव्यम् । एवं च यः समुद्रपर्यायोऽर्णवशब्दः स एव नित्यपुलिङ्गः प्रकृतस्तु न तथेति भावः । त्रिलिङ्ग इति स्वरूपकथनार्थम् । वस्तुतस्त्वनियतलिङ्ग इत्यर्थः ।

च०— ननु लिङ्गानुशासने अथ पुमानित्यधिकृत्य देवासुरात्मस्वर्गगिरिसमुद्रनखकेश-दन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानीति समुद्रपर्यायाणां नित्यपुलिङ्गतायाः विहिततयार्णवशब्दस्य क्लीबता कथं सङ्गच्छत इत्यत आह **अर्णव इति** । 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य' इति कात्यायनवचनादर्णवशब्दादाचारक्विबन्तात् 'सनाद्यन्ता' इति धातुत्वे पचादित्वात् 'नन्दिग्रहि' इति विहितकर्तृसाधनाच्प्रत्यये निष्पन्नोर्णवशब्दोऽनियतलिङ्ग इति क्लीबता सङ्गच्छत इति भावः ।

सु०— **न केवलं निर्गुणे शास्त्रसमन्वयो नोपपद्यते । किन्तु तस्य सत्त्वमेवानुपपन्न-मित्याह** विशेयेति ।

अनु० — विज्ञेयवाच्यलक्ष्यत्वपूर्वाशेषविशेषतः ॥
निर्गतं मनसो वाचो

द्वन्द्वात्परस्त्वप्रत्ययः प्रत्येकमभिसंबध्यते । पूर्वपदेन रूपादीनां ग्रहणम् । तन्निर्गुणं ब्रह्म नास्त्येवेति बहिरेव प्रतिज्ञा द्रष्टव्या । कुतः । मनसो वाचश्चागोचरं यतः । उपलक्षणमेतत् । सर्वप्रमाणागोचरत्वाच्छशविषाणवदिति द्रष्टव्यम् । गवां ज्ञानानां चरो वृत्तिरस्मिन्निति गोचरम् । विषय इति यावत् । तेन नपुंसकोपपत्तिः । सर्वप्रमाणाविषयत्वं कुत इत्यत उक्तं विज्ञेयत्वपूर्वविशेषेभ्यो निर्गतमिति । विज्ञेयत्वाभावान्न कस्यापि प्रमाणस्य विषयः । वाच्यत्वलक्ष्यत्वसदसद्गुणयोगित्वाभावाच्च न शाब्दत्वम् । रूपाद्यभावाच्च न प्रत्यक्षत्वम् । लिङ्गसंबन्धाभावाच्च नानुमेयत्वमिति ।

वा० — उपसंहारानन्तरं पुनस्तदुपपादनानुपपत्तिरित्यत उत्तरग्रन्थस्य विषयान्तरं दर्शयति न केवलमिति । तत्पुरुषादावेकैकपदार्थप्राधान्यात्तत्पर'त्व'प्रत्ययस्य प्रत्येकपदार्थसंबन्धासंभवेऽपि द्वन्द्वे सर्वपदार्थानां समप्राधान्यात्तत्पर'त्व'प्रत्ययस्य प्रत्येकसंबन्धेन विवक्षितार्थसिद्धिरित्याशयेनाह द्वन्द्वादिति । अनेन, त्वप्रत्ययान्तेन द्वन्द्व इति भ्रान्तिरपि निरस्ता भवति । लक्ष्यत्ववाच्यत्वग्रहणेन शब्दरूपप्रमाणविशेषविषयत्वासंभवसिद्धेः प्रमाणान्तराविषयत्वे हेतुसमर्पकाणां रूपस्पर्शादीनां लिङ्गसंबन्धस्य च पूर्वपदालाभ इत्याशयेनाह पूर्वपदेनेति । निर्गुणविषय एवासत्त्वरूपानुपपत्तिः प्रदर्श्यत इति प्रकृतसंबन्धप्रदर्शनार्थं प्रयुक्त तच्छब्दं धर्मिसमर्पकतया व्याख्याति तन्निर्गुणमिति । ननु नोक्ताभिप्रायो मूलात्प्रतीयत इत्यतो यदि तत्स्यादित्युत्तरवाक्यबललब्धप्रतिज्ञाऽध्याहारं दर्शयति नास्त्येवेति । योग्यतया मनस इत्यादि तद्धेतुतया योजयति मनस इति । करणान्तरगोचरत्वसंभवात्करणविशेषागोचरत्वस्य नासत्त्वसाधकत्वमित्यत आह उपलक्षणमिति । गोचरसञ्चरेति गोचरशब्दस्य घान्ततया निपातनाद्धान्तश्चेति लिङ्गानुशासने तस्य पुल्लिङ्गत्वविधानान्नपुंसकानुपपत्तिरित्यतोऽधिकरणे घान्तत्वेऽपि बहुव्रीहिसमासस्य विशेष्यनिघ्नत्वान्नानुपपत्तिरित्याह गवामिति । विज्ञेयत्वाभावस्य प्रमाणसामान्याविषयत्वे हेतुत्वमवाच्यत्वादीनां तत्तद्विशेषाविषयत्व इति सामान्यतो विशेषतश्च सर्वप्रमाणाविषयत्वसिद्धिरित्याशयेन विविच्य योजयति विज्ञेयत्वाभावादिति ।

स० — ननु गोचरशब्दस्य गोचरसञ्चरेति पुंसि निपातितत्वेन कथमगोचरमिति नपुंसकतेत्यत आह गवां ज्ञानानमिति । तथा च नायं गोचरशब्दस्तत्सूत्रनिपातितः किन्तु बहुव्रीहिरूपोऽन्य एव । तस्य च विशेष्यनिघ्नत्वान्नपुंसकतोपपत्तिरिति भावः ॥ ननु मा वदेदिति कथं, माङि लुङिति माङ्योगे मावादीति लुङा भाव्यमित्यत आह माशब्दोऽयं न माङिति ।

प० — तदित्यनुवादः निर्गुणं ब्रह्मेति व्याख्या । नास्त्येवेति शेषोक्तिः । निर्गतमिति तदित्यस्य विशेषणमिति भावः । गोचरा इन्द्रियार्थाश्चेत्यमरोक्त्या गोचरशब्दस्य नित्यपुंलिङ्गत्वाद्व्यधिकरणबहुव्रीहिमाश्रित्य विशेष्यनिघ्नतामाह **गवामिति** ।

**या०** — ननु गोचरशब्दस्य गोचरसञ्चरेति पुंसि निपातितत्वेन कथमगोचरमिति नपुंसकतेत्यत आह **गवां ज्ञानानामिति** । तथा च नायं गोचरशब्दस्तत्सूत्रनिपातितः किन्तु बहुव्रीहिरूपोऽन्य एव । तस्य विशेष्यनिघ्नत्वान्नपुंसकतोपपत्तिरिति भावः । उपलक्षणं चैतत् । चरश्चरणमस्यास्तीति मत्वर्थीयाच्प्रत्ययान्तत्वेन 'त्रयी न श्रुतिगोचरा' इति प्रयोगेण च विशेष्यलिङ्गतोपपत्तिरित्यपि द्रष्टव्यम् ।

च० — ननु गोचरसञ्चर इति घान्ततया निपातितगोचरशब्दस्य लिङ्गानुशासने 'अथ पुमान्' इत्यधिकृत्य घान्तश्चेत्यनेन पुंसि संज्ञायां घः प्रायेणेत्यनेन च नित्यपुंलिङ्गताया विहिततया न प्रकृते क्लीबनिर्देशः सङ्गच्छत इत्यत आह **गवां ज्ञानानामिति** । तथा चाधिकरणसाधनघञन्तस्य बहुव्रीहिभिन्नस्य निपातिततया अतादृशस्य बहुव्रीहिरूपप्रकृतस्य विशेष्यनिघ्नतया क्लीबतोपपद्यत इति भावः । एवं च गोचरशब्दस्य मत्वर्थीयाजन्तताश्रयणेन 'त्रयी न श्रुतिगोचरा' इति प्रयुक्त्या च विशेष्यनिघ्नतोपपादनीया । प्रपञ्चितं चैतच्चन्द्रिकाभावदीपिकावीक्षतिनयेऽस्माभिः ।

---

**सु०— ननु प्रमाणागोचरस्यापि निर्गुणस्य स्वप्रकाशतया सिद्धिर्भविष्यतीत्यत आह यदीति ।**

**अनु०** — यदि तत्स्यादगोचरम् ।
अस्तु तन्मा वदेद्वादी न चासच्छास्त्रगं तु तत् ॥

**एवमपि यदि स्वप्रकाशतया तद्ब्रह्म स्यात् तर्ह्यस्तु । किन्तु समन्वयविषयतया न वक्तव्यम् । यतोऽसच्छास्त्रगं वेदादिविषयो न भवति । तद्विषयत्वे स्वप्रकाशत्वहानिप्रसङ्गात् । प्रकाशान्तरव्यावृत्तिर्हि स्वप्रकाशशब्देनाभिप्रेता मायावादिना । तदिदमेकं सन्धित्सतोऽन्यच्च्यवत इत्यायातम् । यद्ब्रह्मास्तित्वमभिलषितः शास्त्राविषयत्वमापतितम् । वादीति परिहासः । माशब्दोऽयं न माङ् । अतो लिङा सम्बन्धः ।**

वा० — प्रमाणाधीनसिद्धिकत्वात्प्रमेयस्य सर्वप्रमाणाविषयत्वेनासत्त्वे उपपादिते प्रसञ्जकाभावेन तत्प्रसक्तेरेवाभावात् 'यदि तत्स्यात् इति' शङ्का निर्दला । अत एव तदभ्युपगमेन परिहारोऽप्यतीव निर्दल इयतस्तत्प्रसञ्जकं दर्शयन्नुत्तरवाक्यमवतारयति **नन्विति** । अस्ति चेत्कथं न वक्तव्यमित्यतोऽभिप्रायमाह **किन्त्विति** । पराभ्युपेतस्वप्रकाशत्वहानिमेव शास्त्रविषयत्वप्रयोजकतयाऽऽह **तद्विषयत्व इति** । नन्वे-

तावताऽपि प्रतिज्ञातासत्त्वपरित्यागो दोष इत्यतो वैकल्पिकतयैव प्रतिज्ञाततया न दोष इत्याह **तदिदमिति**। 'अमानोनाः प्रतिषेधे' इति गणपठितनिषेधार्थकमाशब्दत्वेनास्य माङ्त्वाभावात्सर्वलकारापवादकलुङो न प्रसक्तिरित्याह **माशब्द इति**।

प० — 'यदि तत्स्यात्' इति पत्त्रयार्थं सोपस्करमाह **एवमपीति**। मा वदेदित्यस्यार्थो न च वक्तव्यमिति। असच्छास्त्रमित्यनुवादः। वेदेत्यादि व्याख्या॥ ननु 'माङि लुङ्' इति पाणिन्युक्तेः; 'मा वादीत्' इति वाच्यमित्यत आह **माशब्दोऽयमिति**। 'अमानोनाः प्रतिषेधे' इति निषेधार्थो माशब्द इत्यर्थः।

या० — ननु मा वदेदिति कथम्। 'माङि लुङ्' इति माङ्योगे मावादीदिति लुङा भाव्यमित्यत आह **माशब्द इति**।

श्री० — ननु माङि लुङिति माङ्योगे लुङो विधानान्मावादीदिति लुङा भाव्यम्। मा वदेदिति विधिलिङ् कथमित्यत आह। **मा शब्दोऽयमिति**। अमानोनाः प्रतिषेध इति सूत्रोक्तः प्रतिषेधार्थकमाशब्दोऽयं न माङ्। अतो लिङुपपत्तिरित्यर्थः।

च० — ननु माङ्समभिव्याहारे 'माङि लुङ्' इति सर्वलकारापवादभूतलुङा भवितव्यतया कथं लङं निरदिक्षदित्यत आह **माशब्द इति**। 'अमानोनाः प्रतिषेध इति वचनादिति भावः॥

---

सु० — आह। स्वप्रकाशस्यापि ब्रह्मणो न शास्त्रविषयत्वं विरुद्धम्। वचनजन्यस्फुरणाश्रयतया तत्कर्मतया वा वचनविषयत्वाभावेन स्वप्रकाशत्वम्। वचनजन्यवृत्तिव्याप्यतया तद्विषयत्वं चेति व्यवस्थोपपत्तेरिति। तदसत्। स्फुरणं हि ज्ञातता वा ज्ञानं वा। नाद्यः। स्वरूपस्यैव निराकरिष्यमाणत्वात्। द्वितीयेऽपि ज्ञानाश्रयतया विषयत्वं न क्वचिदिति कर्मत्वमेवाश्रयणीयम्। ज्ञानकर्मत्वं च ज्ञानविषयताऽतिरिक्तं नास्ति। ततश्च वचनजन्यज्ञानाविषयत्वमुक्तं स्यात्। वृत्तिरिति च ज्ञानं तदतिरिक्तं वोच्यते। न तावत्तदतिरिक्तम्। प्रमाणाभावात् आद्ये तु व्याप्यत्वं न विषयत्वातिरिक्तं निरूपयितुं शक्यमिति वचनजन्यज्ञानविषयत्वमेवोक्तं स्यात्। तथाच व्याघातप्रसङ्गेन नैकमपि सिद्ध्यतीत्याशयवानाह अवाच्यमिति।

अनु० — अवाच्यं वाच्यमित्युक्त्वा किमित्युन्मत्तवन्मृषा॥
असच्छास्त्रस्य चौर्याय यतते स्वोक्तिदूषकः॥

अवाच्यं वचनजन्यज्ञानाविषयः इत्युक्त्वा पुनश्च वाच्यं वचनजन्यज्ञानविषयो भवतीत्युन्मत्तवत्स्वोक्तिदूषको व्याहतभाषी। किमिति मृषा वृथैवासच्छास्त्रस्य वेदस्य चौर्याय

निर्गुणविषयतया योजयितुं यतते । न हि व्याहतभाषिणः किञ्चित्सिद्ध्यति । उन्मत्तवच्चोरवच्चेति ।

वा० — ननु स्पष्टव्याघातप्रसङ्गेनावाच्यं वाच्यमित्युक्तेरसंभावितत्वात्तदुक्तेः प्रकृतोपयोगाभावेन परेणावक्तव्यत्वाच्च तदुक्त्युपजीविदूषणपरोत्तरमूलमनुपपन्नमित्यतः स्वप्रकाशस्यापि शास्त्रविषयत्वोपपादकतया व्यवस्थाविशेषे परेणोपन्यस्ते तत्पर्यवसानगत्याऽवाच्यं वाच्यमिति परोक्तिलाभात्तदुपजीवनेन व्याघातप्रतिपादकमुत्तरवाक्यं नासङ्गतमित्याशयेनाह **आहेति** । 'न च प्रमाणतोऽन्या स्यात् मितिर्नाम कुत्रचित् इति' भक्तिपादे ज्ञाततास्वरूपस्य निरस्यतया तदाश्रयत्वतत्कर्मत्वादिसदसद्भावविचारो दूरोत्सारित इत्याह **स्वरूपस्यैवेति** । घटादिज्ञानाश्रयत्वेन तद्विषयत्वव्यवहाराभावात्तत्कर्मणि च तथा व्यवहारादिति भावः । ज्ञानकर्मत्वं न तावज्ज्ञानजन्यातिशययोगित्वम् । व्यवहारादिरूपातिशयस्य ब्रह्मण्यपि सत्त्वात् । ज्ञातताारूपस्य वा पराभिमतप्रतिबिम्बितचैतन्यादिरूपफलस्य वा तस्याप्रामाणिकत्वेन घटादावप्यसत्त्वात् । एतेन परसमवेतक्रियाफलशालित्वं तदित्यपि निरस्तम् । अतो न विषयत्वातिरिक्तं कर्मत्वमित्याह **ज्ञानकर्मत्वमिति** । घटादिप्रकाशकज्ञानस्यैवानुभवसिद्धत्वेन तस्य चोक्तरीत्या त्वदभिमतफलरूपत्वासंभवेन वृत्तिरूपताया एव वक्तव्यत्वेन न ज्ञानातिरिक्ता वृत्तिरित्याशयेनाह **न तावदिति** । दूषणस्वरूपं तत्फलं च दर्शयति **तथा चेति** । अवाच्यं वाच्यमित्युक्त्वा स्वोक्तिदूषक इत्यनेनावाच्यं वाच्यमित्युक्तेर्वचनान्तरेण व्याघात इति प्रतीयते । तच्चानुपपन्नम् । वचनान्तराभावात् । एतदुक्तेरेव व्याघातस्य वक्तव्यत्वाच्चेत्यतो यथायोग्यमन्वयं दर्शयन्वाक्यं व्याख्याति **अवाच्यमिति** । मदुक्तममदिति स्वोक्तिदूषकत्वाभावात्तदभिप्रायतया व्याहतिं मूलारूढां करोति **स्वोक्तीति** । 'न चासच्छास्त्रगं तु तत्' इत्युक्तसिद्धेर्व्याहत्युक्तिफलत्वं दर्शयितुमसच्छास्त्रस्येत्यादेस्तदभिप्रायमाह **किमितीत्यादिना** । तथा योजयितुंपरकीयवचनस्य सत्यत्वेन मृषात्वासंभवा'द्विरुपा मृषाश्रुः'इतित्यादिवन्मृषाशब्दो वैयर्थ्यार्थक इत्याह **मृषैव वृथैवेति** । उक्तयोर्व्याहतभाषणशास्त्रविषयत्वासिद्ध्योः सामान्यमुखेन हेतुहेतुमद्भावमुपपादयति **न हीति** । चौर्यायेत्युक्त्याऽपि चोरस्योन्मत्तवद्दृष्टान्तत्वमेवाभिमतमित्याशयेनाह **चोरवच्चेति** ।

प० — परकीयचोद्यमनुवदति **आहेति** । इत्याहेति वक्ष्यमाणेतिपदेनान्वयः । वचनविषयत्वं हि त्रेधा । वचनजन्यस्फुरणाश्रयतया वा वचनजन्यस्फुरणकर्मत्वेन वा वचनजन्यवृत्तिव्याप्यतया वा । आद्यद्वयस्याभावेन स्वप्रकाशत्वस्य संभवात् । अन्त्ये शास्त्रविषयत्वसंभवान्न कोपि दोष इत्यर्थः । **निराकरिष्यमाणत्वादिति**। युक्तिपादे 'न परिच्छेदकार्ये च प्रमाणमिति च प्रमा' इत्यत्र 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचित्' इत्यादिना भक्तिपादे च ॥ **ज्ञानाश्रयतयेति** । ज्ञानाश्रयत्वेन हेतुनेत्यर्थः ॥

**व्याघातेति ।** वचनजन्यज्ञानाविषयतया स्वप्रकाशत्वं वचनजन्यज्ञानविषयतया च वचनविषयत्व-मित्यस्य व्याहतत्वेन स्वप्रकाशत्वशास्त्रविषयत्वयोरन्यतरदपि न सिध्यतीत्यर्थः ।

**या॰— निराकरिष्यमाणत्वादिति ।** 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचित्' इत्या-दिना भक्तिपाद इति शेषः । **न क्वचिदिति ।** तथा च घटादेरपि स्वप्रकाशतापत्तिरिति भावः । यतो वा इमानि भूतानि जायन्त इत्यादौ सर्वत्रेत्यन्वयः । सर्वत्रेत्यस्योपक्रमादावित्यर्थः । ततश्चोक्त-शङ्कानिरासो लभ्यत इति ज्ञेयम् ।

**श्री॰— विषयत्वाभावेनेति ।** आश्रयकर्मणोरुभयोरपि विषयत्वेन व्यवहारादिति भावः । **न क्वचिदिति ।** वचनजन्यज्ञानाश्रयत्वाभावेन वचनविषयत्वाभावरूपं स्वप्रकाशत्वं घटादावप्यस्तीत्यति-व्याप्तिरित्यर्थः ॥ **कर्मत्वमिति ।** द्वितीयः पक्ष इत्यर्थः ॥ **नैकमपीति ।** वचनविषयत्वाभावरूपस्वप्रका-शत्व, वचनजन्यवृत्तिव्याप्यत्वेन वचनविषयत्वयोरुभयोर्मध्य इति शेषः ।

**सु॰— स्यादेतत् । श्रुतिसूत्रयोस्तावदेकार्थत्वं युक्तम् । अन्यथा करणेतिकर्तव्यताभावा-नुपपत्तेः । श्रुतयश्चोपक्रमादिवशात् नित्यशुद्धबुद्धाद्वितीयं निर्गुणमेव प्रतिपादयन्त्यो निरव-काशाः प्रतीयन्ते । ततस्तन्मीमांसाऽपि तद्विषयैव । तथा चान्यथाऽनुपपत्तेर्यथाकथञ्चित् श्रुति-सूत्रयोर्निर्गुणविषयत्वमुपपादनीयम् । अन्यथा विषयाभावेनाप्रामाण्यापत्तेरित्यत आह ।** जन्मादीति

**अनु॰—** जन्मादिकारणं यत्तत्साक्षान्नारायणाभिधम् ।
वदन्ति श्रुतयो ब्रह्म शास्त्रं चैतत्तदर्थतः ॥
प्रवृत्तमस्त्ववाच्यं ते मैवं ब्रूयाः कथञ्चन ॥

**न श्रुतिसूत्रयोर्निर्विषयत्वापत्तिभयेनावाच्यस्यापि तद्विषयत्वं कल्प्यम् । सगुणविषयत्वेन सविषयत्वोपपत्तेः । न चोपक्रमादिवैगुण्यम् । 'यतो वा इमानि भूतानि जायन्ते' इत्यादौ साक्षाज्जन्मादिकारणत्वेन, 'नारायणं महाज्ञेय'मिति नारायणादिशब्दोदितगुणवत्तया च सर्वत्र सगुणस्यैव प्रतीतेरिति भावः ।**

**वा॰—** ननूत्तरवाक्ये श्रुत्यादिविषयत्वं वाच्यस्याङ्गीकृत्यावाच्यस्यावक्तव्यत्वमसङ्गतं किमित्यु-च्यते । निर्गुणस्यैव शास्त्रविषयतया मुख्यतः परेण प्रसञ्जिततयाऽवाच्यस्य तथाऽप्रस्तुतत्वात् । श्रुतिसूत्रयोः पृथक्कारे च न किञ्चित्कारणं। जन्मादिकारणं नारायणाभिधमिति विशेषणयोश्च न किञ्चित्प्रयोजनम् । न च सगुणस्य श्रुत्यादिविषयत्वमुपपाद्य तद्बलेन मीमांसाशास्त्रस्यापि तद्विषयत्वमभिप्रेत्य निर्गुणस्य तद्विषयत्वाभावस्योत्तरवाक्ये प्रतिपादनान्न कोऽपि दोष इति वाच्यम् । निर्गुणे श्रुतिशास्त्रविष-

यत्वाभावस्य निपुणतरं प्रतिपादितत्वेन पुनस्तद्विषयकत्वपक्षस्योज्जीवनासम्भवेन तत्र एव सगुणविषयकत्वे बाधकक्लेशस्याभावेन तद्विषयकत्वनिर्गुणविषयकत्वाभावयोरत्राप्रतिपादनीयत्वादुक्तसौत्रतच्छब्दपरामर्शानुपपत्तेरपरिहारे सूत्रस्य तद्विषयत्वशङ्काऽप्रसराच्च । श्रुतेर्निर्गुणविषयत्वे वा कुतः सूत्रस्य तद्विषयकत्वमतोऽनुपपन्नमेवोत्तरवाक्यमित्यतः सगुणस्यै प्रतीत्यभिप्रायकेण विशेषणद्वयेनोपक्रमादिवैगुण्यरूपसगुणविषयकत्वबाधकपरिहारप्रतीतेः । ततश्चोपक्रमादेः श्रुत्यादिनिर्गुणविषयकत्वसाधकतया पराभिप्रायसूचनात्सिद्धान्ते श्रुत्यादिनैकार्थ्यमङ्गीकृत्य सूत्राणां सगुणविषयतां व्युत्पादयता परस्याप्यैकार्थ्याङ्गीकारेणैव सूत्राणां निर्गुणविषयत्वस्याभिमतत्वायाः सूचनादुपक्रमादिबलेनैव चास्मदुक्तानुपपत्तेः कथञ्चित्परिहार्यत्वस्यापि सूचनाद्विषयान्तरसद्भावकथनेन च विषयाभावेनाप्रामाण्यापत्तिरूपबाधकस्यापि सूचनान्मूलनिवर्त्याशङ्का सद्भैवेत्याशयेनाह **स्यादेतदिति** ॥ **श्रुतिसूत्रयोरिति** । अनयोर्निर्गुणविषयत्वोपपादनप्रकारवैलक्षण्येऽपि फलस्यैकविधत्वाभिप्रायेण भावकथनावसरे तस्यैव कथनमेतदिति ज्ञेयम् ।

**या०**—सर्वत्रोपक्रमादौ सगुणस्यैव प्रतीतिः कुत इत्यत उक्तम् **नारायणं महाज्ञेयमित्यादि** । अनेन श्रौतनारायणादिशब्दार्थसमाख्यैव गुणप्रतीतिसाधिकेत्युक्तं भवति । ननु यतो वेत्यादौ सर्वत्र प्रतीतस्य सगुणस्य कथं नारायणशब्दोदितगुणवत्त्वमित्यत उक्तम् **साक्षाज्जन्मादिकारणत्वेनेति** । तथा च नराणामिदं जन्मादि नारं दातृतया तदाश्रयत्वान्नारायण इति व्युत्पत्त्योपक्रमादौ सर्वत्र श्रुता ये गुणास्ते सर्वेऽपि नारायणशब्दोदिता एवेति युक्ता समाख्येति भावः ।

**श्री०**— **अन्यथेति** । निर्गुणविषयत्वानङ्गीकार इत्यर्थः ॥ **विषयेति** । श्रुतेरुपक्रमादिविरोधेन निर्गुणविषयकत्वायोगे मीमांसाया अपि तद्विषयकत्वायोगेनेत्यर्थः ॥ **अप्रामाण्येति** । श्रुतिसूत्रयोरिति वर्तते । मूले 'ऽवाच्यं ते नैव ब्रूया' इत्यत्र तेऽवाच्यमित्यन्वयः । ते त्वदीयं यदवाच्यं ब्रह्म तच्छास्त्रविषयमेव ब्रूया इति योजना । तत्रावाच्यं ते मैव ब्रूया इत्यस्य तात्पर्यमवाच्यस्यापि तद्विषयत्वं न कल्प्यमिति ।

**सु०— सर्वप्रमाणाविषयस्य शास्त्रविषयत्वाङ्गीकारे यो व्याघात उक्तो नासौ सूक्ष्मेक्षिकामाश्रित्य । येन सूक्ष्मेक्षिकायामविद्यमानमपि दूषणं स्फुरतीति शङ्क्येत । यथाऽऽह 'न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः । दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रदृश्यते ॥' इति । किन्तु स्थूलदृष्टिभिरप्ययं व्याघातः सुज्ञान इत्याशयवानाह** सर्वशब्दैरिति ।

**अनु०**— सर्वशब्दैरवाच्यं तदुक्त्वा तद्विषयं पुनः ॥
शास्त्रं वदन्तमुन्मत्तं कथं लोको न वारयेत् ॥

**उन्मत्तं व्याहतभाषिणम्** ।

**वा०**— उत्तरवाक्यस्याव्यवहितैतद्वाक्येन साक्षात्सङ्गत्यदर्शनादवाच्यं वाच्यमिति पूर्ववाक्यपौनरुक्त्याच्चानुपपत्तिरित्यतो लोकपदप्रयोगलब्धतदभिप्रायोक्त्या पौनरुक्त्यं परिहरति **सर्वेति** । नन्वेवंवादिनस्तथा व्यवहाराभावान्नोन्मत्तत्वम् पूर्ववाक्ये तदुपमत्वोक्तिविरोधश्चेत्याशङ्कानिरासाय व्याघातस्य स्थूलदृष्टिविषयताया मूलारूढतालाभाय चोन्मत्तपदं लुप्तोपममभिप्रेत्य व्याख्याति **उन्मत्तमिति** ।

**सु०**— **निर्गुणे ब्रह्मणि समन्वयनिराकरणमुपसंहरति** मा वद इति ।

**अनु०**— मा वदो मा विजानीहि त्यजासच्छास्त्रचोरताम् ॥

**यतो वक्तुं ज्ञातुं च न शक्यं तस्माच्छास्त्रस्य तद्विषयत्वाग्रहोऽपि त्याज्य इति भावः** ॥ मा वद इति । **स्मशब्दोऽत्राध्याहार्यः । तेन च लङुपपत्तिः** । मा विजानीहीति **माशब्दोऽयम्** । **अतो निर्गुणे समन्वयस्याप्रतिज्ञातत्वाद्वचनवृत्त्यैव समन्वयोऽयमिति ताच्यत्वसमर्थनमेव प्रथमसङ्गतं न साङ्ख्यनिराकरणमिति सिद्धम्** ।

**वा०**— उत्तरवाक्ये उपसंहारज्ञापकाभावेन शास्त्रस्य निर्गुणविषयत्वाभावस्योक्तस्यैवोक्तिरिति प्रतीतेस्तस्मादित्यध्याहारेण निर्गुणविषयकत्वाभावरूपावान्तरप्रमेयनिरासोपसंहारत्वं तस्येत्याह **निर्गुण इति** । मा वद इत्यादेरर्थं वदन् तस्य त्यजेत्याद्यभिप्रेतार्थहेतुत्वं तस्मादित्यध्याहारेणाह **यत इति** । माङ्योगे सर्वलकारापवादत्वाल्लुङोऽत्र लङनुपपत्तिः । माशब्दत्वे च लङर्थातीतत्वस्यात्रान्वयानुपपत्तिरित्यत आह **मा वद इतीति** । मा विजानीहीत्यत्रार्थानुपपत्तेरभावान्माशब्दमङ्गीकृत्य लोटमुपपादयति **मा विजानीहीति** । समन्वये प्रतिज्ञात इत्युक्तसङ्गतिरूपपरमप्रमेयनिरासोपसंहाराभावाच्चदुपसंहारानुक्तिप्रयुक्तन्यूनतापरिहारायासङ्गतिरूपपरमप्रमेयोपसंहारस्यैतद्वाक्याभिप्रेततामभिप्रेत्याह **अत इति** ।

**स०**—ननु मा वद इति कथं । माङ्योगे लुङा भाव्यमित्यत आह **मा वद इति स्मशब्द इति** । तथाच स्मोत्तरे लङित्युक्तत्वेन लङुपपत्तिरिति भावः ॥ **मा शब्दोऽयमिति** । अत्रापि मावद इत्यत्रेव शङ्का द्रष्टव्या ।

**प०**— 'मा वदो मा विजानीहि' इत्यनयोस्तात्पर्यमाह **वक्तुं ज्ञातुं च न शक्यमिति** । तेन लुङुपपत्तिरिति । 'स्मोत्तरे लङ्च' इतिसूत्रेण स्मोत्तरमाङ्योगे लङो विधानादिति भावः । 'ननु माङि लुङ्' इति लुङा भाव्यमित्यत आह **माशब्दोऽयमिति** ।

**या०**— ननु मा वद इति कथम् । न च पूर्ववन्माशब्दोऽयमित्युपपत्तिः । लङर्थस्यातीतस्य प्रकृतेऽनन्वयादतो माङ्योगे सर्वलकारापवादकेन लुङा भाव्यमित्यत आह **मा वद इति** ॥ **स्मशब्द इति** । तथा च स्मोत्तरे लङ्चेत्युक्तत्वेन लङुपपत्तिः । तस्यापि सर्वलकारापवादकत्वमस्तीति तदर्थस्य प्रकृतेऽन्वयोऽपि सम्भवति । यतस्त्वं न वदसि न जानासीति लङर्थतया व्याख्यानादिति

भावः । अत एव तत्तात्पर्यमुक्तम् यतो वक्तुं ज्ञातुं च न शक्यमिति । माशब्दोऽयमित्यस्यापि मा वद इत्यत्रेव शङ्का द्रष्टव्या ।

श्री०—ननु माङि लुङिति माङ्योगे लुङो विधानान्मावादीदिति लुङा भाव्यम् । मावद इति कथं लङ्प्रयोगो मा वद इत्यवादीत्यत आह । **मावद इति स्म शब्द इति** । मावद इत्यनन्तरं स्मशब्दोऽध्याहार्य इत्यर्थः । तथा च स्मोत्तरे लङ्चेति सूत्रेण माङ्योगेपि स्मशब्दस्योत्तरत्र सद्भावे लङ्विधानाददोष इति भावः । यद्यप्यत्र माशब्दोऽयं न माङिति पूर्वोक्तमेव समाधानं शक्यते वक्तुं । तथाऽपि सति तस्मिन्निदं समाधानान्तरमित्यवगन्तव्यम् ॥ ननु माङ्योगे लुङो विधानात् मा विजानीहीति कथं लोट्प्रयोग इत्यत आह । **मा विजानीहीति माशब्दोऽयमिति** । न माङित्यर्थः ।

**सु०— ननु यथा सूत्राविवक्षितं साङ्ख्यनिराकरणं कुर्वतो मम दोषः तथा मन्निराकरणं कुर्वतो भवतोऽपि कथं न दोषः स्यात् । न हीदं कस्यचित्सूत्रस्यार्थतयोच्यत इत्यत आह वयमिति ।**

अनु०— वयं त्वां श्रुतियुक्तिभ्यां बद्ध्वाऽसच्छास्त्रमञ्जसा ॥
विचारयामः श्रुतिभिर्युक्तिभिश्चैव सादरम् ॥

---

**त्वामपव्याख्यातारं श्रुतियुक्तिभ्यां बद्ध्वा निराकृत्यास्मच्छास्त्रं वेदं सूत्रसूचिताभिः श्रुतिभिर्युक्तिभिश्चाञ्जसा नैरन्तर्येण सादरं च शिष्यैर्विचारयाम इति । अनेनेदमुदितं भवति । यावदापातरमणीयं परेषां व्याख्यानं शिष्याः पश्येयुः, न तावदस्मदुक्ते सूत्राणां निजार्थेऽप्यञ्जसाऽऽदरं कुर्युः । किमसौ सूत्रार्थः किं वाऽयमिति सन्देहावस्कन्दनात् । निराकृते त्वपव्याख्याने नैरन्तर्यादराभ्यामस्मदुक्तमेव (सूत्रा)अर्थमुपादाय शास्त्रार्थमीमांसायां निर्विचिकित्साः प्रवर्तेरन् । अतो मा(न.म) भूदयं सूत्रार्थस्तथाऽपि सूत्रार्थग्रहणोपायत्वाद्व्याकरणादावुदाहरणप्रत्युदाहरणप्रदर्शनादिवन्न कश्चन दोषमावहति । किं नाम गुणहेतुरेव भवतीति ॥**

वा —ननूपसंहारेण पूर्वप्रमेयस्य समापितत्वेन विशेषव्युत्पादनानपेक्षणात् 'वयंत्वाम्' इत्युत्तरवाक्यं व्यर्थम् । न चैयताग्रन्थेन कृतस्य मायावादिनिरासस्याप्रयोजकताशङ्कानिरासाय तदिति वाच्यम् । प्रसञ्जकाभावेन तच्छङ्काऽनुत्थानादित्यतः साङ्ख्यमतनिरासं कुर्वतो ममासङ्गत्यादिना निराकरणमेव मम निरासं कुर्वतस्तवाप्यसङ्गत्यादिना निरासस्य प्रसञ्जकम् । सूत्रविवक्षितत्वाविशेषात् । इयांस्तु विशेषः । यन्मया सूत्रार्थतया तन्निरासस्य व्याख्यातत्वात्सूत्रानानुगुण्यं ममाधिकम् । त्वया तु सूत्रार्थतया मन्निरा-

साव्याख्यानात्तव तदनानुगुण्याभावः । सूत्राविवक्षितार्थप्रतिपादकं तूभयोरविशेषमेव । एवञ्च न मां प्रत्येव पर्यनुयोगो युक्त इत्याशङ्कानिरासायोत्तरमूलस्य प्रवृत्तत्वान्न तद्वैयर्थ्यमित्याशयेन तन्मूलमवतारयति **नन्विति** । सूत्राविवक्षितत्वस्यासिद्धिशङ्कान्निरासायाह **न हीति** । अत्र सूत्राणामनेकत्वात्क्वचिदित्युक्तम् । अपव्याख्याननिरासरूपत्वादसत्कृतत्वन्निरासस्य त्वत्कृतातादृशसाङ्ख्यनिरासाद्वैलक्षण्यमित्याशयस्य मूल लाभाय त्वामिति व्याख्याति **त्व मि ते** । श्रुतियुक्त्यो रज्ज्वादिवद्बन्धनासाधनत्वाद्बन्धनोक्तेरनुपयोगाच्चाह **बद्ध्वेति** । मीमांसारूपासच्छास्त्रस्य स्वोत्प्रेक्षितश्रुतियुक्त्यादिना यो विचारस्तस्य सूत्रेण क्रियमाणविचाररूपत्वाभावेन सूत्रेण क्रियमाणविचारप्रतिपादनस्यैव सूत्रव्याख्यानरूपत्वेन मीमांसाविषयकविचारस्य सूत्रव्याख्यानरूपत्वाभावात्त्वव्याख्यार्थतामुपादाय शास्त्रार्थमीमांसायां निर्विचिकित्सा शिष्यप्रवृत्त्यर्थकता नोक्ता स्यादिति तल्लाभायोक्तं वेदमिति सूत्रसूचिताभिरिति च । अपव्याख्याननिरासस्य सूत्रव्याख्यातॄनस्मान् प्रति सादरविचारसाधनत्वभ्रान्तिनिरासायाह **शिष्यैरिति** । ननु मद्व्याख्याननिरासस्य कथं त्वद्व्याख्याने सादरशिष्यप्रवृत्त्यर्थता । अस्तु वा सा तथाऽपि सूत्राविवक्षितार्थप्रतिपादनरूपत्वान्मन्निरासस्य दोषहेतुत्वोक्तेः कः परिहार इत्यत आह **अनेनेदमुदितं भवतीति** । निर्दोषेऽप्यर्थ इति विरोधिशङ्कायां सत्यां स्वरूपेण निर्दोषत्वस्यादराप्रयोजकतां सूचयति **व्याकरणादाविति** । पूर्वमीमांसाभाष्यादेरादिपदेनोपादानम् । प्रदर्शनादिवदित्यादिपदेन सूत्रार्थग्रहणोपयुक्तलौकिकन्यायादेस्तद्भाष्यादौ व्युत्पादितस्य ग्रहणम् ।

**सु० — ननु यदि वाच्यमेव ब्रह्म कोऽर्थस्तर्ह्यवाच्यत्वाद्यभिधात्रीणां श्रुतिस्मृतीनामित्यतः श्रुत्यन्तरेणैव तदर्थमाह** अद्भुतत्वादिति ।

**अनु० — अद्भुतत्वादवाच्यं तदतर्क्यज्ञेयमेव च ॥**
**अनन्तगुणपूर्णत्वादित्यूदे पैङ्गिनां श्रुतिः ॥**

**आश्चर्यतमत्वात् । कथमाश्चर्यतमत्वम् । अनन्तगुणपूर्णत्वात् । दुर्लभं ह्याश्चर्यं भवति । न ह्यनन्तगुणपूर्णं सुलभम् । भासनोपसंभाषेत्यात्मनेपदम् । वाच्यत्वस्योपपादितत्वात् । अर्थकथनमात्रेणैवालम् । श्रुत्युदाहरणं तु दाढर्यार्थमित्यवगन्तव्यम् ।**

**वा० —** नन्वियता प्रबन्धेनावाच्यत्वनिरासादद्भुतत्वेनावाच्यत्वप्रतिपादनपरश्रुत्युदाहरणं प्रकृतविरुद्धमित्यत उत्तरवाक्यतात्पर्यं वक्तुं शङ्कामुत्थापयति **नन्विति** । अद्भुतशब्दस्यादिभूभ्यां द्रुतजित्यद्भवतीति वाऽद्भूयत इति वाऽद्भुतमिति कर्तरि कर्मणि वा द्रुतच्प्रत्ययान्तत्वेऽप्यौणादिकानां रूढिमाश्रित्य प्रवृत्तिनियमात् । आश्चर्यं तद्रूढिमाश्रित्याह **आश्चर्यतमत्वादिति** । बहुगुणस्यैव दुर्लभत्वादाश्चर्यत्वेऽप्यनन्तगुणपूर्णत्वादित्यद्भुतत्वप्रयोजकेऽतिशयोक्त्या प्रयोज्ये आश्चर्यत्वेऽप्यतिशयो भाष्येऽभिमतः ।

आश्चर्यस्यैवावाच्यत्वेन व्यवहारात् । अत एव 'अवाच्यमिति लोकोऽपि वक्त्याश्चर्यतमं भुवि' इति वक्ष्यतीत्याशयेन तमबन्ततया व्याख्यातम् । अनन्तगुणपूर्णत्वस्य हेत्वन्तरत्वे चशब्दाभावादप्रयोजकत्वापाताच्च हेतुसाधकतया तदवतारयति **कथमिति** । तस्य हेतुत्वं घटयति **दुर्लभं हीति** । वदतेः 'शेषात्कर्तरि परस्मैपदम्' इति परस्मैपदित्वादात्मनेपदानुपपत्तिरित्यत आह **भासनेति** । उपसान्त्वनरूपोपसंभाषाया उपच्छन्दनरूपोपमन्त्रणस्य च धातुविशेषणत्वम् । भासनादीनां च धात्वर्थविशेषणत्वम् । तत्र चोपसंभाषायत्नविमत्युपमन्त्रणानां प्रकृतेऽसंभवाद्भासनज्ञानयोर्धात्वर्थविशेषणत्वम् । तथा च वदते चार्वीलोकायत इत्यत्र शिष्यैः स्फुटमनो भासते । तथा चोपर्युपरि शास्त्रार्थप्रतिभासात्सुष्ठु सूत्रपदार्थान्वक्ति । तेजोभङ्गे तु न शक्नुयाद्वदितुमिति भासनस्य धात्वर्थभूतवदनं प्रति हेतुतया विशेषणत्ववत्तत्र तत्रैवोदाहरणे वदितुं जानातीति ज्ञानस्य विषयित्वेन धात्वर्थभूतवदनविशेषणत्ववद्वा स्पष्टतया भासमाना श्रुतिरिममर्थं सुष्ठु वदतीति वा स्पष्टत्वादियं श्रुतिरिममर्थं वदितुं जानातीति वा धात्वर्थविशेषणत्वेन भासनादेर्विवक्षितत्वादात्मनेपदमित्यर्थः । अर्थकथनमात्रस्याप्रयोजकत्वादर्थकथनपरश्रुत्युदाहरणं भाष्य इति भ्रान्तिं निरस्यति **वाच्यत्वस्येति** ।

**स०**—ननु वदतेः परस्मैपदित्वात्कथं ऊद इत्यात्मनेपदप्रयोग इत्यत आह **भासनोपसंभाषेति** । अयं च भासनार्थकः । तथाच पैंगिनां श्रुतिरित्यर्थमूदे प्रकटीचकारेत्यर्थः ॥

**प०**— 'वदव्यक्तायां वाचि' इत्यस्य परस्मैपदित्वादित्युवादेति प्रयोक्तव्ये कथमित्यूद इत्यात्मनेपदप्रयोग इत्यत आह **भासनेति** । भासनं दीप्तिः । उपसंभाषा सांत्वनम् । तथा चोद उक्तशङ्काकर्तारं पारेसांत्वयतीत्यर्थः । **यद्वा भासनोपसंभाषेति** । 'भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वद' इति सूत्रेणार्थविशेषेषु आत्मनेपदविधानादिह भासनारूपार्थे आत्मनेपदम् । स्पष्टमुवाचेत्यर्थ इति भावः ।

**या०**— ननु वदतेः शेषात्कर्तरीति परस्मैपदित्वात्कथमूदे इत्यात्मनेपदप्रयोग इत्यत आह **भासनेति** । 'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वद' इति सूत्रस्यायमर्थः । भासनं दीप्तिः । उपसम्भाषोपसान्त्वनम् । उपमन्त्रणमुपच्छन्दनं प्रार्थनमिति यावत् । एषु विशेषणेषु सत्सु वदतेरात्मनेपदं भवतीति । अत्र भासनोपमन्त्रणे धातोर्वाच्ये । इतरे प्रयोगोपाधयः । शास्त्रे वदते भासमानो ब्रवीतीत्यर्थः । भृत्यानुपवदते सान्त्वयतीत्यर्थः । ज्ञाने शास्त्रे वदते । यत्ने क्षेत्रे वदते । विमतौ क्षेत्रे विवदन्ते । उपमन्त्रणे भार्यामुपवदत इत्यादिकमुदाहरणं द्रष्टव्यम् । प्रकृते चायं वदतिर्भासनार्थ उपसम्भाषार्थश्चाविवक्षितः । ततश्चकरणे कर्तृत्वोपचारात्पैङ्गिकानां श्रुतिर्भासमाना ब्रवीति । उक्तशङ्काकर्तारं सान्त्वयतीति चार्थः सम्पद्यत इति ध्येयम् ॥ १-१-५ ॥ इति श्रीमन्न्यायसुधायामधिकरणपञ्चकं समाप्तम् ॥ छ ॥

श्री० — नन्विममर्थं श्रुत्यनुदाहरणे परः कथमङ्गीकरिष्यतीत्यत उक्तम् **वाच्यत्वस्येति** । **अर्थकथनमात्रेणैवेति** । अवाच्यत्वप्रतिपादनपरश्रुत्यादीनामद्भुतत्वादिरूपार्थकथनमात्रेणैवालम् । अद्भुतवादवाच्यं तदित्यादि पैङ्गिश्रुत्युदाहरणं किमर्थं कृतमित्यर्थः ।

च० — अथ वदतेरात्मनेपदनिमित्तभूतङित्वानुदात्तत्वस्वरितेत्वञित्वविनिर्मुक्ततया 'शेषात् कर्तरि' इति परस्मैपदितैव न्याय्येति कथमात्मनेपदिनिर्देश इत्यत आह **भासनेति** । भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वद इत्यस्यार्थः । उपसंभाषोपमन्त्रणे धातोर्वाच्ये । इतरे प्रयोगोपाधयः ॥ अस्य उदाहरणानि । शास्त्रे वदते भासमानो ब्रवीतीत्यर्थः । भृत्यानुपवदते । सान्त्वयतीत्यर्थः । ज्ञाने शास्त्रे वदते । तत्वं जानातीत्यर्थः । यत्ने क्षेत्रे वदते प्रयतत इत्यर्थः । विमतौ विप्रा वदन्ते विवदन्तीत्यर्थः । भार्यामुपवदते प्रार्थयत इत्यर्थः । प्रकृते च वदतेर्भासनार्थतयोपसंभाषार्थतया वा करणे कर्तृत्वोपचारेण श्रुतिर्भासमाना ब्रवीति दर्शितदिशा शङ्कमानान्सान्त्वयतीति वार्थः सङ्गच्छत इति मन्तव्यम् ।

**सु० — आश्चर्यं हि वस्तु वाच्यमपि न तेन तेनाकारेण विशेषतो निर्देष्टुं शक्यते । व्युत्पत्त्यभावात् । वाङ्मनसयोर्व्याकुलत्वाद्वेत्यतोऽवाच्यमित्युच्यते । मुख्यातिक्रमेणामुख्यप्रयोगे किं प्रयोजनमिति चेत् । स्यादयं प्रयोजनानुयोगो यद्ययं स्वतन्त्रप्रयोगः स्यात् । नैतदस्ति । रूढत्वात् यथोक्तम्, 'रूढोपचारो रूढलक्षणोपचारो लक्षणा' इति । अन्योऽप्याह 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्' इति । तदिदमाह** अवाच्यमिति ।

**अनु० —** अवाच्यमिति लोकोऽपि वक्त्याश्चर्यतमं भुवि ॥

इत्यनुव्याख्यायामधिकरणपञ्चकं समाप्तम् ॥ छ ॥ ५ ॥

वा० — अवाच्यमित्युत्तरवाक्ये रूढप्रयोगत्वात्प्रयोजनानपेक्षाप्रतिपादनेनावाच्यशब्दे गौणी वृत्तिराश्रितेति प्रतीतेरवाच्यादिशब्दाच्छब्दमर्यादया तदप्रतीतेश्च द्रुतत्वादिति नावाच्यपदप्रवृत्तिनिमित्तकथनं नापि गुणकथनम् । शौर्यादेः सिंहनिष्ठत्ववदवाच्यपदमुख्यार्थेऽद्भुतत्वस्याभावात् । अतो गुणप्रयोजककथनमेतदित्याशयेन तस्य गुणलाभार्थतां व्युत्पादयति **आश्चर्यं हीति** ॥ **अवाच्यमिति** । समासेन वा यतो वाचो निवर्तन्त इति वा वाक्येन स्वावयवपदशक्यसंसर्गविशिष्टे सर्वथा वाच्यत्वाभाववति मुख्यार्थे वस्तुनि वाचकपदाभावेन निर्देष्टुमशक्यत्वं तावद्वर्तते । स च निर्देष्टुमशक्यत्वरूपो गुण आश्चर्ये वस्तुन्यपि तेन तेनाकारेण विशेषतो निर्देष्टुमशक्ये वर्तते । न च तत्तदाकारविशेषवाचकशब्दाभावे सोऽप्यवाच्यपदादिमुख्यार्थ एव । तद्भावे वा कथं तेन निर्देष्टुमशक्यत्वमिति वाच्यम् । वाचकशब्द-

सद्भावेऽपि व्युत्पत्त्यभावेन वा वाङ्मनसयोर्व्याकुलत्वाद्वा तेन निर्देष्टुमशक्यत्वोपपत्तेः । तथा च तेन गुणेन निमित्तेनाश्चर्येऽवाच्यमिति प्रयोगोपपत्तिरिति भावः । नन्वेवं यदि गौणी वृत्तिरभिमता तर्हि रूढिप्रयोजकप्रयोगप्रदर्शकोत्तरवाक्यविरोध इत्यतस्तद्गौणत्वोपपादकतया तदवतारयति **मुख्येति** । ननु गौण्या अमुख्यवृत्तित्वात्कथं तत्र रूढ्याश्रयणमित्यतोऽमुख्यवृत्तावपि रूढारूढभेदं सिद्धान्तसंमत्या काव्यप्रकाशसंमत्या च दर्शयति **यथोक्तमित्यादिना** । मुख्यवृत्ताविवामुख्यवृत्तावपि बहुलप्रयोगभावाभावाभ्यां रूढारूढभेदाश्रयणे बाधकाभावादिति भावः । यथा चैतत्तथाऽऽकर एव स्फुटं वक्ष्यति ॥ **१-१-५** ॥

मन्वशास्त्रार्थजलधावामग्नो जगृहे रसम् ॥ तद्दृष्ट्याऽतोषयत्प्राज्ञान्गुरुमेघं तामश्रये ॥ १ ॥
मया विरचिता न्यायसुधावाक्यार्थचन्द्रिका ॥ अनया भावि यत्पुण्यं तदाप्नोतु गुरुर्मम ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्व्यासतीर्थपूज्यपादानां शिष्येण विद्याधीशयतिना विरचितायां श्रीमन्न्यायसुधाविवृतौ वाक्यार्थचन्द्रिकायामधिकरणपञ्चकं समाप्तम् ॥ श्रीकृष्णार्पणमस्तु ॥

**प०**— अमुख्यवृत्तौ रूढारूढभेदेन द्वैविध्यं कुत्रोक्तमित्यत आह **यथोक्तमिति** । न्यायविवरणे ॥ **अन्योपीति** । काव्यप्रकाशिकाकार इत्यर्थः ।

**च०**— **वाङ्मनसयोरिति** । 'अचतुरविचतुर' इत्यादिना अजन्ततया निपातितत्वात्साधुताऽवसेया ।

**सु**—नन्वेतच्छ्रुतिव्याख्यानं सूत्रव्याख्यानानन्तरमेव कर्तव्यम् । तत्रैव पूर्वपक्षश्रुतेः शङ्कितत्वात् । अत्र व्याख्यानं तु न सङ्गतमिति ॥ मैवम् सूत्रपूर्वपक्षिणेवाऽपव्याख्यात्राऽपि लक्षणया ब्रह्मणि समन्वयं समर्थयमानेनैतच्छ्रुतिस्मृत्युपादानस्य कर्तुमुचितत्वात् । तथा चोभौ प्रति सूत्रव्याख्याऽपव्याख्याप्रत्याख्यानयोरवसाने श्रुत्यादिव्याख्यानं युक्तमेवेति ॥

**श्री०**— **सूत्रव्याख्यानानन्तरमेवेति** । न त्वपव्याख्याननिराकरणानन्तरमित्यर्थः । अपव्याख्यानकर्त्रा स्वोक्तप्रमेये अशब्दमित्यादिश्रुतेरनुपात्तत्वादीति भावः ॥ **तत्रैवेति** । समन्वयसूत्रे संशब्देन ब्रह्मणो वाच्यत्वोक्तौ सूत्रपूर्वपक्षिणाऽशब्दमित्यादिश्रुत्यवष्टम्भेनावाच्यत्वे पूर्वपक्षिते ईक्षतेरित्यादिसूत्राण्यवाच्यतानिराकरणेन वाच्यत्वसमर्थनपरतया व्याख्याय तदनन्तरमेव पूर्वपक्ष्याशङ्कितश्रुतिव्याख्यानं कर्तव्यमित्यर्थः ॥ **कर्तुमिति** । लक्षणया समन्वये प्रमाणत्वेनैतच्छ्रुत्युदाहरणस्य कर्तुं शक्यत्वादित्यर्थः ॥ छ ॥ **१-१-५** ॥ ॥ **छ** ॥ **इत्यधिकरणपञ्चकं समाप्तम्** । **छ** ॥

सु० — तदेवं ब्रह्मणो वाच्यत्वाद्गतिसामान्याच्च युक्तं समन्वयसूत्रमिति सिद्धम् ॥

इति सुधायामधिकरणपञ्चकं समाप्तम् ॥ १-१-५ ॥ छ ॥

प० — पूर्वसूत्रसंशब्दार्थद्वयाक्षेपसमाध्यर्थमिदमित्युक्तमेतदधिकरणोपक्रमे । तत्समाधिप्रकारं व्यञ्जयन्नुपसंहरति तदेवमिति । गतीति । सर्वशास्त्रोत्पाद्यज्ञानस्यैकरूपत्वादित्यर्थः । एतच्च तृतीयतृतीये विवरिष्याम इति भावः ।

च० — अधिकरणार्थं निगमयति तदेवमित्यादिना सिद्धमित्यन्तेन ॥

सौधपञ्चाधिकरणीदुर्वेदतमफक्किकाः । काश्चिदार्तीर्थपत्कृष्णो गुरुपादाब्जसंस्मृतेः ॥

इति श्रीमत्सदवाक्यप्रमाणपारावारपारीणश्रीसत्यप्रियतीर्थपूज्यपादतनूजसर्वतन्त्रस्वतन्त्रश्रीनिवासार्यान्तेवासन्तेगणगणितेन कृष्णशर्मणा विरचिता सौधचषकनाम्नी ईक्षतिनयव्याख्या समाप्तेव ॥

सु०— ॥ ॐ । आनन्दमयोऽभ्यासात् । ॐ ॥ अथातो ब्रह्मजिज्ञासेति यस्य ब्रह्मणो जिज्ञासा विहिता तत्स्वरूपं जन्माद्यस्य यतः शास्त्रयोनित्वादिति लक्षणप्रमाणाभ्यां स्वेतरसमस्तवस्तुव्यावृत्ततयाऽवधारितम् । प्रमाणस्यान्यपरत्वशङ्कया लक्षणस्यातिव्याप्तिः समन्वयसूत्रेण परिहृता । ब्रह्मणश्च सकलशास्त्रप्रमाणकत्वासम्भावनाशङ्केक्षत्यधिकरणे निराकृता । न हि लक्षणप्रमाणनिरूपणव्यतिरेकेण वस्तुविचारणं नामास्ति । सम्भावना तु न तत्तदवधारणार्था । अप्रमाणत्वात् । किन्तु यत्रासम्भावनया समीचीनयोरपि लक्षणप्रमाणयोरतथाभावशङ्कया प्रवृत्तिसङ्कोचस्तत्रैव सम्भावनोपयोगः । वस्तुतस्तु लक्षणप्रमाणाभ्यामेव वस्तुव्यवस्थेत्यतो ब्रह्मस्वरूपनिरूपणेऽवशेषाभावात्किमानन्दमयोऽभ्यासादित्यादिनाऽध्यायेनेत्याशङ्क्याध्यायशेषस्य कृत्यमाह एवमिति ।

अनु०— ॥ ॐ आनन्दमयोऽभ्यासात् ॐ ॥

एवं शास्त्रावगम्यत्वे विभागेन समन्वयम् ॥
आनन्दमय इत्यादिनाऽध्यायेन वदत्यजः ॥

ब्र.सू.— ॥ ॐ । आनन्दमयोऽभ्यासात् । ॐ ॥

---

सत्यम् । न ब्रह्मस्वरूपनिरूपणे किमप्यवशिष्टम् । तथाऽपि तत्तु समन्वयादित्युपक्रमादितात्पर्यलिङ्गबलात्सकलस्यापि शास्त्रस्य यो ब्रह्मणि परममुख्यया वृत्त्या प्रतिपाद्यप्रतिपादकत्वलक्षणसमन्वयोऽभिहितस्तमेव समन्वयं विभागेन प्रपञ्चेनानन्दमय इत्यादिनाऽध्यायेन वदति सूत्रकार इति न वैयर्थ्यम् । तत्तु समन्वयादिति हि प्रतिज्ञामात्रेणोक्तम् । तद्यावदुदाहरणत्वेन वाक्यविशेषानुपादाय विमर्शपूर्वकं पूर्वोत्तरपक्षोपालम्भसाधनाभ्यां न प्रपञ्च्यते तावदनुक्तप्रायमकार्यकारित्वात् । अन्यथा परोऽपि ह्यन्यदेव समन्वयादित्युक्त्वा कृती स्यात् । यदि हि प्रत्ययमनुत्पाद्यैकोऽयं भूमध्यप्रदेश इति ब्रूयात् । तदा परोऽपि किं न ब्रूयात्परस्ताद्वितस्तेरिति । तस्मादावश्यकं समन्वयप्रपञ्चनम् । तदनेन समन्वयसूत्रेणाध्यायशेषस्य प्रपञ्च्यप्रपञ्चकभावेन सङ्गतिर्दर्शिता । एवं तर्हि तदानन्तर्यमेव स्यात्कुतो व्यवधानमित्यत उक्तमेवमिति । एवमीक्षत्यधिकरणव्युत्पादितन्यायेन ब्रह्मणः शास्त्रावगम्यत्वे मुख्यया वृत्त्या सकलशास्त्रप्रतिपाद्यत्वे सम्भाविते सतीति ॥ एतदुक्तं भवति । सत्यं प्रपञ्चनमनन्तरप्राप्तम् तथाऽप्यवाच्यत्वाद्याशङ्कानिरासेन शास्त्रावगम्यत्वसम्भावनासमर्थनेन व्यवधीयते । सति हि तस्मिन्न(केत)स्यावसरः । शब्दलेशसञ्चारासम्भवे वाक्यतात्पर्यविचारस्यानवकाशत्वात् । न हि तोयाभ्यवहारासमर्थस्य

मुमूर्षोः शष्कुलीभक्षणं सचेतनः सम्भावयतीति ॥ 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञाऽनुशासनादत्र न यतिभङ्गश्शङ्कनीयः ।

## ( शेषवाक्यार्थचन्द्रिका )

सकलसुगुणपात्रं सर्वदोषैकजैत्रं सुमतिसुगतिदात्रं सुष्ठुमज्ज्ञाननेत्रम् ॥
निखिलजनिजनित्रं नित्यदुष्टैकवेत्रं नवनवसुचरित्रं नौमि लक्ष्मीकलत्रम् ॥ १ ॥
शुभगुणगणगात्रं शुद्धविज्ञाननेत्रं श्रुतिविततचरित्रं श्रान्ततापातपत्रम् ॥
श्रमजलधिवहित्रं शान्तिमन्तःपवित्रं श्रयत विबुधमित्रं शक्तियोगीन्द्रपौत्रम् ॥ २ ॥
विद्याख्यरत्नप्रभवाय बुद्धौ विद्योतमानाय सुनन्दिताय ॥
शुद्धाय नित्यं मुनिसेविताय मध्वाद्भुताम्भोनिधये नमोऽस्तु ॥ ३ ॥
श्रीमद्व्याससुशास्त्रशुद्धजलधिं मध्वोक्तसत्तर्कदुस्तर्काख्यामरदानवाभृतमतिश्रेष्ठाहिहृद्भृता ॥
आलोड्याखिलतत्त्वभासकमहारत्नानि चाप्तोऽसुधां सोऽयं योगिमहेन्द्रसन्निभजयार्याख्यो भवेन्मे मुदे ॥४॥
रघूत्तमाख्यममलमलौकिककलानिधिम् ॥ सेवे प्रकाशिता येन सम्यक् तत्त्वप्रकाशिका ॥ ५ ॥
परवादीभवाक्कुम्भभेदपञ्चाननोपमम् ॥ विष्णुपादगुहासक्तं वेदव्यासमुनिं भजे ॥ ६ ॥
भक्तिज्ञप्तिविरक्त्यादिगुणसन्ततिसङ्गतिः ॥ विद्यापतियतीन्द्रार्यो हृद्यविद्याप्रदोऽस्तु मे ॥ ७ ॥
वेदव्यासनतापगापतिवरं श्रीमज्जयप्रोक्तसत्सर्पार्वेष्टितमध्वसन्मुनिवरग्रन्थागवर्येण यः ॥
संलोड्याखिलसन्नयामृतवरं तत्त्वादिसद्दीपिकां सत्तात्पर्यसुचन्द्रिकां तरुवरं यस्तर्कसत्ताण्डवम् ॥८॥
निष्कास्याद्भुतखण्डनत्रयमुखव्याख्यानरत्नोच्चयं दृष्ट्वा कुत्सितयुक्त्यरातिपिहितां श्रीव्यासतीर्थो बुधः॥
स्वोक्तिं रक्षितुमत्र यः प्रतिपदं सम्यग्विशेषार्पको विद्याधीशयतीन्द्रसद्गुरुवरः किं नावतीर्णः स हि ॥ ९ ॥
यद्धस्ताम्बुजसङ्गतोऽहमभवं देव्याः कटाक्षाश्रयो यद्व्याख्यानदिवाकरेण विदुषामन्तस्तमः संहृतम् ॥
येप्रीता भुवि चन्दनद्रुम इव स्वीयं स्ववत्कुर्वते तान्व्याख्यानिरतान्भजे परगुरूनानन्दभट्टारकान् ॥१०॥
यः श्रीनिवासमृगराट् सकलान्मदान्धमायाविसिन्धुरसुकुम्भगिरीन्विदार्य ।
सत्तर्कतीक्ष्णनखैर्विरराज मध्वसिद्धान्तचारुविपिने तमलं भजेऽहम् ॥ ११ ॥
श्रीमत्सुधाद्भुताम्भोधिविक्रीडनविचक्षणान् ॥ श्रीमद्विद्याधीशतीर्थमुनीन्वन्दे गुरून्मम ॥ १२ ॥
अथ तत्कृपयैवाहं तत्सुशिक्षितमार्गतः ॥ तेषामाज्ञां पुरस्कृत्य तत्प्रसादानुरञ्जितः ॥ १३ ॥
शिक्षितान्युक्तिनिचयान्स्मारं स्मारं यथामति ॥ करोमि सौधगूढार्थशेषवाक्यार्थचन्द्रिकाम् ॥१४॥
यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥ अस्त्वेषा भक्तिकृता श्रीविद्याधीशपादयोः सेवा ॥१५॥

॥ ॐ **आनन्दमयोऽभ्यासात् ॐ** ॥ ननु 'एवं शास्त्रावगम्यत्वे विभागेन समन्वयम्' इत्यध्यायशेषकृत्यप्रतिपादकमुत्तरभाष्यमनर्थकम् । अथातो ब्रह्मजिज्ञासेति यस्य ब्रह्मणो जिज्ञासा विहिता तत्स्वरूपस्याविचारितत्वेन तद्विचारार्थतयैवाध्यायशेषस्यार्थवत्त्वोपपत्त्या तद्वैयर्थ्यशङ्कया एवानुदयेन तत्सार्थक्यस्यावक्तव्यत्वादित्यतो वृत्तानुवादपूर्वकं स्वरूपनिरूपणेऽवशेषेपपादनेन गतार्थताशङ्कामुत्थाप्य तत्परिहारकत्वेन मूलं योजयितुं वृत्तं तावदनुवदति **अथात इत्यादिना** ॥ **विहितेति** । प्रतिज्ञातेत्यर्थः । विषयादिमत्त्वोपपादनेन कर्तव्यतया प्रतिपादितेति वाऽर्थः । नन्वेतावता लक्षणप्रमाणनिरूपणेन सजातीयविजातीयसमस्तवस्तुव्यावृत्ततया लक्ष्यस्वरूपावधारणसिद्धावपि यस्य ब्रह्मणो जिज्ञासा कर्तव्येति प्रतिज्ञाता तत्स्वरूपस्याविचारितत्वात्तदर्थमध्यायशेषप्रवृत्तिः किं न स्यादित्यतो विचार्यत्वेन प्रतिज्ञातस्य ब्रह्मणो लक्षणप्रमाणाभ्यामिवान्येनापि प्रकारेण निरूपणीयत्वे ह्यधिकरणचतुष्टयेन लक्षणप्रमाणाभ्यां तन्निरूपणसिद्धावप्युपायान्तरेण तदसिद्ध्या तदर्थमध्यायशेषस्यारम्भणीयत्वप्रसक्तावपि लक्षणप्रमाणनिरूपणव्यतिरेकेण वस्तुविचारस्यैवाभावान्न तदर्थतयोत्तरसूत्रारम्भप्राप्तिरित्याह **न हीति** ॥ ननु लक्षणप्रमाणनिरूपणव्यतिरेकेण कथं वस्तुविचारणाभावः सम्भावनानिरूपणेन वस्तुविचारस्य सत्त्वादित्यत स्यादेतदेवं यदि लक्षणप्रमाणयोरिव सम्भावनाया अपि वस्त्ववधारकत्वं स्यान्न चैतदस्तीत्याह **सम्भावना त्विति** ॥ तत्र हेतुमाह **अप्रमाणत्वादिति** । उत्कटैककोटिकसन्देहस्यैव सम्भावनात्वादिति

भावः । नन्वेवं सति सम्भावनाया वस्त्ववधारकत्वाभावाद्ग्रन्थकाराणां तद्व्युत्पादनमनर्थकमापद्येतेत्यभिप्रायेण शङ्कते **किं त्विति** ॥ वस्त्ववधारणार्थत्वाभावेऽपि प्रयोजनान्तरार्थत्वान्न तद्व्युत्पादनानर्थक्यमित्यभिप्रेत्य समाधत्ते **यत्रेति** ॥ **प्रवृत्तिसङ्कोचमिति** । स्वेतरसमस्तवस्तुव्यावृत्ततया लक्ष्यस्वरूपानवधारकत्वमित्यर्थः ।

ननु समन्वयोक्तिमात्रेण सिद्धत्वात्समन्वयस्याप्रपञ्चनीयत्वान्न प्रपञ्चनार्थतयाऽध्यायशेषस्यार्थवत्त्वमित्यतो विना प्रपञ्चनेन समन्वयोक्तिमात्रेण तदसिद्धेस्तत्प्रपञ्चनमर्थवदिति भावेनोक्तिमात्रस्यासाधकत्वं सदृष्टान्तमुपपादयति **तत्रेत्यादिना** । ननु च 'विभागेन समन्वयम् आनन्दमय इत्यादिनाऽध्यायेन वदति' इत्येतावतैव समन्वयप्रपञ्चकतयाऽध्यायशेषस्यार्थवत्त्वसिद्धेरेवं शास्त्रावगम्यत्व इति भाष्यखण्डस्य वैयर्थ्यमित्यतः समन्वयसूत्रोक्तार्थप्रपञ्चकत्वे प्राप्तानुपपत्तिपरिहारार्थत्वान्न तदिति भावेन समन्वयप्रपञ्चकत्वेऽनुपपत्तिप्रदर्शनपूर्वकं तत्परिहारतया भाष्यं सङ्गमयति **एवं तर्हीत्यादिना** । कथमस्य व्यवधायकत्वमित्यतः सयुक्तिकं तदभिप्रायमाह **एतदुक्तं भवतीत्यादिना** । ननु सर्वत्र पदान्त एव विरतिदर्शनात्प्रकृते च 'इत्यादिना' इत्यस्य पृथग्गतया पदान्तेऽतीत्य ईत्यय तदभावेनापदत्वात्कथम् इत्यादीत्यत्र विरतिरित्यतो न सुबन्तत्वेनैव पदत्वमिति नियमः । तथा सति राजभ्यामित्यत्र राजन्नित्यस्य

सुबन्तत्वाभावेनापदत्वान्नलोपाभावप्रसङ्गः। ततश्च यथाऽसुबन्तस्यापि राजन्नित्यादेरसर्वनामस्थानसुब्विभक्तिपरत्वेन 'स्वादिष्वसर्वनामस्थाने' इति पदत्वान्नलोपः। तथाऽस्यापि पदत्वाद्युक्ता तत्र विरतिरित्याशयेनाह **स्वादिष्वसर्वनामस्थान इति पदसंज्ञानुशासनादिति** ॥ ननु च राजभ्यामित्यादावजादिपरत्वाभावेन 'यचि भम्' इति भत्वाप्रसङ्गेनापवादकाभावात् 'स्वादिषु' इति पदसंज्ञोपपत्तेर्युज्यते नलोपः। प्रकृते तु तृतीयैकवचनस्याजादित्वेन 'यचि भम्' इति भत्वप्राप्तेर्भसंज्ञायाः पदसंज्ञापवादकत्वान्न पदत्वमिति विरत्यनुपपत्तिस्तदवस्थैव चेत्। अत्र केचित्। 'अयस्मयादीनि छन्दसि' इति सूत्रे वार्त्तिककृता छन्दस्युभयसंज्ञान्यपीति वक्तव्यमिति पदत्वभत्वयोः समावेशाङ्गीकारात्। छन्दस्तुल्यतया 'उपदेशेऽजनुनासिक' इत्यत्र गृहीते पदत्वप्रयुक्तजश्त्वस्य भत्वप्रयुक्तकुत्वाभावस्य च दर्शनादस्यापि छन्दस्तुल्यत्वादत्रापि पदत्वभत्वयोः समावेशसम्भवान्न भसंज्ञायाः सर्वत्र पदसंज्ञापवादकत्वमिति। वस्तुतस्तु तृतीयैकवचनस्याजन्त्वेऽपि नामात्वेन हलन्त्वादजादित्वाभावेन यचि भमिति भत्वाप्राप्तेरस्त्येवेहाप्यपवादकाभाव इति युक्तैव पदसंज्ञया विरतिरिति ध्येयम्। अङ्गीकृत्य चेदं समाधानमुक्तम्। वस्तुतस्तु यतिभङ्गस्य काव्यदोषत्वमेव। न शास्त्रदोषत्वमपि। 'य उपाधिर्लिङ्गति साध्ये सम्बन्धविशेषणे' इति शास्त्रे पदमध्येऽपि विरतिदर्शनात्। अत एव गीताभाष्यटीकायां तथादोषत्वेनैव समाधानमुक्तमिति न किञ्चिदेतत् ॥

स०— ॥ ॐ **आनन्दमयोऽभ्यासादिति** । वस्तुविचारणं नामास्तीत्यनन्तरम् येनाध्यायशेषस्य सार्थक्यं स्यादिति शेषः। नन्वेवमीक्षत्यधिकरणमपि व्यर्थं स्यादित्याशङ्क्य तत्सार्थक्यमुपपादयति **संभावना त्वित्यादिना** ॥ यद्वा ननु लक्षणप्रमाणव्यतिरेकेण वस्तुविचारणमन्यन्नास्तीत्यनुपपन्नम् संभावनाया अपि वस्तुस्वरूपनिर्धारकत्वादित्यत आह **संभावना त्विति** ॥ ननु इत्यादीति कथं विरतिः, अपदान्तत्वात्; श्लोकेषु पदान्त एव विरतिदर्शनादित्यत आह **स्वादिष्वसर्वनामेति** ॥ तथाचानया विवक्षयाऽस्यापि पदान्तत्वात् तत्र विरतिरुपपन्नेति भावः ॥ **यतिभङ्ग इति** ॥ यतिर्विरतिः यतिस्थानभङ्गो यतिभङ्ग इति मध्यमपदलोपी समासः। यत्र स्थाने पदान्तलक्षणे विरत्या भाव्यं तत्र विरतिर्नास्तीति भावः।

प०— ॥ ॐ **आनन्दमयोऽभ्यासात्** ॐ ॥ ननु जिज्ञास्यब्रह्मस्वरूपनिर्णयाय जन्मादिसूत्राद्युक्तलक्षणस्यातिव्याप्तिनिरासाय सर्वकारणादिवाक्यानां ब्रह्मपरत्वाय तत्रासंभावनानिरासाय चोत्तरग्रन्थस्य प्रवृत्तेर्वाच्यत्वान्मूले कथं प्रपञ्चनपरत्वोक्तिः। नह्येतत्सर्वं प्राक्सिद्धमित्यतोऽवतारयति **अथात इति** । विहिता कर्तव्यत्वेन बोधिता इष्टसाधनत्वेनोक्तेति यावत्। वस्तुविचारणं नामास्तीत्यनन्तरं येनाध्यायशेषस्य सार्थक्यं भवेदिति शेषः। नन्वेवं तर्हि ईक्षत्यधिकरणमपि व्यर्थं स्यादित्याशङ्क्य तत्सार्थक्यमुपपादयति **संभावना त्वित्यादिना** । ननु लक्षणप्रमाणाभ्यां वस्त्ववधारितमित्यत्र संभावनया चेति

वाच्यम् । अन्यथा तदुक्तिवैयर्थ्यादित्यत आह **संभावना त्विति** ॥ **अतथाभावेति** । अलक्षणादिभावेत्यर्थः । नन्वीक्षतिनये प्रमाणविषयत्वसंभावनैवोक्ता । तथाच लक्षणप्रमाणयोरित्युक्तिः कथम् । सत्यम् । ब्रह्मपदोक्तगुणपूर्णत्वलक्षणाभिप्रायेणात्र लक्षणोक्तिः । तस्य जन्मादिसूत्रे जगज्जन्मादिहेतुत्वोक्त्या संभावनोक्तेः । यद्वा प्रमाणे संभावनयाऽनद्विषये तद्धेतुत्वादिलक्षणेऽपि सा भवतीति परंपराभिप्रायेण तल्लक्षणोक्तिः । समन्वयसूत्रस्याध्यायादित्वमुपेत्योक्तम् **अध्यायशेषस्येति** । तात्पर्योक्त्या शङ्कानिरासप्रकारमाह **सत्यमित्यादिना** । "तथा चैवं सूत्रयोजना"इत्यादिना यस्समन्वयसूत्रस्य प्रागर्थ उक्तस्तमनुवदति **तत्तुसमन्वयादितीति** ॥ **प्रतिपाद्यप्रतिपादकत्वलक्षणसमन्वय इति** । एतदेव हि तत्परत्वरूपः संबन्धः । तत्प्रमितिशेषत्वस्यैव तात्पर्यशब्दार्थत्वादिति भावः ॥ कथं प्रपञ्चनं किमर्थं चेत्यत आह **तत्तुसमन्वयादितीति** । **प्रतिपाद्यप्रतिपादकत्वलक्षणसमन्वय, इति** । एतदेवहि,तत्परत्वरूपः संबंधः । तत्प्रमितिशेषत्वस्यैव तात्पर्यशब्दार्थत्वादितिभावः ॥ कथं प्रपंचनं किमर्थं चेत्यत आह **तत्तुसमन्वयादिति ईति** ॥ **विमर्शेति** । युक्त्यनुसंधानपूर्वकमित्यर्थः ॥ **अन्यदेवेति** । तत्तु समन्वयादिति सूत्रकृदुक्ते सति अन्यदेव ब्रह्मभिन्नमेव वस्तु शास्त्रयोनि, समन्वयात् उपक्रमादिभिरन्यवस्तुपरत्वरूपसंबन्धावगमादित्युक्त्वा कृती कृतार्थः स्यादित्यर्थः ॥ **प्रत्ययमिति** । विश्वासं । एकः कश्चित्पुमान् । **परस्ताद्वितस्तेरिति** । त्वदुक्तप्रदेशापेक्षया वितस्तिपरिमित प्रदेशात्परस्तात्तत्र भूमध्यप्रदेश इति ब्रूयादित्यर्थः । एवमित्यनुवादः "न्याये"इत्यंत व्याख्या । शब्दैकजन्यज्ञानकर्मत्वादिन्यायेनेत्यर्थः । 'संभाविते सति" इति शेषोक्तिः । कुतो व्यवधानमितिशङ्कानिरासप्रकारमाह **सत्यमित्यादिना** ॥ ननु मूलश्लोके "इत्यादिना" इत्येकपदत्वेन पदमध्य एव पादान्तविरामो न युक्तः, यतिभङ्गापत्तेरित्यत आह **स्वादिष्विति** । कप्रत्ययावधिषु परतः पूर्वं पदसंज्ञं भवतीत्युक्तत्वादिह च तृतीयाविभक्तेर्नाशब्दस्य स्वादित्वेन तत्परतः पूर्वस्य पदत्वेन पदस्यैव पादान्ते विरामप्राप्तेरितिभावः ॥ **यतीति** । यतिरुपरमः । यम उपरम इति धातोः । यस्मिन् स्थले उपरमः पदस्योचितस्तस्य भङ्ग इत्यर्थः । पदान्तस्यैव पादान्ते उपरमस्योचितत्वेन पदमध्ये अनुचितत्वात् । "यतिर्विच्छेदसंज्ञिका' इति वृत्तरत्नाकरोक्तेः । "श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः' इतिदण्डिनोप्युक्तेः ।

**या०** – ॥ ॐ **आनन्दमयोऽभ्यासात्** ॐ ॥ वस्तुविचारणं नामास्तीत्यनन्तरं येनाध्यायशेषस्य सार्थक्यं स्यादिति शेषः । नन्वेवमीत्यां करणमपि व्यर्थं स्यादित्याशङ्क्य तत्सार्थक्यमुपपादयति **सम्भावना त्वित्यादिना** ॥ **विमर्शपूर्वकमिति** । संशयपूर्वकमित्यर्थः । नन्वित्यादीति कथं विरतिः । अपदान्तत्वात् । श्लोकेषु पदान्त एव विरतिदर्शनादित्यत आह **स्वादिष्वसर्वनामेति** । स्वादिष्विति सुशब्दादेकवचनादारभ्य आकपः प्रत्यया गृह्यन्ते । स्वादिषु प्रत्ययेषु परतः सर्वनामस्थानवर्जितेषु पूर्वं

पदसंज्ञं भवतीति सूत्रार्थः । राजभ्यां राजभिरित्याद्युदाहरणं द्रष्टव्यम् । एवं च राजभ्यामित्यादौ यथा प्रातिपदिकान्तस्यापि नस्य पदान्तत्वेन लोपः । **एवमित्यादीति** । प्रातिपदिकान्तस्याप्यनेन सूत्रेण पदान्ततायां तत्र विरतिर्युक्तेति भावः ॥ **यतिभङ्ग इति** । यतिस्थानभङ्गो यतिभङ्ग इति मध्यमपदलोपी समासः । यतिर्विरतिः ॥

श्री०— ॐ ॥ **आनन्दमयोऽभ्यासात्** ॐ ॥ ननु 'एवं शास्त्रावगम्यत्वे' इत्यनेनाध्यायशेषस्य तदर्थत्वोपपत्तेरित्यतो वृत्तानुवादपूर्वकमध्यायशेषमाक्षिपति **अथात इत्यादिना** । ननु लक्षणादिनिरूपणे कृतेऽपि वस्तुविचारणमेव तदर्थं इत्यत आह **न हीति** । अथाऽपि संभावनैव तदर्थ इत्यत आह **सम्भावना त्विति** ॥ **अकार्यकारित्वादिति** । कार्यं गुणपूर्णतारूपं तदकारित्वादित्यर्थः ॥ **अन्यदेवेति** । 'तत्तु समन्वया''दिति सूत्रकृदुक्ते सत्यन्यदेव ब्रह्मभिन्नमेव वस्तु, शास्त्रयोनि । समन्वयादुपक्रमादिभिरन्यवस्तुपरत्वरूपसंबन्धावगमादित्युक्त्वा कृती कृतार्थः स्यादित्यर्थः ॥ **प्रत्ययमनुत्पाद्येति** । विश्रामकारणमनुक्त्वेत्यर्थः । **सति हि तस्मिन्निति** । अवाच्यत्वशङ्कानिरासेन शास्त्रावगम्यत्वसंभावनासमर्थने सतीत्यर्थः ॥ **एतस्येति** । समन्वयस्येत्यर्थः । तदेव विशदयति **शब्दलेशेति** । अवाच्यत्वशङ्कयेत्यर्थः । **वाक्यतात्पर्यविचारस्येति** । समन्वयविचारस्येत्यर्थः । तोयाभ्यवहारासामर्थ्यं शब्दलेशसञ्चारासंभवे दृष्टान्तः, शष्कुलीभक्षणं वाक्यतात्पर्यरूपसमन्वयविचारे दृष्टान्त इत्यवधेयम् ।

च०— श्रीनिवासार्थेह्यपद्ममन्दिरो हयकन्धरः । सुनन्दतात्सेवया मे भक्त्याऽलंकृतयाऽनया ॥

॥ ॐ **आनन्दमयोऽभ्यासात्** ॐ ॥ **विहितेति** । विषयादिमत्तानिबन्धनकर्तव्यतया 'अथातो ब्रह्मजिज्ञासा'इतिसूत्रोपस्कृतविधायकतव्यान्तबोधितेत्यर्थः । प्रतिज्ञातेत्यर्थः इत्यप्यर्थापयन्ति । **लक्षणप्रमाणाभ्यामिति** । द्वन्द्वप्रकृतिकतृतीयाप्रत्यायितं जन्यत्वं तदुत्तरप्रकृतिकतृतीयोपस्थापितप्रकारतानिरूपकत्वं च भूताधिकारीयकर्मसाधननिष्ठाप्रकृतिभूतण्यन्तधातूपस्थाप्यावधारणक्रियायामन्वेति । तथा च तादृग्लक्षणप्रमाणनियन्त्रिततादृग्व्यावृत्तिनिष्ठप्रकारतानिरूपकप्रागप्रतिकध्वंसप्रतियोगित्वरूपातीतत्वविशेषितावधारणक्रियाकर्मीभूतं तत्स्वरूपमिति समुदिताशयः । अन्यपरत्वशङ्कया शिवादितात्पर्यकत्वशङ्कया । ईक्षतिनयसाफल्यं दर्शयति **असंभावनाशङ्केति** । **नामास्तीति** । येनाध्यायशेषसाफल्यं स्यादिति पूरितेनान्त्रेति । ननु लक्षणप्रमाणनिरूपणतुल्यकक्षापन्नसंभावनानिरूपणेन वस्तुविचारणसत्वेन न तदतिरेकेण वस्तुविचारणाभाव इत्यत औत्कट्यानौत्कट्याङ्कितकोटिद्वयावगाहिसंदेहात्मकसंभावनाया अप्रामाण्येन वस्त्वनवधारकतया लक्षणप्रमाणतुल्यकक्ष्याऽनापन्नतया न तन्निरूपणेन वस्तुविचारणमित्याशयेनाह **संभावनात्विति** । प्रवृत्तिसङ्कोचनम् । स्वेतरसमस्तवस्तुव्यावृत्त्युपरागेण लक्ष्यस्वरूपानवधारकत्वम् । **संभाव-**

**नोपयोग इति** । तस्याः वस्त्वनवधारकत्वेपि फलान्तरसद्भावेन न तद्व्युत्पादनानर्थकतेति भावः । विमर्शपूर्वकं सन्देहपूर्वकम् । अकार्यकारित्वात् समन्वयविशेषानवधारकत्वात् । **अन्यदेव समन्वयादिति** । शिवादिकमेव शास्त्रयोनि समन्वयादित्युक्त्वेत्यर्थः । कृती स्यात् । कुशलः स्यात् । प्रत्ययम् । विश्रंभम् । **परस्ताद्वितस्तेरिति** । न त्वदभिहतो भूमध्यप्रदेशः किन्तु त्वदभिहितप्रदेशादपि वितस्तिद्वयप्रदेशाधिकपरत्वविशेषित एव भूमध्यप्रदेश इति ब्रूयादित्यर्थः । समन्वयसूत्रेण समन्वयसूत्रनिरूपिता । अध्यायशेषस्य अध्यायशेषनिरूपिताधेयताविशेषिता । शेषपदोपादानं समन्वयनयमारभ्याध्यायसङ्गतिरस्तीत्यभिप्रेत्य । प्रपंच्यप्रपञ्चकभावेन प्रपंच्यप्रपञ्चकभावाभिन्ना सङ्गतिर्दर्शितेति योजनीयम् । **एवमित्यनूद्य** व्याकुरुते **न्यायेनेत्यन्तेन** ॥ ईक्षतिनयस्य व्यवधायकत्वाशयं सनिदर्शनं सयुक्तिकं स्फुटीकरोति **एतदुक्तं भवतीति** । ननु निखिलश्लोकेषु पदान्त एव विरतिदर्शनात्प्रकृते चेत्यादि-इत्यस्यापदान्ततया कथं विरतिरित्याशङ्कायां यथा राजभ्यां राजभिरित्यादौ स्वादिष्विति तृतीयाद्विवचने वहुवचने च परतः प्रातिपदिकान्तस्यापि नस्य पदान्तत्वेन लोपस्तद्वदित्यादीत्यस्याप्यनेन सूत्रेण पदान्ततया तत्र विरतिः सङ्गच्छत एवेति समाधत्ते **स्वादिष्विति** ॥ **यतिभङ्ग इति** । यतिर्विरतिस्तत्स्थानभङ्ग इत्यर्थः । अथ राजभ्यां राजभिरित्यादौ विभक्तेर्हलादितया अजाद्यसर्वनामस्थानस्वादिपरतानियन्त्रितायाः 'यचिभम्' इति भसंज्ञाया अप्रवृत्त्या निरपवादपदसंज्ञोपपत्त्या न-

लोपस्य सूपपादत्वेपि प्रकृते टारूपविभक्तेरजादितया पदसंज्ञापवादभूतभसंज्ञयापदत्वस्यापोदिततया विरत्यनुपपत्तिर्दुर्वारैवेति चेत् । अत्र व्याकर्तारः । अयस्मयादीनि छन्दसीतिसूत्रे छन्दस्युभयसंज्ञाऽन्वयीतिवक्तव्यमितिकात्यायनवचनेन भत्वपदत्वयोरेकत्र समावेशमूरीकृत्य छन्दोवत्सूत्राणि भवन्तीति भाष्यकृदुक्त्या 'उपदेशेजनुनासिक इत्' इति सूत्रघटकाच्छब्दस्य पदत्वनिबन्धनजश्त्वस्य भत्वनियन्त्रितकुत्वाभावस्य च दर्शनेन प्रकृतभाष्यकारीयवचनस्यापि छन्दस्तुल्यतया भत्वपदत्वयोः सुसमावेशतया भत्वस्य सर्वत्रपदत्वानपवादकतया सामञ्जस्यमिति समादधति । तृतीयैकवचनस्याच्त्वेपि 'आङोनास्त्रियामि'त्यनुशिष्टनाभावेन हल्त्वादजादिपरत्वाभावेन यचि भमिति भत्वाप्राप्तेरस्त्येवात्रापवादकाभाव इति युक्तैव पदसंज्ञया विरतिरिति ध्येयमित्यपि समाहितम् । प्रमेयदीपिकायां देवमिति प्रथमपद्यव्याख्यावसरे न चात्र यतिभङ्गो दोषस्तस्य काव्यविषयत्वात् । शास्त्रेतु 'य उपाधिर्लिंगति साध्ये संबन्धविशेषणे' इत्याद्यभियुक्तवाक्यदर्शनादिति समाहिततया प्रकृतसमाहितिस्त्वस्य शास्त्रदोषतामप्यूरीकृत्येत्यवधेयम् ।

सु० — मायावादी तूत्तरसूत्रसन्दर्भमाक्षिप्य समाधानमाह । द्विरूपं हि ब्रह्मावगम्यते वेदान्तवाक्येषु । नामरूपविकारोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिविवर्जितम् । 'यत्र हि

'द्वैतमिव भवति' 'सर्वाणि रूपाणि विचिन्त्य धीरः' इत्येवं सहस्रशोऽविद्याविद्याविषयभेदेन ब्रह्मणो द्विरूपतां दर्शयन्ति वेदान्तवाक्यानि। तत्राविद्याऽवस्थायां ब्रह्मण उपास्योपासकादिलक्षणः सर्वो व्यवहारः। तत्र कानिचिद्ब्रह्मण उपासनान्यभ्युदयार्थानि। कानिचित्क्रममुक्त्यर्थानि कानिचित्कर्मसमृद्ध्यर्थानि। एवमपेक्षितोपाधिभेदं ब्रह्मोपास्यत्वेन निरस्तसमस्तोपाधि तु ज्ञेयत्वेनोपदिश्यत इत्यस्यार्थस्य प्रदर्शनायोत्तरग्रन्थ आरभ्यत इति।

तदिदमनुपपन्नम्। ब्रह्मणो द्वैरूप्यस्याप्रामाणिकत्वात्। सर्वाण्यपि हि वेदवाक्यान्यसङ्ख्येयकल्याणगुणाकरं सकलदोषगन्धविधुरमेकरूपमेव ब्रह्म नारायणाख्यं प्रतिपादयन्ति। किन्तु कानिचित्सर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वसौन्दर्यौदार्यवीर्यादिगुणविशिष्टतया। कानिचिदपहतपाप्मत्वनिर्दुःखत्वप्राकृतभौतिकविग्रहरहितत्वादिदोषाभावविशिष्टतया। कानिचिदतिगहनताज्ञापनाय वाङ्मनसागोचरत्वाद्याकारेण। कानिचित्सर्वपरिहारेण तस्यैवोपादानायाद्वितीयत्वेन। कानिचित्सर्वसत्ताप्रतीतिप्रवृत्तिनिमित्तताप्रतिपत्त्यर्थं सर्वात्मकत्वेन; इत्येवमाद्यनेकप्रकारैः परमपुरुषं बोधयन्ति। ततो व्याकुलबुद्धयो गुरुसम्प्रदायविकला अश्रुतवेदव्याख्यातारः सर्वत्राप्येकरूपतामननुसन्दधाना वेदं छिन्दन्ति। न (च)एतद्द्वैरूप्यप्रपञ्चनमुत्तरत्रोपलभ्यते। नाप्यस्याविद्याविषयस्य प्रपञ्चनं मोक्षशास्त्रेऽत्रोपयुज्यते। प्रसङ्गादुच्यत इति चेन्न। सर्वस्य प्रासङ्गिकत्वे प्रतिपाद्याभावप्रसङ्गात्। तदिदमाभाणकं लौकिकानां नातिवर्तते 'सार्थादपि तस्करा बहवः' इति॥ एतच्च सगुणनिर्गुणभेदं निराकुर्वताऽऽचार्येण निरस्तमिति नेह पुनः प्रक्रान्तम्। तथा च भाष्यम्। नान्यथा तददृष्टेरिति।

शे० — आक्षिप्येति॥ ब्रह्म जिज्ञासितव्यमिति प्रथमसूत्रे प्रतिज्ञातम् तच्च शास्त्रैकसमधिगम्यम्। शास्त्रं च सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिप्रलयकारणे ब्रह्मण्येव प्रमाणं न प्रधानादाविति न्यायतो व्युत्पादितम्। न चास्ति कश्चिद्वेदान्तभागो यस्तद्विपरीतमपि बोधयेदिति गतिसामान्यादित्युक्तम्। तत्किमपरमवशिष्यते यदर्थमुत्तरसूत्रसन्दर्भावतारः स्यात्; इत्याक्षेपप्रकारो द्रष्टव्यः। उत्तरसूत्राणामगतार्थत्वं वक्तुं वेदान्तेषु भासमानार्थं सङ्क्षिपति द्विरूपं हीति। यद्यपि निरुपाधिन एव जिज्ञास्यत्वात्तत्त्वतो निरस्तसमस्तोपाधिसम्बन्धं ब्रह्मैवोपदेष्टव्यं न सोपाधिकमपि तथाऽपि न तत्तेन रूपेण प्रथममुपदेष्टुं शक्यमित्युपहितरूपेणोपदेष्टव्यमिति निरुपाधिकोपदेशशेषतया सोपाधिकस्य युज्यते तन्निरूपणं वेदान्तेष्वित्यर्थः। तत्र सोपाधिकविषयं वाक्यमुदाहरति यत्र हीति। यस्यां खल्वविद्यावस्थायामाभासभूतद्वैतं सदिव भाति तत्रेतरः स इतरं पश्यतीति, दृष्ट्यादिगोचरमुपाधिमद्ब्रह्म तु वदतीत्यर्थः। सोपाधिकविषयं श्रुत्यन्तरं पठति सर्वाणीति। सर्वज्ञो हीश्वरो नामरूपादिकं विश्वं निर्माय तत्र प्रविश्याभिवदनादिकं कुर्वन्योऽवतिष्ठते तं

विद्वानिहैवामृतो भवतीत्यर्थः । यद्यप्यत्र द्विरूपं हि ब्रह्म वेदान्तेष्ववगम्यत इति प्रतिज्ञाय सोपाधिकविषयकवाक्योदाहरणवन्निरुपाधिविषयकवाक्यमप्युदाहर्तव्यमेव उदाहृतं चापव्याख्यानकर्त्रा तथाऽपि यत्र हीति वाक्योदाहरणेन तदुत्तरस्य यत्र त्वस्य सर्वमात्मैवाभूदिति निरुपाधिकविषयवाक्यस्याप्युदाहृतप्रायत्वात् किं तत्पृथगुदाहरणेनेत्याशयेन निरुपाधिकविषयकवाक्यानुदाहरणमिति ध्येयम् । यद्वा । उपलक्षणतया यत्र त्वस्य सर्वमात्मैवाभूदित्यस्य यत्र नान्यत्पश्यतीत्यादेश्चात्र ग्रहणाददोषः । स्वशब्देनानुपादानं तु परस्य निरुपाधिकविषयतयाऽभिधानमात्रं न तु निरुपाधिकविषयत्वं तस्य वास्तवं सर्वस्यापि वेदस्य सगुणप्रतिपादकत्वादिति ज्ञापनार्थमित्यवधेयम् । यत्र यस्यां विद्यावस्थायामस्य विदुषः सर्वं कर्त्रादि आत्मातिरेकेणासदेवासीत्तत्र केन करणेन कं विषयं को वा कर्ता पश्येदित्याक्षेपादव्यवहार्यमनौपाधिकं तत्त्वमवगम्यते । यत्र यस्मिन्भूम्नि स्थितो विद्वानन्यद्द्रष्टव्यं चक्षुषा न पश्यत्यन्यच्च श्रोतव्यं श्रोत्रेण न शृणोति न चान्यन्मन्तव्यं ज्ञातव्यं वा मनसा वा बुद्ध्या वा मनुते जानाति वा स भूमा दृष्ट्याद्यगोचरो निरतिशयमहत्त्वसम्पन्नः परमात्मेत्युपलक्षितवाक्यद्वयार्थः । ननु ब्रह्मणो न द्वैविध्यं युगपदेकस्य तद्विरोधादित्यतः सोपाधिकत्वनिरुपाधिकत्वयोर्वास्तविकत्वतात्त्विकत्वाभ्यामेकस्मिन्नप्युपपत्तेर्न विरोध इत्याह **अविद्याविद्याविषयभेदेनेति** । ननु शुद्धमेव वास्तवं चेदुपास्योपासकादिभेदस्यावस्तुत्वादुपास्तिविध्यानर्थक्यमित्याशङ्क्याह **तत्रेति** । ननु चोपास्तीनामपि मुक्त्यर्थत्वाद्विद्यावद्वस्तुतामितैव युक्तेत्यतो न तासां साक्षान्मोक्षार्थतेत्याह **तत्रेति** ॥ **कानिचिदिति** । प्रतीकाद्युपासनानीत्यर्थः ॥ **कानिचिदिति** । दहराद्युपासनानीत्यर्थः । **कानिचिदिति** । उद्गीथाद्युपासनानीत्यर्थः । यद्यप्येतानि विधेयत्वात्कर्मकाण्ड एव वक्तव्यानि तथाऽपि मानसत्वेन विद्यासाम्यादिहोक्तानीत्यवगन्तव्यम् । श्रुतिषु दृष्टं ब्रह्मद्वैरूप्यं शिष्ट्वानन्तरसूत्रसन्दर्भारम्भं सम्भावयति **एवमिति** । तस्याद्यप्यविवेकात्कुत्रोपाधिरिष्टः कुत्र वा नेति निरूपयितुमुत्तरो ग्रन्थसन्दर्भ इत्याशयः ।

उदाहृतश्रुतीनामेव ब्रह्मद्वैविध्ये प्रामाण्यात्कथमप्रामाणिकत्वमित्यत आह **सर्वाण्यपीति** । तर्ह्यनुभवविरोधः सर्वत्र वाक्येषूक्तार्थाप्रतिभासादिति शङ्कते **किं त्विति** । परिहरति **कानिचिदिति** । यः सर्वज्ञः सर्वविदेष सर्वेश्वर इत्यादीनीत्यर्थः **कानिचिदिति** । एष आत्माऽपहतपाप्मेत्यादीनीत्यर्थः ॥ **कानिचिदिति** । यतो वाचो निवर्तन्त इत्यादीनीत्यर्थः ॥ **कानिचिदिति** । एकमेवाद्वितीयमित्यादीनीत्यर्थः ॥ **कानिचिदिति** । सर्वं खल्विदं ब्रह्मेत्यादीनीत्यर्थः ॥ **न चेति** । नापीत्यर्थः । उत्तरत्र विशिष्टस्यैव प्रतिपादनेन द्विरूपब्रह्मप्रतिपादनाभावात् न द्विरूपब्रह्मप्रपञ्चनं तदर्थ इति भावः ॥ **नापीति** । अविद्याविषयस्यातात्त्विकत्वे तत्प्रतिपादकत्वे शास्त्रस्याप्रामाण्यापत्तेरित्यर्थः । न च सविशेषत्वे श्रुतितात्पर्यान्नाप्रामाण्यमिति वाच्यम् । तात्पर्यनिर्णायकैः सूत्रैः प्रत्यधिकरणं सविशेषे तात्पर्यनिर्णयात् । किञ्च मुमुक्षुं प्रति

न तावन्मोक्षसाधनतया सविशेषनिरूपणमुपयुज्यते । त्वन्मते निर्विशेषज्ञानस्यैव मोक्षसाधनत्वात्सविशेषस्य कल्पितत्वेन भ्रमरूपतज्ज्ञानस्य विद्यानिवर्तकत्वायोगाच्च । नापि निर्विशेषज्ञानार्थतया तन्निरूपणं रूपादियुक्तपराग्भूतसविशेषज्ञानेन तद्विपरीतनिर्विशेषज्ञानायोगात् । अतो न तन्निरूपणं मोक्षशास्त्र उपयुक्तमिति भावेनोक्तम् **मोक्षशास्त्र इति** । ननु न मोक्षसाधनतया मोक्षसाधनज्ञानसाधनतया वा सविशेषनिरूपणमुच्यते किन्तु प्रसङ्गादेवेति नोक्तदोष इति शङ्कते **प्रसङ्गादिति** । सार्थाद्धनिकात् । भाष्ये पराभिप्रेताध्यायशेषकृत्यानिराकरणेन प्रसक्तां न्यूनतां परिहरति **एतच्चेति** ॥ **निरस्तमिति** । जन्माधिकरणेक्षत्यधिकरणयोरिति शेषः । भाष्ये एतदधिकरण एव च ब्रह्मद्वैविध्यनिरासादप्यत्र न निराकृतमित्याह **तथा चेति** । द्विरूपब्रह्मप्रपञ्चनायाध्यायशेषवृत्तिरिति न युक्तं ब्रह्मद्वैविध्यप्रपञ्चनस्यादृष्टेरित्यपि भाष्यार्थो वर्णनीय इति भावः ।

स० — ननु ब्रह्मणो द्विरूपत्वमेकमेवेत्यादिश्रुतिविरुद्धमित्यत उक्तम् **अविद्याविद्याविषयभेदेनेति** ॥ अत्राविद्यापदेन विद्याविरुद्धं मिथ्याज्ञानं विवक्षितम् । विद्यापदेन च तत्त्वज्ञानम् । तथा च तत्त्वज्ञानविषयीभूतं निरुपाधिकं रूपमेकमेव ॥ सोपाधिकं तु कल्पितं भ्रमेऽवभासते, अतो न विरोध इति भावः । नन्वेवमुपाधिभेदं ब्रह्मोपास्यत्वेनेत्यादिवक्ष्यमाणमयुक्तम् । तत्त्वतश्चैतन्यस्यैकत्वे उपास्योपासकभावस्य ज्ञातृज्ञेयभावस्य चायोगादित्यत आह **तत्राविद्यावस्थायामिति** ॥ आदिपदेनज्ञातृज्ञेयलक्षणादिर्ग्राह्या । ननु निरुपाधिकं ब्रह्मस्वरूपं प्रथमतो न ज्ञातुं शक्यमिति तज्ज्ञापनाय केन चिदुपाधिना विशिष्टं ब्रह्मोपास्यत्वेन वक्तव्यम् । नानोपाधिविशिष्टं ब्रह्मोपास्यतया वेदान्तेषु किमर्थमुच्यत इत्याशङ्कायामाह **तत्र कानिचिदित्यादिना** ॥ **एवमपेक्षितोपाधिभेदमिति** ॥ अपेक्षितफलसाधनीभूतनानागुणविशिष्टमित्यर्थः । ततश्चायमर्थः । सत्यं निरुपाधिकब्रह्मज्ञानाय 'केनचिदुपाधिना विशिष्टं ब्रह्मोपास्यत्वेन वक्तव्यमिति । तथाप्यधिकारिणोऽविद्यावस्थायामन्यफलापेक्षाया अपि सत्वात्तत्फलार्थं सगुणलक्षणोपाधिविशिष्टोपास्तयोऽनेकरूपा अपि कथ्यन्ते । 'यथा यथोपासते तदेव भवतीति श्रुते'रिति । ननु सर्वत्रैकरूपमेव ब्रह्म प्रतिपाद्यत इत्यनुपपन्नम् । यः सर्वज्ञः सर्वविदित्यादिविशिष्टब्रह्मप्रतिपादकवाक्यानामपि श्रवणादित्यत आह **किंत्विति** ॥ **मोक्षशास्त्रेऽत्रोपयुज्यत इति** । सोपाधिकनिरूपणं न निरुपाधिकज्ञानोपयुक्तम् । विरोधात् । अन्यफलार्थं तन्निरूपणे च मोक्षशास्त्रव्याघातः । अविद्याविषयप्रतिपादकत्वेनातत्त्वावेदकप्रसङ्गश्चेति भावः ॥ **सार्थादपीति** । वणिजोऽपीत्यर्थः ।

प— अध्यायार्थोक्तिः पराभिमतार्थव्युदासायापीति भावेन यथाश्रुतपरभाष्यमनूद्य निराह **मायावादीत्वित्यादिना** ॥ **नामरूपविकारेति** । शब्दार्थलक्षणकार्योपाधिविशिष्टमित्यर्थः । "तद्विपरीतं च" इत्यस्य व्याख्या 'सर्वोपाधिविवर्जितम्' इति । आद्येऽर्थे मानं "यत्र हि द्वैतम्"इति । " यत्र हि

द्वैतमिव भवति तत्रेतर इतरं पश्यति' इत्यादि । सर्वाणीति तु निरुपधिकब्रह्माणि ॥ **अविद्याविद्याविषयेति** । अविद्यापदेन तत्कार्यभ्रम उच्यते । भ्रमविषयप्रमाविषयभेदेनेत्यर्थः । 'द्वैतमिव' इतिवाक्ये भ्रान्तिद्योतकेव शब्दस्य सर्वाणीतिवाक्ये तमेवं विद्वानितितच्छब्दस्य श्रवणादिति भावः । तथा च सत्यभूतं ब्रह्म निरुपाधिकमेवेति नाद्वैतभङ्ग इति भावः । ननु निरुपाधिकब्रह्मज्ञानादेव मुक्तिसिद्धौ अविद्याविषयब्रह्म किमर्थमपेक्ष्यत इत्यत आह **तत्रेति** । आदिपदेन ज्ञातृज्ञेयगुरुशिष्यादिलक्षणो ग्राह्यः ॥ **क्रमेति** । अर्चिरादिक्रमेत्यर्थः ॥ **उपाधिभेदं** । उपाधिकृतभेदोपेतम् । ननु यद्येकरूपं ब्रह्म तर्हि 'यः सर्वज्ञः अपहतपाप्मा, निरनिष्ट' इत्यादि वैचित्र्यं वेदवाक्येषु कथमिति पृच्छति **किंत्विति** । गुणदोषविधिनिषेधपरत्वेन परिहरति **कानिचिदिति** ॥ **प्राकृतभौतिकेति** ।'' अशरीरः प्रज्ञात्मेति, 'अस्थूलमनण्वि'त्यादीनीत्यर्थः ॥ **वाङ्मनसेति** । 'यतो वाचो निवर्तन्त' इत्यादीनीति भावः ॥ **अद्वितीयत्वेनेति** । ''एकमेवाद्वितीयमि''त्यादीनीति भावः ॥ **सर्वात्मकत्वेनेति** ।'सर्वं खल्विदं ब्रह्म' 'पुरुष वेदं सर्वम्' इत्यादीनीति भावः ॥ **मोक्षशास्त्र इति** । निरुपाधिकज्ञानाय सोपाधिकनिरूपणमुपयुज्यत इत्युक्तमिति चेन्न । तयोर्विरोधेन सोपाधिकनिरूपणस्य तत्रोपायत्वासंभवात् । अन्यफलार्थं तत्तन्निरूपणे च मोक्षशास्त्रत्वव्याघातादिति भावः ॥ **उपयुज्यत इति** । तदुपयोगाभावादिश्चन्द्रिकायां व्यक्तः । आभाणकं लौकिकगाथा । **सार्थादिति** । समूहादित्यर्थः । आदित्यादिवारविशेषे क्वचित्स्थलविशेषे विक्रियार्थं वणिग्भिरागन्तव्यमितिक्लृप्तसङ्केतस्थले मिलितवणिजां यः समूहः सोऽत्र सार्थपदेन गृह्यते । तस्मादपीत्यर्थः ॥

या०—**आक्षिप्येति** । ब्रह्म जिज्ञासितव्यमिति प्रतिज्ञातम् । तच्च शास्त्रैकसमधिगम्यम् । शास्त्रं च सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिस्थितिप्रलयकारणे ब्रह्मण्येव प्रमाणं न प्रधानादाविति न्यायतो व्युत्पादितम् । न चास्ति कश्चिद्वेदान्तभागो यस्तद्विपरीतमपि बोधयेदिति च गतिसामान्यादित्युक्तम् । तत्किमपरमवशिष्यते । यदर्थमुत्तरसूत्रसन्दर्भस्यावतारः स्यात्' इत्याक्षिप्येत्यर्थः ॥ **द्विरूपं हीति** । यद्यपि तत्त्वतो निरस्तसमस्तोपाधिरूपं ब्रह्मैव जिज्ञास्यमिति तदेव वक्तव्यं नान्यत् । तथाऽपि न तेन रूपेण प्रथममुद्देष्टुं शक्यमित्युपहितेन रूपेणोपदेष्टव्यमित्युपाधिरपि क्वचिदुच्यत इति भावः। नन्वेवं ब्रह्मणो द्विरूपत्वेएकमेवेत्यादिश्रुतिविरोध इत्यत आह **अविद्याविद्याविषयभेदेनेति** । अत्राविद्यापदेन विद्याविरुद्धं मिथ्याज्ञानं विवक्षितम् । विद्यापदेन च तत्त्वज्ञानम् । तथाच तत्त्वज्ञानविषयीभूतं निरुपाधिकं रूपमेकमेव पारमार्थिकम् । सोपाधिकं तु कल्पितं भ्रमेऽवभासतेऽतो न विरोध इति भावः । नन्वेवमुपाधिभेदं ब्रह्मोपास्यत्वेनेत्यादिवक्ष्यमाणमयुक्तम् । तत्त्वतश्चैतन्यस्यैकत्वे उपास्योपासकभावस्य ज्ञातृज्ञेयभावस्य चायोगादित्यत आह ॥ **तत्राविद्याऽवस्थायामिति** । आदिपदेन ज्ञातृज्ञेयलक्षणादिर्ग्राह्या । ननु सोपाधिकोपास्तीनामपि यदि मोक्षफलकत्वं

तदा किं निरुपाधिकज्ञानेनेत्याशङ्कानिरासाय सोपाधिकोपास्तीनां फलान्तराण्याह **तत्र कानिचिदित्यादिना**। अभ्युदयार्थानि प्रतीकोपासनानि। क्रममुक्त्यर्थानि दहरादीनि। कर्मसमृद्ध्यर्थानि उद्गीथादीनि। एवमपेक्षितमुक्त्वा, ननु निरुपाधिकं ब्रह्मस्वरूपं प्रथमतो न ज्ञातुं शक्यं चेत्तर्हि तज्ज्ञापनाय केनचिदेकेनोपाधिना विशिष्टं ब्रह्मोपदेष्टव्यं नानोपाधिविशिष्टं ब्रह्म वेदान्तेषु किमर्थमुच्यते, किञ्च निरुपाधिकवत्सोपधिकस्यापि ज्ञेयत्वे सत्यत्वमेव स्यादित्याशङ्काद्वयं परिहरन्निदानीमुक्ताक्षेपे समाधानमाह **एवमपेक्षितोपाधिभेदमित्यादिना**। अपेक्षितफलसाधनीभूतनानागुणविशिष्टमित्यर्थः। ततश्च सत्यं निरुपाधिकब्रह्मज्ञापनाय केनचिदेकेनोपाधिना विशिष्टं ब्रह्मोपदेष्टव्यमिति। तथाऽप्यधिकारिणोऽविद्यावस्थायामन्यफलापेक्षाया अपि सत्त्वात्। तत्तत्फलसाधनीभूतगुणलक्षणोपाधिविशिष्टोपास्तयोऽनेकरूपा अपि कथ्यन्ते। तं यथा यथोपासते तदेव भवतीति श्रुतेरित्याद्याशङ्कापरिहारः। न निरुपाधिकमपि ज्ञेयतयोपदिश्यते। येन तस्य सत्यताप्रसङ्गः। किन्तूपास्यतयैव। उपासना चाऽविद्यमानेऽपि भवतीति नोक्तदोष इति द्वितीयशङ्कापरिहारश्चात्रोक्त इति ज्ञातव्यम्॥ **मोक्षशास्त्र इति**। निरुपाधिकज्ञानाय सोपधिकनिरूपणमुपयुज्यत इत्युक्तमिति चेन्न। तयोर्विरोधेन सोपाधिकनिरूपणस्य तत्रोपायत्वासम्भवात्। अन्यफलार्थं तन्निरूपणे च मोक्षशास्त्रत्वव्याघातादिति भावः॥ **सार्थादपीति**। वणिजोऽपीत्यर्थः॥

**श्री०**— सर्वेष्वपि वेदवाक्येष्वेकमसङ्ख्येयगुणगणाकरत्वादिनैकैकस्मिन्वाक्ये प्रतिपाद्यत

---

इत्याशयेन शङ्कते **किं स्विति**। नेत्याह **कानिचिदिति**।

**च०**— **आक्षिप्येति**। ब्रह्म जिज्ञासितव्यमितिप्रतिज्ञातं तच्च शास्त्रैकसमधिगम्यं शास्त्रं च सर्वज्ञे सर्वशक्तौ जगदुत्पत्तिस्थितिप्रलयकारणे ब्रह्मण्येव प्रमाणं न प्रधानादाविति न्यायतो व्युत्पादितम्। न चास्ति कश्चिद्वेदान्तभागो यस्तद्विपरीतमपि बोधयेदिति गतिसामान्यादित्युक्तं तत्किमपरमवशिष्यते यदर्थमुत्तरसूत्रसन्दर्भावतारः स्यादित्याक्षिप्येत्यर्थः। वर्तिष्यमाणयोगानां वृत्तयोगाप्रतिपादितार्थप्रतिपादकतां घटयितुं वेदान्तवाक्येषु प्रतीयमानार्थं समस्यति **द्विरूपं हीति**। विगलितनिखिलोपाधिकब्रह्मण एव जिज्ञास्यतया तस्यैवाभिधातव्यत्वेपि 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः' इत्यनुपहितस्य प्रथमं दुरुपदेशतयोपहितरूपस्यैवोपदेशानर्हतयोपाधिः क्वचिदभिधीयत इति भावः। तत्रोपहितप्रतिपादकवाक्यमुदाहरति **यत्र हीति**। यस्यामविद्यादशायां द्वैतं द्वयोर्भावो द्विता, तस्या इदं द्वैतम्: द्वितीयं सदिवाभाति तत्रेतर इतरं पश्यतीति दर्शनकर्तृभावावच्छिन्नं वस्तु वदतीत्यर्थः। तादृशं वाक्यान्तरं चोदाहरति **सर्वाणीति**। निखिलनामरूपात्मकप्रपञ्चं निर्माय अभिवदनं कुर्वाणो य आस्ते तं विद्वानमृतो भवतीत्यर्थः। **द्विरूपं हि ब्रह्मेति** प्रतिज्ञाऽनुरोधादुपहितप्रतिपादकवाक्यवदनुपहितप्रतिपादकवाक्यानामपव्य. स्य. श्रो ।-

ह्वतानामुदाहार्यतया तादृशानियत्र त्वस्य 'सर्वमात्मैवाभूत्। यत्र नान्यत्पश्यति' इत्यादीन्यप्युदाहार्याणि। कण्ठतस्तदनुदाहरणबीजं तु तादृशवाक्यानामप्युपहितपरत्वस्यैव समर्थिततया तत्रानुपहितपरत्वाभिमतिमात्रमन्यदीयमिति ध्वनयितुम्। आद्येऽर्थे मानं यत्र हि द्वैतमिव भवतीति। सर्वांगीति तु निरुपाधिकब्रह्मणीत्यपि स्थितम्। ब्रह्मणो द्विरूपतायामेकमेवेत्यादिश्रुतिविरोध इत्यत आह **अविद्याविद्याविषयभेदेनेति**। तत्वज्ञानरूपविद्याविरुद्धमिथ्याज्ञानविषयीभूतं कल्पितम्। तत्त्वज्ञानविषयीभूतं निरुपाधिकं तु रूपमेकमेव वास्तवमतो न विरोध इति भावः। ननु चैतन्यैक्यस्यैव वास्तवत्वेनोपास्योपासकभावः ज्ञातृज्ञेयभावश्च कथं सङ्घटनीय इत्यत आह **तत्रेति**। आदिपदं ज्ञातृज्ञेयभावसंग्राहकम्। उपहितगोचरोपासनानां मोक्षफलकत्वोपगमेऽनुपहितोपरक्तज्ञानानर्थक्यापत्त्या तासां फलान्तरौपयिकतामाह **तत्र कानिचिदित्यादिना**। प्रतीकोपासनान्यभ्युदयार्थानि दहरादीनि क्रममुक्त्यर्थानि उद्गीथादीनि कर्मसमृद्ध्यर्थानि। एवं उपहितानुपहितभेदेन रूपद्वैविध्ये सति। **अपेक्षितोपाधिभेदमिति**। ईप्सितानेकफलौपयिकानेकगुणविशेषितमित्यर्थः। तेनैकगुणोपरागेणोपासनस्यानुपहितप्रतिपत्त्यौपयिकत्वेपि फलान्तरानौपयिकतया तत्तत्फलसाधनीभूतनानागुणरूपोपाधिविशेषितोपासनानां सङ्कीर्तनम्। एवमुपहितस्योपास्यतायामपि ज्ञेयताराहित्येन व्यधिकरणप्रकारेणाप्युपासनोपपत्त्या न ज्ञेयभूतनिरुपाधिकवत्पारमार्थ्यप्रसङ्ग इति भावः। **मोक्षशास्त्र इति**। मोक्षसाधनीभूतानुपहितगोचरज्ञानं प्रति तदुपाध्यवच्छिन्नावगाहिज्ञानस्य विरोधित्वेन तदनौपयिकतया फलान्तरप्रेप्सया तन्निरूपणस्य च मोक्षशास्त्रत्वविघटकत्वादिति भावः। सार्थात् धनसहितात् वणिजः।

**सु०— नन्वेवमध्यायस्य समन्वयप्रतिपादनलक्षणैकार्थत्वेनैकवाक्यत्वे सति पादभेदः किंनिबन्धनः। अवान्तरार्थोपाधिभेदादिति भावेनाह तत्रेति।**

**अनु०—** तत्रान्यत्रप्रसिद्धानां विष्णावेव समन्वयम्।
शब्दानां प्रथमे पादे

**चतुर्विधा (हि) वैदिकाः शब्दाः। केचिद्ब्रह्मण्येवप्रसिद्धाः, अन्येऽन्यत्रप्रसिद्धाः, केचिदुभयत्रप्रसिद्धाः, अपरे त्वन्यत्रैवप्रसिद्धा इति। सर्वेऽपि प्रत्येकं नामलिङ्गात्मकतया। द्विविधाः। साक्षाद्धर्मिवाचिनो नामात्मकाः। धर्मद्वारा धर्मिणि वर्तमाना लिङ्गात्मकाः। तेषु ब्रह्मणिप्रसिद्धानां समन्वयो न वक्तव्यः। विवादाभावात्। तत्रैव च मीमांसाऽवतारात्। तत्र वक्तव्यसमन्वयेषु त्रिविधेषु शब्देष्वन्यत्रप्रसिद्धानां नामात्मकानां शब्दानां विष्णावेव समन्वयम्। तत्र प्रथमेऽध्याये प्रथमे पादे वदत्यजः। अन्येषामन्येष्विति तत्र तत्र वक्ष्यति। क्रमनि-**

यमे तु हेतुरुपरिष्टाद्वक्ष्यते ॥ प्रथमे स्पष्टब्रह्मलिङ्गानां द्वितीयतृतीययोरस्पष्टब्रह्मलिङ्गानां समन्वयः । चतुर्थे प्रधानस्य शाब्दत्वनिराकरणमित्ययुक्तम् । द्वितीयतृतीयपादोदाहरणवाक्यानामपि बहुलं स्पष्टब्रह्मलिङ्गत्वात् । द्वितीयतृतीययोर्भेदाभावप्रसङ्गाच्च । सगुणनिर्गुणप्राचुर्येण तद्भेद इति कश्चित् । तन्न । निराकृतत्वात् । प्रधानशाब्दत्वनिरासस्येक्षत्यधिकरणानन्तर्यं विहाय विक्षेपे कारणाभावाच्च ।

शे०—निर्धार्यमाणशब्दाभावात्तत्रेति निर्धारणानुपपत्तिः । व्यावर्त्याभावादन्यत्रप्रसिद्धिविशेषणवैयर्थ्यं च । एकोपाधिकथनेऽपि पादचतुष्टयत्वानिर्वाहश्चेत्यत आह चतुर्विधा इति ॥ वैदिका इति । उपक्रमादितात्पर्यलिङ्गप्रमाणकस्य मुख्यवृत्त्या प्रतिपाद्यप्रतिपादकत्वलक्षणसमन्वयस्य वैदिकशब्देष्वेव सम्भवाद्वैदिकत्वेन शब्दो विशेषित इति बोध्यम् ॥ ब्रह्मण्येव प्रसिद्धा इति । उभयत्रप्रसिद्धेष्वन्तर्भावं वारयितुमत्रावधारणमिति ध्येयम् । यद्यप्यत्र ब्रह्मण्येव प्रसिद्धत्वत् ब्रह्मणि प्रसिद्धशब्दानामपि सत्त्वात्पाञ्चविध्यमेव सम्भवति । न च ब्रह्मणीत्यनेन ब्रह्मण्येवेति विवक्षणीयम् अन्यथा ब्रह्मण्यपीति पक्षापत्त्योभयत्र प्रसिद्धेष्वभावः स्यात्कथं ब्रह्मणि प्रसिद्धानां पार्थक्यमिति वाच्यम् । लोकतो ब्रह्मण्येवप्रसिद्धा ब्रह्मणिप्रसिद्धाः श्रुतिलिङ्गादिभिर्ब्रह्मण्येवप्रसिद्धास्तु ब्रह्मण्येवप्रसिद्धा इति भेदसम्भवात् । तथाऽपि ब्रह्मणिप्रसिद्धानां ब्रह्मण्येवप्रसिद्धानां च व्युत्पाद्यसमन्वयत्वेनाभेदविवक्षया चातुर्विध्याभिधानमिति ध्येयम् ।

अन्यत्र प्रसिद्धा इति । नन्वन्यत्रेत्यनेनान्यत्रैवेत्येव विवक्षणीयम् । अन्यथाऽन्यत्रापीति पक्षापत्त्योभयत्रप्रसिद्धेष्वन्तर्भावापातात् । न च लोकतोऽन्यत्रैवप्रसिद्धा अन्यत्रप्रसिद्धाः श्रुत्यादिभिरन्यत्रैव प्रसिद्धास्त्वन्यत्रैवप्रसिद्धा अत एव प्रत्यधिकरणं लोकतोऽन्यत्रप्रसिद्धानामिति टीका चतुर्थपादे च श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धानामिति भाष्यमिति वाच्यम् । अन्यत्रप्रसिद्धत्वेनाभिमतस्यानन्दमयनाम्नोऽन्यस्मिन्नर्थविशेषे, सर्वगतत्वान्तर्यामित्वादिलिङ्गात्मकशब्दजातस्यान्यत्रादित्यादौ इन्द्राकाशादिशब्दानामिन्द्रादाविव, लोकतोऽप्रसिद्ध्या अन्यत्रप्रसिद्धत्वाभावापातात् । अन्यत्रैवप्रसिद्धाव्यक्तप्रकृत्यादिशब्देष्वपि लोकतोऽन्यत्रप्रसिद्धेः सत्त्वादन्यत्रप्रसिद्धेन्द्राकाशादिशब्देषु च श्रुत्यादिनाऽप्यन्यत्रप्रसिद्धेः सत्त्वात्साङ्कर्यं स्यात् । न च श्रुत्यादिमात्रेणान्यत्रैव प्रसिद्धा अन्यत्रप्रसिद्धाः, प्रबलश्रुत्यादिभिरन्यत्रैव प्रसिद्धा अन्यत्रैवप्रसिद्धा इति भेदः । अव्यक्तादिशब्दानामन्यत्रप्रसिद्धिसाधकावरत्वादीनामिव गुहाप्रविष्टत्वादेरन्यत्रप्रसिद्धिसाधकद्वित्वादीनामप्येकस्मिन् ब्रह्मण्यसम्भवेन बलवत्त्वात् । तस्मान्नान्यत्रप्रसिद्धानामन्यत्रैव प्रसिद्धेभ्यो भेदः । न चाप्युभयत्रप्रसिद्धानामन्यत्रप्रसिद्धादिभ्यो भेदः सम्भवति । द्युभ्वाद्यायतनत्वादीनां प्रकृत्यादौ लोकतोऽप्राप्त्या लोकत उभयत्रप्रसिद्धेरसम्भवात् । नापि श्रुत्यादितः । आनन्दमयादि

शब्देष्वपि पूर्वोत्तरपक्षश्रुत्यादिनोभयत्रप्रसिद्धेर्वक्तुं शक्यत्वात् । तत्कथमयं विभाग इति चेन्न । येषां शब्दानां वस्त्वन्तरे लोकप्रसिद्ध्यादेः सत्त्वात्तद्विरोधेन क्वापि ब्रह्मणि वृत्त्यादिकं पूर्वपक्षिणो न सम्मतमत एव येषां विषयवाक्ये आपाततोऽन्यमात्रोपस्थापकत्वमत एव च येषां समन्वयस्यान्योपस्थितिब्रह्मोपस्थि- तिभ्यामेवातिप्रतिबन्धस्तेऽन्यत्रप्रसिद्धाः । अत्र च हेतुरूपफलमुखस्य लक्षणत्रयस्य विवक्षितत्वान्न विशेषणवैय्यर्थ्यम् । एवं येषां लोके ब्रह्मणीवान्यत्राप्रयोगाद्व्यक्तिविशेषनिर्धारणाय श्रुत्यन्तरान्वेषणे श्रुत्यन्तरेऽन्यत्रेव ब्रह्मण्यपि प्रयोगात् श्रुत्यन्तरसाधारण्यं प्रवृत्तिनिमित्तादिसाधारण्यं वा पूर्वपक्षिणोऽपि सम्मतमत एव येषां विषयवाक्ये आपाततोऽन्योपस्थापनसमये तत्तुल्यतया ब्रह्मोपस्थापकत्वम् अत एव च येषां समन्वयस्यान्योपस्थितिमात्रेण प्रतिबन्धस्त उभयत्रप्रसिद्धाः । अत्रापि पूर्ववल्लक्षणत्रयविवक्षा द्रष्टव्या । येषां तु पुनर्वस्त्वन्तरे लोकप्रसिद्धिस्तत्परत्वे प्रबलश्रुत्यादिकमप्यस्त्यत एव येषां विषयवाक्ये आपाततोऽत्यन्तमन्यमात्रोपस्थापकत्वम् अत एव च येषां समन्वयस्यान्योपस्थितिब्रह्मानुपस्थितिभ्यां ब्रह्मपरत्वस्यात्यशक्यकल्पनत्वशङ्कया चातितरां प्रतिबन्धस्तेऽन्यत्रैवप्रसिद्धाः । अत्रापि लक्षणत्रयविवक्षा द्रष्टव्या । तथा हि । अन्यत्रप्रसिद्धानामिन्द्रादिशब्दानां लोकतः सर्वगतत्वादीनां च लोकतोऽन्यत्र- प्रसिद्धादित्यश्रुत्यादिसाहचर्येणान्यत्रप्रसिद्धिर्न तूभयत्रप्रसिद्धानामिव ब्रह्मसाधारणश्रुत्यन्तरादिनाऽन्यत्र- प्रसिद्धिरिति युक्त एवान्यत्रप्रसिद्धानामुभयत्रप्रसिद्धेभ्यो भेदः । उभयत्रप्रसिद्धानां द्युभ्वाद्यायतनत्वा- दीनां 'रुद्रो वा व लोकाधारः विष्णावेवोताश्च प्रोताश्चे'त्यादिश्रुत्यन्तरसाधारण्येन, अक्षरादिशब्दानां प्रवृत्तिनिमित्तसाधारण्येन, सदादिशब्दानां विषयवाक्यस्थकारणत्वादिधर्मसाधारण्येन, आकाशादिशब्दानां प्रयोगसाधारण्येन, उभयत्रप्रसिद्धिर्न तु पूर्वपक्षसिद्धान्तन्यायाभ्यां, येनान्यत्रप्रसिद्धसाङ्कर्यं स्यात् । श्रुत्यादिसाधारण्येनान्यत्रप्रसिद्धत्वस्यान्यत्रप्रसिद्धेष्वन्यत्रैवप्रसिद्धेषु सत्त्वेऽपि श्रुत्यादेः प्राबल्यदौर्बल्याभ्यां तद्भेदसिद्धिः । न च प्रागुक्तदोषः । ब्रह्मपरत्वे बहुविप्लवापत्तिरूपतर्कानुगृहीतत्वं श्रुत्यादेः प्राबल्यम् । तच्च चतुर्थपादीयटीकोक्तरीत्याऽव्यक्तादिशब्दानामेवास्तीति युक्त एवान्यत्रप्रसिद्धेन्द्रादिशब्दानामन्यत्रैव- प्रसिद्धाव्यक्तादिशब्देभ्यो भेद इति सङ्क्षेपः । विस्तरस्तु चन्द्रिकायां द्रष्टव्यः ।

ननु तत्रप्रसिद्धानामव्युत्पाद्यसमन्वयत्वस्य वक्ष्यमाणत्वात्समन्वेतव्याः शब्दास्त्रिविधा एवेति ताव- न्निष्टङ्कितम् । तथा च त्रिविधानां शब्दानां पादत्रयेणैव समन्वयप्रतिपादनसिद्धेरेकस्य वैय्यर्थ्यमित्यत आह **सर्वेऽपीति** । यद्यपि सर्वेषामपि नामलिङ्गात्मकत्वकथनं न प्रकृते उपयुक्तम् । एकत्र नामलिङ्गभेदकथनेना- प्युक्तशङ्कापरिहारात् । तथाऽपि वस्तुस्थितिकथनमेवैतदिति ध्येयम् । यद्वा उक्तशङ्कापरिहाराय क्वचिन्नाम- लिङ्गभेदाश्रयणे प्राप्ते विनिगमनाविरहेणान्यत्रप्रसिद्धेष्वेव वोभयत्रप्रसिद्धेष्वेव वाऽन्यत्रैवप्रसिद्धेष्वेव वा तद्भेदाश्रयणानुपपत्तेः सर्वेषां नामलिङ्गभेदेन द्वैविध्योक्तिरिति ज्ञेयम् । ननु कथं नामलिङ्गभेदः ।

न च रूढत्वयौगिकत्वाभ्यामिति वाच्यम् । सर्वेषामपि ब्रह्मणि महायोगाङ्गीकारात् । न चापातप्रतीत्या रूढता। अन्नमयादिषु तदसम्भवात्। न च योगरूढियुक्तानि नामानि केवलयौगिकानि तु लिङ्गानीति भेदः। सर्वेषामपि ब्रह्मणि विद्वद्रूढेरित्यत आह साक्षादिति । आपाततो निरूढा इत्यर्थः । सर्वेषां नाम्नां ब्रह्मणि महायोगाङ्गीकारेण निरूढत्वाभावेऽप्यापाततो निरूढत्वान्नासम्भव इत्याशयेनापातत इत्युक्तम् ॥ धर्मेति । आपाततो रूढिरहिता इत्यर्थः । ततश्च लिङ्गात्मकत्वेनाभिमतानां ब्रह्मणि विद्वद्रूढत्वेन केवलयौगिकत्वाभावेऽप्यापाततो रूढिरहितत्वान्नासम्भव इति द्रष्टव्यम्। ननु चतुर्विधशब्दसमन्वयप्रतिपादकतया पादचतुष्टयनिर्वाहात्किं नामलिङ्गात्मकत्वेन द्वैविध्यकल्पनयेत्यत आह तेष्विति । अतो नामलिङ्गभेदाश्रयणमावश्यकमिति भावः ॥ तत्रैवेति । विवादविषय एवेत्यर्थः । अन्यथा 'नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्ततेऽपि तु सन्दिग्धेऽर्थे' इति न्यायविरोधप्रसङ्गादिति भावः । शब्दचातुर्विध्यव्युत्पादनस्य मूलोक्तनिर्धारणोपयोगं दर्शयंस्तत्रेत्यस्यावृत्तिं चाभिप्रेत्य मूलं योजयति तत्रेत्यादि। अत्र भाष्ये नामत्वानुक्तावप्युत्तरपादीयानुव्याख्याने समन्वेतव्यानां लिङ्गात्मकानामिति लिङ्गत्वाभिधानेनैवेतरपादे समन्वेतव्यानां नामत्वसिद्धेर्न पृथक तदभिधानमावश्यकमित्याशयेन सिद्धार्थकथनं नामात्मकानामिति॥ अन्येषामिति। अन्यत्रप्रसिद्धलिङ्गात्मकोभयत्रप्रसिद्धनामलिङ्गात्मकान्यत्रैवप्रसिद्धनामलिङ्गात्मकानामित्यर्थः ॥ तत्र तत्रेति । तेषु तेषु पादेष्वित्यर्थः ॥ वक्ष्यतीति।'लिङ्गात्मकानां शब्दानां वृत्तिर्नारायणे परे' 'तत्रान्यत्रप्रसिद्धानां लिङ्गनाम्नां

पुनर्हरिः' इत्यादिनेति शेषः । न चैवमन्यत्र प्रसिद्धेष्विवोभयत्र प्रसिद्धादावपि नामलिङ्गभेदाश्रयणेन पादभेद आश्रयणीयः स्यात् । अन्यथाऽन्यत्रप्रसिद्धेष्वेपि तदाश्रणमनर्थकमिति वाच्यम् । अध्याये पादचतुष्टयादिनियमसंरक्षणायान्यत्रप्रसिद्धेषु तद्विभागाश्रयणस्योभयत्रप्रसिद्धेषु तदनाश्रयणस्य चोपपन्नत्वात् । अन्यथा त्रिपादीत्वषट्पादीत्वप्रसङ्गेन प्रमितस्य पादचतुष्टयत्वस्य पादाष्टकत्वस्य वा हानिप्रसङ्गात् । यद्वा । नाम्नां प्राधान्याल्लिङ्गानां च द्वितीये समन्वयोक्त्या बुद्धिस्थत्वादुभयानुस्मरणाय तत्र भेदो नाश्रितः । वस्तुतस्त्वापातसिद्धं नामलिङ्गयोर्भेदमाश्रित्याद्यद्वितीययोर्भेदः कृतः । इदानीं त्वापातप्रसिद्धितिरस्कारेण तत्रोक्तमहायोगविद्वद्रूढिभ्यामेकीकृतत्वान्न भिन्नपादनिवेशार्हतेति दर्शयितुं न तत्र भेद आश्रित इत्यवधेयम्। ननु महामल्लभङ्गन्यायेनातिप्रयत्नसाध्यस्य प्राथम्ये ह्यन्यत्रैव प्रसिद्धानां शब्दानां प्राथम्यं स्यात्। सोपानारोहणन्यायेनानतिप्रयत्नसाध्यस्य प्राथम्ये तूभयत्र प्रसिद्धानां प्राथम्यं स्यादित्यन्यत्र प्रसिद्धानां पूर्वं समन्वयः, तत्रापि नाम्नां पूर्वमनन्तरं लिङ्गानां तदनन्तरमुभयत्रप्रसिद्धानामन्ते अन्यत्रैवप्रसिद्धानामिति क्रमस्य सर्वथाऽनुपपत्तिरित्यत आह क्रमनियम इति ॥ उपरिष्टादिति। तृतीयस्य तृतीय इत्यर्थः ॥ वक्ष्यत इति । 'तत्र प्रथमतोऽन्यत्र प्रसिद्धानां समन्वयः । शब्दानां वाच्य एवात्र महामल्लेशभङ्गवत् । इतोऽत्यभ्यधिकत्वेऽपि तुर्यपादोदितस्य तु । महासमन्वये तस्मिन्नाधिकारोऽखिलस्य हि । दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोऽञ्जसा'

इत्यादिनेति शेषः । पादत्रयप्रतिपाद्यशब्दानां चतुर्थपादव्युत्पाद्यशब्दानां मध्ये च सोपानारोहणन्याये-नानतिप्रयत्नसाध्यस्य, पादत्रयव्युत्पाद्यशब्दमध्ये महामल्लभङ्गन्यायेनातिप्रयत्नसाध्यस्य, प्राथम्यविवक्षणा-द्युक्तः पादक्रम इत्याशयः ।

ननु परोक्तपादार्थानामभिमतत्वे पृथक् तदभिधानवैयर्थ्यप्रसङ्गादनभिमतत्वमेव वाच्यम् । तथा चानभिमतपादार्थादूषणान्न्यूनत्वमित्यतो 'नान्यथा तददृष्टेः' इति भाष्य एव तद्दूषणादत्रादूषणं न दोषायेत्याशयेन भाष्येण तन्निरासलाभमुपवर्णयितुं तदनुवदति **प्रथम इत्यादिना** । तददृष्टेरिति भाष्यं हेतुतया योजयति **द्वितीयतृतीयेति** । यथा 'अन्तस्तद्धर्मोपदेशा'दित्यस्य विषयवाक्ये 'सैवर्क् तत्साम तदुक्थं तद्यजुः' इति सर्वात्मकत्वं, 'सर्वेभ्यः पाप्मभ्य उदित' इति सर्वपापराहित्यं च ब्रह्मलिङ्गम् स्पष्टमस्ति । तथा द्वितीये 'सर्वत्रे'त्यत्र 'सर्वं खल्विदं ब्रह्मे'ति जीवेष्वसंभावितस्य सार्वात्म्यादे'रत्ते'त्यत्रा-'न्यत्र धर्मादन्यत्राधर्मादि'ति पुण्यपापराहित्यादे''रन्तर' इत्यत्रैत'दमृतमभयमेतद्ब्रह्म' इत्यमृतत्वादे-'रन्तर्यामीत्य''त्रैष ते आत्माऽन्तर्याम्यमृतः' इत्यमृतत्वादे'रदृश्यत्वादी'त्यादौ 'यः सर्वज्ञ' इति सार्वज्ञा-देर्ब्रह्मलिङ्गस्य स्पष्टत्वात्तृतीयेऽपि 'द्युभ्वादीत्यत्र 'अमृतस्यैष सेतुरि'त्यमृतसेतुत्वादेः 'भूमे'त्यत्र 'यत्र नान्य-त्पश्यती'त्यद्वितीयत्वादे'रक्षरमि'त्यत्रा'दृष्टं द्रष्टृ'त्याद्यस्थूलानणुत्वादेः 'ईक्षतिकर्मे'त्यादौ परात्परमिति परात्परत्वादेर्ब्रह्मलिङ्गस्य स्पष्टत्वात्तदुदाहरणवाक्यानामपि स्पष्टब्रह्मलिङ्गत्वादित्यर्थः ॥ **भेदभावप्रसङ्गाच्चेति** । उभयत्राप्यस्पष्टब्रह्मलिङ्गानामेवोदाहरणत्वेनाथैकत्वादित्यर्थः । **सगुणनिर्गुणेति** । द्वितीये सविशेषं तृतीये निर्विशेषं प्रतिपाद्यमतस्तयोर्भेद इति कल्पतरुकार आहेत्यर्थः । द्वितीये 'सर्वत्रे'त्यत्र 'सर्वं खल्विदं ब्रह्म' इत्यविद्यादिसर्वग्रामाधिष्ठातृत्वरूपसार्वात्म्यादेः सविशेषेऽनुपपत्त्या निर्विशेषस्य, तृतीये द्युभ्वाद्यत्र 'तमेवैकं जानथ' 'यदा पश्यः पश्यते रुक्मवर्ण'मिति दृश्यत्वरूपित्वादेर्निर्विशेषेऽनुपपत्त्या सविशेषस्य प्रतिपादनात्कथं सविशेषनिर्विशेषविषयतया भेद इत्यतः प्राचुर्येण द्वितीये सविशेषस्य तृतीये च निर्विशेषस्य प्रतिपादना-त्प्राचुर्येण योऽर्थः प्रतिपाद्यते तस्यैव तदर्थतायाः क्लृप्तत्वाद्युक्तः पादभेद इति भावेनोक्तम् **प्राचुर्येणेति** । **निराकृतत्वादिति** । 'सर्वत्रेत्य'त्रेवात्तेत्यत्रापि 'भूताच्च भव्याच्च महतो महीयानि'ति कालत्रयातीतत्वादे-'रन्तर'इत्यत्र 'कं ब्रह्म खं ब्रह्मे'ति पूर्णसुखत्वादे'रन्तर्यामी'त्य'त्रैषत आत्मे'ति जीवतादात्म्यादेरदृश्यत्वा-दीत्यादौ'यत्तदद्रेश्यमित्यदृश्यत्वादेः सविशेषेऽनुपपत्त्या निर्विशेषस्य, तृतीयेऽपि 'द्युभ्वादी'त्यत्रेव'भूमे'-त्यत्रै'वं पश्यन्ति'ति सप्रकारकज्ञानविषयत्वादे'रक्षरमि'त्यत्रा'दृष्टं द्रष्टृश्रुतं श्रोतृ'ति द्रष्टृत्वादे'रीक्षतिकर्मे'-त्यत्र पुरुषमीक्षत' इति 'दृश्यत्वादे'र्दहर इत्यादौ 'सत्यकामः सत्यसङ्कल्प' इति कामादेर्निर्विशेषेऽनुपपत्त्या सविशेषस्य प्रतिपादनेन, प्राचुर्येण सविशेषनिर्विशेषविषयतया तद्भेदस्य निराकृतत्वान्निराकृतप्रायत्वान्न तथा भेदो युक्त इति भावः । यद्वा । जन्माधिकरणेक्षत्यधिकरणयोः सविशेषातिरिक्तनिर्विशेषस्य वन्ध्यापुत्रोपमत्वप्रतिपादनेन सविशेषनिर्विशेषभेदस्य निरस्तकृतत्वान्न तन्निबन्धनः पादभेद इति भावः ।

स० — **साक्षाद्धर्मिवाचिन इति** । रूढा इत्यर्थः ॥ **धर्मद्वारेति** । अवयवार्थद्वारेत्यर्थः । यौगिका इति यावत् । यद्यपि सर्वेऽपि वैदिकाः शब्दाः यौगिका एवास्मन्मते तथाप्यज्ञप्रसिद्ध्यैतदुक्तमित्यवधेयम् ॥ **अन्यत्रप्रसिद्धानामिति** । लोकतोऽन्यत्रप्रसिद्धानामित्यर्थः । चतुर्थपादे तु श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धशब्दसमन्वयः । तेनात्र पादे समन्वेतव्यशब्दानां यद्यन्यत्रापि प्रसिद्धिरभिप्रेता तर्हि तृतीयपादसाङ्कर्यं, यद्यन्यत्रैवेति तर्हि चतुर्थपादसाङ्कर्यं अन्यत्राप्यन्यत्रैवेत्येतद्विहायान्यत्रप्रसिद्धेर्निरूपयितुमशक्यत्वादितिचोद्यानवकाशः । शिष्टं चन्द्रिकायां द्रष्टव्यम् ॥ **उपरिष्टादिति** । तृतीयेऽध्याय इत्यर्थः । **द्वितीयतृतीयपादोदाहरणवाक्यानामिति** ॥ द्वितीये पादे 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्र 'सर्वं खल्विदं ब्रह्म' इति जीवेष्वयुक्तस्य सार्वात्म्यादेः 'अत्ताचराचर' इत्यत्रा'न्यत्रधर्मादि'तिपुण्यपापराहित्यादेः 'अन्तर इत्यत्र 'एतदमृतमभयमेतद्ब्रह्मे'ति अमृतत्वादे'रन्तर्यामी'त्यत्र 'एषत आत्माऽन्तर्याम्यमृतः' इत्यमृतत्वादेः अदृश्यत्वादिगुणकः इत्यादौ 'यः सर्वज्ञः'इति सार्वज्ञादेः ब्रह्मलिङ्गस्य स्पष्टत्वेन, तृतीयपादे च द्युभ्वादीत्यत्र 'अमृतस्यैष सेतुः' 'यः सर्वज्ञः' इति अमृतत्वसेतुत्वसार्वज्ञादेः भूमेत्यत्र यत्र 'नान्यत्पश्यती'त्यद्वितीयत्वादेः । 'अक्षरमम्बरे'त्यत्रा'दृष्टंद्रष्टृश्रुतं श्रोतृ अस्थूलमनण्वि'त्यदृश्यत्वास्थूलानणुत्वादेः । 'ईक्षतिकर्मे'त्यादौ 'परात्परमि'ति परात्परत्वादेर्ब्रह्मलिङ्गस्य स्पष्टतया तदुदाहरणवाक्यानामपि स्पष्टब्रह्मलिङ्गवत्वादित्यर्थः ।

प० — **वैदिका इति** । वेदगताः । संस्कृता इति यावत् । वेदगतानामेव लोकवेदाधिकरणन्यायेन लौकिकत्वात् । भाषाशब्द एव व्यावर्त्य इति भावः ॥ **साक्षादिति** । रूढयौगिकभेदेन तद्भेद इत्यर्थः । लिङ्गपादे वक्ष्यमाणदिशा आपातत इति योज्यम् । विवृतमेतच्चन्द्रिकायाम् ॥ **धर्मद्वारेति** । धर्मोपस्थितिद्वारैवेत्यर्थः ॥ **तत्रैवेति** । विवादस्थल एवेत्यर्थः । तत्रेति मूलानुवादः, वक्तव्येत्यादिव्याख्या । तत्रेत्यस्यावृत्तिमुपेत्यार्थमाह **तत्र प्रथमेऽध्याय इत्यादि** ॥ **उपरिष्टादिति** । उपासनापाद इत्यर्थः । मायावाद्युक्तपादोपाधीन्निराह **प्रथमे स्पष्टेत्यादि** । स्पष्टत्वं नाम वाक्यान्तरे ब्रह्मपरत्वेन निर्णीतत्वम् ॥ **बहुलं स्पष्टलिङ्गवत्त्वादिति** । तच्च चन्द्रिकायां विवृतम् ॥ **सगुणनिर्गुणेति** । द्वितीये सगुणं ब्रह्म तृतीये निर्गुणं ब्रह्मोच्यत इति पादयोर्भेद इत्यर्थः ॥ **निराकृतत्वादिति** । प्राचुर्येण 'मायावादि'इत्यादिग्रन्थेनेत्यर्थः ।

या० — **साक्षाद्धर्मीति** । आपाततो रूढा इत्यर्थः । न तु रूढा एवेति विवक्षितम् । योगरूढानामन्नमयादीनामसङ्ग्रहापत्तेः । आपातत इत्युक्त्या च सर्वेषामपि नाम्नां महायोगाङ्गीकारादसंभव इति शङ्काऽनवकाशः ॥ **धर्मद्वारेति** । धर्मोपस्थितिद्वारैवेत्यर्थः । तेन योगरूढेष्वन्नमयादिनामसु नातिव्याप्तिः । यत्त्वापाततो यौगिका एवेत्यत्र तात्पर्यमिति व्याख्यानम्, तच्चिन्त्यम् । यौगिकत्वस्यान्तर्यामीत्याद्येकप्रातिपदिकमात्ररूपलिङ्गात्मकशब्देषु सत्त्वेऽपि सर्वेषु भूतेष्वेतमिति यस्मिन्द्यौरित्याद्यनेकपदसम-

भिव्याहाररूपेषु लिङ्गात्मकेषु शब्देष्वभावात् । धर्मद्वारा धर्म्युपस्थापकत्वस्य च सर्वत्रापि सत्त्वात् । "एवमेवापातप्रतीत्यनुरोधेनेयमुक्तिः" इति लिङ्गपादीयसुधायाः "धर्मविशिष्टधर्मिवाचिनाम्" इति, तत्त्वप्रकाशिकायाश्च तात्पर्यं वर्णनीयम्; अतो न कोऽपि विरोध इति ॥ **अन्यत्रप्रसिद्धानामिति** । लोकतोऽन्यत्रैवप्रसिद्धानामित्यर्थः । चतुर्थपादे तु श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धानां समन्वयो वक्ष्यते । तेन प्रथमपादे समन्वेतव्यानां यद्यन्यत्रापि प्रसिद्धिरभिप्रेता, तर्हि तृतीयपादसाङ्कर्यं यद्यन्यत्रैव तर्हि चतुर्थपादसाङ्कर्यम् । अन्यत्राप्यन्यत्रैवेत्येतद्विहायान्यत्रप्रसिद्धेर्दुर्निरूपत्वादिति शङ्काऽनवकाशः । एतेषां शब्दानामसङ्कीर्णलक्षणादिकं चन्द्रिकायां द्रष्टव्यम् ॥ **उपरिष्टादिति** । उपासनापाद इत्यर्थः ॥ **द्वितीयतृतीयपादोदाहरणवाक्यानामिति** । द्वितीये "सर्वत्र प्रसिद्धोपदेशात्" इत्यत्र "सर्वं खल्विदं ब्रह्म" इति जीवेष्वयुक्तस्य सर्वात्मकत्वादेः "अत्ता चराचर" इत्यत्रान्यत्र धर्मादन्यत्राधर्मादिति पुण्यपापराहित्यादेः, "अन्तर" इत्य'त्रैतदमृतमभयमेतद्ब्रह्मे'त्यमृतत्वादेः "अन्तर्यामि" इत्यत्रै'ष त आत्मान्तर्याम्यमृतः' इत्यमृतत्वादेः, "अदृश्यत्वादिगुणक' इत्यादौ "यः सर्वज्ञ" इति सार्वज्ञादेः ब्रह्मलिङ्गस्य स्पष्टत्वेन, तृतीये च "द्युभ्वादि" इत्यत्र'मृतस्यैष सेतुः,' 'यः सर्वज्ञ' इत्यमृतत्वसेतुत्वसार्वज्ञादेः, " भूमेत्य"त्र "यत्र नान्यत्पश्य" तीत्यद्वितीयत्वादेः, 'अक्षरमम्बर" इत्यत्र'दृष्टं द्रष्टृ अश्रुतं श्रोतृ अस्थूलमनण्वित्यदृश्यत्वास्थूलत्वानणुत्वादेः, 'ईक्षतिकर्मे'त्यादौ परात्परमिति परात्परत्वादेः ब्रह्मलिङ्गस्य स्पष्टतया तदुदाहरणवाक्यानां स्पष्टब्रह्मलिङ्गवत्त्वादित्यर्थः ॥ **सगुणनिर्गुणेति** । द्वितीये सविशेषम्, तृतीये निर्विशेषम्, प्राचुर्येण प्रतिपाद्यम् । अतस्तयोर्भेद इति कल्पतरुकार आहेत्यर्थः । द्वितीयेऽपि 'सर्वत्रे'त्यत्र सर्वं खल्विदं ब्रह्मेत्यविद्यादिसर्वभ्रमाधिष्ठानत्वरूपसार्वात्म्यादेः सविशेषेऽनुपपत्त्या निर्विशेषस्य, तृतीयेऽपि 'द्युभ्वादी'त्यत्र 'तमेवैकं जानथ' 'यदा पश्यः पश्यते रुक्मवर्णमि'ति दृश्यत्वरूपित्वादेर्निर्विशेषेऽनुपपत्तेः सविशेषस्य प्रतिपादनात्प्राचुर्येणेत्युक्तमिति द्रष्टव्यम् ॥ **निराकृतत्वादिति** । सविशेषातिरिक्तनिर्विशेषस्याप्रामाणिकतयेक्षत्यधिकरणे निराकृतत्वान्न तन्निबन्धनः पादभेदः सम्भवतीति भावः । यत्तु यौगिकरूढविषयतया द्वितीयतृतीययोर्भेद इति तेनोक्तम्, तत्तृतीये द्युभ्वाद्यायतनत्वादेररूढत्वात्तुच्छमित्युपेक्षितम् ॥

**च०—चतुर्विधा इति** । स्त्रीप्रत्ययान्तोत्तरपदघटितोऽयं षष्ठ्यर्थे सप्तम्यर्थे वा बहुव्रीहिः । 'संख्याया विधार्थे धा' इति सूत्रव्याख्याऽवसरे विधाशब्दो यत्रार्थे प्रसिद्धस्तत्रैव यथा स्यात्तादृशश्चार्थः प्रकार एवेत्याकरोक्त्या विधाशब्दः प्रकारवचनः । स्वाश्रयनिरूपितवृत्तिताऽनवच्छेदकीभूतसमासघटकपूर्वपदार्थताऽवच्छेदकीभूतव्यासज्यवृत्तिधर्मावच्छिन्नानां तदुपलक्षितानां वा विधापदोपस्थाप्यप्रकारव्यक्तीनां चैत्रः श्यामो युवा लोहिताक्ष इत्यादाविवैकत्र द्वयमितिरीत्याऽन्वयबोधेऽपि तदुपलक्षिततत्तद्व्यक्तीनां श्वेतरक्तदण्डवद्भूतलमित्यादाविव शब्दपदोपस्थाप्यप्रातिस्विकव्यक्तिषु प्रत्येकमन्वयोपगमेन क्षत्यनवकाशादिति भावः । **वैदिका इति** ।

अध्यात्मादित्वाट्ठञ् । वेदगता इत्यर्थः । उपक्रमादिप्रमाणकशक्तितात्पर्यलक्षणसंबन्धरूपसमन्वयस्य वैदिकशब्देष्वेव संभवाद्वेदगतशब्देतरशब्दसामान्यव्यावर्तनाय वैदिकपदोपादानमिति व्याचक्षणाः ॥ **वैदिका इति** । वेदगताः संस्कृता इति यावत् । वेदगतानामेव लोकवेदाधिकरणन्यायेन लौकिकत्वाद्भाषाशब्दा एवात्र व्यावर्त्यंत इति भाव इत्यपि स्थितम् । **ब्रह्मण्येवेति** । ब्रह्मेतरनिरूपितशक्तितात्पर्यरूपसंबन्धवर्जितत्वविशेषितब्रह्मनिरूपिततादृशसंबन्धविशेषिता इत्यर्थः । विष्णुतदितरोभयप्रसिद्धिकव्यावर्तनायाऽऽद्यद्लोपादानम् । **अन्यत्रेति** । अन्यारादित्यनुशासनादन्यपदार्थतावच्छेदकीभूतभेदान्वयिप्रतियोगिताऽवबोधकपञ्चम्यंतब्रह्मपदं पूरणीयम् । नन्वन्यत्रैवप्रसिद्धवत्तत्रैवप्रसिद्धा अपि पृथग्वाच्याः । ननु तत्र प्रसिद्धानां समन्वयव्युत्पादनौपयिकसमन्वेतव्यासमन्वेतव्यत्वकोटिकसंदेहानास्कन्दिततया व्युत्पादनीयसमन्वयकताराहित्यस्याभिधास्यमानतया व्युत्पादनीयसमन्वयकानां त्रैविध्यस्य निर्गलितत्तया पादत्रिकेणैव शब्दत्रिकसमन्वयव्युत्पादनस्य निर्वृत्तत्या तुरीयपादानर्थक्यमित्यत आह **सर्वेऽपीति** । तथा च कोशादिव्युत्पादितान्यत्रिकप्रसिद्धिमन्नामात्मकशब्दानां प्रथमे, तादृशलिङ्गात्मकानां द्वितीये, श्रुत्यन्तरादिव्युत्पादितविष्णुतदितरोभयप्रसिद्धिकनामलिङ्गोभयेषां तृतीये, बलवच्छ्रुतिलिङ्गादिव्युत्पादितसावधारणविष्ण्ववतरप्रसिद्धिकतादृगुभयात्मकानां तुरीये समन्वयव्युत्पादनमिति न तदानर्थक्यमिति भावः । **साक्षाद्धर्मिवाचिन इति** । विष्णुनिरूपितमहायोगविद्वद्रूढिग्राहकप्रमाणाप्रतिसंधानदशायामर्थान्तरनिरूपितसमुदायवृत्तिग्रहविषयत्वरूपं यदापाततोरूढत्वं तद्विशेषिता इत्यर्थः । रूढा एवेत्यवधारणस्याविवक्षिततया योगरूढानामन्नमयादीनामपि सङ्ग्रहोऽवसेयः । आपातत इति पदोपादानात्सर्वेषामपि नाम्नां ब्रह्मणि महायोगाङ्गीकारात्तत्र निरूढत्वाभावादसंभव इति शङ्कायास्तत्रनिरूढत्वाभावेऽपि तादृशप्रमाणाप्रतिसंहितिदशायामर्थान्तरनिरूपितसमुदायवृत्तिग्रहविषयतया दर्शितं यदापाततो रूढत्वं तद्राहित्यविशेषिता इत्यनवकाशः । ब्रह्मनिरूपितविद्वद्रूढिविशेषितानां लिङ्गात्मकाभिमतानां केवलयौगिकत्वाभावेपि दर्शितापातरूढिराहित्यसत्वान्नासंभव इति भावः । **धर्मद्वारेति** । व्याप्यधर्मोपस्थितिद्वारैवेत्यर्थः । तेन योगरूढेष्वन्नमयादिनामसु नातिव्याप्तिः । यस्त्वापाततो यौगिका एवेत्यत्र तात्पर्यमिति व्याख्यानं तच्चिन्त्यम् । यौगिकत्वस्यान्तर्यामीत्याद्येकप्रातिपदिकमात्ररूपलिङ्गात्मक शब्देषु सत्वेऽपि 'सर्वेषु भूतेष्वेतं इति 'यस्मिन्द्यौः' इत्याद्यनेकपदसमभिव्याहाररूपेषु लिङ्गात्मकेष्वभावात् धर्मद्वारा धर्म्युपस्थापकत्वस्य च सर्वत्रापि सत्त्वात् । 'एवमेत्रापातप्रतीत्यनुरोधेनेयमुक्ति'रिति लिङ्गपादीयसुधायाः, धर्मविशिष्टधर्मिवाचिनामिति तत्वप्रकाशिकायाश्च तात्पर्यं वर्णनीयमतो न कोऽपि विरोध इत्यपि व्याकुर्वते ॥ **अन्यत्रप्रसिद्धानामिति** । कोशादिव्युत्पादितान्यत्रिकप्रसिद्धिमत्वरूपं यल्लोकतोऽन्यत्रप्रसिद्धत्वं तद्विशेषितानामित्यर्थः । **वक्ष्यतीति** । 'लिङ्गात्मकानां शब्दानां वृत्तिर्नारायणे परे । तत्रान्यत्रप्रसिद्धानां लिङ्गनाम्नां पुनर्हरिः ॥' इत्यादिनेत्यादिः । समन्वेतव्यत्रि-

विधशब्दानामसङ्कीर्णचान्द्रिकलक्षणानि चन्द्रिकाऽऽनन्दमयनयभावदीपितावस्माभिः स्फुटीकृतान्यव-सेयानि । **उपरिष्टादिति** उपासनापाद इत्यर्थः । **वक्ष्यत इति** । 'तत्र प्रथमतोऽन्यत्रप्रसिद्धानां सम-न्वयः । शब्दानां वाच्य एवात्र महामल्लेशभङ्गवत् । इतोऽत्यभ्यधिकत्वेऽपि तुर्यपादोदितस्य तु । महा-समन्वये तस्मिन्नाधिकारोऽखिलस्य हि । दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितौजसा।' इत्यादिनेत्यादिः । अद्वैतत्राद्यभिहितपादप्रतिपाद्यताऽवच्छेदकधर्माणां 'नान्यथातदृष्टेरि' ति भाष्य एव प्रतिविहिततयाऽनु-व्याकृतौ तदप्रतिविहितिर्न क्षतिमावहतीत्याशयेन तादृग्भाष्याशयस्फुटीचिकीर्षया परापभाषितमनुवदति । **द्वितीयतृतीयेति** । यथा प्रथमपादीयांतस्थत्वनयीयविषयवाक्ये 'सैवर्क् तत्साम तदुक्थं तद्यजु'रिति सार्वात्म्यं, 'सर्वेभ्यः पाप्मभ्य उदित ' इति सर्वपापोज्झितत्वं च ब्रह्मलिङ्गं स्पष्टमस्ति तद्वत् द्वितीये'सर्व-त्रे'त्यत्र 'सर्वं खल्विदं ब्रह्मे'ति जीवासंभावितसार्वात्म्यादे'रत्ते'त्यत्रा'न्यत्रधर्मादन्यत्राधर्माधर्मादिति पुण्यपापराहित्यादे'रन्तर' इत्यत्रै'तदमृतमभयमेतद्ब्रह्मे'त्यमृतत्वादे'रन्तर्यामीत्य'त्रैषत आत्मान्तर्याम्यमृत' इत्यमृतत्वादे'रदृश्यत्वादी'त्यादौ 'यः सर्वज्ञ' इति सार्वज्ञ्यादेर्ब्रह्मलिङ्गस्य स्पष्टत्वात् । तृतीयेऽपि 'द्युभ्वा'-दी'त्यत्र'ामृतस्यैष सेतुरि'त्यमृतसेतुत्वादे''भूमे'त्यत्र'यत्र नान्यत्पश्यती'त्यद्वितीयत्वादेर'क्षर'मित्यत्र'अदृष्टं द्रष्ट्रि'त्याद्यस्थूलानणुत्वादे'रीक्षतिकर्मे'त्यादौ 'परात्परमि'ति परात्परत्वादेर्ब्रह्मलिङ्गस्य स्पष्टत्वात् तदुदाह-रणवाक्यानामपि स्पष्टब्रह्मलिङ्गवत्वादित्यर्थः । **भेदाभावप्रसङ्गाच्चेति** । अस्पष्टब्रह्मलिङ्गानामेव द्वितीय-तृतीयोदाहार्यतायामर्थैक्यात्तयोर्भेदो न स्यादित्यर्थः । द्वितीये सविशेषं तृतीये निर्विशेषं प्रतिपाद्यम-तस्तयोर्भेद इति कल्पतरुकारमतं प्रतिविधित्सुरनुवदति **सगुणेति** । द्वितीयेपि 'सर्वत्रे'त्यत्र 'सर्वं खल्विदं ब्रह्म' इति सर्वभ्रमाधिष्ठानत्वरूपसार्वात्म्यादेः सविशेषेऽनन्वयेन निर्विशेषस्य, तृतीयेऽपि 'द्युभ्वादी'त्यत्र 'तमेवैकं जानथ' 'यदापश्यः पश्यते रुक्मवर्णमि'ति दृश्यत्वरूपित्वादेर्निर्विशेषेऽनन्वितत्तया सविशेषस्य प्रतिपादनात्प्राचुर्यपदोपादानम् । **निराकृतत्वादिति** । द्वितीयेपि 'सर्वत्रे'त्यत्रा'त्ते'त्यत्र च 'भूताच्च भव्याच्च' 'महतो महीयान्' इतिकालत्रयातीतत्वादे'रन्तर' इत्यत्र 'कं ब्रह्म खं ब्रह्म' इति पूर्णसुखत्वा-दे'रन्तर्यामी'त्यत्र 'एष त आत्मा'इति जीवतादात्म्यादे'रदृश्यत्वा'दीत्यादौ 'यत्तदद्रेश्यमि'त्यदृश्यत्वादेः सविशेषेऽनुपपत्त्या निर्विशेषस्य, तृतीये 'द्युभ्वादी'त्यत्रैव 'भूमे'त्यत्र'एवं पश्यन्' इति सप्रकारकज्ञान-विषयत्वादे'रक्षर'मित्यत्रा'दृष्टं द्रष्टृश्रुतं श्रोतृ'ति दृश्यत्वादे'रीक्षतिकर्म'इत्यत्र 'पुरुषमीक्षत' इति दृश्य-त्वादेः 'दहर' इत्यादौ 'सत्यकामः सत्यसङ्कल्पः' इति कामादेर्निर्विशेषेऽनन्वयेन सविशेषप्रतिपादन-प्राचुर्येण सविशेषनिर्विशेषत्वनिबन्धनभेदस्यापहस्तितदेश्यत्वान्न तथा भेदो युक्त इति भावः । इति व्याचक्षते । सविशेषातिरिक्तनिर्विशेषस्याप्रामाणिकतया ईक्षत्यधिकरणे निराकृतत्वान्न तन्निबन्धनः पादभेदः संभवतीति भावः ।

सु० — नन्वत्र पादे सप्ताधिकरणानि समन्वयविभागार्थानि । तत्र सप्तानां शब्दानां ब्रह्मणि समन्वयः सिद्ध्येत् । तत्कथमन्यत्रप्रसिद्धानां नामात्मकानां सर्वशब्दानां समन्वयसिद्धिरत्र स्यात् । अन्यथा समन्वयसूत्रेणैवालम् । किमनेनात्यल्पप्रपञ्चनेनेति । मैवम् । एकैकत्राधिकरणे समानन्यायानामनेकशब्दराशीनां निर्णीयमानत्वात् । वाक्यविशेषग्रहणस्य पूर्वपक्षविशेषोपादानस्य सिद्धान्तप्रमाणविशेषस्वीकारस्य चोदाहरणार्थत्वात् । प्रत्येकं निर्णये शास्त्रस्यापर्यवसानप्रसङ्गः । विश्वतोमुखता च सूत्राणां न स्यात् । तर्हि निर्णेतव्यशब्दावच्छेदकोपाधयो वक्तव्याः। अन्यथाऽस्येदमुदाहरणमिति ज्ञातुमशक्यत्वात् । सर्वोदाहरणत्वे च सर्वथाऽधिकरणान्तरानारम्भप्रसङ्गादिति । सत्यम् । सन्ति प्रत्यधिकरणं निर्णेतव्यार्थावच्छेदकोपाधय इत्याशयवानानन्दमयाधिकरणनिर्णेयशब्दोपाधिमाह गुणीति ।

अनु० — गुणिसामान्यवाचिनाम् ।
गुणवाचिनां च प्रथममाह देवः समन्वयम् ।

आनन्दमयादिशब्दा हि गुणिसामान्यं वदन्ति । न शतक्रत्वादिशब्देभ्य इवैतेभ्यो गुणिविशेषप्रतीतिरस्ति । ते च मयट्प्रत्ययादिना ब्रह्मणोऽन्यत्प्रत्याययन्तीति भवन्त्यन्यत्रप्रसिद्धाः । गुणवाचिनस्त्वानन्दादयस्ते गुणिनि ब्रह्मणि वर्तितुं नार्हन्तीत्यन्यत्रप्रसिद्धाः । गुणगुणिनोरभेदस्त्वहिकुण्डलाधिकरण एव साक्षात्सूत्रकृता वक्ष्यते । अभेदेऽपि शब्दादिसाङ्कर्याभावश्चेति ।

शे० — माऽस्त्वन्यत्रप्रसिद्धसर्वशब्दसमन्वयसिद्धिः । न चैवं समन्वयप्रपञ्चकत्वानुपपत्तिरिति वाच्यम् । उपात्तशब्दसमन्वयप्रतिपादकत्वेऽपि प्रपञ्चकत्वसम्भवादित्यत आह **अन्यथेति** । अन्यत्रप्रसिद्धनामात्मकसर्वशब्दसमन्वयसिद्ध्यभाव इत्यर्थः । अतिप्रसङ्गपरिहारायाह **समानन्यायानामिति** । सूत्रोक्तन्यायसञ्चारविषयाणामित्यर्थः । नन्वेकस्यानेकशब्दराशिनिर्णायकत्वे वाक्यविशेषग्रहणं पूर्वपक्षविशेषोपादानं सिद्धान्तप्रमाणविशेषस्वीकरणं चायुक्तं स्यादित्यत आह **वाक्यविशेषेति** । ननु किमुदाहरणार्थत्वकल्पनया प्रत्येकं तत्तच्छब्दसमन्वयप्रतिपादनमेव किं नाश्रीयत इत्यत आह **प्रत्येकमिति** । ननु तथाऽप्युपात्तशब्दमात्रनिर्णायकत्वाङ्गीकारे बाधकाभावान्नोपलक्षणत्वं युक्तमित्यत आह **विश्वतोमुखता चेति** । सर्वशाखानिर्णायकत्वमित्यर्थः ॥ **अन्यथेति** । अवच्छेदकोपाध्यवचन इत्यर्थः । ननु किमस्येदमुदाहरणमिति ज्ञानेनापि । न चैवं सर्वस्योदाहरणत्वप्रसङ्गः तस्येष्टत्वादित्यत आह **सर्वेति** । एकेनैव सर्वशब्दनिर्णयादिति भावः ।

नन्वानन्दमयादिशब्दानां गुणिसामान्यवाचित्वमेव कुतः । तथात्वे वा कथमन्यत्रप्रसिद्धत्वमित्यतस्तदुभयमुपपादयति **आनन्दमयादीति** । 'तत्रानन्दादयो गुणाः । ईशस्यैवेति निर्णीताः' इत्युत्तरभाष्यं

मनसि निधाय गुणवाचिनामिति भाष्यं व्याकुर्वन्नेव तेषामन्यत्रप्रसिद्धत्वं चोपपादयति **गुणवाचिन इति** । ननु गुणगुणिनोर्भेदपक्षेऽन्यवाचिनामन्यत्रवर्तितुमनर्हतयाऽन्यत्रप्रसिद्धत्वस्योक्तरीत्या प्राप्तावप्यहिकुण्डलाधिकरणे सूत्रकृतैव गुणगुणिनोरभेदस्यैवोपपादयिष्यमाणत्वेन गुणगुणिनोरभेदसिद्धेर्गुणवाचिनामप्यानन्दादिशब्दानां गुणिनि ब्रह्मणि वर्तितुमर्हत्वात्कथमनर्हत्वनिबन्धनमन्यत्रप्रसिद्धत्वमित्याशङ्क्य तयोरभेदस्य वक्ष्यमाणत्वेऽपि गुणवाचिनां गुणिनि, गुणिवाचिनां च गुणे, वृत्त्यादिरूपसकलसाङ्कर्यपरिहाराय, सविशेषाभेदस्यैव तत्र समर्थनाद्विशेषबलेन गुणवाचिनां गुण एव वृत्तिर्न गुणिनीति सिद्धेर्गुणिनि वर्तितुमनर्हत्वमस्त्येवेति युक्तं तन्निबन्धनमन्यत्रप्रसिद्धत्वमित्याशयेन परिहरति **गुणगुणिनोरित्यादिना** । यद्यपि गुणगुणिनोरभेदः सूत्रकृतैव वक्ष्यते तथाऽपि विशेषबलाच्छब्दादिसाङ्कर्याभावोऽपि वक्ष्यत इति योजना ।

स०— **अवच्छेदकोपाधय इति** ॥ संग्राहकासाधारणधर्मा इत्यर्थः । ननु गुणवाचकानां शब्दानां गुणिनि प्रवृत्तौ गुणगुणिनोरभेदस्स्यादित्यतो नेदमनिष्टमित्याह **गुणगुणिनोरभेदस्त्विति** ॥ नन्वभेदेऽयं गुणिवाचकोऽयं गुणवाचक इत्यपर्यायत्वरूपमसाङ्कर्यं न स्यादित्यत आह **अभेदेऽपीति** ॥ शब्दसाङ्कर्याभावोऽपर्यायत्वं । आदिपदार्थस्तु गुणगुणिभावाद्युपपत्तिः । एतत्सर्वमहिकुण्डलाधिकरणे विशेषसमर्थनेन वक्ष्यत इत्यर्थः । यद्वा गुणवाचकानामानंदादिशब्दानां गुणिनि ब्रह्मणि वृत्तेरसंभवेनान्यत्र प्रसिद्धिरिति शङ्कायां गुणगुणिभेदनिमित्तत्वेन गुणगुणिनोरभेदप्रतिपादनेनैव तत्परत्वसंभवेन किमित्यभेदो न व्युत्पाद्यत इति गूढाभिसंधिना शङ्किते गूढाभिसंधिरेवोत्तरमाह **गुणगुणिनोरभेदस्त्विति** ॥ तथात्वे तावन्मात्रेणैव तत्परत्वसिध्या गुणवाचिनः पुनः समन्वयप्रतिपादनं व्यर्थमिति पूर्वपक्षिणा स्वाशये उद्घाटिते सिद्धान्ती गुणगुणिनोरभेदेपि गुणिगुणवाचिनां पर्यायत्वाभावेन समन्वयासिद्धेः समन्वयप्रतिपादनं सङ्गतमितिवदन् स्वाशयमुद्घाटयति **अभेदेऽपीति** ।

प०— चतुर्थपादादिग्रंथमवतारयति । **नन्वत्रेत्यादिना** ॥ **विश्वतोमुखता चेति** । अनेकशाखानिर्णायकता चेत्यर्थः ॥ **अवच्छेदकेति** । क्रोडीकार(क)धर्मा इत्यर्थः । कथं तर्हि तेषामन्यत्रप्रसिद्धत्वमित्यत आह । **ते च मयट्प्रत्ययादिनेति** । **गुणवाचिनस्त्वानंदादय इति** । " आनंदो ब्रह्मेति व्यजानात्" । 'विज्ञानं यज्ञं तनुते' इत्यादिना श्रुता इत्यर्थः । एतच्चैतेषां गुणवाचकत्वमुपेत्योक्तं । "प्राप्यत्वेन मयट्प्रोक्तेर्नतत्राप्यन्यदुच्यते" इति वक्ष्यमाणदिशा तेषामपि नामैकदेशग्रहणन्यायेन गुणिवाचित्वात् । नन्वेवं गुणवाचिनां ब्रह्मणि वृत्तिश्चेत्तर्हि तयोरैक्यं स्यात् तथाच आनंदज्ञानादिशब्दानां पर्यायत्वं आनंदज्ञानादिसांकर्यं गुणस्य गुणिना साङ्कर्यं च स्यादित्यत आह । **गुणगुणिनोरिति** । यद्वा कथं तर्हि गुणवाचिनो गुणिनि ब्रह्मणि समन्वयः तस्य गुणगुण्यैक्यहेतुकत्वात् तस्यात्र नयेऽनुक्तत्वादित्यत आह **गुणगुणिनोरिति** । "उभयव्यपदेशात्त्वहिकुंडलवत्" इतिभक्तिपादीयाधिकरणे गुणगुण्यभेदो विशेषबलेन

सांकर्याभावश्चवक्ष्यत इत्यर्थः । तर्हि तेनैवेदं गतार्थमिति चेन्न । गुणिसामान्यवाचिनां समन्वयेऽर्थात्तेषां समन्वयेन तदर्थमेवास्यानारंभणात् ।

या० — **विश्वतोमुखता चेति** । सर्वशाखानिर्णायकतेत्यर्थः ॥ **अवच्छेदकोपाधय इति** । विभाजकोपाधयो वक्तव्या इत्यर्थः । ननु गुणवाचकशब्दानां गुणिनि प्रवृत्तौ, गुणगुणिनोरभेदः स्यादित्यतो नेदमनिष्टमित्याह **गुणगुणिनोरिति** । नन्वभेदे गुणगुणिशब्दयोरपर्यायत्वं न स्यादित्यत आह **अभेदेऽपीति** । शब्दसाङ्कर्याभावोऽपर्यायत्वम् । आदिपदादर्थक्रियाऽऽदिसाङ्कर्याभावः । विलक्षणार्थक्रियादिकारित्वरूपो ग्राह्यः । एतत्सर्वं विशेषसमर्थनेनाहिकुण्डलाधिकरणे सूत्रकृता वक्ष्यत इत्यर्थः ।

श्री० — **सर्वोदाहरणत्वे चेति** । एकस्मिन्नधिकरणे एकस्य न्यायस्य सर्वाण्यपि वाक्यान्युदाहरणानीति ज्ञातुं शक्यत इति स्वीकार इत्यर्थः ।

च० — यत्तु यौगिकरूढविषयतया द्वितीयतृतीययोर्भेद इति तेनोक्तं, तत्तृतीयेऽपि द्युभ्वाद्यायतनत्वादे रूढत्वात्तुच्छमित्युपेक्षितमित्यप्याशयं प्रकाशयति । **समन्वयविभागार्थानीति** । 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्य'मिति कात्यायनवचनात्समन्वयविभागाय इमानीति समासाघटकपदघटितविग्रहकत्वरूपास्वपदविग्रहत्वलक्षणा नित्यसमासता प्रयोजनवाचकार्थपदघटितसमानाधिकरणबहुव्रीहिता वैतस्योपेया । सूत्रघटकशब्दसमन्वयव्युत्पादनेनैवप्रपञ्च्यप्रपञ्चकभावसङ्गतेः सूपपादतयाऽन्यत्रप्रसिद्धसर्वशब्दसमन्वयसिद्ध्यनुपगमेऽपि न क्षतिरित्यत आह **अन्यथेति** । **समानन्यायानामिति** । सूत्रघटकपदप्रत्यायितन्यायसञ्चारविषयत्वमेवातिप्रसङ्गभञ्जकमिति भावः । **प्रत्येकं निर्णय इति** । अन्यत्रप्रसिद्धनामात्मकशब्दत्वाक्रान्ताः यावत्यः शब्दव्यक्तयः प्रत्येकं तत्तद्वृत्तिप्रातिस्विकधर्मावच्छिन्नघटिततया सूत्रणमुपेत्य तत्तद्व्यक्तिनिरूपितशक्तितात्पर्यसंबन्धव्युत्पादन इत्यर्थः । विश्वतोमुखता सर्वशाखानिर्णायकता । **अवच्छेदकोपाधय इति** । अधिकरणान्तरसमन्वेतव्यशब्दव्यावृत्तप्रकृतनयसमन्वेतव्याखिलशब्दवृत्तिधर्माः विभाजकोपाधिपदवाच्या अभिधातव्या इत्यर्थः । **अन्यथा** । तादृशधर्मानभिधाने । **उदाहरणमिति** । अधिकरणान्तरसमन्वेतव्यविलक्षणमित्यादिः । **सर्वोदाहरणत्वे** । अधिकरणान्तरसमन्वेतव्यानामप्युदाहरणत्वोपगमे । स्वसामानाधिकरण्यस्वावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्योभयसंबन्धेन किञ्चिद्विशिष्टो यो धर्मस्तदवच्छिन्ननिरूपकताकशक्तिकत्वरूपगुणिसामान्यवाचकतां तादृशोभयसंबन्धावच्छिन्नकिञ्चिन्निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वरूपैकमात्रवृत्तित्वविशेषितधर्मावच्छिन्नानिरूपितशक्तिकशतकत्वादिशब्दव्यावृत्तिपुरस्कारेण प्रकृतनयसमन्वेतव्यशब्देषु दर्शयति । **आनन्दमयादिशब्दा हीति** । गुणवाचकशब्दानामपि गुण्यभिधायकतोपगमे गुणगुणिनोरैक्यापत्तिरित्याशङ्कायामापाद्या-

निष्ठताघटितसामग्रीविरहादियमापत्तिरेव नोत्पत्तुमर्हतीत्याह **गुणगुणिनोरिति** । अहिकुण्डलनये विशेष-समर्थनेन शब्दपर्यायत्वं विलक्षणार्थक्रियानिर्वाहकत्वमित्यादिकं सूत्रकृतैवाभिधास्यत इत्यर्थः ।

**सु०— तैत्तिरीयके स वा एष पुरुषोऽन्नरसमय इत्यादिनाऽन्नमयप्राणमयमनोमय-विज्ञानमयानन्दमयाः पठ्यन्ते । तत्र संशयः । किमेतेऽन्नमयादयः परमात्मैव । उत तदन्यः कश्चिदिति । सर्वत्र ब्रह्मशब्दश्रवणात्तस्य च विष्णावन्यत्र च प्रयोगात् । किं तावत्प्राप्तम् । अन्य एवान्नमयादिशब्दार्थ इति । कुतः । अन्नमयादिशब्दा हि विकारवाचिनः । मयट् प्रत्ययस्य विकारार्थेऽनुशासनात् । विकारस्य च शरीरादिकोशेषु संभवात् । सर्वविकारात्म-कत्वेन प्रकृतौ वोपपत्तेः ।जीवानां वा विकाराभिमानिनामन्नमयत्वादिकं युक्तम् । गौरः श्याम इत्यादिवत् । अधिष्ठात्रीणां ब्रह्मादिदेवतानां वाऽयं शब्दः संभवति । अशनिरिन्द्र इतिवत् । न च विकारत्वं परस्य ब्रह्मणः संभवति । निर्विकारोऽक्षरः शुद्ध इत्यादेः । यद्यपि विकार इव प्राचुर्येऽपि मयट्प्रत्ययोऽस्ति । तथाऽप्यन्नमयशब्दस्तावद्विकारार्थोऽङ्गीकार्यः । 'ओषधी-भ्योऽन्नमन्नात्पुरुषः' इत्योषधिजनितान्नविकारं पुरुषशब्दाभिधेयं शरीरं प्रकृत्य 'स वा एष पुरुषोऽन्नरसमयः' इत्युक्तत्वात् । 'तस्येदमेव शिरः' इत्यपरोक्षतया निर्देशात् । तथा च द्वैविध्यकल्पनाऽनुपपत्तेःसर्वत्र विकारार्थ एवाङ्गीकार्यः । किञ्चान्नमयादयः पञ्च, ब्रह्म त्वेकमेव; अतः कथं तदेतैः शब्दैरुच्येत । अपि चैते परस्परमन्यतया शरीरशरीरिभावेना-न्तरत्वेन चोच्यन्ते । न चैवं ब्रह्म भवितुमर्हति । न च तह्यानन्दमयोऽस्तु ब्रह्म सर्वान्तरत्वादिति वाच्यम् । विकारप्रवाहपतितत्वात् । अन्नमयाद्यान्तरत्वमात्रेण सर्वान्तरत्वानिश्चयात् । किञ्च ब्रह्मविदाप्नोति परमिति प्रकृतं परं ब्रह्म आनन्दमयस्य 'ब्रह्म पुच्छं प्रतिष्ठे'त्यवयवतया प्रतीयते। न चावयव एवावयवी, विरोधात् । अतो न अन्नमयादयः पञ्चापि ब्रह्म किं त्वन्य एवेति ।**

**एवं प्राप्ते सिद्धान्तयत्सूत्रं व्याख्याति** समुद्रशायिनमिति ।

**अनु०—** समुद्रशायिनं सर्वप्रसूतिप्रभवं श्रुतिः ॥
तदेव ब्रह्म परममिति सावधृतिर्जगौ ॥
यतोऽतो ब्रह्मशब्दस्य तत्रैव नियतत्वतः ॥
येऽन्नं ब्रह्मेत्यादिरूपादभ्यासात्तैत्तिरीयके ॥
अन्यासु चैतद्रूपासु शाखास्वपि सहस्रशः ॥
आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम् ॥

अत्र तैत्तिरीयके 'अन्यासु चतद्रूपासु शाखास्वपि सहस्रशः । आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम्'इत्येतावताऽऽनन्दमयो ब्रह्मेति प्रतिज्ञाभागो व्याख्यातः । तत्र तैत्तिरीयक इत्युदाहरणवाक्यग्रहणम् । अन्यास्विति निर्मितव्यव्यपदेशः । एतद्रूपास्विति गुणि-सामान्यगुणवाचिनामवतीष्वित्यर्थः । तत्र हेतुरभ्यासादिति । तद्व्याख्यानं येऽन्नमिति । 'येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते, आनन्दं ब्रह्मणो विद्वान्, विज्ञानं ब्रह्म चेद्वेद, असद्ब्रह्मेति वेद चेत्' इत्यन्नमयादिविषयतयोदाहृतेषु श्लोकेषु ब्रह्मशब्दस्याभ्यासादित्यर्थः । एकविषयासकृदुक्तिर्मुख्योऽभ्यासः । न चैवमत्रास्ति । किं त्वसकृदुक्तिमात्र(मितिज्ञाप)मिति शङ्कायामेकविषयताऽप्यस्तीति ज्ञापयितुमित्यादेरित्यनुक्त्वा इत्यादिरूपादित्युक्तम् । अन्नमया-दिविषयत्वेन ब्रह्मशब्दस्य श्रुतत्वादित्युक्तं भवति । ब्रह्मशब्देन कथमयं निश्चय इत्यत आह ब्रह्मशब्दस्येति । तदपि कुत इत्यत आह श्रुतिरिति । 'तदेव ब्रह्म परमम्' इति सावधृतिः श्रुतिः विष्णुमेव ब्रह्मशब्दवाच्यं जगौ यतोऽत इति योजना । तत्रापि तदिति परामर्शविषयो विष्णुरिति कुत इत्यत उक्तं समुद्रशायिनमिति । व्याख्यातमेतत्प्रथमसूत्रे ।

शे० — विषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनरूपपञ्चाङ्गत्वादधिकरणस्य भाष्यकारेण तस्यावश्यं-वक्तव्यतयाऽत्राधिकरणे च तदनभिधानाद्भाष्यन्यूनत्वमित्यतः स्पष्टत्वात्तदवचनं न दोषायेत्याशयेन स्वयं

---

विषयसंशयपूर्वपक्षानाह तैत्तिरीयक इति । अत्रानन्दमयस्य सूत्रे स्वशब्देनोपादानेऽपि 'येऽन्नं ब्रह्मेत्या-दिरूपादभ्यासात्' 'आनन्दमय इत्याद्यैः'इत्येतत्सूत्रीयानुव्याख्याऽनुसारेणान्नमयादीनां पञ्चानामपि विषय-त्वमिति ज्ञापयितुं 'स वा एष पुरुषोऽन्नरसमयः' इत्यादिविषयवाक्योदाहरणं, किमेतेऽन्नमयादय इति संशयव्युत्पादनं च कृतम् । टीकायां तु 'आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वे'ति 'तथाऽपि न त आनन्द-मयशब्देनोच्यन्ते' इति सूत्रानुसारिभाष्यानुसारेण 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्द-मयः' इत्यानन्दमयमात्रविषयवाक्योदाहरणम्; अत्रानन्दमयो विषयः, स किं विष्णुरन्यो वेति संशय-प्रदर्शनं च कृतमिति मन्तव्यम् । किमस्य सन्देहस्य बीजमित्यतो ब्रह्मशब्दप्रयोग एवेत्याह सर्वत्रेति । अन्नमयादिषु पञ्चस्वपीत्यर्थः । कुतस्तस्य संशयबीजत्वमित्यतः कोटिद्वयसाधारण्यादित्याह तस्य चेति ॥ विकारवाचिन इति । अन्नादिविकारवाचिन इत्यर्थः । (तस्य विकारः । षष्ठ्य-न्ताद्विकारेऽणादयः स्युः । अश्मनो विकारे टिलोपो वक्तव्यः । अश्मनो विकार आश्मनः । भास्मनः । मार्तिकः । अवयवे च प्राण्यौषधिवृक्षेभ्यः । चाद्विकारे । मयूरस्यावयवो विकारो वा मायूरः। मौर्वं काण्डं भस्म वा । मूर्वा तृणविशेषः । पैप्पलं । विकारावयवार्थावधिकृतौ) । किमत्र विकारस्य वाचकमित्यतो मयट्शब्द एवेति भावेन तस्य विकारार्थत्वमुपपादयति मयट्प्रत्ययस्येति । नन्वन्नादि-

शब्देभ्यो विकारार्थे मयडेव न प्राप्नोति । 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' 'नित्यं वृद्धशरादिभ्यः' इति विकारावयवार्थमयड्विधायकसूत्रयोर्भाषाविषयत्वात्तयोरर्थयोश्छन्दस्यप्राप्तस्य मयटो विधायकस्य द्व्यचश्छन्दसीति सूत्रस्य च द्व्यज्भ्य एव शरपर्णादिप्रातिपदिकेभ्यस्तद्विधायकत्वेन तेन प्राणमनःशब्दाभ्यां विकारार्थे मयट्प्राप्तावप्यन्नरसविज्ञानानन्दशब्देभ्यो बह्वच्केभ्यो विकारार्थे तदप्राप्तेरिति चेन्न । वृद्धशरादिसूत्रगतेन नित्यग्रहणेन तत्प्राप्तिसम्भवात् । न च वृद्धशरादिभ्यो मयटि नित्यत्वसिध्यर्थं तत् । पूर्वसूत्रेण सर्वप्रातिपदिकेभ्यो विकल्पेन मयड्विधानानन्तरं वृद्धशरादिसूत्रारम्भसामर्थ्यादेव तेभ्यस्तस्य नित्यत्वसिद्धेः । न च वाङ्मयत्वङ्मयादिरूपसिद्ध्यर्थं प्रवृत्तस्य नित्यमेकाच इति व्याकरणान्तरसूत्रस्यैकदेशभूतं नित्यग्रहणमेकदेशद्वारा तत्सूत्रस्मारणायेति योगविभागार्थं तदिति शङ्क्यम् । शरादिग्रहणे मृद्ग्रहणवैयर्थ्यापत्तेः । अतस्तदेव मृद्ग्रहणमेकाजुदाहरणैकदेशार्थत्वात्सर्वेषामेकाचां स्मारकमाश्रयितुं शक्यमिति नित्यग्रहणमतिरिच्यमानं भाषायामेव वृद्धशरादिभ्यो नित्यमित्येतदर्थकं सत छन्दसि वृद्धशरादिभ्योऽन्येभ्यश्च प्रातिपदिकेभ्यो यथादर्शनं व्यवस्थितविकल्पार्थमित्यङ्गीकर्तुं युक्तमिति युक्त एव बह्वच्केभ्योऽपि विकारार्थे मयडिति ॥ **प्राचुर्यार्थे मयटचपीति** । 'तत्प्रकृतवचने मयडि'ति सूत्रादित्यर्थः । यद्वा । प्राचुर्ये मयटचपि प्रकृत्यर्थविरोधिनो लेशतोऽनुवृत्तिलाभात्प्रकृतेऽपि विकारार्थः पर्यवस्यतीत्याशयः । यद्वा । हेतुमनुष्येभ्य इत्यनुवर्तमाने मयट्चेति सूत्रेणागतार्थे मयट् । विकार इति

---

स्वार्थिककथनमेवेति ध्येयम् । (तत्प्रकृतवचने मयट् । प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनं भावेऽधिकरणे वा ल्युट् । आद्ये प्रकृतमन्नमयम् अपूपमयम् । यवागूमयी । द्वितीयेऽन्नमयो यज्ञः ॥ **प्राचुर्येणेति** । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढस्तथाऽपीह वचनग्रहणादयं विशेषो लभ्यते । तद्धि यादृशस्य प्रकृतस्य लोके मयटा वचनं तत्र यथा स्यादित्येवमर्थम् ॥ **आद्य इति** । प्रथमान्तात्प्रकृते द्योत्ये प्रत्ययः । स्वार्थिकत्वात्प्रकृतितो लिङ्गम् ॥ **द्वितीय इति** । अस्मिन्पक्षे उच्यमानता प्रकृतता च प्रकृत्यर्थविशेषणम् । ल्युटोक्तमधिकरणत्वं तु मयडर्थः । अत एव विशेष्यनिघ्नता, तदाह **अन्नमयो यत इति** । अन्नं प्रकृतमुच्यते तस्मिन्नित्यर्थः । तत आगतः । स्रुघ्नादागतः स्रौघ्नः । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः । समादागतं समरूप्यम् । विषमरूप्यम् । देवदत्तरूप्यम् । पक्षे गहादित्वाच्छः समीयम् । विषमीयम् । देवदत्तीयम् ।मयट् च सममयम् । विषममयम् । देवदत्तमयम् । योगविभागो यथासङ्ख्यनिरासार्थः । टो ङीबर्थः) । नन्वस्त्वन्नमयादिशब्दानां विकाराभिधायकत्वं तथाऽपि विष्णोरन्नमयादित्वं किं न स्यादित्यतो विकारार्थशब्दवाच्यत्वं हि विकारत्वाद्वा तदभिमानित्वाद्वा तदधिष्ठातृत्वाद्वा भवेत् । न चैतत्प्रकारत्रयं विष्णौ सम्भवतीति वक्तुं पूर्वपक्षकोटिनिविष्टेषूक्तप्रकारेण तत्सम्भवमुपपादयन् देहादिकोशेषु विकारत्वेन तत्सम्भावयति **विकारत्वस्येति** । जडप्रकृतेरपि

तदुपपादयति **सर्वेति** । एवं विकारत्वेन विकारार्थशब्दवाच्यत्वं देहादीनां सम्भाव्य विकाराभिमानित्वेन जीवानामपि तत्सम्भावयति **जीवानामिति** । उपलक्षणं चैतत् । चित्प्रकृतेरपि विकाराभिमानित्वादन्नमयत्वादिकं युक्तमित्यपि द्रष्टव्यम् । ननु कथं तदभिमानित्वमात्रेण तच्छब्दवाच्यत्वमित्यतो दृष्टत्वादित्याह **गौर इति** । अधिष्ठातृत्वेन तच्छब्दवाच्यत्वं दृष्टान्तोपदर्शनेन सम्भावयति **अशनिरिति** । अशनिप्रेरके इन्द्रेऽशनिरिति शब्दो यथेत्यर्थः । ततश्च विकाराधिष्ठातृतया देवतास्वपि विकारशब्दो युज्यत इति भावः । अस्तु तर्ह्युक्तैरेव हेतुभिर्विष्णोरपि विकारार्थकशब्दवाच्यत्वमित्यत आह **न चेति** । विकारत्वमित्युपलक्षणम् । तदभिमानित्वादिकं चेत्यपि द्रष्टव्यम् । न च निर्विकारतया विकारत्वस्याभिमानाभावेन विकाराभिमानित्वस्य चासम्भवेऽप्यधिष्ठातृत्वोपपत्तेर्विष्णोरन्नमयादित्वमिति वाच्यम् । अधिष्ठातृतया आनन्दमयत्वाभिधाने नानाधिष्ठातृणां आनन्दमयत्वप्रसङ्गेन सिद्धान्तिनैवं शङ्कितुमशक्यत्वात् । इत्यादेरित्यादिपदेनाभिमानाभावबोधकवाक्यसंग्रहः **प्राचुर्येऽपीति** । तत्प्रकृतवचने मयडित्यनुशासनादिति भावः । नन्वस्तु स वा एष इति परामर्शान्यथाऽनुपपत्त्येदमित्याद्यपरोक्षनिर्देशान्यथाऽनुपपत्त्या चान्नमयस्याब्रह्मत्वं तत्र श्रुतमयटो विकारार्थत्वं च । तथाऽपि प्राणमयादीनां ब्रह्मत्वं तत्र श्रुतानां मयटां च प्राचुर्यार्थत्वं किं न स्यादित्यतस्तथा सति द्विधाकल्पनाप्रसङ्गान्नैवमित्याह **तथा चेति** ॥ **कथमिति** । तथा सति ब्रह्मणोऽप्यनेकत्वप्रसङ्गेनैकमेवेत्यादिश्रुतिविरोधः स्यादिति भावः ॥ **अन्यतयेत्यादि** । 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः'इत्यन्यतयाऽन्तरत्वेन 'च तस्यैष एव शारीर आत्मा यः पूर्वस्ये'ति शरीरशरीरिभावेन च श्रूयन्त इत्यर्थः ॥ **न चैवमिति** । ब्रह्मण एव ब्रह्मान्यत्वस्य ब्रह्मान्तरत्वस्य शरीरशरीरिभावस्य च विरुद्धत्वादित्यर्थः ॥ **विकारप्रवाहपतितत्वादिति** । आनन्दमयस्य ब्रह्मत्वे तत्र श्रुतस्य मयटः प्राचुर्यार्थत्वं वाच्यमिति विकारार्थकमयट्प्रायपाठबाधः स्यादित्यर्थः । उपलक्षणं चैतत् । अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वादित्यपि द्रष्टव्यम् । आनन्दमयस्य सर्वान्तरत्वमन्नमयाद्यान्तरत्वमात्रेणोत तस्मादान्तरस्यान्यस्याश्रवणादिति । नान्त्यः । तत्रापि 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति प्रकृतस्य ब्रह्मणो 'ब्रह्म पुच्छं प्रतिष्ठे'त्यानन्दमयाश्रयतयोक्तत्वेन तदसिद्धेरिति मनसि निधायाद्यं दूषयति **अन्नमयाद्यान्तरत्वमात्रेणेति** । आनन्दमयादान्तरस्य श्रवणेऽप्यन्नमयादिचतुष्कोशान्तरत्वमात्रेणानन्दमयस्य सर्वान्तरत्वनिश्चयश्चेत्तर्हि प्राणमयादेरप्यन्नमयाद्यान्तरत्वमात्रेण सर्वान्तरत्वं स्यादिति भावः । अस्तु सर्वान्तरत्वमानन्दमयस्य किं तावताऽप्याशास्यते । ब्रह्मत्वसिद्धिरिति चेन्न । ब्रह्मणस्तदवयवत्वाभिधानेनानन्दमयस्य ब्रह्मत्वासम्भवात् । न चानन्दमयावयत्वेनोक्तस्यापरब्रह्मत्वान्न तेनानन्दमयस्याब्रह्मत्वप्राप्तिरिति वाच्यम् । 'ब्रह्मविदाप्नोति परमि'ति प्रकृतस्यैव ब्रह्मणस्तत्र पुच्छत्वाभिधानादित्याह **किञ्चेति** ॥ **अवयवतयेति** । पादाख्यावयवतयेत्यर्थः ।

अस्तु तर्ह्यानन्दमयतत्पुच्छयोर्द्वयोरपि ब्रह्मत्वमित्यतस्तथा सति स्वयमेव स्वस्यावयव इत्युक्तं स्यान्न च तद्युज्यत इत्याह **न चेति** । तत्र हेतुः **विरोधादिति** । स्वस्य स्वावयवत्वस्य विरुद्धत्वादित्यर्थः । यो यदवयवः स तस्माद्भिद्यत इत्यवयवावयविनोर्भेदस्यैव सिद्धत्वादवयवस्य परमात्मत्वान्नावयविनः परमात्मत्वमिति भावः । न चानन्दमयस्याब्रह्मत्वेऽपि ब्रह्मणस्तत्पुच्छत्वोक्तिरयुक्तैव ब्रह्मणोऽन्यानवयवत्वादिति वाच्यम् । पुच्छशब्दस्याश्रयार्थत्वेन ब्रह्मण आनन्दमयाश्रयत्वस्यैव तत्राभिधानात् । न चैवमवयवत्वोक्तेरेवाभावेन बाधकाभावादानन्दमयस्य ब्रह्मत्वमेव किं नाश्रीयत इति वाच्यम् । अवयवावयविभावस्येवाश्रयाश्रयिभावस्यापि भेदनियतत्वेन स्वस्य स्वाश्रयत्वानुपपत्त्याऽऽश्रयत्वोक्तेरेवानन्दमयस्याब्रह्मत्वसाधकतायां तात्पर्यात् ।

'आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम्' इत्येतावतैव सौत्रप्रतिज्ञाभागव्याख्यानात्तैत्तिरीयक इत्यादेर्वैय्यर्थ्यमित्यतो विषयवाक्याद्युदाहरणार्थत्वान्न वैयर्थ्यमित्याह **तत्रेत्यादि** ॥ **प्रथमसूत्र इति** । सौत्रब्रह्मशब्दव्याख्यानावसर इति शेषः ।

**स०— विकारार्थानुशासनादिति** । प्राधान्यार्थे विकारार्थे प्राचुर्यार्थे मयट्त्रिधेत्युक्तत्वादिति भावः ॥ **गौरः श्यामः इत्यादिवदिति** । गौरशरीराभिमानी देवदत्तः श्यामशरीराभिमानी देवदत्त इति वक्तव्ये गौरोऽयं श्यामोऽयमिति, तदभिमानिनि तच्छब्दो यथेत्यर्थः ॥ **अधिष्ठात्रीणामिति** । प्रवर्तकाणामित्यर्थः ॥ **अशनिरिन्द्र इति** । अशनिप्रवर्तक इन्द्र इति वक्तव्येऽशनिरिन्द्र इति तत्प्रवर्तके तच्छब्दो यथेत्यर्थः ॥ **शरीरशरीरिभावेनेति** । तस्यैष एवशारीर आत्मेत्युक्तत्वादिति भावः । एवमन्योन्तर आत्मेत्यनेनान्यत्वञ्चोच्यत इति द्रष्टव्यम् ।

**प०** — आनंदमयादेः सूत्रे ब्रह्मत्वोक्तेः का प्रसक्तिरित्यतोऽन्यत्र भाष्यकृदुक्तं प्रसंजकं वदन्मूलमवतारयति । **तैत्तिरीयक इत्यादिना** संशयबीजमाह **सर्वत्रेत्यादि(ना)** **अनुशासनादिति** ॥ ''तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट्त्रिधेति सप्तमगीताभाष्योक्तेरिति भावः ॥ **शरीरादिकोशेष्विति** । शरीरपदेनान्नविकारदेहग्रहः । आदिपदेन प्राणविकारदेहादिर्ग्राह्यः । तथा चान्नविकारदेहादिरूपकोशेषु जीवाश्रयभूतमंजूषारूपेष्वित्यर्थः ॥ **गौर इति** । यथा देहस्य गौरत्वादिना तदभिमानिजीवो गौरादिपदवाच्यः तथाऽन्नविकारदेहाभिमानी जीवोऽन्नविकारदेहवाच्यन्नमयादिशब्देनोच्यत इत्यर्थः ॥ **अशनिरिति** । वज्रस्वामित्वादिंद्रो यथा वज्रवाचकाशनिपदेनोच्यते तथा ब्रह्मादयस्तन्नियंतृत्वात्तैः शब्दैरुच्यन्त इत्यर्थः ॥ **प्राचुर्येपीति** । प्रागुक्तस्मृतौ प्राचुर्यार्थ इत्यप्युक्तेः । पाणिनिनापि 'तत्प्रकृतवचने मयडि'ति प्राचुर्येण प्रस्तुतमित्यर्थे 'प्रथमासमर्थान्मयड् भवती'ति पंचमेऽध्यायेऽनुशासनादिति भावः । मयटो वैयर्थ्यापत्त्या तादात्म्यार्थत्वमशक्यशंकमिति न शंकितम् ॥ **एते परस्परमिति** । प्राणमयादयश्चत्वार

इत्यर्थः । ''तस्माद्वा एतस्मादन्योऽन्तर आत्मा प्राणमय'' इति ''तस्यैष एव शारीर आत्मे''-त्यादि श्रवणादिति भावः ॥ **किंत्वन्य एवेति** । एतेन कोशा एव प्रकृतिरेवेत्याद्येक-कोटिनिर्णयेन पूर्वपक्षः, उत कोशाः प्रकृतिर्वेत्याद्यनिर्णयेन, अथ सर्वेपीति । नाद्यः । अनेकप्रापकसत्त्वे निर्धारणायोगात् । न द्वितीयः, संशयाविशेषापातात् । नान्त्यः, अनेकार्थकत्वेन वाक्यभेदापत्तेरिति निरस्तं । अयमेवेति विशिष्यैककोटयनिर्धारणेऽपि ब्रह्मान्यत्वेनावधारणसंभवेन संशया-विशेषासंभवादिति । एवमग्रेप्यनेककोटिकपूर्वक्षस्थले ज्ञेयं । ''तैत्तिरियक'' इति मूलपदस्य स्वयं विशे-षणमाह **अत्रेति** । एतदुदाहरणभूत इत्यर्थः ॥ **आनंदमयो ब्रह्मेति प्रतिज्ञाभाग इति** । यद्यपि नास्त्यत्र ब्रह्मपदं तथाप्यस्य सर्वस्य समन्वयसूत्रप्रपंचनपरत्वात्तत्रैवात्र सर्वत्राप्याऽऽध्यायसमाप्ति साध्यार्पक-तया ब्रह्मपरामर्शकतत्पदमनुवर्तत इति भावेनेतिप्रतिज्ञाभाग इत्युक्तं ॥ **तत्रेति** । प्रतिज्ञांशव्याख्यानपरवाक्य इत्यर्थः ॥ **निर्णेतव्येति** । तुल्यन्यायतया निर्णेतुं योग्यवाक्यांतरोक्तिरित्यर्थः ॥ **गुणीति** । गुणि-सामान्यवाचीनि गुणवाचीनि यानि नामानि तद्युक्तास्वित्यर्थः ॥ **नचैवमत्रास्तीति** । अन्नमयादिभिन्न-भिन्नविषयतया श्रवणादिति भावः ॥ **असकृदुक्तिमात्रमिति** । एतच्चान्नमयादि प्रकरणपंचके श्रुतब्रह्म-शब्दमेलनाभिप्रायेणोक्तं । नत्वेकैकप्रकरणाभिप्रायेण विज्ञानानंदमयप्रकरणयोरसकृच्छ्रवणेप्यन्नमयादि-प्रकरणत्रये तदभावात् । विज्ञानमयादिप्रकरणद्वये मुख्याभ्यासस्य स्वस्येनैवमुक्तेस्तदभिप्रायकत्वायोगाच्च । अत एवाग्रे ''इत्युक्तं भवतीति'' तात्पर्यवर्णनं । ''अयमेवाभ्यासो ब्रह्मशब्दस्य यः प्रत्यन्नमयादिशब्द-मेकस्य पाठ'' इति सन्न्यायरत्नावल्युक्तेश्च ।

या० — **विकारार्थेऽनुशासनादिति** । मयड्वैतदोर्भाषायामित्यादिना विकारावयवयोरर्थयोर्मय-ड्विधानादिति भावः । न च तत्र भाषायामिति वचनाद्वेदे विकारार्थे कथं तेन मयट्प्राप्तिरिति वाच्यम् । द्व्यचश्छन्दसीति वेदेऽपि विकारार्थे मयड्विधानात् । विज्ञानानन्दमययोश्च व्याङोः पार्थक्यविवक्षया द्व्यच्क-त्वोपपत्तेः ॥ **गौरः श्याम इत्यादिवदिति** । गौरशरीराभिमानी श्यामशरीराभिमानी देवदत्त इति वक्तव्ये गौरोऽयं श्यामोऽयमिति तदभिमानिनि तच्छब्दो यथेत्यर्थः ॥ **अशनिरिन्द्र इति** । अशनिप्रेरक इन्द्र इति वक्तव्येऽशनिरिन्द्र इति तत्प्रेरके तच्छब्दो यथेत्यर्थः ॥ **प्राचुर्यार्थेऽपीति** । तत्प्रकृतवचने मयडित्यनुशासनादिति भावः ॥ **शरीरशरीरिभावेनेति** । ''तस्यैष एव शारीर आत्मे''त्युक्तत्वा-दिति भावः । एवमन्योऽन्तर आत्मेत्यनेनान्यत्वमान्तरत्वं चोच्यत इति द्रष्टव्यम् ॥ **सर्वान्तरत्वादिति** । मुख्यमेव ह्यात्मानमुपदिदिक्षु शास्त्रं स्थूलतारारुन्धतीन्यायेन लोकबुद्धिमनुसरदन्नमयं शरीरमना-त्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्य मूषानिषिक्तताम्रादिप्रतिमावत्ततोऽन्तरं ततोऽन्तरमित्येवं पूर्वपूर्वेण समानमुत्तरमुत्तरमनात्मानं ग्राहयत्सर्वान्तरं मुख्यमानन्दमयमात्मानमुपदिदेश । न चान्नमयादिभ्य इवा-

नन्दमयादन्योऽन्तर आत्माऽभिधीयते। तथा चैवं सर्वान्तरत्वादानन्दमयो मुख्यमेव ब्रह्म न द्वारमात्रमिति शङ्कार्थः। आनन्दमयस्य सर्वान्तरत्वं किं तदन्यस्यान्तरस्यावचनेनोतान्नमयादिचतुष्कोशान्तरत्वेनोत मिलितेन तदुभयेनेति विकल्पानुपादाय दूषयति **अन्नमयाद्यन्तरत्वमात्रेणेति**। मात्रशब्दसमभिव्याहारेणात्र पक्षत्रयमप्युपात्तमित्यवगन्तव्यम्। अयमर्थः। न तावदाद्यः। यथा बलवान्देवदत्त इति वचने सजातीययज्ञदत्ताद्यपेक्षमेव बलवत्त्वं, सिंहादीनां तु ततो बलवत्त्वमनुक्तमपि गम्यते तथाऽऽनन्दमयस्येतरकोशापेक्षमान्तरत्वम्। ब्रह्म तु ततोऽप्यान्तरमनुक्तमपि गम्यत इत्यपि वक्तुं शक्यत्वेनानन्दमयस्य सर्वान्तरत्वानिश्चयात्। तेन चतुष्कोशान्तरत्वस्यैव सिद्ध्या सर्वान्तरत्वानिश्चयात्॥ अत एव न तृतीयोऽपीति।

**श्री०**— अन्नमयादौ सर्वत्र ब्रह्मशब्दप्रयोग एव सन्देहबीजमिति भावेनाह **सर्वत्र ब्रह्मशब्दश्रवणादिति॥ वचनवृत्त्येति।** आनन्दमयोऽभ्यासादितिवदन्नमयोऽभ्यासादित्यादिरूपवचनवृत्त्येत्यर्थः॥ **ब्रह्म पुच्छं प्रतिष्ठेतीति।** पुच्छमिति लाङ्गूलत्वभ्रमवारणाय प्रतिष्ठेति विवृतम्। प्रतितिष्ठत्याभ्यामिति प्रतिष्ठा पादावित्यर्थः।

**च० — अनुशासनादिति।** अथ कथमेतत्। विकारार्थकमयड्विधायकं 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' 'नित्यं वृद्धशरादिभ्य' इति सूत्रद्वयम्। तत्र चाद्यसूत्रे भाषायामिति पदमेवास्ति। द्वितीयसूत्रे तु तत्पदमनुवर्तत इति तादृशसूत्रद्वयस्य छन्दस्यननुवृत्त्या छन्दसि तादृशार्थे तत्प्रत्ययविधायके द्व्यचश्छन्दसीतिसूत्रे च द्व्यच्कग्रहणादन्नप्राणमनःशब्देभ्यस्तादृशप्रत्ययोत्पादेऽपि अन्नरसविज्ञानानन्दशब्दानां बह्वच्कतया तेभ्यस्तदुत्पादानिर्वाहादिति चेत्। अत्र व्याकर्तारः। वृद्धशरादिसूत्रगतेन नित्यग्रहणेन तत्प्राप्तिसंभवात्। न च वृद्धशरादिभ्यो मयटि नित्यत्वसिद्ध्यर्थं तत्। पूर्वसूत्रेण सर्वप्रातिपदिकेभ्यो विकल्पेन मयड्विधानानन्तरं वृद्धशरादिसूत्रारम्भसामर्थ्यादेव तेभ्यस्तस्य नित्यत्वसिद्धेः। न च वाङ्मयत्वङ्मयादिरूपसिद्ध्यै प्रवृत्तस्य 'नित्यमेकाच' इति व्याकरणान्तरसूत्रस्यैकदेशभूतं नित्यग्रहणमेकच्शब्दद्वारा तत्सूत्रस्मारणायेति योगविभागार्थं तदिति शङ्क्यम्। शरादिग्रहणेन तद्ग्रहणवैयर्थ्यापत्तेः। अतस्तदेवमृद्ग्रहणमेकाजुदाहरणैकदेशार्थत्वात्सर्वेषामेकाचां स्मारकमाश्रयितुं शक्यमिति नित्यग्रहणमतिरिच्यमानं भाषायामेव वृद्धशरादिभ्यो नित्यमित्येतदर्थकं सत् छन्दसिवृद्धशरादिभ्योन्येभ्यश्च प्रातिपादिकेभ्यो यथादर्शनं व्यवस्थितविकल्पार्थमित्यङ्गीकर्तुं युक्तमिति युक्त एव बह्वच्केभ्यो विकारार्थे मयडिति। यद्वा प्राचुर्ये मयट्यपि प्रकृत्यर्थविरोधिनो लेशतो वृत्तिलाभात् प्रकृते विकारार्थः पर्यवस्यतीत्याशयः। यद्वा हेतुमनुष्येभ्य इत्यनुवर्तमाने 'मयट्चे'ति सूत्रेणागतार्थे मयट्। विकार इति चार्थिकार्थकथनमेवेति ध्येयमिति समादधुः। न च तत्र भाषायामिति वचनात् कथं तेन मयट्प्राप्तिरितिवाच्यमिति शङ्कमानाः द्व्यचश्छन्दसीति वेदेऽपि विकारार्थे मयड्विधानात्। विज्ञानानन्दमययोश्च व्याङोः पार्थक्यविवक्षया द्व्यच्कत्वो-

पपत्तेरित्यपि समादधिरे । इदमेव प्रतीकमुपाददाना'स्तादात्म्यार्थे विकारार्थे प्राचुर्यार्थेमयट् त्रिधे'तिसमम-गीताभाष्योक्तेरितिभाव इत्यपि भावमाविर्भावयन्ति । **गौरः श्यामइत्यादिवदिति** । अभिमन्यमान-वाचकः शब्दोऽभिमानिनि प्रयुज्यत इत्यर्थः । अशनिरिन्द्र इतिवदिति । अधिष्ठेयवाचकः शब्दो-ऽधिष्ठातरि प्रयुज्यत इति भावः । **प्राचुर्येऽपीति** । 'तत्प्रकृतवचने मयडि'त्यनुशासनादिति भावः । परामर्शानिर्देशानुपपत्तिभ्यामन्नमयस्याब्रह्मत्वेऽपि तत्रत्यमयटो विकारार्थत्वेऽपि च तादृशनियामकराहित्या-त्प्राणमयादीनामब्रह्मत्वं तत्रत्यमयटां विकारार्थत्वं च दुरुपगममित्याशङ्कायां समभिव्याहृतमयटां मध्ये क्वचिद्विकारार्थत्वं क्वचित्प्राचुर्यार्थत्वमिति द्विधाकल्पनाप्रसङ्गान्नैवमित्याह तथाचेति । **शरीरशरीरि-भावेनेति** । तस्यैष एव शारीर आत्मेत्युक्तेरिति भावः । एवमन्योऽन्तर आत्मेत्यनेनान्यत्वमान्तरत्वं चोच्यत इति द्रष्टव्यम् । **सर्वान्तरत्वादिति** । स्थूलताराऽरुन्धतीन्यायेन लौकिकानां प्रतीतिमनुरुन्धानं शास्त्रमन्नमयादीननात्मनो द्वारत्वेनोपदिश्यान्नमयादिभ्य इवानन्दमयादन्योन्तर आत्मेत्यभिधानाभावेन सर्वान्तरत्वादानन्दमयो मुख्यं ब्रह्म न द्वारमित्युपदिशतीत्याशङ्कितुराशयः । **विकारप्रवाहपतितत्वा-दिति** । आनन्दमयस्य ब्रह्मत्वोपगमे आनन्दपदप्रकृतिकमयटः प्राचुर्यार्थताऽऽपत्त्या विकारार्थकमयट्-चतुष्टयसमभिव्याहारविरोधादित्याशयः । अन्नमयाद्यन्तरत्वमात्रेणेति । आनन्दमयान्तरस्य ब्रह्मणः श्रवणेऽपि अन्नमयादिकोशचतुष्टयान्तरत्वमात्रेणानन्दमयस्य सर्वान्तरत्वनिश्चयोपगतौ प्राणमयाद्युत्तरोत्तर-स्यापि पूर्वपूर्वान्तरत्वमात्रेण सर्वान्तरत्वनिश्चयापत्तिरिति भावः ।

**सु०—नन्वानन्दमय इत्येव सूत्रे प्रतिज्ञा, तत्कथमानन्दमय इत्याद्यैरिति व्याख्यान मित्यत आह** उपलक्षणत्वमिति

**अनु०**— उपलक्षणत्वं शब्दानामानन्दमयपूर्विणाम् ॥

**आनन्दमयश्चासौ पूर्वश्च स एषामस्ति त आनन्दमयपूर्विणस्तेषाम् । स्यादयं व्याख्यान-व्याख्येययोर्विसंवादो यद्यत्रानन्दमयशब्दः स्वमात्रस्य ग्राहकः स्यात् । न चैवम् । किं त्वत्रानन्दमयशब्दस्य समानन्यायानामन्नमयादिशब्दानामुपलक्षकत्वम् । एवमुत्तरत्राप्याकाशा-दिशब्दानामपि । स्वसमानन्यायशब्दान्तरोपलक्षणत्वमवगन्तव्यमिति । अजहल्लक्षणा चैषा । तेनानन्दमयस्य त्यागो न मन्तव्यः । अत एव विकारशब्दादित्याद्याक्षेपाणां तत्परिहाराणां स्वतन्त्रयुक्तीनां चोपलक्षणत्वं द्रष्टव्यम् ।**

**शे०**— नन्वानन्दमयः पूर्वो येषामिति बहुव्रीहिणैव मत्वर्थलाभात् इनिप्रत्ययवैयर्थ्यमित्यतो बहुव्रीहिमाश्रित्य मतुबर्थप्रत्ययप्रयोगे वैयर्थ्यदोषेऽपि कर्मधारयमाश्रित्य मतुबर्थप्रत्ययप्रयोगे शब्दान्तरत्वान्न दोष इत्याशयेनाह **आनन्दमयश्चासौ पूर्वश्चेति** । ननु तथाऽपि कर्मधारयमत्वर्थीयाद् बहुव्रीहिरेवेष्टो लघुत्वा-

दिति न्यायाच्छब्दान्तराश्रयणेऽपि बहुव्रीहिविवक्षयाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवे बहुयत्नाश्रयणं दोषः स्यादेवेति चेन्न । बहुव्रीह्यपेक्षया कर्मधारयमत्वर्थीये शब्दगौरवस्थले बहुयत्नाश्रयणस्य दोषत्वेऽपि शब्दसाम्ये तद्दोषत्वस्य टीकाकृदभिप्रेतत्वात् । अत एव टीकायां यद्विकारीत्यत्र कर्मधारयमत्वर्थीय-मभ्युपगम्यानादिमदित्यत्र तदनङ्गीकारः । बहुव्रीहौ कर्मधारयमत्वर्थीये चार्थगौरवाप्रसङ्गेन शब्दगौरवस्यैव लाघवन्यायविरुद्धत्वात् प्रकृते च तदभावेनादोषत्वात् । लाघवन्यायानादरेण शब्दगौरवेऽपि न्यासादिगत-कर्मधारयमत्वर्थीयप्रयोगाणां 'मेकगोपुरात् ठञ् नित्यमिति' सूत्रे दुर्घटवृत्तिकृता दर्शितत्वाच्चेति सकलमकलङ्क-मिति सम्प्रदायः । वस्तुतस्तु यदा कर्मधारयान्मत्वर्थीयः क्रियते तदा स्वपदार्थप्राधान्यमाश्रित्य कर्मधारयः कर्तव्यः । तेषामेव च पदार्थानामन्यत्र गुणभावमाश्रित्य मत्वर्थीय उत्पद्यत इति प्रतिपत्तिगौरवम् । यदा च पूर्वमेवान्यपदार्थप्राधान्यविवक्षा तदा वर्तिपदार्थानां गुणभाव आश्रीयत इति प्रतिपत्तिलाघवम् । कर्मधारयो मत्वर्थीयसहित एवान्यपदार्थस्य प्रतिपादक इति शब्दगौरवम् । बहुव्रीहिस्त्वन्यानपेक्ष एव तत्प्रतिपादक इति शब्दलाघवं च भवतीति न कर्मधारयमत्वर्थीयाश्रयणं युक्तम् । तथाऽप्यन्यपदार्थप्राधा-न्यविवक्षायां बहुव्रीहेरेव प्रसङ्गेन सर्वधनी सर्वबीजी सर्वकेशी नट इत्याद्यभियुक्तप्रयोगानुपपत्तिप्रसङ्गात् । तदुपपादनार्थं प्रवृत्तात् 'सर्वादेः कर्मधारयादिनिः' इति भाष्यकारीयवचनाल्लाघवानाश्रयणेन वाचनिकः कर्मधारयादिनिरित्यत्र तात्पर्यमिति ।

नन्वसम्बन्धात्कथमानन्दमयशब्देनान्नमयादिशब्दानामुपलक्षणेत्यतः समानन्यायतया एव सम्बन्धत्वान्नानुपपत्तिरित्याशयेनाह **समानन्यायानमिति** । ननु सौत्रानन्दमयाकाशादिशब्दानां समानन्यायशब्दान्तरोपलक्षकत्वे आनन्दमयाकाशादिशब्दवाच्यत्वसिद्धिर्न स्यादित्यत आनन्दमयादिशब्देषु जहल्लक्षणाऽनाश्रयणाददोष इत्याह **अजहदिति** । नानन्दमयस्य त्यागो मन्तव्य इत्युपलक्षणम् । नाकाशादि-त्यागो मन्तव्य इत्यपि द्रष्टव्यम् । यद्यप्युपलक्षणत्वोक्त्यैवाजहल्लक्षणात्वसिद्धेः पुनरजहल्लक्षणात्वोक्तिर्व्यर्था तथाऽपि 'उपलक्षणा च गौणी चे'त्यादौ लक्षणामात्रेऽप्युपलक्षणापदप्रयोगदर्शनेन तेन तदसिद्धेरर्थवत्तदभि-धानमिति द्रष्टव्यम् । नन्वानन्दमयादिशब्दानां समानन्यायशब्दान्तरोपलक्षकत्वे 'विकार शब्दान्नेति चेदि'त्याद्याक्षेपाणां 'न च प्राचुर्यादि'त्यादिपरिहाराणां 'तद्धेतुव्यपदेशाच्चे'त्याद्यसाधारणयुक्तीनां चानुप-पत्तिः । उपलक्षितशब्दमात्रे विकारवाचकमयट्शब्दाभावात्तत एव प्राचुर्यार्थत्वपरिहारस्याप्ययोगादसाधार-णयुक्तीनां चासत्त्वादित्यत आह **अत एवेति** । सूत्रोपात्तानन्दमयाकाशादिशब्दानां समानन्यायशब्दान्तरोप लक्षकत्वादेवेत्यर्थः । विकारशब्दादित्याद्याक्षेपाणामित्यत्रादिपदेनाधिकरणान्तरीयोपदेशभेदादित्याद्याक्षेप-परिग्रहः ॥ **स्वतन्त्रयुक्तीनां चेति** । तद्धेतुव्यपदेशाच्चेत्यसाधारणयुक्तीनामित्यर्थः ।

प० — **इत्या(द्या)क्षेपाणामिति** । प्रागुक्तान्यत्वांतरत्वशारीरत्वाद्याक्षेपोपलक्षकत्वं सौत्रविकार-शब्दस्य प्राचुर्यादिति परिहारस्यान्यत्वाद्याक्षेपपरिहारोपलक्षकत्वं । "तद्धेतुव्यपदेशाच्चे"त्याद्यानंदमयाद्यसाधारणयुक्तीनामन्नमयाद्यसाधारणयुक्त्युपलक्षकत्वं द्रष्टव्यमित्यर्थः । तच्च व्यक्तीकृतं चन्द्रिकायाम् । **वक्ष्यामइति** । "ब्रह्मशब्दस्य चाभ्यासात्पंचरूपादिषु स्फुटमि"त्येतद्व्याख्यानावसर इति भावः ।

या० — बहुव्रीहित्वे इनो वैयर्थ्यात्कर्मधारयोऽयमित्याह **आनन्दमयश्चासाविति** ॥ **विकार-शब्दादित्याद्याक्षेपाणामिति** । अत्र विकारशब्दादित्याक्षेपः कण्ठोक्तः । तत्र विकारशब्देनान्यत्वा-न्तरत्वशरीरशरीरिभावा अप्युपलक्षणीयाः । आदिपदेन 'नेतरोऽनुपपत्तेः ।' 'भेदव्यपदेशाच्च,' 'कामाच्च नानुमानापेक्षे'ति, सूत्रत्रयनिवर्त्यतया अर्थादुक्ता आक्षेपा ग्राह्याः॥ **स्वतन्त्रयुक्तीनां चेति** । अभ्यासमन्त्र-वर्णसमाख्या, तद्योगशासनरूपाणां तदुपलक्षितानामभेदेऽपिविशेषेणैवान्यत्वादिवचनमित्याद्यानां स्वपक्षसा-धकयुक्तीनामित्यर्थः ।

च० — ननु षष्ठ्यर्थे बहुव्रीह्याश्रयणेनैव मत्वर्थभूतसंसर्गप्रतीतिनिर्वाहादिनिप्रत्ययवैयर्थ्यमित्या-शङ्कायां तस्य कर्मधारयप्रकृतिकत्वोपगमान्न क्षतिरित्यभिप्रेत्य समाधत्ते **आनन्दमयश्चासौ पूर्वश्चेत्यादि** । अथ लघीयसा बहुव्रीह्याश्रयणेनैवाभिमतार्थप्रत्यायनसंभवे गरीयसा कर्मधारयप्रकृतिकमत्वर्थीयाश्रयणेन तादृगर्थप्रत्यायनोपपादनं परीक्षकसंप्रदायमतिशेत इति चेन्न । बहुव्रीहेर्यत्राल्पाच्कता मत्वर्थीयान्तकर्म-धारयस्य तु बह्वच्कता तत्र दर्शितक्षत्यवतारेऽपि प्रकृते द्वयोरपि तुल्याच्कतयोक्तक्षत्यनवतारात् एतदाशये-नैव टीकायां यद्विकारीत्यत्र कर्मधारयप्रकृतिकमत्वर्थीयाऽभ्युपगमेऽप्यनादिमदित्यत्र तदनभ्युपगतिः । वृत्तिव्याख्यारूपन्यासादिगतकर्मधारयप्रकृतिकमत्वर्थीयप्रयोगाश्च 'एकगोपूर्वाट्ठञ्नित्यमि'ति सूत्रे दुर्घटवृत्ति-कृतोपदर्शिता चेति सर्वं समञ्जसम् । वस्तुतस्तु । कर्मधारयप्रकृतिकमत्वर्थीयचिकीर्षादशायां समासघटक-पूर्वपदार्थनिष्ठाभेदसंसर्गावच्छिन्नप्रकारतानिरूपिततादृशोत्तरपदार्थनिष्ठविशेष्यताशालिशाब्दधीतात्पर्येण कर्म-धारयं विधायाभेदसंसर्गेण पूर्वपदार्थविशेषितप्रधानभूतोत्तरपदार्थानां मत्वर्थीयशक्यतावच्छेदकीभूतसंसर्गे निरूपितत्वप्रत्यासत्त्या विशेषणतामुपेत्य मत्वर्थीयो विधेय इति प्रतिपत्तिकृतगौरवम् । बहुव्रीहिचिकीर्षायां तु तस्य समासाघटकपदार्थरूपान्यपदार्थप्राधान्येन पूर्वमेव वर्तिपदार्थानां गुणभाव आश्रीयत इति तत्कृतं लाघवं मत्वर्थीयेनान्यपदार्थे प्रतिपादनीये कर्मधारयसमभिव्याहारस्वतन्त्रत ऽऽश्रयणीया बहुव्रीहिणा तस्मिन् प्रतिपादनीये तु न सेत्यपि लाघवं बहुव्रीहिकल्पे सूपपादं तथापि सर्वधनी सर्वबीजी सर्वकेशीत्याद्यभि-युक्तप्रयोगसामञ्जस्याय प्रकृता 'त्सर्वादेः कर्मधारयादिनि'रिति भाष्यकारीयवचनाल्लाघवानाश्रयणेनैव वाच-निकः कर्मधारयादिनिरित्यत्र तात्पर्यमिति न्यमांसुः प्राञ्चकाः । समानन्यायानामिति स्वसमन्वयहेतुभूत-न्यायसञ्चारविषयत्वं शक्यसंबन्ध इत्यनेन ध्वन्यते । तेन नानन्दमयस्य त्याग इति । छत्रिणो यांतीत्यत्रैक-

सार्थत्वाहित्वस्य लक्ष्यतावच्छेदकत्ववत्प्रकृतेऽपि गुणिसामान्यवाचकगुणवाचकान्यतरत्वस्य लक्ष्यतावच्छेदकत्वस्योपगमात्तस्य च शक्यलक्ष्योभयसाधारणत्वादिति भावः । **अत एव** सूत्रघटकानन्दमयपदस्योक्तधर्मावच्छिन्नलक्षकत्वादेव । **उपलक्षणत्वमिति** । विकारशब्देनान्यत्वान्तरत्वशरीरशरीरिभावा उपलक्षणीयाः 'नेतरः भेद, कामाच्चे'तिसूत्रत्रयनिरसनीयाक्षेपा आदिपदसंग्राह्या इति हृदयम् । **स्वतन्त्रयुक्तीनामिति** । तद्धेतुसूत्राद्युक्तासाधारणयुक्तीनामित्यर्थः ।

**सु०— स्यादेतत्** । मुख्यार्थबाधे तद्योगे प्रयोजने च सति लक्षणा दृष्टा । तदत्र वाचकशब्दप्रयोगे संभवति किं लाक्षणिकशब्दप्रयोगे प्रयोजनं सूत्रकारस्य । न चेयं रूढलक्षणा । येन प्रयोजनानपेक्षेत्यत आह सूत्रस्येति ।

**अनु०—** सूत्रस्याल्पाक्षरत्वेन सर्वशाखाविनिर्णये ॥
पुनश्च प्रापकाद्धेतोस्तत्राधिकरणान्तरम् ॥

**यदि मुख्य एव प्रयोगः** क्रियते । तदाऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया इत्येव प्रयोक्तव्यं स्यात् । तथा च सूत्रस्याल्पाक्षरत्वलक्षणं हीयेत । श्रुत्याऽर्थाद्वा ज्ञायमानस्यार्थस्यावचनं ह्यल्पाक्षरत्वम् । अयं चार्थोऽर्थाज्ज्ञायत इति वक्ष्यामः । अतः सूत्रस्याल्पाक्षरत्वेन प्रयोजनेन लाक्षणिकप्रयोगः सूत्रकारस्येति ।

ननु सूत्रे यथाश्रुतमेव चेद् गृह्यते तदा कीदृशो दोषो येन लक्षणा व्याख्यातव्येत्यत आह सर्वेति । प्रवृत्तत्वादिति शेषः । यदि हि सूत्रे श्रुतमात्रं गृह्येत तदा सूत्रशतेन वाक्यशतसमन्वय एव सिद्ध्येत् । न तु सर्वशाखानिर्णयः । सर्वशाखानिर्णयार्थं प्रवृत्तानि चैतानि । सूत्रान्तराभावात् । अतः सर्वशाखानिर्णायकत्वस्यान्यथाऽनुपपत्त्या यथाश्रुतमात्रपरित्यागेन लक्षणा व्याख्येयेति गम्यते । लक्षणाऽऽश्रयणे हि सर्वशाखानिर्णयः सिध्यतीति ।

ननु यथा यथाश्रुतग्रहणे बाधकमस्ति सूत्राणां विश्वतोमुखत्वासंभवः तथोपलक्षणाऽऽश्रयणेऽपि बाधकसद्भावः समानः । आनन्दमयशब्देनान्नमयादीनामिव सर्वशब्दानामुपलक्षयितुं शक्यत्वेनोत्तराधिकरणारम्भानुपपत्तेरिति चेत् । किं समानन्यायशब्दान्तरविषयाधिकरणानारम्भप्रसङ्गो बाधकः । किंवा न्यायान्तरविषयशब्दान्तरगोचराधिकरणानारम्भप्रसङ्गः । नाद्यः । इष्टत्वात् । न द्वितीयः । वैषम्यात् । अन्नमयादयो हि समानन्यायतया संबन्धेनोपलक्षणया गृह्यन्ते । तदितरेषां तूपलक्षणायां कः संबन्धः । न हि संबन्धेन विना लक्षणा दृष्टा । शब्दत्वेन सन्दिग्धत्वेन चोपलक्षणमुपप्लवः । तथा सति तत्तु समन्वयादि-

त्यनेनैव पूर्णत्वात् । अथ समानन्यायविषयत्वेऽप्यधिकरणान्तरारम्भो दृश्यते । उपलक्षणपक्षे स न स्यादित्यापाद्यत इत्यत आह पुनश्चेति । तत्र पूर्वाधिकरणव्युत्पादिन्यायविषयेऽप्यर्थे यदधिकरणान्तरमारभ्यते तत्पूर्वाधिकरणन्यायाच्छादकाधिकाशङ्कालक्षणात्पुनरधिकरणान्तरारम्भप्रापकाद्धेतोर्विद्यमानाद्युज्यते । इदमुक्तं भवति । समानेऽपि न्याये पुनरधिकरणान्तरारम्भान्यथाऽनुपपत्त्या यथाश्रुत एव सूत्रार्थ इति यदुक्तं तन्न । अन्यथोपपत्तेः । अधिकाशङ्कया तन्न्यायविषयत्वाभावे परेणाशङ्किते‌ऽधिकाशङ्कानिराकरणेन पुनस्तन्न्यायविषयत्वप्रदर्शनार्थत्वादधिकरणान्तरारम्भस्य । विश्वतोमुखत्वभङ्गस्तु निरवकाश इति लक्षणाऽऽश्रयणमेव न्याय्यमिति ।

शे०— उपलक्षणत्वं शब्दानामानन्दमयपूर्विणामित्येतावतैव व्याख्यानव्याख्येययोर्विसंवादाभावप्रतिपादनात्सूत्रस्याल्पाक्षरत्वेन सर्वशाखाविनिर्णये इत्युत्तरवाक्यवैयर्थ्यमित्यतो लाक्षणिकपदप्रयोगे प्रयोजनप्रतिपादकत्वान्न वैयर्थ्यमित्याशयेन लाक्षणिकपदप्रयोगे प्रयोजनस्यैवानपेक्षायां तत्प्रतिपादकतयोत्तरवाक्यसार्थक्यासंभवात्तदुपपादनपुरःसरमुत्तरवाक्यमवतारयति **स्यादेतदिति** ॥ **वक्ष्याम इति** । 'ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटम्' इत्यादिनेति शेषः । तथाऽपि सूत्रस्याल्पाक्षरत्वेनेत्येतावतैव प्रयोजनाभिधानादुत्तरवैयर्थ्यमित्यतो मुख्यार्थानुपपत्तिप्रतिपादनार्थत्वान्न वैयर्थ्यमिति भावेन तथा तद्वाक्यमवतारयति **नन्विति** । समानन्यायानामित्येतदद्दृष्ट्वा शङ्कते **नन्विति** । समानन्यायशब्दान्तरोपलक्षणत्वाङ्गीकारान्नातिप्रसङ्ग इत्याशयेन समाधत्ते **किमिति** । तत्कथमित्यतः संबन्धभावाभावाभ्यामित्याह **अन्नमयादयो हीति** । ननु संबन्धाभावेऽपि लक्षणोपपत्तेरुक्तवैषम्यमप्रयोजकमित्यतो व्यतिरेकमुखेन संबन्धस्य लक्षणोपयोगमुपपादयति **न हीति** । अस्तु संबन्धापेक्षा तथापि न समानन्यायतैव संबन्ध इति नियमोऽतिप्रसङ्गात् । ततश्च समानन्यायतयाऽन्नमयादिशब्दानामिव शब्दत्वादिसंबन्धान्तरेणान्येषामप्युपलक्षणोपपत्तेरधिकरणान्तरवैयर्थ्यमेवेत्यत आह **शब्दत्वेनेति** । उपप्लवमेवोपपादयति **तथा सतीति** । आद्यं पक्षमङ्गीकृत्य तत्रोक्तदोषमनिष्टत्वोपदर्शनेन परिहरति **अथेति** ॥ **दृश्यत इति** । प्राणस्तथाऽनुगमादित्यादाविति शेषः ।

स०—**अर्थाज्ज्ञायत इति वक्ष्याम इति** । 'ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटमि'त्यत्र इत्यर्थः ।

प०— **अधिकरणांतरारंभस्येति** । आकाशाधिकरणेत्यर्थः । नन्वधिकरणान्तरारंभ इव विश्वतो मुखत्वमपि अन्यथा नीयताम् । येन तदन्यथानुपपत्त्या लक्षणाऽऽश्रयणं स्यादित्यत आह **विश्वतोमुखत्वेति** ।

**या०— वक्ष्याम इति ।** 'ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटमि'त्यत्रेत्यर्थः ।

**श्री०—विश्वतोमुखत्वभङ्गस्त्विति ।** समानन्यायाक्रान्तशब्दोपलक्षणत्वाभावपक्ष इति शेषः ।

**च०— वक्ष्याम इति ।** 'ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटम्' इत्यत्रेत्यादिः । अन्यथोपपत्तिरुक्ता भवति । आनन्दमयेतरेषां ब्रह्मत्वव्यावृत्तिपुरस्कारेणानन्दमयस्य ब्रह्मत्वज्ञापकानन्दमयपदोपादानान्यथाऽनुपपत्तेरिति पूरणीयम् ।

**सु०—ननु सर्वशाखानिर्णायकत्वमेवैषां सूत्राणां नास्ति । सर्वशाखानां कार्यनिष्ठत्वेनाब्रह्मविषयत्वात् । ब्रह्मनिष्ठस्तु वेदान्तभागोऽल्पीयान् विनापि लक्षणाऽऽश्रयणेन यथाश्रुतार्थैः सूत्रैः शक्यो निर्णेतुमिति किं लक्षणाऽऽश्रयणेनेत्यत आह सर्वे वेदा इति ।**

**अनु०—** सर्वे वेदा आमनन्ति यत्पदं त्विति हि श्रुतिः ॥

**सर्वेषामपि वेदानां ब्रह्मनिष्ठतामाहेति शेषः ।**

**प०—** श्रुतिरित्यनंतरमपेक्षितं पूरयति **इति शेष इति ।**

**सु०— यद्यत्रोपलक्षणमभिप्रेतं स्यात्तदा प्रथमप्राप्तत्वादन्नमयशब्दमेवोपादद्यात् । आनन्दमयशब्दं तूपाददत्सूत्रकारस्तन्मात्रविवक्षां सूचयतीत्यत आह** आनन्दमयेति ।

**अनु०—** आनन्दमयरूपे तु ब्रह्मणः पुच्छनोक्तितः ॥
समस्ताब्रह्मताप्राप्तेरानन्दमयनाम हि ॥

**अन्नमयादीनामब्रह्मत्वे विकारशब्दः साधारणोपपत्तिः । आनन्दमयरूपे तु ब्रह्मविदाप्नोति परमित्युक्तस्य 'ब्रह्म पुच्छं प्रतिष्ठा' इति पुच्छत्वोक्त्या समस्तस्यावयविन आनन्दमयस्याब्रह्मत्वप्राप्तिरधिकाऽप्युपपत्तिरस्तीत्यतोऽत्रावहितैर्भवितव्यमिति ज्ञापयितुमानन्दमयनाम गृहीतं सूत्रकृतेत्यन्यथोपपत्तिरुक्ता भव(ती)ति । यद्यानन्दमयो ब्रह्म स्यात्तदा तदवयवस्य समस्ताया मुख्याया आब्रह्मतायाः सम्यग्ब्रह्मताया अप्राप्तेरिति वा । ततश्च तद्वेदनात्परप्राप्तिः श्रुता बाध्येतेति । नन्वन्नमयेऽप्यधिकाऽनुपपत्तिरस्ति । 'ओषधीभ्योऽन्नम् । अन्नात्पुरुषः । स वा एष पुरुषोऽन्नरसमयः' इति । 'तस्येदमेव शिरः' इति च । मैवम् । अस्यापि विकारोपपादकत्वेन तदन्तर्भावात् । यद्वा अथातो ब्रह्मजिज्ञासेति जिज्ञास्यतयोक्तस्य ब्रह्मणः पुच्छत्वोक्त्या समस्ताब्रह्मताप्राप्तेरानन्दमयविचारस्य प्रकृतेन सङ्गतत्वादानन्दमयनामग्रहणमिति योज्यम् ।**

शे० अन्यथोपपत्तिरुक्ता भवतीति । आनन्दमयमात्रविवक्षाज्ञापकानन्दमयशब्दोपादाना-न्यथाऽनुपपत्तेरिति शेषः ॥ विकारोपपादकत्वेनेति । परामर्शप्रत्यक्षनिर्देशाभ्यामन्नविकारशरीरस्यैवात्र विवक्षणीयत्वेन मयटो विकारार्थत्वमेव न्याय्यं न प्राचुर्यार्थत्वमित्यनेन प्रकारेण विकारोपपादकत्वेनेत्यर्थः ।

प०— समस्तस्येत्यनुवादः । अवयविन इति व्याख्या । अवहितैः सावधानैरित्यर्थः । मास्तु पुच्छस्य मुख्यब्रह्मत्वमित्यत आह ततश्चेति । तद्वेदनात् ब्रह्मविदाप्नोति परमित्युक्तब्रह्मज्ञानात् । परब्रह्मप्राप्तिर्या श्रुता सा बाधिता स्यादित्यर्थः ॥ अधिकानुपपत्तिरिति । प्राकृतान्नविकारदेहपरामर्शा-दिरूपेत्यर्थः ॥ विकारोपपादकत्वेनेति । अत एव पूर्वपक्षदशायामन्नमयादिशब्दे तावद्विकारार्थोऽङ्गीकार्य इत्यादिना तथैवोक्तमिति भावः ॥ प्रकृतेनेति । जिज्ञासासूत्रेणेत्यर्थः । उपलक्षणमेतत् । 'तत्राऽऽनंदादयो गुणाः । ईशस्यैवेति निर्णीता इत्युपासनापादीयानुव्याख्यानसुधायामुक्तदिशा सर्वापेक्षितानंदप्रदोपासनावि-षयमहागुणवाचित्वेनाध्यायादौ मंगलार्थत्वाच्चेत्यपि ध्येयं ॥

या०— अन्यथोपपत्तिरुक्ता भवतीति । तन्मात्रविवक्षाज्ञापकानन्दमयनामोपादानान्यथाऽ-नुपपत्तेरिति शेषः ।

च०— विकारोपपादकत्वेनेति । परामर्शप्रत्यक्षनिर्देशाभ्यामन्नविकारशरीरस्यैवात्र विवक्ष-णीयत्वे मयटो विकारार्थकत्वमेव न्याय्यमिति विकारोपपादकत्वेनेत्यर्थः ।

---

**सु०— ननु सूत्राणामुपलक्षणत्वाभावे सर्वशाखानिर्णयाभावप्रसङ्गेनास्तूपलक्षणत्वम् । आनन्दमयशब्दस्यान्नमयाद्युपलक्षणत्वमित्ययं विशेषः कुत इत्यत आह** ब्रह्मशब्दस्येति ।

अनु०— ब्रह्मशब्दस्य चाभ्यासात्पञ्चरूपादिषु स्फुटम् ॥

**आनन्दमयस्य ब्रह्मत्वे हि हेतुत्वेन(यो) ब्रह्मशब्दाभ्यासोऽभिहितः सोऽन्नमयादिष्वपि समानः । तथा चान्नमयादीनामब्रह्मत्वेऽनैकान्तिकः कथमानन्दमयस्यापि ब्रह्मत्वं साधयेत् । अतोऽन्नमयादिसाधारणं ब्रह्मशब्दाभ्यासं हेतुत्वेन वदता सूत्रकारेण तेषामपि पक्षत्वमङ्गी-कृतमिति ज्ञायते । च शब्देन 'अस्मिन्नस्य च तद्योगं शास्तीत्यादिहेतूनामपि साधारण्यं सूचयति । आदिग्रहणादानन्दादीनां ग्रहणम् । तस्मादुक्त एव सूत्रार्थ इति ।**

शे० — **अस्मिन्नस्य च तद्योगं शास्तीत्यादिहेतूनामिति ।** यद्यप्यत्र मान्त्रवर्णिकमेव च गीयत इत्यादिहेतूनामिति वक्तव्यम् । तस्याऽप्यन्नमयादिपञ्चकसाधारण्यात् । यद्वक्ष्यति 'अन्नमया-दीनां पञ्चानामपि परब्रह्मत्वं युक्त्यन्तरेण प्रतिपादयितुं सूत्रमि'ति तथाऽपि व्युत्पादनसापेक्षत्वान्मान्त्रवर्णिक-समाख्याया अत्राग्रहणमिति द्रष्टव्यम् । अत्रादिपदेनान्नमयादिज्ञानान्मोक्षानुपपत्त्यादिहेतूनां परामर्शः ॥

**आदिग्रहणादिति** । आनन्दादीनामप्यत्र पक्षत्वमिति ज्ञापयितुं पञ्चरूपादिष्वित्यत्रादिपदमित्यर्थः । अन्यथाऽऽनन्दादिमाधारण्येनानैकान्तिकतया ब्रह्मशब्दस्य नानन्दमयब्रह्मत्वव्यवस्थापकत्वं स्यादिति भावः । यद्यपि 'प्राप्यत्वेन मयट्प्रोक्तेन तत्राप्यन्यदुच्यते' इति वक्ष्यमाणरीत्या तेऽपि गुणिवाचिन एव तथाऽप्यापातप्रतीत्यनुरोधेनेदमुक्तिरित एव द्वितीयपादे तथैव व्युत्पादयिष्यतीति ध्येयम् ।

**स० — आदिग्रहणादानन्दादीनामिति** । 'गुणवाचिनां च प्रथममाह देवः समन्वयम्' इत्युक्तत्वेनात्राधिकरणे गुणवाचकानन्दादिशब्दानामपि निर्णेतव्यत्वेन 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादौ श्रूयमाणानामानन्दादीनामपि पक्षत्वम् । अन्यथा ब्रह्मशब्दस्य तत्र तत्र व्यभिचारप्रसङ्गादितीममर्थं आदिशब्देनाहेत्यर्थः ।

**प० — ब्रह्मशब्दाभ्यासोऽभिहित इति** । ब्रह्मशब्दोऽभिहित इत्यर्थः । तथैव प्राक् 'ब्रह्मशब्दस्य श्रुतत्वादि'ति व्याख्यानात् । तथा च सोऽन्नमयादिष्वपि समान इति ग्रंथस्साधुः ॥ **इत्यादिहेतूनामिति** । ''अस्मिन्नि' तिसूत्रोक्तमुक्तगम्यत्व, ''मांत्रवर्णिक''सूत्रोक्तमंत्रवर्णोक्तत्व,तदुपलक्षितभृगुवल्लीसमाख्याऽऽदिहेतूनामित्यर्थः ।

**या० — विकारोपपादकत्वेनेति** । परामर्शप्रत्यक्षनिर्देशाभ्याममन्नविकारिशरीरस्यैवात्र विवक्षणीयत्वे मयटो विकारार्थत्वमेव न्याय्यमिति विकारोपपादकत्वेनेत्यर्थः ॥ **चशब्देनास्मिन्निति** । यद्यपि 'मान्त्रवर्णिकमेव च गीयत' इत्यादिहेतूनामिति वक्तव्यम् । तथाऽपि मान्त्रवर्णिकसमाख्यायाः पञ्चरूपविषयत्वस्यास्पष्टप्रतिभासादेवमुक्तमित्यवगन्तव्यम् । आदिपदेनेतरज्ञानान्मोक्षानुपपत्तिमान्त्रवर्णिकसमाख्ययोस्तदुपलक्षितभृगुवल्लीवाधूलशाखासमाख्यादेश्च ग्रहणम् ॥ **आदिग्रहणादानन्दादीनामिति** । ''आनन्दो ब्रह्मेति व्यजानादि''त्यादौ श्रूयमाणानामानन्दादीनामपि गुणवाचिनामत्र पक्षत्वम् । अन्यथा ब्रह्मशब्दस्य तत्र व्यभिचारप्रसङ्ग इतीममर्थमादिशब्देनाहेत्यर्थः । यद्यपि 'प्राप्यत्वेन मयट्प्रोक्तेन तत्राप्यन्यदुच्यत' इति वक्ष्यमाणरीत्या तेऽपि गुणवाचिन एव । तथाऽप्यन्यत्र प्रसिद्धत्वादिवदापातप्रतीत्यनुरोधेनेयमुक्तिरित्यवधेयम् ।

**च० — चशब्देनास्मिन्नित्यादि** । अन्नमयादीनां पञ्चानामपि परब्रह्मत्वं युक्त्यन्तरेण प्रतिपादयितुं सूत्रमिति ग्रन्थकृदभिप्रास्यमानतया मान्त्रवर्णिकगानस्यान्नमयादिपञ्चकसाधारण्यादत्र मान्त्रवर्णिकमेव च गीयत इत्यादिहेतूनामित्यभिधातव्यत्वेऽपि मान्त्रवर्णिकसमाख्यायास्तत्पञ्चकसाधारण्यस्य व्युत्पादनसापेक्षतया तन्निरपेक्षादरात्तथाऽनभिहितिरिति ध्येयम् । आदिपदमितरज्ञानान्मोक्षानुपपत्तिमंत्रवर्णिकसमाख्याऽऽदिसंग्राहकम् । **आदिग्रहणादिति** । 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादौ श्रूयमाणानां गुणवाचिनामानन्दादिपदानां प्रकृतपक्षतावच्छेदकाभिमतगुणवाचकगुणिसामान्यवाचकान्यतर-

वरूपधर्माकान्ततां ध्वनयितुं पञ्चरूपादिष्विति मौलमादिपदोपादानमितरथा ब्रह्मशब्दस्य तत्रानैकान्त्य प्रसङ्गादिति भावः । 'प्राप्यत्वेन मयट्प्रोक्तेन तत्राप्यन्यदुच्यत' इत्यनुव्याकर्त्रभिधास्यमानदिशाऽऽनन्दादिपदानामपि गुणिवाचकत्वेऽपि लिङ्गपादे तथैव ग्रन्थकृदभिधास्यमानत्वेऽप्यापातप्रतीतिमनुरुध्येत्थमभिहितिरिति ध्येयम् ।

**सु० — नन्वानन्दमयस्य कथं ब्रह्मत्वम् । ब्रह्म पुच्छमिति ब्रह्मणस्तत्पुच्छत्वाभिधानात् । न च ब्रह्मशब्दोऽन्यपरः । तथा सत्यत्रैवानैकान्त्यापत्तेः । न च निरपवादो ब्रह्मशब्दो हेतुः न ब्रह्मशब्दमात्रमिति वाच्यम् । ब्रह्म पुच्छमित्यत्राप्यपवादाभावात् । ब्रह्मावयवत्वमिति चेन्न । अद्याप्यानन्दमयस्य ब्रह्मत्वासिद्धेरिति ॥ अत्र प्रष्टव्यम् । किमवयवस्य पूर्णत्वेऽवयविनः पूर्णत्वं नोपपद्यत इत्यभिप्रायः । किं वाऽऽआनन्दमयस्यावयविनः पूर्णत्वे तदवयवस्य पूर्णत्वाभावापादनम् । उतावयवावयविनोर्भेदादवयवस्य स्मात्मत्वेप नावयविनस्त्वमिति ।**

**आद्ये दोषमाह** ब्रह्मतेति ।

**तनु० —** ब्रह्मताऽवयवेऽपि स्यात्तथाऽवयविनि स्वतः ॥

यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला ॥

दर्शिता चैव पार्थाय निःसीमाः शक्तयोऽस्य हि ॥

**यदाऽवयवेऽपि ब्रह्मता तथा सत्यवयविनि सा स्वतोऽनायासेन स्यात् । अवयविनोऽवयवापेक्षया महत्त्वस्य दृष्टत्वात् । ततश्चावयवस्य पूर्णत्वेऽवयविनः पूर्णत्वानुपपत्तिरिति विरुद्धमेतत् ।**

**द्वितीये व्याप्त्यभावं दर्शयति** यथैवेति । **एतच्च 'उद्बबर्हात्मनः केशौ' इत्यादिना पुराणे प्रसिद्धम् । अखिला निरुपचरिता । तथाऽऽनन्दमयावयवस्यापि भविष्यतीति शेषः । अत्र प्रमाणमाह** दर्शिता चेति । **पार्थदर्शनं च द्यावापृथिव्योरित्यादि तद्वाक्यादवगम्यते । चशब्दः पुराणायुक्तिसमुच्चयार्थः । एवशब्दस्त्वेवं प्रमितैव न वाङ्मात्रेणोच्यत इति संबध्यते । ननु लोके योऽवयवः स परिच्छिन्नो दृष्टस्तत्कथमेतदित्यतः परमेश्वरस्याघटितघटकतया सर्वत्राप्रतिबद्धया शक्त्याऽन्यत्रादृष्टमपि घटते काऽत्र कथन्तेत्याह** निःसीमा इति । **सीमसीमे स्त्रियामुभे इति सीमन् शब्दपर्यायसीमाशब्दोत्तरपदोऽयं समासः । सीमन्शब्दोत्तरपदत्वेऽपि डाबुभाभ्यामन्यतरस्यामिति साधु ।**

**तृतीयेऽप्येतदेवोत्तरम्** । **निःसीमा इति** । **हिशब्दो हेतौ** । **शिरो नारायण इत्यादि-प्रसिद्धिद्योतको वा** ।

शे० — **तथा सतीति** । ब्रह्मपुच्छमित्यत्र ब्रह्मशब्दस्यान्यपरत्व इत्यर्थः ॥ **अत्रैवेति** ब्रह्मपुच्छमित्यत्र ब्रह्मशब्दश्रवणेऽपि विष्णुत्वाभावादिति भावः ॥ **न च निरपवाद इति** । तथा च हेतोरेत्रानागमनान्न व्यभिचार इति भावः ॥ **अद्यापीति** । ततश्चानन्दमयस्य ब्रह्मत्वसिद्धौ ब्रह्मावयवत्वरूपापवादसिद्ध्या निरपवादब्रह्मशब्दस्य व्यभिचाराभावसिद्धिस्तत्सिद्धौ च तेनानन्दमयस्य ब्रह्मत्वसिद्धिरित्यन्योन्याश्रय इति भावः ॥ **व्याप्त्यभावादिति** । यो यदवयवः सोऽपूर्ण एवेति व्याप्तेरभावादित्यर्थः । पूर्णत्वेऽपि कृष्णस्यावयवत्वस्यैवासिद्धेर्न तत्र व्यभिचार इत्यत आह **एतच्चेति** ॥ **अत्रेति** । कृष्णस्य निरुपचरितपूर्णतायामित्यर्थः । परप्रत्यक्षस्य परं प्रत्यसिद्धेः कथमेतदित्यतस्तद्वाक्यादेव तत्सिद्धिरित्याह **पार्थदर्शनं चेति** । ननु निर्गता सीमा याभ्यस्ता इति सीमन्शब्दोत्तरपदतया समासस्य ऋन्नेभ्यो ङीबिति प्राप्तस्य ङीपो 'मन' इति निषेधान्निःसीमान इति भवितव्यम् । निःसीमा इति तु कथमित्यत आह **सीमसीमे इति** । सीमन्शब्दोत्तरपदत्वेऽपि समासस्य न दोष इत्याह **सीमन्निति** । अत्र डाबुभाभ्यामित्येको योगः । मन्नन्तात्प्रातिपदिकादन्नन्ताद्बहुव्रीहेश्च डाप् स्त्रियां स्यादिति तदर्थः । स चार्थाद्विकल्पितः । नित्ये हि डापि न कचिन्नान्तमस्तीति मनोऽनो बहुव्रीहिरिति ङी निषेधो निर्विषयः स्याच्चतोऽन्यतरस्यामित्यपरो योगः । डाबुभाभ्यामित्यनेनोक्तौ डाप्ङीप्निषेधौ द्वावपि वा स्त इति च तदर्थः । तेन तयोरभावेनान्तलक्षणो ङीबपि भवतीत्यर्थपर्यवसानात् डापि निःसीमा इति ङीप्निषेध निःसीमान इति, ङीपि निःसीम्न्य इति, रूपत्रयस्यापि सम्भवान्नानुपपत्तिरिति ध्येयम् । (मनः । मन्नन्तान्न ङीप् सीमा । सीमानौ । अनो बहुव्रीहेः । अन्नन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा बहुयज्वानौ । डाबुभाभ्यामन्यतरस्याम् । सूत्रद्वयोपात्ताभ्यां डाब्वा स्यात् । सीमा सीमे सीमानौ । दामा दामानौ दामे । नपुंसिदामेत्यमरः । बहुयज्वा) न चैवं सीमेत्यत्रापि तत्प्रसङ्ग इति वाच्यम् । अन्यतरस्यामिति योगे मन इत्यस्य निवृत्त्याऽन्नन्तबहुव्रीहिरेव विकल्पाश्रयणेन केवलमन्नन्तात्तदप्रसङ्गात् । न च मन इति निवृत्तौ निःसीमन्निति मन्नन्तबहुव्रीहौ ङीपविकल्पो न स्यादिति वाच्यम् । तत्र मन्नन्तङीब्विकल्पानवकाशेऽप्यन्नन्तङीब्विकल्पस्य बहुसीम्नी बहुसीमे बहुसीमानावित्यादाविवाविरुद्धत्वात् । न चैवं मन्नन्तबहुव्रीहावप्यन्नन्तङीब्विकल्पाश्रयणेनैव महानाम्नीशब्दस्य व्युत्पादयितुं शक्यत्वेन कर्मनिर्णयटीकायां मन इति ङीप्निषेधाप्रवृत्तिव्युत्पादनायानित्यत्वायाश्रयणमनर्थकमिति वाच्यम् । चिरन्तनरीत्याऽन्यतरस्यामिति योगविभागमनाश्रित्य तत्र तदाश्रयणादिति दिक् ॥ **तृतीयेऽपीति** । अवयवावयविनोर्भेदादवयवस्य परमात्मत्वेन नावयविनः परमात्मत्वमिति तृतीयेऽपीत्यर्थः ॥ **एतदेवेति** । अघटितघटकेश्वर

शक्त्या नावयविनोऽवयवत्वं विरुद्धमित्याशयः । उक्तस्यार्थस्य मूलारूढतायै हिशब्दं हेत्वर्थतया व्याचष्टे **हिशब्द इति ।** ईश्वरशक्त्या प्रमितस्यैव दुर्घटस्य निर्वाहोऽन्यथाऽतिप्रसङ्गात् । न चावयविनोऽवयवत्वं प्रमितं तत्कथं तथा निर्वाह इत्यत आह **शिरो नारायण इत्यादि**ति ।

**स०** — ननु सीमशब्दस्य नकारान्तत्वेन 'ऋन्नेभ्यो ङीप्' इति ङीपि निस्सीम्न्य इति भवितव्यम् । निस्सीमा इत्युक्तिस्तु कथमित्यत आह **सीमसीमे स्त्रियामित्यादिना** । तथा च नान्तत्वाभावान्न ङीपः प्राप्तिरिति भावः । नान्तत्वमभ्युपेत्याप्याह **सीमन्शब्दोत्तरपदत्वेऽपीति** । अत्र डापि टिलोपे च सति आकारान्तत्वमेव भवतीति भावः ।

**प०** तथेति मूलपदस्यार्थमाह **तथासतीति** ॥ **उद्धबर्हेति** । 'उद्बबर्हात्मनः केशौ सितकृष्णौ महामुने । उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारक्लेशहानिं करिष्यतः' इत्यादिविष्णुपुराणे पंचमांशे प्रसिद्धमित्यर्थः ॥ **अत्र प्रमाणमाहेति** । व्याप्तत्वेऽर्जुनप्रत्यक्षं प्रमाणमाहेत्यर्थः । "द्यावापृथिव्योरिदमंतरं हि व्याप्तं त्वयैकेन दिशश्च सर्वा" इत्येकादशगीतास्थार्जुनवाक्यादवगम्यते पार्थप्रत्यक्षमित्यर्थः ॥ **पुराणाद्युक्तीति** । पुराणेतिहासादौ व्याप्तत्वोक्तिसमुच्चयार्थ इत्यर्थः । ननु सीमन्शब्दस्य नकारांतत्वेन "ऋन्नेभ्यो ङीब्" इतिप्राप्तङीप्प्रत्ययस्य "मन" इतिसूत्रेण मन्नंतात्प्रातिपदिकात् ङीप् न भवतीति निषेधेपि "निस्सीमानोस्य शक्तय" इति वाच्यमित्यत आह **सीमसीमे स्त्रियामुभे इतीति** । इत्यमरोक्तेरिति योज्यं ॥ **डाबुभाभ्यामिति** । मन्नन्तात्प्रातिपदिकादन्नन्ताच्च बहुव्रीहेर्विकल्पेन डाप्प्रत्ययो भवतीति चतुर्थाद्यपादे पाणिन्युक्त्या डाप्प्रत्ययांतत्वात् साधुरित्यर्थः । उतावयवावयविनोर्भेदादित्यादिनोक्तपक्षं निराह **तृतीयेऽपीति** ॥ **इत्यादिप्रसिद्धीति** । भाष्योक्तस्मृतिप्रसिद्धीत्यर्थः । तथाच "अंगांगित्वेन भगवान्स्वानंदानुभवे स्थितः । स एव व्यूह्य चात्मानं पृथग्रूप इव स्थित" इत्यैतरेयभाष्योक्तदिशा नारायणवासुदेवादिरूपैर्नानारत्नविनिर्मितप्रतिमावत्पुंजीभूतदिव्यलक्षणरूपविशेषेण भगवत एवांगत्वमंगित्वं चोपपन्नमिति द्वयोः परमात्मत्वं नायुक्तमिति भावः ।

**या०** — ननु सीमन्शब्दस्य नकारान्तस्य स्त्रियां मन इति ङीप्निषेधान्निःसीमान इति भवितव्यं निःसीमा इति कथमित्यत आह **सीमसीमेति** । नान्तत्वमभ्युपेत्याप्याह **सीमन्शब्दोत्तरेति** । मन्नन्तात्प्रातिपदिकादन्नन्ताद्बहुव्रीहेश्च ङीप् वा स्यादिति सूत्रार्थः । सीमे सीमानौ बहुयज्वे बहुयज्वानामित्युदाहरणम् । तथा चानेन डापि टिलोपे चाऽऽकारान्तत्वं साध्वित्यर्थः ॥

**श्री०** — ब्रह्मणस्तत्पुच्छत्वाभिधानादित्यत्र ब्रह्मण इत्यस्य जिज्ञास्यतयोक्तस्य ब्रह्मण इत्यर्थः । **ब्रह्मशब्द इति** । ब्रह्मपुच्छमित्यत्रेत्यर्थः ॥ **अन्यपर इति** । जिज्ञास्यब्रह्मव्यतिरिक्तचतुर्मुखादिपर

इत्यर्थः ॥ **उद्बर्हेति** । "उद्बर्हात्मनः केशौ सितकृष्णौ महामुने । उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारक्लेशहानिं करिष्यत "इत्यादिना विष्णुपुराणप्रसिद्धमित्यर्थः । अत्र त्या सत्वे । प्रमाणमर्जुनप्रत्यक्षरूपं प्रमाणम् । "द्यावापृथिव्योरिदमन्तरं हि. व्याप्तं त्वयैकेन दिशश्च सर्वाः" इत्येकादशाध्यायगीतावाक्याज्ज्ञायतेऽर्जुनप्रत्यक्षमित्यर्थः ॥ **सीमसीमे इति** । सीम च सीमा च सीमसीमे इत्यर्थः ॥

च० — **तथा सति** ब्रह्मपुच्छमिति वाक्यघटकब्रह्मपदस्यान्यपरत्वे । अत्रैव ब्रह्म पुच्छमिति वाक्यप्रतिपाद्य एव । ब्रह्मपदश्रवणेऽपि तस्य विष्णुत्वानवगतेरिति भावः । **निरपवाद इति** । निरादयः क्रान्ताद्यर्थे इत्यनुशासनादपवादापादानेन निष्क्रान्तिविशेषित इत्यर्थः । तथा च प्रकृतहेतुताऽवच्छेदकावच्छिन्नस्य तत्राभावात् द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादाविव साध्याभावाधिकरणनिरूपिताधेयतावच्छेदकीभूतहेतुतावच्छेदकवत्त्वरूपानैकान्त्यानवकाश इति भावः । उक्तार्थे विष्णुपुराणं प्रमाणयति **एतच्चेति** । 'उद्बर्हात्मनः केशौ सितकृष्णौ महामुने । उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारक्लेशहानिं करिष्यतः' इत्यादिना विष्णुपुराणे पञ्चमांशे प्रसिद्धमित्यर्थः । ननु सीमन्शब्दोत्तरपदसमासस्य नान्ततायां 'ऋन्नेभ्यो ङीप्' इति प्राप्तस्य ङीपो 'मनः' इति सूत्रेण मन्नन्तात्प्रातिपदिकात् निषेधात् निस्सीमान इति विन्यासेन भवितव्यतया निस्सीमा इति विन्यासः कथं सङ्गच्छत इत्यत आह **सीमन्शब्देति** । समासस्य सीमन्शब्दोत्तरत्वोपगमेऽपि न क्षतिरित्याह **सीमन्शब्दोत्तरेति** । मन्नन्तात्प्रातिपदिकादन्नन्ताद्बहुव्रीहेश्च डाप् वा स्यादिति सूत्रार्थः । सीमे सीमानौ । बहुयज्वे बहुयज्वानावित्युदाहरणम् । इत्थं चानेन योगेन डापि डित्वाट्टिलोपे चादन्तत्वं सङ्गच्छत इत्यर्थः ।

**सु० — स्यादेतत् । ब्रह्मशब्दबलेनानन्दमयादीनां विष्णुत्वं न निश्चेतुं शक्यते । 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम्' इति तापनीयवा-**

अनु० – ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ॥

**क्ये रुद्रेऽपि परंब्रह्मशब्दश्रवणादित्यतः पूर्वोत्तरार्धे भिन्नविषयतया व्याख्याति ऋतमिति । इति पूर्वार्धे विष्ण्वाख्यं परंब्रह्मोक्तमिति योजना । अन्यत्र उत्तरार्धे विरूपाक्षाख्यमुक्तमिति पूर्वोत्तरार्धयोर्भिन्नविषयत्वमुक्तम् । भिन्नविषयत्वेऽन्वयः कथमित्यत उक्तं तत्प्रत्यूर्ध्वरेतमिति । अनेन ऋतमित्यादीनि द्वितीयान्तान्यूर्ध्वरेतमित्यादीनि प्रथमान्तानीत्युक्तं भवति । तर्हि नपुंसक-**

लिङ्गप्रयोगः कथमित्यत उक्तमपरं ब्रह्मेति । अमुख्यया वृत्त्या जीवेऽपि ब्रह्मशब्दसद्भावात्त-दपेक्षया नपुंसकलिङ्गमिति । तत्प्रत्यूर्ध्वरेतमिति विवृणोति तद्व्रते स्थितमिति ।

बिभ्रन्नात्स्वयमुक्तमन्यत्र ह्यूर्ध्वरेतं न तत्प्राप्ति ॥

विरूपाक्षाख्यमपरं ब्रह्मैकं तद्व्रते स्थितम् ॥

एकविषयतया प्रतीयमानयोः पूर्वोत्तरार्धयोः कुतो भिन्नविषयता कल्प्यत इत्यत आह समानेति ।

अनु० समानाधिकृतत्वं चेदुत्तरं नीललोहितम् ॥

कृष्णपिङ्गलरूपेण पुनरुक्तं भविष्यति ॥

समानमेकमधिकृतमधिकरणं विषयो ययोः पूर्वोत्तरार्धयोस्ते समानाधिकृते तयोर्भावः । यदि पूर्वोत्तरार्धयोरेकविषयत्वं स्यात्तदोत्तरम् उत्तरार्धोक्तं नीललोहितम् कृष्णपिङ्गलरूपेण पूर्वार्धोक्तेन निमित्तेन पुनरुक्तं भविष्यति । कृष्णपिङ्गलनीललोहितशब्दयोरेकार्थत्वात् । अतः प्रतीतमप्येकविषयत्वं परित्यज्य भिन्नविषयत्वग्रहणं न्याय्यमिति ।

शे० — ननु पूर्वोत्तरार्धयोर्भिन्नविषयत्ववर्णनेनैव सौत्रहेतोरव्यभिचारसिद्धेर्भाष्ये तत्प्रतीत्यधिक-मित्यतो नेदं विषयभेदप्रतिपादनार्थं किं नाम पूर्वोत्तरार्धयोर्भिन्नविषयत्वं प्राप्तान्वयानुपपत्तिपरिहाराया-न्वयप्रदर्शनार्थमित्याशयेन तत्तथा योजयति भिन्नेति । तथाऽपि भाष्येऽपरब्रह्मेत्यंशस्याधिक्यमित्यतः 'ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितमि'त्येतेषां पूर्वार्धेन प्रथमान्ततयाऽन्वये प्राप्तानुपपत्तिपरिहारार्थं तदि-त्याशयेन योजयति तर्हीति । प्रथमान्ततया पूर्वार्धेऽन्वये ऊर्ध्वरेता इत्यादि पुल्लिङ्गमेव स्यान्न नपुंसक-मित्यर्थः । तदपेक्षयेति । तथा चोत्तरार्धे ब्रह्मेत्येतद्विशेष्यतयाऽनुवर्तनीयमित्युक्तं भवति ॥ विवृणो-तीति । तथा च न तद्व्रते स्थितमित्यंशस्यापि वैयर्थ्यमिति भावः ।

प० — "कृष्णपिंगलं" इत्यनंतरं "इति पूर्वार्धे परंब्रह्मे"ति पदद्वयमध्याहृत्य योजयति इति पूर्वार्ध इति ।

या० — तदपेक्षया नपुंसकेति । तथा चोत्तरार्धे ब्रह्मेत्येतद्विशेष्यतयाऽनुवर्तनीयमिति भावः ।

च० — तदपेक्षया नपुंसकेति । उत्तरार्धे विशेष्यवाचकब्रह्मपदमनुषञ्जनीयमिति भावः ।

सु० — किञ्च ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिरित्युत्तरवाक्ये ब्रह्म अधिपतिर्यस्य रुद्रस्य असौ ब्रह्माधिपतिरिति रुद्रस्य ब्रह्म अधिपतिः प्रतीयते । यस्य चाधिपतिरस्ति कथं तस्य पर-ब्रह्मता स्यादित्यतश्च पूर्वार्धो न रुद्रविषय इत्याशयवानाह ब्रह्माधिपतिरिति ।

अनु०— ब्रह्माधिपतिरित्यत्र तापनीयश्रुतौ पुरः ॥

ऋतं सत्यमिति वाक्यं यद्गतम् अत्र तापनीयश्रुतौ ऋतमित्यस्मात्पुरः पुरतः उपरिष्टादिति यावत् । ब्रह्माधिपतिरिति रुद्रस्य पराधीनताप्रतिपादकं पदमस्तीति योजना ।

स्यादेवं यदि ब्रह्माधिपतिशब्दस्य बहुव्रीहित्वं स्यात् । न चैवम् । षष्ठीतत्पुरुषे कर्मधारये वा संभवति बहुव्रीहित्वनिश्चयकाभावादित्यत आह स्वरितेति ।

अनु०— स्वरितब्रह्मशब्दान्तं बहुव्रीहित्वमेष्यति ॥

यस्माद्ब्रह्माधिपतिप्रातिपादिकं स्वरितब्रह्मशब्दान्तं तस्माद्बहुव्रीहित्वमेवप्राप्नोति । न समासान्तरत्वम् । तथात्वेऽन्तोदात्तत्वेनानुदात्तं पदमेकवर्जमित्यस्य प्रसङ्गेन पूर्वपदस्य (स्वरितान्तता) स्वरितपूर्वपदान्तता न स्यात् । अथवोद्ग्रन्थमेव पूर्वोक्तमर्थमुक्त्वोक्तशङ्कोत्तरत्वेन समस्तोऽपि श्लोको योज्यः । यद्यपि बहुव्रीहित्वं पूर्वसिद्धमेव । तथाऽपि तन्निश्चयापेक्षयैष्यतीति प्रयोगः ।

ननु पूर्वपदान्तस्वरस्य स्वरितत्वेऽपि कुतो बहुव्रीहित्वमिति चेत् । उदाहरणदर्शनादित्याह स्वाहेति ।

अनु०— स्वाहेन्द्रशत्रुर्वर्धस्व यद्बहुव्रीहितामगात् ॥

यद्यस्मात्स्वाहेन्द्रशत्रुर्वर्धस्वेत्यत्रेन्द्रशत्रुप्रातिपदिकं स्वरितेन्द्रशब्दान्तं बहुव्रीहितां प्राप्तं तस्मादिदमपि तथाविधं बहुव्रीहिरेवेति ।

शे०— ब्रह्माधिपतिरित्युत्तरवाक्ये किञ्चित्युक्तार्थस्य स्पष्टमप्रतिभासादित्याशयवानित्युक्तम् । ब्रह्माधिपतिप्रातिपदिकस्य षष्ठीतत्पुरुषत्वे ब्रह्मणोऽधिपतिरित्युत्तरवाक्येन गतार्थत्वमित्यरुचिं मनसिनिधायाह कर्मधारये वेति ॥ बहुव्रीहित्वनिश्चायकाभावादिति । समासप्राबल्यादेव कर्मधारयत्वनिश्चय इति भावः । हेतुत्वसमर्पकाभावेन स्वरितब्रह्मशब्दान्तत्वस्य बहुव्रीहित्वे हेतुत्वस्यैवावगन्तुमशक्यत्वाद्यत्तच्छब्दाध्याहारेण कथञ्चित्तदवगमेऽपि विपक्षे बाधकाभावेनाप्रयोजकत्वात्कथमनेन बहुव्रीहित्वनिश्चय इत्यतो हेतूच्छित्तेरेव विपक्षे बाधकत्वान्नाप्रयोजकतेत्याह यस्मादित्यादि ॥ स्वरितेति । ब्रह्मशब्दस्य मनिन्प्रत्ययान्तत्वेन निदन्तत्वात् । ञ्नित्यादिर्नित्यमित्यादिभूताकारस्योदात्तत्वेऽनुदात्तं पदमिति शेषभूताकारस्यानुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति तस्यैव स्वरितत्वेन ब्रह्मशब्दस्य स्वरितान्तत्वादित्यर्थः ॥ न समासान्तरत्वमिति । षष्ठीतत्पुरुषत्वकर्मधारयत्वरूपमित्यर्थः ॥ तथात्वे हीति । समासस्येत्यनेन सामान्यतः समासान्तोदात्तताया विहितत्वादिति भावः । पूर्वोक्तमर्थमिति । किञ्च ब्रह्माधिपतिरित्या-

दियोजनेत्यन्तेनोक्तमर्थमित्यर्थः ॥ **उक्तशङ्केति** । स्यादेवंयदि ब्रह्माधिपतिशब्दस्येत्यादिनोक्तशङ्कोत्तरत्वे- नेत्यर्थः ।

स० — **स्वरितब्रह्मशब्दान्त इति** । ब्रह्मशब्दस्य मनप्रत्ययान्तत्वे ञ्नित्यादिर्नित्यमित्यनेन बृहतेराद्युदात्तत्वे परस्य मनप्रत्ययस्य'स्यानुदात्तं पदमेकवर्जमि'त्यनेनानुदात्तत्वे 'उदात्तादनुदात्तस्य स्वरित' इत्यनेन मनप्रत्ययस्य स्वरितत्वम् । ततश्च ब्रह्मशब्दः स्वरितान्त इति ज्ञेयम् । स्वरितः ब्रह्मशब्दान्तो यस्मिन्समासे प्रातिपदिके तदिति विग्रहो द्रष्टव्यः । **तथात्वे अन्तोदात्तत्वेनेति** । समासस्येत्यनेन सामा- न्यतः समासस्यान्तोदात्तताया विहितत्वादिति भावः ॥ **अनुदात्तं पदमेकवर्जमित्यस्येति** । यत्रान्त्यः स्वर उदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा परिशिष्टः सर्वोऽनुदात्तो भवतीति सूत्रार्थः । पूर्वपदस्य इत्यस्य प्रसङ्गेनेति संबन्धः । स्वरितपूर्वपदान्तता समासप्रातिपदिकस्येति शेषः ॥ **पूर्वोक्तमर्थ- मिति** । किञ्च ब्रह्माधिपतिरित्यादिना पूर्वार्धो न रुद्रविषय इत्यन्तेनोक्तमर्थमित्यर्थः ॥ **उक्तशङ्कोत्तर- त्वेनेति** । स्यादेवं यदि ब्रह्माधिपतिशब्दस्येत्यादिनोक्तशङ्कोत्तरत्वेनेत्यर्थः ॥ **स्वरितेन्द्रशब्दान्तमिति** । इन्द्रशब्दस्य रन्प्रत्ययान्तस्य निपातितत्वात् ब्रह्मशब्दे कथितरीत्या स्वरितान्तत्वं ज्ञेयम् ।

प० — अत्रेति मूलपदस्यार्थमाह । **ऋतं सत्यमितिवाक्यं यदुक्तं अत्रेति** ॥ **स्वरितेति** ।

स्वरितं ब्रह्मशब्दांतं यस्य तदिति विग्रहः । एवमग्रेपि ॥ **तथात्व इति** । तत्पुरुषादिसमासांतरत्वे इत्यर्थः । 'समासस्येति' षष्ठाद्यपादांतिमसूत्रेण सामान्यतोऽन्तोदात्तताया विधानादिति भावः ॥ **अनुदात्तमिति** । यस्योदात्तादिस्वरो विधीयते तं वर्णं वर्जयित्वाऽवशिष्टं पदमनुदात्तं भवतीत्यनुदात्तस्वर- प्रसंगेनेत्यर्थः । पूर्वं हि पुर इत्यनंतरं 'रुद्रस्य पराधीनत्वप्रतिपादकं पदमस्ती'त्यध्याहृत्य योजयित्वा तत्र शंकानिरासकत्वेनोत्तरार्धं योजितमिदानीं विनैव पदाध्याहारं योजनामाह **अथवेति** । उक्तार्थं मूलास्पृष्टमेव । किं च 'ब्रह्माधिपतिर्ब्रह्मणोधिपतिरित्युत्तरवाक्य इत्यादिना पूर्वार्धो न रुद्रविषय इत्य- न्तेनोक्तमर्थमुक्त्वा स्यादेवं यदीत्यादिनोक्तशंकोत्तरत्वेन 'ब्रह्माधिपतिरि'त्यादिसमग्रश्लोको व्याख्येय इत्यर्थः ॥ **स्वरितेन्द्रेति** । औणादिकरन्प्रत्ययांतस्येंद्रशब्दस्य 'ञ्नित्यादिर्नित्य'मित्याद्युदात्तत्वे शेषनिघाते 'उदात्तादनुदात्तस्य स्वरित' इति स्वरितांतत्वादिति भावः ।

या० — **स्वरितब्रह्मशब्देति** । ब्रह्मशब्दस्य मन्प्रत्ययान्तत्वेन ञ्नित्यादिर्नियमित्यनेन प्रकृति- रूपबृंहतेराद्युदात्तत्वे परस्य मन्प्रत्ययस्यानुदात्तं पदमेकवर्जमित्यनेनानुदात्तत्वे उदात्तानुदात्तस्य स्वरित इत्यनेन मन्प्रत्ययस्य स्वरितत्वम् । ततश्च ब्रह्मशब्दः स्वरितान्त इति ज्ञेयम् ॥ **तथात्वेऽन्तोदात्तत्वेनेति** । समासस्येत्यनेन सामान्यतः समासस्यान्तोदात्तताया विहितत्वादिति भावः ॥ **अनुदात्तं पदमिति** ।

यत्रान्यः स्वर उपात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा परिशिष्ट सर्वोऽच् अनुदात्तः भवतीति सूत्रार्थः ॥ **वोक्तमर्थमिति** । किञ्च ब्रह्माधिपतिरित्यादिना योजनेत्यन्तेनोक्तमर्थमित्यर्थः ॥ **उक्तशङ्केति** । स्यादेवं यदि ब्रह्माधिपतिशब्दस्येत्यादिनोक्तशङ्कोत्तरत्वेनेत्यर्थः ॥ **स्वरितेन्द्रशब्देति** । इन्द्रशब्दस्य रन्प्रत्ययान्तस्य निपातितत्वात् ब्रह्मशब्दवत्स्वरितान्तत्वं ज्ञेयम् ।

श्री० — **कर्मधारय इति** । ब्रह्मा चासावधिपतिश्चेति कर्मधारय इत्यर्थः ॥ **प्रातिपदिकमिति** । समासप्रातिपदिकमित्यर्थः । **स्वरितब्रह्मशब्दान्तमिति** । बृहधातोर्मनिन् प्रत्यये अमागमे यणादेशे च सति निष्पन्नो ब्रह्मशब्दो मनिन्प्रत्ययान्तः । तथा च ञ्नित्यादिर्नित्यम् । ञिति निति च प्रत्यये परे प्रकृतेरादिरुदात्तो भवतीति सूत्रार्थः । तथा च प्रकृते बृहधातोरादेर्बृ इत्यत्रत्यऋवर्णरूपस्याच उदात्तस्वरवत्त्वे सति, तत्परतो विद्यमानस्य मनिन्प्रत्ययस्य मकारस्थिताकाररूपस्याच इति यावत् । अनुदात्तं पदमेकवर्जमिति सूत्रेणानुदात्तस्वरवत्त्वं प्राप्तम् । तथा हि । यत्रान्यः स्वर उदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा परिशिष्टः सर्वोऽप्यच् अनुदात्तो भवतीति सूत्रार्थः । एवं च बृ इत्यत्र ऋवर्णस्वरस्योदात्तत्वे तद्व्यतिरिक्तस्याचो मकारस्थस्याकारस्यानुदात्तस्वरवत्त्वे प्राप्ते 'उदात्तादनुदात्तस्य स्वरितः' उदात्तात्स्वरात्परस्यानुदात्तस्वरस्य स्थाने स्वरितः स्वर आदेशो भवतीति सूत्रार्थः । तथा च मकारस्थानुदात्तस्वरस्य स्वरितत्वे ब्रह्मशब्दः स्वरितान्त इति मन्तव्यम् ॥ **तथात्व इति** । षष्ठीतत्पुरुषकर्मधारयरूपसमासान्तरत्व इत्यर्थः ॥ **अन्तोदात्तत्वेनेति** । ब्रह्माधिपतिरिति समासस्येति शेषः । पूर्वपदस्यानुदात्तं पदमेकवर्जमित्यस्य प्रसङ्गेनेत्यन्वयः । पूर्वपदस्य ब्रह्मपदस्य । अनुदात्तं पदमेकवर्जमिति सूत्रविहितानुदात्तस्वरवत्त्वस्य प्रसङ्गेनेत्यर्थः । स्वरितपूर्वपदान्तता ब्रह्माधिपतिरिति समासस्येति शेषः । अयमर्थः । ब्रह्माधिपतिरित्यस्य, बहुव्रीहिभिन्नषष्ठीतत्पुरुषकर्मधारयरूपसमासान्तरत्वे "समासस्य" समासस्यान्त उदात्तो भवतीति सूत्रेण समासस्यान्ते उदात्तस्वरविधानाद्ब्रह्माधिपतिरिति समासस्यान्ते तकारस्थे इकारे उदात्तस्वरप्राप्तौ । "अनुदात्तं पदमेकवर्ज"मिति सूत्रेण तद्व्यतिरिक्तस्य पूर्वस्याचोऽनुदात्तस्वरविधानाद्ब्रह्माधिपेत्यत्र स्थितानां चतुर्णामप्यचामनुदात्तस्वरवत्त्वं प्राप्तम् । तथा च ब्रह्मपदे ब्रेत्यत्रानुदात्तस्वरं ह्मेत्यत्र मकारे च स्वरितस्वरं वैदिकाः पठन्ति तन्न स्यादिति । अधःपठ्यमानः स्वरोऽनुदात्तः । दक्षिणभागे समाहारेण पठ्यमानः स्वरःउदात्तः । ऊर्ध्वं पठ्यमानः स्वर स्वरितः । तदूर्ध्वं पठ्यमानस्तु स्वरः प्रचय इति वैदिकसम्प्रदायः । **उद्ग्रन्थमिति** ग्रन्थादुद्गतं ग्रन्थव्याख्यानरूपं न भवतीत्यर्थः ॥

च० — **स्वरितब्रह्मशब्दान्तमिति** । ब्रह्मशब्दस्य मन्प्रत्ययान्तत्वेन निदन्तत्वात् । 'ञ्नित्यादिर्नित्यं ञिति निति च प्रत्यये परतः आदिरुदात्तो भवतीत्यादिभूताकारस्योदात्तत्वेऽनुदात्तं पदमेकवर्जं यश्चोदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं पदमनुदात्तं भवतीति शेषांशस्यानुदात्तत्वे

उदात्तादनुदात्तस्य स्वरितः उदात्तात्परस्यानुदात्तस्य स्वरितो भवतीति तस्यैव स्वरितत्वेन ब्रह्मशब्दस्य स्वरितान्तत्वाद्ब्रह्माधिपतिप्रातिपदिकं स्वरितान्तब्रह्मशब्दावयवकं भवतीति बहुव्रीहितां प्राप्नोतीत्यर्थः । **न समासान्तरत्वमिति ।** षष्ठीतत्पुरुषत्वं कर्मधारयत्वं वेत्यर्थः । तथात्वे दर्शितसमासान्तररूपत्वे । समासस्येत्यनेन समासत्वावच्छिन्नसंबन्धिचरमावयवस्यान्तोदात्तताया विहितत्वया उदात्तं पदमिति शेषनिघातापत्त्या स्वरितान्तपूर्वपदावयवकता न स्यादित्यर्थः । **पूर्वोक्तमर्थमिति** । किञ्च ब्रह्माधिपतिरित्यादिकयोजनेत्यन्तेनाभिहितमर्थमित्यर्थः ॥ **उक्तशङ्केति** । स्यादेवं यदि ब्रह्माधिपतिशब्दस्येत्यादिकाभिहितशङ्कोत्तरत्वेनेत्यर्थः ॥ **कुतो बहुव्रीहित्वमिति** । ब्रह्माधिपतिशब्दपक्षकबहुव्रीहित्वसाध्यकस्वरितान्तपूर्वपदावयवकत्वलिङ्गकानुमानाङ्गभूतायाः प्रकृतसाध्यनिरूपितप्रकृतसाधननिष्ठव्याप्तेर्निदर्शनाभावेन दुर्दर्शत्वादिति भावः । **इदमपि** ब्रह्माधिपतिप्रातिपदिकमपि । तथाविधं स्वरितान्तपूर्वपदावयवकम् । **स्वरितेन्द्रशब्दान्तमिति** । स्वरितान्तेन्द्रशब्दावयवकमित्यर्थः । ऋजेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्तशुक्रगौरवन्तेरामालाः इत्युणादिद्वितीयपादीयसूत्रेणैकोनविंशतिशब्दानां रन्नन्ततया निपातनात्तदन्तर्गतेन्द्रशब्दोऽपि तादृश इति ब्रह्मशब्दवत्स्वरितान्तत्वं ज्ञेयम् ।

सु० — **इन्द्रशत्रुप्रातिपदिकस्यापि कुतो बहुव्रीहित्वम् । षष्ठीसमासत्वसम्भवादित्यत आह ॥** तस्मादिति ॥

अनु० — तस्मादस्येन्द्र एवाभूच्छत्रुरित्युत्तरश्रुतेः ॥

**यस्मादिन्द्रशब्दः स्वरितान्त उपात्तस्तस्मात् । मन्त्रस्याभिमतस्वरहीनतादोषात् । अस्य वृत्रस्येन्द्रः शत्रुः शातयिताऽभवत् । न पुनस्त्वष्टुरभिप्रायानुसारेणेन्द्रस्य शत्रुरभवत् । इत्युत्तरवाक्यबलादिदं ज्ञायते यदिन्द्रशत्रुप्रातिपदिकं बहुव्रीहिर्न तत्पुरुष इति । तथा चाहुः 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादि'ति ।**

शे० — ॥ **कुतो बहुव्रीहित्वमिति** । दृष्टान्ताभावेन स्वरितपूर्वपदान्तत्वस्य बहुव्रीहित्वेन व्याप्त्यसिद्धेरिति भावः । **इदमपि** ब्रह्माधिपतिप्रातिपदिकमपि । **तथाविधं** स्वरितब्रह्मशब्दान्तमित्यर्थः । ॥ **स्वरितान्त इति** ॥ इन्द्रशब्दस्य रन्प्रत्ययान्तत्वात् ञ्नित्यादिर्नित्यमित्यादिभूतेकारस्योदात्तत्वेऽनुदात्तं पदमिति शेषभूताकारस्यानुदात्तत्वे तस्यैवोदात्तादनुदात्तस्य स्वरित इति स्वरितत्वेनेन्द्रशब्दस्य स्वरितान्तत्वमिति ज्ञेयम् ॥ **मन्त्रो हीन इति** । दुष्टः शब्दः स्वरत इत्यप्रसिद्धः पाठः । अतः प्रसिद्धस्यैवोदाहरणम् । स्वरेणेति स्वरतः । आद्यादित्वात्तसिः । यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्

प्रतिपादयन्नभिमतमर्थं नाहेत्यर्थः । वागेव वज्रः वाग्वज्रः । यथेत्युदाहरणे । इन्द्रशत्रुरिन्द्रशत्रुशब्दः स्वरकृतादपराधाद्यजमानं हिंसितवान् । इन्द्रमभिचरता हतपुत्रेण त्वष्ट्रा इन्द्रशत्रुर्वर्धस्वेति मन्त्रः प्रयुक्तः । तत्र षष्ठीसमासार्थे विवक्षितेऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्तः प्रयुक्तः । तत्र बहुव्रीह्यर्थोपसंहारादिन्द्र एव शत्रुरभवत् । कः पुनर्बहुव्रीहितत्पुरुषयोरर्थभेदः । यावता यस्येन्द्रः शत्रुरिन्द्रस्याप्यसौ । शत्रुरेव । सपत्नपर्यायो हि शत्रुशब्दः । नैष दोषः । क्रियाशब्दोऽत्र शत्रुशब्दः शातयिता शत्रुरिति । तथा चेन्द्रस्य शातयिता भूत्वा वर्धस्वेति षष्ठीसमासेऽर्थः । बहुव्रीहौ त्विन्द्रशातयितृक इति स्पष्ट एवार्थभेदः । कथं पुनरत्राद्युदात्तत्वस्य वा अन्तोदात्तत्वस्य वा प्रसङ्गः । यावता यज्ञकर्मणीत्येकश्रुत्या भवितव्यम् । अयमप्यदोषः । तत्र हि जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विधीयते । स्वेच्छया प्रयुज्यमानश्च मन्त्रो न भवति । यदि वैकश्रुत्यभावादेवात्र प्रत्यवायस्तथा यस्तु प्रयुङ्क्त इत्यत्र श्लोके दुष्यति चापशब्दैरिति दोषो दर्शितः । तस्मादस्त्यपशब्दप्रयोगेऽधर्म इति ।

स०—यथेन्द्रशत्रुः इन्द्रशत्रुरिति मन्त्रः ॥ **स्वरतोऽपराधादिति**॥ स्वरतो ज्ञातादपराधादित्यर्थः ॥

प०— शिक्षाग्रन्थश्लोकमुदाहरति **तथाचाहुरित्यादिना** । मिथ्याप्रयुक्तः अयथाप्रयुक्तः । वाग्वज्रः वाग्रूपवज्रः । इन्द्रशत्रुः इन्द्रशत्रुरिति मंत्रः । स्वरतोऽपराधात्स्वरभ्रंशनिमित्तात् । उदाहृतश्च श्लोको महाभाष्ये पस्पशाह्निके ॥

**या०— स वाग्वज्र इति** । सः स्वरवर्णहीनः प्रयुक्तो मन्त्रो वज्रवद्धिंसको यजमानं हिनस्ति । तत्र पुराकल्पसिद्धमुदाहरणम् **यथेन्द्रशत्रुरिति** । इन्द्रशत्रुरिति मन्त्रो यथा स्वरतो जातादपराधादित्यर्थः । त्वष्टुः पुत्रो विश्वरूपः शक्रेण हतः । स त्वष्टा इन्द्रस्य हन्तारं पुत्रं लिप्सुस्तदर्थं सोमायणमनुतिष्ठन् भागलिप्सुमपीन्द्रं नाजुहाव । इन्द्रः स्वयमेवागत्य प्रसह्य सोमरसं पपौ । त्वष्टा सोमपात्रेऽवशिष्टं सोमरसमिन्द्रस्य शातयिता पुत्रो भूयादित्याशंसमानः स्वाहेन्द्रशत्रो वर्धस्वेति मन्त्रेण जुहाव । तदेन्द्रशत्रुरिति शब्दे स्वाभिप्रेतफलाय तत्पुरुषस्वरोहः कर्तव्यः । तं विहाय यथास्थितो बहुव्रीहिस्वर एव तत्र प्रयुक्तः । तेन स्वरापराधेन तत्रोत्पन्नस्य वृत्रासुरस्य शत्रुः शातयिताऽभूदिति त्वष्टा हतपुत्र इत्यादि तैत्तिरीयश्रुतिसिद्धमेतदिति द्रष्टव्यम् ॥

श्री०— **इन्द्रशब्दः स्वरितान्त इति** । इन्द्रशब्दस्यापि रन्प्रत्ययान्तत्वेन 'ञ्नित्यादिर्नि'त्यमिति सूत्रेण नितिप्रत्यये परे इन्द् धातोरादेरुदात्तत्वे तत्परतः स्थितस्य रन्प्रत्ययस्थरेफस्थस्याकारस्यानुदात्तं पदमेकवर्जमित्यनेनानुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इत्यनेन तस्य रादेशे इन्द्रशब्दः स्वरितान्त इत्यर्थः ।

**च०—मंत्रो हीन इति**। मिथ्याप्रयुक्तःअयथाप्रयुक्तः । वाग्वज्रःवाग्रूपवज्रः इन्द्रशत्रुः इंद्रशत्रुरिति मन्त्रःस्वरतोऽपराधात् । स्वरनिमित्तभ्रंशात् । उदाजहार च भाष्यकारः स्पशायामेतच्छ्लोकम् । पुंसोः

पुंलिङ्गयोरिति । एतच्चाश्वपते गोपते इत्यादौ पूर्वपदस्वरितान्तत्वेपि बहुव्रीहित्वाभावात्तत्रव्यभिचारपरिहारायेत्युक्तं नयचन्द्रिकायामिति व्याचक्षते । कन्याप्रियो मृदङ्गः धान्यपतिरित्यादितत्पुरुषस्थले पूर्वपदान्तस्वरितत्वसत्वेपि बहुव्रीहित्वाभावेन व्यभिचारवारणायेदं विशेषणम् । कन्याप्रियो मृदङ्ग इत्यत्र'प्रीतौ च' इति सूत्रेणातिशयितप्रीतौ गम्यमानायां सुखप्रिययोरुत्तरपदयोस्तत्पुरुषसमासे पूर्वपद-प्रकृतिस्वरत्वं विहितम् । धान्यपतिरित्यत्र च पत्यावैश्वर्ये इत्यैश्वर्यवाचिपतिशब्देपरे तत्पुरुषसमासेपूर्व-पदप्रकृतिस्वरत्वं विहितम् । कन्याधान्यशब्दौच फिट्सूत्रेण स्वरितान्तौ । तथा च तत्रोक्तनियमस्य व्यभिचारे प्राप्ते पुंसोरित्युक्तम् । उक्तोदाहरणयोस्तु कन्याधान्यशब्दयोरपुंस्त्वेन समस्यमानयोरुभयोः पुंस्त्वस्य विवक्षितस्याभावान्न व्यभिचार इत्यपि व्याकुर्वते । अत्र पदद्वयस्यापि पुंस्त्वनियमो न विवक्षितः अन्यथा पूर्वपक्षानुसारेण सहस्रप्रधानेत्ष्वियत्र बहुव्रीहिर्न स्यात् । किञ्चेत्युत्तरपक्षानुसारेणानवद्यैरभिद्युभि-रित्यस्य पूर्वोदाहृतस्य पूर्वपदप्रकृतिस्वरत्वं न स्यादिति द्रष्टव्यम् । तत्र ब्रह्माधिपतिरित्यत्र ब्रह्मशब्दस्य नपुंसकत्वेपि न तद्विषये एतत्सूत्रोदाहरणासङ्गतिरिति ध्येयम् । वस्तुतोब्रह्माधिप्रतिर्यस्येतिप्रकृते उभयोः पुलिङ्गत्वेप्यदोषः । न च पुलिंगब्रह्मशब्दस्य न विष्णुपरत्वमिति वाच्यं 'स आविवेश ब्रह्मा ब्रह्माणं चतुर्मुखमित्यादौ पुलिंगस्यापि ब्रह्मशब्दस्य विष्णौ प्रयोगादिति द्रष्टव्यमित्यपि प्रपञ्चितम् ।

---

**सु० — न केवलं पूर्वपदान्तस्वरितत्वे बहुव्रीहित्वमुदाहरणबलादुदाहरणेऽप्युत्तरश्रुतिबला-त्कल्प्यते । किं नामानुशासनमप्येवमस्तीत्याह । पूर्वान्तस्वरित इति ।**

**अनु० —** पूर्वान्तस्वरिते पुंसोर्बहुव्रीहित्वमेष्यति ॥
महाव्याकरणे सूत्रमिति स्वरविनिर्णये ॥

**पुंसोः पुलिङ्गयोः समस्यमानयोः पूर्वपदान्ते स्वरे स्वरिते सति तत्समासप्रातिपदिकं बहु-व्रीहित्वमेष्यतीति सूत्रार्थः । अत्र केचिद्व्यभिचारमुद्भावयन्ति तदसत् । सामान्यलक्षणप्राप्तं हि पुनर्विशेषणलक्षणैरपोद्यत इति व्याकरणप्रक्रिया । यथोक्तम् । सामान्यविशेषवता लक्षणेनेति । तत्र विशेषलक्षणान्यपर्यालोच्य सामान्यलक्षणे व्यभिचारोद्भावनं कथं युज्यते । किञ्चानेन सूत्रेण बहुव्रीहौ पूर्वपदे प्रकृतिस्वरत्वमुपलक्ष्यते । ब्रह्मेन्द्रशब्दयोः स्वरितान्तत्वात् । तथा च कुतो व्यभिचारः । यथाऽऽह पाणिनिः । बहुव्रीहौ प्रकृत्या पुर्वपदमिति । अत एव स्वरवि-निर्णय इत्याह । अन्यथा समासनिर्णय इत्यवक्ष्यत् । अपिच सन्देहे सति स्वरेण समास-निर्णयार्थमिदमुच्यते । यथोक्तम् । असन्देहं प्रयोजनं व्याचक्षाणेन भाष्यकृता स्थूलपृषती-मनड्वाहीमालभेतेत्यत्र स्थूलपृषतीशब्दे तत्पुरुषबहुव्रीहिसंदेहं व्युत्पाद्य यदि पूर्व पदप्रकृतित्वं**

बहुव्रीहिः तदा यदि समासान्तोदात्तत्वं तदा तत्पुरुष इत्यादि । तथा चासन्दिग्धे व्यभिचारोद्भावनमसङ्गतमिति ॥ ननु पूर्वान्तस्वरित इति कथम् । सामर्थ्याभावेन समासानुपपत्तेरिति । मैवम् । समासप्रातिपदिके पूर्वान्तस्वरिते सतीति व्याख्यानात् । तथापि स्वरितपूर्वान्त इति स्यात् । बहुव्रीहौ विशेषणस्य पूर्वनिपातात् । । न । विशेषणविशेष्यभावस्य कामचारित्वात् । आहिताग्न्यादित्वाद्वेति ।

शे० — ॥ पुंसोरिति ॥ अत्र पदद्वयस्यापि पुंस्त्वनियमो न विवक्षितः । अन्यथा पूर्वपक्षानुसारेण सहस्रप्रधानेष्वित्यत्र बहुव्रीहिर्न स्यात् किं चेत्युत्तरपक्षानुसारेण चानवचैरभियुभिरित्यत्राभियुभिरित्यस्य पूर्वोदाहृतस्य च पूर्वपदप्रकृतिस्वरत्वं न स्यादिति द्रष्टव्यम् ॥ तथाच ब्रह्माधिपतिरित्यत्र ब्रह्मशब्दस्य नपुंसकत्वेऽपि न तद्विषये एतत्सूत्रोदाहरणासङ्गतिरिति बोध्यम्। वस्तुतस्तु ब्रह्माधिपतिर्यस्येति प्रकृते उभयोः पुलिङ्गत्वेऽप्यदोषः । न च पुलिङ्गब्रह्मशब्दस्य न विष्णुपरत्वमिति वाच्यम् । 'स आविवेश ब्रह्मा ब्रमाणं च चतुर्मुखम् 'इत्यादौ पुलिङ्गस्यापि ब्रह्मशब्दस्य विष्णौ प्रयोगादिति द्रष्टव्यम् ॥ अत्र तत्पुरुषे तुल्यार्थेत्यादिविषये यतोऽनाव इत्याद्युदात्ततुल्यपूर्वपदकतुल्यश्वेत इत्यादि तत्पुरुषे । इगन्तकालेत्यादिविषये ञः सङ्ख्याया इत्याद्युदात्तपञ्चपूर्वपदकपञ्चवर्ष इत्यादि द्विगौ । आर्यो ब्राह्मणेत्यादिविषये ण्यदन्तस्वरितान्तपूर्वपदके आर्यब्राह्मण इत्यादिकर्मधारये । सङ्ख्येत्यादिविषये कन्नन्ताद्युदात्तैकपूर्वपदकैकादशेत्यादि द्वन्द्वे च स्वरितपूर्वपदान्तत्वेऽपि बहुव्रीहित्वाभावाद्व्यभिचार उक्तलक्षणस्येति केषाञ्चिद्वैय्याकरणंमन्यानां भ्रान्तिं प्रतिक्षेप्तुमुद्भावयति **अत्र केचिद् व्यभिचारमुद्भावयन्तीति** । पूर्वान्तस्वरित इति सामान्यवतोऽस्य महाव्याकरणस्थलक्षणस्य समासान्तरविधायकतुल्यार्थादिविशेषवत्तत्स्थसूत्रविषये व्यभिचारोद्भावनं कर्मण्यणित्यादेरातोऽनुपसर्गे क इत्यादि विषये गोदः कम्बलद इत्यादौ व्यभिचारोद्भावनेन समासस्येत्यस्य बहुव्रीहौ प्रकृत्येत्यादिविषये व्यभिचारोद्भावनेन च तुल्ययोगक्षेममित्यसाम्प्रदायिकं वैय्याकरणानामित्यभिप्रेत्य वैय्याकरणसम्प्रदायं तत्सम्मत्यैव दर्शयन्समाधत्ते **सामान्येति** । सामान्योपेतं लक्षणं सामान्यलक्षणमित्युत्तरपदलोपी तत्पुरुषः । एवं विशेषलक्षणैरित्यत्रापि द्रष्टव्यम् । शब्दानुशासनहेतुप्रक्रियादिविभागकल्पनां प्रति करणे सामान्यविशेषवता लक्षणेनेति तृतीया । विशेषलक्षणानीति महाव्याकरणस्थानीति शेषः । एवं सूत्रस्य यथास्थितार्थमङ्गीकृत्य परन्यायेनैव व्यभिचारसमाधानमभ्यधायि । अधुना परकीयव्यभिचारशङ्काऽवकाशशून्यप्रसिद्धव्याकरणानुसारिसूत्रस्यार्थान्तरमाह **किञ्चेति** । एवंच निमित्तनैमित्तिकभावव्यत्यासं बहुव्रीहित्वशब्दार्थान्तरगतभावप्रत्ययस्य च पूर्वपदप्रकृतिस्वरत्वोपलक्षकपूर्वान्तस्वरितशब्देन सम्बन्धं चाङ्गीकृत्य

बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं भवतीति सूत्रं व्याख्यातं भवति । ननु सूत्रस्य यथास्थितार्थकत्वे स्वरेण समासनिश्चायकत्वेनास्य प्रकृतोपयोगेऽप्यर्थान्तरपक्षे समासेन स्वरनिश्चायकत्वापत्त्या नास्य सूत्रस्य प्रकृतोपयोग इत्यतो बहुव्रीहिनिमित्तकपूर्वपदप्रकृतिस्वरत्वं विदधताऽप्यनेन पूर्वपदप्रकृतिस्वरेण कार्येण बहुव्रीहिरूपनिमित्तनिश्चयस्याभ्यनुज्ञातत्वाद्युक्तोऽस्य प्रकृतोपयोग इत्यभिप्रेत्य कथं ब्रह्माधिपतीन्द्रशत्रुसमासयोः पूर्वपदप्रकृतिस्वरत्वं येन बहुव्रीहित्वं निश्चिनुम इत्याशङ्कापरिहाराय तयोः पूर्वपदप्रकृतिस्वरूपत्वमुपपादयति **ब्रह्मेन्द्रशब्दयोरिति** । ब्रह्मशब्दस्य मनिन्प्रत्ययान्तत्वेनेन्द्रशब्दस्य रन्प्रत्ययान्तत्वेन च नित्वात् ञ्नित्यादिर्नित्यमित्यादिभूताकारेकारयोरुदात्तत्वेऽनुदात्तं पदमिति शेषभूताकारयोरनुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति तयोरेव स्वरितत्वे ब्रह्मेन्द्रशब्दयोः स्वरितान्तत्वादित्यर्थः । समासान्तर्गतयोरेतत्समासान्तर्गतयोश्चेति शेषः । नन्वेवमपि पूर्वोदाहृतेष्वेव सत्यपि पूर्वपदप्रकृतिस्वरत्वे बहुव्रीहित्वाभावाद्व्यभिचार इत्यतो बहुव्रीहौ प्रकृत्या पूर्वपदमिति प्रसिद्धव्याकरणेऽप्येवं निमित्तनैमित्तिकभावाश्रयणात् । यदि पूर्वपदप्रकृतिस्वरत्वं तर्हि बहुव्रीहित्वमिति वदता भाष्यकृता पूर्वप्रदप्रकृतिस्वरत्वेन बहुव्रीहित्वनिश्चयस्याभिप्रेतत्वात्तत्रत्यव्यभिचारशङ्कायाश्च सामान्यविशेषभावादिनोभयसमाधेयत्वान्नास्मान्प्रत्येव पर्यनुयोगो युक्त इत्याह **तथा चेति** । अन्यथा परस्यापीदं दूषणं समानमित्याह **यथाऽऽहेति** । एवम् अर्थान्तरवर्णनेऽनुव्याख्यानज्ञापकमाह **अत एवेति** । अस्मिंश्च पक्षे यथास्थितनिमित्तनैमित्तिकभावव्यत्यासाद्यभ्युपगमगौरवमुपलभ्य यथास्थितनिमित्तनैमित्तिकभावपक्षमेवाभ्युपेत्य विशेषनिर्णायकाभावेन सन्देहप्रसक्तिस्थल एव निर्णयार्थं प्रवृत्तस्य प्रकारान्तरेणासन्दिग्धे व्यभिचारोद्भावनमप्यसाम्प्रदायिकं वैय्याकरणानामित्यभिप्रेत्य सन्देहस्थल एव पूर्वपदप्रकृतिस्वरत्वादिकं बहुव्रीहित्वादिनिश्चायकमित्येतद्भाष्यसम्मत्या द्रढयति **अपि चेति** । एतेन स्वरविनिर्णय इत्येतदप्यन्यथासिद्धमित्युक्तं भवति । एतेन द्वितीयपक्षेऽपि व्यभिचारचोदनं गर्भस्रावेणैव गतं वेदितव्यम् । असन्देहं सन्देहप्रागभावमित्यर्थः । वैय्याकरणस्य सन्देहाभावेन तद्ध्वंसानुपपत्तेरिति द्रष्टव्यम् ॥ **सन्देहं व्युत्पाद्येति** । स्थूला चासौ स्पृषती चेति स्थूलपृषतीति कर्मधारयः । अत्र पृषतीशब्दो मत्वर्थलक्षणया पृषद्वतीं बिन्दुमतीं धेनुमाह । स्थूला च सैव । बिन्दूनां स्थौल्यं तानवं वा यथा तथाऽस्तु । स्थूलानि पृषन्ति यस्यामिति बहुव्रीहिः । अत्र स्थौल्यं पृषतामेव लभ्यते । स्थौल्यं तानवं वा गोष्वि‍ति विशेषः ॥ **यदीति** । अन्तोदात्तस्थूलशब्दस्य समासेऽपि तथैव श्रवणात् । पूर्वपदप्रकृतिस्वरेण बहुव्रीहित्वनिश्चय इति वाक्यशेषः । आदिशब्देन च सन्देहस्थल एव नियमार्थं प्रवृत्ते 'षष्ठी स्थानेयोगे'त्यनेन विशेषविहितावयवषष्ठ्या निवृत्तिरिति 'षष्ठी स्थानेयोगे'त्यत्रत्यभाष्यग्रन्थसङ्ग्रहः ॥ **सामर्थ्याभावेनेति** । पूर्वान्तपदस्य पुंसोरित्येतत्सापेक्षत्वादिति भावः ॥ **इति व्याख्यानादिति** । तथा च न तत्सापेक्षत्वमिति भावः ॥ **बहुव्रीहाविति** । सप्तमी

विशेषणे बहुव्रीहावित्यनेनेत्यर्थः ॥ **कामचारित्वादिति ।** विशेषणस्य भेदकत्वरूपत्वेन पूर्वान्तपदस्या पूर्वान्तत्वात्स्वरितव्यावर्तकत्वस्य स्वरितपदस्य चास्वरितात्पूर्वान्तव्यावर्तकत्वसम्भवेनोभयोरपि तत्त्वसम्भवादित्यर्थः । विशेषणविशेषभावस्य कामचारेऽप्युपसर्जनसंज्ञाया अन्वर्थत्वात्स्वरितशब्दस्य पूर्वान्तनिष्ठधर्माभिधायकत्वेनाप्रधानवाचित्वात्तस्यैव पूर्वनिपातेन भवितव्यम् । अन्यथा कर्मधारये गुणवाचकयोः क्रियावाचकयोर्गुणक्रियावाचकयोर्वापूर्वनिपातनियमवद् गुणद्रव्यवाचकयोः क्रियाद्रव्यवाचकयोर्द्रव्यवाचकयोरपि बह्वल्पविषययोः पूर्वनिपातानियमः स्यादित्यस्वरसात्पक्षान्तरमाह **आहिताग्न्यादित्वाद्वेति ।**

**स०- अत्रकेचिद्व्यभिचारमिति** ॥ अत्र हि यो बहुव्रीहिः स स्वरितपूर्वपदान्तः यः स्वरितपूर्वपदान्तः स बहुव्रीहिरित्युभयथाऽपि व्याप्तिरभिमता अस्य । सूत्रस्य स्वरनिर्णयार्थत्वादाद्या व्याप्तिरत्राभिप्रेतेति गम्यते । अत एव स्वरविनिर्णय इत्याहेति वक्ष्यति । प्रकृते समासनिर्णयार्थमुदाहृतत्वाद्द्वितीयापि । एवं चात्राभिमते येऽपिकेचिद्वैयाकरणाः व्यभिचारमुद्भावयंतीत्यर्थः । तथा हि । न तावदाद्याव्याप्तिः संभवति ब्रह्मचारिपरिस्पन्द इति बहुव्रीहेः स्वरितपूर्वपदान्तत्वाभावात् । बहुव्रीहौ प्रकृत्या पूर्वपदमित्यन्तोदात्तत्वात् । नापि द्वितीया आर्यब्राह्मणः आर्यकुमार इति कर्मधारयसमासे व्यभिचारात् आर्यशब्दस्य ण्यदन्तत्वेन स्वरितान्तत्वात् । 'आर्यो ब्राह्मणकुमारयोरि'त्यनेनैवात्रापि पूर्वपदप्रकृतिस्वरत्वविधानेन न समासान्तोदात्तत्वप्राप्तिः ततश्चोभयथापि व्याप्तिरनुपपन्नेति । अत्र यद्यपि प्रकृतसङ्गतत्वाद्द्वितीयैव व्याप्तिर्विचार्या । तथाऽप्याद्याया अपि सूत्रार्थतया अभिप्रेतत्वस्योक्तत्वेन तस्यापि विचार्यतेत्यवगन्तव्यम् ॥ **सामान्यलक्षणप्राप्तं हीति** ॥ सामान्यसूत्रप्राप्तं हीत्यर्थः ॥ तथा च विशेषसूत्रविहितस्थलव्यतिरिक्तस्थले प्रागुक्तव्याप्त्योरुपपत्तिः इत्यर्थः । ब्रह्माधिपतिरित्यत्रेन्द्रशत्रुरित्यत्र च पूर्वपदान्तस्य स्वरितत्वेऽपि समासान्तरप्रापकं विशेषसूत्रं न किमप्यत्रास्तीति भावः । एवं द्वयंव्यभिचारं परिहृत्याऽऽद्य प्रकारान्तरेणापि परिहरपि ॥ **किं चानेन सूत्रेणेति । ब्रह्मेन्द्रशब्दयोः स्वरितान्तत्वादिति** ॥ समासकालेऽपीति शेषः । तथाच यो बहुव्रीहिः स प्रकृतिस्वरोपेतपूर्वपद इत्येव व्याप्तिर्न तु स्वरितपूर्वपदान्त इति । अतो नोक्तव्यभिचार इति भावः । यद्यप्यस्याप्यर्थस्य बहुव्रीहौ विश्वं संज्ञायामित्यादिना विश्वदेव इत्यादौ पूर्वपदप्रकृतिस्वरापवादेनान्तोदात्तता विहिताऽतो व्यभिचार एव । तथाऽपि समासस्येत्यनेन विहितसमासान्तोतत्वाभावस्य व्यापकतया विवक्षितत्वान्न कुत्रापि व्यभिचार इति ध्येयम् । ननु प्रकृतानुपयुक्तेयं व्याप्तिरेतत्सूत्रार्थतया कुतोऽभिमतेति कल्प्यते येन तद्व्यभिचारपरिहारादिकं सङ्गतं स्यादित्यत आह **अत एव स्वरविनिर्णय इत्याहेति** ॥ यत एव इयं व्याप्तिरेतत्सूत्रार्थतया ग्रन्थकृतोऽभिमता अत एवेत्यर्थः । द्वितीयेऽर्थेऽपि व्यभिचारं प्रकारान्तरेण परिहरति ॥ **अपि च संदेहे**

मतीत्यादिना ॥ **असंदेहं प्रयोजनमिति** ॥ व्याकरणशास्त्रं निष्प्रयोजनमिति अनारम्भणीयमित्याशङ्कायां वैदिकप्रयोगेषु संदेहाभाव एव व्याकरणप्रयोजनमिति व्याचक्षाणेनेत्यर्थः ॥ **तथा चासंदिग्धे व्यभिचारोद्भावनमिति** ॥ एवं च संदिग्धसमासत्वे सति यः पूर्वपदप्रकृतिस्वरः स बहुव्रीहिरिति द्वितीय व्याप्तौ विवक्षितत्वान्न कोऽपि दोषः । अत्र तत्पुरुषे तुल्यार्थेत्यादिविषये यतोनाव इत्याद्युदात्ततुल्यपूर्वपदतुल्यश्वेत इत्यादितत्पुरुषे इगन्तकालेत्यादिविषये ञः सङ्ख्याया इत्याद्युदात्तपञ्चपूर्वपदकपञ्चवर्ष इत्यादिद्विगौ आर्यब्राह्मणेत्यादि विषये ण्यदन्तस्वरितान्तपूर्वपदके आर्यब्राह्मण इत्यादिकर्मधारये सङ्ख्येत्यादिविषये कृत्वन्ताद्युदात्तैकपूर्वपदकैकादशेत्यादि द्वन्द्वे च स्वरितपूर्वपदान्तत्वेपि बहुव्रीहित्वभावात् व्यभिचार उक्तलक्षणस्येति केषांचिद्वैयाकरणंमन्यानां भ्रान्तिं प्रतिक्षेप्तुमुद्भावयति ॥ **अत्र केचिदिति** ॥ पूर्वान्तस्वरित इति सामान्यवतोऽस्य महाव्याकरणस्थलक्षणस्य समासान्तरविधायकतुल्यार्थादिविशेषवत्स्थलसूत्रे विषये व्यभिचारोद्भावनं कर्मण्यणित्यादेः आतोऽनुपसर्गेक इत्यादिगोदः कम्बलद, इत्यादौ व्यभिचारोद्भावनेन, समासस्येत्यस्य बहुव्रीहौ प्रकृत्येत्यादिविषये व्यभिचारोद्भावनेन च तुल्ययोगक्षेममित्यसांप्रदायिकं वैयाकरणानां इत्यभिप्रेत्य वैयाकरणसंप्रदायं तत्संमत्यैव दर्शयन्समाधत्ते ॥ **सामान्येति** ॥ शब्दानुशासनहेतुप्रकृत्यादिविभागकल्पनाप्रकरणे । **सामान्यविशेषवता लक्षणेनेति** । तृतीया एवं सूत्रस्य यथास्थितार्थमङ्गीकृत्य परन्याये नैवास्य व्यभिचारसमाधानमभ्यधायि । अधुना परकीयव्यभिचारशङ्कावकाशशून्यप्रसिद्धव्याकरणानुसारि सूत्रस्यार्थान्तरमाह ॥ **किंचेति** ॥ एवं च निमित्तनैमितिकभावव्यत्यासं बहुव्रीहित्वं शब्दान्तर्गतभावप्रत्ययस्य च पूर्वपदप्रकृतिस्वरत्वोपलक्षक पूर्वान्तस्वरितशब्देन संबन्ध चाङ्गीकृत्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं भवतीति सूत्रं व्याख्यातं भवति । ननु सूत्रस्य यथास्थितार्थकत्वे स्वरेण समासनिश्चायकत्वेनास्य प्रकृतोपयोगेप्यर्थान्तरपक्षे समासेन स्वरनिश्चायकताऽऽपत्या नास्य सूत्रस्य प्रकृतोपयोग इत्यतो बहुव्रीहिनिमित्तकपूर्वपदप्रकृतिस्वरत्वं विदधताप्यनेन पूर्वपदप्रतीतिस्वरेण कार्येण बहुव्रीस्वरूपनिमित्तनिश्चयस्याभ्यनुज्ञातत्वात् युक्तोऽस्य प्रकृतोपयोग इत्यभिप्रेत्य कथं ब्रह्माधिपतीन्द्रशत्रुसमासयोः पूर्वपदप्रकृतिस्वरत्वं येन बहुव्रीहित्वं निश्चिनुमः इत्याशङ्का परिहाराय तयोः पूर्वपदप्रकृतिस्वरत्वमुपपादयति ॥ **ब्रह्मेन्द्रशब्दयोरिति** । ब्रह्मशब्दस्य मनिन् प्रत्ययान्तत्वेनेन्द्रशब्दस्य रन्प्रत्ययान्तत्वेन नित्वात् ञ्नित्यादिर्नित्यमित्यादिभूताकारेकारयो रुदात्तत्वे अनुदात्तं पदमेकवर्जमिति शेषभूताकारयोरनुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति तयोरेव स्वरितत्वे ब्रह्मेन्द्रशब्दयोः स्वरितांतत्वादित्यर्थः । यथास्थित निमित्तनैमित्तिकभावव्यत्यासाद्यभ्युपगमगौरवमुपलभ्य समासान्तर्गतयोरेतत्समासान्तर्गतयोश्चेति शेषः । नन्वेवमपि पूर्वोदाहतेष्वेव सत्यपि पूर्वपदप्रकृतिस्वरत्वे बहुव्रीहित्वाभावाद्व्यभिचार इत्यतो बहुव्रीहौ प्रकृत्येत्यादिप्रसिद्धव्याकरणेऽप्येवं निमित्तनैमित्तकभावाश्रयणत् । यदि पूर्वपदप्रकृतिस्वरत्वं तर्हि बहुव्रीहिरिति वदता भाष्य-

कारेण पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वनिश्चयस्याभिप्रेतत्वात्तत्रत्यव्यभिचारशङ्कायाश्च सामान्यविशेषाभावादिनोभयसमाधेयत्वात् नास्मान्प्रत्येव पर्यनुयोगो युक्त इत्याह **तथा चेति** ॥ अन्यथा परस्यापीदं दूषणं समानमित्याह **यथाऽऽहेति** ॥ एवमर्थान्तरवर्णनेऽनुव्याख्यानज्ञापकमाह ॥ **अत एवेति** ॥ अस्मिश्च पक्षे । यथास्थितनिमित्तनैमित्तिकभावपक्षमेवाभ्युपेत्य विशेषनिर्णायकाभावेन संदेहप्रसक्तिस्थल एव निर्णयार्थं प्रवृत्तस्य प्रकारान्तरेणासंदिग्धे व्यभिचारोद्भावनयप्यसांप्रदायिकं वैयाकरणानां इत्यभिप्रेत्य संदेहस्थल एव पूर्वपदप्रकृतिस्वरत्वादिकं बहुव्रीहित्वादिनिश्चायकं इत्येतद्भाष्यसंमत्या द्रढयति ॥ **अपि चेति** ॥ एतेन स्वरनिर्णय इत्येतदप्यन्यथासिद्धमित्युक्तं भवति । एतेन द्वितीयपक्षेऽपि व्यभिचारचोदनं गर्भस्रावेणैव गतं वेदितव्यम् ॥ **असंदेहमिति** ॥ संदेहप्रागभावमित्यर्थः । वैयाकरणस्य संदेहासंभवेन तद्ध्वंसानुपपत्तेरिति द्रष्टव्यम् ॥ **संदेहं व्युत्पाद्येति** । स्थूलाचासौ पृषती चेति स्थूलपृषतीति कर्मधारयः । अत्र पृषतीशब्दो मत्वर्थलक्षणया पृषद्वतीं बिन्दुमतीं धेनुमाह । स्थूला च सैव । बिन्दूनां स्थौल्यं तानवं वा यथा तथाऽस्तु । स्थूलानि पृषन्ति यस्यामिति बहुव्रीहिः । अत्र स्थौल्यं पृषतामेव लभ्यते । स्थौल्यं तानवं वा गोरस्त्विति शेषः ॥ **यदीति** ॥ अन्तोदात्तस्थूलशब्दस्य समासेऽपि तथैव श्रवणात् । पूर्वपदप्रकृतिस्वरेण बहुव्रीहित्वनिश्चय इति वाक्यशेषः । आदिशब्देन संदेहस्थल एव नियमार्थं प्रवृत्ते 'षष्ठीस्थाने योगे'त्यनेन विशेषविहितावयवषष्ठ्या निवृत्तिरिति षष्ठीस्थाने योगेत्यत्रत्यभाष्यग्रन्थसंग्रहः ॥ **सामर्थ्याभावेनेति** ॥ समस्यमानयोः पुंसोर्मध्ये पूर्वपदे पूर्वान्तेस्वरिते सतीत्युक्तौहि न वाक्यार्थो घटते । अतः कथं पूर्वान्तस्वरित इति समास इत्यर्थः ॥ **समासप्रातिपदिक इति** ॥ पूर्वान्तस्वरित इत्यस्य यदि पूर्वपद इति विशेष्याध्याहारः तदा परमसामर्थ्यं स्यात्। न चैवं। किन्तु समासप्रातिपदिक इति विवक्षितत्वादिति भावः । यद्वा पूर्वान्तपदस्य पुंसोरित्येतत्सापेक्षत्वेनेति भावः ॥ **इति व्याख्यानमिति** ॥ विशेषणस्य भेदकत्वेन पूर्वान्तपदस्यापूर्वान्तात् स्वरितव्यावर्तकत्वस्य स्वरितपदस्य चास्वरितात् पूर्वान्तव्यावर्तकत्वसंभवेनोभयोरपि तत्त्वसंभवादित्यर्थः । विशेषणविशेष्यभावस्य कामचारेऽपि उपसर्जनसंज्ञाया अन्वर्थत्वात् स्वरितशब्दस्य पूर्वान्तनिष्ठधर्माभिधायकत्वेनाप्रधानवाचित्वात्तस्यैव पूर्वनिपातेन भाव्यं । अन्यथा कर्मधारये गुणवाचकयोः क्रियावाचकयोर्गुणक्रियावाचकयोर्वाद्रव्यपूर्वनिपातानियमवत् गुणद्रव्यवाचकयोः क्रियाद्रव्यवाचकयोर्द्रव्यवाचकयोरपि बह्वल्पविषययोः पूर्वनिपातानियमः स्यादित्यस्वरसात्सक्षान्तरमाह **आहिताग्न्यादित्वादिति** ।

प०— **पुंसोःपुंल्लिंगयोरिति** । 'एतच्चाश्वपते गोपते इत्यादौ पूर्वपदस्वरितांतत्वेपि बहुव्रीहित्वाभावात्तत्र व्यभिचारनिरासायेत्युक्तं' नयचंद्रिकायां ॥ **व्यभिचारमिति** । 'समस्यमानपदयोः

पूर्वपदांतस्वरे स्वरिते सति तत्समासप्रातिपदिकं बहुव्रीहित्वमेष्यती ' त्यत्र अन्वयतो व्यतिरेकतश्च वैयाकरणा व्यभिचारमुद्भावयंतीत्यर्थः । तथाहि । आर्यश्चासौ ब्राह्मणश्चार्यब्राह्मण इत्यादिकर्मधारये पूर्वपदस्य स्वरितांतत्वेपि तत्र बहुव्रीहित्वाभावात् । आर्येतिपदस्य ऋगताविति धातोः ' ऋहलोर्ण्यदि ' ति सूत्रेण ण्यत्प्रत्यये निष्पन्नत्वात् । ण्यत्प्रत्ययस्य ' तित्स्वरित ' मितिषष्ठाद्यपादीयसूत्रेण स्वरितत्वात्तदंतस्यार्येति पूर्वपदस्य स्वरितांतत्वात् । नच 'समासस्येति सूत्रेण समासांतोदात्तत्वे' अनुदात्तं पदमेकवर्जमितिशेषनिघातेनानुदात्तत्वान्नस्वरितान्तत्वमितिवाच्यम् । ' आर्यो ब्राह्मणकुमारयोरि' ति षष्ठद्वितीयपादीयसूत्रेण ब्राह्मणकुमारशब्दयोः परयोरार्यशब्दः प्रकृतिस्वरं प्राप्नोति कर्मधारये इति प्रकृतिस्वरेण स्वरितांतत्वात् । ' ब्रह्मचारिपरिस्पंद ' इति बहुव्रीहौ ब्रह्मचारिपदस्य स्वरितांतत्वाभावेपि बहुव्रीहिदर्शनात् । अत एव बहुव्रीहौ प्रकृत्या पूर्वपदमितिषष्ठद्वितीयाद्यसूत्रे वृत्तौ ब्रह्मचारिपदं कृदुत्तरपदप्रकृतिस्वरत्वेनांतोदात्तमित्युक्तमिति ॥ **सामान्यलक्षणेति** । लक्षणशब्दोत्र सूत्रपर्यायः । स्वरितांतं पूर्वपदं बहुव्रीहिर्भवतीति सामान्यसूत्रम् । तस्यार्यब्राह्मण इत्यादावार्य इत्यादिविशेषसूत्रेणापवादित्वेपि न दोषः । नह्यपवादकृतव्यभिचारो दोषाय । ' व्यभिचार्यपवादेन मानमेव भविष्यती'ति वक्ष्यमाणत्वात् । पस्पशाग्रंथे महाभाष्योक्तमाह **यथोक्तमित्यादिना** । सामान्यविशेषवता लक्षणेनेति । शब्दानुशासनं क्रियत इति योज्यम् ॥ **अनेन सूत्रेणेति** । महाव्याकरणसूत्रेणेत्यर्थः ॥ **पूर्वपदप्रकृतिस्वरत्वमुपलक्ष्यत इति** । तथा च ब्रह्माधिपतीत्यादौ तत्पुरुषादित्वे समासांतोदात्ततांप्राप्तौ शेषनिघातेन पूर्वपदस्य स्वरितांतत्वं न स्यादिति भावः । नन्वेवं प्रकृतेऽसंभव इत्यत आह । **ब्रह्मेंद्रशब्दयोरिति** । समासकापीति शेषः ॥ **अत एवेति** । प्रकृतिस्वरोपलक्षकत्वादेवेत्यर्थः ॥ **अन्यथेति** । स्वरितांतपूर्वपदस्यैव बहुव्रीहित्व इत्यर्थः । तथा च बहुव्रीहौ पूर्वपदस्य क्वचिदंतोदात्तत्वेपि स्वरिताद्यंतत्वे च न दोषो भवतीति । प्रकारांतरेण व्यभिचार दोषं निराह । **अपि चेति** ॥ **इदमिति** । पूर्वपदांते स्वरिते सतीत्यादिना प्रागुक्तसूत्रमित्यर्थः । यद्वा बहुव्रीहौ प्रकृत्या पूर्वपदमित्येतदित्यर्थः । **यथोक्तं** पस्पशाह्निके किं प्रयोजनं व्याकरणस्येति शंकापरिहारार्थं ' रक्षोहागमलघ्वसंदेहाः प्रयोजनमित्युक्त्वा ' एवं वा समासः अन्यथा वेत्यादिसंदेहाभावः प्रयोजनमिति । तद्विवृतं महाभाष्यकृतेत्यर्थः ॥ **तथा चासंदिग्धइति** । आर्यब्राह्मणइत्यादौ कर्मधारयत्वस्य निर्णीतत्वाद्विशेषणाभावेन व्याप्यस्यैवाभावान्न तत्र व्यभिचारोद्भावनं संगमिति भावः । **सामर्थ्याभावेनेति** । पूर्वपदांते स्वरिते सतीत्यर्थे पूर्वांतस्वरितपदयोरसामर्थ्येन समर्थःपदविधिरिति समर्थाधिकारे पूर्वांतं च स्वरितं चेति 'विशेषणं विशेष्येण बहुल'मित्युक्तसमासानुपपत्तिरिति भावः । पूर्वांतं स्वरितं यस्येति बहुव्रीहिमाश्रित्य समासप्रातिपदिक इति पदाध्याहारेण समाधत्ते **मैवमित्यादिना** । पुंसोः समस्यमानपुंसोः संबन्धिनि समासप्रातिपदिक इति योजनेति भावः ॥ **कामचारित्वा-**

**दिति**। तथा चात्र स्वरितपदस्यैव विशेष्यत्वाददोष इति भावः। विशेषणत्वं तस्योपेत्याप्याह **आहितेति**। आहिताग्न्यादिगणे विशेष्यस्यापि पूर्वनिपातोक्तेः तद्गणमध्येऽस्यापि ग्रहणसंभवादिति भावः॥

या०— **पुंसोः पुंल्लिङ्गयोरिति**। इदं च विशेषणम् कन्याप्रियो मृदङ्गो धान्यपतिरित्यादितत्पुरुषे पूर्वपदान्तस्वरितत्वसत्त्वेऽपि बहुव्रीहित्वाभावेन व्यभिचारवारणाय। तथा हि। कन्याप्रियो मृदङ्ग इत्यत्र प्रीतौ चेति सूत्रेणातिशयितप्रीतौ गम्यमानायां सुखप्रिययोरुत्तरपदयोः तत्पुरुषसमासे पूर्वपदप्रकृतिस्वरत्वं विहितम्। तथा धान्यपतिरित्यत्र पत्यावैश्वर्ये इत्यैश्वर्यवाचिपतिशब्दे परतस्तत्पुरुषसमासे पूर्वपदे प्रकृतिस्वरत्वम्। कन्याधान्यशब्दौ तिल्यशिक्यमर्त्यकाष्मर्यधान्यकन्याराजन्यमनुष्याणाम् अन्तरिति फिट्सूत्रेण स्वरितान्तौ। तथा च तत्रोक्तनियमस्य व्यभिचारे प्राप्ते पुंसोरित्युक्तम्। उक्तोदाहरणयोस्तु कन्याधान्यशब्दयोरपुंस्त्वेन समस्यमानयोरुभयोः पुंस्त्वस्य विवक्षितस्याभावान्न व्यभिचार इति॥ **अत्र केचिदिति**। अत्र यो बहुव्रीहिः सः स्वरितपूर्वपदान्तः। यः स्वरितपूर्वपदान्तः स बहुव्रीहिरित्युभयथाऽपि व्याप्तिरभिमता। अस्य सूत्रस्य स्वरविनिर्णयार्थतया मूले उक्तत्वादाद्या व्याप्तिरत्राभिप्रेतेति गम्यते। प्रकृते समासनिर्णयार्थमुपात्तत्वाद् द्वितीयाऽपि। एवं चात्राभिमते व्याप्तिद्वये केचिद्वैय्याकरणा व्यभिचारमुद्भावयन्तीत्यर्थः। तथा हि। न तावदाद्या व्याप्तिः सम्भवति। ब्रह्मचारिपरिस्पन्द इति बहुव्रीहेः स्वरितपूर्वपदान्तत्वाभावात्। तत्र पूर्वपदभूतब्रह्मचारिपदस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वात्। समासान्तोदात्तत्वस्य च बहुव्रीहौ प्रकृत्या पूर्वपदमित्यपोदितत्वात्। नापि द्वितीया। आर्यब्राह्मण आर्यकुमार इति कर्मधारयसमासे व्यभिचारात्। आर्यशब्दस्य ण्यदन्तत्वेन तित्स्वरितमिति स्वरितान्तत्वात्। आर्यो ब्राह्मणकुमारयोरित्यनेनात्रापि पूर्वपदप्रकृतिस्वरत्वविधानेन न समासान्तोदात्तताप्राप्तिः। ततश्चोभयथाऽपि व्याप्तिरयुक्तेति। अत्र यद्यपिप्रकृतसङ्गतत्वात् द्वितीयैव व्याप्तिर्वाच्या। तथाऽप्याद्याया अपि सूत्रार्थतयाऽभिप्रेतत्वस्य मूले व्यक्तत्वात्साऽपि विचार्येत इत्यवगन्तव्यम्॥ **सामान्यलक्षणेति**। सामान्यसूत्रेणोत्सर्गतः प्राप्तं हीत्यर्थः॥ **विशेषलक्षणानीति**। तथा च विशेषसूत्रापोदितोदाहरणव्यतिरिक्तोदाहरणेषु प्रागुक्तव्याप्त्योरुपपत्तिः। ब्रह्माधिपतीन्द्रशब्दप्रातिपदिकयोश्च पूर्वपदान्तस्वरितयोर्न समासान्तत्वप्रापकं विशेषसूत्रमस्तीति भावः। एवं व्याप्तिद्वये शङ्कितव्यभिचारं साधारण्येन परिहृत्याद्यव्याप्तावेव समाधानान्तरमाह **किञ्चानेनेति**। नन्वेवं प्रकृतेऽसम्भव इत्यत आह **ब्रह्मेन्द्रशब्दयोरिति**॥ **स्वरितान्तत्वादिति**। समासकालेऽपीति शेषः। तथा च यो बहुव्रीहिः स प्रकृतिस्वरोपेतपूर्वपद इत्येव व्याप्तिर्न तु स्वरितपूर्वपदान्त इति। अतो नोव्यभिचारक्त

शङ्केति भावः । यद्यप्येवमपि बहुव्रीहौ विश्वं संज्ञायामित्यादिना विश्वदेव इत्यादौ पूर्वपदप्रकृतिस्वरापवादेनान्तोदात्तताया विहितत्वाद्व्यभिचार एव । तथाऽपि समासस्येत्यनेन विहितसमासान्तोदात्तत्वाभावस्यैव व्यापकतयाऽत्र विवक्षितत्वान्न कुत्रापि व्यभिचार इति ध्येयम् । ननु प्रकृतानुपयुक्तेयं व्याप्तिरेतत्सूत्रार्थतया कुतोऽभिमतेति कल्प्यते । येन तद्व्यभिचारपरिहरणं सङ्गतं स्यादित्यत आह **अत एव स्वरेति** यत इयं व्याप्तिरेतत्सूत्रार्थतया ग्रन्थकृतोऽभिमताऽत एवेत्यर्थः । द्वितीयव्याप्तावप्यसाधारणं समाधानमाह **अपि चेति सन्देहे सतीति** । तत्पुरुषबहुव्रीहिसन्देहे सतीत्यर्थः ॥ **असन्देहं प्रयोजनमिति** । व्याकरणशास्त्रमनारम्भणीयं निष्प्रयोजनत्वादित्याशङ्कापरिहाराय रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति प्रतिज्ञातम् । सन्देहानुत्पादरूपं विवृण्वतेत्यर्थः ॥ **इत्याद्युक्तमिति** । स्थूलपृषतीमनड्वाहीमालभेतेत्यत्र श्रुतौ स्थूलपृषतीशब्दः कर्मधारयो बहुव्रीहिर्वेति सन्देहः । तत्र यदि कर्मधारयस्तदा पृषतीशब्देन मत्वर्थलक्षणया पृषद्वती बिन्दुमती स्थूला गौरेवाभिधीयते । बिन्दूनां स्थौल्यं सौक्ष्म्यं वा तत्र नादरः । यदा बहुव्रीहिस्तदा स्थूलत्वस्य पृषद्विशेषणत्वेन बिन्दूनां स्थौल्यमायाति, गौस्तु पृषद्वत्त्वमत्रायाति । स्थौल्ये तु नादरः । एवं च यदि स्थूलशब्दान्तोदात्तता तदा कर्मधारय इत्याद्युक्तमित्यर्थः ॥ **तथा चासन्दिग्ध इति** । तथा च सन्दिग्धसमासत्वे सति यः पूर्वपदप्रकृतिस्वरः स बहुव्रीहिरिति द्वितीयव्याप्तौ विवक्षितम् । आर्यब्राह्मण इत्यादौ तु कर्मधारय इत्यस्य सुप्सुपेति वा साधनं कृतेति वा स्वरेण विनिर्णय इति तृतीयातत्पुरुषत्वं ज्ञातव्यम् । **सामर्थ्याभावेनेति** । समस्यमानयोः पुंसोर्मध्ये पूर्वान्ते स्वरिते सतीति ह्यत्र विवक्षितो वाक्यार्थः। न चैतदर्थाभिधानेऽयं समासः शक्तोऽस्मात्तथाऽप्रतीतेः । अतोऽत्र न सामर्थ्यम् । उक्तं हि काशिकायाम् । विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्य इति । तथा च समर्थः पदविधिरित्यधिकारात् प्रकृते च सामर्थ्याभावात्कथं समास इत्यर्थः । स्यादयं दोषो यदि पूर्वान्ते स्वरिते सतीति वाक्यार्थोऽत्र विवक्षितः स्यात् ॥ न चैवम् । किन्तु पूर्वान्तः स्वरितो यस्य स इति वाक्यार्थस्य विवक्षणात् । नन्वेवमन्यपदार्थभूतविशेष्यप्रातिपादकपदाभावात् साकाङ्क्षं वाक्यमपूर्णमित्यत आह **समासप्रातिपदिक इति** । तथा चाध्याहारेण वाक्यस्य निराकाङ्क्षतेति भावः । न चैवं पुंसोरिति निर्धारणासङ्गतिः । पुंसोः सम्बन्धिनि समासप्रातिपदिक इति विवक्षितत्वात् **विशेषणस्येति** । चित्रगुरित्यादौ चित्रादिविशेषणपदानां पूर्वनिपातदर्शनादिति भावः ॥ समाधानमाह ॥ **विशेषणेत्यादिना** ॥

श्री० — **पुंलिङ्गयोरिति** । कन्यायाः प्रियः कन्याप्रियः । धान्यानां पतिः धान्यपतिरिति षष्ठीतत्पुरुषसमासौ । षष्ठीतत्पुरुषसमासे च कन्याधान्यशब्दौ कन्याधान्यराजन्यमनुष्याणामन्तरिति

फिट्सूत्रेण स्वरितान्तत्वेन निपातितौ । ब्रह्मेन्द्रशब्दयोरुक्तरीतेरत्रासम्भवात् । तथाच तत्र स्वरितपूर्वपदान्तत्वेऽपि बहुव्रीहित्वाभावाद्व्यभिचारः स्यादतः पुंलिङ्गयोरित्युक्तम् । तथाच कन्याप्रियशब्दयोरुभयोः पुंलिङ्गत्वाभावात् धान्यशब्दस्य नित्यनपुंसकत्वेन पतिशब्दस्य च नित्यपुंलिङ्गत्वाभावान्न व्यभिचार इत्यर्थः । प्रकृते च ब्रह्माधिपतिशब्दयोरुभयोरपि पुंलिङ्गत्व दिति द्रष्टव्यम् ॥ **अत्र केचिदिति** । यो बहुव्रीहिः स स्वरितपूर्वपदान्तः यः स्वरितपूर्वपदान्तः स बहुव्रीहिरिति व्याप्तिद्वयं विवक्षितम् । स्वरविनिर्णय इति स्वरस्य निर्णेयतया मूले उक्तत्वादाद्या व्याप्तिरभिप्रेतेति गम्यते । प्रकृते समासनिर्णयार्थमुपात्तत्वाद्द्वितीयापि । एवं च व्याप्तिद्वयेऽपि केचिद्वैयाकरणा व्यभिचारमुद्भावयन्तीत्यर्थः । तथा हि न तावदाद्या व्याप्तिः सम्भवति । ब्रह्मचारी परिस्पन्दो यस्य स ब्रह्मचारिपरिस्पन्द इति बहुव्रीहिसमासे स्वरितपूर्वपदान्तत्वाभावेन व्यभिचारात् । चारिशब्दशब्दस्य इन्प्रत्ययान्तत्वात् । तस्य च कृदतिङिति सूत्रेण कृत्वोक्तेः । गतिकारकोपपदात्कृदिति सूत्रेण कृदन्तस्योदात्तस्वरविधानात् । पूर्वपदे ब्रह्मचारिपदे अन्तस्येकारस्योदात्तस्वरवत्त्वेन स्वरितस्वरवत्त्वाभावात् । ननु समासस्येति सूत्रेण समासस्यान्तोदात्तत्वोक्तेर्ब्रह्मचारिपरिस्पन्द इति समासान्तदकारस्थाकारस्योदात्तत्वे अनुदात्तं पदमेकवर्जमित्यवशिष्टस्यानुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति तस्य स्वरितत्वे च स्वरितपूर्वपदान्तत्वप्राप्त्या न व्यभिचार इति चेत् । उच्यते । बहुव्रीहौ प्रकृत्या पूर्वपदम् । अत्र पूर्वपदग्रहणं पूर्वपदस्वरे उदात्ते स्वरिते वा वर्तते । तथाच बहुव्रीहौ समासे पूर्वस्य पदस्य यः स्वर उदात्तः स्वरितो वा स प्रकृत्या भवति । स्वभावेनैवावतिष्ठते । न विकारं समासान्तोदात्तत्वप्रयुक्तमनुदात्तत्वमापद्यत इति सूत्रार्थः । अयं च समासस्येति सूत्रविहितं यत्समासान्तोदात्तत्वं तत्प्रयुक्तम् यदनुदात्तं पदमेकवर्जमित्यादिसूत्रविहितमनुदात्तत्वादि तदपवादः । तथाच ब्रह्मचारिपरिस्पन्द इति बहुव्रीहौ पूर्वपदे ब्रह्मचारिपदे कृदन्तत्वप्रयुक्त प्रकृतिस्वरस्योदात्तस्वरस्य स्वभावेनैवावस्थितत्वेनानुदात्तत्वादिरूपविकाराभावात्स्वरितपूर्वपदान्तत्वं नास्तीति व्यभिचारः स्यादेव । तथा यः स्वरितपूर्वपदान्तः स बहुव्रीहिरिति द्वितीयापि व्याप्तिरयुक्ता । आर्यश्चासौ ब्राह्मणश्चार्यब्राह्मण इति कर्मधारयसमासे व्यभिचारात् । तथाहि । आर्यशब्दो हि ण्यदन्तः । ऋगतावित्यस्मात् ण्यत्प्रत्यये णकारतकारयोर्लोपे ऋवर्णस्याकाररूपे गुणे तस्य च रपरत्वे णित्वादादिवृद्धौ च सत्यामार्येति रूपम् । एवं च ण्यत्प्रत्ययस्य तित्वात्तदन्तस्यार्यपदस्य तित्स्वरितमिति सूत्रेण स्वरितान्तत्वादार्यब्राह्मण इति समासस्य स्वरितपूर्वपदान्तत्वेऽपि बहुव्रीहित्वाभावाद्व्यभिचार इति व्यभिचारद्वयं साधारण्येन परिहरति **सामान्यलक्षणे इति** । सामान्यसूत्रेत्यर्थः । विशेषलक्षणैर्विशेषसूत्रैः ॥ **तत्र विशेषलक्षणानीत्यादि** । तथा च पूर्वान्तस्वरिते पुंसोर्बहुव्रीत्वमेष्यतीति महाव्याकरणसूत्रं सामान्यसूत्रम् । तथाच यो बहुव्रीहिः स स्वरितपूर्वपदान्त इत्युत्सर्गः । ब्रह्मचारिपरिस्पन्द

इत्यादौ तु बहुव्रीहित्वेऽपि गतिकारकोपपदात्कृदिति विशेषसूत्रेणोदात्तस्वरविधानेनापवादसद्भावात्तद्व्यतिरिक्तस्थलेऽयं नियमः । तथा यः स्वरितपूर्वपदान्तः स बहुव्रीहिरित्यपि सामान्यव्याप्तिरुत्सर्ग एव । आर्यब्राह्मण इत्यादौ तु स्वरितपूर्वपदान्तत्वेऽपि कर्मधारयसमासप्रापक आर्यो ब्राह्मणकुमारयोरिति कर्मधारयसमासप्रापक आर्यो ब्राह्मणकुमारयोरिति कर्मधारयसमासविधायकविशेषसूत्रापवादसद्भावाद्व्यतिरिक्तस्थलेऽयं नियम इति भावः । आद्यव्याप्तौ व्यभिचारपरिहाराय समाधानान्तरमाह **किञ्चानेनेति** । पूर्वान्तस्वरित इत्यनेन बहुव्रीहौ पूर्वपदेन प्रकृतिस्वरवत्त्वमुपलक्ष्यते । एवंच यो बहुव्रीहिः स प्रकृतिस्वरोपेतपूर्वपद इत्येव व्याप्तिर्न तु स्वरितपूर्वपदान्त इति । प्रकृतिस्वरश्च धातुस्वरः । स च क्वचिदुदात्तः क्वचित्स्वरितः । तथाच ब्रह्मचारिपरिस्पन्द इति ब्रहुव्रीहौ पूर्वपदे ब्रह्मचारिपदे प्रकृतिस्वरवत्त्वमस्त्येव । चारीत्यत्र चरधातोरिन्प्रत्ययान्तस्य कृदन्तत्वेनोदात्तस्वरवत्त्वात् । प्रकृते च ब्रह्माधिपतिरित्यत्रेन्द्रशत्रुरित्यत्र च बहुव्रीहौ पूर्वपदे ब्रह्मपदे इन्द्रपदे च प्रकृतिस्वरवत्त्वं वर्तत एवेति न व्याप्त्यसम्भवः । कथं प्रकृतिस्वरवत्त्वमस्तीत्यत आह **ब्रह्मेन्द्रशब्दयोः स्वरितान्तत्वादिति** । उदात्तस्वरितयोरुभयोरपि प्रकृतिस्वरत्वेनात्रोदात्तस्वराभावेऽपि स्वरितस्वरसद्भावात्प्रकृतिस्वरवत्त्वमक्षतमिति भावः । द्वितीयव्याप्तौ व्यभिचारपरिहाराय समाधानान्तरमाह **अपि चेति** ॥ **सन्देहे सतीति** । अत्र तत्पुरुषशब्देन कर्मधारयो ग्राह्यः 'तत्पुरुषः समानाधिकरणः कर्मधारय' इति सूत्रेण समानाधिकरणतत्पुरुषस्य कर्मधारयत्वोक्तिरिति ध्येयम् । तथा चैवं सन्देहं व्युत्पाद्य पूर्वपदप्रकृतिस्वरत्वे बहुव्रीहित्वं यदोक्तं तदा सन्दिग्धसमासत्वे सतीति विशेषणं हेतावभिप्रेतमिति सूचितं भवति । तथाच सन्दिग्धसमासत्वे सति यः प्रकृतिस्वरोपेतपूर्वपदः स बहुव्रीहिरिति द्वितीयव्याप्तौ विवक्षितत्वात् । आर्यब्राह्मण इत्यादौ तु कर्मधारयत्वस्य निर्णीतत्वेन सन्दिग्धसमासत्वरूपविशेषणाभावेन तद्विशिष्टहेतोरेवाभावान्न तत्र व्यभिचारोद्भावनं सङ्गतमिति भावः ॥ **विशेषणस्येति** । स्वरितेतिविशेषणस्येत्यर्थः ॥ **कामचारित्वादिति** । तथाच पूर्वान्त इत्यस्यैव विशेषणत्वमभिप्रेतमिति भावः ॥ **विशेषणस्येति** । स्वरितेति विशेषणस्येत्यर्थः ॥ **कामचारित्वादिति** । तथाच पूर्वान्त इत्यस्यैव विशेषणत्वमभिप्रेतमिति भावः ॥ **आहितेति** । आहितोऽग्निर्येनासावित्याहितशब्दस्य परनिपातेनाग्न्याहित इति भवति । एवं स्वरितः पूर्वान्तो यत्रेत्यत्रापि स्वरितशब्दस्य परनिपातेन पूर्वान्तस्वरित इत्युक्तमित्यर्थः । उत्तरवाक्यबलेन ब्रह्माधिपतिरित्युत्तरवाक्यबलेनेत्यर्थः ।

च० — **अत्रकेचिदिति** । बहुव्रीहित्वे स्वरितांतपूर्वपदावयवकत्वनिरूपिता स्वरितांतपूर्वपदावयवकत्वे बहुव्रीहित्वनिरूपिता च व्याप्तिद्वयमभिप्रेयते । स्वोदाहृतमहाव्याकरणसूत्रस्य स्वरविनिर्णयार्थताया मूलकाराभिहिततयाऽऽद्या प्रकृते समासनिर्णयार्थं तस्य तदुदाहृततया द्वितीयापि । इत्थं च दर्शित-

ग्रंथकृदभिप्रेतव्याप्तिद्वये केचित्पाणिनीया अनैकान्त्यमुद्भावयन्तीत्यर्थः । ब्रह्मचारिपरिस्पन्द इति बहुव्रीहिघटकपूर्वावयवभूतब्रह्मचारिपदस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्ततया स्वरितांतपूर्वपदावयवकत्वाभावेन सामासिकान्तोदात्तत्वस्य च बहुव्रीहौ प्रकृत्या पूर्वपदमित्यपोदिततयाद्यव्याप्तिर्भांक्षीदेव । आर्यब्राह्मण आर्यकुमार इति कर्मधारयघटकपूर्वावयवभूतार्यपदस्य ऋहलोर्ण्यदित्यनुशिष्टण्यदन्तत्वेन तित् स्वरितमिति स्वरितान्ततया तत्र च बहुव्रीहित्वाभावेनार्यो ब्राह्मणकुमारयोरित्यनेन पूर्वपदप्रकृतिस्वरविधानेन सामासिकान्तोदात्तत्वस्याप्यप्राप्तया द्वितीयाऽपितथैव । प्रकृतौपयिकद्वितीयव्याप्तेरेव विचार्यतायामपि प्रथमव्याप्तिरपि सूत्रार्थतया मूलकाराभिहितेति सापि विचार्यत इति हृदयम् । विशेषवतेत्यादिसामान्यशब्दानुशासनहेतुप्रकृत्यादिविभागकल्पना क्रियत इत्यर्थः । **सामान्यलक्षणेति** । करणसाधनल्युडंतलक्षणशब्दोऽयं च सूत्रवचनः । उत्सर्गशास्त्रप्राप्तं हीत्यर्थः । तत्रेति । महाव्याकरणस्थानी त्यर्थः । **विशेषलक्षणनीति** इत्थं च नाम्न लौनपदान्तद्विर्वचनआतोनुपसर्गेकइत्यादिविशेषशास्त्रापोदितस्थल एव तुल्यास्यप्रयत्नम् अचः परस्मिन्कर्मणीत्यादिकमुत्सर्गशास्त्रं चरतीति । ब्रह्मचिपतीन्द्रशत्रुप्रातिपदिकयोश्च स्वरितांतपूर्वपदावयवयोः समासान्तरविधायकविशेषानुशासनवैधुर्येण विशेषशास्त्रानपोदिततया तत्रोत्सर्गशास्त्रमनङ्कुशं संचरतीति भावः । प्राक् विशेषलक्षणापर्यालोचननिबंधना शङ्का निर्दलेति समाधाय संप्रति महाव्याकरणसूत्रस्यान्यदीयानैकान्त्यशंकापनोदकं पाणिनीयसूत्रार्थमनुरुंधानमर्थांतरमभिदधान आद्यव्याप्तौ समाधत्ते । **किंचेति** । अनेन सूत्रेण महाव्याकरणस्थसूत्रेण । उक्तमर्थं पक्षनिदर्शनयोः संगमयति । **ब्रह्मेत्यादि । स्वरितांतत्वादिति** । समासदशायामपीतिपूरणीयम् । इत्थं च बहुव्रीहित्वे प्रकृतिस्वरोपेतपूर्वपदावयवकत्वनिरूपिता व्याप्तिरेवोपेयते न स्वरितांतपूर्वपदावयवकत्वनिरूपितेति नानैकांत्यशंकाऽवकाश इति भावः । अर्थांतराभिधानमपि मूलकृदभिप्रेतमित्यत्र तदीयविन्यासमेव प्रमाणयति । **अत एवेति** । दर्शितव्याप्तेर्मूलकृदभिप्रेतत्वादेवेत्यर्थः । श्रूयमाणसौत्रविन्यासमनुरुंधान एव विशेषादर्शनादिघटितसामग्रीनिष्पाद्यसमासविशेषत्वतदभावकोटिकसंदेहदशायामेव पूर्वपदप्रकृतिस्वरत्वादिकं बहुव्रीहित्वाद्यवधारकमिति पस्पशायां भाष्यकृदुक्तदिशा द्रढयन् द्वितीयव्याप्तौ समाधत्ते । **अपि चेति । संदेहे सतीति** । तत्पुरुषः समानाधिकरणः कर्मधारयइत्यनुशासनात्कर्मधारयत्वबहुव्रीहित्वकोटिकसंदेहे सतीत्यर्थः । **यथोक्तमिति** । पस्पशायां किं प्रयोजनं व्याकरणस्येतिशंकाऽनुत्तये रक्षोहागमलघ्वसंदेहाःप्रयोजनमित्यभिधाय एवं वा समास अन्यथा वेत्यादिसंदेहाभावः प्रयोजनमिति स्फुटीकृतं भाष्यकृतेत्यर्थः । अत्र व्याकर्तारः । असंदेहं । संदेहप्रागभावमित्यर्थः । वैय्याकरणस्य संदेहाभावेन तद्ध्वंसानुपपत्तेरिति द्रष्टव्यम् । संदेहं व्युत्पाद्येति । स्थूला चासौ पृषती चेति कर्मधारयः । अत्रपृषतीशब्दो मत्वर्थलक्षणया पृषतीं बिंदुमतीं धेनुमाह । स्थूला च सैव । बिंदूनां स्थौल्यं तानवं वा यथा तथास्तु । स्थूलानि पृषंति यस्यामिति

बहुव्रीहिः । अत्र स्थौल्यं पृषतामेव लभ्यते । स्थौल्यं तानवं वा गोरस्त्विति विशेष इति व्याचक्षते । इत्थं व्याख्याने संदेहे सति स्वरेण समासनिर्णयार्थमिदमुच्यत इति सौधवचनेनभाष्यकारीयेण कर्मधारयबहुव्रीहि-संदेहोत्तरकालीनस्वरविशेषानुसंधाननिवर्त्यत्वाभिधानेन च संदेहप्रध्वंसस्य प्रयोजनत्वाध्यवसित्या संदेहपदं संदेहप्रागभावार्थकतया व्याख्याय वैय्याकरणस्य संदेहाभावेन तद्ध्वंसानुपपत्तेरिति द्रष्टव्यमित्यास्मीयोक्तेरसं देहः संदेहप्रागभाव इति कैयटोक्तेश्च तादृक्सौधभाष्यग्रंथाभ्यामैककंटयं विभावनीयम् । **असंदिग्धइति** । विशेषलक्षणार्थाधीनविशेषदर्शनदशायां संदेहानास्कंदित इत्यर्थ । **असङ्गतमिति** । सामानाधिकरण्यप्रत्या-सत्त्या संदिग्धसमासत्वविशेषितपूर्वपदप्रकृतिस्वरत्वस्यैव बहुव्रीहित्वव्याप्यतोपगमेन निर्णीतकर्मधारयत्वके आर्यब्राह्मणइत्यादौ सामानाधिकरण्येनैकविशेषितापराधिकरणतायां सामानाधिकरण्यनिरूपकत्वस्य तंत्रतया तद्राहित्यनिबंधनहेतुताऽवच्छेदकविशिष्टाभावेन द्रव्यं गुणकर्मान्यत्वे सति सत्वादित्यादाविव प्रकृतसाध्या-भाववन्निष्ठाधिकरणतानिरूपकतावच्छेदकहेतुतावच्छेदकवत्वरूपानैकांत्यानवकाशादिति भावः । **सामर्थ्याभावेनेति** । पुंलिंगपदद्वयघटितसमासघटकपूर्वपदरूपावयवे स्वरिते सतीति प्रकृताभिमतार्थबोधने पूर्वान्त स्वरित इत्यस्य सामर्थ्याभावादित्यर्थः । विशेष्यवाचकसप्तम्यंतपदाध्याहारान्न क्षतिरिति समाधत्ते । **समासेति** । पुंसोः समस्यमानपुंसोः संबंधिनि समासप्रातिपदिक इति योजनेत्याशयः । बहुव्रीहाविति सप्तमीविशे-षणे बहुव्रीहाविति योगेनेत्यर्थः । चित्रगुरित्यादौ विशेषणाभिधायकचित्रादिपदानां विशेष्याभिधायकगोपदा-दितः पूर्वनिपातदर्शनादित्यपि स्थितं । **कामचारित्वादिति** । अपूर्वान्तप्रतियोगिकस्वरितानुयोगिकभेदानुमाप-कत्वरूपभेदकत्वात्मकविशेषणत्वं पूर्वान्तेत्यस्यस्वरितांतप्रतियोगिकपूर्वांतानुयोगिकभेदानुमापकत्वरूपभेदक-त्वात्मकविशेषणत्वं स्वरितेत्यस्य च संभवतीति प्रकृते स्वरितपदस्यैव विशेष्याभिधायकत्वोपगमान्न क्षति-रिति भावः तत्पदस्य विशेषणाभिधायकतामूरीकृत्यापि पाणिनीयदिशा समाधत्ते । **आहितेति** ।

**सु० — एवं पुनरुक्तिप्रसङ्गेनोत्तरवाक्यबलेन च "ऋतं सत्यमिति पूर्वोत्तरार्धयोर्भिन्न-विषयत्वमुपपाद्य सङ्क्षेपेण व्याख्यातं वाक्यं विस्तरेण व्याख्याति ।** ऋतमिति ।

ऋतं सत्यं परं ब्रह्मेत्यावुद्देश्य द्वितीयका ॥
विभक्तिलुग्वेरूतादिः प्रथमा रुद्रगोचरा ॥

इत्यादीति सुपां सुलुगिति प्रथमाया लुक् । इत्यादिपूर्वार्धस्थं यत्तद्जातं तत्रस्थमिति वा । द्वितीयेत्येतावत्युच्यमाने कर्मणि द्वितीयैव प्रतीयेत । प्राबल्यात्कारकविभक्तेः । न च तत्स-म्भवति । क्रियापेक्षत्वात्कर्मत्वस्य । अत्र च क्रियाऽभावात् । अत उद्देश्यद्वितीयेत्युक्तम् । तर्हि प्रतिशब्देन भाव्यम् । सत्यम् । अध्याहरिष्यते । श्रौतप्रयोगदर्शनादकारान्तो रेतशब्दो

वा समासान्तोडप्रत्ययो वाऽनुसर्तव्यः ॥ ऊर्ध्वरेतादिरिति । **ऊर्ध्वरेतमित्यादिपदावयवभूता । एवं रुद्रगोचरेतिवत्पूर्वं विष्णुगोचरेत्यपि द्रष्टव्यम् । एवं विषयविभक्ती तदर्थं चोक्त्वा योजनामाह** तस्मादिति ।

तस्माद्विष्णुं परं ब्रह्म प्रति रुद्रो व्रते स्थितः ॥
ऊर्ध्वरेता इति ह्येव श्रुत्यर्थोऽवसितो भवेत् ॥

**उक्तयुक्तिसमुदायात्** ॥ऊर्ध्वरेता **इत्येतदुलपक्षणमित्याशयेनोक्तम्** व्रते स्थित इति ।

शे०— **सङ्क्षेपेणेति** । विष्ण्वाख्यमुक्तमन्यत्रेत्यादिनापूर्वोत्तरार्धविषयप्रदर्शनेनोर्ध्वरेतं च तत्प्रतीत्यनेनान्वयप्रदर्शनेन चेत्यर्थः ॥ **विस्तरेणेति** । विषयविभक्तितदर्थकथनेनेत्यर्थः । अतो न पौनरुक्त्यमिति भावः । ननु विभक्तिविशेषणत्वादित्यादिरिति भवितव्यम् । इत्यादीति तु कथमित्यत आह **इत्यादीतीति** । अत्र पक्षे विभक्तिविशेषणप्रथमाया श्छांदसलुक्कल्पनामिया पदजातविशेषणता- मङ्गीकृत्य पक्षान्तरमाह **इत्यादीति** । अत्र पक्षे तत्रस्थेति पदाध्याहार इति ध्येयम् ॥ **प्राबल्यादिति** ॥ उपपदविभक्तेः सकाशादिति शेषः । अन्तरङ्गक्रियासम्बन्धापेक्षकारकनिमित्तया विभक्तेरप्यन्तरङ्गत्वात् बलीयस्त्वमिति भावः । अत एव कर्मणि द्वितीयाया हरिं भजतीत्यादौ सावकाशत्वान्नमोयोगे चतु- र्थ्याश्च नमो देवेभ्य इत्यादौ सावकाशत्वान्नमस्करोति देवानित्यादौ द्वितीयाचतुर्थ्योः प्रसङ्गे परविप्रति- षेधेन चतुर्थ्या एव प्रसक्तावपि तस्या उपपदविभक्तित्वेन दुर्बलत्वात्कर्मणि द्वितीयायाश्च कारकविभक्ति- तया प्राबल्यात्तयैव चतुर्थीबाध इति ध्येयम् ॥ **अध्याहरिष्यत इति** । ततश्च विष्णुभक्तत्वप्रकारं प्राप्तस्य चैत्रस्य विष्णोश्च विषयविषयिभावस्य प्रतिना द्योतनादित्थंभूताख्याने 'लक्षणेत्थंभूताख्याने'ति सूत्रेण कर्मप्रवचनीयत्वात्प्रतिशब्दस्य तद्योगे कर्मप्रवचनीययुक्ते द्वितीया इत्यनेन द्वितीयावदत्रापि तद्व्रत- स्थितत्वप्रकारं प्राप्तस्य रुद्रस्य विष्णोश्च विषयविषयिभावस्य प्रतिना द्योतनादित्थंभूताख्याने कर्मप्रवचनीय- प्रतिशब्दयोगे द्वितीयेयमिति भावः । (लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः। एष्वर्थेषु विषयभूतेषु प्रत्यादयः कर्मप्रवचनीयसंज्ञाः स्युः । लक्षणे । वृक्षं प्रति । परि । अनु वा विद्योतते विद्युत् । इत्थंभूताख्याने । भक्तो विष्णुं प्रति परि अनु वा । भागे लक्ष्मीर्हरिं प्रति परि अनु वा । हरेर्भाग इत्यर्थः । वीप्सायां वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति । अत्रोपसर्गत्वाभावान्न षत्वम् । एषु किं, परिषिञ्चति ) । यद्वा । नायं प्रतिः कर्मप्रवचनीयः किन्तु तद्व्रते स्थितिरूपक्रियाविशेषकत्वादुपसर्गः । तथा च 'बुभुक्षितं न प्रतिभाति किञ्चने'त्यादाविवाकर्मप्रवचनीयप्रतिशब्दयोगे उभसर्वतसोः कार्येति

वार्तिककृदुक्तरीत्या द्वितीयेयमित्यर्थः । ( उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते । उभयतः कृष्णं गोपाः । सर्वतः कृष्णम् । धिक्कृष्णाभक्तम् । उपर्युपरि लोकं हरिः । अध्यधिलोकम् । अभितः परितः समया निकषा हा प्रतियोगेऽपि । अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया निकषा । हा कृष्णाभक्तम् तस्य शोच्यतेत्यर्थः । बुभुक्षितं न प्रतिभाति किञ्चित् । तस्य परमाम्रेडितम् । द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । पटत्पटेति । आम्रेडितं द्विस्त्रिरुक्तमिति च । उपसर्गाः क्रियायोगे । प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप । एते प्रादयः ) ननु रेतःशब्दस्य सकारान्ततया रेतआदिरिति भाष्ये भवितव्यम् । रेतादिरिति तु कथमित्यत आह **श्रौतेति** । ऊर्ध्वरेतं विरूपाक्षमिति श्रौतप्रयोगदर्शनादित्यर्थः ॥ **समासान्त इति** । ऊर्ध्वं रेतो यस्येति बहुव्रीहिसमासात्तद्धिता इति बहुवचनज्ञापिततद्धितगतिवैचित्र्याड्डप्रत्यये डित्वादूर्ध्वरेतश्शब्दस्य टिलोपे च सत्यकारान्तोर्ध्वरेतशब्दनिष्पत्तिरिति भावः । एवमित्यस्यैव विवरणम् **रुद्रगोचरेतिवदिति** । यद्वा । यथा पूर्वोत्तरार्धयोर्भिन्नविषयत्वमुपपादयितुं विभक्तितदर्थविवेचकमुद्देश्यद्वितीयकेति विभक्तिविशेषणमुक्तमेवं विषयविवेचकं विष्णुगोचरेत्यस्यापि विशेषणं वक्तव्यमित्यर्थः । कुत इत्यतो न्यायसूचनाय रुद्रगोचरेतिवदित्युक्तम् । एवं चात्रैवमित्यस्य वय्यर्थ्यमिति शङ्का निरस्ता भवति ॥ **उक्तयुक्तीति** । कृष्णपिङ्गलरूपेण पुनरुक्तं भविष्यतीत्यादिनोक्तपौनरुक्त्यादियुक्तिसमुदायादित्यर्थः ।

**स०** — ननूर्ध्वरेतादिरिति कथं । रेतःशब्दस्यसकारान्तत्वेनोर्ध्वरेतआदिरिति वक्तव्यमित्यत आह **श्रौतप्रयोगदर्शनादिति** ॥ तद्धिता इति बहुवचनेन ज्ञापितद्धितगतिवैचित्र्यादिति भावः ॥ **समासान्त इति** ॥ **ऊर्ध्वरेतेति** । समासान्ते डप्रत्यये टिलोपे अकारान्तोपपत्तिरिति भावः ।

**प०** — **उत्तरेति** । ब्रह्माधिपतिरित्युत्तरवाक्यबलेनेत्यर्थः ॥ **सुपांसुलुगितीति** । 'सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल' इति सूत्रेणेत्यर्थः ॥ **प्राबल्यादिति** । उपपदविभक्ति इति योज्यम् । ननूर्ध्वरेतादिरिति कथम् । रेतःशब्दस्य सकारान्तत्वेन ऊर्ध्वरेतआदिरिति भाव्यमित्याशङ्क्य समाधत्ते **श्रौतप्रयोगेति** । 'ऊर्ध्वरेतं विरूपाक्षम्' इति श्रौतप्रयोगेत्यर्थः ॥ **उक्तयुक्तीति** । पौनरुक्त्यापत्तिवाक्यशेषबलरूपयुक्तिद्वयाद्वाक्यशेषस्य बहुव्रीहित्वद्योतकयुक्तिबलाच्चेत्यर्थः ।

**या०** — **सुपां सुलुगिति** । 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः' सुपां स्थाने सुश्च लुक् च पूर्वसवर्णश्च आ च आत् च शे च या च डा च ड्या च याच्च आल् च ते सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल इतीतरेतरयोगे द्वन्द्वः । एते आदेशाः स्युरिति सूत्रार्थः । ऋजवः

सन्तु पन्थाः । पन्थान इति प्राप्ते जसः सुः । आर्द्रे चर्मन् । चर्मणीति प्राप्ते लुक् । मती । मत्या इति प्राप्ते पूर्वसवर्णदीर्घः । सखाया इति प्राप्ते औकारस्य आ । नताद् ब्राह्मणं । नतमिति प्राप्ते अम आत् । अस्मे इन्द्राबृहस्पती । न युष्मे वाजबन्धवः । यूयं वयमिति प्राप्ते जसः शे । यूयवयादेशाभावश्च छान्दसत्वात् । उरुया । उरुणेति प्राप्ते या । नाभा पृथिव्याः । नाभाविति प्राप्ते डा । अनुष्टुभ्याजयामसि । अनुष्टुभा इति प्राप्ते ड्या । साधुया । साध्विति प्राप्ते याच् । वसन्ता यजेत । वसन्ते इति प्राप्ते आल् इत्युदाहरणानि । तथा चार्द्रे चर्मन्नित्यत्र यथा सप्तम्यालुक् एवमत्र प्रथमाया लुगिति भावः । **अत उद्देश्येति** । तथा च कर्मप्रवचनीययुक्ते द्वितीयेत्यनेन द्वितीयेति भावः ॥ **प्रतिशब्देनेति** । प्रतिशब्दश्च लक्षणेत्थम्भूताख्यानेत्यनेन कर्मप्रवचनीय इति भावः । ननूर्ध्वरेतादिरिति कथं । रेतःशब्दस्य सकारान्तत्वेनोर्ध्वरेतआदिरिति वक्तव्यमित्यत आह **श्रौतप्रयोगेति** । ऊर्ध्वरेतं विरूपाक्षमिति श्रौतप्रयोगदर्शनादित्यर्थः ॥ **समासान्त इति** । ऊर्ध्वरेता इति समासान्ते डप्रत्यये टिलोपे अकारान्तोपपत्तिरिति भावः ॥ **एवं रुद्रगोचरेतिवदि**ति । यथा पूर्वोत्तराधियोर्भिन्नविषयत्वमुपपादयितुं विभक्तितदर्थविवेचकमुद्देश्यद्वितीयकेति विभक्तिविशेषणमुक्तम् । एवं विषयविवेचकं विष्णुगोचरेत्यपि तद्विशेषणं वक्तव्यमित्यर्थः । कुत इत्यतो न्यायसूचनाय रुद्रगोचरेतिवदित्युक्तम् । एवं चात्र एवमित्यस्य वैयर्थ्यमिति चोद्यानवकाश इति ध्येयम् ॥

**श्री०** — कर्मणि द्वितीयैव कुतः प्रतीयेतेत्यत आह **प्राबल्यात्कारकविभक्तेरिति** । परंब्रह्म प्रति रुद्रो व्रते स्थित इति कर्मप्रवचनीयप्रतिशब्दयोगे कर्मप्रवचनीययुक्ते द्वितीयेति सूत्रेण द्वितीयाया विहितत्वादुपपदविभक्तिर्जाता । कर्मणि द्वितीयेति विहिता कर्मकारके द्वितीयाविभक्तिः कारकविभक्तिः । ततश्चोपपदविभक्तेः कारकविभक्तिर्गरीयसीति न्यायात्कर्मणि द्वितीयैव प्रतीयत इत्यर्थः । तदर्थे विभक्त्यर्थमुद्देश्यद्वितीयारूपत्वम् ॥ **उपलक्षणमिति** । विष्णुं परं ब्रह्म प्रति ऊर्ध्वरेता इत्यस्यान्वयाभावादुपलक्षणतया व्रते स्थित इति ग्राह्यमित्यर्थः । तथा च व्रते स्थित इति पदमध्याहार्यमिति भावः ।

**च०** — सुपामिति । 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' सुपांस्थाने सुः । लुक् । पूर्वसवर्णाः । आ । आत् । शे । या । डा । ड्या । याच् । आल् । एते आदेशाः स्युः । ऋजवः संतु पंथाः । पंथान इति प्राप्ते जसः सुः । परमे व्योमन् । व्योम्नीतिप्राप्ते ङेर्लुक् । धीतीमतीसुष्टुती । धीत्यामत्यासुष्टुत्येतिप्राप्ते पूर्वसवर्णः । यासुरथारथीतमादिविस्पृशा अश्विना । यौ सुरथौ दिविस्पृशाविति प्राप्ते आ । नताद्ब्राह्मणं । नतमितिप्राप्ते आत् । नयुष्मेराजबंधवः अस्मेइंद्राबृहस्पती । युष्मासु अस्मभ्यमितिप्राप्ते शे । उरुयाधृष्णुया । उरुणा धृष्णुनेतिप्राप्ते या । नाभापृथिव्याः नाभाविति प्राप्ते डा । अनुष्ट्या च्यावयतात् । अनुष्ठानमनुष्ठा । आङो ड्या । साधुया ।

साधुनेतिप्राप्ते याचू। वसंता यजेत। वसंते इति प्राप्ते आलू इति उदाहरणानि।तथा चात्र प्रथमायाःलुगिति भावः। प्राबल्यादिति। ग्रामं गच्छतीत्यादौ कर्मणि द्वितीयाया हरये नम इत्यादौ नमःशब्दसमभिव्याहारे चतुर्थ्याश्च सावकाशतया नमस्करोति देवान्नमस्यति देवानित्यादौ विप्रतिषेधशास्त्रेण चतुर्थ्या एव प्राप्तौ तस्या उपपदविभक्तित्वेन दुर्बलत्वात् कर्मणि द्वितीयायाश्च कारकविभक्तित्वेन प्राबल्यात्तयैव चतुर्थी बाध्यत इति हृदयं । उद्देश्यद्वितीयेति । तथाच नेयं कर्मणि द्वितीयेत्यनुशिष्टा द्वितीया किंतु कर्मप्रवचनीययुक्ते द्वितीयेत्यनेनानुशिष्टेति भावः । कर्मप्रवचनीयसमभिव्याहारविरहात्कथं तेन सेत्यत आह । अध्याहरिष्यत इति । भक्तो विष्णुं प्रतीत्यादौ चैत्रादिवृत्तिभक्तिविषयतामापन्नस्य विष्णोस्तद्विषयकभक्तिमत्तामापन्नस्य चैत्रादेश्च भक्तभजनीयभावसंसर्गे द्योत्ये लक्षणेत्थंभूताख्यानेत्यनेनेव प्रकृतेपि रुद्रकर्तृकोपासनारूपव्रतविषयतामापन्नस्य विष्णोस्तद्विषयकोपासनाख्यव्रतकर्तृतामापन्नस्य रुद्रस्य च दर्शितसंसर्गे द्योत्ये 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव' इत्यनेन प्रतेः कर्मप्रवचनीयसंज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीये'त्यनेनात्र द्वितीयेति भावः । नायं प्रतिः कर्मप्रवचनीयसंज्ञः किंतु तद्गते स्थितिरूपक्रियाविशेषकत्वादुपसर्गः । ततश्च बुभुक्षितं न प्रतिभाति किंचिदित्यादाविवाभितः परितः समयानिकषाहाप्रतियोगेऽपीत्यनेन द्वितीयेत्यपि न्यभांसुः । ननु भाष्यकारीय ऊर्ध्वरेतादिरिति विन्यासो न संगच्छते। रेतःशब्दस्य सकारांततया रेतआदिरिति भवितव्यत्वादित्यतआह । श्रौतेति । 'ऊर्ध्वरेतं' विरूपाक्षमित्यादि श्रौतप्रयोगदर्शनादित्यर्थः । समासांत इति । तद्धिता इति बहुवचनज्ञापिततद्धितगतिवैचित्र्यात् बहुव्रीहिप्रकृतिकडप्रत्यये तस्य डित्वाट्टिलोपे चाकारांततोपपद्यत इति भावः । एवं रुद्रगोचरेतिवदिति । यथा पूर्वोत्तरदलद्वयस्य विषयभेदप्रत्यायनफलकम् विभक्तितदर्थविवेचकमुद्देश्यद्वितीयकेतिविभक्तिविशेषणमुक्तं तद्वद्विषयविवेचकं विष्णुगोचरेत्यपि तद्विशेषणमभिधातव्यमित्यर्थः । रुद्रगोचरेतिवदिति च न्यायसूचकं।

सु० — न केवलमुपपत्तिबलादेवं श्रुत्यर्थो व्याख्यायते । अपितु श्रुत्यन्तरसमाख्यानादपीत्याह ऋतमिति ।

ऋतं सत्यंपरं ब्रह्म प्रति विष्णुं सदाशिवः ॥
ऊर्ध्वरेता ध्यायतीह शङ्करो नीललोहितः ॥
इत्यर्थमेतमेवाह नीलग्रीवश्रुतिः परा ॥
आथर्वणी परं ब्रह्म तस्मादेको हरिः श्रुतौ ॥

ध्यायति । तमेव । अनेन ध्यायतीत्यध्याहारेण कर्मणि वा द्वितीयेति ज्ञायते । आथर्वणीत्युक्ते प्रसङ्गात्तापनीयश्रुतिरित्येव प्रतिभाति ॥ अत उक्तम् ॥ पराऽन्येति । तर्हि

किंनामधेया । **नीलग्रीवश्रुतिः । एवं पूर्वोत्तरार्धयोर्भिन्नविषयतया व्याख्यानेन लब्धमाह** परं ब्रह्मेति । **ऋतं सत्यमित्यस्यां श्रुतौ प्रतीतमिति शेषः । तस्मात्पूर्वार्धस्य विष्णुविषयत्वात् ।**

**प०—** परंब्रह्मेत्यस्योर्ध्वरेत इत्यनेनान्वितत्वाद्ध्यायतीत्यस्य कर्मापेक्षायामाह **तमेवेति** ॥ **अनेनेति** । समाख्याकथनेनेत्यर्थः ॥ **कर्मणि वा द्वितीयेति** । प्रागुद्देश्यद्वितीयेत्युक्ता द्वितीयेत्यर्थः ।

**श्री०— पराऽन्येति** । परा अन्या तापनीयश्रुतिभिन्ना । आथर्वणी अथर्वणवेदोक्ता । नीलग्रीवश्रुतिर्नीलग्रीवप्रतिपादकत्वेन तन्नाम्नी श्रुतिः । तन्नामिका शाखाऽस्तीत्यर्थः ।

**सु०— बाधकान्तरमाह** । तदेवेति ।

तदेवर्तमिति प्राह कथमेवान्यथा श्रुतिः ॥
अवधारयन्ती तस्यैव ह्युतत्वादिकमञ्जसा ॥

**ऋतं सत्यं परं ब्रह्मेति पूर्वार्धोऽपि यदि रुद्रविषयः स्यात्तदा तदेवर्तं तदु-सत्यमाहुस्तदेव ब्रह्म परमं कवीनामिति श्रुतिस्तस्य विष्णोर्ऋतत्वादिकं कथमञ्जसा कवीनां सम्मत्या प्राह । परस्परविरोधेनान्यतरश्रुतेरप्रामाण्यं प्रसज्येतेति भावः । ऋतमिति श्रुती रुद्रस्य ऋतसत्यब्रह्मत्वादीन्याह । तदेवेति (च) श्रुतिर्विष्णोः । तत्र श्रुतिद्वयबलाद्द्वयोरपि ऋतादिशब्दवाच्यत्वे क्वास्ति विरोध इत्यत उक्तम्** तस्यैवेति । **तत्कथमित्यत उक्तमवधारयन्तीति । विरोधे चाऽद्यश्रुतेरेव बाधो युक्तः । तदेवेति श्रुतेः प्रबलत्वात्तच्चैतच्छ्रुत्या आपातप्रतीतिजभ्रान्तिबाधात्मकत्वादवसीयते । न ह्यप्राप्तप्रतिषेधो युज्यते । नापि श्रुत्याभासाद्विना तत्प्रापकमस्तीति ।**

शे०— **क्वास्ति विरोध इति** । ततश्च नान्यतरश्रुत्यप्रामाण्यप्रसङ्ग इति भावः । नन्वस्त्वेवं परस्परविरोधेनान्यतरश्रुत्यप्रामाण्यप्राप्तिस्तथाऽपि तदेवर्तमिति श्रुतिविरोधेन ऋतं सत्यमित्यस्या एवाप्रामाण्यमिति विवक्षितार्थासिद्धिरेव । ऋतं सत्यमिति श्रुतिविरोधेन तदेवर्तमिति श्रुत्यप्रामाण्येऽपि परस्परविरोधप्रयुक्तान्यतरश्रुत्यप्रामाण्यनिर्वाहादित्यतआह **विरोधे चेति ॥ आद्यश्रुतेरिति** । प्रथममुदाहृताया ऋतं सत्यमिति श्रुतेरित्यर्थः ॥ **तच्चेति । प्राबल्यमित्यर्थः ॥ श्रुतीति** ॥ श्रुतितात्पर्यापरिज्ञाननिमित्तकभ्रान्तिबाधात्मकत्वादित्यर्थः । ननु तदेवर्तमित्यस्याप्राप्तप्रतिषेधकत्वस्यैवोपपन्नत्वात्प्राप्तप्रतिषेधकत्वेऽपि वा प्रमाणान्तरेणैव तत्प्राप्तिसम्भवान्न श्रुत्यापातप्रतीतिजभ्रान्तिबाधात्मकत्वसिद्धिरित्यतः पक्षद्वयं क्रमेण दूषयति **न हीत्यादि** । नान्तरिक्षेऽग्निश्चेतव्यो न दिवीत्यप्राप्तप्रतिषेधवदिहापि स्यादिति चेन्न । तत्र हिरण्यं निधाय चेतव्यमिति विधिस्तुत्यर्थतया तदुपपत्तावपि प्रकृते तदभावादित्याशयः ।

श्री० — तर्द्धेति । प्राबल्यमित्यर्थः ॥ एतच्छ्रुतीति । ऋतं सत्यमिति श्रुतीत्यर्थः । आपातेति । पूर्वोत्तरार्धयोर्भिन्नविषयकत्वाननुसन्धानदशायामित्यर्थः ॥

सु० — ननु तर्हि रुद्रस्य विष्ण्वात्मकत्वेनाविरोधोऽस्तु । पुनरुक्तिपरिहारायोत्तरार्धोक्तो विरूपाक्षस्त्वपरो भविष्यति । एवं तर्हि विष्णोरेव ब्रह्मशब्द इति क्वास्ति सौत्रस्य हेतोर्व्यभिचारः। न हि पक्षे व्यभिचारः शङ्क्यत इति । किञ्च रुद्रादीनां सर्वेषां प्रलयेऽसतां सृष्टावीश्वराज्जन्मवतां ब्रह्मत्वं कथमुपपद्यते । जन्मादिमत्त्वमेव तेषां कुतोऽवगम्यत इत्यत आह एकइति ।

अनु० — एको नारायण आसीन्न ब्रह्मा न च शङ्करः ॥
वासुदेवोऽग्र एवासीन्न ब्रह्मा न च शङ्करः ॥
नेन्द्रसूर्यौ न च गुहो न सोमो न विनायकः ॥
इत्यादिवाक्यतो विष्णोरुत्पत्तिरवतारगा ॥

इत्यादिवाक्यतो रुद्रादीनां प्रलयेऽभावो विष्णोरुत्पत्तिश्चावगम्यते ॥ उत्पत्तिमत्त्वेनाब्रह्मत्वे विष्णोरपि तथात्वं स्यात् । तस्यापि रामकृष्णादिरूपस्योत्पत्तिसद्भावादित्यत आह विष्णोरिति । उत्पत्तिरुत्पत्तिवाक् । अवतारगा प्रादुर्भावविषया । न तु शरीरादिलाभलक्षणा । कुत एतदित्याशङ्कायामेक इत्यादिपूर्ववाक्यं सम्बद्ध्यते । इत्यादिवाक्यतो विष्णोर्महाप्रलयेऽप्यवस्थानावगमादित्यर्थः । स्वरूपमात्रेणावस्थानेऽपि शरीरादिलाभलक्षणोत्पत्तिः किं न स्यादिति चेन्न । स्वरूपसत्त्वस्य ब्रह्मशङ्करादावपि समानत्वेन 'न ब्रह्मे'त्याद्यनुपपत्तिप्रसङ्गादिति ।

शे० — विष्णोरिति । सकाशादिति शेषः । आदिशब्दोपात्त'तत एते व्यजायन्त विश्वो हिरण्गर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः' इति वाक्यबलादवगम्यत इत्यर्थः ।

प० 'इत्यादिवाक्यत' इति मूलानुवादपूर्वं शेषमाह इत्यादिवाक्यत इत्यादिना । शङ्कते ॥ उत्पत्तिमत्त्वेनेति । 'एक इत्यादिपूर्ववाक्यमि'त्यस्मिन्पक्षे 'इत्यादिवाक्यतो विष्णोरुत्पत्तिरवतारगे'त्येकान्वय इति भावेनार्थमाह इत्यादिवाक्यतो विष्णोरिति ।

श्री० — उत्पत्तिश्चावगम्यत इति । इत्यादिवाक्यत इत्युक्तत्वाद्वाक्यशेषे 'स मुनिर्भूत्वा समचिन्तयत्तत एते व्यजायन्त । विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्राः ।' इत्युक्तत्वादिति भावः ।

सु० — ननु यदि ब्रह्मशब्दो विष्णोरेव तदा जीवादौ व्यवहारो न स्यात् । तथा च ब्रह्मत्वापेक्षया नपुंसकप्रयोग इति न स्यात् । ब्रह्मणोऽधिपतिरित्यपि व्याहतं स्यादित्याशङ्कां परिहरन्नुपसंहरति मुख्यमिति ।

अनु० — मुख्यं ब्रह्म हरिस्तस्मात् ॥

अन्येष्वमुख्यया वृत्त्या ब्रह्मशब्दाङ्गीकारान्नोक्तदोष इति भावः । अत एवापरं ब्रह्मेति प्रागुक्तम् ।

**शे० — तथा च ब्रह्मत्वापेक्षयेति** । अपरब्रह्मत्वापेक्षया शङ्करं नीललोहितमिति नपुंसकनिर्देश इति पूर्वोक्तं समाधानमसत्स्यादित्यर्थः ॥ **व्याहतं स्यादिति** । अधिपतियुक्तत्वपरब्रह्मत्वयोर्विरुद्धत्वादित्यर्थः ॥ **उक्तेति** । शङ्कितेत्यर्थः ।

**प० —** जीवादौ व्यवहाराभावे को दोष इत्यत आह **तथा चेति** । ऊर्ध्वरेतं विरूपाक्षमित्यादेः प्रथमान्तत्वेन नपुंमकप्रयोगः कथमित्यतो 'विरूपाक्षाख्यमपरं ब्रह्मोक्त'मित्यत्र ब्रह्मत्वापेक्षया नपुंसक इति यदुक्तं तन्न स्यादित्यर्थः ॥ **व्याहतमिति** । स्वस्यैव ब्रह्मत्वे स्वस्मात्स्वस्योत्तमत्वं व्याहतमित्यर्थः ॥ **प्रागिति** । विरूपाक्षाख्यमपरं ब्रह्मोक्तमित्यत्रेत्यर्थः ॥

**या० — व्याहतं स्यादिति** । ब्रह्मण इत्यनेनाधिपतिशून्यस्य विष्णोरेव गृहीतत्वादिति भावः ।

**सु० — ननु यद्यमुख्यतया ब्रह्मशब्दस्य विष्णोरन्यत्र वृत्तिरङ्गीकृता तर्ह्यन्नमयादयोऽप्यमुख्यब्रह्मतया कुतो न व्याख्यायन्ते । न ह्यत्र मुख्यब्रह्मत्वज्ञापकं किञ्चिदस्तीत्यत आह** प्रस्तावइति ।

अनु० — प्रस्तावः परमित्यपि ॥

**अत्र हि ब्रह्मविदाप्नोति परमिति परस्यैव ब्रह्मणः प्रस्तावः प्रसङ्गोऽस्ति । तेनोत्तरेषामपि ब्रह्मशब्दानां परब्रह्मविषयत्वनिश्चयान्नात्रामुख्यार्थाऽऽशङ्का कार्या । अपिशब्दो वक्ष्यमाणसमुच्चयार्थः ।**

**शे० — वक्ष्यमाणेति** । शक्तिग्रहणसामर्थ्येन प्रथमप्राप्तत्वरूपवक्ष्यमाणप्रमाणेत्यर्थः ।

**प० — परस्यैवेति** । परस्य प्राप्यत्वस्यैव श्रवणेन ब्रह्मविशेषणत्वाश्रवणेऽप्यन्यज्ञानेनान्यप्राप्तेरयोगाद्ब्रह्मविदित्यत्रापि परब्रह्मविदितिगम्यत इति भावः ॥ **वक्ष्यमाणेति** । मुख्यब्रह्मग्रह इति वक्ष्यमाणेत्यर्थः ॥

**श्री० -- वक्ष्यमाणेति** । अनुपदमेव मुख्यब्रह्मेति मुख्यार्थे बाधकाभावरूपेत्यर्थः ।

**सु० — अङ्गीकृत्य चेदं ज्ञापकमुक्तम् । वस्तुतस्तु शक्तिग्रहणसामर्थ्येन प्रथमप्राप्तत्वात् बाधकाभावाच्च नामुख्यार्थकल्पना युक्तेत्याह** मुख्येति ।

अनु० — मुख्यब्रह्मग्रहे युक्ते नामुख्यं युज्यते क्वचित् ॥
असम्भवे हि मुख्यस्य गौणार्थाङ्गीकृतिर्भवेत् ।

**मुख्ययोगेऽप्यमुख्यग्रहणं किं न स्यादिति चेत् (न) । मुख्यासम्भव एवामुख्याङ्गीकार इति व्याप्तेरित्याह** असम्भवे हीति । **यद्वा कथं तर्हि ब्रह्म वेद ब्रह्मैव भवतीत्यादौ ब्रह्मशब्दस्यामुख्यार्थग्रहणमित्यत आह** क्वचिदसम्भवे हीति ।

श्रो० — नन्वेवं गङ्गायां घोष इत्यादावपि शक्तिग्रहणसामर्थ्येन प्रवाहस्य प्रथमप्राप्तत्वात्प्रवाहार्थत्वापत्त्याऽमुख्यार्थकल्पना न स्यादित्यतस्तत्र बाधकवशात्प्रथमप्राप्तस्य परित्यागेऽपि प्रकृते बाधकाभावान्न तत्परित्याग इत्याह **बाधकाभावाच्चेति** ।

**श्री० — ब्रह्म वेदेति** । ब्रह्म वेद चेद्ब्रह्मैव जीव एव भवति न जीवभावोऽस्य गच्छतीति द्वितीयब्रह्मशब्दस्य जीवरूपामुख्यार्थस्य गृहीतत्वेन तन्न स्यात् । मुख्यस्यैवात्र ग्रहणे ब्रह्माभेदप्राप्तेरिति भावः ।

**सु० — ननु नान्नमयादयः परमात्मा विकारवाचिनो मयट्शब्दस्य श्रवणात् । परमात्मनोऽन्नादिविकारत्वानुपपत्तेः । न च ब्रह्मशब्दानुपपत्तिः । अमुख्यार्थसम्भवात् । न च प्रस्तावविरोधो मुख्येऽर्थे बाधकाभावश्चेत्युक्तमिति वाच्यम् । विकारार्थस्य मयट्प्रत्ययस्य बाधकत्वात् । तत एव प्रस्तावस्याप्यपवादादित्याशङ्क्य तत्परिहाराय सूत्रम्** ॐ विकारशब्दान्नेति चेन्न प्राचुर्यादिति ।

## ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ

**तत्रानन्दमयविषयावेवाक्षेपपरिहाराविति प्रतीतिनिरासाय सिद्धान्तांशं व्याचष्टे** प्राचुर्यार्थश्चेति ।

**अनु०** — ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ
प्राचुर्यार्थश्च मयटः सर्वेऽत्र प्रतिपादिताः ॥

**चशब्दोऽवधारणे । अत्र श्रुतौ । कुत इत्यत आह** प्रतिपादिता इति । **अयमर्थः । मयट्शब्दो हि विकार इव प्राचुर्येऽपि मुख्यः । तत्प्रकृतवचने मयडित्यनुशासनात् । न च ब्रह्मशब्दोऽन्यत्र मुख्यः । न च सावकाशेन निरवकाशस्य बाधोऽस्ति । अतो निरवकाशब्रह्मशब्दबलात्सावकाशस्य मयटः प्राचुर्यार्थत्वोपपत्तेर्न तद्बलादन्नमयादीनामपरमात्मत्वं कल्प्यमिति। एतेन विकारप्रवाहमध्यपतितत्वान्नानन्दमयशब्दः प्राचुर्यार्थ इत्येतद्भंस्रावेणैव गतम् । अन्नमयादिष्वपि मयटः प्राचुर्यार्थतास्वीकारात् । परेणापि हि प्राणमये न विकारार्थत्वं वक्तुं युक्तम् । प्राणानां प्राणविकारत्वासम्भवात् । यथाकथञ्चिद्विकारकल्पने मुख्यार्थपरित्यागात् ।**

स्यादेतत् । अन्नविकारत्ववदन्नप्राचुर्यमपि नेश्वरस्य सम्भवति । तद्धि पार्थिव-शरीराणामन्नोपजीविनां स्यादिति चेन्न । अत्रान्नशब्दस्य प्रसिद्धान्नार्थत्वाभावात् । स्वयमेव हि श्रुतिः'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' इत्यन्नशब्दं निर्वक्ति । अदिधातोः कर्मणि कर्तरि च क्तप्रत्यये सति रूपमेतत् । न च भूतात्तृत्वं प्रसिद्धान्नस्य सम्भवति । तस्मादन्न-शब्दोऽयं भावप्रधानो भूताद्यत्वं भूतात्तृत्वं च वक्ति ।

शे०— तत्प्रकृतवचने मयडित्यनुशासनादिति । प्राचुर्येण प्रस्तुतं प्रकृतं तस्य वचनं प्रतिपादनं भावे ल्युट् । ततश्चायं सूत्रार्थः । तदिति प्रथमासमर्थात्प्राचुर्येण प्रस्तुतमिदमित्यर्थे वर्तमाना-त्स्वार्थे मयट् प्रत्ययो भवतीति । अन्नमयं यवागूमयीत्याद्यस्योदाहरणम् । प्राचुर्येण प्रस्तुता यवागूरित्या-दिस्तदर्थः । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढो न क्लृप्तप्राचुर्यविशिष्टप्रस्तुतवाची तथाऽपि प्रकृत इत्येतावति वक्तव्ये वचनग्रहणादयं विशेषो लक्ष्यते । वचनग्रहणं हि लोके यादृशस्य प्रकृतस्य मयटा वचनं प्रत्यायनं प्रसिद्धं तत्र यथा स्यादित्येवमर्थम् । लोके च मयडन्तैरन्नमयादिशब्दैः प्राचुर्येण प्रकृतस्य प्रत्यायनं प्रसिद्धम् । न चैवं प्राचुर्यविशिष्टप्रकृत्यर्थमात्रपर्यवसितमयड्विधिरूपत्वेनानन्दमयशब्दात्सूत्रोपात्त-प्राचुर्यमात्रलाभेऽपि कथमानन्दप्रचुरधर्मिपर्यन्तत्वलाभ इति वाच्यम् । मत्वर्थीयाच्प्रत्ययान्तत्वाश्रयणेन तल्लाभसंभवादिति ध्येयम् । यद्वा । प्राचुर्येण प्रस्तुतं प्रकृतं तदुच्यतेऽस्मिन्निति प्रकृतवचनम् । तदिति प्रथमासमर्थाद्यथोक्तेऽभिधेये मयट्प्रत्ययो भवतीति प्रचुरतायुक्तेऽपि वस्तुनि विकारवन्मयट्स्मरणादित्यर्थः । विकारप्रवाहमध्यपतितत्वाच्चानन्दमये मयटः प्राचुर्यार्थत्वं युक्तमिति प्रागुक्तं दूषणमप्यतिदेशेन परिहरति **एतेनेति** ॥ एतेनेत्युक्तमेव विशदयति **अन्नमयादिष्वपीति** । तथा चान्नमयादीनां चतुर्णामब्रह्मत्वम-ङ्गीकृत्यानन्दमयमात्रस्य ब्रह्मत्ववादिनं प्रत्युक्तरीत्या प्रायपाठबाधप्रसक्तावपि मयाऽन्नमयादीनामपि ब्रह्म-त्वाङ्गीकारेण तत्रत्यमयटामपि प्राचुर्यार्थत्वस्यैवाङ्गीकृतत्वान्न मत्पक्षे विकारप्रायपाठभङ्गप्रसक्तिरिति भावः । अङ्गीकृत्यैव च प्रायपाठबाधस्योद्भाव्यत्वं तत्समाधानमभिहितम् । वस्तुतस्तु तस्य परेणानु-द्भाव्यत्वान्न समाधेयत्वमपीत्यभिप्रेत्य कुतस्तदित्यतः स्वं प्रत्यप्यविशिष्टत्वादित्याशयेन परं प्रति तदुपपा-दयति **परेणापीति** । प्राणमय इत्युपलक्षणम् । प्राणमयादिष्वित्यर्थः । **प्राणानामिति** । प्राणादीना-मित्यर्थः । क्वचित्प्राणमयादीनामित्येव पाठः ॥ **प्राणविकारत्वासम्भवादिति** । प्राणादिविकारत्वा-संभवादित्यर्थः । प्राणादीनां प्राणादिविकारत्वस्यात्माश्रयत्वप्रसङ्गेनासंभवादिति भावः । ननु प्राणादीनां प्राणादिविकारत्वाभावेऽपि प्राणाद्युपाध्यवच्छिन्नस्यात्मनः प्राणादिशब्देन ग्रहणात्तस्य च प्राणादिविका-रत्वं संभवत्येव घटाद्यवच्छिन्नस्य गगनस्य घटादिविकारत्वदर्शनादित्यत आह **यथाकथञ्चिदिति** ॥ **मुख्येति** । प्राणादिशब्दानां प्राणाद्युपाध्यवच्छिन्नपरत्वेन मुख्यार्थत्यागप्रसङ्गादिति भावः ॥ **पार्थिव-**

**शरीराणामिति ।** ईश्वरस्य चाप्राकृतविग्रहत्वान्न पार्थिवशरीरत्वमिति भावः । **अदिधातोरिति ।** अद्यत इति कर्म्यण्यत्तीति कर्तरि चादिधातोर्निष्ठाक्तप्रत्यये 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इत्यनेन दकारात्परस्य दकारस्य च नत्वे श्रौतत्वादन्नाण्ण इत्यत्रान्नादिति निर्देशाच्च जग्ध्यादेशाभावे च सत्यन्नमिति रूपनिष्पत्तिरिति ज्ञेयम् ॥ **वक्तीति ।** ततश्चान्नप्राचुर्यमीश्वरस्य संभवतीति भावः ॥

**स०—तत्प्रकृतवचने मयडितीति ॥** तदिति प्रथमासमर्थात् प्राचुर्येण प्रस्तुतमित्यर्थे मयडिति सूत्रार्थः । उदाहरणं त्वत्रान्नमयो यज्ञ इति द्रष्टव्यम् ॥ **परेणापि प्राणमय इति ॥** परेण हि प्राणेन्द्रियादिसंघात एव शरीरम् अन्नमयादिशब्दाभिधेयमित्युच्यते । तस्य चान्नविकारित्वेनान्नमयत्वेपि शरीरशब्दार्थनिविष्टप्राणानां प्राणविकारत्वासंभवादित्यर्थः । एवं मनोमयेऽपि न विकारार्थत्वं वक्तुं युक्तम् । शरीरशब्दार्थनिविष्टमनसो मनोविकारत्वासंभवादिति परेणासङ्गतोक्तिरित्याभति । तथापि यादवप्रकाशीयमतानुसारेणेयमुक्तिः । तेन प्राणमयमनोमययोः मयटः स्वार्थिकत्वाङ्गीकारादित्यदोषः ॥ **प्राणानां इन्द्रियाणाम् । यथा कथञ्चिदिति ॥** प्राणसंबन्धेन प्राणविकारो मयडर्थत्वेन गौणो व्याख्यायते प्राणानाम् प्राणसंबन्धश्च तादात्म्यादिरूपः कश्चन भविष्यतीति कल्प्यते । प्राणशब्देनेन्द्रियावयवादिग्रहणेन वा तद्विकारित्वकल्पने मयटः प्राणशब्दस्य च मुख्यार्थपरित्यागप्रसङ्गादिति भावः ॥ **अदधातोरिति ॥** रदाभ्यामित्यनेन नत्वे अन्नमिति रूपनिष्पत्तिर्द्रष्टव्या ।

**प०—विकारशब्दान्नेति चेन्न प्राचुर्यादिति ।** तावतोक्तशङ्कानिरासः कथमित्यत आह **अयमर्थ इति ॥ तत्प्रकृतवचन इति ।** प्राचुर्येण प्रस्तुतमित्यर्थे प्रथमान्तान्मयड्भवती'ति पाणिन्युक्तेरित्यर्थः । परस्यैव विकारप्रायपाठत्याग इत्याह **परेणापि हीति ॥ प्राणानां प्राणविकारत्वेति ।** वायुविकारा हि प्राणाः । तेषामेव तद्विकारत्वायोगादित्यर्थः । प्राणशब्दस्य वायुलक्षकत्वमुपेत्य विकारार्थत्वमुपेयत इत्यत आह **यथाकथञ्चिदिति ।** 'अदधातोरित्यादि । 'अद्भक्षण' इत्यनः अद्यत इति वा अत्तीति वाऽर्थे क्तप्रत्यये 'रदाभ्यां निष्ठातो नःपूर्वस्य च दः' इति नत्वेऽन्नमितिरूपमित्यर्थः ॥ **अयमिति ।** मयडन्तोऽन्नशब्द इत्यर्थः ॥ **प्राणनेति !** चेष्टेत्यर्थः ।

**या०— ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ ॥ तत्प्रकृतवचन इति ।** इदं सूत्रं वैयाकरणैर्द्वेधा व्याख्यातम् । तदिति प्रथमासमर्थात्प्राचुर्येण प्रस्तुतमिदमित्यर्थे वर्तमानात्स्वार्थे मयट्प्रत्ययो भवतीत्येकोऽर्थः । अस्यान्नमयं यवागूमर्यात्याद्युदाहरणम् । प्राचुर्येण प्रस्तुतमन्नमित्यादिस्तदर्थः । यद्यपि प्रकृतशब्दः प्रस्तुतमात्रवाची न क्लृप्तप्राचुर्यविशिष्टप्रस्तुतवाची । तथापि प्रकृत इत्येतावति वक्तव्ये वचनग्रहणादयं विशेषो लभ्यते । वचनग्रहणं हि यादृशस्य प्रकृतस्य मयटा वचनं प्रत्यायनं प्रसिद्धं तत्र यथा स्यादित्येवमर्थम् । लोके च मयडन्तैरन्नमयादिशब्दैः प्राचुर्येण प्रकृतस्य प्रत्यायनं

प्रसिद्धमिति । अपरस्त्वर्थः । प्रकृतं प्रस्तुतमुच्यतेऽस्मिन्निति प्रकृतवचनम् । तदिति प्रथमासमर्थात्प्रकृतवचनेऽर्थे मयट्प्रत्ययो भवतीति । अस्यान्नमयो यज्ञ इत्याद्युदाहरणम् । प्रकृतमन्नमस्मिन्यज्ञ इत्यादिस्तदर्थः । अस्मिन्नर्थे प्रकृतादर्थादर्थान्तरे प्रत्ययः । प्रकृतशब्देन च प्रस्तुतमात्रमुच्यते न तु प्राचुर्यविशिष्टमिति पूर्वस्मादर्थाद्विशेषः । अत्र च न द्वितीयव्याख्यानं प्रकृतोपयोगि, प्राचुर्यप्रत्यायकाभावात्, किन्तु, प्रथमव्याख्यानमेव । तत्रापि सूत्रोपात्तप्राचुर्यं शाब्दं, आनन्दप्रचुरधर्मिपर्यन्तत्वं त्वार्थिकमित्यवगन्तव्यम् । 'अन्नमयादीनां पञ्चानामपि न ब्रह्मत्व'मिति यत्शङ्करेणोक्तं तदुक्तातिदेशेन दूषयति **एतेन विकारेति** ॥ **परेणापीति** । 'देहप्राणमनोबुद्ध्यानन्दरूपा अनात्मान एव क्रमेणान्नमयादिशब्दवाच्या' इति परस्याभिप्रेतम् । तत्र देहस्यान्नविकारत्वेऽपि, न प्राणादीनां प्राणादिविकारत्वम् । आत्माश्रयत्वप्रसङ्गात् । अतः स्वार्थिकत्वमेवात्र मयटामिति त्वयाऽपि वाच्यम् । सति चैवमानन्दमये प्राचुर्यार्थतास्वीकारे, कथं प्रायपाठविरोधस्त्वदेकदेशिनं प्रति त्वयोक्त इति भावः । प्राणमय इत्युपलक्षणम् । प्राणमयादिष्वित्यर्थः । एवं प्राणानामित्यादिकमपि प्राणादीनां प्राणादिविकारत्वासम्भवादिति व्याख्येयम् । अत एव भामत्याम्, 'न च प्राणमयादिषु विकारार्थत्वायोगात्स्वार्थिको मयडि'त्याशङ्क्य निराकृतम् । तदीयनिराकरणमेवाभिप्रेत्याह **यथाकथञ्चिदिति** । प्राणाद्युपाध्यवच्छिन्नं ब्रह्म भवति प्राणादिविकारो, घटाकाशमिव घटविकार इति प्राणाद्युपाधिविभक्तलक्षणविकारकल्पन इत्यर्थः । **मुख्यार्थ इति** । उपाधिज्ञाप्यविभागस्य मुख्यविकारत्वाभावादेवं कल्पने मुख्यार्थपरित्याग इति भावः । यद्यप्येतन्मतमग्रे निराकरिष्यते । तथाऽप्युक्तदूषणातिदेशसौकर्यायात्रापि दूषितम् । अत एवाग्रे नैतद्दूषणं वक्ष्यतीत्यवगन्तव्यम् ॥ **क्तप्रत्यये सतीति** । 'रदाभ्यां निष्ठातो नः पूर्वस्य च द' इत्यनेन तकारदकारयोः नकारे च सतीति शेषः ।

श्री० — ॥ ॐ **विकारशब्दान्नेति चेन्न प्राचुर्यात्** ॐ ॥ **अन्नशब्दस्य** अन्नमयशब्दे विद्यमानस्यान्नशब्दस्य ।

च० — **तत्प्रकृतवचने मयडित्यनुशासनादिति** । तदितिप्रथमासमर्थात्प्राचुर्येण प्रस्तुतमिदमित्यर्थे मयट्प्रत्ययो भवतीति सूत्रार्थः । अन्नमयं यवागूमयीत्याद्युदाहरणम् । प्राचुर्येण प्रस्तुतमन्नमित्यादिस्तदर्थः । प्रकृतशब्दस्य प्रस्तुतमात्रनिरूपितसमुदायवृत्तिकत्वेन क्लृप्तप्राचुर्यविशिष्टप्रस्तुतवाचकत्वविरहेपि प्रकृत इत्येवाभिधातव्ये वचनग्रहणसामर्थ्यादीदृशार्थाधिगतिर्भवति ॥ यादृशस्य प्रकृतस्य मयटा वचनं लोके प्रसिद्धं तत्र यथा स्यादित्येवमर्थम् । लोके मयडन्तैरन्नमयादिशब्दैः प्राचुर्येण प्रकृतस्य प्रत्यायनं प्रसिद्धम् । न चैवं प्राचुर्यविशिष्टप्रकृत्यर्थमात्रपर्यवसितमयड्विधिरूपत्वेनानंदमयशब्दास्सूत्रघटकप्राचुर्य-

मात्रलाभेपि कथमानंदप्रचुरधर्मिपर्यंतत्वलाभ इति वाच्यम् । मत्वर्थीयाचूप्रत्ययांतत्वाश्रयणेन तल्लाभसंभवा- दिति व्याचक्षते । यदभ्यधात्संकरोऽन्नमयादीनां पंचानामपि न ब्रह्मत्वमिति तदुक्तातिदेशेन प्रतिविधत्ते । **एतेनेति ॥ प्राणानामिति** । आत्माश्रयप्रसङ्गेन प्राणादीनां प्राणविकारत्वस्य दुरुपगमत्वादिति भावः । प्राणादीनां प्राणादिविकारत्वस्योक्तदिशा दुरुपपादत्वेपि घटाद्युपहितगगनस्य तत्तदुपाधिविकारत्वस्येव प्राणाद्युपहितचैतन्यस्य प्राणादिशब्देन ग्रहणेन प्राणाद्युपाधिविकारत्वस्य सूपपादत्वादिति भामत्युक्तसमा- हितिं प्रत्याख्याति । **यथाकथंचिदिति** । **मुख्यार्थेति** । प्राणादिशब्दानां तदुपहितपरत्वे मुख्यार्थ- परित्यागप्रसंगादिति भावः । **क्तप्रत्यये सतीति** । तयोरेवकृत्यक्तेतिकर्मणि अदेः सकर्मकत्वेऽपि धातो रर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिये'तिवचनादत एव नेह पच्यते नेहभुज्यत इत्यादौ भावे लकार इति हरदत्ताद्युक्त्या पच्यादिवददेरपि प्रकृतेऽविवक्षितकर्मतया गत्यर्थाकर्मक श्लिषशीङस्थासवसजनरुहजीर्यतिभ्यश्चेतिसूत्रे तादृशानामपि पीता गावो भुक्ता ब्राह्मणा इत्याद्यनुरोधेनाकर्म- कपदेन गृहीततया तादृशाददेःकर्तरि च क्तप्रत्यये रदाभ्यां निष्ठातो नः पूर्वपद इति प्रकृतिप्रत्ययावयवद- कारतकारयोर्नत्वे च सतीदं रूपं निष्पद्यत इति भावः। अदो जग्धिर्ल्यप्ति किति प्रकृते तादिकित्परत्वात्। जग्धिरित्यादाविव जग्धादेशेन भवितव्यमिति शङ्का तु अन्नाण्ण इति सूत्रे अन्नादितिनिर्देशेन तदभाव- ज्ञापनान्निरसनीया । **भूताद्यत्वम्** भूतकर्तृकादनक्रियाकर्मत्वम् । भूतात्तृत्वं भूतकर्मकादनक्रियाकर्तृत्वम् ।

---

सु० — **तथाऽपि न तत्प्राचुर्यं परमेश्वरस्य युज्यते। भूतात्तृत्वस्य संहर्तृत्वेन सम्भवेऽपि भूताद्यत्वस्य कथमप्यसम्भवादित्यत आह** भोग्यत्वमिति ।

अनु० — भोग्यत्वमत्र चाद्यत्वमुपजीव्यतया हरेः ॥

**अत्राद्यत्वं नाम गौण्या वृत्त्या भोग्यत्वमेव । भोग्यत्वं च हरेः सर्वभूतोपजीव्य- तया युज्यते। एवं प्राणमनोविज्ञानशब्दानामपि वाग्यन्तःकरणबुद्धिलक्षणप्रसिद्धार्थतां परित्यज्य प्राण(व)बोध(न)विज्ञानार्थतामुपादाय तत्प्राचुर्यमशरीरेऽपि परमात्मन्युपपादनीयम् । तत्रोदाहृत- श्लोकार्थानां प्रसिद्धार्थेऽनुपपत्तेरिति । मयटः प्राचुर्यार्थत्वेऽपि नान्नमयादित्वं परमात्मनो युज्यते। तत्प्रचुर इत्युक्ते तद्विरुद्धस्याप्यल्पस्य प्रसक्तेः । ब्राह्मणप्रचुरोऽयं ग्राम इति यथा । न हि परमात्मन्यज्ञानदुःखादिलेशोऽप्यस्ति । मैवम् । विरुद्धार्थप्राप्तेरशाब्दत्वात् । तत्प्रचुरशब्दो हि तस्य तस्मिन्महत्त्वमात्रमाह । विरुद्धसद्भावस्तु प्रमाणान्तरगम्यः । अन्यथाऽन्नप्रचुरो मखः प्रकाशप्रचुरः सवितेत्युक्ते मखे सवितरि च दुर्भिक्षान्धकारलेशप्रसङ्गात् ।**

**शे०— प्रसिद्धार्थ इति**। वा वन्तःकरणबुद्धिलक्षणप्रसिद्धार्थ इत्यर्थः। कुतस्तत्प्रचुर इत्युक्त्या तद्विरुद्धस्याल्पस्य प्रतीतिरित्यतस्तथा दृष्टत्वादित्याह **ब्राह्मणेति**। ब्राह्मणप्रचुरशब्देन ब्राह्मणविरुद्धशूद्रादिसद्भावसिद्धिदर्शनादित्यर्थः। विरुद्धार्थप्रतीतेरशाब्दत्वे कथं ब्राह्मणप्रचुरो ग्राम इत्यतस्तत्सिद्धिरित्यतो न तत्र शब्दात्तत्सिद्धिः किन्तु मानान्तरादेवेत्याह **विरुद्धेति**। विरुद्धार्थप्राप्तेः शाब्दत्वमेवास्तु किं मानान्तरगम्यत्वकल्पनयेत्यतो बाधकमाह **अन्यथेति**। अत्र प्रचुरप्रकाशो रविरितिवदिति भाष्यानुसारेण प्रचुरप्रकाशः सवितेत्युदाहरणेन विवक्षितसिद्धावपि तथाऽनुदाहृत्य प्रकाशप्रचुरः सवितेत्याद्युदाहरणेनैतदपि निरस्तं भवति। यदाह कल्पतरुकारः प्रचुरप्रकाशः सवितेत्यादौ प्राचुर्यस्य विशेषणत्वे प्रतियोगिन ईषदनुवृत्तिप्रतीतिनियमाभावेऽपि विशेष्यत्वे तन्नियम एव। ब्राह्मणप्रचुरो ग्राम इत्यादौ तद्दर्शनात्। आनन्दमय इत्यादौ च प्राचर्यस्य विशेष्यत्वादिति। अन्नप्रचुरो मखः प्रकाश प्रचुरः सवितेत्यादौ प्राचुर्यस्य विशेष्यत्वेऽपि तस्मिंस्तद्विरुद्धार्थाप्रतिभासात्।

**प०— इति यथेति**। तत्र शूद्राल्पता प्रतीतेरिति भावः। अशब्दार्थत्वेप्याक्षेपात्तद्विरुद्धस्य लाभ इति शङ्कते **ननुप्राचुर्यमिति**॥ **पदार्थान्तरेति**। विजातीयसमानाधिकरणाल्पापेक्षया ब्राह्मणप्रचुरो ग्राम इति वन्नक्षत्रादिपदार्थान्तरगताल्पप्रकाशापेक्षया प्रचुरकाशो रविरिति प्रयोगोपपत्तेरित्यर्थः। तथा च ब्रह्माणि दुःखादिप्रसक्तेरभावेपि जीवरूपपदार्थान्तरगताल्पसुखाद्यपेक्षयाऽऽनंदमयो ब्रह्मेत्यादि प्रयोगोपपत्तिरिति भावः॥ **यथा विरुद्धेत्यादि**। प्राचुर्यस्य विशेषणत्वे विरुद्धधीर्नेति परैरप्यङ्गीकाराद्विशेषणतया तात्पर्यानाहेत्यर्थः। सामान्यैःसाधारणगुणपुरुषैः।

**या०— अन्यथाऽन्नप्रचुरो मख इति**। अनेन प्रचुरप्रकाशः सवितेत्यादौ प्राचुर्यस्य विशेषणत्वे प्रतियोगिन ईषदनुवृत्तिप्रतीतिनियमाभावेऽपि विशेष्यत्वे तन्नियमः। ब्राह्मणप्रचुरो ग्राम इत्यादौ दर्शनात्। आनन्दमय इत्यत्र प्राचुर्यं विशेष्यमिति कल्पतरूक्तमपि निरस्तं वेदितव्यम्। अन्नप्रचुर इत्यादौ प्राचुर्यस्य विशेष्यत्वेऽपि तद्विरुद्धाप्रतीतेः।

**श्री०—** हरेरुपजीव्यत्वं च नारायणानिरुद्धरूपेण भोज्यवस्तुषु स्थित्वा तर्पकत्वादिति ध्येयम्॥ **अशरीरेऽपीति**। तथाच तद्धि पार्थिवशरीराणामित्युक्तमप्रयोजकमित्याशयः॥ **प्रमाणान्तरगम्य इति**। ब्राह्मणप्रचुर इत्यादौ शूद्रादिसद्भावप्रापकप्रत्यक्षरूपमानान्तरवत्प्रकृते परमात्मनि विरोधिदुःखादिप्रापकं मानान्तरं नास्तीत्याशयः। **अन्यथा** विरुद्धार्थप्रतीतेः शाब्दत्वे।

**च०—** अशाब्दत्वात्। ब्राह्मणविरुद्धाल्पगोचरप्रतीतेर्ब्राह्मणपदसमभिव्याहृतप्रचुरपदशक्तिप्रतिसंधानानधीनत्वात्। प्रमाणांतरगम्यः प्रत्यक्षादिजनिताधिगतिविषयः। प्राचुर्यस्य विशेषणत्वे प्रतियोगिन

ईषदनुवृत्तिनियमाभावेऽपि विशेष्यत्वे तन्नियमः ब्राह्मणप्रचुरो ग्राम इत्यादौ दर्शनात् । आनंदमय इत्यत्र प्राचुर्यं विशेष्यमिति कल्पतरुकारोक्तिं तस्य विशेष्यत्वेपि तद्विरुद्धाप्रतीतेरनुभूयमानत्वेन प्रतिविधत्ते **अन्नप्रचुरो मख इत्यादि ।**

सु०— **ननु प्राचुर्यं प्रतियोग्यपेक्षयैव भवति । सत्यम् । पदार्थान्तरगताल्पतद्धर्मापेक्षयोपपत्तेरित्याशयवान्यथा विरुद्धप्रतीत्यवकाशो न भवेत्तथाऽन्नमयादिशब्दतात्पर्यार्थानाह** महाभोक्तेति ।

अनु०— महाभोक्ता महाभोग्य इत्यर्थोऽन्नमये भवेत् ॥
महाप्राणो महाबोधो महाविज्ञानवानपि ॥

अन्नमये **परमेश्वरेऽन्नमयशब्देनोक्त इति शेषः । महाप्राणो महाव्यापार इति प्राणमयशब्देनोक्तार्थो भवेदिति योज्यम् । मनु अवबोधन इत्यस्माद्भावेऽसुन्प्रत्यये मनो बोधः । अत्रापि इत्यर्थो मनोमयशब्दस्य विज्ञानमयशब्दस्य भवेदिति योज्यम् । अपिशब्दान्महानन्द इत्यानन्दमयशब्दार्थो भवेदिति ग्राह्यम् ।**

शे०— ननु प्राचुर्यस्य समानाधिकरणप्रतियोग्यल्पत्वापेक्षत्वाद् ब्रह्मण्यानन्दादिविरुद्धदुःखादिरूपप्रतियोगिनोऽल्पस्याभावात्कथं तन्निरूप्यानन्दादिप्राचुर्यसिद्धिरित्याशङ्कते **नन्विति ।** प्राचुर्यस्य प्रतियोग्यल्पत्वापेक्षत्वेऽपि न प्रतियोगिनः सामानाधिकरण्यनियमः । ब्राह्मणप्रचुरो ग्राम इत्यादौ समानाधिकरणस्य विजातीयशूद्रादेरल्पत्वेनेव प्रचुरप्रकाशः सवितेत्यादौ व्यधिकरणस्य सजातीयस्य नक्षत्रादिप्रकाशस्याल्पत्वेनापि प्राचुर्यस्य दर्शनात् । प्रकृते च सैषानन्दस्येत्यादिश्रुत्यैव व्यधिकरणस्य सजातीयस्य जीवानन्दस्याल्पत्वमुक्त्वा ब्रह्मानन्दस्य यतो वाच इत्यादिना महत्त्वोक्तिरित्याशयवानाह **सत्यमित्यादिना ।**

स०—**ननु प्राचुर्यप्रतियोग्यपेक्षयेति ।** तथाच प्राचुर्यवशात्समानाधिकरणएव प्रतियोग्यल्पता शब्दात्प्रतीयते इति कल्पनीयमितिभाव· **पदार्थान्तरगतेति** पदार्थान्तरेच तत्प्रतीतेः प्रमाणांतरजत्वसंभवेन न शाब्दत्वमिति भावः । **प्राणमयशब्देनोक्तार्थोभवेदिति योज्यमिति ।** प्राणशब्दस्य चेष्टामात्रार्थकत्वेन प्राणमयशब्दस्य महाचेष्टकत्वार्थलाभात् महाव्यापार इत्यस्य साक्षात्तदर्थत्वाभावात् । प्राणमयशब्देनोक्तोभवेदित्युक्तमितिध्येय ॥ **विज्ञानमयशब्दस्येति** ॥ तस्य साक्षाच्छब्दार्थत्वादितिभावः ॥

या०— **ननु प्राचुर्यमिति ।** प्रतियोगिभूतं चाल्पत्वं समानाधिकरणविजातीयगतमेव ब्राह्मणप्रचुरो ग्राम इत्यादौ दृष्टम् । तथा च प्राचुर्यवत्समानाधिकरणगतप्रतियोग्यपि शब्दात्प्रतीयत इति

कल्पनीयम् । न चाल्पप्रचुरो मख इत्यादावपि तत्प्रतीतिप्रसङ्ग उक्त इति वाच्यम् । इष्टत्वात् । तत्रापि शब्दाद्विरोध्यनुवृत्तिः प्रतीयते । मानान्तरेण तु तदभावावगम इति शङ्कितुराशयः ॥ **पदार्थान्तरगतेति** । तथा च प्रतियोगी विजातीयसमानाधिकरणगत एव सर्वत्र वाच्य इति नियमोऽसिद्धः । दृश्यते हि ब्राह्मणप्रचुरो ग्राम इत्यादौ समानाधिकरणस्य विजातीयशूद्रादेरल्पत्वेनैव प्रचुरप्रकाशः सवितेत्यादौ व्यधिकरणस्य सजातीयस्य नक्षत्रादिप्रकाशस्याल्पत्वेनापि प्राचुर्यम् । पदार्थान्तरे चाल्पत्वस्य प्रतियोगिनः प्रतीतिः प्रमाणान्तरजन्यैवानुभूयत इति न तस्याः शाब्दत्वमिति भावः ।

श्री० — **प्रतियोग्यपेक्षयेति** । प्राचुर्यस्य प्रतियोगिनिरूपकत्वमल्पत्वम् । तथाच प्राचुर्यं हि स्वसमानाधिकरणस्वनिरूपकविजातीयाल्पत्वं यत्तदपेक्षयादृष्टम् । ब्राह्मणप्रचुरोग्राम इत्यत्र, ब्राह्मणप्राचुर्यं स्वसमानाधिकरणस्वनिरूपकब्राह्मणविजातीयशूद्राल्पत्वापेक्षया दृष्टम् । एवमानन्दमचुरो विज्ञानप्रचुरो मनःप्रचुर इत्यादावप्यानन्दप्राचुर्यं स्वसमानाधिकरणस्वनिरूपकानन्दादिविजातीयदुःखाद्यल्पत्वापेक्षयैव वक्तव्यम् । तथाच ब्रह्मणि दुःखादिकं वाच्यमिति भावः ॥ **पदार्थान्तरगतेति** । स्वभिन्नजीवगताल्पसुखादिधर्मापेक्षयेत्यर्थः । अयं भावः । प्राचुर्यं स्वसमानाधिकरणस्वनिरूपकविजातीयाल्पत्वापेक्षया यथा दृष्टम् एवं स्वसमानाधिकरणस्वनिरूपकसजातीयाल्पत्वापेक्षयाऽपि दृष्टम् । यथा प्रचुरप्रकाशः सवितेत्यत्र प्रकाशप्राचुर्यं व्यधिकरणस्वनिरूपकप्रकाशसजातीयनक्षत्रादिप्रकाशाल्पत्वापेक्षया भवति । नक्षत्रादिप्रकाशापेक्षया प्रचुरप्रकाशः सवितेत्युच्यते । एवमानन्दप्रचुर इत्यादावप्यानन्दादिप्राचुर्यं व्यधिकरणस्वनिरूपकानन्दादिसजातीयजीवानन्दाल्पत्वापेक्षयाऽपि सम्भवति । जीवानन्दापेक्षयेश्वरः प्रचुरानन्दो जीवज्ञानापेक्षयेश्वरः प्रचुरज्ञान इत्यादि । विनिगमकं तु दुःखाद्यङ्गीकारे 'निरनिष्टो निरवद्यो' 'यः सर्वज्ञः' 'सुखसुख' इत्यागमविरोध एवेति ध्येयम् । **असुनिति** । नकारलोपे मनस् इति प्रातिपदिकम् ।

च० — ननु प्राचुर्यस्य समानाधिकरणप्रतियोग्यल्पतानिरूप्यत्वस्य ब्राह्मणप्रचुर इत्यादौ दर्शनात्प्रकृते च ब्रह्मणि तादृशविरोधिभूतदुःखादिलेशाभावेन कथं तन्निरूप्यमानंदादिप्राचुर्यं सिध्यतीत्याशंकते । **नन्विति** । प्राचुर्यप्रतियोगिभूताल्पसामानाधिकरण्यं न नियतं वैयधिकरण्यस्थलेपि प्रकाशप्रचुरः सवितेत्यादौ नक्षत्रादिप्रकाशाल्पत्वेनापि तद्दर्शनात् इत्थं च प्रकृते सैषानंदस्येत्यादिमीमांसितजीवानंदाल्पत्वेनापि निरूप्यता ब्रह्मानन्दप्राचुर्ये संगच्छत इत्याशयेन समाधत्ते । **सत्यमिति** ।

**सु० — नन्वन्नमयादित्वे परमात्मनोऽनेकत्वप्रसङ्गादेकमेवेति श्रुतिविरोधः स्यात् । तथा विज्ञानं प्रचुरमस्मिन्नानन्दः प्रचुरोऽस्मिन्निति विज्ञानादीनां परमेश्वरस्य च भेदप्रसङ्गेन विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिविरोधः स्यात् । तथा मनश्शब्दस्यावबोधार्थत्वे मनो विज्ञानशब्द-**

योरेकार्थत्वेन विज्ञानमयो मनोमय इति पृथगुक्तिर्नोपपद्यत इत्यत आह विशेषेति ।

अनु०— विशेषसामान्यतया विज्ञानं मन इत्यपि ॥
एकस्य ज्ञानरूपस्य हरेरुक्तिर्विभागतः ॥

अत्रैवं विवक्षाभेदेन परिहारत्रयं द्रष्टव्यम् । एकस्य निर्भेदस्यापि हरेर्विशेषबलेनानेकत्वसङ्ख्यावत्त्वाद्विभागतोऽन्नमयाद्यनेकत्वोक्तिर्युज्यते । एवं ज्ञानरूपस्य ज्ञानानन्दाद्यात्मकस्यापि हरेर्विशेषशक्त्यैव विभागतस्तद्रूपत्वेनोक्तिर्युज्यते एवं मनश्शब्दस्यावबोधार्थत्वेऽपि (विज्ञानं) विज्ञानमय इति मनोमय इत्यपि विभागतः पृथगुक्तिर्युज्यते । कथम् । विशेषसामान्यतया विशेषसामान्यविषयतया । विज्ञानशब्दो हि विशेषज्ञानमाह । 'सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचराः । देवादीनां तु तज्ज्ञानं विज्ञानमिति कीर्तितमि'ति वचनात् । मनःशब्दस्तु ज्ञानमात्रवाची विज्ञानशब्द(स्य )सहपाठबलात्सामान्यज्ञाने पर्यवस्यति । विद्येते हि परमार्थतः सामान्यविशेषाकाराविति समस्ततद्विषयज्ञानमुपपन्नमेवेश्वरस्येति ।

शे०— कुत एतदित्याह **सामान्यैरिति** । साधारणैः पुरुषैरित्यर्थः ॥ **विद्येते हीति ।** भगवज्ज्ञानस्य च विद्यमानसर्वविषयकत्वमावश्यकमन्यथा सार्वज्ञ्यहानेरिति भावः ।

स०— **सामान्यैरिति** ॥ साधारणैः पुरुषैरित्यर्थः ॥ **विद्येते हि परमार्थत इति** । भगवज्ज्ञानस्य च विद्यमानसर्वविषयकत्वमावश्यकम् । अन्यथा सार्वज्ञ्यहानेरितिभावः ॥

प०— **इति वचनादिति** । गीताभाष्योक्तवचनादित्यर्थः ।

या०— **सामान्यैरिति** । साधारणैः पुरुषैरित्यर्थः । मम गोचरा मज्ज्ञानगोचराः ॥ **विद्येते हीति** । भगवज्ज्ञानस्य च विद्यमानसर्वविषयकत्वमावश्यकमन्यथा सार्वज्ञ्यहानेरिति भावः ।

श्री० **सामान्यैरिति** । प्रमाणं विज्ञानशब्दस्य विशेषज्ञानार्थत्वमात्र एवेति द्रष्टव्यम् । अन्यथा देवादीनामित्यसङ्गतेः । सामान्यविशेषाकारौ जगतीति शेषः ।

च०— सामान्यैः साधारणपुरुषैः ।

सु०— तथाऽपि नान्नमयादयः परमात्मा । तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमय इत्यादिनाऽन्नमयादीनामन्योन्यमन्यत्वावगमात् । परमात्मनि तु भेदाभावादित्यत आह अभेदेऽपीति ।

अनु०— अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिः ॥

भेदप्रतिनिधितया भेदकार्यनिर्वाहकेण विशेषेणैव । न तु भेदेन । येन विरोधः

**स्यादित्यर्थः । न चात्र यतिभङ्गः शङ्कनीयः । 'पूर्वान्तवत्स्वरः सन्धौ क्वचिदेव परादिवत् । द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत्' इति वचनात् ।**

**शे०— यतिभङ्ग इति ।** यतिर्विरतिः । यतिर्विच्छेदसंज्ञित इत्युक्तेः । तद्भङ्गः पदमध्ये विरामादिति भावः । पूर्वान्तवत्स्वरः सन्धावित्यस्यायमर्थः । योऽयं पूर्वापरयोरेकादेशः स्वरः सन्धौ सवर्णदीर्घादिः स प्रायः पूर्वान्तवद्द्रष्टव्यः । यथा 'कस्ते दारिद्र्यदावानल वदतु यशो वावदूकोऽपि दाने' इति । यथा वा 'धर्मविश्वसितो धर्मास्पदं भवति पूरुषः' इति । क्वचिदेव परादिवच्च द्रष्टव्यः । यथा 'अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुने'ति । यथा वा 'अधर्मनर्मचतुरस्यात्मा स्याद्दुःखभाजनम्' इति । अत्र स्वरस्य परादिवद्भावे व्यञ्जनमपि परादिवद्भवति तद्भक्तत्वात् । यणादेशः पूर्वान्तोऽपि परादिवदेव द्रष्टव्यः । यथा 'सताकूपारपारे प्रथितपृथुयशस्यर्थिसार्थे कृतार्थः' इति । यथा वा 'सम्भूतानि यतो भूतान्याकाशादीनि पूरुषादि'ति । यथा वा 'दिनाधीशं त्रियामा विम्वालोचनमुपैति तमि'ति । अत्रापि व्यञ्जनस्य परादिवद्भाव इष्यत इति । प्रकृते चैकादेशस्यैकारस्य पूर्वान्तवद्भाव इति भावः ॥ **वचनादिति ।** वृत्तरत्नाकरे सम्मतितयोदाहृतवचनादित्यर्थः ।

**स०— पूर्वान्तवत्स्वरः संधाविति ॥** केचित्तु योऽयं पूर्वापरयोरेकादशः स्वरः संधौ सवर्णदीर्घादिः स प्रायः पूर्वान्तवत् क्वचिदेव क्वचित्परादिवच्च द्रष्टव्य इत्याहुः स्वरः एकादेशःस्वयं परादिरपिपूर्वस्यान्तवत् भवति यथा धर्मविश्वसितेः शर्मास्पदं भवति पूरुष इति क्वचिच्च स्वयंपूर्वान्तोपिपरस्यादिवद्भवति यथा अधर्मनर्मचतुरस्यात्मास्याद्दुःखभाजनमिति । अत्र स्वरस्य परादिवद्भावे व्यञ्जनमपिपरादिवद्भवति तद्भक्तत्वात् । यणादेशः पूर्वान्तोपि परस्यादिवदेवभवति यथा 'संभूतानि यतोभूतान्याकाशादीनि पूरुषाद् । दिनाधीशं-त्रियामाविम्वालोचनमुपैति तम्इति प्रकृते चैकारः पूर्वान्तवज्जात इति भावः । व्यञ्जनस्यापि परादिवद्भाव इष्यते यथा इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाच इति ॥

**प०— न चात्र यतिभंग इति ।** यतिस्वरूपमुक्तं प्राक् ॥ **पूर्वांतवत्स्वर इति ।** स्वरोऽजक्षरमुच्यते । अचः स्वरा इति प्रसिद्धेः । प्रकृते च विशेषेणैवेत्यत्र एवशब्दावयवभूत एकाररूपोऽच् । स च 'वृद्धिरेची'ति वृद्ध्यैकारभावं गतः परस्यैव शब्दस्यादिभूतोपि पूर्वस्यांतवद्भवति यतिचिंतायां । अतः पदमध्ये विच्छेददोषो नेत्यर्थः । यणादेशः पूर्वभक्तोपि परादिवद्भवति । तस्योपयोगोऽग्रे ध्येयः ।

**या०— पूर्वान्तवत्स्वर इति ।** स्वर एकादेशरूपः सवर्णदीर्घादिः स्वयं परादिरपि पूर्वस्यान्तवत्क्वचिद्भवति ।'यथा धर्मविश्वसितो धर्मास्पदं भवति पूरुष' इति । क्वचिच्च स्वयं पूर्वान्तोऽपि परस्यादिवद्भवति । यथा 'अधर्मनर्मचतुरस्यात्मास्याद् दुःखभाजनम्' इति । अत्र स्वरस्य परादिभावे व्यञ्जनमपि

परादिवद्भवति । तद्भक्तत्वात् । यणादेशः पूर्वान्तोऽपि परस्यादिवदेव भवति । यथा 'सम्भूतानि यतो भूतान्याकाशादीनि पूरुषात्' । 'दिनाधीशं त्रियामा विम्बालोचनमुपैति तमि'ति । प्रकृते चैकादेश ऐकारः पूर्वान्तवज्जात इति भावः ।

**च०** — यतिभङ्गः यतिर्विच्छेदसंज्ञित इति वचनाद्विच्छेदो यतिः । पदमध्ये विरामाद्यद्भंग इति भावः । **पूर्वांतवत्स्वर इति** । अस्यायमभिसंधिः । 'एकः पूर्वपरयोरि'त्यधिकृत्य विहितः स्वर्णदीर्घादि-रूपस्वरपदाभिधेयाजूवर्णः परस्याद्यावयवभूतोपि पूर्वस्य चरमावयवो भवतीति वृत्तरत्नाकरादौ सिद्धांतिततया प्रकृते च तदधिकृत्य विहितो वृद्धिसंज्ञक ऐकारः परस्यैवशब्दस्याद्यावयवतामापन्नोपि पूर्वस्य चरमावयवतामापद्यते इति पदमध्ये विच्छेदरूपोक्तक्षत्यनवकाश इति ।

**सु०** — **विशेषो भेदकार्यं** व्यवहारादिकं **निर्वहतीति पूर्वमेवोक्तम्** । **अत्र विशेषनिष्ठमागमं** चाह भेदशब्दा इति ।

**अनु०** — भेदशब्दा विशेषं तु हरावन्यत्र भिन्नताम् ॥

ब्रूयुः

**भेदनिमित्ता अन्यादिशब्दा भेदशब्दाः** ।

**हरौ विशेषं ब्रूयुरित्यस्यापवादमाह** हरेरिति ।

हरेर्जीवजडैरपि भेदं हि मुख्यतः ॥'

ब्रह्मतर्कवचोऽप्येवम्

**एवमन्यत्र भिन्नतामित्यस्यापि क्वचिदपवादो** द्रष्टव्यः । **न केवलं पूर्वोक्तोपपत्तिर्ब्रह्मतर्कवचोऽप्येवमावेदयतीत्यपेरर्थः** ।

**शे०** — **पूर्वमेवेति** । जन्माधिकरण इत्यर्थः ॥ **उक्तमिति** । 'अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यतः' इत्यादिनेति शेषः ॥ **अत्रेति** । भगवतीत्यर्थः ॥ **विशेषनिष्ठमिति** । भेदशब्दान भेदप्रतिनिधिविशेषपरत्वप्रतिपादकमित्यर्थः । अन्यादिशब्दानां विशेषनिष्ठत्वलाभायाह **भेदेति** । अनेन मूले मध्यमपदलोपी समास इत्युक्तं भवति ।

**क्वचिदिति** । गुणगुण्यादावित्यर्थः ॥ **पूर्वोक्तोपपत्तिरिति** । अभेदेऽपि विशेषेणैवान्य इत्यादिनोक्तोपपत्तिरित्यर्थः । ब्रह्मतर्कवचोऽपीत्यपिशब्दो न केवलं पूर्वोक्तोपपत्तिर्ब्रह्मतर्कवचोऽप्येवमावेदयतीति व्याख्यातः ।

**स०** — **अत्र विशेषनिष्ठमिति** ॥ विशेषार्थज्ञापकमित्यर्थः ।

प० — भेदकार्यकरत्वं कथं तस्येत्यत आह **विशेषो भेदकार्यमिति ॥ पूर्वमेवेति ।** अभिन्नेऽपि विशेषोयमि'त्यादिना जन्माधिकरणे । विशेषनिष्ठं विशेषविषयकं । इह विषयवाक्ये भेदशब्दाभावादाह **भेदनिमित्तेति ।**

**इत्यस्यापि क्वचिदपवाद इति ।** व्यतिरेको गन्धवदित्यादावंशांशिगुणगुण्यादिस्थले प्रयुक्तो भेदशब्दो न भिन्नतां वक्ति । किंतु विशेषमित्येवंरूपापवाद इत्यर्थः । **पूर्वोक्तोपपत्तिरिति ।** जन्माधिकरणोक्तभेदनिषेधभेदकार्यदर्शनोभयान्यथानुपपत्तिरूपोपपत्तिरित्यर्थः ।

या० — **पूर्वमेवेति ।** द्वितीयाधिकरण इत्यर्थः ॥ **भेदनिमित्ता इति ।** अन्यथा प्रकृतासङ्गतेरिति भावः ।

**क्वचिदिति ।** गुणगुण्यादावित्यर्थः ।

श्री० — **अत्र विशेषनिष्ठमिति ।** पूर्वमभिन्नेऽपि विशेषोऽयं बलादापततीति व्यवहारान्यथाऽनुपपत्तिः प्रमाणत्वेनोक्ता । अत्र तु पुनर्विशेषप्रतिपादकमागमरूपं प्रमाणमुच्यत इत्यर्थः ।

मूले हरौ हरिरूपविषये प्रवर्तमानभेदप्रवृत्तिनिमित्तकान्यादिशब्द इत्यर्थः । मूलेऽन्यत्र भिन्नतामित्यत्र हरेरन्यत्र । जीवो जडादन्योजडं जीवादन्यदिति प्रयोग इति शेषः । हरेर्जीवजडभेदं हीत्यत्र मूले हरिर्जीवान्यो जडान्य इति प्रयोग इति शेषः ॥ **क्वचिदिति ।** खण्डितत्वंशून्ये गुणगुण्यादौ गुणो गुणिनोऽन्य इति प्रयोगेऽन्य शब्देन विशेष एव ग्राह्य इति भावः ।

च० — **पूर्वमेवेति ।** जन्मादिनय इत्यर्थः । **भेदनिमित्ताः शब्दा इति ।** समानाधिकरणाधिकारे शाकपार्थिवादीनां वोत्तरपदलोपो वक्तव्य इति कात्यायनवचनादिति भावः ।

**गु० — यदुक्तं प्रागेकस्यापि विभागत उक्तिरिति न तत्रोपपत्तिरभिहिता । एतामेवोपपत्तिं प्रतिज्ञामात्रेणोक्ते तत्राप्यतिदिशति** अत इति ।

**अनु० —** अत एकः स पञ्चधा ॥

उक्तोऽन्नमय इत्यादि

**विशेषबलादेवेति एकोऽपीति वाऽपिशब्दसम्बन्धः । इत्यादीति क्रियाविशेषणम् ।**

**शे० —** भिन्नक्रमतया प्रकारान्तरेणापि तं व्याचष्टे एकोऽपीति वेति ॥ **क्रियाविशेषणमिति ।** साधनं परित्यज्य धात्वर्थमात्रविशेषणं क्रियाविशेषणमित्यर्थः । ततश्च क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं वाच्यमिति क्लीबत्वैकवचनान्तत्वाव्ययत्वविधानादव्ययादाप्सुप इति सुब्लोपे इत्यादीत्युपपन्नमिति भावः ।

प०— **एतामेवेति** । विशेषबलादित्येवंरूपाम् । व्यवहितेन समुच्चयेऽरुचिमत्वाह । इति वाऽपिशब्दसंबन्ध इति

श्री०— **एतामेवेति** । एकस्यापि हरेरन्योन्यत्वोपपादनायाभेदेऽपीत्यादिनोक्तां विशेषरूपामुपपत्तिमेकस्यापि विभागोक्तिर्युज्यत इति प्रतिज्ञामात्रेणोक्तेऽर्थेऽतिदिशतीत्यर्थः । तत्र हेत्वनुक्तेरत्रोक्तं विशेषं तत्र हेतुत्वेनातिदिशतीति भावः ॥

सु०— **किञ्चोत्तरस्मिन्ननुवाके वरुणो भृगोरेतस्मिन्ननुवाके प्रतिपादितमेव वस्तु ब्रह्मत्वेनोपदिशति । अतश्चान्नमयादिकं परं ब्रह्मेत्याह** भृगोरिति ।

अनु०— भृगोश्चैतद्वदिष्यति ॥

**अनुवाकस्योत्तरत्वेन वदिष्यतीत्युक्तम् । तस्य च ब्रह्मत्वमुपरिष्टादुपपादयिष्यते । तथा च ब्रह्मशब्दादुत्तरानुवाकसंवादाच्चान्नमयादीनां पञ्चानामपि ब्रह्मत्वे सिद्धे मयट्प्रत्ययादीनां प्राचुर्यार्थत्व(द्यर्थतया)व्याख्यानं युक्तमिति ।**

शे०— **उपरिष्टादिति** । 'अधीहि भगवो ब्रह्मेत्युक्तोऽन्नप्राणपूर्वकमि'त्यादिनेति शेषः । मयट्प्रत्ययादीनामित्यादिपदेनान्यशब्दादेः संग्रहः । प्राचुर्याद्यर्थतयेत्यादिशब्देन विशेषपरिग्रह इति द्रष्टव्यम् ।

प०— भृगोश्चेति चशब्दार्थमाह **किञ्चेति** । अर्थं वदन्नेवावतारयति **उत्तरस्मिन्नित्यादिना ॥ उपरिष्टादिति** । 'अधीहिभगवोब्रह्मेत्युक्त इत्यत्रेत्यर्थः । मयट्प्रत्ययादीनां मयट्प्रत्ययान्यत्वान्तरत्वशरीरशरीरित्वावयवावयवित्वादीनामित्यर्थः ॥

या०— **मयट्प्रत्ययादीनामिति** । अत्र द्येनादिपदेनान्यशब्दादेर्द्वितीयेन विशेषरूपार्थस्य सङ्ग्रहः ।

श्री०— **उत्तरस्मिन्निति** । तस्मा एतत्प्रोवाच अन्नं प्राणमित्यादावित्यर्थः ।

सु० — **नन्वत्रान्नमयादिशब्दाः श्रूयन्ते । उत्तरत्र (तु) मयट्प्रत्ययहीना अन्नादिशब्दा एव । शब्दभेदे च निमित्तभेदेनाभिधेयभेदेन चावश्यं भवितव्यम् । न चान्नमयादिशब्दा अन्नादिशब्दपर्याया इति युक्तम् । प्रत्ययार्थस्याधिकस्य विद्यमानत्वात् । न च भीमसेनो भीमो बलभद्रो बलः सत्यभामा सत्या पुनर्नवा नवा, काचमाची माचीत्यादिवत्स्यादिति वाच्यम् । वैषम्यात् । भीमादिशब्दा हि प्रत्येकं तद्वाचकाः । न चान्नशब्दमात्रमन्नमयस्य**

वाचकम् । प्रत्ययस्य स्वार्थिकत्वप्रसङ्गात् । प्राचुर्यार्थश्च मयडित्युक्तम् । न ह्यन्नमयो यज्ञ इति वक्तव्येऽन्नशब्दमात्रं प्रयुज्यते । तस्मात्तत्रात्र च पृथग्वस्तुप्रतिपादनात्कथं तत्संवादेनात्रापि ब्रह्मप्रतिपादनमित्युच्यते । किं त्वत्रान्नमयादयः कोशास्तत्र तु ब्रह्मेत्यत आह प्राप्यत्वेनेति ।

अनु०— प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते ॥

एतमन्नमयमात्मानमुपसङ्क्रम्येत्यादिप्राप्यत्वेन निर्देशे मयटः स्पष्टोक्तेस्तत्रापि नान्यदुच्यते ।

शे०— शब्दभेदे चेति । अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरित्यादौ संज्ञाभेदस्य निमित्ताभिधेयभेदाविनाभावदर्शनादिति भावः । ननु पर्यायेषु व्यभिचारान्नोक्तोऽविनाभाव उपपन्न इत्यतः पर्यायव्यतिरिक्तत्वेन शब्दविशेषणान्न व्यभिचार इत्यभिप्रेत्य स्वरूपासिद्धिं परिहरति न चेति । ननु पर्यायसामान्यत्वाभावेऽपि तद्विशेषत्वं किं न स्यादित्याशङ्क्य निषेधति न चेति । पुनर्नवानवेतिशब्दाभ्यां नेत्ररोगपरिहारकद्रव्यविशेषोऽभिधीयते । काचमाचीमाचीशब्दावप्यौषधविशेषस्य वाचकौ ज्ञेयौ ॥ प्रत्येकं तद्वाचका इति । (कल्पकप्रत्ययप्रयोगयोरभावान्न तदिति भावेन प्रत्ययाभावं तावदुपपादयति न चेति) । अन्नशब्दस्यैवान्नमयवाचकत्वे किं बाधकमत्राह प्रत्ययस्येति । इष्टापत्तिं परिहरति प्राचुर्यार्थश्चेति ॥ उक्तमिति । प्राचुर्यादिति सूत्रखण्डेन प्राचुर्यार्थाश्च मयट इत्यादितद्भाष्येण चेति शेषः । कल्पकस्य प्रयोगस्याभावादपि न प्रत्येकं तयोस्तद्वाचकत्वमित्याह न हीति ॥ तस्मादिति । व्यभिचारासिद्ध्योरुक्तरीत्याऽप्रसङ्गादित्यर्थः । मयटः श्रवणादित्युपलक्षणमेतत् । अत्रापि 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यादौ मयटोऽश्रवणाच्चेत्यपि द्रष्टव्यम् । ततश्च न मयटः श्रवणाश्रवणाभ्यामनुवाकद्वयस्य भिन्नविषयत्वसिद्धिरिति भावः ।

स०— ननु यत्र शब्दभेदः तत्र निमित्तभेदः अभिधेयभेदश्चेनुत्यनुपपन्नं पर्यायेषु व्यभिचारादित्यशंक्य पर्यायव्यतिरिक्तत्वं हेतुविशेणमभिप्रेत्य तदसिद्धिपरिहरति नचेति ॥ ननु पर्यायसामान्यत्वाभावेपि तद्विशेषत्वं किन्न स्यादित्याशंक्याह न च भीमेति ॥ पुनर्नवानवेत्यादि औषधविशेषसंज्ञेयं ।

प०— पुनर्नवेति । औषधविशेषस्य नाम । 'काचमाची'त्यपि वस्तुविशेषस्यनाम । 'काचमाचीति तु वायस'' इत्यभिधानम् । शाब्दिकादिमतमाह भीमादिशब्दा हीति । भीमशब्दो भीमसेनशब्द इत्यर्थः । तत्रापीत्यपिपदसमुच्चयमाह अत्रापीति । भृगुवल्ल्यां ब्रह्मवल्ल्यां चेत्यर्थः ।

या०—पुनर्नवा नवेति । काचमाची माचीति चौषधविशेषयोः संज्ञा ॥ प्रत्येकं तद्वाचका इति । रूढ्या भीमत्वादिमात्रवाचका इत्यर्थः ।

श्री०— अस्तु स्वार्थिकत्वमित्यत आह प्राचुर्यार्थश्चेति । अर्थान्तरासम्भवे हि स्वार्थिकत्वं कल्प्यम् । न चात्र तदसम्भवोऽस्तीति भावः ।

च०— प्रत्येकं तद्वाचका इति । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपवृत्तिपञ्चकघटका अपि तत्र प्रयोगप्रत्ययदर्शनाद्भीमत्वाद्यवच्छिन्नवाचका इत्यर्थः ।

सु०— एतद्विवृणोति प्रचुरान्नादिरेवेति ।

अनु०— प्रचुरान्नादिरेवातो ह्यन्नमन्नमयेत्यपि ॥
उच्यते ह्यविशेषेण नान्यत्किञ्चिदिहोच्यते ॥

यथा हि ज्योतिष्टोमाधिकारे वसन्ते वसन्ते ज्योतिषा यजेतेति कालविशेषविधिपरे वाक्ये ज्योतिश्शब्दो ज्योतिष्टोमस्याभिधायकः । न हि तत्र शब्दयोः पर्यायत्वम् । राजशब्दस्यापि राजपुरुषशब्दपर्यायत्वप्रसङ्गात् । ज्योतिषां स्तोमो हि ज्योतिष्टोमः । अत एव न प्रत्येकं वाचकत्वं किं त्वधिकारबलादेकदेशोत्कीर्तनेन समग्रशब्दलक्षणामङ्गीकृत्य निमित्ताभिधेयैक्यमङ्गीकरणीयम् एवमत्राप्यन्नप्राणाद्येकदेशोत्कीर्तनेनान्नमयशब्दादिलक्षणयाऽन्नादिशब्दानामन्नमयादिशब्दानां चैक्यमङ्गीकृत्य तन्निमित्ताभिधेयैक्यमभ्युपेयते । प्राप्यतयोक्तिस्थाने मयट्प्रयोगसामर्थ्यात् । न ह्यन्यविद्ययाऽन्यप्राप्तिर्युक्तेति भावः । अन्नमयेति प्रातिपदिकमात्रग्रहणम् । इतिशब्द आद्यर्थे प्रत्येकं चाभिसम्बद्ध्यते । तथा चातः प्राप्यत्वेन मयट्प्रोक्तिसामर्थ्यादन्नमित्यादीनां च शब्दानामविशेषेण स्वरूपैक्येन कारणेन तैः शब्दैः प्रचुरान्नादिशब्दैः प्रचुरान्नादिनिमित्तत्रान्परमात्मैवोच्यते । न पुनरनुवाकद्वये प्रतिपाद्यभेदमङ्गीकृत्येहानुवाके ब्रह्मणोऽन्यत्किञ्चिच्छरीरादिकोशरूपमुच्यत इति योजना । आद्यो हिशब्दो न ह्यन्यविद्ययाऽन्यप्राप्तिर्युक्तेति न्यायसूचनार्थः । द्वितीयस्तु शब्दैक्ये निमित्ताभिधेयैक्यप्रसिद्धेर्द्योतकः ।

श्री०— एकदेशोत्कीर्तनेन समग्रशब्दलक्षणामङ्गीकृत्य निमित्ताभिधेयैक्यमङ्गीकरणीयमिति पक्षं दृष्टान्तप्रदर्शनेनोपपादयितुमाह यथा हीति । ननु ज्योतिषेति कर्मान्तरविधानान्न ज्योतिश्शब्दोऽत्र ज्योतिष्टोमस्याभिधायक इत्यत उक्तम् कालविशेषविधिपर इति । वसन्तकालगुणसङ्क्रान्तत्वान्न कर्मान्तरविधिरित्यर्थः । ज्योतिष्टोमे कालविशेषविधिपरत्वं कुत इत्यतस्तस्य प्रकृतत्वादित्याह ज्योतिष्टोमा-

**धिकार इति ।** वसन्ते वसन्ते ज्योतिषा यजेतेति ज्योतिष्टोमानुवादेन कालरूपगुणविधिः कर्मान्तरविधिर्वेति संशये कर्मान्तरविधिपक्षे द्रव्यदेवतात्मकरूपकल्पनेन गौरवापत्त्या कालविशेषलक्षणगुणविधिरेवेति सिद्धान्तितमित्याशयः । अस्तु ज्योतिःशब्दस्य ज्योतिष्टोमाभिधायकत्वं किं तावतेत्यत एकदेशोत्कीर्तनेन समग्रशब्दलक्षणामङ्गीकृत्य निमित्ताभिधेयैक्यस्याङ्गीकरणीयत्वं सिद्धमित्याशयेन पर्यायत्वादिनैव ज्योतिष्टोमाभिधायकत्वोपपत्तेर्नोक्तप्रकारकल्पनायास्तत्रावकाश इत्याशङ्कापरिहाराय पर्यायत्वं तावन्निराकरोति **न हीति** ॥ **तत्रेति** । ज्योतिःशब्दस्य ज्योतिष्टोमाभिधायकत्वसिद्धावित्यर्थः । पर्यायत्वे बाधकमाह **राजशब्दस्यापीति** । यदि ज्योतिःशब्दस्य ज्योतिष्टोमाभिधायकत्वमात्रेण ज्योतिर्ज्योतिष्टोमशब्दयोः पर्यायत्वं स्यात्तदा राजपुरुषशब्दान्तर्गतराजशब्दस्यापिराजपुरुषवाचकत्वेन राजपुरुषशब्दस्यापि राजशब्दपर्यायत्वं स्यादित्यर्थः । अयमाशयः । वृत्तौ हि राजपदं राजानमभिधाय न तावति पर्यवस्यति किन्तु पुरुषमप्याचष्टे । यथा गङ्गायां घोष इत्यत्र गङ्गापदं तीरम् । यदि तु तावत्येव पर्यवस्येत्तत्तो यथा वाक्ये राज्ञोऽश्वश्च पुरुषश्चेति द्वाभ्यां सम्बन्धो भवति तथा राजपुरुषोऽश्वश्चेत्यपि स्यात् । विशेषणसम्बन्धोऽपि भवेत् । यथा वाक्ये ऋद्धस्य राज्ञः पुरुष इति । अतो वृत्तौ राजपदस्य राजपुरुषाभिधायकत्वाद्राजशब्दस्यापि राजपुरुषशब्दपर्यायत्वं स्यादिति । ननु राजपुरुष इत्यत्र राजशब्दस्य तदेकदेशत्वेन राजपुरुषशब्दपर्यायत्वाभावेऽपि प्रकृते ज्योतिष्टोमाभिधायकस्य ज्योतिःशब्दस्य तदेकदेशत्वाभावात्पर्यायत्वं स्यादेवेत्यतो ज्योतिःशब्दस्यापि तदेकदेशत्वमाह **ज्योतिषामिति** । ननु त्रिवृत्पञ्चदश सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा इति वाक्यशेषबलाज्ज्योतिर्नामकाः स्तोमा यस्येत्येव तन्निर्वचनं मीमांसकाभिमतम् । बहुव्रीहित्वप्रयुक्तपूर्वपदप्रकृतिस्वरदर्शनाच्चेदमेव युक्तम् । तत्कथं ज्योतिषां स्तोमो ज्योतिष्टोम इति श्रुत्यादिविरुद्धं तन्निर्वचनाश्रयणमिति चेन्न । श्रुतौ स्तोमशब्दस्य स्तोत्रपरत्वात् । अत्र टीकायां तु समुदायपरत्वेनाविरोधोपपत्तेः । पूर्वपदप्रकृतिस्वरत्वं तु न बहुव्रीहित्वाविनाभूतम् । तत्पुरुषे तुल्यार्थेत्यादिविषये यतो नाव इत्याद्युदात्ततुल्यपूर्वपदकतुल्यश्वेत इत्यादितत्पुरुषे इगन्तकालेत्यादिविषयेऽत्र सङ्ख्याया इत्याद्युदात्तपञ्चपूर्वपदकपञ्चवर्ष इत्यादिद्विगौ आर्यो ब्राह्मणेत्यादिविषये ण्यदन्तस्वरितान्तपूर्वपदके आर्य ब्राह्मण इत्यादिकर्मधारये. सङ्ख्येत्यादिविषये कन्नन्ताद्युदात्तैकपूर्वपदकैकादशेत्यादिद्वन्द्वे च व्यभिचारादित्यधस्तादावेदितमिति दिक् । पर्यायसामान्यत्वाभावेऽपि पर्यायविशेषत्वाज्ज्योतिःशब्दस्य ज्योतिष्टोमाभिधायकत्वमस्त्वित्यत आह **अत एवेति** । राजशब्दस्यापि प्रत्येकं वाचकत्वप्रसङ्गादेवेत्यर्थः । परिशेषयितुं शङ्कते **किं त्विति** ॥ **अधिकारेति** । प्रकरणबलादित्यर्थः । एकदेशेति समग्रेति च शक्यसम्बन्धोपपादनाय । ज्योतिःशब्दस्य हि स्वयमपि शक्योऽर्थ एव । स्वं रूपं शब्दस्येति पाणिनि-

स्मृतेः । स च लक्ष्यस्य समग्रस्य ज्योतिष्टोमशब्दस्यैकदेशो भवति । अतोऽत्र शक्यसम्बन्धिसमग्रशब्द-लक्षणोपपद्यत इति । अत्र यद्यपि ज्योतिःशब्देन ज्योतिष्टोमरूपोऽर्थ एव लक्षयितुं शक्यते तथाऽपि शब्दलक्षणानङ्गीकारे संज्ञाधिकरणन्यायेन कर्मान्तरविधिपरत्वापत्त्या निमित्ताभिधेयैक्यलाभाय समग्र-शब्दलक्षणाङ्गीकार इति द्रष्टव्यम् । ननु तत्र ज्योतिष्टोमाधिकारसामर्थ्यात् ज्योतिःशब्दस्य तदेकदेशो-कीर्तनेन समग्रलक्षणया ज्योतिष्टोमवाचकत्वं न्याय्यम्, अन्यथा अधिकारविरोधात्प्रकृते तु किंसामर्थ्या-त्तथा स्यादित्यत आह **प्राप्यतयेति** । सामर्थ्यमेवोपपादयति **न हीति** ॥ **प्रातिपदिकमात्रेति** । अन्यथाऽन्नमय इत्येव वक्तव्यत्वादित्याशयः ॥ **प्रत्येकं चेति** । अन्नमित्यादिनाऽन्नमयमित्यादिना चेति प्रत्येकमित्यर्थः । पदार्थमुक्त्वा वाक्यार्थमाह **तथा चेति** । हिशब्दद्वयवैयर्थ्यमर्थभेदकथनेन परिह-रति आद्य **इत्यादि** ।

सं०— एकदेशोत्कीर्तनेन समग्रशब्दलक्षणामंगीकृत्य निमित्ताभिधेयैक्यमंगीकरणीयमिति पक्षमु-पपादयितुं प्रसक्तपर्यायत्वादिकं निराकृत्य परिशेषयति **यथेति** ॥ कालविशेषविधिपरत्वोपपादनार्थं ज्योतिष्टोमाधिकार इत्युक्तं । तथाच वसंते वसंते ज्योतिषा यजेतेति वाक्यं किं प्रकृतज्योतिष्टोममनूद्य कालविशेषलक्षणगुणविधायकं उत कर्मान्तरविधायकमिति संदिह्य कर्मान्तरविधायकत्वपक्षे रूपादेः । कल्पनीयत्वेन गौरवापत्त्या जोतिषेत्यनेन प्रकृतज्योतिष्टोममनूद्य कालविशेषलक्षणगुणविधायकमिति सिद्धान्तितमिति भावः । ननु ज्योतिष्टोमशब्दस्य यागविशेषे रूढस्य कथं राजपुरुषशब्दसमानत्वमित्यतो यौगिकोऽप्ययमित्याह **ज्योतिषां स्तोमो हीति** ॥ **अत एवेति** । राजशब्दस्यापि राजपुरुषवाचकत्वप्र-सङ्गादेवेत्यर्थः ॥ **प्रत्येकं वाचकत्वमिति** ॥ ज्योतिर्ज्योतिष्टोमशब्दयोरित्यर्थः ॥ **अधिकारबलादिति** ॥ प्रकरणबलादित्यर्थः । एकदेशेति समग्रेति च शक्यसंबन्धोपपादनाय । ज्योतिःशब्दस्य हि स्वं रूपं शब्दस्येति वचनेन स्वरूपमपि शक्यार्थः । स च समग्रज्योतिष्टोमशब्दलक्षकस्तदेकदेशरूपो भवति । अतोऽत्र शक्यसंबन्ध उपपद्यत इति । अत्र यद्यपि ज्योतिःशब्देन लक्षणया ज्योतिष्टोमरूपोऽर्थो ज्ञातुं शक्य इति न शब्दलक्षणा युक्ता तथाऽपि निमित्ताभिधेयैक्यलाभाय शब्दो लक्षणीयः । अन्यथा संज्ञाभेदप्रसङ्गेन कर्मान्तरपरत्वशङ्काऽऽपातादिति द्रष्टव्यम् । न च दार्ष्टान्तिकेऽन्नप्राणादिशब्दानामेव लक्षणया प्रचुरान्नादिरूपार्थप्रत्यायकत्वेन समाख्यात्वोपपत्तौ किमिति तैरन्नमयादिशब्दो लक्षणीय इति वाच्यम् । तथात्वेऽन्नादिशब्दानां प्रचुरान्नादिरूपे भगवति लक्षणया समन्वयः स्यात् । न चासावस्मा-कमिष्टः । 'योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः' इत्युक्तेः । न चान्नादिशब्दानां अद्यतेऽत्ति चेत्यादि निरुक्त्या भगवति मुख्यत एव समन्वयोपपत्तिरिति वाच्यम् । मयडर्थभूतप्राचुर्यस्यातदर्थत्वात् ।

तस्यागे च निमित्तभेदेन समाख्यात्वभङ्गप्रसङ्गः । तदिदमुक्तम् **निमित्ताभिधेयैक्यमिति** ॥ अतोऽत्र समन्वयप्रमाणसिद्धसमाख्यात्वपरिरक्षणाय शब्दलक्षणैव युक्तेति मन्तव्यम् ।

प० — दृष्टान्तपूर्वकमेकदेशेन समग्रशब्दार्थप्रतीतिप्रकारमाह **यथाहीत्यादिना** । ज्योतिष्टोमाधिकारे ज्योतिष्टोमप्रकरणे ॥ **कालविशेषविधिपरे इति** । वसंतरूपकालविशेषेत्यर्थः । ज्योतिष्येति-पदेन पूर्वप्रकृतज्योतिष्टोमानुवादेन वसंतरूपकालस्य विधानादितिभावः ॥ **ज्योतिषां स्तोमो हीति** । यद्यपि त्रिवृत्पञ्चदशसप्तदशएकविंशा एतानि वा व तानि ज्योतींषि य एतस्य स्तोमा इति ज्योतींषि स्तोमा यस्मिन्निति ज्योतिष्टोम इति विग्रह इति प्रसिद्धस्तथाप्यवयवविभागप्रदर्शन एव तात्पर्यमित्येके । अन्ये तु एवमेव विग्रहः । बहुव्रीहिप्रसिद्धिस्त्वन्यथा नेयेत्याहुः ॥ **अत एवेति** । राजशब्दस्यापि राजपुरुषवाचकत्वप्रसंगादेवेत्यर्थः ॥ **अधिकारेति** । प्रकरणबलादित्यर्थः ॥ **एकदेशेति** । समग्रेति च लक्षणाबीजोपपादनं ॥ **निमित्तेति** । प्रवृत्तिनिमित्तैक्यमभिधेयैक्यमित्यर्थः । यत्तु पस्पशाह्निके कैयटे 'सिद्धे शब्दार्थसंबन्धे' इत्येतद्भाष्यव्याख्यानावसरे एकदेशोत्कीर्तनेन प्रतीतस्य समग्रशब्दस्य नार्थप्रत्यायकत्वमुच्चार्यमाणस्यैवार्थप्रत्यायकत्वा'दित्युक्तं तन्न । अनुच्चार्यमाणस्यापि मनसानुसंहितस्य शब्दस्यार्थप्रत्यायकत्वानुभवात् । सामर्थ्यादित्युक्तं व्यनक्ति **नहीति** ॥

या० — ननु ज्योतिष्टोमशब्दस्य यागविशेषे रूढस्य कथं राजपुरुषशब्दसमानत्वमित्यतो यौगिकोऽप्ययमित्याह **ज्योतिषां स्तोमो हीति** । हिशब्देनेदं हि निर्वचनं चिरन्तनमीमांसकप्रसिद्धमिति सूचयति । अत आधुनिकैरित्थमनङ्गीकारात्कथमेतदिति शङ्काऽनवकाशः ॥ **अत एवेति** । राजशब्दस्यापि राजपुरुषवाचकत्वप्रसङ्गादेवेत्यर्थः ॥ **प्रत्येकमिति** । ज्योतिर्ज्योतिष्टोमशब्दयोरिति शेषः ॥ **अधिकारबलादिति** । प्रकरणबलादित्यर्थः ॥ एकदेशेति समग्रेति च शक्यसम्बन्धोपपादनाय । ज्योतिःशब्दस्य हि स्वं रूपं शब्दस्येति वचनेन स्वयमपि शक्योऽर्थः । स च समग्रो यो ज्योतिष्टोमशब्दो लक्ष्यस्तदेकदेशरूपो भवति । अतोऽत्र शक्यसम्बन्ध उपपद्यत इति । अत्र यद्यपि लक्षणया ज्योतिःशब्देन ज्योतिष्टोमरूपोऽर्थो ज्ञातुं शक्यत इति न शब्दलक्षणाऽङ्गीकारार्हा । तथाऽपि निमित्ताभिधेयैक्यलाभाय शब्दलक्षणैव युक्ता । अन्यथा संज्ञाभेदप्रसङ्गेन कर्मान्तरपरत्वशङ्कापातादिति द्रष्टव्यम् । एवं दार्ष्टान्तिकेऽप्यन्नप्राणादिशब्दैरन्नमयादिशब्दलक्षणैव युक्ता । न प्रचुरान्नादिरूपार्थलक्षणा । निमित्ताभिधेयैक्यालाभेन प्रमाणसिद्धसमाख्यात्वभङ्गप्रसङ्गात् । अन्नादिशब्दानां लक्षणया प्रचुरान्नादिपरत्वे तस्य समन्वयत्वासम्भवाच्च । योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वय इत्युक्तेरित्यवगन्तव्यम् ॥ **प्रातिपदिकमात्रेति** । वस्तुतस्त्वन्नमय इति वक्तव्यमिति भावः ॥ छ ॥ छ ॥

श्री॰— **राजपुरुषेति** । राज्ञः पुरुषो राजपुरुष इति षष्ठीव्युत्पत्त्या भृत्यवाचकराजपुरुषशब्दस्य राजशब्दपर्यायत्वाभावादित्याशयः । अधिकारो ज्योतिष्टोमेन यजेतेति प्रकरणम् । तथाऽपि कथं निमित्ताभिधेयैक्यलाभ इत्यत आह **न हीति** । अन्नादिज्ञानेनान्नमयादिप्राप्त्यसम्भवादिति भावः ॥

च॰— राजपदस्य राजपुरुष इति समासैकदेशत्वस्येव ज्योतिःशब्दस्यापि ज्योतिष्टोम इति समासैकदेशत्वमित्याह **ज्योतिषामिति** । ननु त्रिवृत्पंचदशसप्तदश एकविंश एतानि वाव तानि ज्योन्तींषि य एतस्य स्तोमा इति वाक्यशेषबलाज्ज्योतिर्नामकाः स्तोमा यस्येत्येव विग्रहवाक्यं मीमांसकाभिप्रेतम् । बहुव्रीहित्वप्रयुक्तपूर्वपदप्रकृतिस्वरत्वदर्शनाच्च सङ्गतमिति दर्शितश्रुतिविरोधप्रसङ्गेन ज्योतिषां स्तोम इति विग्रहवाक्याश्रयणं न सङ्गगच्छत इति चेदत्र व्याकर्तॄणां श्रौतस्तोमशब्दस्य स्तोत्रपरतया टीकितस्तोमपदस्य च समुदायपरतया ऽविरोधोपपत्तेः । पूर्वपदप्रकृतिस्वरत्वं तु न बहुव्रीहित्वाविनाभूतं ण्यदन्तस्वरितांतपूर्वपदकार्यब्राह्मणादिकर्मधारयादिषु आर्यब्राह्मण इत्यादिविषयेषु व्यभिचारादित्यधस्तादावेदितमिति समादधति । **अधिकारबलादिति** । प्रकरणबलादित्यर्थः । **एकदेशेति** । समग्रेति च शक्यसंबन्धोपपादनाय तथा हि । स्वं रूपं शब्दस्याशब्दसंज्ञेति पाणिनिस्मृतिज्ञापितज्योतिश्शब्दस्वरूपनिरूपितशक्तिकतया ज्योतिःशब्दस्य स्वशक्यज्योतिःशब्दावच्छिन्ननिरूपितविषयितात्वावच्छिन्ननिरूपितव्याप्यतावच्छेदकस्वावच्छिन्ननिरूपितविषयितात्वकधर्माश्रयत्वरूपज्योतिःशब्दघटितत्वमेव लक्ष्याभिमतज्योतिष्टोमशब्दे लक्ष्यलक्षकाभिमतज्योतिःशब्दशक्यनिरूपितसंबन्ध इति ध्येयम् । स्वपदं लक्ष्यतावच्छेदकाभिमतधर्मपरं विषयितात्वावच्छिन्ननिरूपितव्याप्यतायाः प्रातिस्विकत्वाद्व्याप्यव्यापकभावो न घटत इत्यवच्छेदकपर्यन्तानुधावनम् । ज्योतिःशब्देनलक्षणया ज्योतिःष्टोमरूपार्थस्यैव बोधसंभवेऽपि शब्दलक्षणानभ्युपगमे संज्ञाधिकरणन्यायेन संज्ञाभेदनियन्त्रितकार्यान्तरविधिपरत्वापत्त्या निमित्ताभिधेयैक्यलाभाय शब्दलक्षणोपगतिरित्यवसेयम् ।

**सु॰— एवं सूत्रद्वयेनान्नमयादिशब्दपञ्चकस्येश्वरवाचित्वं मयटश्च सर्वत्र प्राचुर्यार्थत्वमुपपादितम् । इदानीमानन्दमयशब्दस्य विष्णुवाचित्वं तद्गतस्य मयटश्च प्राचुर्यार्थत्वं हेत्वन्तरेणोपपादयत्** तद्धेतुव्यपदेशाच्चेति सूत्रं **व्याख्याति** महानन्दत्व एवेति ।

## ब्र. सू. ॥ ॐ ॥ तद्धेतुव्यपदेशाच्च ॐ ॥

**अनु॰—** ॐ तद्धेतुव्यपदेशाच्च ॐ ॥

महानन्दत्व एवास्य हेतुः कोऽन्यादिति स्फुटम् ॥

उक्तः

आनन्दमयप्रकरणे को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादित्यस्य विष्णोरेव महानन्दत्व एव (च) हेतुरुक्तः । तेन ज्ञायते विष्णुरेवानन्दमयशब्दार्थ इति मयट् च प्राचुर्यार्थ इति । यदि ह्यानन्दमयो विष्णोरन्यः स्यात् । मयट् च विकारार्थो भवेत् । तदा श्रुतिरन्यस्यानन्दविकारत्वे हेतुं कमपि ब्रूयात् । विष्णोर्महानन्दत्वे हेतुकथनं त्वसङ्गतमेव । अनेन (सूत्रे) तदिति षष्ठ्यन्तं सप्तम्यन्तं च तन्त्रेणोपात्तमित्युक्तं भवति । तस्य विष्णोस्तत्र महानन्दत्व इत्युक्तत्वात् ।

नन्वत्राकाशस्यानन्दत्वाभावेऽननं प्राणनं च कस्यापि न स्यादित्येतावदुच्यते । न तु विष्णोर्महानन्दत्वे कश्चिदपि हेतुरुच्यत इत्यत उक्तम् ॥ स्फुटमिति ।

शे० — मयटश्च प्राचुर्यार्थत्वं हेत्वन्तरेणेति । ततश्च को ह्येवान्यात्कः प्राण्यादिति हेतुव्यपदेशस्यानन्दमयस्य विष्णुत्व इव प्राचुर्यं मयडर्थ इत्यत्रापि हेतुत्वकथनेन विकारशब्दादिति बाधकोद्धारानन्तर्यं तद्धेतुव्यपदेशस्य समर्थितं भवति ॥ तेनेति । विष्णोरेव महानन्दत्व एव च हेतुकथनेनेत्यर्थः । सूत्रे तदित्यस्य षष्ठ्यन्तत्वेऽस्येत्येव, सप्तम्यन्तत्वे च महानन्दत्व एवेत्येव, व्याख्येयत्वादन्यतरवैयर्थ्यम् । ततश्च महानन्दत्व एवास्येत्यंशस्यासूत्रार्थकथनरूपत्वादभाष्यत्वमित्याशङ्कां परिहरति अनेनेति ।

सु० — तत्कथमिति चेत् । आकाशशब्दस्तावद्विष्णुपर इति वक्ष्यते आकाशस्तल्लिङ्गादिति । तथा च विष्णोरनानन्दत्वे जगतो निश्चेष्टत्वप्रसङ्गमापादयन्त्या श्रुत्या जगच्चेष्टकत्वं हेतुत्वेन विवक्षितमिति विवक्षुस्तस्यानन्दत्वेन व्याप्तिं तावदुपपादयति श्रुत्यन्तर इति ।

अनु० — श्रुत्यन्तरे यस्मात्सुखं लब्ध्वा करोत्ययम् ॥
करोति नासुखी

यस्मादित्यस्योपरि सम्बधः । श्रुत्यन्तरे छन्दोगश्रुतावित्युक्तमित्युत्तरेणान्वयः । यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोतीति श्रुत्यन्तरे परमेश्वरव्यापारस्यानन्दाविनाभूतत्वमुक्तमित्यर्थः ।

आनन्दशब्द(स्य)श्च पूर्णानन्द एव मुख्यवृत्तिरित्यत्रापि श्रुतिमाह भूमेति ।

भूमा सुखं नाल्पे सुखं भवेत् ॥

इत्युक्तं

यो वै भूमा तत्सुखं नाल्पे सुखमस्तीति छन्दोगश्रुतौ सुखशब्दस्य पूर्णानन्द एव मुख्यवृत्तिरित्युक्तमित्यर्थः । यद्यपि भूमशब्दो भाववाची । बहोर्लोपो भू च बहोरिति वचनात् । तथाऽपि भावभवित्रोरैक्याद्भूमेति पूर्ण एवोच्यते नाल्प इत्युक्तत्वात् स च सन्निधानात्सुखेनेति गम्यते ।

शे० — उपरिसन्बन्ध इति । 'अतः केवललीलया इत्यत्रत्यातश्शब्देन सम्बन्ध इत्यर्थः ॥ भाववाचीति । बहुत्ववाचीत्यर्थः । कुतो भूमशब्दस्य बहुत्ववाचित्वमित्यतो बहुशब्दाद्भावार्थे इमनिच्प्रत्ययान्तत्वादिति भावेन । तथात्वे कथं भूमन्निति प्रातिपदिकनिष्पत्तिरित्यत आह बहोर्लोप इति । बहोः परेषामिष्ठेमेयसामादेर्लोपः स्याद्बहोश्च भू इत्यादेशः स्यादिति सूत्रार्थः । ततश्च बहुशब्दात् 'पृथ्वादिभ्य इमनिज्वे'ति भावे इमनिच्प्रत्यये बहोर्लोप इतीमनिच आदेरिकारस्य लोपे बहुशब्दस्य च भू इत्यादेशे भूमन्निति प्रातिपदिकनिष्पत्तिरिति भावः ॥ नाल्प इति । अल्पशब्दस्यापूर्णधर्मिवाचित्वादिति भावः ॥ स च भूमा सन्निधानादिति । परमधार्मिक इत्यादौ धर्मपदसन्निधानेन धर्मेण परमत्वलाभवत्सुखशब्दसन्निधानात्सुखेन पूर्णत्वमेव लभ्यत इति भावः ।

स० — यस्मादित्यस्येति । 'अतः केवललीलया' इत्यत्रस्यातः शब्देनेत्यर्थः । अत्र यद्यपि भूमशब्दो भाववाचीति । भूशब्दस्य पृथ्वादित्वेन तस्मात् 'पृथ्वादिभ्यः इमनिज्वा' इति इमनिचो भावे विहितत्वादिति भावः ॥ बहोर्लोपो भू च बहोरिति वचनादिति । बहोः परस्य इष्ठेमेयसां आदेर्लोपः स्यात् बहोश्च भूरादेश इति सूत्रार्थः ॥ सचेति । भूमेत्यर्थः ।

प० — तद्धेतुव्यपदेशाच्च ॥ यस्मादित्यस्योपरिसंबन्ध इति । यस्मादित्यस्य केवललीलयेत्यतःपदेनान्वय इत्यर्थः । नासुखीत्यनन्तरमपीत्युक्तमित्युत्कृष्य श्रुतिशेषोक्तिपूर्वमर्थमाह सुखमेव लब्ध्वा करोतीतिश्रुत्यन्तर इत्यादि । भाववाचीति । 'पृथ्वादिभ्य इमनि'ज्वेति सूत्रे भावार्थे इमनिच्प्रत्ययस्य विधानात् बहुशब्दस्य पृथ्वादिगणे पाठादिति भावः । तथात्वे भूमेति कथं रूपमित्यत आह बहोरिति । बहुशब्दात्परस्येमनिजादेः प्रत्ययस्यादेरिकारस्य लोपो भवति बहुशब्दस्य भूरादेशश्च भवतीति पाणिनिसूत्रादित्यर्थः । तत्र ज्ञापकमाह नाल्प इति । भूमप्रतियोगिनोऽल्पपदेन निर्देशाद्भूमा पूर्ण एवाभिमतोन्यथा नाल्पत्व इति निर्देशः स्यादिति भावः । तावता सुखपदस्य पूर्णसुख एव मुख्यवृत्तिरित्यत्र किमागतमित्यतो भूमेत्यत्र भूमशब्दस्य गुणैः पूर्णत्वार्थतया व्याख्यानेपीह प्रकृतोपयोगायार्थमाह स चेति । यो वै भूमा पूर्णसुखः स एव च सुखपदेनोच्यत इति श्रुत्यर्थ इत्युक्तं भवति ।

या० — ॥ ॐ तद्धेतुव्यपदेशाच्च ॐ ॥ अन्वयमुक्त्वा व्यतिरेकमाह नासुखं लब्ध्वेति । सुखमेवेति निगमनम् । यो वै भूमेति । यो वै भूमा पूर्णो नारायणाख्यस्तत्सुखमनन्याधीनसुखरूपम् ।

अस्यातिव्याप्तिं परिहरति **नाल्प इति** । भूमप्रसादं विना नाल्पे मुक्तजाते सुखमस्तीत्यर्थः ॥ **बहोर्लोप इति** । बहोः परस्येष्ठेमेयसामादेर्लोपः स्याद्बहोश्च भूरादेश इति सूत्रार्थः । ततश्च बहुशब्दस्य पृथ्वादित्वेन तस्मात् 'पृथ्वादिभ्य इमनिज्वे'ति इमनिचो भावे विहितत्वादिति शेषः ॥ **नाल्प इति** । अल्पशब्दस्य चापूर्णधर्मिवाचकत्वादिति भावः ॥

**श्री०— ॐ तद्धेतुव्यपदेशाच्च ॐ ॥ उपरीति** । अतः केवललीलयेत्यत्रत्यैतच्छब्देनेत्यर्थः ॥ **भाववाचीति** । पूर्णत्ववाची ॥ **बहोरिति** ॥ बहु अस्मात् पृथ्वादिभ्य इमनिज्वेति भावे इमनिच्प्रत्यये बहोर्लोपो भू च बहोः । बहोः परस्येष्ट इमनिच् ईयस् इत्येतेषां प्रत्ययानामादेरिकारस्य लोपः स्याद्बहोश्च भूरित्ययमादेश इति इकारलोपे बहोश्च भूरादेशे भूमन्निति प्रातिपदिकम् ॥

**च०— भाववाचीति** । प्रकृतिजन्यबोधीयप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नबहुत्ववाचीत्यर्थः । **बहोर्लोप इति** । बहोर्लोपो भूच बहोः बहुशब्दप्रकृतिकाणामिष्ठेमेयसामादेरिकारस्यलोपः स्यात्प्रकृतिभूतबहुशब्दस्य च भूरादेशः स्यादिति सूत्रार्थः । तथा च बहुशब्दात्पृथ्वादिभ्य इमनिज्वेति भावे इमनिच्प्रत्यये तदादिभूतेकारस्य च बहोर्लो इत्यनेन लोपे प्रकृत्यंशस्य भूरादेशे भूमन्निति प्रातिपदिकं निष्पद्यत इति भावः ।

---

**ईश्वरप्रवृत्तेः पूर्णानन्दत्वेन व्याप्तिं श्रुत्योपपाद्योपपत्त्याऽपि समर्थयते** यत्प्रवृत्तिश्चेति ।

**अनु०—** यत्प्रवृत्तिश्च नृत्तगानादिका सुखात् ॥
दुःखाद्रोदादिका चैव सर्वकर्तृत्वतोऽस्य च ॥
सर्वशक्तेर्न दुःखं स्यात्

**अत्रापि यद्यस्मादित्यस्योपरि सम्बधः । प्रवृत्तिश्चतुर्विधा भवति । सुखोद्रेकाद्दुःखोद्रेकात्सुखरागाद्द्वेषाच्चेति शेषः । सुखोद्रेकात्प्रवृत्तेरुदाहरणमाह** नृत्तेति । **उन्मत्तस्येति शेषः । दुःखोद्रेकात्प्रवृत्तिमुदाहरति** दुःखादिति । **केचिदाहुः सुखदुःखतत्साधनरागद्वेषावेव प्रवर्तकाविति । यथोक्तं प्रवर्तनालक्षणा दोषा इति । तन्निरासार्थमेवशब्दः । सुखादेव दुःखादेवेति । न ह्युन्मत्तस्य क्वचिदनुसन्धानमस्ति । येन सुखरागात्तत्साधनमेतदित्यनुसन्धाय नृत्तादौ प्रवर्तेत । किं तूद्रिक्तं सुखमेव तत्प्रवृत्तौ हेतुः । नापि दुःखं द्विषतोऽपि नारकिणो रोदनादिकं तत्परिहारहेतुरित्यनुसन्धानमस्ति । किंतु दुःखोद्रेक एव तत्र कारणमित्यनुभवसिद्धम् । सुखरागात्तत्प्राप्त्यर्था भोजनादौ प्रवृत्तिर्दुःखद्वेषाच तन्निवृत्त्यर्था कण्टकोद्धरणादौ प्रवृत्तिः सुप्रसिद्धेति नोदाहृता ।**

**किमतो यद्येवं चेतनसम्बन्धिनी प्रवृत्तिश्चतुर्विधेत्यत आह** सर्वकर्तृत्वत इति ।

**सुखानवाप्तिश्चेति शेषः । ततश्च दुःखोद्रेकनिमित्ता तन्निवृत्त्यर्था सुखावाप्त्यर्था चेति प्रवृत्तित्रयं परमेश्वरे नोपपद्यत इति भावः ।**

शे० — श्रुत्यन्तरे यस्मात्सुखं लब्ध्वेति पूर्ववाक्यसमुच्चयार्थोऽत्रापीत्यपिशब्दः ॥ **यद्यस्मादिति ।** अत्र यदिति मौलपदानुवादस्तस्य व्याख्यानं यस्मादिति ॥ **उपरीति ।** अतः केवललीलयेत्यनेनेत्यर्थः । मूले सुखदुःखोद्रेकसाध्यप्रवृत्त्योरेवोदाहरणात्तयोरेव प्रवृत्तिकारणत्वविवक्षाया अभिप्रेतत्वभ्रान्तिनिरासाय शेषं पूरयति **चतुर्विधा भवतीत्यादिना** ॥ **केचिदिति ।** नैयायिका इत्यर्थः ॥ **सुखदुःखेति ।** सुखतत्साधनरागो दुःखतत्साधनद्वेषश्च प्रवर्तकाविति योज्यम् । तत्र गौतमसूत्रं प्रमाणयति **यथोक्तमिति ।** प्रवर्तयतीति व्युत्पत्त्या प्रवर्तनेति प्रवृत्तिहेतुत्वं गृह्यते । ततश्च प्रवर्तना प्रवर्तकत्वं लक्षणं येषां ते प्रवर्तनालक्षणा इत्यर्थसिद्ध्या दोषपदोक्तस्य रागादेः प्रवृत्तिहेतुत्वसिद्धिः । यद्यपि चैतत्सूत्रानुसारेण रागद्वेषयोरिव मोहस्यापि प्रवर्तकत्वप्राप्त्या रागद्वेषाविति द्वयोरेव तत्कथनमनुचितम् । तथाऽपि मोहस्य स्वैकार्थसमवेतरागादिजनकतया रागद्वेषाभ्यामन्यथासिद्धेर्मोहस्य न प्रवर्तकत्वमित्याशयेन पूर्वं रागद्वेषयोरेवोपादानस्य न्याय्यत्वात् । सूत्रे तु साक्षात्परम्परासाधारण्येन प्रवृत्तिप्रयोजकत्वस्यैव विवक्षया दोष इति बहुवचनेन रागद्वेषमोहानां त्रयाणामपि सङ्ग्रहः कृत इत्यवधेयम् । ननु यथाभाष्यं द्वयोरेव प्रवृत्तिकारणत्वं व्याख्यायतां किमन्यथा शेषपूरणेनेत्यतः सुखादौ रागादिना भोजनादिप्रवृत्तेरनुभवसिद्धत्वान्न द्वैविध्यमात्रविवक्षाऽत्र भाष्ये युक्तेत्याशयेन कुतस्तर्हि सुखादिरागादिना प्रवृत्तेरनुदाहरणमित्यतः सुप्रसिद्धत्वादिति भावेन तदन्यथासिद्धिमाह **सुखरागादित्यादिना ।** ननु च दुःखाभावे दुःखोद्रेकाद्दुःखद्वेषाद्वा प्रवृत्त्यसंभवेऽपि सुखरागादेव प्रवृत्त्युपपत्तेर्न वक्ष्यमाणपरिशेषासिद्धिरित्यतः शेषं पूरयति **सुखानवाप्तिश्चेति शेष इति ।** सर्वकर्तुः सर्वशक्तेर्दुःखस्येव सुखानवाप्तेरप्ययोगादिति भावः ।

स० — **प्रवर्तनालक्षणाः** प्रवर्तना प्रवृत्तिः लक्षणं कार्यभूतं येषां ते तथोक्ताः प्रवर्तका इत्यर्थः ॥

प० — **अत्रापि यस्मादित्यस्योपरि संबन्ध इति ।** अतःपदेन संबन्धइत्यर्थः ॥ **सुखेति ।** सुखं च दुःखं च तत्साधनं च तेषां रागद्वेषावित्यर्थः । तार्किकसंमतिमाह **यथोक्तमिति ।** प्रवर्तनालक्षणाः प्रवर्तकरूपा इत्यर्थः । दोषा रागद्वेषमोहाः ।

या० — **सुखदुःखेति ।** सुखतत्साधनरागो दुःखतत्साधनद्वेष इति विवेकः ॥ **प्रवर्तकाविति ।** यद्यपि मोहोऽपि प्रवर्तकतया वक्ष्यमाणतत्सूत्रोक्तः । तथाऽपि न तस्य प्रवृत्तिहेतुत्वं स्वातन्त्र्येण किन्तु रागद्वेषानुग्राहकत्वेन मूढमेव हि रागद्वेषौ प्रवर्तयत इत्याशयेनेदमुक्तमित्यवगन्तव्यम् ॥ **प्रवर्तनालक्षणा इति ।** प्रवर्तना प्रेरणा । प्रवर्तयतीति व्युत्पत्त्या प्रवर्तकत्वमित्यर्थः । ण्यासश्रन्थो युजिति स्त्रियां युच् ।

तदेव लक्षणं येषां ते तथोक्ता इति न्यायसूत्रार्थः । तेन रागद्वेषमोहा इत्यपि तदुक्तं ग्राह्यम् । अतः प्रकृतसङ्गतिः । प्राण्यादित्यस्यार्थो वैदिकीमिति । अन्यादित्यस्यार्थो लौकिकीमिति ॥ छ ॥ छ ॥

**श्री०— उपरीति** । अतः केवलेत्यत्रत्यैतच्छब्देनेत्यर्थः । सुखादेव दुःखादेव नान्यथेत्याशये-नैवव्यावर्त्यं दर्शयति **केचिदिति** । केचित्तार्किकाः । सुखरागात्सुखसाधनरागात् । दुःखद्वेषाद्दुःखसाध-नद्वेषात्प्रवृत्तिः । तत्र सुखं मे भूयादिति सुखरागात्सुखसाधने नृत्तगानादौ प्रवृत्तिः । सुखसाधनं मे स्यादिति रागात्सुखसाधनीभूतस्रक्चन्दनादिसम्पादने दुःखद्वेषात्तत्परिहारसाधनरोदनादौ दुःखसाधन-द्वेषाद्दुःखसाधनीभूताहिकण्टकोद्धरणादौ प्रवृत्तिर्दृष्टेति रागद्वेषयोरेव सर्वत्र प्रवर्तकत्वान्न सुखोद्रेकदुःखो-द्रेकयोः प्रवर्तकत्वम् । भवदाचार्योदाहृता या नृत्तगानादौ प्रवृत्तिः साऽपि सुखरागादेव न सुखो-द्रेकात् या च नारकिणो दुःखोद्रेकात्प्रवृत्तिः साऽपि दुःखद्वेषादेव न दुःखोद्रेकादित्याशयः । एवमभि-प्रायावर्णने' न ह्युन्मत्तस्येत्युत्तरग्रन्थासङ्गतेरिति ध्येयम् ॥ **दोषा इति** । दोषा रागादयश्च त इति रागद्वेषमोहानां दोषत्वाभिधानादिति भावः । यद्यपि मोहस्याप्यस्ति प्रवर्तकत्वं, तथाऽपि न स्वातन्त्र्येण । किन्तु 'मूढमेव रागद्वेषौ प्रवर्तयत' इति परोक्तेः । रागद्वेषजननद्वारैवेति साक्षा-त्प्रवर्तकत्वं तयोरेवेति भावः । आचार्योदाहृतनृत्तगानादिप्रवृत्तेः नारकिणो रोदनादि प्रवृत्तेश्च, यत्सुख-रागदुःखद्वेषसाध्यत्वं परोक्तं, तन्निराकरणं कथमेवकारलब्धमित्यतस्तद्दर्शयति **न हीति** । सुखरागाद्दुःख द्वेषाच्च प्रवृत्तिराचार्यैः कस्मान्नोदाहृतेत्यत आह **सुखेति** । अम्बुवाय्वादेः प्रवृत्तावेतत्कारणासम्भवेन चेतनेत्युक्तम् । मूले न दुःखं स्यादित्यनेन दुःखोद्रेकात्प्राप्तदुःखद्वेषाच्च तन्निवृत्त्यर्थप्रवृत्त्यसम्भवोऽभिहि-तस्तथाऽपि नेश्वरप्रवृत्तेः सुखोद्रेकसाध्यत्वसिद्धिः । सुखरागादपि तत्सम्भवेन तन्निराकणालाभादित्यत आह **सुखानवाप्तिश्चेति शेष इति** । तथा च न दुःखं स्यादित्यनन्तरं सुखानवाप्तिश्च न स्यादिति मूले ग्राह्यम् । येन सुखरागात्तदवाप्त्यर्था प्रवृत्तिः स्यादिति भावः । एवं सति प्रवृत्तित्रयनिषेधो लब्ध इत्याह **ततश्चेति** ॥ **तन्निवृत्त्यर्थेति** ॥ दुःखद्वेषाद्दुःखनिवृत्त्यर्थेत्यर्थः ।

**च०—केचिदिति** । नैयायिका इत्यर्थः । **सुखदुःखेति** । सुखतत्साधनरागो दुःखतत्साधन-द्वेषश्च प्रवर्तकाविति योजनीयम् । मोहस्यान्यथासिद्धत्वाशयेन द्विवचनम् । **यथोक्तमिति** । गौतमसूत्र इत्यर्थः । प्रवर्तनाशब्दो ण्यासंश्रन्थोयुजिति युजन्तः स्त्रियाम् । तदर्थः प्रवृत्तिहेतुत्वं तल्लक्षणं असाधारण-धर्मो येषामित्यर्थः । मोहस्यापि स्वाश्रयसमवेतरागादिजननद्वारा हेतुत्वाशयेन सौत्रं बहुवचनम् ।

**सु०— तथाऽपि किमित्यत आह** अत इति ।

**अनु०—** अतः केवललीलया ॥

प्रवर्तको

अतः परिशेषादीश्वरः प्रवर्तको भवन्केवललीलयाऽऽनन्दोद्रेकादेव भवेदिति सिद्धः परमेश्वरप्रवृत्तेः पूर्णानन्दाविनाभावः ।

एवमुपोद्घातमुक्त्वा प्रयोगमाह अत इति ।

यत एवं परमेश्वरप्रवृत्तेः सिद्धः पूर्णानन्दाविनाभावः । अतः प्रवर्तकोऽयं केवललीलया पूर्णानन्देन युक्तो भवेदिति । अयमत्र प्रयोगः । ईश्वरः सुखी भवितुमर्हति । प्रवृत्तिकारणत्रयरहितत्वे सति प्रवृत्तिमत्त्वादुन्मत्तवदिति । कार्यानुगुणत्वाच्च कारणस्य महाप्रवृत्त्या महानन्द एव सिद्ध्यतीति ।

श्री० — पूर्णानन्देन युक्तत्वस्य साध्यतया विवक्षायां दृष्टान्ते साध्यवैकल्यमित्यतः प्रयोगप्रकारमाह अयमत्रेति । कथं तर्हि पूर्णानन्दत्वसिद्धिः । आनन्दमात्रसाधनं च प्रकृतानुपयुक्तमित्यत आह कार्यानुगुणत्वाच्चेति ।

प० — अतः केवललीलया प्रेरक इत्येतदेव वाक्यं प्रकारान्तरेण योजयति एवमुपोद्घातमुक्त्वेत्यादि । यत् यस्मादित्यस्योपरिसंबन्ध इत्युक्तस्य योजनान्तरम् प्रदर्श्य यस्मादित्यस्योपरिसंबन्ध इत्युक्तम् तत्प्रदर्शयन्व्याचष्टे यत एवमिति ।

श्री० — नन्वनेन सुखित्वसिद्धावपि न महानन्दत्वसिद्धिः । तथा च महानन्दत्व एवास्येत्ययुक्तमित्यत आह कार्येति ॥ वाचनिकं कण्ठोक्तम् ॥

अनु० — न चेदेष प्राण्यादन्याच्च कः पुमान् ॥

एवं श्रुतेरभिप्रायसिद्धं हेतुं व्याख्याय वाचनिकं विपक्षे बाधकं विवृणोति न चेदिति एष परमात्मा आसमन्तात्काशनादाकाशः पूर्णानन्दो न चेत्तदा कारणान्तराभावान्न किञ्चित्प्रवर्तयेत् । न चेदेष किञ्चित्प्रवर्तयेत्तदा कः पुमान्प्राण्यादन्याच्च । न कोऽपि लौकिकीं वैदिकीं वा प्रवृत्तिं कुर्यात् । स्वातन्त्र्याभावादिति योज्यम् ।

श्री० — 'आसमन्तात्काशते यदाकाशो मुख्यतो हरि'रित्युत्तरानुव्याख्यानं मनसि निधाय श्रौताकाशपदं व्याख्याति आसमन्तादिति । आ इत्यनुवादेन समन्तादिति व्याख्यानम् । भाष्ये न चेदित्यानन्दो न स्यादिति श्रौतापादकस्य सङ्ग्रह इत्यभिप्रेत्यापेक्षितपूरणेन तद्व्याचष्टे पूर्णानन्दो न चेदिति । न स्यादिति नञोऽन्यात्प्राण्यादित्यनेनापि सम्बन्धाच्छ्रुतौ नान्यात्न प्राण्यादित्येतदेवापाद्यकीर्तनमित्यभिप्रेत्य प्रकृततर्केऽप्रयोजकतामाशङ्क्य पूर्णानन्दत्वाभावे प्रवृत्तिकारणाभावापादनद्वारा चेष्टकताभावापादनस्यात्राभिमतत्वेन साक्षात्तदापादनस्यानभिमतत्वान्नाप्रयोजकत्वमित्याशयवान् पूर्णानन्दत्वाभावेन यावत्कारणाभावापादनं मध्ये सूचयन्नेवापाद्यवाक्यतात्पर्यमाह तदेत्यादिना । अत्र तदा कारणान्तराभावा-

दिति मध्ये कारणाभावापादनसूचनम् । न प्रवर्तयेदिति नान्यान्न प्राण्यादिति श्रौतापाद्यतात्पर्यकथनम् । माऽस्त्वीश्वरस्य प्रवर्तकत्वमपीतीष्टापत्तिमशङ्क्य तथा सति जगदनीहं स्यादित्यनिष्टापादनान्तरं मनसि निधाय तत्समर्पणायापेक्षितमनुवृत्त्या पूरयंस्तत्राप्यप्रयोजकत्वं परिहरति **न चेदेष इति** । प्राण्यादन्याच्चेति भाष्यानुसारेण कः पुमान्प्राण्यादन्याच्चेति सम्बन्धम् प्रदर्श्य को ह्येवान्यात्कः प्राण्यादिति श्रौतनिर्देशानुसारेण पदद्वयतात्पर्यमाह **न कोऽपि लौकिकीमित्यादि** ।

**प०**— प्राण्यादन्याच्चेत्यनयोर्व्यत्यासेनार्थोक्तिः 'लौकिकीं वैदिकीं वा प्रवृत्तिमिति । भाष्यनिर्देशक्रमेणानुवादः । श्रौतनिर्देशक्रमेणार्थोक्तिरिति न व्यत्यासदोषः शंक्यः ॥

**श्री०**— वाचनिकं कण्ठोक्तम् ॥

**सु०**— अन्नमयादीनां पञ्चानामपि युक्त्यन्तरेण परब्रह्मत्वं प्रतिपादयितुं सूत्रम् । ॐ मान्त्रवर्णिकमेव च गीयत इति ।

## ब्र. सू. — ॥ ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥

तस्यार्थः । सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णप्रतिपादितमेव वस्तूत्तरेण ग्रन्थेन गीयते । अतश्चान्नमयादयः परं ब्रह्मेति । स्यादेतद्यदि मन्त्रवर्णोऽपि परब्रह्मविषयः स्यात् । तदेव कुतः । मन्त्रवर्णे ब्रह्मेत्येव श्रवणात् । तस्य चामुख्यया वृत्त्याऽन्यत्रापि संभवात् । कथं च मान्त्रवर्णिकार्थप्रपञ्चनार्थमुत्तरो ग्रन्थ इत्यतः सूत्रार्थं विवरितुमुपोद्घातमाह ब्रह्मविदिति ।

**अनु०** ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥
ब्रह्मवित्परमाप्नोतीति यत्प्रथमसूचितम् ॥
तदेव मन्त्रवर्णेन सत्यं ज्ञानमनन्तवत् ॥
लक्षितं

ब्रह्मविदाप्नोति परमित्यनुवाकस्य प्रथमवाक्ये सूचितं तावत्परब्रह्मैव । परशब्दश्रवणात् । तज्ज्ञानस्य मोक्षहेतुत्वोक्तेश्च । तदेव च मन्त्रवर्णेन सत्यं ज्ञानमनन्तवदन्तवन्न भवतीति लक्षितमसाधारणधर्मोपेततया प्रतिपादितमतो मान्त्रवर्णिकं परं ब्रह्मैव । ब्रह्मविदाप्नोति परमित्युक्ते हि शङ्कात्रयमुदेति । किं लक्षणकं तद्ब्रह्म । न हि लक्षणेन विना वस्तु समस्तव्यावृत्ततया शक्यते ज्ञातुम् । कथं च तद्वेदनं किं प्रतीयमानाकारस्यारोपितस्वमुपेत्य तदेवास्मीत्युतान्यथा । ब्रह्मेति पूर्णं प्रतीतम् । न (हि) च तादृशस्य साक्षात्कारोऽस्माकं संभव-

वतीति । का नाम तत्प्राप्तिर्या ज्ञानसाध्या । सर्वगतत्वेन नित्यप्राप्तत्वादिति । तत्परिहाराय मन्त्रवर्णमुदाहरति श्रुतिः । तदेषाभ्युक्तेति । तदभ्येतदाशङ्कात्रयं प्रति तत्समाधानतयेति यावत् । एषा ऋगुक्तोच्यत इत्यर्थः । तत्र सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणशङ्काया उत्तरम् । एतच्च प्रत्येकं लक्षणम् । वक्ष्यमाणप्रकारेण सत्यत्वादीनामव्यभिचारित्वात् । अत एव समुदितं लक्षणमभ्युपेत्य विशेषणकृत्यान्वेषणे परेषां क्लेशः परास्तः । यो वेदेति द्वितीयशङ्कोत्तरम् । परिपूर्णपरिमाणमपि शक्तिवशाद्भक्तानुकम्पयाऽल्पपरिमाणं प्रकटयत्सर्वजीवतदुपकारिकार्यकारणप्रेरकत्वेन हृदयगुहावस्थितं ज्ञेयमिति । सोऽश्नुत इति तृतीयशङ्कोत्तरम् । न संयोगमात्रं तत्प्राप्तिः । नाप्यैक्यापत्त्यादिः । किन्तु तद्व्यक्तिस्थाने ततोऽत्यन्तभिन्नतया सत्यकामत्वादितत्सारूप्याभिव्यक्तिरेवेति ।

शे० — **कथं चेति** । अन्यविषयत्वस्यैव स्पष्टं प्रतिभासनादिति भावः । **विवरितुमिति** । 'तत्र सत्यत्वं सृष्ट्याऽन्नप्राणयोरपी'त्यादिनेति शेषः । **परशब्दश्रवणादिति** । अङ्गीकृत्य चेदं ज्ञापकमुक्तम् । वस्तुतस्तु शक्तिग्रहणसामर्थ्येन प्रथमप्राप्तत्वाद्बाधकाभावाच्च नात्रामुख्यार्थकल्पना युक्तेत्येव समाधानमवधातव्यम् । लक्षणया प्रतिपादितमित्यन्यथाप्रतीतिनिरासाय लक्षितमित्येतदनूद्य व्याचष्टे **लक्षितमिति** । मन्त्रवर्णेनासाधारणधर्मवत्तया परब्रह्मणः प्रतिपादने को हेतुरित्यतोऽन्यथा लक्षणाकाङ्क्षाया अनिवृत्तेरिति भावेन कुतोऽत्र लक्षणाकाङ्क्षा येन तत्पूरणाय मन्त्रवर्णस्य लक्षणवत्तया ब्रह्मप्रतिपादकत्वं स्यादित्यत आह **ब्रह्मविदिति** ॥ **शङ्कात्रयमिति** । यद्यपि लक्षणाशङ्कोदेतीत्येव वक्तुमुचितं तावतैवोक्तशङ्कापरिहारात् । तथाऽपि यो वेदेत्यादिमन्त्रवर्णशेषस्य सार्थक्यलाभायाधिकमुक्तमिति मन्तव्यम् । लक्षणाभिधानप्रयोजनप्रदर्शनेन लक्षणाकाङ्क्षामुपपादयति **न हीति** ॥ **उतान्यथेति** । सकलजीवादिप्रेरकत्वेनेत्यर्थः । एतच्च सर्वजीवप्रेरणाय हृदयगुहानिहितत्वोक्तिव्यावर्त्यप्रदर्शनम् । हृदयगुहास्थितत्वोक्तिलब्धाल्पपरिमाणत्वनिरसनीयां शङ्कां दर्शयति **ब्रह्मेतीति** । पूर्णमपरिच्छिन्नपरिमाणमित्यर्थः ॥ **अस्माकमिति** । परिच्छिन्नज्ञानयोग्यानामित्यर्थः ॥ **वक्ष्यमाणप्रकारेणेति** । 'सद्भावं यापयेद्यस्मात्सत्यं तत्तेन कथ्यते' इत्यादिवक्ष्यमाणप्रकारेणेत्यर्थः ॥ **अव्यभिचारित्वादिति** । संभवव्यभिचाराभ्यामेव विशेषणस्यार्थवत्त्वादिति भावः ॥ **परेषां क्लेश इति** । अत्र यद्रूपेण यन्निश्चितं तद्रूपं यन्न व्यभिचरति तत्सत्यम् । यद्रूपेण यन्निश्चितं तद्रूपं यद्व्यभिचरति तदनृतमित्युच्यतेऽतो विकारमनृतम् । सत्यं ब्रह्मेति ब्रह्म विकाराद्व्यावर्तयति । अतः करणत्वं प्राप्तं ब्रह्मणः । कारणस्य च कारकत्वं । वस्तुत्वान्मृद्वदचिद्रूपता च प्राप्ता । अत्रेदमुच्यते ज्ञानं ब्रह्मेति । ज्ञानं ज्ञप्तिरवबोधः । भावसाधनोऽयं ज्ञानशब्दः ।

ब्रह्मविशेषणत्वात्सत्यानन्ताभ्यां सह । न हि सत्यताऽनन्तता च ज्ञानकर्तृत्वे सत्युपपद्येते । ज्ञानकर्तृत्वेन हि विक्रियमाणं कथं सत्यं भवेत् अनन्तं च । यद्धि न कुतश्चित्प्रविभज्यते तदनन्तम् । ज्ञानकर्तृत्वे च ज्ञानानन्ताभ्यां प्रविभक्तमित्यनन्तता न स्यात् । अतो ज्ञानं ब्रह्मेति कर्तृत्वादिकारकत्वनिवृत्त्यर्थम् । मृदादिवदचिद्रूपतानिवृत्त्यर्थं च प्रयुज्यते । ज्ञानं ब्रह्मेति वचनादन्तवत्त्वं प्राप्तम् । लौकिकज्ञानस्यान्तवत्त्वदर्शनादतस्तन्निवृत्त्यर्थमिहानन्तमित्येवंरूपविशेषणकृत्यान्वेषणे परेषां क्लेश इत्यर्थः । यथा चैतत्तथा तैत्तिरीयशाङ्करभाष्यादौ स्पष्टम् । ब्रह्मेति च पूर्णं प्रतीतमित्युक्तशङ्कापरिहारायोक्तमल्पपरिमाणं प्रकटयदिति ॥ **कार्येत्यादि** । अन्यथा हृदयगुहावस्थितत्वोक्तिर्वैयर्थ्यादिति भावः ॥ **न संयोगमात्रमिति** । सर्वगतत्वेन नित्यसंयुक्तत्वादिति भावः ॥ **नाप्यैक्येति** । ब्रह्मणा सहेति भेदाभिधानादिति भावः ॥ **तद्व्यक्तिस्थान इति** । वैकुण्ठादावित्यर्थः । एतच्च प्रायिकाभिप्रायमित्यविरोधः । मुक्तमात्रस्य ब्रह्मणा सह भोगप्रतीतिनिरासाय सर्वान्कामानश्नुत इत्यस्य तात्पर्यमाह **सत्यकामत्वादीति** । सत्यकामत्वादेर्जीवस्वरूपत्वादभिव्यक्तिरेवेत्युक्तम् ।

स० — **उतान्यथेति** ॥ सकलजीवप्रेरकत्वादिनेत्यर्थः । इयं च शंका सर्वजीवप्रेरणाय हृदयगुहानिहितत्वोक्तिनिवर्त्या दर्शिता । भगवतः सर्व जीवप्रेरणरूपप्रयोजनाभावे हृदयनिहितत्वस्योक्तस्य वैयर्थ्यप्रसंगादिति ध्येयम् । अपरामपि तन्निवर्त्याशंकां दर्शयति ब्रह्मेति ॥ **पूर्णं प्रतीतमिति** । पूर्णमखिलवस्तुक्तगतमपरिछिन्नमित्यर्थः अस्माकं अल्पवस्तुगतपरिछिन्नज्ञानयोग्यानामित्यर्थः । अत एव तदाशङ्कोतरत्वेन स्वस्वहृदयगतं परिछिन्नपरिमाणमेव ज्ञेयमिति निहितं गुहायामित्यनेनोच्यत इति ज्ञातव्यम् ॥ **नैक्यापत्तिरिति** । ब्रह्मणा सहेत्युक्तत्वादिति भावः ॥ **किन्तु तद्व्यक्तिस्थान इति** । वैकुण्ठादावित्यर्थः । इतरत्र परब्रह्मणा सह भोगासंभवादिति ।

प० — ॥ ॐ **मांत्रवर्णिकमेवचगीयते** ॐ ॥ **सूचितमिति** । संग्रहेणोक्तमित्यर्थः । परशब्दस्य प्राप्तिकर्मबोधकस्थल एव श्रवणेन ब्रह्मविशेषणत्वेनाश्रवणात्तद्विशेषणत्वस्याप्यभिमतत्वे त्वावृत्तिप्रसंगात्तज्ज्ञापकाभावाच्चेत्यत आह **तज्ज्ञानस्येति** । अनंतवदित्यादिमूलपदस्यार्थोऽन्तवन्न भवतीत्यादि ॥ **प्रतीयमानाकारस्येति** । ब्रह्मपदेन साक्षिणा च प्रतीयमानस्य पूर्णत्वापूर्णत्वादेराकारस्येत्यर्थः । **उतान्यथेति** । सर्वोत्तमत्वसर्वप्रेरकत्वादिनेत्यर्थः । **ब्रह्मेति पूर्णमिति** । पूर्णं सकलवस्तुगतमपरिच्छिन्नपरिमाणमित्यर्थः । **अस्माकमिति** । परिच्छिन्नज्ञानयोग्यानामित्यर्थः ॥ **श्रुतिरिति** । उपनिषदित्यर्थः । **तद्व्यक्तिस्थान इति** । श्वेतद्वीपादौ ।

या० — ॥ ॐ **मान्त्रवर्णिकमेव च गीयते** ॐ ॥ लक्षितमित्येतत्प्रदर्शितमिति प्रतीतिनिवारणाय व्याचष्टे **असाधारणधर्मेति** ॥ **उतान्यथेति** । सकलजीवप्रेरकत्वादिनेत्यर्थः । इयं च शङ्का

सर्वजीवप्रेरणाय हृदयगुहानिहितत्वोक्तिनिवर्त्या दर्शिता । अपरामपि तन्निवर्त्यामाशङ्कां दर्शयति **ब्रह्मेति पूर्णमिति** । पूर्णं सर्ववस्तुगतमपरिच्छिन्नपरिमाणमित्यर्थः ॥ **अस्माकमिति** । परिच्छिन्नज्ञानयोग्याना-मित्यर्थः ॥ **परेषां क्लेश इति** । आनन्त्यस्य बृहत्त्वापरपर्यायस्य धर्मत्वेन धर्मिसापेक्षत्वान्न स्वरूपलक्षण-त्वमत उक्तम् **सत्यमिति** । तेनापि महासामान्यमात्राभिधानात्तत्पर्यवसानायापरा व्यक्तिर्वक्तव्येत्यपेक्षायां विज्ञानमित्युक्तम् । नन्विदमयुक्तम् । सुखदुःखरागद्वेषादीनां ज्ञानप्रभेदत्वस्य गुरुणाऽभ्युपगतत्वात् । ज्ञानत्वस्यापि महासामान्यतया तत्पर्यवसानाय दुःखादिव्यावृत्तव्यक्त्यन्तरं वाच्यमित्यत उक्तम् आनन्द-मिति । तथा च विज्ञानसामान्यालम्बनमानन्दविशेषो ब्रह्मेत्यानन्द एव बृहत्त्वादिधर्मवत्तया निरुपाधिक-ब्रह्मस्वरूपलक्षणं पर्यवस्यतीति परेषां विशेषलक्षणकृत्यान्वेषणक्लेश इत्यर्थः । अनन्तब्रह्मपदाभ्यामेवा-न्तरहितधर्मिस्वरूपलक्षणाभिधानसम्भवे उक्ताकाङ्क्षानुदयेनेतरवैयर्थ्यात् । आनन्देतरपदवैयर्थ्या-परिहाराच्च । वैषयिकानन्दानामनेकेषामनुभवेनानन्दपदादप्यानन्दत्वसामान्यमात्राभिधाने वैषयिकानन्द-व्यावृत्तव्यक्तिस्वरूपबोधनाय पदान्तरस्यापेक्षितत्वप्रसङ्गाच्चेत्याशयेन क्लेश इत्युक्तम् । ब्रह्मेति च पूर्णं प्रतीतमित्युक्तशङ्कापरिहारायोक्तम् **अल्पपरिमाणमिति** ॥ **कार्यकारणप्रेरकत्वेनेति** । अन्यथा हृदय-गुहावस्थितत्वोक्तेर्वैय्यर्थ्यप्रसङ्ग इति भावः ॥ **नाप्यैक्येति** । ब्रह्मणा सहेत्युक्तत्वादिति भावः ॥ **तद्व्यक्ति-स्थान इति** । वैकुण्ठादावित्यर्थः । इतरत्र परब्रह्मणा सह भोगासम्भवादिति भावः ॥ **सत्यकाम-त्वादीति** । सर्वान्कामानित्युक्तिलभ्यमिति ज्ञातव्यम् । सत्यकामत्वादेर्जीवस्वरूपत्वादभिव्यक्तिरेवेत्युक्तम् ।

श्री० — ॐ **मान्त्रवर्णिकमेव च गीयते** ॐ ॥ प्रथमवाक्ये ब्रह्मशब्देन परब्रह्मैव सूचित-मित्यन्वयः । कथमित्यतः सूचनाप्रकारं दर्शयति **परशब्देति** । अत्र ब्रह्मज्ञानेन परब्रह्मप्राप्तिः श्रूयते न ह्येतत्सम्भवति । अन्यविद्ययाऽन्यगतेरयोगात् । अतः परब्रह्मप्राप्तिरूपमोक्षजनकज्ञान-विषयस्यापि परब्रह्मत्वं सूचितमित्यर्थः । युक्त्यन्तरं चाह **तज्ज्ञानस्येति** । अत्र ब्रह्मज्ञानस्य मोक्ष-हेतुत्वं श्रूयते । मोक्षजनकज्ञानविषयत्वं च परब्रह्मण एव नान्यस्य । तमेवं विद्वानिति श्रुतेरिति भावः । एवमेव ब्रह्मविदाप्नोति परमिति सूचयित्वेति भाष्यस्याभिप्रायो द्रष्टव्यः । तत्त्वप्रकाशिकायां स्पष्टमनुक्त-त्वादिति ध्येयम् ॥ **अनन्तवदन्तवन्न भवतीति** । श्रुतावनन्तमिति स्पष्टोक्तेराचार्यैरनन्तवदिति कस्मादुक्त-मिति चेत् । उच्यते । अनन्तमित्यत्र न अन्तमनन्तमिति अनश्व इत्यादिवन्नञ्समासेऽन्तशब्दोक्तनाश-प्रतियोगिकान्योन्याभावः प्रतीयते । तच्चासङ्गतम् । अतः श्रौतोऽन्तशब्दोऽन्तवदिति व्याख्यातः । ततश्चान्तशब्दोक्तत्रिविधनाशवन्न भवतीत्यनन्तवदिति नञ्समासः । एवञ्च श्रुतावन्तशब्दोऽर्श आद्य-जन्ततयाऽन्तवदित्यर्थकः । तथा चान्तं न भवतीत्यनन्तमिति नञ्समासो द्रष्टव्यः । यथाऽनादिमत्परं-ब्रह्मेत्यत्रानादीत्येव पदच्छेदे न आदि अनादीति नञ्समासे आदिभिन्नत्वप्रतीत्या आदिमन्न भवतीत्यना-

दिमदिति नञ्समासः कृतस्तद्वदिति ध्येयम् ॥ **सत्यकामत्वेति** । मुक्तानां सत्यकामत्वं नाम भगवत्कामानुकूलकामत्वमेवेति ज्ञेयम् ॥

च० — **ब्रह्मेति पूर्णमिति** । सर्वदेशगतमित्यर्थः । अस्माकम् । अपरिच्छिन्नरूपं परिच्छेत्तुमनीशानामित्यर्थः । **परेषां क्लेश इति** तैत्तिरीयसाङ्करभाष्यादौ स्फुटमेतत् ।

सु० — **अस्त्वेवं प्रथमवाक्यसूचितार्थस्य परब्रह्मत्वात्तदुत्थशङ्कापरिहारार्थस्य मन्त्रवर्णस्यापि तत्परत्वम् । तथाऽपि किं प्रकृत इत्यतः सूत्रार्थं विवृणोति** तत्रेति ।

अनु० — तत्र सत्यत्वं सृष्ट्याऽन्नप्राणयोरपि ॥
उक्तं ज्ञानं तु मनसा विज्ञानेनाप्युदीरितम् ।
अनन्तत्वं तथाऽऽनन्दमयवाचाऽप्युदाहृतम् ॥

**तत्र लक्षणेषु सत्यत्वं सृष्ट्या 'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इति सृष्टिप्रकरणेन, 'स वा एष पुरुषोऽन्नरसमय' इति 'तस्माद्वा एतस्मादन्नरसमयादि'ति चान्नप्राणयोरन्नमयप्राणमययोः प्रकरणाभ्यामु(मप्यु)क्तम् । ज्ञानं तु ब्रह्मलक्षणं मनसा । 'तस्माद्वा एतस्मात्प्राणमयादि'त्यादिना मनोमयप्रकरणेन । विज्ञानेनापि । 'तस्माद्वा एतस्मान्मनोमयादि'त्यादिना विज्ञानमयप्रकरणेनाप्युदीरितम्। तथाशब्दः समुच्चये । अनन्तत्वमपि ब्रह्मलक्षणम् । आनन्दमयवाचा । 'तस्माद्वा एतस्माद्विज्ञानमयादि'त्यादिनाऽऽनन्दमयप्रकरणेन । अपिपदेनोत्तरवाक्यैरप्युदाहृतम् । अत उत्तरेषां षण्णामपि प्रकरणानां मान्त्रवर्णिकपरब्रह्मलक्षणविवृतित्वात्(परं) ब्रह्मैवान्नमयादय इति सूत्रार्थः ।**

शे० — **उत्तरवाक्यैरपीति** । आनन्दमयप्रकरणादुपरितनैः को ह्येवान्यात्कः प्राण्यादित्यादिवाक्यैरपीत्यर्थः ।

प० — **अपि पदेनोत्त(नतदुत्त)रवाक्यैरपीति** । ''कोह्येवान्या''दित्यादिवाक्यैरित्यर्थः । एतच्च विवरिष्यते । ''नाल्पेसुखमितिप्रोक्त्यैवानन्दमये''त्यादिव्याख्यानावसरे ॥ **षण्णामपि प्रकरणानामिति** । सृष्टिप्रकरणेन सह षट्त्वं ध्येयम् ॥

या० — **उत्तरवाक्यैरपीति** । आनन्दमयप्रकरणादुपरितनैरित्यर्थः ॥ **षण्णामपीति** । इदं चोत्तरवाक्यानामप्यानन्दमयप्रकरणान्तर्भावमभिप्रेत्येति द्रष्टव्यम् ॥

सु० — **सत्यत्वं सृष्टिप्रकरणेनोक्तमित्युक्तम् । तत्कथमित्यत आह** सद्भावमिति ।

अनु० — सद्भावं यापयेद्यस्मात्सत्यं तत्तेन कथ्यते ॥
इति सृष्टिरिह प्रोक्ता

सच्छब्दः सद्भाववाची । सद्भावे साधुभावे च सदित्येतत्प्रयुज्यत इति वचनात् । सद्भावो जन्म । यथोक्तम् । सद्भावशब्देन प्रजननं सूचितमिति । तथा च सच्छब्दे जन्मवाचिनि कर्मण्युपपदे यातेरन्तर्णीतण्यर्थादातोऽनुपसर्गे क इति कप्रत्यये कृतेऽयस्मयादीनि छन्दसीत्युपपदस्य भसंज्ञायां सत्यमिति भवति । ततः सत्सद्भावं जन्म यापयेत्प्रापयेत्स्वव्यतिरिक्तं सर्वं यस्मात्तस्मात्तद्ब्रह्म सत्यं कथ्यत इति सकलजगज्जन्मकारणत्वं सत्यशब्दार्थं हृदि कृत्वा आत्मन आकाश इत्यादिश्रुत्येहानुवाके सृष्टिः प्रोक्तेत्यर्थः ।

अस्तु जगत्स्रष्टृत्वं सत्यशब्दार्थः । तथाऽप्यात्मन आकाश इत्यादिसृष्टिप्रकरणं तद्व्याख्यानमिति न युक्तम् । अवयवार्थकथनादेरभावादित्यत आह जगदिति ।

अनु० — जगत्सद्भावयापकम् ॥
ब्रह्मेति स्थापनायैव

सत्यशब्देन यज्जगत्सद्भावयापकं ब्रह्मेत्युक्तं तस्यार्थस्य स्थापनायैव सृष्टिः प्रोक्ता नावयवार्थकथनाद्यर्था । एतदुक्तं भवति । नावयवार्थकथनादिकमेव व्याख्यानम् । किं तूक्तस्थापनमपि । प्रकृते च सत्यं ब्रह्मेति लक्षणेऽभिहितेऽसंभवीदं पञ्चानां महाभूतानामेव जगज्जन्मादिकारणत्वादित्याशङ्क्य महाभूतानामपि ब्रह्मैव कारणं तदन्तर्गतं तत्सत्तादिप्रदं चातो ब्रह्मैव जगज्जनकमिति तत्स्थापनमात्मन आकाश इत्यादिना क्रियत इति भवतीदं तद्व्याख्यानमिति ।

शे० — सद्भावशब्दस्य सत्तार्थताभ्रांतिपरिहारायाह सद्भावो जन्मेति । कुतः सत्तावाचिनस्तस्य तत्परित्यागेन जन्मार्थत्वमित्यतो गीताभाष्यसम्मत्या तत्समर्थयते ॥ यथोक्तमिति । सप्तदशाध्याये सद्भावे साधुभावे चैतच्छ्लोकव्याख्यानावसर इत्यर्थः । प्रागसतः सत्तापादानं प्रजननमित्यर्थः । यद्यपि सद्भावशब्दः सत्तामात्रवची तथाऽप्यत्र ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात्सत्ताविशेषप्रजननपर इति ज्ञायत इति प्रतिपादयितुमुक्तमित्यनुक्त्वा सूचितमित्युक्तमित्यवधेयम् ॥ कप्रत्यय इति । उपलक्षणं चैतत् । आतो लोप इटि चेत्याकारलोपे च सतीत्यपि द्रष्टव्यत् । ननु झलां जशोन्त इत्यनेन जश्त्वाप्त्त्या सद्यमिति भवितव्यं सत्यमिति तु कथमित्यत आह छन्दस्युभयथेति । अत्रायस्मयादीनि छन्दसीत्युपपदस्य भसंज्ञायामित्येव पाठः स्वरसत्वात्प्रायिकत्वा'त्सत्तेर्यातनाच्चे'वेति सत्यशब्दव्याख्यानपरचतुर्थपादीयानुव्याख्यानव्याख्यानपर'अयस्मयादीनि छन्दसी'ति भसंज्ञास्मरणाज्जश्त्वाभाव इति सार्वत्रिकटीकाकारीयोत्तरग्रन्थानुसारित्वाच्चेति द्रष्टव्यम् । छन्दस्युभयथेतिक्वाचित्कपाठे त्वयमर्थः । यद्यपि तृतीया-

ध्यायस्थस्य छन्दस्युभयथेत्यस्य सार्वधातुकार्धधातुकोभयविषयकत्वमेव । षष्ठाध्यायगतस्याप्याद्यस्य वृत्तिकृन्मते तिसृचतसृशब्दयोर्नामि दीर्घत्वादीर्घत्वविषयत्वमेव । हरदत्तादिमते त्वविशेषेण नामि दीर्घत्वादीर्घत्वविषयत्वमेव । तत्स्थस्यैव द्वितीयस्य तस्य तु भूसुधियोर्यणादेशनिषेधापवादकतयेङ्यणादेशोभयविषयत्वमेव न तूभयपदसंज्ञोभयविषयत्वमिति न तदुभयोदाहरणमिदं संभवति तथाऽप्ययस्मायदीनि छन्दसीति सूत्रीयस्य छन्दस्युभयसंज्ञान्यपीति वक्तव्यमिति वार्तिकस्यार्थानुवादोऽयम् । तथा च छन्दसि भत्वपदत्वयोः समावेशस्य वार्तिककृता क्वचिदङ्गीकारादुपपदस्य भसंज्ञायां जश्त्वाभाव उपपद्यत इति । अत एव चतुर्थपादे 'सच्च त्यच्चाभवदि'त्येतद्ग्रन्थव्याख्यानावसरे 'अयस्मयादीनि छन्दसी'ति भसंज्ञाश्रयणाज्जश्त्वाभाव इति ग्रन्थकृद्वक्ष्यतीति द्रष्टव्यम् ।

नन्वेवमुक्तार्थस्यापकत्वप्राप्तावपि न तद्व्याख्यानत्वप्राप्तिरवयवार्थकथनादिरूपत्वस्यैव तत्र तन्त्रत्वात्प्रयोजनाभावेन स्थापनस्याप्यकर्तव्यत्वाच्चेत्यत आह **एतदुक्तं भवतीति** ।

प० — **इति वचनादिति** । गीतावचनादित्यर्थः ॥ **यथोक्तमिति** । सप्तदशे गीताभाष्ये उक्तमित्यर्थः ॥ **कर्मणीति** । कर्मकारके ॥ **यातेरिति** । 'याप्रापण'इतिधातोरित्यर्थः ॥ **आत इति** । अनुपसर्गे कर्मण्युपपदे आकारान्ताद्धातोः कप्रत्ययो भवतीति कप्रत्यये कृते लशक्वतद्धित इति ककारस्येत्संज्ञायां तस्य लोप इति तस्य लोपे 'आतो लोप इटि चे'त्याकारलोपे च सति रूपम् । सच्छब्दतकारस्य झलाञ्जशोन्त इति जशादेशे दकारः कुतो नेत्यत आह **अयस्मयादीनीति** । अयस्मयादीनि शब्दरूपाणि छन्दसि विषये भसंज्ञानि भवन्तीति आद्याध्यायचतुर्थपादस्थसूत्रस्यार्थः । तस्याकृतिगणत्वेन वृत्तावुक्तेः तत्रायमपि शब्दो ग्राह्यः । तथा चापदान्तत्वाज्जश्त्वाभाव इति भावः । ननु महाभूतानां ब्रह्मैव कारणमित्ययुक्तम् । आकाशादेरेव वाय्वादिकारणत्वादित्यत उक्तम् **तदन्तर्गतं चेति** । महाभूतानां ब्रह्मैव कारणम् । तथा चाकाशाद्यन्तर्गतं सद्वाय्वादिकारणं च भवतीति भावः । तदन्तर्गतेः किम्फलमित्यत उक्तं **तत्सत्तादिप्रदश्चेति** । आकाशादिसत्ताशक्तिप्रतीतिप्रवृत्त्यादिप्रबोधनं कुर्वदित्यर्थः ।

या० — **आतोऽनुपसर्गे इति** । अनुपसर्गे कर्मण्युपपदे आकारान्ताद्धातो कप्रत्ययो भवतीति सूत्रार्थः । गोद इत्युदाहरणम् । आतो लोप इटि चेत्याकारलोपे सतीत्यपि ग्राह्यम् । ननु झलां जशोऽन्ते इति जश्त्वे सद्यमिति भवेत्सत्यमिति तु कथमित्यत आह **छन्दस्युभयथेति** । 'अयस्मयादीनि छन्दसी'ति सूत्रे वार्तिकं क्वचिदुभयमपि न भवतीति । तस्यायमर्थानुवादः छन्दसि क्वचिद्भत्वं पदत्वं चेत्युभयथाऽपि भवतीति । न तु सूत्रम् । अस्य सूत्रस्य तृतीयाध्यायगतस्य सार्वधातुकार्धधातुकोभयपरत्वेन षष्ठाध्यायस्थस्य च न' भूसुधियोःछ' न्दसि क्वचिद्यणादेशनिषेधापवादकत्वेन भपदसंज्ञारूपोभय-

विषयकत्वाभावादिति ज्ञातव्यम् । क्वचिदयस्मयादीनि छन्दसीत्युपपदस्य भसंज्ञायामिति पाठः । तथाऽपि तत्सूत्रस्थोक्तवार्तिकस्मरणार्थमेव सूत्रोदाहरणमिति ध्येयम् ॥ **तदन्तर्गतं तत्सत्तादिप्रदं चेति** । तद्देशान्तर्नियामको हरिश्चाकाशशब्दोक्त' इत्यादिना सृष्टिप्रकरणे भगवत्सृष्टेरपि वक्ष्यमाणत्वेन 'तदुपयोगकथनार्थमिति ज्ञातव्यम् ।

**श्री०— यथोक्तमिति** । गीताभाष्य इत्यर्थः ॥ **प्रजननं सूचितमिति** । प्रजननं प्रागसतः सत्तापादनम् । यद्यपि सद्भावशब्दः सत्तामात्रवाची तथाऽप्यत्र ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात्सत्ता-विशेषप्रजननपर इति प्रतिपादयितुं सूचितमित्युक्तमिति द्रष्टव्यम् ॥ **कप्रत्यय इति** । तथाच सदुपपदात् या प्रापणेऽस्माद्धातोऽनुपसर्गे कः । आदन्ताद्धातोः कर्मण्युपपदे कप्रत्ययः स्यादिति कप्रत्यये ककारलोपे आतो लोप इटि चेति धात्वाकारलोपे सत् य् अ सत्येति प्रातिपदिकम् । ननु 'झलां जशोऽन्ते' पदान्ते' झलां जशः स्युः इति सूत्रेण सदिति पदान्ते झलस्तकारस्य दकाराख्ये जशि सद्यमिति स्यादित्यत उक्तम् **उपपदस्य भसंज्ञायामिति** । भसंज्ञा च पदसंज्ञापवादिका । तथा चात्र पदसंज्ञाऽभावेन पदान्तत्वा-भावान्न जश्त्वप्राप्तिरितिसत्यमिति युक्तमिति भावः । स्वव्यतिरिक्तं सर्वमिति द्वितीया ॥

**च०**— सद्भावपदस्य सत्तारूपार्थप्रत्यायकताप्रतीतिमवतारयति **सद्भावो जन्मेति** । उक्तार्थे गीताभाष्यं प्रमाणयति **यथोक्तमिति** । सप्तदशाध्याये सद्भावे साधुभावे चेति काशिकाव्याख्यावसर इत्यादिः। असतः सत्तापादनरूपप्रजननमित्यर्थः । सद्भावशब्दस्य सत्तामात्राभिधायकत्वेपि प्रकृते ब्रह्मणो-जगज्जनकत्वस्याभिधित्सितया सत्ताविशेषरूपप्रजननतात्पर्यक एवायं विज्ञायत इति सूचितमित्यनेन ध्वन्यते । **कप्रत्यय इति** 'आतोनुपसर्गे कः' अनुपसर्गे कर्मवाचके उपपदे आदन्ताद्धातोः कप्रत्ययो भवतीति । गोदः कंबलद इत्यादाविव कप्रत्यये कृते आतो लोप इटि चाजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यादित्याकारलोपे च सतीत्यर्थः । ननु झलां जशोऽन्त इति जश्त्वप्रसङ्गेन सद्यमिति भवितव्यमिति सत्यमिति कथं निष्पद्येतेत्यत आह **अयस्मयादीनीति** । छन्दस्युभयथेत्यपि क्वाचित्कः पाठस्तु सत्ततेर्यातनाच्चैवेति सत्यपदव्याख्यानरूपतुरीयपादीयानुव्याख्याप्रतीकार्थापनपरा । अयस्मयादीनि छन्दसीति भसंज्ञास्मरणाज्जश्त्वाभाव इति सकलकोशगतोत्तरग्रन्थाननुरोधादप्रायिकत्वाच्च न स्वरस इति व्याचक्षाणाः ।

**सु०— अन्नमयप्रकरणं सत्यशब्दार्थ इत्युक्तं तत्कथमित्यत आह सत्त्वमिति** ।

अनु०— सत्त्वं जीवनमेव च ॥

विशीर्णता च सत्त्वं स्यात्सत्नमित्याहुरेव यत्

न केवलं जन्मैव सच्छब्दार्थः किन्तु जीवनं च प्राणधारणलक्षणं सत्त्वमेव सच्छब्दप्रवृत्ति निमित्तमेव । अस्ति देवदत्त इत्युक्ते जीवतीति प्रत्ययात् । विशीर्णता च शैथिल्यलक्षणा । सत्त्वं सच्छब्दप्रवृत्तिनिमित्तं स्यात् । कुतः । यद्यस्माद्विशीर्णं वस्तु सन्नमित्याहुः । एवशब्दः षद्लृविशरणगत्यवसादनेष्विति पाठान्मुख्यएवायं प्रयोग इति सूचयति । तथा चास्तेः शत्रन्तस्य सदेः क्विबन्तस्य वा सदिति रूपम् । भावप्रधानं चैतत् । सत् सत्त्वं जीवनं विशरणं वा भूतानां यापयतीति सत्यमित्युक्तं भवति ।

किमतो यद्येवमित्यत आह अत इति ।

अनु० — अतोऽद्यताऽत्तृताऽन्नत्वं सत्यशब्दार्थ एव हि

यत एवं सकलभूतानां जीवनविनाशहेतुत्वं सत्यशब्दोक्तम् । अतः सत्यशब्दार्थ एवान्नत्वमन्नशब्दप्रवृत्तिनिमित्तम् । तत् कथम् । हि यस्मादुपजीव्यत्वलक्षणाद्यता विनाशकत्वलक्षणात्तृता च तदिति ।

प्राणमयप्रकरणं च सत्यशब्दार्थ इत्युक्तम् । तत्कथमित्यत आह प्राणमिति ।

प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्चये
आयुः प्राणो हि भूतानामिति यद्गतिजीवने ॥
उक्ते सदिति धात्वर्थो गतिश्चातो हि सत्यता ॥

प्राणत्वं

देवादयः प्राणं परमात्मानमनु तत्प्रेरणया प्राणन्ति चेष्टन्ते । स प्राणः परमात्मा सर्वेषामायुर्जीवनहेतुश्चातोऽसौ प्राण उच्यत इति मन्त्रेण प्राणन्ति प्रवर्तन्ते जीवन्ति वा सर्वभूतान्यनेनेति प्राणशब्दार्थतया गतिजीवने भूतानां गतिजीवनप्रदत्वमिति यावत् उक्ते । यद्यस्मात् यतश्च सदिति धात्वर्थौ, गतिर्जीवनं चास्ति धात्वर्थः । ताभ्यां च शतरि क्विपि च कृते सदिति भवति । तच्च भावप्रधानं विवक्षित्वा सत्सत्त्वं गतिं जीवनं वा भूतानां यापयतीति सत्यशब्दोऽपि गतिजीवनप्रदत्वमाह । अतः सत्यता प्राणत्वं सत्यप्राणशब्दयोरेकार्थत्वमिति व्याख्येयम् ॥ अनेनान्नमयप्राणमयप्रकरणे सत्यशब्दार्थप्रपञ्चनेन तद्व्याख्याने इत्युक्तं भवति ।

ज्ञानशब्दार्थो मनोमयप्रकरणमित्युक्तम् । तत्कथमित्यत आह अवबोधार्थ इति ।

अवबोधार्थो मनुधातुः प्रकीर्तितः ॥

प्रकीर्तितो मनु अवबोधन इति व्याख्यातः । ततश्च तस्माद्भावेऽसुन्प्रत्यये विहिते मन इति ज्ञानमिति चैकार्थता भवति । विज्ञानमयप्रकरणस्य ज्ञानशब्दार्थत्वं स्पष्टमेवेति न प्रपञ्चि-

तम् । अत्र ज्ञानं ब्रह्मेति लक्षणेऽभिहिते सकलचेतनसाधारण्यादलक्षणमेतदित्याशंकायां नावबोधमात्रं ज्ञानमिहविवक्षितं । किंतु सकलपदार्थसामान्यविशेषाकारविषयमित्यतो नातिव्याप्तिरित्याभ्यां प्रकरणाभ्यां लक्षणस्यातिव्याप्तिपरिहाराय प्रपञ्चनं कृतमिति ।

आनन्दमयप्रकरणेनानन्तत्वं व्याख्यातमित्यभिहितम् । तत्कथमित्यत आह नाल्प इति ।

नाल्पे सुखमिति प्रोक्त्यैवानन्दमयतोक्तितः ।
अनन्तत्वं सुनिर्णितं पूर्णानन्दो हि नाल्पके ॥

नानन्दमयप्रकरणमनन्तपदनिर्वचनपरत्वादिना रूपेण तद्व्याख्यानम् । किं नामानन्तत्वलक्षणस्यासम्भावनाशङ्कायामानन्दमयतोक्त्याऽनन्तत्वं सुनिर्णीतमुपपादितम् । परमेश्वरोऽनन्तः पूर्णानन्दत्वादिति । ननु साध्यसाधनयोः क्वाप्यदर्शनेन व्याप्त्यभावात्कथमेतत् । मैवम् । नाल्पे सुखमस्तीति श्रुत्युक्त्या हि यस्मादल्पकेऽन्तवति पूर्णानन्दो नास्तीति निश्चीयते । व्यतिरेकव्याप्तिरस्तीत्यर्थः । नन्वनन्तत्ववत्पूर्णानन्दोऽप्यसिद्ध एव । सत्यम् । अत एव को ह्येवान्यादित्यादिनोपपादयति श्रुतिः । उक्तं चैतदानन्दमयवाचाऽपीति ।

सूत्रार्थमुपसंहरति अत इति ।

अतो हि मन्त्रवर्णोक्तिविस्तृतिस्तु समस्तया ॥
क्रियते परया यस्मात्

अत इत्युक्तप्रकारेण । हिशब्दः प्रसिद्धौ तुशब्दोऽवधारणे । परया मन्त्रवर्णादुत्तरया श्रुत्या । तस्माद्विष्णुरेवान्नमयादिशब्दवाच्य इति पूर्वेण सम्बन्धः ।

शे० — अस्तेः शत्रन्तस्येति । तथा चास् भुवीत्यस्माल्लटि तस्य लटः शतृशानचाविति शतरि श्नसोरल्लोप इति धात्वकारलोपे च सदिति रूपसिद्धिरिति भावः । प्राणन्ति चेष्टन्त इति । अन चेष्टायामिति धातोरिति भावः ॥ प्रवर्तन्त इति ॥ उक्तधातोरिति भावः ॥ जीवन्ति चेति । धातूनामनेकार्थत्वादिति भावः ॥ सदिति धात्वर्थो गतिरिति । पद्लृविशरणगत्यवसादनेष्विति धातोरिति भावः ॥ अस्तिधात्वर्थ इति । अस्ति देवदत्त इत्युक्ते जीवतीति प्रत्ययादिति भावः ॥ ताभ्यां चेति । नात्र यथाक्रमं सम्बन्धः किं त्वस्तेः शतरि सदेः क्विपि चेति यथायोग्यमेवेति ध्येयम् । ननु मनोमयविज्ञानमयप्रकरणयोर्ज्ञानशब्दावयवार्थकथनादिरूपत्वाभावात्कथं तद्व्याख्यानत्वमित्यतस्तदभावेऽप्युक्तलक्षणातिव्याप्तिनिरासेनोक्तलक्षणव्यवस्थापकत्वाद्युक्तं व्याख्यानत्वमित्याह ज्ञानमिति । नन्वनन्तत्वं तथाऽऽनन्दमयवाचेत्यानन्दमयप्रकरणस्यानन्तत्वविवरणार्थत्वोक्तेस्तत्र विद्यमानेन नाल्पे सुखमस्तीति वाक्येन

कथं तदुपपादनमित्यतस्तेनानन्दमयप्रकरणस्य तद्विवरणत्वोक्तावप्यानन्दमयवाचाऽपीत्यपिशब्देन तदुत्तरप्रकरणस्थ'कोह्येवान्यादि'त्यादिवाक्यानमिव स्थलान्तरस्थनाल्पे सुखमस्तीतिवाक्यस्यापि सङ्ग्रहेणानन्दमयप्रकरणमात्रस्य तदुपपादकत्वानभ्युपगमाद्युक्तमेतत्प्रकरणस्थस्यापि तस्योपपादकत्वमित्याह **उक्तं चैतदानन्दमयवाचाऽपीति ।** इत्यादिनेत्यादिपदेनानन्दं ब्रह्मणो विद्वान्न बिभेति कदाचनेति विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते इत्यभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवतीति मनोमयादिज्ञानान्मोक्षप्रतिपादकवाक्यानां सङ्ग्रहः ।

प० — **अस्तेःशत्रंतस्येति ।** 'असभुवी'त्यस्य शतृप्रत्यये'श्नसोरल्लोप'इत्यकारलोपे सदिति रूपमिति भावः । नन्वनंतत्वमानंदमयप्रकरणेन विव्रियत इत्युक्तं तदयुक्तम् । कोह्यीत्यस्य हेत्वसिद्धिनिरासकस्य तत्प्रकरणेऽभावात् । तेन विनाऽनन्तत्वलक्षणोपपादनाभावादित्यत आह **उक्तं चैतदिति ।** आन्दमयवाचाऽपीत्यपिपदेन तदुत्तरवाक्यसमुच्चायकेनान्दमयप्रकरणेन तदुत्तरवाक्यैश्चानन्तत्वमुदाहृतमिति प्रागेवोक्तमेतदित्यर्थः ॥

या० — **अस्तेः शत्रन्तस्येति ।** अत्र श्नसोरल्लोप इत्यकारलोपो द्रष्टव्यः ॥ **प्राणन्ति प्रवर्तन्त इति ।** अन चेष्टायामिति धातोरिति भावः ॥ **जीवन्ति वेति ।** धातूनामनेकार्थत्वादिति भावः । यथोक्तम् । 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते । 'प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः' इति । नन्वेवमानन्दमयप्रकरणमनन्तत्वस्योपपादकमित्ययुक्तम् । को ह्येवान्यादित्यादिवाक्यस्य तद्गतत्वाभावादित्यत आह **उक्तं चैतदिति ।** एवमुत्तरवाक्यानामप्यनन्तत्वोपपादकत्वमपिशब्देन पूर्वमुक्तं नानन्दमयप्रकरणमात्रस्येत्यर्थः । ये प्राणं ब्रह्मोपासत इत्यादिनेत्यत्रादिपदे'नानन्दं ब्रह्मणो विद्वान्न बिभेति कदाचन' 'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति' । 'शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते' । अभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवती'ति वाक्यानां सङ्ग्रहः ॥

श्री० — **अस्तेः शत्रन्तस्येति ।** अस भुवि अस्मात् शतृप्रत्यये शकारऋकारयोर्लोपे अस् अत् इति स्थिते 'श्नसोरल्लोपः' इति अस् इत्यत्रत्याकारस्य लोपे स् अत् सदिति रूपम् । जीवनवदित्यर्थः। **सदेरिति ।** षद्लृ विशरणेत्यदिधातोः क्विपि तस्य लोपे सति भवति । सन्नमिति तदर्थः ॥ **भावप्रधानं चैतदिति ।** सदिति पदं धर्मविशेषकप्रतीतिजनकमित्यर्थः । भावप्राधान्यं दर्शयति ॥ **सत्त्वमिति ।** जीवनमेव भावो जीवनवतो । विशरणमेवेत्यर्थः ॥ **उपजीव्यत्वलक्षणाद्यतेति ।** जीवनहेतुत्वमित्यर्थः । ताभ्यां षद्लृ विशरणगत्यवसादनेषु अस् भुवीति धातुभ्याम् । अस्तेः शतरि सदेः क्विपि चेति विवेकः रूपसिद्धिः पूर्वोक्तैव ॥ **सत्वं गतिमिति ।** प्रवर्तकत्वं चेष्टकत्वम् । गतिमतो जीवनवतश्च भावो गतिजीवने एवेति भावः ॥ **तस्माद्धात्र इति ।** मन् धातोर्भावे असुनप्रत्यये नकार-

लोपे मन् अस् मनस् इति प्रातिपदिकं सिध्यति । न प्रपञ्चितमाचार्यैरिति शेषः । ननु तर्हि स्पष्टत्वे ब्रह्मवल्ल्यां मनोमयविज्ञानमयप्रकरणाभ्यां ज्ञानत्वं कस्मात्प्रपञ्चितमित्यत आह ॥ **ज्ञानं ब्रह्मेतीति** ॥ **सकलपदार्थेति** । तद्वतेत्यर्थः ॥ **अनन्तत्ववदिति** । साध्यवद्धेतोरपि सन्दिग्धत्वात्कथं पूर्णानन्दत्वं हेतुरिति भावः उत्तरमाह ॥ **अत एवेति** । पूर्णानन्दत्वहेतोरसिद्धत्वादेवेत्यर्थः । एवञ्च को ह्येवान्यादिति वाक्येन पूर्णानन्दत्वस्योपपादितत्वादनन्तत्वोपपादकत्वं दुक्तमित्याशयः । ननु तर्हि को ह्येवान्यादित्यस्य वाक्यस्य पूर्णानन्दत्वोपपादकतयाऽनन्तत्वोपपादकता प्राप्ता नानन्दमयप्रकरणस्यैव । अस्य वाक्यस्यानन्दमयप्रकरणादुत्तरत्र सत्वेनानन्दमयप्रकरणान्तर्गतत्वाभावादिति चेन्न । आनन्दमयप्रकरणवदुत्तरवाक्यानामप्यनन्तत्वोपपादकतायाः पूर्वमुक्तत्वान्नोक्तदोष इत्याशयेनाह ॥ **उक्तं चैतदिति** । अपिपदेनेति शेषः ॥ **मन्त्रवर्णादुत्तरयेति** । सृष्ट्यादिप्रकरणषट्केनेत्यर्थः ॥ छ ॥

च० — **अस्तेः शत्रन्तस्येति** । असभुवीति धातुव्याख्यानात्सत्तार्थादस्तेर्लटः शतृशानचावप्रथमा समानाधिकरण इति तस्य शत्रादेशे श्नसोरल्लोप इति इतिधात्ववयवाकारलोपे च सदिति सेत्स्यतीति भावः । प्राणन्ति चेष्टन्त इति । अनचेष्टायामिति धातुव्याख्यानादिति भावः । जीवन्ति चेति बह्वर्था अपि धातवो भवन्ति तद्यथा वपिः प्रकिरणे दृष्टः छेदने चापि वर्तते । केशश्मश्रु वपतीत्यादिभाष्योक्तेरिति भावः । **सदिति धात्वर्थो गतिरिति** । षद्लृविशरणगत्यवसादनेष्विति धातुव्याख्यानादिति भावः । **अस्तिधात्वर्थ इति** । अस्ति देवदत्त इत्युक्ते जीवतीति प्रत्ययादिति प्रागभिहितत्वादिति भावः । **ताभ्यामिति** । अस्तेः शतरि सदेः क्विपि चेति यथायोग्यमेव योजनीयं न यथाक्रमम् ।

सु० — **एवमानन्दमयोऽभ्यासादित्यादिसूत्रैः स्वपक्षसाधनं विधाय परपक्षप्रतिक्षेपार्थं सूत्रम्** नेतरोऽनुपपत्तेरिति ।

## ब्र. सू. ॥ ॐ नेतरोऽनुपपत्तेः ॐ ॥

तत्र प्रतिज्ञांशं व्याख्याति इतर इति । **इतरो जीवो वा शरीरादिकोशो वा प्रकृतिर्वाऽ-**

अनु० — ॥ ॐ नेतरोऽनुपपत्तेः ॐ ॥

इतरोऽत्र न कथ्यते ॥

**त्रान्नमयादिप्रकरणे न कथ्यते । कुतः । अनुपपत्तेः । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासत इत्यादिनाऽन्नमयादिज्ञानान्मोक्षः प्रतीयते । अन्नमयादिशब्दानां च जीवादिवाचित्वे तदनुपपत्तेरित्यर्थः ।**

**कुतोऽनुपपत्तिरित्यत आह** पुरुषमिति ।

पुरुषं वेत्ति यो मुच्येन्नान्यः पन्था हि विद्यते ॥
इति श्रुतेरन्यवेदी कथं मुक्तिं प्रयास्यति ॥

**अनेन 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते' इति श्रुतिं सूचयति । नन्वत्र तमित्युच्यते न विष्णुमिति । मैवम् । सहस्रशीर्षा पुरुष इत्यादौ प्रकृतपुरुषस्य तमिति परामर्शादित्यभिप्रेत्योक्तम्** पुरुषमिति । यच्छब्दश्रवणात्स इति द्रष्टव्यम् । **मुच्येन्मुच्येत । व्यत्ययो बहुलमिति वचनात् । अन्यः परमपुरुषज्ञानात् । पन्था मोक्षस्य । हिशब्दः श्रुतेः प्रसिद्धत्वद्योतकः ।**

**नन्वस्तु पुरुषज्ञानादेव मोक्षः । पुरुषोऽप्यन्यश्चेत्कथं नान्यज्ञानान्मोक्ष इत्यत आह** पुरुष इति ।

पुरुषः पर आत्माऽजो ब्रह्म नारायणः प्रभुः ॥
महानानन्द उद्विष्णुर्भग ओम इतीर्यते ॥
स्वयं नारायणो देवो नान्यस्यैतानि कस्यचित् ।

**स्वयं मुख्यया वृत्त्या । एतानि नामानि ।**

**कुत एतेषां भयुवन्नामत्वमित्यतः ॐ शब्दस्य विष्णुवाचित्वे तावद्युक्तिमाह** तस्मादिति ।

तस्मादोमित्युदाहृत्य यज्ञदानानि कुर्वते ॥

**तस्मादोङ्कारस्य विष्णुनामत्वादेव हि ये विष्णुमुद्दिश्य यज्ञदानादि कुर्वते ते ॐ मित्युदाहृत्यैव । अन्यथा तन्न स्यात् । न ह्यन्योद्देशेन कर्म कुर्वाणैरन्यविषयो मन्त्रो जप्यत इति ।**

**पुरुषशब्दस्य विष्णु वाचित्वे युक्तिमाह** सूक्तेनेति ।

सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदाः ॥
इति पैङ्गिश्रुतिस्तेन नान्यज्ञानाद्विमुच्यते ॥

**य एनं नारायणं यजन्ति ते पौरुषेण सूक्तेन यजन्ति । तेन ज्ञायते पुरुषशब्दो विष्णुवाचीति । इति पैङ्गिश्रुतिः पुरुषशब्दस्य भगवदेकवाचितामाह यतस्तेन तमेवं विद्वानित्यस्य विष्णुपरत्वादिति ।**

**शे०**— इति पैङ्गिश्रुतिरित्यतःपरमपेक्षितमध्याहरति **पुरुषशब्दस्य भगवदेकवाचितामाह यत इति ॥ तेनेति ।** पुरुषशब्दस्य भगवदेकवाचित्वेनेत्यर्थः । तेनेत्युक्तस्य पुरुषशब्दस्य भगवदेकवाचित्वस्य नान्यज्ञानाद्विमुच्यत इति प्रतिज्ञायां साक्षाद्धेतुत्वासम्भवान्मध्येऽपेक्षितं हेतुं पूरयति **तमेवं विद्वान-**

**मृत इह भवतीत्यस्य विष्णुपरत्वादितीति** । अनेनेति पैङ्गिश्रुतिः पुरुषशब्दस्य भगवदेकवाचित्वमाह यतस्तेन कारणेन तमेवं विद्वानित्यस्य विष्णुपरत्वं तस्य विष्णुपरत्वान्नान्यज्ञानाद्विमुच्यत इति मूलयोजनोक्ता भवति । केचित्तु तेनेति तच्छब्दश्रवणाद्यच्छब्दाध्याहारेण योजयतीति तेन किं सिद्धमित्यतो मूलं नान्यज्ञानाद्विमुच्यत इति । तदभिप्रायमाह तमेवं विद्वानित्यस्य विष्णुपरत्वमितीत्याहुः ॥

प० — ॐ **नेतरोनुपपत्तेः** ॐ । 'पुरुषं वेत्ति' इत्यादिमूलं संगमयितुं सौत्रं हेत्वंश शंकापूर्वं स्वयं व्याचष्टे कुत इत्यादिना । स्वयमित्यनुवादः मुख्यया वृत्त्येत्यर्थः । एतानीत्यनुवादः नामानीति व्याख्या । तेनेत्यनुवादः तस्य व्याख्यानमेवंविद्वानित्यस्य विष्णुपरत्वादिति । तृतीयापंचम्योरेकार्थत्वादिति भावः ।

श्री० — ॐ **नेतरोऽनुपपत्तेः** ॐ ॥ ननु मुचः कर्मणि धातोरात्मनेपदित्वान्मुच्येदिति कथं विधिलिङ्परस्मैपदित्वमित्यत आह **व्यत्यय इति** ॥ **ओमिति** । मूले ओं अ इति पदच्छेदो द्रष्टव्यः ।

च० — पैङ्गिनां श्रुतिरित्येतत् पुरुषशब्दस्य भगवदेकवाचितामाह यत इति पूरणीयेनान्वेतीत्याह यत इति ।

सु० — **नन्वितरपरिग्रह इवेश्वरपरिग्रहेऽप्यनुपपत्तिः समाना । तथा हि । ओषधीभ्योऽन्नमन्नात्पुरुष इत्योषधिकार्यान्नविकारं शरीरं पुरुषपदेनोक्त्वा स वा एष पुरुष इति तं परामृश्यान्नरसमय इत्युच्यते । तस्येश्वरत्वेऽनुपपत्तिरेव । तत्प्रवाहपतिताश्च प्राणमयादय इत्याशङ्कां परिहर्तुं पीठ( ठिका )मारचयति** ब्रह्मशब्दोदित इति ।

अनु — ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च ॥
तस्मादाकाशसृष्टिं च प्रोवाचात्र चतुर्विधाम् ॥

**ब्रह्मविदाप्नोति परं सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मशब्दोदिते तस्मिन्विष्णौ तस्माद्वा एतस्मादात्मन इत्यात्मशब्दं (च) प्रयुज्येति योज्यम् । तस्मादेतस्मादित्यनुसन्धानात् । आकाशसृष्टिं च प्रोवाचाकाशः सम्भूत इत्यनेन । अत्रानुवाके । आत्मशब्दं प्रयुज्य सृष्टिं च प्रोवाचेत्यनेनात्मत्वमपि विधेयमिति सूचयति । चतुर्विधाकाशसम्बन्धित्वात्सृष्टेश्चतुर्विधत्वम् । न स्वतः । त्रैविध्यस्य वक्ष्यमाणत्वात् । तथाच चतुर्विधाकाशसृष्टिं च प्रोवाचेत्यर्थः ।**

आकाशचातुर्विध्यं कथमित्यत आह भूतमिति ।

भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः ॥
हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव च ॥
आ समन्तात्काशते यदाकाशो मुख्यतो हरिः ॥

**भूतमाकाशशब्दोक्तमित्यादिसम्बधः** । **अन्तर्नियामक एषां त्रयाणाम्** । **तत्रापि न समानकक्ष्यतया चतुर्णामाकाशशब्दार्थत्वमित्याह** मुख्यत इति । **चशब्दस्तुशब्दा(र्थः) र्थे** । **तत्कथमित्यत आह** आसमन्तादिति । **आ इत्यनुवादेन समन्तात्काशनं ह्याकाशशब्दार्थः** । **ततश्च यद्यस्माद्धरिरेव मुख्यतः समन्तात्काशते तस्मात्स एव मुख्यत आकाश इति योज्यम्** ।

**शे०— अनुपपत्तिरेवेति** । स वा एष इति परामर्शानुपपत्तेरित्यर्थः ॥ **परिहर्तुमिति** । 'एवं देहादिपर्यन्तमागतं हरिमेव तु । परामृशति तस्यैव पञ्चरूपत्ववित्तये । त्यक्त्वा भूतादिकं सर्वं स वा एष' इति श्रुत्यादिनेति शेषः ॥ **आत्मशब्दं च प्रयुज्येति** । अनेनात्मशब्दं प्रयुज्य चेति च शब्दो भिन्नक्रम इत्युक्तं भवति ॥ **आत्मत्वमपि विधेयमिति सूचयतीति** । श्रुतौ तस्माद्वा एतस्मादित्यतःपूर्वं ब्रह्मणा विपश्चितेत्यनन्तरं स आत्मा चेति शेषं सम्पूर्यात्मत्वमपि विधेयमित्यर्थः । अन्यथा पूर्वत्रात्मत्वानुक्त्याऽऽत्मत्वेनात्रतु तस्यात्मशब्देनानुवादानुपपत्तेरिति भावः । चतुर्विधां सृष्टिमिति सृष्टेश्चातुर्विध्यपरमिति भ्रांतिं निवारयति **चतुर्विधेति** । नन्वनुपपत्तेरभावेन चातुर्विध्यस्यैव सम्भवात्कुतो न स्वत इत्यत आह **त्रैविध्यस्येति** । प्रादुर्भावाभिमानस्वरूपोत्पत्तिभेदेन त्रैविध्यस्य 'क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिरि'त्यादिना वक्ष्यमाणत्वादित्यर्थः ॥ **कथमिति** । भूताकाशस्यैवाकाशतया प्रसिद्धत्वादिति भावः ॥ **आकाशशब्दोक्तमित्यादिः सम्बन्ध इति** । अनेनाकाशशब्दोक्त इत्येतद्योग्यतया लिङ्गविपरिणामेन सम्बद्ध्यत इत्युक्तं भवति । देहस्य सन्निहितत्वात्तन्नियामकत्वमात्रप्रतीतिं निवारयति **एषां त्रयाणामिति**॥ **कथमिति** । भूते रूढत्वेन तत्रैव मुख्यत्वस्योचितत्वादिति भावः ॥ **आ इत्यनुवादेनेति** । अतो न वैयर्थ्यमिति भावः ॥ उक्तशङ्कापरिहारायैवशब्दाध्याहारेण वाक्यं योजयति **ततश्चेति** ।

**प०—** ब्रह्मशब्दोक्त एवात्मशब्दप्रयोग इत्यत्रज्ञापकमाह **तस्मादेतस्मादित्यनुसंधानादिति** । अत्रेत्यनुवादेनानुवाक इति व्याख्या **विधेयमिति** । यत्सत्यंज्ञानादिवाक्योक्तं स आत्मेति विधेयमित्यर्थः । तथाचाप्रस्तुतस्य कथमात्मशब्देनानुवाद इति शंकानवकाश इति भावः ॥ **चतुर्विधाकाशेति** । भूतभूताभिमानितद्देहतदंतर्नियामकरूपचतुर्विधाकाशेत्यर्थः ॥ **त्रैविध्यस्येति** । 'प्रादुर्भावो हरेर्जनिरि'त्यादिना सृष्टेः प्रादुर्भावाभिमानस्वरूपत्रैविध्यस्य वक्ष्यमाणत्वादित्यर्थः ॥

या० — **विधेयमितीति** । तेनात्मत्वेनाप्रस्तुतस्य कथमात्मशब्देनानुवाद इति शङ्काऽनवकाशः **त्रैविध्यस्येति** । 'प्रादुर्भावो हरेर्जनिरि'त्यादिना सृष्टेः प्रादुर्भावाभिमानस्वरूपलाभरूपत्रैविध्यस्य वक्ष्यमाणत्वादित्यर्थः ।

श्री० — तस्यान्नरसमयत्वस्य । ईश्वरत्वे अन्नमयस्येश्वरत्वे ॥ **अनुपपत्तिरेवेति** । तद्धि पार्थि-वशरीराणामन्नोपजीविनामेव युक्तं न हरेरित्यर्थः । तत्प्रवाहो विकारप्रवाहः । अतो न विष्णुत्वं तेषामिति शेषः । पीठं भूमिकामारचयति कर्तव्यविचारोपयोगिनमर्थं दर्शयतीत्यर्थः कुत इत्थं योज्यमित्यत आह **तस्मादेतस्मादित्यनुसन्धानादिति** । तच्छब्दस्य पूर्वं दूरप्रकृतपरामर्शकत्वेनैतच्छब्दस्य चाव्यवहित-पूर्वप्रकृतपरामर्शकत्वेन तस्मादेतस्मादात्मन इत्यनुवादबलेन सः ब्रह्मशब्दोदितो विष्णुरात्मेत्यात्मत्वं विधेय-मिति सूचयितुमात्मशब्दं प्रयुज्येत्युक्तमिति भावः । तथाच तस्माद्ब्रह्मविदाप्नोति परमित्यत्र परप्राप्तिका-मेन ज्ञातव्यतयोक्तत्वात् । एतस्मात्सत्यज्ञानानन्तत्वेन लक्षितात् । तथा सति आत्मेति ब्रह्मशब्दोक्तस्या-त्मत्वविधायकवाक्ये आत्मशब्देन प्रकृताच्च'आत्मन आकाशः सम्भूत' इति श्रुत्यर्थो द्रष्टव्यः । भूतं भूता-भिमानी चेत्युक्तविधया चतुर्विधस्य वायोर्मुख्यामुख्यभेदेन चतुर्विधाकाशात्सृष्टिमाकाशाद्वायुरिति वाक्येन प्रोवाचेति योज्यम् ॥

च० — **आ इत्यनुवादेनेति** । अतो न वैयर्थ्यमिति भावः ।

सु० — **एवं मुख्यामुख्यभेदेन चतुर्विधादाकाशादाकाशाद्वायुरित्युक्तविधया चतुर्विधस्य वायोः सृष्टिं प्रोवाच । तत्रापि वायुशब्देन मुख्यतो हरिरेवोच्यत इति योज्यम् (वक्तव्यम्)। तत्कथमित्यत आह** बलेति ।

अनु० — बलज्ञानस्वरूपत्वाद्वायुः

**वशब्दो बलवाची । आयुरिति ज्ञानमुच्यते । अयतेर्गत्यर्थत्वात् । गत्यर्थानां ज्ञानार्थ-त्वात् । तथा वायोरग्निरिति चतुर्विधाद्वायोश्चतुर्विधस्याग्नेः सृष्टिं प्रोवाच ॥ तत्रापि मुख्यतो हरिरेवाग्निशब्देनोच्यत इति स्थिते तत्कथमित्यत आह** अग्निरिति ।

अग्निरगं नयन् ॥

**न गच्छति स्वतो न प्रवर्तत इत्यगं विश्वम् । अगशब्दे कर्मण्युपपदे नयतेः क्विप् । तत्सन्नियोगेनोपपदलोपो धातोश्च ह्रस्वता निर्वचनत्वात् । ततोऽग्नेराप इति चतुर्विधादग्नेश्च-तुर्विधानामेवापां सृष्टिं प्रोवाच ॥ तत्राप्याप इति मुख्यतो हरिरेवोक्त इति वाच्यम् । कथं तदित्यत आह** आप इति ।

आपि आपालनाच्चैव

आङ्पूर्वस्य पाते रूपमेतत् । उपसर्गह्रस्वता धातुलोपश्च निर्वचनत्वात् । चशब्दोऽनुक्तसमुच्चयार्थः । तेन स्त्रीरूपत्वात्स्त्रीलिङ्गं बहुरूपत्वाद्बहुवचनं चेत्युक्तं भवति । एवशब्दो हरिरेवेति सम्बद्ध्यते ॥ एवमद्भ्यः पृथिवीति चतुर्विधाभ्योऽद्भ्यश्चतुर्विधायाः पृथिव्याः सृष्टिं प्रोवाच । तत्रापि हरिरेव मुख्यतः पृथिवीशब्दवाच्य इति सिद्धे तदुपपादयति पृथिवीति ।

पृथिवी प्रथितो यतः ॥

प्रथितो यतस्ततः पृथिवीति योजना । पृथु विस्तारे ।

शे० — उक्तविधया चतुर्विधस्येति । भूतं भूताभिमानी चेत्याद्युक्तविधयेत्यर्थः ॥ वशब्दो बलवाचीति । न तत्र व्युत्पादनापेक्षेति न व्युत्पादनं कृतम् ॥ अयतेरिति । अस्माद्बाहुलकादौणादिके उणि कृते'ऽत उपधाया' इत्युपधावृद्धौ वायुरिति रूपसिद्धिरिति द्रष्टव्यम् ॥ ज्ञानार्थत्वादिति । धातूनामनेकार्थत्वादिति भावः ॥ क्विबिति । क्विप् चेति सूत्रेणेति शेषः । नन्वेवं क्विपो लोपे कृदन्तत्वात्स्वाद्युत्पत्तावगनीरिति भवितव्यमग्निरिति तु कथमित्यत आह तत्सन्नियोगेनेति । प्रत्ययसन्नियोगेनेत्यर्थः ॥ उपपदस्य लोप इति । अलोन्त्यपरिभाषयोपपदागशब्दान्त्यस्य लोप इत्यर्थः ॥ धातोश्चेति । धातोरीकारस्येकार इत्यर्थः । यद्यपि प्रत्ययसन्निधानाद्धातोर्ह्रस्वविधिद्धावपि नोपपदान्त्यलोपसिद्धिर्धातुना व्यवधानेन साक्षात्प्रत्ययसन्नियोगाभावात्तथाऽपि तत्सन्नियोगमात्रेणापि भर्गादिशब्देषु वर्णविकारादेर्दर्शनेन साक्षात् तद्योगस्यानपेक्षितत्वादपेक्षितस्य च यथाकथञ्चित्सन्नियोगस्य प्रकृतेऽपि सत्त्वाद्युक्त एवोपपदान्त्याकारलोप इति द्रष्टव्यम् । ननु च विधायकाभावात्कथमुपपदाकारलोपादीत्यत आह निर्वचनत्वादिति । निरुक्तशास्त्रे निरुच्यमानशब्दानां पृषोदरादित्वादेः साधुत्वाङ्गीकारात्पृषोदरादित्वादेव चात्र वर्णनाशादीति भावः । यद्यपि च पृषोदरादित्वमात्रेणैव वर्णनाशाद्युपपत्तौ प्रत्ययसन्नियोगाश्रयणमनर्थकम् । तथाऽपि प्रकृतिप्रत्ययसन्निधान एव च वर्णविकारादेस्तत्र व्याख्येयत्वाभिप्रायेण तस्यार्थवत्त्वमिति द्रष्टव्यम् । अगशब्दोपपदान्नयतेर्डिप्रत्यय इत्यस्य प्रकारान्तरत्वादविरोध इति द्रष्टव्यम् ॥ आङ्पूर्वस्येति । क्विबन्तस्येति शेषः । तर्ह्यापेत्येव स्यात्तत्कथमबिति प्रातिपदिकनिष्पत्तिरित्यत आह उपसर्गेति । धातुलोपश्चेति । धात्वन्तलोप इत्यर्थः । अत्राप्युपसर्गस्य साक्षात्प्रत्ययसन्निधानाभावेऽपि प्रत्ययसन्नियोगमात्रस्य सत्त्वाद्ध्रस्वत्वे धात्वन्तलोपे च सत्यबिति प्रातिपदिकनिष्पत्तिरिति भावः ॥ अनुक्तेति । स्त्रीरूपत्वबहुरूपत्वरूपानुक्तसमुच्चयार्थ इत्यर्थः । किं तत्समुच्चयप्रतिपादनेनेत्यतः स्त्रीलिङ्गत्वबहुवचनोपपत्तिरेव तत्प्रयोजनमिति भावेनोक्तसाध्ये प्रति तयोर्हेतुत्वमुपपादयति । तेनेति । अवधारणार्थकैवकारविरोध इत्यतो भिन्नक्रमतया तं योजयति एवशब्द इति ॥ पृथु विस्तार

**इति** । यद्यपि प्रथसङ्ख्यान इत्यस्मात्प्रथेः षिवङ्सम्प्रसारणं चेत्युणादिसूत्रेण पृथिवीशब्दो निष्पादित इति तथैव वक्तव्यम् । तथाऽपि प्रथेर्विहितः षिवङ्प्रत्यय उणादयो बहुलमित्युक्तत्वादन्यस्मादपि भवतीति भावेन पृथु विस्तार इत्यस्मादपि षिवङ्प्रत्यये षित्वात् षिद्गौरादिभ्यश्चेति ङीषि जाते पृथिवीति रूपसिद्धिरिति ज्ञेयम् ॥

प० — **आकाशाद्वायुरितीति** । अनेन वायोः सृष्टिं प्रोवाचेत्यन्वयः । कीदृशस्य वायोरित्यत आह ॥ **उक्तविधया चतुर्विधस्येति** । भूतं भूताभिमानी चेत्युक्तविधयेत्यर्थः ॥ **अयतेरिति** । अयगतावित्यस्य उण्प्रत्यये तस्य 'अत उपधाया' इति वृद्धौ रूपमिति भावः ॥ **उपपदस्येति** । उपपदां तस्याकारस्येत्यर्थः । कैः सूत्रैरेतन्निर्वाह इत्यत आह **निर्वचनत्वादिति** । व्याकरणवन्निर्वचनमपि पृथक्प्रमाणमेवेति तदनुरोधेन प्रकृतिप्रत्ययादिरूह्य इति भावः । उक्तं हि 'वर्णागमोवर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्त'मिति ॥ **पाते रूपमेतदिति** । क्विप्रत्यये धातोरंतलोपे उपसर्गस्य ह्रस्वत्वे च सति अवितिरूपं । तस्य बहुवचनमाप इति शब्दस्वाभाव्यादिति भावः ॥ **प्रथुविस्तार इति** । अस्मात् षिवङ्प्रत्यये षित्वान्ङीप्रत्यये प्रत्यये गुणाभावे च रूपं निर्वचनत्वास्त्रीत्वास्त्रीलिंगं चेति भावः ॥

या० — **उक्तविधयेति** । भूतं भूताभिमानी चेत्याद्युक्तविधयेत्यर्थः ॥ **अयतेर्गत्यर्थत्वादिति** । अयगतावित्यस्मादुण्प्रत्यये उपधावृद्धौ वायुरिति रूपमिति भावः । नन्वगेत्यत्र कथमुपपदाकारलोपः । न च निरुक्तत्वेन पृषोदरादित्वाद्वर्णनाश इति वाच्यम् । प्रकृतिप्रत्ययसन्निधानादेव वर्णनाशादेस्तत्र व्याख्येयत्वात् । प्रकृते च धातुना व्यवधानेन सन्निधानाभावादित्यत आह **तत्सन्नियोगेनेति** । तथा च साक्षात्प्रत्ययसन्निधानाभावेऽप्युपपदविशिष्टधातोः प्रत्ययविधानात् । प्रत्ययसन्नियोगमात्रेण वर्णनाशोपपत्तिरिति भाव इत्याहुः । वस्तुतस्तु काशिकायाम् अन्येभ्योऽपि दृश्यत इत्यत्र दृशिग्रहणं क्विबन्ते विध्यन्तरोपलक्षणार्थमित्युक्तत्वेनोणादिवृत्तौ क्विब्वचिप्रच्छीत्यत्र क्विपः पूर्वं निर्देश इष्टसम्पादनार्थं इत्युक्तत्वेन च क्विप्प्रत्ययस्येष्टसम्पादकत्वमभिप्रेत्य तत्सन्नियोगेनेत्युक्तमिति द्रष्टव्यम् । अत्रालोन्त्यपरिभाषयोपपदान्तस्यैव लोपो द्रष्टव्यः ॥ **आङ्पूर्वस्येति** । क्विप्प्रत्यये सतीति ग्राह्यम् ॥ **धातुलोप इति** । धात्वन्ताकारलोप इत्यर्थः । तथा चाप् इति प्रातिपदिकनिष्पत्तिरिति भावः ॥ **पृथु विस्तार इति** । अस्माद्बाहुलिके षिवन्प्रत्यये तस्य च कित्त्वविवक्षया गुणभावे षित्वेन ङीषि च सति पृथिवीति रूपमिति भावः ॥

श्री० — **अगशब्द इत्यादि** । तथा चागशब्दे कर्मार्थके उपपदे नी प्रापणे अस्मात् क्विपि तस्य लोपे क्विप्रत्यययोगेनोपपदान्त्यस्य गकारस्थस्य अकारस्य लोपे धातोश्च ह्रस्वतायामग्नि अग्नीति

प्रातिपदिकम् ॥ **आङ्पूर्वस्येत्यादि** । तथा चाङ्पूर्वात् पा रक्षणेऽस्मादुपसर्गस्य ह्रस्वे अप इति जाते धात्वन्तस्याकारस्य लोपे अप् इति प्रातिपदिकम् । पश्चात्स्वाद्युत्पत्तावाप इति सिध्यति । तदेव दर्शयति **तेनेति** । अनुक्तसमुच्चयार्थेन चशब्देनेत्यर्थः ॥ **पृथु विस्तार इति** । पृथ् अस्मात् औणादिके षिवन्प्रत्यये षः प्रत्ययस्येति पकारस्य अन् इत्यस्य च लोपे पृथ् इव इति जाते षिद्गौरादिभ्यश्च स्त्रियां ङीष् स्यादिति ङीषि ङकारषकारयोर्लोपे ई इत्येतावन्मात्रे उर्वरिते सति पृथ्इव् ई पृथिवीति रूपम् । न चात्र पृ इत्यत्र ऋकारस्य अकाररूपे गुणे तस्य च रपरत्वे पर्थिवीति स्यादिति वाच्यम् । षिवन्प्रत्ययस्य कित्कार्यकारिताया विवक्षितत्वात् । कितश्च स्वस्मिन्परतो गुणनिषेधकत्वस्य क्ङिति चेति सूत्रोक्तत्वादत्र गुणाभाव इति उणादिवृत्तौ साधितमनुसन्धेयम् ॥

च० - **अयतेरिति** ॥ अयचमतयणय गताविति धातुव्याख्यानादिति भावः । **क्विबिति** । क्विप्चेति योगेनेति हृदयम् । तत्सन्नियोगेन । तादृशप्रत्ययसमभिव्याहारेण । उपपदलोपः । उपपदभूतागशब्दान्त्याकारस्यालोन्त्यपरिभाषया लोप इत्यर्थः । **धातोरिति** । धात्ववयवस्य दीर्घेकारस्य-ह्रस्वेकार इत्यर्थः । **निर्वचनत्वादिति** । निरुक्तशास्त्रे 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकार-नाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' इत्युपगमादिति भावः ।

**सु०— तथा च चतुर्विधायाः पृथिव्याः पृथिव्या ओषधय इति चतुर्विधौषधिसृष्टिं प्रोवाच । भूतानां समाप्तत्वात्तस्थाने भौतिकग्रहणम मि)तःपरं कार्यम् ॥ तत्राप्योषधिशब्देन मुख्यतो हरिरेवोच्यत इति स्थिते कुत इत्यत आह** उष्टानामिति ।

**अनु०—** उष्टानामाश्रयत्वेन स एवौषधिनामकः ॥

**दग्धानाम् । उष्टा ओषाः कर्मणि घञ् । ओषा धीयन्तेऽस्मिन्नित्योषधिरित्यर्थः । कर्मण्यधिकरणे चेति किप्रत्ययः ॥ कथमोषध्यन्तर्गतस्योष्टाश्रयत्वमित्यत आह** ओषधीषु स्थित इति ।

ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत् ।

**क्षुधितैर्जाठराग्निनोष्टैः । ओषधीभ्योऽन्नमिति चतुर्विधोषधीभ्यश्चतुर्विधस्यान्नस्य सृष्टिं प्रोवाच । तत्राप्यन्नशब्दो विष्णावेव मुख्यः । अद्यतेऽत्ति चेति व्याख्यानस्य तस्मिन्नेव सम्भवादिति प्रागेव सिद्धत्वान्नोक्तम् । ततोऽन्नात्पुरुष इति चतुर्विधान्नाच्छरीरतदभिमानितदन्तर्यामिरूपस्य त्रिविधस्य पुरुषस्य सृष्टिं प्रोवाच ।**

**तत्रापि पुरुषशब्देन मुख्यतो हरिरेवोक्त इति स्थिते तत्कथमित्यत आह** पुरीति ।

पुरि शेते यतः सोऽथ पुरुषश्चेति गीयते ॥

अथ तस्मात् । पुरि शरीरे । अत्रोपपदस्य सप्तम्या अलुक् । तस्य चेकारस्योकारः । धातुशकारस्य षकारो निर्वचनत्वात् । अधिकरणे शेतेर्डः ।

एवमात्मादिशब्दान्व्याख्याय तेषां सृष्टिं विवृणोति क्रियेति ।

क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः ॥

आकाशादिषु नान्यास्ति ह्यभिमानोऽभिमानिनः ॥

अभिमानिशरीरस्य साक्षाद्भूतस्य चोद्भवः ॥

साक्षाज्जन्मैव किं न स्यादित्यत आह नान्येति ।

हिशब्दो नित्यो नित्यानामित्यादिश्रुतिप्रसिद्धिसूचकः । अभिमानो ममेदमिति बुद्धिः । जनिरिति सम्बन्धः । भूतस्येत्युपलक्षणम् ओषध्यादिभौतिकस्य चेत्यपि ग्राह्यम् । साक्षादुद्भव एव जनिरित्यन्वयः ।

शे० — दग्धानामिति । तापत्रयेणेति शेषः । उष दाह इति धातोरिति भावः ॥ कर्मणीति । 'अकर्तरि च कारके संज्ञायामि'त्यनेनेति शेषः । कर्मण्यधिकरणे चेति किरिति । कर्मण्युपपदे घुसंज्ञकेभ्यो धातुभ्योऽधिकरणे कारके किप्रत्ययो भवति । चकारोऽनुक्तसमुच्चयार्थः । जलं धीयतेऽस्मिन्निति जलधिरिति यथेति सूत्रार्थः । तथा च धाधातोर्दाधाघ्वदाबिति घारूपतया घुत्वादस्मात्किप्रत्यये कस्येत्संज्ञायां किवा'दातो लोप इटि चे'त्याकारलोपे ओषधिशब्दनिष्पत्तिरिति भावः ॥ अधिकरणे शेतेरिति ॥ अधिकरणे सप्तम्यन्ते उपपदे शेते'रन्येष्वपि दृश्यत' इति सूत्रेण डप्रत्यये डित्वाट्टिलोपे च पुरुषशब्दनिष्पत्तिरिति भावः । अथवा । अधिकरणे सुबन्ते उपपदे शेतेरच्प्रत्यये निर्वचनत्वेन शेतेरीकारलोपे उक्तरूपनिष्पत्तिरिति भावः । केचित्तु शेतेर्धातोरधिकरणे सुबन्ते उपपदेऽच्प्रत्ययो भवतीत्येव सूत्रार्थः । तथा च खे शेते खशय इत्यादिवत्पुरुशय इत्येव स्यात्तत्कथं पुरुषशब्दनिष्पत्त्यर्थमेतत्सूत्रोदाहरणमित्याशङ्क्य तथा सति गिरिशय इत्येवोक्तरीत्या प्रसङ्गेन गिरिश इत्यादेरप्यनिष्पत्तिप्रसङ्गात् । न च गिरौ 'शेतेर्ड' इत्येतत्सूत्रीयवार्तिकादेव तदुपपत्तिरिति वाच्यम् । तत्रास्याप्युपसङ्ख्येयत्वात् । नियामकस्य शिष्टप्रयोगस्यात्रापि तुल्यत्वादित्यत्र तात्पर्यमित्याहुः ।

प० तत्स्थान इति 'भूतं भूताभिमानीचे'त्यत्र भूतपदस्थाने भौतिकपदं भूताभिमानिपदस्थाने भौतिकाभिमानिपदं च स्थापयित्वा योज्यमित्यर्थः । उष्टानामित्यस्यार्थो दग्धानामिति ॥ कर्मणि घञिति । 'उषदाह' इति धातोरिति योज्यम् । 'पुगंतलघूपधस्यचे'ति गुण इति भावः ॥ कर्मणीति । कर्मण्युपपदेऽधिकरणेऽर्थे घोः किप्रत्यय इति सूत्रार्थः । धातुशकारस्य षकारः कथमित्यत आह अधिकरणे

**शेतेरिति** । अधिकरणे सुप्युपपदे शीङ्स्वप्न इत्यस्माच्प्रत्ययो भवतीति सूत्रेण तृतीयाध्याये द्वितीयपादे अच्प्रत्ययविधानात् । तथा चाच्प्रत्यये सप्तम्यादेरलुगादिवन्निर्वचनत्वादेव धात्वन्तलोपे पुरुष इति भवतीति भावः ।

या० — **कर्मण्यधिकरणे चेति** । कर्मण्युपपदे घुसंज्ञकेभ्यो धातुभ्योऽधिकरणे कारके किप्रत्ययो भवतीति सूत्रार्थः । जलं धीयतेऽस्मिन्निति जलधिरित्युदाहरणम् । तथा च दाधाघ्वदाबिति घुत्वादस्मादधिकरणे किप्रत्यये कित्त्वादातो लोप इटि चेत्याकारलोपे ओषधीति रूपमिति भावः । 'अधिकरणे शेतेरि'ति सूत्रम् । यद्यप्यस्य सूत्रस्याधिकरणे सुप्युपपदे शेतेर्धातोरच्प्रत्ययो भवतीति काशिकायां व्याख्यानं कृतं खशय इति चोदाहृतम् । तथा चानेन पु शय इत्येव स्यान्न पुरुश इति । तथाऽप्यस्याधिकरणे सुप्युपपदे शेतेर्धातोर्डप्रत्ययो भवतीत्यप्यर्थमभिप्रेत्यात्रोदाहरणमिति ज्ञातव्यम् । अत एवैतत्सूत्रव्याख्यावसरे काशिकायां गिरौ डश्छन्दसीत्युक्तं गिरिश इति चोदाहृतम् । तत्र गिराविति वैदिकप्रयोगसिद्धाधिकरणसामान्योपलक्षणादविरोधः ॥

श्री० — **कर्मणि घञिति** । उष् प्लुष् दाहेऽस्मात्कर्मणि घञि घकारञकारयोर्लोपेनाकारमात्रे उर्वरिते सति सार्वधातुकार्धधातुकयोरिति उकारस्योकाररूपे गुणे ओष् अ ओषेति रूपम् ॥ तदर्थं उक्त **उष्टा इति ॥ कर्मणीति** । दाधाघ्वदाप् । दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युरिति धातुरूपस्यास्य धातोर्घुसंज्ञायामोषा धीयन्तेऽत्रेत्यधिकरणे कर्मण्यधिकरणे च कर्मण्युपपदे घुसंज्ञकेभ्योऽधिकरणे किप्रत्यये ककारलोपे कित्त्वाद्धात्वाकारलोपे ओष धू इ ओषधीति रूपम् । पुरुष पदेन भौतिकस्याभिमानिदेहस्यैव विवक्षितत्वेन तदतिरिक्तस्य भौतिकस्याभिमानिदेहस्यैवाभावात्त्रिविधत्वं ज्ञेयम् । सप्तम्याः पुरीत्यस्याः ॥ **इकारस्येति** । ङीति सप्तमीविभक्ते रूपस्य इकारस्य उकार इत्यर्थः ॥ **धात्विति** । शीङ् स्वप्न इति धातुशकारस्येत्यर्थः ॥ **अधिकरणे शेतेरिति** । अधिकरणे सुप्युपपदे शेधातोर्डप्रत्ययः स्यादिति सूत्रार्थः । तथा च पुरिशी इति स्थिते इकारस्योकारे धातुशकारस्य षकारे पुरुषी इति जाते डप्रत्यये टिभूतस्य ईकारस्य लोपे प्रत्ययाकारे मिलिते सति पुरुष् अ पुरुषेति रूपम् । अत्र काशिकायामधिकरणे शेतेरित्यत्र गिरौ डश्छन्दसीत्युक्त्वा गिरिश इत्युदाहृतत्वाद्गिरावित्यस्य चाधिकरणसामान्यमात्रोपलक्षकतयोक्तरीत्या डप्रत्यय एव व्याख्येयो न त्वच्प्रत्ययः । तथात्वे पुरिशी अस्मादच्प्रत्यये ईकारस्य एकाररूपे गुणे पुरिशे इति जाते एचोयवायाव इति अचिपरे एकारस्यायादेशे पुरिशय् अ पुरिशय इति स्यात् । खे शेते इति खशय इतिवत् न तु पुरुष इति रूपमिति द्रष्टव्यम् । **नित्यो नित्यानामिति** । अत्र निर्धारणबलात्स्वरूपेण नित्यानां जीवानां सकाशादप्यतिशयेन यन्नित्यत्वं कथ्यते तच्छरीरस्यापि नित्यत्वं विना नोपपद्यत इति शरीरस्यापि नित्यत्वमस्माद्वाक्यात्सिध्यतीति भावः ।

च०— **कर्मण्यधिकरणे चेति** । कर्मवाचके उपपदे घुसंज्ञकधातुभ्योधिकरणकारकेर्थे किप्रत्ययो भवति चकारोनुक्तभावकर्मादिसमुच्चयार्थः । जलानि धीयन्तेऽस्मिन्निति जलधिरित्युदाहरणम् इत्थं च दाधाध्वदाविति धारूपतया घुत्वादस्मा न्किप्रत्यये तस्य कित्वादातो लोप इटि चेति धात्वाकारलोपे ओषधिशब्दनिष्पत्तिरिति भावः । **अधिकरणे शेतेरिति** । यद्यपीदं सूत्रं वामनः काशिकायामच्प्रत्ययविधायकमिति व्याचख्यावुदाजहार च शय इति नैतत्सूत्रोदाहरणं प्रकृतसङ्गतम् । तथापि प्रकृतसूत्रे गिरौ डश्छन्दसीतिवार्तिकस्योदाहृततया तस्य डप्रत्ययविधायकत्वमस्तीत्याशयेनेदमुदाहृतमिति समादधुः । अत्र व्याकर्तारः अधिकरणे सप्तम्यन्ते उपपदे शेतेरन्येष्वपि दृश्यत इति सूत्रेण डप्रत्यये डित्वाट्टिलोपे च पुरुषशब्दनिष्पत्तिरिति भावः । अथवा । अधिकरणे सुबन्ते उपपदे शेतेरच्प्रत्यये । निर्वचनत्वेन शेतेरीकारलोपे उक्तरूपनिष्पत्तिरिति भावइत्यपि न्यभांत्सुः ।

**सु०— यद्येवमात्माकाशवाय्वग्न्यप्पृथिव्योषध्यन्नपुरुषपदैर्मुख्यतो हरिरेवोक्तः अन्यदमुख्यतस्ततः किं प्रकृत इत्यत आह** एवमिति । अत्र **देहशब्दात्प्रागात्मशब्दोऽध्याहार्यः । स**

अनु०— एवं देहादिपर्यन्तमागतं हरिमेव तु ॥
परामृशति तस्यैव पञ्चरूपत्ववित्तये ॥
त्यक्त्वा भूतादिकं सर्वं स वा एष इति श्रुतिः ॥

**वा एष पुरुष इति श्रुतिः प्रकृतमपि भूतादिकं सर्वं त्यक्त्वाऽऽत्मादिदेहपर्यन्तमागतं तैः शब्दैः प्रकृतं हरिमेव परामृशति । तस्यैव सृष्टिकर्तुः शरीरेऽन्नमयादिपञ्चरूपत्वज्ञापनायेति । इदमुक्तं भवति । नान्नमयादीनां परब्रह्मत्वपरिग्रहे स वा एष पुरुष इति परामर्शविरोधः । आत्मपदोदितस्य परामर्शोऽयमिति स्वीकारात् । न च नासौ परब्रह्म । तस्मात्परप्राप्तिकामेन ज्ञातव्यतयोक्तादेतस्मात्पुनः सत्यज्ञानानन्तत्वेन लक्षितादात्मन इति प्रकृतानुसन्धानात् । न च सन्निहितपरामर्शपरित्यागेन दूरप्रकृतपरामर्शाङ्गीकारोऽनुचित इति वाच्यम् । आत्मादिपुरुषान्तसर्वशब्दैरपि तस्यैव प्रकृतत्वाङ्गीकारात् । न चेश्वरस्योत्पत्तिरनुत्पन्ना । प्रादुर्भावापेक्षया व्याख्यानात् । न चैतदप्रामाणिकं व्याख्यानम् । कारणत्वेनेत्युपपादयिष्यमाणत्वात् । न चैवं भूतादिसृष्टेरप्रामाणिकत्वापत्तिः । आकाशादिशब्दानां भूतादिपरत्वस्यापि स्वीकारात् । अनेकार्थतायाश्चोपपादयिष्यमाणत्वात् । न चैवं तेषामपि प्रादुर्भावमात्रापत्तिः । सामान्यतः श्रुतस्य सम्भवशब्दस्य यथायोग्यं व्याख्यानोपपत्तेः । न चैवमप्यन्नरसमयस्य प्रकृतसर्वात्मकत्वापत्तिः । प्रकृतानामपि भूतादीनां परित्यागेन हरेरेव परामर्शाङ्गीकारात् । न चैतदन्याय्यम् । आकाशा-**

**दिशब्दानां हरावेव मुख्यत्वेन तस्यैवोत्कटतया बुद्धिसन्निधानात् । न चेश्वरपरामर्शो व्यर्थः । तस्यैवान्नमयादिपञ्चरूपताज्ञापनाय प्रकरणान्तरारम्भार्थत्वात् । तस्य च लक्षणविवरणार्थत्वेनोपयोगस्योक्तत्वात् । तथा चान्नमयस्य ब्रह्मत्वेऽनुपपत्त्यभावान्न तत्प्रवाहपतितानां प्राणमयादीनामब्रह्मत्वं कल्पनीयमिति ।**

शे०— नन्वादिश्च पर्यन्तश्च तयोः समाहार आदिपर्यन्तं देहस्यादिपर्यन्तं देहादिपर्यन्तम् इत्युक्त्या देहस्यैवादित्वमन्तत्वं च प्रतीयते । तच्चायुक्तम् । विरुद्धत्वेनैकस्यैव तदयोगादित्यतो योजयति **अत्रेति** । आत्मदेहादिपर्यन्तमित्यर्थः । आत्मशब्दाध्याहारेणात्मन आदित्वस्य देहस्य चान्तत्वस्यैवोक्त्यैवादित्वान्तत्वयोरनुक्तेरविरोध इति भावः । यद्वा । ननु देहपर्यन्तमित्येतावता पूर्णत्वादादिपदमनर्थकमित्यतो देहशब्दात्प्रागध्याहृतात्मशब्देनान्वितस्यादिशब्दस्यात्मशब्देन हरेः प्रकृततासमर्थनार्थत्वान्न तदित्याशयेनाह **अत्रेति** ॥ **आत्मादिदेहपर्यन्तमिति** । ततश्च देहशब्दात्प्रागात्मशब्दाध्याहारे आदिपर्यन्तत्वयोश्च क्रमेण सम्बन्धे आत्मा च देहश्चात्मादेहौ । आदिश्च पर्यन्तश्चादिपर्यन्तौ आत्मदेहौ आदिपर्यन्तौ यस्य पदजातस्य तदात्मादिदेहपर्यन्तं तत्प्रत्यागतमित्यर्थः । अस्यैव तात्पर्यं तैः शब्दैः प्रकृतमिति । 'ब्रह्मशब्दोदिते' इत्याद्याखण्डलार्थमाह **इदमुक्तं भवतीति** ॥ **न चैतदिति** । आत्मादिपुरुषान्तसर्वशब्दैरपि तस्यैव प्रकृततया व्याख्यानमप्रामाणिकमित्येतच्च नेत्यर्थः ।

**प०—** ईश्वरपरिग्रहेप्यनुपपत्तिः समैवेत्यादिना प्रागुक्तशङ्कायाः कथमनेन निरास इत्यत आह **इदमुक्तं भवतीत्यादिना** कल्पनीयमित्यन्तेन ॥ **कारणत्वेनेतीति** । 'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्ते'रित्यानुमानिकपादीयचतुर्थेऽधिकरणे कार्यत्वे सति कारणत्वरूपावान्तरकारणभूताकाशादिपुरुषान्तशब्दैः विष्णुरुच्यत इत्युपपादयिष्यमाणत्वादित्यर्थः । उपलक्षणमेतत् । 'द्युभ्वाद्य'धिकरणे हरेः प्रादुर्भावरूपजने'राकाशस्तल्लिङ्गादि'त्यत्र महायोगविद्वद्रूढिभ्यां हरावाकाशादिभूतभौतिकशब्दमुख्यार्थत्वस्य चोपपादयिष्यमाणत्वादिति ध्येयम् ॥ **अनेकार्थतायाश्चेति** । 'ज्योतिरुपक्रमा'दित्यधिकरणे 'कल्पनोपदेशा'दिति सूत्रे ॥ निगमनिघण्टुव्याकरणादिसिद्धयोगरूढयादिवृत्तेरङ्गीकारेण विष्ण्वन्यार्थान्तरस्यापि स्वीकृतत्वेनानेकार्थत्वस्य 'तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यत' इत्यादिनोपपादयिष्यमाणत्वादित्यर्थः ॥ **प्रकृतेति**। आकाशादिपुरुषान्तशब्दैर्यत्प्रकृतं भूततदभिमान्यादिकं तत्सर्वात्मकत्वापत्तिरित्यर्थः ।

**या०— कारणत्वेनेति** । कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेरित्यत्राकाशादिष्ववान्तरकारणत्वेन स एव स्थितः । यथाव्यपदिष्टस्यैव परस्य आकाशे तिष्ठन्नित्यादिना आकाशादिषूक्तेरित्युपपादयिष्यमाणत्वादित्यर्थः ॥ **अनेकार्थतायाश्चेति** । समाकर्षादित्यादिनेति शेषः ॥ **प्रकृतसर्वात्म-**

**कृत्वेति** । आकाशादिशब्दैः प्रकृतं यच्चतुर्विधाकाशादिकं तस्य सर्वस्याप्यन्नरसमयत्वमुच्यत इति प्राप्तमित्यर्थः ॥

**श्री०**— देहादिपर्यन्तमित्यत्र विद्यमानादिशब्दस्याध्याहृतेनात्मशब्देन संबन्ध इत्याशयेनाह **देहशब्दात्प्रागिति** । असावात्मपदोदितः । **सन्निहितेति** । पुरुषपदेन सन्निहितशरीरेत्यर्थः । तेषां भूतानां भौतिकानां चैवं परात्मन इवेत्यर्थः । प्रकृतसर्वस्यान्नरसमयत्वापत्तिरिति योज्यम् ॥ **लक्षणेति** । सत्यत्वादिलक्षणेत्यर्थः ।

**च०— अनेकार्थतयाश्चेति** । समाकर्षादित्यादिनेत्यादिः ।

**सु०— ननु किमनेन बहुधा संविधानेन** । शरीरमात्रपरामर्शोऽयं किं न स्यात् । **मैवम्** । तथा सत्येष पुरुष इत्येतावता **पूर्णत्वेन स इत्यस्य वैयर्थ्यापत्तेः** । भवत्पक्षेपि तत् **समानमिति चेन्नेत्यभिप्रेत्याह** स इति ।

अनु०— स इत्यात्मपदोद्दिष्ट एष जीवशरीरगः ॥

**एष इति जीवशरीरगः परामृश्यते । शरीरग इत्येवोक्ते परमेश्वरस्य शरीरित्वं प्रतीयेत । अतो जीवेत्युक्तम् । किञ्च शरीरपरामर्शे स वा एष पुरुषोऽन्नमय इत्येव वक्तव्यम् । रसशब्दस्तु व्यर्थः । प्रयोजनानुपलब्धेः** । अन्नात्पुरुष इत्येव प्रकृतत्वाच्च । **नचास्मत्पक्षेऽपि रसशब्दस्य वैयर्थ्यम्** । अन्नमय इत्येवोक्ते प्राकृतान्नमयत्वं ( इत्येव ) प्रतीयेत । तन्निवृत्त्यर्थत्वेन **सार्थक्यादित्याशयवानाह** सारेति ॥

सारान्नमय एवायं न लोकान्नमयः प्रभुः ॥
इति तं रसशब्देन विशिनष्टि शरीरगम् ॥

**रसशब्दो हि सारवाची । रसस्सारो वरश्चेति शब्दाः पर्यायवाचका इति वचनात् । ततश्चान्नरसोऽन्नसारः । अन्नशब्दार्थेषु मुख्यार्थोऽनृत्वादि(लक्षण)स्तत्प्रचुर इत्युक्तं भवति । तस्य तात्पर्यार्थः** सारान्नमय इति । **इति ज्ञापयितुमिति शेषः । विशिनष्टि श्रुतिः । अपि च । शरीरपरामर्शोऽयं चेत्तस्येदमेव शिरः अयं दक्षिणः पक्षः अयमुत्तरः पक्षः अयमात्मा इदं पुच्छं प्रतिष्ठेति सर्वं व्यर्थमेव स्यात् । शरीरशिरःप्रभृतेः प्रत्यक्षसिद्धत्वेनोपदेशानपेक्षणात् ।**

**शे०**— तथा सत्येकस्यैव विरुद्धकार्यकारणभावप्रसङ्गादिति भावः ॥ **कारणत्वेनेत्युपपादयिष्यमाणत्वादिति** । कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेरित्यादिना चतुर्थे व्यङ्ग्यव्यञ्जकभावेन कारणत्वे सति कार्यत्वस्य बहुरूपत्वेन भगवत्युपपादयिष्यमाणत्वादित्यर्थः । भूतादिचतुष्टयस्याकाशादिशब्दार्थत्ववर्णनस्य प्रकृतोपयोगं दर्शयितुं तद्व्यावर्त्यमाशङ्कते **न चैवमिति** । आकाशादिशब्दानां

भगवदर्थत्व इत्यर्थः । तत्प्रतिपादकप्रमाणाभावादिति भावः ॥ **स्वीकारादिति** । तथा चानेनैव भूतादिसृष्टिसिद्धेर्नाप्रामाणिकत्वं तस्याः प्रसज्यत इति भावः । नन्वाकाशादिशब्दानामनेकार्थत्वमेव कुत इत्यत आह **अनेकार्थतायाश्चेति** ॥ **उपपादयिष्यमाणत्वादिति** । साधकबाधकभावाभावव्युत्पादनपूर्वकमनेकार्थत्वस्य 'तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः । प्रयोजनबहुत्वेन तस्य तस्याविरोधत' इति । 'इति बुद्धौ समारोहादुभयोर्योगरूढयोः । त्यागे च कारणाभावादुभयार्थत्वमिष्यते' इत्यादिना च स्वकीयपरकीयज्योतिरधिकरणव्याख्यानापव्याख्यानसमर्थननिरासावसरे उपपादयिष्यमाणत्वादित्यर्थः । एवं सम्भवशब्दस्य प्रादुर्भावार्थत्वाश्रयण इत्यर्थः । अन्यथा भगवत्यपि स्वरूपलाभार्थत्वापत्तेरिति भावः । भगवत्पक्षे सम्भवशब्दस्य प्रादुर्भावार्थत्वेऽपि भूतादिपरत्वपक्षे स्वरूपलाभाद्यर्थत्वाश्रयणान्नोक्तदोष इत्याह **सामान्यत इति** । कुत एवं वैरूप्यमित्यतो भगवति प्रादुर्भावस्यैव भूतादिषु स्वरूपलाभादेरेव योग्यत्वादिति भावेन यथायोग्यमेत्युक्तम् ॥ **प्रकृतसर्वेति** । आकाशादिशब्दैः प्रकृतं यद्भूततदभिमानितद्देहतदन्तर्नियामकभगवल्लक्षणचतुष्टयं तदात्मकत्वापत्तिरित्यर्थः ॥ **न चैतदन्याय्यमिति** । प्रकृतत्वाविशेषे कस्यचित्परामर्शः कस्यचित्परित्याग इत्यन्याय्यमित्यर्थः ॥ **तस्यैवेति** । तथा चाविशेषेण प्रकृतत्वमसिद्धमिति भावः ॥ **उक्तत्वादिति** । 'तत्र सत्यन्वं सृष्ट्याऽन्नप्राणयोरपी'त्यादिनेति शेषः ।

**प०— इति वचनादिति** । प्रथमे छांदोग्यभाष्योक्तवचनादित्यर्थः । इतिरसेत्यत्रेतिशब्दानुवादपूर्वं शेषमाह **इतिज्ञापयितुमिति शेष इति** ।

**श्री०—** संविधानेन प्रयत्नेन ॥ **अन्नात्पुरुष इति** । न ह्यन्नरसात्पुरुषोत्पत्तिः पूर्वमुक्ता । येनान्नरसमयत्वोक्तिर्घटते । किं त्वन्नादेव । एवं चान्नविकारित्वेनैव पूर्वं प्रकृतत्वाच्छरीरस्य तथैव परामर्शः कार्योऽतो रसशब्दवैयर्थ्यमिति भावः ॥ **तात्पर्यार्थ इति** । अन्नरसमयशब्दार्थकथनपरत्वेऽन्नरसमय इति वक्तव्यत्वादित्याशयः ॥

**च०—** पर्यायवाचकाः पर्यायरूपा वाचकाः ।

**सु०— नन्वीश्वरेऽप्यनुपपत्तिरेव । तस्य शिरःप्रभृत्यवयवाभावात् । न । प्रकाशवच्चेति वक्ष्यमाणत्वात् । तथाऽप्यनुपपत्तिः । ईश्वरशिरःप्रभृतीनामप्रत्यक्षत्वेनेदमिति निर्देशायोगादिति चेन्न । लक्षणयोपपत्तेरित्याशयवानाह** इदमिति ।

**अनु०—** इदमित्येव निर्देशो वस्त्रप्रावृतवद्विभोः ॥
शिर आदेर्भवेज्जीवशिर आदौ व्यवस्थितेः ॥

**इदमिति निर्देशोऽप्रत्यक्षेऽपि परमेश्वरशिरःप्रभृतौ** लक्षणया **भवेदेव । विभोः शिर-**

आदेर्जीवशिरआदौ प्रत्यक्षे व्यवस्थितेरिति लक्षणाबीजसम्बन्धं दर्शयति । ननु मुख्यप्रयोगं परित्यज्य लाक्षणिकं प्रयुञ्जानस्य प्रयोजनं वाच्यम् । दृष्टं हि गङ्गायां घोष इत्यादौ पावित्र्यादिज्ञापनमिति चेन्न । प्रकृते रूढलक्षणत्वादिति भावेनोक्तम् । वस्त्रप्रावृतवदिति । सप्तम्यर्थे वतिः । यथाऽप्रत्यक्षेऽपि जानुनि प्रत्यक्षवस्त्रप्रावृते प्रत्यक्षवस्त्रसन्निधानादिदमिति निर्देशस्तथा प्रकृतेऽपीत्यर्थः । ननु मुख्ये बाधकाभावात्कुतो लक्षणाश्रयणमिति चेन्न । शरीरपरिग्रहे वैय्यर्थ्यस्य स्फुटत्वात् ।

शे० — **प्रकाशवच्चेति** । तृतीये प्रकाशवच्चावैयर्थ्यमिति सूत्रेण यदा पश्यः पश्यते रुक्मवर्णमित्यादिश्रुतीनामवैयर्थ्याय लौकिकविग्रहविलक्षणविग्रहस्य वक्ष्यमाणत्वादित्यर्थः । शिरआदाविति दार्ष्टान्तिकानुरोधादाह **सप्तम्यर्थ इति** । तत्र तस्येवेति स्मरणादिति भावः ॥ **स्फुटत्वादिति** । शरीरशिरःप्रभृतेः प्रत्यक्षसिद्धत्वेनोपदेशानपेक्षणादिति भावः ।

प० — **प्रकाशवच्चेतीति** । भक्तिपादे ''अरूपवदे'वेत्यधिकरणे 'प्रकाशवच्चावैयर्थ्यमि''तिगुणसूत्रे यथा गृहांतश्चाक्षुषप्रकाशे सत्यपि बाह्यप्रकाशापेक्षया नास्ति प्रकाश इति व्यवहारः तथा भगवतो विग्रहवत्त्वेपि तस्य प्राकृतत्वादिरूपलोकदेहवैलक्षण्यादरूपमव्ययमित्यादिश्रुत्युपपत्तेर्न . तासां वैयर्थ्यमिति वक्ष्यमाणत्वादित्यर्थः । **सप्तम्यर्थे वतिरिति** । तत्र तस्येवेत्यनेत सप्तम्यर्थे वतिरित्यर्थः ।

या० —**प्रकाशवच्चेतीति** । प्रकाशवच्चावैय्यर्थ्यमिति सूत्रेण 'यदा पश्यः पश्यते रुग्मवर्णमि'त्यादिश्रुतीनामवैय्यर्थ्याय लोकविलक्षणविग्रहस्य वक्ष्यमाणत्वादित्यर्थः ॥

श्री० — **मुख्यप्रयोगमिति** । अस्मिन् शिर इति मुख्यप्रयोगमित्यर्थः ।

सु० — किञ्च सर्वमेव त आयुर्यन्तीति प्राण(अन्न)मयज्ञानान्मोक्षः श्रूयते । कदाऽपि मरणाभावो हि सर्वमायुः । न चासौ विना मोक्षाद्युज्यते । न च शरीरपरिग्रहे तद्युज्यते । तमेवंविद्वानि(त्यादि)श्रुतिविरोधादित्याह तमिति ।

अनु० — तं विदित्वाऽस्य मुक्तिः स्यान्नान्यज्ञानात्कथञ्चन ॥

तं परमात्मानं विदित्वा साक्षात्पश्यत इति शेषः । तेन समानकर्तृता । ब्रह्मशब्दादयोऽप्यत्र बाधकतया वक्तव्याः । ननु च विकारशब्दादिति सूत्रकारेणान्नमयादीनां ब्रह्मत्वाङ्गीकृतावेकामनुपपत्तिं परिहरता लक्षणया सर्वानुपपत्तिपरिहारोऽपि सूचितः । अत एव भोग्यत्वमत्र चाद्यत्वमित्यादिना भाष्यकृता तत्रैवानुपपत्तिपरिहारः कृतः । ब्रह्मशब्दोदित इत्यादिकमपि तत्रैव कर्तुमुचितम् । व्यवधाने कारणाभावात् । अन्यथोत्सूत्रितत्वप्रसङ्गादिति । मैवम् ।

**तत्सूत्रसूचितस्याप्यर्थस्य व्यवधाने प्रयोजनसद्भावात् । अन्नमयादीनां पञ्चानामप्यब्रह्मत्वोपपादकोपपत्त्याऽऽभासास्तत्र निराकृताः । अन्नमयमात्रविषयानुपपत्तिपरिहारस्त्वत्रेत्यनेन ज्ञाप्यते । किञ्च नेतरोऽनुपपत्तेरिति सूत्रं केचिन्न तावदन्नमयः परमात्मा परामर्शाद्यनुपपत्तेरिति व्याकुर्वते । तदपि निराकर्तुमत्रेदमुदितमिति ।**

शे० — **अन्नमयज्ञानान्मोक्षः श्रूयत इति** । यद्यप्यन्नमयप्रकरणे 'सर्वमेव त आयुर्यन्ती'ति वाक्यमेव न श्रूयत इति न तदन्नमयज्ञानस्य मोक्षसाधनतायां प्रमाणतयोपन्यसितुमर्हतीति हेतोरसिद्धिप्रसङ्गात् किन्तु सर्वं वैतेऽन्नमाप्नुवन्तीत्येतदेव । उदाहृतं च तदेव प्राक् टीकाकृताऽन्नमयज्ञानस्य मोक्षसाधनत्वे प्रमाणत्वेनेत्ययुक्तमिदमाभाति । तथापि तैत्तिरीयशाखायामन्नमयप्रकरणे तथाऽश्रवणेऽपि शाखान्तरे तत्प्रकरण एव तत्पाठमाश्रित्यायं ग्रन्थः प्रवृत्त इत्यदोषः । सर्वशाखानिर्णायकत्वात्सूत्राणामित्यवधेयम् । सर्वोपजीव्यत्वरूपान्नमयशब्दार्थस्य 'यद्भतिजीवने' इत्यादिना प्राणमयशब्दार्थतयोक्तत्वेनान्नमयप्राणमयशब्दयोरेकार्थत्वसिद्धेः प्राणमयब्रह्मत्वोपपादकस्यापि 'सर्वमेव त आयुर्यन्तीत्यस्यान्नमयस्यापि ब्रह्मत्वोपपादकत्वाभिप्रायेणायं ग्रन्थः प्रवृत्त इति तत्त्वम् । **श्रूयते** प्रतीयते । प्रतीतिमेवोपपादयति **कदाऽपीति** । एवं प्रतीतिमुपपाद्य शरीरपरिग्रहेऽपि कथं तदनुपपत्तिरित्यतस्तामुपपादयति **न चेति** । शेषपूरणे निमित्तमाह **तेनेति** । अन्यथा वेदनक्रियायाः पुरुषकर्तृकत्वात्स्यादिति भव क्रियायाश्च मुक्तिकर्तृकत्वेन समानकर्तृकत्वाभावाद्विदित्वेति क्त्वाप्रत्ययानुपपत्तिप्रसङ्ग इत्यर्थः । शेषपूरणे च वेदनक्रियायां दर्शनक्रियायां च पुरुषस्यैव कर्तृतया समानकर्तृकत्वाद्युक्तः क्त्वाप्रत्यय इति भावः । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु समानकर्तृकत्वाभावेऽपि क्त्वाप्रत्ययस्य 'यदोर्वंशं नरःश्रुत्वा सर्वपापैः प्रमुच्यत' इत्यादौ बहुलमुपलम्भेन तन्नियमस्यानावश्यकत्वादिति द्रष्टव्यम् ॥ **ब्रह्मशब्दादय इति** । आदिपदेन मान्त्रवर्णिकगानादिपरिग्रहः । कारणाभावादित्यत्र कारणशब्दः प्रयोजनपरः । अत एव प्रयोजनसद्भावादित्युत्तरत्र परिहारग्रन्थ इति ध्येयम् । अस्ति व्यवधाने कारणमित्याह **मैवमिति** । तर्ह्युत्सूत्रितत्वप्रसङ्ग इत्यतः प्रयोजनविशेषेण व्यवधानेऽपि तत्सूत्रसूचितत्वानपायान्नोत्सूत्रिततत्वप्रसङ्ग इत्याशयेनोक्तं तत्सूत्रसूचितस्येति । अभिमतं प्रयोजनविशेषं दर्शयति **अन्नमयादीनामिति** । यत्र क्वचिदुक्त्या व्यवधानकरणेनाप्युक्तप्रयोजनसिद्धेरत्रैव तदुक्तिर्व्यर्थेत्यतः प्रयोजनोक्त्याऽत्रैव तदुक्तिं घटयति **किञ्चेति** ।

प० — **सर्वमेव त आयुर्यन्तीत्यन्नमयज्ञानान्मोक्षः श्रूयत इति** । यद्यपि सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासत इत्येवान्नमयप्रकरणे मोक्षवाक्यम् । सर्वमेव त इति तु प्राणमयप्रकरणगतम् । पूर्वं नेतरोनुपपत्तेरित्येतद्व्याख्यावसरे तथैवोक्तेः । तथापि सर्वं वै तेऽन्नमाप्नुवंतीत्यत्र मोक्षपरत्वस्यास्फुटत्वात्प्राणमयप्रकरणे स्फुटत्वात्तत्प्रायपाठादन्नमयप्रकरणे श्रुतवाक्यस्यापि मोक्षपरत्वं ध्येयमिति भावेन प्राणमयप्रक-

रणगतवाक्यस्य मोक्षपरत्वोपपादनमतो नासंगतमेतदिति बोध्यम् । उपलक्षणमेतत । आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचनेत्यादिमनोमयादिप्रकरणस्थवाक्यानामपि मोक्षपरत्वस्पष्टीकरणं बोध्यम् ॥ लेखक-दोषमूलोयं पाठः । सर्वं वा इत्यादिवाक्यमेवोदाहार्यमित्येके ॥ **तेन समानकर्तृतेति** । समानकर्तृकयोः पूर्वकाले क्त्वेति समानकर्तृकक्रियांतरे सत्येव पूर्वकालीनक्रियावाचिधातोः क्त्वाप्रत्ययविधानात्पश्यत इति क्रियांतरानध्याहारे विदित्वेति क्त्वाप्रत्ययप्रयोगस्यासाधुत्वापत्तेरिति भावः ॥ **ब्रह्मशब्दादयोपीति ।** ब्रह्मशब्दमांत्रवर्णिकगानादिसिद्धांतसाधका अत्र लक्षणानाश्रयणे बाधकतया वक्तव्या इत्यर्थः ॥ **लक्षण-येति** । उपलक्षणतयेत्यर्थः ॥ **अनेनेति** । व्यवधानेनेत्यर्थः ।

या० — **प्राणमयज्ञानान्मोक्ष इति** । तथा चानेन प्राणस्य ब्रह्मत्वे निश्चिते तत्प्रायपाठविरोध-लक्षणबाधकसद्भावाल्लक्षणाश्रयणं युक्तमिति सूचितम् । क्वचिदन्नमयज्ञानान्मोक्षः श्रूयत इति पाठः । स प्रामादिकः । अत्र यद्यपि सर्वं वै तेऽन्नमाप्नुवन्तीत्यन्नमयज्ञानान्मोक्षः श्रूयत इत्येवं बाधकं वक्तुं युक्तम् । तथाऽपि तस्य लौकिकान्नप्राप्तिपरतयाऽपि सावकाशत्वसम्भवात्तत्परित्यागेनैवमुक्तमित्यवधेयम् ॥ **न च-शरीरपरिग्रह इति** । अन्नमयप्रकरण इति शेषः । प्रायपाठविरोधापत्तेरिति भावः ॥ छ ॥ छ ॥

श्री० — ननु विदित्वा मुक्तिरिति न युक्तम् । समानकर्तृकयोः पूर्वकाले क्त्वा । एककर्तृक क्रिययोर्मध्ये पूर्वकालीनक्रियायां वाच्यायां तद्वाचके पदे क्त्वाप्रत्ययो विहितः । भुक्त्वा व्रजतीति यथा । न ह्यत्र तथा समानकर्तृकताऽस्ति । वेदने पुरुषस्य कर्तृत्वात् । स्यादित्यत्र मुक्तेः कर्तृत्वा-दित्यत आह **विदित्वा साक्षात्पश्यत इति** । एवंच वेदनसाक्षाद्दर्शनक्रिययोरुभयोरपि जीवकर्तृत्वेन समानकर्तृकत्वात्तन्मध्ये वेदनपदोक्तपरोक्षज्ञानस्य दर्शनपूर्वकालीनत्वाद्युक्तस्तत्र क्त्वाप्रत्यय इति भावः । तत्रैव विकारशब्दादिति सूत्रव्याख्यानावसर एव ॥ **अन्नमयमात्रविषयानुपपत्तिरिति** । अन्नमयस्यैव ब्रह्मत्वविषये या अन्नरसमयत्वानुपपत्तिस्तत्परिहार इत्यर्थः । अत्र ब्रह्मशब्दोदित इत्यादिग्रन्थे । अनेन व्यवधानकरणेन ।

च० — **तेन समानकर्तृकतेति** । अनुपस्कारदशायां वेदनभवनयोः पुरुषमुक्तिकर्तृकतया विभिन्न-कर्तृकत्वेन समानकर्तृकत्वाभावेन क्त्वाप्रत्ययस्य दुस्सङ्गमत्वेप्युपस्कारोपगमेन वेदनदर्शनयोः समानकर्तृक-तया तस्य सुसङ्गमत्वादिति भावः । व्याकर्तारस्तु । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु समानकर्तृ-कत्वाभावेपि क्त्वाप्रत्ययस्य 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यत' इत्यादौ बहुलमुपलम्भेन तन्नियम-स्यानावश्यकत्वादिति द्रष्टव्यमित्यपि न्यभांत्सुः ।

सु०— अत्राह । जीव एवान्नमयादिशब्दार्थः । स ह्यन्नविकारशरीरावच्छिन्नत्वाद्भवत्यन्नमयः । प्राणमनोबुद्ध्यानन्दोपाध्यवच्छिन्नश्च भवति प्राणादिविकारो घटाकाशमिव घटविकारः । तेन प्राणमयत्वाद्युपपत्तिः । तथा च स वा एष पुरुष इति परामर्शस्तदुपाधिविषयतया हि श्लिष्टतरो भवति । रसशब्दश्चान्नस्थस्यविष्ठभागव्यावृत्त्यर्थो भविष्यति । इदमिति निर्देशश्च मुख्यार्थस्सम्पद्यते प्राणमयादिषु सर्वत्र शिरःप्रभृत्यवयवानां वक्तव्यत्वेन तन्न्याये सिद्धस्यापि कथनोपपत्तेः शरीरित्वमवयवित्वं प्रियादियोगो ब्रह्मपुच्छत्वं चेत्येतत्सर्वं समञ्जसं भवति । न च वक्तव्यं शरीरादिकोशा एव कुतस्तर्हि नाङ्गीक्रियन्ते । तथा चान्नमयप्राणमयमनोमयविज्ञानमयानन्दमा मे शुद्ध्यन्तामिति श्रुत्यन्तरानुगुण्यं च स्यादिति । कोशेषु ब्रह्मशब्दाद्यनुपपत्तेः । अन्यत्वमन्तरत्वं शरीरत्वं चोपाध्यपेक्षया जीवेऽप्युपपद्यन्ते ।

शे०— नन्वन्नमयादिशब्दानामन्नादिविकारवाचित्वाज्जीवस्यापि विष्णोरिवान्नादिविकारत्वाभावेन विकाराभिधायकशब्दवाच्यत्वानुपपत्तेः कथं विष्णुपरित्यागेन जीवस्यैव तत्त्वावधारणमित्यतो मयडनुपपत्तिं तावत्परिहरति स हीति । ननु चैवमपि जीवस्य प्राणादिविकारत्वाभावान्न स्वतः प्राणादिमयत्वं प्राणादीनां प्राणादिविकारत्वाभावेन प्राणादिविकारभूतप्राणादिकिञ्चित्पदार्थानवच्छिन्नत्वाच्च नान्नमयत्ववदपि तदिति कथं तस्य प्राणमयादित्वमित्यत उक्तप्रकारद्वयेन तदनुपपत्तावपि प्राणाद्युपाध्यवच्छिन्नस्य तस्य प्राणादिविकारत्वोपपत्तेर्नानुपपत्तिरित्याह प्राणेत्यादि । ननु गौरः श्याम इत्यादौ दर्शनादन्नविकारत्वाभावेऽप्यन्नविकारदेहाभिमानित्वादन्नमयत्वोपपत्तावपि कथं तदुपाध्यवच्छिन्नस्य तद्विकारत्वं येन विकारार्थकशब्दवाच्यत्वं स्यादित्यतो घटाद्युपाध्यवच्छिन्नस्य गगनस्य घटादिविकारिताया दृष्टत्वाद्युज्यते विकारार्थकशब्दवाच्यत्वं तस्येत्यभिप्रेत्योक्तं घटाकाशमिव घटविकार इति ।

ननु तथाऽपि न जीव एवेत्यवधारणं युक्तम् । परामर्शानुपपत्तेरुभयत्र तुल्यत्वादित्यतो जीवपक्षे उपाध्यपेक्षया युज्यते परामर्शः, ईश्वरपक्षे त्वीश्वरवत्तदुपाधेरप्यतद्रूपत्वान्न तदपेक्षयाऽपि परामर्शोपपत्तिरिति स इत्यात्मपदोद्दिष्ट इत्युक्तरीत्यैव तदुपपत्तिरिति न तस्य तत्र श्लिष्टत्वमिति युक्तमीश्वरपरित्यागेन जीवस्यैव तत्त्वावधारणमित्याशयेनाह तथा चेति । ननु नोपाध्यपेक्षया जीवपक्षे परामर्शोपपादनं युक्तम् तथा सत्यन्नात्पुरुष इति प्रक्रमानुसारेण स वा एष पुरुषोऽन्नमय इत्येव वक्तव्यतया रसशब्दवैयर्थ्यप्रसङ्गादित्यतस्तत्सार्थक्यमाह रसशब्दश्चेति ॥ इदमिति निर्देशश्चेति । तदुपाधिविषयतयेत्यनुवर्तते । तदुपाधेः प्रत्यक्षत्वादिदमित्यपरोक्षतया निर्देशस्य जीवपक्षे मुख्यार्थत्वमीश्वरपक्षे त्वीश्वरशिरःप्रभृतीनामीश्वरवदप्रत्यक्षत्वादिदमित्यपरोक्षतया निर्देशस्य मुख्यार्थत्वासम्भवादि'दमित्येव निर्देशो दस्रप्रावृतवद्धिभोरि'ति पूर्वोक्तरीत्या लाक्षणिकत्वस्यैवाश्रयणीयत्वाज्जीवमादाय मुख्यार्थत्वोपपत्तौ च लक्षणयेश्वरपक्षा-

श्रयणायोगाच्चेश्वरपरित्यागेन जीव एवेत्यवधारणमुपपन्नमिति भावः । ननु तथाऽपि जीव एवेत्यवधारण-मनुपपन्नम् । स वा एष इत्यस्य शरीरपरामर्शत्वे तस्येदमेव शिरः अयं दक्षिणः पक्षः अयमुत्तरः पक्षः इत्यादिकं सर्वं व्यर्थमेव स्यात् । शरीरशिरःप्रभृतीनां प्रत्यक्षसिद्धत्वेनोपदेशानपेक्षणा-दित्यत आह **प्राणमयादिष्विति** । ईश्वरपरित्यागेन जीवस्यैवान्नमयादिशब्दार्थत्वे युक्त्यन्तरं चाह **शारीरत्वमिति** । तस्यैष एव शारीर आत्मेत्यन्नमयादीनां शारीरत्वश्रवणादीश्वरस्यैवान्नमयादित्वे तस्य सशरीरत्वापत्त्या प्रियाप्रियस्पर्शौ न वारयितुं शक्यः । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहति-रस्ती'ति श्रुत्या सशरीरस्य तन्नियमात् । न चेश्वरस्यतत्संस्पर्शोऽङ्गीकर्तुं युक्तः । 'निरनिष्टो निरवद्य' इति तन्निषेधादतो नेश्वरस्य शारीरत्वमिति नान्नमयादित्वं किन्तु जीवस्यैवेति भावः ॥ **अवयवित्वा-मिति** । अन्नमयादेः शिरआद्यवयवत्वश्रवणादीश्वरस्यान्नमयादित्वे तस्यावयववत्त्वं वाच्यम् । न च तत्संभवति । निष्कलमिति श्रुत्या निरवयवत्वस्य श्रवणादतोऽपीश्वरपरित्यागेन जीव एवेत्यवधारणं युक्तमित्यर्थः ॥ **प्रियादियोग इति** । प्रियादियोगश्च ब्रह्मणि प्रमाणबाधित इति भावः ॥ **ब्रह्म पुच्छत्वं चेति** । सत्यं ज्ञानमनन्तं ब्रह्मेति प्रकृतस्य ब्रह्मणो ब्रह्म पुच्छं प्रतिष्ठेत्यानन्दमयाश्रयत्वाभिधाना-ज्जीवस्यानन्दमयतायां ब्रह्मणस्तदाश्रयत्वाभिधानस्य समञ्जसत्वेऽपीश्वरस्यानन्दमयत्वे न वाक्यशेषोक्तमान-न्दमयाश्रयत्वं समञ्जसं स्वस्य स्वाश्रयत्वस्यानुपपन्नत्वादिति भावः ।

ननूक्तरीत्या परामर्शादेरश्लिष्टत्वप्रसङ्गेनेश्वरस्यान्नमयादित्वानुपपत्त्या तदन्यस्यान्नमयादित्वादेरवश्या-श्रयणीयत्वेऽपि जीव एवेत्यवधारणमनुपपन्नमेव । शरीरादिकोशानामेव तदुपपत्तेः । न च विनिगम-नायां कारणाभावः । जीवस्यान्नमयादित्ववादिनाऽपि शरीरोपाधिविवक्षयैव जीवे 'स वा एष' इत्यादि-परामर्शादिव्युत्पादनेन तस्मिन्परामर्शादेरतिश्लिष्टत्वात् । किञ्च शुद्धिप्रार्थनावाक्यानुगुण्यं शरीरपक्षे स्वरसं भवति जीवपक्षे तु तदपि शरीरोपाधिविवक्षया व्युत्पादनीयं स्यादिति तस्यासामञ्जस्यप्रसङ्ग इत्या-शयेन शङ्कते **नच वक्तव्यमित्यादिना ॥ ब्रह्मशब्दाद्यनुपपत्तेरिति** । निराबाधस्य ब्रह्मशब्दस्य परमात्मना विनाऽनुपपत्तेरित्यर्थः । ब्रह्मशब्दादीत्यादिपदेनानुपदमेव वक्ष्यमाणासाधारसाधारणयुक्तिकलापपरा-मर्शः । ननु ब्रह्मशब्दाद्यनुपपत्त्या शरीरादिकोशपरित्यागे जीवस्यापि परित्याग आवश्यकः । अन्नमया-दीनां तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमय' इत्यादिना परस्परमन्यत्वेनान्तरत्वेन तस्यैष एव शारीर आत्मा यः पूर्वस्येति शरीरिभावेन च श्रवणाज्जीवस्यान्नमयादित्वे च तस्य स्वस्य स्वस्मादन्य-त्वस्य स्वस्यैव स्वस्मादन्तरत्वस्य स्वस्यैव शरीरशरीरिभावस्य चाङ्गीकर्तव्यत्वात्; न च तस्यैव तं प्रति तत्संभव इत्यत आह **अन्यत्वमित्यादि** । तथा च तदुपाधीनां परस्परमन्यत्वादुत्तरोत्तरस्य पूर्वपूर्वस्मादन्त-रत्वात्पूर्वपूर्वं प्रत्युत्तरोत्तरस्य शरीरत्वेन शरीरशरीरिभावस्य च सत्त्वाज्जीवोपाधिभूतशरीरविवक्षया स वा

एष इत्यादिपरामर्शादेरिवान्यत्वादेऽपि शरीरप्राणाद्युपाधिविवक्षयोपपत्तेर्युक्तं जीवस्यान्नमयादित्वावधारण-मित्याशयः ।

प० — 'भेदव्यपदेशाच्चे'तिसूत्रव्यावर्त्याशंकामाह **अत्राहेति** । जीवब्रह्मैक्यवादीति योज्यम् । पंचसु शब्देषु मयटां विकारार्थत्वमुपेत्य जीवे तद्घटनाप्रकारमाह **स हीति** । प्राणाद्युपाध्यवच्छिन्नश्च प्राणादिविकारो भवतीत्यत्र दृष्टांतमाह **घटेति** ॥ **तदुपाधीति** । जीवोपाधिभूतपुरुषशब्दितदेहविषय-तयेत्यर्थः ॥ **तत्प्राय इति** । तत्सदृश इत्यर्थः ।

श्री० — नन्वन्नविकारशरीरावच्छिन्नजीवस्यान्नमयत्वाङ्गीकारे तस्येदमेव शिर इत्युपदेशान-र्थक्यम् । शिरःप्रभृत्यवयवानां प्रत्यक्षसिद्धत्वेनावक्तव्यत्वादित्यत आह **प्राणमयादिष्विति** । **तत्प्राये** तत्समाने अन्नमयप्रकरणे । **नाङ्गीक्रियन्ते** अन्नमयादिशब्दार्थतयेति शेषः । तथाच किं जीवपरत्वाङ्गी-कारेण जीव इव कोशेष्वपि लिङ्गानां सम्भवादिति भावः ॥ **ब्रह्मशब्देति** । शुद्धिप्रार्थनं तु जीवे उपाध्य-पेक्षया युक्तमित्याशयः । नन्वन्नमयादीनामन्यत्वान्तरत्वाद्युक्तेस्तस्य च कोशेष्वेव सम्भवो न जीवे इत्यत आह **अन्यत्वमिति** ॥ छ ॥

**सु० — ननु जीवपक्षेऽप्यनुपपत्तिरस्ति । ब्रह्मशब्दो हि निराधारो न परमात्मना विनोपपद्यते । 'अद्यतेऽत्ति चेति' सर्वाद्यत्वं सर्वात्तृत्वं 'प्राणं देवाः' इति सर्वदेवादिचेष्टकत्व यतो वाच' इति वाङ्मनसागोचरत्वं 'विज्ञानं देवा' इति सर्वदेवोपास्यत्वं ज्येष्ठत्वं 'सोऽकामयत' इति सङ्कल्पपूर्वकं सर्वस्रष्टृत्वं सर्वान्तरत्वमित्यादीनि नाल्पतरज्ञानशक्त्यादिसंपन्ने जीवे संभवन्ति । तद्धेतुव्यपदेशश्चासङ्गतः स्यात् । मान्त्रवर्णिकव्याख्यानता च बाध्येत । न च जीवज्ञानान्मोक्षो युज्यत इति । मैवम् । उपनिषदर्थानवबोधात् । अत्र हि जीवब्रह्मणोरेकत्वं विवक्षितम् । तत्र यानि वाक्यानि शुद्धविरोधीनि तान्युपहितसंसारिस्वरूपापेक्षाणि । ब्रह्म-शब्दादीनि तु तत्स्वभावसिद्धपरमात्मस्वरूपापेक्षाणि । ऐक्यविवक्षा चात्र वाक्यशाबल्यान्यथा-ऽनुपपत्त्यैव गम्यते । न चैवं विनिगमनायां कारणाभावात्परमात्मैवान्नमयादि(शब्द)वाच्यो-ऽस्त्विति युक्तम् । विशुद्धविरोधिनां वाक्यानां परमात्मनि सर्वथाऽनुपपत्तेः । सत्यप्यभेदे महाकाशधर्म एवावच्छिन्नाकाशे व्यवह्रियते । 'यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति । न तु परिच्छिन्नधर्मो वितस्तिमात्रत्वं महाकाशे । न च ब्रह्म पुच्छं प्रतिष्ठेत्यनुपपन्नम् । अस्य जीवस्य ब्रह्म पुच्छमायतनमधिष्ठानं निजं स्वरूपमित्यर्थोपपत्तेः । तस्मा'न्नेतरः' इत्यनुप-पन्नमित्याशङ्कां परिहर्तुं भेदव्यपदेशाच्चेति सूत्रम् ।**

ब्र. सू. **॥ ॐ भेदव्यपदेशाच्च ॐ ॥**

शे० — ननु न ब्रह्मशब्दाद्यनुपपत्त्या शरीरादिकोशानामन्नमयत्वादि निराकर्तुं युक्तम् । यथाकथञ्चिद्ब्रह्मशब्दादीनां कोशेष्वपि सम्भवात् । अवश्यं च ब्रह्मशब्दादीनां यथाकथञ्चित्सम्भवमुपादायोपपत्तिः परेण वाच्या । कथमन्यथा जीवस्यान्नमयादित्वमिति पराभिप्रेतं सिद्ध्येत् । ब्रह्मशब्दाद्यनुपपत्तेः कोशेष्विव जीवेऽपि तुल्यत्वादित्याशयेन शङ्कते **नन्विति** । अनुपपत्तिर्ब्रह्मशब्दाद्यनुपपत्तिरित्यर्थः । कथं तदनुपपत्तिरित्यतो ब्रह्मशब्दस्य तावज्जीवेऽनुपपत्तिमुपपादयति **ब्रह्मशब्दो हीति** । कथं तर्हि 'ब्रह्म ब्रह्मैव भवती'त्यत्र द्वितीयब्रह्मशब्दस्य जीवपरत्वमित्यतो बाधकवशात्क्वचिज्जीवपरत्वेऽपि निराबाधस्य परमात्मैकनिष्ठत्वात्प्रकृते चानुपपत्त्यभावस्य पूर्वमेवोपपादितत्वात्तस्य परमात्मपरत्वमेवेत्याशयेनोक्तं निराबाध इति । आदिशब्दसङ्गृहीतानुपपत्तिमुपपादयति **अद्यतेऽत्ति चेत्यादि** । 'नेतरोऽनुपपत्तेरि'त्युक्तानुपपत्तिमप्याह ॥ **न च जीवज्ञानादिति** । स्यादेतदेवं यद्यत्र जीवब्रह्मैक्यविवक्षा सिद्धा स्यात् । न चैतदस्ति । प्रमाणाभावादित्यत आह **ऐक्यविवक्षा चात्रेति** । नन्वैक्यविवक्षया ब्रह्मशब्दादीनामुपपत्तिर्न वक्तुं शक्या । तथा सति तत एवेश्वरस्याप्यन्नमयादित्वेऽनुपपत्तिपरिहारसम्भवेन तस्यैवान्नमयादित्वोपपत्तावीश्वरपरित्यागेन जीवस्यान्नमयादित्वावधारणानुपपत्तिप्रसङ्गात् । अन्यथा ब्रह्मशब्दादीनामैक्यविवक्षयोपपत्तिर्न स्यात् । ऐक्यविवक्षायामपि ब्रह्मशब्दादीनामेवोपपत्तिर्न तु विशुद्धविरोधिवाक्यानामित्यत्र नियामकाभावादित्याशङ्क्य निराकरोति **न चैवमित्यादिना** ॥ **अनुपपन्नमिति** । अत्र ह्यानन्दमयब्रह्मणोरवयवावयविभावाभिधानात्तयोश्च भेदस्यैव सर्वसम्मतत्वादैक्यविवक्षा तद्विरुद्धेति भावः । नेदमानन्दमयब्रह्मणोरवयवावयविभावाभिधानमुखेन भेदाभिधानमङ्गीकर्तुं शक्यम् । उक्तवाक्यशाबल्यान्यथाऽनुपपत्तिबाधितत्वात् । किन्त्वानन्दमयस्य ब्रह्मस्वरूपत्वाभिधानमेवेति परिहरति **स यश्चेति** ।

**न चैवमिति** । साधकप्रमाणाभावद्बाधकसद्भावाच्चेत्यर्थः । कथं तदुभयमित्यतो बाधकसद्भावमुपपादयति **स यश्चेति** । अनुभाष्यमुपलक्षणमित्यभिप्रेत्य 'स यश्चायं पुरुषे यश्चासावादित्य' इत्यादिभेदव्यपदेशादित्येतत्सूत्रीयभाष्यस्थादिशब्दसङ्गृहीतभेदव्यपदेशान्तरमाह **तथेत्यादि** । एवं बाधकसद्भावमभिधायाधुनाऽभेदविवक्षासाधकत्वेन परेणोपन्यस्तं वाक्यशाबल्यान्यथाऽनुपपत्तिमनूद्य दूषयति **यदुक्तमित्यादिना** ॥ **ततो न जीव इति** । साधकबाधकभावाभावाभ्यां जीवब्रह्मणोरभेदासिद्ध्याऽभेदविवक्षयाऽपि जीवे ब्रह्मशब्दादीनामनुपपत्तेर्न कोशपरित्यागेन जीवस्यान्नमयादित्वावधारणं युक्तमिति भावः ॥

प० — **अत्र हीति ।** ब्रह्मवल्यामित्यर्थः ॥ **उपहितेति ।** उपाध्यवच्छिन्नेत्यर्थः ॥ **वाक्यशाबल्येति ।** शुद्धलिंगोपहितलिंगवाक्यमेलनान्यथाऽनुपपत्त्येत्यर्थः ॥ **नेतर इत्यनुपपन्नमिति ।** "इतरो जीवादिरन्नमयादिर्नेति" यदुक्तं पूर्वसूत्रे तदयुक्तमित्याशंकामित्यर्थः ॥

श्री० — ॥ ॐ **भेदव्यपदेशाच्च** ॐ ॥ **जीवपक्षेऽपीति ।** कोशपक्ष इवेति शेषः ॥ **यानि वाक्यानीति ।** अन्यस्वशागीरत्वप्रतिपादकानीत्यर्थः । शुद्धं चैतन्यम् ॥ **तत्स्वभावेत्यादि ।** संसारिस्वभावभूतचैतन्यतया सिद्धं यत्परमात्मस्वरूपं तत्पराणीत्यर्थः ॥ **वाक्यशाबल्येति ।** संसारिशुद्धचैतन्योभयस्वरूपप्रतिपादकानि यानि अन्यर ।दिब्रह्मशब्दादियुक्तानि वाक्यानि तेषां सङ्कीर्णत्वस्यैक्यविवक्षां विनाऽसंभवादित्यर्थः ॥ **परमात्मन्येवेति ।** जीवधर्माणां कथंचित्परमात्मन्यपि सम्भवादिति भावः । ननु तर्हि परमात्मनिष्ठब्रह्मशब्दादीनां संसारित्वविरोधिनां कथं जीवेऽप्युपपत्तिर्विनिगमकाभावादित्यतो विनिगमकमाह **सत्यपीति ।** एवं च ब्रह्मधर्माणामेव जीवे व्यवहारो न जीवधर्माणां ब्रह्मणीत्यस्ति विनिगमकमिति भावः ।

**सु० — तत्र चशब्दः प्रतिज्ञासमुच्चयार्थ इति भावेन सूत्रं व्याचष्टे** आदित्य इति ।

**अनु० — ॥ ॐ भेदव्यपदेशाच्च ॐ ॥**

आदित्ये पुरुषे चायमिति भेदोपदेशतः ॥
नास्याभेदोऽस्ति जीवेन

**स्यादेतदेवं कथञ्चित् । यद्यस्यामुपनिषदि जीवपरमात्मनोरभेदो विवक्षितः स्यात् । न चैवम् । 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति पुरुषादित्यशब्दोपलक्षितापकृष्टोत्कृष्टसकलजीवानां नियम्यतयाऽधिकरणत्वेन परमात्मनश्च नियामकतयाऽधिष्ठातृत्वेन भेदस्यैवात्रोपदेशात् । तथा 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति लब्धृलब्धव्यतया 'यदा ह्येवैषः' इत्युपासकोपास्यतया 'उपसंक्रामति' इति प्राप्तृप्राप्यतया 'भीषाऽस्मात्' इति नियम्यनियामकतया च भेदोपदेशा द्रष्टव्याः । यदुक्तं वाक्यशाबल्या(न्यथाऽ)नुपपत्तिरत्र प्रमाणमिति । तदयुक्तम् । केवलं ब्रह्मपरतयैव वाक्यानां समञ्जसीकृतत्वात् । ततो न जीवोऽन्नमयादिशब्दवाच्य इति ।**

प० — **प्रतिज्ञेति ।** नास्याभेदोऽस्ति जीवेनेति प्रतिज्ञेत्यर्थः । इतिशब्दमाद्यर्थं मत्वा मूलोक्तमुपलक्षणं मत्वाऽऽह **तथेति** ॥ ननूक्तवाक्यशाबल्यान्यथानुपपत्तिपराहताः भेदव्यपदेशा इत्याशङ्क्य निषेधति **यदुक्तमित्यादिना** ॥ **ततो न जीव इति ।** जीवब्रह्मणोरत्यंतभिन्नत्वेन ब्रह्मत्वसाधकानां ब्रह्मशब्दादीनां जीवे कथमप्यवृत्तेरिति भावः ॥

या०— ॥ ॐ भेदव्यपदेशाच्च ॐ ॥ ननूक्तवाक्यशाबल्यान्यथाऽनुपपत्तिपराहता भेदव्यपदेशा इत्याशङ्क्य निराकरोति यदुक्तं वाक्येति ॥ ततो न जीव इति । जीवस्य ब्रह्मणोऽत्यन्तभिन्नत्वेन ब्रह्मसाधकानां ब्रह्मशब्दादीनां जीवे कथमप्यवृत्तेरित्यर्थः ॥ छ ॥ छ ॥

श्री०— अपकृष्टोत्कृष्ट इति । जीवसामान्यवाचिना पुरुषपदेनापकृष्टजीवानां देवविशेषवाचिनाऽऽदित्यपदेनोत्कृष्टजीवानां च लक्षणेति ध्येयम् ॥ छ ॥

सु०—ननु कथमुच्यते नास्य परमात्मनोऽभेदोऽस्ति जीवेनेति । अनुमानतस्तदभेदस्य प्रमितत्वात् । तथा चोक्तविधयाऽन्नमयत्वादिकं जीवस्य किं न स्यात् । न चोक्तभेदोपदेशविरोधः । अनुमानविरोधेन तस्यैवान्यपरत्वोपपत्तेरित्याशङ्कापरिहाराय सूत्रं कामाच्च नानुमानापेक्षेति ।

ब्र. सू.— ॥ ॐ कामाच्च नानुमानापेक्षा ॐ ॥

तद्व्याचष्टे नानुमेति ।

अनु०— ॥ ॐ कामाच्च नानुमानापेक्षा ॐ ॥

नानुमा कामचारिणी ॥

विमतानि शरीराणि मद्भोगायतनानि यत् ॥

शरीराणीत्यादिका तु तत्त्वज्ञाने ह्यपेक्ष्यते ॥

प्रत्यक्षादिविरुद्धत्वात्

सम्प्रतिपन्नस्वशरीरेषु सिद्धसाधनतापरिहाराय विमतानीत्युक्तम् । यद्यस्माच्छरीराणि । शरीरत्वादित्यर्थः । मच्छरीर(ादि)वदिति दृष्टान्तः । आदिग्रहणाद्विप्रतिपन्नानीन्द्रियाणि ममैव करणानि इन्द्रियत्वात्सम्प्रतिपन्नवदित्यादीनामुपादानम् । नन्वेतान्यनुमानानि प्रतिक्षेत्रं क्षेत्रज्ञानामभेदं साधयन्ति । न तु जीवानां परमात्माभेदम् । तेन विमता आत्मानः परमात्मनः (तत्त्वतो) न भिद्यन्ते आत्मत्वात्परमात्मवदित्याद्यनुमानमत्र शङ्कनीयम् । न त्विदमिति । मैवम् । न हि जीवानामुपहितस्वरूपाणामेव साक्षादभेदः सम्भवति । प्रत्यक्षादिविरोधात् । ततश्च निरुपाधिकेन रूपेणाभेदेऽनुमानं पर्यवस्यति । तथा च कथं न प्रकृतसङ्गतिरिति । तत्त्वज्ञाने तत्त्वज्ञानार्थम् । नापेक्ष्यते । तत्त्वज्ञानकारणं न भवतीत्यर्थः । कुतः । प्रत्यक्षादिविरुद्धत्वात् । हिशब्दो दृष्टान्तसूचकः । तदयं प्रयोगः । विमतानि शरीराणीत्यादिकाऽनुमाऽनुमानत्वेन पराभिमता । यथार्थज्ञानकारणं न भवति । प्रमाणविरुद्धत्वाद्दहनानुष्णतासाधनानुमानवदिति ।

प्रत्यक्षादिविरुद्धाऽपि सदनुमा किं न स्यादित्यत उक्तं कामचारिणीति ।

**तद्विवृणोति** अक्षेति ।

अक्षागमभयोज्झिता ॥

अनुमा कामवृत्ता हि

**अक्षं प्रत्यक्षम् । अनुमानमप्यत्रोपसङ्ख्येयम्** । अक्षागमभयोज्झितेति । **तद्विरोधभयोज्झितेत्यर्थः । कामवृत्ता पुरुषेच्छानुसारिप्रवृत्तिमती । नन्वनेन किं विपक्षे बाधकमुक्तमित्यत** आह कुत्रेति ।

कुत्र नावसरं व्रजेत् ॥

**किमाक्षेपे । सर्वत्राप्यवसरं व्रजेदित्यर्थः** ।

**शे०— उक्तविधयेति** । अत्र हेत्युक्तविधयेत्यर्थः । **अन्यपरत्वेति** । व्यावहारिकभेदपरत्वोपपत्तेरित्यर्थः । यच्छरीराणीत्यत्र यच्छब्दस्यार्थकथनपूर्वकं विशिष्टस्य तात्पर्यमाह **यद्यस्मादित्यादि** । इत्यादीनामित्यादिपदेन विप्रतिपन्नानि चक्षूंषि ममैव दर्शनकरणानि चक्षुष्ट्वान्मच्चक्षुर्वदित्यादीनामुपादानम् ॥ **अत्र शङ्कनीयमिति** । जीवपरमात्माभेदसाधकत्वेन प्रकृतसङ्गतत्वादिति भावः ॥ **न त्विदमिति** ॥ जीवानामन्योन्य भेदसाधकप्रमाणस्य जीवपरमात्मनोरभेदासाधकत्वेन प्रकृतासङ्गतत्वादिति भावः ॥ **तथा चेति** । निरुपाधिकेन रूपेण जीवानामभेदेऽनुमानपर्यवसाने सिद्धे सतीत्यर्थः ॥ **कथं न प्रकृतसङ्गतिरिति** । निरुपाधिकस्य निरुपाधिकेनाभेदे वक्तव्ये निरुपाधिकस्यैव ब्रह्मत्वाद्ब्रह्माभेदस्यैव तेन सिद्धेर्न प्रकृतासङ्गतिरित्यर्थः । ॥ **तत्त्वज्ञानार्थमिति** । तत्त्वज्ञान इति सप्तमी तादर्थ्ये इति भावः । ननु निर्दोषोपपत्तेरेवानुमानत्वात्तस्या यथार्थज्ञानकरणत्वाभावसाधनं बाधितमित्यत **उक्तम् अनुमानत्वेन पराभिमतेति** । प्रमेयत्वाज्जडं चितिरित्युत्तरानुव्याख्यानं मनसि निधायाह **अनुमानमप्यत्रोपसङ्ख्येयमिति** ।

**स०**— तत्र हि शरीराणीत्येवोक्ते स्वशरीराण्यादाय सिद्धसाधनताप्राप्तौ विमतानीत्युक्तम् ।

**प०**— ॐ **कामाच्च नानुमानापेक्षा** ॐ । यदित्यस्यार्थो यद्यस्मादिति । यस्माच्छरीराणीत्यस्य फलितार्थः शरीरत्वादित्यर्थ इति ॥ **प्रतिक्षेत्रमिति** । प्रतिदेहमित्यर्थः । क्षेत्रज्ञानां जीवात्मनां । अत्र जीवब्रह्माभेदे प्रत्यक्षमागमं वानाशङ्क्यानुमानमेवाशङ्क्य तन्निराकृतौ तात्पर्यं चंद्रिकायां व्यक्तं ॥ **तथा च कथमिति** । निरुपाधिकरूपस्यैव परमात्मत्वादिति भावः ।

**या०**— ॥ ॐ **कामाच्च नानुमानापेक्षा** ॐ ॥ **तथा च कथमिति** । निरुपाधिकरूपस्यैव परमात्मत्वादिति भावः । निर्दोषोपपत्तिरूपानुमाया यथार्थज्ञानकरणत्वमस्त्येवेति तदभावसाधने बाध इत्यत उक्तम् **अनुमानत्वेनेति** ।

श्री० — ॥ ॐ कामाच्च नानुमानापेक्षा ॐ ॥ अन्यपरत्वेति । व्यावहारिकभेदपरत्वेत्यर्थः ॥ स्वशरीरेषु अतीतानागतवर्तमानेषु ॥ न प्रकृतेति । ऐक्यनिराकरणस्य प्रकृतमङ्गतिर्नेति कथमित्यर्थः । अक्षशब्दस्य दुष्टेन्द्रियसाधारण्यादाह अक्षमिति । निर्दोषार्थेन्द्रियसन्निकर्ष इत्यर्थः । अदुष्टमिन्द्रियं त्वक्षमित्यन्यत्रोक्तमत्र नाभिप्रेतमिति हृदयम् ।

च० — विमतानीत्युक्तमिति । प्रकृतसाध्यतदभावकोटिकविमतिविषयीभूतानीत्यर्थः ।

सु० — तत्कथमित्यत आह जड इति ।

अनु० — जड आत्मैव वस्तुत्वात्प्रमेयत्वाज्जडं चितिः ॥
घन आकाश इत्याद्या वार्यन्ते केन हेतुना ॥

आत्मा जडो ज्ञानानाश्रयो वस्तुत्वाद्घटवत् । आकाशो घनो निबिडावयवः । प्रमेयत्वात्पाषाणवदिति साक्षिप्रत्यक्षविरुद्धम् । जडं घटादिकम् । चितिश्चेतनम् । प्रमेयत्वादात्मवदित्यनुमानविरुद्धम् । चैतन्यकार्यस्य सर्वथाऽप्यनुपलम्भात् । आद्यपदेन ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् । क्षीरवदित्यागमविरुद्धस्य ग्रहणम् । केनेत्याक्षेपे । यदि प्रत्यक्षादिविरोधिनोऽप्यनुमात्वं स्यादिति शेषः । प्रत्यक्षादिविरुद्धमपि यद्यैक्यानुमानं प्रमाणं स्यात्तदोदाहृतमपि किं न स्यादविशेषादित्युक्तं भवति । नन्वत्र कथं प्रयोक्तव्यम् । यथान्यासमवेत्येवकारेणाह । तर्हि प्रतिज्ञापदव्याघातः स्यादिति चेत् । अस्तु । न हि प्रत्यक्षादिविरोधादयं गरीयान् । समश्च परानुमाने । तत्परिहारोऽप्यत्र तुल्यः । नन्वाकाशो घन इति साधने कालादौ व्यभिचारः । न । पक्षतुल्यत्वात् । यदत्र वक्तव्यं तदुपरिष्टाद्वक्ष्यत इति ।

शे० — इति साक्षिप्रत्यक्षविरुद्धमिति । इत्यनुमानद्वयं साक्षिप्रत्यक्षबाधितमित्यर्थः । आत्माऽऽकाशस्वरूपग्राहिणा साक्षिप्रत्यक्षेण ज्ञानाश्रयत्वनिबिडावयवत्वाभावयोरेव सिद्धेरिति भावः । ऐन्द्रियकातीन्द्रियसाधारण्येन जडमात्रस्य पक्षत्वे वक्ष्यमाणप्रकारेणानुमानविरोधाप्रसरादैन्द्रियकमेव जडं पक्षत्वेनाभिप्रेतमित्याशयेनोक्तं घटादिकमिति । गूढाभिसन्धिः शङ्कते नन्वत्रेति । अत्र ज्ञानाश्रयत्वाद्युक्तसाध्यविषयकं प्रतिज्ञावाक्यं कीदृशमित्यर्थः । तथैवोत्तरवाद्यपि परिहरति यथान्यासमिति । पूर्ववादी स्वाशयमुद्घाटयति तर्हीति । उत्तरवाद्यपि तमुद्घाटयति अस्त्विति । नन्वेवं प्राक् प्रतिज्ञाताविशेषभङ्गप्रसङ्ग इत्यत आह समश्चेति । विमतानि शरीराणीत्याद्यनुमानेष्वपि विमतिविषयतावच्छेदकत्वेन स्वभोगानवच्छेदकशरीरादित्वमेव वाच्यम् । अन्यथा सिद्धसाधनात् । तथा च विमतानीत्यनेन स्वभोगानवच्छेदकत्वस्यैव लाभात्स्वभोगानवच्छेदकशरीरेषु स्वभोगावच्छेदकत्वसाधनेऽपि प्रतिज्ञापदव्याघातः परस्यापि सम इत्यर्थः ।

ननु स्वभोगानवच्छेदकत्वं न विमतिविषयतावच्छेदकतया ब्रूमः किं नाम स्वभोगानवच्छेदकत्वेनाभिमतत्वमेव । तत्कथं प्रतिज्ञापदव्याघात इत्यतस्तर्हि प्रकृतेऽपि ज्ञानाश्रयत्वेनाभिमतस्यैव पक्षत्वात्तत्र ज्ञानानाश्रयत्वसाधनेऽपि न प्रतिज्ञापदव्याघात इत्याशयेनाह **तत्परिहारोऽपीति** । ननु नैक्यानुमानानां भेदग्राहिप्रत्यक्षादिप्रमाणबाधो युक्तः । भिन्नविषयत्वेनाविरोधात् । भेदग्राहकप्रत्यक्षादेर्मिथ्याभेदविषयकत्वात् । ऐक्यानुमानानां पारमार्थिकाभेदविषयत्वादित्यतः पृथगधिकरणे भेदग्राहकप्रत्यक्षादेर्मिथ्याभेदविषयकत्वाभावस्याभेदानुमानादेश्च पारमार्थिकाभेदविषयकत्वाभावस्य विस्तरेण वक्ष्यमाणत्वादभेदानुमानस्य प्रत्यक्षादिविरोधो दुष्परिहर इत्याशयेनाह **यदत्रेति** । यद्वा । ऐक्यानुमानानां तत्त्वमस्यादिश्रुतिमूलकत्वात्कथं निर्मूलोक्तानुमातुल्यत्वमित्यतः पृथगधिकरणे सर्वासामैक्यश्रुतीनामभेदपरत्वाभावस्य वक्ष्यमाणत्वेनैक्यानुमानस्यापि निर्मूलत्वाज्जड आत्मैवेत्याद्यनुमानतुल्यत्वमपरिहार्यमित्याशयेनाह **यदत्रेति** ।

**स०** - एवं शरीरशब्दस्य भोगायतनवाचकतया स्वस्य यानि भोगायतनानि तान्येव पक्ष इति वाच्यं तथा च तत्रापि व्याघात एवेति भावः । ननु नात्र व्याघातः चेष्टाश्रयत्वादीनामेव शरीरशब्दार्थतयाऽत्र विवक्षितत्वेन भोगायतनत्वस्य तदर्थतयाऽविवक्षितत्वादित्यत आह **तत्परिहारोऽपीति** । तर्ह्यत्रापि जातिरूपस्य वा सुखाश्रयत्वादिरूपस्य वा ज्ञानाश्रयत्वेनाभिमतस्य शब्दार्थतया विवक्षितत्वेन ज्ञानाश्रयत्वालाभे न व्याघातः । एवं शब्दसमवायिकरणत्वमेवाकाशत्वेनोक्तरूपमतस्तत्रापि न व्याघात इति भावः । ननु नास्मदनुमानानां प्रमाणविरोधः भेदप्रमाणानां मिथ्याभूतभेदविषयकतयाऽतत्त्वावेदकत्वादित्यत आह **यदत्र वक्तव्यं तदिति** ॥ 'समीपे सहभोगस्य मुक्तित्वेनोक्तितोऽसकृत् । भेदो जीवेशयोर्मिथ्येत्येव मिथ्या स्वयं भवे'दित्यत्र जीवेशभेदमिथ्यात्वाभावो वक्ष्यत इत्यर्थः ।

**प०**— जडआत्मेत्यादेः प्रत्यक्षानुमानागमविरुद्धानुमा कुत्र नावसरं व्रजेदिति प्रागुक्तविवृतिरूपत्वात्क्रमादक्षादिविरुद्धानुमानोक्तिपरत्वलाभाय मूलोक्तक्रमव्यत्यासेन मूलं व्याचष्टे **आत्मेत्यादिना** ॥ **इति साक्षीति** । इत्यनुमानद्वयं साक्षिप्रत्यक्षविरुद्धमित्यर्थः ॥ **तर्हि प्रतिज्ञापदव्याघातः स्यादिति चेदिति** । आत्मेत्यस्य ज्ञानाश्रय इत्यर्थत्वात् । तथाऽऽकाश इत्यस्य निबिडावयवद्रव्यमित्यर्थत्वात् । जडमित्यस्याचेतनमित्यर्थत्वादिति भावः ॥ **समश्च परानुमान इति** । विमतानि शरीराणीत्यस्य मद्भोगायतनभूतमदीयातीतानागतशरीरव्यावृत्तये मद्भोगानायतनानि शरीराणीत्यर्थत्वादिति भावः । ननु तत्तद्भोगायतनतया प्रतीयमानानि शरीराणीति पक्षस्यार्थः अतो न व्याघात इति चेत्तर्ह्यात्मादिपदैरपि प्रमातृत्वादिधर्मान्तराक्रांतरूपेण पक्षीकरणस्याभिमतत्वान्न व्याघात इति भावेनाह **तत्परिहारोपीति** । ननु नाभेदानुमानानां प्रत्यक्षादिबाधः । भेदस्य मिथ्यात्वेन प्रत्यक्षादेरप्रमाणत्वादिति चोद्यं कुतो न निरस्यत इत्यत आह **यदत्रेति** ॥ **उपरिष्टादिति** । "अस्मिन्नस्ये"तिसूत्रव्याख्यानपरे समीपे सहभोगस्य मुक्तित्वेनेत्या-

दिग्रन्थे वक्ष्यत इत्यर्थः । यद्वा । भेदग्राहकत्वमेव नास्ति प्रत्यक्षस्य कुतो भेदानुमानबाधकत्वमित्यत उक्तं **यदत्रेति** । "भेदो विशेष्यधर्म्यादिग्रहणापेक्षया यदि । अन्योन्याश्रयता हेतोर्दुर्ग्राह्य" इत्यादिना बौद्धपरीक्षायां प्रत्यक्षस्य भेदग्राहकत्वं वक्ष्यत इत्यर्थः । अथवानुमानानां कामचारित्वेन दूषणे मीमांसाऽनारंभापातेन व्याघातः स्यात् । इदमनुमानं मानं इदं नेति व्यवस्थायामनुमानस्य वाच्यत्वादित्यत आह **यदत्रेति** । "आगमानुगृहीतानुमानमेवानुमाऽपि तु" इत्यादौ "तर्काप्रतिष्ठानादि" त्येतद्व्याख्यानावसरे वक्ष्यत इत्यर्थः । यद्वाऽभेदानुमानस्य प्रत्यक्षादिबाधादेरुक्तावप्यभेदागमस्यापि प्रत्यक्षबाधादेरत्र वक्तव्यत्वादित्यत आह **यदत्रेति** । "पृथगुपदेशादि" त्यत्र वक्ष्यत इत्यर्थः इत्यादि ज्ञेयम् । अतो विरोधस्तदवस्थ इति भावः ।

**या०—इति साक्षीति** । इत्यनुमानद्वयं साक्षिप्रत्यक्षविरुद्धमित्यर्थः । अतीन्द्रियजडस्य पक्षत्वे चैतन्यकार्यस्य सर्वथाप्यनुपलम्भादिति वक्ष्यमाणहेतोरसिद्धिरित्यत आह **घटादिकमिति** । गूढाभिसन्धिराह **नन्वत्रेति** । अत्र ज्ञानानाश्रयत्वाद्युक्तसाध्यविषये प्रतिज्ञावाक्यं कीदृशमित्यर्थः । अभिसन्धिमुद्घाटयति **तर्हीति** । चेतनशब्दपर्यायात्मशब्दाज्ज्ञानाश्रयस्यैव प्रतीतेः । आकाशशब्दस्य निबिडावयवरूपावकाशवाचकत्वादिति भाव । नन्वेवमविशेषोऽसिद्ध इत्यत आह **समश्चेति** । अत्र विमतिविषयतावच्छेदकाज्ञाने विमतिविषयत्वस्यैव ज्ञातुमशक्यत्वेनावश्यकतया विमतिविषयतावच्छेदकरूपेणैव पक्षनिर्देश उचितः । विमतिविषयतावच्छेदकं चात्र स्वभोगानायतनशरीरत्वम् । तथा च मद्भोगानायतनानि शरीराणि मद्भोगायतनानीति प्रतिज्ञायां व्याघातः सम इत्यर्थः । ननु नात्र व्याघातः । मच्चेष्टानाश्रयशरीराणीति वा मदिन्द्रियानाश्रयशरीराणीति वा मद्भोगायतनत्वेनाभिमतानि शरीराणीति वा पक्षनिर्देशसम्भवादित्यत आह **तत्परिहारोऽपीति** । अत्राप्यात्मत्वजातिमान्वा सुखाद्याश्रयो वा ज्ञानाश्रयत्वेनाभिमतो वेति पक्षनिर्देशसम्भवान्न व्याघात इति तादृशपरिहारोऽपि तुल्य इत्यर्थः । एवं शब्दसमवायिकारणमित्यादिरूपेण पक्षनिर्देशे नाकाशपक्षकानुमानेऽपि व्याघात इत्यवधेयम् । ननु नास्मदनुमानानां प्रमाणविरोधो भिन्नविषयत्वात् भेदप्रमाणानि हि मिथ्याभेदविषयकाणि अनुमानानि तु पारमार्थिकाभेदसाधकानीत्यत आह **यदत्र वक्तव्यमिति** । 'समीपे सह भोगस्य मुक्तित्वेनोक्तितोऽसकृत् । भेदो जीवेशयोर्मिथ्येत्येव मिथ्या स्वयं भवेदि' त्यत्र जीवपरमात्मभेदस्यापि पारमार्थिकत्वं वक्ष्यते । अतो विरोधस्तदवस्थ इत्यर्थः । यद्वा । नैक्यानुमानान्युक्तानुमानतुल्यानि श्रुतिसहकृतत्वादित्यत आह **यदत्रेति** । उपरिष्टात्पृथगधिकरणे सर्वासामैक्यश्रुतीनां भेदपरत्वमेव वक्ष्यते । तथा चैक्यानुमानानां केवलानुमानत्वमेवेत्युक्तानुमानाविशिष्टतोपपन्नेति भावः ।

**श्री०— कथमिति** । साध्यभूतजडत्वस्य ज्ञानानाश्रयत्वार्थकत्वादात्मशब्दस्य च ज्ञानाश्रयार्थकत्वाज्ज्ञानाश्रयो ज्ञानानाश्रय इति प्रयोक्तव्यमन्यथा वेत्यर्थः । ज्ञानाश्रयो ज्ञानानाश्रय इति प्रयोगे

व्याघातं वक्ष्यामीत्याशयो गूढ इति ध्येयम् । एवं घन आकाश इत्यत्राप्यनिबिडावयवद्रव्यं निबिडावयवद्रव्यमिति प्रयोक्तव्यमन्यथा वेत्यपि ज्ञातव्यम् ॥ यथान्यासमात्मा जड इत्येव नान्यथेत्यर्थः ।

च०— ननु जीवब्रह्मैक्यसाधकानुमानानां न प्रमाणविरोधः शक्यनिरूपणः भेदप्रमाणानां मिथ्याभेदविषयकत्वादनुमानानां च पारमार्थिकैक्यसाधकत्वादित्यत आह **यदत्र वक्तव्यमिति** । पृथगुपदेशादितिनये निखिलश्रुतीनामैक्यतात्पर्यकत्वाभावस्याभिधास्यमानतया तादृशानुमानानामपि मूलराहित्यादाभाससमकक्षतया बाधकाभावाज्जीवपरमात्मभेदस्य पारमार्थिकत्वैवेत्यभिधास्यमानतया तेषां प्रमाणविरोधस्तदवस्थ इति भावः ।

**सु०— नन्वथातो ब्रह्मजिज्ञासेत्यत्रैव जीवेशभेदः समर्थितः । तथा जन्मादिसूत्रेणापि । अतो जीवैक्यमित्युक्तत्वात् । अत्रापि पुनस्तत्साधने पुनरुक्तता स्यादित्यत** आह न जीवेति ।

अनु०— न जीवभेदसूत्राणां शङ्क्याऽत्र पुनरुक्तता ॥

वाक्यान्तरद्योतकत्वात्

**अत्र शास्त्रे तत्र तत्र प्रकरणे ह्यैक्यविवक्षायां चोदितायां तत्तद्गतभेदवाक्यद्योतनेन सूत्रेषु भेदसमर्थनं क्रियते । अतस्तात्पर्यभेदान्न पुनरुक्तता शङ्क्या । तथा हि । जिज्ञासावाक्येष्वभेदशङ्कायां तद्गतब्रह्मशब्देनैव भेदसमर्थनम् । जिज्ञास्यस्य ब्रह्मणो जीवत्वे शङ्किते तत्पूर्ववाक्योक्तलक्षणेन भेदसाधनमित्यादि स्वयमूह्यम् । एवमेव 'भेदव्यपदेशाच्चान्यः' इत्यादादावपि पुनरुक्ततादोषः परिहरणीयः । नन्वेवं सत्यभेदः स्वरूपेण कुत्रापि न निराकृतः स्यादित्यत** आह पृथगिति ।

पृथगित्यत्र पूर्णता ॥

**पूर्णता प्रधानता । भेदसाधनस्य स्वातन्त्र्येण विचारितत्वात् । यद्यपि प्रकरणविशेषविषयतयाऽभेदे निराकृतेऽपि स्वरूपनिराकरणमर्थात्सिद्ध्यति । तथाऽपि वस्तुस्थितिकथनमेतदित्यदोषः । अथवा पुनरुक्तिपरिहारस्यैवंजातत्वा'दत एव चोपमे'त्यादिसूत्राण्यापातप्रतीतभाष्यदिशा भेदपराणीव प्रतिभान्ति । तन्निरासार्थमिदमुक्तम् । 'पृथगुपदेशादि'त्यत्रैव भेदसमर्थनस्य पूर्णता पर्यवसानमिति । यद्यप्येतत्करिष्यमाणव्याख्यानादेव ज्ञास्यते । तथाऽपि स्पष्टार्थमुक्तमित्यदोषः ।**

**शे०—समर्थित इति ।** तद्रिजिज्ञासस्व तद् ब्रह्मेति ब्रह्मशब्देन गुणपूर्णत्वोक्तेरनुभवसिद्धाल्पगुणजीवाभेद इति न्यायविवरणे उक्तत्वादिति भावः । भेदव्यपदेशाच्चान्य इत्यादावित्यादिपदेन

विशेषणभेदव्यपदेशाभ्यां, शारीरश्चोभयेऽपि भेदेनैनमधीयते इत्यादेर्ग्रहणम् ॥ **स्वरूपेणेति** । प्राधान्येनेत्यर्थः । प्रकरणविशेषविषयतयैव तत्र तत्र निराकृतत्वादिति भावः । नन्वत एव चोपमेत्यादिसूत्रेषु भाष्यदिशा भेदपरत्वप्रतीतिरेव न भवितुमर्हति । भेदस्याथातो ब्रह्मजिज्ञासेत्यादिनैव समर्थितत्वेनात एव चोपमेत्यादावपि तत्समर्थने पौनरुक्त्यप्रसङ्गात् । तत्कथं तन्निरासोऽस्य प्रयोजनं स्यादित्यत उक्तम् **पुनरुक्तिपरिहारस्यैवज्ञातत्वादिति** ॥ तत्र तत्र प्रकरणे ऐक्यविवक्षायां चोदितायां तत्प्रकरणगतवाक्यान्तरद्योतनेन सूत्रेषु भेदसमर्थनेन तात्पर्यभेदान्न पुनरुक्तिरिति भेदपरत्वप्रतीतिरवर्जनीयैवेति भावः । अत एव **चोपमेत्यादीत्यादिपदेनाम्बुवदग्रहणादित्यादेर्ग्रहणम्** । चशब्देन भेदं दर्शयतीत्युक्तत्वाद्भाष्यादत एवेत्यादीनां भेदपरत्वप्रतिभास इति ज्ञेयम् । टीकोक्तरीत्योदाहृतभाष्यस्यार्थान्तरपरत्वप्रतिभासजनकत्वेऽपि तद्रीत्यननुसरणे उदाहृतभाष्यांशस्य भेदप्रतीतिजनकत्वमेवेत्याशयेनापातप्रतीतभाष्यदिशेत्युक्तम् ॥ **एतदिति** । अत एवेत्यादिसूत्राणां भेदसमर्थनपरत्वमित्येतदित्यर्थः ॥ **करिष्यमाणेति** । 'न च चित्वादभिन्नत्वं जीवस्येशवदाप्यत' इत्यादिना करिष्यमाणादत एवेत्यादिसूत्रव्याख्यानादेवेत्यर्थः ।

प० — **इत्युक्तत्वादिति** । "अतो जीवैक्यमपि स निराचक्रे जगद्गुरु"रिति जन्मादिसूत्रे उक्तत्वादित्यर्थः ॥ **स्वरूपेणेति** । अभेदत्वेनेत्यर्थः । तथाचाभेदः प्रकरणविशेषविषयो नेत्येव निराकरणं कृतं अभेदो नेति कुत्रापि न निराकरणं कृतं स्यादिति भावः ।

या० — **स्वरूपेणेति** । अभेदत्वेनेत्यर्थः । तथा चाभेदप्रकरणविशेषविषयो नेत्येव निराकृतम् । अभेदो नेति निराकरणं कुत्रापि न कृतं स्यादिति भावः ॥ **आपातप्रतीतभाष्येति** । आपातप्रतीता या भाष्यादिकरीतिस्तयेत्यर्थः । तथा हि । भाष्ये अत एव चोपमेत्यत्र चशब्देन भेदं दर्शयतीत्युक्तत्वात् साक्षादेव भेदपरत्वम् । अम्बुवदग्रहणादित्यत्र भगवद्भक्त्या तत्सादृश्यं सम्यगभिव्यज्यत इत्युक्तत्वात् । वृद्धिह्रासभाक्त्वमित्यत्र एवं भक्त्यादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीनन्यान्प्रति सामञ्जस्यं भवतीत्युक्तत्वात् । परमत इत्यत्र यतोऽलौकिकत्वात्परमेव ब्रह्मानन्दादिकमिति वचनाद्भेदकधर्मोक्त्या भेदपरत्वमापाततः प्रतीयते । वस्तुतस्त्वेषां सूत्राणां तत्त्वप्रकाशिकोक्तरीत्याऽर्थान्तर एव तात्पर्यमिति ॥ छ ॥ छ ॥

श्री० — **स्वरूपेणेति** । अभेदो नास्तीति कण्ठरवेणेत्यर्थः ॥ **भेदसाधनस्येति** । पृथगित्यत्र सूत्रकृता प्राधान्येन भेदसाधनं कृतम् । साधनं च स्वपक्षसाधनपरपक्षोपालम्भः । तथा चाभेदः स्वरूपतो निराकृत एवेत्याशयः ॥ **प्रकरणविशेषेति** । तत्तत्प्रकरणविशेषबलेन तैस्तैरिन्द्रादिभिरभेदोऽस्त्वित्याशङ्किते तत्तत्प्रकरणे इन्द्रादिभिरभेदो न विवक्षितो भेदकधर्मकथनबलादित्येवं निषेधे सामान्यतोऽभेदस्वरूपनिराकरणं सिध्यत्येव । नीलादियावद्घटविशेषनिषेधे घटसामान्याभावसिद्धिवदिति यद्यपि, तथाऽपि पृथगिति सूत्रे सामान्यतोऽभेदमेव पूर्वपक्षयित्वा यद्भेद एव सिद्धान्तः क्रियते तद्वस्तुस्थितिज्ञा-

पनायेति मन्तव्यम् । एवं वाक्यान्तरद्योतकत्वादित्युक्तरीत्येत्यर्थः ॥ **तन्निरासार्थमिति** । उत्तरत्र शास्त्रसमाप्तिपर्यन्तं भेद एव तत्र तत्र समर्थ्यत इत्येतन्निरासायेदमुदितमित्यर्थः ॥ **पर्यवसानमिति** । तथा च तत्र भेदो न समर्थ्यत इति भावः ॥ **एतदिति** । 'अत एवे'त्यादौ भेदो न समर्थ्यत इत्येतदित्यर्थः ॥ **ज्ञातस्य इति** । तथाच 'पृथगित्यत्र पूर्णते'ति न वाच्यमिति भावः ॥ छ ॥

**सु०— शरीरादिकोशा एवान्नमयादिशब्दवाच्या इति पक्षोऽपि नेतरोऽनुपपत्तेरिति साधारणदोषेण दूषित एव । विशेषदोषेण दूषयितुं सूत्रम्** अस्मिन्नस्य च तद्योगं शास्तीति

**ब्र. सू०— ॥ ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥**

**तद्व्याचष्टे** योगमिति ।

**अनु०— ॥ ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥**

योगमन्नमयाद्यैर्यत्फलत्वेनास्य शंसति ॥
स्थानद्वयेऽप्यतः कोशा एत इत्यतिसाहसम् ॥

**यद्यस्मादस्य स य एवंविदित्युक्तस्य ब्रह्मविदः फलत्वेनान्नमयादिभिर्योगं तत्प्राप्तिं स्थानद्वयेऽप्यनुवाकद्वयेऽपि । शंसति कथयति श्रुतिः । एतमन्नमयमात्मानमुपसङ्क्रामतीत्यादि । एतमन्नमयमात्मानमुपसङ्क्रम्येत्यादि च । अत एतेऽन्नमयादयः कोशा इत्येतद्व्याख्यानमतिसाहसं पूर्वोत्तरापरामर्शमूलम् । न हि शरीरादिकोशप्राप्तिर्ब्रह्मविद्याफलमिति संभवति । तरति शोकमात्मविदित्यादिविरोधात् । शरीरादेश्च शोकरूपत्वात् । स्यादेतद्यद्यत्रान्नमयादिप्राप्तिरुच्येत । न चैतदस्ति । उपसङ्क्रमशब्दस्यातिक्रमार्थत्वादित्यत आह** उपसङ्क्रमणं चेति ।

उपसंक्रमणं चैव द्वितीयोद्देशिंत प्रति ॥
अतिक्रमं वदन्तं तमुपशब्दो निवारयेत् ॥

**द्वितीयोद्देशितं प्रति । द्वितीयया कर्मत्वेनोक्तमन्नमयादिकं प्रति यदुपसंक्रमणमुच्यते तदतिक्रमं वदन्तम् । उपसंक्रमणपदनाचिपदमतिक्रमार्थं व्याकुर्वन्तमिति यावत् । उपशब्दो निवारयेत् । तस्योपशब्दविरोधः स्यात् । उपपूर्वस्य क्रमेः प्राप्त्यर्थत्वात् । दोषान्तरमाह** अश्रुतस्येति ।

अश्रुतस्यातिशब्दस्य स्थानं दद्यात्कथं पुनः ॥
श्रुताश्रुतपरित्यागकल्पने विगतह्रियाम् ॥

पुनरिति दोषान्तरसमुच्चयार्थः । वाक्यद्वयतात्पर्यमाह श्रुतेति ।

एवं व्याकुर्वाणेन हि श्रुतमुपशब्दं त्यक्त्वा तत्स्थानेऽश्रुतोऽतिशब्दोऽध्याहार्यः । तथा च श्रुतपरित्यागोऽश्रुतकल्पनं च स्यात् । तदुभयं च लज्जाहेतुरिति । न वयं श्रुतपरित्यागेनाश्रुताध्याहारं कुर्मो येनायं दोषः स्यात् । किं नामाव्ययानामनेकार्थत्वादुपशब्दोऽतिशब्दार्थो व्याख्यायत इति चेन्न । नियामकेन विना प्रसिद्धार्थत्यागाप्रसिद्धार्थस्वीकारानुपपत्तेः ।

शे० — साधारणदोषेणेति । जीवादिसाधारणतज्ज्ञानान्मोक्षानुपपत्तिरूपदोषेणेत्यर्थः ॥ विशेषदोषेणेति । शरीरादिकोशमात्रासाधारणदोषेणेत्यर्थः । नन्वेकतात्पर्यकभिन्नभिन्नस्वार्थप्रतिपादकप्रकरणसमुदायस्यैव स्थानत्वात्प्रकृते चान्नमयादिप्रकरणानामन्नादिप्रकरणानां चोक्तरीत्यैकार्थ्यादुक्तरूपस्थानत्वाभावान्न स्थानद्वय इत्युक्तिरुपपन्नेत्यतो लक्षणया स्थानशब्देनानुवाकस्यैवात्र ग्रहणान्नानुपपत्तिरित्याह स्थानद्वयेऽप्यनुवाकद्वय इति । आद्येनादिपदेनैतं प्राणमयमात्मानमुपसङ्क्रामतीत्यादेर्द्वितीयेन त्वेतं प्राणमयमात्मानमुपसंक्रम्येत्यादेर्ग्रहणम् । ननु शोकनिवृत्तिफलकब्रह्मविद्यायाः शोकप्राप्तिफलकत्वस्य विरुद्धत्वेऽपि शरीरादिकोशप्राप्तिफलकत्वस्य न तद्विरोध इत्यतः शरीरादिकोशनामपि शोकाविनाभूतत्वेन शोकरूपत्वात्तत्प्राप्तिफलकत्वस्य तद्विरोध एवेत्याह शरीरादेश्चेति । उपशब्दो निवारयेदित्यस्य तात्पर्यम् ॥ तस्येत्यादि । विरोधोपपादनम् ॥ उपेति । तत्रैव प्रयोगप्रत्ययप्राचुर्यादिति भावः । किमत्र दोषान्तरत्वसूचकं येन दोषान्तरमाहेत्यवतार्यत इत्यत आह पुनरितीति । अतो न वैयर्थ्यविरुद्धार्थत्वे इति भावः ।

सु० — न ह्यव्ययान्यनेकार्थानीत्येतावताऽन्तःशब्दस्य बहिरित्यर्थो गृह्यते । किन्तु प्रयोगादिकमनुसृत्यैवेति स्थितेऽभ्युपगम्यापि दोषमाह मृतावेवेति ।

अनु० — मृतावेव परित्यागः कृतो ह्यन्नमयस्य च ।

हि यस्मादन्नमयस्य कोशस्य चशब्दात्प्राणमयस्य च परित्यागो मृतावेव कृतो भवति । मृतेः शरीरत्यागरूपत्वात् । तस्मादस्माल्लोकात्प्रेत्येति मरणोक्त्यैवान्नमयाद्यतिक्रमस्योक्तत्वात्पुनरेतमन्नमयमात्मानमुपसंक्रामतीति तदतिक्रमोक्तौ पुनरुक्तिः प्रसज्येतेति । किञ्च ब्रह्मविदाप्नोति परमित्युपक्रमानुगुण्यं च प्राप्तिपरत्वे स्यात् । अतो नान्नमयादयः कोशाः किन्तु विष्णुरेव । शुद्धिप्रार्थनलिङ्गाद्वाक्यान्तरोक्तानां कोशत्वेऽपि न कश्चिद्विरोधः । अपि च तेऽन्नमयादयः । एते त्वन्नरसमय इत्युपक्रमाद्रसो वै स इति वाक्यशेषाच्चान्नरसमयादय इति शब्दान्तरन्यायेनाप्यन्ये भविष्यन्तीति सर्वमनवद्यम् ॥ ॥ छ ॥ छ ॥

शे०— **किन्तु विष्णुरेवेति** । कोशान्तर्गतभगवन्मूर्तिविशेषा एवेत्यर्थः । नन्वनुवाकद्वयोक्तानामन्नमयादीनां ब्रह्मत्वं नाङ्गीकर्तुं युक्तम् । तथा सत्यन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्तामिति वाक्योक्तान्नमयादीनामपि ब्रह्मत्वप्रसङ्गात् । अनुवाकद्वयोक्तान्नमयादीनामेव वाक्यान्तरेऽप्यन्नमयादिश्रुत्या शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञायमानत्वेनैकत्वनिर्णयात् । न च वाक्यान्तरोक्तानां ब्रह्मत्वमभ्युपगन्तुं शक्यम् । शुद्धिप्रार्थनविरोधादत आह **शुद्धिप्रार्थनलिङ्गादित्यादि** । उपलक्षणं चैतत् । ब्रह्मशब्दाभावात्तल्लक्षणाभावाज्ज्ञानिनस्तत्प्राप्तिकथनाभावाच्चेत्यपि द्रष्टव्यम् ॥ **तेऽन्नमयादय इति** । न त्वन्नरसमयादय इत्यर्थः । रसशब्देन वाक्यान्तरोक्तानामविशेषणादिति भावः ॥ **एते त्विति** । अनुवाकद्वयोक्ता अन्नरसमयादय इति व्यवहितेनान्वयः । कुतोऽनुवाकद्वयोक्तानामन्नरसमयादित्वमित्यत उपक्रमोपसंहारयो रसशब्देन विशेषणादिति भावेनोक्तमन्नरसमय इत्युपक्रमादित्यादि ॥ **शब्दान्तरन्यायेनेति** । शब्दान्तराधिकरणन्यायेनेत्यर्थः । अथैष ज्योतिरथैष विश्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेत्यत्र किं दक्षिणाविशेषविधानार्थज्योतिरादिशब्दैः प्रकृतज्योतिष्टोमानुवादः किंवा कर्मान्तराण्येवंनामकानि विधीयन्त इति संशये प्रकरणात्प्रकृताभिधायेतच्छब्दसामानाधिकरण्याच्च ज्योतिरादिशब्दैर्दक्षिणाविधानार्थं ज्योतिष्टोमोऽनूद्यत इति प्राप्ते संज्ञान्तरश्रवणेनार्थभेदावगतेर्बलवद्बाधकाभावाद्यजेतेत्यनेनैव ज्योतिष्टोमानुवादसिद्धेरथैष इत्यादेरानर्थक्यापातादेतच्छब्दस्य प्रस्तूयमानपरामर्शित्वसम्भवाच्च दक्षिणाविशिष्टज्योतिरादिसंज्ञककर्मान्तरविधिरेवेति सिद्धान्तितं भेदलक्षणे । अत्र यथा संज्ञाभेदात्कर्मभेदस्तथाऽन्नमयादीनामन्नरसमयादीनां च संज्ञाभेदाद्भेद इत्यर्थः । शब्दान्तरन्यायेनापीत्यपिशब्देनानुक्तप्रकरणभेदसमुच्चयः ।

स०— **शब्दान्तरन्यायेनेति** । संज्ञाभेदन्यायेनेत्यर्थः । संज्ञाभेदन्यायस्त्वित्थम् । ज्योतिष्टोमं प्रकृत्य श्रूयते 'अथैष ज्योतिः' अथैष विश्वज्योतिरथैष सर्वज्योतिस्तेन सहस्रदक्षिणेन यजेतेति । तत्र संदेहः किं प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्देनानूद्य सहस्रदक्षिणाख्यो गुणो विधीयते उत कर्मान्तराण्येतन्नामान्येवंदक्षिणानीति । पूर्वपक्षस्तु गुणो विधीयत इति । ज्योतिष्टोमप्रकरणात् । अन्यथा प्रकृतहानाप्रकृतप्रक्रिये स्याताम् । एतच्छब्दस्य पूर्वप्रकृतवाचित्वाच्चेति । सिद्धांतस्तु गुणविशिष्टकर्मान्तरमिति । न च तत्र प्रमाणाभावः । निर्बाधभिन्नसंज्ञाया एव प्रामाण्यात् । न च प्रकरणविरोधः । अथ शब्देन प्रकरणविच्छेदात् न चैतच्छब्दायोगस्तस्य संनिहितमात्रपरत्वात् संनिधानस्य चातीत इवागामिन्यपि संभवात् । आगामिसन्निहितश्च ज्योतिःशब्दार्थः । स च ज्योतिःशब्दोऽतीतमपरामृशन् अपूर्वसंज्ञारूपत्वात् नूतनं किंचित् कर्माभिधत्ते । अतोऽत्र संज्ञया कर्म भिद्यते । एवं विश्वज्योतिःशब्दादावपीति ।

**प०— अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥ शब्दान्तरन्यायेनेति ।** शब्दांतरे कर्मभेदः कृतानुबन्धित्वादि'ति द्वितीयाध्यायद्वितीयपादोक्तजैमिनीयन्यायेनेत्यर्थः । तत्र यथा यजति ददाति जुहोतीति शब्दभेदाद्यागदानहोमानां नानार्थत्वं तथेहापीति भावः । चंद्रिकायां तु 'अथैषज्योतिः अथैष-विश्वज्योति त्यादाविव संज्ञाभेदाद्भेद' इत्युक्तम् । 'शब्दभेदादर्थभेद' इतिन्यायेनेत्येके ।

**या०—॥ ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ॥ ॥ वाक्यान्तरोक्तानामिति ।** 'अन्नमय-प्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्तामि'ति वाक्यान्तरोक्तानामित्यर्थः । **शब्दान्तरन्यायेनापीति ।** संज्ञाभेदन्यायेनेत्यर्थः । संज्ञाभेदन्यायस्त्वित्थम् । ज्योतिष्टोमं प्रकृत्य श्रूयते । 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते'ति । तत्र संशयः । किं प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्दैरनूद्य सहस्रदक्षिणाख्यो गुणो विधीयते । उत कार्यान्तराण्येतन्नामान्येवंदक्षिणानि विधीयन्त इति । पूर्वपक्षस्तु, प्रकृतमेव ज्योतिष्टोममनूद्य तत्र गुणो विधीयत इति । ज्योतिष्टोमप्रकरणात् । अन्यथा प्रकृतहानाप्रकृतप्रक्रिये स्याताम् । एतच्छब्दस्य पूर्वप्रकृतवाचित्वाच्चेति । सिद्धान्तस्तु । गुणाविशिष्टं कर्मान्तरमिति । न च तत्र प्रमाणाभावः । निर्बाधभिन्नसंज्ञाया एव मानत्वात् । न च प्रकरणविरोधः । अथशब्देन प्रकरणविच्छेदात् । न चैतच्छब्दायोगः । तस्य सन्निहितमात्र-परत्वात् । सन्निधानस्य चातीत इवागामिन्यपि सम्भवात् । आगामिसन्निहितश्च ज्योतिःशब्दार्थः । स च ज्योतिःशब्दोऽतीतमपरामृशन् अपूर्वसंज्ञारूपत्वान्नूतनं किञ्चित्कर्माभिधत्ते । अतोऽत्र संज्ञया कर्म भिद्यते । एवं विश्वज्योतिःशब्दादावपीति ॥

**श्री०— प्राप्तिपरत्व इति ।** उपसंक्रामतीत्यस्य प्राप्त्यर्थकत्वं कथयतामस्माकं मतेऽन्नमयादीनां पञ्चानामपि परब्रह्मत्वेन सर्वस्यापि प्रकरणस्य भगवत्परत्वादुपक्रमानुगुण्यं भवति न त्वन्मत इत्यर्थः । ते स्थानान्तरोक्ताः । एते त्वन्नरसमयादय इत्यन्वयः । तथा चान्नरसमयः प्राणरसमयो मनोरसमयो विज्ञानरसमय आनन्दरसमय इति द्रष्टव्यम् । **शब्दान्तरेति ।** संज्ञान्तरेत्यर्थः । जुहोति ददातीत्यादिशब्दभेदात्कर्मभेदो दृष्टस्तद्वदित्यर्थः ।

**च०— शब्दान्तरन्यायेनेति ।** संज्ञांतराधिकरणन्यायेनेत्यर्थः । संज्ञाभेदन्यायेनेति वार्थः । अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेत्यत्र दक्षिणाविशेषविधानफलको ज्योतिरादिशब्दैः प्रकृतज्योतिष्टोमानुवादः कार्यान्तराण्येवं नामकानि विधीयंते वेति संशये ज्योतिष्टोमप्रकरणात्प्रकृतपरामर्शकैतच्छब्दसमभिव्याहाराच्चैः शब्दैस्तद्विधानफलकः स एवानूद्यत इति पूर्वपक्षे प्राप्ते संज्ञान्तरश्रवणेनार्थभेदाधिगतेर्बलवद्बाधकाभावाद्यजेतेत्यनेनैव तदनुवादसिद्धेरथैष इत्यानर्थक्यापत्त्या प्रस्तूयमानपरामर्शकत्वसंभवादेतच्छब्दस्य दक्षिणाविशिष्टज्योतिरादिसंज्ञककार्यान्तराण्येव विधीयन्त इति

भेदलक्षणे सिद्धान्तितम् । अत्र संज्ञाभेदाद्यथा कर्मभेदस्तद्वत्प्रकृतेप्यन्नमयादीनां संज्ञाभेदनियंत्रितो भेद इत्यर्थः ।

सु० – एवमन्नमयादीनां पञ्चानामपि परब्रह्मत्वप्रतिपादनपरतया सूत्राणि व्याख्याय परेषामपव्याख्यां प्रत्याख्यातुमुत्तरोऽयं ग्रन्थसन्दर्भ आरभ्यते । तत्र मायावादिनोऽन्नमयादयः पञ्चापि कोशा इति मन्यमाना ब्रह्मपुच्छं प्रतिष्ठेत्युक्तस्य ब्रह्मणः स्वप्राधान्येन ज्ञेयत्वप्रतिपादकान्येतानि सूत्राणीति व्याचक्षते । तथा हि । अन्नमयादयश्चत्वारस्तावदन्नादिविकाराः कोशा एव । तथा च विकारार्थे मयट्प्रवाहे सत्यानन्दमय एवाकस्मादर्धचरतीयन्यायेन कथमेव मयटः प्राचुर्यार्थत्वं ब्रह्मविषयत्वं चाश्रीयते । मान्त्रवर्णिकब्रह्माधिकारादिति चेत । अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्गः । अन्नमयादीनामन्तरस्यान्यस्य श्रवणादब्रह्मत्वमानन्दमयस्य तु तदभावाद्ब्रह्मत्वमिति चेन्न । तत्रापि सत्यं ज्ञानमनन्तं ब्रह्मेति प्रकृतस्य ब्रह्मणो ब्रह्म पुच्छं प्रतिष्ठेत्यानन्दमयाश्रयतयोक्तत्वात् । तद्विजिज्ञापयिषयैवान्नमयादयः पञ्चापि कोशाः कल्प्यन्ते ।

नन्वन्नमयादीनामिवानन्दमयस्य पुच्छत्वेनोक्तं ब्रह्म कथं स्वप्रधानं स्यात् । न । स्वप्रधानतया प्रकृतत्वात् । न चानन्दमयावयत्वेनापि ब्रह्मणि ज्ञायमाने प्रकृतत्वं न हीयते आनन्दमयस्य ब्रह्मत्वादिति वाच्यम् । तथा सति तदेवावयव्यवयवश्चेत्यसामञ्जस्यप्रसङ्गात् । अन्यतरपरिग्रहे च पुच्छस्यैव ब्रह्मत्वं युक्तम् । ब्रह्मशब्दश्रवणात् । न त्वानन्दमयस्य तत्र ब्रह्मशब्दाश्रवणात् । असन्नेवेति श्लोकस्य ब्रह्मपुच्छमित्युक्तब्रह्मविषयत्वात् । न ह्यत्रानन्दमयोऽन्वाकृष्यते । किन्तु पुच्छतयोक्तं ब्रह्म स्वप्रधानतया । न चानन्द(मय)स्यानुभवसिद्धस्य भावाभावशङ्का युज्यते । कथं तर्हि पुच्छत्वोक्तिः । पुच्छवत्पुच्छमित्याश्रयार्थत्वात् ।

किञ्चानन्दमयस्य प्रियाद्यवयवयोगशारीरत्वाभ्यां सविशेषत्त्वाद्ब्रह्मणोऽपि सविशेषत्वप्रसङ्गः । निर्विशेषं च ब्रह्म । वाङ्मनसागोचरत्वश्रुतेः । मयटः प्राचुर्यार्थत्वेऽप्यानन्दप्रचुर इत्युक्ते दुःखाल्पत्वमपि गम्यते । प्राचुर्यस्य लोके प्रतियोग्यल्पतासापेक्षत्वात् । न च ब्रह्मणि दुःखं संभवति । किञ्च प्रियादीनां प्रतिशरीरं भेदेनानन्दमयस्यापि भेदे ब्रह्मणोऽपि प्रतिशरीरं भेदः प्रसज्येत । न च तद्युक्तम् । अनन्तत्वश्रुतेः । न चैवं भार्गवी वारुणी विद्या विरुद्ध्येत । तत्र मयटोऽश्रवणेन भिन्नविषयत्वात् । एतमानन्दमयमात्मानमिति चान्नमयादीनामिवानन्दमयस्यातिक्रमणीयतयोक्तस्याब्रह्मत्वात् । अन्ते मयटः श्रवणेन पूर्वमपि तदध्याहारे पूर्वमपि नानन्दमयो ब्रह्मास्तु । ब्रह्मज्ञानार्थिनस्तु तदुपदेशो द्वारतयोपपन्नो भविष्यतीति ।

शे०— **अन्नादिविकारा इति** । अन्नरसविकारो देहोऽन्नमयः । यथा हि घटावच्छिन्नाकाशो घटविकारस्तथा प्राणाद्युपाध्यवच्छिन्न आत्मा प्राणादिविकार इति विवेकः । प्राणोपाधिरात्मा प्राणमयो मनोमयस्तदुपाधिरात्मा विज्ञानमयो विज्ञानोपाधिरात्मा विज्ञानविकार इति विवेकः । यद्वा । भृगुवल्ल्युक्ताधिदैविकान्नादीन्प्रत्याध्यात्मिकान्नादिकोशानां विकारत्वाभिप्रायेणान्नादिविकारत्वोक्तिरिति ध्येयम् ॥ **तथा चेति** । मयट् चेति सूत्रान्मयट्शब्दो विकारे श्रुत इति वक्तुं विकारार्थे मयडित्युक्तं । विकारप्रकरणं प्रकटयितुं प्रवाहपदम् । प्रियाद्यवयवत्वस्य विकारार्थत्वे लिङ्गत्वात्प्राचुर्यार्थत्वे त्वभावान्मयटो न तदर्थतेत्याह **आनन्दमय एवेति** । एकस्यैव मयटोऽर्थद्वयं नेत्यत्र दृष्टान्तमाह ॥ **अर्धेति** । केनचिन्नृपाशुपतेन सर्वजरत्या योषितोऽनुपभोग्यत्वात्सर्वतरुण्याश्च वृद्धे मय्यरुचिप्रसङ्गादर्धजरत्यानयने दूतः प्रेषित इति लोकप्रवादोऽर्धजरतीशब्दनोच्यते । छप्रत्ययेन चोपमानोपमेयभावरूपः सम्बन्ध उच्यते । तथा च तत्प्रवादतुल्यप्रवादानुपपत्तेरित्यर्थः । श्रुतिलिङ्गप्रकरणविरोधेन प्राचुर्यार्थत्वे मयटो दृष्टान्तोऽपि नास्तीत्याह **कथमिवेति** । विकारार्थत्वे च निश्चिते वाक्यस्य न ब्रह्मार्थतेत्याह ॥ **ब्रह्मविषयत्वं चेति** । कथंशब्दस्य प्रश्नार्थतामुपेत्य प्रकरणेन प्राचुर्यार्थत्वादिसिद्धिरिति शङ्कते **मान्त्रवर्णिकेति** । न प्रकरणमात्रं नियामकमतिप्रसक्तेरित्याह **नेति** । लिङ्गेन प्रकरणबाधात्तेषामब्रह्मत्वमित्याशङ्कते **आनन्दमयादीनामिति** ॥ **अन्तरस्यान्यस्य श्रवणादिति** । अन्योऽन्तर आत्मा प्राणमयोऽन्योऽन्तर आत्मा मनोमयोऽन्योऽन्तर आत्मा विज्ञानमयोऽन्योऽन्तर आत्माऽऽनन्दमय इत्युक्तेरिति भावः ॥ **तदभावादिति** । आनन्दमयादन्तरस्यान्यस्याश्रवणादित्यर्थः ॥ **ब्रह्मत्वमिति** । अन्यथा प्रकृतहानाप्रकृतस्वीकारप्रसक्तेरिति भावः । पुच्छवाक्ये आनन्दमयादप्यन्यस्य पुच्छब्रह्मणोऽन्तरस्य प्रतिष्ठापदेनोक्तेरन्नमयादीनामिवानन्दमयस्याप्यब्रह्मत्वमेवेत्याह **तत्रापीति** । यदुक्तमानन्दमयस्याब्रह्मत्वे प्रकृतहानमप्रकृतक्रिया चेति तत्परिहरति **तद्विजिज्ञापयिषयैवेति** । यद्वा । अन्येत्यानन्दमयस्याब्रह्मत्वे तदुक्तिवैयर्थ्यमित्यतोऽन्नमयादिवत्पुच्छज्ञानार्था तदुक्तिरित्याह **तद्विजिज्ञापयिषयैवेति** ।

पुच्छश्रुतिविरोधान्न तस्य स्वप्रधानार्थतेति शङ्कते **नन्विति** । पुच्छशब्दस्यात्रावयवार्थत्वमेव कुत इत्यतस्तत्प्रकरणादन्यथा तद्विरोधादित्याशयेनोक्तम् ॥ **अन्नमयादीनामिवेति** । स्वप्रधानब्रह्माधिकाराद् ब्रह्मशब्दोक्त्यैव तत्प्रत्यभिज्ञाने पुच्छशब्दविरोधे सत्येवास्मिन्वाक्ये प्रथमचरमश्रुतशब्दयोराद्यस्यानुपसंजात विरोधिनो बलीयस्त्वात्पुच्छत्वेन प्राप्तगुणत्वबाधया स्वप्रधानब्रह्मधीरित्याह **नेति** । किं प्रकृतं स्यादित्याशङ्कते **न चेति** । किं प्रकृतं ब्रह्मानन्दमयवाक्ये पुच्छवाक्ये चोच्यते किं वैकत्रेति विकल्पं मनसि निधायाद्यं दूषयति **तथा सतीति** । अवयवावयविभावस्य कल्पितत्वेऽप्यन्नमयादिष्वेकत्र गुणप्रधानत्वायोग इति भावः । द्वितीयं दूषयति **अन्यतरपरिग्रहे चेति** । अन्यतरस्मिन्वाक्ये ब्रह्मोक्तिस्वीकारे सतीत्यर्थः ।

नन्वसद् ब्रह्मेति वेद चेदस्ति ब्रह्मेति चेद्वेदेत्यानन्दमयेऽपि ब्रह्मशब्दश्रवणादुभयत्र ब्रह्मशब्दश्रवणे कथं पुच्छस्य ब्रह्मत्वमानन्दमयस्याब्रह्मत्वमुच्यत इत्यतः श्लोकस्य पुच्छविषयत्वेनानन्दमयाविषयत्वान्न तत्र ब्रह्मशब्दश्रवणमिति नानन्दमयस्य ब्रह्मत्वप्राप्तिरित्याह **असन्नेवेति श्लोकस्येति** । आनन्दमयपरित्यागेन कुतः श्लोकस्य पुच्छविषयत्वकल्पनम् । श्लोकोक्तभावाभाववेदनयोर्गुणदोषोक्तेः पुच्छब्रह्मविषयत्वे सम्भवादानन्दमयब्रह्मविषयत्वे चासम्भवात्पुच्छब्रह्मविषयत्वमेव कल्पनीयमित्याह **न हीति** । आनन्दमयब्रह्मणोऽपि भावाभाववेदनयोर्गुणदोषोक्तेरुपपत्तेः कथमानन्दमयब्रह्मविषयत्वे तदनुपपत्तिरित्यत आह **न चानन्दस्येति** ॥ **अनुभवसिद्धस्येति** । प्रियमोदादिविशेषत्वादानन्दमयस्य सर्वलोकानुभवसिद्धत्वमिति भावः । पुच्छवाक्ये ब्रह्मशब्देन स्वप्रधानोक्तौ पुच्छशब्दस्य का गतिरिति पृच्छति **कथं तर्हीति** । प्रतिष्ठाशब्दविरोधात्पुच्छशब्दस्य तत्र मुख्यवृत्त्यसम्भवेऽपि पृथिव्यादिपुच्छेष्वाधारत्वदृष्ट्या ब्रह्मण्यपि सर्वाधारे लक्षणया पुच्छपदमुपपन्नमित्याह **पुच्छवदिति** ॥ **प्रियाद्यवयवेति** । तस्य प्रियमेव शिर इत्यादिना प्रियाद्यवयववत्त्वस्य तस्यैष एव शारीर आत्मा यः पूर्वस्येति शारीरत्वस्य च श्रवणादित्यर्थः । सविशेषत्वादित्यतः परमानन्दमयस्य ब्रह्मत्व इति शेषः । इष्टापत्तिं परिहरति **निर्विशेषं चेति** । तत्कुत इत्यत आह **वाङ्मसागोचरत्वश्रुतेरिति** । यतो वाचो निवर्तन्तेऽप्राप्य मनसा सहेति वाङ्मनसागोचरत्वश्रुतेरित्यर्थः । एवं मयटो विकारार्थत्वेन प्राचुर्यार्थत्वाभावान्नानन्दमये ब्रह्मविषयत्वमाश्रयितुं युक्तमित्युक्तम् । इदानीमस्तु मयटः प्राचुर्यार्थत्वं तथाऽपिनानन्दमये ब्रह्मविषयत्वमाश्रयितुं युक्तमित्याह **मयट इति** ॥ **प्राचुर्यस्येति** । समानाधिकरणस्यप्रकृत्यर्थप्रतियोग्यल्पत्वसापेक्षत्वनियमादित्यर्थः । ब्राह्मणप्रचुरो ग्राम इत्यादौ समानाधिकरणस्य विजातीयशूद्रादेरल्पत्वेन प्राचुर्यस्य लोके दर्शनादिति भावः । अतिमधुरे रुच्यर्थं रसान्तरानुवेधवदानन्देऽपीत्युत्कर्षार्थमीषद्दुःखानुषक्तिरिष्टैवेत्याशङ्क्याह **न चेति** ।

**किञ्चेति** । प्रतिदेहं प्रियादीनां सातिशयत्वेनानन्दमयस्यपि सातिशयत्वाद् ब्रह्मणोऽपि प्रतिशरीरं सातिशयत्वप्रसङ्ग इत्यर्थः । इष्टापत्तिं परिहरति **न चेति** ॥ **अनन्तत्वश्रुतेरिति** । सत्यं ज्ञानमनन्तं ब्रह्मेत्यनन्तत्वश्रुतेरित्यर्थः । भृगुवल्लीसमाख्यानादन्नमयादीनां ब्रह्मत्वमित्याशङ्क्य पूर्वानुवाकेऽन्नमयादिशब्दानां श्रवणादुत्तरानुवाके मयट्प्रत्यहीनानामन्नादिशब्दानामेव श्रवणाच्छब्दभेदे च निमित्तभेदस्याभिधेयभेदस्य चावश्यकत्वेन भिन्नविषयत्वान्न समाख्याऽत्रास्तीत्याह **न चेति** । नन्वेतमानन्दमयमात्मानमुपसंक्रामतीति ब्रह्मविद आनन्दमयप्राप्तिश्रवणादानन्दमयस्य चाब्रह्मत्वे तदयोगादानन्दमयस्य ब्रह्मत्वमिति चेत् । तर्ह्येतमन्नमयमात्मानमुपसंक्रमतीत्यन्नमयादीनामपि ब्रह्मविदः प्राप्तिश्रवणान्यथाऽनुपपत्त्या ब्रह्मत्वप्रसङ्गेनान्नमयादीनामब्रह्मत्वमङ्गीकृत्यानन्दमयस्यैव ब्रह्मत्वाङ्गीकारायोगात् । न चान्नमयमात्मानमुपसंक्रामतीत्यत्रोपसंक्रमशब्दस्यातिक्रमार्थत्वादन्नमयादीनामतिक्रममात्राभिधानेऽपि प्राप्तेरनभिधानान्नोक्तानुपपत्तिरिति वाच्यम् ।

तथा सत्यानन्दमयमात्मानमुपसंक्रामतीत्यत्रापि तदर्थत्वापत्त्या ब्रह्मविदस्तत्प्राप्तिश्रवणासिद्धेर्नानन्दमयस्यापि ब्रह्मत्वमित्याशयेनाह **एतमानन्दमयमात्मानमिति चेति** । ननूत्तरानुवाकोक्तस्यानन्दस्यानन्दो ब्रह्मेति व्यजानादिति ब्रह्मशब्दश्रवणादिना ब्रह्मत्वादन्नप्राणमनोविज्ञानान्तरं श्रुतेनानन्देनान्नमय-प्राणमयमनोमयविज्ञानमयानन्तरं श्रुतस्यानन्दमयस्य स्थानप्रमाणेनाभेदादानन्दमयस्य ब्रह्मत्वमस्त्विति चेत् । तर्ह्युत्तरानुवाकोक्तान्नादीनामप्यन्नं ब्रह्मेति व्यजानादित्यादिब्रह्मश्रुत्या ब्रह्मत्वेनोत्तरानुवाकोक्तान्नप्राण-मनोविज्ञानैः पूर्वानुवाकोक्तान्नमयप्राणमयमनोमयविज्ञानमयानां स्थानप्रमाणेनाभेदादन्नमयादीनामपि ब्रह्म-त्वस्य स्वीकर्तव्यतयाऽर्धजरतीयायोगात् । न चान्ते एतमन्नमयमात्मानमुपसंक्रम्येति मयट्प्रत्ययश्रवणेन उत्तरानुवाकोक्तान्नादीनामन्नमयादित्वमेवेत्यब्रह्मत्वप्राप्तेर्न तत्स्थानप्रमाणेन पूर्वानुवाकोक्तानन्दमयस्यापि ब्रह्म-त्वप्राप्तिरिति वाच्यम् । तर्हि तत एवोत्तरानुवाकोक्तानन्दस्याप्यानन्दमयत्वेनाब्रह्मत्वप्राप्त्या न तत्स्थान-प्रामाण्येन पूर्वानुवाकोक्तानन्दमयस्यापि ब्रह्मत्वप्राप्तिरित्याशयेनाह **अन्ते मयटः श्रवणेनेति** । ननु ब्रह्मज्ञानार्थिनस्तदुपदेशान्यथाऽनुपपत्त्या आनन्दमयस्य ब्रह्मत्वमेवेत्यभिप्राय इति चेत् । तर्हि तत एवान्न-मयादीनामपि ब्रह्मत्वप्रसङ्गेनार्धजरतीयानुपपत्तेस्तादवस्थ्यात् । न च ब्रह्मज्ञानार्थिनो नान्नमयाद्युपदेशो अनर्थको ब्रह्मज्ञानोपायत्वेन द्वारतया तदुपपत्तेरिति वाच्यम् । तथा सत्यानन्दमयस्यापि ब्रह्मज्ञानार्थिनं प्रत्युपदेशानुपपत्तेः पुच्छब्रह्मज्ञानोपायत्वेन द्वारतया तदुपपत्तेरिति नोक्तयुक्त्याऽप्यानन्दमयस्य ब्रह्मत्वसिद्धि-रित्याशयेनाह **ब्रह्मज्ञानार्थिन इति** ।

स० — **कोशाः कल्प्यंत इति** ॥ कोशवादिभिरस्माभिरिति शेषः ॥ **नन्वन्नमयादीनामि-वेति** ॥ अन्नमयादिप्रकरणेषु अन्नमयादिपुच्छत्वेनोक्तानि यथा न स्वप्रधानानि तथेत्यर्थः ॥ **प्रियाद्यवयव-योगशरीरत्वाभ्यामिति** ॥ 'तस्य प्रियमेव शिर' इत्यादिनाऽऽनन्दमयस्य प्रियाद्यवयवयोगः कथ्यते । तथा 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'त्यनेन तस्य पूर्वस्य विज्ञानमयस्यैष एव शारीर आत्मा य एष आनन्दमय इति विज्ञानमयशारीरत्वमुच्यते । इदं च विशेषणं न संभवति निर्विशेष इति भावः ।

प० — श्रोतृबुद्धिसौकर्यायाह **एवमिति** । **तद्विजिज्ञापयिषयेति** तज्ज्ञापयामीतीच्छयेत्यर्थः ॥ **अन्नमयादीनामिवेति** । अन्नमयादिषु पुच्छत्वेनोक्तं पृथिव्यादिकं यथा न प्रधानं तथेत्यर्थः । निषेधति **नेति** । आनन्दमयस्य पुच्छत्वेन कथनं नोपेयत इत्यर्थः । तत्र हेतुमाह **स्वप्रधानतया प्रकृतत्वादिति** । **ननु 'तदप्येषश्लोको भवति'** । 'असन्नेव स भवती'त्युक्तश्लोकस्यान्नमयादिप्रकरणेष्विवानन्दमयप्रकरणे-प्यानन्दमय विषयत्वात्कथं तत्रत्यब्रह्मशब्दस्य पुच्छे श्रवणं आनन्दमये त्वश्रवणमित्यतः पूर्वप्रकरणचतुष्टयोक्त-श्लोकचतुष्टयस्यान्नमयादिविषयत्वेप्यत्रानन्दमयप्रकरणे कथितश्लोकस्य पुच्छविषयत्वमेवोपेयते । अतो नोक्त-हेतुद्वयमसिद्धमिति भावेनाह **असन्नेवेति** ॥ **अत्रेति** । श्लोक इत्यर्थः । श्लोकस्यानन्दमयविषयत्वे बाधकं

त्याह **न चानन्दस्येति** । आनन्दमयशब्देनोक्तानन्दस्य 'असन्नेव स भवतीति संतमेनं ततो विदु'रिति तदेतच्छब्दाभ्यां परामर्शेनासेच्छब्दसच्छब्दाभ्यामुक्तावभावभावौ न युक्तौ भावाभावशंकाया एवायोगादित्यर्थः । **कथं तर्हीति** । स्वप्रधानत्व इत्यर्थः ॥ **प्रिया(द्य)वयवयोगशारीरत्वाभ्यामिति** । 'तस्य प्रियमेव शिर' इत्यादिना प्रिया(द्य)वयवयोगः । 'तस्यैष एव शारीर आत्मे'त्यादिनाऽऽनन्दमयस्य विज्ञानमयः शरीरमुच्यते । इदं च स विशेषब्रह्मणि संभवति न निर्विशेष इति भावः ॥ **वाङ्मनसेति** । 'यतो वाचो निवर्तंत' इत्यादिश्रुतेरित्यर्थः ॥ **अनन्तत्वश्रुतेरिति** । 'सत्यं ज्ञानमनंतं ब्रह्मे'तिश्रुतानन्तत्वस्य देशकालवस्त्वपरिच्छेदरूपत्वेन भेदविरोधादिति भावः ॥ **न चैवं भार्गवीति** । आनन्दमयस्थानापन्नस्य 'आनन्दो ब्रह्मेति व्यजानादि'त्युक्तस्य ब्रह्मत्वेनोपगमादिहानन्दमयस्याब्रह्मत्वे तद्विरोध इति नेत्यर्थः । प्राप्यस्थले मयट्श्रवणमस्तीत्यत आह **एतमिति** ॥ **अतिक्रमणीयतयेति** । उपशब्दस्यातिक्रमणार्थत्वोपगमादिति भावः ॥ **द्वारतयेति** । अरुन्धतीज्ञानार्थं स्थूलतारोपदर्शनमिवेति भावः ।

या० **आनन्दमयाश्रयतयेति** । तथा चात्र पुच्छपदमाश्रयलक्षकमिति भावः ॥ **नन्वन्नमयादीनामिवेति** । अन्नमयादिप्रकरणेष्वन्नमयादिपुच्छत्वेनोक्तानि यथा न स्वप्रधानानि तथेत्यर्थः ॥ **भावाभावशङ्केति** । अस्ति ब्रह्मेति चेद्वेद । असद्ब्रह्मेति वेद चेत् इति वाक्योक्तेत्यर्थः ॥ **प्रियाद्यवयवयोगशरीरत्वाभ्यामिति** । 'तस्य प्रियमेव शिरः' इत्यादिनाऽऽनन्दमयस्य प्रियाद्यवयवयोगः कथ्यते । तथा 'तस्यैव एव शारीर आत्मा यः पूर्वस्ये'त्यनेन तस्य पूर्वस्य विज्ञानमयस्यैष एव शारीर आत्मा य एष आनन्दमय इति विज्ञानमयशरीरत्वमुच्यते । तद् इदं च सविशेषे संभवति न निर्विशेष इति भावः ।

श्री० — तर्ह्यानन्दमयस्य ब्रह्मत्वसमर्थनपरतया प्रतीयमानानां सूत्राणां कोऽभिप्राय इत्यत आह **ब्रह्म पुच्छं प्रतिष्ठेत्युक्तस्येति** ॥ **स्वप्राधान्येनेति** । स्वयं प्रधानत्वेनैव । न त्वानन्दमयावयवत्वेनेत्यर्थः । अन्तरस्यान्यस्य श्रवणरूपस्याब्रह्मत्वसाधकस्यानन्दमयेऽभावेऽप्यन्यद्बाधकं तत्र भविष्यतीत्याह **तत्रापीति** ॥ **आनन्दमयाश्रयतयेति** । आनन्दमयं प्रत्याश्रयतयेत्यर्थः । तथा चान्याश्रितस्यानन्दमयस्य परब्रह्मत्वं न संभवतीति भावः ॥ **तदिति** । आश्रयतयोक्तब्रह्मेत्यर्थः ॥ **प्रकृतत्वादिति** । ब्रह्मविदाप्नोति परम् । सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्येनेत्यर्थः । प्रकृतत्वं स्वप्राधान्येन प्रकृतत्वम् ॥ **आनन्दमयस्येति** । तथा चावयवावयविनोरभेदादवयविनो ब्रह्मत्वेऽवयवस्यापि ब्रह्मत्वं प्राप्तमिति भावः । तथाच ब्रह्मविदाप्नोति परमित्यादिना प्रकृतत्वं किमर्थमुपपादनीयमिति हृदयम् । **असामञ्जस्येति** । विरोधादिति भावः । ननु विरोधादेकस्य ब्रह्मत्वेऽङ्गीकार्ये आनन्दमयस्यैव तत्कस्मान्न स्यादित्यत आह **अन्यतरेति** । नन्वसन्नेवेति श्लोकेऽस्त्यानन्दमये ब्रह्मशब्द इत्यत आह **असन्नेवेति** । अत्र श्लोके ॥ **तर्हीति** । स्वप्रधानतया ब्रह्मणो ज्ञेयत्वे सतीत्यर्थः । **पुच्छत्वेति** । पुच्छत्वोक्त्याऽप्राधान्यं प्राप्तमिति भावः ॥ **आश्रयेति** । तथाच

प्राधान्यमेवेति भावः ॥ **प्रतियोगीति** । स्वसमानाधिकरणस्वनिरूपकविजातीयरूपप्रतियोगीत्यर्थः ॥ **अनन्तत्वेति** । वस्तुतः परिच्छेदाभावस्यानन्तशब्दार्थत्वात्तस्य चाभेदरूपत्वादनन्तशब्देनाभेद उक्त इत्यर्थः । अन्ते प्राप्यतयोक्तिस्थाने ॥ **पूर्वमपीति** । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमित्यत्र विज्ञानं ब्रह्मेति व्यजानात् । आनन्दो ब्रह्मेति व्यजानादिति पूर्ववाक्येऽपीत्यर्थः । पूर्वमपि एतद्वाक्येऽपि ॥ **नानन्दमय इति** । विकारार्थमयट्प्रत्ययबलादन्नमयादिवदिति भावः । ननु तस्याब्रह्मत्वे ब्रह्मज्ञानार्थिनो भृगोस्तदुपदेशोऽसङ्गत इत्यत आह **ब्रह्मेति** ॥

**सु०— नन्वेवं तर्हि कथं सूत्राणि । आनन्दमयस्य ब्रह्मताप्रतिपादनपरतयोपलम्भात् । मैवम् । वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति न्यायेन सूत्राणां कथञ्चिद्योज्यत्वात् । तस्मादानन्दमयादयः पञ्चापि कोशा न ब्रह्मेति ।**

**शे०— एवं तर्हीति** । आनन्दमयस्याब्रह्मत्व इत्यर्थः । का कथन्तेत्यत आह **आनन्दमयस्येति** ।

**गुणे त्विति** । यथा ह्यग्नीषोमीये पशावेकपाशके 'अदितिः पाशान्प्रमुमोक्त्वेतानि'त्य'दितिः पाशं प्रमुमोक्त्वेतमि'ति च मन्त्रौ श्रुतौ । तत्र बहुवचनवान्मन्त्रः किं प्रकरणादुत्कृष्टव्यो न वेति विशये बहुवचनस्यासमवेतार्थत्वादुत्कर्षे प्राप्ते विशेष्यप्रधानभूतपाशवाचिप्रातिपदिकस्याग्नीषोमीये समवेतार्थत्वात्तदनुरोधेन बहुवचनं पाशगुणत्वेन तद्विशेषणभूतबहुत्ववाचकमन्याय्यया लक्षणया पाशावयवाँल्लक्षयतीति नवमे निर्धारितम् । विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वादिति । उत्कर्षोऽनुत्कर्षो वेत्यस्यां विप्रतिपत्तौ पाशं पाशानिति च मन्त्रयोर्विकल्पः स्यात् । पाशप्रातिपदिकस्योभयत्र समत्वात् । गुणे प्रत्ययार्थे त्वन्याय्यकल्पनान्न तद्बलान्मन्त्रोत्कर्षः प्रत्ययस्य पदैकदेशत्वात् । प्रातिपदिकपारतन्त्र्येणोत्कर्षकत्वायोगादिति सूत्रार्थः । एवमिहापि प्रधानश्रुतिविरोधे गुणभूतसूत्राण्यन्यथा नेयानीति भावः । नन्वाम्नायस्यार्थं वक्तुं प्रभवामो नाम्नायं पर्यनुयोक्तुमिति न्यायादपर्यनुयोज्ये वेदे पाशैक्येऽपि बहुवचनं कथञ्चिदवयवबहुत्वाभिप्रायं युज्यते । पौरुषेयेषु सूत्रेषु स्वायत्ते शब्दप्रयोगे सर्वज्ञेन सूत्रकृता किमर्थं श्रुतिविरोधप्रापिकाप्यूरचनं कृतमित्याशङ्क्याध्याहाराद्यपेक्षानेकार्थप्रत्यायनार्थमित्याशयेनोक्तम् **कथञ्चिदिति** । अध्याहारलक्षणाऽनुषङ्गादिभिरित्यर्थः ॥

**योज्यत्वादिति** । ब्रह्म पुच्छं प्रतिष्ठेत्यत्र किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते उत स्वप्रधानत्वेनेति विशये पुच्छशब्दादवयवत्वेनेति प्राप्त उच्यते **आनन्दमयोऽभ्यासादिति** । अत्रानन्दमयशब्दस्यानन्दमयपर्यायाम्नाते पुच्छब्रह्मणि लक्षणा । स्वप्राधान्येन प्रतिपाद्यमित्यध्याहारः । ततश्च ब्रह्मपुच्छं प्रतिष्ठेति वाक्यगतब्रह्मपदेन स्वप्रधानमेव ब्रह्मोच्यते । असन्नेव स भवतीत्यस्मिन्निगमनश्लोके ब्रह्मणः केवलस्याभ्यस-

मानत्वादित्येतत्सूत्रार्थः । यत्र ब्रह्मत्वं साध्यं तत्र तद्विषयश्रुत्यादिमात्रस्य हेतूकर्तव्यत्वेऽपीह ब्रह्मणः पुच्छवाक्यविषयत्वे स्थिते तात्पर्येण प्रधानतया तत्प्रतिपाद्यत्वस्य साध्यतया तात्पर्यसिद्धये तल्लिङ्गतयाऽभ्यासपर्यन्तहेतूक्तिरित्यवगन्तव्यम् । द्वितीयसूत्रे विकारशब्देनावयवो लक्ष्यते तद्वाचिशब्दः पुच्छशब्दः । स एव शब्दो विकारो विगतकार्योऽनर्थकः शब्दः कारशब्दः कर्मणि घञन्तः कार्यवाची । तथा च पुच्छमित्यवयववाचिशब्दात्तस्य स्वार्थपरित्यागाल्लक्षणीयाभावेनानर्थक्यप्रसङ्गाच्च न स्वप्रधानत्वं ब्रह्मणो युक्तमिति शङ्कार्थः । न च पुच्छपदेनाधारत्वं लक्षणीयम् । प्रतिष्ठापदेन पौनरुक्त्यप्रसङ्गादिति शङ्कितुर्हृदयम् । प्राचुर्यादप्यवयवशब्दोपपत्तेः । प्राचुर्यं प्रायापत्तिरवयवप्राये वचनमित्यर्थः । अन्नमयादीनां हि शिरआदिपुच्छान्तेष्ववयवेषूक्तेष्वानन्दमयस्यापि शिरआदीन्यवयवान्तराण्युक्त्वाऽवयवप्रायापत्त्या ब्रह्म पुच्छं प्रतिष्ठेत्याह । नावयवत्वविवक्षयेति द्वितीयसूत्रार्थः । पुच्छवाक्ये पुच्छशब्देनावयवो नोच्यते किं त्वाधारो लक्ष्यत इत्यत्र हेत्वन्तरमुच्यते **तद्धेतुव्यपदेशाच्चेति** । सर्वस्य विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते । इदं सर्वमसृजत यदिदं किञ्चेति । न च कारणस्य सतो ब्रह्मणः स्वविकारमानन्दमयं प्रति मुख्यमवयवत्वमुपपद्यत इत्यर्थः । यत् 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति मन्त्रवर्णेन ब्रह्मोक्तं तदेतदुपायभूतेन ब्राह्मणेन स्वप्राधान्येन गीयते 'ब्रह्म पुच्छं प्रतिष्ठे'ति । अवयवत्वे त्वस्य मन्त्रे प्राधान्यं ब्राह्मणे त्वप्राधान्यमित्युपायोपेययोर्मन्त्रब्राह्मणयोर्विप्रतिपत्तिः स्यादिति मान्त्रवर्णिकसूत्रार्थः । इतश्च पुच्छवाक्यस्थं ब्रह्मैव स्वप्रधानं प्रतिपाद्यम् । इतरस्त्वानन्दमयोऽत्र न प्रतिपाद्यते । ब्रह्मपुच्छं हि प्रकृत्य श्रुतस्य 'सोऽकामयत बहुस्यां प्रजायेयेत्य'भिध्यानपूर्वकसर्वस्रष्टृत्वस्य वैषयिकप्रियादिमत्त्वेन तत्रानुपपत्तेरिति पञ्चमार्थः । इतश्च न ब्रह्म पुच्छमित्यत्रोक्तं ब्रह्म संसारि यस्माद्ब्रह्मपुच्छमित्यधिकारे 'रसो वै स रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति जीवब्रह्मणी भेदेनैव व्यपदिश्येते । न हि लब्धैव लब्धव्यो भवतीति षष्ठार्थः । ननु भृगुवल्ल्यामानन्दस्य ब्रह्मत्वादानन्दमयस्यापि ब्रह्मत्वं पञ्चमपर्यायत्वादनुमीयत इत्याशङ्कानिवृत्त्यर्थं सूत्रम् । **कामाच्चेति** । काम्यत इति काम आनन्दस्तस्य ब्रह्मत्ववद्दृष्टेनानुमानेनानन्दमयस्यापि ब्रह्मत्वमपेक्षितव्यम् । विकारार्थकमयड्विरोधादित्यर्थः । इतोऽपि नानन्दमयोऽत्र प्रतिपाद्यते । पुच्छवाक्योक्ते ब्रह्मणि प्रतिबद्धस्यानन्दमयस्य 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति ।' इत्यादिना तत्प्राप्तिमोक्षाभिधानादित्यस्मिन्निति सूत्रार्थः । तदेवमानन्दमयशब्दवाच्यस्याप्रतिपाद्यत्वाल्लक्ष्यस्य ब्रह्मणो व्यतिरेकात्पुच्छवाक्यस्थब्रह्मैवात्र स्वप्रधानं प्रतिपाद्यमिति स्थितमित्याशयः । एतच्च शाङ्करभाष्यतदानन्दगिरिभामतीकल्पतरुतत्परिमलेषु स्पष्टं विशेषतस्तत एवावगन्तव्यम् ।

प० — **इति न्यायेनेति** ।. 'विप्रतिपत्तौ विकल्पः स्यात्समत्वात्', 'गुणे त्वन्याय्यकल्पना एकदेशत्वात्' इति नवमोक्तजैमिनीयन्यायेनेत्यर्थः । स च न्यायः गुहानयचन्द्रिकाव्याख्यानेऽस्माभिः विवृतः ।

या० — **गुणे त्वन्याय्यकल्पनेति** । यथा ह्यग्नीषोमीये पशावेकपाशकेऽदितिः पाशान्प्रमुमोक्त्वेतानित्यदितिः पाशं प्रमुमोक्त्वेतमिति च मन्त्रौ श्रुतौ । तत्र च बहुवचनवान्मन्त्रः किं प्रकरणादुत्कष्टव्यो न वेति विशये बहुवचनस्यासमवेतार्थत्वादुत्कर्षे प्राप्ते विशेष्यप्रधानभूतपाशवाचिप्रातिपदिकस्याग्नीषोमीये समवेतार्थत्वात्तदनुरोधेन बहुवचनं पाशगुणत्वेन तद्विशेषणभूतबहुत्ववाचकमन्याय्यया लक्षणया पाशावयववान् लक्षयतीति नवमे निर्धारितम् । 'विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वादि'ति । उत्कर्षोऽनुत्कर्षो वेत्यस्यां विप्रतिपत्तौ पाशं पाशानिति च मन्त्रयोर्विकल्पः स्यात् । पाशप्रातिपदकस्योभयत्र समत्वात् । गुणे प्रत्ययार्थे त्वन्याय्यकल्पना । न तद्बलान्मन्त्रोत्कर्षः । प्रत्ययस्य तदेकदेशत्वात्प्रातिपदिकपारतन्त्र्येणोत्कर्षकत्वायोगादिति सूत्रार्थः । एवमिहापि प्रधानश्रुतिविरोधे गुणभूतसूत्राण्यध्याहारादिभिर्नेयानि । तथा चाचार्यशबरस्वामी वर्णयाम्बभूव । लोकेष्वर्थेषु प्रसिद्धानि पदानि तानि सति वेदाविरोधसम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यानीति । तथा हि । ब्रह्म पुच्छं प्रतिष्ठेत्यत्र किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते । उत स्वप्रधानत्वेनेति विषये पुच्छशब्दादवयवत्वेनेति प्राप्ते उच्यते ॐ **आनन्दमयोऽभ्यासात्** ॐ ॥ आनन्दमयेत्यादिवाक्ये यद्ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्मपदप्रतिपाद्यं तत्स्वप्रधानमेव । असन्नेव स भवतीत्यस्मिन्निगमनश्लोके ब्रह्मण एव केवलस्याभ्यस्यमानत्वात् ॥ ॐ **विकारशब्दान्नेति चेन्न प्राचुर्यात्** ॐ ॥ अत्र विकारशब्दोऽवयवशब्दोऽभिप्रेतः । पुच्छमित्यवयवशब्दान्न स्वप्रधानत्वं ब्रह्मण इति चेन्नायं दोषः । प्राचुर्यादप्यवयवशब्दोपपत्तेः । प्राचुर्यं प्रायापत्तिः । अवयवप्राये वचनमित्यर्थः । अन्नमयादीनां हि शिरआदिपुच्छान्तेष्ववयवेषूक्तेष्वानन्दमयस्यापि शिरआदीन्यवयवान्तराण्युक्त्वा अवयवप्रायापत्त्या ब्रह्म पुच्छं प्रतिष्ठेत्याह । नावयवविवक्षया । यत्कारणमभ्यासादिना स्वप्रधानत्वं ब्रह्मणः समर्थितम् ॥ ॐ **तद्धेतुव्यपदेशाच्च** ॐ ॥ सर्वस्य विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते । इदं सर्वमसृजत यदिदं किञ्चेति । न च कारणं स्वविकारस्यानन्दमयस्य मुख्यया वृत्त्याऽवयव उपपद्यते॥ ॐ **मान्त्रवर्णिकमेव च गीयते** ॐ ॥ यत्सत्यं ज्ञानमित्यादिना मन्त्रवर्णेन ब्रह्मोक्तं तदेतदुपायभूतेन ब्राह्मणेन स्वप्राधान्येन च गीयते । ब्रह्म पुच्छं प्रतिष्ठेति । अवयववचनत्वे त्वस्य मन्त्रे प्राधान्यं ब्राह्मणे त्वप्राधान्यमित्युपायोपेययोर्मन्त्रब्राह्मणयोर्विप्रतिपत्तिः स्यादिति ॥ ॐ **नेतरोऽनुपपत्तेः** ॐ ॥ इतश्च ब्रह्म पुच्छं प्रतिष्ठेत्यत्रोक्तं ब्रह्म परमात्म नेतरो जीवः । कस्मादनुपपत्तेः । ब्रह्म पुच्छं हि प्रकृत्य श्रूयते । सोऽकामयत बहु स्यां प्रजायेयेति सा

तपोऽतप्यत स तपस्तप्त्वा इदꣳसर्वमसृजत यदिदं किञ्चेति प्राक् शरीराद्युत्पत्तेरभिध्यानं सृज्यमानानां च विकाराणां स्रष्टुरव्यतिरेकः । सर्वविकारसृष्टिश्च न परस्मादात्मनोऽन्यत्रोपपद्यते ॥ ॐ **भेदव्यपदेशाच्च** ॐ ॥ इतश्च ब्रह्म पुच्छमित्यत्रोक्तं ब्रह्म न संसारी । यस्माद्ब्रह्म पुच्छमित्यधिकारे रसो वै सः रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति इति । जीवब्रह्मणी भेदेन व्यपदिशति । न हि लब्धैव लब्धव्यो भवति ॥ ॐ **कामाच्च नानुमानापेक्षा** ॐ ॥ ब्रह्मपुच्छाधिकारे सोऽकामयतेति कामयितृनिर्देशान्नानुमानिकमपि साङ्ख्यपरिकल्पितमचेतनं प्रधानं ब्रह्मत्वेन कारणत्वेन चापेक्षितव्यम् ॥ ॐ **अस्मिन्नस्य च तद्योगं शास्ति** ॐ ॥ इतश्च न प्रधाने जीवे वाऽयं ब्रह्मशब्दः । यस्मादस्मिन्ब्रह्मणि प्रकृते प्रबुद्धस्यास्य जीवस्य तद्योगं शास्ति । तदात्मना योगस्तद्योगस्तद्भावापत्तिर्मुक्तिरित्यर्थः । तं तद्योगं शास्ति शास्त्रम् । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवतीत्यादि । तच्च परमात्मपरिग्रहे घटते । न प्रधानजीवयोः परिग्रहे । तस्मादिदं ब्रह्म परमात्मेति ।

श्री०— **कथंचिदिति** । ब्रह्म पुच्छं प्रतिष्ठेत्युक्तस्य ब्रह्मणः स्वप्राधान्येन ज्ञेयत्वं नानन्दमयावयवतयेत्येवंपरतया योज्यत्वादित्यर्थः ।

च०— **गुणे त्वन्याय्यकल्पनेति** । यथा ह्यग्नीषोमीये पशावेकपाशकेऽदितिः पाशान् प्रमुमोक्त्वेतानिति अदितिः पाशं प्रमुमोक्त्वेतमिति च मन्त्रौ श्रुतौ । तत्र बहुवचनवान् मन्त्रः किं प्रकरणादुत्कष्टव्यो न वेति विशये बहुवचनस्यासमवेतार्थत्वादुत्कर्षे प्राप्ते विशेष्यप्रधानभूतपाशवाचिप्रातिपदिकस्याग्नीषोमीयसमवेतार्थत्वात्तदनुरोधेन बहुवचनं पशुगुणत्वेन तद्विशेषणीभूतबहुत्ववाचकमन्याय्यया लक्षणया पाशावयवान् लक्षयतीति नवमे निर्धारितम् । विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वादिति । उत्कर्षोऽनुत्कर्षो वेत्यस्यां विप्रतिपत्तौ पाशं पाशानिति च मन्त्रयोर्विकल्पः स्यात् पाशप्रातिपदिकस्योभयत्र साम्यात् । गुणे प्रत्ययार्थे त्वन्याय्यकल्पना तद्बलान्मन्त्रोत्कर्षः । प्रत्ययस्य पदैकदेशत्वात्प्रातिपदिकपारतन्त्र्ये गोत्कर्षकत्वायोगादिति सूत्रार्थः । एवमिहापि प्रधानश्रुतिविरोधे गुणभूतसूत्राण्यन्यथा नेयानीति भावः ।

**सु०—तदेतत्सूत्रव्याख्यानेन निराकृतमपि शिष्यहिततया स्फुटं निराकरोति** येऽन्नमिति ।

**अनु०**— येऽन्नं ब्रह्मेत्याद्युपासां सामानाधिकरण्यतः ॥
उक्त्वा पञ्चस्वरूपाणां पुनस्तत्प्राप्तिवादिनी ।
स्थानद्वयगता वेदवाणी तदपलापिनाम् ॥
तमसोऽन्यत्र संस्थानं कथमेव सहेत सा ॥

इत्यादीति क्रियाविशेषणम् । पञ्चस्वरूपाणामिति विशेषणसमास एवायं न द्विगुः । तद्धितार्थाद्यभावात् । तत्प्राप्तिवादिनी । ज्ञानफलत्वेनेति शेषः । स्थानद्वयमनुवाकद्वयम् । तदपलापिनामन्नमयादीनां ब्रह्मत्वापलापिनां मायावादिनाम् । इदमुक्तं भवति । अन्नमयादि पञ्चकं यदि न ब्रह्म तदाऽन्नमयादीन्प्रत्युदाहृतश्लोकेषु येऽन्नं ब्रह्मोपासत इति प्रथमानुवाकेऽन्नं ब्रह्मेति व्यजानादित्युत्तरानुवाके च ब्रह्मतयोक्तिविरोधः स्यात् । न हि पुच्छस्यापि ब्रह्मत्वे प्रमाणमस्त्यन्यदतो ब्रह्मशब्दात् । नन्वेतद्ब्रह्मज्ञानद्वारतयोपदिष्टम् । न तु ब्रह्मतयोपदिष्टमिति चेन्न । सामानाधिकरण्येनोक्तत्वात् । न च सामानाधिकरण्यमपि गौणम् । तथा सति विदुषस्तत्प्राप्तिरुक्ता विरुध्येत । न च तत्रातिक्रमोऽर्थ इत्युक्तम् । न चानन्दमये ब्रह्मशब्दो नास्ति श्लोकस्य पुच्छविषयत्वादिति वाच्यम् । तथा सत्यन्नमयादिश्लोकानामपि तथात्वप्राप्तेः । किञ्च बाधकवशादित्थमाश्रीयते । एवमेव वा । नाद्यः । बाधकानां परिहृतत्वात् । द्वितीये तु निर्निमित्तं वेदार्थभूतब्रह्मापलापिनो बौद्धस्येव वेदाभिमानिकोपेन नरकप्राप्तिः स्यादिति ।

शे० — **तदेतत्सूत्रव्याख्यानेनैव निराकृतमपीति** । अन्नमयादीनां पञ्चानामपि परब्रह्मत्वप्रतिपादनपरतया सूत्रव्याख्यानेनेत्यर्थः ॥ **इत्यादीति क्रियाविशेषणमिति** । साधनं परित्यज्य धात्वर्थमात्रविशेषणं क्रियाविशेषणमित्यर्थः । ततश्च क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं वाच्यमिति क्लीबत्वैकवचनान्तत्वाव्ययत्वविधाना'दव्ययादाप्सुप' इति सुब्लोपे इत्यादीत्युपपन्नमिति भावः । ननु पञ्चस्वरूपाणामित्यस्य सङ्ख्यापूर्वकत्वेन 'सङ्ख्यापूर्वो द्विगुरि'ति द्विगुत्वादकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्मरणात् । द्विगोरिति ङीषि पञ्चस्वरूप्या इति भवितव्यं पञ्चस्वरूपाणामिति कथमित्यत आह **पञ्चस्वरूपाणामिति** ॥ **विशेषणसमास इति** । पञ्च च तानि स्वरूपाणि चेति 'विशेषणं विशेष्येण बहुलमि'त्यनेन विशेषणसमास इत्यर्थः । न च विशेषणसमासस्य 'दिक्सङ्ख्ये च संज्ञायामि'ति विशेषस्मरणेन संज्ञायामेव नियमितत्वात्प्रकृते च विशिष्टस्यासंज्ञात्वान्न विशेषणसमासः प्रकृते आश्रयितुं युक्तः । अन्यथैकशाटीत्यत्रापि विशेषणसमासोपपत्त्या तत्र समासविधायकपूर्वकालैकेति सूत्रवैयर्थ्यापातादिति वाच्यम् । पञ्चस्वरूपशब्दस्य नियमेनार्थविशेषोपस्थापकतया सामयिकसंज्ञाश्रयणेन तत्संभवात् ॥ **न द्विगुरिति** । तथा च नोक्तरीत्याऽनिष्टरूपप्रसङ्ग इति भावः । द्विगुसमासाभावे हेतुमाह **तद्धितार्थादीति** । पञ्चकपालः पुरोडाश इत्यादिवत्तद्धितार्थविषयत्वस्य, पञ्चगवधन इत्यादिवदुत्तरपदपरत्वस्य, पञ्चगवमित्यादिवत्समाहारवाच्यत्वस्याप्यभावान्न पञ्चस्वरूपाणामिति द्विगुरित्यर्थः । 'तद्धितार्थोत्तरपदसमाहारे चे'त्यत्रोक्तस्य त्रिविधस्यैव सङ्ख्यापूर्वकस्य 'सङ्ख्यापूर्वो द्विगुरि'ति द्विगुत्वविधानान्न सङ्ख्यापूर्वकत्वमात्रेण द्विगुत्वमिति भावः । यद्यपि पञ्चपात्रमित्यादिवत्पात्रादित्वेना-

कारान्तोत्तरपदत्वेऽपि ङीबप्राप्तेरुपपादयितुं शक्यत्वात्समाहारस्य वाच्यत्वाश्रयणेन द्विगुत्वमपि व्युत्पादयितुं शक्यम् । तथाऽपि द्विगुत्वे द्विगुरेकवचनमित्येकवद्भावेनैकवचनस्यैव प्रसक्त्या पञ्चस्वरूपाणामिति बहुवचनानुपपत्तिप्रसङ्गात्तदुपपत्तय एव तथा नाश्रितमिति ध्येयम् ॥ **स्थानद्वयमनुवाकद्वयमिति ।** एतच्च स्थानद्वयेऽनुवाकद्वय इति पूर्ववाक्यवदेव व्याख्यातव्यम् ।

किमनेनान्नमयादीनां ब्रह्मत्वे साधकमुक्तं भवतीत्याशङ्कां परिहरन्नेव 'अन्नं ब्रह्म, सामानाधिकरण्यतः। तत्प्राप्तिवादिनी'त्याद्यनेकविशेषणानामाकाङ्क्षाक्रमेण प्रयोजनप्रदर्शनेन वैयर्थ्यशङ्कां च परिहरन्नेव विकल्पमुखेन प्रवृत्त्या तदपलापिनामिति वाक्यान्त्यभागस्यासङ्गतिशङ्कां च परिहरन्नेव येऽन्नमित्यादेरभिप्रायमाह **इदमुक्तमिति ॥ उदाहृतश्लोकेष्विति ।** 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्याद्युदाहृतश्लोकेष्वित्यर्थः । तत्र येऽन्नं ब्रह्मोपासत इत्यादौ ब्रह्मतयोक्तेरिति भावः । येऽन्नं ब्रह्मेत्यादित्यादिपदेन न केवलमेतदनुवाकस्थस्य ये प्राणं ब्रह्मोपासत इत्यादेरेव संग्रहः किं नामोत्तरानुवाकस्थस्यान्नं ब्रह्मेतिव्यजानादित्यादेरपीति भावेनादिपदसंग्राह्यं दर्शयन्नेव स्थानद्वयगतत्वेमेतदुपपादयति **अन्नं ब्रह्मेति व्यजानादित्युत्तरानुवाके चेति ।** उक्तहेतोरप्रयोजकत्वं परिहरति **न हीति ।** तथा च ब्रह्मतयोक्तानामन्नमयादीनामब्रह्मत्वे तत्त्वेनोक्तस्य पुच्छस्यापि तत्प्रसङ्गान्न ब्रह्मतयोक्तेरप्रयोजकत्वमिति भावः । उक्तहेतोरसिद्धिशङ्कापरिहारकतया मौलं सामानाधिकरण्याभिधानं योजयितुमाशङ्कते **नन्विति ॥ गौणमिति ।** मनो ब्रह्मेत्यादौ तद्दर्शनादिति भावः ॥ **तथा सतीति ।** न हि शरीरादिकोशप्राप्तिर्ब्रह्मज्ञानिनः फलमिति संभवति । तरति शोकमात्मविदित्यादिश्रुतिविरोधात् । शरीरादेः कोशरूपत्वादिति भावः । नन्वत्र नान्नमयादिप्राप्तिरुच्यते । उपसंक्रमणशब्दस्यातिक्रमार्थत्वादित्यत आह **न चेति ॥ उक्तमिति ।** 'उपसंक्रमणं चैव द्वितीयोद्देशितं प्रति । अतिक्रमं वदन्तं तमुपशब्दो निवारयेदित्यादिनेति शेषः । नन्वसद् ब्रह्मेति वेद चेदिति ब्रह्मशब्दश्रवणात्कथमानन्दमये ब्रह्मशब्दाश्रवणमित्यतः स्यादेतदेवं यद्यसन्नेवेति श्लोक आनन्दमयविषयः स्यात् । न चैवम् । किन्तु ब्रह्मपुच्छमित्युक्तब्रह्मविषयक एव । तस्य स्वप्रधानतया प्रकृतत्वात् । ततश्च सिद्धमानन्दमये ब्रह्मशब्दाश्रवणमित्याह **श्लोकरयेति ॥ तथात्वप्राप्तेरिति ।** पुच्छविषयकत्वप्राप्तेरित्यर्थः । अन्यथाऽर्धजरतीयप्रसक्तेरिति भावः । **बाधकानामिति ।** आनन्दमयस्य ब्रह्मत्वे विकारार्थकमयडनुपपत्त्यादिबाधकानामित्यर्थः । **परिहृतत्वात् ।** 'प्राचुर्यार्थश्च मयटः सर्वेऽत्र प्रतिपादिताः' इत्यादिनेति शेषः ॥ **निर्निमित्तमिति ।** बाधकं विनेत्यर्थः ।

स०— **विशेषणसमास एवायमिति ।** अन्यथा पञ्चस्वरूप्या इति स्यादिति भावः ।

प०—**तद्धितार्थाद्यभावादिति ।** द्वितीयस्याद्यपादे 'दिक्संख्ये संज्ञायामि'त्यनुवर्त्य 'तद्धितार्थोत्तरपदसमाहारे चे'ति सूत्रे तद्धितार्थे विषयभूते उत्तरपदे च परतः समाहारे वाच्ये दिक्संख्ये

सुबन्तेन समस्येते इति समासं विधाय 'संख्यापूर्वो द्विगुरि'ति तदुत्तरसूत्रेण संख्यापूर्वकसमासस्य द्विगुसंज्ञोक्त्या 'द्विगोः' इति ङीपि सति पञ्चस्वरूपीति भाव्यमिति न शङ्क्यम् । तद्धितार्थविषय इत्यादिसमासनिमित्तानामिहाभावेन तेन समासस्यैवात्राप्राप्तेः । किन्तु पञ्च च तानि स्वरूपाणि च पञ्चस्वरूपाणीति 'विशेषणं विशेष्येण बहुलमि'ति सूत्रेण विशेषणसमास एवेत्यर्थः । भाष्यस्याशेषपदानामुपयोगं व्यञ्जयन्परमतनिरासप्रकारं व्यनक्ति **इदमुक्तं भवतीत्यादिना स्यादितीत्यन्तेन** ।

**या०**— ननु तद्धितार्थोत्तरपदसमाहारे चेति सूत्रप्रापितसमासे संख्यापूर्वो द्विगुरिति द्विगुसंज्ञायां द्विगुरेकवचनमित्येकवचने द्विगोरिति ङीपः प्राप्तौ पञ्चस्वरूप्या इति वक्तव्ये कथं पञ्चस्वरूपाणामित्युक्तमित्यत आह **विशेषणसमास इति** ॥ **तद्धितार्थादीति** । तथा च न तद्धितार्थोत्तरपदेत्यादिनाऽत्र समासप्राप्तिः । येनोक्तरीत्या प्रयोगप्रसङ्गः । किन्तु विशेषणं विशेष्येण बहुलमित्यनेनेति भावः । अत्र समासहारविवक्षया द्विगुत्वमङ्गीकृत्य पात्रादित्वेन न समाधानं कृतम् । तथात्वेऽप्येकवचनप्रसङ्गेन बहुवचनानुपपत्तेरित्यवगन्तव्यम् ।

**श्री०**— **क्रियेति** । उक्त्वेति वचनरूपक्रियाविशेषणमित्यर्थः ॥ **अभावादिति** । अविवक्षितत्वादित्यर्थः । प्रथमानुवाक इत्यनन्तरं 'सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते इति वाक्यं ग्राह्यम् । ननु ब्रह्मतयोक्तावपि न ब्रह्मत्वमङ्गीक्रियत इति चेत्तत्राह **न हीति** । तथा च स्वप्राधान्येन ज्ञेयतया त्वदङ्गीकृतस्यापि 'ब्रह्मपुच्छं प्रतिष्ठे'ति उक्तपुच्छस्यापि ब्रह्मत्वं न स्यादित्याशयः ॥ **नन्वेतदिति** । अन्नमयादिपञ्चकमित्यर्थः । **सामानाधिकरण्येनेति** । अन्नं ब्रह्मेति सामानाधिकरण्येनेत्यर्थः ॥ **तथा सतीति** । अमुख्यब्रह्मत्वोपेतान्नादिसाक्षात्कारेण तत्प्राप्तिरुक्ता स्यादित्यर्थः ।

**च०**— **इत्यादिक्रियाविशेषणमिति** । साधनांशविनिर्मोकेणोपोपसृष्टकेवलधातूपस्थाप्यनिष्ठविशेष्यतानिरूपिताभेदसंसर्गावच्छिन्नप्रकारतापन्नप्रत्ययकमित्यर्थः । तेन कृदन्तसामानाधिकरण्याभावेन तस्य स्त्रीलिङ्गत्वापत्त्यनवकाशः । क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वमव्ययत्वं च वाच्यमिति क्लीबत्वैकवचनान्तत्वाव्ययत्वविधानादव्ययादाप्सुप् इति सुब्लोपे इत्यादीति समञ्जसमिति भावः । अभिहितं च कातन्त्रपरिशिष्टकृता । कथं स्तोकः कृदन्तसमानाधिकरणत्वात् । धात्वैकाधिकरण्ये तु स्तोकमोदनस्य पाक इति स्यादेवेति । ननु पञ्चस्वरूपाणामिति भाष्यकारीयो विन्यासः पाणिनीयं प्रतिशेते । तस्य संख्यावाचकशब्दपूर्वकतया संख्यापूर्वो द्विगुरिति द्विगुतयाकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति वचनात् द्विगोरिति ङीपि पञ्चस्वरूप्या इति न्यासेन भवितव्यत्वादित्यत आह **पञ्चस्वरूपाणामिति** । **विशेषणसमास इति** । विशेषणं विशेष्येण बहुलमित्यनेन नीलोत्पलमित्यादाविव समानाधिकरणतत्पुरुष इत्यर्थः । ननु विशेषणं विशेष्येणेति सिद्धे पूर्वनिपातनियमार्थं एकशब्दस्य

दिक्संख्ये संज्ञायामिति बाधनार्थं च पूर्वकालैकेति सूत्रं यथा तद्वद्दिक्संख्ये संज्ञायामित्यपि संज्ञायामेवेति नियमार्थमिति स्थिततया प्रकृते विशिष्टस्य संज्ञात्वविरहेण न विशेषणसमासाश्रयणं सङ्गच्छत इति चेत् । अत्र व्याचक्षाणाः पञ्चस्वरूपशब्दस्य नियमेनार्थविशेषोपस्थापकतया सामयिकसंज्ञाश्रयणेन तत्संभवान्न द्विगुरिति । तथाच नोक्तरीत्यानिष्टप्रसङ्ग इति भाव इति प्रकृतग्रन्थाशयं व्यभावयन् । प्रकृतसमासस्या-द्विगुतायां बीजं दर्शयति तद्धितार्थेति । तद्धितार्थोत्तरपदसमाहारे च । तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वद्वेत्यर्थः । पौर्वशालः आपरशाल इति दिशा तद्धितार्थे । पूर्वशालाप्रिय इत्युत्तरपदे । दिक्षु समाहारो नास्त्यनभिधानात् । संख्यायास्तद्धितार्थे षण्णां मातॄणा-मपत्यं षाण्मातुरः, पञ्चकपालः पुरोडाश इति । पञ्चगवधन इत्युत्तरपदे । पञ्चगवमिति समाहारे उदाहरणानि । तत्र न संख्यापूर्वकत्वमेव द्विगुताया तन्त्रम् । किन्तु तद्धितार्थविषयकत्वोत्तरपदपरत्व-समाहारवाचकत्वान्यतमं । तदाक्रान्तश्च नायमिति नैतस्य द्विगुतापत्तिरिति भावः । समाहारस्य वाच्यत्वा-श्रयणेऽपि पात्रादित्वादकारान्तोत्तरपदत्वेऽपि ङीबप्राप्तेर्द्विगुत्वमुपेत्यापि समाधातुं सुशकमिति शङ्का द्विगुत्वे पञ्चगवमितिवत् द्विगुरेकवचनमित्येकवद्भावापत्त्या पञ्चस्वरूपाणामिति बहुवचनान्तत्वानुपपत्तिप्रसङ्गेन तदुपायेन पात्रादित्वोपगमेन समाहितमिति निरसनीया ।

**सु० — स्थानद्वयगतेत्युक्तम् । प्राक् च भृगोश्चैतद्वदिष्यतीति । तत्रोत्तरानुवाकोक्तस्य ब्रह्मत्वं प्रपञ्चयति ॥** अधीहीति ।

**अनु०** — अधीहि भगवो ब्रह्मेत्युक्तोऽन्नप्राणपूर्वकम् ॥
आह ब्रह्म कथं तन्न

**अधीह्यध्यापय । ण्यर्थस्यान्तर्णीतत्वात् । भगवो भगवन् । मतुवसो रुः सम्बुद्धौ छन्दसीति वचनात् । उक्तो भृगुणा पृष्टो वरुणः 'भृगुर्वै वारुणिः । वरुणं, पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुःश्रोत्रंमनोवाचमि'त्येवं ब्रह्मप्रश्नो-त्तरत्वेनोक्तत्वादन्नादिकं ब्रह्मैव भवितुमर्हतीत्यर्थः । ननु तत्र मयटोऽश्रवणाद्भिन्नविषयत्वमिति चेन्न ! उक्तोत्तरत्वात् । किञ्च तथा सत्यन्नमयादीन्प्रत्युदाहृतश्लोकेषु मयटोऽश्रवणाद्भिन्नविष-यत्वं स्यात् । अस्त्विति चेन्न । तथा सति तदुदाहरणस्यासङ्गतिप्रसङ्गात् । यस्मान्नादेर्विकारास्ते तत्प्रशंसापरतया सङ्गतिरस्त्विति चेन्न । मनोमयश्लोके तदयोगात् । तर्हि तत एवानुपपत्ते-रन्नादिशब्दैरन्नमयादय एवोच्यन्त इति कल्प्यत इति चेत् । तर्ह्यत्रापि प्रकरणवशादन्नमयादय एवोच्यन्त इत्यङ्गीकार्यम् । उक्तेऽर्थे हि संवादित्वेनेयमाख्यायिकोक्ता । तस्मादन्नमयादय**

**एवात्रोच्यन्ते । ते च ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वान्यथाऽनुपपत्त्या ब्रह्मैवेति । यद्यपि 'सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिते'ति साक्षाद्ब्रह्मविद्यात्वमुच्यते । तथाऽपि मीमांसार्थं युक्त्युपन्यामः । अथवा । अस्यापि समानयोगक्षेमत्वादिति ।**

शे०— ननु णिचोऽत्राश्रवणात्कथमधीहीत्यनेनाध्यापकत्वलाभ इत्यत आह **ण्यर्थस्येति ॥ वचनादिति ।** मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति सम्बुद्धौ परतः छन्दसि विषय इति सूत्रार्थः । प्रश्नप्रतिवचनानुक्तिप्रयुक्तां भाष्ये न्यूनतां परिहरन्नेव ब्रह्मप्रश्नोत्तरत्वस्य हेतोर्मूलारूढताला-भायोक्तिशब्दं प्रश्नपरतया व्याचष्टे **उक्त इति** । पदार्थमुक्त्वा यतस्तत इत्यध्याहारमभिप्रेत्य प्रश्नप्रति-वचानांशप्रदर्शनपूर्वकं वाक्यार्थमाह **भृगुर्वा इत्यादिना ॥ इत्यर्थ इति** तनश्च तत्समाख्यानादन्नमया-दीनां ब्रह्मत्वमिति वाक्यशेषः ॥ **भिन्नविषयत्वमिति** । शब्दभेदे निमित्ताभिधेयभेदस्यावश्यकत्वा-दित्यर्थः । तथा चानुवाकद्वये भिन्नभिन्नवस्तुप्रतिपादनान्न समाख्येति भावः ॥ **उक्तोत्तरत्वादिति** । प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यत इत्यादिनेति शेषः । **तदयोगादिति** । उक्तप्रकारेण सङ्गत्य-योगादित्यर्थः । यतो वाचो निवर्तन्त इति मनोमयश्लोके यद्विकारो मनोमयस्तस्य मनसोऽप्रशंसनादस्य चानन्दं ब्रह्मणो विद्वान्न बिभेतीत्यानन्दस्य प्रशंसा क्रियते तद्विकारत्वाभावादिति भावः । **तत एवानु-पपत्तेरिति** । तदुदाहरणस्यासङ्गतिप्रसङ्गरूपानुपपत्तेरित्यर्थः । अन्नादिशब्दैरन्नमयादीन्प्रत्युदाहृतश्लोकगता-न्नादिशब्दैरित्यर्थः ॥ **अत्रापीति** । उत्तरानुवाकेऽपीत्यर्थः । अन्नादिशब्दैरिति शेषः । ननु च श्लोको-दाहरणानुपपत्त्या तद्गतान्नादिशब्दानामन्नमयादिपरत्वेऽभिहिते तादृशानुपपत्त्यैवोत्तरानुवाकोक्तान्नादिशब्दा-नामन्नमयादिपरत्वव्युत्पादनस्य सम्मतत्वेऽपि प्रकृते तादृशानुपपत्तेरभावात्प्रकरणमात्रस्य चाप्रयोजकत्वात्कथं तद्वशेनोत्तरानुवाकगतान्नादिशब्दानामन्नमयादिपरत्वव्युत्पादनमित्यतोऽत्रापि तादृशानुपपत्त्यैवान्नादिश-ब्दानां तत्परत्वस्याभिप्रेतत्वाददोष इत्यभिप्रेत्यानुपपत्तिमुपपादयति **उक्तेऽर्थ इति** । इतीत्यतःपरं श्रुत्येति शेषः ॥ **साक्षादिति** । स्वयमेवेत्यर्थः ॥ **ब्रह्मविद्यात्वमुच्यत इति** । तथा च श्रुत्यैव ब्रह्मपरत्वसिद्ध्या युक्त्यनपेक्षत्वात्तदुपन्यासोऽनर्थ इति भावः ॥ **अस्यापीति** । सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिते'तिब्रह्मपरत्ववाक्यस्यापीत्यर्थः ॥ **समानयोगक्षेमत्वादिति** अन्नादीनां ब्रह्मत्वोपदेशसमान-योगक्षेमत्वादित्यर्थः । अन्नं ब्रह्मेति व्यजानादित्यादेरन्नादीनां ब्रह्मज्ञानद्वारत्वाभिप्रायकत्ववत्सैषेत्यादि-ब्रह्मविद्यात्ववचनस्याप्यन्नादीनां ब्रह्मज्ञानद्वारत्वाभिप्रायकत्वेन श्रुत्याऽन्नादेर्ब्रह्मत्वासिद्ध्या तत्सिद्ध्यर्थतया युक्त्युपन्यासोऽर्थवानिति भावः ।

स०— **मतुवसो रुः संबुद्धौ छन्दसीति** । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति संबुद्धौ परतः छन्दसि विषय इति सूत्रार्थः ॥ **मनोमयश्लोक इति** । 'यतो वाचो

निवर्तन्ते'इति मनोमयश्लोके मनःप्रशंसाऽभावेनोक्तसङ्गत्ययोगादित्यर्थः ॥ **अथवास्यापि समानेति** । अन्ततः परमे व्योमन् प्रतिष्ठितेति व्याख्याने सर्वस्या अपि विद्यायाः साक्षाद्ब्रह्मविद्यात्वं न लभ्यते अतो अनिश्चितार्था । तथैतदपि वाक्यं तद्विद्यागतान्यवाक्यसमानयोगक्षेमम् । यद्युक्तविचारेणेतरवाक्यानि साक्षाद्ब्रह्मवाक्यानि स्युः तर्हीदमपि वाक्यं तेषां साक्षाद्ब्रह्मविद्यात्वप्रतिपादकं भविष्यति नो चेन्न । उक्तरीत्या सावकाशत्वात् । अत आवश्यकत्वादितरवाक्यानामेव साक्षाद्ब्रह्मप्रतिपादकतासिद्ध्यै युक्त्युपन्यासः कृत इति भावः ।

प०— **मतुवसोररिति** । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति संबुद्धौ परतः छंदसि विषये इति सूत्रार्थः । **उक्तोत्तरत्वादिति** । 'प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते' इत्युक्तत्वादिति भावः ॥ **मनोमयश्लोक इति** । 'यतो वाचो निवर्तंत' इति श्लोके मनसः प्रशंसाऽभावादिति भावः । **अत्रापीति** । भृगुवल्ल्यामपीत्यर्थः ॥ **व्योमन्निति** । अच्छेद्यत्वेन व्योमनिभे ब्रह्मणीत्यर्थः ॥ **युक्तीति** । ब्रह्मप्रश्नोत्तरत्वादियुक्त्युपन्यास इत्यर्थः ॥ **अस्यापीति** । 'भृगुर्वै वारुणि'-रित्यनुवाकस्यापि 'ब्रह्मविदि'त्यनुवाकसमानयोगक्षेमत्वादित्यर्थः ।

या०— **मतुवसोरिति** । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति संबुद्धौ परतश्छन्दसि विषय इति सूत्रार्थः । प्रकृतमेवोदाहरणम् ॥ **उक्तोत्तरत्वादिति** । 'प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते' इत्यादिनेति शेषः ॥ **मनोमयश्लोक इति** । यतो वाचो निवर्तन्त इति मनोमयश्लोके मनःप्रशंसाऽभावेनोक्तसङ्गत्ययोगादित्यर्थः॥ **अथवाऽस्यापीति** । अन्ततः, 'परमे व्योमन् प्रतिष्ठिते'ति व्याख्याने सर्वस्या अपि विद्यायाः साक्षाद्ब्रह्मविद्यात्वं न लभ्यते । अतोऽनिश्चितार्थतयेदमपि वाक्यं तद्विद्यागतान्यवाक्यसमानयोगक्षेमम् । यद्युक्तविचारेणेतरवाक्यानि साक्षात्प्रतिपादकानि तर्हीदमपि वाक्यं तेषां साक्षाद्ब्रह्मविद्यात्वप्रतिपादकं भविष्यति । नान्यथा । उक्तरीत्या सावकाशत्वात् । अत आवश्यकत्वादितरवाक्यानामेव साक्षाद्ब्रह्मप्रतिपादकतासिद्ध्यै युक्त्युपन्यासः कृत इति भावः ।

श्री० — **मतुवसो रुः संबुद्धौ छन्दसीतीति** । मत्वन्तस्य वस्वन्तस्य च रुः स्यात्संबुद्धौ परतश्छन्दसि विषय इति सूत्रार्थः । अलोन्त्यपरिभाषया रुरित्यादेशः षष्ठीनिर्दिष्टस्यान्त्यस्यैव । तथाच भगशब्दान्मतुप्प्रत्यये उप् इत्यस्य लोपे मादुपधायाश्च मतोर्वोऽयवादिभ्य इति सूत्रेण मतुपो मकारस्य वकारे सति भगवदिति तकारान्तप्रातिपदिकनिष्पत्तौ सत्यां पश्चात्संबुद्धौ भगवत् सु इति स्थिते मतुवसो रुरिति सूत्रेण तकारस्य रुरित्यादेशे तस्य विसर्गे संबुद्धौ सोर्लोपे भगव इति युक्तमित्यर्थः । किञ्च तथा सतीत्यनन्तरं ब्रह्मवल्ल्यामपीति शेषः ॥ **उदाहृतश्लोकेष्विति** । अन्नाद्वै प्रजाः प्रजायन्ते । प्राणं देवा अनुप्राणन्तीत्यादिष्वित्यर्थः । ते कोशाः ॥ **तदिति** । अन्नादीत्यर्थः ॥ **तदयोगादिति** ।

प्रजाजनकत्वदेवचेष्टकत्वरूपोऽन्नप्राणयोर्महिमा यथा तत्र निरूपितस्तथा यतो वाच इत्यत्र मनोमहिम्नोऽनिरूपितत्वेनोक्तसङ्गत्ययोगादित्यर्थः ॥ **तत एवेति** । मनोमयश्लोके मनोमहिम्नोऽनिरूपितत्वेनोक्तसङ्गत्यसम्भवादेवेत्यर्थः ॥ **अन्नादिशब्दैरिति** । अन्नाद्वै प्रजा इत्यादिश्लोकस्थान्नादिशब्दैरित्यर्थः । उच्यन्ते ब्रह्मवल्ल्याम् तथा चान्नमयादिप्रशंसा सम्भवतीति हृदयम् । अत्रापि भृगुवल्ल्यामपि । अन्नादिशब्दैरिति शेषः । प्रकरणवशादित्युक्तमेव प्रदर्शयति **उक्तार्थ इति** । ब्रह्मवल्ल्युक्तार्थ इत्यर्थः । **ब्रह्मप्रश्नेति** । अधीहि भगवो ब्रह्मेति ब्रह्मप्रश्नेत्यर्थः ॥ **परम इति** । परमव्योमशब्दस्य ब्रह्मवाचकत्वादित्यर्थः । **समानयोगक्षेमत्वादिति** । परमे व्योमन् प्रतिष्ठितेत्यस्यान्नमयादिद्वारपञ्चकोपदेशद्वारा शाखाचन्द्रमसन्यायेनान्ततः परमे व्योमन् प्रतिष्ठितेत्यपि व्याख्यानसम्भवेन साक्षाद्ब्रह्मविद्यात्वसाधकत्वाभावेनान्नमयादिप्रकरणसमानयोगक्षेमत्वेन भार्गवीवारुणीविद्यायाः परब्रह्मपरत्वनिश्चायकत्वासम्भवादित्याशयः ॥

च०— **मतुवसो रुः संबुद्धाविति** । मत्वन्तस्य वस्वन्तस्य च पदस्य रुरित्ययमादेशो भवति संबुद्धौ परतः छन्दसि विषय इति सूत्रार्थः । **उक्तोत्तरत्वादिति** । साध्यत्वेन मयट्प्रोक्तेरित्यादिनेत्यादिः । साक्षात् दर्शितानुपूर्वीकेण स्वेनैव ।

**सु०— स्यादेतत् । ब्रह्मप्रश्नोत्तरतयोक्तिमात्रेण न वरुणोक्तानामन्नादीनां ब्रह्मत्वं सिध्यति । ब्रह्मज्ञानोपायतयाऽपि तदुपदेशोपपत्तेः । तथा हि । द्वितीयाचन्द्रप्रश्नेऽचन्द्ररूपापि शाखा चन्द्रतयोच्यते चन्द्रज्ञानोपायत्वात् । यथा वाऽरुन्धतीप्रश्ने तत्समीपवर्तिनी पृथुला तारकाऽरुन्धतीत्वेनोपदिश्यते । अरुन्धतीज्ञानद्वारत्वात् । द्वारत्वं चान्नादिशब्दोदितानां शरीरादीनां बहिर्वृत्तिनिवारणद्वारा ब्रह्मज्ञानं प्रत्युपपद्यत एवेति । मैवम् । किमनेन व्यभिचारश्चोद्यते । किंवाऽन्यथासिद्धिः संभाव्यते । उत सा निश्चीयते । पक्षत्रयमसंबद्धमित्याह** द्वारमिति ।

**अनु०—** द्वारं तदिति वादिनः ॥
उपसत्तिं कथं विद्युः

**तदन्नादिकम् । उपसत्तिं ब्रह्मज्ञानार्थोपसत्त्युत्तरकालीनं गुरूपदेशप्रकारमित्यर्थः । कथमित्याक्षेपे । न विद्युरित्यर्थः । गुरूपदेशप्रकाराज्ञानविजृम्भितेयं शङ्केति भावः । तत्कथं न विद्युरित्यत आह** उपसन्नायेति ।

उपसन्नाय हि त्रिशः ॥
वक्तव्यं ब्रह्म गुरुणा चतुर्वारमथापि वा ॥
सकृद्वेत्यागमा ब्रूयुः संप्रदायविदोऽपि च ।

ब्रह्मैव वक्तव्यम् । न पुनर्यत्किञ्चित् । अबोधेऽपि पुनः पुनः तदेव शब्दान्तरेण वक्तव्यम् । द्वारं च द्वारतयैव वक्तव्यम् । न तु तदात्मकत्वेन । न हि धूमोऽग्न्यात्मकत्वेन प्रदर्श्यते । चन्द्राद्युदाहरणमप्यसिद्धमेवेति । आगमा वेदाः । संप्रदायविदः स्मृतीतिहासपुराणकर्तारः । अपिचावितरेतरसमुच्चयार्थौ । तर्हि उपदेशप्रकाराज्ञतया वरुणोऽन्यदुपदिशतीत्यस्तु । मैवम् । लोकपालस्यैतावज्ज्ञानाभावासंभवादित्याशयेन द्वारोपदेशशङ्कानिराकरणमुपसंहरति तदिति ।

तद्यत्किञ्चित्कथं ब्रूयादुपसन्नाय दिक्पतिः ॥

तत्तस्मात् । यत्किञ्चिद् द्वारम् ।

शे०—तदुक्तप्रकारेण युक्तेरपि सावकाशत्वान्न युक्त्याऽपि तत्सिद्धिरित्याशङ्कते स्यादेतदिति । ननु नान्नाद्युपदेशो द्वारतयाऽन्यथयितुं युक्तः । अन्नादिज्ञानं विनाऽपि प्राणादिज्ञानेनान्नादेर्द्वारत्वायोगात् । न चात एव ब्रह्मज्ञानोपायतयेति ब्रह्मणि द्वारत्वाश्रयणमिति वाच्यम् । अन्नं ब्रह्मेत्यनुक्त्वाऽप्यानन्दो ब्रह्मेति ब्रह्मस्वरूपस्योपदेष्टुं शक्यतया तदयोगादित्यत आह द्वारत्वं चेति ॥ बहिर्वृत्तिनिवारणद्वारेति । चित्तस्य प्रत्यक्प्रावण्यद्वारेत्यर्थः ॥ व्यभिचार इति । अन्नादिकं ब्रह्म भवितुमर्हति ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वादित्यनुमाने विशेषव्याप्तौ दृष्टान्ताभावेन तदनुपपत्त्या यद्यत्प्रश्नोत्तरत्वेनोच्यते तत्तदेवेति सामान्यव्याप्तेरेवावश्यवक्तव्यत्वाच्छाखादेश्चन्द्रादिप्रश्नोत्तरत्वेनोक्तत्वेऽपि चन्द्रादित्वाभावाद्व्यभिचार इत्यर्थः । कथं तर्हि द्वितीयाचन्द्रप्रश्नेऽचन्द्ररूपायाः शाखायाश्चन्द्रतयोपदेशः । अरुन्धतीप्रश्ने तत्समीपवर्तिन्याः पृथुलायास्तारकाया अरुन्धतीत्वेनोपदेशश्चेत्यतो लोके चन्द्रारुन्धत्यादौ शाखास्थूलतारकादेर्द्वारत्वेनैवोपदेशेन चन्द्रारुन्धतीत्वेनोपदेशाभावादुदाहरणमसिद्धमित्याह चन्द्राद्युदाहरणमपीति ॥ इतरेतरसमुच्चयार्थाविति । ततश्चापिशब्दयोर्नान्यतरवैयर्थ्यमिति भावः ।

स०— किमनेन व्यभिचारः चोद्यत इति ॥ यत् यत्प्रश्नोत्तरत्वेनोच्यते तत्तदेवेति सामान्यव्याप्त्यभिधान इत्यर्थः ।

प०—किमनेनेति । 'द्वितीयाचन्द्रप्रश्न' इत्यादिकथनेनान्नादिकं ब्रह्म भवितुमर्हति । ब्रह्मप्रश्नोत्तरत्वात् । यत् यत्प्रश्नोत्तरं तत्तद्भवतीति विवक्षितानुमाने शाखादौ व्यभिचारः शङ्क्यत इत्यर्थः । सा असिद्धिः ।

या०— किमनेन व्यभिचारश्चोद्यत इति । यद्यत्प्रश्नोत्तरत्वेनोच्यते तत्तदेवेति सामान्यव्याप्त्यभिधान इत्यर्थः ।

श्री०— **व्यभिचारश्चोद्यत इति** । यद्यत्प्रश्नोत्तरत्वेनोच्यते तत्तदेवेति सामान्यव्याप्तौ चन्द्रारुन्धतीबोधनद्वारभूतशाखास्थूलतारकयोर्व्यभिचारश्चोद्यत इत्यर्थः ॥ **अन्यथासिद्धिरिति** । तत्प्रश्नोत्तरत्वं ब्रह्मत्वं विना द्वारत्वेनाप्यन्यथासिद्धमित्यन्यथासिद्धिः संभाव्यते शङ्क्यत इत्यर्थः । सा अन्यथासिद्धिः ॥ **लोकपालस्येति** । 'न देवपदवीं प्राप्ता ब्रह्मदर्शनवर्जिताः' इति वचनेन देवतापदस्य परब्रह्मज्ञानसाध्यत्वावगमेनैतावज्ज्ञानाभावे लोकपालकत्वस्यैवासंभवादिति भावः ।

च०— **चन्द्राद्युदाहरणमपीति** । चन्द्रारुन्धत्यादिप्रश्ने शाखापृथुलतारकादिकं चन्द्रारुन्धत्यादिज्ञानोपायकत्वेनैवोपदिशन्ति लौकिकाः न तत्तादात्म्येनेत्याशयः ।

सु० – **नन्वब्रह्मैव ब्रह्म पृष्टवते वरुणेनोक्तं व्यामोहनायेति किं न स्यादित्यत आह** न वदेदिति ।

अनु०— न वदेद्ब्रह्म च कथं मायावी न हि वारिराट् ॥

**किमाक्षेपे । ब्रह्मैव वदेदित्यर्थः । तत्र हेतुर्मायावी न हीति । आप्तत्वादित्यर्थः । विवक्षितार्थतत्त्वज्ञानं हि वरुणस्य दिक्पतेः प्रसिद्धम् ।** अविप्रलम्भकत्वं **च पितृत्वात् । भृगोर्ब्रह्मज्ञानयोग्यत्वात् । उपसन्नायेति प्रसङ्गदोषस्य निरस्तत्वात् । वारिराडिति भूताभिमानित्वेनोक्तस्यापटुकरणत्वासंभवात् । विवक्षायाश्चोपदेशादेव सिद्धेः ।** अत **एव श्रुतिर्वारुणिः(र्वरुणं) पितरमुपससारेत्याह । तदनेनाप्तेन ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वमन्नादीनां ब्रह्मत्वे हेतुरित्युक्तं भवति ।**

श्री०— कथं वरुणस्याप्तत्वमित्यतो विवक्षितार्थतत्त्वज्ञानादिरूपाप्तिमत्त्वादिति भावेनाप्त्येकदेशभूततत्त्वज्ञानवत्तामुपपादयति **विवक्षितार्थतत्त्वज्ञानं इति** विप्रलम्भकत्वस्य श्रोतृप्रसङ्गान्यतरानानुकूल्यनिबन्धनत्वात्प्रकृते च तदुभयानुकूल्यसत्त्वान्न विप्रलम्भकत्वमित्याशयेनाप्त्येकदेशभूतमविप्रलम्भकत्वमुपपादयति **अविप्रलम्भकत्वं चेति ।** अत्र पितृत्वादिति श्रोतुर्वक्तृप्रेमास्पदत्वस्य भृगोरित्यनेन तत्त्वज्ञानयोग्यतायाश्चोपपादनेन श्रोत्रानुकूल्यसमर्थनम् । उपसन्नायेत्यनेन प्रसङ्गानुकूल्यसमर्थनमिति द्रष्टव्यम् । आप्त्येकदेशभूतपटुकरणत्वस्योपपादनम् **वारिराडितीति** । तदेकदेशविवक्षाया उपपादनम् **विवक्षायाश्चेति** । नन्वस्तु वरुणस्याप्तत्वं तथाऽपि न ब्रह्मप्रश्नोत्तरतयोक्तत्वेन हेतुनाऽन्नादीनां ब्रह्मत्वं सिध्यति । अब्रह्मैव ब्रह्म पृष्टवते वरुणेन व्यामोहनायेत्युक्तरीत्या तस्यान्यथासिद्धिशङ्काकलङ्कितत्वादित्यतोनात्र तावन्मात्रं हेतुत्वेनाभिमतं किं त्वाप्तेन ब्रह्मप्रश्नोत्तरतयोक्तत्वमेव । तस्य च नान्यथासिद्धिशङ्काग्रस्तत्वमिति युक्ता तेन तत्सिद्धिरित्याह **तदनेनेति** ।

या०— आप्तत्वमुपपादयति । **विवक्षितार्थतत्त्वज्ञानं हीत्यादिना** । श्रोतृप्रसङ्गान्यतरानुकूल्याभावव्याप्तं लोके विप्रलम्भकत्वम् । इह तदुभयानुकूल्यसत्त्वाद्व्याप्यस्य विप्रलम्भकत्वस्याप्यभाव इत्याह **अविप्रलम्भकत्वं चेति** । पितृत्वादित्यनेन वक्तृप्रेमास्पदत्वस्य भृगोरित्यनेन श्रोतुस्तत्त्वज्ञानयोग्यत्वस्य चोपपादनेन श्रोत्रानुकूल्योपपादनमिति द्रष्टव्यम् ।

श्री०— श्रोतुस्तत्त्वज्ञानायोग्यत्वे वक्तुर्विप्रलिप्सा भवति । प्रकृते च तन्नास्तीत्याह **भृगोरिति ॥ भूताभिमानित्वेति** । सर्वदा सावधानतया स्वाभिमन्यमानप्रेरणं हि अभिमानिदेवताकृत्यम् । न हीदमभिमानिदेवतानामपटुकरणत्वे सम्भवतीति भावः ।

च०—वरुणस्याप्ततामुपपादयति । **विवक्षितार्थतत्त्वज्ञानं हीति** । विप्रलम्भकत्वनिरूपितव्यापकताविशेषितस्य श्रोतृप्रसङ्गान्यतरानानुकूल्यस्य व्यतिरेकेण तद्व्याप्यतापन्नविप्रलम्भकत्वव्यतिरेकः पक्षीकृतवरुणेऽवसितुं सुशक इत्याशयेनाह **अविप्रलम्भकत्वं चेति** । हेतुविभक्त्यन्तत्रिकेण हेत्वसिद्धिं प्रतिविधत्ते ।

सु०—**ननु वरुणेनोक्तेष्वन्नादिष्वन्नप्राणमनांसि सन्तु ब्रह्मस्वरूपाणि । अन्नादिशब्दानामत्तृत्वाद्यर्थतयाऽनुपपत्त्यभावात् । चक्षुःश्रोत्रवाक्शब्दं तु कथं ब्रह्म स्यात् । चक्षुरादिशब्दानां चष्टेऽनेनेति चक्षुः । शृणोत्यनेनेति श्रोत्रम् । वदत्यनयेति वागिति करणार्थत्वात् । ब्रह्मणश्च करणत्वानुपपत्तेरिति चेन्न । कर्तर्यपि तद्व्युत्पत्तिसंभवादित्याह** चष्ट इति ।

अनु०— चष्ट इत्येव तच्चक्षुः श्रवणाच्छ्रोत्रमुच्यते ॥
वचनादेव वाग्ब्रह्म सृष्टिस्थित्यादिकारणम् ॥

**एवशब्देन करणसाधनतां निराकरोति । किञ्च 'यतो वा इमानि भूतानि जायन्ते' इति सकलभूतानां सृष्टिस्थितिसंहारकारणत्वं च ब्रह्मलक्षणमन्नादिषूपदिष्टम् । ततश्चैतद्ब्रह्मेत्याह** सृष्टीति । **यतः सृष्ट्यादिकारणमुक्तमतोऽपि ब्रह्मेति संबन्धः** ।

शे०— **अत्तृत्वाद्यर्थतयेति** । भूतात्तृत्वभूताद्यत्वाद्यर्थतयेत्यर्थः ॥ **अनुपपत्त्यभावादिति** । ब्रह्मणः संहर्तृत्वेन सर्वभूतात्तृत्वस्य सर्वभूतोपजीव्यतया ब्रह्मणि सम्भवस्य 'भोग्यत्वमत्र चाद्यत्वमि'त्यादिना प्राग्व्युत्पादितत्वादिति भावः । **करणत्वानुपपत्तेरिति** । कारकान्तरेऽचरितार्थत्वे सति कारणत्वादिरूपकरणत्वस्य कर्तृतया करणे चरितार्थे ब्रह्मण्यनुपपत्तेरित्यर्थः ॥ **कर्तर्यपीति** । ब्रह्मणश्च श्रवणादिकर्तृत्वादिति भावः । ननु चक्षुरादिशब्दानां ब्रह्मणि निर्वचनप्रस्तावे सृष्ट्यादिकारणत्वोक्तिरसङ्गतेत्यतो नेदं चक्षुरादिशब्दवाच्यत्वोपपादकं किन्तु वरुणोपदिष्टानामन्नादीनां युक्त्यन्तरेण ब्रह्मत्वोपपादकमेवेति भावेन तत्तथा योजयति **किञ्चेति** । सृष्टीत्यादेरन्नादीनां ब्रह्मत्वोपपादकत्वे युक्त्यन्तरपरत्वस्य मूलारूढतासिद्धये तथा तद्व्याचष्टे **यत इत्यादिना** ।

श्री०— अकरणत्वादिति । कर्तृप्रयोज्यत्वरूपकरणत्वाभावादित्यर्थः ।

च०— चक्षुःश्रोत्रवाक्शब्दमिति । कृतबहुव्रीहित्वात् ब्रह्मपदसमानलिङ्गता ।

सु०—ननु तथाऽपि नानुवाकद्वयोक्तमेकं वस्तु भवितुमर्हति । सङ्ख्याभेदात्संज्ञाभेदाच्च । पूर्वं खल्वन्नमयादयः पञ्चोक्ता न चक्षुःश्रोत्रवाचः । उत्तरत्र चान्नादयः षट् न विज्ञानानन्दाविति तत्राह तच्चेति ।

अनु०— तच्च वाधूलशाखायामष्टरूपमुदाहृतम् ॥
विज्ञानानन्दसहितं पृथक् सृष्ट्यादिलक्षणैः ॥

चशब्दो हेत्वर्थः । यस्माद्वाधूलशाखायां विज्ञानानन्दसहितं तदन्नादिषट्कमित्यष्टरूपं ब्रह्मतयोदाहृतम् । तस्मात्तदनुसारेण प्रथमानुवाके चक्षुरादित्रयस्योत्तरत्र विज्ञानानन्दयोरध्याहारेण सङ्ख्यासंज्ञैक्यं भविष्यतीति भावः । हेत्वन्तरसमुच्चये वा चशब्दः । अत्रापि हि 'विज्ञानं ब्रह्मेति व्यजानात् ।' 'आनन्दो ब्रह्मेति व्यजानादि'त्युत्तरवाक्यपर्यालोचनयाऽपि ह्यत्र विज्ञानानन्दयोरध्याहारो गम्यते । न ह्यन्यद्वरुणेनोपदिष्टं भृगुस्त्वन्यद्व्यजानादिति युज्यते । ननु वाधूलशाखोक्तमपि कुतो ब्रह्मेत्यत आह पृथगिति । अनेकशाखाविदामेवात्र सम्यगधिकारज्ञापनायैतदुक्तम् । ननु वाधूलशाखायामिवात्रोभयत्राष्टकमेव कस्मान्नोक्तमित्यत आह आवापेति ।

आवापोद्वापतः शाखा यत आहुः परं पदम् ॥

क्वचिदन्यत्रानुक्तावापेन क्वचिदन्यत्रोक्तोद्वापेन क्वचिदुभयतया क्वचित्सामग्र्येण परमेश्वरस्वरूपं प्रतिपादयन्तीति शाखानां स्वभावो यतोऽतो न कश्चिद्विरोध इति ।

शे०— कुतोऽनुवाकद्वयोक्तस्य वस्तुनो भेद इत्यतः 'सप्तदश प्राजापत्यान्पशूनालभेते'ति प्राजापत्यवाक्ये सङ्ख्यया कर्मभेदस्य भेदलक्षणे स्थितत्वादिहापि सङ्ख्याभेदेनानुवाकद्वयोक्तवस्तुनोऽपि भेदसिद्धिरिति भावेन सङ्ख्याभेदं तावद्भेदसाधकत्वेनाह सङ्ख्याभेदादिति । 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरि'त्यादौ संज्ञाभेदेनेवेहापि संज्ञाभेदादप्यनुवाकद्वयोक्तवस्तुभेदसिद्धिरित्याशयेनाह संज्ञाभेदाच्चेति । कथं सङ्ख्याभेदसंज्ञाभेदावित्यतस्तौ दर्शयति पूर्वमिति । पूर्वानुवाक इत्यर्थः । उत्तरत्रेति । उत्तरानुवाक इत्यर्थः ॥ उदाहृतमिति । 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा वाङ्मयः । तस्माद्वा एतस्माद्वाङ्मयादन्योऽन्तर आत्मा चक्षुर्मयस्तस्माद्वा एतस्माच्चक्षुर्मयादन्योऽन्तर आत्मा श्रोत्रमयस्तस्मात्प्राणमयस्तस्मान्मनोमयस्तस्माद्विज्ञानमयस्तस्मादानन्दमयः' इति वाधूलश्रुताविति शेषः। तदेव हेत्वन्तरं दर्शयति अत्रापि हीति । उत्तरानुवाकेऽपीत्यर्थः । नन्वावापोद्वापत इति वक्ष्यमाणरीत्यैव

सङ्ख्य संज्ञैक्यसिद्धिसंभवादप्रसिद्धश्रुत्युदाहरणमनर्थकम् । सार्थक्येऽपि वा स्पष्टं तद्वाक्योदाहरणेन विवक्षितार्थस्य वर्णनीयत्वात्साम्मुख्येन तदुक्तत्ववर्णनमनर्थकमेवेत्यत आह **अनेकेति** । एतत् साम्मुख्येन वचनमित्यर्थः । **अत्रेति** । तैत्तिरीयशाखायामित्यर्थः ॥ **उभयत्रेति** । पूर्वोत्तरानुवाकयोरित्यर्थः । **क्वचिदन्यत्रानुक्तावापेनेति** । ततश्च प्रकृते पूर्वानुवाकेऽनुक्तस्य चक्षुरादेरुत्तरानुवाके प्रक्षेपरूपावाप इति भावः ॥ **क्वचिदन्यत्रोक्तोद्वापेनेति** । ततश्च प्रकृते उत्तरानुवाकोक्तस्य चक्षुरादेः पूर्वानुवाके त्यागरूपोद्वाप इति भावः ॥ **क्वचिदुभयथेति** । ततश्चोत्तरानुवाक एवान्नं प्राणं चक्षुः श्रोत्रं मनो वाचमितीत्यत्रान्नं ब्रह्मेति व्यजानादित्यादावनुक्तस्य चक्षुरादेरावापस्तत्रैवोक्तविज्ञानानन्दयोरुद्वापः । एवमन्नं ब्रह्मेति व्यजानादित्यादावन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमितीत्यत्रानुक्तविज्ञानानन्दयोरावापः । तत्रैवोक्तस्य चक्षुरादेरुद्वापश्चेति भावः । यद्वा पूर्वानुवाकेऽनुक्तस्य चक्षुरादेरुत्तरानुवाके आवापस्तत्रोक्तविज्ञानानन्दमयोरुद्वाप इत्युभयथेत्यर्थः ॥ **क्वचित्सामग्र्येणेति** । वाधूलशाखायां समग्रमपीत्यर्थः ।

स० — ननु 'विज्ञानं ब्रह्मेति व्यजानात्' इत्युत्तरवाक्यपर्यालोचनयाऽपि ह्यत्र विज्ञानानन्दाध्याहारो गम्यत इति युक्तिमनुक्त्वा वाधूलशाखोदाहरणं किमिति कृतमित्यत आह **अनेकशाखाविदामिति** । **क्वचिदन्यत्रेति** ॥ अन्यत्र पूर्वानुवाके अनुक्तानां चक्षुःश्रोत्रवाचां अन्यत्र उत्तरानुवाके आवापः प्रक्षेपः । अन्यत्र उत्तरानुवाके उक्तानां चक्षुःश्रोत्रवाचां अन्यत्र पूर्वानुवाके उद्वापस्त्यागः । क्वचिदुभयथा उत्तरानुवाके अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमित्यत्र अन्यत्र अन्नं ब्रह्मेति व्यजानादित्यादौ अनुक्तानां चक्षुःश्रोत्रवाचां आवापः तत्रैवोक्तविज्ञानानन्दयोरुद्वापः एव'मन्नं ब्रह्मेति व्यजानादि'त्यत्राप्युभयं द्रष्टव्यम् । क्वचित्सामग्र्येण वाधूलशाखायामित्यर्थः ।

प० — **यस्माद्वाधूलशाखायामित्यादि** । 'तस्माद्वा एतस्मादन्नरसमयात् अन्योन्तर आत्मा वाङ्मयः । तस्माद्वा एतस्माद्वाङ्मयादन्योन्तर आत्मा चक्षुर्मयः तस्माद्वा एतस्माच्चक्षुर्मयादन्योन्तर आत्मा श्रोत्रमयः तस्मात्प्राणमयः तस्मान्मनोमयस्तस्माद्विज्ञानमयस्तस्मादानन्दमय'इति हि वाधूलशाखेति तत्त्वप्रदीपोक्तरीत्याऽष्टरूपोक्तिस्तत्र ध्येया । हेत्वन्तरमेवाह **अत्रापि हीति** । एतदुक्तमिति अन्यथा पृथक्सृष्ट्यादिप्रतिपादकवाक्यान्युदाहृत्य प्रदर्शयेदिति भावः । **क्वचिदन्यत्रानुक्तावापेनेत्यादि** । यथा ब्रह्मवल्ल्यामनुक्तस्य चक्षुरादेः भृगुवल्ल्यामावापः प्रक्षेपः भृगुवल्ल्यामुक्तस्य चक्षुरादेर्ब्रह्मवल्ल्यामुद्वापोनुक्तिः भृगुवल्ल्यामेवा(न्यत्रा)नुक्तस्य चक्षुरादेरावापोन्यत्रोक्तस्य ज्ञानादेरुद्वाप इत्युभयथा क्वचिद्वाधूलशाखायां सामग्र्येणेति विवेकः ।

या० — तदेव हेत्वन्तरं दर्शयति **अत्रापि विज्ञानमिति** ॥ **एतदुक्तमिति** । अन्यथा पृथक् सृष्ट्यादिप्रतिपादकवाक्यान्युदाहृत्य प्रदर्शयेदिति भावः ॥ **क्वचिदन्यत्रानुक्तावापेनेति** । यथा

पूर्वानुवाकेऽनुक्तस्य चक्षुरादेरुत्तरानुवाके आवापः प्रक्षेपः । अन्यत्रोक्तोद्वापो यथोत्तरानुवाके उक्तस्य चक्षुरादेः पूर्वानुवाके उद्वापस्त्यागः । क्वचिदुभयथा यथोत्तरानुवाक एवान्यत्रानुक्तस्य चक्षुरादेरावापः । अन्यत्रोक्तविज्ञानानन्दयोरुद्वापश्च । क्वचित्सामग्र्येणेत्यस्य वाधूलशाखैवोदाहरणम् ।

श्री० — तदेव विशदयति **अत्रापीति** ।। **अत्रोभयत्रेति** । अत्र तैत्तिरीयशाखायामुभयत्रानुवाकद्वय इत्यर्थः ।

च० —**अनुक्तावापेनेति** पूर्वानुवाकानभिहितचक्षुरादेरुत्तरानुवाके संग्रहेणेत्यर्थः । **अन्यत्रोक्तोद्वापेनेति** । उत्तरानुवाकोक्तचक्षुरादेः पूर्वानुवाके उद्वापस्त्यागः ।

सु० — **ननु तथाऽपि वरुणोपदिष्टानामन्नादीनां ब्रह्मत्वं नोपपद्यते । तद्विज्ञाय पुनरेव वरुणं पितरमुपससार' इति लब्धोपदेशस्यापि भृगोः पुनरुपसरणवचनात् । पूर्वोक्तस्यैव ब्रह्मत्वे अधीहि भगवो ब्रह्मेति पुनरुपसरणं व्यर्थं स्यात् । अनेन तु ज्ञायते न पूर्वोपदिष्टं ब्रह्मेति । यथा हि कश्चित्सुवर्णं याचितवते रजतं ददाति सोऽपि गृहीत्वाऽऽलोच्य पुनः(पुनः) सुवर्णं देहीति याचते । तेन पार्श्वस्थो जानाति प्राग्दत्तमन्यदेव किञ्चिन्न सुवर्णमिति । तथेहापीत्याशङ्कां परिहरति** यत इति ।

**अनु०** — यतो भूतानि जायन्त इत्याद्यैर्लक्षणैः स्वयम् ।।
लक्षितं गुरुणा पश्चात्तपसैवापरोक्षितम् ।
दृष्ट्वैकैकस्वरूपं तु समस्तोक्तानुदर्शनम् ।।
इच्छताऽऽज्ञां गुरोः प्राप्य तपसैवापरोक्षितम् ।।
अब्रह्मेत्येव वदतां श्रुतहान्यश्रुतग्रहौ ।।
साक्षाल्लक्षणतां प्राप्ताविति लज्जा तदुक्तिषु ।।

**अयमर्थः न पुनरुपसरणान्यथाऽनुपपत्त्या पूर्वोपदिष्टस्याब्रह्मत्वं कल्प्यम् । पुनरुपसरणस्यान्यथोपपत्तेः । तथा हि । वरुणो ह्युद्देशलक्षणाभ्यां भृगवे ब्रह्मोपदिश्योवाच । न श्रवणमात्रेण कृती भवान् । श्रवणमात्रस्य ब्रह्मसाक्षात्कारासाधनत्वात् । साक्षात्कारस्यैव मोक्षसाधनत्वात् । अतस्त्वया मनननिदिध्यासनरूपं तपः करणीयमिति । स चैवमुपदिष्टाष्टरूपो युगपत्सर्वस्य साक्षात्कर्तुमशक्यत्वान्मनननिदिध्यासनाभ्यामन्नाख्यं भगवद्रूपं साक्षात्कृत्य गुरुप्रसादलब्धमपूर्वतमं धनं तस्मै निवेदयितुं प्राणाख्यरूपान्तरसाक्षात्काराय मनननिदिध्यासने चिकीर्षुर्गुरोरनुज्ञामादातुं च पुनर्गुरुमुपससार । एवं रूपान्तरेऽपि । तत्रानुजानीहीति वक्तव्ये यदधीहि भगवो ब्रह्मेति वदति तदहङ्कारनिरासार्थमिति । नन्वेवमस्त्वर्थापत्तिरन्यथोपपद्य-**

पक्षीणा । तथाऽपि किं पूर्वस्याब्रह्मत्वात्पुनरुपसरणम् उतोक्तरीत्याऽनुज्ञानार्थमिति सन्दिह्यते । सन्देहे चान्नमयादीनां न ब्रह्मत्वावधारणं संभवतीति । मैवम् । यतो वा इमानि भूतानि जायन्त इत्यादिलक्षणयोगात्तपसैवापरीक्षितत्वलिङ्गाच्चोत्तरपक्षावधारणोपपत्तेः । न हि देहादाविदं लक्षणं संभवतीति । न च तस्य स्वभावसिद्धज्ञानस्य साक्षात्कारस्य तपोऽपेक्षितम् । किंश्च पूर्वस्याब्रह्मत्वेन पुनरुपसरणे स तपस्तप्त्वाऽन्नमब्रह्मेति व्यजानात् । नान्नाद्ध्येव खल्वित्यादि ब्रूयात् । एवं ब्रह्मत्वज्ञापकेषु श्रुतेष्वप्यश्रुतमब्रह्मत्वं कल्पयतां श्रुतहानिरश्रुतग्रहापत्तिश्च स्यादित्यलं निर्दलपक्षप्रतिक्षेपेऽस्माकमेव लज्जा जायत इति । अक्षरार्थस्तु स्फुट एव । सूत्राक्षराणामनानुगुण्यं तु भगवता न व्युत्पादितम् । तस्य परेण स्वयमेवाङ्गीकृतत्वात् । यो हि स्वयमेव स्वव्याख्यानस्यास्वारसिकत्वं मन्यते । तं प्रति तद्व्युत्पादनं मृतमारणमिव निराकर्तुरेव लज्जाकरम् । अत एवाह । इति प्रकारेण तदुक्तिषु विषयभूतासु दूषणाभिधानेऽस्माकमेव लज्जेति ।

शे०— ननु सृष्टिस्थित्यादिकारणमित्यादिना वरुणोक्तान्नादीनामुक्तस्य सृष्ट्यादिकारणत्वस्यैव कथनाद्यतो भूतानीत्याद्युत्तरवाक्यवैयर्थ्यमित्यतः पुनरुपसरणान्यथाऽनुपपत्त्या प्राप्ताब्रह्मत्वशङ्कानिवर्तकतया तस्यार्थवत्त्वमिति भावेन तच्छङ्कानिवर्तकतया तद्योजयितुं तां शङ्कामुत्थापयति **नन्विति** । ननूक्तार्थापत्तेरनेनादूषणान्नोक्तशङ्कानिरासकत्वमुत्तरवाक्यस्येत्यतो भाष्याभिप्रायमाह **अयमर्थ इति** । तद्युक्तशङ्कानिरासस्य दृष्टैवैकमित्यादिनाऽन्यथोपपत्तिप्रतिपादनेन सिद्धेर्यतो भूतानीत्यादेरानर्थक्यमित्यतस्तद्व्यावर्त्यशङ्काप्रदर्शनेन तद्योजयितुं तामुत्थापयति **नन्वेवमिति** । ननु लक्षणलिङ्गयोरन्यत्राप्युपपत्तेर्न ताभ्यामुत्तरपक्षावधारणं संभवतीत्यतस्तयोरन्यत्रासंभवं क्रमेण दर्शयति **न हीत्यादिना** । भाष्याक्षरार्थकथनपूर्वकत्वात्तदभिप्रायकथनस्य कथं तदकथयित्वैवायमर्थ इत्यभिप्रायकथनमुपपद्यत इत्यतोऽत्र यतो भूतानीत्यादिभाष्याक्षरार्थस्य स्पष्टत्वात्तदकथनेऽपि तात्पर्याभिधानमुपपद्यत इत्याशयेनाह **अक्षरार्थस्त्विति** । पञ्चकोशत्ववादिमते आनन्दमयोऽभ्यासादित्यादिसूत्राक्षरानानुगुण्यं च दोष इत्याशयेन कुतस्तर्हि पञ्चकोशत्ववादिमतदूषणार्थं प्रवृत्तस्य भाष्यकारस्याक्षरानानुगुण्याव्युत्पादनमित्यतोऽव्युत्पादने प्रतिज्ञापूर्वकं निमित्तमाह **सूत्रेति** ॥ **अङ्गीकृतत्वादिति** । वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति न्यायेन सूत्राणां कथञ्चिद्योज्यत्वादिति परेणैवोक्तेरिति भावः ।

स०— **तस्य परेण स्वयमेवांगीकृतत्वादिति** । वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति सूत्राणां कथंचिद्योज्यत्वादिति तेनोक्तत्वादिति भावः ।

प० — मूलपदैरुक्त शंकानिरासस्याप्रतीतेर्व्यनक्ति **अयमर्थ** **त्यादिना** ॥ **अर्थापत्तिरन्यथोपपत्त्येति** । पुनरुपसरणान्यथानुपपत्तिरनुज्ञास्वीकाररूपान्यथोपपत्त्येत्यर्थः ॥ **अक्षरार्थ इति** । यत इत्यादिमूलस्येति योज्यम् ॥ **स्वयमेवांगीकृतत्वादिति** । 'गुणे त्वन्याय्यकल्पने'त्युक्तत्वादिति भावः । इतिपदं पूर्वं हेत्वर्थकं व्याख्याय प्रकारार्थतयापि व्याख्याति **इति प्रकारेणेति** ।

या० — **तस्य परेण स्वयमेवेति** । वेदसूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति सूत्राणां कथञ्चिद्योज्यत्वादिति तेनोक्तत्वादिति भावः ।

श्री० — **अन्यथोपपत्तेति** । अनुज्ञास्वीकारार्थत्वेनेत्यर्थः । विषयभूतासु निराकरणविषयभूतासु ।

सु० — यच्च भेदव्यपदेशाच्चेति सूत्रं व्याख्यायोक्तं परेण **मिथ्याभूतं जीवात्मपरमात्मभेदमाश्रित्य भेदव्यपदेशाच्चेत्युक्तमिति तदनुपपन्नमिति भावेनाह** समीप इति ।

अनु० — समीपे सह भोगस्य मुक्तित्वेनोक्तितोऽसकृत् ॥
भेदो जीवेशयोर्मिथ्येत्येव मिथ्या स्वयं भवेत् ॥

**'एतमानन्दमयमात्मानमुपसंक्रम्ये'त्यादौ परमेश्वरस्य समीपे । 'सोऽश्नुत'इत्यादौ तेन सह । न हि सामीप्यं साहित्यं च भेदेन विनोपपद्यते । न च मोक्षेऽपि शिष्यमाणं मिथ्या भवितुं युक्तम् । आत्मस्वरूपस्यापि मिथ्यात्वप्रसङ्गात् । अथवा भेदव्यपदेशादित्युक्ते मिथ्याभेदोऽयं किं न स्यादित्याकाङ्क्षानिरासार्थत्वेनास्मिन्नस्य च तद्योगं शास्तीति सूत्रं प्रकारान्तरेण व्याख्याति ।**

शे० — किमुक्तमित्यत ईदृशं च विज्ञानात्मपरमात्मभेदमाश्रित्य भेदव्यपदेशाच्चेत्युक्तमिति परभाष्यमर्थतोऽनुवदति ॥ **मिथ्याभूतमिति** । समीपे सहभोगस्य कुत्राप्यनभिधानादसिद्धिरित्यतो नात्र समीपे सहभोगाभिधानमेकं भेदापवादकत्वेन विवक्षितं किन्तु समीपे भोगाभिधानं सह भोगाभिधानं चेति द्वयमेव । तच्च नासिद्धमिति भावेनाभिधानद्वयं क्रमेण दर्शयति **एतमित्यादिना** । समीपे भोगस्य सहभोगस्य च मुक्तित्वेनोक्त्याऽस्तु सामीप्यसाहित्ययोर्मोक्षे प्राप्तिस्तथाऽपि मोक्षे कथं भेदप्राप्तिरित्यतस्तयोर्भेदाविनाभूतत्वादिति भावेन तमुपपादयति **न हीति** । अस्तु मोक्षे भेदप्राप्तिस्तथाऽपि कुतस्तस्य पारमार्थ्यं येन भेदमिथ्यात्वमिथ्यात्वसिद्धिरित्यत आह **न चेति** ॥ **प्रकारान्तरेणेति** । **'योगमन्नमयाद्यैर्यदि'**त्यादिप्राचीनव्याख्यानापेक्षया प्रकारान्तरेणेत्यर्थः । व्याख्यातीत्यतःपरं समीप इतीति शेषो द्रष्टव्यः ।

या० — मिथ्याभूतं जीवात्मपरमात्मभेदमिति तद्ग्रन्थार्थानुवादो न वाक्यानुवाद इति द्रष्टव्यम् ॥

श्री० — प्रकारान्तरेणेति । 'योगमन्नमयाद्यैर्यत्फलत्वेनास्य शंसती'ति पूर्वमस्य सूत्रस्य व्याख्यातत्वात्प्रकारान्तरेणेत्युक्तम् । तथा चास्मिन्स्थानद्वयेऽस्य जीवस्य तद्योगं तेन परब्रह्मणा योगं तत्सामीप्यमिति यावत् । तेन योगं साहित्यं च श्रुतिः शास्ति । तथा तत्समीपे तेन सह भोगं च मुक्तित्वेन शास्तीति व्याख्यानं द्रष्टव्यम् ।

सु० — एवं पञ्चकोशवादिनां मायावादिनां व्याख्यां निराकृत्य ये तु भास्करादयो यथाश्रुतसूत्रानुसारिणोऽन्नमयादयश्चत्वारः कोशा आनन्दमयस्त्वेक एव परमात्मेति व्याचक्षते । तन्मतमतिदेशेन निराकरोति एतेनेति ।

अनु० — एतेन मयटश्चैव द्वैविध्येनार्थकल्पनात् ॥
तदन्येषां मतमपि सत्संसत्सु न भासते ॥

एतेनैवान्नमयादीनां पञ्चानामपि ब्रह्मत्वोपपादनेन तदन्येषां पञ्चकोशत्ववादिभ्योऽन्येषां चतुष्कोशवादिनाम् । सत्संसत्सु विद्वत्सभासु । अधिकं चात्र दोषमाह मयटो द्वैविध्येनार्थकल्पनाच्चेति । अन्नमयादिषु विकारार्थत्वमानन्दमये प्राचुर्यार्थत्वमिति यदत्र नियामकमुक्तं तत्प्रागेव निराकृतमिति । ननु प्राणमय एव विकारप्रक्रमो भग्नः । (तत्र तर्हि) प्रत्ययस्य स्वार्थिकत्वकल्पनादधिको दोषः स्यादिति ।

शे० — अतिदेशेनेति । सूत्राक्षरानानुगुण्यस्य परेण स्वपक्षे परिहारेण शङ्कायामाधिक्याद-तिदेशोऽत एव यथाश्रुतसूत्रानुसारिण इत्युक्तमिति ध्येयम् । मयटो द्वैविध्येनार्थकल्पनाया: प्रागनुक्ताया एव चतुष्कोशत्ववादिमतनिरासकत्वेनोक्त्या परिहारसाम्याभावात्कथमतिदेश: । अन्यथाऽतिप्रसङ्गादित्यत: परिहारसाम्यसिद्धये तत्परित्यागेनैतेनेत्यस्यार्थं वदन्वाक्यं योजयति एतेनैवेति । तर्हि च मयटो द्वैविध्येनार्थकल्पनादिति भाष्यखण्डो व्यर्थ इत्यतोऽत्र पक्षेऽधिकदोषप्रतिपादनार्थत्वान्न तद्वैय्यर्थ्यमिति भावेन तथैवावतारयति अधिकं चेति ॥ कल्पनाच्चेति । अनेन चशब्दो भिन्नक्रम इत्युक्तं भवति । मयटोऽर्थद्वैविध्यकल्पनामेवोपपादयति अन्नमयादिष्वित्यादि । तथा च प्रायपाठबाध इति भाव: । नन्वन्नमयाद्युपदेशानन्तरमन्योऽन्तर आत्मेत्यन्तरस्य श्रवणादानन्दमयोपदेशानन्तरं च तदश्रवणादानन्दमय एव ब्रह्म न त्वन्नमयादय इत्यर्थद्वैविध्यमवश्यं कल्पनीयमित्यतस्तत्रापि 'सत्यं ज्ञानमनन्तं ब्रह्मेति' प्रकृतस्य ब्रह्मणो 'ब्रह्म पुच्छं प्रतिष्ठे'त्यानन्दमयाश्रयतयोक्तत्वान्नानन्दमयेऽप्यन्तरस्यान्यस्याश्रवणमिति पञ्चकोशत्ववादिमतोपन्यासावसर एव समर्थितत्वान्नार्थद्वयकल्पना युक्तेत्याह यदत्रेति । यद्वा । ननूत्तरानुवाकेऽन्नप्राणमनोविज्ञानज्ञानानन्तरं तद्विज्ञाय पुनरेव वरुणं पितरमुपससारेति पुनरुपसत्तिश्रवणादानन्दज्ञानानन्तरं

च तदश्रवणादन्नादीनामब्रह्मत्वस्यानन्दस्य ब्रह्मतायाश्च सिद्ध्याऽन्नप्राणमनोविज्ञानानन्तरं श्रुतेनानन्देनान्नमयप्राणमयमनोमयविज्ञानमयमानन्तरं श्रुतस्यानन्दमयस्य स्थानप्रमाणेनाभेदादानन्दमयस्यैव ब्रह्मत्वं न त्वन्नमयादीनामिति तावदावश्यकम्। ततश्च मयटोऽर्थद्वैविध्यमकामेनापि कल्पनीयमेवेति कथं प्रायपाठबाधो दोष इत्यतो 'ह्येकैकं स्वरूपं त्वि'त्यादिनाऽन्नादीनां ब्रह्मत्वेऽपि पुनरुपसरणस्य समाहितत्वेन पुनरुपसरणभावाभावाभ्यामन्नादीनामानन्दस्य चाब्रह्मत्वब्रह्मत्वव्यवस्थाऽसिद्ध्या न तत्स्थानप्रमाणेनान्नमयादीनामानन्दमयस्य चाब्रह्मत्वब्रह्मत्वव्यवस्थासिद्धिरिति नानेनापि प्रकारेण मयटोऽर्थद्वयकल्पनासिद्धिरित्याह **यदत्रेति**। ततश्चानन्दमय एव मयटः प्राचुर्यार्थत्वे प्रायपाठविरोधो दुष्परिहर इति भावः।

ननु चतुर्ष्वपि पर्यायेषु मयटो विकारार्थत्वमङ्गीकृत्यानन्दमयाख्ये पञ्चमपर्याये मयटः प्राचुर्यार्थतामङ्गीकुर्वाणं प्रति प्रायपाठबाधप्रसक्तावप्यन्नमयादिचतुष्कोशवादिना भास्करेणान्नमये मयटो विकारार्थत्वाङ्गीकारेऽपि प्राणमयमनोमययोर्मयटः स्वार्थिकत्वाङ्गीकारेण विकारप्रक्रमस्य प्राणमयमारभ्यैव भग्नत्वान्नानन्दमये मयटः प्राचुर्यार्थतायां प्रायपाठबाध इत्याशङ्कते **नन्विति**। अन्नमयशब्दार्थत्वेनाभिमतस्य देहस्यान्नविकारत्ववत्प्राणमयमनोमयशब्दाभिधेयप्राणमनोरूपकोशयोः प्राणादिविकारत्वाभावान्न तत्र मयटो विकारार्थतेत्यर्थः। एतावता विकारप्रक्रमस्य प्रागेव भग्नत्वेनानन्दमय एवाभङ्गादानन्दमये मयटः प्राचुर्यार्थतायां विकारार्थकमयट्प्रायपाठबाधस्यादोषत्वप्राप्तावपि न विकारार्थकमयट्प्रायपाठबाधस्य सर्वथा चतुष्कोशत्ववादिमतेऽदोषत्वसिद्धिः। नाप्यानन्दमये मयटः प्राचुर्यार्थताया निर्दोषत्वसिद्धिः। आनन्दमये विकारप्रक्रमभङ्गेन तत्र प्राचुर्यार्थत्वपक्षे विकारार्थकमयट्प्रायपाठबाधवत्प्राणमये विकारप्रक्रमभङ्गेन तत्रैव मयटः स्वार्थिकतायां विकारार्थकमयट्प्रायपाठबाधस्यावर्जनीयत्वात्। आनन्दमये प्राचुर्यार्थतायां विकारार्थकमयट्प्रायपाठबाधाभावेऽपि स्वार्थिकमयट्प्रायपाठबाधस्यावर्जनीयत्वात्। तथा च विकारार्थकमयट्प्रायपाठबाधपरिजिहीर्षया स्वीकृतस्य प्राणमये स्वार्थिकत्वस्योक्तविधया प्रायपाठबाधद्वयापादकत्वेनायुक्ततया पञ्चकोशत्ववादिरीत्याऽमुख्यार्थत्वप्रसङ्गं सोढ्वा प्राणाद्युपाध्यवच्छिन्नस्यात्मनः प्राणादिविकारत्वे प्राणमयादावपि मयटो विकारार्थत्वमेव वक्तव्यमिति प्रागवच्छिन्नस्य विकारप्रक्रमस्यानन्दमय एव भङ्गे वाच्ये तत्र मयटः प्राचुर्यार्थतायां विकारार्थकमयट्प्रायपाठबाधो दुष्परिहर एवेत्याशयेन परिहरति। **तत्र तर्हीति**। यद्वा। एवं तर्हि प्राणमये मयटः स्वार्थिकत्वाद्वैयर्थ्यमेव दोष इत्याशयेनाह **तत्र तर्हीति**। अधिको दोषो वैयर्थ्यरूपः। अत एव चन्द्रिकायां वैयर्थ्यमित्येवोक्तम्। यद्यपीह टीकायां तथैव वक्तुमुचितं तथाऽपि विकारार्थकमयट्प्रायपाठपरिजिहीर्षया स्वीकृतं प्राणमये स्वार्थिकत्वं प्रायपाठबाधादप्युल्बणस्य वैयर्थ्यस्यापादकमेवेति प्रायपाठबाधपरिहारेऽपि न नः क्षतिरिति ज्ञापयितुमधिको दोष इत्येवोक्तम्। अथवा। एवं तर्ह्यन्नमये विकारार्थत्वं प्राणमयादौ स्वार्थिकत्वमान-

न्दमये प्राचुर्यार्थत्वमिति वैरूप्यप्रसङ्ग इत्याशयेनाह **तत्र तर्हीति** । अस्मिंश्च पक्षे प्रायपाठबाधोक्त्या प्राप्तस्य वैरूप्यस्य न स्वार्थिकत्वोक्त्या परिहारः किन्तु वैरूप्येऽतिशयसमर्पणेन स्थिरीकरणमेवेत्यनर्थकमेव स्वार्थिकत्ववचनमिति ज्ञापयितुमधिको दोष इत्युक्तमिति ध्येयम् ।

स०— **आनन्दमये प्राचुर्यार्थत्वमिति** । तथा च प्रायपाठविरोधः स्यादिति भावः । **यदत्र नियामकमुक्तमिति** । मांत्रवर्णिकब्रह्माधिकारः अन्नमयादिष्वान्तरस्यान्यस्य श्रवणेऽपि आनन्दमये तदभाव इत्यादिकमर्थः ॥ **ननु प्राणमय एवेति** । शरीरशब्दार्थरूपसंघातप्रविष्टप्राणानां प्राणविकारत्वासंभवादित्यर्थः ।

प०— **यदत्र नियामकमुक्तमिति** । सर्वान्तरत्वादिरूपं यन्नियामकमुक्तं तत् ततोपि ब्रह्मपुच्छमिति पुच्छब्रह्मणः श्रवणादित्यादिना निराकृतमित्यर्थः ।

या०— **आनन्दमये प्राचुर्यार्थत्वमिति** । तथा च प्रायपाठविरोध इति भावः ॥ **यदत्रनियामकमिति** । मान्त्रवर्णिकब्रह्माधिकारः । अन्नमयादिष्वान्तरस्यान्यस्य श्रवणेऽप्यानन्दमये तदभाव इत्यादिकमित्यर्थः ॥ **प्रागेवेति** । पञ्चकोशत्ववादिव्याख्यानानुवादसमय एवेत्यर्थः । ननु न प्रायपाठोऽस्ति । येन तद्विरोध इत्याशङ्कते **ननु प्राणमय एवेति** । इदमुपलक्षणम् । मनोमय इत्यपि ग्राह्यम् । चतुर्भिरन्नमयादिपदैर्देहमनोप्राणबुद्धिरूपाश्चत्वारः कोशा अभिधीयन्त इति मयाऽङ्गीक्रियते । एवं च देहस्यान्नविकारित्वेऽपि न प्राणमनसो प्राणमनोविकारित्वं सम्भवति । आत्माश्रयत्वप्रसङ्गादिति भावः । **अधिकदोष इति** । मयटामर्थत्रयकल्पनादिति भावः । इदमुपलक्षणम् । विज्ञानमयेऽपि स्वार्थिकत्वकल्पनाप्रसङ्गः । न च विज्ञानमये मयट्सम्बन्धार्थो वैयर्थ्यादप्यमुख्यार्थस्य ज्यायस्त्वादिति वाच्यम् । अन्नमये विकारार्थः, प्राणमयमनोमययोः स्वार्थिको, विज्ञानमये संबन्धार्थ, आनन्दमये प्राचुर्यार्थ इति वैरूप्यप्रसङ्गात् । न च प्राणमयादावपि सम्बन्धार्थता । प्राणादेः प्राणादिसंबन्धाभावात् । प्राणशब्दस्याप्रसिद्धार्थत्वे तु वरं परमात्मपरत्वमित्यपि द्रष्टव्यम् ।

श्री०— **द्वैविध्येनेति** । तथाच नियामकाभावादन्नमयादाविवानन्दमयेऽपि विकारत्वमेव स्वीकर्तव्यम् । अन्यथा प्रायपाठविरोधः स्यादिति भावः । नन्वन्नमयादिष्वन्तरस्यान्यस्य श्रवणेन तत्रत्यमयटां विकारार्थत्वमानन्दमये तदश्रवणात्तत्र मयटः प्राचुर्यार्थत्वमिति नियामकमुक्तमिति चेत्तत्राह **यदत्रेति** । आनन्दमयेऽन्तरस्यान्यस्याश्रवणेऽपि ब्रह्म पुच्छं प्रतिष्ठेत्यानन्दमयं प्रत्याश्रयतया ब्रह्मण उक्तत्वेन ब्रह्माश्रितस्यानन्दमयस्य ब्रह्मत्वासम्भवात्तद्गतमयटोऽपि विकारार्थत्वमेव वाच्यमिति नानन्दमयस्य ब्रह्मत्वमिति पञ्चकोशत्ववादिव्याख्यानानुवादावसर एव निराकृतमित्यर्थः । ननु यदुक्तमन्नमयादिषु चतुर्षु विकारार्थत्वमानन्दमये प्राचुर्यार्थत्वमिति द्वैविध्यकल्पनमयुक्तं प्रायपाठविरोधादिति । तन्न । अन्नशब्दवाच्ये

देहरूपे कोशेऽन्नविकारित्वसंभवेनान्नमय एव मयटो विकारार्थत्वं स्वीकृतं न प्राणमयमनोमयविज्ञानमयेषु । आत्माश्रयत्वप्रसङ्गेन प्राणानां प्राणविकारित्वासम्भवात् । मनसश्च मनोविकारित्वासम्भवात् । विज्ञानस्यापि विज्ञानविकारित्वासंभवादतो न प्रायपाठविरोध इत्याशङ्कते **ननु प्राणमय एवेति** । उपलक्षणमेतत् । मनोमयविज्ञानमयावपि ग्राह्यौ ॥ **स्वार्थिकत्वेति** । प्राण एव प्राणमय इत्यादिरूपेण स्वार्थिकत्वकल्पनादावित्यर्थः । अर्थान्तराभावादिति भावः । **अधिको दोष इति** । अन्नमये विकारार्थत्वं प्राणमयादिषु त्रिषु स्वार्थिकत्वमानन्दमये प्राचुर्यार्थत्वमिति त्रैविध्यकल्पनात् द्वैविध्यकल्पनापेक्षयाऽप्यधिकदोषः स्यादित्यर्थः ।

**च०** — मयडंतशब्दपंचकप्रतिपाद्यं कोशपंचकमेव न ब्रह्मेत्यभिदधानानां मायावादिनां मतमपास्य तादृशसूत्राघटकशब्दचतुष्टयप्रतिपाद्यमेव कोशपंचकं तादृशसूत्रघटकानन्दमयपदवाच्यं तु ब्रह्मेत्यभिदधतां भास्करादीनां मतस्य प्रत्याचिख्यासया तदनुवदति **एवमित्यादि** ॥ **अधिकं चेति** । मायावादिमतोक्तदोषावधिकाधिक्यविशेषितमित्यर्थः । तदेव व्यनक्ति **अन्नमयादिष्विति** । **यदत्र नियामकमिति** । अन्नमयाद्यंतरश्रवणानन्दमयान्तराश्रवणरूपमित्यर्थः । प्रागेव । पंचकोशत्ववादिमतोपन्यासावसर एव । **अधिको दोष इति** । अर्थद्वयकल्पनावधिकाधिक्यविशेषितो वैयर्थ्यरूप इत्यर्थः ।

**मु०** — **ननु सूत्रव्याख्यामुपक्रम्य परापव्याख्यानिराकरणमसङ्गतमिति चेन्न । स्वव्याख्यानदार्ढ्यार्थत्वादिति भावेनाधिकरणार्थमुपसंहरति** अत इति ।

**अनु०** — अतो नारायणो देवो निश्शेषगुणवाचकैः ॥
गुणिसामान्यवचनैरपि मुख्यतयोदितः ॥
अध्यात्मगैश्च प्राणाद्यैस्तथैव ह्यभिभूतगैः ॥
अन्नादिशब्दैर्भगवानेको मुख्यतयोदितः ॥

**गुणिसामान्यवाचिनां गुणवाचिनां च शब्दानां समन्वयाय प्रवृत्तेऽप्यधिकरणेऽधिकरणसिद्धान्तन्यायेन सिद्धमप्यर्थान्तरमुपसंहरति** अध्यात्मगैश्चेति । **अत एव नाधिकरणोपक्रमविरोध** इति ।

**शे०** — ननु 'अतो नारायणो देवो निश्शेषगुणवाचकैः । गुणिसामान्यवचनैरपि मुख्यतयोदितः' इत्येतावतैवैतदधिकरणार्थोपसंहारसिद्धेस्तस्याधिकरणार्थोपसंहारत्वानुपपत्तेश्चाध्यात्मगैश्चेत्याद्युत्तरवाक्यवैयर्थ्यमित्यत आनुषङ्गिकैतदधिकरणार्थोपसंहाररूपत्वान्न तस्य वैयर्थ्यमित्याशयेनोत्तरवाक्यतात्पर्यमाह **गुणिसामान्येति** । ननु वाक्यस्यानुषङ्गिकार्थोपसंहारकत्वकल्पनमनर्थक'मतो नारायणो देवः' इत्यादि-

पूर्ववाक्यस्यैवास्याप्येतदधिकरणार्थोपसंहारत्वस्यैव संभवादित्यत आह **अत एवेति** । अध्यात्मगैरित्यादेरानुषङ्गिकैतदधिकरणार्थोपसंहारत्वादेवेत्यर्थः ॥ **नाधिकरणोपक्रमविरोध इति** । 'गुणिसामान्यवाचिनां गुणवाचिनां च प्रथममाह देवः समन्वयमि'त्येतदधिकरणोपक्रमविरोधो नेत्यर्थः । तदुपक्रमानुसारेण गुणिसामान्यवाचिगुणवाचिशब्दसमन्वयस्यैवाधिकरणार्थत्वस्थित्याऽतादृग्रूपाध्यात्मगादिशब्दसमन्वयस्याधिकरणार्थत्वाभावस्यैव सिद्ध्याऽध्यात्मगैरित्यस्यैतदधिकरणार्थोपसंहारताया उक्तोपक्रमविरुद्धत्वेन कल्पयितुमशक्यत्वादुक्तरीत्या प्रकारान्तराश्रयणमेव युक्तमिति भावः ।

स०— अत **एव नाधिकरणोपक्रमेति** । अध्यात्मादिशब्दसमन्वयस्याधिकरणसिद्धांतन्यायेन सिद्धस्यैवात्रोक्तेरित्यर्थः । **अत एव नाधिकरणोपक्रमेति** । गुणिसामान्यवाचिनां गुणवाचिनां समन्वयः साक्षादेवाधिकरणार्थतयोपक्रान्तः । अध्यात्मादिवाचिशब्दसमन्वयस्त्वानुषङ्गिक एवातो न विरोध इति भावः ।

प०— **अधिकरणसिद्धांतन्यायेनेति** । सिद्धांतो हि स्वतंत्रप्रतितंत्राधिकरणाभ्युपगमभेदेन चतुर्धा । तत्र कस्यचिदर्थस्य सिद्धावनुषंगतः सिद्धोर्थोऽधिकरणसिद्धांतः । यथा कर्तृसिद्धौ सार्वज्ञसिद्धिः तेन न्यायेनेत्यर्थः । नन्वधिकरणोपक्रमे 'गुणिसामान्यवाचिनां गुणवाचिनां च प्रथममाह देवस्समन्वयं' इत्यत्रैतदधिकरणसमन्वेतव्यशब्दविभाजकोपाधेरुक्तत्वादाध्यात्मिकादिशब्दानां तदनाक्रांतानामत्र समन्वये उपक्रमविरोध इत्यतो वक्ति **अत एवेति** । आध्यात्मिकादिशब्दसमन्वयस्यानुषंगिकत्वादेव न गुणिसामान्यवाचिनामित्युपक्रमविरोध इत्यर्थः ॥ छ ॥

या०—नन्वधिकरणोपक्रमे 'गुणिसामान्यवाचिनां गुणवाचिनां च प्रथममाह देवः समन्वयमि' त्यत्रैतदधिकरणसमन्वेतव्यशब्दविभाजकोपाधेरुक्तत्वादध्यात्मगादिशब्दानां च तदनाक्रान्तानामत्र समन्वये तद्विरोध इत्यत आह **अत एव नाधिकरणेति** । अध्यात्मगादिशब्दसमन्वयस्याधिकरणसिद्धान्तन्यायेन सिद्धत्वस्यात्रोक्तत्वादेवेत्यर्थः । तथा चोक्तोपाधिः साक्षादधिकरणार्थविवक्षयाऽध्यात्मादिवाचिशब्दसमन्वयस्तु आनुषङ्गिक एव प्रदर्शितोऽतो न विरोध इति भावः ।

**सु०—समस्तैर्गुणिसामान्यवाचकैर्गुणवाचकैरध्यात्मविषयैः(च) प्राणवागादिभिरधिभूतविषयैश्चान्नौषध्यादिभिश्शब्दैर्भगवानेव मुख्यतयोदित इत्युपसंहारो नोपपद्यते । अस्यार्थस्य प्रागनुक्तत्वात् । ननूक्तमुपलक्षणपरोऽयमानन्दमयशब्द इति । सत्यम् । उपलक्षणं हि प्रकृतोपयुक्तस्योपपन्नस्य चार्थस्य भवति । अन्यथाऽतिप्रसङ्गात् । न चैतेषां सर्वशब्दानां मुख्यया वृत्त्या भगवदेकवाचित्वसमर्थनं प्रकृतोपयुक्तं नाप्युपपन्नम् । तथाहि । जन्माद्यस्य यत इति**

सूत्रे जगज्जन्मादिकारणत्वादीन्यष्टौ लक्षणानि ब्रह्मणोऽभिहितानि। तत्रैव शास्त्रं प्रमाणमुक्तं तृतीयसूत्रे। समन्वयसूत्रे च तेषामेव वाक्यानां ब्रह्मणि समन्वयः प्रतिज्ञातः। अतो जगज्जन्मादिकारणत्वं यत्र यत्र प्रतीयते तेषामेव वाक्यानां परमेश्वरे समन्वयसमर्थनं प्रकृतसङ्गतम्। न सर्वेषाम्। सर्वत्र जगज्जन्मादिकारणत्वप्रतिपादनाभावात्। किञ्च यन्निष्ठतयजगज्जन्मादिकारणत्वं प्रतीयते तद्वाचिनः शब्दस्य यया कयाचन वृत्त्या भगवत्परत्वे समर्थितेऽपि लक्षणस्यातिव्याप्तिः परिच्छियत एव। न हि गङ्गापदलक्ष्यस्य तीरस्य घोषावासत्वं न सिध्यति। अतो मुख्यवृत्तिसमर्थनस्य क्वोपयोगः। नोपपद्यते च सर्वशब्दानां भगवत्येव मुख्यवृत्तिसमर्थनम्। रूढियोगौ हि मुख्यवृत्ती। तत्रापि योगाद्रूढिर्बलवती। न च शब्दानां भगवति रूढिरस्ति। किन्तु तदितरत्रैव। योगस्तु संभवति। तथाऽपि स तदितरसमानः। तथा चार्थान्तर एव मुख्यवृत्तयः शब्दाः। रूढेर्योगस्य च सत्त्वात्। नेश्वरे। योगमात्रस्य कथञ्चित्संभवात्। अतः सूत्रकारस्य सकलशब्दानां मुख्यया वृत्त्या भगवत्येव समन्वयसमर्थने सङ्गत्युपपत्त्योरभावादपव्याख्यानमेतदित्याशङ्क्य सङ्गतिं तावद्दर्शयति जन्मादीति।

अनु० — जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये ॥
ब्रह्मणो लक्षणं प्रोक्तं

अथातो ब्रह्मजिज्ञासेति प्रथमसूत्रे ब्रह्मशब्देन जिज्ञास्यस्य सकलगुणपूर्णत्वं जीवादिव्यावृत्त्यर्थमुपात्तम्। जन्माद्यस्य यत इति द्वितीयसूत्रेण तत्सिद्धये जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणं प्रोक्तम्। अतः सूत्रद्वयेन साध्यतया साधकतया चानन्दादिसकलगुणपूर्णत्वं जगज्जन्मादिकारणत्वं च प्रकृतमिति। विवृतं चैतत्पूर्वमस्माभिः। किमतो यद्येवमित्यत आह शास्त्रमूलमिति।

शास्त्रमूलं यतस्ततः ॥

तदुभयं प्रधानमप्रधानं च लक्षणमनुमानादिनाऽतिव्याप्तौ शङ्कितायां तन्निवृत्त्यर्थं तृतीयसूत्रे शास्त्रमूलं शास्त्रैकप्रमाणकमुक्तं यतस्ततश्चतुर्थे सूत्रे शास्त्रस्यान्यपरत्वशङ्कायां सर्वशब्दानां भगवत्यन्वयः प्रतिज्ञातुमुचितो न कतिपयशब्दानामिति शेषः। सर्वगुणपूर्णत्वे शास्त्रस्य प्रमाणतयाऽभिधानेऽपि कुतः सर्वशब्दसमन्वयः प्रतिज्ञातव्य इत्यत आह अन्वय इति।

अन्वयः सर्वशब्दानां गुणसर्वस्ववेदकः ॥

यतः सर्वशब्दानामन्वय एव गुणसर्वस्ववेदको न कतिपयशब्दानाम्। अतः सर्वशास्त्राद् गुणसर्वस्वसिद्धये स एव प्रतिज्ञातव्य इति संबन्धः। अन्यथा यस्यैव शब्दस्य समन्वयो

**न प्रतिज्ञायते तदर्थो गुणो भगवति न सिद्ध्येदतिव्याप्तिश्च स्यात् । प्रतिज्ञाते च समन्वयसूत्रेण सकलशब्दसमन्वये तत्प्रपञ्चनं सूत्रकारस्य कथमसङ्गतं भवतीति । एतेन मुख्यवृत्तिरपि सङ्गता द्रष्टव्या । तस्या अपि समन्वयसूत्रे प्रतिज्ञातव्यत्वात् । अमुख्यवृत्तौ तदभिधेयगुणालाभप्रसङ्गात् । अभिधेयेऽतिव्याप्तिप्रसङ्गाच्चेति ।**

शे० —ननु जन्माद्यस्येति सूत्रेणेत्याद्युत्तरभाष्यमनर्थकम् । न चानन्दमयोऽभ्यासादिति सूत्रे प्राणाद्यशेषशब्दसमन्वयसमर्थने सूत्रकारस्य सङ्गत्यादिप्रतिपादकत्वान्नानर्थक्यमिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च तत्र प्राणाद्यशेषशब्दसमन्वयस्योक्तत्वसिद्धिरेव तत्प्रयोजनमिति वाच्यम् । अस्यार्थस्य तत्रोक्तत्वसिद्धेरप्यनर्थकत्वात् । अर्थवत्त्वेऽपि वा सौत्रानन्दमयशब्दस्य शब्दान्तरोपलक्षकतया तत्समन्वयोक्तिमात्रेणाशेषशब्दसमन्वयोक्तिसिद्धेश्चेत्यतः सूत्रेऽस्यार्थस्योक्तत्वसिद्धेः प्रयोजनं दर्शयन्नेवोपलक्षणत्वमात्रेणाशेषशब्दसमन्वयसिद्धिरूपस्यास्यार्थस्य सङ्गत्याद्यभावेनासिद्ध्या सङ्गत्यादेरवश्यवक्तव्यत्वं च सोपपत्तिकं दर्शयन्नर्थद्वयोपसंहारपरवाक्यद्वयार्थानुवादपूर्वकमुत्तरवाक्यमवतारयति **समस्तैरित्यादि** । गुणिसामान्यवाचकैरन्नमयादिभिरिति शेषः । गुणवाचकैरानन्दादिभिरिति शेषः । अधिभूतविषयैराकाशादिभिरिति शेषः । अन्नौषध्यादिभिरित्यतःपूर्वमधिभौतिकविषयैरिति शेषः । शब्दैरिति सर्वत्र सम्बद्ध्यते । अस्यार्थस्येत्यनेनास्यार्थस्योक्तत्वसिद्धेरुक्तविधोपसंहारसमर्थनं प्रयोजनमिति सूचितं भवति । सौत्रानन्दमयशब्दस्य शब्दान्तरोपलक्षकत्वेन तत्समन्वयोक्त्यैव प्राणाद्यशेषशब्दसमन्वयसिद्ध्युपपत्तेः कथमस्यार्थस्य सूत्रेऽनुक्तत्वं येनोक्तविधोपसंहारानुपपत्तिरिति शङ्कते **नन्विति** । उपलक्षणत्वेऽपि न तत्सिद्धिरित्याह **सत्यमिति** । कुतः सर्वशब्दानां मुख्यया वृत्त्या भगवदेकवाचित्वसमर्थनस्य प्रकृतानुपयुक्तत्वमित्यतः सर्वशब्दानां भगवदेकवाचित्वसमर्थनस्य तावत्प्रकृतानुपयुक्तत्वं सयुक्तिकमुपपादयति **जन्माद्यस्य यत इतीति** । मुख्यवृत्तिसमर्थनस्यापि प्रकृतानुपयोगमुपपादयति **किञ्चेति** । एवं प्रकृतानुपयुक्तत्वमुपपाद्य सर्वशब्दानां मुख्यवृत्त्या भगवदेकवाचित्वसमर्थनस्य प्रतिज्ञातमनुपपन्नत्वमुपपादयति **नोपपद्यते चेति** ॥ **बलवतीति** । अवयवार्थसापेक्षाद्योगात्तन्निरपेक्षाया रूढेर्बलवत्त्वस्य रथकारादिशब्देषु स्थितत्वादिति भावः ॥ **न चेति** । प्रयोगप्रत्ययबाहुल्ययोरभावादिति भावः ॥ **इतरत्रैवेति** । प्रयोगप्रत्ययबाहुल्यस्य तत्रैव सत्त्वादित्यर्थः ॥ **कथञ्चिदिति** । प्रयोगस्य भगवत्तदितरसाधारण्येन तच्छब्दस्य भगवत्परत्वे समर्थितेऽपि तच्छब्दोक्तगुणस्योभयत्र प्राप्त्या नातिव्याप्त्यादिदोषपरिहारः सम्भवतीत्यभिप्रायेण कथञ्चिदित्युक्तम् । साध्यतयेत्यस्यानन्दादिगुणपूर्णत्वमित्यनेन सम्बन्धः । साधकतयेत्यस्य जगज्जन्मादिकारणत्वमित्यनेन सम्बन्धः । नन्वानन्दादिगुणपूर्णत्ववज्जन्मादिकारणत्वस्यापि तृतीयसूत्रानुसारेण शास्त्रेतरप्रमाणेनाप्रसिद्धेः । जगत्कारणत्ववच्च गुणपूर्णत्वस्यापि श्रुत्या प्रसिद्धेरुभयोरप्यप्रसिद्धत्वस्यैव वा प्रसिद्धत्वस्यैव वा प्राप्त्याऽविशेषात्कथं

प्रसिद्धत्वाप्रसिद्धत्वविशेषाधीनोऽनयोर्लक्षणयोः साध्यसाधकभावोऽन्यथा विपरीतोऽपि स स्यादित्यत आह **विवृतं चैतदिति** । **गुणपूर्णत्वजगत्कारणत्वयोर्मध्ये** गुणपूर्णत्वं साध्यमेव जगत्कारणत्वं तु साधकमेवेत्येतद्गुणपूर्णतायाः श्रुतिप्रसिद्धाया अप्यसम्भावनाशङ्काकलङ्कितत्वेनाप्रसिद्धप्रायत्वाद्गुणपूर्णत्वं साध्यं जगत्कारणत्वं तु श्रुतिप्रसिद्धम् । न तु दृष्टान्तभावादित्यधिकरणोक्तरीत्या युक्त्याऽप्यनुगृहीततया सम्भावितत्वान्नाप्रसिद्धम् । **गुणपूर्णताया** युक्त्यनुगृहीतत्वेऽपि न जगत्कारणत्वातिरिक्तयुक्त्यनुगृहीतत्व-मस्तीत्यतो जगत्कारणत्वमेव साधकतया वक्तव्यमित्यादिना जन्माधिकरणे सृष्टिः स्थितिश्चेत्यनुव्याख्यान-व्याख्यावसरे विवृतमित्यर्थः ॥ **अतिव्याप्तिश्चेति** । तच्छब्दसमन्वयवत्यन्यस्मिंस्तदर्थभूतगुणप्राप्त्याऽति-व्याप्तिश्च स्यादित्यर्थः ।

**म०**— ननु वाचनिकस्यैवार्थस्यान्वयप्रतियोगित्वेन प्रकृते यया कयाचन वृत्त्या कारणवाक्यस्य भगवत्परत्वे समर्थितेऽपि तद्वाक्यगतगुणान्वयसंभवाद्यर्थं तत्परत्वसमर्थनमित्यत आह **न हीति** ॥ **योग-मात्रस्य कथञ्चिदिति** । योगस्योभयसाधारण्येन भगवत्परत्वे समर्थितेऽपि तद्वाक्योक्तगुणस्योभयत्र प्राप्त्याऽतिव्याप्त्यादिदोषपरिहारासंभवात् कथञ्चिदित्युक्तम् । ननु आनन्दादिसकलगुणपूर्णत्वस्य साध्य-तया प्राप्तत्वे किं नियामकं जगज्जन्मादिकारणत्वस्य साधनत्वेनैव प्राप्तौ किं नियामकं वैपरीत्येनैव साध्यसाधनभावः किं न स्यादित्यत आह **विवृतं चैतदिति** । जन्माधिकरण इति शेषः । **अति-व्याप्तिश्च स्यादिति** । तच्छब्दार्थगुणवत्यन्यस्मिन्नित्यर्थः । सकलगुणेष्वेकैकगुणस्यैव लक्षणत्वेन विव-क्षितत्वादिति भावः ।

**प०**—उत्तरमूलमवतारयति **समस्तैरित्यादिना सङ्गतिं तावद्दर्शयतीत्यन्तेन** ॥ **अतिव्याप्तिश्च स्यादिति** । तच्छब्दार्थगुणवत्यन्यस्मिन्निति योज्यं । गुणानां प्रत्येकमेवलक्षणत्वादिति भावः । अतिव्याप्तिरत्र भगवतोऽन्यत्रैव स्थितिर्ध्येया । यद्वा केषांचिच्छब्दानामेव समन्वयप्रतिज्ञाने तत्तच्छब्दप्रवृ-त्तिनिमित्तभूतकतिपयगुणवत्त्वमेव भगवतो लक्षणं स्यान्न सर्वगुणवत्त्वम् तच्च ब्रह्मण्यसमन्वितशब्देषु कतिपयशब्दवाच्येपि गतमित्यतिव्याप्तिरित्यर्थः ॥ **अभिधेयेऽतिव्याप्तीति** । अत्राप्यतिव्याप्तिरन्यत्रैव वृत्तिर्ध्येया ।

**या०**— अधिभूतविषयैरित्यत्राधिभूतपदेन भौतिकमपि ग्राह्यम् । अन्नौषध्यादिभिरित्यत्राका-शादिशब्दा अपि ग्राह्याः । ननूभयोरपि शास्त्रेतरप्रमाणेनाप्रसिद्धिः शास्त्रेण प्रसिद्धिश्चाविशिष्टा । तथा च कथं जगज्जन्मादिकारणत्वं साधकं गुणपूर्णत्वं वा साध्यम् । प्रसिद्धस्यैवाप्रसिद्धसाधकतया दृष्टत्वा-दित्यत आह **विवृतं चैतदिति** । अनयोर्मध्ये एकस्य साधकत्वमपरस्य साध्यत्वं चेत्येतत् गुणपूर्णतायाः श्रुतिप्रसिद्धाया असम्भावनाशङ्काग्रस्तत्वात् पूर्वमप्रसिद्धत्वमेव । जगज्जन्मादिकारणत्वं तु श्रुतिप्रसिद्धं

युक्त्याऽप्यनुगृह्यत इति नाप्रसिद्धम् । सकलगुणपूर्णतायां तु युक्तिर्जगज्जन्मादिकारणत्वमेवेत्येतदेव साधकतया वक्तव्यमिति जन्माधिकरणे विवृतमित्यर्थः ॥ **अतिव्याप्तिश्च स्यादिति** । एकैकगुणस्यैवात्र लक्षणतया विवक्षितत्वात्तच्छब्दार्थगुणवत्यन्यस्मिन्नतिव्याप्तिः स्यादित्यर्थः ॥

**श्री०**— पूर्ववाक्यार्थं वदन्नेवोत्तरग्रन्थं सङ्गमयति **समस्तैरित्यादिना** । प्रकृतानुपयुक्तत्वं तावदुपपादयति **तथा हीति** । सर्वशब्दानां भगवदेकवाचित्वसमर्थनं प्रकृतानुपयुक्तमित्युपपाद्य मुख्यया वृत्त्या भगवदेकवाचित्वसमर्थनं प्रकृतानुपयुक्तमित्येतदुपपादयति **किञ्चेति** ॥ **यन्निष्ठतयेति** । हिरण्यगर्भः समवर्तत अग्र इत्यादौ हिरण्यगर्भादिनिष्ठतयेत्यर्थः ॥ **यया कयाचन वृत्त्येति** । लक्षणयेत्यर्थः । ननु हिरण्यगर्भादिलक्ष्यार्थस्य जगज्जन्मादिकारणत्वं न सिध्यतीति चेत्तत्राह **न हीति** ॥ **योगमात्रस्येति** । केवलयोगस्येत्यर्थः ॥ **न भगवतीति** । तथाच गुणसर्वस्वसिद्धिर्न स्यादिति भावः ।

**च०**— **विवृतं चैतदिति** । एकस्य जगज्जन्मादिकारणत्वस्य साधकत्वमनुमापकत्वमपरस्य गुणपूर्णत्वस्य साध्यत्वमनुमेयत्वमित्येतत् जन्मादिनये विवृतमित्यर्थः । **अतिव्याप्तिश्च स्यादिति** । निखिलगुणपूर्तेर्लक्षणत्वे असंभवः कतिपयगुणवत्तायाः लक्षणत्वे अतिव्याप्तिप्रसङ्ग इत्यर्थः ।

**सु०**—**एवमसङ्गतिं परिहृत्य यदुक्तं परेण न परमेश्वरस्यैव सर्वशब्दमुख्यार्थत्वं युक्तम् । योगस्य परमेश्वर इवान्यत्रापि संभवात् । ईश्वरे रूढेरभावेनान्यत्र तदाधिक्यादिति । तत्र योगस्योभयत्र साम्यं तावन्निराकरोति** शब्देति ।

**अनु०**— शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयात् ॥

**इन्द्रादिशब्दप्रवृत्तिहेतूनां परमैश्वर्यादीनां तस्मिन्परमेश्वरे मुख्यसंबन्धादिन्द्रादिशब्दानां तद्वाचकत्वमेव । तस्यैव हि परमैश्वर्यमनवधिकं स्वतन्त्रं च । अन्यत्रापि तथा चेत्को विशेष इति तत्रोक्तम्** अन्यार्थेष्विति ।

अन्यार्थेष्वल्पताहेतोस्तन्निमित्तत्वतस्तथा ॥

तद्वाचकत्वं शब्दानां

**यतोऽन्यार्थेषु पुरन्दरादिषु हेतोः शब्दप्रवृत्तिहेतोरैश्वर्यादेरल्पता । देशतः कालतस्स्वरूपतश्च सावधिकत्वात् । अल्पस्यापि भगवन्निमित्तत्वाच्चेति । एतदुक्तं भवति । अवयवार्थमनुसृत्य वृत्तिर्हि योगः । अवयवार्थश्च यथा यथोत्कृष्यते तथा तथा योगवृत्तेरप्युत्कर्षेण भाव्यम् । निमित्तवैचित्र्ये नैमित्तिकावैचित्र्यस्यानुपपत्तेः । अवयवार्थश्च परमेश्वरेऽनवधिकः स्वतन्त्रश्च । अर्थान्तरेऽल्पः पराधीनश्च । अतः कथं योगस्योभयत्र साम्यम् । किन्त्वीश्वरे महायोगोऽन्यत्र**

योगमात्रमिति स एव शब्दमुख्यार्थ इति । यदुक्तमीश्वरे शब्दानां रूढिर्नास्तीति तन्निराकरोति बहुलेति ।

बहुलातिप्रयोगतः ॥

रूढमित्येव साध्यं स्यात्

**बहुलातिप्रयोगतो हेतोः शब्दजातं हरौ रूढमेवेति साध्यं स्यात् । अयं प्रयोगः । विमताः शब्दा हरौ रूढाः । बहुलातिप्रयोगवत्त्वात् । नारायणादिशब्दवदिति । प्रयोगवत्त्वं च यौगिकेष्वमुख्येषु चास्तीत्यतो बहुलेत्युक्तम् । अज्ञातमुख्येष्वमुख्येष्वपि बहुलप्रयोगोऽस्तीत्यतोऽतिप्रयोगत इत्युक्तम् । पूज्यप्रयोगो ह्यतिप्रयोगः । पूज्यता चाविवेकपूर्वकत्वाभावः । न च रूढयोगे रूढोपचारे रूढलक्षणायां व्यभिचारः । तत्रापि रूढिसद्भावेन सपक्षत्वात् । समाहारवृत्तयो हि ताः ।**

**शे०—तदाधिक्यमिति** । तत्र योगरूढिप्राप्त्या मुख्यार्थत्वस्याधिक्यादित्यर्थः । नन्वस्त्विन्द्रादिशब्दप्रवृत्तिनिमित्तस्यैश्वर्यादेर्भगवति निरवधिकत्वं स्वतन्त्रत्वं च । प्रसिद्धेन्द्रादौ च तस्य सावधिकत्वं परतन्त्रत्वं च । कथमेतावताऽपि योगस्योभयसाधारण्यनिरासो निमित्तनैमित्तिकभावस्याप्रतीतेरित्यत आह **एतदुक्तं भवतीति** ।

रूढमित्येवेत्येवकारं भिन्नक्रमतया योजयति **रूढमेवेतीति** । अत्र च नैवकारोऽन्ययोगव्यवच्छेदार्थः । किं त्वरूढं नेति रूढययोगव्यवच्छेदार्थ इति ध्येयम् । नारायणादिशब्देषु भगवति रूढत्वसिद्ध्या सिद्धसाधनवारणाय विमता इत्युक्तम् । हरेरन्यत्र विमतशब्देषु तत्सिद्धेरुक्तदोषपरिहारायाह **हराविति ॥ रूढा इति** । अत्र च न प्रयोगबाहुल्यरूपाऽमुख्यरूढिः साध्यत्वेनाभिमता । साध्याविशेषप्रसङ्गात् । नाप्यखण्डशक्त्या प्रतिपादकत्वरूपा मुख्यरूढिः । तथा सति रूढोपचाररूढलक्षणयोरपि रूढिसद्भावप्रतिपादकस्य तत्रापि रूढिसद्भावेन सपक्षत्वादित्युत्तरग्रन्थस्यासामञ्जस्यप्रसङ्गात् । रूढोपचारादावखण्डशक्त्यभावात्किन्तु मुख्यामुख्यसाधारणरूढिशब्दार्थ(सद्भावमात्र)मेव। तच्चोभयत्राप्याविशिष्टम् । अखण्डशक्त्या प्रतिपादकत्वरूपरूढिशब्दमुख्यार्थाश्रयणेन पक्षीकृतशब्देषु, प्रयोगबाहुल्यरूपाऽमुख्यार्थाश्रयणेन रूढोपचारादावपि तद्वृत्तेः । न चैवं तर्कताण्डवविरोधः । तत्रैतद्वाक्यतात्पर्यतया प्रयोगेणाखण्डशक्तिसाधनस्य वर्णितत्वात् । अन्यथा प्रयोगातिरिक्ताखण्डशक्त्युपोद्बलकतयैतद्ग्रन्थोपन्यासवैयर्थ्यादिति वाच्यम् । तत्राप्युक्तरीत्या रूढिशब्दमात्रस्यैव साध्यत्वेऽपि पर्यवसानगत्याऽखण्डशक्तिरेव पक्षीकृतशब्देषु सिध्यतीति पर्यवसन्नसाध्याभिप्रायेणाखण्डशक्तेः साधनोक्तेरुपपत्त्या तदविरोधोपपत्तेरित्येके । वस्तुतस्तु तर्कताण्डवे तूदाहृतानुव्याख्यानस्थरूढिशब्दस्याखण्डशक्तिपरत्ववद्बहुलातिप्रयोग-

पदस्यापि प्रयोगमात्रबाहुल्यमित्यत्रैव यस्य यत्रावयवार्थमुख्यार्थसादृश्यसम्बन्धानपेक्षप्रयोगरूपविशेषपरताया अभिप्रेतत्वेनैतट्टीकायामिव बहुलातिप्रयोगमात्रपरत्वाभावेन तस्य प्रकारान्तरत्वान्न विरोधः । अत एवात्रैव तत्रापि न वक्ष्यमाणव्यभिचारशङ्काऽपीति ध्येयम् । ननु च तत्रापीत्याद्युत्तरग्रन्थस्वारस्यानुसारेण रूढोपचारादावप्यखण्डशक्तेर्ग्रन्थकृदभिप्रेतत्वकल्पनयोत्तरग्रन्थासामञ्जस्यस्य परिहर्तुं शक्यत्वादखण्डशक्तिसाधनमेवेदं किं न स्यात् । न ह्यन्येषां तत्राखण्डशक्तिसम्मतेत्येतावता ग्रन्थकृतोऽपि रूढोपचारादौ तदसम्मतिर्निर्णेतुं शक्यते । तथा सति सर्वत्र प्रतितन्त्रसिद्धान्ताभावप्रसङ्गादिति चेदुच्यते । न रूढोपचारादावप्यखण्डशक्तिर्ग्रन्थकृदभिप्रेततया कल्पयितु शक्यते । तथा सति रूढोपचाररूढलक्षणयोरुपचारलक्षणाभ्यां भेदप्रतिपादकस्य यथा रूढलक्षणा लक्षणामात्राद्रूढगौणी च गौणीमात्रात्प्रयोगप्राचुर्याद्भिद्यत इत्युत्तरग्रन्थस्यास्वारस्यप्रसङ्गात् । तत्र प्रयोगप्राचुर्यस्य भेदकत्वोक्त्याऽखण्डशक्त्यभावस्य सूचनादखण्डशक्तिसद्भावे तद्भावाभावाभ्यामेव तयोस्ताभ्यां भेदसिद्ध्युपपत्त्या प्रयोगप्राचुर्यभावाभावाभ्यां तद्भेदव्युत्पादनस्यानर्थक्यात । किञ्चैवं रूढायां लक्षणायां गौण्यां चाभिधातुल्यत्वेन प्रयोजनानपेक्षणादिति चतुर्थपादीयटीकायामभिधातुल्यत्वोक्तिरनुपपन्ना स्यात् । अभिधातुल्यत्वोक्त्या तत्राखण्डशक्त्यभावस्यैव प्राप्तेः । तद्भावे चाभिधात्वेनेत्येतावता पूर्तेस्तुल्यत्वपर्यन्तधावनानर्थक्यम् । अयुक्तश्च तत्राखण्डशक्त्यभ्युपगमः । तथात्वे हि गोघटादिशब्देष्विव मञ्चाः क्रोशन्तीत्यादावप्यखण्डशक्त्यैव प्रयोगप्रत्यययोरुपपत्त्योपचारादिरूपामुख्यवृत्तिकल्पनवैयर्थ्यात् । यस्य शब्दस्य यत्रार्थे प्रयोगसामर्थ्यं तस्य प्रवृत्तिनिमित्तातिरिक्तं तत्सादृश्यं निमित्तीकृत्यान्यत्र वृत्तिर्गौणी तत्सम्बन्धं निमित्तीकृत्यान्यत्र वृत्तिस्तु लक्षणेति करिष्यमाणतल्लक्षणाक्रान्ततया मञ्चाः क्रोशन्तीत्यादे रूढलक्षणादित्वाभावापाताच्च । तदेवं ग्रन्थकृतो रूढोपचारादावखण्डशक्त्यभ्युपगमस्य कल्पयितुमशक्यत्वादयुक्तत्वाच्च तत्रापीत्युत्तरग्रन्थानुरोधेनाविवक्षितविशेषरूढिशब्दार्थमात्रसाधनमेवैतद्ग्रन्थकरणीयमिति न कश्चित्क्षुद्रोपद्रवः ॥ **बहुलेति** । हरावित्यस्यात्रापि सम्बंधः । ततश्च हरौ बहुलातिप्रयोगवत्त्वस्यैव हेतुत्वलाभान्नाप्रयोजकत्वमिति भावः । दृष्टान्तसम्भवादुक्तानुमाने विशेषव्याप्तिमेवाश्रित्याह **नारायणादिशब्दवदितीति** ।

विशेषव्याप्तावव्यभिचाराद्विशेषणवैयर्थ्यमित्यतो यस्य शब्दस्य यत्रार्थे बहुलः प्रयोगः स तस्मिन्रूढ इति सामान्यव्याप्तेरत्राभिमतत्वात्तत्र च वक्ष्यमाणरीत्या व्यभिचारप्रसक्तेस्तद्वारकतया न हेतुगतविशेषणवैयर्थ्यमित्याशयेन हेतुगतविशेषणकृत्यमाह **प्रयोगवत्त्वमिति** ॥ **यौगिकेष्विति** । औपगवादिशब्देष्वित्यर्थः । न च व्याकरणस्य साधुत्वमात्रपरत्वाद्वृक्षादिवदमी रूढा इत्यभियुक्तोक्तेश्चौपगवादिशब्दानामपि रूढत्वान्न व्यभिचार इति वाच्यम् । अर्थानुगमदर्शनेन तदयोगादिति भावः ॥ **अज्ञातेति** । न ज्ञातो मुख्यार्थो येषां शब्दानां तेष्वमुख्येषु शब्देष्वित्यर्थः । अग्निर्माणवक इत्यादिव्यवहा-

रादनवगताग्न्यादिशब्दमुख्यार्थस्य माणवकादावग्न्यादिशब्दव्युत्पत्त्या तत्रैव प्रयोगप्राचुर्योपपत्तिरिति भावः ॥ **व्यभिचार इति** । वृत्त्यन्तरतया रूढत्वरूपोक्तसाध्याभाववत्सु तेषु शब्देषु बहुलातिप्रयोगवत्त्वरूपहेतुसत्त्वादिति भावः । अविदिताशय इव साध्यसत्त्वान्न व्यभिचार इति गूढाभिसन्धिः परिहरति **तत्रापीति** । रूढयोगादावपीत्यर्थः ॥ **रूढिसद्भावेनेति** । मुख्यामुख्यभेदेन साध्यतया विवक्षितरूढिसामान्यसद्भावेनेत्यर्थः । तत्र रूढयोगेऽखण्डशक्त्या प्रतिपादकत्वरूपा प्रयोगबाहुल्यरूपा चेति द्विरूपाऽपि रूढिः रूढोपचाररूढलक्षणयोस्त्वखण्डशक्त्या प्रतिपादकत्वरूपमुख्यरूढ्यभावेऽपि प्रयोग बाहुल्यरूपाऽमुख्यरूढिरस्त्येवेति साध्यतया विवक्षितरूढिशब्दार्थमात्रस्य सर्वत्र सत्त्वान्न व्यभिचार इति भावः ।

ननु रूढयोगरूढोपचाररूढलक्षणानां वृत्त्यन्तरत्वान्न तत्र रूढिसद्भावेन सपक्षत्वाभिधानमुचितमित्यतः स्यादेतदेवं यदि रूढयोगादेर्वृत्त्यन्तरत्वं स्यात् । न चैतदस्ति । उभयकार्यदर्शनस्य वृत्तिद्वयसमाहारेणैवोपपत्तौ वृत्त्यन्तरत्वकल्पकाभावादिति स्वाभिसन्धिमुद्घाटयति **समाहारवृत्तयो हि ता इति** । वृत्तिद्वयसमाहाररूपा एवेत्यर्थः ।, तत्रोक्तोपपत्तिसूचनाय हिशब्दः । न चावयवशक्तिर्योगो रूढिस्त्वखण्ड शक्तिस्ते चैकस्यैव शब्दस्यैकस्मिन्नर्थे विरुद्धे इत्यसमाहाररूपं वृत्त्यन्तरमेव योगरूढिर्वाच्या । तत्कथं तस्याः समाहारवृत्तित्वकथनमिति वाच्यम् । योगरूढयोर्यथाक्रमं पङ्कजनिकर्तृत्वपद्मत्वरूपभिन्नधर्मनियतयोरपि तद्द्वारैकस्मिन्धर्मिणि समाहारसम्भवादुभयकार्यदर्शनस्य समाहारेणैवोपपत्तौ वृत्त्यन्तरत्वकल्पने गौरवाच्च । न चैवमसिद्धिबाधसमाहारोऽपि हेत्वाभासान्तरं स्यादिति वाच्यम् । तत्रैकेनैवोद्देश्यस्य दुष्टत्वबोधस्य सिद्ध्या समाहारकल्पकाभावादिति चतुर्थे वक्ष्यमाणत्वात् । इह तु पङ्कजपदेनोद्देश्यस्य पङ्कजनिकर्तृत्वविशिष्टपद्मत्वबोधस्यैकैकेनासिद्ध्या तत्कल्पनस्यावश्यकत्वादिति भावः । न चैवमपि न हि योगरूढ्योः समाहारो योगरूढिर्येन विरोध इत्यादिचतुर्थपादीयग्रन्थेनास्य विरोध इति वाच्यम् । एकत्र धर्मे समाहाराभावस्यैव तत्राभिमतत्वेनाविरोधसम्भवात् । अवश्यं च समाहाराभाववचनस्योक्ताभिप्रायकत्वम् । अन्यथा विद्वद्रूढिं च तत्रगामित्येतद्व्याख्यावसरे सनिरुक्तिकं योगवृत्तिसाहित्येन तत्रगां परमेश्वरविषयां सर्वेषां शब्दानां रूढिं च दर्शयतीत्यादिका रूढेर्योगसाहित्येनोत्तरत्र टीकायामुक्तिरयुक्ता स्यात् । 'तत्र प्रयोगबाहुल्यं यदि तत्परता किम्वि'त्येतद्व्याख्यानावसरे 'न ह्यस्माभिः परममुख्यतामात्रसिद्धये विशिष्टोपादानं क्रियते किन्तु समाहाररूपविधान्तरसिद्धये चे'त्युत्तरत्र टीकायां समाहारोक्तिरप्ययुक्तैव स्यात् । सन्न्यायरत्नावल्यां च 'न चावयववृत्त्यखंडवृत्त्योरेकस्मिन्नर्थे विरुद्धत्वाद्योगरूढिर्नाम नास्तीति वाच्यम्। तस्याः पङ्कजादिशब्देषु दृष्टत्वादि'ति समाहारोक्तिरप्यनुपपन्नैव स्यादिति द्रष्टव्यम् । नन्वस्त्वेवं योगरूढेः समाहारवृत्तित्वमुक्तरीत्या कथञ्चिदखण्डशक्त्यवयवशक्तिरूपवृत्तिद्वयसमाहारसत्त्वात् । तथाऽपि रूढोपचार-

रूढलक्षणयोर्न समाहारवृत्तित्वाश्रयणं युज्यते । तत्र वृत्तिद्वयसमाहाराभावाद्रूढोपचारे मुख्यार्थसादृश्यं निमित्तीकृत्य वृत्तेरेकस्या एव सद्भावाद्रूढलक्षणायामपि मुख्यार्थसम्बन्धं निमित्तीकृत्य वृत्तेरेकस्या एव सत्त्वात्कथं समाहारवृत्तयो हि ता इत्युक्तिरिति चेन्न । अखण्डशक्त्या प्रतिपादकत्वरूपमुख्यरूढेस्तत्रा-भावेऽपि प्रयोगबाहुल्यरूपामुख्यरूढेस्तत्रापि सद्भावेन वृत्तिद्वयसमाहारस्य तत्राप्यविकलत्वात् । रूढि-शब्दार्थमात्रस्यैव साध्यतयाप्रस्तुतत्वेनात्र प्रकरणे मुख्यामुख्ययोर्भेदेन द्विरूपाया अपि रूढे रूढिशब्देन विवक्षितत्वादिति सकलमकलङ्कम् ।

स० — **अन्यत्र तदाधिक्यादिति** । योगरूढिलाभादिति भावः । ननु योगरूढस्य रूढोप-चारस्य रूढलक्षणायाश्च वृत्त्यंतरत्वेन कथं तत्रापि रूढिसद्भावेन सपक्षत्वमुच्यत इत्यत आह **समाहार-वृत्तयो हीति** ।

प० — **तदाधिक्यादिति** । तस्याः रूढेराधिक्यं तस्मादित्यर्थः । कथमेतेन शब्दप्रवृत्तीत्यादि-मूलेन योगस्य साम्यशंकानिरास इत्यत आह **एतदुक्तं भवतीति** । यद्यपीदं समाकर्षाधिकरणे व्युत्पाद्यं तथापि शिष्यहिताय प्रसंगादत्रोक्तं । योगादिवृत्तेर्लक्षणोदाहरणादिकं चतुर्थपादे व्यक्तं भविष्यति **न च रूढयोग इति** । रूढयोगे पङ्कजादिशब्दे रूढोपचारे चित्रलिखितसिंहादौ रूढलक्षणायां मञ्चाः क्रोशन्ति मार्गाश्चलन्तीत्यादौ रूढवृत्तेरभावेपि उक्तहेतुसत्त्वादिति भावः ॥ **सपक्षत्वादिति** । रूढि-मत्त्वरूपसाध्यस्यापि सत्त्वादिति भावः । **कथमित्यत आह समाहारेति** । नन्ववयववृत्तिर्योगोऽखण्ड-वृत्ती रूढिरिति तथा रूढिर्हि मुख्यवृत्तिरुपचारादिरमुख्यवृत्तिरिति चतुर्थपादे 'प्रयोगमात्रबाहुल्यं रूढि-रित्यभिधीयते' इत्यादिव्याख्यावसरे वक्ष्यते । तथाच ते वृत्ती एकस्मिन्नर्थे एकस्य शब्दस्य विरुद्धे इति चेन्न । रूढियोगयोर्यथाक्रमं पद्मत्वपङ्कजनिकर्तृत्वादिरूपभिन्नधर्मनियतयोरपि तद्द्वारैकस्मिन्नर्थे सैंधवादि-शब्दवृत्त्योरिव समाहारसंभवादुभयकार्यदर्शनस्य समाहारेणैवोपपत्तौ वृत्त्यन्तरकल्पनागौरवाच्चेति भावः । यत्तु नहि योगरूढ्योः समाहारो योगरूढिः येन विरोधः स्यादित्यादिचतुर्थपादीयसुधोक्तिः तदभिप्रायं तत्रैव विवरिष्यामोऽतो न विरोधः शङ्क्यः ॥

या० — **तदाधिक्यादिति** । योगरूढिलाभेन मुख्यार्थत्वस्याधिक्यादित्यर्थः ॥ **रूढमेवेति** । अत्रैवकारेण रूढयोगो व्यवच्छिद्यते । न तु योग इति ज्ञातव्यम् । यस्य शब्दस्य यत्रार्थे बहुलातिप्रयोगः स तत्र रूढ इति सामान्यव्याप्तिमभिप्रेत्य हेतुगतविशेषणयोः कृत्यं दर्शयति **प्रयोगवत्त्वमित्यादिना** ॥ **तत्रापि रूढिसद्भावेनेति** । नन्वत्र साध्यतयाऽभिप्रेता रूढिः किं प्रयोगबाहुल्यरूपा किंवाऽखण्डशक्त्या प्रतिपादकत्वरूपाऽन्या वा काचित् । नाद्यः । साध्याविशेषप्रसङ्गात् । न द्वितीयः । रूढोपचार-लक्षणयोः सपक्षत्वोक्त्यसम्भवात् । तत्राखण्डशक्तेः केनाप्यनङ्गीकारात् । तस्मात्कथमेतदिति चेत् ।

उच्यते । स्वस्वजातीयवृत्त्यन्तरापेक्षया शीघ्रप्रतिपादकत्वरूपैव रूढिरत्र साध्यतयाऽभिप्रेता । इयं च योगरूढिरूढोपचारादिसाधारणी । तथा हि । योगापेक्षया रूढेः केवलोपचारलक्षणापेक्षया रूढोपचार-लक्षणयोश्च शीघ्रोपस्थापकतारूपत्वस्यानुभवसिद्धत्वात्। योगस्यावयवार्थप्रतीतिमपेक्ष्य केवलोपचारलक्षणयोश्च प्रयोजनमपेक्ष्य, विलम्बेनोपस्थापकतारूपत्वान्न शीघ्रप्रतिपादकतारूपत्वम् । न चैतद्ग्रन्थस्वारस्याद्रूढोपचा-रलक्षणयोरप्यखण्डशक्तिरूपैव रूढिर्ग्रन्थकृदभिमतेति कुतो न कल्पनीयमिति वाच्यम् । रूढायां गौण्यां लक्षणायां चाभिधातुल्यत्वेन प्रयोजनानपेक्षणादिति चतुर्थपादीयसुधायामभिधातुल्यत्वोक्तिविरोधात् । न चैवं यथा रूढलक्षणा लक्षणामात्राद्रूढगौणी च गौणीमात्रात्प्रयोगप्राचुर्येण भिद्यते । तथा प्रवृत्तिनिमि-त्तापेक्षत्वाद्रूढिमात्रात्प्रयोगबाहुल्येन योगमात्राच्च भिन्ना तृतीयेयं वृत्तिरिति चतुर्थपादीयसुधायां प्रयोग-प्राचुर्यस्यैव भेदकतोक्तिविरोधः । तत्रोक्तं रूढ्यनुमापकप्रयोगप्राचुर्यमपि भेदकम् । न तु तदेवेत्याशयात् ।

ननु रूढयोगरूढोपचाररूढलक्षणानां पृथक् वृत्त्यन्तरतया न्यायविवरणादावुक्तत्वेन कथं तत्र रूढिसद्भाव इत्यत आह **समाहारवृत्तयो हीति** । वृत्तिद्वयसमाहाररूपत्वमेव तासां न वृत्त्यन्तररूप-त्वमित्यर्थः । अत्र च 'न हि योगरूढ्योः समाहारो योगरूढिरिति ब्रूमः'इत्यादिचतुर्थपादीयसुधया यथा न विरोधस्तथा तत्रैव वक्ष्यामः । न च योगरूढेः कथञ्चिद्वृत्तिद्वयसमाहारसम्भवेऽपि रूढोपचारलक्ष-णयोर्न तत्सम्भवः । यतस्तत्र मुख्यार्थसादृश्यं तत्सम्बन्धं वा निमित्तीकृत्य वृत्तिरेकैवेति वाच्यम् । शीघ्रोपस्थापकतारूपस्य वृत्त्यन्तरस्यापि तत्रानुभूयमानत्वादिति पूर्वमेवोक्तत्वादिति ॥

श्री०— ननु शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयेऽपि कुतो महायोगवृत्तिरित्यत आह **एत-दुक्तं भवतीति** । अज्ञातमुख्येष्वमुख्येष्विति सामानाधिकरण्यम् । अज्ञातो मुख्योऽर्थो येषां म्लेच्छैः प्रयुज्यमानानां यवादिशब्दानां ते शब्दा अज्ञातमुख्यास्ते च तेऽमुख्याश्चेति योज्यम् । अमुख्येष्विति साध्याभावोपपादनायेति ज्ञातव्यम् ।

च०— **तदाधिक्यादिति** । योगरूढिप्राप्ते नियन्त्रितमुख्यार्थताधिक्यादित्यर्थः । भागवतै-श्वर्यनिरवधिकत्वस्वातन्त्र्ययोरर्थान्तरगतैश्वर्यसावधिकत्वपारतन्त्र्ययोश्च भगवदर्थान्तरयोर्योगवृत्तिसाम्याभावे निमित्तनैमित्तिकभावं व्यनक्ति **एतदुक्तं भवतीति** । हरौ रूढमेवेतीति शब्दोत्तरं विन्यस्तस्यैवकारस्य ततःपूर्वं विन्यासोपगमेन शङ्खः पाण्डुर एवेत्यादाविव विशेषणवाचकपदसमभिव्याहृतत्वेनानुसन्धीयमान-तया विशेष्यतावच्छेदकावच्छेदेन विशेषणान्वयितारूपोऽयोगव्यवच्छेदो बोध्यते न तु विशेष्यतावच्छेद-कानाश्रये प्रकृतविशेषणान्वयव्यवच्छेदरूपोऽन्ययोगव्यवच्छेद इति भावः । अथात्र प्रयोगबाहुल्यरूपा-मुख्यरूढेः साध्यावैशिष्ट्यप्रसंगेन सिषाधयिषितता, रूढोपचाररूढलक्षणयोरखंडशक्त्यभावेन तयोरपि सपक्षत्वप्रतिपादकस्य तत्रापि रूढिसद्भावेन सपक्षत्वादित्युत्तरग्रन्थस्यासामंजस्यप्रसंगेनाखंडशक्त्या प्रतिपा-दकत्वरूपमुख्यरूढेश्च सा न संगच्छत इति चेदत्र व्याकुर्वाणाः पक्षनिदर्शनोभयसाधारणस्य मुख्यभाक्तसा-

साधारणरूढत्वमात्रस्य सिषाधयिषितत्वात् । न च प्रयोगातिरिक्ताखंडशक्त्युपोद्बलकतयैतद्ग्रन्थमुपन्यस्यै-तद्ग्रन्थतात्पर्यविषयतया प्रयोगेणाखंडशक्तिसाधनस्य तर्कतांडवे वर्णिततया तद्विरोधप्रसंगेन नोक्तदिशा साधनं गच्छत इति वाच्यं । तत्राप्युक्तदिशा रूढिशब्दार्थमात्रस्य साध्यतयाऽभिप्रेतत्वेपि पर्यवसानगत्या-ऽखंडशक्तिरेव पक्षीकृतशब्देषु सिध्यतीति पर्यवसन्नसाध्याभिप्रायेणाखंडशक्तेः साधनोक्तेरुपपत्त्या तदविरो-धोपपत्तेरिति समाधाय; न च तद्ग्रन्थस्वारस्याद्रूढोपचारलक्षणयोरप्यखंडशक्तिरूपैव रूढिग्रन्थकृदभिमतेति कुतो न कल्पनीयमिति वाच्यमिति शंकमानाः । तथा सति रूढोपचारलक्षणयोरुपचारलक्षणाभ्यां भेदप्रतिपादकस्य यथा रूढलक्षणा लक्षणामात्राद्रूढगौणी च गौणीमात्रात्प्रयोगप्राचुर्याद्भिद्यत इत्युत्तर-ग्रन्थस्यास्वारस्यप्रसंगात् । तत्र प्रयोगप्राचुर्यस्य भेदकत्वोक्त्याऽखंडशक्त्यभावस्य सूचनात् । अखंडशक्ति-सद्भावे तद्भावाभावाभ्यामेव तयोस्ताभ्यां भेदसिध्युपपत्त्या प्रयोगप्राचुर्यभावाभावाभ्यां, तद्भेदव्युत्पादना-नर्थक्यात् । किं चैवं 'रूढायां लक्षणायां गौण्यां चाभिधातुल्यत्वेन प्रयोजनानपेक्षणादि'ति चतुर्थपादीय-टीकायामभिधातुल्यत्वोक्तिरनुपपन्ना स्यात् । अभिधातुल्यत्वोक्त्यातत्राखंडशक्त्यभावस्यैव प्राप्तेः तद्भावे चाभिधात्वेनेत्येतावता पूर्तेस्तुल्यत्वपर्यन्तानुधावनानर्थक्यम् । अयुक्तश्च तत्राखंडशक्त्यभ्युपगमः । तथात्वे हि गोघटादिशब्देष्विव मंचाः क्रोशंतीत्यादावप्यखंडशक्त्यैव प्रयोगप्रत्यययोरुपपत्त्योपचारादिरूपा-मुख्यवृत्तिकल्पनवैयर्थ्याद्यस्य शब्दस्य यत्रार्थे प्रयोगः सामर्थ्यं तस्य प्रवृत्तिनिमित्तातिरिक्तं तत्सादृश्यं निमित्तीकृत्यान्यत्र वृत्तिर्गौणी, तत्संबंधं निमित्तीकृत्यान्यत्र वृत्तिस्तु लक्षणेति करिष्यमाणतल्लक्षणानाक्रांत-तया मंचाः क्रोशंतीत्यादौ रूढलक्षणादित्वाभावापाताच्च । तदेवं ग्रन्थकृतो रूढोपचारादावखंडशक्त्य-भ्युपगमस्य कल्पयितुमशक्यत्वाच्च तत्रापीत्युत्तरग्रन्थानुरोधेनाविवक्षितविशेषरूढिशब्दार्थमात्रसाधनमेवै-तदंगीकरणीयमित्याशयं प्रकाश्य समादधिरे ।

**बहुलेति** । बहुलातिप्रयोगवत्त्वस्यैव हेतुतायां साक्षादिमद्व्यक्तौ बहुलातिप्रयोगवद्गो-शब्दादौ हरिनिरूपितरूढिमत्तारूपसाध्यविनिर्मुक्तेनैकांत्यव्युदसनाय हेतुतावच्छेदकघटकतया बहुलाति-प्रयोगांशे हरिविषयकत्वनिवेशं, ध्वनयितुं हराविति पदमनुषञ्जनीयम् । अत्र च नारायणशब्दवदिति दृष्टांतोपादानाद्विशेषव्याप्तिः, हेतुशरीरघटकविशेषणानां विशेषव्याप्तावव्यभिचाराद्वैयर्थ्यापत्त्योत्तरत्र तद्वि-शेषणप्रयोजनप्रदर्शनानुरोधेन सामान्यव्याप्तिश्च विवक्षितेत्यवसेयम । बहुलेतिप्रतीकमुपाददानाः हरावित्य-स्यात्रापि संबन्धः ततश्च हरौ बहुलातिप्रयोगवत्त्वस्यैव हेतुत्वलाभान्नाप्रयोजकत्वमिति भाव इत्यप्याशयं प्रकाशयंति । **यौगिकेषु** । पाचकौपगवादिपदेषु । अर्थानुगतिदर्शनेन व्याकरणस्य साधुत्वमात्रपरतया वृक्षादिवदमी रूढा इति कतिपयोक्तिरवधीरणीयैव । **अज्ञातमुख्येष्विति** । अप्रतिसंहितसिंहपदमुख्यार्थस्य सिंहो देवदत्त इति व्यवहारात्सिंहादिपदस्य देवदत्त एव व्युत्पत्त्या तत्रैव प्रयोगप्राचुर्योपपत्तेरिति भावः ।

वृत्त्यंतरतया तत्र सपक्षतोपगंतुं शक्येत्यत आह समाहारवृत्तयो हि ता इति । वृत्तिद्वयसम्मेलनरूपा इत्यर्थः । न चावयवशक्तिसमुदायशक्तिरूपयोर्योगरूढयोर्विरुद्धतया नैकत्र सम्मेलनं संगच्छत इति वृत्त्यंतररूपतैवोपेयेति वाच्यं । पङ्काधिकरणकजनिकर्तृत्वरूपावयववृत्तिप्रवृत्तिनिमित्तस्य पद्मत्वरूपसमुदायवृत्तिप्रवृत्तिनिमित्तस्य चैकत्र समावेशेनैव प्रतीतिद्वयरूपकार्यद्वैविध्यनिर्वाहे वृत्त्यंतरत्वकल्पनानवकाशात् । तुल्यदिशा बाधासिद्धिसमाहारस्यापि हेत्वाभासांतरत्वापत्तिस्त्वेकेनैवोद्देश्यभूतदुष्टत्वबोधसिद्ध्या समाहारकल्पकाभावादिति तुरीयेऽभिधास्यमानतयानवकाशैव । प्रकृते च दर्शितरूपद्वयोपरक्तप्रतीतिभेदरूपकल्पकसत्त्वेन तादृूप्यस्यावश्यकत्वादित्याशयः । ननूक्तादिशा प्रातिस्विकवृत्तिद्वयसम्मेलनरूपत्वोपगमे न हि योगरूढयोः समाहारो योगरूढिर्येन विरोध इति तुरीयपादेनास्य विरोध इति चेन्न । तादृशटीकाग्रन्थस्यैकस्य धर्मस्य तादृशवृत्तिद्वयप्रवृत्तिनिमित्तत्वाभावतात्पर्यकतया क्षतिविरहात् । 'विद्वद्रूढिं च तत्रगामि'तिप्रतीकव्याख्यावसरे सनिरुक्तिकं योगवृत्तिसाहित्येन तत्रगां परमेश्वरविषयां सर्वेषां शब्दानां रूढिं च दर्शयतीत्यादिका टीकोक्ति'स्तत्र प्रयोगबाहुल्यं यदि तत्परता किम्वि'ति प्रतीकव्याख्यावसरे च नास्माभिः परममुख्यतामात्रसिद्धये विशिष्टोपादानं क्रियते किंतु समाहाररूपविधांतरसिद्धये चेन्युत्तरत्र टीकायां समाहारोक्तिस्तथा सन्न्यायरत्नावल्यां न चावयववृत्त्यखंडवृत्त्योरेकस्मिन्नर्थे विरुद्धत्वाद्योगरूढिर्नाम नास्तीति वाच्यं तस्याः पंकजादिशब्देषु दृष्टत्वादित्युक्तिश्च समाहारोक्तिसमाहारसामंजस्यं ज्ञापयन्तीति स्थितम् ।

सु० — **नन्वसिद्धोऽयं हेतुः । इन्द्रादिशब्दानां परमेश्वरे प्रयोगस्यैवाभावादित्यत आह** रूढिरिति ।

अनु० — रूढिर्हि द्विविधा मता ॥
अविद्वद्विद्वदाप्त्यैव

**अत्र रूढिरिति रूढिज्ञापको बहुलातिप्रयोगो लक्ष्यते । आप्तिः संबन्धः । तत्राविद्वत्संबन्धिनो बहुलातिप्रयोगस्याभावेऽपि विद्वत्संबन्धिनो भावान्नासिद्धिरिति भावः । अस्त्वेवमीश्वरे(ऽपि)रूढिः शब्दानाम् । तथाऽपि लोकेऽपि तद्भावात्साम्यमेव । ततश्च हरिरेव मुख्यवाच्य इति नोपपद्यत इत्यत आह** मुख्येति ।

मुख्या हि विदुषां तु सा ॥

**विदुषां बहुलातिप्रयोगानुमिता सा रूढिर्मुख्या हि यस्मात्तस्मान्न साम्यमिति शेषः ।**

शे० — रूढिसाधनमात्रेणैव भगवतो मुख्यार्थत्वसिद्धे रूढिर्हि द्विविधेति तद्द्वैविध्याभिधायकोत्तरवाक्यमनर्थकमित्यत उक्तानुमानेऽसिद्धिशङ्कापरिहारस्तत्प्रयोजनमिति भावेन तद्व्यावर्त्यतया तां शङ्कामुत्थापयति नन्विति । ननु कथं रूढिद्वैविध्यकथनेनासिद्धिशङ्कापरिहार: परमेश्वरे प्रयोगस्यानुपपादनात् । प्रयोगाभावशङ्कापरिहाराय प्रयोगस्यैव वक्तव्यत्वाद्रूढिद्वैविध्यकथनं चासङ्गतमित्यतोऽत्र रूढिशब्देन प्रयोगस्यैव ग्रहणान्नोक्तदोष इति भावेन तत्र तस्याशक्ते: कथं रूढिशब्देन प्रयोगग्रहणमित्यतो लक्षणयेति भावेनाह अत्रेति । लक्षणाबीजभूतशक्यसम्बन्धाभावान्न तेन तस्य लक्षणा युज्यत इत्यतो रूढिशब्दार्थभूताखण्डशक्तिज्ञापकत्वात्प्रयोगस्य ज्ञाप्यज्ञापकभाव एव शक्यसम्बन्ध इति भावेनोक्तं रूढिज्ञापक इति । प्रयोगद्वैविध्यकथनेनापि कथमुक्तशङ्कापरिहार इत्यतोऽत्राभिप्रायमाह तत्रेति । असिद्धिपरिहारस्योक्तरीत्या पूर्ववाक्येनैव सिद्धेर्विद्वद्रूढे'र्मुख्या ही'त्युत्तरवाक्ये मुख्यत्वाभिधानमनर्थकमित्यतोऽसिद्धत्वशङ्कापरिहारे'ऽप्यतो नारायणो देवो नि:शेषगुणवाचकै: । गुणिसामान्यवचनैरपि मुख्यतयोदित:' इति प्रागुक्तमुख्यवाच्यत्वानुपपत्तिशङ्कापरिहारेण तदुपपादनार्थं तदिति भावेन तद्भावयं तथा योजयितुं तद्व्यावर्त्यशङ्कामुत्थापयति अस्त्विति ॥ लोकेऽपीति । इन्द्रादावित्यर्थ: । तद्भावादिति । अखण्डशक्तिभावादित्यर्थ: । तत्साधकस्य बहुलातिप्रयोगस्य विद्वत्सम्बन्धिनस्तत्राभावेऽप्यविद्वत्सम्बन्धिनस्तस्य तत्रापि भावादिति भाव: । हिशब्दसूचितं हेतुहेतुमद्भावं दर्शयन्नेव साम्यशङ्कापरिहारं मूलारूढं कर्तुं शेषं सम्पूर्य व्याचष्टे विदुषामिति ।

श्री० —नन्वत्र हेतोरेव द्वैविध्ये उपपादनीये साध्यस्य द्वैविध्योपपादनमसङ्गतमित्यत आह अत्रेति ॥

सु० — कथं मुख्यत्वमित्यत आह विद्वदिति ।

अनु० — विद्वद्रूढिर्वैदिका स्यात्सा योगादेव लभ्यते ॥

वैदिकबहुलप्रयोगानुमिता हि विद्वद्रूढिरित्युच्यते । सा च लौकिकमात्रप्रयोगानुमिताया मुख्येति स्फुटमेवेति । ननु वैदिकेति कथम् । टिड्ढाणञ् इत्यादिना ङीपा भवितव्यम् । मैवम् । परमवैदिकत्वख्यापनार्थत्वात् । अथवा वैदिका: प्रयोगा अस्यां सन्ति ज्ञापका इत्य'र्शआदिभ्योऽजि'त्यचि कृते वैदिकेति भवति । यद्वा वैदिकानां पुरुषाणामास्यादिति तत्प्रयोगात्सिद्धेति । हेत्वन्तरमाह सेति । ल्यब्लोपनिमित्ता पञ्चमी । यत: सा विद्वद्रूढिर्योगमविहायैवोपलभ्यते । न त्वविद्वद्रूढिवत्सङ्केततुल्याऽतोऽपि सा मुख्येति ।

शे० — कथं मुख्यत्वमिति । विदुषां बहुलप्रयोगानुमितत्वमात्रेण कथं रूढेर्मुख्यत्वं निमित्तनैमित्तिकभावस्यास्फुटत्वेन वैपरीत्यस्यापि वक्तुं शक्यत्वादित्यर्थ: । ननु नानेनोक्तशङ्कापरिहार: । विद्व-

द्रूढ्यनुवादेन वैदिका स्यादिति वैदिकत्वविधानानर्थक्यं च विद्वद्रूढ्यसिद्ध्या तदनुवादानुपपत्तिश्चेत्यतो नात्र यथाश्रुत एवोद्देश्यविधेयभावः। किन्तु वैदिका विद्वद्रूढिः स्यादित्येव। वैदिकत्वं च वैदिकबहुलप्रयोगानुमितत्वमेव। तथा च विदुषां बहुलप्रयोगानुमितत्वेन तस्या विद्वद्रूढित्वसिद्ध्या युक्तो मुख्यत्वलाभ इत्याशयेन वाक्यं योजयति **वैदिकेति**। अस्तु वैदिकबहुलप्रयोगानुमितत्वादस्या विद्वद्रूढित्वं ततोऽपि कथं मुख्यत्वसिद्धिः। विद्वद्रूढेरविद्वद्रूढेश्च रूढित्वाविशेषेण प्राबल्यदौर्बल्ययोरसिद्धेरित्यत आह **सा चेति**। विद्वद्रूढिरित्यर्थः। अविद्वद्रूढेर्बालानां चित्रलिखितसिंहे सिंहप्रसिद्धिवदज्ञानादिमूलकत्वेन दुर्बलत्वात्तदपेक्षया विद्वद्रूढेरसम्भाविताज्ञानमूलत्वेन प्राबल्यान्मुख्यत्वमिति भावः। नन्वेवमस्यार्थस्य भाष्यकारेण मुख्यत्वसिद्धयेऽवश्यं वक्तव्यत्वात्तदनुक्तिर्भाष्ये दोष इत्यतो यवादिशब्दानां प्रियङ्ग्वादिषु 'यदाऽन्या ओषधयो म्लायन्ते तदैते मोदमानास्तिष्ठन्ती'त्यादिवाक्यशेषाज्ञानमूलकम्लेच्छप्रसिद्धितोऽपि तज्ज्ञानमूलकतया दीर्घशूकेष्वार्यप्रसिद्धेर्बलवत्त्वदर्शनेनास्यार्थस्य स्फुटत्वान्न तदनभिधानं दोषापादकमित्याशयेनोक्तमिति स्फुटमेवेति। ननु वेदे भवा इति भावार्थेऽध्यात्मादिभ्यश्चेति अध्यात्मादित्वाट्ठञि यस्येति चेत्यकारलोपे ठस्येकादेशे ठञन्तत्वाट्टिड्ढाणञित्यादिना ङीप्यलोपे च सति वैदिकीति भवितव्यं वैदिकेति तु कथमित्याशङ्कते **ननु वैदिकेति कथमिति**। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनाच्छान्दसो ङीबभाव इति समाधत्ते **मैवमिति** ॥ **अथवेति**। वैदिकशब्दाद्वैदिकानामिमे वैदिका इतीदमर्थे अणि अल्लोपे च वैदिकशब्दः प्रयोगपरः सम्पद्यते। ततश्च वैदिकाः प्रयोगा अस्याः सन्ति ज्ञापकतयेति मत्वर्थे वैदिकशब्दादर्श आदिभ्योऽजित्यचि कृते पूर्ववदल्लोपे ङीप्निमित्ताभावेन ततो ङीपोऽप्राप्तेः स्त्रीत्वविवक्षाया'मजाद्यतष्टाबि'त्यकारान्ततया टापि वैदिकेति रूपसिद्धिरिति भावः। अनेकप्रत्ययकल्पने गौरवं मनसि निधायैकपदत्वमाश्रित्य समाधानान्तरमाह **यद्वेति**। अस्मिन्पक्षे कथं तत्प्रयोगसिद्धत्वलाभ इत्यत आस्यशब्देन तत्सम्बन्धिनः प्रयोगस्योपलक्षणाज्ज्ञापकहेतुतया सिद्धत्वस्यापि लाभ इत्याशयेन तथा योजनामाह **आस्यादिति** ॥ **तत्प्रयोगात्सिद्धेतीति**। तदुक्तरीत्या विद्वद्रूढित्वेन मुख्यत्वसिद्धेरुत्तरवाक्यवैयर्थ्यमित्यतो विद्वद्रूढेर्मुख्यत्वे योगाविनाभूतत्वरूपहेत्वन्तरकथनार्थं तदित्याशयेनोत्तरवाक्यतात्पर्यमाह **हेत्वन्तरमाहेति**। ननु चात्र विद्वद्रूढेर्योगालाभ उच्यते न तु योगाविनाभावः। वैदिकबहुलप्रयोगादपि तत्सिद्धेरेवेति चानुपपन्नमित्यतो योगाविनाभूतत्वरूपहेत्वन्तरसमर्पकतया मूलं व्याचष्टे **ल्यब्लोपनिमित्ता पञ्चमीत्यादिना**। पञ्चमीविधाने 'ल्यब्लोपे कर्मण्यधिकरणे चोपसङ्ख्यान'मिति वचनात्। ल्यबन्तलोपेऽत्र कर्मणि पञ्चमीत्याशयः ॥ **सङ्केतेति**। अर्थगतप्रवृत्तिनिमित्तमनपेक्ष्यास्मात्पदादिममर्थं जानन्त्वित्यभिप्रायविशेषः सङ्केतः।

स० — **टिड्ढाणेत्यादिनेति**। वैदिकशब्दस्य चानुगन्तव्यत्वादिति भावः ॥ छ ॥

प०— **टिड्ढाणञित्यादिनेति** । वेदेन कृतेत्याद्यर्थे वेदशब्दाट्ठकि कृते ठस्येक इति इकादेशे किति चेत्यादिवृद्धौ यस्येत्यकारलोपे टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप इति सूत्रेण ङीप्प्रत्यये सति वैदिकीति स्यादित्यर्थः ॥ **अर्श आदिभ्य इति** । अर्शःप्रभृतिशब्देभ्यो मत्वर्थेऽच्प्रत्यये यस्येति सूत्रेण वैदिकशब्दाकारलोपेऽकारान्तत्वादजाद्यतष्टाबिति टाप्प्रत्यये वैदिकेति रूपमित्यर्थः । **आस्यादिति** । मुखादित्यर्थः ।

या०— **टिड्ढाणञित्यादिनेति** । टिड्ढाणञ्द्वयसच्दघ्नञ्मात्रच्तयप्ठक्ठञ्क्वरप इति सूत्रस्यायमर्थः । टिदादिभ्योऽनुपसर्जनेभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीप् स्यादिति । उदाहरणानि तु । कुरुचरी । सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावनिकी । यादृशी । इत्वरी । आढ्यङ्करणीति क्रमेण द्रष्टव्यानि । तथा च **वैदिकशब्दस्य ठगन्तत्वात्** । अनेन सूत्रेण ङीपि कृते आक्षिकीतिवद्वैदिकीति भाव्यमिति भावः ॥ १-१-६ ॥ छ ॥ छ ॥

श्री०— **ङीपेति** । वेदशब्दात्तस्येदमित्यर्थे ठक्प्रत्यये तस्येकादेशे 'यस्येति चे'ति दकारस्थाकारलोपे एकारस्यैकाररूपवृद्धौ वैदिकेति जाते टिड्ढाणञित्यादिना ङीपि ङकारपकारयोर्लोपे वैदिकी स्यात् । आक्षिकीतिवदित्यर्थः ॥ **वैदिकत्वेति** । तथाच छन्दःकल्पत्वान्न दोष इति भावः । अस्या रूढेः ॥ **वैदिकाः प्रयोगा इति** । यमिन्द्रमाहुर्वरुणमाहुरित्यादयः । मत्वर्थसम्बन्धोपपादनाय ज्ञापका इत्युक्तम् ॥ **अचि कृत इति** । वैदिकशब्दनिष्पत्तिः पूर्ववदेव । तथाच वैदिकशब्दान्मत्वर्थेऽच्प्रत्यये सवर्णदीर्घे वैदिकेत्याकारान्तत्वं युक्तमिति भावः ॥ **आस्यादिति** । मुखादित्यर्थः ॥ इत्यानन्दमयाधिकरणम् ॥ ॥ छ ॥ १-१-६ ॥ छ ॥

च०— **टिड्ढाणञित्यादिनेति** । टिड्ढाणञ्द्वयसच्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्-ख्युनामिति योगेन अध्यात्म्यादित्वात् ठञन्तवैदिकशब्देपि स्त्रीत्वविवक्षायां लवणट्ठञित्यनुशिष्टठञन्तलावणिकशब्दे स्त्रीत्वविवक्षायामिव ङीवा भवितव्यमिति भावः । **यथोक्तं भाष्य इति** । स चेन्द्रो राजा सम्प्रयुंजतीत्यादिभिरन्यः प्रतीयत इत्येत्रोक्तेरिति भावः ॥ **व्याख्यानमिति** । अतो नारायणो देव इत्यादि नयार्थनिगमनरूपमध्यात्मगैरित्यादिनयसिद्धान्तन्यायसिद्धार्थनिगमनरूपं च व्याख्यानमित्यर्थः । इति श्रीमदानन्दमयनयव्याख्या ॥ छ ॥

सु०— ततः किमित्यत आह तस्मादिति ।

अनु०— तस्मान्मुख्यार्थता विष्णोः

**यस्मादेवं विष्णौ महायोगो मुख्या च रूढिः । अन्यत्र योगमात्रममुख्यरूढिश्च तस्मात्सर्वशब्दमुख्यार्थता विष्णोरुपपन्नेति ।**

उपसंहरति इति कृत्वेति ।

इति कृत्वा हृदि प्रभुः ॥

समन्वयं साधयति ॥ ६ ॥ छ ॥

**एतां सङ्गतिमेतां चोपपत्तिं हृदि कृत्वा सूत्रकृदानन्दमयोऽभ्यासादित्यशेषगुणिसामान्यवाचकादिशब्दानां मुख्यया वृत्त्या हरौ समन्वयं साधयति । अतो युक्तमेवैतद्व्याख्यानमिति** ॥ छ ॥ इत्यानन्दमयाधिकरणम् ॥ १-१-६ ॥

**शे०**— तस्मान्मुख्यार्थता विष्णोरिति विष्णोर्मुख्यार्थत्वप्रतिपादकमुत्तरवाक्यमनर्थकमित्यतो विष्णौ महायोगविद्वद्रूढ्युपपादनप्रयोजनप्रदर्शनार्थत्वान्न वैयर्थ्यमिति भावेन तद्वाक्यं तथाऽवतारयति **तत इति** । अस्तु भगवति शब्दप्रवृत्तिहेतूनामित्युक्तरीत्या शब्दानां महायोगः । अस्तु च रूढमित्यादिनोक्तरीत्याभगवति विद्वद्रूढिरन्यत्र च योगमात्रममुख्यरूढिश्च तावता किं सिद्धमित्यर्थः ॥ **सङ्गतिमिति** । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये' इत्यादिनोक्तामित्यर्थः ॥ **एतां चोपपत्तिमिति** । शब्दप्रवृत्तिहेतूनामित्यादिनोक्तामित्यर्थः ॥ गुणिसामान्यवाचकादिशब्दानामित्यत्रादिपदेन गुणवाचकानामध्यात्मादिगतानां च संग्रहः ॥ **व्याख्यानमिति** । 'अतो नारायणो देवः' इत्याद्यधिकरणार्थोपसंहाररूप'मध्यात्मगै'रित्याद्यधिकरणसिद्धान्तन्यायसिद्धार्थोपसंहाररूपं च व्याख्यानमित्यर्थः ॥ **इत्यानन्दमयाधिकरणम्** ॥ १-१-६ ॥

**प०**— इति कृत्वा हृदीत्यत्रेतिशब्देन परामृश्यमानं दर्शयति **एतां सङ्गतिमिति** । जन्माद्यस्येत्यादिनोक्तां सङ्गतिं शब्दप्रवृत्तिहेतूनामित्यादिनोक्तामुक्तामुपपत्तिं चेत्यर्थः । एतस्य हृदि करणं च समन्वयसूत्रात्साध्यार्पकतया प्रत्यधिकरणमाध्यायपरिसमाप्तितत्त्वित्यन्यव्यावर्तकावधारणार्थकतुशब्दयुक्ततत्पदानुवृत्तिबलाज्ज्ञायत इति हृदयम् । सर्वथान्यव्यावृत्तेरयोगेन महायोगविद्वद्रूढिभ्यामेवान्यव्यावृत्तिलाभात् । न चोदाहरणमात्रेन्यव्यावृत्त्यर्थं तत् । तस्योपलक्षणमात्रत्वात् । 'नचैवमन्योऽन्तर आत्मानन्दमय'इत्यादिश्रुतिष्वानन्दमयादिशब्दैः 'मुख्यामुख्ययोर्मुख्ये संप्रत्यय' इति न्यायेनानन्दमयस्तत्त्विति प्रतिज्ञाभागेनैव विष्णुग्रहणसूचनात् अभ्यासादित्याद्युक्तिर्व्यर्थेति शङ्क्यम् । विष्णावान्दमयादिशब्दानां मुख्यार्थत्वस्य प्रतिज्ञांशमात्रेण सूचनेपि तस्य शब्दस्य तस्मिन्नर्थे तात्पर्यमस्तीत्यस्य तेनाप्राप्त्या तात्पर्यज्ञापनार्थत्वेनाभ्यासादिति हेतूक्तिसार्थक्यान्मुख्यवृत्तिमवधार्य हेतूक्तेः प्रवृत्तत्वादिति । व्यक्तमेतदुत्तरनयन्यायविवरणटीकायाम् ॥ छ ॥ १ । १ । ६ ॥ छ ॥

## ॥ इति आनन्दमयाधिकरणम् ॥

सु० — ॥ ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥ स्यादेतत् । यद्यानन्दमयोऽभ्यासादिति वदतः सूत्रकारस्यैतावानर्थोऽभिमतो भवेत्तर्हि तत एव गतार्थत्वादन्तस्तद्धर्मोपदेशादित्याद्यधिकरणानामनुत्थानमेव स्यात् । पदार्थान्तरविषयौ हि रूढियोगावाश्रित्यैव तत्र पूर्वपक्षप्रवृत्तिः । यथोक्तं भाष्ये । तत्रान्यविषयाया रूढेरविद्वद्रूढित्वेन भगवद्विषयाया विद्वद्रूढितो, योगस्य चाल्पभगवदधीनप्रवृत्तिनिमित्तसापेक्षस्य निरवधिकापरतन्त्रप्रवृत्तिनिमित्तापेक्षान्महायोगादुपपादितमेव दुर्बलत्वमिति कुतोऽधिकरणान्तरस्यावकाशः । सत्यम् । तथाऽप्यभ्यधिकाशङ्कासद्भावेनाधिकरणान्तरारंभोपपत्तिरित्याशयवांस्तावदधिकाशङ्काप्रवर्तनपूर्वकमन्तस्तद्धर्मोपदेशादित्याद्यधिकरणतात्पर्यं दर्शयति देवानामिति ।

ब्र. सू.० — ॥ ॐ अन्तस्तद्धर्मोपदशात् ॐ ॥

अनु० — ॥ ॐ अन्तस्तद्धर्मोपदेशात् ॐ ॥

देवानां तत्र शक्ततां ॥

आशङ्क्य

तैत्तिरीयाः पठन्ति । अन्तःप्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवा इति । तत्र संशयः । किमयमन्तःप्रविष्टः परमात्मोतान्य इति । अन्य इति तावत्प्राप्तम् । कुतः । इन्द्रो राजा जगतो य ईशे । त्वष्टारं रूपाणि विकुर्वन्तं विपश्चितं ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम् । दिव आत्मानं सवितारं बृहस्पतिमितीन्द्रादिश्रुतेः । सप्त युञ्जन्ति रथमेकचक्रमित्यादित्यलिङ्गाच्च । अन्नं ब्रह्मेत्यादिश्रुत्या तद्धेतुव्यपदेशादिलिङ्गेन चातीताधिकरणेन निर्णयः कृतः । न चेन्द्रादिश्रुतिरन्यत्र नेतुं शक्यते । पुरन्दरादिषु रूढत्वाद्यौगिकत्वाच्च ।

ननूक्तमत्रान्यत्र रूढेरविद्वत्संबन्धित्वाद्योगस्य च परमेश्वरायत्ताल्पनिमित्तत्वादमुख्यतेति । सत्यम् । तदन्नौषध्यादिपदार्थेषु स्यात् । न तु पुरन्दरादिषु ।

तत्रेन्द्रादिशब्दप्रवृत्तिनिमित्तस्य परमैश्वर्यादेरनवधिकस्यापरायत्तस्य विद्यमानत्वेन मुख्ययोगोपपत्तेः । अशक्तेषु खलु सामन्तादिष्वैश्वर्यादिकमल्पं परायत्तं च भवति । देवास्त्वप्रतिहतशक्तयः कथमेवं भवेयुः । तथा च श्रुतिः । इन्द्रो वै देवानामोजिष्ठ इत्येवंजातीयका ।

शे० — ॥ ॐ अन्तस्तद्धर्मोपदेशात् ॥ ॐ ॥ ननु देवानां तत्र शक्ततामित्याद्युत्तरभाष्यमनर्थकम् । न चैतदन्तरधिकरणार्थकथनमिति वाच्यम् । तत्सूत्रगतपदाक्षरार्थानभिज्ञानेन तस्य तद्व्या-

ख्यानत्वायोगात् । न च पदाक्षरार्थकथनवत्तात्पर्यकथनस्यापि व्याख्यानत्वात्तात्पर्यप्रदर्शकस्योत्तरग्रन्थस्य युक्तं तदधिकरणव्याख्यानत्वमिति वाच्यम् । तथाऽपि देवानामित्यादिभाष्यखण्डवैयर्थ्यानिस्तारात् । न च पुरन्दरादिष्विन्द्रादिशब्दानां महायोगविद्वद्रूढिव्युत्पादकत्वान्न तस्याप्यानर्थक्यमिति वाच्यम् । तद्व्युत्पादनस्य प्रकृतानुपयोगित्वेनाकर्तव्यत्वात् । न च गतार्थताशङ्कापरिहारार्थं तद्व्युत्पादनमावश्यकमेवेति वाच्यम् । निर्बीजत्वेन तच्छङ्काया एवानुदयात् । सबीजत्वेऽपि वा रूढियोगाश्रयणेन पूर्वपक्षप्रवृत्त्यभ्युपगमे तच्छङ्काप्रसरेऽपि तत्र रूढियोगाश्रयणेनैव पूर्वपक्ष इत्यत्र नियामकाभावेन पुरन्दरादिष्विन्द्रादिशब्दानां रूढियोगावनाश्रित्यापि हेत्वन्तरेण तत्र पूर्वपक्षप्रवृत्तेस्तच्छङ्काया अनुत्थानादित्यत उक्तदूषणद्वयपरिहारेण गतार्थताशङ्कामुत्थापयति **स्यादेतदिति** । तत्र गतार्थताशङ्काबीजप्रदर्शनमेतावानर्थ इति । अन्यत्र रूढियोगमात्रं शब्दानां भगवति तु महायोगविद्वद्रूढी । अतो हेतोः स एव मुख्यार्थ इत्येतावानर्थ इत्यर्थः । सर्वशब्दानां भगवति महायोगविद्वद्रूढ्यभिमतिरेव गतार्थताशङ्काबीजमिति भवाः । स्यादयं दोषो यदि पुरन्दरादिष्विन्द्रादिशब्दानां रूढियोगाश्रयणेनैव पूर्वपक्षोऽभिमतः स्यात् । न चैतदस्ति । नियामकाभावात्तत्कथं वक्ष्यमाणरीत्या गतार्थताशङ्कावकाश इत्यतो रूढियोगाश्रयणेनैव पूर्वपक्षं भाष्यसम्मत्या द्रढयति **यथोक्तं भाष्य इति** । अन्तःस्थत्वाद्यधिकरणभाष्य इत्यर्थः । तत्तदधिकरणभाष्यसंग्रहार्थं भाष्य इति सामान्यमुक्तम् । अन्यत्र योगरूढेन्द्रादिश्रुत्या पूर्वपक्षस्य स चेन्द्रो राजेत्यादिना तत्र भाष्ये प्रदर्शनादिति भावः । अस्त्वन्यविषययोगरूढिभ्यामेवेन्द्रादिशब्दानामन्यपरत्वमित्यतो भगवद्विषयमहायोगविद्वद्रूढिभ्यामुक्तरीत्याऽन्यविषययोगरूढिबाधान्न तद्बलात्पुरन्दरादिप्राप्तिर्युज्यत इत्याह **तत्रेति** । उपपादितमानन्दमयाधिकरण इति शेषः ॥ **अधिकरणान्तरारम्भेति** । अन्तस्तद्धर्मोपदेशादित्याद्यधिकरणारम्भोपपत्तेरित्यर्थः ।

नन्वानन्दमयाधिकरणेन गतार्थत्वादन्तस्तद्धर्मोपदेशादित्याद्यधिकरणवैयर्थ्यशङ्काया एतावताऽपि न परिहारः । अभ्यधिकाशङ्काप्रदर्शनेनानन्तराधिकरणारम्भसमर्थनेऽपि तदुत्तराधिकरणारम्भासमर्थनादित्यतः 'चेष्टा हि'इत्यादिनोत्तराद्यधिकरणेष्वप्यधिकाशङ्कायाः प्रदर्शयिष्यमाणत्वान्न तद्वैयर्थ्यमपीत्याशयेन तावदित्युक्तम् । भाष्योक्तदिशाऽन्यविषययोगरूढ्याश्रयणेनैवेह पूर्वपक्षप्रवृत्त्या गतार्थताशङ्काप्रसङ्गाद्युक्तमधिकाशङ्कयाऽधिकरणारम्भसमर्थनं भाष्यकाराणामित्युक्तम् । तत्र कथमन्यविषययोगरूढ्याश्रयणेनेह पूर्वपक्षप्रवृत्तिर्येन गतार्थताशङ्काया अवकाश इत्यतस्तथा पूर्वपक्षं दर्शयितुं विपरीतयुक्त्यनुसन्धानात्मकस्य पूर्वपक्षस्य सन्दिग्धेऽर्थे न्यायः प्रवर्तत इति सन्देहसापेक्षत्वात्तस्य च धर्मिज्ञानसाध्यत्वेन विषयसंशययोरसत्त्वेऽप्रवृत्तेर्विषयसंशयौ तावद्दर्शयति **तैत्तिरीया इति** ॥ **अन्य इति तावत्प्राप्तमिति** । यद्यप्यत्राधिकरणे इन्द्रादिषु निर्धारित एक एवान्तस्थ इति, अनिर्धारितो यः कश्चिदिति, सर्वोऽपीति च पूर्वपक्षत्रयमपि

सम्भावितं चन्द्रिकोक्तरीत्योपपन्नं तथाऽपीह टीकायां न च स्वतन्त्रानवधिकैश्वर्यमनेकेषां विरुद्धमिति वाच्यम् । इन्द्रादीनां परमेश्वरात्मकत्वादित्याद्युत्तरग्रन्थानुसारात् । अनुव्याख्याने देवानां तत्र शक्तता-मित्यादिनाऽनेकेषां स्वतन्त्रानवधिकैश्वर्यसूचनेनेन्द्रादीनां परमेश्वराभेदस्यैव बोधनाच्चेन्द्रादिः सर्वोऽप्य-न्तःस्थ इति तृतीयपक्ष एवाभिमतो ॥ भाष्यटीकायां तु पक्षत्रयसाधारण्येनान्य इत्येव भाष्ये उक्तत्वेन तदनुसारात्तत्पक्षप्रापकपूर्वोत्तरटीकावाक्यानुसाराच्चोक्तपक्षत्रयमप्यभिमतम् । अत एवैतच्च पक्षत्रयमित्यादिना टीकाऽभिप्रेतमित्यन्तेन ग्रन्थेन चन्द्रिकायां टीकाद्वयस्येत्थमेव तात्पर्यमुपवर्णितम् । तत्राभेदपक्षस्य टीका-द्वयाभिमतत्वस्याद्यपक्षद्वयस्य टीकाभिप्रेतत्वस्य प्रतिपादनेनोक्तप्रकारस्यैव समर्पणादिति ध्येयम् । इन्द्रा-दिश्रुतिलिङ्गसद्भावेऽपि कुतोऽन्तःस्थत्वमिन्द्रादेरित्यतः पूर्वाधिकरणन्यायसाम्यादित्याह **अन्नं ब्रह्मेत्या-दिश्रुत्येति** । इन्द्रादिश्रुतिलिङ्गयोरिन्द्रादेरन्तःस्थत्वनिर्णयासाधकत्वे ब्रह्मश्रुतिलिङ्गयोरपि न ब्रह्म-त्वसाधकता स्यादिति भावः । नन्विन्द्रादिश्रुतिलिङ्गयोर्ब्रह्मश्रुतिलिङ्गयोश्च श्रुतिलिङ्गत्वाविशेषेऽपि युज्यते साधकत्वासाधकत्वव्यवस्था । इन्द्रादिश्रुतिलिङ्गयोः सावकाशत्वाद् ब्रह्मश्रुतिलिङ्गयोश्चोक्तरीत्या निरवका-शत्वात्कथमुक्तातिप्रसङ्ग इत्यत इन्द्रादिश्रुतेरपि निरवकाशत्वाविशेषात्साधकत्वमेवेत्याह **न चेति** । 'पदमज्ञातसन्दिग्धं प्रसिद्धेरपृथक् श्रुतिः । निर्णीयते निरूढं तु न स्वार्थादपनीयते इत्युक्तेरिति' भावः ।

नन्वेवमन्यविषयरूढ्याश्रयणेनैवेन्द्रादित्वसिद्धेः किमधिकाशङ्काप्रदर्शनं भाष्य इत्यतो गतार्थता-शङ्कामुत्थापयति **ननूक्तमत्रेति** । अल्पप्रवृत्तिनिमित्तत्वात्तत्सापेक्षत्वादित्यर्थः । अमुख्यतेत्यतः परं भगवति रूढेर्विद्वत्संबन्धित्वाद्योगस्य च निरवधिकापरतन्त्रप्रवृत्तिनिमित्तापेक्षत्वान्मुख्यतेति शेषः । ततश्चान्य-रूढेर्भगवद्रूढितो योगमात्रस्य महायोगाद्दुर्बलत्वादिन्द्रादिशब्दानामपि महायोगविद्वद्रूढिभ्यां विष्णुपरत्वा-न्नेन्द्रादिश्रुत्यादिनाऽन्यस्य प्राप्तिरिति व्यर्थमिदमधिकरणमिति भावः । तत्परिहारकतया भाष्योक्ता-मधिकाशङ्कां दर्शयति **सत्यमित्यादिना** ॥ **अन्नौषध्यादिपदार्थेष्विति** । अन्नौषध्यादिपदानामिति शेषः । अन्नौषध्यादिपदार्थेष्वित्यत्रैव तत्पदानामर्थेष्विति वा योजना द्रष्टव्या । न पुरन्दरादिषु इत्यतः परमिन्द्रियादिशब्दानामिति शेषः । तदित्यनुवर्तते ।

कुतो नेत्यतो महायोगस्य विद्वद्रूढेश्च तत्र सत्त्वादिति भावेन महायोगं तावदाह **तत्रेति** । ननु च खण्डाधिपतिष्वैश्वर्यादेरल्पतायाः परायत्ततायाश्च दृष्टत्वेनेन्द्रादिष्वप्यैश्वर्यादेरल्पतायाः पारतन्त्र्यस्य च सिद्धेः कथमिन्द्रादिशब्दप्रवृत्तिनिमित्तपरमैश्वर्यादेर्निरवधिकत्वापरायत्तत्वे इति कथं तत्र मुख्ययोगो अभिधीयत इत्यतस्तत्र प्रवृत्तिनिमित्तस्य परायत्तत्वाद्यनुमानस्य सोपाधिकत्वेनाभासत्वान्न तेन तत्सिद्धि-रित्याशयेन यत्र प्रवृत्तिनिमित्तमल्पं परायत्तं च तत्राशक्तत्वमित्यशक्तत्वोपाधेः साध्यव्यापकत्वमुपपादयति **अशक्तेष्विति** । न च खण्डाधीशत्वमेव तेषामसिद्धमिति वाच्यम् । 'खण्डाधीशाः सार्वभौमस्य यद्वद्ब्रह्मे-

शाया:' इत्याद्यागमादेव तत्सिद्धेः । प्रकृतोपाधेः साधनाव्यापकत्वं सूचयन्नेव व्यापकव्यावृत्त्या तद्व्याप्य-व्यावृत्तिसिद्धिं तत्फलं चाह **देवास्त्विति** । खण्डाधिपतिष्वपि तेष्वशक्तत्वाभावात्साधनाव्यापकत्वमिति भावः । कथमेवं भवेयुः पराधीना अल्पप्रवृत्तिनिमित्तवन्तो भवेयुरित्यर्थः । तत्प्रयोजकस्याशक्तत्वस्या-भावादत एव देवास्त्वप्रतिहतशक्तय इत्युक्तमिति भावः । ननु च खण्डाधिपतित्वेनैवोक्तोपाधेरपि पक्षे साधनान्न साधनाव्यापकत्वं नापि तद्व्यावृत्त्या साध्यव्यावृत्तिसाधनोपपत्तिरित्यतः पक्षे उक्तोपाधिसाधनस्य श्रुतिबाधितत्वान्नोक्तदोषद्वयमपीत्याशयेनाह **तथा च श्रुतिरिति** । नन्विन्द्रो वा इत्याद्युदाहृतश्रुत्येन्द्रस्य अप्रतिहतशक्तित्वसिद्धावपि त्वष्टृप्रजापत्यादीनां तदसिद्धेः कुतस्तेषामपराधीनानल्पप्रवृत्तिनिमित्तवत्त्वसिद्धिः येन तत्र तच्छब्दादीनां महायोगः सिद्ध्येदित्यत आह **एवंजातीयकेति** । त्वष्ट्रादिष्वप्यप्रतिहतशक्ति-बोधिका श्रुतिर्द्रष्टव्येत्यर्थः ।

स० — ॐ **अन्तस्तद्धर्मोपदेशात्** ॐ ॥ पूर्वाधिकरणसिद्धान्तन्यायविषयत्वमाशङ्क्य परिहरति **पदार्थान्तरविषयाविति** ॥ **यथोक्तं भाष्य इति** 'स चेन्द्रो राजा जगतो य ईशे' इत्या-दिभिरन्यः प्रतीयत इत्युक्तेरिति भावः ।

प० — ॐ **अन्तस्तद्धर्मोपदेशात्** ॐ ॥ **यथोक्तं भाष्य इति** । 'इन्द्रो राजेत्यादिभिरन्यः प्रतीयत' इति 'स च प्राणः प्रसिद्धेर्वायुरित्यापततीत्याद्युक्तेरि'ति भावः । इन्द्रत्वष्ट्रग्निसवितृबृहस्पति-प्रापकश्रुतीः क्रमेणाह **इन्द्रो राजेत्यादिना** । ब्रह्मेति प्रथमान्तं चतुर्मुखवाचि 'तपसान्वविन्दद्'-तिवाक्यशेषस्थक्रिययान्वेति । सप्ताश्वत्वैकचक्ररथलिङ्गे आह **सप्तेति** ॥ **इत्यादिश्रुत्येति** । अन्नमयादि प्रत्यायकान्नादिसमानाधिकरणब्रह्मश्रुत्येत्यर्थः । एतेन पूर्वसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेः पूर्वेणास्याऽऽप-वादिकी सङ्गतिरपि सूचिता । ननु तत्र श्रुतिलिङ्गान्येकं ब्रह्मैव निर्णाययन्ति । अत्र तु श्रुतिलिङ्गानि नानाकोटिप्रापकाणीति कथं निर्णयं कुर्युरिति चेन्न । ब्रह्मान्यत्वेन निर्णयकरणसंभवात् । अत एव प्रागुतान्य इतिसंशयकोटिरुक्ता । तेषामेकत्वस्य वक्ष्यमाणत्वाच्चेति ध्येयम् ॥ **तदन्नौषध्यादिपदार्थेषु स्यादिति** । एतच्च सर्वभूतभौतिकाचेतनस्वभावस्येशाधीनत्वादिव्युत्पादनं वक्ष्यमाणाकाशनये व्युत्पत्स्य-मानं हृदि कृत्वोक्तम् । न पूर्वनये सिद्धं कृत्वा । पूर्वत्राचेतनस्येशाधीनत्वासाधनादुत्तराधिकरणपूर्व-पक्षानुवादप्रसङ्गाच्च । तथैवाकाशनयचन्द्रिकोक्तेरिति ज्ञेयम् ।

या० — ॥ ॐ **अन्तस्तद्धर्मोपदेशात्** ॐ ॥ **यथोक्तं भाष्य इति** । स चेन्द्रो राजा सप्त युञ्जन्तीत्यादिभिरन्यः प्रतीयत इति तत्रोक्तेरिति भावः ॥ **अन्य इति** ॥ **तावत्प्राप्तमिति** । अत्र यद्यपीन्द्रादिषु निर्धारित एक एवेति न पूर्वपक्षः । अनेकप्रापकसद्भावे निर्धारणायोगात् । तथाऽप्य-निर्धारितो यः कश्चिदिति वा सर्वेऽपीति वा पूर्वपक्षः । अत एवात्रान्य इत्येकवचनम् । उत्तरत्र चान्ये-

षामित्यादिबहुवचनं श्लिष्टमिति ज्ञातव्यम् । न चाद्ये निर्धारणाभावे पूर्वपक्षस्य सन्देहादविशिष्टता । द्वितीये चान्यः प्रविष्टः शास्ता जनानामिति श्रवणेनानेकेश्वरापात इति वाच्यम् । अन्तस्थः परमात्माऽन्यो वेति सन्देहेऽन्य एवेत्येकावधारणेन प्रवृत्तस्य पूर्वपक्षस्य सन्देहाद्विशिष्टत्वात् । सोऽन्य इन्द्र एवेत्यावधारणं तु नास्ति । इन्द्रादिप्रापकानां बलाबलानिश्चयात् । द्वितीयपक्षोक्तदूषणं तु न च स्वतन्त्रानवधिकैश्वर्यादिकमन्येषां विरुद्धमित्याशङ्क्येन्द्रादीनां परमेश्वरात्मकत्वादित्यादिना पूर्वपक्षी स्वयमेव परिहरिष्यतीति नात्र काचिदनुपपत्तिः । चन्द्रिकायां तु । इन्द्रादिषु निर्धारित एक एवेत्यपि पूर्वपक्ष एतत्सुधायामभिप्रेततया वर्णितः । 'एतच्च पूर्वपक्षत्रयं सुधायामभिप्रेतमि'त्युक्तत्वात् । अनन्तराधिकरणसङ्गतिं सूचयितुमाह **अन्नं ब्रह्मेत्यादीति** । तथा चातीताधिकरणसिद्धान्तन्यायेनैतदधिकरणपूर्वपक्षोत्थानादनन्तरताऽस्येति भावः **तदन्नौषध्यादीति** । अनेन पूर्वाधिकरणवैषम्येन पूर्वपक्षोत्थानादप्यनन्तरसङ्गतिः सूचितेति ज्ञातव्यम् । त्वष्टृब्रह्मप्रजापत्यादिष्वपीदृशी श्रुतिरुन्नेयेत्याशयेनाह **एवंजातीयकेति** ।

च० — ॐ **अन्तस्तद्धर्मोपदेशात्** ॐ ॥ **अन्य इति तावत्प्राप्तमिति** । प्रकृताधिकरणशरीरघटकास्त्रयः पूर्वपक्षाः । इन्द्रादिघटितकूटघटकतावच्छेदकीभूतेन्द्रत्वाद्येकतरमात्रावच्छिन्नधर्मिकान्तस्थतादात्म्यावगाहिसमूहालम्बनानात्मकनिर्णयफलक आद्यः पूर्वपक्षस्तादृशेन्द्रत्वादावन्तस्थत्वनिरूपितधर्मितावच्छेदकतामनवगाहमानस्तादृशकूटघटकीभूता विष्णोरन्या काचन व्यक्तिरन्तस्थेत्येवमाकारको यो विष्ण्वन्योन्तस्थो न वेति संदेहनिवर्तको निश्चयस्तत्प्रयोजनको द्वितीयस्तादृशेन्द्रत्वसूर्यत्वादिनिखिलधर्मेषु तद्धर्मितावच्छेदकतामवगाहमानसमूहालम्बनरूपनिर्णयजनकस्तृतीयः । तदेतत्पूर्वपक्षत्रयंसुधायामत्र च पूर्वपक्षे इन्द्रादीनां विष्णवभेदस्याप्युक्तत्वात्, अत्र टीकायामिन्द्रादिः स्यादित्युक्तेन्द्राद्यन्यतमं इत्यप्युक्तत्वात् आनन्दमयाधिकरणे च हिरण्यगर्भरुद्राद्यनेकप्रापकयुक्ते पूर्वपक्षानाहेति बहुवचनप्रयोगाच्च टीकाऽभिप्रेतम् । भाष्ये च पक्षत्रये साधारण्येनान्यः प्रतीयत इत्युक्तमिति व्याचख्युः चन्द्रिकाकृतः । अत्र प्रकृतग्रन्थव्याकर्तारः दर्शिततृतीयपूर्वपक्ष एव । न च स्वतन्त्रानवधिकैश्वर्यादिकमनेकेषां विरुद्धमिति वाच्यमिन्द्रादीनां परमेश्वरात्मकत्वादित्युत्तरसौधग्रन्थमनुरुन्धानाः अनुव्याख्याने देवानां तत्र शक्ततामित्यादिना अनेकेषां स्वतन्त्रानवधिकैश्वर्यसूचनेनेन्द्रादीनां परमेश्वराभेदस्य बोधनात्तादृशानुव्याख्याध्वनितश्चेति स एव प्रकृतनयीयसुधाग्रन्थाभिप्रेतः । भाष्यटीकायां तु पक्षत्रयसाधारण्येनान्य इत्येव भाष्ये उक्तत्वेन तदनुसाराचत्पक्षप्रापकपूर्वोत्तरटीकावाक्यानुसाराच्चोक्तपक्षत्रयमप्यभिमतम् । अत एवैतच्च पक्षत्रयमित्यादिना टीकाऽभिप्रेतत्वस्य प्रतिपादनेनोक्तप्रकारस्यैव समर्पणादिति ध्येयमिति सुधाश्रीमद्भाष्यटीकयोराशयं निरूढतात्पर्यकचन्द्रिकादिशा दुर्विभावं चन्द्रिकाऽऽशयविभावनया प्रकाशयन्ति । अत्र यद्यपीन्द्रादिषु निर्धारित एक एवेति न पूर्वपक्षः । अनेकप्रापकसद्भावे

निर्धारणायोगात् । तथाप्यनिर्धारितो यः कश्चिदिति वा सर्वेऽपीति वा पूर्वपक्षः । अत एवात्रान्य इत्येकवचनम् उत्तरत्र चान्येषामित्यादि बहुवचनं श्लिष्टमिति ज्ञातव्यम् । न चाद्ये निर्धारणाभावे पूर्वपक्षस्य संदेहादविशिष्टता द्वितीये चान्तः प्रविष्टः शास्ता जनानामिति श्रवणेनानेकेश्वरापात इति वाच्यम् । अन्तःस्थः परमात्मोतान्यो वेति संदेहे अन्य एवेत्येकावधारणेन प्रवृत्तस्य पूर्वपक्षस्य संदेहाद्विशिष्टत्वात् । सोऽन्य इन्द्र एवेत्यवधारणं तु नास्ति । इन्द्रादिप्रापकन्यायबलाबलानिश्चयात् । द्वितीयपक्षोक्तदूषणं तु न च स्वतन्त्रानवधिकैश्वर्यादिकमन्येषां विरुद्धमित्याशङ्क्येन्द्रादीनां परमेश्वरात्मकत्वादित्यादिना पूर्वपक्षी स्वयमेव परिहरिष्यतीति नात्र काचिदनुपपत्तिः । चन्द्रिकायां इन्द्रादिषु निर्धारित एक एवेत्यपि पूर्वपक्ष एतत्सुधाभिप्रेततया वर्णितः । एतच्च पूर्वपक्षत्रयं सुधायामभिप्रेतमित्युक्तत्वादित्यपि व्याचक्रिरे प्रकृताधिकरणे अनन्तराधिकरणनिरूपितां सङ्गतिं ध्वनयति **अन्नं ब्रह्मेत्यादीति** । अन्नमयादिप्रत्यायकान्नादिपदसमानविभक्तिकब्रह्मपदश्रुत्येत्यर्थः । तथाच 'पूर्वसिद्धान्ततो यत्र पूर्वपक्षः प्रवर्तते । तत्रापवादिकी प्रोक्ते'त्यभिधानादव्यवहितपूर्वनयसिद्धान्तन्यायेन पूर्वमतप्रवृत्त्या पूर्वनयनिरूपिता प्रकृतनयाधिकरणिका आपवादिकी सङ्गतिरिति ध्वन्यते । **तदन्नौषध्यादीति** । इदं च वर्तिष्यमाणाकाशनये सेत्स्यमाणं निखिलभूतभौतिकाचेतननिसर्गस्येशायत्तत्वमभिसंधायोक्तम् । एतेन प्राक्तननयवैलक्षण्येन पूर्ववादिमतप्रवर्तनादप्यनन्तरसङ्गतिर्ध्वन्यते । **न तु पुरन्दरादिष्विति** । इन्द्रादिशब्दानामिति पूरणीयम् । **सामन्तादिषु खण्डेशादिषु** ।

**अनु०**— तत्र रूढिं च तच्छब्दानामपि स्वयम् ॥

**सु०— रूढिरपि पुरन्दरादिष्विन्द्रादिशब्दाना'मिन्द्रस्य नु वीर्याणि प्रवोचमि'त्यादिमन्त्रेषु बहुलप्रयोगदर्शनेन विद्वत्संबन्धिनी मुख्यैव । तेषामतत्परत्वे तद्यजनादौ विनियोगानुपपत्तेः । न च स्वतन्त्रानवधिकैश्वर्यादिकमनेकेषां विरुद्धमिति वाच्यम् । इन्द्रादीनां परमेश्वरात्मकत्वात् । स एव हि कार्यवशात्तत्तदुपाधिभेदभिन्नस्तास्ताः संज्ञा लभते । कुत एतदिति चेत् । एतत्प्रकरणगतवाक्यशाबल्यान्यथाऽनुपपत्त्येति तावद्ब्रूमः । तथाहि । अदृश्येऽनात्म्य इत्यानन्दमयलक्षणत्वेनोक्तमदृश्यत्वमिह न विजानन्ति देवा इत्युच्यते । समानाधिकरणानि चेन्द्रादिश्रुतिलिङ्गानि । न चैकं वाक्यमनेकविषयं (सं)भवति व्याघातात् । यथोक्तम् । अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति । न चात्रैकोपादानेनापरपरित्यागे कारणमस्ति । तथा च पुराणवाक्यम् । 'अहं भवो भवन्तश्च सर्वं नारायणात्मकमि'त्यादि । अत एव भेदव्यपदेशस्तदितरविषयो व्याख्येयः । न चैवं सति विनिगमने कारणाभावः । अनुपहितधर्माणामुपहिते संभवाद्वैपरीत्यस्यासंभवात् । तस्मादिन्द्रादय एवान्तःप्रविष्टत्वेन प्रतिपाद्यन्त इति ।**

**एवं देवानामिन्द्रादीनां तत्र स्वतन्त्रानवधिकेन्द्रादिशब्दप्रवृत्तिनिमित्तवत्तायां शक्तता ।** ततश्चेन्द्रादिशब्दानां तत्र महायोगवृत्तिमिति शेषः । तथा तच्छब्दानामिन्द्रादिशब्दानां तत्र पुरन्दरादि(षु)देवेषु स्वयमपि साक्षादपि विद्वत्संबन्धिनीमपीति यावत् । रूढिं चाभ्यधिकामाशङ्क्य ।

शे० — एवं महायोगमुपपाद्य विद्वद्रूढिमप्याह **रूढिरपीति** । रूढिरपि मुख्येति संबन्धः । रूढित्वाविशेषात्कुतस्तस्या मुख्यत्वमित्यतो विद्वत्सम्बन्धित्वेन तस्या विद्वद्रूढित्वान्मुख्यत्वमिति भावेन हेतुगर्भं विशेषणमुक्तं विद्वत्संबन्धिनीति । कथं तस्या विद्वत्संबन्धित्वमित्यत उक्तमिन्द्रस्येत्यादि । पुरन्दरादिष्विन्द्रादिशब्दानामित्येवपाठः । क्वचित्पुरन्दरादिशब्दानामिति पाठः । तत्राप्युक्त एवार्थोऽनुसन्धेयः । नन्विन्द्रस्य नु वीर्याणीत्यादिमन्त्राणां पुरन्दरादिपरत्वासिद्ध्या तत्तन्मन्त्रगतेन्द्रादिशब्दानामपि तत्परत्वाभावान्न तत्र तेषां प्रयोगबाहुल्यमिति कथं विद्वद्रूढिसिद्धिरित्यत आह **तेषामिति** ॥ **अनेकेषां विरुद्धमिति** । तथ सत्यनेकेश्वरप्रसक्तेरिति भावः ॥ **परमेश्वरात्मकत्वादिति** । तथा च नानेकेश्वरप्रसक्तिरितिभावः । कथमविलक्षणस्य भगवतो विचित्रानेकशब्दवाच्यत्वमित्यत आह **स एव चेति** । स परमेश्वर एवेत्यर्थः ॥ **तास्ता इति** । इन्द्रबृहस्पत्यादिसंज्ञा इत्यर्थः । इन्द्रादीनां परमेश्वरात्मत्वसिद्धावनेकेश्वरवादानापत्ता वपि प्रकृते मानाभावेन तस्यैवासिद्धेस्तत्प्रसङ्गो दुर्वार इत्याशङ्कते **कुत एतदिति चेदिति** । उदाहरिष्यमाणपुराणापेक्षया तावदित्युक्तम् । अन्यथाऽनुपपत्तिमेव दर्शयति **तथा हीत्यादि** । अन्तःस्थस्य विष्णुत्वप्रापकमुदाहरति **अदृश्य इत्यादिना** ॥ **न विजानन्ति देवा इत्युच्यत इति** । यद्यप्यत्र देवाज्ञेयत्वमुच्यते न स्वानन्दमयलक्षणत्वेनोक्तमदृश्यत्वं तथाऽपि देवाज्ञेयत्वात्कैमुत्यन्यायेनादृश्यत्वमेव सिद्ध्यतीत्यभिप्रेत्यैवमुक्तमिति मन्तव्यम् । अन्तस्थस्येन्द्रादित्वप्रापकमुदाहरति **समानेति** । अदृश्यत्वेन सहेति शेषः । ननु तथाऽपि नेन्द्रादीनां परमात्मत्वसिद्धिः । अन्तःप्रविष्टमिति वाक्यस्येन्द्रादिश्रुतिलिङ्गबलादिन्द्रादिविषयत्वस्यादृश्यत्वलक्षणबलाच्च विष्णुविषयत्वस्य च संभवादित्यत आह **न चैकं वाक्यमिति** ॥ **व्याघातादिति** । एकवाक्यत्वोक्त्यैकविषयत्वस्यैव लाभादनेकविषयकत्वमेकवाक्यत्वं च विरुद्धमिति भावः ।

कुत एकवाक्यत्वोक्त्यैकविषयकत्वस्य लाभो येनानेकविषयस्य तद्व्याघात इत्यतस्तत्र नियामकमाह **यथोक्तमिति** । जैमिनिना भावार्थपाद इति शेषः ॥ तद्वाक्यमुदाहरति **अर्थैकत्वादिति** । यावद्धि पदजातमविभागे एकार्थं विभागे च साकाङ्क्षं तावदेकं वाक्यमिति सूत्रार्थः । अत्रार्थशब्दस्याभिधेयवाचित्वे, पदस्य जातिवाचित्वादेकार्थ्येऽपि प्रकृतिप्रत्यययोः केवलयोरप्रयोगान्न विभागे साकाङ्क्षत्वं, यस्य तु पदसमुदायस्य विभज्यमानस्य साकाङ्क्षत्वं तस्याविभागे नैकार्थ्यं प्रतिपदमर्थभेदात् अतः समुचितलक्षणस्य

काप्यभावादसंभववारणायार्थशब्दः प्रयोजनवाची द्रष्टव्यः । अत्र च विभागे साकांक्षमित्येतावति कृते 'स्योनन्ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान' इत्यनयोर्भिन्नवाक्यत्वेन संमतयोर्मन्त्रयोरतिव्याप्तिः स्यात् । तस्मिन्निति पदसमूहस्य विभागे सति प्रकृतवाचितच्छब्दार्थनिर्णयाय पूर्वपदसमूहाकांक्षासत्त्वात्तन्निवृत्त्यर्थमेकप्रयोजनमित्युक्तम् । सत्यपि विभागे साकांक्षत्वे प्रयोजनभेदाद्वाक्यभेदः । द्वे हि तत्र प्रयोजने । पूर्वस्य सदनकरणमुत्तरस्य पुरोडाशप्रतिष्ठापनमिति नातिव्याप्तिः । अविभागे एकार्थमित्युच्यमाने भगो वां विभजतु पूषा वां विभजत्वित्येतयोर्भिन्नमन्त्रत्वेन संमतयोर्मन्त्रयोरतिव्याप्तिः । तयोरपि तात्पर्यविषयस्य द्रव्यविभागरूपस्य प्रयोजनस्यैकत्वात्तन्निवृत्त्यर्थं विभागे साकांक्षत्वमित्युक्तम् । उदाहरणं तु 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी'ति । अत्र ह्यग्नये जुष्टमित्यादिपदसमूहे पृथक्कृते पूर्वो देवस्य त्वेत्यादिपदसमूहः साकाङ्क्षो भवति । एकीकृते तु कृत्स्नस्याप्येकनिर्वापप्रकाशकत्वमस्तीति युज्यते एकवाक्यत्वम् । न चात्र कथं निर्वापस्यैकस्यैव प्रकाशनं प्रयोजनं स्यात् । पदान्तरार्थानामपि प्रकाशनाविशेषात् । ततश्चैकप्रयोजनत्वरूपविशेषणाभावाल्लक्षणस्यासम्भव इति वाच्यम् । सकलसवित्रादिविशेषणविशिष्टैकप्रधाननिर्वापप्रकाशनस्यैकस्यैव प्रयोजनत्वेनासम्भवाभावात् । अन्यथा पदार्थान्तराणामपि प्राधान्याभ्युपगमे मन्त्रवाक्यस्य कर्मसमवेतार्थत्वाभावप्रसङ्गादिति । तथा चानेकविषयत्वेऽन्तःप्रविष्टवाक्यस्यैन्द्राद्यनेकप्रकाशकतयाऽनेकप्रयोजनकत्वप्रसङ्गेनैकप्रयोजनकत्वघटितैकवाक्यत्वव्याघात एवेति भावः । ननु च तथाऽपि नेन्द्रादीनां परमेश्वरात्मकत्वकल्पनाऽऽवश्यकी । इन्द्रश्रुत्या सवित्रादिश्रुतीनां विष्णुलिङ्गस्यादृश्यत्वस्य च बाधया तत्स्थ इन्द्र एवेति निर्णयस्य कर्तुं शक्यत्वादेवं सवित्रादिष्वपि द्रष्टव्यम् । अथवा विष्णुलिङ्गेनेन्द्रादिश्रुतिबाधयाऽन्तःप्रविष्टवाक्यस्य विष्णुमात्रपरत्वोपपत्तेर्नाभेदकल्पकं किञ्चिदित्यत आह **न चात्रैकोपादानेनेति** । विष्णुलिङ्गानां निरवकाशत्वेनेन्द्रादिश्रुत्यादिभिरबाध्यत्वादिन्द्रादिश्रुतीनां च श्रुतित्वादेव लिङ्गाबाध्यत्वान्नोक्तप्रकारेणान्यतरोपादानेनान्यतरपरित्यागो युक्त इत्युभयानुग्रहार्थमिन्द्रादीनां परमेश्वरात्मत्वमेव कल्पनीयमिति भावः । एवं वाक्यशाबल्यान्यथाऽनुपपत्त्येन्द्रादीनां परमेश्वराभेदं प्रसाध्य पुराणेनापि तं साधयति **तथा चेति** । पुराणवाक्यमित्युपलक्षणम् । स ब्रह्म स शिवः स हरिरिति श्रुतिवाक्यमित्यपि द्रष्टव्यम् । नन्विन्द्रादीनां परमेश्वराभेदाभ्युपगतौ स यश्चायं पुरुषे यश्चासावादित्य इति भेदोपदेशविरोध इत्यत आह **अत एवेति** । वाक्यशाबल्यान्यथाऽनुपपत्त्यादिप्रमाणैरिन्द्रादीनां परमेश्वराभेदस्य सिद्धत्वादेवेत्यर्थः । भेदव्यपदेशः पूर्वाधिकरणोदाहृतः स यश्चायमित्यादिः ॥ **तदितरविषय इति** । इन्द्राद्यतिरिक्तजीवविषय इत्यर्थः । नन्वेवमिन्द्रादिरन्य

एवान्तःस्थो न परमात्मेति कथमवधारणं विनिगमनायां कारणाभावेन परमात्मैवान्तःस्थो न त्विन्द्रादि-रित्यपि वक्तुं शक्यत्वादिति भावेन शङ्कते **न चैवमिति** । यथा हि सत्यप्यभेदे महाकाशधर्म एवावच्छिन्नाकाशे व्यवह्रियते यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय इति न तु परिच्छिन्नधर्मो वितस्तिमात्रत्वं महाकाशे तथा सत्यपीन्द्रादीनां परमात्मनश्चाभेदेऽनुपहितधर्माणामदृश्यत्वादीनामेवोपहितेन्द्रादौ व्यवहारो न तूपहितेन्द्रादिधर्मोऽनुपहिते परमात्मनीति युक्तमवधारणमिति भावः । अधिकाशङ्कया पूर्वपक्षमुपसंहरति **तस्मादिति** । उपपादितस्याभ्यधिकाशङ्काप्रकारस्य मूलारूढतासिद्ध्यै शेषपूरणादिना मूलं योजयति **एवमित्यादिना** ।

स०— **समानाधिकरणानीति** ॥ अदृश्यत्वेन समानं एकं अन्तस्थं अधिकरणं येषां तानि तथोक्तानीत्यर्थः । ननु अन्तःप्रविष्टमितिवाक्यस्य चन्द्राद्यनेकविषयत्वं ईश्वरविषयत्वं चास्त्वित्यत आह **न चैकमिति** ॥ **व्याघातादिति** । एकविषयत्वस्यैवैकवाक्यत्वरूपत्वेन एकवाक्यत्वमङ्गीकृत्य विषय भेदाङ्गीकारे व्याघात इत्यर्थः । व्याघातमुपपादयितुं एकवाक्यत्वं मीमांसकसंमत्या दर्शयति **यथोक्तम-र्थैकत्वादेकं वाक्यमिति** ॥ अत्रार्थैक्यमात्रे उक्ते, 'भगो वां विभजतु पूषा वां विभजतु' इत्येतयोर-प्येकवाक्यता स्यात् अत उक्तं **विभागे साकाङ्क्षमिति** ॥ तावन्मात्रे कृते 'स्योनन्ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि ते तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान' इति मन्त्र योरेकवाक्यत्वं-स्यात् तस्मिन्नित्यस्य पूर्वसाकाङ्क्षत्वात् । अत उक्तम् **अर्थैकत्वादिति** । तथा चार्थैक्ये सति विभागे साकांक्ष-त्वमेकवाक्यत्वमिति पर्यवस्यति ॥ इदं च निर्वापविषयवाक्येऽव्याहतमिति भावः । नन्वस्मिन्वाक्ये परमा-त्मन एव प्रतिपादनं नान्येषामित्याशङ्क्याह **न चात्रेति** ॥ **अत एवेति** ॥ ऐक्यस्य प्रमाणसिद्ध-त्वादेवेत्यर्थः। भेदव्यपदेशः पूर्वाधिकरणोदाहृतः । 'स यश्चायं पुरुष' इत्यादिरिति शेषः । तदित-रविषयः इन्द्राद्यतिरिक्तजीवविषय इत्यर्थः न चैक्यस्य सिद्धत्वे इन्द्रादिरन्य एव न परमात्मेति निर्धारणा नुपपत्तिरित्याशङ्क्याह **न चैवं सतीति** ।

प०— **इत्युच्यत इति** । देवा अपि न जानन्ति किम्वन्य इति कैमुत्येनादृश्यत्वप्रतीतेरिति भावः ॥ **व्याघातादिति** । ननु कथं व्याघातः । यद्येकं वाक्यमित्यस्य एकविषयकमित्यर्थः स्यात्तदा व्याघातः । तदेव कुत इत्यतो द्वितीयाध्यायाद्यपादीयजैमिनिसूत्रं संवादयति **यथोक्तमिति** । अर्थस्य प्रतिपाद्यस्यैकत्वादेकं वाक्यम् । यावद्भिः शब्दैरेकोर्थः प्रतिपाद्यते तावान् शब्दसमूहः एकवाक्यं न केव-लमर्थैक्यं एकवाक्यतायां तन्त्रम् । किन्तु विभागे कस्यचिच्छब्दस्यापगमे सति साकाङ्क्षं चेत्प्रयुज्यमान-शब्दजातं तदात्मकं वाक्यमिति । यथा घटोऽस्तीति वाक्यपदजातं एकवाक्यं एकार्थबोधकत्वात् । अनयोः-पदयोरेकस्य विभागे साकाङ्क्षत्वाच्च । एकार्थत्वमेकवाक्यत्वमित्युक्ते घटोऽस्ति घटोऽस्तीत्यनयोरेकवाक्यत्वा-

पातः ! अतो विभागे साकाङ्क्षमित्युक्तम् । तावत्येवोक्ते 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'त्यनयोरेकवाक्यतापत्तिः । पूर्ववाक्यस्यापि विभागे तमित्यस्य साकाङ्क्षत्वादिति ज्ञेयम् । भाष्यकारादयस्तु अर्थस्य प्रयोजनस्यैकत्वादित्यर्थः । भगो वां विभजतु । पूषावांविभजत्वित्यनयोर्विभागरूपैकप्रयोजकत्वात्तत्रातिव्याप्तिनिरासाय साकाङ्क्षंचेद्विभागे स्यादित्युक्तम् । तावत्युक्ते 'स्योनन्ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमाने'ति मन्त्रे पूर्वदलस्य विभागे तस्मिन्नित्यस्य साकाङ्क्षत्वात्पूर्वोत्तरदलयोरेकवाक्यताऽऽपत्तिः । अतोऽर्थैकत्वादित्युक्तम् । तयोर्वाक्ययोः सदनकरणासादनरूपभिन्नप्रयोजनत्वान्नातिव्याप्तिरिति व्याचक्षते । अहमिति ब्रह्मवाक्यम् । नन्वेवं पूर्वनये भेदव्यपदेशाच्चेति सूत्रे देवादेरीश्वरेणोक्तभेदविरोध इत्यत आह **अत एवेति** । अभेदस्य प्रमितत्वादेव देवेतरविषयभेदव्यपदेशो व्याख्येय इत्यर्थः । एतेन पूर्वत्र जीवमात्राभेदशङ्का निरस्ता । अत्र तु जीवविशेषदेवाभेदशङ्का निरस्यत इति गत्यन्तरमपि सूचितम् ॥ **विनिगमन इति** । अन्तः प्रविष्टः इन्द्रादिरेवेत्यत्र विनिगमन इत्यर्थः । मूलं योजयति इत्येवं **देवानामित्यादिना** ।

**या०**— व्याघातमुपपादयितुं मीमांसकोक्तमेकवाक्यत्वं दर्शयति **यथोक्तमर्थैकत्वादिति** । दर्शपूर्णमासयोराम्नायते । 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी'ति । अयं मन्त्रः किमेकवाक्यमुत भिन्नं वेति संशये एतानि वाक्यानि भिन्नानि भवितुमर्हन्ति । कुतः एकनियामकस्य दुर्बोधत्वात् । अर्थैक्यं वाक्यैक्ये प्रयोजकमिति चेन्न । एकस्मिन्पदेऽतिव्याप्तेः । पदसमूहस्य वाक्यत्वे समूहानामत्र बहूनां संभवात् वाक्यभेद इति प्राप्तेऽभिधीयते । यद्विभागे साकाङ्क्षमविभागे चैकार्थं तदेकवाक्यमिति प्रयोजकस्य बोद्धुं शक्यत्वान्नैकत्वे नियामकं दुर्बोधम् । अत्र विभागे साकाङ्क्षमित्येवोक्तेऽतिव्याप्तिः स्यात् । 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान' इत्यत्र तस्मिन्नित्यादिपदसमूहस्य विभागे सति प्रकृतवाचितच्छब्दार्थनिर्णयाय पूर्वपदे समूहसाकाङ्क्षत्वमस्ति । अतस्तद्व्यवच्छेत्तुमेकार्थमित्युच्यते । न हि तत्रैकार्थत्वमस्ति । पूर्वसमूहस्य सदनकरणमर्थः । उत्तरसमूहस्य पुरोडाशप्रतिष्ठापनम् । स्योनं समीचीनम् । सुशेवं सुष्ठु वन्दितुं योग्यम् । मेध सारभूतपुरोडाशेत्यर्थः । अत्र द्वयोः समूहयोर्वाक्यद्वयत्वमुभयवादिसिद्धम् । तदेतदेकार्थमित्यनेन व्यावर्त्यते । एकार्थमित्येवोक्तेऽतिव्याप्तिः । भगो वां विभजतु पूषा वां विभजतु इत्यनयोर्भिन्नमन्त्रत्वेन सम्मतयोः पदसमूहयोस्तात्पर्यविषयस्य द्रव्यविभागरूपस्यार्थैक्यात् । तद्व्यवच्छेत्तुं विभागे साकाङ्क्षमित्युक्तम् । प्रकृते त्वग्नये जुष्टमित्यादिपदसमूहे पृथक्कृते पूर्वो देवस्य त्वेति समूहः साकाङ्क्षो भवति । एकीकृते तु कृत्स्नस्यैक एव निर्वापोऽर्थः । एवमेव वाक्यत्वनिर्णये तेनानियतपरिमाणस्य यजुषोऽवसानं निश्चेतुं शक्यमिति द्वितीयाध्यायस्य प्रथमपादे

उक्तमित्यर्थः । एवं चार्थैक्यगर्भमेकवाक्यत्वमनेकविषयत्वे व्याहतं भवतीति भावः ॥ **अत एव भेदेति** । पूर्वाधिकरणोदाहृत इत्यर्थः ॥ **अनुपहितधर्माणामिति** । अदृश्यत्वादीनामित्यर्थः ।

श्री०— ॐ **अन्तस्तद्धर्मोपदेशात्** ॥ ॐ ॥ **तद्यजनादाविति** । इन्द्रादिदेवताकयज्ञादौ तेषां मन्त्राणां विनियोगो न स्यादित्यर्थः । इह अन्तः प्रविष्टं कर्तारमिति वाक्ये ॥ **न विजानन्तीति** । नन्वनेन सामान्यतोऽज्ञेयत्वमुच्यते । अदृश्य इति चाक्षुषज्ञानाविषयत्वमतोऽदृश्यत्वं न विजानन्तीत्यनेन कथमुच्यत इति चेत् । पश्यार्थैश्चानालोचन इति ज्ञानमात्रेऽपि दृशेः प्रयोगाददृश्यत्वमप्यज्ञेयत्वमेवेति न दोष इति ध्येयम् । इति वाक्येनान्तस्थस्योच्यत इत्यर्थः । तथाऽपि किं प्रकृत इत्यत आह **समानाधिकरणानि चेति** । इन्द्रादिशब्दा अदृश्ये प्रतीयन्त इत्यदृश्यत्वलिङ्गसमानाधिकरणानीत्यर्थः । अन्तस्थरूपैकधर्मिनिष्ठतया प्रतीयन्त इति यावत् । ननु लिङ्गादीनां सामानाधिकरण्यप्रतीतैक्योदाहरणे- नानेकेषामपीन्द्रादीनामत्र प्रतिपाद्यत्वं किं न स्यादित्यत आह **न चैकमिति** । अन्तः प्रविष्टमिति वाक्यमित्यर्थः ॥ **एकोपादानेनेति** । एकस्य विष्णोरन्तस्थतयोपादानेनेत्यर्थः । नन्वेवं सवितारं बृहस्पतिं सप्त युञ्जन्तीति श्रुतिलिङ्गाभ्यामादित्यस्य ब्रह्माभेदेऽङ्गीक्रियमाणे यश्चासावादित्य इति पूर्वाधिकरणोदा- हृतभेदव्यपदेशविरोध इत्यत आह **अत एवेति** । वाक्यशाबल्यान्यथाऽनुपपत्त्या आदित्येन स्पष्टम भेदस्य सिद्धत्वादेवेत्यर्थः । तदितरविषय आदित्यदेवेतरजीवविषय इत्यर्थः । आदित्यपदेन तदितरे लक्षणीया इति भावः । **एवं सति** अभेदे सति । **विनिगमने** इन्द्रादिरेव वाच्य इति निर्बन्ध इत्यर्थः ॥ **अनुपहितेति** । अदृश्यत्वादीनामित्यर्थः । सत्यप्यभेदे महाकाशधर्म एव परिच्छिन्नाकाशे यावान्वा इत्यादि व्यवह्रियते न वैपरीत्यमिति दृष्टमेवमभेदेऽपीन्द्रादीनामेव वाच्यत्वाङ्गीकारे ब्रह्मधर्माः स्वतन्त्रा- नवधिकैश्वर्यादिरूपास्तत्र संभवन्ति न त्विन्द्रादिश्रुतिलिङ्गानि ब्रह्मणि संभवन्तीत्यस्ति विनिगमने कारण- मिति भावः ।

च०— व्याहतेः प्रतिपिपादयिषया मीमांसकाभिहितमेकवाक्यत्वं दर्शयति **यथोक्तमर्थैकत्वा- दिति** । भेदलक्षणे भावार्थचरणे जैमिनिनाऽभिहितमित्यर्थः । यावत्पदकदम्बमविभागे स्वघटकनिखिल- पदसमभिव्याहारविशिष्टत्वे एकार्थतात्पर्यविषयीभूतान्वयरूपैकार्थविषयकधीजनकम् । विभागे स्वघटक- यत्किञ्चित्पदसमभिव्याहाराभावे । साकाङ्क्षयत्किञ्चित्समभिव्याहाराभावनियन्त्रितान्वयबोधानुत्पादकताकं तावदेकवाक्यमिति सूत्रार्थः । अत्र व्याचक्षाणाः । अत्रार्थशब्दस्याभिधेयवाचित्वे पदस्य जातिवाचित्वा- दैकार्थ्येपि प्रकृतिप्रत्यययोरप्रयोगान्न विभागे साकाङ्क्षत्वं यस्य तु पदसमुदायस्य विभज्यमानस्य साकाङ्क्षत्वं तस्याविभागेनैकार्थ्यं प्रतिपादमर्थभेदात्समुचितलक्षणस्य क्वाप्यभावादसंभववारणायार्थशब्दः प्रयोजनवाची द्रष्टव्यः अत्र च विभागे साकाङ्क्षमित्येतावति कृते 'स्योनन्ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पया-

मिं ते । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहिणां मेध सुमनस्यमान इत्यनयोर्भिन्नवाक्यत्वेन संमतयोर्मन्त्रयोरति-व्याप्तिः स्यात् । तस्मिन्निति पदसमुदायस्य विभागे सति प्रकृतवाचितच्छब्दार्थनिर्णयाय पूर्वपदसमूहाकाङ्क्षासत्वात् । तन्निवृत्त्यर्थमेकप्रयोजनमित्युक्तम् । सत्यपि विभागे साकाङ्क्षत्वे प्रयोजनभेदाद्वाक्यभेदः । द्वे हि तत्र प्रयोजने । पूर्वस्य सदनकरणमुत्तरस्य पुरोडाशप्रतिष्ठापनमिति नातिव्याप्तिः अविभागे एकार्थमित्युच्यमाने भगो वां विभजतु पूषा वां विभजतु इत्येतयोर्भिन्नमन्त्रत्वेन समतयोर्मन्त्रयोरतिव्याप्तिस्तयोरपि तात्पर्यविषयस्य द्रव्यविभागरूपप्रयोजनस्यैकत्वात् तन्निवृत्त्यर्थं विभागे साकाङ्क्षमित्युक्तम् । उदाहरणं तु 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यामग्नये जुष्टं निर्वपामी'ति । अत्र ह्यग्नये जुष्टमित्यादिपदसमूहैः पृथक्कृते पूर्वो देवस्यत्वेत्यादिपदसमूहः साकांक्षो भवति । एकीकृते तु कृत्स्नस्याप्येकनिर्वापप्रकाशकत्वमस्तीति युज्यते एकवाक्यत्वम् । न चात्र कथं निर्वापस्यैकस्यैव प्रकाशनं प्रयोजनं स्यात् । पदान्तरार्थानामपि प्रकाशनाविशेषात् ततश्चैकप्रयोजनत्वरूपविशेषणाभावाल्लक्षणस्यासंभव इति वाच्यम् । सकलसवित्र दिविशेषणविशिष्टैकप्रधाननिर्वापप्रकाशनस्यैव प्रयोजनत्वेनासंभवाभावात् । अन्यथा पदार्थान्तराणामपि प्राधान्याभ्युपगमे मन्त्रवाक्यस्य कर्मसमवेतार्थत्वाभावप्रसंगादिति । तथा चानेकविषयत्वेन्तःप्रविष्टवाक्यस्येन्द्राद्यनेकप्रकाशकतयाऽनेकप्रयोजनकत्वप्रसङ्गेनैकप्रयोजनकत्वघटितैकवाक्यत्वव्याघात एवेति भाव इति व्याचक्षते । एकार्थकत्वमेकवाक्यमित्युक्ते घटोस्ति घटोस्तीत्यनयोः प्रत्येकमेकवाक्यत्वापत्तिः । अतो विभागे साकांक्षमित्युक्तम् । तावत्येवोक्तौ अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेत्यनयोरेकवाक्यत्वापत्तिः पूर्ववाक्यस्य विभागे तमित्यस्य साकांक्षत्वादिति ज्ञेयमित्यपि निबंधान्तरे विन्यस्तम् । **अनुपहितधर्माणामिति** । अदृश्यत्वादीनामित्यर्थः ।

अनु० — समुद्रान्तःस्थितत्वाद्यैस्तद्धर्मैर्विष्णुरूढनाम् ॥
साधयित्वा

सु० — **स्वयं सूत्रकारोऽन्तस्तद्धर्मोपदेशादिति सूत्रेणान्तःप्रविष्टो विष्णुरेव । समुद्रेऽन्तः कवयः । यस्याण्डकोशँ शुष्ममाहुः । ब्रह्मा तपसाऽन्वविन्ददिति समुद्रान्तःस्थितत्वब्रह्माण्डवीर्यत्वब्रह्मतपोलभ्यत्वादिधर्मोपदेशात् । तेषां च विष्णुधर्मत्वेन श्रुतिस्मृतिसिद्धत्वात् । न चेन्द्रादिश्रुतिलिङ्गविरोधः । निरवकाशलिङ्गबलेन तद्बाधोपपत्तेः । न च तेषामपि निरवकाशत्वम् । इन्द्रं मित्रं वरुणमग्निमाहुरित्यादिना तेषां भगवति विद्वद्रूढिसद्भावस्य सिद्धत्वात् । महायोगस्य च सुप्रसिद्धत्वात् । इन्द्रादिगतस्य परमैश्वर्यादेरल्पता परमेश्वराधीनता च श्रुतिपुराणादिप्रसिद्धा । शक्तेरप्यस्मदाद्यपेक्षयाऽऽधिक्यमात्रमेव न तु निरर्गलत्वमपि । अन्यथाऽनेकेश्वरविरोधश्च । विद्वद्रूढिरपीश्वरसन्निधाननिमित्तैव । इत्येवं समुद्रान्तःस्थितत्वाद्यैर्विष्णुधर्मै-**

**रन्तःप्रविष्टत्वस्य विष्णुनिष्ठतां तथा तच्छब्दानामिन्द्रादिशब्दानामपि विष्णुरूढताम्। उपलक्षणमेतत्। तत्र यौगिकत्वं च साधयित्वा।**

**शे०**— ननु समुद्रान्तःस्थितत्वाद्यैरित्युत्तरभाष्यमनर्थकमेव। न चैतत्सूत्रतात्पर्यप्रदर्शकमित्युक्तमिति वाच्यम्। समुद्रान्तःस्थितत्वादीनां विष्णुरूढतां प्रति साधकतायाः सूत्रेऽनभिप्रेतत्वेन तदयोगात्। न चाभ्यधिकाशङ्कापरिहाराय रूढतासाधनमप्यभिमतमेव सूत्र इति वाच्यम्। समुद्रान्तःस्थितत्वादीनां विष्णुरूढतायाश्च साध्यसाधनभावस्यासामर्थ्यप्रतिहततया तैस्तत्साधनायोगात्। योग्यहेत्वन्तरकल्पने च समुद्रान्तःस्थितत्वाद्यैरित्यस्य वैयर्थ्यापत्तिः। विष्ण्वादिशब्दानां विष्णौ रूढत्वस्य सिद्धतया साध्यत्वानुपपत्तिः। तत्साधनस्याभ्यधिकाशङ्कापरिहारकत्वाभावाद्वैयर्थ्यं च। इन्द्रादिशब्दानां विष्णौ रूढत्वस्य साध्यत्वाभिप्राये च तथैव भाष्ये वक्तव्यतया विष्णुरूढतामित्येतावन्मात्रोक्त्यस्वारस्यम्। पुरन्दरादिषु महायोगविद्वद्रूढिभ्यां प्रवृत्तत्वेनेन्द्रादिशब्दानां विष्णौ रूढत्वमात्रसाधनस्याप्यभ्यधिकाशङ्कापरिहाराक्षमत्वेन तद्वैयर्थ्यं च। विद्वद्रूढिसाधनाभिप्रायेऽपि नाभ्यधिकाशङ्कापरिहारः। अन्यत्र महायोगविद्वद्रूढिभ्यां प्रवृत्ततया विष्णुनिष्ठविद्वद्रूढेरन्यनिष्ठविद्वद्रूढिमहायोगबाधाक्षमत्वात्तस्मादनर्थकमेतद्भाष्यमित्यतोऽत्र भाष्ये तद्धर्मैरित्यत्रान्तःप्रविष्टत्वस्य विष्णुनिष्ठतामिति साध्याध्याहारस्य विष्णुरूढतामित्यत्र पूर्ववाक्यात्तच्छब्दानामित्यनुवृत्ते रूढिसाधकप्रमाणाविशेषस्य योग्यतया लाभस्य रूढिशब्दस्य विद्वद्रूढिपरत्वस्य विष्णुरूढतामित्यस्य विष्णौ यौगिकत्वोपलक्षणत्वस्य चाऽऽश्रयणाद्युक्तोऽनेन भाष्येणाभ्यधिकाशङ्कापरिहार इति भावेन भाष्याभिप्रेतं तद्धर्मैरन्तःप्रविष्टत्वस्य विष्णुनिष्ठत्वसाधनं तावदुपपादयति **स्वयं सूत्रकार इति**। अनेन स्वयमित्येतन्न केवलं रूढेर्विद्वत्सम्बन्धित्वसमर्पकत्वात्पूर्ववाक्यशेषः किन्तु साधयित्वेत्युक्तसाधनक्रियाऽपेक्षितकर्तृसमर्पकत्वात्परिहारवाक्यशेष इति सूचितं भवति। समुद्रान्तःस्थितत्वाद्यैरित्यादिशब्दर्थविवरणपूर्वकं तद्धर्मोपदेशादिति सौत्रहेतोरसिद्धिं परिहरति **समुद्रेऽन्तः कवय इत्यादिना**। अस्तु धर्मोपदेशस्तथाऽप्युपदिष्टानां तद्धर्मत्वं कुतः। समुद्रान्तःस्थितत्वादेरन्यत्रापि सम्भवादित्यतः सूत्रभाष्ययोस्तद्धर्मपदप्रयोगसूचितमर्थमाह **तेषां चेति॥ श्रुतिस्मृतीति**। लोकोपलक्षणं चैतत्। अत एव चन्द्रिकायां लोके श्रुतौ स्मृतौ चेत्यादिना स्मृत्यादिसमकक्षतया लोकस्योपादानम्। तथा च श्रुतिस्मृतिलोकसिद्धत्वादित्यर्थः। श्रुत्यादिकं चैतदधिकरणभाष्योदाहृतं द्रष्टव्यम्।

ननु कथं स्वभावदुर्बलेन लिङ्गेन स्वभावप्रबलेन्द्रादिश्रुतिबाधयाऽन्तःस्थस्य विष्णुत्वनिर्णयः। अन्यथैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादावपि लिङ्गेन श्रुतिबाधसम्भवेनेन्द्रप्रकाशनसामर्थ्यरूपलिङ्गेन मन्त्रस्येन्द्रोपस्थानाङ्गत्वप्रसक्तेरित्यभिप्रेत्य शङ्कते **न चेन्द्रादिश्रुतिलिङ्गादिविरोध इति**। श्रुतेर्लिङ्गापेक्षया स्वभावप्रबलत्वेऽपि यत्र लिङ्गं निरवकाशं श्रुतिश्च सावकाशा तत्र 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलमि'ति

न्यायेन श्रुतेर्लिङ्गबाध्यत्वमेव । अन्यथा श्येनेनाभिचरन् यजेतेत्यत्र श्येनश्रुत्या वाक्यशेषोपात्तस्य श्येनसादृश्यस्य बाधापत्त्या श्येनशब्दस्य यागपरत्वाभावप्रसङ्गात्तद्वदिहापि लोके श्रुतौ स्मृतौ च विष्णुधर्मतया प्रसिद्धस्य समुद्रान्तःस्थितत्वादेरन्यगतत्वानुपपत्त्या निरवकाशत्वाद्युक्तं सावकाशेन्द्रादिश्रुतिबाधकत्वमित्याशयेन परिहरति **निरवकाशेति** । विषम उपन्यासः । उक्तन्यायेन सावकाशश्रुतेर्लिङ्गबाध्यत्वेऽपि न निरवकाशाया अपि । प्रत्युत निरवकाशत्वप्रयुक्तप्राबल्यापेक्षया स्वभावनिरवकाशत्वप्रयुक्तप्राबल्यस्य बलवत्त्वाल्लिङ्गबाधकत्वमेव । प्रकृते चेन्द्रादिश्रुतेः पुरन्दरादिषु महायोगविद्वद्रूढिभ्यां प्रवृत्ततया तत्रैव मुख्यत्वेन निरवकाशत्वान्न लिङ्गबाध्यता किन्तु तद्बाधकत्वमेवेत्याशयेन शङ्कते **न चेति** । स्यादेतदेवं यदीन्द्रादिश्रुत्यादेर्विष्णावमुख्यत्वं स्यात् । न चैतदस्ति । विद्वद्रूढिमहायोगाभ्यां प्रवृत्ततया तत्र मुख्यत्वादिति भावेनेन्द्रादिशब्दानां भगवति विद्वद्रूढिं तावदुपपादयति **इन्द्रं मित्रमित्यादि** । न चेन्द्रं मित्रमित्यादिवाक्यमिन्द्राद्यभेदपरं तत्कथमनेन विद्वद्रूढिसिद्धिरिति वाच्यम् । आहुरिति तत्तच्छब्दवाच्यतयैव स्पष्टमुक्तत्वेनाभेदपरत्वायोगात् । 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणी'ति वाक्यशेषे भेदस्यैवोक्त्या तद्विरोधापाताच्चेति ध्येयम् । भगवति मुख्यत्वसिद्धये महायोगमप्याह **महायोगस्येति** । इन्द्रादिशब्दप्रवृत्तिनिमित्तपरमैश्वर्यादेर्विष्णावनन्याधीनत्वनिरवधिकत्वाभ्यां मुख्यतः संभवात्तत्र शब्दानां महायोग इति भावः । एवमिन्द्रादिशब्दानां पुरन्दरादिषु मुख्यत्वेऽपि भगवत्यपि महायोगविद्वद्रूढिभ्यां प्रवृत्ततया मुख्यत्वान्न पुरन्दरादिषु निरवकाशत्वमित्युक्तम् । इदानीं तु महायोगविद्वद्रूढ्योः पुरन्दरादिष्वभावेन तत्रामुख्यत्वान्नेन्द्रादिश्रुतेः पुरन्दरादिषु मुख्यत्वमिति भावेन पुरन्दरादिषु महायोगाभावं तावदुपपादयति **इन्द्रादिगतस्येति** । अतो न तत्र तेषां महायोग इति वाक्यशेषः । **नन्वशक्तेषु** सामन्तादिष्वैश्वर्यादेरल्पत्वपारतन्त्र्ययोः सत्त्वेऽपि देवानामप्रतिहतशक्तित्वात्कथं तत्र प्रवृत्तिनिमित्तस्याल्पत्वादिकमित्यतो देवानामप्यप्रतिहतशक्तित्वासिद्धेर्युक्तमेव सामन्तादिष्विव देवेष्वपि प्रवृत्तिनिमित्ताल्पत्वादीति भावेन परोदाहृतश्रुतेस्तर्हि का गतिरित्यतोऽस्मदाद्यपेक्षया देवानामधिकशक्तिमत्त्वमेव तदर्थो न तु निर्गलितशक्तिमत्त्वमित्याह **शक्तेरपीति** । कुतोऽयं श्रुत्यर्थसङ्कोच इत्यतः श्रुतिपुराणबलादेवेत्याह **इत्यपीति** । श्रुतिपुराणप्रसिद्धमिति संबन्धः । न केवलं श्रुतिपुराणबलादेवार्थसङ्कोचः किन्त्वनेकेश्वरापत्तिरूपयुक्तिबलादपीत्याह **अन्यथेति** । न चाभेदाभ्युपगमान्नानेकेश्वरप्रसक्तिरिति वाच्यम् । तस्यानुपदमेव दूषयिष्यमाणत्वादित्यत्र तात्पर्यात् । एवं पुरन्दरादिष्विन्द्रादिशब्दानां महायोगाभावमुपपाद्य विद्वद्रूढ्यभावमाह **विद्वद्रूढिरिति** । विद्वत्संबन्धिबहुलप्रयोगस्येश्वरसन्निधाननिमित्ततयाऽन्यथासिद्धत्वान्न तेन तत्राखण्डशक्तिसिद्धिरिति भावः । उक्तस्याभ्यधिकाशङ्कापरिहारस्य भाष्यारूढतासिद्ध्यै **मूलमुक्तरीत्याऽपेक्षिताध्याहारादिना योजयति एवमित्यादिना साधयित्वेत्यन्तेन ग्रन्थेन** ।

प० — **श्रुतिस्मृतीति** । भाष्योक्तेति योज्यम् । मूलार्थमाह **इत्येवमित्यादिना** ।

य० — सुप्रसिद्धिमुपपादयति **इन्द्रादिगतस्येति ॥ अन्यथाऽनेकेश्वरेति** । अभेदश्चानुपदमेव निराकरिष्यत इति भावः ।

श्री० — मूलगतादिपदार्थमाह **ब्रह्माण्डवीर्यत्वेत्यादि ॥ तेषामपीति** । इन्द्रादिश्रुतिलिङ्गानामित्यर्थः ॥ **निरर्गलत्वं** अप्रतिबद्धत्वम् ॥ **इत्यपीति** । श्रुतिपुराणादिसिद्धमित्यर्थः । **अन्यथा निरर्गलत्वाङ्गीकारे** ।

च० — इन्द्रादिश्रुत्यादीनां विष्णौ विद्वद्रूढिमहायोगाभ्यां प्रवृत्त्या तन्नियंत्रितमुख्यताकत्वेनामुख्यताविरहात् न क्षतिरित्याशयेन भागवतीं विद्वद्रूढिं तावदुपपादयति **इन्द्रमित्यादि** । इन्द्रं मित्रमितिवाक्यं नानाकर्मविभक्तिसमभिव्याहृतबहुवचनरूपकर्तृलकारांतैनैकदन्तलंबोदरगजानना इत्यादाविव तत्तत्पदाभिधेयत्वप्रतिपादनात्सत्यार्थगर्भा भुवनस्येति वाक्यशेषे भेदकधर्मोक्त्या च नाभेदप्रतिपादकमिति तादृगेवास्त्विति शंका निर्दलैव । भगवति मुख्यतासिद्ध्यै महायोगमप्याह **महायोगस्येति** ।

अनु० — ऽभिदां तैश्च पुनरेव न्यवारयत् ॥ ७ ॥

**सु० — ननूक्तरीत्या देवानां परमेश्वरात्मकत्वेन समुद्रान्तःस्थितत्वादिकं (सर्वं) संभवतीत्येवं तैर्देवैरेवे(री)श्वरस्याभिदां च पुनराशङ्क्य भेदव्यपदेशाच्चान्य इति सूत्रेण, अन्यश्चासाविन्द्रादिदेवेभ्योऽन्तःप्रविष्टः । इन्द्रस्यात्मेत्यादिविशेषविषयभेदव्यपदेशादभेदे प्रमाणाभावाच्च । न च वाक्यशाबल्यम् । सर्वस्येश्वरपरताया उक्तत्वात् । पुराणस्येश्वरसन्निधानातिशयविषयत्वादित्येवं न्यवारयदित्यर्थः । अत्र पुनरित्याशङ्काऽऽवृत्तिमात्रमाचष्टे । तैरेवेत्यवधारयता प्रकारान्तरेण भेदसूत्रस्य पुनरुक्तता निरस्ता भवति । यद्यप्ययं लिङ्गात्मकः शब्दस्तथापीन्द्राद्यनेकनामसमन्वयलाभादत्र निर्णीत इत्यदोषः ।**

शे० — तथाऽप्यभिदां तैश्चेत्युत्तरवाक्यमनर्थकम् । पूर्वभाष्येणैवाधिकाशङ्कानिरासेनान्तःस्थस्य विष्णुत्वसमर्थनादित्यत उत्तरसूत्रनिवर्त्यशङ्काप्रदर्शनपूर्वकं तत्तात्पर्यप्रदर्शनार्थत्वादस्य न वैयर्थ्यमिति भावेन तन्निवर्त्यामाशङ्कामुत्थापयति **नन्विति** । ननु चेन्द्रादीनां परमेश्वरात्मकत्वमेव कुत इत्यतः प्रागुपपादितवाक्यशाबल्यान्यथाऽनुपपत्त्यादिकमेव तत्र मानमित्याह **उक्तरीत्येति** । प्रदर्शितामाशङ्कां मूलरूढां करोति **एवमिति** । पुनरेवेत्यत्रैवकारस्य यथास्थितान्वये प्रयोजनाभावात्तैरेवेत्यनेनान्वयमाह **तैर्देवैरिति** । अत्र चैवशब्दप्रयोजनमुत्तरत्राकर एव **स्फुटमित्यवधेयम्** । प्रतिसंबन्ध्यनुक्तावपीश्वरस्य योग्यतया प्रतिसंबन्धितयाऽन्वय इति भावेनाह **ईश्वरस्येति** । पुनर्न्यवारयदित्यन्वयोऽनुपपन्नः । इन्द्रा-

दिभिरीश्वरस्य पूर्वमभेदानिराकरणादिति भावेनानुक्तेनाशङ्क्येत्यनेनान्वयमाह **पुनराशङ्क्येति** । न्यवारयदित्यत्र पूर्वोदाहृतसूत्रेणेत्यभिप्राये उत्तरसूत्रवैयर्थ्यप्रसङ्गादाह **भेदेति** । सूत्रे चशब्दोऽभेदे प्रमाणाभावरूपहेतुसमुच्चयार्थ इत्याह **अभेद इति** ॥ **न चेति** । वाक्यशाबल्यमित्यत:परमभेदे प्रमाणमिति शेषः ॥ **सर्वस्येति** । इन्द्रादिश्रुतिलिङ्गादेरित्यर्थः ॥ **व्याख्यातत्वादिति** । तच्छब्दानां विष्णुरूढतां साधयित्वेत्येतद्व्याख्यानावसर इति शेषः । अस्तु तर्ह्यहं भवो भवन्तश्चेत्यादिपुराणं स ब्रह्मा स शिवः स हरिरित्यादिश्रुतिश्च तत्र मानमित्यत आह **पुराणस्येति** । उपलक्षणं चैतत् । श्रुतेरित्यपि द्रष्टव्यम् । ननु परात्मनेन्द्रादीनामभेद इति पूर्वस्मिन्नाधिकरणेऽनाशङ्कितत्वात्कथमिदां च तैः पुनराशङ्क्येत्युक्तमित्यत आह **अत्र पुनरितीति** । नात्राभेदाशङ्कापेक्षया पुन:शब्दः किन्तु शङ्काऽऽवृत्तिमात्रापेक्षयैव । शङ्काऽऽवृत्तिश्च तत्तत्सूत्रद्वयनिवर्त्यशङ्कासत्त्वाद्युक्तैवेत्यर्थः ॥ **प्रकारान्तरेणेति** । वाक्यान्तरद्योतकत्वादिति प्रागुक्तप्रकारापेक्षया विशेषविषयकत्वरूपप्रकारान्तरेणेत्यर्थः । तैरेवेत्यनेन विशेषविषयकत्वस्य सूचनादिति भावः ॥ **यद्यपीति** । तथा च तत्समन्वयप्रतिपादनं न पादसङ्गतमिति भावः ॥ **तथाऽपीति** । तथा च फलतः पादसङ्गतिरिति भावः । नामसमन्वयेन लिङ्गसमन्वयेऽप्यल्पाक्षरे सूत्रे एकलिङ्गसमन्वयोक्त्याऽनेकनामसमन्वयस्यार्थिकसिद्धेरेव सङ्गतत्वादनेकनामसमन्वयोक्त्या त्वेकलिङ्गसमन्वयस्यार्थिकसिद्धेरसङ्गतत्वादेकनामसमन्वयोक्त्या चोदाहरणवाक्यस्थसजातीयनामसमन्वयाक्षेपस्य विजातीयलिङ्गसमन्वयाक्षेपस्य गौरवापादकतया क्लिष्टत्वेनासङ्गतत्वात्सजातीयस्योपलक्षणत्वं विजातीयस्य त्वाक्षेप इत्यस्यापि वैरूप्येणासंभवाल्लिङ्गग्रहणमिति चन्द्रिकोक्तरीत्या समाधानमवधेयम् ।

स० — **अत्र पुनरिति** ॥ न तु परिहारस्यैकप्रकारत्वमित्यर्थः ॥ **प्रकारांतरेण भेदसूत्रस्येति** ॥ पूर्वं वाक्यांतरद्योतकत्वेन पुनरुक्तता परिहृता । अस्मिन् सूत्रे तु विशेषविषयत्वेनापि पुनरुक्ततापरिहारो ज्ञातव्य इति भावः ।

प० — **तैरेवेत्यवधारयतेति** । तच्छब्दस्यैवकारेणान्वयमुपेत्यायमनुवाद इति ज्ञेयम् ॥ **प्रकारान्तरेणेति** । वाक्यान्तरद्योतकत्वप्रकारापेक्षया जीवसामान्यजीवविशेषाभेदशङ्कानिरासकत्वरूपप्रकारान्तरेणेत्यर्थः । अस्य नयस्य द्वितीयपादे निवेशमाशङ्क्य निराह **यद्यपीति** ।

या० — ननु परमात्मनेन्द्रादीनामभेद इति पूर्वमनाशङ्कितत्वात्कथमिदां च पुनराशङ्क्येत्युक्तमित्यत आह **अत्र पुनरित्याशङ्केति** ॥ **प्रकारान्तरेणेति** । पूर्वोक्तवाक्यान्तरद्योतकत्वापेक्षया प्रकारान्तरेण विशेषविषयकत्वरूपेणेत्यर्थः । तैरेवेत्यनेन विशेषविषयकत्वस्य सूचनादिति भावः ।

सु० — केचिदेतत्सूत्रद्वय'मथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते य एषोऽन्तर क्षिणि पुरुषो दृश्यत' इति छान्दोग्योक्ताक्ष्यादित्यान्तस्थपुरुषस्येश्वरत्वसमर्थनपरत्वेन व्याचक्षते। तद्वा निराकर्तुमेवेत्युक्तम्। तथात्वे ह्यन्तर उपपत्तेरित्यस्यानारम्भप्रसङ्गः। य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचेत्येतद्वाक्यमधिकृत्य तत्प्रवृत्तमिति चेन्न। वाक्यभेदेनाधिकरणभेदे शास्त्रापर्यवसानप्रसङ्गात्। सन्ति च तत्राप्यमृतत्वादयो ब्रह्मधर्माः।

नन्वधिकाशङ्कया तदारम्भो भविष्यति। तथाहि। एष दृश्यत इति तावत्प्रत्यक्षेऽर्थे प्रयुज्यते। ब्रह्म तु परोक्षं न तथा निर्देशविषयो भवितुमर्हति। युज्यते चैतत्प्रतिबिम्बे। प्रथमावगतात्प्रत्यक्षाभिधानाच्छायापुरुषेऽधिगते तदुपरक्तायां बुद्धौ प्रतीयमाना अमृतत्वादयः स्तुत्या कथंचिद् व्याख्येया इति। तदिदं पुनरुक्तिभयसंभ्रान्तेन भाषितम्। यतो अत्रापि य एषोऽन्तरक्षिणि पुरुषो दृश्यत इति प्रत्यक्षाभिधानमस्ति। तदत्र यथा परमात्मनि सावकाशितं तथा तदपि भविष्यतीति का तत्राप्यधिकाशङ्का। तर्ह्यत्र परोदाहृतमेवास्तु विषयवाक्यम्। तत्रान्तःप्रविष्टमित्याद्यन्यद्भविष्यतीति चेन्न। स्थानादिभेदव्यपदेशादिना तत्र तस्यैवोदाहरणत्वप्रतिभासनात्।

तस्माद्वाक्यज्ञानदरिद्राणां व्याख्यानमुपेक्षणीयमिति ॥ १-१-७ ॥

शे० — केचिदिति। मायावादिन इत्यर्थः॥ व्याचक्षत इति। अयमत्र व्याख्यानप्रकारः। य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते एषोऽन्तरक्षिणि पुरुषो दृश्यत इत्यक्ष्यादित्ययोरन्तस्थः प्रतीयते। स तु विद्याकर्मातिशयलब्धैश्वर्यः कश्चित्संसारी न तु परमात्मा। हिरण्यश्मश्रुरित्यादौ रूपश्रवणात्। परमात्मनश्चारूपत्वेन श्रुतत्वादिति प्राप्ते परमात्मैव। आदित्यवाक्ये सर्वेभ्यः पाप्मभ्य उदित इति श्रुतस्य सर्वपापराहित्यस्याक्षिवाक्ये सैवक्र्तसामेत्यादौ श्रुतस्य सार्वात्म्यस्य च संसारिण्यसंभवाद्रूपादिकं तु नीरूपेऽपि सविशेषब्रह्मणि साधकानुग्रहार्थमैच्छिकमायामयमस्ति। यद्वा। सर्वस्य कार्यजातस्य ब्रह्मोपादानकत्वादुपादेयस्य चोपादानादनन्यत्वात्कार्यशरीरगतरूपादिभिर्ब्रह्म व्यपदिश्यत इति॥ एवेत्युक्तमिति। तथा चेत्यर्थ इत्यध्याहारेण न्यवारयदित्येवार्थ इति योजनेति भावः॥ अनारम्भप्रसङ्ग इति। अक्षिस्थस्य ब्रह्मताया अत्रैव सिद्धत्वादिति भावः। ननूद्गीथोपासनस्थमक्षिवाक्यमधिकृत्य प्रवृत्तेनानेन कथमुपकोसलविद्यास्थमक्षिवाक्यमधिकृत्य प्रवृत्तान्तराधिकरणस्य गतार्थतेत्याशङ्कते य एषोऽन्तरक्षिणीति॥ अपर्यवसानप्रसङ्गादिति। वाक्यानामानन्त्यादिति। ननूद्गीथोपासनस्याक्षिवाक्य इवोपकोसलविद्यास्याक्षिवाक्येऽपि निरवकाशब्रह्मधर्माणामश्रवणेन तद्धर्मोपदेशादित्यन्तर-

धिकरणन्यायाविषयत्वान्न तद्वाक्योक्तस्यानेन ब्रह्मत्वसिद्धिरिति तत्सिद्धये युक्त एव तदधिकरणारम्भ इत्यत आह **सन्ति चेति** । ब्रह्मधर्मा इत्युपलक्षणम् । ब्रह्मशब्दश्च तत्राधिक इत्यपि द्रष्टव्यम् ।

मांमत्युक्तमधिकाशङ्कयाऽधिकरणारम्भमनुवदति **नन्विति** । नन्वेष दृश्यत इत्यपरोक्षाभिधाना-च्छायापुरुषाधिगत्या बुद्धेस्तदुपरागेण यथाकथञ्चिद्व्याख्येयत्वं यथा ब्रह्मधर्माणामुच्यते तथाऽमृतत्वादि-ब्रह्मधर्माभिधानाद्ब्रह्माधिगत्या बुद्धेस्तदुपरक्तत्वादेष दृश्यत इत्यपरोक्षाभिधानस्यैवान्यथाव्याख्यानं किं न स्यान्नियामकाभावादित्यत उक्तं प्रथमावगतादिति । उपक्रमप्राबल्यादपरोक्षाभिधानानुसारेण ब्रह्मधर्मा एवान्यथाव्याख्येया अन्यथोपक्रमाधिकरणविरोधः स्यादिति भावः । **स्तुत्या कथञ्चिद्योज्या इति** । छायापुरुषस्यामृतत्वं कतिपयक्षणावस्थानात्, अभयत्वमचेतनत्वात्, पुरुषत्वं पुरुषाकारत्वात, आत्मत्वं कनीनि-काया आपनाद्, ब्रह्मरूपत्वमुक्तरूपामृतत्वादियोगादिति कथञ्चिद्व्याख्येया इत्यर्थः ॥ **तदत्रेति** । एष दृश्यत इति प्रसिद्धतदभिधानस्य ब्रह्मणि सावकाशत्वावर्णने तस्यैव बाधकत्वेनोक्तरूपाक्षिवाक्यस्थस्य ब्रह्म-त्वरूपैतदधिकरणसिद्धान्तासिद्धिप्रसङ्गादवश्यं तस्य ब्रह्मणि सावकाशत्वं वाच्यम् । तथा चैतदधि-करणोक्तरीत्योपकोसलविद्यास्थस्यापि प्रत्यक्षाभिधानस्य सावकाशत्वान्न छायापुरुषाधिगतिसाधनत्वमिति भावः ॥ **यथा सावकाशितमिति** । ऐच्छिकमायामयरूपवत्त्वाद् ब्रह्मणोऽपि प्रत्यक्षत्वमिति सावकाशित-मित्यर्थः । तथा च परेषां भाष्यम् । यस्मात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थं 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारदे'ति स्मरणादिति ।

नन्वत्राधिकरणे परोदाहृतविषयवाक्यानाश्रयणेन विषयवाक्यान्तराश्रयणे भाष्यकाराणां न तावत्प-रोदाहृतस्य विषयत्वासम्भवो हेतुः । स्वकीयविषयवाक्य इव परोदाहृतेऽपि तत्र समवेतव्यस्यान्तःस्थ-त्वस्य हेतूकृतस्य तद्धर्मोपदेशस्य च स्पष्टत्वेन तस्याप्येतदधिकरणविषयत्वयोग्यत्वात् । अन्यथा तदभावादेव विषयवाक्यत्वाभावव्युत्पादनसम्भवेनाधिकरणान्तरानारम्भपर्यन्तधावनानर्थक्यात् । नापि तथात्वेऽधिकरणा-न्तरानारम्भप्रसङ्गो हेतुः । उक्तरूपविद्याद्वयस्थविषयवाक्यभेदेनाधिकरणरचनाया एकेनैव समानन्याय-तया वाक्यद्वयस्यापि ब्रह्मपरत्वनिर्णयादधिकरणान्तरानारम्भप्रसक्तावप्यक्षिवाक्यद्वयस्याप्येतदधिकरणनिर्णेय-त्वमङ्गीकृत्य वाक्यान्तरनिर्णयार्थमधिकरणान्तरप्रवृत्त्यङ्गीकारे तदसम्भवात् । यदि चोत्तरत्र वाक्यान्तरा-श्रयणेऽपि समानन्यायतया तस्यापि ब्रह्मपरत्वसिद्धेरधिकरणान्तरवैयर्थ्यमेवेति मन्यसे तर्ह्यन्तःप्रविष्टवाक्य-स्यात्र विषयवाक्यत्वाश्रयणेऽप्येतत्समानन्यायतयाऽक्षिवाक्यस्यापि ब्रह्मपरत्वसिद्धयोत्तराधिकरणानारम्भ-स्तुल्यः । अन्तःप्रविष्टवाक्यस्य ब्रह्मपरत्वन्यायेनाक्षिवाक्यस्य ब्रह्मपरत्वेऽप्यधिकाशङ्कया तदधिकरणारम्भ इति यदि तर्ह्यक्षिवाक्यस्य ब्रह्मपरत्वन्यायेनान्तःप्रविष्टवाक्यस्य ब्रह्मपरत्वेऽप्यधिकाशङ्कयाऽधिकरणान्तरा-रम्भ इति तुल्यमेव । न चोक्तरीत्या स्वपरोदाहृतवाक्ययोरविशेषेऽप्यत्रस्वोदाहृतमेव विषयवाक्यं

न तु परोदाहृतमक्षिवाक्यं तत्तु तत्रैव न तु तत्रान्तःप्रविष्ट वाक्यमित्यत्र विशेषनियामकमस्तीत्याशयवानाशङ्कते **तर्हीति** । समानन्यायतया तद्धर्मोपदेशादित्यनेनैव वाक्यद्वयस्य ब्रह्मपरत्वसिद्ध्या तद्वाक्यमधिकृत्याधिकरणद्वयप्रवृत्तावुत्तरस्यानारम्भप्रसङ्गो यदीत्यर्थः ॥ **अत्रेति** । अन्तरित्यत्रेत्यर्थः ॥ **परोदाहृतमेवेति** । उद्गीथोपासनस्थमक्षिवाक्यमित्यर्थः ॥ **अस्त्विति** । तथा च विषयवाक्यान्तराश्रयणमनर्थकमिति शेषः । तत्रान्तःप्रविष्टवाक्यं न विषयवाक्यं किन्त्वक्षिवाक्यमात्रमेवेत्यत्र विशेषहेत्वभावादिति भावः । अस्त्युक्तव्यवस्थायां नियामकमिति समाधत्ते **स्थानादीति** । आदिपदेन **सुखविशिष्टाभिधानादेः** परामर्शः ॥ **तत्रेति** । अन्तराधिकरण इत्यर्थः ॥ **तस्यैवेति** । परोदाहृताक्षिवाक्यस्यैवेत्यर्थः । अन्तःप्रविष्टवाक्ये स्थानादिव्यपदेशाभावान्न तत्र तस्य विषयवाक्यत्वं किन्त्वक्षिवाक्यस्यैवेति निर्णयादत्रापि तस्य विषयवाक्यतायामन्यतरस्य वैयर्थ्यप्रसङ्गाद्युक्तं परोदाहृतविषयवाक्यपरित्यागेन विषयवाक्यान्तराश्रयणमत्र भाष्यकाराणामित्याशयः ॥ १-१-७ ॥

स०— ननु 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचे'तिवाक्यमन्तराधिकरण एव विचार्य नत्वन्तस्थाधिकरणे तद्वाक्ये ब्रह्मधर्माणां अश्रवणात् इत्यत आह **संति चेति** ॥ अष्टमाध्यायस्थेऽपि य एषोऽन्तरक्षिणीतिवाक्य इत्यर्थः । ननु अमृतत्वादिति ब्रह्मधर्मेण एष इत्यपरोक्षनिर्देशेनैव अमृतत्वादीनामन्यथात्वमुक्तं प्रथमावगतत्वात् । एवं चाक्षिस्थस्य न ब्रह्मत्वमिति युक्ताऽभ्यधिकाशंकेति भावः ।

प०— **केचिदिति** । मायावादिनो रामानुजीयाश्चेत्यर्थः । प्रथमाध्यायगतवाक्यविचारोऽत्र चतुर्थाध्यायगतवाक्यविचारस्तत्रातो न पौनरुक्त्यमिति शङ्कते **य एष इति** । ननु तत्र ब्रह्मधर्माश्रवणान्नानेन गतार्थं तदित्यत आह **तत्रापीति** । य एष इति वाक्येऽपीत्यर्थः । विवृतमेतत्पौनरुक्त्यमधिकाशङ्कानिरासश्चान्तरनयचन्द्रिकायाम् ॥ १ । १ । ७ ॥ छ ॥

या०— **एवेत्युक्तमिति** । तथा चेत्यर्थ इत्यध्याहारेण न्यवारयदित्येवार्थ इति योजनेति भावः ॥ **एतद्वाक्यमधिकृत्येति** । अष्टमाध्यायस्थमेतद्वाक्यमित्यर्थः ॥ **स्तुत्या कथञ्चिदिति** । अमृतत्वं कतिपयक्षणावस्थानात् । अभयत्वमचेतनत्वात् । पुरुषत्वं पुरुषाकारत्वात् । आत्मत्वं कनीनिकाया आपनात् । ब्रह्मरूपत्वमुक्तरूपामृतत्वादियोगादिति कथञ्चिद्व्याख्येया इत्यर्थः ॥ **सावकाशितमिति** । मायया परानुग्रहाय कायनिर्माणेन परमात्मनोऽपि रूपवत्वात्प्रत्यक्षाभिधानं तस्मिन्नुपपन्नम् । माया ह्येषा परामृष्टा यन्मां पश्यसि नारदेति स्मरणात् । इति सावकाशितमित्यर्थः ॥ १-१-७ ॥ छ ॥

श्री०— **छान्दोग्योक्तेति** । छान्दोग्ये चतुर्थप्रपाठकोक्तेत्यर्थः । एवमपि य एषोऽन्तरक्षिणीत्यष्टमाध्यायस्थवाक्यार्थस्याप्यत्रैव निर्णयसंभवेनान्तर उपपत्तेरित्यस्यानारम्भ एव । नन्वष्टमाध्यायस्थवाक्ये

तद्धर्मोपदेशाभावात्कथमनेनाधिकरणेन तन्निर्णय इति चेत्तत्राह **सन्ति चेति** । इति होवाचेत्यनन्तरमेतदमृतमभयमेतद्ब्रह्मेत्युत्तरत्र । तत्र तस्मिन्नष्टमाध्यायस्थेऽपि वाक्ये । ब्रह्मधर्माः सन्तीत्यर्थः । तथा चान्तरधिकरणेनैव गतार्थत्वादन्तराधिकरणस्य वैयर्थ्यमिति भावः । तदारम्भोऽन्तरधिकरणारम्भः । अन्तरधिकरणविषयभूते य एषोऽन्तरक्षिणीति चतुर्थप्रपाठकस्थवाक्येऽधिकाशङ्कामेव दर्शयति **तथा हीति** । तथानिर्देशः प्रत्यक्षनिर्देशः । एतत् प्रत्यक्षनिर्देशविषयत्वम् । प्रतिबिम्बे छायापुरुषे प्रत्यक्षनिर्देशसंभवेऽपि वाक्यशेषोक्तामृतत्वादिधर्माः कथं युज्यन्त इत्यत आह **प्रथमेति** । एतदमृतमित्यादिवाक्यापेक्षया प्रथमेत्यर्थः । उपरक्तायां सत्याम् । पश्चाद्वाक्यशेषे प्रतीयमानाः । ततश्चोपक्रमस्यासञ्जातविरोधित्वेन प्रबलत्वात्तद्विरोधेनोपसंहारस्था धर्माः छायापुरुषस्तुतिपरतया व्याख्येया इत्यर्थः । तदिदमधिकाशङ्काप्रदर्शनम् **अत्रापीति** । चतुर्थप्रपाठकस्थवाक्य इवात्राप्यन्तरधिकरणविषयीभूतेऽष्टमप्रपाठकस्थेऽपि वाक्ये । **तत्** प्रत्यक्षाभिधानम् । **अत्र** अन्तराधिकरणे ॥ **तदपीति** । चतुर्थप्रपाठकवाक्यस्थं प्रत्यक्षाभिधानमपि परमात्मनि सावकाशं भविष्यतीत्यर्थः । तत्र अन्तरधिकरणनिर्णीतचतुर्थप्रपाठकवाक्ये ॥ **तर्हीति** । अधिकाशङ्कयाऽन्तरधिकरणस्याप्रवृत्तौ । अत्र अन्तरधिकरणे परोदाहृतं चतुर्थप्रपाठकस्थं य एषोऽन्तरक्षिणीति वाक्यद्वयम् ॥ **तत्रेति** । अन्तरधिकरण इत्यर्थः । तथा चात्राधिकरणे भवद्भिरुद्न्हियमाणमन्तः प्रविष्टमिति वाक्यमन्तरधिकरणे विचार्यं भविष्यतीत्यर्थः । तत्र अन्तरधिकरणे । तस्यैव अन्तरधिकरणे परोदाहृतस्य एष इति वाक्यस्यैवेत्यर्थः ॥ छ ॥ १-१-७ ॥ छ ॥

**च० — एतद्वाक्यमधिकृत्येति** । अष्टमाध्यायस्थमेतद्वाक्यमित्यर्थः । **स्तुत्या कथंचिदिति** । कतिपयक्षणावस्थितेरमृतत्वमचैतन्यादभयत्वं पुमाकारत्वात्पुरुषत्वमित्यादिदिशा व्याख्येयमित्यर्थः । **सावकाशितमिति** । 'मायां ह्येषा परा सृष्टा यन्मां पश्यसि नारदे'ति स्मृतेः परानुग्रहार्थं मायया कया च निर्मित्यापरमात्मनोपि रूपवत्वात्प्रत्यक्षाभिधानं तस्मिन् सावकाशितमित्यर्थः ।

॥ इति अन्तःस्थत्वाधिकरणम् ॥

सु० — ॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ **एवमधिदैवविषयशब्दसमन्वयमभिधायाधुना अधिभूतविषयशब्दसमन्वयं प्रतिपिपादयिषुराकाशस्य भूतेषु प्राधान्यात्तच्छब्दसमन्वयं हरावाह सूत्रकारः** आकाशस्तल्लिङ्गादिति ।

ब्र॰ सू॰ — **॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥**

**छन्दोगाः पठन्ति । अस्य लोकस्य का गतिरित्याकाश इति होवाच । सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्त इति । तत्र संशयः । किमयमाकाशः परमात्मोत भूतमिति । भूतमिति तावत्प्राप्तम् । कुतः । आकाशशब्दस्य योगरूढिभ्यां भूते प्रसिद्धत्वात् । आकाशनमवकाशत्वं खल्वाकाशशब्दनिर्वचनलब्धम् । तच्च भूते सुप्रसिद्धम् । प्रयोगश्च लोकवेदयोराकाशशब्दस्य भूतविषयो बहुलः । ननु च सर्वाणि ह वेत्याद्युक्तलिङ्गबलात्परमात्मा किं न स्यात् । लिङ्गाच्छ्रुतेर्बलवत्त्वादिति ब्रूमः । न च बहुत्वेन लिङ्गानां प्राबल्यम् । तथाऽपि साम्येनानिर्णयात् । न च साम्यमपि । यथाऽऽहुः । 'द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः । तयोः स्वभावो बलवानुपजीव्यादिकश्च सः' इति । कृत्रिमाकृत्रिमयोरकृत्रिमं हि ज्यायः । अतः प्रथमावगतस्वभावबलवच्छ्रुत्यनुरोधेन लिङ्गानि कथञ्चिद्योजयानीति । नन्वन्तस्तद्धर्मोपदेशादित्यनेनैव परिहृतमेतत् । इन्द्रादिशब्दवदाकाशशब्दस्यापि भूतेऽमुख्यया वृत्त्या प्रवृत्तस्य महायोगविद्वद्रूढिभ्यामीश्वरवाचिनस्तद्बुद्ध्याधायकत्वमेव हि न्याय्यम् । सुतरां च निरवकाशलिङ्गबलादिति । न च काचिदभ्यधिका शङ्काऽस्तीत्यतोऽनारम्भणीयमिदं सूत्रमिति ।**

शे० — ॐ **आकाशस्तल्लिङ्गात्** ॐ ॥ समन्वेतव्यशब्दावच्छेदकोपाधिकथनपूर्वकमधिकरणद्वयस्य पौर्वापर्ये नियामकं च सूचयन्नेवैतदधिकरणप्रतिपाद्यमाह **एवमिति** । अत्र सौत्र आकाशशब्दः सजातीयशब्दोपलक्षणपर इत्याशयेनाधिभूतेत्याद्युक्तम् । नन्वेवमधिभूतगताशेषशब्दसमन्वयपरत्वे सूत्रस्य, कुतः सूत्रे आकाशस्यैव मुखतः सङ्कीर्तनमन्येषां तूपलक्षणमित्यत उक्तं **प्राधान्यादिति** । अभ्यधिकाशङ्कयाऽधिकरणारम्भसमर्थनार्थत्वान्न चेष्टा हीत्याद्युत्तरभाष्यवैयर्थ्यमिति भावेन तत्प्रयोजकीभूतगतार्थताशङ्कामुत्थापयितुं विषयाद्यप्रदर्शने तस्या अनुत्थानाद्विषयसंशयपूर्वपक्षांस्तावद्दर्शयति **छन्दोगाः पठन्तीत्यादिना** । भूते आकाशशब्दस्य कथं योगरूढी इत्यतो योगं तावदुपपादयति **आकाशनमिति** । अस्तु योगस्तथाऽपि कुतस्तस्य तत्र रूढिरित्यतो रूढिज्ञापकलौकिकवैदिकबहुलप्रयोगसद्भावादित्याह **प्रयोगश्चेति** ॥ **अनिर्णयादिति** । परमात्मैवाकाश इति निर्णयानुपपत्तेरित्यर्थः । तर्हि साम्येनैव तवापि भूतमिति

निर्णयो न स्यादित्यत आह **न च साम्यमपीति** । अङ्गीकृत्य साम्यं सिद्धान्तिनं प्रत्यनिर्णय उक्तः । वस्तुतस्तु साम्यस्यैवाभावाद्युक्तो भूतमेवाकाश इति मम निर्णय इत्याशयः । बहुत्वप्रयुक्तप्राबल्यापेक्षया स्वभावप्रयुक्तप्राबल्यस्य बलवत्त्वमेव कुत इत्यत्र मूलभूतं न्यायमुदाहरति **कृत्रिमेति** ॥ **लिङ्गानीति** । सर्वभूतकारणत्वादीनीत्यर्थः ॥ **कथञ्चिद्योज्यानीति** । परतोऽपि वरीयस्त्वपूर्वादित्युत्तरवाक्यव्याख्यानावसरे तथा हीत्यनुपदमेवोपपादयिष्यमाणप्रकारेणेत्यर्थः । एवं गतार्थताशङ्कोपयुक्तं विषयादिकमभिधायेदानीं तामुपपादयति **नन्विति** । ननु च तत्रान्तःप्रविष्टं कर्तारमेतमिति विषयवाक्यमत्र चाकाश इति होवाचेति विषयवाक्यमिति कथं पुनरुक्तत्वमित्यतो न विषयवाक्यभेदेनैवाधिकरणभेदोऽतिप्रसङ्गात् । किन्तु न्यायभेदेनापि । न च न्यायभेदः प्रकृतेऽस्तीत्याशयेनाह **इन्द्रादिशब्दवदिति** । नन्वध्यात्मगैरित्यानन्दमयाधिकरणोक्तरीत्येन्द्रादिशब्दानामपि पुरन्दरादिषु मुख्यया वृत्त्या प्रवृत्तानामपि महायोगविद्वद्रूढिभ्यामीश्वरवाचित्वेन तद्बुद्ध्याधायकतयेन्द्रादिश्रुत्यवष्टम्भेन विपक्षायोगादनन्तरधिकरणमपि व्यर्थं स्यादित्यतस्तत्रोक्तरीत्या गतार्थताशङ्कापरिहारकाधिकाशङ्कासद्भावेन तदधिकरणारम्भोपपत्तावपि प्रकृते तदभावान्नाधिकरणारम्भः संभवतीत्याह **न काचिदिति** ।

**स०— ॐ आकाशस्तल्लिङ्गात् ॐ ॥ कृत्रिमाकृत्रिमयोरकृत्रिमं हि ज्याय इति** । स्वभावप्रयुक्तप्राबल्यमकृत्रिमम् । बहुत्वप्रयुक्तप्राबल्यं तु कृत्रिममित्यर्थः ।

**प०— ॐ आकाशस्तल्लिङ्गात् ॐ ॥ पठन्तीति** । प्रथमेऽध्याये ॥ **अस्य लोकस्येति** । पृथिवीलोकशब्देन पूर्वोक्तस्येत्यर्थः । योगरूढिभ्यामित्युक्तं क्रमेण व्यनक्ति **आकाशनमित्यादिना** । प्राणिसंचारानुकूलतया स्थितिराकाशनम् ॥ **लोकवेदयोरिति** । 'वियद्विष्णुपदं वापि पुंस्याकाशविहायसी' इत्यमरादौ लोके । 'आत्मन आकाशः संभूत' इत्यादौ वेद इत्यर्थः । न च साम्यमपीत्यनन्तरं स्वभावप्राबल्यस्य बलवत्त्वादिति योज्यम् । कुत इत्यत आह **यथाऽऽहुरिति** । तत्त्वनिर्णयादावुदाहृतब्रह्मतर्कवाक्यकर्तार आहुरित्यर्थः ॥ **कृत्रिमेति** । बहुत्वकृतप्राबल्यं कृत्रिमं स्वभावप्राबल्यमकृत्रिममिति तदेवोत्पत्तिविशिष्टत्वाज्ज्याय इत्यर्थः ।

**या०— ॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ कृत्रिमाकृत्रिमयोरिति** । आगन्तुकस्वाभाविकयोः । स्वाभाविकं ज्याय इत्यर्थः । बहुत्वं त्वितरसापेक्षमागन्तुकमिति भावः ।

**श्री०— ॥ ॐ आकाशस्तल्लिङ्गात् ॥ ॐ ॥ साम्येनेति** । लिङ्गानां बहुत्वेन, आकाशश्रुतेश्च स्वभावतः प्राबल्यमिति प्राबल्यसाम्येनेत्यर्थः । **प्रथमावगतेति** । आकाश इति होवाचेति प्रथमवाक्येन प्रथमावगतेत्यर्थः ।

च० — ॐ आकाशस्तल्लिङ्गात् ॐ ॥ योगरूढिभ्यामित्येतत्क्रमेण व्यनक्ति आकाशन-मिति । 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽधिगन्तव्या बह्वर्था धातवो मताः' इत्य-भियुक्तोक्त्या आङुपसृष्टदीप्त्यर्थकाशतेः प्राणिसञ्चारानुकूलस्थितिरूपाकाशनार्थतां तत्प्रकृतिकघञश्च भावसाधनतामाश्रित्य महायोगं तावदुपपादयति आकाशमिति । कृत्रिमाकृत्रिमयोरिति । आगन्तुक-नैसर्गिकयोर्नैसर्गिकं ज्याय इति भावः ।

सु० — तत्राभ्यधिकां शङ्कां दर्शयति चेष्टा हीति ।

अनु० — ॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥

चेष्टा हि चेतनानां या सा भवेत्तत्प्रसादतः ॥

अचेतनस्वभावस्तु विवरादिः कथं ततः ॥

इति शङ्कानिवृत्त्यर्थम्

युक्तमिन्द्रादिशब्दानां पुरन्दरादिष्वमुख्यत्वम् । निरवधिकस्य प्रवृत्तिनिमित्तस्यैश्वर्या-देरसंभवात् । अल्पस्यापि परमेश्वरायत्तत्वात् । युक्तं च स्वतन्त्रानवधिकैश्वर्यादिमति परमेश्वरे मुख्यत्वम् । न चैवमाकाशशब्दप्रवृत्तिनिमित्तमवकाशत्वं भूते निरवधिकं न संभवति । क्वचित्क-दाचिदप्यभावाभावात् । नापीश्वरायत्तम् । ऐश्वर्यं हि वर्षणशासनपालनादिरूपा चेतनसंबन्धिनी चेष्टा । सा चागन्तुकज्ञानेच्छादिकारणव्यपेक्षत्वात्स्वयमागन्तुकत्वाच्च कारणद्वारा स्वरूपतश्च परमेश्वरप्रसादाऽऽयत्तेति युज्यते । आकाशाऽऽदिशब्दप्रवृत्तिनिमित्तं तु विवरत्वादिकं न तावदा-गन्तुकज्ञानादिकारणद्वारा परमेश्वरायत्तम् । अचेतनाश्रितत्वात् । नापि स्वरूपतः । स्वभावत्वा-दनागन्तुकत्वात् । न चाकाशशब्दस्येश्वरे योगः संभवति । तस्य मनागप्यवकाशत्वाभावात् । तस्मादाकाशशब्दं भूतमेवेत्यभ्यधिकाशङ्कानिवृत्त्यर्थं सूत्रितमिति शेषः । विवराऽदिरिति भाव-प्रधानो निर्देशः । आदिग्रहणेनावकाशग्रहणमुपलक्षणमिति सूचयति । ततः परमेश्वरात् । तदा-यत्त इति यावत् । कथमित्याक्षेपे ।

शे० — नन्वेतावता पूर्वाधिकरणसिद्धान्तन्यायवैषम्येणेह पूर्वपक्षोत्थानादधिकरणाऽऽरम्भो युज्यत इत्युक्तं भवति । न चैतत्संभवति । तथा सति भाष्ये इन्द्रादिशब्दापेक्षयाऽऽकाशादिशब्देषु वैषम्य-स्योपपादनीयत्वापातात् । न ह्यनेन भाष्येण तदुच्यते । भूते आकाशादिशब्दानां महायोगविद्वद्रूढ्यो-र्भगवति च तदुभयाभावस्य चाप्रतिपादनात्तत्कथं वैषम्येण पूर्वपक्षवृत्तिः । न च 'विवरादिः कथं ततः'

इत्येतदेव वैषम्याभिधायकमत्र विवरत्वादेर्भूतेऽनन्याधीनत्वस्य स्पष्टमभिधानादिति वाच्यम् । तथात्वे विवरत्वादित्येव वक्तव्यतया विवरादित्युक्त्यसामञ्जस्यात् । भावप्रधानत्वाश्रयणेन कथञ्चित्तत्सामञ्जस्येऽप्याकाशादिशब्दनिर्वचनलभ्यार्थस्यैवानन्याधीनताया भाष्ये वक्तव्यतया विवरत्वादेरन्यामधीनत्ववर्णनस्यासङ्गतिप्रसङ्गः । विवरत्वादेरेव तच्छब्दनिर्वचनलब्धावकाशत्वादिरूपत्वेन कथञ्चित्सङ्गतिलाभेऽपि न भूते महायोगसिद्धिः । निर्वचनलभ्यस्यार्थस्यानन्याधीनत्ववत्तत्र निरवधिकताया अपि महायोगोपपादकत्वेन भूते विवरत्वादेर्निरवधिकत्वस्यात्रानभिधानात् । विद्वद्रूढेरप्यत्रानुक्त्या भूते मुख्यत्वासिद्धाविन्द्रादिशब्दवैषम्यासिद्धिरेव । भूत इव भगवत्यपि महायोगविद्वद्रूढिभ्यां प्रवृत्तौ भूतमेवेति पूर्वपक्ष्यभिमतावधारणायोगेन तदुपपादकतया भगवति महायोगविद्वद्रूढ्यभावस्यावश्यवक्तव्यस्येहानुक्तेश्च । विवरादित्युक्तेरपेक्षिताशेषार्थसूचकत्वाभिप्रायेऽपि विवरादित्येतावतैव वैषम्यसूचनेन चेष्टा हीति कारिकापूर्वार्धस्याचेतनस्वभावस्त्वित्युत्तरार्धभाष्यखण्डस्य चानर्थक्यम् । न चानन्याधीनत्वे हेतुकथनपरत्वात्तत्सार्थक्यमिति वाच्यम् । चेतनस्वभाववदचेतनस्वभावस्यापीश्वराधीनत्वोपपत्त्याऽप्रयोजकत्वेन तत्र तस्य हेतुत्वायोगादन्याधीनत्वे स्वभावत्वहान्यापत्त्या स्वभावत्वमात्रस्यैव तत्र हेतुत्वेनाचेतनपदाऽऽनर्थक्यप्रसङ्गाच्च । अनेनैव न्यायेनैश्वर्यादेरपि भगवदधीनत्वाऽऽपत्त्येन्द्रादिशब्दापेक्षया वैषम्यासिद्धिप्रसङ्गाच्च । तस्मान्नाभ्यधिकाशङ्कासमर्पकत्वं भाष्यस्येति कथमभ्यधिकाशङ्कामाहेति भाष्यस्यावतरणमित्यतोऽपेक्षितार्थपूरणेन भाष्यस्य वैषम्योपपादकत्वमुपपादयितुं पूर्वाधिकरणसिद्धान्तं तावदनुवदति **युक्तमित्यादिना** ।

**असम्भवादिति** । पुरन्दरादिगतस्य परमैश्वर्यादेः सावधिकतायाः श्रुतिपुराणादिप्रसिद्धत्वादिति भावः ॥ **परमेश्वरायत्तत्वादिति** । तदायत्तत्वमपि श्रुतिपुराणादिप्रसिद्धमिति भावः । अनेनेन्द्रादिशब्दानां पुरन्दरादिषु महायोगाभाव उपपादितो भवति । उपलक्षणं चैतत् । विद्वद्रूढिरपीश्वरसन्निधाननिमित्तैवेति न तत्र तेषामखण्डशक्तिरित्यपि द्रष्टव्यम् । एवं पुरन्दरादिषु महायोगविद्वद्रूढ्यभावादिन्द्रादिशब्दानां तत्रामुख्यत्वमुपपाद्य भगवति मुख्यत्वमुपपादयति **युक्तं चेति** । स्वतन्त्र इत्यादिना भगवति महायोगोपपादनम् । उपलक्षणं चैतत् । इन्द्रं मित्रं वरुणमग्निमाहुरित्यादिश्रुत्यादेस्तेषां भगवति विद्वद्रूढिरपि सिद्धेति द्रष्टव्यम् ।

एवं पूर्वाधिकरणसिद्धान्तन्यायमुपन्यस्य तद्वैषम्येण पूर्वपक्षं दिदर्शयिषुराकाशादिशब्दानां भूते महायोगसिद्ध्यर्थं तच्छब्दनिर्वचनलब्धस्यार्थस्य निरवधिकत्वं तावदाह **न चैवमिति** । यद्यप्यवकाशत्वस्याव्याकृताकाशस्वभावतया न भूते निरवधिकत्वं संभवति । तथाऽपि 'अन्तरिक्षं वा सञ्चरन्ती'त्यादिश्रुत्या 'शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगं ।, भूतानां छिद्रदातृत्वमि'त्यादिस्मृत्या च प्राणिसञ्चरणाद्यनुकूलत्वरूपाकाशत्वस्य भूताकाशे सत्त्वसिद्ध्या तन्निरवधिकत्वोक्तेर्युक्तत्वात् । अत एव तत्र भूते

सुप्रसिद्धमिति प्रागुक्तमिति द्रष्टव्यम् ॥ **क्वचित्कदाचिदपीति** । एतच्च परमतरीत्या व्याकृत्य चिन्तय-वोक्तम् । स्वमते भूताकाशस्य देशतः, कालतश्च परिच्छिन्नत्वादिति द्रष्टव्यम् । एवमाकाशादिशब्द-निर्वचनलब्धस्यार्थस्य भूते निरवधिकत्वमुपपाद्य तस्यानन्याधीनत्वमप्याह **नापीति** । कुतो न भगवदाय-त्तत्वं विवरत्वादेरैश्वर्यादिवत्तदायत्तत्वस्यैव न्याय्यत्वात् । अन्यथैश्वर्यादेरप्यन्यानधीनत्वापत्त्या पुनरिन्द्रा-दिशब्दावैषम्यप्रसङ्गादित्यतोऽन्यानधीनत्वे हेतुं वक्तुं तस्यैश्वर्यादिधर्मवैलक्षण्यज्ञापनायैश्वर्यस्य स्वरूपं दर्शयन्नेव तत्पराऽयत्तताप्रतिपादनपरतया पूर्वार्धं व्याचष्टे **ऐश्वर्यं हीति** । तर्ह्याकाशादिशब्दप्रवृत्तिनिमि-त्तस्यागन्तुकज्ञानादिकरणद्वारा वा स्वरूपतो वा परमेश्वरायत्तत्वसंभवात्कथं नापीश्वरायत्तमिति प्रतिज्ञात-मनन्याधीनत्वमित्यतो**ऽचेतनस्वभाव** इत्यत्राचेतनाश्रितः स्वभावोऽचेतनस्वभाव इति मध्यमपदलोपिसमास-माश्रित्याचेतनाश्रितत्वस्वभावत्वरूपहेतुद्वयलाभाद्धेतुद्वयेन यथाक्रमं शङ्कितप्रकारद्वयनिराससिद्धिरित्या-शयवांस्तथाविकल्पमभिप्रेत्य तद्वाक्यतात्पर्यमाह **आकाशादिशब्दप्रवृत्तिनिमित्तं त्वित्यादिना** ॥ **अचेतनाश्रितत्वादिति** । न चाचेतनाश्रितत्वाद्विवरत्वादिकं प्रति ज्ञानादेरागन्तुककारणस्यासंभवेऽपि रूपादौ पाकादिरिवान्य एवात्रागन्तुको हेतुर्भविष्यतीति वाच्यम् । तादृशकारणविशेषस्य प्रमाणैरनु-पलम्भेनेन्द्रादिशब्दप्रवृत्तिनिमित्ते पालनादिरूपप्रयत्नात्मकैश्वर्ये ज्ञानादेरेव हेतुत्वदर्शनादत्रापि ज्ञानादिरेव हेतुर्वाच्यः । स चाचेतने नास्तीत्याशयात् । स्वस्य भावः स्वभाव इति यौगिकार्थत्वे स्वभावपदस्य परमेश्वरायत्ते पालनात्मकैश्वर्ये व्यभिचारप्रसङ्गाद्रूढिमाश्रित्य व्याचष्टे **अनागन्तुकत्वादिति** । यद्यप्यत्र भूते आकाशादिशब्दानां मुख्यत्वसिद्धये महायोग इव विद्वद्रूढिरप्यवश्यं व्युत्पाद्या तथाप्यधिकरणोपक्रमे रूढिज्ञापकतया लौकिकवैदिकबहुलप्रयोगस्योपन्यासेन तत एव तत्सिद्धेर्न पृथक् तदुपपादनं कृतमिति द्रष्टव्यम् ।

एवमाकाशादिपदानां महायोगविद्वद्रूढिव्युत्पादनेन भूते मुख्यत्वमुपपाद्येश्वरे तदुभयाभावं मनसि निधाय योगाभावमाह **न चेति** । आकाशादिशब्दनिर्वचनलब्धस्यावकाशत्वस्य ब्रह्मण्यसत्त्वेन योगस्यैवा-भावात्तस्य निरवधिकत्वानन्याधीनत्वाभ्यां महायोगो दूरनिरस्त इत्याशयः । यद्यप्यत्र 'आ=समन्तात्काशते' इति योगो ब्रह्मण्यपि संभवति । तस्य च निरवधिकत्वानन्याधीनत्वाभ्यां महायोगोऽप्युपपादयितुं शक्यते । तथाऽपि तस्याक्लृप्ततयाऽक्लृप्तयाऽऽकाशे रूढ्या बाधितत्वाभिप्रायेणायं ग्रन्थ इति द्रष्टव्यम् । योगो न संभवतीत्युपलक्षणम् । वैदिकप्रयोगबाहुल्यासिद्ध्या विद्वद्रूढिरप्यसिद्धेत्यपि द्रष्टव्यम् ॥ **तस्मादिति** । आकाशादिशब्दानां भूते महायोगविद्वद्रूढिभ्यां प्रवृत्तेर्भगवति च तदभावादित्यर्थः । 'इत्याशङ्कानिवृत्यर्थम्' इत्यस्य 'आकाश इति नाम च' इत्यनेनान्वयस्यायोग्यतया बाधितत्वादाकाङ्क्षितशेषं पूरयति **सूत्रितमिति शेष इति** । प्रवृत्तिनिमित्तस्यानन्याधीनताया मूलारूढतासिद्धये धर्मिवाचकपदस्य लक्षणया धर्मपरत्वं

द्रष्टव्यमित्याह **विवरादिरितीति** । सूत्रोपात्ताकाशशब्दानुसारेण विवरत्वमात्रस्यैव वक्तव्यत्वाद्विवरादिरित्यादिपदमनर्थकमित्यत: सूत्रे आकाशपदमाधिभौतिकसकलशब्दोपलक्षणमिति ज्ञापयितुमादिपदमित्याह **आदिग्रहणेनेति** । तथाच पृथिव्यादिशब्दप्रवृत्तिनिमित्तसंग्रहार्थमादिपदमित्यर्थ: । यद्यपि 'उपलक्षणत्वं शब्दानामानन्दमयपूर्विणामि'त्यादिना सूचितोऽयमर्थस्तथापि तस्यैव स्मारणार्थमादिपदमत्र गृहीतमिति हृदयम् ॥ **आक्षेप इति** । प्रश्नार्थत्वायोगादिति भाव: ।

स० — **स्वभावत्वादिति** । तथा च मूलस्थ'अचेतनस्वभाव'शब्दस्य भावप्रधाननिर्देशो हेतुगर्भत्वं चेत्युक्तं भवति । तद्व्याख्यान**मनागन्तुकत्वादिति** ॥ **आदिग्रहणेनेति** । विवरादिरित्यादिग्रहणेन सूत्रस्थाकाशशब्द उपलक्षणमिति सूचयतीत्यर्थ: ।

प० — 'युक्तमिन्द्रादी'त्यादिना पूर्ववैषम्येणात्र पूर्वपक्षप्रदर्शनेन पूर्वेणास्य प्रत्युदाहरणरूपानन्तरसङ्गतिरपि सूचिता । मूले विवरपदं भावप्रधानमित्युपेत्योक्तम् **अवकाशत्वं भूते निरवधिकमिति** । तत इतिपदस्य तत्रेत्यर्थमुपेत्येश्वरयोगनिरासकतयापि'विवरादि: कथं तत' इत्येतदर्थमाह **न चाकाशशब्दस्येत्यादिना** ।

या० — **युक्तमिन्द्रादिशब्दानामिति** । अनेन पूर्वाधिकरणवैषम्येन पूर्वपक्षोत्थानादनन्तरसङ्गति: सूचितेति ज्ञातव्यम् ॥ **अचेतनाश्रितत्वादिति** । अनेन मूलेऽचेतनाश्रित: स्वभावोऽचेतनस्वभाव इति मध्यमपदलोपी समास इति सूचितम् । तेनाचेतनाश्रितत्वात्स्वभावत्वादिति हेतुद्वयलाभ इति ज्ञातव्यम् । न चाचेतनाश्रिते ज्ञानादेरागन्तुकस्य कारणस्यासम्भवेऽपि रूपादौ पाकादिरिवान्य एवात्रागन्तुको हेतुर्भविष्यतीति वाच्यम् । तादृशस्य कारणस्य प्रमाणैरनुपलम्भेनेन्द्रादिशब्दप्रवृत्तिनिमित्ते पालनादिरूपैश्वर्ये ज्ञानादेरेव हेतुत्वदर्शनादत्रापि ज्ञानादिरेव हेतुर्वाच्य: । स चाचेतने नास्तीत्याशयात । स्वस्य भाव: स्वभाव इति यौगिकार्थस्येश्वराधीने पालनादौ व्यभिचारित्वात् । रूढिमाश्रित्य व्याचष्टे **अनागन्तुकत्वादिति** । एवमाकाशशब्दस्य भूते मुख्यतामुपपाद्येश्वरेऽमुख्यत्वमाह **न चाकाशशब्दस्येति** । रूढिस्तु विपरीतैवेति भाव: । **उपलक्षणमितीति** । तथा च वाय्वादिशब्दप्रवृत्तिनिमित्तानामादिशब्देन ग्रहणमिति भाव: ।

श्री० — **कारणद्वारेति** । ज्ञानादिरूपकारणद्वारेत्यर्थ: । **मनाक्** कदाऽपि अवकाशत्वेति विवरत्वेत्यर्थ: ।

च० — प्रकृतनये पूर्वनयवैषम्येण पूर्ववादिमतप्रदर्शनेन पूर्वनयनिरूपितैतन्नयवृत्तिसङ्गति: प्रत्युदाहरणरूपेति ध्वनयति **युक्तमित्यादि** । 'पूर्ववैषम्यतो यत्र पूर्वपक्ष: प्रवर्तते । सङ्गतिस्तत्र तेन' स्यात्प्रत्युदाहरणात्मिका' इत्यभियुक्तोक्तेरिति भाव: ।

**सु०— नन्वत्राकाशः परमात्मा तल्लिङ्गादित्येतावदुच्यते । न पुनरुक्तपूर्वपक्षाच्छादकं किञ्चिदित्यतः सूत्रस्यार्थान्तरमाह** आकाश इति ।

**अनु०—** आकाश इति नाम च ॥
परतोऽपि वरीयस्त्वपूर्वाल्लिङ्गाद्धरेर्भवेत् ॥

**आकाशनामबलात्खलु परेण भूतमाशङ्कितम् । न च तद्युक्तम् । यतो निरवकाशात्परोवरीयस्त्वादेरनेकस्माल्लिङ्गादाकाश इति नाम च हरेर्भवेत् । वाचकमिति शेषः । अत्रोपसर्जनतया समासे निर्दिष्टेनापि वरीयस्त्वेन बुद्ध्या विविक्तेन परतोऽपीत्यस्य संबन्धो नानुपपन्नः । सर्वभूतोत्पत्तिकारणत्वपूर्वादिति वक्तव्ये परोवरीयस्त्वपूर्वादित्युक्तम् । प्रथमप्रतीतस्यापि सर्वभूतकारणत्वादेर्भूतेऽपि कथञ्चिद्व्याख्यातुं शक्यत्वात् । परोवरीयस्त्वादेः सर्वथाऽपि तत्र नेतुमशक्यत्वात् ।**

शे०— नन्वभ्यधिकाशङ्कयाऽधिकरणारम्भस्य 'चेष्टा ही'त्यादिनैव समर्थना'दाकाश इति नाम चे'त्युत्तरभाष्यानर्थक्यमित्यत 'इत्याशङ्कानिवृत्त्यर्थं सूत्रितमि'त्यनेनोक्तस्य सूत्रेऽभ्यधिकाशङ्कानिवृत्त्यर्थत्वस्य सूत्रार्थकथनेनोपपादनार्थत्वान्नानर्थक्यमिति भावेन सूत्रस्याभ्यधिकाशङ्कानिवृत्त्यर्थत्वायोगमाशङ्कते **नन्विति ॥ पूर्वपक्षाच्छादकं किञ्चिदिति ।** सर्वभूतकारणत्वादेर्वक्ष्यमाणरीत्या भूतेऽपि संभवेनोक्तपूर्वपक्षानिवर्तकत्वादिति भावः । किञ्चिदित्यतःपरं तस्मान्न सूत्रं शङ्कानिवृत्त्यर्थमिति शेषः ॥ **सूत्रस्य अर्थान्तरमाहेति** । आकाशः परमात्मा सर्वभूतकारणत्वादितल्लिङ्गादिति पूर्वपक्ष्युपदर्शितसूत्रार्थापेक्षयाऽन्यं सूत्रार्थमाहेत्यर्थः । आकाश इति नामापीति समुच्चयार्थकत्वायोगात्प्रकृतानुसन्धानार्थकतुशब्दार्थत्वं मनसि निधाय चशब्दयोजनामाह **आकाशनामेति** । ननु परतोऽपीत्यस्य न तावत्समासार्थेन संबन्धः । अयोग्यत्वात् । नापि वरीयस्त्वेन । वरीयस्त्वं पूर्वं यस्येति वरीयस्त्वपूर्वमिति समासे उपसर्जनतया तस्य निर्दिष्टत्वात्तत्संबन्धे चैकस्यैव वरीयस्त्वस्य विरुद्धप्रधानत्वोपसर्जनत्वप्रसक्तेरित्यत आह **अत्रेति ॥ इति वक्तव्य इति ।** विषयवाक्ये प्रथमप्रतीतत्वात्प्रथमातिक्रमे च कारणाभावात्सर्वभूतोत्पत्तिकारणत्वपूर्वादित्येव वक्तव्यमित्यर्थः ॥ **इत्युक्तमिति** । भावे क्तः । इत्युक्तिरित्यर्थः । वक्ष्यमाणरीत्या स्वव्यतिरिक्तत्वेन सर्वशब्दसङ्कोचाद्यभिप्रायेण कथञ्चिदित्युक्तम् । अशक्यत्वादित्यतःपरमित्यभिप्रेत्येति शेषः ।

स०— ननु वरीयस्त्वपूर्वादित्यत्र वरीयस्त्वमेव पूर्वं यस्येति वरीयस्त्वस्य पूर्वादित्यनेनैवान्वितत्वेन परतोऽपीत्येतदनन्वितं स्यादित्यत आह **अत्रोपसर्जनतयेति** ॥ विशेषणतयेति भावः । तथा च साक्षात्संबन्धाभावेऽपि बुध्या विवेक इति भावः ।

प० — **उक्तपूर्वपक्षाच्छादकं किंचिदिति** । योगरूढिभ्यां भूतमेवाकाशशब्दवाच्यं न पुनर्ब्रह्मेत्युक्ताशंकानिवर्तकम् । भगवति महायोगविद्वद्रूढ्यादिकं किंचिदपि नोच्यत इत्यतो महायोगविद्वद्रूढिभ्यां विष्णोरेवाकाशशब्दार्थत्वमित्यर्थान्तरमित्यर्थः ॥ **भूतेऽपि कथंचिद्व्याख्यातुं शक्यत्वादिति** । एतेन परभाष्ये कारणत्वादिलिङ्गोक्तिरयुक्तेति सूचितम् ।

श्री० — **समास इति** । वरीयस्त्वपूर्वेति समास इत्यर्थः । तथाच देवदत्तस्य गुरुकुलमित्यादाविव नित्यसापेक्षत्वात्समास इति भावः ॥ **सर्वभूतोत्पत्तीति** । एतल्लिङ्गस्य सर्वाणि ह वा इति प्रथमवाक्य एवोक्तत्वादित्यर्थः । किमर्थं तथोक्तमित्यत आह **प्रथमेति** । **अशक्यत्वादित्यनन्तरमित्यभिप्रायेणेत्यर्थ** इति शेषः । तथा च नेतुमशक्यत्वादित्यभिप्रायेण परोवरीयस्त्वपूर्वादित्युक्तमित्यन्वयो द्रष्टव्यः ।

सु० — **तथाहि । अस्य लोकस्य का गतिरिति पृथिवीगतिप्रश्नस्याकाश इत्युत्तरमभिधाय कथमेतत्, अपां कार्यं हि पृथिवी, तत्रैव (च) लीयत इति तासामेव पृथिवीगतित्वोपपत्तेरित्याशङ्क्य मैवम् मूलकारणत्वादित्याह** सर्वाणीति । **न च तर्ह्यात्मन आकाशः संभूत इति श्रुतेरात्मा वक्तव्य इति वाच्यम् । भूतविषयविचारे वियत एव वक्तव्यत्वात् । न च आकाशस्यापि भूतत्वात्सर्वाणीति विरुद्धम् । इदं सर्वमसृजतेतिवत्तद्व्यतिरिक्तग्रहणोपपत्तेः । न चावधारणानुपपत्तिः । परंपरया भूतोपादानस्यापरस्याभावात् । कथमस्य भूतोत्पत्त्यादिहेतुत्वम् । भूतेषु ज्येष्ठत्वादित्याह** आकाशो ह्येभ्यश्चतुर्भ्यो **भूतेभ्यो** ज्यायानिति । **न केवलमुत्पत्तिलयकारणत्वाद्गतिः । किं नाम कारणेषु स्थितं कार्यमिति श्रुतेराश्रयत्वादपीत्याह** आकाशः परायणमिति । **न चास्य लोकस्येति प्राणिनिकायाभिधानम् । येन सर्वभूतशब्दोऽपि तत्परः स्यात् । न प्रतिष्ठां लोकमतिनयेदिति पृथिव्याः प्रकृतत्वात्** ।

शे० — अपां कार्यं हीत्यत्र हिशब्दोऽव्ययः पृथिवीत्यादिप्रमाणप्रसिद्धिद्योतनार्थः ॥ **तत्रैवेति** । यस्य यस्मादुत्पत्तिस्तस्य तत्रैव लयस्यौत्सर्गिकत्वादिति भावः ॥ **तर्हीति** । मूलकारणत्वाभिप्राये ॥ **आत्म वक्तव्य इति** । तस्यैव मूलकारणत्वादिति भावः ॥ **परंपरयेति** । प्रायिकमेतदित्यविरोधः ॥ **सर्वाणीति** । सर्वशब्दवदेभ्य इतीदंशब्दोऽपि स्वव्यतिरिक्तभूतपर इत्यभिप्रेत्य व्याचष्टे **एभ्यश्चतुर्भ्यो भूतेभ्य इति** । ततश्चैभ्यो ज्यायानित्येतदपि न विरुद्धमिति भावः । ननु सर्वभूतशब्दस्य प्राणिनिकायपरत्वेन सर्वभूतकारणत्वं नाम सकलप्राणिनिकायकारणत्वमेव न चैतद्भूते संभवतीति सर्वभूतकारणत्वमपि निरवकाशमेवेत्यतः स्यादेतदेवं यद्यत्र सर्वभूतशब्दस्य प्राणिनिकायपरत्वमेव स्यात् न चैतदस्ति । किं नामास्य लोकस्येति पूर्ववाक्ये लोकशब्दनिर्दिष्टमात्रपरत्वमेव । न च लोकशब्देन प्राणिनिकायोऽभि-

१. (छां. उ १-९) अत्र पृ १४६३ सुधायां द्रष्टव्यम् ।

धीयते । किं नाम पृथिव्येव । तथा च लोकशब्दनिर्दिष्टपृथिवीमात्रपरत्वात्सर्वभूतशब्दस्य तत्कारणतायाश्च भूतेऽप्युपपन्नत्वान्न सर्वभूतकारणत्वस्य निरवकाशत्वमित्याह **न चास्य लोकस्येत्यादि** । **तत्परः स्यादि**त्यतः परं ततश्च सर्वभूतकारणत्वमपि भूते निरवकाशं स्यादिति शेषः ।

**स०— न प्रतिष्ठामिति** । प्रतिष्ठां लोकम् = सर्वाधारं पृथिवीलोकं । अति = अतिक्रम्यान्यं न जानीयादिति श्रुत्यर्थः ।

**प०— प्राणिनिकायेति** । प्राणिसमूहेत्यर्थः । न प्रतिष्ठां लोकमिति । प्रतिष्ठां = सर्वाधारं लोकम् । पृथिवीलोकं अतिक्रम्यान्यत्र जानीयादिति श्रुत्यर्थः । पृथिवीलोकमतिक्रम्य साम न नयेत् = सामप्रतिपाद्यपृथिवीलोकशब्दितादन्यत्र ब्रूयादित्यर्थः ।

**या०— न प्रतिष्ठामिति** । प्रतिष्ठां लोकं = सर्वाधारं पृथिवीलोकम् अतिक्रम्यान्यं न जानीयादिति श्रुत्यर्थः ।

**श्री० —** प्रथमप्रतीतस्य सर्वभूतकारणतल्लयाधिकरणत्वादेः कथं, भूते कथंचिद्व्याख्यातुं शक्यत्वम् , इत्यतस्तदुपपादयति **तथा हीत्यादिना प्रकृतत्वादित्यन्तेन** ॥ **मूलेति** । आकाशस्येति शेषः ॥ **आत्मेति** । आत्मैव मूलकारणत्वेन वक्तव्य इत्यर्थः ॥ **विरुद्धमिति** । स्वस्य स्वकारणत्वमात्माश्रयेण विरुद्धमिति भावः ॥ **इदमिति** । अत्र यथा ब्रह्मातिरिक्तमेव सर्वशब्देन गृह्यते न ब्रह्मापि तद्वदाकाशव्यतिरिक्तमेवात्र सर्वाणीत्यनेन ग्राह्यं नाकाशमपि येन विरुद्धता स्यादित्याशयः ॥ **अवधारणेति** । सर्वाणि ह वा इमानि भूतान्याकाशादेवेत्यवधारणेत्यर्थः ॥ **अपरस्येति** । आकाशातिरिक्तस्येत्यर्थः । **गतिरिति** । पृथिवीगतिरित्यर्थः । ननु नैवं कथंचिद्व्याख्यातुं शक्यते । तथाहि । यदि 'अस्य लोकस्य का गतिरि'त्यत्र लोकशब्देन पृथिवी विवक्षिता स्यात्तदाऽऽकाशस्य तद्गतित्वमभिधाय तदुपपादनपरे 'सर्वाणि ह वा' इति वाक्ये सर्वशब्द आकाशव्यतिरिक्तसर्वार्थतया सङ्कुचितार्थो व्याख्येयः प्रसज्येत । न चैवम् । किं नाम 'लोकस्तु भुवने जने' इत्यभिधानबलात्प्राणिनिकाय एव लोकशब्दवाच्यतया गृह्यते तद्गतिप्रश्ने च भगवानेव तद्गतित्वेनाकाश इत्यनेनोच्यते । तथा च सर्वाणि ह वा इत्यत्रत्यसर्वभूतशब्देन प्राणिनिकायस्यैव ग्रहणेन विरोधाभावात्सर्वशब्दोऽसङ्कुचितार्थ एव भवतीत्यत आह **न चास्येति** । तत्परः प्राणिनिकायपरः । कुतो न प्राणिनिकायाभिधानमित्यत आह **नेति** । अत्र प्रतिष्ठाशब्देन सर्वाधारस्य पृथिवीलोकस्यैव प्रकृतत्वादित्यर्थः । सर्वभूतोत्पत्तिकारणत्वादिलिङ्गत्वादित्यर्थः ।

**च०— प्राणिनिकायाभिधानम्** प्राणिसमूहाभिधानम् । **न प्रतिष्ठामिति** । सर्वाश्रयं पृथिवीलोकमतिक्रम्यान्यं न जानीयादित्यर्थः ।

सु०— न च परोवरीयस्त्वादिकं शक्यमेवं कथञ्चिद्व्याख्यातुम् । निरुपचरितं सर्वोत्तमत्वं हि परोवरीयस्त्वम् । अन्यथा ज्यायानित्यनेनैव गतार्थत्वप्रसङ्गात् । उद्गीथत्वं चोमित्येतदक्षरमुद्गीथमित्युक्तत्वान्न कथञ्चिदन्यत्र नेतुं शक्यते । आरोपोऽयमिति चेन्न । बाललीलाऽर्थत्वप्रसङ्गादुपनिषदाम् । अनन्तत्वं चाकाशस्य देशकालधर्मैरन्तवतो न संभवत्येव । आपेक्षिकं तु प्रकृतविरुद्धम् । पृथिव्याः सामगतित्वम् 'अन्तवद्वै खलु सौम्य ते सामे' ति निराकृत्य स्वयमप्यन्तवन्तमाकाशमभिदधता किमधिकमाचरितं स्यात् । अतोऽनन्तत्वमपि निरुपचरितमेवेति ।

नन्वाकाशश्रुतिरपि निरवकाशेत्युक्तम् । सत्यम् । दुरुक्तं तत् । न हि देशकालाभ्यां परिच्छिन्नस्याकाशस्यावकाशदातृत्वं निरवधिकं संभवति । नापि स्वतन्त्रं परमेश्वरायत्तत्वात् । तत्कुत इत्यत आह नभ इति ।

अनु०— नभो ददाति श्वसतां मार्गं यन्नियमाददः ॥
इत्यादिवाक्यैः ॥ ८ ॥

आदिग्रहणेन सर्वभूतगुणैर्युक्तमित्यादेः संग्रहः । तेन यदुक्तं परमेश्वरे योगानुपपत्तिरिति तदपि समाहितं भवति । आकाशेऽवकाशदातृत्वस्येश्वरायत्तत्वमीश्वरस्यापि पृथक्तद्वत्त्वं चात्र गम्यत इति शेषः । उपपत्तिं तु वक्ष्यामः । तस्मादाकाशोपलक्षितसकलाधिभूतशब्दपरममुख्यवाच्यो भगवान्हरिरिति सिद्धम् ॥ १-१-८ ॥

शे०— ननु चास्य लोकस्येत्यस्य पृथिवीमात्रपरत्वे सिद्धे सर्वभूतशब्दस्य तत्परत्वं स्यात् । तदेव कुतः । तस्यापि प्राणिनिकायाभिधायकत्वे बाधकाभावादित्यत आह न प्रतिष्ठामिति । तथा चास्य लोकस्येत्यस्य प्राणिनिकायाभिधायकत्वे प्रकृतपरित्यागाप्रकृतस्वीकारप्रसङ्ग एव बाधक इति भावः । ननु चतुर्भ्यो भूतेभ्यो ज्यायस्त्वमेव परोवरीयस्त्वमिह विवक्षितमस्तु । किं निरुपचरितसर्वोत्तमत्वपर्यन्तधावनेनेत्यत आह अन्यथेति । चतुर्भ्यो भूतेभ्यो ज्येष्ठत्वस्य ज्यायानित्यनेनैवोक्तत्वादिति भावः । ननु चानन्तत्वं नान्तत्रयोज्झितत्वं किं नाम आकल्पावस्थितत्वम् । तच्च भूताकाशस्याप्यस्त्येवेति कथं तस्य निरवकाशत्वमित्यत आह आपेक्षिकं त्विति । प्रकृतविरुद्धत्वमेवोपपादयति पृथिव्या इति । नन्वस्तु लिङ्गानां निरवकाशत्वं तथाऽप्याकाशश्रुत्यनुसारेण भूतमेवात्र विवक्षितमस्तु किमाकाशस्य परमात्मत्वकल्पनया । न च निरवकाशलिङ्गेन श्रुतिबाधान्न भूतमाश्रयितुं युक्तमिति वाच्यम् । निरवकाशलिङ्गेन सावकाशायाः श्रुतेर्बाधेऽपि निरवकाशश्रुतिबाधे निरवकाशलिङ्गस्यासामर्थ्यात् निरवकाशत्वमात्रप्रयुक्तप्राबल्यापेक्षया स्वभावनिरवकाशत्वप्रयुक्ताबल्यस्य बलवत्त्वेन रूपद्वयेन प्रबलयाऽऽकाशश्रुत्यैव निरवकाशलिङ्ग-

बाधसम्भवात् । न चानेकत्वेन लिङ्गानामप्यनेकत्वान्निरवकाशत्वाच्च रूपद्वयेन तेषामपि प्राबल्यमिति वाच्यम् । स्वभावप्रयुक्तप्राबल्यापेक्षयाऽनेकत्वप्रयुक्तप्राबल्यस्य दुर्बलतायाः 'स्तयोः स्वभावो बलवानि'त्यादिप्रमाणसिद्धत्वेन निरवकाशश्रुत्या बाधसम्भवात् । श्रुतेरभ्यस्यमानतया प्रकारत्रयेण श्रुतेः प्राबल्येन तया लिङ्गबाधस्य कैमुतिकन्यायसिद्धत्वाच्चेत्याशयेन शङ्कते **नन्विति** ॥ **उक्तमिति** । आकाशशब्दस्य भूते महायोगविद्वद्रूढिभ्यां मुख्यत्वं 'विवरादिः कथं ततः' इत्यत्रोक्तमित्यर्थः । महायोगविद्वद्रूढ्योरेवासिद्धेर्नाकाशश्रुतेर्निरवकाशतेति युक्तो निरवकाशलिङ्गैर्बाध इत्याशयेन महायोगाभावं दर्शयितुं तच्छब्दनिर्वचनलब्धस्यार्थस्य तत्र निरवधिकत्वाभावं तावदुपपादयति **न हीति** । देशकालाभ्यां परिच्छिन्नस्येति हेतुगर्भं विशेषणम् । भूते तस्यानन्याधीनत्वाभावमप्याह **नापीति** । उपलक्षणमेतत् वैदिकप्रयोगबाहुल्यासिद्ध्या विद्वद्रूढिरप्यसिद्धेत्यपि द्रष्टव्यम् **तत्कुत इति** । ऐश्वर्यादिवदागन्तुकज्ञानादिकारणद्वारा वा स्वरूपतो वाऽन्यानधीनतायाः अचेतनाश्रितत्वस्वभावत्वाभ्यामुपपादितत्वादन्याधीनत्वं कुतः, न कुतोऽपीत्यर्थः । **भूतगुणैः** अवकाशप्रदत्वादिभिः ॥

ब्रह्मणः सर्वभूतगुणैर्युक्तत्वप्रतिपादकप्रमाणस्याकाशावकाशदातृत्वस्येश्वरायत्ततारूपप्रकृतप्रमेयाप्रतिपादकत्वादादिपदेन संग्रहो न युक्त इत्यतो नोक्तप्रमेयसाधकतयाऽस्योपन्यासः किन्तु न केवलमाकाशगतस्यावकाशदातृत्वस्येश्वरायत्तत्वात्तस्य तत्र महायोगः किं नाम परिच्छिन्नादाकाशादपरिच्छिन्ने ब्रह्मण्येवावकाशदातृत्वस्य निरवधिकत्वाच्च तस्य तत्र महायोग इत्यत्रैव । न चैतद्व्युत्पादनमनर्थकम् । न चाकाशशब्दस्येश्वरे योगः सम्भवति । तस्य मनागप्यवकाशत्वाभावादिति पूर्वपक्षिशङ्कितयोगानुपपत्तिशङ्कासमाधानार्थतयाऽर्थवत्त्वादित्याह **तेनेति** । साकाङ्क्षत्वात्प्रमाणद्वयसाध्यप्रदर्शनपूर्वकमपेक्षितक्रियामध्याहरति **आकाशेति** । अचेतनस्वभावस्य कथमीश्वराधीनत्वम् । अन्याधीनत्वे स्वभावत्वहानेरित्यतः प्रमाणप्रश्नश्चेदुक्तमेव । सम्भावकप्रश्नश्चेत्तत्राह **उपपत्तिं त्विति** । गायत्र्यधिकरणेऽन्यथा सर्वेश्वरत्वहानेरित्यादिनेति शेषः । यद्यप्यवकाशप्रदत्वस्य भगवत्येव निरवधिकत्वस्य सर्वभूतगुणैर्युक्तमित्यादिप्रमाणसिद्धत्वान्न तस्याचेतनस्वभावत्वमित्येव वक्तुं युक्तमित्यनर्थकं सिद्धान्तेऽचेतनस्वभावस्येशतन्त्रत्वसमर्थनम् । तथाऽपि स्वभावनियामकत्वरूपमहागुणसिद्ध्यर्थं जडमात्रस्वभावनिमित्तकशब्दान्तरसमन्वये न्यायः फलिष्यतीति प्रदर्शनार्थं च कृत्वा चिन्तया कृतमित्यवधेयम् ॥ १-१-८ ॥

स० — **निरुपचरितं सर्वोत्तमत्वं परोवरीयस्त्वमिति** । 'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात्प्रोक्तं पारोवरीयकमि'ति प्रमाणेन परोवरीयस्त्वशब्दस्य निरुपचरितं सर्वोत्तमत्वमर्थ इति भावः ॥ **अन्यथेति** । निरुपचरितसर्वोत्तमत्वं परित्यज्य उत्तमत्वमात्रस्यैव परोवरीयस्त्वशब्दार्थत्वाङ्गीकार इत्यर्थः ॥ **देशकालधर्मैरिति** । देशतः कालतः धर्मत इत्यर्थः ॥ **आपेक्षिकं त्विति** । यथा-

कथञ्चिदनन्तत्वमित्यर्थः ॥ **आकाशेऽवकाशदातृत्वस्येति** । न च विवरत्वस्यैव आकाशशब्दप्रवृत्तिनिमित्तत्वेन तस्य परमात्मनि सर्वथाऽसंभवस्य परेण शङ्कितत्वेन तस्य परमात्मनि संभवमनुपपाद्यावकाशदातृत्वस्य तदुपपादनमसङ्गतमिति वाच्यम् । पूर्वपक्षिणापि भ्रान्त्या, अवकाशप्रदत्वस्यैव प्रवृत्तिनिमित्तत्वमङ्गीकृत्य परमात्मनि संभवेऽपि, असंभवस्याऽऽशङ्कितत्वादिति भावः । अचेतनस्वभावस्य विवरत्वादेः परमेश्वरायत्तत्वस्योक्तरीत्याऽसंभवादागमसिद्धमपि तत्कथमङ्गीकार्यमित्यत आह **उपपत्तिं तु वक्ष्याम इति** ॥ गायत्र्यधिकरण इति शेषः । तत्र हि यद्यपि विवरत्वादिकं कारणमित्यादिनाऽऽकाशस्य धर्मिण एवोत्पत्त्या आदावीश्वराधीनत्वेन तद्धर्मस्यापि तथाभावोऽवर्जनीय इत्युपपत्तिरुच्यत इत्यर्थः । यद्वा तस्मिन्नेवाधिकरणे 'तादृशत्वाच्च तच्छक्तेरि'त्यनुव्याख्याव्याख्याऽवसरे 'अन्यथा सर्वेश्वरत्वहाने'रित्यादिनेति शेषः ।

प० — **निरुपचरितं सर्वोत्तमत्वं हीति** । 'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात्प्रोक्तं पारोवरीयकमि'ति छान्दोग्यभाष्योक्तेरिति भावः । उत्तमत्वमात्रविवक्षायां बाधकं चाह **अन्यथेति** । यद्वा परिमाणत आधिक्यं परोवरीयःशब्दार्थ इति विवक्षायां बाधकमाह **अन्यथेति** । ज्यायानित्यस्य व्याप्ततम इत्यर्थत्वात् । वृद्धशब्दस्येयसुन्प्रत्यये ज्यादेशे च ज्यायानिति रूपनिष्पत्तेः ॥ **ओमितीति** । ओमित्येतन्नामकमक्षरशब्दितं ब्रह्मोद्गीथमुद्गीथनामकमुपासीते'ति छान्दोग्योपक्रमे उक्तत्वादित्यर्थः । **इत्यादेरिति** । सर्वभूतगुणैर्युक्तं दैवं त्वं ज्ञातुमर्हसीति मोक्षधर्मवाक्यस्यान्यत्र भाष्यकारोक्तस्य संग्रह इत्यर्थः । सर्वेषां पृथिव्यादिभूतानां ये धारकत्वतर्पकत्वतापकत्वशोषकत्वावकाशदातृत्वादयो गुणास्तैर्गुणैर्युक्तं विष्ण्वाख्यं दैवं ज्ञातुमर्हसीति कश्चित्प्रत्युच्यते । कथं समाहितमित्यतः महायोगो हि द्वेधा । अन्यगतशब्दप्रवृत्तिहेतुं प्रति स्वातन्त्र्यं शब्दप्रवृत्तिहेतुपौष्कल्यवत्त्वं चेति । तत्राऽऽद्यं नभ इति भागवतसिद्धम् । अन्त्यं तु आदिपदोपात्तमोक्षधर्मवाक्यसिद्धमिति भावेनाह **आकाशेऽवकाशदातृत्वस्येति** । ननूक्तमत्राचेतनगतं तत्स्वभावभूतं च कथमन्याधीनमिति तत्राह **उपपत्तिं त्विति** । गायत्र्यधिकरणोपक्रमे आकाशाधिकरणवैषम्यं व्युत्पादयन्तो वक्ष्याम इत्यर्थः ॥ छ ॥ १ । १ । ८ ॥ छ ॥

या० — अचेतनस्वभावस्य विवरत्वादेः परमेश्वरायत्तत्वस्योक्तरीत्याऽसम्भवादागमसिद्धमपि तत्कथमङ्गीकार्यमित्यत आह **उपपत्तिं त्विति** । गायत्र्यधिकरण इति शेषः । तत्र हि 'यद्यपि विवरत्वादीनां कारणता' इत्यादिग्रन्थेनाकाशस्य धर्मिण एवोत्पत्त्यादावीश्वराधीनत्वेन तद्धर्मस्यापि तथाभावोऽवर्जनीय इत्युपपत्तिर्वक्ष्यत इत्यर्थः ॥ १–१–८ ॥ छ ॥

श्री० — **अन्यथा** सर्वोत्तमत्वमात्रार्थत्वे । उद्गीथत्वमपि सर्वभूतोत्पत्तिकारणत्वादिलिङ्गवदाकाशेऽपि कथंचिद्वक्तुं शक्यत एवेत्याशयेन शङ्कते **आरोपोऽयमिति** ॥ **बालेति** । अविद्यमानार्थप्रतिपादकत्वेनेत्यर्थः । 'नाविद्यमानं ब्रुवते वेदा ध्यातुमि'त्युक्तेरिति भावः । अनन्तत्वं देशकालगुणैश्चानन्तत्व-

मित्यर्थः ॥ **आपेक्षिकमिति ।** वाय्वाद्यपेक्षया देशानन्त्यस्य व्युत्क्रमाद्ध्याङ्गीकारेण कालानन्त्यस्यापि सत्त्वादित्यादिरूपमापेक्षिकमित्यर्थः । तदुपपादयति **पृथिव्या इति । सामगतित्वं** सामरूपगतिमत्त्वम् ॥ **स्वयमप्यन्तवन्तमिति ।** न चाकाशे आपेक्षिकमनन्तत्वमस्तीति वाच्यम् । साम्न्यपि तादृशानन्तत्वस्य वक्तुं शक्यत्वेन तन्निराकरणानुपपत्तिप्रसङ्गादिति भावः । **यदुक्तमिति ।** न चाकाशशब्दस्येश्वरे योगः सम्भवति । तस्य मनागप्यवकाशत्वाभावादिति यदुक्तमित्यर्थः । **समाहितमिति ।** आदिपदगृहीतेन सर्वभूतगुणैरितिवाक्येनाकाशधर्मस्याप्यवकाशत्वस्य भगवत्येवावगमादिति भावः । समन्वेतव्यशब्द-ताऽवच्छेदकोपाधिं वदन्नुपसंहरति **तस्मादिति ।** छ ॥ १-१-८ ॥ छ ॥

**च०— निरुपचरितं सर्वोत्तमत्वं हीति ।** 'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात्प्रोक्तं पारोवरीयकमि'ति छान्दोग्यभाष्येऽभिहितत्वादिति भावः । **उपपत्तिमिति ।** गायत्रीनये 'यद्यपि विरत्वादिकं कारणतः स्वरूपतोप्यनागन्तुकं तथापि धर्मिण एवाकाशादेरुत्पत्तिविनाशवतो जन्मस्थितिलयेष्वीश्वराधीनत्वे धर्मस्यापि तथाभावोऽवर्जनीय' इति ग्रन्थेन गायत्रीनयोपक्रमे आकाशन-यवैषम्यं व्युत्पादयन्तोऽभिधास्याम इत्यर्थः ॥

॥ इति आकाशाधिकरणम् ॥

---

'नभो ददाति श्वसतां मार्गं यन्नियमाददः ।' इति भागवतस्यायमर्थः—
अदः (सकारान्तस्य 'अदस्' शब्दस्य नपुंसकलिङ्गस्य प्रथमाविभक्तिः अदः अमू अमूनि) = अयं, नभः = आकाशः, यन्नियमात् = यस्य प्रेरणया, श्वसतां = श्वासोच्छ्वासं कुर्वतां प्राणिनां, मार्गं = अवकाशं, ददाति ।

सु०— इदानीमाध्यात्मिकशब्दसमन्वयं सिषाधयिषुः प्रधानत्वात्प्राणशब्दसमन्वयार्थं सूत्रयामास अत एव प्राण इति ।

## ब्र. सू.— ॐ अत एव प्राणः ॐ

तैत्तिरीयके श्रूयते । तद्वै त्वं प्राणोऽभवः । महान्भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान्प्राणयो न वेति । तत्र संशयः । किमयं प्राणः परमात्मोत मुख्य इति । वायुवृत्त्यादेः प्राणशब्दप्रवृत्तावपि वाक्यार्थस्य सर्वथाऽप्यनुपपत्तेर्न संशयविषयत्वम् । न ह्यचेतनं प्रति त्वमेवमभव इति बुद्धिमतोच्यते । किं तावत्प्राप्तम् । मुख्य इति । कस्मात् । प्राणशब्दस्य लोकवेदयोर्मुख्यप्राणे प्रयोगप्राचुर्यात्प्राणन्त्यनेनेति निरुक्तिसंभवाच्च । नन्वेतदपि पूर्वन्यायेन परिहृतं न सूत्रारंभं प्रयोजयतीति । अतोऽभ्यधिकाशङ्कां दर्शयति अध्यात्ममिति ।

अनु०— अध्यात्ममन्वयव्यतिरेकतः ॥

प्राणादिहेतुतादृष्टेः

आत्मानमधिकृत्य तस्य भोगायतनत्वेन वर्तत इत्यध्यात्मं शरीरं तस्मिन्प्राणः प्राणनं जीवनम् । आदिग्रहणाच्चेष्टोपादीयते । मुख्यस्येति शेषः । मुख्य एवात्र प्राणो भवितुमर्हतीति वाक्यशेषोऽत्राध्याहार्यः ।

शे० — ॥ ॐ अत एव प्राणः ॐ ॥ एतदधिकरणसमन्वेतव्यशब्दावच्छेदकोपाधिं वदन्नेव सूत्रस्य प्राणशब्दोपलक्षितानेकशब्दसमन्वयप्रतिपादकत्वे कुतः सूत्रे प्राणशब्दस्य मुखतः सङ्कीर्तनमितरेषां चोपलक्षणमित्याशङ्कां च परिहरन्नेव ससङ्गतिकमेतदधिकरणप्रतिपाद्यमाह **इदानीमित्यादि** । सूत्रे प्राणशब्दः सजातीयचक्षुरादिशब्दोपलक्षक इति ज्ञापनार्थमाध्यात्मिकेत्याद्युक्तं । तैत्तिरीयक इत्यादिको ग्रन्थः छन्दोगाः पठन्तीत्यादिपूर्वाधिकरणग्रन्थवद्योज्यः । वायुवृत्त्यादेरित्यत्रादिपदेनेन्द्रियाणां चेष्टायाश्च संग्रहः । अस्य च न संशयविषयत्वमित्यनेन सम्बन्धः । प्राणशब्दप्रवृत्तावित्यादौ तु तस्यैव योग्यतया वायुवृत्त्यादाविति विभक्तिविपरिणामेनान्वयो बोध्यः । वाक्यार्थस्य सर्वथाऽप्यनुपपत्तेरित्युपलक्षणम् । 'मुखे मुख्यः प्रकीर्तितः' इति मुख्यवायावेव मुख्यत्वाभिधानेन वायुवृत्तौ प्राणशब्दस्यामुख्यार्थत्वादित्यपि द्रष्टव्यम् । उक्तामनुपपत्तिमेव दर्शयति **न ह्यचेतनं प्रतीति** ॥ **इति बुद्धिमतोच्यत इति** । इत्यादि बुद्धिमतोच्यत इत्यर्थः । अत एव चन्द्रिकायां त्वं प्राणोऽभव इत्याद्ययोगादित्यादिशब्दः । न चौषधे त्रायस्वैनमित्यादिवदुपपत्तिरिति वाच्यम् । तस्य स्वमतेऽभिमानिदेवतापरत्वेन मीमांसकमते चार्थवादत्वेनाचेतनसम्बोधनपरत्वाभावात् । यद्यपि पूर्वाधिकरणपूर्वपक्षे जडस्याप्याकाशस्यानन्दमयत्वादिकमिवात्रापि जडस्याप्यभिमानिद्वारा सम्बोधनादिकं युक्तम् । तथाऽपि मुख्ये मुख्यत्वात्प्राणशब्दस्य जडपरत्वायोगात्त्वमभवः करिष्यमाणः

प्राणय इत्यादीनां बहूनाममुख्यार्थत्वप्रसङ्गान्न तस्य संशयविषयत्वाश्रयणमिति ध्येयम् ॥ **पूर्वन्यायेनेति ।** इन्द्राकाशादिशब्दानामन्यत्र मुख्यत्वेऽपि रूढियोगाभ्यामेव तत्परत्वादमुख्यत्वं, भगवति च महायोगविद्वद्रूढिभ्यां प्रवृत्ततया मुख्यत्वं, तथा प्राणशब्दस्यान्यत्र प्रसिद्धत्वेऽपि रूढियोगाभ्यामेव तत्र प्रवृत्तेर्भगवति च महायोगविद्वद्रूढिभ्यां प्रवृत्तेरन्यत्रामुख्यत्वस्य भगवति च मुख्यत्वस्य सिद्ध्या भगवन्मात्रबुद्ध्याधायकत्वेन न प्राणश्रुत्या पूर्वपक्षावकाश इत्यर्थः ॥ **अभ्यधिकाशङ्कां दर्शयतीति ।** प्राणशब्दप्रवृत्तिनिमित्तं जीवनादिहेतुत्वमन्वयव्यतिरेकाभ्यां प्राणशब्दार्थत्वेन प्रसिद्धस्य वायोरेवेति स एव प्राणशब्दवाच्यो न विष्णुरित्यभ्यधिकाशङ्कामित्यर्थः । विवक्षितामभ्यधिकाशङ्कां भाष्यारूढां कर्तुमपेक्षितशेषपूरणेन तद्याचष्टे **आत्मानमित्यादिना ।**

**प०** — ॐ **अत एव प्राणः** ॐ ॥ **प्रधानत्वादिति ।** मुख्यप्राणवाचित्वादिति भावः । श्रूयते प्राणशब्द इति योज्यम् । ननु वायुविकारे श्वासवायौ चेष्टादौ च प्राणशब्दवाच्यत्वस्य सत्त्वात्तस्य कुतो न संशयकोटित्वमित्यत आह **वायुवृत्त्यादेरिति ।** अनुपपत्तिमेवाह **न हीति ।** ओषधे त्रायस्वैनमित्याद्यप्यभिमानिचेतनपरमेवेति भावः । **लोकवेदयोः** पौरुषेयापौरुषेयग्रन्थयोः । **प्राणन्ति** जीवन्ति चेष्टन्ते वा ॥ **एतदपीति ।** चोद्यमिति योज्यम ॥ **पूर्वन्यायेनेति ।** इन्द्राकाशादिशब्दानां महायोगविद्वद्रूढिभ्यां निरवकाशलिङ्गेन च विष्णूपस्थापकत्वन्यायेनेत्यर्थः ॥ **अभ्यधिकाशङ्कामिति ।** विष्णुत्वावगमकमहायोगविद्वद्रूढिनिरवकाशलिङ्गानां त्रयाणामभावहेतुका(ना)मित्यर्थः ।

**श्री०** — ॥ ॐ **अत एव प्राणः** ॐ ॥ **वायुवृत्त्यादे**र्जडस्य **न संशयविषयत्वं** तत्कोटित्वमित्यन्वयः ।

**च०** — ॥ ॐ **अत एव प्राणः** ॐ ॥ श्रूयमाणानुपूर्वीविशेषस्यैतद्योगसमन्वेतव्यतावच्छेदकताविपर्यासप्रतिविधित्सया प्रकृतनयसमन्वेतव्यतावच्छेदकमभिदधानः सूत्राघटकतादृशसमन्वेतव्यतावच्छेदकाक्रान्तचक्षुरादिशब्दसमन्वयव्युत्पादकत्वोपगमे तद्घटकतया तादृशचक्षुरादिशब्दासङ्कीर्तनेन तादृशानेकशब्दोपलक्षकप्राणशब्दस्य तथा सङ्कीर्तनं निर्बीजमित्याशङ्कां प्रतिविदधानः ससङ्गतिकमेतन्नयप्रतिपाद्यमभिधत्ते **इदानीमित्यादि ।** **प्रधानत्वात्** मुख्यप्राणाभिधायकत्वात् ॥ **सूत्रयामासेति ।** चौरादिकस्वार्थणिजन्तवेष्टनार्थसूत्रयतेर्धातूनामनेकार्थकत्वात्सूत्रकृत्यर्थतोपगमे 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चे'ति वा, सूत्रमिति प्रातिपदिकात्करोत्यर्थे णिचि लिटि रूपमेतत् । विषयसन्देहपूर्वपक्षान् दर्शयति **तैत्तरीयक इत्यादि** ॥ **श्रूयते** प्राणशब्द इत्यनुषञ्जनीयम् ॥ **किमथमिति ।** प्रकृतप्राणशब्दाभिधेयधर्मिकपरमात्मत्वमुख्यप्राणत्वकोटिकः सन्देहः प्रकृताधिकरणघटक इति भावः । सन्देहस्य विरुद्धनानाकोटिकत्वमेव नियतं न तु तादृशभावाभावकोटिकत्वं स्थाणुर्वा पुरुषो वेत्यादेरसंग्रहात् । तस्य चतु-

कोटिकतायां तु प्रकृतेऽपि सैवोपगम्यताम् । वायुविकारश्वासचेष्टेन्द्रियाणां प्राणशब्दाभिधेयानामपि न सन्देहविषयतेत्यत्र बीजं दर्शयति **वायुवृत्त्यादेरिति** । क्लीबभावप्रत्ययान्तेनान्वेति । वाक्यार्थानुपपत्तिं दर्शयति **न हीति** । ओषधे त्रायस्वैनमित्यादिकं त्वभिमानिदेवतातात्पर्यकमिति भावः । प्राणशब्दस्य मुख्यार्थत्वानुपपत्तिरप्यवसेया । करणसाधनप्रत्ययान्ततामभिप्रेत्याह **प्राणन्तीति** । प्रकृत्यंशः जीवनार्थः श्रेष्ठार्थो वा ।

**सु० — ततश्चायमर्थः । उपपद्यते तत्रेन्द्रादिश्रुतेराकाशादिश्रुतेर्वाऽपहारः । प्रवृत्तिनिमित्तस्यान्यत्र मुख्यस्यासंभवात् । परमात्मनि च संभवात् । न चैवं प्रकृते । जीवनचेष्टाहेतु(त्वं)ता हि प्राणशब्दप्रवृत्तिनिमित्तम् । तच्च मुख्ये संभवति । शरीरे, सति मुख्ये, जीवनादिकं भवति । नासतीत्यन्वयव्यतिरेकाभ्यां मुख्यस्य जीवनादिहेतुतादृष्टेः । ननु वायुविकारान्वयव्यतिरेकानुविधायित्वं जीवनादेः प्रतीयते । मुख्यस्य तु तद्धेतुता साध्यत इति किं केन सङ्गतम् । मैवम् । वायुविकारशरीरत्वान्मुख्यस्येति ।**

**अथवा प्राणादिहेतुताया अदृष्टेरिति व्याख्येयम् । परमात्मन इति शेषः । अन्वयव्यतिरेकाभ्यां हि हेतुता कल्प्या । न च परमात्मनः प्राणशब्दप्रवृत्तिनिमित्तजीवनादिहेतुतावगमकान्वयव्यतिरेकौ पश्याम इति भावः ॥ यद्वा यदत्र वाक्ये नव देवान्प्राणय इतीन्द्रियप्राणनमुक्तम् । यच्च प्रजापत्युपलक्षितानां सकलजीवानां भोगकारणत्वम् । तदुभयमप्यध्यात्ममन्वयव्यतिरेकाभ्यां मुख्यस्य दृश्यते न परमात्मनः । अतो युक्तिसंवादान्मुख्यविषयमेवेदं वाक्यमिति । न चात्र वाक्ये पूर्ववदनन्यथासिद्धं किमपीश्वरलिङ्गमस्ति । येन श्रुतिबाधं प्रत्येष्याम इति पूर्वपक्षशेषः ।**

**शे०** — ननु जीवनस्य वायुविकारान्वयव्यतिरेकदर्शनेन जीवनादिहेतुत्वस्य वायुविकारनिष्ठत्वप्राप्तावपि मुख्यवायोर्जीवनं प्रत्यन्वयव्यतिरेकादर्शनेन जीवनादिहेतुत्वस्य मुख्यप्राणनिष्ठत्वासिद्धेर्न प्राणशब्दस्य तत्र महायोग इति कथमियमभ्यधिका शङ्का । भगवतोऽप्यन्वयव्यतिरेकाभ्यां जीवनादिहेतुत्वोपपत्त्या प्राणशब्दनिर्वचनलब्धजीवनादिहेतुत्वस्य भगवन्निष्ठत्वेन तत्रापि महायोगोपपत्तेरन्यमात्रोपस्थापकत्वासिद्धिश्चेत्यतः । पूर्वाधिकरणवैषम्यप्रदर्शनपूर्वकमभ्यधिकाशङ्कामुपपादयति **ततश्चेत्यादिना** ॥ **प्रवृत्तिनिमित्तस्येति** । इन्द्रादिशब्दप्रवृत्तिनिमित्तस्य परमैश्वर्यस्य पुरन्दरादिष्वल्पतायाः श्रुतिपुराणादिसिद्धत्वेनाकाशशब्दनिर्वचनलब्धस्यावकाशदातृत्वस्य देशकालाभ्यां परिच्छिन्नभूते च सावधिकत्वेन पुरन्दरादिषु भूते च तत्तच्छब्दनिर्वचनलब्धप्रवृत्तिनिमित्तस्यामुख्यत्वादित्यर्थः । ततश्च न तेषां तत्र महायोग इति

भावः । अन्यत्र महायोगाभावमुक्त्वा भगवति तेषां महायोगमाह **परमात्मनि चेति** । सम्भवादित्यत्र प्रवृत्तिनिमित्तस्य मुख्यस्येत्यनुवर्तते । अविगानेन परमैश्वर्यादेः 'सर्वभूतगुणैर्युक्तमि'त्यादिवचनबलेनावकाशदातृत्वस्य च देशकालगुणैरपरिच्छिन्ने भगवत्येव निरवधिकत्वेन तत्र तेषां महायोग इति भावः । एवं पूर्वाधिकरणन्यायमुक्त्वा तद्वैषम्यमुपपादयति **न चेति** । तत्कथमित्यतो निर्वचनलब्धार्थप्रदर्शनपूर्वकं तस्य मुख्यप्राणे मुख्यत्वमुपपादयति **जीवनेति** । **जीवनचेष्टाहेतुत्वं हीत्येव** मूलपाठो बहुषु पुस्तकेषु दर्शनात् । क्वचित्तु **जीवनचेष्टाहेतुता ही**त्यपि पाठस्तत्रापि हेतुत्वमित्यर्थः । अतस्तचेत्युत्तरपरामर्श उपपन्न इति ध्येयम् ॥ **मुख्ये संभवतीति** । मुख्यप्राणे मुख्यं(?) संभवतीत्यर्थः । अतस्तत्र तस्य महायोग इति भावः । **शरीरे सति मुख्य इति** । शरीरे मुख्यप्राणे सतीत्यर्थः । **किं केन सङ्गतमिति** । अन्यनिष्ठान्वयव्यतिरेकयोरन्यनिष्ठकार्यकारणभावग्राहकत्वेऽतिप्रसङ्ग इति भावः । कुलालशरीरस्य घटं प्रत्यन्वयव्यतिरेकदर्शनेन कुलालस्य घटहेतुताग्रहवन्मुख्यप्राणशरीरभूतवायोर्जीवनं प्रत्यन्वयव्यतिरेकदर्शनमात्रेण मुख्यप्राणस्यापि तद्धेतुत्वग्रहो नानुपपन्नः । शरीरशरीरिभावस्यैव नियामकत्वान्नातिप्रसङ्गोऽपीत्याशयेन परिहरति **मैवमिति** ।

एवं मुख्यप्राणे महायोगोपपादकत्वेन भाष्यं योजयित्वा भगवति महायोगाभावोपपादकत्वेनापि भाष्यं योजयति ॥ **अथवेति** । मुख्यस्य प्राणादिहेतुताया दृष्टत्वात्कथमदृष्टिरित्यतोऽपेक्षितशेषं पूरयति **परमात्मन इति शेष इति** । ननु श्रुत्यादिना ब्रह्मणो जीवनादिहेतुत्वग्रहसंभवान्नान्वयव्यतिरेकाभ्यां प्राणादिहेतुत्वदृष्टिमात्रेण ब्रह्मणो जीवनादिहेतुत्वाभावसिद्धिरित्यतो मुख्यस्य जीवनहेतुत्वग्राहकान्वयव्यतिरेकानुसारेण 'येन जातानी'त्यादिश्रुतेरपि मुख्यप्राणविषयत्वेन श्रुत्या ब्रह्मणो जीवनादिहेतुत्वग्रहानुपपत्तेर्युक्तेवान्वयव्यतिरेकाभ्यां ब्रह्मणो हेतुत्वादृष्टिमात्रेण जीवनादिहेतुत्वाभावसिद्धिरित्यभिप्रेत्य सोपस्कारेण वाक्यतात्पर्यमाह **अन्वयव्यतिरेकाभ्यामिति** । अस्तु तर्हि ब्रह्मणो जीवनादिहेतुत्वग्रहोऽन्वयव्यतिरेकाभ्यामेवेत्यतः सत्यप्यन्वये ब्रह्मणः सर्वगतत्वादशरीरत्वाच्च तस्य वा तच्छरीरस्य वाऽस्मदादिशरीरे व्यतिरेकाभावेन ग्राहकयोरन्वयव्यतिरेकयोरभावान्न ताभ्यामपि तस्य तद्ग्रह इत्याह **न चेति** । तथा च प्राणशब्दनिर्वचनलब्धं जीवनादिहेतुत्वं न भगवद्गतमिति न तत्र तस्य निरवधिकत्वमिति भावः । उपलक्षणं चैतत् । जन्मादिसूत्रोक्तस्थितिहेतुताया असम्भवादिप्रसङ्गादन्यगतं न भगवदधीनमित्यपि द्रष्टव्यम् ॥ **मुख्यस्य दृश्यत इति** । एतदपि वायुविकाररूपशरीरद्वारेण द्रष्टव्यम् । अभ्यधिकाशङ्कान्तरमाह **न चेति** । नाप्यत्र निरवकाशलिङ्गमस्तीत्यर्थः । तथा च समुद्रशायित्वादिपरोवरीयस्त्वादिनिरवकाशलिङ्गानां श्रवणादिन्द्रादिश्रुतीनामाकाशादिश्रुतीनां च बाधसंभवेऽपीह वाक्ये तदश्रवणान्न प्राणश्रुतेर्बाध इति वैषम्यमुक्तं भवति । ननु निरवकाशस्य श्रीपतित्वलिङ्गस्यैव श्रवणात्कथं तदश्रवणमित्यतो-

ऽद्भ्यः संभूत इत्यनुवाके श्रीश्च ते लक्ष्मीश्च पत्न्यौ इत्युक्तस्य विष्णुत्वेऽपि भर्ता सन् भ्रियमाण इत्यनुवाके तद्वै त्वं प्राण इत्युक्तस्य न विष्णुत्वमिति भावेनात्रेत्युक्तम् । नन्वस्यार्थस्य भाष्यादलाभात्कथमिदं वैषम्यमुच्यत इत्यतः पूर्वपक्षभाष्यशेषपूरणमेतदित्युक्तं **पूर्वपक्षशेष इति** ॥

स०— ॥ ॐ **अत एव प्राणः** ॐ ॥ **शरीरे सति मुख्य इति** । सतीत्यस्य मुख्य इत्यनेन संबन्धः ।

प०— **अदहार इति** । इन्द्रादिभ्यो विष्णाविति योज्यम् । **जीवनचेष्टेति** । जीवनचेष्टयोर्हेतुतेत्यर्थः । वाक्यशेषे तथा प्रतीतेरग्रे स्पष्टयिष्यमाणत्वादिति भावः । शरीरेऽधिकरणे । मुख्ये सतीत्यर्थः ॥ **वायुविकारशरीरत्वान्मुख्यस्येति** । यथा कुलालशरीरान्वयादिना कुलालस्य हेतुता तथैवात्रापीति भावः । ननु मुख्यप्राणस्येव हरेरपि जीवनान्वयव्यतिरेकित्वे कथं निर्णय इत्यतो योजनान्तरं चाह **अथवेति** । आदिपदेनात्र न पूर्वत्रेव चेष्टाग्रहः । तस्यापि प्राणपदेनैवग्रहसंभवात् किन्तु भोगकारणत्वमिति भावेनाह **यद्वेति** ॥ **युक्तीति** । सर्वेन्द्रियदेवप्राणनादियुक्तीत्यर्थः । एनेन हरौ विद्वद्रूढिरपि निरस्ता । योगपूर्वकत्वात्तस्याः । एवं सौत्रप्रतिज्ञांशव्यावर्त्यमुक्त्वाऽत एवेति हेत्वंशव्यावर्त्यमाह **न चात्रेति** । किञ्चेति चार्थः । लक्ष्मीपतित्वादिकं तु 'अद्भ्यः संभूतः' इत्यनुवाकान्तरगतं भर्ता सन्नित्यनुवाकगतप्राणविशेषणं न भवति । प्राणविशेषणत्वे वा योगेन लक्ष्म्यादिशब्दस्य प्राणभार्यापरत्वमेवेति भावेनोक्तम् **अनन्यथासिद्धमिति किमपीति** च ।

या०— ॐ **अत एव प्राणः** ॐ ॥ **न चैवं प्रकृत इति** । अत्रापि पूर्वाधिकरणवैषम्येन पूर्वपक्षोत्थानादनन्तरसङ्गतिरनेन सूचितेति ज्ञातव्यम् ॥ **वायुविकारशरीरत्वादिति** । यथाकुलालशरीरस्य घटं प्रत्यन्वयव्यतिरेकदर्शनेन कुलालस्य तत्र हेतुताग्रहस्तथा प्रकृतेऽपीति भावः ॥ **अन्वयव्यतिरेकाभ्यां हीति** । प्रमाणान्तराभावादिति शेषः । 'येन जातानि जीवन्ति' 'इतरेण तु जीवन्ती'त्यादिश्रुतेर्मुख्यप्राणविषयत्वेन सावकाशत्वात् न श्रुत्या हेतुताग्रहः प्रकृते सम्भवतीति भावः । तथा च हेतुताया अन्वयव्यतिरेकमात्रगम्यत्वस्यात्रानभिप्रेतत्वाद्यथाश्रुते यागादेः स्वर्गादावहेतुत्वापात इति दूषणानवकाश इति ध्येयम् ॥ **पश्याम इति** । परमात्मनः सर्वगतत्वादशरीरत्वाच्च तस्य वा तच्छरीरस्य वा नास्मदादिशरीरेऽभाव इति न तद्व्यतिरेकाज्जीवनव्यतिरेकग्रहः सम्भवतीति भावः । तस्य वा तच्छरीरस्य वा नित्याव्यक्तस्वभावत्वान्न तद्ग्रह इति वा ॥ **मुख्यस्य दृश्यत इति** । इदमपि वायुविकाररूपशरीरद्वारेणेति द्रष्टव्यम् ।

च०— **न चैवं प्रकृत इति** । तथाच पूर्वनयवैषम्येण पूर्ववादिमतप्रवर्तनात्प्रत्युदाहरणरूपा सङ्गतिरनेन ध्वन्यत इत्यवमेयम् ॥ **वायुविकारशरीरत्वादिति** । घटादिनिरूपितान्वयव्यतिरेकयोः

कुलालादिशरीरे दर्शनेन तदधिष्ठितचेतनस्य यथा तन्निरूपितहेतुताप्रतिसंहतिस्तद्वत्प्रकृतेऽपीत्याशयः । **अन्वयव्यतिरेकाभ्यां हीति** । हेतुताग्राहकमानान्तरराहित्यादिति भावः । परमात्मनो जीवनादिहेतुत्वप्रतिपादकत्वेनोत्तरवादूरीकृता 'येन जातानि जीवन्ति' 'इतरेण तु जीवन्ती'ति श्रुतिरपि मुख्यप्राणस्य तद्धेतुत्वतात्पर्यकतया पूर्ववादिना नीयत इति हृदयम् । तथा च कार्यकारणभावस्यान्वयव्यतिरेकमात्रजनिताधिगतिविषयत्वस्यात्रानभिधित्सिततया यागस्वर्गयोः हेतुहेतुमद्भावस्यान्वयव्यतिरेकप्रतिसंहतिजनितावगतिविषयत्वेऽपि न क्षतिरित्यवसेयम् ॥ **पश्याम इति** । सर्वगततया अशरीरतया नित्याव्यक्तनिसर्गतया चेश्वरस्य नान्वयव्यतिरेकग्रह इति भावः ॥ **मुख्यस्य दृश्यत इति** । वायुविकारशरीरं द्वारीकृत्येत्यवसेयम् ।

सु० — **नन्वेवं चेन्न सूत्रमेतदाच्छादकमित्यतस्तस्य तात्पर्यमाह** ॥ अतिदेशो हीति ।

अनु० — अतिदेशो हि तादृशः ॥

**हिशब्दो हेतौ । एवमधिकाशङ्कया पूर्वपक्षे प्राप्ते सूत्रकृता तादृशः पूर्वोक्तसमानस्य परिहारन्यायस्यातिदेशः कृतो यस्मात्तस्मादुक्ताशङ्काच्छादकं भवत्येवेदं सूत्रमिति योज्यम् । यद्वा किमनेनाधिकाशङ्काव्युत्पादनेन । यथाभाष्यमेव पूर्वपक्षः किं न स्यादित्यत्रेदमुक्तम् । तादृशो ह्यतिदेशो यत् आशङ्काया आधिक्ये सति परिहारस्य समानत्वम् । यद्याशङ्कायां न विशेषस्तर्हि पूर्वेणैव परिहृतत्वात्प्राचीनन्यायातिदेशनमनर्थकं स्यात् । प्रत्युदाहरणं शङ्कापरिहारे शास्त्रापर्यवसानप्रसङ्गात् । यदि च परिहारोऽविशेषितो न स्यात्कथं तर्ह्यत एवेत्यतिदेश इति मन्दव्युत्पादनार्थमिदमुक्तम् । भाष्येऽप्यस्य सर्वस्यापि स्वीकारार्थं प्रसिद्धेरित्याह ।**

शे० — **यथाभाष्यमिति** । 'स च प्राणः प्रसिद्धेर्वायुरित्यापतती'ति यथाश्रुतभाष्यानुसारेण रूढ्यैव पूर्वपक्षः किं न स्यादित्यर्थः । नन्वतिदेशत्वादेव शङ्काधिक्यसिद्धेस्तादृशो हीति भाष्यमनर्थमित्यतो मन्दानामतिदेशस्वरूपस्य सुज्ञानत्वायैवेदमित्याह **मन्देति** । एवं भाष्येऽधिकाशङ्कां विनैव पूर्वपक्षमङ्गीकृत्यात्राभ्यधिकाशङ्काप्रदर्शनं समर्थितम् । अङ्गीकृत्य चेदमुक्तम् । वस्तुतो भाष्ये प्रसिद्धेरित्यनेनात्रोक्तस्याभ्यधिकाशङ्काप्रकारस्य सर्वस्य स्वीकृतत्वान्न तत्राभ्यधिकाशङ्काऽनुक्तिरित्याह **भाष्येऽपीति** ॥८ ॥

स० — **प्रसिद्धेरित्याहेति** । प्राणशब्दप्रवृत्तिनिमित्तस्य जीवनादिहेतुत्वस्यान्वयव्यतिरेकाभ्यां मुख्य एव प्रसिद्धेरित्यर्थः ।

प० — **पूर्वोक्तसमानस्येति** । महायोग विद्वद्रूढिनिरवकाशलिङ्गत्वेन पूर्वोक्तसमानस्येत्यर्थः ॥ **यथाभाष्यमेवेति** । प्रसिद्धेरिति भाष्यानुसारादन्यत्र रूढिमात्रेण पूर्वपक्षः किं न स्यादित्यर्थः । उदा-

हरणभेदेनातिदेशोऽर्थवान्स्यादित्यत आह **प्रत्युदाहरणमिति** ॥ **अस्य सर्वस्येति** । अन्वयव्यतिरेकतः प्राणादिहेतुताया मुख्य एव दृष्टेर्विष्णावदृष्टेरित्यादेस्सर्वस्येत्यर्थः ।

**या० —यथाभाष्यमेवेति** । 'स च प्राणः प्रसिद्धेर्वायुरित्यापतती'ति यथाश्रुतभाष्यानुसारेणेत्यर्थः । वस्तुतस्तु भाष्येऽपि प्रसिद्धेरित्यनेनैवायं सर्वोऽप्यर्थः स्वीकृत इत्याह **भाष्येऽपीति** ।

**श्री० —**तदुभयं क्रमेणोपपादयति **यद्याशङ्कायामित्यादिना** । ननु नानर्थकं तद्वैलक्षण्यमित्युदाहरणे प्राप्तपूर्वपक्षिशङ्कापरिहारायातिदेशस्य क्रियमाणतया सार्थक्योपपत्तेरित्यत आह **प्रत्युदाहरणमिति** । नन्वत एवेत्यतिदेशस्वरूपं तु ज्ञातमेव । तादृशो ह्यतिदेश इति किमर्थमुपपादनीय इत्यत आह **मन्देति** ।

**च० — यथाभाष्यमेवेति** । 'स च प्राणः प्रसिद्धेर्वायुरित्यापतती'ति श्रूयमाणानुपूर्वीकभाष्यानुरोधेनेत्यर्थः ।

**सु० — अतिदेशार्थमाह** लिङ्गमिति ।

**अनु० —** लिङ्गं बलवदेव स्यात्

**हरिरिति वक्ष्यमाणं सिंहावलोकनन्यायेनात्रापि संबध्यते । तेनैवशब्दस्य संबन्धः । अथवा मौत्रस्यैवशब्दस्यानुवादेन बलवदिति व्याख्यानम् । 'शब्दादेव प्रमितः'इति यथा । यतस्तस्मादित्यध्याहार्यम् । ततश्चायमर्थः । हरिरेवात्र प्राणः स्यात् । कुतः ? यतोऽत्र वैष्णवं लिङ्गं श्रूयते तस्मात् । 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ'इति सन्निहितवाक्ये श्रूयमाणस्य श्रीलक्ष्मीपतित्वस्य मनसाऽप्यन्यत्राशक्यचिन्तनस्य बलवत्त्वादिति ॥ ननूक्तं प्राणश्रुतिरपि निरवकाशा । शब्दप्रवृत्तिनिमित्तस्य प्राणनादिहेतुत्वस्यान्वयव्यतिरेकाभ्यां मुख्ये दृष्टत्वात्परमेश्वरे तदभावादित्यत्राप्येतदेवोत्तरम् । प्राणनादिहेतुत्वलिङ्गं प्राणशब्दप्रवृत्तिनिमित्तो धर्म इति यावत् । हरावेव मुख्यं स्यान्न मुख्य इति ।**

**शे० — अतिदेशार्थमाहेति** । तथा च 'लिङ्गं बलवदेव' इत्युत्तरवाक्यं नानर्थकमिति भावः । अनेन 'प्रसिद्धेरि'ति भाष्यं प्राणशब्दप्रवृत्तिनिमित्तजीवनादिहेतुत्वस्यान्वयव्यतिरेकाभ्यां मुख्यप्राणे प्रसिद्धेरित्येवं व्याख्यातं भवति । लिङ्गं बलवदित्येतावता पूर्तेरेवशब्दस्यानर्थक्यमित्यतो नैवशब्दस्य बलवदित्यनेन संबन्धः किन्त्वन्येनेत्यभिप्रेत्यैवशब्दसंबन्धयोग्यं दर्शयति **हरिरितीति** ॥ **व्याख्यानमिति** । तथा च व्याख्यानव्याख्येयभावान्न तद्वैयर्थ्यमिति भावः । कुतो बलवत्त्वस्यैवशब्दार्थत्वमित्यतो दृष्टत्वादित्याह **शब्दादेवेति** । अत्रैवकारस्य बलवत्त्वार्थस्य निश्चितत्वाद्दृष्टान्तीकरणमिति ज्ञेयम् ।

---

१. आशङ्काया आधिक्ये सति, परिहारस्य समानत्वम् (सुधा) इत्येतदुभयम् ।

सिंहावलोकनन्यायेन हरिरित्यस्याध्याहारेण यतस्तस्मादित्यस्य च लाभेन सिद्धं वाक्यार्थमाह **ततश्चेति** ॥ **श्रीश्च ते लक्ष्मीश्च पत्न्यौ इति** । यद्यपि तैत्तिरीयशाखायां ह्रीश्च त इति पाठस्तथाऽपि भाष्ये शाखान्तरम् (शुक्लयजुर्वेदीयकाण्वशाखां) आश्रित्य श्रीश्च त इति पठितत्वात्तदनुसारेण श्रीश्च त इतीह टीकायां पठितमित्यवधेयम् । **सन्निहितेति** । न चाद्भ्य इत्यनुवाके श्रीश्च ते लक्ष्मीश्चेत्यस्य पाठाद्भर्ता सन् भ्रियमाण इत्यनुवाके च तद्ब्रै त्वं प्राण इत्यस्य श्रवणान्न श्रीलक्ष्मीपतित्वस्य विषयवाक्यसन्निहित-वाक्ये श्रवणमिति वाच्यम् । श्रीश्च त इति युष्मच्छब्देनोक्तस्य तद्ब्रै त्वं प्राण इत्यत्रापि युष्मच्छब्देन प्रत्यभिज्ञानेनानुवाकद्वयस्यैकार्थ्यादेकवाक्यत्वमभिप्रेत्य सन्निहितवाक्ये श्रूयमाणत्वोक्तेरुपपन्नत्वात् । ननु श्रीलक्ष्मीपतित्वलिङ्गस्य निरवकाशत्वेऽपि न तेन प्राणश्रुतिबाधः । सावकाशश्रुतेर्निरवकाशलिङ्गेन बाधेऽपि निरवकाशश्रुतेरबाधात् । निरवकाशत्वमात्रप्रयुक्तप्राबल्यापेक्षया श्रुतित्वनिरवकाशत्वरूपप्रकारद्वयप्रयुक्त-प्राबल्यस्य बलवत्त्वेन तद्रूपद्वयोपेतप्राणश्रुत्यैव श्रीलक्ष्मीपतित्वरूपनिरवकाशलिङ्गबाधसंभवादिति भावेन शङ्कते **ननूक्तमिति** ॥ **हरावेवेति** । इदं च बलवदेव स्यादित्यस्य तात्पर्यार्थकथनमिति द्रष्टव्यम् ।

**स०**— एवशब्दस्य प्राबल्यार्थकत्वे दृष्टान्तमाह **शब्दादेव प्रमित इति यथेति** ॥ **हरावेव मुख्यमिति** । मुख्यमिति बलवदित्यस्य व्याख्यानम् ।

**प०**— **इति यथेति** । तत्रैवकारेण वामनश्रुतेर्बलवत्त्वस्य प्रमितग्रहणेन निरवकाशत्वस्य भाष्ये-ऽभिधानात् । परंतु तत्र श्रुतेर्जात्या अत्र तु लिंगस्य निरवकाशत्वेन बलवत्त्वमिति भेद इति भावः ॥ **श्रीश्चत इति** । यद्यपि 'ह्रीश्चत' इत्येव तैत्तिरीयाणां पाठस्तथापि भाष्योक्ततैत्तिरीयसमानशाखांतरवाक्य-मेवात्र पठितमित्यदोषः । वक्षस्स्थलस्थिताः श्रीः अङ्कस्था लक्ष्मीः ॥ **सन्निहितेति** । श्रीपतित्वादि-लिंगस्यानुवाकांतरस्थत्वेऽपि ते इति युष्मच्छब्दनिर्दिष्टस्यैव तद्ब्रै त्वं प्राण इत्यत्रापि युष्मच्छब्देन प्रत्यभि-ज्ञानेनानुवाकद्वयोक्तवस्तुन एकत्वात्सन्निहितेत्युक्तम् ॥ **अशक्यचिंतनस्येति** । लक्ष्म्यादिशब्दानां योगेन प्राणभार्यापरत्वे प्रसिद्धिबाध इति भावः ॥ **एतदेवेति** । लिंगं बलवदेव स्यादित्येतदित्यर्थः । बलवदि-त्यस्यार्थो मुख्यमिति ॥ **न मुख्य इति** । न मुख्यप्राण इत्यर्थः ।

**या०**— **शब्दादेवेति** । तत्रैवकारस्य बलवत्त्वम् अर्थतया क्लृप्तमस्तीत्यर्थः ॥ **श्रीश्च ते लक्ष्मीश्चेति** । यद्यपि तैत्तिरीयशाखायां ह्रीश्च त इति पाठः । तथाऽपि भाष्ये शाखान्तरमाश्रित्य श्रीश्च त इति पठितत्वात्तदनुसारेण श्रीश्च त इति पाठ इत्यवधेयम् ॥ **सन्निहितवाक्य इति** । यद्यप्यद्भ्यः संभूत इत्यनुवाके श्रीश्च ते लक्ष्मीश्चेति वाक्यं, भर्ता सन् भ्रियमाण इत्यनुवाके च तद्ब्रै त्वं प्राण इति वाक्यम् । ततश्च न श्रीलक्ष्मीपतित्वलिङ्गं विषयवाक्यसन्निहितवाक्ये श्रूयमाणम् । तथाऽप्यनुवाकद्वयस्य

एकार्थतयैकवाक्यत्वादेवमुक्तम् । कथमन्यथा श्रीश्च त इति युष्मच्छब्देनोक्तस्य तद्वै त्वं प्राण इत्यत्रापि युष्मच्छब्देन प्रत्यभिज्ञानमिति भाव: ।

**श्री०— शब्दादेवेति** न हि श्रुतेर्लिङ्गं बलवदिति भाष्ये सौत्रैवकारस्य बलवत्त्वार्थतया व्याख्यातत्वादिति भाव: ।

**च०— श्रीश्च ते लक्ष्मीश्च पत्न्याविति** । तैत्तरीयशाखायां ह्रीश्चत इति पाठेऽपि शाखान्तराश्रयणेन श्रीश्च त इति भाष्ये स्थिततया तादृशपाठमनुरुन्धानस्तथैवापाठीदिति ध्येयम् । वक्षस्थलस्था श्री: अङ्कस्था लक्ष्मी: । **सन्निहितवाक्य इति** । श्रीश्च त इति वाक्यस्योत्तरानुवाकस्थतया तद्वै त्वं प्राण इति वाक्यस्य च भर्ता सन्भ्रियमाण इत्यनुवाकस्थत्वेनैकानुवाकस्थताराहित्यनियंत्रितसन्निहितत्वाभावेन कथमयं निर्देश इति तु न शङ्कनीयम् । तादृशानुवाकद्वयस्य ते इति युष्मच्छब्दनिर्दिष्टस्यैव तद्वै त्वमित्यत्रापि युष्मच्छब्देन प्रत्यभिज्ञानेन एकार्थतात्पर्यकतानिबन्धनैकवाक्यत्वाभिप्रायकत्वात् तादृशनिर्देशस्य सामञ्जस्यमवसेयम् ।

**सु० कुतो जीवनादिहेतुत्वं हरौ मुख्यम् । अन्वयव्यतिरेकयोरभावादित्यत आह** प्रेरक इति ।

अनु०— प्रेरकोऽस्यापि यद्धरि: ॥ ९ ॥

अस्य जीवनादेर्मुख्याधीनतया प्रतीतस्यापीत्यपेरर्थ: । यत् यस्मात् 'श्रुत:' इति शेष: । **अयमर्थ: । मा भूतामन्वयव्यतिरेकावीश्वरस्य जीवनादिहेतुतासाधकौ । तथाऽपि श्रुतिबला-त्सेत्स्यति । न ह्यन्वयव्यतिरेकावेव कारणतायां प्रमाणम् । तथा सति स्वर्गादावग्निहोत्रादे: कारणता न स्यादिति । तर्हि प्रमाणद्वयबलाद् द्वयोरपि जीवनादिहेतुत्वे कुतो हरावेव तन्मुख्यमिति च न वाच्यम् । यतोऽस्य मुख्यस्यापि हरि: प्रेरक श्रूयत इति । मुख्ये कथं न मुख्यं जीवनादिहेतुत्वमित्यस्याप्येतदेवोत्तरम् । न हि परप्रेरणया भवत्तस्मिन्मुख्यमिति संभवतीति ।**

अथवा जीवनादि हेतुतासाधनाय यदन्वयव्यतिरेकानुविधायित्वं लिङ्गमुक्तं तद्विष्णुपक्ष एव मुख्यं स्यात् । न मुख्यपक्ष इति योज्यम् । उभयत्र हेतुमाह प्रेरक इति । यथा वायुविकारनिष्ठान्वयव्यतिरेकौ तस्य मुख्यशरीरत्वान्मुख्यविषयावङ्गीक्रियेते । तथाऽस्य मुख्यस्यापि हरि: प्रेरक इति तद्विषयाविति । मुख्ये न मुख्यं लिङ्गमित्यस्याप्येतदुपपादकम् । अनन्यथासिद्धान्वयव्यतिरेकौ हि कारणक्लृप्तिं कुर्वाते । न चेह तथाऽस्ति । यत: परमेश्वरावस्थानमेव जीवनकारणम् । मुख्यस्तु तदायत्तस्तच्छरीररूपस्तस्मिन्नवस्थितेऽवतिष्ठते निर्गते निर्गच्छतीति ।

**संवदतीमं सर्वमप्यर्थं श्रुतिः । 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' इत्येवंजातीयका । एवमेव युक्त्यानुकूल्यपरिहारायापि 'लिङ्गम्'इत्यादिकमेव योजनीयमिति ।**

**शे॰** — अन्वयव्यतिरेकयोरभावाच्छ्रुतेश्चान्वयव्यतिरेकानुसारेण मुख्यप्राणविषयत्वेन साधकाभावेन भगवतो जीवनादिहेतुत्वस्यैवासिद्धेर्न तस्य तत्र मुख्यत्वकल्पनावकाश इत्याशयेन शङ्कते **कुत इत्यादि** । अन्वयव्यतिरेकयोरभावादित्युपलक्षणम् । येन जातानि, इतरेण तु जीवन्ति इत्यादेर्मुख्यविषयत्वादित्यपि द्रष्टव्यम् । जीवनादिहेतुत्वस्य भगवति श्रुतिसिद्धत्वस्य भाष्यारूढतासिद्धये तदनुगुणं शेषं पूरयति **श्रुत इति शेष इति** । श्रुत इति शेषपूरणेन लब्धमर्थं दर्शयति **अयमर्थ इति ॥ श्रुतिबलादिति** । येन जातानि जीवन्ति इतरेण तु जीवन्ति इत्यादि श्रुतिबलादित्यर्थः । सेत्स्यतीत्यत्र ब्रह्मणो जीवनादिहेतुतेति शेषः । न च मुख्यस्य जीवनादिहेतुत्वग्राहकान्वयव्यतिरेकानुसारेणोदाहृतश्रुतेर्मुख्यविषयत्वात्कथं श्रुतिबलाद्ब्रह्मणो जीवनादिहेतुत्वसिद्धिः स्यादिति वाच्यम् । अधीहि भगवो ब्रह्मेति तद्ब्रह्मेतीति च पूर्वत्रोत्तरत्र च ब्रह्मशब्दात् येन जातानीत्यस्य, पूर्वत्र 'मध्ये वामनमासीनमि'ति वामनशब्दात् उत्तरत्र 'गुह्यं ब्रह्म सनातनमि'ति ब्रह्मशब्दादितरेण तु जीवन्तीत्यादेरपि, ब्रह्ममात्रविषयकत्वेन, श्रुतेर्मुख्यप्राणाविषयताया असंभवादित्याशयात् । अत एव बलादित्युक्तम् । इतीत्यस्येत्ययमर्थ इति पूर्वेण संबन्धः । तर्हीत्यस्यैव विवरणं **प्रमाणद्वयबलाद्द्वयोरपि जीवनादिहेतुत्व इति** । अत्र च प्रमाणद्वयं कारणत्वसाधकश्रुत्यन्वयव्यतिरेकरूपम् । **द्वयोर्**ब्रह्ममुख्ययोः । कुतो न वाच्यमित्यतोऽत्राप्येतदेवोत्तरं 'प्रेरकोऽस्यापि यद्धरिरि'ति मनसि निधाय प्रकृतोपयोगितया तद्व्याचष्टे **यतोऽस्य मुख्यस्य हरिः प्रेरकः श्रूयत इति** । 'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः' । 'सर्वं ह्येतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राचिनश्च स ह्येक एवैतान्नयत्युन्नयति वशीकरोति' । 'सर्वकर्ताऽपि सन् प्राणः परमाधारतः स्थितः' इत्यादिश्रुतिस्मृतिवाक्येषु मुख्यप्राणस्य भगवदधीनत्वोक्तेरिति भावः ।

एवं भगवति हेतुताऽवगमकयोरन्वयव्यतिरेकयोरभावमङ्गीकृत्य ताभ्यां जीवनादिहेतुताग्रहासंभवेऽपि श्रुत्या तदुपपत्तेर्भगवतः प्राणादिशब्दप्रवृत्तिनिमित्तवत्त्वात्तस्य च भगवत्येव मुख्यत्वान्मुख्ये चामुख्यत्वात्प्राणशब्दस्य भगवत्येव मुख्यत्वं प्राणे त्वमुख्यत्वमित्यस्यार्थस्य सिद्धये प्राणशब्दप्रवृत्तिनिमित्तजीवनादिहेतुत्वस्य ब्रह्ममुख्ययोर्मुख्यत्वामुख्यत्वोपपादकतया 'लिङ्गमि'त्यादिवाक्यद्वयं व्याख्यातम् । इदानीं तु हेतुतावगमकान्वयव्यतिरेकयोर्भगवत्यपि सत्त्वेन ताभ्यामपि तस्य जीवनादिहेतुत्वसिद्धिरप्रत्यूहेत्यभिप्रेत्य हेतुतावगमकस्यान्वयव्यतिरेकानुविधायित्वस्योभयत्राविशेषे जीवनादिहेतुत्वस्य मुख्यत्वामुख्यत्वविभागासिद्ध्या तदुपपादकतयाऽन्वयव्यतिरेकानुविधायित्वस्य मुख्यत्वामुख्यत्वविभागस्यावश्यं

प्रतिपादनीयत्वात्तत्प्रतिपादकतया वाक्यद्वयं व्याचष्टे **अथवेति** । अस्तु मुख्यप्रेरकत्वं हरेस्तावताऽपि कथं तदन्वयव्यतिरेकानुविधायित्वसिद्धिरित्यतः प्रेरकत्वोक्त्या लब्धमर्थमाह **यथेति** । 'हरिः प्रेरकः' इत्यनन्तरं मुख्यप्राणनिष्ठान्वयव्यतिरेकौ(हरिविषयकौ)मुख्यप्राणस्य हरिदेहत्वादिति शेषः । न चेश्वरस्य नास्मदादिशरीरेऽजीवनदशायामपि व्यतिरेकः संभवति तस्य सदा सर्वगतत्वादिति वाच्यम् । सर्वगतस्यापि तस्य भूमाधिकरणेऽस्मदादिशरीरादुत्क्रमणस्य वक्ष्यमाणत्वेनाजीवनदशायां रूपविशेषस्य व्यक्त्यात्मना तत्संयोगाभावेनास्मदादिशरीरे व्यतिरेकस्य संभवादिति भावः । नन्वस्तु भगवत्यन्वयव्यतिरेकानुविधायित्वस्य मुख्यत्वोपपादकत्वं प्रेरकत्वस्य न तु प्राणेऽमुख्यत्वोपपादकत्वमिति कथमुभयत्र हेतुमाहेत्युभयोपपादकत्वमुक्तमित्यतो मुख्येऽमुख्यत्वोपपादकत्वमपि तस्योपपादयति **मुख्ये न मुख्यं लिङ्गमित्यादि** । चेष्टाविषयेऽप्येवं श्रुतिर्द्रष्टव्येत्याशयेनोक्तम**एवंजातीयकेति** ॥ **युक्त्यनुकूल्यपरिहारायेति** । यदत्र वाक्ये 'नव देवान्प्राणय' इतीन्द्रियप्राणनमुक्तं, यच्च प्रजापतिशब्दोपलक्षितानां सर्वजीवानां भोगकारणत्वं, तदुभयमप्यन्वयव्यतिरेकाभ्यां मुख्यस्य दृश्यते न परमात्मन इति यत्परेण युक्त्याऽऽनुकूल्यमुक्तं तत्परिहारायापीत्यर्थः ॥ **योजनीयमिति** । **लिङ्गं** इन्द्रियप्राणनसर्वजीवभोगकारणत्वरूपं **बलवदेव** स्यात् । हरावेव मुख्यं स्यादिति यावत् । न तु मुख्ये । यतोऽस्य मुख्यस्यापि हरिरेव प्रेरक इति योजनीयमित्यर्थः ।

स०—**एवमेव युक्त्यानुकूल्येति** । यदत्र वाक्ये नव देवान् प्राणय इतीन्द्रियप्राणन युक्तम् । यच्च प्रजापत्युपलक्षितानां सकलजीवानां भोगकारणत्वं तदुभयमप्यन्वयव्यतिरेकाभ्यां अध्यात्मं मुख्यस्यैव दृश्यते न परमात्मन इति युक्त्यानुकूल्यं परेणोक्तम् । तत्परिहारायापीत्यर्थः । तथा चैवं योजना । लिङ्गं नव देव प्राणनं प्रजापत्युपलक्षितसकलजीवभोगकारणत्वं हरावेव मुख्यं न मुख्ये कुतः यतोऽस्य मुख्यस्यापि हरिरेव प्रेरकः तस्मादिति ।

प०— **मुख्याधीनतया** मुख्यप्राणाधीनतयेत्यर्थः ॥ **श्रुतीति** । इतरेण तु जीवन्तीति वक्ष्यमाणश्रुतिबलादित्यर्थः ॥ **प्रमाणद्वयेति** । अन्वयव्यतिरेकरूपश्रुतिरूपप्रमाणद्वयेत्यर्थः ॥ **श्रूयत इति** । यस्मिन्नेतावुपाश्रिताविति वक्ष्यमाणश्रुतिशेषे श्रयत इत्यर्थः । एतावित्यस्य प्राणापानाख्यरूपद्वयवान्मुख्यप्राण इत्यर्थत्वादिति भावः ॥ **एतदेवेति** । अस्य मुख्यप्राणस्यापि प्रेरको हरिरित्येतदेवेत्यर्थः । तद्व्यनक्ति **न हीति** । अत एव श्रुतौ न प्राणेन नापानेन मर्त्यो जीवति कश्चनेति मुख्यप्राणरूपयोः प्राणापानयोः जीवनहेतुत्वं निषिध्यते । अन्वयव्यतिरेकसिद्धस्य सर्वथानिषेधायोगेन मुख्यं जीवनहेतुत्वं नेत्यभिप्रायेण तन्निषेधसंभवात् अन्यथाऽसंभवादिति भावः । लिंगं बलवदेवेत्यस्यार्थान्तरं लिंगपदस्वारस्यमनुरुध्याह **अथवेति** । **तथाऽस्येति** । एतेन यस्मिन्नेतावुपाश्रितावित्यस्य एतौ जगज्जीवनदौ प्राणापानौ यस्मिन्मुख्यतो जगज्जीवनदे हरावुपाश्रितौ तत्प्रेरणया जगज्जीवनं कुरुत इत्यर्थः उक्तो भवति ।

यस्मिन्नेतावुपाश्रिताविल्यस्य तात्पर्यान्तरं व्यनक्ति **यतः परमेश्वरेति** ॥ **संवदतीमं सर्वमप्यर्थमिति** । यथा चैतत्तथा पूर्वमेव दर्शितम् । एवंजातीयकेत्यनेन तत्प्राणे प्रपन्न उदतिष्ठत् । तत्प्राण उत्क्रांतिपद्यतेत्यादेर्ग्रहणं सूचयति । वक्ष्यमाणप्राणनयन्यायेन तत्रापि प्राणशब्दस्य विष्णुपरत्वात् ॥ **युक्त्यानुकूल्यपरिहारायापीति** । यद्देवान्प्राणयो नवेति वाक्यशेषोक्तेंद्रियप्राणनसर्वजीवभोगकारणत्वरूपयुक्त्यानुकूल्यस्य पूर्वपक्षयुक्तस्य परिहारायापि लिङ्गं इन्द्रियप्राणनादिलिंगं हरावेव बलवत् मुख्यं न तु मुख्यप्राणे । कुतः । प्रेरकोस्यापि यद्धरिरिति योज्यमित्यर्थः । 'येन वा पश्यति येन वा शृणोति' 'प्राणस्य प्राण' इत्यादिश्रुतेरिति भावः ।

**या०— श्रुतिबलादिति** । ईश्वरस्य जीवनादिहेतुतेति शेषः । येन जातानि जीवन्तीति श्रुतिबलादित्यर्थः । अत्र तद्ब्रह्मेति उत्तरत्र ब्रह्मशब्दश्रवणान्न मुख्यप्राणविषयतयेयं श्रुतिः सावकाशतार्हेति भावः ॥ **हरिः प्रेरकः श्रूयत इति** । 'सर्वं ह्येवैतत्परमेऽवतिष्ठते । प्राणश्च प्राणाश्च प्राणिनश्च स ह्येक एवैतान्नयत्युन्नयति वशीकरोती'त्यादिवाक्येष्विति शेषः । अभ्युपेत्य चेदमुदितम् । वस्तुतस्त्वीश्वरस्य जीवनादिहेतुतासाधकावन्वयव्यतिरेकावपि सम्भवत इत्याह **अथवेति** । हरिः प्रेरक इत्यनन्तरमतो मुख्योऽपि हरिदेहस्थानीय इति ग्राह्यम् । तथा च मुख्यप्राणगतावन्वयव्यतिरेकौ मुख्यस्य भगवच्छरीरत्वात्तद्विषयावित्युक्तं भवति । यथोक्तम् । 'वायुवृत्तिर्यथा मुख्यप्राणदेहस्तथैव सः । विष्णोर्देहस्ततस्तस्यैवान्वयव्यतिरेकते'ति । न चेश्वरस्य सर्वदा सर्वगतत्वादजीवनदशायां व्यतिरेकासम्भव इति वाच्यम् । रूपविशेषस्य व्यक्त्यात्मना संयोगाभावाद्व्यतिरेकोपपत्तेः । अत एव भूमाधिकरणे ईश्वरस्यास्मदादिशरीरादुत्क्रमणं वक्ष्यत इति ध्येयम् । इतरेण तु जीवन्तीत्यत्रेतरशब्दो न मुख्यप्राणपरः किन्तु ब्रह्मपर एव । पूर्वत्र 'मध्ये वामनमासीनमि'ति वामनशब्दादुत्तरत्र च 'गुह्यं ब्रह्म सनातनमि'ति ब्रह्मशब्दादित्यवधेयम । एवं चेष्टाविषयेऽपि श्रुतिरुदाहार्येत्याशयेन **एवंजातीयके**त्युक्तम् ॥ **एवमेव युक्त्यानुकूल्येति** । 'यद्देवान्प्राणयो नव' इत्यादिवाक्योक्तेन्द्रियप्राणनसकलजीवभोगकारणत्वरूपयुक्त्याऽनुकूल्यं यत्परेणोक्तं तत्परिहारायापीत्यर्थः । तथा चात्र लिङ्गमिन्द्रियप्राणनादिरूपं हरावेव मुख्यमित्यादियोजना द्रष्टव्या । अत्रापि श्रुतिं सूचयितुं पूर्वमेवंजातीयकेत्युक्तमिति ज्ञातव्यम् ।

**श्री०— न स्यादिति** । अग्निहोत्राभावेऽपि गङ्गास्नानादपि स्वर्गस्य जायमानत्वेन व्यतिरेकाभावादिति भावः ।

**च०— श्रुतिबलादिति** । ईश्वरस्य जीवनादिहेतुतेत्युपस्कृतेन योजनीयम् ॥ **ब्रह्मेति** । ब्रह्मपदसमभिव्याहाराधीननिरवकाशताक 'येन जातानि जीवन्ती'ति श्रुतिबलादित्यर्थः । **हरिः प्रेरकः श्रूयत इति** । 'सर्वं ह्येवैतत्परमेऽवतिष्ठते प्राणश्च प्राणाश्च प्राणिनश्च स ह्येक एवैतान्नयत्युन्नयति वशीकरोति'

इत्यादिवाक्येष्विति पूरणीयम् । ईश्वरधर्मिकान्वयव्यतिरेकप्रतिसन्धाननिबन्धनापि जीवनादिहेतुताधिगतिः सङ्गच्छत इत्याह **अथवेति** । हरिः प्रेरकः इत्यस्यानन्तरमतो मुख्योऽपि हरिशरीरकल्प इत्युपस्कर्तव्यम् । तथाच'वायुवृत्तिर्यथा मुख्यप्राणदेहस्तथैव सः । विष्णोर्देहस्ततस्तस्यैवान्वयव्यतिरेकिते'त्याकरोक्त्या मुख्यस्य भगवच्छरीरकल्पत्वात्तस्तद्गतान्वयव्यतिरेकावपीशगताविति ध्येयम् । ईश्वरस्य सर्वगतत्वेऽपि अभिव्यक्तरूपविशेषस्य तत्संयोगराहित्येन व्यतिरेकोऽपि सूपपादः । **इतरेणेति** । ब्रह्मणेत्यर्थः । 'मध्ये वामनमासीनं' गुह्यं ब्रह्म सनातनमि'ति पूर्वोत्तरयोर्वामनब्रह्मशब्दश्रवणात् । **युक्त्याऽनुकूल्यपरिहारायापीति** । यद्देवान्प्राणयों न वेति वाक्यशेषाभिहितेन्द्रियप्राणनसर्वजीवभोगकारणत्वरूपयुक्त्यानुकूल्यस्य पूर्ववाक्याभिहितस्य परिजिहीर्षया लिङ्गमिन्द्रियप्राणनादिरूपं हरावेव बलवन्मुख्यं न तु मुख्यप्राणे प्रेरकोऽस्यापि यद्धरिरिति योजनीयमित्यर्थः । येन पश्यति येन वा शृणोति प्राणस्य प्राण इत्यादिश्रुतेरिति भावः ।

सु० — अत्र केचित् । 'प्राणस्य प्राणं प्राणबन्धनं हि सोम्य मनः' इति चोदाहरन्ति । तदयुक्तमित्यपरे । शब्दभेदात्प्रकरणवशाच्च संशयानुपपत्तेः । यथा पितुः पितेति प्रयोगेऽन्यः पिता षष्ठीनिर्दिष्टोऽन्यः प्रथमानिर्दिष्टः पितामह इति गम्यते । तद्वत्प्राणस्य प्राणमिति शब्दभेदात्प्राणादन्यः प्राणस्य प्राण इति निश्चीयते । न हि स एव तस्येति भेदनिर्देशो भवति । यस्य च प्रकरणे यो निर्दिश्यते नामान्तरेणापि स एव तत्प्रकरणनिर्दिष्ट इति गम्यते । यथा ज्योतिष्टोमाधिकारे 'वसन्ते वसन्ते ज्योतिषा यजेत'इत्यत्र ज्योतिःशब्दो ज्योतिष्टोमविषयो भवति । तथा परस्य ब्रह्मणः प्रकरणे 'प्राणबन्धनं हि सोम्य मनः' इति श्रुतः प्राणशब्दो वायुविकारमात्रं कथमवगमयेत् । अतः संशयाविषयत्वान्नैतदुदाहरणं युक्तम् । किन्तु 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ते'त्युपक्रम्य श्रूयते 'कतमा सा देवता'इति । 'प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति । प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता' इत्येतदुदाहरणवाक्यमिति ।

शे० — ननु वृत्तिकृतामुदाहरणस्यैवात्रोदाहरणत्वोपपत्तौ किमित्युदाहरणान्तराश्रयणं भाष्यकारस्येत्यतस्तत्रानुपपत्तिप्रदर्शनपूर्वकं भाष्यकारीयमुदाहरणमुपपादयितुं चिरन्तनवृत्तिकृतामुदाहरणं तावदनुवदति **अत्र केचिदिति** । सर्वत्र सन्दिग्धमेव वाक्यमुदाहृत्य निर्णीयते इदं त्वसन्देहान्नैवमिति ॥ **तदिति** । अपरे मायावादिनः । कथमेतयोरसन्दिग्धत्वमित्यतः पूर्वस्य शब्दभेदेन द्वितीयस्य च प्रकरणेन निर्णीतत्वादिति भावेनाह **शब्दभेदादिति** । शब्दभेदं विवृणोति । **यथेति** । राहोः शिर इतिवद्व्यपदेशमाशङ्क्य घटो घटस्येति व्यपदेशादृष्टेर्नैवमित्याह **न हीति** । अत्र स एव तस्येति भेदनिर्देशार्हो

भवतीति मूलपाठः । तत्र स एव तत्प्रतियोगिकाभेदवानेव तस्येति भेदनिर्देशस्याहों योग्यो विषय इति यावत् भवतीति न हि दृष्टमिति योजना । क्वचित्स एव तस्येति भेदनिर्देशो भवतीति पाठः । तत्र स एव तस्येति यो भेदनिर्देशः सोऽभेदे न हि भवति घटो घटस्येत्येकस्मिन्नव्यवहारादिति योज्यम् । प्रकरणं प्रपञ्चयति **यस्येति** । तदेव दृष्टान्तेन स्पष्टयति **यथेति** । प्राणः परमात्मा बन्धनमाश्रयः स्वरूपं यस्येति विग्रहः । वाक्ययोर्निश्चितार्थत्वे फलितमाह **अत इति** । तर्हि विषयवाक्याभावादधिकरणानारम्भप्रसङ्ग इति शङ्कते । **किन्त्विति** । सन्दिग्धवाक्यान्तरमेवोदाहरणमित्याह **प्रस्तोतर्या देवतेत्यादि** । उषस्तिश्चाक्रायणः किल ऋषिर्धनाय राज्ञो यज्ञमभिगम्य ज्ञानवैभवमात्मनः प्रकटयितुकामः प्रस्तोतारमुवाच । हे प्रस्तोतर्या देवता प्रस्ताव इति साम्नो भक्तिविशेषस्तमन्वायत्ताऽनुगताऽधिष्ठात्रीति यावत् । तां चेदविद्वान्मम विदुषः सन्निधौ प्रस्तोष्यसि मूर्धा ते निपतिष्यतीति । स भीतः पप्रच्छ कतमेत्यादिना । प्रतिवचनं प्राण इति । मुख्यप्राणं व्यावर्तयति **सर्वाणीति** । प्राणमभिलक्ष्य लयकाले संविशन्ति जन्मकालेऽमेवाभिलक्ष्योज्जिहते उद्गच्छन्ति सैषा परा देवता प्रस्तावं भक्तिविशेषमनुगतेत्यर्थः ।

स० — **शब्दभेदात् प्रकरणाच्चेति** ॥ पूर्ववाक्ये शब्दभेदात्संशयानुपपत्तिः । द्वितीये तु प्रकरणादिति विवेको द्रष्टव्यः ।

प० — वृत्तिकारादिमतमाह **अत्रकेचिदिति** ॥ **अपर इति** । मायावादिप्रभृतयः । अयुक्तत्वं व्यनक्ति **शब्देति** । पूर्ववाक्ये शब्दभेदात्संशयानुपपत्तिः द्वितीये तु प्रकरणादिति विवेको द्रष्टव्यः । वाक्यद्वये संशयानुपपत्तौ क्रमादुक्तं हेतुद्वयं क्रमेण व्यनक्ति **यथेत्यादिना नैतदुदाहरणं युक्तमित्यन्तेन** । **ज्योतिष्टोमाधिकारे** ज्योतिष्टोमप्रकरणे । तदयुक्तमित्यपर इत्युक्तं तन्मतमाह **किं त्वित्यादिना** ॥ **श्रूयत इति** । छान्दोग्ये प्रथमाध्याये । प्रस्तोतरिति संबोधनम् । **प्रस्तावमन्वायत्ता** प्रस्तावप्रतिपाद्या । **प्राणमेवे**त्यादिवाक्येन प्राणस्य सर्वभूतोत्पत्तिलयहेतुत्वमुच्यते ।

या० — **शब्दभेदात्प्रकरणाच्चेति** । पूर्ववाक्ये शब्दभेदात्संशयानुपपत्तिः । द्वितीये तु प्रकरणादिति विवेको द्रष्टव्यः ॥ **किन्तु प्रस्तोतर्या देवतेति** । प्रस्ताव इति साम्नो भक्तिविशेषस्तमन्वायत्ताऽनुगताऽधिष्ठात्रीति यावत् । चक्रायणः किल ऋषिर्धनाय राज्ञो यज्ञमधिगम्य ज्ञानवैभवमात्मनः प्रकटयितुकामः प्रस्तोतारमुवाच । हे प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्मम विदुषः सन्निधौ प्रस्तोष्यसि मूर्धा ते निपतिष्यतीति । स भीतः पप्रच्छ । कतमा सेति । प्रत्युक्तिः प्राण इत्यादीति विषयवाक्यार्थो ज्ञातव्यः ।

च० — वृत्तिकारादीनां मतमाह **केचिदिति** । अपरे मायावादिप्रभृतयः ॥ **शब्दभेदात्प्रकरणाच्चेति** । वाक्यद्वये सन्देहानुपपत्तिबीजं क्रमेण दर्शयति **नैतदुदाहरणं युक्तमित्यन्तेन** । **ज्योतिष्टोमाधिकारे** ज्योतिष्टोमप्रकरणे । मायावादिप्रभृतीनां मतमाह **किं त्विति** ॥ **श्रूयत इति** । छान्दोग्ये प्रथमाध्याय इति पूरणीयम् ॥ **प्रस्तोतर्या देवतेति** । सामभक्तिविशेषः प्रस्तावस्तमन्वायत्ता तदधिष्ठात्री । प्रस्तावप्रतिपाद्येत्यपि स्थितम् । धनाय राज्ञो यज्ञं प्रयातः सौवाधिगमवैपुल्यं स्फुटीचिकीर्षुश्चाक्रायणनामा ऋषिः प्रस्तोतारमभ्यधात् । हे प्रस्तोतर्या देवता प्रस्तावाधिष्ठात्री तामजानानः मदभ्यर्णे प्रस्तोष्यसि मूर्धा ते निपतिष्यति स भीतोऽप्राक्षीत् कतमा सा देवतेति । प्रतिवचनं प्राण इत्यादीति विषयवाक्यार्थोऽधिगन्तव्यः ।

**सु०—एतदप्ययुक्तम् । संशयपूर्वपक्षयोरनुत्थानात् । 'ननु प्राणबन्धनं हि सोम्य मनः' 'प्राणस्य प्राणमि'ति चैवमादौ ब्रह्मविषयः प्राणशब्दो दृश्यते । वायुविकारे तु प्रसिद्धो लोकवेदयोः । अतः प्राणशब्देन कतरस्योपादानमिति भवति संशयः । मैवम् । वायुविकारे देवताशब्दस्य प्रस्तावमन्वायत्तत्वस्य चासंभवात् । चेतनस्य हि देवताशब्दो मन्त्राधिष्ठानं(नत्वं) चोपपन्नम् । किञ्चात्र भूतानां संवेशनमुद्गमनं च पारमेश्वरं कर्म प्रतीयते । तेन पूर्ववत्तद्ग्रहणमेव युक्तम् । कुतः पूर्वपक्षस्यावकाशः । यतो वा इमानि भूतानीति हि सर्वप्राणिनिकायस्य ब्रह्मण्येव संवेशनं तत एवोद्गमनं च श्रावयति । 'सुप्तिजागरयोरपि सता सोम्य तदा संपन्नो भवती'त्यादि ।**

शे० — **अनुत्थानादिति** । त्वदुदाहरणेऽपि वाक्यशेषविरोधात्तुल्यमसन्दिग्धत्वमिति नास्याप्युदाहरणत्वं युक्तमिति भावः । आकाशादिशब्दवत्प्राणशब्दस्योभयत्र प्रयुक्तिरेव संशयहेतुरित्याशङ्कते **नन्विति** । मनःशब्दलक्ष्यं तत्साक्षिचैतन्यं प्राणे परस्मिन्नैक्येन स्थितमित्याद्यवाक्यार्थः । प्राणस्य पञ्चवृत्तेर्वायुविकारस्य प्राणं सत्तास्फूर्तिदमात्मानं ये विदुस्ते ब्रह्म जानन्तीति द्वितीयवाक्यार्थः । अमृतः प्राणो ब्रह्मैवेत्यादिसंग्रहार्थमेवमादावित्यादिपदम् । तथा च कुतः संशय इत्यत्राह **वाग्विति** । हेतुमुक्त्वा फलमाह **अत इति** ॥ **देवताशब्दस्येति** । कतमा सा देवतेति सैषा देवतेति च प्रश्नप्रतिवचनयोः श्रुतस्येत्यर्थः । न च प्राणशब्दस्य जडवाय्वभिमानिचेतनपरत्वाद्देवताशब्दाद्युपपत्तिरिति वाच्यम् । तथा सति, 'वायुविकारस्य पञ्चवृत्तेः प्राणस्योपपादनं युक्तमि'ति त्वत्पूर्वपक्षभाष्यविरोधप्रसक्तेरिति भावः । यद्वैतदस्वरसादाह **किञ्चेति** । उभयत्र प्रयुक्तस्याप्याकाशशब्दस्य ज्यायस्त्वादिलिङ्गबलाद्ब्रह्मपरत्ववत्तादृशस्य प्राणशब्दस्यापि ब्रह्मलिङ्गबलाद् ब्रह्मपरत्वस्य तल्लिङ्गन्यायेन सिद्धत्वान्न पूर्वपक्षावसर इति भावः । आकाशवाक्योक्तं ज्यायस्त्वादिलिङ्गमत्र नास्तीत्याशङ्क्याह **अत्रेति** । सर्वाणि ह वा इमानि

भूतानि प्राणमेवाभिसंविशन्तीति वाक्यशेष इति शेषः । कुतो भूतसंवेशनादेः पारमेश्वरकर्मत्वं येन पूर्वपक्षस्यानवकाश इत्यतः **किमत्र** सृष्टिप्रलयकालीनं तद्विवक्षितं किंवा सुप्तिजागरकालीनमिति विकल्पं मनसि निधायोभयमपि श्रुतिबलेन ब्रह्ममात्रनिष्ठमित्याह **यतो वा इत्यादिना** । आदिशब्देनैतस्माज्जीव उत्तिष्ठन्तीत्यस्य संग्रहः । तथा च प्रस्ताववाक्यस्य ब्रह्मणि भूतलयादिबोधक'यतो वे'त्यादिश्रुत्यनुसारेण ब्रह्मणि सर्वभूतलयादिपरत्वेन तल्लिङ्गादिति न्यायेनात्रोक्तप्राणो ब्रह्मैवेति निर्णयान्न पूर्वपक्षावसर इति भावः ।

**स०— प्रस्तावमन्वायत्तत्वस्येति** ॥ सामभक्तिषु मध्ये प्रस्तावो नाम सामभक्तिस्तं अन्वायत्तत्वस्येत्यर्थः ॥ **मन्त्राधिष्ठानमिति** भावप्रधानो निर्देशः । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशतीति वाक्योक्तं भूतसंवेशनादिकं सृष्टिप्रलयकालीनं वा सुप्तिजाग्रत्कालीनं वा । आद्य आह **यतो वा इमानीति** ॥ द्वितीय आह **सुप्तिजागरयोरपीति** ।

**प०**— संशयोत्थानमाशङ्क्य निराह **नन्वित्यादिना** । जन्मलयहेतुत्वरूपनिरवकाशब्रह्मलिङ्गसद्भावेन तल्लिङ्गादिति पूर्वोक्तन्यायेन प्राणस्यापि ब्रह्मत्वनिर्णयसंभवादिति भावेन पूर्वपक्षानुदयं च व्यनक्ति **विश्वेति** । कथमिदं पारमेश्वरलिङ्गमित्यतस्तद्वाक्यं प्रलयसृष्टिकालीनलयादिपरमुत सुप्तिजागरणकालीनलयादिपरम् । आद्ये आह **यतो वा इति** । अन्त्ये आह **सुप्तीति** ।

**या०**— सर्वाणि ह वा इमानि भूतानीति वाक्योक्तं भूतसंवेशनादिकं सृष्टिप्रलयकालीनं वा विवक्षितं सुप्तिजागरकालीनं वा । आद्य आह **यतो वा इमानीति** । द्वितीय आह **सुप्तिजागरयोरपीति** । आदिपदेनैतस्माजीव उत्तिष्ठतीत्यस्य ग्रहणम् ॥

**श्री०**— साधारणधर्मभूतप्राणशब्ददर्शनात्संशय इत्याशयेन कोटिसहचारं तस्योपपादयति **नन्विति** । समबलत्वाभावान्न संशय इत्याह **मैवमिति** । पूर्वत्र प्राणबन्धनं हि सोम्य मन इत्यत्रेवेत्यर्थः । भूतसंवेशनोद्गमनयोः पारमेश्वरकर्मत्वं कुत इत्यतः श्रुत्यन्तरेणोपपादयति **यतो वा इति** ।

**च०**— सर्वाणि ह वा इमानि भूतानीति वाक्याभिहितं भूतसंवेशनादिकं सृष्टिप्रलयकालीनं विवक्षितं सुप्तिजागरकालीनं वेति कल्पद्वयीघटकादिमकल्पं प्रत्याह **यतो वा इमानि भूतानीति** । द्वितीयं प्रतिविधत्ते **सुप्तिजागरयोरपीति** ।

**सु०— ननु मुख्येऽपि प्राणे संवेशनोद्गमने दृश्येते । 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं मनः प्राणं श्रोत्रम् । यदा प्रतिबुध्यते प्राणादेवाधि पुनर्जायन्ते' इति । एवं तर्हि संशयः स्यान्न पूर्वपक्षः । समबलत्वात् ।**

**किञ्च 'यदा वै पुरुष' इति श्रुतिरपि मुख्यप्राणविषयेति कुतोऽवगतम् । स्वापकाले प्राणवृत्तावपरिलुप्यमानायामिन्द्रियवृत्तयः परिलुप्यन्ते । प्रबोधकाले च प्रादुर्भवन्तीति**

**प्रत्यक्षानुगुण्यान्मुख्यप्राणविषयत्वं प्राबल्यं च निश्चीयत इति चेन्न । इन्द्रियाणामतीन्द्रियाणां मुख्यप्राणे संवेशोद्गमनयोरप्रत्यक्षत्वात् । अनुमानमस्त्विति चेन्न । परमात्मनोऽप्यपरिलुप्यमानस्य विद्यमानत्वेनावधारणानुपपत्तेः ।**

शी० — ननु प्रस्ताववाक्यस्य प्रसिद्धप्राणे सर्वभूतलयादिपरत्वेन ब्रह्मणि सर्वभूतलयादिपरत्वाभावान्नात्र परमेश्वरधर्मप्रतीतिरिति कथं तल्लिङ्गादिति न्यायेन ब्रह्मपरत्वम् । न चास्य प्रसिद्धप्राणे सर्वभूतलयादिपरत्वमेव कुत इति वाच्यम् । यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येतीति प्रसिद्धप्राणे संवेशनोद्गमनप्रतिपादकश्रुत्यन्तरानुसारेण तत्सिद्धेः । न च तत्र प्रसिद्धप्राणे इन्द्रियसंवेशनोद्गमनयोः श्रुतत्वेन भूतसंवेशनोद्गमनपरत्वाभावात्कथं प्रसिद्धप्राणे इन्द्रियसंवेशनादिप्रतिपादकस्वापवाक्यानुसारेण भूतसंवेशनोद्गमनप्रतिपादकप्रस्ताववाक्यस्य प्रसिद्धप्राणे तत्परत्वसिद्धिरिति वाच्यम् । स्वापवाक्यस्यापि भूतसारेन्द्रियलयायुक्तिद्वारा भूतलयपरत्वेन तदुपपत्तेः । न चैवं ब्रह्मणि भूतसंवेशनोद्गमनप्रतिपादक'यतो वे'त्यादिश्रुत्यनुसारात्प्रस्ताववाक्यस्य ब्रह्मणि सर्वभूतलयादिपरत्वमेव किं न स्यात् । स्वापवाक्यानुसारेण प्रसिद्धप्राणे सर्वभूतसंवेशनपरत्वमेव न तु 'यतो वे'त्यादिश्रुत्यनुसारेण ब्रह्मणि सर्वभूतलयादिपरत्वमित्यत्र नियामकाभावादिति वाच्यम् । स्वापश्रुतेः प्राबल्याद्यतोवेत्यादिश्रुतेश्च दुर्बलत्वेन प्राबल्यदौर्बल्यभावस्यैव तत्र नियामकत्वात् । न च श्रुतिद्वयस्य प्राबल्यदौर्बल्यभावोऽपि निर्निबन्धनः उभयोः परस्परानपेक्षत्वादिति वाच्यम् । प्रसिद्धप्राणे सर्वभूतलयादिपरायाः स्वापश्रुतेर्मानान्तरानुगृहीतत्वेन ब्रह्मणि लयादिबोधिकायाश्च यतो वेत्यादिश्रुतेस्तदननुगृहीतत्वेन ताभ्यामेव प्राबल्यदौर्बल्यनिश्चयसम्भवात् । तथा च मानान्तरानुगृहीततया प्रबलस्वापश्रुत्यनुसारेण प्रस्ताववाक्यस्य प्रसिद्धप्राणे सर्वभूतलयपरत्वेऽपि मानान्तराननुगृहीततया दुर्बल,'यतो वे'त्यादिश्रुत्यनुसारेण ब्रह्मणि लयादिपरत्वाभावात्प्रस्ताववाक्यं प्रसिद्धप्राणपरमेवेत्यभ्यधिकाशङ्कया पूर्वपक्षप्रवृत्तेर्न गतार्थतेत्यभिप्रेत्य गूढाभिसन्धिः शङ्कते **नन्विति** । श्रुतौ तर्हीत्यस्य तस्यामवस्थायामित्यर्थः । स्वापश्रुतेर्मानान्तरसंवादस्य सर्वभूतलयपरत्वस्यैव वक्ष्यमाणरीत्याऽनुपपत्तेर्नोक्तरीत्याऽभ्यधिकाशङ्का सम्भवतीत्यभिप्रेत्य पूर्वपक्ष्यभिसन्धिमुद्धाट्य दूषयितुमविदिताशय इव तावत्परिहरति **एवं तर्हीति** ॥ **संशयः स्यादिति** । प्रस्ताववाक्यं स्वापवाक्यानुसारेण मुख्यप्राणे भूतसंवेशनोद्गमनप्रतिपादकं किंवा यतो वेत्यादिश्रुत्यनुसारेण ब्रह्मणि भूतसंवेशनोद्गमनप्रतिपादकमिति संशय एव स्यान्न त्वेककोट्यवधारणात्मा पूर्वपक्षः स्यादित्यर्थः । कुतो न स्यादित्यतः संवादकश्रुत्योः समानबलत्वादित्याह **समबलत्वादिति** । अङ्गीकृत्य चैतदुक्तम् ।

वस्तुतस्तु स्वापवाक्यस्य मुख्यप्राणविषयत्वासिद्धेर्न संशयस्याप्यवकाश इत्याह **किञ्चेति** । परमात्मपरत्वस्यापि संभवादिति भावः । स्वापवाक्यस्य मानान्तरानुगृहीततया यतो वेत्यादिवाक्यान्तरा-

पेक्षया प्राबल्यात्तदनुसारेण प्रस्तावव़ाक्यस्य मुख्यप्राणे सर्वभूतसंवेशनादिपरत्वमेवेति निश्चयोपपत्तेर्युक्तः पूर्वपक्ष इति पूर्ववादी स्वाभिसन्धिमुद्घाटयति **स्वापकाल इति** ॥ **मुख्यप्राणविषयत्वमिति** । प्राणवृत्तेर्मुख्यप्राणशरीरत्वादिति भावः । स्वापवाक्यस्य मानान्तरानुगृहीतत्वेन प्राबल्यं वदन्प्रष्टव्यः ; किं प्रत्यक्षानुगृहीतत्वं किंवाऽनुमानानुगृहीतत्वमिति विकल्पं मनसि निधायाद्यं दूषयति **नेन्द्रियाणामिति** । मुख्यप्राण इत्युपलक्षणम् । प्राणवृत्तावित्यपि द्रष्टव्यम् । द्वितीयमाशङ्कते **अनुमानमस्त्विति चेदिति** । प्राण इन्द्रियसंवेशनोद्गमनवान् तेषु निर्व्यापारेष्वपि स्वयं सव्यापारत्वात् । यो येषु निर्व्यापारेष्वपि स्वयं सव्यापारः स तत्संवेशनोद्गमनवान् यथा नदीषु निर्व्यापारासु सव्यापारः समुद्रो नदीसंवेशनोद्गमनवानिति । इन्द्रियाणि वा स्वापकाले मुख्यप्राणे संवेशनोद्गमनवन्ति तस्मिन्सव्यापारेऽपि स्वयं निर्व्यापारत्वात् । सव्यापारेऽपि समुद्रे निर्व्यापारनदीवदिति वाऽत्रानुमानप्रयोगो बोध्यः । नानेनानुमानेन प्राणस्येन्द्रियसंवेशनोद्गमनसिद्धिः । इन्द्रियेषु निर्व्यापारेषु सत्सु परमात्मनः सव्यापारत्वेऽपीन्द्रियसंवेशनोद्गमनवत्त्वाभावेन व्यभिचरितत्वात् । यदि च तस्यापि सपक्षत्वान्न व्यभिचार इति मन्यसे तर्ह्यनुमानेनोभयोरपि संवेशनोद्गमनवत्त्वसिद्ध्या न प्राणस्यैव तत्त्वेनावधारणसिद्धिस्तदसिद्धौ च न स्वापवाक्यस्य प्राणमात्रपरत्वसिद्धिस्तदभावे च प्रस्तावव़ाक्यस्याप्युभयपरस्वापवाक्यानुसारेण प्रसिद्धप्राणब्रह्मपरत्वापत्त्या पूर्वपक्ष्यभिमतस्य प्राणमात्रपरत्वेनावधारणस्यासिद्धिः स्यादित्याह **परमात्मनोऽपीति** ।

**स०— अनुमानमस्त्विति चेदिति** । प्राणः इन्द्रियसंवेशनोद्गमनवान् । तद्वृत्तिलोपेऽप्यपरिलुप्यमानतयावस्थानात् । यो यद्वृत्तिलोपेऽप्यपरिलुप्यमानतयाऽवस्थितः सः तत्संवेशनोद्गमनवान् । यथा नदीवृत्तिलोपेऽप्यपरिलुप्यमानतयाऽवस्थितः समुद्रो नदीसंवेशनोद्गमनवानित्यनुमानमेव इन्द्रियसंवेशोद्गमनसाधकं भविष्यति । तथाचोदाहृतश्रुतेरनुमानसंवादेनैव प्राणविषयत्वं प्राबल्यं च निश्चीयत इति भावः ।

**प०— मुख्येपि प्राणसंवेशोद्गमने दृश्येते इति** । ननु वक्ष्यमाणश्रुताविन्द्रियाणामेव प्राणसंवेशोद्गमने श्रूयेते न तु भूतानाम् । तथा च 'सर्वाणि ह वा इमानि भूतानि प्राणमभिसंविशन्तीत्यादिश्रुतेर्मुख्यप्राणविषयत्वसाधने कथमियं श्रुतिः समाख्येति चेन्न । इन्द्रियसारत्वाद्भूतानां प्रस्तावव़ाक्यमपि स्वापवाक्यानुरोधेन प्रसिद्धप्राण एव भूतलयद्वारेन्द्रियलयपरमेवेति तात्पर्यात् । शङ्कितुरभिप्रायमुद्घाट्य निराह **स्वापेति** ॥ **अनुमानमस्त्विति** । प्राणवृत्तिर्देवता वा इन्द्रियोद्गमनाधारः इन्द्रियेषु परिलुप्यमानेषु प्राणस्यापरिलुप्यमानत्वात् । सामान्यव्याप्त्या यथा मृत्पिण्डो घटस्येत्यादिरूपमनुमानमित्यर्थः ॥ स्वापकाले इन्द्रियलोपेप्यपरिलुप्यमानतयावस्थानादित्यनुमानमेव प्राणे इन्द्रियसंवेशोद्गमनसाधकं भविष्यति । तथा चोदाहृतश्रुतेरनुमानसंवादेनैव प्राणविषयत्वं प्राबल्यं च निश्चीयत इति भावः ॥ **अवधारणेति** । प्राण एवेत्यवधारणेत्यर्थः ।

**या०— मुख्यप्राणविषयत्वमिति ।** प्राणवृत्तेर्मुख्यप्राणशरीरत्वादिति भावः ॥ **प्राबल्यं चेति ।** तथा च पूर्वपक्षोपपत्तिरिति भावः ॥ **अनुमानमिति ।** प्राण इन्द्रियसंवेशनोद्गमनवान् तद्वृत्तिलोपेऽप्यपरिलुप्यमानतयाऽवस्थानात् । यो यद्वृत्तिलोपेऽप्यपरिलुप्यमानतयाऽवस्थितः स तद्वत्संवेशनोद्गमनवान् यथा संगते(=मे) नदीवृत्तिलोपेऽप्यपरिलुप्यमानतयाऽवस्थितः समुद्रो नदीसंवेशनोद्गमनवानित्यनुमानमेव प्राणे इन्द्रियसंवेशनोद्गमनसाधकम् । तथा चोदाहृतश्रुतेरनुमानसंवादेनैव प्राणविषयत्वं प्राबल्यं च निश्चेतुं शक्यमिति भावः ।

**च०— अनुमानमिति ।** प्राणपक्षकं भूतसंवेशनोद्गमनवत्तासाध्यकं तद्वृत्तिलोपेऽप्यपरिलुप्यमानतयाऽवस्थितिहेतुकं यो यद्वृत्तिलोपेऽप्यपरिलुप्यमानतयाऽवस्थितः स तत्संवेशनोद्गमनवान् यथा नद्यादिवृत्तिविलोपेऽप्यपरिलुप्यमानतयाऽवस्थितसागरो नद्यादिसंवेशनोद्गमनवानिति सामान्यव्याप्तिकमनुमानमित्यर्थः ।

**सु०— किञ्चेन्द्रियाणां मुख्यप्राणे संशयोद्गमनयोः श्रुत्यनुमानसिद्धत्वेऽपि किमायातं सर्वभूतसंबन्धिनोस्तयोः इन्द्रियसारत्वात् भूतानां नासङ्गतिरिति चेत् । किमेतदनुमानं संभावना वा । नाद्यः । व्याप्त्यभावात् । द्वितीये तु श्रुत्यनुमानाभासमूलसंभावनामात्रेण श्रुतिबाधया पूर्वपक्ष इति सुभाषितम् । नन्वादित्योऽन्नं चोद्गीथप्रतिहारदेवते तावद्ब्रह्मणोऽन्ये । तत्सा(म्या)मान्यात् प्राणस्यापि न ब्रह्मत्वमिति पूर्वपक्षोऽस्त्विति चेन्न । निर्णायकाभाव एव प्रायपाठस्यानुसरणीयत्वात् । स्पष्टं चात्र पारमेश्वरं कर्मेत्युक्तम् । अन्यथा छत्रचामराद्यसाधारणलिङ्गसद्भावेऽपि सामन्तसन्निधिमात्रेण राजा न राजा स्यात् । कथं चावधारितमादित्योऽन्नं च न ब्रह्मेति । श्रूयते हि तत्रापि 'सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति' इत्यादि ब्रह्मलिङ्गम् । 'अन्नमेव प्रतिहरमाणानि' इति तु प्रायपाठादुपजीवनार्थं ग्राह्यम् । तस्मात्संशयपूर्वपक्षयोरसंभवान्नेदमुदाहरणम् । किन्तु न्यायविदामग्रेसरेणानन्तवेदविदा भाष्यकृतोपात्तमेवेति सिद्धम् ॥ १-१-९ ॥**

**शे०—** स्वापवाक्यस्यानुमानसंवादेन मुख्यप्राणस्य सर्वभूतसंवेशनोद्गमनप्रतिपादकत्वे तदनुसारेण प्राणे सर्वभूतसंवेशनोद्गमनप्रतिपादकस्य प्रस्तावावाक्यस्य मुख्यप्राणे सर्वभूतलयादिपरत्वप्राप्तावपि स्वापवाक्यस्यानुमानसंवादेन मुख्यप्राणे इन्द्रियाणां संवेशनादिप्रतिपादकत्वाङ्गीकारे भिन्नविषयकत्वेन न स्वापवाक्यस्य प्रस्तावबाक्यनिर्णायकत्वमित्याशयेनाह **किञ्चेति ।** प्रसिद्धप्राणे भूतसारेन्द्रियलयाद्युक्तिद्वारा सर्वभूतलयपरत्वात्स्वापवाक्यस्य समानविषयतया प्रस्तावबाक्यनिर्णायकत्वोपपत्तेर्नासङ्गतिरित्यवशिष्टं पूर्व-

वाद्यभिसन्ध्येकदेशमुद्धाटयति **इन्द्रियसारत्वादिति** । इन्द्रियाणि साराणि येषां तेषां भावस्तत्त्वं तस्मादित्यर्थः । स्यादेतदेवं यदि भूतसारेन्द्रियलयाद्युक्त्या स्वापवाक्यस्य सर्वभूतलयादिपरत्वमुपपन्नं स्यात् । न चैतदस्ति । तथा हि । किमत्र भूतसारेन्द्रियाणां प्रसिद्धप्राणे संवेशनोद्गमनयोस्तत्र भूतसंवेशनोद्गमनाविनाभूतत्वाद्व्याप्यसमर्पकतया तद्व्यापकभूतसंदेशनादिपरत्वमित्यभिप्रेतमुत भूतसारेन्द्रियाणां तत्र संवेशनादेर्भूतसंवेशनादिसंभावकत्वात्तदभिधायकस्य तत्संभाव्यमानभूतसंवेशनादिपरत्वमिति भावेन विकल्पयति **किमेतदिति** । प्राणो भूतसंवेशनोद्गमनवान् तत्सारेन्द्रियसंवेशनोद्गमनवत्त्वात् यो यत्सारसंवेशनादिमान् स तत्संवेशनादिमान् यथा नदीसारफेनादिसंवेशनादिमान्समुद्रो नदीप्रवेशनादिमानिति सामान्यव्याप्तिमूलकानुमानमित्यर्थः ॥ **व्याप्त्यभावादिति** । ऊर्णनाभिदेहादेः स्वसारभूततन्त्वादिसंवेशनादिमत्त्वेऽपि स्वसंवेशनादिमत्त्वाभावादिति भावः ॥ **श्रुत्यनुमानाभासेति** । यदा वै पुरुषः स्वपितीत्यादिका श्रुतिः, तद्वृत्तिलोपेऽप्यपरिलुप्यमानतयाऽवस्थानादित्यनुमनं च ते एव मूलं यस्याः प्राणे इन्द्रियसंवेशनादिना भूतानामपि तत्र संवेशनादिसंभावनायास्तन्मात्रेणेत्यर्थः ॥ **श्रुतिबाधयेति** । ब्रह्मणि सर्वभूतलयादिप्रतिपादक—यतोवेत्यादिश्रुतिबाधयेत्यर्थः । अधिकाशङ्कान्तरमाशङ्कते **नन्विति** । 'कतमा सा देवतोद्गीथमन्वायत्तेत्यादित्य इति होवाच कतमा सा प्रतिहारमित्यन्नमिति होवाचेति श्रुतेरिति भावः । **उद्गीथप्रतिहारौ** सामभक्तिविशेषौ । तत्सामान्यात्तत्साहचर्यादित्यर्थः ॥ **निर्णायकाभाव एवेति** । विषये

प्रायदर्शनादिति वचनादिति भावः । अस्तु तर्हि प्रकृतेऽपि निर्णायकाभावादेव प्रायपाठानुसरणमित्यत आह **स्पष्टं चेति** । अस्तु निर्णायकसद्भावेऽपि प्रायपाठस्यानुसरणीयत्वमित्यत आह **अन्यथेति** । आदित्यान्नयोरब्रह्मत्वं परोक्तमङ्गीकृत्य तत्साहचर्यस्याप्रयोजकत्वमुक्तम् । असिद्धं च तदित्याह **कथं चेति** । ब्रह्मत्वसाधकाभावादेवेति चेत्तत्राह **श्रूयते हीति** । आदिपदेन सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्तीत्यस्य परिग्रहः । नन्वन्नमेव प्रतिहरमाणानीति वाक्यस्य भूताद्यत्वप्रतिपादकत्वेन न ब्रह्मधर्मप्रतिपादकत्वमिति कथं तस्यादिपदेन संग्रह इत्यत आह **अन्नमेवेति** । पारमेश्वरकर्माभिधायकवाक्यप्रायपाठादित्यर्थः ॥ १–१–९ ॥

स० — **इन्द्रियसारत्वाद्भूतानामिति** । प्राणः भूतसंवेशनोद्गमनवान् तत्सारभूतेन्द्रियसंवेशनोद्गमनवत्त्वात् । यो यत्सारसंवेशनादिमान् स तत्संवेशनादिमान् इति सामान्यव्याप्तिमूलकमनुमानमित्यर्थः । **व्याप्त्यभावादिति** ॥ ऊर्णनाभेः स्वसारभूततन्तुसंवेशनादिमत्त्वेऽपि स्वसंवेशनादिमत्त्वाभावः ॥ **तत्सामान्यात्** । तत्सहपाठादित्यर्थः । नन्वन्नस्य ब्रह्मरूपत्वे अन्नमेव प्रतिहरमाणानीति कथं युज्यते । ब्रह्मणोऽद्यत्वासंभवादित्यत आह **अन्नमेव प्रतिहरमाणानीति त्विति** ॥ **प्रायपाठात्** पारमेश्वरकर्माभिधायकवाक्यप्रायपाठात् ।

प०—**इन्द्रियसारत्वादिति** । इन्द्रियाणि सारभूतानि येषामिति बहुव्रीहिः । तथा चेन्द्रियाणां भूतसारत्वादिति लक्ष्यते (तथा च प्राणस्यापरिलुप्यमानत्वादिति हेतुर्विपक्षे बाधकसत्त्वादसाधारणानैकांतिक इति भावः१) किमेतदनुमानमिति प्रस्तावमिन्द्रियादिलयपरं भूतसारेन्द्रियलयपरत्वादित्यनुमानं चेत् विशेषव्याप्त्यभावादिति भावेनाह **किमेतदनुमानमिति** । प्राणः भूतसंवेशोद्गमनवान् तत्सारभूतेन्द्रियसंवेशोद्गमनवत्त्वात् । यो यत्सारसंवेशनादिमान्स तत्संवेशनादिमानिति सामान्यव्याप्तिमूलकमनुमानमित्यर्थः ॥ **व्याप्त्यभावादिति** । ऊर्णनाभेः स्वसारभूततन्तुसंवेशनादिमत्त्वेऽपि स्वसंवेशनादिमत्त्वाभावादिति भावः ॥ **श्रुतिबाधेति** । प्रस्तावश्रुतेर्ब्रह्मपरत्वबाधेन परवाक्यरीत्या प्रसिद्धप्राण एवेन्द्रियलयादिपरं प्रस्तावमिति पूर्वपक्ष इत्यर्थः । अब्रह्मप्रायपाठात्प्रस्ताववाक्यमब्रह्मपरमितिपूर्वपक्ष्यत इति भावेन शंकते **नन्वादित्य इति** । कतमा सा देवता उद्गीथमन्वायत्ता आदित्य इति होवाचेति कतमा सा देवता प्रतिहारमन्वायत्ता अन्नमिति होवाचेति वाक्यद्वये श्रुत आदित्योऽन्नं चेत्यर्थः । **निर्णायकाभाव एवेति** । विशये प्रायदर्शनादिति जैमिनिसूत्रादिति भावः । नन्वस्य ब्रह्मरूपत्वेऽन्नमेव प्रतिहरमाणानीति कथं युज्यते । ब्रह्मणोऽद्यत्वासंभवादित्यत आह **अन्नमेव प्रतिहरमाणानीति** । भुंजानानीत्यर्थः ॥ **प्रायपाठादिति** । ब्रह्मपरत्वेन निर्णीतप्रस्तावोद्गीथवाक्यद्वयप्रायपाठादित्यर्थः ॥ १ । १ । ९ ॥ छ ॥

या०—**इन्द्रियसारत्वादिति** । इन्द्रियाणि साराणि येषामिति बहुव्रीहिः । तथा चेन्द्रियाणां

---

भूतसारत्वादिति लभ्यते । यथाऽऽह कल्पतरुकारः । भोगप्रत्यासत्तेरिन्द्रियाणां भूतसारत्वादिति ॥ **किमेतदनुमानमिति** । प्राणः भूतसंवेशनोद्गमनवान् । तत्सारभूतेन्द्रियसंवेशनोद्गमनवत्त्वात् । यो यत्सारसंवेशनादिमान् स तत्संवेशनादिमान् । यथा नदीसारफेनादिसंवेशनादिमान्समुद्रो नदीसंवेशनादिमानिति सामन्याप्तिमूलकानुमानमित्यर्थः ॥ **व्याप्त्यभावादिति** । ऊर्णनाभिदेहादेः स्वसारभूततन्त्वादिसंवेशनादिमत्त्वेऽपि स्वसंवेशनादिमत्त्वाभावादिति भावः । एतेनेन्द्रियाणां भूतसारत्वेन प्रधानतया तद्वाचकशब्दैर्भूतलक्षणाऽतो नासङ्गतिरिति यत्कल्पतरावुक्तं तदपि निरस्तं वेदितव्यम् । स्वापादिकाले जडे देवतायां वा महाभूतानां लयादेरप्रामाणिकत्वात् । दृष्टिसृष्टिपक्षाश्रयणे च तदा वायुविकारादेरप्यनुमानायोगादिति ॥ **श्रुत्यनुमानाभासेति** । यदा वै पुरुष इत्यादिका श्रुतिः । तद्वृत्तिलोपेऽप्यपरिलुप्यमानतयाऽवस्थानादित्यनुमानं च प्राणेन्द्रियसंवेशनादिना भूतानामपि तत्र संवेशनादिसम्भावनायां मूलमित्यर्थः । श्रुतेरुक्तरीत्या सावकाशत्वेनाभासत्वं उक्तानुमानस्योर्णनाभ्यादावेव व्यभिचारादाभासत्वमिति ज्ञेयम् ॥ **श्रुतिबाधयेति** । यतो वेत्यादिश्रुतिबाधयेत्यर्थः । नन्वन्नस्य ब्रह्मत्वेऽन्नमेव प्रतिहरमाणानीति कथं युज्यते । ब्रह्मणोऽद्यत्वासंभवादित्यत आह **अन्नमेव प्रतिहरमाणानीति** ॥ **प्रायपाठादिति** । पारमेश्वरकर्माभिधायकवाक्यप्रायपाठादित्यर्थः ॥ १–१–९ ॥

श्री०— **सर्वभूतसंबन्धिनोस्तयोरिति** । तथाच भूतसंवेशनोद्गमनाधिकरणत्वलिङ्गेन परमेश्वर-परत्वं भविष्यतीति भावः । अब्रह्मप्रायपाठात्प्रस्तावववाक्यमब्रह्मपरमिति पूर्वपक्ष्यत इत्यभिप्रायेण शङ्कते **नन्वादित्य इति** । कतमा सा देवता प्रतिहारमन्वायत्ता, आदित्य इति होवाचेति, कतमा सा देवता प्रतिहारमन्वायत्ता अन्नमिति होवाचेति वाक्यद्वये श्रुतमादित्योऽन्नं चेत्यर्थः । नन्वन्नस्य ब्रह्म प्रतिहर-माणानीत्युक्ताद्यत्वविरोध इत्यत आह **अन्नमेवेति** । **प्रतिहरमाणानि** भुञ्जानानि ॥ **प्रायपाठादिति** । उद्गीथप्रस्तावदेवतयोर्ब्रह्मत्वेन तत्प्रायपाठादित्यर्थः ॥ १-१-९ ॥

च०— **इन्द्रियसारत्वादिति** । षष्ठ्यर्थबहुव्रीहिप्रकृतिकभावप्रत्ययः । इन्द्रियाणां भूत-सारत्वादित्यर्थः । भोगप्रत्यासत्तेरिन्द्रियाणां भूतसारत्वादितिकल्पतरुकारोक्तेः ॥ **किमेतदनुमानमिति** । प्राणपक्षकं भूतसंवेशोद्गमनवत्तासाध्यकं तत्सारभूतेन्द्रियसंवेशनोद्गमनवत्ताहेतुकं नदीसारत्वेनादिमान् सागरो नदीसंवेशनादिमानिति सामान्यव्याप्तिकमनुमानमित्यर्थः ॥ **व्याप्त्यभावादिति** । स्वसारभूत-तन्तुसंवेशनादिमत्यूर्णनाभिशरीरे स्वसंवेशनादिमत्ताविरहेणेत्याशयः । विशेषव्याप्तौ सामान्यव्याप्तौ च निदर्शनाभावादित्यप्याशयं प्रकाशयन्ति । **श्रुतिबाधयेति** । यतो वेत्यादिश्रुतिबाधयेत्यर्थः । प्रस्तावश्रुते-र्ब्रह्मतात्पर्यकत्वबाधेन स्वापवाक्यदिशा प्रसिद्धप्राण एवेन्द्रियलयादितात्पर्यकं प्रस्तावववाक्यमिति च पूर्वपक्ष इत्यर्थः ॥ **प्रतिहरमाणानीति** । भुञ्जानानीत्यर्थः ॥ **प्रायपाठादिति** । ब्रह्मतात्पर्यकत्वावधृतिविषयी-भूतप्रस्तावोद्गीथवाक्यद्वयसमभिव्याहारादित्यर्थः ॥ १-१-९ ॥

॥ इति प्राणाधिकरणम् ॥

सु० — **ज्योतिश्चरणाभिधानादित्यत्राधिकाशङ्का भाष्य एव दर्शिता । यदाहाग्निसूक्तत्वादिति ॥ १–१–१० ॥**

**शे०** — ॐ **ज्योतिश्चरणाभिधानात्** ॐ ॥ ननु कर्णादिविदूरत्वरूपनिरवकाशविष्णुलिङ्गबलात्, अग्न्यादिश्रुतेर्जडपरत्वे आकाशाधिकरणन्यायेन, देवतापरत्वे चान्तरधिकरणन्यायेन, ब्रह्मपरत्वान्न सावकाशाग्निश्रुत्या ज्योतिषोऽग्नित्वेन पूर्वपक्ष इति पूर्वाधिकरणेष्विवात्राप्यधिकाशङ्कयैव सूत्रारम्भो वर्णनीयस्तत्कुतोऽत्राभ्यधिकाशङ्काया अप्रदर्शनमित्यतो भाष्य एव तत्प्रदर्शनादत्राप्रदर्शनमित्याशयेनाह **ज्योतिश्चरणाभिधानादित्यत्रेत्यादि** । तत्कथमवगम्यत इत्यत आह **यदाहेति** । भाष्यकार इति शेषः । तद्वाक्यमुदाहरति **अग्निसूक्तत्वादितीति** । यद्यप्यत्र तत्तत्सूक्तस्थानामग्न्यादिश्रुतीनां विष्णौ सावकाशत्वे सूक्तानामपि विष्णौ सावकाशत्वमेवेति न सावकाशप्रकरणानुगृहीतश्रुत्याऽपि पूर्वपक्षोदयो युक्तः । न चैवं सर्वसूक्तानां विष्णुसूक्तत्वेनेदमग्निसूक्तमिदं वायुसूक्तमित्यध्यापकप्रसिद्धेरयोगात्सूक्तं निरवकाशमिति युक्तः सूक्तानुगृहीतश्रुत्युक्त्या पूर्वपक्षोदय इति वाच्यम् । सर्वसूक्तानां वैष्णवत्वेऽपीदमग्निसूक्तमिदं त्वन्यदिति व्यवस्थाया अभिव्यक्तेरिति वक्ष्यमाणरीत्योपपन्नत्वेन तन्निरवकाशत्वायोगात् । तथा च सावकाशसूक्तस्य निरवकाशविष्णुलिङ्गैः सुतरां बाधान्न तदवष्टम्भेन पूर्वपक्षोदय इति नेयमभ्यधिकाशङ्का संभवति । तथापि वक्ष्यमाणन्यायेनेदमग्निसूक्तमिदं वायुसूक्तमित्यादिव्यवस्थायाः संभवेऽपीदमग्निसूक्तं न तु विष्णुसूक्तमित्यध्यापकप्रसिद्धेरयोगात्सूक्तं निरवकाशमिति युक्तस्तेन निरवकाशलिङ्गबाधया पूर्वपक्षोदयः । निरवकाशत्वमात्रप्रयुक्तस्य लिङ्गगतस्य प्राबल्यस्य श्रुतिगतान्निरवकाशसूक्तसाहित्यश्रुतित्वोभयप्रयुक्तप्राबल्यात् दुर्बलत्वात् । न च लिङ्गस्य बहुत्वप्रयुक्तस्यापि प्राबल्यस्य सत्त्वेन साम्यमेवेति कथमवधारणमिति वाच्यम् । तत्प्रयुक्तप्राबल्यस्य श्रुतित्वरूपस्वभावप्रयुक्तप्राबल्यात् दुर्बलत्वात् । तस्मान्निरवकाशलिङ्गेन सूक्तानुगृहीताग्न्यादिश्रुतिबाधः । अन्तरधिकरणस्थेन्द्राग्न्यादिश्रुतिस्तु न सूक्तानुगृहीतेति युक्तो निरवकाशलिङ्गैस्तद्बाध इति चन्द्रिकोक्तरीत्याऽभ्यधिकाशङ्काप्रकारोऽत्र द्रष्टव्यः । विशेषस्तु चन्द्रिकायां द्रष्टव्यः ॥ ॥ १–१–१० ॥

मु०— तेन वक्तव्याभावादुत्तरं गायत्र्यधिकरणमेव विव्रियते । अधिवेदगताशेषनाम्ना-मुपलक्षणस्य वेदमातुस्त्रैवर्णिकद्वितीयजन्मनि जनन्या गायत्र्याः प्राधान्येन तन्नाम्नः समन्वयं प्रतिपादयितुं सूत्रम् छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनमिति ।

ब्र. सू.—

## ॐ छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॐ

छन्दोगाः पठन्ति । (छां. ३.१२.१) गायत्री वा इदं भूतमित्यादि । तत्र संशयः । किं गायत्री ब्रह्म किं(वा) वर्णसमावेशलक्षणो मन्त्र इति । मन्त्र एवेति तावत्प्राप्तम् । कुतः । गायत्रीशब्दस्य छन्दोविशेषे प्रसिद्धत्वात् । नन्वेतदपि पूर्वन्यायेनैव परिहृतमित्यतोऽभ्यधिकाशङ्कया पूर्वपक्षयति नित्यत्वादिति ।

अनु०— नित्यत्वादेव शब्दस्य तत्स्वभावः कथं हरेः ॥

भवेदाकाशादिशब्दानां परमात्मपरत्वम् । अन्यगतस्य शब्दप्रवृत्तिनिमित्तस्येश्वरपरतन्त्रत्वेन तत्र मुख्यवृत्त्ययोगात् । यद्यपि विवरत्वादिकं कारणतः स्वरूपतोऽप्यनागन्तुकम् । तथाऽपि धर्मिण एवाकाशादेरुत्पत्तिविनाशवतो जन्मस्थितिलयेष्वीश्वराधीनत्वे धर्मस्यापि तथाभावोऽवर्जनीयः । न चाकाशोऽनादिनित्य इति युक्तम् । आत्मन आकाशः सम्भूत इत्यादिश्रुतिविरोधात् । यस्त्वनादिवाच्यमाकाश इत्युक्तोऽव्याकृताकाशः सोऽनादिनित्योऽपि न तत्र पूर्वपक्षिणो विवक्षितः । भूतप्रकरणत्वात । न चैवं प्रकृते सम्भवति । गायत्रीशब्दप्रवृत्तिनिमित्तं हि गानत्राणकर्तृत्वम् । यथाऽऽह श्रुतिः । गायति च त्रायते च तस्माद्गायत्रीति (छां. ३.१२.१) तत्र गानकर्तृत्वं नाम अर्थप्रतिपादकत्वम् । त्राणकर्तृत्वं चाध्येतॄणां पापाद्रक्षणशक्तिः । तदुभयमपि कथं केन प्रकारेण हरेः अधीनं स्यात् । न केनापि । तथा हि । विवरत्वादिवद्धर्मिणा सहैव तदधीनं वा स्यात् । ध्वनिवत्स्वयमेव वा । नाद्यः । धर्मिणः शब्दस्य वेदस्य दित्यत्वादनादित्वाच्च । धर्मिण एव नित्यत्वे तेन सह पराधीनत्वं कुत इति एवार्थः । न द्वितीयः । अर्थप्रतिपादनादिशक्तेस्तत्स्वभावत्वात् ।

शे०— ॥ ॐ छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॐ ॥ अत्र सूत्रे समन्वेतव्यतयाऽभिप्रेतो गायत्रीशब्दो न स्वमात्रपरः किन्तु सजातीयानामुष्णिगादिशब्दानामुपलक्षणमिति भावेनैतदधिकरणसमन्वेतव्यशब्दावच्छेदकोपाधिकथनपूर्वकमेतदधिकरणप्रतिपाद्यमाह अधिवेदगतेति । कुतस्तर्हि सूत्रे गायत्रीशब्दस्यैव समन्वेतव्यतयाऽभिप्रेतत्वमन्येषां तूपलक्षणत्वमित्यत उक्तं

**प्राधान्येनेति** । तत्र हेतुर्वेदमातुरित्यादि । अभ्यधिकाशङ्काप्रदर्शनप्रयोजकतया गतार्थताशङ्कामुत्थापयितुं विषयसंशयपूर्वपक्षानाह **छन्दोगा इति** ॥ **पूर्वन्यायेनेति** । अन्तरधिकरणन्यायेनेत्यर्थः ।

नन्वाकाशादिशब्दप्रवृत्तिनिमित्तस्यान्यगतस्यापि परमेश्वराधीनत्वात्तत्रैवाकाशादिशब्दानां मुख्यत्ववद्गायत्र्यादिशब्दप्रवृत्तिनिमित्तस्यान्यप्यगतस्य परमेश्वराधीनत्वेन तत्रैव तच्छब्दानां मुख्यत्वसम्भवान्नेयमाकाशादिशब्देभ्योऽभ्यधिकाशङ्केत्यतो न्यायवैषम्यमुपपादयितुं पूर्वाधिकरणसिद्धमाकाशादिशब्दानां भगवति मुख्यत्वं तावदनुवदति **भवेदाकाशादिशब्दानामिति** '' **तत्रेति** । भूत इत्यर्थः ॥ **यद्यपीति** । एतच्चाकाशाधिकरणीयाभ्यधिकाशङ्काप्रदर्शनावसरे व्युत्पादितमनुसन्धेयम् ॥ **न चेति** । तथा च तस्येश्वराधीनत्वासिद्धेर्न तद्धर्मस्यापि तदधीनत्वप्रसङ्ग इति भावः । किं भूताकाशस्यानादिनित्यत्वमुच्यते किंवाऽव्याकृताकाशस्य वेति विकल्पं मनसि निधायाद्यं दूषयति **आत्मन इति** । इति होवाचेति वाक्ये आकाशशब्दार्थत्वेनाव्याकृताकाशस्याविवक्षितत्वान्न द्वितीय इत्याह **यस्त्विति** । इति होवाचेत्यत्राविवक्षैव कुत इत्यत आह **भूतेति** । एवमाकाशादिशब्दप्रवृत्तिनिमित्तस्यान्यगतस्य भगवदधीनत्वादाकाशादिशब्दानां भगवति मुख्यत्वमुपपाद्य गायत्र्यादिशब्देषु तद्वैषम्यमुपपादयति **न चेति** । कुतो गानत्राणकर्तृत्वस्य गायत्रीशब्दप्रवृत्तिनिमित्तत्वमित्यत आह **यथाऽऽहेति** । त्रायते चेत्येव श्रुतिपाठः । अस्तु गानत्राणकर्तृत्वस्य प्रवृत्तिनिमित्तत्वम् । तथात्वेऽपि कुतो न भगवदधीनत्वमित्यतो नित्यत्वादेवेति मूलं योजयितुं विकल्पसमर्पकतया तत्कथं हरेरिति भाष्यखण्डं योजयति **तदुभयमिति** ।

**विवरत्वादिवदिति** । यथा विवरत्वादिकं धर्मिणा सहैवोत्पत्तिस्थितिविनाशेषु भगवदधीनं तथा गानत्राणकर्तृत्वमपि धर्मिणा वेदेन सहैवोत्पत्तिस्थितिविनाशेषु भगवदधीनमित्यभिप्रेतं किंवा धर्मिणो भूताकाशस्योत्पत्तिविनाशयोरभावेऽपि तद्गुणस्य ध्वनेः स्वातन्त्र्येणोत्पत्तिस्थितिविनाशेषु यथा भगवदधीनत्वं तथा धर्मिणो वेदस्योत्पत्त्याद्यभावेऽपि गानत्राणकर्तृत्वरूपस्य तद्धर्मस्य स्वातन्त्र्येणैवोत्पत्तिस्थितिविनाशेषु भगवदधीनत्वमिति विकल्पार्थः । धर्मिण आकाशादेरुत्पत्तिस्थितिविनाशवत्त्वात्तद्धर्मस्य विवरत्वादेर्धर्मिणा सहोत्पत्तिस्थितिविनाशेषु परमेश्वराधीनत्वसम्भवेऽपि प्रकृते धर्मिणो वेदस्यानादिनित्यत्वेनोत्पत्त्याद्यभावात्तद्धर्मस्य गानत्राणकर्तृत्वस्य धर्मिणा सहोत्पत्त्यादौ न भगवदधीनत्वं वक्तुं युक्तमित्यभिप्रेत्य धर्मिणो वेदस्योत्पत्तिनाशाभावोपपादकतया नित्यत्वाच्छब्दस्येति मूलं योजयति **धर्मिणः शब्दस्य वेदस्य नित्यत्वादिति** । नन्वेतावता धर्मिणोऽविनाशात्तत्र भगवदधीनत्वाप्राप्तावप्यनादित्वानुक्त्योत्पत्त्यभावालाभान्न तत्र भगवदधीनत्वसिद्धिरित्यतो नित्यत्वादिति मूलमनादित्वरूपहेत्वन्तरोपलक्षणपरतया योजयति **अनादित्वाच्चेति** । यदर्थं धर्मिणो वेदस्योत्पत्तिविनाशाभावोऽभिहितस्तत्फलसमर्पकतया भाष्यस्यैवशब्दार्थमाह **धर्मिण एव नित्यत्व इति** । अत्र नित्यत्व इत्युपलक्षणम् ।

अनादित्वे चेत्यपि द्रष्टव्यम् । तेन सह तदधीनत्वमित्यत्र वेदधर्मस्य गानत्राणकर्तृत्वस्येति शेषो द्रष्टव्यः ।

ननु च क्रमविशेषविशिष्टा वर्णा एव वेदो न त्वव्याकृताकाशादिवदर्थान्तरम् । न च वर्णानां देशतः कालतो वा क्रमः सम्भवति सर्वगतत्वान्नित्यत्वाच्च । अत उपलब्धिनिष्ठ एव स वाच्यः । ततश्चोपलब्धेर्जन्यतया तद्गतक्रमोऽपि जन्य इत्येवास्थेयम् । तथा च कृतकक्रमविशिष्टवर्णात्मकस्य वेदस्यानादित्वं बाधितम् । तत्त्वनिर्णयटीकायां क्रमस्य कृतकत्वेऽपीति कृतकत्वोक्तेः सिद्धान्तविरुद्धं च । तत्कथमनादित्वस्य साधकतयोपन्यास इति चेन्न । तत्त्वसङ्ख्यानटीकायां नित्यत्वं नाम कूटस्थतयाऽऽद्यन्तशून्यत्वम् । तच्च वेदानां नित्या वेदाः समस्ताश्चेत्यादिप्रमाणसिद्धमित्युक्तत्वात् । युक्तं चैतत् । क्रमस्य सदेश्वरबुद्धिस्थत्वादत एवोक्तं विष्णुतत्त्वनिर्णये सर्वज्ञत्वेनेश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वादिति' । तट्टीकायां कौटस्थ्यनिषेधस्त्वस्मदादीन्प्रति प्रमापकत्वोपयुक्तस्यास्मदादिबुद्धिस्थस्य क्रमस्योच्चारणाद्यधीनत्वेन कृतकत्वाद्द्रष्टव्यः । अत एव न तस्यानित्यत्वम् । सर्वेषां सर्वथा वर्णविषयकविवक्षितक्रमोपधिभूतबुद्ध्युपरम एव हि वेदे विनाशो वक्तव्यो न तु घटादीनामिवापरः । न चेश्वरस्य तथाविधबुद्ध्युपरमो युज्यते तस्य सदा सर्वज्ञत्वात् । अत एव च 'पुराणानामप्यन्यथारचनमेवानित्यत्वमि'ति वचनमुपपन्नम् । एवं चेश्वरबुद्धिस्थक्रमस्य नित्यत्वमनादित्वं चास्मदादिबुद्धिघटितक्रमस्य कृतकत्वमनित्यत्वं चेति तत्त्वसङ्ख्यानतत्वनिर्णयटीकयोरविरोध इति द्रष्टव्यम् । यद्वा तर्कताण्डवरीत्या क्रमस्य कृतकत्वेऽपि आधुनिकाध्यापकेन स्वबुद्धिस्थपूर्वपूर्वदिवसीयक्रमानुसारेणोत्तरोत्तरदिवसेष्वीश्वरेणापि स्वबुद्धिस्थप्रवाहानादिपूर्वपूर्वकल्पीयक्रमानुसारेणैवोत्तरोत्तरकल्पेष्वपि वेदस्योच्चारितत्वेन स्वातन्त्र्याभावेन नियतानुपूर्वीकत्वरूपापौरुषेयत्वस्यैवेहानादित्वरूपतया विवक्षितत्वान्न बाधादिप्रसङ्गः । सम्मतं चैतत् ग्रन्थकारस्य नियतैकप्रकारकत्वमपौरुषेयत्वमिति पूर्वमुक्तेरितिद्रष्टव्यम् ।

द्वितीयपक्षनिवर्तकतया तत्स्वभावः कथं हरेरिति भाष्यखण्डं योजयति **न द्वितीय इति** । आदिपदेनाध्येतॄणां पापाद्रक्षणशक्तेः सङ्ग्रहः ।

प० — ॐ **छन्दोऽभिधानादिति** ॥ इतरद्भित्वा गायत्रीनामोक्तौ हेतुः**प्राधान्येनेति** । तत्र हेतुद्वयं **वेदमातुरित्यादि** ॥ **पठन्तीति** । तृतीयेऽध्याये ॥ **एतदपि पूर्वन्यायेनेति** । गायत्रीशब्दार्थो न विष्णुरित्येतदपि निरवकाशब्रह्मलिंगरूपेणेन्द्राकाशप्राणज्योतिरादिशब्दानां विष्ण्वर्थकत्वप्रतिपादनन्यायेनेत्यर्थः । वक्ष्यमाणदिशाऽत्रापि निरवकाशब्रह्मलिंगसद्भावादितिभावः । मूलं योजयति **तदुभयमित्यादिना** । नित्यत्वादित्युपलक्षणं मत्वाऽऽह **अनादित्वाच्चेति** । एतच्च कृत्वा चिन्तयोक्तम् । **वेदानुपूर्वीकृत्रिमत्वस्यान्यत्र व्यक्तत्वादिति** चन्द्रिकायां व्यक्तम् ।

या० — ॥ ॐ **छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम्** ॐ ॥
ननु रां क्रीं ह्रीमित्येकाक्षराणां वर्णक्रमविधुराणामेव मन्त्रत्वं किं वाऽन्येषामित्यत आह **वर्णसमावेशलक्षण इति** । वर्णक्रमविशेषरूप इत्यर्थः । तथा चानेकाक्षराणामेव मन्त्रत्वमिति नियम इति भावः । नित्यत्वस्य प्रकृतानुपयोगादाह **अनादित्वाच्चेति** । एवञ्च मूले नित्यत्वादित्यनादित्वसाधनायैवोक्तमिति मन्तव्यम् । अत एव न्यायविवरणटीकायां वेदस्य नित्यत्वेनानादित्वादित्युक्तम् ॥ ननु कृतकक्रमविशिष्टवर्णसमुदायरूपस्य वेदस्य कथमनादित्वमिति चेत् । उच्यते । भूतभवद्भविष्यद्भिरखिलैरेकप्रकारेण पठ्यमानत्वरूपं नियतैकप्रकारत्वमेवानादित्वं वेदस्य विवक्षितम् । उक्तं हि तत्त्वनिर्णयटीकायां स्वतन्त्रस्य वक्तुरभावादपौरुषेयत्वमुपपद्यत इति । एतदेव चानादिनित्यत्वमिति । न तु कूटस्थत्वादिरूपं नित्यत्वमनादित्वम् । येन क्रमस्य कृतकत्वेऽपीत्यादिटीकाविरोधः । न चैवमसदादिवदीश्वरस्यापि कथञ्चिद्वेदजनकत्वात्तत्स्वभावस्य तदधीनतापत्तिः । एतावता नियतैकप्रकारशब्दस्वभावभूतार्थप्रतिपादनादिशक्तेः पराधीनत्वासंभवेन ईश्वराधीनत्वविघटनोपपत्तेः । अन्यथाऽस्मदाद्यधीनत्वस्याप्यापातात् । स्वातन्त्र्यस्य चेश्वरेऽप्यभावात् । न चैवंविधमनादित्वमाकाशादीनामिति तदुक्तेरभ्यधिकाशङ्काप्रदर्शकत्वमपीति न काचिदनुपपत्तिः । अत्र नित्यत्वं नाम कूटस्थतयाऽऽद्यन्तशून्यत्वम् । तच्च वेदानां 'नित्या वेदाः समस्ताश्चे'त्यादिप्रमाणसिद्धमिति तत्त्वसङ्ख्यानटीकाविरोधपरिहारस्तत्पञ्चिकायामस्माभिः प्रदर्शितस्तत्रैवानुसन्धेयः । चन्द्रिकायां तु कृत्वा चिन्तयाऽनादित्वोक्तिरित्युक्तम् ।

श्री० — ॥ ॐ **छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम्** ॐ ॥
**वेदमातुरिति** । वेदमाता तु गायत्रीति प्रमाणोक्तेरिति भावः । सर्ववेदव्याख्येयपुरुषसूक्तव्याख्येयतया मूलत्वेन गायत्र्या वेदमातृत्वम् । प्राधान्येन हेत्वन्तरमाह **त्रैवर्णिकेति** । जन्मनि जन्मविषये । जनन्या मातुः । आदौ मात्रोत्पन्नस्योपनयनेन द्वितीयं जन्म भवतीति 'मैत्रो ब्राह्मण उच्यत इति' ब्राह्मण्यापादकत्वात्प्राधान्यं ज्ञेयम् । उपपत्तिं तूत्तरत्र वक्ष्याम इति प्रतिज्ञातामुपपत्तिमाह **यद्यपीत्यादिना** ॥ **कारणत इति** । ज्ञानादिकारणद्वाराऽऽगन्तुकं न भवति । अचेतनाश्रितत्वात् । नापि स्वरूपतः स्वभावतः स्वभावत्वादित्यर्थः ॥ **ध्वनिवदिति** अयावद्द्रव्यभाविनो भूताकाशगुणस्य ध्वनेर्धर्मिणा सह जननाभावेन धर्मिणा सह न तदधीनत्वं किंतु केवलध्वनेरेव तद्वदित्यर्थः ।

च० — ॥ ॐ **छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम्** ॐ ॥
प्रकृतनयसमन्वेतव्याभिमतगायत्रीनाम्नश्छन्दोभिधायकत्वनियन्त्रितस्वसजात्यविशेषितवैदिकाखिलोष्णिगादिशब्दोपलक्षकत्वाशयेनैतन्नयसमन्वेतव्यतावच्छेदकं कीर्तयन्नेव तादृशोष्णिगादिशब्दानामुपलक्ष्यत्वमेव । उपलक्षकता तु गायत्रीशब्दस्येत्यत्र बीजं दर्शयन् प्रकृतनयसमन्वेतव्यमभिधत्ते **अधिवेदगतेति** । अत्र

हेतुर्वेदमातुरित्यादि । अभ्यधिकाशङ्काप्रदर्शनौपयिकगतार्थताशङ्कोद्भिभावयिषया विषयसन्देहपूर्ववादि मतानि दर्शयति **छन्दोगा इति** । तृतीयेऽध्याय इत्यादिः । **तत्र संशय इत्यादि** । गायत्रीपदप्रतिपाद्यधर्मिकः ब्रह्मत्वानुपूर्वीविशेषविशिष्टवर्णात्मकत्वरूपमन्त्रत्वोभयकोटिकः संदेहः प्रकृतनयघटक इत्यर्थः । **एतदपि पूर्वन्यायेनेति** । मन्त्र एवेति तावत्प्राप्तमित्येतदपि निरवकाशब्रह्मलिङ्गरूपेणेन्द्राकाशप्राणज्योतिरादिशब्दानां भगवत्तात्पर्यकत्वप्रतिपादनन्यायेनापहस्तितमित्यर्थः । प्रकृतनयसमन्वेतव्यगायत्र्यादिशब्द धर्मिकातिक्रान्तनयसमन्विताकाशादिशब्दावधिकाधिक्यशङ्कौपयिकन्यायवैषम्यप्रतिपिपादयिषया प्राक्तननयसमर्थितमाकाशादिशब्दानां परमात्मनिरूपितशक्तितात्पर्यलक्षणसंबन्धाख्यसमन्वयवत्त्वमनुवदति **भवेदित्यादि** । **तत्र** । भूते । **यद्यपीति** । गगनादावनैसर्गिकं ध्वन्यादिकं स्वाश्रयोत्पादकातिरिक्तकारणद्वारा स्वरूपद्वारा चाश्रयवृत्तिप्रागभावप्रतियोगित्वादागन्तुकम् । विवरत्वादिकं तु नैसर्गिकमिति न तथेत्याशयः । **धर्मस्यापीति** । धर्म्यनतिरेकादिति हृदयम् । **तथाभावः** जन्मादिष्वीश्वराधीनत्वम् । **अवर्जनीयः** दुर्निवारः । **न चेति** । तथा च धर्मिण एवेशायत्तत्वं नासैत्सीदिति न तद्धर्मस्यापि तदायत्तत्वं सेत्स्यतीति भावः । **अनादिनित्यः** प्रागभावाप्रतियोगित्वविशेषितध्वंसाप्रतियोगित्ववान् । भूताकाशस्यानादिनित्यत्वमभिधित्सितमव्याकृतस्य वेति कल्पद्वयीमभिसंदधान आद्यमपहस्तयते **आत्मन इति** । द्वितीयं प्रतिविधत्ते **यस्त्विति** । मौलेन हेतुविभक्त्यंतेन धर्मिणो विनाशात्तत्रेशानधीनत्वसिद्धावपि अनादित्वानभिधाननिबन्धनोत्पत्तिसाहित्यालाभेन तत्र तदनायत्तता न सेधिष्यतीति मौलतादृशविभक्त्यंतपदमेवानादित्वांशोपलक्षकमित्याशयेन तादृग्मूलं योजयति । **अनादित्वाच्चेति** । धर्मिणोऽनादिनित्यत्वोक्तेः फलं दर्शयति । **धर्मिण इति** । प्रथमांतभावप्रत्ययान्तोत्तरं वेदधर्मस्य गानत्राणकर्तृत्वस्येत्युपस्कार्यम् । ननु वेदस्याव्याकृताकाशवदखण्डार्थरूपताविरहेण नित्यविभुत्वाभ्यां ज्ञानध्वनिसेनादाविव कालिकदैशिकक्रमस्य दुरुपगमतया च तत्तत्सामग्रीजनिततत्तद्वर्णविषयकप्रतीतिगतक्रमस्यैवास्थेयतया क्रमस्य कृतकत्वेपीति तत्वनिर्णयटीकायां वैदिकक्रमस्य कृतकत्वाभिधानेन कृतिनिर्वर्त्यक्रमविशेषविशिष्टवर्णात्मकपक्षीकृतवेदेनादित्वहेतोः स्वरूपासिद्धिदूषिततया तदुपन्यसनं न संगच्छत इति चेन्न । तत्वसंख्यानटीकायां नित्यत्वं नाम कूटस्थतयाऽऽद्यन्तशून्यत्वं तच्च नित्याः वेदाः समस्ताश्चेत्यादिप्रमाणसिद्धमित्यभिहिततया विष्णुतत्त्वनिर्णये सर्वज्ञत्वेनेश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वादिति भगवत्पादीयविन्यासेन च तट्टीकायां कौटस्थ्यनिषेधस्यास्मदादीन्प्रति प्रमापकत्वौपयिकास्मदादिप्रतीतिगतक्रमस्योच्चारणाद्यायत्ततया कृतिनिर्वर्त्यत्वतात्पर्यकतया सामञ्जस्यात् । पारमेश्वरतथाविधबुध्युपरतिविरहादेव तस्य नित्यतापि संगच्छते । 'पुराणानामप्यन्यथारचनमेवानित्यत्वमि'ति वचनमत एवोपपद्यते । इत्थं च तत्त्वसंख्यानटीकेश्वरबुद्धिगतक्रमस्यानादिनित्यत्वतात्पर्यिका तत्वनिर्णयटीका त्वस्मदादिबुद्धिघटितक्रमस्य कृतिनिर्वर्त्यत्वनाशप्रतियोगित्वतात्पर्यि-

केति तयोर्नैतरेत्तरप्रातिरूप्यमित्यवसेयम् । तर्कतांडवदिशा क्रमस्य कृतकत्वेऽप्याधुनिकाध्यापकेन स्वबुद्धिस्थपूर्वपूर्वदिवसीयक्रमानुसारेणोत्तरोत्तरदिवसेष्विवेश्वरेणापि स्वबुद्धिस्थप्रवाहनादिपूर्वपूर्वकल्पीयक्रमानुसारेणैवोत्तरोत्तरकल्पेष्वपि वेदस्योच्चरितत्वेन स्वानन्यथाभावेन नियतानुपूर्वीकत्वरूपापौरुषेयत्वस्यैवेहानादित्वरूपतया विवक्षितत्वान्न बाधादिप्रसंगः । सम्मतं चैतद्ग्रन्थकारस्य नियतैकप्रकारकत्वमपौरुषेयत्वमिति पूर्वमुक्तेरिति द्रष्टव्यमित्यपि कल्पान्तरं व्याकर्तारो न्यभांत्सुः ।

**अनु०**— कथं प्रसिद्धबहुलशब्दानामन्यथार्थता ॥

**सु०— किञ्चाकाशादिवाक्ये सन्ति पारमेश्वराणि लिङ्गानीति युक्तं तत्र तदाश्रयणम् । न चात्र तथाविधं किमपि पश्यामः । प्रत्युत (छां. ३.१२.१) 'गायत्री वा इदं सर्वं' 'वाग्वै गायत्री'त्यादयः** शब्द एव प्रसिद्धा बहवः शब्दाः **श्रूयन्ते । कथं च तेषां, विना बलवद्बाधकोपनिपातेन** (अन्यथार्थता)=**अन्यार्थता** कल्पयितुं **युक्ता** । **अव्यवस्थाप्रसङ्गात् । न च छन्दसः सर्वात्मकत्वानुपपत्तिः । ब्रह्मणोऽपि** साम्यात् ।

**शे०**— ननु तर्हि नित्यत्वादेव शब्दस्य तत्स्वभावः कथं हरेरित्येतावतैवाभ्यधिकाशङ्कया पूर्वपक्षसमर्थना'त्कथं प्रसिद्धबहुलशब्दानामन्यथार्थते'ति कारिकोत्तरखण्डवैयर्थ्यमित्यतोऽभ्यधिकाशङ्कान्तरप्रदर्शकत्वान्न तस्य वैयर्थ्यमित्याह **किञ्चेति** ॥ **शब्द एव प्रसिद्धा इति** । यद्यप्यत्र शब्दे प्रसिद्धयोर्गायत्रीवाक्शब्दयोर्द्वयोरेवात्र श्रवणाद्बहवः शब्दा इति तद्बहुत्वाभिधानमयुक्तम् । तथाऽपि तयोरेव बहुवारं श्रवणाभिप्रायेण वा गायत्र्यभिन्नतयोक्तेषु प्रयुक्तपृथिव्यादिशब्दानामपि गायत्रीशब्दत्वमेवेत्यभिप्रायेण वेदं बहुत्वाभिधानमिति ध्येयम् । मूले कथंशब्देन सूचितं दोषमाह **अव्यवस्थेति** ॥ **सर्वात्मकत्वेति** । गायत्री वा इदं सर्वमिति वाक्योक्तसर्वात्मकत्वेत्यर्थः । तथा च छन्दोविशेष एवेयं गायत्रीति भावः ॥ **साम्यादिति** । तथा च न ब्रह्मापि गायत्रीति भावः ।

**प०** — उत्तरार्धं योजयितुमाह **किंचेति** । द्वेधा हि शङ्का प्रमेयाश्रिता प्रमाणाश्रिता चेति पूर्वार्धेनाद्योक्ता अन्त्या तूत्तरार्धेनोच्यत इति किंचेत्यारंभः । **सर्वात्मकत्वेति** ।

**या०— शब्द एव प्रसिद्धा बहव इति** । न च शब्दप्रसिद्धयोर्गायत्रीवाक्शब्दयोर्द्वयोरेवान्यत्र श्रवणात्कथं तेषां बहुत्वमिति शङ्कनीयम् । तयोरेव बहुवारं श्रवणात् । गायत्र्यभिन्नतयोक्तेषु प्रयुक्तपृथिव्यादिशब्दानामपि गायत्रीशब्दत्वमेवेति चाशयात् ॥ **सर्वात्मकत्वेति** गायत्री वा इदं सर्वमिति वाक्योक्तसर्वात्मत्वानुपपत्तिरित्यर्थः ।

**श्री०**— बलवद्बाधकोपनिपाताभावेऽप्यन्यार्थताकल्पने को दोष इत्यत आह **अव्यवस्थेति** । शब्दानामिति शेषः । इन्द्रादिसूक्तस्थानामिन्द्रादिशब्दानामप्यग्न्यादिपरत्वं स्यादिति भावः ।

च०— प्रमेयाश्रितशङ्कया पूर्वदलमवतार्य, प्रमाणश्रितया तयोत्तरदलमवतारयति **किं चेत्यादि** । **बहवः श्रूयन्त इति** । गायत्रीवाक्शब्दयोरेवात्र श्रवणेण बहुत्वाभिधानस्यानुपपन्नताशङ्का समानानुपूर्वीकयोस्तयोरेव क्रियासमभिव्याहारेण श्रवणाशयेन गायत्र्याभिन्नतयोक्तेषु प्रयुक्तपृथिव्यादिशब्दानामपि गायत्रीशब्दत्वमेवेत्याशयेन वा निरसनीया । **सर्वात्मकत्वेति** । गायत्री वा इदं सर्वमिति वाक्याभिहितसर्वात्मकत्वानुपपत्तिरित्यर्थः ।

सु०-- नन्वियमेव गायत्री वाक्यशेषे ज्योतिष्ट्वेन पठ्यते । (छां. ३.१३.७) 'अथ यदतः परो दिवो ज्योतिर्दीप्यत' इत्यादिना । ज्योतिश्च पूर्वाधिकरणे ब्रह्मेति निर्णीतम् । मैवम् । पूर्वाधिकरणोदाहृतवाक्योक्तस्य ज्योतिषो ब्रह्मत्वेऽप्यत्र तदनुपपत्तेः । तत्र हि कर्णादिविदूरत्वमुक्तम् । अत्र पुनस्तदेतद्दृष्टं च श्रुतं चेति तद्विपरीतम् । युज्यते च ज्योतिरिति पदं छन्दसि । तत्पर्यायस्य 'तेजो वै ब्रह्मवर्चसं गायत्री'ति तेजःशब्दस्य तत्र दर्शनात् । अस्तु वा 'अथ यदतःपरो दिवो ज्योतिरि'त्युक्तं ज्योतिर्ब्रह्म । तथाऽपि गायत्री छन्द एव । उपदेशभेदेन भिन्नप्रकरणत्वादिति । अथवाऽत्राप्यथ यदतःपरो दिव इति वाक्योक्ते ज्योतिषि सन्देहः । किं ब्रह्मोतान्यदिति । उपक्रमे गायत्रीशब्दश्रवणादन्यदिति प्राप्तम् । ननु गायत्रीशब्दस्याप्याकाशादिशब्दवदीश्वरपरत्वोपपत्तेः किमनेनेत्यतो नित्यत्वादित्यादिनाऽभ्यधिकाशङ्केयमुक्तेति । एतदाच्छादकत्वेनाधिकरणतात्पर्यमाह इति चेदिति ।

अनु०— इति चेत्तद्धरेरेव बाहुल्याच्छ्रुतिलिङ्गयोः ॥

तत्र ब्रूम इत्यध्याहार्यम् । तत् ज्योतिःप्रकरणं गायत्रीप्रकरणं च हरेरेव प्रतिपादकम् । न च गायत्रीपदविरोधः । यतः तत् हरेरेव वाचकम् । कथम् । यस्मात् तत् गायत्रीपदप्रवृत्तिनिमित्तं मुख्यतो हरेरेव । अन्यगतं च हरेरेवाधीनम् । न च ज्योतिषो ब्रह्मत्वे दृष्टत्वाद्यनुपपत्तिः । यतः तत् अधिष्ठानादिद्वारा कर्णादिविदूरस्यैव हरेरुपपद्यते । न चोपदेशभेदानुपपत्तिः । यतस्तद्दिवः परत्वं दिवि स्थितत्वं च विवक्षाभेदाद्धरेरेव युज्यते ।

कुत एतत् । श्रुतिलिङ्गयोर्बाहुल्यात् । तथा हि 'ततो ज्यायांश्च पुरुषः' । 'यद्वैतद्ब्रह्म' । 'य एतामेव ब्रह्मोपनिषदं वेदे'ति श्रुतयः । लिङ्गानि च गानत्राणकर्तृत्वं, भूतादिपादत्वम्, 'एतामेव नातिशीयन्त' इति सर्वोत्तमत्वमित्यादीनि । अत एव श्रुतिलिङ्गबाहुल्यात् तत् प्रसिद्धबहुलशब्दजातमपि हरेरेवेति ।

शे०— ज्योतिश्च पूर्वाधिकरणे ब्रह्मेति निर्णीतमिति । यद्यप्यग्निसूक्तस्थस्य ज्योतिषो ब्रह्मत्वं पूर्वाधिकरणे निर्णीतं न तु छान्दोग्यस्थस्यापि तन्निर्णीतमित्ययुक्तमेतदित्याभाति । तथाऽपि ज्योतिर्हृदय

आहितं यदित्यग्निसूक्तस्थस्यैव ज्योतिषः छान्दोग्येऽपि ज्योतिःश्रुत्या योऽयमन्तर्हृदय इति हृदयनिहितत्वधर्मेण च शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञायमानत्वेनैकत्वमभिप्रेत्येदमुक्तमिति ध्येयम् । **पूर्वाधिकरणोदाहृतवाक्योक्तस्येति** । न चैवं सति पूर्वपक्षे पूर्वसिद्धान्तेनाक्षेपाच्चिन्तावैफल्यमिति वाच्यम् । ज्योतिषो गायत्रीत्वे इयं वाव सा येयं पृथिवीति गायत्र्यभिन्नत्वेनोक्तपृथिव्यामस्यां हीदं सर्वं प्रतिष्ठितमित्युक्तस्य स्थितिहेतुत्वादेरपि तद्धर्मत्वापत्त्या जन्मादिसूत्राक्षेपात् । योऽयमन्तर्हृदय इति छान्दोग्यस्थे ज्योतिष्यानन्दमयधर्मभूतहृदयनिहितत्वश्रवणेन ज्योतिरधिकरणमनाक्षिप्यैवानन्दमयाधिकरणाक्षेपाच्चेति ध्येयम् । ननु कर्णादिविदूरत्वं न सर्वथा कर्णादिविदूरत्वमिह विवक्षितम् । क्वाप्यसम्भवात् । किन्त्वियदिति परिच्छेदानर्हवैभवत्वमेव । तच्च न दृष्टत्वश्रुतत्वादिविरुद्धमित्यरुचेराह **अस्तु वेति** । ज्योतिरधिकरणे विष्णौ निर्णीतज्योतिःश्रुत्येति शेषः ॥ **उपदेशभेदेनेति** । दिवः पर इति दिवीति च पञ्चम्युपदेशसप्तम्युपदेशभेदेनेत्यर्थः । न्यायविवरणेऽत्राधिकरणेऽधिवेदगतशब्दसमन्वेतव्यताया उक्तत्वात्तदनुसारेण पूर्वपक्षमुपपाद्याधुना 'अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्युक्तस्य ज्योतिषो गायत्री वा इदं सर्वमिति गायत्र्या समारम्भः कृत' इति भाष्यस्वारस्यानुरोधेन पक्षान्तरमाह **अथवेति** । अत्र छान्दोग्यस्थज्योतिषो गायत्री वेत्युपक्रमेण गायत्रीत्वादग्निसूक्तस्थमपि गायत्रीत्येकः पूर्वपक्षः । अन्यस्त्वग्निसूक्तस्थस्य ज्योतिषः कर्णादिविदूरत्वाद्विष्णुत्वेऽपि छान्दोग्यस्थस्य तदेतत् दृष्टं च श्रुतं चेति तद्विरुद्धदृष्टत्वादिश्रवणान्न विष्णुत्वमिति पूर्वपक्षद्वयमभिमतम् । द्वितीयपक्षे यथा चिन्ताया न वैफल्यं तथोक्तमधस्तात् **न चेति** । तस्य छन्दसि योगरूढिभ्यां प्रवृत्तेरिति भावः ॥ **कथमिति** । तच्छब्दप्रवृत्तिनिमित्तस्य भगवद्गतत्वाभावादन्यगतस्य चोक्तरीत्या भगवदधीनत्वाच्च न तस्य तद्वाचकत्वमित्याशयः ॥ **हरेरेवेति** । एवं च तस्य तत्स्वभावत्वोक्तिराग्रहमूलैव । सिद्धान्ते तस्य भगवदधीनत्ववर्णनं च स्वभावनियामकत्वरूपमहागुणसमन्वयसिद्ध्यर्थं कृत्वा चिन्तया वेत्यवधेयम् । न केवलं गायत्रीशब्दप्रवृत्तिनिमित्तस्य भगवति निरवधिकत्वादेव तस्य तत्र मुख्यत्वं किन्त्वन्यगतस्य तदधीनत्वादिति भावेन मूलं योजयति **अन्यगतं चेति** ॥ **न च दृष्टत्वेति** । ज्योतिषः कर्णादिविदूरत्वादिति भावः । अनेनोपदेशभेदादिति सूत्रखण्डोऽग्निसूक्तस्थज्योतिर्निष्ठकर्णादिविदूरत्वविरुद्धदृष्टत्वाद्युपदेशान्नेदं ज्योतिर्ब्रह्मेति प्रकारान्तरेण व्याख्यातो भवति ॥ **यत इति** । अनेनोभयस्मिन्नप्यविरोधादित्यस्य कर्णादिविदूरत्वदृष्टत्वादिके आकारभेदेन न विरुद्धे इत्यप्यर्थ इत्युक्तं भवति ॥ **न चोपदेश इति** । दिव इति दिवीति च पञ्चमीसप्तम्युपदेशभेदानुपपत्तिरित्यर्थः ॥ **विवक्षाभेदेनेति** । त्रिसप्तलोकापेक्षयेति भाष्योक्तविवक्षाभेदेनेत्यर्थः ॥ **कुत एतदिति** । आकाशादिवाक्य इव गायत्रीवाक्ये पारमेश्वरलिङ्गाश्रवणान्न भगवत्परत्वाश्रयणमिति भावः ॥ 'कथं प्रसिद्धबहुलशब्दानामन्यथार्थते'ति पूर्वपक्षं निराकरोति **अत एवेति** । तथा च श्रुतिलिङ्गबाहुल्यानुरोधेनैवान्यार्थताश्रयणान्नाव्यवस्थाप्रसङ्ग इति भावः ।

प०— गायत्रीवा इदं सर्वं भूतमित्युक्तसर्वात्मकत्वेनेत्यर्थः । ननूपक्रमे श्रुतगायत्र्यां कथं ज्योतिःशब्दो युक्त इत्यत आह **युज्यते चेति** ॥ **उपदेशेति** । द्युस्थत्वदिवःपरत्वरूपोपदेशभेदे-नेत्यर्थः ॥ **अत्रापीति** । न केवलं ज्योतिर्नय एव ज्योतिषि संदेह इत्यपेरर्थः । तद्धरेरेवेति मूलमस-कृदावृत्त्याऽनेकधा योजयति **तज्ज्योतिः प्रकरणमित्यादिना** ॥ **यतस्तदिति** । तद्द्रष्टृत्वादिकं देहाद्य-धिष्ठानद्वारोपपद्यत इत्यन्वयः ॥ **विवक्षेति** । भाष्याद्युक्तदिशा त्रिसप्तलोकविवक्षाभेदादित्यर्थः । तदि-त्यनुवादः । प्रसिद्धबहुलशब्दजातमपीति व्याख्या ।

या०— साकल्येन कर्णादिविदूरत्वं पूर्वमुक्तम् । अत्र पुनस्तद्योग्यतानुसारेणाधिष्ठानादिद्वारा वा द्रष्टृत्वादिकमुच्यते । अतो न विरोध इत्यरुचेराह **अस्तु वेति** । नन्वेवं पूर्वपक्षद्वयेऽपि पूर्वाधिकरणसिद्धान्ताक्षेपाभावाद्व्यर्थेयं चिन्तेति चेन्न । पक्षद्वयेऽपीयं वाव सेयं पृथिवीति गायत्र्यभिन्नत्वे-नोक्तायां पृथिव्यामस्यां हीदं सर्वं प्रतिष्ठितमित्युक्तस्य स्थितिहेतुत्वादेरपि तद्धर्मत्वापत्त्या जन्माधिकरणा-क्षेपो यम् अन्तर्हृदय इत्यानन्दमयधर्मभूतहृदयनिहितत्वश्रवणेनानन्दमयाधिकरणाक्षेपश्चेत्याशयात् । अथ-यदतः परो दिवो ज्योतिर्दीप्यत इत्युक्तस्य ज्योतिषो गायत्री वा इदं सर्वमिति गायत्र्या समारम्भः कृत इति भाष्यस्वारस्यानुरोधादाह **अथवाऽत्रापीति** । न्यायविवरणेऽत्राधिवेदगतशब्दसमन्वेतव्यताया उक्तत्वात् तदनुसारेण पूर्वमतमुक्तमित्यवगन्तव्यम् । मतद्वये विषयवाक्यभेदेऽपि प्रमेयमेकमेवेत्यतो न विरोध इति द्रष्टव्यम् । अधिष्ठानादिद्वारेत्यत्रादिपदेन योग्यतानुसारेण द्रष्टृत्वादिसङ्ग्रह **विवक्षाभेदा-दिति** । त्रिसप्तलोकापेक्षयेति भाष्योक्तविवक्षाभेदादित्यर्थः ।

श्री०— **उपदेशभेदेनेति** । त्रिपादस्यामृतं दिवीति पूर्वोपदेशः, परो दिव इति पंचम्यन्तः पश्चिम इत्युपदेशभेदेनेत्यर्थः ॥

च०— ननु **कर्णादिविदूरत्वं** न श्रोत्रादीन्द्रियसामान्यजनितप्रतीतित्वावच्छिन्ननिरूपितविषयता-त्वावच्छिन्नाभावः किन्तु परिच्छिन्नस्यनर्हताकवैभवयोगित्वमेव । तच्च द्रष्टृत्वश्रुतत्वादिकं न विरुणद्धीत्यरुचि-मनुसंदधानः कल्पान्तरमनुसरति **अस्तु वेति** । 'इयं वा व सा येयं पृथिवी'ति गायत्र्यभिन्नत्वेनोक्तायां पृथिव्यामस्यां हीदं सर्वं प्रतिष्ठितमित्यभिहितसर्वाधारत्वस्य तद्धर्मताप्रसंगेन जन्मादिनयाक्षेपस्य यमन्तर्हृदय इत्यानन्दमयधर्मभूतहृदयनिहितत्वश्रवणेनानन्दमयनयाक्षेपस्य च संभवेन चिन्तासाफल्यमवसेयं । न्याय-विवृतौ प्रकृतनयेऽधिवेदगतशब्दसमन्वेतव्यताभिहित्या तदनुरोधेन पूर्ववादिमतमुपपाद्य संप्रति 'अथ यदतः परोदिवो ज्योतिर्दीप्यते' इत्युक्तस्य ज्योतिषो गायत्री वा इदं सर्वमिति समारम्भः कृतः इति भाष्याक्षरानु-पूर्वीसामञ्जस्यमनुरुन्धानः कल्पान्तरमारचयति **अथवेति** । अत्र छान्दोग्यश्रुतिगतज्योतिःपदाभिधेयस्य गायत्री वेत्युपक्रमेण गायत्रीत्यादमिसूक्तगततत्पदाभिधेयमपि गायत्रीत्येकं पूर्ववादिमतशरीरं । तच्छरीरान्तरं

तु अग्निसूक्तगतज्योतिःपदप्रतिपाद्यस्य **कर्णादिविदूरत्वाद्ब्रह्मत्वेपि** छन्दोगश्रुतिगततत्पदवाच्यस्य तद्विरुद्ध-दृष्टत्वादिश्रवणान्न ब्रह्मत्वमिति । **अधिष्ठानादिद्वारेति** । आदिपदं योग्यतानुरोधसंग्राहकम् । **उपदेश-भेदेति** । दिव इति दिवीति च पञ्चमीसप्तम्युपदेशभेदानुपपत्तिरित्यर्थः । **विवक्षाभेदादिति** । त्रिसप्त-लोकापेक्षयेति भाष्यभाषितविवक्षाभेदादित्यर्थः ।

सु० — **ननूक्तमत्र नित्या गायत्री प्रवृत्तिनिमित्तं च तत्स्वभावः । तत्कथं हरेरधीन-मित्यत** आह तादृशत्वाच्चेति ।

अनु० — तादृशत्वाच्च तच्छक्तेः ॥ ११ ॥

**पूर्वेण सम्बन्धः । हेतुसमुच्चये चशब्दः । तादृशी खल्वीश्वरशक्तिः । यन्नित्यानित्य-स्वभावास्वभावसर्वविषया । अन्यथा सर्वेश्वरत्वहानेः । अथ तस्याः शक्तेः किं शक्यमिति चेत् । तत्स्वरूपसत्तैव । अनादिसिद्धा सेति चेत् । सत्यम् । अनादीश्वरशक्त्यैवेति वदामः । उक्तं चात्र प्रमाणमिति ।**

शे० — **तत्कथमिति** । न कथमपीत्यर्थः । विवरत्वादिवद्धर्मिणा सह ध्वनिवत्स्वयमेव वा तदधीनत्वासम्भवस्योपदर्शितत्वादिति भावः ॥ **पूर्वेणेति** । तद्धरेरेवेति पूर्वेणेत्यर्थः ॥ **हेतुसमुच्चय इति** । बाहुल्याच्छ्रुतिलिङ्गयोरित्युक्तहेतुसमुच्चय इत्यर्थः । अतो नैतद्वैयर्थ्यमिति भावः । किमनादि-स्वभावस्य भगवदधीनत्वमसम्भावितमित्यभिप्रेतं किंवाऽप्रामाणिक(त्वं)मिति विकल्पं मनसि निधायाद्यं दूषयति **तादृशीति** । नित्यानित्येत्युपलक्षणम् । साधनादीत्यपि द्रष्टव्यम् । गूढाभिसन्धिः शङ्कते **अथेति** । उत्तरवाद्यपि तथैव समाधत्ते **स्वरूपेति** । पूर्ववादी स्वाशयमुद्घाटयति **अनादीति** उत्तरवाद्यपि स्वाभिसन्धिमुद्घाटयति **सत्यमिति** । द्वितीयं प्रत्याह **उक्तं चात्र प्रमाणमिति** । 'नमो ददाति श्वसतां मार्गं यन्नियमादः' इत्यादिरूपं स्वभावस्यापि भगवदधीनत्वबोधकं प्रमाणमाकाशाधिकरणे उक्त-मित्यर्थः । यद्वाऽनादिस्वरूपसत्तायाः कुत ईश्वराधीनत्वमित्यत आह **उक्तं चेति** । जिज्ञासाधिकरणेऽना-दिस्वरूपसत्ताया अपीश्वराधीनत्वे 'द्रव्यं कर्म च कालश्चे'त्यादिप्रमाणमुक्तमित्यर्थः । इत्यादीत्यादिपदेन छन्दोभिधानादित्यादित्रिसूत्र्या सङ्ग्रहः ॥

स० — ॥ ॐ **छन्दोभिधानान्नेतिचेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम्** ॐ ॥ **उक्तं चात्रप्रमाणमितीति** ॥ प्रथमाधिकरणे 'द्रव्यं कर्म च कालश्चे'त्यादिप्रमाणमनादेरपीश्वराधीनत्वप्रति-पादकमुक्तमित्यर्थः ।

प०—**पूर्वेणेति** । तद्भरेरेवेति साध्येनेत्यर्थः ॥ **हेतुसमुच्चय इति** । बाहुल्याच्छ्रुतिलिंगयो-रित्युक्तहेतुना तादृशत्वादित्युक्तहेतोः समुच्चय इत्यर्थः ॥ **उक्तं चेति** । जिज्ञासाधिकरणे 'द्रव्यं कर्म च कालश्चे'त्यादिप्रमाणमुक्तमित्यर्थः ।

या०— **उक्तं चात्र प्रमाणमिति** । प्रथमाधिकरणेऽनादिस्वरूपसत्ताया अपीश्वराधीनत्वे 'द्रव्यं कर्म च कालश्चेत्यादिप्रमाणमुक्तमित्यर्थः ॥

श्री०— **अनादिसिद्धा सेति** । सा स्वरूपसत्ताऽनादिसिद्धा । ईश्वरशक्तिश्च सादिरिति स्वरूपसत्ता कथं तच्छक्त्या स्यादिति भावः ॥ १-१-११

च०— **उक्तं चात्र प्रमाणमिति** जिज्ञासानये अनादिस्वरूपसत्ताया अपीश्वरनिघ्नताविषये द्रव्यं कर्म च कालश्चेति प्रमाणमभिहितमित्यर्थः ।

**सु०— अपरे तु ज्योतिश्चरणाभिधानादित्याद्येकमेवाधिकरणं व्याचक्षते । तदयुक्तम् । अथ यदतः परो दिवो ज्योतिरिरिति वाक्ये चरणाभिधानाभावात् । चरणाभिधानादित्यस्य पादाभिधानादित्यर्थ इति चेत् । एवं तर्हि भूतादिपादव्यपदेशोपपत्तेश्चैवमिति पुनरुक्तं स्यात् । न स्यात् । तात्पर्यभेदात् । तथा हि । पूर्वस्मिन्वाक्ये तावानस्य महिमेति चतुष्पाद्ब्रह्म निर्दिष्टम् । तत्र यच्चतुष्पदो ब्रह्मणस्त्रिपादस्यामृतं दिवीति द्युसम्बन्धिरूपं निर्दिष्टम् तदेवेह द्युसम्बन्धात्प्रत्य-भिज्ञायते । तत्परित्यज्य प्रकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयातामित्यत्रा-भिप्रेयते । तत्र तु भूतादिपादव्यपदेशबलेन प्रकृतस्य ब्रह्मत्वोपपादनमिति । उच्यते । एवं हि व्याकुर्वता प्रकृतप्रत्यभिज्ञानं ज्योतिषो ब्रह्मत्वे हेतुः उत्तरा तु त्रिसूत्री प्रकृतस्य ब्रह्मत्वोपपादि-केत्युक्तं स्यात् । तथा च श्रुतहानाश्रुतकल्पने स्याताम् । अन्यथा ज्योतिः प्रत्यभिज्ञानादित्येव ब्रूयात् । लघु चैवं स्पष्टं च सूत्रं स्यात् । पादाभिधानादित्येव वा वदेत् । श्रुत्यनुगमो ह्येवं सति स्यादित्युक्तमेवोपपन्नमिति ॥ १-१-११ ॥**

शे०— **पुनरुक्तं स्यादिति** । पादोऽस्य सर्वा भूतानीति पूर्ववाक्यस्थपादाभिधानादन्यस्य ज्योतिर्वाक्ये पादाभिधानस्याभावात्तस्यैव चरणाभिधानादित्यत्र विवक्षायां भूतादिसूत्रवैय्यर्थ्यं स्यादि-त्यर्थः । न च चरणाभिधानादित्यनेन पादोऽस्य सर्वा भूतानीति मन्त्रवाक्यस्थं सर्वभूतानामेकपादत्वम-मृतस्य त्रिपादत्वं चोच्यते । भूतादिपादेत्यनेन तु सैषा चतुष्पदेति ब्राह्मणवाक्यस्थानां भूतपृथिवीशरीर-हृदयानां पादत्वमुच्यते ब्राह्मणवाक्ये इदं सर्वमिति भूतम्, येयं पृथिवीति पृथिवी, यदिदमस्मि-न्पुरुषे शरीरमिति शरीरम् यदिदमस्मिन्नन्तः पुरुषे हृदयमिति हृदयं चोक्त्वा सैषा चतुष्पदा षडुविध-

गायत्रीति भूतादीनां चतुर्णां पादत्वव्यपदेशात्ततो न पौनरुक्त्यमिति वाच्यम् । चरणाभिधानादित्यनेन पादोऽस्य सर्वा भूतानि त्रिपादस्येति मन्त्रस्थपादाभिधानद्वयस्यैव ततोऽधिकार्थस्य ब्राह्मणस्थपादाभिधानस्यापि वक्तुं शक्यत्वेन भूतादिसूत्रवैय्यर्थ्यादित्याशयात् पूर्वं ब्रह्मोक्तावपि कथमुक्तहेतुना ज्योतिषो ब्रह्मतेत्याशङ्क्याह **तत्रेति** । द्युसम्बन्धादित्यतः परं निर्दिष्टमिति शेषः । अयमाशयः । औत्सर्गिकं तावच्छब्दस्य प्रसिद्धार्थानुवादकत्वम् । यस्याहिताग्नेरग्निर्गृहान्दहेत् । यस्योभयं हविरार्तिमर्च्छेदित्यादौ च विधिविभक्तेरपि यच्छब्दबलादपूर्वार्थावबोधनस्वभावात्प्रच्यावनस्याङ्गीकारात् । यत्र सर्वथा न प्राप्तिस्तत्रैव प्रसिद्धार्थत्वपरित्यागः । तदिह यदतः परो दिवो ज्योतिरित्यत्रापि यच्छब्दसामर्थ्यात् द्युसम्बन्धेन ज्योतिषा प्रसिद्धेन भवितव्यम् । न च तस्य मानान्तरात्प्रसिद्धिरस्ति । पूर्ववाक्ये च द्युसम्बन्धि त्रिपाद्ब्रह्म प्रसिद्धमिति तदेव सम्बध्यते । न च वाक्यस्थज्योतिर्लाभे प्रकृतहानं न दोषः । वाक्यापेक्षया प्रकरणस्य दुर्बलत्वदिति वाच्यम् । यच्छ्रुतेर्विषयगवेषणायां प्रकरणप्राप्तस्यापि प्रसिद्धस्यैव ग्राह्यतया स्ववाक्यगतस्यापि प्रस्तोष्यमाणस्यापूर्वस्याप्रसिद्ध्याऽग्राह्यत्वादिति । यच्छब्दस्य ब्रह्मार्थत्वं हित्वा तेजोवाचित्वे बुद्धिगौरवमुक्त्वा दोषान्तरमाह **तदिति** । प्राकृतं प्रकृतेर्जातं कार्यमिति यावत् ॥ **प्रकृतहानेति** । प्रसिद्धापेक्षया पूर्ववाक्यगतं प्रकृतं सन्निहितम् अप्रसिद्धं तु कल्प्यमप्रकृतमत एवोक्तं **कल्पयत इति** । लिङ्गोपस्थापिताद्ब्रह्मणः श्रुत्युपस्थापिततेजसो बलीयस्त्वेऽपि यच्छब्दार्थे ज्योतिषि सन्निधापकमानापेक्षायां त्रिपाद्ब्रह्मणो ध्याने विनियोगाकांक्षस्यानन्तरवाक्ये श्रुत्युक्ते विजातीयमानाकाङ्क्षश्रुत्युक्ततेजोभिधानालि(लि)ङ्गोपनीतातिसन्निहितसजातीयश्रुतिसिद्धैकवाक्यताकाङ्क्षब्रह्मोक्तिर्यच्छब्दस्य युक्ता । तस्माद्यत्तच्छब्दार्थप्रयुक्तो ज्योतिःशब्दो ब्रह्मार्थ इति भावः । **अत्रेति** । ज्योतिः सूत्र इत्यर्थः ॥ **तत्रेति** । भूतादिसूत्र इत्यर्थः। कथं भूतादिसूत्रे प्रकृतस्य ब्रह्मत्वोपपादनमित्यत उक्तं **भूतादिपादव्यपदेशबलेनेति** । पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्मैव भवितुमर्हति । यतो भूतादीन्पादान्व्यपदिशति । भूतपृथिवीशरीरहृदयानि हि निर्दिश्य सैषा चतुष्पदा षडविधा गायत्रीति । न हि ब्रह्मानाश्रयणे केवलस्य छन्दसो भूतादयः पादा उपपद्यन्ते । ब्रह्मणस्तु सर्वात्मकत्वा द्युज्यते भूतादीनां पादत्वमिति भूतादिपादव्यपदेशबलेन प्रकृतस्य ब्रह्मत्वोपपादनमित्यर्थः ॥ **श्रुतहानेति** । श्रुतस्य चरणशब्दस्य हानम् । अश्रुतस्य प्रत्यभिज्ञानादित्यस्य कल्पनं च स्यादित्यर्थः ॥ **अन्यथेति** । प्रत्यभिज्ञानस्यैव ज्योतिषो ब्रह्मत्वसाधकतयाऽभिप्रेतत्व इत्यर्थः । अवधारणे हेतुद्वयमाह **लघु चेति** । अत्राप्यवधारणे हेतुमाह **श्रुत्यनुगमो ही ति** ॥ १-१-११ ॥ छ ॥

स० — **तदेवेह द्युसम्बन्धात् प्रत्यभिज्ञायत** इति ॥ पूर्वं त्रिपादस्यामृतं दिवीत्यत्र द्युसम्बन्धिरूपमुक्तं तदेवेहाथ यदतः परो दिवो ज्योतिर्दीप्यत इत्यनेन द्युसम्बन्धितया पुनरुच्यमानं परामृश्यत

इत्यर्थः । **प्रकृतप्रत्यभिज्ञानमिति** ॥ द्युतसम्बन्धितयोक्तस्य पुनस्तथोक्तिरित्यर्थः ।

प०— सिद्धान्तरीत्या कर्णादिविदूरत्वं चरणशब्दार्थमुपेत्याह **चरणाभिधानाभावादिति ।** शङ्कते **न स्यादित्यादिना ।** पूर्वं त्रिपादस्यामृतं दिवीत्यत्र यत् द्युसंबन्तिया पुनरुच्यमानं परामृश्यत-इत्यर्थः ॥ **द्युसंबन्धादिति ।** दिवःपरो ज्योतिर्दीप्यत इति दिव इत्युक्तसंबन्धादित्यर्थः ॥ **अत्राभिप्रेयत-इति ।** चरणाभिधानादित्यात्राभिप्रेयत इत्यर्थः । श्रुतहानायेव व्यतिरेकमुखेनोपपादयति **अन्य-थेति** ॥ १ । १ । ११ ॥ छ ॥

या०— **द्युसंबन्धात्प्रत्यभिज्ञायत इति ।** यच्छब्देन परामृश्य द्युसम्बन्धितया पुनरुच्यत इत्यर्थः । अयमभिप्रायः । औत्सर्गिकं तावद्यच्छब्दस्य प्रसिद्धार्थानुवादकत्वम् । तदिह यदतः परो दिवो ज्योतिरिति यच्छब्दसामर्थ्यात् द्युसम्बन्धेनापि ज्योतिषा प्रसिद्धेन भवितव्यम् । पूर्ववाक्ये च द्युसम्बन्धि त्रिपाद्ब्रह्म प्रसिद्धमिति प्रसिद्ध्यपेक्षायां तदेव सम्बध्यतेऽतस्तदेव यच्छब्देन परामृश्य पुन-रुच्यत इति । प्राकृतं प्रकृतेर्जातम् । कार्यमिति यावत् । **अत्रेति ।** ज्योतिरिति प्रथमसूत्रे इत्यर्थः ॥ **तत्रेति ।** तदुत्तरत्रिसूत्र्यामित्यर्थः ॥ **भूतादिपादेति ।** पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्मैव, यतो भूतादीन्पादान् व्यपदिशति भूतपृथिवीशरीरहृदयानि हि निर्दिश्याह सैषा चतुष्पदा षड्विधा गायत्रीति । न हि ब्रह्मानाश्रयणे केवलस्य छन्दसो भूतादेः पादा उपपद्यन्ते इति भूतादिपादव्यपदेशबलेन प्रकृतस्य ब्रह्मत्वो-पपादनमित्यर्थः । पौनरुक्त्यपरिहारानुपयोगित्वात् शिष्टसूत्रद्वयोक्तं प्रकृतस्य ब्रह्मत्वोपपादकं नानूदित-मित्यवधेयम् ॥ **श्रुतहानेति ।** प्रथमसूत्रे श्रुतस्य चरणशब्दस्य हानमश्रुतस्य प्रत्यभिज्ञानादित्यादेः कल्पनमित्यर्थः ॥ १-१-११

च०— **द्युसंबंधात्प्रत्यभिज्ञायत इति ।** परो दिवो ज्योतिर्दीप्यत इति वाक्ये यच्छब्देन परामृश्य द्युसम्बन्धात्पुनरभिधीयत इत्यर्थः । अत्रेदमभिसंहितम् । यदितिसर्वनाम्नः प्रसिद्धार्थानुवादकत्व-स्यौत्सर्गिकतया 'यदतःपरो दिवोज्योतिर्दीप्यते' इत्यत्र यच्छब्दसमभिव्याहारात् द्युसम्बन्धेनापि ज्योतिषा प्रसिद्धेन भवितव्यम् । पूर्ववाक्ये द्युसम्बन्धित्रिपाद्ब्रह्म प्रसिद्धमिति प्रसिद्ध्यपेक्षायां तदेवात्रान्वेति अतस्तदेव यच्छब्देन परामृश्य पुनरभिधीयत इति । **प्राकृतं प्रकृतेर्जातम् ।** तस्येदमित्यनुशिष्टसम्बन्धार्थकप्रकृति-शब्दप्रकृतिकेनाणा जन्यजनकभावसम्बन्धप्रत्यायनात् । **अत्रेति ।** ज्योतिरिति प्रथमसूत्र इत्यर्थः । **तत्रेति ।** तदुत्तरत्रिसूत्र्यामित्यर्थः ॥ **श्रुतहानेति ।** प्रथमसूत्रे श्रुतस्य चरणाभिधानादित्यस्य हानमश्रुतस्य प्रत्यभिज्ञानादित्यादेः कल्पनमित्यर्थः ।

॥ इति गायत्र्यधिकरणम् ॥

सु०— ॥ ॐ प्राणस्तथाऽनुगमात् ॐ ॥ नन्वत एव प्राण इत्यनेनैवैतद्गतार्थम् । ता एताः शीर्षञ्छ्रियः श्रिता इत्यादिवाक्यान्तरविषयत्वान्नेति चेन्न । उक्तोत्तरत्वात् । अभ्यधिकाशङ्कासद्भावान्नेति चेन्न । अदर्शनात् । सद्भावे वा तदनन्तरमेवारम्भणीयत्वादित्यतो निरन्तराधिकरणसिद्धान्तन्यायोपजीव्यधिकाशङ्कया पूर्वपक्षमाह बाहुल्य इति ।

अनु०— ॥ ॐ प्राणस्तथाऽनुगमात् ॐ ॥

बाहुल्ये श्रुतिलिङ्गयोः ॥

अन्यस्य मुख्यवाच्यत्वमिति ॥

पूर्वाधिकरणे हि गायत्र्याद्यन्यवाचिशब्दबाहुल्यसद्भावेऽपि श्रुतिलिङ्गबाहुल्याश्रयणेन गायत्री परमात्मैवेति निर्णीतम् । अस्ति चात्रापि परकीयश्रुतिलिङ्गबाहुल्यम् । तथाहि । चक्षुरादिभिः सहपाठस्तावत्प्रधानस्य ब्रह्मणो नोपपद्यते । न च किञ्चिदत्र ब्रह्मणो ज्ञापकमस्ति । येनाप्रधानप्रायपाठस्यापवादः स्यात् । युज्यते । चेन्द्रजीवमुख्यप्राणानाम् । इन्द्रस्य हस्ताधिष्ठातुरिन्द्रियत्वात् । जीवस्येन्द्रियजन्यफलाश्रयत्वात् । मुख्यस्य च सर्वेन्द्रियस्वामित्वात् । प्राणो वा अहमस्म्यष इतीन्द्रश्रुतिः । ता अहिंसन्तेत्यादिनोक्तानि प्राणविवादो, देहादुत्क्रमणप्रवेशौ, ततो देहपातोत्थाने, प्राणसंवादश्चेति मुख्यप्राणलिङ्गानि । तथा तं शतं वर्षाण्यभ्यार्चदिति शतायुष्ट्वं प्राणो वंश इति चक्षुरादीन्प्रति वंशत्वमिति जीवलिङ्गानि । सति चैवमन्यदीययोः श्रुतिलिङ्गयोर्बाहुल्येऽन्यस्येन्द्रादेः प्राणशब्दवाच्यत्वं युक्तम् । अन्यथोक्तन्यायस्यानैकान्त्यापातात् । न च वाक्यभेदो दोषः । अनन्यगतिकतया प्राप्तत्वादिति । अमुख्यया वृत्त्याऽत्र मुख्यप्राणस्य वाच्यत्वं सिद्धान्तिनाऽप्यभ्युपगम्यत इत्यतो मुख्येत्युक्तम् । इतिशब्दः शङ्कासमाप्तिद्योतकः ।

शे०—॥ ॐ प्राणस्तथाऽनुगमात् ॐ ॥ ॥ गतार्थतामिति । सर्वासां प्राणविद्यानामत एव प्राण इत्यनेनैव भगवद्विषयतायाः समर्थितत्वादिति भावः । विद्याविशेषेऽभ्यधिकाशङ्कया प्रत्यवस्थानान्न गतार्थतेत्यभिप्रेत्य गूढाभिसन्धिः शङ्कते ता वा एता इति । अविदिताशयः परिहरति उक्तोत्तरत्वादिति । वाक्यभेदेनाधिकरणभेदे तेषामानन्त्येन शास्त्रापर्यवसानप्रसङ्गादित्युक्तोत्तरत्वादित्यर्थः । आशयमुद्घाटयति अभ्यधिकेति ॥ सहपाठ इति । चक्षुःश्रोत्रमनोवाक्प्राण इति चक्षुरादिभिः सह पाठ इत्यर्थः । अप्रधानचक्षुरादिसाहचर्यात्प्राणोऽप्यप्रधानभूत एवेति भावः । ननु निर्णायकाभाव एव प्रायपाठोऽनुसरणीयो न तु तत्सद्भावेऽपि । अन्यथा छत्रचामराद्यसाधारणलिङ्गसद्भावेऽपि सामन्तसन्निधिमात्रेण राजा न राजा स्यादित्यत आह न चेति । तर्हि चक्षुरादिभिः सहपाठादेव प्राणस्येन्द्रादित्वमपि

न स्यादित्यत आह **युज्यते चेति** ॥ **इन्द्रश्रुतिरिति** । अत्र प्रसिद्धेन्द्रप्रयुक्तोऽहंशब्द एवेन्द्रश्रुतित्वेन द्रष्टव्यः । 'इन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाचे'त्यादीन्द्रश्रुतीनां वृत्रहन्तृत्वमहाव्रतयजमानत्वादिलिङ्गानामुपलक्षणमेतत् । ततश्चेन्द्रे इन्द्रश्रुतिलिङ्गबाहुल्यसिद्धिरिति द्रष्टव्यम् । प्राणे प्राणश्रुतिलिङ्गबाहुल्यमाह **ता अहिंसन्तेत्यादिना** । यद्यपि न्यायविवरणटीकायामिन्द्रियैः सहाभिधानमपि प्राणलिङ्गत्वेनोक्तमिति तदप्यत्र गणनीयम् । तथाऽप्युक्तरीत्या तस्येन्द्रजीवप्राणसाधारणत्वादसाधारणलिङ्गकथनावसरे तन्न सङ्गृहीतम् । सर्वसाधारण्यज्ञापनायैव स्वातन्त्र्येणैवोदाहृतमिति द्रष्टव्यम् । अत्र प्राणविवादादिलिङ्गप्रदर्शनेनैव तल्लिङ्गसहचरिता 'प्राण उदक्रामत प्राणः प्राविशदि'त्यादिप्राणश्रुतिरपि दर्शितप्रायैवेति भावेन न पृथग्दर्शिता । भाष्यटीकयोः प्राणविवादस्यैव प्राणसंवादशब्देन ग्रहणेऽपीह टीकायां प्राणविवादस्य प्रत्येकमभिधानेन प्राणसंवादशब्देन तद्ग्रहणायोगात् । 'तं देवा अब्रुवन् त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं सस्त्वमस्माकमसी'त्यादिस्तुतिरूपोऽर्थवाद एव संवादो ज्ञेयः । ततश्च प्राणेऽपि तद्बाहुल्यसिद्धिरिति ज्ञेयम् । जीवे श्रुतिलिङ्गबाहुल्यमाह **तथेति** । अत्र शतायुष्ट्वादिलिङ्गसहचरिता 'पुरुषरूपेण य एष तपति स एष पुरुषः समुद्रः' इत्यादिका जीवश्रुतिर्लिङ्गप्रदर्शनेन प्रदर्शितप्रायैवेति न पृथग् दर्शिता । अत एव जीवेऽपि श्रुतिलिङ्गबाहुल्यसिद्धिरिति ध्येयम् ॥ **अन्यथोक्तन्यायस्येति** । यदीयश्रुतिलिङ्गबाहुल्यं यत्र तत्र स एवोच्यत इति न्यायस्येत्यर्थः ॥ **अनन्यगतिकतयेति** । सम्भवत्येकवाक्यत्व एव वाक्यभेदस्य दोषत्वम् । प्रकृते चानेकप्रापकसद्भावेनैकवाक्यत्वायोगान्न वाक्यभेदो दोष इति भावः ।

स० — ॐ **प्राणस्तथानुगमात्** ॐ ॥ **अन्यथोक्तन्यायस्येति** । यदीयश्रुतिलिङ्गबाहुल्यं यत्र तत्र स एवोच्यत इति न्यायस्येत्यर्थः ।

प० — ॥ ॐ **प्राणस्तथानुगमात्** ॐ ॥ **उक्तोत्तरत्वादिति** । वाक्यभेदेनाधिकरणभेदे शास्त्रापर्यवसानप्रसङ्गादित्यनन्तराधिकरणे उक्तत्वादिति भावः । इन्द्रश्रुतिः अहमितिप्रसिद्धेन्द्रप्रयुक्ताहंश्रुतिः ॥ **अन्यथोक्तन्यायस्येति** । यदीयश्रुत्यादिबाहुल्यं यत्र स एव तत्र ग्राह्य इत्युक्तन्यायस्येत्यर्थः । अनेकार्थत्वे वाक्यभेददोष इत्याशंक्याह **न चेति** ।

या० — ॐ **प्राणस्तथाऽनुगमात्** ॐ ॥ **उक्तोत्तरेति** । वाक्यभेदेनाधिकरणभेदे शास्त्रापर्यवसानप्रसङ्गादित्युक्तोत्तरत्वादित्यर्थः ॥ **चक्षुरादिभिरिति** । 'चक्षुः श्रोत्रं मनो वाक् प्राणः' इत्यत्रेत्यर्थः ॥ **इन्द्रश्रुतिरिति** । प्राणश्रुतिस्तु विषयवाक्यगतेति नोक्ता । उपलक्षणं चैतत् । पुरुषश्रुतिरपि ग्राह्या । इन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच । प्राणो वा अहमसीतीन्द्रश्रुतेः । वाक्प्राणः, प्राण उदक्रामत्, प्राणः प्राविशत्, प्राण ऋच, इति प्राणश्रुतेः । पुरुषरूपेण स एष पुरुष इत्यपि पुरुषश्रुतेश्च

बहुत्वमपि ग्राह्यम् । महाव्रते यजमानत्वप्राणकलहशतायुष्ट्वादिनिरवकाशलिङ्गबलान्नैतासामुक्तरीत्या विष्णुपरत्वशङ्काऽवकाश इति भावः ॥ **देहादुत्क्रमणप्रवेशावित्यादि** । प्राण उदक्रामत्, तत्प्राण उत्क्रान्ते उदपद्यत, प्राणः प्राविशत्, तत्प्राणे प्रपन्न उदतिष्ठत् । इत्यनेनोक्तानि उत्क्रमणप्रवेशदेहपातोत्थानानीति ज्ञातव्यम् ॥ **प्राणसंवादश्चेति** । प्राणानामिन्द्रियदेवानां समीचीनः प्रीतिपूर्वको वाद इत्यर्थः । स च 'तं देवा अब्रुवन् । त्वमुक्थमसि, त्वमिदं सर्वमसि, तव वयं स्मस्त्वमस्माकमसीत्यत्रोक्तो ज्ञातव्यः ॥ **अन्यथोक्तन्यायस्येति** । यदीयश्रुतिलिङ्गबाहुल्यं यत्र तत्र स एवोच्यत इति न्यायस्येत्यर्थः ।

श्री० — ॐ **प्राणस्तथाऽनुगमात्** ॐ ॥ **इन्द्रश्रुतिरिति** । अस्येन्द्रवाक्यत्वादित्यर्थः ॥

च० — ॐ **प्राणस्तथानुगमात्** ॐ ॥ नन्वत एव प्राण इत्यतीतयोगेनैव निखिलप्राणविद्यानामीशगोचरशक्तितात्पर्यवत्तायाः समर्थिततया मन्दप्रयोजनमिदं लक्षणमित्याशङ्कते **नन्विति** । अतिक्रान्तनयस्य तैत्तरीयशाखास्थवाक्यविषयकत्वात्प्रकृतनयस्य चैतरेयशाखागतवाक्यविषयकत्वोपगमान्न क्षतिरित्यभिसन्दधानः शङ्कते **ता वा एता इति** । वाक्यभेदेनाधिकरणभेदे शाखापर्यवसानप्रसङ्गादित्यन्तनयेऽभिहितं स्मारयन् समाधत्ते **उक्तोत्तरत्वादिति** । उक्तातिप्रसङ्गापनिनीषया पूर्ववादी स्वाशयं प्रकाशयति **अभ्यधिकेति** । तस्या एव गगनकुसुमायमानतया तदनिस्तारादित्याह **अदर्शनादिति** । तादृशशङ्काकर्मकदर्शनोपगमे प्रकृतनयस्य तन्नयाद्व्यवहिते निर्निबन्धनत्वाख्यबाधकमभिधत्ते **तत्सद्भाव इति** ॥ **निरन्तरेति** । अन्तरशब्दो व्यवधानवचनः निःशब्दो निष्क्रान्तिवचनः 'निरादयः क्रान्ताद्य'र्थे' त्यनुशासनान्निर्व्यवधानगायत्रीनयीयश्रुतिलिङ्गबाहुल्यरूपसिद्धान्तन्यायमित्यर्थः ॥ **सहपाठ इति** । अनेन ब्रह्मपक्षकं स्वावधिकावरत्वविशेषितचक्षुराद्यभिधायक'चक्षुः श्रोत्रं मनो वाक् प्राण'इतिवाक्यघटकतत्समानविभक्तिकप्राणपदशक्तितात्पर्यविषयत्वाभावसाध्यकं चक्षुराद्यवधिकप्राधान्यविशेषितत्वहेतुकमनुमानं ध्वन्यते । ननु छत्रचामराद्यसाधारणलिङ्गसद्भावे सामन्तसन्निधानमात्रेण यथा राजा न राजा भवति तद्वत्प्रकृते ब्रह्मत्वनिर्णायकसमवधानेन सहपाठमात्रेण ब्रह्म न ब्रह्म भवेदिति शङ्कितां हेतोरप्रयोजकतां वारयति **न चेत्यादिकस्यादित्यन्तेन** ॥ **युज्यत इति** । सहपाठ इति कर्तृवाचकमनुषञ्जनीयम् । इन्द्रादित्रितयधर्मिकमिन्द्रियत्वेन्द्रियजन्यफलाश्रयत्वतत्स्वामित्वहेतुकं दर्शितसाध्यप्रतियोगिसाध्यकमनुमानत्रयमेतत्सूचितमवसेयम् । हस्ताधिष्ठातृत्वेन चाद्यहेतोरसिद्धिशङ्का निरसनीयेति हृदयम् । इन्द्रश्रुतिरिन्द्रप्रयुक्ताहंपदरूपा श्रुतिः । प्राणश्रुतिर्विषयवाक्यगतैवेति नोपन्यस्ता । पुरुषश्रुतिरप्युपन्यसनीया । 'इन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाचे'तीन्द्रश्रुतीनामि'न्द्रो वै वृत्रं हत्वे'त्यादिवृत्रहन्तृत्वमहाव्रतयजमानत्वादिलिङ्गानां बहुत्वादिन्द्रे श्रुतिलिङ्गबाहुल्यसिद्धिरवसेया । प्राणश्रुतिलिङ्गभूमानमभिधत्ते **ता अहिंसन्तेत्यादि** । न्यायविवृतिटीकायामिन्द्रियैः सहाभिधानमपि प्राणलिङ्गत्वेनाजीगणदिति **प्रकृते** कथं तत्तथा

नाजीगणदिति शंका तस्येन्द्रजीवप्राणसाधारण्येनासाधारणलिङ्गगणनावसरे तत्परिगणनानौचित्यादपहस्तयितव्या । अत्र प्राणविवादादितलिङ्गभूम्नः प्रदर्शनेनैव तत्सहचरित 'प्राण उदक्रामत् प्राणः प्राविशदि'त्यादितच्छ्रुतिभूम्नोऽपि प्रदर्शनं कृतदेशीयमिति मन्वानो न पृथक् प्रादीदृशत् । भाष्ये प्राणविवादस्यैव प्राणसंवादशब्देन भाषणेऽपि टीकायां तथैव टीकनेऽपि प्रकृते प्राणविवादतत्संवादयोः पृथगभिधानेन 'तं देवा अब्रुवन् त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसी'त्यादिस्तुतिरूपः समीचीनो वाद एव संवादशब्देनोपादेयः । इत्थं च प्राणेऽपि तद्भूयस्त्वसिद्धिरवसेया । जीवेऽपि श्रुतिलिङ्गभूयस्त्वं दर्शयति **तथेति** । अत्र शतायुष्यादिजीवलिङ्गाभिधायकपदसमभिव्याहृता पुरुषरूपेण 'य एष तपति स एष पुरुषः समुद्र' इत्यादिका भूयसी जीवश्रुतिरपि भूयस्तल्लिङ्गप्रदर्शनेनैव प्रदर्शितदेश्येति न पृथक् प्रादर्शि । इत्थं च जीवेऽपि श्रुतिलिङ्गभूयस्त्वसिद्धिरिति ध्येयम् ॥ **अन्यथोक्तन्यायस्येति** । यादृशवाक्यं यादृगार्थश्रुतिलिङ्गबाहुल्योपेतं तत्तादृशार्थतात्पर्यकमिति सामान्यमुखव्याप्तिरुदाहृतस्थलेष्वनैकान्त्यं प्रसज्येतेति भावः ॥ **अनन्यगतिकतयेति** । गां बधान गां नयेत्यादौ वाक्यभेदस्य दोषत्वपरिजिहीर्षया संभवत्येकवाक्यत्व इति विशेषिततया प्रकृते च नानार्थप्रत्यायकसंवलनेनैकार्थतात्पर्यकत्वस्य दुरुपपादतया नानार्थतात्पर्यकत्वोपगतावपि क्षत्यभावादिति भावः ।

सु० — सिद्धान्तयत्सूत्रं व्याख्याति ॥ तन्नेति ।

---

ब्र. सू. — **ॐ प्राणस्तथाऽनुगमात् ॐ**

अनु० — तन्नात्रगस्य हि ॥

विष्णावेव तु लिङ्गानि प्राणस्थानि तु सर्वशः ॥
प्राणसंवादपूर्वाणि मुख्यतो जीवगानि च ॥
अभ्याचच्छतवर्षाणि प्राणवंशत्वमित्यपि ।

**किन्तु ब्रह्मण एव प्राणशब्दमुख्यवाच्यत्वमिति शेषः । कुतः । ब्रह्मशब्दानुगमात् । पारमेश्वरलिङ्गानुगमाच्चेति भावः । अथवा बाहुल्य इत्यादिकमेव सिद्धान्तवाक्यम् । ब्रह्मविषययोः श्रुतिलिङ्गयोर्बाहुल्ये विद्यमाने यदन्यस्येन्द्रादेः प्राणशब्दमुख्यवाच्यत्वं पूर्ववादिनोक्तं तन्नेति ।**

**ननु च श्रुतिलिङ्गबाहुल्यादेवान्यस्य मुख्यवाच्यत्वमित्युक्तम् । सत्यम् । तथाऽप्यस्त्यत्र वैषम्यम् । निरवकाशश्रुतिलिङ्गबाहुल्येन हि प्रागत्र च निर्णयः कृतः । एतानि तु सावकाशानीत्याह** अत्रगस्येति । **इन्द्रादिगतस्य । हिशब्दो हेत्वर्थः । तस्मान्नेति पूर्वेण**

**संबन्धः । प्रमाणप्रसिद्धिद्योतको वा । आद्यस्तुशब्दो न्यायविशेषसूचकः । प्राणस्थानि प्राणसंबन्धितया प्रतीतानि । पुनस्तुशब्दोऽप्यर्थे । इन्द्रियविषयाण्यपीति श्रुतिरपीति वा । न च मन्त्रेषु पुरुषसंबन्धनिबन्धनं क्रोशनमित्रामुख्यानीश्वरे लिङ्गानीति शङ्कनीयम् । अन्तर्गतस्य तस्यैव तत्तत्कर्तृत्वादित्याशयेन मुख्यत इत्युक्तम् । शतं वर्षाणीत्यतोऽपि परस्तादितिशब्दो योज्यः । प्राणवंशत्वं प्राणांश्चक्षुरादीन्प्रति वंशत्वम् । एतेन न वक्तुरित्यादिसूत्रतात्पर्यमुक्तं भवति ।**

**शे० — ब्रह्मशब्दानुगमादिति** । 'एतद्ब्रह्म' 'ब्रह्मणो लोकः' । 'ब्रह्मेमं पुरुषम्' । 'उदरं ब्रह्मे'त्यादिब्रह्मशब्दानुगमादित्यर्थः ॥ **पारमेश्वरेति** । 'तं देवाः प्राणयन्ते'त्यादिदेवोपदेश्यत्वादिपारमेश्वरलिङ्गानुगमाच्चेत्यर्थः । अन्यदीययोः श्रुतिलिङ्गयोर्बाहुल्येऽप्यन्यस्येन्द्रादेः प्राणशब्दवाच्यत्वाभावे उक्तन्यायस्यानैकान्त्यमिति भावेन गूढाभिसन्धिः शङ्कते **ननु चेति ॥ निरवकाशेति** । 'विष्णुमेवानयन्देवाः' इत्यादिभाष्योदाहृतप्रमाणानुसारेण देवोपदेश्यत्वादेर्निरवकाशत्वसिद्धेः । तथा च नोक्तन्यायस्यानैकान्त्यमिति भावः ॥ **प्रमाणेति** । 'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः । न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तममि'त्यादिप्रमाणप्रसिद्धिद्योतको नेत्यर्थः ॥ विष्णोरेव तु लिङ्गानीत्यत्रैवकारेण विवक्षितसिद्धेस्तुशब्दस्यानर्थक्यमित्यत आह **आद्यस्तुशब्द इति** । स चोपरिष्टाद्वक्ष्यत इति

---

भावः । वस्तुतो भगवद्गतत्वादाह **प्राणसम्बन्धितया प्रतीतानीति ॥ पुनस्तुशब्द इति** । प्राणस्थानि त्विति तुशब्द इत्यर्थः । अतो न तद्वैयर्थ्यमिति भावः । अप्यर्थकत्वे योजनामाह **इन्द्रविषयाण्यपीति** । अनेन न केवलं प्राणसम्बन्धितया प्रतीतान्यन्तर्गतस्य विष्णोर्लिङ्गानि किन्त्वपीन्द्रविषयाण्यप्यत्रगस्य विष्णोरेव लिङ्गानीत्यपिशब्दसंबन्धः सूचितो भवति । न केवलं प्राणसंबन्धितया प्रतीतानि लिङ्गान्येवान्तर्गतस्य विष्णोः किन्तु तत्तच्छ्रुतिरप्यत्रगस्य विष्णोरेवेति चसंबन्धः इत्याह **श्रुतिरपीति** । तुशब्दसूचितन्यायविशेषसमर्पकत्वान्न मुख्यत इत्यस्य वैयर्थ्यमिति भावेन तं विशेषं वक्तुं शङ्कते **न चेति ॥ योज्य इति** । प्राणवंशत्वमितीत्यत्रत्येतिशब्दस्य न केवलमनेन संबन्धः किन्त्वभ्यार्चच्छतवर्षाणीत्यत्रापि संबन्धो द्रष्टव्य इत्यर्थः । 'प्राणो वंश इति स्थविरः शाकल्य' इति वाक्यशेषानुसारेण प्राणवंशत्वशब्दार्थमाह **प्राणवंशत्वमित्यादि** । नन्वत्रगस्येत्यादेरसूत्रितार्थप्रतिपादकत्वादभाष्यत्वमित्यतो न वक्तुरित्यादिसूत्रतात्पर्यकथनरूपत्वान्नाभाष्यत्वमित्याशयेनाह **एतेनेति** । अत्रगस्येत्यादिनेत्यर्थः । इन्द्रादिप्रापकश्रुतिलिङ्गादेस्तदन्तर्यामिपरतायास्तत्राभिप्रेतत्वादिति भावः ।

**स० —** तुशब्दसूचितन्यायविशेषं वक्तुमाह **न च मंत्रे पुरुषसंबन्धनिबन्धनमिति** । इदानीन्तनन्यायमाह **अन्तर्गतस्येति** ।

प० — **न्यायविशेषेति** । अन्तर्यामिगतत्वरूपन्यायविशेषेत्यर्थः । यद्वा तत्तत्कर्तृत्वादिति-वक्ष्यमाणसर्वकर्तृत्वरूपन्यायविशेषेत्यर्थः । सिद्धान्तदिशा इन्द्रविशेषणत्वाभावमुपेत्याह **वक्तुरिति** । प्रतर्दनस्य श्रोतृत्वेन वक्तृत्वाभावादिति भावः ॥

या० — **ब्रह्मशब्देति** । एतद्ब्रह्म ब्रह्मणो लोकः ब्रह्मेमं पुरुषम् उदरं ब्रह्मेत्यादिब्रह्मशब्दानुगमादित्यर्थः ॥ **पारमेश्वरेति** । तं देवाः प्राणयन्त इति देवोपदेश्यत्वं तं भूतिरिति भूतित्वेन देवोपास्यत्वं सर्वे वेदा इति सर्ववेदप्रतिपाद्यत्वमित्यादिपारमेश्वरलिङ्गानुगमादित्यर्थः ॥ **प्रमाणप्रसिद्धीति** । 'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः । न क्वापि किञ्चिन्नामास्ति तमृते विष्णुमव्ययमि'त्यादिप्रमाण प्रसिद्धिद्योतको वेत्यर्थः । तुशब्दसूचितं न्यायविशेषं वक्तुमाह **न च मश्चे पुरुषेति** । इदानीं तन्न्यायमाह **अन्तर्गतस्येति** ॥ **एतेनेति** । न वक्तुरित्यादिसूत्रत्रयेऽपीन्द्रादिप्रापकश्रुतिलिङ्गानां तदन्तर्यामिपरतयाऽभिप्रेतत्वादिति भावः ।

श्री० — **क्रोशनमिवामुख्यानीति** । एवं प्राणादिसम्बन्धनिबन्धनानीश्वरे लिङ्गानीति न मुख्यत्वं तेषामिति भावः ॥ **तदिति** । प्राणसंवादीत्यर्थः । वंशत्वमाश्रयत्वम् ।

---

च० — **ब्रह्मशब्दानुगमादिति** । 'एतद्ब्रह्म' 'ब्रह्मणो लोकः' 'ब्रह्मेमं पुरुषं' 'उदरं ब्रह्मे'त्यादिब्रह्मशब्दानुगमादित्यर्थः । **पारमेश्वरेति** । तं देवाः प्राणयन्तेति देवकर्तृकोपदेशनक्रियाकर्मत्वं तं भूतिरिति देवा उपासां चक्रिरे इति भूतित्वप्रकारकतत्कर्तृकोपासनाक्रियाकर्मत्वं 'सर्वे वेदा' इति सर्ववेदप्रतिपाद्यत्वं 'प्राणो ह्येष य एष तपती'ति सूर्यमण्डलस्थत्वं 'प्राणस्त्वं प्राणः सर्वाणि भूतानी'ति सर्वान्तर्यामित्वं सर्वाणि भूतान्यापिपीलिकाद्याः प्राणेन बृहत्याविष्टब्धानीति सर्वव्यापित्वमित्यादीनां भागवतलिङ्गानां संबन्धादित्यर्थः ॥ **निरवकाशेति** । तथा च निरवकाशत्वांशस्य हेतुतावच्छेदकघटकत्वोपगमेन विष्णुमेवानयन् देवा इत्यादिभाष्योपन्यस्तप्रमाणप्रमापितनिरवकाशताकदर्शितलिङ्गानां पक्षधर्मतासिद्धिः पूर्ववाद्युपन्यस्तलिङ्गानां चातादृशतया तादृशविशेषणघटितोक्तव्याप्तेरनैकान्त्यव्युदासश्च संभवतीति भावः । प्रमाणप्रसिद्धीति तत्तन्नाम्नोच्यते विष्णुरित्यादिप्रमाणप्रसिद्धिसूचको वेत्यर्थः । तुशब्दध्वनितविशेषप्रतिपिपादयिषयाऽऽशङ्क्य पराकुरुते **न चेत्यादि** । 'प्राणो वंश इति स्थविरः शाकल्य' इति वाक्यशेषमनुरुन्धानः प्राणवंशत्वशब्दार्थमभिधत्ते **प्राणवंशत्वमित्यादि** । 'अत्रगस्य हि' इत्यादेः 'न वक्तुः' इत्यादित्रिसूत्रीतत्पर्यकथनरूपतया नोत्सूत्रितार्थप्रतिपादकत्वनियन्त्रिताभाष्यतेत्याह **एतेनेति** । इन्द्रादिप्रापकश्रुतिलिङ्गादेस्तदन्तर्यामितात्पर्यकतायास्तत्राभिप्रेतत्वादिति भावः ।

सु० — केचिदत्र कौषीतकिब्राह्मणोपनिषदीन्द्रप्रतर्दनाख्यायिकायां श्रुतं 'प्राणोऽस्मि प्रज्ञात्मे'-त्यादिवाक्यमुदाहरन्ति । तेषां वक्तुरिति न श्रुत्यनुगतम् । वक्तृत्वं हीन्द्रस्यात्मोपदेशादित्य-नेनैव लब्धम् । न च वक्तुरितीन्द्रप्रतिपत्त्यर्थम् । तस्य तदप्रत्यायकत्वात् । अस्माकं तु विशिष्टं शस्त्रं शंसितुर्विश्वामित्रस्य नेन्द्रोऽन्यथोपदेष्टुमर्हतीति युक्तिद्योतनाय सार्थकमिति ।

शे० — परोदाहृतस्यैवात्र विषयवाक्यत्वसम्भवान्नोदाहरणान्तराश्रयणमुचितमित्यतस्तस्यानुपपन्न-त्वादिति भावेन तत्रानुपपत्तिं कथयितुं तदुदाहरति केचिदत्रेति इन्द्रप्रतर्दनाऽऽख्यायिकायामिति । 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपाजगाम युद्धेन च पौरुषेण च तं हेन्द्र उवाच प्रतर्दन वरं ते ददामीति । अथ होवाच प्रतर्दनस्त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस' इत्याद्या-ख्यायिकायां श्रुतमित्यर्थः ॥ प्राणोऽस्मीति । प्रतर्दनं प्रतीन्द्रेण प्रयुक्तं 'प्राणोऽस्मि प्रज्ञात्मे'ति वाक्य-मित्यर्थः । आदिपदेन च 'तन्मामायुरमृतमित्युपास्स्वे'त्युत्तरवाक्यसंग्रहः ॥ वक्तुरिति न श्रुत्यनुगत-मिति । न परं ब्रह्म प्राणशब्दं कस्माद्वक्तुरात्मोपदेशात् । वक्ता हीन्द्रो नाम कश्चिद्विग्रहवान्देवता-विशेषः । स्वात्मानं प्रतर्दनायाचक्षे मामेव विजानीहीत्युपक्रमस्य प्राणोऽस्मि प्रज्ञात्मेत्यहङ्कारवादेन स एष वक्तुरात्मत्वेनोपदिश्यमानः प्राणः कथं ब्रह्म स्यात् । न हि ब्रह्मणो वक्तृत्वं सम्भवति । अवागमन इत्यादिश्रुतिभ्य इति हि पूर्वपक्षसूत्रखण्डस्यार्थः । तत्र वक्तुरिति वचनं न श्रुत्यनुगतम् । श्रुतौ वक्तृ-पदाश्रवणादित्यर्थः । न केवलं श्रुत्यननुगममात्रं दोषः किन्तूपदेशादित्यनेनैवोपदेष्टृत्वरूपवक्तृत्वलाभा-द्वक्तुरित्यस्य वैयर्थ्यं चेत्याह वक्तृत्वं हीति । अतो वक्तुरित्यस्य वैयर्थ्यं चेति वाक्यशेषः । नन्वा-त्मोपदेशादित्यनेन लब्धमपि वक्तृत्वं विग्रहवत्यामिन्द्ररूपदेवतायामेवोपपद्यते न ब्रह्मणि तस्य वागादि-रहितत्वादतो वक्तृत्वान्यथाऽनुपपत्त्याऽत्रेन्द्र एव ग्राह्य इतीन्द्रप्रतिपत्त्यर्थं पुनरुच्यतेऽतो न वैयर्थ्यमित्या-शङ्क्य निराकरोति न चेति ॥ तदप्रत्यायकत्वादिति । वाक्करणव्यापारस्वरूपवक्तृत्वस्य देवमनुष्यादि-साधारणत्वेन देवताविशेषरूपेन्द्रप्रत्यायकत्वासम्भवादित्यर्थः । परपक्षे उद्भावितं दोषद्वयं न स्वपक्षे प्रसज्यत इत्याह अस्माकं त्विति ॥ विशिष्टशस्त्रेति ॥ बृहतीसहस्रस्तोत्रेत्यर्थः । ततश्च बृहतीसहस्र-शंसनस्य श्रुत्युक्तत्वान्न वक्तुरित्यस्य श्रुत्यननुगतत्वं नापि वैयर्थ्यमुक्तयुक्तिसूचकत्वेनार्थवत्त्वादिति भावः ।

स० — वक्तुरिति न श्रुत्यनुगतमिति । प्रतर्दनस्य श्रोतृत्वेन वक्तृत्वाभावादिति भावः । तर्हीन्द्रस्य वक्तृत्वमनेनोच्यत इत्यस्त्वित्यत आह वक्तृत्वं हीन्द्रस्येति ॥ न च वक्तुरितीन्द्रप्रति-पत्त्यर्थमिति । इन्द्रत्वप्रतिपत्त्यर्थमित्यर्थः । आत्मोपदेशादित्यात्मशब्देनात्ममात्रे प्राप्ते तस्येन्द्रत्वप्रतीत्यर्थं वक्तुरितिपदमिति नेत्यर्थः ॥ प्रतिशब्दो वीप्सायामिति । तथाच तद्योगे द्वितीयोपपन्नेति भावः ।

प० —**न श्रुत्यनुगतमिति ।** अस्मदीयश्रुतौ विश्वामित्रस्य शस्त्रवक्तृत्वश्रवणात्वक्तुरिति सौत्रोक्तिः श्रुत्यनुगता । त्वदुदाहरणे प्रतर्दनस्य केवलं श्रोतृत्वेन वक्तृत्वाश्रवणाद्वक्तुरिति न श्रुत्यनुगतमित्यर्थः । ननु व॒ुरिन्द्रस्येत्येवार्थ इति चेत् तर्हि वक्तुरिति व्यर्थं । इन्द्रस्य वक्तृत्वज्ञापनं तस्य प्रयोजनमिति चेत्तत्राह **तेषामिति** । तर्हीन्द्रस्य वक्तृत्वमनेनोच्यत इत्यस्त्वित्यत आह **वक्तृत्वं हीति ॥ इन्द्रप्रतिपत्त्यर्थमिति ।** इन्द्रत्वप्रतिपत्त्यर्थमित्यर्थः । आत्मोपदेशादित्यनेनात्ममात्रे प्राप्ते तस्येन्द्रत्वप्रतिपत्त्यर्थं वक्तुरिति पदमिति नेत्यर्थः ॥ **युक्तीति** । पूर्वपक्षयुक्तिद्योतनायेत्यर्थः ॥

या० — **वक्तुरिति न श्रुत्यनुगतमिति** । परेण हीन्द्रो नाम कश्चिद्विग्रहवान् देवताविशेषस्स्वमात्मानं प्रतर्दनायाचचक्षे 'मामेव विजानीही'त्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मे'त्यहङ्कारवादेन । स एवं वक्तुरात्मत्वेनोपदिश्यमानः प्राणः कथं ब्रह्म स्यात् । न हि ब्रह्मणो वक्तृत्वं सम्भवति । 'अवाग् अमनः' इत्यादिश्रुतिभ्य इति हि पूर्वपक्षांशो व्याख्यातः ततश्च श्रुत्यनुगमायाहङ्कारास्पदस्यानुवादमात्रं येन श्रुत्यननुगमः । किं त्विन्द्रस्य वक्तृत्वप्रतिपादनार्थमप्यतो नोक्तदोष इत्यत आह **वक्तृत्वं हीति ।** वक्तृत्वस्य प्रतिपादनमप्यात्मोपदेशादिति सूत्रखण्डेनैव लब्धं पुनस्तदर्थं वक्तुरिति पदे व्याख्यायमाने तस्य वैय्यर्थ्यं स्यादिति भावः । नन्वात्मोपदेशादित्यनेन लब्धमपि वक्तृत्वं विग्रहवत्यामिन्द्ररूपदेवतायामेवोपपद्यते न ब्रह्मणि । तस्य वागादिरहितत्वात् । अतो वक्तृत्वान्यथाऽनुपपत्त्याऽत्रेन्द्र एव ग्राह्य इतीन्द्रप्रतिपत्त्यर्थं पुनरुच्यते । अतो न वैय्यर्थ्यमित्याशङ्क्य निराकरोति **न च वक्तुरिति ॥ तदप्रत्यायकत्वादिति** । व्याकरणव्यापारकत्वरूपवक्तृत्वस्येतरदेवमनुष्यादिसाधारणत्वेन देवताविशषरूपेन्द्रप्रत्यायकत्वासम्भवादित्यर्थः ।

च० — भाष्यकारान्तरोदाहृतवाक्यस्यैवोदाहरणतायाः सूपगमतायां नोदाहरणान्तरमार्गणौचितीत्याशङ्कां तस्यानुपपन्नत्वादित्याशयेन तत्रानुपपत्त्याचिख्यासया तदुदाहरति **केचिदत्रेति** ॥ **इन्द्रप्रतर्दनाख्यायिकायामिति** । 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपाजगाम युद्धेन च पौरुषेण च तं हेन्द्र उवाच प्रतर्दन वरं ते ददामीति अथ होवाच प्रतर्दनस्त्वमेव मे वरं वृणीष्व यत् त्वं मनुष्याय हिततमं मन्यस इत्याद्याख्यायिकायां श्रुतमित्यर्थः ॥ **प्राणोऽस्मीति** । प्रतर्दनं प्रतीन्द्रेण प्रणीतं प्राणोऽस्मि प्रज्ञात्मेति वाक्यमित्यर्थः । जानीहीत्युपक्रम्य प्राणोऽस्मि प्रज्ञात्मेत्यहङ्कारवादेन स एष वक्तुरात्मनोपदिश्यमानः प्राणः कथं ब्रह्म स्यान्न हि ब्रह्मणो वक्तृत्वं संभवति । 'अवागमन' इत्यादिश्रुतेरिति पूर्वपक्षांशो व्याकृतः । तत्र वक्तुरितिवचनं न श्रुत्यनुगतम् । श्रुतौ वक्तृपदाश्रवणादित्यर्थः । श्रुत्यननुगतिमभिधायोपदेशादित्यनेनैवोपदेष्टृत्वरूपवक्तृत्वलाभाद्वक्तुरित्यस्य वैयर्थ्यं चेत्याह **वक्तृत्वं हीति** । अतो वक्तुरित्यस्य वैयर्थ्यं चेति पूरणीयम् । नन्वात्मोपदेशा-

दित्यनेन लब्धमपि वक्तृत्वं विग्रहवत्यामिन्द्ररूपदेवतायामेवोपपद्यते न वागादिरहिते ब्रह्मणीत्यतो वक्तृत्वान्यथानुपपत्त्येन्द्र एव ग्राह्य इतीन्द्रप्रतिपत्त्यर्थं पुनरुच्यतेऽतो न वैयर्थ्यमित्याशङ्क्य निराकरोति **न चेति तदप्रत्यायकत्वादिति** । वाक्करणव्यापारकत्वरूपवक्तृत्वस्य देवमनुष्यादिसाधारणत्वेन देवताविशेषरूपेन्द्रप्रत्यायकत्वासंभवादित्यर्थः । मतान्तरे उद्भावितक्षतिद्वयं सिद्धान्ते न प्रसज्यत इत्याह **अस्माकं त्विति** ॥ **विशिष्टशंस्त्रेति** । षट्त्रिंशदक्षरबृहतीछन्दस्कसहस्रर्चात्मकशस्त्रशंसनकर्तुरित्यर्थः । तथाच बृहतीसहस्रशंसनस्य श्रुत्युदिततया न वक्तुः इत्यस्य वैयर्थ्यश्रुत्यननुगतत्वे दर्शितयुक्तिसूचकत्वादिति हृदयम् ।

**सु० — पादार्थमुपसंहरति** तस्मादिति ।

**अनु०** — तस्मादन्यत्रगैः शब्दैरुक्तन्यायैः समन्ततः ॥
एको नारायणो देवो भण्यते नात्र संशयः ॥

**अन्यत्रगैर्नामात्मकैरिति शेषः । तस्मादित्यस्यैव विवरणमुक्तन्यायैरिति । उक्तो न्यायो येषु ते तथोक्ताः । समन्ततः सर्ववेदगतैः । एको मुख्यार्थः** ॥ नात्र संशय इति । लक्षणयाऽयं **समन्वयोऽभिधीयत इति केषाञ्चिन्मतं मुख्यवृत्त्येति सिद्धान्तः । अतो विप्रतिपत्तेरत्र संशयो न कार्यो निर्णायकस्योक्तत्वादित्यर्थः । अथवोक्तेऽपि न्यायेऽनादिवासनानिमित्तोऽन्यस्य मुख्यवाच्यत्वविषयः संशयो न कार्य इत्यनेनाचष्टे** ।

**शे०** — अन्यत्रगैः शब्दैरित्येवोक्तेऽन्यत्र प्रसिद्धलिङ्गात्मकानामपि शब्दानामुपादानप्रसङ्गात्तेषां चात्र पादेऽसमन्वितत्वात्क्वचित्समन्वयेऽपि तस्य नामसमन्वयार्थत्वेन तात्पर्याविषयत्वात् । तथा सति वक्ष्यमाणन्यायैरिति वक्तव्यतयोक्तन्यायैरित्यस्यास्वारस्यप्रसङ्गाच्चेत्यतः शेषं सम्पूर्य व्याचष्टे **नामात्मकैरिति शेष इति** । ननूक्तन्यायैरित्यस्य वैयर्थ्यं तस्मादित्यनेनैव तल्लाभादित्यत आह **तस्मादित्यस्यैव विवरणमिति** । ननु तथाऽप्युक्तन्यायैरित्यस्य न प्रत्येकं भण्यत इत्यनेन सम्बन्धो बाधितत्वादित्यतः शब्दैरित्यनेन विशेषणतया सम्बन्धो वाच्यः । न चायमपि सम्भवति । शब्दानामुक्तन्यायरूपत्वाभावादित्यतो बहुव्रीह्याश्रयणेन कर्मधारयानाश्रयणान्नानुपपत्तिरिति भावेन व्याख्याति **उक्तो न्यायो येषु ते तथोक्ता इति** । गावी गौणीत्यादिभाषाशब्दसाधारण्येनान्यत्र प्रसिद्धनामात्मकशब्दमात्रस्य समन्तत इत्यनेन ग्रहणे उक्तन्यायैरित्यस्यानुपपत्तिप्रसङ्गात्समन्तत इत्यस्य तात्पर्यमाह **सर्ववेदगतैरिति** ॥ **एको मुख्यार्थ इति** । 'एके मुख्यान्यकेवला' इत्यभिधानादिति भावः । नात्र संशय इत्यप्रसक्तप्रतिषेधोऽनुपपन्न इत्यतः प्रसञ्जकसद्भावान्नाप्रसक्तप्रतिषेधोऽयमिति भावेनाह **लक्षणयेति** । तर्हि तत एव संशयः स्यादेवेति कथं तदभावोक्तिरित्यतोऽभिप्रायमाह **निर्णायकस्येति** । उक्तत्वादीक्षत्यधिकरण इति शेषः ।

प०— **उक्तत्वादिति** । 'कथं च लक्षणावादी' ब्रूयाद्ब्रह्मसमन्वयम् । योसौ शब्दस्य मुख्यार्थ स्तत्रैव स्यात्समन्वयः' इत्यादिनेक्षतिनये समन्वयसूत्रस्थसंशब्दरूपस्य लक्ष्यत्वेऽनवस्थारूपस्य निर्णायकस्य चोक्तत्वादित्यर्थः ॥

या०— ननु करणापेक्षायाः शब्दैरित्यनेनैव पूर्णत्वादुक्तन्यायैरिति किमर्थमित्यतो नोक्तन्यायानां पृथक्करणत्वकर्मधारयाश्रयणेन वैयर्थ्यं किन्तु बहुव्रीह्याश्रयणेन करणभूतशब्दानुग्राहकत्वमेवेत्याशयेनाह **उक्तो न्यायो येष्विति** ॥ **उक्तत्वादिति** । ईक्षत्यधिकरण इति शेषः ।

सु०— सर्वज्ञकल्पेन तत्त्वोपदेशाय प्रवृत्तेन भगवताऽऽचार्येणैवं सूत्रेषु व्याख्यातेषु शिष्याणामेतावन्मात्रार्थान्येतानीति प्रतीतिः स्यात् । तां निराकर्तुमाह वासुदेवादीति ।

अनु०— वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः ॥
अथवा पञ्चमूर्तिः स प्रोक्तोऽधिकरणं प्रति ॥
प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथाऽपि वा ॥

वासुदेवादित्वेनेत्यर्थः । चशब्दो वक्ष्यमाणपक्षान्तरसमुच्चयार्थः । प्रथमपादान्ते कथनादस्मिन्नेव पाद इति भाति । तन्निरासायोक्तं सर्वशः सर्वेष्वपि पादेषु अथवेति निपातसमुदायः पक्षान्तरे । पञ्चमूर्तिर्नारायणादित्वेन । प्रतिशब्दो वीप्सायां कर्मप्रवचनीयः । अथापिवेति त्रयोनिपाता यथाक्रमं प्रतिसूत्रमित्यादिभिस्त्रिभिः संबध्यन्ते । अत्रेयं मूर्तिः प्रतिपाद्यत इति कथं ज्ञायत इत्यत आह तैरिति ।

अनु०— तैस्तैर्युक्तिश्रुतिन्यायविशेषैः

न्यायशब्दः प्रकारवचनः । श्रुतिलिङ्गव्यतिरिक्तन्यायार्थो वा । तस्यां तस्यां मूर्तौ प्रसिद्धैर्लिङ्गैः श्रुतिसमाख्यादिव्यावर्तकैर्विवेको ज्ञातव्य इति शेषः । ननु चतुर्मूर्तिः पञ्चमूर्तिर्वेति प्रत्यधिकरणं प्रतिसूत्रं वा प्रत्यक्षरं वेति च वस्तुविकल्पः कथमित्यत आह योग्यतेति ।

अनु०— योग्यता यथा ॥

सर्वेऽपि पक्षाः सूत्रकृतो विवक्षिताः । पुरुषाणां योग्यताऽनतिक्रमेण प्रतीयन्ते । तदपेक्षया विकल्पो युज्यत इति योज्यम् ॥ एवमलौकिकार्थत्वं कुतः सूत्राणामित्यत आह बृहत्तन्त्रेति ।

अनु० — बृहत्तन्त्रप्रमाणेन

एवमर्थत्वं सूत्राणां ज्ञेयमिति शेषः । बह्वर्थ इति वक्ष्यमाणं चा(वा)ऽत्र संबध्यते । तर्हि कस्मात्तथा न व्याख्यायत इत्यत आह बह्वर्थमपीति ।

अनु० — बह्वर्थमपि सङ्ग्रहात् ॥
उच्यते नरबुद्धीनामपि किञ्चिद्ग्रहार्थः ॥

**सूत्रजातमिति शेषः । उच्यते व्याख्यायते । बुद्धिशब्दस्य ज्ञानार्थत्वे ग्रहो ग्राह्यं भावप्रधानो निर्देशः । ग्राह्यत्वमेवार्थः प्रयोजनं तस्मै । मनोऽर्थत्वे ग्रहणं ग्रहः ।**

शे० — वासुदेवादीत्यादिभाष्यस्याऽऽनर्थक्यं परिहरति **सर्वज्ञकल्पेनेति** । सर्वज्ञत्वस्येश्वरमात्रनिष्ठत्वात्सर्वज्ञकल्पेनेत्युक्तम् ॥ **वक्ष्यमाणेति** । अथवा पञ्चमूर्तिरित्यनुपदमेव वक्ष्यमाणेत्यर्थः । भ्रान्तिनिवर्तकत्वान्न सर्वेश इत्यस्य वैयर्थ्यमिति भावेन भ्रान्तिनिमित्तकथनेन तामुपपादयति **प्रथमपादान्त इति** । कथं सर्वेश इत्यनेनोक्तभ्रान्तिनिरास इत्यतस्तत्तात्पर्यमाह **सर्वेश उति** ॥ **निपातसमुदाय इति** । तथा च नान्यतरवैयर्थ्यमिति भावः ॥ **वीप्सायामिति** । अधिकरणमधिकरणं प्रतीत्येवं वीप्सायामित्यर्थः ॥ **कर्मप्रवचनीय इति** । 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनव' इति स्मरणादित्यर्थः । तथा च कर्मप्रवचनीयप्रतिशब्दयोगात् 'कर्मप्रवचनीययुक्ते द्वितीये'त्यधिकरणमि'ति द्वितीयोपपत्तिरिति भावः ॥ **त्रिभिः सम्बध्यत इति** । तथा चात्र न निपातसमुदायाश्रयणक्लेश इति भावः ॥ **कथं ज्ञातव्यमिति** । व्यावर्तकाभावादिति भावः ॥ **प्रकारवचन इति** । युक्तिशब्देन युक्तेर्गृहीतत्वेन न्यायशब्दस्य तदर्थताया अयोगादिति भावः ॥ **अतिरिक्तन्यायार्थो वेति** । समाख्यादिरूपन्यायार्थ इत्यर्थः । अत एव लिङ्गश्रुतिसमाख्यानादिभिरिति वक्ष्यतीति ध्येयम् । व्यावर्तकाभावशङ्काया मूलेन परिहारसिद्धये व्यावर्तकपरतया विशेषशब्दव्याख्यानं **व्यावर्तकैरिति** । साकाङ्क्षत्वादपेक्षितशेषं पूरयति **विवेको ज्ञातव्य इति शेष इति** ॥ **अत्रापि सम्बध्यत इति** । उपलक्षणं चैतत् । बह्वर्थमिति भावप्रधानत्वं च द्रष्टव्यम् । यद्यप्यत्रापि सूत्राणां ज्ञेयमिति शेषोऽपेक्षित एव । तथाऽपि पूर्वपक्ष इवानेकार्थत्वांशे न तत्पूरणमिति भावेन पक्षान्तराश्रयणमिति बोध्यम् । **तया** बह्वर्थतया । बह्वर्थस्य बह्वर्थतयाऽव्याख्याने निमित्ताभावादिति भावः ॥ **ग्रहो ग्राह्यमिति** । गृह्यत इति ग्रह इति कर्मसाधनो ग्रहशब्द इति भावः ।

प० — **वीप्सायामिति** । 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव'इति सूत्रेण कर्मप्रवचनीयसंज्ञक इत्यर्थः । तथा च कर्मप्रवचनीययुक्ते द्वितीयेति भावः ।

या० — **सर्वज्ञकल्पेनेति** । सर्वज्ञादीश्वरादीषन्न्यूनेनेत्यर्थः । तेन ईषदसमाप्तौ कल्पविधानादाचार्याणां च सर्वज्ञत्वात्कथं सर्वज्ञकल्पेनेत्युक्तिरिति शङ्काऽनवकाशः ॥ **प्रतिशब्द इति** । तथा च तद्योगाद्द्वितीयेति भावः ॥ **अतिरिक्तन्यायार्थो वेति** । समाख्यादिरूपन्यायार्थ इत्यर्थः ।

श्री० — ननु वासुदेवादिरूपेणेत्यत्र **रूपशब्दो**ऽधिकः । तथाहि । वासुदेवादिरूपेण चतुःप्रकार इति वाच्यम् । तथाच रूपपदार्थमूर्तिपदास्वारस्यम् । तत्स्वारस्यापेक्षायां तु वासुदेवादित्वेन

चतुर्मूर्तिरिति वक्तव्यम् । तथाच रूपपदास्वारस्यमित्याशङ्कायां रूपापरपर्यायमूर्तिपदस्वारस्यादादिपदात्परो रूपशब्दो धर्मपरो विवक्षित इत्याशयेनाह **वासुदेवादित्वेनेत्यर्थ इति** । **सर्वेष्वपि पादेष्विति** । एतदध्यायगतेषु सर्वेष्वपि पादेष्वित्यर्थः । अन्यथा सर्वाध्यायगतपादेष्वित्यर्थकरणे उत्तरत्र युक्तिपादे 'मूर्तिनां वर्णमागमादि'त्यत्र वासुदेवादिरूपेणेत्यनेन पुनरुक्तिमाशङ्क्य तत्परिहारः क्रियते । स न युक्तः स्यादित्यवगन्तव्यम् ॥ **वस्तुनि विकल्प इति** । एकस्याधिकरणादेश्चमूर्तिप्रतिपादकत्वपञ्चमूर्तिप्रतिपादकत्वरूपविरुद्धधर्मद्वयालिङ्गितत्वमित्यर्थः । **तदपेक्षया** योग्यतापेक्षया ।

**च०— वीप्सायामिति** । 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव' इत्यनेन योगेन प्रतिः कर्मप्रवचनीयसंज्ञक इत्यर्थः ।

**सु०— न चैवं सूत्रार्थलेशव्याख्यानपरोऽयं ग्रन्थ इत्यनादरणीय इत्याशयेनाह** ग्रन्थ इति ।

**अनु०**— ग्रन्थोऽयमपि बह्वर्थो

**समग्रार्थव्याख्यानमकुर्वन्नपि ॥ अयमित्युक्तत्वात्सत्यपि तस्मिन्पुनरस्य विरचनाद्भाष्यमल्पार्थमिति नाशङ्कनीयमित्याह** भाष्यं चेति ।

**अनु०**— भाष्यं चात्यर्थविस्तरम् ॥

**अतिशयितेनार्थेन विस्तरो यस्येति व्यधिकरणबहुव्रीहिर्गमकत्वात् । बह्वर्थत्वमनयोरनुपलम्भबाधितमिति चेन्न । व्याख्यानसामग्रीवैकल्यनिमित्तत्वात्तदनुपलम्भस्येत्याशयेनाह** बहुज्ञा एवेति ।

**अनु०**— बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः ॥

एतयो**र्भाष्यानुभाष्ययोः** ।

**एवं प्रासङ्गिकमुक्त्वोपपादितस्यान्यत्रप्रसिद्धनामसमन्वयस्य फलं लक्षणसिद्धिमुपसंहरति** तस्मादिति ।

**अनु०**— तस्मान्महागुणो विष्णुर्नाम्नामपुनरुक्तितः ॥ १२ ॥

**सकलवेदगतसमस्तनामवाच्यत्वादित्यर्थः । कथं तन्मात्रेण महागुणत्वम् । नाम्नां यौगिकत्वादपुनरुक्तितश्चेति ॥ १-१-१२ ॥ छ ॥**

**शे०**— ननु 'प्रथने वावशब्द' इति वावुपपदे प्रपञ्चविवक्षायां स्तृञो घञ्विधानादर्थविस्तारमिति भवितव्यं तत्कथमत्यर्थविस्तरमितीत्यतोऽशब्दप्रथनविवक्षायामेव स्तृञो घञ्विधानादर्थप्रपञ्चविव-

क्षायां घञप्रसङ्गेऽपि प्रकृते विस्तरशब्दस्य शब्दप्रपञ्चपरत्वेन घञोऽप्राप्तेः 'ऋदोरबि'त्यनेनाप्प्रत्यय एव युक्त इति भावेनार्थप्रथनव्यावर्तनेन शब्दप्रथनं दर्शयति **अतिशयितेनेति** । ननु 'शेषो बहुव्रीहिरि'त्यधिकारसूत्रस्थशेषपदादप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च लब्धम् । ततश्च कथमतिशयितेनार्थेन विस्तरो यस्येति व्यधिकरणबहुव्रीह्याश्रयणमित्यतः पञ्चभिर्भुक्तमस्येति वैयधिकरण्य इव पञ्च भुक्तवन्तोऽस्येति क्वचित्सामानाधिकरण्येऽपि बहुव्रीह्यदर्शनात्सप्तमीविशेषण इति लिङ्गात्क्वचिद्वैयधिकरण्येऽपि कण्ठेकाल इत्यत्र तद्दर्शनेन सामानाधिकरण्यवैयधिकरण्ययोरप्रयोजकत्वेन समासस्य विग्रहवाक्यार्थगमकत्वागमकत्वयोरेव बहुव्रीहिसंभवासंभवप्रयोजकत्वाद्युक्तो वैयधिकरण्येऽपि गमकत्वात्समास इति भावेनाह **गमकत्वादिति** ॥ **समस्तनामेति** । समस्तान्यत्रप्रसिद्धनामेत्यर्थः ॥ **कथमिति** । रूढ्या सकलनामवाच्यत्वस्य गुणपूर्त्यसाधकत्वाद्योगेन सकलनामवाच्यत्वे च भगवन्नामाऽऽवृत्तिमात्रत्वप्रसक्तेरिति भावः ॥ १-१-१२ ॥ छ ॥ छ ॥

**स०**— ननु प्रथने वावशब्द इति अशब्दे प्रथने घञ्प्रत्ययस्य विहितत्वेनात्यर्थविस्तारमिति वक्तव्येऽर्थविस्तरमिति कथमित्यत आह **अतिशयितेनेति** ॥ **गमकत्वादिति** । समासार्थावबोधने समर्थत्वादित्यर्थः ॥

॥ श्रीसुधाटिप्पणिका सत्यव्रततीर्थविरचिता प्रथमाध्यायस्य प्रथमः पादः ॥ श्रीकृष्णार्पणमस्तु ॥

**प०**—**गमकत्वादिति** । विग्रहेणोक्तार्थस्य प्रत्यायकत्वादित्यर्थः । विग्रहेण योऽर्थ उच्यते तं चेत्समस्तं पदजातं प्रत्याययति तत्र समासो भवति । तादृशार्थोऽत्र समस्तेन गम्यत इति समासः (युक्तः) । कृत्तद्धितसमासा हि अर्थगमक एव शब्दे भवन्ति । न सर्वत्र । अभिधानलक्षणा हि कृत्तद्धिसमासाः इति अकर्तरि च कारक इति सूत्रभाष्योक्तेः । अत एव ग्रामं गच्छतीत्यादौ ग्रामगामीति कर्मण्यङ्(णि)न भवति कृतः कट इति घञ् न भवति अनभिधानादित्युक्तं भाष्ये । अत एव अविकशब्दादेव तस्य विकार इत्यण्प्रत्ययः आविकमित्यनेनाविविकारस्य प्रतीतेः । ननु अवेर्विकार आवमिति आवशब्देनाविविकारस्याप्रतीतेराविशब्दाद्विकारार्थकाण्प्रत्ययरूपतद्धितो न भवति किंत्वविकशब्दादेवेत्युक्तम् । पंचभिर्भुक्तमस्येति व्यधिकरणस्थले पंच भुक्तवंतोऽस्येति समानाधिकरणस्थले वाऽनेकमन्यपदार्थे समासो न भवति अनभिधानादित्युक्तम'नेकमि'ति सूत्रभाष्ये ॥ **बहुज्ञा एवेतीति** । तथा च प्रदर्शितमस्माभिस्तत्रतत्र बह्वर्थत्वमिति भावः ॥ **लक्षणसिद्धिमिति** । ब्रह्मपदोक्तगुणपूर्णत्वरूपप्रधानलक्षणासिद्धिमित्यर्थः ॥ १ । १२ ॥ छ ॥ इति श्रीमन्न्यायसुधापरिमळे सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते प्रथमाध्यायस्य प्रथमः पादः ॥ छ ॥

**या०**— ॥ **'अर्थेन विस्तर इति** । ततश्च विस्तरशब्दस्य शब्दप्रपञ्चपरस्य 'ऋदोरप्' इत्यपा निष्पन्नस्योपपत्तिरिति भावः । षष्ठ्याश्रयणे त्वर्थप्रपञ्चप्राप्त्या 'प्रथने वाव शब्द' इति शब्दातिरिक्तार्थ-प्रपञ्चविवक्षायां घञो विधानेन विस्तार इति स्यादिति ज्ञातव्यम् । ननु 'समानाधिकरणानां बहुव्रीहि-रिष्यत' इति वार्तिककारेण नियमितत्वात्कथमत्र व्यधिकरणबहुव्रीह्याश्रयणमित्यत आह **गमकत्वादिति** । तथा च 'न धातुलोपः आर्धधातुके' इत्यत्र धातुलोपशब्दे षष्ठीगर्भव्यधिकरणबहुव्रीह्याश्रयणाद्यत्र वाक्यार्थगमकता व्यधिकरणबहुव्रीहेः सम्भवति तत्र तदाश्रयणेऽपि न दोष इति वैय्याकरणानामभिप्रेत-त्वेनोक्तवार्तिकं प्रायिकमिति भावः ॥ १–१–१२ ॥ छ ॥

॥ इति श्रीमन्न्यायसुधाटिप्पण्यां श्रीमद्वेदेशतीर्थपूज्यपादशिष्ययदुपतिविरचितायां
प्रथमाध्यायस्य प्रथमः पादः ॥ १–१ ॥

**श्री०**—अयमित्यस्यार्थः समग्रार्थव्याख्यानमकुर्वन्नपीति । अयं सूत्रार्थलेशव्याख्यानपरोऽपि ग्रन्थो बह्वर्थ इति विशिष्योक्त्या भाष्यमल्पार्थमिति सूचितम् । विशिष्यैकस्तुतिरपरनिन्दाभ्यनुज्ञापिकेति न्यायादित्याशयः । हेत्वन्तरमप्याह **सत्यपीति** ॥ **लक्षणेति** । साध्यलक्षणेत्यर्थः । यौगिकत्वेऽपि पुनरुक्तत्वेऽपि पुनरुक्तत्वेऽनन्तगुणासिद्धेरपुनरुक्तत्वमपेक्षितम् । अपुनरुक्तत्वेऽपि रूढत्वे 'यच्छब्दा योग-वृत्तय' इत्युक्तत्वात् तदसिद्धिप्रसङ्गाद्यौगिकत्वमपेक्षितमित्याशयेन नाम्नां यौगिकत्वादपुनरुक्तितश्चे-त्युक्तम् ॥ छ ॥ १–१–१२ ॥ छ ॥

**च०— अर्थेन विस्तर इति** । षष्ठीसमासादरे अर्थसंबन्धिप्रपञ्चप्रत्यायनेन 'प्रथने वावशब्द' इति शब्दातिरिक्तार्थप्रपञ्चविवक्षायां वौ उपपदे स्तृञो घञो विधानाद्विस्तार इति न्यासेन भवितव्यमिति स नादृतः, तथाच पर्युदस्तशब्दप्रपञ्चस्य विवक्षिततया 'ऋदोरप्' इत्यपा निष्पद्यत इति भावः । ननु 'वृष्टे देवे गतः' पञ्चभिर्भुक्तमस्येत्यादौ बहुव्रीहिवारणाय'प्रथमाविभक्त्यर्थे बहुव्रीहिः समानाधिकरणानामिति वक्तव्यमि'ति वार्तिकस्यावतीर्णतया कथं प्रकृते व्यधिकरणबहुव्रीह्याश्रयणं संगच्छत इत्याशङ्कायां पञ्च भुक्त-वन्तोऽस्येति क्वचित्सामानाधिकरण्येपि बहुव्रीह्यदर्शनात् सप्तमीविशेषणे इति लिङ्गात् कण्ठेकाल इत्यादि-काचित्कव्यधिकरणस्थलेपि तद्दर्शनेन 'न धातुलोप आर्धधातुके' इत्यत्र धातुलोपशब्दे षष्ठीगर्भव्यधिकरण-बहुव्रीह्याश्रयणाच्च सामानाधिकरण्यवैय्यधिकरण्ययोर्बहुव्रीहिप्रयोजकताराहित्येन समासस्य विग्रहवाक्य-जनितान्वयधीजनकतासत्त्वेन ( प्रयोजकतया प्रकृतसमासे तादृशधीजनकतासत्त्वेन ? ) वैय्यधिकरण्येपि स संगच्छत इत्याशयेनाह **गमकत्वादिति** । **बहुज्ञा एवेतीति** । बह्वर्थत्वं तत्र तत्र प्रदर्शितमेवास्माभिरि-

त्यवसेयम् । **लक्षणसिद्धिमिति** । ब्रह्मपदप्रत्यायितगुणपूर्णतारूपं संभाव्यप्रधानलक्षणसिद्धिमित्यर्थः । **समस्तनामेति** । श्रुत्यादिव्युत्पादितत्वकोशादिव्युत्पादितत्वान्यन्नविशेषितेशेतरप्रसिद्धिकशब्दसामान्येत्यर्थः । **कथमिति** । समुदायवृत्त्योक्तसकलपदाभिधेयत्वस्य गुणपूर्त्यसाधकतया अवयववृत्त्या तादृशापर्यायानन्तशब्दवाच्यत्वोपगमेन तत्प्रवृत्तिनिमित्तानन्तगुणपूर्णता सेत्स्यतीत्यर्थः ।

**सु०— इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना । कृतायां टीकायां विषमपदवाक्यार्थविवृतावयं पूर्वेऽ(र्वा)ध्याये प्रथमचरणः पर्यवसितः ॥१-१॥**

शे०—अलङ्कारश्लोके प्रगुणशब्दो ऋजुवाची । ऋजावजिह्मप्रगुणावित्यभिधानादिति द्रष्टव्यम् ॥

**यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥**
**अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥ १ ॥**

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां प्रथमाध्यायस्य प्रथमः पादः ॥ छ ॥

---

श्रीं०—इति श्रीमत्पूर्णप्रज्ञभगवत्पादविरचितस्यानुव्याख्यानस्य टीकायां तत्प्रशिष्यजयतीर्थमुनिविरचितायां विषमपदवाक्यार्थविवृतौ प्रथमाध्याये प्रथमः पादः समाप्त इत्याह **इति श्रीमत्पूर्णप्रमितीति** । भगवत्पादः पूज्यपादः । उत्तमानां स्वरूपं तु पादशब्देन भण्यत इति वचनात् । सुकृतेः समीचीनकृतेः । तत्कृतिविषयस्य तद्विरचितस्येत्यर्थः ॥ **प्रगुणेति** । गुणप्रधानभाव इति प्रयोगात् गुणशब्द उपसर्जनवाची । तथाच तत्प्रशिष्यः शिष्यशिष्येत्यर्थः । शिष्यशिष्यः प्रशिष्यः स्यादित्यभिधानात् । पूर्णप्रज्ञाचार्याणां शिष्याः पद्मनाभतीर्थास्तच्छिष्या अक्षोभ्यतीर्थास्तच्छिष्यत्वादिति भावः ॥

---

१. **रोचते इति** । मह्यमिति शेषः । अतो 'रुच्यर्थानां प्रीयमाणः' (पा सू.) । इति चतुर्थ्या भाव्यत्वेन 'गुरोः' इति षष्ठी कथमिति शङ्कानवकाशः । **विद्याधीशपादयोरिति** । अत्र विद्याधीशपदेन श्रीवेदव्यासदेवो विवक्षितः 'विद्याधीशः स्वयं प्रभुः' इत्यनुव्याख्याने प्रयोगात् । तस्य हरेः पादयोः सेवा अस्तु । अतः शास्त्राभ्यासरूपसेवायाः हरिपादयोः समर्पणीयत्वेन गुरुपादयोः समर्पणस्यायुक्तत्वात् कथम् इति चोद्यानवकाशः । विद्याधीशगुर्वन्तर्यामित्वेन विवक्षणात् 'गुरोः' इति पूर्वप्रकृतभङ्गोऽपि नास्ति । (इति हयग्रीवसेवा)

**विषमेति** । विषमाणि दुरधिगमार्थानि यानि पदानि तदुपेतानि यानि वाक्यानि तेषां येऽर्थास्तद्विवृतौ तद्विवरणरूपायामित्यर्थः । प्रथमचरणः प्रथमपादः पर्यवसितः समाप्त इत्यर्थः ॥

॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽगृहीतसुधावाक्यार्थविवरणे प्रथमाध्यायस्य प्रथमः पादः समाप्तः ॥ १–१ ॥ छ ॥ छ ॥

**च०— सुकृतेरनुव्याख्यानस्येति** । नीलघट इत्यादेः साधुतावारणाय सीतारामदाराः चंचाः पुरुषं पश्य वार्ष्णिकाः(?) पुरुषं पश्येत्यादिसामञ्जस्यानुरोधेनासति विशेषानुशासने विशेष्यविशेषण वाचकपदयोः समानलिङ्गवचनकत्वमिति नियमस्य स्थिततया कर्त्रर्थकषष्ठ्या समस्तस्य कर्मसाधनक्तिन्नन्तस्य नित्यस्त्रीत्वाद्भावल्युडन्तस्य नित्यक्लीबत्वात् विशेषानुशासनविषयतया समानलिङ्गकत्वाभावेपि न क्षतिः । न च ग्रन्थविशेषपरानुव्याख्यानपदस्य भावल्युडन्तत्वायोगेनानुव्याख्यायते परापरतत्वादिकमनेनात्रेति करणसाधनत्वस्याधिकरणसाधनत्वस्य वा उपेयतया तादृशस्य च 'कोऽसावनुमान' इति भाष्ये भाषणात् 'यो भावे ल्युट् स नपुंसकः अन्यत्र त्वभिधेयवशादनियतलिङ्ग' इति कैय्यटोक्त्या इध्मप्रव्रश्चनः कुठारः करणं करणी प्रमाणं प्रमाणी गवामयनो देशोपनी(नी?)शाला गोदोहनी स्थालीत्यादिदर्शनेन नित्यक्लीबता-विरहेण नोक्तदिशा निर्वाह इति वाच्यम् । कर्त्रर्थकषष्ठ्यंतेन कृतव्यधिकरणबहुव्रीहिकभावसाधनक्तिन्नन्त-सुकृतिपदस्य क्लीबस्य भाषितपुंस्कतयाऽनादेरनादिन इत्यादाविव 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्ये'ति विभाषया नुमभाव इति पदद्वयसामानाधिकरण्यसामञ्जस्यमवसेयम् । प्रगुणशब्दो ऋजुवाची । ऋजा-वजिह्मप्रगुणावित्यभिधानात् ॥ छ ॥

श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः । मदीयपरिचंचूर्या लेशतो वृणुतान्मयि(पि?) ॥

॥ इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीसत्यप्रियतीर्थपूज्यपादतनूजसर्वतन्त्रस्वतन्त्रगालवपुरी-श्रीनिवासाचार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां चषकनाम्न्यां श्रीमन्न्यायसुधाव्याख्यायां प्रथमाध्यायस्य प्रथमः पादः ॥

---

**पूर्वेध्याय इति** सत्यधर्मीयपाठः । 'पूर्वादिभ्यो नवभ्यो वा' (पा.सू. ७-१-१६) एभ्यः ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मिन् पूर्वे ।

श्रीमट्टीकाकृत्पादाचार्य(जयतीर्थयति)विरचिता

सनाभिः

# श्रीमन्न्यायसुधा

षट्टिप्पणीसमेता

## प्रथमाध्यायस्य द्वितीयः पादः

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

सु० — **द्वितीयपादस्य पूर्वोत्तरपादभेदस्य स्वस्मिन्नेकवाक्यतायाश्च सिद्धये प्रतिपाद्यमर्थं दर्शयति** लिङ्गात्मकानामिति ।

**अनु०** — हरिः ॐ ॥ लिङ्गात्मकानां शब्दानां वृत्तिर्नारायणे परे ॥

चिन्त्यते ।

**लिङ्गं धर्मः स आत्मेवात्मा प्रवृत्तिनिमित्तं येषां ते लिङ्गात्मकाः । स्वरूपार्थो वाऽऽत्मशब्दः । निमित्तनिमित्तिनोरभेदोपचारात् । सकलवेदगतानामन्यत्रप्रसिद्धानामिति शेषः ।**

शे० — यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥ १ ॥

प्रयोजनोक्त्या किं पादप्रतिपाद्यप्रदर्शनेनेत्याशङ्कां परिहरन्नेव तत्प्रदर्शनपरत्वान्नोत्तरभाष्यवैयर्थ्यमित्याशयेन तत्संगमयति **द्वितीयपादस्येति** । द्वितीयपादस्य पूर्वपादेनोत्तरपादाभ्यां च भेदसिद्धय इति च पादप्रतिपाद्यप्रदर्शनप्रयोजनसङ्कीर्तनम् । अत्र च स्वस्मिन्नित्यनुक्तौ प्रकृतत्वात्पूर्वोत्तरपादैरेकवाक्यतासिद्धय इति प्राप्त्या पूर्वोत्तरभेदसिद्धय इत्यनेन विरोधः स्यात् । तत्परिहाराय स्वस्मिन्नित्युक्तम् । पादप्रतिपाद्ये प्रदर्शिते सर्वत्रेत्यादिसूत्रसंदर्भस्यान्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयरूपैकार्थप्रतिपादकत्वात्स्वस्मिन्नेकवाक्यत्वस्य तस्य चार्थस्य पूर्वोत्तरपादव्यावृत्तत्वात्तद्भेदस्य च सिद्धिर्भवतीत्यर्थवत् पादप्रतिपाद्यप्रदर्शनमिति भावः । प्रतिपाद्यमित्यत्रापि द्वितीयपादस्येत्यस्य सम्बन्धः । **लिङ्गं धर्म इति** । निर्वचनलभ्यार्थो धर्म इत्यर्थः । अन्यथा रूढानां घटादिशब्दानामपि घटत्वादिरूपधर्मप्रवृत्तिनिमित्तकत्वेन लिङ्गात्मकत्वप्रसङ्गात् । उक्तविवक्षायां तु नातिप्रसङ्गः । घटत्वादेर्निर्वचनलभ्यत्वाभावेन तादृशधर्मप्रवृत्तिनिमित्तत्वाभावात् इदं चान्तर्यामीत्याद्येकप्रातिपदिकरूपाणामेव लिङ्गात्मकशब्दत्वमित्यङ्गीकृत्योक्तम् । अतो न 'सर्वभूतेष्वेतं' 'यस्मिन्द्यौरि'त्याद्यनेकप्रातिपदिकात्मकवाक्यरूपलिङ्गात्मकशब्देष्वव्याप्तिरिति ध्येयम् । यद्वा । धर्म्युपस्थापकरूपो धर्म इत्यर्थः । अत्राप्येकप्रातिपदिकरूपाणामेव लिङ्गात्मकत्वेन विवक्षणान्नाव्याप्तिरिति बोध्यम् । ननु शब्दार्थयोर्भेदात्कथं शब्दानामर्थरूपलिङ्गात्मकत्ववचनमित्यतो गौणीं वृत्तिमाश्रित्य व्याचष्टे **स आत्मेवेति** । यथाऽऽत्मा प्रवृत्तौ निमित्तं तथा लिङ्गमपि शब्दप्रवृत्तौ निमित्तमिति निमित्तत्वसाम्येन लिङ्गे आत्मत्वोपचार इति भावः । नामात्मकेष्वात्मशब्दस्य स्वरूपार्थत्वं लिङ्गात्मकेषु च प्रवृत्तिनिमित्तार्थत्वमिति वैरूप्याश्रयणमयुक्तमित्यरुच्या पक्षान्तरमाह **स्वरूपार्थो वेति** । नन्वेवं

शब्दानामर्थस्वरूपत्वमुक्तं स्यात्तच्च बाधितमित्यतोऽनयोर्निमित्तनैमित्तिकभावापन्नत्वात्तद्भावापन्नयोश्च त्रपुसज्वरयोस्त्रपुसं ज्वर इत्यभेदव्यवहारदर्शनाद्युक्तोऽत्र भेदेऽप्यभेदव्यवहार इत्याह **निमित्तेति**। कतिपयशब्दवाच्यत्वे गुणपूर्त्यसिद्धिप्रसङ्गादाह **सकलेति**। भाषाशब्दव्यावृत्त्यर्थं वेदगतेति। लिङ्गात्मकशब्दसमन्वयप्रतिपादकत्वस्य तृतीयचतुर्थयोरपि सत्त्वेन कथं ततो भेदसिद्धिरित्यत उक्तमन्यत्रेत्यादि। ततश्चोभयत्रान्यत्रैवप्रसिद्धलिङ्गसमन्वयप्रतिपादकत्वस्य तृतीयपादादौ सत्त्वेऽप्यन्यत्र प्रसिद्धलिङ्गसमन्वयाप्रतिपादकत्वाद्युक्तैवोत्तरपादाभ्यामस्य भेदसिद्धिरिति भावः।

स०— श्रीनिवासाय नमः। श्रीवेदव्यासाय नमः॥ ननु पादार्थप्रतिपादनादेव पादार्थः इति ज्ञास्यते, किं तत्प्रदर्शनेन; इत्यत आह **द्वितीयपादस्येति**। प्रतिपाद्यमर्थमित्यनेन संबन्धः॥ **स्वस्मिन्निति**। द्वितीयपाद इत्यर्थः। अन्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयरूपैकार्थकत्वेन द्वितीयपादस्य सर्वस्यैकवाक्यत्वं, पूर्वोत्तरपादानां चातदर्थत्वात्तद्भेदश्च सिध्यतीति भावः॥ **लिङ्गं धर्म इति**। निर्वचनलब्धार्थो धर्म इत्यर्थः। तथाच लिङ्गात्मकाः अन्यत्रप्रसिद्धयौगिका एवोच्यन्ते इति ज्ञातव्यम्॥ **आत्मेवात्मेति**। यथा आत्मा सर्वेषां प्रवृत्तौ निमित्तं, तथा लिङ्गमपि शब्दप्रवृत्तौ निमित्तमिति प्रवृत्तिनिमित्तत्वसाम्येन आत्मशब्दोपचार इति भावः॥ आत्मशब्दस्य स्वरूपार्थस्य प्रवृत्तिनिमित्ते प्रवृत्तिनिमित्तमाह **निमित्तेति**।

प०— श्रीहयवदनाय नमः ॐ॥ **द्वितीयपादस्येति**। प्रतिपाद्यमर्थं दर्शयतीत्यन्वयः। तस्य फलोक्तिः पूर्वेत्यादि। पूर्वपादोत्तरपादोक्तार्थादर्थभेदोक्त्या पादभेदस्यैकरूपार्थप्रतिपादकत्वोक्त्या स्वस्मिन्द्वितीयपादे एकवाक्यतायाश्च सिद्धेः। अत्र नियामक'स्वार्थैकत्वादेकं वाक्यमि'त्यादेरन्तरधिकरण एवोक्तेरिति भावः।

या०— ॥ ॐ **श्रीगुरुभ्यो नमः॥ हरिः** ॐ॥ **द्वितीयपादस्येति**। प्रतिपाद्यमित्यन्वयः॥ **स्वस्मिन्निति**। द्वितीयपाद इत्यर्थः। तथा चान्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयरूपैकार्थप्रतिपादकत्वेन द्वितीयपादस्य सर्वस्यैकवाक्यत्वं पूर्वोत्तरपादानां चातदर्थत्वात्तद्भेदश्च सिद्ध्यतीति भावः॥ **लिङ्ग धर्म इति**। धर्म्यनुमापकरूपो धर्म इत्यर्थः। निर्वचनलभ्योऽर्थो धर्म इति व्याख्यानं तु सर्वेषु भूतेष्वेतमेवेत्याद्यनेकप्रातिपदिकात्मकवाक्यप्रतिपाद्येषु सर्वगतत्वादिलिङ्गेष्वव्याप्तत्वादुपेक्ष्यम्। तथाच लिङ्गात्मकानामित्यस्य व्याप्यधर्मोपस्थितिद्वारैव धर्म्युपस्थापकानामित्यर्थः पर्यवस्यतीति ज्ञातव्यम्।

प्रपञ्चितं चैतदानन्दमयाधिकरणे ॥ **प्रवृत्तिनिमित्तमिति** । निर्वचनलभ्योर्थ इत्यर्थः । इदं चान्तर्यामीत्याद्येकप्रातिपदिकरूपलिङ्गात्मकशब्दानपेक्ष्योक्तम् । वस्तुतस्तु आत्मा प्रतिपाद्यमित्यर्थः । तेन नोक्तलिङ्गात्मकशब्देष्वव्याप्तिः ॥ **निमित्तनिमित्तिनोरिति** । पूर्वयोजनायामात्मप्रातिपदिके गौणी वृत्तिरुक्ता । अत्र तु सामानाधिकरण्यरूपायां विशेष्यविभक्तिसमभिव्याहृतविशेषणविभक्ताविति ततो भेदः । अन्यत्र प्रसिद्धत्वादिवदित्यत्रादिपदेनोभयत्र प्रसिद्धत्वं ग्राह्यम् ।

**श्री०**— ॥ ॐ **सर्वत्रप्रसिद्धोपदेशात्** ॐ ॥ ननु शब्दानां प्रवृत्तिनिमित्तस्वरूपत्वं कथमित्यत आह **निमित्तेति** ।

**च०**— ॥ श्रीगुरुराजो विजयते ॥ सत्रायमाणप्रणतयोपुरोज्ञानलोलुवः ॥ स्ताद्गुरुः श्रीनिवासार्यो मन्मनीषामरीमृजः ॥ उत्तरभाष्यमवतारयति **द्वितीयपादस्येति** । प्रथमषष्ठ्या विशेष्यतानिरूपकत्वमुत्तरषष्ठीद्वयेन प्रकारतानिरूपकत्वं सिद्धिपदोपस्थाप्यनिश्चयान्वयि प्रत्याप्यते । तदेकदेशविशेष्यताप्रकारतयोराधेयतासंसर्गेण प्रकृत्यर्थद्वयमन्वेति । सर्वनाम्नां बुद्धिविपयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोपस्थापकतया निरूपितत्वप्रत्यासत्त्या तादृशमप्तमी प्रकृतिभूतस्वपदोपस्थाप्यतावच्छेदकीभूतद्वितीयपादत्वावच्छिन्नान्विता तदुपस्थाप्याधेयता तलन्तोपस्थाप्यान्वयिनी । अर्थपदोत्तरद्वितीयया चाक्षुषत्वावच्छिन्नवाचकणिच्प्रकृतिभूतदृशिलक्ष्यतावच्छेदकीभूतज्ञानत्वावच्छिन्नान्वयिविषयतारूपकर्मत्वमवगम्यते। चतुर्थ्युपस्थाप्या प्रकृत्यर्थान्विता फलता निरूपकतासंसर्गेण क्रियायां सा चानुकूलतासंसर्गेण णिजर्थव्यापारे स चाख्यातार्थव्यापारे स च प्रथमांतार्थेऽन्वेति । आद्यषष्ठ्यंतार्थविशिष्टे उत्तरषष्ठ्यन्तार्थस्य वैशिष्ट्यभानोपगमात्तद्विषयकत्वानामवच्छेद्यावच्छेदकभावो भासत इत्युपेयते । एकवाक्यतापन्नो द्वितीयपादः सर्वत्रेति सूत्रघटितः, पूर्वोत्तरपादभिन्नं च घटमानयेति वाक्यमिति समूहालम्बनव्युदासाय आद्यषष्ठ्यंतं तन्त्रावृत्त्याद्याश्रयणेन प्रतिपाद्यमित्यनेनापि संबध्यते। प्रत्युपसृष्टात्पद्यतेर्ण्यन्तात् 'तयोरेवे'ति लक्षणानुशिष्टकर्मसाधनता(कर्मणिनिष्पन्नप्रतिपाद्यशब्दावयवभूता णिच्प्रत्ययप्रकृत्युपस्थाप्यप्रतिपत्त्यन्वयिनी जनकता) आवर्जितषष्ठ्यावगम्यते । इत्यन्वद्वितीयपादनिष्ठविशेष्यतानिरूपकपूर्वोत्तरपादभेदनिष्ठप्रकारताकैकवाक्यतानिष्ठप्रकारताकनिश्चयफलकप्रतिपत्तिजनकव्यापारकर्मीभूतार्थविषयकज्ञानानुकूलव्यापारकर्ता भाष्यकार इति समुदितग्रन्थाधीनान्वयबोधप्रकारोऽवसेयः । अत्र च स्वस्मिन्नित्यनिर्देशे पूर्वोत्तरपादयोः प्रकृतयोरेकवाक्यतायामप्यन्वयो भायात्तथा सति ताभ्यां भेदसिद्धय इति वचनं विरुध्येतेति तथा मा भूदिति तत्पदं निरदिक्षत् । प्रकृतपादप्रतिपाद्ये श्रुत्यादितो लोकतो वाऽपीतरेषु प्रसिद्धलिङ्गात्मकशब्दसमन्वयरूपैकार्थतात्पर्यकत्वे सर्वत्रेत्यादिकाऽऽमनन्तीत्यन्तसूत्रसन्दर्भस्यावधृते तादृशहेतुप्रतिसंधानाधीना प्रकृतपादधर्मिका दर्शितार्थतात्पर्यकता विनियुक्तपूर्वोत्तरपादवृत्तिप्रातिस्विकधर्मपर्याप्ता(प्त्य)वच्छेदकताकप्रतियोगिताकभेदद्वयविधेयिका अनुमितिरुदेष्यतीत्याशयः ।

इत्थं च दर्शितहेतुप्रतिसंहितौ किञ्चिदद्वारकपादप्रतिपाद्यप्रदर्शनफलत्वं तदद्वारकं तु दर्शितानुमिताविति ध्येयम् । **लिङ्गं धर्म इति** । अत्र व्याचक्षाणाः "निर्वचनलभ्यार्थरूपो धर्म इत्यर्थः । अन्यथा रूढानामपि घटादिशब्दानां घटत्वादिरूपधर्मप्रवृत्तिनिमित्तकत्वेन लिङ्गात्मकत्वप्रसङ्गात्। उक्तविवक्षायां तु नातिप्रसङ्गः । घटत्वादेर्निर्वचनलभ्यत्वाभावेन तादृशधर्मप्रवृत्तिनिमित्तकत्वाभावात्। इदं चान्तर्यामीत्याद्येकप्रातिपदिकरूपाणामेव लिङ्गात्मकशब्दत्वमित्यङ्गीकृत्योक्तम् । अतो न सर्वेषु भूतेष्वेतं यस्मिन्द्यौरित्याद्यनेकप्रातिपदिकात्मकवाक्यरूपलिङ्गात्मकशब्देष्वव्याप्तिरिति ध्येयम् । यद्वा धर्म्युपस्थापकरूपो धर्म इत्यर्थः । अत्राप्येकप्रातिपदिकरूपाणामेव लिङ्गात्मकत्वेन विवक्षायां नाव्याप्तिरिति बोध्य"मिति व्याचक्षते । उक्ताव्याप्तिप्रसङ्गेनाद्यव्याख्यानमुपेक्ष्यमित्यपि निबध्नन्ति । इत्थं च लिङ्गात्मकानामित्यस्यावयववृत्तिनिमित्तनियंत्रिततादृशवृत्तिकानामिति । तादृशवृत्तिप्रवृत्तिनिमित्तरूपस्यानेकप्रातिपदिकसमभिव्याहाराधीनप्रतीतिगोचरधर्मिरूपस्य वा व्याप्यधर्मस्य उपस्थितिद्वारा धर्म्युपस्थापकानामिति वा मतभेदेनार्थद्वयमवसेयम् । अत्र व्याकर्तारः । ननु शब्दार्थयोर्भेदात्कथं शब्दानामर्थरूपं लिङ्गात्मकत्ववचनमित्यतो गौणीं वृत्तिमाश्रित्य व्याचष्टे **आत्मेवेति** । यथात्मा प्रवृत्तौ निमित्तं तथा लिङ्गमपि शब्दप्रवृत्तौ निमित्तमिति निमित्तत्वसाम्येन लिङ्गे आत्मत्वोपचार इति भावः । नामात्मकेष्वात्मशब्दस्य स्वरूपार्थत्वं लिङ्गात्मकेषु च प्रवृत्तिनिमित्तार्थत्वमिति वैरूप्याश्रयणमयुक्तमित्यरुच्या पक्षान्तरमाह **स्वरूपार्थो वेति** । नन्वेवं शब्दानामर्थस्वरूपत्वमुक्तं स्यात्तच्च बाधितमित्यतोऽनयोर्निमित्तनिमित्तिभावापन्नत्वात्तद्भावापन्नयोश्च त्रपुसं ज्वर इत्यभेदव्यवहारदर्शनाद्युक्तोऽत्र भेदेऽप्यभेदव्यवहार इत्याह निमित्तेतीति व्याकुर्वते । निबन्धान्तरीयविन्यासस्तु **निमित्तनिमित्तिनोरिति** । पूर्वयोजनायामात्मप्रातिपदिके गौणी वृत्तिरुक्ता । अत्र तु सामानाधिकरण्यरूपायां विशेष्यविभक्तिसमभिव्याहृतविशेषणविभक्ताविति ततो भेदः । यद्वा पूर्वयोजनायामात्मशब्दः स्वामित्वार्थः । तत् 'सादृश्यं च प्रधानत्वं' 'अर्थत्वमर्थतैव स्यादि'त्यनुव्याख्यानोक्तरीत्या द्रष्टव्यम् । शब्दापेक्षया तत्प्रवृत्तिनिमित्तधर्मस्य प्रधानत्वादिति । यथोक्तं तद्व्याख्यानसुधायाम् । अर्थो हि ज्ञानाद्यपेक्षया प्रधानं विवक्ष्यत इति ॥ **अभेदोपचारादिति** । तादात्म्यसंबन्धरूपेणाभेदेन निमित्तनैमित्तिकभावस्यापि संबन्धत्वेन सदृशत्वादित्यर्थः । अथवा निमित्तनैमित्तिकभावसंबन्धेनात्मलिङ्गरूपनिमित्तकत्वस्य लक्षकः । उपचारोक्तिस्त्वमुख्यवृत्त्यभिप्रायेणेति ज्ञेयमिति । यादृशयादृशशब्दव्यक्तीनामंशनिरूपितशक्तितात्पर्यवत्ता न समर्थिता तत्तत्प्रवृत्तिनिमित्ताविशेषिततानिबन्धनगुणपूर्त्यसिद्धिप्रसङ्गापनुत्तिफलकं वेदगतांशेऽभेदेनान्वयिप्रत्यायकसकलपदोपादानम् । भाष्यशब्दव्यावृत्तिपरिच्छित्तिप्रयोजनकं च निष्ठान्तोपादानम् । तृतीयतुरीयपादसमन्वेतव्यलिङ्गात्मकशब्दप्रतियोगिकभेदावगतिहेतुभूतं श्रुत्यादिकोशाद्यन्यतरव्युत्पादितेशेतरशक्तितात्पर्यसंबन्धावगमकमपरनिष्ठान्तोपादानम् ।

**सु०— नन्वतीतपादे समन्विता अपि लिङ्गात्मका एव । यौगिकत्वात् । अन्यथा गुणपूर्त्यलाभेन समन्वयसमर्थनवैयर्थ्यात् । न च प्रकरणगतगुणलाभेन सार्थक्यम् । वचनवृत्त्यङ्गीकारवैफल्यात् । उक्तं च यच्छब्दा योगवृत्तय इति । तत्कथमयं विभागः । सत्यम् । तथाऽप्यन्यत्रप्रसिद्धत्वादिवदापातप्रतीत्यनुरोधेनेयमुक्तिरित्यदोषः । वृत्तिर्लक्षणादिरपि भवतीत्यतः परे मुख्यार्थ इत्युक्तम् । तथा च मुख्यवृत्तिरिति लभ्यते । चिन्त्यते समर्थ्यतेऽस्मिन्पाद इति शेषः ।**

शे०—अस्त्वेवमस्योत्तरपादभेदसिद्धिस्तथाऽपि न पूर्वपादभेदसिद्धिः । तस्याप्यन्यत्रप्रसिद्धलिङ्गसमन्वयप्रतिपादकत्वेन पादप्रतिपाद्यस्य पूर्वपादादव्यावृत्तत्वादित्याक्षिपति **नन्विति** । ननु पूर्वपादे समन्वितानां रूढत्वेन नामत्वान्न लिङ्गत्वमित्यतो नात्र धर्मिवाचित्वं नामत्वं धर्मवाचित्वं लिङ्गत्वमित्याश्रयितुं युक्तम् । तथा सति धर्मिवाचितयाऽन्तर्याम्यादिशब्दानां नामत्वस्य धर्मवाचितया चानन्दादिशब्दानां च लिङ्गत्वस्य प्रसङ्गात् । किं नाम रूढत्वं नामत्वं यौगिकत्वं च लिङ्गत्वमित्येवाश्रयणीयम् । तथा च पूर्वपादसमन्वितानामपि यौगिकत्वात्कथं न लिङ्गत्वमित्याह **यौगिकत्वादिति** । अस्तूक्तरीत्या रूढत्वयौगिकत्वाभ्यामेव नामलिङ्गभेदस्तथाऽप्यतीतपादे समन्वितानामपि रूढत्वादेव न यौगिकत्वमिति कथं लिङ्गत्वमित्यतः स्यादेतदेवं यदि केचिद्रूढा एव केचिद्यौगिका एवेति विभागः स्यात् । न चैतदस्ति । सर्वेषामपि यौगिकत्वादिति भावेन रूढानां यौगिकत्वानङ्गीकारे बाधकमाह **अन्यथेति** । रूढानां यौगिकत्वानङ्गीकार इत्यर्थः ॥ **गुणपूर्त्यलाभेनेति** । तत्तच्छब्दनिर्वचनलब्धगुणलाभैकप्रयोजनकत्वात्समन्वयसमर्थनस्य तदभावे वैयर्थ्यमेवेत्यर्थः । प्रयोजनान्तरसम्भवात् तत्तच्छब्दनिर्वचनलब्धगुणलाभैकप्रयोजनकत्वमसिद्धं समन्वयसमर्थनस्येत्याशङ्कते **न चेति** । प्रकरणगतगुणलाभेनेत्युपलक्षणम् । तत्तदधिकरणाक्षेपसमाधानेनेत्यपि द्रष्टव्यम् ॥ **वचनवृत्तीति** । रूढ्यङ्गीकारवैफल्यादित्यर्थः । लक्षणादिना भगवत्परत्वेऽपि प्राकरणिकगुणलाभस्य तत्तदधिकरणाक्षेपसमाधानस्य च संभवादिति भावः ॥ **उक्तं चेति** । सङ्क्षेप इति शेषः । यतोऽर्थगतं प्रवृत्तिनिमित्तमपेक्ष्य नारायणमभिदधति अतोऽनन्तगुणोऽसाविति पूर्वेण सम्बन्धः । विद्वत्प्रतीत्या सर्वेषां यौगिकत्वेऽप्यज्ञप्रतीत्या ये रूढास्ते नामानि तत्प्रतीत्या ये यौगिकास्ते लिङ्गानीत्यज्ञप्रतीत्यनुरोधेन नामलिङ्गविभागस्याश्रयणाददोष इत्याह **सत्यमिति** ॥ **आपातप्रतीत्यनुरोधेनेति** । यौगिकत्वं लिङ्गत्वमित्युक्तिरापातप्रतीत्यनुरोधेनेत्यर्थः । आपाततो यौगिकत्वं लिङ्गत्वमिति यावत् । तदपि चापाततो रूढिरहितत्वमेव मन्तव्यम् । तेनानेकपदसमभिव्याहारात्मकेषु 'सर्वेषु भूतेष्वेतमि'त्यादिरूपलिङ्गात्मकशब्देषु नाव्याप्तिरिति भावः । यद्यप्यत्र प्रकृतशङ्काऽनुसारेणापातप्रतीत्यनुरोधेनेय-

मुक्तिरित्येव वक्तव्यम् । तथाऽपि प्रसङ्गादन्यत्रप्रसिद्धोभयत्रप्रसिद्धादिविभागोऽपि न वास्तवः । विद्वत्प्र-सिद्ध्या सर्वशब्दानां भगवत्परत्वात् किं त्वज्ञप्रतीत्या केचिदन्यत्रप्रसिद्धाः केचिदुभयत्रप्रसिद्धाः केचिदन्यत्रत्रैवप्रसिद्धा इत्यज्ञप्रतीत्यनुरोधेनैवेति ज्ञापयितुमन्यत्रप्रसिद्धादिवदिति दृष्टान्ततयोपादानं कृतमित्यवेधयम् । परमत इव स्वमतेऽपि नारायणे परापरविभागभ्रान्तिं परिहर्तुं पर इत्यस्य प्रयोजनमाह **वृत्तिरिति** । कथमनेनोक्तभ्रान्तिनिरास इत्यतो व्याचष्टे **मुख्यार्थ इति** । नारायणस्य मुख्यार्थत्वोक्तावपि कथं वृत्तेर्मुख्यत्वलाभः परशब्देनेत्यतः परशब्दोक्तमुख्यार्थत्वस्य वृत्तेर्मुख्यत्वं विनाऽनुपपन्नत्वात्तेन तल्लाभ इत्याह **तथा चेति** । उक्तलिङ्गसमन्वयस्य द्वितीयपादप्रतिपाद्यत्वलाभायानुगुणं शेषमाह **अस्मिन्निति** ।

**स०**— ननु यौगिकत्वानङ्गीकारेऽपि यस्मिन्प्रकरणे यः शब्दः तस्य यथाकथञ्चित् भगवत्परत्वे, समर्थितत्वं(=यौगिकत्वं) किमर्थमङ्गीकर्तव्यम्; इति शङ्कते **न च प्रकरणेति** ॥ **अन्यत्रप्रसिद्धत्वादि-वदिति** । अन्यत्र प्रसिद्धत्वं यथा लोकत इत्यर्थः । आदिपदेन उभयत्रप्रसिद्धत्वं ग्राह्यम् । नामा-त्मकत्वं त्वज्ञरूढित इति ग्राह्यम् । तथा आपातप्रतीत्यनुरोधेन अज्ञप्रतीत्यनुरोधेन यौगिकत्वमेव लिङ्गात्म-कत्वमित्यर्थः ।

**प०**— **उक्तं चेति** । संक्षेपभाष्ये ॥ **अन्यत्रप्रसिद्धत्वादिवदिति** । यथाऽन्यत्रोभयत्रा-न्यत्रैवप्रसिद्धत्वमापाततस्तद्वदित्यर्थः । प्रपञ्चितश्चायं नामलिङ्गादिभेदश्चन्द्रिकायाम् । **मुख्यार्थ इतीति** । सप्तम्यन्तं मुख्यार्थपदम् । अत्र विशेष उपासनापादे वक्ष्यत इति भावः ।

**या०**— **आपातेति** । अज्ञप्रतीत्यनुरोधेनेत्यर्थः । तथा च यथा विद्वत्प्रसिद्ध्या भगवत्परा-णामपीन्द्रादिशब्दानामज्ञप्रतीत्यनुरोधेनान्यत्र प्रसिद्धत्वादिकं विवक्षितम् । तथा पूर्वपादे समन्वितानां शब्दानां विद्वद्रीत्या यौगिकानामप्यज्ञप्रतीत्यनुरोधेन रूढतया साक्षाद्धर्म्युपस्थापकत्वं विवक्षितम् । अतो युक्तेयं पादभेदोक्तिरिति भावः ।

**श्री०**— **अन्यथेति** । रूढत्वेऽवयववृत्त्या तन्नामप्रतिपादितगुणालाभादित्यर्थः ॥ **न चेति** । तथाच तन्नाम्नो रूढ्या भगवद्वाचकत्वमेवास्तु । तन्नामवाच्यगुणालाभेऽपि तन्नामोपेते ये गुणास्त-त्प्रकरणोक्तास्तद्वत्त्वं भविष्यतीति गुणपूर्त्यलाभो नेति भावः ॥ **वचनेति** । तथाच तत्प्रकरणगतनाम्नो लक्षणया भगवत्परत्वेऽपि तत्प्रकरणगतगुणलाभो भविष्यतीति वचनवृत्तिः कस्मादङ्गीकार्येत्यर्थः । यौगि-कत्वादित्युक्तं युक्त्योपपाद्य तत्र सम्मतिं चाह **उक्तं चेति** ।

च० — ननु धर्मिवाचकत्वं नामत्वं धर्मवाचकत्वं लिङ्गत्वमिति विवक्षायाः अन्तर्याम्यादिशब्दानां नामताया आनन्दादिशब्दानां लिङ्गतायाश्च प्रसञ्जकतया योगेन समुदायवृत्त्युपरक्तप्रतिसंहितिगोचरत्वं नामत्वमवयववृत्त्युपरागेण तत्प्रतिसंधानविषयत्वं च लिङ्गत्वमित्येवाश्रयणीयं इत्थं च प्राक्तनपादसमन्वितानामपि तादृशलैङ्गिकलक्षणलक्षिततया लिङ्गता प्रासाङ्क्षीदेवेत्याह **यौगिकत्वादिति ॥ आपातप्रतीत्यनुरोधेनेति** । प्रातिस्विकनिरवधिकशब्दप्रवृत्तिनिमित्ताश्रयत्वान्यगतशब्दप्रवृत्तिनिमित्तनियामकत्वाभ्यां निखिलशब्दानामीशनिरूपितपरममुख्यवृत्तितात्पर्यकत्वे प्रतिसंदधानानां प्रसिध्या भगवत्पराणामपीन्द्रादिशब्दानां तादृशप्रवृत्तिनिमित्ताननुसंधातॄणामिन्द्रादिशब्दश्रवणाव्यवहितोत्तरक्षणावच्छेदेन जनितशचीपतित्वादिप्रकारकप्रतीत्यनुरोधेनान्यत्रप्रसिद्धत्वादिकं यथा पूर्वपादे विवक्षितम्, तथा तत्र समन्वितानां तादृशप्रवृत्तिनिमित्तानुसंधानदिशावयववृत्त्या परमैश्वर्याद्युपरक्तान्वयधीजनकानामपि तादृशनिमित्ताप्रतिसंहितिकालीनसमुदायवृत्त्यधीनतादृशधर्मानुपरक्तप्रतीतिमनुरुध्य रूढत्वमपि विवक्षितमिति पादभेदोक्तिः सङ्गच्छत इति भावः ।

सु० — ॥ ॐ सर्वत्रप्रसिद्धोपदेशात् ॐ ॥ **केचिन्मनोमयः प्राणशरीरो भारूप इत्युक्तं मनोमयत्वादिनोपास्यत्वं परमात्मनः प्रतिपादयितुमिदमधिकरणमिति** व्याचक्षते । तदसदित्याशयवानाह सर्वगत्वमिति ।

**अनु०** — ॥ ॐ सर्वत्रप्रसिद्धोपदेशात् ॐ ॥

सर्वगत्वं तु प्रथमं प्रविचार्यते ॥

**तुशब्दोऽवधारणे । एतमस्यामेतं दिवीत्यादिवाक्योक्तं सर्वगतत्वमेवात्र पादे प्रथमं परमेश्वरस्य समर्थ्यते । न तु मनोमयत्वादिनोपास्यत्वमित्यर्थः । सत्यकामत्वादिपरमेश्वरधर्माणां स्फुटप्रतिभासत्वेन सन्देहाद्यनुपपत्तेरिति** भावः । **ननु मनोमयत्वादयः शारीरधर्मा अपि प्रतीयन्त इति चेन्न । तेषामानन्दमयाधिकरणन्यायेन सावकाशत्वात् । चरमप्रतीतेनापि निरवकाशेन प्रथमप्रतीतस्य सावकाशस्यान्यथात्वोपपत्तेः ।**

शे० — ॥ ॐ **सर्वत्रप्रसिद्धोपदेशात्** ॐ ॥ प्रतिपाद्यान्तराप्रसङ्गात्प्रसक्तौ वा सति सम्भवे तत्परित्यागेन प्रतिपाद्यान्तरस्यावक्तव्यत्वात्तदसम्भवाभिप्राये चासम्भवहेतोरपि वक्तव्यत्वादधिकरणप्रतिपाद्यमात्रप्रदर्शनपरोत्तरभाष्यमनर्थकमित्यतः प्रतिपाद्यान्तरप्रसक्तिं तावद्दर्शयति **केचिदिति** । एवं प्रतिपाद्यान्तरप्रसक्तिमुद्भाव्य तर्हि तदेवास्तु किं प्रतिपाद्यान्तराश्रयणेनेत्यतस्तस्यानुपपन्नत्वाद्युक्तं तत्परित्यागेन

भाष्यकाराणां प्रतिपाद्यान्तराश्रयणमित्याशयेन तद्भाष्यं सङ्गमयति **तदसदित्याशयवानिति**। स्पष्टं तत्वेत्यनुक्तेराशयपदम्। प्रतिपाद्यान्तरामाधुत्वाशयस्य मूलारूढताप्रसिद्ध्यर्थं तदनुगुणतया तुशब्दं व्याचष्टे। **तुशब्द इति**। तर्ह्यसम्भवहेतोरपि वक्तव्यत्वात्तदनुक्तौ कथं प्रतिज्ञामात्रेणाभिमतसिद्धिरित्यतोऽसम्भवहेतोरत्र स्पष्टत्वात्तदनुक्तावपि प्रतिज्ञामात्रेण विवक्षितसिद्धिरित्याशयेन भाष्याभिप्रायमाह **सत्यकामत्वादीति**। सत्यकामत्वेत्यनेन 'सत्यसङ्कल्प आकाश आत्मेति' विषयवाक्योक्तस्य सत्यसङ्कल्पत्वस्य परिग्रहः। आदिपदेना'वाक्यनादरो ज्यायान्पृथिव्या' इत्यादिवाक्यशेषोक्तान्तरत्वज्यायस्त्वादिलिङ्गसंग्रहः। संन्देहादीत्यादिपदेन **पूर्वपक्षसंग्रहः**। ननु भवेत्सन्देहाद्यनुदयो यद्यत्र वाक्ये सत्यकामत्वादयो ब्रह्मधर्मा एव प्रतीयेरन्। न चैतदस्ति। मनोमयत्वादीनां शारीरधर्माणामप्यत्र प्रतीयमानत्वात्। तथा चोभयधर्मश्रवणाद्युक्तः सन्देहः। मनोमयत्वादीनामुपक्रमस्थत्वेन प्रथमावगतत्वात्सत्यकामत्वादीनां चोपसंहारस्थत्वेन चरमावगतत्वादुपक्रमाधिकरणन्यायेन प्रथमावगततया प्रबलैः शारीरधर्मैरेव चरमावगततया दुर्बलब्रह्मधर्मबाधया युक्तः पूर्वपक्षोऽपीत्यभिप्रेत्य शङ्कते **नन्विति**। मनोमयत्वादीत्यादिपदेनान्तर्हृदयेऽणीयानित्यादिवाक्यशेषोक्ताणीयस्त्वादेः संग्रहः। मनोमयत्वादिकं च जीवधर्म एव। तस्यैव मन आदिसम्बन्धात्। न तु ब्रह्मणः। तस्य 'अप्राणो ह्यमनाः शुभ्रः' इत्यादिश्रुतिभ्यस्तद्राहित्यावगतेरिति भावः **आनन्दमयाधिकरणन्यायेनेति**। न मनोमये मनःशब्दोऽन्तःकरणपरो येनोक्तानुपपत्तिः किंतु मनु अवबोधन इत्यस्माद्भावे असुन्प्रत्यये मनो बोधस्तत्प्राचुर्यं च महाबोधत्वरूपं परमेश्वरे सम्भवत्येवेत्यानन्दमयाधिकरणन्यायेनेत्यर्थः॥ **सावकाशत्वादिति**। तथा चातुल्यबलत्वान्न मनोमयत्वादिनां जीवत्वकोट्युपस्थापकत्वं नापि तत्कोट्यवधारकत्वमिति न सन्देहाद्यवसर इति भावः। ननु तर्हि सत्यकामत्वादीनां चरमश्रुततया दुर्बलत्वात्तैः प्रथमप्रतीततया प्रबलमनोमयत्वादिजीवधर्मबाधायोगात् सत्यकामत्वादिना ब्रह्मपरत्वनिश्चयोऽपि न स्यादित्यतो मनोमयत्वादीनामुक्तरीत्या सावकाशत्वात्सत्यकामत्वादीनां चरमप्रतीतत्वेऽपि निरवकाशत्वात्सावकाशनिरवकाशयोर्निरवकाशस्य बलवत्त्वाद्युक्तो निरवकाशसत्यकामत्वादिधर्मैः सावकाशमनोमयत्वादिजीवधर्मबाधया ब्रह्मपरत्वनिर्णय इत्याशयेनाह **चरमप्रतीतेनापीति**।

स० — ॥ ॐ **सर्वत्रप्रसिद्धोपदेशात्** ॐ ॥ **नन्विति**। यथा सत्यकामत्वादीनां ब्रह्मधर्मत्वं स्फुटं तथा मनोमयत्वादीनां शारीरधर्मत्वमिति सदेहासिद्धिरित्यर्थः॥ **न तेषामिति**। मनःशब्दस्यावबोधार्थत्वान्मयटः प्राचुर्यार्थत्वात् मनोमयशब्दस्य वाच्यं ब्रह्मैवेति तदुक्तमित्यर्थः। ननु जीवधर्मत्वसंभवे कथं मनोमयत्वादीनां ब्रह्मधर्मत्वं सत्यकामत्वादिना निर्णयश्चेति चेत् न। पूर्वप्रतीतस्यानुपसञ्जातविरोधिनः पश्चात्प्रतीतेनोपसञ्जातविरोधिना बाधायोगादित्यत आह **चरमेति**। यथा पश्चाच्छ्रुतेनापि 'तेजो वै घृतमित्य'नेन प्रथमप्रतीतस्याक्ताः शर्करा उपदधातीत्यस्य निर्णयः तत्र अक्तता-

साधनद्रव्यमात्राक्षेपेण तैलवसादीनामपि प्राप्तौ घृतस्तावकेनार्थवादेन निर्णयविधेयस्यैव अक्तताधनत्वात् तथा सत्यकामत्वादिना मनोमयत्वादीनां निर्णयः । सावकाशत्वनिरवकाशत्वे प्राबल्यदौर्बल्यकारणे इत्यर्थः । घृतस्तुतेरुपलक्षणत्वेनापि तैलस्यापि ग्रहसंभवात् संदेहाप्तिरित्यर्थः । सत्यकामत्वादीनां कथञ्चिदन्यत्र संभवः ॥

प० — ॐ **सर्वत्रप्रसिद्धोपदेशात्** ॐ ॥ **केचिदिति** । मायावादिनो रामानुजीयाश्च ॥ **इत्युक्तेति** ॥ छान्दोग्ये तृतीयाध्याये उक्तेत्यर्थः । ननूपक्रमप्राबल्यस्य पूर्वतन्त्रे स्थितत्वात्सत्यकामत्वादिचरमधर्मेण कथं प्रबलस्य मनोमयत्वादिप्रथमश्रुतस्य बाध इत्यत आह **चरमेति** । 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलमि'ति पूर्वतन्त्र एवोक्तेरिति भावः ।

या० — ॐ **सर्वत्रप्रसिद्धोपदेशात्** ॐ ॥ **सत्यकामत्वादीति** । आदिपदेन सत्यसङ्कल्पत्वादिपरिग्रहः । ननु मनोमय इत्याद्युदाहृतवाक्ये प्रथमप्रतीतानां मनोमयत्वादिशारीरधर्माणां कथं सावकाशत्वम् । असञ्जातविरोधितया प्रबलोपक्रमप्रतीतत्वात् । सत्यसङ्कल्पत्वादेश्चरमप्रतीतत्वादित्यत आह **चरमेति** ।

श्री० — **केचित्** मायिनो रामानुजीयाश्च ॥ ननु मनोमय इत्याद्युदाहृतवाक्ये प्रथमप्रतीतानां मनोमयत्वादिशारीरधर्माणां कथं सावकाशत्वमसञ्जातविरोधित्वेन प्रबलोपक्रमस्थत्वात् । सत्यसङ्कल्पत्वादेश्चरमप्रतीतत्वादित्यत आह **चरमेति** ।

च० — ॥ **मनोमयत्वादिनेति** ॥ कर्मसाधनकृत्यप्रकृत्युपस्थाप्योपासनान्वयिप्रकारतानिरूपकत्वं तृतीयार्थः । **सत्यकामत्वादीति**। आदिपदं सत्यसंकल्पस्य, 'अवाक्यनादरः ज्यायान् पृथिव्या'इत्यादिवाक्यशेषोक्तावाक्यनादरत्वज्यायस्त्वादिलिङ्गस्य च परिग्राहकं । **सन्देहाद्यनुपपत्तेरिति** । इहादिपदं पूर्ववादिमतसंग्रहकं तथाच विशेषादर्शनघटितसामग्र्यभावेन संदेहस्य' पारमेश्वरलिङ्गबाहुल्याश्रवणेन पूर्ववादिमतप्रवृत्तेश्चानुदय इति भावः । ननु सत्यकामत्वादिपारमेश्वरधर्माभिधायकपदसमभिव्याहारवन्मनोमयत्वादिशारीरधर्माभिधायकपदसमभिव्याहारस्यापि प्रकृतवाक्ये सत्त्वेन सत्प्रतिपक्षस्थल इव संशयावतारस्य मनोमयत्वादीनामुपक्रमगतपदबोध्यतानिबन्धनक्षिप्रोपस्थितिकत्वाधीनबलीयस्त्वाकतया सत्यकामत्वादीनां च निगमनगतत्वापादितमन्थरप्रतीतिकत्वायत्तदौर्बल्यकत्वेन उपक्रमाधिकरणन्यायेनौपक्रमिकत्वदोस्थापितशारीरधर्मैर्नैगमनिकपदप्रतीतभागवतधर्मबाधया पूर्ववादिमतप्रवृत्तेश्च निरर्गलतया न क्षतिरित्याशङ्कते **नन्विति** । मनोमयत्वादीत्यादिपदं अन्तर्हृदयेऽणीयानित्यादिवाक्यशेषाभिहिताणीयस्त्वादिसंग्राहकम् ।अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिभिर्ब्रह्मणो मन आदिसम्बन्धराहित्यावगतेस्तदादिसम्बन्धित्वरूपमनोमयत्वादेर्जीवधर्मताऽवधृतेरिति भावः । **आनन्दमयाधिकरणन्यायेनेति** । अवबोधनार्थस्य मनो-

भाविसुनि तदन्तान्मयटि च प्राचुर्यार्थे निष्पन्नमनोमयशब्दप्रवृत्तिनिमित्तमहाबोधवत्वस्येश्वरे सम्भवेन साम ञ्जस्यमित्यानन्दमयनयव्युत्पादितन्यायेनेत्यर्थः **सावकाशत्वादिति** । तथा च मनोमयत्वादीनां सत्यकाम-त्वादितुल्यकक्ष्यानापन्नतया जीवत्वकोट्यनुपस्थापकतया तदनवधारकतया च न सन्देहपूर्वमतप्रवृत्त्यवतार इति भावः । माथर्यामांथर्याभ्यामुपस्थितत्वानुपस्थितत्वे न दौर्बल्यप्राबल्यापादके किन्तु सावकाशत्वनिर-वकाशत्वे एवेति तादृशमनोमयत्वादीनां तादृशसत्यकामत्वादिभिर्बाधनं संगच्छत इत्याशयेनाह **चरम-प्रतीतेनेति** । **अन्यथात्वोपपत्तेः** । परमेश्वरशक्तितात्पर्यकत्वोपपत्तेः ।

**सु० — ननु कथं तर्ह्यस्माकमपि चक्षुर्मयत्वादीनि पूर्वपक्षप्रापकाणि । उच्यते । हेत्वन्त रेण पूर्वपक्षे सत्यभ्युच्चयमात्रत्वेन तेषामुपन्यासः । यथा परस्येक्षत्यधिकरणे प्रायपाठे निरस्तेऽ-प्यभ्युच्चयमात्रत्वेन प्राणाधिकरणे तदुपन्यासः ।**

शे० — शिष्यः शङ्कते **नन्विति** । 'चष्ट इत्येव तच्चक्षुः श्रवणाच्छ्रोत्रमुच्यते' इत्यानन्दमयाधि-करणोक्तरीत्या चक्षुर्मयत्वादीनामपि ब्रह्मणि सावकाशत्वान्न चक्षुर्मयत्वादीनां पूर्वपक्षप्रापकत्वं स्यात् । सावकाशस्यापि तस्यास्माकं पूर्वपक्षप्रापकत्वे सावकाशस्यापि मनोमयत्वादेः परेषामपि कथं न पूर्वपक्ष-प्रापकत्वमित्याशयः । न चक्षुर्मयत्वमेव मुख्यतः पूर्वपक्षप्रापकतयाऽस्माकमभिप्रेतं येन सावकाशतयाऽ-हेतुः स्यात् । किं त्वर्भकौकस्त्वरूपलिङ्गादिकमेव मुख्यतः पूर्वपक्षप्रापकम् । चक्षुर्मयत्वादिकं चाभ्युच्चय-हेतुरेवेति युज्यते सावकाशस्याप्यभ्युच्चयतया पूर्वपक्षप्रापकत्वम् । परेषां च मनोमयत्वादिकमेव मुख्यतः पूर्वपक्षप्रापकं न त्वभ्युच्चयहेतुरिति कथं सावकाशस्य तस्य पूर्वपक्षप्रापकत्वमित्याशयेन आनन्दमयोक्तस्य को ह्येवान्यादिति प्राचुर्यार्थे हेतुव्यपदेशस्य तत्प्रायपाठस्य चासम्भवात् न तन्न्यायविषयत्वं, ज्ञानकरणतया प्रसिद्धचक्षुरादिसम्बन्धस्यैव नित्यज्ञाने सर्वान्तर्यामिण्यसम्भवेन तत्प्राचुर्यस्य सुतरामनुपपत्तिरेव । चक्षुः-शब्दस्य विष्णुपरत्वे मयटो वैयर्थ्यं चेति चक्षुर्मयत्वादिकं मुख्यैव पूर्वपक्षयुक्तिरिति सत्येव समाधानेऽङ्गी-कारवादेन समाधत्ते **उच्यत इति** । कथं सावकाशस्याभ्युच्चयतयाऽपि पूर्वपक्षसाधकतयोपन्यास इत्यतस्तथा दृष्टत्वादित्याह **यथेति** । सदेवेत्यादिवाक्योक्तं कारणं प्रधानमिति प्राप्ते 'तदैक्षत बहु स्यां प्रजायेये'तीती-क्षतृत्वश्रवणादचेतनस्य प्रधानस्येक्षितृत्वासम्भवान्न प्रधानं किंतु ब्रह्मैवेतीक्षतेर्नाशब्दमिति पूर्वसूत्रेणोक्तम् । तत्र तत्तेज ऐक्षत ता आप ऐक्षन्तेति गौणप्राये पठितत्वात्तदैक्षतेतीक्षतिर्गौणो व्याख्यातव्य इत्याशङ्क्यो-क्तम् । **गौणश्चेदिति** । अप्तेजसोरिवाचेतने प्रधाने गौणोऽयमीक्षतिरित्यसत् । कुतः । अनेन जीवे-नात्मनेति आत्मशब्दात् । न हि जीवश्चेतनोऽचेतनस्य प्रधानस्यात्मा सम्भवतीति । प्रायपाठस्त्वकिञ्चि-त्कर इत्येवमीक्षत्यधिकरणे प्रायपाठे निरस्ते सत्यपीत्यर्थः । **अभ्युच्चयत्वेनेति** । 'प्रस्तोतर्या देवते'त्युपक्रम्य

श्रुते 'कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ती'ति वाक्ये प्राणशब्दः प्रसिद्धप्राणपर एव । न च सर्वभूतसंवेशनादिविरोधः । 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः' इत्यादिश्रुतेः स्वापकाले प्रसिद्धप्राणे सर्वभूतसर्वेन्द्रिय-लयाद्युक्तिद्वारा सर्वभूतलयादिपराया मानान्तरानुगृहीतत्वेन प्रबलत्वाद्ब्रह्मणि भूतलयादिबोधिकायाश्च यतो वा इमानीत्यादिश्रुतेस्तदननुगृहीतत्वेन दुर्बलत्वात् प्रस्ताववाक्यमपि प्रबलानुसारेण प्रसिद्धप्राणे सर्वभूतलयादिपरं न तु ब्रह्मणि सर्वभूतलयपरमित्यभ्यधिकाशङ्कामभिधायापि चादित्योन्नं चोद्गीथप्रति-हारयोर्देवते प्रस्तावदेवतायाः प्राणस्यानन्तरं निर्दिश्येते । न च तयोर्ब्रह्मत्वमस्ति । तत्प्रायपाठात् प्राणस्य न ब्रह्मत्वमिति यथा परस्य मते प्रायपाठस्य पूर्वपक्षहेतूपोद्बलनायोपन्यासः । उक्तं च भामत्यां 'निरस्तोऽप्ययमर्थ ईक्षत्यधिकरणे पूर्वोक्तपूर्वपक्षहेतूपोद्बलनाय पुनरुपन्यस्त' इति । तथाऽस्माकमपि मतेऽभ्युच्चयत्वे-नैव चक्षुर्मयत्वादेरुपन्यास इति भावः ।

स०— **नन्विति** । आनन्दमयाधिकरणे चक्षुर्मयत्वादीनामपि चष्ट इत्येव तच्चक्षुरित्यादिना सावकाशत्वाभिधानादिति भावः । **यथा परस्य ईक्षत्यधिकरण इति** । तत्र हि तदैक्षत बहुस्यां प्रजाये येति तत्तेजोऽसृजतेति ईक्षितृत्वश्रवणाज्जगत्कारणं न प्रधानं किन्तु ब्रह्मैव । नचाचेतनस्य प्रधानस्येक्षितृत्वं संभवतीतीक्षतेर्नाशब्दमित्यनेनोक्ते नन्वयमीक्षतिर्गौणो व्याख्येयस्तत्तेज ऐक्षत ता आप ऐक्षन्तेति गौण-प्रायपठितत्वादित्याशङ्क्य अनेन जीवात्मनेत्याद्यात्मशब्दान्नायमीक्षतिर्गौणो भवितुमर्हति । प्रायपाठस्त्व-किञ्चित्कर एवेत्याशयेनोक्तं गौणश्चेन्नात्मशब्दात् इति । एवमीक्षत्यधिकरणे प्रायपाठे व्यर्थतया निरस्त इत्यर्थः । **अभ्युच्चयमात्रत्वेन प्राणाधिकरण इति** । प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्तेति वाक्ये श्रूयमाणप्राण-शब्दो वायुविकारपर एव । न ब्रह्मपरः । प्राणशब्दस्य वायुविकारे प्रसिद्धतरत्वात् भूतसंवेशनोद्गमनरूपब्रह्म-लिङ्गयोश्च मतान्तरसंवादबलेन तदभिमानिनि मुख्येपि सावकाशत्वादिति पूर्वपक्षप्रापकयुक्तिमभिधा-यापि चादित्योन्नं चोद्गीथप्रतिहारयोर्देवते प्रस्तावदेवतायाः प्राणस्यानन्तरं निर्दिश्येते । न च तयो-र्ब्रह्मत्वमस्ति । तत्सामान्यात्प्राणस्यापि न ब्रह्मत्वमिति तद्भाष्ये प्रायपाठोपि पूर्वपक्षोपोद्बलनायोपन्यस्त इत्यर्थः । उक्तं च भामत्यां 'निरस्तोप्ययमर्थ ईक्षत्यधिकरणे पूर्वोक्तपूर्वपक्षहेतूपोद्बलनाय पुनरुपन्यस्त' इति । हेत्वन्तरं च तत्वप्रकाशिकादौ द्रष्टव्यम् ।

प०— **तर्हीति** । आनन्दमयनयन्यायेन दर्शनशक्तिप्राचुर्यादिना सावकाशत्व इत्यर्थः । **हेत्वन्तरेणेति** । सर्वप्राणिहृदयगुहास्थत्वरूपार्भकौकस्त्वहेतुना पूर्वपक्ष इत्यर्थः । अत एव सूत्रेऽर्भकौ-कस्त्वोक्त्यनन्तरं तद्व्यपदेशादित्युक्तिः ॥ **परस्येक्षत्यधिकरण इति** । तत्तेज ऐक्षतेति गौणेक्षणप्रायपाठा-

त्तदैक्षतेत्युक्तमपीक्षणं गौणमिति शङ्कितेऽनेन जीवेनात्मनेत्यात्मशब्दादीक्षणं न गौणम् । प्रायपाठस्तु निर्णायके सत्यप्रयोजक इति गौणश्चेन्नात्मशब्दादित्यत्र निरस्तेऽप्यत एव प्राण इत्यत्र कतमा सा देवता उद्गीथमन्वायत्ता आदित्य इति होवाचेत्याद्यब्रह्मादित्यान्नप्रायपाटात्प्रस्तावववाक्यस्थप्राणोप्यब्रह्मेति पूर्वपक्षो यथा तथेत्यर्थः। 'निरस्तोऽपीक्षत्यधिकरणे पूर्वोक्तपक्षोपोद्बलनाय पुनरुपन्यस्त' इति वाचस्पत्युक्तेरिति भावः। **दर्शयतीति** । विवक्षितगुणोपपत्तेरिति सूत्रस्य विवक्षितः 'सर्वेषु भूतेष्वेतम्'इति श्रुतावभिमतः दूरे शक्तस्यापि तत्तच्छक्तिप्रबोधनार्थं तत्र तत्रावस्थानरूपो यो गुणस्तस्य लीलयोपपत्तेरिति वर्णकांतरमभिप्रेत्येति योज्यम् ।

या० — **कथं तर्हीति** । चष्ट इत्येव तच्चक्षुरित्याद्यानन्दमयाधिकरणोक्तन्यायेन तेषामपि परमेश्वरे सावकाशत्वादिति भावः । **हेत्वन्तरेणेति** । आदित्यश्रुत्यादीनां बहुत्वं, क्षित्यादिषूक्तत्वाऽऽदित्येऽनुक्तिरित्यादिहेत्वन्तरेणेत्यर्थः॥ **यथा परस्येक्षत्यधिकरण इति** । तत्र हि तदैक्षत बहुस्यां प्रजायेयेतीतीक्षितृत्वश्रवणाज्जगत्कारणं न प्रधानं किन्तु ब्रह्मैव । न चाचेतनस्य प्रधानस्येक्षितृत्वं संभवतीतीक्षतेर्नाशब्दमित्यनेनोक्ते नन्वयमीक्षतिर्गौणो व्याख्येयस्तत्तेज ऐक्षत ता आप ऐक्षन्तेति गौणप्रायपठितत्वादित्याशङ्कयानेन जीवेनात्मनेत्याद्यात्मशब्दान्नायमीक्षतिर्गौणो भवितुमर्हति । प्रायपाठस्त्वकिञ्चित्कर एवेत्याशयेनोक्तम् गौणश्चेन्नात्मशब्दादिति । एवमीक्षत्यधिकरणे प्रायपाठे निरस्ते सत्यपीत्यर्थः ॥

---

**अभ्युच्चयमात्रत्वेनेति** । 'प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ते'ति वाक्ये श्रूयमाणः प्राणशब्दो वायुविकारपर एव न ब्रह्मपरः। प्राणशब्दस्य वायुविकारे प्रसिद्धतरत्वात् । भूतसंवेशनोद्गमनरूपब्रह्मलिङ्गयोश्च तदभिमानिनि मुख्येऽपि सावकाशत्वादिति पूर्वपक्षप्रापकयुक्तिमभिधायापि चादित्योन्नं चोद्गीथप्रतिहारयोर्देवते प्रस्तावदेवतायाः प्राणस्यानन्तरं निर्दिश्येते । न च तयोर्ब्रह्मत्वमस्ति । तत्सामान्यात्प्राणस्यापि न ब्रह्मत्वमिति तद्भाष्ये प्रायपाठस्यापि पूर्वपक्षहेतूपोद्बलनायोपन्यास **इत्यर्थः** । **उक्तं च भामत्याम्** । निरस्तोऽप्ययमर्थ ईक्षत्यधिकरणे पूर्वोक्तपूर्वपक्षहेतूपोद्बलनाय पुनरुपन्यस्त इति ।

च० — ननु चष्ट इत्येव तच्चक्षुरित्याद्यानन्दमयनयोक्तदिशा चक्षुर्मयत्वादीनामपीशनिरूपितशक्तितात्पर्यकतया पूर्ववादिमतप्रवर्तकत्वायोगेनाताद‍ृशं ताद‍ृशत्वेन कथं भाष्यकारा अभाषिषत । उक्तक्षतितादवस्थ्यादतथाभूतस्यापि तथात्वोपगमे च परभाष्यकृदपि तथा कथं नाभ्युपेयादिति विनेयशङ्कामपनिनीषुराशङ्कते **नन्विति** । **हेत्यन्तरेणेति** । मयूरव्यंसकादित्वात्समासः । अर्भकौकस्त्वादित्यश्रुतिक्रियासमभिव्याहारक्षित्यादिस्थितियुक्तिपूर्वकादित्यस्थित्यनुक्तिरूपप्रधानहेतुनेत्यर्थः । **अभ्युच्चयमात्रेणेति** । पूर्ववादिमतसंचिरकी(संतिती)र्षयेत्यर्थः। **तेषां** चक्षुर्मयत्वादीनां । '**यथा परस्येत्यादि** ईक्षतिनये तदैक्षत बहुस्यां

प्रजायेयेतीतीक्षितृत्वश्रवणाज्जगत्कारणं न प्रधानं किन्तु ब्रह्मैव । न चाचेतनस्य प्रधानस्येक्षितृत्व सम्भवतीतीक्षतेर्नाशब्दमित्यनेनाभिधायाथायमीक्षतिर्भाक्तार्थो व्याकर्तव्यस्तत्तेज ऐक्षत ता आप ऐक्षन्तेति भाक्तार्थकभूयस्त्वसमभिव्याहृतत्वादित्याशङ्कयानेन जीवेनात्मनेत्यात्मशब्दसमभिव्याहृतत्वान्नायमीक्षतिर्भाक्तार्थको भवितुमीष्टे भूयस्समभिव्याहारस्त्वकिञ्चित्कर इत्यभिसंधायोक्तं गौणश्चेन्नात्मशब्दादित्येवमीक्षतिनये प्रायपाठेऽपहस्तितेपीत्यर्थः । **अभ्युच्चयमात्रत्वेनेति** । प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्राणमन्वायत्तेति वाक्ये श्रूयमाणप्राणशब्दो वायुविकारतात्पर्यक एव न ब्रह्मतात्पर्यकस्तस्य तत्र सिद्धत्वात् । भूतसंवेशनोद्गमनादिरूपपरमेश्वरलिङ्गयोस्तदभिमानिमुख्येपि सावकाशत्वादिति पूर्ववादिमतप्रवृत्तिबीजभूतां युक्तिमभिधायापि चादित्योन्नं चोद्गीथप्रतिहारयोर्देवते प्रस्तावदेवताया:प्राणस्यानन्तरं निर्दिश्येते । न च तयोर्ब्रह्मत्वमस्ति तत्सामान्यात्प्राणस्यापि न ब्रह्मत्वमित्यन्यदीयभाष्ये पूर्ववाद्युपन्यस्तहेतूपोद्बलनायोपन्यस्तमित्यर्थः । भामत्यां 'निरस्तोप्ययमर्थः ईक्षत्यधिकरणे पूर्वोक्तपूर्वपक्षहेतूपोद्बलनाय पुनरुपन्यस्त' इत्युक्तेः । तथा भगवत्पादैरपि तादृशहेतूपोद्बलनायैव चक्षुर्मयत्वादिरुपन्यस्त इत्याशयः ।

सु० — सर्वगतत्वप्रतिपादनस्य प्रकृतोपयोगं दर्शयति तत्रेति ।

---

अनु० — तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः ॥

**प्रबोधनं कार्याभिमुखीकरणम् । तत्किं दूरे स्थितः शक्तिप्रबोधने न शक्तो येन तत्र तत्र तिष्ठतीत्यत उक्तम्** दूरतोऽपीति ।

दूरतोऽप्यतिशक्तः स लीलया केवलं प्रभुः ॥

इति ज्ञापयितुम्

**यद्यपि स प्रभुर्विष्णुर्दूरतोऽपि तत्तच्छक्तिप्रबोधनेऽतिशक्तस्तथाऽपि केवलं लीलया तत्र तत्र स्थितस्तत्तच्छक्तीनां प्रबोधको भवतीति ज्ञापयितुं सर्वगतत्वमिह प्रविचार्यत इति संबन्धः । एतदुक्तं भवति । स्वनिर्गमप्रवेशाभ्यां देहपातनोत्थापनमित्याद्या मुख्यप्राणादिशक्तयस्तदन्तर्गतभगवदायत्ता इति प्रागुक्तम् । तदनुपपन्नम् । भगवतः सर्वगतत्वाभावात् । शास्त्रैकसमधिगम्यं खलु (हि) तत् । शास्त्रं चैतमस्यामित्यादिकमन्यपरमित्याशंक्योक्तार्थसमर्थनाय सर्वगतत्वमत्र हरेरुपपाद्यत इति । अथवा न सर्वगतत्वं हरेरुपपादनीयम् । तस्यानन्दादिवत्स्रष्टृत्वादिवद्वा गुणत्वाभावादित्याशंक्य न सर्वगतत्वं नाम सर्वसंयोगित्वमात्रमिह विवक्षितम् । किं नाम तत्तच्छक्तिप्रेरकत्वेन । अतस्तदुपपादनमुपपद्यत इत्यनेनोच्यते। अथवा न सर्वगतत्वमत्र प्रतिपाद-**

नीयम् । अदृश्यत्वाद्यधिकरणे तस्य प्रतिपादयिष्यमाणत्वादित्याशंक्य तत्र सर्वगतत्वमात्रमत्र तु तत्तच्छक्तिप्रबोधकत्वमिति तात्पर्यभेदोऽनेनोच्यते । अथवा अन्तर्याम्यधिकरणे पृथिव्यादिषु-स्थितेर्वक्ष्यमाणत्वान्नेदमारम्भणीयमित्याशंक्यात्र शक्तिप्रेरकत्वेन तत्र तु सत्तादिप्रदत्वेन तत्तद-न्तर्गतत्वमुच्यत इत्यनेनाचष्टे । अथवा अन्तःस्थत्वाधिकरणेनेदं गतार्थमित्याशंक्य तत्र चन्द्रादिकतिपयपदार्थान्तरस्थितत्वम् अत्र तु सर्वपदार्थान्तर्गतत्वमभिधीयत इति प्रतिपाद्यभेद-मेतेनाह । अथवा । सर्वगतत्वं नाम सर्वमूर्त(द्रव्य संयोगित्वं (वा) परममहत्परिमाण योगि)त्वं वा (सु)प्रसिद्धम् । तदत्र यदि साध्यं स्यात्तदाऽर्भकौकस्त्वादित्याक्षेपानुपपत्तिरदृश्यत्वाद्यधिकरणेन गतार्थता चेत्याशंक्य सर्वगतत्वमन्यथाऽनेन व्याचष्टे ।

शे० — **प्रकृतोपयोगमिति** । उक्तार्थसमर्थनार्थमित्यर्थः । अन्यथा निष्फलतया सर्वगतत्व-मस्ति न वेति चिन्ताया अकर्तव्यत्वादिति भावः ॥ **दर्शयतीति** । अतो नोत्तरवाक्यवैयर्थ्यमिति भावः । किं तत्प्रकृतं कथं च सर्वगतत्वस्य तदुपयोग इत्यत आह **एतदुक्तं भवतीति** ॥ **अन्यपर-मिति** । आदित्यादिपरमित्यर्थः ॥ **उक्तार्थेति** । अव्यवहितप्राणाधिकरणोक्तार्थ इत्यर्थः ॥ **गुणत्वा-भावादिति** । सर्वसंयोगित्वादिरूपस्य तस्याकाशादिसाधारणत्वादिति भावः ॥ **अनेनेति** । तत्र तत्र स्थित इति वाक्येनेत्यर्थः ॥ **प्रतिपादयिष्यमाणत्वादिति** । अन्यथा पुनरुक्तेरिति भावः ॥ **साध्यमिति** । विचार्यमित्यर्थः । समन्वेतव्यमिति यावत् ॥ **अर्भकौकस्त्वादित्याद्याक्षेपानुपपत्ति-रिति** । अयं भावः । समन्वेतव्यसर्वगतत्वस्य स्वरूपेणैवासंभवो ह्यत्रोच्यते । स च यद्यपि सर्वगतत्वस्य तत्र तत्र स्थितत्वरूपत्वे संभवति । तथा सति समन्वेतव्यसर्वगतत्वस्याल्पस्थानस्थितत्वरूपत्वप्राप्त्या तस्य चापरिच्छिन्ने ब्रह्मणि स्वरूपेणैवासंभवेन नायं सर्वगतो विष्णुरस्य सर्वगतत्वस्य सर्वेषु भूतेष्वित्येतदनुसारेण अल्पस्थानस्थितिरूपत्वादन्यथा भूतेष्वित्यस्य वैयर्थ्यप्रसङ्गात्तस्य च ब्रह्मण्यसंभवादित्याक्षेपसंभवात् । तथाऽपि सर्वगतत्वस्य सकलमूर्तसंयोगित्वरूपत्वे वाऽपरिच्छिन्नपरिमाणवत्त्वरूपत्वे वा न संभवति । तथा सति समन्वेतव्यस्य सकलमूर्तसंयोगित्वादिरूपस्य सर्वगतत्वस्याल्पस्थानस्थितत्वरूपत्वानापत्त्याऽपरिच्छिन्नतया अल्पस्थानस्थितत्वासंभवेऽप्यपरिच्छिन्नेऽपि विष्णौ समन्वेतव्यसकलमूर्तसंयोगित्वादिरूपसर्वगतत्वोपपत्त्या तदसंभवाभावेन नायं सर्वगतो विष्णुरत्रोक्तस्य सर्वगतत्वस्याल्पस्थानस्थितत्वरूपत्वात्तस्य च विष्णावसंभवा-दित्याक्षेपायोगादिति ॥ **अन्यथेति** । तत्र तत्र स्थितत्वरूपेणेत्यर्थः । ततश्चोक्तरीत्याऽऽक्षेपोपपत्तिः । अदृश्यत्वाधिकरणेनागतार्थता चेति भावः ।

स० — **अर्भकौकस्त्वादित्याक्षेपानुपपत्तिरिति** । अयं भावः । सर्वेषु भूतेष्वेतमेव ब्रह्मेत्या-चक्षत इत्यनेन तत्तद्भूतमात्रगतत्वरूपमल्पौकस्त्वमुच्यते । अन्यथा भूतेष्वित्यस्य वैयर्थ्यापत्तेः । इदं

च सर्वेषु भूतेषु उपपद्यते । तत्तज्जीवानां तत्तद्भूतमात्रगतत्वसंभवात् । न विष्णोः । तस्यैतस्यैव सर्वगतमित्यस्यार्थस्य सर्वभूताशयस्थित इत्यादिप्रमाणसिद्धस्य सिद्धान्तिनोऽभिमतत्वात् । तस्मान्न विष्णुरत्र सर्वगततयोच्यते किन्तु तत्तज्जीवा एवेति हि पूर्वपक्षिणोऽभिमतम् । इदं च सर्वमूर्तसंयोगित्वादिरूपसर्वगतत्वस्यात्र विचार्यत्वेऽनुपपन्नन् । सर्वजीवेष्वपि सर्वमूर्तसंयोगित्वादिरूपस्य सर्वगतत्वस्य विष्णाविवाल्पौकस्त्वानुपपत्तिरूपबाधकबलेन वक्तुमशक्यत्वे जीवा एव सर्वगता इत्याक्षेपानुपपत्तेः । तत्र तत्र स्थितत्वरूपसर्वगतत्वस्य साध्यत्वे तु विष्णोरेकस्य निरुक्ताल्पौकस्त्वानुपपत्त्या तत्र तत्र स्थितत्वरूपसर्वगतत्वासंभवेऽप्यनेकेषां जीवानां तदुपपद्यत एवेत्याक्षेपः श्लिष्टतरो भवति तद्वत्तत्रापि व्याहतेरभावादिति । यद्वा यल्लिङ्गं साध्यसहचरितं न तु तद्विरुद्धं तदेव कस्यचिदर्थस्य साधकं बाधकं वा भवति । निरुक्ताल्पौकस्त्वं परममहत्त्वपरिमाणवत्त्वादिरूपसाध्यविरुद्धं कथं विष्णुग्रहणे बाधकं च स्यात् । अतः साध्यविरुद्धेन लिङ्गेनाक्षेपो नोचित इत्यर्थः । वस्तुतस्तु एतमस्यामित्यादौ यद्येतादृशं सर्वगतत्वमित्युच्यते तदात्रैव सर्वेषु भूतेष्वित्यल्पौकस्त्वाक्षेपो नोपपद्यते । अल्पस्थलेऽवस्थानस्यैतद्वाक्यार्थत्वेन प्रसक्तेरेवाभावादिति द्रष्टव्यम् ।

प० — ननु प्रकृतोपयोगं दर्शयतीत्युक्तं किं प्रकृतं कथमस्य प्रकृतोपयोग इत्यत आह **एतदुक्तमिति** । इतःपरं तत्र तत्रेति वाक्यस्य पञ्चभाष्युपयोगमाह **अथ वेत्यादिना अन्यथाऽनेन व्याचष्ट इत्यन्तेन** ॥ **अत्र तु सर्वपदार्थान्तर्गतत्वमिति** । नन्वेवमपि तदनेन गतार्थं 'आ(त्तं)प्तं वै भूयसा कनीयः' इति न्यायादिति चेत्सत्यम् । चन्द्राद्यन्तःस्थत्वं सर्वगतस्यायुक्तमित्याक्षेपे व्योमवदित्यनेनात्र तदुपपाद्यत इति तात्पर्यात् । वक्ष्यति च 'एतद्वावाभिधमि'त्येतद्व्याख्याने यावन्तः शब्दाः कचित्प्रतीके स्थितिवाचिनस्ते सर्वेऽप्यनेनोपलक्ष्यन्त इति । तत्र कतिपयान्तस्थत्वमित्युक्तिस्तु व्योमवदित्यत्रत्यन्यायानुसंधानेनापि कतिपयान्तःस्थत्वमेव न सर्वान्तस्थत्वमित्यभिप्राया ॥ **अर्भकौकस्त्वादित्याक्षेपानुपपत्तिरिति** । 'सर्वेषु भूतेष्वेतम्' इत्यनेनाकाशादेरिव विभुत्वस्योक्तौ सत्याम् 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति-चेत्' इतिसूत्रे 'सर्वेषु भूतेषु' इत्यल्पस्थानस्थितत्वश्रवणात्तस्यापरिच्छिन्ने हरावयोगान्नात्र विष्णुः प्रतिपाद्यः किन्त्वादित्यादिरेवेति पूर्वपक्षानुपपत्तिरित्यर्थः ॥ **व्याचष्ट इति** । तत्र तत्र स्थित इतिश्लोकेनेति योज्यम् ।

या० — **यदि साध्यमिति** । विचार्यमित्यर्थः । समन्वेतव्यमिति यावत् ॥ **अर्भकौकस्त्वादित्याक्षेपानुपपत्तिरिति** । असिद्धिप्रसङ्गादिति भावः । तथाहि । अयं सर्वगतो न विष्णुः सर्वभूतेष्वित्यनेनास्य सर्वगतस्याल्पमात्रस्थानस्थितिकथनात् । अन्यथा भूतेष्वित्यस्यवैयर्थ्यप्रसङ्गात् । अपरिच्छिन्नपरिमाणे विष्णौ च तदयोगादिति ह्यत्राक्षेपोऽभिमतः । अयं च सर्वगतत्वस्य तत्र तत्र स्थितत्वरूपत्वे

संभवति । तादृशसर्वगते उक्तरूपाल्पौकस्त्वसंभवेनासिद्ध्यभावात् । न तु तस्य सर्वमूर्तसंयोगित्वादिरूपत्वे । तादृशसर्वगते उक्तरूपाल्पौकस्त्वस्य सर्वथाऽप्यसंभवेनासिद्धिप्रसङ्गात् । न ह्यसिद्धं लिङ्गं कस्यचिदर्थस्य साधनाय बाधनाय वा क्षममिति ।

श्री०— अन्यपरं आदित्याख्यजीवपरम् । सर्वमूर्तसंयोगित्वपक्षे दूषणमाह **अर्भकेति** । परममहत्परिमाणपक्षे दूषणमाह **अदृश्यत्वाद्यधिकरणेनेति** । यत्तदद्रेश्यमित्याद्युक्त्वा नित्यं विभुं सर्वगतमिति वाक्योक्तसर्वगतत्वस्यादृश्यत्वाधिकरणे हरौ समन्वितत्वादिति भावः ।

च०— **प्रकृतोपयोगमिति** । उक्तार्थसमर्थकत्वमित्यर्थः । सर्वगतत्वोपपादनस्य प्रकृतार्थनिश्चायकतां संघटयति **एतदुक्तं भवतीति** । **अन्यपरम्** आदित्यादितात्पर्यकम् । **उक्तार्थसमर्थनायेति** । पादान्त्यप्राणनये ब्रह्म ततममिति निरुपपदात्तनोतेर्डप्रत्ययनिष्पन्नतशब्दप्रकृतिकतमबन्तेनाभिहितार्थावधारणायेत्यर्थः । **गुणत्वाभावादिति** । सर्वप्रतियोगिकसंयोगानुयोगित्वरूपसर्वसंयोगित्वात्मकसर्वगतत्वस्य गगनादिसाधारण्येन परमेश्वरासाधारणगुणत्वाभावादिति भावः । **अनेनेति** । प्रकृतपरामर्शकेन सर्वनाम्नेदमा तत्रतत्रेति प्रतीकं कर्मलकारप्रकृत्युपस्थाप्यान्वयिनी हेतुता तृतीययोपस्थाप्यते । **प्रतिपादयिष्यमाणत्वादिति** । करिष्यमाणप्रतिपादनक्रियाकर्मत्वादित्यर्थः । अत्रापि प्रतिपादने पौनरुक्त्यापत्तिरिति भावः । **यदि साध्यमिति** । यदि विचार्यमित्यर्थः । समन्वेतव्यमिति फलिताशयः । **अर्भकौकस्त्वादित्याद्याक्षेपानुपपत्तिरिति** । अयमभिसन्धिः । भूतेष्वित्यस्यार्थवत्ताऽनुरोधेनाल्पाल्पस्थानस्थितितात्पर्यकत्वस्यावश्योपेयतयाऽपरिच्छिन्नपरिमाणे विष्णौ तदयोगेन प्रकृतनयसमन्वेतव्याभिमतसर्वगतत्वस्यासम्भवप्रसङ्गेन न सर्वगतो विष्णुरिति पूर्ववादिमतप्रवृत्तिरत्राभिप्रेता । सा च समन्वेतव्याभिमतसर्वगतत्वस्य तत्तत्स्थानस्थितत्वरूपतायामेव संगच्छते न सर्वमूर्तसंयोगित्वापरिच्छिन्नपरिमाणत्वरूपतायाम् । तथा सति तस्याल्पाल्पस्थानस्थितत्वरूपत्वानापत्त्या अपरिच्छिन्नेपि तादृशयोः सम्भवेन तदसम्भवाभावेन दर्शितपूर्ववादिमतानवतारप्रसङ्गादिति ।

**सु०— तत्तच्छक्तिप्रबोधक इति कथम् । कर्तरि चेति समासप्रतिषेधात् । न । याजकादिभिश्चेति प्रतिप्रसवात् । यद्वा । प्रकृष्टो बोधो यस्मादिति वा पचाद्यजन्तत्वेन वा प्रबोधः । शक्तीनां प्रबोधः शक्तिप्रबोधः । ततश्च 'अज्ञात' ( पा. सू. ५–३–७२ ) इति कप्रत्यय इति ।**

शे०— ननु बुधू इत्यस्मात् ण्वुलि तस्याकादेशे लघूपधगुणे च निष्पन्नबोधकशब्दस्य कर्त्रर्थकाकप्रत्ययान्तत्वेन तद्योगे कर्तरि चेति षष्ठीसमासप्रतिषेधात्कथं शक्तिबोधक इति षष्ठीसमास इत्याशङ्कते

**तत्तदिति** ॥ **कर्तरि चेतीति** । यद्यप्यत्र तृजकाभ्यां कर्तरीति सूत्रे कर्तृग्रहणं तृजकयोरेव विशेषणं युक्तम् । साक्षात् श्रुतत्वात् तृज्ग्रहणं चेहैवोपयुज्यते अयमेको गुण इति भावः । अन्यथा ह्युत्तरार्थता तस्य वक्तव्या स्यात् (अत्रान्वयाभावप्रयुक्तोत्तरार्थत्वमत्रैवान्वयसंभवे नाङ्गीकार्यमिति भावः ) । तृच्प्रयोगे कर्तृषष्ठ्या अभावात्कर्तृकर्मणोरित्यत्रानभिहिताधिकारस्याकरे स्थितत्वात् । तृचा च कर्त्रर्थस्याभिधानात् । ततश्च कर्तरि यौ तृजकौ ताभ्यां कर्मणि षष्ठ्या न समास इत्येव तदर्थः पर्यवस्यति । कर्तरि चेत्यत्र तु कर्तृग्रहणं षष्ठ्या विशेषणम् । तस्याश्चाकेनैव समासप्रतिषेधः । तस्यैव तृजकाभ्यामित्यतोऽनुवृत्तिः । न च तृचोऽप्यनुवृत्तिः । कर्तर्येव तृज्विधानेन कर्तुरभिहिततया तद्योगे कर्तरि षष्ठ्या एवासंभवात् । न चैवं कर्तरि चेत्यत्र तृचः संबन्धाभावान्नित्यं क्रीडाजीविकयोरित्यत्रानुवृत्तिः कथं स्यादिति वाच्यम् । अत्रैव च तस्योपयोगसंभवेनानुवृत्तेरिष्टत्वात् । अत एवोक्तं वृत्तिकृता नित्यं क्रीडाजीविकयोरित्यत्र तृजत्र नास्तीति । ततश्च कर्तरि चेत्यस्य कर्तरि या षष्ठी साऽकेन न समस्यते इत्येवार्थ उपपन्नः । संमतश्च हरदत्तादीनां तृजकाभ्यां कर्तरीत्यत्राथ कस्माद्विपर्ययो नाश्रीयत इत्याशङ्क्य तथाऽनाश्रित्यैवेति स्पष्टमस्य पक्षस्यैव यौक्तत्वसूचनात्ततश्च तत्तच्छक्तीनामिति कर्मषष्ठ्याः कर्त्रर्थकाकप्रत्ययेन समासानिषेधकत्वान्न कर्तरि चेत्यस्य प्रकृते प्रसङ्गः किन्तु तृजकाभ्यामित्यस्यैवेति तृजकाभ्यां कर्तरीति समासप्रतिषेधादित्येव वक्तव्यम् । तथाऽपि जयादित्यमतमाश्रित्यैवमुक्तम् । तन्मते हि तृजकाभ्यां कर्तरीत्यत्र कर्तरि या षष्ठी सा तृजकाभ्यां न समस्यत इत्यर्थः । अत एव कर्तर्येव तृज्विधानात्कर्तुरभिहितत्वेन तृज्योगे कर्तरि षष्ठी नेति अपां स्रष्टेत्यनुदाहृत्य भवतः शायिकेत्येवोदाहृतम् । कर्तरि चेत्यत्र तु कर्तरि यौ तृजकौ ताभ्यां कर्मषष्ठ्या न समास इत्यर्थः । अत्रापि कर्तरीत्येतदकस्यैव विशेषणं तत्रैव सामर्थ्यात् । संभवे व्यभिचारे च सत्येव हि विशेषणविशेष्यभावो भवति । न च तृच्कर्तारं व्यभिचरति तस्य कर्तर्येव विधानादकस्तु व्यभिचरति कर्तारम् । तस्य भावेऽपि विधानात् । ततश्च जयादित्यमते कर्तरि चेत्यस्य कर्मषष्ठ्याः कर्त्रर्थकाकप्रत्ययेन समासप्रतिषेधकत्वाद्युक्तस्तत्तच्छक्तीनामिति कर्मषष्ठ्याः कर्त्रर्थकाकप्रत्ययान्तबोधकशब्देन समासस्य कर्तरि चेत्यनेन प्रतिषेध इति ध्येयम् । वस्तुतोऽत्र कर्तरि चेत्यनेन तृजकाभ्यां कर्तरीत्यस्याप्युपलक्षणतया ग्रहणाज्जयादित्यमतेन कर्तरि चेत्यनेन यौक्तमतेन तृजकाभ्यां कर्तरीत्यनेन कर्मषष्ठ्याः समासप्रतिषेधान्न षष्ठीसमासो युक्त इत्येवाक्षेपग्रन्थार्थ इति न काऽपि कुसृष्टिरित्यवधेयम् ।

**नेति** । याजकादिभिः शब्दैः कर्मणि षष्ठी समस्यत इति सूत्रार्थः ॥ **प्रतिप्रसवादिति** । अन्येन निवर्तितस्य पुनः प्रवृत्त्यभ्यनुज्ञानं प्रतिप्रसव इत्यर्थः । यद्यपि बोधकशब्दो न याजकादिषु पठितस्तथाऽपि याजकादेराकृतिगणत्वाद्विष्णुबोधकमिति समासः साधुरित्यन्यत्रोक्तेस्तस्याकृतिगणत्वाद्युक्तः प्रतिप्रसव इति ध्येयम् । यद्यप्यत्र कर्मणो विद्यमानस्यापि कर्मत्वस्याविवक्षया शेषत्वविवक्षया शेषषष्ठी-

समासो वक्तुं युक्तः । कर्तरि चेत्यस्य तृजकाभ्यां कर्तरीत्यस्य वा कृल्लक्षणषष्ठीसमासप्रतिषेधकत्वेऽपि शेषषष्ठीसमासाप्रतिषेधकत्वात् । न च सतः कर्मत्वस्य कथमविवक्षेति वाच्यम् । यावद्वस्तुनि वर्तते तावदवश्यं प्रयोगे विवक्षितव्यमेवेति नियमाभावेन तत्संभवात् । अन्यथा वृक्षस्य शाखेत्यादावधिकरण-त्वादेर्विद्यमानत्वेन तद्विवक्षाऽऽवश्यक्या सप्तमीप्रसङ्गेन षष्ठ्यभावप्रसङ्गात् । अत एवाह भाष्यकारः । एवं तर्हि कर्मादीनामविवक्षा शेष इति । ततश्च तृजकाभ्यां योगे कर्तृकर्मणोः कृतीति प्राप्तषष्ठ्याः समासा-संभवेऽपि शेषषष्ठ्याः समासो युज्यत एव । अत एवाह कैयटः । कथं तर्हि घटानां निर्मातुस्त्रिभुवन-विधातुश्च कलह इति शेषषष्ठ्या समास इति । किं च कर्मत्वविवक्षायामपि न कर्तृकर्मणोः कृतीति प्राप्तकृल्लक्षणषष्ठीसमासानुपपत्तिः । जनिकर्तुः प्रकृतिस्तत्प्रयोजको हेतुश्च जातिवाचको गुणो गुणिविशेषक इत्यादित्रिमुनिनिर्देशेन कर्तरि चेति तृजकाभ्यां कर्तरीति वा निषेधस्यानित्यत्वज्ञापनेन क्वचिदप्रवृत्ति-संभवात् । अत एव 'भीष्मः कुरूणां भयशोकहन्ता'। 'हितकारक' इत्यादिप्रयोगा अप्युपपन्नाः । तथाच याजकादित्वाश्रयणमनर्थकमिव भाति । तथाऽपि कर्मत्वविवक्षां कर्तरि चेत्यादेः षष्ठीसमासनिषेधस्य नित्यत्वविवक्षां चाश्रित्य याजकादित्वाश्रयणं कृतमिति ध्येयम् । न चैवमपि कर्मणि चेति कर्मणि षष्ठ्याः समासप्रतिषेधात्कथमत्र षष्ठीसमास इति वाच्यम् । कर्मणि चेत्यनेनोभयप्राप्तौ कर्मणीत्यस्या एव समासनिषेधेन कर्तृकर्मणोः कृतीति कृल्लक्षणषष्ठ्याः समासस्योपपन्नत्वात् । यदि च या काचन कर्मणि षष्ठी गृह्येत तथा सति कर्तरि चेति वा तृजकाभ्यां कर्तरीति वा निषेधो व्यर्थ एव स्यात् कर्मणि चेत्यनेनैव सिद्धत्वादिति सर्वमनाकुलम् ।

एवं निषेधप्रसक्तावपि प्रतिप्रसवात्समाससंभवोऽभिहितः । अधुना प्रतिषेधप्रसङ्ग एव नेति समाधानान्तरमाह **यद्वेति** । अत्र च बहुव्रीहिपक्षे मत्वर्थीयपचाद्यजन्तपक्षेऽपि प्रबोधवत्त्वं कर्तृता-संबन्धेनैव विवक्षितमिति न प्रकृतवाक्यार्थासङ्गतिरिति ज्ञेयम् । (इदं विचार्यम्) ॥ **शक्तीनां प्रबोध इति** । तथा च कर्तरि चेति निषेधप्रसक्तिरेव नेति भावः । नन्वस्मिन्पक्षे शक्तिप्रबोध इत्येव स्यान्न तु शक्तिप्रबोधक इति तत्राह **ततश्चेति** ॥ **अज्ञात इतीति** । अज्ञात इति सामान्येनोच्यते । न च सर्वथाऽज्ञातेऽर्थे शब्दप्रयोग एव संभवति । न खल्वश्व इत्यजानन्नश्वशब्दं प्रयोक्तुमर्हति । तथा च स्वरूपेण ज्ञाते पदार्थे विशेषरूपेणाज्ञाते कविधानमेतत् । अत एवोक्तं 'प्रयोगोऽस्य कथं नु स्यादज्ञातः सर्वथैव यः । तस्माद्धर्मान्तराज्ञानमज्ञानं न स्वरूपत' इति । ततश्च स्वरूपेण ज्ञातस्याप्यश्वस्य स्वामि-विशेषसंबन्धाज्ञानादज्ञातविशेषत्वेनाज्ञातत्ववत्तच्छक्तिप्रबोधस्यापि स्वरूपेण ज्ञातस्य विशेषरूपेणाज्ञानाद-ज्ञातत्वमेवेति युक्तोऽश्वक इत्यादाविवात्रार्थे (=अज्ञातार्थे) वर्तमानात्प्रातिपदिकात्स्वार्थे प्रागिवात्क इत्यधिकृतः कप्रत्यय इति भावः ।

स०— कर्तरि शप्प्रत्ययः ण्वुलि चाविति कृते युवोरनाकाविति अकादेशे कृते पुगन्तलघूपधस्य चेति गुणे च सति बोधक इति रूपम् ॥ **कर्तरि चेति** । कर्त्रर्थतृजकाभ्यां षष्ठ्या न समास इति सूत्रार्थः । अपां स्रष्टा सतामर्चक इत्युदाहरणमत्र द्रष्टव्यम् ॥ **याजकादिभ्यश्चेतीति** । एतैः षष्ठी समस्यत इत्यर्थः ॥ **प्रतिप्रसवादिति** । कर्तरि चेति प्रतिषेधे प्राप्ते वचनमारभ्यते प्रसवार्थमिति काशिकायामुक्तेरिति भावः । याजकादेराकृतिगणत्वमभिप्रेत्येत्थं समाहितम् । तदभावे प्रकारान्तरमप्याह **यद्वा प्रकृष्टो बोध इति** । भावे घञ्नन्दिग्रहिपचादिभ्यो ल्युणिन्यच इति पचाद्यजन्तं वा । अत्र बोधकशब्दस्य कप्रत्ययान्तत्वेनाकत्वाभावान्न कर्तरि चेति प्रतिषेधप्राप्तिरिति भावः । बहुव्रीहिपक्षे मत्वर्थीयपचाद्यजन्तत्वपक्षे वा प्रबोधत्वं कर्तृतासंबन्धेनैव ज्ञेयम् ॥ **अज्ञात इतीति** । संबन्ध्यादिना अज्ञातेऽर्थे कप्रत्ययः स्यादिति सूत्रार्थः । कस्यायमश्वः अश्वक इत्युदाहरणमत्र बोध्यम् । प्रकृते पदार्थानां शक्तिप्रबोधे सामान्यतो ज्ञाते ईश्वरकृतत्वाज्ञानात्कप्रत्यय इति भावः ।

प०— समासानुपपत्तिमाशङ्कते **तत्तच्छक्तिप्रबोधक इति कथमिति** ॥ **कर्तरि चेति** । 'कर्त्रर्थकतृजकाभ्यां सह षष्ठी न समस्यते' इति द्वितीयाध्यायद्वितीयपादे निषेधादित्यर्थः । यत्तु 'तृजकाभ्यां कर्तरि' इति सूत्रमुदाहार्यम् । तस्यैव 'कर्त्रर्थकतृजकाभ्यां सह षष्ठी न समस्यते' इत्यर्थः । न तु 'तृजकाभ्यां सह कर्त्रर्थकषष्ठी न समस्यते' इति । तथात्वे तृचः कर्तर्येव विधानेन तद्योगेऽकर्त्रर्थकषष्ठ्या असंभवेन तृज्ग्रहणानर्थक्यप्रसङ्गात् । कर्तरि चेति तदुत्तरसूत्रस्य तु तृजकाभ्यां सह कर्त्रर्थकषष्ठी न समस्यत इति । तथैव मञ्जर्यामुक्तेरिति । तन्न । वृत्तौ तृज्ग्रहणमुत्तरार्थमित्युपेत्य कर्तरीति षष्ठीविशेषणं चोपेत्य कर्तरि षष्ठीसमासनिषेधस्य पूर्वसूत्रार्थत्वमुक्त्वा कर्तरि चेत्यस्य कर्त्रर्थकतृजकाभ्यां षष्ठी न समस्यत इत्युक्तत्वात्तदनुरोधेनेयमुक्तिरिति ध्येयम् । मञ्जर्युक्तेर्दूषणं त्वनवसरत्वान्नोच्यते ॥ **याजकादिभिश्चेति** । याजकपूजकादिशब्दैः कर्त्रर्थकतृजकान्तैरपि षष्ठी समस्यत इति पुनः षष्ठीसमासविधानाद्याजकादिगणेऽस्यापि शब्दस्य पठितव्यत्वादिति भावः । प्रतिप्रसवो निषेधस्यापवादः । वृत्त्यादौ याजकादिगणमध्ये बोधकशब्दस्यापाठादाह **यद्वेति** ॥ **पचादीति** । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इतिसूत्रे पचादिगतशब्देभ्योऽच्प्रत्ययविधानात्पचादिगणस्य च 'अजपि सर्वधातुभ्यो वक्तव्यः' इति भाष्योक्तेः 'यङोचि च' इतिसूत्रेऽज्ग्रहणेन ज्ञापनाद्वा आकृतिगणत्वात्प्रकर्षेण बोधयतीत्यर्थे प्रपूर्वाद्बुध अवबोधने इत्यतो ण्यन्तादच्प्रत्यये पुगन्तेति गुणे णेरनिटीति णिलोपे सति प्रबोध इति रूपम् । तेन'इगुपधज्ञाप्रीकिरः कः' इति भाव्यमिति चोद्यानवकाशः ॥ **अज्ञात इति** । अज्ञाते अज्ञातेऽर्थे कप्रत्ययो भवतीति सूत्रस्यार्थः । शक्तिप्रबोधनमन्यैर्न ज्ञायत इत्यर्थः ।

या० — **कर्तरि चेति**। कर्त्रर्थतृजकाभ्यां षष्ठ्या न समास इति सूत्रार्थः। अपां स्रष्टा सतामर्चक इत्युदाहरणम्। एवं चात्र कर्त्रर्थकेन षष्ठ्याः कथं समासोपपत्तिरित्याशयः॥ **याजकादिभिश्चेति**। एतैः षष्ठी समस्यत इत्यर्थः। ननु याजकादिष्वस्यापाठादाकृतिगणत्वस्याप्यत्राकथनात्कथमिदं समाधानमित्यस्वरसादाह **यद्वेति**। बहुव्रीहिपक्षे मत्वर्थीयपचाद्यजन्तत्वपक्षे वा प्रबोधवत्त्वं कर्तृतासंबन्धेनैव विवक्षितम्। अतः प्रकृतवाक्यार्थसङ्गतिरिति ध्येयम्॥ **अज्ञात इतीति**। संबन्ध्यादिनाऽज्ञातेऽर्थे कप्रत्ययः स्यादिति सूत्रार्थः। कस्यायमश्वः अश्वक इत्युदाहरणम्। तथा च प्रबोधक इत्यस्याकत्वाभावान्न 'कर्तरि चे'ति प्रतिषेधप्राप्तिरिति भावः। न च प्रकृते तत्तच्छक्तिप्रबोधवतः किंसंबन्धित्वेनाज्ञानं यदर्थे कप्रत्यय इति वाच्यम्। न ह्यत्र संबन्धित्वेनैवाज्ञाते कप्रत्ययः इति विवक्षितं किंतु स्वरूपेण ज्ञातेऽपि धर्मान्तरेणाज्ञात इत्येव। यथाऽऽहुः। 'प्रयोगोऽस्य कथं नु स्यादज्ञातः सर्वथैव यः। तस्माद्धर्मान्तराज्ञानमज्ञानं न स्वरूपतः' इति। तथा चैकस्यैकदैवानन्तपदार्थेषु स्थित्वा तत्तच्छक्तिप्रबोधकर्तृत्वमस्मदादिष्वविद्यमानमैश्वर्यादिकं संभावकं विना न ज्ञातुं शक्यमित्यर्थे कप्रत्यय इत्याशयात्।

श्री० — **प्रतिप्रसवः** निषेधस्यापवादः।

च० — अथावगमार्थस्य बुधेर्ण्वुलि युवोरिति तस्य अकादेशे पुगन्तेति लघूपधगुणे च निष्पन्नबोधकशब्दस्य वज्रस्य धर्ता, ओदनस्य पाचक इत्यादेरिव कर्तरि चेति कर्त्रर्थतृजकसमभिव्याहारे षष्ठीसमास प्रतिषेधगोचरतया षष्ठ्यन्तशक्तिपदेन न समास इत्याशङ्कते। **कर्तरि चेतीति**। अथ तृजकाभ्यां कर्तरीति सूत्रे प्रकृतिप्रत्यायितकर्त्रनिरूतसप्तम्यर्थदाचकत्वस्य समभिव्याहृतपदोपस्थाप्यतृजकान्वितत्वैव नानुवृत्तपदबोध्यषष्ठ्याम्। कर्तृकर्मणोरित्यत्रानभिहिताधिकारस्याकरे समर्थिततया तृचः कर्त्रर्थकतानैय्यत्येन तत्समभिव्याहारे कर्त्रर्थकषष्ठ्या अप्रसङ्गेन तत्र तदन्वयस्य दुरुपगमत्वात्। तथाच कर्तृनिरूपितवाचकताविशेषिततृजकाभ्यां कर्मसाधनषष्ठी न समस्यत इति तत्सूत्रार्थः पर्यवासासीत्। उदाजह्रुश्च तत्र अपां स्रष्टा, ओदनस्य पाचक इति कर्मणि षष्ठीघटितान्येव। कर्तरि चेत्यस्य तु धात्वर्थनिर्देशे ण्वुल् वक्तव्य इति भावेपि ण्वुलो विहिततया तत्समभिव्याहारे कर्तरिषष्ठीप्रसङ्गेन तादृशी सा तृजकाभ्यां न समस्यत इति। प्रकृते च भावसाधनषष्ठीघटितमेव भवतः शायिकेति। इत्थं च प्रकृते कर्मणि षष्ठीसमासनिषेधकतृजकाभ्यामित्यस्यैवोदाहार्यतया कथं कर्तृषष्ठीसमासनिषेधकं कर्तरि चेत्युदाहार्षुरिति चेत् सत्यं। जयादित्यमते तृजकाभ्यां कर्तरीत्यत्र तु सप्तम्यन्तार्थस्यानुवृत्तपदार्थेऽन्वयमुपेत्य कर्तरि या षष्ठी सा तृजकाभ्यां न समस्यत इत्यर्थे भवतः शायिकेति कर्तृषष्ठीघटितस्यैवोदाहृततया कर्तरिचेत्यत्र तु सप्तम्यन्तार्थस्यानुवृत्ततृजकाभ्यां इत्येकदेशेनाकेनान्वयमूरीकृत्य कर्मणि या षष्ठी सा तृचा कर्त्रर्थकाकेन च न समस्यत इत्यर्थे कर्मणिषष्ठीघटितानामेवोदाहरणेन तन्मताभिप्रायकतया प्रकृतग्रन्थसामञ्जस्यात्। मतान्तरे तु कर्तरि

चेत्यस्य तृजकाभ्यामित्येतदुपलक्षकत्वोपगमान्न क्षतिरित्याकरदृशां निरूढः पन्थाः । **याजकादिभिरिति** । एतैः षष्ठी समस्यत इत्यर्थः । **प्रतिप्रसवादिति** । केनचिद्योगेन प्रतिषिद्धस्य पुनः प्रवृत्त्यभ्यनुज्ञानं प्रतिप्रसवः । बोधकशब्दस्य गणपाठाभावेऽपि तस्याकृतिगणत्वं पाणिनीयैरङ्गीकृतमित्याशयेनेयं समाहितिः कर्मत्वस्यापि सम्बन्धत्वेन बोधविवक्षायामेव । तर्हि कर्मादिनामविवक्षा शेष इति भाष्यकारोक्त्या कथं तर्हि 'घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः' इति शेषषष्ठ्या समास इति कैय्यटेनाभिहिततया जनिकर्तुः प्रकृतिस्तत्प्रयोजको हेतुश्च जातिवाचको गुणे गुणिविशेषक इत्यादिमुनित्रयनिर्देशेन च समासः संगच्छत एव । कथमन्यथा भीष्मः कुरूणां भयशोकहन्तेत्याद्यभियुक्तप्रयोगाः संगच्छेरन्निति ध्येयम् । तत्रासम्प्रतिपत्तौ तु विधान्तरेणापि समाधत्ते **यद्वेति** । एवं निषेधं प्रसज्य प्रतिप्रसवेन समाहितम् । सम्प्रति निषेध एव न प्रसज्यत इति समाहित्यन्तरमाह यद्वेतीत्यपि स्थितम् । तथा सति ककारविनिर्मुक्तन्यासेन भवितव्यमित्येतत्परिजिहीर्षति **अज्ञात इति** । प्रकृत्युपस्थाप्यज्ञानत्वावच्छिन्ननिरूपितनिष्ठोपस्थापितविषयत्वावच्छिन्नप्रतियोगिताकपर्युदासनञ्बोध्यभेदवत्यर्थे प्रागिवात्क इत्यधिकृतःकोऽनुशिष्टः । 'प्रयोगोस्य कथं नु स्यादज्ञातः सर्वथैव यत् तस्माद्धर्मान्तराज्ञानमज्ञानं न स्वरूपतः ।' इत्युक्त्या कस्यायमश्वोऽश्वक इत्याद्युदाहरणेषु तादृशार्थबाधात्प्रकृत्यंशस्य धर्मविशेषोपरक्तज्ञानत्वावच्छिन्नलक्षकतामुपेत्याश्वस्याश्वत्वादिनावगमेऽपि पुरुषविशेषनिरूपितत्वाश्रयणेनानधिगमादुदाहरणत्वं संगमनीयम् । इत्थं च प्रकृतेऽपि स्वनिरूपितकर्तृतासम्बन्धेन शक्तिप्रबोधवतः परमात्मनः सामान्यधर्मपुरस्कारेणाधिगमेपि धर्मविशेषोपरागेणानधिगमात्प्रकृतसूत्रोदाहरणत्वं संगच्छेत इति मन्तव्यम् ।

सु०— अत्र सूत्रम् कर्मकर्तृव्यपदेशाच्चेति ।

**अस्यार्थः । आत्मानं परस्मै शंसतीति शंसनक्रियायामात्मनः सर्वगतस्य कर्मत्वेन शारीरस्य कर्तृत्वेन व्यपदेशाच्च न शारीरोऽयं सर्वगतः । एकस्यां क्रियायां कर्मकर्त्रोरेकत्वायोगात् । न हि देवदत्तः छिदायां कर्ता कर्मापि भवतीति । तत्र किं कर्मकर्तृभावो भेदव्याप्य उत नेति । नाद्यः । नियामकाभावेन व्याप्तेरनिश्चयात् । स्यादेतत् । क्रियाश्रयः कर्तेति तावत्प्रसिद्धम् । परसमवेतक्रियाजन्यफलशालिकर्मेत्युच्यते । यथा देवदत्तसमवेतगतिक्रियाफलसंयोगशाली ग्रामः । क्रियाफलशालित्वेनैव कर्मत्वे संयोगशालिनो देवदत्तस्यापि तत्प्रसंगः । तथात्वे च देवदत्तं ग्रामं गच्छतीति द्वितीया स्यात् । अतो लक्षणविरोधात्कर्मकर्त्रोर्भेदो नियत इति ।**

शे० — ॐ **कर्मकर्तृव्यपदेशाच्च** ॐ ॥ शंसनक्रियायामित्युपलक्षणं । आत्मानं वेदेति वेदनक्रियायां यस्तस्याजेति त्यागक्रियायामित्यपि द्रष्टव्यम् । एकस्यां क्रियायामेकस्यैव कर्मकर्तृभावविरोध उक्तस्तमाक्षिपति **तत्रेति** ॥ **नियामकाभावेति** । अनुकूलतर्काभावेनेत्यर्थः । लक्षणविरोध एवानुकूलतर्को भविष्यतीति नियामकाभावोऽसिद्ध इत्याशङ्कते **स्यादेतदिति** ॥ **क्रियाश्रय इति** । क्रियानुकूलव्यापाराश्रय इत्यर्थः । तेन । द्विधाभवनादिरूपक्रियाश्रये दार्वादौ कर्मणि नातिप्रसङ्गः । तस्य द्विधाभवनक्रियाश्रयत्वेऽपि तदनुकूलव्यापाराश्रयत्वाभावादिति भावः । प्रसिद्धवैयाकरणानामिति शेषः । मीमांसकाद्यभिमतं कर्मलक्षणमाह **परेति** । नन्वत्रान्यसमवेतत्वं क्रियाविशेषणं वा फलविशेषणं वाऽभिमतम् । आद्येऽप्यन्यत्वं क्रियाश्रयापेक्षया विवक्षितं फलाश्रयापेक्षया वा । नाद्यः । क्रियाऽऽश्रयादन्यत्र क्रियाया असम्भवात् । न द्वितीयः । ग्रामं गच्छतीत्यादौ गमनक्रियायाः संयोगरूपफलाश्रयाद्देवदत्तशरीरादन्यत्रासमवेतत्वेन ग्रामादेरकर्मत्वप्रसङ्गात् । न द्वितीयः । उक्तविकल्पक्रमेणातिव्याप्त्यसम्भवप्रङ्गात् । गमनक्रियाश्रयदेवदत्तान्यग्रामनिष्ठसंयोगरूपफलभागिनि देवदत्त एवातिव्याप्तेः । फलाश्रयादन्यत्र फलासम्भवाच्च । अथ कर्मापेक्षमेवान्यत्वं विवक्षितं तदाऽऽत्माश्रयत्वप्रसङ्गः । कर्तर्यतिव्याप्तेश्च । एतेन कर्तुरेवान्यपदार्थत्वेन कर्तृसमवेतक्रियाफलशालित्वस्यैव लक्षणार्थत्वान्नात्माश्रयप्रसंग इति निरस्तम् । तावताऽपि कर्तर्यतिव्याप्तेरपरिहारात् । तत्कथमिदं कर्मत्वलक्षणमिति चेन्न । तत्क्रियानधिकरणत्वे सति तत्क्रियाफलशालित्वस्यैव समुदायार्थत्वेन विवक्षितत्वात् । लक्ष्ये लक्षणं योजयति **यथेति** । अत्र फलभागित्वं कर्मत्वमित्युक्ते पुण्यफलसुखादिशालिन्यतिप्रसक्तेस्तन्निरासाय क्रियापदोपादानम् । सत्यन्तपदव्यावर्त्यमाह **क्रियाफलशालित्वेनेति** । गमनफलं ग्रामदेवदत्तप्राप्तिः । सा चोभयनिष्ठत्वाद्गमनकर्तर्यपीति तस्यापि क्रियाफलशालित्वेन कर्मत्वप्रसक्तिरित्यर्थः । अस्तु देवदत्तस्यापि कर्मत्वम् । किं तावताऽपीत्यत आह **तथात्वे चेति** । न च देवदत्तस्य क्रियाजन्यफलशालित्वेन कर्मत्वेऽपि न तत्र द्वितीयाप्रसङ्गः । कर्मणि द्वितीयेति सूत्रेऽनभिहिताधिकारेणानभिहित एव कर्मणि द्वितीयाऽविधानात् । प्रकृते च देवदत्तस्य गच्छतीति तिङाऽभिहितत्वात्तत्कथं द्वितीयापादनमितिवाच्यम् । गच्छतीत्यनेन कर्तृत्वविशिष्टदेवदत्तस्याभिधानेऽपि कर्मत्वविशिष्टस्य तस्यानभिधानेन द्वितीयाऽऽपादनसम्भवात् । अन्यथा मामहं जानामित्यादावपि द्वितीया न स्यादित्यत्र तात्पर्यात् । अतस्तद्व्यावृत्त्यर्थं सत्यन्तं गृहीतमिति शेषः । ततश्च देवदत्तस्य स्वसमवेतगतिक्रियानधिकरणत्वाभावान्न तत्रातिप्रसङ्ग इति भावः ॥ **अत इति** । कर्मलक्षणपरपदेन क्रियाश्रयस्य कर्तुः कर्मान्यतोक्तेः कर्मकर्त्रोः एक्ये निरुक्तकर्मलक्षणस्य तत्राव्याप्तिप्रसंङ्गात्तयोर्भेद एवावश्यक इत्यनुकूलतर्क एवोक्तव्याप्तिनियामक इति भावः ।

**स०**— एकक्रियायां एकस्यैव कर्मकर्तृभावविरोध उक्तस्तमाक्षिपति **तत्रेति** । नियामकमाशङ्कते । **स्यादेतदिति** । परसमवेतपदव्यावृत्तिं दर्शयति **क्रियेति** । अस्तु तर्हि देवदत्तस्यापि कर्मत्वमित्यत आह **तथात्वे चेति** । ननु देवदत्तस्य क्रियाफलशालित्वेन कर्मत्वेपि न द्वितीयाप्रसङ्गः कर्मणि-द्वितीयेति सूत्रेऽनभिहित इत्यधिकारेण तिङाद्यनभिहिते कर्मद्वितीयाविधानात् प्रकृते च देवदत्तस्य गच्छतीति तिङाभिहितत्वात् कथं द्वितीया स्यादिति चेन्न । गच्छतीति कर्तरिप्रत्ययस्य समागतत्वात् तेन च कर्तृत्वविशिष्टस्याभिधानेऽपि कर्मत्वविशिष्टस्यानभिधानेन कर्मणो वाऽनभिहितत्वेन द्वितीयाप्राप्तेरावश्यकत्वादिति भावः । अस्तु नामैवं कर्मत्वलक्षणं ततः किमित्यत आह **अत इति** । कर्मलक्षणे परसमवेतपदेन तत्क्रियाऽनधिकरणत्वं विवक्षणीयम् । अन्यथा कर्मापेक्षया परत्वविवक्षायामात्माश्रयत्वम् । परशब्देन कर्तृत्वविवक्षायां च कर्तर्यतिप्रसङ्गतादवस्थ्यमित्यादिदूषणावकाशप्रसङ्गात् । तथाच तत्क्रियाऽनधिकरणत्वेसति तत्क्रियाजन्यफलशालित्वं कर्मत्वमिति पर्यवस्यति । एवं च स्फुटो विरोधः । कर्तृत्वस्य क्रियाऽऽश्रयत्वरूपत्वेनोक्तत्वादिति । वस्तुतस्तु परमसवेतपदेन कर्तृभिन्नत्वस्यैव विवक्षितत्वेन कर्तुः अन्यत्वं नास्तीति विरोध इति द्रष्टव्यम् । नन्विदं कर्मलक्षणं देवदत्तो दारु छिनत्तीत्यादावव्याप्तम् । धात्वर्थक्रियाया एवात्र क्रियापदेन विवक्षित्वात् । दार्वादेश्च तदाश्रयत्वात् । कर्तृत्वलक्षणं च दार्वादावतिव्यापकमिति चेन्न । अयमस्याः क्रियायाः कर्तेति प्रतीतिसाक्षिकसंबन्धविशेषेणैव क्रियाऽनाश्रयत्वाऽऽश्रयत्वयोर्विवक्षितत्वे दोषाभावात् दार्वादावुक्तसंबन्धविशेषेण क्रियाऽऽश्रयत्वाभावादिति । वस्तुतस्तु कर्तृव्यापारलक्षणक्रियाया एव धात्वर्थत्वेन तदाश्रयत्वस्य दार्वादावभावेन नाव्याप्तिः कर्तर्यैव तदाश्रयत्वस्य सत्त्वेन अतिव्याप्तिश्च नेति द्रष्टव्यम् । यथोक्तं 'क्रियैव वाच्या धातूनां कर्तृव्यापारलक्षणा । स्वैकनिष्ठक्रियार्थत्वे धात्वर्थेष्वक्रियात्मसु' इति ।

**प०**— **अत्रेति** । अस्मिन्नधिकरणे तृतीयं गुणसूत्रमित्यर्थः । अत्र सूत्रे कर्मकर्त्रोर्भेदमुपेत्य पूर्वपक्षो निरस्तः । स तु भेदोनुव्याख्याने उत्सर्गतोऽनियत इत्युच्यते । तत्र भेदस्यौत्सर्गिकत्वोक्तिबीजं विवक्षुः सूत्रार्थं तावदनुवदति **अस्यार्थ इत्यादिना** ॥ **तत्रेति** । एवं सूत्रार्थे सतीत्यर्थः । व्याप्तो नेति पक्षे परिशेषयितुं व्याप्तिपक्षं तावन्निराह **नाद्य इति** । ननु नियामकाभावेनेत्यसिद्धम् । कर्मकर्त्रोर्भेदाभावे कर्मादिलक्षणविरोधस्य व्यभिचारादर्शनसहकृतसहचारदर्शनस्य च नियामकस्य भावादित्यत आद्यं तावदाशङ्क्य निराह **स्यादेतदित्यादिना को विरोध इत्यन्तेन** ॥ **क्रियाऽऽश्रय इति** । गमनादिरूपक्रियाऽऽश्रय इत्यर्थः ॥ **लक्षणेति** । अन्यत्वगर्भितकर्मलक्षणविरोधादित्यर्थः ।

**या०**—**नियामकाभावेनेति** । विपक्षे बाधकाभावेनेत्यर्थः ॥ **क्रियाऽऽश्रय इति** । अत्र क्रियापदेन कर्तृव्यापारो ग्राह्यः । तेन द्विधाभवनादिरूपक्रियाऽऽश्रये दार्वादौ कर्मणि नातिव्याप्तिः । द्विधा-

भवनादिरूपकर्तृव्यापारानाश्रयत्वादिति ध्येयम् । गतिक्रियेत्यत्रापि गत्यनुकूलो व्यापार एव विवक्षितः ॥ **तथात्वे देवदत्तमिति** । ननु देवदत्तस्य क्रियाजन्यफलशालित्वेन कर्मत्वेऽपि न तत्र द्वितीयाप्रसङ्गः । तस्य गच्छतीति तिङाऽभिहितत्वात् । कर्मणि द्वितीयेत्यत्र चानभिहित इत्यधिकारेण तिङाद्यनभिहित एव कर्मणि द्वितीयाविधानात् । अतः कथं देवदत्तमिति द्वितीयाऽऽपादनमिति चेन्न । गच्छतीत्यनेन कर्तृ-त्वविशिष्टदेवदत्तस्याभिधानेऽपि कर्मत्वविशिष्टस्य तस्यानभिधानेन मामहं जानामीत्यादाविव तत्र द्विती-याऽऽपादनसम्भवादित्याशयात् । द्वितीया स्यादित्यस्यानन्तरमतःपरसमवेतेति क्रियाविशेषणमावश्यक-मिति पूरणीयम् ॥ **अतो लक्षणेति** । कर्मलक्षणे परपदेन क्रियाश्रयस्य कर्तुः कर्मान्यताप्रतीतेः । तयोरैक्ये इदं कर्मलक्षणं तत्राव्याप्तमसमञ्जसं स्यादिति तयोर्भेद आवश्यक इत्यनुकूलतर्क एवोक्तव्याप्तिनियामक इति भावः ।

श्रीं० — ॐ **कर्मकर्तृव्यपदेशाच्च** ॐ ॥ **द्वितीया स्यादिति** । तथाच तत्रातिव्याप्तिपरिहाराय परसमवेतेत्युक्तमिति भावः । ननु परशब्दस्य कर्मान्यत्वमर्थः । तथा च पुनः कर्तर्यव्याप्तिरेवेति चेन्न । परसमवेतेत्यस्य कर्त्रन्यत्वे सतीत्यत्र तात्पर्यात् ।

च० — **शंसनक्रियायामिति** । आत्मानं वेदेति वेदनक्रियायां यस्त्यजेति त्यजनक्रियायामिति चोपस्कर्तव्यम् । एकक्रियानिरूपितकर्तृत्वकर्मत्वे एकस्यां व्यक्तौ न घटेते विरोधादित्यभिहितार्थमाशङ्कते **तत्रेति** । **कर्मकर्तृभावः** एकक्रियानिरूपितकर्मकर्तृभावः । **भेदव्याप्तः** तादृशकर्मत्वकर्तृत्वान्यतरावच्छिन्न-प्रतियोगिताकभेदव्याप्तः । **नियामकाभावेनेति** अनकूलतर्काभावेनेत्यर्थः । लक्षणविरोधमेवानुकूलतर्क-मन्वानोनियामकाभावासिद्धिमाशङ्कते **स्यादेतदिति** । **क्रियाऽऽश्रय इति** । अत्र व्यापारमात्रं धात्वर्थः । जन्यजनकभावस्य विनैव पदार्थत्वं संसर्गमर्यादया भानं सम्भवनीति फलमात्रं कर्मप्रत्ययार्थः । फल-विशेषान्वयबोधे च धातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया ग्रामं त्यजतीत्यादौ धात्वर्थस्पंदेग्रामनिष्ठविभाग-जनकत्वमेव ग्रामं गच्छतीत्यादौ च ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते न तु विपरीतम् । तादृश-व्यापारदाभिधेयं धात्वर्थाश्रयत्वमेव गच्छत्युत्पद्यते जानातीत्यादौ कर्तृत्वं गलाधःसंयोगानुकूलक्रिया-नुकूलव्यापाररूपभोजनकंठताल्वभिघातरूपपाठनिरूपितं च तदनुकूलकृतिमत्वरूपं नाशनिरूपितं च प्रति-योगित्वमिति नानैव निर्णीतम् । ग्रामं गच्छतीतिवत् स्वं गच्छतीति प्रयोगवारणाय परसमवेतत्वमपि स्वातन्त्र्येण द्वितीयार्थ इष्यते । तस्य च धात्वर्थेन्वयः । परत्वे चैकदेशेपि आकांक्षावैचित्र्यात्प्रकृत्यर्थस्य प्रतियोगितयान्वयः । **एवंच** ग्रामं गच्छति चैत्र इत्यादौ ग्रामभिन्नसमवेता ग्रामनिष्ठसंयोगजनिका या क्रिया तदाश्रयतावांश्चैत्र इत्यन्वयबोधः । अत्र च स्वस्यापि द्वित्वावच्छिन्नस्वभेदवत्त्वात् स्वं गच्छतीति

प्रयोगस्य दुर्वारतया द्वितीयाप्रकृत्यर्थतावच्छेदावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैवान्वयोपगमे च चैत्रो द्रव्यं गच्छति मल्लो मल्लं गच्छतीत्यादेरनिर्वाहात्। एतन्निर्वाहाय क्रियान्वयिभेदप्रतियोगितावच्छेदकत्वमेव-द्वितीयार्थ इत्यूरीकारेपि विहंगो भूमिं प्रयातीतिवत् विहंगो विहंगं गच्छतीति प्रयोगापत्तेर्दुर्वारत्वात्। एतद्विहंगवृत्तिभूमिसंयोगजनकक्रियाया अपि विहङ्गान्तरनिष्ठाभेदप्रतियोगितावच्छेदकत्वात्। अतो विहङ्गो विहङ्गं गच्छतीत्यादौ विहङ्गादिवृत्तित्वविशिष्टसंयोगस्य स्वनिरूपितजनकत्वस्वाश्रयनिष्ठभेदप्रतियोगिताव-च्छेदकत्वोभयसम्बन्धेनान्वयोपगमात् विहङ्गनिष्ठक्रियायास्तद्विहङ्गनिष्ठसंयोगजनकत्वेन तज्जनकत्वसंबन्धेन तत्संयोगवत्वेपि विहङ्गवृत्तित्वविशिष्टतत्संयोगाश्रयतद्विहङ्गनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावात् नोक्तो-भयसम्बन्धेन विशिष्टसंयोगवत्त्वमित्यनतिप्रसङ्गादिति न्यायनये प्रपञ्चितं प्राचीनमतमनुसन्धेयम्। नव्यमते तु फलावच्छिन्न व्यापारो धात्वर्थः फलान्वय्याधेयत्वं द्वितीयार्थः शेषं समानमित्थं च धातुवृत्तिग्रहविशे-ष्याश्रयः कर्तेति सौधाक्षरार्थपर्यवसित्या क्रियापदेन परिस्पन्दमात्रानुपादानात् भुज्यादिशक्यतावच्छेदक-कोटिनिविष्टक्रियापरपर्यायपरिस्पन्दस्यादनादिकर्मसाधारण्येपि न क्षतिरिति ध्येयम्। अत्र व्याचक्षणाः अत्र क्रियापदेन कतृव्यापारो ग्राह्यस्तेन द्विधाभवनादिरूपक्रियाश्रये दार्वादौ कर्मणि नातिव्याप्तिः। द्विधाभवनादिरूपक्रियाश्रये कतृव्यापाराना श्रयत्वसत्त्वादिति ध्येयम्। गतिक्रियेत्यत्र गत्यनुकूलो व्यापारो विवक्षितः' इति व्याचचक्षिरे। नन्वत्र देवदत्तस्य क्रियाफलशालित्वेपि न तद्वाचकपदोत्तरं द्वितीयापादन-सम्भवः। कर्मणि द्वितीयेत्यत्रानभिहिताधिकारस्य समर्थिततया प्रकृते च देवदत्तस्य समभिव्याहृत-लकाराभिहितत्वादिति चेन्न। कर्तरिकृदित्यत्र यत्कर्तृग्रहणं तदेव लःकर्मणीत्यत्र चकारेणानुकृष्यत इति ण्वुलादीनां लकाराणां च शक्तौ वैलक्षण्याभावेनाकान्तस्य (अकप्रत्ययान्तस्य) नामतेव पचतिरूपं पचतिकल्पदेवदत्त इत्यादौ रूपबाद्यन्तस्यापि नामतया नामार्थयोरभेदसंसर्ग एव ण्वुलादौ कर्तुर्वाच्यत्वे बीजमित्यस्याप्यकिञ्चित्करतया युष्मदि समानाधिकरणे मध्यमः अस्मद्युत्तम इति सामानाधिकरण्यप्रयुक्त-पुरुषव्यवस्थायाः लकृत्तद्धितसमासैरनभिहिते कर्तरि प्रथमेत्यादेश्च तिङ्क्ष्वपि कर्तुरेव वाच्यतायां प्रामाण्येन गच्छतीत्यनेन कर्तृत्वविशिष्टस्याभिहितत्वेपि कर्मत्वविशिष्टस्यानभिधानेन मामहं वेद्मीत्यादाविव द्वितीया-प्रसञ्जनात्। द्वितीया स्यादित्यनन्तरं परसमवेतेतिक्रियाविशेषणमावश्यकमिति पूरणीयम्। **अतो लक्ष-णेति**। कर्मलक्षणे परपदेन क्रियाश्रयस्य कर्तुः कर्मान्यताप्रतीतेरेकक्रियायां कर्मकर्त्रोरैक्ये कर्मलक्षणस्य तत्राव्याप्तिप्रसङ्गेनासामञ्जस्यात्तयोर्भेदावश्यंभाव इत्यनुकूलतर्क एवाभिहितव्याप्त्यवधारक इति भावः।

**सु०— मैवम्। यतो देवदत्तो ग्रामं गच्छति तस्यापि देवदत्तसमवेतगतिक्रियाफल-विभागशालित्वेन कर्मत्वप्रसङ्गात्। तथा च देवदत्तः कौशाम्बीं पाटलीपुत्रं गच्छतीति प्रयोगः**

स्यात् । किं चानागतादिविषयेच्छादिक्रियाफलशालित्वमनागतादेर्नास्तीति तत्कर्मत्वं न स्यात् । न हि तदभावे तत्र फलोत्पादः संभवति । मा भूदिति चेन्न । इच्छादीनां सकर्मकत्वव्याघातात् । तद्वाचिनो द्वितीयानुपपत्तिप्रसङ्(गश्च)गाच्च । वर्तमानेऽपि घटादौ न ज्ञानादिजन्यं फलमुपलभ्यते । तथा हि । न तावज्ज्ञातता । निराकरिष्यमाणत्वात् । इच्छादीनां तदजनकत्वाच्च । नापि संस्कारादिकम् । तस्यात्मन्येवोत्पादात् । नापि व्यवहारः । व्याहारादिरूपस्य तस्य कर्तृनिष्ठत्वात् । उपादानादिरूपस्योपेक्षणीयाव्याप्तेः । तस्मात्क्रियास्वातन्त्र्यं कर्तृत्वम् । तद्विषयत्वं च कर्मत्वमिति वाच्यम् । न च तयोः कमपि विरोधं पश्यामः । अन्यथा कर्मकर्ताऽपि दुर्लभः स्यात् । किं चास्ति तावत्कारकान्तरसमावेशः । कांस्यपात्र्या भुङ्क्ते कांस्यपात्र्यां भुङ्क्त इत्यादिप्रयोगदर्शनात् । तथा कर्मकर्त्रोरपि समावेशे को विरोधः ।

शे० — अपादानेऽतिव्याप्तेर्नेदं कर्मलक्षणमित्याशयेनाह **यत इति** । यस्माद् ग्रामादित्यर्थः **तस्यापीति** । विश्लेषावधेर्ग्रामस्यापीत्यर्थः । कर्मत्वप्रसङ्गादित्यन्वयः । उक्तलक्षणोपपादनं देवदत्तेत्यादि । देवदत्तसमवेतगतिक्रिययोत्तरसंयोगस्येव पूर्वदेशविभागस्यापि जननाद्देवदत्तसमवेतगतिक्रियाफलसंयोगशालित्वेन गम्यस्य ग्रामादेः कर्मत्ववदवधिभूतग्रामस्यापि परसमवेतगतिक्रियाफलविभागशालित्वात्कर्मत्वमिति भावः । नन्वपादानं कर्मापि भवतीति न तत्रातिव्याप्तिरित्यत आह **तथा चेति** । कर्मणि द्वितीयेत्यनुशासनादिति भावः । ननु कौशाम्ब्याः सत्यपि कर्मत्वेऽपादानत्वमेव विवक्षितमिति पञ्चम्येव स्यात् । कर्मत्वस्य चाविवक्षितत्वान्न द्वितीयाप्रसङ्गः । विवक्षातः कारकाणि भवन्तीति वचनादिति चेन्न । अपादानस्य यदि वास्तवं कर्मत्वं तदा विवक्षायाः प्रयोक्तृपुरुषमात्रतन्त्रत्वेन कदाचित्कर्मत्वविवक्षायां द्वितीयाप्रयोगः स्यादित्यत्र तात्पर्यात् । ननु भवेदेवं यदि विवक्षा प्रयोक्तृमात्राधीना स्यात् न त्वेवं किंतु शाब्दिकसम्प्रदायानुरुद्धाः । तथा च ग्राममगाम (म्या ग्)दित्वद्देवदत्तः कौशाम्बीं पाटलीपुत्रं गच्छतीत्यप्रयोग उपपन्न इति चेन्न । प्रमाणतर्कावनुपन्यस्य सम्प्रदायमात्रात्सर्वथानिवृत्तकर्मव्यवहारेऽप्यपादाने स्वकृतलक्षणानुरोधेन कर्मत्वमेवेति प्रत्यवस्थाने वस्तुत्वमात्रस्यापि कर्मत्वरूपत्वप्रसङ्गात् । अतिव्याप्त्यभिधानेऽस्त्येव कर्मत्वं किं तु विवक्षा न कर्तव्येति वैय्याकरणसम्प्रदाय इत्यभिधातुं शक्यत्वात् । तथा च न लक्षणालक्षणव्यवस्था स्यादिति भावः । अपादानेतरत्वेनोक्तलक्षण विशेषणान्न तत्रातिव्याप्तिरित्यरुचेराह **किं चेति** । यद्वाऽतिव्याप्तिमुक्त्वाऽव्याप्तिमाह **किं चेति** । अत्राद्येनाऽऽदिपदेनातीतस्य द्वितीयेन ज्ञानादेः परिग्रहः । कुतोऽनागतादेः क्रियाफलशालित्वाभावस्तत्राह **न हीति** । अनागतादेर्विषयस्यैवाभावान्न तत्र फलोत्पाद इति भावः ॥ **द्वितीयाऽनुपपत्तीति** ।

अनागतादेरिच्छादिक्रियां प्रत्यकर्मकत्वेऽनागतादिपदाद् द्वितीया न स्यात् । कर्मणि द्वितीयेति कर्मण्येव तदनुशासनादिति भावः । अनागतादेरलक्ष्यत्वात्तत्रावर्तमानत्वेऽपि न लक्षणस्याव्याप्तिरित्यस्चेराह **वर्तमानेऽपीति** । ज्ञानादीत्यादिपदेनेच्छादिपरिग्रहः । वर्तमाने घटादौ ज्ञानादिक्रियाजन्यं फलं किं भट्टरीत्या ज्ञाततोतोभयरीत्या संस्कारादिकम् यद्वा मद्रीत्या व्यवहार इति विकल्पान्मनसि निधायाद्यं दूषयति **न तावदिति** । **निराकरिष्यमाणत्वादिति** । युक्तिचरणे 'न परिच्छेदकार्येव' इत्यादिना, भक्तिचरणे 'न च प्रमाणतोऽन्या स्यात्' इत्यादिना चेति शेषः । तथा चासम्भव इति भावः । अस्तु वा ज्ञातता तथाऽप्यव्याप्तिरित्याह **इच्छादिनेति** । आदिपदेन कृत्यादिसङ्ग्रहः । ज्ञानस्य ज्ञाततजनकत्वात् । परसमवेतज्ञानक्रियाजन्यज्ञाततारूपफलशालित्वेन ज्ञानकर्मणि वर्तमानघटादावुक्तरूपकर्मत्वस्य सत्वेऽपीच्छादिक्रियाणां ज्ञाततोत्पादकत्वाभावेनेच्छादिक्रियाजन्यज्ञाततारूपफलशालित्वाभावेनेच्छादिकर्मणि वर्तमानघटादावुक्तलक्षणाभावादव्याप्तिरिति भावः । न द्वितीय इत्याह **नापीति** । संस्कारादिकमित्यादिपदेन ज्ञाननिवृत्तिपरिग्रहः ॥ **तस्येति** । तथा च ज्ञानादिकर्मणि वर्तमानघटादौ ज्ञानादिक्रियाजन्यसंस्कारादिरूपफलशालित्वाभावान्न तस्य कर्मता स्यात् । प्रत्युतात्मन एव ज्ञानादिजन्यसंस्कारादिरूपफलशालित्वेन घटादिज्ञानादिकर्मता स्यादिति भावः । न तृतीय इत्याह **नापीति** । व्यवहारोऽपि किमभिवदनादिरूपो विवक्षितः । किं वोपादानादिरूप इति विकल्पं मनसि निधायाद्यं दूषयति **व्यवहारादिरूपस्येति** । आदिपदेनाभिज्ञासङ्ग्रहः । ततश्च घटादेस्तत्कर्मत्वाभावापत्तिरात्मन एव घटादिज्ञानकर्मत्वापत्तिरिति भावः । द्वितीयं इत्याह **उपादानादिरूपस्येति** । आदिपदेन हानपरिग्रहः । उपेक्षणीयाव्याप्तेरित्युपलक्षणम् । कलधौतमलादेरपि तज्ज्ञानकर्मत्वापातादित्यपि द्रष्टव्यम् ॥ **क्रियास्वातन्त्र्यमिति** । प्रधानीभूतधात्वर्थं प्रत्याश्रयत्वमेव स्वातन्त्र्यमित्यर्थः । नन्वस्तु क्रियास्वातन्त्र्यमेव कर्तृत्वं तद्विषयत्वमेव कर्मत्वम् । किं तावतेत्यतो लक्षणविरोधाभावः सिद्ध इत्याह **न चेति** । ननु क्रियास्वातन्त्र्यविषयत्वयोः प्रत्यक्पराग्भावलक्षणत्वात्कथं न विरोध इत्यत उक्तं **कमपीति** । विशेषबलात्तदुपपत्तेरिति भावः । एवं तर्ह्यतिप्रसङ्गः स्यादिति चेन्न । सति प्रमाणे तन्निर्वाहहेतुभूतभेदाभावे च तत्प्रतिनिधिना तत एव च सिद्धेन विशेषेण तन्निर्वाहाभ्युपगमादिति भावः । एकस्य कर्मकर्तृभावो विरुद्ध इत्यङ्गीकारेऽनिष्टमाह ॥ **अन्यथेति** । पच्यते फलं स्वयमेवेत्यादिरिति शेषः । कर्मैव सन् यत्सतोऽपि कर्तृव्यापारस्य सूक्ष्मत्वादनुदरा कन्येतिवत्तदविवक्षया कर्तृत्वेन विवक्ष्यते । तत्र व्यतिरिक्तस्य कर्तृत्वविवक्षाभावाद्विवक्षावशेनैव च वैय्याकरणैः कारकत्वाङ्गीकारात्कर्मत्वं न स्यादिति भावः । **किंचेति** । विवक्षातः कारकाणि भवन्तीति न्यायेनाधिकरणस्य सतोऽप्यधिकरणत्वस्याविवक्षयाऽतिशयमात्रस्यैव विवक्षया कांस्यपात्र्येति करणप्रत्ययः करणस्य च सतोऽप्यति-

शयस्याविवक्षयाऽधिकरणमात्रस्यैव च विवक्षया कांस्यपात्र्यामित्यधिकरणप्रत्ययश्च यथेत्यर्थः । इत्यादीत्यादिपदेनात्मनाऽऽत्मानं वेत्सीत्यादेः संग्रहः ।

स० — अतिव्याप्त्यैतल्लक्षणं निराकरोति **मैवमिति** । यतो यस्माद्ग्रामात् । अपादानस्यापि कर्मत्वे को दोष इत्यत आह **तथा चेति** । ननु फलशब्देनोद्देश्यस्यैवाभिधानादस्योद्देश्यफलसंबन्धाभावात् ईप्सिततमत्वाभावात् कथं कर्मत्वेन द्वितीयाप्रसङ्गः । यदा निर्वर्त्यत्वेन उद्देश्यफलविभागशालित्वादीप्सिततमं वा ग्रामान्तरसंयोगो नान्तरीयकः तदाऽयं व्यभिचार इत्यदोषः । न च कर्मत्वेऽपि कौशांब्या अपादानत्वं स्यादिति भावः । अव्याप्तिमप्याह **किं चेति** । कुतोऽनागतादेरिच्छादिक्रियाफलशालित्वं नास्तीत्यत आह **न हीति** । अनागतादीनां विषयाणामेवाभावात् न तत्र फलोत्पाद इत्यर्थः । अनागतादीनामलक्ष्यत्वात्तत्रावर्तमानं लक्षणं नाव्यापकमिति शङ्कते **मेति** । अतीतादीनां लक्ष्यत्वानङ्गीकारे दूषणमाह **नेति** । अव्याप्तेर्विषयमाह **वर्तमानेति** । तदुपपादयति **तथा हीति** । ज्ञानादिजन्यं फलं किं ज्ञातता तत्संस्कारादिकं वा व्यवहारो वेति विकल्प्य दूषयति **न तावदित्यादिना** ॥ **निराकरिष्यमाणत्वादिति** । 'न परिच्छेदकार्येव प्रमाणमिति च प्रमे'त्यादिनेति शेषः । **इच्छादिनेति** । ज्ञाततामङ्गीकुर्वताऽपीष्टतादेरनभ्युपगमादिति भावः । **संस्कारादिकमिति** । ज्ञानस्य प्रकृतत्वात् तदभिप्रायेण बोध्यम् । व्यवहारोऽपि किं वचनरूपः उतोपादानादिरूपो वा । पक्षद्वये दूषणमाह **नापीति** । नन्विदं लक्षणं दुष्टं चेत् किं तर्हि युक्तं लक्षणमित्यत आह **तस्मादिति** । ननु प्रत्यक्पराग्भावलक्षणे क्रियास्वातन्त्र्यविषयत्वे कथं न विरुद्ध इत्यत आह **न चेति** । विशेषबलादुपपत्तेरित्याशयः । एकस्य कर्मकर्तृत्वभावो विरुध्यत इत्युररीकरणे अनिष्टमाह **अन्यथेति** । यद्येकस्य कर्तृकर्मत्वं विरुद्धं स्यात् तर्हि मुच्यते वत्सः स्वयमेवेत्यस्योभयरूपत्वं न स्यात् । अत्र कर्मणस्तिङाभिहितत्वात् प्रथमा । **किञ्चेति** । विवक्षातः कारकाणि भवन्तीति न्यायात् अधिकरणस्य सतोऽतिशयविवक्षया करणप्रत्ययः । ननु तत्र क्रियासाम्येपि प्रयोगभेदेन कारकान्तरसमावेशो न विरुद्धः युगपत् प्रयोगासंभवात् अत्रापि प्रयोगभेदश्चेत् अविरोध एव न चैकत्वे कथमविरोधः । दिङ्मात्रमेतत् एकस्मिन्नपि प्रयोगे ज्ञानक्रियायां कर्मकर्त्रोः भेदस्यापि सिद्धत्वादिति ।

प० — नेदं कर्मादिलक्षणम् । येन तद्विरोधभिया भेदोऽभ्युपेयः स्यात् । किन्तु क्रियाविषयत्वादिकमेवेति परोक्तलक्षणं निराह **यत इति** । देशादिति योज्यम् । अवधौ पञ्चमी न हेतौ । **तस्यापीति** । अवधिभूतदेशस्यापीत्यर्थः । तथा च कौशांब्याः पाटलीपुत्रं गच्छतीत्यत्र पञ्चमी न स्यात् । द्वितीयैव स्यादित्याह **तथा चेति** ॥ **तदभाव इति** । अनागतादेरभावे । ननु वर्तमान-

कर्मादेरेवैतल्लक्षणमित्यत आह वर्तमानेपीति ॥ निराकरिष्यमाणत्वादिति । 'न परिच्छेदकार्येव प्रमाणमिति च प्रमा' इत्यत्र युक्तिपाद इति भावः ॥ व्याहा(व्यवहा)रादीति । अभिलपनरूपस्य हानादिबुद्धिरूपस्य वेत्यर्थः ॥ उपादानादीति । परिग्रहपरित्यागादिरूपस्येत्यर्थः ॥ अन्यथेति । कर्मकर्तृभावस्य भेदव्याप्तत्वे तण्डुलाः स्वयमेव पच्यन्ते, वत्साः स्वयमेव मुच्यन्ते, भिद्यते काष्ठं स्वयमेवेत्यादिकर्मवत्कर्मणा तुल्यक्रिय इति तृतीयाद्यपादतृतीयसूत्रे कर्मकारकस्थक्रियया तुल्यक्रियः कर्ता कर्मवत्कार्यं लभत इत्युक्त्या सिद्धः कर्ता दुर्लभः स्यादित्यर्थः ॥ कारकान्तरेति । अधिकरणकरणादिरूपकारकान्तरेत्यर्थः ।

या० — यत इति । यस्माद् ग्रामादित्यर्थः । तथा चापादानेऽतिव्याप्तिरिति भावः । नन्वपादानस्य कर्मत्वमपि स्यात्को दोष इत्यत आह तथा चेति । कर्मणि द्वितीयेत्यनुशासनादिति भावः । ननु कौशाम्ब्याः सत्यपि कर्मत्वेऽपादानत्वमेव विवक्षितम् अतः पञ्चम्येव भवति न द्वितीया । विवक्षातः कारकाणि भवन्तीति वचनादिति चेन्न । वास्तवकर्मत्वसद्भावेऽपि विवक्षायाः प्रयोक्तृपुरुषमात्राधीनत्वेन कदाचित्कर्मत्वविवक्षया द्वितीयाप्रयोगोऽपि स्यादित्याशयात् । अपादानस्य कर्मत्वं कदाऽपि न विवक्षितमिति शाब्दिकसम्प्रदायोऽयमिति चेत् । तर्ह्यपादानात्सकलकर्मव्यवहारनिवृत्तौ व्यवहर्तव्यस्य कर्मत्वस्यापि निवृत्तिरेव । त्वया परं स्वलक्षणानुरोधेन यदि कर्मत्वं तत्रेष्यते तदा प्रमेयत्वमेव लक्षणं क्रियतां किं परसमवेतेत्यादिलक्षणेनेत्यलम् । अपादानेतरत्वेन विशेषणे नोक्तदोष इत्यरुचेराह किञ्चेति ॥ निराकरिष्यमाणत्वादिति । 'न परिच्छेदकार्येव प्रमाणमिति च प्रमा'इत्यादिनेति शेषः । अस्तु वा ज्ञातता । तथाप्यव्याप्तिरित्याह इच्छादिनेति । आदिपदेन कृत्यादिः । तथा च घटमिच्छति घटं करोति शत्रुं द्वेष्टीत्यादिप्रयोगे इच्छादिकर्मस्विच्छादिभिर्ज्ञाततायाः अजननादव्याप्तिरित्यर्थः । संस्कारादिकमित्यत्र ज्ञानेन जायमानं फलं संस्कार इच्छाद्वेषौ चेच्छाद्वेषाभ्यां कृतिरूपं फलं कृत्याश्च धर्माधर्मरूपं जायत इत्यादिपदार्थविवेकः ॥ क्रमपीति । स्वरूपानुबन्धिनं लक्षणानुबन्धिनं वेत्यर्थः ॥ अन्यथेति । परसमवेतेत्यादिकर्मलक्षणविरोधेन कर्मकर्त्रोर्भेदनियम इत्यर्थः ॥ कर्मकर्ताऽपीति । भिद्यते काष्ठं स्वयमेव । पच्यते ओदनः स्वयमेवेत्यादिरूप इति शेषः । अत्र हि कर्मवत्कर्मणा तुल्यक्रिय इत्यनेन कर्तुरेव कर्मता विहिता । यदि चोक्तलक्षणं कर्मत्वमङ्गीकृत्य तद्विरोधेन तयोर्भेदो नियत इत्युच्यते तदैतत्सूत्रोक्तं कर्मकर्त्रोरैक्यमनुपपन्नं स्यादित्यर्थः । अत्र च कर्मणस्तिङाऽभिहितत्वान्न तत्र द्वितीयेति ज्ञातव्यम् । नन्वत्र नैकस्यां क्रियायां कर्तृकर्मणोरैक्यं सम्भवति । तथाहि । भिदादिर्यदि द्विधाभवनविक्लेदनादिरूपकर्तृव्यापारवाची तदा काष्ठादेः कर्मतैव न कर्तृता । देवदत्तः काष्ठं भिनत्ति ओदनं पचतीत्यादिप्रयो-

गात् । यदा च द्विधाभवनविक्लेदनेत्यादिरूपकर्मव्यापारमात्रवाची भिद्यते काष्ठं स्वयमेवेत्यादौ तदा काष्ठादेः स्वसमवेततद्द्विधाभवनादिरूपव्यापारे स्वातन्त्र्यात्कर्तृतैव न तदा कर्मत्वगन्धोऽप्यस्ति । अत एवैतादृशप्रयोगात्सकर्मका अप्यकर्मका भवन्ति लकारश्च कर्तरि भावे चेत्याहुः । उदाहृतं सूत्रं च काष्ठादेः शुद्धकर्मत्वाभावेऽपि यगादिप्रत्ययसिद्ध्यर्थं कर्मत्वातिदेशपरं पारिभाषिककर्मत्वं वा । ततश्च मामहं जानामीत्यादाविवैकस्यां क्रियायामत्र कर्मकर्त्रो रैक्याभावात्कथमिदमापादनमिति चेत । उच्यते । 'क्रियमाणं तु यत्कर्म स्वयमेव प्रसिद्ध्यति । सुकरैः स्वैर्गुणैर्यस्मात्कर्मकर्तेति तद्विदुरि'ति कर्मकर्तृलक्षणप्रतिपादकश्लोकार्थपर्यालोचनया स्वाभाविकमेव कर्तुः कर्मत्वमस्तीति प्रतीयते । तथाहि । चैत्रः काष्ठं भिनत्तीत्यादाविव भिद्यते काष्ठं स्वयमेवेत्यादावपि भिद्यादिर्द्विधाभवनाद्यनुकूलव्यापारवाच्येव न द्विधाभवनादिमात्रवाची । अनुकूलव्यापारश्च तत्र कुठारोद्यमननिपतनादिरूपः । अत्र तु सुकरनिःसारत्वपुराणत्वादिस्वगुणरूपः । तस्मिंश्च व्यापारे यत्स्वतन्त्रं काष्ठादि तदेव कर्तृ कर्म च भवति । तत्साध्यद्विधाभवनादिरूपफलभागित्वसुकरनिःसारत्वादिगुणानां च कर्तृव्यापारत्वाविवक्षायामुदाहृतश्लोके सुकरैः स्वैर्गुणैरित्यस्य वै यर्थ्यं स्यात् । अवतारितं चेदं तु व्याख्यातृभिः । कथं पुनरचेतनं चेतनाधिष्ठानमन्तरेण प्रसिध्यति । यो हि कुठारस्योद्यमननिपतनादि करोति स भेदने कर्तोपलब्धः । न चैतत्काष्ठेऽस्तीत्यत आह सुकरैः स्वैर्गुणैरितीति । तथा चोक्तसुकरनिःसारत्वादिगुणानामुद्यमनादिकर्तृव्यापारतुल्यताया अत्राभिप्रेततया तद्रूपैकक्रियायां कर्मभूतमेव काष्ठादि कर्त्रिति कर्मकर्तृसिद्धिः । न चैवमस्मिन्प्रयोगेऽकर्मकत्वाभिधानादिविरोधः । स्वभिन्नकर्तृव्यापाराकर्मत्वविवक्षया तदुपपत्तेरिति । यद्वा एतदस्वरसादेवाह **किञ्चेति** ॥ **कांस्यपात्र्येति** । न चात्र करणत्वमेव नाधिकरणत्वम् । एवं कांस्यपात्र्यामित्यत्राप्यधिकरणत्वमेव न करणत्वम् । तथा च कथं कारकान्तरसमावेश इदमुदाहरणमिति वाच्यम् । शक्तिः कारकमिति पक्षे करणाधिकरणयोरप्यधिकरणतासद्भावात् ।

श्री० — **यतः** कौशाम्बीपुरात् ॥ **क्रियाफलविभागेति** । क्रियाजन्यविभागरूपफलेत्यर्थः ॥ **इच्छादिक्रियेति** । इच्छादिरूपक्रियेत्यर्थः । श्वस्तनं भोजनमिच्छामीत्यादावनागतादेः कर्मत्वानङ्गीकारे दूषणान्तरमाह **तद्वाचिन इति** । कर्मवाचिनो भोजनादिशब्दस्योपरीत्यर्थः ॥ **द्वितीयेति** । द्वितीया विभक्तिरित्यर्थः ॥ **कांस्येति** । एकस्यामेव भोजनक्रियायां करणस्यैवाधिकरणत्वदर्शनादित्यत्र भिन्नप्रयोगे समावेशोऽत्र त्वेकस्मिन्प्रयोग इति तु वैषम्यमात्रम् । एवं च करणकारकेऽधिकरणकारकान्तरसमावेशस्य दृष्टत्वात्प्रकृतेऽपि तथाऽस्त्वित्याशयः ।

च०— **यतो देवदत्त इति । यतः** कौशांबीतः । **ग्रामं** पाटलीपुत्रम् । **तस्यापि** कौशांबी-रूपापादानस्यापि प्रयोगसमवेतानामादेशानां तैःस्मार्यमाणानां स्थानिनां वा बोधकत्वमिति मतभेदेनाकरे स्थिततया पञ्चम्यादेशतापन्नतसिला तत्स्थानिभूतपञ्चम्या वाऽपादाने पञ्चमीति योगेनानुशिष्टया अपादानत्वं प्रत्याप्यते । तच्च स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वम् । देवदत्तः कौशांबीतः पाटलीपुत्रं प्रयातीत्यादौ देवदत्तस्यापादानतावारणाय भूतान्तं क्रियाविशेषणम्। भेदप्रतियोगितावच्छेदकत्वे विभागे च पञ्चम्याः शक्तिद्वयम् । भेदे विभागे च वृक्षादेः प्रकृत्यर्थस्याधेयतासम्बन्धेनान्वयः । प्रति-योगितावच्छेदकत्वमाश्रयतासम्बन्धेन विभागश्च जनकतासम्बन्धेन क्रियायामन्वेति । एवंच कौशाम्बीनिष्ठ-भेदप्रतियोगितावच्छेदिका तन्निष्ठविभागजनिका पाटलीपुत्रकर्मिका या गमनक्रिया तत्कर्ता देवदत्त इत्युक्तस्थले बोधः । **कौशांबीमिति** । तेन निर्वृत्तमित्यर्थे विहिताणन्तात् टिड्ढाणञित्यादिना ङीप् । कुशाम्बेन निर्वृत्तां नगरीमित्यर्थः । तथाच देवदत्तसमवेतगतिक्रियाफलीभूतसंयोगाश्रयस्येव तत्फलीभूत-विभागाश्रयापादानस्यापि कर्मसंज्ञापत्त्या कर्मणि द्वितीयेत्यनुशासनात्तद्वाचकपदोत्तरद्वितीयोत्पादः स्यादिति भावः । करणाधिकरणत्वोभयसत्त्वे कांस्यपात्र्या भुङ्क्ते कांस्यपात्र्यां भुङ्क्त इति कादाचित्कविवक्षाविशेषाधीन-प्रयोगद्वयवत् वास्तवकर्मत्वापादनत्वोभयसत्वे तदधीनप्रयोगद्वयापत्तेर्न जात्वपादानस्य कर्मत्वं विवक्ष्यत इति पाणिनीयसंप्रदायोक्तिमात्रेण दुर्निवारत्वात् । प्रयोक्तृमात्राधीननिखिलातिप्रसङ्गपरिजिहीर्षायामभिधेयत्वा-दिकं कर्मलक्षणमिति किमिति नाभ्यधात् इत्यलम् । अत्रेत्थं लक्षणमाचक्षाणैः प्राचीनैः फलविशेषान्वयबोधे धातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया ग्रामं त्यजतीत्यादौ धात्वर्थस्पन्दे ग्रामनिष्ठविभागजनकत्वमेव गच्छ-तीत्यादौ च संयोगजनकत्वमेव प्रतीयते, न तु विपरीतमिति सिद्धान्तिततयाऽपादानाभिमतकौशाम्ब्यां गमिजनितोपस्थितिघटितसामग्र्या भासमानसंयोगजनकत्वस्य बाधेन विभागजनकत्वभासकसामग्र्या अभावेन नेदमापादनं संगच्छत इत्यरुचिमनुसन्दधानोऽतिप्रसङ्गानवकाशेऽप्यव्याप्त्यैव लक्षणं दुष्यतीत्यभिधत्ते **किञ्चेति** । अपादानेतरत्वविशेषणे नोक्तदोष इत्यरुचेराह **किञ्चेती**त्यप्यवतारितं निबन्धान्तरेषु । आद्य-तृतीयादिपदाभ्यामतीतस्य द्वितीयेन ज्ञानकृतिसंस्काराणां परिग्रहः । अनागतादेः क्रियाफलशालित्वाभावे हेतुमाह **नहीति**। असति धर्मिणि धर्मोत्पादस्य धर्मिसत्ताघटितसामग्र्यभावेनायोगादिति भावः। ज्ञानादीत्या-दिपदमिच्छादिपरिग्राहकं वर्तमानघटादिगोचरज्ञानादिक्रियाजन्यफलं भाट्टदिशा ज्ञातता उभयदिशा संस्का-रादिकं व्यवहारो वेति कल्पत्रयीमभिसंदधान आद्यं प्रतिविधत्ते **न तावदिति । निराकरिष्यमाणत्वादिति।** युक्तिभक्तिचरणयोः 'न परिच्छेदकार्येव प्रमाणमिति च प्रमे'ति 'न च प्रमाणतोऽन्या स्यादि'ति प्रतीकाभ्यां प्रत्याख्यास्यमानत्वादित्यर्थः ।' तथाचासंभवदूषितमिति भावः । भाट्टैरपि ज्ञानस्यैव ज्ञाततजनकत्वोप-गमेनेच्छाकृत्यादीनां तदभावेन जानातिकर्मतायाः घटादौ कथंचिन्निर्वाहेऽपीच्छत्यादिकर्मताया अनि-

वाहप्रसङ्ग एवेत्याह **इच्छादीनामिति** । द्वितीयं प्रत्याख्याति **नापीति** । आदिपदमज्ञानध्वंससंग्राहकम् । **तस्यात्मनीति** । तथाच घटादावव्याप्तिरात्मन्यतिप्रसङ्गश्चेत्याशयः । तृतीयेपि व्यवहारपदेनाभिज्ञारूपः हानोपादानादिरूपो वेति वितर्कद्वयमनुसंदधान आद्यमपाकुरुते **कर्तृनिष्ठत्वादिति** । तथाचोक्तदिशाऽव्याप्त्यतिप्रसंगौ स्याताम् इति भावः । द्वितीयं प्रतिषेधति **उपादानादीति** । **उपादानादिरूपस्येति** । इष्टसाधनताज्ञानस्य तत्र हेतुत्वादिति हृदयम् । प्रत्यक्पराग्भावरूपकर्तृत्वकर्मत्वे कथमेकस्य घटेते इत्याशङ्कमानाः भेदप्रतिनिधिविशेषशवत्या संगच्छेते इत्यपि समादधति **कर्मकर्तापीति** । पच्यते ओदनः भिद्यते काष्ठमित्यादौ 'कर्मवत्कर्मणा तुल्यक्रियः' ( पा. सू. ३-१-८७ ) इत्यनेन कर्तुरेव कर्मवद्भावविधानात् कर्तृकर्मणोर्नियमेन भेदाङ्गीकारे स न स्यादिति तादृशप्रयोगाः कथं संगच्छेरन्निति भावः । अथ यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते, तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते स्वव्यापारे स्वतन्त्रत्वात । तेन पूर्वं करणत्वादिसत्त्वेऽपि संप्रति कर्तृत्वात् कर्तरि लकारः । साध्वसिः(=खड्गः) छिनत्ति काष्ठानि पचन्ति स्थाली पचतीति । कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि इदानीमकर्मका एव तेभ्यो भावे कर्तरि च लकाराः । पच्यते ओदनेन । भिद्यते काष्ठेन । कर्तरि तु कर्मवत्कर्मणा तुल्यक्रियः । कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् स्यात् । कार्यातिदेशोयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । कर्तुरभिहितत्वात्प्रथमा । पच्यते ओदनः । भिद्यते काष्ठम् । अपाचि । अभेदि । लकारवाच्य एव कर्ता कर्मवदित्युपगमादस्मादेवातिदेशात् भावे लकारे कर्तुर्द्वितीया स्यादिति शङ्कानवकाशः । अत एव कृत्यक्तखलर्थाः कर्मकर्तरि न भवन्ति किन्तु भाव एव । भेत्तव्यं कुसूलेन । ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवनं च । सैवेदानीं कर्तृस्था न तु तत्तुल्या । सत्यम् कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियायाः भेदमाश्रित्य व्यवहारः । कर्मणेति किम् । करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ मा भूत् । यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु, तत्र कर्मस्था क्रिया नेतरत्र । न हि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते । करोतिरुत्पादनार्थः । उत्पत्तिश्च कर्मस्था । तेन करिष्यते घट इत्यादि । यत्नार्थत्वे तु नैतत्सिध्येत् ज्ञानेच्छादिवत् यत्नस्य कर्तृस्थत्वादित्यादिना सप्रपञ्चं पाणिनीयैर्व्याख्याततया तेन पारिभाषिककर्मत्वोरीकारेऽपि शुद्धस्य 'कर्तुरीप्सिततमं कर्म'ति लक्षणलक्षितकर्मत्वस्यानुपगत्या मामहं जानामीत्यादाविवेकक्रियानिरूपितकर्तृत्वकर्मत्वयोः सामानाधिकरण्यानुपगमेन कथमिदं प्रसंजनं संगच्छत इत्यरुचिमनुसंदधानः क्षत्यन्तर(=दोषान्तर)मभिधत्ते **किञ्चेत्यादि** ।

सु० — ननु च दृश्यते तावत्कर्मकर्त्रोर्भेदः। न च व्यभिचारो दृश्यते। तेन व्याप्ति-निश्चय इति। मैवम्। दर्शनादर्शनमात्रस्य व्याप्त्यनिश्चायकताया वक्ष्यमाणत्वात्। न च व्यभिचारादर्शनमपि। मामहं जानामीति तद्दर्शनात्। अन्यथा(ऽऽत्म)साक्षात्कारानुपपत्ति-प्रसङ्गात्। न च नित्यानुमेय एवात्मा। साक्षात्कारस्यापन्होतुमशक्यत्वात्। कश्चिदाह मानसप्रत्यक्षावसेयोऽयमात्मा। तथाऽपि कर्तृतैवास्य, न कर्मता। आत्मकर्तृकेऽहंप्रत्यये प्रति-भासमात्रेण तदापरोक्ष्यसिद्धेरिति। तत् कर्मतातिरिक्तानिरुक्तेः रिक्तमेव वचनम्। किं चाह-मितिप्रत्ययः सकर्मको न वा। नेति पक्षोऽनुभवविरुद्धः। जानातेः सदा सकर्मकत्वावभासाच्च। आद्ये किमस्य कर्मेति वक्तव्यम्। न तावदात्मातिरिक्तम्। घटादावहंप्रत्ययादर्शनात्। आत्मसंबन्धि सुखादिकमिति चेन्न। तन्मात्र(स्य)कर्मतायामात्मासिद्धिप्रसङ्गात्। अहं सुख-मित्यादिव्यवहारप्रसङ्गाच्च। अथ ज्ञानाश्रयः कर्ता सुखादिविशिष्टः कर्मेति चेत्, (न)। आगतं तर्ह्यंशतः कर्मकर्त्रोरैक्यम्। किं च युञ्जानस्य निरुपाधिकमात्मानं पश्यतोऽहंप्रत्ययो नान्यकर्मक इत्यकर्मको वाऽऽत्मकर्मको वाऽभ्युपगन्तव्यः। गत्यन्तराभावात्।

शे० — अव्यभिचरितसहचारदर्शनात्कर्मकर्त्रोर्भेदेन व्याप्तिनिश्चय इत्याशङ्कते **ननु चेति** ॥ **दर्शनादर्शनमात्रस्येति**। सहचारदर्शनव्यभिचारादर्शनमात्रस्येत्यर्थः। व्यभिचाराभावे प्रमाणप्रवृत्ति-

सहकृतस्य तस्य व्याप्तिनिश्चायकत्वात् तन्निरासाय मात्रपदम्। **वक्ष्यमाणत्वादिति**। वैशेषिकपरीक्षायां 'सहदर्शनमात्रेण न व्याप्तिरवसीयते' इत्यादिनेति शेषः। अभ्युपेत्यैव व्यभिचारादर्शनं सहचारव्यभिचार-दर्शनादर्शनमात्रं न व्याप्तिनिश्चायकमिति वस्तुस्थितिमात्रमुक्तम्। वस्तुतस्तु न व्यभिचारादर्शनमप्यस्ती-त्याह **न चेति**। नापीत्यर्थः। उक्तरूपज्ञाने आत्मनः कर्मत्वानभ्युपगमेऽनिष्टमाह **अन्यथेति**। ततश्चा-त्मनो नापरोक्ष्यं स्यादिति भावः। नन्वात्मनो नित्यानुमेयत्वान्नापरोक्ष्यमितीष्टापादनतया प्रसङ्गाभासोऽ यमित्याशङ्क्य निषेधति **न चेति** ॥ **अशक्यत्वादिति**। अहमितिप्रत्यक्षस्य प्राणभृन्मात्रसिद्धत्वान्ना-पह्नवो युक्तः। अन्यथा घटादिसाक्षात्कारस्याप्यपह्नवप्रसङ्गादिति भावः। वैशेषिकाद्युक्तमात्मनोऽकर्मत्वेऽपि आपरोक्ष्योपपादनप्रकारमनूद्य दूषयति **कश्चिदिति**। नन्वेवमात्मनः कर्तृत्वकर्मत्वसिद्धयेष्टसिद्धिरित्यत आह **तथाऽपीति**। नन्वेवं नापरोक्ष्यसिद्धिः कर्तृत्वेऽप्यात्मनो मानससाक्षात्काराकर्मत्वादित्यत आह **आत्मकर्तृक इति** ॥ **कर्मतेति**। कर्मताया अवभासमानत्वातिरिक्ताया अनिरुक्तेरित्यर्थः। तथा चात्म-नोऽहंप्रत्यये प्रतिभासाभ्युपगमे तत्कर्मत्वस्यैव प्राप्तेर्नात्मनः कर्मतेति वचनमर्थशून्यमिति भावः ॥ **अनुभवविरोध इति**। घटादिवद्विषयानुल्लेखितया ज्ञानस्याननुभवात्तस्याकर्मकत्वमप्रामाणिकमित्यर्थः। न केवलं विषयानुल्लेखितया नानुभूयत इत्येव, किंतु विषयोल्लेखितयैवानुभूयमानत्वाच्चेत्याह **जानातेरिति**।

जानातेः सकर्मकत्वावभासेन सविषयकत्वस्य ज्ञानस्वभावत्वस्थितेः निर्विषयत्वे तत्स्वभावशून्यतया घटादिवज्ज्ञानत्वं न स्यादित्यर्थः । अत्र सप्रतियोगिकेऽभावादौ सप्रतियोगिकत्वस्य स्वभावत्वदर्शनात् सविषयकत्वस्यापि ज्ञानस्वभावत्वात् स्वभावस्य चानपायात्सार्वकालिकं सविषयत्वमेव ज्ञानत्वे प्रयोजकं न तु यदाकदाचित्सविषयत्वमात्रमिति वस्तुस्थितिकथनार्थं सदेत्युक्तमिति प्राञ्चः । वस्तुतस्तु आत्मोल्लेखितयाऽहमितिप्रत्ययस्य तत्कर्मकतायाः तत्प्रत्यक्षेणैव सिद्धेस्तस्याकर्मकत्वमनुभवविरुद्धमित्यर्थः । न केवलं प्रत्यक्षानुभवविरुद्धं,किंत्वहंप्रत्ययो न निर्विषयो ज्ञानत्वात् नीलादिज्ञानवत् इत्यनुमानविरुद्धं चेति भावेनानुमानमूलभूतव्याप्तिं व्यभिचाराभावसूचनेनोपपादयति **जानातेरिति** ॥ **आद्य इति** । सकर्मकत्वपक्ष इत्यर्थः । अहंप्रत्ययः सकर्मको भवन् आत्मातिरिक्तकर्मको वा आत्मकर्मको वा । आद्येऽप्यात्माऽसंबन्धिघटादिकर्मको वा तत्सम्बन्धिसुखादिकर्मको वेति विकल्पान्मनसि निधायाद्यं दूषयति **न तावदिति** । द्वितीयमाशङ्कते **आत्मेति** । अत्रापि किं सुखादिमात्रे कर्मत्वमभिमतं सुखादिविशिष्टात्मा वेति विकल्पं मनसि निधाय, आद्यं दूषयति **तन्मात्रस्येति** । अहमितिप्रत्ययव्यतिरेकेणात्मसाधकाभावात् तस्य च सुखमात्रविषयकत्वात् आत्माऽसिद्धिप्रसङ्ग इति भावः ॥ **अहं सुखमित्यादीति** । आदिपदेन दुःखादिपरिग्रहः । यथा हि अयमितिप्रत्ययस्य घटविषयकत्वात् घटत्व-इदन्त्वयोः सामानाधिकरण्यावगाही अयं घट इति प्रत्ययः तत्साध्यः तथा व्यवहारश्च भवतः तथाऽहमितिप्रत्ययस्य सुखविषयकत्वेऽहंत्वसुखत्वयोः सामानाधिकरण्यावगाही अहंसुखमितिप्रत्ययः तत्साध्यतादृशव्यवहारश्च स्यातामिति भावः । अस्तु तर्ह्यात्मकर्मक इति आद्यद्वितीयः तेन नानुभवविरोधः । न चैवमेकस्य कर्तृत्वकर्मत्वप्रसक्तिरिति वाच्यम् । निरुपाधिस्वरूपस्यैकत्वेऽपि सोपाधिकस्य भेदात् एकस्मिन्नपि देहे ज्ञातृज्ञेययोर्भेदोपपत्तेः । अस्तु वा सुखादिविशिष्टस्यात्मनो ज्ञानकर्मत्वं, न सुखादिमात्रस्येत्यव्यवहितद्वितीयः पक्षः । ततश्च नात्मासिद्धिप्रसङ्गो नाप्यहंसुखमिति व्यवहारप्रसङ्गश्च । न चास्मिन्पक्षे विशिष्टस्य विशेष्याभेदेन कर्तृकर्मणोरैक्यापत्तिरिति वाच्यम् । विशिष्टविशेष्ययोरभेदेऽपि विशिष्टद्वयस्य परस्पराभेदाभावेन तदप्रसङ्गात् । अत्र च विशिष्टद्वयस्यैव कर्तृकर्मभावाभ्युपगमेन विशेष्यविशिष्टयोः तदनभ्युपगमादिति शङ्कते **अथेति** । न विशिष्टं विशेषणादिभ्यः तत्त्वान्तरम् । कृशानुयुक्तो गिरिः तद्ध्वजयुक्तत्वात् इत्यादौ हेतुसाध्ययोर्वैय्यधिकरण्यप्रसङ्गात् इत्याशयेनाह **आगतं तर्हीति** । विशिष्टं विशेषणादिव्यतिरिक्तमखण्डमेवेति पक्षमङ्गीकृत्याप्याह **किञ्चेति** ॥ **युञ्जानस्येति** । समाधिं कुर्वत इत्यर्थः ॥ **निरुपाधिमिति** । सुखाद्युपाध्यनवच्छिन्नमित्यर्थः । अतो न तत्र विशिष्टस्य कर्मत्वं वक्तुं शक्यमिति भावः । न च तदा शुद्धस्यैव ज्ञेयत्वेऽपि न कर्मकर्त्रोरभेदसिद्धिः विशिष्टस्य ज्ञातृत्वसंभवात् इति वाच्यम् । तदा सर्वोपाधिप्रहाणेन केवलस्यैव ज्ञातृत्वाङ्गीकारात् । उक्तं खण्डनटीकायां सङ्करेण । युञ्जानस्य केवल एवात्मा ज्ञाता ज्ञेयश्च निरञ्जनश्रुतिबलादिति ॥ **अकर्मको**

**वेत्यादि** । अकर्मकत्वस्यानुभवविरुद्धत्वादात्मकर्मकत्वमेव वाच्यमिति भावः । विधान्तरेणैव स प्रत्ययः किं न स्यादित्यतस्तस्यासत्त्वान्न तथेत्याह **गत्यन्तराभावादिति** ।

स०— अव्यभिचरितसाहचर्यात् कर्तृकर्मणोर्भेदोऽभ्युपगन्तव्य इति शङ्कते **ननु चेति** ॥ साहचर्यमात्रस्य व्याप्त्यनिश्चायकत्वं, अव्यभिचरितत्वं तु प्रकृते नास्ति । ज्ञानक्रियायामेकस्यैव कर्तृकर्मभावदर्शनादिति परिहरति **वक्ष्यमाणत्वादिति** । परमाण्वारंभवादे 'सहदर्शनमात्रेण न व्याप्तिरवसीयते' इत्यादिनेति शेषः । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु व्यभिचारादर्शनमपि नास्तीत्याह **न चेति** । नापीत्यर्थः **तद्दर्शनादिति** ॥ **मामहं जानामीति** । एकत्रैव कर्तृकर्मत्वयोर्विद्यमानत्वेन भेदाभावात् व्यभिचारदर्शनादित्यर्थः । यद्यपि मुच्यते वत्सः स्वयमेवेत्यादावेव व्यभिचारः शक्यप्रदर्शनः, तथापि मीमांसार्थमेतत्प्रदर्शनमित्यदोषः । **अन्यथेति** । आत्मनः कर्मत्वानङ्गीकार इत्यर्थः । आत्मकर्मकसाक्षात्कारानुपपत्तेरित्यर्थः । आत्मनो नित्यानुमेयत्वात् नाहंप्रत्ययकर्मतेत्यत आह **न चेति** ॥ वैशेषिकादिमतमुत्थापयति **कश्चिदाहेति** ॥ **तथापीति** । अयं भावः । आत्मा अस्मदादिमानसप्रत्यक्षः ज्ञानसमवायिकारणाश्रयत्वात् मनोवत् । परसिद्धसाधनादिनिर्देशादनवद्यम् । विपक्षे स्ववृत्तिविरोधो बाधकः । विमतं ज्ञानं न स्वाश्रयविषयं गुणत्वात्, यो गुणो नासौ स्वाश्रयविषयः, यथाऽग्नेरौष्ण्यतायाः प्रकाशादिरिति ॥ **घटादावित्यादिना** ॥ न हि मामित्यस्मच्छब्देन घटाद्यभिधानं संभवति । अहं सुखीत्यादिप्रत्ययात् विशेषणत्वेन सुखादेरस्मच्छब्दविषयत्वेऽपि सुखादिमात्रस्य कर्मत्वे आत्मत्वं मतुबर्थप्रत्ययश्च न स्यात् । विशिष्टकर्मतायामिष्टसिद्धिरिति समुदायार्थः । **अहं सुखमितीति** । अयमिति प्रत्ययस्य घटविषयत्वे यथा सामानाधिकरण्येन अयं घट इति व्यवहारः, तथाहमिति प्रत्ययस्य सुखविषयत्वे सामानाधिकरण्येनाहं सुखमिति व्यवहारः स्यादिति भावः । यद्वा अहमिति प्रत्ययस्तावत् अहमर्थविषय इत्यविवादम् । अत्र सुखादेः कर्मत्वे अहमर्थोऽपि तदात्मतया प्रतीयते । तथाचाहं सुखमित्यादिसामानाधिकरण्येन व्यवहारप्रसङ्ग इत्यर्थः । एकस्यैवात्मनोऽवच्छेदकभेदेन कर्तृत्वं कर्मत्वं चोपपद्यत इत्याशङ्कते **अथ ज्ञानाश्रय इति** ॥ **युञ्जानस्येति** । ध्यानलक्षणं योगं कुर्वत इत्यर्थः ॥ **निरुपाधिमात्मानमिति** । तस्यां दशायां आत्मस्वरूपं सुखाद्युपाध्यनवच्छिन्नमेव भासत इत्यङ्गीकारात् सुखविशिष्टकर्मेति वक्तुं न शक्यत इत्यर्थः ।

प०— व्यभिचारादर्शनसहितसहचारदर्शनं नियामकमिति द्वितीयपक्षमाशङ्क्य निराह **नन्वित्यादिना** ॥ **वक्ष्यमाणत्वादिति** । 'सहदर्शनमात्रेण न व्याप्तिरवसीयते' इति वैशेषिकनये वक्ष्यमाणत्वादित्यर्थः ॥ **अन्यथेति** । मामहं जानामीत्यात्मकर्तृकज्ञाने आत्मनोऽकर्मत्वे कदाप्यात्मनः साक्षात्कारो न स्यादित्यर्थः । ननु नास्त्येव सः, आत्मनो नित्यानुमेयत्वात् प्रत्यक्षत्वे च तार्किकादिरीत्या कर्मत्वा-

भावेऽपि मानससाक्षात्कारस्य, प्राभाकररीत्या स्वप्रकाशज्ञानाश्रयतया आत्मसाक्षात्कारस्य चोपपत्तेरित्यत आद्यं तावन्निराह **न चेति** । द्वितीयं मतमनूद्य निराह **कश्चिदित्यादिना अपरस्त्वितिपर्यन्तेन** ॥ **अहं सुखमित्यादीति** । अहं सुखं जानामि अहं दुःखं जानामीत्यादिव्यवहारः स्यात् न तु मामहं जानामीत्यादिव्यवहार इत्यर्थः । एकस्यैवात्मनोऽवच्छेदकभेदेनैव कर्तृत्वं कर्मत्वं चोपपद्यत इत्याशङ्कते **अथ ज्ञानाश्रय इति** ॥ **युञ्जानस्येति** । समाधिं कुर्वत इत्यर्थः ॥ **निरुपाधिकमात्मानमिति** । तस्यां दशायामात्मस्वरूपं सुखाद्युपाध्यनवच्छिन्नमेवावभासत इत्यङ्गीकारात् सुखादिविशिष्टं कर्मेति वक्तुं न शक्यत इत्यर्थः ।

**या०— वक्ष्यमाणत्वादिति** । 'सहदर्शनमात्रेण न व्याप्तिरवसीयते' इत्यत्रेति शेषः । **अन्यथेति** । आत्मनः साक्षिरूपैतज्ज्ञानाकर्मत्वे तत्साक्षात्कारासिद्धिप्रसङ्गः । ततश्चात्मनोऽप्यापरोक्ष्यासिद्धिप्रसङ्ग इति भावः ॥ **नित्यानुमेय एवेति** । अचिदात्मन्यन्तःकरणे चिदाकारप्रतिबिम्बावभासः तथाविधबिम्बान्तरपुरःसरः प्रतिबिम्बत्वात् मुख्यप्रतिबिम्बवदिति साङ्ख्यरीत्या, संवेदनेषु विषयाकारप्रतिबिम्बावभासः तथाविधबिम्बसन्निधानपुरःसरः तस्मिंस्तदवभासत्वात् दर्पणगतमुखवदिति नित्यानुमेयविषयवादिसौत्रान्तिकरीत्या वा इच्छाश्रयत्वेन तार्किकरीत्या वाऽनुमेय इत्यर्थः । तार्किकाद्युक्तं आत्मनोऽप्यकार्यत्वेऽपि आपरोक्ष्योपपादनं दूषयितुमनुवदति **कश्चिदिति** ॥ **कर्मतातिरिक्तेति** । प्रतिभासमानत्वस्येति शेषः ॥ **सदेति** । आत्मातिरिक्तघटादिविषयकत्वे आत्मविषयकत्वेऽपीत्यर्थः ॥ **अहं सुखमित्यादीति** । अहमित्यस्य हि सामान्याकारेण वस्तुत आत्मसंबन्ध्यर्थ इति त्वयोच्यते । सुखं च तद्विशेषः । एवं चात्मसम्बन्धिसुखमित्यादिव्यवहारवत् अहं सुखमित्यादिव्यवहारोऽपि स्यादित्यर्थः । तेनात्मातिरिक्तस्यैव सुखादेरहंप्रत्ययविषयत्वमिति पक्षस्यात्र निराक्रियमाणत्वात्कथमहं सुखमिति सामानाधिकरण्येन व्यवहारापादनमिति चोद्यानवकाश इति ध्येयम् । ननु नात्मातिरिक्तस्य कर्मत्वं, किन्त्वात्मन एव । न चैवं कर्मकर्त्रोः ऐक्याङ्गीकारप्रसङ्गः । आत्मन एकत्वेऽपि विशिष्टाकारभेदादित्याशयेन शङ्कते **अथेति** । विशिष्टं न विशेषणादिभ्यस्तत्त्वान्तरमिति पक्षमाश्रित्याह **आगतं तर्हीति** । विशिष्टं विशेषणादिव्यतिरिक्तमिति पक्षे न किञ्चिद्दूषणमित्यस्वरसादाह **किञ्च युञ्जानस्येति** । समाधिं कुर्वत इत्यर्थः । **निरुपाधिकमिति** । तस्यां दशायामात्मस्वरूपं सुखाद्युपाध्यनवच्छिन्नमेवावभासत इत्यङ्गीकारात्सुखादिविशिष्टः कर्मेति वक्तुं न शक्यत इत्यर्थः । न च तदा शुद्धस्य ज्ञेयत्वेऽपि विशिष्टस्य ज्ञातृत्वात्पुनर्भेद एवेति वाच्यम् । सर्वोपाधिप्रहाणेन केवलस्यैव ज्ञातृतयाऽङ्गीकारात् । उक्तं हि खण्डनटीकायाम् 'युञ्जानस्य केवल एवात्मा ज्ञाता ज्ञेयश्च निरञ्जनादिश्रुतिबलादि'ति । अकर्मकत्वे उक्तानुभवविरोध इत्यत आह **आत्मकर्मको वेति** ।

**श्री०— अन्यथा** मामहं जानामीति प्रत्ययानङ्गीकारे। **साक्षात्कारः** आत्मसाक्षात्कारः। ननु साक्षात्कारानुपपत्तिप्रसङ्गापादने इष्टापत्तिः। न चासिद्धिप्रसङ्गः। अनुमानेन तत्संभवादित्याशङ्क्य निषेधति **न चेति**। **तत्** आपरोक्ष्यम्। **वचनं** कर्तृतैव न कर्मतेति वचनम्। **घटादाविति**। अहमिति प्रत्ययस्यात्मातिरिक्तघटादिविषयकत्वे घटादौ विषयेऽहमिति ज्ञानापत्तिः। तथाच घटोऽहमिति व्यवहारापत्तिरित्यर्थः। अहंप्रत्ययस्यात्मातिरिक्तं घटादि न विषयः। किं त्वित्यत आह **आत्मेति**॥ **तन्मात्रस्येति**। आत्मसम्बन्धिसुखादिमात्रस्याहंप्रत्ययकर्मतायामित्यर्थः। मामहं जानामीत्यत्र कर्मकर्त्रोर्भेदमाशङ्कते **अथेति**। तथा ज्ञानाश्रयः सुखादिविशिष्टं जानामीत्यर्थः।

**च०— वक्ष्यमाणत्वादिति**। वैशेषिकपरीक्षायां 'सकृद्दर्शनमात्रेण न व्याप्तिरवसीयते' इत्यभिधास्यमानत्वादित्यर्थः। **अन्यथा** दर्शितसाक्षिरूपज्ञानकर्मत्वानुपगमे। आपाद्यानिष्टताघटितसामग्र्यभावात् आपरोक्ष्याभावापाद्यकापत्तिर्न संभवतीत्याशंक्य पराकुरुते **न च नित्यानुमेय इति**। अचिदात्मन्यन्तःकरणे चिदाकारप्रतिबिंबावभासः तथाविधबिंबान्तरपुरःसरः प्रतिबिंबत्वात् मुखप्रतिबिंबवदिति सांख्यदिशा संवेदनेषु विषयाकारप्रतिबिंबावभासः तथाविधबिंबसंनिधानपुरःसरः तस्मिंस्तदाभासत्वात्। दर्पणगतमुखाद्यवभासवत् इति सौत्रान्तिकदिशा वा इच्छाद्याश्रयत्वेन तार्किकदिशा अत्रानुमेय इत्यर्थ इति स्थितम्। **अपह्नोतुमशक्यत्वादिति**। भेदप्रतिनिधिविशेषमहिम्ना लिङ्गपरामर्शसिद्ध्यभावबाधाभावादिघटित-

---

सामग्र्यसमवधानकालीनज्ञानावगाहि'मामहंजानामी'त्याकारकविषयिताप्रत्यासत्त्यवच्छिन्नात्मनिष्ठप्रकारतानिरूपितविशेष्यतापन्नज्ञाननिष्ठाश्रयतासंसर्गावच्छिन्नतादृशविषयतानिरूपितात्मनिष्ठप्रकारताशालिनः साक्षिरूपानुभवस्यापह्नवे घटं साक्षात्करोमीत्यादेरपि तत्प्रसङ्गादिति भावः। चिरन्तननैय्यायिकैकदेशप्रदर्शिताम् आत्मनः कर्मतामन्तरेणापि आपरोक्ष्योपपादनभङ्गीं दुदूषयिषुरनुवदति **कश्चिदिति**। **कर्तृतैवेति**। न्यायनये जानात्यर्थनिरूपिताश्रयत्वस्यैव तदर्थनिरूपितकर्तृतारूपत्वादिति भावः। **आत्मकर्तृके** आत्माश्रिते। कर्मत्वातिरिक्तेति सविषयकज्ञानादिनिरूपितकर्मतायाः विषयतारूपत्वादिति भावः। **अनुभवविरोध इति**। सविषयकाणां विषयानुपरागेण भानाभावेन मामहं जानामीति प्रत्ययस्य विषयोपरक्तज्ञानग्रहरूपतया ज्ञानस्य सविषयकताऽसैत्सीदिति तद्राहित्यमनुभवविरुद्धमित्यर्थः। किं च ज्ञानं सकर्मकं द्वितीयान्तोपस्थापितप्रकृत्यर्थविशेषितकर्मत्वप्रकारकनिरूपकतासंसर्गकक्रियाविशेष्यकशाब्दबोधौपयिकसमभिव्याहारविशेषरूपाकांक्षाविशेषितधातूपस्थाप्यत्वात् गम्याद्युपस्थापितवत् इत्यनुमानेनापि सकर्मकताऽवगमः सेधिष्यतीत्याशयेनाह **जानातेरिति**। देवदत्तो ग्रामं गच्छतीत्यत्र गमिधातोः प्राप्त्यर्थकत्वेन सकर्मकत्वेपि परिस्पन्दरूपक्रियार्थकत्वदशायाम् अकर्मकत्ववत् जानातेः कदाप्यकर्मकत्वं नास्तीत्याह सदेतीत्यपि व्याचक्षते। उत्तरसंयोगावच्छिन्नक्रियारूपप्राप्त्यर्थकत्वं गमेरभिधावृत्त्या नव्यमते नियतमिति तदानीं सकर्मकत्व-

मेव लक्षणया तदनवच्छिन्नपरिस्पन्दार्थकताग्रहदशायामकर्मकत्ववत् जानातेरपि परिस्पन्दादिलक्षकताग्रहदशायाम् अकर्मकत्वमिष्टमेव तांत्रिकाणामित्येतद्व्याख्याशयो भावनीयः । जानातेः सकर्मकत्वावभासेन सविषयकत्वस्य ज्ञानस्वभावत्वस्थितेर्निर्विषयत्वे तत्स्वभावशून्यतया घटादिवज्ज्ञानत्वं न स्यादित्यर्थः । अत्र सप्रतियोगिके अभावादौ सप्रतियोगिकत्वस्य स्वभावत्वदर्शनात् । सविषयकत्वस्यापि ज्ञानस्वभावत्वात् स्वभावस्य चानपायात् सार्वकालिकं सविषयकत्वमेव ज्ञानत्वे प्रयोजकं, न तु यदाकदाचित्सविषयकत्वमात्रमिति वस्तुस्थितिकथनार्थं सदेत्युक्तमिति प्राञ्चः । वस्तुतस्तु । आत्मोल्लेखितयाऽहमितिप्रत्ययस्य तत्कर्मकतायास्तत्प्रत्यक्षेणैव सिद्धेस्तस्याकर्मकत्वमनुभवविरुद्धं, किं त्वहंप्रत्ययः न निर्विषयकः ज्ञानत्वात् नीलविज्ञानवदित्यनुमानविरुद्धं चेति भावेनानुमानमूलभूतव्याप्तिं व्यभिचाराभावसूचनेनोपपादयति जानातेरितीत्यपि अर्थापयन्ति । आद्य इति । सकर्मकत्वकल्प इत्यर्थः । दर्शिताद्यकल्पेऽपि आत्मातिरिक्तकर्मक आत्मकर्मको वेति वितर्कद्वयीं, तद्घटकाद्यवितर्केऽपि आत्माऽसंबंधिघटादिकर्मकः तत्संबंधिसुखादिकर्मको वेति वितर्कद्वयं, तद्घटकद्वितीयवितर्केऽपि सुखादिमात्रं कर्मेत्यभिप्रेयते तद्विशिष्ट आत्मा वेति तद्द्वयं प्रतिसंदधानः क्रमेणापहस्तयते **न तावदित्यादि** । **तन्मात्रस्य** सुखमात्रस्य । **आत्मेति** । अहमितिप्रत्ययस्य सुखत्वावच्छिन्नमात्रावगाहितायामात्मत्वावच्छिन्नावगाहनेन तद्धर्मावच्छिन्नव्यवस्थापकतादशार्थावगाहिप्रमितिविरहेण तद्धर्मावच्छिन्नसत्त्वानिर्वाहप्रसङ्ग इति भावः । **अहं सुखमित्यादीति** । यथा ह्ययमिति धर्मितावच्छेदकीभूत-इदन्त्वप्रकारकग्रहबलात् तद्धर्मविशेषितानुयोगिकवैशिष्ट्यं घटत्वांशेऽवगाहमानौ अयं घट इति प्रत्ययव्यवहारौ भवतः, अतः तद्वत् अहमिति धर्मितावच्छेदकीभूताहंत्वप्रकारकप्रतीतिबलात् तद्धर्मविशेषितानुयोगिकवैशिष्ट्यं सुखत्वांशेऽवगाहमानौ अहंसुखमितिप्रतीतिव्यवहारौ स्यातामिति भावः । ज्ञानविशिष्टस्य कर्तृत्वं सुखादिविशिष्टस्य कर्मत्वं उपेयत इति तयोर्भेदान्न क्षतिरित्याशङ्कते । **अथेति** । विशिष्टस्य विशेष्यादिविशेषणसम्बन्धत्रितयरूपतया तादृशांविशिष्टद्वयघटकविशेष्यांशैक्यनियन्त्रितोक्तक्षतितादवस्थ्यमभिधत्ते **तर्हीति** । विशिष्टं न दर्शितत्रितयरूपं किं त्वखण्डमन्यदिति मताश्रयणेपि तदापत्तिर्दुर्वारेत्याह **किञ्च युञ्जानस्येति** । रुधादीरित्त्वकस्य स्वरितेत्त्वेन तदन्तर्गतात् युजेर्योगार्थात्कर्तरि लटः शानजादेशे श्नम्यलोपेऽनुस्वारे च निष्पन्नतया युंजानशब्दस्य योगं कुर्वाणस्येत्यर्थः । निरुपाधि सुखाद्युपाध्यनवच्छिन्नम् । अतस्तत्र विशिष्टकर्मत्वं न सुवचमिति भावः । युंजानश्च केवल एवात्मा ज्ञाता ज्ञेयश्च निरंजनादिश्रुतिबलादिति सांकरोक्त्या केवलस्यैव ज्ञातृत्वाङ्गीकारादिति हृदयम् ।

**सु० — अपरस्तु घटादिसन्निकृष्टेन चक्षुरादिनोपजनितं विज्ञानं त्रितयप्रकाशरूपं कर्मतया विषयम् । स्वप्रकाशतया स्वरूपम् । आश्रयतयाऽऽत्मानं व्यवस्थापयतीति नात्मनः कर्मता,**

१. रुधादीति । रुधिर् भिदिर् युजिर् इत्यादिनवधातवः, इर् इत् येषां ते इरितः ।

नापि तत्साक्षात्कारासिद्धिरित्याह । स प्रष्टव्यः । किमिदं ज्ञानस्य स्वप्रकाशत्वं नामेति । स्वकर्मकप्रकाशत्वमिति चेत् । तर्हि वृश्चिकभिया पलायमानस्याशीविषमुखे निपातः । यत्स्वलक्षणमात्राधीनविरोधं कर्मकर्तृभावं परिहर्तुं सर्वलोकावसितविरोधं क्रियाकर्मभावमभ्युपैति । क्रिया हि कर्मकारकजन्येष्यते । न च जन्यजनकयोरेकतोचिता । अन्तर्भावितपूर्वापरभावित्वात्तस्याः । न च तदेव स्वात्मानं प्रति पूर्वमपरं चेति युज्यते । प्रकाशान्तरानपेक्षसिद्ध(द्धि)त्वं स्वप्रकाशत्वमिति चेन्न । घटादेरपि स्वप्रकाशतापातात् । न हि घटादयः स्वसिद्धौ प्रकाशान्तरमपेक्षन्ते, किं नाम प्रकाशमेव । स्वातिरिक्तप्रकाशानपेक्षसिद्ध(द्धि)त्वमिति चेन्न । स्वापेक्षाभावेन स्वातिरिक्तविशेषणवैयर्थ्यात् । प्रकाशानपेक्षसिद्धत्वमिति चेन्न । व्याघातात् । शशविषाणादेरपि(एवं) सिद्धिप्रसङ्गाच्च । स्वव्यवहारहेतुप्रकाशत्वमिति चेन्न । स्वविषय एव व्यवहारहेतुत्वदर्शनेनास्वविषयस्य स्वव्यवहारहेतुताऽनुपपत्तेः । तद्गुणसंविज्ञानबहुव्रीह्यादिकं तु नोदाहरण(णीय)म् । गुणस्यापि समासविषयताऽङ्गीकारात् ।

शे० — त्रिपुटीप्रत्यक्षवादिना प्राभाकरेणात्मनोऽकर्मत्वेऽप्युक्तं स्वप्रकाशसंविदाश्रयत्वेन प्रत्यक्षत्वोपपादनप्रकारं दूषयितुमनुवदति **अपरस्त्विति** ॥ **किमिदमिति** वक्ष्यमाणापेक्षया किंशब्दः ॥ **स्वलक्षणेति** । परसमवेतक्रियाफलशालित्वं कर्मत्वमिति स्वमात्रकल्पितान्यत्वगर्भलक्षणमात्राधीन एकैकस्य कर्तृत्वकर्मत्वविरोधो न वास्तव इति युक्तमेकत्वं कर्तृकर्मणोः न तु क्रियाकर्मणोरपि । तयोर्विरुद्धत्वाद्विरुद्धस्वभावत्वादिति भावः । विरुद्धस्वभावत्वमेव कथमित्यतो भेदव्यतिरेकेण क्रियाकर्मभावस्यैवानुपपत्तेरित्याह **क्रिया हीति** । कार्या क्रियेत्यर्थः ॥ **अन्तर्भावितेति** । अनन्यथासिद्धनियतपूर्वभावित्वं कारणत्वमनन्यथासिद्धनियतपश्चाद्भावित्वं तु कार्यत्वमित्यर्थः । ततोऽपि किमित्यत आह **न चेति** । एकस्याप्यनेककालसंबन्धितया पूर्वापरभावोऽस्ति । अत उक्तं स्वात्मानं प्रतीति । द्रव्याद्याकारेणाभेदेऽपि मृद्घटयोः पूर्वापरभावोऽस्ति । तत उक्तं **तदेवेति** । तदनवच्छिन्नकालविशेषस्यैव तत्पूर्वशब्दार्थत्वात् युगपदेकस्यापि पूर्वापरीभावसम्भव इति भावः । प्रकाशान्तरानपेक्षसिद्धत्वं किं प्रकाशभिन्नानपेक्षसिद्धत्वमभिमतं, स्वातिरिक्तप्रकाशानपेक्षसिद्धत्वं वेति विकल्पं मनसि निधायाद्यं दूषयति **न घटादेरपीति** । प्रकाशभिन्नानपेक्षत्वेऽपि स्वातिरिक्तप्रकाशापेक्षसिद्धत्वान्न घटादेस्तत्प्रसङ्ग इति । द्वितीयं शङ्कते **स्वातिरिक्तेति** ॥ **स्वापेक्षाभावेनेति** । कुत्रापीति शेषः ॥ **व्याघातादिति** । सिद्धेः प्रकाशापेक्षत्वनियमेन सिद्धित्वोक्त्या तत्सापेक्षत्वस्यैव लाभात् सिद्धेः प्रकाशत्वानपेक्षत्वोक्तिर्व्याहतेत्यर्थः । सिद्धेः साधकप्रमाणानपेक्षत्वनियमाभावात् न व्याघात इत्यरुचेराह **शशेति** ॥ **स्वविषय एवेति** । तद्विषयकज्ञानस्यैव तद्व्यवहारहेतुत्वस्य पटादिज्ञाने दर्शनेन ज्ञानस्य स्वविषयव्यवहारहेतुत्वं वदता स्वविषयताऽवश्यं वाच्या ।

अन्यथा स्वव्यवहारहेतुत्वमेव न स्यात् । तथा चोक्तरीत्या क्रियाकर्मभावविरोध एवेति भावः । ननु तद्विषयमेव तत्र स्वकार्यं करोतीति न नियमः । गाङ्कुटादिभ्यः ( गाङ् कुटादिभ्योऽञ्णिन्ङित् । गाङादेशात्कुटादिभ्यश्च परे अञ्णितः प्रत्ययाः ङितः स्युः ) इत्यत्र बहुव्रीहेः स्वाविषयेऽपि कुटे स्वाविषयान्यपदार्थभूतपुटादाविव कार्यकारित्वदर्शनात् । अध्ययनविधिदीपप्रभादेश्च स्वाविषयकस्याप्यन्यस्मिन्निव स्वस्मिन्स्वकार्यकारित्वदर्शनात् । ततश्चोक्तनियमासिद्धेःज्ञानस्यापि स्वाविषयकस्य स्वव्यवहारहेतुत्वं किं न स्यादित्यत आह **तद्गुणेति** ॥ **गुणस्यापीति** । प्रधानमन्यपदार्थं प्रति गुणभूतस्य समस्यमानपदार्थस्य कुटस्यापीत्यर्थः ॥ **समासविषयत्वाङ्गीकारादिति** । बहुव्रीहेरन्यपदार्थे शक्तिरिति वैय्याकरणादिमते, लक्षणेति तार्किकादिमते च चैत्रशालास्था आनीयन्तामित्यत्रोपलक्षणस्यापि चैत्रस्य स्वशालास्थस्य तच्छब्दविषयत्ववत् कुटस्यापि कुटादिवदन्यपदार्थभूतसमुदायान्तर्गतस्य शक्त्या लक्षणया वा बहुव्रीहिविषयत्वस्यैव सत्त्वात् न तदविषयत्वम् । तथाऽध्ययनविधिदीपप्रभादेरप्यन्यस्मिन्निव स्वस्मिन्स्वकार्यकारिणोऽपि स्वविषयत्वमेवेति न तदविषयत्वमिति नोक्तव्याप्तेः कुत्रापि व्यभिचार इति भावः ।

**स०** — त्रिपुटीप्रत्यक्षवादिनः प्राभाकरस्य मतमुत्थापयति **अपर इति** ॥ **किमिदमिति** । वक्ष्यमाणपक्षापेक्षया किंशब्दः । **यत्स्वलक्षणेति** । कर्तृकर्मलक्षणयोः पदार्थयोः पूर्वापरभावानपेक्षत्वात् नात्यन्तं विरोधः अतो युक्तमेकत्वं कर्तृकर्मणोः । न क्रियाकर्मणोः जन्यजनकयोः पूर्वापरभूतत्वेन विरुद्धधर्माधारत्वादिति ॥ **कर्मकर्तृभावमिति** । कर्मणः कर्तृभावमित्यर्थः । एवं क्रियाकर्मभावमित्यत्रापि क्रियायाः कर्मभावमित्यर्थः ॥ **स्वविषय एव व्यवहारहेतुत्वदर्शनेनेति** । तथाच स्वविषयव्यवहारहेतुताऽवच्छेदकत्वेनैव स्वविषयकत्वं ज्ञाने अवर्जनीयं, तच्च दूषितमिति भावः । ननु लम्बकर्णमानयेति बहुव्रीहेः अन्यपदार्थविषयकत्वेन गुणभूतकर्णाविषयत्वेपि कर्णानयनादिव्यवहारहेतुत्व दर्शनात् अवच्छेद्यन्यूनवर्तिनः कथमवच्छेदकत्वमित्यत आह **तद्गुणसंविज्ञानबहुव्रीह्यादिकमिति** । आदिपदेन तत्पुरुषपरिग्रहः । **गुणस्यापीति** । अन्यथा चित्रगुमानयेत्यादावपि गवानयनं स्यादिति भावः । प्राधान्याप्राधान्ये यथाक्रममन्यपदार्थवृत्तिपदार्थयोर्विषयत्वप्रयुक्ते इति द्रष्टव्यम् ।

**प०** — तृतीयं मतमनूद्य निराह **अपरस्त्विति** । इत्याहेत्यन्वयः । कथमार्थाविषमुखे निपातोऽयमित्यतो व्यनक्ति **यदीति** ॥ **स्वलक्षणेति** । स्वेन कल्पितं यल्लक्षणं परसमवेतक्रियाफलशालित्वं कर्मत्वं, क्रियाश्रयत्वं कर्तृत्वमिति कर्मकर्तृत्वमितिकर्मकर्तृलक्षणं तन्मात्राधीनविरोधमिति बहुव्रीहिः ॥ **कर्मकर्तृभावमिति** । एकस्येति योज्यम् । कर्मणः कर्तृभावं कर्मकर्तृभावमिति वा । क्रियायाः कर्मभावे कथं विरोध इत्यत आह **क्रिया हीति** । ननु लम्बकर्णमानयेत्यादिबहुव्रीहिसमासस्य अन्यपदार्थविषयकतया लम्बमानकर्णरूपविशेषणाविषयकस्यापि लम्बमानकर्णानयनादिहेतुतायाः दर्शनात्

अस्वविषयस्य स्वव्यवहारहेतुतानुपपत्तेरित्ययुक्तमित्यत आह **तद्गुणेति** । तस्य गुणभूतस्य अन्यपदार्थे संविज्ञानं यस्मिन्बहुव्रीहौ स तद्गुणसंविज्ञानबहुव्रीहिः लम्बकर्ण इत्यादिः ।

**या०** — प्राभाकरोक्तमात्मनोऽकर्मत्वेऽप्यपरोक्षत्वोपपादनं दूषयितुमनुवदति **अपर आहेति** । प्रकाशान्तरं प्रकाशभिन्नमित्यर्थः ॥ **स्वापेक्षाभावेनेति** कुत्रापीति शेषः । **स्वविषय एवेति** । तथाच ज्ञाने स्वविषयकव्यवहारहेतुतावच्छेदकं हि स्वविषयकत्वमेव वाच्यम् । अन्यत्र तथा दर्शनात् । तच्चोक्तरीत्या तत्र न संभवतीति स्वाविषयव्यहारहेतुत्वमपि तत्रासंभवीति भावः । ननु यथा गाङ्कुटादिभ्य इत्यादितद्गुणसंविज्ञानबहुव्रीहिवाक्यं स्वाविषयेऽपि समस्यमानपदाऽर्थे कुटादौ स्वविषयान्यपदार्थभूतपुटादाविव स्वकार्यं करोति । यथा वाऽध्ययनविधिदीपप्रभादिकं स्वाविषयकमप्यन्यस्मिन्निव स्वस्मिन्नपि स्वकार्यं करोति । तथा ज्ञानं स्वाविषयकमपि स्वस्मिन्नपि व्यवहाररूपकार्यहेतुः किं न स्यादित्यत आह **तद्गुणसंविज्ञानेति** ॥ **गुणस्यापीति** । प्रधानेऽन्यपदार्थे गुणभूतस्य समस्यमानपदार्थस्य पुटादेरपीत्यर्थः । यथा चैत्रशालास्था आनीयन्तामित्यत्रोपलक्षणस्यापि चैत्रस्य स्वशालास्थस्य तच्छब्दविषयत्वं, तथा कुटादेरपि पुटादिवत् अन्यपदार्थभूतसमुदायान्तर्गतस्य शक्त्या लक्षणया वा बहुव्रीहिविषयत्वेन तदविषयत्वमसम्मतमेवेति भावः । एवमध्ययनविधेर्दीपप्रभायाश्च स्वाविषयकत्वमसम्मतमेवेत्यपि ग्राह्यम् ॥

**श्री०** — **क्रियेति** । ज्ञानरूपक्रियेत्यर्थः । **स्वापेक्षेति** । यदि कुत्रचित्स्वसिद्धौ स्वापेक्षा

---

स्यात्तदा परं तद्व्यावर्तनाय स्वातिरिक्तेति विशेषणं सार्थकं स्यात् । न ह्येवमस्त्यात्माश्रयादित्यर्थः । माऽस्तु तद्विशेषणमित्याशयेन शङ्कते **प्रकाशेति** ॥ **व्याघातादिति** । सिद्धत्वमित्युक्त्या ज्ञानाभिधसिध्यपरपर्यायप्रकाशापेक्षाया एव प्राप्त्या पुनस्तदनपेक्षोक्तौ व्याहतिरित्यर्थः ॥ **शशेति** । प्रकाशानपेक्षसिद्धेर्वक्तुं सुवचत्वादित्यर्थः । **स्वविषय एवेति** । ज्ञानं यत्तत्स्वस्य यो विषयस्तत्रैव व्यवहारं करोति नान्यत्र । ज्ञानव्यवहारयोः समानविषयकतानियमात् । तथाच ज्ञानस्य स्वविषयव्यवहारजनकत्वं यद्युच्यते तदा स्वस्य स्वयमेव विषय इति वाच्यम् । तथाच स्वाख्यविषयकव्यवहारजनकतावच्छेदकं ज्ञाने किञ्चिद्वाच्यम् । तच्चान्यत्र संभवतीति स्वविषयकत्वमेव वाच्यम् । तच्च क्रियाकर्मभावानुपपत्त्या दूषितमित्यविषयकत्वान्न स्वविषयकव्यवहारहेतुत्वमुपपन्नमिति भावः । नन्वतद्विषयकस्यापि तद्विषयकव्यवहारहेतुतोपपन्नैव । अतद्गुणसंविज्ञानबहुव्रीहिस्थले दृष्टत्वात् । तथाहि । लम्बौ कर्णौ यस्य तमानयेत्यत्र बहुव्रीहेरन्यपदार्थदेवदत्तविषयकत्वेन स्वाविषयेऽपि समस्यमानपदार्थे कर्णे स्वविषयान्यपदार्थभूतदेवदत्त इवानयनव्यवहारहेतुतादर्शनाद्व्यभिचार इत्यत आह **तद्गुणेति** । कुत इत्यत आह **गुणस्यापीति** । कर्णादेरित्यर्थः । **समासो** बहुव्रीहिसमासः । तथा चास्वविषयकत्वमेव तत्र नास्तीति भावः ।

च०— नैयायिकाद्युपेतघटादिमुख्यविशेष्यकव्यवसायविषयविशेषितज्ञानविशेषितात्मगोचरानुव्यवसायोभयलिङ्गकमिति मानमातृमेयरूपत्रिपुटीविषयक-'अयं घटः, घटमहं जानामि' इत्याद्याकारकघटचक्षुःसन्निकर्षविषयासंसर्गाग्रहादिघटितसामग्रीनिष्पाद्यस्वप्रकाशरूपज्ञानाश्रयत्वमात्मनोऽकर्मकत्वेनापरोक्ष्यं चोपगच्छतां प्रभाकराणां मतं प्रतिविधित्समानोऽनुवदति **अपरस्त्विति** । **अन्तर्भावितेत्यादि** । अनन्यथासिद्धत्वे सति स्वाव्यवहितपूर्वक्षणावच्छेदेन स्वाधिकरणवृत्त्यभावाप्रतियोगित्वं स्वनिरूपितकारणत्वं, अनन्यथासिद्धत्वे सति स्वाव्यवहितोत्तरक्षणावच्छेदेन स्वाधिकरणवृत्त्यभावाप्रतियोगित्वं कार्यत्वं, तच्चैकत्र विरुद्धमित्यर्थः । प्रकाशान्तरानपेक्षसिद्धिकत्वं प्रकाशत्वावच्छिन्नप्रतियोगिताकभेदवदनियंत्रितसिद्धिकत्वरूपं सामानाधिकरण्यप्रत्यासत्त्या स्वातिरिक्तत्वविशेषितप्रकाशत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपं वाऽभिप्रेयत इति वितर्कद्वयमनुसंदधानो घटादिचाक्षुषे सौरादिप्रकाशापेक्षायामपि तदन्यनैरपेक्ष्यात् आद्यासामञ्जस्यमात्माश्रयप्रसङ्गेन स्वातिरिक्तविशेषणानर्थक्येन द्वितीयस्य च तन्मन्वानः प्रतिविधते **प्रकाशान्तरेत्यादि** ॥ **व्याघातादिति** । सिद्धत्वस्य प्रकाशसापेक्षत्वव्याप्यतया तेन तल्लब्ध्या पुनस्तत्प्रतिविहितौ व्याहतिरित्यर्थः । चाक्षुषत्वस्यैवालोकापरपर्यायप्रकाशजन्यतावच्छेदकतया, स्पार्शनादिसाधारणनिश्चयत्वरूपसिद्धित्वस्य तदभावेन न क्षतिरित्यरुचेराह **शशेति** । सिद्धित्वस्य कस्यापि जन्यतानवच्छेदकतया तदभावेन दुःसमाधेयत्वादिति हृदयम् । **अस्वविषय इति** । घटादिज्ञानात् घटादिगोचरव्यवहारानुदयेन समानविषयकज्ञानव्यवहारयोरेव हेतुहेतुमद्भावस्य स्थिततया व्यवहारहेतुप्रकाशत्वस्य स्वविषयकत्वव्याप्यतया व्यवहारांशे स्वविषयकत्वोपादानानर्थक्यादिति भावः । ननु कुटादिभ्यः रुधादिभ्य इत्यादितद्गुणसंविज्ञाननिर्देशेषु तादृशनिर्देशाविषयेपि कुटादौ रुधादौ च तद्विषयीभूते पुटभिदादितुल्यकक्ष्यापन्नतया कार्यकरत्वदर्शनात् प्रकृतेऽपि तथा किं न स्यादित्याशङ्कते **तद्गुणेति** ॥ **गुणस्यापीति** । तादृशनिर्देशाधीनान्वयधीनिरूपितसमासघटकपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नस्यापि कुटादेः, रुधादेश्चेत्यर्थः । बहुव्रीहेर्गुणसाधारणधर्मावच्छिन्ने शक्तिमुपगच्छतां पाणिनीयानां, तत्तद्घटकैकपदे तद्धर्मावच्छिन्ने लक्षणामूरीकुर्वाणानां नैयायिकानां मते चोक्तधीप्रकारीभूतस्यापि दर्शितदिशा समासवृत्तिविषयत्वोपगमादिति भावः ।

सु०— किञ्चात्मा न चाक्षुषज्ञानेऽवभासते । अरूपिद्रव्यत्वादाकाशवत् । अन्यथा रूपित्वप्रसङ्गः । कर्मतया प्रकाशे रूपोपयोग इति चेन्न । प्रकाशमानं कर्मतयैव प्रकाशत इति वदन्तं प्रति विशेषणवैयर्थ्यात् । एतेनानुमानेऽपि प्रयोजकान्तरशङ्का निरस्ता । किं चात्मा यदि तदविषयोऽपि तत्र प्रकाशते । हन्त तर्हि रूपज्ञाने रसोऽपि कस्मान्न प्रकाशते । अनाश्रयत्वादिति चेत् । तत् किं यावज्ज्ञानसम्बन्धि ज्ञाने प्रकाशते, किंवाऽऽश्रय एव ॥ आद्ये चक्षुरा-

दावतिप्रसङ्गः । द्वितीयेऽपि नियामकं वाच्यम् । न हि घटोऽयमित्यात्माऽवभासते । घटमहं जानामीतिप्रत्ययस्तु घटज्ञानविशिष्टात्मकर्मकोऽन्य एव । आत्मसिद्धिस्तु कर्मतयाऽपि भविष्यतीति । एतेन स्वप्रकाशतयाऽऽत्मसिद्धिरपि परास्ता । स्वकर्मकप्रकाशवत्त्वतद्रूपत्वातिरिक्तायास्तस्या निरूपयितुमशक्यत्वात् । तदेवं कर्तृकर्मभावो न भेदव्याप्त इति सिद्धम् ।

शे० — एवं स्वप्रकाशत्वानिरुक्तेर्न स्वप्रकाशतया स्वरूपव्यवस्थापकत्वं ज्ञानस्येत्युक्तम् । इदानीं ज्ञानाश्रयतयाऽऽत्मव्यवस्थापकत्वं परोक्तं दूषयति **किञ्चेति** । अप्रयोजकत्वं निराह **अन्यथेति** ॥ **कर्मतयेति**। तथा च रूपवत्त्वस्य चाक्षुषज्ञाने कर्मतया प्रकाशे प्रयोजकत्वात् अरूपिद्रव्यत्वेन कर्मतया चाक्षुषज्ञाने प्रकाशाभाव एव साधनीयो न तु अरूपिद्रव्यत्वेन तत्र प्रकाशाभावः । चाक्षुषज्ञानमात्रे रूपवत्त्वस्याप्रयोजकत्वेनाप्रयोजकत्वात् । तथा च सिद्धसाधनतेति भावः । न च ज्ञानस्यारूपिद्रव्यत्वेऽपि चाक्षुषज्ञाने भानात् तत्रानैकान्त्यमिति वाच्यम् । तस्यापि पक्षतुल्यत्वेन तदनवकाशात् । अत एव किञ्चेत्युक्तम् । अन्यथाऽऽत्मनो भानस्य पूर्वमदूषितत्वात्किञ्चेत्यनुपपन्नं प्रसज्येतेति द्रष्टव्यम् । **विशेषणेति** । कर्मतयेति विशेषणवैयर्थ्यादित्यर्थः । सम्भवद्व्यभिचारस्यापि विशेषणताप्रयोजकत्वादिति भावः ॥ **एतेनेति** । प्रकाशमानं कर्मतयैव प्रकाशत इति नियमाङ्गीकारेणाऽऽश्रयत्वस्य प्रकाशाप्रयोजकत्वेनानाश्रयत्वस्याप्यप्रकाशप्रयोजकत्वासिद्ध्याऽप्रयोजकत्वेनात्मा न चाक्षुषज्ञानेऽवभासत इत्युक्तानुमानेऽरूपिद्रव्यत्वापेक्षया

---

ज्ञानानाश्रयत्वरूपोपाधिशङ्काऽपि निरस्तेत्यर्थः । उक्तमुपाधिमेवोद्भाव्य दूषयितुं प्रतिबन्दीं च तावदाह **किञ्चेति** ॥ **तत्किमिति** । यद्यप्यनाश्रयत्वादिति विशिष्योक्तेर्न प्रथमविकल्पावसरः, तथाऽपि यावज्ज्ञानसम्बन्धि तावदपि ज्ञाने प्रकाशत एवेत्यङ्गीकृत्य प्रकृते ज्ञानसम्बन्धित्वमुपपादयितुमाश्रयत्वोपन्यास इत्यभिप्रायसम्भवात्प्रथमपक्षप्रसक्तिरिति द्रष्टव्यम् ॥ **आद्य इति** । चक्षुरादेरपि ज्ञानकारणत्वेन ज्ञानसंबन्धित्वादित्याशयः ॥ **नियामकं वाच्यमिति** । तेन विना चक्षुरादिकरणादेर्न भानं किं त्वाश्रयस्यात्मन एवेति नियन्तुमशक्यत्वादित्यर्थः । तच्च दुर्वचमिति भावः ॥ ननु घटज्ञाने आश्रयतयाऽऽत्मनोऽनवभासे घटमहं जानामीति आद्योल्लेखिचाक्षुषघटज्ञानाकारानुपपत्तेस्तदन्यथाऽनुपपत्तिरेवाश्रयतया भाने नियामिकेत्यतो यद्घटज्ञानं तत्रात्मनोऽवभास एव नास्ति । यत्र च घटमहं जानामीत्यादावस्त्यात्मावभासो न तद्घटज्ञानं, किन्तु घटज्ञानविशिष्टात्मज्ञानमेवेति न तदन्यथाऽनुपपत्त्याऽप्यात्मन आश्रयतया घटज्ञाने भानसिद्धिरित्याह **न हीति** । ननु चाक्षुषादिज्ञाने आश्रयतयाऽऽत्मनोऽनवभासे तदसिद्धिरेव स्यादित्यात्मसिध्यन्यथाऽनुपपत्तिरेव तत्राश्रयतयाऽऽत्मभाने नियामिकेत्यतः स्यादेतदेवं यद्याश्रयतयाऽऽत्मनोऽनवभासे तदसिद्धिः स्यात् । न चैतदस्ति । चाक्षुषादिज्ञाने कर्मतयाऽवभासेनापि तत्सिद्धिसम्भवात् । ततश्चान्यथाऽनुपपत्तेरेवाभावात् नोक्तनियमसिद्धिरित्याह **आत्मसिद्धिस्त्विति** । केचित्तु 'घटमहं जानामीत्यात्मो-

खिघटज्ञानाकारानुपपत्तिर्वा तत्राश्रयात्मभाननियामिकाऽऽश्रयतयाऽभानेऽसिद्धिप्रसङ्गो वेति विकल्पं मनसि निधायाद्यं दूषयति **न हीति** । द्वितीयं दूषयति **आत्मेति** ।। **कर्मतयेति** । घटमहं जानामीति घटज्ञानविशिष्टात्मानुभवे तद्विशिष्टात्मनः कर्मत्वादिति भाव' इत्याहुः । अन्ये तु 'तर्हि घटज्ञाने आत्मभानं न स्यात् । ततश्च तदसिद्धिप्रसङ्ग इति न तदभाव इत्यतो यद्घटज्ञानं न तत्रात्मा भासते, घटोऽयमित्यादौ तदभावात् । यत्र चात्मा भासते घटमहं जानामीत्यादौ तच्च न घटज्ञानमित्याह **न हीति** । अत एव न तदसिद्धिप्रसङ्गोऽपीत्याह **आत्मसिद्धिस्त्विति** ।। **कर्मतयेति** । मामहं जानामीत्यत्रेति शेष' इत्याहुः । ननु नात्मसिध्यर्थं तस्य कर्मत्वमाश्रयणीयम् । वेदान्तरीत्या विनापि कर्मत्वं स्वप्रकाशतयैव तत्सिद्धिसम्भवादित्यत आह **एतेनेति** । एतेनेत्युक्तं हेतुमेव विशदयति **स्वकर्मकेति** ।। **अशक्यत्वादिति** । उक्तरीत्येति शेषः । अयमाशयः । स्वप्रकाशत्वं न तावत्स्वप्रकाशान्तरानपेक्षसिद्धिकत्वम् । घटादेरपि तदापातात् । नापि स्वातिरिक्तप्रकाशानपेक्षसिद्धिकत्वम् । स्वातिरिक्तविशेषणवैयर्थ्यात् । नापि प्रकशानपेक्षसिद्धित्वम्, व्याघातात्, शशविषाणादेरपि सिद्धिप्रसङ्गाच्च । नापि स्वव्यवहारहेतुप्रकाशत्वम् । स्वविषयवत्त्वं विना तदयोगात् । तस्मात्स्वकर्मकप्रकाशवत्त्वं वा स्वकर्मकप्रकाशरूपत्वं वा स्वप्रकाशत्वमिति वाच्यम् । न च तत् तेषां मते आत्मनः सम्भवति । कर्तृकर्मविरोधप्रसङ्गेन परैस्तदनङ्गीकारात् । अङ्गीकारे वा उभयत्र कर्मतयैवात्मसिद्धेः प्राप्तत्वेन अस्मदुक्तप्रकाराबहिर्भाव इति । अत्र च स्वप्रकाशस्यात्मस्वरूपज्ञानस्येश्वरज्ञानवन्नित्यत्वान्न कार्यक्रियाकर्मभावपक्षोक्तपौर्वापर्यानुपपत्तिरूपदोषप्रसक्तिरिति ध्येयम् । एवं मामहं जानामीत्यत्रात्मनोऽकर्मत्वे उक्तरीत्या तदापरोक्ष्यासिद्धिप्रसङ्गात्कर्मत्वे वाच्ये तत्रैव व्यभिचारान्न कर्तृकर्मभावो भेदव्याप्त इति प्रथमपक्षदूषणोपसंहारव्याजेन द्वितीयपक्षमुपादत्ते **तदेवमिति** ।

म० — **एतेनेति** ॥ चक्षुर्ज्ञानासंबन्धित्वमुपाधिर्न भवति संबन्धित्वस्य कर्मत्वाविनाभूतत्वेन साधनवतः पक्षादव्यावृत्तत्वेन साधनव्यापकत्वात् । संबन्धित्वमात्राश्रयणे चक्षुरादौ साध्यव्यापकता । अथ ज्ञानाश्रयत्वमुपाधिः, तन्न; प्रतिपक्षानुमानस्यानैकान्त्यप्रसङ्गात्, घटोऽयमितिज्ञाने आत्माऽप्रतिभासात्; 'यत्कर्म तदेव प्रकाशते नान्यत्' इति नियमाङ्गीकारेणाश्रयत्वस्य प्रकाशाप्रयोजकत्वेन अनाश्रयत्वस्याप्यप्रकाशाप्रयोजकत्वाच्चेति । ननु घटमहं जानामीत्यत्र घटस्यैव कर्मत्वात् आश्रयतया प्रतिभासानभ्युपगमात् कथमात्मावभासत्वमुपपद्यत इत्यत आह **आत्मेति** । किञ्च आत्मा न संविदाश्रयतया परोक्षः वस्तुत्वात् घटवत् । केवलान्वयितया उपाधेरनाशङ्क्यत्वादिति । **अनाश्रयत्वादिति** । विशेषोक्तावपि यावज्ज्ञानसंबन्धि ज्ञाने प्रकाशत इत्येवाङ्गीकृत्य प्रकृतत्वाभिप्रायेणात्मनः ज्ञानसंबन्धित्वमुपपादयितुमेवमुच्यते उत ज्ञानाश्रय एव ज्ञाने प्रकाशत इत्यङ्गीकारात् रूपादेश्च तदभावन्ना

प्रकाशप्रसक्तिरित्यभिप्राये नेति विकल्पकोटयुत्थानं द्रष्टव्यम् । स्वप्रकाशज्ञानाश्रयत्वेन आत्मसिद्धिरित्येत-न्मतदूषणेन मायावादमतमपि दूषितमित्याह **एतेनेति** ॥ **निरूपयितुमशक्यत्वादिति** ॥ तथाच प्रथमपक्षाङ्गीकारे प्रागुक्तव्यभिचारः । द्वितीये पौर्वापर्यविरोध इति द्रष्टव्यम् । प्रथमपक्षस्यासंभव-दुष्टत्वात् द्वितीयं पक्षमभ्युपगमयन् आक्षेपमुपसंहरति **तदेवमिति** ।

प० — **अनुमानेपीति** । आत्मा न चाक्षुषे ज्ञानेऽवभासते इत्यनुमाने इत्यर्थः । ज्ञानाना-श्रयत्वज्ञानासंबन्धित्वादिकमेव चाक्षुषज्ञानेऽनवभासे प्रयोजकं न त्वरूपिद्रव्यत्वमिति शङ्का निरस्ता । चाक्षुषज्ञानावभासे रूपस्यैव प्रयोजकत्वेन तदभावे तदभावनियमेन हेतोरेव प्रयोजकत्वाज्ज्ञानाश्रयत्वस्या-प्रयोजकत्वादिति भावः ॥ **अनाश्रयत्वादिति** । तज्ज्ञानानाश्रयत्वादित्यर्थः । घट इत्यादिज्ञाने आत्मनो भानमेव नियामकमित्यत आह **न हीति** । ननु घटज्ञानस्याकारो न घटोयमिति, किन्तु घटमहं जानामीत्येव । तत्र चात्मा भात्येवेत्यत आह **घटमिति** । नन्वत्रापि प्रत्यये ज्ञानमेव कर्मतया भाति । आत्मा त्वाश्रयतयैव । अन्यथात्मसिद्धिरेव न स्यादित्यत आह **आत्मसिद्धिस्त्विति** । अत एव प्राग्घटज्ञानकर्मक इत्यनुक्त्वा ज्ञानविशिष्टात्मकर्मक, इत्यवोचामेति भावः । एवञ्च विशिष्टात्मज्ञाने कर्तुरेव कर्मत्वं प्राप्तमित्याकूतम् ।

या० — **एतेनानुमान इति** । चाक्षुषज्ञानासम्बन्धित्वं नोपाधिः । सम्बन्धपदेन कर्मत्वविव-क्षायां साधनव्यापकता । सम्बन्धमात्रविवक्षायां तु चक्षुरादौ साध्यव्यापकतेति भाव इत्याहुः । वस्तु-तस्त्वात्मा न चाक्षुषज्ञानेऽवभासत इत्युक्तानुमाने चाक्षुषज्ञानानाश्रयत्वमुपाधिरिति शङ्काऽपि निरस्तेत्यर्थः । प्रकाशमानं कर्मतयैव प्रकाशत इति नियमाङ्गीकारेणाश्रयत्वस्य प्रकाशाप्रयोजकत्वेऽनाश्रयत्वस्याप्यप्रकाश-प्रयोजकत्वस्य शङ्कितुमशक्यत्वादिति भावः । नन्वाश्रयतयाऽऽत्मनः चाक्षुषज्ञानेऽनवभासे कथं घटमहं जानामीति चाक्षुषज्ञानाकार आत्मोल्लेखी उपपन्नः स्यात् । अत आश्रयाभाने ज्ञानाकार एव नियामक इत्यत आह **न हि घटोऽयमिति** । ततश्च यच्चाक्षुषज्ञानं तस्य घटोऽयमित्येवाकारो, न तत्रात्मा भासते । यत्र चात्मा भासते घटमहं जानामीत्यत्र, न तच्चाक्षुषमिति न चाक्षुषज्ञाने आश्रयज्ञाने ज्ञानाकारो निया-मक इति भावः । ननु चाक्षुषादिज्ञाने आश्रयतयाऽऽत्मनोऽनवभासे तदसिद्धिरेव स्यादित्यात्मसिद्ध्य-न्यथाऽनुपपत्तिरेव तत्राश्रयभाने नियामिकेत्यत आह **आत्मसिद्धिरिति** ॥ **कर्मतयेति** । अहं जानामी-त्यत्रेति शेषः । एवं स्वमतेऽन्यथोपपत्तिमभिधाय मायावाद्युक्तान्यथोपपत्तिं दूषयति **एतेनेति** । उभय-त्रापि कर्मतयैवात्मसिद्धेरागतत्वेनासदुक्तप्रकाराबहिर्भावेनेत्यर्थः । सुषुप्तावप्यात्मज्ञानानुभवादकर्मकज्ञानस्य नित्यत्वं तावदावश्यकम् । तस्य चात्मभेदे ज्ञानस्याबुभुत्सितग्राह्यत्वेन ज्ञानान्तरवेद्यत्वेऽनवस्था, स्ववेद्यत्वे आत्मज्ञानयोरुभयोः स्वप्रकाशत्वकल्पनागौरवप्रसङ्गः । अतो यावद्द्रव्यभाविना तेनात्मनोऽभेदाङ्गीकार

एव श्रेयानित्याशयेनोक्तं **तद्रूपत्वेति** । अत्र च ज्ञानस्य नित्यत्वान्न क्रियाकर्मभावपक्षोक्तपौर्वापर्यानुपपत्तिरूपदोषप्रसक्तिरिति ध्येयम् ॥ **अशक्यत्वादिति** । अवेद्यत्वपराप्रकाशत्वादिरूपायाः सिद्ध्युपायानुपन्यासेनासङ्गतत्वात्स्वव्यवहारे स्वातिरिक्तसंविदपेक्षत्वादिरूपायाश्च स्वकर्मकत्वं विनाऽसम्भवादिति भावः । एवं मामहं जानामीत्यत्रात्मनोऽकर्मत्वे तदापरोक्ष्यासिद्धिप्रसङ्गात्तत्कर्मत्वे वाच्ये तत्र व्यभिचारान्न कर्मकर्तृभावो भेदव्याप्त इति प्रथमपक्षदूषणोपसंहारव्याजेनैव द्वितीयं पक्षमुपादाय तत्र व्यभिचारिणो हेतुत्वेनोपादानानुपपत्तिरूपं दोषं प्रदर्शयन्नुत्तरग्रन्थमवतारयति **तदेवमित्यादिना** । एवञ्च प्राग्विकल्पितस्य नेति द्वितीयपक्षस्यादूषणान्न्यूनतेति शङ्काऽनवकाश इति ध्येयम् ।

**श्री०** — इतोऽप्यात्मा न ज्ञानाश्रयतया भासत इत्याह **किञ्चेति** ॥ **अन्यथेति** । आत्मनोऽपि चाक्षुषज्ञानेऽवभासाङ्गीकारे ॥ **रूपित्वेति** । तदेव हि द्रव्यं चाक्षुषं यन्महत्त्वे सत्युद्भूतरूपवदिति भावः । उपयोग इत्यनन्तरं नाश्रयतया प्रकाशे, आत्मा तु ज्ञानाश्रयतया प्रकाशतेऽतो न तत्र रूपस्योपयोग इति वाक्यशेषः । तथा चारूपिद्रव्यत्वेऽपि ज्ञानाश्रयतया चाक्षुषज्ञानेऽवभाससंभवादप्रयोजकतेति भावः । **विशेषणेति** । कर्मतया विशेषणे वैयर्थ्यमित्यर्थः । यद्यकर्मतया प्रकाशमानं किञ्चित्स्यात्तदा परं तद्व्यावर्तनायेदं विशेषणं सार्थकं स्यात् । न ह्येतदस्त्यतो व्यावर्त्याभावादिदं विशेषणं व्यर्थमिति भावः । तदविषयोप्यात्मा आश्रयतया प्रतीयते इति ब्रुवाण आशङ्कते **अनाश्रयत्वादिति** । रसस्य रूपज्ञानानाश्रयत्वादात्मनश्च तदाश्रयत्वादित्यर्थः । **ज्ञानसंबन्धि** आश्रयकरणादिकम् । तावत्सर्वमिति शेषः ॥ **आद्य इति** । चक्षुरादेर्ज्ञानकरणत्वेन तत्संबन्धित्वाद्रूपादिज्ञाने चक्षुरप्यवभासेतेत्यर्थः ॥ **इतीति** । इत्यत्रेत्यर्थः । ननु घटमहं जानामीति चाक्षुषप्रत्यये भासत एवेति चेत्तत्राह **घटमहमिति** । घटज्ञानवानहमिति तदर्थः । अन्यः चाक्षुषो न, किंतु साक्षिरूपानुव्यवसायरूप इत्यर्थः ॥ **तदेवमिति** । कर्मकर्तृभावो भेदव्याप्त इति प्रथमपक्षस्यानुपपन्नत्वादित्यर्थः । भेदव्याप्तो नेति द्वितीयपक्ष एवाङ्गीकार्य इत्याह **न कर्मकर्तृभाव इति** ।

**च०** —गुरूणां मते चाक्षुषज्ञाने आत्मभानोपगतिः सङ्गच्छत इत्याह **किं चेति** । **अन्यथेति** । विषयताप्रत्यासत्त्या द्रव्यचाक्षुषत्वावच्छिन्नं प्रति महत्त्वसमानाधिकरणोद्भूतरूपस्य तन्त्रत्वोपगमादिति भावः । **प्रयोजकान्तरशङ्केति** । उक्तानुमाने अरूपिद्रव्यत्वातिरिक्तचाक्षुषज्ञानानाश्रयत्वस्योपाधिताशङ्का चाक्षुषज्ञाने रूपस्यैव प्रयोजकताव्युत्पादनेन निरस्तेत्यर्थः । **अन्य एवेति** । मनःकरणकानुव्यवसायरूप इत्यर्थः । **कर्मतयेति** । व्यवसायात्मात्ममनोयोगविषयासंसर्गाग्रहादिघटितसामग्रीनिष्पाद्ययद्विषयिताप्रत्यासत्त्या विषयविशेषितज्ञानविशेषितात्मविषयकलौकिकप्रत्यक्षात्मकानुव्यवसायरूपज्ञानं तन्निरूपितलौकिकविषयतारूपकर्मतयेत्यर्थः । आत्मनः कर्मतामन्तरेणापि स्वप्रकाशतयैव तत्सिद्धिसंभवादिति

वेदान्तिनयप्रत्याचिख्यासया तमनुवदति **एतेनेति** । कर्मत्वोरीकार एवात्मसिद्धिरित्येतादृशार्थ एव पर्यवसानेन अस्मदभिहितविधाबहिर्भावेनेत्यर्थः । तदेव विशदयति । **सकर्मकेति** । सुप्तिदशायामप्यात्मज्ञानानुभवेनात्मकर्मकज्ञानावश्यंभावेन तादृशज्ञानस्य चात्मभिन्नत्वे ज्ञानान्तरवेद्यत्वेऽनवस्थापत्त्या स्ववेद्यत्वे आत्मज्ञानयोरुभयोः कल्पनाप्रसङ्गेन यावद्द्रव्यभाविना तेनात्मनाऽभेदाङ्गीकार एवाश्रेयनित्याशयेन तद्रूपत्वेत्युक्तिः । एतत्कल्पे ज्ञानस्य नित्यतया न क्रियाकर्मभावनिबन्धनपौर्वापर्यानुपपत्तिप्रसङ्ग इति मन्तव्यम् । **अशक्यत्वादिति** । आत्मनः सिद्ध्युपायानुपन्यसनेनावेद्यत्वरूपस्वप्रकाशत्वस्य दुरुपगमतया स्वव्याहारेत्यादिरूपस्य चोक्तदिशाऽपहस्तितत्वादिति भावः । एवं मामहं जानामीति प्रतीतिनिरूपितकर्मत्वस्यात्मन्यनुपगमे तदापरोक्ष्यासिद्धिप्रसङ्गेन तत्र तत्कर्मत्वस्योपेयतया तत्रैवानैकान्त्यात् । न कर्मकर्तृभावो भेदव्याप्त इति प्रथमकल्पीयदूषणनिगमनापदेशेन द्वितीयकल्पमुपाददानस्तत्रानैकान्त्येन हेतुत्वेनोपादानानुपपत्तिरूपां क्षतिमभिदधान उत्तरग्रन्थमवतारयति **तदेवमित्यादि** । इत्थं च प्राग्वितर्कितस्य भेदव्याप्तत्वनिषेधोपरक्तद्वितीयवितर्कस्याप्रतिविधानान्न्यूनतेति दोषानवकाशः ।

सू०— ॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥

**तथा च कथं हेतुत्वेनोपादानमित्यत आह** कर्मेति ।

**अनु०—** कर्मकर्त्रोरुत्सर्गतो भिदा ॥

---

**यावेकस्यां क्रियायां कर्मकर्तारौ तयोर्भेद इत्यस्त्येव व्याप्तिः । किं त्वौत्सर्गिकी । न तु धूमस्येवाग्निना सङ्कोचानर्हेत्यर्थः । ततः किं लब्धमिति चेद्दोषद्वयं परिहृतमिति क्रमेणाह** अभेदोऽपीति ।

अभेदोऽपि विशेषे स्याद्बली सोऽप्यनपोदितः ॥

**यस्मात्कर्मकर्त्रोरुत्सर्गत एव भिदा, तस्माद्विशिनष्टि स्वविषयमुत्सर्गविषयाद्व्यवच्छिनत्तीति विशेषोऽपवादस्तस्मिन्सत्यभेदोऽपि स्यात् । तथा च मामहं जानामी(त्याद्यु)त्युपपन्नं भवति । यतश्चोत्सर्गोऽप्यपवादाभावे बली स्वसाध्यसाधने समर्थः । न चास्ति प्रकृतेऽपवादः । तस्मादत्र हेतुत्वेनोपादानमपि युज्यते । यथा हि न हिंस्यात्सर्वा भूतानीत्यौत्सर्गिको भूतहिंसानिषेधोऽग्नीषोमीयपशुहिंसाविधिनाऽपोद्यते । भवति चानपोदिते ब्रह्महिंसाद्यकरणीयत्वे प्रमाणम् । नन्वेवं तर्हि प्रमेयत्वानित्यत्वयोरप्येवं वक्तुं शक्यत एव । प्रमेयत्वस्यानित्यत्वेनौत्सर्गिकी व्याप्तिः । अपवादेन त्वाकाशादौ नित्यत्वम् । अपवादाभावाच्छब्दादावनित्यत्वसाधकतेति । ततश्चानैकान्तिकतोच्छेदः स्यात् । मैवम् । सामान्यविषयेण हि प्रमाणेनार्थे प्रतीते सति विशेष-**

विषयेणापवादो भवति । ततश्च सर्वतः प्रसक्ता बुद्धिस्तद्विषयं परित्यज्यान्यत्र विश्राम्यति । न च सर्वभूतहिंसानिषेधस्येव प्रमेयत्वानित्यत्वव्याप्तेः केनापि प्रमाणेन प्राप्तिरस्ति । किं नाम प्रमेयत्वं, नित्यत्वानित्यत्वाभ्यां सहव्यवस्थितमेवोपलभ्यत इति न तत्र(अपि)उत्सर्गापवादन्यायस्यावकाशः । एवं तर्हि कर्मकर्तृभावोऽपि भेदाभेदाभ्यां सह व्यवस्थित एवोपलब्ध इति कथमत्राप्युत्सर्गापवादन्यायस्यावकाशः । मैवम् । प्रत्यक्त्वपराक्त्वरूपो हि कर्तृकर्मभावः । स तावदापाततो विरोधाद्भेदेन घटनीयो वा विशेषेण वा । तत्र भेदो मुख्यः, विशेषस्तु प्रतिनिधिरित्युक्तम् । न च मुख्यप्रतिनिध्योः समकक्ष्यतया प्रतिभासो भवति । अतो भेदः सामान्यतः प्राप्नोति विशेषस्त्वपवादेनेति युक्तमुक्तम् । यथा चानुगतसामान्याभावेऽप्युत्सर्गापवादन्यायसंभवस्तथा वक्ष्यामः । सोपाधिकसंबन्धस्य साधनाङ्गताऽभाववत् सोपाधिकव्यभिचारस्यापि न दूषणाङ्गत्वमिति किमत्रालौकिकम् । वक्ष्यते चैतदिति ।

शे०— अस्तु तर्हि द्वितीयो निरवद्यत्वादित्यतस्तत्र च व्यभिचारिणोऽहेतुत्वाद्धेतुत्वेनोपादानानुपपत्तिरूपं दोषं दर्शयन् उत्तरग्रन्थमवतारयति **तथा चेति** ।। **दोषद्वयमिति**। कर्मकर्तृभावो भेदव्याप्तः इति आद्यपक्षोक्तो मामहं जानामीत्यादौ व्यभिचारः । नेति द्वितीयपक्षोक्तो हेतुत्वेनोपादानानुपपत्तिरूप इत्येवं प्राक् विकल्पितपक्षद्वयोक्तं दोषद्वयमित्यर्थः।। कथं क्वचिदपोदितस्यापि प्रकृतेऽपवादाभावमात्रेण हेतुतयोपादानमित्यतस्तथाऽन्यत्र दृष्टत्वादित्याशयेनाह **यथा हीति** ।। **औत्सर्गिक इति** । या भूतहिंसा सा निषिद्धेत्यौत्सर्गिकोऽयं नियम इत्यर्थः । **सर्वभूतहिंसानिषेधस्येवेति** । सर्वभूतहिंसात्वनिषिद्धत्वयोर्व्याप्तेरिवेत्यर्थः । **सहव्यवस्थित एवेति** । तथा च कर्मकर्तृभावभेदयोरपि सामान्यतो व्याप्तिग्राहकं प्रमाणं नेति भावः । क्वचित्सहावस्थानात् आपातत इत्युक्तम् ।। **विशेषेण वेति** । मामहं जानामीत्यादाविति शेषः । **उक्तं** जन्माधिकरण इति शेषः । **सामान्यत इति** । सामान्यतो नियमग्राहकप्रमाणेन प्राप्नोतीत्यर्थः । ननु सिद्धान्तेऽनुगतसामान्याभावात् कथमुत्सर्गापवादन्यायः । द्वयोः प्रमाणयोरेकस्वरूपविषयत्वे ह्यन्यतरस्याप्रामाण्यमेव स्यात्, भिन्नविषयत्वे तु नापवादविषयोऽस्ति । सामान्यतः प्रसक्तस्यैव विशेषविषयेणापवाददर्शनादित्यत आह **यथा चेति** । वैशेषिकपरीक्षायां 'व्युत्पत्तिरपि हि सादृश्येनैव गम्यते' इत्यनुव्याख्यानव्याख्यानावसरेऽनुगतसामान्याभावेऽपि सादृश्येनैव तत्कार्यमुत्सर्गापवादन्यायादिकं सम्भवतीति वक्ष्याम इत्यर्थः । नन्वसाधनत्वापादकव्यभिचाराक्रान्तः कर्मकर्तृभावः कथं भेदकः स्यादित्यतो न व्यभिचारमात्रमसाधनत्वे हेतुः, किंतु निरुपाधिकव्यभिचार एवेत्यभिप्रेत्य व्यभिचारमात्रस्यादोषत्वं दृष्टान्तोपदर्शनपूर्वकमुपपादयति **सोपाधिकस्येति** । साधनस्य साध्यसाहित्यमात्रं न प्रामाण्योपयोगि किन्तु

निरुपाधिकमेव । अन्यथा सोपाधिकसाध्यसम्बन्धस्य मैत्रीतनयत्वादेरपि श्यामतासाधनत्वप्रसङ्गादित्यर्थः । **सोपाधिकेति** । व्यभिचारोऽपि निरुपाधिक एवासाधनत्वे हेतुः । यथा प्रमेयत्वस्य नित्यत्वेन । न हि प्रमेयत्वं स्वभावेन नित्यत्वाव्यभिचारि । व्यभिचारि तु निमित्तान्तरेणेत्यत्र नियामकं पश्यामः । यस्तु स्वभावेन साध्याव्यभिचारिणोऽपि साधनस्यौपाधिको व्यभिचारो नासावप्रामाण्यकारणमिति भावः । कुत एतदित्यतोऽस्यार्थस्य 'उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् । व्यभिचार्यपवादेन मानमेव भविष्यति' इत्यनेन तृतीयस्य द्वितीये वक्ष्यमाणत्वादित्याह **वक्ष्यते चैतदिति** । किमत्र कल्पकमित्यतः 'अतो हि भोजनादीनामिष्टसाधनताऽनुमा । मानं व्यवहृतौ नित्यं व्यभिचारो हि तत्र च'इति । तदुत्तरानुव्याख्याने सोपाधिकव्यभिचारस्य दूषणत्वाभावादेवागामिभोजनादीनामिष्टसाधनतानुमानं मानम् । यदि च सोपाधिकोऽपि व्यभिचारो दूषणं स्यात्तदा विमतं भोजनमिष्टसाधनं भोजनत्वात् ह्यस्तनभोजनवदित्यनुमानमप्यमानं स्यात् । तत्रापि क्वचिदपथ्यत्वाद्युपाधिनाऽनिष्टसाधनत्वस्याप्युलम्भेन व्यभिचारसद्भावात् । न च पथ्यत्वादिविशिष्टभोजनत्वादिकमेव तत्र साधनमिति न व्यभिचारः । तस्य प्रवृत्त्युत्तरकालं फलानुमेयस्य प्रागसिद्धेः । तस्मान्निरुपाधिक एव व्यभिचारोऽसाधनत्वे हेतुर्न तु सोपाधिकोऽपीत्यवश्यं कल्पनीयमिति कल्पकं च वक्ष्यत इत्यर्थः ।

स० – ॥ **दोषद्वयमिति** । मामहं जानामीत्यत्र व्यभिचारः, व्यभिचारिणश्च हेतुत्वेनोपादानानुपपत्तिरिति दोषद्वयमित्यर्थः ॥ 'यथा हि' इत्यादिना सामान्यविशेषभावमुपपादयति । मैवमित्यादेरयं भावः । सामान्यव्याप्तेः प्रमितायाः एव विशेषव्याप्त्या प्रमितयैव सङ्कोचः क्रियते । यत्र प्रमितता नास्ति, साहचर्यमात्रे तु प्रतीयते, न तत्र सामान्यविशेषभावः । विशेषप्रमाणप्रवृत्तेः प्रागेव व्यभिचारात् । सामान्यव्याप्तेर्विशेषवृत्तिशङ्काऽनुदयात् । विलक्षणप्रमाणप्राप्तयोश्च न सामान्यविशेषभाव इति । **विशेषेण वेति** । मामहं जानामीत्यत्रेति भावः । ननु सिद्धान्तेऽनुगतसामान्याभावेन कथमुत्सर्गापवादन्यायावकाशः । द्वयोः प्रमाणयोरेकविषयत्वे अन्यतरस्याप्रामाण्यमेव स्यात् भिन्नविषयत्वे तु नापवादविषयोऽस्तीति बाधकावतारात् । अनुगतसामान्याङ्गीकारे तु सामान्यतः प्रवृत्तप्रमाणस्य विशेषतोऽपवादविषयत्वेन नोक्तदोषः स्यादित्यत आह **यथा चानुगतसामान्याभावेऽपीति** ॥ 'व्युत्पत्तिरपि हि सादृश्येनैव गम्यते'इत्यनुव्याख्यानव्याख्याऽवसरे वक्ष्याम इत्यर्थः ॥ **सोपाधिकस्य व्यभिचारस्यापीति** ॥ अपवादनिमित्तस्य व्यभिचारस्येत्यर्थः ॥ **वक्ष्यते चैतदिति** ॥ 'उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् । व्यभिचार्यपवादेन मानमेव भविष्यती'त्यत्रेति शेषः ।

प० — **दोषद्वयमिति** । कर्मकर्तृभावस्य भेदव्याप्तत्वे मामहं जानामीत्यात्मसाक्षात्कारानुपपत्तिः । अव्याप्तत्वे च सूत्रे भेदव्याप्तत्वमुपेत्य कर्मकर्तृव्यपदेशस्य हेतुत्वेनोक्त्यनुपपत्तिरिति दोषद्वय-

मित्यर्थः । **न चास्ति प्रकृतेऽपवाद इति** । अभेकौकस्त्वस्य व्योमवत्समाहितत्वाच्चक्षुर्मयत्वादेश्चानन्दमयनयन्यायेन सावकाशत्वादिति भावः ॥ **विशेषेण वेति** । मामहं जानामीत्यादाविति भावः ॥ **प्रतिनिषिधिरित्युक्तमिति** । जन्मादिनय उक्तमित्यर्थः । ननु हिंसात्वादिजातिविषय उत्सर्गः । अग्नीषोमीयादिव्यक्तिविशेषविषयः अपवादः सिद्धः । 'कुतो भस्मत्वमासस्य नरत्वं पुनरिष्यते' इत्यादिना वैशेषिकनयेऽनुगतजातिः सिद्धान्ते निरसिष्यते । तथाच कथमुत्सर्गापवादन्यायावकाश इत्यत आह **यथा चेति** । '(इति)व्युत्पत्तिरपि हि सादृश्येनैव गम्यते' इत्येताद्व्याख्यानसुधायां वैशेषिकनये सादृश्यमादायैवोत्सर्गादिरिति वक्ष्याम इति भावः । नन्वपवादकृतव्यभिचारिणोपि व्यभिचारित्वात्तस्य हेतुत्वेनोपादानमलौकिकमित्यत आह **सोपाधिकेति** ॥ **वक्ष्यते चैतदिति** । 'उत्सर्गतोपि यत्प्राप्तमपवादविवर्जितम् । व्यभिचार्यपवादेन मानमेव भविष्यति' इतिभक्तिपादे वक्ष्यत इत्यर्थः ।

या०— **दोषद्वयमिति** । आद्यपक्षोक्तो मामहं जानामीत्यत्र व्यभिचारो द्वितीयपक्षोक्तो हेतुत्वेनोपादानानुपपत्तिरिति दोषद्वयमित्यर्थः ॥ **भूतहिंसानिषेध इति** । या भूतहिंसा सा निषिद्धेत्यौत्सर्गिको नियम इत्यर्थः ॥ **सर्वभूतहिंसानिषेधस्येवेति** । सर्वभूतहिंसान्वनिषेधयोर्व्याप्तेरिवेत्यर्थः । **सहव्यवस्थित एवेति** । तथा च कर्मकर्तृभावभेदयोः सामान्यतो व्याप्तिग्राहकं प्रमाणं नेति भावः ॥

क्वचित्सहावस्थानादापातत इत्युक्तम् ॥ **विशेषेण वेति** । मामहं जानामीत्यादाविति भावः ॥ **सामान्यत इति** । सामान्यतो नियमग्राहकप्रमाणेन प्राप्नोतीत्यर्थः । ननु सिद्धान्तेऽनुगतसामान्याभावेन कथमुत्सर्गापवादन्यायसम्भवः । द्वयोः प्रमाणयोरेकस्वरूपविषयत्वे ह्यन्यतरस्याप्रामाण्यमेव स्यात् । भिन्नविषयकत्वे तु नापवादविषयोऽस्ति । सामान्यतः प्रसक्तस्यैव विशेषविषयेणापवाददर्शनादिति बाधकावतारादित्यत आह **यथा चानुगतेति** । 'व्युत्पत्तिरपि हि सादृश्येनैव गम्यते' इत्यनुव्याख्यानव्याख्यावसरेऽनुगतसामान्याभावेऽपि सादृश्येनैव तत्कार्यमुत्सर्गापवादन्यायादिकं सम्भवतीति वक्ष्याम इत्यर्थः । ननु व्यभिचारो न दूषणाङ्गमित्येतत्कथमित्यत आह ॥ **सोपाधिकेति** ॥ **सोपाधिकस्येति** । अपवादादिनिमित्तस्येत्यर्थः । कुत एतत्कल्पनीयमित्यत आह **वक्ष्यते चैतदिति** । 'अतो हि भोजनादीनामिष्टसाधनतानुमा । मानं व्यवहृतौ नित्यं व्यभिचारो हि तत्र च' इत्यत्र सोपाधिकव्यभिचारस्य दूषणत्वाभावादेव ह्यागामिभोजनादीनामिष्टसाधनतानुमानं मानम् । यदि सोपाधिकोऽपि व्यभिचारो दूषणाङ्गं स्यात्तदा विमतं भोजनमिष्टसाधनं भोजनत्वात् ह्यस्तनभोजनवदित्यनुमानममानं प्रसज्येत। तत्रापि क्वचिदपथ्यत्वाद्युपाधिनाऽनिष्टसाधनत्वस्याप्युपलम्भेन व्यभिचारसद्भावात् । न च तत्र पथ्यत्वादिविशिष्टमेव भोजनत्वादिकं साधनमिति वाच्यम् । तस्य प्रवृत्त्युत्तरकालफलानुमेयस्य प्रागसिद्धेः ।

न च भोजनत्वस्यामानत्वमिष्टमेवेति वाच्यम् । प्रेक्षावतां निःशङ्कव्यवहारानुपपत्तिप्रसङ्गात् । अतो निरुपाधिक एव व्यभिचारो दूषणाङ्गं न सोपाधिकोऽपीत्यवश्यं कल्पनीयमिति कल्पकं वक्ष्यत इत्यर्थः ।

श्री० — **हेतुत्वेनोपादानमिति** । शारीरस्य सर्वगतत्वाभावे कर्मकर्तृव्यपदेशस्य कथं हेतुत्वेनोपादानम् । कर्मकर्तृभावस्य भेदव्याप्तत्वाभावेनाभेद एवोपपन्नत्वाज्जीवस्यैवास्तु सर्वगतत्वम् । तथाच जीवः स्वात्मानं स्वयं शंसतीति युक्तमेवातो विरुद्धो हेतुरित्याशयः । **ब्रह्महिंसादीति** । एवं प्रकृतेऽपि शंसनक्रियायां कर्मकर्त्रोर्भेदव्यपदेशेऽपवादाभावात्प्रकृतार्थे प्रमाणत्वं भविष्यतीति भावः ॥ **सहव्यवस्थितमेवेति** । यत्र नियमग्राहकं प्रमाणमस्ति तत्रैव नियमे चेद्व्यभिचारो दृश्यते, तर्हि तत्रोत्सर्गापवादन्यायावतार इति भावः ॥ **एवं तर्हीति** । **कर्मकर्त्रोरपि** भेदग्राहकं प्रमाणं नास्त्येवेति भावः ॥ **विशेषेण वेति** । अभेदमङ्गीकृत्य भेदकार्यकारिणा विशेषेणेत्यर्थः । **प्रतिनिधिः** भेदप्रतिनिधिः ॥ **समकक्ष्यतयेति** । सोमपूतिकयोरदर्शनादिति भावः । अत इत्यनन्तरं कर्मकर्त्रोरिति शेषः ॥ **अपवादेनेति** । मामहं जानामीत्यादौ व्यभिचारेण भेदापवादकतया तत्प्रतिनिधिर्विशेष इत्यर्थः । एवंच प्रमेयत्वस्य नित्यत्वानित्यत्वाभ्यां सहावस्थाने न कोऽपि विशेषोऽस्ति । किंतु साम्येनैव । प्रकृते तु कर्मकर्तृभावस्याभेदेन सहावस्थानं विशेषबलेनैव इति भेदेन सहावस्थानरूपकोटया साम्यं नास्तीति भेदेनैव सहावस्थानं प्रामाणिकमिति, तदेव प्रबलमिति

भावः । ननु कर्मकर्तृभावस्य भेदव्याप्तत्वात् न शारीरस्य सर्वगतत्वमुपपद्यत इत्येतदयुक्तम् । मामहं जानामीत्यभेदावगाहिप्रत्यक्षरूपापवादकप्रमाणनिमित्तव्यभिचारादर्शनेन भेदव्याप्तत्वासम्भवात्कथं व्यभिचारिणस्तस्य हेतुत्वेनोपादानमिति चेत् । न । एतादृशव्यभिचारस्य दूषणानङ्गत्वात् । कथमिति चेत्तत्राह **सोपाधिकेति** । शाकपाकजत्वप्रयुक्तश्यामत्वसम्बन्धस्येत्यर्थः ॥ **सोपाधिकव्यभिचारस्येति** । किं नाम स्वारसिकव्यभिचारस्यैव दूषणाङ्गत्वम् । न चात्र तादृशो व्यभिचारोऽस्तीत्याशयः ॥

च० — **सङ्कोचानर्हेति** । यथा हिंसात्वेन अकर्तव्यत्वसाधने वैधहिंसायामनैकान्त्यव्युदसनाय तदन्यत्वं हेतुतावच्छेदककोटौ निवेशनीयं, न तथा धूमेन वन्हिसाधने किञ्चित्तत्र निवेशनीयमित्यर्थः । **दोषद्वयमिति** । आद्यकल्पोक्तानैकान्त्यद्वितीयकल्पोक्तानैकान्तिकहेतुपरिग्रहानौचित्यरूपदोषद्वयमित्यर्थः । अकर्तरि च कारके संज्ञायामित्यधिकृत्य घञो विहिततया विशेषशब्दस्य करणसाधनघञन्ततायामेवापवादबोधकता सङ्गच्छते न तु कर्तृसाधनतदन्ततायां, तस्य तत्र नानुशासनात् विशिनष्टीत्येतत्फलितप्रदर्शनपरम् । उपदेशशब्दस्य करणसाधनघञन्ततायाः भाष्यवृत्त्यादिषु समर्थितत्वात् । व्यभिचारनिरूपकाधिकरणव्यावृत्तविशेषणविशेषस्य सर्वत्रापि हेतुतावच्छेदककोटौ निवेशसंभवेनानैकान्तिकमात्रोच्छेदः स्यादित्याशङ्कते **नन्वेवमिति** । **सामान्यतः प्राप्नोतीति** । एकक्रियानिरूपितकर्तृत्वकर्मत्वे, तादृशान्यतरा-

वच्छिन्नप्रतियोगिताकभेदनियन्त्रिताधेयताके, प्रत्यक्पराग्भावरूपत्वात् बिम्बप्रतिबिम्बभाववदित्यनुमानेन प्राप्नोतीत्यर्थः ॥ **युक्तमुक्तमिति** । जन्मादिनय इति पूरणीयम् । अथ प्रमाणद्वयस्यानुगतधर्मावच्छिन्न-विषयतायामूरीकृतायामेवोत्सर्गापवादन्यायसंभवः । यथा सार्वधातुकार्धधातुकयोः, पुगन्तलघूपधस्य च, क्ङितिचेत्यादीनाम्। प्रकृते च सिद्धान्ते तादृशधर्मानुपगत्या न तन्न्यायावतारः, द्वयोरेकव्यक्तिविषयत्वेऽन्य-तराप्रामाण्यमेव स्यात् नोभयप्रामाण्यं, भिन्नविषयत्वे च नापवादविषयोऽस्ति । सामान्यधर्मावच्छिन्नविषय-कप्रमाणस्यैव विशेषधर्मावच्छिन्नविषयकप्रमाणेनापवाददर्शनादित्यत आह **यथा चेति** । वैशेषिकपरीक्षायाम् 'इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते' इत्यनुव्याख्याव्याख्यावसरेऽनुगतसामान्याभावेऽपि सादृश्येनैव तत्कार्यमुत्सर्गापवादन्यायादिकं संभवतीत्यभिधास्याम इत्यर्थः । नन्वनैकान्तिककर्मकर्तृभावः कथं भेदसाधनायालमित्यतो नानैकान्त्यमात्रमसाधनत्वाङ्गं, किन्तु निरुपाधिकत्वविशेषितमित्येतन्निदर्शनप्रदर्शनेन घटयति **सोपाधिकेति** ॥ **वक्ष्यत इति** । साधनलक्षणे भक्तिचरणे 'उत्सर्गतोपि यत्प्राप्तमपवाद-विवर्जितम् । व्यभिचार्यपवादेन मानमेव भविष्यती'त्यादिनाऽयमर्थोऽभिधास्यत इत्यर्थः । 'अतो हि भोजनादीनामिष्टसाधनताऽनुमा । मानं व्यवहृतौ नित्यं व्यभिचारो हि तत्र च' इति तदुत्तरानुव्याख्याने सोपाधिकानैकान्त्यस्य दूषणत्वविरहादेवागामिभोजनादीनामतीतप्रत्यवसानं निदर्शनीकृत्य प्रत्यवसानत्वेन इष्टसाधनतानुमापनं संगच्छते । तस्यापि तत्तायां तु क्वचिदपथ्यत्वोपाधिनाऽनिष्टसाधनत्वस्याप्युपलम्भेना-नैकान्त्यस्य सूपपादत्वात् । पथ्यत्वविशिष्टप्रत्यवसानत्वं तु न प्राक् स्वध्यवसायम् । तादृगनुमानामानत्वे च प्रेक्षावतां निःशङ्कप्रवृत्त्यनुदयप्रसङ्ग इति प्रकृतार्थकल्पकं व्यक्तमिति भावः ।

**सु० सर्वगतत्वमत्राधिकरणे प्रतिपाद्यत इत्युक्तम् । तत्किं तन्मात्रमुतान्योप-लक्षणम् । आद्ये सूत्राणां विश्वतोमुखत्वहानिः । शास्त्रापर्यवसानं चापद्येत । द्वितीये तूपा-धिर्वक्तव्यः । अन्यथाऽधिकरणान्तराभावप्रसङ्गादित्यतः प्रथमाधिकरणोपाधिं वदन्प्रसङ्गात्सर्वा-धिकरणोपाधीनाह** एतदिति ।

अनु— एतद्भावाभिधं लिङ्गं क्रियालिङ्गे ततः परम् ॥
अन्तर्याम्यन्तरश्चेति क्रियाभावाख्यमुच्यते ॥
अदृश्यत्वाद्यभावाख्यं श्रुतिर्लिङ्गाधिका परा ॥ १ ॥

**एतत्सर्वगतत्वं भावाभिधं सत्ताभिधम् । यावन्तः शब्दाः क्वचित्प्रतीके स्थितिवाचिनस्ते सर्वेऽप्यनेनोपलक्ष्यन्त इत्यर्थः । एवमुत्तरत्रापि ज्ञातव्यम् । क्रिये च ते लिङ्गे च । ततः प्रथमाधिकरणात्परं द्वाभ्याम् 'अत्ता चराचरग्रहणात्', 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनादि'त्ये-**

ताभ्यामधिकरणाभ्यां चिन्त्येते। नन्वेकमधिकरणं व्यर्थम्। न व्यर्थम्। अ(भ्य)धिकाशङ्कया प्रत्यवस्थानात्। 'अन्तर उपपत्ते'रि'त्यन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादि'ति चाधिकरणद्वयेन क्रियाप्रधानकभावाख्यं लिङ्गमुच्यते प्रतिपाद्यते। अत्रापि पूर्ववन्नान्यतराधिकरणवैयर्थ्यम्। अत एव क्रिया क्रियया भावो भावेन व्याख्यायत इति परास्तम्। 'अदृश्यत्वादिगुणको धर्मोक्ते'रित्यत्रोक्तमदृश्यत्वादिलिङ्गमभावाख्यम्। परा परस्मिन् 'वैश्वानरः साधारणशब्दविशेषादि'त्यधिकरणे प्रतिपाद्या श्रुतिर्नाम न तु लिङ्गम्। तर्हि पादान्तभावो न संभवतीत्यत उक्तं लिङ्गाधिकेति। लिङ्गान्यधिकानि समानाधिकरणानि यया सा लिङ्गाधिकेति। यथा प्रथमपादेऽन्तस्तद्धर्मोपदेशादिति लिङ्गनिर्णयो बहुनामसमन्वयलाभार्थः तथा बहुलिङ्गसमन्वयलाभार्थो नामविचारोऽत्र न विरुध्यत इति। साक्षात्प्रकर(ण)णिनिष्ठत्वात् श्रुतेरुपादानं नोपपद्यते। सा च सूक्तादिव्यावर्तकाग्न्यादिशब्दोपलक्षणमिति ज्ञातव्यम्॥ १-२-१॥

शे०— उक्तमिति। 'सर्वगत्वं तु प्रथममि'त्यनेनेति शेषः। शास्त्रापर्यवसानं चेति। प्रत्येकं निर्णये इति शेषः॥ वक्तव्य इति। अन्यथाऽस्येदमुदाहरणमिति ज्ञातुमशक्यत्वादिति भावः। ननु अस्तु तर्हि सर्वेषामप्युदाहरणत्वमित्यत आह अन्यथेति। अनेनैव सर्वशब्दनिर्णयादिति भावः॥ एवमुत्तरत्रेति। क्रियालिङ्गे इत्यादावप्येवं यावन्तः क्रियावाचिनः शब्दाः ते सर्वेऽप्यनेनोपलक्ष्यन्त इति तात्पर्यं वर्णनीयमित्यर्थः। क्रिया च लिंङ्ग चेति भ्रान्तिं वारयति क्रियेचेति। संहारकर्मफलभोगरूपक्रियात्मके इत्यर्थः॥ क्रियाप्रधानकभावाख्यमिति। अन्तःस्थितिरूपभावसहितं रमणनियमनरूपक्रियात्मकं लिङ्गमित्यर्थः॥ पूर्ववदिति। अधिकाशङ्कया प्रत्यवस्थानादिति भावः॥ अत एवेति। अधिकाशङ्कया प्रत्यवस्थानादेवेत्यर्थः॥ परा परस्मिन्निति। वसन्ता ब्राह्मणोऽग्नीनादधीत नाभा पृथिव्या इत्यादाविव सप्तम्येकवचनस्य सुपां सुलुगित्यादिना डादेश इत्याशयः॥ तर्हीति। पादार्थस्यान्यत्रप्रसिद्धलिङ्गसमन्वस्याप्रतिपादनादिति भावः। कथमेतावता पादसङ्गतिरस्येत्यतः फलतः पादसङ्गतिं दृष्टान्तोपदर्शनपूर्वकं दर्शयति यथेति। लिङ्गनिर्णयः अन्तःस्थत्वरूपलिङ्गसमन्वय इत्यर्थः॥ बह्विति। इन्द्रसवित्रादिबहुनामेत्य :॥ बहुलिङ्गति। पाचकत्वाद्यनेकलिङ्गेत्यर्थः॥ नामेति। वैश्वानरनामेत्यर्थः। नन्वत्र वैश्वानरनामसमन्वयेन तत्समानाधिकरणतया श्रुतपाचकत्वाद्यनेकलिङ्गसमन्वयसिद्धिवत् एतत्प्रकरणगतैकलिङ्गसमन्वयेनापि तत्समानाधिकरणतया श्रुतनामलिङ्गसमन्वयसिद्धिसम्भवाद्व्यर्थं तदर्थं पादासङ्गतवैश्वानरनाम्न उपादानं सूत्रभाष्ययोरित्यत आह साक्षादिति। लिङ्गानामपि श्रुतिवत्प्रकरणनिष्ठत्वेऽपि न तदुपक्रमनिष्ठत्वम्। ततश्च साक्षात्=व्यवधानेन प्रकरणोपक्रम एव श्रुतत्वाच्छ्रुतेः प्रथमातिक्रमे कारणाभावात्तदुपादानं सूत्रभाष्ययोर्युक्तमिति भावः। यद्वा। प्रकरणनिष्ठत्वं सूक्तव्यावर्तकत्वम्।

तच्च यद्यपि प्रकरणस्थलिङ्गानामप्यस्ति । तथाऽपि न श्रुतिवत्; श्रुतेर्झटिति प्रकरणव्यावर्तकत्वात् लिङ्गानां च विलम्बेन व्यावर्तकत्वात् । ततश्चोक्तरीत्या प्राबल्याच्छ्रुतेरेवोपादानमुपपद्यते । अत एव वक्ष्यति 'सा च सूक्तादिव्यावर्तिके'त्यादिना । अथवा । साक्षादिति श्रुतेरुपादानमित्यनेन सम्बध्यते । प्रकरणनिष्ठत्वस्य श्रुतिलिङ्गसाधारणत्वेऽप्युपक्रमे श्रुतत्वात् 'असाधारण्येन व्यपदेशा भवन्ती'ति न्यायेन श्रुतेरेव प्रकरणनिष्ठत्वलाभेन साक्षादित्यस्य तदर्थत्वस्य कल्पयितुमशक्यत्वात् । लिङ्गानामप्यत्रोपलक्षण-तयोपादानेन तत्तौल्यनिरासाय श्रुतेरित्यनेन संबन्धस्य सप्रयोजनत्वात् । ततश्च श्रुतिलिङ्गानां सर्वेषाम-प्यत्रोपादनात्कुतः श्रुतेरेवात्रोपादानमिति शङ्काऽनवकाशेऽपि कुतः श्रुतेरेव साक्षात्=मुख्यतः, स्वशब्दे-नेति यावत्, सूत्रभाष्ययोरुपादानमिति शङ्कानिवृत्त्यर्थमिदमुक्तमिति द्रष्टव्यम् । सूक्तादीत्यादिपदेन विद्यादिपरिग्रहः ॥ १-२-१ ॥

स०— ननु तत्प्रकरणगतस्य कस्यचिल्लिङ्गस्यैकस्य भगवत्परत्वसमर्थने तत्समानाधिकरणानामि-तरलिङ्गानां समन्वयः सिद्धो भविष्यतीति व्यर्थं तदर्थं श्रुतेरुपादानमित्यत आह **साक्षात्प्रकरणनिष्ठत्वा-दिति** । वैश्वानरश्रुतिः साक्षादव्यवधानेनैव प्रकरणगता प्रथमत एव । प्रकरणनिष्ठत्वात्= प्रकरणव्याव-र्तकतया प्रसिद्धत्वात् उपादानमित्यर्थः । प्रकरणव्यावर्तकवैश्वानरनाम्नि भगवत्परे सति तत्प्रकरणं सर्वमपि भगवत्परं भविष्यतीत्यभिप्रायेण वैश्वानरनामैवोपात्तमिति भावः । अत आह **सा च सूक्तादि-व्यावर्तकेत्यादि** । अथवा यद्यपि गार्हपत्याद्यंगत्वादिलिङ्गान्यपि प्रकरणनिष्ठानि तथापि श्रुतिः साक्षात् मुख्यतया प्राधान्येनेति यावत् । प्रकरणनिष्ठा । लिङ्गानि तु श्रुतिशेषतया प्रकरणनिष्ठानि । अतः प्राधान्येन प्रकरणनिष्ठत्वात् श्रुतेरुपादानमित्यर्थः ।

प०— **क्वचित्प्रतीक इति** । परिच्छिन्नस्थलविशेष इत्यर्थः । अन्तराधिकरणादावत्रत्यन्याय-सिद्धचन्द्राद्यन्तःस्थत्वमुपेन्द्रादिनामसमन्वय एव क्रियते । नत्वन्तःस्थत्वं तत्र ब्रह्मणि व्युत्पाद्यते । अत एव सङ्क्षेपभाष्ये व्योमवदित्यत्रोक्तन्याय एव'अन्तरःस्ववदि'ति संचारितः । एवमन्यत्रापि ध्येयम् ॥ **उत्तरत्रापीति** । क्रियालिङ्ग इत्यत्रापि क्रियावाचिनः सर्वे शब्दाः उपलक्ष्यन्त इत्यादिरूपेण ज्ञेय-मित्यर्थः ॥ **पूर्ववदिति** । पूर्वत्र यथाऽधिकाशङ्कया गुहामित्यस्य प्रवृत्तत्वान्नान्यतरवैयर्थ्यम् तथेहान्त-राधिकरणानन्तरमधिकाशङ्कया प्रवृत्तान्तर्यामिनयस्य न व्यर्थतेत्यर्थः । अत एव संक्षेपभाष्ये अधिकरण-द्विकद्वयस्याप्यत्ता नियन्ता चेत्येवार्थ उक्तो न तु प्रत्येकमिति भावः ॥ **अत एवेति** । अधिकाशङ्कया प्रवृत्तत्वादेव क्रियासमन्वयपरपूर्वाधिकरणद्वयेनैवान्तरादिनयद्वये समन्वीयमानक्रिया अपि समन्वितत्वेन व्याख्यायते । भावोपि भावसमन्वयपरेण 'सर्वत्र प्रसिद्धे'ति नयेन ब्रह्मनिष्ठ इति व्याख्यायत इति ॥ किमेताभ्यामधिकरणाभ्यामिति चोद्यं निरस्तमित्यर्थः । यद्वा अन्तराधिकरणोक्तक्रियाऽन्तर्यामिनये समन्वी-

यमानक्रियया व्याख्यायते,अन्तराधिकरणोक्तभाव: अन्तर्यामिनयोक्तभावेन व्याख्यायतेऽतो व्याख्येयव्याख्यानभावात् नान्यतरवैयर्थ्यमिति समाधानं निरस्तम् । अधिकाशङ्कयोत्थानेनार्थवत्त्वादेवेत्यर्थः । अधिकाशङ्का चन्द्रिकायां विवृता ध्येया । अत्राप्यग्रे तत्तदधिकरणे व्यक्ता भविष्यतीति नात्र प्रदर्श्यते ॥ **न तु लिङ्गमिति** । विश्वजीवान्तरत्वाद्यैर्लिङ्गैस्सर्वैरिति सक्षेपभाष्ये वैश्वानरशब्दस्य सिद्धान्तदिशा विष्णौ यौगिकत्वाभिप्रायेण लिङ्गत्वोक्तावपि इह पूर्वपक्षरीत्यान्यत्राप्यापातदशाऽऽपन्नरूढिमुपेत्य श्रुतिरेवेयं न तु लिङ्गमित्युक्तमित्यविरोध इति बोध्यम् । समानाधिकरणानीति शेषोक्तिः । ननु पादान्तर्भावसौकर्याय लिङ्गमेव समन्वीयताम् । तस्यागेन श्रुत्युपादाने सूत्रकारस्य किं बीजमित्यत आह **साक्षात्प्रकरणीति** । प्रकरणमस्यास्तीति प्रकरणि । प्रकरणप्रतिपाद्यमिति यावत् । वैश्वानरनाम प्रकरणप्रतिपाद्ये वस्तुनि साक्षाच्छ्रूयते । लिङ्गानि तु वैश्वानरविशेषणतया । यद्वा वैश्वानरनाम साक्षाद्वचनवृत्त्या प्रकरणप्रतिपाद्यबोधकं, लिङ्गानि तु तद्व्याप्यार्पकतया वा तद्व्याप्यतया वा न, साक्षात् ,अतो वैश्वानरनाम्नः साक्षात्प्रकरणिनिष्ठत्वाच्च न केवलमनेकलिङ्गसमन्वयार्थत्वादिति । यद्वा चस्त्वर्थः । ननु सूत्राणां विश्वतोमुखत्वसिद्ध्यर्थमधिकरणविषयोपाधिसंग्रहश्लोके वैश्वानरश्रुतिमात्रं वैश्वानर(विद्या)प्रकरणस्थानेकलिङ्गयुतं समन्वीयत इत्युक्तिरयुक्ता । वैश्वानरनयस्य विश्वतोमुखत्वानापत्तिश्चेत्यत आह **सा चेति** । इदमग्निसूक्तमिदं वायुसूक्तमिदमिन्द्रसूक्तमित्यादिरूपेण सूक्तानामसाङ्कर्यप्रतिपादकम् । तथा इयमग्निविद्या इयं प्राणविद्या

---

इत्यादिरूपेणोपनिषद्गतविद्यानां असाङ्कर्यप्रतिपादकं च यत् तत्तत्सूक्तादिस्थाग्निवाय्वादिशब्दजातं तस्य सर्वस्योपलक्षणमित्यर्थः । एवं च न प्रक्रमविरोधो नाप्यधिकरणस्य विश्वतोमुखत्वभङ्ग इत्यर्थः ॥ १ । २ । १ ॥

**या०— अत एवेति** । अभ्यधिकाशङ्कया प्रत्यवस्थानादेवेत्यर्थः । यद्वा गुणप्रधानभावस्य विवक्षितत्वादेवेत्यर्थः । ननु तत्प्रकरणगतस्य कस्यचिल्लिङ्गस्य भगवत्परत्वसमर्थने तत्समानाधिकरणानामितरलिङ्गानां समन्वयः स्वयमेव सेत्स्यतीति, व्यर्थं तदर्थं पादासङ्गतश्रुतेरुपादानमित्यत आह **साक्षात्प्रकरणेति** । वैश्वानरश्रुतिः साक्षादव्यवधानेनैव प्रकरणगता । प्रथमत एव प्रकरणे श्रूयत इति यावत् । अतः प्रथमातिक्रमे कारणाभावाच्छ्रुतिरेवोपात्तेति भावः । यद्वा श्रुतेः साक्षान्मुख्यया वृत्त्या प्रकरणनिष्ठत्वात् प्रकरणव्यावर्तकतया प्रसिद्धत्वादुपादानमित्यर्थः । प्रकरणव्यावर्तकवैश्वानरनाम्नि भगवत्परे सति तत्प्रकरणगतं सर्वमपि लिंङ्ग भगवत्परं भविष्यतीत्यभिप्रेत्य वैश्वानरनामैवोपात्तमिति भावः । अत एवाहुः सा च सूक्तादिव्यावर्तिकेत्यादि । यद्यपि पाचकत्वादिलिङ्गान्यपि प्रकरणनिष्ठानि तथाऽपि श्रुतिः साक्षान्मुख्यतया प्राधान्येनेति यावत्, प्रकरणनिष्ठा । लिङ्गानि तु श्रुतिशेषतया तन्निष्ठानि । अतः प्राधान्येन प्रकरणनिष्ठत्वाच्छ्रुतेरुपादानमित्यर्थ इत्यप्याहुः ॥ १-२-१ ॥

**श्री०— अन्यथेति** । उपाध्यनुक्तौ सर्वशब्दानामप्यत्रैव समन्वेतुं शक्यत्वादित्याशयः ॥ **प्रतीक इति** । एतमस्यामेतं दिवीत्यादीत्यर्थः । नन्वधिकरणद्वये क्रियाप्रधानकभावाख्यलिङ्गं समन्वीयते । तत्र क्रिया क्रियारूपलिङ्गसमन्वयप्रतिपादकात्तेत्याद्यधिकरणद्वयोक्तरीत्या व्याख्याता । भावो भावाभिधलिङ्गसमन्वयप्रतिपादकाऽऽद्याधिकरणेन व्याख्यात इत्येतदधिकरणद्वयवैयर्थ्यमित्यत आह **अत एवेति** । अभ्यधिकाशङ्कया प्रवृत्तत्वादेवेत्यर्थः । यद्वा अत एवेत्यर्थस्य क्रियाप्रधानकभावाख्यलिङ्गस्य विशिष्टस्य समन्वयप्रतिपादनादेवेत्यर्थः । सत्यमेवं तथाऽपि न वैयर्थ्यम् । भावाभिधक्रियालिङ्गसमन्वयप्रतिपादकाधिकरणापेक्षयाऽभ्यधिकाशङ्कया प्रत्यवस्थानादित्याशयः ॥ **यया** श्रुत्या । वैश्वानरनाम्नेत्यर्थः ॥ १–२–१ ॥

**च०—उक्तमिति** । 'सर्वगत्वं तु प्रथमं प्रविचार्यते' इत्यत्रेति पूरणीयम् । **आद्ये** तत्तद्व्यक्तित्वावच्छिन्नप्रतिपादकत्वस्यैवोपगमे । **शास्त्रेति** निर्णेतव्यव्यक्तीनामानन्त्यादिति भावः । **वक्तव्य इति** । तत्तन्नयसमन्वेतव्यतावच्छेदकाज्ञाने सर्वसाङ्कर्यापत्त्या नयान्तरानारम्भापातादिति भावः । **ते सर्व इति** । किञ्चिन्निरूपिताधेयतावाचकशब्दत्वं प्रकृतनयसमन्वेतव्यताऽवच्छेदकमित्यर्थः । **एवमिति** । क्रियावाचकशब्दत्वादिकमेव तत्र तत्र समन्वेतव्यताऽवच्छेदकमित्यवसेयमिति भावः । **द्वन्द्वभ्रान्तिं प्रत्यस्यति क्रियेचेति** । सर्वादानकर्मफलभोगरूपक्रियात्मके इत्यर्थः । **क्रियाप्रधानकभावाख्यमिति** । अन्तःस्थितिरूपभावाभिधायकशब्दघटितरमणनियमनरूपक्रियाप्रतिपादकशब्दत्वावच्छिन्नं समन्वेतव्यमित्यर्थः । **पूर्ववदिति** । षष्ठ्यन्ताद्वतिः । अधिकाशङ्कया प्रत्यवस्थितेरिति भावः। **अत एव** । अधिकाऽऽशङ्कया प्रत्यवस्थितेरेव ॥ **परा परस्मिन्निति** । सुपांसुलुगित्यादिना नाभा पृथिव्या इत्यादाविव ङेर्डादेश इत्याशयः । तर्हि कोशादिव्युत्पादितान्यत्रिकप्रसिद्धिकलिङ्गसमन्वयरूपपदार्थाप्रतिपादकत्वे निदर्शनप्रदर्शनेन पादान्तर्भावं घटयति **यथेति** । लिङ्गनिर्णयः अन्तस्थत्वरूपलिङ्गसन्वयव्युत्पादनम् । **बहुनामेति** । इन्द्राग्निपवितृबृहस्पत्यादिनामेत्यर्थः । **बहुलिङ्गेति** । पाचकत्वहोमाद्यधिष्ठानत्वगार्हपत्याद्यङ्गत्वादीत्यर्थः । **नामेति** । वैश्वानरनामेत्यर्थः । ननु प्रकरणसमभिव्याहृतलिङ्गात्मकैकशब्दसमन्वयव्युत्पादनेनापि तत्समानाधिकरणेतरनिखिलनामलिङ्गसमन्वयः सेत्स्यत्येवेति पादासङ्गतोक्तनामोपादानं निर्बीजं सूत्रभाष्ययोरित्यत आह **साक्षादिति** । वैश्वानरश्रुतेः प्राथम्येन प्रकरणे श्रूयमाणत्वमेव तदुपादाने बीजमित्याशयः । यद्वोक्तश्रुतेः प्रकरणव्यावर्तकत्वेन प्रथितत्वात्तदुपादानम् । अत एव सा च सूक्तादिव्यावर्तिकेत्यादिनाऽभिधास्यति । लिङ्गानां दर्शितश्रुतिशेषत्वात्, श्रुतेश्च तन्निरूपितप्राधान्यमेव तदुपादानबीजमिति वाऽवसेयम् ।

॥ इति सर्वगतत्वाधिकरणम् ॥

सू० -- ॐ अत्ता चराचरग्रहणात् ॐ ॥ अत्र 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इति वाक्यमुदाहृत्य, अत्तारं केचिद्वृत्तिकारा विचारितवन्तः । तद्विहाय 'स यद्यदेवासृजत तत्तदत्तुमध्रियते'ति वाक्यमुदाहृत्य अत्तारं व्यचीचरद्भगवान् भाष्यकारः । कश्चात्र विशेषः । उच्यते । अत्र 'अत्तुमध्रियते', 'अत्ति' इति च अत्ता साक्षात्प्रतीयते । तत्र तु ओदनोपसेचनपदाभ्यामुपलक्षणीयः । अद(दि)धात्वनुगतिश्चात्र । न चोपलक्षिते नियमोऽस्ति । किञ्च चराचरग्रहणादिति हेतुरत्र सर्वं वाऽत्तीति कण्ठोक्तः । तत्र तु ब्रह्मक्षत्रमृत्युपदैश्चराचरस्योपलक्षणमित्यस्ति महान्विशेषः । नन्वेवं तर्हि श्रुत्यनुगमाय सर्वग्रहणादिति कुतो न कृतम् । अस्ति प्रयोजनं चराचरग्रहणस्य । सर्वग्रहणादित्युक्ते शक्नोति पूर्ववादी वदितुम् । अदितिरपि सर्वस्य स्वभोज्यस्यान्नपानादेर्भोक्त्रीति । तत्र नायं सर्वशब्दः संकुचितवृत्तिः । किं नाम 'स तया वाचे'त्यादिपूर्ववाक्यपर्यालोचनया चराचरवाचीति वक्तव्यम् । तदेतदनेन द्योतयतीति ।

टी० —ॐ अत्ता चराचरग्रहणात् ॐ ॥ वृत्तिकारान्तरोदाहरणपरित्यागेनोदाहरणान्तराश्रयणं भाष्यकाराणामनर्थकमित्यतः तस्यानुपपन्नत्वादुक्तं, तदनादरेण वाक्यान्तरोपादानमित्याशयेनोदाहरणद्वयस्वरूपं तावद्दर्शयति अत्रेति । यस्य परमात्मनो ब्रह्म क्षत्रं चोभे जाती प्रसिद्धान्नवद् ओदने भवतः, यस्य च मृत्युः सर्वमारको यम उपसेचनमोदनमिश्रघृतवत्तिष्ठति। तं नाविरतो दुश्चरितादिति पूर्वमन्त्रप्रकाशितोपायवान् यथा वेद इत्थमन्यः तद्रहितः को वेद । यत्र च सोऽत्ता कारणरूपो वर्तते तं निर्विशेषमात्मानं को वेदेति परकीयविषयवाक्यार्थः ॥ कश्चेति । किमाक्षेपे, न कोऽपीत्यर्थः ॥ अत्रेति । भाष्यकारोदाहृतवाक्य इत्यर्थः ॥ अत्तुमध्रियतेतीति । अत्तीत्यत्रेवात्तुमित्यत्र न प्रत्ययबलेन कर्तृत्वलाभः । तुमुण्ण्वुलौ क्रियायां क्रियार्थायामिति (तुमुन्ण्वुलौ मान्तत्वात् कृन्मेजन्त इत्यनेनाव्ययत्वम् । अव्ययकृतो भावः इति वचनात् भावे तुमुन् । कृष्णं द्रष्टुं याति । ण्वुल् कर्तरि । कृष्णं दर्शको याति । ) तुमुनो भाव एव विधानेनात्तीत्यत्रेव कर्तरि प्रत्ययाभावात् । यदि तुमुनपि कर्तर्येव स्यात् तदा सेनादयोऽपि कर्तरि कृदित्येव कर्तरि भविष्यन्ति किं तुमर्थ इत्यनेन, अतस्तुमर्थग्रहणात्कर्तुस्तावदयमपकृष्यते । न चान्यत्रान्योऽर्थो निर्दिश्यतेऽनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति, धातोश्च स्वार्थो भाव एवेति न तद्बलेन कर्तृत्वलाभः । किं त्वध्रियतेति पदसमभिव्याहारादेवेति ज्ञापयितुमत्तुमित्येवानुक्त्वाऽत्तुमध्रियतेत्येतावदुदाहृतम् ॥ साक्षादिति । मुख्यवृत्त्येत्यर्थः ॥ तत्र त्विति । वृत्तिकारान्तरोदाहरण इत्यर्थः ॥ उपलक्षणीय इति । ओदनादिगतादनीयत्वोपलक्षणद्वारेण ओदनोपसेचनपदाभ्यामत्ता लक्षणीय इत्यर्थः । ओदनादिपदस्य

तदवाचकत्वादिति भावः । **प्रकारान्तरेणापि** वैलक्षण्यमुदाहरणयोराह **अदी(दे)ति** । अत्तुमित्यत्र तुमुनः, अत्तीत्यत्र लटः, अत्तेत्यत्र तृचश्च श्रवणेन श्रुतिसूत्रयोः प्रत्ययकृतवैलक्षण्ये सत्यप्यदधात्वनुगतिरप्यस्मदीयोदाहरणेऽस्ति न तु परकीयोदाहरणेऽतोऽपि तत्परित्याग इत्यर्थः । **अङ्गीकृत्य** लक्षणया लाभम्, अत्ता परमत उपलक्षणीयो, भाष्यकारमते साक्षात् श्रुत इति वैषम्यमभिहितम् । वस्तुतोऽत्रात्तुरेव लक्षणया न लाभः सम्भवतीत्याह **न चोपलक्षित इति** । अत्तृप्रतियोग्यद्यत्वमेवोदनोपसेचनपदाभ्यामुपलक्षणीयमिति नियमे हि तत्प्रतियोग्यत्तप्रतीतिर्नियमेन लक्षणया स्यात् । न चैवं नियमोऽस्ति । भोक्तृत्वसंहर्तृत्वप्रतियोगिभोज्यत्वसंहार्यत्वयोरपि ताभ्यामुपलक्षणसम्भवेन तत्प्रतियोगिनोर्भोक्तृसंहर्त्रोरपि लक्षणीयत्वसम्भवान्नात्तुर्नियमेन प्रतीतिरिति भावः । उदाहरणयोर्वैलक्षण्यान्तरमाह **किञ्चेति** ॥ **अत्रेति** । भाष्यकारीयोदाहरण इत्यर्थः ॥ **तत्रेति** । वृत्तिकारान्तरोदाहरण इत्यर्थः ॥ **अस्ति महान्विशेष इति** । अतः परकीयोदाहरणपरित्यागेनोदाहरणान्तराश्रयणं भाष्यकाराणां युक्तमित्याशयः ।

**स० — ॐ अत्ताचराचरग्रहणात् ॐ ॥ अत्तुमध्रियतेति** ॥ अत्तीत्यत्र कर्तरिप्रत्ययात् तावन्मात्रेण अदनकर्तृत्वलाभेऽपि अत्तमित्यत्र तुमुन्प्रत्ययस्य तुमुण्वुलौ क्रियायां क्रियार्थायामित्युक्त्या तावन्मात्रेणैककर्तृत्वालाभात् अत्तुमध्रियतेत्युक्तम् । तथा च 'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितमि'त्युक्तत्वेनात्तुमध्रियतेत्यनेन तल्लाभ इति भावः ॥ **साक्षादिति** । मुख्यवृत्त्येत्यर्थः । **तत्र त्वोदनोपसेचनपदाभ्यामिति** । ओदनशब्दस्य भोक्तृप्रतियोग्यद्यत्वं तु मुख्यवृत्त्यर्थः । अमुख्यवृत्त्यात्तेति चेन्न । तर्हि ओदनगतं संहर्तृप्रतियोगिसंहारार्थत्वमेवार्थोऽस्त्विति चन्द्रिकानुसारेण यस्य ब्रह्म चेति वाक्ये अत्ता न वचनवृत्त्या प्रतीयते किंत्वोदनोपसेचनपदलक्षणीयः संहार्यत्वज्ञानमूलकज्ञानविषय इत्यर्थः । **न चोपलक्षित इति** । ओदने संहर्तृप्रतियोगिसंहार्यत्वस्येव भोक्तृप्रतियोगिभोज्यत्वस्यापि सत्त्वात् संहार्यत्वस्यैव लक्षणायां न किमपि नियामकमस्तीति भावः । तथाच भोक्तेत्यपि वक्तुं शक्यत इति भावः ।

**प० — ॐ अत्ता चराचरग्रहणात् ॐ ॥ व्यचीचरदितिः** । विचारयामासेत्यर्थः ॥ **अत्रेति** । भाष्यकारोक्तवाक्य इत्यर्थ । **न चोपलक्षित इति** । ओदनोपसेचनशब्दाभ्यां अत्तेति कुत उपलक्ष्यं त्वदुक्तरीत्या ओदनादिगतसंहार्यत्वप्रतियोगितया संहर्तेति वा ओदनादिगतभोज्यत्वस्यान्तरङ्गतया ओदनादिपदेन अन्तरङ्गभोज्यत्वस्योपस्थितौ प्रतियोगितया भोक्तेत्येवोपलक्षणासंभवेन अत्तेत्येवोपलक्षणाऽसंभवेनात्तैवोपलक्षित इति नियमश्च)निश्चयश्च नास्तीत्यर्थः ॥ **तदनेनेति** । चराचरग्रहणादिति कथनेन । **द्योतयति** सूत्रकार इत्यर्थः ।

**या० — ॥ ॐ अत्ता चराचरग्रहणात् ॐ ॥ उपसेचन**मोदनमिश्रघृतवदित्यर्थः ॥ **अत्तुमध्रियतेति** । अत्तीत्यत्र च न प्रत्ययबलादत्राता किन्त्वध्रियतेति पदसमभिव्याहारादिति ज्ञापयितुमत्तुमध्रियतेत्ये-

तावदुक्तम् । तावत्युक्ते हि 'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितमि'त्युक्तत्वेनात्ता प्रतीयत एवेति ध्येयम् ॥ **उपलक्षणीय इति** । ओदनोपसेचनपदाभ्यामुपलक्षितं यदद्यत्वं तदनुरोधेन सूचनीय इत्यर्थः । अदनीयौदनोपसेचनसूचितोऽत्ता प्रतीयत इति भामत्युक्तेः । यस्य मृगयाविनोदमृगाः परनरपतय इत्युक्ते क्षत्रिया एव प्रतीयन्ते न श्रोत्रियः कश्चिद्ब्राह्मणः एवमिहेति कल्पतरूक्तेश्च । अथवोपलक्षितेनाद्यत्वेनात्ताऽप्युपलक्षणीय इति लक्षितलक्षणामभिप्रेत्येत्थमुक्तमिति ध्येयम् । अत्तृप्रतियोग्यद्यत्वमेव ओदनोपसेचनपदाभ्यामुपलक्षणीयमिति नियमो न प्रामाणिकः । येन तत्प्रतियोग्यत्तृप्रतीतिर्नियमेन स्यात् । ततश्चादधात्वनुगतिरुपपन्ना स्यात् । न चैवम् । भोज्यत्वसंहार्यत्वयोरप्युपलक्षणसम्भवेन तत्प्रतियोगिनोर्भोक्तृसंहर्त्रोरपि प्रतीतिसंभवेऽदधात्वनुगत्यसम्भवादिति भावः ।

**श्री०** — ॐ **अत्ता चराचरग्रहणात्** ॐ ॥ **व्यचीचरत्** विचारितवान् ॥ **अत्रेति** । अत्तर्भ्रियतेति विषयवाक्ये अत्तेति सूत्रोक्त-अदधात्वनुगतिरस्तीत्यर्थः । नन्वदनोपसेचनपदाभ्यामत्तुरुपलक्षिते सति तत्रापि सूत्रोक्तादधात्वनुगतिरस्तीत्यत आह **न चोपलक्षित इति** । ओदनोपसेचनयोरद्यत्वादत्तोपलक्ष्यते । तत्कुतः । तयोर्भोज्यत्वादेरपि सत्त्वेन भोक्त्रादिरपि कस्मान्नोपलक्ष्यते । तथाच यदा भोक्त्रादिरुपलक्ष्यते तदोपलक्षिते भोक्तरि अदधात्वनुगतिनियमो नास्तीत्यर्थः ॥ **चराचरेति** । अद्यतयेति शेषः । **अनेन** एतद्विषयवाक्योदाहरणेनेत्यर्थः । **सोऽपि** व्यवच्छेदोऽपि । **चोद्यस्य** अनित्यत्वादिति चोद्यस्य । अत्र क्रियाविषये ।

**च०** — ॥ ॐ **अत्ताचराचरग्रहणात्** ॐ ॥ वृत्तिकारान्तरीयोदाहरणावधीरणेनोदाहरणान्तरमार्गणं भाष्यकारीयं निर्बीजं, तस्यापि समञ्जसत्वादित्याशङ्कामपनिनीषुः सौवान्यदीययोः सामञ्जस्यासामञ्जस्ये व्युत्पिपादयिषुस्तद्द्वयरूपं तावद्दर्शयति **अत्रेति** । कृत्यल्युट इत्यत्र बहुलग्रहणात्कर्मसाधनल्युडन्तोपसेचनशब्दस्याचारक्विबन्तात्कर्तरि क्विबन्ततया ओदनस्योपरिष्टात् सिच्यमानघृतायित इत्यर्थः । **व्यचीचरदिति** विपूर्वाच्चरतेर्लुङि द्वित्वे हलादिशेषे सन्वद्भावेन इत्वाभ्यासदीर्घे च निष्पद्यते । **कश्चात्रेति** । किमः आक्षेपार्थतया भाष्यकारोदाहृतवाक्ये को विशेषो न कोऽपीत्यर्थः । **अभ्रियतेति** । अत्तीत्यत्र तिपेवाऽभ्रियतेत्यत्रापि तशब्देन कर्तृप्रत्यायनात् । तुमुण्ण्वुलौ क्रियायां क्रियार्थायामिति स्मृतेः फलत्वनिरूपकत्वस्य तुमुनर्थतया यष्टुं यातीत्यत्र यागनिष्ठफलतानिरूपकयागकर्तुरिव प्रकृतेऽपि तत्तत्कर्मकादनक्रियानिष्ठफलतानिरूपकमनःकर्मकधारणकर्तुर्बोधोदयादिति भावः । अत्तीत्यत्रादिप्रकृतिकतिपैव कर्ता प्रत्याय्यतेऽभ्रियतेत्यत्र तुमुन्प्रकृत्युपस्थाप्यक्रियायास्तत्फलकक्रियायाश्च समानकर्तृकतानियमेन तादृशतुमुनन्तेन समभिव्याहृतात्मनेपदान्तादिति भावः । साक्षादिति । मुख्यवृत्येत्यर्थः । **तत्रेति** । वृत्तिकारान्तरीयो-

दाहरण इत्यर्थः । **उपलक्षणीय इति** । 'अदनीयोपसेचनसंसूचितोऽत्ता प्रतीयत' इति भामत्युक्त्या 'यस्य मृगयाविनोदमृगाः परनरपतय इत्युक्ते क्षत्रिय एव प्रतीयते न श्रोत्रियः कश्चिद्ब्राह्मण एवमिहेति' कल्पतरूक्तेश्चौदनोपसेचनपदाभ्यामुपलक्षितं यददनकर्तृत्वं तदनुरोधेन सूचनीय इत्यर्थः । विधान्तरेणापि वैशेष्यं भगवत्पादीयोदाहरणस्याभिधत्ते । **अदीति** । 'गमेरिट् परस्मैपदेष्वि'त्यादाविव 'इक्श्तिपौ धातुनिर्देशे' इति वचनादिका निर्देशः अदधातुसमभिव्याहार इत्यर्थः । सौवोदाहरणे अत्तीत्यत्र लडादेशतिपः अत्तुमित्यत्र तुमुनः सूत्रे च तृचः श्रवणेऽपि त्रयाणामेकप्रकृतिकतया श्रुतिसूत्रयोः प्रत्ययसमभिव्याहारनियन्त्रितवैलक्षण्यसत्त्वेपि प्रकृतिसमभिव्याहारनिबन्धनसारूप्यमस्ति, मतान्तरीये तु तदपि नास्तीति तदनादृतमिति भावः । प्राक्तनी समाहितिरभ्युपगमवादरूपैव । वस्तुतः दर्शितपदद्वयोपलक्षितभोज्यत्वसंहार्यत्वाभ्यां तत्प्रतियोगिभूतभोक्तृसंहर्त्रोरपि स्मृतिसंभवेन भुज्यादिसमभिव्याहारमन्तरेणादिसमभिव्याहारो दुरुपपादस्तादृशपदद्वयेनादनकर्मत्वमेवोपलक्षणीयं नान्यदिति नियमस्य निष्प्रमाणत्वादित्याह **न चेति** । भङ्ग्यन्तरेणापि सौवोदाहरणस्यान्यदीयोदाहरणादधिकं श्रेयस्त्वमाह **किं चेति** । अत्र सौवोदाहरणे कण्ठोक्तः श्रूयमाणपदसमभिव्याहाराधीनेऽन्वयधीविषयः । तत्र अन्यदीयोदाहरणे उपलक्षणमिति तादृशहेत्ववगाहिनी लक्षकपदप्रतिसंधानाधीना उदीच्यप्रतीतिरित्यर्थः ।

---

**सु०— यदस्मिन्नध्याये समन्वीयते तत्सर्वं लक्षणत्वेन प्रकृतमित्यानन्दमयाधिकरणान्तेऽभिहितम्, लक्षणं च लक्ष्येण ब्रह्मणाऽभिन्नमिति लक्षणसूत्रे प्रतिपादितम् । अत्र च क्रियालिङ्गसमन्वय इत्युक्तम् । तथा चादनादिक्रियाणां परमेश्वरस्वरूपत्वमुक्तमिति तदाक्षिपति** अनित्यत्वादिति ।

अनु०— ॐ अत्ता चराचरग्रहणात् ॐ ॥

अनित्यत्वात्क्रियाणां तु कथमेव स्वरूपता ॥

**तुशब्दः सर्वगतत्वादिव्यवच्छेदार्थः । सोऽपि चोद्यस्यात्रावकाशसंभावनार्थः । कथमित्याक्षेपे ।** कथमेव **न कथञ्चिदपीत्यर्थः ।** स्वरूपता **परमेश्वरस्वरूपता । परमेश्वरस्य हि नित्यत्वं जन्मादिसूत्रलब्धम् । स्वयमनित्यस्य सकलकारणत्वानुपपत्तेः । यत्खलु यस्य जनकं न तस्यासौ जनको, यच्च यस्य विनाशकं न तस्यासौ विनाशक इति । क्रियाणां त्वनित्यत्वं सुप्रसिद्धम् । तथा च नित्यानित्ययोः कथमभेदः स्यात् । विरुद्धधर्माध्यासस्य भावभेदाव्यभिचारात् । अन्यथा जगति भेदाभावप्रसङ्गात् । ततो यदि नाम सर्वगतत्वादीनां यावद्द्रव्यभाविनामभेदः तथाऽपि न क्रियाणामसौ युज्यत इति ।**

**शे०** — क्रियायाः समन्वेतव्यत्वस्यैवासिद्धेः । सिद्धौ वा लक्षणत्वासिद्धेस्तत्सिद्धावपि लक्ष्याभेदासिद्धेर्न क्रियायाः स्वरूपत्वाक्षेपो युक्त इति तत्परोत्तरवाक्यमसङ्गतमित्यतः क्रियायाः समन्वेतव्यत्वं लक्षणत्वं लक्ष्याभिन्नत्वं च प्रसञ्जकप्रदर्शनेनोपपादयन् भाष्यकारीयमाक्षेपं सङ्गमयति **यदस्मिन्निति** ॥ **आनन्दमयाधिकरणान्त इति** । 'शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयात् । अन्यार्थेष्वल्पताहेतोस्तन्निमित्त्वतस्तथा । तद्वाचकत्वं शब्दानामित्यत्रे'ति शेषः । तत्र समन्वेतव्यशब्दानां भगवति महायोगोक्त्या तत्तच्छब्दनिर्वचनलब्धार्थानां भगवति निरवधिकत्वानन्याधीनत्वप्रतिपादनेन भगवल्लक्षणत्वस्यैवाभिहितत्वात् । प्रपञ्चितश्चायमर्थष्टीकाकारैस्तद्ग्रन्थव्याख्यानावसरे,'एतदुक्तं भवति' इत्यादिनेति अत्र सम्मुग्धतयाऽनुवाद इति द्रष्टव्यम् ॥ **लक्षणसूत्र इति** । 'लक्ष्यलक्षणयोर्भेदः' इत्यादिना 'अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यते' इत्यन्तेन ग्रन्थेनेति शेषः ॥ **अत्र चेति** । अत्रेति सूत्र इत्यर्थः ॥ **उक्तमिति** । सर्वगतत्वाधिकरणे क्रियालिङ्गे ततः परमित्यनेनेति शेषः । एवं च प्रसञ्जकसद्भावात्सिद्ध आक्षेप इत्याह **तथा चेति** । सूत्रोपात्तस्यैव नात्र समन्वयः । तथा सति विश्वतोमुखत्वाभावेनासूत्रत्वप्रसङ्गात् । किं नाम सूत्रोपात्तात्तृशब्दोपलक्षितक्रियात्मकाः सर्वेऽपि शब्दा अत्रोदाहरणमिति भावेनानित्यत्वात्क्रियाणामिति भाष्ये बहुवचनमिति मनसि निधायोक्तम् **अदनादिक्रियाणामिति** ॥ **अत्रेति** । अन्यथा सर्वगतत्वादिसाधारणत्वे चोद्यस्य प्रथमतिक्रमे कारणाभावेन सर्वगतत्वाधिकरण एव कर्तव्यतयाऽत्तृत्वा-

---

धिकरणे तदाक्षेपानौचित्यप्रसङ्गादिति भावः । अवश्यवक्तव्यानुक्तिप्रयुक्तन्यूनतापरिहाराय तत्परतया व्याचष्टे । **स्वरूपतेति** । ननु परमेश्वरस्य नित्यत्वासिद्धेः, सिद्धत्वे वा क्रियाणामनित्यत्वासिद्धेः, सिद्धत्वे वा नित्यानित्ययोर्भेदे साधकाभावेनाभेदे बाधकाभावेन च तद्भेदासिध्याऽभेदोपपत्तेर्निर्दोऽयमाक्षेप इत्यत आह **परमेश्वरस्य हीति** । जन्मादिसूत्रे नित्यत्वानुक्तेः कथं तल्लाभ इत्यतोऽर्थतस्तल्लाभ इत्याशयेनाह **स्वयमिति** । स्वयमनित्यस्यापि सकलकारणत्वं किं न स्यादित्यतोऽनित्यत्वेऽनित्यभावत्वेनोत्पत्तिमत्त्वस्यापि प्राप्तेः उत्पादकविनाशकवत्त्वस्यावश्यं वक्तव्यत्वात्स्वोत्पादकविनाशकौ प्रत्यस्योत्पादकत्वविनाशकत्वासंभवान्न सकलकारणत्वमित्याशयेन स्वोत्पादकविनाशकौ प्रत्युत्पादकत्वविनाशकत्वासंभव एव कुत इत्यतस्तथा दर्शनादिति भावेन व्याप्तिद्वयं दर्शयति **यत्खल्विति** । द्वितीयशङ्कां परिहरति **क्रियाणामिति** । भेदे साधकाभावशङ्कां परिहरति **विरुद्धेति** ॥ **भावभेदेति** । भावशब्दः पदार्थमात्रपरः । ततश्च पदार्थभेदव्याप्तत्वादित्यर्थः ।

केचित्तु विरुद्धधर्माधारौ भावौ भिन्नाविति व्याप्तेरित्यर्थः । घटाभावे विद्यमानस्य पटाभावस्य घटाभावापेक्षया विरुद्धधर्माधिकरणत्वेऽपि न घटभावाद्भिन्नत्वमभावस्याधिकरणत्ववादिमत इति तद्रीत्या व्यभिचारपरिहाराय भावपदम् । स्वमते प्रतियोगिनिरूप्यस्याप्यन्योन्याभावस्य प्रतियोग्यनिरूप्यधर्म्य-

भिन्नत्वात् तत्र व्यभिचारवारणाय भावपदमावश्यकमित्याहुः । चतुर्थीं शङ्कां परिहरति **अन्यथेति** । तुशब्दोक्तसर्वगतत्वादिव्यवच्छेदप्रकारमुपपादयन्नाक्षेपमुपसंहरति **तत इति** ।

**स० — लक्षणसूत्र इति** । जन्माद्यस्येतितेनैतद्विष्णोरेव स्वलक्षणमित्यादिनेत्यर्थः । **विरुद्धधर्माध्यासस्येति** । विरुद्धधर्माधिकरणत्वस्येत्यर्थः । **भावभेदाव्यभिचारादिति** । पदार्थभेदाव्यभिचारादित्यर्थः । सोऽपि चोद्यस्यात्रावकाशसंभावनार्थ इत्युक्तं तद्दर्शयति **ततो यदि नामेत्यादिना** ।

**प० — अभिहितमिति** । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये' इत्यादिनेति भावः । **लक्षणसूत्र इति** । जन्मादिसूत्रे 'लक्ष्यलक्षणयोर्भेद' इत्यादिना 'अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यत' इत्यन्तेन ग्रन्थेन प्रतिपादितमित्यर्थः ॥ **अदनादीति** । हनुचलनादिरूपक्रियाणामित्यर्थः । उक्तमितीतिशब्दो हेत्वर्थः ॥ **तदाक्षिपतीति** । अपरिच्छिन्नस्य अपरिच्छिन्नावयवकस्य च चलनक्रियैव गगनादेरिवायुक्ता इत्याक्षेपस्तु भूमनये उत्क्रमणादिक्रियासमर्थनन्यायेन समाहित इति नास्यानवसरचोद्यावकाश इति ध्येयम् । भगवतः क्रियावत्त्वसमर्थनप्रकारश्च भूमनय एव चन्द्रिकायां सम्यक्प्रदर्शितः । अत्राप्यग्रे क्रियाशक्त्यात्मनेत्येतद्व्याख्यानावसरे परिस्पन्दाभावे प्रमाणाभावादित्यादिना किञ्चिद्विवरिष्यते । **सोऽपीति** । सर्वगतत्वव्यवच्छेदोऽपि । अत्र क्रियायाम् । विवरिष्यते चैतदग्रे । कुतोऽनुपपत्तिरित्यतः सर्वकारणस्यानित्यत्वे तज्जनकविनाशाभ्यां भाव्यम् । जनकादिकं च न सर्वस्मादन्यदस्तीति सर्वमेवेति वाच्यम्, तच्चायुक्तमित्याह **यस्त्वखिलेति** । यच्चेत्यनन्तरं यस्येत्यनुषङ्गः ॥ **विरुद्धेति** । विरुद्धधर्मवत्त्वस्य वस्तुभेदव्याप्तत्वादित्यर्थः । तुशब्दार्थं व्यनक्ति **ततो यदि नामेति** ।

**या० — अदनादिक्रियाणामिति** । आदिशब्देन मानान्तर्नियमनरमणानामिह संग्रहः ॥ **इत्युक्तमिति** । क्रियालिङ्गं ततः परम् । अन्तर्याम्यन्तरश्चेति क्रियाभावाख्यमुच्यत इत्यत्रेति शेषः ॥ **विरुद्धधर्मेति** । विरुद्धधर्माधिकरणत्वस्येत्यर्थः ॥ **भावभेदेति** । पदार्थभेदव्याप्यत्वादित्यर्थः । सोऽपि चोद्यस्यात्रावकाशसंभावनार्थ इत्युक्तं दर्शयति **ततो यदि नामेत्यादिना** ।

**श्री० —** नन्वीश्वरस्याप्यनित्यत्वात्स्वरूपत्वं युक्तमेवेत्यत आह **परमेश्वरस्येति** । ननु भगवतः प्रपञ्चेन जन्यत्वात्प्रपञ्च एव तस्य विनाशकोऽस्त्विति चेत्तत्राह **यस्त्वखिलेति** । **यत्** ब्रह्म । **यस्य** प्रपञ्चस्य । **तस्य** ब्रह्मणः । **असौ** प्रपञ्चः । एवमुत्तरत्र ॥ **तथा चेति** । क्रियाब्रह्मणी नाभिन्ने । नित्यत्वानित्यत्वरूपविरुद्धधर्माधिकरणत्वात् । यत् यद्विरुद्धधर्माधिकरणं तत् तन्न । यथा घटपटाविति प्रयोगो द्रष्टव्यः । **अन्यथा** व्यभिचारेण पदार्थभेदसाधकत्वाभावे ।

च०— **अभिहितमिति** । शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयात् । अन्यार्थेष्वल्पता-हेतोस्तन्निमितस्त्वस्तथा । तद्वाचकत्वं शब्दानां' इत्यत्रेति पूरणीयम् । तत्रसमन्वेतव्यनिखिलशब्दा-नामीश्वरे महायोगाभिधानतत्पदावयववृत्तिप्रतिसंधानाधीनधीविषयत्वापन्नधर्माणामीशे निरवधिकत्वेतरान-धीनत्वप्रतिपादनेन भागवतलक्षणस्यैवाभिप्रेतत्वात् ।

तद्ग्रन्थार्थापनदशायां टीकाकृत्पादैरेतदुक्तं भवतीत्यादिना विशदीकृतत्वाच्च दर्शितार्थस्येत्यव-सेयम् । **लक्षणसूत्र इति** । लक्ष्यलक्षणयोरित्यादिकाऽतोनंतगुणं ब्रह्म निर्भेदमपि भण्यत इत्यन्तग्रन्थेनेत्यु-पस्कार्यम् । अत्र प्रकृतनये । समन्वयः शक्तितात्पर्यसंबन्धव्युत्पादनं **उक्तमिति** । 'क्रियालिंगे ततः परम्' इत्यादिनेत्यादिः । सूत्रघटकसमन्वेतव्यान्वबोधकपदस्य सौत्रं विश्वतोमुखत्वमनुरुध्य सजातीयोपलक्ष-कतां मन्वानोऽभिधत्ते । **अदनादीति** । आदिपदं निगमनादिपरिग्राहकम् । **भावभेदेति** । भावत्वां-शस्यातन्त्रतया एकपदार्थप्रतियोगिकापरपदार्थानुयोगिकभेदव्यासत्वादित्यर्थः । घटाभावत्वस्यापि तदन-धिकरणपटाभावादिभेदकतया भावत्वांशस्यातन्त्रतोक्तिः । अत्र कतिपये व्याचक्षाणाः पटाभावे घटाभावापेक्षया विरुद्धधर्माधिकरणत्वपक्षेऽपि न घटाभावाद्भिन्नत्वमभावस्याप्यन्योन्याभावस्य प्रतियोग्य-निरूप्यधर्म्यभिन्नत्वात् । तत्र व्यभिचारवारणाय भावपदमावश्यकमित्यपि व्याचक्षते । **अन्यथा विरुद्ध-धर्माध्यासस्य भेदकत्वानङ्गीकारे** ।

---

सु०— **परिहरति** इति चेदिति ।

अनु०— इति चेत्स विशेषोऽपि क्रिया शक्त्यात्मना स्थिरः ।

**नेत्यध्याहारः । कुतः । न केवलमीश्वरः स्थिरोऽपि तु स तदीयो विशेषो धर्मोऽपि क्रियारूपः स्थिरो यत इति शेषः । अत्र (तु) क्रिया स्थिरेत्येतावदेव वक्तव्यं विशेष इति तु क्रियायाः परमेश्वरैक्येऽप्युक्तवक्ष्यमाणन्यायेन तद्धर्मताऽप्यङ्गीकरणीयेति ज्ञापयितुम् । न केवलं स विशेषः सर्वगतत्वादिः स्थिरः, किन्तु क्रियाऽपि पारमेश्वरी स्थिरा यत इति वा योज्यम् । अनेन क्रियाया अपि नित्यत्वप्रतिज्ञानेन विरुद्धधर्माध्यासस्यासिद्धिरुक्ता । तथा हि । ईश्वरस्य संहरणादिक्रियाणामनित्यत्वं किं प्रमाणबलादङ्गीक्रियते, उत नित्यत्वे बाधकसद्भावात्, अथवा तत्साधकप्रमाणाभावात् । नाद्यः । ईश्वरस्य तत्क्रियायाश्च अप्रत्यक्षत्वेन तदनित्यत्वस्य प्रत्यक्षेण-प्रत्येतुमशक्यत्वात् । लिङ्गाभावेनानुमानानुपपत्तेः । क्रियात्वं लिङ्गमिति चेत् , तत्किं धात्वर्थ-त्वम् परिस्पन्दत्वं वा । नाद्यः । ज्ञानेच्छाप्रयत्नैः सत्तया च व्यभिचारात् । न द्वितीयः । सर्व-क्रियाणामपरिस्पन्दत्वेन भागासिद्धत्वात् । ईश्वरपरिस्पन्दपक्षीकारेत्वाश्रयासिद्धिः । परेण तस्या-**

नङ्गीकृतत्वात् । अङ्गीकारेऽप्यनैकान्त्यम् । क्वचिदनीश्वरपरिस्पन्दानामपि नित्यत्वस्य वक्ष्यमाणत्वात् । क्रियात्वस्य नित्यत्वेन विना वृत्तौ बाधकाभावादप्रयोजकता च । कार्यत्वेन सोपाधिकत्वं च । तस्यापि साधने बाधः । प्रमाणस्य वक्ष्यमाणत्वात् । असत्यावरणादौ प्रागूर्ध्वं चानुपलम्भो लिङ्गमिति चेत् । अनुपलम्भः किं प्रत्यक्षेणोत प्रमाणमात्रेण । नाद्यः । योग्यतया विशेषणेऽसिद्धेः । अन्यथा गगनादिना व्यभिचारात् । द्वितीये त्वसिद्धिः । आगमादिनोपलब्धेः ॥ एतेनावरणाद्यभावे सति कदाचिदेवोपलब्धिरपि प्रत्युक्ता । वर्णनित्यत्ववादेऽनैकान्त्याच्च । किंच नित्योऽपि ईश्वरपरिस्पन्दः कदाचिदभिव्यक्तः कदाचिदेवोपलभ्यत इत्यङ्गीकारे न बाधकं पश्यामः । व्यक्तिरप्यादिग्रहणेन गृह्यत इति चेन्न । सन्दिग्धविशेषणासिद्धेः । अस्तु तर्हि फलानुपलम्भो लिङ्गमिति चेन्न । सर्वथाऽनुपलम्भस्यासिद्धत्वात् । न हीश्वरपरिस्पन्दक्रिया कदाऽपि न संयोगविभागलक्षणं फलं जनयतीति युज्यते । तथा सति परिस्पन्दत्वानुपपत्तेः । नित्यसंयोगविभागजन्मानुपलब्धेरिति चेन्न । नित्यगुणादिना व्यभिचारात् । कदाचिदेव संयोगादिजन्म विवक्षितमिति चेत् । तथाऽपि गगनादिना व्यभिचारः । कदाचिदेव संयोगाद्यसमवायिकारणत्वमस्त्विति चेन्न । कदाचिदिति विशेषणवैयर्थ्यात् । तत्परित्यागेऽप्यसमवायिकारणत्वस्य दुर्निरूपत्वेनासिद्धेः ।

शे० — उक्तवक्ष्यमाणन्यायेनेति । भगवद्धर्माणां भगवता सविशेषाभेदस्य जन्माधिकरणे उक्तत्वादहिकुण्डलाधिकरणे वक्ष्यमाणत्वाद्विशेषबलेन तद्धर्मत्वोपपत्तिरिति भावः । ईश्वरस्य संहरणादिक्रियाया अनित्यत्वे प्रमाणं भवत्प्रत्यक्षमनुमानमागमो वेति विकल्पान्मनसि निधायाद्यं तावद्दूषयति **ईश्वरस्येति** । द्वितीयं दूषयति **लिङ्गाभावेनेति** ॥ **ज्ञानेच्छाप्रयत्नैरिति** । ईश्वरीयैरिति शेषः ॥ **सत्तया चेति** । सर्वपदार्थसम्बन्धिन्येत्यर्थः ॥ **व्यभिचारादिति** । ज्ञानादीनां धात्वर्थरूपक्रियात्वेऽप्यनित्यत्वाभावादिति भावः । अत्र सत्तायां व्यभिचारो न्यायरीत्या द्रष्टव्यः । मतान्तरेऽनित्यत्वस्यापि तत्र सत्त्वादीश्वरसम्बन्धिसत्ताविवक्षायां च ज्ञानेच्छाप्रयत्नसत्ताभिरिति वक्तव्यतया ज्ञानेच्छाप्रयत्नैः सत्तया चेति पृथगुपादानयोगादितिध्येयम् । हेतूक्तं क्रियात्वं परिस्पन्दत्वमिति द्वितीयेऽपि वाच्यं, किं पक्षीभूतक्रिया धात्वर्थमात्रमेवाभिमता किंवा परिस्पन्द एवेति, विकल्पं मनसि निधायाद्यं दूषयति **सर्वक्रियाणामिति** । तथा सति ज्ञानादिरूपक्रियाणामपि धात्वर्थत्वेन पक्षतया तासां च परिस्पन्दत्वाभावाद्भागासिद्धिः स्यादित्यर्थः । द्वितीयं दूषयति । **ईश्वरपरिस्पन्देति** । अनैकान्त्यमेवोपपादयति **क्वचिदिति** ॥ **वक्ष्यमाणत्वादिति** ॥ 'शक्तिसद्भाव

एव तु । क्रियादिनित्यता ज्ञेये'त्यादिनेति शेषः । क्रियात्वेनैव कार्यत्वस्यापि पक्षे साधनेन साधनव्यापकत्वात्कथमुपाधित्वमित्यत आह **तस्यापीति** ॥ **बाध इति** । आगमबाध इत्यर्थः ॥ **प्रमाणस्येति** । आगमस्येत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'क्रियादिश्च स्वभाव इति हि श्रुतिरि'त्यादिनेति शेषः । क्रियाया अनित्यत्वे लिङ्गान्तरमाशङ्कते **असत्यावरणादाविति** । आवृनतया प्रागूर्ध्वं चानुपलभ्यमाने व्यभिचारवारणाय विशेषणभागः । प्रागूर्ध्वं चोपलभ्यमाने तद्वारणाय विशेष्यभागः । आदिपदं तु वर्णनित्यत्ववादे तत्रानैकान्त्यपरिहाराय । तत्राव्यञ्जकेऽसति नानुपलब्धिरिति न व्यभिचारः । एतच्च व्यक्तिरप्यादिग्रहणेन गृह्यत इत्यादिनोत्तरत्र वक्ष्यमाणमनुसन्धेयम् । प्रत्यक्षेणानुपलम्भ इति प्रथमेऽपि किं योग्यत्वे सति प्रत्यक्षेणानुपलब्ध्याऽभावनिश्चयोऽभिमतः किंवा प्रत्यक्षेणानुपलब्धिमात्रेण । नाद्य इत्याह **योग्यतयेति** ॥ **असिद्धेरिति** । ईश्वरक्रियाया अयोग्यत्वेन योग्यत्वे सतीति विशेषणासिद्ध्या विशिष्टहेत्वसिद्धेरित्यर्थः । द्वितीयं दूषयति **अन्यथेति** । गगनादेरप्यसत्यावरणे प्रागूर्ध्वं च प्रत्यक्षेणानुपलभ्यमानत्वेऽप्यनित्यत्वाभावादिति भावः । अस्तु तर्हि प्रमाणमात्रेणानुपलम्भो हेतुरित्याद्यद्वितीयो निरवद्यत्वादित्यत आह **द्वितीय इति** ॥ **असिद्धिरिति** । हेतुविशेष्यासिद्ध्या विशिष्टहेत्वसिद्धिरित्यर्थः । असिद्धिमेवोपपादयति **आगमादिनेति** । ज्ञानं नित्यं क्रिया नित्येत्यागमेन तन्मूलकानुमानेन चेत्यर्थः ॥ **एतेनेति** । कदाचिदेवोपलब्धिः किं प्रत्यक्षेणोत प्रमाणमात्रेण । नाद्यः । अयोग्यतया प्रत्यक्षेणोपलम्भस्य कदाऽप्यभावेनासिद्धेः । नान्त्यः । आगमादिना सर्वदोपलम्भेन कदाचिदेवोपलम्भस्याप्यसिद्धत्वादिति पूर्वोपन्यस्तासिद्धिरूपदूषणेनैवेत्यर्थः ॥ **वर्णनित्यत्ववाद इति** । असत्यावरणे प्रागूर्ध्वमनुपलभ्यमानत्वस्य वा, आवरणाभावे सति कदाचिदेवोपलभ्यमानत्वस्य च वर्णेषु सत्वेऽप्यनित्यत्वाभावात्तत्रानैकान्त्यमित्यर्थः । न्यायमतेऽनित्यत्वस्यापि तत्र सत्त्वान्नानैकान्त्यमित्यत उक्तं वर्णनित्यत्ववाद इति । यद्यपि हेतुद्वयस्यादिपदार्थघटितत्वान्न तत्रानैकान्त्यं, तथापि तदन्तर्भावे वक्ष्यमाणदोषभयात्तदनन्तर्भावं सिद्धवत्कृत्यानैकान्त्याभिधानमिति द्रष्टव्यम् । हेतुद्वयमनैकान्तिकत्वेन दूषयित्वाऽप्रयोजकत्वेनापि दूषयति **किंचेति** । एतदप्यादिपदार्थानन्तर्भावं मनसि निधायोक्तमिति द्रष्टव्यम् । आदिपदार्थघटितहेतोर्वर्णेष्वभावान्नानैकान्त्यं नाप्यप्रयोजकत्वमिति शङ्कते **व्यक्तिरपीति** । एतच्चाद्यहेत्वभिप्रायेणाव्यञ्जकासत्त्वपरम् । द्वितीयहेत्वभिप्रायेण तु यथाश्रुतपरम् । ततश्चासत्यावरणेऽसति चाव्यञ्जके प्रागूर्ध्वमनुपलभ्यमानत्वमाद्यहेत्वर्थः । सत्यावरणाभावे सति च व्यक्त्यभावे कदाचिदेवोपलभ्यमानत्वं द्वितीयहेत्वर्थः । न चैतद्धेतुद्वयं वर्णेष्वस्ति । अव्यञ्जकेऽसति प्रागूर्ध्वमनुपलभ्यमानत्वस्य वा, व्यक्त्यभावे कदाचिदेवोपलभ्यमानत्वस्य वाऽभावान्न व्यभिचारः । अव्यञ्जकेऽसतीति हेतुविशेषणादव्यञ्जकप्रयुक्तं प्रागूर्ध्वमनुपलम्भोपपादनमनुपपन्नम् । व्यक्त्यभावे सतीति विशेषणाद्व्यक्तिकादाचित्कत्वप्रयुक्तं कदाचिदेवोपल-

भ्यमानत्वोपपादनं चानुपपन्नमेवेति नाप्रयोजकत्वमपीति भावः । एतच्चाविदितसिद्धान्त्याशयस्य पूर्ववादिनश्चोद्यमिति ध्येयम् । सिद्धान्ती स्वाशयमुद्घाटयति **सन्दिग्धेति** । अनित्यत्वसिद्धेः प्रागसत्यावरणेऽसत्त्वयव्यञ्जक इत्यादिविशेषणानां पक्षे सन्दिग्धासिद्धत्वादित्यर्थः ॥ **फलानुपलम्भ इति** । अत्र फलाभाव एव लिङ्गमनुपलम्भग्रहणं तत्साधकतयेति द्रष्टव्यम् । किमत्र कदाचिदपि फलाभावो लिङ्गतयाऽभिमतः सर्वदा फलाभावो वेति विकल्पं मनसि निधायाद्यं दूषयति **सर्वथेति** । कदाचिदपि फलाभावस्येत्यर्थः । असिद्धिमेवोपपादयति **न हीति** ॥ **तथा सतीति** । कदाचिदपि संयोगविभागाजनकत्व इत्यर्थः ॥ **परिस्पन्दत्वानुपपत्तेरिति** । संयोगभागजनकत्वस्य तल्लक्षणतया कदापि संयोगाद्यजनकत्वे तल्लक्षणानाक्रान्ततया परिस्पन्दत्वानुपपत्तेरित्यर्थः । सर्वदा फलाभावो हेतुरिति द्वितीयं शङ्कते **नित्यमिति** । अनुपलम्भग्रहणप्रयोजनमुक्तमनुसन्धेयम् । सर्वदा फलाभावोऽपि किं यथाश्रुत एव विवक्षितः कदाचिदेव फलाभावरूपो वेति विकल्पं मनसि निधायाद्यं दूषयति **नित्यगुणादिनेति** । साध्याभावप्रदर्शनाय नित्येत्युक्तम् । आदिपदेन सामान्यादिपरिग्रहः सर्वदा संयोगाद्यजनकत्वं= सर्वथा संयोगाद्यजनकनित्यगुणादिष्वनैकान्तिकमित्यर्थः । द्वितीयं शङ्कते **कदाचिदेवेति** । अतो न सर्वथासंयोगाद्यजनकनित्यगुणादिष्वनैकान्त्यमिति भावः । कदाचिदेव संयोगादिजनकत्वादित्यत्रापि किं जनकत्वसामान्यस्यैव विवक्षा, उत तदसमवायिकारणत्वरूपतद्विशेषस्येति, विकल्पं मनसि निधायाद्यं दूषयति **तथा सतीति** । मास्तु तर्हि नित्यगुणादिष्वनैकान्त्यं गगनादिनित्यद्रव्ये कदाचिदेव संयोगादिजनकत्वेन तत्रानैकान्त्यादनुमानमसदेवेत्याशयः । द्वितीयं शङ्कते **कदाचिदिति** ॥ **वैयर्थ्यादिति** । संयोगाद्यसमवायिकारणत्वस्यानित्यत्वाव्यभिचारादिति भावः ॥ **अस्तु तर्हि कदाचिदिति** । विशेषणपरित्यागेन संयोगाद्यसमवायिकारणत्वमेव क्रियाया अनित्यत्वे लिङ्गमित्यत आह **तत्परित्यागेऽपीति** ॥ **दुर्निरूपत्वेनेति** । वैशेषिकपरीक्षायां समवायस्य निराकरिष्यमाणत्वेन समवायिनोऽसंभवात् तत्प्रत्यासन्नत्वलक्षणस्यासमवायिकरणत्वस्य दुर्निरूपत्वादित्यर्थः ।

स०— **उक्तवक्ष्यमाणन्यायेनेति** ॥ क्रियायाः भगवता निर्विशेषाभेदानंगीकारेणेत्यर्थः ॥ **ज्ञानेच्छाप्रयत्नैरिति** ॥ ज्ञानादीना मनित्यत्वशङ्कायामपि न सत्ताया अनित्यत्वशङ्केति दर्शयितुं सत्तयेति पृथगुपादानं ॥ **सर्वेति** । किं सर्वक्रिया पक्षीक्रियत उतेश्वरपरिस्पन्दमात्रं नाद्यः, धात्वर्थरूपईश्वरगतज्ञानादिरूपक्रियायां परिस्पन्दत्वाभावेन भागासिद्धेः । न द्वितीयः, परेण ईश्वरपरिस्पन्दानभ्युपगमेन आश्रयासिद्धेः; इत्यर्थः ॥ **क्वचिदनीश्वरपरिस्पन्दानामपीति** । 'शक्तिसद्भाव एव तु । क्रियादिनित्यता ज्ञेया' इत्यनुव्याख्याने वक्ष्यमाणत्वात् इत्यर्थः ॥ **प्रमाणस्येति** । 'क्रियादिश्च स्वभाव इति हि श्रुतिः । ज्ञानं नित्यं क्रिया नित्या' इत्यादिना प्रमाणस्य वक्ष्यमाणत्वात् इत्यर्थः ।

किं योग्यत्वे सति अनुपलब्ध्या अभावनिश्चयः, उत अनुपलब्धिमात्रेण । नाद्यः, **ईश्वर** क्रियाया अयोग्यत्वेन असिद्धेः; न द्वितीयः, अनुपलब्धिमात्रेण आकाशादीनाम् असत्त्वापातात्; इत्याह **योग्यतयेति** ॥ **एतेनावरणाद्यभावे सतीति** । यदि प्रत्यक्षेणोपलब्धिः तदा असिद्धिरेव, यदा प्रमाणेन तदा विशेषणासिद्धिः इति पूर्वोक्तासिद्धत्वेन; इत्यर्थः ॥ उक्तहेत्वन्तर्गत'आदि'शब्देन अभिव्यक्तिग्रहणे तदभावस्य अनिश्चयात् सन्दिग्धविशेषणासिद्धिः; इत्याह **व्यक्तिरपीति** ॥ **नित्यगुणादिना व्यभिचारादिति** । अत्र 'यत् नित्यं तत् सर्वदा स्वफलजनकम्' इति सामान्यव्याप्त्यभिधाने नित्यगुणे ज्ञानेच्छादिरूपे व्यभिचारः, तत्कार्यस्य सृष्ट्यादेः सर्वदाऽभावात्; इत्यर्थः । यद्वा यथाश्रुते सर्वथा संयोगाजनके जलपरमाणुगतरूपादौ व्यभिचारो बोद्धव्यः ।

प० — **उक्तवक्ष्यमाणन्यायेनेति** । 'अतोऽनंतगुणं ब्रह्म निर्भेदमपि भण्यते । एवं धर्मान्' इत्याद्युक्तन्यायेन भक्तिपादे उभयव्यपदेशादित्यत्र वक्ष्यमाणन्यायेनेत्यर्थः ॥ **संहरणादिक्रियाणामिति** । संहारस्याप्यदनविशेषत्वात्प्रागदनादिक्रियाणां इत्युक्तावप्येवमुक्तेरविरोधः । आद्येऽपि-प्रमाणं किं प्रत्यक्षमनुमानमागमोवेति हृदि विकल्प्य क्रमेण निराह **नाद्य इत्यादिना** ॥ **ज्ञानादिरपि कुतो न भवेदित्यन्तेन** । ननु लिङ्गाभावेनेत्ययुक्तम् । क्रियात्वस्य वा असत्यावरणादौ प्रागूर्ध्वमनुपलम्भस्य वा आवरणाद्यभावे सति कदाचिदुपलम्भस्य वा क्रियाजन्यफलानुपलम्भस्य वा नित्यं तत्फलानुपलम्भस्य वा कादाचित्कफलजनकत्वस्य वा कदाचित्संयोगाद्यसमवायित्वस्य वा सामान्यवत्त्वस्य वा सामान्यवत्त्वे सत्यसदादिबाह्येन्द्रिय ग्राह्यत्वस्य वा बाह्येन्द्रिय ग्राह्यसजातीयत्वस्य वा लिङ्गनवकस्य संभवादित्यतः क्रमेण तत्सर्वमाशङ्क्य निराह **क्रियात्वं लिङ्गमिति चेदित्यादिना स्फुटोऽस्य व्यभिचार इत्यन्तेन** । ईश्वरगतज्ञानादिधात्वर्थरूपक्रियामात्रं पक्षीकृत्य परिस्पन्दत्वेन हेतुना अनित्यत्वं साध्यते, अथ परिस्पन्दमेव । आद्य आह **सर्वक्रियाणामिति** । अन्त्य आह **ईश्वरपरिस्पन्देति** ॥ **वक्ष्यमाणत्वादिति** । 'शक्तिसद्भाव एव त्वि'त्याद्युत्तरग्रन्थ एवेति भावः ॥ **असतीति** । आवरणेऽन्यस्मिन् प्रतिबन्धके वा असति प्रागूर्ध्वं चानुपलम्भादीश्वरक्रियाऽनित्येति साध्यत इत्यर्थः ॥ **एतेनेति** । वक्ष्यमाणदिशा नित्यभूतायामनीश्वरक्रियायां व्यभिचारकथनेन उक्तकार्यत्वोपाधिकथनेन प्रत्यक्षेणोपलम्भेऽसिद्धिकथनेनागमेन सर्वदोपलम्भेन चावरणाद्यभावे सति कदाचिदेवोपलब्धिरूपो हेतुरपि प्रत्युक्त इत्यर्थः । स्थलान्तरेप्यनैकान्त्यमाह **वर्णेति** । अप्रयोजकश्चायं हेतुरित्याह **किञ्चेति** ॥ **आदिग्रहणेनेति** । आवरणाद्यभावे सतीत्यादिपदेन व्यक्त्यभावे सतीति गृह्यत इत्यर्थः ॥ **सन्दिग्धेति** । व्यक्त्यभावे सतीतिविशेषणस्यानिश्चयादिति भावः ॥ **परिस्पन्दत्वानुपपत्तेरिति** । संयोगविभागासमवायिकारणं कर्मेति तार्कि-

कैस्तल्लक्षणोक्तेरिति भावः ॥ **नित्यगुणादिनेति** । नित्यभूते गुणे सामान्यादौ च गगनपरिणामादौ नित्यसंयोगादिजनकत्वानुपलम्भेऽपि नित्यत्वाभावरूपसाध्याभावाद्व्यभिचारः । यन्नित्यं तत्सदा स्वकार्यं करोतीति सामान्यव्याप्तिविवक्षायामपि लयवर्तीश्वरेच्छादौ सृष्ट्यादिकार्यजनकत्वाभावाद्व्यभिचार इत्यर्थः ॥ **गगनादिनेति** । तत्र कदाचिद्घटादिमूर्तसंयोगजनकत्वेसत्यपि अनित्यत्वरूपसाध्याभावादिति भावः । न च गगनादिकं सदा किञ्चित्संयोगादिकं जनयत्येवेति वाच्यम् । तस्यापि लयेऽभावात् ॥ **इति विशेषणवैयर्थ्यादिति** । व्यभिचारावारकत्वादिति भावः ॥ **दुर्निरूपत्वेनेति** । एतच्च वैशेषिकाधिकरणे असमवायिकारणलक्षणदूषणप्रस्तावे स्पष्टीभविष्यतीति भावः ।

या० — **उक्तवक्ष्यमाणेति** । भगवद्धर्माणां भगवता सविशेषाभेदसाधकन्यायेनेत्यर्थः । स च न्यायो जन्माधिकरणे उक्तोऽहिकुण्डलाधिकरणे वक्ष्यमाण इति बोध्यम् ॥ **ज्ञानेच्छेति** । ईश्वरीयैरिति शेषः ॥ **सर्वक्रियाणामिति** । एतत्पादसमन्वेतव्यानामदनपानान्तर्नियमनरमणरूपाणां सर्वक्रियाणामित्यर्थः । पानादेर्भोगरूपतया परिस्पन्दत्वाभावादिति भावः ॥ **परेणेति** । परममहत्परिमाणवद्द्रव्यस्य परिस्पन्दायोगादिति भावः ॥ **क्वचिदनीश्वरेति** । 'शक्तिसद्भाव एव तु, क्रियादिनित्यता ज्ञेये'त्यत्र वक्ष्यमाणत्वादित्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'कियादिश्च स्वभाव इति हि श्रुतिः । ज्ञानं नित्यं क्रिया नित्ये'त्यादिप्रमाणस्याकार्यत्वप्रतिपादकस्य वक्ष्यमाणत्वादित्यर्थः । लिङ्ग क्रियाऽनित्यत्व इति शेषः ॥ **असिद्धेरिति** । ईश्वरक्रियाया अयोग्यत्वेन विशेषणासिद्धेरिति भावः ॥ **एतेनेति** । कदाचिदेवोपलब्धिः किं प्रत्यक्षेणोत प्रमाणमात्रेण । नाद्यः । असिद्धेः । न द्वितीयः । आगमादिना प्रागूर्ध्वमप्युपलम्भसंभवेन तेन कदाचिदेवोपलम्भस्यासिद्धेरिति पूर्वोक्तासिद्धत्वरूपदूषणेनेत्यर्थः । ईश्वरपरिस्पन्दस्य प्रत्यक्षत्वमप्यभ्युपेत्यापि समाधत्ते **किञ्चेति** । अत्राभिव्यक्तिः कालविशेषसंबन्धरूपैव विवक्षिता, नोपलब्धिरूपाऽतोऽभिव्यक्तेरप्युपलब्धिरूपत्वेनाभिव्यक्तेरुपलभ्यते इति कथं साध्यसाधनभाव इति शङ्काऽनवकाश इति ध्येयम् ॥ **आदिग्रहणेनेति** । आवरणाद्यभावे सतीत्युक्तहेत्वन्तर्गतादिशब्देनेत्यर्थः । तथा च न तथाऽन्यथासिद्धिरिति भावः ॥ **न हीश्वरेति** । तथा च तदुपलम्भोऽपि कदाचित्प्रमाणान्तरेण वा प्रत्यक्षेणैव वा भविष्यतीति भावः । **नित्यगुणादिनेति** । साध्याभावप्रदर्शनाय नित्येत्युक्तम् । आदिपदेन सामान्यादिपरिग्रहः । नित्यद्रव्येति नित्यं संयोगविभागजन्म संभावितमतस्तन्नोदाहृतम् । नित्यगुणादिना च कदाऽपि संयोगविभागजन्म नोपलब्धं, संयोगविभागयोः कर्मसंयोगविभागमात्रासमवायिकारणकत्वात् । यद्यपि निमित्तकारणेन नित्येश्वरेच्छादिना संयोगादिजन्मास्ति । तथाऽप्यत्र नित्यगुणपदेन सर्वथा संयोगविभागाजनकं जलपरमाण्वादिगतरूपादिकमेव ग्राह्यमिति मन्तव्यम् ॥ **दुर्निरूपत्वेनेति** । इदं चोक्तवक्ष्यमाणन्यायेन द्रष्टव्यम् ।

श्री०— **ज्ञानेच्छाप्रयत्नैरिति** । ईश्वरज्ञानं, ज्ञा अवबोधन इति धात्वर्थः । **ईश्वरेच्छ,** इषू इच्छायामिति धात्वर्थः । ईश्वरप्रयत्नोऽपि, यती प्रयत्न इति धात्वर्थः । सत्ता च भू सत्ता यामिति धात्वर्थः । अनित्यत्वे लिङ्गान्तरमाशङ्कते **असतीति** । सृष्टेः प्राक् संहारादूर्ध्वम् । **प्रागू-** र्ध्वमनुपलम्भोऽनित्यत्वं विना आवृतत्वेनान्यथासिद्धं कस्मान्न स्यादित्यन्यथासिद्धिपरिहारायोक्तम् ॥ **असत्यावरणादाविति** । आदिपदेन प्रतिपदेन प्रतिबन्धकीभूतदुरदृष्टग्रहणम् । अत्र योग्यत्वे सतीति विशेषणं दीयते न वा । आद्ये आह **योग्यतयेति** । द्वितीये त्वाह **अन्यथेति** । अनित्यत्वसाधकं हेत्वन्तरमसिध्यतिदेशेन पराचष्टे **एतेनेति** । अत्रापि पूर्ववदन्यथासिद्धिपरिहाराय सत्यन्तम् ॥ **वर्णेति** । तेषां ध्वनिना कदाचिदेवोपलब्धेरिति भावः । प्रागूर्ध्वमनुपलम्भः कदाचिदेवोपलम्भश्चानित्यत्वं विना कदाचिदभिव्यक्तिप्रयुक्तं भविष्यतीत्यप्रयोजकतेत्याह **किंचेति** । असत्यावरणादावित्यत्रादिपदेना- भिव्यक्तेरपि गृहीतत्वेन तदसत्त्वस्योक्तत्वान्न तयाऽन्यथासिद्धिर्हेतोरित्याशङ्कते **व्यक्तिरपीति** । ईश्वरपरिस्पन्दस्यातीन्द्रियत्वेन तत्र व्यञ्जकसत्त्वं न निश्चेतुं शक्यमिति सन्दिग्धविशेषणासिद्धि- रित्याह **सन्दिग्धेति** ॥ **फलेति** । 'कर्म चासमवायि स्याद्यत्संयोगविभागयोः' इत्युक्तत्वेन संयोग- विभागरूपफलेत्यर्थः । ईश्वरक्रियाया नित्यत्वे संयोगविभागरूपकार्योपलम्भः स्यात् । **न चैवं,** तस्मादनित्यत्वमिति ॥ **सर्वथाऽनुपलम्भस्येति** । फलसामान्याभावस्येत्यर्थः । **जनयतीति** । तथाच

---

फलसामान्याभावस्यासिद्धिरिति भावः ॥ **परिस्पन्दत्वेति** । संयोगविभागासमवायिकारणत्वरूपकर्मत्वे- त्यर्थः ॥ **नित्यमिति** । फलानुपलम्भपदेन विवक्षितेति शेषः । क्रियाया नित्यत्वे तत्तत्कार्यं सदा स्यात् । न च भवत्यतोऽनित्यत्वमिति भावः ॥ **नित्यगुणेति** । जलपरमाणुगतरूपेत्यर्थः । आदि- पदेन सामान्यादि । **विवक्षितं** फलानुपलम्भपदेन अस्त्विति । अनित्यत्वे हेतुरित्यर्थः ॥ **विशेष- णवैयर्थ्यादिति** । नित्यगुणादौ संयोगाद्यसमवायिकारणत्वरूपहेतोरेवाभावात् आद्यकर्मणि च हेतुसा- ध्ययोरुभयोरपि सत्त्वेन व्यावर्त्याभावादित्याशयः ॥**दुर्निरूपत्वेनेति** । न च समवायिकारणप्रत्या- सन्नत्वे सत्यवधृतसामर्थ्यं तत् । तुरीतन्तुसंयोगेऽतिव्याप्तेः । न च समवायिकारणमात्रप्रत्यासन्नत्वं विवक्षितमिति वाच्यम् । आत्ममनःसंयोगेऽतिव्याप्तेः । न च समवायिकारणभिन्नत्वे सति कार्यध्वंसप्रयोजकध्वंसप्रतियोगित्वम् असमवायिकारणत्वमिति वाच्यम् । द्वित्वनाशप्रयोजकनाशप्रतियो- गिन्यपेक्षाबुद्धावतिव्याप्तिरित्यादिप्रकारेण दुर्निरूपत्वेनेत्यर्थः ।

च०— **उक्तवक्ष्यमाणन्यायेनेति** । भागवतधर्माणां भगवता सविशेषाभिन्नत्वस्य जन्मादिनये अभिहितत्वादहिकुण्डलनयेऽभिधास्यमानत्वाच्च तादृशविशेषशक्त्या तेषां तद्धर्मता सङ्गच्छत इति भावः । ईश्वरक्रियाणामनित्यत्वं किं प्रत्यक्षेण प्रमीयतेऽनुमानेनागमेन वेति वितर्कत्रयीं प्रतिसन्दधान आद्यं

तावत्प्रतिविधत्ते **ईश्वरस्येति** । द्वितीयमपहस्तयते **लिङ्गेति** ॥ **ज्ञानेच्छाप्रयत्नैरिति** । 'ईश्वरो जानाति इच्छति प्रयतते विद्यते' इत्यादौ तत्तद्धातूपस्थाप्येशवृत्तिज्ञानेच्छाप्रयत्नसत्तानां नित्यत्वात्, अनैकान्त्यमिति भावः । द्वन्द्वघटकतयैव सत्तापदं विन्यसनीये विभजनेन मतान्तरदिशा अनैकान्त्याभिहितिरियमित्यपि विभावयन्ति । हेतूक्तक्रियात्वं परिस्पन्दत्वरूपमिति द्वितीयवितर्केऽपि तादृशहेतुना नित्यत्वसाधनदशायां धात्वर्थत्वं पक्षतावच्छेदकतयाऽभिप्रेयते परिस्पन्दत्वं वेति तद्द्वयीमनुसन्दधान आद्यं प्रत्याह **सर्वक्रियाणामिति** ॥ **भागासिद्धत्वादिति** । जानात्याद्युपस्थापितदर्शितेश्वरधर्माणामपि प्रकृतपक्षतावच्छेदकाक्रान्ततया तद्ध्वंस्यभावप्रतियोगित्वात् प्रकृतहेतोर्भागासिद्धिरित्यर्थः । द्वितीयं प्रत्याख्याति **ईश्वरपरिस्पन्देति** ॥ **परेणेति** । विभौ परिस्पन्दस्य मतान्तरेऽनुपगतेरिति हृदयम् । अनैकान्त्यमेवोपपादयति **क्वचिदिति** ॥ **वक्ष्यमाणत्वादिति** । 'शक्तिसद्भाव एव तु क्रियादिनित्यता ज्ञेया' इत्यादिनेत्यादिः । क्रियात्वेनैव कार्यत्वस्यापि साधनात् साधनव्यापकतया न तदव्याप्कताघटितमूर्तिकोपाधिता सङ्गच्छत इत्यत आह **तस्यापीति** ॥ **बाधक इति** । आगमाधीनपक्षधर्मिकसाध्यवैधुर्यप्रतिसन्धानमित्यर्थः । **प्रमाणस्य** आगमस्य । **वक्ष्यमाणत्वादिति** । 'क्रियादिश्च स्वभाव इति हि श्रुतिरि'त्यादिनेत्यादिः ।

घटादिनिदर्शनेषु तदावरणाभावदशायां तत्पूर्वक्षणावच्छेदेन तत्स्थितिक्षणध्वंसाधिकरणक्षणावच्छेदेन च घटादेरनुपलब्ध्याख्यहेतौ अनित्यतानिरूपितव्याप्तेर्गृहीततया गृहीतव्याप्तिकोक्तसाधनेन क्रियायामनित्यता सुसाधेत्याशङ्कते **असतीति** । पूर्वोत्तरक्षणयोरन्धकाराद्यावृततयाऽनुपलभ्यमानघटादावनैकान्त्यव्युदसनाय हेतुतावच्छेदकघटकतया आद्यदलोपादानम् । पूर्वोत्तरक्षणयोरुपलक्ष्यमाणवस्तुनि तद्विधूननाय एतद्घटकतयोत्तरदलोपादानम् । वर्णनित्यत्वोपगन्तृमते व्यञ्जकध्वन्यसमवधानदशायां तत्रोक्तक्षतिनिरसनायादिपदाभिप्रेतव्यञ्जकभावावैशिष्ट्यमपि सामानाधिकरण्यप्रत्यासत्त्या तत्र निवेशनीयम् । प्रत्यक्षेणेत्याद्यवितर्केऽपि सत्यामपि योग्यतायां प्रत्यक्षेणानुपलब्ध्यभावनिश्चयोऽभिप्रेयते । तेनानुपलब्धिमात्रेण वेति कल्पद्वयीमभिसन्धायाद्यं पराकुरुते **योग्यतयेति** । तलन्तोत्तरतृतीया सप्तम्यन्तार्था अन्वयभेदार्थिका ॥ **असिद्धेरिति** । पारमेश्वरक्रियाया अयोग्यतोपगत्या हेतुतावच्छेदघटकविशेषणासिद्धिनिबन्धनविशिष्टासिद्धिरित्यर्थः । **अन्यथा** तादृशविशेषणं हेतुशरीरे निवेश्य शिष्टांशस्यैव हेतुत्वोपगमे । **व्यभिचारादिति** । तथा च द्वितीयोऽपि न संभवतीति भावः । **प्रमाणमात्रेणेति** । प्रधानभूतद्वितीयेऽपि क्षतिमाह **असिद्धेरिति** । हेतुशरीरघटकोत्तरदलासिद्धिनियन्त्रिता तद्घटितविशिष्टासिद्धिरित्यर्थः । **आगमादिनेति** । 'ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः' इत्याद्यागमेनेत्यर्थः । इदमेव प्रतीकं तन्त्रावृत्त्याऽऽद्याश्रयेण आदिपदस्योपजीव्यार्थकतोपगमेन भाट्टदिशा आगमोपजीव्यकानु-

मानेनेत्यर्थमपि प्रत्यापयति **एतेनेति** । किञ्चित्कालसंबन्धिनी कालान्तरवृत्त्यभावप्रतियोगिनी चोपलब्धिः प्रत्यक्षनिबन्धना प्रमाणसामान्यनियन्त्रिता वाऽभिप्रेयते । अयोग्यतानिघ्नेन सार्वकालिकोपलब्धिराहित्येन उपलब्धौ किञ्चित्कालसंबन्धित्वाभावेऽत्रासिद्धिप्रसङ्गेनाद्यस्य दर्शितागमायत्ताया: सार्वकालिकोपलब्धेरेव सत्त्वेन दर्शितैवकारार्थाभावाधीनतद्धटितविशिष्टहेत्वसिद्धिप्रसङ्गेन द्वितीयस्य च प्रत्याख्यानेनेत्यर्थः ।

वर्णानित्यत्वमूरीकुर्वतां नैयायिकानां नयेऽनैकान्त्याप्रसरात्तन्नित्यत्वोपगन्तृमताभिप्रायेण तदाह **वर्णेति** । इदमप्यादिपदार्थाघटितमेव हेतुद्वयशरीरमित्यभिप्रेत्य तस्य तद्धटिततायामुक्तानैकान्त्यस्याभिधास्यमानाप्रयोजकत्वस्य चानवकाशात् । ईश्वरपरिस्पन्दस्य प्रत्यक्षगोचरतामुपेत्याप्यप्रयोजकताममिधत्ते **किं चेति** । हेतुत्वानुपपत्तिशङ्काऽवकाशः । **अभिव्यक्तेरिति** । 'अकर्तरि च कारके' इत्यधिकृत्य विहितक्तिनः करणसाधनत्वादभिव्यञ्जकादित्यर्थः, तेनोपलब्धिहेतुद्वयशरीरघटकतयाऽऽदिपदार्थोपगमान्नोक्तक्षतिद्वयावतार इत्याशङ्कते **व्यक्तिरपीति** । व्यक्तिपदं करणसाधनक्तिन्नन्ततदाद्यहेतुवाक्यशरीरघटकमव्यञ्जकसमवहिततितात्पर्यकं द्वितीयं तच्छरीरघटकं तु भावसाधनक्तिन्नन्तमेवेति हृदयम् । अप्रतिसंहितोत्तरवाद्यभिसन्धिकस्य पूर्ववादिन इयमाशङ्केत्यवसेयम् । उत्तरवादी स्वाशयमाविर्भावयति **सन्दिग्धेति** । प्रागनित्यताऽवधृतेरावरणवैधुर्यादिघटितहेतूपरक्तपक्षधर्मिकसन्देहास्कन्दनेनावधृतेन हेतुना पक्षे सन्दिग्धं साध्यं साधनीयमिति परीक्षकाणां कुलधर्मात्ययप्रसङ्ग इति भावः । **कालानुपलम्भ इति** ।

फलराहित्येन क्रियाध्वंसे साधनीयेऽसिद्धिशङ्काऽपनुत्तयेऽनुपलम्भेन तद्राहित्यसाधनाय तद्ग्रहणम् । व्याप्यवृत्तेरवच्छेदकानुपगमेन कालानवच्छिन्नाऽऽधारकत्वरूपकालिकव्याप्यवृत्तित्वविशेषितफलाभावस्य साधनत्वमुपेयते । तदवच्छिन्नाधेयताकत्वरूपकालिकाव्याप्यवृत्तिविशेषिततदभावस्य वेति कल्पद्वयीं प्रतिसन्दधान आद्यमपहस्तयते **सर्वथेति** । असिद्धनामेवोपपादयति **नहीति** । **परिस्पन्दत्वानुपपत्तेरिति** । संयोगविभागजनकत्वस्य तल्लक्षणतया तल्लक्षणालक्षितत्वे तत्त्वानुपपत्तेरित्यर्थः । दर्शितकालिकाव्याप्यवृत्तिताकफलाभावस्य हेतुतेति द्वितीयकल्पं प्रत्याचिख्यासुराशङ्कते **नित्यमिति** । अनुपलब्धिपदोपादानप्रयोजनमधस्तादेवाभ्यधाम **अनित्यगुणादिनेति** । प्रकृतसाध्यराहित्यप्रत्यायनाय गुणादिकं नित्यत्वेन विशेषितम् । आदिपदं सामान्यादिपरिग्राहकम् । व्यभिचारपदोपस्थाप्यसाध्याभावाधिकरणनिरूपितवृत्तित्वघटकाधिकरणान्विताभेदार्थिकतृतीया । तथाच गगनपरिमाणसामान्याद्यभिन्नं यत्प्रकृतसाध्याभावाधिकरणं तन्निरूपितवृत्तित्वरूपानैकान्त्यादित्यर्थः । नित्यद्रव्येषु नित्यसंयोगविभागजन्म संभावितमतस्तन्नोदाजहार । नित्यगुणादिना च कदापि संयोगविभागजन्म नोपलब्धं संयोगविभागयोः कर्मसंयोगविभागासमवायिकारणकत्वात् तेषां च नित्यत्वात् द्रव्यसमवायिकारणकत्वात् च । अतो हेतुरपि तत्रास्तीति भाव इत्यपि विवृण्वते । नित्यगुणपदेन व्यभिचारनिरूपकाधिकरणतया गगनपरिमाणादेरेवो-

पादानेन तादृशपारमेश्वरज्ञानेच्छाप्रयत्नैः संयोगविभागादिरूपफलोत्पादेऽपि न क्षतिः । **तथापीति** । गगनपरिमाणादिषु अनैकान्त्यापनोदेऽपि गगनादिरूपव्यभिचारनिरूपकाधिकरणवृत्तित्वादित्यर्थः । शङ्कते **कदाचिदिति** । एवं चोक्तनित्यागुणनित्यद्रव्येषु नानैकान्त्यमिति भावः । **वैयर्थ्यादिति** । हेतुतावच्छेदकघटकविशेषणानां परमप्रयोजनरूपानैकान्त्यवारणस्य अपरमप्रयोजनरूपासिद्धिनिरसनरूपस्य च दुष्प्रतिपदत्वादित्यर्थः । **दुर्निरूपत्वेनेति** । वैशेषिकपरीक्षायां समवायस्य प्रतिविधास्यमानतया कार्यैकार्थसमवायकारणैकार्थसमवायान्यतरावच्छिन्नसमवायिकारणनिरूपिताधेयताकत्वघटितमूर्तिकासमवायिकारणस्य निरूपयितुमशक्यत्वादित्यर्थः । ईषद्दुःसुष्विति खलः तादृशार्थे विधानात् ।

**सु० — किञ्च द्वितन्तुकारम्भके(वयवे) तन्तौ कर्मोत्पन्नं तन्त्वन्तराद्विभागं करोति । ततो द्वितन्तुकारम्भकसंयोगविनाशः । तन्नाशे द्वितन्तुकविनाशः । अथेदानीं तन्तोः कार्यसंयुक्तप्रदेशविभागः । ततश्चोत्तरदेशसंयोगः । तस्मात्कर्मणो विनाश इति परेषां प्रक्रिया । एवं च यथाऽनेककालवर्तिन्यपि क्रिया कदाचित्संयोगाद्यारभते न यावत्सत्त्वम् । तथा नित्यापि कदाचित्संयोगाद्यारभतां को विरोधः । सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वं हेतुरस्त्विति चेन्न । विशेष्यासिद्धेः । बाह्येन्द्रियग्राह्यसजातीयत्वस्य परमाण्वादौ व्यभिचारात् । किञ्च वर्णनित्यत्वे स्फुटोऽस्य व्यभिचारः । नाप्यागमादीश्वरक्रियाऽनित्यतावगतिः । स हीश्वरक्रियाऽनित्येत्येवमात्मको वा, स इमान्लोकानसृजतेत्येवमात्मको वा । आद्यस्तु नोपलभ्यते । द्वितीयस्तु स ऐक्षत सोऽकामयतेत्यादिना तुल्यः । तत्र यदि क्रियाया अनित्यत्वं, ज्ञानादेरपि कुतो न भवेदिति । अस्तु तर्हि नित्यत्वे बाधकसद्भावादिति द्वितीयः पक्षः । तथा हि । यदि सृष्टिसमयेऽपि संहारक्रिया विद्येत तदा तथैव श्रुत्यादावुपलभ्येत । जननविनाशौ च घटस्य युगपत्प्रसज्येयाताम् । किञ्च यदीश्वरक्रिया नित्या स्यात्तर्हि क्रियायाः संयोगविभागौ प्रति अनपेक्षकारणत्वात्तदुत्पत्तिसातत्यप्रसङ्गः । अपि चेश्वरक्रिया संयोगविभागौ करोति न वा । नेति पक्षे क्रियात्वं व्याहन्येत । आद्येऽपि किं स्वसत्तोत्तरक्षणे उत विरम्य । नाद्यः । स्वसत्ताया इदं प्रथमताभावेन संयोगादिविशेषस्य विवक्षितक्षणादपि पूर्वमुत्पत्तिप्रसङ्गात् । न द्वितीयः । पूर्वोत्तरावस्थयोरविशिष्टस्य विरम्यव्यापारायोगात् । उत्तरसंयोगस्य कर्मविनाशकत्वेन कृतसंयोगस्य कर्मणोऽवस्थानानुपपत्तेश्चेत्यत उक्तं शक्त्यात्मनेति । अयमर्थः । तत्तत्कार्यजननशक्तिरेव क्रियेत्युच्यते । अतः तेन रूपेण स्थिरा सा यदा व्यज्यते तदा व्यवहारालम्बनं तत्तत्कार्यजननी च भवतीति न कश्चिद्दोष इति । क्रिया शक्त्यात्मना व्यक्तिशक्तिरूपेण कारणेनेति वा ।**

**शे०** — नित्यत्वेऽपि कदाचिदेव संयोगादिजनकत्वोपपत्तेरप्रयोजकत्वाच्च न तेनानित्यत्वसाधनं युक्तमित्याह **किञ्चेति** । ननु संयोगविभागाजननेऽनपेक्षकारणस्य कर्मणो नित्यत्वे कथं कदाचिदेव संयोगादिजनकत्वं इत्यतोऽनित्यक्रियाया अपि यावत्सत्त्वं संयोगादिजनकत्वाभाववत्तदुपपत्तेः इत्याशयेन अनित्यक्रियाया यावत्सत्त्वं संयोगाद्यजनकत्वं परीत्यैवोपपादयति **द्वितन्तुकेति** । द्वौ तन्तू समवायिकारणे यस्यावयवविशेषस्य स द्वितन्तुकः । तस्यावयवभूते तन्तावित्यर्थः । परेषां वैशेषिकाणाम् ॥ **प्रक्रियेति** । यथा चैतत् तथा विभागजविभागनिरूपणावसरे परग्रन्थे स्पष्टम् । एवं च क्रियाया यावत्सत्त्वं संयोगादिजनकत्वनियमाभावात् । नित्यत्वेऽपि न तत्प्रसङ्ग इत्यप्रयोजकत्वं सिद्धमित्याह **एवं च यथेति** ॥ **यावत्सत्त्वमिति** । आरम्भसंयोगनाशक्षणे कार्यनाशक्षणे च संयोगाद्यजनकत्वादिति भावः । अनित्यत्वसाधने लिङ्गान्तरमाशङ्कते **सामान्यवत्त्वे सतीति** । बाह्येन्द्रियग्राह्यत्वं किं यथाश्रुतमेव विवक्ष्यते, किं वा बाह्येन्द्रियग्राह्यत्वजातीयत्वं वेति विकल्पं मनसि निधायाद्यं दूषयति **न विशेष्यासिद्धेरिति** । ईश्वरक्रियाया अस्मदादिबाह्येन्द्रियग्राह्यत्वाभावादिति भावः । द्वितीयं दूषयति **बाह्येन्द्रियग्राह्यजातीयत्वस्येति** ॥ **व्यभिचारादिति** । अस्मदादिबाह्येन्द्रियग्राह्यपृथिवीत्वादिजातिमत्त्वस्य तत्रापि सत्त्वादिति भावः । स्वमते परमाणोरनित्यत्वेऽपि तन्नित्यत्ववादिमतेन व्यभिचारोद्भावनमिति द्रष्टव्यम् । यद्वैतदस्वरसादेवाह **किंच वर्णेति** । अस्मदादिबाह्येन्द्रियग्राह्यशब्दत्वादिजातेस्तत्रापि सत्त्वादिति भावः । ईश्वरक्रियाया अनित्यत्वे आगमः प्रमाणमिति तृतीयं पक्षं दूषयति **नापीति** ॥ **नोपलभ्यत इति** । तथा च तादृशागमस्यैवाभावान्न तेन क्रियाया अनित्यत्वसिद्धिरिति भावः ॥ **तुल्य इति** । तथा च न तेनापि क्रियाया अनित्यत्वसिद्धिरिति भावः । तादृशेनापि क्रियाया अनित्यत्वसिद्धिः किं न स्यादित्यतस्तुल्यत्वोक्त्या सूचितमतिप्रसङ्गमुपपादयति **तत्र यदीति** ॥ **कुतो न भवेदिति** । अविशेषादिति भावः ॥ **क्रियात्वं व्याहन्येतेति** । संयोगविभागयोरनपेक्षकारणं कर्मेति तल्लक्षणादिति भावः ॥ **व्यक्तिशक्तिरूपेणेति** । अनेन क्रियाशक्त्यात्मनेत्येकमेव पदं, क्रियाशब्दश्च व्यक्तिवचन इत्युक्तं भवति ।

**स०** — **किं च द्वितन्तुकावयव इति** । तन्तुद्वयकार्यस्य अवयविनः अवयवभूते तन्तौ इत्यर्थः । अनेन अनुमानस्य को दोष उक्तः ? इति चेत्; अप्रयोजकता इति ब्रूमः । अथवा, 'या क्रिया, सा, यावत्स्वसत्त्वं संयोगविभागासमवायिकरणम् । इयञ्च कदाचिदेव संयोगाद्यसमवायिकारणम्, न यावत्स्वसत्वम् । अतः न नित्यता' इति हि परस्य अत्र अभिप्रायः । तत्र व्यभिचारोऽनेन उच्यते, यावत्सु क्षणेषु अवस्थितस्यापि तन्तुकर्मणा आरम्भसंयोगनाशक्षणे कार्यनाशक्षणे च संयोगाद्यजनकत्वेन तावत्सु क्षणेषु संयोगविभागाजनकत्वात् इति । यद्यपि क्रियाया द्वित्रिक्षणावस्थायि-

त्वम् आधुनिकैरुच्यते न षट्क्षणावस्थायित्वम्, तथापि इयं पूर्वेषां क्रिया; इत्यवगन्तव्यम् **विशेष्यासिद्धेरिति** । ईश्वरक्रियाया इन्द्रियग्राह्यत्वाभावात्, इत्यर्थः । स्वमतेऽपि विशेषणासिद्धिरपि द्रष्टव्या ॥ **बाह्येति** । बाह्येन्द्रियग्राह्यसजातीयत्वस्य हेतुत्वे परमाण्वादीनामपि बाह्येन्द्रियग्राह्यसजातीयत्वात् व्यभिचारः, इत्यर्थः ॥ **क्रियात्वं व्याहन्येतेति** । 'कर्म चासमवायि स्याद्यत्संयोगविभागयोः' इति तल्लक्षणादिति भावः ॥ **व्यक्तिशक्तीति** । क्रियाशब्दोक्तव्यक्तिशक्तिरूपाश्रयणेन ।

प० — हेतोरप्रयोजकत्वं च वक्तुमाह **किञ्चेति** । द्वितन्तुकेति बहुव्रीहिः । तन्तुद्वयारब्धकार्यस्यावयवभूते तन्तावित्यर्थः ॥ (तद्विभागं तन्त्वन्तरविभागं) ॥ **संयोगेति** । तन्तुद्वयसंयोगविनाश इत्यर्थः ॥ **सामान्यवत्त्वे सतीति** । घटत्वादावव्यभिचाराय एतद्विशेषणम् । आत्मन्यव्यभिचाराय बाह्येति । योगिव्यावृत्तयेऽस्मदादीति ॥ **परमाण्वादाविति** । द्रव्यत्वपृथिवीत्वादिना तादृशघटादिजातीयत्वात् परमाण्वादेरिति भावः ॥ **अस्येति** । सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वस्येत्यर्थः । प्राश्निकल्पितपक्षत्रयमध्ये प्रमाणबलादिति आद्यं पक्षं प्रत्यक्षानुमानागमरूढतयाऽऽशङ्क्य मूलाद्बहिरेव निरस्य द्वितीयमाशङ्क्य मूलारूढतया निराचष्टे **अस्त्वित्यादिना** । न च घटादिक्रियाया नित्यत्वे निर्बाधं प्रमाणमस्तीत्यन्तेन ग्रन्थेन । **क्रियात्वं व्याहन्येतेति** । संयोगविभागासमवायिकारणं कर्मेति तल्लक्षणादिति भावः ॥ **विवक्षितेति** ॥ यस्मिन्क्षणे संयोग इत्युच्यते ततः पूर्वकाल इत्यर्थः । पूर्वं क्रियारूपो विशेषः शक्त्यात्मना स्थिर इति योजनामभिप्रेत्यार्थ उक्तः । अधुना स क्रियारूपो विशेषः क्रियाशक्त्यात्मनेत्येकपदत्वमुपेत्य व्यनक्ति **शक्तिरूपेणेति** । क्रियाशब्दस्य व्यक्त्यर्थत्वं चोपेत्यार्थमाह **व्यक्तिशक्तिरूपेण कारणेनेति वेति** । व्यक्तिरूपत्वं शक्तिरूपत्वं चेति क्रियायाः द्विरूपत्वाद्धेतोः क्रियारूपो विशेषः स्थिर इति युक्तम् । शक्तिरूपत्वेन स्थैर्यस्य कादाचित्कव्यक्तिरूपतामादाय बाधकपरिहारस्य च संभवादिति भावः ॥

या० — **किञ्च द्वितन्तुकेति** । द्वौ तन्तू समवायिकारणे यस्यावयवविशेषस्य स द्वितन्तुकः तस्यावयवभूते तन्तावित्यर्थः । बहुतन्तुकावयविनि आरम्भकसंयोगानां बहुत्वेनैकसंयोगनाशानन्तरं वक्ष्यमाणकार्यनाशो न स्पष्टं प्रतीयतेऽतो द्वितन्तुक एवावयवी गृहीत इति ध्येयम् ॥ **एवं च यथाऽनेकेनेति** । तथा चोक्तहेतोरप्रयोजकतेति भावः । **न यावत्सत्त्वमिति** । स्वोत्पत्तिक्षणे आरम्भकसंयोगनाशक्षणे कार्यनाशक्षणे च संयोगाद्यजनकत्वादिति भावः । यद्यपि क्रियाया द्वित्रिक्षणावस्थायित्वमेवाधुनिकैः उच्यते, न षट्क्षणावस्थायित्वम् । तथापीयं पूर्वेषां प्रक्रियेत्यवगन्तव्यम् ॥ **क्रियात्वं व्याहन्येतेति** । 'कर्म चासमवायि स्याद्यत्संयोगविभागयोरि'ति तल्लक्षणादिति भावः । **व्यक्तिशक्तिरूपेणेति** । ततश्चात्र क्रियाशक्त्यात्मनेत्येकमेव पदं, क्रियाशब्दश्च व्यक्तिवचन इति भावः ।

श्री० — कदाचिदेव संयोगाद्यसमवायिकारणत्वम् अनित्यत्वं विनाऽप्युपपद्यत इत्यप्रयोजकतेत्याह **किञ्चेत्यादिना** । बहुतन्तुककार्यग्रहणे एकतन्तुसंयोगनाशेन तत्र समग्रकार्यनाशासम्भवात् । द्वितन्तुकग्रहणे तु तन्तुद्वयसंयोगस्यासमवायिकरणत्वात्तस्यैव चान्त्यतन्तुसंयोगरूपत्वात्तन्नाशेन समग्रकार्यनाशः सम्भवतीत्यभिप्रेत्य द्वितन्तुकेत्युक्तम् । अदृष्टविलम्बेन कार्यविलम्बे सत्यप्यन्त्यतन्तुसंयोगेन कदाचित्कार्यं न स्यादित्याद्यभियुक्तवाक्यपर्यालोचनयाऽन्त्यतन्तुसंयोगस्यैवासमवायिकारणत्वं गम्यत इति ज्ञेयम् ॥ **विशेष्यासिद्धेरिति** । ईश्वरक्रियाया अतीन्द्रियत्वादिति भावः । ननु बाह्येन्द्रियग्राह्यसजातीयत्वं हेतुः, स चेश्वरक्रियायामस्त्येव । क्रियात्वादिना घटादिक्रियासाजात्यस्य सत्त्वादित्यत आह **बाह्येति** । आद्ये द्वितीये च हेतौ दूषणान्तरं चाह ॥ **वर्णेति** । श्रोत्ररूपबाह्येन्द्रियग्राह्यत्वात् । वर्णानां द्रव्यत्वेन बाह्येन्द्रियग्राह्यघटादिसजातीयत्वाच्चेति भावः । ईश्वरक्रियाया अनित्यत्वं प्रमाणबलादङ्गीक्रियत इत्याद्यपक्षे तत्प्रमाणं, न प्रत्यक्षं, नाप्यनुमानमित्युक्तम् । अधुनाऽऽगममाशङ्क्य निराकरोति **नापीति** ॥ **स इमानिति** । असृजतेति भूतार्थकलङाऽतीतकालसम्बन्धस्य सर्जनक्रियायाः प्रतीयमानत्वादनित्यत्वं मन्तव्यम् । तुल्यत्वोक्त्यैव लब्धमर्थं दर्शयति **तत्र यदीति** । अनित्यत्वमागमबलादङ्गीक्रियत इति शेषः ॥ **ज्ञानादेरपीति** । आगमबलादेवेति शेषः । तत्रापि भूतार्थकलङो विद्यमानत्वादिति भावः ॥ **विरम्येति** । कतिपयक्षणव्यवधानेनेत्यर्थः । **स्वसत्ताया** ईश्वरक्रियासत्तायाः ॥ **विवक्षितक्षणादिति** । यस्मिन्क्षणे संयोगविशेषादिर्भवतीत्युच्यते भवद्भिः, तत्क्षणात्पूर्वमपि स्यात्, क्रियायाः **तत्पूर्वं** सत्त्वादित्यर्थः । **अवस्था** क्षणः । **अविशिष्टस्य** अविलक्षणस्य । यदि पूर्वक्षणापेक्षयोत्तरक्षणे किञ्चिद्वैलक्षण्यं क्रियायामायातीति स्यात्तदापरं तद्वैलक्षण्यस्य पूर्वपूर्वक्षणेऽभावाद्विरम्य व्यापारो युक्तः स्यात् । न चैवं तददर्शनादिति भावः । **शक्तिरेव क्रियेति** । क्रियाशक्त्यात्मनेति पदद्वयम् । शक्त्यात्मना स्थितिरर्थः क्रियाशक्तिरेव क्रियेति यावदित्यर्थः ।

च० — क्रियायां नित्यत्वेऽपि ततः कादाचित्कयेव संयोगविभागादिजनिःसूपपादेत्यप्रयोजकतया नोक्तहेतुना नित्यत्वसाधनं सङ्गच्छते इत्यभिधित्समानस्तदौपयिकीं क्रियायां अनित्यत्वोपगन्तृवैशेषिकोररीकृतामपि ततः कादाचित्कीं संयोगविभागादिजनिं दिदर्शयिषुस्तदीयप्रक्रियामनुवदति **किं चेत्यादि** ॥ **द्वितन्तुकेति** । बहुव्रीहिः । शेषाद्विभाषेति तल्लिङ्गात् । तन्तुद्वयसमवायिकारणको यः पटस्तदवयवे तन्तावित्यर्थः । विभागजविभागनिरूपणावसरे न्यायनयनिरूढैवैषा प्रक्रियेत्यभिसन्धिः । **न यावत्सत्त्वमिति** । सत्त्वमभिव्याप्येत्यर्थः । काशीतः पाटलीपुत्रं यावद्वृष्टो देव इत्यादावभिविध्यर्थकयावच्छब्दयोगेऽपि द्वितीयाविधानात् क्षणचतुष्टयावस्थापि स्वाधिकरणक्षणत्वव्यापकाधारतानिरूपकता नरसंयोगाद्यारम्भे स्वोत्पत्तिक्षणे आरम्भकसंयोगनाशक्षणे कार्यनाशक्षणे च संयोगाद्यजनादिति फलिताशयः । हेत्वन्तर-

माशङ्कितम् **सामान्यवत्त्वे सतीति** । येनेन्द्रियेण या व्यक्तिर्गृह्यते, तेन तद्गता जातिरपीति नियमेन सामान्ये गगनादौ चानैकान्त्यविधूननाय पूर्वोत्तरदलयोरुपादानम् । आत्मनि तदपहस्तयितुं बाह्यपदमुपात्तम् । तच्च तादृशेन्द्रियजन्यसाक्षात्कारनिरूपितलौकिकविषयताश्रयत्वपर्यन्तं विवक्षणीयं तेनाकाशे शब्द इत्याद्युपनीतभाने उपनीतमर्यादया आकाशादिगोचरेष्वाकाशादेर्भानेऽपि न क्षतिः तादृशोपनीतभानानामाकरदृशां निरूढत्वात् । **व्याहन्येतेति** । संयोगविभागासमवायिकारणत्वरूपक्रियालक्षणलक्षितत्वाभावादिति भावः ॥ **तत्तत्कार्यजननशक्तिरेवेति** । 'व्यक्तिः भावं गतायां तु करोतीति स्वरूपिणी । शक्तिरूपस्थिता सैव क्रियाशक्तिरितीर्यते' इति प्रमाणानुरोधेन कार्यजननशक्तिरूपस्थितक्रियाऽत्र क्रियेत्युच्यते, इत्यप्यर्थापयन्ति । **व्यक्तिशक्तिरूपेणेति** । एतेन क्रियाशक्त्यात्मनेति द्वन्द्वगर्भषष्ठीतत्पुरुषप्रकृतिकतृतीयान्तम् । क्रियाशब्दश्च व्यक्तिवचन इति ध्वन्यते ।

**सु० — ननु केयं शक्तेर्व्यक्तिर्नाम । न तावत्प्रतीतिः । ईश्वरापेक्षया नित्यसिद्धत्वेनोक्तदोषानुषक्तेः । परापेक्षया कदाऽप्यभावात् । भावेऽपि कार्योत्पादस्य तदनपेक्षत्वात् । अत एव नावरणनिवृत्तिर्व्यक्तिरिति । मैवम् । व्यक्तिशब्देन शक्तेरेवावस्थाविशेषस्य विवक्षितत्वात् ॥ तत्र यत्तावदुक्तम् । यदि सृष्टिसमयेऽपि संहारक्रिया स्यात्तदा तथा व्यवह्रियेतेति । तदसत् । व्यक्तिरूपेणैव व्यवहारालम्बनत्वात् । यदपि जननविनाशौ युगपत्स्यातामिति तदपि व्यक्त्यवस्थायामेव शक्तेर्जनकत्वादनुपपन्नम् । यच्च क्रियाया नित्यत्वे संयोगविभागोत्पत्तिसातत्यप्रसञ्जनं तदप्येवमेव परिहृतम् । किं चैवं पटसामग्र्याः पटोत्पत्तावनपेक्ष(कारण)त्वात्पटोत्पत्तिसातत्यं स्यात् । ननु किं सामग्री तमेव पटं पुनर्जनयतु(येत्), उत पटान्तरम् । नाद्यः । पटप्रागभावस्यापि सामग्रीनिविष्टत्वात्तस्य च पटोत्पत्त्या विनष्टत्वेन सामग्र्या विकलत्वात् । न द्वितीयः । पूर्वपटेन प्रतिबद्धत्वात् । तत्कथं पटोत्पत्तिसातत्यम् । सत्यम् । सममेतत्प्रकृतेऽपीति । यदपीश्वरक्रिया संयोगविभागौ करोति न वेति पृष्टम् । तत्र करोतीति ब्रूमः । कुर्वन्ती च विरम्यैव । न च तदनुपपत्तिः । व्यक्त्या विशिष्टत्वात् । अन्यथाऽवयवक्रियाऽप्युत्तरदेशसंयोगं स्वोत्पत्त्युत्तरक्षण एव कुर्यात् । न च कृतसंयोगस्य कर्मणोऽवस्थानानुपपत्तिः । अनित्यक्रियासु तद्व्यवस्थोपपत्तेः ।**

**शे० — उक्तदोषेति** घटादेर्युगपज्जननविनाशप्रसञ्जनरूपेत्यर्थः ॥ **परेति** । पुरुषशक्त्या नित्यातीन्द्रियत्वादिति भावः ॥ **भावेऽपीति** । ईश्वराचिन्त्यशक्त्या प्रतीतिसद्भावेऽपीत्यर्थः ॥ **अत एवेति** । ईश्वरापेक्षया नित्यसिद्धत्वात्परापेक्षया कदाऽप्यभावाद्भावेऽपि कार्योत्पादस्य तदनपेक्षत्वादेवेत्यर्थः ।

शक्तिव्यक्तिरूपाश्रयणेनोक्तबाधकान्यनूद्य परिहरति **तत्रेति** ॥ **व्यक्तिरूपेणैवेति** । ततश्च सृष्टिसमये संहारक्रियायाः शक्तिरूपेण सद्भावेऽपि तेन रूपेण व्यवहारानालम्बनत्वाद्व्यक्तिरूपेणैव व्यवहारालम्बनत्वात्, व्यक्तेश्च तदाऽभावात् न श्रुत्यादौ तथा व्यवहार इति भावः ॥ **जननेति** । घटस्येति शेषः । **व्यक्त्यवस्थाया एवेति** । व्यक्त्यवस्थोपेतायाः क्रियाशक्तेरेव जनकत्वात्सृष्टिसमये च तदभावान्नोक्तप्रसङ्ग इति भावः । (क्रियाया एव शक्तित्वेनाभिधानानुसारेणेदम्) ॥ **एवमेवेति** । व्यक्त्यवस्थाया एव क्रियाया जनकत्वान्न क्रियानित्यत्वेऽपि संयोगादिसततोत्पत्तिप्रसङ्ग इति भावः । सामग्रीवैकल्यात्पूर्वसंयोगेन प्रतिबन्धाच्च न संयोगादिसततोत्पत्तिप्रसङ्ग इति भावेन सामग्रीवैकल्यादिकं परमुखेनैवानेतुं प्रतिबन्दीमाह **किञ्चेति** ॥ **सममेतदिति** । किं क्रिया तमेव संयोगं पुनर्जनयतु संयोगान्तरं वा । नाद्यः । संयोगप्रागभावस्यापि सामग्रीनिष्ठत्वात्तस्य च संयोगोत्पत्त्या विनष्टत्वेन सामग्रीवैकल्येन क्रियामात्रेण संयोगजननयोगात् । नान्त्यः । पूर्वसंयोगेन प्रतिरुद्धत्वात् । तत्कथं संयोगोत्पत्तिसातत्यमेवं विभागोऽपीति सममेतदित्यर्थः ॥ **करोतीति ब्रूम इति** । अतो न लक्षणव्याघात इति भावः । तर्ह्येतत्पक्षोक्तविकल्पदोषप्रसङ्गः इत्यत आह **कुर्वन्ती चेति** । तथा च स्वसत्तोत्तरक्षण एव संयोगादिजनकत्वानङ्गीकारान्न तत्पक्षोक्तदोषप्रसङ्ग इति भावः । तावता तद्दोषपरिहारेऽपि एतत्पक्षोक्तदोषः स्यादेवेत्याशङ्क्य निषेधति **न चेति** । पूर्वोत्तरावस्थयोरविशिष्टस्य विरम्यव्यापाराभावादिति भावः ।

पूर्वोत्तरावस्थयोरविशिष्टस्य विरम्यव्यापाराभावेऽपि प्रकृते व्यवस्था विशिष्टत्वभावाभावाभ्यां क्रियायाः पूर्वोत्तरावस्थयोरविशेषासिद्धेर्युक्तो विरम्यव्यापार इत्याशयवानाह **व्यक्त्येति** । पूर्वोत्तरावस्थयोर्विशेषं क्रियायाः परमुखेनाप्यानेतुं प्रतिबन्दीमाह **अन्यथेति** ॥ **अनुपपत्तेरिति** । उत्तरसंयोगस्य कर्मविनाशकत्वात् अन्यथाप्रापणानुपपत्तिप्रसङ्गादिति भावः ।

स०— उक्तबाधकान्यनूद्य परिहरति **तत्रेत्यादिना** ॥ यदुक्तं संयोगादिकारणत्वे नित्यत्वानुपपत्तिरिति तद्विघटयति **न च कृतेति** ॥

प०— **अत एवेति** । नित्यसिद्धत्वादित्यादिदोषादेवेत्यर्थः । न कश्चिद्दोष इत्युक्तं तद्व्यनक्ति **तत्र यत्तावदित्यादिना** । **अवयवक्रियेति** । द्वितन्तुकावयव इत्यादिनोक्तावयवक्रियेत्यर्थः ।

या०— **अवस्थाविशेषस्येति** । स च कार्यैकोन्नेय इति भावः ।

श्री०— प्रतीतिः किमीश्वरस्योच्यते, परेषां वा । नाद्य इत्याह **ईश्वरेति** । ईश्वरमपेक्ष्येत्यर्थः । नित्यसिद्धत्वेन शक्तिप्रतीतेरिति शेषः ॥ **उक्तदोषेति** । तथाहि । यदि सृष्टिसमयेऽपीत्यादिनोक्तेत्यर्थः । द्वितीयं निराह **परेति** । परानपेक्ष्येत्यर्थः । भगवच्छक्तेरतीन्द्रियत्वेन परेषां भगवच्छक्तिप्रतीतिः कदाऽपि नास्तीति भावः । अस्त्यागमादिना परेषां तत्प्रतीतिरिति चेत्तत्राह **भावेऽपीति** । **तदनपेक्ष**-

**स्वात्** परप्रतीत्यनपेक्षत्वादित्यर्थः । परेषां यदा भगवच्छक्तिप्रतीतिस्तदैव कार्यं भवति । नो चेन्नेति न युक्तम् । शक्तिकार्यभूतस्य सततं कार्योत्पादस्य परप्रतीत्यनपेक्षत्वेन परेषां तत्प्रतीतिरस्तु वा मा वा कार्यं तु सदा स्यादेवेति भावः । तथाच क्रियारूपशक्तौ परप्रतीतिरूपव्यक्तौ सत्यां कार्योत्पादः तस्मिन् सति परेषां प्राप्त्या तत्प्रतीतिरूपव्यक्तिसिद्धिरित्यन्योन्याश्रय इति हृदयम् ॥ **अत एवेति** । ईश्वरापेक्षयाऽऽवरणस्यैवाभावात्परेषां त्वीश्वरशक्तिप्रतीतिप्रसक्तेरेवाभावेन तान्प्रत्यावरणकल्पनाया एवासम्भवेन परापेक्षया कदाऽप्यावरणनिवृत्तेरभावात् । भावे वा कार्योत्पादस्य तदनपेक्षत्वादित्यर्थः । अवस्थाविशेषः सृष्ट्यादिकालविशेषसम्बन्धरूपः ॥ **व्यक्तिरूपेणैवेति** । शक्तेर्यदा सृष्ट्यादिकालविशेषसम्बन्धस्तदैवेति भावः । व्यक्त्यवस्थायाः सृष्ट्यादिकालविशेषसम्बन्धवत्याः । तथाच शक्तेः सृष्टिसंहारकालसम्बन्धस्य युगपदभावान्न युगपत्सृष्टिसंहाराविंत्याशयः ॥ **एवमेवेति** । कालविशेषसम्बन्धरूपव्यक्त्यवस्थाया एव शक्तेः संयोगादिजनकत्वात् व्यक्त्यवस्थायाश्च सदाऽभावान्न तत्सातत्यमिति भावः ॥ **एवमिति** । क्रियायाः संयोगविभागौ प्रत्यनपेक्षकारणत्वात्तदुत्पत्तिसातत्यप्रसञ्जन इत्यर्थः । **अनपेक्षत्वात्** इतरानपेक्षकारणत्वादित्यर्थः । **तमेव** पूर्वमुत्पन्नमेव ॥ **विनष्टत्वेनेति** । प्रतियोग्यापत्तेरेव प्रागभावविपत्तिस्त्वादिति भावः । **पूर्वपटेनेति** । सामग्र्या हि तन्तौ पटेनोत्पत्तव्यम् । तत्र च पूर्वपटस्यैव प्रतिबन्धकस्य सत्त्वेन पटान्तरस्यावकाशाभावादित्यर्थः ॥ **सममेतदिति** । क्रियारूपसामग्री तमेव संयोगादिकं जनयेदुत संयोगान्तरम् । नाद्यः । संयोगादिप्रागभावाभावेन सामग्र्या विकलत्वात् । न द्वितीयः । पूर्वसंयोगादिना प्रतिबद्धत्वादित्यर्थः ॥ **तदनुपपत्तिरिति** । पूर्वोत्तरावस्थयोरविशिष्टस्य विरम्य व्यापारायोगादित्यर्थः ॥ **व्यक्त्येति** । कालविशेषसम्बन्धरूपयेत्यर्थः । तथाच पूर्वोत्तरावस्थयोरविशिष्टत्वमेवेति नेति भावः । **अवयवक्रिया** द्वितन्तुकावयवक्रिया ॥ **उत्तरक्षण एवेति** । तन्त्वन्तरविभागादिभिर्व्यवधानं न स्यात्पूर्वोत्तरावस्थयोरविशिष्टत्वादित्यर्थः । **कर्मण** ईश्वरकर्मणः ॥ **अनित्येति** । ईश्वरक्रिया तु नित्येति भावः ।

च० — **नित्यसिद्धत्वेन** सार्वकालिकसर्वगोचरेश्वरज्ञानविषयीकृतत्वेन । **उक्तदोषेति** । घटादेर्यौगपद्येनोत्पादविनाशापत्तिरूपेत्यर्थः । **कदापीति** । अतीन्द्रियत्वादिति भावः । **भावेपीति** । ईश्वराचिन्त्याद्भुतशक्त्या प्रतीतिसद्भावेऽपीत्यर्थः । अत एव । तादृशेशाज्ञानावगाढत्वपरातीन्द्रियत्वकार्योत्पादनिष्ठतन्नैरपेक्ष्यत एवेत्यर्थः । उक्तक्षतिजातं शक्तिव्यक्तिरूपाश्रयणेन परिजिहीर्षति **व्यक्तिरूपेण इति** । इत्थं च सर्जनदशायामितरक्रियाया व्यवहारानौपयिकशक्त्यात्मनाऽवस्थितावपि तदौपयिकव्यक्त्यात्मनावस्थितेस्तदानीं न तथा व्यवहारापत्तिरिति भावः । **जननेति** । घटादेरित्यादिः । **व्यक्त्यवस्थाया एवेति** । बहुव्रीहिः । तथा च सर्जनदशायामितरक्रियायास्तादृप्येणानवस्थितेर्न क्षतिरिति भावः । एवमेव व्यक्त्यात्मनैव क्रियायाः संयोगादिजनकत्वोपगमेनैव । संयोगादिरूपफलोत्पत्तिप्रयोजक

निखिलकूटवैधुर्यनियन्त्रितं पूर्वसंयोगरूपप्रतिबन्धकनिबन्धनं वा संयोगादिमानन्त्याप्रसञ्जनमित्यभिधित्समानः परलपनेनैव तादृशकूटवैधुर्यं निर्दिधारयिषुः प्रतिबन्दीमभिधत्ते **किं चेति** ॥ **सममेतदिति** । प्रागभावस्य तत्तद्व्यक्तित्वेनैव कारणतायाः स्थिततया तत्संयोगव्यक्त्युत्पादने तद्व्यक्त्युत्पत्तिप्रयोजकप्रागभावविनाशेन तद्घटितकूटवैधुर्येण तद्व्यक्त्युत्पादस्य तादृशव्यक्तिरूपप्रतिबन्धकसमवधानेन व्यक्त्यन्तरोत्पादस्य चापत्त्यनवकाशेन न संयोगादिसातत्यापत्तिरिति भावः ॥ **करोतीति ब्रूम इति** । तेन लक्षणव्याहतिरिति हृदयम् । तत्कल्पोक्तदोषं परिहरति **कुर्वती चेति** । तथा च स्वसत्तोत्तरक्षणावच्छेदेनैव संयोगादिजनकत्वानुपगतेर्न तत्कल्पोक्तक्षत्यवकाश इति भावः । **तदनुपपत्तिरिति** । पूर्वोत्तरक्षणयोरविशिष्टस्य कार्यजनकत्वतद्राहित्ययोर्व्यवस्थानानुपपत्तिरित्यर्थः । पूर्वोत्तरक्षणयोः क्रियायां वैशेष्यं परलपनेनापि निर्धारयति **अन्यथेति** ॥ **अनवस्थानानुपपत्तिरिति** । उत्तरसंयोगैकनाश्यत्वात्कर्मण इति भावः ।

सु०— **ननु संहारकाले क्रिया व्यक्ता (अथ) न वा । न चेत्कथं तत्र व्यवहारोऽर्थक्रिया वा । आद्ये कथं सृष्टिव्यवहाराद्यभावः । मैवम् । व्यक्तेरप्यवान्तरानन्तविशेषवत्ताऽङ्गीकारात् । तदिदमुक्तं** सविशेषोऽपीति । **एवमनङ्गीकारे परेषामपि समानः प्रसङ्गः । पारमेश्वरस्य ज्ञानेच्छाप्रयत्नलक्षणस्य संहारव्यापारस्य नित्यत्वात् । नित्यमपि परमेश्वरेच्छादिकं सहकारिसद्भाव एव कार्यकारीति चेन्न । सहकारिणामपि नित्यत्वात्, परमेश्वरेच्छाद्यायत्तत्वाच्च । नेच्छादिमात्रं संहारादिकारणं किन्तु संजिहीर्षादिकम् उत संहारादिविशेषविषिष्टं तदेव । नाद्यः । अनभ्युपगमात् । तत एव संहरादिसिद्धाविच्छादिकल्पनावैयर्थ्याच्च । संजिहीर्षादेश्च नित्यानित्यविकल्पानुपपत्तेः । न द्वितीयः । सति संहारादौ संजिहीर्षादिकं ततः संहारादिरिति परस्पराश्रयप्रसङ्गात् । न च स्वरूपसता संहारादिनेच्छादिकमुपधीयते । किन्तु विषयभूतेनेति चेत् । संहारादिविषयता किमागन्तुकी, अथवा नित्येति वक्तव्यम् । नाद्यः ॥ गुणेष्वागन्तुकधर्मोत्पत्तेरनभ्युपगमात् । द्वितीये तु सर्वदा संहारादिप्रसङ्गः । तस्माच्छक्तिव्यक्तिरूपता सर्वथाऽनुसरणीया । सा च समा क्रियायामपीति ।**

शे०— **क्रिया व्यक्ता न वेति** । अत्र क्रियाशब्दः शक्तिपरः । अत एव तत्तत्कार्यजननशक्तिरेव क्रियेत्युक्तमिति ध्येयम् । संहारक्रियायाः संहारकालेऽव्यक्तत्वे संहारक्रियेति श्रुत्यादौ व्यवहारो न स्यात् । व्यक्तिरूपेणैव व्यवहारालम्बनत्वात् । संहाररूपार्थक्रिया च न स्यात् । व्यक्त्यवस्थाया एव शक्तेर्जनकत्वादित्याह **न चेदिति** । संहारकाले शक्तेर्व्यक्तत्वे संहारस्येव सृष्टेरपि प्रसङ्गः ।

संहारक्रियेति श्रौतव्यवहारवत् सृष्टिः क्रियेत्यपि श्रौतव्यवहारस्यापि प्रसङ्गः इत्याह **आद्य इति** ॥ **तदिदमुक्तमिति** । अनेन यो व्यवहारहेतुर्व्यक्तिरूपो विशेषः, स सविशेषोऽपि भगवत्यवान्तरानन्तविशेषसहितोऽपि भवति । अतो न व्यवहारादिसाङ्कर्यप्रसङ्ग इति मूलयोजना सूचिता भवतीति द्रष्टव्यम् ॥ ननु क्रियायां शक्तिव्यक्तिरूपत्वं व्यक्तिरूपेण व्यवहारालम्बनत्वं व्यक्तेरप्यवान्तरानेकविशेषवत्त्वं चेत्यनेककल्पनादोषप्रसङ्गान्नेश्वरस्य क्रियाङ्गीकारो युक्त इत्यतस्तर्हि ज्ञानेच्छाद्यङ्गीकारेऽपि शक्तिव्यक्त्यादेरनेकस्य कल्पनीयत्वाज्ज्ञानादिकमपि नेश्वरस्याङ्गीकर्तव्यं स्यादविशेषादिति भावेन ज्ञानादौ शक्तिव्यक्त्यादिकमेव कुतः कल्पनीयं, येन तस्यापलापः स्यादितस्तत्र शक्तिव्यक्त्यादिरूपत्वं परेणाप्यङ्गीकारयति **एवमिति** । क्रियायां शक्तिव्यक्त्याद्यनङ्गीकार इत्यर्थः ॥ **समानः प्रसङ्ग इति** । सृष्टिसमये संहारोऽपि स्यादित्यतिप्रसङ्गस्तुल्य इत्यर्थः । ननु संहारक्रियाया नित्यत्वेन सृष्टिसमयेऽपि सत्त्वात् त्वत्पक्षे घटादेः युगपज्जननविनाशप्रसङ्गेऽपि परमेश्वरीयसंहारव्यापारस्यानित्यत्वेन सृष्टिसमयेऽसत्त्वान्न परपक्षे युगपज्जननादिप्रसङ्ग इत्यतः स्यादेतदेवं यदि परमेश्वरीयसंहारव्यापारोऽनित्यः स्यात् । न चैतदस्तीत्याह **परमेश्वरस्येति** ॥ **नित्यमपीति** । तथा च सृष्टिसमये पारमेश्वरसंहारव्यापारसत्त्वेऽपि सहकारिविरहान्न संहारजनकत्वमिति नोक्तप्रसङ्ग इति भावः । स्यादप्येवं यदि सृष्टिसमये संहारकारणपारमेश्वरव्यापारस्य सहकारिविरह एव स्यान्न चैतदस्ति, पारमेश्वरव्यापारवत्तत्सहकारिणामपि नित्यतया सृष्टिसमये सत्त्वावश्यंभावादित्याह **सहकारिणामपीति** । अनित्यत्वेऽपि सहकारिणामीश्वरेच्छाद्यायत्तत्वेन सतीच्छादौ तदभावायोगान्न सहकारिविरहो वक्तुं युक्त इत्याह **ईश्वरेच्छाद्यायत्तत्वाच्चेति** ॥ **नेच्छादीति** । संहारादीत्यादिपदेन सृष्टिपरिग्रहः । सञ्जिहीर्षादिकमित्यादिपदेन सिसृक्षापरिग्रहः । तथा च सृष्टिसमये चेच्छादिमात्रसद्भावेऽपि सृष्टिसमये सिसृक्षावत्सञ्जिहीर्षायाः संहारसमये च सञ्जिहीर्षावत्सिसृक्षाया अभावान्न सृष्ट्यादिसमये जननविनाशयौगपद्यप्रसङ्ग इति भावः ॥ **अनभ्युपगमादिति** । तथा चापसिद्धान्त इति भावः । तथाऽभ्युपगमेऽप्याह **तत एवेति** । सञ्जिहीर्षादित एवेत्यर्थः ॥ **नित्यानित्येति** । सञ्जिहीर्षादिकं नित्यमनित्यं वा । नाद्यः । सर्वदा संहारप्रसङ्गात् । नान्त्यः । तथा सति संजिहीर्षासंहारादौ संजिहीर्षाद्यन्तरं कारणं वाच्यम् । अन्यथा तत्रैव व्यभिचारेण तस्य संहाराद्यकारणत्वप्रसङ्गात् । ततश्चानवस्थेति नित्यानित्यविकल्पानुपपत्तेरित्यर्थः । **किन्तु विषयभूतेनेति** । विषयत्वं चानागतस्यापि संभवतीति न परस्परपराश्रयत्वमिति भावः ॥ **गुणेष्विति** । इच्छादीनां गुणानां सामान्यसंबन्धेऽपि नागन्तुकधर्मोत्पत्तिस्तत्राभिमता येन संहारादिविषयतोत्पद्येतेत्यर्थः ॥ **तस्मादिति** । संजिहीर्षाया नित्यत्वेन सृष्टिकाले सिसृक्षायाश्च नित्यतया संहारकाले च सत्त्वेऽपि शक्तिरूपेणैव सत्त्वात् व्यक्तिरूपेणैव च कार्यकारित्वात् । यदा सिसृक्षाव्यक्तिस्तदानीमेव सृष्टिः, यदा च

संजिहीर्षाया व्यक्तिस्तदानीमेव संहार इति न सृष्ट्यादौ युगपज्जननविनाशप्रसङ्ग इति शक्तिव्यक्तिरूपताश्रयणेनैवोक्तप्रसङ्ग निरासो वक्तव्यः। स च क्रियायामपि तुल्य इति न मत्पक्षेप्यतिप्रसङ्ग इति भावः।

स०— **सविशेषोऽपीति** ॥ विलक्षणोऽपीत्यर्थः ॥ **सञ्जिहीर्षादेश्चेति** ॥ सञ्जिहीर्षादिकं नित्यमनित्यं वा। नित्यं चेत्सदा संहारादिप्रसङ्गः। अनित्यं चेत् कथमीश्वरस्य नित्यगुणत्वमिति भावः ॥ यद्वा सञ्जिहीर्षादेः अनित्यत्वे सञ्जिहीर्षादिसंहारेऽपि सञ्जिहीर्षान्तरं कारणं वाच्यम्। अन्यथा तत्रैव व्यभिचारेण तस्यासंहारे कारणत्वमेव न स्यात् सा चान्या चेदनवस्था, सैव चेदात्माश्रयः। नित्यत्वे सर्वदा संहारादिप्रसङ्ग इति दूषणप्रसङ्गेन विकल्पानुपपत्तेरित्यर्थः। **किन्तु विषयभूतेनेति** ॥ विषयत्वं चानागतस्याप्यस्तीति नान्योन्याश्रय इत्यर्थः ॥ **गुणेष्विति** ॥ इच्छादीनां गुणानां सामान्यसंबन्धेऽपि नागन्तुककर्मोत्पत्तिस्तत्राभिमता येन संहारादिविषयतोत्पद्येतेत्यर्थः।

प०— व्यक्तेरैकरूप्यमुपेत्य शङ्कते **ननु संहारकाल इति** ॥ **संजिहीर्षादेश्च नित्यानित्यविकल्पानुपपत्तेरिति**। सञ्जिहीर्षादिकं नित्यं चेत् नित्यं संहारातिप्रसङ्गः। अनित्यं चेत्तत्संहारस्यापि सञ्जिहीर्षाधीनत्वेनात्माश्रयाद्यापातात्। सञ्जिहीर्षानधीनत्वेऽन्यसंहारस्यापि तदधीनत्वाभावापाताद्व्यभिचारादिति दूषणप्रसङ्गेनेति भावः ॥ **विषयभूतेनेति**। इच्छां प्रति विषयभूतेन संहारादिनेच्छायां सञ्जिहीर्षत्वादिरूपो विशेष उपधीयते। इच्छाविषयत्वं चागामिन्यपि संहारे संभवतीति नान्योन्याश्रय इति भावः। इच्छायाः संहारादिविषयता संहारादिविषयकतेत्यर्थः। परममहदिति भिन्नं पदम्। एकपदत्वे वा 'आन्महतस्समानधिकरणजातीययोरि'ति आत्त्वस्य स्थान्यादेशोक्तिव्यत्ययेन समानाधिकरणजातीययोः इति द्वन्द्वेऽल्पाच्तरस्य परनिपातेन च ज्ञापनादनित्यत्वमिति ध्येयम्।

या०— **क्रिया व्यक्ताऽथ न वेति**। तत्तत्कार्यजननशक्तिरेव क्रियेत्युक्तत्वादत्र क्रियाशब्दः शक्तिपरः ॥ **कथं सृष्टीति**। तत्तत्कार्यजननशक्तेः ज्ञानादिवदेकत्वात्तस्याव्यक्तौ तत्साध्यानि सर्वाणि कार्याणि युगपदेव स्युरित्यर्थः ॥ **अवान्तरानन्तेति** ॥ अनेन शक्तिरूपक्रियाया एकत्वे भगवत्क्रियाणामानन्त्यवचनविरोध इत्याशङ्काऽपि निरस्ता ज्ञातव्या। व्यक्तीनामानन्त्येन क्रियानन्त्यवचनानां व्यक्तक्रियाविषयत्वसंभवात् ॥ **तदिदमुक्तमिति**। अनेन यो व्यवहारहेतुर्व्यक्तिरूपो विशेषः स सविशेषोऽपि भवति। अवान्तरानन्तविशेषैः सहितोऽपि भवति, अतो न कार्यसाङ्कर्यप्रसङ्ग इति मूलयोजना सूचितेति ज्ञातव्यम् ॥ **व्यापारस्येति**। प्रवृत्तेरित्यर्थः ॥ **नित्यानित्येति**। सञ्जिहीर्षादेरनित्यत्वे सञ्जिहीर्षादिसंहारादावपि सञ्जिहीर्षाद्यन्तरं कारणं वाच्यम्। अन्यथा तत्रैव व्यभिचारेण तस्य संहाराद्यकारणत्वप्रसङ्गात्। सा चान्या चेदनवस्था, सैव चेदात्माश्रयः। ईश्वरशरीराद्यभावेन तज्जननासंभवाच्च।

नित्यत्वे सर्वदा संहारादिप्रसङ्ग इति दूषणप्रसङ्गेन विकल्पानुपपत्तेः ॥ **किन्तु विषयभूतेनेति** । विषयत्वमनागतस्यापि संभवतीति नान्योन्याश्रय इति भावः ।

श्री० — **क्रियेति** । शक्तिरित्यर्थः । व्यक्तिरेकैवेति हृदयम् ॥ **तत्रेति** । संहारकाल इत्यर्थः । **व्यवहारः** संहारव्यवहारः । **अर्थक्रिया** संहरणरूपा ॥ **कथमिति** । क्रियानिष्ठायाः सामान्यतः कालसम्बन्धरूपायाः व्यक्तेरेकत्वेन तस्याश्च जातत्वात्सृष्टिव्यवहारः सृष्टिरूपक्रिया वा स्यादित्यर्थः । **व्यक्तेः** क्रियानिष्ठव्यक्तेः । तथाच व्यक्तिर्नाम सामान्यतः कालसम्बन्धरूपा न विवक्षिता येनोक्तदोषः, किन्तु तत्तत्कालविशेषसबन्धरूपैवातो नोक्तदोष इत्याशयः । **प्रसङ्गः** सदा संहारव्यवहारसंहरणरूपार्थक्रिययोः प्रसङ्गः । सञ्जिहीर्षादिकमित्यत्रादिपदेन सिसृक्षा ग्राह्या । **तदेव** नित्येच्छादिकमेव । अभ्युपगमे त्वाह **तत एवेति** । नित्येच्छादिव्यतिरिक्तसञ्जिहीर्षादित एवेत्यर्थः ॥ **सतीति** । तल्लक्षणविशेषणविशिष्टत्वलाभादित्यर्थः । **उपाधीयते** । उपसंहितं विशिष्टं भवतीति यावत् ॥ **किंस्विति** । तथाचानागतस्यापि विषयत्वसम्भवेन स्वरूपसत्त्वस्यानपेक्षितत्वात् । संहाराभावेऽपि भाविना संहारेणेच्छादिकमुपधीयते । ततश्च सञ्जिहीर्षात्वं संभवतीत्येवाङ्गीकारेण सति संहारादौ सञ्जिहीर्षादिकमित्यस्यानङ्गीकारान्नान्योन्याश्रय इति भावः । **संहारादिविषयकता** इच्छादेर्भाविसंहारादिविषयकता ॥ **सर्वदेति** । इच्छादौ भाविसंहारादिविषयकत्वस्य नित्यत्वेन संजिहीर्षायाः सदा सत्त्वादित्यर्थः । **अनुसरणीया** संजिहीर्षादाविति शेषः ।

च० — **क्रिया व्यक्ता न वेति** । क्रियाशब्दोऽत्र शक्तिवचनः । **एवमङ्गीकार इति** । उक्तदिशा शक्तिव्यक्त्युपगमेनासमाहितावित्यर्थः । अथ परमेश्वरे नित्यक्रियामुपगच्छतां मते क्रियायाः शक्तिव्यक्तिरूपत्वं व्यक्तिरूपेण व्यवहारौपयिकत्वं व्यक्तेरप्यवान्तरानन्तविशेषपरत्वं च कल्पनीयमित्यनेककल्पनानियन्त्रितगौरवापत्त्या तत्र तदनुपगतिरेव श्रेयसीत्याशङ्कां क्रियानुपगमेन ज्ञानेच्छाप्रयत्नलक्षणा एव सर्जनादिव्यापारा इत्युररीकुर्वतो मतेऽपि तादृशव्यापाराणां तुल्यदिशा दर्शितानेककल्पनानिबन्धनतत्प्रसञ्जनेन यत्रोभयोरिति न्यायेनापनिनीषुस्तन्मतेऽपि तेषां तत्कल्पनामूरीकारयति **एवमिति** । क्रियायां शक्तिव्यक्त्यनभ्युपगम इत्यर्थः ॥ **समानः प्रसङ्ग इति** । तादृशक्रियोपगन्तृमत इव तदनुपगन्तृमतेऽपि सृष्टिकालत्वावच्छिन्नधर्मिकसंहरणाभिन्नव्यापारवत्त्वापादकिका(?) संहरणवत्त्वापादिका यद्यदभिन्नवत् तत् तद्वदिति गृहीतसामान्यमुखव्याप्तिकापत्तिर्दुर्वारेत्यर्थः । **सहकारिसद्भाव एवेति** । तथा च तदानीं संहरणरूपफलानुत्पादो नेच्छाविरहनिबन्धनः किन्तु सहकारिवैधुर्यनियन्त्रित एवेति भावः । **नित्यत्वादिति** । तद्विरहोऽपि दुरुपपाद इति हृदयम् । सहकारिणामनित्यत्वोपगमेऽपि तेषां तदिच्छैकनिघ्नत्वेन तन्नियन्तृभूतेच्छासमवधाने तादृशसहकारिसमवधानस्याप्यावश्यो(?)तव्यत्वादिति भावः ॥ **नेच्छेति** । संहारादी-

त्यादिपदं सर्जनपालनपरिग्राहकं संजिहीर्षादीत्यादिपदं सिसृक्षादिसंग्राहकम् । तथा च सर्जनसंहरणदशयोरिच्छामात्रसद्भावेऽपि सर्जनदशायां संजिहीर्षायाः संहरणदशायां च सिसृक्षायाः विरहेण सर्जनसंहरणयौगपद्यप्रसङ्ग इति भावः । **नित्यानित्येति** । तस्याः नित्यत्वे सर्वदा संहरणापत्त्या अनित्यत्वे च तत्प्रतियोगिकध्वंसे तादृशव्यक्त्यन्तरस्य हेतुत्वाकल्पनेऽपि नाशत्वरूपजन्यतावच्छेदकाक्रान्ततादृशव्यक्तिप्रतियोगिकध्वंसे हेतुतावच्छेदकाभिमतसंजिहीर्षात्वावच्छिन्नासमवधाननियन्त्रितव्यतिरेकव्यभिचारेण तद्धर्मावच्छेदेन तद्धर्मावच्छिन्नस्य(?)हेतुत्वापत्त्या तादृशध्वंसे तादृशव्यक्त्यन्तरहेतुत्वकल्पने च तादृशव्यक्त्याऽऽनन्त्येनावस्थापत्त्या तादृशव्यक्त्यैक्ये आत्माश्रयप्रसङ्गेन निःशरीरेश्वरातदुत्पादासंभवेनोक्तवितर्कद्वयानुपपत्तेरित्यर्थः । **परस्पराश्रयेति** । विषयितासत्त्यासत्त्या समुपसृष्टहरत्युपस्थाप्यविशेषितसन्प्रत्ययप्रत्याय्यमानेच्छासत्त्वस्य प्रकृत्यर्थसमवधानाधीनतया तादृशार्थस्य च प्रकृत्यर्थविशेषितसन्नन्तार्थसमवहितिनिबन्धनतयाऽन्योन्याश्रय इत्यर्थः । **किन्तु विषयभूतेनेति** । तादृशप्रत्यासत्त्या प्रकृत्यर्थविशेषितसन्प्रत्ययार्थो न समुपसृष्टहरतिप्रकृतिकसन्नन्तार्थः किन्तु तादृशप्रकृत्यर्थनिरूपितविषयिताविशेषिततादृशप्रत्ययार्थ एव । स च विषयस्यातीतत्वे आगामि(?)त्येव तन्निरूपितविषयिताविशेषितो(?)क्षत एवेति न क्षतिरिति भावः ॥ **संहारादिविषयतेति** । बहुव्रीहिप्रकृतिकस्तल् संहारादिनिरूपितेच्छादिनिष्ठविषयितेत्यर्थः । **गुणेष्विति** । जन्यभावानां द्रव्यादित्रितयान्यतमरूपतानैयत्येन तादृशान्यतमस्य च द्रव्यान्यस्मिन् दुरुत्पादतोपगतेरिति भावः ।

**सु०— ननु पारमेश्वरी ज्ञानादिलक्षणा संहारादिक्रिया परेणापि नित्येत्यङ्गीकृतम् । परिस्पन्दलक्षणा तु नास्त्येव । तस्माद्व्यर्थोऽयं प्रयत्नः । मैवम् । परिस्पन्दाभावे प्रमाणाभावात् । परममहत्परिमाणमस्तीति चेत्, न; अणु मध्यमपरिमाणाभ्यां सत्प्रतिपक्षत्वात् । न च, ते न स्तः । परममहत्त्वेऽपि तथा वक्तुं शक्यत्वात् । 'अणोरणीयान्महतो महीयान्' इति द्वयोरपि श्रौतत्वात् । अणोरणीयस्त्वमप्रत्यक्षत्वोपलक्षणमिति चेत् । महतो महत्त्वमपि परमपूज्यत्वमिति किं न स्यात् । विरोधादुभयाङ्गीकारो नोचित इति चेत् तर्हि प्रथमप्राप्तत्वादणुत्वमेव ग्राह्यम् । परिहरिष्यते चायं विरोध इति ।**

शे०— शिष्यो भाष्यकारीयव्युत्पादनस्यानर्थक्यमाशङ्कते **नन्विति** ॥ **अङ्गीकृत इति** । तथा च तन्नित्यत्वव्युत्पादनमनर्थकमिति भावः ॥ **नास्त्येवेति** । तथा च तन्नित्यत्वं दूरापास्तमिति भावः ॥ **परिस्पन्दाभाव इति** । तथा च परिस्पन्दाभावासिद्धेर्युक्तं तस्य नित्यत्वव्युत्पादनमिति भावः । ननु चेश्वरः परिस्पन्दरहितः परममहत्परिमाणवत्त्वात् गगनवदित्यनुमानमानस्यैव परिस्पन्दाभावे

प्रमाणत्वाकथं प्रमाणाभाव इत्याशङ्कते **परमेति** । ईश्वरः परिस्पन्दवान् अणुत्वात्परमाणुवत् मध्यमपरिमाणत्वात् घटवदिति सत्प्रतिपक्षत्वान्न तस्य परिस्पन्दाभावसाधकतेत्याह **अणुमध्यमपरिमाणाभ्यामिति** । अणुत्वमध्यमपरिमाणत्वयोरीश्वरेऽसत्त्वेन स्वरूपासिद्धतयाऽसमानबलत्वान्न सत्प्रतिपक्षत्वमित्याशङ्कते **न चेति** ॥ **शक्यत्वादिति** । तथा च परममहत्परिमाणत्वस्यापीश्वरेऽसत्त्वेन पूर्वानुमानस्यापि स्वरूपासिद्धत्वात्तुल्यबलत्वमेवेत्याशयः । ननु महतो महीयानित्यागमेनेश्वरस्य परममहत्परिमाणत्वसिद्धेः कथमसिद्धिरित्यतस्तर्ह्यणोरणीयानित्यनेनेश्वरस्याणुत्वस्यापि सिद्धेर्न प्रतिपक्षानुमानेऽप्यसिद्धिरित्याह **अणोरणीयानिति** ॥ **अप्रत्यक्षत्वोपलक्षणमिति** । तथा च नानेनाणुत्वसिद्धिरिति भावः ॥ **किं न स्यादिति** । तथा च न तेनापि महत्त्वसिद्धिः स्यादिति भावः । अङ्गीकृत्य विरोधं समाधानमाह **तर्हीति** । महत्त्वमेवेति वैपरीत्यशङ्कां निरस्यति **प्रथमेति** । परित्यागे च कारणाभावादिति भावः । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्त्वणुत्वमहत्त्वयोर्विरोध एव नास्तीत्याह **परिहरिष्यते चेति** । अन्यभावव्यावृत्तेश्च इत्येतत्सूत्रीयविरुद्धैर्लक्षणैर्युतम् । 'ब्रह्मैव तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि । अविरोधेन गोविन्दे सन्त्यस्थूलादिकानि च' इत्येतदनुव्याख्यानव्याख्यानावसर इति शेषः ।

स०— **परमेति** । ईश्वरः परिस्पन्दविधुरः विभुत्वात् आकाशवदित्यर्थः ॥ **अण्विति** । ईश्वरः परिस्पन्दवान् अणुत्वात् परमाणुवत् । मध्यमपरिमाणत्वात् घटवदित्यर्थः । हेतोरसिद्धिम् आशङ्क्याह **न चेति** । **परिहरिष्यते चायमिति** ॥ 'अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः । योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् । ब्रह्मैव तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि । अविरोधेन गोविन्दे सन्त्यस्थूलादिकानि च'इत्यत्रेति शेषः । अन्ये तु 'अणीयांश्च महीयांश्च भगवानागमोदित' इत्यादिनेति शेष आहुः ।

प०— **अस्तीति** । प्रमाणमित्यनुषङ्गः ॥ **सत्प्रतिपक्षत्वादिति** । ईश्वरः परिस्पन्दहीनः परममहत्परिमाणवत्त्वादित्युक्ते, ईश्वरः परिस्पन्दवान् अणुपरिमाणवत्त्वात् मध्यमपरिमाणवत्त्वादिति वक्तुं शक्यत्वादिति भावः । **द्वयोरपीति** । अणुत्वमहत्त्वयोरपीत्यर्थः ॥ **परिहरिष्यते चेति** । अक्षराधिकरणे वैशेषिकाधिकरणे चेति भावः ।

या०— **परिहरिष्यते चेति** । 'अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः । योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युक्तम् । ब्रह्मैव तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि । अविरोधेन गोविन्दे सन्त्यस्थूलादिकानि च' इत्यत्रेति शेषः ।

श्री०— **ज्ञानादिलक्षणेति** । संहारादिविषयकज्ञानादिरूपा धात्वर्थक्रियाया नित्यत्वाङ्गीकारेऽपि परिस्पन्दलक्षणायाः क्रियाया नियत्वं साध्यत इत्यत आह **परिस्पन्देति** ॥ **नास्त्येवेति** ।

परममहत्परिमाणवद्द्रव्ये परिस्पन्दाभावादिति भावः ॥ **अण्विति** । ईश्वरः क्रियावान् अणुमध्यमपरिमाणवत्त्वात्परमाण्वादिवदीति सत्प्रतिपक्षत्वमित्यर्थः । स्वरूपासिद्धिमाशङ्क्य परिहरति **न च ते इति** । अणुमध्यमपरिमाणे इत्यर्थः । त्वदनुमानेऽपि स्वरूपासिद्धिरित्याह **परमेति** ॥ **तथेति** । नास्तीत्यर्थः । ननु न मम स्वरूपासिद्धिः । परममहत्त्वस्य महतो महीयानिति सिद्धत्वादिति चेत्तर्हि ममापि न स्वरूपासिद्धिः । अणोरणीयानित्यणुपरिमाणस्य श्रौतत्वादित्याशयेनाह **अणोरिति** । द्वयोरणुमहत्परिमाणयोः ॥ **उपलक्षणमिति** । अणुपरिमाणं न विवक्षितमिति न भवदीयहेतुसाधकत्वं तच्छ्रुतेरिति भावः । तर्हि तवापि तुल्यमित्याह **महत इति** । मह पूजायामिति धातोर्महत्त्वस्य पूज्यत्वार्थकत्वात् । त्वत्पक्षे चाणुत्वमप्रत्यक्षत्वोपलक्षकमित्यस्मिन्पक्षे विशेषोऽस्तीति भावः । **उभयाङ्गीकारः** उभयपरिमाणाङ्गीकारः । तथाच महत्परिमाणं स्वीकृत्याणुत्वमप्रत्यक्षत्वोपलक्षणमिति वक्तव्यमिति भावः । तर्हि वैपरीत्यमेवास्त्वित्याह **तर्हीति** । असञ्जातविरोधित्वेन प्रबलं । अणोरणीयानित्युपक्रमवाक्ये प्रथममेव प्रतीतत्वादित्यर्थः । **ग्राह्यम्** न चरमप्रतीतं सावकाशं महत्त्वमित्याशयः । अङ्गीकृत्येदमुक्तम् । वस्तुतस्त्वमाह **परिहरिष्यते चेति** ।

**च०** — ननु सिषाधयिषितनित्यत्वविशेषितक्रियायां(:) ज्ञानेच्छादिरूपत्वे सिद्धसाधनतापत्त्या परिस्पन्दरूपत्वे च ह्रदः काञ्चनमयवह्निमानित्यादौ ह्रदे वह्नेः तत्र च काञ्चनमयत्वस्य गगनकुसुमायमानतया

तत्र तस्य बाधादिना दुःसाधतेव, प्रकृतेऽपीश्वरे परिस्पन्दस्य तत्र च नित्यत्वस्य तादृशतया बाधाद्यापत्त्या दुःसाधतेत्याशङ्कते **नन्विति** । द्वितीयकल्पमुपेत्य तत्रोक्तक्षतिमपनिनीषुः समाधत्ते **मैवमिति** ॥ **प्रमाणाभावादिति** । तथा च प्रकृतपक्षधर्मिकपरिस्पन्दाभावोपरक्तप्रमितिवैधुर्यान्नोक्तक्षत्यवकाश इति भावः । गगनं निदर्शनीकृत्य परममहत्परिमाणेन हेतुना परिस्पन्दराहित्यमीश्वरेऽनुमिमानं प्रति परमाणुं घटं च निदर्शनीकृत्याणुत्वेन मध्यमपरिमाणवत्वेन च परिस्पन्दस्य तत्र सुसाधतया सत्प्रतिपक्षतामभिधत्ते **अण्वित्यादि** । प्रतिरोधानुमानेऽसिद्धिशङ्कायां स्थापनायामपि तत्प्रसरात्, तत्रत्यसमाहितेरत्रापि सुवचत्वादित्याह **न चेत्यादिना श्रौतत्वादित्यन्तेन** । अणीयःपदस्यार्थान्तरलक्षकतया नाणुपरिमाणप्रत्यायकतेत्युक्तेतुल्यदिशा महीयःपदस्यापि तादृशतया न परममहत्परिमाणप्रत्यायकतेत्युक्तिदेश्य(?)त्वादित्याह **स्यादित्यन्तेन** । विरोधमुपेत्य वैपरीत्यशङ्कानुत्पादबीजमभिदधानः समाधत्ते **तर्हीति** ॥ **ग्राह्यमिति** । परित्यजनबीजाभावादिति भावः । वस्तुतस्तु यो(?) विरोध एव नास्तीत्याह **परिहरिष्यते चेति** । 'अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः । योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् । अत्रैव तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि । अविरोधेन गोविंदे सन्त्यस्थूलादिकानि च'इत्यानुपूर्वीकायाः अन्यभावव्यावृत्तेश्चेति योगतात्पर्यं विवृण्वानानुव्याख्यायाः व्याख्यावसर इत्यादिः ।

सु०—ननु (च) क्रियायाः शक्तिव्यक्तिरूपे परस्परं भिन्नेऽभिन्ने वा। आद्ये शक्तिरेव नित्या क्रियात्वनित्येत्यापन्नम्। द्वितीये त्वनिवृत्तः सदा व्यवहारादिप्रसङ्ग इत्यत आह शक्तितेति।

अनु०— शक्तिता व्यक्तिता चेति विशेषोऽपि

अभिन्ने एव शक्तिव्यक्ती। न चोक्तदोषः। यतस्तत्र शक्तितेति व्यक्तितेति च विशेषोऽप्यस्ति। स च भेदकार्यनिर्वाहक इति च प्रागेवोक्तमिति।

स च विशेषः परस्परं विशेषिणा च यदि भिन्नः, तदा शक्तिव्यक्त्योरपि किं भेदो न स्यात्। अथाभिन्नः पुनर्व्यवहारादिसाङ्कर्यमित्यत आह विशेषवानिति।

विशेषवान् ॥

अभिन्नोऽपि

विशेष इत्यनुवर्तते। अभिन्न एवायं विशेष इति भ्रमः। न चोक्तानुपपत्तिः। यतोऽभिन्नोऽपि विशेषवानङ्गीक्रियते। स्वनिर्वाहक इत्यर्थः।

नन्वेवमन्यत्रापि क्रियाया नित्यत्वमङ्गीकर्तव्यम्। शक्तिव्यक्तिस्वीकारेण सकलदोषपरिहारादिति चेत्। अङ्गीक्रियतां यदि तन्नित्यतायां प्रमाणमस्ति। सति निर्बाधे प्रमाणे, तद्विपरीतव्यवहारेषु च तदन्यथाऽनुपपत्त्या कल्पनैषा भवति। न च घटादिक्रियाया नित्यत्वे निर्बाधं प्रमाणमस्ति। अस्ति तु परमेश्वरादिक्रियाया नित्यत्वे तदित्याह क्रियादिश्चेति।

क्रियादिश्च स्वभाव इति हि श्रुतिः ॥

एतेन तृतीयोऽपि निर(परा)स्तः। 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतिमनेनोपलक्षयति। स्वाभाविकी=यावद्द्रव्यभाविनी।

अत्र स्पष्टां च श्रुतिमाह ज्ञानमिति।

ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः ॥

नित्यानन्दोऽव्ययः पूर्णो भगवान्विष्णुरच्युतः ॥'

इति पैङ्गिश्रुतिश्चाह

अथवा पूर्वा श्रुतिः शक्तिरेव क्रियेत्यत्र पठिता उत्तरा तु क्रियाया नित्यत्वे। यद्वा, पूर्वा स्वरूपत्वे। तस्य विवादास्पदत्वात्(त्वे)। द्वितीया तु तद्धेतौ नित्यत्व इति।

अस्त्वेवमीश्वरक्रिया नित्या। अन्यक्रिया किमनित्यैवेत्यतो विवेकं प्रमाणान्तरेण दर्शयति शक्तीति।

शक्तिसद्भाव एव तु ॥
क्रियादिनित्यता ज्ञेया तदन्यत्र त्वनित्यता ॥
इति सत्तत्त्ववचनम् ॥ २ ॥

**सद्भावे=नित्यत्वे । आदिपदेन ज्ञानादिग्रहणम् । अथवा नित्यतेति स्थायित्वमुच्यते । ततश्च ज्ञानक्रियादिशक्तिः यावत्कालभाविनी तावत्कालभावि ज्ञानादिकमपीत्युक्तं भवति ।**

**शे०**— **किया त्विति** । व्यक्तिस्तु इत्यर्थः । क्रियाशक्त्यात्मनेति व्यक्तिशक्तिरूपेणेति पूर्वं क्रियाशब्दस्य व्यक्तिपरतया व्याख्यातत्वादिति द्रष्टव्यम् ॥ **सदेति** । सृष्टिसमयेऽपीत्यर्थः ॥ **व्यवहारादीति** । संहारक्रियेति श्रौतव्यवहारप्रसङ्गः । युगपज्जननविनाशस्य आदिपदेन संग्रहः ॥ **न चोक्तेति** । सदा व्यवहारप्रसङ्गरूप इत्यर्थः । अत्र यद्यपि शक्तितान्यक्तितयोर्विशेषत्वमुच्यते । तथाऽपि तयोरेव विशेषत्वं न प्रतिपत्तव्यम् । किन्तु शक्तित्वव्यक्तित्वाभिन्नं क्रियायां शक्तित्वव्यक्तित्वरूपार्थद्वयव्यवस्थापकं अर्थान्तरमेव विशेषतया द्रष्टव्यम् ॥ **प्रागेवेति** । जन्माधिकरणादावेवेत्यर्थः । क्रियायाः शक्तिव्यक्तिरूपत्वाश्रयणेन सर्वप्रयोजनसिद्धेर्भगवत्क्रियानित्यत्वप्रतिपादकप्रमाणोपन्यासपरोत्तरवाक्यवैयर्थ्यमित्यत आह **नन्विति** ॥ **अन्यत्रापीति** । घटादावपीत्यर्थः । तथा च क्रियाया द्वैरूप्याश्रयणमनर्थकमिति भावः ॥ **तन्नित्यतायामिति** । घटादिक्रियाणां नित्यत्वे प्रमाणाभावाद्भेदेनैवोपपत्तेर्न तत्प्रतिनिधिविशेषाश्रयणं तत्र युक्तमित्यर्थः ॥ **तृतीयोऽपीति** । नित्यत्वे साधकप्रमाणाभावादिति तृतीयोऽपीत्यर्थः । 'क्रियादिश्च स्वभाव' इति श्रुतिस्वरूपसङ्कीर्तनमिति भ्रान्तिं निवारयति **पराऽस्येति** । स्वाभाविकीत्येतत्स्वभावनिर्वृत्तेत्यन्यथाप्रतीतिनिरासाय व्याचष्टे **यावद्द्रव्येति** ॥ **अत्रेति** । परमेश्वरक्रियाया नित्यत्व इत्यर्थः ॥ **स्पष्टमिति** । अतो नैतच्छ्रुत्युदाहरणवैयर्थ्यमिति भावः । पूर्वत्र नित्यत्वस्याश्रुतत्वादस्पष्टत्वमिति ज्ञेयम् तर्हि स्पष्टत्वादेतत्-श्रुत्यैव विवक्षितार्थसिद्धेः पूर्वश्रुत्यानर्थक्यमित्यतः प्रकारान्तरेण वाक्यद्वयसार्थक्यमाह **अथवेति** । क्रियायाः स्वरूपत्वे प्रमाणोपन्यासोऽनर्थक इत्यत आह **तस्येति** । क्रियायाः स्वरूपत्वस्यैव मुख्यतो विप्रतिपत्तिविषयत्वादित्यर्थः । तर्हि पूर्वश्रुत्यैव विप्रतिपन्नप्रमेयसिद्धेः नित्यत्वप्रतिपादकश्रुत्युपन्यासवैयर्थ्यमित्यत आह **द्वितीया त्विति** । क्रियाया नित्यत्वातिरेकेण नित्यभगवत्स्वरूपत्वानुपपत्तेः, स्वरूपत्वोपपादकनित्यत्वसिद्धये द्वितीयश्रुत्युपन्यास इत्यर्थः । नित्यतेत्युत्तरपदानुरोधेन सद्भावपदं नित्यत्वपरत्वेन व्याख्याय, सद्भाव इति पूर्वानुरोधेन नित्यतेत्येतत्स्थायित्वपरत्वेन व्याचष्टे **अथवेति** ।

**स०**— क्रिया त्वनित्येत्यापन्नमिति भावः । शक्तित्वं व्यक्तित्वमित्यर्थोपपादकं विशेषद्वयं क्रियायाम् अस्तीत्यर्थः ॥ **यदि तन्नित्यतायामिति** ॥ घटादिक्रियाणां नित्यत्वे प्रमाणाभावात्

भेदेनैवोपपत्तेर्न तत्प्रतिनिधिविशेषाश्रयणमित्यर्थः । **द्वितीया तु तद्धेताविति** । क्रियायाऽनित्यत्वात् नित्यभगवत्स्वरूपत्वमनुपपन्नमिति विवादस्य सत्त्वे? क्रियाया अपि नित्यत्वात् तदुपपद्यत एवेति । क्रियानित्यत्वस्य भगवत्स्वरूपत्वे हेतुत्व इत्यर्थः ।

**प०— यतस्तत्रेति** । अभिन्नयोरपि शक्तिव्यक्त्योरित्यर्थः । चशब्दं भिन्नक्रमतया योजयति **शक्तितेति व्यक्तितेति च विशेषोप्यस्तीति** ॥ **प्रागेवेति** । स्वनिर्वाहकतेत्यादिना जन्माधिकरणे । तर्ह्यनवस्थेत्यतो विशेषवानित्यस्य फलितार्थमाह **स्वनिर्वाहक इत्यर्थ इति** ॥ **तृतीयोऽपीति** । ईश्वरक्रियाणामनित्यत्वं किं प्रमाणबलादङ्गीक्रियते, नित्यत्वे बाधकसद्भावात्, साधकाभावाद्वेति प्राग्विकल्पितपक्षत्रये प्रथमः पक्षो बहिरेव निरस्तः । द्वितीयः शक्त्यात्मनेति मूलेन । अन्त्यस्तु क्रियादिश्चेत्यादिमूले प्रमाणकथनेन निरस्त इत्यर्थः । नित्यत्वे साधकाभावादिति चोद्यनिरासाय नित्यत्व एव श्रुतिर्वाच्या । न तु स्वरूपत्व इत्यत आह **तस्य विवादास्पदत्वादिति** । तद्धेतौ स्वरूपत्वहेतुभूते नित्यत्व इत्यर्थः । नित्यतेतिपदानुरोधादाह **सद्भावे नित्यत्व इति** । सद्भावशब्दस्य सत्त्वमेवार्थ इत्युपेत्य नित्यतेत्यस्यैवार्थान्तरमाह **अथवेति** ॥ **ज्ञानक्रियादिशक्तिर्यावत्कालभाविनीति** । नित्या चेत्तज्ज्ञानादिकमपि नित्यम्, अनित्या चेत् शक्तिर्ज्ञानादिकमप्यनित्यमिति भगवतोऽन्यत्र नित्यानित्यभेदेन क्रियादिकं द्विरूपमपीत्युक्तं भवति ।

---

**या०— क्रिया त्विति** । व्यक्तिस्त्वित्यर्थः । पूर्वं क्रियाशब्दस्य व्यक्तिपरतया व्याख्यातत्वात् ॥ **यतस्तत्रेति** । शक्तित्वं व्यक्तित्वमित्यर्थद्वयोपपादकं विशेषद्वयं क्रियायां यतोऽस्तीत्यर्थः । स्वाभाविकीत्येतत् स्वभावे च निवृत्तेत्यन्यथाप्रतीतिवारणाय व्याचष्टे **यावद्द्रव्येति** । तथा च स्वार्थे प्रत्यय इति भावः ॥ **तस्य विवादास्पदत्व इति** । क्रियायाः स्वरूपत्वस्यैव मुख्यता, विप्रतिपत्तिविषयत्वात् इत्यर्थः ॥ **तद्धेताविति** । क्रियाया अनित्यत्वान्नित्यभगवत्स्वरूपत्वमनुपपन्नमिति विवादास्पदत्वे, क्रियाया अपि नित्यत्वात्तदुपपद्यत एवेति भगवत्स्वरूपत्वसाधकहेतौ क्रियानित्यत्व इत्यर्थः । नित्यतेत्युत्तरपदानुरोधेन पूर्वं सद्भावपदमपि नित्यत्वपरमिति व्याख्यातम् । इदानीं पूर्वसद्भावपदानुरोधेन उत्तरनित्यतापदमेव स्थायित्वपरमित्याह **अथवेति** । अनेन क्रियाज्ञानयोर्द्वित्रिक्षणमात्रावस्थायित्वं नास्माकं सम्मतमिति ज्ञातव्यम् ।

**श्री०— क्रिया त्विति** । क्रियाशक्त्यात्मनेत्यत्र क्रियापदस्य व्यक्त्यर्थकत्वेन व्याख्यातत्वादत्र क्रियापदेन व्यक्तिर्ग्राह्या ॥ **अनित्येति** । शक्तेः सार्वकालिकत्वाद्व्यक्तेश्च कादाचित्कत्वादिति भावः ॥ **अनिवृत्त इति** । अतिप्रसङ्गपरिहारायाङ्गीकृताया अपि व्यक्तेः शक्त्यभिन्नत्वेन सर्वदा सत्त्वादित्याशयः । **तत्र शक्तिव्यक्त्योः** ॥ **शक्तितेति व्यक्तितेति विशेष इति** । क्रिया-

निष्ठशक्तिव्यक्त्योरभेदेऽपि शक्तित्वव्यक्तित्वरूपभेदकार्यनिर्वाहको द्विविधो विशेषोऽस्तीति व्याख्येयम् । शक्तित्वव्यक्तित्वयोरेव विशेषत्वाभावादिति ध्येयम् । **स विशेषः** शक्तित्वव्यक्तित्वोपपादको द्विविधो विशेषः ॥ **विशेषिणा चेति** । शक्तिव्यक्तिरूपधर्मिणेत्यर्थः ॥ **किं भेद इति** । शक्तिव्यक्तिधर्मभूतयोः शक्तित्वव्यक्तित्वोपपादकयोः विशेषयोर्भेदे प्रोच्यमाने क्रियानिष्ठधर्मभूतयोरपि शक्तिव्यक्त्योर्भेदः किं न स्यात् । धर्मत्वविशेषादित्याशयः । अथाभिन्न इत्यनन्तरं तर्हीति शेषः ॥ **साङ्कर्यमिति** । शक्तेरेकस्या एव उर्वरितत्वेन सृष्टिकालेऽपि संहारादिव्यवहारसङ्ग इत्यर्थः । विशेषः शक्तित्वव्यक्तित्वोपपादकः शक्तित्वव्यक्तिनिष्ठो द्वित्वावच्छिन्न इत्यर्थः ॥ **स्वनिर्वाहक इति** । तथाच स्वनिर्वाहकत्वरूपविशेषवानिति योज्यम् । **अन्यत्रापि** घटादावित्यर्थः । **तद्विपरीतव्यवहारेषु** नित्यत्वाङ्गीकारविरोधिषु कादाचित्कसंहारादिव्यवहारेषु सत्स्वित्यर्थः । कल्पना शक्तिव्यक्त्यङ्गीकारेण परिहारकल्पना ॥ **तृतीयोऽपीति** । नित्यत्वसाधकप्रमाणाभावादिति तृतीयोऽपि पक्षः, क्रियाया नित्यत्वप्रतिपादकप्रमाणोदाहरणेनैव परास्त इत्यर्थः ॥ **शक्तिरेवेति** । तथाच 'ज्ञानबलक्रियारूपा शक्तिः स्वाभाविकी'ति श्रुतिर्योज्या ॥ **तस्येति** । अत्र यद्यल्लक्षणत्वेनोच्यते, तत्सर्वं भगवत्स्वरूपमेवेति सृष्ट्यादिक्रियाया अपि भगवल्लक्षणत्वेनोक्तत्वात् तस्याश्चानित्यत्वेन भगवत्स्वरूपत्वं विवादास्पदमित्यर्थः ॥ **तद्भुताविति** । भगवत्स्वरूपत्वोपपादकक्रियाया नित्यत्व इत्यर्थः ॥ **अन्यक्रियेति** । अन्येषां जीवानां क्रियेत्यर्थः । **दर्शयति** प्रसङ्गादिति शेषः । जीवस्वरूपभूतक्रियाभिप्रायेण पूर्वयोजना । देहादिविशिष्टजीवनिष्ठक्रियाभिप्रायेण सद्भावपदस्वारस्याय योजनान्तरमाह **अथ वेति** । पुरुषस्य यावत्पर्यन्तं ज्ञानक्रियाजनकत्वशक्तिरस्ति तावत्पर्यन्तं ज्ञानादिकमस्त्येव । अस्मिन्पक्षे परोक्तं त्रिक्षणावस्थायित्वं ज्ञानादीनां यत्, तदस्माकमसम्मतमिति ज्ञातव्यम् ॥

च० — **क्रिया त्विति** । व्यक्तिस्त्वित्यर्थः । क्रियाशक्त्यात्मनेति प्रतीकगतक्रियापदस्य व्यक्तिरूपेणेतिव्याख्यातत्वया अत्रत्यतत्पदस्यापि व्यक्तिपरतोपपद्यत इत्येवसेयम् । **सदेति** । सर्जनदशायामपीत्यर्थः । **व्यवहारादिति** । जगत्सर्जनविनाशयोर्यौगपद्येन श्रौतव्यवहारप्रसङ्ग इत्यर्थः । अत्र कतिपये व्याचक्षाणाः (शे॰चं॰) 'अत्र यद्यपि शक्तिताव्यक्तितयोर्विशेषत्वमुच्यत इति आशङ्कमानाः तथापि न तयोरेव विशेषत्वं प्रतिपत्तव्यं किं तु शक्तित्वव्यक्तित्वाभिन्नक्रियायां शक्तित्वव्यक्तित्वरूपार्थद्वयव्यवस्थापकमर्थान्तरमेव विशेषतया द्रष्टव्यमि'ति तत्तात्पर्यं विभावयन्तः समादधति **प्रागेवेति** । जन्मादिनय एवेत्यर्थः । क्रियायाः शक्तिव्यक्तिरूपत्वोपगत्यैव सर्वसामञ्जस्यात्करिष्यमाणेशक्रियानित्यत्वप्रतिपादकप्रमाणोपन्यसनानर्थक्यशङ्कापरिजिहीर्षया, तुल्यदिशा क्रियान्तरनित्यत्वमवैशेष्येणा-

शङ्कते **नन्वेवमिति** । **अन्यत्रापीति** । घटादिनिरूपितवृत्तित्वविशेषितायां इत्यर्थः । तथा च क्रियात्वावच्छेदेनैव तन्नित्यत्वोपगमसंभवे तत्सामानाधिकरण्येन नित्यत्वतदभावोपगमे निर्बीज इति भावः । तन्नित्यतायां घटादिक्रिया नित्यतायां निर्बाधेति । निरादय इत्यनुशासनात् बाधापादानकनिष्क्रान्तिविशेषितेत्यर्थः । **प्रभवति** समर्था भवति, प्रकर्षेणोत्पद्यते वा । एतेन ईशक्रियानित्यत्वसाधकप्रमाणोपन्यसनेन । **तृतीयेऽपि** नित्यत्वसाधकप्रमाणाभावादिति तृतीयकल्पोऽपि । क्रियादिश्च स्वभाव इति मौलप्रतीकस्य श्रुत्यनुकरणत्वविपर्यासं निरस्यति **परास्येति** । स्वाभाविकीत्यस्य तेन निर्वृत्तमित्यधिकृत्य विहितप्रत्ययान्तत्वभ्रान्त्यपनुत्तये व्याचष्टे **यावद्रव्येति** । तथा च स्वार्थिकष्ठगिति भावः । अत्र भागवतक्रियानित्यत्वे । **स्पष्टम्** नित्यत्वावबोधकपदसमभिव्याहारविशेषितम् । पूर्वोदाहृतायां तु तादृशपदसमभिव्याहारवैधुर्यात्तस्या अस्फुटतेत्यवसेयं स्फुटैतच्छ्रुत्युदाहृत्यैव समीहितसिद्ध्या पूर्वश्रुत्युदाहृतिर्मन्दप्रयोजनेत्यतस्तादृक्श्रुतिद्वयसाफल्यं विधान्तरेणाभिधत्ते **अथवेति** । संप्रतिपन्ने क्रियाया ईशतादात्म्ये प्रमाणोपन्यसनं मन्दप्रयोजनमित्यत आह **तस्येति** । तस्यैव प्राधान्येन विप्रतिपत्तिगोचरत्वादिति भावः । तद्धेतौ क्रियाया ईशतादात्म्यहेतौ । तस्याः नित्यतामन्तरेण तादृशेशतादात्म्यानुपपत्तेरिति भावः । नित्यतेत्युत्तरपदसमभिव्याहारमनुरुन्धानः सद्भावपदं तदर्थतया व्याचख्यौ संप्रति सप्तम्यन्तोक्तपदनिर्देषमनुरुध्य तदन्तोत्तरपदं स्थायित्वतात्पर्यकतया व्याकुरुते **अथ वेति** । अनेन 'चेतने शक्तिरूपेणादेर्भाव इष्यति । सुप्तोयं बलवान् विद्वान् इत्यादिव्यवहारतः' इत्यादिगीतातात्पर्योदाहृतप्रमाणानुरोधेन संसारिज्ञानक्रियादीनां शक्तिरूपस्वकारणात्मना चिरकारणावस्थायित्वमेव न न्यायनयदिशा कतिपयक्षणमात्रावस्थायित्वमिति ध्वन्यते ।

सु० — **स्वरूपसहकारिसमवधानातिरिक्ता शक्तिरेव नास्तीति केचित् । तेषामुदाहृतश्रुत्यादिविरोधः । न च तत्स्वरूपमात्रम् । संबन्धितया प्रतीतेः । नापि सहकारिपरम् । स्वाभाविकत्वादिश्रवणात् ॥ किं चास्ति तावदित्थं व्यवहारः । स्फोटादिकार्यं प्रति शक्तिमानपि दहनो देहसंयोगादिसहकारिविरहात् न तदजीजनदिति । तत्र न तावच्छक्तिशब्देन वह्निस्वरूपमात्रमुच्यते । मतुपो वैयर्थ्यप्रसङ्गात् । नापि सहकारिसमवधानं तदभावस्योक्तत्वात् । दहनत्वसामान्यमेव शक्तिरिति चेत् । कथं तर्हि स्वरूपसहकारिसमवधानातिरिक्ता नास्ति । सामान्यमपि सहकारिवर्गान्तर्गतमिति चेत् । तत्किं प्रत्यक्षमप्रत्यक्षं वा । आद्ये दहनदर्शने स्फोटजननशक्तिजिज्ञासा न स्यात् । न द्वितीयः । अपसिद्धान्तापातात् । तथाभ्युपगमे वा सैव शक्तिरस्माकम् । किञ्च मृत्तन्त्वादिस्वरूपं प्रत्यक्षादिसिद्धम् । तस्य**

**घटादिकारणत्वं तु अन्वयव्यतिरेकसमधिगम्यम् । अन्वयव्यतिरेकग्रहणोपायश्च सामान्यम् । तच्च प्रत्यक्षादिसिद्धमिति परेणापि स्वीकृतम् । न च कारणत्वं स्वरूपं, सहकारिसमवधानं वा । स्वरूपस्यान्वयव्यतिरेकानपेक्षाधिगतत्वात् । कारणस्यैव सहकारिसमवधानान्वेषणात् । ततोऽतीन्द्रियमेव किञ्चिन्मृदादीनां घटादिकारणत्वमभ्युपगमनीयम् । तदेव शक्तिरिति शक्तिवादिभिरभ्युपेयत इत्यास्तां प्रपञ्चः ।**

**शे०** — ननु न शक्तिव्यक्तिरूपाश्रयणेन परिहारो युक्तः प्रमाणाभावेन स्वरूपसहकारिसमवधानातिरिक्तशक्तेरेवाभावादिति नैयायिकमतं दूषयितुं शङ्कामुत्थापयति **स्वरूपेति** । उदाहृतश्रुतीत्यादीत्यादिपदेनोदाहृतसत्तत्त्ववचनपरिग्रहः । उदाहृतश्रुत्यादेः स्वरूपमात्रपरत्वान्न तेन शक्तिसिद्धिरित्याशङ्कते **न चेति** ॥ **संबन्धितयेति** । अस्येति षष्ठ्येति शेषः । उपलक्षणं चैतत् । विविधेति बहुविधत्वेनोक्तेरित्यपि द्रष्टव्यम् ॥ **सहकारिपरमिति** । आगन्तुकसहकारिपरमित्यर्थः ॥ **स्वाभाविकत्वादीति** । अत्रादिपदेन परत्वसंग्रहः । आगन्तुकसहकारिणश्चोक्तस्वाभाविकत्वपरत्वयोरयोगात् नोदाहृतश्रुत्यादेस्तत्परत्वमिति भावः । **वैयर्थ्यप्रसङ्गादिति** । विरुद्धार्थत्वप्रसङ्गादित्यर्थः । शक्तिशब्दोक्तवन्हिस्वरूपवत्त्वस्य वन्हावसंभवादिति भावः ॥ **उक्तत्वादिति** । देहसंयोगादिसहकारिविरहादित्यनेनेति शेषः । गूढाभिसन्धिः शङ्कते **दहनत्वेति** । न शक्तिशब्देन वन्हिस्वरूपमुच्यते । किन्तु दहनत्वसामान्यमेव । तेन न मतुपो वैयर्थ्यमिति भावः । अविदिताशयः सिद्धान्ती परिहरति **कथं तर्हीति** । दहनत्वस्यैव शक्तित्व इत्यर्थः । दहनत्वस्यैव वन्हिस्वरूपसहकारिव्यतिरिक्तस्य शक्तित्वाङ्गीकारादिति भावः । पूर्ववादी स्वाशयमुद्घाटयति **सामान्यमपि स्वरूपान्तर्गतमिति चेदिति** । स्वरूपसहकार्यतिरिक्तशक्त्यभाववादिना 'स्वं असाधारणं प्रतिबन्धकदशाव्यावृत्तं रूपं=धर्मः' इति व्युत्पत्त्या प्रतिबन्धकाभावस्येव स्वस्य रूपमिति व्युत्पत्त्या कारणत्वावच्छेदकवन्हित्वादिधर्मस्यापि स्वरूपशब्देन ग्रहणात् न दहनत्वसामान्यस्य शक्तित्वोक्तौ स्वरूपसहकारिव्यतिरिक्तशक्तिसिद्धिरिति भावः । सामान्यमपि सहकारिवर्गान्तर्गमिति पाठे तु तत्र सहकारिपदस्य प्रयोजकमात्रपरत्वात् सामान्यस्याप्यवच्छेदकतयोपयोगात् तदपि सहकारिवर्गान्तर्गतमेवेति, न तस्य शक्तित्वोक्तौ स्वरूपसहकारिव्यतिरिक्तशक्तिसिद्धिरित्यर्थः । सहकार्यभागोक्तिस्तु दहनत्वेतरसहकारिविरहपरेति ज्ञातव्यम् ॥ **अप्रत्यक्षं वेति** । अतीन्द्रियशक्तिस्थानाभिषिक्तत्वात्सामान्यस्याप्रत्यक्षत्वकोटिप्रसक्तिरिति द्रष्टव्यम् ॥ **दहनदर्शन इति** । दहनत्वविशिष्टतया दहनदर्शन इत्यर्थः ॥ **न स्यादिति** । शक्तेरदृष्टत्वादिति भावः ॥ **अपसिद्धान्तेति** । योग्यव्यक्तिजातेः प्रत्यक्षत्वस्य तत्सिद्धान्तत्वादिति भावः ।

**मृत्तन्त्वादिस्वरूपमिति** । एतच्च मृत्त्वादिसामान्यस्य वक्ष्यमाणप्रत्यक्षादिसिद्धत्वोपपादनायोक्तमिति ध्येयम् ।. **अन्वयव्यतिरेकेति** । अन्वयव्यतिरेकाभ्यामनुमेयमित्यर्थः ॥ **सामान्यमिति** । व्यक्तीनामानन्त्येन व्यक्तिपुरस्कारेणान्वयव्यतिरेकग्रहस्य जन्मसहस्रेणाप्यसंभवादिति भावः । ननु सामान्यस्यैवाग्रहान्न तदवच्छेदेनान्वयव्यतिरेकग्रहो युक्त इत्यतो मृत्तन्त्वादेः प्रत्यक्षादिसिद्धतया मृत्त्वादिकमपि प्रत्यक्षादिसिद्धमेवेति युज्यते तदवच्छेदेनान्वयव्यतिरेकग्रह इत्याह **तच्चेति** । किमस्येतिहासकथनस्य प्रयोजनमित्यतः शक्तिसिद्धिरेवेति भावेन, साध्यमानं कारणत्वं परिशेषेण शक्तिरेवेति वक्तुं, प्रसक्तप्रतिषेधं तावत्करोति **न चेति** । अनुमीयमानं कारणत्वं स्वरूपयोग्यतादिरूपं मृत्त्वादिकं वाऽभिमतं, किं वा सहकारिसमवधानरूपं फलोपधानमिति विकल्पार्थः । आद्यपक्षं दूषयति **स्वरूपस्येति** । तस्य प्रत्यक्षत्वादिति भावः । द्वितीयं दूषयति **कारणस्यैवेति** । ततश्च न सहकारिसमवधानमेव कारणत्वमिति तत्साधनं बाधितविषयमिति भावः ॥ **अतीन्द्रियमेवेति** । न चानन्यथासिद्धनियतपूर्ववृत्तित्वरूपमेव कारणत्वमन्वयव्यतिरेकानुमेयं, न त्वन्यदिति, नोक्तदोष इति वाच्यम् । तस्यान्वयव्यतिरेकानुमेयत्वं वदताऽपि पूर्ववृत्तित्वमात्रस्य रासभादिसाधारण्येन नियमविशेषितस्यापि तस्यान्यथासिद्धिसाधारणत्वेन लिङ्गत्वेन वक्तुमशक्यतयाऽनन्यथासिद्धनियतपूर्ववृत्तित्वस्यैव लिङ्गत्वेनाश्रयणीयतया तस्यानुमेयत्वायोगात् । न हि तदेव तेनानुमेयं संभवतीति भावः । ननु शक्तिरेव कारणत्वं चेत् सा कारणं न स्यात् । तथा च न शक्तिर्दाहानुकूला स्यादित्यरुचेराह **आस्तामिति** । कारणत्वस्यापि कारणस्येव कार्यप्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपानुकूलत्वाश्रयत्वात् नेयमनुपपत्तिरिति भावः । विस्तरस्तु तर्कताण्डवे द्रष्टव्यम् ।

**स०**— शक्तिव्यक्तिरूपताश्रयणेनोक्तसमाधानं न युक्तम् । स्वरूपसहकारिव्यतिरिक्तशक्तेः अप्रामाणिकत्वादिति तार्किकाः, तन्निराकर्तुमाह **स्वरूपसहकारिसमवधानेति** ॥ **उदाहृतेति** । आदिपदेन सत्तस्ववचनम् । **न च तदिति** ॥ अस्य शक्तिरिति षष्ठ्या संबन्धप्रतीतेः संबन्धस्य भेदविशेषगर्भत्वादित्यर्थः ॥ **नापीति** । सहकारिणमस्वाभाविकत्वादित्यर्थः । व्यवहारान्यथानुपपत्त्यापि शक्तिरवश्याभ्युपगमनीयेत्याह **किञ्चेति** ॥ **सामान्यमपि सहकारीति** । अवच्छेदकत्वोपयोगादिति भावः । सामान्यं न शक्तिः किं तु कारणत्वमेव तच्च स्वरूपसहकारिसमवधानातिरिक्तम् । सामान्यं सद्ग्राहकान्वयव्यतिरेकग्रहणोपायभूतमेव तदवच्छेदेन नियतान्वयव्यतिरेकयोर्ग्रहणादित्याह **किं च मृत्तन्त्वादीति** ॥ परिशेषात् कारणत्वस्य शक्तित्वमुपपादयति **न चेति** ॥ **कारणस्यैव सहकारिसमवधीनेति** । तथा च सहकारिसमवधानप्रयोजकमेव कारणत्वं न तु तदेवेति भावः ।

प०— 'शक्तिसद्भावे तु स्वभाव इति श्रुतिः' इति पैङ्गीश्रुतिश्चास्त्येवेति योजनान्तरमुपेत्य अतीन्द्रियशक्त्यपलापवादिमतनिरासकतया तात्पर्यतो व्याचष्टे **स्वरूपसहकारीति** । स्वरूपं च सहकारिसमवधानं च ताभ्यामतिरिक्तेत्यर्थः ॥ **श्रुत्यादीत्या**द्युक्त्या शक्तयः सर्वभावानामचिन्त्याज्ञानगोचरा इत्यादिस्मृतिरपि विष्णुपुराणादिस्था ग्राह्येति सूचयति । यद्वा सत्तत्त्ववचनमादिपदार्थः ॥ **संबन्धितयेति** । अस्येति परमात्मन इति वा षष्ठ्या संबन्धितया, प्रतीतेर्न शक्तिपदेन स्वरूपमादाय स्वरूपमात्रपरं वाच्यमित्यर्थः ॥ **स्वाभाविकत्वादीति** । नित्यत्वमादिपदार्थः । सहकारिण आगन्तुकत्वादिति भावः । शक्तिव्यवहारान्यथानुपपत्तिं च शक्तिसद्भावे मानमाह **किञ्चेत्यादिना** ॥ **उक्तत्वादिति** । देहसंयोगादिसहकारिविरहान्न तदजीजनदित्यनेनोक्तत्वादित्यर्थः ॥ कारणत्वस्यान्वयव्यतिरेकावगम्यत्वान्यथाऽनुपपत्त्या च वह्नित्वादिति सामान्यवद्वह्न्यादिस्वरूपतत्सहकारिभ्योऽतिरिक्तशक्तिसिद्धिरित्याह **किञ्च मृदिति** ॥ **कारणस्यैवेति** । कारणत्वधर्माक्रान्तस्यैवेत्यर्थः । तथा च कारणत्वं सहकारिसमवधानरूपं कथं स्यादित्यर्थः ॥ **आस्तां विस्तर इति** । प्रपञ्चस्तु तर्कताण्डवे द्वितीयपरिच्छेदे ध्येयः ।

या०— शक्तिरूपताश्रयणेन क्रियास्थायित्वसाधनं न युक्तम् । स्वरूपसहकारिव्यतिरिक्तशक्तेरप्रामाणिकत्वादिति तार्किकादयः तान्निराकर्तुमाह **स्वरूपसहकारीति** ॥ **स्वाभाविकत्वादिति** । आगन्तुकसहकारिणां च स्वभाविकत्वमादिपदेनोक्तं परत्वं न सम्भवतीति भावः ॥ **उक्तत्वादिति देहसंयोगा**दिसहकारिविरहादित्यनेनांशेनेति शेषः । गूढाशयः शङ्कते **दहनत्वसामान्यमिति** । तथा च न मतुपो वैयर्थ्यप्रसङ्ग इति भावः । अविदिताशय इव सिद्धान्ती परिहरति **कथं तर्हीति** । पूर्वपक्षी स्वाशयमुद्घाटयति **सामान्यमपीति** । अवच्छेदकत्वोपयोगादित्यर्थः । सहकारिपदं च प्रयोजकमात्रपरमिति ज्ञातव्यम् । सहकार्यभावोक्तिस्तु दहनदहनत्वेतरसहकारिविरहपरेत्याशयः ॥ **अप्रत्यक्षं चेति** । सामान्यस्य शक्तिस्थानेऽभिषिक्तत्वात् शक्तेश्चातीन्द्रियत्वादेतत्कोटिप्रसक्तिरिति ध्येयम् ॥ **दहनदर्शन इति** । दहनत्वविशिष्टदहनदर्शन इत्यर्थः । सामान्यं न शक्तिरित्यत्र युक्त्यन्तरमाह **किञ्चेत्यादिना** ॥ **मृत्तन्त्वादिस्वरूपमिति** । एतच्च मृत्तन्त्वादिसामान्यस्य वक्ष्यमाणप्रत्यक्षत्वादिसिद्धत्वोपपादनाय वा, स्वरूपस्यान्वयव्यतिरेकानपेक्षाधिगतित्वादिति वक्ष्यमाणहेतूपपादनाय वोक्तमिति ज्ञातव्यम् ॥ **कारणत्वमिति** । अत्रानुमेयं कारणत्वं तावच्छक्तिरूपमेव नान्यत् । तच्चान्वयव्यतिरेकगम्यम् । सामान्यं च तद्ग्रहणोपयुक्तं अतः पूर्वमेवावगतं प्रत्यक्षादिना । ततो नानुमेयकारणत्वात्मकशक्तिरूपं भवितुं युक्तमित्यर्थः ॥ **अन्वयव्यतिरेकग्रहणोपाय इति** । मृत्त्वावच्छिन्नत्वे सति घटः तदभावे तदभाव इत्येवमादिरूपेणेत्यर्थः । तथाऽवच्छेदकरूपस्य सामान्यस्याभावे प्रतिव्यक्त्यन्वयव्यतिरेकयोः आयुःपर्यवसानप्रसङ्गेन ग्रहीतुमशक्यत्वादिति भावः । नन्वत्रानुमेयं कारणत्वं शक्तिरूपमेवेत्येतदेव

कुतः । तदतिरिक्तस्य स्वरूपादेरपि कारणतारूपत्वसम्भवादित्याशङ्क्य निराकरोति **न चेत्यादिना** ॥ **स्वरूपं चेति** । स्वरूपसम्बन्धरूपत्वादिति भावः । **सहकारीति** । फलोपधानात्मककारणत्वस्य सहकारिसमवधानरूपत्वात् एवमाशङ्कितमिति द्रष्टव्यम् ॥ **कारणस्यैवेति** । तथा चात्रानुमेयं कारणत्वं सहकारिसमवधानप्रयोजकमेव, न तु तदात्मकमिति भावः ॥ **ततोऽतीन्द्रियमेवेति** । न चानन्यथासिद्धनियतपूर्ववृत्तित्वरूपमेव कारणत्वमत्रानुमेयमिति वाच्यम् । तस्यान्वयव्यतिरेकसहचारदर्शनसहकृतप्रत्यक्षगम्यस्य शक्तिरूपकारणत्वे लिङ्गतयाऽनुमेयत्वासम्भवात् । न च तदेव तेनानुमेयमिति सम्भतीति भावः । तदिदमुक्तम् **अतीन्द्रियमेव किञ्चिदिति** । न चैवमन्वयव्यतिरेकसमधिगम्यमित्यनेन विरोधः । अन्वयव्यतिरेकसहचारदर्शनसहकृतप्रत्यक्षगृहीतोक्तलिङ्गगम्यमित्यस्यैवार्थस्य तत्रापि विवक्षितत्वात् । अन्वयव्यतिरेकसहचारदर्शनसहकृतप्रत्यक्षेण हि त्वदभिमतोक्तकारणताशरीरनिविष्टा नियमरूपा रसरूपादिसाधारणी व्याप्तिरेव गृह्यते, न शक्तिरूपा कारणता । तस्या नित्यातीन्द्रियत्वात् । एतेन सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वादिरूपमेव कारणत्वमत्रानुमेयमित्यपि निरस्तम् । तस्य सर्वस्यापि प्रत्यक्षत्वेन लिङ्गतया, नित्यानुमेतयाऽनुभवसिद्धकारणतारूपत्वासम्भवात् । आत्माश्रयत्वादित्यादिना दुष्टत्वाच्च । नन्वेवं शक्तिः कारणत्वं चेत् आत्मा कारणं न स्यात् । तथा च शक्तिर्दाहानुकूलेति विशिष्टप्रयोगानुपपत्तिरिति चेन्न । कारणत्वस्यापि कारणस्यैव कार्यप्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपानुकूलत्वाश्रयात् । ननु प्रतिबन्धकेन पूर्वस्याः शक्तेर्नाशात् प्रतिबन्धकापनये वोत्तेजकसमवधाने वा कथं पुनर्दाहः । यदि चैताभ्यां शक्त्यन्तरोत्पादः तदाऽनेकशक्तिकल्पनागौरवमिति चेन्न । कुठारस्य कदाचित्कुण्ठत्ववत्संस्कारस्य कदाचिदनुद्बोधवत्सत्यामेव शक्तौ तस्याः प्रतिबन्धदशायां कुण्ठीभावलक्षणावस्थाविशेषस्यैव कल्पनेन नाशस्यानङ्गीकारात् । ननु तथाऽपि बीजादावङ्कुरानुकूलशक्तिवत् शक्त्यनुकूलाऽपि शक्तिः स्वीकार्या । बीजादिनिष्ठामङ्कुरादिजननशक्तिं प्रति बीजादेः समवायिकारणत्वात् । एवं तदानुकूल्यतत्पूर्वकालीना बीजादावनादिशक्तिपरम्पराङ्गीकार्येति बीजादेरनादित्वं स्यादिति चेन्न । मन्मते अङ्कुरे शक्तियुक्तस्य बीजस्य बीजे शक्तात् स्वकारणादेवोत्पत्त्या बीजगतशक्तिपरम्पराऽनपेक्षणात् । न च शक्तावपि स्वकार्यानुगुणशक्तिः स्वीकार्येत्यनवस्था । समवायविशेषादिवत्स्वनिर्वाहकत्वादिति न किञ्चिदत्रानुपपन्नम् । तदिदमभिप्रेत्याह **इत्यास्तां प्रपञ्च इति** ।

**श्री० — उदाहृतेति** । अस्य शक्तिः । शक्तिः परमात्मनः । इति स्वरूपातिरिक्तायाः शक्तेः 'ज्ञानं नित्यं क्रिया नित्ये'त्यादिसहकारिरूपज्ञानादिव्यतिरिक्तायाश्च शक्तेः प्रमाणप्रमितत्वादित्याशयः । **तत्** श्रुत्यादि । तथाच शक्तेर्भगवत्स्वरूपत्वप्रतिपादन एव तात्पर्यं स्यात् । स्वाभाविकीति श्रवणात् । न तु भगवत्स्वरूपातिरिक्तत्वेऽतो नोदाहृतश्रुत्यादिविरोध इत्यर्थः । **संबन्धितयेति** । अस्य शक्तिः

परात्मनः शक्तिरिति भगवत्संबन्धितायाः शक्तेरुक्तत्वात्स्वरूपातिरिक्तता शक्तेस्तत्र विशेषबलेनाभिप्रेतेति वक्तव्यम् अतः श्रुत्यादिविरोधस्तदवस्थ इति भावः। ननु स्वरूपातिरिक्तत्वस्यात्र शक्तेर्लाभेऽपि न सहकारिव्यतिरिक्तत्वलाभः । श्रुतेः सहकारिकथनपरत्वेन शक्तेः सहकारिसमवधानातिरिक्तत्वालाभादित्याशङ्क्य निषेधति **नापीति** ॥ **स्वाभाविकत्वादीति** । आदिपदेन नित्यत्वं ग्राह्यम् । तथाच सहकारिणामागन्तुकानां न स्वाभाविकत्वादिकमिति सहकारिव्यतिरिक्तैव साऽङ्गीकार्येति भावः ॥ **मतुप इति** । शक्तिमानपीत्यत्रेत्यर्थः । स्वरूपत्वकथनस्य व्यर्थत्वादिति भावः ॥ **सहकारिवर्गेति** । दहनत्वादिसामान्यस्यापि स्फोटजनकतावच्छेदकतयोपयुक्तत्वेन प्रयोजकत्वात्सहकारिवर्गेऽन्तर्गतमित्यर्थः ॥ **न स्यादिति** । दहनत्वविशिष्टदहनस्य सविकल्पके प्रतीयमानत्वेन दहनत्वरूपशक्तेरपि प्रतीतत्वादित्यभिप्रायः ॥ **अपसिद्धान्तादिति** । प्रत्यक्षयोग्यव्यक्तिवृत्तिदहनत्वजातेः प्रत्यक्षयोग्यत्वादित्यर्थः ॥ **तथेति** । अतीन्द्रियतयेत्यर्थः । **कारणत्वं त्वित्यतः पूर्वं** शक्तिरूपमिति शेषः । अनपेक्षेत्यनन्तरं प्रत्यक्षेति शेषः । **अधिगतत्वात्** अधिगतिविषयत्वादित्यर्थः । सहकारिसमवधानमेव कारणत्वं न भवतीत्याह **कारणस्यैवेति** । शक्तिमत एव । न हि पटजननाशक्ते मृदादौ पटजननाय तुरीवेमादिसहकारिसमवधानं मृग्यते । किन्तु शक्तिमति तन्त्वादावेवेति तदेव कारणं भवतीत्याशयः ।

---

**च०**— ननु जनकव्यक्तिस्वरूपसहकारिसमवधानाभ्यामतिरिच्यमानमूर्तेः शक्तेरेवालीकतया तदाश्रयणेनेशक्रियानित्यत्वसमर्थनं न सङ्गच्छत इति न्यायनयभङ्गीं दुदूषयिषुरनुवदति **स्वरूपेति** । **संबन्धितयेति** । श्रुतिघटकेशपरामर्शकसर्वनामेदंपदप्रकृतिकषष्ठ्युपस्थाप्यतदनुयोगिकसंबन्धप्रतियोगित्वोपरक्तप्रतीतेरित्यर्थः । बहुत्वसंख्याविशेषिताभिधायकविशब्दप्रकारवचनविधापदघटितबहुव्रीहिरूपविविधपदोपस्थावस्थापिततादृक्संख्याविशेषितप्रकारवैशिष्ट्यमपि स्वरूपमात्रतात्पर्यकतां विरुणद्धीत्यवसेयम् । **सहकारिपरमिति** । स्वसमवधानकालीनफलानुत्पादप्रयोजकप्रागभावप्रतियोगिसमवधाननिरूपकत्वरूपत्वनिरूपितसहकारित्वविशेषित(ष)तात्पर्यकमित्यर्थः । **स्वाभाविकत्वादीति** । परत्वसंग्राहकमादिपदम् तथा च समभिव्याहृतपदान्तरोपस्थाप्यनैसर्गिकत्वपरत्वाद्यन्वयानुपपत्त्या नेदं तादृशसहकारितात्पर्यकमित्यर्थः । आगन्तुकसहकारिपरमित्यर्थ इत्यप्यर्थापयन्ति ॥ **अजीजनदिति** । जनीप्रादुर्भावे इति पठिताद्धेतुमण्यन्तात् लुङि अटि चाङि द्वित्वे सन्वद्भावे इत्वे दीर्घे च निष्पद्यत इत्यवसेयम् । गतिबुद्धिप्रत्यवसानार्थेति योगेनाण्यन्तावस्थायां कर्तुः स्फोटादेर्ण्यन्तावस्थायां कर्मसंज्ञाविधानात् स्फोटादिकपदोत्तरं द्वितीया । **वैयर्थ्येति** । अभेदे आधाराधेयभाववत्ताया अयोगेन प्रकृत्युपस्थाप्यवह्निस्वरूपनिरूपितमत्वर्थसंसर्गस्य समभिव्याहृतपदान्तरोपस्थाप्ये तस्मिन् बाधेन विरुद्धार्थताप्रसङ्गादिति भावः । **उक्तत्वादिति** ।

देहसंयोगादिसहकारिविरहादित्यनेनेत्यादिः । गूढाशयः पूर्ववादी शङ्कते **दहनत्वेति** । एवं च घटो जातिमानित्यादाविव दहनपदोपस्थापिते स्वरूपतो वह्नित्वावच्छिन्ने शक्तिपदोपस्थापितवह्नित्वावच्छिन्ननिरूपितस्य शक्तित्वरूपसामान्यधर्मावच्छिन्नवह्नित्वनिरूपितस्य वा संसर्गस्य मतुपा प्रत्यायनात् न तादृशप्रत्ययवैयर्थ्यमिति भावः । अनधिगतपूर्ववाद्यभिसंधिरुत्तरवादी तदाशङ्कितं पराकुरुते **कथं तर्हीति** । सहकारिपदं प्रयोजकत्वावच्छिन्नतात्पर्यकमेवेति जनकत्वावच्छेदकीभूतदहनत्वस्यापि कथञ्चित्स्फोटाद्युपयोगितया सहकारिविरहोक्तिः प्रधानतद्वैधुर्यतात्पर्यिकेत्यवसेयम् । **अप्रत्यक्षं वेति** । वस्तुत ऐन्द्रियकस्यापि सामान्यस्यातीन्द्रियाभिमतशक्तिस्थानाभिषिक्ततोपगमेन तादृशद्वितीयवितर्कोत्थितिरवधेया ॥ **दहनदर्शन इति** । येनेन्द्रियेण या व्यक्तिरिति नियमोपगमेन दहनत्वप्रकारकदहनविशेष्यकदर्शन इत्यर्थः । तेन मेयत्वतद्व्यक्तित्वादिना दहनगोचरदर्शनदशायां स्फोटादिजननजिज्ञासोदयेऽपि न क्षतिः ।

मृत्तन्तुत्वादिकं न घटादिजननशक्तिरूपं तत्करणतारूपतज्जननशक्तिगोचरानुमित्यात्मकग्रहोत्पादौपयिकान्वयव्यतिरेकलक्षणहेतुग्रहोत्पादप्रयोजकसाक्षात्कारविषयत्वात् । शक्तिर्न मृत्तन्तुत्वात्मिका मृत्तन्तुत्वाद्यवगाहिसाक्षात्कृतिनिबन्धनतादृशहेतुग्रहनियन्त्रितानुमितिविषयत्वादिति शक्तिमृत्तन्तुत्वादीनां परस्परतादात्म्याभावसाधकयुक्त्यन्तरमभिधत्ते **किं चेत्यादि** । **मृत्तन्त्वादिस्वरूपमिति** । एतच्च मृत्तन्तुत्वादिजातीनामभिधास्यमानप्रत्यक्षादिसिद्धत्वस्य स्वरूपस्यान्वयव्यतिरेकानपेक्षाधिगतित्वादित्यभिधास्यमानहेतोश्च प्रत्यायनौपयिकं अन्वयव्यतिरेकग्रहणोपाय इति । जन्यजनकाभिमतव्यक्तीनामानन्त्येन प्रतिव्यक्त्यन्वयव्यतिरेकयोः पुरुषायुषेणापि दुर्ग्रहतया जन्यजनकतावच्छेदकाभिमतधर्मयोरनुगतेरवश्योपेयत्वादिति भावः । अन्वयव्यतिरेकलिङ्गकानुमितिगोचरकारणत्वस्य परिशेषप्रमाणेन शक्तिरूपतैवोपेयेत्यभिधित्समानस्तादृशलिङ्गेन सिषाधयिषितं कारणत्वं जनकतावच्छेदकाभिमतधर्मवत्त्वात्मकस्वरूपयोग्यतारूपं प्रयोजकतासंबन्धेन फलोत्पत्तिवैशिष्ट्यरूपफलोपधानात्मकं वेति प्रसक्तकल्पद्वयीं तावत्प्रतिषेधति **न चेत्यादि** । **स्वरूपमिति** । स्वस्य=कारणाभिमतस्य, रूपं=कारणतावच्छेदकभूतो धर्म इत्यर्थः । **सहकारिसमवधानमिति** । समवधानशब्दो न भावल्युडन्तः सन् भाववचनः । किं तु समवधीयते=संपाद्यत इति कर्मसाधनल्युडन्तः करणत्वार्थकशैषिकषष्ठ्या समस्तो निखिलसहकारिकरणकसंपादनक्रियाकर्मीभूतदर्शितफलोत्पत्तिवैशिष्ट्यरूपकल्पान्तरवचनः । फलोपधायकतारूपं कारणत्वं कारणकूटनिष्ठमेव न प्रातिस्विकव्यक्तिनिष्ठमिति ध्वनयितुं प्रसिद्धपदानुपादानेन पदान्तरोपादानं आद्यकल्पं न्यक्कुरुते **स्वरूपस्येति** । जनकतावच्छेदकीभूतमृत्तन्तुत्वादिसाक्षात्कारे अन्वयव्यतिरेकयोरनुपयोगादिति भावः । फलोपधानात्मककारणत्वस्य सहकारिसमवधानरूपत्वादेवमाशङ्कितमिति व्याचक्षणाः(णः)

द्वितीयं प्रत्याख्याति **कारणस्यैवेति**। स्वरूपयोग्यतारूपकारणतारूपं कारणत्वं कारणकूटपर्याप्तमेव न प्रतिव्यक्ति विश्रान्तमिति तादृशस्य प्रातिस्विकोक्तहेतुना साधने बाध इत्यर्थः। पारिभाषिकस्य च गुरुधर्मसाधारण्येनानादृतत्वात्। न च स्वरूपतो मृत्तन्तुत्वादिज्ञाने तयोरनुपयोगेऽपि जनकतावच्छेदकत्वेन ज्ञाने तदुपयोगोऽस्त्येवेति वाच्यम्। तस्यापि स्वरूपसंबन्धरूपत्वात्। **अतीन्द्रियमेवेति**। परिशेषप्रमाणोदयस्य निरर्गलतया तदनुमेयमतीन्द्रियमेव सेत्स्यतीति भावः। अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपकारणत्वस्यैवानुमेयत्वोपगमान्न तेनातीन्द्रियाशक्तिः सेत्स्यतीति शङ्का तु पूर्ववृत्तित्वमात्रस्य रासभादिसाधारण्येन नियमघटितस्याप्यन्यथासिद्धगतत्वेनानन्यथासिद्धनियतपूर्ववर्तित्वस्य च साध्यावैशिष्ट्यापत्त्या हेतुत्वासंभवेन निर्दलैव।

अत्र कतिपये व्याकर्तारः 'कारणत्वरूपा हि शक्तिः, 'शक्तिर्दाहानुकूला' इति शिष्टप्रयोगानुरोधेन कारणस्यैव कार्यप्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपानुकूल्योपगमेन कारणतादात्म्यापन्नापि भवती'त्यभ्युपयन्ति। अथ वह्न्यादेर्मण्यादिसमवहितत्वे दाहादिजननशक्तिर्ध्वंसङ्गीत्तदपनयने च, उत्तेजकसमवधाने वा दाहोत्पादानुरोधेनोत्पत्स्यत इत्युपगन्तव्यतयाऽनन्तशक्तितद्ध्वंसतत्प्रागभावतत्सामग्रीकल्पनानियन्त्रितगौरवप्रसङ्गः। न च कुठारस्य कादाचित्ककुण्ठितत्वाकुण्ठितत्वे इव संस्कारस्य तादृशानुद्बोधोद्बोधाविव च तस्याः प्रतिबन्धाप्रतिबन्धदशयोरवस्थाविशेषकल्पनयैव सामञ्जस्यं घटाद्यानन्त्यस्येव शक्त्याद्यानन्त्यस्यापि प्रमाणप्रमिततया क्षतिविरहश्चेति वाच्यम्। एवमपि बीजादेरङ्कुरादिकं प्रतीव तज्जननशक्तिं प्रत्यपि समवायिकारणतया शक्तिपारम्पर्यकल्पनयाऽनवस्थेत्यत आह **आस्तामिति**। समवायवद्विशेषवच्च शक्तेः स्वनिर्वाहकत्वोपगमेन शक्त्यादावपि स्वस्वकार्यानुगुणशक्त्यन्तरकल्पनाविरहान्नानवस्थेत्याशयः।

**सु० — ननु च क्रियायां किं प्रमाणम्। प्रत्यक्षद्रव्यवर्तिन्यां प्रत्यक्षमेवेति ब्रूमः। चलतीत्यपरोक्षाऽवभासदर्शनात्। इन्द्रियव्यापारान्वयव्यतिरेकानुसारित्वात् चलतिप्रत्ययस्य। अन्यथा रूपादेरप्यप्रत्यक्षत्वापातात्। अथ मतत्। न कर्म प्रत्यक्षम्, प्रत्यक्षेण गच्छति द्रव्ये विभागसंयोगातिरिक्तविशेषानुपलब्धेः। यस्त्वयं गच्छतीति प्रत्ययः, स संयोगविभागानुमितक्रियालम्बनः। अनुमापकसंयोगविभागावगमार्थश्चेन्द्रियव्यापार इति। तदयुक्तम्। क्रियाप्रतीतेरनुमितत्वं इन्द्रियव्यापारस्य चान्यत्रोपक्षीणत्वं अप्रत्यक्षतायां प्रमाणतः सिद्धायां कल्प्यते अन्यथा वा! नाद्यः। प्रमाणाभावात्। यदुक्तमनुपलब्धेरिति। तदसिद्धम्। बाधसिद्धेः। न ह्यपरोक्षावभासमङ्गीकुर्वाणोऽनुपलब्धेरित्येतावता**

शक्यो बोधयितुम् । घटादावपि तथा प्रसङ्गात् । विवादपदं कर्म, अप्रत्यक्षं कर्मत्वात्परमाणुकर्मवदिति चेन्न । परमाणुकर्मणोऽप्यस्माभिर्योगिप्रत्यक्षताऽङ्गीकारात् । तदर्थमस्मदादीति विशेषणोपादाने परस्य वैयर्थ्यम् । किञ्च विवादपदं रूपम् अप्रत्यक्षं, रूपत्वात्, परमाणुरूपवदिति किं न स्यात् । प्रतीतिविरोधान्नेति चेत् । समं प्रकृतेऽपि । अनुमानविरुद्धा कर्मप्रत्यक्षताप्रतीतिः अप्रमेति चेत् । रूपप्रत्यक्षताप्रतीतिरपि तथाऽस्तु । प्रतीतिविरुद्धेऽर्थेऽनुमानमेव नोदेतीति चेत् । एतदपि तुल्यम् ।

शे०— वाद्यन्तराभिमतं प्रत्यक्षद्रव्यवर्तिक्रियाया आनुमानिकत्वं प्रदूष्य प्रत्यक्षत्वं व्यवस्थापयितुं तत्प्रसञ्जयति **ननु चेति** । ततश्च प्रमाणाभावेन घटादौ क्रियाया एवासिद्धेः न तस्या नित्यत्वादिविचारावसर इति भावः । प्रत्यक्षसंभवप्रतिपादनाय प्रत्यक्षद्रव्यवर्तिन्यामिति विशेषणम् । प्रतिज्ञातं प्रत्यक्षमभिनयेन दर्शयन्नेव विप्रतिपन्नं प्रति तत्साधकमप्याह **चलतीत्यपरोक्षेति** । अस्यावभासस्य अपरोक्षावभासत्वे नियामकान्तरमाह **इन्द्रियेति** । अनन्यथासिद्धेत्यपि पूरणीयम् । तादृशस्यापरोक्षत्वानङ्गीकारेऽनिष्टमाह ॥ **अन्यथेति** । इन्द्रियव्यापारान्वयव्यतिरेकानुकारिणोऽपि चलतिप्रत्ययस्यापरोक्षावभासत्वाभावे तादृशस्य रूपादिप्रत्ययस्य अपरोक्षावभासत्वाभावप्रसङ्गेन रूपादेरप्यप्रत्यक्षत्वं स्यादित्यर्थः । चलतिप्रत्ययस्यानुमितित्वं व्यवस्थापयितुमनुपलम्भयुक्त्याऽप्रत्यक्षत्वं व्यवस्थापयन्नेव तद्वादिमतमुत्थापयति **अथ मतमिति** । गच्छति द्रव्ये पूर्वदेशविभागोत्तरदेशसंयोगातिरिक्तविशेषस्य प्रत्यक्षेणानुपलम्भान्न कर्मणः प्रत्यक्षत्वमिति भावः । एवमप्रत्यक्षत्वं प्रसाध्य यदुक्तं चलतीत्यपरोक्षावभासदर्शनादिति तदन्यथयति **यस्त्वयमिति** । यद्वा ननु तर्हि चलतीत्यपरोक्षप्रतीतिविरोध इत्यतो न संयोगविभागावजानानः कर्म प्रत्येति । रथस्य देशान्तरप्राप्तिं प्रतिसन्दधानस्यैव रथिनोः, रथो गच्छतीति प्रतीतेः, सारथेस्तु देशान्तरप्राप्त्यप्रत्याकलने स्थिरत्वेनैव प्रतीतेर्न चलतीतिप्रतीतिः प्रत्यक्षकर्मविषयेत्याह **यस्त्वयमिति** । न च तस्यानुमितित्वमसिद्धम् । कर्मप्रत्यक्षत्वेऽपि पूर्वदेशविभागोत्तरदेशसंयोगाभ्यां तद्व्यञ्जनीयम् । अत एव यत्र संयोगविभागावप्रत्यक्षौ, तत्र कर्मापि न प्रत्यक्षं भूकम्पादौ । तथा चोत्तरदेशसंयोगे सति कर्म नष्टमेव । प्रत्यक्षं च वर्तमानमात्रविषयकम् । किं चात्र संयोगोऽपि ज्ञातो व्यञ्जकः । उत्पन्ने च संयोगे, तत्साक्षात्कारः तदनन्तरं च कर्मसाक्षात्कारदशायामव्यवहितप्राक्कालीनमपि कर्म नास्ति । संयोगसाक्षात्कारकाल एव कर्मणो नष्टत्वात् । तत्कथं कर्मप्रत्यक्षं भवेदित्यर्थः । अनुमितिरूपत्वे चलतिप्रत्ययस्येन्द्रियव्यापारान्वयव्यतिरेकानुविधानविरोध इत्यत आह **अनुमापकेति** । नेन्द्रियव्यापारान्वयव्यतिरेकानुविधानमात्रम् अपरोक्षावभासत्वसाधकम् अतिप्रसङ्गात् । किं त्वनन्यथासिद्धान्वयव्यतिरेकानुविधानमेव । न चैतदत्रास्ति

अनुमापकसंयोगादिग्रहे तस्योपक्षीणत्वादिति भावः ॥ **न हीति** । ननु चोक्तरीत्याऽपरोक्षावभासानुपपत्त्यैव तत्सिद्धिः नानुपलब्धिमात्रेणेति चेत् । स्यादप्येवं यदि कर्मोत्तरदेशसंयोगमात्रव्यङ्ग्यं स्यात् । न चैवं, किंतु पूर्वदेशविभागव्यङ्ग्यमेव । विभागसाक्षात्कारश्च तदुत्पत्त्यव्यवहितोत्तरक्षणे, तत्काले च कर्मणः सत्त्वात् कुतो न प्रत्यक्षत्वमिति भावः ॥ **अस्माभिरिति** । तथा चान्यतररीत्या दृष्टान्ते साध्यवैकल्यमिति भावः । अस्मदाद्यप्रत्यक्षत्वस्यैव साध्यत्वान्न दृष्टान्ते साध्यवैकल्यमित्यत आह **तदर्थमिति** ॥ **परस्येति** । परेण योगिनामनभ्युपगमाद्वैयर्थ्यमित्यर्थः । ततश्च अन्यतररीत्या व्यर्थविशेषणत्वमिति भावः । प्रतिवादिरीत्या साध्यवैकल्यपरिहार एव वादिमते प्रयोजनमिति न वैयर्थ्यमित्यरुचेराह **किञ्चेति** ॥ **विवादपदं** रूपमिति ॥ घटादिरूपमित्यर्थः । तथा चाऽऽभाससाम्यमिति भावः । प्रतीतिविरोधभावाभावाभ्यां वैषम्यात् नाभाससाम्यमित्याशङ्कते **प्रतीतीति** । रूपं साक्षात्करोमीति रूपप्रत्यक्षताप्रतीतिविरोधादित्यर्थः ॥ **सममिति** । कर्मणोऽप्यप्रत्यक्षत्वस्य चलनं साक्षात्करोमीति तत्प्रतीतिविरुद्धत्वान्नोक्तरीत्या वैषम्यमिति भावः । कुतः कर्मप्रत्यक्षताप्रतीतेरप्रमात्वमित्यत उक्तम् **अनुभवविरुद्धेति** । विवादपदं कर्म, अप्रत्यक्षं कर्मत्वादित्यनुमानविरुद्धेत्यर्थः । ततश्च कर्मप्रत्यक्षताप्रतीतेरप्रमात्वान्न बाधकत्वमिति भावः ॥ **तथाऽस्त्विति** । अप्रमाऽस्त्वित्यर्थः । तस्या अपि रूपाप्रत्यक्षत्वानुमानविरुद्धत्वादिति भावः । **नोदेतीति चेदिति** । रूपप्रत्यक्षताप्रतीतेरप्रमात्वसिद्धौ बाधकाभावादनुमानोदयः । तदुदये च तद्विरुद्धत्वात् तत्प्रतीतेरप्रमात्वमित्यन्योन्याश्रयादिति भावः ॥ **एतदपि तुल्यमिति** । कर्मप्रत्यक्षताप्रतीतेरप्रमात्वसिद्धौ बाधकाभावादनुमानोदयः । तदुदये च तद्बाधितत्वात्कर्मप्रत्यक्षताप्रतीतेरप्रमात्वमिति तुल्यं समाधानमित्यर्थः ।

प० — क्रियाप्रसङ्गात् क्रियामात्रमतीन्द्रियमिति मतमप्यपाचिकीर्षुराह **ननु च क्रियायामिति** ॥ **विभागेति** । पूर्वदेशविभागोत्तरदेशसंयोगाभ्यामतिरिक्तस्य विशेषस्यादर्शनादित्यर्थः । विभागसंयोगातिरिक्तविशेषानुपलब्धिरेव प्रमाणमित्यत आह **यदुक्तमिति** ॥ **परस्येति** । योगीश्वरादिकमनङ्गीकुर्वत इत्यर्थः ।

या० — नन्वेवं शक्तेरतीन्द्रियत्वे तदात्मकक्रियाया अपि सर्वत्रातीन्द्रियत्वमेव किमित्याशयेन पृच्छति **ननु क्रियायामिति** । शक्त्यवस्थायाः क्रियाया अतीन्द्रियत्वेऽपि व्यक्त्यवस्थायास्तस्याः प्रत्यक्षत्वमपि क्वचित्संभवतीत्याशयेनाह **प्रत्यक्षद्रव्येति** । अनेनेश्वरादिद्रव्येषु व्यक्त्यवस्थाया अपि क्रियाया न प्रत्यक्षत्वमिति सूचयति **प्रत्यक्षद्रव्येति** । व्यक्त्यवस्थाया अपि क्रियाया अतीन्द्रियत्वमेवास्तु, किं द्वैविध्यकल्पनयेत्याशयेन शङ्कते **अथेत्यादिना** ॥ **परस्येति** । तन्मते योग्यादेरभावादिति भावः ॥ **प्रतीतिविरोधादिति** । रूपं साक्षात्करोमीत्यनुव्यवसायाविरोधादित्यर्थः ।

श्री०— नन्वपरोक्षावभासोऽसिद्ध इत्यत आह **इन्द्रियेति** । तथा च चलतीति प्रत्ययोऽपरोक्षो भवितुमर्हति इन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वात् रूपादिप्रत्ययवदित्यनुमानं द्रष्टव्यम् । अस्मिन्ननुमानेऽप्रयोजकताशङ्कापरिहाराय बाधकभूतमतिप्रसङ्गमाह **अन्यथेति** ॥ **विशेषेति** । कर्मरूपविशेषेत्यर्थः । ननु चलतिप्रत्ययापरोक्षत्वसाधकोक्तानुमानविरोध इत्याशङ्कायां केवलेन्द्रियव्यापारान्वयव्यतिरेकयोः उक्तासाधकत्वात् अनन्यथासिद्धेन्द्रियव्यापारान्वयव्यतिरेकावेव तत्साधकाविति वाच्यम् । न चैतादृशान्वयव्यतिरेकौ प्रकृते स्तः । तयोरन्यथासिद्धत्वात् कथमिति चेत्तत्राह **अनुमापकेति** । क्रियानुमापकेत्यर्थः ॥ **घटादाविति** । अपरोक्षावभाससिद्धस्यापि घटादेरनुपलब्धियुक्तिमात्रेणाप्रत्यक्षत्वं स्यात् । तत्र च बाधसिद्धिरेव वाच्या । सा प्रकृतेऽपि समेति । **विवादपदं रूपं** प्रत्यक्षद्रव्यवर्तिरूपम् । **तथाऽस्त्विति** । अनुमानविरुद्धत्वादप्रमाऽस्त्वित्यर्थः । **प्रतीतीति** । रूपं साक्षात्करोमीत्यनुव्यवसायरूपप्रतीतिविरुद्धे रूपाप्रत्यक्षत्वरूपेऽर्थ इत्यर्थः ॥ **तुल्यमिति** । चलनं साक्षात्करोमीति प्रतीतिविरुद्धे कर्माप्रत्यक्षत्वरूपेऽप्यर्थेऽनुमानमेव नोदेतीति तुल्यमित्यर्थः ॥

च०— प्रत्यक्षद्रव्यवर्तिक्रियाया अपि संयोगविभागलिङ्गकानुमितिनिरूपितद्रव्यनिष्ठोद्देश्यतानिरूपितविधेयतापन्नत्वमेव न साक्षात्क्रियमाणत्वमिति मतान्तरीयप्रक्रियां प्रतिविधाय साक्षात्कृतिनिरूपितलौकिकविषयताशालित्वं व्यवतिष्ठापयिषुस्तत्प्रसञ्जयति **ननु चेति** । तथा च क्रियाया एव निष्प्रमाणतायां तन्नित्यत्वादिमीमांसा चित्रिणीतनूजपाण्डितीमीमांसाकल्पेति भावः । तस्यां साक्षात्क्रियमाणत्वसंभवं ध्वनयितुं णिन्यन्तपदोपादानम् । अत्र कतिपये नन्वेवं शक्तेरतीन्द्रियत्वे तदात्मकक्रियाया अपि सर्वत्रातीन्द्रियत्वमेव किमित्याशयेन पृच्छति **ननु क्रियायामिति** । शक्त्यवस्थायाः क्रियाया अतीन्द्रियत्वेऽपि व्यक्त्यवस्थायाः तस्याः प्रत्यक्षत्वमपि क्वचित्संभवतीत्याशयेयाह **प्रत्यक्षद्रव्येति** । अनेनेश्वरादिद्रव्येषु व्यक्त्यवस्थाया अपि क्रियाया न प्रत्यक्षत्वमिति सूचयति । प्रत्यक्षद्रव्येऽपि व्यक्त्यवस्थाया अपि क्रियाया अतीन्द्रियत्वमेवास्तु किं द्वैविध्यकल्पनयेत्याशङ्कते **अथेत्यादिनेति** । नन्वित्यादिकमथेत्यन्तग्रन्थं व्याकुर्वते । अनेन प्रत्यक्षद्रव्यवर्तिक्रियापक्षकं प्रत्यक्षप्रमाणकत्वसाध्यकं साक्षात्कारविषयत्वहेतुकमनन्यथासिद्धेन्द्रियव्यापारान्वयव्यतिरेकानुविधायिप्रतीतिगोचरत्वहेतुकं चानुमानं दर्शनपदोपादानेन विषयिताप्रत्यासत्त्या चलनक्रियाश्रयविशेषितज्ञानविशेषितात्मावगाह्यनुव्यवसायेनासिद्धिशङ्कानिरसनं धूमवह्न्योरिव प्रकृतहेतुसाध्ययोरपि कार्यकारणभावावधारणेन प्रकृतस्थलीयाप्रयोजकताशङ्कानिरासकं प्रकृतसाध्याभावापादककप्रकृतहेत्वभावापाद्यकबाधकतर्कं **त्वापातादित्यन्तेनाभिप्रैति** । अस्यावभासस्यापरोक्षावभासत्वे नियामकान्तरमाह **इन्द्रियेतीत्यवतारयन्ति** । चलतीति प्रत्ययस्य विषयविशेषानुपलम्भेन साक्षात्कारत्वाभावमनुमितित्वं सिषाधयिषुराशङ्कते **अथेति** । प्रत्यक्षं=प्रत्यक्ष-

गोचरः तृतीयान्तं (?) हेतुविभक्त्यन्तेनान्वेति । अथ भावसाधनक्तिन्नन्तपदबोध्येन्द्रियजनितोपलम्भनिष्ठ-स्वनिरूपितविषयतासंसर्गावच्छिन्नप्रतियोगिताकाभावेन तत्संसर्गावच्छिन्नप्रतियोगिताकसाक्षात्काराभावस्य तद्विषयत्वाभावस्य वा साधने हेत्ववधृतौ साध्यावधृतेः तदनवधृतौ हेत्वनवधृतेरापत्त्या असिद्धिसन्दिग्धासिध्यन्यतरापत्तिर्दुर्वारेति चेन्न । 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु'इति गीतास्थबुद्धिपदस्य 'साङ्ख्यविषयो यया वाचा बुध्यते सा वागभिहिते'ति तद्भाष्यदिशा करणसाधनक्तिन्नन्तत्ववत् प्रकृतेप्युपलब्धिपदस्य तत्साधनक्तिन्नन्तत्वोपगमेन इन्द्रियप्रतियोगिकसन्निकर्षनिष्ठस्वनिरूपितानुयोगितासंसर्गावच्छिन्नप्रतियोगिताकाभावेन उक्तसाध्यसाधने सत्यभावादित्यलम् । उक्तानुमानस्य कालात्ययापदिष्टतापरिजिहीर्षया चलतीति प्रतीतेरनुमितित्वमनुमिमीते **यस्त्वयमिति** । क्रियाया ऐन्द्रियकत्वोपगन्तृमतेपि यत्र संयोगविभागावप्रत्यक्षौ तत्र क्रियाया अप्रत्यक्षत्वानुरोधेन संयोगस्य विभागस्य च प्रतिसंहितस्यैव तद्व्यञ्जकतोपगमनीयेति संयोगोत्पत्तितत्साक्षात्कारक्रियासाक्षात्काराणां पौर्वापर्यापत्त्या संयोगसाक्षात्कारदशायामेव क्रिया व्यनङ्क्षीदिति कथं क्रियासाक्षात्कार उदीयादिति भावः । तादृशप्रतीतेरनुमितिरूपतायां इन्द्रियव्यापारान्वयव्यतिरेकानुविधानं विरुणद्धीत्यत आह **अनुमापकेति** । इन्द्रियव्यापारान्वयव्यतिरेकानुविधानमात्रस्य अन्यथासिद्धिनिरूपकसाधारण्येन साक्षात्कारत्वसाधकत्वायोगेन अनन्यथासिद्धतद्व्यापारान्वयव्यतिरेकानुविधानस्य च अनुमित्यौपयिकसंयोगविभागग्रहोपक्षीणतदनुविधानके भावेनोक्तदिशा नानुमातुं सुशकमिति भावः । **अस्माभिरिति** निदर्शनेऽन्यतरदिशा साध्यवैकल्यमिति भावः । साध्यीभूताभावप्रतियोगिन्यस्मदादिवृत्तित्वं निवेश्य निदर्शने साध्यसंगमनेऽपि साध्यतावच्छेदकघटकविशेषणस्यान्यतरदिशा मन्दप्रयोजनतामाह **परस्येति** । योगिनमनुपगच्छत इत्यर्थः । तथाच तद्विशेषणव्यावर्तनीयस्य योगिप्रत्यक्षस्यैवालीकतया तद्व्यावृत्तिफलकं तदनुपादेयं तद्दिशेति भावः । हेतुतावच्छेदकघटकविशेषणानामसिद्ध्यनैकान्त्यान्यतरवारकतयैव सार्थक्यमितिवत् साध्यतावच्छेदकघटकविशेषणानां तादृङ्नियमाभावेन इदं कर्मान्यत्वविशिष्टसत्तावदित्यादाविव उपरञ्जनफलितासंभवेन तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यं न वेति द्वितीयविप्रतिपत्तिग्रन्थव्याख्यावसरे न्यायनयदिशा ईश्वरज्ञानमादाय सिद्धसाधनवारणफलकस्य चरमज्ञाने दीधितिकारनिवेशिततज्ज्ञानसामानाधिकरण्यविशेषणस्य ईश्वरं विद्विषतां मीमांसकानां दिशा मन्दप्रयोजनत्वेऽपि व्यापके व्यर्थविशेषणता न दोष इति दीधितिकारोक्तेश्च न क्षतिरित्यरुचेराह **किञ्चेति** । विवादपदं प्रकृतसाध्यतदभावकोटिकविप्रतिपत्तिविषयीभूतं घटादिरूपम् । तथा च तद्वदिदमप्यप्रयोजकमिति भावः । **प्रतीतिविरोधादिति** । विषयिताप्रत्यासत्त्या व्यवसायोपनीतरूपविशेषितसाक्षात्कारविशिष्टात्मनिष्ठलौकिकविषयतानिरूपक'रूपं साक्षात्करोमी'त्यनुव्यवसायविरोधादित्यर्थः । **सममिति** । चलनं साक्षात्करोमीति तादृशानुव्यव-

सायविरोधादित्यर्थः । अप्रमात्वे हेतुगर्भं विशेषणम् **अनुमानविरोधेति** । विवादपदं कर्मेत्यादिना दर्शितानुमानसिद्धाप्रत्यक्षत्वे विरुद्धार्थविषयिणीत्यर्थः । तथा च स्वयमप्रमा सा कथमनुमानं बाधेत अप्रामाण्यज्ञानानास्कन्दितत्वस्य बाधग्रहनिष्ठप्रतिबन्धकतावच्छेदकघटकत्वादिति भावः । **तथाऽस्तु** अप्रमाऽस्तु । एवं च सापि तन्न बाधत इति भावः । **प्रतीतिविरुद्धेर्थे** प्रतीतिविषयीकृतप्रत्यक्षताविरुद्धार्थविषयके ॥ **नोदेतीति चेदिति** । बाधाभावघटितसामग्र्यभावादिति भावः । रूपप्रत्यक्षताप्रतीतेरप्रमात्वसिद्धौ बाधकाभावादनुमानोदयः तदुदये च तद्विरुद्धत्वात्प्रतीतेः अप्रमात्वमित्यन्योन्याश्रयादिति भाव इत्यत्राप्याशयं प्रकाशयन्ति । **एतदपि तुल्यमिति** । तादृशसामग्र्यभावादिदमपि न प्रवर्तत इत्यपि सुवचमिति भावः । इदमपि प्रतीकमन्योन्याश्रयपरतया योजयन्ति ।

**सु० — अथ ब्रूषे । परमाणुरूपस्याप्रत्यक्षतायामाश्रयामहत्त्वं प्रयोजकमिति । तन्न । परमाणोरपि महत्त्वस्य वक्ष्यमाणत्वात् । किं च परमाणुकर्माप्रत्यक्षतायामपि तदेव प्रयोजकं किं न कल्प्यम् । यदि तर्हि कर्म प्रत्यक्षम्, एकस्यामपि कर्मव्यक्तावुत्पन्नायां चलतीतिप्रत्ययः स्यात्, इति चेत् । न, संयोगविभागयोरपि तुल्यत्वात् । तथा च न कर्मानुमानमपि स्यात् । अथ मन्यसे सेनावनादिवत् संयोगविभागयोः प्रत्यक्षतोपपत्तिरिति । तर्हि कर्मणोऽपि तथा किं न स्यात् । न द्वितीयः । तन्तवो न प्रत्यक्षाः किन्तु पटकार्यानुमेयाः । पटग्रहण एव च इन्द्रियव्यापारोपयोग इत्यपि कल्पनाप्रसङ्गात् ।**

**शे०** — सोपाधिकत्वानुपाधिकत्वाभ्यां वैषम्यात नाभाससाम्यमित्याशङ्कते **अथेति** । स्वाश्रयामहत्त्वमित्यर्थः । अप्रत्यक्षत्ववति परमाणुरूपे आश्रयामहत्त्वसद्भावेन साध्यव्यापकत्वाद्रूपत्ववति घटरूपे च तदभावेन साधनाव्यापकत्वादिति भावः ॥ **वक्ष्यमाणत्वादिति** । 'परमाणोरणोर्नास्ति महत्त्वेत्यद्भुतं वचः' इत्यादिनेति शेषः । तथा च तत्र साध्याव्यापकत्वान्नोपाधित्वमिति भावः । उपलक्षणं चैतत् । कालादिगुणेषु सत्यपि अप्रत्यक्षत्वे आश्रयामहत्त्वाभावात्साध्याव्यापकत्वमेव । न च कार्यमहदनधिकरणत्वं तदर्थः । तच्च कालगुणेष्वप्यस्तीति वाच्यम् । तथाऽपि घटादिवृत्तिगुरुत्वादौ साध्याव्यापकत्वानिस्तारादित्यपि द्रष्टव्यम् । अङ्गीकृत्याऽऽश्रयामहत्त्वस्योपाधित्वमाभाससाम्यमुक्तमक्षतमेव । कर्माप्रत्यक्षतानुमानेऽप्यस्यैवोपाधित्वस्य वक्तुं शक्यत्वादित्याह **किञ्चेति** ॥ **यदि तर्हि कर्म प्रत्यक्षमिति** । यदि कर्म प्रत्यक्षं तर्हीति संबन्धः ॥ **स्यादितीति** । न चासावस्ति । ततो न कर्म प्रत्यक्षमिति विपर्यये पर्यवसानं बोध्यम् ॥ **संयोगविभागयोरपीति** । एकस्यामपि कर्मव्यक्तौ संयोगविभागयोरु-

त्पन्नयोः संयोगविभागयोः प्रत्ययोऽपि स्यान्न चासावस्ति । ततो न संयोगविभागावपि प्रत्यक्षावित्यापातादित्यर्थः । अस्तु संयोगविभागयोरप्रत्यक्षत्वम्, किं नश्छिन्नमित्यतस्तथा सत्यनुमापकसंयोगाद्यज्ञानान्न कर्मानुमानमपि स्यादित्याह **तथा चेति** । ततश्च संयोगाद्यनुमितकर्मालम्बनत्वं चलतिप्रत्ययस्य परोक्तं भज्येतेति भावः ॥ **सेनावनादिवदिति** । आदिपदेन राशिस्थदूरकेशादेर्ग्रहणम् ॥ अयं भावः । यथा ह्येकैकस्मिन्नश्वादौ, वृक्षादौ वा, सेनेति वनमिति च प्रत्ययाभावेऽप्यश्वसमुदाये वृक्षसमुदाये च भवत्येव सेनेति वनमिति च प्रत्ययः । तथैकस्मिन्संयोगे विभागे च संयोगविभागप्रत्ययाभावेऽपि संयोगसमुदाये विभागसमुदाये च संयोगविभागप्रत्यक्षं भविष्यति । न चैकैकस्याश्वादेः सेनादित्वाभावात्तत्समुदायस्यैव तथात्वात्प्रत्येकं तत्प्रत्ययाभावेऽपि समुदाये तत्प्रत्ययो युक्तः । इह तु एकैकसंयोगादिव्यक्तेरपि संयोगादित्वात् तत्साक्षात्काराभावो न युक्त इति वाच्यम् । एकैकस्य संयोगादेः कर्मानुमापकत्वाननुभवेन कर्मानुमापकसंयोगादिप्रत्यक्षं तत्समूहमात्रविषयमित्याशयात् । प्रत्येकं केशत्वेऽपि केशसमुदाये तत्साक्षात्कारवत् प्रत्येकं संयोगादित्वेऽपि समुदाये तत्साक्षात्कार इति वा ॥ **तथा किं न स्यादिति** । सेनावनादिवत्प्रत्यक्षत्वं किं न स्यादित्यर्थः ॥ **न द्वितीय इति** । अन्यथा वेति द्वितीयो नेत्यर्थः । अविशेषादिति भावः ।

स० — **परमाणोरपि महत्त्वस्येति** । वैशेषिकपरीक्षायां संयोगविभागरूपलिङ्गस्य प्रत्यक्षत्वेन

---

चलतीति प्रत्ययः स्यात् । न च सोऽस्तीति तस्मात्संयोगादिके जातेऽपि तत्प्रत्यक्षं स्यात्, तथा चैतेन कर्मानुमानमपि तदा स्यादित्यर्थः । तर्कफलमाह **तथा चेति** । यथैकस्यां कर्मव्यक्तावुत्पन्नायां चलतीतिप्रत्ययाभावान्न कर्म कदापि प्रत्यक्षमित्युच्यते, एवमेकस्मिन् संयोगादिके जाते न तदा कर्मानुमानमिति भावात्, कदापि कर्मानुमानं संयोगादिना न स्यादित्यर्थः । आह **सेनावनादिवदिति** । यथैकस्मिन्नेवाश्वे गजे वा सेनेति न व्यवहारः । यथा वैकस्मिन् वृक्षे वनमिति न व्यवहारः । किन्तु समूह एव । एवं प्रकृतेऽपि एकैकसंयोगविभागसमूह एव संयोगित्वं न त्वेकत्रेति पूर्वपक्ष्याशयादिति भावः ।

**न द्वितीय इति** । (?)

प० — **वक्ष्यमाणत्वादिति** । वैशेषिकनये वक्ष्यमाणत्वादित्यर्थः । **तदेवेति** । आश्रयामहत्त्वमेवेत्यर्थः । तथा च घटादिकर्मणः प्रत्यक्षत्वमेव, आश्रयस्य महत्त्वादिति भावः ॥ **चलतीतिप्रत्ययः स्यादिति** । नास्ति च प्रत्ययः, अतो न कापि क्रिया प्रत्यक्षेतिभावः ॥ **संयोगविभागयोरपीति** । एकस्मिन्संयोगे विभागे वा जातेऽपि तत्प्रत्यक्षं स्यादित्यर्थः । नास्ति च प्रत्यक्षम् अतो न कदापि संयोगादिः प्रत्यक्षः स्यादिति भावः । अस्तु को दोष इत्यत आह **तथाचेति** । संयोगादेरप्रत्यक्षत्वे इत्यर्थः । लिङ्गज्ञानाभावादिति भावः ॥ **सेनावनादिवदिति** । सेनावनपदवाक्यादेः संघरूपेण

प्रत्यक्षता यथा, तथा पक्षिसञ्चारादौ संयोगादेरपि संघातरूपेण प्रत्यक्षतोपपद्यते । तथानुभवात् । न तु प्रातिस्विकरूपेणेत्यर्थः । अन्यथा वेति पक्षं निराह **न द्वितीय इति** । द्व्याश्रयौ द्वयोर्व्यासज्यवर्तिनौ इत्यर्थः ।

**या०— परमाणोरपीति** । वैशेषिकपरीक्षायामिति शेषः । तथा च तत्रैव साध्याव्यापकतेति भावः ॥ **संयोगविभागयोरपीति** । एकस्मिन्संयोगादिके जातेऽपि तत्प्रत्यक्षं स्यात् । तथा च तेन तदा अनुमितिरूपश्चलतीति प्रत्ययोऽपि स्यादित्यर्थः । तर्कफलमाह **तथा चेति** । यथैकस्यां कर्मव्यक्तावुत्पन्नायां तदा चलतीति प्रत्ययाभावात्, न कर्म कदाऽपि प्रत्यक्षमित्युच्यते । एवमेकस्मिन्संयोगादिके जातेऽपि, तस्याप्रत्यक्षत्वेन लिङ्गाज्ञानात् तदा कर्मानुमितेरसंभवेन कदाऽपि कर्मानुमानं संयोगादिना न स्यादित्यपि वक्तुं शक्यमित्यर्थः ॥ **सेनावनादिवदिति** । यथा इयं सेना, इदं वनमिति प्रत्ययोऽश्वादिसमूहे वृक्षसमूहे वा भवति, न त्वेकैकस्मिन्नश्वादौ, तथा कर्मानुमापकसंयोगविभागप्रत्यक्षमपि तत्समूह एव भवति । नैकस्मिन्संयोगादावित्यर्थः । आदिपदेन राशिदूरस्थकेशादेर्ग्रहणम् ॥ **संयोगविभागयोरिति** । कर्मानुमापकयोरिति शेषः । एतेनैकस्याश्वादेर्वृक्षस्य वा सेनात्ववनत्वयोरभावादेव तत्प्रत्ययः समूहमात्रविषय इत्यस्तु । प्रकृते तु एकस्यापि संयोगादेः संयोगादित्वात्तत्प्रत्यक्षमेकस्मिन्नपि स्यादेवेति शङ्का निरस्ता । अत्राप्येकैकस्य संयोगादेः कर्मानुमापकत्वाननुभावेन कर्मानुमापकसंयोगादिप्रत्यक्षं तत्समूहमात्रविषयमित्याशयात् ।

**श्री०—प्रयोजकमिति** । तथा च प्रतिबन्दितयोक्ते भवदनुमाने आश्रयामहत्त्वमुपाधिरित्यर्थः । परमाणुरूप एव साध्यव्यापकत्वान्नायमुपाधिरित्याशयेनाह **परमाणोरपीति** ॥ **किञ्चेति** । यथा रूपाप्रत्यक्षतायामाश्रयामहत्त्वं प्रयोजकमित्युच्यते । तथा कर्माप्रत्यक्षतायामपि तदेव प्रयोजकमस्तु । परमाणुगतत्वाविशेषात् । तथाच त्वदनुमानमपि सोपाधिकमित्यर्थः । एवञ्च कर्मप्रत्यक्षत्वे आश्रयमहत्त्वस्यैव प्रयोजकत्वप्राप्त्या प्रत्यक्षद्रव्याश्रितेऽपि कर्मणि आश्रयस्य महत्त्वात्प्रत्यक्षत्वं भवत्वित्याशयः ॥ **स्यादिति** । न भवति प्रत्ययः तस्मात्प्रत्यक्षं नेत्याशयः । **तर्हीति** । चलतीति प्रत्यक्षमपि कर्मसमूहे एव भवति, नैकस्मिन् कर्मणि; इति किं न स्यादित्यर्थः । अन्यथा वेति द्वितीयं पक्षं प्रतिषेधति **न द्वितीय इति** । **इन्द्रियव्यापारेति** । तन्तुप्रत्यक्षत्वसाधकत्वेन सम्मतेत्यर्थः ॥

**च०**—रूपाप्रत्यक्षतानुमानमहत्परिणामविशेषितद्रव्यानाश्रितत्वरूपम् आश्रयामहत्त्वमुपाधिमाशङ्कते **अथेति** ॥ **वक्ष्यमाणत्वादिति** । वैशेषिकपरीक्षायां 'परमाणोरणोर्नास्ति महत्त्वेत्यद्भुतं वचः' इत्यादिनेत्यादिः । तथा चेदं साध्यवति परमाणुरूपादौ नेति साध्यव्यापकत्वान्नोपाधिरिति भावः । साध्याधिकरणे गगनपरिमाणादौ घटी(क)यकगुरुत्वादौ चौपाधिवैधुर्यादपि साध्याव्यापकताऽवसेया । तुल्यदिशा

कर्मप्रत्यक्षताऽनुमानेऽपि लिङ्गोपस्थितापरपर्यायलिङ्गप्रत्यक्षतानुमाने प्रतिवादिनस्तदुपाधिः (ता-उ) द्विभाव-
विषयेऽपि सङ्गच्छत इत्याशयेनाह किञ्चेति । यदि तर्हि कर्म प्रत्यक्षमिति । 'तर्हि' इत्ययं 'प्रत्यक्षं'
इत्यतः परोऽनुसन्धेयः । 'स्यात्' इत्यतः परं 'नोत्पद्यते चासाविति न कर्मणः प्रत्यक्षगोचरते'ति
पूरणीयम् । संयोगे(गे?)त्यादि । एकक्रियाव्यक्त्युत्पादितसंयोगविभागप्रतीतिरूपानुमित्यौपयिकस्याभावे
क्रियानुमितिरपि न स्यादित्याह तथा चेति । तथा च संयोगादिमत्तापरामर्शजन्यक्रियाविषयकानुमितिरूपत्वं
चलतीति प्रतीतेः परसमीहितमभङ्गुरं देवेति भावः । समावयवादिवदिति । अयमभिसन्धिः । एकैकस्याः
संयोगादिव्यक्तेः क्रियाऽनुमापकता नैवोच्यते, किन्तु तत्समुदाय एव, तत्रैव संयोग इत्यादिप्रतीतिगोचरता
यथैकैकतुरंगममतंगजादिव्यक्तेस्तादृश्याः स्थूलपनसादिव्यक्तेश्च सेनेति वनमिति च प्रतीत्यवगाढताविरहेऽपि
तद्घटितसमुदाये तथा तथा प्रतीत्यवगाढता, तद्वदिति । न च व्यासज्यवृत्तिसेनात्ववनत्वादीनां प्रत्येकं
तुरगपदादावपर्याप्त्या पर्याप्तिसंबन्धेन तत्तदवगाहिन्याः तत्र तदनुदयेऽपि प्रकृतहेतुतावच्छेदका-
भिमताव्यासज्यवृत्तिसंयोगत्वादीनां प्रत्येकं पर्याप्त्या कथमेकैकव्यक्तौ न तादृशप्रतीतिरिति वाच्यम् ।
तादृशनिदर्शनोपादानेनैव कर्मानुमापकसंयोगादिप्रत्यक्षं तत्समूहमात्रविषयम् इत्याशयादिति व्याचक्षाणै-
राशयस्याविष्कृततया प्रकृतेऽपि क्रियानुमापकतावच्छेदकाभिमतधर्मस्यापि व्यासज्यवृत्तितायाः ध्वनित-
त्वात् । समूहस्य हेतुताभ्रौव्ये दुःसंपादव्यासज्यवृत्तिताकसंयोगत्वादेः हेतुतावच्छेदकीकर्तुमशक्यत्वात् ।
अन्यथा वा इति द्वितीयकल्पमपि प्रतिविधत्ते न द्वितीय इति । अवैशेष्यादिति हृदयम् ।

**अपि च संयोगविभागौ द्व्याश्रयाविति परस्य मतम् । अस्माकमपि संयोग-विभागद्वयं द्व्याश्रयमिति । ताभ्यां चानुमीयमानं कर्मोभयत्रानुमातव्यम् । तथा च श्येन इव स्थाणावपि चलतीतिप्रत्ययप्रसङ्गः । अथोच्येत, न क्रिया स्थाणावनुमीयते, किं नाम श्येन एव । निपततः श्येनस्य पूर्वदेशविभागोत्पत्तौ उत्पततश्चोत्तरदेशसंयोगजनने स्थाणु-कर्मणः कारणताऽयोगात् । श्येने तु कर्मण्यनुमिते, तस्योपपद्येते देशान्तरसंयोगविभागा-विति । तदनुपपन्नम् । स्थाणुकर्मणा हि श्येनस्य देशान्तरसंयोगविभागोत्पत्त्यनुपपत्तौ कर्मान्तरमेव तदनुगुणं श्येने कल्पनीयं स्यात् । स्थाणुकर्मानुमानस्य तु कुतो निवृत्तिः । यद्वत्तं हि कार्यमुपलभ्यते तद्वत्तं कारणमपीत्यौत्सर्गिको न्यायः । श्येनकर्मणैव कल्पितेन सर्वस्योपपत्तौ न स्थाणुकर्मोपयोग इति चेन्न । विकल्पानुपपत्तेः । तथा हि, किं व्याप्ति-पक्षधर्मतावदप्युपयोगे सत्येव लिङ्गमनुमापकं इत्येतावत्यनुमानसामग्री, उत व्याप्तिपक्षधर्म-तावत्त्वमात्रम् । नाद्यः, अकार्यकारणानुमानोच्छेदप्रसङ्गात् । किञ्च, यो येनाविनाभूतः स**

**क्वचिदुपलभ्यमानोऽनुपयोगात्त न गमयतीत्यलौकिकम् । द्वितीये तु कथं न स्थाणौ कर्मानुमानम् । अनुमितमपि कर्म कल्पनागौरवभयादपनीयत इति चेत्(न) प्रमाणसिद्धेऽर्थे तद्भयाभावात् ।**

शे०—परस्य मतमिति वदतां संयोगादेर्द्व्याश्रयत्वं न वास्तवम् । 'संयोगश्च विभागश्च भेदश्चैव पृथक् पृथक् । अन्योन्यप्रतियोगेन' इत्यादिनोपपत्तेर्वक्ष्यमाणत्वादिति सूचितं भवति ॥ **उभयत्र कर्मानुमातव्यमिति ।** संयोगरूपस्य विभागरूपस्य वा गत्यनुमापकलिङ्गस्य श्येन इव स्थाणावपि सद्भावादिति भावः । ननु संयोगमात्रं विभागमात्रं वा गत्यनुमापकमङ्गीक्रियते । येन निपातदशायां संयोगस्य उत्पातदशायां च विभागस्य श्येन इव स्थाणावपि सत्त्वात् स्थाणावपि गत्यनुमानं प्रसज्येत । किं नाम मिलितसंयोगविभागयोरेव गत्यनुमापकत्वम् । ततश्च निपातदशायामुत्पातदशायां च संयोगमात्रस्य विभागमात्रस्य वा स्थाणौ सत्त्वेऽपि संयोगविभागयोर्मिलितयोस्तत्राभावान्न स्थाणौ कर्मानुमानं, किन्तु श्येन एवेति चेन्न । तथाऽप्युत्पत्य निपतिते श्येने, स्थाणौ संयोगविभागयोर्मिलितयोरपि सद्भावेन गत्यनुमानापरिहारादिति भावः । ननु गत्यनुमानलिङ्गयोः संयोगविभागयोः स्थाणौ सत्त्वात् अस्तु तत्रापि ताभ्यां गत्यनुमानमित्यत आह **तथा चेति ।** संयोगविभागानुमितकर्मालम्बनः श्येनश्चलतीति यथा प्रत्ययः, तथा तदनुमितकर्मालम्बनः स्थाणुः चलतीति प्रतीतिः स्यादित्यर्थः । उपलक्षणमेतत् । कर्मप्रत्यक्षत्ववादिनो मम योग्यस्य कर्मणोऽनुपलम्भेनाभावनिश्चयेन बाधितत्वान्न गत्यनुमानसंभव इत्यपि द्रष्टव्यम् ।

ननु संयोगविभागयोः कारणतया क्रियानुमापकत्वात् श्येनक्रियाया निपततः श्येनस्य पूर्वदेशविभागं प्रत्युत्पततः श्येनस्य, उत्तरदेशसंयोगं प्रति च कारणत्ववत् निपततः श्येनस्योत्तरदेशसंयोगं प्रत्युत्पततः श्येनस्य, पूर्वदेशविभागं प्रत्यपि कारणत्वेन संयोगविभागाभ्यां श्येनकर्मानुमानसंभवेऽपि स्थाणुकर्मणो निपतत उत्पततश्च श्येनस्य, यौ स्थाणुसंयोगविभागौ तौ प्रति कारणत्वेऽपि निपतत उत्पततश्च श्येनस्य, यौ पूर्वोत्तरदेशविभागसंयोगौ तौ प्रति अकारणत्वेन संयोगविभागाभ्यां न स्थाणुकर्मानुमानसंभव इति कथं तत्र चलतिप्रत्ययापादनमित्याशयेन गूढाभिसन्धिः शङ्कते **अथेति** । आद्यप्रतिज्ञायां हेतुमाह **निपतत इति** । द्वितीयप्रतिज्ञायां हेतुमाह **श्येने त्विति ॥ उपपद्येते देशान्तरसंयोगविभागाविति** । तौ प्रत्यपि तस्यैव कारणत्वादिति भावः । एतेन निपतत उत्पततश्च श्येनस्य, पूर्वोत्तरदेशविभागसंयोगाहेतुत्वेन स्थाणुकर्माननुमाने निपतत उत्पततः श्येनस्यैव उत्तरपूर्वदेशसंयोगविभागाहेतुत्वान्न श्येनकर्मणोऽप्यनुमानमिति शङ्का परिहृता भवति । आशयमजानानः परिहरति **स्थाणुकर्मणा हीति श्येनस्य देशान्तरसंयोगविभागोत्पत्त्यनुपपत्ताविति** । पूर्वोत्तरदेशविभागसंयो-

गोत्पत्त्यनुपपत्तावित्यर्थः । **तदनुगुणमिति** । श्येनस्य पूर्वदेशविभागोत्तरदेशसंयोगोत्पत्त्यनुगुणमित्यर्थः । **स्थाणुकर्मानुमानस्येति** । स्थाणुश्येनसंयोगविभागाभ्यामिति शेषः । निपतत उत्पततश्च पूर्वोत्तरदेशविभागसंयोगोपपादकतया श्येनकर्मण इव तस्यैव श्येनस्य स्थाणुसंयोगविभागोपपादकतया स्थाणुकर्मानुमानमनिवार्यमिति भावः । पूर्ववादी स्वाशयमुद्घाटयति **श्येनकर्मणैवेति** । श्येनस्य पूर्वोत्तरदेशविभागसंयोगौ प्रति स्थाणुकर्मणः कारणत्वासम्भवेन तौ प्रति श्येनकर्मैव कारणतया तावदनुमातव्यम् । ततश्चानुमितेन तेन श्येनस्य पूर्वोत्तरदेशविभागसंयोगयोरिव स्थाणुश्येनसंयोगविभागयोरप्युपपत्तौ किं स्थाणुकर्मणेति भावः । ननु न श्येनकर्मणा स्थाणुनिष्ठसंयोगविभागयोरुपपत्तिः । यन्निष्ठं हि कार्यमुपलभ्यते, तत् तन्निष्ठेनैव कारणेन भाव्यमिति व्याप्त्या श्येनकर्मणः स्थाणुनिष्ठत्वाभावेन तन्निष्ठसंयोगविभागौ प्रति कारणत्वायोगादित्याशङ्कानिरासायोक्तं यद्गतं हि कार्यमिति ॥ **अकार्येति** । रसेन रूपानुमाने व्याप्तिपक्षधर्मतावत्त्वेऽपि उपयोगाभावाद्रसवत्त्वहेतुः अनवगमकः स्यादित्यर्थः । विशिष्टसामग्र्यभावादिति भावः ॥ **द्वितीये त्विति** । व्याप्तिपक्षधर्मतामात्रस्यैवानुमितिसामग्रीत्वमिति द्वितीय इत्यर्थः ॥ **कथं नेति** । व्याप्तिपक्षधर्मतामात्रस्य प्रकृतेऽपि सत्त्वादिति भावः ।

स० — **अन्यथेति**(?) । द्विपूर्वोत्तरदेशविभागसंयोगौ प्रति श्येनदेशयोराश्रयत्वेन स्थाणोस्तदाश्रयत्वाभावेऽपीत्यर्थो यदा निपततः श्येनस्य पूर्वदेशविभागः उत्पन्नः तदोत्पन्नो यो स्थाणुश्येनसंयोगः उत्पततश्चोत्तरदेशसंयोगोत्पत्तिकालतः स्थाणुश्येनविभागः तौ प्रति स्थाणोराश्रयत्वस्य विद्यमानत्वेन सकर्मानुमानमेवेति निवार्यमिति गूढाभिसन्धिरुत्तरमाह **स्थाणुकर्मानुमानस्येति** ॥ **श्येनकर्मणैवेति** । पूर्वोत्तरदेशविभागसंयोगयोः स्थाणुश्येनसंयोगविभागयोश्चोपपत्तौ किं स्थाणुकर्मणेति भावः । ननु श्येनकर्मणा स्थाणुनिष्ठसंयोगविभागयोरुत्पत्तिर्यन्निष्ठं कार्यं तत् तन्तुनिष्ठेनैव कारणेन भवतीति व्याप्तेः श्येनकर्मणः स्थाणुनिष्ठत्वाभावात् न तन्निष्ठसंयोगविभागौ प्रति कारणत्वमित्यतः तद्गतं कार्यमिति वाक्यं तत्परिहारकमिति ध्येयम् ॥ **अकार्येति** । शिंशुपात्वेन वृक्षत्वानुमाने व्याप्तिपक्षधर्मतावत्त्वेऽपि प्रयोगाभावात् शिंशुपात्वहेतुरागमः स्यादित्यर्थः ।

प० — **अस्माकमिति** । घटसंयोगः पटे, पटसंयोगो घटे, घटपटौ विभक्तौ, इत्यत्रापि घटविभागः पटे, पटविभागो घटे, इत्येवं रूपेण, द्वयं द्व्याश्रयमित्यर्थः । 'न सर्वधर्म एकोऽस्ति समुदायस्तु भिन्नगः' इत्यदिना वैशेषिकनयेऽस्यार्थस्य व्यक्तत्वादिति भावः । शङ्कते **यद्गतमिति** । **सर्वस्येति** । श्येनस्य देशान्तरसंयोगविभागस्थाणुसंयोगविभागरूपसर्वस्येत्यर्थः ॥ **विकल्पेति** । विकल्पे कृते कोऽपि कल्प उपपन्नो नेत्यर्थः । **एतावतीति** । जन्यजनकभावरूपोपयोगे सति व्याप्तिपक्षधर्मतावत्त्वमित्येतावतीत्यर्थः ॥ **अकार्येति** । रूपरसाद्यनुमानानामित्यर्थः । नन्वनुमितस्यानुमापकजनकत्वे-

नैवोपयोगो नाभिमतः । किन्तु यथाकथञ्चिद्रसादिनाऽनुमितरूपादौ त्वस्ति स, इति वदन्तं प्रत्याह **किञ्चेति** ।

या० — **निपतत इति** । देशान्तरादिति शेषः ॥ **उत्पतत इति** । स्थाणोरिति शेषः ॥ **स्थाणुकर्मानुमानस्येति** । स्थाणुश्येनसंयोगविभागाभ्यामिति शेषः ॥ **सर्वस्येति** । स्थाणुश्येनसंयोगविभागयोर्देशान्तरसंयोगविभागयोश्चेत्यर्थः ॥

श्री० — **द्व्याश्रयाविति** । एक एव संयोगः एक एव विभागो द्विष्ठ इत्यर्थः । **संयोगविभागद्वयम्** संयोगद्वयं विभागद्वयमित्यर्थः । 'संयोगश्च विभागश्च भेदश्चैव पृथक्पृथक्' इति वक्ष्यमाणत्वादिति द्रष्टव्यम् । **ताभ्यां** द्विष्ठाभ्यां संयोगविभागाभ्याम् । तथाच हेतुमति सर्वत्र साध्यसत्ताया आवश्यकत्वात् कर्मानुमापकश्येनसंयोगादेः द्विष्ठत्वात् संयोगाश्रययोः श्येनस्थाण्वोरुभयत्रापि कर्मानुमानं स्यादिति भावः । इष्टापत्तिरिति चेत्तत्राह **तथा चेति** ॥ **श्येन एवेति** । श्येनश्चलतीति प्रत्ययवदित्यर्थः ॥ **निपतत इति** । ऊर्ध्वदेशादधोदेशनिष्ठं स्थाणुं प्रति नितरां पतत आगच्छत इत्यर्थः ॥ **उत्पतत इति** । स्थाणोः सकाशादूर्ध्वदेशं प्रति पतत इत्यर्थः । अनुमिते इत्यनन्तरं तेन कर्मणेति शेषः । **कर्मान्तरं** स्थाणुकर्मभिन्नं कर्म । **तदनुगुणं** देशान्तरसंयोगविभागोत्पत्त्यनुकूलम् ॥ **कुत इति** । स्थाणुकर्मणोः देशान्तरसंयोगादिकारणत्वाभावेऽपि स्थाणुश्येनसंयोगविभागाभ्यां स्थाणौ कर्मानुमानं तु स्यादेवेति तत्रापि चलतीति प्रत्ययः स्यादित्यर्थः । शङ्कते **यद्दृष्टं हीति** । घटादिरूपं कार्यं भूतलादिगतं सदुपलभ्यते । तत्कारणस्य कालादृष्टादेः कपालद्वयसंयोगस्य वा तद्गतत्वाभावात् औत्सर्गिक इत्युक्तम् । **श्येनेति** । स्थाणुश्येनसंयोगविभागदेशान्तरसंयोगविभागरूपं च कार्यं श्येनगतमेवोपलभ्यत इति तत्रत्यमेव कर्म कारणतया कल्पनीयमित्याशयः । **उपयोगो** जन्यजनकभावादिरूपः ॥ **एतावतीति** । जन्यजनकभावरूपोपयोगे सति व्याप्तिपक्षधर्मतावत्त्वमित्येतावतीत्यर्थः ॥ **अकार्येत्यादि** । रसादूपानुमाने उपयोगाभावादिति भावः ॥ **अलौकिकमिति** । हस्त्यविनाभूतो हस्तिपो देशान्तरे उपलभ्यमानः उपयोगाभावेऽपि हस्तिनं गमयत्येवेति लोकदृष्टत्वेन प्रकृतेऽपि स्थाणुश्येनसंयोगस्य कर्माविनाभूतत्वेन श्येन इव स्थाणावप्युपलभ्यमानस्यापि उपयोगाभावेऽपि स्थाणौ कर्मगमकत्वं स्यादेवेति तत्रापि चलतीति प्रत्ययो दुर्वार इति भावः ॥ **कथमिति** । स्थाणुः कर्मवान् श्येनसंयोगविभागवत्त्वात् श्येनवत् इत्यनुमाने व्याप्तिपक्षधर्मतयोः सत्त्वादिति भावः ॥ **कल्पनागौरवेति** । श्येनकर्मणैव संयोगादिकार्यस्योपपत्तौ स्थाणुकर्मणोऽपि तत्र कारणत्वकल्पने गौरवमित्यर्थः । प्रमाणवतो गौरवस्य न्याय्यत्वाददोष इत्याह **प्रमाणेति** ।

च०—संयोगादेः क्रियानुमापकताम् अनैकान्त्येनापहस्तयते अपि चेति । परस्य नैयायिकस्य । अस्माकं उत्तरवादिनाम् । 'संयोगश्च विभागश्च भेदश्चैव पृथक्पृथक् । अन्योन्यप्रतियोगेने'त्यादिनोपपत्तेरभिधास्यमानत्वादिति ध्वन्यते । 'श्येनः क्रियावान् स्थाणुसंयुक्तत्वात् मित्यादिरूपपूर्वदेशविभक्तत्वात् च' इत्यनुमाने न्यायनये सिद्धान्ते च हेतुतावच्छेदकावच्छिन्नस्य व्यभिचारनिरूपकाधिकरणे स्थाणौ भित्त्यादिरूपपूर्वदेशे च सत्वेनानैकान्त्यात् व्यक्त्यैक्यानैक्ययोरकिञ्चित्करत्वादित्याशयः । अथ धूमादेः कारणीभूतस्वसमानाधिकरणवन्ह्यनुमापकतेव संयोगविभागयोरपि स्वसमानाधिकरणकारणीभूतक्रियानुमापकतैव उपेयत इति देशान्तरान्नियतश्येननिष्ठतदवधिकविभागं प्रति उर्ध्वदेशं प्रति उत्पतच्छ्येननिष्ठतद्देशसंयोगं प्रति च श्येननिष्ठक्रियाया एव हेतुतया स्थाणुवृत्तिक्रियायाः तदहेतुतया श्येने ताभ्यां तस्याः साधनेपि न स्थाणौ ताभ्यां तत्साधनसंभव इति न चलनप्रतीतिप्रसञ्जनावकाश इति गूढाशयः पूर्ववादी शङ्कते अथेति ॥ औत्सर्गिको न्याय इति । प्रकृतसाध्याभिमतक्रियाव्याप्यतावच्छेदकाभिमतधर्मावच्छिन्नसंयोगविभागसमवधाने तद्धर्मावच्छिन्नसमवहितेरावश्यकत्वादिति भावः । सर्वस्य स्थाणुश्येनसंयोगविभागदेशान्तरसंयोगविभागरूपस्य । एतावती उपयोगांशेनापि घटिता । अलौकिकं लोकावगतमर्यादामतिक्रान्तम् । अकार्येति । रसेन रूपानुमान इत्यर्थः ।

मु०—नन्वीश्वरानुमानेऽपि अनेकेश्वरकल्पना एवं सति स्यात् । न स्यात् । वैषम्यात् । कार्यत्वं हि क्षित्यादीनां कर्तृत्वमात्रमवगमयत्तदेकत्वानेकत्वयोरुदासीनमेव । ततस्तदनेकत्वशङ्कायां कल्पनागौरवपराहतायामेकत्वे पर्यवस्यति । इह तु संयोगविभागलक्षणेन कार्येण स्थाणावेव कर्मण्यनुमिते कथं कल्पनागौरवेण तदपनयनम् । अथोच्येत । अन्यथाऽप्युपपत्तेर्न स्थाणौ कर्मानुमानं, न चायमर्थापत्तिदोषो नानुमानस्येति वाच्यम् । अन्यथाऽप्युपपत्तिशङ्कायामनुमानेऽपि व्याप्तिसन्देहापत्तेरिति, तदनुपपन्नम् । अत्र हि स्थाणौ प्रतीतौ संयोगविभागावकारणकावेव स्यातामिति वा शङ्कनीयम् । श्येनगतेनैव कर्मणा भवेतामिति वा । नाद्यः, व्याहतायाः शङ्काया अनुत्थानात् । न द्वितीयः, तत्तदवयवगतपरित्यागेनान्यगतस्य कारणतायाः क्वाप्यनुपलब्धत्वेन निर्मूलायाः शङ्काया अनुदयात् । कर्मैव तथा विधमुपलब्धमिति चेन्न । तस्येदानीं कल्प्यमानत्वात् । प्रत्यक्षकर्मवादे तु नायं दोषः । प्रतिपन्नतत्स्वभावानुसरणसंभवात् । किञ्च संयोगादिना क्रियानुमाने यावत्सत्त्वं चलतिप्रत्ययप्रसङ्गः । संयोगेन क्रियाविनाशान्नेति चेन्न । क्रियानाशस्याप्यप्रत्यक्षतावादे दुरवबोधत्वात् । न हि कार्यजन्म कारणविनाशेन व्याप्तम् । येन संयोगोत्पत्त्या कर्मविनाशोऽ-

नुमीयेत । पटोत्पत्तावपि तन्तुसंयोगादेरविनाशात् । नापि संयोगजननं क्वापि कर्मविनाशाऽविनाभूतमनुभूतम् । कर्मावस्थाने सदा संयोगाद्युदयसमासत्तिरिति चेत् । तत्किं यावत् कारणं तावत् कार्यान्तरजननम् । मा हि भूत् यावत्तन्तुसंयोगसद्भावं पटपरम्परोत्पादः । यावत्कर्मसद्भावं संयोगोत्पादस्तु न निश्चितः । अपि चात्प्रत्यक्षे व्योम्नि संयोगविभागावपि अप्रत्यक्षाविति पतति पतत्री गगन इति प्रत्ययो न स्यात् । वियति विततालोकावयविनि बहुविहगविभागसंयोगनिबन्धनोऽसौ प्रत्यय इति चेत् । तथाऽपि दीपिकाऽऽलोकगतिप्रतीतेरशक्यत्वापरिहारात् ।

**शे०— एवं सतीति ।** कल्पनागौरवस्यादूषणत्व इत्यर्थः, न तु प्रमाणसिद्धेऽर्थेऽदूषणत्व इत्यर्थः । कर्त्रनेकत्वस्य प्रमाणासिद्धत्वादिति ज्ञेयम् । यद्वा कर्त्रनेकत्वमपि प्रमाणसिद्धमेव विचित्रकार्यस्य प्रासादादेरनेकर्तृकत्वदर्शनादिति शङ्कितुर्हृदयम् ॥ **अन्यथाऽपीति ।** स्थाणुकर्मणा विनाऽपीत्यर्थः ॥ **अनुत्थानादिति ।** व्यघातावधित्वादाशङ्काया इति भावः ॥ **तत्तदवयवगतेति ।** स च तदवयवश्च तत्तदवयवौ तद्गतपरित्यागेनेत्यर्थः । कार्यं हि यत्राश्रये दृश्यते, तद्गतस्य वा तदवयवगतस्य वा, असमवायिकारणत्वं वाच्यम् । तन्तुगततया दृश्यमाने कार्ये पटे, तद्गतस्य तन्तुसंयोगस्य पटगततया दृश्यमानकार्ये तद्रूपे पटावयवतन्तुगतरूपस्य च असमवायिकारणतादर्शनात् । न त्वन्यगतस्येति कथं श्येनकर्मणा स्थाणावगतेन तदवयवागतेन स्थाणौ संयोगाद्युत्पत्तिरिति भावः । न च संयोगादेर्द्विष्ठत्वपक्षे श्येनकर्मापि कार्याश्रयगतमेवेति वाच्यम् । परत्रारम्भकत्वस्य क्वाप्यदृष्टत्वेन श्येनकर्मणा श्येने संयोगादिजननसंभवेऽपि, स्थाणौ तज्जननासम्भवादित्यत्र तात्पर्यात् । अत एव परत्रारम्भकत्वमपि कुतो न स्यादित्युत्तरत्र तथैव वक्ष्यतीति ध्येयम् ॥ **तथाविधमिति ।** परत्रारम्भकमित्यर्थः ॥ **तस्येति ।** परत्रारम्भकत्वस्येर्थः । कथं तर्हि कर्मप्रत्यक्षत्वपक्षेऽपि श्येनकर्मणः परत्रारम्भकत्वमित्यत आह **प्रत्यक्षेति ।**

ननु संयोगोत्पत्त्यनन्तरं क्रियाया नष्टत्वान्न यावत्संयोगादिसत्त्वं चलतिप्रत्ययप्रसङ्ग इत्याशङ्कते **संयोगेनेति ।** ननु संयोगोत्पत्त्यैव कर्मविनाशानुमानान्न तस्य दुरवबोधत्वमित्यतः किमत्र 'यत्र कार्यजन्म, तत्र कारणविनाशः' इति सामान्यव्याप्तिरभिमता, किं वा यत्र संयोगजन्म 'तत्र तत्कारणकर्मविनाशः' इति विशेषव्याप्तिरिति विकल्पं मनसि निधायाद्यं व्यभिचारेण दूषयति **न हीति ।** द्वितीयं दूषयति **नापीति ।** दृष्टान्ताभावादिति भावः । किमत्र यावत्कालं कारणं, तावत्कालं कार्यान्तरजननम् इति सामान्यव्याप्तिरभिमता, किं वा यावत्कालं कर्मरूपकारणं तावत्कालं संयोगादिरूपकार्योत्पाद, इति विशेषव्याप्तिरभिमतेति विकल्पं मनसि निधायाद्यं निराचष्टे **तत्किमिति ।** कारणावस्थानावधि-

कार्योत्पादाभ्युपगमे बाधकमाह **मा हि भूदिति** । न भवति हीत्यर्थः । तथा च व्यभिचारान्न सामान्यव्याप्तिराश्रयितुं युक्तेति भावः । द्वितीयं दूषयति **यावत्कर्मेति** । दृष्टान्ताभावान्न विशेषव्याप्तिरिति भावः ॥ **अप्रत्यक्ष इति** । इदं च पक्षिगगनसंयोगस्य अप्रत्यक्षतोपपादनाय विशेषणम् । तत्तश्च गगनस्याप्रत्यक्षत्वाद्गगनपक्षिसंयोगस्य न प्रत्यक्षत्वं ससंबन्धिकपदार्थप्रत्यक्षस्य, संबन्धितावच्छेदकप्रकारकसंबन्धिद्वयप्रत्यक्षसाध्यत्वादित्युक्तं भवति ॥ **अप्रत्यक्षाविति** । तथा चानुमापकसंयोगविभागरूपलिङ्गज्ञानाभावान्न तत्र गत्यनुमानं स्यादित्यर्थः । ततोऽपि किमित्यत आह **पततीति** । अत्रादौ ततश्चेति पूरणीयम् । तस्य च संयोगविभागानुमितकर्मालम्बनत्वासंभवादित्यर्थः । न तत्र पक्षिगगनसंयोगविभागयोरनुमापकत्वं ब्रूमः, येनोक्तरीत्या लिङ्गज्ञानाभावाद्गत्यनुमानं न स्यात्किंतु वियति वितताऽलोकस्य पक्षिसंयोगविभागावेव तत्रानुमापकतयेष्येते । तयोश्च प्रत्यक्षतया तत्संयोगादेरपि प्रत्यक्षत्वसंभवेन लिङ्गज्ञानसत्त्वाद्गत्यनुमानमनाकुलमेवेति अनुमितकर्मालम्बनत्वमेव पतति पतत्री गगन इति प्रत्ययस्य भविष्यतीत्याशङ्कते **वियतीति** । अवयविनीत्यतःपरं पतत्रिण इति शेषः । एकैकसंयोगविभागव्यक्तेरप्रत्यक्षत्वेऽपि सेनावनादिवत् तत्समुदायस्य प्रत्यक्षत्वमिति भावेन बहुत्वेन संयोगविभागयोर्विशेषणं कृतम् । **विभागसंमोगनिबन्धनोऽसौ प्रत्यय इति** । संयोगाद्यनुमितकर्मालम्बनः पतति पतत्री गगन इति प्रत्यय इत्यर्थः ॥ **तथाऽपीति** । वियति विततालोकावयविपक्षिसंयोगविभागावाश्रित्य पतति पतत्री गगन इति प्रतीतिनिर्वाहेऽपीत्यर्थः । दीपिकालोकगतिप्रतीते· गगने दीपिकालोको गच्छतीति प्रतीतेरित्यर्थः । तत्र दीपिकालोकगगनसंयोगविभागयोरप्रत्यक्षत्वान्न गत्यनुमापकत्वं वक्तुं युक्तम् । नापि पतति पतत्री गगन इत्यादाविव वियति विततालोकावयविनो यौ दीपिकालोकसंयोगविभागौ तयोस्तत्रालोकान्तराभावात् । न च तत्रापि वियति विततदीपिकालोकावयवस्य दीपिकालोकावयविना सह यौ संयोगविभागौ तयोरेव तत्र गमकत्वमिति वाच्यम् । अवयवावयविनोः संयोगविभागयोरसत्त्वात् । सत्त्वेऽपि वा इहालोकत्रसरेणुर्गच्छतीत्यादावगतिरेव, तत्र वियति विततालोकद्व्यणुकस्य त्रसरेणुसंयोगविभागयोः प्रत्यक्षाप्रत्यक्षधर्मतयाऽप्रत्यक्षत्वात् । तथा च तत्र लिङ्गज्ञानाभावेन गत्यनुमानायोगान्न गच्छतीतिप्रत्ययस्यानुमितकर्मालम्बनत्वं युक्तमिति भावः ।

स०— **नन्वीश्वरानुमानेऽपीति** । कल्पनागौरवस्यादूषणत्वाङ्गीकार इत्येतावन्मात्रमेव एवमित्यस्यार्थः । ननु प्रमाणसिद्धेऽर्थे दूषणत्वमिति कर्त्रनेकत्वस्य प्रमाणासिद्धत्वादिति ध्येयम् । अथवा कर्त्रनेकत्वमपि प्रमाणसिद्धमिति शङ्कितुर्भ्रान्तिः । **तत्तदवयवगतपरित्यागेनेति** । स च तदवयवश्चेति तत्तदवयवौ तदुभयगतपरित्यागेनेत्यर्थः । कार्यं यत्राश्रये दृश्यते तद्गतस्य वा तदवयवगतस्य वाऽसमवायिकारणत्वं वाच्यं नान्यगतस्येत्यर्थः । न च संयोगस्य द्विष्ठत्वात् श्येनकर्मापि कार्याश्रयगतमेवेति

वाच्यम् । परत्रारम्भकत्वस्य क्वाप्यदृष्टत्वेन श्येनकर्मणा श्येनसंयोगजननसंभवेऽपि स्थाणौ संयोगजननासंभवादिति भावः ॥ **कर्मैवेति** । अन्यगतमपि कर्म संयोगादिकारणं दृष्टमित्यर्थः । ननु कर्मप्रत्यक्षतावादेऽपि श्येननिष्ठकर्मण एव स्थाणुनिष्ठसंयोगविभागकारणत्वेनाङ्गीकृतत्वात् तत्तदवयवगतपरित्यागेनान्यगतस्य कारणतायाः क्वापि नोपलब्धेरिति कथमित्यत आह **प्रत्यक्षकर्मवाद इति** । ननु संयोगोत्पत्त्यनन्तरमेव क्रियाया नष्टत्वात् न यावत्संयोगादि सत्त्वं चलतिप्रत्ययस्येत्यत आह **न हीति** । ननूक्तव्यभिचारेण सामान्यतः कार्यजन्मकारणविनाशयोर्व्याप्त्यभावेऽपि विशेषाकारेण संयोगलक्षणकार्यजननं कर्मरूपकारणविनाशाविनाभूतमित्युच्यतेऽतो नोक्तव्यभिचार इत्यत आह **नापि संयोगजननमिति** । दृष्टान्ताभावान्नेयमपि व्याप्तिरिति भावः । कारणावस्थानावधिककार्योत्पादाभ्युपगमे बाधकमाह **मा हि भूदिति** । दृश्यते तावत्कर्मावस्थानावधि संयोगसद्भावः, तेन सति कारणे कार्योत्पत्तिसमासत्तिः स्यादेवेति विशेषव्याप्त्यभिधाने नोक्तदोष इत्यत आह **यावत्कर्मसद्भावमिति** । पूर्व एवाभिप्रायः ॥ **अपि चेति** । अनुमापकस्याप्रत्यक्षत्वात् न तत्रेन्द्रियस्यैक्यापारौ(?) यक्षप इत्यर्थः । **वियति वितरालोके इति** । तथा च गगनपक्षिसंयोगादेरप्रत्यक्षत्वादेवानुमापकत्वाभावेऽपि आलोकपक्षिसंयोगादेः प्रत्यक्षत्वेनानुमापकत्वं भविष्यतीति भावः ॥ **तथाऽपीति** । आलोक अत्र देशे गच्छतीति प्रत्ययः नालोकावयवसमूहः विभागादिनिमित्तक आलोकान्तराभावात् । तदवयवाश्रयणेऽपीहालोकत्रसरेणुर्गच्छति इत्यादि नोपपद्यते इत्यर्थः । केचित्तु अन्धकार इति शेषः । तथा च तत्रालोकान्तराभावेनान्धकारस्य च त्वन्मते द्रव्यत्वेनानन्यगत्या गगनदीपिकालोकसंयोगादिरेवानुमापको वाच्यः । स चाप्रत्यक्ष इति तत्र दीपिकालोकगतिप्रतीतिरशक्या स्यादिति भाव इत्याहुः ।

प०— श्येनस्थाणुसंयोगादौ स्थाणुकर्मणा न व्याप्तिरिति शङ्कामनूद्य निराह **अथोच्येतेति** ॥ **तत्तदिति** । कार्याधिकरणमत्र तत्पदेन परामृश्यते । तद्गतस्य कार्याश्रयगतस्य तदवयवगतस्य कार्याश्रयावयवगतस्य च परित्यागेनेत्यर्थः । तन्तुषु विद्यमानः पटः तन्तुगतसंयोगासमवायिकारणको दृष्टः । पटगतरूपादिकार्यं पटावयवतन्तुगतरूपादिकारणकं दृष्टम् । पटगतद्विकाद्यपि पटगतैकत्वादिकारणकं दृष्टमितीहापि स्थाणुगतः संयोगः स्थाणुकर्मणा तदवयवकर्मणा वा स्यान्नत्वन्यगतेनेति भावः । अयं च दोषस्तवापि तुल्य इत्यत आह **प्रत्यक्षकर्मेति** । संयोगजन्मना कर्मनाशोऽनुमीयत इत्यतः किं कार्यजन्म स्वसमवायिकारणविनाशकमिति व्याप्त्या संयोगजन्मना कर्मनाशोऽनुमीयते अथ संयोगजन्म स्वहेतुकर्मनाशकमिति व्याप्त्या । आद्यं निराह **नहीति** । अन्त्यं निराह **नापीति** । दृष्टान्ताभावान्नेत्थमपि व्याप्तिरिति भावः । सदासंयोगविभागोदयानापत्तिः कर्मनाशे लिंगमस्तु व्याप्तिश्च व्यतिरेकयोरिति भावेन शङ्कते **कर्मावस्थान इति** । अत्रापि किं पूर्ववत् सामान्यतो व्याप्तिः

उत विशिष्य । आद्यमाक्षिपति **तत्किमिति** । किमित्याक्षेपे । यावत्कारणसत्त्वं कार्यान्तरजननं नेत्यर्थः । कुतो नेत्यत आह **मा हीति** । यावत्तन्तुसंयोगसद्भावमित्यव्ययीभावः । यावति काले तंतुसंयोगसद्भावः तावत्यपि काले पटपरंपरोत्पादो हि यस्मान्मा भूत्तस्मादिति योजना । अन्यथा सोपि स्यादेवेति भावः । द्वितीयं निराह **यावदिति** ॥ **न निश्चित इति** । कर्मणोऽप्रत्यक्षत्वेन संप्रतिपन्नदृष्टान्ताभावादिति भावः ॥ **असौ प्रत्यय इति** । अनुमानाद्युपनीते गगने पतति पतत्रीति प्रत्यय इत्यर्थः ॥ **दीपिकेति** । प्रदीपे नीते सति तदालोकस्यापि गगने गतिर्दृश्यते । तत्प्रतीतिरशक्या स्यात् । आलोकान्तरसंयोगस्यानुपलम्भान्महान्धकारे तदभावाच्चेति भावः ।

या० — **तत्तदवयवगतेति** । स च तदवयवश्च तत्तदवयवौ । तदुभयगतपरित्यागेनेत्यर्थः । कार्यं हि यत्राश्रये दृश्यते तद्गतस्य वा, तदवयवगतस्य वा असमवायिकारणत्वं वाच्यं नान्यगतस्य । नच संयोगादेर्द्विष्ठत्वात् श्येनकर्मापि कार्याश्रयगतमेवेति वाच्यम् । परत्रारम्भकत्वस्य क्वाप्यदृष्टत्वेन श्येनकर्मण । श्येनसंयोगादिजननसम्भवेऽपि, स्थाणौ तज्जननासम्भवादित्याशयात् ॥ **तथाविधमिति** । परत्रारम्भकमित्यर्थः ॥ **तस्येति** । परत्रारम्भकत्वस्येत्यर्थः । ननूक्तव्यभिचारेण सामान्यतः कार्यजन्मनः कारणविनाशव्याप्त्यभावेऽपि विशेषाकारेण संयोगलक्षणकार्यजननं कर्मरूपकारणविनाशाऽविनाभूतमित्युच्यते अतो नोक्तव्यभिचार इत्यत आह **नापि संयोगेति** । दृष्टान्ताभावादिति भावः । यावत्कारणं तावत्कार्यान्तरजननमिति सामान्यतो व्याप्त्यभावेऽपि यावत्कर्मरूपं कारणं तावत्संयोगादिरूपकार्योत्पाद इति विशेषतो व्याप्त्यभिधाने नोक्तदोष इत्यत आह **यावत्कर्मेति** । पूर्व एवाभिप्रायः ॥ **वियति वितततेति** । तथा च तत्रालोकपक्षिसंयोगादेरेवानुमापकत्वं न गगनपक्षिसंयोगादेरिति भावः ॥ **तथाऽपीति** । अन्धकार इति शेषः । तथाच तत्रालोकान्तराभावेनान्धकारस्य च त्वन्मते अद्रव्यत्वेनानन्यगत्या गगनदीपिकालोकसंयोग एवानुमापको वाच्यः । स च प्रत्यक्ष इति तत्र दीपिकालोकगतिप्रतीतिरशक्या स्यादिति भावः ॥

श्री० — **स्यादिति** । अनुमानरूपप्रमाणसिद्धत्वेन गौरवभयाभावादित्याशयः ॥ **अन्यथाऽपीति** । श्येसंयोगादिरूपकार्यस्य स्थाणुकर्म विनाऽप्युपपत्तेरित्यर्थः ॥ **व्याप्तीति** । अर्थापत्तौ यदाऽन्यथाऽप्युपपत्तिः तदाऽनुमानेऽपि संयोगादिरूपं कार्यं साध्यभूतस्थाणुक्रियां विनाऽपि सम्भवतीति हेतोः अन्यथासिद्धिशङ्कया व्याप्तिसन्देहापत्तेरित्यर्थः ॥ **तत्तदवयवेति** । यथा पटरूपं कार्यं यत्राश्रये तन्तौ दृश्यते, तद्गतस्यैव तन्तुद्वयसंयोगस्य तत्प्रत्यसमवायिकारणत्वं दृष्टम् । तथा पटगतरूपाख्यं कार्यं यत्राश्रये पटे दृश्यते, तदवयवभूततन्तुगतस्यैव रूपस्य तत्प्रत्यसमवायिकारणत्वं दृष्टम् । तथाच श्येनकर्मणैव स्थाणौ प्रतीतौ संयोगविभागौ भवेतामित्यङ्गीकारेऽसमवायिकारणभूतश्येनकर्मणः परत्रारम्भकत्वं स्यात् ।

असमवायिकारणस्य स्वाश्रये स्वाश्रयसमवेते वा कार्यजनकस्य दृष्टत्वात् । श्येनकर्मणा च स्थाणौ संयोगादिजननं न युक्तम् । स्थाणोः संयोगं प्रति श्येनकर्मणः स्वाश्रयस्वाश्रयावयवसमवेतत्वयोरभावादित्यर्थः ॥ **निर्मूलायाः शङ्काया इति** । स्थाणौ प्रतीतौ संयोगविभागौ श्येनकर्मणैव भवेतामिति शङ्काया इत्यर्थः । ननु न निर्मूलेयं शङ्का । दृष्टत्वादित्याशङ्कते **कर्मैवेति** । स्वाश्रयस्वाश्रयसमवेतपरित्यागेन परत्रारम्भकं श्येनकर्मैवोपलब्धमित्यर्थः ॥ **तस्येदानीमिति** । श्येनकर्मणः परत्रारम्भकस्येदानीं कल्प्यमानत्वेन विप्रतिपन्नत्वादित्यर्थः । कर्मणः प्रत्यक्षत्वपक्षे तु नायं दोष इत्याह **प्रत्यक्षकर्मवादे त्विति** । कर्मस्वभावो यथा प्रतिपन्नः तथा तदनुसरणसम्भवात् । प्रत्यक्षेण च श्येनकर्मणा श्येन एव संयोगविभागौ प्रतीयेते न स्थाणौ । श्येनश्चलतीति चलनं च श्येन एव प्रतीयते न स्थाणौ । अतो न कोऽपि दोष इति भावः । न च वाच्यं संयोगादेर्द्विष्ठत्वेन श्येनकर्मजन्यसंयोगादेः स्थाण्वादावपि सत्त्वेन परत्रारम्भकत्वं प्राप्तमेवेति । स्यादयं दोषः संयोगादेर्द्विष्ठत्ववादे, नास्माकम् । अस्माभिः स्थाणुप्रतियोगिकसंयोगादेः श्येननिष्ठत्वस्यैवाङ्गीकारेण स्थाणुगतत्वाभावादित्यवधेयम् ॥ **यावत्तत्सत्त्वमिति** । अनुमापकसंयोगादिकं यावत्कालपर्यन्तमस्ति तावत्कालपर्यन्तमपि चलनं स्यात् । तथाच यावत्तत्सत्त्वं चलतीति प्रत्ययप्रसङ्ग इत्यर्थः । कार्योत्पत्त्या तत्कारणविनाशोऽनुमीयत इति चेत् तत्राह **न हीति** । व्याप्त्यभावमेव दर्शयति **पटोत्पत्ताविति** । ननु सर्वकार्योत्पत्तेः कारणविनाशव्याप्तत्वाभावेऽपि संयोगरूपकार्योत्पत्तिः तत्कारणकर्मविनाशाऽविनाभूतेति चेत्तत्राह **नापीति** । अविनाभावानङ्गीकारे बाधकं प्रमाणमाशङ्कते **कर्मेति** । संयोगोत्पत्त्या कर्मनाशानङ्गीकार इत्यर्थः । **समासत्तिः** प्राप्तिः ॥ **संयोगेति** । पक्षिसंयोगेत्यर्थः ।

**च०— एकत्वे पर्यवस्यतीति** । वह्नित्वावच्छिन्ननिरूपितव्याप्त्यवच्छिन्नधूमप्रकारताशालिपरामर्शदशायामभौमवह्निशून्यः पर्वत इत्यादिबाधप्रतिसन्धानदशायां भौमवन्हित्वादिनेव तादृशपरामर्शदशायामेव वन्हेर्महानसीयत्वे लाघवमिति लाघवप्रतिसन्धानसमवधाने व्यापकतानवच्छेदकमहानसीयवन्हित्वादिरूपेणापि अनुमितौ व्यापकभानोपगतेः तत्रान्तरसिद्धत्वादिति भावः ॥ **तत्तदवयवगतेति** । स च तदवयवश्च तत्तदवयवौ तद्गतपरित्यागेनेत्यर्थः । तन्त्वादौ पटादिलक्षणं कार्यं तन्त्वादिगततन्त्वन्तरादिसंयोगादिलक्षणसमवायिकारणं पटादौ दृश्यमानरूपादिलक्षणं कार्यं पटावयवभूततन्तुगतरूपादिलक्षणमसमवायिकारणमपेक्षते न त्वेतदन्यतरभिन्नगतमिति दर्शनेन श्येनकर्मणा श्येने संयोगादिजननसंभवेऽपि स्थाणौ तज्जननासंभवादिति भावः । **तथाविधं** परत्रारम्भकम् । **दुरवबोधत्वादिति** । अतीन्द्रियप्रतियोगिकाभावस्याप्यतीन्द्रियत्वादिति भावः ॥ **अनुभूतमिति** । निदर्शनाभावेन विशेषव्याप्तेरपि दुर्ग्रहत्वादिति भावः ॥ **मा हि भूदिति** । फलोपधानस्य सामग्रीनियन्त्रिततया तद्घटकतत्पटव्यक्ति-

प्रागभावाभावेन तद्व्यक्तेः व्यक्त्यन्तरासमवायिकारणाद्यभावेन तस्य चोत्पादायोगादिति भावः । **न निश्चित इति** । निदर्शनाभावेन विशेषव्याप्तिरपि दुर्ग्रहेति भावः । विशेष्यविधया संबन्धावगाहिप्रत्यक्षे प्रतियोग्यनुयोगितावच्छेदकप्रकारकप्रत्यक्षयोः हेतुतया पतत्रिप्रतियोगिकसंयोगानुयोगितावच्छेदकीभूतगगनत्वप्रकारकप्रत्यक्षविरहेण पतत्रिक्रियानुमापकगगनपतत्रिसंयोगस्यैव अप्रत्यक्षत्वेन हेत्वसिद्ध्या न तेन पतत्रिक्रियानुमापनं सङ्गच्छत इत्याह **अपि चेति** । संयोगाद्यन्वयिनिरूपितत्वार्थिका व्योमपदोत्तरतृतीया गगनतलविततसाक्षात्क्रियमाणबहुलालोकावयवानुयोगिकपतत्रिप्रतियोगिकसंयोगादिभानरूपलिङ्गपरामर्शनिबन्धनैव पतत्रिक्रियानुमितिरुपेयत इति न क्षतिरित्याशङ्कते **वियतीति** ॥ **बहुसंयोगेति** । पतत्रिण इत्यादिः । पूर्वोक्तदिशा समुदायस्य हेतुतां ध्वनयितुं बहुत्वेन विशिनष्टि **दीपिकेत्यादि** । वियतीत्यनुषञ्जनीयम् । उक्तदिशा गगनदीपिकालोकसंयोगस्याप्रत्यक्षतया आलोकान्तराभावेन तेन दीपिकालोकस्य संयोगोऽनुमापक इत्यस्यापि दुर्वचतयोक्ततादवस्थ्यादित्यर्थः ।

**सु० — किं चान्धकारे नयनादि(परि)स्पन्दप्रतिभासो दुघटः स्यात् । यदि च मार्तण्डमण्डलस्येव देवदत्तस्यापि गतिरनुमेयास्यात् तदोभयत्रापि चलतिप्रत्ययः स्यात् । न वा कुत्रचित् । विशेषकारणाभावात् । अपि च कर्मकारणादेव संयोगविभागोत्पत्त्युपपत्तौ किं मध्ये कर्मकल्पनयेत्यनवक्लृप्तिरेव कर्मणः । न संयोगाद्युत्पत्तिः कर्मकारणात्संभवति । तस्य संयोगविशेषादेः स्वाश्रये तत्समवेते वा कार्यारम्भकत्वस्यान्यत्र निश्चितत्वात् । शरीरात्मसंयोगो हि शरीरकर्मकारणम् । कथं तस्माच्छरीराकाशदेशसंयोगविभागौ भवतः । एवमन्यत्रापि द्रष्टव्यमिति । मैवम् । तथा सति संयोगविशेषादेः कर्मकारणत्वस्याप्यभावप्रसङ्गात् । न हि परस्परं तन्तुसंयोगस्य क्रियाहेतुत्वमस्ति । संयोगमात्रस्य तदभावेऽपि तद्विशेषस्य स्यादिति चेत्, तर्हि तथैव परत्रारंभकत्वमपि कुतो न स्यात् । किं चैवं सति कर्मणोऽपि कथमाश्रयाश्रयिसमवेतपरित्यागेनान्यत्र संयोगादिजनकत्वम् । तस्य तथाविधकार्यगम्यस्य तथैव प्रमितत्वादिति चेत् । कर्मकारणस्यैवायमवान्तरभेदमाश्रित्य स्वभावः कल्प्यताम् । धर्मकल्पनात्खलु धर्मिकल्पना गरीयसी । तस्मात्प्रत्यक्षाश्रितं कर्म प्रत्यक्षमेवेति स्थितम् ॥१-२-२॥**

शे० — **किञ्चेति** । अत्र नयनपदेन गोलकमेव विवक्षितं, नेन्द्रियम् । तस्यातीन्द्रियत्वेन तदाश्रितपरिस्पन्दस्यापि अतीन्द्रियत्वादिति ध्येयम् । आदिपदेन भुजादेर्ग्रहणम् ॥ **दुर्घटः स्यादिति** । नयनादेर्देशान्तरसंयोगविभागयोरन्धकारेऽनुपलब्ध्या गत्यनुमानासंभवादिति भावः । प्रतिकूलतर्कपराहतं

१. 'मार्तण्ड' इत्येव सत्यधर्मीयपाठः, विकर्तनार्कमार्तण्ड' इत्यमरश्च ।

च कर्माप्रत्यक्षत्वानुमानमित्याह **यदि चेति** ॥ **गतिरनुमीयेतेति** । पूर्वदेशवियोगोत्तरदेशप्राप्तिपरम्परयेति शेषः ॥ **उभयत्रापीति** । देवदत्त इव आदित्येऽपि चलतिप्रत्ययः स्यादित्यर्थः ॥ **न वेति** । आदित्य इव देवदत्तेऽपि चलतिप्रत्ययो न स्यादित्यर्थः । ननु कर्मणः प्रत्यक्षतावाद इवानुमेयतावादेऽपि आदित्यदेवदत्तयोश्चलतिप्रत्ययाप्रत्ययव्यवस्था किं न स्यादित्यतो दूरादिदोषाभावेन देवदत्तगतेश्चलतीति प्रत्यक्षोपलम्भसंभवेऽपि मार्तण्डमण्डलस्य दूरस्थत्वेन तत्र चलतीतिप्रत्यक्षासंभवाद्युज्येते तत्र चलतीतिप्रत्ययाप्रत्ययौ । अनुमेयतापक्षे चोभयत्र गत्यनुमानेनानुमितकर्मालम्बनश्चलतीतिप्रत्ययो न व्यवस्थामर्हतीत्याशयेनाह **विशेषेति** ॥ **अपि चेति** । कर्मातीन्द्रियत्व इति शेषः । 'तद्धेतोरेवास्तु हेतुत्वं किं तेने'ति न्यायादिति भावः । ननु न कर्मकारणस्य संयोगादिकारणत्वं घटते, येन कर्मणोऽनवक्लृप्तिर्भवेदिति शङ्कते **नेति** । किं तत्कर्मकारणं, कुतश्च तस्मात्संयोगाद्यनुत्पत्तिरित्यत आह **तस्येति** । कर्मकारणस्येत्यर्थः । संयोगविशेषादेरित्यादिपदेन वेगगुरुत्वादेर्ग्रहणम् ॥ **अन्यत्रेति** । कर्मकारणतयाऽभिमतसंयोगाद्यतिरिक्तकार्यारम्भकतन्तुसंयोगादिष्वित्यर्थः । ततश्च कर्मकारणतयाऽभिमतं संयोगविशेषादिकं, न परत्र कार्यारम्भकं, संयोगविशेषादिरूपत्वात् तन्तुसंयोगादिवत् इति प्रयोगोऽत्राभिमत इति ध्येयम् । दार्ष्टान्तिकमुपपादयति **शरीरात्मेति** ॥ **कथं तस्मादिति** । आकाशदेशस्य कर्मसाध्यसंयोगाश्रयस्य, कर्मजनकशरीरात्मसंयोगाश्रयत्व-तत्समवेतत्वयोरभावादिति भावः । आदिपदोपात्तवेगादावप्येतद्दर्शयति **एवमन्यत्रापीति** । वेगगुरुत्वद्रवत्वानि हि शरफलजलेषु कर्मकारणानि । कथं तेभ्यः शरफलजलानामाकाशदेशसंयोगाद्युत्पत्तिः । कर्मसाध्यसंयोगाद्याश्रयस्याकाशदेशस्य कर्मजनकवेगाद्याश्रयत्व-तत्समवेतत्वयोरभावादिति द्रष्टव्यमित्यर्थः ॥ **तथा च सतीति** । अन्यत्र दृष्टानुसारेणैव कल्पनीयत्व इत्यर्थः ॥ **परत्रेति** । आश्रयादाश्रयसमेवताच्चान्यत्रेत्यर्थः ॥ **किंचेति** । यदि कर्मकारणस्य न परत्र कार्यजनकत्वं तर्हि द्वयेनसमवेतस्य कर्मणः कथं स्याणौ संयोगादिजनकत्वमित्यर्थः ॥ **अवान्तरभेदमिति** । यथेतरासमवायिकारणेषु परत्र आरम्भकत्वादर्शनेऽपि कर्मणि परत्राम्भकत्वं तदवच्छेदकं च कर्मत्वं तज्जन्यतावच्छेदकं चोत्तरदेशसंयोगत्वादिकमाश्रित्य विशेषतः कल्प्यते । तथा कर्मकारणस्यैव परत्रारम्भकत्वं तन्मात्रवृत्तिधर्मविशेषस्यैव तदवच्छेदकत्वमित्यादि कल्पनीयमित्यर्थः । ननु चोभयथाऽपि कल्पनोपपत्तौ कर्मकारणस्यैवायमवान्तरभेदमाश्रित्ये'त्याद्यवधारणं निर्निबन्धनमित्यत आह **धर्मेति** । प्रत्यक्षद्रव्यवर्तिन्यामित्याद्युपक्रम्योक्तं प्रमेयमुपसंहरति **तस्मादिति** । अनुमेयत्वे कर्मणोऽसत्त्वप्रसङ्गादित्यर्थः । तस्मादन्यत्रापि प्रत्यक्षेणैव क्रियासिद्धेर्युक्तो नित्यत्वानित्यत्वविचार इति स्थितम् ॥ १–२–२ ॥

स० — **किञ्चेति** । नयनस्य देशान्तरविभागसंयोगयोरन्धकारेऽनुपलब्धेरित्यर्थः । अत्र नयनपदेन गोलकमेव विवक्षितम् । नेन्द्रियम् । तत्स्पन्दस्यासन्मतेऽप्यतीन्द्रियत्वेन तत्स्पन्दातीन्द्रियत्वसा-

साकमपि द्(इ)ष्टत्वात् ॥ **यदि चेति** । यदि च पूर्वदेशविभागोत्तरदेशप्राप्तिपरम्परया गतिरनुमीयते तदाऽऽदित्य इव देवदत्तेऽपि चलतीति प्रत्ययो न स्यात् देवदत्त इवादित्येऽपि चलतीति प्रत्ययः स्यात् । न ह्युपलभ्यमानदेशान्तरप्राप्तिरपि मयूखमाली चलतीति कश्चित्प्रत्येति । न च तत्र देशान्तरप्राप्तिः न प्रतीयत एव देशान्तरस्यैवाकाशादेरप्रतीतेरिति वाच्यं, संतमसे खद्योतस्यापि देशान्तरप्राप्तिनिश्चयाभाव-प्रसङ्गात् । तदालोकस्य व्यापकत्वात् । न च वाच्यं खद्योतालोकभागैरेव संयोगविभागाः प्रतीयन्त इति । अंशुमालिनोऽपि तथात्वप्रसङ्गात् । तदालोकस्य व्यापकत्वात् । न तेन संयोगविभागो लभ्यत इति चेत् अव्यापकेनापि खद्योतालोकेन तस्य तौ न लक्ष्येते घनोदकवत् युगपत्संचारितत्वात् अवयवावयवितया संयोगविभागासंभवाच्च देशान्तरस्यालोकादेशा(?)नुपलब्धिरुभयत्रापि तुल्येति । न च मार्तण्ड मण्डलस्य प्रत्यक्षत्वात् तत्क्रियाया अपि प्रत्यक्षत्वमेव प्रत्यक्षद्रव्यवर्तिन्यां प्रत्यक्षत्वमेवेत्युपक्रमोपसहाराभ्यां तथा अवगमात् ॥ तथा च नायं दृष्टान्त इति वाच्यम् । प्रत्यक्षद्रव्यवर्तिन्या अपि मार्तण्डमण्डलक्रियायाः दूरस्थ-त्वादिदोषेणाप्रत्यक्षत्वोपपत्तेः । दोषाभाव एव च प्रत्यक्षद्रव्यवर्तिक्रियाया प्रत्यक्षत्वमुपक्रमोपसंहारयोरभिमतं इत्याहुः । केचित्तु मार्तण्डमण्डलगतिरपि एकत्रैवानुमातुं शक्यते चेत् अनुमानमात्रवेद्यतानङ्गीकारात् । मण्डलसमीपवर्तिभिः तद्गतेः प्रत्यक्षत एवोपलम्भात् । अस्माकं तु दूरस्थतया तद्गतस्पष्टप्रतिभासा-भावात् । आगमादेव तदीयप्रत्यक्षावगतिसंभवाच्च । तदिदमुक्तं प्राक् 'प्रत्यक्षकर्मवादे तु नायं दोषः ।

---

प्रतिपन्नतत्स्वभावानुसरणसंभवात्' इति । ननु न कारणस्य संयोगादिकारणत्वं घटते (कल्पनात्?) इति शङ्कते **न संयोगेति** । तस्येत्यनन्तरं संयोगविशेषादिरूपत्वादिति हेतुः पूरणीयः । संयोगविशेषादेरित्यादिपदेन वेगगुरुत्वादीनां ग्रहणम् । **अन्यत्रेति** । कर्मकारणतयाऽभिमतसंयोगविभागातिरिक्तकार्यारम्भकसंयोगादि-ष्वित्यर्थः । तथा च पटाद्यसमवायिकारणतयाऽभिमतेषु तन्तुसंयोगादिषु स्वाश्रयतत्समवेतान्यतरान्य-समवेतकार्यारम्भकत्वस्यादर्शनात् प्रकृतकर्मकारणतयाऽभिमतस्य संयोगविशेषादेरपि न कर्मसाध्यो-त्तरदेशे संयोगादिजनकत्वमिति भावः । एतदेव दर्शयति **शरीरात्मसंयोगो हीत्यादिना** । **कथं तस्मादिति** । पटादिजनकसंयोगान्तरे जनकत्वमित्याश्रय एव हस्ततनु(?)संयोगे च हस्तसमवेते काय एव कार्यारम्भकत्वस्य दर्शनेन परत्रारम्भकत्वस्य कुत्रापि संयोगेऽदर्शनादिति भावः । **एवमन्यत्रापीति** । वेगगुरुत्वद्रवत्वानि हि शरफलजलेषु कर्मकारणानि कथं तेभ्यः शरफलजलानामाकाशदेशसंयोगविभागो-त्पत्तेः(त्तिः?) । अवयविवेगादिजनकेषु अवयववेगादिषु स्वाश्रयसमवेत एव कार्यारम्भकत्वस्य स्पष्टत्वेन परत्वारम्भकत्वस्य क्वचिदपि वेगादावभावादिति द्रष्टव्यमित्यर्थः । परिहरति **मैवमिति** ॥ **तथा सतीति** । अन्यत्र दृष्टानुसारेण कल्पनीयत्व इत्यर्थः । **परत्वारम्भकत्वमपीति** । आश्रयाश्रयसमवेताच्चान्यत्रेत्यर्थः ॥ **किञ्चेति** । यदि कारणं न परत्रैव कार्यमुपजनयतीति नियमः, 'तदा श्येनसमवेतेन कर्मणा स्थाणु

संयोगाद्युत्पत्तिन स्यादित्यर्थः । **अवान्तरभेदमाश्रित्येति** । यथेतरासमवायिकारणेषु परत्रारम्भकत्वादर्शनेपि कर्मणि परत्रारम्भकत्वं तदवच्छेदकं कर्मत्वं तज्जन्यतावच्छेदकं चोत्तरदेशसंयोगत्वादिकम् आश्रित्य विशेषतः कार्यकारणभावः कल्प्यते तथा कर्मकारणस्यैव परत्रारम्भकत्वं तन्मात्रवृत्तिधर्मविशेषस्यैव तदवच्छेदकमित्यादि कल्पनीयमित्यर्थः ॥ **तस्मादिति** । अनुमेयत्वे कर्मणोऽसत्त्वप्रसङ्गादित्यर्थः ।

**प०**— नन्वन्धकारापगम एव गतिप्रत्यायक इति चेन्न । संयोगादिलिङ्गकत्वक्षतेः । दोषान्तरं चाह **किञ्चेति** । तत्रान्धकारापगमाभावादिति भावः । यद्वा आलोकसंयोगविभागलिङ्गकत्वे दोषान्तराभिधानमेतदिति ज्ञेयम् । तत्र संयोगादेरज्ञानात् । अस्माकं तु तमसो द्रव्यत्वेन तज्ज्ञानेन तत्संयोगानुमानद्वारा तत्प्रतिभास इति भावः । यद्वा नयनादिपरिस्पन्देन पक्ष्मचलनभुजस्फुरणादिग्रहः । तस्य तु मन्मते स्पार्शनत्वादिति भावः । ननु रविबिम्बस्य प्रत्यक्षत्वेऽपि तद्गतकर्मणोऽनुमेयत्ववत् देवदत्तकर्मणोऽप्यनुमेयता स्यादित्यत आह **यदि चेति** । तत्र कर्माप्रत्यक्षता तु दूरस्थत्वदोषवशादेवेति भावः । **उभयत्र** सूर्यमण्डलदेवदत्तयोः । कर्मापलापाऽऽपादनस्य परिहारमाशङ्कते **न संयोगादीति** ॥ **तस्येति** । कर्मकारणस्येत्यर्थः । तत्किमित्यत उक्तं **संयोगादिविशेषस्येति** । नोदनादिरूपसंयोगविशेषस्य वेगगुरुत्वादेश्चेत्यर्थः । संयोगविशेषस्य स्वाश्रये कार्यारंभकत्वं व्यनक्ति **शरीरेति** । तस्य कर्मजन्यत्वात् कार्यारंभकत्वमयुक्तमित्येतद्व्यनक्ति **कथमिति** । भवत इत्यन्वयः । तदर्थं शरीरनिष्ठमात्मसंयोगजन्यं किञ्चित्कर्माख्यं वस्तूपेयमिति भावः । स्वाश्रयसमवेते कार्यारंभकत्वादिकं कुत्रेत्यत आह **एवमन्यत्रापीति** । हस्ततरुसंयोगरूपः कर्मकारणसंयोगो हि हस्तसमवेतकाये तरुसंयोगे कारणम् । कथं तस्मात्कार्याकाशसंयोगविभागौ भवत इति द्रष्टव्यमित्यर्थः । यद्वा अन्यत्रेत्यस्य वेगादिकारणान्तर इत्यर्थः । बाणादौ कर्मजनकस्य वेगादेर्बाणाकाशसंयोगादिजनकत्वं कथमित्यर्थः ॥ **तथा सतीति** । अदर्शनादकारणत्वे सतीत्यर्थः ॥ **परत्रेति** । स्वाश्रयतत्समवेताभ्यामन्यत्रेत्यर्थः । **धर्मिकल्पना** कर्मरूपधर्मिकल्पना । **गरीयसी** तस्माल्लाघवाद्धर्मकल्पनैव युक्तेति भावः ॥ **तस्मादिति** । अप्रत्यक्षत्वे कर्मणोऽभावादिदोषप्रसङ्गादित्यर्थः ॥ १–२–२ ॥

**या०**— **किञ्चान्धकार इति** । अत्र नयनपदेन गोलकमेव विवक्षितं, नेन्द्रियम् । तस्यातीन्द्रियत्वेन तत्स्पन्दस्यास्मन्मतेऽप्यतीन्द्रियत्वादिति ज्ञातव्यम् । आदिपदेन भुजोर्वादीनां ग्रहणम् । ततश्चायमर्थः । अस्ति तावद्दक्षिणवामनयनादेर्वातादिना जायमानः शुभाशुभसूचकः स्पन्दविशेषः । स च त्वगिन्द्रियेणैव प्रतिभासते । तस्य चातीन्द्रियत्वे तदनुमापको नयनादिगगनसंयोगादिर्वक्तुं शक्यस्तस्यातीन्द्रियत्वेनाज्ञानात् । नापि नयनादेर्गगनादिविततालोकसंयोगादिः । अन्धकारे

तदसंभवात् । अतोऽन्धकारेऽप्यनुभवसिद्धो नयनादिस्पन्दप्रतिभासो दुर्घटः स्यादिति । ननु यदुक्तं प्रत्यक्षाश्रितं कर्म प्रत्यक्षमेवेति । तदयुक्तम् । मार्तण्डमण्डलस्य प्रत्यक्षत्वेऽपि तद्गतेस्तन्मण्डलदेशान्तर-संयोगाद्यनुमेयत्वस्यैव सर्वानुभवसिद्धत्वात् । तद्वद्देवदत्तादिगतिः प्रत्यक्षाश्रिताऽप्यनुमेयैवास्तु अविशेषा-दित्याशङ्क्य चलतीतिप्रत्यय एव विशेषोऽस्तीत्याशयेनाह **यदि च मार्तण्डमण्डलस्यैवेत्यादिना** ॥ **उभयत्रापीति** । देवदत्तश्चलतीतिप्रत्ययस्यानुमितिरूपत्वे देवदत्त इव मार्तण्डमण्डलेऽपि चलतीति-प्रत्ययः स्यादित्यर्थः । देवदत्तश्चलतीतिप्रत्ययस्य प्रत्यक्षरूपत्वेऽङ्गीकृते नायं दोषः । मार्तण्डमण्डलस्य दूरस्थत्वेन तत्र चलतीतिप्रत्यक्षोत्पत्त्यसंभवादिति ध्येयम् ॥ **अपि च कर्मकारणादिति** । तथा चान्यथासिद्धिशङ्कया न संयोगादिना कर्मानुमानमिति भावः । शङ्कते **न संयोगाद्युत्पत्तिरिति** ॥ **तस्येति** । कर्मकारणस्येत्यर्थः । तस्येत्यनन्तरं संयोगविशेषादिरूपत्वादिहेतुः पूरणीयः । तस्य व्य भिमुपपादयितुमाह **संयोगविशेषादेरिति** । आदिपदेन वेगगुरुत्वादेर्ग्रहणम् ॥ **अन्यत्रेति** । कर्मकारणतयाऽभिमतसंयोगाद्यतिरिक्तकार्यारंभकतन्तुसंयोगवेगादिष्वित्यर्थः । तथा च विवादपदं कर्मकारणतयाऽभिमतं संयोगविशेषादिकं न परत्र कार्यारंभकं संयोगविशेषादिरूपत्वात् तन्तुसंयोगादि-वदिति प्रयोगोऽत्राभिप्रेत इति ध्येयम् । एतदेव दर्शयति **शरीरात्मेति** ॥ **कथं तस्मादिति** । आकाशदेशस्य कर्मसाध्यसंयोगाश्रयस्य कर्मजनकशरीरात्मसंयोगाश्रयत्वतत्समवेतत्वयोरभावादिति भावः । आदिपदोपात्ते वेगादावप्येतद्दर्शयति **एवमन्यत्रापीति** । वेगगुरुत्वद्रवत्वानि हि शरफलजलेषु कर्म-कारणानि कथं तेभ्यः शरफलजलानामाकाशदेशसंयोगाद्युत्पत्तिः । कर्मसाध्यसंयोगाश्रयस्याकाशदेशस्य कर्मजनकवेगाद्याश्रयत्वतत्समवेतत्वयोरभावादिति द्रष्टव्यमित्यर्थः ॥ **तथा सतीति** । अन्यत्र दृष्टानु-सारेणैव कल्पनीयत्व इत्यर्थः ॥ **परत्रारंभकत्वमपीति** । उक्तोभयान्यसमवेतारंभकत्वमपीत्यर्थः ॥ **अवान्तरभेदमिति** । तथेतरासमवायिकारणेषु परत्रारंभकत्वादर्शनेऽपि कर्मणि परत्रारंभकत्वं तदवच्छेदकं च कर्मत्वम् । तज्जन्यतावच्छेदकं चोत्तरदेशसंयोगत्वादिकमाश्रित्य विशेषः कल्प्यते । तथा कर्म-कारणस्यैव परत्वारंभकत्वम् । तन्मात्रवृत्तिधर्मविशेषस्यैव तदवच्छेदकत्वमित्यादि कल्पनीयमित्यर्थः ॥

श्री० — संयोगादिरूपकार्येण क्रियानुमानं तदा स्यात् यदि क्रिया संयोगजनिका स्यात्, न चैवम् किं नाम 'तद्धेतोरेवास्तु तद्धेतुत्वं किं तेन' इति न्यायेन कर्मकारणत्वेनाभिमतेन संयोगादि-रूपकार्योत्पत्तौ किं मध्ये कर्मकल्पनयेत्याह **अपि च कर्मकारणादेवेति** । कर्मकारणात् शरीरात्म-संयोगरूपात् ॥ **अन्यत्र निश्चितत्वादिति** । कर्मकारणतयाऽभिमतसंयोगविशेषभिन्ने तन्तुद्वयसंयोगे स्वाश्रयभूते तन्तौ पटरूपकार्यजनकत्वं दृष्टम् । यथा वा तन्तुकेशसंयोगस्य स्वाश्रयभूततन्तुसमवेते पटे

संयोगरूपकार्यजनकत्वं दृष्टमित्यर्थः । यथाऽऽहुः 'तन्तुकेशसंयोगात्पटकेशसंयोगः' इति । तन्तुरूपादेश्च स्वाश्रयसमवेते पटे रूपाख्यकार्यजनकत्वं दृष्टमित्यर्थ इत्यप्याहुः ॥ **कथमिति** । शरीरकर्मणा च शरीराकाशदेशसंयोगादिकं तावद्भवति । तत्र कर्मकारणादेव तदुत्पत्तिमङ्गीकृत्य कर्मापलापे शरीरात्मसंयोगात्कथं शरीराकाशदेशसंयोगादिकं स्यात् । संयोगविशेषस्य स्वाश्रये तत्समवेते वा कार्यजनकत्वेनाकाशदेशस्य शरीरात्मसंयोगाश्रयत्वस्य शरीरात्मसंयोगाश्रयसमवेतत्वस्य वाऽभावादित्यर्थः ॥ **तथा सति** अन्यत्र दृष्टानुसारेणैव कल्पनीयत्वे । **संयोगविशेषादेः** शरीरात्मसंयोगादेरित्यर्थः ॥ **कर्मेति** शरीरकर्मेत्यर्थः ॥ **संयोगमात्रस्येति** । तथा च तन्तुसंयोगस्य क्रियाऽजनकत्वमिष्टमेवेत्याशयः । **तद्विशेषस्य** संयोगविशेषस्य । शरीरात्मसंयोगस्येत्यर्थः । **स्यात्** शरीरे कर्मकारणत्वं स्यादित्यर्थः ॥ **परत्रेति** । संयोगविशेषस्य क्रियाजनकत्ववत्स्वानाश्रये स्वाश्रयासमवेते वाऽऽकाशदेशे संयोगादिजनकत्वरूपं परत्रारंभकत्वमपि स्यादेवेत्यर्थः । तथाच किं कर्मणेति भावः । शरीरे कर्मकारणत्वेनाभिमतशरीरात्मसंयोगस्यैव परत्रारंभकत्वमानेतुं प्रतिबन्दीं गृह्णाति ॥ **किं चैवं सतीति** । एवं सति संयोगविशेषस्य स्वाश्रये तत्समवेते वा कार्यारंभकत्वे प्रोच्यमाने सतीत्यर्थः । असमवायिकारणस्य स्वाश्रये स्वाश्रयसमवेते वा कार्यारम्भकत्वस्यान्यत्राकाशे संयोगादिरूपकार्येत्यर्थः । **तथैवेति** । परत्रारंभकत्वेनेत्यर्थः ॥ **कर्मकारणस्यैवेति** । शरीरे कर्मकारणत्वेन त्वदभिमतस्य शरीरात्मसंयोगरूपस्येत्यर्थः ॥ **अवान्तरेति** ॥ शरादौ पतनादिरूपकर्मकारणत्वेनाभिमतवेगादेः स्वाश्रयादिमात्र एव जनकत्वेऽपि कर्मकारणेष्ववान्तरभेदमाश्रित्य कर्मकारणविशेषस्य शरीरात्मसंयोगस्यैवायं स्वभावः, आकाशे संयोगादिजनकत्वरूपं परत्रारंभकत्वं कल्प्यतां लाघवात् । तथाच कर्म न कल्पनीयमित्यर्थः । कथं लाघवमित्यत आह **धर्मेति** । संयोगविशेषस्य शरीरात्मसंयोगस्य कर्मकारणत्वेन प्रमितत्वात्तत्र परत्रारंभकत्वरूपं धर्ममात्रं कल्पनीयमिति लाघवम् । त्वन्मते त्वक्लृप्तः कर्मरूपो धर्म्येव कल्पनीय इति गौरवमित्यर्थः ॥

च० — **नयनादिस्पन्दप्रतिभासः** गोलकादिचलनप्रतीतिः । इन्द्रियस्यातीन्द्रियतया तत्स्पन्दस्यापि तादृशत्वात् । अथोत्तरवादी ऐन्द्रियिकाश्रयक्रियाया ऐन्द्रियिकत्वं यत्प्रातिष्ठिपत् तत्र सङ्गच्छते तरणिबिम्बस्य तादृशत्वेपि तद्व्रज्याया उत्तरप्राक्तनदेशप्रातिविभागलिङ्गकानुमितिविषयीक्रियमाणतायाः सार्वजनीनानुभवसिद्धतया तत्तुल्यकक्ष्यापन्नदेवदत्तादिगतेरपि तथात्वापत्त्या उभयत्रापि चलनप्रतीतेरेव(वे-) वैशेष्यं प्रसज्येतेत्याशङ्कायां तरणिबिम्बे व्रज्यामनुमिनोमि देवदत्ते गतिं साक्षात्करोमीत्यनुव्यवसायवैचित्र्यानुरोधेन दूरस्थत्वदोषेण काचिन्नेक्ष्यते किं त्वनुमीयते । अन्या तु अभ्यर्ण(समीप)वर्तितया साक्षात्क्रियत एवेतिव्यवस्थाया आश्रयणीयतया मनोरथमहीरुहोऽकालीत् [अकालीत्=कलकामधेनौ लुङ्]एवेत्यभिधत्ते

**यदि चेति** । तद्धेतोरिति न्यायेन क्रियाया संयोगादिनिरूपितान्यथासिद्धिशङ्कास्कन्दिततया हेतुहेतुमद्भावस्यैवानवधृत्या न संयोगादिना तदनुमापनं सङ्गच्छत इत्याह **अपि चेति** । कर्मकारणत्वोपरक्ताभिमतिविषयीभूतवस्तुपक्षकसंयोगाद्युत्पादकत्वाभावसाध्यकस्वाश्रयतत्समवेतान्यतरवृत्तिकार्यारंभकसंयोगादिविशेषरूपत्वहेतुकतन्तुसंयोगनिदर्शनकमनुमानमभिप्रेयिवान् आशङ्कते **न संयोगेनेत्यादि** ॥ **आकाशेत्यादि** । कर्मसाध्य संयोगाश्रयस्याकाशदेशस्य कर्मजनकशरीरात्मसंयोगाश्रयत्वतत्समवेतत्वयोरभावादिति भावः.। **परत्र** आश्रयादावाश्रयसमवेताच्चान्यत्रेत्यर्थः । प्रत्यक्षद्रव्यवर्तिन्यामित्यादिनाऽभिहितप्रमेयं निगमयति **तस्मादिति** । तस्मादन्यत्रापि प्रत्यक्षेणैव क्रियासिद्धेर्युक्तस्तन्नित्यानित्यत्वविचार इति सिद्धम् ॥

**॥ इति अत्तृत्वाधिकरणम् ॥**

सु० — ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ ऋतं पिबन्ताविति वाक्यं किं जीवेश्वरौ प्रतिपादयति किंवा परमेश्वरमेवेति संशये जीवेश्वराविति तावत्प्राप्तम् । कुतः । द्विवचनात । न चानन्दमयाधिकरणन्यायेन परिहारः । बाधकाभावात् । कर्मफलभोगानुपपत्तेश्च । जीवेश्वरपक्षे तु छत्रिन्यायेनोपचारो भविष्यतीत्येवं प्राप्ते परमात्मानमेकमेव प्रतिपादयतीदं वाक्यं, गुहानिहितालिङ्गत्वात् ब्रह्मशब्देन विशेषणाच्चेति सिद्धान्तितम् । तत्र कर्मफलभोगो भगवता भाष्ये प्रतिपादितः । द्विवचनस्य तु न स्पष्टं परिहारोऽभिहितः, अतः तत्परिहारार्थमाह द्वित्वं चेति ।

अनु० — ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥

द्वित्वं चैकस्य युज्यते ॥

एतदुक्तं भवति । परमेश्वरमात्रग्रहणे द्विवचनानुपपत्तिं वदन्प्रष्टव्यः । कथमनुपपत्तिरिति । द्विवचनं भेदाभिधायि । न च परमात्मनि स्वगतभेदो युज्यत इति चेन्न, द्विवचनस्य भेदाभिधायित्वेऽनुशासनाभावात् । अथ द्वित्वसंख्या द्विवचनाभिधेया, सा च परमात्मन्यभेदेन एकत्वसंख्यया च विरुध्यत इति चेत्, न । अभेदेनैकत्ववत्येव घटे द्रव्यान्तरसहिते द्वित्वदर्शनात् । अथ द्वित्वं द्रव्यान्तरविधुरस्य न युज्यते विरोधादिति मतम् । तत्रेदमुपतिष्ठते । न केवलं संसारधर्महीनस्य कर्मफलभोगो युज्यते । किन्तु द्वित्वं चैकस्य= निर्भेदस्य एकत्वाधारमात्रस्य च युज्यते ।

शे० — ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ ननु द्वित्वं चैकस्य युज्यत इत्येकस्यापि द्वित्वोपपादनं भाष्यकारीयमनर्थकम् । न च द्विवचनानुपपत्तिरूपबाधकपरिहारार्थं तदिति वाच्यम्, तत्परिहारेणापि प्रयोजनाभावात् । न च पिबतोर्ब्रह्मत्वसिद्धिरेव तत्प्रयोजनमिति वाच्यम्, तथा सति कर्मफलभोगानुपपत्तेरपि परिहर्तव्यत्वप्रसङ्गात् । न च तदपरिहारे द्विवचनानुपपत्तिपरिहारमात्रेण पिबतोर्ब्रह्मत्वसिद्धिर्भविष्यतीति । ततो द्विवचनमात्रानुपपत्तिपरिहारस्याकर्तव्यत्वात् तत्परोत्तरग्रन्थानर्थक्यमित्याशङ्कां द्विवचनानुपपत्तेरेव परिहर्तव्यतायां नियामकोक्त्या परिहरन्, भाष्ये विषयाद्यप्रदर्शनप्रयुक्तन्यूनतां तावत्परिहरति **ऋतमिति** । अन्नमयादीनामनेकत्वादब्रह्मत्वमिति शङ्कानिरासकन्यायेनैव पिबतोरनेकत्वात् अब्रह्मत्वमिति शङ्कापरिहारान्न द्विवचनश्रुत्या पूर्वपक्षो युक्त, इत्याशङ्क्य परिहरति **न चेति** । यद्यप्यन्नमयादीनां 'स वा एष पुरुषोऽन्नरसमय' इत्यादौ यत्र ब्रह्मत्वमुक्तं न तत्रानेकत्वं

श्रुतं । यत्र च 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्' इत्यादावनेकत्वं श्रुतं न तत्र ब्रह्मतोक्तेति वैषम्यं । तथाऽप्यन्नरसमयादौ अनेकत्वस्याश्रुतत्वेऽपि अनेकत्वलाभोऽस्त्येवेति सिद्धान्ते तन्निर्वाह आवश्यक एवेत्यभिप्रेत्येदमुक्तम् । अत एव चन्द्रिकायां श्रुतपदप्रयोगः, अन्यथा तत्र नानेकत्वमित्येवावक्ष्यदिति ध्येयम् ॥ **बाधकेति** तत्र तु 'येऽन्नं ब्रह्मोपासत' इति ब्रह्मशब्द एव बाधक इति भावः । ननु च 'यः सेतुरीजानानामक्षरं ब्रह्म तत्परमि'ति प्रकृतेऽपि ब्रह्मशब्दश्रवणात्स एव बाधक इति न बाधकाभाव इत्यरुचेराह **कर्मेति** । कर्मबन्धरहितत्वादिति भावः । ननु कर्मफलभोगानुपपत्तिर्नेश्वरपक्षे बाधिका । तथा सति तत एव जीवेश्वरपक्षस्यापि परित्यागप्रसङ्गात् ईश्वरस्याभोक्तृत्वेन पातृत्वव्यपदेशानुपपत्तेस्तुल्यत्वादित्यत आह **जीवेश्वरपक्षे स्थिति** ॥ **छत्रिन्यायेनेति** । यथैकस्यैव छत्रित्वेऽपि तत्साहचर्यादनेकेषां छत्रिणो गच्छन्तीति छत्रित्वव्यपदेश औपचारीकः, तथा जीवस्यैव पातृत्वेऽपि तत्साहचर्यादीश्वरस्य 'द्वौ पिबन्तावि'ति द्वयोः पातृत्वव्यपदेश औपचारिक इत्यर्थः । **भाष्ये प्रतिपादित इति** । 'आत्माऽन्तरात्मेति हरिः', 'शुभं पिबत्यसौ नित्यमि'त्यादिनेति शेषः । **न स्पष्टमिति** । विष्णू इति वक्तव्ये विष्णुरूपे एवेत्युक्त्या द्विवचनस्य रूपद्वयाभिप्रायेण विष्णौ सावकाशत्वस्य भाष्येऽपि सूचितत्वादेवमुक्तमिति ध्येयम् । नन्वेकत्वाधारस्य द्वित्वाधारत्वमात्रप्रतिपादनेन कथं द्विवचनानुपपत्तिशङ्कापरिहारः, भेदाभिधायितया द्विवचनस्य स्वगतभेदशून्ये ब्रह्मणि तदसंभवस्यापरिहारात्,

---

इत्यतो द्विवचनानुपपत्तिमनेकधा विकल्प्य, पक्षान्तरं बहिरेव प्रदूष्य, पर्यवसितपक्षनिरासपरतया भाष्यं योजयति **एतदुक्तं भवतीति** ।

स० — ॐ **गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्** ॐ ॥ ननु क्रियालिङ्गे ततः परमित्येतदनुव्याख्यानव्याख्यानान्न वैयर्थ्यमिति समाधानमभिहितं तदनुपपन्नं प्रकृते तस्यादर्शनादिति चेत् न गतार्थताशङ्कनिवर्तिकाया अभ्यधिकाशङ्कायाः सत्त्वात् । पूर्वाधिकरणवैषम्येण प्रवृत्ता, आक्षेपसमाधानरूपेण प्रवृत्ता चेति तस्याः द्वैविध्यात् । द्विविधायाः अपि प्रकृते सत्त्वात् । तथाहि अस्तुपूर्वत्रात्तृत्वस्य परमात्मनि समन्वयं प्रातिपदिकार्थभूताया अदनक्रियायाः प्रत्ययार्थस्य च कर्तृत्वस्य परमात्मनि समन्वयसंभवात् । न कर्मफलभोक्तृत्वस्य । प्रातिपदिकार्थस्य कर्मफलभोजनस्य प्रत्ययार्थस्य द्वित्वस्य च परमात्मनि असंभवात् । अथ वा पूर्वं संहारकत्वं परमात्मनः उक्तं, तदनुपपन्नं भोजनस्यापि संहारविशेषत्वेन तस्य परमात्मनि द्विवचनादिबाधकसद्भावेनानुपपत्तेरिति । ननु यथैकस्य ब्रह्मणोऽन्नमयादिपञ्चरूपत्वं युक्तमित्युक्तं तथात्र द्विरूपत्वं किं न स्यादित्यत आह **न चेति** । तत्र ब्रह्मशब्दाभ्यासो बाधक इत्यर्थः ॥ **छत्रिन्यायेनेति** ॥ यथैकस्य छत्रित्वेपि छत्रिणो गच्छन्तीति अनेकेषां तत्साहचर्यात् छत्रित्वव्यपदेश इति लोके न्यायः । वेदेऽपि प्राणभृत उपदधातीति प्राणभृल्लिङ्गैकमात्रसाहचर्यादन्येषाम् अपि

प्राणभृद्व्यपदेश इति, तथा कर्मफलभोक्तृजीवसाहचर्यात् ईश्वरोऽपि तद्व्यपदेशभागिति । **तादात्म्याभावस्त्विति** ॥ सहावस्थानाविरोधकत्वादिति भावः ।

प०—ॐ **गुहां प्रविष्टावात्मानौहितद्दर्शनात्** ॐ । द्वित्वं चेत्यस्य संगत्यप्रतीतेस्तां वक्तुमाह **ऋतमिति** । नन्वेकस्याप्यन्नमयाद्यनेकशब्दवाच्यत्वं अनेकरूपाभिप्रायेणेतिभाष्ये अभिधानात् द्विवचनमपि तेन न्यायेन युक्तमित्याशंक्य निराह **न चेति** ॥ **बाधकेति** । तत्र ब्रह्मशब्दादिकमेव बाधकं । न चात्रापि गुहानिहितत्वादि बाधकम् । जीवेश्वरयोः संभवादिति भावः । एतच्च बहुरूपत्वादिति भाष्योक्तिं हृदि कृत्वोक्तम् । वस्तुतस्तु तत्र विषयवाक्ये न द्विवचनं बहुवचनं वास्ति । येन तत्रैकस्यानेकत्वायोगशंकया तत्परिहारस्तत्र घटेत । 'अन्नमयप्राणमयमनोमयविज्ञानमयाऽऽनंदमया मे शुध्यंतामि'त्यत्र बहुवचनश्रवणेपि तेषामब्रह्मत्वात् । भाष्ये बहुरूपत्वेन समाधिस्तु कथं चिदनेकत्वानुपपत्तिशंकोदयेपि अत्रत्यन्यायं हृदि कृत्वैव कृत इति चंद्रिकायां व्यक्तम् ॥ **उपचार इति** । कर्मफलभोगस्येत्यनुषंगः । ननु गुणभूतद्विवचनश्रुतिमुख्यत्वाय प्रातिपदिकस्योपचारो न युक्तः । द्विवचनश्रुतेर्निरवकाशत्वात् । ब्रह्ममात्रपक्षे द्वयोरप्यस्वरस्याचेति भावः ॥ **अनुशासनेति** । भेदवाचित्वव्युत्पादकव्याकरणादिरूपप्रमाणाभावादित्यर्थः ।

**या०— ॥ ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ न चानन्दमयाधिकरणेति** । तत्र यथैकस्यैव पञ्चत्वसङ्ख्याऽनुपपन्ना एकमेवेत्यादिश्रुतिविरोधादित्याशङ्क्य बहुरूपत्वादविरोध इति परिहृतं, तथाऽत्राप्येकस्यैवेश्वरस्य द्वित्वसङ्ख्यारूपद्वयविवक्षयोच्यत इति परिहारोऽस्त्विति न वाच्यमित्यर्थः ॥ **बाधकेति** । तत्र तथाकल्पकब्रह्मशब्दाभ्यासादिरूपबाधकवत्प्रकृते तथाकल्पकस्य जीवेश्वरद्वित्वरूपमुख्यार्थबाधकस्याभावादित्यर्थः । प्रत्युतेश्वररूपद्वित्वग्रहणे एव बाधकमस्तीत्याह **कर्मफलेति** ॥ **न स्पष्टमिति** । 'यः सेतुरि'ति वाक्योदाहरणेनैकवचनेन विशेषणादेक एव पातेत्यस्यार्थस्य भाष्येऽपि सूचितत्वादेवमुक्तमिति ध्येयम् ॥ **एकत्वाधारमात्रस्येति** । द्रव्यान्तरशून्यस्येत्यर्थः ।

श्री०— ॐ **गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्** ॐ ॥ ननु जीवेश्वरपक्षेऽपीश्वरे कर्मफलभोगोऽनुपपन्न एवेत्यत आह **जीवेश्वरपक्षे त्विति** । उपचारः ईश्वरे कर्मभोगानुभवितृजीवसाहित्येनोपचार इत्यर्थः ॥ **द्रव्यान्तरविधुरस्येति** । तस्य मिथ्यात्वेनाभावाद्ब्रह्मणस्तद्वैधुर्यं द्रष्टव्यम् । तथा चैकत्वाधारमात्रस्येत्यर्थो द्रष्टव्यः ।

च०— ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ॥ **न चानन्दमयेति** । 'एकमेवाद्वितीयमित्यादिश्रुतिविरोधात् ब्रह्मणि पञ्चत्वसङ्ख्यानुपपत्तिशङ्कायाः बहुरूपत्वादविरोध इति यथा

आनन्दमयनये परिहृतिस्तदत्रापि द्वित्वानुपपत्तिशङ्कायाः द्विरूपत्वात् द्वित्वाविरोध इति परिहारोऽस्त्विति न वाच्यमित्यर्थः । **बाधकेति** । तन्नयीयवाक्ये मुख्यार्थपरित्याजकब्रह्मशब्दाभ्यासवत्प्रकृतनयीय-वाक्ये तादृशस्य कस्यचिदभावादित्यर्थः । परमेश्वररूपद्वयतात्पर्यकतया योजनायामेव बाधकमभिधत्ते **कर्मफलेति** । कर्मबन्धवैधुर्यादिति भावः । ननु च 'यः सेतुरीजानानामक्षरं ब्रह्म' इति प्रकृते ब्रह्मपदश्रवणात् तदेव बाधकमिति न बाधकाभाव इत्यरुचेराह **कर्मफलेतीत्यप्यवतारितम्** । **छत्रिन्यायेनेति** । कतिपयेषामच्छत्रित्वेपि छत्रिसहचरिततया छत्रिणो यान्तीति व्यपदेशगोचरतेव जीवस्यैव ऋतपातृत्वेऽपि तत्सहचरिततया ब्रह्मणोऽपि तत्पातृत्वव्यपदेशविषयतोपपत्तेः कर्मफलभोगा-नुपपत्तिर्न जीवेश्वरपक्षे बाधिकेत्यर्थः । **सिद्धान्तितमिति** । 'गुहावेशात्' ब्रह्मशब्दात् सेतुत्वा-दक्षरत्वतः । पारत्वादभयत्वाच्च ब्रह्मैवात्र निगद्यते' इत्युत्तरवाद्याशयस्य स्फुटीकृतत्वादिति भावः ॥ **तत्रेति** । सर्वनाम्नाऽनुपपद्यमानं द्वित्वावच्छिन्नं कर्मफलभोगद्विवचनरूपं परामृश्यते, सप्तम्या च भोगान्वयिनी घटकता । **प्रतिपादित इति** ।

'आत्मान्तरात्मेति हरिः' इत्यादिक'कर्मजम्' इत्यन्तस्य 'शुभं पिबत्यसौ नित्यम्' इत्यादिकस्य चोदाहरणेनेत्यादिः । **न स्पष्टमिति** । विष्णुरूपे एवेति भाष्ये विष्णुपदोपादानेनैव सामञ्जस्ये द्विवचनान्तरूपपदविन्यासेन विष्णौ रूपद्वयाशयेन द्विवचनस्य नेयतायाः 'यः सेतुः' इति वाक्योदा-हरणेन एकवचनेन विशेषणात् एक एव पातेत्यर्थस्य वा भाष्येपि ध्वनितत्वादित्थमभिहितम् । अत्र स्पष्टमित्यभिधानक्रियाविशेषणं स्तोकंपचतीतिवत् । 'क्रियाविशेषणानां कर्मत्वं क्लीबत्वमव्ययत्वं चे'त्य-नुशासनात् कथं स्तोकः पाकः कृदन्तसमानाधिकरणत्वाद्धात्वैकाधिकरण्ये तु स्तोकमोदनस्य पाक इति स्यादेवेति स्वतन्त्रपरिशिष्टोक्तेरित्यवधेयम् । **अनुशासनाभावादिति** । 'द्व्येकयोर्द्विवचनैकवचने' इत्यस्य द्वित्वैकत्ववाचकत्वपरत्वादिति हृदयम् । एकत्वाधारमात्रस्य द्रव्यान्तरसाहित्यविवक्षाविनिर्मुक्तस्य विरोधान्वयिप्रतियोगितार्थकपञ्चमीद्विवचनं प्रकारान्तरेण ब्रह्मशब्देन विशेषणात् इतिविधाभिन्नविधया तद्भावाभावात् घटतदभावयोरिव भावाभावरूपत्वाभावात् ।

**सु० — कथमित्यपेक्षायां तत्प्रदर्शनाय विशेषणाच्चेति सूत्रं प्रकारान्तरेण व्याचष्टे** यः सेतुरिति ।

अनु० — ॐ **विशेषणाच्च** ॐ ॥

'यः सेतुरि'ति चैकत्ववचनेन विशेषणात् ॥ ३ ॥

**द्वित्वस्याभेदैकत्वाभ्यां न तावद्भावाभावलक्षणो विरोधः । तद्भावाभावात् । नापि वध्य-**

घातुकभावः । सहावस्थानप्रसङ्गात् । तादात्म्याभावस्तु प्रकृते नोपयुज्यते । अतः सहानवस्थानमेव वक्तव्यम् । तस्य च नियमेन परस्परपरिहारेणोपलम्भो बीजम् । न चासावस्ति । 'ऋतं पिबन्तौ' इति द्विवचनविषयतया प्रकृतयोर्द्वित्वाधारयोः 'यः सेतुः' इत्येकवचनेन च विशेषणात् । अभेदैकत्वाधारतावगमादिति यावत् । न चात्रैकस्यैव ग्रहणम् । व्यावर्तकाभावादिति । एतेनैतदपि प्रत्युक्तम् 'यत्परेण बुद्धिजीवाविति पूर्वपक्षयित्वा जीवेश्वराविति सिद्धान्तितम्' । तथा हि, 'तत्तु समन्वयात्' इति परमात्मन्येव समन्वयं प्रतिज्ञातवता सूत्रकारेण स एव विवरणवाक्यैः प्रपञ्चनीयः । जीवेश्वरयोरस्य वाक्यस्य समन्वयं प्रतिपादयन्प्रक्रमं जह्यात् । बाधके सति नायं दोष इति चेन्न । तदनिरूपणात् । द्विवचनमिति चेत् । तर्हि जीवेश्वराङ्गीकारोऽपि न स्यात् । तयोरैक्याङ्गीकारात् । काल्पनिकोऽस्ति तयोर्भेद इति चेत् । तर्हीश्वरस्यैवाद्भुताचिन्त्यैश्वर्यवशाद्द्विरूपत्वेन द्वित्वमुपपाद्यताम् । तथा च प्रक्रमानुगुणं सूत्रं स्यात् । तत्त्वावेदकं च शास्त्रमिति ॥ नन्वेकवचनेनेति वक्तव्यम् । एकत्ववचनेनेति कथम् । एकत्वादिसङ्ख्याहि प्रत्ययार्थः । यथोक्तम् । 'द्व्येकयोर्द्विवचनैकवचने' इति । द्वित्वैकत्वयोरित्यर्थः । अन्यथा द्व्येकेष्विति स्यात् । तस्मादेकत्वस्य वचनमेकत्ववचनमित्येव युक्तम् । अन्यत्रापि भावप्रधानो निर्देशः प्रतिपत्तव्य इति ॥ १-२-३ ॥

---

शे०— **प्रकारान्तरेणेति** । ब्रह्मशब्देन विशेषणादिति व्याख्यानापेक्षया प्रकारान्तरेणेत्यर्थः । ननु पिबतोः एकत्वेन विशेषणकथनमसङ्गतम् । न च शङ्कितविरोधपरिहारार्थं तदिति वाच्यम् । सहोपलम्भप्रतिपादनमात्रेण विरोधशङ्कापरिहारायोगात् । सहान स्थानलक्षणविरोधस्य तेन कथञ्चित्परिहारेऽपि विरोधान्तरसम्भवात् इत्यतोऽत्र पक्षान्तरनिरासपूर्वकं सहानवस्थितत्वं परिशेष्य, तन्निरासपरतया भाष्यं योजयति **द्वित्वस्येति** ॥ **नापीति** । 'नाजात एकोऽन्यं हन्ति नाप्यन्याधार' इति न्यायादिति भावः ॥ **प्रकृते नोपयुज्यत इति** । सहावस्थानाविरोधकत्वादिति भावः ॥ **व्यावर्तकाभावादिति** । द्वितीयव्यावर्तकस्यैकमात्रनिष्ठस्य असाधारणधर्मस्यात्राश्रयणादिति भावः ॥ **एतेनेति** । द्विवचनस्य ब्रह्मणि सावकाशत्ववर्णनेनेत्यर्थः । एतेनेत्युक्तं दर्शयितुमादौ तावत् 'न च जीवे समन्वयोऽभिधीयते' इति भाष्योक्तां समन्वयासङ्गतिमाह **तथा हीति** । एतेनेत्युक्तं विवृणोति **तर्हीति** । तर्ह्युभयथा निर्वाहे काल्पनिकभेदाश्रयणेन जीवेश्वराङ्गीकार एवास्त्वित्यतो निमित्तद्वहमाह **तथा चेति** । 'यः सेतुरि'ति पिबतोर्विशेषणस्य एकत्ववचनेनेत्येकत्वाभिधायकत्वमुक्तं तदाक्षिपति **नन्वेकवचनेनेति** ॥ **वक्तव्यमिति** । 'यः सेतुरि'त्यत्र सोरेकत्वसङ्ख्याबद्धस्तुवचनत्वेऽपि एकत्वसङ्ख्यावाचित्वाभावादिति भावः । स्यादेवं

यदि स्वादिप्रत्ययस्य सङ्ख्यावद्वस्तुवाचित्वं स्यात्, न चैतदस्ति, किं त्वेकत्वादिसङ्ख्यैव तदर्थः । तथा च यः सेतुरित्यादावपि सोरेकत्वाभिधायकत्वेनैकत्ववचनत्वमेवेत्याशयेन समाधत्ते **एकत्वादीति** । एकशब्दश्च सङ्ख्यावाचीति त्वप्रत्ययनिर्देशोऽनर्थक इति शङ्कितुराशयः । एकशब्दस्य सङ्ख्यावद्वस्तुपरत्वमेव, न सङ्ख्यापरतेत्यभिप्रेत्य परिहरति **एकत्वादीति** ॥ **अन्यथेति** । भावप्रधाननिर्देशाकरणे द्वित्वसङ्ख्यावन्तौ द्वौ एकत्वसङ्ख्यावानेक इति त्रयाणां निर्देशे बहुवचनं स्यादित्यर्थ इत्याहुः । केचित् । कुतः सङ्ख्यायाः तदर्थत्वमित्यतोऽस्यार्थस्य प्रसिद्धत्वादिति भावेन हिशब्दः । तामेव प्रसिद्धिमुपपादयितुमत्रार्थे पाणिनिसंमतिमाह **यथोक्तमिति** । तद्वाक्यमुदाहरति **द्व्येकयोरिति** । उपलक्षणमेतत् । बहुषु बहुवचनमितीत्यपि द्रष्टव्यम् । कथमस्मात्सङ्ख्यायाः प्रत्ययार्थत्वलाभ इत्यतो भावप्रधाननिर्देशत्वाश्रयणेन सूत्रं व्याचष्टे **द्वित्वैकत्वयोरिति** । कुतोऽत्र भावप्रधानत्वाश्रयणेन सङ्ख्यावाचित्वव्याख्यानं, सङ्ख्यावद्वाचित्वस्यैवोपपत्तेरित्यत आह **अन्यथेति** । भावप्रधाननिर्देशेन सङ्ख्यार्थत्वमनाश्रित्य सङ्ख्यावद्वस्तुवाचित्वे द्वित्वसङ्ख्यावन्तौ द्वौ एकत्वसंख्यावानेक इति त्रिषु विवक्षितेषु द्व्येकेष्विति बहुवचननिर्देशः स्यादित्यर्थः । अतोऽत्र सूत्रे भावप्रधाननिर्देशेनैकत्वादिसङ्ख्याया एव स्वादिप्रत्ययार्थत्वात् युक्तं 'यः सेतुरि'त्यादावपि सोः प्रत्ययस्यैकत्वाभिधायकतया एकत्ववचनत्वमित्युपसंहरति **तस्मादिति** । तर्हि द्विवचनश्रुतेरिति न निरवकाशत्वमित्येव वक्तव्यतया कथमन्यत्र भाष्यकारीयो द्विवचनश्रुतेरितिव्यवहारः, कथं चाभियुक्तानभियुक्तसाधारण्येनैकवचनं द्विवचनं बहुवचनमित्येव व्यवहार इत्यतः स्वादिप्रत्ययानां सङ्ख्यावाचित्वविधायकोदाहृतसूत्रबलात् भावप्रधानत्वेन स निर्वाह्य इत्याह **अन्यत्रापीति** ॥ १-२-३ ॥

**स०— व्यावर्तकाभावादिति** । उभयोरपि प्रकृतत्वेऽपि अयमेव ग्राह्य इत्यत्र अन्यव्यावृत्तौ व्यावर्तकाभावादित्यर्थः ॥ **नन्वेकेति** । एकशब्दे एव एकत्वसंभवे संख्यावद्वस्तुवाचित्वे च द्वित्वसंख्यावन्तौ द्वौ एकत्वसंख्यावांश्चैक एव त्रिषु विवक्षितेषु (द्व्येकेष्विति)बहुवचनं स्यादिति भावः । न च संख्याया एव प्रत्ययार्थत्वेन अभिप्रेतत्वे 'बहुषु' इत्यत्र बहुवचनमुपपन्नम् इति वाच्यम् । बहूनि बहुवचनमित्येवोक्ते बहुत्वस्य त्रित्व एव पर्यवसानसंभवेन चतुष्ट्वादिसंख्याविवक्षायामपि बहुवचनं भवतीति भावः ॥ **अन्यत्रापीति** । 'तान्येकवचनद्विवचनबहुवचनान्येकशः' (पा. सू. १-४-१०२) इत्यादावित्यर्थः ।

**प०— तद्भावाभावादिति** । 'भावाभावरूपत्वाभावादित्यर्थः ॥ **सहावस्थानेति** । 'नाजात एकोऽन्यं हन्ति नाप्यन्याधारः'इति न्यायेन मूषकमार्जारयोः किञ्चित्कालं सहावस्थितयोरेव वध्यघातुकभावदृष्टेरिति भावः ॥ **नोपयुज्यत इति** । तस्यान्योन्याभावरूपत्वेन सहावस्थानाविरोधादिति भावः ॥ **न**

**चात्रेति** । 'यस्सेतुरि'तिवाक्ये कुतो नेत्यत आह **व्यावर्तकेति** । उभयग्रहणव्यावर्तकाभावादिति भावः । न चैकवचनमेव व्यावर्तकं अभेदैकत्वावधारकमपि भवति द्वित्वं इति वादिनं प्रति तस्य व्यावर्तकत्वासिद्ध्याऽन्योन्याश्रयादिति भावः । कुतो निरस्तमित्यत आह **तथा हीति** ॥ **इत्यर्थ इति** । तथैवाद्यस्य चतुर्थपादे वृत्तावुक्तेरिति भावः । नन्वेवं बहुषु बहुवचनमित्यत्रापि भावप्रधानत्वापत्त्या बहुष्विति बहुवचनायोगश्चेति शङ्क्यम् । आधारगतबहुत्वस्य बहुत्वरूपधर्मेऽप्यारोपेण बहुवचनोपपत्ते-रिति मञ्जर्यादावुक्तत्वात् । **अन्यथेति** । भावप्रधानतामनुपेत्य सङ्ख्याविशिष्टधर्मिवाचकत्व इत्यर्थः । **अन्यत्रेति** । एकवचनमित्यादिप्रयोगस्थल इत्यर्थः ॥ १ । २ । ३ ॥ छ ॥

**या०— सहावस्थानेति** । तर्हिहिमूषकयोः समानाधिकरणयोरेव वध्यघातकभावदर्शनादिति भावः ॥ **व्यावर्तकाभावादिति** । द्वितीयव्यावर्तकस्यैकमात्रनिष्ठासाधारणधर्मस्य श्रुतावभावादित्यर्थः । एतेनेत्युक्तं दर्शयितुमादौ तावत न च जीवे समन्वयोऽभिधीयत इति भाष्योक्तं दोषमाह **तत्तु समन्व-यादित्यादिना** ॥ इदानीमेतेनेति परामृष्टं दर्शयति **तर्हीश्वरस्यैवेति** । अनेनैतेनेत्यस्यैकस्यैवेश्वरस्य अचिन्त्यैश्वर्यवशाद्रूपद्वयापेक्षया द्वित्वोपपादनेनेत्यर्थ उक्तो भवतीति ज्ञातव्यम् ॥ **अन्यथा द्व्येकेष्विति** । भावप्रधाननिर्देशेन सङ्ख्यार्थत्वमनाश्रित्य सङ्ख्यावद्वस्तुवाचित्वे द्वित्वसङ्ख्यावन्तौ द्वौ एकत्वसङ्ख्यावांश्चैक एवं त्रिषु विवक्षितेषु सूत्रे द्व्येकेष्विति बहुवचननिर्देशः स्यादित्यर्थः । अतोऽत्र सूत्रे भावप्रधाननिर्देशे-नैकत्वादिसङ्ख्यैव स्वादिप्रत्ययार्थतयाऽभिप्रेतेति वक्तव्यमिति भावः । नन्वेकवचनमित्यादिसांव्यावहा-रिकप्रयोगेषु का गतिरित्यत आह **अन्यत्रापीति** । सांव्यावहारिकेषु परीक्षकप्रयोगेष्वित्यर्थः । यद्वा नन्वेवं 'द्विवचनश्रुतेरपि बलम्' इति न्यायविवरणे का गतिरित्यत आह **अन्यत्रापीति** । न्याय-विवरणेऽपीत्यर्थः । स्वादिप्रत्ययानां सङ्ख्यावाचित्वविधायकोक्तसूत्रबलादिति भावः । अन्ये तु अन्यत्रापीत्यस्य 'तान्येकवचनद्विवचनबहुवचनान्येकशः' इत्यादावपीत्यर्थ इत्याहुः ॥ १-२-३ ॥ छ ॥

**श्री०**— एकत्वाधारस्यापि द्वित्वं न युज्यत इति हि प्रकृतम् । तत्रतादात्म्याभावलक्षणो विरोधो द्वित्वैकत्वयोरेकत्रानवस्थानोपपादको न भवति । घटपटयोस्तादात्म्याभावलक्षणविरोधे सत्यप्ये-कत्रावस्थानदर्शनादिति भावेनाह **तादात्म्याभावस्त्विति** । स्यादिदं यदि द्वित्वाधारयोरेकवचनेन विशेषणं स्यात् । न चैवम् । किन्तु प्रकृतयोरपि । तयोर्मध्ये एकमेव गृहीत्वा तस्यात्रैकत्वमुच्यत इत्या शङ्क्य स्यादेवं प्रकृतयोर्द्वयोर्मध्ये एकस्यैव ग्रहणम् । यदीतरव्यावर्तकं किञ्चित्स्यात्तत्तु नास्तीत्याह **न चात्रेति** । यत् सिद्धान्तितं तदपि प्रत्युक्तमित्यन्वयः ॥ **प्रक्रममिति** । परमात्मन्येव समन्वयप्रतिज्ञान-रूपमुपक्रममित्यर्थः । उत्तरमाह **एकत्वादिसंख्या हीति** ॥ **प्रत्ययेति** । 'तान्येकवचनद्विवचनबहु-वचनान्येकशः' इति सूत्रविहितैकवचनादिसंज्ञकस्वादिप्रत्ययार्थ इत्यर्थः ॥ १-२-३ ॥

च० **प्रसङ्गादिति** । 'नाजात एकोन्यं हन्ति नाप्यन्यथा(=अन्यमन्याधारः)' इति न्यायेनाहिनकुलयोरिव द्वित्वे स्वावच्छेदकक्षणावच्छिन्नत्वे स्वनिरूपकाधिकरणतावन्निरूपितत्वोभयसंबन्धेनाभेदैकत्ववृत्त्याधेयताविशिष्टा या आधेयता तद्विशेषितत्वरूपसहावस्थानप्रसङ्गादिति भावः ।

**नोपयुज्यत इति** । दर्शितसहावस्थित्यभञ्जकत्वादिति भावः ॥ **व्यावर्तकाभावादिति** । व्यक्त्यन्तरव्यावर्तकैकव्यक्तिमात्रवृत्तिधर्मबोधकपदासमभिव्याहारादिति भावः । एतेन द्विवचनश्रुतेः ब्रह्मणि योजनीयत्ववर्णनेन तृतीयान्तसर्वनामपरामृष्टं दिदर्शयिषुः, 'न च जीवे समन्वयोऽभिधीयते' इति भाष्यभाषितसमन्वयासाङ्गत्यमाह **तथा हीति** । तत्परामृष्टं दर्शयति **तर्हीत्यादि** ॥ **अन्यथेति** । सौत्रनिर्देशस्य भावप्रधानतामनुपेत्य संख्याविशेषितप्रत्यायकत्वे ॥ उदीरितार्थं निगमयति **तस्मादिति** ॥ **अन्यत्रापीति** । 'द्विवचनश्रुतेरपि' इति न्यायविवृतिप्रतीकादावित्यर्थः । स्वादीनां संख्याभिधायकत्वाभिधायकोदाहृतसूत्रानुरोधादित्यर्थः ॥ **भावप्रधान इति** । प्रकृतिजन्यबोधीयप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नविशेष्यकान्वयधीजनक इत्यर्थः ।

## ॥ इति गुहाधिकरणम् ॥

सु०— ॐ अन्तर उपपत्तेः ॐ ॥ अत्र क्रियाभावरूपलिङ्गसमन्वयश्चिन्त्यत इत्युक्तम्। तदयुक्तम्। सूत्रे भावस्यैव प्रतिज्ञानात् क्रियाया अनुक्तेरित्यतोऽन्तरशब्दमुभयार्थतया व्याख्याति अन्तरिति।

अनु०— ॐ अन्तर उपपत्तेः ॐ ॥

अन्तः स्थित्वा रमणकृदन्तरः स उदाहृतः ॥
रमणं चात्मशब्देनादेयं मातीति चोच्यते ॥

अन्तःशब्दोपपदाद्रमतेर्ञमन्ताड्ड इति डः। उणादयो बहुलमित्युपपदलोपः। विवक्षितं चैतत्सूत्रकारस्य। अन्यथा 'अन्तस्तद्धर्मोपदेशादि'तिवत् अन्तरुपपत्तेरित्यवक्ष्यत्। लघु चैवं सति सूत्रं स्यात्। अन्तर इति कुर्वन्निममेवार्थं प्रतिजानीत इति। ननु च 'य एषोन्तर(ऽ)क्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच' इत्येतदत्रोदाहरणवाक्यम्। अत्र चाक्षिस्थ एव प्रतीयते। न तस्य रमणकर्तृत्वम्। श्रुत्युक्तमेव सूत्रैः प्रतिज्ञातव्यम्। तत्कथं श्रुतावनुक्तं रमणकर्तृत्वं सूत्रकृता प्रतिज्ञायत इत्यत आह रमणं चेति। न केवलमक्षिस्थत्वम्। किन्तु रमणं रमणकर्तृत्वं चेति आद्यश्चशब्दः। न केवलं सूत्रेऽपि तु श्रुतौ चेति द्वितीयः। आत्मशब्देन एष आत्मेत्यनेन। आदेयम्= उपादेयं सुखं सुखसाधनं च माति= अनुभवतीति निर्वचनेनेत्यर्थः। आङ्पूर्वकाद्ददातेर्मन्यतेश्च क्विप्॥१॥

शे०— ॐ अन्तर उपपत्तेः ॐ ॥ भावस्यैवेति। अन्तरशब्दस्य अन्तःशब्दपर्यायतयाऽन्तःस्थितिमात्रस्यैव अन्तर इत्यनेन प्रतीतेरिति भावः ॥ उभयार्थतयेति। क्रियाभावरूपोभयार्थतयेत्यर्थः। कथमेतावतोऽर्थस्यान्तर इत्येतस्माल्लाभ इत्यतः प्रकृतिप्रत्ययविभागप्रदर्शनेन भाष्यकारीयं व्याख्यानमुपपादयति अन्तःशब्दोपपदादिति ॥ ञमन्ताड्ड इति। अत्र ञमिति प्रत्याहारग्रहणं ञमङणनमिति। ञमन्ताद्धातोर्डप्रत्ययो भवतीत्यर्थः। ततश्च मान्ततया ञमन्तात् रमेः कर्तरि डप्रत्यये चुटू इति डकारस्येत्संज्ञायां डित्वविधिसामर्थ्यादभस्यापि रमेष्टिलोपे र इति रूपनिष्पत्तिरिति भावः। न चैवं दम् उपशमे इत्यस्माद्दम्यन्तेऽनेनोद्धता जना इति करणे डप्रत्यये डस्येत्संज्ञायां टिलोपे च द इत्येव स्यान्न तु दण्ड इति। तथा च वनषणसंभक्तावित्यस्य भौवादिकस्य वनतेरपि डप्रत्ययान्तस्य द इत्येव स्यान्न तु वण्ड इतीति वाच्यम्। चुटू, षःप्रत्ययस्य, इत्यत्र चुटूषाः प्रत्ययस्येत्येकयोगे कर्तव्ये पृथग्योगकरणमस्य, अनित्यत्वज्ञापनार्थमित्याकरे स्थितत्वेन चुटू इत्यस्यानित्यत्वाद्वा प्रत्ययाद्यतिरिक्तस्य कस्मैचित्कार्याय उच्चार्यमाणस्यैव वर्णस्येत्संज्ञाया आकरे स्थित्या प्रयोजनाभावाद्वा बाहुलकाद्वलुग्विधाविव लुप्तयकारप्रत्ययादित्वाद्वा डस्येत्संज्ञाभावसिध्या दण्डो वण्ड इत्यादिरूपसिद्ध्युपपत्तेरप्रत्यूहा

त्वात्। नन्वेवमपि रोरीत्युपपदान्तरेफलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽण' इति दीर्घतायां च सत्यां पुना रमत इत्यादिवदन्तार इति भवितव्यम्। अन्तर इति तु कथम्, इत्यतः स्यादेतदेवं यद्यत्र रोरीति रेफनिमित्तको रेफलोपोऽभिमतः स्यात् न चैवं, किं नाम बाहुलकनिमित्त एव। तथा च रेफलोपनिमित्तकस्य रेफस्य परत्वाभावान्न दीर्घत्वप्रसङ्ग इत्याह **उणादय इति** ॥ **उपपदलोप इति**। अलोन्त्यपरिभाषयोपपदान्त्यरेफलोप इत्यर्थः। 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्यचतुर्विधं बाहुलकं वदन्ती'त्यभियुक्तोक्तेर्बाहुलकग्रहणादपेक्षिताशेषार्थसिद्धिरिति ध्येयम्। किमनयाकुसृष्टिकल्पनया सूत्रेऽन्तःस्थितिमात्रस्यैव प्रतिज्ञा किं न स्यादित्यत आह **विवक्षितं चेति**। तत्कथमवगम्यत इत्यत आह **अन्यथेति**। अन्तःस्थितिमात्रस्य तावतैव लाभादिति भावः। भावमात्रस्यैवप्रतिज्ञायामन्तरित्यस्यैव वक्तव्यत्वे निमित्तान्तरमाह **लघु चेति**। उपलक्षणं चैतत्। श्रुत्यनुगतं च स्यादित्यपि द्रष्टव्यम्। भाष्यकारीयं रमणकर्तृत्वस्यात्मशब्दार्थत्ववर्णनमनर्थकम् इत्यतः सूत्रस्य श्रुत्यननुगतत्वशङ्कापरिहारार्थं तदिति भावेन, अननुगमशङ्कापरिहारकतया तद्वाक्यं योजयितुं श्रुतिसूत्रयोरननुगममाशङ्कते **नन्विति** ॥ **न तस्य रमणकर्तृत्वमिति**। तत्प्रतिपादकशब्दाभावादिति भावः ॥ **श्रुत्युक्तमेव चेति**। सूत्रस्य श्रुत्यनुसारित्वादिति भावः। असंकीर्णार्थप्रदर्शनेन चशब्दद्वयवैयर्थ्यं परिहरति **न केवलमिति** ॥ **ददातेर्मन्यतेश्चेति**। दा दान इत्यस्मात्कर्मणि क्विप्, मन् अवबोधन इत्यस्माच्च कर्तरि क्विबित्यर्थः। तथा च निर्वचनत्वेन धात्वाकारलोपे दकारस्य तकारे चात्मन्निति प्रातिपदिकनिष्पत्तिरिति भावः। ॥ * ॥ * ॥

स० — ॐ **अन्तर उपपत्तेः** ॐ ॥ **ञमन्ताड्ड इति**। ञमिति प्रत्याहारग्रहणम्। ञमन्ताद्धातोर्डप्रत्ययो भवतीति सूत्रार्थः। उदाहरणं तु दम्यतेऽनेनेति दण्ड इत्यादिकं द्रष्टव्यम्। अनेन सूत्रेण डप्रत्यये डित्वसामर्थ्याट्टिलोपे र इति रूपमिति भावः। नन्वेवं 'रोरि' इत्युपपदान्तरलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे च सति अन्तारः इति स्यादित्यत आह **उणादयो बहुलमिति** ॥ **उपपदलोप इति**। उपपदान्तरेफलोप इत्यर्थः। स्यादयं दीर्घो यद्यत्र रेफलोपो रोरीतिसूत्रेणोच्यमानो रेफनिमित्तो विवक्षितः स्यात्। न चायम्। किन्तु बाहुलिक एव। तथा च रेफलोपस्य रेफनिमित्तत्वाभावान्न दीर्घप्राप्तिरिति भावः। 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् द्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलिकं वदन्ति' इति वचनात् बहुलग्रहणमुक्तार्थसाधकमिति द्रष्टव्यम्। **ञमन्ताड्ड इति**। विहितप्रत्ययस्य न डित्त्वम्। डकारस्यानुबन्धसंज्ञा नास्तीति उणादिवृत्तावेव उक्तत्वात्। अन्यथा रण्डेत्यादिरूपनिष्पत्तेरिति। अतोऽत्रापि डप्रत्ययस्य डित्वाभावे टिलोपाप्राप्त्या

रण्ड इति स्यान्न र इति रूपमिति चेत् । उच्यते । बहुलग्रहणादेवैतत्सूत्रविहितस्यापि डस्य क्वचित् डित्वमङ्गीक्रियत इति । अतो युक्तमुक्तम् । **ददातेर्मन्यतेश्च क्विबिति** । तथा च 'आतो लोप इटि च' इत्याकारलोपे निर्वचनत्वेन दकारस्य तकारे च सति 'आत्मन्' इति रूपमिति भावः ।

प० — ॥ ॐ **अंतर उपपत्तेः** ॐ । चक्षुरन्तस्थो विष्णुरेवेति भाष्यदिशा वा परीत्या वा अन्तरशब्दस्यांतःस्थत्वार्थत्वं मत्वा शंकते **अत्रेत्यादिना** ॥ **इत्युक्तमिति** । सर्वत्रेतिनये 'एतद्भावाभिधं लिंगमि'त्यादिविषयमालायामुक्तमित्यर्थः ॥ **रमतेरिति** । रमुक्रिडायामित्यस्माद्धातोः कर्तरि 'ञमंताड्डः' इति उणादिसूत्रेण ञम्संज्ञककवर्गादिपंचवर्गान्तिमवर्णान्यतमवर्णान्ताद्धातोर्डप्रत्यये चुटू इति डकारव्यंजनस्य लोपे डित्वात्'अभस्यापि' इति धातोष्टिलोपे र इति रूपमिति भावः । नन्वंतरशब्दस्य 'रो रि' इति रेफस्य ढूलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे अन्तार इति स्यादित्यत आह **उणादय इति** । 'कृवापाजिमिस्विदिसाध्य-शूभ्य उण्' इत्युणादिप्रकरणस्थाद्यसूत्रोक्तोण् प्रत्ययादयः, 'प्रत्यया बहुलं भवन्ति' यतो विहितास्ततोऽन्य-त्रापि भवन्ति, केचिदविहिता एव प्रयोगत उन्नीयंत इत्यष्टाध्यायीगततृतीयाद्यपादीयाद्यसूत्रे वृत्तावभिधाना-दिति भावः । एवं च उत्तररेफस्य पूर्वरेफलोपानिमित्तत्वान्न दीर्घप्राप्तिरत्रेति हृदयं । ञमन्ताड्ड इति विहि-तडप्रत्ययस्योणादिवृत्तौ 'उणादयो बहुलम्' इति बहुलग्रहणात् चुटू' इतीत्संज्ञा डप्रत्ययस्थडकारव्यंजनस्य नेत्युक्त्वा रम्यते रमते वा रंडेत्याद्युदाहरणस्योक्तत्वेपि होत्सर्गतः चुटू इत्यनेन प्राप्तेत्संज्ञा भवत्येव । यद्वा षःप्रत्ययस्य, चुटू इति पृथग्योगकरणं चुटू इत्यस्यानित्यत्वज्ञापनार्थम् । तथाच तेन वित्तश्चुञ्चणपाविति सूत्रोक्तप्रत्यय चकारस्य नेत्संज्ञा । विद्याचंचुरित्यादिसिध्यतीति प्रथमाध्याये तृतीयपादे वृत्त्यादावुक्तत्वात् रण्डेत्यादौ चुटू इति विधेरप्रवृत्तिः इह प्रवृत्तिरिति डकारव्यंजनस्येत्संज्ञा ध्येया ॥ **लघु चैत्रमिति** । न केवलं श्रुत्यनुसारीति चार्थः ॥ **अंतर इति कुर्वन्निममेवार्थमिति** । अत्र यत्कश्चिदाह । श्रुतौ 'अन्यों तर आत्मे'त्यादाविवांतरशब्द एव, न तु अन्तः शब्दः । अंतर अक्षणीति वक्तव्येऽपि सेदुराजेत्यादिवत् 'अहहारेत्वे'त्यादिवदयं निर्देशः कृतः । तेन श्रुत्यनुसारिणि सूत्रेऽपि तथैव निर्देशः कृत इति नायं निर्देशो भवदभिमतार्थसाधक इति । तन्न । कल्पकाभावात् । सौत्रनिर्देशस्यान्यथोपपत्तेः । अतिशयाभावाच्च । अंतस्तद्धर्मेत्यादावपि तथानिर्देशापाताच्च । 'य एषोंऽतरादित्ये, य एषोंऽतरक्षणी'त्येवंरूपवाक्ययोरेव तत्र परैरुदाहृतत्वात् । अत एवेतिवदित्युक्तं । एतेनांतर इत्येव श्रुतावपि विच्छेदमुपेत्य क्रियाभावपरत्वेन व्या-ख्यायताम् । किमात्मशब्दार्थनिर्देशपरतयेत्यपि प्रत्युक्तं ध्येयं । सर्वत्र तथाऽऽपत्तेः । अन्यथोपपत्तौ वृथा क्लेशायोगाच्चेत्यलम् । क्विबित्युपलक्षणम् । ददातेराकारलोपः तकारादेशश्चेति ज्ञेयं । 'पूर्वान्तवत्स्वरः संधौ'इत्यादिना यतिभङ्गदोषस्याऽऽनन्दमयनये 'अभेदेपि विशेषेणैवान्य' इत्यत्रैव परिहृतत्वान्नात्र यतिभङ्गः

शङ्कयः ॥ आदेयशब्दस्य पदद्वयसमाहाररूपत्वाद्वा नात्र यतिभङ्गचोद्यावकाशः । परमतमाशङ्क्य निराह **सुखसंबन्धेति** ॥

या० — ॥ ॐ **अन्तर उपपत्तेः** ॐ ॥ **सूत्रे भावस्यैवेति** । अन्तरशब्दस्यान्तःशब्दपर्यायतयाऽन्तःस्थित इत्येवान्तर इत्यनेन प्रतीतेरिति भावः ॥ **अमन्ताड्ड इतीति** । अमिति प्रत्याहारग्रहणम् । अमङणनमिति । अमन्ताद्धातोर्डप्रत्ययो भवतीत्युणादिसूत्रार्थः । दम्यतेऽनेनेति दण्डः, रम्यतेऽसाविति रण्डा, इत्याद्युदाहरणं द्रष्टव्यम् । तथा चानेन सूत्रेण रमतेर्डप्रत्यये डित्त्वात् अमो लोपे र इति रूपं सिध्यतीति भावः । नन्वेवमन्तर इति स्थिते 'रोरि' इत्युपपदान्त्यरेफलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे च सति अन्तार इति स्यादित्य आह **उणादयो बहुलमिति** ॥ **उपपदलोप इति** । अलोन्त्यपरिभाषया उपपदान्त्यरेफलोप इत्यर्थः । तथाच, नात्रोपपदान्त्यरेफलोपो रोरीति सूत्रविहितो रेफनिमित्तो येनोक्तरीत्या पूर्वस्याणो दीर्घप्राप्तिः । किन्तु प्रत्ययस्य बाहुलिकत्वोक्तनिमित्त एवातो न दीर्घप्राप्तिरिति भावः । 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलिकं वदन्ति' इति वचनाद्बहुलग्रहणादुक्तार्थसिद्धिरिति द्रष्टव्यम् । ननु अमन्तादित्यनेन विहितस्य डप्रत्ययस्य न डित्त्वं वैयाकरणानामभिमतम् । डकारस्यानुबन्धसंज्ञा नास्तीत्युणादिवृत्तावुक्तत्वात् । अन्यथा रण्डेत्यादिरूपानिष्पत्तेः । तथाच टिलोपाप्राप्त्या रम इत्येव स्यात् न र इति रूपमिति चेत् । सत्यम् । बहुलग्रहणादेव तत्सूत्रविहितस्यापि डस्य क्वचिड्डित्वमपि प्रयोगबलादङ्गीकार्यम् । कथमन्यथा 'आनन्दरूपो निष्परिमाण एष' इति रामशब्दनिर्वचनपरायां श्रुतौ रश्चासावमश्चेति विग्रहसूचनमुपपन्नं स्यात् । तत्रानन्दार्थकस्य रमतेरेवाभिप्रेतत्वात् । अप्रसिद्धधात्वन्तरकल्पनस्य च गौरवपराहतत्वादिति ज्ञातव्यम् । अत एवोणादिवृत्तावुदाहृतवाक्यात्पूर्वं सत्यपि प्रयोजन इत्युक्तम् । अन्यथा प्रयोजनाभावादित्येवावक्ष्यत् । तेन ज्ञायतेऽनुबन्धसंज्ञाभावेन डित्वं प्रायिकम् । क्वचित्प्रयोजने च सति अनुबन्धसंज्ञा ततश्च डित्वमपि भवतीति तद्वाक्यार्थ इति । अतो युक्तमुक्तमिति प्रतिभाति । **सुखसाधनं चेति** । तथाच सुखसाधनतयाऽभिमतविषयानुभवाभिव्यक्तसुखानुभवकर्तेत्यात्मशब्दनिर्वचनेन लभ्यत इति भावः ॥ **ददातेर्मन्यतेश्चेति** । दा दान इत्यस्मात्कर्मणि क्विप्, मनु अवबोधन इत्यस्माच्च कर्तरीत्यर्थः । तथा च 'अतो लोप इटि च' इति धात्वाकारलोपे निर्वचनत्वेन दकारस्य तकारे सत्यात्मन् इति रूपमिति भावः ॥

च० — ॐ **अन्तर उपपत्तेः** ॐ ॥ **भावस्यैवेति** । नायं भावस्तिङ्कृत्तद्धितस्थलीयः किन्तु भावसाधनघञन्तसत्तावचनभूधातुप्रतिपाद्यसद्भावः तस्यैवेत्यर्थः । क्वचिदन्तरशब्दो व्यवधानार्थः ।

'हलोनन्तराः संयोगः' इत्यादौ । अन्तरागृहा इत्यादौ बाह्यार्थः । अन्तराः शाटका इत्यादौ परिधानीयार्थः । गृहान्तरे देवदत्त इत्यादौ मध्यभागार्थः । तत्र मध्यभागार्थस्य मध्यभागार्थ-कान्तःशब्दपर्यायतया तस्य सप्तम्यन्ततया छेदे तत्पदोत्तरसप्तम्या मध्यभागनिरूपिताधेयता-रूपस्थितिबोधनात् ॥ **अव्ययादाविति** । लुप्तान्तःशब्दप्रकृतिकसप्तम्या तदुपस्थाप्यमध्यभाग-निरूपिततादृशार्थस्यैव बोधनात् । लुप्तविभक्त्यननुसंधानकल्पे तु द्वारमित्यादाविव स्थितादिपदानु-संधानादितानिर्वाहे तु प्रकृतेऽपि तादृश्येव रीतिर्विभाव्यतामिति भावः । अन्तरशब्दस्यान्तःशब्द-पर्यायतयान्तःस्थितिमात्रस्यैवान्तर इत्यनेन प्रतीतेरिति भाव इत्यपि व्याकुर्वते । **उभयार्थतया** क्रिया-भावरूपोभयतात्पर्यकतया । **अमन्ताड्ड इति** । अमिति प्रत्याहारग्रहणम् । तादृशप्रत्याहारघटक-अमङणनेत्यन्यतमान्ताद्धातोर्डप्रत्ययो भवतीति सूत्रार्थः । तथा च तादृशअमन्ताद्रमेः कर्तरि डप्रत्यये इति डस्येत्संज्ञायां लुट् प्रथमादेशरूप'डा'इत्यस्य डित्वसामर्थ्यादभस्यापि तासेष्टेर्लोपवत्प्रकृतेऽपि डित्व-सामर्थ्याद्तादृशस्यापि रमेष्टेर्लोपे र इति रूपं निष्पद्यत इत्याशयः । न चैवं तुल्यदिशा रमेः करण-साधने डप्रत्यये रमेः कर्मसाधने 'वनषणसंभक्तौ'इतिपठितस्य भौवादिकस्य वनतेरपि तस्मिन् कृते दः रः वः इत्येव रूपाणि निष्पद्येरन् । न तु दण्डः रंडा वण्ड इतीति वाच्यम् । 'चुटू षःप्रत्ययस्य' इत्येकयोगे(=सूत्रे) कर्तव्ये पृथक् 'चुटू' 'षःप्रत्ययस्य' इति योगद्वयकरणसामर्थ्यादस्यानित्यता ज्ञाप्यत इत्याकरे (=भाष्ये) स्थिततयेत्संज्ञाविधायकदर्शितशास्त्रस्यानित्यत्वेन तदप्रवृत्त्या लस्येत्संज्ञा न भवति । प्रयोजनाभावात । न च लित्स्वरप्रयोजनम् । णलो लित्वेन तदभावज्ञापनादिति यथा, तद्वत्प्रयोजना-भावाद्वा बाहुलिकलुशविधाविव नुंचुप्चणपावित्यत्रेव वा लुप्तवकारप्रत्ययादित्वाद्वा डस्येत्संज्ञाभावसिद्ध्या दण्ड इत्यादिरूपसिद्धेर्निरन्तरायत्वात् । न चैवं अमन्तादिति विहितस्य डप्रत्ययस्य क्वचिड्डित्वं क्वचिदडित्वमित्येतद्वैचित्र्यं निर्बीजतया न सङ्गच्छत इति वाच्यम् । उदाहृतसूत्रे बहुलग्रहणादेव तत्सूत्रविहितस्यापि तस्याडित्वमभियुक्तप्रयोगानुरोधात् क्वचिदूरीकार्यम् । एवमनुपगमे, 'आनन्दरूपो निष्परिमाण एषः' इति रामशब्दनिर्वचनपरायां श्रुतौ रश्चासावमश्चेति विग्रहस्य ध्वनितत्वात्तत्कथं सङ्गच्छतेत्यवसेयम् । नन्वेवमपि पुना रमत इत्यादाविव 'रोरि' 'ढूलोप'इति योगयोः प्रवृत्त्या 'अन्तार'इति भवितव्यमिति अन्तर इति रूपं दुरुपपादमित्याशङ्कायां बेभेदिता मरीमार्जितेत्यत्र भिदिमृज्योर्यथा बाहुलिको यङ्लुगिति 'न धातुलोप' इत्यस्याप्रवृत्तिः तथान्तर इत्यत्रापि रेफलोपस्य बाहुलिकत्वोपगमेन 'ढूलोप' इत्यस्य प्रवृत्तिविरहेणान्तार इति रूपप्रसञ्जनामवकाश इत्याह **उणादय इति** । **उपपदलोप इति** । अलोन्त्यपरिभाषयोपपदान्त्यरेफलोप इत्यर्थः । 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलिकं वदन्ति' इत्यभियुक्तोक्तेर्बहुलग्रहणात्

समीहिताखिलार्थसिद्धिरिति ध्येयम् । बहूनर्थान् लाति आदत्ते बहुलमिति व्युत्पत्तेराकरे स्थितत्वात् । भावमात्रस्यास्थिततायां क्षत्यभावेन वा व्रज्याकल्पने ममता(?) देयेत्यत आह **विवक्षितं चैतदिति** । अन्यथा भावमात्रतात्पर्यकतायां दर्शितविन्यासापत्तौ निमित्तान्तरमाह **लघु चैवमिति** । व्यच्कान्तरशब्दापेक्षया व्यच्कान्तःशब्दस्य लघुत्वान्मात्रालाघवं पुत्रलाभाद्गरीय इति पाणिनीयानां परिभाषातश्चेति भावः । सूत्रस्य श्रुत्यननुगतत्वशङ्काव्युदासफलकं भाष्यकारीयं रमणकर्तृत्वस्यात्मशब्दार्थत्वप्रतिपादनमित्यभिधित्समानस्तच्छङ्कानिरासकतया तद्वाक्यं युयोजयिषुः श्रुतिसूत्रयोरननुगममाशङ्कते **नन्विति** ॥ **न तस्येति** । तत्प्रत्यायकपदवैधुर्यादिति भावः । **श्रुत्युक्तमेव चेति** । 'नाश्रौतं सूत्रयते नासूत्रितं भाषते नाभाषितं टीकते, नाटीकितं टीकते' इति संप्रदायविदामुक्तेः सूत्रस्य श्रुत्यनुरुन्धानत्वादिति भावः । **ददातेर्मन्यतेश्चेति** । आङुपसृष्टात् जौहोत्यादिकात् दानार्थकाद्वा रूपप्रकृतिविशेषात्कर्मणि दैवादिकादवबोधनार्थान्मन्यतेश्च कर्तरि क्विबित्यर्थः । **एवं चातो लोप इटि चेति** । धात्वाकारलोपे निर्वचनत्वेन व्यञ्जनाशस्य तत्त्वे आत्मन्निति प्रतिपादिकं निष्पद्यत इति भावः ।

**सु० — चक्षुरन्तरस्य परमेश्वरत्वोपपादकमपरं सूत्रम् ।** सुखविशिष्टाभिधानादेव चेति । **अत्र विशिष्टपदं व्यर्थं सुखाभिधानादेवचेत्येतावता पूर्णत्वात् । सुखसंबन्धाभिधानार्थं विशिष्टपदमिति चेत् न, सुखित्वाभिधानादेव चेति कर्तुं शक्यत्वात् । लघु चैवं सति सूत्रं स्यात् । अयुक्तं च सुखसंबन्धाभिधानम् । 'प्राणो ब्रह्म कं ब्रह्म' इति श्रुतौ सुखमात्राभिधानादित्यतोऽन्यथा व्याचष्टे** विशिष्टेति ।

**अनु० — ॐ सुखविशिष्टाभिधानादेव च ॐ ॥**

विशिष्टसुखवत्त्वाच्च

**नात्र सुखविशिष्टशब्दः तद्वत्तामाचष्टे । येनानुपादेयः स्यात् । किन्तु सुखस्य वैशिष्ट्यं पूर्णतालक्षणम् । यदि हि सुखाभिधानादित्येव ब्रूयात् तदा सुखस्यान्यत्रापि सद्भावेन व्यभिचारः स्यात् । ततः सार्थकं विशेषणोपादानम् । ननु कथमत्र विग्रहः । सुखेन विशिष्टः श्रेष्ठ इति । कथं तर्हि विशिष्टसुखेत्युक्तम् । अर्थकथनमात्रमेतदित्यदोषः । सुखेन श्रेष्ठो हि तदा स्यात् यदि तत्सुखं श्रेष्ठं भवेदित्यर्थाद्, वैशिष्ट्यं सुखधर्मो भवति । अथवा 'कडाराः कर्मधारये' इति विशेषणस्य परनिपातं मन्यमानेन विशिष्टसुखेत्युक्तम् । कथं तर्हि मतुप्प्रयोगः, श्रुतावनुक्तत्वात् । स्वरूपेणापि सुखेन विशेषशक्त्या तद्वान भवतीति ज्ञापयितुमिति ।**

**नन्वेवं व्याख्याने हेतुरसिद्धः स्यात् । सुखविशेषणस्य विशिष्टत्वस्य श्रुतावनुक्तत्वादिति चेन्न । मुख्यामुख्ययोर्मुख्यस्यैव ग्राह्यत्वात् । उक्ता च सुखस्य विशिष्टता श्रुतावित्याह** ब्रह्मत्वं चेति ।

ब्रह्मत्वं च विशिष्टता ॥

**सुखविशेषणं विशिष्टता च ब्रह्मत्वं ब्रह्मशब्दार्थः । 'कं ब्रह्मेति' ब्रह्मशब्देनोक्तेति यावत् । ब्रह्मशब्दो हि पूर्णतामाह । तद्विशेष्याकाङ्क्षायां सन्निहितपरित्यागे कारणाभावात्सुखमेव संबध्यत इति ।**

**शे०— ॐ सुखविशिष्टाभिधानादेव च ॐ ॥** सुखविशिष्टाभिधानादेवेति सूत्रानुसारेण सुखविशिष्टाभिधानस्यैव व्याख्येयतया कुतो भाष्यकारीयमन्यथाव्याख्यानमित्यतः सूत्रे विशिष्टपदवैयर्थ्य-परिहारार्थं तदिति भावेन सौत्रविशिष्टपदानर्थक्यशङ्कापरिहारपरतया भाष्यं योजयितुं प्रयोजनप्रदर्शनपूर्वकं सूत्रमुपन्यस्य विशिष्टपदवैयर्थ्यमाशङ्कते । **चक्षुरन्तरस्येति** । ननूभयथा संबन्धाभिधानसंभवे कुतोऽयं निर्बन्धः, येन सुखित्वाभिधानादित्येव वक्तव्यतयाऽवधार्यत इत्यत आह **लघु चेति** । यद्यपि सुखि-शब्दस्य सुखविशिष्टशब्दपर्यायत्वात्पर्यायेषु लाघवगौरवचिन्तानवसरात् नैतच्चोद्यावकाशो युक्तः । तथाऽपि रूढ्या पर्यायेषु तच्चिन्तानवसरस्यैव सिद्धान्तेऽभिहितत्वात्, प्रकृते च सुखिशब्दस्य सुखविशिष्टशब्दस्य च योगेन संबन्धबोधकतया युक्तो लाघवगौरवचिन्तावसर इति ध्येयम् । यद्वा एतदस्वरसादेवाह **अयुक्तं चेति** । ननु सुखाभिधानमात्रेण पूर्तेः, किं पूर्णत्वरूपवैशिष्ट्यप्रतिपादकविशिष्टपदेनेत्यत आह **यदि हीति ॥ व्यभिचारः स्यादिति** । 'अक्षिस्थो विष्णुः सुखादि'त्यनुमाने जीवे व्यभिचार इत्यर्थः ॥

**ननु कथमत्रेति** । विशिष्टसुखवत्त्वादिति भाष्यानुसारेण विशिष्टं च तत्सुखं चेत्येव विग्रहः कर्तव्यः । प्रकारान्तरेण विग्रहाश्रयणे पूर्णत्वालाभात् । तथा च समासविधौ प्रथमानिर्दिष्टत्वेन, उपसर्जनत्वा-द्विशिष्टपदस्य पूर्वनिपाते विशिष्टसुखाभिधानादित्येव सूत्रणीयमिति गूढाभिसन्धेः शङ्केयम् । विदिताशयः सिद्धान्ती अन्यथाविग्रहाश्रयणेन समाधत्ते **सुखेन विशिष्ट इति** । कृद्ग्रहणेन गतिकारकपूर्वकस्यापि ग्रहणात् नखनिर्भिन्न इत्यादाविव गतिपूर्वककृदन्तविशिष्टसुखशब्दस्य कर्तृकरणे कृता बहुलमिति समास इति भावः । अन्यथाविग्रहाश्रयणे भाष्यविरोध इत्याशङ्कते **कथं तर्हीति** । न विग्रहप्रदर्शनपरभाष्यम् अतो न विरोध इत्याशयेन समाधत्ते **अथेति** । कथं तर्ह्यस्मिन्पक्षे सुखस्य पूर्णत्वलाभ इत्यतः सुखेन श्रैष्ठ्यस्य सुखश्रैष्ठ्यं विनायोगात्तल्लाभ इत्याशयेनार्थतो लाभमुपपादयति **सुखेनेति** । इदानीं पूर्वपक्ष्या-शयमुन्मूलयितुं भाष्यं विग्रहप्रदर्शनपरमेवेत्याश्रित्य तर्हि विशिष्टशब्दस्य पूर्वनिपातः स्यादित्यतः कडा-रादिशब्दानां कर्मधारये विकल्पेन पूर्वनिपातस्य कडारा इत्यनेनोक्तेर्विशिष्टं च तत्सुखं चेति विग्रहेऽपि जैमिनिकडारः कडारजैमिनिरितिवत्, विशिष्टसुखं च सुखविशिष्टमित्युभयथाऽपि उपपत्तेर्न दोष इत्या-**अथवा कडारा इति** । ननु न सूत्रविशिष्टपदं पूर्णत्वार्थकमाश्रयितुं युक्तम् । तथा सति सूत्रे पूर्णसुखा भिधानेऽपि संबन्धानभिधानेन भाष्ये संबन्धाभिधायकमतुपो वैयर्थ्यापातात् । न च सूत्रे संबन्धानुक्ता-

वपि श्रुत्यनुसारेण भाष्ये संबन्धोक्तिरस्त्विति वाच्यम् । 'प्राणो ब्रह्म कं ब्रह्मे'ति सुखमात्रस्यैव श्रुतावहे भिधानेन तत्रापि संबन्धानभिधानादित्याशयेन भाष्ये मतुपो वैयर्थ्यमाशङ्कते **कथमिति** । समाधत्ते **स्वरूपेणापीति** । ननु श्रुत्यैव तज्ज्ञापनसंभवात्. न तत्प्रयोगस्य तज्ज्ञापकत्वं कल्पनीयमित्यत: श्रुतावनुक्तत्वादित्युक्तमिति सिद्धान्तशेषतया वा योज्यम् । विशिष्टत्वस्य ब्रह्मशब्दार्थत्वे वर्णनमनर्थकमित्यत: असिद्धिशङ्कापरिहारार्थं तदिति भावेनासिद्धिशङ्कामुत्थापयति **नन्विति** । भाष्यकारीयं विशिष्टत्वस्य ब्रह्मशब्दार्थत्ववर्णनं विना, न सौत्रहेतोरसिद्धिशङ्कापरिहार इति भ्रान्तिनिरासाय स्वयं परिहारमाह **मुख्यामुख्ययोरिति** । तर्हि किमनेन भाष्येणेत्यतो न्यायसिद्धस्याप्यर्थस्य श्रौतत्वलाभार्थत्वात् तस्य न तदिति भावेन तथा भाष्यं योजयति **उक्ता चेति** । ब्रह्मशब्देन विशिष्टत्वोक्तिलाभाय उद्देश्यविधेयभावव्यत्यासेन मूलं व्याचष्टे **सुखविशेषणमिति** । ब्रह्मशब्देन कथं सुखस्य पूर्णत्वलाभ इत्यत आह **ब्रह्मशब्दो हीति** ।

**स०— लघु चैवं सतीति** । प्रकृते च सुखिशब्दस्य रूढ्या सुखसंबन्धबोधकत्वेन सुखविशिष्टशब्दस्य तथा बोधकत्वात् । किं तु योगेनैवेति शङ्काऽनवकाश इति भावः । **ननु कथमिति** । समासविधौ प्रथमानिर्दिष्टत्वात् विशिष्टशब्दस्य पूर्वनिपात: स्यादिति भावः । **कडाराः कर्मधारय इति** । कडारादयः शब्दा: कर्मधारय एव वा पूर्वं प्रयोक्तव्या इति सूत्रार्थः । उदाहरणं तु जैमिनिकडारः । कडारजैमिनिरिति । अस्याकृतिगणत्वाभिप्रायेणेदमुक्तम् इत्यवधेयम् ।

---

**प०— लघु चैवमिति** । न च सुखिशब्दसुखविशिष्टशब्दयोः पर्यायत्वेन पर्यायेषु न लाघवगौरवचिन्तेति परिभाषाया: सत्त्वाल्लघु चैवं सतीति कथं सङ्गच्छत इति वाच्यम् । रूढ्या पर्यायेषु लाघवगौरवचिंता न कार्येति परिभाषाभिप्रायात् । प्रकृते च सुखिशब्दस्य रूढ्या सुखसंबंधबोधकत्वेन सुखविशिष्टशब्दस्य तथाऽबोधकत्वात्, किन्तु योगेनैवेति चोद्यानवसर इति भाव: ॥ **श्रुतादिति** । श्रुत्युक्तस्यैव सूत्रे वक्तव्यत्वादिति भाव: ॥ **अन्यत्रापीति** । जीवेऽपीत्यर्थः । श्रेष्ठसुखसिद्धि: कथमित्यत आह ॥ **सुखेनेति** ॥ **कडारा इति** । बहुवचनमाद्यर्थे । कडारादयः शब्दा: कर्मधारयसमासे पूर्वस्मिन् परस्मिन्वा प्रयोज्या इत्यर्थ: । विशिष्टशब्दस्यापि कडारादिशब्दमध्ये ग्राह्यत्वादिति भाव: ॥ **मुख्यामुख्ययोरिति** । एतेन छांदोग्यभाष्यदिशा ब्रह्मशब्दस्य विष्णुरूपधर्मिपरत्वेऽपि न दोष इति सूचितम् ॥

**या०— ॥ ॐ सुखविशिष्टाभिधानादेव च ॐ ॥ कडाराः कर्मधारय इति** । कडारादयः शब्दा: कर्मधारये वा पूर्वं प्रयोक्तव्या इति सूत्रार्थ: । जैमिनिकडार: कडारजैमिनिरित्याद्युदाहरणम् । अस्याऽऽकृतिगणत्वमभिप्रेत्येदमुक्तमित्यवधेयम् ॥

**च०—** सुखविशिष्टेत्यानुपूर्वीकेतन्नयीयगुणसूत्रानुरोधेन सुखवैशिष्ट्यस्यैव व्याकर्तव्यत्वे विनिमयेन भाष्यकारीया व्याकृतिर्मन्दप्रयोजनेत्याशङ्कायां सूत्रघटकविशिष्टपदानर्थक्याय नुतिफलिका

सेत्याशयेन तदवय(व)कतत्पदानर्थक्यशङ्कापनोदकतया भाष्यं युयोजयिषुः फलप्रदर्शनपूर्वकं तद्योग-मुदाहृत्य तदवयवभूतोक्तपदानर्थक्यमाशङ्कते **चक्षुरन्तरस्येति । व्यर्थमिति ।** अक्षिस्थपक्षके तादात्म्येन विष्णुसाध्यके विष्णुत्वसाध्यके वाऽनुमाने सुखस्य हेतुत्वोपगत्यैव सामञ्जस्ये हेतुता-वच्छेदकशरीरे वैशिष्ट्यांशनिर्देशस्यानैकान्त्याद्यवारकत्वादिति भावः । **पूर्णत्वात् ।** उक्तसाध्यसम-र्थनौपयिकहेतुगोचरकाङ्क्षोपरमात् । संबन्धाभिधानार्थमिति प्रकृतहेतुभूतसुखे पक्षधर्मताप्रत्यायनार्थं न हेतुतावच्छेदकघटकतया संसर्गांशनिवेशबोधनाय धूमेन वन्हिसाधने धूमस्यैव हेतुत्वादित्यर्थः । सुखित्वेति मत्वर्थीयस्यापि संसर्गाबोधकत्वादिति भावः । उभयोस्तदवगमकत्वाविशेषेऽपि मत्वर्थीय-विन्यसन एव बीजमभिधत्ते **लघु चेति ।** विशिष्टपदस्य त्र्यच्कतया तदपेक्षयैकाच्केन लघुत्वान्मात्रा-लाघवं पुत्रोत्सवकल्पं मन्यन्ते वैयाकरणा इति भावः । यद्यपि सुखिविशिष्टपदयोः पर्यायतया पर्याये तु लाघवगौरवचिन्तानवसरात् नैतच्चोद्यावकाशो युक्तः । तथापि रूढ्या पर्यायेषु तच्चिन्तानवसरस्यैव सिद्धान्तेऽभिमतत्वात्, प्रकृते च सुखिशब्दस्य सुखविशिष्टशब्दस्य च योगेन संबन्धबोधकतया युक्तो लाघवगौरवचिन्तावसर इति ध्येयम् । यद्वैतदस्वरसादिवाह **अयुक्तं चेति ।** इत्यपि प्रपञ्चिषतः संसर्गांशस्य हेतुतावच्छेदकघटकतया दुर्निवेशताज्ञापनायासिद्धिमप्यभिधत्ते **अयुक्तं चैतदिति ।** पूर्णता-लक्षणम् । रमाद्यानन्दव्यावृत्तनिरवधिकपूर्तिरूपम् । **व्यभिचार इति ।** सुखेन विष्णुत्वसाधने रमा-

---

विरिञ्चादिषु प्रकृतसाध्यविनिर्मुक्तप्रकृतहेतुतावच्छेदकावच्छिन्नविशेषितेषु अनैकान्त्यमित्यर्थः । **विग्रहः** कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपवृत्तिपञ्चकान्यतमप्रकृतसमासार्थप्रत्यायकवाक्यम् । विधान्तरेण विग्रहाश्रयणस्य पूर्णत्वप्रतीत्यनौपयिकतया विशिष्टसुखवत्त्वादिति भाष्याक्षरानुपूर्व्यनुरोधेन सूत्रघटकपदयोः समासाधिकरणतत्पुरुषेऽनुरोद्धव्ये उपसर्जनसंज्ञकविशिष्टपदपूर्वनिपातापत्तिनियन्त्रितविशिष्टसुखेति विन्या-सापत्त्या कथं सुखविशिष्टेत्यसुसूत्रयत्सूत्रकार इति गूढः शङ्कितुराशयः । प्रतिसंहिततदाशय उत्तरवादी भङ्ग्यन्तरेण विग्रहाश्रयणेन समाधत्ते **सुखेन विशिष्ट इति ।** कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषासञ्चारेण नखनिर्भिन्न इत्यादाविव गतिपूर्वककृदन्तविशिष्टशब्देन सुखशब्दस्य कर्तृकरणे कृताबहुलमित्यनेन समासोऽवधेयः । भङ्ग्यन्तरेण विग्रहाश्रयणे प्रकृतानुव्याकृतिप्रतीकं विरुणद्धी-त्याशङ्कते **कथं तर्हीति ।** न समासजनितान्वयधीविषयतात्वावच्छिन्नसमनियतस्वनिरूपितविषयतात्वा-वच्छिन्नकान्वयधीजनकत्वरूपौत्सर्गिकलक्षणकविग्रहप्रदर्शकम् एतत्प्रतीकं किन्तु अर्थात् न्यायनये सुख-करणकश्रैष्ठ्यलक्षणकार्यलिङ्गकानुमानात् मीमांसकदिशा अर्थापत्तिलक्षणासिद्धस्य सुखगतश्रैष्ठ्यलक्षणकारणस्य कथं न तात्पर्यकमिति न क्षतिरिति समाधत्ते **अर्थेत्यादि ।** दर्शितलक्षणविग्रहप्रदर्शकत्वोपगमेऽपि सामञ्जस्यं सूपपादमित्याह **अथवेति ।** कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोक्तव्या इत्यर्थः ।

जैमिनिकडारः कडारजैमिनिरित्यादयः तत्प्रदेशाः । अस्याकृतिगणतामभिप्रेयिवान् इदमुदाजहारै-त्यवसेयम् ।

**सु०— चक्षुरन्तरस्येश्वरत्वं प्रतिपाद्य, अक्ष्यादित्ययोरग्निरेव नियामकतयाऽत्रोच्यतै इति यत् पूर्वपक्षिणोक्तं तन्निराकर्तुं सूत्रम्** अनवस्थितेरसंभवाच्च नेतर इति ।

**तस्यार्थः । जीवस्याग्नेर्जीवान्तरनियामकत्वे तस्यापि नियामकान्तरेण भाव्यमित्यनवस्थितेः, उभयोर्जीवत्वसाम्येन नियम्यनियामकभावासंभवाच्च नाग्निरक्ष्यादित्यस्थतया अत्रोच्यत इति । एतदयुक्तम् । स्वव्याघातात् । अस्माभिरपि हि ब्रह्मादिजीवानां मानुषादिजीवनियामकत्वमङ्गीक्रियते । तत्र यदि परस्यानवस्थित्यसंभवौ अस्माकमपि कुतो न भवतः । यथा च नास्माकं, तथा न परस्यापीत्यतः सूत्रं सम्यग्व्याख्यातुं पीठमारचयति** अन्योन्येति ।

**अनु० — ॐ अनवस्थितेरसंभवाच्च नेतरः ॐ ॥**

अन्योन्यनियतिश्चेशनियमेनान्यथा भवेत् ॥

**चशब्दोऽवधारणे । चेतनानामिति वक्ष्यमाणमत्रापि संबध्यते । चेतनानां याऽन्योन्यनियतिः ब्रह्मादीनां नियामकता, मानुषादीनां तु नियम्यता, सा ईशनियमे प्रेरणे सत्येवोपपन्ना भवेत् । अनवस्थित्यसंभवाभावात् । प्रेरकपरंपरा हि परनिरपेक्षे परमेश्वरे विश्राम्यति । तन्नियत्या चेतरेषां नियम्यनियामकभावो भविष्यति । नियन्तुरीश्वरस्याभावे अन्योन्यनियतिरुपपन्ना न भवेत् । अनवस्थित्यसंभवपरिहारोपायाभावात् ।**

**ननु ब्रह्मादीनां नियामकत्वं मानुषादीनां नियम्यत्वमित्येष विशेषः तेषां स्वभाव एव । यद्वक्ष्यति न चाऽऽधिकारिकमिति मोक्षेऽप्यनुवृत्तेश्च । आधिकारिमण्डलस्थोक्तेरिति वचनात् । स्वभावे च का नाम परमेश्वरापेक्षेत्यत आह** चेतनानामिति ।

चेतनानां विशेषो यः स्वभावोऽपीश्वरार्पितः ॥

**चेतनानां ब्रह्मादीनां मानुषादीनां च, यो विशेषो नियम्यनियामकत्वलक्षणः, सः तेषां स्वभाव एव । 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' (गी.१०-३९) इति वचनात् । अन्यथेश्वरस्य सर्वैश्वर्यं न स्यात् । स्याच्च परेषां स्वातन्त्र्यम् । अङ्गीकृतं च परैराकाशेऽनादिनोऽपि द्रव्यत्वस्य गुणवत्त्वाधीनत्वम् । अद्वैतिभिश्चाविद्याधीनत्वं जीवब्रह्मविभागस्य । यो हीश्वरेण यस्य सर्वदा नियम्यते, स तस्य स्वभाव इत्युच्यते । यस्तु कदाचित् सोऽस्वभाव इति ।**

शे० — ॐ अनवस्थितेरसंभवाच्च नेतरः ॐ ॥ 'अन्योन्यनियतिश्चेशनियमेनान्यथा भवेत्' इति स्वमतेऽन्योन्यनियतिसंभवव्युत्पादनं भाष्यकारीयमनर्थकम् । न च स्वमतेऽनवस्थित्यसंभवपरिहारार्थं तदिति वाच्यम् । प्रसञ्जकाभावेनानवस्थित्यसंभवयोरेव अप्रसक्तेः । प्रसक्तौ वा तदपरिहारेऽप्यनिष्टाभावादित्यतः प्रसञ्जकोपदर्शनपूर्वकमनवस्थादिप्रसक्तिं, तदपरिहारेऽनुपपत्तिं चोपदर्श्य, तत्परिहारकतयोत्तरवाक्यं योजयितुं प्रयोजनोपदर्शनपूर्वकं सूत्रं तावदुपन्यस्यति **चक्षुरन्तरस्येति** ॥ **व्याख्यातुमिति** । 'अन्योन्यनियमे तस्मादनवस्थित्यसंभवौ' इत्यनेनेति शेषः ॥ **अवधारण इति** । समुच्चायकत्वासंभवादिति भावः । स्वमते जीवानामन्योन्यनियतिसंभवस्य मूलारूढतासिध्यर्थमाह **चेतनानामिति** । अन्योन्यनियतिशब्दस्याव्यवस्थया परस्परनियम्यनियामकभावार्थकत्वभ्रान्तिं निवारयन्नेव, अपेक्षिताध्याहारेण व्याचष्टे **चेतनानामिति** । कुत ईशनियमे सत्युपपत्तिरित्यत आह **अनवस्थितीति** । कथमनवस्थाद्यभाव इत्यतोऽनवस्थाभावं तावदुपपादयति **प्रेरकेति** । असंभवाभावमुपपादयति **तन्नियस्येति** । अपेक्षिताध्याहारादिना नान्यथा भवेदिति व्याचष्टे **नियन्तुरित्यादि** ॥ ननु चेतनानां विशेषस्य भगवदधीनत्ववर्णनमसङ्गतम् । न च नियम्यनियामकभावस्यैव विशेषशब्देन ग्रहणान्नासङ्गतिः । तस्येशाधीनतायाः प्रागेवोक्ततया पुनरवक्तव्यत्वात् । न चोक्तस्याप्यपवादशङ्कानिरासार्थं पुनरुक्तिरिति वाच्यम् । प्रापकाभावेन तच्छङ्काया अनुदयात् । न च स्वभावत्वमेवापादकम् । अत एव भाष्ये 'स्वभावोऽपीत्युक्तिरि'ति वाच्यम् । नियम्यनियामकभावस्य स्वभावत्वासिद्धेः । सिद्धत्वे वाऽस्वभाववत्स्वभावस्यापीश्वराधीनत्वोपपत्त्या स्वभावत्वयुक्त्येश्वराधीनत्वाक्षेपायोगात् इत्यतो नियम्यनियामकभावस्य स्वभावत्वाद्युपपादनेनाऽऽक्षेपमुपपाद्य तन्निरासकतयोत्तरवाक्यं योजयति **नन्विति** ॥ **न चाधिकारिकमिति** । देवादिपदस्यानाकाङ्क्षत्वोक्त्याऽऽगन्तुकस्य तदसम्भवेन स्वभावत्वमर्थात्सिद्धमिति भावः । यद्वा, न जीवानां चैतन्यमेव निजस्वभावः, किन्तु देवासुरनरत्वाद्याजीवानां ते निसर्गत इति वचनात् देवत्वादिकमपीति प्रतिपादनेन नियम्यनियामकभावस्यापि स्वभावत्वसिद्धिरित्यभिप्रायः । नियम्यनियामकभावस्य जीवस्वभावत्वे स्पष्टं च नियामकमाह **मोक्षेऽपीति** । मोक्षेऽनुवर्तमानस्य च नागन्तुकत्वमिति भावः । स्यादेव यदि नियम्यनियामकभावस्य मोक्षेऽनुवृत्तिर्भवेत् सैव कुतः सिद्धेत्यत आह **आधिकारिकेति** । **वचनात्** ब्रह्मसूत्रादित्युपलक्षणम् । तद्व्याख्यानरूपभाष्योदाहृतात् 'बलिं हरन्ति मुक्ताय विरिञ्चाय च पूर्ववत् । सब्रह्मकास्तु ते देवा विष्णवे च विशेषतः' इत्यादिगारुडवचनबलादित्यपि द्रष्टव्यम् । अस्तु वा स्वभावत्वं नियम्यनियामकभावस्य, किं तावतेत्यतः स्वभावस्येशाधीनत्वे स्वभावत्वहान्यापत्त्या ईशानधीनत्वप्राप्तेर्न तदाश्रयणेनानवस्थादिपरिहारसिद्धिरित्याशयेनाह **स्वभावे चेति** । कथमनादिचेतनस्वभावस्येशाधीनत्व-

मित्यतः किमस्याप्रमितत्वमित्याशयः । प्रमितत्वेऽपि सम्भावकशून्यत्वन्यत्राद्दृष्टत्वं वेति विकल्पान्मनसि निधायाद्यं दूषयति **नेति** । द्वितीयं प्रत्याह **अन्यथेति** । तृतीयं प्रत्याह **अङ्गीकृतं चेति** । अनादिस्वभावस्यापीश्वराधीनत्वे स्वभावास्वभावव्यवस्था न स्यात् । यो ह्यनन्याधीनः स स्वभाव अन्याधीनश्च अस्वभाव इत्युच्यते तद्यदि स्वभावस्याप्यन्याधीनत्वं तदा का वार्ता स्वाभावास्वभाववादस्येत्यत आह **यो हीति** ।

**स०— न चाधिकारिकमिति** । देवादिपदस्यानपेक्ष्यत्वोक्त्या आगन्तुकस्य तदसंभवेन स्वभावत्वं अर्थात्सिद्धमिति भावः ॥ **मोक्षेऽप्यनिवृत्तश्चेति** । 'ता यो वेद स वेद ब्रह्मे'ति श्रुत्या मोक्षेऽपि सर्वमुक्तनियामकत्वं सिद्धमिति भावः । न च तद्वाक्यममुक्तब्रह्मविषयमिति वाच्यं तस्य मुक्तदेवनियामकत्वाभावात् । न च नियम्या अपि अमुक्ता एवेति वाच्यम् । अमुक्तापेक्षया मुक्तानां बहुत्वेनामुक्तविषयत्वाङ्गीकारे सङ्कोचः स्यात् । न च स युज्यते बाधकाभावादिति भावः ॥ **अधिकारिकमण्डलस्थोक्तेरिति वचनादिति** । मुक्तस्वावरप्रेरणाधिकारे स्थिता ये मुक्तदेवाः ते आधिकारिकाः, तन्मण्डले नियामकतया तिष्ठतीत्याधिकारिकमण्डलस्थो मुक्तब्रह्मा तस्य 'ता यो वेद स वेद ब्रह्मे'ति वाक्ये सर्वमुक्तदेवतापूज्यतयोक्तेरिति वचनार्थः ।

**प०— नचाऽधिकारिकमितीति** । ज्ञानार्थिनाऽधिकारिविशेषप्राप्यब्रह्मादिपदं नाकांक्ष्यम् । तथात्वेऽनर्थप्राप्तेरिति ज्ञानपादेन चाऽऽधिकारिकमपि पतनानुमानात्तद्योगादिति षष्ठेऽधिकरणे कथनेन नियमनादितत्तद्व्यापारस्य तत्तत्स्वभावत्वावगमादिति भावः । स्वभावत्वे युक्तिश्चाह **मोक्षेऽपीति** । मोक्षेप्यनुवृत्तौ 'प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमंडलस्थोक्तेरि'ति चतुर्थाध्यायचतुर्थपादीयसूत्रसिद्धांतांशं प्रमाणयति **आधिकारिकेति** । मुक्तानां जगद्व्यापारवर्जमित्युक्तम् । 'ता यो वेद स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहंती'ति प्रत्यक्षं स्पष्टं मुक्तस्य सर्वदेवपूज्यत्वव्यपदेशात् मुक्तानां जगदैश्वर्यमस्तीति चेन्न । अधिकारे विनियुक्तानां देवानां मंडले स्थितस्य मुक्तविरिंचस्यैव तत्रोक्तेर्नाशेषमुक्तानां जगद्विषयैश्वर्यमि युक्त्या मुक्तावनुवृत्तेरवगमादिति भावः ।कथमनादिस्वभावस्य नियम्यत्वमित्यत आह **अंगीकृतं चेति** । विवृतमेतद्वायत्रीनयचंद्रिकायां । 'अनादीनां गुणादीनां यथा गुण्यादितंत्रते'त्यादिग्रंथेन ।

**या०— न चाधिकारिकमितीति** । तत्र तद्यपि देवतादिपदमनादियोग्यतावतामेव नेतरेषामित्येव वक्ष्यति । तथाऽपि मानुषादीनां देवानां चानादियोग्यतायाः तत्र समर्थनेन तेषां नियम्यनियामकभावः स्वाभाविक इत्यस्याप्यर्थाल्लाभादेवमुक्तमिति ध्येयम् ॥ **आधिकारिकेति** । मुक्तस्वावरप्रेरणाधिकारे स्थिता ये मुक्तदेवास्ते आधिकारिकाः, तन्मण्डमण्डले नियामकतया तिष्ठतीत्याधिकारिकमण्डलस्थो

मुक्तब्रह्मा, तस्य 'ता यो वेद स वेदब्रह्म सर्वेऽस्मै देवा बलिमावहन्ती'त्यत्र मुक्तसर्वदेवतापूज्यतयोक्तेरिति सूत्रखण्डार्थः ॥

**श्री०—** ॥ ॐ **अन्तर उपपत्तेः** ॐ ॥ ॥ ॐ **सुखविशिष्टाभिधानादेव च** ॐ ॥ ॐ **अनवस्थितेरसम्भवाच्च नेतरः** ॐ ॥ यो हीश्वरेण यस्येत्यत्र, पदार्थस्य यो धर्म इत्यर्थः ॥ **मूलाभावेनेति** । परम्पराङ्गीकारे तत्रैव कालपर्यवसानापत्तेरिति भावः ॥ **अविनिगम्यत्वेनेति** । विनिगमकशून्यत्वेनेत्यर्थः ॥

**च०— न चाधिकारिकमितीति** । तत्र देवतादिपदस्यानादियोग्यताव्यतिरेकेण दुष्प्रायत्व-मभिधास्यतीति मानुषादीनां सुराणां चानादियोग्यतायाः समर्थनात् तेषां नियम्यनियामकभावो नैसर्गिक इत्यर्थादलभिष्टेत्याशयेनेत्थमभ्यधादिति मन्तव्यम् । **आधिकारिकेति** । मुक्तस्वकीयावरनियमनाधिकारे वर्तमाना आधिकारिका मुक्तदेवताः, तेषां मण्डले आधिपत्येन स्थितो मुक्तब्रह्मा तस्य 'ता यो वेद । स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति' इति मुक्तनिखिलदेवकर्तृकपूजासाधनद्रव्यदानक्रियासंप्रदानतया वचना-दिति सौत्रावयवार्थः । तत्सूत्रार्थनिरूपकभाष्योपन्यासे 'बलिं हरन्ति मुक्ताय विरिञ्चाय च पूर्ववत् । सत्रह्मकास्तु ते देवा विष्णवे च विशेषतः' इति गारुडवचने व्यक्तमेतदित्यवसेयम् । अनादिचेतन-निसर्गस्येश्वराधीनत्वं किं निष्प्रमाणं निःसंभावनाकं निरान्यत्रिकदर्शनं वेति वितर्कांश्चेतसि दधान आद्यं प्रत्याख्याति **नेति** । द्वितीयमपहस्तयते **अन्यथेति** । **सर्वैश्वर्यं** सर्वैकमेकनियमनक्रियाकर्तृत्वम् । तृतीयमपाकुरुते **अङ्गीकृतं चेति** । **परैः** नैयायिकैः । नन्वाकाशधर्मिकद्रव्यत्वविधेयकानुमितेरेव गुणवत्त्वलिङ्गावगाहिपरामर्शाधीनत्वं नैयायिका अभ्युपयन्ति । न द्रव्यत्वस्यैव तदधीनत्वमिति कथमिदं निदर्शितमिति चेन्न । व्याप्यसत्ता व्यापकसत्ताधीना प्रतियोगित्वविषयत्वावच्छेद्यसत्ता घटत्वावच्छे-दकसत्ताधीना इत्यादयः तदीयविन्यासाः कथं सङ्गमनीयाः । यद्विषयकनिश्चयस्य विरोधिविषयिता-प्रयुक्तः प्रकृतपक्षतावच्छेदकविशिष्टे पक्षे प्रकृतसाध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहित्वप्रकृतसाध्यतावच्छे-दकविशिष्टनिरूपितव्याप्तिविशिष्टवैशिष्ट्यावगाहित्वोभयाभाव इत्यादिदीधितिकारादिव्यवहाराश्च दुःस-ङ्गमाः प्रसज्येरन् । पारिभाषिकप्रागुक्तपक्षं प्रत्याख्याय स्वरूपसंबन्धरूपप्रयुक्तत्वस्यैव गदाधरेण समर्थितत्वात्, न चात एवेमामनुपपत्तिं प्रतिसन्दधानस्तद्ग्रन्थं व्याचक्षाणो गदाधरः तदुभयाभावपदम् उभयाभावीयाधिकरणतापरत्वेन व्याचचक्ष इति वाच्यम् । अधिकरणतायाम् अधिकरणात्मकत्वस्य तादृशोभयाभावाधिकरणीभूतज्ञाने विषयिताप्रयुक्तत्वाभावेनासंभवप्रसङ्गेन दुरुपगमतया भावान्तरत्वस्योपगतौ अनन्तध्वंसप्रागभावतत्सामग्रीकल्पनानिबन्धनगौरवप्रसङ्गेन तस्य जन्यत्वोरीकारासंभवेन नित्यत्वोररीकारा-वश्यंभावेनोक्तक्षतितादवस्थ्यादित्याकारदृशां निरूढः पन्थाः । **अद्वैतिभिरिति** । जीव ईशोविशुद्धा

चिद्भेदस्तस्यास्तयोर्द्वयोः । अविद्या तच्चितोर्योगः षडस्माकमनादय' इत्यनादितया प्रतिपन्नजीवब्रह्म-विभागस्याविद्यातत्कार्यान्तरत्वरूपमिथ्यात्वलक्षणानाक्रान्ततापत्त्या व्याप्तिमाशङ्क्य कार्यपदस्थाने नियम्य-पदमभिषिच्याविद्यातन्नियम्यान्यतरत्वं तत्त्वमिति परिष्कुर्वाणैरिति पूरणीयम् । जिज्ञासानये कृतप्रपञ्चन-मेतत् ।

सु० — किमतो यद्येवं स्वव्याघातेन विना सूत्रार्थो निष्पन्न इत्याह अन्योन्येति ।

अनु० — अन्योन्यनियमे तस्मादनवस्थित्यसंभवौ ॥

यस्मादीश्वराङ्गीकारेऽन्योन्यनियमो युज्यते । नान्यथा तस्मादीश्वरमनङ्गीकृत्य परेणा-न्योन्यनियमेऽङ्गीक्रियमाणेऽनवस्थित्यसंभवौ सूत्रकृतोक्तौ युक्तावित्यर्थः । नन्वनवस्थित्य-संभवयोः को भेदः । उभयत्रापि प्रवृत्त्यनुपपत्तिसाम्यात् । उच्यते । अनवस्थायां हि प्राक् सिद्धमूलाभावेन प्रवृत्तिनिरोधः । असंभवे तु समानतयाऽविनि(य)गम्यत्वेनेति भेदः । यथा पृथिवीसंबन्धाद्गन्धोपलब्धिः पयसीति वदन्तं प्रत्युच्यते । पयःसंबन्धात्पृथिव्यां तदु-पलब्धिरिति किं न स्यात् । विनिगमकाभावादिति । तदनेनानीश्वरवादिनं प्रतीदं दोषाभि-धानमित्युक्तम् । ईश्वरमङ्गीकृत्याक्ष्यादित्यस्थतयाऽत्राग्निरुच्यत इति वदतः को दोष इत्यत आह ईश्वरश्चेदिति ।

---

ईश्वरश्चेन्नियन्ता स्यात्स एव प्रथमागतः ॥

किमित्यपोद्यते कस्माद्वृथाऽवस्थितिकल्पना ॥

यदीश्वरः सर्वनियन्ताऽभ्युपगतः स्यात्तदा स एव प्रथमागतः साक्षादक्ष्यादित्यस्थ-त्वेनामृतत्वादिप्रमाणैः प्रतीतः कस्मात्परित्यज्यते । कस्याचेश्वरस्यादित्यादीनां च मध्ये वृथाऽग्नेर्नियामकत्वेनावस्थितिकल्पना क्रियते । पूर्वपक्षप्रापकाणां भाष्ये निरस्तत्वादिति । ईश्वरपरित्यागे मध्येऽग्निकल्पने च प्रमाणं नास्तीत्युक्तम् । ततः किमित्यत आह दोषवतीति ।

दोषवत्येव तस्मात्सा नैव कार्या कथञ्चन ॥ ४ ॥

दोषः श्रुतहानिरश्रुतकल्पना च । आद्येन एवशब्देन दोषद्वयस्यापरिहार्यत्वमाह । तस्मात् उभयत्र प्रमाणाभावात् । सा परमेश्वरपरित्यागेनावस्थितिकल्पना । अनेन सूत्रस्या-र्थान्तरमुक्तं वेदितव्यम् । मध्येऽग्नेरवस्थितिकल्पकाभावात् । प्रथमावगतेश्वरपरित्यागा-संभवाच्च नेतर इति ।

इदमुक्तं भवति । अक्ष्यादित्यस्थतयाऽत्र प्रतिपाद्यमग्निं प्रतिपद्यमानं प्रति किं स्वतन्त्र-मीश्वरमनभ्युपगम्यैतदुच्यते, उताभ्युपगम्येति विकल्प्य, पक्षद्वये सूत्रकारेण दूषणमुक्तमिति ।

अथवा प्रतिवादिनं निरीश्वरं निश्चित्य सूत्रकृताऽनवस्थित्यसंभवावुक्ताविति पूर्वग्रन्थार्थः। तत्कथं निश्चितमित्यत आह ईश्वरश्चेदिति। यदि सर्वनियन्तेश्वरः प्रतिवादिनाऽभ्युपगतः स्यात्, तदा स एव प्रथमागतः किमित्यपोह्येत। कस्माच्च वृथाऽवस्थितिकल्पना क्रियते। किं तु निर्निमित्तत्वात्सा नैव कार्या स्यात्। न हि पूर्वपक्षी सर्वथाऽप्यप्रेक्षावान्। तथा सत्युन्मत्तवदुपेक्षणीयः स्यात्। कृता च तेनेयं सर्वा कल्पना। तेन जानीमोऽयं निरीश्वर इत्ययमभिप्रायः सूत्रकारस्येति ॥ १-२-४ ॥

शे०— **को भेद इति**। फलभेदोपपादकभेदयोरसम्भवान्न कोऽपि भेद इत्यर्थः। कथमसम्भव इत्यतः। फलभेदाभावं दर्शयति **उभयत्रापीति**। अनवस्थित्यसंभवयोरित्यर्थः। नापि फलैक्येऽप्युपपादकभेदात् तद्भेद इत्यत उभयोर्जीवत्वसाम्यादित्यसम्भवोपपादकस्यैव नियम्यताप्रयोजकीभूतजीवत्वस्य नियामकेऽग्नावपि साम्यात् तस्याप्यन्येन नियम्यत्वमवश्यं वाच्यम्। तन्नियामकश्च न पूर्वो जीवः। अन्योन्याश्रयप्रसङ्गात्। अतोऽन्य एव वाच्यः। एवं तस्यापि नियम्यताप्रयोजकत्वसाम्यात् पुनरन्यो नियामको वाच्य इत्यनवस्थोपपादकत्वादिति स्पष्टत्वान्नोक्तम् **प्राक् सिद्धेति**। यदर्थमुत्तरोत्तरानुसरणं तन्मूलं तस्य प्रमाणसिद्धत्वाभावेनेत्यर्थः। इदं च प्रकृतानवस्थाया मूलक्षयकारित्वोपपादनायोक्तम्। मूलस्य प्रामाणिकत्वे तदसम्भवादिति ध्येयम् ॥ **अविनिगम्यत्वेनेति**। तथा चोक्तरीत्या फलसाम्येऽप्युपपादकभेदाद्भेद इति भावः। नन्वेवमसम्भवेऽप्यनवस्थायामिव प्राक् सिद्धमूलाभाव एव प्रवृत्तिनिरोधकोऽस्तु किं समानतयाऽविनिगम्यत्वस्य तदुपपादकत्वकल्पनयेत्यतोऽसम्भवस्थले विनिगमकाभावस्यैवोपपादकत्वेन दृष्टत्वादित्याशयेन तदुदाहरति **यथेति** ॥ **को दोष इति**। त्वयेव मयाऽपीश्वराङ्गीकारात् त्वन्मत इव न मन्मतेऽप्यनवस्थादिप्रसङ्गः। अन्यथा त्वन्मतेऽप्यनवस्थाप्रसङ्ग एवेति न स्वव्याघाताभावसिद्धिरित्यर्थः। ननु चेश्वरस्यादित्यानां च मध्येऽग्नेः अवस्थितिकल्पनं न निर्बन्धनम्। य एष आदित्ये पुरुषो दृश्यत इत्यादिश्रुत्यभ्यासार्थवादबलेन तस्य प्राप्तत्वादित्यत आह **पूर्वपक्षेति** ॥ भाष्ये **निरस्तत्वादिति**। सोऽहमस्मीत्यादि त्वन्तर्याम्यपेक्षयेत्यादिनेति शेषः। यद्यप्यत्र श्रुतिरेव निरस्ता तथाऽपि श्रुतेः सावकाशत्वे तदनुयायिनोरभ्यासार्थवादयोरपि सुतरां सावकाशत्वमिति टीकोक्तेः श्रुतिनिरासेनैवाभ्यासार्थवादनिरासस्यापि सिद्धत्वमभिप्रेत्यैवमुक्तमिति द्रष्टव्यम् ॥**उभयत्रेति**। ईश्वरपरित्यागे मध्येऽग्निकल्पने च प्रमाणाभावादित्यर्थः। पूर्वपक्षप्रापकाणां भाष्ये निरस्तत्वादिति भावः। ननु 'अन्योन्यनियमे तस्मादनवस्थित्यसम्भवौ' इति, 'ईश्वरश्चेन्नियन्ता स्यादि'ति च सूत्रव्याख्यानद्वयं परस्परविरुद्धत्वादपव्याख्यानमित्यतोऽत्र पक्षद्वयं विकल्प्याद्यपक्षाश्रयणेनाद्यव्याख्यानस्य द्वितीयपक्षाश्रयणेन द्वितीयव्याख्यानस्य प्रवृत्त्यैकपक्षाश्रयणेनाप्रवृत्तेर्न दोष इत्याशयेनविकल्पप्रदर्शनपूर्वकं व्याख्यानद्वयं व्यवस्थापयितुमाह **एतदु(इदमु,)क्तं भवतीति**।

अस्मिन्पक्षे सूत्रकृतः प्रतिवादिनि निरीश्वरत्वस्येश्वरत्वानध्यवसायः कल्पनीय इत्यरुच्या पक्षान्तरमाह **अथवेति** ॥ **पूर्वग्रन्थेति** । अन्योन्यनियमे तस्मादिति पूर्वग्रन्थेत्यर्थः । तर्ह्युत्तरवाक्यवैयर्थ्यम् । 'अन्योन्यनियमे तस्मादनवस्थित्यसम्भवा'दित्यनेनैव सूत्रव्याख्यानसिद्धेरित्यतो नेदं व्याख्यानं किन्तु सूत्रकृतः प्रतिवादिनिरीश्वरत्वनिश्चयोपपादकं तदिति भावेन तदनुगुणतया शङ्कामुत्थापयति **तत्कथमिति** ॥ ॥ १ — २ — ४ ॥

**स० — उभयत्रापीति** । जीवत्वसाम्येन नियामकान्तरापेक्षयाऽनवस्थायां जीवत्वसाम्येन नियामकाभावासंभवेन प्रवृत्त्यनुपपत्तिसाम्यादित्यर्थः । **प्राक्सिद्धेति** । यद्बलादुत्तरत्र परम्परा कल्प्यते तन्मूलं, तस्य प्रमाणासिद्धत्वे मूलक्षय इत्यर्थः । **अविनिगम्यत्वेनेति** । विनिगमनाऽविषयत्वेनेत्यर्थः । 'उपलभ्याप्सु वैगन्धं केचिद्ब्रूयुरनैपुणात् । पृथिव्यामेव तं विद्यादपो वायुञ्च संश्रितमि'ति मोक्षधर्मे ।

**प० —** अर्थान्तरमुक्तमित्येतद्व्यनक्ति **मध्य इति** । ईश्वरस्यादित्यादीनां च मध्य इत्यर्थः । ईश्वरश्चेत्यादिकं सूत्रस्य वृत्त्यंतरोक्तिपरतया योजितं इदानीं 'अन्योन्यनियमे तस्मादनवस्थित्यसंभवौ' इत्युक्तसूत्रार्थोपपादकतया सूत्रतात्पर्योक्तिपरतया योजयति ॥ **अथवेति** ॥ १ । २ ॥

**या० — उभयत्रापीति** । असंभवशब्दाभिधेयप्रवृत्त्यनुपपत्तिरूपफलस्यानवस्थायामपिसाम्या-दित्यर्थः । न च फलैक्येऽप्युक्तोपपादकभेदाद्भेदः । उभयोर्जीवत्वसाम्यादित्यसंभवोपपादकस्यापि नियम्यताप्रयोजकीभूतजीवत्वस्य नियामकेऽन्नावपि साम्यात् तस्याप्यनेन नियम्यत्वमवश्यं वाच्यम् । तन्नियामकश्च न पूर्वो जीवः । अन्योन्याश्रयत्वप्रसङ्गात् । अतोऽन्य एव वाच्यः । एवं तस्यापि नियम्यताप्रयोजकजीवत्वसाम्यात्पुनरन्यो नियामको वाच्य इत्यनवस्थायामेव पर्यवसानेन उपपादकयोरपि ऐक्यादित्याशयात् । **प्राक् सिद्धेति** । यदर्थमुत्तरोत्तरानुसारणं तन्मूलं, तस्य पूर्वस्य प्रमाणसिद्धत्वाभावेनेत्यर्थः । इदं च प्रकृतानवस्थाया मूलक्षयकारित्वेन दोषत्वोपपादनायोक्तं, मूलस्य प्रामाणिकत्वे तदसंभवादिति ध्येयम् ॥ **अविनिगम्यत्वेनेति** । तथाच फलसाम्येऽप्यु-पादकभेदाद्भेदः । तस्यापि जीवत्वसाम्यादित्यसंभवोपपादकस्य विनिगमकाभावात्, वैपरीत्यमेवा-स्त्वित्येवार्थो न त्वदुक्तः । एवञ्च नान्योन्याश्रयत्वादेरवकाशः । परस्परनियम्य-नियामकभावानभ्युपगमादित्याशयः । ननु तस्यापि जीवत्वसाम्यादित्यस्योक्तरीत्याऽन-वस्थायामेव तात्पर्यं वाच्यं, नाविनिगम्यत्वहेतुकवैपरीत्यापादने । तस्य पराभिलषितकार्या-संभवहेतुतया कुत्राप्यनवस्थायसङ्कीर्णोदाहरणेऽदर्शनादित्यत आह **यथेति** । गन्धोपलब्धेरुभयत्र साम्येऽपि पृथिव्यामेव गन्धः स्वाभाविकः, पयसि त्वौपाधिक इति पराभिलषि-तस्याविनिगम्यत्वहेतुकवैपरीत्यापादनेनासंभवो दृश्यते । न चात्रानवस्थादेरवकाशोऽस्ति । अत एवम्

असङ्कीर्णोदाहरणे दर्शनादुक्तं युक्तमिति भावः । इदं च वैपरीत्यापादनं न स्वरीत्या, नापि नैयायिकादिरीत्या, केनापि पयसि गन्धानङ्गीकारात् । किन्तु कस्यचिद्वैतण्डिकस्य रीत्येति ध्येयम् ॥ **पयः सम्बन्धात्पृथिव्यामिति** । इदं च त्रिवृत्करणाभिप्रायेणोक्तमिति ज्ञातव्यम् ॥ **पूर्वपक्षप्रापकाणामिति** । 'य एष आदित्ये पुरुषः सोऽहमस्मि' इति अग्नेरादित्यस्थत्वश्रुतिः 'स एवाहमस्मि' इत्यभ्यासः । 'अथ हाग्नयः समूदिरे गार्हपत्योऽनुशशासे'त्यादिबह्वग्निश्रुतिः । 'स य एतदेवं विद्वानुपास्तेऽपहते पापकृत्यामि'त्यर्थवादश्चेति पूर्वपक्षप्रापकाणामित्यर्थः । यद्यपि भाष्ये सोऽहमस्मीत्यादि त्वन्तर्याम्यपेक्षयेति श्रुतिरेव निरस्ता । नाभ्यासार्थवादौ । तथाऽपि श्रुते सावकाशत्वेन निरासे तदनुयायिनोरभ्यासार्थवादयोरपि सावकाशतया निरास उपलब्ध एवेत्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यम् ॥ १-२-४ ॥

**श्री० — भेद इति ।** उभयत्रापि प्रवृत्तिनिरोधसाम्येऽपि तदुपपादकप्रकारमात्रस्यैव भेद इत्यर्थः ॥ **उभयत्रेति** । ईश्वरपरित्यागे मध्येऽग्निकल्पने चेत्यर्थः ॥ १-२-४ ॥

**च० — को भेद इति ।** फलभेदोपपादकभेदयोरन्यतरस्य संभवान्न कोपि भेद इत्यर्थः । **उभयत्रापीति** । अनवस्थित्यसंभवयोरित्यर्थः । प्रवृत्त्यनुपपत्तिरूपफलस्य स्थलद्वयेपि साम्यादित्यर्थः । फलैक्येप्युपपादकभेदनिबन्धनो भेद इति दुर्वचमेव । उभयोर्जीवत्वसाम्यादित्यसंभवोपपादकस्यैव नियम्यताप्रयोजकतापन्नजीवत्वस्य नियामकाग्न्यावप्यवैशेष्येण तस्यापि चेतनान्तरेण नियम्यतोपेया । तन्नियमनकर्ता चान्योन्याश्रयापत्त्या न प्राक्तनो जीवः । किंत्वन्य एव । एवं तस्य तस्यापि तादृश तादृश एव वाच्य इत्यनवस्थायामेव पर्यवसित्योपपादकयोरप्यैक्यादित्याशयात् । मूलस्य प्रमाणप्रमितत्वे प्रकृतानवस्थायाः मूलक्षयकारित्वनिबन्धनदोषत्वस्य दुरुपपादतापत्त्या तस्यास्तत्संघटयितुं तस्य तदप्रमितत्वमाह **प्राक्सिद्धेति** । **अविनियम्यत्वेनेति** । अन्योन्यावैशेष्यापादितनियमनकर्मत्वाभावेनेत्यर्थः । तथा चोक्तदिशा फलतौल्येपि उपपादकभेदनिबन्धनो भेद इति भावः । अनवस्थया असङ्कीर्णमसंभवोदाहरणं दर्शयति **यथेति** ॥ **को दोष इति** । तथा चोभयोरपीश्वरोपगन्तृत्वेन वैकतरमते दर्शितदिशेश्वरविद्वेषितनिबन्धनानवस्थापत्तिरिति भावः । पूर्वपक्षेति पूर्ववादिमतप्रवृत्तिहेतूनां य एष आदित्ये पुरुषो दृश्यत इत्यादिश्रुति 'स एवाहमस्मि' इत्यभ्यास 'अथ हाग्नयः समूदिरे गार्हपत्योऽनुशशास य एतदेवं विद्वानुपास्तेतेषापकृत्यामि(?)त्यभ्यासजबह्वग्निश्रुत्यर्थवादानां भाष्ये सोऽहमस्मीत्यादि तु अन्तर्याम्यपेक्षयेत्यादिना चाकृतत्वादित्यर्थः । यद्यप्यत्र भाष्यकाराः श्रुतिमेव प्रत्याचख्युः, तथापि श्रुतेः सावकाशत्वे तदनुरुन्धानाभ्यासार्थवादयोरप्यतीव सावकाशतां टीकाकृत्पादाष्टिटीकिर इति श्रुत्युपाकृत्यैव तदनुविधाऽप्यभ्यासार्थवादापाकृतिं मन्वाना न्यभांत्सुरित्यवधेयम् ॥

॥ इति अन्तराधिकरणम् ॥

सु० — ॐअन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥ नन्वेतदनन्तरातीतेनैव गतार्थम् । अन्तर्यामित्वं ह्यन्तःस्थित्वा नियामकत्वम् । एतदेवान्तर उपपत्तेरित्युक्तम् । न च तत्र नियामकत्वं न विवक्षितम् । तथा सत्यनवस्थितेरसंभवाच्चेति दूषणस्यालग्नकत्वप्रसङ्गादित्यतः प्रमेयभेदं दर्शयितुं एतदधिकरणनिवर्तनीयामाशङ्कामाह रमणमिति । पूर्वाधिकरणेऽक्ष्यादिषु

अनु० — ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ॥
रमणं नातियत्नस्य विक्षेपादेव युज्यते ॥

स्थित्वा रममाणस्तत्प्रेरको हरिरित्युक्तम् । तदसत् । व्याहतत्वात् । आदित्यादिनियमनार्थमतियत्नेन हि भाव्यम् । प्रयत्नस्य व्यापारानुगुणत्वदर्शनात् । अतियत्नवतश्च चित्तविक्षेपो नियतः । न च चित्तविक्षेपवतो रमणमुपपद्यते । अतो नियामकश्च रतिमांश्चेति व्याहतम् । न च व्याहतं शतेनापि हेतूनां सिद्ध्यति । तदुक्तम्, 'बहुव्यापारतायाश्च क्लेशोऽधिकतरो भवेदि'ति । उक्तव्याप्तिपक्षधर्मतावधारणाय एवशब्दः । एतत्परिहारत्वेन गूढाभिसन्धिरधिकरणार्थमाह इति चेदिति ।

इति चेत्सर्वनियमो यस्य कस्मान्न शक्यते ।

तत्रेदमुत्तरमिति शेषः । यस्य परमेश्वरस्य सर्वनियमः सर्वान्तर्यामित्वमस्ति । तस्य कस्मान्न शक्यते रमणमिति प्रकृतम् । एतामाशङ्कां परिहर्तुं सर्वान्तर्यामित्वमिह हेतुतयोच्यत इति भावः । नन्वेतत्पिण्याकयाचनार्थं गतस्य खारीतैलदानमिव । यत् आदित्यादिनियामकस्य चित्तविक्षेपसंभवेन रमणं न युज्यत इत्युक्ते, सर्वनियामकत्वमुक्तम् । ततो ह्यतिशयेन चित्तविक्षेपाद्रमणानुपपत्तिः, इत्यतोऽभिप्रायमुद्घाटयति स्वात्मनेति ।

स्वात्मनाऽनियतं वस्तु प्रतीपं ह्यात्मनो भवेत् ॥
स्वाधीनसत्ताशक्यादि कथमात्मप्रतीपकम् ॥ ५ ॥

यद्वस्तु स्वात्मना देवदत्तेनानियतं देवदत्तानधीनसत्ताप्रतीतिप्रवृत्तिकं, तदेवात्मनो देवदत्तस्य प्रतीपं चित्तविक्षेपकं भवेदिति हि दृष्टम् । इदं तु जगदीश्वराधीनसत्तादिकम् । तत्कथं तस्य चित्तविक्षेपकं भवेत् । अथवा यदीदं वस्तु विश्वं स्वात्मनेश्वरेणानियतं स्यात् । तदधीनसत्तादिकं न स्यात्, तदैव ह्यात्मनः परमेश्वरस्य प्रतीपं भवेत् । न चैवमिति योज्यम् । न राजादिवन्नियामकत्वमात्रमन्तर्यामित्वम्, अपि तर्हि सत्तादिप्रदत्वमित्युक्तं भवति ॥ १-२-५ ॥

शे० — ॥ ॐ **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्** ॐ ॥ गतार्थताशङ्कानिरासार्थमेत दधिकरणनिवर्त्यशङ्काप्रदर्शनार्थत्वादुत्तरभाष्यस्य न वैयर्थ्यमित्यभिप्रेत्य तच्छङ्कामुत्थापयति **नन्विति** । तत्कथमित्यतोऽन्तर्यामित्वं तावन्निर्वक्ति **अन्तर्यामित्वं हीति** । अत्र समन्वेतव्यतयाऽभिप्रेतं न तु अन्य-दिति वाक्यशेषः । अस्त्विदमेवान्तर्यामित्वं, तथाऽपि तस्य पूर्वत्राविचारितत्वान्न गतार्थत्वमित्यतः पूर्वत्र विचारितस्यान्तरत्वस्यान्तः स्थित्वा नियामकत्वरूपत्वाद्गतार्थमेवेत्याह **एतदेवेति** ॥ **तत्रेति** । पूर्वत्र विचारितेऽन्तरत्व इत्यर्थः । क्रियामात्रस्य, भावमात्रस्य वा, पूर्वत्र विचारिततया तद्विचारकत्वे प्राप्तस्य पूर्वेण गतार्थत्वस्य क्रियाप्रधानकभावविचारकत्वमात्रेण परिहारात् न नियामकत्वपर्यंतधावनमावश्यकं नियामकाभावात् । तथा चान्तरत्वस्यान्तःस्थित्वा नियामकत्वरूपत्वाभावान्न गतार्थत्वमिति भावः । अन्तरत्वस्य नियामकत्वरूपत्वविवक्षायामुत्तरसूत्रमेव नियामकमित्याह **तथा सतीति** । रमणप्रेरकत्वयोः परस्पराभावात्मकत्वाभावात्कथं विरुद्धत्वं इत्यतो न परस्परविरहत्वमेव विरोधः । गोत्वाश्वत्वयोरप्यविरोध-प्रसङ्गात् । किं नाम परस्परविरहव्याप्यत्वमपि । तथा च रमणाप्रेरकत्वयोः परस्परविरहरूपत्वाभावेऽपि तद्व्याप्यत्वाद्विरुद्धत्वमेवेति भावेन तदुपपादयति **आदित्यादीति** । कुत आदित्यादिनियमने महाप्रयत्ना-पेक्षेत्यतोऽल्पप्रयत्नेन शिरोद्धारणादिकृत्यदर्शनेन प्रयत्नस्य कार्यानुगुणत्वनियमस्थितेः आदित्यादिनियमन-रूपमहाकार्यस्य महाप्रयत्नं विनाऽसिद्धेरेव तत्सिद्धिरित्याह **प्रयत्नस्येति** । अस्त्वतिप्रयत्नः किमेताव-तेत्यतस्तस्य चित्तविक्षेपाविनाभूतत्वात् चित्तविक्षेपसिद्धिरित्याह **अतिप्रयत्नवतश्चेति** । तथा लोके दर्शना-दिति भावः । अस्तु चित्तविक्षेपस्यापि सिद्धिः तावताऽपि किं सिद्धमित्यतस्तस्य रत्यभावव्याप्तत्वात् रत्यभावः सिद्ध इत्याह **न चेति** । रमणविरुद्धरत्यभावव्याप्तविक्षेपाविनाभूतमहाप्रयत्नाविनाभूतत्वान्नियामकत्वस्य रमणविरुद्धत्वमित्याशयेनोपसंहरति **अत इति** ॥ **उक्तेति** । नियामकत्वातिप्रयत्नवत्त्वविक्षेपवत्त्वरूपाणां स्वस्वसाध्यैरतिप्रयत्नवत्त्वादिभिर्व्याप्तिः पक्षधर्मतायाश्चावधारणायेत्यर्थः । रमणाक्षेपस्य नानेन परिहारः । प्रत्युत दृढीकरणमेवेत्यत उक्तं **गूढाभिसन्धिरिति** । सर्वनियम इत्यनेनैव परिहाराद्रमणाक्षेपस्य स्वात्मनेत्युत्तरभाष्यानर्थक्यमित्यतोऽभिसन्ध्युद्घाटनार्थं तदिति भावेनाभिसन्ध्युद्घाटननिमित्तं पूर्ववाक्यस्य रमणाक्षेपानिवर्तकत्वं दर्शयन्नुत्तरवाक्यमवतारयति **नन्वेतदिति** ॥ **पिण्याकेति** । पिण्याकस्थानीयमा-दित्यादिनियामकत्वम् । तदुपपादनं तदर्थं प्रवृत्तस्य खारीतैलदानस्थानीयसर्वनियामकत्वप्रतिज्ञानम् अयुक्तमित्युपमानोपमेयभावो द्रष्टव्यः । ननु कथमेतावतोक्तव्याघातपरिहार इत्यतोऽभिप्रायमाह **न राजादि-वदिति** ॥ **सत्तादिप्रदत्वमिति** । तच्च न रमणविरुद्धमिति भावः ॥ १—२—५ ॥

स० — ॐ **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्** ॐ ॥ अत्र पूर्वाधिकरणापेक्षया समाधानरूपा गतार्थताशङ्कानिवर्तकलक्षणा । सा चाधिकशङ्का द्रष्टव्या **पिण्याकयाचनार्थमिति** ॥ यथा

पिण्याकयाचनार्थं गत्वा केनचित्खारीतैलं दास्यामीति क्रियमाणा प्रतिज्ञा व्याहता भवति, तथा पिण्याकस्थानीयं यत् यत्किञ्चिन्नियामकत्वं तद्याचनायागततदुपपादनं तदर्थं प्रवृत्तस्य खारीतैलस्थानीयं सर्वनियामकत्वं प्रतिज्ञानमयुक्तमिति भावः ।

प०— ॐ **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्** ॐ ॥ अधिकाशङ्कोक्तेर्बीजं दर्शयति **नन्वित्यादिना** । **अलग्नकत्वेति** । 'अनत्यन्तगतौ क्ता'दिति क(न)प्रत्ययः । ईषल्लग्नम् लग्नकम्, तन्नेत्यलग्नकम् ॥ **विक्षेप इति** । मनसो व्याकुलत्वम् । श्रुतिलिङ्गप्रकरणैर्विपक्षबाधकहेतुभ्यां च व्याहतमपि सेत्स्यतीत्यत आह **न चेति** ॥ **उक्तेति** । पूर्वाधिकरण इत्यादिनोक्तयोर्व्याप्तिपक्षधर्मतयोरित्यर्थः ॥ भगवान् न रमणयुक्तः, विक्षेपयुक्तत्वात् संमतवत् । न चासिद्धिः । भगवान् विक्षेपयुक्तः, अतिप्रयत्नवत्त्वात् संमतवत् । न चात्राप्यसिद्धिः । भगवानतिप्रयत्नत्वात्, विश्वनियमनरूपमहाव्यापारवत्त्वात् संमतवत् । न चात्राप्यसिद्धिः । पूर्वाधिकरण एव तादृशव्यापारवत्त्वसिद्धेरित्येवमुक्तव्याप्तिपक्षधर्मतयोर्निश्चयाय विक्षेपादेवेत्येवशब्दः प्रयुक्त इत्यर्थः ॥ **तैलदानमिवेति** । पिण्याकयाचककर्तृकतैलदानमिवेत्यर्थः । पिण्याकं याचमानं केनचिद्धेतुना निर्बन्ध्य तैलं दत्त्वा याहीत्युक्ते सति तैलदानं तस्य यथा प्रसक्तं तथेदं जानामीत्यर्थः । पूर्वं व्यतिरेकदृष्टान्तपरतया योजितम्, इदानीं दार्ष्टान्तिकपरतयैव योजयति ॥ **अथवेति** । तावता कथं गतार्थतानिरास इत्यतोऽधिकरणार्थं निष्कृष्य दर्शयति **न राजादिवदिति** ॥ १-२-५ ॥

या०— ॐ **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्** ॐ ॥ **व्याहतत्वादिति** । विरुद्धत्वादित्यर्थः । विरोधश्च न परस्परविरहरूपतया, किन्तु परस्परविरहव्याप्यतया इत्याशयेन तमुपपादयति **आदित्यादिनियमनार्थमित्यादिना** । नन्वेवमपि कथमुक्तव्याहतिपरिहार इत्यतोऽभिप्रायमाह **न राजादिवदिति** ॥ **सत्तादिप्रदत्वमिति** । तच्चोक्तरीत्या न रमणविरुद्धमिति भावः ॥ ॥ १—२—५ ॥

श्री०— ॥ ॐ **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यमदेशात्** ॐ ॥ **दूषणस्येति** । जीवस्य जीवान्तरनियामकत्व इति व्याख्यानादिति ध्येयम् । तथाहि । अग्न्यादिरेवाक्ष्यादिनियामक इति पूर्वपक्षनिरासाय तत्सूत्रम् । **तत्र** अग्न्यादेर्नियामकत्वे । अनवस्थित्यसम्भवाभ्यां दूषिते भवद्भिरपि ब्रह्मादीनां जीवादिनियामकत्वस्याङ्गीकारात् भवतामप्यनवस्थित्यसम्भवाविति परेणोक्ते, सर्वनियामकस्येश्वरस्यास्माभिरङ्गीकारात् तच्छक्त्या नियम्यनियामकभावः संभवतीति समाधीयत इति स्थितिः । तत्र

यदि ईश्वरस्य सर्वनियामकत्वं नाभिप्रेतं, तर्ह्यनवस्थित्यसम्भवाभ्यां परपक्षदूषणस्यालम्भकत्वप्रसङ्गात् । सिद्धान्तिपक्षेऽपि अनवस्थित्यसम्भवयोः प्राप्त्या स्वव्याघातप्राप्तेरित्यर्थः । अतस्तत्परिहाराय नियामकत्वमभिप्रेतमिति वाच्यम् । तथाच गतार्थतेत्यर्थः ॥ **उक्तेति** । ईश्वरो नियामको रतिर्माश्चेति व्याहतेः ईश्वररूपपक्षस्थितत्वनिश्चयायेत्यर्थः । तथाच न युज्यत एवेत्यन्वयो द्रष्टव्यः ॥ १–२–५ ॥

**च०** ॐ **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्** ॐ ॥ अनन्तरपदाभिधेयाव्यवहितत्वमागामिसाधारणमित्यतीतपदोपादानम् । **व्याहतत्वात्** विरुद्धत्वात् । विरोधोऽपि नान्योन्यविरहतादात्म्यलक्षणः किन्त्वितरेतरविरहव्याप्यतालक्षण इति भावेन तं विशदयति **आदित्यादीति** । उक्तव्याहत्यपनयनभङ्गीं दर्शयति **न तावदित्यादि** ॥ **सत्तादिप्रदत्वमिति** । तच्चोक्तदिशा न रमणं विरुणद्धीति हृदयम् ॥

॥ इति अन्तर्याम्यधिकरणम् ॥

सु० — ॥ ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ अत्र यत्तदद्रेश्यमित्यादिवाक्योक्तानामदृश्यत्वादीनां धर्माणां ब्रह्मणि समन्वयः प्रतिपाद्यते । तेषां चोक्तरीत्या ब्रह्मस्वरूपत्वमभ्युपगतं तदभ्यधिकाशङ्क्याऽऽक्षिपति गुणेति ।

अनु० — ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥

गुणक्रियादयो भावा यदि वा स्युरभेदिनः ॥

अभेदोऽभावधर्माणां ब्रह्मणा युज्यते कथम् ॥

आनन्दादयो गुणाः संहरणादिक्रियाः सर्वगतत्वादिभावाः । अन्नमयादिरूपाणि पुच्छाद्यवयवाश्च यद्यभेदिनोऽङ्गीकृताः तदा तथा स्युर्वा । तेषां भावत्वेन वक्ष्यमाणानुपपत्तेरभावात् । अनुपपत्त्यन्तराणां च परिहृतत्वात् । अदृश्यत्वादीनां तु धर्माणां ब्रह्मणाऽभेदो न युज्यते । तेषामभावत्वाद्ब्रह्मणो भावत्वात् । भावाभावयोरैक्यस्य विरुद्धत्वादिति । परिहरति नाभाव इति ।

नाभावो भाव इति च विशेषः प्रायशो भवेत् ॥

इह हि दृश्यादन्योऽदृश्यः तस्य भावोऽदृश्यत्वमित्यदृश्य(त्व)ादिशब्दैर्दृश्याद्यन्योन्याभावोऽभिधीयते । अश्वादन्योऽनश्वः तस्य भावोऽनश्वत्वमिति यथा । न पुनस्तत्प्रागभावादिः । असामर्थ्येन समासासंभवात् । दृश्यादिविरोधित्वमर्थोऽस्त्विति चेन्न । सहानवस्थानवध्यघात(तु)कभावभावाभावलक्षणविरोधानामसंभवात् । तादात्म्यविरोधस्य चान्योन्याभावानतिरेकात् । तथा चाभावो अन्योन्याभाव इति भाव इति चैतयोर्लोकेऽपि विशेषो= भेदो न भवेत् । एवं (च) सति ब्रह्मण्येव काऽनुपपत्तिरिति । तदभावो हीति वक्ष्यमाणाभिप्रायेण प्रायश इत्युक्तम् । अथवाऽभाव इति चतुर्विधेष्यभावे प्राप्तेऽन्योन्याभावपरिग्रहणार्थं प्रायश इत्युक्त(त्यभिहित)म् । अन्योन्याभावो हि प्रागभावादिभ्यो(ऽपि) बहुतरः प्रतिवस्तु नियतत्वात् । नित्यानादिसंबन्धिनः प्रागभावादेरभावात् ।

शे० — ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ अभेदाक्षेपार्थत्वान्नोत्तरवाक्यवैयर्थ्यमित्याशयेनाभेदस्यासिद्धौ तदाक्षेपायोगात् तत्सिद्धिमुपपादयितुं विषयवाक्यप्रदर्शनपूर्वकं प्रतिपाद्यमाह अत्रेति । अस्त्वदृश्यत्वादीनां प्रतिपाद्यत्वं तावता कथं तेषां ब्रह्माभेदसिद्धिः येन तदाक्षेपस्योपपत्तिरित्यतो यदस्मिन्नध्याये समन्वीयते तत्सर्वं लक्षणत्वेन प्रकृतमित्यानन्दमयाधिकरणोक्तरीत्याऽदृश्यत्वादीनां लक्षणत्वस्य जन्माधिकरणे लक्ष्यलक्षणयोरभेदस्य व्युत्पादितत्वेन ब्रह्मस्वरूपत्वस्य च सिद्धिरित्याशयेनाह

**तेषां चेति** । ननु 'अभेदो भावधर्माणां ब्रह्मणा युज्यते कथम्' इत्येतावताऽदृश्यत्वादिधर्माणामभावतया ब्रह्माभेदाक्षेपसिद्धेः गुणक्रियादय इत्यादिभाष्यखण्डवैयर्थ्यमित्यतो गुणक्रियादिवैषम्योपदर्शनेनात्रैव चोद्यस्यावकाशसंभावनार्थत्वात् न तद्वैयर्थ्यमित्याशयेनादिपदार्थं दर्शयन्नेवादृश्यत्वादेर्गुणक्रियादिवैषम्योपपादनपूर्वकमाक्षेपमुपपादयति **आनन्दादय इत्यादिना** ॥ **वक्ष्यमाणानुपपत्तेरिति** । भावाभावयोः ऐक्यस्य विरुद्धत्वादिति वक्ष्यमाणानुपपत्तेरित्यर्थः ॥ **अभावादिति** । लक्ष्यलक्षणयोरुभयोरपि भावरूपत्वादिति भावः । ननु गुणक्रियादीनां ब्रह्माभेदे वक्ष्यमाणानुपपत्त्यभावेऽपि गुणगुणिभावानुपपत्त्यादिरूपबाधकान्तरमस्त्येवेति युक्तः तत्राप्यभेदाक्षेप इति कथं तत्परित्यागेनादृश्यत्वादिष्वेव तदाक्षेप इत्यत आह **अनुपपत्त्यन्तराणामिति** ॥ **परिहृतत्वादिति** । 'एकस्य ज्ञानरूपस्य हरेरुक्तिर्विभागतः' इत्यादिनाऽऽनन्दमयाद्यधिकरणादिष्वेवेति शेषः । नाभाव इत्युत्तरवाक्यस्याक्षेपशेषत्वभ्रान्तिनिमित्तकचित्तविक्षेपं परिहरति **परिहरतीति** । ननु भावाभावयोरभेदस्य बाधितत्वात्तत्प्रतिपादकं नाभावो भाव इतीति वाक्यमनुपपन्नार्थम् । न चात्र भावाभावशब्दाभ्यामन्योन्याभावतद्वतोरेवाभिधानात्तदभेदस्य चाबाधितत्वान्नोक्तदोष इति वाच्यम् । तावताऽन्योन्याभावतद्वतोरभेदप्राप्तावपि अदृश्यत्वादिरूपाभावधर्माणां ब्रह्माभेदासिद्ध्या तद्व्युत्पादनस्य प्रकृतासङ्गतत्वात् । न चादृश्यत्वादिशब्दानामप्यन्योन्याभावार्थकत्वेन अन्योन्याभावतद्वतोरभेदव्युत्पादनस्यादृश्यत्वादिधर्माणां ब्रह्माभेदसमर्थनार्थत्वात्प्रकृतसङ्गतिरिति वाच्यम् । अर्थान्तरस्यापि संभवेनादृश्यत्वादिपदानामन्योन्याभावार्थकत्वस्यैवासिद्धेः । अदृश्यत्वमित्यादिपदैरन्योन्याभावसमर्पणाप्रतिभासाच्च इत्यतः परिशेषेणान्योन्याभावार्थत्वं व्युत्पादयितुमन्योन्याभावसमर्पकत्वं तावद्दर्शयति **इह हीत्यादिना** । दृश्यादन्यः । अदृश्य इत्यन्योन्याभाववतो नञर्थत्वाददृश्यशब्देन दृश्यान्योन्याभाववान् लक्ष्यते । तथा चादृश्यत्वशब्देन तद्धर्मस्यान्योन्याभावस्य लाभः । धूमवत्त्वशब्देन धूमलाभवदित्यर्थः । नञोऽन्योन्याभाववदर्थत्वं त्वप्रत्ययस्य चान्योन्याभावार्थत्वं कुत इत्यतस्तथाऽन्यत्र दृष्टत्वादित्याह **अश्वादन्य इत्यादि** । तथा चानश्वत्वशब्देन यथाऽश्वान्योन्याभावाभिधानम् , एवमदृश्यत्वादिशब्देन दृश्याद्यन्योन्याभावाभिधानमित्युक्तं भवति । एवमदृश्यत्वादिपदैः अन्योन्याभावलाभमभिधाय कुतस्तस्यैवार्थत्वमित्यतः परिशेषादिति भावेनादृश्यत्वादिशब्दानामर्थान्तरं भवत् दृश्यादिसंसर्गाभावो वा, दृश्यादिविरोधो वेति, विकल्पं मनसि निधायाद्यासंभवं प्रतिजानीते **न पुनरिति** । असंभवहेतुमाह **असामर्थ्येनेति** । यथाऽनश्व इत्यत्र संसर्गाभावरूपप्रसज्यप्रतिषेधार्थकत्वे, नञः भवतीति क्रियाऽन्वयस्य 'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञि'ति वचनेनावश्यकत्वात् तत्सापेक्षस्य नञः 'सापेक्षमसमर्थमि'ति वचनेनासमर्थत्वात्सत्येव च सामर्थ्ये 'समर्थः पदविधिरि'ति वृत्तिविधानान्नाश्वशब्देन समासः, तथाऽदृश्यत्वादीत्यत्रापि दृश्यो न भवतीत्यदृश्य इति, नञः क्रियाऽन्वयितया क्रियासापेक्षत्वेन

दृश्यपदेन सामर्थ्याभावान्न समासः । भिन्नरूपपर्युदासार्थत्वे तु तस्य 'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञि'ति भट्टवचनाद्दृश्येत्याद्युत्तरपदसापेक्षत्वमेव, न क्रियासापेक्षत्वमिति तत्र सामर्थ्यसंभवाद्युक्तः समास इति भावः । उपलक्षणं चैतत् । दृश्यादिसंसर्गाभावस्यैव ब्रह्मधर्मत्वसंभवेन अदृश्यत्वादीत्यत्र त्वप्रत्ययवैयर्थ्यं च स्यादित्यपि द्रष्टव्यम् । द्वितीयमाशङ्कते **दृश्यादिविरोधित्वमिति** । दृश्यादिविरोधि अदृश्यादि नञो विरुद्धार्थत्वात् । तद्भावो विरोध एवेति दृश्यादिविरोधरूपं दृश्यादिविरोधित्वमेवादृश्यत्वमित्यादिपदार्थ इत्यर्थः । ततश्चासुरा अधर्मः अनर्थः इत्यादाविव, अत्रापि युक्तः समासः । विरोधलाभार्थत्वात् त्वप्रत्ययश्च सार्थक एवेति भावः । किमत्र दृश्यादिविरोधः तेन सहानवस्थानमभिमतं किंवा वध्यघातुकभावः आहोस्वित्तेन सह भावाभावरूपः उत तत्तादात्म्यविरोधो वेति विकल्पान्मनसि निधायाद्यपक्षत्रयं पराचष्टे **सहेति** । चतुर्थस्तु अशक्यशङ्कः तेन दृश्याद्यन्योन्याभावस्यैवादृश्यत्वादिशब्दार्थत्वप्राप्तेः इत्याशयेन कथं तेन तल्लाभ इत्यत आह **तादात्म्येति** । एवमदृश्यत्वादिशब्दानामन्योन्याभावार्थत्वं व्युत्पाद्य, सम्पूर्णवाक्यवृत्ति लोके ब्रह्मणि चेति पदद्वयाध्याहारं चाभिप्रेत्य, वाक्यं योजयति **तथा चेति** । अभाव इत्यनुवादेनान्योन्याभाव इति व्याख्यानम् । इति च इत्यस्य व्याख्यानमेतयोरिति । प्रकृतोपयोगितया विशेषपदार्थमाह **भेद इति** ॥ **वक्ष्यमाणाभिप्रायेणेति** । अन्योन्याभावस्य धर्मिस्वरूपत्वेऽपि प्रतियोगिस्वरूपत्वाभावेन प्रतियोगिरूपभावव्यावृत्त्यर्थं प्रायश इत्युक्तमित्यर्थः । प्रायशोऽभाव इति भाव इति च विशेषो न भवेत् इत्यप्यन्वयमभिप्रेत्य प्रायश इत्यस्य प्रयोजनमाह **अथवेति** । कथं प्रायश इत्यनेन प्रागभावादित्रिकनिरास इत्यतः प्रायश इत्युक्तस्य बाहुलकत्वस्य तत्राभावादित्यभिप्रेत्यान्योन्याभावस्य बहुतरत्वं प्रागभावाद्यपेक्षयोपपादयति **अन्योन्याभावो हीति** । प्रतिवस्तुनियतत्वात्=सर्ववस्तुनियतत्वादित्यर्थः । प्रागभावादेः कथमल्पतरत्वमित्यतोऽनादिसंबन्धिनः प्रागभावस्य नित्यसंबन्धिनो ध्वंसस्य सत्संबन्धिनोऽत्यन्ताभावस्य चाभावादित्याशयेनाह **नित्येति** ।

स० — ॐ **अदृश्यत्वादिगुणको धर्मोक्तेः** ॐ ॥ सन्ति नञस्त्रयोऽर्थाः तदन्यत्वं तदभावः तद्विरुद्धत्वं चेति । तेषु कोऽत्रार्थोऽभिमत इत्यपेक्षायामाह **इहेत्यादिना** ॥ **न पुनस्तत्प्रागभावादिरिति** । तथा चान्योन्याभावलक्षणपर्युदासार्थत्वमेवात्र नञो विवक्षितम् न प्रसज्यप्रतिषेधार्थत्वरूपसंसर्गाभावार्थत्वमित्यर्थः । पर्युदासादिस्वरूपं तु 'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् । प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्' इत्याद्यभियुक्तवाक्यादवगन्तव्यम् । **असामर्थ्येनेति** । नञः पर्युदासार्थत्वे तदर्थस्य साक्षादुत्तरपदार्थान्वितत्वेन सामर्थ्यासंभवात् समासानुपपत्तिः 'समर्थः पदविधिरि'ति वचनात् ॥ **यथानश्च इति** ॥ प्रसज्यप्रतिषेधार्थत्वे तु तदर्थस्य प्रतियोग्यनन्विता याऽस्तीत्यादिक्रिया तदन्वितत्वे साक्षात् प्रति-

योग्यन्वितत्वाभावेनासमर्थतया न तद्वाचकपदेन समासः संभवति यथात्र न घटोऽस्तीति ॥ एवं यदि-प्रकृते प्रसज्यप्रतिषेधार्थत्वं विवक्षितं स्यात् तदात्र न दृश्यत्वादिगुणाः, सन्त्येव इति वक्तव्यं नादृश्य-त्वादिगुणक इति । प्रतियोगिवाचकपदेन न समासः तया उक्तरीत्याऽसामर्थ्यादिति भावः ॥ **दृश्यत्वा-दिविरोधित्वमिति** ॥ अत्र चाधर्म इत्यादिवत् समासो नानुपपन्न इति भावः ।

प० — ॐ **अदृश्यत्वादिगुणको धर्मोक्तेः** ॐ ॥ **उक्तरीत्येति** । जन्माधिकरणे अत्तेत्यधिकरणे चोक्तरीत्येत्यर्थः ॥ परिहृतत्वादिति । जन्मादिनये अत्तेति नये चेति भावः ॥ **इह हीति** । 'अद्रेश्यमिति'श्रुतावित्यर्थः । द्रेश्यमित्यस्य दृश्यमित्यर्थमुपेत्य दृश्यादित्यनुवादः कृतः ॥ **असामर्थ्येनेति** । अदृश्यत्वादीत्यत्र नञो निषेधार्थकत्वे क्रियान्वयनियमेनोत्तरपदेनाकाङ्क्षाविरहात् दृश्यत्वाभावादिगुणक इत्यादि स्यात् नत्वदृश्यत्वादीति निर्देश इति भावः ॥ **दृश्यादिविरोधित्व-मिति** । अत्र तु 'असुरा अविद्येत्यादा'विव न समासानुपपत्तिरिति भावः ॥

या० — ॐ **अदृश्यत्वादिगुणको धर्मोक्तेः** ॐ ॥ **उक्तरीत्येति** । यदस्मिन्नध्याये समन्वी-यते तत्सर्वं लक्षणत्वेनैव प्रकृतमित्यादिनोक्तरीत्येत्यर्थः ॥ **वक्ष्यमाणेति** । भावाभावयोरैक्यस्य विरुद्धत्वा-दित्यनुपदमेव वक्ष्यमाणानुपपत्तेरित्यर्थः । **अनुपपत्त्यन्तराणां चेति** । अभेदे गुणगुणिभावाद्यनुपपत्तिः क्रियाणामनित्यत्वाद्ब्रह्माभेदानुपपत्तिः । अर्भकौकसः सर्वगतत्वानुपपत्तिः, अतियत्नस्य रमणानुपपत्तिः, एकस्यानेकत्वानुपपत्तिरवयविनोऽवयवत्वानुपपत्तिः इत्याद्यनुपपत्त्यन्तराणामित्यर्थः । सन्ति नञस्त्रयोऽर्था अन्यत्वमभावो विरोधश्चेति । तेषु कोऽर्थोऽत्राभिमत इत्यपेक्षायामाह **इहेत्यादिना** । अन्योन्याभावार्थ-त्वमेव कुत इत्यतः परिशेषादित्यभिप्रेत्याभावार्थत्वं तावन्निराकर्तुमाह **न पुनरिति** । अत्र तच्छब्देन दृश्यत्वादिपरामर्शो, न दृश्यादिपरामर्शः । दृश्याद्यभावस्यैव ब्रह्मधर्मत्वसम्भवेन त्वप्रत्ययवैयर्थ्य-प्रसङ्गात् । न परमत इवास्मन्मते संसर्गाभावत्वेनाभावविभागः, किन्तु प्रागभावादित्वेनैवेति दर्शयितुं प्रागभावादिग्रहणं कृतमिति ज्ञातव्यम् ॥ **असामर्थ्येनेति** । नञः प्रसज्यप्रतिषेधरूपप्रागभावाद्यर्थत्वे 'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञि'ति वचनात्तस्य क्रियासापक्षत्वेन दृश्यत्वादय इदानीमत्र न सन्तीत्यादिवाक्यमेव स्यान्न समासः । 'समर्थः पदविधिरि'ति सामर्थ्ये सत्येव समासविधानात् । क्रिया-सापेक्षस्य च नञः प्रतियोगिसमर्पकदृश्यत्वादिपदेन सामर्थ्याभावात् । सापेक्षमसमर्थमिति वचना-दित्यर्थः । पर्युदासरूपान्योन्याभावत्वे तु, तस्य दृश्येत्याद्युत्तरपदसापेक्षत्वमेव, न क्रियासापेक्षत्वम् । 'पर्युदासस्तु विज्ञेयो यत्रोत्तरपदेन नञि'ति वचनात् । अतस्तत्र सामर्थ्यसम्भवात्समासोपपत्तिरिति भावः । विरोधार्थत्वमपि निराकर्तुमाशङ्कते **दृश्यादीति** । अत्र दृश्यत्वादिति पाठः प्रामादिकः । ॥ **सहानव-स्थानेति** । ब्रह्मणो व्याप्तत्वेन दृश्यादिसमानाधिकरणत्वादिति भावः । यद्यपि अधर्मः असुर इत्यादौ

विरोधार्थकसमासे वध्यघातकभावरूप एव विरोधः प्रसिद्ध इति स एव निराकार्यः। तथापि सहानवस्थानादिकमपि विरोधशब्दार्थतया प्रसक्तमपि तन्निराकृतमित्यवधेयम्। तथाच योग्यताऽभावप्रसङ्गान्न विरोधार्थकोऽयं समास इति भावः॥ **वक्ष्यमाणेति**। 'तदभावो हि तद्भावविरोधी न ततोऽपरः' इत्यनुव्याख्यानावतारिकावसरे प्रतियोगिरूपभावतदभावयोरैक्याभावाभिप्रायस्य द्वितीये त्वापादकासिद्धिरिति भावेनेति वाक्येन वक्ष्यमाणत्वेन प्रतियोगिरूपभावव्यावृत्त्यर्थं प्रायश इत्युक्तमित्यर्थः। ननु प्रागभावेति प्रागभावादिप्रभेदवानित्यर्थः। इदं च संसर्गाभावस्याप्येकस्य विद्यमानत्वात्कथं चतुर्विधेऽपीत्युक्तमिति शङ्कायां, प्रागभावादिव्यतिरिक्तः सोऽपरो नास्तीति ज्ञापनाय परीत्यैवोक्तम्। सिद्धान्ते कार्यकारणयोः संसर्गस्यैवाभावेन प्रागभावप्रध्वंसाभावयोः संसर्गाभावत्वानुपपत्तेरिति ज्ञेयम्।

**श्री० — ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ उत्करीत्येति**। यत् यल्लक्षणं तत्सर्वं ब्रह्मस्वरूपमिति प्रकृतमित्यानन्दमयाधिकरणान्तोक्तरीत्येत्यर्थः॥ **वक्ष्यमाणेति**। अभेदो भावधर्माणामिति वक्ष्यमाणेत्यर्थः॥ **अदृश्यत्वादिशब्दैरिति**। यथा धूमवतो भावः धूम एव भवति। तद्वद्दृश्यादन्योऽदृश्यस्तस्य दृश्यान्योन्याभाववतो भावो धर्मोऽन्योन्याभाव एवादृश्यत्वशब्देनोच्यते सूत्र इत्यर्थः। अनश्वत्वमित्यस्याप्यश्वादन्योन्याभाववतो भावो धर्मोऽनश्वत्वमश्वान्योन्याभाव एवार्थ इति

---

ध्येयम्॥ **सहानवस्थानेति**। ब्रह्मणो व्याप्तत्वेन दृश्येन घटादिना सहैवावस्थानादित्यर्थः॥ **वध्येति**। स्वस्यापि दृश्यत्वेन स्वव्याघातकत्वाभावादिति भावः॥ **भावेति**। उभयोर्दृश्यब्रह्मणोर्भावत्वादेवेत्यर्थः॥ **तादात्म्येति**। तादात्म्याभावरूपेत्यर्थः। ननु अभावो भाव इति विशेषो भेदो लोकेऽपि नास्तीति वक्तुं न शक्यते। घटप्रतियोगिकाभावस्य घटरूपत्वादर्शनादिति चेत्। सत्यम्। अत एव प्राय इत्युक्तमित्याह **तदिति**। अथवेति पक्षे अयमर्थः। प्रायःशब्दो बहुतरार्थकः। तथाचाभावो भाव इति भेदो बहुतरो नास्ति। किं नाम स्वल्पस्थले। संसर्गाभावमात्रस्यैव प्रागभावादेर्भावाद्भेदो दृष्टः। भावान्योन्याभावरूपाभावयोरभेद एव बहुतरं सर्वत्र दृष्ट इत्यर्थः। नन्वेतत्कथमभावभावयोर्भेद एव बहुतरं दृष्टः। प्रागभावादित्रये दृष्टत्वात्। अभेदस्त्वन्योन्याभावमात्रे। अतः कथमयं बहुतर इत्यत आह॥ **अन्योन्याभावो हीति**। यद्वा प्रायशोऽभाव इत्यन्वयः। तथाच यः प्रायशोऽभावो बहुतरं विद्यमानोऽभावोऽन्योन्याभाव इति यावत्। 'भाव इति च विशेषो न भवेत्' इत्यनुव्याख्यानयोजनी ज्ञेया कथमन्योन्याभावस्य बहुतरत्वमित्यत आह **अन्योन्याभावो हीति**। प्रागभावादिस्तु न बहुतर इत्याह **नित्येति**। भिन्नः प्रभेदवान्॥ **ब्रह्मगतस्यापीति**। अत्यन्ताभावरूपसंसर्गाभावस्येत्यर्थः॥

च० — ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ॥ उक्तरीत्या परस्मिन्नध्याये समन्वीयते तत्सर्वं लक्षणत्वेनैव प्रकृतमित्यादिनोक्तदिशेत्यर्थः । **वक्ष्यमाणेति** । भावाभावयोरैक्यस्य विरुद्धत्वादित्यनुपदमेवाभिधास्यमानेत्यर्थः । **अनुपपत्यन्तराणां चेति** । गुणगुण्यादीनामभेद आधाराधेयभावस्य अनित्यक्रियाणां नित्यब्रह्मतादात्म्यस्य अर्भकौकसः सर्वगतत्वस्य अतियत्नस्य रमणस्यैकस्यानेकत्वस्यावयविनोऽवयववत्त्वस्यानुपपत्तिरित्यनुपपत्यन्तराणामित्यर्थः । **परिहृतत्वादिति** । एकस्य ज्ञानरूपस्य 'हरेरुक्तिर्विभागत' इत्यादिनाऽऽनन्दमयादिनयेष्वेवेत्यादिः । नाभाव इति प्रतीकस्य पूर्ववादिमतप्रत्यायकत्वभ्रान्तिमपनयति **परिहरतीति** । अनश्वो ब्राह्मण इत्यादौ पर्युदासार्थकत्वस्यासंदेहोनुपलब्धिरित्यादौ प्रतिषेधार्थकत्वस्याधर्मोऽसुर इत्यादौ विरोधार्थकत्वस्य च नञो दर्शनात्प्रकृते विशेषादर्शनसमवहितसाधारणधर्मदर्शनादिघटितसामग्रीनिष्पाद्यार्थविशेषतात्पर्यकत्वसंदेहे तादृशार्थविशेषं निश्चाययति **इहेत्यादिना** । पर्युदासार्थकतां परिशिषिषुः प्रसक्तप्रतिषेधतात्पर्यकतां तावत्प्रतिविधत्ते **न पुनरिति** । सर्वनाम्ना दृश्यत्वं परामृश्यते न दृश्यम् । तथा सति दृश्याद्यभावस्यैव ब्रह्मधर्मत्वसंभवेन भावप्रत्ययानर्थक्यप्रसङ्गात् । असंभवबीजं दर्शयति **असामर्थ्ये चेति** । 'प्रसज्यप्रतिषेधोयं क्रियया सह यत्र नञ्' इति वचनेन समासाघटकधातूपस्थाप्यक्रियान्वितस्वार्थप्रतिपादकत्वेन सापेक्षतया तन्नैरपेक्ष्यलक्षणसामर्थ्याभावेन 'समर्थः पदविधिरि'ति समर्थयोरेव वृत्तिविधानात्समासवृत्तिर्न सङ्गच्छेत । पर्युदासार्थत्वे तु 'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्' इति भट्टवचने नञो भेदवल्लक्षकतया तदर्थतावच्छेदके भेदे स्वोतरदृश्यपदोपस्थाप्यस्यानुयोगितासंसर्गेणान्वयोपगमेन दृश्यप्रतियोगिकभेदवदित्यर्थपर्यवसित्या तादृशक्रियान्वयानुपगमेन सामर्थ्यध्रौव्यात्समासः सङ्गच्छत इति भावः । विरोधार्थकतामपि निराचिकीर्षुराशङ्कते **दृश्यादीति** । नञो विरुद्धार्थकतया तदेकदेशविरोधे स्वोत्तरदृश्यपदोपस्थापितस्य निरूपितत्वसंबन्धेनान्वयोपगमेन दृश्यनिरूपितविरोधविशेषितेत्यर्थपर्यवसानात्पूर्ववत्सामर्थ्यस्याक्षततया 'असुरः अधर्म' इत्यादाविव समासः सङ्गच्छते । प्रकृतिजन्यबोधे प्रकारीभूय भासमानधर्मवचनो भावप्रत्ययश्च तादृशभावान्वयबोधौपयिक इत्याशयः । दृश्यप्रतियोगिको विरोधः किमसामानाधिकरण्यरूपः वध्यघातुकभावरूपः प्रतियोग्यनुयोगित्वात्मकभावाभावत्वरूपः तत्तादात्म्यविरहरूपो वेति कल्पचतुष्टयीं चेतसि दधानः कल्पत्रयीं पराचष्टे **सहेति** । तादात्म्यविरहलक्षणस्तदीयकल्पः तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावाभिधान्योन्याभावात्मकस्त्वनुमत एवेति न प्रत्याख्येय इत्याह **तादात्म्येति** । **वक्ष्यमाणाभिप्रायेणेति** । 'तदभावो हि तद्भावविरोधी न ततो परः' इत्यनुव्याख्यावतरणिकायाम्. अन्योन्याभावस्य धर्मिस्वरूपत्वेऽपि प्रतियोगिस्वरूपत्वाभावेन प्रतियोगिरूपभावव्यावृत्यर्थं प्रायश इत्युक्तमित्यर्थः । प्रायश इत्यस्याभावांशेष्यन्वयमभिप्रेत्य व्याकुरुते **अथवेति** । शिष्ट-अभावत्रिकात् बहुत्वमन्योन्याभावस्योपपादयति **अन्योन्या-**

भावो हीति। पञ्चमी समभिव्याहृतपदार्थतावच्छेदकान्वितावधित्वार्थिका प्रतिवस्तुनियतत्वात् भेदत्वावच्छिन्नस्य केवलान्वयित्वात्। 'प्रागभावादेः'इति'आदि'पदं ध्वंसात्यन्ताभावयोः संग्राहकम्। सिद्धान्ते अनलीकप्रतियोगिकात्यन्ताभावानुपगमेन शिष्ट-अभावत्रिकनिरूपितप्रतियोगितात्रिकव्यधिकरणप्रतियोगितानिरूपक इति बहुत्वमिति भावः। सिद्धिसंदिग्धासिध्यन्यतरानवकाशेन स्वपदोपात्तप्रागभावराहित्यहेतुभूतं यदुत्पत्तिराहित्यरूपानादित्वं तद्बोधकपदस्यैवादितोपि न्यसनौचित्येपि तस्य व्यच्कतयाऽनुपादानेनादिपदसंगृहीतध्वंसात्यन्ताभावयोः प्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकाभावद्वये प्रत्येकं हेतुभूतं यन्नित्यत्वं ध्वंसाप्रतियोगित्वरूपत्वे दर्शितान्यतरापत्त्या व्याप्यवृत्तेरवच्छेदकानुपगमेन कालानवच्छिन्नाधेयताकत्वरूपनित्यत्वं किञ्चिन्निरूपिताधेयताकत्वे च तदुभयप्रत्यायकव्यच्कनित्यपदोपादानम्। एतेन प्रकृतगौधफक्किकाविरोधस्तद्व्याकृतिरूपस्यानादिसंबन्धिनः प्रागभावस्य नित्यसंबन्धिनो ध्वंसस्य सत्संबोधिनोऽत्यन्ताभावस्य चाभावादित्याशयेनानित्येतीत्यानुपूर्वीकव्याख्याग्रन्थस्य च विरोधान् तत्प्रणेतृनुयायिनामेव कतिपयेषां प्रामाणिकप्रतियोगिकात्यन्ताभाववादा अवधीरणीयाः ('धृङ् अनादरे' तिरस्करणीया इत्यर्थः)।

सु०— ननु प्रागभावप्रध्वंसाभावात्यन्ताभावभिन्नः संसर्गाभावः, किं धर्मिणो भिन्न उताभिन्नः। नाद्यः। ब्रह्मगतस्यापि भेदप्रसङ्गात्। तथा च'एवं धर्मान्' इत्यादिश्रुतिविरोधात्। न च ब्रह्मणि नासौ श्रुत इति वाच्यम्। अगोत्रमवर्णमित्यादिना प्रतीतत्वात्। न विद्यते गोत्रादिकं यस्य तद्धि तथोच्यते। द्वितीये किमन्योन्याभावनिर्धारणेन। अभाव इत्येव वक्तव्यम्। तथा चाशेषश्रुतिव्याख्यानं भवतीति। अत्र ब्रूमः। भिन्न एव धर्मिणः प्रागभावादिः। धर्मिविनाशेऽप्यविनाशात्। यत्र हि भूतले घटाभावस्तस्य खननादिना विनाशेऽपि घटाभावोऽनुवर्तत एव। धर्मित्वं च भूतलादेः प्रातीतिकं न वस्तुकृतम्। अत एव भाववदभावस्यापि तत्त्वान्तरत्वमभिधाय भावाभावस्वरूपत्वात् इत्यन्योन्याभावस्य धर्मिस्वरूपतामाह। ननु तर्हि ब्रह्मण्यपि तथात्वप्रसङ्गः। सत्यम्। गोत्रादिसंसर्गा(स्या)भावस्य ब्रह्मातिरिक्तत्वाभ्युपगमात्। यथा हि दण्डो देवदत्तस्य विशेषणम्। तथा गोत्राद्यभावोऽपि ब्रह्मणो विशेषणम्। न च श्रुतिविरोधः। दण्डित्ववदभाववत्त्वस्य धर्मत्वेन विवक्षितत्वात्। न च आनन्दादावप्येवं कल्पना। 'आनन्दो ब्रह्मे'त्यादिवचनात्। बाधकाभावाच्च। तस्मादन्योन्याभाव एवान्यत्र धर्मिस्वरूपमिति ब्रह्मण्यपि तथाऽभ्युपगन्तव्यः। गोत्राद्यभाववत्ता तु भावरूपैव इति न तस्या ब्रह्मस्वरूपत्वे काचिदनुपपत्तिरिति नेह विचार्यते।

**शे०—नमु चेति** । प्रागभावादिभेदवानित्यर्थः। यद्यपि च सिद्धान्ते कार्यकारणयोः संसर्गस्यैवाभावेन प्रागभावप्रध्वंसाभावयोः न संसर्गाभाववत्त्वम्, अत्यन्तासत्प्रतियोगिकत्वेनात्यन्ताभावस्य च संसर्गाभावत्वाभावान्नैवं वक्तुं युक्तम् । तथाऽपि संसर्गाभावस्याप्येकस्य सत्त्वात्कथं चतुर्विधोऽपीत्युक्तमिति शङ्कायां प्रागभावादिव्यतिरिक्तः संसर्गाभाव एव नास्तीति ज्ञापनाय, परीत्यैवमुक्तमत एव भिन्न एव धर्मिणः प्रागभावादिरित्येव सिद्धान्ते वक्ष्यति । अन्यथा हि भिन्न एव संसर्गाभाव इत्यवक्ष्यदिति ध्येयम् । **भेदप्रसङ्गादिति** । अन्यगतस्य तस्य भेददर्शनादिति भावः । अस्तु ब्रह्मगतस्यापि संसर्गाभावस्य तद्भिन्नत्वमित्यत आह **तथा चेति** । तत्र ब्रह्मधर्माणां ब्रह्मणा भेदनिषेधादिति भावः ॥ **न चेति** । तथा च न तस्य ब्रह्मणा भेदप्रसक्तिरिति नोदाहृतश्रुतिविरोध इति भावः । नन्वगोत्रमित्यादौ नञः संसर्गाभावरूपप्रसज्यप्रतिषेधार्थत्वे उक्तरीत्या असामर्थ्येन समासानुपपत्त्या गोत्रादन्यदगोत्रं, वर्णादन्यदवर्णमिति गोत्राद्यन्यदेवोच्यत इति कथमत्र संसर्गाभावप्रतीतिरित्यत आह **न विद्यत इति** ।

अयमाशयः । नात्र गोत्राद्यन्यदगोत्रमिति गोत्राद्यन्यदुच्यते, किन्तु न विद्यते गोत्रादि यस्येति गोत्रादिसंसर्गाभाव एव । यद्यप्यन्यपदार्थप्रधानतया जघन्याद्बहुव्रीहेः, वर्तिप्रधानपदार्थतया, तत्पुरुषस्य प्राबल्यान्न तत्पुरुषपरित्यागेन जघन्यबहुव्रीह्याश्रयणं युक्तम् । तथाऽपि यदस्मिन्नध्याये समन्वीयते तद्ब्रह्मलक्षणमित्यानन्दमयाधिकरणान्ते व्यवस्थितत्वाद्गोत्राद्यन्योन्याभावस्य च ब्रह्मणीव प्रपञ्चेऽपि सत्त्वेन, अतिव्याप्ततया ब्रह्मलक्षणत्वायोगेन तत्पुरुषानुपपत्त्या जघन्यस्यापि बहुव्रीहेराश्रयणं युक्तम् । 'अदृश्यम्, अग्राह्यम्' इत्यादौ तु दृश्याद्यन्योन्याभावस्यानतिप्रसक्ततया ब्रह्मलक्षणत्वोपपत्तेर्न समासप्राबल्यापवादकं किञ्चिदिति तत्र तत्पुरुषमेवाश्रित्य दृश्याद्यन्यस्यैवादृश्यादिशब्दार्थत्वाश्रयणमिति ॥ **किमन्योन्याभावनिर्धारणेनेति** । धर्म्यभिन्नतया व्यावर्तनीयाभावाभावादिति भावः ॥ **अभाव इत्येव वक्तव्यमिति** । अभावसामान्यस्यैव धर्म्यभिन्नतया संग्राह्यत्वादिति भावः । इत्येवेत्यवधारणमुपपादयति **तथा चेति** । अभाव इति सामान्योक्तावेवेत्यर्थः ॥ **अशेषेति** । अगोत्रमवर्णमित्यादिश्रुतिखण्डस्यापीत्यर्थः । अन्योन्याभावनिर्धारणेऽदृश्यमग्राह्यमित्यादेरेव व्याख्यानप्राप्त्या न अशेषश्रुतिव्याख्यानमिति भावः । प्रथमपक्षोक्तदोषं परिहरिष्यामीत्यभिप्रेत्य तमुपादत्ते **भिन्न एवेति** । भेदवत्प्रागभावादेरपि धर्म्यभेदस्यैव संभवे, कुतोऽर्धजरतीयाश्रयणमित्यत आह **धर्मिविनाशेऽपीति** । न चैवं भेदस्यापि धर्मिणो भेदप्रसङ्गः । धर्मिनाशेऽप्यविनाशस्य भेदेऽपि तुल्यत्वादिति वाच्यम् । अनित्यधर्मिकस्य भेदस्यानित्यताया एवोपरिष्टादुपपादितत्वेन धर्मिनाशे तन्नाशस्यैव ग्रन्थकृदभिमतत्वेन तदप्रसङ्गात् ।

नन्वेवं 'तस्मात्प्रध्वस्तभेदादी'त्युत्तरानुव्याख्यानेन तद्व्याख्यानरूपटीकया च विरोधः । तत्र 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति वाक्यं प्रमाणीकृत्य, नष्टधर्मिकभेदस्य सत्त्वाभिधानादिति

चेत् । स्यादप्येवं विरोधो, यदि घटादेर्धर्मिणो विनाशे, भेदस्य सर्वथाऽविनाशस्तत्राभिमतः स्यात् । यदि वाऽत्र धार्मिविनाशे सर्वथाऽपि भेदविनाशोऽभिमतः स्यात् । न चैवं, किन्तु घटादेः कार्याकारेण नाशे भेदस्य कारणाकारेणैवाविनाशस्तत्राभिमतः । अत्र च कार्याकारेण धर्मिनाशे तदाकारेणैव, भेदविनाशः । तथा च कार्याकारेण धर्मिविनाशवत् तदात्मकभेदस्यापि विनाशात्कारणात्मना, भेदस्याविनाशवच्च तदात्मनैव, कार्यस्याप्यविनष्टत्वेन, न तत्र धर्मिविनाशोऽपीति न धर्मिविनाशेऽपि भेदविनाशलाभ इति नोत्तरग्रन्थविरोध इति ध्येयम् । ननु प्रागभावादेर्धर्मिविनाशेऽप्यविनाश एव कुतः । भेदस्येव तन्नाशे नाशस्यैव संभवादित्यत आह **यत्र हीति** । **भूतल इति** । भूतलादावित्यर्थः । अत एवोत्तरत्र भूतलादेरिति वक्ष्यतीति द्रष्टव्यम् ॥ **घटाभाव इति** । घटप्रागभावादिरित्यर्थः ॥ **अनुवर्तत एवेति** । प्रतियोग्यापत्तेरेव प्रागभावविनाशत्वादिति भावः । नन्वेवं प्रागभावादेर्धर्मिणोऽत्यन्तभेदे भूतलादेस्तन्निरूपितधर्मित्वं न स्यात् । धर्मित्वस्य धर्मतादात्म्यनिबन्धनत्वादित्यतो वास्तवधर्मित्वस्य धर्मतादात्म्यनिबन्धनत्वेऽपि प्रातीतिकस्य तदभावाद्भूतलादेः प्रागभावादिकं प्रति प्रातीतिकस्यैव धर्मित्वस्याङ्गीकारान्नानुपपत्तिरित्याह **धर्मित्वं चेति** । प्रातीतिकं, प्रतीत्यैव केवलं विषयीक्रियते, न वस्तुगत्याऽस्तीत्यर्थः । न चैवं घटाभाववद्भूतलमित्यादिप्रतीतीनां भ्रमत्वापत्तिः । तत्र ह्यभावो विशेषणमात्रं, तद्वत्त्वमेव धर्म इति वक्ष्यमाणन्यायेन भूतलादौ तद्वत्त्वनिरूपितमेव धर्मित्वं वास्तवं, नाभावनिरूपितमित्यङ्गीकारात् ॥ **अत एवेति** । यत एवमन्योन्याभाव एव धर्म्यभिन्नः, प्रागभावादिस्तु तद्भिन्नोऽत एवेत्यर्थः । प्रागभावादेर्धर्मिभिन्नत्वे, प्रागुपन्यस्तदोषमुद्धर्तुमाशङ्कते **नन्विति** ॥ **तथा प्रसङ्ग इति** । संसर्गाभावस्य भेदप्रसङ्ग इत्यर्थः । अन्यगतस्य संसर्गाभावस्य धर्मिभिन्नत्वादिति भावः । इष्टापादनतया प्रसङ्गाभासोऽयमित्याह **सत्यमिति** ॥ **विशेषणमिति** । व्यावर्तकमात्रं न धर्म, इति गूढाभिसन्धेरुत्तरम् । आशयमजानानो विशेषणत्वमेव धर्मत्वमिति भ्रान्तश्चोदयति ॥ **न चेति** । श्रुतिविरोधः 'एवं धर्मानि'ति श्रुतिविरोध इत्यर्थः । आशयमुद्धाटयति **दण्डित्ववदिति** । तथा च गोत्राद्यभावस्य ब्रह्मधर्मत्वाभावात् न तस्य ब्रह्मणा भेदे, एवं धर्मानिति श्रुतिविरोध इति भावः ॥ **एवं कल्पनेति** । आनन्दादिकमपि विशेषणमेव, न तु धर्मः । तद्वत्त्वमेव च धर्म, इति कल्पनेत्यर्थः ॥ **आनन्दो ब्रह्मेत्यादीति** । तथा चानन्दादितादात्म्यस्य ब्रह्मणि प्रमितत्वात् आनन्दादेरेव तद्धर्मत्वमिति भावः ॥ **बाधकेति** । धर्मिनाशेऽप्यनुवृत्तिरूपबाधकस्याभावाच्चेत्यर्थः । नन्वभाववत्त्वमभाववतो भावः, स चाभाव एवेति कथं तस्य ब्रह्माभेद इत्यतः 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति वचनादभावसंबन्ध एवाभाववत्त्वं न त्वभाव एवेति युक्तस्तस्य ब्रह्माभेद इत्याह **गोत्राद्यभाववत्ता त्विति** ।

ननु गोत्राद्यभावविशिष्टसंबन्धस्य ब्रह्मस्वरूपत्वे अभावस्यापि तदभेदो दुर्वार एव । 'यद्विशिष्टस्य यत् भवति तत् तद्विशेषणस्यापि भवति' इति व्याप्तेरित्यतो घटावच्छिन्नस्य घटात्यन्ताभावध्वंसादेर्घटदेशकालभिन्नदेशकालादित्वेऽप्यवच्छेदकस्य घटस्य तदभावेन व्यभिचारेणोक्तव्याप्त्यसिद्धेः अवच्छिन्नस्य संबन्धस्य ब्रह्मस्वरूपत्वेऽप्यवच्छेदकस्याभावस्य संबन्धं प्रति, कुरूणां क्षेत्रे वसतीत्यादौ कुरूणामिव ताटस्थ्येन व्यावर्तकत्वेनोपलक्षणतया, न ब्रह्मस्वरूपत्वप्राप्तिरित्याशयेनोक्तम् **न काचिदनुपपत्तिरिति** ।

स० — नन्वत्रगोत्रमित्यादिनापि कथमपि कथं तत्प्रतीतिः, तथात्वेऽसामर्थ्येन समासासंभवादित्यत आह **न विद्यते इति** ॥ तथाच नञः प्रसज्यप्रतिषेधार्थत्वेऽसामर्थ्येन तत्पुरुषानुपपत्तिरेवोक्ता, न समासमात्रस्य येनात्र बहुव्रीहिरपि न स्यात् । न चैवं प्रकृते अदृश्यत्वादित्यत्रापि बहुव्रीह्याश्रयणेन तत्संसर्गाभावार्थोऽस्त्विति वाच्यम् । तत्पुरुषापेक्षयाऽन्यपदार्थप्रधानबहुव्रीह्याश्रयणस्य जघन्यत्वात् अगोत्रमित्यादौ तु पर्युदासार्थत्वमाश्रित्य तत्पुरुषाभिधाने गोत्रादिभेदमात्रस्यानुपयुक्तस्य प्रतीत्यागुणालाभात् अतोऽगत्या तत्र बहुव्रीहिरेव वक्तव्य इति भावः । नष्टस्य भूतलादेः कथमनुवर्तमानाभावधर्मित्वमित्यत आह **धर्मित्वं च भूतलादेरिति** ॥ यद्वा 'ननु धर्मिनाशेऽपि धर्मस्यानाशादि'त्यनुपपन्नं धर्मस्य धर्म्याश्रितत्वेन तन्नाशे तन्नाशस्य रूपादौ दृष्टत्वेनावश्यकत्वादिति । यत्र धर्मिसत्वं तद्धर्मत्वे प्रयोजकं तत्रैव तन्नाशे तन्नाशः न चैवं प्रकृत इत्याह **धर्मित्वं चेति** ॥ न वस्तुकृतं = वस्तुसत्तापेक्षं न भवतीत्यर्थः । **अत एवेति** ॥ प्रागभावादेः धर्मिस्वरूपत्वाभावादेवेत्यर्थः । **दण्डित्ववदभाववत्त्वस्येति** । भिन्नस्याभावस्य न धर्मत्वं येन 'एवं धर्मानि'ति श्रुतिविरोधः किं तु तन्निरूपितसंबन्धस्यैव स च भावरूप इति भवतीश्वराभिन्नः । न च विशिष्टैक्ये विशेषणस्याप्यभावस्यैक्यापत्तिः । अभावस्य संबन्धे तटस्थतया व्याकर्तव्यत्वेनोपलक्षणत्वात् । न चैवं दण्ड संबन्धस्येति वक्तव्यं, दण्डित्ववदभाववत्त्वस्येति कथमुक्तमिति मतुबर्थः संबन्ध एवेत्यभिप्रायेण तथोक्तिसंभवात् । यथाऽऽहुः 'संबन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः' इति ।

प० — **न विद्यते गोत्रादिकमिति** । निषेधार्थकनञस्तत्पुरुषस्य निषेधेऽपि न बहुव्रीहेरिति भावः ॥ **अशेषश्रुतीति** ॥ 'अद्रेश्यमग्राह्यमगोत्र'मित्यादिश्रुतिस्थाशेषपदव्याख्यानं सूत्रकृता कृतं स्यात् । अन्योन्याभावमात्रस्योक्तौ तु तेन न सर्वपदव्याख्यानं लभ्यत इति भावः । नष्टस्य कथमभावधर्मित्वमित्यत आह **धर्मित्वं चेति** । **आहेति** । सूत्रकारः तत्वविवेकाख्यग्रन्थे द्विविधं परतन्त्रं च भावोऽभाव इतीरिते [ भावाभावविभागेन द्विधैवाचेतनं मतम् ]' इत्यभावस्य तत्त्वान्तरत्वमभिधाय 'भावाभावस्वरूपत्वान्नान्योन्याभावता पृथगि'त्यन्योन्याभावस्य धर्मिस्वरूपतामाहेत्यर्थः ॥

या०— **अगोत्रमिति** । नन्वगोत्रमित्यादिनाऽपि कथं तत्प्रतीतिः । नञः प्रसज्यप्रतिषेधार्थकत्वेऽसामर्थ्येन तत्पुरुषत्वासम्भवात् । ब्रह्मवाचकपदसामानाधिकरण्यानुपपत्त्याऽव्ययीभावस्यापि वक्तुमशक्यत्वादित्यत आह **न विद्यत इति** । नन्वेवमदृश्यत्वादीत्यत्रापि न विद्यते दृश्यं यस्य, तददृश्यं, तस्य भावोऽदृश्यत्वमिति बहुव्रीह्याश्रयणेन संसर्गाभावार्थत्वं कुतो न स्यादिति चेन्न । तथात्वे दृश्यस्य प्रपञ्चस्याभावप्राप्त्या योग्यताऽभावात् । न च न विद्यते दृश्यत्वादिर्यस्येति बहुव्रीहिः । तस्य ब्रह्मवाचकत्वेन गुणपदेन सामानाधिकरण्यासम्भवात् । न विद्यन्ते दृश्यत्वादिगुणा यस्येति करणे तु, विवक्षितस्यादृश्यत्वादेर्गुणत्वस्यासिद्धिः । यद्वक्ष्यति 'अदृश्यत्वादिकांस्तस्माद् गुणानाह' इति । अतो न तत्र बहुव्रीहिशङ्काऽवकाश इति ॥ **भूतल इति** । भूतलादावित्यर्थः । अत एवाग्रे भूतलादेरिति वक्ष्यति । तेन संसर्गविशेषावच्छिन्नघटात्यन्ताभावविवक्षायां भूतलं धर्मि, घटप्रागभावध्वंसविवक्षायां तु तदुपादानमिति ज्ञातव्यम् । नन्वेवं प्रागभावादेर्घटादितोऽत्यन्तभेदे घटादेस्तन्निरूपितं धर्मित्वं न स्यात् । धर्मित्वस्य धर्मतादात्म्यनिबन्धनत्वादित्यत आह **धर्मित्वं चेति** । प्रातीतिकं प्रतीत्यैव केवलं विषयीक्रियते, न वस्तुगत्याऽस्तीत्यर्थः । न चैवं घटाभाववद्भूतलमित्यादिप्रतीतीनां भ्रमत्वापत्तिः । तत्राप्यभावो विशेषणमात्रं तद्वत्त्वमेव धर्मः, इति वक्ष्यमाणन्यायेन भूतलादौ तद्वत्त्वनिरूपितमेव धर्मित्वं वास्तवं, नाभावनिरूपितमित्यङ्गीकारात् । अन्योन्याभावे तु धर्मिप्रतीतावेव प्रतीयमानत्वादित्युक्त्या धर्मितादात्म्यस्यैव सिद्धत्वात् न तस्य धर्मिणोऽत्यन्तभेदो वा, तन्नाशानन्तरमनुवृत्तिर्वाऽस्तीति ज्ञातव्यम् । न चैवं 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति तैत्तिरीयभाष्ये 'तस्मात्प्रध्वस्तभेदादि सदित्येवावगम्यते' इत्यनुव्याख्याने च धर्मिनाशेऽपि भेदाविनाशवचनात्तद्विरोधः । तत्र कार्याकारेण धर्मिनाशे तदात्मकस्यापि भेदस्य नाश एव । कारणात्मना तु नोभयोर्नाश इत्याशयात् । न चैवं प्रागभावादावङ्गीकर्तुं शक्यम् । सिद्धे हि धर्मितादात्म्ये कल्पनैषा । न चान्योन्याभाव इव प्रागभावादौ धर्मितादात्म्यसाधकं तत्प्रतीतावेव प्रतीयमानत्वादिकं किञ्चिदस्तीति । **अत एवेति** । यत एवमन्योन्याभाव एव धर्म्यभिन्नः प्रागभावादिस्तु तद्भिन्नोऽत एवेत्यर्थः ॥ **तथात्वप्रसङ्ग इति** । संसर्गाभावस्य ब्रह्मभेदप्रसङ्ग इत्यर्थः ॥ **विशेषणमिति** । व्यावर्तकमात्रं न धर्म इत्यर्थः । विशेषणत्वमेव धर्मत्वमित्याशयवतोद्भावितम् 'एवं धर्मानि'ति श्रुतिविरोधमाशङ्क्य निराकरोति **न च श्रुतीति** । तथा चाभाववत्त्वमेव धर्मो नाभावः । तस्य च ब्रह्मणाऽभेद एवेति भावः ॥ **न चानन्दादाविति** । तत्रापि विशेषणत्वमात्रं न धर्मत्वं किन्तु तद्वत्त्वमेव धर्म इति कल्पना स्यादित्यर्थः ॥ **आनन्दो ब्रह्मेत्यादीति** । तथाच तादात्म्यस्य तत्र प्रमितत्वेनानन्दस्यैव धर्मत्वमिति भावः ॥ **बाधकेति** । धर्मिनाशेऽप्यनुवृत्तिरूपबाधकस्याभावाच्चेत्यर्थः । नन्वभाववत्त्वमभाववतो भावः । स चाभाव एव । तस्य कथं ब्रह्माभेद

इत्यत आह **गोत्राद्यभावेति** ॥ **भावरूपेति** । तथा चाभाववत्त्वमखण्डोपाधिर्वाऽभावसम्बन्धो वा नाभाव इत्यर्थः । यथाऽऽहुः । 'सम्बन्धेऽपि विवक्षायां भवन्ति मतुबादय' इति । न चाभावविशिष्ट-सम्बन्धस्य ब्रह्माभेदेऽभावस्यापि तदभेदापत्तिः । अभावस्य सम्बन्धे तटस्थतयैव व्यावर्तकत्वेनोपलक्षणत्वात् । तदिदमुक्तं । न काचिदनुपपत्तिरिति ॥

श्री० — **असाविति** । अत्यन्ताभावरूपः संसर्गाभाव इत्यर्थः ॥ **निर्धारणेनेति** । अन्यो-न्याभावस्य धर्मिस्वरूपत्वनिश्चयेनेत्यर्थः ॥ **तथा चेति** । अभावमात्रं धर्मिस्वरूपम् इत्युक्तौ ब्रह्मणि दृश्या-द्यन्योन्याभावगोत्राद्यत्यन्ताभावरूपसंसर्गाभावप्रतिपादकाशेषश्रुतिव्याख्यानं संभवति । तथा च 'अभाव-गुणको धर्मोक्तिरि'त्येव वक्तव्यम् इत्यर्थः । घटाभावः घटप्रतियोगिकाभावादिः । तदुपपादयति **यत्र इति** । घटाभावो घटप्रागभावादिः । ननु खननादिना भूतलादेर्विनाशेऽपि घटप्रागभावाद्यनुवृत्तौ प्रोच्यमानायां प्रागभावादिकं प्रति नष्टस्यापि भूतलादेर्धर्मित्वमुक्तं स्यान्न च तत्संभवति । नष्टत्वादेवेत्या-शङ्क्याह **धर्मित्वं चेति** ॥ प्रातीतिकं प्रतियोगित्वादिवद्धर्मिसत्तासापेक्षं न भवति । किन्तु बौद्ध-मित्यर्थः ॥ **अत एवेति** । संसर्गाभावस्य धर्मिणः सकाशाद्भिन्नत्वादेवेत्यर्थः ॥ **आहेति** । तत्त्व-विवेके भगवानाचार्य इत्यर्थः ॥ **तथात्वेति** । ब्रह्मणि श्रुतस्य गोत्राद्यत्यन्ताभावरूपसंसर्गाभावस्य ब्रह्मणः सकाशाद्भेदः स्यादित्यर्थः । विशेषणमित्यनन्तरं देवदत्ताद्भिन्नमिति शेषः । एवमुत्तरत्रापि । विशेषण-मित्यनन्तरं ब्रह्मणो भिन्नमिति शेषः कार्यः ॥ **श्रुतीति** । एवं धर्मानिति श्रुतीत्यर्थः ॥ **एवं कल्पनेति** । आनन्दवत्त्वमेव धर्मो नत्वानन्द इति स्यादित्यर्थः । ननु गोत्राद्यभावत्वस्याप्यभावरूपत्वेन कथं ब्रह्माभेद इत्यत आह **गोत्रादीति** ।

च० — **नन्वित्यादि** । नायं भिदिरन्योन्याभावार्थः । किन्त्ववान्तरवैचित्र्यार्थः । तथा च अनेकार्थत्वाद्धातूनां प्रागभावादिप्रभेदवानित्यर्थः । **संसर्गाभावः** वृत्तिनियामकसंसर्गावच्छिन्नप्रतियोगि-ताकाभावः । वृत्त्यनियामकसंसर्गस्याभावप्रतियोगितानवच्छेदकत्वात् । तादात्म्यसंबन्धावच्छिन्नप्रतियोगि-ताकाभावरूपान्योन्याभावव्यावर्तनाय वृत्तिनियामकेति संसर्गविशेषणम् । न च 'चैत्रस्येदं न मैत्रस्य' इत्यादौ निरूपकतासंसर्गावच्छिन्नस्वामित्वनिष्ठप्रतियोगिताकाभावभानमुपेयुषां प्राचां मते तादृशाभावा-संग्रह इति वाच्यम् । तत्स्थाने तादात्म्यान्येति विशेषणस्यैवाभिषेचनीयत्वात् घटादिप्रतियोगिकाभावानां संसर्गप्रतियोगिकत्वबाधेन संसर्गप्रतियोगिकाभाव इति व्याख्यानमनादेयमेव । ध्वंसप्रागभावयोः प्रतियोगि-वत्तदभावविरोधित्वोपगन्तृप्राचीनमते घटोत्पत्तेः प्राक् तद्ध्वंसानन्तरं च कपाले समवायेन घटो नास्तीति

प्रतीतेर्घटत्वरूपसामान्यधर्मावच्छिन्नसमवायावच्छिन्नप्रतियोगिताकत्वेन ध्वंसप्रागभावावगाहित्वस्याकरनिरूढत्वात् । संसर्गाभावपदाभिधेयस्य कस्यचिदतिरिच्यमानतायां चातुर्विध्येन न चतुर्विधेपीत्यभिधानं न सङ्गच्छेत इति शङ्केरन् तथा मा शङ्किषतेति दर्शितदिशोक्ताभावत्रिकस्यैव संसर्गाभावपदाभिधेयत्वेन तत्त्रितयान्यस्याभावेन सामञ्जस्यादिति न्यायनयं भङ्गीं दर्शयितुं संसर्गाभावपदोपादानंसिद्धान्ते कार्यकारणयोः संसर्गस्याभावेन प्रागभावप्रध्वंसाभावयोः संसर्गाभावत्वानुपपत्तेः अत एव भिन्न एव धर्मिणः प्रागभावादिरिति सिद्धान्तेऽभिधास्यति । अन्यथा हि भिन्न एवेत्यभ्यधास्यदिति ध्येयम् । **भेदप्रसङ्गादिति** । व्यक्त्यन्तरगतस्य भेददर्शनादिति भावः ॥ **अगोत्रमिति** । नञः प्रसज्यप्रतिषेधार्थकत्वे उक्तदिशा सामर्थ्याभावप्रसङ्गेन पर्युदासार्थकत्वमेवेति नानेन संसर्गाभावः प्रत्याख्यत इत्यत आह **न विद्यत इति** । समासाघटकपदार्थविशेष्यकशाब्दधीजनकाद्बहुव्रीहेः तद्घटकोत्तरपदार्थविशेष्यकान्वयधीजनकतत्पुरुषस्य श्रेयस्त्वेऽपि प्रकृताध्यायसमन्वीयमानानां ब्रह्मलक्षणताया आनन्दमयनयान्ते समर्थिततया गोत्राद्यन्योन्याभावस्य प्रपञ्चसाधारण्येनातिप्रसङ्गप्रसङ्गेन लक्षणत्वायोगेन बाधकेन श्रेयसोऽपि तत्पुरुषस्य दुर्ग्रहतया अतादृशस्यापि बहुव्रीहेरेवाश्रयणीयत्वात् । बाधकसमवधानस्थले क्वचिदसमर्थसमाससाधुताया अपि ज्ञापकबलेनातच्छब्दादित्यादौ समर्थयिष्यमाणत्वात् । अदृश्यमग्राह्यमित्यादौ तु दृश्यादिपर्युदासस्य अनतिप्रसक्ततया तल्लक्षणतासंभवेन बाधकासमवहितेर्ज्यायांस्तत्पुरुष एवाश्रयणीय इति दृश्यादिपर्युदासस्यैवादृश्यादिपदार्थताऽवधेया ॥ **किमन्योन्याभावनिर्धारणेनेति** । नराणां नरेषु वा क्षत्रियाः शूरतमा इत्यादाविव प्रकृते धर्म्यभिन्नत्वेन व्यावर्तनीयव्यक्त्यन्तरविरहादिति भावः ॥ **अभाव इत्येव वक्तव्यमिति** । अभावत्वावच्छेदेन धर्म्यभिन्नत्वोपगमादिति भावः । **अशेषेति** । अगोत्रमवर्णमित्यादिश्रुतिदलस्यापीत्यर्थः । पर्युदासनिर्धारणेऽदृश्यमग्राह्यमिति दलस्यैवार्थकथनं नोक्तदलान्तरस्येत्यभिसन्धिः । आद्यकल्पोक्तक्षतिपरिजिहीर्षया तमुपादत्ते **भिन्न एवेति** । अर्धजरतीयाश्रयणस्य निर्बीजत्वाशङ्कामपनयति **धर्मिनाशेऽपीति** । एतेन प्रागभावादित्रितयपक्षकं स्वाधिकरणप्रतियोगिकप्रतियोगिताभेदवत्तासाध्यकं स्वाश्रयप्रतियोगिकप्रध्वंसनिरूपितकालिकसंबन्धावच्छिन्नाधिकरणताव्यापकतत्संबन्धावच्छिन्नाधिकरणताकध्वंसाप्रतियोगित्वहेतुकमनुमानमभिप्रेयते । हेतुतावच्छेदककोटौ व्यापकत्वांशनिवेशात्कपालध्वंसकाले घटप्रागभावध्वंससत्त्वेऽपि न क्षतिः। साध्यतावच्छेदकघटकतया प्रतियोगितावैयधिकरण्यनिवेशान्न व्यासज्यवृत्तिधर्मावच्छिन्नभेदमादाय सिद्धसाधनावतारः । नन्वेवमपि हेतोरनैकान्त्यं दुर्वारमेव । 'तस्मात्प्रध्वस्तभेदादी'त्युत्तरानुव्याख्याने तट्टीकायां च 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति प्रमाणमनुरुध्य धर्मिनाशेपि नाशस्यैव समर्थनादिति चेन्न । कार्याकारेण नाशेऽपि कारणाकारेणैव तदनाशस्य तत्राभिप्रेततया कार्यात्मताविशिष्टप्रतियोगिकनाशस्यैव हेतुशरीरघटकतया तदनवकाशात् ॥ **घटाभाव इति** । घटप्राग-

भावादिरित्यर्थः ॥ **अनुवर्तत एवेति** । प्रतियोग्युत्पत्तेः प्रागभावध्वंसोपधायकसामग्रीघटकत्वादिति भावः ॥ नन्वेवं प्रागभावादेर्घटादितो भेदोपगतौ घटादेस्तद्धर्मित्वं न स्यात् । सिद्धान्ते धर्मित्वस्य धर्मतादात्म्य-निबन्धनत्वादिति विनेयशङ्कामपहस्तयते **धर्मित्वं चेति** । **प्रातीतिकम्** प्रतीत्यैव विषयीक्रियमाणम् । न तु वास्तवमित्यर्थः । तथा सति भूतलं घटाभाववदित्यादिप्रतीतीनां विपर्यासत्वापत्तिरिति शङ्का तत्र ह्यभावो विशेषणमात्रं तत् द्रव्यमेव धर्म इत्यभिधास्यमानन्यायेन भूतलादौ तदधिकरणतानिरूपितमेव धर्मित्वं वास्तवं नाभावनिरूपितमित्युपगमान्निरसनीयेति भावः । न चैवं तुल्यदिशा प्रागभावादावपि सुवचम् । सिद्धे धर्मितादात्म्ये कल्पनैषा न भवति । धर्मितादात्म्यस्य कल्पकं तत्प्रतीतावेव प्रतीयमानत्वा-दिकं न किञ्चिदपि प्रागभावादावन्योन्याभाववदिति हृदयम् । अत एव=भेदस्यैव धर्मिस्वरूपत्वादेः ।

प्रागभावादेर्धर्मिभिन्नताकल्पोक्तक्षतिमुद्दिधीर्षुराशङ्कते **नन्विति** । **तथात्वप्रसङ्गः** संसर्गाभावस्य ब्रह्मानुयोगिकभेदप्रतियोगित्वप्रसङ्गः । **विशेषणं** व्यावर्तकमात्रम् । न धर्म इत्यर्थः । विशेषणत्वमेव धर्मत्वमित्यभिसंदधानः पूर्ववादी यं दोषमुद्बीभत्तमपहस्तयते **न चेति** ॥ **श्रुतिविरोधः** एवं धर्मानिति श्रुतिविरोधः । **दण्डित्ववत्** दण्डप्रतियोगिकसंयोगानुयोगित्ववत् । **अभाववत्त्वस्य**=अभावप्रतियोगिक-संसर्गानुयोगित्वस्य । **एवं कल्पना** आनन्दादिविशेषणमेव न धर्मः किं तु तद्वत्त्वमेव धर्म इति कल्पना । **वचनादिति** । तथा च समानविभक्तिकपदसमभिव्याहाररूपाकांक्षा ज्ञानघटितसामग्र्य-धीनान्वयबुद्धेरेकपदार्थेऽपरपदार्थस्य तादात्म्यसंसर्गावगाहित्वेनानन्दादेरेव धर्मत्वमिति भावः । **बाध केति** । धर्मिनाशेऽप्यनुवृत्तिरूपबाधकस्याभावाच्चेत्यर्थः । **गोत्राद्यभाववत्ता** गोत्राद्यभावः । अथ गोत्रा-द्यभावनिरूपितत्वसंबन्धविशेषितसंबन्धस्य ब्रह्मस्वरूपत्वे संबन्धविशेषणतापन्नाभावस्यापि 'विशिष्टस्य यद्भवति विशेषणस्यापि तद्भवति' इति व्याप्तेः, सर्वादीनीति सूत्रं व्याचक्षाणेन भाष्यकृता चित्रवाससं लोहितोष्णीषा इत्यादितद्गुणसंविज्ञानानुदाहरमाणेन ध्वनिततया ब्रह्माभेदापत्तिरिति चेन्न । विषयिता-संबन्धेन लिङ्गविशेषितज्ञानस्यानुमितिहेतुत्वे लिङ्गस्यापि तथात्वस्य, तेन संसर्गेण साध्यविशेषितस्य तदभावविशेषितस्य वा ज्ञानस्य तद्विरोधित्वे साध्यतदभावयोरपि तथात्वस्य प्रतिपत्तियोगितासंसर्गेण प्रतियोगिविशेषिताभावस्य तदनधिकरणदेशकालवृत्तित्वे तस्यापि तथात्वस्य प्रसङ्गेन तादृशव्याप्तेरेव निष्प्रमाणत्वात् । भाष्यकारस्तु तादृशप्रदेशरूपमेवोदाजहार तादृशीं व्याप्तिं नैवादध्वनदित्यवसेयम् । प्रतियोगितासंसर्गकाभावबुद्धौ उपलक्षणविधया कस्यचिद्भानानुपगमेऽपि तत्प्रकारकाभावबुद्धौ तदुपगमेन लघुधर्मसमनियतगुरुधर्मस्यावच्छेदकत्वानुपगन्तृमते साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपा-वच्छिन्नप्रतियोगिताकाभाववत् इत्यादिबुद्धावुपलक्षणविधा भासमानव्यापकतावच्छेदकत्वादीनां रूपान्तरा-

वच्छिन्नप्रतियोगितान्तरव्यावर्तकतेव प्रकृतेऽपि उपलक्षणीभूतगोत्राभावस्य संबन्धान्तरव्यावर्तकतैवोपेयत इति वा क्षत्यभावादित्याशयेनाह **न काचिदनुपपत्तिरिति** ।

**सु० — यस्त्वन्योन्याभावस्य धर्मिस्वरूपतां क्वापि न मन्यते । स प्रष्टव्यः । किंनिमित्तोऽयमनभ्युपगमः । किं विरोधादुत, प्रमाणाभावात्, अथ बाधकसद्भावात् । आद्ये कथमन्योन्याभावस्य धर्मिणा विरोध इति वक्तव्यम् । विधिनिषेधरूपत्वेनेति चेत्, तदेव कथम् । नञः प्रयोगाप्रयोगाभ्यामिति चेत् तत्राह** अतद्भाव इति ।

**अनु० —** अतद्भावोऽन्यता चेति न विशेषोऽस्ति कश्चन ।

**पटस्य ह्यघटत्वं घटादन्यत्वं चैकमेव । अघटो घटादन्य इत्यनयोर्विशेषाप्रतीतेः । विद्येते च नञः प्रयोगाप्रयोगौ इत्यतो व्यभिचार इत्यर्थः । स्थलान्तरे व्यभिचारं दर्शयति** दोषाभाव इति ।

दोषाभावो गुण इति प्रसिद्धो लौकिकेष्वपि ॥

**आरोग्यं गुणः अक्रौर्यं गुणः इति नञ्प्रयोगविषयस्य निषेधस्य रोगाद्यभावस्य, नञ्प्रयोगाविषयो विधिरूपत्वं गुणत्वं, लौकिकवैदिकेषु व्यवहारेषु प्रसिद्धम् । उपलक्षणं चैतत् । अनौदार्यं दोषः, इति गुणाभावस्य दोषत्वमपि प्रसिद्धम् । अतो(ऽपि) व्यभिचार इत्यर्थः । अन्योन्याभावस्य धर्मिस्वरूपत्वसमर्थनं न औत्प्रेक्षिकम् । किन्तु सूत्रकृतोऽप्यभिमतमिति दर्श(सूच)यितुं सूत्रकृताऽप्ययं व्यभिचारः सूचित इत्याह** अदृश्यत्वादिकानिति ।

अदृश्यत्वादिकांस्तस्माद्गुणानाह स्वयं प्रभुः ।

**यस्मान्नञः प्रयोगाप्रयोगौ नाभेदविरोधिनौ, तस्मात्तदेव सूचयितुमदृश्यत्वादिगुणक इत्यदृश्यत्वादीनां नञ्वाच्यानामतथाभूतानां गुणानां चैक्यमाह सूत्रकारः । अन्यथा दृश्यत्वादीत्यवक्ष्यदिति । अनेन सप्रतियोगिकत्वनिष्प्रतियोगिकत्वाभ्यां विरोऽधोऽपि परास्तो वेदितव्यः ।**

शे० — ननु 'अतद्भावोऽन्यता चे'ति अघटत्वघटान्यत्वयोर्विधिनिषेधरूपत्वेऽप्यभेदेनानैकान्त्यान्न विधिनिषेधरूपविरोधस्यैक्याभावसाधकत्वं इत्यर्थवर्णनपरोत्तरवाक्यमसङ्गतम् । न च विधिनिषेधरूपत्वेन अन्योन्याभावतद्वतोर्विरुद्धत्वान्न दृश्याद्यन्योन्याभावस्य ब्रह्मस्वरूपत्वमिति निराकरणार्थत्वात् नासङ्गतिरिति वाच्यम् । तथा सत्युक्तन्यायेन लोकेऽप्यन्योन्याभावस्य धर्मिस्वरूपत्वाभावापत्त्या लोके धर्मिस्वरूपत्ववादिनोक्तयुक्तेस्तत्रान्यथयितव्यत्वेन तन्न्यायेन ब्रह्मण्यप्यन्यथयितुं शक्यत्वेन लोकेऽन्योन्याभावस्य स्वरूपत्ववादिनोक्तानुपपत्तेरशक्यशङ्कत्वादित्यतो विरोधेन स्वरूपत्ववादिनः उक्तशङ्काऽनुदयेऽपि लोकेऽप्यन्योन्या-

भावस्यास्वरूपत्ववादिनो विरोधाभावादुक्तशङ्कोपपत्तेरुक्तरीत्या तत्परिहारकतयोत्तरवाक्यस्य सङ्गतिरित्याशयेन तद्यनङ्गीकारहेतोरन्यस्यापि संभवान्न विरोधमात्रनिराकरणेनान्योन्याभावस्य तं प्रति धर्मिस्वरूपत्वसिद्धिरित्यतः सत्यमिति भावेन संभावितानभ्युपगतहेतून्विकल्प्य प्रथमपक्षनिरासकतयोत्तरभाष्यं योजयति **यस्त्विति** ॥ **क्वापीति** । ब्रह्मण्यन्यत्रापीत्यर्थः ॥ **कथमिति** । किंरूप इत्यर्थः । किं भावाभावरूपः किंवा सप्रतियोगिकत्वनिष्प्रतियोगिकत्वरूप इति प्रश्नार्थः । यद्वा । कथमित्यत्र सिद्धपदाध्याहारेण साधकप्रमाणप्रश्नोऽयमवगन्तव्यः । ततश्च साधकप्रमाणाभावेन विरोधस्यैवासिद्धेर्न तेनान्योन्याभावतद्वतोरैक्याभावसाधनमुपपन्नमिति भावः । आद्यं शङ्कते **विधीति** । विशेषेण सामान्यानुमानमिति भावः ॥ **तदेव कथमिति** । विधिनिषेधरूपत्वसिद्धौ तेन विरोधसाधनसंभवेऽपि साधकप्रमाणाभावेन तस्यासिद्धेर्न तेन विरोधसाधनं संभवतीति भावः । नञः प्रयोगाप्रयोगयोरेव विधिनिषेधरूपत्वसाधकत्वान्न साधकाभाव इति शङ्कते **नञ इति** । अयमत्र प्रयोगप्रकारः । घटतद्धर्मिकान्योन्याभावौ नाभिन्नौ विरुद्धत्वात्सम्मतवत् । विमतौ विरुद्धौ विधिनिषेधरूपत्वात्सम्मतवत् । विमतौ विधिनिषेधरूपौ नञ्प्रयोगाप्रयोगविषयत्वात्संमतवदिति । अघटत्वे घटान्यत्वे च सत्यपि विधिनिषेधरूपत्वे विरोधाभावात्तत्र व्यभिचार इति वक्तुं विरोधरूपसाध्यस्यापि तत्र सत्वान्न व्यभिचार इति शङ्कापरिहाराय साध्याभावोपपादकतया मूलं योजयति **पटस्य हीति** । ननु चाविरोधेऽप्यघटत्वघटान्यत्वयोर्विधिनिषेधरूपत्वस्यैवाभावाद्धेतोरेव तत्रागमनान्न व्यभिचार इत्यतो विधिनिषेधरूपत्वे नञ्प्रयोगाविषयत्वतद्विषयत्वयोरेव प्रयोजकत्वेन परस्याभिमतत्वात्सत्यपि नञ्प्रयोगविषयत्वे विधिनिषेधरूपत्वाभावे व्यभिचारप्रसङ्गेन विधिनिषेधरूपत्वावश्यंभावान्न हेत्वभावस्तत्रेत्याह **विद्यते चेति** । अतो विधिनिषेधरूपत्वमावश्यकमिति वाक्यशेषः ॥ **अतो व्यभिचार इति** । विधिनिषेधरूपत्वस्य विरोधलक्षणसाध्येनेति शेषः ॥ **स्थलान्तर इति** । आरोग्यगुणयोरक्रौर्यगुणयोर्वा सत्यपि विधिनिषेधरूपत्वे विरोधस्याभावाद्व्यभिचार इति भावः । कुतस्तयोर्विधिनिषेधरूपत्वं येन तत्र हेतुवृत्तिः स्यादित्यत आह **आरोग्यमित्यादिना** । न विद्यते रोगो यस्यासावरोगस्तस्य भाव आरोग्यमिति भावस्य नञ्प्रयोगविषयत्वान्निषेधत्वमिति भावः । सप्रतियोगिकत्वनिष्प्रतियोगिकत्वरूपो विरोध इति द्वितीयपक्षं प्रथमपक्षोक्तदूषणातिदेशेन दूषयति **अनेनेति** । अक्रौर्यं गुणः, अनौदार्यं दोषः, इत्यादौ व्यभिचारेणेत्यर्थः । तत्राप्यक्रौर्यानौदार्ययोः सप्रतियोगिकत्वाद्गुणदोषयोश्च निष्प्रतियोगिकत्वादस्ति सप्रतियोगिकत्वनिष्प्रतियोगिकत्वरूपो विरोधः । न च साध्योऽभेदाभावस्तत्रास्तीति भावः ।

**स०** — अघटत्वे घटान्यत्वे च सत्यपि विधिनिषेधरूपत्वे विरोधाभावात्तत्र व्यभिचार इति वक्तुं विरोधरूपसाध्यस्यापि सत्त्वात् न व्यभिचार इति शङ्कां परिहर्तुं तयोरविरोधोपयुक्तमैक्यमुपपादयति

**पटस्य हीति** । तदेवोपपादयति **अघट इति** । न चैवं विरोधेऽपि अघटत्वघटान्यत्वयोर्विधिनिषेधरूपत्वस्यैवाभावेन हेत्वभावान्न व्यभिचार इत्यतः विधिनिषेधरूपत्वे नञ्प्रयोगविषयत्वतदविषयत्वयोरेव प्रयोजकत्वेन परस्याभिप्रेतत्वात् विधिनिषेधरूपत्वमावश्यकमिति युक्तो व्यभिचार इत्याह **विद्यते चेति** ॥ **अतो व्यभिचार इति** ॥ विधिनिषेधरूपत्वसाधकनञ्प्रयोगादिविषयत्वस्य विरोधरूपसाध्येनेत्यर्थः ॥ **आरोग्यमिति** न विद्यते रोगो यस्य असौ अरोगः । तस्य भावः आरोग्यमित्यर्थः ॥

**प०** -- **अक्रौर्यमिति** । शान्त्यभावाभाव इत्यर्थः ॥ **अनेनेति** । निष्प्रतियोगिकसप्रतियोगिकरूपे गुणदोषाभावादावभिन्ने बहुस्थले व्यभिचारकथनेनेत्यर्थः ॥

**या०** — **आरोग्यमिति** । न विद्यन्ते रोगा यस्य सोऽरोगस्तस्य भाव आरोग्यमिति रोगाभावस्य नञ्प्रयोगविषयत्वमित्यर्थः ॥

**श्री०** — **तदेव** विधिनिषेधरूपत्वमेव ॥ **विद्यते चेति** । अघट इत्यत्रास्ति नञः प्रयोगः । नास्ति च घटादन्य इत्यत्र । अन्यत्वस्य भावरूपत्वादिति ध्येयम् ॥ **अतो व्यभिचार इति** । नञ्प्रयोगाप्रयोगविषयत्वप्रयुक्तविधिनिषेधरूपत्वं यत्र तत्रैक्याभाव इति व्याप्तेरघटत्वघटान्यत्वयोर्व्यभिचार इत्यर्थः । गुणाभावस्य नञ्प्रयोगविषयस्येत्यर्थः ॥ **दोषत्वमिति** । नञ्प्रयोगाविषयविधिरूपदोषत्वमित्यर्थः । तदेव अभेदाविरोधित्वमेव ॥ **अनेनेति** । दोषभावो गुण इत्यादौ व्यभिचारेणेत्यर्थः ।

---

**सु०** — **नन्वेवं भावाभावयोरैक्ये भावाभावलक्षणो विरोधः क्वापि न स्यात् । असति च तस्मिन्विरोधवार्तैव लुप्येत । भावाभावयोर्हि साक्षाद्विरोधस्तद्द्वाराऽन्ययोरिति चेत् । किमविशिष्टयोर्भावाभावयोर्विरोधमङ्गीकृत्य तदभाव आपाद्यते, उतावच्छिन्नयोः । आद्ये त्विष्टापादनमित्याह** भावेति ।

**अनु०** — भावाभावविरोधोऽपि न तु सर्वत्र विद्यते ।

**सर्वत्रेत्यनेनाविशिष्टत्वं द्योतयति । घटवति पटाभावदर्शनादिति भावः । द्वितीये त्वापादकासिद्धिरिति भावेन तत्स्वरूपमाह** तदभावो हीति ।

तदभावो हि तद्भावविरोधी न ततोऽपरः ।

**उभयत्राप्यनुभवप्रसिद्धिं हिशब्देन द्योतयति । नन्वेतत्सर्वं तृतीयेऽन्तर्भवति । सत्यम् । तथाऽप्युल्बणतया पृथग्दूषितमित्यदोषः । अस्तु तर्ह्यन्योन्याभावस्य धर्मिस्वरूपत्वे प्रमाणाभाव इति द्वितीयः पक्षः । मैवं, भेदो हि वस्तुस्वरूपमिति सर्वैरभ्युपगन्तव्यम् । अन्यथाऽनवस्थादिदोषप्रसङ्गात् । अभावे स्वरूपातिरिक्तस्यासंभवेन भेदाभावप्रसक्तेश्च । अन्योन्याभावश्च भेद एवेति कथं धर्मिस्वरूपत्वं न स्यात् ।**

शे० — **भावाभावयोरैक्य इति ।** घटतद्धर्मिकान्योन्याभावयोरभेद इत्यर्थः ॥ **क्वापि न स्यादिति ।** तद्विरोधाभ्युपगमेऽन्योन्याभावतद्वतोरैक्यायोगादिति भावः । इष्टापत्तिं परिहरति **असति चेति ।** सर्वविरोधानां भावाभावविरोधमूलकत्वादिति भावः । तत्कथमित्यत आह **भावभावयोरिति ।** गोत्वतदभावयोः परस्परप्रतिक्षेपरूपतया साक्षाद्विरोध इत्यर्थः ॥ **तद्वारेति ।** भावभावविरोधमुपजीव्येत्यर्थः ॥ **अन्ययोरिति ।** ययोर्भावाभावरूपत्वं नास्ति तयोरित्यर्थः । परस्परप्रतिक्षेपरूपत्वाभावान्न गोत्वाश्वत्वयोः साक्षाद्विरोधः किन्तु परस्परप्रतिक्षेपरूपगोत्वगोत्वाभावयोर्विरोधमुपजीव्य गोत्वाश्वत्वयोर्विरोधः । तथा परस्परप्रतिक्षेपरूपमूषकतदभावयोर्विरोधमुपजीव्य परस्परप्रतिक्षेपानात्मकयोर्मूषकमार्जारयोर्विरोध इति भवति भावाभावविरोधमूलकः सर्वोऽपि विरोध इति भावः । **किमविशिष्टयोरिति ।** अविशिष्टयोर्भावाभावयोर्विरोधमङ्गीकृत्याविशिष्टयोर्भावाभावयोः ऐक्येऽविशिष्टयोर्भावाभावयोः क्वापि विरोधो न स्यादित्यापाद्यते किंवा तत्प्रतियोगिरूपभावतदभावरूपविशिष्टयोर्भावाभावयोर्विरोधमङ्गीकृत्य तादृशविशिष्टयोरैक्ये तादृशविशिष्टयोर्विरोधाभाव आपाद्यत इति प्रश्नार्थः । अविशिष्टयोर्भावाभावयोर्विरोधाभावस्य मूलारूढतासिध्यर्थ्यमाह **सर्वत्रेतीति ।** कुतस्तस्येष्टत्वमित्यतः प्रामाणिकत्वादित्याह **घटवतीति ॥ द्वितीये त्विति ।** विशिष्टयोर्भावाभावयोरैक्ये विशिष्टयोर्भावाभावयोर्विरोधाभावापादन इत्यर्थः ॥ **आपादकेति ।** प्रतियोगिरूपभावतदभावयोरैक्यस्यापादकीकृतस्य मयाऽनङ्गीकारादिति भावः ॥ **तत्स्वरूपमिति ।** आपादकस्वरूपमित्यर्थः । **उभयत्रेति ।** तदभावस्य तद्भावविरोधित्वे तदभावातिरिक्तस्य तद्भावाविरोधित्वे चेत्यर्थः ॥ **एतत्सर्वमिति ।** नन्वेवं भावाभावयोरैक्य इत्यादिना शङ्कितं सर्वमित्यर्थः । **तृतीय इति ।** बाधकसद्भावादन्योन्याभावस्य न धर्मिस्वरूपत्वमिति तृतीयकल्प इत्यर्थः । भावाभावलक्षणविरोधोच्छेदस्याप्यन्योन्याभावस्य धर्मिस्वरूपत्वे बाधकत्वात्पृथगाशङ्क्य निराकरणमुपपन्नमिति भावः । **पृथग्दूषितमिति ।** पृथगाशङ्क्य दूषितमित्यर्थः ।

नन्वन्योन्याभावभेदत्वाभ्युपगमस्य निष्प्रयोजनतया सिद्धान्तिनोऽनावश्यकत्वात्सप्रयोजनत्वे वा भेदस्य वस्तुस्वरूपत्वासिद्धेस्तत्सिद्धावपि तावतैव प्रकृतसिद्ध्या त्रैविध्येऽपि भेदस्य क्षत्यभावेन तस्यानिराकर्तव्यतया त्रैविध्यपक्षोत्थापनपूर्वकं तन्निरासकोत्तरवाक्यवैयर्थ्यमित्यतोऽन्योन्याभावस्य धर्मिस्वरूपत्वे प्रमाणाभावादिति द्वितीयपक्षनिराससिद्ध्यर्थत्वादन्योन्याभावभेदत्वाभ्युपगमस्य नानुपपत्तिरित्याशयेन द्वितीयपक्षमुत्थापयति **अस्त्विति ।** कथमन्योन्याभावस्य भेदत्वाभ्युपगममात्रेणोक्तद्वितीयपक्षनिरास इत्यतो भेदस्य वस्तुस्वरूपत्वस्थित्या तत्साधकप्रमाणस्यैवान्योन्याभावस्य धर्मिस्वरूपत्वे प्रमाणत्वाद्युक्तस्तन्निरास इति भावेन भेदस्यापि धर्मिस्वरूपत्वे विप्रतिपद्यमानं प्रति तद्व्यवस्थापयति **भेदो हीति ॥ वस्तुस्वरूपमेवेति ।** न चैवं निरपेक्षत्वाद्यापातः । तस्य 'भेदस्य च स्वरूपत्वे ये वदन्ति च शून्यताम्'

मित्यनुव्याख्यानव्याख्यानावसरे इदमुक्तं भवतीत्यादिना वैशेषिकपरीक्षायामाकर एव परिहरिष्यमाणत्वात् । अभ्युपगन्तव्यमित्येवाकरपाठः । अत एवान्यथेत्युत्तरग्रन्थः सङ्गच्छत इति ध्येयम् । ननु वस्तुधर्मत्व-स्यापि संभवात्किं तत्स्वरूपत्वाग्रहेणेत्यत आह **अन्यथेति** । वस्तुधर्मत्व इत्यर्थः ॥ **अनवस्थाऽऽदीति** । धर्मभेदवादे तस्य तस्य भेदान्तरभेद्यत्वादनवस्था । विशेष्यभेदप्रतीतौ स्तम्भात्कुम्भस्य भेदसिद्धावेव कुम्भात्स्तम्भस्य भेदसिद्ध्याऽन्योन्याश्रयः । धर्मिणः सकाशाद्भेदेन प्रतीतस्यैव हि प्रतियोगित्वादप्रतीत-भेदस्यापि प्रतियोगितायां स्वात्मनोऽपि तत्प्रसङ्गादित्यर्थः **स्वरूपातिरिक्तस्येति** । स्वरूपभेदातिरिक्तस्य-पृथक्त्वरूपस्यान्योन्याभावरूपस्य चेत्यर्थः । **असंभवेनेति** । गुणत्वेन पृथक्त्वस्यानवस्थाप्रसङ्गेना-न्योन्याभावस्य चाभावेऽसंभवेनेत्यर्थः । तथा च भेदस्य वस्तुस्वरूपत्वाभावेऽभावे स्वरूपभेदस्याभाव-प्राप्तेः पृथक्त्वान्योन्याभावयोश्चासंभवेन तत्र भेदाभाव एव स्यात् । अतोऽगत्या भेदस्य वस्तुस्वरूपत्व-मभ्युपगन्तव्यमिति भावः । यद्वा धर्मिस्वरूपातिरिक्तभेदस्याभावेऽसंभवेनेत्यर्थः । एवं भेदस्य वस्तु-स्वरूपत्वं व्यवस्थाप्य यदर्थं तद्व्यवस्थापितं तदिदानीमाह **अन्योन्याभावश्चेति** । तथा च 'यत्र तस्य ग्रहेऽग्रह' इति भेदस्य वस्तुस्वरूपत्वसाधकप्रमाणस्यैवान्योन्याभावस्य वस्तुस्वरूपत्वे प्रमाणत्वान्न तस्य धर्मिस्वरूपत्वे प्रमाणाभाव इति भावः ।

स० — **तद्द्वाराऽन्ययोरिति** । यथैकत्रैव, घटतदभावज्ञानयोरित्यर्थः । यद्वाऽन्ययोरित्यस्य गोत्वाश्वत्वादिरूपपरस्परविरहव्याप्ययो'रित्यर्थः । वस्तुतस्तु वध्यघातकयोरेकस्यापराभावसंपादकत्वेन सहानवस्थितयोश्चैकस्यापराभावव्याप्तत्वेन तद्द्वारा विरोध इति भावः ॥ **एतत्सर्वमिति** । भावाभाव-लक्षणविरोधोच्छेदस्यापि अन्योन्याभावस्य धर्मिस्वरूपत्वे बाधकत्वात् पृथगाशङ्क्य निराकरणमुपपन्नमिति भावः ।

प० — **अन्ययोरिति** । परस्परविरहव्याप्ययोरित्यर्थः ॥ **अवच्छिन्नयोरिति** । घट-घटाभावपटपटाभावेत्येवंरूपयोरित्यर्थः ॥ **एतत्सर्वं तृतीय इति** । अभावधर्माणां भेदाभेदचिन्तनादिकं तृतीयेऽध्याये 'उभयव्यपदेशात्तु अहिकुण्डलवदि'ति गुणगुणिभेदाभेदचिन्तापरभक्तिपादीयाधिकरणे सङ्गतम् । तथाऽप्यन्योन्याभावस्य धर्मितः पार्थक्यस्य उत्कृष्टदोषतया पृथक्पार्थक्येन दूषितमित्यर्थः । यद्वा अन्योन्याभावस्य स्वरूपत्वपक्षे विरोधादिबहुबाधकसत्त्वेन भेदपक्षस्योल्बणतयेत्यर्थः । केचित्तु आद्यपक्षदूषणं तृतीयपक्षदूषणे अन्तर्भवतीत्यर्थ इत्याहुः । अन्योन्याभावस्य स्वरूपत्वे सर्ववाद्यभ्युपगमे विपक्षे बाधकद्वयं च प्रमाणयति ॥ **भेदो हीति** । भेदस्य स्वरूपत्वेऽप्यन्योन्याभावस्य किमायातमित्यत आह **अन्योन्याभावश्चेति** ॥

**या०— तद्द्वाराऽन्ययोरिति ।** यथैकत्रैकदा घटतदभावज्ञानयोर्भावयोरित्यर्थः । केचित्त्व-न्ययोरित्यस्य गोत्वाश्वत्वादिरूपपरस्परविरहव्याप्ययोरित्यर्थः इत्याहुः । तत्र तद्द्वारेत्येतन्न स्वरसम् ॥ **तृतीय इति ।** बाधकसद्भावादिति तृतीयकल्प इत्यर्थः ॥

**श्री०— अन्ययोस्त**ज्ज्ञानयोः ॥ **अवच्छिन्नयोरिति ।** घटविशिष्टयोरित्यर्थः । घटप्रतियो-गिकोऽभावो घटस्वरूपमित्यनयोर्विरोधमङ्गीकृत्य विशिष्टयोर्भावाभावयोर्यद्यैक्यं स्यात्तर्हि तयोर्विरोधः क्वापि नस्यादित्यापाद्यत इत्यर्थः । **उभयत्र** तत्प्रतियोगिकाभावस्तत्स्वरूपत्वविरोधी । अपरो घटप्रतियोगिकः पटनिष्ठोऽभावः पटस्वरूपत्वविरोधी नेत्युभयत्रेत्यर्थः । तृतीये बाधकसद्भावादिति पक्षे ॥ **अनवस्थेति ।** भेदपरंपरयेत्यर्थः ॥ **प्रसक्तेरिति ।** अभावे तावद्भावप्रतियोगिको भेदोऽस्ति । न तावदतिरिक्तः । अभावे स्वरूपातिरिक्तधर्माभावात् । तथा चाभावस्य भावाद्भेदाभावप्रसक्तेः । तथाच भेदस्याभाव-स्वरूपत्वमङ्गीकृत्य भावाद्भेद उपपादनीयः । तथा च सर्वत्राप्येवमस्त्विति भावः । नन्वभावे भावप्रति-योगिको यो भेद स एव धर्मिस्वरूपमस्तु न त्वन्योन्याभावस्तस्य भेदातिरिक्तत्वादित्यत आह **अन्यो-न्येति ॥ न स्यादिति ।** तथाच प्रत्यक्षमेव प्रमाणमस्तीत्याशयः ॥

**च०— तद्द्वारान्ययोरिति ।** अत्र व्याकर्तारः (शे चं.) इदमेवप्रतीकमुपाददानाः ययोर्भावाभाव-रूपत्वं नास्ति तयोरित्यर्थः । परस्परप्रतिक्षेपरूपत्वाभावान्न गोत्वाश्वत्वयोः साक्षाद्विरोधः किंतु परस्परप्रति-

---

क्षेपरूपगोत्वगोत्वाभावयोर्विरोधमुपजीव्य गोत्वाश्वत्वयोर्विरोधः । तथा परस्परप्रतिक्षेपरूपमूषकतदभावयो-र्विरोधमुपजीव्य परस्परप्रतिक्षेपानात्मकयोर्मूषकमार्जारयोर्विरोध इति भवति भावाभावविरोधमूलकः । सर्वोपि विरोध इति भाव इति तदाशयमुदबीभवन् । तत्र कतिपये प्रकृतप्रतीकं यथा एकत्र एकदाघटतदभाव-ज्ञानयोर्भावयोरित्यर्थ इति व्याख्याय केचित्त्वन्ययोरित्यस्य गोत्वाश्वत्वादिरूपपरस्परविरहव्याप्ययोरित्यर्थः इत्याहुरिति प्रदर्शितव्याख्यामुपन्यस्य तत्र तद्द्वारेत्येतन्न स्वरसमिति तत्र सौधग्रन्थास्वारस्यमुद्भावयन्ति । तदेतन्मतानुयायिनो न क्षमन्ते । नहि तद्द्वारेत्यस्य तदभावविषयकतयेत्यर्थः । येन तदभावत्ताज्ञानस्यैव संग्रहः स्यात् । तथा सति तदभावव्याप्यवत्ताज्ञानतद्व्यापकाभाववत्ताज्ञानावच्छेदकधर्मदर्शनानाम-संग्रहप्रसङ्गात् । किन्तु तदभावव्याप्यतद्व्यापकाभाववत्तादिनिखिलज्ञानसाधारणस्तद्घटितो विरोध इत्यर्थः । स च गोत्वाश्वत्वादिसाधारणोऽपीति सर्वं समञ्जसमिति । **किमविशिष्टयोरिति ।** तद्व्यक्तित्वादिना अवि-शेषितस्य भावस्य तद्व्यक्तित्वाद्यवच्छिन्नप्रतियोगितानिरूपितानुयोगितासंबन्धेन तद्व्यक्तित्वाद्यवच्छिन्ना-विशेषितस्याभावस्य चेत्यर्थः । भावत्वाभावत्वावच्छिन्नयोरिति फलिताशयः । **अवच्छिन्नयोरिति ।** दर्शितधर्मावच्छिन्नस्य भावस्य दर्शितप्रत्यासत्त्योक्तधर्मावच्छिन्नविशेषिताभावस्य चेत्यर्थः । **आपादकेति ।** तादृशाभावनिरूपितप्रतियोगितापन्ना या व्यक्तिः तस्यास्तद्व्यक्तिनिष्ठप्रतियोगितानिरूपितानुयोगितापन्ना-

भावस्य चेत्यापादकीकृतस्यानुपगमादिति भावः । **तत्स्वरूपम्** आपादकस्वरूपम् । **उभयत्र** तदभावातदभावयोस्तद्भावविरोधित्वाविरोधित्वोभयस्मिन् । **एतत्सर्वं** नन्वेवं भावाभावयोरैक्य इत्यादिना-शङ्कितमखिलम् । **तृतीये** बाधकसद्भावायत्तमन्योन्याभावस्य धर्मिस्वरूपताराहित्यमिति कल्पे दर्शितभावा-भावविरोधोन्मूलनस्यापि पर्युदासस्य धर्मितादात्म्योपगतिबाधकतया तत्कल्पननिरासेनैवैतन्निरसनसंभवेन पृथगाशङ्कासमवहित्योरनावश्यंभावादिति भावः ।

**सु०— अथ मतम् । भेदस्त्रिविधोऽस्माभिरभ्युपगम्यते । पृथक्त्वम् अन्योन्याभावः, स्वरूपं चेति । तत्र द्रव्ये त्रिविधोऽपि संभवति । गुणादिपञ्चके तु द्विविध एव । पृथ-क्त्वस्य गुणत्वेन तत्रासंभवात् । अभावे तु स्वरूपभेद एव । तत्रान्योन्याभावाभ्युपगमेऽनव-स्थाप्रसङ्गात् । अतोऽन्योन्याभावस्य भेदत्वेऽपि, भेदस्य (तु) स्वरूपत्वेऽपि, नान्योन्याभावस्य धर्मिस्वरूपत्वम् । स्वरूपभेदातिरिक्तभेदत्वादन्योन्याभावस्येत्यत आह** पृथक्त्वेति ।

अनु०— पृथक्त्वाभावतद्रूपान्भेदांस्त्रीन्कल्पयन्ति चेत् ॥
कल्पनागौरवाद्यास्तु दोषास्तत्र विरोधिनः ॥

अभावोऽन्योन्याभावः स धर्मी रूपमात्मा यस्यासौ तद्रूपः । आद्यग्रहणेन दृष्टहानिर-दृष्टकल्पना च गृह्यते । तत्र तु तथाकल्पने इत्यर्थः ।

कथं पृथक्त्वान्योन्याभावस्वरूपभेदानां भेदाङ्गीकारे कल्पनागौरवादिकमित्यत आह पृथक्त्वेति ।

पृथक्त्वान्यत्वभेदास्तु पर्यायेणैव लौकिकैः ॥
व्यवह्रियन्ते सततं वैदिकैरपि सर्वशः ॥

अन्यत्वमन्योन्याभावः । भेदः स्वरूपभेदो घटात्पृथक् घटो न भवति पट एवेति । पृथक्त्वान्योन्याभावस्वरूपभेदाः सर्वैर्लौकिकैर्वैदिकैश्च पर्यायेणैव क्रमेणैव पृथग्वाक्यतया व्यवह्रियन्ते, न जातु एकवाक्यनिवेशेन ।

एतदुक्तं भवति । यथा घटकलशकुम्भव्यवहाराणां पर्यायत्वात् एकेनैव निमित्ते-नोपपत्तौ घटत्वाद्यनेकनिमित्तकल्पने कल्पनागौरवम् । यथा च घटादिव्यवहारान् पर्यायेणैव कुर्वाणैस्तन्निमित्तमेकतयैव दृष्टमिति, तत्त्रित्वाङ्गीकारे दृष्टहानिरदृष्टकल्पना च भवति । तथा पृथग(क्त्व)ादिव्यवहाराणामपि पर्यायत्वात् एकेनैव स्वरूपभेदेनोपपत्तौ, निमित्तत्रयकल्पने कल्पनागौरवम् । नियमेनासहप्रयोक्तृभिः पृथक्त्वादीनामैक्यं दृष्टमिति, तत्परित्यागेन त्रित्व-

**कल्पनायां दृष्टहानिरदृष्टकल्पना च स्यादिति । अविनाभावित्वान्न सहप्रयोग इति चेत् । मा भूद्घटात्पृथगित्युक्त्वा घटो न भवतीति प्रयोगः । घटो न भवतीत्युक्त्वा घटात्पृथगिति कस्मान्न भवेत् । पृथक्त्वे सति अन्योन्याभावादिकं नियतं न त्वन्योन्याभावे पृथक्त्वमिति परेणैव व्युत्पादितत्वात् । न चायमस्ति नियमोऽविनाभूतं सह नोच्यत इति । पृथिव्यप्तेजोवायुमनसां क्रियावत्त्वमूर्तत्वपरत्वापरत्ववेगवत्त्वादीनीति तदीयग्रन्थ एव व्यवहारदर्शनात् । लौकिकाः प्रयोजनमात्रपराः । अन्यतमव्यवहारेणैव तत्प्रयोजनसिद्धेर्न सहव्यवहरन्तीति चेन्न । वैदिकैरप्येवमेव व्यवहारात् । तदिदमुक्तम् । वैदिकैरपीति । किञ्च पर्यायप्रयोगस्यान्यथात्वकल्पनं क्वचिदपर्यायप्रयोगे सति स्यात् । अन्यथा घटादिव्यवहारेऽपि तथाप्रसङ्गात् । न चैतदस्ति । तत्कथमन्यथाकल्पनं निर्मूलमुपपद्येत इति । एतदप्युक्तम्** सर्वेश इति, सततमिति च ।

**शे०** — तथाऽप्यन्योन्याभावस्य भेदत्वव्युत्पादनमात्रेणैवाभिमतप्रयोजनसिद्धेर्न तत्त्रैविध्येऽपि काचित्क्षतिरित्यनर्थकं तत्त्रैविध्यनिराकरणमित्यतः तत्त्रैविध्यपक्षेऽनिष्टप्रदर्शनपूर्वकं तं पक्षमुत्थाप्य, तन्निरासकतयोत्तरवाक्यं योजयति **अथ मतमिति** । द्विविध इत्युक्त्या प्राप्तां कश्चिद्द्विविधो भेद इत्यव्यवस्थां विधाद्वयसूचनेन परिहरन्नेव पृथक्त्वासंभवहेतुं चाह **पृथक्त्वस्येति** ॥ **तत्रेति** । गुणादिपञ्चक इत्यर्थः । अन्यथा गुणादिपञ्चकस्य द्रव्यतायाः, अतिव्याप्ततया गुणवत्त्वस्य द्रव्यालक्षणत्वस्य वा प्रसक्तेरिति

---

भावः । कुतस्तत्र स्वरूपभेद एवेत्यतः पृथक्त्वस्य गुणत्वेनाभावेऽसम्भवस्योक्तरीत्या सिद्धत्वादन्योन्याभावमात्रासम्भवे हेतुमाह **तत्रेति** । पृथक्त्वान्यत्वभेदा इत्युत्तरवाक्यानुसारेण सामान्यशब्दोऽप्यभावशब्दोऽभावविशेषान्योन्याभावपर इत्याह **अभाव इति** । पूर्ववाक्येनैव भेदत्रैविध्यस्य दूषितत्वात् नोत्तरेण कृत्यमित्यतो भेदत्रैविध्ये प्रतिज्ञातकल्पनागौरवाद्युपपादकत्वान्न वैयर्थ्यमिति भावेन, तद्वाक्यं तथा योजयति **कथमिति** । अन्योन्याभाववत एवान्यशब्दार्थत्वादन्योन्याभावस्यैव च तद्धर्मत्वात् अन्यत्वमन्योन्याभाव इत्याह **अन्यत्वमिति** । पृथक्त्वान्योन्याभावयोः पृथगभिधानात्साधारणोऽपि भेदशब्दः तद्विशेषपर इत्याह **भेद इति** । पृथक्त्वादिव्यवहारस्वरूपप्रदर्शनं घटात्पृथगित्यादि । सर्वेश इत्यस्य प्रतिपदं सर्वैरिति । पर्यायेणेति भाष्यपदानुवादस्तद्व्याख्यानं क्रमेणेति । तस्यैव विवरणं पृथग्वाक्यतयेत्यादि । पृथक्त्वान्योन्याभावस्वरूपभेदानां पर्यायेणैव व्यवह्रियमाणत्वेऽपि कथं तत्त्रैविध्यकल्पने कल्पनागौरवादिकमित्यतस्तथा दृष्टत्वादित्याह **एतदुक्तं भवतीति** ॥ **अविनाभावित्वादिति** । तथा चान्यथासिद्धत्वादसहप्रयोगस्य न तेन पृथक्त्वादीनामैक्यसिद्धिरिति भावः । अविनाभावाभावेऽप्यसहप्रयोगान्नान्यथासिद्धिरित्याशयेनाह **मा भूदिति घटो न भवतीति** । प्रयोग इत्युपलक्षणम् । पट एवेति प्रयोग इत्यपि द्रष्टव्यम् । घटो न भवतीत्युक्त्वेत्यप्युपलक्षणम् । पट एवेत्युक्त्वेत्यपि द्रष्टव्यम् ॥ **कस्मादिति** । पृथक्त्वस्यान्योन्या-

भावादिनाऽविनाभाववत् अन्योन्याभावादेः पृथक्त्वाविनाभावाभावेनाविनाभावादसहप्रयोगानुपपत्तेरिति भावः । कुतः पृथक्त्वान्योन्याभावादिकयोः अन्योन्यभावादिपृथक्त्वाविनाभावभावाभावावित्यत आह **पृथक्त्वे सतीति** ॥ **न त्वन्योन्याभाव इति** । न त्वन्योन्याभावादिक इत्यर्थः । अत एव पूर्वमन्योन्याभावादिकमिति आदिपदम् । अत्र सतीति नियतमिति चानुवर्तते । तथा चान्योन्याभावादिके सति न पृथक्त्वं नियतमित्यर्थः ॥ **परेणैवेति** । भेदत्रैविध्यवादिनेत्यर्थः । पृथक्त्ववति द्रव्येऽन्योन्याभावादेः सत्त्ववत् अन्योन्याभावादिमति गुणादौ पृथक्त्वस्यासत्त्वेनाव्यभिचारव्यभिचाराभ्यामेवोक्तनियमानियमसिद्धिरिति भावः । अङ्गीकृत्याऽविनाभूतस्यासहप्रयोगनियमं, घटो न भवतीत्युक्त्वा घटात्पृथगिति प्रयोग आपादितः । इदानीं तूक्तनियमस्यैवाभावाद्धटात्पृथगित्युक्त्वापि, घटो न भवतीति प्रयोगो वर्जनीय एवेत्याह **न चेति** । नापीत्यर्थः । कुतो न नियम इत्यतो व्यभिचारादित्याह **पृथिवीति** ॥ **तदीयग्रन्थ एवेति** । प्रशस्तपादभाष्य एवेत्यर्थः । यद्यपि क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्तत्वपरत्वापरत्ववेगवत्त्वानीति तत्र पठितं । तथाऽप्यर्थानुवादोऽयमित्यदोषः । वैदिकैरित्यनेन व्यावर्त्यां शङ्कां दर्शयति ॥ **लौकिका इति** । मूले सर्वेश इत्यादिना सूचितम् असहप्रयोगस्यान्यथासिद्धत्वमाह **किञ्चेति** ॥ **पर्यायप्रयोगस्येति** । असहप्रयोगस्येत्यर्थः ॥ **अन्यथाकल्पनीयमिति** । अविनाभूतत्वनिमित्तत्वकल्पनमित्यर्थः ॥ **क्वचिदपर्यायप्रयोग इति** । क्वचित्सहप्रयोग इत्यर्थः ॥ **अन्यथेति** । क्वचित्सहप्रयोगाभावेऽपि पर्यायप्रयोगस्याऽविनाभावित्वनिमित्तत्वकल्पन इत्यर्थः । घटादीत्यादिपदेन कलशकुम्भयोर्ग्रहणम् ॥ **तथाप्रसङ्गादिति** । अविनाभावित्वादसहप्रयोगप्रसङ्गादित्यर्थः । अस्तु तर्हि क्वचित्सहप्रयोगादेव पर्यायप्रयोगस्यान्यथाकल्पनमित्यत आह **न चेति** ।

स० — **क्वचिदपर्यायप्रयोगे सतीति** । क्वचित्सहप्रयोगे प्रमिते सतीत्यर्थः ॥ **अन्यथा घटादिव्यवहारेऽपीति** । घटकलशव्यवहारेऽपीत्यर्थः ।

प० – **परेणैव व्युत्पादितत्वादिति** । अथ मतमित्यादिग्रन्थेनेति भावः । **क्रियावत्त्वमूर्तत्वेत्यादि** । तेषामन्योन्यमविनाभावाभ्युपगमादिति भावः ॥ **अपर्यायप्रयोगे सतीति** । परेण सहप्रयोगे निर्णीते सतीत्यर्थः ॥ **घटादिव्यवहारेऽपीति** । घटकरीरकलशादिव्यवहारेऽप्यसहप्रयोगस्य प्रयोजनांतरप्रसंगादित्यर्थः ॥ **न चैतदिति** ॥ अपर्यायप्रयोगस्य प्रयोजनान्तरं क्वचित्प्रमितत्वं च नास्तीत्यर्थः । असहप्रयोगस्यान्यथाकल्पनं समूलमिति शङ्कते **अथ मतमिति** ॥ **यदिति** । यस्मादित्यर्थः । पाणिनीयसूत्रबलाच्च पृथक्त्वान्योन्याभावयोर्भेदः सिध्यतीत्याह **किंचेति** । ननु 'अन्याराादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते, इति सूत्रे अन्य आरात् इतरऋते दिक्शब्द अञ्चूत्तरपद अच् आहीत्येवंरूपशब्दयोगे पंचमी भवतीत्येवोच्यते । न च पृथक्त्ववाचिशब्दयोग इति तत्राह **अन्य इतीति** ॥ **वचनादिति** । वृत्ति-

कारस्येति योज्यम् ॥ **आभ्यां विवेक इति** । पृथक्त्वान्योन्याभवाभ्यां पार्थक्यमित्यर्थः । किञ्चेत्यादिनोक्तं च निराह ॥ **पंचमीप्रयोगेत्यादिना** ॥ **अन्यशब्दोपपदे** । अन्यशब्द एव समभिव्याहृते पंचमी विधीयते न तु तदर्थकभिन्नार्थांतरादिपदयोगे सतीत्यर्थः । 'स्वं रूपं शब्दस्याशब्दसंज्ञे'ति सूत्रेणाग्नेर्ढगित्यादावग्न्यादिशब्दस्वरूपस्येवान्यशब्दस्वरूपग्रहणस्यैव प्राप्तत्वात् । अर्थग्रहणव्याख्याने ज्ञापकाभावाच्च मैत्रो भिन्नश्चैत्रादित्याद्युदाहरणनिर्वाहस्यान्यथैव वक्ष्यमाणत्वात् । पदमञ्जर्यामपि वृत्तिकारव्याख्यानेनैवार्थग्रहणं ज्ञेयमित्युक्तत्वाच्च । प्रत्युतार्थग्रहणे इतरशब्दवैयर्थ्याच्च । न च चैत्रमैत्रयोः प्रकृतयोरयं चैत्रः शूर इतर इति निर्देश्यमानप्रतियोगिपदार्थे इतरशब्देनोच्यत इति वृत्तावुक्तत्वात्, न इतरशब्दवैयर्थ्यमिति वाच्यं एवंरूपेतरशब्दार्थस्य,अन्यपदार्थान्तर्भावोस्ति नवेति चिन्त्यमिति द्वितीयाध्यायतृतीयपादे अन्यारादितरेतिसूत्र एव मंजर्यामुक्तत्वेनान्यपदार्थमध्य एवास्याप्यर्थस्य ग्रहणसंभवेन तद्वैयर्थ्यानिस्ताराददिति भावः ।

या० — **क्वचिदपर्यायप्रयोग इति** । क्वचित्सहप्रयोगे प्रमिते सतीत्यर्थः ॥ **अन्यथा घटादिति** । घटकलशादिव्यवहारेऽप्यविनाभावादेव न सहप्रयोग इति स्यादिति भावः ॥

श्री० — **अनवस्थेति** । अभावेऽपि चेदितरान्योन्याभावस्वरूपभेदोऽङ्गीक्रियते तर्हि तस्याप्यभावत्वेन तत्राप्यन्योन्याभावरूपभेदाङ्गीकारप्रसक्त्याऽनवस्थेत्यर्थः । **भेदस्येत्यर्थः** स्वरूपभेदस्येत्यर्थः । **तद्रूपः** स्वरूपभेदः । **पृथग्वाक्यतया** भिन्नवाक्यनिवेशेन । **जातु** कदाऽपि ॥ **एकेनैवेति** । पृथुबुध्नोदराकारस्वरूपेणैकेनैव प्रवृत्तिनिमित्तेनेत्यर्थः । घटत्वादीत्यत्रादिपदेन कलशत्वादिग्रहणम् ॥ **निमित्तत्रयेति** । पृथक्त्वादिनिमित्तत्रयेत्यर्थः ॥ **अविनाभावित्वादिति** । न तु पर्यायत्वादित्यर्थः । घटात्पटः पृथक् । घटादन्य इति एकदा न प्रयुज्यते । कुतः । यत्र पृथक्त्वं तत्रान्योन्याभाव इति व्याप्तेः सत्वेन व्याप्यभूतपृथक्त्वोक्त्या व्यापकीभूतोऽप्यन्योन्याभावादिर्लब्ध इति न तयोः सहप्रयोग इति भावः । उभयं क्रमेणोपपादयति ॥ **पृथक्त्वे सतीति** । पृथक्त्वे सत्यन्योन्याभावो नियतः । यत्र पृथक्त्वं तत्रान्योन्याभावः । द्रव्ये दर्शनादिति त्वयोक्तत्वात् । तथाच व्याप्योक्त्या व्यापकस्य लब्धत्वेनादौ घटात्पृथगित्युक्त्वा पश्चाद्घटो न भवतीति प्रयोगो मा भूत् । तथाऽप्यादौ घटो न भवतीत्युक्त्वा पश्चाद्घटात्पृथगिति तु स्यादेव । न चात्रापि पूर्वोक्तरीत्याऽन्योन्याभावस्य पृथक्त्वव्याप्तत्वेनव्याप्यभूतान्योन्याभावोक्तौ व्यापकीभूतं पृथक्त्वमपि लब्धमिति वाच्यम् । अन्योन्याभावे सति पृथक्त्वम् । यत्रान्योन्याभावस्तत्र पृथक्त्वमिति यावत् व्याप्तिर्नैव । रूपं रसो न भवतीति प्रतीत्या गुणादौ व्यभिचारस्य पृथक्त्वस्य गुणत्वेन तत्रासम्भवादिति त्वयोक्तत्वादिति भावः ॥ **पृथिवीत्यादि** । पृथिवीत्वादीनां क्रियावत्त्वादिनाऽविनाभूतत्वादिति भावः ॥ **न सहेति** । घटो न भवतीत्युक्त्वा घटात्पृथगिति

न व्यवहरन्तीत्यर्थः ॥ **अन्यथाकल्पनमिति** । अविनाभावित्वेन वा, लौकिकानामन्यतमव्यवहारेण प्रयोजनसिद्ध्या वा न प्रयोग इत्यन्यथाकल्पनमन्यथासिद्धिकल्पनमित्यर्थः । एवमुत्तरत्रापि । **अपर्याय-प्रयोगे** क्वचिद्युगपत्प्रयोगे । यथा धूमवत्त्वादग्निमानिति क्वचित्सहप्रयोगोऽस्तीति कृत्वा कदाचिद्धूमवत्त्वा-दित्युक्तेऽविनाभावाद्वह्निर्गम्यत इति दृष्टम् । तद्वदत्रापि पृथक्त्वादीनां **पर्यायप्रयोगस्य** सहाप्रयोगस्येति यावत् । अविनाभावेनान्यथासिद्धिकल्पनं तदा स्याद्यदि कस्मिंश्चित्प्रयोगे पृथक्त्वादित्रयमपि युगपत्प्रयु-ज्येत । न चैवम् । तस्मादन्यथासिद्धिर्न कल्प्येत्यर्थः ॥ **अन्यथेति** । क्वचित्पर्यायप्रयोगाभावेऽपि पर्यायप्रयोगस्याविनाभावादिनाऽन्यथासिद्धिः कल्प्यते, तर्हि घटकरीरकलशादीनां पर्यायेण क्रमेण प्रयोगः कुत इत्युक्ते घट इत्युक्तौ कलशो लभ्यते । घटाविनाभूतत्वात्कलशस्येत्यप्यन्यथासिद्धिकल्पना स्यात् । न तु घटस्यैव कलशत्वादिति । तत्र चैतावदेव वाच्यम् । क्वचिदसहप्रयोगाभावान्नान्यथासिद्धिः कल्प्येति । सममेतत्प्रकृतेऽपीति ॥ **सर्वश इति** । क्वचिदपर्यायप्रयोगे सति पर्यायप्रयोगस्यान्यथाकल्पना कार्या । न चैवम् । किन्तु सर्वशः सततं पर्यायेणैव प्रयोगादिति भावः सूचित इति ध्येयम् ।

च०— **क्वचिदपर्यायप्रयोग इति** । एकवाक्यघटकतयोभयोः प्रयोगे सतीत्यर्थः । **अन्यथा** क्वचिदेकवाक्यघटकतया पदद्वयप्रयोगाभावेऽपि पर्यायप्रयोगस्याविनाभावित्वनिमित्तकताकल्पने । घटादीत्यादिपदं करीरकलशादिपदपरिग्राहकम् । **तथाप्रसङ्गात्** । अविनाभावित्वनिमित्तताप्रसङ्गात् ।

---

**सु०— अथ मतम् । पृथक्त्वान्योन्याभावयोस्तावत्स्फुटो विवेकः । यत्पृथक्त्वमव-धिनिरूप्यम् । अन्योन्याभावस्तु प्रतियोगिनिरूप्यः । किं च, 'अन्यारादितरर्ते' इति पृथक्त्ववाचिपदयोगे पञ्चम्यनुशिष्यते । अन्य इत्यर्थग्रहणमिति वचनात् । अन्यथा भिन्नो-घटात्पटोऽर्थान्तरं घटात्पट इत्यादौ पञ्चमी न स्यात् । अनुशासनान्तराभावात् । तथा च पृथक्त्वमेव चेदन्योन्याभावः तदा घटो न भवति पट इत्यत्रापि पञ्चमी स्यात् । न चैवम् । तेन जानीमोऽन्यत्पृथक्त्वम् , अन्यश्चान्योन्याभाव इति । स्वरूपभेदस्य चाभ्यां उभयाभ्यां विवेकः । परनिरूप्यत्वविरहाद्विधिरूपत्वाच्च । एवं च व्यवहारपर्यायताऽन्यथोपपादनीयेति ।**

शे०— पृथक्त्वान्योन्याभावस्वरूपभेदानां भेदस्य युक्त्यादिसिद्धत्वान्न सहाप्रयोगस्याविना-भावित्वादिनिमित्तकत्वकल्पनं निर्मूलमित्याशयेन लीलावतीकिरणावल्यादावुपपादितं तद्भेदमुत्थापयति **अथ मतमिति** ॥ **यत्पृथक्त्वमवधीत्यादि** । उपलक्षणमेतत् । पृथक्त्वं विधिरूपं अन्योन्याभावस्तु निषेधरूप इत्यपि द्रष्टव्यम् । ननु पञ्चम्यन्तपदाभिलप्यमानं प्रतियोगित्वमेवावधित्वमिति कथं प्रति-योग्यवधिनिरूप्यत्वाभ्यां पृथक्त्वान्योन्याभावयोर्भेद इत्यरुचेराह **किं चेति** । 'अन्य आरात् इतर ऋते दिक्शब्द अंचूत्तरपद आच् आहि' इत्येतैर्युक्ते पञ्चमीविभक्तिर्भवतीत्युदाहृतसूत्रार्थः ॥ **पृथग्वाचीति** ।

पृथक्त्ववद्वाचिपदयोग इत्यर्थः । पृथक्त्ववाचिपदयोग इति पाठेऽप्ययमेवार्थोऽनुसन्धेयः । पृथक्शब्दस्य पृथक्त्वविशिष्टवाचितया पृथक्त्ववाचित्वाभावात् । नन्वत्र सूत्रे पृथक्शब्दानुपादानात्कथं तद्योगे पञ्चम्यनुशासनमेतदित्यत आह **अन्य इत्यर्थग्रहणमिति वचनादिति** । अन्य इत्यर्थग्रहणमिति वृत्तौ व्याख्यानादित्यर्थः । तथा चान्यार्थका अन्यशब्दपर्याया यावन्तः शब्दास्तद्योगे पञ्चम्या अनेन विधानात् । पृथगादिशब्दानामप्यन्योन्याभाववद्वाचकतयाऽन्यशब्दे पर्यायत्वात्तद्योगे भवत्येवेदं पञ्चम्यनुशासनमिति भावः । ननु 'स्वं रूपं शब्दस्याशब्दसंज्ञे'ति न्यायेनान्य इत्यस्य शब्दग्रहणसंभवादर्थग्रहणत्वाश्रयणमनर्थकमित्यतः शब्दग्रहणत्वे, अन्यो देवदत्तो यज्ञदत्तादित्यत्रैव पञ्चमी स्यात् । न तु भिन्नादिशब्दयोगे । अर्थग्रहणे त्वन्यो भिन्नो विधर्मा अर्थान्तरमितरः पृथगित्यादौ पञ्चमी भवतीत्यर्थग्रहणमेवेदमित्याह **अन्यथेति** । ननु शब्दग्रहणत्वेऽन्यारादिति सूत्रेण भिन्नादिशब्दयोगे पञ्चम्यप्राप्तावपि लक्षणान्तरेणैव तद्योगेऽपि पञ्चम्युपपत्तेः, किमर्थग्रहणत्वाश्रयणेनेत्यतः स्यादेवं यदि भिन्नादियोगे पञ्चमीविधायकं लक्षणान्तरं स्यात् । न चैतदस्तीत्याह **अनुशासनान्तरेति** ! तथा च शब्दग्रहणेऽनेन पञ्चम्यसंभवाल्लक्षणान्तरस्य चाभावेन तेनापि तदप्राप्तेर्भिन्नो देवदत्तो यज्ञदत्तादित्यादौ पञ्चम्यनुपपत्तिप्रसङ्गात् तत्र पञ्चम्युपपत्त्यर्थमन्य इत्यर्थग्रहणमावश्यकमिति भावः । अस्तु पृथक्त्ववद्वाचिपदयोगे पञ्चम्यनुशासनमिदं सूत्रं, किमेतावतेत्यत आह **तथा चेति** । अन्यपर्यायशब्दयोगे पञ्चम्यनुशासना-

---

द्घटात्पटोऽन्य इत्यत्रेव घटः पटो नेत्यत्रापि घटात्पटो नेति पञ्चमी स्यादित्यर्थः । न चान्योन्याभाववद्वाचकपदप्रयोगे पञ्चम्यनुशासनादन्यशब्दस्य तादृशतया तद्योगे पञ्चम्युपपत्तावपि नशब्दस्यान्योन्याभाववाचकत्वेन तद्वद्वाचकत्वाभावान्न घटः पटो नेत्यत्र पञ्चमीप्रसङ्ग इति वाच्यम् । भूतले न घटः न पचतीत्यादौ नञः केवलप्रतिषेध इव, लोकेऽपटो घट इति समासे, वेदे च 'नानुयाजेष्वि'त्यादावन्यस्मिन् प्रचुरप्रयोगादिरूपस्य शक्तिप्रमाणस्य सत्त्वेन प्रतिषेधवाचकत्ववदन्योन्याभाववद्वाचकत्वोपपत्तावपि केवलान्योन्याभावे क्वाप्यप्रयोगेण तद्वाचकत्वाभावेनान्योन्याभाववद्वाचकनञ्प्रयोगे घटः पटो नेत्यत्र पञ्चम्या वज्रलेपत्वात् । उपलक्षणं चैतत् । अपटो घट इति समासे नञाऽन्योन्याभाववत एवाभिधानात्तत्रापि पञ्चमी स्यादित्यपि द्रष्टव्यम् । इष्टापत्तिमाशङ्क्य परिहरति **न चेति** । पृथक्त्वान्योन्याभावयोर्भेदमुपपाद्य स्वरूपभेदस्य पृथक्त्वान्योन्याभावाभ्यां भेदमुपपादयति **परनिरूप्यत्वेति** । पृथक्त्वान्योन्याभावयोरवधिप्रतियोगिरूपपरनिरूप्यत्वात्ताभ्यामस्य युक्तो भेद इति भावः ॥ **विधिरूपत्वाच्चेति** । यद्यपि पृथक्त्वस्यापि विधिरूपत्वान्न विधिरूपत्वं पृथक्त्वात्स्वरूपभेदस्य विवेचकं संभवति । तथाऽप्यन्योन्याभावमात्रविवेचकतयैवास्योपन्यास इत्यवधेयम् । पृथक्त्वादिभेदसमर्थनस्य प्रयोजनमाह **एवं चेति** ॥ **अन्यथेति** । अविनाभावनिमित्तकत्वेनेत्यर्थः ।

**स०** — पृथक्त्वान्योन्याभावौ भिन्नौ पञ्चमीप्रयोगविषयत्वतदविषयत्वरूपविरुद्धधर्माधिकरणत्वात् इत्यनुमानमभिप्रेत्यात्राप्रयोजकत्वं परिहर्तुमाह **किञ्चेति** ।

**प०** – ( अत्रत्यो विषयः पृ. १७०३ पं. २४ तः पृ. १७०४ पं. २ पर्यन्तं द्रष्टव्यः । )

**या०** **यत्पृथक्त्वमवधिनिरूप्यमित्यादि** । इदमुपलक्षणम् । यत्पृथक्त्वं भावरूपमन्योन्याभावस्तु अभावरूप इत्यपि द्रष्टव्यम् ॥ **किञ्चान्याराद्रितरेति** । एतैर्योगे पञ्चमी स्यादिति तदर्थः । एवं चान्याराादितरर्त इति सूत्रैकदेशस्यैवात्र ग्रहणमिति ध्येयम् । नन्वत्र पृथक्त्ववाचिपदं नोपात्तमित्यत आह **अन्य इत्यर्थेति** । तथा चान्यत्वार्थका येऽन्यशब्दपर्यायाः पृथक् भिन्नोऽर्थान्तरमित्यादयः शब्दाः तद्योगेऽपि पञ्चम्यत्रानुशिष्टेति गम्यत इति भावः । **विधिरूपत्वाच्चेति** । इदं च स्वरूपभेदस्यान्योन्याभावादेव विवेकसाधनायोक्तमिति ज्ञातव्यम् ॥ **अन्यथोपपादनीयेति** । अविनाभावादिनेति शेषः ।

**श्री०**— **अवधीत्यादि** । अवधित्वं प्रतियोगित्वं च भिन्नमिति शंकितुर्हृदयम् । **अन्यथा** अर्थग्रहणाभावे । **आभ्यां** पृथक्त्वान्योन्याभावाभ्याम् । **विवेको** भेदः । परः अवध्यादिः ॥ **विधीति** । पट एवेति प्रतीयमानस्य स्वरूपभेदस्य विधिरूपत्वादन्योन्याभावस्य निषेधरूपत्वान्नानयोरैक्यमित्यर्थः ॥ **एवं चेति** । त्रयाणां भेदस्य सत्त्वादित्यर्थः । **पर्यायता**= क्रमेण प्रयोगः । **अन्यथा**= अविनाभावादिना ।

---

**च०**— निरूपकभेदपञ्चमीविधायकानुशासनतद्राहित्यादिहेतुभिः पृथक्त्वान्योन्याभावस्वरूपभेदानामन्योन्यभेदस्यानुमिततयैकवाक्यघटकतया प्रयोगराहित्यस्याविनाभावित्वनिमित्तकता सङ्गच्छत एव इत्यभिसन्दधानश्चिरन्तननिबन्धेषूदयनादिप्रदर्शितदिशा शङ्कते **अथ मतमिति** । पृथक्त्वस्य भावरूपता अन्योन्याभावस्याभावरूपता च भेदिका द्रष्टव्या । ननु पञ्चमीजनितोपस्थितिविषयतापन्नप्रतियोगित्वावधित्वयोरेव भेदस्य दुर्निरूपतया कथं तन्निबन्धनस्तद्भेद इत्यरुचेराह **किञ्चेति** । अन्य । आरात् । इतर । ऋते । दिक्शब्द । अंचूत्तरपद आच् । आहि । इत्येतत्समभिव्याहारे पञ्चमी भवतीति सूत्रार्थः ॥ **पृथक्त्ववाचिपदयोगे** पृथक्त्वप्रवृत्तिनिमित्तकपदसमभिव्याहारे । ननु पृथगितिशब्दस्य सूत्राघटकतया कथं तत्समभिव्याहारे पञ्चम्यनुशिष्टेत्यत आह **अन्य इत्यर्थेति** । वामनः काशिकायाम् इत्थमार्तीथपदित्यर्थः । तथा चान्यशब्दपर्यायाखिलशब्दसमभिव्याहारे पञ्चम्या अनेन विहिततया पृथगादिशब्दानामपि तथाविधतया तत्समभिव्याहारेऽपीदं तद्विधायकं भवतीति भावः । स्वं रूपं शब्दस्येति परिभाषामनादृत्येत्थमर्थापने बीजं दर्शयति **अन्यथेति** ॥ **पञ्चमी स्यादिति** । नशब्दस्याप्यन्यपदपर्यायत्वादिति भावः । न चान्यपदस्य भेदावच्छिन्नवाचकतया नशब्दस्य च विरुद्धविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतस्य प्रतिषेधमुख्यविशेष्यकान्वयबोधजनकस्य समानविभक्तिकतादृश-

पदद्वयसमभिव्याहारे च भेदमुख्यविशेष्यकशाब्दधीजनकस्य प्रतिषेधत्वभेदत्वप्रवृत्तिनिमित्तकत्वेन नानार्थतया नेतरेतरपर्यायतेति वाच्यम् । लोके अघटः पट इत्यादौ पदद्वयसामानाधिकरण्यानुरोधेन वेदे च नानुयाजेष्वित्यादौ भेदवत्यपि शक्तितात्पर्यावधारणेन तस्य तत्पर्यायत्वस्य दुरपह्नवत्वात् । तत्र लक्षणाऽऽश्रयणस्य कल्पनागौरवापादकत्वात् । अघटः पट इत्यादौ नञुपस्थाप्यैकदेशे प्रतियोगितासंबन्धेन व्युत्पत्तिवैचित्र्येण घटस्यान्वयमुपेत्य घटप्रतियोगिकान्योन्याभाववदभिन्नः पट इत्यन्वयबोधस्योपगतौ तद्दिशैव घटः पटो नेत्यत्रापि सूपगमतया पञ्चम्यापत्तेर्दुर्वारत्वाल्लुप्तविभक्त्यनुसन्धानेन सामानाधिकरण्यस्य प्रकृतेऽपि सूपपादत्वादित्याशयात् । अघटः पट इत्यादौ समासे नञान्योन्याभाववत एवाभिधानात्तत्रापि पञ्चम्यापत्तिरवसेया ॥ **परनिरूप्यत्वविरहादिति** । पृथक्त्ववदवधिनाऽन्योन्याभाववत्प्रतियोगिना चानिरूप्यतया तदुभयभेदोऽप्यत्र सूपपाद इति भावः ॥ **विधिरूपत्वाच्चेति** । स्वरूपभेदे धर्मिणि अन्योन्याभावमात्रप्रतियोगिकभेदे साधनीये हेतुमभिप्रैति । तेन पृथक्त्ववृत्तिप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकभेदस्यानेनासाधनान्नानैकान्त्यावकाशः ॥ **अन्यथोपपादनीयेति** । अविनाभावनियन्त्रितत्वादिना नेयेत्यर्थः ।

सु० — अत्रोच्यते । यत्तावदुक्तं निरूपकभेदाद्भेद इति, तदसत् । अवधिप्रतियोगिनोरेव भेदस्य निरूपयितुमशक्यत्वात् । पृथक्त्वनिरूपकत्वमवधित्वम्, अभावनिरूपकत्वं प्रतियोगित्वमिति चेन्न । पृथक्त्वान्योन्याभावभेदस्याद्याप्यसिद्धत्वेन इतरेतराश्रयत्वात् । पञ्चमीप्रयोगाप्रयोगाभ्यां भेदश्चानुपपन्नः । अन्यशब्दोपपदे पञ्चमीविधानात् । कथं तर्हि भिन्नादियोगे पञ्चमीति चेत् । विलक्षणो यज्ञदत्तो देवदत्तादित्यत्र कथम् । न हि वैलक्षण्यं पृथक्त्वम् । गुणादिष्वपि सद्भावात् । अथ कथञ्चिदपादानत्वं तत्र व्युत्पादयिष्यत इति चेत् । भिन्न इत्यादावपि किं न व्युत्पाद्यते । तथा सत्यन्य इत्यत्रापि साम्यात्सूत्रवैयर्थ्यमापद्यत इति चेन्न । प्रपञ्चार्थत्वेनोपपत्तेः ।

शे० — **अशक्यत्वादिति** । पञ्चम्यन्तपदाभिलप्यमानं प्रतियोगित्वमेवावधित्वं न त्वन्यदिति भावः ॥ **पृथक्त्वेति** । तथा च निरूपकभेदात्पृथक्त्वान्योन्याभावयोर्युक्तो भेद इति भावः ॥ **अभावेति** । अन्योन्याभावेत्यर्थः । एतच्चावधित्वविशेषस्य प्रतियोगित्वविशेषस्य च लक्षणं, न त्ववधित्वादिसामान्यस्येत्यतो न महत्त्वाद्यवधौ प्रागभावादिप्रतियोगिनि चाव्याप्तिरिति ध्येयम् ॥ **अद्याप्यसिद्धत्वेनेति** । निरूपकभेदसिद्धिं विनाऽसिद्धत्वेनेत्यर्थः । निरूपकभेदातिरेकेण तद्भेदसाधकाभावादिति भावः ॥ **इतरेतराश्रयत्वादिति** । पृथक्त्वान्योन्याभावयोर्भेदसिद्धौ पृथक्त्वनिरूपकत्वान्योन्या-

भावनिरूपकत्वरूपविरुद्धधर्माधिकरणतया अवधिप्रतियोगिरूपनिरूपकभेदसिद्धिः तत्सिद्धौ चावधिनिरूप्यत्वप्रतियोगिनिरूप्यत्वरूपविरुद्धधर्माधिकरणत्वेन पृथक्त्वान्योन्याभावरूपनिरूप्यभेदसिद्धिरितीतरेतराश्रयत्वादित्यर्थः । किं चेत्युक्तं साधकं दूषयति **पञ्चमीति** । पृथक्त्वस्यान्योन्याभावरूपत्वेऽपि घटात्पटोऽन्य इत्यत्रेव घटः पटो नेत्यत्र न पञ्चमीप्रसङ्गः । 'अन्यारादिति' सूत्रे 'स्वं रूपमि'ति परिभाषयाऽन्य इत्यन्यस्य शब्दग्रहणत्वेनार्थग्रहणत्वाभावेनान्यशब्दयोगभावाभावाभ्यामुक्तस्थले पञ्चमीप्रयोगाप्रयोगयोरुपपत्तेर्न पञ्चमीप्रयोगाप्रयोगाभ्यां तद्भेदसिद्धिरित्याह **अन्यशब्दोपपद इति** । अर्थग्रहणत्वे सूत्रे इतरग्रहणानर्थक्यम् । अन्येत्यनेनान्यपर्यायशब्दयोगे पञ्चमीविधानप्राप्त्येतरशब्दस्यापि पृथगादिशब्दवदन्यशब्दपर्यायतया तद्योगेऽप्यन्येत्यनेनैव पञ्चमीविधानस्य सिद्धत्वात् । न च, 'इतरस्त्वन्यनीचयो'रित्यमरोक्तेर्नीचार्थकस्येदं ग्रहणमिति वाच्यम् । 'अस्मात्तारो मन्द्रो वे'त्यादाविव पञ्चमीविभक्त इत्यनेनैव तत्सिद्धेः । यश्चितर इति निर्दिश्यमानप्रतियोगी पदार्थ उच्यते । तथा हि । चैत्रमैत्रयोः प्रकृतयोरुच्यते-चैत्रः शूरः इतरः कातर इति । तथा च नायमन्यार्थ इति । तन्न । पृथगन्य इतर इति पर्याया इति वर्धमानविरोधात् । पृथक्त्वाधिकरणे 'अन्येतरयोः शक्ति'रित्यभियुक्तवचनविरोधाच्च । अत एव 'तस्यान्यार्थेऽन्तर्भावोऽस्तीति चिन्त्य'मित्याह हरदत्तः । अतो नान्येत्यर्थग्रहणमिति ध्येयम् । अर्थग्रहणपक्षेऽन्यपर्यायशब्दयोगे पञ्चमीविधानसिद्ध्या भिन्नादिशब्दानामपि

---

तत्पर्यायतया तद्योगे पञ्चम्युपपत्तावपि शब्दग्रहणपक्षेऽन्यो देवदत्तो यज्ञदत्तादित्यन्यत्रैवान्यशब्दयोगेन पञ्चमी स्यात् । भिन्नो देवदत्तो यज्ञदत्तादित्यादावन्यशब्दयोगाभावात्पञ्चमी न स्यादित्यर्थग्रहणमेवेदमाश्रयणीयम् । इतरग्रहणं तु सूत्रे प्रपञ्चार्थं भविष्यतीत्याशयेन शङ्कते **कथं तर्हीति** । आदिपदेनार्थान्तरादिसंग्रहः । शब्दग्रहणपक्षेऽन्यारादिति सूत्रेण भिन्नादिशब्दयोगे पञ्चम्यप्राप्तावपि कथञ्चिदपादानत्वेन 'अपादाने पञ्चमी'त्यनेनैव पञ्चमीसंभवान्न तदनुपपत्तिप्रसङ्ग इति भावेन कथञ्चिदपादानत्वस्य पञ्चमीप्रापकत्वं परमुखेनैवानेतुं प्रतिबन्दीमाह **विलक्षण इति** ॥ **कथमिति** । अन्यपर्यायशब्दयोगाभावान्न तत्र पञ्चमी स्यादिति भावः । ननु विलक्षणशब्दोऽप्यन्यशब्दपर्याय एवेति भवेदेव तद्योगेऽप्यनेन पञ्चमीत्यतः पर्यायत्वेऽस्यार्थैक्यनिबन्धनत्वेन प्रकृते च तदभावान्न पर्यायत्वमित्याह **न हीति** । कुतो न वैलक्षण्यमेव पृथक्त्वमित्यतः पृथक्त्वरूपगुणशून्यतया निर्धारितेषु गुणादिषु वृत्तेर्वैलक्षण्यस्य न पृथक्त्वरूपता युक्तेत्याह **गुणादिष्वपीति** । आशयमविद्वान् शङ्कते **अथेति** । 'विवक्षातः कारकाणि भवन्ती'ति वचनादनपादानत्वेऽप्यपादनत्वविवक्षया विलक्षणो देवदत्तो यज्ञदत्तादित्यत्रापादाने पञ्चमीति सूत्रेण पञ्चमीत्याशयः । आशयमुद्घाटयति **भिन्न इत्यादावपीति** । तथा चात्राप्युक्तरीत्या पञ्चम्युपपत्तेर्नान्येत्यर्थग्रहणं सूत्र इति भावः ॥ **तथा सतीति** । भिन्नादियोगे कथञ्चिदपादानत्वाश्रयणेन पञ्चम्युपपत्ता-

वित्यर्थः ॥ **साम्यादिति** । अन्ययोगेऽपि कथञ्चिदपादानत्वव्युत्पादनस्य साम्यादित्यर्थः ॥ **सूत्रवैयर्थ्यमिति** ।। 'अन्यारादितरर्ते' इति सूत्रवैयर्थ्यमित्यर्थः ।' अपादाने पञ्चमीत्यनेनैवान्यादियोगे पञ्चम्युपपत्तेरिति भावः ॥ **प्रपञ्चार्थत्वेनेति** । अपादाने पञ्चमीति सूत्रप्रपञ्चार्थत्वेनेत्यर्थः ।

स० — **इतरेतराश्रयत्वादिति** । प्रतियोगिनिरूप्यत्वस्यान्योन्याभावपृथक्त्वस्वरूपत्वाभावेन तन्निष्ठधर्ममात्रत्वात् अन्योन्याभावनिरूपकत्वस्यात्यन्ताभावप्रतियोगिन्यसत्त्वात् महत्वावधौ पृथक्त्वनिरूपकत्वाभावेन तयोरेवावधित्वप्रतियोगित्वरूपत्वासंभवेन तन्निष्ठधर्मत्वावश्यंभावात् अन्योन्याभावपृथक्त्वयोर्भेदसिद्धौ अन्योन्याभावनिरूपकत्वपृथक्त्वनिरूपकत्वलक्षणविरुद्धधर्माधिकरणत्वेन पृथक्त्वान्योन्याभावावधिप्रतियोगिनोर्भेदसिद्धिः तत्सिद्धौ च प्रतियोगिनिरूप्यत्वावधिनिरूप्यत्वरूपविरुद्धधर्माधिकरणत्वेन पृथक्त्वान्योन्याभावयोर्भेदसिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥ **अन्यशब्दोपपद इति** । 'अन्यारादि'त्यनेनान्यशब्दयोग एव पञ्चमी विधीयते न तदर्थकभिन्नपदयोग इति भावः ॥ **कथञ्चिदपादानत्वमिति** । तथा चापादाने पञ्चमीत्यनेनैवात्र भविष्यति पञ्चमीत्यर्थः ।

प० — ( अत्रत्यो विषयः पृ. १७०४ पं. २ तः पं. ११ पर्यन्तं द्रष्टव्यः । )

अन्य इत्यर्थग्रहणाभावे बाधकमाशंक्य प्रतिबन्दीमाह **कथं तर्हीति** । तर्ह्यन्यशब्दोपपद एव पंचमीति पक्ष इत्यर्थः ॥ **विलक्षण इति** । अन्येत्यर्थग्रहणपक्षेऽपि अन्योन्याभावपृथक्त्वस्वरूपभेदानां त्रयाणामेव भेदत्वोपगमेन तेषामेवान्यपदार्थत्वाद्वैधर्म्यरूपवैलक्षण्यस्यान्यशब्दार्थत्वाभावादिति भावः । अन्योन्याभावस्वरूपे भेदस्थले पंचम्यभावाद्वैलक्षण्यं पृथक्त्वान्तर्भूतमित्युपेत्यैव पंचमी समर्थनीया । न चैतद्युक्तमित्याह **न हीति** ॥ **सद्भावात्** । वैलक्षण्यस्येति योज्यम् ॥ **कथंचिदिति** । निरूपणावधित्वमात्रेणेत्यर्थः । तथा चापादाने पंचमीत्यनेनैव पंचमी भविष्यतीति भावः ॥

या० — पृथक्त्वनिरूपकत्वमित्यत्र पृथक्त्वग्रहणं प्रकृताभिप्रायेण । वस्तुतस्तु परत्वापरत्वोत्कृष्टत्वदीर्घत्वादिभावनिरूपकत्वमवधित्वमिति ज्ञातव्यम् । न चैवं सादृश्यप्रतियोगिन्यतिव्याप्तिः । तस्याप्यवधित्वेन लक्ष्यत्वादित्याशयात् ॥ **इतरेतराश्रयत्वादिति** । पृथक्त्वस्यान्योन्याभावभेदसिद्धौ तदवधेरभावनिरूपकत्वरूपप्रतियोगित्वसिद्धिः । तत्सिद्धौ च पृथक्त्वस्यान्योन्याभावभेदसिद्धिरितीतरेतराश्रयत्वादित्यर्थः । प्रौढिवादेनाह **अन्यशब्दोपपद इति** । अन्य इत्यर्थग्रहणं न भवति, किन्तु 'स्वं रूपं शब्दस्ये'ति वचनाच्छब्दग्रहणमेवेत्यर्थः । ननु विलक्षणशब्दोऽप्यन्यशब्दपर्याय इत्यत आह **न हीति** । **पृथक्त्वं** अन्यत्वापरपर्यायं पृथक्त्वमित्यर्थः ॥ **अथ कथञ्चिदिति** । विवक्षाविशेषमाश्रित्येत्यर्थः । तथा चापादाने पञ्चमीत्यनेनैव तत्र पञ्चमीति भावः ॥ **प्रपञ्चार्थत्वेनेति** । अपादाने पञ्चमीति सूत्रप्रपञ्चार्थत्वेनेत्यर्थः ।

श्री० — ननु घटात्पृथगिति पृथक्त्ववाचिपृथक्पदप्रयोगेऽर्थग्रहणपक्षे पञ्चमीप्रयोगो विहितो नान्योन्याभावप्रयोगे । घटो न भवति पट इत्यत्र तददर्शनादतः पृथक्त्वान्योन्याभावयोर्भेद इत्याशङ्क्य आह **पञ्चमीति** ॥ **कथं तर्हीति** । तथा चार्थग्रहणं कार्यमिति भावः ॥ इत्यत्र **कथमिति** । अर्थग्रहणपक्षेऽप्यस्तु भिन्नादिशब्दप्रयोगे पञ्चमी । विलक्षणादिशब्दप्रयोगे तु कथम् । न चान्यभिन्नादिशब्दसमानार्थत्वं विलक्षणशब्दस्येति वाच्यम् । विरुद्धधर्मोपेतं विलक्षणमित्यन्यत्वादिव्याप्यधर्मस्यैव विलक्षणशब्देनोक्तेर्न तयोरेकार्थत्वमित्यर्थः । नन्वर्थग्रहणपक्षे पृथक्त्ववाचिपदप्रयोगे तावत्पञ्चमी विहिता । वैलक्षण्यस्यापि पृथक्त्वेन तद्योगे पञ्चम्युपपद्यत इत्यत आह **न हीति** । विरुद्धधर्मवत्त्वरूपवैलक्षण्यस्य गुणादिसाधारणत्वेन पृथक्त्वरूपत्वाभावान्न तद्योगे पञ्चमी युक्तेत्यर्थः । **तत्र** देवदत्ताद्विलक्षण इत्यत्र ॥ **कथंचिदिति** । यज्ञदत्तविश्लेषावधित्वेन देवदत्तस्यापादानत्वमित्यर्थः । **किं न व्युत्पाद्यत इति** । अपादानत्वमिति शेषः । तथा चापादान एव पञ्चमी तत्राप्यस्तु । तथा चार्थग्रहणं न कार्यमिति भावः ॥ **साम्यादिति** । घटादन्य इत्यत्राप्यपादानत्वव्युत्पादनसम्भवेनापादाने पञ्चमीत्यनेनैव पञ्चमीप्राप्तावन्यारादिति सूत्रं व्यर्थमापन्नमिति भावः ।

च० — **पृथक्त्वेति** । परत्वेत्यादिनिरूपकत्वं तदित्यपि द्रष्टव्यम् । तथा च निरूपकभेदनिबन्धनस्तद्भेद इति हृदयम् । **इतरेतराश्रयत्वादिति** । पृथक्त्वान्योन्याभावयोर्निरूपकभेदसिद्ध्यधीनसिद्धिका दर्शितलक्षणावधित्वप्रतियोगित्वरूपनिरूप्यभेदसिद्धिः तन्नियन्त्रिता च सा सिद्धिः इतीतरेतराश्रयत्वादित्यर्थः । **अन्यशब्दोपपद इति** । अन्यशब्दसमभिव्याहार इत्यर्थः । **प्रौढवादेनाह** अन्यत्रशब्दोपपद इत्यप्यवतारयन्ति । इतरशब्दस्याप्यन्यपदपर्यायतया तस्यार्थग्रहणत्वे इतरग्रहणानर्थक्यापत्तेः । **प्रपञ्चार्थत्वेन** अपादाने पञ्चमीति सूत्रार्थविवरणपरत्वेन ।

**सु० — विलक्षणयोगे पञ्चमी वक्तव्येति चेत् । विशिष्टव्यावृत्तादियोगेऽपि कथम् । न विशिष्टादिकं पृथक्त्वमिति च स्वयमेव व्युत्पादितम् । सर्वत्रोपसङ्ख्याने भिन्नादिष्वपि तथा भविष्यति । किमन्येत्यत्रार्थग्रहणव्याख्यानेन ।**

शे० — **विलक्षणयोग इति** । तथा चोपसंख्यानादेव विलक्षणो देवदत्तो यज्ञदत्तादित्यत्र पञ्चम्युपपत्तेर्नान्येत्यर्थग्रहणपक्षेऽप्यनुपपत्तिः । शब्दग्रहणपक्षे तु भिन्नादियोगेऽन्यशब्दयोगाभावान्न पञ्चम्युपपत्तिरिति न शब्दग्रहणमाश्रयितुं युक्तमिति भावः । तर्हि शब्दग्रहणेऽप्युपसंख्यानादेव भिन्नादियोगेऽपि पञ्चम्युपपत्तेर्नार्थग्रहणेन प्रयोजनमिति मनसि निधाय प्रतिबन्दीमाह **विशिष्टेति** । आदि-

पदेन धर्मसंग्रहः । अर्थग्रहणपक्षेऽप्यन्यपर्यायशब्दयोग एव पञ्चमीविधानात् । विशिष्टादिशब्दस्य चान्यशब्दपर्यायत्वाभावात्तद्योगे पञ्चमी न स्यादित्यर्थः । ननु पृथगिति विशिष्ट इति व्यावृत्त इति प्रतीतीनामेकाकारत्वेन वैशिष्ट्यादिकमेव पृथक्त्वम् । तथा च विशिष्टादिशब्दस्याप्यन्यशब्दपर्यायत्वेन तद्योगेऽपि भविष्यत्येवान्यारादिति सूत्रेण पञ्चमीति कथमर्थग्रहणपक्षे विशिष्टादियोगे पञ्चम्यनुपपत्त्युद्भावनमित्यत आह **न विशिष्टादिकमिति** ।। **व्युत्पादितमिति** । गुणकिरणावल्यामिति शेषः ।

अयमत्र परकीयोपपादनप्रकारः । यदि विशिष्टं पृथक् तदा पूर्वं यच्छब्दविशिष्टं व्योम तदेव पश्चाच्छब्दाविशिष्टं तत एव पृथक् स्यात् । एवं बुद्ध्याद्यविशिष्टादात्मादेस्तद्बुद्ध्यादिविशिष्टः स एव ततः पृथक् स्यात् । नापि वैधर्म्यं पृथक् । पाकरक्ते घटे श्यामात्तद्घटात् पृथगयं घट इति व्यवहारप्रसङ्गात् । तद्विरोधिधर्मवत्त्वस्यैव तद्वैधर्म्यत्वात् । तस्य च श्यामानन्तरं रक्ततादशायमपि सत्त्वात् । एवं व्यावृत्तमपि न पृथगतद्व्यावृत्तिरेव वैशिष्ट्यमिति वैशेषिकैरङ्गीकृतत्वेन विशिष्टव्यावृत्तयोरेकत्वादिति । तदुक्तं किरणावल्याम् । पृथक्शब्दस्य विशिष्टोऽर्थ इति चेत् । शब्दबुद्धिदण्डाद्यविशिष्टापृथक्त्वेऽपि तद्विशिष्टस्य व्योमात्ममैत्रादेर्दर्शनात् । एतेनैव वैधर्म्यमात्रं पृथक्त्वमिति निरस्तम् । श्यामाद्रक्तो विधर्मा, न च पृथगिति दर्शनादिति । अत्र विशिष्टव्यावृत्तयोरभेदेन विशिष्टपक्षदूषणेनैव दूषितत्वान्न व्यावृत्तपक्षः पृथग्दूषितः । विशिष्टशब्दयोग इव व्यावृत्तयोगेऽपि पञ्चमीदर्शनात् स्वयं पृथक् तदुपादानं कृतमिति

---

ध्येयम् । नन्वर्थग्रहणपक्षे विशिष्टादिशब्दयोगेऽन्यारादिति सूत्रेण पञ्चम्यप्राप्तावपि न तद्योगे पञ्चम्यनुपपत्तिः । विलक्षणयोग इव विशिष्टादियोगेऽप्युपसङ्ख्यानादेव पञ्चम्युपपत्तेरित्यतः किं तद्वन्येत्यर्थग्रहणेन शब्दग्रहणपक्षेऽपि विशिष्टादियोग इव भिन्नादियोगेऽप्युपसङ्ख्यानादेव पञ्चम्युपपत्तेरित्याह **सर्वत्रेति** । विलक्षणयोगे विशिष्टादियोगे चेत्येवं सर्वत्रेत्यर्थः ।

स० — **व्युत्पादितमिति** । स्वग्रन्थे परेणैवेति शेषः ।

प० — **स्वयमेव व्युत्पादितमिति** । विशिष्टत्वादिमति गुणादिपंचके पृथक्त्वाभावस्योक्ततया व्युत्पादितप्रायमित्यर्थः ॥

**या०** — विशिष्टव्यावृत्तादियोग इत्यत्रादिपदेन विधर्मग्रहणम् । ननु विशिष्टव्यावृत्तादिशब्दोऽप्यन्यशब्दपर्याय एवेत्यत आह **न विशिष्टादिकमिति** ।। **स्वयमेवेति** । वैशेषिकेनैव स्वग्रन्थे व्युत्पादितमित्यर्थः । यथाऽह किरणावलीकारः । पृथक्शब्दस्य विशिष्टोऽर्थ इति चेत् । शब्दबुद्धिदण्डविशिष्टापृथक्त्वेऽपि तद्विशिष्टस्य व्योमात्ममैत्रादेर्दर्शनादिति । यदि विशिष्टमेव पृथक्, तदा पूर्वं यच्छब्दाविशिष्टं व्योम्, तदेव पश्चाच्छब्दविशिष्टम् तत एव पृथक् स्यात् । एवं बुद्ध्याद्यविशिष्टादात्मादेः बुद्ध्यादिविशिष्टः स एव ततः पृथक् स्यादिति तत्फक्किकार्थः । अनेन पृथक्शब्दस्य व्यावृत्तमर्थ इति पक्षोऽपि

दूषितप्रायः । अतद्व्यावृत्तिरेव वैशिष्ट्यमिति वैशेषिकैरङ्गीकृतत्वेन विशिष्टव्यावृत्तयोरेकत्वात् । व्यावृत्तिविशेषणे संबन्धि विशिष्टमिति मते तु गुणादेरपि व्यावृत्तत्वान्न तस्य पृथक्शब्दवाच्यत्वम् । एवं पृथक्शब्दस्य विधर्मार्थत्वमपि तत्रैव निराकृतम् । यथाऽऽह । एतेन वैधर्म्यमात्रं पृथक्त्वमिति निरस्तम् । श्यामाद्रक्तो विधर्मा न च पृथक् इति दर्शनादिति ॥

**श्री०** — **वक्तव्येति** । विलक्षणशब्दस्यान्यशब्दसमानार्थकत्वाभावेनान्यारादिति सूत्राविषयत्वादपादानत्वव्युत्पादनस्य च क्लिष्टत्वादिति भावः ॥ **कथमिति** । न हि विशिष्टादिशब्दयोगेऽपि पञ्चमी वक्तव्येत्यत्र नियामकमस्तीति भावः । ननु विशिष्टादीनां पृथक्त्वरूपत्वेन पृथक्त्ववाचिपदयोगे पञ्चम्या अन्य इत्यर्थग्रहणमिति पक्षेऽन्यारादिति सूत्रप्राप्तत्वेन न दोष इत्यत आह **स्वयमेवेति** । रूपत्वादिविशिष्टं रूपं वाय्वादिव्यावृत्तं रूपमिति विशिष्टादेर्गुणादावपि सत्वेन न पृथक्त्वरूपत्वम् । गुणे च पृथक्त्वरूपगुणाभावस्य पृथक्त्वस्य गुणत्वेन तत्रासम्भवादित्यनेन व्युत्पादितत्वादिति ध्येयम् ॥ **सर्वत्रेति** । विशिष्टादियोगेऽपीत्यर्थः । **तथा** उपसंख्यानम् । **अन्येत्यत्र** अन्यारादितिसूत्रे ॥

**च०** — **स्वयमेव** उदयनेनैव । **व्युत्पादितमिति** । गुणकिरणावल्यां शब्दबुद्धिदण्डाद्यविशिष्टापृथक्त्वेऽपि तद्विशिष्टव्योमात्ममैत्रादेर्दर्शनादित्यनेनेत्यर्थः । शब्देन बुध्या दण्डेन विशिष्टेभ्यो अपृथग्भूतानां तद्विशिष्टव्योमात्ममैत्रादीनां दर्शनादिति तदीयग्रन्थाशयोऽवसेयः । एवं श्यामाद्रक्तो विधर्मा न पृथगिति व्यवहारदर्शनाद्वैधर्म्यमप्यादिपदोपात्तं न पृथक्त्वमित्यवधेयम् ।

**सु०** — **'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्यामि'ति विकल्पविधानसामर्थ्यादिद(त्थ)माश्रीयत इति चेन्न । अप्राप्तेऽपि विकल्पविधानस्य बहुलमुपलम्भात् ।**

**शे०** — ननु 'पृथग्विनानानाभिरि'ति पृथगादियोगे पञ्चम्या विकल्पो विधीयते । न चाप्राप्तस्य विकल्पो विधातुं युक्तः । तस्य प्राप्तिपूर्वकत्वनियमात् । न च नियम एवायमसिद्धः । 'न बहुव्रीहावि'ति बहुव्रीहौ सर्वनामसंज्ञाया नित्यं निषेधे प्राप्ते, 'विभाषा दिक्समासे बहुव्रीहावि'ति तद्विभाषाऽऽरम्भस्य, 'द्वंद्वे चे'ति सर्वनामसंज्ञाया नित्यं निषेधे प्राप्ते, 'विभाषा जसी'ति तद्विकल्पारम्भस्य, लिङ्सिचोरात्मनेपदेष्वि'ति झलाद्योर्लिङ्सिचोर्नित्यं कित्संज्ञायां प्राप्तायां 'वा गम' इति तद्विकल्पारम्भस्य, 'यज्ञकर्मण्यजपन्यूङ्खसामस्वि'ति यज्ञक्रियायामैकश्रुत्ये नित्यं प्राप्ते, 'उच्चैस्तरां वा वषट्कार' इति तद्विकल्पारम्भस्य, 'व्यक्तवाचां समुच्चारण' इति वदतेर्नित्यमात्मनेपदे प्राप्ते विभाषा विप्रलाप इति तद्विकल्पारम्भस्य, 'व्याङ्परिभ्यो रम उपाच्चे'ति रमतेर्नित्यं परस्मैपदे प्राप्ते विभाषाऽकर्मकादिति तद्विकल्पा-

रम्भस्य, 'नेयङुवङ्स्थानावस्त्री'ति य्वोर्नित्यं नदीसंज्ञानिषेधे प्राप्ते 'वाऽमी'ति तद्विकल्पारम्भस्य, 'तिरोऽन्तर्धावि'ति तिरःशब्दस्य नित्यं गतिसंज्ञायां प्राप्तायां 'विभाषाकृञी'ति तद्विकल्पारम्भस्य, 'अधिरीश्वरे' इति अधेर्नित्यं कर्मप्रवचनीयसंज्ञायां प्राप्तायां 'विभाषा कृञी'ति तद्विकल्पारम्भस्य; निष्ठेति बहुव्रीहौ निष्ठाया नित्यं पूर्वनिपाते प्राप्ते 'वाहिताग्न्यादिष्वि'ति तद्विकल्पारम्भस्य, दिवस्तदर्थस्येति नित्यं षष्ठ्यां प्राप्तायां विभाषोपसर्गे इति सोपसर्गे तद्विकल्पारम्भस्य, 'कर्तृकर्मणोः कृती'ति तद्योगे नित्यं षष्ठ्यां प्राप्तायां 'कृत्यानां कर्तरि वे'ति कर्तरि तद्विकल्पारम्भस्य, लुङि चेति हनो नित्यंवधादेशे प्राप्ते आत्मनेपदेष्वन्यतरस्यामिति तद्विकल्पारम्भस्य, 'चक्षिङः ख्याञि'ति चक्षिङो नित्यं ख्याञादेशे प्राप्ते 'वा लिटी'ति तद्विकल्पारम्भस्य, 'लिपिसिचिह्वश्चे'ति च्लेर्नित्यमङादेशे प्राप्ते आत्मनेपदेष्वन्यतरस्यामिति तद्विकल्पारम्भस्य, 'ऋदुपधाच्चाक्लृपिचृतेरि'ति ऋदुपधात्वान्मृजेर्नित्यं क्यपि प्राप्ते 'मृजेर्विभाषे'ति तद्विकल्पारम्भस्य, 'सम्भावनेऽलमितिचेत्सिद्धाप्रयोगे' इति नित्यं लिङि प्राप्ते 'विभाषा धातौ सम्भावनवचनेऽयदी'ति तद्विकल्पारम्भस्य, 'यूनिलुगि'ति युवप्रत्ययस्य नित्यं लुकि प्राप्ते 'फक्फिञोरन्यतरस्यामि'ति तद्विकल्पारम्भस्य, सास्मिन्पौर्णमासीति संज्ञायामिति नित्यमणि प्राप्ते 'विभाषाफाल्गुनी श्रावणी कार्तिकी चैत्रीभ्य' इति तद्विकल्पारम्भस्य, अवृद्धावपि बहुवचनविषयादिति नित्यं वुञि प्राप्ते 'विभाषाकुरुयुगन्धराभ्यामि'ति तद्विकल्पारम्भस्य, 'पर्वताच्चे'ति नित्यं छप्रत्ययप्राप्तौ 'विभाषाऽमनुष्ये' इति तद्विकल्पारम्भस्य, कालाट्ठञिति नित्यं ठञ्प्राप्तौ

'विभाषा पूर्वाह्णापराह्णाभ्यामि'ति तद्विकल्पारम्भस्य, पूर्वैर्यथायथं प्रत्ययेषु प्राप्तेषु 'मयड्वैतयोरि'ति सूत्रात्पूर्वैः स्वस्वोक्तप्रत्ययेषु प्राप्तेष्वित्यर्थः, मयड्वैतयोर्भाषायामभक्ष्याऽऽच्छादनयोरि'ति तद्विकल्पारम्भस्य, सङ्ख्याया इति नित्यं कनि प्राप्ते 'पञ्चद्शतौ वर्गे वे'ति तद्विकल्पारम्भस्य, 'समायाः ख' इति नित्यं खप्राप्तौ 'द्विगोर्वे'ति तद्विकल्पारम्भस्य, 'धान्यानां भवने क्षेत्रे खञि'ति नित्यं खञि प्राप्ते 'विभाषा तिलमाषोमाभङ्गाणुभ्य' इतितद्विकल्पारम्भस्य, 'नञस्तत्पुरुषादि'ति नित्यं समासान्तनिषेधे प्राप्ते पथो विभाषे'ति तद्विकल्पारम्भस्य, 'अनश्चे'ति अन्नन्तादव्ययीभावान्नित्यं टचिप्राप्ते 'नपुंसकादन्यतरस्यामि'ति तद्विकल्पारंभस्य, 'धनुषश्चे'ति नित्यमनङादेशप्राप्तौ 'वा संज्ञायामिति तद्विकल्पारंभस्य, 'दीर्घादि'ति नित्यं तुकिप्राप्ते 'पदान्ताद्वे'ति तद्विकल्पारंभस्य, 'युक्ते चे'ति पूर्वपदस्य नित्यमाद्युदात्तत्वप्राप्तौ 'विभाषाध्यक्ष' इति तद्विकल्पारम्भस्य, 'किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धमि'ति नित्यमनुदात्तत्वनिषेधे प्राप्ते 'किमो लोपे विभाषे'ति तद्विकल्पारम्भस्य, 'लोट्चे'ति नित्यमनुदात्तत्वनिषेधप्राप्तौ 'विभाषितं सोपसर्गमनुत्तममि'ति तद्विकल्पारम्भस्य, 'हन्तेरत्पूर्वस्ये'ति नित्यं णत्वे प्राप्ते 'वमोर्वे'ति तद्विकल्पारम्भस्य च दर्शनेन विकल्पस्य प्राप्तिपूर्वकतायाः स्थितत्वात् । ( विभाषेति-एभ्यष्ठग्वा । पक्षेऽण् । फाल्गुनिकः फाल्गुनो मासः । श्रावणिकः श्रावणः । कार्तिकिकः कार्तिकः । चैत्रिकः चैत्रः ।) तथा च पृथग्विनेति पञ्चमी-

विकल्पविधिरपि पृथगादियोगे पञ्चमीनित्यप्राप्तिपूर्वक एव वाच्यः । न चान्यारादितरर्त इत्यत्रान्येत्यस्य शब्दग्रहणत्वे पृथगादियोगे पञ्चमीप्राप्तिः संभवतीति विकल्पविधानान्यथाऽनुपपत्तिरेवान्येत्यर्थग्रहण-नियामिकेति सूत्रेऽन्येत्यर्थग्रहणमेव वाच्यमिति शङ्कते **पृथग्विनेति** ।

सत्यं विकल्पविधिः प्राप्तिपूर्वकः । न तु तन्नियमः । ऊर्णोतेः परस्येडादिप्रत्ययस्य पूर्वेण ङित्वा-प्राप्तावपि 'विभाषोर्णोरि'ति तद्विकल्पारंभस्य, 'यमो गन्धन' इति गन्धने वर्तमानाद्यमेः परस्य सिचः कित्वविधानेऽप्युपयमने वर्तमानाद्यमेः परस्य सिचः कित्वाप्राप्तावपि 'विभाषोपयमन' इति तद्विकल्पारं-भस्य, जातिरूपैकार्थाभिमाने एकवचनस्यैव प्राप्तत्वेन बहुवचनाप्राप्तावपि 'जात्याख्यायामेकस्मिन् बहुव-चनमन्यतरस्यामे'ति (जात्याख्यायामिति—एकोऽप्यर्थो बहुवद्भवति । ब्राह्मणाः पूज्याः । ब्राह्मणः पूज्यः ) तद्विकल्पारम्भस्य, 'वृत्तिसर्गतायनेषु क्रम' इति सूत्रे साक्षाद्विशेषानुपादानेऽपि वृत्त्याद्यर्थ एव विधानाय समारब्धात् उपपराभ्यामिति नियमसूत्रादनुपसर्गविषयत्वस्यावसायेनानुपसर्गे वृत्त्याद्यर्थे क्रमेरात्मनेपदा-प्राप्तावपि तदर्थ एवात्मनेपदविकल्पविधायकत्वेन तत्सूत्र एव वाग्रहणेनैव तत्सिद्ध्या पृथक् तत्करणायोगेन तदन्यथाऽनुपपत्त्या वृत्त्यादिबहिर्भाव एव तद्विकल्पविधायकत्वस्याश्रयणीयत्वात्तत्र चात्मनेपदस्य सर्वथा अप्राप्तावपि 'अनुपसर्गाद्वे'ति तद्विकल्पारम्भस्य, 'पतिः समास एवे'ति नियमादसमासे, घिसंज्ञाया अप्राप्तावपि 'षष्ठीयुक्तश्छन्दसिवे'ति तद्विकल्पारम्भस्य, 'भविष्यति मर्यादावचनेऽवरस्मिन्नि'ति अव-रस्मिन् प्रतिषेधोक्त्या परस्मिन्प्रविभागे प्रतिषेधे अप्राप्तावपि 'परस्मिन् विभाषे'ति तद्विकल्पारम्भस्य, पत्युर्नो यज्ञसंयोग इति नियमादयज्ञसंयोगे सपूर्वस्य पत्युर्नकाराप्राप्तावपि 'विभाषापूर्वस्ये'ति तद्वि-कल्पारम्भस्य, 'अरुर्द्विषदजन्तस्य मुमि'त्यादिभिः खिदन्तादावुत्तरपदे मुम्विधानात्कृत्युत्तरपदे मुमोऽप्राप्ता-वपि 'रात्रेः कृति विभाषे'ति तद्विकल्पारम्भस्य, 'ग्रो यङी'ति पूर्वसूत्रेण गृ इत्यस्य धातोर्यङि परतः रेफस्य लकारविधानादचि परतस्तदप्राप्तावपि 'अचि विभाषे'ति तद्विकल्पारम्भस्य च दर्श-नेन व्यभिचारात । ततश्चोक्तरीत्यैव पृथगादियोगे पञ्चम्यप्राप्तावपि, 'पृथग्वि'नेति पञ्चमीविकल्पविधानो-पपत्त्या तदन्यथाऽनुपपत्तेरेवासिद्धेः, न तयाऽन्येत्यस्यार्थग्रहणत्वसिद्धिरिति भावेनाह **अप्राप्तेऽ-पीति** ।

स० — **पृथग्विनानानाभिरिति** । अन्य इत्यर्थग्रहणे हि अन्यारादित्यनेन पृथगादियोगे पञ्चम्यां नियततया प्राप्तायां पृथग्विनानानाभिरिति विकल्पेन तृतीयाविधानमुपपद्यते । अर्थग्रहणाभावे तु पृथगादियोगे अन्यारादित्यनेन पञ्चम्या नित्यतयाऽप्राप्तत्वेन विकल्पविधानमनुपपन्नं स्यादित्यर्थः ॥ **अप्राप्तेऽपि विकल्पविधानस्येति** । 'ग्रो यङि' 'अचि विभाषे'त्यादिरूपस्येत्यर्थः ।

प०— **इत्थमिति** । अन्य इत्यर्थग्रहणमित्यर्थः ॥ **अप्राप्तेऽपीति** । 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च, विभाषोर्णोः, विभाषोपयमने अनुपसर्गाद्वेत्यादिविकल्पानां 'न वेति विभाषा' इति सूत्रे महाभाष्ये अनेकेषां प्रदर्शितत्वादिति भावः ।

या०— **पृथग्विनानानाभिरिति** । एभिर्योगे तृतीया स्यादिति सूत्रार्थः । पक्षे पञ्चमीद्वितीये । अन्यारादित्यत्रान्य इत्यर्थग्रहणे हि पृथगादियोगे पञ्चम्यां नित्यतया प्राप्तायां, पृथग्विनेति विकल्पविधानमुपपद्यते । अर्थग्रहणाभावे तु पृथगादियोगे पञ्चम्या नित्यतयाऽप्राप्तत्वेन विकल्पविधानमनुपपन्नं स्यादित्यर्थः ॥ **अप्राप्तेऽपीति** । 'अचि विभाषे'त्यादिविकल्पविधानस्येत्यर्थः । 'ग्रो यङी'ति पूर्वसूत्रे गृ इत्येतस्य धातो रेफस्य लकार आदेशो भवति यङि परत इत्येवोक्तत्वेन णिजादौ प्रत्यये परतस्तेनाप्राप्तोऽपि लकारादेशोऽत्र विकल्पेन विधीयत इति ज्ञातव्यम् । एवं 'जराया जरसन्यतरस्या'मि'त्यादिकमप्यप्राप्तविकल्पविधानमूह्यम् ।

च०— **पृथग्विनानानाभिरिति** । एतत्समभिव्याहारे विकल्पेन तृतीया स्यात् कदाचित् पञ्चमी द्वितीया च । अन्यारादिति योगे अन्येत्यस्यार्थग्रहणरूपतायां पृथगादिपदसमभिव्याहारेऽपि पञ्चम्याः नित्यता प्राप्ताङ्गीदिति दर्शितयोगान्तरेण विकल्पनं सङ्गच्छते, तद्राहित्ये तु तत्समभिव्याहारे तन्नित्यताया अप्रसक्त्या विकल्पविधानं न घटेतेत्यर्थः ॥ **अप्राप्तेऽपीति** । ऊर्णुनुविथ ऊर्णुनविथ ऊर्णुविता ऊर्णवितेत्याद्यनुरोधेन पूर्वयोगाप्राप्तस्यापि ङित्वस्य 'विभाषोर्णोरि'ति विकल्पप्रदर्शनादेवं जरायां जरसन्यतरस्यामित्यादौ तादृशस्य जरसादेशादेश्च तद्दर्शनादित्यर्थः । प्रापञ्चिपत चैतत्प्रपञ्चकाः ।

सु०— अस्तु वाऽन्येत्यर्थग्रहणम् । तथाऽपि पृथक्त्ववाचिपदयोगे पञ्चमीविधानस्य व्याख्यानात् । घटः पटो न भवतीत्यत्र तु, वाक्यप्रतिपाद्यं पृथक्त्वमिति पञ्चमी न भविष्यति । प्रतियोगिनिरूप्यत्वानिरूप्यत्वाभ्यां तु विवेकः स्वरूपभेदवादिना वक्तुमशक्य इति वक्ष्यामः । विधिरूपत्वं चोक्तन्यायपराहतम् । अत एव पृथक्त्वान्योन्याभावविवेचकत्वमपि निरस्तम् ।

किं चानश्व इति किमन्योन्याभावो नञर्थः । किंवा पृथक्त्वम् । आद्ये कथमश्वादन्य इति विग्रहवाक्ये पञ्चमी । न च तत्र पृथक्त्वमन्यशब्दार्थ इति युक्तम् । समासविग्रहवाक्ययोः समानार्थत्वात् । द्वितीये पृथक्त्वस्यापि निषेधतेत्यलं पल्लवेन ।

शे० — नन्वेवं भिन्नादियोग इवान्ययोगेऽपि उपसंख्यानादेव पञ्चमी भविष्यतीति सूत्रेऽन्यग्रहणानर्थक्यमित्यरुचेराह **अस्तु वेति** । नन्वेवं घटः पटो नेत्यत्रोक्तरीत्या पञ्चमीप्रसङ्ग इत्यत आह **तयाऽपीति ॥ पृथग्वाचीति** । अन्योन्याभावरूपपृथक्त्ववद्वाचीत्यर्थः । क्वाचित्कपृथक्त्ववाचीति पाठेऽप्ययमेवार्थोऽनुसन्धेयः । वाक्यप्रतिपाद्यं पृथक्त्वमिति पृथक्त्ववदित्यर्थः । तथा च पृथक्त्ववद्वाचिपदयोगाभावान्न घटः पटो न भवतीति व्यासे पञ्चमीप्रसङ्ग इति भावः । उपलक्षणं चैतत् । अपटो घट इति समासेऽपि न पञ्चमीप्रसङ्गः । तत्राप्यन्योन्याभाववतो वाक्यप्रतिपाद्यतया पृथक्त्ववद्वाचिपदयोगाभावादित्यपि द्रष्टव्यम् । यद्यप्यत्र 'अ इति शब्दः प्रस्तुतस्याभावं विरोधिनमन्यं च वदतीत्यैतरेयभाष्यानुसारात् 'सद्विलक्षणमित्यत्राभावान्यविरोधिनां मध्ये नञः कोऽर्थः' इति कर्मनिर्णयानुसाराच्च । नञःअन्योन्याभाववद्वाचकत्वं स्वस्य सिद्धान्तः । युक्तं चैतत् । अपटो घटो नानुयाजेष्वित्यादिप्रचुरप्रयोगादिरूपस्य तत्र व्युत्पत्तिरूपस्य च शक्तौ प्रमाणस्य सत्त्वेन साधकसद्भावात् अन्योन्याभाववदवाचकत्वे न घट इत्येवोक्ते प्रतिषेधो वा पर्युदासो वेति संशयानुपपत्तिप्रसङ्गेन विपक्षे बाधकसद्भावाच्च । अस्ति चोपपदाद्यभावेऽक्षादिष्विव सन्देहः । न हि तत्राशक्तौ सन्देहो युज्यते । तथा सति गङ्गास्तीत्युक्ते नीरं तीरं वेति सन्देहप्रसङ्गात् । तथा च नञोऽन्यवाचकत्वान्नान्योन्याभाववतो वाक्यप्रतिपाद्यत्वाभिधानं युक्तम् ।

---

तथाऽप्यन्योन्याभाववति शक्तस्यापि नञः समानाधिकरणप्रथमान्तपदद्वयसमभिव्याहारमन्तरेण तदनुपस्थापकतया पदन्तरसमभिव्याहृतस्यैव तदुपस्थापकत्वमित्यभिप्रायेण वाक्यप्रतिपाद्यत्वाभिधानमुपपद्यत एव । न चैवं समभिव्याहारमन्तरेणान्योन्याभाववदनुपस्थापकत्वेऽपि तद्वाचकत्वमस्त्येवेति तद्योगे समासव्यासयोः पञ्चमी स्यादेवेति वाच्यम् । पदान्तरसमभिव्याहारमन्तरेणान्योन्याभाववद्वाचकपदप्रयोग एव पञ्चमीविधानस्य सूत्रेऽभिप्रेततया तादृशस्यान्यादिपदस्य योगे पञ्चम्युपपत्तावपि अतादृशस्य नञो योगे पञ्चम्यप्रसङ्गोपपत्तेरित्यत्र तात्पर्यात् । एवमन्योन्याभावपृथक्त्वयोर्भेदसाधकं निराकृत्य स्वरूपभेदस्यान्योन्याभावपृथक्त्वाभ्यां भेदसाधकतया परोपन्यस्तहेतुं दूषयति **प्रतियोगिनिरूप्यत्वेति** । उपलक्षणं चैतत् । अवधिनिरूप्यत्वानिरूप्यत्वाभ्यामित्यपि द्रष्टव्यम् । यद्वा प्रतियोगिपदमेव प्रतियोग्यवधिरूपमात्रपरम् । अत एव परनिरूप्यत्वविरहादित्येव प्रागुक्तमिति ध्येयम् ॥ **स्वरूपभेदवादिना त्विति** । यद्यपि धर्मभेदवादिना परनिरूप्यत्वानिरूप्यत्वाभ्यां भेदो वक्तुं शक्यतेऽव्यभिचरिततया तयोस्तन्मते भेदहेतुत्वात्तथाऽपि भेदस्य वस्तुस्वरूपत्ववादिना न ताभ्यां वक्तुं शक्यः । परनिरूप्यत्वानिरूप्यत्वरूपविरुद्धधर्माक्रान्तयोरपि घटतत्स्वरूपभेदयोस्तेनाभेदाभ्युपगमेन तयोर्भेदासाधकत्वस्य तत्सम्मतत्वात् । अन्यथा घटतत्स्वरूपभेदयोरपि भेदप्रसङ्गेन तत्स्वरूपभेदवादित्वानुपपत्तिप्रसङ्गात् । न च

स्वरूपभेदस्यापि प्रतियोग्यनिरूप्यतया तत्रोक्तधर्माक्रान्तत्वमेव नेति वाच्यम् । प्रतियोगिनिरूप्यस्यैव भेदतया तदनिरूप्यत्वे भेदत्वायोगात् । अन्यथा घटस्यैव भेद इति परिभाषामात्रकरणप्रसङ्गादिति भावेन तुशब्दः । वस्तुतस्तु स्वरूपभेदस्याप्युक्तरीत्या परनिरूप्यत्वान्न तद्विरह इत्यसिद्धत्वान्न स स्वरूपवादिना वक्तुं शक्यत इत्यर्थः । विधिरूपत्वाच्चेत्युक्तं हेतुं दूषयति **विधीति** । विधिनिषेधरूपत्वं चेत्यर्थः ।

**उक्तन्यायेति** । अतद्भावोऽन्यता चेत्युक्तन्यायेत्यर्थः । अघटत्वघटान्यत्वयोः सत्यपि विधिनिषेधरूपत्वे भेदाभावेन व्यभिचरितत्वान्न तस्य स्वरूपभेदान्योन्याभावयोर्भेदसाधकत्वमिति भावः । यद्यप्यत्र भेदस्यापि निषेधरूपत्वाद्विधिरूपत्वमेव नास्तीत्यसिद्धिरेव वक्तुं शक्या, स्वमते भेदस्यान्योन्याभावतया तस्य धर्मिस्वरूपत्वेनातिरिक्तत्वाभावेऽप्यभावत्वाक्षतेः । तथाऽप्युपपादनसापेक्षत्वादस्य प्रकारस्य, पूर्वमुपपादिततया उपपादननिरपेक्षव्यभिचारनिर्देशेनैव दूषणं कृतमिति ध्येयम् । पृथक्त्वमवधिनिरूप्यमन्योन्याभावस्तु प्रतियोगिनिरूप्य इति पृथक्त्वान्योन्याभावयोः भेदसाधकोपन्यासग्रन्थे उपलक्षणतयाऽभिप्रेतम् । तयोर्विधिनिषेधरूपत्वं भेदसाधकमप्यघटत्वघटान्यत्वादौ व्यभिचरितत्वान्न भेदसाधकमित्याह **अत एवेति** । अत्र विधिनिषेधरूपत्वस्येति शेषः । विधिनिषेधरूपत्वस्य पृथक्त्वान्योन्याभावयोः भेदसाधकत्वमप्यत एव निरस्तमिति संबन्धः । एवं पृथक्त्वस्यान्योन्याभावत्वे परोद्भावितानि बाधकानि परिहृत्य पृथक्त्वस्यान्योन्याभावत्वं युक्त्याऽप्युपपादयति **किं चेति** । आद्येऽपि विग्रहेऽन्यशब्दः किमन्योन्याभाववद्वाची किं वा पृथक्त्ववद्वाचीति विकल्पं मनसि निधायाद्यं दूषयति **आद्य इति** ॥ **कथं पञ्चमीति** । पृथक्त्वस्यैवान्योन्याभावरूपत्वेऽन्योन्याभाववद्वाचकान्यशब्दस्य पृथक्त्ववद्वाचितया तद्योगे 'अन्यारादि'ति सूत्रेण पञ्चम्युपपत्तावपि पृथक्त्वान्योन्याभावयोर्भेदपक्षेऽन्योन्याभाववद्वाचकान्यपदयोगेऽपि पृथक्त्ववद्वाचिपदयोगाभावेन तद्योगे विहितपञ्चम्यनुपपत्तेरिति भावः । व्यासेऽन्यशब्दः पृथक्त्ववद्वाचीति द्वितीयपक्षमाशङ्कते **न च तत्रेति** । तथा च पृथक्त्ववाच्यन्यपदयोगात् पञ्चम्युपपत्तिरिति भावः । समासे नञोऽन्योन्याभाववदर्थत्वे विग्रहे पृथक्त्ववद्वाचकत्वमेव न संभवति । तथा सति समासविग्रहयोर्विभिन्नार्थत्वप्रसङ्गेन तद्भावायोगादित्याह **समासेति** । **वृत्त्यर्थावबोधकवाक्यस्यैव** विग्रहत्वादिति भावः । अस्तु तर्हि पृथक्त्ववान्नञर्थ इति द्वितीयो निरवद्यत्वात् इत्यतस्तर्हि नञर्थतया पृथक्त्वस्यान्योन्याभावस्वरूपत्वे प्राप्तेऽस्मदिष्टसिद्धिरित्याह **द्वितीये त्विति** । पृथक्त्वस्यान्योन्याभावरूपत्वेन गुणत्वाऽसिद्ध्याऽन्योन्याभावमादाय गुणादिषु पृथगिति व्यवहारस्य मुख्यत्वोपपत्तेर्वृथा तद्गौणत्वकल्पनमनुपपन्नमेवेत्याशयेनाह **अलमिति** ।

**सु० — वाक्यप्रतिपाद्यं पृथक्त्वमिति** । यद्यपि नञः अन्यत्वे शक्तेः घटः पटो न भवतीत्यत्रान्यत्ववाचिनञ्पदस्यैव सत्त्वेन पृथक्त्ववाचिपदेन योगस्यापि सत्त्वात् पृथक्त्वस्य वाक्यप्रतिपाद्यत्वेन

तद्वाचकपदाभावान्न पञ्चमीप्राप्तिरिति वक्तुमशक्यम् । तथापि नानार्थसैन्धवादिशब्दानां प्रकरणाद्यनुगृहीतावेवाश्वत्वादिप्रकारकबोधजनकत्वदर्शनेन प्रकृतेप्यभावान्यविरोधानां नञर्थत्वेन तस्य नानार्थत्वात् नेत्येतावन्मात्रेणैवान्यत्वशक्तेनापि अन्यत्वप्रकारकबोधस्यैवासंभवेन घटः पट इत्यादिसामानाधिकरण्यात् तादात्म्यप्रसक्त्याऽत्रैव नञोऽन्यत्वप्रकारकबोधजनकत्वस्य सत्वेन वाक्यप्रतिपाद्यं पृथक्त्वमित्युक्तेरुपपन्नत्वात्, पदान्तरसमभिव्याहारमन्तरेणैव पृथक्त्ववाचकपदयोगे एव पञ्चम्या विधानान्नात्र पञ्चमीप्राप्तिरिति भावः ॥ प्रतियोगिनिरूप्यत्वानिरूप्यत्वाभ्यामित्युपलक्षणम् । अवधिनिरूप्यत्वानिरूप्यत्वाभ्यामित्यपि द्रष्टव्यम् । **स्वरूपभेदवादिनेति** । भेदस्य प्रतियोगिनिरूप्यस्यैव तदनिरूप्यधर्मिस्वरूपत्वाङ्गीकारात् अन्योन्याभावस्वरूपवदेव प्रतियोग्यनिरूप्यत्वात् तत्स्वरूपत्वमुपपन्नमित्यत आह **वक्ष्याम इति** । विधिरूपत्वाच्च स्वरूपभेदस्यान्योन्याभावस्य निषेधरूपत्वाच्च तयोर्भेद इत्युक्तं प्राक्, तद्दूषयति **विधिरूपत्वं चेति** ॥ विधिनिषेधरूपत्वस्याघटत्वघटान्यत्वादौ व्यभिचारेण विरोधासाधकत्वस्य प्रागुक्तत्वात्तन्न्यायेन विधिरूपत्वस्यापि घटान्यत्वे व्यभिचारेण विरोधासाधकत्वादिति भावः ॥ **अत एवेति** । विधिरूपत्वस्योक्तरीत्या विरोधासाधकत्वादेवेत्यर्थः । विधिरूपत्वस्येति शेषः । **पल्लवः** **अवान्तरभेदः** ।

---

प० — यत्पृथक्त्वमवधिनिरूप्यमित्याद्युक्तं च निराह **प्रतियोगीति** ॥ **वक्ष्याम इति** । समयपादे 'नासतो दृष्टत्वादि'ति शून्यवादिनिरासप्रस्तावे 'स्वरूपं वस्तुनो भेद' इत्यादिव्याख्याऽवसर इति भावः । विधिरूपत्वनिषेधरूपत्वाभ्यां स्वरूपभेदान्योन्याभावयोर्भेद इत्यत आह **विधिरूपत्वे चेति** । अतद्भाव इत्यादावुक्तन्यायेनेत्यर्थः ॥ **अत एवेति** । विधिनिषेधरूपयोरतद्भाव इत्यादौ उक्तन्यायेन व्यभिचारितया भेदासाधकत्वाद्विधिरूपत्वनिषेधरूपत्वाभ्यां पृथक्त्वान्योन्याभावयोर्भेद इत्यपि निरस्तमित्यर्थः ॥ **विवेचकत्वमिति** । विधिरूपत्वनिषेधरूपत्वयोरिति योज्यम् । पृथक्त्वस्य निषेधरूपतां चाह **किंचेति** ॥ **कथमिति** । पृथक्त्वान्योन्याभावयोरेकत्वे घटः पटात्पृथगित्यत्रेव घटो न भवति पट इत्यत्रापि पंचमी स्यादिति वादिनस्तव मतेऽन्योन्याभावयोगे पंचम्ययोगादिति भावः ।

**समानार्थत्वादिति** । समानार्थप्रदर्शकवाक्यरूपत्वाद्विग्रहस्येति भावः । अत एव च 'समर्थः पदविधिरि'ति द्वितीयाध्यायाद्यपादे 'प्राक् कडारात्समास' इत्यादिसमासप्रकरणे'ऽव्ययं विभक्ती'त्यादिभिः पंचभिः सूत्रैर्नित्यसमासं विधाय 'विभाषा अपपरिबहिरंचवः पंचम्ये'त्यादिना विकल्पेन बहवः समासा उक्तास्सूत्रकृता । विग्रहसमासयोर्भिन्नार्थत्वे च नित्यसमासपक्षेऽपि राजपुरुष इति समासेन राज्ञःपुरुष इति विग्रहवाक्यस्य निवर्तनाप्रसक्तेस्तन्निवृत्तिर्माभूद्विग्रहवाक्यस्यापि कदाचित्प्रयोगःस्यात् इत्येतदर्थं षष्ठीतत्पुरुषा-

दिसमाससूत्रेषु विभाषापदानुवर्तनेन विकल्पेन समासं न विदध्यात् तेन समासविग्रहयोरेकार्थत्वस्यैवावगमादिति भावः । यत्तु समर्थसूत्रव्याख्यावसरे 'वावचनानर्थक्यं च । स्वभावसिद्धत्वादि'त्यादिवार्तिकभाष्यकैयटपदमञ्जरीषु समासविग्रहयोर्भिन्नार्थत्वं व्युत्पाद्य सूत्रकारीयविभाषाग्रहणस्यानर्थक्यमुक्तं तदपेशलम् । विग्रहसमासयोरेकार्थत्वानुभवात् । राजपुरुषमानय राज्ञः पुरुषमानयेत्यादौ कार्यैक्यदर्शनाच्च ।

एतावान्भेदः । समासे पदद्वयमनन्यापेक्षस्वार्थं सत् राजविशिष्टपुरुषमभिधत्ते । विग्रहे त्वर्थान्तरापेक्षां सहते । ऋद्धस्य राज्ञः पुरुष इति । न चैतावताऽर्थभेदः । प्रतिपाद्यैकत्वात् । एतावन्मात्रभेदेन समासो विग्रहस्यानिवर्तकः तर्हि विभाषावचनात्प्राग्विहितेनोपकुम्भादिसमासेनापि कुम्भस्योपेतिविग्रहवाक्यं न(नि)वर्तेत । तथा उपपदसमासेनापि कुम्भकारादिशब्देन तद्विग्रहवाक्यं न निवर्तेतेति । अत एव दशमस्याष्टमपादीयाद्यनये मीमांसकैरपि विग्रहसमासयोरेकार्थत्वमेवोपेत्य नानुयाजेष्वित्यत्र पर्युदासः सिद्धान्तित इति ।

या० — पूर्वोक्तस्य प्रौढिवादत्वं सूचयन्वैयाकरणरीतिमाश्रित्यापि समाधानमाह **अस्तु वेति** । **व्याख्यानादिति** । तत्सूत्रव्याख्यातृभिरिति शेषः ॥ **वाक्यप्रतिपाद्यमिति** । ननु नञोऽन्यत्वेऽपि शक्तिसद्भावेन घटः पटो न भवतीत्यत्रापि नेतिपदस्यैव पृथक्त्ववाचित्वाद्वाक्यप्रतिपाद्यं पृथक्त्वमिति कथम् । ततश्च तत्र पञ्चमी स्यादेवेति चेन्न । नञोऽन्यत्ववाचकत्वेऽपि तद्योगे घटः पटो न भवतीत्यत्र न पञ्चमीप्रसक्तिः । पदान्तरसमभिव्याहारमन्तरेण पृथक्त्ववाचिपदयोग एव तत्र पञ्चमीविधानात् । नेतिपदं त्वन्यत्वे शक्तमपि न समानाधिकरणप्रथमान्तपदद्वयसमभिव्याहारमन्तरेणान्यत्वमुपस्थापयति, किन्तु तत्समभिव्याहृतमेव । केवलस्य नेतिपदस्य पर्युदासे क्वाप्यप्रयोगात् । न चैवं तस्य तत्र शक्त्यभावप्रसङ्गः । घटो नेति प्रयोगे पर्युदासः प्रतिषेधो वेति संशयानुदयप्रसङ्गात् । अतस्तत्र शक्तमपि नेतिपदं समानाधिकरणप्रथमान्तपदद्वयसमभिव्याहृतमेवान्यत्वमुपस्थापयति । नान्यथेत्यभिप्रत्यैव वाक्यप्रतिपाद्यं पृथक्त्वमित्युक्तमिति द्रष्टव्यम् । स्वरूपभेदस्य चाभ्यां विवेकः परनिरूप्यत्वविरहाद्विधिरूपत्वाच्चेत्युक्तं हेतुद्वयं क्रमेण दूषयति **प्रतियोगिनिरूप्यत्वेत्यादिना** । अत्र प्रतियोगिपदेन परमात्रमुपलक्षणीयम् । पृथक्त्वनिरूपके परेण प्रतियोगित्वानङ्गीकारात् । परोक्तानुवादत्वाच्चास्य । स्वरूपभेदवादिनेत्यनेनेदं सूचयति । स्वरूपभेदस्थले स्वरूपस्येव तदभिन्नभेदस्यापि न परनिरूप्यत्वं, किन्तु तत्प्रतीतेरेवेति यथा त्वयोच्यते, तथा वयमप्यन्योन्याभावपृथक्त्वयोर्धर्मिस्वरूपतया तद्वदेव न परनिरूप्यत्वं, किन्तु तत्प्रतीत्योरेवेति वैशेषिकपरीक्षायां वक्ष्यामः । अतः स्वरूपभेदस्येवान्योन्याभावपृथक्त्वयोरपि परनिरूप्यत्वाभावान्न परनिरूप्यत्वानिरूप्यत्वाभ्यां स्वरूपभेदस्य ताभ्यां

विवेकस्त्वया वक्तुं शक्य इति । केचित्तु प्रतियोगिनिरूप्यस्यैव भेदस्य तदनिरूप्यधर्मिस्वरूपत्वाङ्गीकारा-दन्योन्याभावपृथक्त्वाभ्यां स्वरूपभेदस्य नानेन रूपेण विवेकस्त्वया वक्तुं शक्य इत्यत्राभिप्रायमाहुः ॥

**उक्तन्यायेति** । अतद्भावोऽन्यता चेत्याद्युक्तन्यायेनाभावभेदभावेऽपि विधिरूपत्वस्योपपत्त्या अन्यथासिद्धतया पराहतमित्यर्थः । यत्पृथक्त्वमवधिनिरूप्यमित्यत्रोपलक्षणया यदभिप्रेतं पृथक्त्वे भाव-रूपत्वमन्योन्याभावविवेचकमिति तदपि दूषयति **अत एवेति** । उक्तन्यायेनान्यथासिद्धत्वादेवेत्यर्थः । पृथक्त्वेऽन्योन्याभावविवेचकत्वमिति विग्रहः । भावरूपत्वस्येति शेषः । न केवलं पृथक्त्वेऽन्योन्या-भावभेदसाधकाभावः किन्तु तदभेदसाधकमप्यस्तीत्याह **किञ्चेति** । किञ्चैवं गुणादिषु पृथगित्यादि-व्यवहारस्य मुख्यार्थत्वसंभवे न वृथा गौणता कल्पनीयेत्याशयेनाह **अलं पल्लवेनेति** ॥

**श्री०— तथाऽपीति** । पृथक्त्वान्योन्याभावयोरभेद एवेति शेषः । ननु पञ्चमीप्रयोगाप्रयो-गाभ्यां भेद एवेति चेत्तत्राह ॥ **पृथक्त्ववाचीति** । **विवेकः** पृथक्त्वान्योन्याभावाभ्यां स्वरूपभेदस्य पूर्व-पक्षिणोक्तो विवेक इत्यर्थः । ननु मास्तु विधिरूपत्वहेतुनाऽन्यत्वस्वरूपभेदयोर्भेदः तथाऽपि विधिरूपत्व-हेतुनैव पृथक्त्वान्योन्याभावयोस्तु भविष्यति भेद इत्यत आह **अत एवेति** । विधिरूपत्वस्येति शेषः । नञ्प्रयोगाप्रयोगाभ्यां विधिनिषेधरूपत्वं यत्र तत्रैक्याभाव इति व्याप्तेः दोषाभावो गुण इत्यत्र व्यभिचारा-देव पृथक्त्वेऽन्योन्याभावविवेचकत्वमपि विधिरूपत्वस्य परास्तमित्यर्थः ॥ **विग्रहवाक्य इति** । समास-विग्रहवाक्ययोः एकार्थत्वावश्यंभावादनश्व इति समासवाक्येऽन्योन्याभावार्थत्वस्यावश्यकत्वेन तत्समानार्थ-काश्वादन्य इति विग्रहवाक्येऽप्यन्योन्याभावार्थकत्वं वाच्यम् । तथा सत्यन्योन्याभावार्थकत्वे कथमश्वा-दिति पञ्चमी । घटो न भवति पट इत्यन्योन्याभावप्रयोगे पञ्चम्या दुर्दर्शनात् । यदि तत्रापि पञ्चमी तर्हि पञ्चमीप्रयोगाप्रयोगाभ्यां पूर्वं पृथक्त्वान्योन्याभावयोर्भेदोपपादनं व्याहन्येतेति भावः । ननु समासवाक्येऽन्योन्याभावोऽन्यशब्दार्थः । विग्रहवाक्ये तु पृथक्त्वम् । तद्वाचिपदयोगे तु अर्थग्रहणपक्षे युक्ता पञ्चमीत्याशङ्क्याह ॥ **न चेति** । **तत्र** विग्रहवाक्ये । कुतो नेत्यत आह **समासेति** । समासार्था-वबोधकवाक्यस्यैव विग्रहत्वादिति भावः ॥ **पृथक्त्वस्यापीति** । भावरूपत्वेन प्रतीतस्यापीत्यर्थः ॥ **निषेधतेति** । निषेधार्थकनञ्वाच्यता प्राप्ता, सा च विरुद्धेत्यर्थः ॥

**च०**— नन्वेवं भिन्नादियोग इवान्ययोगेऽपि उपसंख्यानादेव पञ्चमी भविष्यतीति सूत्रेऽन्य-ग्रहणानर्थक्यमित्यरुचेराह **अस्तु वेतीति** । कतिपये व्याकर्तारः । पूर्वोक्तस्य प्रौढिवादत्वं सूचयन् वैयाकरणरीतिमाश्रित्यापि समाधानमाह । अस्तु वेतीत्यपि निबन्धान्तरीयावतरणिकाविन्यासः ॥ **पृथक्त्ववाचीति** । समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहाररूपाकाङ्क्षाज्ञानासमवहित-

सामग्र्यधीनान्वयधीगोचरान्योन्याभावोपस्थापकमित्यर्थः ॥ **व्याख्यानादिति** । तत्सूत्रव्याकर्तृकर्तृकादि-त्यर्थः । अत्रैके व्याचक्षाणाः 'पृथग्वाचीत्येव प्रतीकं गृह्णानाः अन्योन्याभावरूपपृथक्त्ववद्वाचीति व्याख्याय क्वाचित्कपृथक्त्ववाचीति पाठेऽप्ययमेवार्थोऽनुसन्धेयः' इति निबध्नन्ति । **वाक्यप्रतिपाद्य-मिति** । समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदनञ्पदसमभ्याहाररूपाकाङ्क्षाज्ञानाधीनान्वयधीविषयः पृथक्त्वमित्यर्थः । उक्तदिशा पृथक्त्वान्योन्याभावयोर्भेदसाधकमपास्य स्वरूपभेदस्य पृथक्त्वान्योन्याभाव-निष्ठप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकभेदद्वयानुमापकत्वेनाभिहितमपि प्रत्याख्याति **प्रतियोगीत्यादि** । किञ्चिन्निरूप्यत्वानिरूप्यत्वाभ्यामित्यर्थः । तेन पृथक्त्वनिरूपके प्रतियोगित्वानुपगतावपि न क्षतिः । **वक्ष्याम इति** । स्वरूपभेदस्थले स्वरूपस्येव तदभिन्नभेदस्यापि न परनिरूप्यत्वं, किन्तु तत्प्रतीत्योरेवेति वैशेषिकपरीक्षायामित्यादिः ॥ **उक्तन्यायेति** । 'अतद्भावोऽन्यता चे'त्युक्तदिशा अभावभिन्नताराहित्येपि विधिरूपता सङ्गच्छत इत्यप्रयोजकतया पराहतमित्यर्थः । अत एव = उक्तदिशा भावरूपत्वस्याप्रयोजक-त्वादेव । पृथक्त्वानुयोगिकान्योन्याभावप्रतियोगिकभेदसाधकमपाकृत्य तदनुयोगिकतत्प्रतियोगिकतादात्म्य-साधकमप्यभिधत्ते **किञ्चेति** । **नञर्थः** नञः प्रवृत्तिनिमित्तम् । नञ् अन्योन्याभाववद्वाचकः पृथक्त्ववद्वाचको वेति विकल्पाशयः । **कथं पञ्चमीति** । पृथक्त्ववद्वाचकान्यपदसमभिव्याहारे पञ्चमी-विधानाद्विग्रहवाक्यघटकान्यपदस्यान्योन्याभाववद्वाचकत्वादिति भावः । द्वितीये पृथक्त्ववद्वाचकताकल्पे । पृथक्त्वस्यान्योन्याभावरूपतया गुणात्मताराहित्येनान्योन्याभावमादाय रूपं रसात्पृथगित्यादिव्यवहाराणां मुख्यार्थतैव सुसंपादेति न मन्दप्रयोजनाभाक्तार्थता कल्पनीयेत्याशयेनाह **अलं पल्लवेनेति** ।

**सु०— सन्तु कल्पनागौरवदृष्टहान्यदृष्टकल्पनाः । ततः किमिति चेत् । तत्किं कल्पनागौरवादिकं दूषणमेव न भवति, किंवा भवति दूषणम् । किन्तु दोषोन्नायकत्वेनैवेति । आद्यं निराकरोति** दृष्टेति ।

**अनु०—** दृष्टहानिरदृष्टस्य कल्पनेत्येव दूषणम् ॥

**इतिशब्द आद्यर्थे । तेन कल्पनागौरवं संगृह्यते । दूषणमेवेति योजना । कुत इत्यत आह** यदेति ।

यदा तदधिको दोषो विद्यते को नु वादिनाम् ॥

यदाशब्दो **यस्मादित्यर्थे** । तदधिकः **तदतिरिक्तः** । किमाक्षेपे । **नु वितर्के** । वादि-नामिति । **वैपरीत्यलक्षणया परिहासः । अनिष्टप्रसञ्जनार्थं वा । एतदुक्तं भवति । यदि दृष्टहान्यादिकं न दूषणं तदाऽसिद्ध्यादिकमपि कुतो दूषणमिति वक्तव्यम्** । अङ्गवैकल्यहेतुत्वा-

दिति चेत् । अथ विकलाङ्गमपि कुतो न साधनम् । तथा सत्याकाशादीनामनित्यतादिक-मापद्येत, तच्च प्रमाणविरुद्धमिति चेत् । स्वीकृतं तर्हि दृष्टहानादेर्दोषत्वम् ।

अङ्गविकलस्याप्यनुमानत्वेऽप्रामाणिकान्यनेकानि प्रसज्यन्त इति चेत् । तदिदमदृष्ट-कल्पनं कल्पनागौरवं च । विकलाङ्गं च साधनं चेति व्याहतमिति चेत् । कथं व्याहतम् । सकलाङ्गस्यैव साधकत्वदर्शनाद्विकलाङ्गस्य अदर्शनादिति चेत् । दृष्टहान्यादिकमेवैतत् । अथ मा भूदसिद्ध्यादिकं दूषणमिति ब्रूयात् । तदा वादित्वमेव न स्यात् । दूष्यपक्षाभावात् । तदभावे साध्यस्याप्यभावादिति । द्वितीयस्याप्येतदेवोत्तरम् । दृष्टहानिरिति ।

अत्रैतदेव दूषणम् । न तु दोषान्तरोन्नायकत्वेनेति यथास्थित एव संबन्धः । तत्र हेतुमाह यदेति ।

यदा दृष्टहान्यादिकमुद्भाव्येत तदा ततः किमित्याकाङ्क्षायां तदधिकस्तदुन्नेयो दोषः को नु वक्तव्यो विद्यते न कोऽपि । योऽप्युच्येत तस्यापि दृष्टहान्याद्यनतिरेकादिति भावः ।

शे० — ननु चोक्तरीत्या भेदत्रैविध्यस्य निरस्तत्वादुत्तरवाक्यानर्थक्यम् । न च दृष्टहान्या-देर्दोषत्वव्युत्पादनार्थं तदिति वाच्यम् । तद्व्युत्पादनस्य प्रकृतासंगतत्वादित्यतः सङ्गतिमाह **सन्त्विति** । ततः किमिति शङ्काग्रन्थस्योभयथा तात्पर्यसंभवाद्विकल्पयति **तत्किमिति** ॥ **दूषणमेवेति** । प्रतिज्ञायां हेतूक्त्यर्थं उत्तरवाक्यमित्यतो नानर्थक्यमिति भावेन तथा अवतारयति **कुत इतीति** । कालार्थत्वस्य प्रकृतानुपयोगादाह **यदाशब्द इति** । यदाशब्दस्तु हेत्वर्थे इत्यभिधानादिति भावः । दृष्टहान्यादेरदूषणत्ववादिनं प्रति तदन्यस्य असिद्ध्यादेरदूषणत्वापादनेनैव चरितार्थत्वात् अधिकपदोपादानमनर्थकमित्यतस्तत्प्रकृतोपयोगितया व्याचष्टे **तदधिक इत्यादि** । तत्रा-पर्यवसित इत्यर्थः ॥ **किमाक्षेप इति** । उत्तरत्र परिहाराभावेन प्रश्नार्थत्वायोगादिति भावः । वादिनामित्येतत्सार्थक्याय पक्षान्तरमाह **अनिष्टेति** । कथं सर्वदोषाणां दृष्टहान्यादित्वं येन तदतिरिक्तः कोऽपि न दोष इत्याक्षेप उपपद्येतेत्यत आह **एतदुक्तं भवतीति** । अङ्गवैकल्यस्येति कर्मणि षष्ठी बोध्या । तथा चाङ्गवैकल्यं प्रति हेतुत्वादित्यर्थः । अङ्गवैकल्यहेतुत्वादिति पाठः सुगमः ॥ **अनि-त्यत्वादिकमिति** । कृतकत्वादिनेति शेषः । अङ्गविकलस्याप्यनुमानत्व इति पाठः । अङ्गवैकल्य-स्याप्यनुमानत्व इति क्वचित्पाठः । तत्र स्वार्थे प्रत्यय इति ज्ञेयम् ॥ **अप्रामाणिकान्यनेकानीति** । 'वस्तुत्वात्तुरगः शृङ्गी पुष्पवत्खं सुतैर्युता । चित्रिणी च रसः षष्ठो रसत्वात्सोत्तरो भवे'दित्यादौ व्युत्पादितानि तुरगशृङ्गित्वादीनीत्यर्थः । दृष्टहान्यादिकम् आदिपदेनादृष्टकल्पनपरिग्रहः ॥ **यथास्थित**

**एव संबन्ध इति** । यथास्थित एव एवशब्दसंबन्ध इत्यर्थः ॥ **अनतिरेकादिति** । उक्तरीत्या दृष्टहान्यादावेव पर्यवसानादित्यर्थः ।

**स० — किंशब्दस्य आक्षेपार्थत्वं चेति** । अङ्गवैकल्यस्येति क्वचित्पाठः । तत्र कर्मणि षष्ठी, तथाचाङ्गवैकल्यं प्रति हेतुत्वादित्यर्थ इति द्रष्टव्यम् ।

**प० — अनित्यतादिकमिति** । कृतकत्वादिहेतुनेति भावः । ननु दूष्यपक्षाभावेऽपि स्थाप्यपक्षभावात्कथमवादितेत्यत आह **तदभाव इति** । दूष्यपक्षाभाव इत्यर्थः ॥ **द्वितीयस्यापीति** । दोषोन्नायकत्वपक्षस्यापीत्यर्थः ।

**या० — तदतिरिक्त इति** । तत्रापर्यवसित इत्यर्थः ॥ **अनित्यताऽऽदिकमिति** । कृतकत्वादिनेति शेषः ॥ **अप्रामाणिकान्यनेकानीति** । 'वस्तुत्वात्तुरगः शृङ्गी पुष्पवत्खं सुतैर्युता । चित्रिणी च रसः षष्ठो रसत्वात्सोत्तरो भवेदि'त्याद्यनुमानैरिति शेषः । **अनतिरेकादिति** । उक्तरीत्या दृष्टहान्यादावेव पर्यवसानादित्यर्थः ॥

**श्री० — अङ्गेति** । पक्षधर्मतादीत्यर्थः ॥ **तर्हि दृष्टेति** । प्रमाणदृष्टाकाशादिनित्यताहानेरित्यर्थः ॥ **व्याहतमिति चेदिति** । तथाच न दृष्टहानिरिति भावः । कुत इति चेत्तत्राह ॥ **दूष्येति** । वादिना ह्यसिद्ध्यादिदूषणेन परपक्षो दूषणीयः । तस्य च यद्यदूषणत्वं तर्हि दूषणोपायाभावेन. दूषणीयपक्षाभाव एव प्राप्तः । ततोऽपि किम् । न हि स एव दोष इति तत्राह **तदभाव इति** । दूष्यपक्षाभाव इत्यर्थः । वादिना हि स्वपक्षः साधनीयः । तत्तदा साधनीयः यदि कश्चित्स्वपक्षविरोधी पक्षः स्यात् । न च स दूष्यः पक्ष उक्तरीत्याऽस्ति । तथाच साध्यस्य साधनीयस्य पक्षस्याभावः प्राप्तः । तथाच वादित्वं न स्यादिति युक्तमित्यर्थः ॥ **यथास्थित एवेति** । न पूर्ववद्दूषणमेवेति व्यत्यास इत्यर्थः ।

**सु० — अन्योन्याभावस्य भावस्वभावत्वे, धर्मधर्मिभावस्तच्छब्दानां सहप्रयोगः । कदाचिद् दृष्टेऽपि वस्तुनि तददर्शनमित्यादिकं न स्यादिति, तृतीयस्य प्रागुक्तमेव परिहारं स्मारयति** भावेति ।

**अनु०** — भावाभावस्वरूपास्तु विशेषा एव वस्तुनः ॥
अभिन्ना एव संग्राह्या व्यवहारप्रसिद्धये ॥

**भावग्रहणेन अतृत्वादिष्वप्ययं परिहारोऽनुसन्धेय इति दर्शयति । भावाभावस्वरूपा अतृत्वादयोऽदृश्यत्वादयश्च यद्यपि ब्रह्मणाऽभिन्ना एव । तथाऽपि धर्मधर्म्यादिव्यवहारप्रसिद्धये वस्तुनो धर्मिणो विशेषा एवातिशया एव संग्राह्याः । न वस्तुतन्मात्रमिति । इदमुक्तं भवति ।**

अत्तृत्वादीनामदृश्यत्वादीनां च ब्रह्मस्वरूपत्वं तावच्छ्रुत्यादिसिद्धम् । अस्ति च धर्मधर्म्यादिव्यवहारोऽपि प्रमितः । न चान्यतरस्यापि बाधोपपन्ना । ततस्तदन्यथाऽनुपपत्त्या सविशेषाभेदोऽङ्गीकरणीयः । विशेषस्य चाभिन्नेऽपि भेदनिमित्तव्यवहारनिर्वाहकत्वं स्वरूपग्राहकप्रमाणेनैव सिद्धमिति ।

अत्रैके, गुणक्रियादीनां द्रव्येणात्यन्तभेदं समवायं चाङ्गीकृत्य व्यवहारानुपपादयन्तः श्रुतीनामुपासनार्थत्वं अनागन्तुकार्थत्वं वा, वदन्तो विशेषं नाभ्युपगच्छन्ति । अपरे तु, भेदाभेदाभ्यां व्यवहारनिर्वाहं पश्यन्तः केवलभेदप्रतिषेधं च श्रुतीनामर्थं ब्रुवाणा न विशेषमिच्छन्ति । अन्ये तु, अखण्डमेव ब्रह्माभ्युपगम्य धर्मधर्म्यादिव्यवहाराः सर्वेऽप्यविद्याऽऽरोपनिमित्ता इति मन्यमाना विशेषमवजानते । तत्र भेदवादिना भेदाभेदवादिना च विशेषमङ्गीकारयति यथेति ।

यथैकः समवायोऽपि भेदाभेदौ च वस्तुनि ॥
अङ्गीकार्या विशेषेण स्थानेषु व्यवहर्तृभिः ॥

स्थानेषु स्वशास्त्रप्रदेशेषु एकः समवाय इति वस्तुनि भेदाभेदाविति च व्यवहर्तृभिर्यथा ते समवायभेदाभेदा विशेषेण विशेषवन्तोऽङ्गीकार्यास्तथा भावाभावस्वरूपाश्चेति योजना ।

एतदुक्तं भवति । धर्मधर्मिभेदवादिना तावदेकः समवाय इति व्यवह्रियते । तत्त्वं भावेनेति सूत्रितत्वात् । तत्र समवायस्यैकत्वं किं ततो भिन्नमुत तत्स्वरूपम् । नाद्यः । समवाये द्रव्यगुणादेरसंभवात् । द्वितीये तु कथं सहप्रयोगः । षष्ठीव्यवहारो वा । औपचारिक इति चेन्न । समवायैकत्वसाधनप्रयासवैयर्थ्यापत्तेः । ततो गत्यन्तराभावात्सविशेषाभेदोऽङ्गीकार्यः । तथा च किं ब्रह्मणि श्रुतीनामन्यपरत्वं प्रकल्प्य भेदसमवायकल्पनया । अन्ततोऽप्यङ्गीकार्येण विशेषेणैव सर्वस्योपपत्तेः । समवायप्रतियोगिकभेदाभावः समवायस्यैकत्वमिति चेत् । तथाऽपि समवायस्येति षष्ठ्यर्थस्य पृथगभावेन तत्र विशेषस्याङ्गीकार्यत्वात् । यस्तु भेदवादी समवायेऽप्येकत्वसङ्ख्यामङ्गीकरोति, तेनापि समवायस्य संबन्धोऽङ्गीक्रियते, न वा । आद्ये किं स एव, समवायान्तरं वा । न प्रथमः । संबन्ध्यतिरिक्तसंबन्धाभावेनैकः समवाय इति व्यवहारानुपपत्तेः । अत एव न तृतीयः । स्वनिर्वाहकत्वे पुनः सविशेषत्वमेवाङ्गीकरणीयम् । न द्वितीयः । एकः समवाय इत्यस्यानुपपत्तेः ॥

शे० — तृतीयस्येति । विरोधात्, प्रमाणाभावादिति, पक्षद्वयापेक्षया बाधकसद्भावादिति प्राग्विकल्पिततृतीयस्येत्यर्थः ॥ प्रागिति । जन्माधिकरण इत्यर्थः ॥ उक्तमिति । 'अतोऽनन्तगुणं

ब्रह्मे'त्यादिनेति शेषः । अदृश्यत्वाद्यभावाख्यमित्यदृश्यत्वाद्यभावधर्माणामेवेह भगवद्विशेषताया वक्तव्यत्वाद् भावाभावस्वरूपा इति भाष्ये भावग्रहणानर्थक्यमित्यत आह **भावग्रहणेनेति** ॥ **अतिशया एवेति** । ब्रह्मणा सविशेषाभिन्ना एवेत्यर्थः । न त्वेत एव तद्विशेषा इति भ्रमितव्यम् । धर्माणामन्यत्र सविशेषाभिन्नत्वव्युत्पादनेन विशेषाभाववस्त्वसिद्धिरिति द्रष्टव्यम् । नन्वचूत्वादीनामदृश्यत्वादीनां च कुतो ब्रह्मणा सविशेषाभिन्नत्वं, येन धर्मधर्म्यादिव्यवहारसंभव इत्यत आह **इदमुक्तं भवतीति** । **श्रुत्यादिसिद्धमिति** । 'एकधैवानुद्रष्टव्यमि'त्यादिश्रुतिसिद्धमित्यर्थः ॥ **न चेति** । अगृह्यमाणविशेषतयाऽन्यतरप्राबल्याद्यनिर्णयादिति भावः । नन्वभिन्ने वस्तुनि भेदकार्यनिर्वाहकत्वं विशेषस्य कुतः प्रमाणात्सिद्धमित्यत आह **विशेषस्य चेति** ॥ **स्वरूपग्राहकप्रमाणेनैवेति** । यथा च स्वरूपग्राहकप्रमाणेन व्यवहारनिर्वाहकत्वसिद्धिः तथा 'भेदहीने त्वपर्यायशब्दान्तरनियामकः । विशेषो नाम कथितः' इत्येतद्वाक्यव्याख्यानावसरे एतदुक्तं भवतीत्यादिना पूर्वमेव व्युत्पादितमित्यवधेयम् ॥ **व्यवहारानिति** । धर्म्यादिव्यवहारानित्यर्थः । तथा च भेदेनैवान्यथासिद्ध्या व्यवहारान्यथाऽनुपपत्तेरेवाभावात् न तया विशेषसिद्धिरिति भावः । ननु 'एकधैवानुद्रष्टव्यमि'त्यादिश्रुतिभिर्ब्रह्मण्यभेदस्यैव सिद्धत्वात्कथं भेदेन व्यवहारनिर्वाह इत्यतः स्यादेवं यदि तासां श्रुतीनां वस्तुतत्वपरत्वं स्यात् । न चैतदस्तीत्याह **श्रुतीनामिति** ।

---

**केवलभेदप्रतिषेधं चेति** । आत्यन्तिकभेदप्रतिषेधमित्यर्थः । ननु भेदवादिनः स्वशास्त्रप्रदेशेऽ**एकः समवाय** इति व्यवहारस्यैवासिद्धेः, सिद्धत्वे वा समवायैकत्वयोर्भेदेनैव तद्व्यवहारसम्भवात् अभेदे वा घटस्य स्वरूपमित्यादिवद् औपचारिकत्वोपपत्तेर्न तद्व्यवहारानुरोधेनैकत्वस्य समवायेन सविशेषाभिन्नत्वसिद्धिरित्यत आह **एतदुक्तं भवतीति** ॥ **सूत्रितत्वादिति** । सप्तमाध्याये वैशेषिकेणेति शेषः । तत्त्वमेकत्वं भावेन सत्तया व्याख्यातम् । 'यथैका एव सत्ता सर्वत्र सद्बुद्धिप्रवर्तिका । तथैक एव समवायः सर्वत्र समवेतबुद्धिप्रवर्तकः' इत्युदाहृतसूत्रार्थः । एकत्वं समवायाद्भिन्नमिति पक्षेऽपि तत्किं द्रव्यं किंवा गुणः, उत कर्म, अथवा सामान्यम् आहोस्विद्विशेष इति विकल्पान्मनसि निधाय सर्वान्दूषयति **समवाय इति** । आदिपदेन कर्मसामान्यविशेषाणां संग्रहः ॥ **सहप्रयोग इति** । एकः समवाय इति सहप्रयोग इत्यर्थः ॥ **षष्ठीव्यवहारो वेति** । समवायस्यैकत्वमिति षष्ठीव्यवहार इत्यर्थः । इदं चैकः समवाय इति मूलं समवायस्यैकत्वमिति व्यवहारस्योपलक्षणमित्यभिप्रेत्येति ज्ञेयम् ॥ **औपचारिक इति** । घटस्य स्वरूपमिति व्यवहारवत् एकः समवाय इति समवायस्यैकत्वमिति वा व्यवहार औपचारिक इत्यर्थः ॥ **प्रयासवैयर्थ्यापत्तेरिति** । समवायैकत्वसाधनाय 'तत्त्वं भावेने'ति सूत्रनिर्माणप्रयासवैयर्थ्यापत्तेरित्यर्थः ।

**श्रुतीनामिति** । 'एकधैवानुद्रष्टव्यमि'त्यादिश्रुतीनामित्यर्थः ॥ **अन्यपरत्वमिति** । उपासनार्थत्वानागन्तुकार्थत्वरूपमित्यर्थः ॥ **सर्वस्योपपत्तेरिति** । धर्मधर्म्यादिव्यवहारस्याप्युपपत्तेरित्यर्थः । एकत्वं समवायाद्भिन्नमेवास्तु । न चोक्तदोषः । अभावरूपत्वाभ्युपगमात् । तथा च समवायभिन्नस्य द्रव्यगुणादिरूपभावस्य समवायेऽसम्भवेऽप्यभावरूपस्य तस्य समवाये नासम्भव इत्यभिप्रेत्य शङ्कते **समवायेति** ॥

**षष्ठ्यर्थस्य पृथगभावेनेति** । देवदत्तस्य दण्ड इत्यादौ सम्बन्धिव्यतिरिक्तस्यैव सम्बन्धस्य षष्ठ्यर्थत्वदर्शनात् । प्रकृते च तदसम्भवात्सम्बन्धिन एव सम्बन्धस्य षष्ठ्यर्थसम्बन्धत्वं वाच्यम् । तदपि विशेषाभावे नोपपादयितुं शक्यमिति तदर्थं विशेषस्याङ्गीकर्तव्यत्वादित्यर्थः ॥ **यस्त्विति** । भेदवाधेकदेशीत्यर्थः । सङ्ख्यायाः तन्मते पदार्थान्तरतया, गुणत्वाभावेन, समवायस्यैकत्वसङ्ख्यावत्त्वमविरुद्धमिति भावः । **सम्बन्ध इति** । एकत्वसङ्ख्ययेति शेषः ॥ **एकः समवाय इति** । दण्डीत्यादावतिरिक्तसम्बन्धस्य सत्त्व एव विशिष्टव्यवहारदर्शनेन, तदभावे एकत्वविशिष्टसमवायव्यवहारानुपपत्तेरित्यर्थः ॥ **अत एव न तृतीय इति** । एकः समवाय इति विशिष्टव्यवहारस्य सम्बन्धव्यतिरिक्तसंबन्धसापेक्षत्वेन, तदभावे विशिष्टव्यवहारानुपपत्तेरेव समवायस्यैकत्वेन सम्बन्धो नेति, तृतीयोऽपि निरस्त इत्यर्थः । यद्यपि संबन्धोऽस्ति न वेति, प्राग्विकल्पितप्रकारेण सम्बन्धाभावपक्षो द्वितीयः तथाऽपि सम्बन्धास्तित्वपक्षेऽपि स एव वा, सम्बन्धान्तरं वेति, पक्षद्वयस्याभिप्रेतत्वात् तदभिप्रायेण तृतीयत्वोक्तिरिति द्रष्टव्यम् । ननु समवायस्यैकत्वेन सह सम्बन्धाभावेऽपि स्वनिर्वाहकत्वाद्युज्यत एवैकः समवाय इति व्यवहार इत्यत आह **स्वनिर्वाहकत्व इति** । विशेषानङ्गीकारे एकस्यैव निर्वाह्यत्वनिर्वाहकत्वयोरयोगादिति भावः । **न द्वितीय इति** । समवायस्यैकत्वेन समवायान्तरमिति द्वितीयो नेत्यर्थः । समवायस्य त्वन्मते एकत्वादेकत्वेन सहसमवायान्तराङ्गीकारे समवायैकत्वहान्यापत्त्या अपसिद्धान्तः स्यादित्यर्थः ।

स० — **अनागन्तुकेति** । गुणेषु ब्रह्मधर्मभूतानागन्तुकत्वसाम्येन ब्रह्माभेदव्यपदेश औपचारिक इति भावः । **तत्वंभावेनेति सूत्रितत्वादिति** । तत्वं समवायस्यैकत्वं भावेन सत्तया व्याख्यातम् । सत्तया एकत्वोपपादकन्यायेन समवायस्य एकत्वमपि व्युत्पादितप्रायमिति भावः । **सह प्रयोगः** एकः समवाय इति सहप्रयोग इत्यर्थः ॥ **षष्ठीव्यवहार इति** । समवायस्यैकत्वमिति षष्ठीव्यवहारो वेत्यर्थः । **षष्ठ्यर्थस्य पृथगभावेनेति** । देवदत्तस्य दण्ड इत्यादौ संबन्धिव्यतिरिक्तसंबन्धस्यैव षष्ठ्यर्थत्वदर्शनेन प्रकृते संबन्धिन एव तत्त्वे विशेषस्यावश्यकत्वादित्यर्थः ॥ **अत एव न तृतीय इति** । समवायस्यैकत्वसंख्यायाः संबन्धोऽस्तीति प्रथमपक्षेऽपि स एव वा समवायान्तरं वेति पक्षद्वयस्याभिप्रेतत्वात् तदभिप्रायेण तृतीयत्वं संबन्धो नास्तीति पक्षस्य द्रष्टव्यम् । अत एव संबन्धाभावादेवेत्यर्थः ॥ **न द्वितीय इति** ।

समवायान्तरमिति द्वितीयो नेत्यर्थः । **एकः समवाय इत्यस्यानुपपत्तेरिति** । समवायस्यैकत्वाङ्गीकारेण समवायस्यैकत्वेन सह समवायान्तराभ्युपगमे समवायैकत्वहान्यापत्त्या अपसिद्धान्तः स्यादिति भावः ।

**प०** — अथ बाधकसद्भावादन्योन्याभावस्य न धर्मिस्वरूपत्वमिति प्राग्विकल्पिततृतीयपक्षं विवृण्वन्नेव निराह **अन्योन्याभावस्येति** ॥ **प्रागुक्तमेवेति** । जन्मादिसूत्रोक्तमेवेत्यर्थः ॥ **बाधोपपन्नेति** । उपपन्ना बाधेत्यर्थः ॥ **श्रुतीनामिति** । एकधैवानुद्रष्टव्यम् । एकमेवाद्वितीयम् । एवं धर्मान्पृथक्पश्यन् । नेह नानास्ति किंचन । इत्यादिगुणगुण्यभेदश्रुतीनामित्यर्थः । **तत्वं भावेनेति** । तत्वं समवायस्यैकत्वं भावेन सत्तया व्याख्यातमिति गौतमसूत्रस्यार्थो वैशेषिकनये सुधायां व्यक्तः ॥ **भेदेति** । भेदसमवाययोः कल्पनयेत्यर्थः ॥ **समवायस्य संबन्ध इति** । एकत्वेन सहेति योज्यम् । न वाङ्गीक्रियत इति पक्षं निराह **अत एव न तृतीय इति** । एकत्वेन सह समवायस्य संबन्धाभावेनेत्यर्थः । समवायान्तरं वेति पक्षं निराह **न द्वितीय इति** ॥ **इत्यस्यानुपपत्तेरिति** । समवायानेकत्वस्य प्राप्तेरिति भावः ।

**या०** — **प्रागुक्तमिति** । जन्माधिकरणोक्तमित्यर्थः ॥ **श्रुतीनामिति** । अभेदश्रुतीनामित्यर्थः ॥ **अनागन्तुकेति** । तथा च गुणादिषु ब्रह्मधर्मभूताऽनागन्तुकसाम्येन ब्रह्माभेदव्यपदेश औपचारिक इति भावः ॥ **तत्त्वं भावेनेति** । तत्त्वं समवायस्यैकत्वं भावेन सत्तया व्याख्यातम् । यथैकैव सत्ता सर्वत्र सद्बुद्धिप्रवर्तिका तथा एकः समवायः सर्वत्र समवेतबुद्धिप्रवर्तक इति वैशेषिकसूत्रार्थः । एकत्वं भिन्नं चेत्तर्हि द्रव्यमुत गुणादीति विकल्पं मनसि निधायाद्यं दूषयति ॥ **द्रव्यगुणादेरिति** ॥ **सहप्रयोग इत्यादि** । एकः समवाय इत्यादिसहप्रयोगः ॥ **समवायस्यैकत्वमिति** । षष्ठीसमासप्रयोगो वेत्यर्थः । तथा चैकः समवाय इति मूलमुपलक्षणाभिप्रायमिति भावः ॥ **औपचारिक इति** । समवायातिरिक्तस्यैकत्वस्याभावेन षष्ठीप्रयोगो घटस्य स्वरूपमितिवदौपचारिक इत्यर्थः ॥ **एकत्वसाधनेति** । षष्ठीप्रयोगादेरौपचारिकत्वमाश्रित्य तयोर्निर्विशेषाभेदसमवायभेदसाधनेनैव तदभिन्नैकत्वस्यापि सिद्धिसम्भवात्तदेकत्वसाधनाय तत्त्वं भावेनेति सूत्रनिर्माणप्रयासवैयर्थ्यापत्तेरित्यर्थः । न हि घटसिद्ध्यनन्तरं तत्स्वरूपसाधनाय पुनः प्रेक्षावान्प्रवर्तत इति भावः ॥ **समवायप्रतियोगिकेति** । तथाच समवायभिन्नस्य द्रव्यगुणादेर्भावस्याभावेऽप्यभावरूपमेकत्वं भिन्नमेव तत्राङ्गीक्रियत इत्यर्थः ॥ **पृथगभावेनेति** । घटस्य रूपमित्यादावतिरिक्तसम्बन्धस्यैव षष्ठ्यर्थत्वदर्शनात्प्रकृते च तदसम्भवात्सम्बन्धिन एव सम्बन्धत्वं वाच्यम् । तच्च विशेषाभावे नोपपादयितुं शक्यमिति तदर्थं विशेषस्याङ्गीकार्यत्वादिति भावः ॥ **यस्त्विति** । प्राभाकर

इत्यर्थः । संख्यायास्तन्मते पदार्थान्तरत्वमेव न गुणत्वमिति भावः ।' **सम्बन्ध इति** । एकत्वेनेति शेषः ॥ **एकः समवाय इति** । दण्डित्वादावतिरिक्तसम्बन्धवत्त्वेव विशिष्टप्रत्ययदर्शनेन तदभावे एकत्व-विशिष्टसमवायव्यवहारानुपपत्तेरित्यर्थः ॥ **न तृतीय इति** । सम्बन्धो नेत्ययं पक्ष इत्यर्थः । यद्यपि सम्बन्धो नेति पक्षो द्वितीयतया प्राग्विकल्पितः । तथाऽपि सम्बन्धोऽस्तीति प्रथमपक्षेऽपि स एव वा समवायान्तरं वेति पक्षद्वयस्योक्तत्वात्तदभिप्रायेणास्य तृतीयत्वमिति द्रष्टव्यम् ॥ **एकः समवाय इत्यस्येति** । समवायान्तराङ्गीकारे एकः समवाय इति सिद्धान्तस्यानुपपत्तेरित्यर्थः ।

श्री०— **प्रागुक्तं** द्वितीयाधिकरणोक्तम् ॥ **तृतीयस्येति** । बाधकसद्भावादिति तृतीयपक्षस्ये-त्यर्थः । **द्रव्येण** ईश्वरेण ॥ **समवायं चेति** । मेरुमन्दरवदत्यन्तभिन्नयोर्धर्मधर्मिभावव्यवहारघटना-येत्यर्थः । **श्रुतीनां** 'एवं धर्मानि'त्यादीनाम् । एवमुत्तरत्रापि । विशेषवतोऽङ्गीकार्यादित्यर्थः । **ततः** समवायात् । **सहेति** । एकः समवाय इति सहप्रयोगः समवायस्यैकत्वमित्यत्र भेदगर्भषष्ठीप्रयोग इत्यर्थः ॥ **समवायेति** । समवायस्यैकत्वं मुख्यमित्यङ्गीकृत्य तत्साधनं महता प्रयासेन कृतं, तन्न-स्यात् । न ह्यौपचारिकोऽर्थ एतावता प्रयासेन साध्यमानो दृष्ट इत्यर्थः ॥ **तथाऽपीति** । समवायस्यै कत्वं नाम समवायप्रतियोगिकभेदाभाव इत्यत्र षष्ठ्यर्थसम्बन्धस्य पृथक् समवायैकत्वरूपसम्बन्धयति-रिक्तस्य संयोगादिरूपस्याभावेन स्वरूपत्वमेवाङ्गीकार्यम् । तत्र च भेदकार्यनिर्वाहाय विशेषोऽङ्गीकार्य इति भावः । समवायस्येत्यनन्तरमेकत्वसङ्ख्यायाश्चेति शेषः ॥ **व्यवहारेति** । एक इत्यस्यैकत्ववानित्यर्थ-कत्वेन भेदसम्बन्धव्यवहारेत्यर्थः ॥ **अत एव न तृतीय इति** । समवायैकत्वयोः सम्बन्ध एव नास्तीति तृतीयः पक्षोऽपि एकः समवाय इति सम्बन्धव्यवहारानुपपत्त्याऽयुक्त इत्यर्थः । प्रथमपक्षस्य द्वेधा विकल्पितत्वात्तृतीय इत्युक्तम् ।

ननु प्रथमतृतीयपक्षयोः समवायस्यैकत्वेऽपि स्वस्मिन् भेदघटितसम्बन्धव्यवहारनिर्वाहकत्वरूप-स्वभावोऽङ्गीक्रियते अतो न दोष इति चेत्तत्राह ॥ **स्वनिर्वाहकेति** । अभिन्नस्य भेदकार्यकारित्वं विशेषं विना न युक्तमित्यर्थः । समवायस्यैकत्वसङ्ख्यया समवायान्तरमेव सम्बन्धोऽङ्गीक्रियत इति द्वितीयपक्षं प्रतिषेधति ॥ **न द्वितीय इति** ॥ **एक इति** । सम्बन्धिभूतसम्बन्धभूतसमवायद्वयस्य प्राप्त्या एक इत्यस्यानुपपत्तेरित्यर्थः ।

च०— **एके** नैयायिकाः । **श्रुतीनां** एकधैवानुद्रष्टव्यमित्यादीनाम् । **अपरे** भास्करादयः । **अन्ये** मायावादिनः । **तत्वं भावेनेति** । तत्वं समवायस्यैकत्वं भावेन सत्तया व्याख्यातम् । एकैव सत्ता यथा सार्वत्रिकसद्बुद्धिगोचरस्तथैक एव समवायः सार्वत्रिकसमवेतत्वोपरक्तप्रतीत्यालम्बन इति वैशे-षिकयोगार्थः । भिन्नत्वकल्पेऽपि तर्त्कि द्रव्यं गुणादिकं वेति वितर्कद्वयमनुसन्दधान आह **द्रव्यगुणादे-**

रिति ॥ **सहप्रयोग इत्यादि** । एकवाक्यघटकतयैकसमवायपदयोरेकत्वान्वयिसमवायपदयोरेकत्वान्वयिसमवायनिरूपिताधेयतार्थकषष्ठ्याश्च प्रयोगो वेत्यर्थः ॥ **औपचारिक इति** । चैत्रस्य स्वामित्वादाविव षष्ठ्यर्थसंबन्धहेतुभूतभेदाभावेन राहोः शिर इत्यादिवदभेदार्थक इत्यर्थः ॥ **प्रयासेति** । सूत्रनिर्माणरूपप्रयासेत्यर्थः । **श्रुतीनाम्** एकधैवानुद्रष्टव्यमित्यादीनाम् ॥ **समवायप्रतियोगिकेति** । समवायवृत्तितद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्त्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः । तेन व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य प्रत्येकवृत्तित्वेऽपि तादृशधर्मावच्छिन्नभेदाभावस्य वस्त्वन्तरसाधारण्येऽपि न क्षतिः । वैशिष्ट्यावच्छिन्नाभाववारणायावच्छेदकतापर्याप्तिरपि निवेशनीया । एवं संबन्धान्तरनिबन्धनो दोषः प्रतियोगितायां संबन्धविशेषणावच्छिन्नत्वविवक्षया निरसनीयः । **यस्तु भेदवादीति** । एतन्मते संख्यायाः पदार्थान्तरतया गुणत्वानुपगत्या समवायस्य तदाश्रयत्वं सङ्गच्छत इति भावः । **संबन्ध इति** । एकत्वसंख्याप्रतियोगिकः समवायानुयोगिक इत्यर्थः ।

**सु०— किं च वस्तुनि समवाय इति कथम् । न ह्यवयवावयव्यादीनां संबन्धोऽस्ति यत एकः समवायः । स्वनिर्वाहकत्वे तूक्तम् । अपि चैकस्वभाव एव समवायः । स कथमवयवादीनाधारत्वेनावयव्यादीनाधेयत्वेन नियच्छेत् । अवयवादीनां स्वभावभेदादिति चेत् । अलं तर्हि समवायेन । अथ समवायस्यैव विचित्रस्वभावत्वं तदा सविशेषत्वमेवेति । भेदाभेदवादिना त्ववश्यमङ्गीकरणीयो विशेषः । परस्परविरुद्धयोर्भेदाभेदयोरेकत्र तमन्तरेण अनुपपत्तेः । किञ्च भेदाभेदयोरपि वस्तुना परस्परं च भेदाभेदान्तराभ्युपगमेऽनवस्था । स्वनिर्वाहकत्वे तु विशेषाङ्गीकारः । भेदे, वस्तुनि भेदाभेदाविति व्यवहारानुपपत्तिः । वस्तुना तयोः संबन्धाभावात् । अत्यन्ताभेदेऽपि** वस्तुनि भेदाभेदा**वित्याधाराधेयभावो द्विवचनं चानुपपन्नं स्यात् । वस्तुतन्मात्रत्वात् । ततश्च तन्निर्वाहार्थमवश्यमङ्गीकरणीये विशेषे तत एव ब्रह्मणि सर्वस्योपपत्तौ किं भेदाभेदाभ्युपगमेनेति । यथा च तन्तुपटादौ भेदाभेदाभ्युपगमस्तद्वक्ष्यामः ।**

**शे०**— भाष्ये समवाय इत्यस्य वस्तुनीत्यनेनाप्यन्वयमभिप्रेत्य दूषणान्तरमाह **किं चेति** । वस्तुन्यवयवावयव्यादिरूप इत्यर्थः । वस्तुनि समवाय इति प्रतीतौ किं बाधकमित्यत आह **न हीति** । अवयवावयव्यादीनां संबन्ध इत्यत्र समवायेन सहेति शेषः । आधाराधेयताप्रयोजकसंबन्धसद्भाव एव भूतले घट इत्याधाराधेयभावप्रतीतिदर्शनात् । प्रकृते चावयवावयव्यादिरूपस्य वस्तुनः समवायस्य चाधाराधेयभावप्रयोजकसंबन्धाभावात् न वस्तुनि समवाय इत्याधाराधेयभावप्रतीतिर्युक्तेत्यर्थः । कुतो न

वस्तुसमवाययोः संबन्ध इत्यतः, स किं संबन्धिभूतः समवाय एव वा, संबन्ध्यतिरिक्तं समवायान्तरं वा, नाद्यः । संबन्ध्यतिरिक्तसंबन्धसद्भाव एव भूतले घट इत्याधाराधेयभावप्रतीतिदर्शनेन, प्रकृते तदभावेन, वस्तुनि समवाय इत्याधाराधेयभावप्रतीत्ययोगात् । नान्त्य इत्याह **यत इति** । यतः एकः समवायोऽतो न वस्तुनः समवायेन समवायान्तरं संभवतीति योज्यम् । वस्तुसमवाययोः समवायान्तराङ्गीकारे समवायैकत्वभङ्गापत्त्या अपसिद्धान्त इति भावः । ननु वस्तुनः समवायेन सह संबन्धाभावेऽपि समवायस्य स्वनिर्वाहकत्वाद्युज्यते आधाराधेयभावप्रत्यय इत्यत आह **स्वनिर्वाहकत्व इति ॥ उक्तमिति** । स्वनिर्वाहकत्वे पुनः सविशेषत्वमङ्गीकरणीयं, विशेषमन्तरेणैकस्यैव निर्वाहकत्वनिर्वाह्यत्वायोगादित्युक्तमित्यर्थः । भाष्ये **एक** इत्यस्यैकस्वभावत्वमर्थ इत्यभिप्रेत्य दूषणान्तरमाह **अपि चेति ॥ एकस्वभाव इति** । अविचित्रस्वभाव इत्यर्थः । स कथमवयवादीनाधारत्वेन, अवयव्यादीनाधेयत्वेन नियच्छेदिति पाठः स्पष्टार्थः । अवयवादीनामाधारत्वेनावयव्यादीनामाधेयत्वेनेति पाठे कर्मत्वाभिप्रायेण षष्ठ्याविति ध्येयम् ।

**अलं तर्हीति** । अवयवावयव्यादीनां स्वभावभेदादेवाधाराधेयभावोपपत्तेरिति भावः ॥ **सविशेषत्वमेवेति** । विशेषमन्तरेण समवायस्य विचित्रस्वभावताया एवानिर्वाहादिति भावः । ननु धर्मधर्मिणोर्भेदाभेदाङ्गीकारेणैव सर्वानुपपत्तिशमनात्किं विशेषेणेत्यत आह **परस्परेति** । ततश्च तयोरेकत्रावस्थानघटनाय भेदाभेदवादिनाऽपि विशेषोऽङ्गीकार्य एवेति भावः । न च प्रतीतत्वादेवाविरोध इति किं विशेषेणेति वाच्यम् । प्रतीतिरपि कथमुत्पन्नेति चिन्तायां वस्तुस्वभावातिशयस्यैवानुसरणीयत्वात् । यद्वैतदस्वरसादेवाह **किं चेति** । भेदाभेदौ वस्तुना परस्परं च भिन्नाभिन्नौ उत भिन्नौ किंवाऽत्यन्ताभिन्नाविति विकल्पान्मनसि निधायाद्यं दूषयति **भेदाभेदयोरपीति ॥ वस्तुनेति** । धर्मधर्मिभ्यामित्यर्थः ॥ **अनवस्थेति** । तयोरपि भेदाभेदयोर्वस्तुना परस्परं च भेदाभेदौ, एवं तयोरपि भेदाभेदयोः, इत्यपर्यवसितपरंपराश्रयणेऽनवस्थेत्यर्थः । न च भेदाभेदयोर्भेदाभेदान्तराभ्युपगमेऽपि नानवस्था प्रसज्यते उत्पत्तिज्ञप्त्यप्रतिबन्धकत्वादिति वाच्यम् । विशेषणप्रतीतिमन्तरेण विशिष्टप्रत्ययानुपपत्त्या ज्ञप्तिप्रतिबन्धकत्वसंभवादिति भावः ।

ननु भेदाभेदयोर्वस्तुना परस्परं च भेदाभेदाङ्गीकारेऽपि नानवस्था । तयोर्भेदाभेदयोर्भेदाभेदान्तराभावेऽपि स्वनिर्वाहकत्वोपपत्तेः इत्यतः, एवं तर्हि विशेषानभ्युपगमे स्वनिर्वाहकत्वस्य वक्तुमशक्यत्वात् स्वनिर्वाहकत्वोपपादकत्वेनैव विशेषसिद्धेर्व्यर्थो भेदाभेदाङ्गीकार इत्याशयेनाह **स्वनिर्वाहकत्वे त्विति** । भेदाभेदयोर्वस्तुना परस्परं च भेद इति, द्वितीयं प्रत्याह **भेद इति ॥ व्यवहारानुपपत्तिरिति** । आधाराधेयभावव्यवहारानुपपत्तिरित्यर्थः । कुत आधाराधेयभावव्यवहारानुपपत्ति-

रित्यतः, सति संबन्धे, कुण्डबदरादौ तद्व्यवहारदर्शनात् असति च तस्मिन् मेरुमन्दरयोस्तददर्शनाद्भेदाभेदयोश्च वस्तुना संबन्धाभावान्न तद्व्यवहारो युज्यत इत्याह **वस्तुनेति** । तृतीयं प्रत्याह **अत्यन्ताभेद इति** । भेदाभेदयोर्वस्तुना परस्परं चात्यन्ताभेद इत्यर्थः । अत्र वस्तुना भेदाभेदयोरत्यन्ताभेदादाधाराधेयभावानुपपत्तिर्भेदाभेदयोरत्यन्ताभेदाच्च भेदाभेदाविति द्विवचनानुपपत्तिरिति विवेकः । अन्यथैकस्मिन्नपि घटे आधाराधेयभावो द्विवचनं च स्यादिति भावः ॥ **तन्निर्वाहार्थमिति** । आधाराधेयभावद्विवचननिर्वाहार्थमित्यर्थः ॥ **सर्वस्येति** । धर्मधर्म्यादिव्यवहारस्येत्यर्थः । नन्वेवं तन्तुपटयोरप्यत्यन्ताभेदमेवाङ्गीकृत्य विशेषबलेनैव भेदकार्यनिर्वाहसंभवाद्भेदाभेदौ न स्यातामिति कथं सिद्धान्ते तदभ्युपगम इत्यत आह **यथा चेति** ॥ **वक्ष्याम इति** । 'अंशिनोंऽशैरभेदोऽयमंशेन तु भिदाऽभिदे'त्यादिना वैशेषिकपरीक्षायामिति शेषः ।

**स०— वस्तुनि** अवयवावयव्यादिरूप इत्यर्थः । अवयवावयव्यादीनामित्यत्र समवायेन सहेति शेषः । स हि न संयोगोऽनभ्युपगमात् । समवायोऽपि स एव वा समवायान्तरं वा । आद्ये संबन्धातिरिक्तसंबन्धाभावेनैकः समवाय इति व्यवहारानुपपत्तेः । समवायान्तरं चेत् तत्राह **एकः समवाय इति** । समवायैकत्वहान्यापत्त्याऽपसिद्धान्तापातादिति भावः ॥ **उक्तमिति** । स्वनिर्वाहकत्वे पुनः सविशेषमेवाङ्गीकरणीयमित्युक्तमित्यर्थः । अवयवादीनामित्यत्र कर्मणि षष्ठी । नन्वेवं तन्तुपटयोरप्युक्तन्यायेन भेदाभेदयोरसंभवेनात्यन्ताभेदमेवाङ्गीकृत्य विशेषबलेन भेदकार्यनिर्वाहोऽपि स्यात् । तथाचापसिद्धान्तः, तत्राह **यथा चेति** ।

**प०—** का कथन्ता इत्यत आह **न ह्यवयवेति** ॥ **संबन्धः** । समवायेन सहेति योज्यम् । संयोगादेरभावेऽपि समवाय एव समवायेनावयवादिवस्तुना संबन्धोऽस्त्विति चेत् । स किं अन्यः उतानन्योऽपि स्वनिर्वाहकः । आद्यो नेति भावेन तत्र हेतुमाह **यत इति** । अन्त्ये आह **स्वनिर्वाहकत्वे तूक्तमिति** । 'स्वनिर्वाहकत्वे पुन'रित्यादिना निरन्तरग्रन्थ एवोक्तमुत्तरमित्यर्थः । स्वभावभेदात् स्वभावविशेषादित्यर्थः ॥ **भेद इति** । भेदाभेदयोर्वस्तुना सहात्यन्तभेदेऽङ्गीकृते सतीत्यर्थः । नन्वेवं कथं सिद्धान्ते उपादानोपादेयगुणगुण्यादौ भेदाभेदाङ्गीकार इत्यत आह **यथा चेति** ॥ **वक्ष्याम इति** । 'इतरव्यपदेशादि'त्यधिकरणे 'अंशिनोऽपि पटाद्या ये भिन्नैरेव परस्परम् । अंशैरंशिन उच्यन्ते' इति संग्रहेणोक्तविस्तृतिपरस्य अंशिनोंशैरभेदोयमंशेन तु भिदाभिदेतिवैशेषिकनयानुव्याख्यावसरे वक्ष्याम इत्यर्थः ।

**या०—** समवाय इत्यस्य वस्तुनीत्यनेनाप्यन्वयमभिप्रेत्य दूषणान्तरमाह **किञ्चेति** ॥ **न ह्यवयवावयव्यादीनामिति** । समवायेनेति शेषः । तथा चेह कुण्डे बदराणीत्यादावतिरिक्तसम्बन्धेनैव

आधाराधेयभावप्रतीतिदर्शनात्प्रकृते तदभावात्कथं वस्तुनि समवाय इति प्रतीतिरिति भावः ॥ **यत एक इति** । अत्र समवाय इत्यस्यावृत्त्या यत इत्यध्याहारेण च मूलं योजितमिति ज्ञातव्यम् । नन्वेवमुक्तन्यायेन तन्तुपटादावपि भेदाभेदाभावप्रसङ्ग इत्यत आह **यथा चेति** । पटादेस्तन्त्वादिना पृथगनुपलम्भादिहेतुभिरभेदः खण्डितत्वेन भेदश्चाभ्युपगन्तव्य इति समयपादे वक्ष्याम इत्यर्थः ।

श्री० — भेदाभेदौ च वस्तुनीत्यत्र मूले वस्तुनीत्यस्य समवाय इत्यनेनाप्यन्वय इत्यभिप्रेत्याह । **किञ्चेति** । **वस्तुनि** अवयवादौ ॥ **समवाय इति** । अवयव्यादीनां समवाय इत्येवमवयव्यादिसमवायनिरूपितसंबन्धव्यवहारः कथमित्यर्थः ॥ कुत इत्यत आह **न हीति** । **संबन्धः** समवायनिरूपितः । कुतो नास्तीत्यत आह **यत इति** । तथाच समवायस्यैकत्वेन, अवयवादौ अवयव्यादिसमवायनिरूपितसंबन्धस्य संयोगरूपस्याभावात्समवायान्तरस्यैव वाच्यत्वे संबन्धिसंबन्धरूपसमवायद्वयप्राप्त्या एकः समवाय इत्यनुपपत्तेरित्यर्थः । एकत्वेऽपि पूर्ववत्स्वनिर्वाहकताङ्गीकारान्न दोष इति यदि ब्रूयाः तर्हि सविशेषत्वमेवाङ्गीकर्तव्यमित्युक्तमित्याह **स्वनिर्वाहकत्वे त्विति** ॥ **नियच्छेदिति** । तथा चैकस्य दीपादेः प्रकाशत्वदाहकत्वाद्यनेकस्वभावत्वेऽपि समवायरूपवस्तुन एकस्यैकस्वभावत्वस्यैवाङ्गीकारादवयवादेराधारत्वं वा अवयव्यादेराधेयत्वमेव वा घटयेन्न तूभयम् । उभयघटनास्वभावश्च त्वयाऽङ्गीकृत इति, स न युक्त इति भावः ॥ **अलमिति** । तथा चाधारत्वादेरवयवादिस्वभावत्वेनावयवादिस्वभावादेवाधाराधेयभावाद्युपपत्तौ किं तद्घटनाय समवायाङ्गीकारेणेत्यर्थः ॥ **तदेति** । एकस्यानेकस्वभावत्वं 'विशेषं विना न युक्तमित्यर्थः । यदि चैकस्यापि दीपादेरनेकस्वभावो दृष्ट इति ब्रूयाः तदाऽपि समवायस्य विचित्रस्वभावत्वरूपधर्मस्य समवायाद्भेदे संयोगसंबन्धायोगेन समवाये वाच्ये, तस्य धर्मिरूपसमवायाद्भेदे द्वित्वप्राप्त्या एक इत्यस्यानुपपत्तेरभेदेऽङ्गीकार्ये समवायस्य विचित्रस्वभावत्वमिति भेदव्यवहारानुपपत्तेस्तदर्थं स्वनिर्वाहकत्वेऽङ्गीकार्ये सविशेषत्वमेव प्राप्तमित्यर्थः । **तं विशेषम्** । ननु भेदाभेदयोर्वस्तुना परस्परं च भेदाभेदान्तराभ्युपगमे किलानवस्था, न चैवम् । किं नाम, वस्तुनिष्ठयोरेव भेदाभेदयोर्वस्तुना भेदाभेदाविति परस्परं च भेदाभेदाविति भेदव्यवहारनिर्वाहकत्वं भविष्यति । स्वनिर्वाहकत्वाङ्गीकारादित्यत आह **स्वनिर्वाहकत्वे त्विति** । भेदो भेदाभेदयोर्वस्तुना परस्परं चेत्यनुवर्तते । **द्विवचनम्** । भेदाभेदाविति द्विवचनमित्यर्थः ।

नन्वेवं चेत्तन्तुपटादावप्यत्यन्ताभेदं विशेषं चाङ्गीकृत्याशेषभेदव्यवहारस्य विशेषबलादेवोपपत्तौ सत्यां, सिद्धान्ते भेदाभेदाङ्गीकारो व्यर्थ इत्यत आह **यथा चेति** ।

**च०— एकः समवाय इति ।** दण्डीत्यादिविशिष्टव्यवहारनिर्वाहकतया विशेषणविशेष्य-प्रतियोग्यनुयोगिकस्य ताभ्यामतिरिच्यमानस्य संबन्धस्य दर्शनादिति भावः । **यथा चेति ।** पटादे-स्तन्त्वादिभिः पृथगनुपलम्भादिहेतुभिरभेदः खण्डितत्वेन भेदश्चाभ्युपगन्तव्य इति समयचरणेऽभिधास्याम इत्यर्थः ।

**सु०— अखण्डवादिनाऽपि विशेषमङ्गीकारयति** अखण्डेति ।

अनु०— अखण्डवादिनोऽपि स्याद्विशेषः

**अङ्गीकार्य इति वचनविपरिणामेन संबध्यते । नन्वखण्डवादिनोऽपि विशेषोऽङ्गीकार्य इति** व्याहतम् । **अखण्डत्वं निर्विशेषत्वमित्यनर्थान्तरत्वादित्यत उक्तम्** अनिच्छतोपीऽति ।

अनिच्छतोऽप्यसौ ॥

व्यावृत्ते निर्विशेषे तु किं व्यावर्त्यबहुत्वतः ॥ ६ ॥

**स्वाभ्युपगममात्रेणाखण्डवादित्वेऽपि न्यायप्राप्तत्वाद्विशेषाङ्गीकरणमिति । असौ पूर्वो-पपादितः । अनेन पूर्वोक्तार्थस्मरणार्थत्वादस्य न पुनरुक्तिदोष इति सूचितम् । यद्वा । यस्मिन्ननङ्गीकृते सत्यज्ञानादिपदानां पर्यायव्यर्थते स्याताम् । सत्यत्वादीनां ब्रह्मतन्मात्रत्वा-ङ्गीकारात् । अङ्गीकृते च तन्निवृत्तिः । तस्यापर्यायशब्दप्रवृत्तावभिन्नेऽपि निमित्तत्वात् । असौ इत्यङ्गीकार्यत्वहेतुसूचनम् । ननु ब्रह्मातिरिक्ते सत्यज्ञानानन्दादौ वाचकत्वशक्तिमतां सत्यादिपदानां लक्ष्यमेव ब्रह्माभ्युपगम्यते । तत्कथं पर्यायता । वाच्यार्थभेदसद्भावात् । मैवम् । सत्यज्ञानानन्तानन्दादीनां ब्रह्मातिरिक्तानां परेणानङ्गीकृतत्वात् । अस्ति कथञ्चि-त्सत्यादिकमन्यदिति चेन्न । कथञ्चित्सत्यादिकं वाच्यम् । साक्षात्सत्यादिकं तु लक्ष्यमिति वैपरीत्यस्यानुचितत्वात् । अस्तु वा कथञ्चित्पर्यायतापरिहारः । तथाऽप्येकेन पदेन लक्षित-स्यैवान्येनापि लक्षणायां व्यर्थता न परिहर्तुं शक्या । ननु च लक्ष्यार्थभेदाभावेऽपि ब्रह्म-ण्यारोपिताऽसत्यत्वादिधर्माणां व्यावर्त्यानां बहुलत्वात् तद्व्यावर्तकत्वेन सार्थक्यं पदानामित्यत आह** व्यावृत्त इति । **व्याख्यातचरमिदम् । तदेवं विशेषस्य सर्ववादिभिरङ्गीकार्यत्वात्तद्बलेन धर्मधर्म्यादिव्यवहारोपपत्तेर्युक्तम् अदृश्यत्वादिगुणानां ब्रह्मणैक्यमिति सिद्धम् ॥ १-२-६ ॥**

**शे०—** अङ्गीकार्या इत्यस्य बहुवचनान्ततया **कथमेकवचनान्तविशेषपदेन** सम्बन्ध इत्यत उक्तम् **वचनविपरिणामेनेति ।** विशेषानिच्छुत्वस्याखण्डवादिनि, भेदवादिनि, भेदाभेदवादिनि, च सत्त्वादत्रैव तदभिधानमनर्थकमित्यतो व्याघातपरिहारार्थं तदित्याशयेन व्याघातशङ्कामुत्थापयति **नन्विति ।** असा-वित्यस्यानर्थक्यं परिहर्तुमर्थं तावदाह **पूर्वोपपादित इति ।** जन्माधिकरण उपपादित इत्यर्थः । किमस्य

प्रयोजनमित्यतः पौनरुक्त्यशङ्कापरिहार इत्याह ॥ **अनेनेति** । पूर्वोक्तार्थस्मारणस्यापि प्रयोजनविशेषाभावं मन्वानः प्रकारान्तरमाह **यद्वेति** ॥ **पर्यायव्यर्थत इति** । पर्यायत्वव्यर्थत्व इत्यर्थः ॥ **अनङ्गीकृतत्वादिति** । अन्यथाऽपसिद्धान्तप्रसक्तेरिति भावः । ब्रह्मव्यतिरिक्तस्य पारमार्थिकसत्यादेरभावेऽपि व्यावहारिकस्य तस्य सत्त्वान्नापसिद्धान्त इति शङ्कते **अस्तीति** । **अनुचितत्वादिति** । अन्यथा साक्षाद्गङ्गादेः गङ्गादिपदलक्ष्यत्वं कथञ्चिद्गङ्गादेस्तु तद्वाच्यत्वमित्यपि स्यादिति भावः ॥ **लक्षितस्यैवान्येन लक्षणायामिति** । अविकलक्षणायामखण्डार्थत्वभङ्गप्रसक्तेरिति भावः ॥ **व्याख्यातचरमिति** । 'न व्यावृत्त्या प्रयोजनं । व्यावृत्तस्याविशेषत्वे' इत्येतद्व्याख्यानेनैव व्याख्यातप्रायमित्यर्थः ॥ १ — २ — ६ ॥

स० — **व्याख्यातचरमिति** । तथाच 'सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनम् । व्यावृत्तस्याविशेषत्वे' इत्येतद्व्याख्यानेनैव व्याख्यातप्रायमित्यर्थः । तथाहि व्यावृत्ते ब्रह्मणि निर्विशेषे सत्यादिपदप्रतिपादितव्यावर्तकविशेषशून्ये सति व्यावर्त्यानां असत्यत्वादीनां बहुत्वनः किं प्रयोजनम् । न किमपि । सत्यादिपदानां ब्रह्मणि व्यावर्तकसत्यत्वादिधर्माप्रतिपादकत्वे असत्यत्वादिव्यावृत्तिबोधो न लभ्यते । अतस्तदर्थम् असत्यत्वादिव्यावर्त्यबहुत्वोपन्यासो व्यर्थ इति भावः ।

प० — **पूर्वोक्तेः** । जन्मादिसूत्रोक्तेत्यर्थः । असावित्यस्यैतादृशबुद्धिस्थपरामर्शित्वरूपमर्थान्तरमाह **यद्वेति** ॥ **व्याख्यातचरमिदमिति** । जन्मादिसूत्रे सत्यज्ञानादिकेऽप्येवमित्यादिव्याख्यावसर इति भावः ॥ १ । २ । ६ ॥

या० — **पूर्वोपपादित इति** । जन्माधिकरणे उपपादित इत्यर्थः ।

**व्याख्यातचरमिति** । 'सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनम् । व्यावृत्तस्याविशेषत्वे' इत्येतद्व्याख्यानेनैव व्याख्यातप्रायमित्यर्थः । तथाहि । व्यावृत्ते ब्रह्मणि निर्विशेषे सत्यादिपदप्रतिपादितव्यावर्तकविशेषशून्येऽङ्गीकृते सति व्यावर्त्यानामसत्यत्वादीनां बहुत्वतः किं प्रयोजनं, न किमपि । सत्यादिपदानां ब्रह्मणि व्यावर्तकसत्यत्वाद्यप्रतिपादकत्वेऽसत्त्वादिव्यावृत्तिबोधालाभेन तदर्थमसत्यत्वादिव्यावर्त्यबहुत्वोपन्यासो व्यर्थ इति भावः ॥ १ – २ – ६ ॥

श्री० — **अङ्गीकृते** चेत्यत्र यस्मिन्नित्यनुवर्तते । **तन्निवृत्तिः** तयोः पर्यायव्यर्थतयोरित्यर्थः । तथाच यस्मिन्ननङ्गीकृते सति पर्यायव्यर्थते स्यातां, यस्मिन्नङ्गीकृते च तयोर्निवृत्तिः असावित्यन्वयः । पर्यायव्यर्थते स्यातामित्यस्योपपादकम् ॥ **सत्यत्वादिनामिति** । तन्निवृत्तिरित्यस्योपपादकम् । **तस्येति** ॥ **अङ्गीकार्यत्वे** विशेषस्येति शेषः । **सत्यज्ञानानन्दादाविति** । सत्ताजातिमति तद्व्याप्यज्ञानत्वादिमति चेत्यर्थः । **कथञ्चित्सत्यं** व्यावहारिकं सत्यम् । **वाच्यं** मुख्यवृत्त्या प्रतिपाद्यम् । वैपरीत्यस्यानुचितत्वादित्युक्तत्वात्कथञ्चिदित्युक्तम् ॥ १ – २ – ६ ॥

च०— **पूर्वोपपादित इति ।** जन्मादिनये उपपादित इत्यर्थः ॥ **व्याख्यातचरमिति ।** सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनम् । व्यावृत्तस्याविशेषत्वे इति प्रतीकव्याकृत्यैव व्याकृतप्रायमित्यर्थः ।

सु०— ॥ ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ **अस्याधिकरणस्य नात्रान्तर्भावः संभवति । नामात्मकशब्दसमन्वयार्थत्वात् । नापि पूर्वत्र । लिङ्गसमन्वयस्याप्यत्र सिद्धत्वात् । न चोभयबहिर्भावः । अन्यत्र प्रसिद्धशब्दविषयत्वात् । न चावक्तव्यता । समन्वयासिद्धिप्रसङ्गात् । तत्कथमित्यतो लिङ्गाधिकेत्यत्रान्तर्भावः समर्थितः । यद्वा पादद्वयार्थत्वेनैकत्र प्रवेशानुपपत्तेः पादद्वयशेषोऽयम् । अत एव पादद्वयान्ते निबन्धनमिति ज्ञापयितुं पादद्वयार्थं तावदुपसंहरति** बहुलिङ्गेति ।

अनु०— **॥ ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥**

बहुलिङ्गसमायुक्तैर्बहुभी रूढनामभिः ॥
प्रसिद्धैरन्यगत्वेन वाच्यः साक्षाज्जनार्दनः ॥
वैश्वानरादयः शब्दा अपि तद्वाचिनस्ततः ॥

**रूढेत्यस्यैव विवरणं** प्रसिद्धैरन्यगत्वेनेति । **अन्यथा यौगिकनामपरित्यागः स्यात् । एतच्च लिङ्गानामपि विशेषणम् । साक्षात् मुख्यया वृत्त्या । इदानीं वैश्वानराधिकरणतात्पर्यमाह** वैश्वानरादय इति । **आदिशब्दप्रयोगाद्वैश्वानरशब्दस्योपलक्षणत्वमिति दर्शयति ।** तत **इति सौत्रात्मशब्दादिकं परामृशति ।** तद्वाचिनः **परमेश्वरवाचिनः ।**

**ननु कथं वैश्वानरस्य विष्णुत्वनिर्धारः । पक्षान्तरेऽप्यग्न्यादिशब्दानां होमाधिकरणतावदिलिङ्गानां च श्रवणादित्यत आह** तानीति । तद्वाः **परमेश्वरविषयाः ।** ही**ति तथा दृष्ट्यु-**

अनु०— **॥ ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषविधमपि चैनमधीयते ॐ ॥**

तानि लिङ्गानि ते शब्दा अपि तद्वा हि सर्वशः ॥

**पदेशं हेतुमाचष्टे । यस्मादेवं तस्मादिति पूर्वेण वा संबन्धः । अनेन शब्दादिभ्य इति सूत्रस्य तात्पर्यमुक्तं वेदितव्यम् । ननु कथमग्न्यादिशब्दानां विष्णुपरत्वम् । अन्यत्र रूढत्वात् । न च विष्णावपि रूढिरस्तीति वाच्यम् । बहुत्वेनान्यत्र रूढेः प्रबलत्वेनाल्पपरमेश्वररूढिबाधकत्वोपपत्तेरित्यत आह** बहुलाऽपीति ।

बहुलाऽप्यङ्गरूढिस्तत्प्राज्ञरूढिं न बाधते ॥ ७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
प्रथमाध्यायस्य द्वितीयः पादः ॥ १–२ ॥

**तत् तस्मादङ्गप्राज्ञरूढित्वादेव । आनन्दमयाधि करणान्ते व्युत्पादितन्यायादिति वेति ॥**

**इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थख्ययतिना ॥**
**कृतायां टीकायां विषमपदवाक्यार्थविवृतौ द्वितीयः पादोऽयं प्रथमविषये पर्यवसितः ॥**

**इति श्रीमन्न्यायसुधायां प्रथमाध्यायस्य द्वितीयः पादः ॥ १–२ ॥**

**शे॰—ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ** ॥ बहुलिङ्गसमायुक्तेत्युत्तरभाष्यमनर्थकम् । न च पादद्वयार्थोपसंहारार्थम् तदिति वाच्यम् । तस्याप्यसङ्गतत्वात् । न चास्याधिकरणस्य पादान्तर्भावप्रतिपादनार्थत्वान्नासङ्गतिरिति वाच्यम् । अनन्तर्भावशङ्काया एवासम्भवेन,अन्तर्भावस्याव्युत्पादनीयत्वात् । सम्भवे वा अन्तर्भावस्य पूर्वमेव समर्थनादित्यतोऽनन्तर्भावशङ्काप्रदर्शनपूर्वकं पूर्वोक्तमन्तर्भावप्रकारमुपदर्श्य प्रकारान्तरेणान्तर्भावव्युत्पादनार्थत्वाच्च नोत्तरभाष्यवैयर्थ्यमित्याशयेनानन्तर्भावशङ्कामाह **अस्येति** ॥ **नामात्मकशब्देति** । वैश्वानरशब्देत्यर्थ ॥ **लिङ्गसमन्वयस्यापीति** । पाचकत्वादिलिङ्गसमन्वयस्यापीत्यर्थः ॥ **लिङ्गाधिकेत्यत्रान्तर्भावः समर्थित इति**। अन्यत्र प्रसिद्धवैश्वानरनामसमन्वयवत् अन्यत्र प्रसिद्धपाचकत्वादिबहुलिङ्गसमन्वयस्याप्यत्रोक्तेर्बह्वनुहस्य च न्याय्यत्वादत्रैव पादेऽन्तर्भाव इत्यर्थः ॥ **अत एवेति** । पादद्वयशेषत्वादेवेत्यर्थः ॥ **विवरणमिति** । अतो न प्रसिद्धैरन्यगत्वेनेत्यस्य वैयर्थ्यमिति भावः । किं तद्विवरणेनापि प्रयोजनमित्यत आह **अन्यथेति** । रूढेत्यस्य अविवरणे हि लोकतः केवलरूढानामाकाशादिशब्दानामेव तेन प्राप्त्या योगरूढानां शब्दानां परित्यागः स्यादित्यर्थः ॥ **लिङ्गानामपीति** । समासे उपसर्जनत्वेऽपि लिङ्गानां बुद्ध्या विवेकेनेदं मूले विशेषणमिति भावः ॥ **मुख्यया वृत्त्येति** । लक्षणादिव्यावृत्त्यर्थं मूले साक्षात्पदमिति भावः ॥ **उपलक्षणत्वमिति** । समानन्यायाग्न्यादिशब्दान्तरोपलक्षणत्वमित्यर्थः । आत्मशब्दादिकमित्यादिपदेन समाख्यारूपद्वितीयसूत्रोक्तसाधकस्य परामर्शः ॥ **पक्षान्तर इति** । तेजोभूतादावित्यर्थः ॥ **यस्मादेवमित्यादि** । अग्न्यादिशब्दानां होमाधिकरणत्वादिलिङ्गानां च परमेश्वरविषयत्वेन पक्षान्तरे साधकाभावाद्युक्तं वैश्वानरस्य विष्णुत्वनिर्धारणमिति पूर्वेण वा हिशब्दस्य संबन्ध इत्यर्थः । तानि लिङ्गानीत्यादेरभाष्यत्वशङ्कां परिहरति **अनेनेति** ॥ **आनन्दमयाधिकरणान्त**

इति । 'सा योगादेव लभ्यत' इत्यानन्दमयाधिकरणान्ते सा विद्वद्रूढिर्योगमविहायैवोपलभ्यते न त्वविद्वद्रूढिवत्संकेततुल्या अतोऽपि सा मुख्येत्युक्तन्यायादिति वेत्यर्थः ॥ १–२–७ ॥

॥ यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥ अस्त्वेषा भक्तियुता श्रीविद्याधीशपादयोः सेवा ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यपादाननिजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥

स० — ॐ **वैश्वानरः साधारणशब्दविशेषात्** ॐ ॥ शब्दाश्चतुर्विधाः । तत्रैव प्रसिद्धाः अन्यत्र प्रसिद्धाः, उभयत्र प्रसिद्धाः, अन्यत्रैव प्रसिद्धाश्चेति । तत्र, तत्रैव प्रसिद्धानां यथाऽवक्तव्यता तथा एतस्याप्यवक्तव्यतेति चतुर्थविकल्पाभिप्रायः ॥ **आनन्दमयाधिकरणान्त इति** । 'बहुलातिप्रयोगतः । रूढमित्येव साध्यं स्यात् रूढिर्हि द्विविधा मता । अविद्वद्विद्वदाप्त्यैव मुख्या हि विदुषां तु सा' इत्यत्रानन्दमयाधिकरणान्ते भगवतीन्द्रादिशब्दानामपि विद्वत्संबन्धिनो बहुलातिप्रयोगस्य सत्त्वेन भगवत्येव बहुला रूढिर्नान्यत्रेति व्युत्पादितन्यायादित्यर्थः ॥

---

॥ इति श्रीसुधाटिप्पणिकायां श्रीमत्सत्यव्रततीर्थविरचितायां प्रथमाध्यायस्य द्वितीयः पादः ॥

प० — ॐ **वैश्वानरः साधारणशब्दविशेषात्** ॐ ॥ पादान्तर्भावमस्यानुक्त्वा पादार्थोपसंहारो न युक्तः । तथापि पादद्वयार्थोपसंहारो व्यर्थ एवेत्यतः प्रागुक्त शङ्कापूर्वं विवृण्वन्स्मारयति ॥ **अस्येत्यादिना** ।

**समन्वयासिद्धिप्रसङ्गादिति** । ननु कथमेतत् वैश्वानरनाम्नो देवतार्थत्वे अन्तर्नयन्यायेन, जडरूपभूतार्थत्वे, आकाशनयन्यायेन न समन्वयसिद्धेरिति चेत्तत्राहुः । वैश्वानरनाम्नः समन्वयासिद्धीति नार्थोऽस्य वाक्यस्यापि तु आनन्दमयनयमारभ्यादृश्यत्वनयपर्यन्तमुक्तरूढयौगिकाशेषशब्दसमन्वयासिद्धिप्रसङ्गादित्यर्थः । सर्वशब्दानां ब्रह्मणि समन्वये लोके संव्यवहारविरोधेनान्यत्र प्रसिद्धनाम्नो रूढस्य यौगिकस्य वा कस्यापि विष्णौ समन्वयायोगादिति सर्वाक्षेपसमाधानस्य साक्षादप्यविरोधमितिसूत्रेणात्रैव समाधानात् । अत एव समन्वयासिद्धीत्येवोक्तं न तु प्रतियोगिविशेष उपात्त इति ॥ **समर्थित इति** । एतत्पादीयाद्यनये विषयमालोक्तिप्रस्तावे समर्थित इत्यर्थः ॥ **इति ज्ञापयितुं पादद्वयार्थं तावदुपसंहरतीति** । एतेन वैश्वानरनयतात्पर्यमुक्त्वा पश्चादेवोपसंहारो युक्त इति चोद्यं निरस्तम् ।

पादान्तर्भावस्याप्यनेन ज्ञापितत्वया अस्य पूर्वसङ्गतत्वात् । सन्न्यायरत्नावली–नयचन्द्रिकयोस्तु वैश्वानर-नयतात्पर्योक्तिपरतयैव बहुलिङ्गेत्यादि सर्वं योजितम् ॥ **आनन्दमयेति** । 'शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयादित्यादि'नोक्तशब्दप्रवृत्तिहेतुपौष्कल्यान्यगस्वातन्त्र्यादिन्यायैः श्रुतिस्मृतिभिश्च सिद्धां प्राज्ञरूढिं न बाधत इत्यर्थः ॥ १ । २ । ७ ॥

इति श्रीमन्न्यायसुधापरिमळे सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते

॥ प्रथमाध्यायस्य द्वितीयः पादः ॥

या० — ॥ ॐ **वैश्वानरः साधारणशब्दविशेषात्** ॐ ॥ **अन्यथेति** । रूढेत्यस्याविवरणे लोकतः केवलरूढानामाकाशादिनाम्नामेव प्राप्त्याऽऽनन्दमयादिनाम्नां योगरूढानां परित्यागः स्यादित्यर्थः ॥ **लिङ्गानामपीति** । बुद्ध्या विविक्तानामिति शेषः ॥ **उपलक्षणं त्विति** । अग्न्यादि-शब्दोपलक्षणत्वमित्यर्थः । शिष्टं भाष्ये स्पष्टम् ॥ **आनन्दमयाधिकरणान्त इति** । 'सा योगादेव लभ्यते इत्यानन्दमयाधिकरणान्ते विद्वद्रूढिर्योगमविहायैवोपलभ्यते, न त्वविद्वद्रूढिवत् सङ्केततुल्या ततोऽपि सा मुख्येत्युक्तन्यायादिति वेत्यर्थः ॥ १–२–७ ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्येण यदुपतिना विरचितायां सुधाटिप्पण्यां

॥ प्रथमाध्यायस्य द्वितीयः पादः ॥

---

श्री० — ॥ ॐ **वैश्वानरः साधारणशब्दविशेषात्** ॐ ॥ विवरणकरणे निमित्तमाह **अन्यथेति** । तथाच विवरणमकृत्वा रूढनामभिर्वाच्य इत्येवोक्ते वैश्वानरादियौगिकनाम्नः समन्वयो न सिध्येत् । विश्वनरसम्बन्धी वैश्वानर इति वैश्वानरशब्दस्य यौगिकत्वात् । अतोऽन्यगतत्वेन प्रसिद्धैरिति रूढशब्दार्थो विवृतः । तथा चान्यत्र प्रसिद्धनामलिङ्गात्मकोभयविधशब्दसंग्रहः । तेन पादद्वयार्थोप-संहारोऽयमिति ज्ञेयम् । वैश्वानरनाम्नश्चान्यत्र प्रसिद्धत्वात्तदपि गृहीतमिति भावः ॥ **एतच्चेति** । तथा चान्यगत्वेन प्रसिद्धबहुलिङ्गसमायुक्तैरिति बुद्ध्या विवेकेन योज्यम् । **पक्षान्तरे** पूर्वपक्षे । ननु विश्वनरशब्दात्तस्येदमिति सम्बन्धार्थे अण्प्रत्यये णित्वादादिवृद्धौ वैश्वनर इति स्याद्वैश्वानर इति कथमिति चेत् । उच्यते । 'विश्वस्य वसुराटोः । मित्रे चर्षौ नरे संज्ञायाम्' । वसुराट्शब्दयोः परतो, मित्रशब्दे च परे, नरशब्दे च परे विश्वशब्दस्य दीर्घः स्यात् । उदाहरणं विश्वावसुः । विश्वाराट् विश्वामित्रः विश्वानरः । तथाच विश्वानरशब्दादण्प्रत्यये विश्वानरसम्बन्धी वैश्वानर इति भवतीति ज्ञेयम् ॥१–२–७॥

इति यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽगृहीतवाक्यार्थविवरणे

॥ प्रथमाध्यायस्य द्वितीयः पादः ॥

**च० — ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ॥ लिङ्गसमन्वयस्यापीति** । पाचकत्वादिलिङ्गसमन्वयस्यापीत्यर्थः ॥ **अन्तर्भावः समर्थित इति** । कोशादिव्युत्पादितान्यत्रिकप्रसिद्धिकवैश्वानरनामसमन्वयस्येव तादृशपाचकत्वादिबहुलिङ्गसमन्वयस्यापि प्रकृतेऽभिधानाद्बह्वनुग्रहस्य च न्याय्यत्वादत्रैव पादेन्तर्भाव इत्यर्थः ॥ **अत एवेति** । पादद्वयशेषत्वादेवेत्यर्थः । तद्विवरणरूपत्वानुपगमे बाधकमभिधत्ते **अन्यथेति** । रूढेत्यस्याविवृतौ हि केवलरूढानामाकाशादिनाम्नामेव प्राप्त्या योगरूढानन्दमयादिशब्दानां परित्यागः स्यादित्यर्थः ॥ **लिङ्गानामपीति** । लिङ्गपदस्य समासोपसर्जनत्वेऽप्यन्तर्वर्तिविभक्त्यनुसन्धानेन समानविभक्तिकतां परिकल्प्य तत्रेदं विशेषणमित्यभिहितमिति मन्तव्यम् ॥ **आनन्दमयाधिकरणान्त इति** । 'सा योगादेव लभ्यते' इत्यानन्दमयनयान्ते सा विद्वद्रूढिः योगमविहायैव लभ्यते न त्वविद्वद्रूढिवत्सङ्केततुल्याऽतोऽपि सा मुख्येत्युक्तन्यायादिति वेत्यर्थः ॥

श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः । मदीयपरिचंचूर्या लेशेन वृणुतादलम् ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणश्रीसत्यप्रियतीर्थपूज्यपादतनूज सर्वतन्त्रस्वतन्त्र-
गालवपुरीश्रीनिवासाचार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां
श्रीमन्न्यायसुधाचषकनाम्न्यां व्याख्यायां प्रथमाध्यायस्य द्वितीयः पादः ॥

श्रीमत्-जयतीर्थविरचिता

सनाभिः

# श्रीमन्-न्यायसुधा

षट्टिप्पणीसमेता

## प्रथमाध्यायस्य तृतीयः पादः

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

सु० — भिन्नवाक्यत्वादिसिद्धये तृतीयपादप्रतिपाद्यमर्थं दर्शयति तत्रेति ।

अनु० — तत्रान्यत्र प्रसिद्धानां लिङ्गनाम्नां पुनर्हरिः ॥
विशेषान्मुख्यतो वृत्तिं स्वस्मिन्नेवात्र वक्त्यजः ॥

हरिः सूत्रकारः अत्र पादे लिङ्गानां नाम्नां च स्वस्मिन्वृत्तिं वक्ति । ननु पूर्वेण पादद्वयेनोक्ता सेत्यत उक्तम् पुनरिति । ननु तर्हि वैयर्थ्यमित्यत उक्तम्, तत्र हरौ, अन्यत्र च तस्मात्, प्रसिद्धानामिति । पूर्वत्र त्वन्यत्र प्रसिद्धानामित्युक्तमेव । परमेश्वरे प्रसिद्धानि चेल्लिङ्गनामानि किं समन्वयप्रतिपादनेन । सिद्धत्वादित्यत उक्तम् स्वस्मिन्नेवेति । अन्ययोगव्यवच्छेदः, प्रयोजनमिति भावः । तत्किमन्यत्र शब्दवृत्तिरेव नास्ति । न नास्ति । किंतु मुख्यतः परमेश्वरे अन्यत्र त्वमुख्येत्युक्तम् मुख्यत इति । एवं सत्यन्यत्र लक्षणादिकमेव प्राप्तमित्यत उक्तम् विशेषादिति । परममुख्या वृत्तिरीश्वरे अन्यत्र मुख्यादीति । एतदुक्तं भवति । ये शब्दाः लोकदृष्ट्या अन्यत्र शक्तिमन्तः तेषां वेदवाक्येष्वन्यपरत्वे प्राप्ते शक्तितात्पर्याभ्यां भगवदेकनिष्ठत्वं पादद्वयेन प्रतिपादितम् । अत्र तूभयत्र शक्तिमत्तया लोकप्रसिद्धानामन्यत्र तात्पर्ये प्राप्ते, भगवत्येव शक्तितात्पर्ये प्रतिपाद्येते इति । यद्यपि प्राधान्यक्रमानुरोधेन नामलिङ्गानामिति वक्तव्यम् । तथाऽप्युत्तर प्रतिपादनानुसारेण लिङ्गनाम्नामित्यभिहितम् ।

शे० — ॥ हरिः ॐ ॥

यद्विद्याधीशगुरोः शुश्रूषान्या न रोचते तस्मात् ॥
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥१॥

सप्रयोजनत्वेन पादप्रतिपाद्यस्यावश्यं दर्शनीयत्वात्‌ तत्प्रदर्शनपरोत्तरभाष्यानर्थक्यमित्याशयेन तत्परतया भाष्यं योजयति भिन्नवाक्यत्वेति । तृतीयपादस्य पूर्वोत्तरपादाभ्यां भिन्नवाक्यत्वस्य सिद्धय इत्यर्थः । उपलक्षणं चैतत् । स्वस्मिन्नेकवाक्यत्वसिद्धय इत्यपि द्रष्टव्यम् । क्वचित् भिन्नवाक्यत्वादिसिद्धय इत्यपि पाठः । तत्रादिशब्दस्यैवायमर्थो बोध्यः । कर्मधारयभ्रान्तिं वारयति लिङ्गानां नाम्नां चेति ॥ पादद्वयेनेति । आद्येन पादेन नाम्नां, द्वितीयेन लिङ्गानां च स्वस्मिन् वृत्तिरुक्तेत्यर्थः । अन्यत्रेत्यत्र तत्रेत्युक्तस्य हरेरेव योग्यतया प्रतियोगितया सम्बन्ध इत्याह तस्मादिति । तत्र हरौ, तस्माद्धरेरन्यत्र च प्रसिद्धानामिति सम्बन्धः । कथमेतावताऽपि वैयर्थ्यपरिहार इत्यतः पूर्वपादद्वयेऽन्यत्र प्रसिद्धनाम-

लिङ्गसमन्वयसमर्थनेऽप्युभयत्र प्रसिद्धनामलिङ्गसमन्वयस्यासमर्थनान्न वैयर्थ्यमिति भावेनाह **पूर्वत्र त्विति** ॥ **उक्तमेवेति** । 'तत्रान्यत्र प्रसिद्धानां विष्णावेव समन्वयम् । शब्दानां प्रथमे पादे' इत्यादिनेति शेषः ॥ **तत्किमिति** । तथा सति शब्दप्रयोग एवान्यत्र न स्यादिति भावः ॥ **नेति** । तथा च युक्तोऽन्यत्रापि प्रयोग इति भावः ॥ **इत्युक्तं मुख्यत इतीति** । इत्याशयेन मुख्यत इत्युक्तमित्यर्थः ॥ **एवं सतीति** । अन्यत्रामुख्यत्व इत्यर्थः ॥ **लक्षणादिकमेवेति** । अन्यथाऽन्यत्रापि मुख्यत्वप्रसङ्गेनोक्तव्यवस्थाऽयोगादिति भावः । 'परममुख्यत्वं विष्णावन्यत्र मुख्यता । उपलक्षणा च गौणी चे'त्युत्तरानुव्याख्यानानुसारेण विशेषादित्यस्य तात्पर्यमाह **परममुख्येति** ॥ **प्राधान्यक्रमानुरोधेनेति** । यथा लिङ्गापेक्षया नाम्नां प्राधान्यं, तथोक्तमानन्दमयाधिकरण इति ज्ञेयम् ॥ **उत्तरप्रतिपादनेति** । द्युभ्वाद्यायतनमिति सर्वाधार· त्वलिङ्गस्यैवैतत्पादे प्रथमं समन्वितत्वादित्यर्थः ॥

**स०** — श्रीनिवासाय नमः ॥ श्रीवेदव्यासाय नमः ॥ **भिन्नवाक्यत्वादिसिद्धय इति** । अस्य पादस्य पूर्वेणोत्तरेण भेदसिद्धये स्वस्मिन् एकवाक्यतासिद्धये चेत्यर्थः । समन्वयप्रतिपादकत्वप्रदर्शनेन एकवाक्यत्वमुभयत्रप्रसिद्धशब्दसमन्वयप्रतिपादकत्वप्रदर्शनेन पादभेदश्च सिद्ध्यतीति द्रष्टव्यम् ।

**प०** — **हरिः ॐ** ॥ **भिन्नवाक्यत्वादीति** । पूर्वोत्तरपादैरस्य पादस्येति योज्यम् । स्वस्मिन्नेकवाक्यत्वसिद्धिः आदिपदार्थः । तयोरर्थभेदाभेदनिमित्तत्वस्य अन्तरधिकरणे 'अर्थैकत्वादेकं वाक्यम्'इति जैमिनिसूत्रोदाहरणेन व्यक्तीकृतत्वादिति भावः । अन्यत्रेत्यस्य प्रतियोगिसापेक्षत्वादाह **अन्यत्र तस्मादिति** । तावता कथमर्थभेद इत्यत्र आह **पूर्वत्रेति** । पूर्वपादद्वय इत्यर्थः । उत्तरपादे तु वक्ष्यामः, इति भावः । मूले समन्वयापेक्षयैव पुनःशब्दो नोभयत्रप्रसिद्धशब्दसमन्वयापेक्षयेति भावः । शब्दवृत्तिरेव नास्ति किमिति प्रश्नस्योत्तरं 'न नास्ती'ति । तावता कथं व्यर्थतापरिहारः पूर्वपादद्वयादर्थभेदश्च, भगवदेकनिष्ठत्वोक्तेरुभयत्र साम्यादित्यतो व्यनक्ति **एतदुक्तमिति** ॥ **अन्यत्र तात्पर्ये प्राप्त इति** । 'वेदवाक्येष्वि'त्यनुषङ्गः । पूर्वपक्षन्यायैरेति भावः ॥ **भगवत्येव शक्तितात्पर्ये इति** ॥ द्युभ्वाद्यायतनं तत्त्वित्यादिसावधारणप्रतिज्ञांशेन शक्तेः, हेत्वंशेन तात्पर्यस्य, लाभात्, हेत्वंशेन बाधाभावे सति शक्तेरपि लाभाद्वेति भावः ॥ **उत्तरेति** । प्रथमाधिकरणे लिङ्गस्य भूमादिनयेषु नाम्नः समन्वयादुत्तरप्रतिपादनेत्युक्तम् ।

**या०** — ॥ ॐ **द्युभ्वाद्यायतनं स्वशब्दात्** ॐ ॥ ॐ **नानुमानमतच्छब्दात्** ॐ ॥ ॐ **प्राणभृच्च** ॐ ॥ **भिन्नवाक्यत्वादीति** । अस्य पादस्य पूर्वोत्तरपादभेदसिद्धये स्वस्मिन्नेकवाक्यता- सिद्धये चेत्यर्थः । उभयत्र प्रसिद्धशब्दसमन्वयप्रतिपादकत्वप्रदर्शनेन पादभेदः स्वस्मिन्नेकवाक्यत्वं च सिद्ध्यतीति द्रष्टव्यम् ॥

श्री०— ॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ अन्यत्रैवेत्यस्यावधिं पूरयति ॥ **तस्मादिति** । हरेः सकाशादित्यर्थः ॥ **विशेषादिति** । **विशेषः** प्रभेदः । मुख्यवृत्तावपि प्रभेदाङ्गीकारादित्यर्थः । विशेषमेव दर्शयति ॥ **परमेति** ॥ **अन्यत्र त्विति** । न चान्यत्र त्वमुख्येत्युक्तमित्यनेन विरोधः । परममुख्यवृत्तिर्नास्तीत्यर्थकरणेनाविरोधादिति ध्येयम् ॥ **प्राधान्येति** । लिङ्गात्मकयौगिकशब्दापेक्षया नामात्मकरूढशब्दानां शीघ्रमर्थोपस्थापकत्वेन प्राधान्यमित्यर्थः ॥ **उत्तरेति** । आद्याधिकरणे द्युभ्वाद्यायतनत्वरूपलिङ्गसमन्वयप्रतिपादनादित्यर्थः ॥

च०— **भिन्नवाक्यत्वादीति** । आदिपदमेकवाक्यतासंग्राहकम् । तथाच तृतीयपादधर्मिकद्वितीयतुरीयपादभिन्नत्वैकवाक्यत्वोभयोपरक्तनिश्चयफलकतृतीयपादप्रतिपाद्यार्थकर्मकदर्शनानुकूलव्यापारकर्ता भाष्यकार इति समुदितग्रन्थाधीनबोधाकारोऽवसेयः । विष्णुतदितरोभयप्रसिद्धिकशब्दसमन्वयप्रतिपादकत्वप्रदर्शनेन अतादृशपादभेदः स्वाश्रितैकवाक्यता च सेत्स्यतीति ध्येयम् ।

सु०— ॥ ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ॥ अत्र **'यस्मिन् द्यौः'** इत्यादिवाक्यप्रतिपाद्यं द्युभ्वाद्यायतनं विष्णुरेवेति प्रतिपाद्य, पूर्वपक्षिणा शङ्कितानां रुद्रादीनां निराकरणार्थं सूत्रितम् ॐ नानुमानमतच्छब्दात् ॐ, ॐ प्राणभृच्चेति । तत्रातच्छब्दादिति तच्छब्दाभावादिति व्याख्यातं भाष्ये । तदयुक्तमिवाभाति । असामर्थ्येन समासानुपपत्तेः । तत्र 'छन्दोवत्सूत्राणि भवन्ति'इति वा । **'अकर्तरि च कारके'** इति ज्ञापकादसामर्थ्येऽपि क्वचित्समासो भवतीति वा' 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावो वेति समाधानमवधातव्यम् । अथवा तेभ्यः शिवादिभ्योऽन्यत् अतद्=ब्रह्म तस्य, शब्दोऽतच्छब्दस्तस्मादिति व्याख्यानमित्याशयवानाह विष्णावेवेति ।

अनु०— ॥ ॐ **नानुमानमतच्छब्दात्** ॐ ॥

विष्णावेवात्मशब्दस्य रूढत्वान्न शिवादिकान् ॥
श्रुतिर्वक्ति ॥ १ ॥

रूढत्वात्प्रसिद्धत्वादित्यर्थः । न तु रूढिवृत्त्योपेतत्वादिति । महारूढियोगाभ्यां तस्य तत्र प्रवृत्तेः । तस्य चात्र श्रवणादिति शेषः । श्रुतिः 'यस्मिन्द्यौः' इत्यादिका । अथवा अन्यत्रापि सिद्धान्तसाधकस्यैव पूर्वपक्षनिरासेऽपि हेतुत्वं द्रष्टव्यम् । तेन न न्यूनतादोष इत्येतत्प्रदर्शयितुं सिद्धान्तसाधकस्यैव पूर्वपक्षनिरासेऽपि व्यापारं दर्शयितुमिदं सूत्रद्वयमित्यनेनोच्यते । ननु तर्हि तच्छब्दादित्येवास्तु । तदिति च ब्रह्मपरामर्शो व्याख्यास्यते । मैवम् । अनेका-

**र्थत्वे तच्छब्दोऽन्यार्थोऽपि संभवति । अतस्तस्यैव शब्दादिति वक्तव्यम् । तदर्थमतच्छब्दादिति प्रयुक्तम् ( दित्युक्तम् ।** परिमळ **) अत एवाह** विष्णावेवेति ॥ १-३-१ ॥

**शं० — ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ** ॥ रीत्यन्तेरणातच्छब्दादित्यस्यानुभाष्यकारीयमर्थवर्णनं सूत्रखण्डस्य वर्णकान्तरमेव, न तु तच्छब्दाभावादिति भाष्यकारीयव्याख्यानासम्भवनिबन्धनम् इत्यभिप्रायेणेति भावेन भाष्यकारीयं व्याख्यानमाक्षिप्य समाधातुं प्रयोजनकथनपूर्वकं तत्तत्सूत्राण्युपन्यस्य तद्व्याख्यानतयाऽऽक्षेप्यं भाष्यं योजयितुमाह **द्युभ्वेत्यादिना** ॥ **शङ्कितानामिति** । द्युभ्वाद्यायतनत्वेन शङ्कितानामित्यर्थः । आदिपदेन जीवादिसंग्रहः ॥ **ॐ नानुमानमतच्छब्दात् ॐ** ॥ **ॐ प्राणभृच्च ॐ** ॥ भाष्यमाक्षिपति **तदिति** ॥ **असामर्थ्येनेति** । नञः प्रसज्यप्रतिषेधरूपाभावार्थत्वे तस्य क्रियासापेक्षत्वेन तच्छब्दो नास्तीत्यादिवाक्यमेव स्यात् । न समासः । 'समर्थः पदविधिरि'ति सामर्थ्ये सत्येव समासविधानात्, क्रियासापेक्षस्य च नञः प्रतियोगिसमर्पकतच्छब्देन न सामर्थ्यं, सापेक्षमसमर्थमिति वचनादिति भावः ॥ **तत्रेति** । ततश्च 'छन्दसि सर्वे विधयो विकल्प्यन्ते' इति वैयाकरणोक्तेः असमर्थस्यापि नञस्तच्छब्देन समासोपपत्तिरिति भावः । छान्दसत्वाश्रयणमगतिका गतिरित्यरुच्या पक्षान्तरमाह **अकर्तरि च कारक इति** । अत्र हि संज्ञायां विषये कारके धातोर्घञ् विहितः प्रास आहार इत्यादि सिध्यर्थम् । स च कर्तरि निषिध्यते अकर्तरीति । कर्तरि न भवतीत्यर्थः । किं कारणं मिषत्यसौ मेष इत्यादौ घञ् मा भूदित्येवमर्थम् । तथा सति हि मैष इति प्रसङ्गात् । न चाकर्तरीति प्रसज्यप्रतिषेधाश्रयणेनेति वाच्यम् । तथा सत्यब्राह्मणमानयेत्यादौ ब्राह्मणभिन्नस्य ब्राह्मणसदृशस्यैव प्राप्तिवत् ('नञिव युक्तं तद्भिन्ने तत्सदृशे वर्तते तथा ह्यर्थगतिरि'ति 'निपात एकाजनाङि'त्यादिसूत्रेषूक्तपरिभाषान्यायेनेत्यर्थः । अनाङित्यादि नञ्युक्तम् । 'तत्र तस्येव' इत्यादि इव युक्तम् । लोके त्वब्राह्मणमानयेत्यादिकं ब्राह्मणमिवेत्यादिकं च क्रमेणोदाहरणम् । तथा चोक्तोभययुक्तं शब्दस्वरूपं **स्वस्मिन्सदृशाधिकरणे** सदृशाभिधेये वाच्यतासम्बन्धेन वर्तते हि यस्माल्लोके तथा तादृशी अर्थप्रतीतिरस्तीति लोकन्यायसिद्धेयं परिभाषेति दर्शितं भवति) नञिवयुक्तन्यायेनाकर्तरीति पर्युदासेनैव कर्तुरन्यस्मिन्कर्तृसदृशे कारक एव भवतीति प्राप्त्या कारकग्रहणानर्थक्यप्रसङ्गात् । प्रसज्यप्रतिषेधे तु वाक्यभेदेन संज्ञायां घञ् भवति कर्तरि न भवतीत्येषोऽर्थः संपद्यते । तत्र संज्ञायां घञ् भवतीति प्रथमवाक्येऽर्थनिर्देशाभावात् । 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति स्वार्थ एव घञ् स्यात् । न च स्वार्थे पूर्वेणैव घञ्विधेर्नात्र तत्प्रसङ्गः । स्वार्थस्य सिद्धाख्ये धर्मे घञादयो भवन्तीति पूर्वत्रोक्तावपि साध्यरूपे शुद्धे प्रकृत्यर्थेऽत्र घञ्प्राप्तेरवर्जनीयत्वात् । अतः प्रसज्यप्रतिषेधे कर्तव्यमेव कारकग्रहणम् । पर्युदासे तूक्तरीत्या न कर्तव्यं प्रसज्यते ।

तच्च क्रियमाणं प्रसज्यप्रतिषेधेनासामर्थ्येऽपि समासो भवतीति ज्ञापयति तदनेन प्रकारेणासामर्थ्येऽपि समासस्य 'अकर्तरि च कारके संज्ञायामि'त्यत्र कारकग्रहणेन ज्ञापितत्वात् । असूर्यंपश्या राजदाराः, अश्राद्धभोजी ब्राह्मणः, इत्यादौ प्रसज्यप्रतिषेधार्थस्यापि नञः समासवत् अतच्छब्दादित्यत्रापि तदर्थस्य नञः समासो युक्त इति भावः । अत्रापि प्रतिपत्तिगौरवं मनसि निधाय पक्षान्तरमाह **अर्थाभाव इति** । अत्र 'चार्थाभावे यदव्ययमि'त्येकदेशोत्कीर्तनमुपयुक्तत्वात्कृतम् । 'अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावे'ति सूत्रेऽर्थाभावे यदव्ययं तस्य समर्थेन सुबन्तेन सहाव्ययसमासविधानात् । मक्षिकाणामभावो निर्मक्षिकमित्यादाविव तच्छब्दस्याभावोऽतच्छब्दमित्यर्थाभावे यदव्ययमित्यव्ययीभावसमास एव वाऽस्त्वित्यर्थः । न चा'व्ययादाप्सुप' इति सुपो लोपं विधायादन्तादव्ययीभावात्परस्य सुपो 'नाव्ययीभावादतोम् त्वपञ्चम्या' इति अम्भावविधानात् । अतच्छब्दमित्येव स्यान्न त्वतच्छब्दादितीति । तत्कथमव्ययीभावाश्रयणमत्रेति वाच्यम् । तत्रैव सूत्रेऽपञ्चम्या इत्युक्त्या पञ्चमीं विनैवामादेशविधानादन्यत्राम्भावप्राप्तावपि पञ्चम्यां तदप्राप्त्या अव्ययीभावत्वेऽप्यतच्छब्दादित्यस्योपपत्तेरिति भावः । एवं भाष्यकारीयव्याख्यान मुपपाद्योत्तरानुव्याख्यानं सूत्रखण्डस्य वर्णकान्तरमित्याह **यद्वेति** । अनुव्याख्याने स्पष्टमव्याख्यानादाह **इत्याशयवानिति** । रूढत्वादित्यस्य रूढिवृत्त्योपेतत्वार्थकत्वभ्रान्तिं निवारयति **रूढत्वादिति** । किमर्थान्तरकल्पनया, रूढिवृत्त्योपेतत्वमेवार्थः किं न स्यात् इत्यतस्तस्यात्र असम्भवादिति भावेन तदसम्भवं

---

प्रतिजानीते **न त्विति** । तत्र हेतुमाह **महायोगेति** । यद्यप्यखण्डशक्त्या प्रतिपादकत्वरूपा रूढिरात्मशब्दस्य विष्णावस्ति । तथाऽपि यत्रार्थे यस्य शब्दस्य प्रयोगमात्रबाहुल्यं तत्र तस्य वृत्ती रूढिरिति अवयवार्थव्यावर्तकमात्रपदघटितरूढ्यसम्भवाभिप्रायेणैवायं ग्रन्थः । अनवधिकात्मशब्दप्रवृत्तिनिमित्तवति विष्णावात्मशब्दस्य प्रयोगबाहुल्यात्तस्य तत्र महायोगरूढिलक्षणावृत्तिः न तु रूढिरिति रूढिवृत्त्योपेतत्वस्य बाधितत्वाद्युक्तं रूढत्वादित्यस्यार्थान्तरकल्पनमिति भावः । साकाङ्क्षस्य वाक्याभासतयाऽप्रतिपादकत्वाद पेक्षितशेषं पूरयति **तस्य चेति** । विष्णावेवेत्यादिभाष्यस्यातच्छब्दादिति सूत्रखण्डमात्रव्याख्यानपरत्वेन शिवादिकानीत्यादिभाष्यखण्डवैयर्थ्यं, व्याख्यानान्तरस्य प्रयोजनविशेषादर्शनाच्चेति, पूर्वत्रारुच्या भाष्यं प्रकारान्तरेण योजयति **अथवेति** । न सूत्रखण्डमात्रव्याख्यानार्थं भाष्यं, किंतु सिद्धान्तसाधकस्य पूर्वपक्षनिरासहेतुत्वज्ञापनमेव तत्प्रयोजनमित्याशयेनाह **अन्यत्रापीति** । तत्तदधिकरणेष्वित्यर्थः ॥ **सिद्धान्तसाधकस्यैवेति** । तत्तदधिकरणसिद्धान्तसाधकसूत्रोपात्तहेतोरेवेत्यर्थः ॥ **पूर्वपक्षनिरासेऽपीति** । तत्तदधिकरणपूर्वपक्षनिरासेऽपीत्यर्थः । अन्यत्र तज्ज्ञापनस्यापि किं प्रयोजनमित्यत उक्तं **तेनेति** । स्वपरपक्षसाधनदूषणयोरेव सिद्धान्तप्रतिष्ठाहेतुत्वेन तदर्थं तयोरुभयोरपि कर्तव्यत्वात् तत्तदधिकरणे स्वपक्षस्थापने कृतेऽपि परपक्षनिरासाननुष्ठानात्प्रसक्तन्यूनताशङ्कापरिहार एव तत्प्रयोजनमिति भावः । **तर्हीति** ।

सिद्धान्तसाधकस्यैव पूर्वपक्षनिरासकत्व इत्यर्थः । तच्छब्दस्यैव सिद्धान्तसाधकत्वादिति भावः । किं तच्छब्दादित्यत्र तस्यापि शब्द इत्यभिमतं किंवा तस्यैवेति । आद्यं दूषयति **अनेकेति** । ततश्च कोटिद्वयसाधारणत्वेन सिद्धान्त्यभिप्रेतावधारणहेतुत्वं न स्यादिति भावः । द्वितीयमङ्गीकृत्य तर्हि तादृशार्थलाभार्थमेव अतच्छब्दादित्यपि वक्तव्यमेवेति न तद्वैयर्थ्यशङ्काऽवकाश इति भावेनाह **अत इति** ॥ १—३—१ ॥

स०— ॐ **नानुमानमतच्छब्दादिति** ॐ ॥ **असामर्थ्येन समासेति** । नञः प्रसज्यप्रतिषेधार्थत्वे नञर्थस्य तच्छब्दरूपप्रतियोग्यन्विततया अस्तीत्यादिक्रियापदान्वितत्वेऽपि साक्षात्प्रतियोग्यन्वितत्वाभावेनासमर्थतया न तद्वाचकपदेन समासः संभवतीति भावः । टिप्पण्यां तु तच्छब्दपरित्यागेन अन्येन नञ्संबन्धो भवतीत्यर्थः ॥ **तत्रेति** ॥ **छन्दोवदिति** । नैव वैशेषिकादिसूत्राणि, अपि तु वेदाङ्गभूतान्येव । वेदाङ्गत्वं च ब्रह्मसूत्राणां तदर्थनिर्णायकत्वादिति द्रष्टव्यम् । **अकर्तरि च कारक इतीति** । कर्तृवर्जिते अन्यस्मिन्कारके संज्ञायां विषये धातोर्घञ्प्रत्ययो भवतीति सूत्रार्थः । प्रास्यतीति प्रास इत्युदाहरणम् । स च कर्तरि कारके निषिध्यते । मिषत्यसौ मेष इत्यत्र मा भूदिति । अत्र चाकर्तरीति पर्युदासाश्रयणे सामर्थ्यलब्धत्वात् कारकग्रहणमनर्थकं स्यात् । तदनर्थकं क्रियमाणं असूर्यंपश्या राजदारा अश्राद्धभोजी विप्र इत्यादिषु प्रसज्यप्रतिषेधेनासमर्थेनापि समासोऽस्तीति ज्ञापनार्थम्, इति काशिकादावुक्तत्वादिति भावः । **असामर्थ्येऽपि क्वचिदिति** । प्रसज्यप्रतिषेधार्थकनञ् इति शेषः । **अर्थाभावे यदव्ययमिति** । अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु । एतेष्वर्थेषु वर्तमानं यदव्ययं तत् समर्थेन सुबन्तेन सह समस्यते, स समासः अव्ययीभावसंज्ञो भवतीति सूत्रार्थः । तत्रार्थाभावे यदव्ययमित्येकदेशोत्कीर्तनमेव कृतं तावन्मात्रस्यैव प्रकृतोपयोगादिति ध्येयम् । अत्राव्ययीभावत्वेप्यमादेशो न भवति । अपञ्चम्या इति विशेषणादित्याशयः । यद्यपि नञः प्रधानक्रियान्वयेन प्रसज्यप्रतिषेध एव न्याय्यः । अथाप्यनुपपत्तेरप्रधानप्रातिपदिकान्वयेन पर्युदास आश्रयणीय एव । यथा नेक्षेतोद्यन्तमादित्यमित्यत्र व्रतप्रकरणसामर्थ्यात् नञः पर्युदासोऽर्थ इत्यभिप्रायः ॥ **अनेकार्थत्वे तच्छब्द इति** । तस्य विष्णोर्वाचकः शब्द आत्मशब्द इत्यर्थः । अथवा यः शब्दो बोधकत्वेनोच्यते तस्येति शेषः ॥ तच्छब्दो बोधकत्वेनोक्तः शब्द इत्यर्थः । स चासौ शब्द इति विग्रहः ।

प०— अत्र मूले अतच्छब्दात्' इति सूत्रांशस्य वृत्त्यन्तरोक्त्या भाष्योक्तवृत्तिर्दुष्टेतिभ्रान्तिनिरासाय प्रस्तावपूर्वमनुपपत्त्युद्घाटनेन समाधिमाह **द्युभ्वाद्यायतनमित्यादिना** । सूत्रमितिजात्येकवचनम् । **तच्छब्देति** । भस्मधरोग्रत्वसंसारित्वादिशब्दाभावादिति व्याख्यातमित्यर्थः ॥ **असामर्थ्ये-**

**नेति** । अतच्छब्दादित्यत्र नञोऽर्थद्वयं संभवति । 'श्राद्धं न भुङ्क्ते' इत्यश्राद्धभोजीत्यादाविव प्रसज्यप्रतिषेधार्थत्वम् । 'घटादन्योऽघट' इत्यादाविव पर्युदासार्थत्वमिति । तत्र 'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् । पर्युदासस्स विज्ञेयो यत्रोत्तरपदेन नञ्' इत्युक्तत्वात् । आद्यार्थे 'तच्छब्दो नास्ति इति अतच्छब्दः तस्मात्' इति वक्तव्यम् । तत्र क्रियाऽन्वितस्य नञ उत्तरपदेन तच्छब्देनाऽकाङ्क्षाविरहात् तेन सह साकाङ्क्षत्वरूपं सामर्थ्यं नास्ति । नञ् इति सूत्रेण च नञ्पदं समर्थं समर्थेनोत्तरपदेन समस्यत इति साकाङ्क्षत्वरूपसमर्थयोरेव पदयोः समासो विहितः । ततश्चेहासामर्थ्येन समासानुपपत्तेरित्यर्थः ।

**छन्दोवदिति** । छन्दोविषये 'दृष्टानुविधिः छन्दसी'त्यसामर्थ्येऽपि समास इति भावः । यद्यपीदं न सूत्रं नापि वार्तिकं नापि न्यायः तथापि 'वृद्धिरादैजि'तिसूत्रे ऐजित्यत्र चोः कुरिति कुत्वमाशंक्य छन्दोवत्सूत्राणि भवन्तीति भाष्यकारेणोक्तत्वात् कैयटे च, इष्टिरेवेयमित्युक्तत्वाद्वार्तिककारेष्ट्युपसङ्ख्यानयोरिव भाष्यकारेष्टेरपि निर्णायकत्वात् तस्योपन्यासः ।

**अकर्तरि चेति** । तृतीयाध्यायस्य तृतीयपादे 'प्रास्यन्ति तमि'ति 'प्रास' इत्यादिरूपसिद्ध्यर्थं अकर्तरि च कारके संज्ञायामिति सूत्रे कर्त्रन्यकारके संज्ञायां च विषये धातोर्घञिति घञ् प्रत्ययविधायके अकर्तरीति किंपर्युदासः प्रसज्यप्रतिषेधो वेति विचारे, पर्युदासपक्षे, नञिव युक्तन्यायेन कर्तृभिन्नस्य कर्तृसदृशस्य कारकस्यैव ग्रहणसंभवात् कारकपदं व्यर्थम् । क्रियते च तत्, तेन ज्ञायते अकर्तरीति न पर्युदासः किन्तु प्रसज्यप्रतिषेध इति । तथा च प्रसज्यप्रतिषेधेऽपि समासोऽस्तीति ज्ञापनाय कारकपदमिति । यद्यपि भाष्ये अकर्तरीति पर्युदासमेवाश्रित्य कारकपदं प्रत्याख्यातम् । तथापि वृत्तौ तथोक्तत्वादिति ज्ञापकादित्युक्तम् । भाष्यकारमते तु समर्थः पदविधिरिति सूत्रव्याख्याऽवसरे 'सुडनपुंसकस्ये'ति नञःप्रसज्यप्रतिषेधार्थकत्वमुपेत्य 'असूर्यपश्यानि मुखानी'त्यादिनिर्वाहस्य दर्शितत्वात्तत्सूत्रमुदाहार्यम् ।

यद्वा भाष्यकारीयोक्तिरेव अयुक्ता ! 'अनपुंसकस्ये'त्यस्य पर्युदासत्वेपि दोषाभावेन कारकग्रहणज्ञापकेनैवासूर्यपश्यानि मुखानीत्यादि निर्वाह्यमिति भावेनाकर्तरीत्युक्तम् ॥ **अर्थाभाव इति** । 'अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावे'त्यादि द्वितीयाध्यायाद्यपादीयसूत्रेणार्थाभावे वर्तमानं यदव्ययं तदुत्तरपदेन समस्यते । स समासो अव्ययीभाव इत्यव्ययीभावविधानात् । इह च तच्छब्दस्याभावो अतच्छब्दमिति अभावार्थकस्य नञः उत्तरपदेन सहाव्ययीभावसमासः । मक्षिकाणामभावो निर्मक्षिकम् । विवादस्याभावोऽविवादमित्यादिवदित्यर्थः । ननु'अव्ययीभावश्चेति' सूत्रेण अव्ययत्वे सति अव्ययादाप्सुप इति समासादुत्पन्नसुपो लुकि प्राप्ते 'नाव्ययीभावादतोम्त्वपञ्चम्या'इतिसूत्रेणामादेशेऽविवादमित्यादा-

विव अम् प्राप्नोतीति चोद्यं तु अपञ्चम्या इत्युक्तत्वादम् न भवतीति चन्द्रिकायां समाहितं ध्येयम् । एतेन 'अतद्धर्माभिलापादि'त्येतदपि त्रेधा समाहितं ध्येयम् । अतदित्यनुवादो ब्रह्मेति व्याख्या ।

नन्वेवं व्याख्याने स्वशब्दादित्यनेन पौनरुक्त्यमित्यतः सत्यमेवं तथापि प्रयोजनवशात् पौनरुक्त्यं सह्यमिति भावेन प्रयोजनोक्तिपरतया मूलस्य तात्पर्यमाह **अथवेति** ॥ **इत्येतत्प्रदर्शयितुमिति** । यद्यपि अदृश्यत्वनये 'विशेषणभेदव्यपदेशाभ्यां च नेतरा'विति चशब्दोक्त्यैव एतत्प्रदर्शितम् । अन्यथा तस्य वैयर्थ्यात् । अत एव तत्र टीकायामर्थान्निराकृतमपि विशेषयुक्त्या पराकुर्वत्सूत्रमित्यवतारितम् । तथापि साक्षात्प्रदर्शयितुं तदित्यर्थः ॥ **ब्रह्मपरामर्श इति** । पूर्वसूत्रे साध्यार्पकतया समन्वयसूत्रादनुवृत्तं तत्त्विति तच्छब्दनिर्दिष्टब्रह्मपरामर्श इत्यर्थः ॥ **अनेकार्थत्व इति** । आत्मशब्दस्येति योज्यम् । तच्छब्दः तस्य ब्रह्मणः शब्दः आत्मशब्दः । अन्यार्थः प्रधानाद्यर्थोपि इत्यर्थः । **अत इति** । तच्छब्दाद्ब्रह्मवाचकात्मशब्दादित्युक्तौ प्रधानादिवाचकोपि संभवतीति प्रधानादिरपि किं नेति शङ्कानिवृत्त्यर्थमित्यर्थः ॥ **तस्यैवेति** । ब्रह्मण एवेत्यर्थः ॥ **इत्युक्तमिति** । तदित्यनेन संनिहितानुमानिकपदनिर्दिष्टशिवादिभ्योऽन्यदतद् अतत्= ब्रह्मेति । शिवाद्यन्यशब्दादित्युक्तौ शिवादिशब्दो नेति लाभात्तेन ब्रह्ममात्रसाधारणशब्दादिति प्राप्तत्वा(भावा)दिति भावः ॥ १ ॥ ३ ॥ १ ॥

---

**या०— असामर्थ्येनेति** । नञः प्रसज्यप्रतिषेधरूपाभावार्थत्वे तस्य क्रियासापेक्षत्वेन तच्छब्दोऽत्र नास्ति यत इत्यादिवाक्यमेव स्यान्न समासः । समर्थः पदविधिरिति सामर्थ्ये सत्येव समासविधानात् । क्रियासापेक्षस्य च नञः प्रतियोगिसमर्पकतच्छब्देन सामर्थ्याभावात् । सापेक्षमसमर्थमिति वचनादिति भावः ॥ **अकर्तरि च कारक इति** । कर्तृवर्जितेऽन्यस्मिन्कारके संज्ञायां विषये धातोर्घञ्प्रत्ययो भवतीति सूत्रार्थः । प्रास्यते इति प्रास इत्याद्युदाहरणम् । स चाकर्तरीति कर्तरि कारके निषिद्ध्यते । मिषत्यसौ मेष इत्यत्र मा भूदिति । अत्र चाकर्तरीति पर्युदासाश्रयणे नञिवयुक्तन्यायेन सामर्थ्यलब्धत्वात्कारकग्रहणमनर्थकं स्यात् । तदनर्थकं क्रियमाणत्वम् 'असूर्यंपश्या राजदाराः अश्राद्धभोजी ब्राह्मणः' इत्यादिषु प्रसज्यप्रतिषेधार्थकेनासामर्थ्येऽपि समासोऽस्तीति ज्ञापनार्थमिति काशिकादावुक्तत्वादिति भावः ॥ **क्वचित्समास इति** । प्रसज्यप्रतिषेधार्थकनञेति शेषः ॥ **अर्थाभावे यदव्ययमिति** । अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावेत्यादिसूत्रेऽर्थाभावे यदव्ययं तत्समर्थेन सुबन्तेन सह समस्यम् इत्युक्तत्वान्निर्मक्षिकमित्यादिवदव्ययीभावेत्यर्थः । अत्राव्ययीभावत्वेऽपि अम् न भवति अपञ्चम्या इति वचनादिति द्रष्टव्यम् ॥ **न तु रूढिवृत्त्येति** । न तु लौकिकरूढिवृत्त्येत्यर्थः । **अनेकार्थत्वे तच्छब्द** इत्यत्र तस्य ब्रह्मणो वाचकः शब्द इति विग्रहेणात्मशब्दो ग्राह्यः ॥ १-३-१ ॥

श्री० — ॐ **द्युभ्वाद्यायतनं स्वशब्दात्** ॐ ॥ ॐ ॥ **नानुमानमतच्छब्दात्** ॐ ॥ ॥ ॐ **प्राणभृच्च** ॐ ॥ **अनुपपत्तेरिति** । प्रसज्यप्रतिषेधार्थत्वे प्रतियोगिवाचकतच्छब्देन नञः समासोऽनुपपन्न इत्यर्थः ॥ **अकर्तरीति** । कर्तृभिन्ने कारके घञ्प्रत्ययो भवति, कर्तरि न भवतीति सूत्रव्याख्यानं द्रष्टव्यम् । अतत्किम् इत्यतो ब्रह्मेत्युक्तम् । प्रसिद्धत्वादित्यत्र महायोगरूढिभ्यामित्यभिप्रेतम् । महायोगेन्युत्तरग्रन्थानुसारादिति ध्येयम् । **न त्विति** । रूढत्वात् रूढवृत्त्योपेतत्वादिति सामान्यतो व्याख्यानेऽविद्वद्रूढिरपि प्राप्ता स्यात्, तदर्थं प्रसिद्धत्वादिति व्याख्येयम् । अस्त्वविद्वद्रूढिप्राप्तिरित्यत आह ॥ **महायोगेति** । तस्य चात्रेति महायोगविद्वद्रूढिभ्यां भगवति प्रसिद्धस्यात्मशब्दस्यात्र द्युभ्वाद्यायतने श्रवणादित्यर्थः ॥ **न्यूनतेति** । स्वपक्षमात्रसाधनेन परपक्षप्रतिक्षेपे हेतोरकथनेन तदप्रतिक्षेपात्, न्यूनतेत्यर्थः ॥ **अनेनेति** । विष्णावेवात्मशब्दस्येति मूलेनेत्यर्थः ॥ **अनेकार्थत्व इति** । आत्मशब्दस्येति शेषः ॥ **प्रयुक्तमिति** । शिवादिभ्योऽन्यत् अतत् ब्रह्म तस्य शब्दादित्युक्ते तस्यैव शब्दादित्यर्थो लभ्यत इति भावः ॥ १–३–१ ॥

च० — ॥ ॐ **नानुमानमतच्छब्दात्** ॐ ॥ **असामर्थ्येनेति** । नञः प्रसज्यप्रतिषेधार्थरूपाभावार्थत्वे क्रियामुख्यविशेष्यकान्वयबोधोपगन्तॄणां पाणिनीयानां मते 'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञि'ति वचनात् तच्छब्दोऽत्र नास्तीति तच्छब्दकर्तृका वर्तमानकालीना भवनक्रिया अभावप्रतियोगिनीति शाब्दबोधौपयिकविन्यासेनैव भवितव्यतया समासानुपपत्तेः । समर्थः पदविधिरिति समासाघटकपदार्थानन्वितस्वार्थप्रत्यायकत्वरूपसामर्थ्ये सत्येव समासविधानात् । शरैः शातितपत्रः चैत्रस्य दासभार्येत्यादौ तु 'प्रतियोगिपदादन्यद् यदन्यत्कारकादपि । वृत्तिशब्दैकदेशेन न तस्यान्वय इष्यत' इति वचनात्पदमञ्जर्यां कथं देवदत्तस्य गुरुकुलमित्याशङ्क्य नात्र गुरुणा देवदत्तस्य संबन्धः किन्तु गुरुद्वारकः कुलेन संबन्ध इत्यर्थाद्गुरुणापि योगो भवतीति हरदत्तोक्तेर्वा सामञ्जस्यं द्रष्टव्यम् । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो न' 'सापेक्षमसमर्थमि'त्यादिवचनादिति भावः । छान्दसत्वाश्रयणमनन्यगतिकमित्यरुचेः कल्पान्तरमनुसरति **अकर्तरीति** । प्रास्यन्त्येनेन प्रास इत्याद्युदाहरणानुरोधेन संज्ञायां विषये धातोर्घञ् विहितः । स च मिषत्यसौ मेष इत्यादिवारणाय कर्तरि कारके निषिध्यते । पर्युदासाश्रयणे नञिव युक्तन्यायेन अकर्तरि= कर्तृभिन्ने तत्सदृशे कारक एव भवतीति प्राप्त्या कारकग्रहणमनर्थकमापद्येत । प्रसज्यप्रतिषेधे तु संज्ञायां घञ् भवति कर्तरि न भवतीति वाक्यभेदोपगत्याऽर्थः संपद्यते । तत्र प्रथमवाक्येऽर्थनिर्देशाभावेन तद्विशेषजिज्ञासापूरणाय कर्तव्यमेव कारकग्रहणम् । तच्च क्रियमाणं प्रसज्यप्रतिषेधेऽसामर्थ्येऽपि समासो भवतीति ज्ञापयति । तेन असूर्यंपश्या राजदारा अश्राद्धभोजी

ब्राह्मण इत्यादयः प्रसज्यप्रतिषेधार्थकनञ्समासाः सङ्गच्छन्त इति, तद्वत्प्रकृतेऽपि तदर्थकनञ्समासः सङ्गच्छत एवेति भावः। अत्रापि प्रतिपत्तिगौरवमनुसन्दधानः कल्पान्तरमनुधावति **अर्थाभाव इति।** अव्ययं विभक्तीति योगे अर्थाभावे यदव्ययं तस्य समर्थेन सुबन्तेन सह समासविधानात्, मक्षिकाणामभावो निर्मक्षिकमित्यादाविव तच्छब्दस्याभावोऽतच्छब्दमित्यर्थाभावे यदव्ययमित्यव्ययीभाव एव समासोऽस्त्वित्यर्थः। अव्ययादाप् इति विहितसुब्लोपापवादकस्य अम्भावस्य विधायके 'नाव्ययीभावादि'ति सूत्रे अपञ्चम्या इत्युक्त्या प्रकृते न पञ्चम्या अम्भावापत्तिरिति ध्येयम्।

**सु०**—॥ ॐ भूमासंप्रसादादध्युपदेशात् ॐ ॥ **इदं कश्चिद्व्याख्याति। भूमा= परमात्मा। कुतः। संप्रसीदत्यत्रेति संप्रसादः= सुप्तिः। तत्र जाग्रत्प्राणः संप्रसादशब्देन लक्ष्यते। तस्मादूर्ध्वमुपदेशादिति। अपर आह 'संप्रसादो= जीवात्मा। तस्मादूर्ध्वमुपदेशादिति। तदुभयमप्यसत्। प्रसिद्धप्राणादिपदपरित्यागेनाप्रसिद्धसंप्रसादपदोपादाने कारणाभावात्। अतोऽध्युपदेशादित्येव हेतुः। ननु कथं तस्य परमात्मत्वसाधकता। अन्यत्रापि संभवादित्यतो व्याख्याति** अखिलेशत्वादिति।

**अनु०— ॥ ॐ भूमा संप्रसादादध्युपदेशात् ॐ ॥**

अखिलेशत्वाद्भूमा विष्णुः सुखाधिकः ॥ २ ॥

**अधिशब्दो हीश्वरवाची। तथा च विशेषानुक्तेरखिलेशत्वमेवोक्तं भवति। न चैतदसिद्धम्। नामवागादीनां पूर्वपूर्वाधिपत्यस्योक्तत्वादिति। ननु तर्हि संप्रसादादित्येतदनाकाङ्क्षितत्वात् व्यर्थमापन्नमिति चेन्न। हेत्वन्तराभिधायकत्वादित्याशयेन व्याचष्टे** सुखाधिक इति। **प्रसीदत्य(न्त्य)नेनेति प्रसादः सुखम्। सम्यक् प्रसादः संप्रसादः। गुणगुणिभावाभ्युपगमेन सुखाधिक इति तात्पर्यार्थोऽभिहितः। य(स्मात्तस्मा)तस्तस्मादिति शेषः ॥ १-३-२ ॥**

**शे०— ॥ ॐ भूमासम्प्रसादादध्युपदेशात् ॐ ॥ कश्चिदिति।** सङ्कर इत्यर्थः। सम्प्रसादशब्देन प्राणलक्षणायां हेतुभूतं सम्प्रसादशब्दमुख्यार्थसम्बन्धं प्राणस्योपपादयितुं तच्छब्दमुख्यार्थं तावदाह **सम्प्रसादःसुप्तिरिति।** सम्प्रसादशब्दस्य सुप्तावरूढत्वात्कथं तस्याः सम्प्रसादशब्दार्थत्वमित्यतो योगेनेति भावेन तमाह **सम्प्रसीदतीति।** तत्र जाग्रदिति शक्यसम्बन्धकथनम्। एवं सम्प्रसादशब्दस्य प्राणे लक्षणामुपपाद्य सम्प्रसादादध्युपदेशादिति हेतुं व्याचष्टे **तस्मादिति।** प्राणादूर्ध्वमुपदेशादित्यर्थः॥ **अपर इति।** रामानुज इत्यर्थः॥ **सम्प्रसादो जीवात्मेति।** 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतेः सम्प्रसादो जीवात्मेत्यर्थः।

प्रसिद्धप्राणादीत्यादिपदेन जीवसंग्रहः। तथा सति प्राणादूर्ध्वमुपदेशादिति वा, जीवादध्युपदेशादिति वा, वक्तव्यतया सम्प्रसादादिति लाक्षणिकपदप्रयोगोऽयुक्त इति भावः। उपलक्षणं चैतत्। प्राणादूर्ध्वमुपदेशस्यानन्दमयप्रकरणे मनोमयादिषु भूमप्रकरणे च विज्ञानमतिश्रद्धादिषु च सत्त्वात्। मनोमयादीनां विज्ञानादीनां च तन्मतेऽब्रह्मत्वात्। तत्र व्यभिचारादित्यपि द्रष्टव्यम् ॥ **अन्यत्रापीति**। नामादीश्वरत्वेन वागादेरुपदेशोऽपि ब्रह्मत्वाभावेन व्यभिचारित्वादिति भावः। अध्युपदेशादिति सौत्रपदात्कथमीशत्वस्य लाभ इत्यत आह **अधिशब्दो हीति**। अधिरीश्वर इति पाणिनिस्मृतेरिति भावः। अस्त्वीश्वरत्वलाभस्तथाऽपीशत्वोपदेशत्वादित्येव वक्तव्यम्। अखिलत्वसमर्पकशब्दाश्रवणादित्यत आह **तथा चेति**। भूमनिष्ठतयाऽखिलेशत्वस्य श्रुतावश्रुतत्वाद्ब्रह्मत्वसिद्धिरित्याशङ्क्य निराकरोति **न चेति** ॥ **पूर्वपूर्वेति**। तथा च प्रायपाठात् भूम्नोऽप्यखिलाधिपप्राणाधिपत्यलाभादखिलेशत्वसिद्धिरिति भावः ॥ **अनाकाङ्क्षितत्वादिति**। अधीत्यस्योर्ध्वार्थत्वे तदपेक्षितावधिनिरूपकतया सम्प्रसादादित्यस्य सार्थक्यसम्भवेऽपि तत्परित्यागेनाधीत्यस्येश्वरार्थत्वाङ्गीकारे तस्यावधिनिरूप्यतया तदनपेक्षणात्संप्रसादादित्यनर्थकमापन्नमित्यर्थः ॥ **हेत्वन्तरेति**। धर्मोपपत्तेश्चेत्युत्तरसूत्रस्थचशब्दानुषङ्गेण भूम्नोऽत्र ब्रह्मत्वपूर्णसुखत्वान्तराभिधायकत्वान्न वैयर्थ्यप्रसङ्ग इत्यर्थः। सम्प्रसादशब्दस्य सुखे रूढ्यभावेऽपि योगसम्भवात् युक्तं तेन सुखग्रहणमित्याह **प्रसीदत्यनेनेति**। न च भवन्मतेऽपि प्रसिद्धसुखपदपरित्यागेनाप्रसिद्धसंप्रसादपदोपादाने कारणाभाव इति वाच्यम्। ईश्वरस्य सुखं चेद्दुःखमपि स्यादिति नाशङ्क्यम्। पूर्णानन्दकार्येण सम्यक् प्रसादेन दुःखाभावनिश्चयादिति ज्ञापनार्थत्वात्। तर्हि पूर्णसुखत्वादिति व्याख्यातव्यं तत्कथं सुखाधिक इति व्याख्यानमित्यत आह **गुणगुणिभावाभ्युपगमेनेति**। अखिलेशत्वस्यैव सुखाधिकत्वस्य भाष्ये हेतुत्वगमकं न किंचिदस्तीत्यतः शेषं सम्पूरयति **यतस्तस्मादितीति** ॥ १-३-२ ॥

प०— ॐ **भूमा संप्रसादात्** ॐ ॥ **कश्चिदिति**। रामानुजः। अपरो मायावादी ॥ **प्रसीदत्यनेनेति**। प्रपूर्वात् 'षद्लृविशरणगत्यवसादनेष्वि'त्यतो 'अकर्तरि च कारक' इति करणे घञिति भावः। प्रसिद्धसुखपदत्यागेन यौगिकसंप्रसादपदोक्तिकृत्यं चन्द्रिकायां व्यक्तम्। सुखाधिक इत्यस्य हेतुत्वलाभाय पदद्वयमध्याहरति **(यतस्तस्मा)यस्मात्तस्मादिति** ॥ १ ॥ ३ ॥ २ ॥

या०— ॐ **भूमा सम्प्रसादादध्युपदेशात्** ॐ ॥ **इदं कश्चिदिति**। सङ्कर इत्यर्थः। **अपरो** रामानुजः ॥ **अन्यत्रापीति**। नामाद्यपेक्षया वागादेरप्यूर्ध्वमुपदेशसद्भावादित्यर्थः ॥ **ईश्वरवाचीति**। अधिरीश्वर इति ज्ञापकादिति भावः ॥ **पूर्वपूर्वेति**। तथाच प्रायपाठाद्भूम्नोऽपि अखिलाधिपप्राणाधिपत्येऽखिलेशत्वमेव सिद्ध्यतीति भावः ॥ **अनाकाङ्क्षितत्वादिति**। अधीत्यस्य ऊर्ध्वार्थत्वं परित्यज्य ईश्वरार्थत्वाङ्गीकारेऽवध्यनपेक्षणादिति भावः ॥ **प्रसीदत्यनेनेति**। न च भवन्मतेऽपि प्रसिद्धसुखादिपदपरि-

त्यागेनाप्रसिद्धसम्प्रसादपदोपादाने कारणाभावः । ईश्वरस्य सुखं चेत् दुःखमपि स्यादिति नाशङ्क्यम् । पूर्णानन्दकार्येण सम्यक् प्रसादेन दुःखाभावनिश्चयादिति ज्ञापनार्थत्वात् ॥ १-३-२ ॥

श्री० — ॥ ॐ **भूमासंप्रसादादध्युपदेशात्** ॐ ॥ जाग्रदिति लक्षणाबीजसम्बन्धप्रदर्शनाय ॥ **अन्यत्रापीति** । अध्युपदेशादित्यस्य हेतोः 'प्राणो वा आशाया भूयान्' इत्याद्युक्तरीत्या प्राणादावपि सम्भवादिति भावः ॥ **पूर्वेति** । पूर्वापेक्षयोत्तरस्येत्यर्थः ॥ **गुणगुणीति** । विशेषबलादित्यर्थः ॥ १—३—२ ॥

च० -ॐ **भूमासंप्रसादादध्युपदेशात्** ॐ ॥ **कश्चित्**= सङ्करः । **अपरः** रामानुजः । **अन्यत्रापीति** । नामादितो वागादेरप्यूर्ध्वमुपदेशसद्भावादित्यर्थः । **ईश्वरवाचीति** । अधिरीश्वर इति ज्ञापकादिति भावः । **पूर्वपूर्वेति** । तथा च भूयः समभिव्याहाराद्भूम्नोप्यखिलाधिपतिप्राणाधिपतित्वलाभादखिलेशावमसैत्सीदिति भावः ॥ **अनाकाङ्क्षितत्वादिति** । अधीत्यस्योर्ध्वार्थकतायां तदवधिप्रत्यायकतया संप्रसादादित्यस्यार्थवत्ता, ईश्वरार्थकतायां तु तस्य तदनिरूपिततया तज्जिज्ञासाराहित्येन तत्पूरकमनर्थकमापद्यत इत्यर्थः ॥ **हेत्वन्तरेति** । धर्मोपपत्तेश्चेत्युत्तरसूत्रघटकचशब्दापकर्षेण भूम्नोऽत्र ब्रह्मत्वे पूर्णसुखत्वात्मकहेत्वन्तरावगमकतया नानर्थक्यं प्रसज्यत इत्यर्थः । संप्रसादशब्दस्य सुखनिरूपितसमुदायवृत्तिकत्वाभावेऽपि करणसाधनघञन्ततामाश्रित्य व्याचष्टे **प्रसीदन्त्यनेनेति** । उपदेशेजनुनासिक इदिति सूत्रव्याख्यावसरे घञः करणसाधनतायाः भाष्यकैयटयोः समर्थितत्वादिति भावः । अखिलावगतसुखनिरूपितसमुदायवृत्तिकसुखादिपदानुपादानेन, एतादृशप्रसादपदोपादानं निर्बीजमिति शङ्का तु दुःखाभावरूपकारणानुमापकपूर्णानन्दरूपकार्यलक्षणहेतुप्रत्यायनफलकतया निरसनीया ।

सु० — ॥ ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ **'एतद्वै तदक्षरं गार्गी'त्यत्रोक्तमक्षरं ब्रह्मैवेत्युक्तम् । अत्र सूत्रम्** ॥ ॐ अन्यभावव्यावृत्तेश्चेति । **तदिदमक्षरस्य ब्रह्मत्वोपपादनाय हेत्वन्तराभिधायकतया** व्याख्यातं भाष्ये । **आक्षेपनिवर्तकतयाऽप्यतो विरुद्धवदित्यादिना** व्याख्यायते ।

**तथाहि । नेदमक्षरं ब्रह्म । 'अस्थूलमनण्वन्हस्वमदीर्घमलोहितमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमवागमनोऽचक्षुष्कमप्राणमसुखम(गोत्र)मात्रमनन्तरमबाह्यं न तदश्नाति किञ्चने'त्यक्षरस्यास्थूलत्वादिश्रवणात् । न चैतद्ब्रह्मणः संभवति । अस्थूलत्वादिपदैर्हि स्थूलत्वादिविपरीतम् अणुत्वाद्यभिधानं वा स्यात् । स्थूलत्वादिनिवृत्तिमात्रपर्यवसानं वा । आद्ये परस्परविरोधः । अस्थूलमित्यनेन ह्यणुपरिमाणं वक्तव्यम् । अनण्वित्यनेन च महत्त्वम् । न चोभयमेकत्र युज्यते । परस्परपरिहारेणैव वृत्तिदर्शनात् । एवमन्हस्वमदीर्घमित्यत्रापि**

विरोधो द्रष्टव्यः । न चैकपरिमाणोपेतमेवोत्कृष्टापेक्षयाऽणु महद्दीर्घं ह्रस्वं चेत्युच्यत इत्याश्रयणेन विरोधपरिहारः । घटादितुल्यत्वेनावक्तव्यत्वात् । उत्कृष्टापकृष्टपरिमाणद्रव्यान्तराभावाच्च । द्वितीये तु निःस्वभावं ब्रह्मत्यापन्नम् । तथा च 'सर्वत्र प्रसिद्धोपदेशात् । अत्ता चराचरग्रहणात् । रूपोपन्यासाच्च' इत्युक्तविरोधः स्यादिति ।

तत्र तावत्प्रथमपक्षमभ्युपेत्य चशब्दसूचितं परिहारमाह अत इति ।

अनु० — ॐ अन्यभावव्यावृत्तेश्च ॐ ॥

अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः ।
योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् ॥
ब्रह्मैव

यतो ब्रह्म विरुद्धैर्लक्षणैर्युतमेव अतो, विरुद्धवत् = उक्तोभयविधविरुद्धार्थप्रतिपादकमिव, भातं = प्रतीतमपि वाक्यं तत्त्वतो व्याख्याय हरौ योजनीयम् योजयितुं शक्यमिति योजना । यतोऽम्बरान्तधृत्यादिनाऽक्षरस्य विष्णुत्वं निश्चितमतो विरुद्धवद्भातमपि वाक्यं तत्त्वतो व्याख्याय हरौ योजयितव्यमिति वा । कथं तत्त्वतो व्याख्यानमित्यपेक्षायां विरुद्धैरिति संबध्यते । अथवा अत इत्यस्य पूर्वत्र संबन्धः । यतः सुखाधिकोऽतो भूमा विष्णुरि(विष्णुरतो भूमे)ति विरुद्धवदिति प्रतिज्ञायां विरुद्धैरिति हेतुतया संबध्यते ।

एतदुक्तं भवति । नाक्षरस्य ब्रह्मत्वेऽस्थूलमित्यादिवाक्यस्यानवकाशः । अस्थूलादिपदैस्तद्विपरीताणुत्वाद्यभिधानमिति व्याख्यानस्याङ्गीकारात् । न चैवं सति परस्परविरोध इति वाच्यम् । विरुद्धधर्माणां ब्रह्मण्यवस्थानस्य श्रुत्यादिसिद्धत्वादिति ।

शे० — ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ ननु अतो विरुद्धवद्भातमित्युत्तरानुव्याख्यानमनर्थकम् । न चैतदक्षराधिकरणव्याख्यानमिति वाच्यम् । अक्षरमम्बरान्तधृतेरित्यर्थकथनरूपत्वाभावेन तदसंभवात् । न चान्यभावव्यावृत्तेश्चेत्येतदधिकरणीयगुणसूत्रव्याख्यानमेतदिति वाच्यम् । तथापि भाष्योक्तरीत्याऽक्षरस्य ब्रह्मत्वे हेत्वन्तराभिधायकत्वस्थित्याऽस्य तद्व्याख्यानत्वस्याप्ययोगादित्यतोऽक्षरस्य ब्रह्मत्वरूपपूर्वसूत्रोक्तार्थे आद्याक्षेपनिवर्तकतयाऽस्योदाहृतगुणसूत्रव्याख्यानत्वात् । तस्य च भाष्यकारीयहेत्वन्तरपरत्वव्याख्यानापेक्षया वर्णकान्तरत्वात् नानुपपत्तिरिति भावेनोक्ताक्षेपप्रकारप्रदर्शनपूर्वकं तत्परिहारकतया सूत्रं योजयितुं पूर्वसूत्रोक्तार्थस्याबुद्ध्यारूढत्वे तदाक्षेपस्यापि बुद्ध्यारोहासंभवात् । आक्षेपस्य

सुबोधतासिद्धये पूर्वसूत्रमुपन्यस्य विषयवाक्योदाहरणपूर्वकं तत्सिद्धमर्थं तावदाह **अक्षरमम्बरान्तधृते-रित्यादिना** ॥ ॐ **अन्यभावव्यावृत्तेश्च** ॐ ॥ **हेत्वन्तरेति** । लौकिकस्थौल्यादिराहित्यरूपेत्यर्थः । **इदं** 'एतद्वै तदक्षरं गार्गी'त्यत्रोक्तम् । **एतत्** अस्थूलत्वादीत्यर्थः । कुतोऽस्थूलत्वादिकं ब्रह्मणो न संभवतीत्यतोऽस्थूलादिपदेषु किं नञः पर्युदासोऽर्थतयाऽभिमतः, किंवा प्रसज्यप्रतिषेधः, इत्यभिप्रेत्य विकल्पयति **अस्थूलादिपदैरिति** ॥ **परस्परविरोध इति** । अस्थूलादिपदानामनण्वादिपदानां चेति शेषः ॥ **अणुपरिमाणमिति** । अणुत्वपरिमाणमित्यर्थः । कुतोऽणुत्वमहत्त्वयोरेकत्रायोग इत्यतो यत्र महत्त्वं त्र्यणुकादौ न तत्राणुत्वं, यत्र चाणुत्वं परमाणुद्व्यणुकयोः न तत्र महत्त्वमित्यणुत्वमहत्त्वयोः परस्परात्यन्ताभावसामानाधिकरण्येनैव वृत्तिदर्शनान्न भगवति तयोः समावेश इत्याह **परस्परेति** । न च कालभेदेन विरोधपरिहारः । परिमाणस्य यावद्द्रव्यभावित्वेन तदसम्भवात् ॥ **एवमिति** । अन्ह्-स्वत्वमित्यनेन दीर्घत्वपरिमाणं वक्तव्यम् । अदीर्घमित्यनेन ह्रस्वत्वं तदुभयं च नैकत्र युज्यते । यतो यत्र ह्रस्वत्वं द्व्यणुके न तत्र दीर्घत्वं यत्र च दीर्घत्वं त्र्यणुकादौ न तत्र ह्रस्वत्वमिति ह्रस्वत्वदीर्घत्वयोः परस्परात्यन्ताभावसमानाधिकरणतयैव वृत्तेर्दृष्टत्वान्नैकत्र तत्समावेश इति भावः । स्यादयं महत्त्वाणुत्व-दीर्घत्वह्रस्वत्वानां विरोधो यदि रूपे नीलत्वपीतत्वादिवत्परिमाणेऽणुत्वादिजातियोगः स्यान्न चासा-विहास्ति । कल्पनैव किलैषा वैशेषिकाणां न तु परिमाणावान्तरभेदे प्रमाणमस्ति । अतः परिमाणमेक-जातीयमेवोत्कर्षापकर्षवत् । यथा हि त्र्यणुकादिषु महत्त्वमेकजातीयमेव परेणोत्कर्षापकर्षवदङ्गीकृतम् । यथा वाऽणुत्वं परमाणुद्व्यणुकयोरेवं परिमाणमवान्तरजातिरहितमेव सर्वद्रव्येषूत्कर्षापकर्षवद्वर्तते । यथा चैकद्रव्ये वर्तमानं परिमाणं द्रव्यान्तरवर्त्युत्कृष्टपरिमाणापेक्षयाऽणुत्वमित्युच्यते । तदेव द्रव्यान्तरवर्ति-नोऽपकृष्टपरिमाणस्यापेक्षया महत्त्वमित्युच्यते । एवं ह्रस्वत्वदीर्घत्वयोरविरोधो द्रष्टव्यः । तत्कथं भगवति तदसंभव इत्याशयेन शङ्कते **न चैकपरिमाणोपेतमेवेति** । अस्त्वेवं मध्यवर्तिद्रव्यपरिमाणस्य स्वापेक्षयोत्कृष्टापकृष्टद्रव्यवर्तिपरिमाणद्वयापेक्षयोत्कर्षापकर्षमात्रेणाणुत्वमहत्त्वव्यवहारभाजनतयैकत्र महत्त्वा-णुत्वसमावेशसंभवस्तथाऽपि नासाविहाश्रयितुं शक्यः । तस्य ब्रह्मणीव घटादावपि सत्त्वेनातिप्रसक्ततया ब्रह्मण्यवक्तव्यत्वादित्यत आह **घटादीति** । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु न ब्रह्मण्यनेन प्रकारेण तत्समावेशो युज्यते । अन्यत्र स्वापेक्षयोत्कृष्टापकृष्टपरिमाणद्रव्यान्तरसद्भावेन तदपेक्षयोत्कर्षापकर्षसंभवेऽपि ब्रह्मापेक्षयोत्कृष्टापकृष्टपरिमाणद्रव्यान्तराभावेन न तदुत्कर्षापकर्षमात्रेणाप्यणुत्वमहत्त्वसमावेश इत्याह **उत्कृष्टापकृष्टेति** । अस्तु तर्ह्यस्थूलादिपदानां स्थूलत्वादिनिवृत्तिमात्रमर्थ इति द्वितीय इत्यत आह **द्वितीये त्विति** । परिमाणशून्यस्य द्रव्यस्य निःस्वभावत्वनियमादिति भावः । अस्तु निःस्वभावत्वं ब्रह्मण इतीष्टापत्तिं परिहरति **तथा चेति** । निःस्वभावत्वे चेत्यर्थः ।

अन्यवस्तुस्वभावानामित्यादिना द्वितीयस्याप्यभ्युपगमात्तावदित्युक्तम् । अतो विरुद्धवद्धात-मित्याद्युक्तप्रतिज्ञायां हेत्वनुक्तेर्न्यूनतामाशङ्क्य विरुद्धैर्लक्षणैर्युतमित्येतदेव तत्र हेतुतया संबध्यत इति भावेनात इत्येतद्धललब्धयत इति हेतुत्वसमर्पकपदाध्याहारेण वाक्यं योजयति **यत इत्यादिना** । तत्र तस्यैवेति सूत्रस्य प्रायिकत्वेनाभियुक्तव्याख्यानत्वाद्विरुद्धवदिति द्वितीयान्ताद्वतिरिति भावेन तदनुवादेन तथा विग्रहमाह **विरुद्धवदिति** । अस्मिन्पक्षे विरुद्धैर्लक्षणैर्युतत्वस्य साध्यवत्सन्दिग्धस्यैव साधनतया-ऽऽश्रयणीयत्वादेतत्परित्यागेनापेक्षितयोग्यहेतुपूरणेनोक्तप्रतिज्ञामुपपादयति **यत इत्यादि** । तर्ह्यध्याहृतहेतु-बलेनैवोक्तप्रतिज्ञानिर्वाहात् विरुद्धैरित्यादिभाष्यखण्डवैयर्थ्यमित्यतः प्रतिज्ञाततत्त्वतो व्याख्यानप्रकारोप-दर्शकत्वात्र तदित्याशयेन तत्प्रकारोपदर्शकतया तद्योजयितुं तदाकाङ्क्षामुत्थापयति **कथमिति** । अत्र पक्षे ( अश्रुतेत्यस्य हेतुत्वायोग्येत्यस्य च निश्चयस्येत्युत्तरेण संबन्धः । हेतुत्वायोग्यत्वे हेत्वभिधानं बाधकाभावेत्यादि । बाधकं विरोधरूपम् । साधकमम्बरान्तधृत्यादिकम् । साध्यमक्षरस्य विष्णुत्वम् ॥ **ततः पूर्वमिति** । बाधकाभावसिद्धेः पूर्वमित्यर्थः । बाधकाभावसिद्ध्यर्थतयेति यावत् । **अन्योन्या-श्रयेति** । अम्बरान्तधृत्यादिनाऽक्षरस्य विष्णुत्वनिश्चये विरुद्धवत्प्रतीतस्यापि तत्त्वतो व्याख्याय हरौ योजनीयत्वसिद्धिः । तत्त्वतो व्याख्याने च विरोधाभावादम्बरान्तधृत्यादिनाऽक्षरस्य विष्णुत्वनिश्चय इत्यन्योन्याश्रयापत्त्येत्यर्थः । ) अश्रुतस्य, बाधकाभावसहकृतसाधकस्यैव साध्यनिश्चायकत्वात्ततः पूर्वं

साधकतयोपन्यासे अन्योन्याश्रयापत्त्या, हेतुत्वायोग्यस्य बाधकाभावसहकृतसाधकस्यैव साध्यनिश्चयस्य, अम्बरान्तधृत्यादिनाऽक्षरस्य विष्णुतानिश्चयस्य, हेतुत्वकल्पनं, प्रतिज्ञापूर्वकव्याख्यानप्रकारप्रदर्शनस्य प्रयोजनविशेषाभावश्चेति पूर्वत्रापरितोषात्पक्षान्तरमाह **अथवेति** । पूर्वत्रसंबन्धप्रकारमेव दर्शयति **यत इति** । अस्मिंश्च पक्षे न पूर्ववाक्ये यतस्तत इत्यनयोरध्याहारः किन्तु यत इत्यस्यैवेति द्रष्टव्यम् । कथं तर्हि प्रकृतवाक्ययोजनेत्यत आद्यव्याख्यानमाश्रित्य विरुद्धैर्लक्षणैर्युतमित्यस्य हेतुगर्भविशेषणत्वं चाश्रित्य भाष्ययोजनामाह **विरुद्धवदितीति** । तत्त्वतो व्याख्यानस्य प्रयोजनप्रकारयोरनुक्तेः संदिग्धत्वेन हेतुत्वो-पपादकप्रकारानुपलम्भेन विरुद्धैर्लक्षणैर्युतत्वस्योक्तप्रतिज्ञायां हेतुत्वानुपपत्तेर्विरोधपरिहारप्रकारोपायानुक्त्या प्रथमपक्षासमर्थनाच्चापर्याप्तमिदं भाष्यमित्यतो वाक्यतात्पर्यमाह **एतदुक्तं भवतीति** ।

स० — ॐ **अन्यभावव्यावृत्तेश्च** ॐ ॥ किं नञा, पर्युदासोऽर्थः उत प्रसज्यप्रतिषेध इति विकल्पार्थः । **उत्कृष्टापकृष्टपरिमाणद्रव्यान्तराभावाच्चेति** । सर्वापेक्षया परमात्मन्येव उत्कृष्टाप-कृष्टपरिमाणद्रव्यत्वस्य सिद्धान्तिभिरभ्युपगतत्वादिति भावः । **तथाच सर्वत्रप्रसिद्धोपदेशादित्यादि**-निःस्वभावत्वे 'सर्वत्रप्रसिद्धोपदेशादि'त्यनेन सर्वत्रसत्वस्य, 'अत्ता'इत्यनेन क्रियायाः 'रूपे'त्यनेन गुणानां,

च तत्स्वभावत्वस्य समर्थितत्वेन तद्विरोधः स्यादित्यर्थः । अथवा अस्थूलमित्यस्य स्थौल्यनिषेधपरत्वे सर्वत्रेत्यनेन 'न तदश्नाति किञ्चने'त्यस्य; 'अत्ता' इत्यनेन 'अलोहितम्' इत्यस्य 'रूपोपन्यासाच्च'इत्यनेन विरोध इत्यर्थः । पर्युदासाश्रयेण न तावदस्थूलादिवाक्यस्यानवकाशत्वं परिहरति । **एतदुक्तं भवतीति** ।

प० — ॥ ॐ **अक्षरमंबरांतधृतेः** ॐ ॥ **अत्रेति** । अक्षरं ब्रह्मैवेत्युक्तेः अर्थ इत्यर्थः ॥ **हेत्वंतरेति** । प्राकृतस्थौल्यादिराहित्यरूपहेत्वंतरेत्यर्थः । वैशेषिकनये 'अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षये'त्यादिना वक्ष्यमाणेन गतार्थत्वमाशंक्य निराह **न चैकपरिमाणेति** ॥ **उत्कृष्टापकृष्टपरिमाणद्रव्यांतराभावाच्चेति** । ब्रह्मण इति योज्यं । तथैव वैशेषिकनये वक्ष्यमाणत्वादिति भावः ॥ **इत्युक्तविरोध इति** । सर्वत्रेतिनये सर्वत्र सत्त्वस्य । अत्तेतिनये क्रियायाः । अदृश्यत्वनये रूपेतिगुणसूत्रे रुक्मवर्णमिति दिव्यविग्रहस्य गुणस्य चोक्तत्वात्तद्विरोध इत्यर्थः ॥ **उक्तोभयविधेति** । स्थूलत्वादिविपरीतमणुत्वादीति स्थूलत्वादिनिवृत्तिमात्रे चोक्तोभयविधेत्यर्थः । विरुद्धैर्लक्षणैर्युतमित्येतत् पूर्वं हेतुतया योजितमिदानीं व्याख्यानप्रकारार्पकतया योजयति **यतोंबरांतेत्यादिना** ॥ **विरुद्धवदितीति** । विरुद्धवदित्यादित्रिपादीत्यर्थः ॥ **विरुद्धैरितीति** । ब्रह्मैवेत्यंतमित्यर्थः । तावतोक्तशंकानिरासः कथमित्यत आह **एतदुक्तमिति** ॥ **श्रुत्यादीति** । 'योसौ विरुद्धोऽविरुद्धः' 'यस्मिन्विरुद्धगतयोऽप्यनिशं पतंती'त्यादिसिद्धत्वादित्यर्थः ॥ सर्वधर्मेति वक्ष्यमाणश्रुत्यादिसिद्धत्वादित्यर्थः ।

---

या० —॥ ॐ **अक्षरमम्बरान्तधृतेः** ॐ ॥ ॐ **अन्यभावव्यावृत्तेश्च** ॐ ॥ **उत्कृष्टापकृष्टपरिमाणेति** । ब्रह्मापेक्षयेति शेषः ॥ **तथाच सर्वत्र प्रसिद्धेत्यादि** । निःस्वभावत्वे, सर्वत्रेत्यनेन सर्वत्र सत्त्वस्य । अत्तेति क्रियालिङ्गसमन्वयप्रतिपादकसूत्राणामुपलक्षणम् । तथा चात्तेत्यादिभिः क्रियायाः । रूपेत्यनेन गुणस्य च, स्वभावत्वसमर्थनेन तद्विरोधः स्यादित्यर्थः ॥

श्री० — ॥ ॐ **अक्षरमम्बरान्तधृतेः** ॐ ॥ ॐ **अन्यभावव्यावृत्तेश्च** ॐ ॥ **स्थूलत्वादिविपरीतेति** । स्थूलपरिमाणभिन्नेत्यर्थः ॥ **न चैकेत्यादि** । एवमेव वस्तु स्वापकृष्टवस्त्वपेक्षयोऽपकृष्टं स्वोत्कृष्टवस्त्वपेक्षयाऽपकृष्टमित्यर्थः ॥ **तुल्यत्वेनेति** । घटादावपि स्वोत्कृष्टापकृष्टवस्त्वपेक्षाऽणुमहत्त्वादेः सम्भवेन विशेषाभावाद्भगवतीदं न वक्तव्यमित्यर्थः ॥ **उत्कृष्टेत्यादि** । भगवदपेक्षयेति शेषः ।

भातशब्दार्थकथनं प्रतीतमपीति । आद्ययोजनायामत इत्यस्य हेतुसापेक्षत्वाद्विरुद्धैर्लक्षणैर्युतमित्येतद्धेतुत्वेन सम्बध्यत इत्यभिप्रेत्य **यतो** ब्रह्मेत्यादि व्याख्यातम् । द्वितीययोजनायां त्वतो विरुद्धत्वादित्यादिसाध्ये हेतुरध्याहार्य इत्यभिप्रेत्य यतोऽम्बरान्तेत्यादि व्याख्यातम् । ननु तर्हि द्वितीययोजनायां विरुद्धैर्लक्षणैर्युतं ब्रह्मेत्यनुव्याख्यानस्य कथं सम्बन्ध इत्यत आह **कथं तत्त्वत इति** । विरुद्धत्वादित्यर्थः ॥ **विरुद्धवदितीति** । इत्यादिप्रतिज्ञायामित्यर्थः । न त्वेतावन्मात्रमेव प्रतिज्ञायामित्यर्थः ॥ **विरुद्धैरिति**

अनुव्याख्याने इत्यर्थः **श्रुत्यादीति** । 'अस्थूलमनणु' 'अस्थूलोऽनणुरूपोऽसौ' इति भाष्योदाहृत-श्रुतिस्मृतीत्यर्थः ।

**च०— ॥ ॐ अक्षरमम्बरान्तधृतेः ॐ ॥ यशोदादिप्रत्यक्षमिति** । आदिपदमर्जुनादि-संग्राहकम् अणुत्वमहत्त्वयौगपद्ये यशोदादिप्रत्यक्षं प्रमाणमित्यर्थः ।

**सु०— विरुद्धैर्लक्षणैर्युतं ब्रह्मेत्युक्तम्** । मे माता वन्ध्येतिवद्व्याहतत्वात् । **यदि हि महत्त्वाणुत्वादीनि विरुद्धानि । कथं तर्हि तैर्युतमेकं स्यात् । विरोधस्य सहानवस्थानात्मकत्वात् । यदि चैकं तैर्युतं कथं तर्हि तानि विरुद्धानि स्युः । सहावस्थानस्याविरोधरूपत्वादि-त्याशङ्क्योक्तं विवृणोति** तानीति ।

**अनु०—** तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि ॥
अविरोधेन गोविन्दे सन्त्यस्थूलादिकानि च ॥

**विरुद्धैर्लक्षणैर्युक्तं ब्रह्मेत्यनेनैतदस्माभिरभिप्रेतम्** । **तान्यस्थूलादिकानि अणुत्वमहत्त्वादि-कानि** लिङ्गानि तस्माद्**ब्रह्मणो**ऽन्यत्र सहा**सन्त्यपि** गोविन्देऽविरोधेनैव **सहैवेति यावत् सन्तीति** । **न पुनर्विरोधमभ्युपेत्यैकत्रावस्थानमुच्यते येन व्याघातः स्यात्** इत्यवधारणार्थस्य **चशब्दस्यार्थः** । **गोविंद इत्यनेन यशोदादिप्रत्यक्षमप्यत्रार्थे प्रमाणमिति सूचयति अयमभिसन्धिः । अणुत्व-महत्त्वादिकं ब्रह्मणि किं प्रमाणाभावान्नाभ्युपेयम् । किंवा विरुद्धत्वात् । नाद्यः । 'अणोर-णीयान्' इत्याद्यागमस्योभयकार्यदर्शनानुमानस्योदाहृतप्रत्यक्षस्य च तत्र प्रमाणत्वात् । द्विती-येऽपि किं विरोधः प्रमाणेनाथ परस्परम् । न प्रथमः । विपरीतप्रमाणादर्शनात् । द्रव्यत्वा-देस्तूक्तप्रमाणविरुद्धत्वेन कालात्ययापदिष्टत्वात्** ।

**शे०—** विरुद्धैर्लक्षणैर्युतमित्येतद्विवरणरूपत्वान्नोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य किं विवरणेनेत्यतो व्याघातशङ्कापरिहारस्तत्प्रयोजनमिति भावेन तच्छङ्कामुत्थापयति **विरुद्धैरित्यादि** । व्यवहितत्वात्संबन्ध-माह **तान्यस्थूलादिकानीति** । प्रथमपक्षसमर्थनरूपत्वं मूलारूढं कर्तुं तत्परतयाऽस्थूलादिकानीत्यस्यार्थ-माह **अणुत्वेति** । तत्रान्यत्रेति सामानाधिकरण्ये तदित्यस्य वैयर्थ्यं चशब्दाध्याहारेण तत्रान्यत्र च सहासन्त्यपीति वैयधिकरण्येन योजनायामविरोधेनेत्युत्तरविरोधापत्तेस्तदविरोधेन योजयति **तस्मादिति** । चशब्दोऽवधारणेऽविरोधेनेत्यनेन च सम्बध्यत इत्याशयेनाह **अविरोधेनैवेति** । ब्रह्मैवेति पूर्ववाक्या-

नुसारेण ब्रह्मणीति वक्तव्ये गोविन्द इति विलक्षणशब्दप्रयोगोऽनर्थक इत्यतोऽभिमतार्थे प्रमाणान्तर-सूचकत्वान्नानर्थकत्वमित्याशयेनाह **गोविन्द इतीति** । यशोदादीत्यादिशब्देनार्जुनादिसंग्रहः ।

किं विवक्षितार्थे प्रत्यक्षप्रमाणसूचनेनापि प्रयोजनमविरोधेनेति सहावस्थानोक्त्यैव विरोधशङ्का-परिहारसिद्धेरित्यतोऽभिप्रायमाह **अयमिति** । आद्येऽपि किमागमोऽपि नास्तीत्यभिप्रायः, किंवाऽनुमानं नास्तीति, अथवा प्रत्यक्षं नास्तीति, विकल्पान्मनसि निधाय क्रमेण दूषयति **अणोरणीयानित्यादिना ।** आदिपदेन महतो महीयानित्यादेः संग्रहः ॥ **उभयकार्यदर्शनेति** । एकदामबद्धत्वरूपाणुत्वकार्यस्या-नेकदामाबद्धत्वरूपमहत्त्वकार्यस्य ब्रह्मणि सत्त्वात्कार्यस्य च स्वस्वकारणीभूतपरिमाणं विनाऽयोगादणुत्व-महत्त्वरूपपरिमाणद्वयवत्त्वे तत्कार्यमेव लिङ्गमिति भावः । यद्यप्यत्रोभयकार्यरूपानुमानस्येत्येव वक्तव्यम् । तथाऽपि कार्यस्यासिद्धिशङ्कापरिहारार्थं दर्शनानुसरणं कृतमिति ध्येयम् ॥ **उदाहृतप्रत्यक्षस्येति ।** अणुन्येव कृष्णस्य मुखे गर्भीकृतब्रह्माण्डे महत्त्वग्राहकस्य यशोदादिप्रत्यक्षस्येत्यर्थः ॥ **तत्रेति** । ब्रह्मणो-ऽणुत्वमहत्त्वादिसद्भाव इत्यर्थः । आद्येऽपि किं विरोधिप्रमाणमनुमानातिरिक्तं किं वाऽनुमानमिति विकल्पं मनसि निधायाद्यं दूषयति **विपरीतेति** । अस्तु तर्हि विमतं नाणुत्वमहत्त्वादिरूपपरिमाणवद्द्रव्यत्वात्प-दार्थत्वाद्वा घटवदित्यनुमानं मानमित्यत आह **द्रव्यत्वादेरिति** । **उक्तप्रमाणेति** । यशोदादिप्रत्यक्षादि-प्रमाणेत्यर्थः ।

---

स० — **यशोदादिप्रत्यक्षमिति** ॥ दामबन्धनसमये अन्येषाम् अपि प्रत्यक्षमादिशब्देन ग्राह्यम् । एतावता कथं पूर्वपक्ष्युक्तपर्युदासपक्षानुपपत्तिपरिहार इत्यतः विरुद्धवद्भातमित्यारभ्य सन्त्य-स्थूलादिकानि च इत्यन्तस्य भाष्यस्य तात्पर्यमाह **अयमभिसन्धिरित्यादिना** ॥ **उभयकार्यदर्शना-नुमानस्येति** । वत्सपाशकान्तरङ्गे तत्त्वबहुदामानन्तर्गतत्वमित्याद्युभयकार्यदर्शनानुमानस्येत्यर्थः । ननु विरुद्धपरिमाणस्यागमस्याभावेऽपि परमात्मा परिमाणद्वयोपेतो न द्रव्यत्वात् । घटादिवदिति अनुमानं भविष्यतीत्यत आह **द्रव्यत्वादेरिति ।**

प० — एतदभिप्रेतमित्युक्तं व्यनक्ति **तानीति** । तान्यस्थूलादिकानीति मूलपदयोरन्वयेन अनुवादः । अणुत्वमहत्त्वादिकानीति व्याख्या । मूलस्थचशब्दार्थमाह **न पुनरित्यादि** ॥ **यशोदा-प्रत्यक्षमिति** । तच्च, 'पीतप्रायस्य जननी सुतस्य रुचिरं स्मितं । मुखं लालयती राजन् जृंभतो ददृशे इदं । खं रोदसी' इत्यादिना भागवते प्रसिद्धमिति भावः । आदिपदादर्जुनादेः, विश्वरूपादिग्राहक-प्रत्यक्षग्रहः । **उभयकार्येति** । 'गोपिकोलूखले दाम्ना बबंध प्राकृतं यथा । तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः । द्व्यङ्गुलोनमभूदि'त्यादिना सिद्धस्य यशोदयोलूखले बद्धुमनेकदामभिरुद्योगेपि तैर्दाममिरबद्ध-त्वरूपकार्यस्यांते अत्यल्पदाम्ना बद्धत्वरूपकार्यस्य च दर्शनेन विष्णुरणुः अल्पदामबद्धत्वात् वत्सादिवत्'

'विष्णुः महान् अनेकदामभिरप्यबद्धत्वात्' पर्वतादिवत् इत्यनुमानस्येत्यर्थः ॥ **तत्रेति** । अणुत्वमहत्त्वादौ' । 'विष्णुः न स्थौल्यादिपरिमाणद्वयवान् द्रव्यत्वात्' इत्याद्यनुमानमेव विपरीतप्रमाणमित्यत आह **द्रव्यत्वादेरिति** ॥

**या० — उभयकार्यदर्शनेति** । यथैकस्मिन्नेव कृष्णेऽणुत्वकार्यं, वत्सपाशबद्धत्वं, महत्त्वकार्यं दामसञ्चयाबद्धत्वं, दृश्यते तदुभयं तत्र स्वकारणीभूतपरिमाणद्वयानुमापकमिति भावः ।

**श्री० —** व्याहतिमुपपादयति **यदि हीत्यादिना** । चशब्दार्थमाह **न पुनरिति** । नन्वीश्वरो न विरुद्धपरिमाणद्वयवान् द्रव्यत्वात् घटादिवदित्यनुमानस्यैव विपरीतप्रमाणस्य दर्शनादित्यत आह **द्रव्यत्वादेस्त्विति** ।

**च० — उभयकार्यदर्शनमिति** । अणुत्वकार्यस्यैकदामबद्धत्वस्य महत्त्वकार्यस्यानेकदामबद्धत्वस्य च ब्रह्मणि सत्वात्स्वस्वकारणीभूतपरिमाणमन्तरेण न तत्कार्यतादृशपरिमाणद्वयवैशिष्ट्ये तत्कार्यमेव लिङ्गमिति भावः ।

**सु० — किञ्चाकाशस्य परमाणुसंयोगः किमाकाशैकदेशे वर्तते, उताकाश एव । आद्ये किमेकदेशो नामावयवः, प्रदेशभेदो वा । नाद्यः । अनभ्युपगमात् । द्वितीये किमसावाकाशस्वरूपमेवाथार्थान्तरम् । आद्योऽन्त्येऽन्तर्भवति । द्वितीयोऽप्यभ्युपगमविरुद्धः । औपाधिकाङ्गीकारे त्वात्माश्रयादिकम् । न द्वितीयः । भेरीसंयोगस्यापि तथात्वापत्तेः । तथा च सर्वत्र शब्दोपलब्धिप्रसङ्गात् । अतः परमाणुसंयोगार्थमाकाशोऽणुरभ्युपगन्तव्य इति व्यभिचारश्च । न द्वितीयः । परस्परविरोधासिद्धेः । स हि सर्वत्र सहानवस्थानदर्शनाद्वा कल्पनीयः । उत क्वचित् । किंवा विमतिपदादन्यत्र सर्वत्र । नाद्यः । ब्रह्मणि श्रुत्यादिना सहावस्थानस्य दर्शनात् । न द्वितीयः । आकाशमनसोः परस्परपरिहारेण वर्तमानयोरपि भूतत्वमूर्तत्वयोर्विरोधाभावात् । अन्यथा पृथिव्यादौ तदुभयं न स्यात् । न तृतीयः । नित्यत्वज्ञानत्वयोरशरीरत्वकर्तृत्वयोश्चान्यत्र सर्वत्र सहानवस्थितयोरीश्वरबुद्धावीश्वरे च समावेशाभावप्रसङ्गात् ।**

**शे० —** आकाशे द्रव्यत्वादेर्व्यभिचारश्चेत्याह **किं चेति** । अत्र किञ्चेत्ययं निपातोऽन्यार्थकः । व्यभिचारश्चेत्यत्रत्यचशब्दश्चात्र संबन्धनीयः तथाच किञ्च चेत्यस्यान्यच्चेत्यर्थलाभान्न व्यभिचारश्चेत्युत्तरवाक्यस्थचशब्दवैयर्थ्यमिति ध्येयम् ॥ **अवयव इति** । तन्त्वादिवद्द्रव्यसमवायिकारणरूप इत्यर्थः । **अनभ्युपगमादिति** । आकाशसमवायिकारणीभूतद्रव्यानभ्युपगमादित्यर्थः । **आद्य इति** । आकाश-

स्वरूपमेवेति, आद्यः, आकाशे वर्तत इति द्वितीयेऽन्तर्भवतीत्यर्थः । तथाच तत्पक्षोक्तदोषेणैवायमपि पक्षो दूषित इति भावः । अर्थान्तरप्रदेश इति द्वितीयेऽपि, स किं स्वाभाविकः किं वौपाधिक, इति विकल्पं मनसि निधायाद्यं दूषयति **द्वितीयोऽभ्युपगमविरुद्ध इति** । आकाशनिरंशतायाः त्वत्सिद्धान्त त्वेन स्वाभाविकप्रदेशाङ्गीकारेऽपसिद्धान्त इति भावः । प्रदेश औपाधिक इति द्वितीयेऽपि, न तावदौपाधिकत्वमुपाधिगम्यत्वमिति शक्यते वक्तुम् । तथा सति प्रदेशानां स्वाभाविकत्वप्रसङ्गेनापसिद्धान्तापातात् । किन्तूपाधिजन्यत्वमेव । तत्र किं परमाणुरेवोपाधिः तदतिरिक्तो वा । आद्येऽपि न तावदसम्बद्धस्य परमाणोर्जनकत्वं सम्भवति । तथा सति काश्मीरस्थमहारजनस्य केरलदेशवर्तिवाससोऽवच्छेदकत्वप्रसङ्गात् । अतः संबद्धस्यैव तस्य जनकत्वमभ्युपेयम् । तत्रापि न परमाणोः सर्वदेशसम्बद्धस्य भेदकत्वं सम्भवति । तथा सति कृत्स्नस्यैवोपाधिनैव ग्रस्तत्वेन उपाधेराकाशभेदकत्वाभावप्रसंगात् । तस्मादेकदेशेन सम्बद्धस्यैव परमाणोराकाशभेदकत्वं वाच्यमित्याकाशैकदेशे परमाणुसंयोगोपपादकत्वेनाकाशैकदेशस्यैव परमाणुसंयोगापेक्षणादात्माश्रयत्वम् । न द्वितीयः । उपाध्यन्तरस्योक्तरीत्याऽसम्बद्धस्य भेदकत्वेऽतिप्रसङ्गात्सर्वदेशसम्बद्धत्वे च भेदकत्वायोगादेकदेशसम्बद्धत्वमेव वाच्यम् । तस्य चैकदेशस्य स्वाभाविकत्वेऽपसिद्धान्तात् । औपाधिकत्वेपि तद्गम्यत्वाभिप्राये उक्तदोषानतिवृत्तेः तज्जन्यत्वेऽपि स्वजन्यत्वे उक्तरीत्याऽऽत्माश्रयप्रसङ्गात् । पूर्वोपाधिजन्यत्वे चान्योन्याश्रयप्रसङ्गात् । उपाध्यन्तरजन्यत्वे च तस्यापि पूर्वोपाधिजन्यत्वे चक्रकप्रसङ्गात् उपाध्यन्तरजन्यत्वे तस्याप्युपाध्यन्तरस्योपाध्यन्तरकृतैकदेशसम्बद्धस्यैव भेदकत्वमित्यनवस्था स्यादित्याशयेनाह **औपाधिकेति** ॥ **भेरीसंयोगस्येति** । भेरीशब्दासमवायिकारणस्य हन्यमानभेर्याकाशसंयोगस्येत्यर्थः ॥ **तथात्वापत्तेरिति** । कृत्स्नाकाशवृत्तित्वापत्तेरित्यर्थः । अस्तु भेर्याकाशसंयोगस्य कृत्स्नाकाशवृत्तित्वं किं तावतेत्यत आह **तथा चेति** । त्वन्मते जन्यविभुविशेषगुणानां देशनियमस्यासमवायिकारणकृतत्वात् भेर्याकाशसंयोगस्य कृत्स्नाकाशवृत्तित्वे आद्य एव भेरीशब्दः कृत्स्नव्यापीति, तस्य सर्वत्रोपलब्धिप्रसङ्गादित्यर्थः । उपलक्षणं चैतत् । वीचीतरङ्गन्यायेन शब्दपरम्परोत्पत्तिप्रक्रियाभङ्गश्च स्यादित्यपि द्रष्टव्यम् । न च संयोगस्य स्वात्यन्ताभावासमानाधिकरण्यादयमदोष इति वाच्यम् । अणुत्वमहत्त्वयोरसामानाधिकरण्यनियमे भावाभावयोः सुतरां सामानाधिकरण्यायोगात् । किंच भेर्यवष्टब्धप्रदेशे संयोगवत् तदत्यन्ताभावस्याप्यङ्गीकारेऽन्यत्र च तदत्यन्ताभाववत् संयोगस्यापि धीप्रसङ्गादित्यभिप्रायात् ॥ **अत इति** । सूच्यग्रादिना पर्वतादेः संयोगस्य सूच्यग्रसमपरिमाणपर्वतादिप्रदेशवृत्तित्वदर्शनेन संयोगस्य प्रतिसंबन्धितुल्यपरिमाणतत्तत्प्रदेशवृत्तित्वसिद्ध्याऽऽकाशे परमाणुसंयोगस्य प्रतिसंबन्धिभूतपरमाणुतुल्यपरिमाणाकाशादिप्रदेशवृत्तित्वस्यैव वाच्यतया परमाणुसंयोगार्थमाकाशेऽणुत्वं परिमाणमपि वाच्यमेवेति परिमाणद्वयवत्याकाशे वर्तमानतया द्रव्यत्वादेर्व्यभिचार इत्याशयः ।

नन्वणुत्वमहत्त्वादीनां परस्परपरिहारेणैव वृत्तेः कथं न परस्परविरोध इत्यत आह **स हीति** ॥ **श्रुत्यादिनेति** । 'अणोरणीयान्' इत्यादिश्रुत्या उभयकार्यरूपानुमानेन यशोदादिप्रत्यक्षेण चेत्यर्थः ॥ **आकाशमनसोरिति** । मूर्तत्वपरिहारेण भूतत्वस्य, आकाशे भूतत्वपरिहारेण मूर्तत्वस्य, मनसि वृत्त्या भूतत्वमूर्तत्वयोरपि सहानवस्थानेन क्वचित्सहानवस्थानदर्शनस्य विरोधकल्पकत्वे, भूतत्वमूर्तत्वयोरपि स स्यादिति भावः । ननु च तयोरपि विरोधस्यैवाभ्युपगमादिष्टापादनमेतदित्यत आह **अन्यथेति** ॥ **नित्यत्वज्ञानत्वयोरिति** । यद्यपीश्वरज्ञानमनित्यमिति वैशेषिकाणां मतम् । अग्रे यद्वक्ष्यत्यात्रेयस्य ज्ञानानित्यत्वमपीति । तथाऽपि न तन्मुख्यमतमिति युक्तमीश्वरज्ञाने ज्ञानत्वनित्यत्वयोः समावेशाभावापादनमिति द्रष्टव्यम् । यद्वा । एतदस्वरसादेवाह **अशरीरत्वकर्तृत्वयोरिति** ॥ **अन्यत्रेति** । विमति पदादीश्वरज्ञानादीश्वराच्चान्यत्रेत्यर्थः ।

स० — अनुमानस्य व्यभिचारमप्याह **किञ्चेति** । किञ्चेत्ययं निपातसमुदायः । व्यभिचारश्चेत्यत्रत्यः चशब्दः अत्र संबध्यते तथाचान्यच्चेत्यर्थः तेन किञ्चेत्यनेनैव समुच्चयस्य लब्धत्वेन व्यभिचारश्चेति चशब्दो व्यर्थ इति चोद्यानवकाशः । **आद्योन्त इति** । उताकाशेत्यस्मिन्नित्यर्थः । ननु स्वाभाविकप्रदेशानभ्युपगमान्नाकाशैक्यहानिः औपाधिकानदभ्युपगमाच्च संयोगस्य प्रदेशवृत्तित्वं संभवतीति तत्राह **औपाधिकेति** ॥ तत्रेदमाकूतम् । उपाधिः किं संबद्धः, प्रदेशकारक उतासंबद्धः । अन्त्येऽतिप्रसङ्गः । आद्येऽपि किं एकदेशसंबद्धः, उत सर्वदेशसंबद्धः । द्वितीये प्रदेशकारकत्वं न स्यात् । आद्ये किं एकदेशः सः स्वाभाविकः उतौपाधिकः । आद्येऽपसिद्धान्तः द्वितीये किं अनेनौपाधिना कृतः उतोपाध्यन्तरेण आद्ये आत्माश्रयः द्वितीये किं तदुपाध्यन्तरं एतदुपाधिकृतप्रदेशसंबद्धं सत भेदकं उतोपाध्यन्तरकृतप्रदेशसंबद्धम् । आद्ये चक्रकं द्वितीये अनवस्थेति ।

अणुत्वमहत्वादीनां परस्परपरिहारेण वर्तमानानां कथं परस्परविरोधासिद्धिरित्यत आह **स हीति** । सहानवस्थानदर्शनात् । कल्पनीयो हि स विरोधः किं क्वचित् किं वा सर्वत्र विमतिपदादन्यत्रेति योजना ।

प० — व्यभिचारं च द्रव्यत्वादेः वक्तुमाकाशेप्यणुत्वमहत्त्वे 'महतोल्पत्वम् अपि तु व्योमवत्प्राह वेदवित्' इत्यादिवैशेषिकनयानुव्याख्यानं हृदि कृत्वा उपपादयति **किंचेत्यादिना** ॥ **आद्योन्त्य इति** । आकाश एवेति विकल्पदोषेण दुष्टो भविष्यतीति भावः ॥ **अभ्युपगमविरुद्ध इति** । अपसिद्धांत इत्यर्थः ॥ **आत्माश्रयादिकमिति** । उपाधिखंडनायुक्तदिशेति भावः ॥ **आकाशोणुरपीति** । संयोगस्य स्वाभाविकप्रदेशवृत्तित्वात् प्रदेशस्याणुत्वात् प्रदेशप्रदेशिनोर्भेदाभावात् आकाशो अणुरियुक्तं । अथ परस्परं विरोध इति कल्पं निराह **न द्वितीय इति** ॥

**या०**— ईश्वरो न परिमाणद्वयवान् द्रव्यत्वात् इत्यनुमानस्याकाशे व्यभिचारमपि वक्तुमाह **किञ्चाकाशस्येत्यादिना** ॥ **अवयव इति** । तन्त्वादिवद्द्रव्यसमवायिकारणरूप इत्यर्थः ॥ **प्रदेशभेद इति** । पटे हस्तवितस्त्यादिपरिमितः प्रदेशो यादृशः पटैकदेशः तादृशः प्रदेशविशेषो वेत्यर्थः ॥ **अनभ्युपगमादिति** । आकाशकारणीभूतद्रव्यानभ्युपगमादित्यर्थः ॥ **अभ्युपगमविरुद्ध इति** । त्वन्मते आकाशस्य निरंशत्वेन स्वाभाविकप्रदेशाङ्गीकारेऽपसिद्धान्त इत्यर्थः ॥ **आत्माश्रयादिकमिति** । उपाधिः किं स परमाणुरेव अन्यो वा । नाद्यः, आत्माश्रयात् । नान्त्यः, सोऽप्याकाशैकदेशसम्बन्ध्येव तमेकदेशं सम्पादयतीति वाच्यम् । अन्यथाऽतिप्रसङ्गात् । तस्य चैकदेशस्य स्वाभाविकत्वेऽपसिद्धान्त-प्रसङ्गेन औपाधिकत्वे तत्राप्युक्तविकल्पप्रसरेणानवस्थाप्रसङ्ग इत्यर्थः ॥ **आकाशोऽणुरिति** । तथा चैकस्मिन्नेवाकाशे परिमाणद्वयप्राप्त्या व्यभिचार इति भावः ।

**श्री०**— व्यभिचारं च वक्तुमाह **किञ्चेति** ॥ **आकाश एवेति** । सर्वस्मिन्नप्याकाश एवेत्यर्थः । **अन्त्ये**=आकाश एवेति पक्षे । स्वाभाविकप्रदेशानभ्युपगमान्नाकाशैक्यहानिः औपाधिक-तदभ्युपगमाच्च संयोगस्य प्रदेशवृत्तित्वं सम्भवति इति चेत्तत्राह **औपाधिकेति** । किं घटाद्युपाधिरसम्बद्ध आकाशभेदकः, उत सम्बद्धः । आद्येऽतिप्रसङ्गः । द्वितीये स उपाधिसम्बन्धः सर्वाकाशवर्ती, आकाशैकदेशवर्ती वा । नाद्यः, अभेदकत्वप्रसङ्गात् सर्वस्यैवोपाधिना ग्रस्तत्वात् । द्वितीये एकदेशस्यौ-पाधिकत्वात्सोऽप्यौपाधिकेनैव प्रदेशेन सम्बध्यत इति वाच्यम् । तत्रापि स एवोपाधिरन्यो वेत्यादि विकल्पापत्त्याऽऽत्माश्रयानवस्थादिकं स्यादिति भावः ॥ **न द्वितीय इति** । उताकाश एवेति द्वितीयः पक्षो नेत्यर्थः ॥ **भेरीति** । यथा परमाणुसंयोग आकाश एव वर्तते । सर्वत्राकाशे तिष्ठतीति यावत् । तथा भेरीसंयोगोऽपि सर्वत्राकाशे स्यादित्यर्थः । इष्टापत्तिरिति चेत्तत्राह **तथा चेति** ॥ **शब्देति** । भेरीसंयोगकार्यभूतशब्देत्यर्थः । असमवायिकारणस्य सर्वत्र सत्वादिति भावः । **सः** विरोधः । **सर्वत्र** ईश्वरेऽन्यत्र चेत्यर्थः ॥ **अणुरपीति** । स्वाभाविकाणुप्रदेशवानित्यर्थः । क्वचित् सहानवस्थान-दर्शनाद्वा कल्पनीय इत्यर्थः ॥ **विमतीति** । विप्रतिपत्तिविषयीभूतेश्वरादन्यत्र सहानवस्थानदर्शनाद्वा कल्पनीय इत्यर्थः । **अन्यथा** विरोधाङ्गीकारे । **तदुभयं** । भूतत्वमूर्तत्वोभयसमावेश इत्यर्थः ।

**च०**— ईश्वरपक्षकतादृशपरिमाणद्वयराहित्यसाध्यकद्रव्यत्वहेतुकानुमानस्याकाशेऽनैकान्त्यमभिधि-त्सते । **किञ्चेति** । **आकाश एव**= कृत्स्नाकाश एव । **अवयवः**= द्रव्यसमवायिकारणरूपः । **प्रदेशभेदो वेति** । हस्तवितस्त्यादिपरिमितः पटे यादृशः, प्रदेशस्तादृशप्रदेशविशेषो वेत्यर्थः । **अन-भ्युपगमात्** । आकाशकारणीभूतद्रव्यानभ्युपगमात् । **अभ्युपगमविरुद्धः**= निसर्गेणाकाशस्या-नंशत्वाङ्गीकर्तृस्वाचार्याभ्युपगमविरुद्धः । **आत्माश्रयादिकमिति** । आदिपदमनवस्थापरिग्राहकम् ।

तत्परमाणुरेवोपाधित्वेनाभिप्रेयते तदितरो वा । आद्ये आत्माश्रयः । द्वितीये सोप्यतिप्रसङ्गभङ्गाय तदेकदेशं संबध्नाति इति तस्य औपाधिकतायां च तत्राप्युक्तवितर्कप्रसरेणानवस्था प्रसज्यत इत्यर्थः । **तथात्वापत्तेः**= । कृत्स्नाकाशगतत्वापत्तेः । **अन्यधर्मस्य**= अवयविधर्मस्य । **अन्यधर्मत्वे**= अवयवधर्मत्वे । **अतिप्रसङ्गात्**= घटधर्मस्यापि पटधर्मत्वप्रसङ्गात् । **वाक्यव्यवस्थेति** । होमादौ विरुद्धोदयानुदयकालीनत्वस्यापि प्रामाणिकतयोपेतव्यन्वापत्त्या उदितानुदितहोमादिवाक्यव्यवस्थाऽप्यधिकारिभेदेन अनाश्रयणीया प्रसज्येतेत्यर्थः । **प्रमाणस्वरूपेति** । उदितादिवाक्यं नैकत्र तादृशकालद्वयादिविधायकं किं तु व्यवस्थयैवेति मीमांसया— 'अणोरणीयानि'त्यादिवाक्यं तु तामन्तरेणैव प्रत्यक्षसंवादेन तादृशपरिमाणद्वयविधायकमिति निर्णीतमित्यर्थः । **अत एव**= प्रमाणस्वरूपनिर्णयौपयिकत्वादेव ।

**सु॰— किञ्च । संयोगादीनां प्रदेशवृत्तित्वमङ्गीकुर्वता न तावत्प्रदेशवृत्तित्वमवयववृत्तित्वमङ्गीकर्तुमुचितम् । आकाशादीनां तदभावात् । अन्यधर्मस्यान्यवृत्तित्वाभ्युपगमेऽतिप्रसङ्गाच्च । किं तु स्वात्यन्ताभावसमानाधिकरणत्वमेव वक्तव्यम् । तथाच भावाभावयोरन्यत्र सर्वत्र सहानवस्थितयोः कथं विरोधो न भवेत् । दर्शनादिति चेत्समं प्रकृतेऽपि । तस्मादन्यत्र सर्वत्र सहानवस्थितं कथं नाम सहावतिष्ठत इत्येवं प्रश्नमात्रमवशिष्यते । तत्र वस्तुस्वभाव एव तादृश इति परिहारः । न चैवमतिप्रसङ्गः । प्रमाणभावाभावाभ्यां तद्व्युदासात् । एवं सति वाक्यव्यवस्था न क्वाप्याश्रयणीयेति चेन्न । प्रमाणस्वरूपावधारणे त्वेवमेतदित्यङ्गीकारात् । अत एव न मीमांसावैयर्थ्यमिति ।**

**शे॰—** अणुत्वमहत्त्वयोर्विमतिविषयादन्यत्र परस्परपरिहारेणैव वृत्तिदर्शनेनान्यत्र तयोः सहानवस्थाननियमेऽपि विमतिविषये सहदर्शनान्न तत्र विरोध इत्याशयेन विमतिविषये सहदर्शनस्याविरोधोपपादकत्वं परमुखेनैवानेतुमन्यत्र सहानवस्थानदर्शनादीश्वरेऽणुत्वमहत्त्वयोर्विरोधे भावाभावयोरन्यत्र सहानवस्थानदर्शनात्संयोगतदत्यन्ताभावयोरपि वृक्षे विरोधः स्यादिति प्रतिबन्दीं वक्तुकामः संयोगतदत्यन्ताभावयोरपि असामानाधिकरण्यस्यैव सत्त्वादिष्टापादनमित्याशङ्कापरिहाराय पररीत्या तयोः सामानाधिकरण्यं तावदुपपादयति **किंचेति** । संयोगस्य प्रदेशवृत्तित्वाङ्गीकारात् तस्य च स्वात्यन्ताभावसामानाधिकरण्यरूपत्वात् संयोगतदत्यन्ताभावयोः सामानाधिकरण्यसिद्धिरिति भावेन कुतः प्रदेशवृत्तित्वस्योक्तप्रकारतेत्यतोऽन्यस्यासंभवादित्याह **संयोगादीनामिति** । प्रदेशवृत्तित्वं यद्यवयववृत्तित्वं, तर्हि इह पक्षी नेह पक्षीति प्रतीत्या सिद्धस्याकाशनिष्ठपक्षिसंयोगादेः प्रदेशवृत्तित्वं न स्यात् । तत्राकाशावयववृत्तित्वरूपप्रदेश-

वृत्तित्वस्यायोगात् । आकाशादेरवयवाभावात् । अतो नावयववृत्तित्वं तदित्याह **आकाशादीनामिति** । अङ्गीकृत्य च वृक्षादिसावयववृत्तिसंयोगादेर्वृक्षाद्यवयववृत्तित्वं निरवयवगगनादिवृत्तिसंयोगादेरवयववृत्तित्वाभाव उक्तः । वस्तुतस्तु सावयववृक्षादिवृत्तिसंयोगस्यापि, न वृक्षाद्यवयववृत्तित्वं परेणाङ्गीकर्तुं शक्यमित्याह **अन्यधर्मस्येति** । वृक्षधर्मत्वात्संयोगस्य न तदवयववृत्तित्वं युक्तम् । न चैवं प्रतिवादिमतेऽपि अवयवसंयोगस्य तदनुपपत्तिरविशेषादिति वाच्यम् । तेनावयवावयविनोः अभेदाङ्गीकारेणातिप्रसङ्गपरिहारसंभवेन तदुपपत्तावपि न त्वन्मते तदुपपत्तिः । त्वयाऽवयवावयविनोर्भेदाभ्युपगमेनान्यवृत्तेरन्यधर्मत्वायोगात् । अन्यथाऽवयववृत्तिरूपादेरप्यवयविधर्मत्वं स्यादविशेषादिति भावः । माऽस्तु प्रदेशवृत्तित्वस्यावयववृत्तित्वरूपत्वं किं तावतेति पृच्छति **किं त्विति** । प्रतिवादिरीत्या प्रयुक्तस्यावयववृत्तित्वस्य निरासेऽन्यस्याप्रसङ्गात् वाद्यभिमतस्यात्यन्ताभावसामानाधिकरण्यस्य सिद्धिरित्याशयेन परिहरति **स्वेति** । एवमनिष्टापादनत्वमुपपाद्येदानीं प्रतिबन्दीमाह **तथा चेति** । कथं नाम सहावतिष्ठतामिति प्रमाणप्रश्नश्चेदुक्तमुत्तरम् । अथ संभावकं किमित्याशयस्तत्राह **तत्रेति** । देशभेदेन कालभेदेन प्रतियोगिभेदेन च विरुद्धद्वयसमावेशदर्शनेन भेदस्य विरोधशान्तिहेतुत्वात् तत्प्रतिनिधिना विशेषेणापि युक्तो विरोधपरिहार इति भावः । आशयमजानानः शङ्कते **न चेति** । **अतिप्रसङ्गः** सर्वज्ञत्वासर्वज्ञत्वादिधर्माणामपि विरोधाभावप्रसङ्गः । स्वभावभेदेन तत्रापि विरोधस्य उत्सादयितुं शक्यत्वात् । तथा च विरुद्धधर्माधिकरणतया भावभेदसाधनमनुपपन्नमित्याशयः । दृष्टिप्रमाणतश्चेति समयपादीयमनुव्याख्यानं मनसि निधाय समाधत्ते **प्रमाणेति** । न स्वेच्छामात्रेण विरुद्धधर्मद्वयमभ्युपेत्य विशेषेण विरोधाभावोऽभिधीयते येनातिप्रसङ्गः स्यात् । किंतु प्रमाणेन तदर्थप्राप्तावेवेति प्रमाणेन समुचितस्यैव तस्य विरोधपरिहारकत्वम् । न चातिप्रसङ्गस्थले प्रमाणेन समुचितो विशेषोऽस्तीति नातिप्रसङ्ग इत्याशयः । न प्रमाणसमुचितस्यापि विशेषस्य विरोधशामकत्वं व्यभिचारादित्याशङ्कते **एवं सतीति** ॥ **वाक्येति** । सादित्वानादित्वाणुत्वव्यापकत्वादिप्रतिपादकवाक्येत्यर्थः ॥ **व्यवस्थेति** । अनादित्वश्रुतिर्गौणानादित्वपरेत्यादिव्यवस्थेत्यर्थः ॥ **क्वापीति** । जीवपरमात्माधिभूताधिदैवतादिष्वित्यर्थः ॥ **अनाश्रयणीयेति** । आकाशादीनां प्रमाणद्वयेन सादित्वानादित्वबोधनेन तत्र प्रमाणसमुचितविशेषेणैव विरोधस्योत्सादयितुं शक्यत्वान्न व्यवस्थया प्रयोजनमिति तत्परमीमांसावैयर्थ्यं स्यादिति भावः । यत्र व्यवस्थाऽनाश्रयणेऽपि प्रमाणस्वरूपावधारणमस्ति तत्र प्रमाणसमुचितविशेषेणैव सर्वविरोधपरिहाराद्व्यवस्थाऽनाश्रयणमिष्टमेव । यत्र च न प्रमाणस्वरूपावधारणं, तत्र प्रमाणसमुचितविशेषस्याभावेन तेन विरोधशान्तेरसंभवात्प्रमाणस्वरूपावधारकत्वेन व्यवस्थाऽऽश्रयणमप्यर्थवदेवेत्याशयेन समाधत्ते **प्रमाणेति** ॥ **अत एवेति** । प्रमाणस्वरूपनिर्णयार्थमवश्यमपेक्षितव्यवस्थोपपादकतया मीमांसाया अर्थवत्त्वादेवेत्यर्थः ।

स० — सावयवेष्वर्थेषु अवयववृत्तित्वे संयोगस्यावयववृत्तित्वं न स्यात् त्वयाऽवयवावयविनोर्भेदाभ्युपगमात् इत्याह **अन्यधर्मस्येति** ॥ नन्वस्थूलत्वादीनामविरोधेनैकत्र समावेशे क्वापि विरोधाभावप्रसंगाद्भावभेदो न स्यादित्यत आह **न चेति** ॥ **एवं सतीति** । उदितानुदितहोमयोरपि प्रमाणप्रमितयोरविरोधाद्व्यवस्थाऽऽश्रयणं न स्यात् । प्रमाणसिद्धस्यान्यथाभावाभावात् मीमांसापि व्यर्था स्यादिति भावः ॥ **न प्रमाणेति** । विरुद्धसमवाये एकस्य कर्मणोऽनुष्ठातुमशक्यत्वात् श्रुतिस्वरूपस्यैवानवधृतत्वात् व्यवस्था यत्र तत्राव्यर्था मीमांसा भगवतस्तु लोकविलक्षणत्वात् अविरोधेनैव प्रमाणस्वरूपमवधृतानिति भावः । **अत एवेति** । प्रमाणस्वरूपावधारणार्थत्वादेवेत्यर्थः ।

प० — **अन्यधर्मस्यान्यवृत्तित्वेऽतिप्रसंगाच्चेति** । प्रदेशपक्षेपि न्यायमते प्रदेशिनोः भेदादिति भावः । ननु घटादावप्यन्यत्र अदृष्टविरुद्धधर्मा अंगीकार्याः । वस्तुस्वभावस्य तादृशत्वेन विरोधपरिहारसंभवादित्याशंक्य निराह **न चैवमिति** ॥ **एवं सतीति** । वस्तुस्वभावत्वेनैव विरोधपरिहारे सतीत्यर्थः ॥ **वाक्यव्यवस्थेति** । सगुणनिर्गुणवाक्य-निष्क्रियसक्रियवाक्य-जगत्सत्यत्वासत्यत्वादिवाक्यानां भिन्नविषयत्वादिना व्यवस्था न स्यात् । एकविषयत्वेऽपि वस्तुस्वभावस्यैव तादृशत्वादिति विरोधपरिहारस्य सुवचत्वादिति भावः ॥ **प्रमाणस्वरूपेति** । अस्य प्रमाणस्यैतदेव तात्पर्यं नान्यदिति निर्धारणे सत्येव वस्तुस्वभावानुसरणमित्यर्थः ॥ **अत एवेति** । प्रमाणस्वरूपावधारणार्थत्वादेव इत्यर्थः ॥

या० — **अन्यधर्मस्येति** । तथाच तार्किकमतेऽवयवस्यावयवितोऽन्यत्वेन संयोगस्यावयववृत्तित्वेऽवयविधर्मत्वं न स्यादिति भावः ॥ **वाक्यव्यवस्थेति** । उदिते होतव्यमनुदिते होतव्यमित्यादौ अधिकारभेदादिना व्यवस्था नाश्रयणीया, किन्तु होमादौ विरुद्धं कालद्वयादिकमपि प्रामाणिकत्वादङ्गीकार्यं स्यादित्यर्थः । यद्वा 'प्राण एवाधस्तात्प्राण उपरिष्टात्प्राणो मध्यतः प्राणः सर्वतः । प्राणो वाऽणुः' इति मुख्यप्राणस्यापि व्याप्त्यणुत्वप्रतिपादकवाक्ययोर्व्यवस्था अणुश्चेत्यत्र रूपभेदेन नाश्रयणीया किन्तु प्राणेऽपि विरुद्धं परिमाणद्वयं प्रामाणिकत्वादङ्गीकार्यं स्यादित्यर्थः ॥ **प्रमाणस्वरूपेति** । उदितहोमादिवाक्यं नैकत्र विरुद्धकालद्वयादिविधायकं, किन्तु व्यवस्थयैवेति मीमांसया निर्णीतम् । अणोरणीयानित्यादिवाक्यं तु व्यवस्थां विना नैकत्रैव प्रमाणद्वयविधायकमिति प्रत्यक्षादिसंवादेनैव निर्णीतमित्यर्थः ॥ **अत एवेति** । प्रमाणस्वरूपनिर्णयार्थमावश्यकत्वादेवेत्यर्थः ।

श्री० — भावाभावयोः संयोगतदत्यन्ताभावयोः । **सहानवस्थितयोः** सामानाधिकरण्याङ्गीकार इति शेषः ॥ **दर्शनादिति** । अग्रे संयोगस्य मूले तदभावस्य च दर्शनादित्यर्थः । ननु अस्थूलादीनाम-

विरोधेनैकत्र समावेशे एतन्न्यायेनैव क्वापि विरोधाभावप्रसङ्गाद्भावभेदो न स्यादित्यत आह **न चेति** ॥ **प्रमाणेति** । यत्र विरुद्धतया प्रतीयमानानामप्येकत्र समावेशे प्रमाणमस्ति, तत्राविरोधः यत्र नास्ति तत्र विरोधः, इत्यङ्गीकारेणातिप्रसङ्गव्युदासः सम्भवतीत्यर्थः । नन्वेवं तर्हि 'उदिते होतव्यमनुदिते होतव्यम्' इत्युदितानुदितहोमयोरुभयोरपि एतत्प्रमाणसिद्धत्वेनैवाविरोधात् एकपुरुषविषयकत्वमेव स्यात् । तथाच शाखाभेदेन व्यवस्थाश्रयणं न स्यात् । प्रमाणसिद्धस्यान्यथात्वशङ्काया अभावेन तदविरोधसाधकमीमांसावैयर्थ्यं च स्यादित्याशङ्क्य निषेधति **एवं सतीति** ॥ **प्रमाणेति** । यद्युदिते होतव्यमिति प्रमाणाद्भिन्नमुदितानुदितहोमयोरेकपुरुषविषयकत्वेनाविरोधसाधकं प्रमाणमेतादृशमिति तत्प्रमाणस्वरूपं निश्चितं स्यात्तदा ह्येवमेतत् । भिन्नशाखिविषयत्वेन व्यवस्था नाश्रयणीयेति चोद्यं स्यात् । न च तत्प्रमाणस्वरूपं निश्चितम् । अतो विरुद्धसमवाये एकस्य कर्मणोऽनुष्ठातुमशक्यत्वाद्युक्तं व्यवस्थाश्रयणमित्यर्थः ॥ **अत एवेति** । अविरोधसाधकप्रमास्वरूपस्यानिर्धारणादेवेत्यर्थः । प्रकृते तु भगवतो लोकविलक्षणत्वात्तत्राणुत्वमहत्त्वयोरविरोधेन समावेशघटकम् अणोरणीयानित्यादि प्रमाणस्वरूपं निश्चितमस्तीति तद्वैषम्यमस्तीति न कोऽप्यतिप्रसङ्ग इति भावः ।

**सु० — एवं तावदस्थूलादिपदानामणुत्वाद्यभिधायकत्वपक्षमुपादाय श्रुतेर्ब्रह्मविषयत्वमुपपादितम् । इदानीं स्थूलत्वादिनिवृत्तिपरत्वेऽपि न दोष इत्येवंपरतया सूत्रं व्याचष्टे** अन्येति ।

**अनु० —** अन्यवस्तुस्वभावानां स्थौल्यादीनामपाकृतिम् ॥
नारायणे श्रुतिर्वक्ति न तु तस्यास्वभावताम् ॥

**ब्रह्मणोऽन्यानि वस्तूनि घटादीनि । तत्स्वभावभूतानि यानि स्थौल्यादीनि जडानि परतन्त्राणि कार्याणि विनाशवन्त्यणुत्वादिभिः सहानवस्थितानि च । तथाविधानां स्थौल्यादीनामभावं नारायणे 'अस्थूलमनणु'इत्यादिश्रुतिर्वक्ति । न तु तस्य निःस्वभावत्वं येनोक्तविरोधः स्यादित्यर्थः । कुत एवं श्रुतेरर्थसङ्कोचः क्रियते । निःस्वभावत्वमेवार्थः किं न स्यादित्यत आह** सर्वधर्मेति ।

सर्वधर्मा सर्वनामा सर्वकर्मा गुणाः श्रुताः ॥
दोषाः श्रुताश्च नेत्याद्या प्रमाणं श्रुतिरत्र च ॥ ३ ॥

**अत्र=परमेश्वरस्य सस्वभावत्वे न केवलमत्र किं नाम पूर्वोक्ताणुत्वमहत्त्वादौ चेत्यर्थः । इहाच्छायमतम इत्यादेरसंकुचितवृत्तित्वमेव ज्ञेयम् । बहुपदविषयत्वादिदं व्याख्यानं स्वशब्देन विधाय सूत्रकारः, कतिपयपदविषयं पूर्वव्याख्यानं चशब्देन समुच्चितवानिति ॥ १-३-३ ॥**

शे० — नन्वस्थूलादिपदानां स्थूलत्वादिविपरीताणुत्वाद्यभिधायकत्वाङ्गीकारेणास्वभावत्वाप्राप्ते-स्तन्निरासकोत्तरकारिकानर्थक्यमित्यतो नोत्तरवाक्यं पूर्ववाक्यशेषो येनासङ्गतिः स्यात् । किन्तु प्राग्विकल्पितपक्षद्वयमध्ये द्वितीयपक्षमभ्युपेत्य तत्रोक्तदोषपरिहारकतया सूत्रव्याख्यानार्थमिति नासङ्गत्यादीत्याशयेन पूर्वोत्तरवाक्ययोरर्थभेदं दर्शयन्नेव तद्वाक्यं तथैवावतारयति **एवं तावदिति** ॥ **उक्त विरोध इति । 'सर्वत्र प्रसिद्धोपदेशात् । अत्ता चराचरग्रहणात् । रूपोपन्यासाच्चे'**त्युक्तविरोधः स्यादित्यर्थः । ननु यद्यस्थूलादिपदानां लौकिकस्थौल्यादिराहित्यार्थकत्वेनालौकिकस्थौल्यादिसिद्धिः तर्हि अच्छायमतमोऽवाय्वनाकाशपदानामपि लौकिकछायातमोवाय्वादिराहित्यार्थकत्वापत्त्याऽलौकिकतमोऽवाय्वादिसिद्धिः स्यादित्यत आह **इहेति** । अस्थूलमनण्वित्यादिवाक्येऽस्थूलादिपदानां प्राकृतथौल्यादिमात्रनिषेधकतया संकुचितार्थत्वेऽपि अच्छायमतमोऽवाय्वनाकाशमित्यादीनां सर्वात्मना तमआदिनिषेधकतयाऽसंकुचितार्थत्वमेव ज्ञेयम् । अदुःखमसुखमित्येकस्मिन्नपि वाक्येऽसुखमित्यनेन बाह्यसुखनिषेधेऽप्यदुःखमित्यनेन दुःखमात्रनिषेधदर्शनेन योग्यायोग्यत्वयोरेव संकोचासंकोचनियामकतयैकवाक्यस्थत्वादेरप्रयोजकत्वादिति भावः । ननूक्तरीत्याऽस्थूलादिश्रुतिव्याख्यानद्वयस्याप्युपपन्नत्वेनाविशेषात् द्वयोरपि स्वशब्देनैव विधेयतया कुतः सूत्रे एकस्यैव स्वशब्देन विधानं द्वितीयस्य चशब्देन समुच्चय इत्यतो ब्रह्मणि सुखादीनामपि व्यावृत्तिसंभवेन प्रसज्यप्रतिषेधार्थतया व्याख्यानस्य एतच्छ्रुतिगतासुखादिपदसाधारणतया सकलपदविषयकत्वात् ब्रह्मणि सुखान्यस्य सुखादिसदृशान्यस्यासंभवेन पर्युदासार्थतया व्याख्यानस्यासुखादिपदसाधारणत्वाभावेनैतच्छ्रुतिगतास्थूलादिकतिपयपदमात्रविषयकत्वात् । बहुविषयकत्वाल्पविषयकत्वाभ्यां विशेषाद्युक्तमेव स्वशब्देन विधानादिकमित्याह **बह्विति** ॥ १—३—३ ॥

स० — **इदानीमिति** । प्रसज्यप्रतिषेधेनेति शेषः । पर्युदासपक्षस्य च शब्देन सूचने अस्य स्वशब्देनोपादाने तु नियामकमाह **बह्विति** । प्रसज्यप्रतिषेधपक्षे सुखादीनामपि व्यावृत्तिसंभवात् बहुपदविषयत्वं पर्युदासपक्षे तु नञस्तत्समं तदन्यदर्थः स्यात् न हि सुखान्यत् सुख समं संभवतीति अल्पपदविषयत्वं बोध्यं ॥ **समुचितवानिति** ॥ अनेन सौत्रचशब्दस्य समुच्चयोऽप्यर्थ इत्युक्तं भवति ।

प० — **सूत्रमिति** । पूर्वं च चशब्दार्थोऽयमिति भावः । अत्रेत्यनुवादः परमेश्वरस्य स्वभावत्व इति व्याख्या । सूत्रे चशब्दसंगृहीतं व्याख्यानं विधिरूपत्वात् स्वशब्देन कर्तुमुचितम् इत्यनौचित्यमाशंक्य निराह **बहुपदेति** । इदं स्थौल्यादिराहित्यार्थत्वरूपं व्याख्यानं श्रुतिगतास्थूलादिसर्वपदविषयत्वात् अन्यभावव्यावृत्तिरिति वा चशब्देन कृतमित्यर्थः ॥ **कतिपयेति** । अस्थूलादिपदचतुष्टयेत्यर्थः ॥ ॥ १ । ३ । ३ ॥

**या०**— अतम इत्यादेरित्यत्रादिपदेनावाय्वनाकाशमित्यनयोर्ग्रहणम् ॥ **कतिपयेति** । अस्थूलमनण्वदीर्घमन्ह्रस्वमिति पदचतुष्टयमात्रविषयत्वात्पूर्वव्याख्यानं कतिपयपदविषयमित्यर्थः ॥ १-३-३ ॥

**श्री०**— **अणुत्वाद्यभिधायकत्वेति** । अस्थूलं स्थूलपरिमाणभिन्नपरिमाणोपेतं तच्चाणुपरिमाणमेवेति नञः पर्युदासार्थत्वमङ्गीकृत्येत्यर्थः ॥ **निवृत्तीति** । नञः प्रसज्यप्रतिषेधार्थत्वेऽपीत्यर्थः ॥ **उक्तविरोध इति** । सर्वत्रेत्यादिनोक्तसर्वगतत्वात्तत्वादिविरोधः स्यादित्यर्थः । चशब्दार्थमाह **न केवलमिति** । ननु यथाऽस्थूलमित्यादौ प्राकृतस्थौल्यादिकं नास्ति अपि तु अप्राकृतं स्थौल्यादिकमस्तीत्यर्थः क्रियते । एवमच्छायमतम इत्यत्रापि प्राकृतछायातमोनिषेधेऽप्राकृततत्सद्भावः प्रसज्येत । तच्च विरुद्धं तस्मात्कथमेतदित्यत आह **इहेति** । श्रुतौ प्रसज्यप्रतिषेधपक्ष इत्यर्थः ॥ **असंकुचितेति** । सर्वात्मना निषेध इत्यर्थः । ननु 'अन्यभावव्यावृत्तेश्च' इति सूत्रे सूत्रकारः प्रसज्यप्रतिषेधाङ्गीकारेण श्रुतिव्याख्यानं कण्ठतो विधाय पर्युदासाङ्गीकारेण व्याख्यानं चशब्देन कुतः समुच्चितवान् । निमित्ताभावादित्यत आह **बह्विति** । इदं प्रसज्यप्रतिषेधार्थत्वेन व्याख्यानम् ॥ **कतिपयेति** । अस्थूलमनण्वन्ह्रस्वमदीर्घमिति पदचतुष्टय एव स्थूलपरिमाणभिन्नपरिमाणोपेतमिति प्राप्नोति । परस्परविरुद्धपरिमाणरूपार्थाभिधायकपदत्वादेषाम् । अलोहितमित्यादौ नैवंरूपेणार्थो युक्तः । तद्विरोध्यनुक्तेरिति पर्युदासस्य कतिपयपदविषयकत्वं ज्ञेयम् । यद्यपि लोहितादिभिन्न इत्यर्थः कर्तुं शक्यस्तथाऽप्यस्थूलादिपदेषु यथाऽधिकार्थत्वमायाति न तथा । अपि त्वल्पार्थतेति ध्येयम् ॥ १—३—३ ॥

**च०**— **अतम इत्यादेरिति** । आदिपदमेवाय्वित्यादिग्राहकम् । **कतिपयपदविषयम्** ॥ अस्थूलमित्यादिपदचतुष्टयविषयम् ॥ १-३-३॥

**सु०— अतःपराणि सूत्राणि भाष्य एव स्पष्टार्थानीति न तत्र वक्तव्यमस्ति । परमाख्यविद्याव्याख्यां करोमीति च प्रतिज्ञातम् । तदुभयसिद्ध्यर्थमेतत्पादाधिकरणविषयपूर्वपक्षसिद्धान्तन्यायान् संग्रहेण दर्शयति** लिङ्गमिति ।

**अनु०**— लिङ्गं साधारणं शब्दौ स्थानं लिङ्गमनुग्रहः ॥
पुनः शब्दा लिङ्गशब्दौ विचार्या द्विस्थिता इह ॥
बाहुल्यं लिङ्गशब्दानामनुक्तिश्च विरुद्धता ॥
अदृष्टिरन्वयाभावो विपरीतश्रुतिभ्रमः ॥
लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा ॥
बहुतादृक्त्वमुक्तस्य विरोधोऽर्थस्तथागतिः ॥

समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः ॥
ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ॥
सिद्धान्तयुक्तयो ज्ञेया दृश्यन्ते ताश्च सर्वगः ॥

**एतच्च न्यायविवरणे स्वयमेवाचार्येण व्याख्यातमिति तत्रैवावगन्तव्यम् ।**

**शे०**— ननु लिङ्गं साधारणमित्याद्युत्तरभाष्यमनर्थकम् । न चैतत्पादीयाधिकरणविषयपूर्वपक्ष-सिद्धान्तन्यायानां संग्रहेण प्रदर्शनार्थं तदिति वाच्यम् । वक्तव्यविशेषाभावे विषयाद्यप्रदर्शनेऽप्य-विरोधात् । तद्भावे तु सम्यगेव व्याख्येयतया, संग्रहेण विषयादिप्रदर्शनस्य पक्षद्वयेऽप्ययोगादित्याशङ्कां संग्रहप्रयोजनोक्त्या परिहरन्नेव तत्परतयोत्तरवाक्यं योजयति **अतःपराणीति** । ननु किं तल्लिङ्गशब्दादि, कुत्र च साधारणं, कथं च साधारणम् । साधारणत्वे वा कथं तस्य भगवदेकविषयत्वम् । किञ्चैता-ल्लिङ्गशब्दबाहुल्यादिकं कथं च तस्य पूर्वपक्षसिद्धान्तसंबन्धित्वमित्यत आह **एतच्चेति** ॥ **व्याख्यात-मिति** । प्राणानां ग्रन्थिरसि' इत्यादिना 'यस्मिन्द्यौः' इत्यादिना 'तेषामेव' इत्यादिना चेति शेषः । अत्र साधारणमित्यस्य विचार्या इत्यस्य च यथाऽन्वयं लिङ्गवचनविपरिणामेन सर्वत्रान्वयो द्रष्टव्यः । द्विस्थिता इत्येतत्तु साधारणमित्यस्योक्तरीत्या सर्वत्रानुवृत्तिज्ञापनार्थमेवोक्तम् । यद्वा उक्तरीत्या साधारण-शब्देन सर्वेषामुभयत्र प्रसिद्धिः । द्विस्थिता इत्यनेन तु पूर्वोत्तरपक्षहेतुमत्त्वेत्यवधेयम् । लिङ्गमिति पृथगुक्तत्वाच्छब्दौ शब्दा लिङ्गशब्दावित्यत्र शब्दशब्दो नामविषयो बोध्यः ॥ **तत्रैवावगन्तव्यमिति** । एतच्च न्यायविवरणस्यागतार्थत्वायोक्तम् । अन्यथैतट्टीकानुसारेण न्यायावगतौ, पृथक् न्यायविवरणस्या-ध्ययनाध्यापनादिरूपप्रेक्षावत्प्रवृत्तिविषयत्वं न स्यादिति संप्रदायः ।

'ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः । सिद्धान्तयुक्तयो ज्ञेयाः' इति निरवकाशश्रुतिलिङ्ग-बाहुल्यादीनामेव सिद्धान्तन्यायतया कथनात् । मुक्तोपसृप्यतेत्यादिसिद्धान्तन्यायप्रदर्शकोत्तरवाक्य-वैयर्थ्यं सिद्धान्तन्यायेष्ववान्तरभेदसूचनेन परिहरन्नुत्तरग्रन्थतात्पर्यमाह **सूत्रसूचितानिति** । अतं च्छब्दादित्यनेन यथा रुद्रसमाख्यास्थानां रुद्रपिनाक्यादिनामलिङ्गानामपि मुख्यतो रुद्रादिशब्दत्वं नास्ति । तथा विष्णुसमाख्यानां विष्ण्वादिशब्दानामपि रुद्रादिशब्दत्वं मुख्यतो नास्ति । 'न तु नारायणादीनां नाम्नामन्यत्र संभवः । अन्यनाम्नां गतिर्विष्णुः' इति भाष्योदाहृतस्मृतेः । तथाच रुद्रसमाख्या सावकाशा विष्णुसमाख्या निरवकाशेति सूचनेन रुद्रादिशब्दानामन्तकत्वादिलिङ्गानां च विष्णौ मुख्य-त्वलाभात् । श्रुतिलिङ्गबाहुल्यन्यायस्तत्सूत्रखण्डसूचितः । एवमनुक्त्यादीनामपि तत्तत्सूत्रसूचितत्वं द्रष्टव्यम् ॥ **साक्षादुक्तानिति** । मुक्तोपसृप्यव्यपदेशादित्यादिभिर्मुक्तोपसृप्यत्वादिन्यायानां साक्षाद-

भिधानादिति भावः । सिद्धान्तन्यायेषु सूत्रसूचितत्वतत्तत्सूत्रसाक्षादुक्तत्वरूपोक्तप्रकारद्वैविध्यस्य भाष्यकृत्संमतत्वं भाष्यकारीयज्ञापकोक्त्या दर्शयति **अत एवेति** । अन्यथोभयत्र दृश्यन्त इत्येव वा प्रदर्शिता इत्येव अवक्ष्यदिति भावः ।

स०— **तदुभयसिध्यर्थमिति** ॥ वक्तव्यत्वावक्तव्यत्वोभयसिध्यर्थमित्यर्थः ।

प०— **तदुभयेति** । भाष्ये स्पष्टव्याख्यानं पुनर्व्याख्यानप्रतिज्ञेत्युभयसिद्ध्यर्थमित्यर्थः ॥ यद्वा अवक्तव्यत्वप्रतिज्ञातत्वोभयसिद्ध्यर्थमित्यर्थः ॥ **विषयेति** । विषयान् पूर्वपक्षन्यायात्सिद्धान्तन्यायांश्चेत्यर्थः ॥ **तत्रैवावगन्तव्यमिति** । तदस्माभिः किञ्चिदत्र विव्रियते । 'द्युभ्वादी'त्यत्र सर्वाधारत्वं लिङ्ग, 'भूमाक्षर'नययोर्भूमाक्षरनाम्नी, 'ईक्षती'त्यत्र सृष्टिस्थानं, 'दहर'इत्यत्र हृत्पद्मस्थत्वलिङ्ग 'अनुकृते'रित्यत्रानुकूल्येन गृह्यमाणत्वलिङ्ग, पुनरपि 'शब्दादेव प्रमितः' 'कम्पनात्' 'ज्योतिः' 'आकाश' इति चतुर्षु नयेषु क्रमेण ईशान-वज्र-ज्योतिः-आकाशशब्दाः, 'सुषुप्ती'त्यत्र स्वप्नादिद्रष्टृत्वं लिङ्गम्, 'पत्यादी'त्यत्र ब्राह्मणशब्दश्चेहपादे विचार्यन्त इत्यर्थः । विचार्यपदं यथायोगं विपरिणामेन सर्वत्रान्वेति । अत्र लिङ्गवचनविपरिणामेन सर्वविशेषणेन साधारणशब्देन सर्वेषामुभयत्र प्रसिद्धिः, द्विस्थिता इत्यनेन तु 'पूर्वोत्तरपक्षहेतुमत्तोक्तेति भेद' इति चन्द्रिका । 'साधारणपदस्य विपरिणामेन सर्वत्रान्वयद्योतनाय अन्तेपि द्विस्थिता इत्युक्तमिति' न्यायविवरणटीका । बाहुल्यं लिङ्गशब्दानामिति रुद्रादिप्रापकश्रुतिलिङ्गबाहुल्यम् । 'भूमे'त्यत्र प्राणाद्भूयसोऽनुक्तिः, चशब्देनोत्क्रमणलिङ्गं समुच्चीयते, 'अक्षर'नये अत्तेत्युक्त्वा 'न तदश्नाति किञ्चने'ति विरुद्धता, 'ईक्षति'नये अन्यस्यान्यथाभावादृष्टिः, 'दहर'नये वाक्यान्वयाभावः 'अनुकृति'नये 'कथं नु तदि'ति तच्छब्दश्रुतिर्ज्ञानिसुखपरामर्श इति भ्रमः, 'शब्दादेवे'त्यत्र प्राणापाननेतृत्वादिलिङ्गस्यान्यत्र विष्णोरनवकाशभ्रमः, 'कम्पनादि'त्यत्र वज्रश्रुत्युद्यतत्वरूपनिरवकाशश्रुतिलिङ्गाख्यद्वयं, 'ज्योति'नये बहूनां जीवप्रापकाणां तादृक्त्वं निरवकाशत्वं, 'आकाश'नये उक्तस्य यौगिकार्थस्य विष्णोः स्वीकारे वैनामेति निपातविरोधः, 'सुषुप्ति'नये जीवेशाभेदेनेश्वरोक्तावप्यर्थाज्जीव एवोच्यत इत्यर्थात् तथागतिः, 'पत्यादि'नये निरवकाशश्रुतिद्वयेन विरिञ्चब्रह्मणोरैक्यमिति समस्तमेतदिति, क्रमादुक्तद्वादशनयानां अत्र पादे पूर्वपक्षयुक्तय इत्यर्थः । एतेन 'मुक्तोपसृप्यते'त्याद्यपि स्पष्टम् ।

श्री०— ॥ **तदुभयेति** । स्पष्टार्थत्वेनावक्तव्यत्वव्याख्याकरणप्रतिज्ञेत्युभयसिध्यर्थमित्यर्थः ॥ **संग्रहेणेति** । तथाच विस्तरतोऽव्याख्यानाद्भाष्ये स्पष्टार्थता विषयादिकथनेन संक्षेपतो व्याख्यानाद्व्याख्यानकरणप्रतिज्ञा चोपपन्नेत्यर्थः ।

सु०— सूत्रसूचितान्सिद्धान्तन्यायानभिधाय साक्षादुक्तानप्याह मुक्तेति ।

अनु०— मुक्तोपसृप्यता प्राणादाधिक्यं सर्वतस्तथा ॥
वैलक्षण्यं स्वभावस्य प्रेक्षापूर्वक्रिया तथा ॥
अरस्य ण्यस्य चेशत्वं सूर्याद्यनुकृतिस्तथा ॥
वामनाख्या सर्वकम्पस्तच्छब्दानन्यसिद्धता ॥
अनामरूपता भेदस्योपजीव्यप्रमाणता ॥
सर्वैश्वर्यादिकाद्यास्ता वेदेशेन प्रदर्शिताः ॥

अत एव पूर्वं दृश्यन्त इत्युक्त्वाऽत्र प्रदर्शिता इत्युक्तम् ।

सर्वतस्तथा इत्येतत्पूर्वेणोत्तरेण च सम्बध्यते । प्राणादाधिक्यं तथा सर्वत आधिक्यमिति । स्वभावस्य सर्वतो वैलक्षण्यं तथाऽम्बरान्तधृत्यादीति । प्रेक्षापूर्वक्रिया तथेति तथाशब्द उत्तरत्र सम्बध्यते । तेनापहतपाप्मत्वादीनां ग्रहणम् । सूर्याद्यनुकृतिस्तथा सर्वप्रकाशकत्वम् । तच्छब्दानन्य-सिद्धतेति ज्योतिःशब्दस्यान्यत्रासम्भव इत्यर्थः । उपजीव्यं प्रमाणं यस्यासौ तथोक्तस्तस्य भाव उपजीव्यप्रमाणता । ता इति सिद्धान्तयुक्तयः ।

---

शे०— ननु सर्वतस्तथेत्येतन्न प्राणाधिकरणसिद्धान्तन्यायाभिधानम् । प्राणादाधिक्यमित्यनेनैव तदुक्तेः । नाप्यक्षराधिकरणसिद्धान्तन्यायाभिधानम् । वैलक्षण्यं स्वभावस्येत्यनेनैव तत्कथनात् । तस्मादनर्थकमेतदित्यतोऽधिकरणद्वयेऽपि सिद्धान्तन्यायान्तरकथनरूपत्वान्न तदित्यभिप्रेत्य तथा योजयितुं तत्तदधिकरणसिद्धान्तन्यायसमर्पकभाष्यखण्डेन संबन्धं तावदाह सर्वतस्तथेत्येतदिति ॥ पूर्वेणोत्तरेण चेति । प्राणादाधिक्यमिति पूर्वेण वैलक्षण्यं स्वभावस्य चेत्युत्तरेण चेत्यर्थः । पूर्वोत्तरसंबन्धमेव दर्शयति । प्राणादाधिक्यमित्यादिना । तथा च प्राणादाधिक्यमित्यनेन व्यतिहारो विशिंषन्ति हीतरवदिति सूत्रान्तरोक्तन्यायाभिधानेऽप्यध्युपदेशादित्येतत्सूत्रोक्तसर्वाधिकत्वरूपहेत्वन्तरकथनार्थतया पूर्वत्र वैलक्षण्यं स्वभावस्येत्यनेनान्यभावव्यावृत्तेश्चेति सूत्रोक्तहेत्वभिधानेऽप्यक्षरमम्बरान्तधृतेरित्यादिसूत्र-द्वयोक्तहेतुद्वयकथनार्थतया 'वैलक्षण्यं स्वभावस्य' इत्यनेन च संबन्धस्य सप्रयोजनत्वमुक्तं भवति । ईक्षतीत्यत्र सूत्रोक्तहेत्वन्तरपरतया तथेत्यस्य सार्थक्यं न पूर्ववद्वक्तुं शक्यं, प्रेक्षापूर्वकक्रियातिरिक्तसूत्रोक्त-हेत्वन्तराभावात् इत्यतो, न तथाशब्दस्य प्रेक्षापूर्वकक्रियेत्यनेन संबन्धः, किं तूत्तरत्रैवेति भावेनाह प्रेक्षेति ॥ उत्तरत्रेति । अरस्य ण्यस्य चेशत्वमित्युत्तरत्रेत्यर्थः । तत्राप्यरस्य ण्यस्य चेशत्वमित्यनेनैव सिद्धान्तन्यायकथनात् । किं तथाशब्देनेत्यतो गतिशब्दाभ्यामिति सूत्रोक्तसाधकस्य तेनाभिधानेऽपि

दहर उत्तरेभ्य इत्यादिसूत्रोक्तापहतपाप्मत्वादिसंग्रहार्थत्वात्तथाशब्दस्यार्थवत्त्वमित्याह **तेनेति** । अनुकृते-रिति सूत्रखण्डोक्तलिङ्गस्य सूर्याद्यनुकृतिरित्यनेनाभिधानेऽपि तस्य चेत्युक्तसर्वप्रकाशत्वरूपलिङ्गस्यान-भिधायकतया तथाशब्दं योजयति **तथा सर्वप्रकाशकत्वमिति ॥ ज्योतिःशब्दस्यान्यत्रासंभव इति ।** विष्णुरेव ज्योतिरिति भाष्योदाहृतश्रुताववधारणेन 'नारायणः परंज्योतिः' 'परं ज्योतिरुपसंपद्य तद्देवा ज्योतिषां ज्योतिः' इत्यादिश्रुतिषु परत्वादिविशेषणेन च ज्योतिःशब्दस्य विष्णावेव मुख्यत्वावधारणादिति भावः । भेदस्योपजीव्यप्रमाणतेति सुषुप्तीत्यत्र सिद्धान्तन्याय इत्युक्तं तदयुक्तम् । भेदस्योपजीव्यप्रमाण-त्वासंभवात इत्यतोऽत्र भेदव्यपदेश एव सिद्धान्तन्यायः, उपजीव्यत्वोक्तिस्तु प्राबल्यसूचनेन सिद्धान्त-साधकत्वोपपादनार्थेत्यभिप्रेत्य तदर्थमाह **उपजीव्यमिति** ।

स० — मुक्तोपसृप्यव्यपदेशात्' इत्यनेन मुक्तोपसृप्यता 'भूमासंप्रसादादध्युपदेशात्' इत्यनेन प्राणात्सर्वतश्चाधिक्यम् । 'अन्यभावव्यावृत्तेश्च' इत्यनेन स्वभावस्य वैलक्षण्यम् । 'अक्षरमम्बरान्तधृतेः' इत्यनेनाम्बरान्तधृत्यादि । ईक्षतिकर्मव्यपदेशात्सः' इत्यनेन प्रेक्षापूर्वक्रिया 'दहर उत्तरेभ्य'इत्यनेनापहत-पाप्मत्वादिकम् । 'गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च' इत्यनेनारस्य ण्यस्य चेशत्वम् । 'अनुकृतेस्तस्य च' इत्यनेन सूर्याद्यनुकृतिः । सर्वप्रकाशकत्वं च । 'शब्दादेव प्रमितः'इत्यनेन वामनाख्या । 'कम्पनात्' इत्यनेन सर्वकम्पः 'ज्योतिर्दर्शनात्' इत्यनेन तच्छब्दानन्यसिद्धता । 'आकाशो-ऽर्थान्तरत्वादिव्यपदेशात्' इत्यनेन अनामरूपता 'सुषुप्त्युत्क्रान्तोर्भेदेन'इत्यनेन भेदस्यापजीव्यप्रमाणता, 'पत्यादिशब्देभ्यः' इत्यनेन सर्वैश्वर्यादिकं प्रदर्शितमित्यवगन्तव्यम् ।

प० — **इत्युक्तमिति** । प्रदर्शिताः प्रकर्षेण दर्शिताः न तु सूचिता इत्यर्थप्रतीतेरिति भावः । भेदस्योपजीव्यप्रमाणतेत्येतद्घटयति **उपजीव्यं प्रमाणमिति** । जीवांशे प्रत्यक्षं ईश्वरांशे च श्रुति-वाक्यमित्यर्थः । भेदबोधकं प्रमाणमैक्यस्योपजीव्यमिति यावत् । सर्वैश्वर्यादिकाद्या इत्यनन्तरम् इति शब्दमध्याहृत्य ता इत्यस्यार्थमाह इति सिद्धान्तयुक्तय इति ॥

या० — **सूत्रसूचितानिति** । उक्तन्यायानां सूत्रसूचितत्वप्रकारश्च सूत्रसूचिताख्यग्रन्थे भावबोधकारैः प्रदर्शितः तत्रैवानुसन्धेयः । **साक्षादुक्तानिति** । मुक्तोपसृप्येत्यनेन मुक्तोपसृप्यता, अध्युपदेशादित्यनेन प्राणात्सर्वतश्चाधिक्यम्, अन्यभावव्यावृत्तेश्चेत्यनेन स्वभावस्य सर्वतो वैलक्षण्यं, अम्बरान्तधृतेरित्यनेनाम्बरान्तधृत्यादि, ईक्षतिकर्मेत्यनेन प्रेक्षापूर्वक्रिया, दहर उत्तरेभ्य इत्यनेनापहत-पाप्मत्वादिकं, तथा हि दृष्टं लिङ्गं चेत्यनेन अरस्य ण्यस्य चेशत्वं, अनुकृतेस्तस्यचेत्यनेन सूर्याद्यनुकृतिः सर्वप्रकाशकत्वं च शब्दादेवेत्यनेन वामनाख्या कम्पनादित्यनेन सर्वकम्पः, ज्योतिर्दर्शनादित्यनेन

तच्छब्दानन्यसिद्धता, आकाशोऽर्थान्तरत्वादित्यनेनानामरूपता, सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यनेन भेदस्योपजीव्यप्रमाणता, पत्यादिशब्देभ्य इत्यनेन सर्वैश्वर्यादिकं, साक्षादुक्तमिति ज्ञातव्यम् ॥

**श्री०— अत एवेति ।** पूर्वोक्तानां सूचितत्वादेतेषां तु साक्षादुक्तत्वादेवेत्यर्थः ।

**च०— सूत्रसूचितान्** सूत्रघटकपदध्वनितान् । **साक्षादुक्तान्** तद्घटकपदोपस्थितान् ।

**सु०— नन्वत्र पादे चतुर्दशाधिकरणानि भाष्यादवगम्यन्ते । विषयाः पूर्वपक्षन्यायाः सिद्धान्तन्यायाश्चात्र द्वादशैवोक्ताः न च विषयादिना विनाऽधिकरणं सम्भवति । तत्कथमेतदिति चेत् । इत्थम् । ' तदुपर्यपि बादरायणः सम्भवात्' 'शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि' इत्येतदधिकरणद्वयं न समन्वयसमर्थनार्थम् । किं नाम देवादीनां वेदविद्याधिकारसमर्थनार्थमाद्यम् । द्वितीयं तु त्रैवर्णिकव्यतिरिक्तानां तदभावसमर्थनार्थमित्येतज्ज्ञापयितुमेतदधिकरणद्वयविषयाद्यनुक्तिः । अन्यथा तत्रापि समन्वयसम्बन्धान्वेषणेन शिष्याणां वृथा प्रयासः प्रसज्येत ।**

**शे०— न च विषयादिना विनेति ।** विषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनरूपपञ्चाङ्गत्वात् अधिकरणस्य विषयाद्यभावे नाधिकरणत्वं संभवतीत्यर्थः । 'तदुपर्यपि' इति सूत्रे तदुपरीति समास आश्रितः । अत्र वदन्ति । नात्र षष्ठीसमास आश्रयितुं शक्यते । 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन'इत्यव्ययेन षष्ठीसमासनिषेधात् । तथाच ब्राह्मणस्य कृत्वेत्यादिवदत्राप्यसमास एव युक्तः । अत एवोक्तम् । कैयटहरदत्ताभ्यामव्ययेन समासनिषेधे वृक्षस्योपरीत्यादिकमप्युदाहरणमिति । न चात्र सूत्रेऽव्ययशब्देन कृदव्ययस्यैव ग्रहणम् । न त्वव्ययमात्रस्य । अत एव ब्राह्मणस्य कृत्वेत्येवोदाहरणं वृत्तिकारादीनाम् । तथा चोपरीत्यस्याव्ययतायामपि कृदव्ययत्वाभावान्नानेन सूत्रेण निषेधप्राप्तिरिति वाच्यम् । सामान्यशब्दत्वादव्ययशब्दस्य अव्ययमात्रपरत्वस्यैव युक्ततया कृदव्ययरूपतद्विशेषपरताया नियामकाभावेनायोगात् । न च'अनुर्यत्समया'इत्यत्र यस्य समया यत्समयेति समासकरणमेव तत्र ज्ञापकम् । कथमन्यथा यत्समयेति समासः । तत्रापि पूरणगुणेति निषेधप्रसंगादिति वाच्यम् । सामीप्यार्थकस्य समयाशब्दस्याद्रव्यत्ववाचित्वादव्ययत्वेऽपीह समयावाचिन्यनुशब्दे समयाशब्दस्य वर्तमानतया द्रव्यवाचित्वात् अनव्ययत्वेन, तत्रोक्तनिषेधाप्रसक्त्या यत्समयेति षष्ठीसमाससंभवेन तस्य कृदव्ययपरतायामव्ययशब्दस्य ज्ञापकत्वायोगादिति । अत्र ब्रूमः । सूत्रेऽव्ययशब्दस्य कृदव्ययमात्रपरत्वेनाकृदव्ययेन समासानिषेधकत्वेन तदुपरीति समासोयुक्त एव । न चात्र नियामकाभाव इत्युक्तम् । सत् तव्येत्यादिपूर्वोत्तपकृत्साहचर्यस्यैव तन्नियामकत्वात् । न चैवं यत्समयेत्यत्राप्युक्तनिषेधाप्रसक्तेर्द्रव्यवृत्तितयाऽनव्ययत्वेन

समासोपपादनं हरदत्तादीनामनर्थकमिति वाच्यम् । साहचर्यमनाश्रित्य तस्य प्रकारान्तरत्वात् । तदाश्रयणे च तत एव यत्समयेति समाससिद्धेरनव्ययत्वाश्रयणानर्थक्यस्येष्टत्वात् । अवश्यं चैतदेवम्, यदव्ययसमासनिषेधे कृदव्ययानामेव तन्निषेध इति । कथमन्यथा त्वदुपरि मदुपरीत्यादिः सार्वजनीनः प्रयोगः । तथा 'यत्कृतेऽरीन्निगृह्णीम' 'आदेयाः किं कृते भोगाः कुम्भकर्ण त्वया विना'इति । 'सर्वपश्चात्' इत्यन्यपदार्थसूत्रे भाष्यप्रयोगश्च । [ 'अनेकमन्यपदार्थे' २-२-२४ इति पा. सूत्रे 'एतश्चात्र युक्तं यद्विभक्त्यर्थोऽभिधीयते, तत्र हि सर्वपश्चात्पदं वर्तते अस्येति ।' इति महाभाष्यम् ॥ अत्र कैयटः 'सर्वपश्चादिति । भाष्यकारवचनप्रामाण्यादव्ययेनापि षष्ठीसमासः' इति । ] अत एव चाव्ययनिषेधे वृक्षस्योपरीत्यादिकमप्युदाहरणमिति कैयटहरदत्तवचनमुपेक्ष्यमेव । ततश्चाकृदव्ययत्वेनोपरीत्यस्य न तेन षष्ठीसमासे किंचिद्बाधकमिति संक्षेपः । विषयादीत्यादिपदेन पूर्वपक्षन्यायसिद्धान्तन्याययोर्ग्रहणम् ॥

**श्री० — तदभावेति ।** अधिकाराभावेत्यर्थः ॥

**सु० — नन्वेतद्द्वयमत्र न विचारणीयम् । असङ्गतत्वात् । तथाहि । सङ्गतिस्तावद्द्विविधा भवति । अन्तर्भावलक्षणाऽऽनन्तर्यलक्षणा च । तत्राद्या तावदनयोरधिकरणयोर्न सम्भवति । समन्वयलक्षणे प्रथमाध्यायेऽनन्तर्भावस्य भवद्भिरेवोक्तत्वात् । अध्यायानन्तर्भूतयोश्च पादान्तर्भावासम्भवात् । उत्तराऽपि षोढा भवति । प्रसङ्गोपोद्घातावसरप्राप्तिकारणकार्यत्वैककार्यत्वभेदात् । तत्र न तावत्प्रथमाऽत्रास्ति । स्मारकाभावात् । न द्वितीया । विनैव तेन प्रकृतसिद्धेः । न तृतीया । समन्वयशेषेणविरुद्धत्वात् । न चतुर्थी । उत्तरं प्रबन्धं प्रति कारणत्वानुपलम्भात् । न पञ्चमी । पूर्वप्रबन्धकार्यत्वादर्शनात् । नापि षष्ठी । पूर्वेणानेनोत्तरेण चैकस्याजननात् । तस्मादिदं नेहावकाशमर्हतीत्यत आह** अधिकारश्चेति ।

अनु० — अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितौ ॥ ४ ॥

**अन्तर्भावलक्षणसङ्गत्यभावेऽपि देवानां वेदविद्याधिकारः तदभावः शूद्रादीनामत्र प्रसङ्गादेव चिन्तितौ । प्रसङ्गश्च मनुष्याधिकारत्वादिति पूर्वसूत्रोक्त्योपोद्घलित इति भावः । न च प्रसक्तानुप्रसक्तचिन्तनेऽतिप्रसङ्गः । प्रयोजनभावाभावाभ्यां व्यवस्थानात् । प्रकृते च 'विश्वेदेवा उपासते' इत्युक्तोपपन्नत्वादिकं प्रयोजनमस्ति ।**

**शे० — अत्रेति ।** तृतीयाध्यायेऽसार्वत्रिकीत्यादावधिकारचिन्तनात् देवादीनामधिकारभावाभावचिन्ता तत्रैव कर्तव्या, न तु समन्वयप्रतिपादकेऽस्मिन्नध्याय इत्यर्थः । कुतस्तृतीय एवेयं चिन्ता करणीया, न त्वत्र इत्यतोऽधिकरणमात्रस्य संगतिपञ्चकोपेतत्वनियमात्तृतीये संगतिपञ्चकलाभात्तत्र कर्तव्य-

त्वोपपत्तावपि अत्र शास्त्रसङ्गतिमात्रसंभवेऽपि अध्यायादिसङ्गतिचतुष्टयासंभवान्नात्र कर्तव्यता संभवतीत्यभिप्रेत्याह **असङ्गतत्वादिति** । कथमध्यायादिसङ्गत्यभाव इत्यतोऽधिकरणस्याध्यायपादसङ्गतेरन्तर्भावरूपत्वादधिकरणादिसङ्गतेश्चानन्तर्यरूपत्वात्तयोश्च प्रकृतेऽसंभवात् सङ्गत्यभावसिद्धिरिति भावेन सङ्गतिद्वैविध्यमाह **सङ्गतिस्तावदिति** ॥ **अनन्तर्भावस्येति** । तदर्थप्रतिपादकस्यैव तदन्तर्भावनियमात् । अस्य च समन्वयाप्रतिपादकत्वान्न तत्प्रतिपादकेऽध्यायेऽन्तर्भाव इत्यर्थः । यद्यपि 'दैवतैरपि । ज्ञेयो न वेदैः शूद्राद्यैः' इति संक्षेपोक्तेः अतो देवानां वेदविद्याधिकाराभावान्न तदुपास्यत्वं लिङ्गं विष्णोः संभवतीत्यस्यैतदधिकरणपूर्वपक्षटीकानुसारात् । 'अतो देवानां सर्वविद्याधिकारित्वात्तदुपास्यत्वं हरेर्युक्तमिति । अतो हरिः शूद्राद्यैर्वेदविद्याविज्ञेयो न भवती'ति चैतदधिकरणद्वयसिद्धान्तोपसंहारटीकानुसाराच्च देवोपास्यत्वादिलिङ्गसमन्वयपरत्वस्य स्थितेः अध्यायार्थसमन्वयप्रतिपादकतयाऽध्यायेऽन्तर्भावोऽस्त्येवेति नानन्तर्भावोक्तिर्युक्ता । तथाऽपि फलितदेवोपास्यत्वादौ सङ्गतिप्राप्तावपि मुखतो व्युत्पाद्येऽधिकारादौ न सङ्गतिरिति तदभिप्रायेणायं ग्रन्थ इति द्रष्टव्यम् । अध्यायानन्तर्भूतयोरित्यतः परम् अधिकरणयोरित्यनुवर्तते ॥ **असम्भवादिति** । पादानन्तर्भूतस्याध्यायानन्तर्भूतत्वनियमादध्यायानन्तर्भूतस्य न पादान्तर्भाव इति भावः । एवमध्यायपादान्तर्भावरूपतत्सङ्गत्यभावमुपपाद्य अधिकरणश्रुत्यानन्तर्यरूपाधिकरणादिसङ्गत्यभावमुपपादयिष्यन् तस्या अनेकावान्तरभेदभिन्नत्वेनैकोक्त्या तदभावस्य निरूपयितुमशक्यत्वात्तत्तत्प्रापकाभावेन तत्तदभावं वक्तुं तद्विभागमाह **उत्तराऽपीति** । कास्ता विधा इत्यतः 'स प्रसङ्ग उपोद्घातो हेतुतावसरस्तथा निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते' इत्यभियुक्तोक्तिं मनसि निधाय ता विधा निर्दिशति **प्रसङ्गेत्यादि** । तत्र प्रसङ्गो नाव्यवहितप्रकरणेन, तेनैव वा प्रकरणेन, स्मारितस्यार्थस्योपेक्षानर्हत्वम् । तथा सति क्वचिदव्यवहितपूर्वप्रकरणेन क्वचिच्च तेनैव स्मारणविवक्षायामननुगमापातात् । किन्तु लाघवात् स्मृतस्योपेक्षानर्हत्वमेव । प्रकृतसिद्ध्युपयोगिनी चिन्तोपोद्घातः । प्रतिबन्धकजिज्ञासापगमोऽवसरप्राप्तिः । कारणत्वं चात्र प्रयोजकत्वमेव विवक्षितम् । संग्रहेऽपि हेतुतापदेन तदेव विवक्षितम् । कार्यत्वं प्रयोज्यत्वम् । संग्रहेऽपि निर्वाहकत्वमुक्तरूपकार्यत्वमेव कार्यस्यापि कारणनिर्वाहकत्वात् । यत्तु प्रकृतोपयोग्युपपादकतया, प्रकृतोपपादकोपपादकतया वा, प्रयोजकत्वापरपर्यायं निर्वाहकत्वं संग्रहे विवक्षितमिति । तन्न । तथा सति कार्यत्वाख्यापरसङ्गतिप्रसङ्गात् । एकं कार्यं यस्येति व्युत्पत्त्यैककार्यानुकूलत्वमेवैककार्यत्वम् । अत्र षोढेति न नियमपरम् । तथा सति यत्र पूर्वोक्तातिप्रसङ्गवारणार्थमन्यदभिधीयते तत्रापवादलक्षणायास्तथा यत्राधिकाशङ्कां कृत्वा पूर्वस्यातिदेशः तत्रातिदेशिक्याः सङ्गतेरभावप्रसङ्गात् । किं त्वानन्तर्यसङ्गतेरनेकविधत्व एव । अत एव चन्द्रिकायामानन्तर्यसङ्गतेर्बहुप्रकारत्वमेवोक्तम् । व्यवहृतं च तत्र तत्रातिदेशापवादयोरपि सङ्गतित्वमित्यवधेयम् । **अत्रेति** । देवताधिकरणापशूद्राधिकरणयोरित्यर्थः ॥ **अन्तर्भाव-**

**लक्षणसङ्गत्यभावेऽपीति** । मुखतो व्युत्पाद्ये देवताधिकारादाविति शेषः । फलिते देवोपास्यत्वे तत्स्त्वादिति ध्येयम् । ननु स्मारकाभावान्न प्रसङ्गः संभवतीत्युक्तमित्यत आह **प्रसङ्गश्चेति** । उक्त्योपोद्बलित इति तथोक्तिरेव स्मारिकेति भावः ।

स० — **समन्वयशेषेणावरुद्धत्वादिति** ॥ समन्वयशेषजिज्ञासाया प्रतिबद्धत्वादित्यर्थः । तथाच न प्रतिबन्धकजिज्ञासाविच्छेदरूपावसरप्राप्तिलक्षणा सङ्गतिरित्यर्थः ।

प० — **प्रसङ्गेत्यादि** । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । यथा द्वितीये 'उत्क्रान्तिगत्यागतीनाम्' इति नये जीवाणुत्वे हेतूकृतोत्क्रान्तिगत्यागतीनां 'स्वात्मना चोत्तरयोरि'ति सूत्रे भगवदधीनत्वचिन्तनं प्रासङ्गिकम् । प्रकृतप्रमेयोपयुक्तचिन्तनमुपोद्घातः । यथा जिज्ञासासूत्रे जिज्ञासाकर्तव्यत्वचिन्तनं चिकीर्षितत्वेन बुद्धौ प्रकृतशास्त्रकर्तव्यत्वोपयुक्तम् । उक्तं हि चन्द्रिकायां, 'शास्त्रेणास्यौपोद्घातिकी सङ्गतिरि'ति । वक्तव्यस्य सर्वस्योक्त्यनन्तरं प्राप्तिरवसरप्राप्तिः । यथा पञ्चाधिकरणीतः पश्चादध्यायस्य आरभ्यत्वम् । कारणकार्यत्वेति कारणत्वकार्यत्वेत्यर्थः । वक्ष्यमाणं प्रति कारणत्वमेका सङ्गतिः यथा समन्वयसूत्रमीक्षतिनयस्य मुख्यवृत्त्या समन्वयस्योक्तावेव तत्साधनायोत्तरस्योत्थानात् । यथा वा आद्यद्वितीयाध्याययोः समन्वयोक्तावेव तत्राविरोधसाधनस्योत्थानात कार्यत्वसङ्गतिः । यथा गुहां प्रविष्टावित्यस्य अत्तेतिनयकार्यत्वम् । सामान्यचिन्तनस्य विशेषचिन्तां प्रति कारणत्वेन तस्य तत्कार्यत्वात् । पूर्वेणोत्तरेण चैककार्यकरत्वम् । यथा समन्वयसूत्रं शास्त्रयोनिसूत्रेण पूर्वेण सह जगत्कारणत्वं विष्ण्वेकनिष्ठमिति निर्णयं करोति । जिज्ञासासूत्रं चोत्तरेण जन्मादिसूत्रेण सह जिज्ञासाकर्तव्यत्वनिर्णयरूपमेकं कार्यं करोतीत्यादि ध्येयम् । **अवरुद्धत्वात्** । प्रतिरुद्धत्वादित्यर्थः ॥ **प्रसङ्ग इति** । स्मृतत्वरूपः । **उपोद्बलितः** प्रबलित इत्यर्थः । **इत्युक्तोपपन्नत्वादिकमिति** । देवानामनधिकारे देवा उपासत इत्यस्य अप्रामाण्यापातेन तदुपास्यत्वं ब्रह्मणः अनुपपन्नं अधिकारे सत्युपपद्यत इति भावः । आदिपदेन मनुष्याधिकारत्वादित्यस्य सामान्यपरस्य पर्युदस्तेतरपरतया प्रमाणाविरुद्धत्वं ग्राह्यम् । एतेन देवोपास्यत्वलिङ्गस्य फलतः समन्वयसिद्धेः फलतोन्तर्भावसङ्गतिरपि सूचिता ।

या० — **समन्वयशेषेणेति** । समन्वयशेषजिज्ञासया प्रतिबद्धत्वादित्यर्थः । तथाच न प्रतिबन्धकजिज्ञासाविच्छेदरूपावसरप्राप्तिलक्षणा सङ्गतिरित्यर्थः ।

श्री० — **उक्तत्वादिति** । न समन्वयसमर्थनार्थमित्यादिनेत्यर्थः । अत्र देवानामधिकारसमर्थने ॥ **स्मारकेति** । स्मृतस्योक्षानर्हत्वस्य प्रसङ्गलक्षणत्वादित्यर्थः । **तेन** देवाधिकारसमर्थनेन ॥

**प्रकृतेति** । समन्वयेत्यर्थः ॥ **अवरुद्धत्वादिति** । तथाच प्रतिबन्धकजिज्ञासाविच्छेदो नास्तीति भावः । **अनुपलम्भात्** अधिकारसमर्थनस्येति शेषः । प्रसक्तिश्च मनुष्याधिकारत्वादित्युक्ते इत्यादिना भाष्ये दर्शिता ।

**च० —समन्वयशेषेणेति** । तद्गोचरजिज्ञासाप्रतिबद्धत्वादित्यर्थः । तथाच न प्रकृतप्रमेयाधिगत्यनुत्पादप्रयोजकजिज्ञासाविच्छेदपूर्वकावश्याभिधानीयत्वरूपावसरप्राप्तिलक्षणा सङ्गतिरिति भावः ।

**सु० — ननु चिन्तिताविति कथम् । विप्रतिषेधे परं कार्यमिति स्त्रीलिङ्गेन भाव्यम् । मैवम् । इतीमौ विषयावित्यध्याहारात् ॥ १-३-४ ॥**

**शे० — ननु चिन्तिताविति कथमिति** । पुल्लिङ्गं कथमित्यर्थः । ननु चात्र का कथन्ता । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणावित्यत्रेव चिन्तितश्च चिन्तिता च चिन्तितावित्यत्र पुंसः शेषेण तल्लिङ्गोपपत्तेः । न चात्र 'वृद्धो यूना' इति पूर्वसूत्रात्तल्लक्षणश्चेदेव विशेष इत्यनुवर्तते । तत्र च तल्लक्षणश्चेद्विशेष इत्यनेन यत्र सर्वं सरूपं लिङ्गकृतं यत्र वैरूप्यमित्यर्थप्रतिपादनेन कुक्कुटमयूर्यावित्यादिशब्दस्वरूपकृतवैलक्षण्ये एकशेषनिषेधात् । एवेत्यनेन तु विशेषकृतवैलक्षण्ये तन्निषेधात् । प्रकृते च अधिकारतद्धानिरूपविशेषकृतवैलक्षण्यात् पुमान् स्त्रियेत्यनेन पुंसः शेषो न संभवतीति वाच्यम् । तत्रैवकारेणेन्द्रश्चेन्द्राणी चेन्द्राण्यावित्यादावेकशेषनिषेधार्थं स्त्रीपुंसविशेष्यवैलक्षण्यातिरिक्तप्रत्ययागमादिवैलक्षण्यस्यैवाभिमतत्वेन, प्रकृते विशेष्यकृतवैलक्षण्ये सत्यपि, आगमादिवैलक्षण्याभावेन पुमान् स्त्रियेत्यनेन प्रकृते एकशेषसंभवात् । तत्कथं पुल्लिङ्गानुपपत्तिरित्यतोऽत्र चिन्तिताविति द्विवचनान्तस्याधिकार इत्याद्येकवचनान्तेनान्वयानुपपत्त्या तदुपपत्त्यर्थमधिकारश्च तद्धानिरिति मूलग्रन्थानुरोधेनाधिकारतद्धानी इत्येवंरूपस्य विरुद्धानेकलिङ्गावयवद्वन्द्वरूपद्विवचनान्तविशेष्यपदस्याध्याहर्तव्यत्वात् । तद्विशेषणे चिन्तितावित्यस्मिन् शब्दे उक्तरीत्या पुमान् स्त्रियेत्यनेनैकशेषेऽप्यजहत्स्वार्थलिङ्गातिरिक्तलिङ्गानां विशेषणानां विशेष्यनिघ्नतया तल्लिङ्गत्वनियमात् । विरुद्धानेकलिङ्गावयवद्वन्द्वरूपविशेष्यानुरोधेनानेकलिङ्गतापत्तौ युगपदनेकलिङ्गत्वानुपपत्तेः । पर्यायेण तत्प्रसङ्गे विरुद्धानेकलिङ्गावयवद्वन्द्वानुप्रयोगे 'परवल्लिङ्गम् द्वन्द्वतत्पुरुषयोः इति परपदवल्लिङ्गानुशासनात् । कुक्कुटमयूर्यावित्येतदनुप्रयोगे अयं च इयं चेमे इत्यादाविदंशब्दे मयूरीपदलिङ्गवत्तद्धानिपदलिङ्गस्यैव प्राप्त्या चिन्तिते इति स्त्रीलिङ्गस्यैव भाव्यत्वादित्यभिप्रेत्याह **विप्रतिषेध इति** । विरुद्धलिङ्गद्वयप्राप्तावित्यर्थः । परं कार्यमितीत्यनेन परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्येतत्सूत्रं तात्पर्यतः संगृण्हाति । चिन्तिताविति द्विवचनान्तस्याधिकार इत्याद्येकवचनेनान्वयानुपपत्त्या तदन्वययोग्यपदान्तरस्याध्याहर्तव्यत्वेऽपि इमौ विषयावित्यादिपदान्तराध्याहारेणापि तदन्वयोपपत्तौ अधिकार-

तद्धानी इत्येवंरूपं पुलिङ्गानुपपत्तिशङ्काप्रापकाध्याहारस्याकर्तव्यत्वान्न पुलिङ्गानुपपत्तिरिति समाधत्ते **नैवमिति** । अधिकारतद्धान्योरेव विषयताप्रतिपत्तये इतीमौ इत्युक्तम् । विषयाविति विधेयलिङ्गापेक्षया इमाविति पुलिङ्गमिति दर्शयितुं विषयौ इत्युक्तम् । **अयमाशयः** । चिन्तिताविर्त्येतन्नाधिकारश्च तद्धानिरित्यनेन श्रुतेनान्वेति । येन भिन्नवचनतया विशेषणविशेष्यभावानुपपत्तिः स्यात् । नाप्यध्याहृतेनाधिकारतद्धानी इत्यनेन । येन चिन्तिते इति प्रसक्त्या चिंतिताविति पुलिङ्गानुपपत्तिः स्यात् । किं त्विमौ विषयावित्यध्याहृतेनैव । तथाच विषयश्च विषयश्च विषयौ, चिन्तितश्च चिन्तितश्च चिन्तितौ, इत्यत्रोभयोरपि पुलिङ्गत्वेन स्त्रीपुंसभावनिबन्धनैकशेषप्राप्तेरेवाभावात् सरूपाणामित्येकशेषे शिष्टपुलिङ्ग-प्रयोगोपपत्तिरिति ।

केचित्तु । नन्वधिकारश्चेत्यादेरेकवचनान्तस्य सहत्वानवगमकत्वेन चिन्तिताविति द्विवचनान्तेन विशेषणविशेष्यभावेनान्वयायोगात् । द्विवचनान्तेनान्वयोपपत्त्यर्थमधिकारश्च तद्धानिरिति मूलग्रन्था-नुरोधेनाधिकारतद्धानी इति विशेष्यवाचकविभिन्नलिङ्गावयवद्वन्द्वरूपं द्विवचनान्तं सहत्वावगमकं पदमध्या-हार्यम् । तथाच तद्विशेषणीभूते चिन्तिताविर्त्यत्र, चिन्तितश्च चिन्तिता चेत्यस्य विरूपतया सरूपाणामेकशेष इत्येकशेषासंभवेऽपि, ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ इत्यत्रेव स्त्रीपुंसमात्रकृतवैलक्षण्येन पुमान्स्त्रियेत्यनेन पुंसोऽवशेषे विरुद्धलिङ्गावयवद्वन्द्वविशेषणतया चिन्तितशब्दात्तदुभयलिङ्गप्रसङ्गे युगपदु-भयलिङ्गत्वानुपपत्त्या पर्यायेण विरुद्धलिङ्गद्वयप्रसङ्गे 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्यनेनोक्तरूपद्वन्द्वानु-प्रयोगे, परपदलिङ्गस्यैव विधानेन, कुक्कुटमयूर्याविर्त्येतद्द्वन्द्वानुप्रयोगे अयं चेयं च इमे इत्यादौ, परपदस्य मयूरीशब्दस्यैवेदंशब्दे लिङ्गप्राप्तिवत् इहापि परपदस्य तद्धानिशब्दस्यैव चिन्तितशब्दालिङ्ग-प्राप्तौ चिन्तिते इत्येव स्यात् । तत्कथं चिन्तिताविति पुलिङ्गमित्यभिप्रेत्य शङ्कते **ननु चिन्तिताविति कथमित्यादिना** । यद्यप्यत्र 'अहं च त्वं च पचावः' इत्यादौ सहत्वानवगमेऽपि द्विवचनान्तेनान्वय-दर्शनेनाधिकारश्च तद्धानिश्चेत्येकवचनान्तस्यापि चिन्तिताविति द्विवचनान्तेनान्वयोपपत्त्या सहत्वावगमक-द्विवचनान्तस्याधिकारतद्धानी इति विशेष्यपदाध्याहारस्यानपेक्षितत्वेन चिन्तिताविर्त्यस्य विरुद्धानेक-लिङ्गावयवद्वन्द्वानुप्रयोगत्वाभावेन परवल्लिङ्गमित्यस्याप्राप्तेर्न चिन्तिते इति स्त्रीलिङ्गप्रसङ्ग इति शक्यते समाधातुम् । तथाऽप्यङ्गीकृत्य द्विवचनान्तेनान्वयोपपत्त्यर्थं सहत्वावगमकद्विवचनान्तविशेष्यपदाध्याहारं सहत्वावगमस्य लिङ्गानुपपत्तिशङ्काऽप्रसञ्जकेनाध्याहृतेन **इमौ विषया**वित्यादिनाऽप्युपपन्नत्वेन तच्छङ्का-प्रसञ्जकस्याधिकारतद्धानी इति विरुद्धानेकलिङ्गावयवद्वन्द्वरूपद्विवचनान्तपदस्यानध्याहार्यत्वात् नोक्तरीत्या चिन्तितशब्दे स्त्रीलिङ्गप्रसङ्ग इत्याशयेन परिहरति **नैवमित्यादिना** । विषयाविर्त्येवोक्तेऽधिकारतद्धानि-

व्यतिरिक्तौ विषयाविति शङ्का स्यादतस्तयोरेव विषयत्वप्रतिपत्तय इतीमौ इत्युक्तं विधेयविषयापेक्षयेमाविति पुल्लिङ्गमिति ज्ञापयितुं **विषया**वित्युक्तमित्याहुः ॥ १—३—४ ॥

स०—ननु चिन्तितश्च चिन्तिता चेत्यत्र द्वन्द्वापवादकेन 'सरूपाणामेक शेष एकविभक्तौ' इत्यनेनैकशेषे सति ब्राह्मणश्च ब्राह्मणी चेत्यादौ नियतैकशेषत्वेन स्वयं विशेष्यस्यान्यविशेषणत्वात् विशेषणानां त्वजहत्स्वार्थलिङ्गातिरिक्तानां विशेष्यलिङ्गत्वनियमात् अनियतैकशेषस्य चिन्तितशब्दस्य ब्राह्मणावित्यादिवत् एकशेषनिमित्तकलिङ्गविशेषासंभवात् अधिकारतद्धानिशब्दयोर्विरुद्धलिङ्गत्वेन तद्विशेषणीभूतचिन्तितशब्दस्यापि विरुद्धोभयलिङ्गत्वे प्राप्ते विप्रतिषेधे परं कार्यमित्यत्र भाष्यकृता एकस्मिन्नेव शब्दे विरुद्धोभयलिङ्गत्वरूपसमावेशरूपशब्दपरविप्रतिषेधस्यापि व्याख्यातत्वादत्रापि प्रयोगे परस्य तद्धानिशब्दस्यैव लिङ्गं स्यादिति भावेन शङ्कते **नन्विति** ॥ ननु चात्र पुमान्स्त्रियेत्यनेनैव माता च पिता च पितरावित्यादिवत् एकशेषे चिन्तितावित्युपपन्नत्वात् 'न स्वरूपाणामेक शेषः' इत्यनेनैकशेषप्राप्तिरिति चेत् न । यत्र स्त्रीपुंलिङ्गमात्रकृतं वैलक्षण्यं न तु विशेष्यकृतं तत्रैव तस्य प्रवृत्तेः प्रकृते च अधिकारतद्धानिरूपविशेष्यकृतवैलक्षण्यसत्त्वेन वैरूप्यान्न सरूपाणामित्यस्य प्रवृत्तिः । सारूप्य एव तस्य प्रवृत्तिरिति चेत् न किञ्चिद्वैरूप्येपि सरूपाणामित्यर्थस्य प्रवृत्तेरङ्गीकार्यत्वात् । अन्यथा कुक्कुटमयूर्याविमे मयूरीकुक्कुटाविमौ इत्यादिप्रयोगो न सिध्येत् । तस्मात्तादृशसूत्रान्तरासाध्यप्रयोगोपपत्त्यर्थकिञ्चिद्वैरूप्येऽपि तस्य प्रवृत्तेरिति न दोषः । न च कुक्कुटमयूर्यावित्यादाविव परवल्लिंङ्ग द्वन्द्वतत्पुरुषयोरित्यस्य प्राप्त्या चिन्तितावित्युपपन्नमिति वाच्य तद्वत्प्रकृते अधिकारतद्धानिशब्दयोः समस्तत्वाभावेन तत्प्राप्त्यसंभवादिति शङ्काग्रन्थाभिप्रायः ॥ **मैवमिति** ॥ इमावित्येवोक्ते अनन्वितत्वेनोक्तशङ्कापरिहारायोगात् इमौ विषयावित्यध्याहारः केचित् **ननु चिन्तिताविति कथमिति** ॥ द्विवच कथमित्यर्थः । अयमाशयः । अत्र चिन्तितेत्येकवचनमेव युक्तं न चिन्तिताविति कथमिह द्विवचनम् । तथाहि चिन्तितशब्दस्य विशेष्यभूताधिकारहानिशब्दवचनानुसारेणैकवचनान्तत्वमेव युक्तम् । न चैवमुभयसंबन्धासिद्धिश्चिन्तितत्वस्येति वाच्यम् । चिन्तितशब्दो हि क्रियावचनः तस्य चैकवचनान्तस्यापि चिन्तितेति सकृत्प्रयोगे अधिकारस्तद्धानिश्चेति समुच्चयार्थकचशब्दप्रयोगात् हरिं गुरुं च भजस्वेत्यत्रेव प्रत्येकं संबन्धसिद्ध्या अधिकारश्चिन्तितः तद्धानिश्च चिन्तितेति बोधसंभवात् प्रत्येकमेकक्रियासंबन्धस्यैव समुच्चयरूपत्वात् । एवं च न द्विवचनकृत्यमिति । नन्वेकवचनप्रयोगेपि चिन्तितेऽपि स्त्रीलिङ्गस्यैव प्रयोग इत्यत्र किं नियामकं अधिकारस्य प्रथमप्रयुक्तत्वेन तदनुसारेण चिन्तित इति पुल्लिङ्गप्रयोगस्यैवोचितत्वादित्यत आह **विप्रतिषेध इति** ॥ न चात्र सौत्रमेव परत्वमिति वैयाकरणानामभिप्रेतत्वेन न प्रकृतविषयतायां कथमस्येति चेत्

प्रयोगसंबन्ध्यपि परत्वमत्र विवक्षितमिति पदमञ्जर्यादिग्रन्थपर्यालोचनयावगमात् । एवं चात्राऽऽचार्यप्रयोगे हानिशब्दस्य परत्वात् तदाश्रितं कार्यं स्त्रीलिङ्गमेव चिन्तितशब्दे विशेष्यनिघ्ने युक्तं तस्माच्चिन्तितेति स्त्रीलिङ्गैकवचनेनैव भाव्यम् । न चिन्तिताविति द्विवचनेनेति शङ्कार्थः । अन्ये तु चिन्तितश्च चिन्तित-चेत्यत्रैकशेषे कर्तव्ये विप्रतिषेधे परं कार्यमिति स्त्रीलिङ्गस्यैव शेषे चिन्तिते इति स्यात् चिन्तिताविति पुल्लिङ्गशेषः कथमिति शङ्कार्थमभिधाय तत्र च पुमान्स्त्रियेतिसूत्रेण पुल्लिङ्गशेषो भविष्यत्यतः 'काऽत्र-कथन्ता' इत्याशङ्क्य तत्समाधानार्थमतं तेषां भावं नाकलयाम उक्तरीत्या व्याख्यानेषु पुमान् स्त्रियेत्यस्य प्राप्तेरेव अभावात्' इत्याहुः ॥

श्रीसुधाटिप्पणिकायां श्रीमत्सत्यव्रततीर्थविरचितायां प्रथमाध्यायस्य तृतीयः पादः ॥

प० — का कथन्तेत्यत आह **विप्रतिषेध इति** । विप्रतिषेधे विरोधे सति परम्पश्चात्तनसूत्रो-क्तमेव कार्यं कर्तव्यमिति परप्राबल्यन्यायेनेह पूर्वनिर्दिष्टपुल्लिङ्गापेक्षया परनिर्दिष्टस्त्रीलिङ्गेन भाव्य-मित्यर्थः । पुमांस्त्रियेत्येतत्पुंस्त्वस्त्रीत्वजात्याक्रान्तविषयम् । विशेष्यविभक्तिकस्वतन्त्रस्त्रीपुंसपरश्चेति भावः ।

**या० — ननु चिन्तिताविति कथमिति** । द्विवचनं कथमित्यर्थः । स्त्रीलिङ्गेनेत्यतः परम् एकवचनेनेति शेषः । चिन्तितशब्दो हि विशेष्यनिघ्नः क्रियावचनः । तस्य चैकवचनान्तस्याप्यधिकार स्तद्धानिश्च चिन्तितेति सकृत्प्रयोगे समुच्चयार्थकचशब्दसामर्थ्यात् 'हरिं गुरुं च भजस्व'इत्यत्रेव प्रत्येक संबन्धसिद्ध्या अधिकारश्चिन्तितस्तद्धानिश्चा चिन्तिता इति बोधसंभवान्न द्विवचनेन कृत्यं, प्रत्युत चिन्तित शब्दस्य विशेष्यनिघ्नस्य विशेष्यलिङ्गवचनत्वाद्द्विवचनान्तस्य पुल्लिङ्गस्य विशेष्यस्यात्राश्रवणादनन्वय एवेति भावः । नन्वेकवचनप्रयोगेऽपि चिन्तितेति स्त्रीलिङ्गेनैव भाव्यमित्यत्र किं नियामकम् । प्रथम-प्रयुक्ताधिकारशब्दानुसारेण चिन्तित इति पुल्लिङ्गप्रयोगस्यैवोचितत्वादित्यत आह **विप्रतिषेध इति** । यद्यपि सौत्रमेव परत्वं परैरुच्यत इति नास्योदाहरणमत्रोचितम् । तथाऽप्येकस्मिन्विशेषणशब्दे विशेष्य द्वयानुसारेण विरुद्धोभयलिङ्गत्वे प्राप्ते यत्प्रयोगतः परं विशेष्यं तल्लिङ्गमेव विशेषणीभूतशब्दकार्यमित्यर्थ-स्याप्यत्र सूत्रे विवक्षितत्वात् युक्तमुदाहरणमित्यवगन्तव्यम् । अन्ये तु चिन्तितश्च चिन्तिता चेत्यत्रैकशेषे कर्तव्ये, 'विप्रतिषेधे परं कार्यमि'ति स्त्रीलिङ्गस्यैव विशेषे, चिन्तिते इति स्त्रीलिङ्गेनैव भाव्यम् । चिन्ति-ताविति पुलिङ्गं कथमिति शङ्काभिप्रायमभिधाय तत्र न तु 'पुमान् स्त्रिया' इति सूत्रेणैवात्र पुल्लिङ्गशेषो भविष्यति अतः काऽत्र कथन्तेत्याशङ्क्य यत्र स्त्रीपुंसमात्रकृतं वैलक्षण्यं, ब्राह्मणश्च ब्राह्मणी चेत्यादौ-तत्रैव तत्सूत्रप्रवृत्तिः । 'तल्लक्षणश्चेद् विशेष' इत्यनुवृत्तेः । प्रकृते चाधिकारतद्धानिरूपविशेष्यकृत-

वैलक्षण्यस्यापि सत्त्वेन तत्प्राप्त्यसंभवादिति परिहृत्य, स्यादेवं यद्यधिकारतद्धानिविशेषणमेतत्स्यात् । न चैवम् । किन्त्वध्याहृतस्येमौ विषयावित्यस्यैवातो नात्र स्त्रीलिङ्गप्रसक्तिरिति समाधानाभिप्रायमाहुः ॥ ॥ १–३–४ ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्येण यदुपतिना विरचितायां सुधाटिप्पण्यां प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥ १–३ ॥

च०–**ननु चिन्तिताविति कथमिति** । पुंस्त्वं कथमित्यर्थः । **विप्रतिषेध इति** । विरुद्धलिङ्गद्वयप्राप्तावित्यर्थः । **परं कार्यमिति** । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्येतद्योगमनेनाभिप्रैति । **कुक्कटमयूर्याविमे** । मयूरीकुक्कुटाविमावित्याद्युदाहरणम् । तथा च श्रूयमाणद्विवचनान्तविशेषणवाचकपदस्य समभिव्याहृतैकवचनान्तविशेष्यवाचकपदद्वयेनान्वयायोगेऽप्युपस्कृतद्विवचनान्ताधिकारितद्धानी इति पदेनान्वय उपेयस्तथा सति दर्शिताद्योदाहरणे अनुप्रयुज्यमाने इमे इतिपदे स्त्रीत्ववत्प्रकृतेपि तदापत्त्या चिन्तिते इति विन्यासः स्यादिति भावः । **इतीमौ विषयाविति** । तथा च पुंस्त्वविशेषितद्विवचनान्तपदस्यैवोपस्कार्यत्वोपगमान्नोक्तक्षत्यवकाश इति भावः ।

अत्रत्यानां गिरां कासांचिद्व्याख्यालेशतो हरिः ।
प्रीणीयाद्गजिवदनो गुरुहृत्पद्ममन्दिरः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणश्रीसत्यप्रियतीर्थपूज्यपादतनूजसर्वतन्त्रस्वतन्त्रगालवपुरीश्रीनिवासार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां श्रीमन्न्यायसुधाचषकनाम्न्यां व्याख्यायां प्रथमाध्यायस्य तृतीयः पादः ॥

सु०— अत्र देवानां वेदविद्याधिकाराक्षेपार्थं सूत्रद्वयम् 'मध्वादिष्वसम्भवादनधिकारं जैमिनिः' 'ज्योतिषि भावाच्चे'ति । तस्यार्थः । न देवा वैदिकोपासनादावधिक्रियन्ते । तान्प्रति वैदिकविधेरभावात् । 'आत्मानमुपासीत' इत्यादिविधिरेव तान्विषयीकरोतीति चेन्न । विकल्पानुपपत्तेः । तथाहि । किं तेषां सर्ववेदोक्तोपासनादावधिकारः । किंवा क्वचित् । नाद्यः । सर्वत्र तेषां नियोज्यत्वाभावात् । तत्साध्यफलकामो हि तत्र नियुज्यते । फलं च तदुच्यते । यदप्राप्तमननुष्ठितसाधनं च । न च सर्वोपासनादिफले देवानां कामः सम्भवति । मध्वाद्युपासनानां देवतापदप्राप्तिफलत्वात् । तस्य च तैः प्राप्तत्वात् । सर्वज्ञत्वेनोपासनासाध्यज्ञानस्यापि नित्यसिद्धत्वात् । अत एव न द्वितीयः । किंच जैमिनिरप्येवं मन्यत इति ।

एवमवांतरफलस्य परमप्रयोजनस्य च पदादेः प्राप्तत्वेन विधेरसंभवाज्जैमिनिवचनाच्च देवानामनधिकार इति प्राप्ते तत्प्रतिविधानार्थं सूत्रम् । ॐ भावं तु बादरायणोऽस्ति हीति ।

अनु०— ॐ भावं तु बादरायणोऽस्ति हीति ॐ ॥

तत्फलाय विधिः सिद्धे चोपासाया निराकृतः ॥
यतो जैमिनिनाऽन्यार्थमसिद्धेऽर्थे विधिस्तथा ॥
विद्याधिराजस्य मतमविरोधस्तयोस्ततः ॥

तत्र यत्पूर्वपक्षिणोदाहृतं जैमिनिवचनं तस्य परिहारो नास्ति । तत्किं भगवन्मतविरुद्धत्वेनाप्रमाणमेव प्रतिपत्तव्यमिति । मैवम् । भिन्नविषयत्वेन विरोधाभावादित्याह तत्फलायेति ।

तदिति 'वसूनामेवैको भूत्वा' इत्यादिश्रुतिप्रसिद्धं परामृशति । सिद्धे ज्ञाते ब्रह्मस्वरूपे, विषयसप्तमीयम् । उपासाया विधिरिति संबन्धः । अन्यार्थं फलान्तरार्थम् । तथा असिद्धेऽर्थे विधिरुपासाया इत्यत्राप्यनुवर्तते । अत्रेतिशब्दाध्याहारेण मतमिति योज्यम् । तयोर्मतयोः ।

शे०— ॥ भावं तु बादरायणोऽस्ति हीति ॥ ननु तत्फलायेत्युक्तभाष्यमनर्थकम् । न च जैमिनिमतभगवन्मतयोर्विषयभेदोपपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च तयोर्विरोधाभावोपपादनार्थं तदिति वाच्यम् । तदुपपादनस्य प्रकृते सङ्गत्यप्रतीतेः । न च मध्वादिष्वित्यादिना देवानामधिकारे जैमिनिमतविरोधस्य शङ्कितत्वात्तद्विरोधपरिहारस्य प्रकृतासङ्गतिरिति वाच्यम् । तथाऽपि तेन शङ्कितविध्यनुपपत्तिपरिहृत्य, तच्छङ्कितविरोधमात्रपरिहारे निमित्ताभावादित्यतोऽनुपपत्तिद्वयस्य शङ्कितत्वेपि तस्य परिहारार्थं प्रवृत्ते 'भावं त्वि'ति सूत्रे विध्यनुपपत्तिपरिहारेण तत्परित्यागेन, भाष्यकारीयाविरोधोपपादनस्योपपन्नत्वादित्याशयेन, सूत्रे प्रमक्तन्यूनताशङ्कापरिहारकतया भाष्यं योजयितुं, विषयप्रदर्शनपूर्वकं सूत्रद्वयमाक्षेपपरतया तावद्योजयति अत्रेत्यादिना । देवानां वैदिकोपासनादावनधिकारः किं तेषां विशेषविधिप्रयुक्तः किंवा सामान्यविधिप्रयुक्त इति विकल्पं मनसि निधायाद्यं दूषयति तान्प्रतीति । द्वितीयमाशङ्कते आत्मानमिति ॥ किंवा क्वचिदिति । मोक्षफलकोपासनादावित्यर्थः ॥ देवतापदेति । वस्वादिपदेत्यर्थः ॥ तस्य चेति । वस्वादिपदस्य वस्वादिभिः प्राप्तत्वान्न तत्रार्थिता सम्भवतीति भावः । न केवलमस्मिन्पक्षे वस्वादीनां मधुविद्याफले वसुत्वादावधिकाराभावो दोषः, किन्तु विद्यासाध्ये वसुत्वादिसाधने ज्ञानेऽर्थित्वाभावोऽप्यपरो दोषो वस्वादीनां सिद्धज्ञानत्वादित्याह सर्वज्ञत्वेनेति । अत्र चशब्दाध्याहारेण नित्यसिद्धत्वाच्चेति योज्यम् । अत एव टीकायां दोषान्तरतया चेदं दूषणमुक्तमिति द्रष्टव्यम् । यद्वा देवतापदस्य प्राप्ततयाऽप्राप्तत्वाभावेनाफलत्व-

मुपपाद्यानुष्ठितसाधनत्वेनाननुष्ठितसाधनत्वाभावेनाफलत्वमुपपादयति **सर्वज्ञत्वेनेति** । मोक्षफलकोपासनादावधिकार इति द्वितीयं दूषयति **अत एवेति** । देवानां मोक्षार्थित्वेऽपि न तत्साधने विद्यासाध्ये ज्ञानेऽर्थिताऽस्ति । तेषां सार्वज्ञ्येन सर्वविद्योक्तज्ञानित्वात् । न हि स्वर्गार्थिनोऽपि कृतयज्ञस्य पुनर्यज्ञविद्याविचारेऽधिकारोऽस्तीति भावः ।

एवं सूत्रद्वयमधिकाराक्षेपपरतयोपपाद्य तत्परिहारतयोत्तरसूत्रमुत्थापयति **एवमिति** । पदादेरित्यत्रादिपदेन मोक्षपरिग्रहः । अवान्तरफलस्य वस्वादिपदस्य प्राप्तत्वात्परमप्रयोजनस्य च मोक्षस्यार्थतः प्राप्तत्वेनेत्यर्थः ॥ **विधेरिति** । आत्मानमुपासीतेति सामान्यविधेरित्यर्थः । विशेषविधिस्तु स्वरूपेणैव नास्तीति भावः ।

इदानीमुत्तरभाष्यं विरोधपरिहारकतया योजयितुं शङ्कितदोषपरिहाराभावप्रयुक्तं सूत्रे न्यूनत्वमाशङ्कते **तत्रेति** । ननु भगवन्मतविरुद्धत्वेन जैमिनिमतस्याप्रामाण्यान्न तद्विरोध इत्यन्यथासिद्धत्वान्न तत्परिहार इति न न्यूनत्वमित्यतो न मुनिमतस्याप्रामाण्यमङ्गीकर्तुं युक्तमन्यथा भगवन्मतस्यापि तदापत्तेरित्याशयेनाह **तत्किमिति** । तथाच विरोधापरिहाराद्भावं त्वित्यपूर्णः परिहार इति शेषः । इदानीं सूत्रे प्रसक्तन्यूनत्वपरिहारकतया भाष्यं योजयति **मैवमिति** ॥ **इतिशब्दाध्याहारेणेति** । अन्यथा फलान्तरार्थमुपासाया विधिरित्यादेर्भगवन्मतत्वालाभादिति भावः ।

---

**प०**— अननुष्ठितसाधनं चेति बहुव्रीहिः । अनुष्ठितस्यासिसाधयिषितत्वात् । सिसाधयिषितस्यैव च फलत्वादिति भावः । एतच्च मोक्षस्याफलत्वायोक्तम् । तत्साधनज्ञानस्य देवैः संपादितत्वादिति भावः ॥ **अत एवेति** । स्वयोग्यफलस्य वसुत्वादेर्ज्ञानस्य च प्राप्तत्वेन तत्सलकविद्याविशेषेष्वधिकारासंभवादेव क्वचिद्विद्यायामधिकार इति कल्पोपि नेत्यर्थः ॥ **एवमिति** । अधिकारो नेति मन्यत इत्यर्थः ॥ छ ॥ **पदादेरिति** । वसुत्वादिपदमवान्तरफलम् आदिपदोपात्तज्ञानं परमफलमिति ज्ञेयम् । तत्प्रतिविधानार्थं= तन्निषेधार्थम् ॥ **इत्यादिश्रुतीति** । 'स एतदेवामृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती'त्यादिश्रुतिसिद्धमित्यर्थः ॥ **इति योज्यमिति** । विद्याधिराजस्य फलान्तरार्थमसिद्धेर्थे विधिरिति मतमिति योज्यमित्यर्थः ।

**श्री०**— सर्वत्र= सर्ववेदोक्तोपासनादौ ॥ **अत एवेति** । फलस्य नित्यसिद्धत्वादेव क्वचित् कस्मिंश्चिद्वेदोक्तोपासनादावप्यनधिकार इत्यर्थः । ॐ **भावं तु बादरायणोऽस्ति हीति** ॐ ॥ **अवान्तरेति** । ज्ञानरूपेत्यर्थः । **उदाहृतं** किञ्च जैमिनिरित्यादिनेत्यर्थः ।

सु० — ननु किं तदन्यत्फलं कथं च सर्वज्ञानामसिद्धोऽर्थः । येन देवानामप्युपासनाविधानोपपत्तिरित्यत आह मोक्ष इति ।

अनु० — मोक्षे फलविशेषोऽस्ति न च सर्वं प्रकाशते ॥
सर्वदा तेन देवानामपि युक्ता ह्युपासना ॥

यच्च प्रकाशते, न तत्सर्वदा । तेन तदुभयार्थम् । हिशब्दो यस्मादित्यर्थे । ननु सर्वज्ञानां सर्वं न प्रकाशत इति विप्रतिषिद्धम् । मैवम् । परमेश्वरव्यतिरिक्तानां सर्वज्ञत्वासिद्धेरित्याह नित्यमिति ।

नित्यं वृद्धिक्षयापेतं विष्णोः पूर्णं तु वेदनम् ।
स्पष्टातिस्पष्टविशदं ब्रह्मणोऽशेषवस्तुगम् ॥
अन्येषां क्रमशो ज्ञानं मितवस्तुगतं सदा ।

पूर्णम् अशेषार्थविषयम् । तुशब्दोऽवधारणे, विष्णोरेवेति संबध्यते ॥ स्पष्टातिस्पष्टविषयमिति । निरतिशयस्पष्टमित्यर्थः । ननु स्पष्टता नाम ज्ञानस्य विशेषविषयता । सा च पूर्णमित्यनेनैव गता । मैवम् । अपरोक्षत्वादिवत्स्पष्टताया विषयानपेक्षज्ञानधर्मत्वाङ्गीकारात् । तस्य चानुभवसिद्धत्वात् । ब्रह्मणो हिरण्यगर्भस्य । अशेषवस्तुगं परब्रह्मातिरिक्ताशेषवस्तुविषयम् । अत्राप्येवेति सम्बध्यते । न तु सर्वार्थविषयत्वाद्युक्तविशेषणोपेतमित्यर्थः । अत्र ब्रह्मसंवेदनस्य पृथगुक्तिः कैमुत्यार्थम् । विष्णुसंवेदनोक्तिस्तु सर्वविषयत्वस्य विष्णुज्ञानलक्षणत्वेनेतरेषां तदसम्भावितमिति सूचयितुम् । मितवस्तुगतं परमेश्वरातिरिक्तकतिपयार्थविषयम् । एतेन भावमिति सूत्रं व्याख्यातं भवति । अत्र च 'यावत्सेवा'इत्यादिभाष्योदाहृतं वचनं प्रमाणमिति ।

ननु जैमिनिभगवन्मतयोरविरोध इति न युक्तम् । जैमिनिर्हि श्रुतफलाद्यतिरिक्तं फलादिकं विद्यानामस्तीति वा मन्यते नास्तीति वा । आद्ये कथमनधिकारं ब्रूयात् । द्वितीये तु कथं न विरोध इति चेन्न । भगवतः सूत्रकारस्याशेषविशेषज्ञत्वेन विशदं वचनम् । जैमिनिस्तु सामान्यवेदी फलान्तरादिकमजानन्न निराकुर्वन्यथाश्रुतमङ्गीकृत्यानधिकारमुक्तवानित्यविरोधोपपत्तेरित्याह इत्यादय इति ।

इत्यादयो विशेषास्तु सदा विद्यापतेर्हृदि ॥
जैमिन्याद्यास्तु सामान्यवेत्तृत्वात्तथा वदन् ॥
विद्येशमतमेतस्मान्नैव तद्भिर्विरुद्ध्यते ॥ ८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
प्रथमाध्यायस्य तृतीयः पादः ॥ १–३ ॥

**मोक्ष इत्युक्तपरामर्शार्थ** इतिशब्दः । तुशब्दो विद्यापतेस्तु इति **योज्यः** । हृदि **वर्तन्ते । तस्मादसौ विशदमवादीदिति शेषः । तत देवतानधिकारादिकम् । तथेति । सम्मुग्धमित्यर्थः । अस्याप्युपपादनाय नित्यमित्यादिपूर्ववाक्यमनुसन्धेयम्** । विद्येशेत्युपसंहारः । **अयं न्यायोऽन्यत्राप्यनुसन्धेय** इति ज्ञापयितुमित्यादय **इति** जैमिन्याद्या **इति** सद्भिरिति **चोक्तमिति** ॥ १-३-८ ॥

**इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ।**

**कृतायां टीकायां विषमपदवाक्यार्थविवृतौ तृतीयः पादोऽयं प्रथमविषये पर्यवसितः ॥**

**इति श्रीमन्न्यायसुधायां प्रथमाध्यायस्य तृतीयः पादः ॥ १—३ ॥**

शे० — विषयभेदेनाविरोधस्य तत्फलायेत्यनेनैव सिद्धेः किं मोक्ष इत्युत्तरेणेत्यतस्तत्रोक्तफलान्तरार्थत्वोपपादनार्थं तदिति भावेन तथा योजयति **नन्विति** । ननु न च सर्वं प्रकाशत इत्येतावता असिद्धार्थत्वोपपादनेन विद्यासाध्यज्ञानेऽर्थित्वादुपासनाधिकारसमर्थनात् सर्वदेति शब्दवैयर्थ्यमित्यतो, नात्र सर्वं सर्वदा न प्रकाशत इति संबन्धः, येन सर्वदेत्यस्य वैयर्थ्यं, किन्तु सर्वं न प्रकाशते यच्च प्रकाशते न तत्सर्वदेति । ततश्च पदद्वयस्याप्यसिद्धार्थोपपादकत्वान्न वैयर्थ्यमित्याशयेनाह **यच्च प्रकाशत इति** । तेनेत्यादिफलवाक्येऽपेक्षितं पूरयति **तदुभयार्थमिति** । मोक्षे फलविशेषार्थमसिद्धार्थप्रकाशार्थं चेत्यर्थः । तेनेति तच्छब्दस्य यत एवं तेनेति यच्छब्दसापेक्षत्वात् हिशब्दं तदर्थतया व्याचष्टे **हिशब्द इति** । ईश्वरादिज्ञाने तारतम्यप्रतिपादनं भाष्यकारीयमनर्थकमित्यतो व्याघातपरिहारार्थं तदित्याशयेन व्याघातशङ्कामुत्थापयति **नन्विति** । ब्रह्मणोऽशेषवस्तुगमिति मितवस्तुगतमिति च विषयवैलक्षण्यप्रयुक्तज्ञानतारतम्यप्रतिपादकोत्तरवाक्यानुसारेण पूर्णमित्यस्यार्थमाह **पूर्णमशेषार्थमिति** । सुसूक्ष्मैरप्यशेषैश्चेत्यादिवक्ष्यमाणप्रकारेण स्वपरगताशेषविशेषविषयकमित्यर्थः । विष्णोरेव सर्वविषयकं ज्ञानमित्यर्थलाभाय तुशब्दमवधारणपरतया व्याचष्टे **तुशब्द इति** । तावताऽपि विष्णोर्वेदनं पूर्णमेवेत्येवोक्तं स्यात् न तु विष्णोरेव ज्ञानं पूर्णमित्यतो भिन्नक्रमतया तुशब्दसंबन्धमाह **विष्णोरेवेति सम्बध्यत इति** । ननु स्पष्टत्वस्य विशेषविषयत्वातिरिक्तस्य ज्ञाने दुर्निरूपतया तद्रूपत्वात् स्पष्टातिस्पष्टविशदत्वोक्त्या निरुपचरितसकलविशेषविषयकत्वमेवोक्तं भवति । तच्च पूर्णमित्यनेनैव सिद्धम् । तस्याशेषार्थविषयकतया व्याख्यातत्वात् । तथाच स्पष्टेत्यादिविशेषणमनर्थकमिति शङ्कते **नन्विति** । सा च पूर्णमित्यनेनैव गतेत्युपलक्षणम् । लक्ष्मीज्ञानादिगृहीते विषये ईश्वरज्ञानस्य साम्यापत्तिश्चेत्यपि द्रष्टव्यम् ॥ **अपरोक्षत्वादिवदिति** । अत्रादिपदेन परोक्षत्वादिसंग्रहः । न चैतदप्यसिद्धम् । 'परोक्षत्वापरोक्षत्वे विशेषौ ज्ञानगौ यथा' इत्यादिनोत्तरत्र तस्योपपादयिष्यमाणत्वादिति भावः । विष्णोः पूर्णमित्युक्तस्यैवार्थस्य कथनाद्ब्रह्मणोऽशेषवस्तुगमित्येतत्पुन-

रुक्तमित्यतो, नात्र ब्रह्मशब्दो विष्णुपरस्तस्य तत्र मुख्यत्वेऽपि विष्णोः पृथगभिधानात्, किन्तु चतुर्मुखपरः । तथाच चतुर्मुखज्ञानप्रकारप्रदर्शनार्थत्वान्न वैयर्थ्यमित्याह **ब्रह्मण इति** । अन्यत्रालोचने सर्वविषयं 'ब्रह्मा तु सर्वगं पश्येदि'त्यादिनिरवकाशवाक्यानुसारेणाशेषवस्तुगमित्येतद्व्याख्याति **परं ब्रह्मेति ॥ अत्रापीति** । ब्रह्मणोऽशेषवस्तुगमेवेति संबध्यत इत्यर्थः । तद्व्यवच्छेदं दर्शयति **न त्विति** । आदिपदेन 'नित्यं वृद्धिक्षयापेतमि'त्युक्तनित्याविकारित्वस्य स्पष्टेत्यादिनोक्तनिरतिशयस्पष्टत्वस्य च संग्रहः । **कैमुत्यार्थमिति** । यदा हिरण्यगर्भज्ञानमपि कतिपयार्थविषयं तदा रुद्रादिज्ञानमल्पार्थविषयमिति किम्, इति सूचयितुं, ब्रह्मणोऽशेषवस्तुगमिति ब्रह्मज्ञानं पृथगुक्तमित्यर्थः । अन्यथाऽन्येषामित्यनेनैव रुद्रादिज्ञानस्येव हिरण्यगर्भज्ञानस्याप्युक्तिसंभवात्, पृथक् तदभिधानानर्थक्यादिति भावः । ब्रह्मणोऽशेषवस्तुगमन्येषां क्रमशो ज्ञानं मितवस्तुगमित्येतावतैव देवानाममर्वज्ञत्वप्रतिपादनेन न तु सर्वं प्रकाशते देवानामित्यत्र प्राप्तव्याघातशङ्कापरिहारात् 'नित्यं वृद्धि' इत्यादिना विष्णुसंवेदनकथनमनर्थकमित्यत आह **विष्ण्विति** । अनेन कुत एवं हिरण्यगर्भादिज्ञानानामसर्वविषयत्वमित्यतः सर्वविषयकत्वस्य विष्णुज्ञानमात्रनिष्ठत्वादिति हेतुहेतुमद्भावेन भाष्ययोजना सूचिता भवति । मितवस्तुगतत्वस्य हिरण्यगर्भज्ञानेऽपि सत्त्वात् कथमियं हिरण्यगर्भज्ञानादन्यज्ञानानां भेदोक्तिरित्यतस्तत्तथा व्याचष्टे **मितेति ॥ एतेनेति** । मोक्षे फलविशेषोऽस्तीत्यादिनेत्यर्थः । अन्यथा सूत्रार्थकथनरूपत्वाभावात् मोक्षे फलविशेषोऽस्तीत्यादेरभाष्यत्वं स्यादिति भावः । ननु स्यादेतदेवं यदि तत्तद्विद्योक्तानुष्ठानेन तत्रोक्तान्यदपि फलं प्रकाशविशेषश्च भवतीत्येतत्सिद्धं स्यात् । न चैतदस्ति । प्रमाणाभावात् । तस्मान्नैवं सूत्रव्याख्यानं युक्तमित्यत आह **अत्र चेति** ।

विरोधस्य तत्फलायेत्यादिना परिहृतत्वात्पुनस्तत्परिहारोऽनर्थक इत्यतः पूर्वोक्तपरिहारे प्राप्तानुपपत्तिपरिहारार्थत्वात्तस्य नानर्थक्यमित्याशयेन पूर्वपरिहारेऽनुपपत्तिमुत्थापयति **नन्विति** । इत्यादय इत्यत्रेतिशब्दपराम्रष्टव्यं दर्शयति **मोक्ष इत्युक्तेति** । एतद्वाक्यार्थस्य सूत्रकारस्य विशदवचने हेतुसमर्पकत्वघटनाय तुशब्दस्यावधारणार्थत्वं मनसि निधाय भिन्नक्रमतया संबन्धमाह **तुशब्द इति** । अपेक्षिताध्याहारेण साकाङ्क्षतां परिहरति **वर्तन्त इति** । विशदवचनस्यात्राश्रुतत्वात्कथमेतद्वाक्यार्थं प्रति तस्य साध्यतया संबन्ध इत्यत आह **तस्मादिति ॥ अस्याप्युपपादनायेति** । न केवलं न तु सर्वं प्रकाशत इत्यत्र प्राप्तव्याहतिशङ्कापरिहाराय देवानामसर्वज्ञत्वप्रतिपादकत्वं, किं नाम सूत्रकारस्य सर्वज्ञत्वेन विशदवचनेऽप्यन्येषामसर्वज्ञत्वात् सम्मुग्धवचनमित्येतदुपपादकत्वमपीत्यपिशब्दार्थः । तथा कुतोऽन्येषामसर्वज्ञत्वं येन संमुग्धवचनमित्यत आहेति नित्यमित्यादिवाक्ययोजना सूचिता भवति । विरोधपरिहारस्येत्यादय इत्यनेनैव कृतत्वाद्विधेशेत्येतदनर्थकमित्यत उपसंहारत्वान्नानर्थक्यमित्याह **विधेशेति** । मोक्षे

फलविशेषोऽस्तीत्युक्तविशेषस्येतिशब्देन समर्पणादादिपदमनर्थकम्, **मध्वादिष्वसंभवादनधिकारं जैमिनिरिति** जैमिनिमतविरोधस्यैव प्रस्तुततया जैमिनिमात्रग्रहणे कर्तव्ये जैमिन्याद्या इत्यत्रादिपदमनर्थकम्, उपसंहारेऽपि जैमिनिना भगवन्मतं न विरुध्यत इत्येव वक्तव्यत्वात्सतेत्येकवचनेनैव पूर्तेर्बहुवचनमनर्थकमित्यतोऽत्रोक्तन्यायस्य **'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । उत्क्रमिष्यत एवंभावादित्यौडुलोमिः । अवस्थितेरिति काशकृत्स्नः । ब्राह्मेण जैमिनिरुपन्यासादिभ्यः । चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः । एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः'** इत्याद्यधिकरणेष्वनुसंधेयत्वसूचनार्थं तदिति भावेनाह **अयमिति** ॥ १—३—८ ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥ अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥

इति श्रीमत्पदवाक्यप्रमाणविदाग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपादानां निजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां प्रथमाध्यायस्य तृतीयः पादः ॥ १—३ ॥

पृ० — सर्वदेत्येतद्वाक्यभेदेन योजयति **यद्वेति** । तेनेत्यनुवादः । तदुभयार्थमिति व्याख्या अप्रकाशितगुणविशेषप्रकाशार्थं कदाचित्प्रकाशितस्य तिरोहितस्य पुनःप्रकाशार्थमिति वा । मोक्षे सुखविशेषार्थमप्रकाशितप्रकाशार्थमिति वार्थः ॥ **यस्मादित्यर्थ इति** । तेन इत्यतः पूर्ववाक्येन तस्यान्वय इति भावः । **परब्रह्मातिरिक्ताशेषेति** । आलोचने सतीति योज्यम् । सर्वविषयत्वयोग्यताभिप्रायं वा । न चेदं मुक्तब्रह्मपरम् । साधकप्रस्तावात् ॥ **अत्राप्येवेतीति** । अवधारणार्थः तुशब्दो ब्रह्मान्याशेषविषयमेवेति संबध्यत इत्यर्थः । तद्व्यवच्छेद्यमाह **नन्वित्यादि** । पूर्णपदोक्तासंकुचितसर्वार्थविषयकत्व-निरतिशयस्पष्टत्व-वृद्धिक्षयापेतत्व-विशेषणयुक्तमित्यर्थः ॥ **एतेनेति** । मोक्ष इत्यादिना अन्यार्थमित्यादिग्रन्थेनेति वार्थः ॥ **अत्र चेति** । सुखविशेषादिसत्वे चेत्यर्थः ।

**मोक्ष इत्युक्तेति** । मोक्ष इत्याद्युक्तिरित्यर्थः । हृदीत्यनुवादः । वर्तन्त इति शेषोक्तिः ॥ **अस्यापीति** । इत्यादयो विशेषाः हृदि वर्तन्त इत्येतदुपपादनाय न केवलमितरेषां तादृशज्ञानमसंभावितमिति प्रदर्शनार्थमित्यपेरर्थः । न च विष्णुज्ञानस्य तादृशत्वे विद्यापतेः सूत्रकारस्य किमागतमिति शङ्क्यम् । अस्य विष्ण्ववतारत्वस्य तमेव शास्त्रप्रभवमिति ग्रन्थादावेवोक्तत्वादिति भावः । 'अविरोधस्तयोस्तत' इत्युक्तत्वात्पुनरुक्तिरित्यत आह **विद्येशेत्युपसंहार इति** । **अयं न्याय इति** । अत्रेव तत्र तत्र प्रस्तुतभिन्नविषयत्वाद्यविरोधव्युत्पादनन्यायः ॥ **अन्यत्र** । 'चरणादितिचेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः', 'सुकृतदुष्कृते एवेति तु बादरि'रित्यत्र । तथा 'शेषत्वात्पुरुषार्थवादो यथान्येष्वि'ति

जैमिनिः, 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनादि'त्यत्र । तथा 'परामर्शं जैमिनिरचोदनाचापवदतिहि 'अनुष्ठेयं बादरायणस्साम्यश्रुतेः' इत्यत्र । तथा 'स्वामिनः फलश्रुतेरित्यात्रेयः', 'आर्त्विज्यमित्यौडुलोमिः', 'पक्षेण तृतीयमि'त्यत्र तथा 'कार्यं बादरिरस्य गत्युपपत्तेः', 'परं जैमिनिर्मुख्यत्वात्', 'अप्रतीकालम्बनान्नयतीति बादरायण'इत्यापाततो विरोधस्थलेऽनुसन्धेय इति ज्ञापयितुमित्यर्थः । तथा व्यक्तमेतद्भाष्य एव तत्र तत्रेति भावः ॥ **इति चोक्तमिति** । आदिपदयुक्ततया, बहुवचनान्ततयोक्तम् । अन्यथा जैमिनेरेवात्र प्रस्तुतत्वादेकवचनान्ततया स एवोच्येतेति भावः ॥ १ । ३ । ८ ॥

॥ इति श्रीराघवेन्द्रयतिकृतश्रीमन्न्यायसुधाटिप्पण्यां प्रथमाध्यायस्य तृतीयः पादः ॥

श्री० — **उभयार्थमिति** । मोक्षे फलविशेषार्थं तस्य सर्वदा प्रकाशार्थं चेत्यर्थः ॥ **सर्वार्थविषयत्वेति** । पूर्णत्वेत्यर्थः । नन्वन्येषामित्युक्त्या ब्रह्मज्ञानस्यापि भगवद्विषयेऽसर्वविषयत्वस्य प्राप्तत्वात् पृथगुक्तिः किमर्थेत्यत आह **अत्रेति** । यदा ब्रह्मज्ञानं भगवद्विषयेऽसर्वविषयकं तदाऽन्यज्ञानमसर्वविषयकमिति किं वक्तव्यं, जगद्विषयेऽप्यसर्वविषयकत्वादिति कैमुत्यार्थमित्यर्थः ॥

**श्रुतेति** । 'वसूनामेवैको भूत्वा' इत्यादावित्यर्थः । **अस्यापीति** । भगवतो विशद्वादित्वस्य जैमिन्यादेः सम्मुग्धवादित्वस्य चेत्यर्थः । सद्भिरित्यस्य जैमिनिबादर्यौडुलोम्याश्मरथ्यैरित्यर्थः ॥ १-३-८ ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽगृहीतसुधावाक्यार्थविवरणे प्रथमाध्यायस्य तृतीयः पादः ॥ १-३ ॥

* * *

श्रीमत्-जयतीर्थविरचिता

सनाभिः

# श्रीमन्-न्यायसुधा

पद्टिप्पणीसमेता

## प्रथमाध्यायस्य चतुर्थः पादः

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

सु०— अन्यत्रैव प्रसिद्धशब्दसमन्वयप्रतिपादनं पादार्थ इति भाष्यात्परिशेषाद्वा सिद्धम् । अन्यत्र प्रसिद्धेभ्योऽन्यत्रैव प्रसिद्धानां विवेकश्च भाष्य एवोपपादित इति नेहोच्यते ॥ ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥ अत्र 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः' इति वाक्यमुदाहृत्य, अव्यक्तशब्दं परं ब्रह्मेवेत्युपपादितम् । तत्र यदुक्तं पूर्वपक्षिणा'अव्यक्तं चेत्परं ब्रह्म तदा तस्य पुरुषादवरत्वं प्राप्नोति । न च तद्युक्तम् । सकलश्रुत्यादविरोधात्'इति । तत्परिहारार्थं सूत्रम् तदधीनत्वादर्थवदिति ॥ तस्यार्थं विवृणोति दुःखीति ।

अनु०— ॥ ॐ तदधीनत्वादर्थवत् ॐ ॥

दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः ॥
शब्दा ब्रह्मणि वर्तन्ते

अव्यक्तग्रहणमुपलक्षणम् । यत्र वाक्ये सर्वेश्वरत्वविरोधि दुःखित्वादिकं प्रतीयते 'जीवा एव तु दुःखिनः', 'योनिमन्ये प्रपद्यन्ते' इत्यादौ, तस्य सर्वस्यापि समन्वयोऽत्र प्रतिपाद्यत इत्यतो दुःख्यादिग्रहणम् ॥ नाव्यक्तादिशब्दानां ब्रह्मपरत्वेऽप्यवरत्वादिप्राप्त्या सर्वमानविरोधोऽस्ति । यतः स्वस्मिन्नवरत्वाद्यभावेऽपि तद्वतां प्रधानादीनां ब्रह्माधीनत्वेन हेतुना दुःखी, बद्धः, अवर, इत्याद्या अपि शब्दा ब्रह्मणि वर्तन्त इत्यङ्गीकृतम् । एतदुक्तं भवति । दुःख्यादिशब्दबलादेव हि दुःखित्वादिप्राप्तिः । ततश्च प्रमाणविरोधो वाच्यः । न च दुःख्यादिशब्दो नियमेन दुःखादिसमवायस्य वाचकः । किन्तु तदस्यास्तीति तत्संबन्धमात्रस्य । संबन्धश्च समवाय इव स्वाम्यमपि भवति । 'तत्र निरनिष्टो निरवद्यः' 'नामानि सर्वाणि यमाविशन्ती'ति निरवकाशश्रुतिद्वयान्यथाऽनुपपत्त्या दुःख्यादिनियन्तृत्वेन दुःख्यादिशब्द प्रवृत्तिरित्यङ्गीकारे काऽनुपपत्तिरिति ।

शे०— यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥
अस्त्वेषा भक्तियुता श्रीविद्याधीशपादयोः सेवा ॥ १ ॥

एकवाक्यताऽऽदिसिद्धयेऽवश्यमभिधातव्यस्य पादप्रतिपाद्यस्य पादान्तर इवात्रानभिधानात्प्रसक्तामनुभाष्यकाराणां न्यूनतां परिहरति अन्यत्रैवेति ॥ भाष्यादिति । 'श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामि'-त्याद्येतत्पादीयभाष्यादित्यर्थः । ननु भाष्यादेतत्पादार्थसिद्धावत्र तदनभिधाने पादान्तरेऽपि भाष्यात्तत्सि-

द्धेरविशेषात् तत्रापि पादप्रतिपाद्यं न वक्तव्यं स्यात् । यदि च प्रस्थानभेदात् भाष्यात्सिद्धस्यावश्यवक्तव्यत्वा- त्तत्र तदभिधानमिति मन्यसे, तदेतदत्रापि तुल्यमित्यरुचेराह **परिशेषाद्वेति** । समन्वेतव्यतया प्रसक्तेष्व- न्यत्र प्रसिद्धादिषु तत्र तत्र तेषां निरूपणेनैतेषामेवावशिष्टत्वादित्यर्थः । ननु व्यर्थ एवायं पादः । न चान्यत्रैव प्रसिद्धशब्दसमन्वयार्थत्वात्तत्सार्थक्यम् । इन्द्रादिशब्दानामन्यत्रैव प्रसिद्धानामपि विष्णौ समन्वयस्य प्रथमपाद एव सिद्धत्वात् । न च तेषामन्यत्रैव प्रसिद्धत्वाभावः । तथा सति तृतीयपाद- वैयर्थ्यापातात् । अन्यत्रैवान्यत्रापीत्यतः प्रकारान्तराभावादित्यतः 'श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धाना- मि'ति भाष्ये लोकतोऽन्यत्रैव प्रसिद्धा अन्यत्र प्रसिद्धाः, श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धास्त्वन्यत्रैव प्रसिद्धा, इत्यन्यत्र प्रसिद्धेभ्योऽन्यत्रैव प्रसिद्धानां भेदस्योक्तत्वान्नानुपपत्तिरित्याह **अन्यत्रेति** ।

नन्वेतदप्ययुक्तम् । अन्यत्र प्रसिद्धत्वेनाभिमतस्यानन्दमयनाम्नोऽन्यस्मिन्नर्थविशेषे, सर्वगतत्वा- न्तर्यामित्वादिलिङ्गात्मकशब्दजातस्याप्यन्यत्रादित्यादौ, इन्द्रादिशब्दानामिन्द्रादाविव, लोकतोऽप्रसिद्ध्या- ऽन्यत्र प्रसिद्धत्वाभावापातात् । प्रत्युतादित्यादिश्रुत्यादिना सर्वगतत्वादेरन्यत्र प्रसिद्धेरुक्तत्वादवरत्वादि- लिङ्गेनान्यत्र प्रसिद्धाव्यक्तादिशब्दानामिवान्यत्रैव प्रसिद्धता स्यात् । यथा च सर्वगतत्वादेरन्यत्र प्रसिद्धि- साधकाऽऽदित्यादिश्रुतिरन्तर्यामित्वादेरन्यत्र प्रसिद्धिसाधकशरीरित्वादिलिंगं च लोकतोऽन्यत्रप्रसिद्धम् । तथाऽव्यक्तादिशब्दस्यान्यत्र प्रसिद्धिसाधकमवरत्वादिलिङ्गमपि लोकतोऽन्यत्र प्रसिद्धमेव । किं चैवमन्यत्रैव प्रसिद्धाव्यक्तादिशब्देष्वपि लोकतोऽन्यत्र प्रसिद्धेः सत्त्वात् अन्यत्र प्रसिद्धेन्द्राकाशादिशब्देषु श्रुत्यादिनाऽप्यन्यत्र प्रसिद्धेः सत्त्वात्साङ्कर्यं स्यादिति चेन्न । प्रबलश्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धा अन्यत्रैव प्रसिद्धाः, श्रुत्यादितो लोकतो वाऽन्यत्रैव प्रसिद्धास्त्वन्यत्र प्रसिद्धा, इति विवेकस्य विवक्षितत्वात् । श्रुत्यादेः प्राबल्यं च यद्यप्यापाततो ब्रह्मण्यसंभवमात्रं न संभवति। अव्यक्तादिशब्दानामन्यत्र प्रसिद्धिसाधका- वरत्वादीनामिव गुहाप्रविष्टत्वादेरन्यत्र प्रसिद्धिसाधकद्वित्वादीनामप्येकस्मिन् ब्रह्मण्यसंभवेन बलवच्छ्रुति- लिङ्गादिभिरन्यत्र प्रसिद्धतयाऽन्यत्रैव प्रसिद्धताऽऽपातात् । नापि सर्वथा ब्रह्मण्यसंभवः । सिद्धान्तानु- दयाऽऽपातात् । तथाऽपि, प्रवृत्तिनिमित्तस्य तदधीनत्वादिना ब्रह्मणि शब्दस्य मुख्यत्वेऽपि तस्य शब्दस्य तद्युक्तवाक्यस्य वाऽपरममुख्यवृत्त्याऽन्यपरत्वं विनाऽनुपपद्यमानत्वमेव श्रुत्यादेर्बलवत्त्वं संभवति । न हि गुहां प्रविष्टावित्यादिषु द्विवचनं तद्युक्तवाक्यं वाऽपरममुख्यवृत्त्याप्यन्यपरम् । अन्यत्रैव प्रसिद्धेषु तु 'अव्यक्तात्पुरुषः परः' 'वसन्ते वसन्ते ज्योतिषा यजेत'इत्यादिष्वव्यक्तादिशब्दस्तद्युक्तवाक्यं वाऽपरममुख्य- वृत्त्याऽन्यपरमेव । अन्यथा देवतातारतम्यकर्मादि न सिध्येत् । वाक्यान्तरस्याप्येतत्तुल्यत्वात् । अत एव 'कामादितरत्र तत्र चायतनादिभ्यः' इत्यधिकरणेऽपरममुख्यवृत्त्या श्रौतत्त्वपरत्वेनोदाहृत 'सेषा प्रकृति- रविकृतिरि'ति वाक्यमेव प्रकृत्यधिकरणे टीकायामुदाहृतमिति द्रष्टव्यम् । अथवा ब्रह्मपरत्वे बहु-

बिप्लवापत्तिरूपतर्कानुगृहीतत्वं बलवत्त्वं बहुविप्लवापत्तिश्चैतत्पादीयाधिकरणीयेषु भाष्यटीकोक्तैवानुसन्धेयेति संक्षेपः । विस्तरस्तु तात्पर्यचन्द्रिकायां द्रष्टव्यः । 'तदधीनत्वादर्थवदि'ति सूत्रार्थविवरणार्थत्वान्न 'दुःखी'त्याद्युत्तरभाष्यमनर्थकमित्यभिप्रेत्य सूत्रस्य वैयर्थ्यशङ्कां तत्प्रयोजनदर्शनेन परिहर्तुं तत्सुबोधत्वाय पूर्वसूत्रमुपन्यस्य, विषयवाक्यप्रदर्शनपूर्वकं पूर्वसूत्रप्रमेयं तावदनुवदति **आनुमानिकमपीति** ॥ ॐ **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** ॐ ॥ **उपपादितमिति** । भाष्य इति शेषः । इदानीं सूत्रवैयर्थ्यशङ्कां परिहरति **तत्रेत्यादिना** ॥ **पुरुषादवरत्वमिति** । पुरुषगतपरत्वं प्रति पञ्चम्या अवधित्वस्य बोधितत्वात् तस्य चावरत्वाविनाभूतत्वात् अव्यक्तादिति पञ्चम्या अवधित्वोक्त्याऽवरत्वप्राप्तिरिति भावः । **सकलश्रुत्यादीति** । 'निरनिष्टो निरवद्य' इत्यादिश्रुत्यादीत्यर्थः । तेन विष्णोर्दोषात्यस्पृष्टिनियमप्रतिपादनादिति भावः ॥ ॐ **तदधीनत्वादर्थवत्** ॐ ॥

ननु चानुमानिकमिति सूत्रेऽव्यक्तस्यैव सूत्रकृता प्रतिज्ञातत्वाद्भाष्यकृता 'अव्यक्तशब्दः' इत्येव व्याख्यातव्यं । दुःखिबद्धावराद्या इति कथं व्याख्यातम् । तथा सति व्याख्यानव्याख्येययोर्विसंवादप्रसङ्ग इत्यतः स्यादयं सूत्रभाष्ययोर्विसंवादः । यदि सौत्रोऽव्यक्तशब्दः स्वमात्रग्राहकः स्यात् । न चैवम् । तथा सति सूत्रत्वव्याघातप्रसङ्गात् । किं तु 'उपलक्षणत्वं शब्दानाम्' इत्युक्तरीत्या शब्दान्तरोपलक्षणमतो न विसंवाद इत्याह **अव्यक्तग्रहणमिति** । ननु नाव्यक्तशब्दस्य शब्दान्तरोपलक्षकत्वं संभवति । तथा सत्यव्यक्तशब्देन दुःख्यादिशब्दानामिव सर्वशब्दानामुपलक्षयितुं शक्यत्वात् तेनोत्तराधिकरणानारम्भप्रसङ्गादित्यतः किं समानन्यायशब्दान्तरविषयाधिकरणानारंभप्रसङ्गो वा बाधकः, किंवा न्यायान्तरविषयशब्दान्तरगोचराधिकरणानारंभप्रसङ्गः । नाद्यः । इष्टत्वात् । नान्त्यः । वैषम्यात् । दुःख्यादिशब्दानां समानन्यायतासंबन्धेनोपलक्षणया ग्रहणसंभवेऽपि तदितरेषामुपलक्षणायां नियामकसंबन्धाभावात् । शब्दत्वेन सन्दिग्धशब्दत्वेन वोपलक्षणायाः प्रागेव दूषितत्वादिति भावेन, अव्यक्तशब्देन दुःख्यादिशब्दोपलक्षणानियामकं समानन्यायतासंबन्धमाह **यत्र वाक्य इति** । **इत्यत इति** । इत्यभिप्रायेणेत्यर्थः ॥ **स्वस्मिन्निति** । ब्रह्मणीत्यर्थः । 'दुःखिबद्धावराद्यास्त्वि'ति मूले तुशब्दोऽपिशब्दार्थ इत्याशयेनाह **इत्याद्या अपीति** । ननु दुःख्यादिशब्देन दुःखादिसमवायस्य प्रतीतेः कथं दुःखादिनियन्तृतया दुःख्यादिशब्दप्रवृत्तिरङ्गीकर्तुं शक्यत इत्यतोऽभिप्रायमाह **एतदुक्तं भवतीति** । अस्तु दुःख्यादिशब्दस्य दुःखादिसंबन्धमात्रवाचकत्वं, तथाऽपि कुतः समवायस्यैव परित्याग इत्यत आह **तत्रेति** ।

स० — अन्यत्र **प्रसिद्धेभ्य इति** । लोकतोऽन्यत्रैवप्रसिद्धानां समन्वयः प्रथमपादे, अत्र श्रुतिलिङ्गादिभिरिति विवेको भाष्ये स्पष्ट इत्यर्थः ॥ **अव्यक्तशब्दमिति** । अव्यक्तमितिशब्दो यस्येति

विग्रहः ॥ **अव्यक्तं चेदिति** । पुरुषगतपरत्वं प्रति पञ्चम्या अवधित्वस्य बोधितत्वेन, व्याप्तत्वात्; अवधित्वोक्त्या अवरत्वं प्राप्नोतीति भावः । **अव्यक्तग्रहणमिति** । सूत्र इति शेषः ॥ **दुःख्यादिग्रहणमिति** । अनुव्याख्यान इति शेषः ॥

प० — **भाष्यादिति** । 'श्रुतिलिंगादिभिरन्यत्रैव प्रसिद्धाना'मित्यादिभाष्यादित्यर्थः ॥ **उपपादित इति** । श्रुतिलिंगादिभिरित्युक्त्याउपपादित इत्यर्थः । तथा च तट्टीकायां बलवदिति विशेषणदानेन विवृतोऽयं विवेक इति न न्यूनताऽऽशङ्केति भावः ॥ ॐ **आनुमानिकमप्येकेषां ०** ॥ **अव्यक्तशब्दमिति** । 'अव्यक्तमितिशब्दो यस्य तदिति बहुव्रीहिः ॥ **सकलश्रुत्यादीति** । सर्वश्रुतिश्रौतस्मृतियुक्तीनामितरासाधारणनिरतिशयसद्धर्मपुरस्कारेणैव ईश्वरपरत्वस्य, 'सर्वे वेदा युक्तयः सुप्रमाणा' इत्यादिप्रमाणसिद्धत्वादिति भावः । तत्परिहारार्थम्—अवरत्वपरिहारेण तादृशशब्दार्थत्वं हरेर्व्युत्पादयितुमित्यर्थः । साध्यमध्याहृत्य तत्र हेतुत्वेन मूलं योजयति **नाव्यक्तादीत्यादिना** । तुशब्दो अप्यर्थ इति मत्वा तस्य स्वस्मिन्नवरत्वाद्यभावेपीत्येकमर्थमुक्त्वा अन्यमर्थमाह **इत्याद्या अपीति** । न केवलं गुणवाचकाऽऽनन्दमयादिशब्दा इत्यर्थः । एवंकल्पनं निर्बीजमित्यत आह **एतदुक्तमिति** ॥

या० — **अन्यत्र प्रसिद्धेभ्य इति** । प्रथमपादे समन्वितानां लोकत एवान्यत्र प्रसिद्धिः । एतत्पादीयानां च श्रुतिलिङ्गादिभिः सेति विवेक इत्यर्थः ॥ ॐ **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** ॐ ॥ **पुरुषादवरत्वमिति** । अव्यक्तादिति पञ्चम्युक्तेन परत्वावधित्वेनार्थात्प्राप्नोतीत्यर्थः ॥ **अव्यक्तग्रहणमिति** । आद्यसूत्रे आनुमानिकमित्यनेनेति शेषः । 'योनिमन्य' इति वाक्यं योनिप्राप्तिप्रतिपादनद्वारा बद्धत्वप्रतिपादकम् । इदमुपलक्षणम् । 'कार्यकारणबद्धौ तौ' 'सोऽवरः इत्यादिकं साक्षादेव बद्धत्वावरत्वादिप्रतिपादकमपि ग्राह्यम् । अन्यथा कृदन्तेषु बद्धादिषु रूढेषु चावरादिशब्देषु कथमित्यग्रेतनफक्किकानुपपत्तेरित्यवगन्तव्यम्

श्री० — ॥ ॐ **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** ॐ ॥ **अव्यक्तग्रहणं** भाष्येऽव्यक्तग्रहणं दुःख्यादिशब्दानामप्युपलक्षणार्थमित्यर्थः । योनिमित्यादौ बद्धत्वमुच्यत इति ध्येयम् । ननूभयोरपि शब्दार्थत्वे स्वाम्यस्यैव ग्रहणे को हेतुरित्यत आह ॥ **तत्र चेत्यादि** । भगवतो दुःख्यादिशब्दवाच्यत्वे दुःखवत्त्वप्राप्त्या 'निरनिष्ट' इति निरवकाशश्रुतिविरोधः तदर्थं तद्वाच्यताऽनङ्गीकारे, नामानीति निरवकाशश्रुतिविरोध इति श्रुतिद्वयान्यथाऽनुपपत्त्या, अस्ति दुःख्यादिशब्दवाच्यत्वं, दुःखवत्त्वप्रसङ्गस्तु स्वाम्यमादायैव परिहरणीय इति ज्ञायत इति भावः ॥

च०— श्रीनिवासार्थहृत्पद्ममन्दिरो हयकन्धरः । सुनन्दतात्सेवया मे मत्वर्थं कृतयाऽनया ॥१॥

पादान्तरेषु तत्तत्पूर्वोत्तरपादभेदतदेकवाक्यतोभयोपरक्तावसितेरुत्पादाय तत्तत्प्रतिपाद्यं यथा भाष्यकृदभाषिष्ट, तद्वत्प्रकृतेपि भाषणीयतया तदभाषणनियन्त्रितां न्यूनतां प्रतिविधत्ते **अन्यत्रैवेति** । **भाष्यात्** श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धानामित्याद्यानुपूर्वीकैतत्पादीयभाष्यात् । अथ भाष्ये भाषणेनैव तदधिगमादत्र तदनभिहितौ तुल्यदिशा पादान्तरेष्वपि तदनभिधानप्रसङ्गः । प्रस्थानभेदात्तदभिधानावश्यंभावोपपादने तु प्रकृते तथाभावोऽवर्जनीय इत्यरुचेराह **परिशेषाद्वेति** । समन्वेतव्यतया प्रसक्तान्यत्रप्रसिद्धादिप्रतिषेधप्रतिसंधानपूर्वकं परिशिष्यमाणप्रतिसंहितेरित्यर्थः । **अन्यत्रप्रसिद्धेभ्य इति** । द्वितीयादौ समन्वितानां कोशादिव्युत्पादितान्यत्रिकप्रसिद्धिरेतत्समन्वेतव्यानां च लिङ्गादिव्युत्पादिता सेति विवेक इत्यर्थः । प्रपञ्चनं तु तात्पर्यचन्द्रिकातोऽवसेयम् ॥ ॐ **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** ॐ ॥ **अव्यक्तशब्दमिति** । बहुव्रीहिणा सामानाधिकरण्यमुपपादनीयं । **पुरुषावरत्वमिति** । अव्यक्तपदप्रकृतिकपञ्चमीप्रत्यायितपरत्वनिरूपितावधित्वानुपपत्तिप्रतिसंधानेनावरत्वाविनाभूततल्लिङ्गकपरामर्शेन वा समुत्पादितधीगोचरावरत्वमित्यर्थः । **योनिमन्य इति** । तत्प्राप्तिप्रतिपादनमुखेन बद्धत्वं प्रतिपादयतीति भावः । कृदन्तेषु बद्धादिशब्देषु रूढेषु चावरादिशब्देष्वित्युत्तरग्रन्थानुरोधेन 'कार्यकारणबद्धौ तौ 'सोऽवर' इत्यादिकमप्युदाहार्यम् । तत्संबन्धमात्रस्य निरूपितत्वप्रत्यासत्त्या प्रकृत्यर्थभूतदुःखादि-

---

विशेषितसंबन्धत्वरूपसामान्यधर्मावच्छिन्नस्य आश्रयत्वादिरूपसमवायत्वात्मकविशेषधर्मावच्छिन्ने स्वामित्वस्वादिरूपतादृशधर्मावच्छिन्ने वा मत्वर्थीयानां शक्त्यभ्युपगमे धनी दण्डीत्यादिप्रयोगाणामनिर्वाहापत्तेश्चन्द्रिकायामेव निरूढत्वात् । ( उपरक्तावसितेः = संबद्धनिर्णयस्य ) ( नन्दतु = नन्दतात् )

सु०— भवत्वेवं तद्धितान्तेषु गतिः । कृदन्तेषु बद्धादिशब्देषु रूढेषु चावरादिशब्देषु **कथम्** । **इत्थम्** । बद्धशब्दस्य बन्धं प्रति कर्मत्वं प्रवृत्तिनिमित्तम् । तद्यस्यास्ति तत्र स शब्दो वर्तते । यस्यास्तीति च संबन्धमात्रमुच्यते । संबन्धविशेषे प्रमाणाभावात् । एवं कारकान्तरवाचिष्वपि द्रष्टव्यम् । अवरादिशब्दा अपि अवरत्वादिनिमित्ताधीनप्रवृत्तय एवमेव योज्याः । किञ्च 'प्रातिपदिकाद्धात्वर्थे' इति ण्यन्तेभ्यः पचाद्यचि विहिते सुलभैवावरादिशब्दप्रवृत्तिः । स्यादेषा व्याख्या, यत्र शब्दतोऽवरत्वादिप्रतीतिः । यत्र पुनः 'अव्यक्तात्पुरुषः पर' इत्यादावर्थादवरत्वादिप्राप्तिस्तत्र कथम् । न हि शब्दवदुपपत्तिर्व्याख्यानमर्हति । उच्यते । अव्यक्तादिति पञ्चम्या हि पुरुषगतं परत्वं प्रति अव्यक्तस्यावधित्वमस्तीत्येतावदेव लभ्यते । न च 'तदस्यास्ती'त्यनेन समवाय एव प्राप्नोतीति नियमोऽस्ति । तत्स्वामित्वेनाप्युपपत्तेः । ततश्च

यद्गतं परत्वं प्रति अवधित्वं तस्यावरत्वमर्थादापद्यताम् । परगतं तु यत्स्वामिकं तस्यावरत्वादिकं प्रति स्वाम्यमेवार्थादापद्यत इति न कश्चिद्विरोधः ।

शे० — **तद्धितान्तेष्विति** । मत्वर्थीयतद्धितान्तेष्वित्यर्थः ॥ **कथमिति** । तत्र संबन्धसामान्यबोधकप्रत्ययवत् प्रकृते तद्बोधकप्रत्ययाभावादिति भावः । **कर्मत्वं प्रवृत्तिनिमित्तमिति** । 'तयोरेव कृत्यक्तखलर्थाः' इति क्तस्य कर्मणि विधानादिति भावः ॥ **संबन्धमात्रमुच्यत इति** । समवायादिरेवोच्यत इति न नियमः, किन्तु सर्वेऽपि संबन्धा उच्यन्त इत्यर्थः । कुत एतदित्यतः समवायादिरेवोच्यते न स्वामित्वमित्यत्र प्रमाणाभावादित्याह **संबन्धविशेष इति** । उक्तमेव न्यायं कर्त्रादिकारकान्तरवाचिकृदन्तशब्देष्वप्यतिदिशति **एवमिति** । जायमान इत्यादिषु शब्देषु जन्यादिकं प्रति कर्तृत्वादिकं हि प्रवृत्तिनिमित्तं, तद्यस्यास्ति तत्र स शब्दो वर्तते, यस्यास्तीति च संबन्धमात्रमेवोच्यते, संबन्धविशेषे प्रमाणाभावात् । तथा च जन्यादिनियन्तृत्वेन कर्त्रादिकारकान्तरवाचित्वात्कृदन्तजायमानादिशब्दानामपि तत्र वृत्तिरिति भावः । अवरादिशब्दा इत्यत्रादिपदेनानित्यादिशब्दानां संग्रहः ॥ **एवमेवेति** । अवरत्वादिकं ह्यवरादिरूढशब्दप्रवृत्तिनिमित्तं, तद्यस्यास्ति तत्र स शब्दो वर्तते, यस्यास्तीति च संबन्धमात्रमुच्यते । तथा चावरत्वादिनियन्तृत्वेनावरादिशब्दानामपि भगवति प्रवृत्तिरिति भावः । अवरादिशब्देषु योगमाश्रित्य समाधानान्तरमाह **किञ्चेति** ॥ **प्रातिपदिकाद्धात्वर्थ इति** । प्रातिपदिकाद्धात्वर्थे णिच् भवति । तस्मिंश्चेष्ठनीव कार्यं भवतीति धातु(गणपठित)सूत्रार्थः । तथा चावरादिशब्देभ्यः 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे'ति धातु(गण)सूत्रेण धात्वर्थे णिचि, तस्येष्ठवद्भावे च जाते, णिचि परतष्टिलोपापेक्षया, परत्वा'दचो ञ्णिती'ति पूर्वं वृद्धौ सत्यां पश्चात् टेरिति इष्ठेमेयस्सु परतष्टिलोपविधानात् टिलोपे, निष्पन्नानामवरादिशब्दानां 'सनाद्यन्ता धातव इति' णिजन्ततया धातुसंज्ञायां, पचाद्यचि कृते णेरनिटीत्यनेन णिचो लोपे अवरयतीत्यवर इति कर्तृव्युत्पत्त्याऽवरादिशब्दानां सुलभैव ब्रह्मणि वृत्तिरिति भावः ॥ **अर्थादिति** । अनुपपत्त्येत्यर्थः । पञ्चम्युक्तपरत्वावधित्वस्यावरत्वाविनाभूतत्वादिति भावः । नन्ववरत्वमस्यास्तीति संबन्धसामान्यविवक्षयोपपत्तिरप्यवरादिशब्दवद्व्याख्यायतामिति न तत्राप्यनुपपत्तिरित्यत आह **न हीति** ॥ **यद्गतमिति** । परत्वं प्रत्यवधित्वं यद्गतं तस्येति संबन्धः । परगतं त्वित्यत्र, परत्वं प्रत्यवधित्वमित्यनुवर्तते **अर्थादिति** । परत्वावधित्वस्वामित्वाविनाभूतत्वात्तेनावरत्वस्वामित्वस्यैव प्राप्तिरिति भावः ।

म० — **भवत्वेवमिति** । तत्र संबन्धसामान्यबोधकप्रत्ययवत् प्रकृते तद्बोधकस्याप्यभावः । **संबन्धमात्रमुच्यत इति** । समवायादिरेव न तु स्वाम्यमित्यत्र प्रमाणाभावादित्यर्थः । **एवं कारकान्तरवाचिष्वपीति** । जायमानो म्रियमाण इत्यादिषु कर्त्रादिवाचिष्वित्यर्थः । अत्रापि जनिकर्तृत्वं

प्रवृत्तिनिमित्तं तद् यस्यास्तीति पूर्ववद्द्रष्टव्यम् ॥ **एवमेवेति** । अवरत्वं यस्यास्तीति संबन्धसामान्यं विवक्षित्वेत्यर्थः ॥ **किं च प्रातिपदिकाद्धात्वर्थ इतीति** । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे'ति धातुसूत्रादवरादिशब्देभ्यश्चौरादिके णिचि इष्ठवद्भावादिष्ठेमेयस्सु परतष्टिलोपो भवतीति टिलोपे 'सनाद्यन्ता धातव' इति धातुसंज्ञायां पचाद्यचि कृते णेरनिटीति लोपे च सत्यवरादिशब्दनिष्पत्तिर्भवति । एवं चावरयतीत्यवर इत्यादिकर्तृव्युत्पत्त्या अवरादिशब्दानां ब्रह्मणि वृत्तिः सिद्धैवेति भावः । **अर्थादिति** । पुरुषगतपरत्वावधित्वोक्तेरित्यर्थः । ननु अवरत्वमस्यास्तीति संबन्धसामान्यविवक्षया अवरत्व प्रतीतिरपि व्याख्यास्यत इत्यत आह **न हीति** ॥ **ततश्चेति** । अवधित्वं यद्गतं तस्येति संबन्धः । **परगतं त्विति** । परं प्रत्यवधित्वमित्यनुवर्तते ।

प० — **तद्धितान्तेष्विति** । मत्वर्थकतद्धितसंज्ञकप्रत्ययांतेष्वित्यर्थः ॥ **कर्मत्वमिति** । 'तयोरेव कृत्यक्तखलर्थाः' इतिभावकर्मणोः क्तप्रत्ययविधानात् बधधातोश्च सकर्मकत्वादिति भावः ॥ **प्रमाणाभावादिति** । सूत्रे 'तयोरेवे'त्यस्य भावत्वकर्मत्ववतोरित्यर्थः । तत्र च संबंधसामान्येनैव कर्मत्ववत्त्वं प्रतीयते । स्वाम्यसंबंधेन कर्मत्ववत्त्वं च हरेरपीति तत्र बद्धशब्दवृत्तौ नानुपपत्तिरिति संबंधमात्रपक्षे अतिप्रसंगभंगस्तु चंद्रिकायां व्यक्तः । ननु भवत्वेवं कृदंतेषु । 'योनिमन्ये प्रपद्यन्त इति तिङन्तेषु कथमित्यत आह **एवं कारकान्तरेति**। बंधं प्रतीत्यनुषंगः । योनिप्रतिपत्तिरूपबंधं प्रति कर्तृत्वं हि प्रपद्यन्त इति तिङ्प्रत्ययप्रवृत्तिनिमित्तम् । 'लः कर्मणि च भावे चाकर्मकेभ्य' इति सूत्रे चकारात्कर्तरि लकारा भवन्तीत्युक्तत्वात् । कर्तृत्वं च यस्यास्ति तत्र हि प्रत्यया भवंति । यस्यास्तीति च संबन्धमात्रम् । समवायरूपविशेषे मानाभावात् । स्वाम्यसंबन्धेन च कर्तृत्वं हरेरप्यस्तीति योनिप्रतिपत्तिरूपबंधकर्तृत्वनियंतृत्वेन हरौ' 'योनिमन्ये प्रपद्यंते 'रमणीयां योनिमापद्यंत' इत्यादितिङन्तशब्दवृत्तौ काऽनुपपत्तिरितिः । तथा 'त्वं बंधदो मुक्तिदोऽतो मतो नः' इत्यादौ यत्र बन्धं प्रति संप्रदानकारकवाचिचतुर्थ्यन्तं पदमधिकरणादिकारकवाचिसप्तम्यंतादिकं वा तत्र सर्वत्रापि तादृशपदवाच्यत्वमेवं द्रष्टव्यमित्यर्थः ॥ **एवमेवेति** । अवरत्वं यस्यास्ति तत्र शब्दो वर्तते । स्वाम्यसंबन्धेन तद्धरेरप्यस्तीति तत्र शब्द इत्येवं योज्यमित्यर्थः । **प्रातिपदिकाद्धात्वर्थ इतीति** । तृतीयाद्यपादे 'सत्याप-पाश-रूप-वीणा-तूल-लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिजि'त्यत्र उक्तचुरादिगणमध्ये 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे'ति पठितस्य गणसूत्रस्यायमर्थः । प्रातिपदिकात्करोतीत्यादिधात्वर्थे विवक्षिते बहुलं णिज् भवति । णिचि परे इष्ठन्प्रत्यये परतो यत्कार्यं तत्कार्यं भवतीति । तथा च 'अवरं करोति' 'बंधं करोती'त्यर्थे णिचिकृते णिचि इष्ठवदित्युक्त्या टेरिति सूत्रेण इष्ठेमेयस्सु परतः टेर्लोपो भवतीत्युक्तटिलोपे च ण्यंतादवरादिशब्दा-

'सनाद्यन्ता धातव' इति धातुसंज्ञायां नंदिग्रहिपचादिभ्यो ल्युणिन्यच' इत्यत्र पचादेराकृतिगणत्वस्य 'यङो-ऽचि चे'त्यत्राजूग्रहणेन ज्ञापितत्वात्पचाद्यचि कृते 'णेरनिटी'ति णिलोपे स्वाद्युत्पत्तौ अवरो बद्ध इत्यादि-शब्दप्रवृत्तिर्हरौ सुलभैवेत्यर्थः । 'स बद्धः स दुःखी स बंधयति स दुःखयती'त्यादिकौषारवश्रुतेरिति भावः॥ **अर्थादिति** । अन्यथानुपपत्तितः । अविनाभावबलादिति यावत् । अव्यक्तादिति पंचम्युक्तं यद(परा)-वधित्वमवरत्वेन विनानुपपन्नं सत्स्वव्यापकमवरत्वं स्वाधिकरणे आक्षिपतीत्यर्थादवरत्वादिप्राप्तिरित्युक्तम् **उपपत्तिरिति** । व्याप्यव्यापकरूपोर्थ इत्यर्थः । अनुपपत्तिरूपेति वार्थः ॥ **परगतं त्विति** । अन्यगतं तु परत्वावधित्वं यत्स्वामिकं येन स्वामिना नियमितं तस्य स्वामिनः परत्वावधित्वसमानाधिकरणावरत्वा-दिकं प्रतीत्यर्थः ।

या० — **तद्धितान्तेष्विति** । मत्वर्थीयतद्धितातेष्वित्यर्थः ॥ **कथमिति** । तत्र संबन्धबोधकप्रत्यय-वदत्र तद्बोधकाभावादिति भावः ॥ **संबन्धमात्रमुच्यत इति** । न चातिप्रसङ्गः शङ्कनीयः । प्रयोगे-सति निमित्तानुसरणम् । न तु निमित्तसतीति प्रयोगः । प्रकृते नामानि सर्वाणीति श्रुत्या शक्तेः प्रमितत्वेन प्रयोगस्यापि प्राप्तत्वादित्याशयात् ॥ **एवं कारकान्तरेति**। जायमानो म्रियमाण इत्यादिकर्तृवाचकेषु, ब्रध्नन इत्यादिकरणवाचकेषु, दानीय इत्यादिसंप्रदानवाचिषु, प्रभवः प्रलय इत्याद्यपादानवाचिषु दोहन इत्याधिक-रणवाचिषु च शब्देषु कर्तृत्वादिकं प्रवृत्तिनिमित्तं तदस्यास्तीत्यादि पूर्ववत्द्रष्टव्यमित्यर्थः ॥ **एवमेवेति** । अरत्वादिकमवर इत्यादिरूढशब्दप्रवृत्तिनिमित्तं, तदस्यास्तीत्युक्तरीत्यैवेत्यर्थः । अवरादिपदेषु योगमाश्रित्य समाधानान्तरमाह **किंच प्रातिपदिकादिति** । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे'ति धातुसूत्रात् अवरादिशब्देभ्यस्तत्कारणादिरूपे धात्वर्थे चौरादिके णिचि सति, तस्य 'अचोञ्णिती'ति प्राप्तवृद्ध्यपवा-दायेष्ठवद्भावस्योक्तत्वेन इष्ठे परतष्टेरिति टिलोपस्य विधानाट्टिलोपे च सति 'सनाद्यन्ता धातवः'इति धातुसंज्ञायां पचाद्यचिं कृते 'णेरनिटी'ति णिलोपे च सत्यवरयतीत्यादिकर्तृव्युत्पत्त्याऽवरादिशब्दानां ब्रह्मणि वृत्तिः सुलभैवेत्यर्थः । **परगतं** त्वित्यत्र परत्वं प्रत्यवधित्वमित्यनुवर्तते ।

श्री०-**तद्धितान्तेष्विति** । अत इनिठनाविति सूत्रेण दुःखशब्दात्तदस्यास्तीति मतुबर्थे तद्धित-रूपे इनप्रत्यये सति दुःखीत्येवंरूपाः शब्दास्तद्धितान्ता इत्यर्थः ॥ **कृदन्तेष्विति** । बध बन्धनेऽस्मात् क्तप्रत्यये ककारलोपे झषस्तथोर्धोऽधः झषः परयोस्तकारथकारयोर्धः स्यात् । डु धाञ् धारणपोषणयोरिति धाधातुं वर्जयित्वेति सूत्रेण तकारस्य धकारे सति बध् ध बद्ध इति कृदन्तः । कृदतिङिति तिङ्वर्जप्रत्ययस्य कृत्त्वोक्तेः क्तप्रत्ययस्य कृत्त्वेन तदन्तत्वादस्येत्यर्थः । संबन्धविशेषः आधाराधेयभावरूपः । तद्घटकः समवाय इति यावत् तस्मिन्निति यावत् । प्रसिद्धत्वात्तृव्युत्पत्तेरिति न्यायविवरणानुसारेणाह **किञ्चेति** । तथाचावरशब्दात् प्रातिपदिकादित्यादिधातुसूत्रस्य चुरादिगणे पठितत्वेनोक्तात्सूत्रात्

चौरादिके णिचि प्रत्यये तस्य च णिच्प्रत्ययस्य इष्ठवद्भावाङ्गीकारात् इष्ठन् इमनिच् ईयस् प्रत्ययानां पुरतः स्थितानां यत्कार्यकारित्वं पूर्वं टिलोपकारित्वरूपं तादृक्स्वभावस्य णिचोऽङ्गीकारात् पूर्वं टिभूतरेफस्याकारलोपे अवर् णिच् इति स्थिते 'सनाद्यन्ता धातवः'। गुप्तिज्किद्भ्यः सनिति' सूत्रमारभ्य विहिता ये सनादयः सन्प्रत्ययमारभ्य 'कमेर्णिङ्' इत्येतत्सूत्रपर्यन्तं ये प्रत्यया विहितास्तदन्ता ये शब्दास्ते धातुसंज्ञाः स्युः। तथाच णिचोऽप्येतदन्तर्गतत्वेन तदन्तावरशब्दस्यानेन सूत्रेण धातुसंज्ञायां 'धातोः' अतःपरं नन्दिग्रहीत्यादिना वक्ष्यमाणा ये अच् इत्याद्याः प्रत्ययास्ते धातोरुपरि ज्ञेया इत्युक्तत्वेनावरशब्दस्यापि सनाद्यन्ता इति धातुसंज्ञाकरणादस्माद्धातो'र्नन्दिग्रहिपचादिभ्यो ल्युणिन्यच-इति सूत्रेणास्यापि पचादिगणस्थत्वात्कर्तरि अच्प्रत्यये सति अवर् णि अच् इति स्थिते पश्चात् 'णेरनिटि' अनिडादावार्धधातुके परे णिचो लोपः स्यादिति सूत्रेण 'तिङ् शित्सार्वधातुकमि'ति तिङ्शितोरेव सार्वधातुकत्वा'दार्धधातुकं शेष' इति तिङ्शिद्भिन्नस्याऽर्धधातुकत्वविधानात् अच्प्रत्ययस्य सेट्कत्वाभावेनानिट्त्वादार्धधातुकत्वाच्चास्मिन् परे णिचो लोपे अच्प्रत्ययस्थचकारलोपे च सति अवर् अ अवरेति रूपम्। ततश्चावरयतीत्यवर इति कर्तृव्युत्पत्तिः सुलभैवेत्यर्थः। उपपत्तिः अव्यक्तादिति अवध्यर्थकपञ्चमीप्रयोगरूपयुक्त्या प्राप्तावरत्वरूपार्थ इति यावत्। सत्यं, यत्र शब्दतोऽवरत्वादिकं प्रतीयते तत्रैवैषा व्याख्या। यत्र त्ववरत्वादिकमर्थतः प्राप्तं तत्र स्वाम्यमप्यर्थत एव प्राप्तमित्येवोच्यते न त्ववरशब्दार्थतया व्याख्यायते। येन न ह्युपपत्तिः शब्दव्याख्यानमर्हतीत्युक्तो विरोधो नाम दूषणं स्यादित्याशयेन समाधत्ते **उच्यत इत्यादिना**। अत एव समवायस्यैव प्रयोगे निमित्तत्वं न स्वाम्यस्येति यतोऽत एवेत्यर्थः।

८०— **तद्धितान्तेषु**=मत्वर्थीयान्तेषु। **कथमिति**। तत्र संबन्धत्वरूपसामान्यधर्मावच्छिन्ननिरूपितशक्तिप्रत्ययसमभिव्याहारवत्प्रवृत्ते तादृशप्रत्ययसमभिव्याहाराभावादिति भावः। **कर्मत्वं प्रवृत्तिनिमित्तमिति**। तयोरेव कृत्यक्तखलर्था इति निष्ठायाः कर्मणि स्मृतेरिति भावः। **सबन्धमात्रमुच्यत इति**। सबन्धत्वरूपसामान्यधर्मावच्छिन्नमेव प्रत्याय्यते न दर्शितविशेषधर्मावच्छिन्नं न च संबन्धान्तरवत्यपि प्रयोगप्रसङ्गः। प्रयोगे सति निमित्तानुसरणं न तु निमित्तमस्तीति प्रयोगः। नामानि सर्वाणीतिश्रुतिप्रत्यायितशक्तिकतया निखिलनाम्नां प्रयोगस्यापि प्रमितत्वादिति भावः। **कारकान्तरवाचिष्वपीति**। कर्त्रादिकारकान्तरवाचिजायमानादिशब्दानामपि तत्र वृत्तिरिति भावः। **एवमेवेति**। अवरादिशब्दगतसमुदायवृत्तिप्रवृत्तभूतावरत्वादिनिरूपितनियन्तृत्वादिसंबन्धस्य ईशे सत्वेन नामानीति श्रुतेश्च योजनीया इत्यर्थः। अवरादिशब्देषु अवयववृत्तिमाश्रित्य समाहित्यन्तरमाह **किञ्चेति**। **प्रातिपदिकाद्धात्वर्थ इति**। प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेतिसूत्रस्य प्रातिपदिकात्करोतीत्याद्यर्थे णिच भवतीष्टे यथा प्राति-

पदिकस्य पुंवद्भाव-रभाव-टिविन्मतुब्लोप-यणादिलोप-प्रस्थस्फाद्यादेश-भसंज्ञास्तद्गुणावपि स्युरित्यर्थः, तथा चावरादिशब्देभ्यस्तादृशार्थके णिचि सनाद्यन्ता इति धातुत्वेऽवरयतीति कर्तृसाधने पचाद्यचि कृते णेरनिटीति णिलोपे च सुलभैवैषां हरौ वृत्तिरिति भावः । परगतमिति । अनुषक्तेनावधित्वमित्यनेनान्वेति ।

**सु० — स्यादेतत् । यद्यपि तदस्यास्तीति संबन्धसामान्यं दुःख्यादिशब्दप्रवृत्तिनिमित्तमुच्यते । तथाऽपि समवायादिरेव न स्वामित्वम् । प्रयोगानुसारित्वात्कृत्तद्धितसमासानाम् । प्रयोगश्च समवायादिनिमित्त एव दृश्यते । न स्वामित्वनिमित्तः । अत एव' तदस्यास्त्यस्मिन्निति मतुबि'तीतिकरणो विवक्षितार्थो निबद्धः । तस्मान्न तदधीनत्वहेतुतो दुःख्यादिशब्दानां ब्रह्मणि प्रवृत्तिः इत्यतोऽस्ति तदधीनत्वनिमित्तोऽपि प्रयोग इत्याह राज्ञीति ।**

अनु० — राज्ञि यद्वत्पराजयः ॥

**भृत्यसमवेतस्य पराजयस्य राजाऽधीनत्वेन यथा राज्ञि पराजयः पराजयनिमित्तकः पराजयीतिशब्दो वर्तते पराजयी भद्रसेन इति तथेत्यर्थः ।**

**किञ्च स्वाम्यसंबन्धेन मतुबर्थाप्रवृत्तौ गोमान्देवदत्त इत्यादिकमपि न स्यात् ।**

शे० — ननु राज्ञि यद्वत्पराजय इत्युत्तरभाष्यमनर्थकम् । न च स्वातन्त्र्यनिमित्तकप्रयोगप्रदर्शनार्थं तदिति वाच्यम् । तस्याप्यनर्थकत्वात् । न च स्वातन्त्र्यस्य शब्दप्रवृत्तिनिमित्तत्वसिद्धिस्तत्प्रयोजनमिति वाच्यम् । 'तदस्यास्त्यस्मिन्निति मतुबि'ति सूत्रे संबन्धमात्रस्य प्रवृत्तिनिमित्तत्वोक्त्या, समवायादेरिव स्वामित्वस्यापि प्रवृत्तिनिमित्तत्वसिद्धिसंभवादित्यतः संबन्धमात्रस्य प्रवृत्तिनिमित्तत्वोक्तावपि कृत्तद्धितसमासानां प्रयोगाधीनत्वेन समवायादिनिमित्तकप्रयोगदर्शनेन समवायादेः प्रवृत्तिनिमित्तत्वोपपत्तावपि स्वामित्वनिमित्तकप्रयोगादर्शनेन न स्वामित्वस्य प्रवृत्तिनिमित्तत्वमित्याशङ्कापरिहारार्थत्वान्नोत्तरभाष्यवैयर्थ्यमित्याशयेन तां शङ्कामुत्थापयति **स्यादेतदिति** ॥ **संबन्धसामान्यमिति** । समवायादयः सर्वेऽपि संबन्धा इत्यर्थः ॥ **समवायादिरेवेति** । प्रवृत्तिनिमित्तमिति संबन्धः ॥ **नेति** । न स्वामित्वं प्रवृत्तिनिमित्तमिति संबन्धः । समवायादिरेवेत्युक्तप्रतिज्ञायां नियामकमाह **प्रयोगेति** । **प्रयोगो**ऽभिधानम् । 'अभिधानलक्षणाः कृत्तद्धितसमासाः' इति वैयाकरणोक्तेरिति भावः । अत एव ग्रामं गच्छति आदित्यं पश्यतीत्यादौ 'कर्मण्यणि'ति न कर्मण्यण् भवति । सुवर्णनिष्कशतमस्यास्तीत्यत्र च मत्वर्थे 'शतसहस्रान्ताच्च निष्कादि'ति न ठञ् । अत एव च दिशां समाहारे तद्धितार्थोत्तरपदसमाहारे चेति समासाभावः । अन्यथा हि कुम्भकारो नैष्कशतिकः पौर्वशालः पौर्वशालाप्रिय इत्यादाविव ग्रामगाम इत्यादावपि कृत्तद्धितसमासप्रसक्तेरिति ध्येयम् । अस्त्वेवं कृत्तद्धितसमासानां प्रयोगाधीनत्वं, तावताऽपि

कुतः समवायादिरेव निमित्तं न स्वामित्वमित्यत आह **प्रयोगश्चेति**। घटत्ववान् दण्डवानित्यादिप्रयोगाः समवायसंयोगनिमित्तका दृश्यन्त इत्यर्थः ॥ **न स्वामित्वनिमित्तक इति**। राजाधीनेन शत्रुगतदुःखेन भृत्यगतबन्धादिना च राज्ञि दुःखिशब्दस्य बद्धशब्दस्य च प्रयोगादर्शनादिति भावः ॥ **इतिकरण इति**। क्रियत इति करणः इतिश्चासौ करणश्चेतिकरणः, इतिशब्द इति यावत ॥ **विवक्षितार्थ इति**। विशिष्ट एव विषये मतुप् भवतीति ज्ञापनार्थं इत्यर्थः। अनेन सम्बन्धमात्रे मतुबिति लब्धं भवति। तथा चोक्तं तद्व्याख्यातृभिः। इतिकरणो विवक्षितार्थः तेन विशिष्ट एव विषये मतुप् भवतीति विज्ञायत इत्यादीति ध्येयम्। ननु 'राज्ञि यद्वत्पराजय' इत्यनेन, 'यथा राज्ञि पराजय' इति पराजयस्य राजगतत्वोक्तावपि, यत्किंचिच्छब्दप्रवृत्तिनिमित्तस्य राजधीनत्वेन राज्ञि तच्छब्दप्रयोगस्यानुक्ततया, कथमस्य तदधीनत्वनिमित्तकप्रयोगप्रतिपादकत्वम् इत्यतः पूर्ववाक्यात् तदधीनत्वहेतुत इत्यस्य, वचनविपरिणामेन शब्दो वर्तत इत्यस्य न हि भृत्यस्येत्युत्तरवाक्याद् भृत्यस्येत्यस्य चानुवृत्ति, पराजय इत्यस्य च निमित्तवाचकस्य नैमित्तिकोपलक्षकत्वं, निमित्तविशेषसमर्पकपराजयशब्दसन्निधानाच्च सामान्यवाचकस्यापि शब्दशब्दस्य, तद्विशेषपराजयशब्दसन्निधानाच्च, सामान्यवाचकस्यापि शब्दशब्दस्य, तद्विशेषपराजयिशब्दपरत्वं चाश्रित्य, विवक्षितार्थोपपादकतया भाष्यं व्याचष्टे **भृत्यसमवेतस्येति**। **न स्यादिति**। तत्र स्वाम्यव्यतिरेकेणान्यस्य षष्ठ्यर्थे-संबन्धस्याभावादिति भावः।

---

स०— **संबन्धसामान्यमिति**। सर्वेऽपि संबन्धा इत्यर्थः। समवायादिरेवेत्यत्र किं नियामकमित्यत आह **प्रयोगानुसारित्वादिति**।

प०— **प्रयोगानुसारित्वात्कृत्तद्धितसमासानामिति**। 'अकर्तरि च कारक' इति सूत्रे 'अभिधानलक्षणा हि कृत्तद्धितसमासा' इति भाष्योक्तेरिति भावः ॥ **अत एवेति**। प्रवृत्तिनिमित्ताश्रय एव प्रयोगदर्शनादेवेत्यर्थः ॥ **इतिकरण इति**। क्रियत इति करणः। 'कृत्यल्युटो बहुलमिति बहुलग्रहणात्कर्मणि ल्युट्। 'इतिश्चासौ करणश्च इतिकरणः इतिशब्द इत्यर्थः। 'नवेतिविभाषे'ति सूत्रे 'अयमितिकरण' 'इतिभाष्योक्तस्यैवमेव कैयटे व्याख्यानात् ॥ **विवक्षितार्थ इति**। 'तदस्मिन्नस्ती'-त्येवंरूपविवक्षितार्थ इत्यर्थः।

या०— **इतिकरण इति**। क्रियत इति करणः शब्दः। इतिश्चासौ करणश्चेतीतिकरणः। इतिशब्द इति यावत् ॥ **विवक्षितार्थः इति**। 'इतिकरणस्ततश्चेद्विवक्षे'ति काशिकायामुक्तत्वादिति भावः।

श्री० — **विवक्षितार्थ इति** । विवक्षितार्थसूचक इत्यर्थः । अत्रेतिशब्दस्य व्यर्थत्वाद्यर्थं सत्किञ्चिज्ज्ञापयतीति न्यायेनात्र तदस्यास्तीति यस्मिन् संबन्धसामान्ये मतुप् विहितः स संबन्धो विवक्षित एव ग्राह्यः । अत एव विवक्षितार्थसूचकोऽत्रेतिशब्द इति तदीयव्याख्यानात् । ततश्च कृत्तद्धितादि-प्रयोगनिमित्ततयाऽस्मद्विवक्षितस्तु संबन्धः समवाय एवेति भवतीतिशब्द एतदर्थसूचक इति भावः ।

च० — **इतिकरण इति** । राजभोजनाः शाल्य इत्यादाविव कर्मसाधनल्युडंतोयमिति शब्देन कृतकर्मधारयः । कडारादित्वाद्विशेषणपरनिपातः । कृतिकर्मीभवदितिशब्द इत्यर्थः । **विवक्षितार्थ इति** । **इतिकरणो** विवक्षितार्थस्तेन विशिष्ट एव विषये मतुब्विज्ञायत इति पाणिनीयोक्तेरिति भावः ।

सु० — **एतदेव विवृणोति** स्वातन्त्र्यमिति ॥

**अनु०** — स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् ।

**यस्मात् प्रवृत्तिनिमित्तानां दुःखादीनां** तद्गतत्वमिव **परगतेषु** स्वातन्त्र्यमपि **दुःख्यादि-**शब्दप्रवृत्तेः कारणम् । **अनुशासनप्रयोगयोरुभयत्र साम्यात् । तस्माद्दुःख्यादिशब्दा अपि उक्तार्थापत्तिबलात्तदधीनत्वहेतुतो ब्रह्मणि वर्तन्त इति संबन्धः ।**

शे० — तदधीनत्वहेतुत इत्युक्तस्यैवोत्तरवाक्येनापि कथनाद्वैयर्थ्यमित्यत आह **एतदेवेति** । तथाच न वैयर्थ्यमिति भावः । 'स्वातन्त्र्यं तद्गतत्वं चे'त्यादिभाष्यं स्वातन्त्र्यवत्तद्गतत्वस्यापि शब्दप्रवृत्ति-निमित्तत्वव्युत्पादनपरमित्याभाति । तच्चायुक्तम् । तस्य स्वपरसम्मतत्वेनाव्युत्पाद्यत्वात् इत्यतो न तस्य प्रवृत्तिनिमित्ततोपपादनार्थमत्र तद्ग्रहणं, किन्तु स्वातन्त्र्यस्य प्रवृत्तिनिमित्तत्वोपपादकयुक्तिसूचनार्थं तद्ग्रहणमित्यभिप्रेत्य तथा योजयति **यस्मादिति** । हिशब्दार्थो यस्मादिति ॥ **परगतेष्विति** । दुःखादिष्वित्यनुवर्तते ॥ **अनुशासनप्रयोगयोरिति** । 'तदस्यास्त्यस्मिन्निति मतुबि'त्यनुशासनस्य 'दुःखी देवदत्तः, पराजयी भद्रसेनः' इत्यादिप्रयोगस्य चेत्यर्थः ॥ **उभयत्रेति** । आश्रयत्वस्वातन्त्र्ययोरित्यर्थः । हिशब्दसूचिताया एतद्वाक्यार्थस्य हेतुताया उत्तरवाक्यार्थेऽयोगात्पूर्ववाक्यार्थे हेतुतया संबन्धमाह **तस्मादिति** ॥ **उक्तार्थापत्तीति** । 'निरनिष्टो निरवद्यो', 'नामानि सर्वाणि यमाविशन्ति' इति निरवकाशश्रुतिद्वयान्यथाऽनुपपत्तिबलादित्यर्थः ।

प० — **परगतेष्विति** । विषयसप्तमीयम् ॥ **अनुशासनेति** । 'तदस्यास्त्यस्मिन्निति मतुप्' । 'अत इनिठनावि'त्यत्रास्मिन्नितिवदस्यापीत्यनुशासनस्य राजा पराजयीति प्रयोगस्य च सत्त्वात् उभयत्र तदाश्रये तत्स्वामिनि च साम्यादित्यर्थः ॥ **उक्तार्थापत्तीति** । 'निरनिष्टो निरवद्यः' 'नामानि सर्वाणि' इतिश्रुतिद्वयान्यथानुपपत्तिरूपप्रागुक्तार्थापत्तिबलादित्यर्थः ।

या० — उक्तार्थापत्तीति । निरवकाशोक्तश्रुतिद्वयाऽनुपपत्तिबलादित्यर्थः ॥

च० — उभयत्र साम्यादिति । तदाश्रये तत्स्वामिनि च साम्यादित्यर्थः । अर्थापत्तीति । 'निरनिष्टो निरवद्यः' 'नामानि सर्वाणि यमि'ति निरवकाशश्रुतिद्वयानुपपत्तिबलादित्यर्थः ।

सु० — अस्तु स्वातन्त्र्यमपि शब्दप्रवृत्तिनिमित्तम् । किं त्वमुख्यमेव । तत्र प्रयोगस्याप्रचुरत्वात् । प्रयोगप्राचुर्यात्तद्गतत्वमेव मुख्यम् । तथा च दुःख्यादिशब्दानां जीवादिष्वेव मुख्यत्वाद्ब्रह्मण्यमुख्यत्वात् 'तत्तु समन्वयादि'त्यनुपपन्नमित्यत आह स्वातन्त्र्यमिति ॥

अनु० — स्वातन्त्र्यं तत्र मुख्यं स्यात्

तत्र स्वातन्त्र्यतद्गतत्वयोर्मध्ये स्वातन्त्र्यमेव मुख्यं=शब्दप्रवृत्तिनिमित्तं स्यात् । न तु तद्गतत्वमित्यर्थः ।

शे० — ननु स्वातन्त्र्यस्य प्रवृत्तिनिमित्तत्वव्युत्पादनमात्रेण दुःख्यादिशब्दानां भगवति वृत्तेः समर्थनात् तद्गतत्वापेक्षया स्वातन्त्र्यस्य मुख्यत्वसमर्थनपरोत्तरवाक्यवैयर्थ्यम् । न च तद्गतत्वस्य स्वातन्त्र्यापेक्षया मुख्यत्वात् दुःख्यादिशब्दानां जीवे मुख्यत्वमीश्वरे त्वमुख्यत्वमिति शङ्कापरिहारार्थं तदिति वाच्यम् । अनुशासनप्रयोगयोरुभयत्र तौल्यव्युत्पादनेन तदमुख्यत्वशङ्काया निर्बीजत्वात् तद्गतत्वापेक्षया स्वातन्त्र्यस्यामुख्यत्वेऽप्यनिष्टाभावेन तस्याः सिद्धान्तिनाऽपरिहार्यत्वात् इत्यतो बीजोपपादनेन तद्गतत्वस्य मुख्यत्वशङ्कोपपादनपूर्वकं तदपरिहारे सिद्धान्तिनोऽनिष्टं दर्शयन् उक्तशङ्कापरिहारकतया तद्वाक्यं योजयितुं तां शङ्कामुत्थापयति अस्त्विति ॥ तत्रेति । बन्धादिस्वामित्वेऽपि बद्धादिशब्दाप्रयोगादिति भावः । प्रयोगप्राचुर्यादिति । यद्यपि धनादिवाहके धनीत्यादिशब्दप्रयोगाभावान्न तद्गतत्वेऽपि प्रयोगप्राचुर्यमित्यपि वक्तुं शक्यम् । तथाऽपि रूपी दण्डीत्यादौ तद्गतत्वं निमित्तम् । धनी गृहीत्यादौ तु स्वातन्त्र्यमित्यभिप्रेत्येदमुक्तम् ।

सु० — स्वातन्त्र्यमपि शब्दप्रवृत्तिकारणमिति मुख्यमिति च क्रमेण प्रतिज्ञातम् । तत्क्रमेणैवोपपिपादयिषुः स्वातन्त्र्यस्य कारणत्वानभ्युपगमे बाधकमाह कुत इति ।

अनु० — कुतो राज्ञि जयोऽन्यथा ॥

अन्यथा स्वातन्त्र्यस्य शब्दप्रवृत्तिकारणत्वाभावे, राज्ञि जयो जयनिमित्तको जयिशब्दः कुतः । कथम् । स्वधामोपविष्टे राज्ञि जयः कुतः, न कुतोऽपि यतः, इत्यर्थः । जयस्य राजगतत्वाभावात्स्वातन्त्र्यमपि यदि शब्दप्रवृत्तिनिमित्तं न स्यात् तदा निमित्ताभावाद्राज्ञि जयिशब्दप्रवृत्तिर्न

**स्यात् । न चैवम् । तस्मात्स्वातन्त्र्यमपि कारणमङ्गीकरणीयमिति । लक्षणया प्रयोगोऽस्त्विति चेन्न । तदस्यास्तीति निमित्तसाम्यात् । अन्यथा वैपरीत्यस्याप्यापातात् । पराजयस्य प्रकृतत्वेऽपि जयग्रहणं व्याप्त्यर्थम् ॥**

**श्रो०**— ननु स्वातन्त्र्यस्य प्रवृत्तिकारणतायाः, तद्गतत्वापेक्षया मुख्यतायाश्च पूर्ववाक्येनैव सिद्धेरुत्तरवाक्यवैयर्थ्यमित्यतो विपरीतप्रतिज्ञया विपर्ययस्यापि प्रसङ्गेन प्रतिज्ञामात्रस्यासाधकतया प्रतिज्ञातप्रमेयद्वयोपपादकत्वात् नोत्तरवाक्यवैयर्थ्यमित्याशयेन तत्तत्प्रतिज्ञातोपपादकत्वे हेतुं सूचयन्नुत्तरवाक्यमवतारयति **स्वातन्त्र्यमपीति** । प्रकृतोपयोगितया अन्यथेत्यस्यार्थमाह **अन्यथेति** । मूले निमित्तवाचको जयशब्दः तन्निमित्तकजयिशब्दोपलक्षणमिति भावेनाह **जय इति** ।। **कुत इति** । न स्यादित्यर्थः । ननु स्वातन्त्र्यस्य कारणत्वाभावेऽपि न राज्ञि जयिशब्दानुपपत्तिः । जयस्य राजगतत्वादेव तत्र तच्छब्दप्रवृत्त्युपपत्तेरित्याशयेन पृच्छति **कथमिति** । जयस्य राजगतत्वाभावसमर्पकतयाऽपि तदेव वाक्यं योजयति **स्वेति** । तात्पर्यार्थमाह **जयस्येत्यादि** । न चोत्कर्षेण वर्तमानत्वस्यापि जयिधात्वर्थत्वात्तदाश्रयत्वस्य च राज्ञ्यपि सत्त्वान्न स्वातन्त्र्यं तन्निमित्तमिति वाच्यम् । राजा शत्रून् जयतीत्यभिभवाभिप्रायेणापि तत्प्रयोगात्तदाश्रयत्वस्य राज्यसत्त्वेन तत्र स्वातन्त्र्यनिमित्तत्वस्यैवाश्रयणीयत्वात् ॥ **लक्षणयेति** । जयाश्रयभृत्यसंबन्धाद्राज्ञि जयिशब्दस्य लाक्षणिकत्वमित्यर्थः । 'तदस्यास्त्यस्मिन्निति मतुबि'ति सूत्रविहितसंबन्धसामान्यरूपनिमित्तस्य राजभृत्ययोः साम्यान्न तत्र लक्षणेत्याह **तदस्येति** ।। **अन्यथेति** । तद्गतत्वस्यैव प्रवृत्तिनिमित्तत्वमङ्गीकृत्य तस्य च भृत्य एव सत्त्वात् तत्रैव जयिशब्दो मुख्यः, राज्ञि तु जयाश्रयभृत्यसंबन्धाल्लाक्षणिक इत्यङ्गीकारे स्वाम्यस्यैव प्रवृत्तिनिमित्तत्वात्तस्य च राज्ञ्येव सत्त्वात्तत्रैव मुख्यः, भृत्ये तु स्वाम्याश्रयराजसंबन्धाल्लाक्षणिक इत्यपि स्यादित्यर्थः । न च स्वाम्याश्रयराजधीपूर्वकत्वाभावान्न भृत्ये जयिशब्दस्य लाक्षणिकत्वमिति वाच्यम् । तथा सति जयाश्रयभृत्यधीपूर्वकत्वाभावेन राज्यपि लक्षणाऽभावप्रसङ्गादिति भावः । ननु 'राज्ञि यद्वत्पराजय' इति पूर्ववाक्ये प्रकृतत्वात् 'कुतो राज्ञी'त्युत्तरवाक्येऽपि पराजयस्यैव ग्रहणे कर्तव्ये जयग्रहणमनर्थकमित्यतः 'दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः । शब्दा ब्रह्मणि वर्तन्त' इति पूर्ववाक्योक्तानुमानमूलभूता 'यः शब्दो यदधीनप्रवृत्तिनिमित्तकः स तद्वाचक' इति विवक्षितसामान्यव्याप्तिर्बहुषु स्थलेषु गृहीतेत्यतो न व्यभिचारमर्हतीति सूचयितुं जयग्रहणं कृतमित्याह **पराजयस्य प्रकृतत्वेऽपीति** ।

**स०**—इति व्याप्तिनिश्चयानुपपत्तेः (अत्र ग्रन्थलोपः । यादुपत्यं द्रष्टव्यम् । ) अनेकत्र तद्दर्शनं चेत्तन्निश्चयोपपत्तेरित्यभिप्रेत्य जयपदग्रहणं कृतमिति भावः ।

प० — **निमित्तसाम्यादिति** । तदाश्रय इव तत्स्वामिन्यपि तदस्यास्तीति सूत्रेऽस्मिन्नित्यस्ये-वास्यापीत्युक्तस्वामित्वरूपनिमित्तस्य सत्त्वादिति भावः ॥ **वैपरीत्यस्येति** । स्वामिन्येव मुख्यप्रयोगः । आश्रये लाक्षणिक इत्यस्येत्यर्थः ॥ **व्याप्त्यर्थमिति** । स्वातन्त्र्येण निमित्तेन शब्दप्रयोगस्योदाहरणान्तर-प्रदर्शनार्थं स्वातन्त्र्यनिमित्तत्वाव्यभिचारार्थमित्यर्थः ।

या० — **साम्यादिति** । तदस्यास्तीति सूत्रविहितसंबन्धसामान्यरूपनिमित्तस्य राजभृत्ययोः साम्यादित्यर्थः ॥ **व्याप्त्यर्थमिति** । व्याप्तिग्राहकभूयोदर्शनार्थमित्यर्थः । ततश्च 'दुःखिवबद्धावराद्यास्तु तदधीनत्वहेतुतः । शब्दा ब्रह्मणि वर्तन्ते' इति पूर्वोक्तानुमाने यः शब्दो यदधीनप्रवृत्तिनिमित्तकः स तद्वाचक इति विवक्षितसामान्यव्याप्तिग्राहकभूयःसहचारप्रदर्शनाय जयग्रहणमिति भावः ।

श्री० — **लक्षणयेति** । राज्ञि जयिशब्दस्येति शेषः । तथाच तत्र स्वातन्त्र्यं न निमित्ततया कल्प्यमित्यर्थः ॥ **अन्यथेति** । निमित्तसाम्येऽपि यदि लक्षणया प्रयोगोऽङ्गीक्रियते तर्हि जीवादावपि दुःख्यादिशब्दप्रवृत्तौ न तद्गतत्वं निमित्तत्वेन कल्पनीयम् । किन्तु लक्षणयैव तत्रापि प्रयोगोऽस्त्विति वैपरीत्यं स्यादित्यर्थः ।

सु० — स्वातन्त्र्यस्य मुख्यकारणत्वमुपपादयति न हीति ।

अनु० — न हि भृत्यस्य विजयिशब्दस्तावत्प्रयुज्यते ॥
यावद्राज्ञ्यन्यगत्वेऽपि स्वातन्त्र्याभासमात्रतः ॥

हिशब्दो यस्मादित्यर्थे । तावद्यावदिति क्रियाविशेषणे । जयस्यान्यगत्वेऽपि भृत्य-गतत्वेऽपि तं जयं प्रति स्वातन्त्र्याभासमात्रेण राज्ञि विजयिशब्दो यावत्प्रयुज्यते तावज्जयाधि-करणस्यापि भृत्यस्य संबन्धितया न प्रयुज्यते यस्मात्तस्मात्स्वातन्त्र्यं तत्र मुख्यं स्यादिति संबन्धः । स्वातन्त्र्यादिति वक्तव्ये स्वातन्त्र्याभासमात्रत इति वचनं किमुतानुपचरितस्वातन्त्र्ये परमात्मनीति कैमुत्यद्योतनार्थम् । भृत्याज्ञाननिमित्तं राज्ञि प्रयोगप्राचुर्यमिति चेन्न । भृत्य-ज्ञानेऽपि तदुपलम्भात् । ननु प्रयोगप्राचुर्यं न मुख्यताहेतुः । अज्ञातमुख्यलाक्षणिकादि-प्रयोगेष्वपि दर्शनादिति चेत् । सत्यम् । प्रयोगप्राचुर्यात्तद्गतत्वमेव मुख्यम् । स्वातन्त्र्यं तु तदप्राचुर्यादमुख्यमिति परेण पर्यनुयुक्तेऽसिद्धिरनेनाभिधीयते । न तु प्रयोगप्राचुर्येण मुख्यता साध्यते । येन व्यभिचारचोदना सङ्गता स्यात् । यद्यप्यत्र प्रयोगप्राचुर्यस्य मुख्याज्ञाननिमि-त्तत्वादिनाऽन्यथासिद्धिर्व्यभिचारो वा शक्यते वक्तुम् । तथाऽपि 'जगद्वाचित्वादि'ति सूत्रदिशा शिष्यैरेव ज्ञातुं शक्यत इत्यसिद्धिरेवोक्ता । कुतस्तर्हि मुख्यतासिद्धिरिति चेत् ।

**उच्यते । तदस्यास्तीति हि दुःख्यादिशब्दप्रवृत्तिनिमित्तमुक्तम् । यच्च यदधीनसत्ताप्रतीति प्रवृत्तिकं, तत्तस्य मुख्यतो भवति । यथेष्टविनियोगयोग्यत्वात् । न तु यत्र यत्संबद्धं तस्य तन्मुख्यतः । यथेष्टविनियोगायोग्यत्वात् । न हि जीवेन दुःखादिकं हातुमुपदातुं वा शक्यते । अतः स्वातन्त्र्यमेव मुख्यमिति । अथवाऽभिधानवृत्तावेव स्वातन्त्र्यतद्गतत्वयोर्निर्धारणायां स्वातन्त्र्यं मुख्यमिति प्रतिज्ञातम् । तत्र प्रयोगप्राचुर्यस्य हेतुत्वाभिधाने न कश्चिद्दोषः । प्रकरणवशादेव व्यभिचारपरिहारात् ।**

**टी०** — न हीत्युत्तरवाक्यस्यापि स्वातन्त्र्योपपादकत्वभ्रान्तिं निराकरोति **स्वातन्त्र्यस्येति ।** ननु तावद्यावच्छब्दयोः शब्दविशेषणतयाऽनियतलिङ्गविशेषणशब्दानां विशेष्यनिघ्नतया पुल्लिङ्गशब्दरूपविशेष्यलिङ्गतायां तावान्यावानिति भवितव्यं तावद्यावदिति तु कथमित्यत आह **तावद्यावदिति क्रियाविशेषणे इति ।** साधनं परित्यज्य धात्वर्थमात्रविशेषणं क्रियाविशेषणमित्यर्थः । ततश्च क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं वाच्यमिति तद्विशेषणानां क्लीबत्वैकवचनान्तत्वाव्ययत्वविधाना'दव्ययादाप्सुप' इति सुब्लोपे तावद्यावदित्युपपन्नमिति ध्येयम् । व्यवहितत्वादन्वयं दर्शयति **जयस्येत्यादिना ॥ स्वातन्त्र्यादिति वक्तव्य इति ।** तद्गतत्वापेक्षया स्वातन्त्र्यस्य मुख्यत्वव्युत्पादनावसरे स्वातन्त्र्यादित्येव वक्तव्यत्वादिति भावः । राज्ञि जयशब्दप्रयोगप्राचुर्यस्य मुख्यार्थभूतभृत्याज्ञाननिमित्तत्वादिनाऽन्यथासिद्धत्वान्न तद्गतत्वापेक्षया स्वातन्त्र्यस्य मुख्यत्वसाधकत्वं तस्येत्याशङ्कते **भृत्येति । तदुपलम्भात्** राज्ञि प्रयोगप्राचुर्योपलम्भात् । तथा च न मुख्याज्ञाननिमित्तत्वादिनाऽन्यथासिद्धिरिति भावः । माऽस्त्वन्यथासिद्ध्या प्रयोगप्राचुर्यस्य स्वातन्त्र्यस्य मुख्यत्वासाधकत्वं व्यभिचरिततया तु स्यादेवेत्याशङ्कते **नन्विति ॥ अज्ञातेति ।** न ज्ञातो मुख्यार्थो येषां ते तथोक्तास्ते च ते लाक्षणिकादयश्च । आदिपदेन गौणपरिग्रहः । तेषां प्रयोगेष्वित्यर्थः । अग्निर्माणवक इति व्यवहारादनवगताग्निशब्दमुख्यार्थस्य माणवकेऽग्निशब्दव्युत्पत्त्या तत्रैव प्रयोगप्राचुर्यसंभवादिति भावः । उपलक्षणमेतत् । नूतनयौगिकशब्देषु तत्प्राचुर्याभावेऽपि मुख्यत्वदर्शनेन व्यतिरेकव्यभिचाराच्चेत्यपि द्रष्टव्यम् । **अनेनेति ।** न हीत्यादिवाक्येनेत्यर्थः । तथा च न हीत्यादिवाक्यावैयर्थ्यमिति भावः ॥ **यद्यप्यत्रेति ।** प्रयोगप्राचुर्यात्तद्गतत्वमेव मुख्यम्, स्वातन्त्र्यं तु तदप्राचुर्यादमुख्यमिति परकीयानुमानेऽपीत्यर्थः ॥ **व्यभिचारो वेति ।** अज्ञातमुख्यलाक्षणिकादिप्रयोगेष्विति शेषः ॥ **जगद्वाचित्वादिति सूत्रदिशेति ।** न प्रसिद्ध्यन्यथाऽनुपपत्त्याऽन्यस्यैव मुख्यवाच्यत्वं कल्प्यम् । लोकस्य जगत्येव शब्दव्यवहारेण तत्रैव तच्छ्रोतॄणां व्युत्पत्तेः । तथा परमात्मनि बहुलव्यवहाराभावेन तत्र व्युत्पत्त्यभावाज्जगति प्रसिद्धेरन्यथोपपत्तेः । अग्निर्माणवक इति व्यवहारादनवगताग्निशब्दमुख्यार्थस्य माणवक

एवाग्निशब्दव्युत्पत्त्या तत्र प्रयोगप्राचुर्यवदिति सूत्रार्थः । तथा च मुख्याज्ञानादिनाऽन्यत्र प्रसिद्धेस्तत्र समर्थितत्वात्तन्न्यायेन तद्गतत्वे प्रयोगप्राचुर्यस्यापि मुख्याज्ञाननिमित्तत्वादिनाऽन्यथासिद्ध्यादेस्तत्र सूचितत्वान्नान्यथासिद्ध्यादिकमत्रोक्तमिति भावः ॥ **कुतस्तर्हीति** । न हीत्यादेरसिद्ध्यभिधायकत्वेन मुख्यतासाधकताऽसंभवादन्यस्य च साधकस्याभावात् । भवितव्यं च तथा । अन्यथेति शेषः । जीवादिष्वेव दुःख्यादिशब्दानां मुख्यत्वेन भगवति तदभावा'त्तत्तुमनन्वयादि'त्यस्यानुपपत्तिप्रसङ्गादतोऽस्यैव मुख्यतासाधकत्वाभिप्राय उक्तव्यभिचारतादवस्थ्यमिति भावः । न हीत्यादिभाष्यस्यासिद्ध्यभिधायकतयाऽनेन स्वातन्त्र्यस्य तद्गतत्वापेक्षया मुख्यत्वासिद्धावपि प्रकारान्तरेणैव तत्सिद्धेर्न समन्वयसूत्रानुपपत्तिरित्याह **उच्यत इति** । नन्वेवं स्वातन्त्र्यस्य युक्त्यन्तरेण तद्गतत्वापेक्षया मुख्यत्वसाधने पूर्वग्रन्थविरोधः । तत्र न हीत्यादिग्रन्थस्य स्वातन्त्र्यस्य मुख्यकारणत्वोपपादकतया योजितत्वादित्यरुचेराह **अथवेति** । अज्ञातमुख्यलाक्षणिकादिषु व्यभिचारात्कथं दोषाभाव इत्यत आह **प्रकरणवशादिति** । प्रकरणप्राप्तविशेषणबलादेवेत्यर्थः । ततश्च यो यच्छब्दवाच्यत्वे सति प्रचुरतरतत्प्रयोगविषयः स तच्छब्दवाच्येषु मुख्य इति व्याप्तिस्वरूपपर्यवसानान्नोक्तव्यभिचारः । न च दृष्टान्ताभावान्नोक्तप्रकारा व्याप्तिः संभवतीति वाच्यम् । यौगिकार्थापेक्षया रूढस्य मुख्यतया तस्यैव वा, रूढेष्वपि गोशब्दवाच्यत्वे सति प्रचुरतरप्रयोगविषयस्य सास्नादिमत्पदार्थस्य तच्छब्दवाच्येषु स्वार्थेषु मुख्यतया तस्यैव वा, दृष्टान्तत्वसंभवादिति भावः । न व्यभिचार इत्येव वक्तव्ये न कश्चिद्दोष इति सामान्यवचनं न केवलं भृत्यज्ञानेऽपि तदुपलम्भादित्युक्तरीत्याऽन्यथासिद्ध्यभाव एव किंतु व्यभिचारोऽपि नेत्यभिप्रायेणेति द्रष्टव्यम् ।

स०— **क्रियाविशेषणे इति** । अन्यथा यावान् तावान् इति स्यादिति भावः ॥ **अज्ञातमुख्येति** । अज्ञातमुख्योऽर्थो येषु ते तथोक्ताः ते च ते लाक्षणिकादयश्चेति विग्रहः ॥ **व्यभिचारेति** । अज्ञातमुख्यलाक्षणिकप्रयोगेष्वित्यर्थः । **जगद्वाचित्वादितीति** । न प्रसिद्ध्यन्यथानुपपत्त्या अन्यस्यैव मुख्यवाच्यत्वं कल्प्यम् । लोकस्य जगत्येव शब्दव्यवहारेण तत्रैव श्रोतॄणां व्युत्पत्तेः परमात्मनि तथा बहुलव्यवहाराभावेन व्युत्पत्त्यभावाच्च जगति प्रसिद्धेरन्यथोपपत्तेः । अग्निर्माणवक इति व्यवहारादनवगताग्निशब्दमुख्यार्थस्य माणवकेऽग्निशब्दव्युत्पत्तिसंभवादिति तत्सूत्रार्थपर्यालोचनयेत्यर्थः । ननु प्राचुर्यस्य मुख्यतासाधकत्वस्यात्राभिप्रेतत्वे स्वातन्त्र्यस्य मुख्यकारणत्वमुपपादयतीति पूर्वग्रन्थविरोधः स्यादित्यत आह **अथवेति** । अज्ञातमुख्यलाक्षणिकादिषु व्यभिचारात् कथं दोषाभाव इत्यत आह **प्रकरणवशादिति** । प्रकरणप्राप्तविशेषणबलादेवेत्यर्थः । तथा च यः यच्छब्दवाच्यत्वे सति प्रचुरतत्प्रयोगविषयः स तच्छब्दवाच्येषु मुख्य इति व्याप्तिलाभान्न कोऽपि दोष इति भावः ।

प० — **क्रियाविशेषणे इति** । प्रयुज्यत इति क्रियाविशेषणे इत्यर्थः । शब्दविशेषणत्वे यावानित्यादि स्यादिति भावः ॥ **अज्ञातमुख्येति** । अज्ञातो मुख्यो= मुख्यार्थो येषां शब्दानां ते च ते लाक्षणिकाश्च तादृशशब्दानां प्रयोगेष्वित्यर्थः ॥ **अनेनेति** । न हीति श्लोकेन प्रयोगप्राचुर्याभावस्यासिद्धिरुच्यत इत्यर्थः ॥ **मुख्याज्ञाननिमित्तत्वादिनेति** । अज्ञाननिमित्तकप्रयोगमूलकत्वभ्रान्तिमूलकत्वादिरादिपदार्थः ॥ **व्यभिचारो वेति** । 'मञ्चाःक्रोशन्ती'त्यादिरूढलक्षणाप्रयोगेषु सत्यपि प्रयोगप्राचुर्ये मुख्यत्वाभावात्तत्प्रयोगप्राचुर्यं मुख्यत्वव्यभिचारीति वा नूतनयौगिकप्रयोगेषु प्रयोगाप्राचुर्येऽपि मुख्यत्वसत्त्वात्प्रयोगाप्राचुर्यममुख्यत्वव्यभिचारीति वा व्यभिचारो वक्तुं शक्यत इत्यर्थः ॥ **जगद्वाचित्वादितीति** । अत्रैव पादे 'समाकर्षादि'त्यधिकरणे शब्दानां महायोगविद्रूढिभ्यां भगवति मुख्यानामेवान्यत्र जगति व्यवहार इति समाकर्षादितिसूत्रेणोक्ते सति कथं तर्हि जगति प्रसिद्धिरिति शङ्कायां शब्दानां जगद्वाचित्वाज्जगद्वाचित्वज्ञानाज्जगत्येव व्युत्पत्तिग्रहादिति यावत् । जगति प्रसिद्धिः मुख्यार्थभगवदज्ञानमूलेति तत्रार्थस्य भाष्यादिदिशा व्यक्तत्वादिति भावः ॥ **स्वातन्त्र्यमेवेति** । यथेष्टविनियोगकर्तृत्वरूपस्वातन्त्र्यमेवेत्यर्थः । नन्वेवं स्वातन्त्र्यस्य मुख्यत्वोपपादनं मूलारूढं न प्राप्तमित्यनुशयादाह **अथवेति** ॥ **न कश्चिदिति** । प्रयोगप्राचुर्यस्य व्यभिचारदोषो वा मूले मुख्यत्वानुपपादनदोषो वा नेत्यर्थः । ननु नहीति श्लोके स्वातन्त्र्यं शब्दवृत्तौ मुख्यं निमित्तम् । प्रचुरप्रयोगहेतुत्वाद्रूढिनिमित्तजातिवदित्युक्ते मञ्चाः क्रोशन्तीत्यादिरूढलक्षणाप्रयोगहेतौ क्रोशत्पुरुषमञ्चसंबन्धे व्यभिचारः कथं परिहार्यः । अभिधानवृत्तावेवाभिधाननिमित्तयोस्तद्गतत्वस्वातन्त्र्ययोर्मध्ये तद्गतत्वापेक्षया स्वातन्त्र्यं मुख्यम् । तद्गतत्वापेक्षयास्य प्रचुरप्रयोगहेतुत्वाद्यौगिकरूढशब्दनिमित्तयोरवयवार्थजात्योर्मध्ये योगापेक्षया जातिवदित्यभिधानवृत्तिमात्रज्ञापकशब्दस्य नहीति श्लोकेऽभावादित्यत आह **प्रकरणवशादिति** । प्रकरणप्राप्तविशेषणबलादित्यर्थः । तथा च 'यो यच्छब्दवाच्यत्वे सति प्रचुरप्रयोगविषयः स तच्छब्दवाच्येषु मुख्य' इति व्याप्तिलाभान्न कोपि दोष इति भावः ॥ **प्रकरणवशादिति** । 'दुःखिबद्धावराद्यास्तु शब्दा' इत्यादिपूर्वोत्तरवाक्येषु जीवादिवाचिनोऽप्येते ब्रह्मणि वर्तन्त इत्याद्युक्तिपर्यालोचनया अस्मिन्प्रकरणे अभिधावृत्तेरेव प्रस्तुतत्वप्रतीत्या अभिधावृत्तिप्रकरणवशादेव अभिधावृत्तौ स्वातन्त्र्यं तद्गतत्वापेक्षया मुख्यं निमित्तम् । प्रचुरप्रयोगहेतुत्वादित्यस्य लाभेन रूढलाक्षणिकादिप्रयोगे व्यभिचारशङ्काऽनवकाशेन तत्परिहारादित्यर्थः ।

या० — **क्रियाविशेषण इति** । अन्यथा शब्दविशेषणत्वापत्त्या तावान् यावानिति स्यादिति भावः ॥ **अज्ञातमुख्येति** । अज्ञातमुख्याश्च लाक्षणिकादयश्च तेषां प्रयोगेष्वित्यर्थः। न ज्ञातो मुख्योऽर्थो येषु ते तथा । यथा म्लेच्छादीनां यवादिशब्दाः । तेषां यवादिशब्दमुख्यार्थाज्ञानेऽपि प्रियङ्ग्वादिष्वेव

सङ्केतेन प्रयोगप्राचुर्यात् । लाक्षणिका, आदिपदोपात्ता गौणाश्च रूढा एव विवक्षिताः । प्रयोगप्राचुर्यस्य तत्रैव संभवादित्यवधेयम् । **न तु प्रयोगप्राचुर्येणेति**। न चैवं स्वातन्त्र्यस्य मुख्यकारणत्वमुपपादयतीत्यवतारिकाविरोधः । स्वातन्त्र्यस्यामुख्यतासाधकप्रयोगाप्राचुर्यस्यासिद्धयभिधाने बाधकाभावेन तन्मुख्यतोपपादनलाभादित्याशयात् ॥ **जगद्वाचित्वादिति** । न प्रसिद्धयन्यथाऽनुपपत्त्याऽन्यस्यैव मुख्यवाच्यत्वं कल्प्यम् । लोकस्य जगत्येव शब्दव्यवहारेण तत्रैव तच्छ्रोतॄणां व्युत्पत्तेः। परमात्मनि तथा बहुलव्यवहाराभावेन व्युत्पत्त्यभावाच्च जगति प्रसिद्धेरन्यथोपपत्तेः । अग्निर्माणवक इति व्यवहारादनवगताग्निशब्दमुख्यार्थस्य माणवकेऽग्निशब्दव्युत्पत्तिसंभवादिति तत्सूत्रार्थपर्यालोचनयेत्यर्थः ॥ **प्रकरणवशादिति** । प्रकरणप्राप्तविशेषणबलादेवेत्यर्थः । तथाच यो यच्छब्दवाच्यत्वे सति प्रचुरतत्प्रयोगे विषयः स तच्छब्दवाच्येषु मुख्य इति व्याप्तिलाभान्नोक्तव्यभिचार इति भावः । न व्यभिचार इति वक्तव्ये न कश्चिद्दोष इति वचनं मुख्यतासाधनायात्र पूर्वमिव यत्नान्तरानुसरणप्रयासोऽपि नास्तीति ज्ञापयितुम् ।

**श्री०** — यद्यप्यत्रेत्यनन्तरं तद्गतत्वमुख्यत्वसाधकस्येति शेषः ॥ **मुख्येति** । स्वातन्त्र्यरूपमुख्यनिमित्तेत्यर्थः । **व्यभिचार इति**। रूढलाक्षणिकशब्देष्वित्यर्थः। **मुख्यतासिद्धिः** । स्वातन्त्र्यस्य । **निर्धारणायां** मुख्यामुख्यत्वनिर्धारणायाम् ॥ **हेतुत्वेति** । तथा चाभिधावृत्तौ यत्र यस्य प्रयोगप्राचुर्यं तत्तत्र मुख्यमिति विवक्षितमित्यर्थः ॥ **न कश्चिद्दोष इति** । हेतोरेवाभावादज्ञातमुख्यलाक्षणिकादौ न व्यभिचार इत्यर्थः ।

**च०**— **क्रियाविशेषणमिति** । स्तोकं पचति मृदु पचतीत्यादौ स्तोकमृद्वादीनां धात्वर्थनिष्ठविशेष्यतानिरूपिताभेदसंसर्गावच्छिन्नप्रकारतापन्नप्रत्यायकानां क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं च वाच्यमिति कात्यायनवचना'दव्ययादाप्सुप' इति सुब्लोपे यथा निष्पत्तिः तद्वत्तादृशतावद्यावदित्येतन्निष्पत्तिरव्यवसेयेति । शब्दविशेषणत्वाभावेन पुंस्त्वशङ्काऽनवकाश इति भावः । **अज्ञातमुख्येत्यादि** । इतरेतरद्वन्द्वगर्भव्यधिकरणतत्पुरुषोऽयम् । मुख्यान्तस्य लाक्षणिकपदेन कृतबहुव्रीहेराद्यन्तस्य च द्वन्द्वस्ततः षष्ठीतत्पुरुषः । गौणघटितः समुदायः समासार्थस्तद्घटकोत्तरपदलक्ष्यो वा । अग्न्यादिपदानां मुख्यार्थमनधिगच्छतो माणवकेऽग्निशब्दव्युत्पत्या तत्रैव प्रयोगप्राचुर्यादिति भावः । **अभिधानवृत्तौ** । शक्तिवृत्तौ । **प्रकरणवशादिति** । प्रकरणप्राप्तविशेषणानुसंधानादेवेत्यर्थः । तथा च यच्छब्दवाच्यत्वे सति प्रचुरतत्प्रयोगविषयो यः स तच्छब्दवाच्यावधिकमुख्यताविशेषित इति व्याप्त्यवसित्या नोक्तानैकान्त्यावकाशः । प्रकृतव्याप्तिनिदर्शनं यौगिकार्थापेक्षया मुख्यो रूढार्थः । गोशब्दवाच्यस्वर्गादिरूपेतरार्थावधिकमुख्यताविशेषिता सास्नादिमतीव्यक्तिश्चेति भावः ।

**सु०— ननु यदि स्वाम्यं प्रवृत्तिनिमित्तं स्यात्तदा भृत्ये बद्धे मृते वा, राजा बद्धो राजा मृत इति प्रयोगः स्यात् । न चैवमस्ति । तेन जानीमो न स्वाम्यं प्रवृत्तिनिमित्तमिति । न च वाच्यं प्रयोगे सति निमित्तानुसरणम् । न तु निमित्तमस्तीति प्रयोग इति । अमुख्य-प्रयोगविषयत्वादस्य न्यायस्य । तत्र हि निमित्तं न सामग्री । किन्तु तदेकदेशः । मुख्य-प्रयोगे तु निमित्तमेव सामग्री । न हि सिंहशब्दस्य शार्दूले प्रयोगाभाववत् उपगोरपत्येऽप्यौ-पगवशब्दप्रयोगाभावो भवतीति । अत्र वक्तव्यम् । कोऽयं प्रयोगो नाम । किं शब्दशक्तिः प्रयोगमूलं व्याकरणमिति यथा । किं वोच्चारणम् । नाद्यः प्रसङ्गस्येष्टत्वात् । विपर्ययपर्यव-साने चासिद्धेः । द्वितीये त्वन्यथासिद्धिमाह** भृत्येति ।

**अनु०—** भृत्यबन्धादिकं राज्ञि राज्ञो बन्धादियोग्यतः ॥
कारणं संशयस्य स्यादिति नैव प्रयुज्यते ॥

**राजाधीनभृत्यबन्धादिकं विवक्षित्वा राज्ञि राजा बद्धो मृत इत्यादिवाक्यं न प्रयुज्यते । किं कारणम् । स प्रयोगः संशयस्य कारणं स्यादित्येव । न तु स्वातन्त्र्यस्य अकारणत्वात । कुतः संशयस्य कारणम् । राज्ञोऽपि बन्धादियोग्यत्वात् । इदमुक्तं भवति । भवत्येव स्वातन्त्र्यं शब्दप्रवृत्तिनिमित्तं, प्रयोगाभावस्तु प्रतिबन्धकनिमित्तः । राजा बद्धो मृत इति प्रयोगे हि संशयो व्युत्पन्नस्य स्यात् । किं राजाधीनस्य भृत्यस्य बद्धत्वादिनैवमुच्यते । किं वा राज्ञ एव बद्धत्वादिनेति । आकाङ्क्षासंनिधियोग्यतानामुभयत्र सद्भावेनार्थद्वयप्रतीतेरव-र्जनीयत्वात् । न च संशयो मा भूदित्येवं निवृत्तः प्रयोगोऽकारणत्वं स्वातन्त्र्यस्य गमयति । न हि मणिमन्त्रादिप्रतिबद्धोऽग्निर्नाधाक्षीदिति न तत्कारणमिति ।**

**शे०—** ननु भृत्यबन्धादिकमित्युत्तरभाष्यमनर्थकम् । न च बद्धादिशब्दप्रयोगस्यान्यथा-सिद्धिव्युत्पादनार्थं तदिति वाच्यम् । तद्व्युत्पादनस्य प्रकृतासङ्गतत्वात् । न च बद्धादिशब्दप्रयोगस्य परेणापादितत्वात्तत्प्रयोगोपपादनस्य प्रकृतासङ्गतिरिति वाच्यम् । आपादकाभावेन परेण बद्धादिशब्द-प्रयोगस्यापादयितुमशक्यत्वात् । न च स्वातन्त्र्यस्य प्रवृत्तिनिमित्तत्वमेवापादकमिति वाच्यम् । तथाऽपि प्रयोगे सति निमित्तस्यानुसरणीयतया निमित्ते सति प्रयोगापादनस्य च न्यायसिद्धतया, तद्विरोधे निमित्त-सद्भावेन प्रयोगापादनानौचित्यात् । अस्तु वा कथञ्चित्प्रयोगापादनं तथाऽप्यनुच्चारणस्यान्यथासिद्धिव्यु-त्पादनमात्रेण न तत्परिहारसिद्धिः । प्रयोगशब्दार्थतया शक्तेरपि परेण वक्तुं शक्यत्वेनोच्चारणमात्रपरतया परविवक्षायां नियामकाभावादित्यतो विषयभेदेन न्यायविरोधपरिहारपूर्वकं प्रयोगापादनमुपपाद्य प्रयो-गशब्दार्थतया संभावितपक्षान् बहिरेव विकल्प्य स्पष्टदूषणतया भाष्यकृदुपेक्षितपक्षं बहिरेव प्रदूष्य परि-

शिष्टपक्षनिरासपरतयोत्तरवाक्यप्रवृत्तेर्नासङ्गतिरित्यभिप्रेत्य तद्वाक्यं तथा योजयितुं स्वातन्त्र्यस्य निमित्तत्वेऽतिप्रसङ्गं तावदाशङ्कते **नन्विति** । विषयभेदेन न्यायविरोधं परिहर्तुं तमाशङ्कते **न चेति** । ननु निमित्ते सत्यमुख्यप्रयोगस्येव मुख्यप्रयोगस्याप्यनापादनस्यैव मुख्यप्रयोगस्येवामुख्यप्रयोगस्याप्यापादनस्यैव वा संभवे नार्धजरतीयाश्रयणं युक्तमित्यतो निमित्तस्य मुख्यामुख्यप्रयोगौ प्रति सामग्रीत्वासामग्रीत्वाभ्यां वैलक्षण्यादसामग्रीत्वेनामुख्यप्रयोगानापादनं सामग्रीत्वाच्च मुख्यप्रयोगापादनमिति युक्तं वैषम्याश्रयणमित्याशयेनाह **तत्र हीति** ॥ **किंतु तदेकदेश इति** । न च सामग्र्येकदेशः कार्याव्यभिचारी येन सत्यपि तस्मिन्कार्यानापादानमुपपद्येतेति भावः ॥ **सामग्रीति** । तथा च सामग्र्याः कार्याव्यभिचाराद्युक्तं निमित्ते सति मुख्यप्रयोगापादनमिति भावः । एतदेव दृष्टान्तेन दर्शयति **न हीति** । **शार्दूल इति** । सिंहसादृश्यरूपनिमित्तवतीति शेषः । प्रयोगशब्देन कुतः शक्तिप्रसक्तिरित्यतस्तत्र तस्य प्रयोगदर्शनादित्यभिप्रेत्य तं दर्शयति **प्रयोगमूलमिति** । शक्तिमूलमित्यर्थः ॥ **इष्टत्वादिति** । बह्वादिशब्दानां राशि शक्तेरङ्गीकृतत्वात्तदापादनं नानिष्टमित्यर्थः ॥ **असिद्धेरिति** । बह्वादिशब्दानां राशि शक्तेरेव सत्त्वेन शक्त्यभावस्यासिद्धेरित्यर्थः । अपेक्षिताध्याहारपूर्वकमाकाङ्क्षाक्रमेण विवक्षितार्थोपपादकतया वाक्यं योजयति **राजाऽधीनेत्यादिना** । ननु मुख्यप्रयोगे निमित्तस्य सामग्रीत्वात्तस्याश्च कार्याव्यभिचारात्कथं सत्यां सामग्र्यां कार्याभावः, तथा सति निमित्तस्य सामग्रीत्वाभावप्रसङ्गादित्यतोऽप्रतिबद्धसामग्र्या एव कार्यजनकतया, सति प्रतिबन्धके कार्याभावो युक्त एवेत्यभिप्रेत्य विवक्षितं हेतुहेतुमद्भावं सयुक्तिकमुपपादयितुमाह **इदमिति** ॥ **अर्थेति** । उदाहृतकोटिद्वयेत्यर्थः ॥ **न चेति** । अत्र 'न चे'त्यस्य स्वातन्त्र्यस्याकारणत्वं न च गमयतीति संबन्धः । प्रतिबद्धस्य कार्याजनकत्वमात्रेणाकारणत्वेऽतिप्रसङ्गं सूचयन्नुक्तमुपपादयति **न हीति** ।

स०— **अमुख्यप्रयोगविषयत्वादिति** । यदि शक्यसंबन्धविवक्षया तीरे गङ्गाशब्दप्रयोगः तर्हि शक्यसंबन्धस्यान्यत्रापि सत्वात् गङ्गाशब्दप्रयोगः स्यादित्यतिप्रसङ्गे तत्रायं न्यायः प्रवर्तत इति भावः । ननु न्यायसङ्कोचे किं नियामकमत आह **तत्र हि निमित्तमिति** । **तत्र** लाक्षणिके । **निमित्तं** शक्यसंबन्धलक्षणम् ॥ **किं त्विति** । प्रयोजनादेरप्यपेक्षितत्वादिति भावः । **मुख्येति** । **निमित्तमेव** प्रवृत्तिनिमित्तमेव । अन्यस्यानपेक्षितत्वादिति भावः ॥ **न हीति** । शक्यसंबन्धस्य सत्वेऽपि प्रयोजनाभावात् सामग्र्यभावेन न प्रयोगः शार्दूले । निमित्तस्यैव सामग्रीत्वे तस्य सत्वात् प्रयोगः स्यात् । उपगोरपत्ये औपगवशब्दस्येवेति भावः । ननु प्रयोगशब्दस्य शब्दशक्त्यर्थकत्वे ज्ञापकं किमित्यत आह **प्रयोगमूलमिति** । शक्तिमूलमित्यर्थः ॥

प०—यदपि सन्न्यायरत्नावल्यां 'प्रयोगे सति निमित्तानुसरणं नतु निमित्तमस्तीति प्रयोग' इति तदप्यनूद्य निराह **नचवाच्यमिति** ॥ **तत्र हीति** । अमुख्यप्रयोगे । निमित्तं मुख्यार्थसादृश्यं वा । तदेकदेश इत्युक्तं सामग्र्येकदेशत्वं निमित्तमेव सामग्रीत्युक्तं च व्यनक्ति **नहीति** । सिंहशब्दस्य चैत्रे प्रयोगः शार्दूले अप्रयोगोस्ति । मुख्यार्थसादृश्यस्य सामग्रीत्वे शार्दूलेपि प्रयोगः स्यात् । स नास्तीति सामग्र्येकदेशत्वमेव तस्य । तथा औपगवशब्दस्य उपगोरपत्यत्वं निमित्तं तस्यापत्यमित्यण्प्रत्ययविधानात् । एवं चोपगवपत्यत्वरूपमुख्यप्रयोगनिमित्तस्य सामग्रीत्वाभावे उपगोरपत्येऽपि क्वचिदौपगवशब्दाप्रयोगः स्यात् शार्दूले सिंहशब्दप्रयोगाभाववत् । नचैवमतो मुख्यप्रयोगे निमित्तं सामग्र्येवेति भावः । **प्रयोगमूलं** शब्दशक्तिमूलम् । व्याकरणकोशोपमानादेः शब्दशक्तिमूलत्वात् ॥ **प्रसङ्गस्येति** । राज्ञिबद्धादिशब्दप्रयोगः स्यादिति प्रसङ्गस्येत्यर्थः । राज्ञिबद्धादिशब्दशक्तेः सत्त्वादिति भावः ॥ **विपर्ययेति** । नास्ति च प्रयोग इत्यस्य वेत्यर्थः ॥ **अकारणत्वादिति** । न प्रयुज्यत इत्यन्वयः । व्युत्पन्नस्य स्वातन्त्र्यमपि निमित्तमिति जानतः ॥

या०— **शार्दूल इति** । सिंहसादृश्यरूपनिमित्तवतीति शेषः ॥

श्री०— **तत्र हीति** । अमुख्यप्रयोग इत्यर्थः । मुख्यार्थबाधस्तत्सादृश्यं प्रयोजनं चैतावती सामग्री । अतः सामग्र्येकदेशभूतसादृश्यरूपनिमित्तसद्भावमात्रेण न सिंहशब्दः शार्दूले प्रयुज्यते । मुख्यप्रयोगे प्रवृत्तिनिमित्तस्यैव सामग्रीत्वेन तत्सत्वे तत्प्रयोगस्यौपगवशब्दे दर्शनात्प्रकृते च स्वाम्यनिमित्तकप्रयोगस्य मुख्यत्वात्तस्मिन्निमित्ते सति बद्ध इत्यादिप्रयोगः स्यादेवेत्यर्थः ॥ **प्रयोगो नामेति** । भृत्ये बद्धे मृते वा राजा बद्धो मृत इति प्रयोगः स्यादित्यत्रापाद्यमान इत्यर्थः । ननु प्रयोगपदस्य शब्दशक्त्यर्थकत्वं कुत्र दृष्टमित्यत आह **प्रयोगेति** । यस्य शब्दस्य यत्रार्थे शक्तिरस्ति स शब्दस्तत्र साधुरित्युच्यते व्याकरणेन । तथाच प्रयोगः शब्दशक्तिर्मूलं कारणमुपजीव्यं यस्य व्याकरणस्येत्यर्थः ॥ **इष्टत्वादिति** । यदि स्वाम्यं निमित्तं स्यात्तदा बद्ध इत्यादि प्रयोगः स्यादित्यस्य बद्धादिशब्दानां शक्तिः स्यादित्यर्थः । तथा चेष्टापत्तिः । न हि बद्धादिशब्दानां बद्धादिरूपेऽर्थे राज्ञि शक्तिर्नाङ्गीकृतेति भावः ॥ **असिद्धेरिति** । नास्ति च प्रयोगस्तस्मात्स्वाम्यं प्रवृत्तिनिमित्तं नेति विपर्ययपर्यवसाने चासिद्धिः । शब्दशक्तिरूपप्रयोगस्य सत्वादित्यर्थः । **उभयत्रेति** । राज्ञो बद्धत्वं भृत्यस्य बद्धत्वं च विवक्षित्वा क्रियमाणे प्रयोगद्वय इत्यर्थः । न च गमयतीत्यन्वयः ।

च०— **शार्दूल इति** । सिंहनिरूपितसादृश्यविशेषित इत्यादिः । **औपगवेति** । अपत्यार्थोऽणन्तेत्यादिः । **नाधाक्षीदिति** । भस्मीकरणार्थकस्य दहेर्लुङि रूपमेतत् ।

सु०— न संशयकारणत्वमात्रं प्रयोगप्रतिबन्धकम् । व्याख्यानतः संशयनिवृत्तिसंभवात् । यथोक्तम् । 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमि'ति । अन्यथा राजा जयीत्यपि प्रयोगो न स्यात् ।

तत्राप्युक्तविधया संशयावतारादित्यत आह अमङ्गलत्वादिति ।

अनु०— अमङ्गलत्वाच्छब्दानां राज्ञो योगादमङ्गले ।
अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनम् ॥

तुशब्दोऽवधारणे । शब्दस्येति जात्येकवचनम् । राज्ञो बन्धनादावमङ्गले योगाद्योग्यतासद्भावात् । आकाङ्क्षादेश्च स्फुटत्वाद्राजा बद्ध इत्यादिपदानां पाक्षिकराजबन्धाद्यमङ्गलप्रतीतिजनकत्वसंभवात् । राज्ञोऽमङ्गलाभिधानस्य च राजतत्पुरुषाप्रीतिहेतुत्वादेव शब्दस्य प्रयोगनिवर्तनं स्यात् । अयमभिसन्धिः । न केवलं संशयप्राप्तेः प्रयोगाभावः । किन्तु संशयनिमित्ताप्रीतिहेतुकानर्थशङ्कयैव । न पुनः स्वातन्त्र्यस्याकारणत्वादिति । तर्हि राजा पराजयीत्यपि न प्रयोक्तव्यमिति चेत् । भृत्यद्वारैव राजा विजयते पराजयते चेति प्रसिद्धतया संशयानुत्पादात् ।

शे०— नन्वमङ्गलत्वादित्युत्तरभाष्यमनर्थकम् । न च संशयनिमित्ताप्रीतिहेतुकानर्थशङ्कायाः प्रयोगप्रतिबन्धकत्वकथनार्थं तदिति वाच्यम् । प्रयोगस्योक्तरीत्या संशयकारणतया तन्मात्रस्यैव प्रयोगप्रतिबन्धकत्वसंभवेन विशिष्टप्रतिबन्धकत्वकल्पनानर्थक्यादित्यतः संशयकारणत्वमात्रस्य प्रयोगप्रतिबन्धकत्वानुपपत्तेर्युक्तमेव विशिष्टस्य प्रतिबन्धकत्वकल्पनमित्याशयेन संशयकारणतायां प्रयोगप्रतिबन्धकत्वानुपपत्तिशङ्कामुत्थापयति **न संशयेति** । व्याख्यानस्य संशयनिवर्तकत्वे परिभाषां प्रमाणयति यथेति ॥ 'एकशतं षष्ठ्यर्था' इति 'अस्तेर्भूरि'त्यादौ यत्रानेकेषां योगानां प्राप्तिस्तत्र स्थाने षष्ठी ग्राह्येति नियमार्थं प्रवृत्ते 'षष्ठी स्थानेयोगे'ति सूत्रे स्थान इत्युक्तेऽप्यनन्तरे वा समीपे वेति सन्देहात्तन्निवृत्तये 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमि'ति भाष्यकारेणोक्तम् । व्याख्यानेन विशेषप्रतिपत्तिरर्थनिश्चयो भवत्येव न तु सन्देहाल्लक्षणाभासः । एवं च स्थान इति व्याख्यास्यामः । ततश्चार्थनिश्चय' इति भाष्यकृता व्याख्यानस्य सन्देहनिवर्तकताया उक्तत्वाद्व्याख्यानेन तन्निवृत्त्या अप्रतिबद्धसामग्रीबलाद्बद्धादिशब्दप्रयोगोऽवर्जनीय एवेति भावः । संशयकारणत्वमात्रस्य प्रयोगप्रतिबन्धकत्वेऽनिष्टमाह **अन्यथेति** ।

**तत्राप्युक्तविधयेति** । राजा जयीति प्रयोगेऽप्याकाङ्क्षासन्निधियोग्यतानामुभयत्र सत्त्वेनार्थद्वयप्रतीतेरवर्जनीयतया किं राजाऽधीनस्य भृत्यस्य जयित्वेनैवमुच्यते । किंवा राज्ञ एव जयित्वे-

नेति व्युत्पन्नस्य संशयप्रसङ्गेन प्रयोगप्रतिबन्धसंभवादिति भावः। जयीत्यपीत्युपलक्षणम्। पराजयीत्यपि द्रष्टव्यम्। प्रयोगाभावस्यान्यथासिद्ध्युपपादकस्याप्रियत्वादेवेत्यवधारणस्यात्राश्रवणात्तदर्थतया तुशब्दं व्याचष्टे **तुशब्द इति**। अमङ्गलत्वाच्छब्दानामिति शब्दानां बहुत्वावगत्या शब्दैकत्वविवक्षया शब्दस्येत्येकवचनानिर्वाहान्नेदं व्यक्त्यैक्यनिबन्धनमेकवचनं किंतु जातिरूपार्थैक्यनिबन्धनमेवेत्याह **शब्दस्येतीति**। राज्ञो योगादमङ्गल इत्यादेरानर्थक्यमित्यतोऽमङ्गलत्वादित्यर्थे हेत्वर्थसमर्पकत्वान्न तदिति भावेन योग्यतया हेतुहेतुमद्भावेन योजनामाह **राज्ञ इत्यादिना**। कथमेतावता राजा बद्ध इत्यादिप्रयोगाभावस्यान्यथासिद्धिः समर्थितेत्यत आह **अयमिति** ॥ **तर्हीति**। संशयनिमित्ताप्रीतिहेतुकानर्थशङ्कायाः स्वातन्त्र्यनिमित्तकशब्दप्रयोगप्रतिबन्धकत्व इत्यर्थः ॥ **नेति**। तत्राप्युक्तविधया संशयनिमित्तकाप्रीतिहेतुकानर्थशङ्कायाः सत्त्वेन तया स्वातन्त्र्यस्य प्रतिबद्धत्वादिति भावः। **प्रसिद्धतयेति**। निर्णीतत्वेनेत्यर्थः। तथा चैककोटिनिर्णयान्न तत्र संशय इति प्रतिबन्धकाभावाद्युक्तः स्वातन्त्र्यनिमित्तकः पराजयीत्यादिप्रयोग इति भावः।

**स०— व्याख्यानतो विशेषप्रतिपत्तिरिति**। विशेषप्रतिपत्तिः संशयनिवर्तकैककोटिनिर्णयः संदेहान्निमित्तात् संदेहजनकत्वादिति यावत्। **लक्षणं** सूत्रम्। तेन तत्प्रयोगोपि लक्ष्यते। ततश्च संदेहजनकसूत्रप्रयोगो न हि। यतो व्याख्यानतो विशेषप्रतिपत्तिर्भविष्यतीति योजना।

---

**प०—यथोक्तमिति**। लणितिसूत्रे महाभाष्ये उक्तमित्यर्थः। अलक्षणम्=असूत्रमित्यर्थः। तत्र हि प्रत्याहारसूत्रेषु अइउण् लणिति णकारानुबन्धं द्विःकथमुपात्तवान् सूत्रकारः। तथात्वे 'अणुदित्सवर्णस्य चाप्रत्यय'इत्येवमादावणित्ययं किंपूर्वेण णकारेण गृहीतप्रत्याहारस्य निर्देशोऽथ परेणेति संदेहावस्कन्दनादित्याशङ्क्य व्याख्यानतो विशेषप्रतिपत्तिः न हि संदेहादलक्षणमितिपरिभाषाज्ञापनाय द्विरुपात्तो णकारानुबंध इत्युक्त्वा अणुदित्सवर्णस्येत्येकं विनान्यत्र सर्वत्र न परेणेति व्याख्यास्यामः। न हि संदेहमात्रादलक्षणं भवतीत्युक्तम्।

**या०— व्याख्यानत इति**। परिभाषेयम्। अलक्षणम्= अज्ञापकमित्यर्थः।

**श्री०— उक्तविधयेति**। किं राजाऽधीनस्य भृत्यस्य जयादिनैवमुच्यते किंवा राज्ञ एव जयादिनेत्युक्तविधयेत्यर्थः ॥ **तर्हीति**। यद्यमङ्गलशब्दप्रयोगो न कर्तव्यस्तर्हीत्यर्थः। तत्रापि किं राजा स्वयमेव पराजित उत भृत्यद्वारेति तत्रापि संशयावतारेण तन्निमित्तराजतत्पुरुषाप्रीतिहेतुकानर्थशङ्का स्यादिति भावः।

**च०— व्याख्यानत इति**। इति परिभाषेयमधस्ताद्विशदीकृतैव। चौरादिकालक्ष दर्शनांकनयोरिति पठितात्स्वार्थणिजन्तात् ल्युटि णिलोपे निष्पन्नो लक्षणशब्दो ज्ञापकवचनः।

सु०— नन्वस्ति तावद् राजा बद्ध इत्यादिप्रयोगाभावः। स तु स्वाम्यस्याकारणत्वान्न भवति। किं तूक्तसंशयप्रतिबन्धादिति कुतो निश्चयम्। न च वाच्यं मा भूदयं निश्चयः। प्रयोगाभावस्यान्यथासिद्धिशङ्काऽपि तर्कानुमाने शक्नोति दूषयितुमिति। वादिनोऽपि निश्चयस्यावश्यकत्वात्। अन्यथा स्वातन्त्र्यनिमित्तकसमन्वयानवधारणापातादित्यत आह गुणास्त्विति।

अनु०— गुणास्तु तादृशा यत्र प्रयुज्यन्तेऽखिला अपि।

तादृशाः=स्वाम्यनिमित्तकाः शब्दाः। यत्र=यदि। गुणाः=शुभाभिधायिनो न तु पाक्षिकमप्यमङ्गलं प्रत्याययन्ति। तत्र=तर्हि। ते अखिला अपि प्रयुज्यन्ते। यथा जितं राज्ञेत्यादयः। प्राप्ताप्राप्तविवेकेनानर्थशङ्कैव प्रयोगाभावकारणम्, न तु स्वातन्त्र्यस्यानिमित्तत्वमिति निश्चीयत इति भावः। अत एवोक्तमखिला अपीति॥ न चायं नियमोऽस्ति। निमित्तसद्भावे प्रयोगो भवतीति। अनन्तानां हि शब्दानां लक्षणानि व्याकरणकारैरुक्तानि। न च तेषां प्रयोगो दृश्यत इति स्फुटत्वान्नोक्तम्। तदेवं स्वातन्त्र्यस्य शब्दप्रवृत्तिहेतुत्वं मुख्यत्वं च सिद्धमित्याह पूज्येष्विति।

अनु०— पूज्येष्वेव विशेषेण स्वातन्त्र्यं मुख्यकारणम्॥

यतः पूज्येषु=स्वामिषु जयिप्रभृतयः शब्दाः प्रयुज्यन्ते। तेन ज्ञायते स्वातन्त्र्यं शब्दप्रवृत्तिकारणमिति। यतश्च पूज्येष्वेव विशेषेण=प्राचुर्येण प्रयुज्यन्ते न भृत्येषु। तेन निश्चीयते स्वातन्त्र्यं शब्दप्रवृत्तौ तद्गतत्वादपि मुख्यं कारणमिति।

शे०— ननु च प्रतिबन्धकोक्त्या बद्धादिशब्दप्रयोगाभावस्य राज्ञि सिद्धेर्गुणा इत्याद्युत्तरवाक्यमनर्थकम्। न च तथा प्रयोगाभावः संशयरूपप्रतिबन्धकप्रयुक्त एव न तु स्वाम्यस्याकारणत्वनिबन्धन इति निश्चयार्थं तदिति वाच्यम्। तन्निश्चयस्याप्यनर्थकत्वात्। न च प्रयोगाभावस्यान्यथासिद्धिनिश्चयेन परकीयतर्कानुमाननिरासार्थतया तस्यावश्यकत्वमिति वाच्यम्। प्रयोगाभावस्यान्यथासिद्धिशङ्कयाऽपि परकीयतर्कानुमानदूषणसंभवेन तन्निश्चयस्याप्यनपेक्षितत्वादित्यतस्तावता परकीयतर्कादेर्दूषणसंभवेऽपि तन्निश्चयाभावे समन्वयानवधारणप्रसक्त्या तदवधारणोपयोगितयोक्तनिश्चयस्यावश्यकतया तदुपपादकस्योत्तरवाक्यस्यार्थवत्त्वादिति भावेन तां शङ्कामुत्थापयति नन्वस्तीत्यादिना। विवक्षितनिश्चयोपपादकतया दुर्गमार्थत्वाद्वाक्यं व्याचष्टे तादृशा इत्यादि। ननु शुभाभिधायिनामस्तु प्रयोगस्तथाऽपि बद्धादिशब्दप्रयोगस्य कथमुक्तसंशयप्रतिबन्धनिबन्धनत्वनिश्चय इत्यत आह प्राप्तेति। प्राप्तिः= प्राप्तम्, अप्राप्तिरप्राप्तमितिभावे क्तप्रत्ययः। प्राप्त्यप्राप्तिनिमित्तको विवेकः प्राप्ताप्राप्तविवेकः। अयं भावः। सत्यपि स्वातन्त्र्ये तन्निमित्तकबद्धादिशब्दप्रयोगाभावस्य संशयनिमित्तकानर्थप्राप्तावेव सत्त्वात्तन्निमित्तकानर्थाप्राप्तौ च प्रयो-

गाभावस्याप्यभावादन्वयव्यतिरेकाभ्यां बद्धादिशब्दप्रयोगे शङ्कानिमित्तकानर्थप्राप्तेः प्रतिबन्धकत्वनिश्चयः । न तु स्वातन्त्र्यस्यानिमित्तत्वं तदनुसारेण मन्तव्यम् । अन्यथा शङ्कानिमित्तकानर्थप्राप्त्यभावस्थलेऽपि प्रयोगाभावापत्तेः । अत एव वन्हौ सत्यपि जायमानस्य दाहाभावस्य मणिसद्भावदशायामेव जायमानत्वात्तदभावे चाभावादन्वयव्यतिरेकाभ्यां दाहं प्रति मणेः प्रतिबन्धकत्वनिश्चयो न तु वन्हेरकारणत्वनिश्चयः । अन्यथोक्तरीत्या तत्रापि दाहं प्रति वन्हेः कारणत्वे, मणिसमवधानेऽपि तदापत्त्या, तदभावेन तस्य तत्राकारणत्वापत्तेरिति द्रष्टव्यम् । **नन्विति** । अन्यथा शुभाभिधायिनां यो नियमेन प्रयोगोऽस्ति सोऽपि न स्यादिति भावः ॥ **अत एवेति** । यतोऽनर्थशङ्कैव प्रयोगाभावकारणं न तु स्वातन्त्र्यस्यानिमित्तत्वमत एवेत्यर्थः ।

ननु निमित्तस्य मुख्यप्रयोगाविनाभावाभाववत् , वक्ष्यमाणरीत्याऽनेकत्र व्यभिचारेण मुख्यप्रयोगाविनाभावस्याप्यभावेन प्रयोगे सति निमित्तानुसरणं न तु निमित्तमस्तीति प्रयोग इति न्यायस्य मुख्यामुख्यप्रयोगविषयतयोक्तरीत्याऽमुख्यमात्रप्रयोगविषयत्वासंभवेन न्यायविरुद्धतयैव बद्धादिशब्दाप्रयोगस्य समर्थयितुं शक्यत्वेन संशयस्य प्रतिबन्धकत्वाश्रयणेन निमित्तस्य मुख्यप्रयोगाविनाभावेऽपि बद्धादिशब्दप्रयोगाभावस्य समर्थनमनुचितं भाष्यकाराणामित्यतोऽस्य प्रकारस्य स्फुटतया शिष्यैरेव ज्ञातुं शक्यत्वात्तमुपेक्ष्य निमित्तस्य मुख्यप्रयोगाविनाभावं चाङ्गीकृत्याभ्युच्चयेन संशयस्य प्रतिबन्धकत्वाश्रयणेन प्रयोगाभावस्य समर्थनं भाष्यकाराणामुपपन्नमित्याशयेन निमित्तस्य मुख्यप्रयोगाविनाभावं निराकरोति **न चेति** । नापीत्यर्थः । धेनुशब्दप्रवृत्तिनिमित्तस्य धेट इचेति व्याकरणोक्तस्य धानकर्मत्वस्य महिष्यादौ, उदञ्चनकारशब्दप्रवृत्तिनिमित्तस्य कुलाले च सत्त्वेऽपि, महिष्यादौ कुलालादौ च धेनुशब्दस्योदञ्चनकार शब्दस्य चाप्रयोगेन तत्र व्यभिचार इति भावः । तथा च राज्ञि सत्यपि निमित्ते बद्धादिशब्दाप्रयोगो युज्यत इति शेषः । युक्त्यन्तरेणाप्यप्रयोगमुपपादयति **अनन्तानां हीति** । अतित्वाकमतित्वया अतिमाकमतिमया इत्यादीनामित्यर्थः ॥ **लक्षणानीति**= प्रकृतिप्रत्ययविभागकल्पनया प्रवृत्तिनिमित्तानीत्यर्थः । **न चेति** । त्वामतिक्रान्तानां मामतिक्रान्तानामित्याद्यर्थेऽतित्वाकमतित्वया अतिमाकमतिमया इत्यादेरप्रयोगादित्यर्थः । तथा च तद्वद्बद्धादिशब्दानामप्यप्रयोगो युक्त एवेति भावः । न च तेषामप्रयोगेऽपि व्याकरणस्मृत्या व्युत्पादितत्वात्प्रयोगयोग्यताऽस्त्येवेति वाच्यम् । तथा सतीहापि यदधीनो गुणो यस्येत्यादिस्मृत्या व्युत्पादितत्वाद्राज्ञि बद्धादिशब्दप्रयोगयोग्यतायाः सत्त्वेनेष्टापादनप्रसङ्गात् । स्वातन्त्र्यस्य शब्दप्रवृत्तौ हेतुत्वमुख्यत्वयोरुक्तत्वात्पुनस्तदभिधानमनर्थकमित्यतः 'स्वातन्त्र्यं तद्गतत्वं चे'त्यादिप्रतिज्ञातप्रमेयद्वयोपसंहाररूपत्वान्नानर्थक्यमित्याशयेनोत्तरवाक्यं योजयति **तदेवमिति** । प्रमेयद्वयोपसंहाररूपत्वघटनायापेक्षिताध्याहारेण वाक्यं योजयति **यत इत्यादिना** ।

स०— **तर्कानुमाने इति** । यदि स्वातन्त्र्यं प्रवृत्तिनिमित्तं स्यात् तर्हि तद्वति बद्ध इत्यादि-प्रयोगः स्यादिति तर्कः । स्वातन्त्र्यं शब्दप्रवृत्तिनिमित्तं न संभवति तद्वति अप्रयुज्यमानत्वादित्यनुमानं चेत्यर्थः । यत्रेति श्रवणात् तत्रेत्याध्याहृत्य तस्यार्थमाह **तत्र हीति** ॥ **प्राप्ताप्राप्तविवेकेनेति** ॥ संशये सति प्रयोगाभावप्राप्तिः । संशये असति प्रयोगाभावस्याप्राप्तिः ॥ **तयोर्विवेकेनेति** । संशये सति प्रयोगो न प्राप्तः तदभावे प्रयोगो भवति । एवं सति स्वातन्त्र्यस्यानिमित्तत्वं कल्पनीयं प्रयोगाभावं प्रति संशयस्य न कारणत्वं कल्पनीयमित्यविवेके प्राप्ते स्वातन्त्र्येऽनिमित्तत्वे कल्पिते मङ्गलाभिधायि-शब्दप्रयोगोऽपि न स्यात् निमित्ताभावात् तस्मात्संशयस्यैव प्रयोगाभावं प्रति कारणत्वं कल्पनीयं बाधका-भावात् । अन्यथा मण्यादिप्रतिबन्धके विद्यमानेपि दाहाभावात् वन्हेरपि दाहकारणत्वं न स्यादिति भावः । यद्वा स्वाम्यनिमित्तकत्वाविशेषेपि शुभाभिधायिनां सर्वेषामेव प्राप्तिः । अशुभा-भिधायिनामप्राप्तिः तयोर्विवेकेन= विलक्षणकारणजन्यत्वविमर्शेनेत्यर्थः ॥ **न तु स्वातन्त्र्यस्येति** । तथात्वे शुभाभिधायिनां यो नियमेन प्रयोगः सोऽपि न स्यादिति भावः । यदुक्तं मुख्यप्रयोगविषयत्वादस्य न्यायस्येत्यादिना प्रवृत्तिनिमित्तसद्भावे मुख्यप्रयोगस्यावश्यकत्वमिति तत्रापि व्यभिचारं स्वयमाह **न चायं नियमोऽस्तीति** । नापीत्यर्थः ॥ **प्रयोग इति** । मुख्यप्रयोग इत्यर्थः । **लक्षणानीति** । प्रकृतिप्रत्ययादिविभागेन स्वरूपाणीत्यर्थः । **न चेति** । कर्मण्यणितिविहितनिमित्ते विद्यमानेऽपि उदञ्चनकार इत्यादिप्रयोगो न दृश्यत इति भावः ।

प०— **तर्कानुमाने इति** । यदि स्वाम्यं प्रवृत्तिनिमित्तं स्यात्तर्हि राज्ञि बद्ध इत्यादिप्रयोगः स्यादिति प्रागुक्ततर्के, न स्वाम्यं शब्दप्रवृत्तिनिमित्तं तस्य राज्ञि बद्धादिशब्दप्रयोगाहेतुत्वादिति तर्कस्य विपर्ययपर्यवसानेन लब्धमनुमानं च दूषयितुं शक्नोतीतिसिद्धान्तिना न वाच्यमित्यर्थः । **वादिनोऽपि** सिद्धान्तिनोऽपि । **समन्वयेति** शक्तितात्पर्येत्यर्थः । यत्रेति श्रवणात्तत्रेत्यध्याहृत्यार्थमाह **तत्र तर्हीति** । नन्वस्ति तावदित्यादिना कृतचोद्यस्य किमुत्तरमनेन लब्धमित्यतो भावमाह **प्राप्ताप्राप्तेति** । राज्ञि बद्धादि-शब्दाप्रयोगे प्रयोजकतयेदं प्राप्तमिदमप्राप्तमिति विमर्शेनेत्यर्थः । स्वाम्येन निमित्तेन शब्दाप्रयोगे प्रतिबन्ध एव प्रयोजकतया प्राप्तः न तु स्वाम्यस्य शब्दप्रवृत्त्यनिमित्तत्वं प्रतिबन्धाभावे शब्दप्रयोगदर्शनात् । अन्यथा= स्वाम्यस्य शब्दप्रवृत्त्यनिमित्तत्वस्यैव दोषवाचिशब्दाप्रयोगप्रयोजकत्वे, गुणवाचिशब्द-प्रयोगोऽपि न स्यात् । अस्ति च सः तेन ज्ञायते प्रतिबन्धकरूपानर्थशङ्कैवाप्रयोगे कारणं न त्वन्यदिति निश्चीयत इत्यर्थः । यदपि मुख्यप्रयोगे तु निमित्तं सामग्रीति निमित्ते सति स्यादेवावश्यं प्रयोग इति प्रागुक्तं यदपि सन्न्यायरत्नावल्युक्तस्य खण्डनं तदुभयमसदिति भावेनाह **न चायं नियमोऽस्तीति** ॥

**न च तेषां प्रयोगो दृश्यत इति ।** एतच्च विवृतं चन्द्रिकायाम् "धेनुशब्दप्रवृत्तिनिमित्तस्य धेट इच्चेति व्याकरणोक्तस्य धानकर्मत्वस्य महिष्यादौ सत्वेऽपि तत्र तदप्रयोगः । यथा च निमित्ते सत्यपि कुलाले कुम्भकारशब्दस्येवोदञ्चनकारादिशब्दानामप्रयोगः तथा राज्ञि सत्यपि निमित्ते बद्धादिशब्दाप्रयोगोऽस्तु । किं च त्वामतिक्रान्तानामित्याद्यर्थेऽतित्वाकं अतित्वयेत्यादयः मामतिक्रान्तानामित्याद्यर्थे अतिमाकमतिमयेत्यादयश्च लक्षणतो व्युत्पादिताः । न च तेषां प्रयोगोस्ति तद्वदिहाप्यस्तु" इत्यादिग्रन्थेन ॥ **तदेवमिति** । 'कुतो राज्ञि जयोन्यथा' इति 'न हि भृत्यस्ये'त्यादिना चोक्तप्रकारेणेत्यर्थः ।

**या० — प्राप्ताप्राप्तेति ।** स्वाम्यनिमित्तकत्वाविशेषेऽपि शुभाभिधायिनामेव सर्वेषां प्राप्तिरस्ति । अशुभाभिधायिनामप्राप्तिश्च । तयोर्विवेकेन विलक्षणकारणजन्यत्वविमर्शेत्यर्थः ॥ **न तु स्वातन्त्र्यस्येति** । तथात्वे शुभाभिधायिनां यो नियमेन प्रयोगः सोऽपि न स्यादिति भावः । यदुक्तममुख्यप्रयोगविषयत्वादस्येत्यादिना प्रवृत्तिनिमित्तसद्भावे मुख्यप्रयोगस्यावश्यकत्वमिति तत्रापि व्यभिचारं स्वयमाह ॥ **न चायं नियम इति** । चशब्दोऽप्यर्थः । प्रयोगो= मुख्यप्रयोगः ॥ **लक्षणानीति** । प्रकृतिप्रत्ययविभागेन प्रवृत्तिनिमित्तानीत्यर्थः ॥ **न च तेषामिति** । अतित्वाकम् अतित्वया अतिमाकम् अतिमयेत्येवमादीनामित्यर्थः ।

**श्री० — तर्कानुमान इति ।** यदि स्वाम्यं प्रवृत्तिनिमित्तं स्यात्तदा बद्ध इत्यादिप्रयोगः स्यात् । न भवति च प्रयोगस्तस्मात्स्वाम्यं न प्रवृत्तिनिमित्तम् । प्रवृत्तिनिमित्तत्वेऽपि प्रयोगाभावस्योक्तसंशयेनान्यथासिद्धत्वान्न तर्कः युक्तः । तथा स्वाम्यं न प्रवृत्तिनिमित्तं प्रयोगाभावादित्यनुमानमप्युक्तरीत्याऽन्यथासिद्धत्वादयुक्तमित्यर्थः । कुतो न वाच्यमित्यत आह **वादिनोऽपीति** । स्वातन्त्र्यस्य निमित्ततां प्रतिपादयितुः सिद्धान्तिन इत्यर्थः ॥ **निश्चयस्येति** । प्रयोगाभावः स्वातन्त्र्यस्याकारणत्वान्न भवति किन्तु संशयप्रतिबन्धादेवेति स्वातन्त्र्यस्य दुःख्यादिशब्दप्रवृत्तिनिमित्ततानिश्चयस्येत्यर्थः । माऽस्तु ममापि तन्निश्चय इत्यत आह **अन्यथेति** । स्वातन्त्र्यस्य प्रवृत्तिनिमित्ततानिश्चयादिनेत्यर्थः । यदुक्तं पूर्वपक्षिणा मुख्यप्रयोगे तु निमित्तमेव सामग्रीति तद्दूषयति **न चायमिति** । यतश्चेत्यनेन मुख्यत्वसिद्ध्युपसंहार इति ज्ञेयम् । शङ्कते **सत्यपीति** । प्रयोगाभावः कुतो न भवेत्, किन्तु भवेदेव । प्रयोगाभावः कुतः । संशयनिमित्तकराजतत्पुरुषाप्रीतिरूपप्रतिबन्धकस्य सत्वादिति शेषः ॥ **निमित्तेति** । प्रयोगे स्वाम्यरूपनिमित्तेत्यर्थः ॥

**च० — प्राप्ताप्राप्तेति** । येन नाप्राप्ते यो विधिरित्यादाविव भावसाधननिष्ठान्तोयं प्राप्तशब्दः । प्रतिषेधार्थश्च नञ् । प्राप्तितदभावनिमित्तको विवेक इत्यर्थः । शुभतदितराभिधायिनां स्वातन्त्र्यनिमित्तकत्वाविशेष्येपि शुभाभिधायिन एव प्रयुञ्जते नासाहशानिति तेन जानीमस्तदप्रयोगेऽन्यदेव निमित्तं

नैतस्यां निमित्तत्वमिति भावः । न चायं नियम इति । धेनुपदप्रवृत्तिनिमित्तपानकर्मत्वस्य महिष्यादि-साधारण्येपि तत्र तदप्रयोगादिति भावः । लक्षणानीति प्रकृतिप्रत्ययविशदीकरणेन प्रवृत्तिनिमित्ता-नीत्यर्थः । 'पाकमूलयोः कुणब्जे हृचौ चे'त्यनुशासनेपि पीलुकुणः कर्णजाहमित्याद्यप्रयोगादिति भावः ।

सु० — किमतो यद्येवमित्यत आह अत इति ।

अनु० — अतो दोषातिदूरत्वात्संशयस्याप्यसंभवात् ॥
दोषाणां विष्णुगत्वस्य प्राज्ञबुद्ध्यपेक्षया ॥
स्वातन्त्र्यार्थमभिप्रेत्य दोषशब्दाश्च[1] विष्णवि ॥

यतः स्वातन्त्र्यं कारणं मुख्यं चातः स्वातन्त्र्यार्थमभिप्रेत्य दुःखिबद्धावराद्या दोषशब्दा अपि विष्णवि=विष्णौ 'जीवा एव तु दुःखिन' इत्यादौ प्रयुज्यन्त इति संबन्धः । सत्यपि निमित्ते यथा राजा बद्ध इत्यादिप्रयोगाभावस्तथा विष्णुर्दुःखीत्यादिप्रयोगाभावोऽपि इतो न भवेत् अत्रापि पाक्षिकस्य विष्णुवैष्णवभयस्य प्रतिबन्धकत्वसंभवादित्यत उक्तम् दोषेति ।

निरनिष्टो निरवद्य इत्यादिश्रुतेर्विष्णौ दोषातिदूरत्वनिश्चयात् । प्राज्ञबुद्ध्यपेक्षया दोषाणां विष्णुगत्वस्य तद्विषयस्य संशयस्यासंभवात् । निमित्तसद्भावात्प्रतिबन्धकाभावादपीत्यपेरर्थः ।

एतदुक्तं भवति । सत्यपि निमित्ते वैदिकप्रयोगनिवृत्तिर्हि विष्णुवैष्णवेभ्यो भयात्स्यात् । तत्कारणं च तदप्रीतिः । तत्रापि हेतुर्विष्णोरनेन दोषित्वमुच्यत इति संशयः । तस्य च निमित्तं वाक्यस्योभयार्थप्रतीतिजनकत्वम् । तस्याप्युभयत्र योग्यतादिसद्भावः । न चासावस्ति प्रकृते । विष्णुवैष्णवानां परमेश्वरनिर्दोषतानिश्चयवत्त्वेन योग्यताध्यवसायानुपपत्तेः । अन्यथा जरद्गवादिवाक्येऽपि तत्प्रसङ्गात् । यद्यपि वाक्यतात्पर्याज्ञोऽप्रीतिसंभवस्तथाऽपि सदभिप्रायवाक्य-प्रयोगनिवृत्तौ किमायातमिति । एतदप्युक्तम् प्राज्ञबुद्ध्यपेक्षयेति । स्वस्य परमवैदिक-ताख्यापनाय विष्णवीति वैदिकप्रयोगः ।

शे० — शब्दप्रवृत्तिहेतुत्वमुख्यत्वव्युत्पादनप्रयोजनाभिधायकत्वान्नोत्तरवाक्यवैयर्थ्यमित्याशयेन स्वातन्त्र्यस्य शब्दवृत्तिहेतुत्वादिव्युत्पादनस्य कैमर्थ्याकाङ्क्षामुत्थापयति किमत इति । स्वातन्त्र्यं मुख्य-कारणमिति प्रकृतस्वातन्त्र्यहेतुत्वतन्मुख्यत्वयोरत इत्यनेन परामर्श इत्याशयेनाह यत इति । अत इत्यस्य योग्यतया व्यवहितेनैव संबन्धमाह अत इत्यादि । दुःखिबद्धावराद्या इत्युपक्रमानुसारेणोक्तं दुःखिबद्धेत्यादि । दुःखिबद्धावराद्या इत्यत्र दोषशब्दत्वमेवादिशब्दसंग्राह्यतावच्छेदकतयाऽभिमतमतो नातिप्रसङ्ग इत्यभिप्रेत्य दोषशब्दा इत्युपसंहारे उक्तमिति द्रष्टव्यम् । 'घर्डिती'त्यस्य 'अच घेः'इत्यनेन

१. 'दोषशब्दास्तु विष्णवि' इति परिमळा(पृ. १८२५)नुसारिपाठेन भाव्यम् ।

बाधिततयाऽप्रसक्तेराह **विष्णवीति** । मूले विष्णवीति प्रयोगस्तु छान्दस इति भावः । एतावतैव प्रयोजनाभिधानाद्दोषातिदूरत्वादित्यादेर्वैयर्थ्यमित्यतः प्रतिबन्धकाभावोपपादकत्वान्न तद्वैयर्थ्यमिति भावेन प्रतिबन्धकशङ्कामुत्थापयति **सत्यपीति** । विष्णुगत्वस्य संशयस्येत्यन्वयमित्यभिप्रेत्य कथं तर्हि सामानाधिकरण्यमित्यतो विषयविषयिभावः षष्ठ्यर्थः संबन्ध इत्याह **तद्विषयस्येति** । संशयस्यापीत्यपिशब्दस्य यथाश्रुतस्यानर्थक्याद्भिन्नक्रमत्वमाश्रित्य तदर्थमाह **निमित्तेति** । अनेन संशयस्यासंभवादपीत्यपिशब्दान्वय उक्तो भवति । विष्णोर्दोषातिदूरत्वस्य स्वरूपसतो न संशयाभावहेतुत्वं अप्रयोजकत्वात्, निश्चितस्यापि न साक्षादतोऽपेक्षितसाध्याध्याहारेण संशयाभावोपपादनपूर्वकं प्रतिबन्धकाभावमुपपादयितुमाह **एतदिति** ॥ **अन्यथेति** । वाक्यार्थव्यतिरेकनिश्चयेऽपि योग्यताध्यवसाय इत्यर्थः ॥ **तत्प्रसङ्गादिति** । योग्यताध्यवसायप्रसङ्गादित्यर्थः । **वाक्यतात्पर्याज्ञ इति** । विष्णुर्दुःखीत्यादिवाक्यस्य यत्तात्पर्यमन्यगतदुःखादिनियामकताप्रतिपादकत्वरूपं तज्ज्ञानशून्य इत्यर्थः । वाक्यतात्पर्याज्ञानिनि अप्रीत्यादेः संभवेन तत्प्रतिबद्धत्वाद्दुःखीत्यादिवाक्यप्रयोगासंभवेऽपि वाक्यतात्पर्यज्ञानिनामप्रीत्याद्यसंभवेन न तान्प्रति विष्णुर्दुःखीत्यादिवाक्यप्रयोगनिवृत्तिप्राप्तिरित्याह **तथाऽपीति** । सन् अभिप्रायो=वाक्यतात्पर्यं येषां ते सदभिप्रायाः । वाक्यतात्पर्यज्ञानिन इति यावत् । तान्प्रतीति योज्यम् । यं प्रति अप्रीत्यादि प्रतिबन्धकं न तं प्रति दुःख्यादिप्रयोगः । यं प्रति दुःख्यादिप्रयोगो न तं प्रति अप्रीत्यादि प्रतिबन्धकमपीति भावः । दोषशब्दाश्च माधव इति वा दोषशब्दाश्च केशव इति वा पादपूरणे कर्तुं शक्येऽपि यद्भाष्यकारीयं विष्णवीति वचनं न तत्पादपूरणार्थं नापि महाशास्त्रप्रयोक्तृगामसाधुत्वाज्ञानमूलकं तत्कल्पयितुं शक्यं किंतु प्रयोजनान्तरार्थमेवेत्यभिप्रेत्य तत्प्रयोजनमाह **स्वस्येति** । 'अस्येदिन्द्रो वा वृधे वृष्ण्यं शवो मदे सुतस्य विष्णवी'त्यादिवैदिकप्रयोगदर्शनादिति भावः । छन्दस्त्वादचघेरित्यस्याप्रवृत्त्या घेर्ङितीत्यस्यैव च प्राप्त्या गुणेऽवादेशे च विष्णवीति रूपनिष्पत्तिर्द्रष्टव्या ।

स० — **अन्यथेति** । योग्यताऽऽद्यभावेऽपि वाक्ये प्रयोगनिवृत्तौ कारणाभावेन प्रयोगोऽस्त्येवेति तदर्थप्रतीतौ अङ्गीक्रियमाणायामित्यर्थः ॥ **यद्यपीति** । सन् अभिप्रायो यस्य स तथोक्तः । तं प्रति वाक्यप्रयोगः ॥ **वैदिकप्रयोग इति** । 'अस्येदिन्द्रो वा वृधे वृष्ण्यं शवो मदे सुतस्य विष्णवी'त्यादौ वेदे प्रयोगदर्शनादिति द्रष्टव्यम् । अन्यथाऽच घेरित्यस्य प्रसङ्गे विष्णाविति भवेदिति भावः ।

प० — **उभयार्थेति** । दोषवत्त्वतत्प्रतिस्वातन्त्र्यरूपोभयार्थप्रतीतिजनकत्वमित्यर्थः । विष्णाविति वाच्ये विष्णवीति कथमित्यत आह **स्वस्य परमवैदिकतेति** । 'मदे सुतस्य विष्णवी'ति वेदे श्रुतो वैदिकः प्रयोगः ।

या० — अन्यथेति । वाक्यार्थव्यतिरेकनिश्चयेऽपि योग्यताध्यवसाय इत्यर्थः ॥ वाक्यतात्पर्याज्ञ इति । विष्णुर्दुःखीत्यादि यद्वाक्यं तस्य यत्तात्पर्यमन्यगतदुःखादिनियामकताप्रतिपादकत्वरूपं तदज्ञ इत्यर्थः ॥ तथाऽपीति । तं प्रति प्रयोगनिवृत्तिसंभवेऽपीत्यर्थः । सन्त उक्ततात्पर्यज्ञानिनस्तदभिप्रायकास्तान्प्रति प्रवृत्तो योऽयं वाक्यप्रयोगस्तन्निवृत्तिसाधकं किमपि नागतमित्यर्थः । अयं भावः । ये वाक्यतात्पर्यं न जानन्ति तान्प्रति प्रयोगनिवृत्तिरिष्टैव । ये तु तज्जानन्ति तान्प्रति न प्रयोगनिवृत्तिः । अप्रीत्यादेः प्रयोगप्रतिबन्धकस्याज्ञानिगतत्वेऽपि ज्ञानिष्वभावादिति ॥ वैदिकः प्रयोग इति । 'अस्येदिन्द्रो वा वृधे वृष्ण्यंशवो मदे सुतस्य विष्णवी'त्यादौ वेदे प्रयोगदर्शनादिति भावः । अन्यथा 'अच्च घे'रित्यस्य प्रसङ्गेन विष्णाविति स्यादिति ध्येयम् ।

श्री० — वैदिकप्रयोगनिवृत्तिरिति । दुःखस्वामित्वाद्दुःखीत्येवं समीचीनाभिप्रायोपेतं यद्वाक्यं तस्य या प्रयोगनिवृत्तिरित्यर्थः । अन्यथेति । प्रतिपाद्यार्थस्य बाधितत्वनिश्चयेऽपि यदि योग्यताऽध्यवसायः स्यादित्यर्थः । प्राज्ञबुद्धिव्यपेक्षयेत्यस्य व्यावर्त्यमाह यद्यपीति ।

च० — वाक्यतात्पर्याज्ञेष्विति । समानविभक्तिकविष्णुदुःखिपदघटितवाक्यस्य यत्तात्पर्यमन्यगतदुःखादिनियामकताप्रतिपादकत्वरूपं तदजानानेष्वित्यर्थः ।

---

सु० — अत्र श्रुतिसंमतिमप्याह वासुदेवेति ।

अनु० — वासुदेवश्रुतिश्चाह नैव विष्णावमङ्गलम् ॥
मङ्गलामङ्गलेऽन्यत्र ततो नामङ्गलम् वदेत् ॥
स्वातन्त्र्यापेक्षया विष्णौ दोषो नामङ्गलोक्तितः ॥

आह एतमर्थमिति शेषः । यतो नैव विष्णौ अमङ्गलं दुःखादिकमस्ति । ततो योग्यताविरहेणार्थान्तरप्रतीत्यभावात्स्वातन्त्र्यापेक्षया विष्णावमङ्गलोक्तितो दोषोऽनर्थो नास्ति । तस्माद्दुःख्यादिशब्दा अपि विष्णौ वेदे प्रयुज्यन्त इति शेषः । अन्यत्र तु राजादौ यतो मङ्गलामङ्गले संभवतोऽतो योग्यतासंभवेनार्थान्तरप्रतिभासनात्पाक्षिकानर्थशङ्कया तत्रामङ्गलं राजा बद्ध इत्यादिकं न वदेदित्यर्थः । एकस्यैव शब्दस्य क्वचिद्दोषप्रत्यायकत्वेनानर्थहेतुत्वं क्वचित्तदभाव इत्येतद्दृष्टान्तेन बोधयति बहुभुक्त्वमिति ।

बहुभुक्त्वं यथा दोषो नृषु नैव हरौ क्वचित् ॥

यथा बहुभुग्देवदत्त इत्युक्ते बहुभोगवानिति निन्द्यश्चेति प्रतीयते । अस्वर्ग्यं चातिभोजनमिति स्मृतेः । उभयस्यापि देवदत्ते संभवेन योग्यत्वात् । अत एव देवदत्ताद्भीरुणा

नैवं प्रयुज्यते । परमेश्वरे तु संसारधर्माणामत्यन्तासंभवान्न दोषप्रतिभासः । किन्तु सर्वसंहर्तृत्वादिकमेव प्रतीयत इति । तत्र तत्प्रयोगः । दार्ष्टान्तिकमाह एवमिति ।

एवं दुःख्यादिशब्दाश्च स्वातन्त्र्यापेक्षयोदिताः ॥
नैव दोषा हरौ

दोषा दोषहेतवः । प्रथमदृष्टान्तस्यापि दार्ष्टान्तिकमध्याहार्यम् । कथं तर्हि परमेश्वरे दुःखित्वादिवेदनमनर्थहेतुत्वेनोच्यतेऽसन्नेव स भवतीत्यादावित्यत आह तद्बुद्ध्येति ।

तद्बुद्ध्योक्ता दोषकारिणः ॥
तस्माच्च दोषशब्दाश्च तत्रैव गुणवाचकाः ॥

दुःखादीनां तद्गतत्वविवक्षयेत्यर्थः । तस्मादिति श्रुतिः स्वोक्तार्थमुपसंहरति । अतोऽव्यक्तादिशब्दवाच्यः परमात्मेति सिद्धम् ॥ १–४–१ ॥

**शे०**— अत्रेति । दुःख्यादिशब्दानां ब्रह्मणि दोषानभिधायकतया प्रयोज्यत्वं राजादौ तु तदभिधायकतयाऽप्रयोज्यत्वमिति यदुक्तमत्रेत्यर्थः । तत इत्युक्तत्वाद्यत इत्यस्य लाभं तत इत्यस्यावृत्ति अपेक्षितशेषपूरणं चाभिप्रेत्य योजयति यत इत्यादिना ॥ दृष्टान्तेनेति । तथा च दृष्टान्तोपदर्शनार्थत्वान्नोत्तरवाक्यवैयर्थ्यमिति भावः । ननु बहुभुगितिशब्दस्य हरौ यथा न दोषप्रत्यायकत्वमत एव तत्र

---

प्रयोज्यत्वं चेति द्वितीयदृष्टान्तस्यैवं दुःख्यादिशब्दा हरौ न दोषप्रत्यायकास्तत एव तत्र प्रयोज्या इति दार्ष्टान्तिकाभिधानेऽपि बहुभुगितिशब्दस्य देवदत्ते दोषप्रत्यायकत्वं तत एवाप्रयोज्यत्वं च यथेति प्रथमदृष्टान्तस्य दार्ष्टान्तिकानुक्तेर्न्यूनत्वमित्याशङ्क्यैवं बद्धादिशब्दा राजादौ दोषप्रत्यायकास्तत एवाप्रयोज्याश्चेति दार्ष्टान्तिकमध्याहार्यमित्याह प्रथमदृष्टान्तस्यापीति ॥ दुःखित्वादिवेदनमिति । यद्यपि तैत्तिरीयभाष्येऽसन्नेवेति वाक्यं 'पञ्चरूपं च तद्ब्रह्म जीवादन्यन्न विद्यते । इति ये तु विजानन्ति तेऽसन्तस्तमआलया' इत्यादिनैक्यादिज्ञानस्यैवानर्थादिहेतुताप्रतिपादकतया व्याख्यातम् । न तु परमेश्वरे दुःखित्वादिवेदनस्य, तथाऽपि 'नासतो विद्यतेऽभावो नाभावो विद्यते सत' इत्येतद्व्याख्यानावसरे भावाभावपर्याययोः सदसच्छब्दयोः सुखदुःखादौ प्रयोगप्रदर्शनार्थमाचार्यैर्गीतातात्पर्यनिर्णयेऽस्य वाक्यस्योदाहृतत्वात्तदनुरोधेन तत्रैव ब्रह्म दुःखीति वेद चेत्तर्हि स वेत्ता दुःख्येव भवति ब्रह्म सुखरूपमिति वेद चेत्तमेनं वेत्तारं सुखिनं विदुरित्येतद्वाक्यव्याख्यानस्य तदभिमतत्वसिद्धिरित्याशयेनैवमुक्तमिति ध्येयम् । 'अतो दोषातिदूरत्वादि'त्युपसंहृतत्वा'त्तस्माच्च दोषशब्दाश्चे'तिपुनरुपसंहारानर्थक्यमित्यतो नायं भाष्यकारीयोपसंहारः किन्तु वासुदेवश्रुतिश्चाहेति सम्मतितयोदाहृतश्रुतेरेवेति नानर्थक्यमित्याह तस्मादितीति ॥ स्वोक्तमिति । नैव विष्णावमङ्गलमित्यादिना स्वोक्तमित्यर्थः ॥ १–४–१ ॥

स० — मङ्गलामङ्गलेऽन्यत्रेत्यत्र 'ईदूदेद्द्विवचनमि'ति प्रगृह्यसंज्ञाभावः वेदत्वाद्वा, मणीवादित्वेन प्रकृतिभावनिषेधो द्रष्टव्यः ।

**उभयस्यापीति** । बहुभुक्त्वनिन्द्यत्वयोरित्यर्थः । यद्वा निन्द्यत्वास्वार्थत्वयोरित्यर्थः । **दार्ष्टान्तिकमाहेति** । नैव हरौ क्वचिदिति अनेनोक्तस्य यथा बहुभुक्परमेश्वर इति उक्ते संतृप्तत्वलक्षणो गुण एव प्रतीयते न दोष इति द्वितीयदृष्टान्तस्य दार्ष्टान्तिकमाहेत्यर्थः ॥ **प्रथमदृष्टान्तस्यापीति** । बहुभुक्त्वं यथा दोषो नृष्वित्यनेनोक्तस्य बहुभुक् देवदत्त इत्युक्ते बहुभोगवान् इति निन्द्य इति प्रतीयत इत्यस्य प्रथमदृष्टान्तस्यापि वं राजा बद्ध इत्यादयोऽपि दोषप्रतीतिहेतव इति न प्रयोगार्हा इति दार्ष्टान्तिकमध्याहार्यमिति भावः । परमेश्वरे दुःखित्वादिवेदनमिति । 'पञ्चरूपं च तद्ब्रह्म जीवादन्यन्न विद्यते । इति ये तु विजानन्ति तेऽसन्तस्तमआलया' इति व्याख्यातत्वेऽपि जीवैक्यवेदने दुःखित्वादिवेदनमवर्जनीयमेवेत्याशयेनैवमुक्तमित्यवधेयम् ।

प० — विष्णौ त्विति तुशब्दस्यान्वयेनानुवादोऽन्यत्र त्विति । मूले श्रुतित्वादेव ईदूदेद्द्विवचनमिति प्रगृह्य संज्ञानाश्रितेति भावः ।

**उभयस्यापि देवदत्ते संभवेनेति** । बहुभुक्त्वनिन्द्यत्वरूपोभयस्येत्यर्थः ॥ **दार्ष्टान्तिकमाहेति** । बहुभुक्त्वं यथेत्यव्यवधानेनोक्तदृष्टांतस्य दार्ष्टान्तिकमाह वासुदेवश्रुतिरित्यर्थः ॥ **प्रथमदृष्टान्तस्यापीति** । राज्ञि बद्धमृतादिशब्दप्रयोगे दोषो यथा एवं हरौ बद्धमृतादिशब्दाः स्वातंत्र्यापेक्षया प्रयुज्यंते चेन्न दोष इत्येतदध्याहार्यमित्यर्थः । यद्वा बहुभुक्त्वमित्यादिदृष्टान्तद्वयम् । बहुभुक्त्वं यथा नृषु दोषस्तथा राज्ञि बद्धादिशब्दप्रयोगो दोष इति दार्ष्टान्तिकमध्याहार्यमित्यर्थः । हरौ यथा न दोष इति द्वितीयदृष्टांतस्यैवमित्यादिदार्ष्टान्तिकमित्यर्थः ॥ **दुःखित्वादीति** । 'असद्ब्रह्मेति चेद्वेद' इत्यादिनोक्तदुःखित्वादिवेदनमित्यर्थः । 'जीवान्यत् ब्रह्म असत्' = 'दुःखिजीवात्मकमेव ब्रह्म' इति वेदनस्य दुःखित्ववेदनरूपत्वादिति भावः । 'अतो दोषातिदूरत्वात्' इति भाष्यकृतोपसंहृतत्वादाह **श्रुतिः स्वोक्तार्थमिति** । अधिकरणार्थमुपसंहरति **अत इति** ॥ १ । ४ । १ ॥

या० — **मङ्गलामङ्गलेऽन्यत्रेति** मूले ईदूदेद्द्विवचनमिति प्रगृह्यसंज्ञाभावः छान्दसः । मणीवादित्वेन प्रकृतिभावनिषेध इति वा ज्ञातव्यम् ।

**दार्ष्टान्तिकमाहेति** । नैव हरौ क्वचिदित्यनेनोक्तस्य द्वितीयदृष्टान्तस्य दार्ष्टान्तिकमाहेत्यर्थः ॥ **प्रथमदृष्टान्तस्येति** । 'बहुभुक्त्वं यथा दोषो नृष्वि'त्यनेनोक्तस्य प्रथमदृष्टान्तस्याप्येवं बद्ध इत्यादिकं राज्ञि दोषप्रतीतिजनकमतो न तत्र प्रयोगार्हमिति दार्ष्टान्तिकमध्याहार्यमित्यर्थः ॥ **दुःखित्वादिवेदनमिति** । यद्यपि तैत्तिरीयभाष्येऽसन्नेवेति वाक्यं 'पञ्चरूपं च तद्ब्रह्म जीवादन्यन्न विद्यते । इति

ये तु विजानन्ति तेऽसन्तस्तमआलयाः' इति ऐक्यज्ञानस्यैवानर्थहेतुताप्रतिपादकतया व्याख्यातं न परमेश्वरे दुःखित्वादिवेदनस्यानर्थहेतुताप्रतिपादकतया । तथाऽपि 'नासतो विद्यतेऽभावो नाभावो विद्यते सतः' इत्येतद्व्याख्यावसरे भावाभावशब्दपर्यायसदसच्छब्दयोः सुखदुःखादौ प्रयोगप्रदर्शनार्थमाचार्यैर्गीतातात्पर्ये अस्य वाक्यस्य गृहीतत्वाद्ब्रह्म दुःखीति वेद चेत्तर्हि स वेत्ता दुःख्येव भवतीत्यप्येतद्वाक्यस्यार्थो वर्णनीय इत्याशयेनैवमुक्तमित्यवधेयम् ॥ १–४–१ ॥

**श्री०— इत्यादाविति** । 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः' इति वचनेन सच्छब्दस्य सुखवाचित्वेनासच्छब्दस्य दुःखवाचित्वाद्ब्रह्मासत् दुःखीति वेद चेत्स्वयमपि दुःखी भवतीत्यर्थः ॥ १ ४–१ ॥

## ॥ इति आनुमानिकाधिकरणम् ॥

सु० — ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥ **ज्योतिष्टोमेन स्वर्गकामो यजेत। वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिकर्मकाण्डगते वाक्ये संदेहः किमेतत् ब्रह्मणि समन्वेत्युत नेति। नेति पूर्वः पक्षः। तथाहि। किमत्र वाक्यार्थो ब्रह्म किंवा पदार्थः। नाद्यः। ज्योतिष्टोमकर्तव्यतादेर्वाक्यार्थतया प्रतीतेः। न द्वितीयः। पदानि हि अमूनि किं रूढ्या ब्रह्मवाचीनि किंवा योगेन। आद्येऽपि किं प्रसिद्धवसन्ताद्यात्मकत्वेन तत्पदानां ब्रह्मणि रूढि-राश्रीयते उत पृथगेव। नाद्यः। तेषां जडत्वानित्यत्वादिना ब्रह्मणोऽपि दूषणप्रसङ्गात्। न द्वितीयः। अनेकार्थतास्वीकारस्यान्याय्यत्वात्। न हीश्वरे वसन्तादिशब्दानां रूढिः प्रमा-णवती। न च रूढ्या समन्वयसमाश्रयणे प्रयोजनमस्ति। गुणपूर्त्यसिद्धेः। नापि योगेन। योगस्य रूढेर्जघन्यवृत्तित्वेन मुख्यार्थताऽसिद्धेः। न चैवंविधं योगमपि पश्यामः। योगे च प्रकृत्यादिविभागः पूर्वोत्तरपदविभागश्चाङ्गीकरणीयः। तत्र प्रकृत्यादेरीश्वरवाचित्वमस्ति न वा। आद्ये योगानुपपत्तिः सामर्थ्याभावात्। द्वितीये ब्रह्मणि सर्वशब्दसमन्वयानुपपत्तिः। प्रकृत्यादेरन्यपरत्वात्। किञ्च सर्वेषां पदानां ब्रह्मपरत्वे विभक्तिवैयर्थ्यं कर्मानुष्ठानविलोपश्च प्राप्नोति। क्रियोपहितरूपत्वात्कारकाणां क्रियाभिधायकस्य चाभावात्। अनुष्ठापकप्रमाणा-न्तरादर्शनात्। तस्मादयुक्तं समन्वयसूत्रमिति।**

---

शे० — ॐ **ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके** ॐ ॥ पदार्थतया वाक्यसमन्वया-क्षेपपरिहारार्थत्वान्न भगवति सकलशब्दयोगनिरूपणपरोत्तरभाष्यवैयर्थ्यमित्याशयेनोदाहरणसंशयप्रदर्शन-पूर्वकं वाक्यानां भगवति समन्वयाक्षेपप्रकारं दर्शयति **ज्योतिष्टोमेनेत्यादि** ॥ **एवमेवेति**। पृथगेवेत्यर्थः ॥ क्वचित्तथैव पाठः। **अन्याय्यत्वादिति**। अन्या यश्चानेकार्थत्वमित्युक्तेरिति भावः। नन्वेवमक्षादिशब्दा-नामप्यनेकार्थत्वं न स्यादित्यतस्तत्राभिधानादिरूपप्रमाणबलात्तत्सम्भवेऽपीह तदभावान्न नानार्थत्वं युक्त-मित्याशयेनाह **न हीति**। रूढिज्ञापकाभिधानादेरभावादिति भावः ॥ **न चेति**। नापीत्यर्थः। **गुणपूर्त्यसिद्धेरिति**। तदधीनत्वन्यायेन ब्रह्मणि सर्वशब्दसमन्वये सर्वनियन्तृत्वादन्यस्य गुणस्यासिद्धे-रित्यर्थः ॥ **रूढेरिति**। कर्मादाविति शेषः ॥ **मुख्यार्थताऽसिद्धेरिति**। ततश्च तत्तु समन्वयादित्यव-धारणानुपपत्तिरिति भावः। अङ्गीकृत्य च ब्रह्मणि योगं कर्मादिनिष्ठरूढेस्तस्य दौर्बल्यमभिहितम्। वस्तु-तस्तु योग एवासिद्ध इत्याह **न चेति**। नापीत्यर्थः। 'जातमोतमि'तिवक्ष्यमाणरीत्या योगोपलम्भान्न तदसिद्धिरित्यरुचेराह **योगे चेति**। प्रकृत्यादीत्यादिपदेन प्रत्ययपरिग्रहः ॥ **आद्य इति**। प्रकृत्यादेरी-श्वरवाचित्वे समुदायस्य ब्रह्मणि वृत्तिर्न स्यादित्यर्थः। तत्कृत इत्यतोऽवयवसमुदाययोर्द्वयोरपिभगवन्नाम-

मात्रत्वेन समुदायस्य भगवत्प्रतिपादने सामर्थ्याभावादवयवार्थस्य पङ्कस्य पङ्कजेति समुदायार्थत्वाभावात् अन्यथा तत्प्रसङ्गादित्याह **सामर्थ्येति** । ततश्च न समुदायोक्तगुणलाभ इति भावः । नन्ववयववृत्त्या समुदायस्य परमेश्वरे वृत्तावयवानामन्यपरत्वाङ्गीकारान्न वृत्त्यनुपपत्तिः पुनस्तदवयवस्याप्यन्यपरत्वमुपादायावयवस्य भगवति वृत्त्युपपत्तेर्न सर्वशब्दसमन्वयानुपपत्तिरित्यरुचेराह **किञ्चेति** । प्रत्येकं सम्बन्धात्प्राप्नोतीत्येकवचनोपपत्तिः । ननु कारकेषु विभक्तयो वर्तन्त इत्यादिनाऽन्यत्र कारकाणामेव विभक्त्यर्थत्वव्यवस्थापनात् । भगवतश्च प्रधानक्रियास्ववान्तरक्रियासु च मुख्यकारकतया तस्यैव विभक्त्यर्थत्वसम्भवात्कथं विभक्तिवैयर्थ्यमित्यतः कारकाणां 'क्रियां कुर्वद्धि कारकमि'ति तल्लक्षणेन क्रियोपहितस्वरूपत्वाद् ब्रह्मणः सर्वशब्दावाच्यत्वपक्षे क्रियावाचकपदेनैव क्रियासिद्ध्या तदुपहितस्वरूपकारकत्वस्य ब्रह्मणि सत्त्वेन तस्य विभक्त्यर्थत्वसम्भवेऽपि सर्वशब्दानां ब्रह्मवाचकत्वे क्रियाभिधायकाभावेन तदसिद्ध्या तदुपहितस्वरूपकारकत्वस्याप्यभावान्न ब्रह्मणो विभक्त्यर्थत्वमित्याशयेनाह **क्रियेति** । कर्मानुष्ठाने लोपमप्युपपादयति **अनुष्ठापकेति** । ज्योतिषा यजेतेत्यादिवाक्यस्थानां ज्योतिरादिशब्दानां ब्रह्मपरत्वेन तत्प्रापकत्वाभावादन्यस्य च कर्मतदङ्गतत्क्रमदेशकालाधिकार्यादिप्रापकस्याभावादिति भावः ।

स० — ॐ **ज्योतिरूपक्रमात्तु तथा ह्यधीयत एके** ॐ ।। **सामर्थ्याभावादिति** ।। प्रकृत्यादेरीश्वरवाचित्वे भगवन्नाममात्रत्वप्रसंगादित्यर्थः । विभक्तिवैयर्थ्यमुपपादयति **क्रियोपहितेति** ।। 'क्रियां कुर्वद्धि कारकमि'ति लक्षणाभावादिति भावः । कारकाणामेव विभक्तिवाच्यत्वात्तेषां च क्रियाभावे अभावाद्विभक्त्यर्थाभावः प्राप्यत इत्युक्तं भवति । कर्मानुष्ठानविलोपश्चेत्युक्तमुपपादयति **अनुष्ठापकेति** ।

प० — ॐ **ज्योतिरूपक्रमात्तु...** ॐ । ज्योतिरादिपदनिरुक्तेः सङ्गत्यर्थं तद्व्यावर्त्यं चोद्यं विवृण्वानो विषसंशयपूर्वपक्षानाह **ज्योतिष्टोमेनेति** । भाष्ये ज्योतिरादिशब्दनिरुक्तावप्यस्योक्तिरत्र पूर्वोत्तरपादविभागस्य स्फुटत्वाद्वक्ष्यमाणाक्षेपस्य सुबोधत्वाय वा ज्योतिःशब्दोपिज्योतिष्टोमपर्याय इति द्योतनाय वा । कालविधिपरे कर्मकर्तव्यत्वाप्रतीतेस्तत्प्रतीतये वा(एव) प्रधानवाक्ये तद्गुणविधिवाक्ये च सर्वत्र संदेह इति द्योतनाय वा निष्फलयूपादिबोधकवाक्यानां फलवज्ज्योतिष्टोमकर्तव्यतापर्यवसानस्य सुज्ञानत्वाय वा ज्योतिष्टोमवाक्यस्याप्युक्तिः ॥ **समन्वेतीति** । शक्तितात्पर्यवद्भवति न वेत्यर्थः । भाष्ये समाकर्षनयस्थवाक्यान्वयादितिगुणसूत्रार्थस्याप्यत्राग्रे 'अङ्गीकृतेऽपि' इत्यादिनावक्ष्यमाणत्वात्तद्व्यावर्त्यकोटिः किमत्र वाक्यार्थो ब्रह्मेति ॥ **ज्योतिष्टोमकर्तव्यतादेः** ज्योतिष्टोमेष्टसाधनत्वादेः । ज्योतिर्नयव्यावर्त्यपूर्वपक्षमाह **न द्वितीय इत्यादिना** । अक्षादिशब्दानामिव न दोष इत्यत आह **न हीति** । आद्यसूत्रव्यावर्त्यमुक्त्वा कल्पनेतिसूत्रव्यावर्त्यमाह **योगेचेति** । एतच्च चोद्यं 'तेषु तेषु पदार्थेषु रूढिः' इत्यादिना निरस्यते । प्रकृत्यादीत्यादिपदेन प्रत्ययग्रहः ॥ **सामर्थ्याभावादिति** । भगवन्मात्रवाचकपदयो-

रन्योन्याकाङ्क्षारूपसामर्थ्याभावादित्यर्थः । **किञ्चेति** । एतदपि सर्वस्य संबुद्ध्यन्ततोक्त्या निरस्यते ॥ **कर्मानुष्ठानविलोपश्चेति** । एतदपि 'तेषु तेषु पदार्थेषु' इत्यादिना निरस्यते । ननु कर्तृकरणत्वादि-कारकत्वसिद्धये विभक्तिसाफल्यमस्त्वित्यत आह **क्रियेति** । क्रियां कुर्वद्धि कारकमिति क्रियोपाधिक-रूपत्वादित्यर्थः । कर्मानुष्ठानविलोपः कुत इत्यत आह **अनुष्ठापकेति** ॥ **अयुक्तं समन्वयसूत्रमिति** । तत्राशेषशब्दसमन्वयस्य प्रतिज्ञानादिति भावः ।

**या०** — ॥ ॐ **ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके** ॐ ॥ नन्वक्षादिशब्देष्वनेकार्थता-स्वीकारो दृश्यत इत्यत आह ॥ **न हीश्वर इति** । अनेकार्थेष्वक्षादिशब्दानां रूढिः प्रमाणवतीति भावः । प्रकृत्यादीत्यत्रादिपदेन प्रत्ययग्रहणम् ॥ **आद्ये योगेति** । जगज्जनकत्वादिगुणलाभाय स्वीकृतयोगानुपपत्तिरित्यर्थः ॥ **सामर्थ्येति** । प्रकृतिप्रत्यययोरुभयोरपि भगवन्नाममात्रत्वेन समुदाय-स्योक्तगुणप्रतिपादने सामर्थ्याभावादित्यर्थः । विभक्तिवैयर्थ्यमुपपादयति ॥ **क्रियोपहितेति** । 'क्रियां कुर्वद्धि कारकमि'ति तल्लक्षणादिति भावः । कारकाणामेव विभक्तिवाच्यत्वात्तेषां च क्रियाभावेऽभावा-द्विभक्त्यर्थाभावः प्राप्त इत्युक्तं भवति । कर्मानुष्ठानविलोपश्चेत्युक्तमुपपादयति **अनुष्ठापकेति** ॥

**श्री०** — ॐ **ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके** ॐ ॥ **पृथगेवेति** । वसन्ताद्यनात्मक-त्वेन पृथगेव तत्र रूढिराश्रीयत इत्यर्थः । **रूढेः** सकाशादिति शेषः । न ह्यमुख्यवृत्त्या प्रतिपादितस्य मुख्यत्वं संभवतीति भावः । **एवंविधं** रूढ्यपेक्षया प्रबलम् । **कारकाणां** विभक्त्यर्थभूतकर्त्रादिकारकाणां । **क्रियोपहितरूपत्वात्** 'क्रियां कुर्वद्धि कारकमि'ति वचनेन क्रियासंबद्धार्थाभिधायकत्वादित्यर्थः ॥ **अभावा-दिति** । क्रियाभिधायकस्यापि यजेतेत्यादेर्ब्रह्मपरत्वादित्यर्थः ।

**च०** — ॥ ॐ **ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके** ॐ ॥ **वाक्यार्थो ब्रह्मेति** । वाक्य-तात्पर्यमात्रगोचर इत्यर्थः । **पदार्थः** पदशक्तितात्पर्यगोचर इत्यर्थः । **अनेकार्थतेति** । अक्षादिशब्दानां नानार्थता प्रामाणिकीति न क्षतिरिति भावः । आद्ये प्रकृतिप्रत्यययोरीश्वरवाचकत्वे **सामर्थ्याभावादिति** । प्रकृतिप्रत्यययोः प्रातिस्विकधर्मावच्छिन्नयोरीश्वरवाचकत्वे भगवन्नाममात्रत्वेन पङ्कजेतिसमुदायस्य पङ्कप्रति-पादनसामर्थ्याभाववत्प्रकृतसमुदायस्य भगवत्प्रतिपादने सामर्थ्याभावादित्यर्थः । तथा च न समुदायवृत्त्य-धीनान्वयधीविषयगुणलाभ इति भावः । निखिलशब्दानां ब्रह्मवाचकत्वे धातोरपि तद्वाचकताऽऽपत्त्या क्रियाभिधायकाभावप्रसङ्गेन तदसिध्या तद्घटितमूर्तिककारकाणामप्यभावप्रसङ्गेन तादृशकारकप्रत्यायन-फलकविभक्तीनामानर्थक्यप्रसङ्ग इत्याशयेनाह **क्रियेति** । प्रमाणाभावनियन्त्रितः कर्मानुष्ठानविलोपप्रसङ्ग इत्याह **अनुष्ठापकेति** ।

सु०— अत्रोच्यते । यत्तावदुक्तं किं ब्रह्मणि वाक्यस्यान्वयः किंवा पदानामिति । तत्र तावत्पदानामिति ब्रूमः । न च वृत्त्यसंभवः । योगसद्भावादित्यभिप्रेत्य निर्वक्ति जातमिति ।

अनु०— ॥ ॐ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॐ ॥

जातमोतं हरौ यस्माज्ज्योतिः षः प्राणरूपतः ॥

जिर्जातम् । जनेरौणादिको डिप्रत्ययः । ओतिरोतम् । अवतेः क्तिन् । जातं= जगत् ओतं= प्रविष्टं यस्मिन्नसौ ज्योतिः । प्राणरूपतश्रेष्टकरूपत्वात् । 'षकारः प्राण आत्मे'ति श्रुतेः । ज्योतिश्चासौ षश्चेति ज्योतिषः । तस्य संबुद्धिर्ज्योतिष ।

शे०— 'अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वय' इत्युत्तरत्र वाक्यसमन्वयस्यापि वक्ष्यमाणत्वात्तावदित्युक्तम् । पदानि ह्यमूनि किं रूढ्या ब्रह्मवाचीनि किंवा योगेनेति प्रागुक्तदोषमाशङ्कते न चेति । योगादर्शनशङ्कापरिहारकतया मूलं योजयति योगेति । दोषान्तरं त्वाभासीकरिष्यत इति भावः । औणादिक इति । उणादयो बहुलमिति बहुलग्रहणाज्जनेः कर्तरि डिप्रत्यय इत्यर्थः । ततश्च टेरिति टिलोपे जीति रूपसिद्धिरिति द्रष्टव्यम् ॥ अवतेः क्तिन्निति । प्रवेशार्थादवतेः कर्तरि क्तिन्प्रत्यये ज्वरत्वरेति वकारस्योपधाकारस्य चोठि सवर्णदीर्घे क्तिप्रत्ययस्य कित्त्वेऽप्योमास इत्यादावक्तेर्मनोविसिवीत्यादिना कित्वेऽपि बाहुलकाद्गुणवद्बाहुलकाद्गुणे तिशब्देन क्तिन्क्तिचोर्ग्रहणात्तितुत्रेति निषेधादिडभावे सति ओतिशब्दनिष्पत्तिरिति भावः । यद्वा च्छ्वोः शूडनुनासिके चेति चकारात्किति परतो वकारस्योठि छान्दसत्वादेत्येधत्यूठ्स्विति वृद्ध्यभावेन गुणे सति ओतिशब्दनिष्पत्तिरिति ज्ञेयम् ।

स०— अवतेः क्तिरिति । प्रवेशार्थस्यावतेः क्तिप्रत्यये ज्वरत्वरेत्यादिना ऊठि सवर्णदीर्घे सति क्तिप्रत्ययस्य कित्वेपि ओमास इत्यादौ अवतेः मनोविसिवीत्यादिना कित्वेपि बाहुलकात् गुणवत् ओतप्रोतमित्यादिबहुलमुपलम्भात् बाहुलकात् गुणसंभवेनोतिशब्दनिष्पत्त्युपपत्तिरिति भावः । अन्ये छ्वोः शूडनुनासिके चेति चकारात् किति परतः वकारस्योठि छान्दसत्वादेत्येधत्यूठ्स्विति विधिर्न भवति इत्याहुः ।

प०— अवतेः क्तिन्निति । तथाच ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यकारवकारयोरूठि सवर्णदीर्घे च बहुलग्रहणादाङ्पूर्वकत्वेन वा गुणे सति ओतिरितिरूपमित्यर्थः ॥ प्राण आत्मेति । अस्यार्थोऽग्रे व्यक्तः ।

या०— औणादिक इति । उणादयो बहुलमिति बहुलग्रहणादत्र डिप्रत्यय इति भावः । ततश्च टिलोपे जिरिति रूपमिति ज्ञातव्यम् ॥ अवतेः क्तिरिति । प्रवेशार्थस्यावतेः क्तिप्रत्यये ज्वरत्वरेत्यादिना वकारस्योपधाऽकारस्य चोठि कृते सवर्णदीर्घे कित्यपि छान्दसे गुणे च सति ओतिरिति रूप-

सिद्धिरिति ज्ञेयम् । अन्ये तु 'छ्वोः शूडनुनासिके चे'ति चकारात्किति परतो वकारस्योठ् छान्दसत्वा देत्येधत्यूठ्स्विति वृद्धिर्न भवतीत्याहुः ।

**श्री०— डिप्रत्यय इति** । जनी प्रादुर्भावेऽस्मात् डिप्रत्यये टिभूतान् इत्यस्य लोपे जि इति रूपम् ॥ **क्तिरिति** । अव प्रवेशनेऽस्मात् क्तिप्रत्यये ककारलोपे अकारवकारयोरुकारे दीर्घे च ऊतिरिति स्थिते कित्यपि छान्दसे ऊकारस्य ओकाररूपे गुणे सति ओतिरिति रूपम् । यणादेशे ज्योतिरिति भवति ॥

**च०— औणादिकेति** । उणादयो बहुलमिति बहुलग्रहणात् जनेः कर्तरि डिप्रत्यय इत्यर्थः । डित्वाधीनटिलोपनियन्त्रिता रूपसिद्धिरिति द्रष्टव्यम् । **अवतेः क्तिरिति** । अवरक्षणेत्यादिना प्रवेशनेपि पठितादवतेः कर्तरि क्तिप्रत्य येज्वरत्वरेत्यादिना वकारोपधाकारयोरूठि सवर्णदीर्घे प्रत्ययकित्वाद्बाहुलका-द्गुणे ओतिरिति रूपसिद्धिरिति व्याकर्तारः ।

**अनु०**— आयजेतश्चायजेत:

**सु०—यजतेर्भावे । घञर्थे 'कविधानमि'ति कप्रत्ययः । संप्रसारणाभावः(तु) छान्दसः । यजो यज्ञः । अथवा कर्तर्येव पचाद्यच् । तथा च आ=सम्यक् समन्ताद्वा, यजेन=यज्ञेन कर्मणा याजकेन पुरुषेण वा, इतः प्राप्तः, आयजेतः । सकलयज्ञभोक्ता यज्वभिर्ज्ञानद्वारा प्राप्यश्चेत्यर्थः । तस्य संबुद्धिरायजेत ।**

**शे०**— ननु कर्तरि पूर्वयोगोऽनेन भावे यथा स्यादिति वृत्तावुक्त्वा 'स्नुपिस्थ' इत्यनेन भावे कप्रत्ययविधानेऽपि स्थाधातोरेव तद्विधानात् । यजतेः कथं भावे कप्रत्यय इत्यतो 'ग्रहवृदृनिश्चिगमश्चेति' सूत्रीय'घञर्थे कविधानमि'ति वार्तिकाद्युक्तो यजतेरपि भावे कप्रत्यय इत्याह **घञर्थे कविधानमितीति** । न चात्र घञर्थे घञविधानमेवास्तु किं कविधानेनेति वाच्यम् । तथा सति याज इति प्रसङ्गेन यजेत्ये-तन्निर्देशानुपपत्तिप्रसङ्गेन तदुपपत्तये कविधानस्यार्थवत्त्वात् । न च घञर्थे कविधानं 'स्थास्नापाव्यधिहनियु-ध्यर्थमि'ति वार्तिककृता स्थास्नादिभ्य एव भावे कप्रत्ययविधानाद्यजतेश्च स्थास्नादिष्वभावात्कथमस्माद्वार्ति-कादपि यजतेः क इति वाच्यम् । पाठमूलभूतशिष्टप्रयोगानुरोधेन पाठोऽपि स्थास्नादिष्वस्य कार्यः अन्यथा अतिप्रसङ्गादित्यत्र तात्पर्यात् । ननु 'वचिस्वपियजादीनां किती'ति किति परे संप्रसारणविधानात्प्रकृते च ककारस्य कित्वात्तस्मिन्परतो यजतेर्यकारस्य सम्प्रसारणादिकारेण भवितव्यम् । यजेति तु कथमित्यत आह **सम्प्रसारणाभाव इति** । 'बहुलं छन्दसी'ति सम्प्रसारणप्रकरणे छन्दसि बहुलं सम्प्रसारणोक्तेर्युक्तः

सम्प्रसारणाभावोऽत्रेति भावः । एतदस्वरसादेव पक्षान्तरमाह **अथवेति** ॥ **कर्तर्येवेति** । यजतीति यज इति कर्तर्येवेत्यर्थः । तस्य कर्तर्येव विधानादिति भावः ।

स०— ननु यजेत्यत्र 'वचस्वपियजादीनां किति' इति संप्रसारणे यकारस्येकारे इजेति रूपं स्यादित्यत आह **संप्रसारणाभाव इति** ।

प०— ननु वचिस्वपियजादीनां कितीति संप्रसारणे सति इज इति स्यादित्यत आह **संप्रसारणेति** ।

या०— ननु कथं भावे कप्रत्ययः । तस्य कर्तर्येव विधानादित्यत उक्तम् ॥ **घञर्थ इति** । घञ् च भावेऽपि विहित इति भावः । नन्वेवं 'वचिस्वपि यजादीनां किती'ति किति संप्रसारणविधानाद्य-कारस्येकारे इजेति रूपं स्यादित्यत आह **संप्रसारणाभाव इति** ॥

श्री०— **घञर्थ इति** । भावोऽपि घञर्थो भवतीत्यर्थः । इदं वार्तिकम् । तथाच यज् अस्माद्भावे कप्रत्यये ककारलोपे यज आयजेतिरूपम् । इउऋऌ इतीकां स्थाने यवरला इत्येते यण आदेशा भवन्ति । तत्र यदि वैपरीत्येन यणां स्थाने इको भवन्ति तर्हि तत्संप्रसारणमित्युच्यते । ततश्च प्रकृते यजेत्यत्र वचिस्वपीति सूत्रेण यकारस्येकाररूपसंप्रसारणे सति इजेति स्यादित्यत आह **छान्दस इति** । **कर्तर्येवेति** । तथाच यज अस्मात्कर्तर्यचूप्रत्यये यजो याजक इत्यर्थः । यजधातोर्भावे कप्रत्ययान्त-त्वपक्षे कर्मणा इज इत्यस्य भावमाह **सकलेति** । कर्तर्यचूप्रत्ययान्तत्वपक्षे याजकेन पुरुषेणेत इत्यस्य तात्पर्यमाह **यज्वभिरिति** । कर्मणा साक्षात्प्राप्यत्वाभावाज्ज्ञानद्वारेत्युक्तम् ॥

च०— ननु नियतकर्तृसाधनताककप्रत्ययस्य भावसाधनता न सङ्गच्छत इत्यतस्तां संघटयति **घञर्थ इति** । तथा च घञो भावेऽपि विहिततया वाचनिकी सा=एतस्य संगच्छत इति भावः । ननु वचिस्वपीति यजेः किति संप्रसारणे इजेतिरूपेण भवितव्यमित्यत आह **संप्रसारणाभाव इति** । एतदरुच्यैव कल्पान्तरमनुसरति **अथवेति** ।

अनु०— वसन्तिश्च वसंस्ततः ।

**सु०—वसतेः पचाद्यच् । वसतीति वसः । तनोतेरौणादिको डिप्रत्ययः । तनोतीति तिः । 'वर्णागमो वर्णविपर्ययश्चे'ति पूर्वपदस्य नकारागमः । वसंश्चासौ तिश्चेति वसन्तिः । व्याप्तो वर्तत इत्यर्थः । तत्संबुद्धिर्वसन्ते । द्विरुक्तिरादरार्था ।**

शे०— **औणादिक इति** । उणादयो बहुलमिति बहुलग्रहणादिति भावः । ततश्च टिलोपे तिशब्दनिष्पत्तिरिति ज्ञेयम् । नन्वेवं वसतिरित्येव स्यात् । कथं वसन्तिरितीत्यत आह **नकारागम**

इति । किं तद्विधायकमित्यतो निरुक्तशास्त्रे निरुच्यमानानां शब्दानां पृषोदरादित्वादेव साधुत्वमित्यत्र यः श्लोको वृत्तिकृता पठितस्तमाह **वर्णेति** । अपूर्वस्य वर्णस्यागमनं वर्णागमः । हिनस्तीति सिंह इत्यत्र आद्यन्तवर्णयोर्हकारसकारयोर्व्यत्यासो वर्णव्यत्यय इत्यर्थः । तथा च कौ जीर्यत इति कुञ्जर इत्यत्र नकारस्य वर्णस्य यथाऽऽगमः तथा वसतिरित्यत्र पूर्वपदान्त्यस्य नकाराऽगमे युज्यत एव वसन्तिशब्द-निष्पत्तिरिति भावः । न चैवं 'नच्छव्यप्रशानि'ति रुत्वप्राप्त्या विसर्गसकारयोः सतोर्वसंस्तिरिति स्यादिति वाच्यम् । 'उभयथर्क्षि'ति पूर्वेण नित्यप्राप्तस्य रुत्वस्य छन्दसि विकल्पविधानेनात्र रुत्वाभावोपपत्तेः ।

**म०— पूर्वपदस्येति** । पूर्वपदान्तस्येत्यर्थः ॥ **नकारागम इति** । विग्रहवाक्य इति शेषः । पृषोदरादित्वात्साधुत्वमिति हृदयम् ।

**प०— वर्णागम इति** । 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्त-दर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' इति पृषोदरादिसूत्रोक्तकार्यसंग्रहश्लोकेन वृत्त्युक्तेन पूर्व-पदस्य नकारागम इत्यर्थः । उदाहरणानि तु कौ जीर्यत इति कुञ्जर इत्यत्रोकारस्य मकारागमः । हिनस्तीति सिंह इत्यत्राद्यन्तयोर्विपर्ययो व्यत्यासः । षोडन्निति षकारस्योवर्णरूपापत्तिर्विकारः । पृषोदर-मित्यादौ तकारादेर्लोपो वर्णविनाशः । यस्य धातोर्योर्थः प्रसिद्धस्तस्मादर्थान्तरेण योगतस्तदर्थातिशयेन योग इति । यदेतत्पञ्चविधं निरुक्तं निर्वचनप्रकारः शब्दानां तदनेन सूत्रेणोच्यत इति मञ्जर्यामुक्तानि ॥ **द्विरुक्तिरिति** । वसन्ते वसन्त इति द्विरुक्तिरित्यर्थः ।

**या०— नकारागम इति** । न चैवं 'नश्छव्यप्रशानि'ति रुत्वप्राप्त्या विसर्गसकारयोः प्राप्तौ वसंस्तिरिति स्यादिति वाच्यम् । 'उभयथर्क्षु' इति तदुत्तरसूत्रेण छन्दसि नकारस्य रुत्वं विकल्पेन भवती-त्युक्तत्वेनात्र रुत्वाप्राप्तेरपि सम्भवात् । न च भुङ्क्ष्वेत्यत्रेवात्रापि मकाराऽगम एव कुतो नोक्त इति वाच्यम् । वसंस्तत इति मूले नकारान्तस्य ग्रहणात् । तस्य च श्रुतौ नकाराऽगमसूचनार्थत्वात् । अन्यथा वसस्तत इत्येवावक्ष्यदिति ।

**श्री०— वसतेरिति** । वस निवासेऽस्मात्कर्तर्यचप्रत्यये वस इति रूपम् ॥ **तनोतेरिति** । तनु विस्तारेऽस्माड्डिप्रत्यये टिभूत-अन् इत्यस्य लोपे त्+इ=तिः इति रूपम् । **पूर्वपदस्य** वसइत्यस्य ।

अनु०— विगतच्छादमत्वात्तु गच्छ

**सु०— गमेश्छदेश्च डोऽन्यत्रापि दृश्यत इति डप्रत्ययः । गं विगतं, छं छादन-मविद्यादिकं यस्मादसौ गच्छस्तस्य संबुद्धिर्गच्छ । 'इन्द्रागच्छे'त्यादिव्याख्यानमेतत् ।**

**शे०**— ननु गच्छेति कथं रूपनिष्पत्तिः । न च गमेश्छदेश्च डप्रत्यये डित्वाट्टिलोपे गच्छशब्द-निष्पत्तिरिति वाच्यम् । गमेश्चेत्यतो गम इत्यस्यानुवृत्तौ 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु ड' इति सूत्रे अन्तादिषु कर्मसूपपदेषु सत्स्वेव गमेर्धातोर्डप्रत्ययविधानेन निरुपपदात्तदविधानेन निरुपपदाद्गमेस्तदा-श्रयणानुपपत्तेः । छदेस्तु न सोपपदादपि विधिरस्तीति कथं ड इत्यतो 'डोऽन्यत्रापि दृश्यत' इत्येतत्सूत्रीय-वार्तिकादुभयत्रापि डप्रत्यय इत्याह **गमेश्छदेश्चेति** । यद्यप्युक्तवार्तिकादपि सोपपदाद्गमेरे डो भविष्यति ग्रामग इत्युदाहरणान्नत्वन्यस्मान्न वा निरुपपदाद्गमेरपीति न विवक्षितार्थसिद्धिः । तथाऽप्युक्तवाक्ये सर्वोपाधिव्यभिचारार्थापिपदोपादानात् निरुपपदाद्गमेरन्यस्मादपि च तत्सिद्ध्या विवक्षितार्थसिद्धिरिति द्रष्टव्यम् । यद्यप्यन्येष्वपि दृश्यत इत्यत्रत्यस्यापिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वेन धात्वन्तरादपीति कारकान्तरेऽपीति च तेनैव सिद्धेस्तदेवेहोदाहर्तुं शक्यम् । विभावितं चेदम् 'इको गुणवृद्धी' इति सूत्रे जनेर्ड प्रक्रम्य गमेरप्ययं डो वक्तव्य इति वदता भाष्यकारेण तथाऽपि भूतकाले तेन डप्रत्ययेऽपि भूतकालं विना सर्वकालेऽपि डप्रत्ययसिद्ध्यर्थं वार्तिकोपादानमित्यवधेयम् । वस्तुतस्तु तत्सूत्रलब्धस्यार्थस्यैवायमनुवाद इति न किंचिदेतत् । अत्र च गमेः कर्तरि छदेश्च भावे डप्रत्यय इति विवेकः । विगतच्छादनत्वादिति योगनिरूपणस्य निर्विषयताशङ्कां परिहरति **इन्द्रागच्छेति** ।

**स०**— **गमेश्छदेश्चेति** । गम्लृ गतौ छदि संवरणे इत्येतयोरित्यर्थः ।

---

**प०**—**गमेश्छदेश्चेति** । गम्लृगतौ छदिरावरण आभ्यां सप्तम्यां 'जनेर्ड'इति डप्रकरणे'ऽन्यत्रापि दृश्यत' इति सूत्रेण ड इत्यर्थः ।

**या०**— **गमेश्छदेश्चेति** । गम्लृ गतौ छदि संवरणे इत्येतयोरित्यर्थः । **गं विगतमित्यादि** । तथा च गमेः कर्मणि छदेश्च भावे डप्रत्ययः । तयोश्च टिलोपे गच्छेति प्रातिपदिकद्वयसिद्धिरित्युक्तं भवति ।

**श्री०**— **गमेश्छदेश्चेति** । गम्लृ गतौ । अस्मात् डप्रत्यये छद संवरणे अस्माच्च डप्रत्यये उभयत्रापि टि इत-अम्-अद्-इत्येतयोर्लोपे ग्+अ=ग, छ्+अ=छ । ततश्च गच्छेति रूपम् ।

**अनु०**— भूतक्षयंकरः ।

भुङ्क्ष्वेत्युक्तो हरिः

**सु०**— **भुशब्दो भूतशब्दस्यादेशः क्षयशब्दस्य च क्ष्वः पूर्वपदस्य मकारागमः । पृषोदरादिरयम् । यद्वा क्षि क्षय इत्यस्मात् ड्वप्रत्ययः । अयमपि सम्बुद्ध्यन्तः ।**

---

१. छेच इति सूत्रेण तुगागमे तस्य चुत्वे गच्छेति ।

**शे०**—नन्वेवं भूतानि क्षिणोतीति क्षिधातोः 'एरजि'ति अचि गुणायादेशयोर्भूतक्षय इति भवितव्यं भुङ्क्ष्वेति तु कथमित्यत आह **भुशब्द इत्यादिना** ॥ **क्ष्व इति** । आदेश इति वर्तते । ततश्च भुङ्क्ष्वेति रूपसिद्धिरिति भावः । ननु च विधायकाभावात्कथमादेशादिकमित्यत आह **पृषोदरादिरयमिति** । 'पृषोदरादीनि यथोपदिष्टमि'ति पृषोदरादिगणस्य यथोपदिष्टस्यैव साधुत्वाभिधानात् । ऊर्ध्वं खं मुखमस्येत्युलूखलम् इत्यादौ ऊर्ध्वखशब्दादेरुलूखल इत्याद्यादेशवत् भूतक्षयशब्दयोर्भुङ्क्ष्व इत्यादेशादिकमुपपन्नं पृषोदरादिगणस्याकृतिगणत्वादिति भावः । शब्दद्वयस्योक्तरीत्याऽऽदेशाश्रयणे गौरवं मनसि निधाय भुशब्दो भूतशब्दस्यादेश इति पूर्वपदस्य मकारागम इति चाश्रित्य, क्षयशब्दस्य क्ष्वाऽऽदेशमनाश्रित्य समाधत्ते **यद्वेति** ॥ **ड इति** । उणादयो बहुलमिति बहुलग्रहणात्क्षिणोतेर्ड्वप्रत्ययेऽजादित्वाभावात् यचि भमिति भसंज्ञायामसत्यामपि डित्करणसामर्थ्याट्टिलोपे क्ष्वेति रूपसिद्धिरिति भावः ।

**स०**—**पृषोदरादिरयमिति** ॥ 'पृषोदरादीनि यथोपदिष्टमि'ति पृषोदरादिगणस्य यथोपदिष्टस्यैव साधुत्वाभिधानात् भुशब्दो भूतशब्दस्यादेश इत्यादिकमुपपद्यते । तत्र हि येषु लोपागमवर्णविकाराः शास्त्रेणाविहिता दृश्यन्ते, तानि तथैव शिष्टैरुच्चारितानि साधूनीत्युच्यन्ते । ऊर्ध्वं खं मुखमस्येत्युलूखलमित्यत्रोर्ध्वखशब्दस्योलूखल इत्येतावादेशौ स्त इत्यादि यथा, तद्वत्प्रकृतेऽपीति भावः ।

---

**प०**—**पृषोदरादिरयमिति** ॥ 'पृषोदरादीनि यथोपदिष्टमि'ति षष्ठतृतीयपादे सूत्रम् । तत्रादिशब्दः प्रकारवचनः । यथोपदिष्टमिति वीप्सायामव्ययीभावः । येषु वर्णागमलोपविकाराः शास्त्रेणाविहिता लोके च दृश्यन्ते तानि पृषोदरप्रकाराणि शब्दरूपाणि यथोपदिष्टं शिष्टैः प्रयुक्तानि सर्वाण्यपि साधून्येव मन्तव्यानीति षष्ठतृतीयपादे वृत्त्यादावुक्तत्वात्पृषोदरादिरयमित्युक्तम् । साधूनीत्युक्तत्वाद्ये शब्दाः वर्णागमविकारलोपादियुततया व्यवहृतास्ते तथैव साधवः पृषोदरादिगणे द्रष्टव्या इत्युक्तत्वादयमपि तथैव निर्वाह्य इत्यर्थः ।

**या०**—**पृषोदरादिरिति** । 'पृषोदरादीनि यथोपदिष्टमि'ति पृषोदरादिगणस्य यथोपदिष्टस्यैव साधुत्वाभिधानात भुशब्दो भूतशब्दस्यादेश इत्यादिकमुपपद्यते । तत्र हि येषु लोपागमवर्णविकाराः शास्त्रेणाविहिता लोके च दृश्यन्ते तानि तथैव शिष्टैरुच्चारितानि साधूनीत्युच्यन्ते । यथा ऊर्ध्वं खमस्य-इत्युलूखलमित्यत्रोर्ध्वखशब्दयोःउलू खल इत्येतावादेशौ स्त इत्यादि । तथाऽयमपि तस्याकृतिगणत्वादिति भावः ॥ **ड्वप्रत्यय इति** । तथा च टिलोपे क्ष्वेति रूपमिति भावः ।

**श्री०**—**यद्वेति** । अत्र पूर्ववत् भुशब्दो भूतशब्दस्यादेशस्तस्य च मकारागमश्च तुल्यः, पश्चात् क्षि क्षयेऽस्मात् ड्वप्रत्यये टिभूतस्य इकारस्य लोपे क्ष्+व= क्ष्व । ततश्च भुंक्ष्वेति रूपम् ।

अनु०— हुं च हुतमस्मिन् जगद्यतः ।

सु०— **जुहोतेरधिकरणे मकारप्रत्ययः । कृन्मेजन्त इत्यव्ययत्वम् । हुतं स्वेनैवास्मिन्विष्णौ जगत्प्रलयादौ यतोऽतो हुं च असावित्यर्थः । कर्मविशेषानुक्तेर्जगदित्युक्तम् ।**

शे०— ननु हुतमस्मिञ्जगद्यत इति भाष्यानुसारेण हूयतेऽस्मिन्नित्यधिकरणनिष्पन्नस्य हुंशब्दस्य हवनमिति भवितव्यम् । जुहोतेरधिकरणे ल्युटि 'युवोरनाकावि'त्यनादेशे गुणावादेशप्राप्तेस्तत्कथं हुमिति रूपनिष्पत्तिरित्यतो'ऽर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्'इत्यधिकरणे मन्प्रत्यये बाहुलकान्मन्प्रत्ययस्य टिलोपे बाहुलकादेव गुणाभावे च सति हुमिति रूपनिष्पत्त्युपपत्तिरित्याशयेनाह **जुहोतेरिति** । नन्वेवं कृदन्ततया कृत्तद्धितेति प्रातिपदिकसंज्ञायां सुप्श्रवणापत्तिरित्यतो मान्ततया 'कृन्मेजन्त'इत्यव्ययत्वेनाव्ययादाप्सुप इति तल्लोपान्न सुप्श्रवणप्रसङ्ग इत्याह **कृन्मेजन्त इत्यव्ययत्वमिति** । कृद् यो मान्त एजन्तश्च तदन्तशब्दरूपमव्ययसंज्ञं भवतीत्युदाहृतसूत्रार्थः ॥

स०— **जुहोतेरिति** । हु दानादनयोरिति धातोरित्यर्थः ।

प०— **जुहोतेरिति** । हु दानादानयोरित्यस्मादित्यर्थः ॥ **कृदिति** । कृदन्तं मकारान्त मेजन्तं च शब्दरूपमव्ययं भवतीति सूत्रार्थः ।

या०— **जुहोतेरिति** । हु दानादानयोरिति धातोरित्यर्थः ॥ **कृन्मेजन्त इति** । कृद् यः मान्त एजन्तश्च सोऽप्यव्ययं स्यादिति सूत्रार्थः । स्मारंस्मारमित्याद्युदाहरणम् ।

श्री०— **जुहोतेरिति** । हु दानादानयोरित्यर्थः । तथाच हु अस्मादधिकरणे मकारप्रत्यये हुमिति रूपम् । नन्विदं हुशब्दस्य उकारान्तस्य द्वितीयैकवचनमिव भाति । ततः प्रायपाठविरोध इत्यत आह **कृन्म इति** । कृदन्तः मान्त एजन्तश्चसोऽव्ययं स्यादिति सूत्रेण हुमित्यस्याव्ययत्वं मान्तत्वादिति ध्येयम् ।

च०—**कृन्मेजन्त इति** । कृद् यः । मान्त एजन्तश्च सोऽव्ययं स्यादिति सूत्रार्थः । णमुलन्तादीन्युदाहरणानि ।

अनु०— स्फुटत्वात्फडिति प्रोक्तः

सु०— **स्फुटविकसन इत्यस्मात्कर्तरि क्विप् । सकारलोपः । उकारस्याकारः । स्फुटत्वात्स्वात्मानं प्रति व्यक्तत्वादसंकुचितवृत्तित्वात् (इति) वा ।**

शे० — **क्विबिति** । क्विप्चेति सूत्रेणेति शेषः । ततश्च कृदन्ततया प्रातिपदिकत्वमिति भावः । नन्वेवं स्फुडिति स्यात्कथं फडित्यतो निरुक्तत्वात्सकारलोपाद्युपपत्तेरदोष इत्याह **सकारलोप इत्यादिना** ।

श्री०— तर्हि फुटेति स्यादित्यत आह **उकारस्येति** ॥

**अनु०—** कवरक्षण इत्यतः ( इत्यपि ? ) ।

कवचं

**सु०— कवरक्षण इत्यतः= इत्यस्य(स्मात्) धातो रूपं कवचमित्येतदित्यर्थः । कवतेरच इत्येतावानेव प्रत्ययः । कवति रक्षतीति कवचम् ।**

**शे०—** ननु कवतिरूपत्वे कवतेः कर्तरि पचाद्यचि सति कवेति भवितव्यं तत्कथं कवचमिति रूपनिष्पत्तिरित्यत उणादयो बहुलमिति बहुलग्रहणादच इत्येतावति प्रत्यये सति तत्सिद्धिरित्याशयेनाह **कवतेरिति** ॥ **अच इत्येतावानिति** । अचमित्येतावानित्यर्थः । प्रयोजनाभावाच्च न मकारस्येत्संज्ञा । ततश्च मान्तत्वात्कृन्मेजन्त इत्यव्ययत्वमिति ध्येयम् । यद्वा । अच इत्येतावानेव प्रत्ययः । ततश्च कवच इति स्थिते लोपात्परत्वाद् 'अतोमि'त्यमि कृते परत्वान्नित्यत्वाच्चामि पूर्वरूपत्वे च कृते तस्यान्तवद्भावात् ह्रस्वात्परस्य सम्बुद्धेः संबन्धिनो मकारस्य हे ज्ञानेत्यादिवत् 'एङ् ह्रस्वादि'ति प्राप्तस्य लोपस्य बाहुलकान्निवृत्तौ कवचमिति संबुद्ध्यन्तरूपसिद्धिः ।

**श्री०— कवतेरिति** । ततश्च कवु अस्मात् अच्प्रत्यये कवचेति रूपम् ।

**अनु०—** वर्तते यस्मात्षड्गुणत्वेन सर्वदा ।

---

वषट्

**सु०— वृतु वर्तने डप्रत्ययः, वर्तत इति वः । षड्गुणात्मकत्वात् षट् । वश्चासौ षट् चेति वषट् । तस्य तात्पर्यं वर्तत इत्यादि । ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्याणि षड्गुणाः ।**

**शे०— डप्रत्यय इति** । डोऽन्यत्रापि दृश्यत इति वार्तिकाद्वा 'अन्येष्वपि दृश्यत' इति सूत्राद्वेति शेषः । के ते षड्गुणा इत्यत 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव' इति वचनं मनसि निधाय तानाह **ऐश्वर्येति** ।

**श्री०— डप्रत्यय इति** । ततश्च वृतु वर्तनेऽस्मात् डप्रत्यये टिभूतस्य ऋत् इत्यस्य लोपे व्+अ=व इति रूपम् ॥

**अनु०—** तद्वत्वतस्तेषां वौषट्

**सु०— विः विष्णुः । 'अकयप्रविसंभूमसखह्वा विष्णुवाचकाः' इति वचनात् । तस्मिन् वौ= वर्तमानाः षट्=गुणा वौषट् । सप्तम्या अलुक् । अस्य तात्पर्यार्थः । तेषां षण्णां गुणानां तद्व(त)त्वतो वौषडिति ।**

शे० — **वौ वर्तमानाः षडिति** । वाविति सप्तम्या वर्तमानशब्देन सप्तमीति योगविभागात्समासे सति 'सुपो धातुप्रातिपदिकयोरि'ति प्रातिपदिकावयवतया सुपो लुकि सति विवर्तमानशब्दस्य षट्शब्देन विशेषणसमासे सति विवर्तमानशब्दस्य यदुत्तरपदं वर्तमाना इति तस्य 'शाकपार्थिवादीनामुत्तरपदलोपश्चे'त्यनेन लोप इति भावः । ननूत्तरपदलोपेऽपि विषडिति भवितव्यं तत्कथं **वौ षडिति** सप्तमीश्रवणमित्यतः "तत्पुरुषे कृति बहुलमि'ति बहुलग्रहणात्सप्तम्या अलुक्संभवाद्युक्तं वौषडिति सप्तमीश्रवणमित्याह **सप्तम्या अलुगिति** ।

प० — **इतिवचनादिति** । अन्तर्यामिब्राह्मणे बृहद्भाष्योक्तवचनादित्यर्थः ।

श्री० — **विष्णुवाचका इति** । एकैकमक्षरं विष्णुवाचकमित्यर्थः । तर्हि सप्तम्या लोपे विषडिति स्यादित्यत आह **सप्तम्या इति** ।

अनु० — इत्येव कथ्यते ।

**सु० — न चैवं भगवन्नामत्वानुपपत्तिः । तद्गतगुणानामपि तदात्मकत्वात् । तदिदमुक्तम्** इत्येवेति । **तर्हि कथ्यत इति कथम् । भावे प्रयोगो न कर्मणीत्यतो न दोषः ।**

---

शे० — **अनुपपत्तिरिति** । गुणप्रतिपादकत्वादिति भावः । कथ्यत इत्यस्य कर्मणि निष्पन्नतया विष्णौ वर्तमानषट्शब्दोक्तगुणानामेव कथनक्रियां प्रति कर्मत्वेन तेषां च बाहुल्याद्भाष्ये कथ्यन्त इति बहुवचनेन भवितव्यं कथ्यत इत्येकवचनं तु कथमित्याक्षिपति **तर्हीति** । भावे कथ्यत इत्यस्य निष्पन्नत्वाद्भावस्यैकत्वादेकवचनं युक्तमिति परिहरति **भाव इति** । तथा च विष्णौ वर्तमाना गुणा इति कथ्यत इति कथनमिति योजनोक्ता भवति ॥

स० — ननु कथ्यत इत्यस्य कर्मणि निष्पन्नत्वात्, तत्र च विष्णौ वर्तमानवौषट्शब्दोक्तबहुगुणानामेव कथनक्रियां प्रति कर्मत्वेन तेषां च बहुत्वात् कथ्यन्त इति वक्तव्यं, कथ्यत इत्यनुपपन्नं; इत्याशयेन परिहरति **भावे प्रयोग इति** । तथा च वौषडिति कथनं भवतीत्यर्थः ।

प० — ननु कथ्यत इत्यस्य कर्मणि निष्पन्नत्वेन विष्णौ वर्तमानवौषट्शब्दोक्तषड्गुणानामेव कथनक्रियां प्रति कर्मत्वेन तेषां च बहुत्वात्कथं कथ्यत इति भाष्यमिति शङ्कते **तर्हि कथ्यत इति कथमिति** । भावे कथ्यत इत्यस्य निष्पन्नत्वाद्भावस्य चैकत्वादेकवचनं युक्तमित्याशयेन परिहरति **भाव इति** । इत्येव कथनमित्यर्थ इति भावः ।

**या० — तर्हि तत्कथ्यत इतीति ।** कथ्यत इत्यस्य कर्मणि निष्पन्नत्वात्कर्मतया विवक्षितानां च षड्गुणानां बहुत्वात्कथं कथ्यत इत्येकवचनमिति भावः ॥ **भावे प्रयोग इति ।** भावस्य चैकत्वादेकवचनमिति भावः । तथा च कथ्यत इत्यस्य वौषडिति कथनं भवतीत्यर्थो ज्ञेयः ॥

**श्री० —** वौ वर्तमानाः षट् वौषडिति निर्वचनेन गुणानामेव वौषट्शब्दवाच्यत्वं प्राप्तं न तु भगवत इत्याशङ्क्य निषेधति **न चैवमिति** ॥ **इत्येवेतीति ।** इति पूर्वोक्तरीत्या गुणानामेव वौषडितिशब्दवाच्यत्वं भवति । यतस्ते भगवदात्मकाः । अतो गुणानां तच्छब्दवाच्यत्वोक्तौ भगवत एवोक्तं भवतीति भावोऽभिप्रेतोऽस्तीति भावः ।

**च० —** अथ प्रकृतिविकारभावस्थले 'वृक्षः पञ्चनौका भवती'त्यत्र प्रकृतिभूतवृक्षादेर्विशेष्यतया भवनान्वयित्वात्तद्गतसङ्ख्याबोधकतया प्रकृतिवाचकसमानवचनत्वमाख्यातस्य, 'एको द्वौ ज्ञायते', इत्याद्युभयारोपस्थलीयवाक्ये चैकादिपदार्थस्यारोपविशेष्यस्याख्यातार्थविशेष्यकान्वयधीविशेष्यतया तत्पदसमानवचनत्वमाख्यातस्येति च सिद्धान्तिततया, 'अमानि तत्तेन निजायशोयुगं द्विभागबद्धाश्चिकुराः शिरःस्थितम्' इत्यत्रायशोद्वयस्य वास्तवत्वेन चिकुरभागद्वयस्य नलेन राज्ञा आरोप्यत्वेन कवेरुत्प्रेक्षितत्वेनाख्यातार्थविशेष्यकान्वयधीविशेष्यत्वेनायशोयुगस्यैव विवक्षिततयाऽऽरोपप्रकारवाचके चिकुरपदविरुद्धवचनत्वेप्याख्यातस्य तद्विशेष्यवाचकायशोयुगपदसमानवचनता तस्याक्षुण्णैवेति समर्थिततया च, प्रकृतेऽपि कर्माख्यातोपस्थाप्यार्थनिष्ठप्रकारतानिरूपितविशेष्यताऽऽपन्नानां वैष्णवगुणानां बहुत्वात्तत्पदसमानवचनत्वेनैवाऽऽख्यातस्य भवितव्यतया कथमेकवचनान्ततेत्याशङ्कते **तर्हि कथ्यत इत्यादि ॥ भावेप्रयोग इति ।** नचाकर्मकेभ्य एव भावे लकाराणां विहिततया कथयतेश्च सकर्मकतया कथं तत्प्रकृतिको लकार इति वाच्यम् । अकर्मकेभ्य इत्यत्राविवक्षितकर्मकाणामपि ग्रहणस्य सिद्धान्तितत्वात् । कथमन्यथा नेह पच्यते नेह भुज्यत इत्यादौ भावे लकार इति हरदत्ततदीयग्रन्थाः संगच्छेरन् । तिङ्वाच्यभावनाया असत्व(एकत्व?)रूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि, किं त्वेकवचनमेव तस्यौत्सर्गिकत्वेन सङ्ख्याऽनपेक्षत्वादिति भावः । भावस्यैकत्वादेकवचनमिति भाव इत्यपि निबन्धान्तरीयो विन्यासः ।

**अनु० —** स्वीयं स्वीकुरुते यस्मात्स्वाहेत्युक्तो जनार्दनः ।

**सु० — हरतेर्जहातेर्वा डः । द्वावप्याङ्पूर्वौ(र्वकौ) स्वीकारे वर्तेते । स्वं= स्वभावतः स्वीयमेव हविरादि(इतरेषां) भ्रान्त्याऽस्ववत् प्रतीतं स्वीकुरुत इति स्वाहः । स चासौ अश्चेति स्वाहेति संबुद्धिः ।**

शे०— **हरतेरिति** । हृञ् हरण इत्यस्माद्धरतीति कर्तरि ड: 'अन्यत्रापि दृश्यते' इत्यनेन वा 'अन्येष्वपि दृश्यते' इत्यनेन वा डप्रत्यये डित्वाट्टिलोपे हशब्दनिष्पत्ति: । यद्वा । ओहाक् त्याग इत्यस्मादुक्तरीत्या जहातीति कर्तरि डप्रत्यये डित्वाट्टिलोपे उक्तशब्दनिष्पत्तिरित्यर्थ: । तर्हि स्वीकुरुत इति कथं भाष्यकारीयव्याख्यानमित्यत: 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थ: प्रदर्शित: । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातव:' इति सत्यपि समाधाने प्रहार आहार: संहारो विहार: परिहार इत्यादाविव सोपसर्गत्वादुक्तधातुद्वयस्योपसर्गस्य च प्रसिद्धधात्वर्थबाधेनार्थान्तरपरत्वव्यवस्थापकत्वाद्युक्तं स्वीकारार्थतया भाष्यकारीयं व्याख्यानमित्याशयेनाह **द्वावपीति** । स्वीकुरुत इत्यभूततद्भावार्थच्विप्रत्ययार्थप्रदर्शनम् **भ्रान्त्याऽस्ववदिति** । कथं तर्हि स्वाहेति दीर्घश्रवणमित्यत: स्वाहशब्दस्य अशब्देन विशेषणसमासेनाऽऽकारान्तप्रातिपदिकनिष्पत्तेर्युक्तं दीर्घश्रवणमित्याह **स चासाविति** ॥ **अश्चेति** । अशब्दवाच्यश्चेत्यर्थ: । तर्हि विश्वपा: इत्यादिवत्स्वाहा: इत्येव प्रथमैकवचनं स्यात्सम्बुद्धावपि 'एङ्ह्रस्वात्सम्बुद्धे:' इत्यादेरप्रवृत्तेरित्यत: शब्दस्वाभाव्यात्स्वाहेत्यस्याव्ययतया 'अव्ययादाप्सुप' इति सुपो लुकि सति स्वाहेत्याकारान्तस्यैव सम्बुद्ध्यन्तत्वसिद्धेरित्याशयेनाह **स्वाहेति** ॥ **सम्बुद्धिरिति** । यद्यप्यसम्बुद्धिपक्षेऽप्युक्तरीत्या विसर्गाश्रयणस्योपपादयितुं शक्यत्वात्सम्बुद्धित्वाश्रयणमनर्थकम् । तथाऽपि वसन्त इत्यादिसम्बुद्धिप्रायपाठात्तदाश्रयणं कृतमिति ध्येयम् ।

स०— **हरतेर्जहातेर्वेति** । हृञ्हरणे इत्यस्य ओहाक्त्याग इत्यस्य वा धातोरित्यर्थ: । भ्रान्त्या अस्ववत्प्रतीतमिति स्वीकुरुत इत्यत्रत्यच्विप्रत्ययव्याख्यानमित्याहु: ।

प०— **हरतेरिति** । हृञ्हरण इत्यत: ओहाक् त्याग इत्यतो चेत्यर्थ: । जुहोतेरिति पाठे हुदानादनयोरित्यत इत्यर्थ: ॥ **स चासावश्चेतीति** । स्वाह अ इत्यनयो: सवर्णदीर्घे स्वाद्युत्पत्तौ सु इति स्थितौ 'अन्तादिवच्च' इति सवर्णदीर्घस्य पूर्वान्तवद्भावेन ह्रस्वत्वे 'एङ्ह्रस्वात्सम्बुद्धेरि' ति सुलोप: ।

या०— **हरतेर्जहातेर्वेति** । हृञ् हरण इत्यस्य ओहाक् त्याग इत्यस्य वा धातोरित्यर्थ: । स्वीकुरुत इत्यत्र च्विप्रत्ययार्थं दर्शयति **भ्रान्त्या अस्ववदिति** ॥ **स्वाहेति सम्बुद्धिरिति** । इदं च स्वाहेत्याकारान्तमव्ययमित्यभिप्रेत्योक्तम् । अन्यथा आकारान्ते सम्बुद्धौ सुलोपाभावात्स्वाहा: इति सम्बुद्धिरिति स्यादिति ज्ञातव्यम् ।

श्री०— **हरतेरिति** । तथा च आङ्पूर्वकात् हृञ् हरणेऽस्मात् डप्रत्यये ऋकारलोपे आह् अ आह इति भवति । जहातेर्वा रूपम् । तथा च आङ्पूर्वकात् ओहाक् त्यागेऽस्मात् डप्रत्यये टिभूताकारलोपे आ+ह्+अ=आह इति भवति ॥ **द्वावपीति** । उभावप्युक्तौ धातू इत्यर्थ: ॥ **स्वीकार इति** । धातुद्वयार्थ-

भूनौ हरणत्यागौ स्वीकारार्थकावित्यर्थः ॥ **स्वमिति** । तथाच स्व आहेत्यत्र सवर्णदीर्घे स्वाह इति भवति । ननु तर्हि स्वाहशब्दस्य सम्बुद्धिः स्वाह इत्येव स्यात् स्वाहा इत्याकारः किमर्थ इत्यतः सोऽपि भगवद्वाचक एवेत्याह **स चासाविति** । स्वाहश्चासौ अश्चेति विग्रहः सवर्णदीर्घे सति स्वाहा इति भवति पश्चात्स्वद्युपचौ प्रथमैकवचनं स्वाहाः इति भवति । सोमपाशब्दवदाकारान्तः पुल्लिङ्गस्तस्य सम्बुद्धिः स्वाहेत्येव भवतीति द्रष्टव्यम् । **नन्वाकारान्ते सम्बुद्धौ सुलोपाभावात् हे सोमपाः इतिवत् हे स्वाहाः** इत्येव स्यादिति वाच्यम् । छान्दसस्य सुलोपस्याङ्गीकारादित्याहुः ॥

अनु०— नमन्त्यस्मिन्गुणा यस्मान्नम इत्येव कथ्यते ।

**सु० नमतेरधिकरणेऽसुन्प्रत्ययः । नपुंसकलिङ्गता तु शब्दानुसारिणी । गुणा इति योग्यतया संबन्धः । नमनेनात्यन्तिकसंबन्धमुपलक्षयति । अथवा अस्मिन्= परमेश्वरे विषये गुणाः= उपसर्जनभूता ब्रह्मादयो नमन्ति प्रह्वीभवन्तीति व्याख्येयम् ।**

शे० — नमन्तीत्यादि कथं नमःशब्दव्याख्यानमित्यतः प्रकृतिप्रत्ययविभागकल्पनया तल्लाभं दर्शयति **नमतेरिति** ॥ **असुनिति** । औणादिकसूत्रेण सर्वधातुभ्योऽसुन्प्रत्ययविधानादिति भावः । ननु भगवतः परमपुरुषत्वेन नपुंसकत्वाभावात्कथं नम इति नपुंसकलिङ्गशब्दप्रयोगस्तत्रेत्यतो नपुंसकलिङ्गस्यार्थसाधुत्वाभावेऽपि कलत्रादिशब्देष्विव प्रयोगसाधुत्वान्नपुंसकलिङ्गनमोब्रह्मादिशब्दप्रयोग इत्याह **नपुंसकलिङ्गतेति** । यद्यप्यधिकरणेऽसुनि निष्पन्नपुल्लिङ्गनमःशब्दसम्बुद्ध्यन्ततया नम इत्यस्योपपत्तेर्न तच्चोद्यावकाशः तथाऽपि कवचमित्यादिनपुंसकलिङ्गसद्भावात्तत्रायं न्यायः फलिष्यतीत्यभिप्रायेणेदमुक्तम् । यद्यपि चैतत्तत्रैव वक्तुमुचितं तथाऽप्यापाततो नम इत्यस्यापि नपुंसकत्वप्रतिभासात्, यस्मादस्मिन्गुणा नमन्त्यतो नमा इत्येवं भाष्ये पुल्लिङ्गस्य नमःशब्दस्य प्रयोक्तव्यतया तथाऽप्रयोगाद्भाष्येन पुंसकनमःशब्दाश्रयणप्रतीतेर्वाऽत्रोक्तम् । अत एव ज्योतिरादिशब्देषु स्वयं विग्रहं प्रदर्श्य नमःशब्दे भाष्य एव तत्प्रदर्शनात्स्वयं तदप्रदर्शनमिति ध्येयम् । प्रकृत्यादिविभागकल्पनयाऽपि न गुणानां लाभ इति भाष्ये तदुक्तिरनर्थिकेत्यत आह **गुणा इतीति** । गुणानां प्रह्वीभावरूपनमनकर्तृत्वाभावादर्थानुपपत्तिरित्यत आह **नमनेनेति** । अत्र पक्षे लक्षणाऽऽश्रयणं भवतीत्यतो गुणा नमन्तीत्येतद्भाष्यस्वारस्याय पक्षान्तरमाह **अथवेति** ।

स०— ननु भगवद्वाचित्वे नमःशब्दस्य पुल्लिङ्गता स्यादित्यत आह **नपुंसकलिङ्गता त्विति** । ब्रह्मशब्दवत्स्वभाव इत्यर्थः । यद्यप्यत्र नमःशब्दस्य पुल्लिङ्गत्वेऽपि संबुद्ध्यन्तत्वेनोपपत्तिः संभवति तथापि गत्यन्तरे विद्यमाने प्रथमान्तत्वेनैवोपपत्तौ संबुद्ध्यन्तत्वं किमित्याश्रयणीयं, पूर्वशब्देषु गत्यन्तरं नास्तीति तदाश्रयणमिति हृदयम् ।

प० — ननु नमन्त्यस्मिन्गुणा यस्मादिति निरुक्त्यनन्तरं प्रथमया निर्दिष्टव्यत्वान्नमा इति भाव्य-मित्यत आह **नपुंसकेति** ॥ **आत्यन्तिकेति** । यावद्द्रव्यभावित्वं वा तादात्म्यसंबन्धेन वेत्यर्थः । तेन कथं गुणानां प्रह्वीभाव इति निरस्तम् ।

या० — ननु नमःशब्दस्य भगवद्वाचकत्वे पुल्लिङ्गता स्यादित्यत आह **नपुंसकलिङ्गतेति** । ब्रह्मशब्दादाविव शब्दस्वभावानुसारिणीत्यर्थः ॥

श्री० — **नमतेरिति** । (णमु) नम् प्रह्वत्वे शब्देचेत्यस्मादसुन्प्रत्यये नकारलोपे सकारस्य रुत्वे विसर्गे च नम इति रूपम् । ननु गुणानां भगवति कथं प्रह्वीभावरूपं नमनमित्यत आह **नमनेनेति** ।

**सु० — एवं योगवृत्त्या पदसमन्वयेऽङ्गीकृते लब्धं प्रयोजनमाह इत्यशेषेति ।**

**अनु० —** इत्यशेषक्रियानामशब्दैरेको जनार्दनः ।
उच्यते मुख्यतो यस्मात्पदवर्णस्वरात्मभिः ॥
तस्मादनन्तगुणता

**इति=उक्तदिशा । तेन न विभक्त्यार्थानुपपत्तिः । क्रियाशब्दा आख्यातपदानि । नामशब्दाः सुबन्त(पद)ानि । 'एक' इति शब्दान्तरन्यायेन प्राप्तं भेदमपाकरोति । अभिधेयभेदे हि नानन्त-गुणता सिध्यति । मुख्यतो योगवृत्त्या । क्रियानामशब्दैरित्यस्यानुवादः पदवर्णस्वरात्मभिरिति । न केवलं पदवर्णात्मभिः किं तूदात्तादिस्वरात्मभिश्च । ननु वर्णानामपि वाचकत्वे विभक्त्यन्तत्वे च पदत्वमेव । तत्किमर्थं पृथग्ग्रहणम् । एकानेकवर्णात्मकत्वविवक्षयेति ब्रूमः । अनन्तगुणता सिद्ध्यतीति शेषः । हिशब्दोऽपर्यायत्वादिति सूचयति । अनेन रूढिमात्रेण पदसमन्वयाङ्गीकारो निष्प्रयोजनः अनन्तगुणत्वासिद्धेरिति पूर्वपक्षिणोक्तं परिहृतमित्युक्तं भवति ।**

**ननु च न निर्वचनस्य शक्यकरणत्वमात्रेणानन्तगुणत्वं परमेश्वरस्य वेदतः सिध्यति । निर्वचनस्य व्याख्यातृमतिपरिकल्पितस्यार्थान्तरेऽन्यथा च सम्भवात् । अन्यथा श्वित्री शोधनं करोति इत्यभिप्रायेण प्रयुक्तस्य श्वेतो धावतीति वाक्यस्य इतः सारमेयो द्रुतं गच्छतीत्यपि प्रमेयं प्रसज्येतेत्यत उक्तम् श्रुतीति ।**

श्रुतितात्पर्यतोऽस्य हि ॥

**भवेदेवम् यदि वसन्त इत्यादिश्रुतीनामुक्तविधनिर्वचनेन परमेश्वरगुणेषु तात्पर्यं न स्यात् । तच्चास्तीत्युपपादयिष्याम इति च हिशब्दः । योगवृत्त्यङ्गीकारस्य प्रयोजनान्तरमाह विज्ञानेति ।**

विज्ञानार्थत्वतः सर्वशब्दानां नास्ति दूषणम् ॥

वैदिकानां सर्वशब्दानामेवं योगवृत्त्या विज्ञानार्थत्वतोऽनन्तगुणोपेततया परमेश्वरज्ञानार्थत्वेनाङ्गीकृतत्वाद्रसन्ताद्यात्मकतया रूढ्यङ्गीकारप्रयुक्तं यदनित्यत्वादिदूषणमुक्तं तन्नास्तीत्यर्थः । तदनेन 'ज्योतिरि'ति सूत्रस्य लेशतस्तात्पर्यमुक्तं भवति । एवं कर्मकाण्डस्य ब्रह्मणि प्रतिपदसमन्वयप्रतिपादनेन समन्वयसूत्रस्यानुपपत्तिः परिहृता । इदानीं वाक्यान्वयपक्षाङ्गीकारेणापि तां परिहरति अङ्गीकृतेऽपीति ।

अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये ॥

वाक्यसमन्वयेऽङ्गीकृतेऽपि ब्रह्मणि वसन्त इत्यादिवाक्यानां समन्वयाङ्गीकारादपि दोषः समन्वयसूत्रानुपपत्तिर्नैवास्तीत्यर्थः । अनेन वाक्यान्वयादिति सूत्रस्य तात्पर्यमुक्तं भवति ।

शे० —इतीत्यस्य व्याख्यानम् उक्तदिशेति । ज्योतिष आयजेतेत्यादिसम्बुद्धिरूपपदच्छेदमङ्गीकृत्य प्रदर्शितस्तुतिरूपत्वेनेत्यर्थः । तत्प्रयोजनमाह तेनेति । ज्योतिषा यजेतेत्यादिपदच्छेदस्य वाक्यसमन्वयोपयुक्तस्य पदसमन्वयदशायामनङ्गीकारेण तदा क्रियाकारकविभक्तीनामेवाभावान्न तदर्थानुपपत्तिरिति भावः ॥ शब्दान्तरेति । शब्दान्तरे कर्मभेद इत्यधिकरणोक्तन्यायेनेत्यर्थः । अयं च न्याय आनन्दमयाधिकरणे विवृतस्तत्रैवानुसन्धेयः । पदवर्णस्वरात्मभिरित्यस्य क्रियानामशब्दैरित्यनेन पौनरुक्त्यं परिहरति क्रियेति । ननु निष्प्रयोजनत्वादनुवादवैयर्थ्यमित्यतोऽधिकविधानार्थत्वान्न तदित्याह न केवलमिति । शक्तं पदमित्यभिप्रायेण वाचकत्व इत्युक्तम् । सुप्तिङन्तं पदमित्यभिप्रायेणोक्तं विभक्त्यन्तत्व इति ॥ अनेनेति । अनन्तगुणताऽस्य हीत्यनेन भाष्यखण्डेनेत्यर्थः ॥ परिहृतमिति । अनङ्गीकारेण परिहृतमित्यर्थः ॥ व्याख्यातृमतिपरिकल्पितस्येति । तन्मतेरनेकरूपत्वादिति भावः । श्वेत इत्यस्यार्थः श्वित्रीति । कुष्ठ इत्यर्थः । धावतीत्यस्यार्थः शोधनं करोतीति । धावुगतिशुद्ध्योरिति धातुव्याख्यानादिति भावः । इतः सारमेय इत्यनेन श्वा इत इति पदच्छेदो दर्शितो भवति । उपपादयिष्याम इति । 'एतमेव तथा सन्तमि'त्यादिनेति शेषः ॥ प्रयोजनान्तरमिति । 'इत्यशेषक्रियानामे'त्यादिना योगाङ्गीकारप्रयोजनस्योक्तत्वात्प्रयोजनान्तरमित्यन्तरशब्दप्रयोगः ॥ अनेनेति । 'जातमोतमि'त्यादिभाष्येणेत्यर्थः ॥ लेशत इति । सङ्क्षेपेणेत्यर्थः । तत्र इत्यशेषेत्यनेन ज्योतिरिति सौत्रप्रतिज्ञाभागस्य जातमोतमित्यादिना हेतुभागस्य तात्पर्यनिरूपणमिति ज्ञेयम् । तां समन्वयसूत्रानुपपत्तिम् ॥ परिहरतीति । ततो न तद्वैयर्थ्यमिति भावः ।

स० — **तेन न विभक्त्यर्थेति** । उक्तरीत्या प्रकृत्यादीनां अन्यपरत्वाङ्गीकारादिति भावः । न चैवं तत्पक्षोक्तदोषप्राप्तिः । तेषामेव स्थलान्तरे पृथक्पदत्वेन भगवत्परत्वसंभवात् । विशदं चैतत् ऋग्भाष्यटीकायां ॥ **शब्दान्तरन्यायेनेति** । अयं न्यायः आनन्दमयाधिकरणे प्रदर्शितोऽस्माभिस्तत्रैवानुसंधेयः । केचित्तु यथा यजति ददाति जुहोतीत्यादौ शब्दान्तरात् कर्मभेदो दृष्ट इति शब्दान्तरन्यायमाहुः ॥ पदवर्णस्वरात्मभिरित्यस्य क्रियानामशब्दैरित्यनेन पौनरुक्त्यं परिहरति **क्रियानामशब्दैरित्यस्यानुवाद इत्यादि** ॥ ननु निष्प्रयोजनत्वादनुवादवैयर्थ्यमित्यतोऽधिकविधानार्थमित्याह **न केवलमिति** ॥ **वाचकत्व इति** । शक्तं पदमित्यभिप्रायेणेदं । **विभक्त्यन्तत्वे चेति** । सुप्तिङन्तं पदं इत्यभिप्रेत्येदमुक्तं । **श्वेत इत्यस्यार्थः श्वित्रीति** । कुष्ठ इत्यर्थः । **धावतीत्यस्यार्थः शोधनं करोतीति** ॥ **सारमेय इति** ॥ अत्र श्वा इत इति पदच्छेदो द्रष्टव्यः ।

प० — **न विभक्त्यर्थानुपपत्तिरिति** । सर्वस्य संबुद्ध्यन्तत्वेन संबोधनार्थत्वात्कर्मकरणादिकारकविभक्तेश्चास्यां दशायामभावादिति भावः ॥ **शब्दान्तरन्यायेनेति** । अयं न्यायः आनन्दमयनये विवृतः । मुख्य इत्यनुवादः । योगवृत्त्येति व्याख्या ॥ **श्वित्रीति** । कुष्ठदेहवानित्यर्थः ॥ **धावतीति** । धावु शौच इति धातुः । श्वा इत इति विच्छिद्यार्थमाह **इत इत्यादिना** ॥ **उपपादयिष्याम इति** । 'कःछन्दसामि'त्यनेन 'एतमेव तथा संतमि'त्यादिना चेति भावः । **लेशत इति** । योगमात्रोक्त्या महायोगरूढ्युक्तिपरस्य 'उपक्रमात्'इत्यस्य लेशतः **'अस्य हि'** इति हिशब्दोक्त्या 'तथा ह्यधीयत एके' इत्यंशस्य च लेशतस्तात्पर्यमुक्तमित्यर्थः ॥ **इतिसूत्रस्येति** । समाकर्षादितिनयगुणसूत्रस्य ।

या० — **उक्तदिशेति** । ज्योतिषा आयजेतेत्यादिसम्बुद्धिरूपपदच्छेदमङ्गीकृत्य प्रदर्शितस्तुतिरूपत्वेनेत्यर्थः । तथा च ज्योतिषा यजेतेत्यादिपदच्छेदस्य वाक्यसमन्वयोपयुक्तस्य पदसमन्वयदशायामनङ्गीकारेण तदा क्रियाकारकवाचिविभक्तीनामेवाभावान्न तदर्थानुपपत्तिर्दोषायेति भावः । तथा हि श्रुतिः 'सृजतो हि श्रुतयोऽनुवर्तन्ते नैवासृजतः । किं वा विदधते किं वा निषेधन्ति स्तुतिमात्रा एव ते स्युः'इति । **शब्दान्तरन्यायेनेति** । अयं न्याय आनन्दमयाधिकरणे प्रदर्शितोऽस्माभिस्तत्रैवानुसन्धेयः ॥ **अनुवाद इति** । अतो न पौनरुक्त्यमिति भावः । अनुवादोऽधिकविधानार्थोऽतो न व्यर्थ इत्याशयेनाह **न केवलमिति** । शक्तं पदमिति मताभिप्रायेण वाचकत्व इत्युक्तम् । विभक्त्यन्ता वर्णाः पदमिति मतमाश्रित्य तु विभक्त्यन्तत्वमित्युक्तमिति द्रष्टव्यम् । श्वेत इत्यस्यार्थः **श्वित्रीति** । कुष्ठ इत्यर्थः । धावतीत्यस्यार्थः **शोधनं करोतीति** । धावु गतिशुध्योरिति धातोः ॥ **इतः सारमेय**

इति । अत्र ध्या इत इति पदच्छेदो द्रष्टव्यः ॥ **उपपादयिष्याम इति** ॥ 'तस्यापि पूर्वसिद्धस्ये'त्यनुपद-मेवेति शेषः ॥ **लेशत इति** । अशेषक्रियानामित्यादिना ज्योतिरिति प्रतिज्ञायाः, जातमोतमित्यादिना उपक्रमादिति हेतुभागस्य च तात्पर्यकथनादिति भावः ॥

**श्री०** — यदुक्तं पूर्वपक्षिणा सर्वेषां पदानां ब्रह्मपरत्वे वसन्ते ज्योतिषेति सप्तमीतृतीयादि-विभक्तिवैयर्थ्यमिति तत्परिहृतमित्याह **तेनेति** । सर्वेषां वसन्त इत्यादिपदानां भगवत्सम्बोधनरूपाणां तद्वाचकत्वमेव, न सप्तम्यादिविभक्तिपरत्वमित्यङ्गीकारेणेत्यर्थः ॥ **शब्दान्तरेति** । अथैष ज्योतिरित्यादौ संज्ञाभेदेन कर्मभेदः, एवं ज्योतिषेत्यादिशब्दभेदादभिधेये भेदशङ्का प्राप्तेत्यर्थः । नन्वेक इत्यनेनाभि-धेयैक्यं किमिति वाच्यम्, अभिधेयभेद एव किं न स्यादित्यत आह **अभिधेयभेदे हीति** । एकस्यैव भगवतः सर्वशब्दवाच्यताऽप्राप्त्या इतरवाचकशब्दप्रतिपाद्यगुणालाभेन भगवतो यच्छब्दवाच्यत्वमङ्गीकृतं तच्छब्दप्रतिपाद्यगुणस्यैव लाभेनानन्तगुणपूर्णता न सिध्यतीत्यर्थः । नन्वधिकानुक्तेर्व्यर्थोऽनुवाद इत्यत आह **न केवलमिति** । **पृथक्** पदात् । एकेत्युत्तरं एकवर्णात्मकपदानेकवर्णात्मकपदविवक्षयेत्यर्थः । तथाच पदशब्देनानेकवर्णात्मकपदं विवक्षितं वर्णशब्देनैकवर्णात्मकमिति भावः ॥ **अनेनेति** । रूढि-मनङ्गीकृत्य योगेनैव सर्वशब्दानां भगवत्परत्वकथनेनेत्यर्थः ॥ **अन्यथेति** । अन्यपरस्यापि शब्दस्य शक्यनिर्वचनत्वमात्रेणान्यपरत्व इत्यर्थः । परमेश्वरज्ञानार्थत्वेन परमेश्वरज्ञानप्रयोजनकत्वेनेत्यर्थः ॥ **प्रयोजनान्तरमिति** । पूर्वं योगवृत्त्यङ्गीकारस्य तस्मादिति वाक्येनानन्तगुणत्वसिद्धिरूपस्यैकस्य प्रयोजन-स्योक्तत्वादित्यर्थः ॥ **लेशत इति** । जातमोतमिति ज्योतिःशब्दव्याख्याने सूत्रे ज्योतिरिति प्रतिज्ञा-पदस्यैव ज्योतिर्ब्रह्मेति तात्पर्यमुक्तं भवतीत्यर्थः । पृथक् पृथगर्थेषु वाचकत्वेन स्थितवाक्यस्यान्ततो भगवत्परत्वं वाक्यान्वय इत्यर्थः ।

**च०** — **श्वित्रीति** । श्वेतपदार्थः । **शोधनं करोतीति** । धावुगतिशुद्ध्योरिति धावतेः शोधनार्थेपि पठितत्वादिति भावः ।

**सु०** — **ननूक्तमत्र न वाक्यानां ब्रह्मणि समन्वयो घटते । साङ्गकर्मपरत्वावगमादा-गमानामिति** तत्राह तदर्थत्वेनेति ।

**अनु०** — तदर्थत्वेन कर्मादेः संभवादल्पबुद्धये ॥

**तदिति विज्ञानं परामृशति** । अल्पबुद्धय इति षष्ठ्यर्थे चतुर्थी । **'अहल्यायै जार' इति यथा । न वाक्यान्वयानुपपत्तिरिति शेषः । यथा खलु यूपाहवनीयादिवाक्यानि न निष्फले तावन्मात्रे पर्यवस्यन्ति । किन्तु ज्योतिष्टोमादीतिकर्तव्यतापराणि । तथा सर्वमपि कर्मकाण्डं नाल्पास्थिरफले कर्ममात्रे पर्यवस्यति, किन्तु ब्रह्मज्ञानार्थमेव । तत्प्रतिपादितस्य कर्मादेर्ब्रह्म-**

ज्ञानार्थत्वात् । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुतेरिति भावः । ननु च यः कर्मकाण्डस्य ब्रह्मणि प्रतिपदसमन्वयोऽभिहितः स युक्तो न वा'। नेति पक्षे न व्युत्पादनीयः । आद्ये किमनेन वाक्यान्वयाङ्गीकारेणेत्यत उक्तं अल्पबुद्धय इति । प्रपञ्चयिष्यते चैतत् । अनेना'न्यार्थमि'त्यादिसूत्राणां तात्पर्यमुक्तं भवति ।

शे०— तत्रोक्तदोषपरिहारार्थत्वान्नोत्तरवाक्यवैयर्थ्यमित्याशयेन तत्परिहारकतया तद्योजयितुं-दोषशङ्कामुत्थापयति **ननूक्तमिति** ॥ **विज्ञानं परामृशतीति** । विज्ञानस्य विज्ञानार्थत्वात इत्यत्रोपसर्जनतया प्रकृतत्वेऽपि योग्यत्वादल्पबुद्धय इति विशेषणसामर्थ्याच्च तस्यैव परामर्श इति भावः । कारकोपपदविभक्तित्वासंभवादाह **अल्पबुद्धय इतीति** । 'चतुर्थ्यर्थे बहुलं छन्दसि' इति सूत्रेणेति शेषः । अत्र हि सूत्रे 'षष्ठी शेष' इत्यतः षष्ठीत्यनुवर्तते । चतुर्थी अर्थ इति च योगविभागः ॥ चतुर्थी षष्ठी च अर्थे= परस्परार्थे बहुलं भवत इति । यद्यपि सूत्रेऽर्थ इत्येव श्रूयते तथाऽपि स्वार्थ एव षष्ठीचतुर्थ्योर्विधानानर्थक्यादन्योन्यसन्निधानादन्योन्यार्थे एव विभक्तिद्वयविधानं युक्तम् । यद्यपि च तत्सूत्रीयं 'षष्ठ्यर्थे चतुर्थी वक्तव्ये'ति वार्तिकमप्यस्तीति तेनापि विवक्षितनिर्वाहः कर्तुं शक्यते तथाऽप्युक्तरीत्या सूत्रेणैव वार्तिकार्थसिद्धेर्न तत्प्रयोजनमिति वार्तिकस्य प्रत्याख्यातत्वान्नोपपादकतयोपादानं युक्तमिति ध्येयम् । चतुर्थ्याः षष्ठ्यर्थत्वे परसम्प्रतिपन्नं दृष्टान्तमाह **अहल्याया इति** । यद्वा ननु न षष्ठ्यर्थेऽल्पबुद्धय इति चतुर्थी आश्रयितुं शक्यते तदर्थे तद्विधायकाभावादित्यतोऽहल्यायै जार इत्यत्र यदेव षष्ठ्यर्थे चतुर्थीविधायकं परस्येष्टं तदेवात्रापि तद्विधायकं भविष्यतीत्याशयेन प्रापकशास्त्रौदासीन्येन दृष्टान्तमेवाह **अहल्याया इति** । अत्र च पक्षे न पूर्ववाक्ये शेषपूरणमिति विशेष इति द्रष्टव्यम् । फलानुक्त्या प्रसक्तां भाष्ये न्यूनतां शेषपूरणेन परिहरति **नेति** । ननु वसन्तादिवाक्यानां कर्ममात्रे एव पर्यवसानोपपत्तेः कथं कर्मणो ब्रह्मज्ञानार्थत्वमित्यतो दृष्टान्तेन तदुपपादयति **यथेति** । यूपाहवनीयादिवाक्यानां यूपाहवनीयादिमात्रे पर्यवसानाभावे हेतुमाह **निष्फल इति** । अध्ययनविधिपरिगृहीतत्वान्न निष्फलत्वं संभवतीति भावः । नन्वस्तु यूपाहवनीयादिवाक्यानां फलाऽऽकाङ्क्षत्वं तथाऽपि क्रतोरनाकाङ्क्षतया ज्योतिष्टोमादिवाक्यस्यानपेक्षतया न तेषामङ्गाङ्गिभावो युक्तः इत्यतः क्रतोरपि कथमितीतिकर्तव्यताऽऽकाङ्क्षासत्त्वेन परस्परान्वयः संभवतीत्याह **किन्त्वति** । दृष्टान्तोपदर्शनं च,अन्यथा निष्फले यूपादिस्वरूपमात्र एव यूपादिवाक्यानां पर्यवसानापत्त्या ज्योतिष्टोमादीतिकर्तव्यतापरत्वं न स्यात्, इति विपक्षे बाधकं सूचयितुमिति ध्येयम् । नन्वध्ययनविधिपरिगृहीततया निष्फले यूपादिमात्रे तद्वाक्यानामपर्यवसानेऽपि ज्योतिष्टोमादेः स्वर्गादिफलकत्वात्सफले तस्मिन्कर्मकाण्डस्य पर्यवसानं किं न स्यादित्यत उक्तम् **अल्पेति** । 'अनित्यत्वात्सदुःखत्वादि'त्यादिश्रुतेरिति भावः । ननु यूपादेः कर्मार्थतया तद्वाक्यस्य कर्मार्थ-

त्वेऽपि कर्मणो ब्रह्मज्ञानार्थत्वाभावात्कथं कर्मकाण्डस्य ब्रह्मज्ञानार्थत्वमित्यतः कर्मब्रह्मज्ञानयोरप्यस्ति साध्यसाधनभाव इत्याह **तदिति** । प्रमाणाभावान्न कर्मब्रह्मज्ञानयोः साध्यसाधनभावः इत्यत आह **विविदिषन्तीति** ॥ **किमनेनेति** । अल्पबुद्धीनामपि मुख्येन प्रतिपदान्वयेनैव ब्रह्मज्ञानोत्पादसंभवादिति भावः । ननु युक्तत्वायुक्तत्वपक्षोक्तदोषापरिहारात्कथमल्पबुद्धीनामित्यनेनोक्ताक्षेपपरिहार इत्यत आह **प्रपञ्चयिष्यत इति** । 'अन्वयः सर्वशब्दानामि'त्यादिनेति शेषः ॥ **अनेनेति** । 'तदर्थत्वेन कर्मादेः' इत्यादिभाष्येणेत्यर्थः । आदिपदेन प्रतिज्ञासिद्धेरित्यादिसूत्राणां संग्रहः ।

**स०— अल्पबुद्धय इति** षष्ठ्यर्थे **चतुर्थीति** ॥ चतुर्थ्यर्थे बहुलं छन्दसीति सूत्रे षष्ठी शेष इत्यतः षष्ठीत्यस्यानुवृत्तिमभिप्रेत्य चतुर्थी अर्थ इति च योगविभागाश्रयणेन षष्ठी चतुर्थी च परस्परार्थे बहुलं भवत इति व्याख्यातत्वात् तेन सूत्रेण षष्ठ्यर्थे चतुर्थीत्यर्थः । ननु एतत्सूत्र एव षष्ठ्यर्थे चतुर्थी वक्तव्येति वार्तिकेणैव तदुपपत्तौ किं क्लिष्टकल्पनाश्रयणेनेति चेन्न सूत्रेणैवोपपत्तौ किं तद्वार्तिकेनेति तद्वैयर्थ्ये तात्पर्यात् ॥ **प्रपञ्चयिष्यत इति** ॥ 'अन्वयस्सर्वशब्दानामि'त्येतदनुव्याख्यानव्याख्यावसरे 'एतेन अङ्गीकृतेऽपि' इत्यादिनोक्तं 'विवृतमि'त्यादिना प्रपञ्चयिष्यत इत्यर्थः ।

**प० — यूपेति** । खादिरो यूपो भवति । यूपं छिनत्ति । 'यूपं तक्षति यूपमष्टाश्रीकरोती'त्यादियूपवाक्यानि । 'वसन्ते ब्राह्मणोऽग्नीनादधीत दिवा आहवनीयं नक्तं गार्हपत्यमि'त्याहवनीयादिवाक्यानि ॥ **निष्फल इति** । फलाश्रवणात् । अध्याहारकल्पकाभावात् । फलवत्कर्मसन्निधिप्रतिबन्धाच्चेति भावः । **ज्योतिष्टोमा(दी)ति(दिकर्तव्यतेति** । ज्योतिष्टोमादेः 'ज्योतिष्टोमेन स्वर्गकामो यजेते'तिवाक्यावगतज्योतिष्टोमेष्टसाधनतापराणीत्यर्थः । 'फलवत्सन्निधावफलं तदङ्गम्' इतिन्यायादिति भावः ॥ **ब्रह्मज्ञानार्थमेवेति** । पर्यवस्यतीत्यनुषङ्गः । 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इतिवक्ष्यमाणसूत्रं हृदि कृत्वाऽऽह **विविदिषन्तीति** ॥ **प्रपञ्चयिष्यत इति** । 'अन्वयः सर्वशब्दानामि'त्यादिनेति भावः ॥ **सूत्राणामिति** । समाकर्षनयस्थानां 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम्' 'अपि चैवमेके' 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' 'उत्क्रमिष्यत एवं भावात् इत्यौडुलोमिः' 'अवस्थितेरिति काशकृत्स्नः' इति चतुर्णां सूत्राणामित्यर्थः । तदर्थो भाष्यादौ व्यक्तः संगृहीतश्चास्माभिस्तन्त्रदीपिकायामिति नात्रोच्यते ।

**या०— षष्ठ्यर्थ इति** । 'षष्ठ्यर्थे चतुर्थी वक्तव्ये'ति वार्तिकादिति भावः । निष्फल इति हेतुगर्भविशेषणम् । **अनाशकेन** अनशनव्रतेन ॥ **प्रपञ्चयिष्यत इति** । 'अन्वयः सर्वशब्दानामि'त्यादिनेति शेषः ।

**श्री०— चतुर्थी** षष्ठ्यर्थे इत्यस्योदाहरणमाह **अहल्यायै इति** । अहल्याया जार इन्द्र इत्यर्थः ॥ **प्रपञ्चयिष्यत इति** । 'अन्वयः सर्वशब्दानामि'त्यादिनेत्यर्थः ।

सु०— नन्वल्पबुद्धीनामपि प्रतिपदान्वय एव ब्रह्मज्ञानहेतुर्भ(विष्यतीति)वतीति किं वाक्यान्वयेनेत्यत आह क इति।

अनु०— कश्छन्दसां योगमिति श्रुतेः

'कश्छन्दसां योगमावेद धीरः' इति श्रुतेर्वैदिकपदयोगवृत्तेरल्पबुद्धिभिरशक्यज्ञानत्वाद्यु(त्वेन यु)क्तं वाक्यान्वयव्युत्पादनमिति शेषः।

नन्वेवं तर्हि योगवृत्त्या प्रतिपदसमन्वयव्युत्पादनं न कर्तव्यम्। को धीरश्छन्दसां योगं= ब्रह्मणि योगवृत्तिम् आवेद न कोऽपीति निरधिकारिकत्वश्रवणात्। न हि गायमानो बधिरेषु गायतीत्यत आह योगार्थेति।

योगार्थतत्त्ववित् ॥

ब्रह्मैको नैव चान्योऽस्ति

योगस्यार्थो योगार्थः। तस्य तत्त्वं याथार्थ्यम्। चशब्दोऽर्थद्वयसमुच्चयार्थः। अयमस्याः श्रुतेरर्थ इति शेषः। एतदुपपादयति क इति।

क इत्यस्योभयार्थतः ॥

'प्रजापतिर्वै कः' इति श्रुतेः कशब्दो ब्रह्मार्थः। किंवृत्तस्य चाक्षेपे वृत्तिः सुप्रसिद्धा। तथा च क इत्यस्योभयार्थत्वाद्ब्रह्मार्थत्वे तस्य योगवृत्तिज्ञाने सामर्थ्यकथनान्नानधिकारिकत्वम्। आक्षेपार्थत्वे तदन्येषामनधिकारकथनाद्युक्तो वाक्यान्वयाभ्युपगमः। ननु कथमेतत्। आवृत्तेस्तन्त्रधर्माद्वेत्यदोषः। प्रमाणं चात्रान्यथाऽनुपपत्तिरिति।

टी०— कश्छन्दसामिति प्रतिपदसमन्वयस्याल्पाधिकारिकत्वाभाववर्णनमनर्थकमित्यतो वाक्यान्वयव्युत्पादनसमर्थनार्थं तदिति भावेन तद्वैयर्थ्यशङ्कामुत्थापयति नन्विति। अपेक्षितपूरणेन साकाङ्क्षत्वप्रयुक्तवाक्याभासत्वशङ्कां परिहरति क इत्यादिना। वाक्यान्वयस्य पूर्ववाक्येनैव समर्थनात् ब्रह्मणः पदसमन्वयाधिकारवर्णनस्य तादर्थ्यायोगाच्च तदनर्थकमित्यतः पदसमन्वयस्यावक्तव्यताशङ्कापरिहारार्थं तदिति भावेन प्रापकोपदर्शनपूर्वकं तद्वैयर्थ्यशङ्कामुत्थापयति नन्विति ॥ अर्थद्वयेति। पदसमन्वयस्य ब्रह्माधिकारिकत्वतदन्यानधिकारिकत्वरूपार्थद्वयेत्यर्थः ॥ अयमिति। इत्ययम् इति इतिशब्दाध्याहारेण योज्यम् ॥ एतदुपपादयतीति। श्रुतावुभयप्रापकादर्शनात्कथमर्थद्वयस्य श्रुत्या लाभ इत्याशङ्कापरिहारार्थमिति भावः। किंवृत्तस्येति। किमो वृत्तं किंवृत्तं= किंशब्द इति यावत् तस्येत्यर्थः ॥ कथमिति। सकृच्छ्रुतस्य शब्दस्यानेकार्थताया अन्याय्यत्वादिति भावः। तन्त्रधर्मोऽनेकोपकारकत्वरूपस्तस्मादित्यर्थः। ननु कश्छन्दसामिति श्रुतौ क इत्यस्योभयपरत्वे प्रमाणेन सिद्धे सत्येव तदन्यथाऽनु-

पपत्त्याऽऽवृत्त्याद्याश्रयणमुपपद्यते । न चात्र श्रौतस्य क इत्यस्योभयपरत्वे किंचित्प्रमाणमस्ति । न । क इत्यस्योक्तरीत्योभयार्थत्वादेव तत्सिद्धिः । अक्षादिशब्दानामनेकार्थतया सर्वत्रानेकार्थपरत्वाऽपातात् च तथा च श्रौतस्य क इत्यस्योभयपरत्वासिद्धेः कथमावृत्त्याद्याश्रयणमित्यतः श्रौत'क'इत्यस्य ब्रह्मार्थत्वाभावे निरधिकारिकत्वेन पदसमन्वयोक्तेरयोगादाक्षेपार्थत्वानङ्गीकारे च सर्वेषामपि पदसमन्वयेनैव ब्रह्मज्ञानोपपत्तौ वाक्यसमन्वयोक्तेरयोगात्तदुभयोक्त्यन्यथाऽनुपपत्त्या श्रुतौ क इत्यस्योभयपरत्वसिद्धेर्युक्तमावृत्त्याद्याश्रयणमित्याह **प्रमाणं चेति** । अत्र श्रुतौ क इत्यस्योभयपरत्व इत्यर्थः ।

**स०**— **किंवृत्तस्य चेति** । किमो रूपं किंवृत्तं किंशब्द इति यावत् । तस्येत्यर्थः । **तन्त्रधर्माद्वेति** ॥ सकृदुक्तमनेकोपकारकं तन्त्रं तस्य यो धर्मोऽनेकोपकारकत्वरूपस्तस्मादित्यर्थः । अन्ये तु 'ननु कथमेतदि'त्यस्य एकस्यैव वेदस्य पदसमन्वयो वाक्यसमन्वयश्चेत्येतदर्थद्वयं कथमित्याक्षेपभावमाहुः । ॥ **प्रमाणं चात्रेति** । क इत्यस्योभयार्थत्व इत्यर्थः । तथा हि'नामानि सर्वाणी'त्यादौ प्रमाणसिद्धप्रतिपदसमन्वयेऽधिकार्यन्यथानुपपत्त्या ब्रह्मार्थत्वं तावत्स्वीकार्यं । 'ता वा एताः सर्वा ऋचः' इत्यादिप्रमाणासिद्धवाक्यान्वयव्युत्पादनान्यथानुपपत्त्याऽऽक्षेपार्थत्वमप्यङ्गीकार्यं । अन्यथाऽल्पबुद्धीनामपि प्रतिपदान्वय एव ब्रह्मज्ञानहेतुर्भविष्यतीति किं वाक्यान्वयेनेतिशङ्काऽवरुद्धत्वेन सूत्रकारीयं तद्व्याख्यानमनर्थकं स्यादिति ।

**प०**— (वाक्यार्थद्वयेति) ॥ **अर्थद्वयेति** । कोपि न जानाति, ब्रह्मैव तु जानातीति वाक्यार्थद्वयेत्यर्थः । पूर्वं'मिति श्रुतेरि'त्येतत्पूर्वशेषतया योजितम् उत्तरान्विततया व्यासत्वस्फोरणाय इति श्रुतेरित्यनन्तरं अयमर्थ इति इति शेष इत्याह **अयमस्याः श्रुतेरर्थ इति शेष इति** ॥ **किंवृत्तस्य चेति** । किंप्रातिपदिकोपेतशब्दस्येत्यर्थः । कि(मो)मावृत्तं किंवृत्तम् । वृतु वर्तने अधिकरणे क्तः । किंप्रातिपदिकं यत्र वर्तते तत्किंवृत्तम् । तच्च कः किं केनेत्यादिविभक्त्यन्तं, किन्तरां किन्तमां कुतः कुतस्तरां कुतस्तमां किमीयं कीदृशमित्यादिकं सर्वं भवतीति तस्य सर्वस्य परिग्रहाय किंवृत्तस्येत्युक्तम् । अष्टमस्याऽध्यपादे 'किंवृत्तं च चिदुत्तरमि'ति सूत्रे वृत्तिमञ्जर्यां यद्वृत्तान्नित्यमिति भाष्यकैयटयोरेवमेवोक्तेः । **शङ्कते ननु कथमेतदिति** । सकृदुक्तस्यार्थद्वयं कथमित्यर्थः ॥ **तन्त्रेति** । सकृदुच्चरितमनेकोपकारकं तन्त्रम् । तस्यानेकोपकारकत्वरूपो यो धर्मस्तस्माद्वेत्यर्थः । नन्वावृत्त्यादिना अनेकार्थत्वं प्रमाणाधीनमित्यत आह **प्रमाणं चात्रेति** । 'एतमेव तथा संतमि'त्यादिवक्ष्यमाणदिशा ब्रह्मणि सर्वशब्दानां योगाद्विवृत्तेः । 'अन्वयः सर्वशब्दानाम्' इति वक्ष्यमाणन्यायेन सर्वाधिकारिकत्वस्य चावगमेन तदुभयान्यथाऽनुपपत्तिरेव एच्छ्रुतेरर्थद्वये प्रमाणमित्यर्थः ।

**या०**— **किंवृत्तस्येति** । किमो रूपं किंवृत्तं । किंशब्द इति यावत् । तस्येत्यर्थः ॥ **तन्त्रधर्माद्वेति** । सकृदुक्तमनेकोपकारकं तन्त्रं, तस्य यो धर्मोऽनेकोपकारकत्वरूपस्तस्मादित्यर्थः ॥

प्रमाणं चात्रेति । क इत्यस्योभार्थत्व इत्यर्थः । 'नामानि सर्वाणी'त्यादिप्रमाणसिद्धप्रतिपदसमन्वयेऽ-धिकारिसिद्ध्यन्यथाऽनुपपत्त्या ब्रह्मार्थत्वं तावत्स्वीकार्यम् । 'ता वा एताः सर्वा ऋचः' इत्यादिप्रमाण-सिद्धवाक्यसमन्वयस्युत्पादनान्यथाऽनुपपत्त्याऽऽक्षेपार्थत्वमप्यङ्गीकार्यम् । अन्यथाऽल्पबुद्धीनामपि प्रति-पदान्वय एव ब्रह्मज्ञानहेतुर्भविष्यतीति किं वाक्यान्वयेनेति शङ्काऽवरुद्धत्वेन प्रमाणोक्तं तदनर्थकं स्यादित्यर्थापत्तिद्वयमत्र प्रमाणमित्यर्थः ।

अनु०— तस्यापि पूर्वसिद्धस्य ज्ञानमेवेति निश्चयात् ।
नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिध्यते ॥ २ ॥

**सु०— यदि ब्रह्मा एक एव पदानां योगवृत्त्याऽर्थसंबन्धं वेद तदा'एकस्य प्रतिभातं तु कृतकान्न विशिष्यते' इति न्यायात्कृतकत्वं शब्दार्थसंबन्धस्येत्यापद्यते । तथा 'औत्पत्तिक स्तु शब्दस्यार्थेन संबन्ध' इति जैमिन्युक्तः शब्दानामर्थैर्नित्ययोगः परित्यक्तः स्यादित्यत आह** तस्यापीति ।

यद्यप्येक एव प्रतिपत्ता तथाऽपि तस्य पूर्वसिद्धस्येव= **पूर्वस्थितस्यैव ज्ञातस्यैव च शब्दार्थ-सम्बन्धस्य** ज्ञानमेव **प्रमितिरेव भवति न तूत्प्रेक्षामात्रम्** इति=**अस्यार्थस्य श्रुत्यादिभ्यो** निश्चयात् **जैमिन्युक्तः अर्थैः** शब्दानां नित्ययोगो **नैवास्माभिस्त्यज्यत इति योजना । एतदुक्तं भवति । स्यादयं दोषो यदि ब्रह्मणः शब्दार्थसम्बन्धज्ञानमुत्प्रेक्षारूपं स्यात् । न चैवम् । किन्तु पूर्व-जन्मनि प्रतीतं स्वतः सिद्धमेव सम्बन्धमिह जन्मनि सुप्तप्रबुद्धन्यायेनेश्वरप्रसादादवबुद्ध्यत इति । तथा च श्रुतिः 'यो ब्रह्माणमि'त्येवंजातीयका । एकदेशे पुरुषान्तरप्रतिपत्तिसंवादाच्चैतदेवम् । तथा च स्मृतिः । 'जन्मान्तरे श्रुतास्तास्तु' इत्यादिका । अत एव श्रुति'आवेदे'त्याह । एतेन नैकाधिकारिकं शास्त्रमित्यपि परास्तम् ॥ १-४-२ ॥**

शे०— ननु पदसमन्वयस्य ब्रह्माधिकारिकत्ववर्णनमात्रेण निरधिकारिकत्वशङ्कापरिहारात् ब्रह्मणः पूर्वसिद्धस्यैव ज्ञानाभिधायकोत्तरवाक्यवैयर्थ्यम् । न च प्रतिपदान्वयस्य ब्रह्ममात्रज्ञातत्वे कृतकत्वाऽऽपत्त्या तत्परिहारार्थं तदिति वाच्यम् । प्रापकाभावेन ब्रह्ममात्रज्ञातत्वेन तच्छङ्काऽनुदयात् । कथञ्चिदुदयेऽपि कृतकत्वेऽपि संबन्धस्य बाधाभावेन तदपरिहारेऽप्यनिष्टाभावादित्यतः प्रापकोपन्यासेन कृतकत्वापत्तिमुपपाद्य तदङ्गीकारे चानिष्टोपदर्शनेन तस्याः परिहरणीयत्वं च सूचयन्नेव तत्परतयोत्तरवाक्यमवतारयति **यदीत्या-दिना** । पूर्ववाक्ये पदसमन्वयस्य ब्रह्ममात्राधिकारिकत्वोक्तेस्तदनुरोधेन तस्यापीत्यपिशब्दस्य समुच्चायकत्वा-संभवात्तद्वैयर्थ्यमित्यतः पूर्ववाक्या'देक एव प्रतिपत्ते'त्यस्यार्थतोऽनुवृत्तिम्, अपिशब्दस्य, यद्यपि तथाऽपी-

त्यर्थकत्वं, तस्य चानुवृत्तान्वयम्, एवशब्दस्य भिन्नक्रमत्वं यथास्थितान्वयं च, ज्ञानशब्दस्य विशेषपरत्वं, निश्चयादित्यत्र श्रुत्यादिभ्य इति शेषं च मनसि निधाय वाक्यं योजयति **यद्यपीत्यादिना** ॥ यदि ब्रह्मणः पूर्वसिद्धस्यैव ज्ञानं तर्हीश्वरत्वं तस्य स्यादित्यत ईश्वरप्रसादायत्तत्वात्तज्ज्ञानस्य, न तस्येश्वरत्वाऽपत्तिरित्याह-**एतदुक्तं भवतीति** । ईश्वरप्रसादात् = अन्तर्गतस्य व्यासस्य प्रसादात् । 'अव(गच्छ)बुध्यते' इत्यत्राध्ययनेन विनेति शेषः । न चैवमध्ययनं व्यर्थम् । अदृष्टार्थत्वात् । अत एवोक्तमन्यत्र 'विरिञ्चस्य केवलं धर्मकारणमि'ति 'महतो हि धर्मस्य कारणं परमेश्वरादध्ययनमि'ति च । 'श्रुतिभ्यो निश्चयादि'त्युक्तं; तत्र कास्ताः श्रुतय इत्यत आह **तथा चेति** । अत्र विवक्षितार्थस्य स्पष्टमप्रतीतेराह **एवंजातीयकेति** । नन्वेकदेशे पुरुषान्तरप्रतिपत्तिसद्भावे कथं 'कश्छन्दसामि'ति तदाक्षेप इत्यतो नात्र वेदनमात्राक्षेपोऽभिमतः तथा सत्याङो वैयर्थ्यप्रसङ्गात् किन्तु आ= सम्यक् समन्ताद्वेदनस्यैव । न चान्यस्य समन्तात्सम्यग्वा वेदनमस्ति येन श्रौताक्षेपानुपपत्तिः स्यादित्याह **अत एवेति** । वेदनमात्राक्षेपस्यानभिमतत्वादेवेत्यर्थः ॥ **एतेनेति** । एकदेशे पुरुषान्तरस्याप्यधिकारप्रतिपादनेनेत्यर्थः ॥ १-४-२ ॥

स० — **यो ब्रह्माणमित्येवमिति** । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतौ प्रहिणोतीत्यस्य प्रज्ञापयतीतिव्याख्याने प्रशब्दादुक्तार्थसिद्धिरिति भावः । अत्र स्पष्टमुक्तार्थाप्रतीतेरुक्तम् **एवंजातीयकेति** । सा च ऋग्भाष्यादौ द्रष्टव्या । **एकदेशे** काठकादिषु । सर्वस्यापि वेदस्यादौ ब्रह्मदृष्टत्वादिति भावः । **एतेन नैकाधिकारिकमिति** सर्वत्रैकदेशेषु ऋष्यन्तरसंवादेनेत्यर्थः ।

प० — **औत्पत्तिकस्त्विति** । जिज्ञासासूत्रेऽस्य सूत्रस्यार्थ उक्तः ॥ **यो ब्रह्माणमिति** । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्येवंजातीयका ऋग्भाष्याद्युक्तेत्यर्थः । अत्र विवक्षितार्थस्यास्फुटत्वादेवञ्जातीयकेत्युक्तम् । **पुरुषान्तरेति** । वामदेवादिपुरुषान्तरस्य । 'तद्धैतत्पश्यनृषिर्वामदेवः प्रतिपेदे । अहं मनुरभवं सूर्यश्च' इत्यदिना आदौ मनुसूर्यादिकतिपयशब्दानाम् 'अवबोधसूर्यनियमनादिभिः सर्वनामा भवति' इति ऐतरेयभाष्योक्तयोगेनान्तर्यामिणि वृत्तिपरिज्ञानसंवादाच्चेत्यर्थः ॥ **इत्यादिकेति** । 'जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः । मुनीनां प्रतिभास्यन्ति भागेनैव न सर्वशः' इति तत्वनिर्णयोक्ता । **अत एवेति** । यतः ब्रह्मण एव वासुदेवप्रसादेन सुप्तप्रबुद्ध इव सर्वप्रमातृत्वमन्येषां एकदेशज्ञातृत्वं तस्मादेव कःछन्दसामिति श्रुतिः आ=सम्यक् ब्रह्मैव वेद नान्यः किंत्वल्पमेव वेदेत्याहेत्यर्थः ॥ **एतेनेति** । एकैकदेशेन योगवृत्तिपरिज्ञानस्य वामदेवादिमुनिषु सत्त्वेन पदसमन्वयरूपेण विष्णुप्रतिपादकं वेदरूपशास्त्रमेकाधिकारिकं नोपपद्यत इति निरस्तम् । ब्रह्मणः सर्वशब्दयोगार्थपरिज्ञाने वामदेवादिमुनीनां एकदेशे योगार्थज्ञानेऽधिकारित्वेनानेकाधिकारिकत्वलाभादिति भावः ॥ ॥ १ । ४ । २ ॥

या०— **यो ब्रह्माणमित्येवमिति** । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतौ ब्रह्मण उत्पत्त्यनन्तरमेव वेदार्थोपदेश ईश्वरेण क्रियत इत्युच्यते तेन नौत्प्रेक्षिकं तस्य वेदार्थस्य ज्ञानं किन्तु सुप्तप्रबुद्धन्यायेन प्राक्सिद्धस्यैवेति सिध्यति । कथमन्यथा जातमात्र एवोपदेशेनापि वेदार्थं जानीयादिति । अत्र स्पष्टमुक्तार्थप्रतीतेरुक्तम् **एवंजातीयकेति** । **एकदेशेषु** काठकाऽदिषु । सर्वस्यापि वेदस्याऽदौ ब्रह्मदृष्टत्वादिति भावः । नन्वेवं कश्छन्दसामिति श्रौत आक्षेपो न युक्त इत्यत आह **अत एवेति** । तथा च आ=समन्तात् समस्तमिति यावत् । को वेद न कोऽपीत्याक्षेप इति भावः ॥ **एतेनेति** । सर्वत्रैकदेशे ऋष्यन्तरसंवादेनेत्यर्थः ॥ १–४–२ ॥

श्री०— **पुरुषान्तरेति** । ऋष्यन्तरेत्यर्थः । प्रतिपत्तिः पूर्वतनमेव वेदमधीमहेऽध्यापयाम- श्चेत्यादिरूपा ॥ **एतदेवमिति** । तस्यापि पूर्वसिद्धस्य ज्ञानमेवेत्युक्तं प्रमेयमेवेत्यर्थः । ननु ऋष्यादिदृष्ट- वेदभागस्य ब्रह्मदृष्टत्वाभावेन ब्रह्मदृष्टे वेदभागे संवादो नास्तीति चेन्न । सर्वस्यापि वेदस्यादौ ब्रह्मणा दृष्टत्वेन ऋष्यादिदृष्टैकदेशस्यापि ब्रह्मदृष्टत्वेन युक्तः संवाद इत्यर्थः । तथा च ब्रह्मणो यदि शब्दार्थ- सम्बन्धज्ञानमौत्प्रेक्षिकं स्यात्तर्हि ब्रह्मदृष्टो यः समस्तो वेदस्तदेकदेशे ऋष्यन्तरसंवादो न स्यात् । न ह्यौत्प्रेक्षिके मेघसंदेशादौ संवादो दृष्ट इति भावः । नन्वृष्यादीनामपि यदेकदेशशब्दार्थसम्बन्धज्ञानं तदप्यौत्प्रेक्षिकं किं न स्यात् । संवादस्य काकतालीयतासम्भवादिति चेन्न । तेऽपि पूर्वजन्मप्रतीतं स्वतःसिद्धमेव संबन्धमिह जन्मनि प्रतिबुद्धन्यायेनेश्वरप्रसादादवगच्छन्तीति स्मृतिसिद्धत्वेन संवादो युक्त इत्याह **तथा चेति** । एकदेशेऽस्ति पुरुषान्तरप्रतिपत्तिरित्यत्रावष्टम्भकान्तरमाह **अत एवेति** । तत्र छन्दसां योगं योगवृत्त्या वाच्यवाचकभावसम्बन्धमासम्यम् आ=सम्यक् को वेदेत्युक्त्या इतरे किंचिज्जान- न्तीति लभ्यत इति भावः । श्रुतेर्योगार्थतत्त्वविद्ब्रह्मैक इत्ययुक्तम् । तथात्वे शास्त्रस्य तन्मात्राधिकारिकत्व- प्रसङ्गात् एकाधिकारिकस्य च शास्त्रस्य लोकेऽदृष्टत्वादिति चेत्तत्राह **एतेनेति** । ब्रह्मदृष्टेषु सर्वेषु वेदेष्वेकैकस्मिन्देशे सर्वत्र ऋष्यन्तरसंवादाङ्गीकारेण तेषामप्यधिकारस्यैकदेशेऽङ्गीकारेणेत्यर्थः ॥ १-४-२॥

॥ इति ज्योतिरुपक्रमाधिकरणम् ॥

मु०— इदानीं 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्,' 'एतेन सर्वे व्याख्याता व्याख्याता' इत्यधिकरणद्वयस्य सङ्क्षेपतस्तात्पर्यमाह स्त्रीशब्दाश्चेति ।

अनु०— ॥ ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ॥

॥ ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ॥

स्त्रीशब्दाश्च निषेधार्थाः सर्वेऽपि ब्रह्मवाचकाः ॥ ६ ॥ ७ ॥

स्त्रीलिङ्गाः प्रकृत्यादिशब्दाः स्त्रीशब्दाः । निषेधनं निषेधोऽभावः । निषिध्यत इति । निषेधः असत् । तदुभयार्थाः ॥ शब्दा इति (च) वर्तते ।

शे०—स्त्रीशब्दा इत्यनेन स्त्रीतिशब्दपरिग्रहोऽयुक्तः तथासति प्रकृत्यादिशब्दानामपरिग्रहप्रसङ्गात् । श्रुतिसूत्रयोः प्रकृतिशब्दश्रवणेऽपि स्त्रीतिशब्दस्याश्रवणाद्भाष्यस्य श्रुतिसूत्रविसंवादापत्तिः । स्त्रीशब्दस्यैकत्वेन भाष्ये स्त्रीशब्द इत्येव वक्तव्यतया बहुवचनानुपपत्तिः । नापि स्त्रियः शब्दः स्त्रीशब्द इति स्त्रीवाचकशब्दपरिग्रहो युक्तः तथा सति प्रकृत्यादिशब्दवद्दारकलत्रादिशब्दानामपि स्त्रीवाचितयाऽत्र विषयत्वप्रसङ्गेन तदंशे स्त्रीलिङ्गत्वादिति पूर्वपक्षन्यायस्यासिद्धिप्रसङ्गादित्यतोऽत्र स्त्रीलिङ्गत्वमित्येतदधिकरणपूर्वपक्षन्यायोक्त्यनुरोधेन स्त्रीवाचिनां स्त्रीलिङ्गानां प्रकृत्यादिशब्दानामेव ग्रहणान्न काऽप्यनुपपत्तिरित्याह स्त्रीलिङ्गा इति । स्त्रीलिङ्गत्वंच अत्रनित्यस्त्रीलिङ्गत्वमेव विवक्षितम् । एवं च ये नियमेन स्त्रियमेवाचक्षते न कदाचिदपि पुन्नपुंसके, यद्वा शब्दान्तरसन्निधानमनपेक्ष्य ये स्वभावादेव स्त्रियां वर्तन्ते त एव स्त्रीवाचकाः शब्दा इह विषया इत्युक्तं भवति । निषेधशब्दस्य भावसाधनत्वेऽभावस्य, कर्मसाधनत्वे चाभावप्रतियोगिनो, लाभात्तदुभयलाभाय निषेधशब्द उभयसाधन इत्याह निषेधनमित्यादिना ॥ वर्तत इति । स्त्रीशब्दा इत्यतो बुद्ध्या विवेकेन शब्दा इत्यनुवर्तनीयमित्यर्थः ॥

म०— स्त्रीलिङ्गा इति । स्त्रीगतासाधारणधर्मनिमित्तका इत्यर्थः । तेन दारादिशब्दसंग्रह इत्यवधेयम् । एवमग्रेपि ।

या०— स्त्रीलिङ्गा इति । स्त्रीगतासाधारणधर्मनिमित्तका इत्यर्थः । तेन दारा इत्यादिशब्दसंग्रह इत्यवधेयम् । एवमग्रेऽपि ।

च०— स्त्रीलिङ्गा इति । 'अथ स्त्री' इत्यधिकृत्य यानि लक्षणानि प्रणीतानि तदनुशिष्टनित्यस्त्रीलिङ्गत्वका इत्यर्थः । स्त्रीगतासाधारणधर्मनिमित्तका इत्यप्यार्थीथपन् । भावसाधनघञन्तताममिप्रेत्य व्याचष्टे निषेधोऽभाव इति । कर्मसाधनतदन्ततामाश्रित्य व्याकुरुते निषिध्यत इतीति ।

सु०— अत्र न सर्वाणि सूत्राणि व्याख्यातानि । ततः प्रतिज्ञा व्याहन्येतेत्यतो विषयादिकथनेन व्याख्याततां मन्वानः सर्वाधिकरणविषयपूर्वपक्षसिद्धान्तयुक्तीराह विरोधीति ।

अनु०— विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनाम् ॥
पृथक्समन्वयार्थानि स्थानान्येतानि सर्वशः ॥

यद्वा अत्राद्येन श्लोकेनाधिकर(णार्थो)णोपाधयः कथ्यन्ते । विरोधीति परमैश्वर्यविरोध्यर्थाः । सर्वेति उक्तवक्ष्यमाणव्यतिरिक्ताः । बाहुल्येति बाहुल्यविशिष्टार्थवाचिनः । कारणेति अवान्तरकारणवाचिनः । स्त्रीति स्त्रीलिङ्गाः । निषेधो वाच्यो येषामस्ति ते निषेधिनः । अथवा । द्वन्द्वात्पर इन्प्रत्ययो द्रष्टव्यः । तथात्वे विरोध्यादयोऽर्था ग्राह्याः । शब्दानामिति शेषः । एतानि एतत्पादगतानि सर्वशः स्थानानि अधिकरणानि एषां शब्दानां समन्वयप्रयोजनानीत्युक्ते प्रत्येकं सर्वशब्दसमन्वयसिद्धिरित्यपि प्रतीयेत । अतः पृथगित्युक्तम् ।

शे०— न सर्वाणीति । 'न संख्ये'त्यस्य 'कारणत्वेने'त्यस्य चाव्याख्यानादिति भावः ॥ प्रतिज्ञेति । परमाख्यविद्याव्याख्यां करोमीति प्रतिज्ञेत्यर्थः । विषयाऽदीत्यादिपदेन पूर्वपक्षसिद्धान्तन्यायसंग्रहः ॥ अधिकरणार्थोपाधय इति । अयमाशयः । नात्र तत्तदधिकरणे तत्तच्छब्दसमन्वय एव प्रतिपाद्यते । तथा सत्येतत्पादीयाधिकरणसप्तकेन सप्तानां शब्दानां समन्वयसिद्ध्यापत्त्याऽन्यत्रैवप्रसिद्धनामलिङ्गात्मकाशेषशब्दसमन्वयासिद्धिप्रसङ्गेन पादस्यैव व्यर्थत्वप्रसङ्गात्, किं नाम एकैकत्राधिकरणे समानन्यायानामनेकशब्दराशीनामेव निर्णयो वाच्यः । न च निर्णेतव्यशब्दावच्छेदकोपाध्यकथनेऽसौ युज्यत इत्यावश्यकमवच्छेदकोपाधिकथनमिति । परमैश्वर्यविरोध्यर्था इति । परमैश्वर्यविरोध्यवरत्वाद्यर्था इत्यर्थः ॥ उक्तवक्ष्यमाणव्यतिरिक्ता इति । नन्वेवमुक्तवक्ष्यमाणव्यतिरिक्तसर्वविषयकत्वस्य सर्वाधिकरणसाधारणत्वाद्विशेषोक्त्यनुपपत्तिः । अनुव्याख्याने व्युत्पत्तेरशक्यत्वस्य द्वितीये पूर्वपक्षहेतुत्वेनोक्त्यनुपपत्तिश्च । ज्योत्याद्यवयवानामब्रह्मत्वेन ज्योतिरित्यादिसमुदायस्य ब्रह्मणि व्युत्पत्तिसंभवादिति चेन्न । अवरादिशब्दानां पञ्चजनादिशब्दानां चेह विचार्यत्वेऽपि येन वाक्यरूपेण पूर्वत्रोत्तरत्र च विचार्यता तेन रूपेण द्वितीये न विचार्यता किन्तु पदादिरूपेणैवेत्यभिप्रायकत्वेनोक्तवक्ष्यमाणातिरिक्तग्रहणस्य ज्योतिरधिकरणे तेषामविचार्यत्वाभिप्रायकत्वाभावेनोक्तदोषानवकाशात् ॥ बाहुल्यविशिष्टेति । बहुत्वविशिष्टेत्यर्थः । विरोधीत्यादेः परमैश्वर्यविरोध्यर्थकशब्दपर्यन्तत्वाश्रयणाद्विरोध्यवरत्वाद्यर्थपरत्वे लाघवं मनसि निधाय पक्षान्तरमाह अथवेति । पक्षद्वयेऽपि विशेष्यानुक्त्या प्रसक्तां वाक्याऽऽभासतां तत्पूरणेन परिहरति शब्दानामिति ॥ शेष इति । अन्यपदार्थतयेति भावः । सर्वश इत्युक्तत्वात्पूर्वपादीयाधिकरणानामपि विरोधीत्याद्युक्तशब्दसमन्वयपरत्वमिति भ्रान्तिनिरासार्थमेतानीत्युक्त-

मिति भावेन तन्निरासोपयोगितया एतानीति व्याचष्टे **एतत्पादगतानीति** ॥ **एषामिति** । विरोधिसर्वे-त्याद्युक्तानामित्यर्थः । **प्रत्येकमिति** । प्रत्यधिकरणमित्यर्थः ।

**स०— सर्वेत्युक्तवक्ष्यमाणव्यतिरिक्ता इति** । यद्यप्युक्ता वक्ष्यमाणाः सर्वेपि शब्दाः समाकर्षादित्यधिकरणे निर्णेयाः तथापि अन्यत्रैवप्रसिद्धशब्दानां अत्र निर्णेतव्यत्वाभिप्रायेणेदमिति बोध्यम् ।

**प०— प्रतिज्ञेति** । 'व्याख्यां करोम्यन्वपि चाहमेव' इत्युक्तप्रतिज्ञा व्याहन्येतेत्यर्थः । पूर्वं विचारधर्मिस्वरूपोक्तिपरतया व्याख्यातम्, इदानीमधिकरणे समन्वीयमाना एवंजातीयका इत्येवंरूपक्रोडीकारकैकधर्माक्रान्ततया तत्तदधिकरणसमन्वेतव्यशब्दराशिप्रदर्शनपरतया व्याचष्टे **यद्वेति** ॥ **परमेति** । परमैश्वर्यविरोध्यर्थकाः दुःखिबद्धावरादिशब्दा इति आद्यनये ।१। सर्वेति ज्योतिर्नयोपाधिः । **उक्तेति** । पूर्वत्रावरादिशब्दानामुत्तरत्र पञ्चजनादिशब्दानां येन वाक्यरूपेण विचार्यता न तेनरूपेण द्वितीये ज्योतिर्नये विचार्यता किन्तु पदवर्णस्वरादिरूपेणेति उक्तवक्ष्यमाणप्रकारातिरिक्तप्रकारकसर्वशब्दत्वमुपाधिरित्यर्थः । अन्यथोक्तवक्ष्यमाणातिरिक्तसर्वविषयत्वस्य सर्वाधिकरणसाधारण्याद्विशिष्योक्तिर्नस्यादित्युक्तं चन्द्रिकायाम् । २ । **बाहुल्येति** । 'न संख्योपसंग्रहात्' इत्यस्योपाधिः 'पञ्चपञ्चजना' इत्येवमादिबाहुल्यविशिष्टार्थवाचिनः ।३। 'कारणत्वेन चे'त्यस्योपाधिः **कारणेति** । कार्यत्वे सति कारणमवान्तरकारणं तद्वाचिनः । आत्मन 'आकाशः संभूत' इत्यादयः ।४। स्त्रीलिङ्गा इति प्रकृतिश्चेति षष्ठस्योपाधिः ।५। 'एतेन सर्वं इतिसप्तमनयस्योपाधि र्निषेध इत्यादि ।६। **एतानी**त्यस्य व्याख्या एतत्पादगतानीति । पूर्वार्धस्यार्थानुवादः **एषां शब्दानामिति** । समन्वयार्थानीत्यस्यार्थः **समन्वयप्रयोजनानीति** । बहुव्रीहिरयम् ।

**या०— प्रतिज्ञेति** । परमाख्यविद्याव्याख्यां करोमीति प्रतिज्ञेत्यर्थः । **सर्वेत्युक्तवक्ष्यमाणेति** । यद्यपि ज्योतिरधिकरणे योगवृत्त्या सर्वेषामपि पदवर्णादीनां समन्वय उक्तः । तथाऽप्युक्तवक्ष्यमाणातिरिक्तग्रहणमवरादीनां लिङ्गानां पञ्चजनादिशब्दानां च येन वाक्यरूपेण पूर्वत्रोत्तरत्र च विचार्यता तेन रूपेण ज्योतिरधिकरणे न विचार्यता किन्तु पदादिरूपेणैवेत्यभिप्रेत्य । अन्यथोक्तवक्ष्यमाणातिरिक्तसर्वविषयत्वस्य सर्वाधिकरणसाधारण्यात् विशेषोक्तिर्न स्यादिति ज्ञातव्यम् ।

**श्री०— ॥ प्रतिज्ञेति** । परमाख्यविद्याव्याख्यां करोमीति प्रतिज्ञेत्यर्थः ॥ **सर्वेति** । एतत्पादीयसर्वेत्यर्थः । विषयेत्युक्त्या तत्तदधिकरणसमन्वेतव्यतत्तच्छब्दमात्रमेव प्राप्तम्, न तत्समानजातीयशब्दान्तरसंग्रहः । तत्संग्राहकानुक्तेरित्यत आह **यद्वेति** । उपाधयः समन्वेतव्यशब्दताऽवच्छेदकीभूता धर्मा इत्यर्थः ॥ **द्वन्द्वात्पर इति** । पूर्वं विरोधिनश्च सर्वे च बाहुल्याश्च कारणाश्च स्त्रियश्च निषेधिनश्च ये शब्दास्तेषामिति द्वंद्वसमास एव कृतः । इदानीं तु विरोधि च सर्वं च बाहुल्यं च

कारणं च स्त्री च निषेधश्च विरोधिसर्वबाहुल्याकारणस्त्रीनिषेधा इति द्वंद्वं कृत्वा पश्चाद्विरोध्यादयो निषेधान्ता अर्था येषां शब्दानां ते शब्दास्तथा तेषामित्यर्थो ज्ञेयः ॥ **प्रत्येकमिति** । एकैकस्मिन्नधिकरणे सर्वेषां विरोध्यादिशब्दानां समन्वयः सिद्ध्यतीति प्रतीतिः स्यादित्यर्थः ॥ १-४-५ ॥

च० — परमैश्वर्यविरोध्यर्थकशब्दपरत्वाश्रयणादपि तद्विरोध्यवरत्वाद्यर्थपरत्वोपगतिरेव ज्यायसी लाघवादित्यपि प्रतिसन्दधानः कल्पान्तरमाश्रयते **अथवेति** । विशेष्यवाचकानिर्देशनियन्त्रितां न्यूनतां प्रतिविधत्ते । **शब्दानामितीति** ।

अनु० — सर्वमानैर्विरोधश्च व्युत्पत्तेरप्यशक्यता ।
परस्परविरोधश्च विरोधः कार्यतद्वतोः ॥
स्त्रीलिङ्गत्वं निषेधश्च पूर्वपक्षेषु युक्तयः ॥
दोषात्यस्पृष्टिनियमः शब्दार्थोऽनेकता तथा ॥
बहुरूपत्वमीशस्य व्यक्त्यव्यक्तिविशेषिता ॥
उत्पादनं स्वदेहाच्च दुर्जनाव्यक्तता तथा ॥
इत्यादियुक्तयः साक्षात्सिद्धान्तस्थापिका इह ॥

---

**सु० — सर्वेत्यनेनैव समाकर्षाधिकरणार्थोऽपि संगृहीतः । तस्य ज्योतिरधिकरणार्थाक्षेपपरिहारार्थत्वात् । 'सर्वमानैर्विरोधश्चे'त्याद्यर्थो न्यायविवरणादाववगन्तव्यः ॥**

शे० — नन्वेतत्पादीयाधिकरणार्थोपाधिकथनपरतया नैतच्छ्लोकव्याख्यानं युज्यते । समाकर्षादिति सूत्राष्टकस्य कारणत्वेनेति चतुर्थाधिकरणशेषत्वमिति चिरन्तनमते एतत्पादीयाधिकरणानामपि षट्त्वेन विरोधीत्याद्युपाधिषट्कोक्तेरुपपन्नत्वेऽपि टीकाकृता सूत्राष्टकस्य पृथगधिकरणत्वाङ्गीकारेण एतत्पादीयाधिकरणानां सप्तत्वेनोपाधिषट्कोक्तेरयुक्तत्वादित्यतो ज्योतिरधिकरणवत्समाकर्षाधिकरणस्यापि सर्वशब्दविषयत्वेन तदुपाधेरेव समाकर्षाधिकरणोपाधित्वेन तदुपाधितः पृथगुपाध्यभावाभिप्रायेणोपाधिषट्कोक्तिः स्वमतेऽपि संभवतीत्याह **सर्वेत्यनेनैवेति** । नन्वेवं ज्योतिरधिकरणेनैव समाकर्षाधिकरणप्रयोजनसिद्धेः तद्वैयर्थ्यमित्यनस्तत्र प्राप्ताक्षेपपरिहारार्थत्वान्न तदित्याशयेनाह **तस्येति** । अत्र यद्यप्यनुव्याख्याने विरोधीत्याद्युपाधिकथनदशायां पृथगुपाध्यनुक्तेः 'सर्वमानैर्विरोधश्चे'त्यादिपूर्वपक्षसिद्धान्तयुक्तिसंग्रहदशायां पृथग्युक्त्यनुक्तेः, भाष्ये समन्वेतव्यशब्दान्तरानुक्तेस्तत्त्वप्रदीपानुसाराच्च समाकर्षादित्यादिसूत्राष्टकस्य पूर्वाधिकरणशेषत्वमेव युक्तम् । तथाऽपि पूर्वतन्त्रे 'हेतुदर्शनाच्चे'ति गुणसूत्रस्य विरोधाधिकरणशेषत्वेऽपि पृथङ्न्यायसूचकत्ववत् अस्यापि तदस्तीति दर्शयितुं ग्रन्थकृताऽधिकरणान्तरं कृतमिति ध्येयम् ॥ छ ॥

प०— नन्वत्र पादे सप्ताधिकरणानि भाष्यटीकायां प्रतीयन्ते । अत्र च षडुपाधय एव कथमुक्ता इत्यत आह सर्वे इत्यनेनैवेति ॥ ज्योतिरधिकरणार्थाक्षेपपरिहारार्थत्वादिति । तत्र हि कल्पनोपदेशादितिगुणसूत्रेण निगमनिघण्टुव्याकरणादिसिद्धरूढ्यादिवृत्तेर्लोके, महायोग(व)तोन्यत्रापीत्यर्थद्वयाङ्गीकारेण कर्मक्रमादिलोपो लोके व्युत्पत्त्ययोगो वा नेत्युक्तिरयुक्ता । तथात्वे अक्षादिशब्दानामनेकार्थेष्विव सर्वशब्दानां ब्रह्मण्यन्यत्र च तुल्या वृत्तिः स्यात् । एवं च समन्वयसूत्रस्यावधारणायोगः । अतोन्यत्र रूढ्याद्युक्तिः कल्पनासूत्रीया न युक्तेत्याक्षेपे सति, हरावधिका वृत्तिरन्यत्र हीनेति परिहारार्थत्वादित्यर्थः । चन्द्रिकायां समाकर्षादिति पञ्चमस्योपाध्यनुक्तिस्तु पञ्चमस्यापि द्वितीयवत्सर्वविषयत्वेन तदुपाधितः पृथगुपाध्यभावात्केवलन्यायभेदमात्रेणाधिकरणभेद इत्युक्तम् ॥ सर्वेति । आनुमानिकनये सर्वमानविरोधः पूर्वपक्षस्य युक्तिः । दोषात्यस्पृष्टिनियमः सिद्धान्तस्य ॥ १ ॥ ज्योतिर्नये व्युत्पत्तेरप्यशक्यता । शब्दार्थानेकतावर्णनम् ॥ २ ॥ नसंख्येतिनये परस्परविरोधः । ईशस्य बहुरूपत्वम् ॥ ३ ॥ कारणत्वेनेत्यत्रैकस्यैव कार्यकारणभावविरोधः । व्यक्त्यव्यक्तिविशेषता ॥ ४ ॥ प्रकृतिश्चेत्यत्र स्त्रीलिङ्गत्वम् । उत्पादनं स्वदेहात् ॥ ५ ॥ एतेनेत्यत्र निषिद्धात्मकत्वं दुर्जनाव्यक्तता ॥ छ ॥

सु०— एवमानुमानिकमित्यादीनि सूत्राणि सङ्क्षेपतो व्याख्याय सिंहावलोकनन्यायेन समाकर्षाधिकरणंज्योतिरधिकरणं 'चान्वय' इत्यादिना किञ्चिद्विवृणोति ।

तथा हि । समाकर्षाधिकरणे प्रतिपाद्यमानो वाक्यान्वयः सूत्रकारस्याभिमतो न वा । आद्ये वक्तव्यम् । प्रागुक्तप्रतिपदान्वयो युक्तो न वेति । नेति पक्षे न वक्तव्यः । युक्तत्वे तु मुख्ये तस्मिन्विद्यमानेऽस्य वैयर्थ्यम् । किञ्च वाक्यान्वयस्य स्वमतत्वेऽन्यार्थं तु जैमिनिरित्यादिसूत्रेषु जैमिन्यादिग्रहणं व्यर्थं स्यात् । अपि च प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः उत्क्रमिष्यत एवं, भावादित्यौडुलोमिः अवस्थितेरिति काशकृत्स्न इति वाक्यान्वयस्त्रिप्रकारोऽभिहितः । तस्य परस्परमविरोधे मतभेदो न स्यात् । विरोधे तु कथं सूत्रकाराभिमतत्वम् । अथ सूत्रकारस्यानभिमतो वाक्यान्वयस्तदा निराकरणसूत्रेणभाव्यम् । न चैतदस्ति । तत्कथमेतदित्यत आह अन्वय इति ।

अनु०— ॥ ॐ समाकर्षात् ॐ ॥

अन्वयः सर्वशब्दानामशक्यो ज्ञातुमञ्जसा ।
इति यल्लोकवैमुख्यं जैमिन्यादिमतं वदन् ॥
विद्याऽधिनाथो भगवानपाचक्रे स्वयं प्रभुः ।

प्रतिपदान्वयेऽभिहिते हि मन्दाधिकारिणां मोक्षमार्गवैमुख्यं स्यात् । सर्वशब्दानां ब्रह्मणि अञ्जसा=मुख्यया वृत्त्या अन्वयस्तावज्ज्ञातुमशक्यः । 'कश्छन्दसामिति' श्रुतेः । न च तज्ज्ञानेन विना मोक्षः । न चाशक्ये प्रवृत्तिर्युक्ता । आकाशरोमन्थनादौ प्रवृत्त्यदर्शनात् । तथा चाहुः । 'व्यसनानि दुरन्तानि समव्ययफलानि च । अशक्यानि च वस्तूनि नारभेत विचक्षणः' इति । तस्मादास्तामयं मोक्षः । शक्यानुष्ठानसाधनधर्माद्यर्थमेव प्रवर्तामहीति । एवं मन्दलोकस्य मोक्षमार्गवैमुख्यं भगवान्सूत्रकारः स्वयमेव जैमिन्यादिमतमेतदिति वदन्वाक्यान्वयप्रदर्शनेन निराकृतवान् । अनेन स्वाभिमत एव वाक्यान्वयोऽतो न निराकरणसूत्राभावो दोषाय । प्रतिपदान्वयश्च युक्त एवेति तद्व्युत्पादनमुपपन्नमेव । तथाऽपि प्रतिपदमन्वये सामर्थ्यवैकल्येन मोक्षमार्गाद्विमुखानां मन्दाधिकारिणामुपायान्तरप्रदर्शनेन समाश्वासार्थं वाक्यान्वयकथनं चोपपन्नमित्युक्तं भवति ।

शे॰— व्याख्यानेऽनवशेषात्किमुत्तरग्रन्थेनेत्यत आह **एवमिति** । एतत्सूत्रीयसंक्षेपव्याख्यानानन्तर्यमेव तद्विवरणस्यौचित्यं तत्कथं व्यवधानमित्यत आह **सिंहेति** । यद्यप्यत्र पौर्वापर्यक्रमेण ज्योतिरधिकरणं समाकर्षाधिकरणं चेति वक्तव्यम् । तथाऽपि सूचीकटाहन्यायेन प्रवृत्ततत्तत्सूत्रविवरणपरोत्तरग्रन्थपौर्वापर्यक्रममनुरुद्ध्यायं निर्देश इति ध्येयम् । उक्तेऽर्थेऽनुपपत्त्यभावात्किं विवरणेनापि प्रयोजनमित्यतोऽधिकरणद्वयार्थेऽनुपपत्तिं दर्शयितुं प्रतिजानीते **तथा हीति** । तत्कथमित्यतस्तावत्समाकर्षाधिकरणविवरणपरेणान्वय इत्युत्तरानुव्याख्यानेन व्यावर्त्यशङ्कामुत्थापयति **समाकर्षाधिकरण इति** । **युक्त इति** । तेषु तेष्वित्युत्तरानुव्याख्यानोक्तरीत्येति शेषः ॥ **न वेतीति** । प्रकृत्यादेरन्यपरत्वाभावे निर्वचनानुपपत्तेरिति वक्ष्यमाणन्यायेनेति शेषः । वैपरीत्येन वैयर्थ्यशङ्कापरिहारायोक्तम् **मुख्यत इति** ॥ **वैयर्थ्यमिति** । प्रतिपदान्वयज्ञानेनैव ब्रह्मज्ञानसिद्धेरन्यस्य प्रयोजनस्य चाभावादिति भावः । स्वशिष्याणामित्युत्तरानुव्याख्याननिरसनीयां शङ्कामाह **किञ्चेति** । तारतम्यमित्याद्यनुव्याख्यानव्यावर्त्यां तामाह **अपि चेति** ॥ **कथमिति** । न हि सूत्रकारो विरुद्धभाषीति भावः ॥ **रोमन्थनादाविति** । यद्यपि 'रोमन्थस्तु वृषादीनां यत्स्याच्चर्वितचर्वणमि'त्यभिधानाद्रोमन्थशब्दः पशुकर्तृकचर्वितचर्वणे प्रसिद्धः । तथाप्यत्र लक्षणया चर्वणमात्रपरो द्रष्टव्यः । आदिपदेन चन्द्रमण्डलाहरणादेः संग्रहः । उक्तेऽर्थे नीतिशास्त्रमुदाहरति **तथा चाहुरिति** । दुरन्तानि दुःखोत्तराणि । समे व्ययफले येषां तानि समव्ययफलानि । अशक्यानि साधकप्रयत्नासाध्यानि ॥ **शक्येति** । शक्यानुष्ठानं साधनं यागादिरूपं यस्येति बहुव्रीहिः । अनेनेत्यस्य व्यवहितेन 'उक्तं भवति'इत्यनेन संबन्धो बोध्यः ।

म० — **आकाशरोमन्थनादाविति** । आकाशचर्वणादावित्यर्थः ।

प० — विवरणाकरणे काऽनुपपत्तिः प्रसेत्यतः समाकर्षाधिकरणे तावत्तामाह **तथा हीति** । ज्योतिरधिकरणे तु तेषु तेष्वित्येतद्व्यमनिकायां वक्ष्यति **प्रागुक्तेति** । ज्योतिर्नयोक्तेत्यर्थः ॥ **त्रिप्रकार इति** । अल्पास्थिरफलादिपरिकरयुक्तकर्मदेवतादौ वैराग्योत्पादनद्वारा ब्रह्मज्ञानोपयुक्तत्वेन । मुमुक्षोर्ज्ञान-हेतुकर्मानुष्ठापकत्वेन । सर्वाधारत्वप्रकारकब्रह्मज्ञाने प्रकारभूतधेयकर्मदेवताद्यर्पकत्वेनेत्येवं त्रिप्रकारेण ब्रह्मण्यन्वेतीत्युक्तत्वाद्वाक्यान्वयस्त्रिप्रकार उक्त इत्युक्तम् । **निराकरणसूत्रेणेति** । व्याकरणे 'लुपि युक्त-वद्व्यक्तिवचने' इत्यादिनोक्तमतान्तरस्य स्वानभिमतस्य 'तदशिष्यं संज्ञाप्रमाणत्वात्' इत्यादिसूत्रे निरास-दर्शनादिति भावः ॥ **आकाशरोमन्थनादाविति** । रोमन्थनं चर्वितचर्वणम् । आकाशभक्षणादा-वित्यर्थः । शक्यानुष्ठानसाधनेति बहुव्रीहिगर्भबहुव्रीहिः । धर्मादीत्यादिपदेनार्थकामौ द्वावेव गृह्येते ॥ **नथापीति** । मुख्ये पदसमन्वये सत्यपीत्यर्थः ।

**या० — आकाशरोमन्थनादाविति** । यद्यपि रोमन्थनशब्दः पशूनां चर्वितचर्वणे प्रसिद्धः । 'रोमन्थस्तु वृषादीनां यत्स्याच्चर्वितचवर्णमि'त्यभिधानात् । तथाऽप्यत्र चर्वणमात्रोपलक्षकः । तथा चाकाशचर्वणादावित्यर्थः ॥

**च० — आकाशरोमन्थनादाविति** । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोरि'ति सूत्रे रोमन्थायते चर्वितस्य आकृष्य पुनश्चर्वणमित्यर्थः । नेह कीटो रोमन्थं वर्तयति । अपानप्रदेशान्निस्सृतं द्रव्यमिह रोमन्थस्तदर्त्तीत्यर्थ इति कैयटादयः । वर्तुलं करोतीत्यर्थ इति न्यासकारहरदत्ताविति पाणिनीयैरभिहिततया 'रोमन्थस्तु वृषादीनां यत्स्यच्चार्वितचर्वणमि'त्यभिधानव्युत्पादिताभिधावृत्तिकार्यस्य प्रकृते बाधालक्षणया चर्वणमात्रार्थो रोमन्थनशब्दः तथा चाकाशचर्वणादावित्यर्थः । आदिपदं चन्द्रमण्ड-लाहरणादिसंग्राहकम् ।

सु० — तर्हि जैमिन्यादिग्रहणं व्यर्थमित्युक्तमित्यत आह स्वशिष्याणामिति ।

अनु० — स्वशिष्याणां प्रसिद्ध्यर्थं मतमात्मीयमंशतः ।
विज्ञातं तैर्जगादात्र तारतम्यं नृणां वदन् ॥ ५ ॥

**जैमिन्यादीनामिति शेषः । नात्र जैमिन्यादिग्रहणेन तदीयमेवैतन्मतमित्युच्यते । किन्तु मदीयमेव मतमेकदेशतो जैमिन्यादिभिर्विज्ञातमिति । एतच्च तेषां ख्यात्यर्थम् । गुरुणा श्लाघिता हि शिष्या लोके ख्यातिं लभन्ते ।**

**ननु वाक्यान्वयस्य प्रकारत्रयं परस्परविरुद्धं कथं सूत्रकाराभिमतं स्यादित्यत आह** तारतम्यमिति । **नृणामल्पाधिकारिणामवस्थातारतम्यं वदन्नित्यनेनावस्थातारतम्यव्यवस्थया मत-भेदो न विरोधेनेत्युक्तं भवति । एतेनाङ्गीकृतेऽपीत्याद्युक्तं विवृतं वेदितव्यम् ॥ ५ ॥**

शे०— **तर्हीति ।** वाक्यान्वयस्य स्वमतत्व इत्यर्थः । तर्हि स्वशिष्यग्रहणमेव कार्यम् । किं जैमिन्यादिग्रहणेनेत्यतस्तेषामेव स्वशिष्यत्वादिति भावेन शेषं पूरयति **जैमिन्यादीनामिति शेष इति ।** इतीत्यस्य जैमिन्यादिग्रहणेनोच्यत इत्यनेन संबन्धः । किमेतत्कथनेनापीत्यत आह **एतच्चेति प्रकारत्रयमिति ।** प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयोक्तमित्यर्थः । अल्पबुद्धय इति पूर्वानुव्याख्यानं मनसि निधाय नृणामित्येतद्व्याख्याति **अल्पाधिकारिणामिति ।** कथमनेन प्रकारत्रयस्य परस्परविरोधपरिहार इत्यत आह **अनेनेति ॥ अवस्थेति ।** सपरिकरं कर्मोक्त्वा 'अमृतो वा व सोमपो भवती'ति तस्य दुःखसंभिन्नं विनाशिफलमुच्यते । तत्परामृश्य यस्मादेवं कर्माद्यनित्यफलं तस्मान्न तन्मोक्षसाधनं किन्तु ज्ञानमेवेति ज्ञानमेव मयाऽऽपाद्यमिति जिज्ञासुत्वावस्था, अल्पाधिकारिणां प्रथमं जायते । ततस्तादृशज्ञानस्य कर्मादि-साध्यतया कर्मादेरपि भाव्यत्वात्कर्मानुष्ठानवत्त्वावस्था, भवति । अनन्तरं कर्मणा प्रक्षीणान्तःकरणमलानां तेषां सर्वं परमात्मन्यवस्थितमिति ज्ञानं भवतीति तादृशज्ञानवत्त्वावस्था जायत इत्युत्तरोत्तरावस्थानां पूर्व-पूर्वावस्थात उत्तमत्वतारतम्यव्यवस्थयेत्यर्थः । अत्राऽऽश्मरथ्यमतमाऽऽद्यावस्थाविषयकम् । औडुलोमिमतं द्वितीयावस्थाविषयकं काशकृत्स्नमतं तृतीयावस्थाविषयकमिति विवेको द्रष्टव्यः ॥ न चानेकाधिकारि विषयत्वान्न विरोध इति टीकाविरोधः । तत्राधिकारिभेदेनैव मतभेदस्योपपादितत्वादिति वाच्यम् । तत्राप्यधिकारिनिष्ठानेकावस्थाविषयकत्व एव तात्पर्यात् । अवस्थात्रयरूपविशेषणभेदेन विशिष्टभेद-विवक्षया तत्प्रवृत्तेरिति वा ॥ १-४-५ ॥

स०— **अवस्थातारतम्यव्यवस्थयेति ।** प्रतिज्ञासिद्धेरित्यत्र कथं कर्म ज्ञानार्थमित्याशङ्कायां क्षुद्रफलार्थिनं प्रति तत्फलाय तत्कर्म विदधदपि कर्मवाक्यं मुमुक्षुं प्रति क्षुद्रफलकत्वात्कर्मणो तद्धानेना-क्षुद्रफलकं ज्ञानमेवोपादेयमिति वैराग्यजननद्वारा ज्ञानार्थमित्युक्तम् । उत्क्रमिष्यत इत्यत्र तु अन्तःकरण-शुद्धिद्वारा कर्मण उपादेयताज्ञानार्थमित्युक्तम् । अवस्थितेरित्यत्र कथं ब्रह्मज्ञानमिति जिज्ञासायां स्वेतरसर्वाधारत्वेनेति साक्षाज्ज्ञानापेक्षितप्रकारसमर्पणायेतरोक्तिः । मतत्रयस्याप्यवस्थातारतम्यव्यवस्थया एकविषयत्वान्न विरोधः । अधिकारभेदेनेति तत्त्वप्रकाशिकाया अप्ययमेवाभिप्राय इति न तद्विरोध इति ध्येयम् । अन्ये तु प्रथमं तावत् यस्मात्कर्मादिकमनित्यफलं अतो ज्ञानमेव मुक्तिसाधनमिति ज्ञानस्य मोक्षहेतुतानिश्चयावस्था । तदनन्तरमेवं निश्चयवतां तादृशज्ञानसाधनाय कर्मादिना भाव्यमिति कर्मानु-ष्ठानावस्था । अनन्तरं कर्मणा प्रक्षीणान्तःकरणमलानां तेषां सर्वं परमात्मन्यवस्थितमित्येवंरूपं ज्ञानमुत्पद्यत

इति ज्ञानित्वावस्था । इत्येवमुत्तरोत्तरावस्थोत्तमताभिप्रायेण वाक्यान्वयः सूत्रकृता क्रमेण प्रकारत्रयेणोपपादित इति भाव इत्याहुः । भावबोधे ब्रह्मज्ञानार्थित्वाभावेन स्वर्गाद्यर्थित्वावस्थाविशिष्टाधिकारिविवक्षया आश्मरथ्यमतम् । ब्रह्मजिज्ञासुत्वावस्थाविशिष्टरूपाधिकारिविवक्षया औडुलोमिमतम् । ज्ञानित्वावस्थाविशिष्टाधिकारिविवक्षया काशकृत्स्नमतं इति व्यवस्थातारतम्यं प्रदर्शितम् ।

प०— नृणामित्यनुवादः, अल्पाधिकारिणामिति व्याख्या ॥ **अवस्थातारतम्यमिति** । अमुमुक्षाऽवस्थोपेतं मन्दं प्रत्याद्यं मतम् । ततोऽधिकं मुमुक्षाऽवस्थं प्रति द्वितीयम् । ततोऽप्यधिकं ज्ञानित्वावस्थं प्रति तृतीयं मतमित्येवममुमुक्षामुमुक्षाज्ञानित्वदशारूपावस्थात्रयस्योत्तरोत्तराधिक्यं वदन्तीत्यर्थः । प्रपञ्चयिष्यते चैतदिति प्रागुक्तं दर्शयति **एतेनेति** ॥ ५ ॥

या०— **प्रकारत्रयमिति** । प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयोक्तमिति शेषः ॥ **अवस्थातारतम्यमिति** । अल्पाधिकारिणां प्रथमं तावद्यस्मात्कर्मादिकमनित्यफलमतो ज्ञानमेव मुक्तिसाधनमिति ज्ञानस्य मोक्षहेतुतानिश्चयवत्त्वावस्था । तदनन्तरं तादृशज्ञानसाधनाय कर्मादिना भाव्यमिति कर्मानुष्ठानवत्त्वावस्था । अनन्तरं कर्मणा प्रक्षीणान्तःकरणमलानां तेषां सर्वं परमात्मन्यवस्थितमित्येवंरूपज्ञानमुत्पद्यत इति ज्ञानित्वावस्थेत्येवमुत्तरोत्तरावस्थानामुत्तमतातारतम्यं वदन्तीत्यर्थः । प्रथममल्पाधिकारिणां ब्रह्मज्ञानार्थित्वाभावेन स्वर्गाद्यर्थित्वावस्था । अनन्तरं ब्रह्मजिज्ञासुत्वावस्था । तदनन्तरं ज्ञानित्वावस्थेत्येवं वाऽवस्थातारतम्यं भावबोधोक्तं द्रष्टव्यम् । न चैवमधिकारिभेदेनेति तत्त्वप्रकाशिकाविरोधः । तत्राप्यधिकारिणोऽवस्थाभेदेनेत्यर्थस्य विवक्षितत्वात् ॥ १–४–५ ॥

च०— **प्रकारत्रयमिति** । प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयाभिहितमित्यादि । **अवस्थातारतम्यमिति** । प्रथममल्पाधिकारिणां ब्रह्मज्ञानार्थित्वाभावेन स्वर्गाद्यर्थित्वावस्था अनन्तरं ब्रह्मजिज्ञासुत्वावस्था तदनन्तरं ज्ञानित्वावस्थेत्येवमवस्थातारतम्यं वदन्तीत्यादिदिशाऽर्थापयन्ति ।

**सु०— ज्योतिरधिकरणे योगवृत्त्या परमेश्वरेऽखिल(पदानां )शब्दसमन्वयोऽभिहितः । नासौ युज्यते । प्रकृत्यादेरन्यपरत्वाभावे निर्वचनानुपपत्तेः । न हि जातादिपदानामन्यपरत्वानङ्गीकारे जातमोतं यस्मिन्निति व्युत्पत्तिः सम्भवति । प्रकृत्यादेरन्यपरत्वे तु सर्वशब्दानां भगवद्वाचित्वमिति गतः पक्षः । किञ्च वसन्त इत्यादीनां भगवत्परत्वे कर्मानुष्ठानलोपो लोकव्यवहारविलोपश्च प्रसज्येतेत्युक्तमित्यत आह** तेष्विति ।

**अनु०— ॥ ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ॐ ॥**

तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः ।

प्रयोजनबहुत्वेन तस्य तस्याविरोधतः ।
उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते ।

व्युत्पत्त्युपपत्तिः कर्मानुष्ठानसम्भवो लोकव्यवहारानुच्छेदश्चेत्येवं प्रयोजनानां बहुत्वेन कारणेन तेषु तेषु तत्तच्छब्दवाच्यतया प्रसिद्धेष्वर्थेषु तत्तच्छब्दानां, रूढिरित्युपलक्षणं, वृत्तिरङ्गीकृता यतस्तस्मात्तस्य तस्याविरोधतः तं तमर्थमपरित्यज्य उपदेशलिङ्गप्रकरणादिबलेन सर्वशब्दानां विष्णौ च शक्तिर्गृह्यते। यद्यपि अत्रैतावदेव वक्तव्यम्। 'नैष दोषः। सर्वशब्दानां भगवद्वाचिनामपि प्रसिद्धार्थान्तरवाचकत्वस्यापि स्वीकारात्। ज्योतिरादिशब्दानां हि ज्योतिष्टोमाद्यर्थत्वस्याङ्गीकृतत्वान्नानुष्ठानलोकव्यवहारविलोपः। जातमोतमित्यवयववृत्त्या परमेश्वरे वृत्तौ जातादिपदानामन्यपरत्वमङ्गीक्रियत इति व्युत्पत्त्युपपत्तिः। पुनस्तदवयवस्याप्यन्यपरत्वमुपादाय परमेश्वरे जातपदव्युत्पत्तिसम्भव इति"। तथाऽपि स्यादेतदेवम्। यदि शब्दानामनेकार्थत्वं स्यात्। तदेव कुत इति शङ्कानिरासार्थमिदमुक्तमिति ज्ञातव्यम्। तथाहि। पदार्थान्तरवाचित्वं तावदुक्तप्रयोजनसिद्धयेऽङ्गीकरणीयम्। परमेश्वरवाचित्वं च सर्वशब्दानां 'नामानि सर्वाणि यमाविशन्ति'। 'ता वा एताः सर्वा ऋच' इत्याद्युपदेशबलाच्छ्रुतिलिङ्गादिसामर्थ्याच्च तत्तच्छब्दानामवश्यमङ्गीकरणीयमिति। अनेन 'कल्पनोपदेशाच्च मध्वादिवदविरोध' इति सूत्रस्य तात्पर्यमुक्तं भवति।

---

टी० — अस्तु उक्ताक्षेपपरिहारार्थं समाकर्षाधिकरणविवरणम्। तथाऽपि ज्योतिरधिकरणविवरणमनर्थकमित्यतस्तत्रोक्तार्थानुवादपूर्वकं तत्राप्यनुपपत्तिमाशङ्कते **ज्योतिरधिकरण इति** ॥ **न हीति**। भगवन्नामावृत्तिप्रसङ्गादिति भावः ॥ **अन्यपरत्वे त्विति**। अन्यत्र प्रसिद्धत्वेनेति शेषः। उपलक्षणं चैतत्। अन्यत्र प्रसिद्धेः समुदायेऽप्यविशेषात्तस्याप्यन्यपरत्वापत्तेरित्यपि द्रष्टव्यम् ॥ **अनुष्ठानलोप इति**। अनुष्ठापकप्रमाणान्तराभावादिति भावः ॥ **लोकेति**। सर्वशब्दानां भगवत्परत्वेन तद्वाचकशब्दाभावादिति भावः ॥ **रूढिरित्युपलक्षणमिति**। कल्पनेतिसूत्रेऽन्यत्र सप्तवृत्तीनामप्यङ्गीकारादिति भावः। अत एव तावत्साधारण्याय वृत्तिरिति सामान्यनिर्देशः ॥ **उपदेशेति**। 'नामानि सर्वाणीत्या'द्युपदेशबलादित्यर्थः ॥ **लिङ्गेति**। श्रुतिलिङ्गेत्यर्थः। अत एव वक्ष्यति 'श्रुतिलिङ्गादिसामर्थ्याच्चे'ति। प्रयोजनबहुत्वेनोपदेशादिसामर्थ्यादित्यस्य वैयर्थ्यमाशङ्क्य परिहरति **यद्यप्यत्रेत्यादिना** ॥ **इदमुक्तमिति**। प्रयोजनबहुत्वेनेत्यादिकमुक्तमित्यर्थः। तेषु तेषु पदार्थेष्वित्यादेरभाष्यत्वशङ्कां परिहरति **अनेनेति** ॥

म० — एतावदेववक्तव्युमित्यक्तं कियद्वक्तव्यमित्यत आह **नैष दोष इत्यादिना ॥ पुनस्तदव-यवस्याप्यन्यपरत्वमुपादायेति** । एकवर्णपर्यन्तं अन्यपरत्वमङ्गीकृत्य तेन भगवत्परत्वमुपपाद्य एकवर्णात्मकस्य रूढ्या भगवत्परत्वं उपपादनीयमितिभावः । नच सर्वेऽपि शब्दा योगेन भगवत्परा इति गतमिति वाच्यं । यावन्तः सावयवाः शब्दाः ते सर्वेऽपि योगेन भगवत्परा इत्यभिप्रेतत्वात् । अत एव टीकाकाराः अन्ततः प्रकृतिप्रत्यययोस्तदर्थे रूढेराश्रयणीयत्वाच्चेत्यवदन् । तथाऽपीति समाधानं ॥ **इदमुक्तमिति** ॥ प्रयोजनबहुत्वतः उपदेशादिसामर्थ्याच्चेत्यत उक्तमिति भावः ।

प० — प्रागुक्तामप्यनुपपत्तिं व्यवहितत्वात्पुनरनुवदति **ज्योतिरित्यादिना** । ल्यब्लोपे पञ्चमीत्युपेत्याह **तं तमर्थमपरित्यज्येति** । उपदेशादीत्यस्यार्थः उपदेशलिङ्गप्रकरणादिबलेनेति । विवरिष्यते चैतदनुपदं तेषु तेष्वित्यादिसार्धश्लोके । अन्यत्र रूढ्यादिवृत्त्यङ्गीकारे प्रयोजनबहुत्वेनेति यन्नियामकमुक्तं यच्च विष्णौ शक्त्यङ्गीकारे उपदेशादिसामर्थ्यादिति नियामकमुक्तं, तदुभयं व्यर्थम् । अवशिष्टेनैव प्रकृतशङ्कानिरासादिति भावेनाक्षिपति **यद्यप्यत्रैतावदेवेति** । एतावदेवेत्युक्तं तन्नियामकद्वयं विनाकृतावशिष्टमूलमर्थतोनुवदन्व्यनक्ति **नैष दोष इत्यादिना** तथापीत्यतः प्रागुक्तेन ग्रन्थेन । इति-शब्दस्य इत्येतावदेव वक्तव्यमिति पूर्वेणान्वयः । इदमुक्तमित्युक्तं नियामकद्वयं व्यनक्ति **तथा हीति** । 'चमसवदविशेषादिति' सूत्रोपात्तश्रुतिमाह **नामनीति** । ज्योतिस्सूत्रे 'तथाह्यधीयत' इत्यंशोपात्तमाह **तावा इति** । आदिपदेन प्रकृतिसूत्रे प्रतिज्ञादृष्टान्तेत्याद्यंशोपात्तग्रहः ॥ **श्रुतीति** । 'अस्तिब्रह्मेति-चेत्' इत्यादिब्रह्मादिशब्दबलात् 'कोह्येवान्यात्क' इत्युक्तजगच्चेष्टकत्वादिलिङ्गबलात् । आदिपदोक्तमान्त्र-वर्णिकादिप्रकरणभृगुवल्ल्यादिसमाख्यादिग्रहः । इतिशब्दस्येतीदमुक्तमिति पूर्वेणान्वयः ॥ **अनेनेति** । तेषु तेष्वित्यादिसार्धश्लोकेन ।

या० — ॥ **इदमुक्तमिति** । 'प्रयोजनबहुत्वेनोपदेशादिसामर्थ्यादिति' पदद्वयमुक्तमित्यर्थः ॥

श्री० — ॥ **वृत्तिरिति** । तथा चैवं व्याख्याने जगति क्वचिद्गौण्यादिवृत्तिस्वीकारेण तत्संग्रहो भवति । न चेन्नेति द्रष्टव्यम् । **एष दोषः** कर्मानुष्ठानलोपादिरूपः । जातमोतमितीत्यत्र ज्योतिःशब्दस्येति शेषः । नैष दोष इत्यारभ्य जातपदव्युत्पत्तिसम्भव इत्येतावदेव वक्तव्यमित्यन्वयः । **अनेकार्थत्वं** ईश्वरतदितररूपानेकार्थत्वमित्यर्थः । उपदेशबलादित्यत्रोपदेशपदेन श्रुत्यादिषट्कान्तरगतं वाक्यं ग्राह्यम् । न श्रुतिः । तथात्वे श्रुतिलिङ्गादीत्यत्र पुनः श्रुतिग्रहणायोगादिति ध्येयम् । 'ज्योति-रुपक्रमात्तु तथा ह्यधीयत एक इत्यत्रोपदेशबलात् । 'शब्दादेव प्रमित' इत्यादौ रूढशब्दरूपश्रुतिबलात् । 'आकाशस्तल्लिङ्गादि'त्यत्र लिङ्गबलात् । आदिपदेन 'आत्मा प्रकरणादि'त्यादौ प्रकरणादिबलादित्यादि द्रष्टव्यम् ।

सु० — यदि सर्वशब्दानामुभयार्थत्वं तर्हि 'विश्वस्मादिन्द्र उत्तरः'। 'असदेवेदमग्र आसीदि'त्यादौ कथम्। उभयोः सर्वोत्तमत्वादेर्विरुद्धत्वेनात्रोभयार्थत्वानुपपत्तेः! पदानामुभयार्थवाचित्वेऽपि तत्र विरोधः, तत्रान्यतरमात्रे तात्पर्यमङ्गीकार्यमिति चेत्। तत्रापि किमुपादेयं किं परित्याज्यमिति न ज्ञायत इत्यत आह तथाऽपीति।

अनु० — तथाऽप्येतद्विरोधे तु तद्वाचित्वमपोद्यते।

यद्यप्युभयार्थाः शब्दा इति सामान्येनोक्तम्। तथाऽपि परमेश्वरपरत्वविरोधेऽन्यपरत्वमपोद्यते। तुशब्दो विशेषद्योतनार्थः। उभयपरत्वं तावद्विरुद्धमिति परेणैवोक्तम्। अन्यतरपरित्यागे च परमेश्वरपरित्यागो न युक्तः। निश्चिततात्पर्यवाक्यान्तरविरोधात्। अतः परिशेषादितरपरित्याग एवोचित इति।

शे० — उभयोरिति। 'उभयोरपि पराधीनत्वप्राप्तिरन्योन्यानुरोधे। अननुरोधे तु न सर्वैश्वर्यमि'ति न्यायविवरणोक्तेरिति भावः॥ तत्रापीति। नियामकाभावेऽपि ब्रह्मैवोपादायान्यपरित्यागाङ्गीकारेऽन्यदेवोपादाय ब्रह्म परित्याज्यमित्यपि स्यादिति भावः॥ परमेश्वरपरत्वविरोध इति। परमेश्वरपरत्वपरित्यागे निश्चिततात्पर्यकवाक्यान्तरविरोधः परमेश्वरपरत्वविरोधस्तस्मिन्नित्यर्थः। ननु नियामकाभावात्कथमुक्तविशेषावधारणमित्यतो नियामकसमर्पकतया तुशब्दं व्याचष्टे तुशब्द इति। तुशब्दद्योतितं विशेषमेव दर्शयति उभयपरत्वमित्यादिना।

स० — निश्चिततात्पर्यवाक्यान्तरविरोधादिति। 'परोमात्रये'त्यादिसर्वोत्तमत्वप्रतिपादकवाक्यविरोधादित्यर्थः। अन्ये 'नामानि सर्वाणि यमाविशन्ती'त्यादिवाक्यविरोधादित्याहुः।

प० — कथमित्याक्षेपे हेतुमाह उभयोरिति। तुशब्दद्योतितविशेषमाह उभयपरत्वमिति। निश्चिततात्पर्यकवाक्यन्तरेति। 'नामानि सर्वाणी'ति प्रागुक्तश्रुतिवाक्यैर्विरोधादित्यर्थः। प्राबल्यद्योतनाय निश्चिततात्पर्येत्युक्तम्। वृद्धसंमतियुक्त्यादिबलेन निश्चितेत्यर्थः। इतिशब्दस्येतिविशेषद्योतनार्थमिति पूर्वेणान्वयः।

श्री० — शङ्कते॥ पदानामिति। तत्रापि अर्थद्वयमध्येऽपि। तमेव विशेषं व्यनक्ति उभयेत्यादि। वाक्यान्तरं 'नामानि सर्वाणी'त्यादि।

मु॰— तर्हि कल्पनोपदेशादित्यादिविरोधः। तत्र सर्वशब्दानामुभयपरत्वस्योक्तत्वादिति चेन्न। निरपवादस्थले पर्यवसायित्वात्तस्येत्याह अविरोध इति।

अनु॰— अविरोधे तु बह्वर्था एतन्मूलतया मताः।

बहुशब्दोऽनेकार्थः। मताः=तत्र तत्र सूत्रेऽभिमताः। नन्वविरोधेऽप्युभयार्थत्वाङ्गीकारो न युक्तः। तत्तु समन्वयादित्यवधार(णविरोधा)णादित्यत उक्तं एतन्मूलतयेति। एष परमेश्वरो मूलं मुख्यो येषां ते तथोक्तास्तेषां भावस्तत्ता। तयेतीत्थंभूतलक्षणे तृतीया। मुख्यमर्थान्तरं वारयितुमवधारणम्। न त्वर्थान्तरमात्रम्। उक्तप्रयोजनव्याघातादिति भावः। एतेनान्यायश्चा(य्यं चा)नेकार्थत्वमित्यपि समाहितम्। मुख्यार्थस्यैकत्वात्।

शे॰— अविरोधे बह्वर्थत्वाभिधानमनर्थकमित्यतः सूत्रविरोधपरिहारार्थं तदिति भावेन तद्व्याख्येयतया विरोधशङ्कामुत्थापयति तर्हीति। ब्रह्मपरत्वमङ्गीकृत्यान्यपरत्वपरित्याग इत्यर्थः। अविरोधे सर्वत्र बह्वर्थत्वस्य न नियमः क्वचिदुभयार्थत्वस्य दर्शनादित्यत आह बहुशब्दोऽनेकार्थ इति। तथाऽप्येतन्मूलतयेति भगवति शब्दानां मुख्यत्ववर्णनमनर्थकमित्यतस्तत्प्रयोजनमाह नन्विति। कर्तृत्वकरणत्वयोरभावात्कथं तृतीयेत्यतः प्रकारे तृतीयेत्याह इत्थंभूतेति। एतन्मुख्यत्वप्रकारं प्राप्ता बह्वर्था इति भावः। तथाऽपि कथं सौत्रावधारणाविरोधसिद्धिरित्यतो भावमाह मुख्येति। अवधारणं तस्त्वित्येतत्। किं मुख्यार्थान्तरवाचकत्वकल्पनया अर्थान्तरमात्रवाचकत्वमेव किं न स्यादित्यत आह उक्तेति। व्युत्पत्त्याद्युपपत्तिरूपेत्यर्थः। तस्त्विति सौत्रावधारणविरोधपरिहारार्थत्वादेतन्मूलत्वाभिधानस्य सार्थक्यमभिहितं इदानीं सकृत्प्रयुक्तस्यानेकार्थत्वमन्याय्यमित्याशङ्कापरिहारार्थत्वाच्च न तदभिधानानर्थक्यमित्याह एतेनेति॥ मुख्यार्थस्येति। यद्यपि नानार्थविवक्षयाऽप्यक्षमानयेत्यादिप्रयोगदर्शनात्सकृत्प्रयुक्तस्याप्यनेकार्थत्वमुपपादयितुं शक्यं; प्रमाणाभावे सकृत्प्रयुक्तस्यानेकार्थत्वाभावस्यैवोक्तन्यायविषयतया सति प्रमाणेऽनेकार्थतायास्तदविरुद्धत्वात्तथाऽपि प्रकृते मुख्यामुख्यभेदेनैवोक्तविरोधपरिहारसम्भवे किं प्रमाणपर्यन्तधावनेनेत्याशयेनैवमुक्तमित्यवधेयम्।

स॰— नन्वेकस्यैव वाक्यस्योभयार्थत्वेऽन्यायश्चानेकार्थत्वं इत्युक्तदोषं परिहरति एतेनेति। यद्यप्येकस्यैवानेकमुख्यार्थत्वमपि संभवति, अक्षादिशब्देषु तथा दर्शनात्, अन्यायश्चानेकार्थत्वमित्यस्य च प्रमाणाभावेऽनेकार्थत्वस्य दोषत्वाभिधायकत्वोपपत्तेः। तथापि प्रकृते मुख्यामुख्यभेदेनैवान्यायश्चानेकार्थत्वमित्यसंभवे किं प्रमाणपर्यन्तगमनेनेत्यभिप्रायेणैतदुक्तं न तु तस्यासाधकत्वाभिप्रायेणेदमिति बोध्यम्।

प०— **इत्थंभूतलक्षण इति** । वाक्यबोध्यत्वरूपकश्चित्प्रकारं प्राप्तस्यार्थान्तरस्य मुख्यवृत्त्या वाक्यबोध्यो भगवान् लक्षणं ज्ञापकः, परममुख्यवृत्त्या भगवान्प्रतिपाद्यतयाऽवगतश्चेत् तत्संबन्धादन्योपि ततः किञ्चिद्धीनवृत्त्या प्रतिपाद्य इति ज्ञायत इति भगवत्संबन्धायत्तप्रवृत्तिहेतुत्वादर्थान्तरस्येति भावः । इत्थं भूतस्य मुख्यार्थत्वप्रकारं प्राप्तस्य विष्णोर्लक्षणमर्थान्तरम् । अर्थान्तरे सत्येव योगवृत्त्या भगवतो मुख्यार्थत्वज्ञानादित्येके ॥ **उक्तेति** । 'तथा हि । पदार्थान्तरवाचित्वमि'त्यादिनोक्तेत्यर्थः ।

या०— **इत्थम्भूतलक्षण इति** । बह्वर्थत्वरूपं प्रकारं प्राप्तानामेतन्मूलकत्वं लक्षणं तत्र तृतीयेत्यर्थः ॥ **अवधारणमिति** । तत्त्वित्यवधारणमित्यर्थः ॥ **एतेनान्यायश्चेति** । अनेकार्थत्वमिति यत्सोऽन्याय इत्यर्थः ॥ **मुख्यार्थस्येति** । यद्यपि प्रमाणसद्भावेऽक्षादिशब्दवदनेकार्थत्वे न दोषः । तथाऽपि मुख्यार्थैक्येनैव दोषपरिहारसम्भवे किं प्रमाणपर्यन्तगमनेनेत्यभिप्रेत्येदमुक्तमिति ज्ञातव्यम् ॥

श्री०— ननु यस्मिन्वाक्ये विरोधाभावदशायामर्थद्वयमेव सम्भावितं तत्र कथं बह्वर्थत्वमित्यत आह **बह्विति** । ननु बह्वर्थाङ्गीकारे तत्त्विति सौत्रावधारणविरोध इत्यत आह **मुख्यमिति** । अर्थान्तरमात्रमित्यत्र, वारयितुमिति वर्तते । कुत इत्यत आह **उक्तेति** । प्रयोजनबहुत्वेनेत्यनेनेत्यर्थः ।

च०— कर्तृकरणत्वयोरभावेप्यर्थान्तरे तृतीयां संघटयति **इत्थंभूतलक्षण ईति** । परमेश्वरप्रधानकत्वज्ञाप्यबह्वर्थत्वरूपप्रकारविशेषिता इत्यर्थः । **अवधारणमिति** । समन्वयसूत्रघटकसर्वनामसमभिव्याहृतावधारणार्थकस्तुशब्द इत्यर्थः । **अन्यायश्चेति** । यद्यपि नानार्थतात्पर्यकेषु सैन्धवमानयेत्यादिषु सकृत्प्रयुक्तस्यापि प्रमाणसद्भावेन नानार्थता न दुष्यतीति तद्राहित्यस्थल एवायं न्यायः संचरितः तथापि मुख्यार्थैक्येन क्षत्यपनुत्तौ प्रमाणराहित्यपर्यन्तानुधावनं मन्दप्रयोजनमित्याशयेनेयमुक्तिरित्यवसेयम् ।

**सु०— ननु पुरन्दरादिष्वपीन्द्रादिशब्दा रूढियोगाभ्यां प्रवृत्ताः । रूढियोगौ च मुख्यवृत्ती कथ्येते । अतोऽक्षादिशब्दानामिवेन्द्रादिशब्दानामुभयं मुख्याभिधेयं युक्तम् । नेश्वर एवेत्यत आह** इतो हीति ।

अनु० - इतो हि रूढताऽन्येषामुपजीव्यत्वमत्र हि ।

**सत्यमस्ति पुरन्दरादीनामपीन्द्रादिशब्दरूढिविषयता तथाऽपि सा इतः परमेश्वरादेव हि यस्मात्, यस्माच्च अत्र योगविषयत्वे परमेश्वरस्यैवोपजीव्यत्वं तस्मात्स एव मुख्यार्थो न पुरन्दरादयः । स्वत एवानवधिकैश्वर्यादिमतीश्वर एवेन्द्रादिशब्दानां योगरूढी । तत्सन्निधानात्तदायत्त(तत्प्र)प्रवृत्तिनिमित्तत्वादेव च पुरन्दरादिषु । प्रसिद्धं चैतत् । यद्यत्सन्निधानाद्य-**

च्छब्दप्रतिपाद्यं तदमुख्यमन्यन्मुख्यमिति । यथा दग्धृशब्दस्यायोऽग्निश्च । न चाक्षादिशब्दार्थानामित(रेत)रापेक्षाऽस्तीति वैषम्यमिति ।

**शे०** — ननु भगवत्सन्निधानादिनाऽन्यत्र शब्दवृत्त्युत्पादकमुत्तरवाक्यमनर्थकमित्यत: सौत्रावधारणाद्यविरोध्यमुख्यत्वसमर्थनार्थत्वान्न वैयर्थ्यमिति भावेन तद्व्यावर्त्यां शङ्कामुत्थापयति **नन्विति** ॥ **रूढियोगाभ्यामिति** । रूढेरभिधानादिसिद्धत्वाद्योगनिमित्तस्य परमैश्वर्यादेस्तत्र सत्त्वादिति भावः ॥ अक्षादिशब्दानामिवेति दृष्टान्तोपादानम्, अन्यथाऽक्षादिशब्दानामपि मुख्यानेकार्थत्वं न स्यादित्यतिप्रसङ्गसूचनार्थम् । **उभयं मुख्याभिधेयमिति** । तथा च मुख्यार्थस्यानेकतया मुख्यार्थान्तरव्यावर्तकावधारणविरोधः । तदनेकत्वप्रयुक्तोक्तन्यायविरोधश्च तदवस्थ इति भावः । अक्षादिशब्दानामिवेति सूचितां प्रतिबन्दीं वैषम्योपदर्शनेन परिहरति **न चेति** ।

**सु०** — नन्वेवं चेदीश्वरस्याप्यमुख्यत्वं प्रसक्तम् । अर्थान्तरापेक्षयैव तत्र शब्दप्रवृत्तेः । न खलु ज्ञातादिशब्दानामन्यार्थतामनपेक्ष्य ज्योतिषेत्यादिशब्दानां भगवति प्रवृत्तिः सम्भवतीत्यत आह तत्सिद्धिरिति ।

अनु० — तत्सिद्धिस्तदपेक्षा च

चशब्दोऽवधारणे । नायमस्ति दोषः । यतः परमपुरुषे तत्तच्छब्दप्रवृत्तिप्रतीतिरेवार्थान्तरापेक्षा न तु प्रवृत्तिः । न हि घटस्य रूपं प्रदीपापेक्षया प्रतीयत इत्येतावता तदायत्तं भवति । यथाऽन्यत्र शब्दप्रवृत्तिरेव परमेश्वरापेक्षा । नैवं परमात्मनि वृत्तावितरापेक्षां काम‍प्यीक्षामह इति ।

**शे०** — ननु शब्दप्रवृत्तिप्रतीतेरन्यापेक्षत्वप्रतिपादकं तत्सिद्धिरित्याद्युत्तरभाष्यमनर्थकमित्यतोऽमुख्यत्वसाधकस्य सापेक्षत्वस्य भगवत्यसिद्धिव्युत्पादनार्थत्वान्नानर्थक्यमित्याशयेन तद्व्यावर्त्यतया सापेक्षतयाऽमुख्यत्वशङ्कामुत्थापयति **नन्विति** । यथास्थितचशब्दयोजनायां चशब्दानर्थक्यं तत्सिद्धिश्चेति योजनायामपि शब्दप्रवृत्तेरपि तत्सापेक्षत्वलाभान्नामुख्यत्वशङ्कानिवर्तकत्वमित्यतोऽवधारणार्थतया तं व्याचष्टे **चशब्द इति** । तथाऽपि प्रवृत्तिप्रतीतेरन्यापेक्षत्वमात्रेणैव प्रवृत्तेरन्यायत्तत्वसिद्ध्याऽमुख्यत्वमेवेत्यतस्तथा सत्यतिप्रसङ्गः स्यादित्याह **न हीति** ।

**सु०** — इतश्च नायं दोष इत्याह साऽपेक्षा चेति ।

**अनु०** — साऽपेक्षा च हरीच्छया ।

**या परमेश्वरे शब्दानां वृत्तावर्थान्तरापेक्षा सा च भगवदिच्छानिबन्धनैव न त्वनन्यगतिकतयेत्यतो न तस्यामुख्यार्थताप्राप्तिः । न हीच्छया प्रकृत्यादिकमुपाददानस्य सृष्टिः परायत्ता । नापि पटुकरणो लीलानिमित्तमिच्छया दण्डमवष्टभ्य गच्छन्दण्डायत्तगतिर्भवतीति ।**

शे० — अमुख्यत्वमापकस्य सापेक्षत्वहेतोरसिद्धिव्युत्पादनेन भगवत्यमुख्यत्वशङ्कायाः परिहारात्किमुत्तरेणेत्यत आह **इतश्चेति** । ततश्च भगवति शब्दप्रवृत्तेरमुख्यत्वाभावे युक्त्यन्तराभिधायकत्वान्न तस्यानर्थक्यमिति भावः ॥ **इच्छानिबन्धनैवेति** । अनेन चशब्दोऽवधारणे, स च हरीच्छयेत्यनेन सम्बद्ध्यत इत्युक्तं भवति । अवधारणव्यावर्त्यप्रदर्शनम् **न त्विति** । स्वेच्छया परापेक्षया अऽप्यस्तु परायत्तत्वापादकत्वमित्यतो वैदिकमतिप्रसङ्गं सूचयन्नुक्तमुपपादयति **न हीति** । तत्रापि विप्रतिपद्यमानं प्रति लोकसिद्धमतिप्रसङ्गमाह **नापीति** । अनन्यगतिकतयैव दण्डोपादानावस्थेव दण्डायत्तगतित्वमित्याशङ्कापरिहारायोक्तम् **पटुकरणोऽपीति** ।

प० — पूर्वं ज्ञप्तावेवार्थान्तरापेक्षामुपेत्य हरावमुख्यत्वदोषो निरस्तः । अधुना शब्दवृत्तावेवान्यापेक्षामुपेत्य उक्तदोषं निराह **इतश्चनायं दोष इत्याहेति** ।

---

**सु० — यद्येवं हरिसन्निधानादिना शब्दानामन्यत्र वृत्तिस्तत्किमयसीव दग्धृशब्दस्य लोके सर्वशब्दानां लक्षणैव । तथा सति गङ्गातीरयोरविशेषप्रसङ्गः । ईक्षत्यधिकरणोक्तार्थस्य मूले निहितः कुठार इत्याशङ्कां परिहरन्नेतन्मूलतयेत्यादिनोक्तमर्थमुपसंहरति** तस्मादिति ।

अनु० — तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता ।

**नायसि दग्धृशब्दस्येवेन्द्रादिशब्दानां पुरन्दरादिषु लक्षणैव । रूढेरभिधानादिसिद्धत्वात् । योगनिमित्तस्य च परमैश्वर्यादेः सद्भावात् । किन्तु परमेश्वरविषययो रूढियोगयोरपराधीनत्वनिरङ्कुशत्वाभ्याम्, अन्यत्र तदधीनत्वाल्पत्वाभ्यां, मुख्यार्थतायामेवायं मुख्यामुख्यविभागोऽभिहित इति । तदिदमुक्तं परममुख्यत्वमिति मुख्यतेति च ।**

शे० — ननु तस्मादित्युत्तरभाष्यमनर्थकम् । न चोपसंहारार्थत्वात्सार्थक्यमिति वाच्यम् । तथ सत्युपपादनानुसारेण विष्णौ मुख्यत्वस्यान्यत्रामुख्यत्वस्यैव वक्तव्यतयाऽनुपपादितस्य विष्णौ परममुख्यत्वस्यान्यत्रमुख्यत्वस्य चाभिधानानर्थक्यादित्यत एतन्मूलतयेत्यादिनोक्तस्यान्यत्रामुख्यत्वस्य भगवति मुख्यत्वस्य चेदं तात्पर्यनिरूपणमिति नानर्थक्यमित्याशयेनोक्तेऽर्थेऽनुपपत्त्यभावात्किमेवं तात्पर्यनिरूपणेनेत्यतो यथाश्रुतार्थेऽनुपपत्तिशङ्कामुत्थापयति **यद्येवमिति** । इष्टापत्तिं परिहरति **तथा सतीति** ।

गङ्गातीरयोरुभयोरपि गङ्गाशब्दलक्ष्यतया गङ्गाया गङ्गाशब्दमुख्यार्थत्वं तीरस्य चामुख्यार्थत्वमिति सर्वसंमतो विशेषो न स्यादिति भावः ॥ **ईक्षत्यधिकरणार्थस्येति** । 'ईक्षणीयत्वतो विष्णुर्वाच्य एवे'ति य ईक्षत्यधिकरणार्थस्तस्य यन्मूलं 'न चान्यथा । लक्ष्यत्वं क्वापि दृष्टं ही'त्यादिनोक्तं तत्रेत्यर्थः । तत्र हि केनचित्तीराऽऽदिपदेन वाच्यमेव तीराऽऽदिकं गङ्गाऽऽदिपदेन लक्ष्यं दृष्टम् न तु केनापि पदेनावाच्यं किमपि लक्ष्यं दृष्टम् । तस्मादवाच्यत्वे ब्रह्मणो लक्ष्यत्वायोगान्न लक्षणयाऽपीक्षणीयत्वमिति मूलमुक्तम् । तच्चात्र लोके वाचकपदाभावेन लक्षणामात्राङ्गीकारे भग्नं स्यादित्यर्थः ।

**स० —ईक्षत्यधिकरणोक्तार्थस्य चेति** । 'नचान्यथा । लक्ष्यत्वं क्वापि दृष्टं हीत्या'दिनोक्तार्थस्येत्यर्थः । तत्र हि 'केनचित्तीरादिपदेन वाच्यस्यैव तीराऽऽदेर्गङ्गाऽऽदिपदलक्ष्यत्वं दृष्टं । न केनापि पदेनावाच्यस्य येन ब्रह्मणो लक्ष्यत्वं स्या'दित्युक्तत्वेन तद्धानिः स्यादिति भावः ।

**प०— अस्तु** को दोष इत्यत आह **ईक्षतीति** । सर्वशब्दावाच्यस्य लक्ष्यत्वं न क्वापि दृष्टमितीक्षत्यधिकरणोक्तार्थस्येत्यर्थः । सर्वस्यापि शब्दराशेर्विष्णुवाचित्वेन लोके कस्यापि वाचकस्याभावादिति भावः ।

**या०— ईक्षत्यधिकरणोक्तार्थस्येति** । 'ईक्षणीयत्वतो विष्णुर्वाच्य एवे'तीक्षत्यधिकरणार्थो यस्तस्य यन्मूलं 'न चान्यथा । लक्ष्यत्वं क्वापि दृष्टं ही'त्यादिनोक्तं तत्रेत्यर्थः । तत्र हि 'केनचित्तीरादिपदेन वाच्यस्यैव तीराऽऽदेर्गङ्गाऽऽदिपदलक्ष्यत्वं दृष्टं । न केनापि पदेनावाच्यस्य, येन ब्रह्मणो लक्ष्यत्वं स्या'दिति मूलमुक्तम् । अत्र च लोके वाचकपदाभावेन लक्षणामात्राङ्गीकारे तद्भग्नं स्यादित्यर्थः । अन्ये तु लोके सर्वपदानां लक्षणाऽङ्गीकारे तन्न्यायेनैव परेणाप्यवाच्ये ब्रह्मणि लक्षणया वैदिकपदेभ्य ईक्षणस्याङ्गीकर्तुं शक्यत्वेन नेक्षणान्यथाऽनुपपत्त्या वाच्यत्वसिद्धिः सम्भवतीति 'ईक्षणीयत्वतो विष्णुर्वाच्य एवे'ति यत्तदधिकरणप्रमेयं तदुन्मूलितं स्यादित्यर्थ इत्याहुः ॥

**च०— ईक्षत्यधिकरणोक्तेति** । 'ईक्षणीयत्वतो विष्णुर्वाच्य एवे'तीक्षतिनयाभिहितार्थस्य 'नचान्यथा । लक्ष्यत्वं क्वापि दृष्टं ही'त्यादिना यन्मूलमभिहितं तत्रेत्यर्थः ।

अनु०— उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः ॥

**सु० —गौणी(चे)त्यतः परमितिशब्दोऽध्याहार्यः** ।

**एतदेव दर्शयन्परममुख्याऽदिवृत्तिलक्षणान्याह** प्रवृत्तीत्यादिना ।

**तत्र परममुख्यवृत्तिर्द्विधा । महयोगो महायोगरूढिश्चेति । महारूढिस्तु न सम्भवति । 'सा योगादेव लभ्यत' इत्युक्तत्वात् । तत्र महायोगस्वरूपमाह** प्रवृत्तिहेतोरिति ।

प्रवृत्तिहेतोर्बाहुल्यं ज्ञेयं परममुख्यता ॥

**निर्वचनलभ्योऽर्थः प्रवृत्तिहेतुस्तस्य बाहुल्यं निरवधिकत्वम् । यद्यपि स्वातन्त्र्यं चात्र वक्तव्यम् । प्रकृतत्वात् । तथाऽप्यन्यतरमात्रेणेतरव्यावृत्तिसिद्धेर्लक्षणपदानां च तन्मात्रप्रयोजनत्वान्नाभिहितम् । परममुख्यतेति ज्ञेयमिति योजना । ननु बाहुल्यं प्रवृत्तिहेतोर्धर्मः । बहुलप्रवृत्तिहेतुमत्त्वं चाभिधेयस्य । परममुख्यता तु शब्दधर्मः । तत्कथं सामानाधिकरण्यम् । नैष दोषः । उपचरितत्वात् । निरवधिकं स्वतन्त्रं वा प्रवृत्तिहेतुमपेक्ष्य या शब्द(स्य प्र)वृत्तिः सा परममुख्यता महायोगलक्षणा ज्ञातव्येति तात्पर्यार्थः ।**

**शे०**— अन्यत्र मुख्यताऽऽदेरेव वृत्तितालाभायाऽह **गौणी चेत्यतःपरमितिशब्द इति** । परममुख्यताऽऽदिवृत्तिलक्षणकथनपरोत्तरग्रन्थानर्थक्यं परिहरति **एतदेवेति** । विष्णौ परममुख्यत्वं तदन्यत्र मुख्यत्वाऽदीत्येतदेवेत्यर्थः । एकेनैव वाक्येन परममुख्यतावृत्तेर्लक्षितत्वात् द्वितीयवैयर्थ्यमित्यतः परममुख्यतावृत्तेर्द्विविधत्वात् द्विरूपतद्वृत्तिलक्षकतया न कस्यापि वैयर्थ्यमिति भावेन तत्तद्विशेषलक्षकतया वाक्यं योजयितुं तद्विभागमाह **तत्रेति** । के ते द्वे विधे इत्यतो न्यायविवरणानुसारेण ते दर्शयति **महायोग इति** । यद्यपि महायोगापेक्षया महायोगरूढेः प्राधान्यात्तस्या एवादौ निर्देश उचितस्तथाऽपि तदेकमात्रप्रसिद्धनारायणाऽदिशब्दमात्रनिष्ठमहायोगरूढ्यपेक्षया भगवदेकप्रसिद्धतदन्यमात्रप्रसिद्धनारायणाऽदिस्तम्भाऽदिसकलशब्दसाधारणतया महायोगस्य प्राधान्यविवक्षया तस्यैवादौ निर्देश इति ध्येयम् । विधाऽन्तरस्यापि सत्त्वात्कथं द्वैविध्यमित्याशङ्कां तदसम्भवव्युत्पादनेन परिहरति **महारूढिस्त्विति** । विद्वद्रूढिरित्यर्थः । कुत इत्यतस्तस्या योगाविनाभूतत्वादिति भावेन तदसिद्धिं परिहरति **सा योगादेवेति** । तथा च योगाविनाभूतत्वेन तद्रूढेर्महायोगरूढित्वस्यैव प्राप्तेः न तदपेक्षया महारूढिमात्रस्य वृत्त्यन्तरत्वं सम्भवतीति भावः । प्रवृत्तिहेतुपदेन न प्रवृत्तिहेतुमात्रपरिग्रहः सम्भवति । तथा सति घटत्वादिजातेरपि प्रवृत्तिहेतुपदेन तत्प्रसङ्गात्तस्या अपि घटादिशब्दानां घटादौ रूढिं प्रति निमित्तत्वेन प्रवृत्तिहेतुत्वात् । न च तस्या बाहुल्यं संभावितं किन्तु सम्भावितबाहुल्यकत्वान्निर्वचनलभ्यार्थस्यैव परिग्रह इत्याह **निर्वचनेति** । नन्वेवमिन्द्राऽदिशब्दानां पुरन्दराऽदौ महायोगरूपपरममुख्यत्वाऽपत्तिः इन्द्राऽदिशब्दनिर्वचनलभ्यैश्वर्यादेस्तत्र बाहुल्यादित्यतो नात्र तद्बाहुल्यमात्रं विवक्षितं येनातिप्रसङ्गः स्यात् किन्तु निरवधिकत्वमेव, तच्च नेन्द्रादाविति नोक्तदोष इत्याह **निरवधिकत्वमिति** ॥ **स्वातन्त्र्यमिति** । अन्यानपेक्षत्वमित्यर्थः ॥ **प्रकृतत्वादिति** । 'इतो हि रूढताऽन्येषामुपजीव्यत्वमत्र ही'त्यादिना भगवति शब्दवृत्तौ प्रवृत्तिनिमित्तनिरवधिकत्ववत् तत्स्वातन्त्र्यस्यापि निमित्तत्वेन प्रस्तुतत्वादित्यर्थः । **अन्यतरमात्रेणेति** । निरवधिकत्वस्वातन्त्र्ययोर्मध्ये येनकेनचिदित्यर्थः । यद्यप्यत्र निरवधिकत्वेनैवेतरव्यावृत्तिसिद्धेरित्येव वक्तव्यं तथाऽपि स्वात-

न्त्र्यनिरवधिकत्वघटितवक्ष्यमाणलक्षणेऽन्यतरमात्रेणैवेतरव्यावृत्तिसिद्धेर्नोभयघटितमेकं लक्षणं, किन्तु स्वातन्त्र्यघटितमेकं, निरवधिकत्वघटितमपरमिति, लक्षणद्वयमेवातो न वैयर्थ्यमिति ज्ञापयितुमन्यतरमात्रेणेत्यत्रोक्तमिति ध्येयम् ॥ **तन्मात्रेति** । इतरव्यावृत्तिमात्रेत्यर्थः । ननु परममुख्यता ज्ञेयेति वक्तव्यं तत्कथं परममुख्यता ज्ञेयमिति भाष्ये निर्देश इत्यत इतिशब्दाध्याहारेण योजयति **परमेति** ॥ **शब्दधर्म इति** । वृत्तित्वादिति भावः ॥ **तत्कथमिति** । प्रवृत्तिनिमित्तधर्मस्य अभिधेयधर्मस्य वा शब्दधर्मेणाभेदाभावादभेदार्थकं, 'बाहुल्यं परममुख्यते'ति सामानाधिकरण्यं कथमित्यर्थः ॥ **निरवधिकमित्यादि** । अत्रोक्तरीत्या लक्षणद्वयस्य विवक्षितत्वान्नान्यतरवैयर्थ्यमत एव बाशब्दप्रयोग इति ध्येय ॥ **या शब्दप्रवृत्तिरिति** । यच्छब्दस्य प्रतिपादकत्वमित्यर्थः ।

स० — रूढेरपि घटत्वादिप्रवृत्तिनिमित्तसापेक्षत्वदर्शनादाह **निर्वचनलभ्योऽर्थ इति** ॥ **प्रकृतत्वादिति** । 'इतो हि रूढताऽन्येषामि'त्यादिनेति शेषः ।

प० — भगवतोन्यत्र तिस्रो वृत्तय इत्यन्वयमभिप्रेत्य प्रत्येकं त्रित्वमिति भ्रमनिरासायाह **गौणीत्यतः परमितिशब्द इति** । न्यायविवरणोक्तविभागमाह **तत्र परममुख्यवृत्तिर्द्वेधेति** । हरितदन्यत्रविद्यमानवृत्तिमध्य इत्यर्थः । ननु लोके योग-रूढि-योगरूढि-रूपमुख्यवृत्तित्रयवत् हरावपि महायोगमहारूढिमहायोगरूढिभेदेन त्रैविध्यं कुतो नोक्तम् । न्यायविवरणे, अत्र लक्षणोक्तिप्रस्तावे च कुतस्तल्लक्षणमपि नोक्तमित्यत आह **महारूढिस्त्विति** ॥ **इत्युक्तत्वादिति** । आनन्दमयनयान्ते ब्रह्मणि विद्वद्रूढेर्योगं विनाऽभावस्योक्तत्वादित्यर्थः । वृत्तिसामान्यलक्षणं च शब्दस्यार्थप्रतिपादकत्वमिति भावः ॥ **महायोगस्वरूपमाहेति** । महायोगो द्विविधः । प्रवृत्तिनिमित्तं प्रति स्वातन्त्र्यरूपः तदाश्रयत्वरूपश्चेति । तत्र द्वितीयं महायोगस्वरूपमाहेत्यर्थः । आद्यानुक्तौ बीजमग्रे व्यक्तम् ॥ **निर्वचनेति** । अवयवशक्तिलभ्योऽर्थः । तत्समुदायरूपो यौगिकशब्दप्रवृत्तिहेतुरित्यर्थः । तथाच न रूढिसाङ्कर्यमिति भावः ॥ **अत्रेति** । महायोगस्वरूपोक्तिप्रस्तावे वक्तव्यम् । तस्यापि महायोगप्रभेदत्वादिति भावः । ननु 'तेषु तेषु पदार्थेष्वि'त्यादिना प्रवृत्तिहेत्वाश्रयत्वरूपयोग इव स्वातन्त्र्यरूपो योगो न प्रस्तुत इत्यत आह **प्रकृतत्वादिति** । 'इतो हि रूढिताऽन्येषामि'त्यनेन प्रकृतत्वादित्यर्थः ॥ **अन्यतरेति** । निरवधिकतदाश्रयत्वरूपमहायोगेनैव विष्णुरेव शब्दार्थो नान्य इति समन्वयसूत्रस्थावधारणार्थकतुशब्दव्यावर्त्यभूतेतरस्य व्यवच्छेदसिद्धेरित्यर्थः । यद्वा ननु महायोगो हि प्रवृत्तिहेतुं प्रति स्वातन्त्र्ये सति निरवधिकतदाश्रयत्वम् । तथाच तादृशमहायोगस्वरूपमाहेत्यवतारितेऽस्मिञ्श्लोके विशेषणांशोऽपि वाच्य एवेति भावेन शङ्कते **यद्यपीति** । अन्यतरेतिमहायोगवृत्तिलक्षणशरीरप्रविष्टदलद्वयमध्ये तदाश्रयत्वदलमात्रेणेतरस्य

वृत्त्यन्तरस्य व्यावृत्तिसिद्धेरित्यर्थः । ज्ञेयमित्यस्य नपुंसकताऽनुपपत्तिनिरासायाध्याहारेण योजयति **इति ज्ञेयमितीति** ॥ **शब्दस्यवृत्तिरिति** । अर्थप्रतिपादकत्वमित्यर्थः ।

**या०— सा योगादेवेति** । योगमविहायैवेत्यर्थः ॥ **प्रकृतत्वादिति** । 'इतो हि रूढिताऽन्येषामि'त्यादिनेति शेष. ॥ **या शब्दस्य प्रवृत्तिरिति** । प्रतिपादकत्वमित्यर्थः ।

**श्री०—प्रकृतत्वादिति** । 'स्वातन्त्र्यं तद्गतत्वं चे'त्यादावित्यर्थः । ननु प्रवृत्तिहेतुमपेक्ष्य शब्दस्य प्रवृत्तिर्महायोग इति लक्षणस्य योगेऽतिव्यप्तिपरिहाराय स्वातन्त्र्येणेति वक्तव्यमिति चेत्तत्राह **अन्यतरमात्रेणेति** । निरवधिकत्वस्वातन्त्र्ययोरन्यतरमात्रेणेत्यर्थः ।

**सु०— महायोगरूढिस्वरूपं निरूपयन्नाह** तत्रेति ।

**अनु०—** तत्र प्रयोगबाहुल्यं यदि तत्परता किमु ॥

**यत्रार्थे प्रवृत्तिहेतोरनवधिकत्वं तत्रैव चेत्प्रयोगबाहुल्यं स्यात्तदा तस्या वृत्तेः परता परममुख्यता किमु वक्तव्येति । अत्रानवधिकप्रवृत्तिनिमित्तवति यत्रार्थे यस्य शब्दस्य प्रयोगबाहुल्यमस्ति तस्य तत्र महायोगरूढिलक्षणा परममुख्यवृत्तिरित्येतावदेव वक्तव्यम् । कैमुत्यकथनं तु शङ्कानिरासार्थम् । तथा हि । किमत्र प्रयोगबाहुल्यमात्रं लक्षणमुतानवधिकप्रवृत्तिनिमित्तविशेषितम् । नाद्यः । रूढिमात्रत्वात्परममुख्यत्वायोगात् । न द्वितीयः । अनवधिकप्रवृत्तिनिमित्तेनैव परममुख्यत्वे विशेष्यवैयर्थ्यात् । न च समाहारेण विधाऽन्तरं भवति । तथा सति असिद्धबाधितसमाहारोऽपरो हेत्वाभासः स्यादिति ।**

**अत्र द्वितीय एवाभ्युपगम्यते । न चोक्तदोषः । विशेषणमात्रेण परममुख्यत्वे, विशेष्यसद्भावेन सुतरां तत्सिद्धेः । न ह्यस्माभिः परममुख्यतामात्रसिद्ध्ये विशिष्टोपादानं क्रियते । किन्तु समाहाररूपविधाऽन्तरसिद्ध्ये । न चातिप्रसङ्गः । वैषम्यात् । अनवधिकप्रवृत्तिनिमित्तापेक्षप्रयोगबाहुल्यं खलु विवक्षितम् । न समाहारमात्रम् । एतदर्थं च तत्र प्रवृत्तिहेतोर्बाहुल्ये सतीति योज्यम् । न चैवं महायोगस्यात्र प्रवेशः । अतिबहुलप्रयोगाभावस्य तत्र विवक्षितत्वादिति ।**

**शे०—** साकाङ्क्षत्वादपेक्षितपूरणेन वाक्यं योजयति **यत्रेति** ॥ **प्रयोगेति** । इदं च 'अखण्डशक्तौ प्रमाणमपि उक्तःप्रयोगोऽसाधारणत्वाल्लक्षणं च भवती'त्यभिप्रेत्यैवोक्तं, न तु शक्तिर्नास्तीत्यभिप्रेत्य 'शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते'इत्यादिना पूर्वं गवादिशब्देष्वपि शक्त्युक्तेः 'बहुलातिप्रयोगतः । रूढमित्येव साध्यं स्यादि'त्यादिना प्रयोगेण रूढिसाधनाच्च । अत्रापि टीकायां 'प्रयोगयुक्तसादृश्यमि'-

त्युत्तरग्रन्थव्याख्यानावसरे 'प्रयोगशब्दस्य सामर्थ्यमर्थं' इति वक्ष्यमाणत्वाच्चेति द्रष्टव्यम् । कैमुत्यघटितत्व-भ्रान्तिं निष्कृष्टलक्षणोपदर्शनेन परिहरति **अत्रेति** । प्रवृत्तिनिमित्तं निर्वचनलभ्योऽर्थः । प्रदर्शितलक्षण-स्यातिव्याप्त्यादिशून्यतया लक्षणपदानां चातिव्याप्त्यादिपरिहारमात्रप्रयोजकत्वान्न तस्य लक्षणप्रवेश इति भावः । किमर्थं तर्हि मूले तदभिधानमित्यतः प्रयोजनान्तरार्थं तदित्याह **कैमुत्येति** ॥ **शङ्कानिरासार्थ-मिति** । महायोगरूढिलक्षणा परममुख्यवृत्तिरेव नास्तीति शङ्कापरिहारार्थमित्यर्थः ।

**प्रयोगेति** । अनुमापकमपि असाधारणत्वाल्लक्षणमपि भवतीत्यभिप्रेत्यैवमुक्तमिति मन्तव्यम् ॥ **रूढिमात्रत्वादिति** । अन्यथा रूढानां घटादिशब्दानामपि परममुख्यताऽऽपत्त्या जगत्यपि परममुख्यता-वृत्तिप्रसङ्गेन 'तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यते'ति सिद्धान्तहानिरिति भावः । अनवधिकप्रवृत्ति-निमित्तविशेषितं प्रयोगबाहुल्यमिति द्वितीयेऽपि किं परममुख्यतासिद्धये प्रयोगबाहुल्योपादानं किं वा महायोगरूढिरूपविधाऽन्तरसिद्धये तदिति विकल्पं मनसि निधायाऽद्यं दूषयति **अनवधिकेति** । अस्तु तर्हि द्वितीयो, महायोगेऽतिप्रसक्ततया तत्परिहाराय विशेष्यस्यार्थवत्त्वादित्यत आह **न चेति** । अस्तु समाहारमात्रेणापि विधाऽन्तरसिद्धिरित्यत आह **तथा सतीति** । एवं शङ्काप्रकारं प्रदर्श्य कैमुत्यकथनेन तन्निरासप्रकारमुपदर्शयितुं विकल्पितपक्षयोः द्वितीयं पक्षं गृह्णाति **अत्रेति** । तत्रोक्तदोषमाशङ्कते **न चेति** । अनवधिकप्रवृत्तिनिमित्तेनैव परममुख्यत्वसिद्धेर्विशेष्यवैयर्थ्यमित्यर्थः । स्यादेवं यदि परममुख्यतासिद्धये

---

विशेष्योपादानमभिमतं स्यान्न चैवं किन्तु विधाऽन्तरसिद्धये, न च विशेषणमात्रेण विधाऽन्तरं सिध्यतीति तत्सिद्धये विशिष्टोपादनमर्थवदिति परिहारं वक्तुं मूलोक्तं कैमुत्यं योजयति **विशेषणमात्रेणेति** । तथा च कैमुत्यकथनेन परममुख्यप्रवृत्तौ तारतम्यलाभान्महायोगादन्याऽपि तदुत्कृष्टा परममुख्यताऽस्तीति सूचितं भवति । एवं मूलोक्तं कैमुत्यमुपपाद्य तल्लब्धमर्थं दर्शयन्नेव वैयर्थ्यं परिहरति **न हीति** । तर्ह्यसिद्धिबाधसमाहारोऽप्यपरो हेत्वाभासः स्यादिति प्रागुद्भावितदोषमाशंक्य निषेधति **न चेति** । तत्रैकेनैवोद्देश्यस्य दुष्टत्वबोधस्य सिद्ध्या, दुष्टत्वबोधेऽसिद्धिबाधयोः परस्परानपेक्षतया तत्समाहाररूप-दोषान्तरकल्पकाभावेन तस्यादोषत्वेऽपि प्रकृते नारायणाऽदिशब्देभ्य उद्देश्यस्य पूर्णगुणो विष्णुरिति विशिष्टबोधस्य प्रवृत्तिनिमित्तनिरवधिकत्व-प्रयोगबाहुल्याभ्यां परस्परानपेक्षाभ्यामसिद्ध्या उद्देश्यसिद्धौ परस्परसापेक्षत्वनियमेन कल्पकसद्भावाद्विधाऽन्तरसिद्धिरित्याशयेन परिहरति **वैषम्यादित्यादिना** । **प्रवृ-त्तिनिमित्तेति** निर्वचनलभ्योऽर्थः । ननु तत्रेति मूले प्रयोगबाहुल्यस्य निरवधिकप्रवृत्तिनिमित्तापेक्षत्वबोधक-शब्दाभावान्न लाभः सम्भवतीति कथं तद्विवक्षितत्वसिद्धिरित्यत आह **एतदर्थं चेति** । नन्वेवं महायो-गरूढिरूपवृत्तिसिद्धावपि न महायोगरूपवृत्त्यन्तरसिद्धिः । महारूढियोग एव तस्यान्तर्भूतत्वेन पृथक्त्वा-योगादिति नोक्तरीत्या परममुख्यताद्वैविध्यसिद्धिरित्याशङ्क्य निषेधति **न चेति** । कुतो न वाच्यमित्यतः

स्यादेवं यदि निरवधिकं स्वतन्त्रं वा प्रवृत्तिनिमित्तमपेक्ष्य शब्दस्य प्रतिपादकत्वमात्रं महायोगः स्यात् न चैतदस्ति किन्त्वतिबहुलप्रयोगाभावे सतीत्यतिबहुलप्रयोगाभावविशेषणविशेषितमेव । तस्य च न महायोगरूढिलक्षणायामन्तर्भावः सम्भवतीति युक्तं तद्द्वैविध्यमित्याह **अतिबहुलेति** ।

**स०**— अनवधिकप्रवृत्तिनिमित्तविशेषितप्रयोगबाहुल्यमिति द्वितीयेऽपि प्रष्टव्यम् । किं परममुख्यतासिद्ध्यर्थं तदभ्युपगमः किं वा योगरूढिरूपविधाऽन्तरसिद्धये । नाऽद्य इत्याह **अनवधिकेति** । नान्त्य इत्याह **न चेति** । **उक्तो दोषः** विशेष्यवैयर्थ्यलक्षणः ॥ **न चातिप्रसङ्ग इति** । असिद्धिबाधसमाहारोऽपि हेत्वाभासान्तरं स्यादित्यतिप्रसङ्गः इत्यर्थः ॥ **अनवधिकप्रवृत्तिनिमित्तापेक्षेति** । अन्यथा नारायणाऽदिशब्देभ्य उद्देश्यो गुणपूर्णत्वनारायणत्वाद्युभयप्रकारकबोधो न सिध्यतीति भावः ॥ **न समाहारमात्रमिति** ॥ असिद्धिबाधसमाहारवन्न निष्फलं समाहारमात्रमित्यर्थः ॥ असिद्धिबाधसमाहारो हि न हेत्वाभासान्तरं निष्फलत्वात् उद्देश्यसिद्धेरन्यतरमात्रेणैव जायमानत्वान् न ह्येवं प्रकृते इति भावः ॥ **महायोगस्यात्र प्रवेश इति** । ततश्च न पृथक् तदुक्तिर्युक्तेति शेषः ।

**प०— हेत्वाभासः स्यादिनीति** । इतिशब्दस्येतिशङ्कानिरासार्थमिति पूर्वेणान्वयः ॥ **समाहाररूपविधाऽन्तरसिद्धय इति** । अत एव अग्रे 'सनिरुक्तिकं' 'विद्वद्रूढि च तत्रगामि'ति रूढेर्योगसाहित्यं मूल एव वक्ष्यत इति भावः । न चैवं 'अवयववृत्तिर्योगोऽखण्डवृत्ती रूढि'रित्यादिना वक्ष्यमाणदिशा विरोधाद्वृत्त्यन्तरं न समाहाररूपमिति शङ्क्यम् । योगरूढ्योः पङ्कजाऽदिशब्दे यथाक्रमं पङ्कजनिकर्तृत्वपद्मत्वरूपभिन्नधर्मनियतयोरपि तद्द्वारा एकस्मिन्धर्मिणि सैन्धवशब्दवृत्त्योरिव समाहारसंभवादुभयकार्यदर्शनस्य समाहारेणोपपत्तौ वृत्त्यन्तरकल्पने गौरवाच्च । अत एव प्रागानन्दमयनयान्ते 'बहुलातिप्रयोगतः । रूढमित्येव साध्यं स्यादि'त्यत्र रूढियोगादौ व्यभिचारं मूलोक्तहेतोराशङ्क्य तत्र साध्यस्यापि सत्त्वान्न व्यभिचार इत्युक्त्वा 'समाहारवृत्तयो हि ता' इत्युक्तम् । अन्यथा मूलोक्तहेतोर्व्यभिचारोऽपरिहार्यः स्यात् । अत एव सन्न्यायरत्नावल्यां 'न चावयववृत्त्यखण्डवृत्त्योरेकस्य शब्दस्यैकस्मिन्नर्थे विरुद्धत्वाद्योगरूढिवृत्तिर्नास्तीति वाच्यम् । तस्याः पङ्कजाऽदिषु शब्देषु दृष्टत्वात्' इत्युक्तमिति भावः । असिद्धबाधितसमाहारोऽप्यपरो हेत्वाभासः स्यादित्युक्तमित्याशङ्क्य निराह **न चातिप्रसङ्ग इति** । वैषम्यादित्युक्तमेवाह **अनवधिकेति** । अनवधिकप्रवृत्तिनिमित्तपदं अनवधिकप्रवृत्तिनिमित्तहेतुकशब्दवृत्तिपरम् । प्राक् तथैव तात्पर्यवर्णनात् । प्रयोगबाहुल्यपदमपि 'बहुलातिप्रयोगतः । रूढमित्येव साध्यं स्यादि'त्येतदविरोधाय प्रयोगबाहुल्यज्ञाप्याखण्डशब्दवृत्तिपरम् । एवं चावयववृत्तिरूपयोगवृत्तिसापेक्षाखण्डवृत्तिरिह विवक्षिता । न तु अन्योन्यनिरपेक्षयोगरूढिसमाहारः विधाऽन्तरत्वेन विवक्षित इत्यर्थः । यथा योगरूढेन पङ्कजपदेनोद्देश्यभूते पङ्कजनिकर्तृत्वविशिष्टपद्मबोधे जनयितव्ये तत्र योगवृत्तिनिरपेक्षरूढिमात्र-

मसमर्थमिति योगसापेक्षैव रूढिरुपेया । तथा योगरूढेन नारायणाऽदिशब्देन गुणाऽश्रयत्वाद्यवयवार्थ-विशिष्टविष्णुत्वादिरूपार्थबोधे उद्देश्यभूते जनयितव्ये नारायणाऽदिपदगतरूढिमात्रमसमर्थमिति योगवृत्ति-सापेक्षैव तत्र रूढिः समर्थेति सापेक्षयोर्योगरूढ्योः समाहार एव योगरूढिरूपविधाऽन्तरमित्यङ्गीक्रियते । असिद्धिबाधसमाहारे तु नैवम् । तत्र दुष्टत्वप्रतीतेरेवोद्देश्यत्वात् तस्याश्चान्योन्यनिरपेक्षेण अन्यतरेणापि संभवाद्वैषम्यमिति भावः ॥ **एतदर्थमिति** । योगसापेक्षरूढेः योगरूढिरूपविधाऽन्तरत्वसिद्ध्यर्थमित्यर्थः । तत्रेति मूलपदानुवादः । सत्यन्ता व्याख्या ॥ **तत्रेति** । महायोग इत्यर्थः ।

**या०— तत्रैव चेत्प्रयोगबाहुल्यमिति** । तत्रैव विषये चेद्रूढ्यनुमापकं प्रयोगबाहुल्यमित्यर्थः । एवमग्रेऽपि प्रयोगबाहुल्यमस्तीत्यादौ रूढ्यनुमापकमिति शेषः । न तु प्रयोगबाहुल्यमेव रूढिरित्यभि-प्रायः । 'बहुलातिप्रयोगतो रूढमित्येव साध्यं स्या'दित्युक्तविरोधादिति ज्ञातव्यम् । 'प्रवृत्तिनिमित्त-मिति' इत्यादौ प्रवृत्तिनिमित्तपदेन निर्वचनलभ्योऽवयवार्थ एव विवक्षित इति ज्ञेयम् ॥ **शङ्कानिरासा-र्थमिति** । महायोगरूढिरूपा परममुख्यवृत्तिरेव नास्तीति शङ्कानिरासार्थमित्यर्थः ॥ **प्रयोगमात्रबाहुल्यं लक्षणमिति** । अनुमापकमपि असाधारणत्वाल्लक्षणमित्यभिप्रेत्येदमुक्तमिति ध्येयम् ॥ **रूढिमात्रत्वादिति** । लौकिकरूढिसहचरितत्वादित्यर्थः ॥ **परममुख्यत्वायोगादिति** । परममुख्यवृत्तिलक्षणत्वायोगादित्यर्थः । ननु महायोगरूढिरूपा परममुख्यवृत्तिरत्र लक्ष्यतयाऽभिप्रेता न परममुख्यवृत्तिमात्रं येन विशेष्यवैयर्थ्यं स्यात् । तत्र च महायोगेऽतिव्याप्तिवारणाय विशेष्यं सार्थकमेवेत्याशयेनाऽऽशङ्क्य निराकरोति **न च समाहारेणेति** । ततश्च परममुख्यवृत्तिर्महायोगरूपैव नान्याऽस्तीति 'तथा ही'त्यादिशङ्काग्रन्थाभिप्राय इति ज्ञातव्यम् । **सुतरां तत्सिद्धेरिति** । तथा च कैमुत्यकथनेन परममुख्यवृत्तौ तारतम्यलाभान्महायोगा-पेक्षयाऽधिका महायोगरूढिरूपाऽन्या परममुख्यवृत्तिरेवात्र लक्ष्यतयाऽभिप्रेता । अतो न विशेष्यवैयर्थ्य-रूपोक्तदोष इति सूचितमिति भावः । एतदेवोपपादयति **न ह्यस्माभिरित्यादिना** ॥ **परममुख्यता-मात्रसिद्ध्य इति** । परममुख्यशब्दवाच्यतामात्रसिद्ध्य इत्यर्थः । लक्षणोक्तेर्व्यवहारार्थत्वात् । परम-मुख्यवृत्तिमात्रस्येदं न लक्षणमिति यावत् ॥ **न चातिप्रसङ्ग इति** । तथा सति असिद्धबाधितेत्यादिनोक्त इत्यर्थः ॥ **अनवधिकप्रवृत्तिनिमित्तापेक्षेति** । अन्यथा नारायणाऽदिशब्देभ्य उद्देश्यस्य गुणपूर्णो विष्णुरित्यादिबोधस्यासिद्धिरिति भावः ॥ **न समाहारमात्रमिति** । असिद्धिबाधसमाहारवत् कार्यजनने परस्परानपेक्षसमाहारो नेत्यर्थः । असिद्धिबाधसमाहारो हि न हेत्वाभासान्तरम् । उद्देश्याया दुष्टत्व-बुद्धेरन्यतरमात्रेणैव जायमानत्वात् । न ह्येवं प्रकृत इति भावः ॥ **अत्र प्रवेश इति** । तथा च न सा पृथग्वृत्तितया वक्तव्येति भावः ॥

श्री०—ननु प्रयोगबाहुल्यस्य प्रवृत्तिनिमित्तसापेक्षताज्ञापकं किमित्यत आह **एतदर्थमिति** । प्रयोगबाहुल्यस्यानवधिकप्रवृत्तिनिमित्तसापेक्षताप्राप्त्यर्थमित्यर्थः । **बाहुल्ये सति प्रवृत्तिहेतुबाहुल्यापेक्षा-** सहितप्रयोगबाहुल्ये सतीत्यर्थः ॥ **न चैवमिति** । अनवधिकप्रवृत्तिनिमित्तापेक्षप्रयोगबाहुल्यस्य महा-योगरूढिलक्षणत्वे निरवधिकप्रवृत्तिनिमित्तसापेक्षवृत्तिरूपमहायोगस्यात्र महायोगरूढिलक्षणे प्रवेशः प्राप्तः । महायोगलक्षणस्य महायोगरूढ्यामतिव्याप्तिर्न स्यादित्यर्थः । कुतो नेत्यत आह **अतीति** । **तत्र** महायोगलक्षणे । तथा च प्रयोगबाहुल्याभावे सति निरवधिकप्रवृत्तिनिमित्तसापेक्षवृत्तिः महायोग इति विवक्षितत्वान्नातिव्याप्तिरिति भावः ।

च०— **प्रयोगमात्रबाहुल्यं लक्षणमिति** । 'अत्रार्थे यस्य शब्दस्य प्रयोगबाहुल्यमस्ति तत्र महायोगरूढिलक्षणा परममुख्यवृत्तिरित्येतावदेवे'ति पूर्वग्रन्थस्य 'न ह्यस्माभिः परममुख्यतामात्रसिद्धये विशिष्टोपादानं क्रियते किन्तु समाहाररूपविधाऽन्तरसिद्धय' इत्युत्तरग्रन्थस्य च विन्यासेन लक्षेर्दर्शनार्था-त्करणसाधनल्युटि निष्पन्नो लक्षणशब्दः प्रकृततद्विषयकानुमितिरूपज्ञानसाधनवचनः । न लक्ष्यता-ऽवच्छेदकसमनियतधर्मवचनः । तेन तस्य तादृशत्वाभावेऽपि न क्षतिः । **विशेषितमिति** । हेतुताऽवच्छे-दकघटकतया तद्घटितमित्यर्थः । **रूढिमात्रत्वादिति** । लौकिकरूढिसहचरिततयाऽनैकान्तिकत्वा-दित्यर्थः । अनुमापकमप्यसाधारणत्वाल्लक्षणमित्यभिप्रेत्येदमुक्तमित्यपि व्याचक्षते । **परममुख्यत्वायोगा-दिति** । परममुख्यवृत्तिव्यभिचारनिरूपकाधिकरणसाधारण्येन तदनुमापकत्वायोगादित्यर्थः । परम-मुख्यवृत्तिलक्षणत्वायोगादित्यपि व्याकुर्वते । **विशेष्यवैयर्थ्यादिति** । तथा च प्राचीनमते स्वसमाना-धिकरणव्याप्यताऽवच्छेदकधर्मान्तरघटिततया व्याप्यत्वासिद्धिः, नव्यमते च निग्रहस्थानमिति भावः । ननु महायोगरूढित्वावच्छिन्नरूपप्रकारान्तरस्यैव सिषाधयिषितत्वोपगमेन तत्र च विशेष्यदलोपादानस्य महायोगस्थलीयानैकान्त्यव्युदसनफलकतया न क्षतिरित्यभिप्रेत्याऽऽशङ्कां प्रतिविधत्ते **न च समाहारेणेति** । हेतुशरीरे दर्शितविशेषणविशेष्यदलोभयोपादानेनेत्यर्थः । **विधाऽन्तरम्** दर्शितसाध्यताऽवच्छेदका-वच्छिन्नम् । **भवति** सिद्ध्यति । **अपरो हेत्वाभासः स्यादिति** । तथाचासिद्धिविशिष्टबाधादि-ष्वतिप्रसङ्गवारणाय हेत्वाभाससामान्यलक्षणे यद्रूपावच्छिन्नविषयकत्वं प्रकृतानुमितिप्रतिबन्धकताऽवच्छेदकं तादृशं यत्स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदककं यत् स्वं तद्रूपवत्त्वरूपविशिष्टान्तराघटितत्वनिवेशनं दीधितिकृतामनर्थकं स्यादिति भावः । एवं च परममुख्यवृत्तिर्महायोगरूपैव न ततोऽतिरिच्यमानाऽस्तीति 'तथाही'त्यादिकशङ्काग्रन्थाऽऽशय इति ध्येयम् । एवमाशङ्काभङ्गीं प्रदर्श्य तत्प्रतिविहितिविधां दिदर्शयिषुर्वितर्कितकल्पद्वय्यां द्वितीयकल्पमुपादत्ते **अत्रेति** । प्रकृतहेतूद्देश्यकदुष्टत्वविधेयकोद्देश्यभूतानुमितेर्व्यभिचारविरोधप्रतिरोधासिद्धिबाधरूपदोषपञ्चका-

न्यतमेनैव पक्षे प्रतिसन्धीयमानेन स्वसमानाधिकरणव्याप्यताऽवच्छेदकधर्मान्तराघटितहेतुताऽवच्छेदक-विशेषितेनैव निर्वाहे तादृशैकदोषघटितदोषान्तरस्य हेतुतोपगतिर्मतभेदे निग्रहव्याप्यत्वासिद्धिप्रसवित्रीति तत्समाहाररूपदोषान्तरकल्पकाभावेन तस्य दोषत्वेपि प्रकृते नारायणाऽदिपदाधीनविष्णुधर्मिकान्वय-बुद्धेरुद्देश्यभूतायाः प्रवृत्तिनिमित्तनिरवधिकत्वप्रयोगबाहुल्याभ्यामितरेतरसाचिव्यविनिर्मुक्ताभ्यामनिष्पादे-नोद्देश्यनिष्पत्तौ परस्परसाचिव्यनियमेन कल्पकसमवहितिनियन्त्रितविधाऽन्तरसिद्धिर्दुरपह्नवैवेत्याशयेन समाधत्ते **वैषम्यादिति** ॥ **प्रवृत्तिनिमित्तेति** । अवयववृत्तिप्रवृत्तिनिमित्तेत्यर्थः । ननु वृत्त्यन्तरत्वे-नोपगतमहायोगरूपवृत्तेर्महायोगरूढ्यन्तर्भावापत्त्या न तद्व्यतिरिच्यमानमूर्तिकता तस्याः संगच्छत इत्याशङ्क्य निराचष्टे **न चेति** ॥ **विवक्षितत्वादिति** । तथा च बहुलप्रयोगाभावरूपविशेषणवैशिष्ट्यस्य तत्र महारूढियोगलक्षणायां वृत्तावभावान्न तत्रैतदन्तर्भावशङ्काऽवकाश इति भावः ।

**मु०— अत्र कतरा वृत्तिर्विष्णौ । येन परममुख्यत्वं विष्णावित्युक्तमित्यत आह** उभयमिति ।

अनु०— उभयं दृश्यते विष्णौ शब्दानामपि सर्वशः ।

**उभयं वृत्तिद्वयं, दृश्यते, प्रमाणैः । सर्वशोऽपि शब्दानामित्यस्यायमर्थः । नारायणा-ऽदिशब्दानां महायोगरूढिः । तदितरेषां महायोग इति ॥ अथवा विष्णौ परममुख्यवृत्तिरित्यु-क्तमनेनोपपादयति । उभयं प्रवृत्तिहेतोर्बाहुल्यं प्रयोगबाहुल्यं च ॥ यद्वा । प्रमितान्वाख्यानं परीक्षकधर्मो न तु स्वेच्छयाऽर्थकल्पनम् । न चैते वृत्ती क्वचित्प्रमिते । अतो न निरूपणीये इत्यत्रेदमुदितम् । प्रमाणानि तु वक्ष्यन्ते ।**

**ननु योगो योगरूढिश्चैते किं न स्याताम् । किमेवं भेदकाभावादाशंक्यते अथवा तद्विवक्षाकारणाभावात् । नाद्यः । तस्योक्तत्वात् । न द्वितीयः । यौगिकाऽदीनामप्यर्थानाम-मुख्यतामभिधाय विष्णोर्मुख्यत्वाभिधानस्य कारणत्वादिति ।**

शे०— 'सर्वशोऽपि शब्दानामि'त्यनेन भगवदेकप्रसिद्धानां तदन्यमात्रप्रसिद्धानां चेत्येवं सर्वशब्दा-नामपि वृत्तिद्वयमिति प्रतीयते तच्च बाधितमित्यतो योग्यतया व्यवस्थया व्याचष्टे **सर्वशोऽपीति** ॥ **नारायणादिशब्दानामिति** । तदेकप्रसिद्धानां शब्दानामित्यर्थः ॥ **महायोग इति** । प्रवृत्तिनिमित्ता-ऽधिक्येऽपि बहुलप्रयोगाभावादिति भावः । यद्यपि इन्द्राऽदिशब्दानामपि ब्रह्मणि विद्वद्रूढिरस्त्येव तथाऽपि नारायणाऽदिशब्दानामिवाविद्वद्रूढेरसत्वात्ततो भेद इत्यवधेयम् । वृत्तिद्वयप्रतिपादनद्वारा विष्णौ

परममुख्यत्वसिद्ध्युपपादनापेक्षया साक्षात्तदपेक्षितहेतुप्रतिपादनेन तदुपपादकत्वं श्लिष्टमिति भावेन पक्षान्तरमाह **अथवेति** । **अन्वाख्यानं** निरूपणम् ॥ **वक्ष्यन्त इति** । 'एतमेव तथा सन्तमि'त्यादिनेति शेषः ॥ **किं न स्यातामिति** । तथा च मुख्यतायामेवान्तर्भूतत्वान्न ततो भेदेन व्यपदेशो युक्त इत्यर्थः ॥ **तस्योक्तत्वादिति** । प्रवृत्तिहेतोर्बाहुल्यमित्यादिना भेदकस्य लक्षणस्योक्तत्वादित्यर्थः ।

स०— **तस्योक्तत्वादिति** । 'इतो हि रूढताऽन्येषामि'त्यादिनोक्तत्वादित्यर्थः ।

प०— **तदितरेषामिति** । इन्द्रादिशब्दानां महायोगः । नारायणादिशब्दानामिव विद्वद्रूढेरभावादिति भावः ॥ **प्रमितान्वाख्यानमिति** । प्रमितस्य लक्षणकथनेन प्रतिपादनमित्यर्थः ॥ **इदमुदितमिति** । 'उभयं दृश्यते' इत्याद्युदितमित्यर्थः । ननु विष्णौ वृत्तिद्वयं प्रवृत्तिहेतुपौष्कल्यादिकं च प्रमाणैर्दृश्यत इत्युक्तम् । कानि तानि प्रमाणानीत्यत आह **प्रमाणानित्विति** । 'एतमेव तथा सन्तमि'त्यादिना वक्ष्यन्त इत्यर्थः । हरौ यद्वृत्तिद्वयमुक्तं तल्लोककॢप्तयोगरूढिरूपमेवोपेयतां किं ततो वैलक्षण्येनेति शङ्कते **नन्विति** ॥ **तस्योक्तत्वादिति** । निरवधिकप्रवृत्तिनिमित्तापेक्षत्वे सति अतिबहुलप्रयोगशून्यत्वं महायोगत्वम् । तादृशमहायोगसापेक्षाखण्डवृत्तित्वं महायोगरूढित्वं इत्येवं लोककॢप्तयोगयोगरूढिभ्यां भेदकस्य लक्षणस्य प्रवृत्तिहेतोरित्यादिनोक्तत्वात् लोके निरवधिकप्रवृत्तिहेतोरभावादित्यर्थः ॥ **मुख्यत्वाभिधानस्येति** । एतच्च 'एतमेव तथा सन्तमित्यादिना प्रमाणमुक्तविषय' इत्यन्तेन ग्रन्थेनाग्रे एतमेवेत्यवधारणादिनाऽन्यस्यामुख्यार्थत्वाभिधानस्य ब्रह्मणो मुख्यार्थत्वाभिधानस्योक्तत्वाद्युक्तमिति भावः ।

या०— **तदितरेषामिति** । अन्यत्रैव प्रसिद्धानां दुःखिबद्धादिशब्दानामित्यर्थः ॥ **वक्ष्यन्त इति** । 'एतमेव तथा सन्तं शतर्चीन्यादिनामभिरि'त्यादिनेति शेषः ॥ **तस्योक्तत्वादिति** । 'प्रवृत्तिहेतोर्बाहुल्यं ज्ञेयं परममुख्यते'त्यादिना भेदकस्य लक्षणस्योक्तत्वादित्यर्थः ।

श्री०— **एते** महायोगमहायोगरूढी ॥ **तस्येति** । भेदकस्य लक्षणद्वयस्येत्यर्थः ॥ **विष्णोरिति** । यदि परममुख्यवृत्तिद्वयस्य योगयोगरूढ्योरन्तर्भावस्तर्हि योगयोगरूढिभ्यामेव भगवति शब्दाः प्रवर्तन्त इति वाच्यम् । ओमिति चेत्तर्हि यौगिकाद्यर्थस्यामुख्यताया उक्तत्वेन तदर्थस्य विष्णोरमुख्यता स्यात् । सा चायुक्तेत्यर्थः ।

च०— **तदितरेषां** तृतीयपादसमन्वेतव्यदुःखिबद्धादिशब्दानाम् ।

सु०—मुख्यवृत्तिरपि त्रेधा भवति । योगो रूढिर्योगरूढिश्चेति । तत्र प्रवृत्तिनिमित्तापेक्षा वृत्तिर्योगः । यथा कुम्भकार, औपगवो, राजपुरुष इति ।

ननु नैतेऽपि यौगिकाः किं नाम रूढा एव । कृत्तद्धितसमासकरणं तु व्युत्पत्तिमात्रार्थम् । यथोक्तं । वृक्षादिवदमी रूढा इत्यादि । मैवम् शब्दार्थविभागस्यावापोद्धाराभ्यां प्रतीतस्यापलापे कारणाभावादित्यादि शिष्यैरेवोह्यतामिति मत्वा रूढेः स्वरूपमाह प्रयोगेति ।

अनु०— प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयते ॥

शे०— मुख्यवृत्तिरिति । अभिधावाचकत्वादिपदवेद्येत्यर्थः । अत एव तथैवोपसंहरिष्यतीति ध्येयम् । सा च शक्त्या प्रतिपादकत्वमित्यन्यत्र विस्तरः ॥ योग इत्यादि । योगस्य रूढ्यपेक्षया रूढेश्च योगरूढ्यपेक्षया दौर्बल्याद्दौर्बल्यक्रमेणायं निर्देश इति ज्ञेयम् । योगलक्षणानुक्त्या प्रसक्तां भाष्ये न्यूनतां परिहरति तत्रेति ॥ प्रवृत्तिनिमित्तेति । अत्र प्रवृत्तिनिमित्तपदेनावयवार्थ एवाभिमतः । अन्यथा रूढेरपि घटत्वादिप्रवृत्तिनिमित्तसापेक्षत्वेन तत्रातिप्रसङ्गात् । उत्तरत्र च रूढिलक्षणे आकर एव प्रवृत्तिनिमित्तपदस्थानेऽवयवार्थपदप्रयोगाच्च । वृत्तिश्चात्र तात्पर्यरूपमर्थप्रतिपादकत्वमेव । ततश्चावयवशक्तिसापेक्षमर्थप्रतिपादकत्वं योग इति पर्यवसन्नोऽर्थः । कृदन्तं यौगिकपदमुदाहरति कुम्भकार इति । 'कर्मण्यणि'ति कुम्भं करोतीत्यत्रार्थेऽण् कृत्प्रत्यय इति ज्ञेयम् । तद्धितान्तं तदुदाहरति औपगवइति । अत्र उपगोरपत्यमित्यस्मिन्नर्थे, 'तस्यापत्यमि'ति तद्धितोऽण्प्रत्ययः । समासरूपं तदुदाहरति राजपुरुष इति । अत्र च 'षष्ठी'त्यनेन समास इति ज्ञेयम् ।

रूढत्वे कर्मण्यणित्यादिव्याकरणविरोध इत्यतस्तस्य साधुत्वमात्रपरत्वान्न विरोध इत्याह कृत्तद्धितेति । अर्थानुगमदर्शनान्न साधुत्वमात्रपरत्वमाश्रयितुं शक्यमित्याह शब्दार्थविभागस्येति । कुम्भकर्तृत्वादिरूपस्येत्यर्थः । यद्यपि कुम्भप्रातिपदिककरोतिधात्वण्प्रत्ययाः स्वस्वार्थेऽन्यानपेक्षा रूढा एव । तथाऽपि समुदाये कुम्भकर्तृत्वरूपे विशिष्टेऽर्थेऽवयवशक्तिसापेक्षा, न त्वश्वकर्णशब्दः शालाऽख्ये वृक्षविशेष इव तन्निरपेक्षा इति भवन्ति यौगिकाः । एवमौपगवादिशब्दा अपि विशिष्टेऽर्थ एव यौगिकाः । न च वाक्यस्यापि स्वार्थबोधने स्वावयवभूतपदशक्तिसापेक्षत्वाद्योगवृत्तिः स्यादिति वाच्यम् ॥ अवयवशब्देन पदावयवस्यैव विवक्षिततया तत्राप्रसङ्गादिति भावः । इत्यादीत्यादिपदेन योगरूढत्वशङ्कानिरासोऽपि द्रष्टव्य इति सूचयति । औपगवादिपदात्पङ्कजादिपदेभ्य इव योगरूढिनिमित्तभूतधर्मद्वयप्रकारकबोधाननुभवात् ।

स०— प्रवृत्तिनिमित्तापेक्षेति ॥ अत्र, प्रवृत्तिनिमित्तशब्देनावयवार्थोऽभिमतः । रूढेरपि प्रवृत्तिनिमित्तापेक्षत्वात्, उत्तरत्र, रूढिलक्षणे, प्रवृत्तिनिमित्तपदस्थाने अवयवार्थपदप्रयोगाच्चेति द्रष्टव्यम् ॥

**कुम्भकार इति** 'कर्मण्यणि'ति कृत्प्रत्ययः कुम्भं करोतीत्यत्रार्थे ज्ञेयः ॥ **औपगव इति** । उपगोरपत्यमित्यस्मिन्नर्थे 'तस्यापत्यमि'ति तद्धितोऽणूप्रत्ययः ॥ **शब्दार्थविभागस्येति** । कुम्भकर्तृत्वादिरूपस्येत्यर्थः ॥ आदिपदेन योगरूढत्वानिरासोपि द्रष्टव्य इति सूचयति ।

प० — शक्त्या प्रतिपादकत्वं मुख्यवृत्तित्वमिति सामान्यलक्षणं स्फुटं मत्वा न्यायविवरणोक्त लौकिकमुख्यवृत्तिविभागमाह **मुख्यवृत्तिरपीति** । न्यायविवरणे विभाजितवृत्तीनां लक्षणानुक्तेः अत्र च कासाञ्चित्तदुक्तेः महायोगादिलक्षणोक्त्या योगादेरपि तत्सूचितमिति भावेन तदाह **प्रवृत्तिनिमित्तापेक्षेति** । निर्वचनलभ्योऽर्थः प्रवृत्तिनिमित्तम् । प्रवृत्तिहेतोरित्यत्र प्राक्तथा व्याख्यानात् । तेन न रूढावतिव्याप्तिः । वृत्तिः अर्थप्रतिपादकत्वम् । एवं च अवयवशक्तिलभ्यमर्थमपेक्ष्यार्थप्रतिपादकत्वं योग इत्यर्थः । प्रवृत्तिहेतोर्बाहुल्यं महायोग इति प्रागुक्तलक्षणे बाहुल्यत्यागे सति लौकिकयोगलक्षणं लभ्यत इति दर्शयितुमेवमुक्तम् । वस्तुतस्तु अवयवशक्तिसापेक्षा वृत्तिर्योग इति फलितोऽर्थः । तेन गौरवचोद्यानवकाशः । कृत्तद्धितसमासानां क्रमेणोदाहरणं कुम्भकार इत्यादि , कुम्भं करोतीति कुम्भपदे कर्मण्युपपदे डुकृञ् करण इत्यस्मात् '**कर्मण्यणि**'ति सूत्रेणाण्प्रत्यये 'अचोञ्णिती'ति वृद्धौ सुपि सति कुम्भकार इति रूपम् । उपगोरपत्यमित्युपगुशब्दादपत्यार्थे 'तस्यापत्यमि'त्यण्प्रत्यये तद्धितेष्वचामादेरित्यादिवृद्धौ 'ओर्गुण' इति गुणे 'सुपो धात्वि'त्यवयवविभक्तिलोपे सुपि सति औपगव इति रूपम् । राज्ञः पुरुष इति विग्रहे षष्ठीति सूत्रेण समासे 'सुपो धात्वि'त्यवयवविभक्तिलोपे सति राजपुरुष इति रूपम् ॥ **व्युत्पत्तीति** । समुदायस्यार्थेन सह वाच्यवाचकसंबन्धज्ञापनमात्रार्थमित्यर्थः ॥ (**यथोक्तमिति** ॥) **शब्दार्थविभागस्येति** । शब्दविभागस्य अर्थविभागस्यचेत्यर्थः ॥ **आवापेति** । राजपुरुषपदप्रक्षेपेण कश्चिदर्थः प्रतीयते । राजपदोद्वापे अमात्यपदावापेऽन्योऽर्थः प्रतीयते । एवं पुरुषपदेपि ध्येयम् । तथा कुम्भपदोद्वापे उदञ्चनपदावापे अन्योऽर्थ इत्यादि ध्येयम् ।

**या० — अत्रापीति** । लोक इत्यर्थः ।

**प्रवृत्तिनिमित्तापेक्षेति** । अत्र प्रवृत्तिनिमित्तपदेन अवयवार्थोऽभिप्रेतः । अतो न घटत्वादिनिमित्तापेक्षायां रूढ्यामतिव्याप्तिरिति ध्येयम् । वृत्तिश्च शब्दबोधानुकूलपदार्थोपस्थितिहेतुः पदपदार्थसम्बन्ध इति कश्चित् । तात्पर्यरूपमर्थप्रतिपादकत्वमेवेति सम्प्रदायविदः । कृदन्तं यौगिकं पदमुदाहरति **कुम्भकार इति** । अत्र 'कर्मण्यणि'ति अण् कृत्प्रत्यय इति ज्ञेयम् । तद्धितान्तं तदुदाहरति । **औपगव इति** । अत्र 'तस्यापत्यमि'ति तद्धितोऽणूप्रत्ययः । समासरूपं तदुदाहरति **राजेति** । अत्र षष्ठीत्यनेन समास इति ध्येयम् ॥ **कृत्तद्धितेति** । कृत्तद्धितसमासविधानं तु आप्तोपदेशादिवच्छक्तिबोधकमेवेत्यर्थः । यद्यपि कुम्भप्रातिपदिककरोतिधात्वणूप्रत्ययाः स्वार्थेऽन्यानपेक्षा रूढा एव । तथाऽपि

समुदायः कुम्भकर्तृत्वरूपे विशिष्टेऽर्थेऽवयवशक्तिसापेक्षः । न त्वश्वकर्णशब्दो वृक्षविशेष इव तन्निरपेक्ष इति भवति यौगिकः । एवमौपगवाऽऽदिशब्दा अपि विशिष्टार्थे यौगिकाः । न च वाक्यस्यापि स्वार्थबोधने स्वावयवभूतपदशक्तिसापेक्षत्वाद्योगवृत्तिः स्यादिति वाच्यम् । एतदर्थमेव लक्षणे वृत्तिपदोपादानात् । वाक्ये च वृत्तेरभावात् । अवयवशब्देन पदावयवस्य विवक्षितत्वान्नोक्तदोष इत्यप्याहुः । इत्यादीत्यत्रादिपदेन योगरूढत्वशङ्कानिरासोऽपि द्रष्टव्य इति सूचयति । औपगवादिपदात् योगरूढिनिमित्तभूतधर्मद्वयप्रकारकबोधाननुभवात् ।

श्री०— **कृत्तद्धितेति** । ततश्च कुम्भशब्दोपपदात्कृञ् करणेऽस्मात्कृत् प्रत्ययभूतेऽण्प्रत्यये गुणे कर् इति जाते णित्वादादिवृद्धौ कारेति कृदन्तं ज्ञेयम् । **अमी** कुम्भकारादिशब्दाः ।

च०— **प्रवृत्तिनिमित्तापेक्षेति** । अवयववृत्तिनिमित्तापेक्षावृत्तिरित्यर्थः । तेन न घटत्वादिनिमित्तकघटादिपदवृत्तिसमुदायवृत्तावतिप्रसङ्ग इति भावः । स्फुटीकरिष्यति चैतदुपरिष्टाद्रूढिलक्षणे मात्रेत्यवयवार्थसादृश्यादीति प्रवृत्तिनिमित्तपदस्थानेऽवयवार्थपदं प्रयुञ्जानो ग्रन्थकृदेव । अत्रान्वयबोधौपयिकपदार्थस्मृतिबीजभूतपदानुयोगिकार्थप्रतियोगिकसंबन्ध एव वृत्तिरिति कतिपयेषां पन्थाः । व्याचक्षाणास्तु । वृत्तिश्च तात्पर्यरूपम् अर्थप्रतिपादकत्वमेव । ततश्चावयवशक्तिसापेक्षमर्थप्रतिपादकत्वं

---

योग इति पयवरुन्नार्थ इति पर्यैकार्षुः । अवयवशक्त्याऽर्थप्रत्यायकान् कृत्तद्धितान्तसमासान् क्रमेणोदाहरति । **कुम्भेत्यादि** । 'कर्मण्यण्' 'तस्यापत्यमि'ति योगानुशिष्टौ कृत्तद्धिताणौ 'षष्ठी'त्येव समासविधायकम् ॥ **व्युत्पत्तिमात्रार्थम्** । साधुत्वमात्रार्थम् । **वृक्षादिवदिति** । शालास्यपादपे अश्वकर्णादिशब्दवदित्यर्थः । **शब्दार्थविभागस्येति** । कुम्भादिप्रातिपदिककरोतिधात्वाद्यणादिप्रत्ययरूपशब्दानां कुम्भकर्तृत्वोपभ्वपत्यत्वराजसंबन्धित्वादिरूपार्थानां च विभागस्येत्यर्थः ।

**सु०— यत्रार्थे यस्य शब्दस्य प्रयोगमात्रबाहुल्यं तत्र तस्य वृत्ती रूढिरित्यभिधीयते मात्रेत्यवयवार्थसादृश्याऽऽदिसापेक्षताव्युदासार्थम् । तेन परममुख्यवृत्तेर्योगरूढे रूढोपचारलक्षणाभ्य च व्यवच्छेदः । बाहुल्यमिति स्वरूपकथनम् ।**

**सर्वेऽपि यौगिका । नास्ति रूढ इति शाकटायनः । तदसत् । घटपटादिशब्दानां बहुलमुपलम्भात् । तेष्युणादिप्रत्ययान्ता यौगिका एवेति चेन्न । अर्थानुगमादर्शनात् । अन्ततः प्रकृतिप्रत्यययोस्तदर्थे रूढेराश्रयणीयत्वाच्चेति । प्रवृत्तिनिमित्तापेक्षो यत्र बहुलप्रयोगस्तत्र योगरूढिः । यथा पङ्कजादिशब्दानां तामरसादाविति प्रसिद्धत्वान्नोक्तम् ।**

विरोधाद्वैफल्याच्च योगरूढिरयुक्तेति केचित् । तथा हि । अवयववृत्तिर्योगः रूढिस्त्वखण्डवृत्तिः । न ह्येतयोरेकत्र समावेशो युज्यते । न च योगरूढ्यङ्गीकारे किमपि प्रयोजनमस्ति । पङ्कजादिशब्दानां सम्प्रतिपन्नवृत्त्यैवोपपत्तेरिति तदयुक्तम् । न हि योगरूढ्योः समाहारो योगरूढिरिति ब्रूमः । येन विरोधः स्यात् । किं नाम यथा रूढलक्षणा लक्षणामात्रात् रूढगौणी च गौणीमात्रात्प्रयोगप्राचुर्येण भिद्यते । तथा प्रवृत्तिनिमित्तापेक्षित्वाद्रूढिमात्रात्प्रयोगबाहुल्येन योगमात्राच्च भिन्ना तृतीयेयं वृत्तिरिति ।

शे० — अपेक्षितपूरणेन लक्षणसमर्पकतया व्याचष्टे **यत्रार्थ इति** । नन्ववयवार्थानपेक्षत्वसूचकमात्रपदप्रयोगादवयवार्थसापेक्षवृत्तेर्व्यवच्छेदेऽपि तदनपेक्षगौण्यादिव्यवच्छेदायोगात्तत्रातिप्रसङ्ग इत्यतो मात्रेत्यनेनावयवार्थसापेक्षत्वस्येव सादृश्यादिसापेक्षत्वस्यापि व्युदासस्ततो न कुत्रापि प्रसङ्ग इत्याह **मात्रेत्यवयवार्थेति** । सादृश्यमिह मुख्यार्थसादृश्यं द्रष्टव्यम् । आदिपदेन सम्बन्धपरिग्रहः । यद्यपि 'उपलक्षणा च गौणी चे'ति मूलनिर्देशक्रमानुसारेण लक्षणाप्रयोजकमुख्यार्थसम्बन्धस्य स्वशब्देन ग्रहणम् आदिपदेन च मुख्यार्थसादृश्यग्रहणमुचितम् । तथाऽपि लक्षणाऽपेक्षया गौण्या मुख्यत्वज्ञापनाय मुख्यार्थसादृश्यस्य स्वशब्देन सबन्धस्य च आदिशब्देन ग्रहणं कृतमिति ध्येयम् । ततश्च यस्य शब्दस्य यत्रार्थेऽवयवार्थमुख्यार्थसादृश्यसम्बन्धानपेक्षः प्रयोगस्तस्य तत्र रूढिरिति पर्यवसन्नं भवति । अवयवार्थानपेक्षत्वादिविवक्षायाः प्रयोजनमाह **तेनेति** ॥ **परमुख्यवृत्तेरिति** । महायोगमहायोगरूढिरूपद्विविध परममुख्यवृत्तेरित्यर्थः । उभयविधपरममुख्यवृत्तौ प्रयोगस्यावयवार्थापेक्षत्वेन तदनपेक्षत्वाभावादिति भावः । योगरूढेरिति योगस्याप्युपलक्षणम् । अत एव योगयोगरूढिभ्यां व्यवच्छेद इत्येव तर्कताण्डवे उक्तम् । ततश्चोभयविधमुख्यवृत्तावप्यवयवार्थत्वापेक्षत्वात्प्रयोगस्य तदनपेक्षत्वविवक्षया व्यवच्छेद इति भावः । मुख्यार्थसादृश्यानपेक्षत्वोक्त्या उपचारात्सम्बन्धानपेक्षत्वोक्त्या च लक्षणाया व्यवच्छेद इत्याह **रूढेत्यादि** । अत्र रूढत्वमुपचारलक्षणयोर्न व्यावर्तकं किन्तु स्वरूपकीर्तनम् । न च प्रयोगबाहुल्यस्य तत्र सम्भावनार्थं तदिति वाच्यम् । प्रयोगबाहुल्यस्य लक्षणाऽनन्तर्भावस्योत्तरवाक्य एव टीकायामभिधानेन प्रयोगबाहुल्यस्य अनपेक्षितत्वेन तत्संभावनस्यानर्थकत्वात् । अत एव सादृश्यसम्बन्धानपेक्षत्वोक्त्या गौणलक्षणाभ्यव्यवच्छेद इत्येवैतद्वाक्यतात्पर्यतया तर्कताण्डवे वर्णितमित्यवधेयम् ॥ **स्वरूपकथनमिति** । व्यवच्छेद्याद्यभावेन लक्षणाऽन्तर्गतत्वायोगादिति भावः । यद्यपि प्रयोगमात्रबाहुल्यानुमेयाऽखण्डशक्त्या प्रतिपादकत्वरूपा प्रयोगाद्यघटिताऽन्यैव रूढिः सिद्धान्तेऽस्त्येव । तथाऽपि रूढ्यनुमापकप्रयोगोऽप्यसाधारणत्वाल्लक्षणमपि भवतीत्यभिप्रेत्येदमुक्तमिति ध्येयम् ।

स० — **यत्रार्थे यस्य शब्दस्येत्यादि** ॥ अखण्डशक्त्या प्रतिपादकत्वं रूढिरिति लक्षणमत्राभिप्रेतं अत्र प्रयोगग्रहणं—अखण्डशक्तौ प्रमाणमपि उक्तः प्रयोगः असाधारणत्वाल्लक्षणं च भवति—इत्यभिप्रेत्य न तु शक्तिर्नास्तीति । पूर्वं शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयत इत्यादिना ग्रन्थकारेणैव गवादिशब्देष्वपि शक्त्यभिधानात् । रूढमित्येव साध्यं स्यादिति प्रयोगेण रूढिसाधनाच्च, प्रयोगयुक्तसादृश्यमित्यनुव्याख्यानस्थप्रयोगशब्दस्य सामर्थ्यमर्थ इत्युक्तत्वाच्चेति द्रष्टव्यम् । अवयवार्थसादृश्याऽदीत्यत्रादिऽपदेन मुख्यार्थसम्बन्धो ग्राह्यः ॥ **तेन परममुख्यवृत्तेरिति** ॥ अवयवार्थानपेक्षत्वोक्त्या परममुख्यवृत्तेर्योगस्य योगरूढेश्च व्यवच्छेदः मुख्यार्थसादृश्यसम्बन्धानपेक्षत्वोक्त्योपचारलक्षणाभ्यां व्यवच्छेदो ज्ञातव्यः । तत्र प्रयोगबाहुल्यप्रसक्त्युपपादनाय रूढेत्युक्तम् । तथा च यस्य यत्रावयवार्थमुख्यार्थसादृश्यसम्बन्धानपेक्षः प्रयोगः तस्य तत्र रूढिरित्युक्तं भवति ॥ **प्रवृत्तिनिमित्तापेक्ष इति** । अवयवशक्तिसापेक्षसमुदायशक्त्याऽर्थप्रतिपादकत्वं योगरूढिरित्यर्थः वैयर्थ्यमुपपादयति **नचेति** ॥ **नहियोगरूढयोरिति** । न चानन्दमयाधिकरणे 'बहुलातिप्रयोगतः । रूढमित्येव साध्यं स्यात्' इत्यनुव्याख्याव्याख्यावसरे जयतीर्थपूज्यचरणैरेव 'समाहारवृत्तयो हि ताः' इत्यादिना रूढियोगसमाहारस्य व्याकृतत्वात् 'तत्र प्रयोगबाहुल्यं यदि तत्परता किमु' इत्येतत्पादीयानुव्याख्याव्याख्यावसरे च 'न ह्यस्माभिः परममुख्यतामात्रसिध्यर्थं विशिष्टोपादानं क्रियते किं नाम समाहाररूपविभागाऽन्तरसिद्धय'इत्यादिना च स्पष्टमेवैतदभ्युपगमात् सन्न्यायरत्नावल्यामपि न चावयववृत्त्यखण्डवृत्त्योरेकस्मिन्नर्थे विरुद्धत्वात् योगरूढिर्नाम नास्तीति वाच्यं तस्य पङ्कजादिशब्देषु दृष्टत्वात् इति समाहारस्यैवोक्तत्वाच्च 'विद्वद्रूढिं च तत्रगामि'त्यनुव्याख्यानव्याख्यावसरे सनिरुक्तिकयोगवृत्तिसाहित्येन तत्रगां परमेश्वरविषयां सर्वेषां शब्दानां विद्वद्रूढिं च दर्शयतीत्युक्तत्वेन तत्राऽपि रूढियोगसमाहारांगीकारात् । अत्र च न हि योगरूढयोः समाहारो योगरूढिरिति ब्रूम इति तदभावाभिधाने तद्विरोध इति चेन्मैवम् । योगरूढानां पङ्कजादिशब्दानां अवयवशक्त्या पङ्कजनिकर्तृत्वस्य समुदायशक्त्या च पद्मस्य बोधकत्वमित्येवं योगरूढयोर्यथाक्रमं पंकजनिकर्तृत्वरूपपद्मत्वरूपभिन्नधर्मनियतयोरपि तद्द्वारा एकस्मिन् धर्मिणि शब्दवृत्त्योरिव समाहारसंभवाभिप्रायेण 'समाहारवृत्तयो हि ताः' इत्यादिग्रन्थस्य प्रवृत्तत्वात् भिन्नभिन्नधर्मबोधनार्थं द्वयोरपेक्षितत्वेपि एकत्र धर्मसमाहारो नेत्यभिप्रायेण 'न हि योगरूढयोरि'त्यादिग्रन्थस्य प्रवृत्तत्वेन तत्रोक्तस्यात्रानिराकरणात् अत्रानङ्गीकृतस्य तत्राप्यनभिमतत्वेन भिन्नविषयत्वेन विरोधस्याप्यभावादिति ।

प० — **प्रयोगमात्रबाहुल्यमिति** । प्रयोगबाहुल्यज्ञाप्याखण्डवृत्तिरित्यर्थोऽस्य ध्येयः । ज्ञाप्यज्ञापकयोरभेदोपचाराद्बाहुल्यमित्युक्तम् । तेन 'बहुलातिप्रयोगतः । रूढमित्येव साध्यं स्यादि'त्यनेनाविरोधः । यद्वा पूर्वोक्तरीत्याऽखण्डशक्तौ प्रमाणमपि प्रयोगबाहुल्यमसाधारणत्वाल्लक्षणं च भवतीत्यभि-

प्रेत्यैवमुक्तम् । सादृश्याऽदीत्यादिपदेन संबन्धग्रहः । तथा चावयवार्थमुख्यार्थसादृश्यमुख्यार्थसंबन्धानपेक्षं प्रयोगबाहुल्यं रूढिरित्युक्तं भवति । अवयवार्थानपेक्षत्वाद्युक्तेः क्रमेण कृत्यमाह **तेनेति** । योग लक्षणागौणीनां च बाहुल्यपदेन निरास इति भावेन त्रयाणामेव ग्रहणं कृतम् । एतच्चाङ्गीकृत्योक्तम् । वस्तुतस्त्ववयवार्थानपेक्षत्वोक्त्या परममुख्यवृत्तितो, योगरूढितश्चैव केवलयोगान्मुख्यार्थसादृश्यसम्बंधान पेक्षत्वोक्त्यैव रूढोपचाररूढलक्षणाभ्यामिव केवलोपचारकेवललक्षणाभ्यामपि व्यवच्छेदो लिलक्षयिषिताया रूढिवृत्तेर्लभ्यते व्यर्थं बाहुल्यग्रहणमिति भावेनाह **बाहुल्यमितीति** । यदा तु वक्ष्यमाणदिशा एतदेव योगलक्षणसाहित्येन योगरूढिलक्षणं भवति । तदा तु योगरूढिरूपवृत्तिविशेषसाधकतया प्रयोजनवच्च भविष्यतीति ध्येयम् । अवयवार्थसादृश्यसम्बंधानपेक्षः प्रयोगो रूढिरितिभावः । प्रवृत्तिहेतोर्बाहुल्यमिति महायोगलक्षणं बाहुल्यपदत्यागेन गृहीत्वा प्रागुक्तरूढिलक्षणं चादाय योगरूढिलक्षणमाह **प्रवृत्तिनिमित्तापेक्ष इति** । अवयवशक्तिलभ्यार्थसापेक्ष इत्यर्थः ॥ **यथापङ्कजादिशब्दानामिति** । तेषामवयवसापेक्षसमुदायशक्त्याऽर्थप्रतिपादकत्वं योगरूढिरित्यर्थः । अन्यथा घटत्वादिप्रवृत्तिनिमित्तसापेक्षायां रूढावतिव्याप्तिप्रसङ्ग इति ध्येयम् । एवमग्रेऽपि प्रवृत्तिनिमित्तपदं अवयववृत्तिपरं ज्ञेयम् । पंकजनिकर्तृत्वरूपावयवार्थमपेक्ष्यैव पद्मे पंकजपदप्रयोगो नान्यथेति भावः । वैफल्यं च व्यनक्ति **नचेति** । **संप्रतिपन्नवृत्त्येति** । रूढिमात्रेण योगमात्रेण वेत्यर्थः । अभ्युपेत्यवादेनाह **न हि योगरूढयोस्समाहार इति** । अभ्युपेत्यवादस्य च प्रयोगमात्रबाहुल्यमिति मूलस्य बाहुल्यपदसार्थक्यं फलमिति भावेनोक्तम् ॥ **प्रयोगबाहुल्येनेति** । प्रयोगमात्रं बाहुल्यमिति प्रागुक्तरूढिलक्षणं प्रवृत्तिहेतोरित्युक्तमहायोगलक्षणैकदेशं च मेलयित्वैव योगरूढेर्लक्षणकथनात् तत्रत्यबाहुल्यग्रहणस्य केवलयोगा-(द्य)पेक्षयाऽन्यैवेयं वृत्तिरिति ज्ञापनं प्रयोजनमुक्तं भवति । अत एव प्रयोगमात्रं रूढिरिति वाच्ये बाहुल्यग्रहणमेतदर्थमेव कृतमिति भावः । यद्वा पंकजनिकर्तृत्वादिधर्मे योगः पद्मत्वादिधर्मे रूढिरिति भिन्नधर्मविषयत्वेनैकस्मिन् शब्दे समाहारेऽप्येकस्मिन्धर्मे न समाहारइत्यर्थः । अन्यथा समाहाररूपविधाऽन्तरसिद्धय इत्यादिपूर्वग्रन्थविरोधः स्यात् । अत एव तर्कताण्डवे योगरूढिसमर्थनवादे अस्य वाक्यस्यैवमेव व्याख्यानं कृतम् ।

या० — **यत्रार्थे यस्य शब्दस्येत्यादि** । यद्यपि प्रयोगमात्रबाहुल्यानुमेयाऽखण्डशक्त्या प्रतिपादकत्वरूपा रूढिः प्रयोगाघटितैवान्याऽस्ति । तथाऽपि रूढ्यनुमापकप्रयोगोऽसाधारणत्वात्तलक्षणमपि भवतीत्यभिप्रेत्येदमिति ध्येयम् । सादृश्याऽदीत्यत्राऽदिपदेन मुख्यार्थसम्बन्धग्रहणम् ॥ **तेन परमेत्यादि** । अवयवार्थानपेक्षत्वोक्त्या महायोगरूढिरूपपरममुख्यवृत्तेर्योगरूढेश्च व्यवच्छेदः । महायोगे केवलयोगे वा प्रयोगबाहुल्याभावान्न तदुभयमत्र व्यावर्त्यमिति ध्येयम् । मुख्यार्थसादृश्य-

सम्बन्धानपेक्षत्वोक्त्योपचारलक्षणाभ्यां व्यवच्छेदः । तत्र प्रयोगबाहुल्यप्रसक्त्युपपादनाय रूढेत्युक्तम् ॥ **प्रवृत्तिनिमित्तापेक्ष इति** । अत्र प्रवृत्तिनिमित्तशब्देनावयवार्थोऽभिमतः । इदं च रूढ्यनुमापकप्रयोगगर्भ-लक्षणम् । अपरं चावयवशक्तिसापेक्षसमुदायशक्त्याऽर्थप्रतिपादकत्वरूपं योगरूढिलक्षणं तर्कताण्डवे द्रष्टव्यम् । विरुद्धत्वमुपपादयति **अवयववृत्तिर्हीति** । अवयवार्थमपेक्ष्य वृत्तिरित्यर्थः । **अखण्ड वृत्तिरिति** । अवयवार्थनिरपेक्षवृत्तिरित्यर्थः । वैफल्यमुपपादयति **न च योगेति** । ननु पङ्कजादि शब्दानां पद्मत्वादिप्रकारकबोधजनकत्वान्यथाऽनुपपत्त्यैव योगरूढिः कल्प्यते । अतस्तादृशबोधजनकत्वमेव तत्प्रयोजनमित्यत आह **पङ्कजादिशब्दानामिति** ॥ **सम्प्रतिपन्नवृत्त्येति** । केवलरूढ्या केवलयोगेन वेत्यर्थः । केवलयोगपक्षे पद्मत्वं संस्कारोपनीतं भासत इत्यभिप्रायः । केवलरूढिपक्षे तु पङ्कज-शब्दात्पद्मत्वप्रकारक एव बोधो भवति न पङ्कजनिकर्तृत्वप्रकारक इति । विरोधभयेन पङ्कजादिपदेष्व-खण्डवृत्तिरूपरूढ्यभावेऽपि बहुलप्रयोगस्यैव भेदकस्य सत्त्वात्तृतीया योगरूढिरनिवार्यैवेत्याशयेन तावत्स-माधत्ते **न हि योगरूढ्योरिति** ।

**श्री०— उणादीति** । तथा च घट् पट् अस्मादौणादिके अप्रत्यये घटेत्यादिरूपम् ॥ **अर्था-नुगमेति** । अवयवार्थानुगमेत्यर्थः । तदर्थे प्रकृतिप्रत्ययार्थे । अन्यथा सामर्थ्याभावेन योगासम्भवा-दित्याशयः । **प्रयोगप्राचुर्येण** निमित्तेन । एवं रूढिमात्राद्भिन्नेत्यस्योपपादकं **प्रवृत्तिनिमित्तापेक्षत्वा-दिति** । नन्वेवं योगरूढ्यङ्गीकारेऽसिद्धिबाधसमाहारोऽप्यपरो हेत्वाभासः स्यादिति चेत् । उच्यते । न तद्वत्परस्परानपेक्ष समाहारमात्रं योगरूढ्योर्विवक्षितम् । किं नाम प्रयोगबाहुल्यस्य प्रवृत्तिनिमित्त-सापेक्षता विवक्षिता । तथाहि । योगरूढिस्थले पङ्कजमानयेत्यत्र पङ्कजनिकर्तारं पद्ममानयेति तावत्पङ्कज-निकर्तृत्वपद्मत्वोभयप्रकारकपद्मविशेष्यको हि बोधो भवति । तथा च यदि प्रयोगबाहुल्यमात्रस्यैव विवक्षा तदा पद्मत्वप्रकारक एव बोधः स्यान्न तु पङ्कजनिकर्तृत्वप्रकारकः । तथा चावयवार्थप्रतीति-विरोधः । यदि च प्रवृत्तिनिमित्तस्यैव विवक्षा तदा पङ्कजनिकर्तृत्वप्रकारक एव बोधो भवेत् । न तु पद्मत्वप्रकारकः । तथा च भेकादावपि प्रयोगप्रसङ्ग इत्येवं बाधकस्य सत्त्वात्प्रयोगबाहुल्यस्यावश्यं प्रवृत्तिनिमित्तसापेक्षता वाच्या । तथा च यदा वह्निरनुष्णोऽतीन्द्रियत्वादित्यनुमानेऽसिद्धिमात्रं बाधमात्रं वा स्वातन्त्र्येण स्फुरति तदा दुष्टज्ञप्तेर्जातत्वेन द्वयोः परस्परसापेक्षताया अभावेन नातिप्रसङ्गः । न चैवं योगरूढिलक्षणस्य महायोगरूढ्यामतिव्याप्तिः । तत्र प्रवृत्तिनिमित्तस्य स्वातन्त्र्यस्य वा निरवधिकत्वस्य वा विवक्षितत्वेनात्र तदभावादिति सर्वमकलङ्कम् । योगमात्राच्च भिन्नेत्यस्य प्रयोगबाहुल्येनेत्युपपादकम् ।

**च०— अर्थानुगमादर्शनात्** । प्रकृत्यर्थान्वितप्रत्ययार्थान्वयित्वादर्शनात् । **पङ्कजादिशब्दा-नामिति** । अवयवसमुदायशक्त्युभयप्रतिसंधानाधीनतत्तन्निमित्तनिष्ठप्रकारतानिरूपितैकधर्मिनिष्ठविशेष्यता-

शालिशाब्दधीजनकत्वं योगरूढिलक्षणं तर्कताण्डवदिशाऽवसेयम् । **संप्रतिपन्नवृत्त्येति** । केवलसमुदायवृत्त्या केवलावयववृत्त्या वेत्यर्थः । **न हि योगरूढयोः समाहार इति** । अयं च ग्रन्थः पूर्ववाद्यभिहितविरोधाभ्युपगमेन प्रावर्तिष्टेति । वस्तुतः पङ्कजनिकर्तृत्वावच्छिन्ने योगस्य, पद्मत्वजात्यवच्छिन्ने रूढेश्च संभवेनाविरोधात् आनन्दमयनये 'बहुलातिप्रयोगतः रूढमित्येव साध्यं स्यादि'ति प्रतीकव्याख्याऽवसरे, समाहारवृत्तयो हि ताः इति विद्वद्रूढिं च तत्रगामिति तद्व्याकृत्यवसरे च सनिरुक्तिकयोगवृत्तिसाहित्येन तत्रगां परमेश्वरविषयां सर्वेषां शब्दानां विद्वद्रूढिं च दर्शयतीत्यभिहित्या तत्रापि रूढियोगयोः समाहारस्याभिधानेन 'तत्र प्रयोगबाहुल्यं यदि तत्परता किम्वि'ति मौलपूर्वग्रन्थविवृतिदशायां 'न ह्यस्माभिः परममुख्यतामात्रसिद्धये विशिष्टोपादानं क्रियते किन्तु समाहाररूपविधान्तरसिद्धय' इत्युक्तत्वेन 'न चावयववृत्त्यखण्डवृत्त्योरेकस्मिन्नर्थे विरुद्धत्वाद्योगरूढिर्नाम नास्तीति वाच्यम् । तस्याः पङ्कजादिशब्देषु दृष्टत्वादि'ति सन्न्यायरत्नावल्यां च समाहाररूपयोगरूढेरुक्तत्वेन च 'न हि योगरूढयोः समाहारो योगरूढिरि'ति प्रकृतग्रन्थे तदभावाभिधाने तद्विरोध इति शङ्काऽनवकाशः । नहीत्यादिप्रकृतग्रन्थस्यावयवाखण्डशक्त्योः समाहारस्य विरुद्धत्वोपगमेन प्रवृत्ततया सर्वथा समाहारासंभवतात्पर्यकत्वाभावादिति मन्तव्यमिति व्याख्यातारः ।

---

**सु०— किञ्च पङ्कजादिशब्दाश्च किं केवलं रूढा अङ्गीकरणीया उत यौगिकाः । नाद्यः । अवयवार्थप्रतीतिविरोधात् । सप्तम्यां जनेर्ड इत्याद्यनुशासनविरोधाच्च । अनेनैव न्यायेन यौगिकाभावप्रसङ्गाच्च । न द्वितीयः । भेकादिष्वपि प्रयोगप्रसङ्गात् । गवादिशब्दानामिव व्यवहारप्राचुर्याप्राचुर्यकृते शक्तिसाम्येऽपि प्रसिद्ध्यप्रसिद्धी, इति चेन्न वैषम्यात् ।**

**गवादिशब्दाना(नां सम्प्रतिपन्नवृत्त्याऽने)मनेकार्थत्वे शास्त्रतो निश्चिते हि प्रसिद्ध्यादेः कारणान्तरं मार्गणीयम् । न चैवमेषां शब्दानामनेकत्र शक्तिरवधृता ।**

शे०— पङ्कजादिशब्दानां सम्मतवृत्त्यैवोपपत्तेरिति प्रागुक्तं दूषयति **पङ्कजादिशब्दाश्चेति** । अत एवानन्दमयाधिकरणे 'बहुलातिप्रयोगतो रूढमित्येव साध्यं स्यादि'त्येतद्वाक्यव्याख्यानावसरे स्वयमेव 'समाहारवृत्तयो हि ताः' इत्यादिना योगरूढिसमाहारस्योक्तत्वा'द्विद्वद्रूढिं च तत्रगामि'त्येतद्वाक्यव्याख्यानावसरे सनिरुक्तिकं योगवृत्तिसाहित्येन तत्रगां परमेश्वरविषयां सर्वेषां शब्दानां विद्वद्रूढिम् च दर्शयतीत्युक्तत्वेन तत्रापि रूढियोगयोः समाहारस्याभिधाना'त्तत्र प्रयोगबाहुल्यं यदि तत्परता किम्वि'त्यादिपूर्वग्रन्थव्याख्यानावसरे 'न ह्यस्माभिः परममुख्यतामात्रसिद्धये विशिष्टोपादनं क्रियते किन्तु समाहाररूपविधान्तरसिद्धये' इति स्पष्टमेव तदभिधानात् सन्न्यायरत्नावल्यामपि न चावयववृत्त्यखण्डशक्त्योरेकस्यैक-

स्मिन्नर्थे विरुद्धत्वाद्योगरूढिर्नाम नास्तीति वाच्यम् । तस्याः पङ्कजादिशब्देषु दृष्टत्वादिति समाहारस्यैवोक्तत्वाच्चेह तन्निषेधे तद्विरोध इति निरस्तं भवति । न हीत्यादिग्रन्थस्यावयवशक्त्यखण्डशक्त्योः समाहारस्य विरुद्धत्वाङ्गीकारेण वैकत्र धर्मे समाहारो नेत्यभिप्रायेणैव वा प्रवृत्तत्वेन सर्वथा समाहारासंभवाभिप्रायकत्वाभावादिति द्रष्टव्यम् ॥ **अवयवार्थेति** । पङ्कजनिकर्तृत्वरूपेत्यर्थः । न चावयवार्थप्रत्यय एवासिद्ध इति वाच्यम् । अनुभवसिद्धप्रत्ययापलापस्यायुक्तत्वात् । अनुभवे विप्रतिपद्यमानं प्रत्याह **सप्तम्यामिति** । ननु गमेर्ड इत्यादिवत्सप्तम्यां जनेर्ड इत्याद्यनुशासनमपि शब्दसाधुत्वव्याख्यानपरमस्त्वित्यरुचेराह **अनेनैव न्यायेनेति** । औपगवादिशब्देष्वप्यवयवार्थप्रतीत्यपलापस्य तस्यापत्यमित्यादिव्याकरणस्य शब्दसाधुत्वमात्रपरत्वस्य च वक्तुं शक्यत्वादित्यर्थः ॥ **भेकादिष्विति** । पद्म इव तत्राप्यवयवशक्तिरूपयोगस्य सत्त्वादिति भावः । अस्य च भेकादिष्ववयवशक्तिप्रतिबन्धार्थं रूढिरङ्गीकार्येति नाभिप्रायः । येन प्रतिबन्धकत्वे शक्तित्वं पारिभाषिकमिति शङ्क्येत । किन्तु पद्मत्वबोधार्थमवश्यं कल्पनीयया रूढ्या भेकादिष्वतिप्रसंगस्यापि परिहार इत्येवेति नोक्तदोष इति ध्येयम् ।

ननु पृथिव्याद्यनेकार्थेषु रूढत्वेऽपि गवादिशब्दानां सास्नादिमद्व्यक्तौ व्यवहारप्राचुर्यनिबन्धनप्रसिद्ध्योपपदाद्यभावेऽपि तत्र प्रयोगप्रत्यययोः सत्त्वेऽपीतरेष्वर्थेषु व्यवहारस्याप्रचुरत्वात्तन्निबन्धनाप्रसिद्ध्योपपदाद्यभावे प्रयोगप्रत्ययाभाववत्पङ्कजादिशब्दानामपि पद्मे भेकादौ चावयवशक्तिसाम्येऽपि पद्मे व्यवहारप्राचुर्यात्तन्निबन्धनप्रसिद्ध्या तत्र प्रयोगप्रत्यययोः सत्त्वेऽपि भेकादौ व्यवहारप्राचुर्याभावात्तन्निबन्धनाप्रसिद्ध्या प्रयोगाभावोपपत्तेर्न भेकादाववयवशक्तिसद्भावे प्रयोगापादनं तदभावेन शक्त्यभावावधारणं वा युज्यते । अन्यथा गवादिशब्दानामपि दशस्वर्थेषु रूढत्वे सर्वत्र प्रयोगप्रत्ययापादनस्य तदभावेन रूढ्यभावावधारणस्य च प्रसङ्गादिति विवरणमतमाशङ्कते **गवादिशब्दानामिति** ॥ **न चैवमिति** । पङ्कजादिशब्दानामनेकेष्वर्थेषु शक्तिनिश्चायकशास्त्राभावादिति भावः ।

स०— **भेकादिष्वपि प्रयोगप्रसङ्गादिति** । अत्र भेकादिषु अवयवशक्तिप्रतिबन्धार्थं रूढिरङ्गीकार्येति नाभिप्रायः । येन प्रतिबन्धकत्वे शक्तित्वं पारिभाषिकं स्यादिति शंक्येत, किन्तु रूढ्या पद्मत्वमपि बोध्यमेवेत्यभिप्राय इति बोध्यम् ॥ **गवादिशब्दानामिति** । अत्र व्यवहारप्राचुर्याप्राचुर्यकृते इत्यस्य प्रसिद्ध्यप्रसिद्धी इत्यनेनान्वयः ॥ **न चैवमेषां शब्दानामिति** । यद्यपि पङ्कजादिशब्दानां भेकादिष्ववयववृत्तिरूपयोगलक्षणा शक्तिरवधृतैव; तथापि पङ्कजपदस्य यादृशी पद्मे शक्तिर्न तादृशी भेकादौ प्रमाणसिद्धा । तथात्वे गोशब्दस्यार्थान्तर इव कदाचित् केवलस्य पङ्कजपदस्य पद्म इव भेकेऽपि प्रयोगप्रसङ्गात् । अतः पङ्कजपदस्य पद्मभेकयोर्न शक्तिसाम्यं प्रामाणिकमिति भावः ।

प० — एवं समाहारस्य वृत्त्यन्तरत्वमुपेत्य विरोधं निरस्येदानीं पङ्कजनिकर्तृत्वविशिष्टपद्मप्रतीतेः संप्रतिपन्नान्यतरवृत्तिमात्रेणासिद्धेरुद्देश्यप्रतीत्यर्थं योगरूढिरूपवृत्तिरभ्युपेयेति भावेनान्यतरवृत्त्या विवक्षित-प्रतीत्यलाभमुपपादयन् प्रागुक्तनैष्फल्यं निराह **किञ्च पङ्कजादिशब्दाश्चेति** । पद्मत्वाविनाभावबला-दस्त्ववयवार्थधीरित्यत आह **सप्तम्यामिति** । सप्तम्यन्ते उपपदे जनीप्रादुर्भाव इत्यतः कर्तरि डप्रत्यय इत्यवयवार्थस्य पाणिनिना व्युत्पादितत्वादित्यर्थः । साधुत्वमात्रपरं व्याकरणमस्त्वित्यत आह **अनेनैवेति** । **भेकादिष्वितीति** । मण्डूककुमुदादिष्वपि पङ्कजनिकर्तृत्वसत्त्वादिति भावः । ननु पङ्कजपदं यौगिक-मेव । न च भेकादावप्यवयवशक्तिसद्भावात् तत्रापि प्रयोगः स्यात् न पद्म एवेति वाच्यम् । पद्मे प्रसिद्धिवद्भेकादौ पङ्कजपदप्रसिद्ध्यभावात् । शक्तिसाम्ये सति कुतः पद्मे प्रसिद्धिर्भेकादावप्रसिद्धिरिति चेत् पूर्वतनानां प्रयोगप्राचुर्याप्राचुर्याभ्यामिति भावेनाशङ्कते **गवादीति** । गोशब्दस्य पशुवाग्वज्रदिङ्-नेत्रघृणिभूजलेषु शक्तिसाम्येपि सास्नादिमत्येव प्रसिद्धिरन्यत्राप्रसिद्धिर्यथा तथेत्यर्थः ॥ **एषामिति** । पङ्कजादिशब्दानामनेकत्र पद्मे भेकादौ च शक्तिरवधृता । निगमनिघण्ट्वादिभिरित्यर्थः ।

या० — इदं च परोक्तं विरोधमभ्युपेत्योक्तम् । वस्तुतस्तु न विरोधः । पङ्कजशब्दे योगरूढ्योर्यथाक्रमं पङ्कजनिकर्तृत्वपद्मत्वरूपभिन्नधर्मनियतयोस्तद्द्वारैकस्मिन्धर्मिणि सैन्धवशब्दवृत्त्योरिव समाहारसंभवादित्याशयेन योगरूढिसमाहाररूपां योगरूढिं परिशेषेण साधयति **पङ्कजादिशब्दाश्चे-त्यादिना** । एतेन 'समाहारवृत्तयो हि ताः' इति प्रथमपादे 'किन्तु समाहाररूपविधा-न्तरसिद्धय' इति पूर्वग्रन्थे 'सनिरुक्तिकं योगवृत्तिसाहित्येन तत्रगां विद्वद्रूढिं च दर्शयती'त्युत्तरग्रन्थेन चावय-ववृत्त्यखण्डवृत्त्योरेकस्मिन्नर्थे विरुद्धत्वाद्योगरूढिर्नाम नास्तीति वाच्यम् । तस्याः पङ्कजादिशब्देषु दृष्टत्वा-दिति सन्न्यायरत्नावल्यां च समाहाररूपयोगरूढेरुक्तत्वेनात्र च न हि योगरूढ्योः समाहारो योगरूढिरिति ब्रूम इति तदभावाभिधाने तद्विरोध इति निरस्तम् । न हि योगरूढ्योरिति ग्रन्थस्याभ्युपगमवादेन प्रवृत्त-त्वात् । एकस्मिन्धर्मे समाहारो नेत्यभिप्रायान्न विरोध इत्यप्याहुः । वस्तुतस्तु न हि योगरूढ्योः समाहार इत्यत्रोक्तरूपयोरिति शेषः । तथा चाखण्डवृत्तिरूपरूढेः समाहारो नेत्येवात्रार्थः । 'बहुलातिप्रयोगतो रूढ-मित्येव साध्यं स्यादित्यत्र बहुलप्रयोगानुमेया या रूढोपचारादिसाधारणी रूढिः प्रथमपादे उक्ता तस्याः समाहारोऽस्त्येव । एवञ्च प्रयोगप्राचुर्येणेत्यादौ तत्सिद्धिसाधारणरूढ्येति भावो विवक्षितः । अतो न कोऽपि विरोध इति भाति ॥ **प्रतीतिविरोधादिति** । प्रतीत्यपलापस्तु प्रेक्षावतो न युक्त इत्याशयः । अनुशासनं साधुत्वार्थमिति वदन्तं प्रत्याह ॥ **अनेनैव न्यायेनेति** । पङ्कजादिशब्दानां केवलरूढत्वे यो न्यायः पूर्वपक्ष्यभिप्रेतस्तेनैवेत्यर्थः । स चावयवार्थप्रतीत्यपलापः अनुशासनं साधुत्वमात्रार्थमित्येवं-रूपः । तथा चानेन न्यायेनौपगवादिशब्दानामपि रूढतापत्त्या केवलयौगिकाभावप्रसङ्ग इति भावः ॥

**भेकादिष्वपीति ।** तथाच तत्राप्रयोगः पद्मत्वे रूढिमाक्षिपतीति भावः ॥ **न चैवमेषां शब्दानामिति ।** यद्यपि पङ्कजादिशब्दानां भेकादिषु केवलयोगरूपा शक्तिरवधृतैव । तथाऽपि यादृशी पङ्कजपदस्य पद्मे शक्तिर्योगरूढिरूपाऽस्माकं सम्मता न तादृशी भेकादौ, यादृशी च भेकादौ न तादृशी पद्म इति पङ्कजपदस्य पद्मभेकयोर्न शक्तिसाम्यं प्रमाणावधृतमित्यर्थः ।

श्री०—संप्रतिपन्नवृत्त्यैवेत्युक्तम् । तत्र संप्रतिपन्ना वृत्तिः केति विकल्प्य निराकरोति **पङ्कजादीति ॥ सप्तम्यामिति ।** सप्तम्यन्ते उपपदे जनेर्धातोर्डप्रत्ययः स्यात् । तथा च पङ्के जायत इति पङ्कजमित्यत्र सप्तम्यन्ते पङ्कपदे उपपदे जनी प्रादुर्भावेऽस्मात् डप्रत्यये टिभूतान् इत्यस्य लोपे प्रत्ययस्याकारे मिलिते सति पङ्कज् अ पङ्कजेति रूपम् ॥ **अनेनैवेति ।** यद्यवयवार्थप्रतीत्यनुशासनयोः सत्त्वेऽपि रूढा इत्यङ्गीक्रियते तर्हि क्वचित्त्वदभिमतो यौगिकशब्दोऽपि न स्यात् । प्रतीत्यनुशासनयोर्योगसाधकयोरप्रयोजकत्वाङ्गीकारादित्यर्थः । **प्रयोगः** प्रसिद्धिः । पङ्कजनिकर्तृत्वरूपयौगिकार्थसद्भावेऽपि न प्रयोगप्रसङ्ग इति शङ्कते **गवादीति ॥ शक्तिसाम्येऽपीति ।** पद्मे भेके च पङ्कजशब्दस्य शक्तिसाम्येऽपीत्यर्थः । पद्मे प्रसिद्धिर्भेके त्वप्रसिद्धिरित्यर्थः ॥ **अनेकार्थत्व इति ।** सास्नादिमत्पिण्ड-वागाद्यनेकार्थत्व इत्यर्थः । **एषां शब्दानां** पङ्कजादिशब्दानाम् । अनेकत्र पद्मे भेके चेत्यर्थः । भेकपर्यायेषु पङ्कजशब्दस्यागणितत्वादित्याशयः । तथा च शक्तिसाम्येऽपीत्युक्तमसदिति भावः ।

---

च०—**प्रतीतिविरोधादिति ।** परीक्षकैः प्रतीतेरनादर्तुमशक्यत्वादिति भावः । **विरोधादिति** धातुप्रत्ययोपपदानामर्थभेदस्य तेन सिद्धत्वादिति भावः ।

**सु०—किञ्च शमिधातोः संज्ञायां स्तम्बकर्णयो रमिजपोर्हस्तिसूचकयोरित्यादिनाऽवयवार्थव्यतिरेकेणोपाधीनपि वदता शास्त्रकारेणाङ्गीकृतैवेषा वृत्तिरित्यलम् ।**

शे०— वैयाकरणरीत्याऽपि योगरूढिं साधयति **किं चेति** । शम्युपपदे धातुमात्रात्संज्ञायां विषयेऽच्प्रत्ययो भवतीत्युदाहृतसूत्रार्थः । शङ्कर इत्यत्रसुखकर्तृत्वरूपावयवार्थव्यतिरेकेण संज्ञापि निमित्तत्वेनाश्रिता । स्तम्बकर्णयोरुपपदयो रमिजपोरच्प्रत्ययो भवतीति सूत्रार्थः । स्तम्बेरमः कर्णेजप इत्यत्रापि हस्तिसूचकयोरिति वक्तव्यमित्युपाधिराश्रित इत्यर्थः । आदिपदेन कर्मणि भृतौ स्तम्बशकृतोरिन्-व्रीहिवत्सयोरिति वक्तव्यमित्यादेः परिग्रहः । ननु पङ्कजपदे रूढिः पद्मत्वभानार्थं कुमुदाद्यभानार्थं वा । आद्येऽपि भानं स्मृतिरनुभूतिर्वा । नाद्यः । अदृष्टादिनोद्बुद्धसंस्कारादेव तत्स्मृतेः । नान्त्यः । उक्तरीत्या स्मृतं पद्मत्वमादाय व्यक्तिवचनन्यायेन पङ्कप्रातिपदिकजनिधातुडप्रत्ययरूपैरवयवैः पङ्कजनिकर्तृ पद्ममित्यनुभवसम्भवात् । न चैवं गामानयेत्यत्र गोत्वस्यापि संस्कारादेवोपस्थितिसम्भवे गोपदस्यापि गवि

शक्तिर्न स्यादिति वाच्यम् । तथात्वे गोशब्दवैयर्थ्यप्रसङ्गात् । न चैवं पङ्कजपदस्य वैयर्थ्यप्रसङ्गः । पङ्कजनिकर्तृत्वभानार्थतया तस्यार्थवत्त्वात् । नान्त्यः । पङ्कजं कुमुदमानयेत्यादौ कुमुदादेरपि भानदर्शनात् । तस्मात्पङ्कजपदं पद्मे यौगिकमेवेति प्राभाकरमतमेव सम्यगित्यत आह **अलमिति** । अयमर्थः । पङ्कजपदस्य पद्मत्वविशिष्टे शक्त्यभावे किं पङ्कजपदशक्यमिति प्रश्ने पद्ममित्यभियुक्तानां प्रतिवचनं कोशकाराणां पद्मपर्यायतया पाठश्च न स्यात् । पङ्कजं पद्ममिति कदाचित्सहप्रयोगप्रसङ्गाच्च । किं चास्य पाचकपदवदरूढत्वे पद्मत्वविशिष्टे समुदायव्युत्पत्त्यपेक्षा न स्यात् । अस्ति च सा । अवयवव्युत्पन्नस्यापि समुदायाव्युत्पन्नस्य पद्मत्वाप्रतीतेः । अवयवाव्युत्पन्नस्यापि वृद्धव्यवहारादिना समुदायव्युत्पन्नस्य तत्प्रतीतेश्च । अन्यथा गामानयेत्यत्र गोशब्दस्यापि गवि शक्तिर्न स्यात् । न चैवं तद्वैयर्थ्यं स्यादिति वाच्यम् । मया तद्वैयर्थ्यस्यैव आपादनात् । अस्तु वा कुमुदाद्यभानार्थमित्यन्त्यः । न चोक्तदोषः । केवलपङ्कजपदेन कदापि कुमुदादिप्रतीतेरभावादिति संक्षेपः । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः ।

स०— **शमिधातोरिति** । शमि उपपदे धातुमात्रात्संज्ञायां विषये अच्प्रत्ययो भवतीति सूत्रार्थः । उदाहरणं तु शङ्कर इति । **स्तम्बकर्णयो रमिजपोरिति** । स्तम्बकर्णयोरुपपदयो रमिजपोरच्प्रत्यय इति सूत्रार्थः । उदाहरणं तु **स्तम्बेरमः कर्णेजप इति** ॥ **अवयवार्थव्यतिरेकेणोपाधीनपीति** । शङ्कर इति सुखकर्तृत्वरूपावयवार्थव्यतिरेकेण संज्ञाऽपि निमित्तत्वेनाश्रिता । स्तम्बेरमः कर्णेजपः, इत्यत्रापि हस्तिसूचकयोरिति वक्तव्यमिति हस्तिसूचकसंज्ञैव निमित्तत्वेनाश्रिता अतो योगरूढिरङ्गीकृतैवेति भावः ।

प०— ननु सप्तम्यां जनेर्ड इत्यनेनैवावधार्यत इत्यत आह **किञ्च शमिधातोरिति** । शमित्येतस्मिन्नव्यये उपपदे धातोरच्प्रत्ययो भवति संज्ञायां विषये । शं करोतीति शङ्करः । शम्भवः । इत्यादिरूपसिद्ध्यर्थमज्विधिपरे सुखकरत्वादिरूपावयवार्थातिरेकेण संज्ञायामिति संज्ञात्वरूपमुपाधिं तथा 'स्तम्बकर्णयो रमिजपो'रित्यत्र स्तम्बपदे उपपदे रमतेरच् प्रत्ययो भवति हस्तिनि वाच्ये सति । कर्णपदे चोपपदे जपेर्धातोरच् भवति सूचके अभिधेये सति । स्तम्बेरमो हस्ती । कर्णेजपः सूचकः । तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् । अत्र सूत्रे स्तम्बशब्दितसस्यवि(सम्यग्वि)शेषरमणादिरूपावयवार्थातिरेकेण हस्तित्वसूचकत्वरूपोपाधीन् वदता व्याकरणशास्त्रकारेणैषां योगरूढिरूपा वृत्तिरङ्गीकृतैवेत्यर्थः । यद्यपि 'स्तम्बकर्णयो रमिजपो'रित्येव सूत्रम् । तथैव तृतीयस्य द्वितीयपादे सूत्रदर्शनात् । तथापि हस्तिसूचकयोरितिवक्तव्यमिति वार्तिककृता उक्तत्वात्तदपि सहोक्तमित्यदोषः ॥ **इत्यलमिति** । प्रपञ्चस्तु तर्कताण्डवे योगरूढिसमर्थनवादे ज्ञेयः ।

**या०— शमि धातोरिति ।** शमि उपपदे धातुमात्रात्संज्ञायां विषये अच्प्रत्ययो भवतीति सूत्रार्थः । शङ्कर इत्याद्युदाहरणम् ॥ **स्तम्बकर्णयोरित्यादि ।** अत्र 'स्तम्बकर्णयो रमिजपो'रिति सूत्रम् । हस्तिसूचकयोरिति वार्तिकम् । तथा चायमर्थः । स्तम्बकर्णयोः सुबन्तयोरुपपदयोर्यथासंख्यं रमिजपोर्धात्वोरच्प्रत्ययो भवति हस्तिसूचकयोर्वाच्ययोरिति । स्तम्बेरमत इति स्तम्बेरमो हस्ती । कर्णे जपतीति कर्णेजपः सूचक इत्युदाहरणम् । इत्यादिनेत्यादिपदेन कृञो हेतुताच्छील्यानुलोम्येषु कर्मणि भृतौ स्तम्बशकृतोरिन् व्रीहिवत्सयोरित्यादीनां ग्रहणम् ॥ **अवयवार्थव्यतिरेकेणेति ।** अत्रोपाधिशब्दो निमित्तपरः । शङ्कर इत्यत्र सुखकर्तृत्वरूपावयवार्थव्यतिरिक्ता संज्ञाऽपि निमित्तत्वेनोक्ता । एवं स्तम्बेरम इत्यादावपि स्तम्बरमणकर्तृत्वादिव्यतिरिक्तं हस्त्यादिरूपार्थविशेषवाचकत्वमपि निमित्तमुक्तमित्यवधेयम् । नन्वेवं गवादिपदेष्वपि योगरूढिप्रसङ्गः । तत्रापि गमेर्डे इत्यनुशासनसद्भावादिति चेन्न । तत्र गमनकर्तृत्वरूपस्यावयवार्थस्य कदाऽप्यभानेनानुशासनस्य कथञ्चिद्व्युत्पत्तिमात्रार्थत्वकल्पनात् । आवापोद्वापक्रमेण डप्रत्ययशक्त्यवधारकन्यायस्य डप्रत्ययेऽसंभवाच्च । नन्वथाऽपि न पङ्कजपदे रूढिः संभवति । सा हि पद्मत्वभानार्थं वा कुमुदाद्यभानार्थं वा । नाद्यः । अदृष्टादिनो द्बसंस्कारादेव स्मृतं पद्मत्वमादाय पङ्कजप्रातिपदिकजनिधातुडप्रत्ययैररवयवैः पङ्कजनिकर्तृ पद्ममित्यनुभवोपपत्तेः । न चैवं गामानयेत्यत्र गोत्वस्यापि संस्कारादेवोपस्थितिसंभवे गोपदस्यापि गवि शक्तिर्न स्यादिति वाच्यम् । तथात्वे गोशब्दवैयर्थ्यप्रसङ्गात् । पङ्कजपदं तु पङ्कजनिकर्तृत्वभानार्थमित्युक्तम् । नापि द्वितीयः । पङ्कजं कुमुदमानयेत्यादौ कुमुदादेरपि भानदर्शनात् । तस्मात्पङ्कजपदं पद्मे यौगिकमेवेति । मैवम् । पङ्कजपदस्य पद्मत्वविशिष्टे शक्त्यभावे कोशकाराणां पद्मपदपर्यायतया पाठानुपपत्तेः । पङ्कजं पद्ममिति कदाचित्सहप्रयोगप्रसङ्गाच्च । किञ्चास्या रूढत्वे पद्मत्वे विशिष्टे समुदायव्युत्पत्त्यपेक्षा न स्यात् । अस्ति च सा । अवयवव्युत्पन्नस्यापि समुदायाव्युत्पन्नस्य पद्मत्वाप्रतीतेः । अवयवाव्युत्पन्नस्यापि वृद्धव्यवहारादिना समुदायव्युत्पन्नस्य तत्प्रतीतेश्च । अन्यथा गोशब्देऽपि गवि शक्तिर्न स्यात् । न च तथात्वे तद्वैयर्थ्यं स्यादित्युक्तमिति वाच्यम् । पङ्कजपदाप्रयोगकाले पद्मत्वस्येव गोपदाप्रयोगकालेऽदृष्टादेः संस्कारानुद्बोधकत्वकल्पनेन गोपदस्य सार्थक्यसंभवात् । तस्मात्पङ्कजपदं पद्मत्वविशिष्टे शक्तमेवाङ्गीकार्यमिति । अस्तु वा कुमुदाद्यभानार्थमिति द्वितीयः । न च तत्रोक्तदोषः । केवलपङ्कजपदेन कदाऽपि कुमुदादिप्रतीतेरभावात् । न च तत्राप्यशक्यमेव पद्मत्वं प्रयोगोपाधिः । घटादिपदे घटत्वादेरपि तथात्वप्रसङ्गात् । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः । तदेतदभिप्रेत्याह **इत्यलमिति ।**

**श्री०—उपाधीन्** निमित्तानि ।

**च०**— पाणिनीयभंग्यापि योगरूढिं सिषाधयिषति **किंश्चेति** । सुखवाचिनि शम्युपपदे धातुसामान्यात्संज्ञायां विषयभूतायामच्प्रत्ययो भवतीति योगार्थः । शङ्कर इत्यादिका तदुदाहृतिः । **स्तम्बकर्णयोरिति** । इदं च सूत्रं हस्तीत्यादिकं तु वार्तिकम् । तथा च स्तम्बकर्णयोरुपपदयोर्यथा-संख्यं रमिजपोर्धात्वोरच्प्रत्ययो भवति हस्तिसूचकयोर्वाच्ययोरिति समुदितार्थः । स्तम्बेरमो हस्ती कर्णेजपः सूचक इति तदुदाहरणम् । आदिपदं कृञो हेतुताच्छील्यकर्मणिभृतौ स्तम्बशकृतोरिन् व्रीहि-वत्सयोरिति वक्तव्यमित्यादिपरिग्राहकम् । **अवयवार्थव्यतिरेकेणेति** । उपाधिशब्दो निमित्तवचनः । सुखकर्मककृतिकर्तृत्वस्तम्बाधिकरणकरमणक्रियाकर्तृत्वाद्यतिरिक्तशिवत्वहस्तित्वादिनिमित्तानीत्यर्थः । गमेर्ड इत्यनुशासनेपि तादृशावयवप्रवृत्तिनिमित्तगमनकर्तृत्वस्य जातु गवादावभानान्न गवादिपदानां योगरूढता-प्रसङ्ग इति स्थितम् । 'यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते । स्वरसंस्कारमात्रार्था तत्र व्याकरण-स्मृतिरि'ति स्मृतिः । अयमर्थः तर्कताण्डवादितोऽवसेयः ।

**सु०**—**एवमव्यवहितामभिधावाचकत्वाऽदिशब्दवेद्यां मुख्यवृत्तिं निरूप्येदानीं व्यवहितां गौणीं लक्षणां चामुख्यवृत्तिं निरूपयति** प्रयोगेति ।

**अनु०**— प्रयोगयुक्तसादृश्यं संबन्धो वाऽप्यमुख्यतः ।

वृत्तिहेतुरिति ज्ञेयः

**सम्बन्धः प्रयोगयुक्तेन । वाशब्दो व्यवस्थितविभाषायाम् । अपिशब्दो मुख्यवृत्ति-लक्षणेनामुख्यवृत्तिलक्षणस्य समुच्चयार्थः ।** अमुख्यत इति समासे गुणभूतया अपि वृत्तेर्बुद्ध्या **पृथक्कृताया विशेषणम् । अमुख्याया गौण्या** लक्षणायाश्च **वृत्तेर्हेतुरिति** ज्ञेय इत्यर्थः । **यस्य शब्दस्य यत्रार्थे प्रयोगः सामर्थ्यं तस्य प्रवृत्तिनिमित्तातिरिक्तं** तत्सादृश्यं **निमित्तीकृत्यान्यत्र वृत्तिर्गौणी** । तत्सम्बन्धं **निमित्तीकृत्य वृत्तिस्तु** लक्षणेत्युक्तं भवति ।

कश्चिदाह । **गौणी नाम वृत्तिर्नास्ति** । सादृश्यस्यापि संबन्धत्वेन लक्षणायामन्तर्भूतत्वा-दिति । **तन्निराकर्तुं पश्चादुद्दिष्टापि गौणी प्रथमं लक्षिता । स्वातन्त्र्यं ह्येवमस्या ज्ञापितं स्यात् ।**

**शे०**— ॥ **अव्यवहितामिति** । मुख्यार्थानुपपत्त्यादिप्रतिसन्धानकृतव्यवधानशून्यामित्यर्थः । इदानीमित्यवसरलक्षणसङ्गतिसूचनार्थमुक्तम् । उपलक्षणा च गौणी चेत्यत्र गौण्यपेक्षया लक्षणायाः पूर्वमुद्देशेऽपि प्रयोगयुक्तसादृश्यमिति लक्षणवाक्ये पूर्वं गौण्या लक्षणाभिधानाद्गौणीं लक्षणां चेत्यनेन गौण्या आदित्वेन निर्देशः कृत इति द्रष्टव्यम् । नन्वमुख्यत इत्यस्य न वृत्तिहेतुनाऽन्वयः । तथा सत्यमुख्यवृत्त्यनिरूपणप्रसङ्गात् । नापि वृत्त्या संबन्धः । तस्या वृत्तिहेतुरिति समासे गुणभूतत्वेनान्व-

यायोग्यत्वात् । तथा हि । यथा ऋद्धस्य राज्ञः पुरुष इति वाक्ये राजा स्वार्थादप्रच्युतः पदान्तरार्थमप्रतिपन्नो योग्यत्वाद्विशेषणसम्बन्धमनुभवति । राजपुरुष इति वृत्तौ तूपसर्जनीभूतस्वार्थमर्थान्तरं प्रत्याययतीत्ययोग्यत्वाद्विशेषणेन न सम्बद्ध्यते तथाऽमुख्यतोवृत्तेर्हेतुरिति वाक्ये वृत्तेः स्वार्थादप्रच्युतत्वेन पदार्थान्तराणामप्राप्तत्वेन विशेषणसम्बन्धयोग्यतायामपि वृत्तिहेतुरिति वृत्तौ, वृत्तेरुपसर्जनीभूतस्वार्थस्यार्थान्तरस्य प्रत्यायकत्वेनायोग्यत्वान्नामुख्यत इति विशेषणेन सम्बन्धः सम्भवतीत्यत आह **अमुख्यत इति** । विशेषणविशेष्यभावमेव दर्शयति **अमुख्याया इति** । अनेनामुख्यत इति षष्ठ्यन्तात्तसिरित्युक्तं भवति । वाशब्दोक्तव्यवस्थितविभाषोपदर्शनपूर्वकमपेक्षितं पूरयन्नेव लक्षणद्वयसमर्पकतया व्याचष्टे **यस्य शब्दस्येति** । प्रयोगयुक्तशब्देन मुख्यार्थलाभाय प्रयोगशब्दं शक्तिपरतया व्याचष्टे **प्रयोगः सामर्थ्यमिति** । गोव्यक्तौ शक्तस्य गोशब्दस्य, गोत्वेन तत्सादृश्यं निमित्तीकृत्यान्यत्र गोव्यक्तौ वृत्तिरपि गौणी स्यादित्यतः प्रवृत्तिनिमित्तातिरिक्तधर्मेण तत्सादृश्यमित्युक्तम् । गोत्वेन सादृश्यस्य प्रवृत्तिनिमित्तधर्मेण सादृश्यतया तदतिरिक्तधर्मेणासादृश्यत्वान्नोक्तातिप्रसङ्गः । तत्सम्बन्धमित्यत्र तच्छब्देन मुख्यार्थस्य परिग्रहः । उपलक्षणा च गौणी चेति निर्देशक्रमेण लक्षणाया एव प्रथमं लक्षणीयत्वात्कुतः क्रमभङ्ग इत्यतः प्रयोजनसद्भावान्नानुपपत्तिरित्याह **कश्चिदिति** । परशब्दस्य परत्र वृत्तित्वाविशेषाद्गौणी लक्षणातो भिन्ना नास्तीत्यर्थः । मुख्यार्थसादृश्यं निमित्तीकृत्य वृत्तिर्गौणी तत्संबन्धं निमित्तीकृत्य वृत्तिर्लक्षणेति भेदकस्य

---

लक्षणस्य सत्त्वात्कथं भेदाभाव इत्यतो, भवेदेतदेवं यदि लक्षणभेद एव स्यान्न चैतदस्ति सादृश्यस्य सम्बन्धत्वेन लक्षणभेदाभावादित्याह **सादृश्यस्यापीति** । न संयोगादिरेव सम्बन्धो लक्षणानिमित्तं स्यात् किन्तु विशिष्टधीनिर्वाहकं सम्बन्धमात्रम् । अस्ति चेहापीदमनेन सदृशमिति विशिष्टधीरिति सादृश्यस्य सम्बन्धत्वसिद्धिरिति भावः ॥

**एवमिति** । पश्चाल्लक्षणीयाया गौण्याः पूर्वं लक्षणकथनेनेत्यर्थः ।

स० — **प्रवृत्तिनिमित्तातिरिक्तमिति** ॥ तथा च घटशब्दप्रवृत्तिनिमित्तघटत्वसदृशघटत्वान्तरवति घटशब्दस्य वा रूढिः तत्र नातिव्याप्तिरिति ध्येयम् ।

प० — अव्यवहिताम् । मुख्यार्थव्यवधानं विनैवार्थबोधोपायभूतामित्यर्थः ॥ **व्यवहितामिति** । मुख्यार्थव्यवधानेनार्थप्रतीतिहेतुभूताम् । प्रयोगयुक्तसादृश्यमित्यत्रस्थप्रयोगयुक्तपदस्य बुद्ध्या विभागेनान्वयमाह **संबन्धः प्रयोगयुक्तेनेति** । प्रयोगः शक्तिः तद्युक्तस्तद्विषयः । मुख्योर्थ इति यावत् । तेनेत्यर्थः ॥ **अमुख्यत इतीति** ॥ **विशेषणमिति** । विशेषणप्रकारमेवाह **अमुख्याया इति** । 'आद्यादिभ्य उपसंख्यानमि'ति षष्ठ्यर्थे तसिरिति भावः । नन्वत्रामुख्यवृत्तेर्हेतुरुच्यते । न तु वृत्तिनिरूपणमित्यत आह **यस्येति** ॥ **सामर्थ्यमिति** । शक्तिरित्यर्थः । प्रयोगपदस्य शक्तौ व्यवहारः

प्रयोगमूलव्याकरणमिति यथेत्यानुमानिकनये दर्शित इति भावः। तस्य शब्दस्य यत्प्रवृत्तिनिमित्तं पङ्कजनिकर्तृत्वादिरूपं पद्मत्वादिरूपं वा तदतिरिक्तं तत्सादृश्यसामर्थ्यविषयार्थसादृश्यं मुख्यार्थसादृश्य-मिति यावत्। **अन्यत्र**= सामर्थ्यविषयपदार्थादन्यत्र॥ **वृत्तिः**= अन्यार्थप्रतिपादकत्वमित्यर्थः। अत्र यस्य शब्दस्य यः शक्योर्थः तस्य तत्सादृश्यनिमित्ता वृत्तिर्गौणीत्येव लक्षणम्। लक्षणालक्षणे तथैवाग्रे-भिधानात्। प्रवृत्तिनिमित्तातिरिक्तमिति स्वरूपसङ्कीर्तनम्। न च 'इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यत' इति वक्ष्यमाणदिशा शक्तिरपि सादृश्यनिमित्तेति तद्वारणाय विशेषणमेवेदमिति शङ्क्यम्। शक्तिग्रहे स्वरूपसतः सादृश्यस्यनिमित्तत्वेऽपि शब्दस्या(प्य)भिधावृत्तौ निमित्तभूतगोत्वादेर्निमित्तता-घटकमात्रत्वेन स्वयमेवानिमित्तत्वात्। अन्यथा सिंहश्चैत्र इत्यत्र सिंहसदृश इति धीवद्गौरयमित्यादि-मुख्यप्रयोगेऽपि सादृश्यधीप्रसङ्गात्। अत एव 'व्युत्पत्तिः सादृश्येनैव गम्यत' इत्युक्तिः। पद्धतावपि 'समयप्रतिपत्तौ सादृश्यमुपधानमि'ति। संन्यायरत्नावलीतर्कताण्डवयोरेतावन्मात्रस्यैव लक्षणत्वेनोक्तेश्च॥

**तत्संबन्धमिति**। मुख्यार्थसंबन्धमित्यर्थः। एतेन वाशब्दो व्यवस्थितविभाषायामित्येतद्विवृतं भवति॥ **संबन्धत्वेनेति**। संयोगादिरेव लक्षणाबीजं न तु संबन्ध इति वक्तुमशक्यत्वेन विशिष्टधी-निर्वाहकम् संबन्धमात्रमित्येव वाच्यत्वात्। इदमनेन सदृशमिति विशिष्टबुद्धिनियामकत्वस्य सादृश्य-स्यापि सत्त्वादिति भावः।

---

या०— **अव्यवहितामिति**। मुख्यार्थबाधादिप्रतिसन्धानकृतव्यवधानशून्यामित्यर्थः। ननु शास्त्रे तत्र तत्राभिधा वाचकत्वं शक्तिरित्यादिपदवेद्या वृत्तयो व्यवह्रियन्ते तासां क्वान्तर्भाव इत्याशङ्काया-मत्रैवेत्याशयेनाह **अभिधेति**। नन्वत्र प्रयोगशब्देनोच्चारणविवक्षायां तद्विषयत्वरूपस्य तद्युक्तत्वस्य शब्दनिष्ठत्वेन शब्दसदृशे शब्दसम्बन्धिनि वा वृत्तेरभावेनासम्भवः। शक्तिविवक्षायां तु लक्षितलक्षणा-यामव्याप्तिः। तत्र लक्ष्यार्थस्य लक्ष्यसम्बन्धित्वेन शक्यसम्बन्धित्वाभावात्। अत आह **सामर्थ्य-मिति**। प्रतिपादकत्वमित्यर्थः। तद्विषयत्वरूपं तद्युक्तत्वं च शक्यलक्ष्यसाधारणमिति नोक्तदोष इति भावः। नन्वेवं गोशब्दस्य यत्रैकस्यां गोव्यक्तौ शक्तिः। गोत्वेन तत्सादृश्यं निमित्तीकृत्य तस्यान्यत्र गोव्यक्तौ वृत्तिरपि गौणी स्यादत उक्तम् **प्रवृत्तिनिमित्तातिरिक्तमिति**। प्रवृत्तिनिमित्तमिव प्रवृत्ति-निमित्तं लक्षणरूपं शक्यव्यभिचारिसादृश्यं तदतिरिक्तमित्यर्थः।

श्री०— **व्यवस्थितेति**। यदा गौणीवृत्तौ सादृश्यं निमित्तं तर्हि 'तत्सिद्धिजातिसारूप्य-प्रशंसालिङ्गभूमिभिः। षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिते'ति गौणीवृत्तिषाड्विध्योक्तेर्भव-दुक्तसादृश्यरूपनिमित्तस्य'आदित्यो यूपो यजमानो यूप' इत्यत्राज्याञ्जननिमित्तौज्वल्यस्य यूपे आदित्य-सादृश्यस्य यूपे चोर्ध्वत्वरूपयजमानसादृश्यस्य सारूप्योदाहरणे सत्त्वेऽपि, तत्सिद्ध्याद्युदाहरणभूते

'यजमानः प्रस्तर' इत्यादौ च नास्तीत्यसार्वत्रिकमिति चेत् । उच्यते । तत्रापि यजमानकार्यकारित्वादिरूपसादृश्यस्यावश्यं वाच्यत्वात । ननु तर्हि सारूप्यं पृथक् कस्माद्वाच्यम् । तस्य सर्वत्र सत्त्वादिति चेन्न । इह चक्षुर्ग्राह्यं सारूप्यं विवक्षितमन्यत्र तु तादृशं नेत्यभिप्रायात् । यथोक्तं शास्त्रदीपिकायाम् । 'सारूप्यादित्यत्र सर्वत्र सारूप्यं गौणत्वे निमित्तम् । कोऽत्र विशेषः । सत्यम् । इह चक्षुर्ग्राह्यं सारूप्यं विवक्षितम् । चाक्षुषं हि यूपस्य यजमानसारूप्यमूर्ध्वत्वम् आदित्यसारूप्यं चाज्याञ्जननिमित्ततेजस्वित्वम् । अतस्तद्द्वारेण यजमानादित्यशब्दाभ्यां यूपः स्तूयत' इति ।

च० — **अव्यवहितामिति** । मुख्यार्थबाधप्रतिसंहितिनियन्त्रितव्यवहितिविनिर्मुक्तामित्यर्थः । शास्त्रीयनानाव्यवहृतीनामेकार्थतां गमयति **अभिधेति** । मतान्तरनिराक्रियाख्यफलसद्भावादुपलक्षणा च गौणी चेति निर्देशविनिमयेन गौण्याः प्रथमं लक्षणाभिधानं नानौचितीमर्हतीत्याशयेन मतान्तरं दर्शयति **कश्चिदिति** । नैयायिक इत्यर्थः । मुख्यार्थसादृश्यनियन्त्रिता गौणी वृत्तिस्तत्संबन्धनिमित्ता लक्षणेति लक्षणभेदनिबन्धनो भेदोऽपि न संभवतीत्याह **सादृश्यस्येति** । संयोगसमवायादिसंबन्धानां लक्षणायां विशिष्टप्रत्ययौपयिकत्वरूपसंबन्धत्वेनैव निमित्ततया तादृशरूपस्य च सादृश्येऽप्यनपायादिति भावः । **एवमिति** । विनिमयाश्रयणेन लक्षणाभिधानेनेत्यर्थः ।

---

सु० — यदि खलु कश्चिद् ब्रूयात् । **लक्षणा नाम नास्ति संबन्धस्याप्येकस्थानत्वादिसादृश्यरूपत्वेन गौण्यामन्तर्भूतत्वादिति** । तदा किं वक्तव्यम् । **नैवं लौकिकी प्रतीतिरिति** चेत् । **तत्किं सादृश्यं संबन्धत्वेन प्रतियन्ति लौकिकाः** ।

**तत्र गौणी द्विविधा । रूढारूढभेदात्** । तत्राद्या यथा । **मृद्रवकादौ गवादिशब्दस्य** । द्वितीया यथा गौर्वाहीक इति ।

**अत्र स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा गोशब्दस्य वाहीके वृत्तौ निमित्ततामुपयन्तीति केचित्** । तदसत् । **गौण्या लक्षणातो भेदाभावप्रसङ्गात्** । **गोशब्दस्य वाहीके वृत्तौ** लक्ष्यमाणगुणानां **निमित्ततायाश्चोपपत्तिशून्यत्वात्** । लक्ष्यमाणगुणसादृश्याद्गुणान्तरं ततो गुणी लक्ष्यत इति तु नानुभाविकम् ।

**स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्त इत्यपरे** । तदप्यसत् । **गुणानां भेदस्य साधयिष्यमाणत्वात्** । वाहीके वृत्तौ निमित्ताभावाच्च । **तस्मात्सदृशगुणाश्रयत्वं निमित्तीकृत्य परार्थे वृत्तिर्गौणीति साधूक्तम्** ।

**शे०**– सम्बन्धत्वेन लौकिकप्रतीतिरेव संबन्धत्वसाधिका । सादृश्यस्य च तदभावान्न सम्बन्धत्वमिति कथं गौण्या लक्षणान्तर्भाव इति भावेन सम्बन्धत्वेन लोकप्रतीतेरेव तत्साधकत्वं परमुखेनैव वाचयितुं प्रतिबन्दीं तावद् गृह्णाति **यदि खल्विति** । सादृश्यस्य सम्बन्धत्वाद्युक्तो गौण्या लक्षणान्तर्भावो लक्षणायास्तु कथं गौण्यामन्तर्भावः संबन्धस्य सादृश्यत्वाभावादित्यत आह **संबन्धस्यापीति** ॥ **सादृश्यरूपत्वेनेति** । तद्विशेषत्वेनेत्यर्थः । अङ्गीकृत्य चेदं प्रतिबन्द्यभिधानम् । वस्तुतस्तूक्तप्रतीत्या सादृश्यस्य न संबन्धत्वं सिध्यति । तथा हि । यथेदमनेन संयुक्तमिति प्रतीत्या न संयोगो विशेषणविशेष्ययोः संबन्धतया सिध्यति । दण्डीत्यत्र दण्डस्येवेह संयोगस्यैव विशेषणत्वात्किन्तु संयोगस्य संयोगिना सह समवाय एव सिध्यति । तथा चोक्तप्रतीत्या सादृश्यस्य धर्म्यादिना सहान्यः संबन्धः सिध्यतु न तु सादृश्यस्य संबन्धत्वम्। न हि तन्निरूप्यत्वमेव तत्संबन्धत्वम् । दीर्घत्वादेरपि ह्रस्वादिसंबन्धत्वापातात् । किन्तु तत्संबन्धवत्त्व-व्याप्यं तत् । यदि हि संबन्धान्तरं विनैव संयोगादिनेव चैत्रो दण्डी रूपी ज्ञातश्चेति धीवत्सादृश्येनैव सिंहवान्देवदत्त इति धीः स्यात्तदैवं सादृश्यस्य संबन्धत्वं सिद्ध्येत् । न चैतदस्तीत्यन्यत्र विस्तरः ॥ **गौर्वाहीक इति** ॥ अत्र वाहीको नाम देशविशेषस्तत्र भवः पुरुषोऽपि वाहीक इति ज्ञेयम् । अत्र वादिनां प्रवृत्तिनिमित्ते विप्रतिपत्तिमुद्भावयति **अत्रेति** ॥ **स्वार्थसहचारिण इति** । गोत्वसहचारिण इत्यर्थः ॥ **गौण्या इति** । स्वार्थसहचारिलक्ष्यमाणगुणनिमित्तकत्वोक्त्या मुख्यार्थसंबन्धनिमित्तकत्वान-

पायेन गौण्या लक्षणातो भेदाभावप्रसङ्गादित्यर्थः ॥ **गोशब्दस्येति** । प्रवृत्तिनिमित्तस्य वाच्यवृत्तित्व-नियमात् । लक्ष्यमाणस्य च गोगतजाड्यादेर्निमित्तस्य वाच्यवृत्तित्वाभावान्न वाहीके गोशब्दप्रवृत्तौ निमित्तत्वमिति भावः । लक्षितलक्षणैव गौणी न ततोऽतिरिक्तेति मतान्तरमाशङ्क्य दूषयति **लक्ष्यमाणेति** ॥ **नानुभाविकमिति** । लक्षणात्रयस्याप्रामाणिकस्य कल्पनमयुक्तमिति भावः । गुण-मात्रं लक्ष्यते पदार्थस्त्वाक्षिप्यत एवेति नानेकलक्षणाप्रसङ्ग इति मतान्तरमुद्भावयति **स्वार्थेति** । न तु परार्थोऽभिधीयत इति शेषः ॥ **साधयिष्यमाणत्वादिति** । 'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपी'त्यादिना वैशेषिकपरीक्षायामिति शेषः । ततश्चाभेदस्याभावेन लक्षकस्य गोशब्दार्थस्य लक्ष्येण वाहीकगतजाड्यादिनाऽभेदरूपसम्बन्धदौर्घट्यान्न लक्षणेति भावः । न च मुख्याभेदाभावेऽपि यादृशतादृशाभेदविवक्षया न सम्बन्धदौर्घट्यमिति वाच्यम् । तत्तुल्यगुणत्वरूपस्य तस्य लक्ष्यगतत्वेऽपि लक्षकेऽसम्भवेन तत्तुल्यगुणवत्त्वस्य च लक्षके सत्त्वेऽपि लक्ष्येऽसंभवेन यादृशतादृशाभेदस्य विवक्षितुम-शक्यत्वादिति द्रष्टव्यम् । ननु लक्षकस्य लक्ष्येण तत्तुल्यगुणवत्त्वमेव सम्बन्धः । लक्ष्यस्य च लक्षकेण तत्तुल्यगुणत्वमेवेति न संबन्धदौर्घट्यमित्यत आह **वाहीक इति** । परार्थस्य गोपदाप्रतिपाद्यत्वे तत्प्रतिपाद्य-जाड्यादावेव गौर्जाड्यमिति प्रयोगापत्त्या गौर्वाहीक इति शब्दसामानाधिकरण्यानुपपत्तिरिति भावः ।

स० — **गौर्वाहीक इति** ॥ वाहीको नाम देशविशेषः। तत्रत्यः पुरुषः वाहीक इत्याहुः। **स्वार्थसहचारिण इति** ॥ गोत्वसहचारिण इत्यर्थः। अत्र किं गोशब्दस्य स्वार्थसहचारिगुणेषु या वृत्तिरंगीकृता सैव गौणीत्यङ्गीक्रियते किं वा लक्ष्यमाणगुणनिमित्तकं वृत्त्यन्तरमिति विकल्पमभिप्रेत्याद्यं दूषयति **गौण्या इति** ॥ द्वितीयं दूषयति **गोशब्दस्येति** ॥ व्यधिकरणत्वादिति भावः ॥ **वाहीके वृत्ताविति** ॥ गङ्गादिशब्दानां लक्ष्येषु तीरादिष्विव गोशब्दस्यापि लक्ष्यमाणगुणेष्वेव वृत्तिः स्यान्न वाहीक इति भावः। वस्तुतस्तु लक्षणातो भेदाभावप्रसङ्गादित्यस्य लक्षितलक्षणातो भेदाभावप्रसङ्गादित्यर्थः। दूषणान्तरमाह **गोशब्दस्येति** ॥ तथा च विशेषोक्त्युपरि कथं विकल्प इति शङ्कानवकाशः। **गुणानां भेदस्य साधयिष्यमाणत्वादिति**। 'भिन्नाश्च, भिन्नधर्माश्चे'त्यादिनेति शेषः ॥ **वाहीके वृत्तौ निमित्ताभावाच्चेति** ॥ पुनस्तेन गुणी लक्ष्यते चेत् लक्षणातो भेदाभाव इति कथितो दोष एवेति भावः।

प० — **प्रतियन्तीति**। जानन्तीत्यर्थः। प्रत्युत इमौ सदृशौ न संबद्धाविति सादृश्यं न संबन्ध इत्येव प्रतियन्तीति भावः। न्यायविवरणोक्तविवरणाय विभागोदाहरणान्याह **तत्रेति** ॥ **वाहीक इति**। 'बहिषष्टिलोप ईकक्चेति' वार्तिके बहिर्भव इत्यर्थे बहिःशब्दादीकक्प्रत्यये किति चेति, आदिवृद्धौ टिलोपे रूपं। अनागरिकः पुमानित्यर्थः ॥ **स्वार्थेति**। स्वार्थसंबन्धितया वर्तमाना इत्यर्थः ॥ **गुणांतरमिति**। लक्ष्यत इत्यन्वेति। लक्षितलक्षणातो भेदाभावस्य पराभ्युपगमात्तं दोषमनुक्त्वा दोषांतरमाह **इति तु नानुभाविकमिति** ॥ **साधयिष्यमाणत्वादिति**। भिन्नाश्च भिन्नधर्माश्च पदार्था अखिला अपी'त्यादिनेति भावः ॥ **वाहीके वृत्तौ निमित्ताभावाच्चेति**। तैश्च गुणी लक्ष्यत इत्युक्तौ चानानुभाविकत्वदोष इति भावः ॥ **सदृशगुणाश्रयत्वमिति**। 'तुष्यतु दुर्जन' इति भावेन वा गुणसंबंधी गौणीतिशब्दार्थव्युत्पादनाय वा गुणेत्युक्तं। वस्तुस्तु सादृश्यं निमित्तीकृत्येत्येवार्थः। सदृशस्य गुणः सादृश्यं तदाश्रयत्वमित्यर्थः।

या० — **गौर्वाहीक इति**। वाहीको नाम देशविशेषः। तत्रत्यः पुरुषोऽपि वाहीक इत्याहुः ॥ **स्वार्थसहचारिण इति**। गोत्वसहचारिण इत्यर्थः। गुण इत्यादौ गुणशब्दो धर्ममात्रपर इति ज्ञातव्यम्। अत्र किं गोशब्दस्य स्वार्थसहचारिगुणेषु या वृत्तिरङ्गीकृता सैव गौणीत्यङ्गीक्रियते उत लक्ष्यमाणगुणनिमित्तकान्यत्रवृत्तिर्गौणीति विकल्पमभिप्रेत्याद्यं दूषयति **गौण्या इति** ॥ द्वितीयं दूषयति ॥ **गोशब्दस्येति**। व्यधिकरणत्वादिति भावः ॥ **गुणाभेदेनेति**। जडत्वमन्दत्वादिरूपसामान्यस्य सर्वत्रानुगतस्याभेदेनेत्यर्थः ॥ **साधयिष्यमाणत्वादिति**। वैशेषिकपरीक्षायां सामान्यानां प्रातिस्विकत्वस्य साधयिष्यमाणत्वादित्यर्थः ॥ **वाहीके वृत्ताविति**। गङ्गादि-

शब्दानां लक्ष्येषु तीरादिष्विव गोशब्दस्यापि लक्ष्यमाणगुणेष्वेव वृत्तिः स्यान्न तु वाहीके । लक्ष्यमाणगुणवत्त्वं निमित्तीकृत्य वाहीके वृत्तिरिति च नानुभाविकमिति भावः ।

**श्री०— एकेति** । प्रवाहतीरयोरेकप्रदेशस्थत्वरूपैकस्थानत्वमस्ति । तद्यथाकथंचित्सादृश्यतया व्याख्येयम् । **स्वातन्त्र्यं** अन्यत्रान्तर्भावायोग्यत्वम् । मृद्गवकादावित्यत्र इवे च प्रतिकृतौ वाच्यायामिवार्थे कप्रत्ययः प्रतिकृतौ भवतीति सूत्रेण कप्रत्यये प्रसिद्धगौरिव विद्यमानं गवकमिति ध्येयम् । अत एव प्रतिमादावपि रामोऽयं लक्ष्मणोऽयं सीतेयमित्यादिरपप्रयोग एव । अपि तु राम इव स्थितं रामकं लक्ष्मण इव स्थितं लक्ष्मणकं सीतेव स्थितं सीताकमित्येव प्रयोक्तव्यम् । अत एव कश्चन लोकोऽपि 'रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते जन्म तस्याशु धिक् धिक् । अत्र श्लोके योऽपशब्दं न वेत्ति व्यर्थप्रज्ञं पण्डितं चापि धिग्धिगि'ति ॥ **अत्र स्वार्थेत्यादि** । तथा च गुणानामेवनिमित्तत्वेन सादृश्यं न निमित्तमिति भावः ॥ **लक्ष्यमाणगुणाः** गोत्वसहचारिणो जाड्यादयः । **गुणान्तरं** वाहीकनिष्ठजाड्यादिरूपम् । ततो गुणी तद्वान्वाहीकः पुरुषः ॥ **गुणाभेदेनेति** । गोत्वसहचरितानां जाड्यादीनां वाहीकनिष्ठानां च जाड्यादीनामभेदेनेत्यर्थः । तथा च सादृश्याद्गुणान्तरं ततो गुणी लक्ष्यत इति नोच्यत इत्यर्थः ॥ **निमित्ताभावाच्चेति** । गङ्गादिशब्दानां लक्ष्येषु तीरादिष्विव लक्ष्यमाणगुणेष्वेव गोशब्दस्य वृत्तिः स्यान्न वाहीक इति पूर्ववदेव भावः ।

---

**च०— एकस्थानत्वादीति** । बहुव्रीहेर्भावप्रत्ययः । **प्रतियन्ति** जानन्ति । **गौर्वाहीक इति** । वाहीको नाम देशविशेषस्तथा चोक्तं कर्णपर्वणि । 'पञ्चानां सिन्धुषष्ठीनामन्तरं ये समाश्रिताः । वाहीका नाम ते देशा न तत्र दिवसं वसेत्' इति । एतेन धर्मबहिर्भूतत्वाद्वाहीका इत्युक्तं भवति । शतद्रुर्विपाशी इरावती वितस्ती चन्द्रभागेति पञ्च नद्यः । सिन्धुनदस्तु षष्ठः तन्मध्यपतितो देशो वाहीक इति तद्व्याख्यातारः । व्युत्पत्त्यन्तरं तु तत्रैव दर्शितम् । 'वहिकश्च वहीकश्च विपाशायां पिशाचकौ । तयोरपत्यं वाहीकाः नैषा सृष्टिः प्रजापते'रिति । एतच्च विवेचनं वाहीकग्रामेभ्यश्चेत्यादावुपयोक्ष्यत इति पाणिनीयाः । एवं च तत्रभवः पुरुषोऽपि वाहीक इति ज्ञेयम् । **स्वार्थसहचारिणः** स्वपदोपात्तगोशब्दप्रवृत्तिनिमित्तगोत्वसमानाधिकरणाः । गोत्वसमानाधिकरणगुणेषु गोशब्दस्य या वृत्तिरूरीकृता सैव गौणीत्युपेयते । लक्ष्यमाणगुणनिमित्तकान्यत्रवृत्तिर्वेत्यभिसंहितकल्पद्वयीघटकाद्यकल्पं पराचष्टे **गौण्या इति** । द्वितीयं प्रतिविधत्ते **गोशब्दस्येति** । निमित्तनिमित्तिनोः सामानाधिकरण्यविरहादिति भावः । लक्षितलक्षणायामेव गोण्या अन्तर्भावमिच्छतां मतं न्यक्कुरुते **लक्ष्यमाणेति** । पदार्थगता गुणा एव लक्ष्यन्ते तदाश्रयीभूता व्यक्तिस्तु आक्षिप्यत एवेति मतान्तरं दुदूषयिषुरनुवदति **स्वार्थेति** ॥ **साधयिष्यमाणत्वादिति** । वैशेषिकपरीक्षायां 'भिन्नाश्च भिन्नधर्माश्चे'त्यादिनेति पूरणीयम् । **वाहीका इति** । गङ्गादि

पदानां तीरादिपदसामानाधिकरण्यवद्वाहीकपदार्थे गोपदनिरूपितवृत्त्यभावेऽपि यत्र जाड्यमान्द्यादौ वृत्तिस्तद्वाचकपदसामानाधिकरण्यमेव गोपदे प्रसज्येत न तु वाहीकपदसामानाधिकरण्यमिति भावः ।

**सु० — लक्षणाऽपि द्वेधा । रूढारूढभेदात् । तत्राद्या यथा । राजाऽयं गच्छतीति । द्वितीया यथा । गङ्गायां घोष इति ॥ केचिदभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यत इत्याहुः । तेषां मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात् । स्याच्च शब्दात्प्रतीतेन लिङ्गेनानुमितार्थस्य । अथाविनाभावोऽत्र संबन्धमात्रम् । तथाऽपि लक्षितलक्षणायामव्याप्तिः । न हि तत्राभिधेय-संबन्धिनी वृत्तिः । किन्तु लक्षितसंबन्धिनी । यथा प्राग्विरुद्धा इदानीं परस्परमेकीभूता इति । परम्परयाऽयमर्थोऽभिधेयसंबन्धीति चेत् । तर्हि किमनया क्लिष्टकल्पनया । प्रयोग-युक्तसंबन्ध इति यथोक्तमेवास्तु ।**

**शे० -- राजाऽयमिति** । सपरिवारस्य राज्ञो गमनदशायां राजाऽयं गच्छतीति बहुलः प्रयो-गोऽस्ति । तत्र राजाराजसमुदाये राजशब्दस्य रूढलक्षणेत्यर्थः ॥ **अभिधेयाविनाभूतेति** । अत्र ज्ञानरूपैव लक्षणेति प्राचीनमतानुसारेण ज्ञानम् । नव्यमतानुसारेण प्रतीयतेऽनेनेति प्रतीतिर्व्यापार इति प्रतीति-शब्दः प्रतीतितद्धेतुव्यापाररूपोभयपरो विवक्षितः । तथा चाभिधेयाविनाभूतोपस्थितिर्वा तद्धेतुभूतः शक्यसंबंधरूपव्यापारो वा लक्षणेति पर्यवसितं भवति ॥ **मञ्चाः क्रोशन्तीत्यादाविति** । आदिपदेन कुन्ताः प्रविशन्तीत्यादेर्ग्रहणम् । मञ्चपुरुषयोः कुन्तकुन्तिनोश्चाविनाभूतत्वाभावात्पुरुषादिप्रतीतिरूपायां तद्धेतुमञ्चपुरुषादिसम्बन्धरूपायां वा लक्षणायामव्याप्तिरिति भावः । ननु क्रोशनसमये मञ्चपुरुषयोः प्रवेशसमये च कुन्तकुन्तिनोरप्यविनाभावोऽस्तीति नाव्याप्तिरित्यस्वरसादाह **स्याच्चेति** । तथा च धूमोऽस्तीति वाक्यबुद्धधूमजन्यवह्न्यनुमितौ तद्धेतुव्यापारे चातिव्याप्तिरिति भावः ॥ **अथेति** । यद्यपि सम्बन्धमात्रविवक्षायामप्यतिव्याप्तिरेव धूमवह्न्योरपि सम्बन्धसद्भावेन वाक्यबुद्धलिङ्गजन्यलिङ्गिप्रतीत्या-देरप्यभिधेयसम्बन्धवत्प्रतीत्यादित्वस्य 'सत्त्वात्तथाऽप्यव्याप्तिमात्रपरिहारार्थोऽयं यत्न इति द्रष्टव्यम् ॥ **लक्षितलक्षणायामिति** । न च लक्षितलक्षणायां लक्षितसम्बन्धिनि वृत्तावप्यभिधेयसम्बन्धिनि वृत्तिरवि-कलैव लक्ष्यस्यापि बोध्यत्वेनाभिधेयत्वात् । रूढिलक्षणानुरोधेन मधुमत्यामभिधेयशब्दस्य बोध्यमात्रपरताया एवाभिधानात् । ततश्च बोध्यसम्बन्धिनि वृत्तेस्तत्रापि सत्त्वान्नाव्याप्तिरिति वाच्यम् । अभिधेयशब्दस्य मुख्यार्थपरत्वाश्रयणेनाव्याप्तेरभिधानात् । वस्तुतस्तूक्तविवक्षायामप्यतिव्याप्तावेव तात्पर्यमिति बोध्यम् । **किमनया क्लिष्टकल्पनयेति** । अविनाभावशब्दस्य लक्ष्येण सह परम्परासम्बन्धघटकत्वविवक्षायां नियतसम्बन्धरूपाविनाभावांशेन सम्बन्धेनैव तद्घटनान्नियमांशवैयर्थ्यमिति भावः ।

स० — **राजायमिति** ॥ सकलपरिवारसहितस्य राज्ञो गमनदशायां राजाऽयं गच्छतीति बहुलप्रयोगोऽस्ति । तत्र राजाऽराजसमुदाये राजशब्दस्य रूढलक्षणेत्यर्थः ॥ **अविनाभूतप्रतीतिरिति** । अविनाभूतप्रत्यायकत्वमित्यर्थः । **स्याच्च शब्दात्प्रतीतेनेति** । इदं समव्याप्त्यभिप्रायेणेति बोध्यम् । **यथेति** । 'मञ्चाः क्रोशन्ति' इत्यत्र 'मञ्चस्थाः क्रोशन्ति' इत्येव प्रतीतेः, 'अयो दहति' इत्यादिवत् 'दहतीव' इत्यत्रेवार्थाप्रतीतेः, मञ्चपदस्य तत्र लक्षणावत् 'सर्वसम्बन्धिप्रतीतिविषया एकीभवन्ति' इति प्रतीत्यभावात् 'एकत्वाश्रयविषयकप्रतीतिमन्तो भवन्ति'–इत्येव प्रतीतेः अनुभवसिद्धत्वात् 'एकीभवन्ति' इत्यस्यैव लक्षितलक्षणेति द्रष्टव्यं । केचित्तु 'सर्व' शब्दस्यैव लक्षणा इत्याहुः ।

प० — न्यायविवरणोक्तं विवृण्वंस्तत्रोक्तविभागतदुदाहरणान्याह **लक्षणापि द्वेधेत्यादिना** ॥ **राजायंगच्छतीति** । शिबिकादावुपविष्टेपि राजनि दृष्टेपि राजवाहकेषु गच्छत्सु राजायं गच्छतीति प्रयोगो लौकिकानामित्यर्थः । गर्वेण भिक्षुकादौ राजायं गच्छतीति लौकिकप्रयोगो यथेत्यर्थ इत्येके । ननु क्रोशनसमये मंचपुरुषाविनाभावोऽस्तीत्यतो दोषान्तरमाह स्याचेति । **शब्दात्** धूमोऽस्तीति शब्दात् ।[१] प्रतीतेन=धूमरूपलिंगेनानुमितार्थस्य वह्नेः धूमशब्दो लाक्षणिकः स्यादित्यर्थः ॥ **संबंधमात्रमिति** । मुख्यार्थेन सह लक्ष्यार्थस्येति योज्यं ॥ **एकीभूता इति** । राजगतैक्यवाचिना एकीभूतशब्देन तेषां बुद्धीनामैक्यं लक्षित्वा (?) लक्षितमत्यैक्यसंबंधिन्येव विषयैक्ये लक्षणा न तु मुख्यार्थराजैक्यसंबंधिनीति भावः ॥ **इति यथोक्तमिति** । मुख्यार्थसंबंधनिमित्ता वृत्तिर्लक्षणेति यथाचार्योक्तमेवेत्यर्थः ॥

या० — **राजाऽयमिति** । सपरिवारस्य राज्ञो गमनदशायां राजाऽयं गच्छतीति बहुलः प्रयोगोऽस्ति । तत्र राजाऽराजसमुदाये राजशब्दस्य रूढलक्षणेत्याहुः । **प्रतीतिरिति** । प्रातिपदिकमित्यर्थः । ननु क्रोशनसमये मञ्चपुरुषयोरविनाभावोऽस्त्येवेत्यस्वरसादाह ॥ **स्याच्चशब्दादिति** ॥ **यथोक्तमेवेति** । तत्र च प्रयोगशब्देन सामर्थ्यमात्रस्य विवक्षितत्वेनोक्तदोषपरिहारः पूर्वमेवोक्त इति भावः ॥ **व्यञ्जनं नामेति** । यथा 'गच्छ गच्छसि चेत्कान्ते पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानि'त्यत्र भार्यामरणं व्यज्यते ॥ **अनुमानतयेति** । देशान्तरजन्मनो मरणाविनाभावादिति भावः । प्रपञ्चयिष्यते चैतत्तृतीये ॥ **स्वयमेवेति** । 'वाचकत्वं हि तात्पर्यं यदर्थमखिला रवा' इत्यत्र वक्ष्यतीत्यर्थः ॥

श्री० — **राजाऽयमिति** । यथा कथंचिद्रथ्यापुरुषं दृष्ट्वाऽयं महाराजो गच्छति । अस्य का संसारचिन्ताऽस्तीत्यर्थः । ततश्चाप्रयोजनादियं रूढलक्षणेति ज्ञेयम् ॥ **अभिधेयेति** । गङ्गापदाभिधेयः प्रवाहस्तदविनाभूतं यत्तीरादि **तत्प्रतीतिस्**तत्प्रतीतिजनिका शब्दवृत्तिरित्यर्थः ॥ **मञ्चा इति** । मञ्चस्थपुरुषाणां मञ्चपदाभिधेयमञ्चाविनाभावाभावादित्यर्थः । लिङ्गस्याभिधेयत्वोपपादनाय शब्दात्प्रतीतेने-

१. चुरादिणिचो वैकल्पिकत्वात् णिजभावपक्षे लक्षित्वेति साधु ।

त्युक्तम् ॥ **अथेति** । तथा च मञ्चाः क्रोशन्तीत्यत्र न व्यभिचारः । तत्राप्यभिधेयमञ्चसम्बन्धस्य पुरुषे सत्त्वादित्यर्थः । अत्र स्याच्चेत्युक्तदूषणे सत्येव दूषणान्तरमाह **तथाऽपीति** । **तदर्थं** उत्सृष्टुम् । **अत्र** वृत्तिकारणचिन्तायाम् । प्रयोजनं न वक्तव्यमित्यर्थः ॥

**च०— राजाऽयमिति** । परिवारविशेषिते राज्ञि राजपदस्य रूढलक्षणेत्यर्थः । **अभिधेयाविनाभूतेति** । उपस्थितिर्लक्षणेति चिरन्तनमते प्रतीतिशब्दो भावसाधनः, तदनुपगन्तृनव्यमते च करणसाधन इति मतभेदेन तदुपस्थितिः तद्धेतुभूतशक्यसंबन्धरूपव्यापारो वा लक्षणेत्यर्थः । **मञ्चाः क्रोशन्तीत्यादाविति** । आदिपदं यष्टीः प्रवेशयेत्यादिपरिग्राहकम् । तथा च मञ्चादिपदलक्ष्याभिमतपुरुषाणां तत्तत्पदाभिधेयाविनाभूतत्वराहित्येन तदुपस्थितेस्तत्संबन्धस्य वा लक्षणात्वं न संगच्छेतेति भावः । दशाविशेषे तत्राप्यविनाभावस्य सूपपादतयाऽरुचिमनुसन्दधान आह **स्याच्चेति** । द्रव्यं गुणवत्त्वादित्यादौ हेतुवाक्यावगतलिङ्गेनानुमीयमानद्रव्यत्वस्यापितदविनाभूततया तद्गोचरानुमितौ तद्धेतुभूतव्यापारे वातिप्रसङ्ग इति भावः । **अथेति** । अव्याप्तिपरिजिहीर्षयैवायं ग्रन्थः प्रववृते नातिप्रसङ्गापनिनीषयेत्यवसेयम् ।

**सु०— व्यञ्जनं नामापरा वृत्तिरस्तीति चेन्न । अनुमानतया तस्य शब्दशक्तित्वानङ्गीकारात् । यथोक्तं । वचनलिङ्गानुमा हि सेति । तात्पर्यवृत्तिरतु नातिरिच्यत इति स्वयमेवाचार्यो वक्ष्यति ।**

**शे०—** ननु. विषं भुंक्ष्व, गच्छ गच्छसि चेत्कान्त,इत्यादौ वाचनिकार्थव्यतिरिक्तस्य निषिद्धभोजनवर्जन-गमनाकर्तव्यत्वादिरूपार्थविशेषप्रतीतेरुपायान्तरेणासम्भवाच्छब्दजन्यत्वमविवादम् । न च शब्दस्य तत्राभिधा समयाभावात् नापि लक्षणा गौणी वा सम्भवति तद्धेत्वभावादिति व्यञ्जनरूपवृत्त्यन्तरमेव तत्र शब्दव्यापारत्वेनाश्रयणीयं तत्कथं तिस्रः शब्दस्य वृत्तय इति वृत्तेस्त्रैविध्याभिधानमित्याशङ्कते **व्यञ्जनं नामेति** । **व्यञ्जनं** व्यापारः ।

**अनुमानतया तस्येति** । तस्य विषं भुङ्क्ष्वेत्यादिवचनस्यानुमानतया निषिद्धभोजनवर्जनादिरूपार्थावगमकत्वेन शब्दप्रमाणतया तदभावेनाभिप्रेतार्थप्रतीतेरशाब्दत्वान्न तदन्यथाऽनुपपत्तिमात्रत्वप्रमाणकं तस्य व्यञ्जनस्य शब्दवृत्तित्वमङ्गीकर्तुं शक्यमिति योजना ।

अयमाशयः । निषिद्धभोजनवर्जनादिप्रतीतेः शाब्दत्वे हि शब्दव्यापारतया व्यञ्जनमङ्गीकर्तव्यं स्यान्न चैतदस्ति । यतो विषं भुंक्ष्वेत्यादावुदाहरणे या निषिद्धभोजनवर्जन-गमनाकर्तव्यत्वादिरूपार्थप्रतीतिरुत्पद्यते सा तावच्छब्दजन्यैव न भवति । तथा च कथं तत्र व्यञ्जनरूपवृत्त्यन्तरकल्पनाव-

काश: । नापि शब्दाजन्यत्वेऽकरणकक्रियोत्पत्तिप्रसङ्ग: । अनुमानस्यैव तत्र करणत्वाङ्गीकारात् । तथा हि । अयमिदानीं क्रुद्धो वर्तते, आप्तत्वे सति प्रमाणविरुद्धकर्तव्यतावादित्वात् । क्रोधश्चास्य सन्निहितान्निषिद्धभोजनादेव दृष्टकारणपरित्यागेनादृष्टस्य कल्पयितुमशक्यत्वात् । ततोऽयमेतद्भोजनाकर्तव्यत्वाभिप्रायवान् मद्भोजनजनितक्रोधवत्त्वादिति वक्त्रभिप्रायमनुमायेदं मया वर्जनीयं मदकार्यत्वेनाप्ताभिप्रेतत्वादित्यनया प्रणाड्या निषिद्धभोजनवर्जनादिप्रतीतिर्वचनलिङ्गानुमितानुमितिरेव न तु व्यञ्जनरूपशब्दवृत्तिरनन्यलभ्यस्यैव शब्दार्थत्वात् । एवं गच्छ गच्छसि चेत्कान्तेत्यत्रापि देहान्तरसंयोगरूपजन्मन: पूर्वदेहसंबन्धेऽनुपपद्यमानतया पूर्वदेहवियोगरूपमृतिरेव जन्मनाऽनुमीयते । ततश्च गमनं न कर्तव्यं प्रियामृतिहेतुत्वादिति गमनाकर्तव्यताप्रतीतिरप्यनुमितानुमितिरेव । यद्यपि च गुरुनिदेशादिना प्रियामृतिहेतोरपि कर्तव्यत्वदर्शनेन व्यभिचारान्न प्रियामृतिहेतुत्वेन गमनाकर्तव्यताऽनुमातुं युक्ता । तथाऽपि नाश्यमानेष्टाधिकेष्टाहेतुत्वविशेषितेन प्रियामृतिहेतुत्वेनाकर्तव्यत्वानुमानमुपपद्यत एव । गुरुनिदेशादौ तु नाश्यमानेष्टाद्भार्यादे: सकाशादधिकस्य गुरुनिदेशजन्येष्टस्य सत्त्वेन तत्र हेत्वगमनेनाव्यभिचारात् । तथा चायमत्र प्रयोग: । प्रकृतगमनं न कर्तव्यं नाश्यमानेष्टाधिकेष्टाहेतुत्वे सतीष्टनाशहेतुत्वात्संमतवदिति । ततश्चोदाहृतस्थलेऽभिप्रेतार्थप्रतीतेरशाब्दत्वान्न शब्दवृत्तिकल्पनमुपपन्नम् ।

अथाऽपि स्यात् । यत्र प्रयोजनप्रतिपिपादयिषया लाक्षणिकशब्दप्रयोगस्तत्र नान्यत: पावनत्वादिप्रतीतिरपि तु तस्मादेव शब्दादिति वाच्यम् । न च निर्व्यापारस्य तत्प्रतिपादकत्वमतिप्रसङ्गादिति व्यापारो वाच्य: । न च प्रयोजने व्यञ्जनादृतेऽन्य: शब्दव्यापार: संभवतीति व्यञ्जनरूपवृत्त्यन्तरमवश्यमाश्रयणीयमिति चेदत्र कश्चित् । गङ्गायां घोष इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते तत्र गङ्गाशब्दस्यासङ्केतिततया प्रयोजनेऽभिधाया असंभवेन तया तदसिद्धावपि लक्षणयैव तत्सिद्धिसंभवेन वृत्त्यन्तरस्याकल्पनीयत्वात् । ननु पावनत्वादौ न लक्षणा संभवति । तद्बीजाभावात् । लक्षणायां हि मुख्यार्थे इतरान्वयानुपपत्तिर्बीजम् । न च गङ्गाशब्दस्य लक्ष्यं तटं मुख्यार्थ: । नापि गङ्गाशब्दमुख्यार्थस्य स्रोतस इव लक्ष्यस्य तटस्यापि घोषाधारत्वानुपपत्ति: । ततश्च हेत्वभावान्न लक्षणा संभवतीति चेन्न । किमिदं लक्षणाबीजत्वम् । न तावज्जनकत्वम् । गङ्गातीरयो: संबन्धस्यानुपपत्तिज्ञानाजन्यत्वात् । नापि तज्ज्ञापकत्वम् । अनुपपत्तिज्ञानमन्तरेणापि गङ्गातीरयो: संबन्धस्य चक्षुरादिना ग्रहात् । नापि तत्तात्पर्यग्राहकत्वम् । तात्पर्यव्याप्यान्तरतोऽपि तद्ग्रहात् । अथ लक्षणाजन्यशाब्दबोधे सहकारित्वं तदिति चेन्न । यष्टी: प्रवेशयेत्यादौ व्यभिचारेण तदनुपपत्ते: । तात्पर्यविषयानुपपत्तिरत्राप्यस्तीति चेत् । तर्हि प्रकृतेऽपि सैव बीजं भविष्यतीति कथं बीजाभाव: ।

नन्वथाऽपि संबन्धस्य लक्षणाबीजत्वाद्गङ्गाशब्दार्थस्य तीरस्य लक्षणीयैः पावनत्वाद्यैरसंबन्धान्न लक्षणा संभवतीति चेत्। तीराद्यैः प्रयोजनस्य साक्षात्संबन्धासंभवेऽपि प्रयोजनाश्रयसंबन्धित्वरूपपरम्परासंबन्धसत्त्वेन लक्षणोपपत्तेः। स्यादेतत्। गङ्गायां घोष इत्यादौ लक्षणाप्रयोजनशैत्यपावनत्वादेः सत्त्व एव गङ्गाशब्देन तटादेर्लक्षणादर्शनाल्लक्षणायाः प्रयोजनवत्त्वं नियतम्। ततश्च पावनत्वादौ लक्षिते यदि किञ्चित्प्रयोजनं स्यात्तदा प्रयोजनस्यापि लक्ष्यत्वम्। न च प्रयोजने लक्ष्ये किञ्चित्प्रयोजनान्तरमस्ति। अस्ति चेत्तस्यापि लक्ष्यतया तत्प्रयोजनान्तरगवेषणायामपर्यवसानादनवस्थाप्रसङ्ग इति चेन्न। लक्ष्यप्रतीतेरेव प्रयोजनत्वात्। तथाऽपि प्रयोजनान्तरं तत्र नास्तीति चेत्। ततः किं। लक्षणाया हि प्रयोजनवत्त्वेन नियमो न तु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्त्वेनापि गौरवादप्रयोजकत्वाच्च। अथ नानार्थस्थले तावदर्थविशेषप्रत्यये प्रकरणादि निर्णायकम्। तथाच यत्र प्रकरणादिशून्यार्थान्तरं प्रतीयते तत्र नाभिधा मूलं सहकार्यभावात्, नापि लक्षणा अयोगात्, अतः सिद्धं वृत्त्यन्तरमिति चेत्। प्रकरणादीनामननुगतत्वेन सहकारित्वासंभवात्। तात्पर्यग्राहकत्वेन तेषामनुगम इति चेत्। तर्हि लाघवात्तात्पर्यग्रह एव सहकार्यस्तु। स चेहाप्यस्त्येवेति किं वृत्त्यन्तरेण। ननु च लक्षणा पदवृत्तिः, इयं च पदतदेकदेशवाक्यरचनार्थभङ्ग्याद्याकाराश्रितेत्याश्रयभेदाद्भेद इति चेन्न। असिद्धेः। तदेकदेशादयो ह्यर्थविशेषतात्पर्यग्राहका एव न तु तत्प्रतिपादका इति कथमाश्रयभेदः। नन्वेमपि लक्ष्ये तात्पर्यज्ञानं लक्षणासहकारि न तु व्यङ्ग्यार्थे तात्पर्यग्रहो नियतः। काव्यादौ तात्पर्याविषयस्यापि व्यङ्ग्यस्य चमत्कारादिति चेत्। व्यङ्ग्ये तात्पर्यग्रहस्यानपेक्षायां गङ्गायां घोष इत्यादौ शैत्यादेरेव प्रतिभासो न केशवालुकादिमत्त्वस्येति नियमाभावप्रसङ्गात्। वासनाविशेषपरिपाकात्तन्नियम इति चेत्। तर्हि लक्षणास्थलेऽपि स एव नियामकोऽस्तु कृतं तात्पर्यग्रहणेनेति न व्यञ्जनेन कृत्यमिति। तन्न। लक्षणायाः प्रयोजनवत्त्वनियतिमभ्युपगच्छता प्रयोजने न लक्षणाऽङ्गीकर्तुमुचिता। तल्लक्षणायाः प्रयोजनाभावात्। न च लक्ष्यप्रतीतिरेव प्रयोजनमिति न तदभाव इति वाच्यम्। शब्दव्यापारविशेषलक्षणाजन्यज्ञानस्य वा ज्ञानरूपाया वा प्रयोजनमिह निरूप्यते। तत्र पक्षद्वयेऽपि लक्ष्यप्रतीतिः प्रयोजनतया न वक्तुं शक्यते। न हि लक्ष्यप्रतीतेर्लक्ष्यप्रतीतिरेव प्रयोजनम्। अभेदेन साध्यसाधनभावायोगात्। प्रयोजनत्वस्य साध्यत्वरूपत्वात्। न चैवं पावनत्वादेरप्येतदजन्यत्वात्प्रयोजनत्वं न स्यादिति वाच्यम्। शैत्यपावनत्वादिप्रतीतेरेव तज्जन्यतया मुख्यप्रयोजनत्वेऽपि प्रयोजनज्ञानविषयतया पावनत्वादेरपि प्रयोजनत्वोपपत्तेः।

किं चास्ति तावदभिधायां रूढलक्षणायां रूढगौण्यां च प्रयोजनानपेक्षत्वमरूढलक्षणायामरूढगौण्यामेव च तदपेक्षत्वमिति सर्वेषां सम्मतिः। तद्यदि लक्ष्यार्थप्रतीत्याऽरूढलक्षणायाः प्रयोजनवत्ता

उच्यते हन्त तर्ह्यभिधादेरप्यभिधेयाद्यर्थप्रतीत्या प्रयोजनत्वोपपत्तेर्वृत्तिमात्रस्यापि सप्रयोजनत्वप्राप्त्योक्तविभागोच्छेदप्रसङ्गः। ततश्च न लक्षणायाः प्रयोजनवत्त्वमात्रनियमोऽपि तु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्त्वमेवेति न लक्ष्यप्रतीतेः प्रयोजनत्वं वक्तुं युक्तम्। तथा च प्रयोजनस्यापि लक्ष्यत्वे प्रयोजनपरम्पराऽऽश्रयणीयैवेत्यनवस्था स्यादेवेति न प्रयोजनस्य लक्षणया लाभ इति यत्किञ्चिदेतत्।

वयं तु ब्रूमः। प्रयोजने शक्त्याद्यभावेऽपि, सति मुख्येऽस्मदायत्ते शब्दप्रयोगे कस्मादवाचकपदप्रयोग इत्यवाचकपदप्रयोगान्यथाऽनुपपत्त्यैव पावनत्वादिबोधसम्भवेन न तदन्यथाऽनुपपत्त्या व्यञ्जनरूपवृत्त्यन्तरस्वीकारो न वा तत्र लक्षणास्वीकारो युक्त इति संक्षेपः।

निषिद्धभोजनवर्जनादिप्रतीतेरानुमानिकत्वे आचार्यवाक्यं सम्मतित्वेनाह **यथोक्तमिति**। कर्मनिर्णय इति शेषः। सा निषिद्धभोजनवर्जनादिप्रतीतिर्वचनलिङ्गकानुमानकरणिकेति तदर्थः। निषिद्धान्नभोजनवर्जनादिप्रतीतेर्वचनलिङ्गकानुमितित्वेनाशाब्दत्वान्नोक्तार्थप्रतीत्यर्थमुक्तोदाहरणेषु तात्पर्यवृत्तिरङ्गीकार्येत्याह **तात्पर्यवृत्तिरस्त्विति**। वक्ष्यते 'वाचकत्वं हि तात्पर्यमि'त्यादिना तृतीयस्य चतुर्थ इति शेषः। यदत्र वक्तव्यं तत्तत्रैव वक्ष्यामः।

**स०— व्यञ्जनं नामेति**॥ व्यञ्जनं व्यापारः। तद् द्विविधं लक्षणामूलमभिधामूलं चेति। गङ्गायां घोष इत्यत्र पावनत्वादिप्रयोजनप्रतिपिपादयिषया गङ्गायामिति लाक्षणिकशब्दप्रयोगात् तत्र प्रतीयमानपावनत्वस्य प्रमाणान्तरेणाप्रतीतेः शब्देनैव तत्प्रतीत्यवश्यंभावात् पावनत्वादौ गङ्गाशब्दस्यासंकेतितत्वेनाभिधया गङ्गाशब्देन तद्बोधासंभवात् गङ्गाशब्दस्य स्रोतस्संबद्धत्वेन तटलक्षकत्ववत् तटे बाधाभावेन मुख्यार्थानुपपत्त्यभावात् गङ्गाशब्दस्य पावनत्वाद्यैरसंबन्धेन शक्यसंबन्धाभावाच्च प्रयोजनाभावेन लक्षणाहेतुमुख्यार्थबाधादित्रयस्याभावात् लक्षणयापि तद्बोधकत्वानुपपत्त्या व्यञ्जनवृत्त्यैव तद्बोधकत्वाभ्युपगमाल्लक्षणामूलं व्यञ्जनमिदम्। अभिधामूलं तु इन्द्रशत्रुरित्यत्र शब्दद्वयस्यापि शक्तत्वात् बहुव्रीह्यवगमस्य प्रकारान्तरेणासम्भवेन स्वरेणैव वक्तव्यत्वात् तस्य च तत्र शक्तिलक्षणयोरभावेन व्यञ्जनावृत्त्यैव तदवगम इति। तथा च तादृशविधान्तरसद्भावात् त्रित्वमनुपपन्नमिति भावः। अन्यच्चोदाहरणं यथा 'गच्छ गच्छसि चेत्कान्त, पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्' इत्यत्र भार्यामरणं व्यज्यत इत्यादि। इदं तु लक्षणामूलमिति द्रष्टव्यम्। शक्त्याद्यभावेपि सत्यस्मदायत्ते शब्दप्रयोगे कस्मादवाचकं प्रयोजनाभावात्प्रयोक्तव्यमित्यन्यथानुपपत्त्यैव पावनत्वादिबोधसंभवेन अन्यथाऽनुपपत्त्यभावेन न वृत्त्यन्तरमभ्युपेयमित्याह **अनुमानतयेति**॥ **वक्ष्यत इति**॥ 'वाचकत्वं हि तात्पर्यं यदर्था अखिला रवाः' इत्यादिना वक्ष्यतीत्यर्थः।

प०— **व्यंजनं नामेति** । अस्तंगतः सवितेत्युक्ते ब्राह्मणस्य संध्या कार्येति, पांथस्य पुरतो न याहीति, चोरस्य चौर्यकर्मण्युद्योगः कार्य इत्यादिरर्थः प्रतीयते । तादृशार्थप्रतीतिहेतुर्व्यञ्जना वृत्तिर्नामेत्यर्थः ॥ **यथोक्तमिति** । कर्मनिर्णये उक्तमित्यर्थः । सा अर्थान्तरधीवेचनरूपलिंगजन्यानुमितिरूपेत्यर्थः ॥ **वक्ष्यतीति** । 'वाचकत्वं हि तात्पर्यं यदर्थमखिला रवा' इति ज्ञानपादे । एतच्चोपलक्षणम् । 'न च वाचनिकार्थ(क)स्तात्पर्यार्थे इति विशेषः तन्मानाभावादि'ति कर्मनिर्णये उपपादितं चेति ध्येयम् । अतो न तल्लक्षणानुक्तिर्दोषायेति भावः ॥

या०— ( १९०० पृ. २१ तः २४ स्थं यादुपत्यं अत्र पठनीयम् । )

च०— **व्यञ्जनं नामेति** । 'निर्मृष्टं सखि चन्दनं स्तनतटे निर्मृष्टरागोऽधरः नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः । मिथ्यावादिनि दूतिबान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकमि'त्यत्राधमपदे दूत्युपभोक्तृत्वनिरूपिता व्यञ्जनाख्या वृत्तिरालङ्कारिकैः शक्तिलक्षणाप्रतिसन्धानाभावदशायामप्यन्वयबोधनिर्वाहायोपेतेत्यर्थः । **अनुमानतयेति** । स्तनतटचन्दनमार्जनादीनामुपभोगाविनाभूतत्वादिति भावः । विवेचनीयं चेदं साधनलक्षणे । **स्वयमेवेति** । 'वाचकत्वं हि तात्पर्यं यदर्था अखिला रवाः' इत्यादिनेत्यादिः ।

सु०— **ननु मुख्यार्थानुपपत्तिं तत्सादृश्यं प्रयोजनं चापेक्ष्य गौणी प्रवर्तते । मुख्यार्थानुपपत्तितत्सम्बन्धप्रयोजनान्यपेक्ष्य तु लक्षणा । यथोक्तम् 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्यार्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिये'ति । तत्कथं सादृश्यसम्बन्धावेवोक्ताविल्यत आह** पूर्वेति ।

**अनु०—** पूर्वायोगे परग्रहः ॥

**शे०** —लक्षणागौण्योर्मुख्यार्थानुपपत्त्यादिहेतुत्रयसापेक्षत्वे काव्यसूत्रसम्मतिमाह **यथोक्तमिति** । द्वितीयोल्लासे काव्यप्रकाशकृतेति शेषः । अत्र य इत्यर्थे यदित्यव्ययम् । तथा च योऽन्योऽर्थो लक्ष्यते सा लक्षणेत्यन्वयः । लक्ष्यत इत्यस्य च प्रतिपाद्यत इत्येवार्थः । न तु लक्षणयोच्यत इत्यर्थः । तथा सत्यात्माश्रयापातात् । यद्यप्यत्र स लक्षणेति वक्तुमर्हति तथाऽपि सर्वशब्दानां विधेयोद्देश्यवाचकशब्दान्यतरलिङ्गग्राहकत्वं व्युत्पत्तिसिद्धमिति विधेयवाचकलक्षणाशब्दस्य स्त्रीलिङ्गत्वात्सेत्युक्तम् । अत एवाधारोऽधिकरणमिति सूत्रस्य य आधारस्तदधिकरणमिति व्याख्यानं युक्तम् । यद्यपि चैवमपि यदा परामृष्टस्य प्रतिपाद्यस्य तदा परामर्शे तत्र लक्षणात्वविधानमनुपपन्नम् । तथाऽपि सविशेषणे हीति न्यायेन तत्प्रतिपादने पर्यवसाने न दोषः । अत एव काव्यदर्पणे यदित्यनेन गुणीभूतं प्रतिपादनं परामृश्यत इत्युक्तमित्यवधेयम् । अत्र च लक्षणाशब्दः शुद्धलक्षणापरो गौण्याख्याशुद्धलक्षणापरश्च । मुख्यार्थबाधो

ज्ञाप्यार्थबाधः । तेन निर्वचनानुपपत्ते रुढिलक्षणामूलभूतायाः सङ्ग्रहः । अन्यथा कर्मणि कुशल इत्यत्र कुशलशब्दस्य कुशादानकर्तरि शक्त्यभावात्संग्रहो न स्यात् । अत्रान्वयानुपपत्तिवत्तात्पर्यानुपपत्तिरपि द्रष्टव्या । तेनाजहत्स्वार्थलक्षणापरपर्याया उपादानलक्षणाया अपि सम्रङ्ग्रहः कृतो भवति । योगश्च सम्बन्धरूपः सादृश्यरूपश्च । अत एव 'भेदाविमौ च सादृश्यात्संम्बन्धान्तरतस्तथा । गौणौ शुद्धौ च विज्ञेयावि'त्युत्तरत्र वक्ष्यति । तथा च मुख्यार्थबाधतद्योगाभ्यां शक्यविषयार्थप्रतिपत्तिर्लक्षणेति प्राञ्चः । नवीनास्तु यदित्यव्ययं यस्मादित्यर्थे । तथा च यस्माद्व्यापारादन्योऽर्थः प्रतिपाद्यते सा लक्षणेत्यर्थः । युक्तश्चायं पक्षः । अन्वयप्रतियोग्युपस्थित्यर्थं वृत्तिकल्पनात् । ततश्च शक्यसम्बन्ध एव लक्षणेति पर्यवसन्नं भवति ।

न चैवमभिधेयाविनाभूतेत्यागामिग्रन्थविरोधः स्यादिति वाच्यम् । प्रतीयतेऽनेनेति प्रतीतिरिति करणव्युत्पत्त्या प्रतीतिशब्दस्य तत्रैव विश्रान्तेः । अत एव तद्भूर्लाक्षणिकः शब्द इत्युपसञ्जहार सूत्रकारः[1] । वृत्तिकृताऽप्युक्तम् आरोपिता क्रिया आरोपितः शब्दव्यापार इति । उपस्थितेरेव लक्षणात्वे आरोपितो व्यापार इत्यसाधु । उपस्थितेर्व्यापारत्वाभावात् । न च शक्यसम्बन्धस्य लक्षणात्वे तद्योग इति व्यर्थम् । मुख्यार्थबाधतद्योगयोर्लक्ष्यप्रतीत्यनुकूलत्वे समानेऽपि मुख्यार्थबाधो मुख्यार्थान्वयप्रतिबन्धद्वारा, शक्यसम्बन्धस्तु साक्षादेव तदुपस्थापक इति स एव लक्षणेति प्रतिपादनार्थत्वात् । न चैवमपि हेत्वभावात् न लक्षणेत्यनन्तरोक्तेन मुख्यार्थबाधादित्रयं हेतुरिति पञ्चमोल्लासेन च विरोधः । न हि शक्यसम्बन्धाभावे शक्यसम्बन्धाभावो, न वा शक्यसम्बन्धे शक्यसम्बन्धो हेतुर्घटत इति वाच्यम् । प्रयोजनं न लक्षणाजन्यज्ञानाविषयो हेत्वभावादित्यत्र प्रथमस्य तात्पर्यात् । नाभिधा समयाभावादित्यत्र साध्यावैशिष्ट्यभयेन प्रयोजनम् नाभिधाजन्यज्ञानविषय इत्यस्यावश्यवाच्यत्वेनोक्तप्रकारस्याश्रयणीयत्वात् । मुख्यार्थबाधरूढिप्रयोजनरूपहेतुत्रयसापेक्षत्वे द्वितीयस्य तात्पर्यात् । वस्तुतो लक्षणापदस्योभयव्युत्पन्नतया क्वचित्किञ्चित्पुरस्कृत्याभिधानमिति न पूर्वापरविरोधः । वृत्तित्वं तु करणव्युत्पत्तिमूलमेवेति द्रष्टव्यम् । रूढितोऽथ प्रयोजनादिति विभागपरं रूढलक्षणा प्रयोजनलक्षणा चेति, न तु लक्षणान्तर्गतम् । एकैकस्यान्तर्भावेऽव्याप्तिप्रसङ्गात् । उभयान्तर्भावे त्वसम्भवप्रसङ्गात् । ननु गङ्गायां घोष इत्यत्र स्वार्थे स्रोतसि प्रत्यायिते गङ्गाशब्दो निवृत्तव्यापारो भवति । ततः प्रत्यायितं स्रोतस्तीरं लक्षयतीत्यर्थधर्मोऽयं लक्षणा नाम, न शब्दधर्मः तत्कथं शब्दो लाक्षणिक इति तत्राह **आरोपिता क्रियेति** । आरोपितः शब्दव्यापारो वाच्यधर्म एव शब्दे आरोप्यत इति लाक्षणिकः शब्द उच्यते । तत्प्रतिपादितस्यैवार्थस्य लक्षकत्वादिति प्राञ्चः । नवीनास्तु लाक्षणिकमपि पदमनुभावकमेव । आरोपितत्वोक्तिस्तु

---

१ (काव्यसूत्र)काव्यप्रकाशकारः ।

साक्षात्सम्बन्धाभावनिबन्धनेति तर्कदृष्ट्या प्राहुः । ततश्चायं सूत्रार्थः । रथादिकर्मणि कुशल इत्यादौ दर्भग्रहणाद्ययोगाद्गङ्गायां घोष इत्यादौ गङ्गादीनां घोषाद्यधिकरणत्वासम्भवान्मुख्यार्थस्य बाधे सति च विवेचकत्वादौ सामीप्ये च सम्बन्धे रूढितः प्रयोगबाहुल्यरूपप्रसिद्धेः । तथा गङ्गातटे घोष इत्यादेः प्रयोगाद्येषां न तथा प्रतीतिस्तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनादात्मनः प्रयोजनाच्च । मुख्येनामुख्यार्थो लक्ष्यते यत्स आरोपितः शब्दव्यापारः । मुख्यार्थव्यवहिततीरादिनिष्ठो लक्षणा इति ।

स० — **मुख्यार्थबाध इति** । मुख्यार्थयोगतद्बाधाभ्यां अन्यार्थो लक्ष्यते प्रतिपाद्यत इति यत् सा लक्षणेत्यन्वयः । न तु लक्ष्यत इत्यस्य लक्षणयोच्यत इत्यर्थः । आत्माश्रयत्वप्रसङ्गात् । अत्र यदित्यनेन लक्ष्यत इत्याख्यातगुणीभूतप्रतिपादनमात्रं परामृश्यते । यद्वा यत् यस्मात् व्यापारादन्यार्थो लक्ष्यते सा लक्षणेत्यर्थः । सर्वनाम्नो विधेयलिङ्गत्वस्य व्युत्पत्तिसिद्धत्वात्सेत्युक्तम् । रूढितोऽथ प्रयोजनादिति लक्षणाविभागपरं रूढलक्षणा प्रयोजनलक्षणेति, न तु लक्षणकोटयन्तर्भूतं । अव्याप्त्यसंभवप्रसङ्गात् । एकैकान्तर्भावे अव्याप्तिः उभयांतर्भावे त्वसंभव इति । ननु स्वार्थं बोधयित्वा विरते शब्दे पश्चादर्थः तीरं प्रतिपादयतीत्यर्थधर्म एव लक्षणा नाम, न तु शब्दधर्मः, अतः कथं शब्दो लाक्षणिक इति व्यवहार इत्यत आह **आरोपिता क्रियेति** ॥ शब्देऽध्यस्तो व्यापार इत्यर्थः । सत्यमर्थगतो व्यापार एव लक्षणेति । तथापि वाच्यगतो व्यापारो वाचके शब्दे आरोप्यतेऽतः शब्दो लाक्षणिक इति उच्यते परीक्षकैरिति ॥

---

वाचकस्वरूपं निरूपितम् । लाक्षणिकस्वरूपमिदानीं निरूपणीयम् । तच्च लक्षणाद्वारम् । तद्वल्लाक्षणिक इति वक्ष्यति । अतो लक्षणास्वरूपं तावन्निरूपयति 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्यार्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिये'ति । मुख्यार्थबाधतद्योगाभ्यां अन्यार्थो लक्ष्यते प्रतिपाद्यते इति यत् सा लक्षणेत्येतावल्लक्षणम् । यच्छब्देन लक्ष्यते इत्याख्यातगुणीभूतं प्रतिपादनमात्रं परामृश्यते ।

अन्यस्त्वाह यतो व्यापारादन्यार्थो लक्ष्यते सा लक्षणेति ॥ प्रतिनिर्दिश्यमानलिङ्गोपादानमत्र । अन्यथा लक्ष्यत इति यत्सा लक्षणेत्युक्ते यच्छब्देन लक्ष्यत्वपरामर्शः स्यात् । न ह्येषा लक्षणा । लक्ष्यत्वं हि लक्ष्यधर्मः । लक्षणा तु लक्षकधर्म एवेति । तच्च (सम्यक्?)लक्ष्यत इत्यत्राख्याते गुणीभूतप्रतिपादनमात्रं परामृश्यत इत्युक्तं स्यात् । तत्प्रतिपादनम् । प्रतिपादन एव धर्मे । रूढितोथ प्रयोजनादिति लक्षणाविभागपरम् । रूढिलक्षणा प्रयोजनलक्षणेति । न तु लक्षणकोटयन्तर्भूतम् । तथात्वे अव्याप्त्यसंभवौ स्याताम् । एकैकस्यान्तर्भावेऽव्याप्तिः । उभयान्तर्भावे त्वसंभवः । ननु गङ्गायां घोष इत्यत्र स्रोतसि प्रत्यर्पिते गङ्गाशब्दो निवृत्तव्यापारोऽभूत्ततः प्रत्यर्पितं स्रोतस्तीरं लक्षयतीत्यर्थधर्मोऽयं लक्षणा नाम, न तु शब्दधर्मः । तत्कथं शब्दो लाक्षणिक इत्याशङ्कयाह **आरोपिता**

**क्रियेति** । आरोपितशब्दव्यापार इत्यर्थः । वाच्यधर्म एव शब्दे आरोप्यते तत्प्रतिपादितस्यैवार्थस्य लक्षकत्वात् । आरोपे हेतुमाह **सान्तराऽर्थनिष्ठ इत्यादि** ।

लाक्षणिकशब्दस्वरूपं विवेक्तुं लक्षणां तावद्विवेचयति **मुख्यार्थबाध इति** ॥ अत्र य इत्यर्थे यदित्यव्ययम् । तथा च योन्योर्थो लक्ष्यते प्रतिपाद्यते सा लक्षणेत्यन्वयः । न तु लक्षणयोच्यत इत्यर्थः । आत्माश्रयात् । यद्यपि 'स लक्षणा' इति वक्तुमर्हति; तथापि सर्वशब्दानां विधेयोद्देश्यवाचकशब्दान्यतरलिङ्गग्राहकत्वं व्युत्पत्तिसिद्धमिति विधेयवाचकलक्षणाशब्दस्य स्त्रीलिङ्गत्वात्सेत्युक्तम् । अत एवाधारोधिकरणमिति सूत्रस्य य आधारस्तदधिकरणमिति व्याख्यानमुक्तम् । यद्यपि चैवमपि यदा[1] परामृष्टस्य प्रतिपाद्यस्य तदा[2] परामर्शे तत्र लक्षणाविधानमनुपपन्नं तथापि सविशेषणे हीति न्यायैर्वा तत्प्रतिपादनं पर्यवसन्नम् । अत एव काव्यदर्पणे पितृचरणैरुक्तं यदित्यनेन गुणीभूतं प्रतिपादनं परामृश्यत इति । मुख्यार्थबाधः ज्ञाप्यार्थबाधः । तेन निर्वचनानुपपत्तेः रूढिलक्षणामूलभूतायाः संग्रहः । अन्यथा कुशलशब्दस्य कुशादानकर्तरि शक्त्यभावात्संग्रहो न स्यात् । अतोऽन्यथानुपपत्त्याऽर्थापत्तिरपि द्रष्टव्या इति सोपादानलक्षणासंग्रहो भवति । तथा च मुख्यार्थबाधतद्योगाभ्यां शक्त्यविषयार्थप्रतिपत्तिर्लक्षणेति प्राञ्चः ।

नवीनास्तु यदित्यव्ययं यस्मादित्यर्थे । तथा च यस्माद् अन्योऽर्थः प्रतिपाद्यते सा लक्षणेत्यर्थः । युक्तश्चायं, अन्वयप्रतियोग्युपस्थित्यर्थं वृत्तिकल्पनात् । तथा च शक्यसंबन्ध एव लक्षणा । न चाभिधेयाविनाभूतेत्याद्यागामिग्रन्थविरोधः । करणव्युत्पत्त्या प्रतीतिशब्दस्य तत्रैव विश्रामात् । अत एव तद्भूर्लाक्षणिक इत्युपसंजहार सूत्रकारः । वृत्तिकृत्ताप्युक्तं आरोपिता क्रिया आरोपितः शब्दव्यापार इति । उपस्थितेर्लक्षणात्वे आरोपितो व्यापार इत्यसाधु उपस्थितेर्व्यापारत्वाभावात् । न च शक्यसंबन्धस्य लक्षणात्वे तद्योग इति व्यर्थं, मुख्यार्थबाधतद्योगयोर्लक्ष्यप्रतीत्यनुकूलत्वे समानेपि मुख्यार्थबाधो मुख्यार्थान्वयप्रतिबन्धद्वारा, शक्यसंबन्धस्तु साक्षादेव तदुपस्थापक इति स एव लक्षणेति प्रतिपादनार्थत्वात् । न चैवमपि हेत्वभावात् न लक्षणेत्यनन्तरोक्तेः न मुख्यार्थबाधादित्रयं हेतुरितीति पञ्चमोल्लासेन च विरोधः । न हि शक्यसंबन्धाभावे शक्यसंबन्धाभावो, न वा शक्यसंबन्धे शक्यसंबन्धो हेतुर्घटत इति वाच्यं; प्रयोजनं न लक्षणाजन्यज्ञानविषयो हेत्वभावादिति प्रथमस्य तात्पर्यात् । नाभिधा समयाभावादित्यत्र साध्याविशिष्ट्यभयेन प्रयोजनं नाभिधाजन्यज्ञानविषय इत्यस्य च अवश्यवाच्यत्वेन उक्तप्रकारस्याश्रयणीयत्वात् मुख्यार्थबाधरूढिप्रयोजनरूपहेतुत्रयसापेक्षत्वे द्वितीयस्य तात्पर्यात् । वस्तुतस्तु लक्षणापदस्य उभयव्युत्पन्नतया क्वचित् किञ्चित् पुरस्कृत्याभिधानमिति न पूर्वापरविरोधः । वृत्तिता तु करणव्युत्पत्ति-

---

१. 'यत्'शब्देन । २. 'तत्'शब्देन

**मूलैवेति** तत्त्वम् । **रूढितोऽथ प्रयोजनादिति** विभागो न तु लक्षणप्रविष्टं, प्रत्येकसमुदायाभ्यां अव्याप्त्यसंभवयोः प्रसङ्गात् । ननु स्वार्थं बोधयित्वा विरते शब्दे पश्चादर्थस्तीरं प्रतिपादयतीत्यर्थ-व्यापारोयं न शब्दस्येत्यत आह **आरोपिता क्रियेति** । अर्थव्यापार एव शब्द आरोप्यत इति लाक्षणिकः शब्द उच्यत इति भावः अस्मत्पितृचरणस्तु लाक्षणिकमपि पदमनुभावकं आरोपितत्वोक्तिस्तु साक्षात्संबन्धाभावनिबन्धनेति । तर्कदृष्ट्या प्राह **व्याख्यानान्तरमिति** (?) ।

प० — **यथोक्तमिति** । काव्यप्रकाशे हेतुत्रयं लक्षणाबीजमुक्तमित्यर्थः ॥ बाधे तद्योग इति निमित्तार्थे सप्तम्यौ । मञ्चाः क्रोशन्तीत्यादौ रूढितः । गङ्गायां घोष इत्यादौ प्रयोजनात् । पावित्र्य-सामीप्यादिज्ञापनस्य प्रयोजनत्वात् । यत् यस्माद्व्यापारात् अन्यार्थोऽमुख्यार्थो लक्ष्यते ज्ञायते सा आरोपिता क्रिया स आरोपितः शब्दव्यापारः लक्षणेत्यर्थः । शब्दव्यापारस्यारोपितत्वं च मुख्यार्थव्यवहितार्थ-निष्ठत्वं ज्ञेयं । गौणवृत्तावुक्तहेतुत्रयसंमतित्वपक्षे तु तद्योग इत्यत्र तत्सादृश्य इत्यर्थः । लक्षणेतिपदस्थाने गौणीति पदं च ध्येयम् । अन्यत्समानम् । अत्र श्लोकेऽमुख्यवृत्तौ मुख्यार्थबाधतद्योगप्रयोजनरूपं हेतुत्रयमुक्तं । रूढित इत्यस्य लक्षणाप्रभेदरूपत्वेनाहेतुत्वात्काचित्कत्वाच्च । तत्र तद्योगरूपहेतुरभिमतः । अन्यौ हेतू दूषणीयौ ।

या० — **मुख्यार्थबाध इति** । मुख्यार्थयोगतद्बाधाभ्यामन्यार्थो लक्ष्यते प्रतिपाद्यते इति यत्सा लक्षणेत्यन्वयः । न तु लक्ष्यत इत्यस्य लक्षणयोच्यत इत्यर्थः । आत्माश्रयत्वप्रसङ्गात् । अत्र यदित्यनेन लक्ष्यत इत्याख्याते गुणीभूतं प्रतिपादनमात्रं परामृश्यते । यद्वा यद्यस्माद्व्यापारादन्यार्थो लक्ष्यते सा लक्षणेत्यर्थः । सर्वनाम्नां विधेयलिङ्गत्वस्य व्युत्पत्तिसिद्धत्वात्सेत्युक्तम् । 'रूढितोऽथ प्रयोजना-दि'ति लक्षणाविभागपरम् रूढलक्षणा प्रयोजनलक्षणेति द्विविधेति । न तु लक्षणकोट्यन्तर्भूतम् । एकैकान्तर्भावेऽव्याप्त्यापत्तेः । उभयान्तर्भावेऽसम्भवप्रसङ्गात् । ननु स्वार्थं बोधयित्वा विरते शब्दे पश्चादर्थस्तीरं प्रतिपादयतीत्यर्थधर्म एव लक्षणा नाम, न तु शब्दधर्मोऽतः कथं शब्दो लाक्षणिक इति व्यवहार इत्यत आह **आरोपिता क्रियेति** । शब्देऽध्यस्तो व्यापार इत्यर्थः । सत्यमर्थगतो व्यापार एव लक्षणेति । तथाऽपि वाच्यगतो व्यापारो वाचके शब्दे आरोप्यतेऽतः शब्दो लाक्षणिक इति व्यवह्रियते परीक्षकैरित्येतच्छ्लोकार्थः ।

च० — लक्षणागौण्योरुक्तसाधनत्रिकसाध्यत्वे काव्यप्रकाशग्रन्थं प्रमाणयति **यथोक्तमिति** ॥ **रूढितोथ प्रयोजनादिति** । लक्षणाद्वयी; एका रूढलक्षणा प्रयोजनानपेक्षा, अपरा तत्सापेक्षलक्षणेति तद्द्वैविध्यप्रदर्शनपरमिति मन्तव्यम् । यदित्यव्ययं य इत्यर्थे । योऽन्योर्थो लक्ष्यते प्रतिपाद्यते । आत्मा-श्रयताप्रसङ्गेन लक्षणया प्रतिपाद्यत इति नार्थः । सर्वनाम्नां या पृथिवी सा द्रव्यमित्यादौ उद्देश्य-

बोधकलिङ्गग्राहकत्वस्येव विधेयवाचकलिङ्गग्राहकत्वस्याप्याधारोऽधिकरणमित्यादौ य आधारस्तदधिकरणमित्यादौ दर्शनात्प्रकृते विधेयवाचकलक्षणापदलिङ्गाभिप्रायेण सेत्युक्तिः । ननु गङ्गायां घोष इत्यादौ गङ्गापदे विरतेपि तत्प्रत्यायितप्रवाह एव तीरं लक्षयतीत्यर्थधर्म एव लक्षणेतिमते कथं शब्दो लाक्षणिक इति व्यवहारः सङ्गमनीय इत्यत आह **आरोपिता क्रियेति** । अभिधेयगत एव व्यापारोऽभिधायकपदेऽध्यस्त इति तथा व्यवहारोऽध्यासमूलक इति कारिकाशयः ।

**सु०— न मुख्यानुपपत्तिरमुख्यवृत्तेः कारणम् । प्रयोगोत्तरकालीनत्वादनुपपत्तिदर्शनस्य । किन्तु मुख्यार्थानुपपत्तिदर्शनममुख्यार्थग्रहणस्य हेतुः । अत एव हि न शब्देनापेक्ष्यते । नापि प्रयोक्त्रा । किन्तु प्रतिपत्त्रैव । शब्दो हि व्युत्पत्तिवशान्मुख्यमेवार्थं प्रथमं बुद्धावारोहयति । न च प्रतिपत्ता तं सहसोत्स्रष्टुमुत्सहत इति तदर्थमेवानुपपत्तिमपेक्षते । अतो न वृत्तिकारणचिन्तायामियं वाच्या । प्रयोजनमपि न वृत्तिहेतुः । किन्तु सति मुख्येऽस्मदायत्ते शब्दप्रयोगे (ऽ)कस्मादमुख्यं प्रयुञ्ज्महे इति वक्त्रा प्रतिपत्त्रा चानुसन्धीयते । अतोत्र न वक्तव्यमिति । अत्रायोगग्रहणं प्रयोजनस्याप्युपलक्षणम् । (यथा)अयोगः सार्वत्रिको न तथा प्रयोजनं रूढायां गौण्यां लक्षणायां चाभिधातुल्यत्वेनानपेक्षितत्वादिति विशेषसूचनाय न स्वशब्देनोपात्तम् । निर्दलत्वात् । मुख्यायोगेऽमुख्यग्रह इति वक्तव्ये पूर्वायोगे परग्रह इति वचनं लक्षितलक्षणाद्यनुगमार्थम् । न हि लक्षितलक्षणा मुख्यासंभवमात्रेणाश्रीयते । किन्तु लक्षितस्य अपि । अत एवैतदयुक्तं मुख्यार्थबाध इति ।**

**शे०–अमुख्यवृत्तेरिति** । अत्र वृत्तिशब्देन प्रतिपादकत्वमेवाभिमतम् । न तु तदनुकूलव्यापारः । तथा सति मुख्यार्थानुपपत्त्यादेस्तद्धेतुत्वनिरासेन सम्बन्धस्यैव तद्धेतुत्वस्थापनानौचित्यप्रसङ्गात् । न हि सम्बन्धोऽनुकूलव्यापारे हेतुः सम्भवति । अनुकूलव्यापारस्यापि सम्बन्धत्वेनाभेदादिति भावः ।। **प्रयोगेति** । बोधकशब्दप्रयोगेत्यर्थः । उपलक्षणमेतत् । तस्य प्रथमोपस्थितमुख्यार्थत्यागमात्रहेतुत्वेन तीरबोधनेऽनपेक्षितत्वादित्यपि द्रष्टव्यम् ।। **अत एवेति** । मुख्यार्थानुपपत्तेः प्रतिपादकत्वरूपायां वृत्तावकारणत्वादेव न मुख्यार्थानुपपत्तिः गङ्गाशब्देन बोधनार्थमपेक्ष्यते; किं नामाशक्यतीरबोधनेऽतिप्रसङ्गान्नियामकं शक्तिस्थानीयं संबन्धमेवापेक्षत इति प्रतिपादकत्वरूपायां वृत्तौ सम्बन्ध एव हेतुरिति भावः ।। **नापि प्रयोक्त्रेति** । प्रयोगार्थमिति शेषः । अनेन संबन्धेन गङ्गापदं तीरं बोधयिष्यतीत्यभिप्रेत्यैव तेन गङ्गापदप्रयोगादिति भावः ।। **प्रतिपत्त्रैवेति** । अपेक्ष्यत इति वर्तते । मुख्यार्थत्यागायेति

शेषः । तदेव विशदयति **शब्दो हीति** ॥ **अत इति** । प्रतिपादकत्वरूपवृत्तावकारणत्वादित्यर्थः ॥ **न वृत्तिहेतुरिति** । शब्दस्याचेतनत्वेन तेन बोधनाय तदनपेक्षणात् । बोधकार्यत्वेन प्रयोजनस्य तदहेतुत्वाच्चेति भावः ॥ **अत इति** । प्रतिपादकत्वरूपवृत्तावकरणत्वादेवात्र वृत्तिकारणचिन्तायां न वक्तव्यं प्रयोजनमिति शेषः । नन्वयोगप्रयोजनयोः प्रतिपादकत्वरूपवृत्तावकारणत्वेन वृत्तिकारणचिन्तायामवक्तव्यत्वात्संबन्धसादृश्ययोरेवोपादानं युक्तमिति वक्तुं प्रवृत्ते तत्र वाक्येऽयोगस्येव प्रयोजनस्यापि वक्तव्यत्वात्तदनुक्तिरयुक्तेत्यतोऽयोगपदेनैवोपलक्षणतया प्रयोजनोक्तेर्न दोष इत्याह **अत्रेति** । तर्हि स्वायत्तन्यायविरोध इत्यतः प्रयोजनाभावे तथाऽत्र प्रयोजनसद्भावान्न विरोध इत्याह **अयोग इति** ॥ **न स्वशब्देनेति** । अयोगशब्देनायोगस्येव प्रयोजनशब्देन प्रयोजनस्यानिर्देश इत्यर्थः । **निर्दलत्वान्मुख्यायोग इति** । निर्दलत्वादित्यत्र पूर्वायोगे परग्रह इत्यस्येति शेषः । ततश्च पूर्वायोगे परग्रह इत्यस्य निर्दलत्वात्पूर्वायोगे परग्रह इत्यनयोर्निमित्तनैमित्तिकभावस्य स्फुटमप्रतीयमानत्वादिति यावत् । मुख्यायोगेऽमुख्यग्रह इत्यस्य सदलत्वान्निमित्तनैमित्तिकभावस्य स्फुटं प्रतीयमानत्वान्मुख्यायोगेऽमुख्यग्रह इत्येव वाच्यम् । सत्यप्येवं यत्पूर्वायोगे परग्रह इत्येवं वचनं तल्लक्षितलक्षणानुगमार्थमित्यर्थः ॥ **अत एवेति** । लक्षितलक्षणाया मुख्यासम्भवमात्रेणानाश्रयणादेवेत्यर्थः । मुख्यार्थबाध इति विशिष्योक्त्या लक्षितार्थबाधस्य व्यावर्तितत्वान्मुख्यार्थासम्भवमात्रस्य च लक्षितलक्षणायामुक्तरीत्याऽभावेन मुख्यार्थबाध

---

इत्ययुक्तमित्यर्थः ।

स० — अमुख्यवृत्तेरित्यत्र वृत्तिशब्देन प्रतिपादकत्वं ग्राह्यं ॥ **प्रयोगेति** ॥ अमुख्यवृत्तिसाध्यप्रयोगोत्तरकालीनानुपपत्तिदर्शनस्यामुख्यवृत्तिकारणत्वासंभवादित्यर्थः ॥ **अत एवेति** लक्षितलक्षणाया मुख्यासंभवमात्रेणानाश्रयणादेवेत्यर्थः ॥ मुख्यार्थबाध इति विशेषोक्त्या लक्षितार्थासंभवस्य व्यावर्तितत्वात् मुख्यार्थासंभवमात्रस्य च लक्षितलक्षणायामभावेन मुख्यार्थबाध इत्ययुक्तमिति भावः ।

प० — तत्राद्यं हेतुं तावन्निराह **न मुख्यार्थानुपपत्तिरित्यादिना** ॥ **अमुख्यवृत्तेरिति** । अमुख्यार्थप्रतिपादकत्वरूपशब्दव्यापारस्येत्यर्थः ॥ **प्रयोगोत्तरकालीनत्वादिति** । एतच्च 'शब्दो ही'त्यादिनाऽग्रे व्यक्तं । किं तस्य सर्वथानुपयोग एवेति प्रश्ने उत्तरमाह **किंत्वित्यादिना** । कुत एवमित्यतः स किं शब्देन लक्ष्यतीराद्यर्थबोधनेऽपेक्ष्यते अथ प्रयोक्त्रेति द्वयमपि क्रमेण निराह **अत एवेति** । अमुख्यार्थग्रहणहेतुत्वादेवेत्यर्थः ॥ **अपेक्ष्यते** तीरादिबोधनार्थमिति योज्यं ॥ **नापि प्रयोक्त्रेति** । प्रयोगार्थमपेक्ष्यत इत्यर्थः । किंत्वनेन संबन्धेन गंगादिपदं तीरादिकं बोधयिष्यतीत्यभिप्रेत्यैवं प्रयुंक्त इति भावः । प्रतिपत्त्रैवामुख्यार्थग्रहणायापेक्ष्यत इत्येतद्व्यनक्ति **शब्दो हीति** । द्वितीयं च हेतुं निराह **प्रयोजनमपीति** ॥ **न वृत्तिहेतुरिति** । अमुख्यार्थप्रतिपादनरूपे शब्दव्यापारे हेतुरित्यर्थः । **अकस्मात्**

निर्निमित्तमित्यर्थः । **अनुसंधीयते** प्रयोजनमित्यनुषंगः ॥ **अतोऽत्रेति** । वृत्तिचिंतायामित्यर्थः ॥ **अत्रा-योगेति** । पूर्वायोगे परग्रह इत्यत्र मुख्यार्थायोगे प्रयोजने च सत्यमुख्यार्थस्य ग्रहणमिति बोध्यमि-त्यर्थः ॥ **स्वशब्देनेति** । वाचकशब्देनेत्यर्थः ॥ **अत एवेति** । लक्षितलक्षणायामव्याप्तेरेवेत्यर्थः ।

या० — **प्रयोगेति** । अमुख्यवृत्तिमच्छब्दोच्चारणोत्तरकालीनानुपपत्तिदर्शनस्यामुख्यवृत्तिकारण-त्वासम्भवादित्यर्थः ॥ **अत एवेति** । पूर्वभावित्वादेवेत्यर्थः ।

च० — **प्रयोगेतरेति** । अमुख्यवृत्तिमत्पदोच्चारणोत्तरकालीनानुपपत्तिप्रतिसन्धानस्य तादृश-वृत्तिहेतुत्वासंभवादित्यर्थः । अत एव तादृशप्रतिसन्धानापेक्षया पूर्वभावित्वादेव ।

**सु० — किञ्च यथा मुख्यवृत्तिष्वपि स्वीकारे तारतम्यमस्ति तथाऽमुख्यवृत्तिष्वपि । कुत इति चेत् । अर्थप्रतीतिसन्निकर्षविप्रकर्षाभ्यामिति ब्रूमः । ननु च सादृश्यसम्बन्धयोस्तद्धि-तमुत्पाद्य तस्यापि लुपि कृते सर्वं सेत्स्यति । किममुख्यवृत्तिस्वीकारेणेत्यतो वेदमुदितम् । यदि गोशब्दस्य गवि वाहीके च गङ्गाशब्दस्य गङ्गायां तीरे चोक्तविधयाऽभिधैव स्यात्तदा गोगङ्गा-शब्दोच्चारणे गोगङ्गयोः पूर्वं प्रतीतिस्तदयोगे चानुसंहितेऽर्थान्तरे प्रतीतिरिति न स्यात् । न हि हरीतक्यादिशब्दोच्चारणे सत्ययं प्रतीतिक्रमोऽस्ति । किन्तु वृक्षे फले च स्वातन्त्र्येण प्रतीते प्रकरणादिवशेनान्य(त्र)तरनियन्त्रणं क्रियते । अस्ति चायं पूर्वायोगे परग्रहः । तेन जानीमो नोभयत्रोक्तविधाभिधेति ।**

शे०—मूले वृत्तितारतम्यानुक्तिप्रयुक्तन्यूनतामाशङ्क्य तत्तारतम्यपरतयैतद्वाक्यव्याख्यानरूपसन्न्याय-रत्नावल्यनुरोधेनैतदेव वाक्यं हेतुकथनपूर्वकं तारतम्यपरतयाऽपि व्याचष्टे **किञ्चेति** । यद्यपि परममुख्या-सम्भवे मुख्यार्थः स्वीकार्यः, तदसम्भवे गौणार्थस्तदसंभवे लाक्षणिक इति मुख्यामुख्यवृत्तिमात्रसाधारण्येन तत्तारतम्यकथनपरसन्न्यायरत्नावल्यनुरोधेन मुख्यामुख्यसाधारण्येन तत्तारतम्यपरतयैतद्ग्रन्थव्याख्यानस्य कर्तव्यत्वेन यथा मुख्यवृत्तिषु स्वीकारे तारतम्यमस्ति तथाऽमुख्यवृत्तिष्वपीति मुख्यवृत्तिदृष्टान्तेनामुख्यवृत्ति-तारतम्यप्रतिपादनपरतयैतद्ग्रन्थव्याख्यानमिह टीकायामयुक्तमिवाभाति । तथाऽप्यमुख्यवृत्तिनिरूपण-प्रस्तावे तत्तारतम्यनिरूपणस्यैव श्लिष्टत्वेन मुख्यवृत्तितारतम्यपरतया व्याख्यानस्याश्लिष्टत्वात् । तत्सूचनस्य च मुख्यवृत्तिदृष्टान्तेनामुख्यवृत्तौ तारतम्योक्त्याऽपि सम्भवा'यथा तथा'ऽध्याहारेण सन्न्यायरत्नावल्या अप्यु क्तार्थपरत्वेन तदविरोधसंभवात् । अमुख्यवृत्तितारतम्यमात्रपरत्वेनैतद्ग्रन्थव्याख्यानमिह टीकायां कृतम् । न चैवं 'विष्णावन्यत्र मुख्यता । उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः' इति वृत्त्युद्देशपरपूर्व-ग्रन्थानुसारेण गौणीतो लक्षणायाः पूर्वत्वेन तदसंभव एव गौण्या आश्रयणीयत्वापत्त्या गौणीतो लक्षणा जघन्येति सिद्धान्तभङ्गः स्यादिति वाच्यम् । पूर्वायोग इति वाक्योक्तपूर्वत्वस्य 'प्रयोगयुक्तसादृश्यं

संबन्धो वाप्यमुख्यतः' इत्यव्यवहितलक्षणोक्त्यभिप्रायकत्वेन व्यवहितोद्देशाभिप्रायकत्वाभावेन तदप्रसङ्गात् । अत एवोत्तरत्रानुव्याख्याने 'मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते । सर्वेषामपि शब्दानां गौणाद्यं तदयोगतः' इति लाक्षणिकापेक्षया गौणस्य प्राथम्योक्तिर्न्यायविवरणेऽपि रूढोपचारो रूढलक्षणा उपचारो लक्षणेति गौण्याः प्राथम्योक्तिः सङ्गच्छते ।

ततश्चायं ग्रन्थार्थः । यथा पूर्वस्याः परममुख्यताया असम्भव एव परस्या मुख्यताया ग्रहः न तु तत्संभवेऽपि । मुख्यतायामपि पूर्वस्या रूढेरसंभव एव परस्य योगस्य ग्रहः, न तु तत्सम्भवेऽपीति मुख्यवृत्तिषु स्वीकारे तारतम्यमस्तीति, तथा पूर्वस्य योगस्यासंभव एव परस्यामुख्यपरिग्रहः । अमुख्यतायामपि पूर्वस्या निरूढगौण्या अयोग एव परस्या अनिरूढगौण्या ग्रहः तथा पूर्वस्या गौण्या असम्भव एव परस्या लक्षणाया ग्रहः । लक्षणायामपि पूर्वस्या रूढलक्षणाया असंभव एव परस्या अरूढलक्षणाया ग्रहोऽरूढलक्षणायामपि पूर्वस्या अन्तरङ्गलक्षणाया असंभव एव परस्या बहिरङ्गलक्षणाया ग्रहः । बहिरङ्गलक्षणायामपि पूर्वस्या लक्षणाया अयोग एव परस्या लक्षितलक्षणाया ग्रह इत्यमुख्यवृत्तिष्वपि स्वीकारे तारतम्यमस्तीति । 'योगस्याप्ययोगश्चेत्परस्या अमुख्यवृत्तेर्लक्षणाया ग्रहः' इति तर्कताण्डवे तु लक्षणापदस्य गौणोपरत्वादविरोधः । अत एवानुपदमेव तत्र लक्षणाया गौणीतो जघन्यत्वसमर्थनमिति ध्येयम् ।

---

**तद्धितमिति** । शैषिकमणादिकमित्यर्थः ॥ **तस्यापि लुपीति** । पुष्पमूलेषु बहुलमिति वार्तिके बहुलग्रहणेन लुपि कृत इत्यर्थः ॥ **सर्वं सेत्स्यतीति** । अभिधयैवेति शेषः । अयमर्थः । यथा हि हरीतक्यादिशब्दे पदार्थेन लुप्तेन स्मृतेन प्रत्ययेनाभिधयैव फलबोधनान्न हरीतकीशब्दस्य वृक्षमात्रवाचकत्वमङ्गीकृत्य फले लक्षणाऽभ्युपगम्यतेऽन्यथा फले तद्धितलुगुक्त्ययोगात् किं तूक्तरीत्योभयत्राप्यभिधैव । एवं सम्बन्ध्यादौ तद्धितमुत्पाद्य तस्यापि लुपि सति लुप्तेन स्मृतेन तद्धितेन गङ्गादिसम्बन्ध्यादितीरादिबोधस्याप्यभिधयैव सम्भवान्न गङ्गादिशब्दस्य सम्बन्धितीरादौ लक्षणाऽभ्युपगमो युक्तः । किं नामोभयत्राभिधैवोक्तरीत्याऽङ्गीकार्या । अन्यथा हरीतक्यादिशब्दस्यापि फलादौ लक्षणैव स्यादिति ॥ **इदमुदितमिति** । पूर्वायोगे परग्रह इत्युदितमित्यर्थः । अनेन पूर्वस्य प्रथमप्रतीतस्य पूरस्यायोगे परस्य चरमप्रतीतस्य तीरस्य ग्रहः प्रत्ययो दृश्यते स न स्यादिति योजना सूचिता भवति ॥ **उक्तविधयेति** । गोगङ्गाशब्दयोर्गवि गङ्गायामभिधा । लुप्तस्य तद्धितस्य संबन्धितीरादावभिधेत्युक्तविधयेत्यर्थः ॥ **न हि हरीतक्यादिशब्दोच्चारणे सतीति** । ततश्च गङ्गादिशब्दे पूराद्यनुपपत्तिपुरःसरं तीरादिप्रतीतिवत् हरीतक्यादिशब्दे वृक्षाद्यनुपपत्तिपुरःसरं फलप्रतीत्यभावेन वैषम्यान्न दृष्टान्तदार्ष्टान्तिकभाव इति भावः ॥ **प्रकरणादिवशेनेति** । सैन्धवादिशब्देष्विवेति शेषः । **नियन्त्रणं** नियमनम् ।

स० — लक्षितलक्षणा न मुख्यार्थासंभवमात्रेणाश्रीयते किं तु लक्षितस्यापीत्यत्र हिशब्देन प्रसिद्धिरेव साधकत्वेनोक्ता परं चात्र साधकमाह **किञ्चेति** । योगापेक्षया रूढिः शीघ्रोपस्थापिकेत्येवं रूपं तारतम्यं यथेत्यर्थः । **तथाऽमुख्यवृत्तिष्वपीति** । तथा च लक्षितलक्षणा लक्षणावन्न शीघ्रोपस्थिति-हेतुः, किं तु विप्रकर्षेण अत एतदन्यथानुपपत्त्या न सा मुख्यार्थासंभवमात्रेणाश्रयणीयेत्यर्थापत्तिरेवात्र साधकतयोक्तेति भावः ॥ **तस्यापि लुपि कृत इति** ॥ हरितक्यादेराकृतिगणत्वसंभवेन हरितक्या इत्यनेन वा फलमूलेषु बहुलमिति बहुलग्रहणेन वा लुपि कृत इत्यर्थः ॥ **सर्वं सेत्स्यतीति** । गंगाशब्दात्प्रवाह-तीरयोरुपस्थितिः गोशब्दाद्गोवाहीकयोरुपस्थितिरित्यादिकं सर्वं सिध्यतीति भावः । **नियंत्रणं** नियमनं ।

प० — एवं मुख्यार्थासंभवेऽमुख्यग्रह एवेत्येकमर्थं मूलस्योक्त्वा परममुख्यासंभवे मुख्यार्थः स्वीकार्यः । तदसंभवे गौणार्थः । तदसंभवे लाक्षणिकग्रह इति सन्न्यायरत्नावल्युक्त्यनुरोधेन लक्षणादितो गौण्याः ज्यायस्त्वोक्तिपरतयापि मूलं योजयति **किञ्च यथेति** । मुख्यवृत्तावानंदमयनयां-तोक्तदिशा परममुख्यमुख्यवृत्त्योर्यथा तारतम्यम्, यथा च योगरूढिरूढिवृत्त्योस्तारतम्यम् यथा रूढि-योगयोस्तारतम्यम् तथागौणवृत्तिलक्षणावृत्त्योर्गौण्यामपि रूढारूढयोर्लक्षणायामपि रूढारूढयोस्तारतम्य मित्यर्थः । **अर्थप्रतीतिसन्निकर्षविप्रकर्षाभ्यामिति** । परममुख्यमुख्यवृत्त्योस्सन्निकर्षविप्रकर्षावानन्द-मयनयान्ते व्यक्तौ । योगरूढ्यादिवृत्तित्रयस्य सन्निकर्षादिकं तु योगरूढ्यादिमुख्यवृत्तित्रयबलाबल-

निर्णयवादे तर्कताण्डवे विशदम् । रूढारूढमुख्यवृत्त्योरर्थप्रतीतिसन्निकर्षविप्रकर्षौ सर्वजनप्रसिद्धौ । गौणलक्षणावृत्त्योस्तु पृथगुपदेशादित्यधिकरणे । 'अतो भेदवदेवैताः श्रुतयः प्रवदन्ति हि । पौराणानि च वाक्यानि सादृश्याभेदसंश्रयादि'त्येतद्व्याख्यानसुधाया'मद्वैतवादिभिः खलु तत्त्वंपदयोर्विरुद्धस्वार्थैकदेश-त्यागेन एकदेशलक्षणया सामानाधिकरण्यमात्रं मुख्यमङ्गीकृतमि'त्यादिना किञ्चिद्विशदीक्रियते । स्पष्टीकृतं चैतत्तर्कताण्डवे गौण्यां सादृश्यस्यान्तर्गणिकभेदे सत्यपि सादृश्यरूपेणानुगते तात्पर्यमित्येकार्थपटादि-शब्दादिवत् तात्पर्यविषये द्राग्धीः । लक्षणायां तु क्वचित्संबन्धे तात्पर्यम् । क्वचित्तद्वारा पूतत्वे क्वचि-च्छीतलत्वादाविति वैरूप्यान्नानार्थादिशब्दादिव विलम्बेन तद्धीरिति लक्षणा जघन्येत्यादिना ग्रन्थेन लक्षणातो गौण्याः प्राबल्यनिर्णयवादे ॥ **सादृश्यसंबन्धयोरिति** । गङ्गासंबन्धीत्यर्थे सदृश इत्यर्थे च गङ्गादिशब्दा'त्तस्येदमि'ति सूत्रेण वा 'तद्धिता' इति सूत्रेण वाऽण्प्रत्यये बहुलग्रहणात्तस्य लुपि कृते 'लुपि युक्तवद्व्यक्तिवचने' इति सूत्रेण पूर्ववल्लिङ्गवचनयोः प्राप्तत्वेन गङ्गासंबन्धिनीत्यर्थे गङ्गायामितिशब्देन लक्षणां विनैव गङ्गासंबन्धितीरप्रतीतेर्गोसदृशवाहीकप्रतीतेश्च संभवात् । यथा हरीतक्यादिशब्दात् फलार्थेऽण्प्रत्यये लुप्चेति सूत्रेण तस्य लुपि सति 'लुपियुक्तवद्व्यक्तिवचन'भावेन हरीतकीति रूपं तथेति भावः । हरीतक्यादावेवं प्रत्ययस्य सत्त्वाल्लुबाद्युक्तिर्न स्यादित्यतो वैषम्यमाह **न हीति** । नियन्त्रणं

नियमनम् । न स्यादितिशेषोक्त्याऽऽपादनरूपत्वेन योजितमपि विपर्यये पर्यवसानरूपेणापि मूलं योजयति **अस्ति चेति । नोभयत्रोक्तविधयाभिधेति** । एतदपि सम्यग्व्युत्पादितं लक्षणादेरभिधातो भेदसमर्थनवादे तर्कताण्डवे ।

**या०**— 'न हि लक्षितलक्षणा मुख्यार्थासम्भवमात्रेणाश्रीयते किन्तु लक्षितस्यापी'त्यत्र हि-शब्देन प्रसिद्धिरेव साधकत्वेनोक्ता । अपरं च तत्र साधकमाह **किञ्चेति** । तथा चामुख्यवृत्तिस्वीकार-तारतम्यान्यथाऽनुपपत्तिरेवोक्तार्थसाधिकेति भावः ॥ **तद्धितमुत्पाद्येति** । शैषिकमणादिकमुत्पाद्येत्यर्थः ॥ **तस्यापि लुपीति** । पुष्यमूलेषु बहुलमिति वार्तिके बहुलग्रहणेन लुपि कृत इत्यर्थः । अत्र लुपीत्युक्त्या लुबर्थे प्रकृतिलिङ्गवचने भवत इति सूचयति । 'लुपि युक्तवद्व्यक्तिवचने' इति वचनादिति ज्ञातव्यम् ॥ **सर्वं सेत्स्यतीति** । गङ्गाशब्दात्प्रवाहतीरयोरुपस्थितिः । गोशब्दाद्गोवाहीकयोरुपस्थितिरित्यादिकं सर्वं सिध्यतीति भावः । **नियन्त्रणं** नियमनम् ।

**श्री०**— **तद्धितमिति** । ननु गौर्वाहीक इति प्रयोगे गौरित्यत्र सादृश्ये विवक्षिते सति यदि तद्धितो वत्प्रत्ययः तर्हि गोवद्वाहीक इति प्रत्ययो दृश्येत इति चेत् । तस्य लोपकरणात् । तथा च गोशब्दात्प्रसिद्धगोरूपस्थितिवद्गोवद्विद्यमानो गौरिति वाहीकोपस्थितिरपि मुख्यवृत्त्यैव भविष्यति । तथा गङ्गाशब्दात्तत्सम्बन्धीत्यर्थे तस्येदमिति यदि तद्धितोऽण्प्रत्ययस्तर्हि णित्वादादिवृद्धौ गाङ्गेति स्यादिति न वाच्यं । अण्प्रत्ययस्य लोपकरणात् । तथा च गङ्गाशब्दात्प्रवाह इव तीरोपस्थितिरपि मुख्यवृत्त्यैव भविष्यतीत्यर्थः । यथा हरीतकीशब्दो वृक्षवाची तथा हरीतक्या इदं फलमिति सम्बन्धार्थे अण्प्रत्यये जाते हारीतकीति भाव्ये प्रत्ययस्य लोपे हरीतक्याः फलं हरीतकीति भवति । तद्वद्गौरिव विद्यमानो गौर्गङ्गायाः सम्बन्धि गङ्गेत्यर्थोपपत्तेर्नामुख्यवृत्तिर्लक्षणा गौणी चाश्रयणीयेति भावः । **अनुसंहिते** विवक्षिते ।

**च०**— **तद्धितं शैषिकमणादिकम्** । **तस्यापि लुपीति** । पुष्पमूलेषु बहुलमितिवार्तिके बहुलग्रहणादिति भावः । **सर्वं सेत्स्यतीति** । गङ्गापदतीरप्रवाहयोरुपस्थितिर्गोपदाद् गोवाहीकयो-रुपस्थितिरित्यादिकं निखिलं सिध्यतीत्यर्थः । अत्र लुपीति वचनेन पञ्चालानां निवासो जनपदः पञ्चालाः, कुरव, इत्यादौ 'जनपदे लुप्' 'वरणादिभ्यश्च' 'पुष्पमूलेषु बहुलं' 'हरीतक्यादिभ्यश्च' इति लुब्विधानात् 'लुपि युक्तवद्व्यक्तिवचने' इति यथा वरणानामदूरभवं नगरं वरणाः, मल्लिका, जाती, विदारी, हरीतकीति प्रकृतिवल्लिङ्गवचने स्तः, तद्वत्प्रकृतेपि ते भवत इति ध्वन्यते । **नियन्त्रणं** नियमनम् ।

सु० — नन्वत्रानुपपत्तेरर्थप्रतीतिहेतुत्वेऽर्थापत्तिरेवास्तु । किं शब्दशक्तिसमाश्रयणेन । तथा हि । किमाप्तप्रणीताच्छब्दादसावर्थः प्रतीयते । अन्यथा वा । नान्यथा । उन्मत्तवाक्यादौ तदभावात् । आद्ये त्वर्थापत्तिरेव । वक्तुराप्तेः प्रतीतार्थानुपपत्तेश्च विरोधेनार्थान्तरस्य कल्प्यमानत्वात् । स्यादेवं यदि वक्तुराप्तत्वं निश्चीयेत । तस्य पदस्य तत्र शक्त्यभावेऽसंबद्धभाषिणि तस्मिन्नाप्तत्वमेव कथं निश्चीयेतेति । तदर्थमवश्यं (शब्द)शक्तिराश्रयणीयेति सर्वमवदातम् ॥ एतेनैतदपि परिहृतम् । यदभिहितं पूर्वपक्षिणा । योगस्य रूढितो दुर्बलत्वेन न परमेश्वरस्य मुख्यार्थत्वमिति । महायोगस्याविद्वद्रूढिमात्रात्प्राबल्योपपत्तेः । विद्वद्रूढेरप्युक्तत्वेन तत्सहितस्य योगस्य सुतरां तदुपपत्तेरिति ।

शे० — **शब्दशक्तिसमाश्रयणेनेति** । शब्दवृत्तिसमाश्रयणेनेत्यर्थः । परिहरति **स्यादेवमिति** । अनेन पूर्वस्य प्रथमप्रतीतस्य वक्तुराप्तत्वस्यायोगे वृत्त्यभावेनानुपपत्तौ प्राप्तायां परस्यास्तन्निर्वाहिकाया लक्षणाया ग्रहः स्वीकारः इति मूलयोजना सूचिता भवति । **शक्त्यभावे** वृत्त्यभावे । शक्तिर्वृत्तिः ॥ **एतेनेति** । महायोगमहारूढियोगयोः परममुख्यत्वोपपादनेन रूढियोगयोश्च मुख्यमात्रत्वोपपादनेनेत्यर्थः ॥ **योगस्येति** । अवयवे रूढिं विना समुदाये योगासम्भवेनोपजीव्यत्वाद्रूढेः प्राबल्यं योगस्य चोपजीवकत्वाद्दुर्बलत्वमित्यर्थः । अत एव रथकारादिशब्देषु सङ्करजातौ रूढ्या रथकर्तरि योगस्यापहार इति भावः ॥ **महायोगस्येति** । महायोगस्याविद्वद्रूढितः प्राबल्यं च 'एतमेव तथा सन्तमि'त्युत्तरवाक्यव्याख्यानावसरे टीकायामुपपादितमनुमन्धेयम् ॥ **विद्वद्रूढेरिति** । यवादिशब्दानां प्रियङ्ग्वादिषु म्लेच्छप्रसिद्धितोऽपि दीर्घशूकेष्वार्यप्रसिद्धेरिव, रूढित्वाविशेषेऽपि बालानां चित्रलिखितसिंहे सिंहप्रसिद्धिवद् दुर्बलाऽतोऽविद्वद्रूढितोऽसम्भाविताज्ञानमूलाया विद्वद्रूढेरेव प्राबल्यात्तत्साहित्येन योगस्याविद्वद्रूढितः सुतरां प्राबल्यसिद्धिरिति भावः ॥ **उक्तत्वेनेति** । उभयं दृश्यते विष्णावित्यनेनेति शेषः ।

स० — परिहरति **स्यादेवं यदीति** ॥ **शक्त्यभाव इति** ॥ वृत्त्यभाव इत्यर्थः । एवमग्रेपि शक्तिः वृत्तिः ॥ **एतेनेति** । इतो हि रूढ(ढि)तान्येषामित्यादिनेत्यर्थः । एतदेव विवृणोति **महायोगस्येति** ॥ इतो हि रूढतान्येषां इत्यनेनाविद्वद्रूढिमात्रान्महायोगस्य प्राबल्यं सूचितम् । अत एवाह **उपपत्तेरिति** ॥ तत्र यद्यपि कण्ठरवेणेन्द्रादिशब्दानां पुरंदरादौ रूढिः परमैश्वर्यादित्येवोक्तम् । तथापि रूढार्थेन्द्रादिभ्यो यौगिकार्थस्य हरेराधिक्येऽभिहिते तद्विषयस्य विशिष्टयोगस्य लौकिकरूढितः प्राबल्यमर्थात्सिध्यति । अत एवाग्रे सूचितमिति वक्ष्यतीति द्रष्टव्यम् ॥ विद्वद्रूढेरप्युक्तत्वेनेत्युक्तं । उभयं दृश्यते विष्णौ इत्यनेनेत्यर्थः ।

**प०**— नन्वत्रेत्यादिना कृतचोद्यं निराह **स्यादेवं यदीति** । शक्तिपदेनात्र वृत्तिर्ग्राह्या ॥ **सर्वमिति** । परैरुक्तं सर्वमवदातं शोधितमित्यर्थः ॥ **एतेनेति** । परममुख्यायोगे मुख्यग्रह इत्यर्थ-(इत्येतत्)सूचकेन पूर्वायोगे परग्रह इत्यनेनेत्यर्थः ॥ **उक्तत्वेनेति** । उभयं दृश्यत इत्यनेनेति भावः ।

**या०**— परिहरति **स्यादेवमिति** ॥ **शक्त्यभाव इति** । वृत्त्यभाव इत्यर्थः । एवमग्रेऽपि । शक्तिर्वृत्तिः । अनेन पूर्वस्य प्रथमं निश्चये वक्तुराप्तत्वायोगे वृत्त्यभावेनानुपपत्तौ प्राप्तायां परस्यास्तन्निर्वाहिकाया लक्षणाया ग्रहः स्वीकार इति मूलयोजनोक्ता भवतीति ज्ञातव्यम् ॥ **एतेनेति** । 'इतो हि रूढ(ढि)ताऽन्येषामि'त्यादिना महायोगमहारूढियोगयोः परममुख्यत्वोपपादनेन रूढियोगयोर्मुख्यत्वमात्रव्युत्पादनेन चेत्यर्थः ॥ **प्राबल्योपपत्तेरिति** । परममुख्यवृत्तित्वादेवेति भावः । अत एवाग्रे सूचितमिति वक्ष्यति ॥ **विद्वद्रूढेरप्युक्तत्वेनेति** । 'उभयं दृश्यते विष्णावि'त्यनेनेत्यर्थः ॥

**श्री०**— **शब्दशक्तिः** शब्दवृत्तिः । **विरोधेन** परस्परमिति शेषः ॥

**च०**—**शब्दशक्तिसमाश्रयणेन** शब्दसामर्थ्याश्रयणेन । **तत्र शक्त्यभावे** तन्निरूपितवृत्त्यभावे ।

**सु०**— **यदुक्तम् 'उभयं दृश्यते विष्णौ' इति, यच्च सूचितं विशिष्टयोगस्य रूढितः प्राबल्यमिति तदुपपादयति** एतमेवेति ।

**अनु०**— एतमेव तथा सन्तं शतर्चीत्यादिका श्रुतिः (नामभिः) ॥
आचक्षत इति ह्यत्र सन्तमित्यवधारणात् ॥
योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्रगाम् ।
बहुशो दर्शयत्यञ्जस्तात्पर्यात्सनिरुक्तिकम् ॥

**'तं यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तं स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मान्मध्यमास्तस्मान्मध्यमा इत्याचक्षत एतमेव सन्तम्' इत्यादिका श्रुतिः । सनिरुक्तिकं योगवृत्तिसाहित्येन ।** तत्रगां **परमेश्वरविषयाम् । शतर्चादिशब्दोपलक्षितानां सर्वशब्दानां विद्वद्रूढिं दर्शयति । आचक्षत इत्युक्तत्वात् । यच्चात्र बहुशोऽतिबहुवारं दर्शयति तेन ज्ञायते अञ्जस्तात्पर्यादेव न तु प्रासङ्गिकत्वेनेति । किञ्चात्र सन्तमिति वचनादेतमेवेत्यवधारणाच्च लौकिकरूढितो भगवद्विषयस्य योगस्य प्राबल्यं दर्शयति श्रुतिः । एतमेव परमात्मानं शतर्चादिनामार्थं सन्तम् उक्तेन योगेन शतर्चादिशब्दवाच्यमाचक्षते विद्वांसः । मधुच्छन्दःप्रभृतींस्तु रूढार्थानमुख्यत इत्यस्यार्थस्य पदद्वयसामर्थ्येन प्रतीतेः ।**

**सन्तमित्यनेन ह्यगङ्गां गङ्गेत्याचक्षते यथा न तथा हरिमिति मुख्यार्थतोच्यते । तदुपपादनार्थम् आचक्षत इति निर्वचनं च सम्बध्यते । अवधारणेन त्वन्यस्य तच्छब्द(मुख्य)ार्थत्वं प्रतिषिद्ध्यते । न च सर्वथा प्रतिषेधो युक्तः । प्रागुक्तप्रयोजनव्याघातात् । ततः परमेश्वरसमकक्षतया वाच्यत्वप्रतिषेधो ज्ञायते । रूढार्थेभ्यो यौगिकार्थस्याधिक्येऽभिहिते तद्विषयस्य विशिष्टयोगस्य लौकिकरूढितः प्राबल्यं सिद्धम् । अवधारणेति क्वचित्पाठः । अत्र सन्तमिति पदं अवधारणा चेति (पद)द्वयं दर्शयतीति योजना । हि यस्मादेवं तस्मादुक्तं युक्तमिति ।**

शे० — **बहुवारमिति** । अनेकवारमित्यर्थः । श्रुतौ 'तस्माच्छतर्चिनस्तस्माच्छतर्चिनः' इत्याद्यभ्यासादिति भावः ॥ **एतमेव परमात्मानमिति** । प्राणस्तथेत्यत्र ब्रह्मत्वेन निर्णीतस्य 'प्राणो ह्येष य एष तपति' इति पूर्ववाक्यस्थस्य प्राणस्यैव 'एतम्' इत्यनेन परामर्श इति भावः ॥ **प्रागुक्तेति** । व्युत्पत्त्युपपत्त्यादिरूपप्रयोजनव्याघातादित्यर्थः ।

स० — **यदुक्तमुभयमिति** । अत्र क्रमोल्लङ्घनं वक्ष्यमाणोपपादनानुसारेणेति ज्ञेयम् ॥ **उक्तेन योगेनेति** । 'तं यच्छतं वर्षाण्यभ्यार्चत्' इत्याद्युक्तप्रकारेणेत्यर्थः । **आचक्षत इति निर्वचनं संबध्यत इति** । अत्र यद्यपि तावन्मात्रं निर्वचनं न भवति तथापि पूर्ववाक्यसहितं इदं तथा भवत्येवेति ध्येयम् । नन्वेतावता रूढार्थेभ्यः यौगिकार्थस्याधिक्यमभिहितम् । तथापि विशिष्टस्य योगस्य रूढितः प्राबल्यसिद्धिः कथमित्यत आह **रूढार्थेभ्य इत्यादिना** ॥ **पदद्वयमिति** । इदं कर्तृ, योगस्य रूढेः प्राबल्यं कर्म, दर्शयतीति योज्यमित्यर्थः ।

प० — **विशिष्टयोगस्येति** । महायोगस्येत्यर्थः । रूढितः अज्ञरूढितः । तं ब्रह्मादिदेहम्, अभ्यार्चत् प्राप्नोत्, इदं सर्वं जगत्, मध्यत उदरे ॥ **श्रुतिरिति** । ऐतरेयोपनिषद्रूपा ॥ **इत्युक्तत्वादिति** । आचक्षते विद्वांस इत्यनेन प्रयोगबाहुल्यस्योक्तत्वात्प्रयोगबाहुल्यस्य 'प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयते' इत्यनेन रूढित्वेनोक्तत्वादित्यर्थः । शस्प्रत्ययार्थोऽतीति ॥ **उक्तेन योगेन** तं यच्छतमित्यादिनोक्तयोगेनेत्यर्थः ॥ **पदद्वयेति** । एतं सन्तमिति पदद्वयसामर्थ्येनेत्यर्थः । तद्व्यनक्ति **सन्तमित्यादिना** ॥ **इति निर्वचनमिति** । मूले क्रमेण तावतैवोक्तेराचक्षत इति निर्वचनमित्युक्तम् । 'तं यच्छतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिन इत्याचक्षत' इति शतर्च्याद्यवयवार्थं सन्तमिति संबध्यत इत्यर्थः ॥ **प्रागुक्तेति** । ज्योतिरादिशब्दव्युत्पत्ति-कर्मानुष्ठानसंभव-लोकव्यवहारानुच्छेदरूपप्रयोजनानां प्रयोजनबहुत्वत इत्यत्रोक्तानां व्याघातादित्यर्थः । तावता रूढार्थेभ्यो यौगिकार्थस्याधिक्यमभिहितम् । तथापि रूढितो विशिष्टयोगस्य कथमाधिक्यसिद्धिरित्यत आह **रूढार्थेभ्य इति** ॥ **उक्तं युक्तमिति** । 'उभयं दृश्यते विष्णौ' इत्युक्तं, विशिष्टयोगस्य रूढितः प्राबल्यं च युक्तमित्यर्थः ।

च० — **शतं वर्षाणीति** । 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः' इत्यनुशासनाच्छत-पदोत्तरमेकवचनम् । 'कालाध्वनोरत्यन्तसंयोगे' इत्यनेनात्राभिव्याप्तिरूपात्यन्तसंयोगार्थिका द्वितीया ।

**सु० — वाक्यान्तरैरपि विष्णोः सर्वशब्दवाच्यतामुपपादयति** अः इतीति ।

अनु० — अः इति ब्रह्म कथितं तद्व्याख्यानात्मता तथा ॥
शब्दानामपि सर्वेषां

**'अः इति ब्रह्म' इति श्रुतावकारस्य ब्रह्मवाचकत्वं तावत्कथितम् । अन्यथा इतिकरण-वैयर्थ्यात् । 'अकारो वै सर्वा वाक्' इति श्रुतौ सर्वेषामपि शब्दानामकारव्याख्यानता च कथिता साक्षादैक्यस्य प्रत्यक्षादिविरुद्धत्वेन लक्षणाश्रयणस्यावश्यकत्वात् । न च व्याख्यान-व्याख्येययोर्भिन्नविषयता युक्ता । तस्मादेतद्वाक्यद्वयपर्यालोचनया सर्ववागभिधेयत्वं ब्रह्मणः प्रतीयते ।**

प० — **इतिश्रुताविति** । ऐतरेये । अत्र विसर्गलोपेन निर्देशे कार्ये सविसर्गस्योक्तिकृत्यम् 'विवृतावपि सर्गःस्यात्संहितायां च यत्र हि । समानोत्तमहीनत्वमुच्यते वस्तुनोञ्जसा' इत्यैतरेये भाष्यदिशा ज्ञेयम् । **अन्यथेति** । ऐक्यपरत्वे अः ब्रह्मेत्येव पूर्तेरिति भावः । **लक्षणाश्रयणस्येति** । 'अकारोवै सर्वावाक्' अकारव्याख्यानं वै सर्वा वागित्येवं लक्षणाश्रयणस्येत्यर्थः । तावता कुत. सर्ववागर्थता ब्रह्मण इत्यत आह **न चेति** ।

**सु०- किञ्च 'यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु तद्वियूय कवयो-ऽन्वविन्दन्नामायत्ता समतृप्यन्कृतेधि इत्यस्यां श्रुतौ (ऐ·उ· २–३–८) वाचो वाक्समूहस्य मध्ये यत् ओमिति पदमङ्गीकारवाचीति यावत्, यच्च नेति पदं प्रतिषेधार्थं, यच्चास्या वाचो मध्ये क्रूरम् अर्थतः कठिनं (च), यच्चोल्बणिष्णु शब्दत कठिनम् । उपलक्षणमेतत् । यावद्वैदिकं पदजातं तत्सर्वं; वियूय विचार्य कवयो विवेकिनः, (नामायत्ता)नामायत्तानि नामप्रकाश्यतया नामाधीनानि त(त्त)च्छब्दप्रवृत्तिनिमित्तानि, अन्वविन्दन् विदितवन्तः । तस्मिंश्च वेदनेऽधिश्रुते परिपक्वे सति अ(तद)नन्तरं समतृप्यन् कृतकृत्या मुक्ता अभूवन्निति, नाममात्रविदः कृतकृत्यता तावत्कथिता । तमेवं विद्वानिति परमेश्वरज्ञानादेव मोक्षः श्रूयते । तदेतदुभयान्यथानुपपत्त्या सर्वाण्यपि वैदिकानि नामानि परमेश्वरार्थानीति गम्यत इत्याह** नामेति ।

अनु० — नामवित्कृतकृत्यता ॥

शे॰— 'अर्थतः कठिनं क्रूरमुल्बणं श्रवणाप्रिय'मित्यैतरेयोपनिषद्भाष्योदाहृतप्रमाणानुसारेण क्रूरोल्बणशब्दौ व्याचष्टे क्रूरमर्थतः कठिनमित्यादिना ।

प॰— नामवित्कृतकृत्यतेत्येतद्विवृण्वन्नेवावतारयति किञ्चेत्यादिना । अस्यां श्रुतौ ऐतरेयश्रुतौ ।

सु॰— अथान्यच्च सकलवैदिकसंहितानां पूर्वोत्तरवर्णानां च विष्णुनामार्थ(रूप)त्वं तत्प्रतिपादकत्वमब्रवीद्वेदः । तेन सर्वे वर्णाः सर्वाश्च संहिता विष्णुमेव प्रतिपादयन्तीति ज्ञायत इत्याह विष्णुनामेति ।

अनु॰— विष्णुनामार्थरूपत्वं संहितादेरथाब्रवीत् ॥

क्वाब्रवीदित्यतस्तद्वाक्यमर्थतः पठति । णकारं चेति ॥

णकारं च षकारं च बलचेष्टात्मकं वदन् ॥
तज्ज्ञानपूर्वकत्वेन संहिताऽध्ययनं तथा ॥

'णकारो बलं षकारः प्राण आत्मा'इति विष्णुनामगतौ णकारषकारौ परमेश्वरबलचेष्टाप्रतिपादकौ वदन् वेदोऽनन्तरं 'स यो ह एतौ णकारषकारावनुसंहितमृचो वेदेत्यृचामनुसंहितं सर्वसंहितासु णकारषकारौ यो वेद णकारषकारतत्संहिताभिः प्रतिपाद्यो योऽर्थः स एव सर्वत्र पूर्वोत्तरवर्णतत्संहिताभिः प्रतिपाद्यत इति यो वेत्ति द, इति विष्णुनामसमानार्थताज्ञानपूर्वकत्वेन सर्वसंहिताऽध्ययनमब्रवीदित्यर्थः ।

नन्वत्र णकारषकारार्थप्रतिपादकत्वं सर्ववर्णादेरुच्यते । न तु विष्णुनामार्थत्वम् । न हि णकारषकारावेव विष्णुनामेत्यत आह उपसर्गत्वत इति ।

उपसर्गत्वतो वेस्तु ताच्छील्यार्थादुनस्तथा ॥
णकारश्च षकारश्च नामरूपतया मतौ ।

सत्यं सन्ति विष्णुनाम्न्यन्येऽपि वर्णाः । तथाऽपि वीत्यस्योपसर्गत्वेनोत्तरपदार्थविशेषकत्वात् उन्प्रत्ययस्य ताच्छील्यार्थत्वादुपसर्जनत्वं मन्वानस्य वेदस्य प्राधान्यात् णकारश्च षकारश्च द्वावेव नामस्वरूपतयाऽभिमतावित्यदोषः । ननूपसर्गाः क्रियायोगे । न चात्र क्रिया योगोऽस्ति । तत्कथमुपसर्गत्वम् । मैवम् । षोन्तकर्मणि, णुस्तुताविति धातुद्वयरूपत्वाङ्गीकारात् । अत एव ताच्छीलिकप्रत्ययोत्पत्त्युपपत्तिः ।

उदाहृतानां श्रुतीनां प्रयोजनमाह तस्मादिति ।

तस्मात्समन्वयो विष्णौ स्वरवर्णपदात्मनः ॥

अपि वेदस्य किमुत वाक्यरूपेण सङ्गतिः ॥

**यौ पुरा सर्वशब्दानां प्रतिपदसमन्वयो वाक्यसमन्वयश्च विष्णावुक्तौ तावेताभिः श्रुतिभिः सिद्धावित्यर्थः ।**

शे० — सर्ववर्णादेरित्यादिपदेन संहितापरिग्रहः । ततश्च सर्ववेदगतपूर्वोत्तरवर्णसंहितानामित्यर्थः । **अन्येऽपि वर्णा इति** । वीत्यत्र वर्णद्वयसत्त्वाद्बहुवचनोपपत्तिरिति ज्ञेयम् ॥ **धातुद्वयेति** । निर्वचनत्वादुभयत्रान्तलोपो द्रष्टव्यः । धातूनामनेकार्थत्वादुक्तचेष्टाबलार्थकत्वसिद्धिरिति भावः ॥ **अत एवेति** । षकारणकारयोरुक्तरीत्या धातुद्वयरूपत्वादेवेत्यर्थः ॥ **प्रत्ययेति** । उन्प्रत्ययेत्यर्थः ॥ **उपपत्तिरिति** । अन्यथा धात्वधिकारविहितत्वात्तदनुपपत्तिप्रसक्तेरिति भावः ।

स० — **सर्ववर्णादेरुच्यत इति** । अत्र आदिपदेन संहिता ग्राह्या । सर्ववेदगतपूर्वोत्तरवर्णसंहितानामित्यर्थः ॥ **अत एव ताच्छीलिकेति** । धातुद्वयरूपत्वादेव धात्वधिकारविहितताच्छीलिक-उन्प्रत्ययोत्पत्तिः; अन्यथा साऽनुपपन्नेति भावः ।

प० — **वदन्वेद इति** । ऐतरेयवाक्यमित्यर्थः । **अनन्तरमिति** । 'णकारो बल'मित्यादिवाक्यादनन्तरमित्यर्थः । सर्ववर्णादेरित्यादिपदेन संहिताग्राह्या । **अत एवेति** । धातुरूपत्वादेव धात्वधिकारविहितोन्प्रत्ययोत्पत्त्युपपत्तिरित्यर्थः । पृषोदरादित्वादत्र यथायोगं वर्णलोपादिः पूर्वोक्तदिशा सुज्ञान इति भावः ।

या० — **सर्ववर्णादेरुच्यत इति** । अत्रादिपदेन संहिता ग्राह्या ॥ तथाच सर्ववेदगतपूर्वोत्तरवर्णसंहितानामित्यर्थः । अत एव पूर्वमपि णकारषकारसंहितार्थप्रतिपादकत्वमिति संहिता ग्राह्या ॥ **अन्येऽपि वर्णा इति** । वीत्यत्र वर्णद्वयमभिप्रेत्य बहुवचनमिति ज्ञातव्यम् ॥ **धातुद्वयरूपेति** । निर्वचनत्वेनोभयत्रान्तलोपे षकारणकारयोरुक्तधातुद्वयरूपत्वमुपपन्नम् । धातूनां चानेकार्थत्वात्प्रागुक्तचेष्टाबलार्थकत्वं च तयोरिति भावः ॥ **अत एवेति** । षकारणकारयोरुक्तरीत्या धातुद्वयरूपत्वादेवेत्यर्थः । अन्यथा धात्वधिकारविहितस्य ताच्छीलिकार्थ-उन्प्रत्ययस्योत्पत्तिरनुपपन्नेति भावः ॥

श्री० — **संहितानामिति** । अत्र संहिताशब्देन सन्धिरुच्यते । एवमेवोत्तरत्रापि ज्ञेयम् ॥ **अन्येऽपि वर्णा इति** । वीत्यत्र वकार इकारश्च, ष्णुरित्यत्र उकार एक इति त्रयो वर्णा इत्यर्थः ।

च० — **अन्येऽपि वर्णा इति** । वीत्यत्र स्वरव्यञ्जनभेदेन वर्णद्वयसद्भावाद्बहुवचनोपपत्तिः 'न पुनरन्तरेणाचं व्यञ्जनोच्चारणमपि भवती'ति भाष्योक्तेः ॥ **धातुद्वयेति** । 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' इत्यभियुक्तोक्तेः

निर्वचनत्वेनोभयत्रान्तलोपोऽवसेयः । अनेकार्था हि धातव इति वचनाच्चेष्टाबलार्थकत्वं तयोरवधेयम् । **अत एव** तयोरुक्तदिशा धातुद्वयरूपत्वादेव । तयोस्ताद्रूप्यानुपगमे धात्वधिकारीयतादृशप्रत्ययस्य तदुत्तरमनुत्पादप्रसङ्ग इत्याशयः ॥

**सु०— उपपत्त्यपेक्षाः श्रुतयः प्रागुदाहृताः । इदानीं स्पष्टं पदवाक्यसमन्वयप्रतिपादिनीरुदाहरति** घोषा इति ।

**अनु०**— घोषाः सर्वेऽपि वेदाश्च सर्वे वेदाश्च यत्पदम् ।
इन्द्रं मित्रं यमिन्द्रं च प्रथमं(मः) सङ्कृतिस्तथा ॥
नामधाः सर्वदेवानामेक इत्यादिका श्रुतिः ॥
प्रमाणमुक्तविषये

**'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राणा एव', सर्वे वेदा यत्पदमामनन्ति', 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः', यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः' 'स प्रथमसं(स)कृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणोऽग्निः' । 'यो देवानां नामधा एक एवे'त्येतानिवाक्यान्येतैः प्रतीकैरुपात्तानि । आदिपदेन 'नामानि सर्वाणि' इत्यादेर्ग्रहणम् । अत्राद्यद्वितीयान्तिमश्रुतयः समन्वयद्वये प्रमाणम् । अन्यास्तु वाक्यान्वये । इन्द्रादिनाम्नां परमेश्वरपरत्वे सति 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इत्यादिवाक्यानां तत्परत्वं हि सिद्ध्यति ।**

**शे०** — उदाहृतश्रुतीनां प्रतिपदसमन्वयवाक्यान्वययोरन्यतरमात्रविषयकत्वभ्रान्तिं सर्वासामपि उभयविधसमन्वयपरत्वभ्रान्तिं च परिहरति **अत्रेति** ।

**प० — उपपत्त्यपेक्षा इति** । एतद्वाक्यद्वयपर्यालोचनयेति, तदुभयान्यथानुपपत्त्येति, उपसर्गत्वतो वेस्त्वित्याद्युक्तोपपत्तिसापेक्षा इत्यर्थः । **ता वा एता इति** । यास्ता एताः सर्वा ऋचस्तासामेकमेव-(व्याहृतिः)व्याहर्तव्यम् । तच्च प्राण एव । प्राणस्तथेत्यत्रोक्तन्यायेन विष्णुरेव । ये च सर्वे वेदास्तेषामपि प्राण एव व्याहृतिर्व्याहर्तव्यः प्रतिपाद्यः किमु ऋचाम् । किञ्च ये समुद्रादिघोषास्तेषामपि मन्त्रशास्त्रप्रसिद्धनादरूपवर्णाभिव्यक्तिद्वारा प्राण एव प्रतिपाद्यः किमु वेदानामित्यर्थः । **सर्वे वेदा इति ।** 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये'इत्युपक्रम्य तद्विष्णोः परमं पदमिति काठके श्रवणाद्विष्णोस्सर्ववेदप्रतिपाद्यत्वसिद्धिः । अन्तेऽग्नियममातरिश्वशब्दश्रवणात् कृत्स्न-ऋच उक्तिः । अस्य वाक्यस्य वामनसूक्तस्थत्वाद्विष्णुपरत्वसिद्धिरिति

भावः । इन्द्रमित्यादिश्रुतीनामिन्द्रादिशब्दवाच्यत्वपरत्वमेव न त्विन्द्राद्यैक्यपरत्वमित्यादि तु चन्द्रिकायामन्तर्नये ऐतरेयाथर्वणभाष्ययोश्च व्यक्तम् । **समन्वयद्वय इति** । पदसमन्वये वाक्यसमन्वये चेत्यर्थः । सर्वे वेदा इत्युक्तेः पदविधया वाक्यविधया चेत्येवं परत्वसंभवान्नामधा इत्यादावप्येवमेवोपपत्तेरिति भावः । य इन्द्रमित्यादौ वाक्यान्वयमात्रपरत्वं व्यनक्ति **इन्द्रादीति** । ननु ता वा इत्यादिश्रुतीनामपि ब्रह्मणि पदसमन्वयान्नैताभिः सर्वशब्दवाच्यत्वसिद्धिरिति चेन्न । एतासां लोकप्रसिद्धपदार्थसंसर्गाबोधकत्वे तद्बोधाधीनस्य पदसमन्वयस्यैवासिद्धिः । बोधकत्वे तु न पदसमन्वयो येन स्वोपजी-(व्यो)व्यं ब्रह्मणः सर्वशब्दवाच्यत्वरूपसंस(र्गो बाध्येत)र्गं बाधेत । स्वाध्यायोऽध्येतव्य इति वाक्यवच्चैतासां विनियोक्तृत्वविनियोज्यत्वे न विरुद्धे इति भावः ।

**श्री०**— वाक्यान्वय इत्युक्तमुपपादयति **इन्द्रादीति** ।

सु०— **नन्वेतदर्थप्रतिपादकसूत्रस्यादर्शनादुत्सूत्रितोयमर्थः कस्मादुक्त इत्यत आह तदेवेति ।**

अनु०— तदेवोक्तमुपक्रमात् ॥
इति स्वयं भगवता ब्रुवताऽशेषमन्वयम् ॥ २ ॥

---

**तदेतद्भगवता सूत्रकारेण स्वयमुक्तमेव नोत्सूत्रितं कथ्यते । तथा च सूत्रम् । 'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके' इति । अत्र ज्योतिरिति सूत्रप्रतीके ग्राह्ये यदुपक्रमादित्याह, तेन 'ज्योतिरुपक्रमा' इति परेषामपपाठ एवेति सूचयति । अथत्राऽत्र ज्योतिर्मात्रग्रहणात्कथं सर्वशब्दप्रतिपादनम् ।** ज्योतिःशब्दस्योपलक्षणत्वादिति वदामः । **कथमुपलक्षणाभिप्रायोऽवगम्यत इत्यत उक्तं** उपक्रमादिति ब्रुवतेति ।

**अत्र हि 'ज्योतिः इति प्रतिज्ञाय उपक्रमात्तु तथा ह्यधीयत एके' इति हेतुरुच्यते । तस्य चायमर्थः** । **'एष इमं लोकमभ्यार्चत् इत्युपक्रमात् उपक्रमं विधाय** ता वा एता **इत्याद्यधीयत एक इति** । **तथाच यदि ज्योतिश्शब्दमात्रसमन्वयोऽत्र विवक्षितः स्यात्तदा तन्मात्रोपपादकं किमपि वक्तव्यम्** । **सर्वशब्दवाच्यतोपपादकस्योपादानं क्वोपयुज्यते** । **न हि विशेषविषयं प्रमाणं नास्ति, येन** सामान्यद्वारा साधनं विधेयम् । **अतः सर्वविषयं प्रमाणमुपाददानेन सूत्रकृता ज्योतिश्शब्दो लाक्षणिको विवक्षित इति ज्ञायते** ।

**किञ्च तत्तु समन्वयादिति ब्रह्मणि सर्वशब्दसमन्वयः प्रतिज्ञातो न कतिपयशब्दसमन्वय इत्युपपादितम्** । **तद्विवरणार्थमध्यायशेषस्य प्रवृत्तिरिति चोक्तम्** । **तत्रानन्दमयाद्यधिकरणैः**

**प्राकरणिकशब्दसमन्वयः प्रतिपादितः । अस्मिंश्च पादे विरोध्यादिशब्दसमन्वयः । तथा च कर्मक्रमाद्यभिधायिनः शब्दाः, इदं च अधिकरणमवशिष्टमिति परिशेषात्तत्समन्वयार्थमेतदिति ज्ञायत इत्याशयवानाह** ब्रुवतेति । **अस्त्वत्र सर्वशब्दसमन्वयप्रतिज्ञानम् । तथाऽपि योऽत्र तदुप(त्प्रति)पादनार्थं जातमोतमित्यादिनाऽन्वयो(न्यायो)भिहितः स न सूत्रित इत्यतो वोक्तम्** उपक्रमादिति । **'एष इमं लोकमभ्यार्चत्' इत्युपक्रमवाक्यमुपादाय तथा ह्यधीयत एक इति वदता सूत्रकारेण तदेवोक्तं यदस्माभिरुक्तम् । उपक्रमे सर्वस्यास्य दर्शनात् । यथा चैतत्तथा एतमेव इत्यादिनोक्तमिति ॥ १-४-२ ॥**

**शे०**— अभाष्यत्वशङ्कापरिहारार्थत्वान्नोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य तच्छङ्कामुत्थापयति **नन्विति ॥ अपपाठ एवेति** । मूलपुस्तकेष्वदर्शनादिति भावः ॥ **उपक्रमं विधायेति** । अनेनोपक्रमादिति पञ्चमी ल्यब्लोपनिमित्तेत्युक्तं भवति ॥ **इत्युपपादितमिति** । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तम्' इत्यादिनाऽऽनन्दमयाधिकरणान्त इति शेषः ॥ **उक्तमिति** । 'इति कृत्वा हृदि प्रभुः । समन्वयं साधयति'इत्यादिनेति शेषः । विरोध्यादीत्यादिपदेन बहुत्वविशिष्टार्थवाचिपञ्चजनादिशब्दसंग्रहः ॥ १-४-२ ॥

**स०— ब्रह्मणि सर्वशब्दसमन्वय इति** । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्व' इत्यादिना सर्वमुक्तमिति भावः ।

**प०— इत्युपपादितमिति ॥ इति चोक्तमिति** । ''जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः । अन्वयः सर्वशब्दानां गुणसर्वस्ववेदक'इत्यनेन । तथा । 'एवं शास्त्रावगम्यत्वे विभागेन समन्वयमि'त्यादिना(चा)नन्दमयनये उपपादितमित्युक्तमिति ज्ञेयम् । **प्राकरणिकेति** । तत्प्रकरणस्थशब्दसमन्वय इत्यर्थः ॥ **विरोध्यादीति** । विरोधिसर्वबाहुल्येति विषयमालाव्याख्यानेन तत्प्राग्विवृतमिति भावः ॥ २ ॥

**या०— अपपाठ एवेति** । अपपाठत्वं च वक्ष्यमाणरीत्या तदीयसूत्रार्थस्यायुक्तत्वेन तेजसस्तद्रूपमिति श्रुत्यनुगमाय लाघवाय च तेजआदिरित्येव वक्तव्यत्वेनाजापदाध्याहारप्रसङ्गेन च ज्ञातव्यम् ॥

**श्री०**— ननु ज्योतिःशब्दसमन्वयसाधकप्रमाणाभावात्सामान्यतः सर्वशब्दवाच्यत्वोपपादकमेव प्रमाणमुपात्तम् । तेन ज्योतिःशब्दस्यापि समन्वयसिद्धिरिति चेत्तत्राह **न हीति ॥ सर्वशब्देति । उक्त**वक्ष्यमाणैतत्कर्मक्रमादिवाचकसर्वशब्देत्यर्थः ॥ १-४-२ ॥

**च०— अपपाठ एवेति** । अपपाठत्वं च मूलकोशेष्वदर्शनादभिधास्यमानदिशा तदीयसूत्रार्थाभिधानासामञ्जस्येन अजापदाध्याहारप्रसङ्गेन च ज्ञेयम् ।

( इति सिंहावलोकनन्यायेन समाकर्षाधिकरणज्योतिरधिकरणयोः किञ्चिद्विवरणम् । )

**सु०— एवं संक्षेपविस्तराभ्यां आनुमानिकमित्यादिसूत्राणि व्याख्याय परेषां व्याख्यानं प्रत्याख्याति । तथा हि । केचिदेतत्पादप्रमेयमन्यथा वर्णयन्ति । यदुक्तं प्रधानस्याशाब्दत्वमीक्षतेर्नाशब्दमिति । तदसिद्धम् कासुचिच्छाखासु प्रधानसमर्पणपराणां शब्दानां श्रूयमाणत्वादिति । तदेतद्यावन्न निराक्रियते न तावद्ब्रह्मकारणवाद(स्य)स्थैर्यं भवति । अतः प्रधानस्याशाब्दत्वं प्रतिपादयितुमयं पाद आरभ्यत इति । तत्तावन्निराचष्टे** न शब्दवाच्यतैवेति ।

**अनु०—** न शब्दवाच्यतैवात्र प्रधानस्य निषिध्यते ।

अत्रैव **प्रथमेऽध्याये प्रधानस्य शब्दवाच्यता निषिद्ध्यत इति नोपपद्यते । तथा सति समन्वयलक्षणेऽन्तर्भावाभावेन पादस्यासङ्गतत्वप्रसङ्ग इति भावः । ननूक्तमत्र समन्वयस्थेम्ने प्रधानस्याशाब्दत्वमत्रोपपाद्यत इति; तथा च कथमसङ्गतिरिति । मैवम् । तथा सत्यविरोधलक्षणेऽन्तर्भावप्रसङ्गात । अन्यथा द्वितीया(ध्याया)र्थोऽपि समन्वयस्थैर्यायैवेति सोऽप्यत्र वक्तव्यः स्यात् । केवलं शब्दवाच्यतैवात्र प्रधानस्य निषिध्यते इति न युज्यते, । विशेषाभावात् ।**

**शे०— तत्तावदिति** । सूत्रापव्याख्यानस्याप्युत्तरत्र निराकरिष्यमाणत्वात्तावदित्युक्तम् । प्रधानाशब्दत्वप्रतिपादनस्याध्यायासङ्गतिवर्णनपरतया मूलं योजयति **अत्रैवेति** । अनेन एवशब्दो भिन्नक्रम इत्युक्तं भवति । अत्रेत्यस्य व्याख्यानम् **प्रथमेऽध्याय इति** । एवशब्दस्यात्रेत्यनेन योजनया लब्धमर्थमाह **तथा सतीति** । कुतोऽस्य व्युत्पादनस्य प्रथमाध्यायेऽसङ्गतिरित्यतोऽध्यायार्थाप्रतिपादकत्वादिति भावेनाध्यायार्थसूचनायोक्तम् **समन्वयलक्षण इति** । समन्वयो लक्ष्यते प्रतिपाद्यतेऽनेनेति समन्वयलक्षणस्तस्मिन्नित्यर्थः । अध्यायसङ्गतिश्चान्तर्भावलक्षणेति भावेनान्तर्भावाभावेनेत्युक्तम् ।

**प०**–इत्यादिसूत्राणीत्यतद्गुणसंविज्ञानबहुव्रीहिः । तदधीनत्वसूत्रज्योतिःसूत्रकल्पनासूत्राणीत्यर्थः । आद्यस्य 'दुःखिबद्धावराद्यास्तु'इति संक्षेपव्याख्या । 'स्वातन्त्र्यं तद्गतत्वं चे'त्यादिविस्तरः । ज्योतिरित्यस्य 'जातमोतमि'त्यादिः संक्षेपः । 'एतमेव तथा सन्तमि'त्यादिर्विस्तरः । कल्पनोपदेशात्, वाक्यान्वयात् , इत्यनयो'स्त्वङ्गीकृतेऽपी'त्यादिः संक्षेपः । तेषु तेष्वित्यादिर्विस्तरः । एवमन्येषां यथायोगं संक्षेपविस्तरौ ध्येयौ । यद्वा स्वाशब्दश्चेत्यादिना सर्वाधिकरणानां विषयपूर्वपक्षसिद्धान्तयुक्तीनामुक्त्या आनुमानिकादिसर्वसूत्राणां संक्षेपेण व्याख्या । तत्र कानिचिद्विस्तरेणेत्येवं संक्षेपविस्तराभ्यामित्यस्यार्थो ध्येयः । **समन्वयलक्षणे** समन्वयाध्याये । **विशेषाभावादिति** । परमते समन्वयसूत्रे ब्रह्मणि सर्वशब्दसमन्वयस्याप्रतिज्ञातत्वेन प्रधानस्याव्यक्तादिशब्दवाच्यत्वेपि प्रागुक्तकारणत्वाद्यविरोधेन शब्दवाच्यतामात्रनिषेधस्यापि फलस्यासिद्धिरित्यर्थः ।

या० — **समन्वयलक्षण** इति । समन्वयाध्याय इत्यर्थः ॥

श्री० — विरोधादीत्याद्यधिकरणकथनेन सङ्क्षेपतः । 'अन्वयः सर्वशब्दानाम्' इत्यनेन विस्तरतः । **लक्षणे** अध्याये । एवमुत्तरत्र ॥ **अन्यथेति** । तत्रान्तर्भावयोग्यत्वेऽप्यत्र कथन इत्यर्थः ॥ **द्वितीयेति** । द्वितीयाध्यायेत्यर्थः ॥ **केवलं शब्दवाच्यतैवेति** । द्वितीयाध्यायार्थभूतयुक्त्यादि-विरोधपरिहारं विनेत्यर्थः ।

च० — **समन्वयलक्षणे** समन्वयाध्याये ।

सु० — **किश्चात्रपादे जगत्कारणादि(वाचि)शब्दवाच्यत्वं प्रधानस्य निषिध्यते शब्द-वाच्यतैव वा । नाद्यः । अत्रोदाहृतवाक्येषु 'महतः परमव्यक्तम्', 'यस्मिन्पञ्चपञ्चजनाः' इत्यादिषु प्रधानस्य जगत्कारणत्वाश्रवणात् । कश्चिदाह । 'महतः परमव्यक्तम् इति परशब्देन कालविप्रकृष्टत्वमुच्यते, ततः कारणत्वशङ्केति । तदयुक्तम् । किं कालविप्रकर्ष एव कारणत्व-मुत तेनानुमेयम् । अथ सम्भाव्यम् । न प्रथमद्वितीयौ । कार्यकारणभावविकलयोरपि परा-परभावदर्शनात् । न तृतीयः । सम्भावनामात्रस्येयन्तं सूत्रसन्दर्भं प्रति प्रयोजकत्वायोगात् । अजामेकामित्यादौ कारणत्वं प्रतीयत इति चेत् । तत्किं ब्रह्मपरं करिष्यते । तेजोऽबन्नविषयं हि तद्व्याख्यातं भवता । तथा च लौकिकमाभाणकं नातिवर्तते 'व्याघ्रेणोरणे नीते का हानिः वृके(णोरणे)नीते को लाभः' इति ।**

**द्वितीये त्विदमुपतिष्ठते । न शब्दवाच्यतैवात्र प्रधानस्य निषिध्यते, प्रकृतानुपयोगा दिति । शाब्दत्वे हि प्रधानस्य स्वरूपमात्र सिद्ध्यति नच स्वरूपसिद्धिमात्रेण काचिल्लक्षणक्षतिः । न ह्यस्माभिरिव परेण सर्वशब्दसमन्वयः प्रतिज्ञातः । नापि प्रधानं निषिध्य ब्रह्म तत्र निवेशि-तम् । येनास्मदीयदिशाऽप्युपयोगः स्यात् । तदिदमुक्तम् । ब्रह्मनिवेशं(शनं) विना प्रधानस्य शब्दवाच्यतैवात्र निषिध्यत इति न युक्तमिति ।**

शे० — भामतीमतमाशङ्कते **कश्चिदाहेति** ॥ **कालविप्रकृष्टत्वमिति** । अर्वाचीनमहत्त्वा-पेक्षया विप्रकृष्टपूर्वकालत्वरूपं कालविप्रकृष्टत्वमित्यर्थः । अव्यक्तस्येति शेषः । यद्यप्यत्र परशब्दः श्रैष्ठ्यवचन एव । 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिपूर्ववाक्येषु श्रुतस्य तथात्वात सांख्यैरपि 'अव्यक्ता-त्पुरुषः परः' इत्यत्र श्रुतस्य तस्य तथैव व्याख्येयत्वात्प्रधानस्याकार्यत्वात् कठवल्लीषु श्रुत' इन्द्रियेभ्यः परं सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्' इति मन्त्रान्तरे परशब्दस्थाने उत्तमशब्द-दर्शनाच्चेति न परशब्देन कारणत्वसिद्धिरिति वक्तुं युक्तम् । तथाऽपि स्पष्टत्वात्तच्छिष्यैरेवोद्यतामिति

भावेन तदनुक्त्वा दूषणान्तरमेवाह **तदयुक्तमित्यादिना** ॥ **कार्यकारणभावविकल्पयोरपीति** । तन्तुरूपपटयोरित्यर्थः ॥ **परापरभावेति** । पौर्वापर्येत्यर्थः । 'अजामेकामित्यादीनां कारणत्वाभिधायकत्वमिति स्फुटम्' इति भाष्योक्तमाशङ्कते **अजामेकामित्यादाविति** । 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः' इत्यादिश्वेताश्वतरवाक्ये सांख्याभिमताया अजायाः प्रजास्रष्टृत्वेनोक्तेरिति भावः । सत्यम्, उदाहृतवाक्ये कारणत्वं प्रतीयत इति । तथा सति त्वया तस्य ब्रह्मणि समन्वेतव्यता स्यात् । समन्वयसूत्रे कारणवाक्यसमन्वयस्य प्रतिज्ञातत्वात् । न च, तस्य त्वया ब्रह्मणि समन्वयोऽभ्युपेयते । तत्कथं ब्रह्मकारणतावादस्य स्थैर्यमित्याह **तदिति** । ननु च नानेन पादेन समन्वयो मन्मते व्युत्पाद्यते किन्तु जन्मादिसूत्रोक्तलक्षणातिव्याप्तिपरिहार एव । अत एवानुमानिकमप्येकेषामिति सूत्रेऽपिशब्दः एकशब्दश्च । ततोऽस्य वाक्यस्य ब्रह्मपरत्वाव्युत्पादनेऽपि प्रधानपरत्वनिरासमात्रेणातिव्याप्तिपरिहारसिद्धेर्नासङ्गतिरित्यतो नातिव्याप्तिपरिहारः संभवति । प्रधानपरत्वनिरासेन तत्रानतिव्याप्तावपि तेजोऽबन्नपरत्वाश्रयणेन तत्रातिव्याप्त्यपरिहारादित्याशयेनाह **तेजोऽबन्नविषयं हीति** । उरणो मेषः । नन्वव्यक्तादिवाक्यस्य कारणत्वाप्रतिपादकत्वेन तद्वाक्यस्थाव्यक्तादिशब्दानां प्रधानपरत्वे जगत्कारणत्वलक्षणक्षत्यभावेऽपि यथा सिद्धान्ते प्रधानस्याव्यक्तशब्दार्थत्वनिराकारणं तथा मन्मतेऽपि किं न स्यादित्यतो, मन्मतेऽपि गुणपूर्तिसिद्धये समन्वयसूत्रे सर्वशब्दसमन्वयस्य प्रतिज्ञातत्वेनाव्यक्तादिशब्दार्थत्वे प्रधानस्य तच्छब्दोक्तस्य गुणस्य ब्रह्मण्यलाभस्यान्यत्र तल्लाभस्य च प्रसङ्गेन ब्रह्मणो गुणपूर्तिसिद्धये प्रधानादेरव्यक्तादिशब्दार्थत्वनिराकरणस्योपपन्नत्वेऽपि परमते सर्वशब्दसमन्वयस्याप्रतिज्ञातत्वेनाव्यक्तादिशब्दार्थत्वेऽपि प्रधानस्याविरोधेन न तन्निरासस्योपयोग इत्याह **न हीति** ।

**स०** — परापरभावदर्शनादित्यत्र कालविप्रकर्षसन्निकर्षरूपपरापरत्वदर्शनादित्यर्थः । **अजामेकामित्यादाविति** । बह्वीः प्रजा जनयन्तीं सरूपामित्युक्तेरिति भावः । उरणोऽविशावः ।

**प०** — नन्वीक्षत्यधिकरणोक्तपमर्थनमेव फलमिति वादिनं प्रत्याह **किञ्चेति** । वाचस्पतिमतमाह **कश्चिदिति** ॥ **कालविप्रकर्ष इति** ॥ अल्पकालसंबन्धो ह्यपरः । बहुकालसंबन्धो हि परः । तथाचार्वाचीनमहत्तत्वात्परं बहुकालीनमव्यक्तमित्युक्ते कारणत्वमेव लभ्यत इति भावः । नन्वानुमानिकाधिकरण-नसंख्याधिकरणविषययोः, अव्यक्तवाक्य-पञ्चजनवाक्ययोः कारणत्वाप्रतीतावपि परमते चमसवदितिसूत्रत्रयात्मकाधिकरणविषये 'अजामेकां लोहितशुक्लकृष्णां ब[ह्वीं] ह्वीः प्र[जां] जाः जनयन्तीम्' इति वाक्ये कारणधीरस्तीति शङ्कते **अजामेकामित्यादाविति** । तत्किमिति काकुस्वरः । न करिष्यत इत्यर्थः । कोऽर्थस्तस्येत्यतो दूषणसौकर्याय परोक्तमर्थमाह **तेजोबन्नेति** । तेजःप्रभृतिभूतत्रयात्म्यशरीरोपादानरूपसूक्ष्मवस्तुविषयकमित्यर्थः । **लौकिकमाभाणकं** लौकिकीं गाथाम् ।

उरणो नाम अविशावकः । **द्वितीये त्विति** । शब्दवाच्यतैवेति पक्षे प्रकृतानुपयोगादित्युक्तं व्यनक्ति **शाब्दत्वे हीति** । एवकारार्थो ब्रह्मनिवेशं विनेति ।

**या— परापरभावदर्शनादिति** । कालविप्रकर्षसन्निकर्षरूपपरापरत्वदर्शनादित्यर्थः । एतेन 'अर्वाचीनमहत्तत्त्वापेक्षया पूर्वकालभावित्वं विप्रकृष्टत्वं अव्यक्तस्य परशब्द आह, तथाच कारणत्वसिद्धिः । नियतप्राक्सत्त्वं हि तत्' इति भामत्यभिप्रेतमपि निरस्तं ज्ञातव्यम् । कार्यकारणभावविकलयोरपि तन्तुरूपपटयोरुक्तपरापरभावदर्शनात् । 'अव्यक्तात्पुरुषः पर' इत्यादाविव तेन तत उत्तमत्वस्यैव प्रतीतेश्च ॥ **अजामेकामित्यादाविति** । 'बह्वीं प्रजां जनयन्तीमि'ति वचनादिति भावः । **उरणो** मेषः ॥

**श्री०— कालविप्रकृष्टत्वं** बहुकालीनत्वमित्यर्थः । ततः पूर्ववर्तित्वलाभादित्यर्थः ॥ **कार्येत्यादि** । तथाच घटापेक्षया कस्यचिद्वृक्षस्य बहुकालीनत्वरूपपरत्वस्य सत्त्वात् घटस्याप्यबहुकालीनत्वरूपापरत्वस्य सत्त्वात्कार्यकारणभावः स्यात् । तथा च बहुकालीने वृक्षे व्यभिचारादेवेदं कारणं बहुकालीनत्वादित्यनुमानमप्ययुक्तमित्यर्थः । **इत्यादौ** 'अव्यक्तात्पुरुषः परः' इति वाक्ये कारणत्वप्रतिपादनाभावेन तत्त्यक्त्वा अन्यदेव वाक्यं तत्प्रतिपादकमुपादीयत इति भावः । **कारणत्वं** प्रधानस्येति शेषः ॥ **आभाणकमिति** । तथा चोभयत्राप्यविशावकमरणस्याविशिष्टत्ववत् 'अजामेकाम्' इति वाक्ये प्रधानं प्रतिपाद्यमिति सांख्येनोक्ते, त्वया तत्र न प्रधानं प्रतिपाद्यं, किन्तु तेजोऽबन्नानीति हि सिद्धान्त्यते । तथा च सांख्यमते त्वन्मते चाजामिति वाक्यस्य ब्रह्मप्रतिपादकत्वाभावस्याविशिष्टत्वात्प्रधानं प्रतिपाद्यमित्युक्ते का हानिः । तेजोऽबन्नपरत्वे तु को लाभः । तथाच प्रधानप्रतिपादकमेव किं न स्यादिति लौकिकाभाणकं प्रकृते द्रष्टव्यम् ॥ **लक्षणेति** । ब्रह्मनिष्ठजगत्कारणत्वरूपलक्षणस्येत्यर्थः । ननु मया भवद्रीत्या समन्वयसूत्रे ब्रह्मणः सर्वशब्दवाच्यतायाः प्रतिज्ञातत्वादजामिति वाक्यस्य प्रधानस्वरूपस्य प्रतिपादकत्वे सर्वशब्दवाच्यताप्रतिज्ञाभङ्गः स्यादित्यत आह **न हीति** । प्रतिज्ञात एवेति चेत्तत्राह **नापीति** । सर्वशब्दसमन्वयप्रतिज्ञासिध्यर्थमिति शेषः ।

**च०— परापरभावदर्शनादिति** । कालविप्रकृष्टत्वसन्निकृष्टत्वरूपपरापरत्वदर्शनादित्यर्थः । उरणो मेषः ।

सु०— किञ्च प्रधानस्य शब्दवाच्यता ईक्षत्यधिकरणानन्तरमेव निषेध्या । त्रिपादीं अतिक्रम्य अत्र निषिध्यत इति(न युज्यते ।)व्यवधान(ने) कारणानिरूपणादिति । किञ्च पादप्रतिपाद्योऽर्थस्तथाविधो भवति, यस्तत्पादस्थसकलसूत्रप्रतिपाद्यः । न च अत्र पादे सर्वेषु(अपि) सूत्रेषु प्रधानस्य शब्दवाच्यतैव निषिध्यत इति नियमोऽस्ति, येनायमेतत्पादार्थः स्यात् । कारण-

**त्वेनेत्यादौ तदभावात्। तत्रापि परम्परया तदेव साध्यमिति चेत्। तर्हि पारम्पर्यस्यातीतपादार्थेऽपि सुवचत्वात् अत्रैव प्रधानस्य शब्दवाच्यता निषिध्यत इति नास्ति। स हि पादार्थो यो नान्यत्र प्रतिपाद्यत इति।**

**शे०**— ननु मन्मते तत्तु समन्वयादित्यत्र ब्रह्मणि सर्वशब्दसमन्वयस्याप्रतिज्ञाततया तादर्थ्येन प्रधानादेरव्यक्तादिशब्दार्थत्वनिराकरणस्यानुपयोगेऽपीक्षतेर्नाशब्दमित्यत्र प्रतिज्ञातस्य प्रधानाशब्दत्वस्य तस्याव्यक्तादिशब्दार्थत्वेऽनुपपत्तिप्रसङ्गात्तादर्थ्येन तन्निरासस्य मन्मतेऽप्युपयोगोऽस्त्येवेत्यतो निष्फलतया प्रधानाशाब्दत्वस्य तत्राप्यप्रतिज्ञातव्यतया तन्निरासवैफल्यमेवेत्याशयेन तत्र प्रतिज्ञाताशब्दत्वोपपादकत्वे तदानन्तर्यमेव स्यादित्याह **किञ्चेति**। ननु तत्तु समन्वयादिति प्रतिज्ञातकारणवाक्यसमन्वयजिज्ञासया प्रतिबन्धान्न तदानन्तर्यं; तस्यां च त्रिपाद्यां पूर्णायामवसरलक्षणसङ्गत्याऽत्राशब्दत्वोपपादनोपपत्तेरस्ति व्यवधानकारणमित्यत आह **किञ्चेति**। यद्यपि सिद्धान्त इव परमतेऽपि प्रायिकत्वेन पादव्यवस्थोपपादयितुं शक्या तथाऽपि सिद्धे पादार्थत्वे तदनुसरणम्। प्रकृते तु तदेवासिद्धमिति न प्रायिकत्वानुसरणमिति भावेनैतदुक्तमिति ध्येयम्॥ **कारणत्वेनेत्यादाविति**। 'कारणत्वेन चाकाशादिषु' इत्यत्र 'आत्मन आकाशः सम्भूतः' इति वेदान्तेषु क्वचिदाकाशादिका सृष्टिरुच्यते क्वचिच्च 'तत्तेजोऽसृजत' इति तेजआदिका ततो विरोध इति सृष्टिवाक्यविगानस्य, 'जगद्वाचित्वात्' इत्यत्र 'यस्य चैतत्कर्म स वेदितव्यः' इत्यादिवाक्यानां जीवादिपरत्वस्य, 'वाक्यान्वयात्' इत्यत्र 'आत्मा वा अरे द्रष्टव्यः' इत्यादिवाक्यानां जीवपरत्वस्य, 'प्रकृतिश्च' इत्यत्र निमित्तोपादानभेदस्य, 'एतेन' इत्यत्र परमाण्वादिकारणत्ववादस्य च निरस्तत्वेन प्रधानाशाब्दत्वप्रतिपादकत्वाभावादित्यर्थः॥ **तत्रापीति**। असद्वेत्यादिकारणवाक्यानां ब्रह्मपरत्वे व्युत्पादिते प्रधानस्य तत्प्रतिपाद्यत्वाभावसिद्ध्या तस्याशाब्दत्वसिद्धिरिति भावः। तथा सति 'आकाशस्तल्लिङ्गात्' इत्यादावप्यकाशादिप्रतिपादकवाक्यानां ब्रह्मपरत्वे व्युत्पादिते प्रधानस्य तत्प्रतिपाद्यत्वाभावसिद्ध्या तदशाब्दत्वस्यातीतपादत्रयार्थत्वं स्यात्। किञ्च तत्तद्वाक्यस्य ब्रह्मपरत्वव्युत्पादनेन प्रधानस्येवाकाशादीनामपि तदप्रतिपाद्यत्वसिद्धेरविशिष्टत्वेन प्रधानाशब्दत्वस्येवाकाशाद्यशाब्दत्वस्यापि पादार्थत्वप्रसङ्ग इत्याशयेन समाधत्ते **तर्हीति**।

ननु काचित्कप्रधानवादप्रतिपादनच्छायापन्नवाक्यगतिनिरूपणमेव न पादार्थः किन्तु ब्रह्मवादविरोधिवादमूलच्छायापन्नं क्वचित्क्वचिदाम्नातं यावद्वाक्यमस्ति तस्य सर्वस्य गतिनिरूपणमेव पादार्थः। अत एवोत्तरत्रापि जीववादमूलछायापन्नवाक्यगतिनिरूपणमप्युपपन्नम्। तदेतदभिप्रेत्योक्तं कल्पतरौ काचित्कस्यासच्छब्दस्य कर्मकर्तृप्रयोगस्य वाऽसद्वादपरत्वं स्वभावपरत्वं च व्युदस्य गतिसामान्यव्यवस्थापनात्पादसङ्गतिरिति। तत्कथं कारणत्वेनेत्यादौ पादार्थाप्रतिपादकत्वेन पादासङ्गत्युक्तिरिति चेन्मैवम्।

अत्र हि न पूर्वाधिकरणत्रय इव क्वाचित्कवाक्यगतिनिरूपणं क्रियते किन्तु सर्ववेदान्तव्यापिब्रह्मप्रमाणत्वाभावप्रसक्तौ तत्समाधानम् । इदं च समन्वयाधिकरणसन्निधौ सङ्गतं न त्वत्र ।

किञ्च जगद्वाचित्वादित्याद्यधिकरणमपि विवक्षितरीत्याऽत्र सङ्गमयितुमयुक्तम् । 'प्रधानसमर्पणाभासवाक्यगतिनिरूपणार्थं परः सन्दर्भः प्रवर्तते' इत्यादिना प्रधानाशाब्दत्वप्रतिपादनार्थमेवैतत्पादप्रवृत्तेर्भाष्यकृदुपवर्णितत्वेन तद्विरुद्धत्वात् ।

म०— **कारणत्वेनेत्यादाविति** । तत्र हि वेदान्तेषु क्वचिदाकाशादिका सृष्टिरुच्यते 'आत्मन आकाशः संभूतः' इति, क्वचित्तेजआदिका 'तत्तेजोऽसृजत' इति । तथा च वेदान्तानां विरोध इति प्राप्ते कार्येष्वाकाशादिष्वेव सृष्टिक्रमादिद्वारकं विगानम् । कारणत्वे तु न विगानम् । कुतः यथा व्यपदिष्टत्वोक्तेः । यथा ह्येकस्मिन् वेदान्ते चेतनः कारणत्वेन व्यपदिष्टः 'सोऽकामयत बहु स्याम्' इति । तथैव 'तदैक्षत तत्तजोऽसृजत' इत्यादावप्युक्तः । एवं च सूत्रे कारणत्वेनेत्येतद्विच्छिद्य सप्तम्यन्तत्वेन, अविच्छिद्य तृतीयान्तत्वेन व्याख्येयमिति त्वया भाषितत्वादिति भावः ॥ **तत्रापि परम्परयेति** । सर्वत्रापि वेदान्तेषु ब्रह्मण एव प्रतिपाद्यत्वाभिधाने प्रधानस्य तदप्रतिपाद्यत्वं अर्थात्सिध्यतीति भावः । **स हीति** ॥ आकाशस्तल्लिङ्गादित्यादावपि आकाशप्रतिपादकवाक्यस्य ब्रह्मपरत्वे व्युत्पादिते प्रधानस्य ब्रह्मपरत्वव्युत्पादनेन प्रधानस्याशाब्दत्वसिद्धौ आकाशादेरपि तत्प्रतिपाद्यत्वाभावसिध्याऽशाब्दत्वापत्त्या प्रधानस्यैव तदनुपपत्तिरिति भावः ।

प०— मूलस्यार्थान्तरमाह **किञ्च प्रधानस्येति** । अन्यमर्थमाह **किञ्च पादेति ॥ कारणत्वेनेत्यादाविति** । आनुमानिकाद्यधिकरणत्रये प्रधानाशब्दत्वोक्तावपि कारणत्वेनेत्यादिसूत्रद्वयात्मकेऽधिकरणे आत्मन आकाशस्संभूतस्तत्तेजोसृजतेत्यादिश्रुतीनामविरोधस्य, जगद्वाचित्वादित्यादिसूत्रत्रयात्मके चाधिकरणे यस्य चैतत्कर्म स वेदितव्य इति कौषीतकिब्राह्मणैर्वेदितव्यत्वेनोक्तवस्तुनो जीवत्वनिरासेन ब्रह्मत्वस्य, वाक्यान्वयादित्यादिसूत्रचतुष्टयात्मकेऽधिकरणे आत्मा वा अरे द्रष्टव्य इति वाक्यस्यात्मशब्दस्य जीवत्वनिरासेन ब्रह्मत्वस्य, प्रकृतिनये ब्रह्मण उपादानत्वस्य, अन्त्यनये परमाण्वादिकारणत्ववादनिरासस्य, व्युत्पादितत्वादिति भावः । ननु मुख्यतः श्रुत्यविरोधाद्युक्त्या ब्रह्मण एव कारणत्वादिना तत्तद्वाक्येषु प्रतिपाद्यत्वोक्त्या प्रधानं न तत्र प्रतिपाद्यमित्यर्थात्सिध्यति । अतो न प्रधानाशाब्दत्वस्य पादार्थत्वभङ्ग इति शङ्कते **तत्रापीति** । अतीतपादार्थेऽपि त्रिपाद्यामपि तत्तद्वाक्यप्रतिपाद्यं ब्रह्मेत्युक्ते तद्द्वारा प्रधानं तत्रतत्र वाक्ये प्रतिपाद्यं नेति लाभादिति भावः । तावतैतत्पादार्थः कुतो नेत्यत आह **सहीति** ॥

**या०— कारणत्वेनेत्यादाविति** । तत्र हि वेदान्तेषु क्वचिदाकाशादिका सृष्टिरुच्यते 'आत्मन आकाशः सम्भूत' इति । क्वचित्तेज आदिका 'तत्तेजोऽसृजते'ति । तथाच वेदान्तानां विरोध इति प्राप्ते, कार्येष्वाकाशादिष्वेव सृष्टिक्रमादिद्वारकं विगानं, कारणत्वे तु न विगानम् । कुतः यथाव्यपदिष्टोक्तेः । यथा ह्येकस्मिन्वेदान्ते चेतनः कारणत्वेन व्यपदिष्टः 'सोऽकामयत बहु स्याम्' इति । तथैव 'तदैक्षत तत्तेजोऽसृजते'त्यादावप्युक्तः । एवं च सूत्रे कारणत्वेनेत्येतद्विच्छिद्य सप्तम्यन्तत्वेन, अविच्छिद्य तृतीयान्तत्वेन च व्याख्येयमिति, त्वया भाषितत्वादिति भावः । आदिशब्देन 'समाकर्षात्', 'जगद्वाचित्वात्', 'एतेन सर्वे व्याख्याता व्याख्याता' इत्येतेषां ग्रहणम् । तत्राप्यसत्कारणत्वजीवकारणत्वपरमाण्वादिकारणत्ववादिनामेव निरासेन तदभावात् ॥ **तत्रापि परम्परयेति** । अत्र हि सृष्टिप्रतिपादकवाक्यानां परस्परविरोधेन समन्वयासिद्धौ ब्रह्मणो जगत्कारणत्वस्यासिद्धिः तदसिद्धौ च न तत्र गतिसामान्यमपेक्षितम् । यदर्थमत्र प्रधानाशाब्दत्वं प्रतिपादनीयं स्यादित्याशयेनाक्षेपे, सृष्टिवाक्यानां परस्परमविरोधसमर्थनात्समन्वयसिद्धौ ब्रह्मणो जगत्कारणत्वस्यापि सिद्धिः तत्सिद्धये च तत्र गतिसामान्यमप्यावश्यकं, तदर्थं च प्रधानाशाब्दत्वमपीति समाधानस्याभिप्रेतत्वादिति भावः । उक्तं हि भामत्याम् । 'इह तु वाक्यानां परस्परविरोधाद्ब्रह्मणि जगद्योनौ न समन्वयः सेद्धुमर्हति । तथाच न जगत्कारणत्वं ब्रह्मणो लक्षणम् । न च तत्र गतिसामान्यम् । न च तत्सिद्धये प्रधानस्याशाब्दत्वप्रतिपादनमि'ति ॥ **तर्हि पारम्पर्यस्येति** । एवं परंपरया प्रधानाशाब्दत्वसाधकत्वस्येत्यर्थः । **अतीतपादेति** । समन्वयरूपेऽतीतपादत्रयार्थेऽपीत्यर्थः । तत्राप्याकाशादिशब्दसमन्वयसिद्धया गतिसामान्यसिद्धौ तदुपपादकप्रधानाशाब्दत्वसिद्धिमिति सुवचत्वादित्यर्थः ॥

**श्री०— तदभावादिति** । प्रधानस्य शब्दवाच्यतानिषेधाभावादित्यर्थः ॥ **परम्परयेति** । 'कारणत्वेने'त्यत्र 'आत्मन आकाशः सम्भूतः', 'तत्तेजोऽसृजते'त्यादिसृष्टिवाक्यानां परस्परमविरोधसमर्थनेन ब्रह्मणो जगत्कारणत्वं सिद्ध्यति । 'समाकर्षादि'त्यादौ चासत्कारणतादिवादिनिराकरणेन ब्रह्मणो जगत्कारणत्वं सिद्ध्यति । तथा चार्थात्प्रधानस्य न तत्र प्रतिपाद्यत्वं प्राप्तम् । एवञ्च परम्परया प्रधानाशब्दत्वमेव तत्र साध्यमित्यर्थः ॥ **अतीतेति** । यदा पूर्वपादत्रये स्पष्टलिङ्गसमन्वयो ब्रह्मणि कथितस्तदाऽर्थात्प्रधानं न लब्धमेवेत्यर्थः ।

**च०-- कारणत्वेनेत्यादाविति** । कारणत्वेनेत्यत्राकाशादितेजआदिसृष्टिवाक्ययोर्विगानस्य, जगद्वाचित्वादित्यत्र 'यस्य चैतत् कर्म स वेदितव्य' इत्यादिवाक्यानां जीवादितात्पर्यकत्वस्य, वाक्यान्वयादित्यत्रात्मावाऽरे द्रष्टव्य इत्यादिवाक्यानां जीवपरत्वस्य, प्रकृतिश्चेत्यत्र निमित्तोपादानभेदस्य, एतेनेत्यत्र

परमाण्वादिकारणत्वस्य, निरस्तत्वेन प्रधानाशाब्दत्वप्रतिपादकत्वाभावादित्यर्थः ॥ **तत्रापीति** । असद्वे-त्यादिवाक्यानां ब्रह्मतात्पर्यकत्वे व्युत्पादिते प्रधानस्य तदप्रतिपाद्यत्वसिद्ध्या तदशाब्दत्वसिद्धिरिति भावः । तुल्यदिशा अकाशादिवाक्यानामपि ब्रह्मतात्पर्यकत्वे व्युत्पादिते प्रधानस्य तदप्रतिपाद्यत्वसिद्ध्या तदशाब्द-त्वस्यातीतपादत्रिकार्थत्वं प्रसज्येतेत्याशयेन समाधत्ते **तर्हीति** ।

**सु०— एवं सामान्यतः पादार्थं निराकृत्येदानीं प्रथमाधिकरणव्याख्यां निराकरोति** न शब्दवाच्यतैवेति । **आनुमानिकमित्यादिसूत्रं यत्परेण व्याख्यातम् । आनुमानिकमप्यनुमान-निरूपितं प्रधानमप्येकेषां शाखिनां शब्दवदुपलभ्यते । काठके हि पठ्यते । 'महतः परम-व्यक्तमव्यक्तात्पुरुषः परः' इति । तत्र य एव, यन्नामानो, यत्क्रमका(मा)श्च, महदव्यक्तपुरुषाः स्मृति(प्र)सिद्धास्त एवेह प्रत्यभिज्ञायन्ते । तत्राव्यक्तमिति रूढियोगाभ्यां प्रधानमुच्यते । एवं तस्य शब्दवत्वादशब्दत्वमनुपपन्नमिति चेत् । नैतदेवम् । न ह्येतत्काठकवाक्यं प्रधानपरमिति ।**

**अत्र पृच्छामः । किमत्र काठकगताव्यक्तशब्दवाच्यतैव प्रधानस्य निषिध्यते किंवा कुत्रापि केनापि शब्देन नोच्यत इति । आद्यस्योत्तरम् । अत्र काठके (वाक्ये) अव्यक्तशब्दवाच्यतैव प्रधानस्य निषिध्यत इति नोपपन्नम् । तन्मात्रेणाशब्दत्वासिद्धेः । द्वितीयेऽपि किं परममुख्य या वृत्त्या उत शब्दवाच्यतैव निषिध्यते । आद्ये तन्मात्रमनुमतमेव । सर्वथा शब्दवाच्यतैवात्र प्रधानस्य निषिध्यत इति द्वितीयस्तु नोपपद्यते । कुत इत्यत आह** सर्वेति ।

**अनु०**— सर्ववेदेतिहासेषु पुराणेषु च संग्रहात् ।

**संग्रहात् प्रधानस्येति शेषः । वेदे तावदाथर्वणिकाः पठन्ति 'विकारजननीमज्ञामष्टरूपा-मजां ध्रुवाम् ।** ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः' इत्यादि । **इतिहासपुराणे तूदाहरि-ष्यमाणे द्रष्टव्ये । ननूक्तमत्र न ह्यत्र स्मृतिप्रसिद्धं कारणं त्रिगुणं प्रधानमुच्यते । तेन यद्यदु-दाह्रियते तत्तद्विप्रतिपन्नमेव, इत्यतः त्रिगुणत्वादिलक्षणोपेतप्रधानप्रतिपादकं इतिहासवाक्यं पठति** सत्त्वमिति

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ।
इत्यादिवाक्यरूपेण

**आदिपदेन 'भूमिरापोऽनलो वायुः' इत्यादेर्ग्रहणम् । इत्यादिवाक्यप्रतिपाद्येन त्रिगुण-त्वादिना रूपेणोपेतस्य प्रधानस्य संग्रहादिति सम्बन्धः ।**

शे० — उपलब्धिमेवोदाहरति **काठके हीति** । कथमत्र प्रधानमव्यक्तशब्दमित्यतस्तत्र स्थान मानमाह **तत्रेति । स्मृतिप्रसिद्धाः** साङ्ख्यस्मृतिप्रसिद्धाः । अव्यक्तश्रुतिरपि प्रधाने मानमित्याह **तत्रेति** । साङ्ख्यस्मृतिसिद्धस्य प्रधानस्याव्यक्तशब्देनोक्तौ तदीयां रूढिं हेतूकरोति **रूढीति** । साङ्ख्यस्मृतिप्रसिद्धेः न केवलं साङ्ख्यप्रवादरूढिरेव, किं नाम न व्यक्तमव्यक्तमित्यवयवप्रसिद्ध्याऽप्य-यमेवार्थोऽवगम्यत इत्याशयेन योगग्रहणम् । रूढियोगाभ्यामव्यक्तशब्दस्य प्रधानवाचित्वे सिद्धे फलित-माह **एवमिति** । स्थानादिभिरुक्तं प्रत्याह **नैतदिति** ॥ **अनुमतमेवेति** । परममुख्यया वृत्त्या कुत्रापि केनापि शब्देन प्रधानस्यावाच्यताया मत्सिद्धान्तत्वादित्यर्थः । आदिपदेन 'सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगदि'त्यादेः संग्रहः ॥ **उदाहरिष्यमाण इति** । अत्रानुपदमेवोदाहरिष्यमाणं 'सत्त्वं रजस्तमः' इति वाक्यमितिहासवाक्यमित्युत्तरत्र टीकायामेव स्पष्टम् । यद्वक्ष्यति इतिहासवाक्यं पठतीति । पुराणं तु 'यत्तत्त्रिगुणमव्यक्तम्' इत्युदाहरिष्यमाणं द्रष्टव्यम् । तत्र मूल एव 'भागवते प्राह' इति स्पष्टमभिधानाट्टीकायामितिहासवाक्यं पठतीतिवत् पुराणवाक्यं पठतीति नोक्तम् । तत्राध्यक्तत्वादेव 'इतिहासवाक्यं पठति' इत्युक्तमिति ध्येयम् ।

प० — **स्मृतिप्रसिद्धा इति** । साङ्ख्यस्मृतिसिद्धा इत्यर्थः । प्रधानपरमितीतिशब्दस्य इति-व्याख्यातमिति पूर्वेणान्वयः ॥ **आथर्वणिका इति** । द्वात्रिंशदुपनिषन्मध्यगताथर्वणोपनिषदध्यापकाः अत्राथर्वणिकपदेन गृह्यन्ते । तेन भाष्यकृद्व्याख्यातदशोपनिषद्गताथर्वणेऽस्य वाक्यस्याभावेऽपि न दोषः ॥ **भूमिराप इति** । 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृति-रष्टधा'इति सप्तमस्थगीतावाक्यग्रहणमित्यर्थः ।

या० — **स्मृतिप्रसिद्धा इति** साङ्ख्यस्मृतिप्रसिद्धा इत्यर्थः ॥ **रूढियोगाभ्यामिति** । साङ्ख्य-स्मृतिप्रसिद्ध्या रूढिः, न व्यक्तमव्यक्तमिति व्युत्पत्तिसम्भवाद्योगोऽपीत्यर्थः ॥ **अत्र काठक इति** । अस्मि-न्पक्षेऽत्रैवेत्येवकारसम्बन्धोऽभिप्रेत इति ज्ञातव्यम् ॥ **उदाहरिष्यमाण इति** । अनुपदमेवोदाहरिष्य-माणं 'सत्त्वं रज' इतीतिहासवाक्यं 'यत्तत्त्रिगुणमि'त्युदाहरिष्यमाणं पुराणवाक्यमिति ज्ञातव्यम् ॥

श्री० — **शब्दवत्** प्रतिपादकशब्दवत् । शब्दप्रतिपाद्यमित्यर्थः ॥ **योगेति** । न व्यक्तम-व्यक्तमिति योगेत्यर्थः ॥ **तन्मात्रेणेति** । अव्यक्तशब्दमात्रवाच्यतानिषेधेनेत्यर्थः । तद्व्यतिरिक्तशब्दा-न्तरवाच्यताया अपि संभवादिति भावः । वृत्त्या वाच्यता निषिध्यत इत्यन्वयः ॥ **वाच्यतैवेति** । सर्वथेत्यर्थः । तन्मात्रं परममुख्यवृत्त्याऽवाच्यत्वम् ॥ **न ह्यत्रेति** । वेदे इत्यर्थः । **उच्यते** किन्तु तेजोऽबन्नान्येवेति शेषः ।

च०— **रूढियोगाभ्यामिति** । सांख्यस्मृतिप्रत्यायितसमुदायवृत्त्याऽवयवभूतव्यक्तपद-पर्युदासार्थ-नञ्निरूपितवृत्तिरूपयोगेन चेत्यर्थः ॥ **विकारजननीमित्यादि** । अध्याहृतकर्तृवाचकपदबोध्य ईश्वरो महदादिविकारोत्पादिकां (अ)ज्ञानोपादानभूतां भूमिरापोऽनलो वायुरित्यादिप्रत्यायिताष्टरूपत्वविशेषितां नित्यां प्रकृतिं ध्यायते कार्योत्पादनाय बुद्ध्या विषयीकरोति तादृशपरमात्मना कार्योत्पादनाभिमुखीकरणार्थ-मधिष्ठिता महदादिनानारूपेण विस्तार्यते प्रेर्यते चेत्यर्थापयन्ति ॥ **उदाहरिष्यमाणे इति** । समनन्तर-मुदाहरिष्यमाणं 'सत्वं रज' इतीतिहासवाक्यं, तादृशं 'यत्तत्त्रिगुणमि'ति तु पुराणवाक्यमिति ज्ञेयम्

**सु०— किञ्च 'अव्यक्तात्पुरुषः परः' इत्यव्यक्तशब्दवाच्यं न चेत्प्रधानं तर्हि तद्वाच्यं वाच्यम् ।**

**नन्वत्र सूत्रकृतैवोक्तं 'शरीररूपकविन्यस्तगृहीतेः' इति, 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इति प्राग्यच्छरीरं रथरूपकतया विन्यस्तं तदत्राव्यक्तशब्देन गृह्यते; प्रकरणात्परिशेषाच्चेति ।**

**नैवं सूत्रकृदाह । तथात्वे हि रूपकविन्यस्तशरीरगृहीतेरित्यवक्ष्यत । अस्तु वा कथञ्चि-द्विशेषणस्य परनिपातः । इदं तु वक्तव्यम् । कथमव्यक्तशब्देन शरीरमुच्यत इति । न ह्येषा रूढिः । नापि योगः संभवति । शरीरस्य व्यक्तत्वात् ।**

**ननु परिहृतमेतत्सूत्रकारेण(कृता) 'सूक्ष्मं तु तदर्हत्वात्' इति । यद्यपीदं शरीरं व्यक्तम्, तथाऽप्यस्य यन्मूलमुपादानकारणं तेजोऽबन्नलक्षणं भूतसूक्ष्मं तत्तावदव्यक्तम् । अनादेस्तस्य सूक्ष्मस्याव्यक्तताऽर्हत्वात् । कार्यकारणशब्दाश्च सङ्कीर्यन्ते । 'गोभिः श्रीणीत मत्सरम्' इति यथेति ।**

**अत्र वक्तव्यम् । किमनेनोक्तं भवतीति । किं शरीरमेवात्रोच्यते, अव्यक्तशब्दस्त-त्रोपचरितः, शरीरमूलोपादानस्य तेजोऽबन्नात्मकस्य भूतसूक्ष्मस्यानादेरव्यक्तत्वादिति; किंवा भूतसूक्ष्ममेवाव्यक्तश(ब्दवाच्यं)ब्दम्, शरीरशब्दस्तु तत्रोपचरितः, शरीरस्य तत्कार्यत्वादिति ।**

**पक्षद्वयेऽपि दोषमाह** यत्रेति ।

अनु०— यत्रार्थो नान्य इष्यते ॥
तेजोऽबन्नात्मकं वाऽपि यद्युपादानमिष्यते ॥
अनाद्येवाऽपराधः कः प्रधानमिति चोदिते ॥

**यत्र वाक्ये, यदि अव्यक्तशब्दस्यान्यार्थो नेष्यते, परब्रह्मलक्षणः, अपि तु तेजोऽबन्नात्मकं**

शरीरमूलोपादानमनादि भूतसूक्ष्ममेवेष्यते । प्रथमे स्वरूपेण(एव) । द्वितीयेऽव्यक्तशब्द-वाच्यतया तत्र तर्हि तत्प्रधानमिति चोदिते को दोषोऽस्ति । येन नेति प्रतिषिध्यते ।

अयमभिसन्धिः । सर्वथा तावन्नाव्यक्तपदं ब्रह्मपरं त्वयोच्यते, किन्तु भूतसूक्ष्म-कार्यशरीरस्य भूतसूक्ष्मस्य वा वाचकमिति । परेण तु प्रधानवाचकमिति । यदि वाऽव्यक्तस्य कारणत्वमभिप्रेतं तदा पक्षद्वयमपि ब्रह्मवादस्य प्रतिपक्षभूतमिति । शरीराङ्गीकारेण प्रधान-निरासो व्यर्थः । कारणत्वाविवक्षायां तु पक्षद्वयस्याप्यविरुद्धत्वात्किमनेनान्यतरपरिग्रहेणा-न्यतरनिराकरणाग्रहेण विफलत्वादसंगतत्वाच्चेति । अथवाऽनादेरुपादानस्य जडस्य भूत-सूक्ष्म(शब्द)ाभिधेयस्याङ्गीकारे प्रधानं नेति रिक्तं वचः; तल्लक्षणत्वात्प्रधानस्य । नाम्नि विवादायोगादिति अभिप्रायः ।

शे० — **तदत्राव्यक्तशब्देन गृह्यत इति** । 'अव्यक्तात्पुरुषः परः' इत्यत्राव्यक्तशब्देनेत्यर्थः । नन्वात्मानं रथिनमित्यादौ शरीरस्य रथरूपकतया विन्यस्तत्वेऽपि कुतः अव्यक्तात्पुरुषः परः इत्यत्राव्यक्त-शब्देन तस्य परिग्रह इत्यतः 'इन्द्रियेभ्यः परा ह्यर्थाः'इत्येतद्वाक्यस्थानामिन्द्रियादिशब्दानाम्'आत्मानं रथिनम्' इति पूर्वस्यां रथरूपककल्पनायामश्वादिभावेन प्रकृतेन्द्रियादिमात्रपरिग्राहकत्वादेतद्वाक्यस्थाव्यक्त-शब्दस्यापि रथरूपकतया विन्यस्तशरीरपरिग्राहकत्वस्य श्लिष्टत्वादित्याह **प्रकरणादिति** । अन्यथा प्रकृत-परित्यागाप्रकृतपरिग्रहप्रसङ्गादिति भावः । अस्त्वेव प्रकरणवशादिह वाक्ये रूपकवाक्याम्नातेन्द्रियादीनामेवे-न्द्रियादिशब्देन परिग्रहः । तथाऽप्यनेकेषामिन्द्रियादीनां प्रकृतत्वे कुतोऽन्यपरित्यागेन शरीरस्यैवाव्यक्त-शब्देन परिग्रहः; इत्यतो रूपकवाक्याम्नातेष्विन्द्रियादिषु 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्युत्तरवाक्यस्थे-न्द्रियशब्देन 'इन्द्रियाणि हयानाहुः' इति रूपकवाक्योक्तेन्द्रियाणां, तत्स्थार्थशब्देन च 'विषयांस्तेषु गोचरान्' इति रूपकवाक्ये इन्द्रियहयगोचरत्वेन निर्दिष्टानांशब्दादिविषयाणाम्, 'अर्थेभ्यश्च परं मनः' इति मनःशब्देन 'मनः प्रग्रहमेव च' इति तद्वाक्योक्तमनसः, 'मनसस्तु परा बुद्धिः' इत्यनेन च 'बुद्धिं तु सारथिं विद्धि' इति तद्वाक्योक्तबुद्धेः, 'बुद्धेरात्मा महान्परः' इत्यात्मशब्देन च 'आत्मानं रथिनं विद्धि'इत्युपक्षिप्तस्यात्मनः परामृष्टत्वेन 'शरीरं रथमेव च' इति रथरूपकत्वेन विन्यस्तशरीरस्यैव रूपकवाक्येऽवशिष्टत्वात् । 'इन्द्रियेभ्यः' इति वाक्ये च 'महतः परमव्यक्तम्' इत्यव्यक्तशब्दस्यैव चावशिष्टत्वादत्रत्येनाव्यक्तशब्देन स्वस्वशब्दोपात्तेन्द्रियादिग्रहणानुपपत्तौ परिशिष्यमाणशरीरस्यैव ग्रहण-सिद्धिरित्याह **परिशेषाच्चेति** ।

न चात्र पारिशेष्यनिमित्तप्रत्यभिज्ञया शरीरोपस्थितिवत्साङ्ख्यस्मृतिसिद्धमहदव्यक्तपुरुषक्रमप्रत्य-भिज्ञया प्रधानोपस्थितेरपि सत्त्वेन विनिगमकाभावे कथं शरीरस्यैवाव्यक्तशब्देन ग्रहणसिद्धिरिति वाच्यम् ।

प्रधानप्रत्यभिज्ञायाः पौरुषेयवाक्यस्थपदार्थतत्क्रमापेक्षत्वेन दुर्बलत्वेन, शरीरप्रत्यभिज्ञायाश्च प्रकरणाधीनपदार्थाश्रयत्वादभिधेयाकाङ्क्षाश्रयत्वाच्च प्रबलत्वेन, प्राबल्यदौर्बल्ययोरेव विनिगमकत्वात् । तथा हि । रथत्वेन रूपितं शरीरं पुरुषपरत्वप्रतिपादकवाक्यान्वयमपेक्षते । इतरथा निष्प्रयोजनत्वात् । यद्यपि न परत्वावधित्वेनान्वयार्थमात्मशरीरादयो रथिरथविभागेन निरूपिताः । तत्र रथिरथादिनिरूपणस्यानुपयोगात् । तत्रैव परत्वावधीन्द्रियाद्याम्नानसत्त्वेनेतरत्र तद्ग्रहणानर्थक्यप्रसङ्गाच्च । किन्तु निदिध्यासनोपकरणानां तेषां वशीकार्यत्वाद्यर्थम् । वशीकृतानि ह्येतानि तदुपकरणानि भवन्ति । 'यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः । यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः' इति तत्रैव श्रवणात् । तथा च न निष्प्रयोजनत्वम् । तथाऽपि रथिरथादिनिरूपणस्य वशीकार्यत्वज्ञापनार्थत्वेऽपि तज्ज्ञापनस्य वशीकार्याणां परापरभावविवेचनं विना न प्रयोजनपर्यवसायिता संभवति । यत्नेन वशीकार्यमुपेक्ष्यान्यवशीकरणप्रवृत्तौ प्रयोजनलाभासंभवात् । अतो वशीकार्यताज्ञापनरूपस्वप्रयोजनसिद्ध्यर्थमेव रथित्वादिना रूपिताः षड'पीन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिवाक्यान्वयमपेक्षन्त इत्यस्त्येव शरीरस्यापि तदन्वयापेक्षा । न च स्वाभिधेयावरुद्धा इन्द्रियादिशब्दास्तदभिदधतीत्यस्त्यव्यक्तशब्दापेक्षा शरीरस्य । अव्यक्तशब्दोऽपि यौगिकत्वादभिधेयविशेषाकांक्षी स्वस्वशब्दोपात्तेन्द्रियाद्यभिधातुमक्षमः शरीराकांक्षीति । तदेवं शरीरप्रत्यभिज्ञाया बलवत्त्वात्तया प्रधानप्रत्यभिज्ञाबाधसंभवाच्छरीरस्यैवाव्यक्तशब्देन ग्रहणमिति युज्यते निर्णय इति संक्षेपः । विस्तरस्तु शाङ्करभाष्यादौ द्रष्टव्यः । परिहरति **नेति** ॥ **एवमिति** । शरीररूपकविन्यस्तगृहीतेरित्यस्यान्यार्थत्वादिति भावः । किमर्थान्तरकल्पनया बाधकाभावेनोपवर्णितार्थत्वस्यैव संभवादित्यत आह **तथात्वे हीति** ॥

**इत्यवक्ष्यदिति** । रूपकविन्यस्तपदस्य शरीरविशेषणत्वेन पूर्वनिपातस्यावश्यकत्वादिति भावः । उपलक्षणं चैतत् । रूपकविन्यस्तपदेनैव शरीरस्य रथरूपविन्यासस्योक्तत्वेन 'तथा हि दर्शयती'त्यस्य वैयर्थ्यादित्यपि द्रष्टव्यम् । ननु कडारादित्वात्परनिपातो भविष्यतीत्यत आह **अस्तु वेति** । कडारादित्वमगतिका गतिरित्याशयेन कथञ्चिदित्युक्तम् । यद्वा । ननु रूपकविन्यस्तपदं न शरीरविशेषणम् । तथा सति रूपकविन्यस्तव्यतिरिक्तमपि शरीरमङ्गीकृत्य तद्व्यावर्तनार्थं विशेषणमिति स्यात् । रूपकविन्यस्तेन्द्रियादिव्यावर्तनमेवेहेष्यते तच्च शरीरविशेषणेनैव लक्ष्यत इति तल्लाभार्थं विपरीतविशेषणविशेष्यभावविवक्षया शरीरशब्दस्यैव पूर्वनिपात इत्यत आह **अस्तु वेति** । रूपकविन्यस्तशरीरपदयोर्विपरीतविशेषणविशेष्यभावकल्पनया रूपकविन्यस्तपदस्यास्तु परनिपात इत्यर्थः । उक्तरीत्या विशेषणविशेष्यभावस्य 'शरीरं ह्यत्र रथरूपकविन्यस्तमित्यव्यक्तशब्देन परिगृह्यते' इति परभाष्यादलाभाभिप्रायेण कथ-

श्चिदित्युक्तम् ॥ **न ह्येषा रूढिरिति** । न परीक्षकाणां पारिभाषिकी प्रसिद्धी रूढित्वेनाभ्युपगन्तुं शक्यते । तथा हि सति तस्या एव वेदार्थनिर्णये निमित्तत्वं वाच्यम् । न च तद्युक्तम् । एवं हि सति परीक्षकविप्रतिपत्त्या वेदार्थेऽपि तत्प्रसङ्गात् । 'य एव लौकिकाः' इति शाबरवचनविरोधाच्च । तत्र लौकिको वैदिक इति व्यपदेशभेदादिना लोकवेदयोः शब्दार्थभेदमाशङ्क्य लोकावगतसंबन्धशब्दानां वेदे बोधकत्वोपपत्तेरर्थैक्यस्य समर्थितत्वात् । किन्तु लौकिकप्रसिद्धिरेव रूढिः । तथा चाव्यक्तशब्दस्य शरीरे लौकिकप्रसिद्धिविरहान्न तस्य तत्र रूढिरिति भावः ।

अव्यक्तशब्देन भूतसूक्ष्मग्रहणे हेतुमाह **अनादेस्तस्येति** । ननु भूतसूक्ष्मस्याव्यक्तत्वार्हत्वे किमायातं स्थूलदेहस्येत्याशङ्क्याह **कार्यकारणशब्दाश्चेति** । प्रकृतेर्विकाराणामनन्यत्वात्प्रकृतेरव्यक्तत्वं विकारे शरीरे उपचर्यत इत्यर्थः । प्रकृतिशब्दस्य विकारे प्रयोगे श्रौतं दृष्टान्तमाह **गोभिरिति** । गोभिस्तद्विकारैः पयोभिर्मत्सरं सोमं श्रीणीत विकारापन्नं कुर्यात् । पाकार्थत्वेऽपि हिरण्येन श्रीणीतेतिवदत्र संबन्धार्थत्वं श्रीणीतेरिष्टम् । ततश्च मत्सरं सोमं श्रीणीत मिश्रयेदित्यर्थः । अत्र यथा गोशब्दस्तद्विकारे प्रयुक्तस्तथा कारणवाचकमव्यक्तपदं तदभिन्ने कार्ये शरीरे प्रयुज्यत इति भावः । यद्यप्यत्र कारणशब्दाः कार्ये दृष्टा इत्येव वक्तव्यं तावत एव प्रकृतोपयोगात् । प्रकृतिशब्दश्च विकारे दृष्ट इत्येव परेणोक्तत्वाच्च । तथाऽपि सूक्ष्मं त्विह कारणात्मना शरीरं विवक्ष्यते शरीरद्वयस्य रथत्वेन सङ्कीर्तितत्वादित्यादिपूर्वोत्तरतदीयग्रन्थपर्यालोचनया कार्यवाचिशरीरशब्दस्यापि कारणे भूतसूक्ष्मे प्रयोगस्य तदभिप्रेतत्वसिद्धेस्तदभिप्रायेण कार्यकारणशब्दाश्चेत्युक्तम् । अयं चाभिप्रेतानुवादो वक्ष्यमाणविकल्पोत्थापनाय । अन्यथैककोटिनिर्धारणेन विकल्पानुत्थानप्रसङ्गात् । विकल्पाश्रयणं च 'तेजोऽबन्नात्मकं वाऽपि यद्युपादानमिष्यते । अनाद्येव' इत्याद्यनुव्याख्यानस्वारस्यायेत्यवधेयम् । यद्वा तेजोऽबन्नशब्दानां कार्यभूतवाचिनां सूक्ष्मेऽव्यक्ते भाष्यकारीयं प्रयोगं समर्थयितुं तदुपादानं कृतमिति ध्येयम् ।

**अत्रेति** । 'अव्यक्तात्पुरुषः पर' इति वाक्य इत्यर्थः ॥ **तत्रेति** । शरीर इत्यर्थः । उपचारे बीजमाह **शरीरेति** ॥ **तत्रेति** । भूतसक्ष्म इत्यर्थः । उपचारे बीजमाह **शरीरस्येति** ।

विकल्पितपक्षद्वयं मूलारूढं करोति **प्रथम इति** । स्वरूपेणेत्यव्यक्तशब्दवाच्यतयेति च मूले शेषपूरणं पक्षद्वयस्य मूलारूढतासिध्यर्थं कृतमिति ज्ञेयम् ।

इतीत्यतः परं त्वयोच्यत इति संबन्धः ॥ **परेणेति** । सांख्येनेत्यर्थः । उच्यत इत्यनुवर्तते ॥ **तल्लक्षणकत्वादिति** । अनादेरुपादानस्येत्याद्युक्तलक्षणकत्वादित्यर्थः । जगतः प्रागवस्थाया सांख्यैः प्रधानत्वेनाभ्युपगमादिति भावः ।

स०— कडारादित्वात्परनिपात इति आह **अस्तु वेति** ॥ अर्थानिर्णयात्कथञ्चिदित्युक्तम् । कारणस्य भूतसूक्ष्मस्याव्यक्तत्वे तस्यैवाव्यक्तशब्दवाच्यस्यान्नकार्यस्य शरीरस्येत्यत आह **कार्यकारणशब्दाश्चेति** ॥ **सङ्कीर्यन्ते** कारणशब्दाः कार्ये कार्यशब्दाश्च कारणे प्रयुज्यन्त इत्यर्थः ॥ **गोभिः श्रीणीत मत्सरमिति** ॥ मदं सुखं सारयति प्रापयतीति मत्सरः सोमः, तं गोभिः गोविकारैः पयोभिः श्रीणीत मिश्रितं कुर्यादित्यर्थः । अत्र कारणवाचकस्य गोशब्दस्य कार्ये पयसि प्रयोगाददृष्टान्तत्वमिति द्रष्टव्यम् । **प्रथमे स्वरूपेणेति** ॥ अव्यक्तशब्दवाच्यतयेत्यर्थः । अव्यक्तभूतसूक्ष्मकार्यत्वेन उक्तशब्दवाच्यत्वं शरीरस्यैति प्रथमपक्षेऽव्यक्तशब्दवाच्यमपि भूतसूक्ष्मकारणतया स्वरूपेणैवाङ्गीकृतमिति भावः ।

प०— प्रकरणात्परिशेषाच्चेतीतिशब्दस्य इति सूत्रकृतैवोक्तमिति पूर्वेणान्वयः । **प्रकरणात्** 'शरीरं रथमेव चे'तिरथरूपकतया शरीरस्य प्रकृतत्वादित्यर्थः । न'न्वात्मानं रथिनं विद्धि शरीरं रथमेव च । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति पूर्ववाक्ये आत्मबुद्धीन्द्रियादेरपि प्रकृतत्वादव्यक्तशब्देन शरीरस्यैव ग्रहणं कुत इत्यत उक्तं **परिशेषाच्चेति** । तेषामिन्द्रियादीतरशब्दैर्गृहीतत्वेन परिशिष्यमाणशरीरस्याव्यक्तशब्देन ग्रहणमित्यर्थः । दूषयति **नैवमित्यादिना** ॥ **इत्यवक्ष्यदिति** । रूपकविन्यस्तपदस्य शरीरविशेषणत्वेन पूर्वनिपातेन भाव्यत्वादिति भावः । ननु रूपकविन्यस्तमित्येतदेव प्राधान्येन विशेष्यतयोपादीयते । तत्किमित्यपेक्षायां शरीरेत्यस्यान्वयाददोष इत्यत आह **अस्तु वा कथञ्चिदिति** । शङ्कते **परिहृतमेवेत्यादिना यथेत्यन्तेन** । सूत्रार्थमाह **यद्यपीति** । कारणस्य भूतसूक्ष्मस्याव्यक्तत्वे तत्कार्यशरीरस्य किमायातमित्यत आह **कार्यकारणेति** ॥ **गोभिरिति** । 'आधावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना । गोभिः श्रीणीत मत्सरम्' ( ऋ. ९–४६–४ ) इत्यस्यां ऋचि गोभिः गोकार्यैः क्षीरैः मत्सरं सोमरसं श्रीणीत मिश्रीकुर्यादिति गोकार्ये क्षीरे यथा कारणगोपदप्रयोगः तथा तेजोबन्नाव्यक्तकार्ये शरीरेऽव्यक्तशब्दप्रयोगो युक्त इत्यर्थः ॥ **अत्रेति** । 'महतः परमव्यक्तमि'ति श्रुताविर्थः । अपीत्यस्यार्थोऽपि त्विति । वाशब्दं एवार्थमुपेत्याह **भूतसूक्ष्ममेवेति** । इष्यत इत्यत्र कथमिति प्रकाराकाङ्क्षायां प्रकारद्वयं व्यवस्थयाह **प्रथम इति** । किं शरीरमेवात्रोच्यत इति पक्षे किं भूतसूक्ष्ममेवेति द्वितीयपक्ष इत्यर्थः । यत्र यदीतिश्रवणात् प्रतिसंबन्धिपदद्वयमध्याहृत्य योजयति **तत्र तर्हीति** । तदिति शेषोक्तिः । अव्यक्तपदवाच्यमित्यर्थः ॥ **परेण त्विति** । तत्पूर्वपक्षिणा सांख्येन त्वित्यर्थः ॥ **प्रतिपक्षभूतमिति** । परमित्यनेन प्रतीतकारणत्वरूपब्रह्मलक्षणस्यातिव्याप्त्यापत्तेरिति भावः ॥ **कारणत्वाविवक्षायां त्विति** । परमित्यस्योत्तमार्थत्वमुपेत्य कारणत्वधीरत्र नास्तीति विवक्षायामित्यर्थः ।

या० — **प्रकरणादित्यादि** । अत्र प्रकरणपरिशेषोपपादकं तदीयं भाष्यमेव लिख्यते । तथा हि, "अनन्तरातीतो ग्रन्थ आत्मशरीरादीनां रथिरथादिरूपकक्लृप्तिं दर्शयति "आत्मानं रथिनं विद्धि शरीरं रथमेव तु ॥ बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति । तैश्चेन्द्रियादिभिरसंयतैरध्वनः पारं विष्णोः परमं पदं प्राप्नोतीति दर्शयित्वा, किं तदध्वनः पारं विष्णोः परमं पदमित्याकाङ्क्षायां, तेभ्य एव प्रकृतेभ्य इन्द्रियादिभ्यः परत्वेन परमात्मानं विष्णोः पदं दर्शयति ॥ 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिना 'सा काष्ठा सा परा गति'रित्यन्तेन । तत्र य एवेन्द्रियादयः पूर्वस्यां रथरूपककल्पनायामश्वादिभावेन प्रकृताः, त एवेह परिगृह्यन्ते प्रकृतहानाप्रकृतप्रक्रियापरिहाराय । तत्रेन्द्रियमनोबुद्धयस्तावत्पूर्वत्रेह च समानशब्दा एव । अर्थास्तु य इमे शब्दादयो विषया इन्द्रियहयगोचरत्वेन निर्दिष्टास्त एव । बुद्धेरात्मा महान्परो यः स 'आत्मानं रथिनं विद्धी'ति रथित्वेनोपक्षिप्तः आत्मशब्दात् । महत्त्वं चास्य स्वामित्वादुपपन्नम् । तदेवं शरीरमेवैकं परिशिष्यते । तच्चेह परिशिष्यमाणेनान्त्येनाव्यक्तशब्देन गृह्यत इति गम्यते" इति । अस्य च भाष्यस्य 'रथत्वेन रूपितं शरीरं पुरुषपरत्वप्रतिपादकवाक्यान्वयमपेक्षते । इतरथा निष्प्रयोजनत्वात् । न च स्वाभिधेयावरुद्धा इन्द्रियादिशब्दास्तदभिदधतीत्यस्त्यव्यक्तशब्दापेक्षा शरीरस्य । अव्यक्तशब्दोऽपि यौगिकत्वादभिधेयविशेषाकाङ्क्षी स्वशब्दोपात्तेन्द्रियाद्यभिधातुमक्षमः शरीराकाङ्क्षीति शरीरमेवाव्यक्तशब्दार्थ' इति कल्पतरूक्तोऽभिप्रायोऽवगन्तव्यः ॥ कडारादित्वाभावात्कथञ्चिदित्युक्तम् । नन्वेवं कारणस्य भूतसूक्ष्मस्याव्यक्तत्वे तस्यैवाव्यक्तशब्दवाच्यत्वं स्यान्न कार्यस्य शरीरशब्दवाच्यस्येत्यत आह **कार्यकारणशब्दाश्चेति** । **सङ्कीर्यन्ते** समानविषया भवन्ति । तथाच कार्यकारणयोरभेदाद्रथत्वेन रूपिते एकस्मिन्वस्तुनि शरीराव्यक्तशब्दयोः प्रयोगो युक्त इति भावः । कार्यस्य कारणाभेदेन कारणशब्दः कार्ये क्व दृष्ट इत्यत आह **गोभिरिति** । मदं सुखं सारयति प्रापयतीति मत्सरः सोमस्तं गोभिर्गोविकारैः पयोलक्षणैः श्रीणीत मिश्रयेदित्यर्थः । अत्र कारणवाचकस्य गोशब्दस्य तद्विकारे पयसि प्रयोगो दृष्ट इति भावः । अत्र यद्यपि कारणशब्दाः कार्येऽपि दृष्टा इत्येव वक्तव्यं तावत एव प्रकृतोपयोगात्प्रकृतिशब्दश्च विकारे दृष्ट इति परेणापि तथैवोक्तेश्च । तथाऽपि सूक्ष्मं त्विह कारणात्मना शरीरं विवक्ष्यते । शरीरद्वयस्य रथत्वेन सङ्कीर्तितत्वादित्यादिपूर्वोत्तरतदीयभाष्यपर्यालोचनया कार्यवाचिशरीरशब्दस्यापि कारणे भूतसूक्ष्मे प्रयोगस्तदभिप्रेत इत्यवगम्यते । तदनुवादाय चैवमुक्तमिति ध्येयम् । अयं च तदभिप्रेतानुवादो वक्ष्यमाणविकल्पोत्थानाय । अन्यथा कारणशब्दः कार्य इत्येवोक्तौ तदनुत्थानात् । एकस्याः कोटेर्निर्धारितत्वात् । विकल्पश्च 'तेजोऽबन्नात्मकं वाऽपि यद्युपादानमिष्यते । अनाद्येवे'त्यनुव्याख्यानस्वारस्यायेति ज्ञातव्यम् । तेजोऽबन्न-

शब्दानां कार्यभूतवाचिनां कथं सूक्ष्मेऽव्यक्ते प्रयोगो मूलकारैः कृत इत्याशङ्कामपि पराकर्तुं कार्यशब्दानां कारणे प्रयोगोपपादनायैवमुक्तमित्याहुः ॥ **पक्षद्वयेऽपीति** । एतेन स्थूलसूक्ष्मशरीरद्वयं शरीराव्यक्तशब्दाभ्यां प्रत्येकमजहत्स्वार्थलक्षणयाऽत्र विवक्षितमिति तदभिप्रेतपक्षोऽपि दूषितो ज्ञातव्यः ॥ **प्रथमे स्वरूपेणेति** । अव्यक्तशब्दतात्पर्यविषयतयेत्यर्थः । मुख्यतोऽव्यक्तशब्दवाच्यभूतसूक्ष्मकार्यत्वेनामुख्यतोऽव्यक्तशब्दप्रतिपाद्यं शरीरमेवेति प्रथमपक्षेऽव्यक्तशब्दमुख्यवाच्यं शरीरकारणं भूतसूक्ष्मं प्रकृताव्यक्तशब्देनाविवक्षितमपि स्वरूपेणाङ्गीकृतम् । अन्यथा मुख्यार्थद्वारिकाया अमुख्यवृत्तेरप्यङ्गीकर्तुमशक्यत्वादिति भावः । उपादानपदसूचितमभिप्रायमाह **यदि चाव्यक्तस्येति** ॥

श्री० — **रूपकतयेति** । **रथोपमतया** रथसादृश्येनेत्यर्थः ॥ **विन्यस्तेति** । कथितेत्यर्थः ॥ **कार्यकारणशब्दा इति** । कार्ये कारणशब्दाः **सङ्कीर्यन्ते** मिश्रिता भवन्तीत्यर्थः । **अत्र** अव्यक्तादिश्रुतौ । **तत्र** शरीरे । एतदुपपादयति **शरीरेति** । **वाच्यं** श्रुताविति शेषः । **शरीरशब्दः** सौत्र इत्यर्थः । **तत्र** भूतसूक्ष्मे । तदुपपादयति **शरीरस्येति** । मूलोपादानं न साक्षादित्यर्थः ॥ **स्वरूपेणेति** । शरीरस्यैव श्रुतिगताव्यक्तशब्दतात्पर्यविषयत्वेन भूतसूक्ष्मस्य तदभावादव्यक्तशब्दतात्पर्याविषयत्वं स्वरूपशब्दार्थः । **तत्** शरीरमूलोपादानमनादिभूतसूक्ष्ममित्यर्थः । **परेण** सांख्येन । **पक्षद्वयं** मायिसांख्यपक्षद्वयम् । एवमुत्तरत्र । **अङ्गीकारे** अव्यक्तशब्दवाच्यतया । कुत इत्यत आह **तदिति** । अनादित्वोपादानत्वजडत्वभूतसूक्ष्मत्वरूपोक्तलक्षणोपेतत्वादित्यर्थः । नन्वेतादृशलक्षणोपेततया तेजोबन्नान्येवाङ्गीकृतानि न प्रधानमिति चेत्तत्राह **नाम्नीति** । तेन प्रधानमेतादृगित्युच्यते । त्वया तु तेजोऽबन्नान्येतादृशानीत्येवं नाम्न्येव विवादो न त्वर्थे इति भावः ॥

च० — **प्रकरणादिति** । अन्यथा प्रकृतपरित्यागाप्रकृतस्वीकारौ प्रसज्येयातामिति भावः । प्रकरणपरिशेषस्वरूपं तदीयभाष्य एव प्रादर्शीति न तत्प्रदर्शनीयम् ॥ **कथञ्चिदिति** । कडारादित्वाभावादिति भावः ॥ **कार्यकारणशब्दा इति** । द्वन्द्वप्रकृतिका 'सुपो धात्वि'ति लुप्ता षष्ठी वाचकत्वार्थिकेति प्रकृतिविकृत्यभिधायकाः शब्दा इत्यर्थः । सङ्कीर्यन्ते एकस्मिन्नेव वस्तुनि प्रयुज्यन्ते । तत् निदर्शनप्रदर्शनेन घटयति **गोभिरिति** । गोविकृतिभूतैः पयोभिर्मत्सरं 'मत्सरो मदकारित्वान्मदः सुखमिहोच्यते' इति भाष्यदिशा सुखजनकं सोमं । क्र्यादिगणे पाकार्थे पठितश्रीणातेर्धातूनामनेकार्थत्वान्मिश्रयेदित्यर्थः । अत्र प्रकृतिशब्दश्च विकारे दृष्ट इत्येव परेणाभिहिततया कारणशब्दाः कार्येऽपि दृष्टा इत्यंशस्यैव प्रकृतौपयिकतयाऽभिहित्यौचित्यामपि सूक्ष्मं त्विह कारणात्मना शरीरं वक्ष्यते । शरीरद्वयस्य रथत्वेन सङ्कीर्तितत्वादिति तदीयभाष्यपूर्वोत्तरग्रन्थविन्यासेन कार्यवाचकशरीरशब्दप्रयोगस्यापि कारणीभूतभूतसूक्ष्मे तदभिप्रेतत्वावगमेन कार्यकारणशब्दाश्चेति विन्यस्तम् । 'तेजोबन्नात्मकं वापि

यद्युपादानमिष्यते । अनाद्येवापराधः कः' इत्यनुव्याख्यास्वारस्यौपयिकविकल्पोत्थानफलकस्तदभिप्रेतानुवादस्तदेकतरकोटिनिर्धारणायां तदनुत्थानादिति मन्तव्यम् । तेजोबन्नशब्दानां कार्यभूतवाचिनां सूक्ष्मे अव्यक्ते भाष्यकृत्प्रयोगसमर्थनाय कार्यशब्दानां कारणे प्रयोगोपपादनमिति ध्येयम् ।

**सु० — नन्विदमाशङ्क्य सूत्रकारेणैव परिहृतम्, तदधीनत्वादर्थवदिति । स्यादेतदेवम् । यदि वयं स्वतन्त्रं तेजोऽबन्नात्मकं कारणम्(इति)अभ्युपगच्छामः । नैतदस्ति । तस्य ब्रह्माधीनताङ्गीकारात् । अवश्यं चैतद(देवम)ङ्गीकर्तव्यम् । अर्थवद्धि तत् । न हि तेन विना ब्रह्मणो जगत्कारणत्वं निर्वहतीति ।**

**अत्रोच्यते । किमनेनोक्तं भवति । अस्ति प्रधानमिति संप्रतिपन्नम् । तद्धर्मेषु तु स्वातन्त्र्यादिषु विप्रतिपत्तिरिति । एवं चेत्प्रधानस्य स्वातन्त्र्यादिकं सांख्येन चोदनीयम् । त्वया तु पारतन्त्र्यादिकं व्युत्पादनीयम् । किमनेनाव्यक्तादिशब्दानां प्रधानपरतानिरासप्रयासेन । न ह्यत्र प्रधानस्य स्वातन्त्र्यादिकमवभासते । प्रत्युताव्यक्तात्पुरुषः पर इत्यव्यक्तस्य पुरुषाधीनत्वं प्रतीयते । तदिदमप्युक्तं 'प्रधानमत्रोच्यत इत्येवोक्तेऽपराधः कः । किन्तु स्वतन्त्रमित्युदिते । न चैवमत्रोच्यते' इति ।**

---

शे० — **न हीति** । कूटस्थ-असङ्ग-अद्वयस्य ब्रह्मणःस्रष्टृत्वान्यथाऽनुपपत्त्या मायाशक्तिरेष्टव्येति भावः ॥ **व्युत्पादनीयमिति** । 'यस्याव्यक्तं शरीरं योऽव्यक्तमन्तरो यमयति' इत्यादिश्रुतिमाश्रित्येति शेषः ॥ **पुरुषाधीनत्वमिति** । पुरुषगतपरत्वं प्रति अवधित्वेनार्थादव्यक्तस्य तदधीनत्वाक्षेपादिति भावः ।

श्री० — **नन्विदमिति** । 'अनाद्येवापराधः कः प्रधानमिति चोदिते' इति भवदीयं दूषणमेवेत्यर्थः । एवं अनाद्येवेति भवदुक्तं दूषणमभ्युपगच्छाम इति । तर्ह्येव सांख्योक्तरीत्या प्रधानमेव स्वतन्त्रकारणं किं न स्यादिति वाच्यमित्यर्थः ॥ **तस्येति** । अस्माभिरिति शेषः । सांख्येन तु नैवमङ्गीकृतमिति भावः । अतः स्वतन्त्रप्रधानकारणतावादस्य स्वतन्त्रब्रह्मकारणतावादविरोधित्वादवश्यं दूष्यमिति हृदयम् । ननु कारणतयाऽङ्गीकृतेन ब्रह्मणैव सर्वस्योपपत्तौ तदधीनतेजोऽबन्नाङ्गीकारः किमर्थमित्यत आह **अवश्यमिति** । **एतत्** तदधीनं तेजोऽबन्नात्मकं कारणम् । **तेन** तेजोऽबन्नरूपकारणेन । 'सर्वकामदुघा विभोः' इत्युक्तेरिति भावः । ब्रह्मणा जगत्सर्जने क्रियमाणे उपादानकारणस्यावश्यमपेक्षितत्वादिति हृदयम् । ननु मयाऽपि सांख्येन प्रधानस्य स्वातन्त्र्ये चोदिते तदेव निराक्रियते इति चेत्तत्राह

न ह्यत्रेति । अत्र 'अव्यक्तादिरि'ति वाक्ये । तथा च निर्दलः पूर्वपक्ष एव न सम्भवतीति भावः ॥ **न चैवमिति** । पुरुषाधीनत्वश्रवणेनात्र वाक्ये प्रधानस्य स्वातन्त्र्यं नैवोच्यत इत्यर्थः ॥

**सु०— चमसवदविशेषादित्यादिकमधिकरणमपि प्रधानस्याशाब्दत्वप्रतिपाद(क)नार्थमिति व्याचक्षते । तथा हि । 'अजामेकां लोहितशुक्लकृष्णां (बह्वीं प्रजां जनयन्तीं सरूपाम्) । बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इत्यस्मिन्मन्त्रे प्रधानस्य प्रतिपादनात्कथं तदशब्दमिति । अत्रोच्यते । यथा हि 'अर्वाग्बिलश्चमसः' इत्यस्मिन्मन्त्रे स्वातन्त्र्येण 'अयं नामासौ चमसः' इति न शक्यते निरूपयितुम्, विशेषाभावात् । ऊर्ध्वबुध्नत्वादेर्यथाकथञ्चित्सर्वत्र योजयितुं शक्यत्वात् । तथा 'अजामेकाम्' इत्यत्रापि प्रधानप्रतिपादनं न शक्यावधारणम्, विशेषाभावादिति । तदिदमनुपपन्नम् । 'गौरनाद्यन्तवती सा जनित्री भूतभाविनी । सिताऽसिता च रक्ता च सर्वकामदुघा विभोः' इत्यादिश्रुतिसमाख्यया निर्णयोपपत्तेः ।**

**किञ्च न तावदत्र अजाशब्देन रूढार्थत्वाच्छागी स्वीकर्तुमुचिता, विद्याप्रकरणत्वात् । नापि परं ब्रह्म, लोहितादित्वासंभवात् । भोग्यत्वानुपपत्तेश्च । अत एव न जीवोऽपि, भोक्तृतया पृथगभिधानात् । नाप्यन्यत्किञ्चिदचेतनम्, अजननानुपपत्तेः । अतः प्रकृतिरेवाजा, जन्माभावात् । लोहितशुक्लकृष्णा च रजस्सत्त्वतमोरूपत्वात् । प्रसिद्धं च रजआदीनां लोहितादित्वमागमेषु । तदनुषक्तश्च जीवस्संसरति । असंसक्तस्तु मुच्यत इत्येतदपि सुप्रसिद्धम् । न चेदेवम्, मन्त्रस्य निर्विषयत्वापत्तिरिति ।**

**शे०— मन्त्र इति** । श्वेताश्वतरवाक्य इत्यर्थः । अर्वाग्बिलत्वादिना विशेषसिद्धिमाशङ्क्य परिहरति **ऊर्ध्वबुध्नत्वादेरिति** ॥ **सर्वत्रेति** । गिरिगुहादावित्यर्थः । तत्र हेत्वाकाङ्क्षायामजात्वादेः सर्वत्रापि यथाकथञ्चित्सुसम्पादत्वात्प्रकरणोपपदवाक्यशेषादिरूपविशेषहेतोश्चाभावादित्याशयेनाह **विशेषाभावादिति** । अनाद्यन्तवतीत्यत्रादिश्चान्तश्चाद्यन्तौ नाद्यन्तावनाद्यन्तौ अनाद्यन्तौ विद्येते यस्याः सा तथोक्तेत्यर्थः । तथा चोदाहृतश्रुत्युक्ताया एवाजाया अजामेकामिति मन्त्रे प्रत्यभिज्ञानादुदाहृतमन्त्रोक्तायाश्चानाद्यन्तवत्त्वादिना प्रकृतित्वनिर्णयात्तत्समाख्यया अजामेकामिति मन्त्रोक्ताया अपि प्रकृतित्वनिर्णयोपपत्तेर्विशेषाभावोऽसिद्ध इति भावः ॥ **विद्याप्रकरणत्वादिति** । अध्यात्मविद्याधिकारादित्यर्थः ॥ **लोहितादित्वेति** । ब्रह्मणोऽरूपत्वेन तत्र लोहितादिरूपाभावादित्यर्थः ॥ **भोग्यत्वेति** । चेतनेनेति शेषः । अत एव जडत्वेन भोग्यत्वं सम्भवतीति वक्ष्यतीति ध्येयम् ॥ **अत एवेति** । चेतनत्वेन जीव-

स्यापि भोग्यत्वानुपपत्तेरेवेत्यर्थः **अन्यत्किञ्चिदचेतनमिति** । तेजोऽबन्नलक्षणमित्यर्थः ॥ **अजननेति** । जनिमत्त्वादिति भावः । नन्वजाशब्दस्य प्रकृतौ रूढ्यभावात्कथं प्रकृतेरजाशब्देन ग्रहणमित्यतो रूढ्यभावेऽपि योगेन ग्रहणमित्याह **जन्माभावादिति** ।

प०— अजामितिमन्त्रार्थोऽग्रे व्यक्तः ॥ **भोग्यत्वानुपपत्तेरिति** । जुषमाणपदेन भुक्तभोगपदेन चोक्तभोग्यत्वेत्यर्थः ।

या०— **विशेषाभावादिति** । धर्मिविशेषनिर्धारकविशेषाश्रवणादित्यर्थः ॥ विशेषाभावादित्येतदसिद्धं चेत्याशयेनाह **विश्वेत्यादिना** ॥ **विद्याप्रकरणत्वादिति** । अध्यात्मविद्याप्रकरणत्वादित्यर्थः ।

श्री० — **अयं नामेति** । यदि नामेत्यादाविव प्रसिद्ध्यर्थो नामशब्दः । ननु चोर्ध्वबुध्नत्वादिकमेव चमसताज्ञापको विशेषो भवन्त्वित्यत आह **ऊर्ध्वेति** । **सर्वत्र** घटादावित्यर्थः । **गौः** प्रकृतिः ॥ **निर्णयेति** । तथा चाजामेकामित्यत्राविशेषोऽसिद्ध इत्यर्थः । अजामिति वाक्ये परिशेषात्प्रकृतेरेवाजात्वमुपपादयितुं प्रसक्तप्रतिषेधं करोति **किंचेत्यादिना** ॥ **विद्येति** । यदि कर्मप्रकरणमेतत्स्यात्तर्ह्येवाऽऽलम्भनार्थं छागी उपयुक्ता स्यात् । न चैवम् । एतद्वाक्यस्योपनिषद्गतत्वेन ज्ञानप्रकरणत्वान्न छाग्या उपयोग इत्यर्थः । उपादानत्वेन जगत्कारणीभूतस्यापरतत्त्वस्याप्रधानस्य ज्ञानं सर्वोत्तमत्वेन भगवज्ज्ञानोपयुक्तमधिकारिणाऽवश्यं सम्पाद्यमिति ज्ञानप्रकरणे तत्कथनस्योपयुक्तत्वादजाशब्देन प्रधानग्रहणमेवोचितमिति भावः । ब्रह्म अजाशब्देन स्वीकर्तुमुचितमिति लिङ्गविपरिणामेनानुवर्तते ॥ **असम्भवादिति** । निर्गुणत्वाद्ब्रह्मण इति भावः ॥ **भोग्यत्वेति** । भुक्तभोगामित्युक्तभोग्यत्वेत्यर्थः । **अत एव** भोग्यत्वानुपपत्तेरेव । **न जीवोऽपि** अजाशब्देन स्वीकर्तुमुचितः ॥ **अभिधानाच्चेति** । जुषमाण-इत्यनेनेत्यर्थः **अजननेति** । अजापदोक्तेत्यर्थः ॥ 'तदनुषक्तश्च जीवः संसरति' इति अजो ह्येको जुषमाणोऽनुशेत इत्यस्य तात्पर्यम् ॥ 'असंसक्तस्तु मुच्यते' इति 'जहात्येनां भुक्तभोगामजोऽन्यः' इत्यस्येति ज्ञेयम् । न चेदेवमित्यनन्तरं तर्हीति शेषः ।

सु०— **ननु न मन्त्रस्य निर्विषयत्वमापद्यते । यतस्सूत्रकृदेवाह ज्योतिरुपक्रमेति । अत्र मन्त्रे प्रतिपादिताऽजा ज्योतिरुपक्रमा तेजोऽबन्नरूपा । कुतः । 'यदग्ने(र्लो)रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति लोहितादिरूपवत्तया तेजोऽबन्नान्यधीयते ह्येके । तत्समाख्ययाऽत्र(ापि) तेजोऽबन्नात्मैवाजा प्रतिपत्तव्या । तस्याश्चतुर्विधभूतग्रामोपादानभूताया बहुप्रजाजननीत्वं जडत्वेन भोग्यत्वं च उपपन्नमिति । अत्र दूषणमाह** अजामिति ।

अनु०— अजामेकामिति प्राह श्रुतिरेतां यदा तदा ॥
को दोषः

**यद्यत्र मन्त्रे परिणामि जडं तेजोबन्नलक्षणं प्रतिपाद्यमङ्गीक्रियते । तर्ह्यजामेकामिति श्रुतिरेतां प्रकृतिं प्राहेति पक्षो यदा तदा को दोषोऽस्ति । न** कोऽपीति ।

**शे०**— छान्दोग्ये तेजोऽबन्नानामीश्वरकार्याणां लोहितादिरूपवतामुक्तत्वेऽपि किमिति तान्येवाजामन्त्रे वक्तव्यानि तदेकार्थत्वे हेत्वभावादित्यत आह **तत्समाख्यया चेति** । लोहितादिशब्दसामान्याच्छान्दोग्योक्तान्येवेह प्रत्यभिज्ञायन्त इति भावः । ननु लोहितादिशब्दसाम्यमात्रेण न छान्दोग्योक्तैवेयमजेति युक्तमाश्रयितुम् । अत्रोक्तबहुप्रजाजनकत्वादेस्तत्रायोगादित्यत आह **तस्या इति** ॥ **चतुर्विधभूतग्रामोपादानभूताया इति** । जरायुजाण्डजस्वेदजोद्भिज्जरूपचतुर्विधभूतग्रामोपादानभूताया इत्यर्थः ॥ **अत्र दूषणमिति** । यद्यप्यत्राजापदमध्याहार्यं तेजसस्तद्रूपमिति श्रुत्यनुगमाय लाघवाय च तेजआदिरिति सूत्रयितव्यं स्यादित्यपि दूषणं वक्तुं शक्यम् । तथाऽपि स्पष्टत्वात्तच्छिष्यैरेव ज्ञातुं शक्यत इति भावेन तस्यानभिधानमिति ध्येयम् ।

**स०**— **चतुर्विधभूतग्रामेति** ॥ देवासुरमनुष्यतिर्यग्रूपेण वा अण्डजोद्भिज्जजरायुजस्वेदजरूपेण वा चातुर्विध्यमित्याहुः ।

**प०**— **चतुर्विधभूतग्रामेति** । जरायुजण्डजस्वेदजोद्भिज्ज-रूपचतुर्विधप्राणिसमूहस्येति भामत्युक्तेत्यर्थः ।

**या०**— **चतुर्विधभूतग्रामेति** । जरायुजाण्डजस्वेदजोद्भिज्जरूपेण चतुर्विधे त्यर्थः ॥

**श्री०**— **उपक्रमा** ज्योतिरादिकेत्यर्थः ॥ **भोग्यत्वमिति** । तेजोऽबन्नानामेतद्भोग्यत्वं प्रसिद्धं जडत्वेन ब्रह्मादिपक्षोक्तदोषाभावादिति भावः ॥

**च०**— **चतुर्विधभूतेति** । जरायुजाण्डजस्वेदजोद्भिज्जरूपचतुर्विधभूतग्रामोपादानभूताया इत्यर्थः ।

**सु०**— **ननु कथं नास्ति । ईक्षतेर्नाशब्दमित्युक्ताशब्दताऽसिद्धेर्विद्यमानत्वादिति चेत् (न) तस्यास्माभिरन्यथाव्याख्यातत्वादित्याशयेनोक्तम्** सर्वथेति ।

अनु०— सर्वथैवास्ति परिणामि जडं यदि ॥

**अपरिहार्य इत्यर्थः** ।

इदमत्राकूतम् । जगत्कारणत्वेन खल्वत्राऽजा प्रतीयते । सा ब्रह्मवादिना ब्रह्मतया समर्थनीया । तेजोऽबन्नात्म(क)तया तु समर्थने प्रधानरूपाऽपि कुतो नाङ्गीकरणीया । लक्षणातिव्याप्तेस्तुल्यत्वादिति । तेजोऽबन्नान्यपि परमेश्वराधीनानि । अतो तत्रातिव्याप्तिरिति न चेत् । एवं तर्हि किं मन्त्रस्य प्रकृतिपरत्वनिराकरणेन । किन्तु प्रकृतिपरत्वमङ्गीकृत्यैव 'यो योनिमधितिष्ठत्येकः' इत्यादिवाक्यबलेनेश्वराधीनत्वमेवोपपादनीयम् ।

शे०— अन्यथेति । समन्वयसंभावकवाच्यत्वोपपादकत्वेनेत्यर्थः । उपलक्षणं चैतत् । निष्फलत्वाशक्यत्वाभ्यां तत्र शाब्दत्वमात्राभावोक्त्ययोगादित्यपि द्रष्टव्यम् ।

ननु तत्तु समन्वयादिति कारणवाक्यानां ब्रह्मणि समन्वयस्य प्रतिज्ञातत्वादजामेकामिति मन्त्रस्य प्रकृतिपरत्वे तस्य कारणत्वाभिधायकत्वेन लक्षणातिव्याप्तिप्रसङ्गात्कथं प्रधानपरत्वे दोषाभाव इत्यत आह इदमिति । नन्वस्माभिस्तेजोऽबन्नानां परमेश्वराधीनत्वाङ्गीकारेण तत्कारणतावादस्य ब्रह्मकारणतायामेव पर्यवसानान्नाजामन्त्रस्य तेजोऽबन्नपरत्वे लक्षणस्यातिव्याप्तिः । प्रधानस्य च सांख्येन स्वातन्त्र्येण कारणत्वाङ्गीकारात्सांख्याभिमतप्रधानपरत्वे वाक्यस्य तत्कारणतावादस्य ब्रह्मकारणतायामपर्यवसानादतिव्याप्तिरिति न लक्षणातिव्याप्तेः पक्षद्वये तौल्यमित्याशङ्कते तेजोऽबन्नानीति ॥ वाक्यबलेनेति । अजामेकामिति श्वेताश्वतरवाक्योपसंहाररूपैतद्वाक्यबलेनेत्यर्थः । आदिपदेन यस्याव्यक्तं शरीरमित्यादेः संग्रहः ।

प०— यो योनिमिति । यस्यामेव श्वेताश्वतरोपनिषदि चतुर्थेऽध्यायेऽजामेकमितिमन्त्रस्तत्रैव पञ्चमेऽध्याये यो योनिमितिवाक्यं श्रुतमिति तद्बलेनेत्यर्थः ।

श्री०— अपरिहार्य इति । तथा च सर्वथाऽपरिहार्यो दोषः कोऽस्ति सर्वोऽपि दोषोऽस्माभिः परिहर्तुं शक्य एवेत्यर्थः । परिहर्तुं शक्यताप्रदर्शनायैव 'तस्यास्माभिरि'त्याद्युक्तम् । ननु न प्रधानरूपाङ्गीकरणीया । तथात्वे कारणत्वरूपब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिः स्यादिति चेत् । तेजोऽबन्नात्मकतापक्षेऽपि साम्यादित्याह लक्षणेति । ननु स्वातन्त्र्येण जगत्कारणत्वस्यैव ब्रह्मलक्षणतया विवक्षितत्वात्तस्य च तेजोऽबन्नेष्वभावेनानतिव्याप्तत्वान्न तुल्यत्वमित्याशङ्क्य प्रधानपक्षेऽप्येवमतिव्याप्तिः परिहर्तुं शक्येत्याह तेजोऽबन्नानीत्यादिना ॥ यो योनिमिति । यो भगवान्योनिं योनिं प्रति कार्योपादानभूतां प्रकृतिमधितिष्ठतीत्यर्थः । अधीनत्वं प्रकृतेरिति शेषः ॥

सु०— किञ्च तेजोऽबन्नादिषु न तावदजाशब्दो रूढः । नापि यौगिकः । तत्तेजोऽसृजतेत्यादिश्रुतेरजननासम्भवात् । न च स्त्रीलिङ्गत्वमुपपद्यते । नाप्येकवचनम् । त्रिवृत्करणा-

**दिति चेन्न । बहुत्वानिवृत्तेः । अथ मन्येत तेजोऽबन्नोपादानं जडमनादिद्रव्यं किमप्येकमस्ति । तत्कार्यत्वादुपचारादजादिशब्दोपपत्तिरिति । तर्हि तदेवात्र प्रतिपाद्यमस्तु, शब्दानां मुख्यवृत्तिलाभात् । अस्त्विति चेत्तर्हि प्रकृतिरत्र प्रतिपाद्येति वदता पूर्वपक्षिणा किमपराद्धम् । तल्लक्षणत्वात्प्रकृतेः । नाममात्रे विवादायोगाच्च, तदिदमुक्तमजामेकामिति ।**

**शे०** भाष्येऽजामेकामिति पदद्वयसूचितं दोषमाह **किञ्चेति** । छाभ्यामजाशब्दस्य रूढत्वेऽप्यभिधानाद्यभावेन न तस्य तेजोऽबन्नेषु रूढिरिति भावः । ननूक्तहेतोरेवाजाशब्दस्य प्रकृतावरूढत्वेपि योगेन तत्परत्ववद्योगेनैव तेजोऽबन्नपरत्वं किं न स्यादित्यतः प्रकृतेर्जन्माभावेन तत्र तस्य योगसम्भवेऽपि तेजोऽन्नानां जनिमत्त्वान्न तत्र योग इति भावेन प्रमाणेन जनिमत्त्वमुपपादयति **नापीति** । प्रातिपदिकास्वारस्यमुक्त्वा प्रत्ययास्वारस्यमप्याह **न चेति** । नापीत्यर्थः । अजाशब्दे स्त्रीलिङ्गस्य प्रकृतावर्थसाधुत्वे सम्भवति दारखट्वादिशब्देष्विव तेजोऽबन्नेषु प्रयोगसाधुत्वाश्रयणं चान्याय्यमिति भावः । एवमजामित्यस्यानुपपत्तिमुद्भाव्य एकामित्यस्यापि तामाह **नापीति** । एकामित्येकत्ववचनानुपपत्तिरित्यर्थः । तेजोऽबन्नानां बहुत्वादिति भावः । त्रिवृत्करणेनैकत्वादेकामित्येकत्ववचनमुपपन्नमिति शङ्कते **त्रिवृत्करणादिति चेदिति** । 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति प्रत्येकं त्रिवृत्करणश्रवणेन त्रिवृत्कृतसमुदायानामपि त्रित्वादेकत्वोक्तेरयोग एवेत्याशयेन परिहरति **बहुत्वानिवृत्तेरिति** । तेजोऽबन्नानामेकत्वाभावेऽपि तदुपादानस्यैकत्वादेः सत्त्वात्तेजोऽबन्नेष्वप्यजामेकामित्यादेरुपपत्तिरित्याशङ्कते **अथेति** । तेजोऽबन्नकारणेऽजामेकामित्यादेर्मुख्यत्वे भवेत्कथञ्चित्तत्कार्यतया तेजोऽबन्नेष्वजात्वादेरुपपत्तिः, तत्रैव कथं मुख्यत्वमित्यत उक्तम् **तेजोऽबन्नोपादानमिति** । अत्र भोग्यत्वमुपपादयितुं जडमिति । अजात्वमुपपादयितुमनादिद्रव्यमिति । एकामित्येकत्वं घटयितुमेकमित्युक्तम् । तदेवेत्यवधारणे हेतुमाह **शब्दानामिति** । मुख्यासम्भव एव गौणस्य ग्राह्यत्वान्न तेजोऽबन्नपरत्वमिति भावः। इष्टापत्तिमाशङ्क्यपरिहरति **अस्त्विति** ॥ **किमपराद्धमिति** । येन प्रधानं नेति प्रतिषिध्येतेति शेषः । पक्षद्वयस्यापि ब्रह्मवादप्रतिपक्षत्वाविशेषात्तेजोऽबन्नोपादानभूतद्रव्यान्तराङ्गीकारेण प्रधाननिरासो व्यर्थः । प्रधानपरत्वाभावेन तत्रानतिव्याप्तावपि तेजोऽबन्नोपादानद्रव्यपरत्वाङ्गीकारेण तत्र लक्षणातिव्याप्तेरपरिहारादिति भावः । किं चानादेर्जडस्यैकस्य तेजोऽबन्नोपादानस्याङ्गीकारे प्रधानं नेति रिक्तं वच उक्तलक्षणकत्वात्प्रधानस्येत्याशयेनाह **तल्लक्षणत्वादिति** ॥ **नाममात्र इति** । प्रमेयभेदाभावे नाममात्रे वादिविवादस्य मूर्खकलहतुल्यत्वापादकत्वेनायोगादित्यर्थः । किं चेत्युक्तदूषणजातस्योद्भाव्यत्वशङ्कापरिहाराय भाष्यारूढत्वं दर्शयति **तदिदमिति** ।

**या०— बहुत्वानिवृत्तेरिति** । 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणी'ति प्रत्येकं त्रिवृत्करणश्रवणेन त्रिवृत्कृतसमुदायानामपि त्रित्वादित्यर्थः ।

**श्री०**— **इत्यादीति** । तथाच 'तत्तेजोऽसृजत' इति श्रुतेस्तेजसः 'तदपोऽसृजत' इति श्रुतेरपां, 'ता आपोऽन्नमसृजन्त' इति श्रुतेरन्नस्य च अजाशब्दोक्ताजननासंभवादित्यर्थः । **त्रिवृदिति** । त्रयाणां मिश्रितत्वेनैकवचनं युक्तमिति ध्येयम् ॥ **बहुत्वेति** । मिश्रितायामप्यैक्याभावेन बहूनां सत्त्वादेकवचनमयुक्तमेवेत्यर्थः । **तदेव** उपपादनमेव ॥ **तल्लक्षणत्वादिति** । तेजोऽबन्नोपादानस्य यल्लक्षणं जडत्वानादिद्रव्यत्वरूपं तल्लक्षणोपेता प्रकृतिरेवेत्यर्थः । तदुपादानभूतमनादिद्रव्यं प्रकृतिरिति मया नोच्यत इत्यत आह **नामेति** ।

**सु०— नन्वत्रोत्तरमुक्तं कल्पनोपदेशादिति । यथा (हि) मधुविद्यादावादित्यादीनां मध्वादित्वेन कल्पना क्रियते, एवमत्राऽपि तेजोऽबन्नानामजादिकल्पनोपदेशादविरोध इति । एतदयुक्तम् । कल्पनायाः प्रयोजनाभावात् । न हीदं पामर(जन)मनोरञ्जनार्थं काव्यम् । अत एव दृष्टान्तोऽपि निरस्तः ।**

**शे०**— मधुविद्यादावित्यादिपदेनासौ वाव लोको गौतमाग्निरित्यादिपञ्चाग्निविद्यादेः संग्रहः । आदित्यादीनामित्यादिपदेन द्युत्वादीनां संग्रहः । मध्वादित्वेत्यादिपदेनाग्नित्वादेः परिग्रहः । ततश्च यथाऽदित्यस्यामधुनोऽपि मधुत्वेन द्युलोकादीनां चानग्नीनामग्नित्वेन कल्पना क्रियत इत्यर्थः ॥ **एवमिति** । अत्रानजादित्वेऽपीति शेषः । अजादित्वादिकमित्यादिपदेनैकत्वादिपरिग्रहः । तेजोऽबन्नानामनजात्वेऽप्यजात्वस्यानेकत्वेऽप्येकत्वस्यास्त्रीलिङ्गत्वेऽपि स्त्रीलिङ्गत्वस्य कल्पनाऽस्त्वित्यर्थः । कल्पना हि गौणी वृत्तिर्वाऽऽरोपो वा । नाद्यः योगेन प्रकृतौ मुख्यवृत्तित्वसम्भवे गौणत्वायोगादिति भावेन द्वितीयं प्रत्याह **कल्पनाया इति** । आरोपस्येत्यर्थः । श्रुतिष्विति शेषः । अन्यथा साङ्ख्याभिप्रेतप्रकृतावेव लोहितत्वाद्यारोपप्रसङ्गादिति भावः ॥ **अत एवेति** । 'असौ वा आदित्यो देवमध्वि'त्यादौ कल्पनोपदेशे पामरमनोरञ्जनार्थकाव्यत्वप्रसङ्गेन कल्पनोपदेशस्यायुक्तत्वादेवेत्यर्थः । देवमध्वित्यादेर्मध्वादिशब्दवाच्यपरत्वान्न त्वदुक्तरीत्या कल्पनोपदेशत्वं तस्येति भावः ।

**प०**— **अत एवेति** । कल्पनायाः प्रयोजनाभावादेव मध्वादिदृष्टान्तार्थः अपरोक्तो निस्तरइत्यर्थः ।

**श्री०**— ननु कल्पनोपदेशो युज्यते जनमनोरञ्जनत्वादित्यत आह **न हीदमिति** ॥ **अत एवेति** । न हि वेदरूपा मधुविद्याऽपि पामरमनोरञ्जनार्थं काव्यमित्यर्थः । 'नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिकाः' इति निषेधाच्चेति ध्येयम् ।

सु०— कश्चिज्ज्योतिरुपक्रमेत्येतदन्यथा व्याचष्टे । ज्योतिर्ब्रह्म । तदुपक्रमा तत्कारणैवेयमजा न स्वतन्त्रेति । तस्य प्रथमसूत्रं व्यर्थम् । अनेनैव चरितार्थत्वात् । किञ्च तदधीनत्वादि(त्यने)नैव प्रधानस्य ज्योतिरुपक्रमत्वं प्रतिपादितम् । प्रतिपादनीयं च सांख्यपरीक्षायामपि । अस्याः श्रुतेः प्रधानपरत्वे(ऽपि) न दोष इत्ययुक्तं 'तत्तु समन्वयात्' इत्यवधारणानुपपत्तेरिति चेत् न, तेजोऽबन्नपरत्वेऽपि तदनिस्तारात् ।

शे०— रामानुजमतं दूषयितुमनुवदति **कश्चिदिति** ॥ **ज्योतिर्ब्रह्मेति** । 'तद्देवा ज्योतिषां ज्योतिरथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यादिश्रुतेरिति भावः । सौत्रस्तुशब्दोऽवधारणार्थ इति भावेन तत्कारणैवेत्येवकारप्रयोगः । तद्व्यावर्त्यप्रदर्शनम् **नेति** । यद्यप्यत्रापि ज्योतिरुपक्रमेत्यपपाठाश्रयणमजादिपदाध्याहारश्च दोषो वक्तुं शक्यते । तथाऽपि 'तदेवोक्तमुपक्रमादि'त्यादिनाऽऽद्यस्य पूर्वमेव सूचितत्वात् द्वितीयस्य स्पष्टतया शिष्यैरेव ज्ञातुं शक्यत्वात्तदनुद्भाव्य दोषान्तरमेवाह **तस्येति** । **प्रथमसूत्रं** चमसवदविशेषादिति सूत्रम् । कथं वैयर्थ्यमित्यतोऽजामित्यस्याः प्रकृतेरकार्यत्वश्रवणाद्बह्वीः प्रजाः सृजमानां सरूपा इति स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्ट्रीत्वश्रवणात्कपिलतन्त्रसिद्धप्रकृतिपरत्वमेवाजामेकामित्यादेरिति पूर्वपक्षस्येयमजा ज्योतिरुपक्रमा ब्रह्मकारणिका तैत्तिरीयशाखायामणोरणीयानित्यादिना ब्रह्मोक्त्वा सप्तप्राणाः प्रभवन्ति तस्मादित्यादिना ततःसृष्टिं चोक्त्वाऽजामेकामिति मन्त्रे ब्रह्मकार्याया अजाया अधीयमानत्वादिति वदता ज्योतिरुपक्रमेत्यनेनैव ब्रह्मकार्यत्वेन ब्रह्माधीनतया ब्रह्मात्मकत्वस्य सिद्धत्वान्न पूर्वसूत्रेण कृत्यमित्याह **अनेनैवेति** ।

ननूक्तरीत्या ब्रह्मात्मकत्वसिद्धिवत्पूर्वपक्षयुक्तरीत्या कपिलतन्त्रसिद्धप्रकृतिपरत्वमपि किं न स्यादित्यतश्चमसशब्दवन्नजायत इत्यजेति यौगिकतयाऽजाशब्दस्यार्थप्रकरणादिभिर्विनाऽर्थविशेषानिश्चायकत्वात् । 'इदं तच्छिर एव ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इत्यादिवाक्यशेषेण शिरसश्चमसत्वनिश्चयसम्भवेऽपीह तन्त्रसिद्धाजाग्रहणेऽर्थप्रकरणादीनामभावात्स्रष्टृत्वमात्रश्रवणेऽपि स्वातन्त्र्यस्याश्रवणान्नतन्त्रसिद्धाया अजाया इह ग्रहणमिति प्रतिपादयतश्चमसवदविशेषादिति सूत्रस्य कथं वैयर्थ्यमित्यतस्तर्हि कथञ्चित्तत्सार्थक्येऽप्युक्तवक्ष्यमाणरीत्यैव प्रकृतेर्ज्योतिःकारणत्वसिद्ध्या ब्रह्मात्मकत्वसिद्धेस्तत्प्रतिपादकज्योतिः सूत्रानर्थक्यमेवेत्याशयेन कथमुक्तवक्ष्यमाणरीत्या तत्सिद्धिरित्याशङ्कां परिहरति **किञ्चेति** ॥ **सांख्यपरीक्षायामिति** । रचनानुपपत्तेरित्यादिनेति शेषः । अन्येषां मते पूर्वसूत्रस्याजामन्त्रे साङ्ख्याभिमताजापरत्वाभावोपपादकत्वेन ज्योतिःसूत्रस्य च तन्मन्त्रस्य तेजोऽबन्नपरत्वोपपादकत्वेन वैयर्थ्यस्योद्भावयितुमशक्यत्वात्तत्पक्षे तदनुद्भावनमित्यवधेयम् । को दोषः सवैथैवेत्यनेन सूचितं तेजोऽबन्नपरत्वाश्रयणेनाजामन्त्रस्य प्रधानपरत्वानाश्रयणे विशेषहेत्वभावं समर्थयितुं हेतुमाशङ्क्य तस्य पक्षद्वय-

साधारण्योपपादनेनाविशेषहेतुत्वमुपपादयितुं तमाशङ्कते **अस्या इति** । अवधारणेन कारणवाक्यानां ब्रह्म-मात्रपरत्वव्युत्पादनादिति भावः ॥ **तदनिस्तारादिति** । तत्तु समन्वयादित्यवधारणानुपपत्तेरनिस्तारा-दित्यर्थः । ततश्च न प्रधानपरत्वपरित्यागेन तेजोऽबन्नपरत्वाश्रयणं युक्तमिति भावः ।

**स० — तस्य प्रथमसूत्रमिति** । चमसवदविशेषादिति सूत्रमित्यर्थः । तत्र किं प्रकृतिस्वरूपमेवा-जामेकामिति श्रुतिप्रतिपाद्यं न भवतीत्युच्यते उत साङ्ख्याभिमतं स्वातन्त्र्यम् । नाद्यः तस्य त्वयाऽपि स्वीकृतत्वात् । द्वितीये त्वाह **अनेनैवेति** ॥ प्रकृतेर्ब्रह्मजातत्वोक्त्याऽत्रैव तत्स्वातन्त्र्यनिराकरणप्रतीत्या पूर्वसूत्रं व्यर्थमित्यर्थः ।

**प० — कश्चिदिति** । रामानुज इत्यर्थः ॥ **प्रथमसूत्रमिति** । चमससूत्रमित्यर्थः । नन्वजा-मेकामिति मन्त्रे अजाशब्देन प्रधानमुच्यत इति प्राप्ते यथोर्ध्वबुध्नादिरूपश्चमसो न निर्णेतुं शक्यते तथा अजाशब्देन स्वतन्त्रप्रधानमुच्यत इति न निर्णेतुं शक्यमिति पक्षनिरासार्थमेतदधिकरणाद्यसूत्रं मन्मत इत्यत आह **अनेनैवेति** । स्वतन्त्रप्रधानमजाशब्देनोच्यत इति चोद्यस्य ज्योतिरुपक्रमा ब्रह्मकारणिक ब्रह्माधीनेत्युक्तिपरज्योतिःसूत्रेणैव निरासस्य जायमानत्वाद्व्यर्थमित्यर्थः । विस्तरस्तु चन्द्रिकायाम् । पौनरुक्त्यमत्रासाङ्गत्यं चाह **किञ्चेति** ॥ **सांख्येति** । रचनानुपपत्तेरित्यारभ्य विप्रतिषेधाच्चेत्यन्तसूत्र-सन्दर्भरूपे समयपादस्याद्याधिकरण इत्यर्थः ॥ **अवधारणेति** । अवधारणार्थकतुशब्दानुपपत्तेरित्यर्थः ।

**या० — तस्य प्रथमसूत्रमिति** । 'चमसवदविशेषादि'ति पूर्वसूत्रमित्यर्थः । तत्राऽपि या कपिलतन्त्रसिद्धा स्वतन्त्रा अजा सैव निरस्यते न तु ब्रह्मोपक्रमा । तस्याः श्रुत्यादिसिद्धत्वादित्येव तेनोक्तत्वादिति भावः । मायावादिमते त्विदं सूत्रमेतन्मत इव न प्रधानास्वातन्त्र्यप्रतिपादकं किन्तु पूर्वसूत्रोपात्तवाक्यविषयप्रदर्शनपरम् । अतो न तस्य पूर्वसूत्रवैयर्थ्यमित्याशयेन तस्येत्युक्तमिति ध्येयम् । यद्यपीदं सूत्रं, 'ब्रह्मात्मिकाजाग्रहण एव विशेषहेतुरस्तीत्याहे'त्यवतार्य 'इयमजा ज्योतिरुपक्रमा ब्रह्म-कारणिका तैत्तिरीयशाखायामणोरणीयानित्यादिना ब्रह्मोक्त्वा सप्तप्राणाः प्रभवन्ति तस्मादित्यादिना ततः सृष्टिं चोक्त्वाऽजामेकामिति मन्त्रे ब्रह्मकार्या ह्यजाऽधीयत' इति पूर्वसूत्रागतार्थतया परेण व्याख्यातम् । तथाऽप्यनेन पूर्वसूत्रं गतार्थमित्याह **अनेनैवेति** ॥ **ज्योतिरुपक्रमत्वमिति** । ब्रह्माधीनत्वमित्यर्थः । **ज्योतिरुपक्रमत्वं** ब्रह्मकारणकत्वम् ।

**श्री० — तत्कारणैवेति** । ब्रह्मकारणिकेत्यर्थः ।

**सु० — अस्तु परस्यैवम् । भवतां तु कथं न दोष इत्यत** आह अस्माकमिति ।

**अनु० —** अस्माकं परमुख्यार्थो भगवानेक एव तु ॥
मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते ॥

॥ सर्वेषामपि शब्दानां गौणाद्यं तद्योगतः ॥

अस्माकं तु मते तत्तु समन्वयादित्यवधारणस्यायमर्थः → सर्वेषामपि शब्दानां भगवानेक एव परममुख्यार्थो नान्य इति । अतो रूढं, यस्य शब्दस्य यदर्थतया प्रसिद्धं, तदपि सर्वं तन्मुख्यार्थमात्रतयाऽभ्युपगम्यते । मुख्यायोगे गौणाद्यपि । एवं चाजादिशब्दाः परममुख्यया वृत्त्या परब्रह्मपरा मुख्यमात्रतया प्रधानस्यापि प्रतिपादका इत्यङ्गीकारे काऽनुपपत्तिरिति ।

नन्वेवं तर्हि सौत्रमवधारणं किमिति परममुख्यार्थान्तरव्यावृत्त्यर्थं व्याख्यायते । वाच्यान्तरमात्रव्यावृत्त्यर्थं कुतो न व्याख्यातव्यम् । न चोक्तप्रयोजनानुपपत्तिः । अमुख्यया वृत्त्या सङ्केतमात्रेण वा तदुपपत्तेरिति चेन्न । सूत्रकारेणैव ग्रन्थान्तरे वैदिकानां शब्दानामुक्तविधानेकार्थत्वस्याभ्युपगतत्वादित्याह अर्थद्वयमिति ।

अर्थद्वयमभिप्रेत्य प्रवृत्ते हरिरुक्तवान् ॥

तदेव पठति कार्याणामिति ।

कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ।
योगानां परमां सिद्धिं परमं ते पदं विदुः ॥

इति

वचसां वैदिकानामुत्तमं वाच्यम् । तदपेक्षयाऽन्यान्यमुख्यवाच्यानि । कुत एतत् । योगानां योगवृत्तीनां परमां सिद्धिम् । सिद्ध्यन्त्यस्मिन्निति सिद्धिः । इन्द्रादयस्त्वपरमसिद्धयः । एतदपि कुतः । कार्याणां महदादीनां पूर्वं मुख्यं कारणम् । प्रकृत्यादीनि त्वमुख्यकारणानि । पदं स्वरूपम् । तस्मात्परमं विदुः । यद्यपि रूढिरविलम्बेनार्थप्रत्यायकतामात्रेण बलवती । तथापि विशेषज्ञानहेतुत्वाद्योग एव बलीयानिति मत्वा स एव गृहीतः । तत्र साक्षादर्थद्वयस्यानुक्तत्वेऽप्युत्तमं वाच्यमिति विशेषणाद्वाच्यान्तरसद्भावोऽवगम्यते । अत एव प्रागभिप्रेत्येत्युक्तम् ।

शे० — स्वमते भगवतः परममुख्यार्थत्वस्य तदन्यस्य च मुख्यमात्रत्वस्य च निरूपणानर्थक्यमित्यतोऽजामन्त्रस्य प्रधानपरत्वे सौत्रावधारणविषयप्रदर्शनेन तदविरोधार्थत्वान्न वैयर्थ्यमित्याशयेन तच्छङ्कामुत्थापयति अस्त्विति । तथाऽपि वैदिकशब्दानामर्थद्वयाभिप्रायकत्ववर्णनमनर्थकमित्यतः सौत्रावधारणार्थतया व्याख्यातपरममुख्यत्वोपपादकत्वान्नानर्थक्यमित्याशयेन तत्रानुपपत्तिशङ्कामुत्थापयति नन्विति ॥ न चोक्तेति । व्युत्पत्त्यादिरूपेत्यर्थः ॥ विशेषणादिति । तस्यानुत्तमवाच्यव्यावर्तकत्वाद्वाच्यान्तराभावे तदानर्थक्यप्रसङ्गादिति भावः ।

प० — मूलं योजयति **अस्माकन्त्विति** । रूढमित्यनुवादः । यस्येत्यादितु व्याख्या ॥ **नचोक्तप्रयोजनानुपपत्तिरिति** । कर्मदेवतादिवस्त्वन्तरापरिलोपप्रधानादिव्यवहारापरिलोपादि-प्रयोजनबहुत्वत इत्यत्रोक्तस्यानुपपत्तिर्नचेत्यर्थः । सिद्धिशब्दोऽधिकरणे व्युत्पन्न इत्याह **सिद्ध्यन्त्यस्मिन्निति** । योगवृत्तीनां मुख्यो विषय इत्यर्थः ॥ **तत्रेति** । प्रवृत्तिग्रन्थे । **साक्षात्** कण्ठतः । परम-मुख्यमुख्यरूपार्थद्वयं वेदवाक्यानामित्यस्यानुक्तत्वेपीत्यर्थः ।

या० — **न चोक्तप्रयोजनेति** । 'विष्णौ शक्तिश्च गृह्यत' इत्युक्तप्रयोजनानुपपत्तिरित्यर्थः ।

श्री० — तटस्थः शङ्कते **अस्त्विति** । एवं 'को दोषः सर्वथैवास्ति परिणामि जडं यदि' इत्युक्तः प्रधानस्य प्रतिपाद्यत्वाङ्गीकारे दोषाभावः परस्य मतेऽस्तु ; परेण सर्वशब्दवाच्यत्वस्य समन्वयसूत्रे प्रति-ज्ञातत्वानङ्गीकारेणाजावाक्ये प्रधानप्रतिपादनाङ्गीकारेऽवधारणानुपपत्तिरूपदोषाभावात् । भवतां पक्षे तदजावाक्ये प्रधानप्रतिपाद्यत्वकथनं कथं न दोषः । भवद्भिः समन्वयसूत्रे सर्वशब्दवाच्यतायाः प्रति-ज्ञातत्वाङ्गीकारेणाजावाक्ये प्रधानप्रतिपादनाङ्गीकारेऽवधारणानुपपत्तिरूपदोषावश्यंभावादित्यर्थः ॥ **भवतामिति** । तथा च सर्वशब्दवाच्यतायाः तत्र ब्रह्मणः प्रतिज्ञातत्वेनाजावाक्ये न प्रधानप्रतिपादनं युक्तमि-त्यर्थः ॥ **प्रयोजनेति** । लोकव्यवहारादिसिद्धिरूपप्रयोजनेत्यर्थः ॥ **उक्तविधेति** । भगवत्तदितररूपे-त्यर्थः । सिद्धिशब्दस्य नित्यस्त्रीलिङ्गत्वात्तद्विशेषणे परमशब्देऽपि युक्ता स्त्रीलिङ्गता । शब्दस्वाभाव्या-त्सिद्धिशब्दस्य स्त्रीलिङ्गत्वेऽपि भगवद्विशेषणत्वं युक्तमिति ध्येयम् । सिद्धेः परमत्वे तद्वतो भगवतः पर-मत्वं लब्धमेवेत्यपि द्रष्टव्यं । **सिध्यन्ति** योगवृत्तिलभ्यार्थाः ॥ **एतदपीति** । योगानां परमसिद्धित्वमि-त्यर्थः ॥ **महदादीनामिति** । तत्त्वानां तदभिमानिब्रह्मादीनां चेत्यर्थः । तर्हि प्रकृत्यादेः कारणत्वं न स्यादित्यतः पूर्वपदलब्धार्थमाह **प्रकृत्यादीनीति** ॥ **तस्मादिति** । कार्याणां पूर्वकारणत्वात्परमसिद्धित्वं परमसिद्धित्वाच्च तत्स्वरूपस्य परमत्वं ततश्चोत्तमवाच्यत्वमित्यर्थः ॥ **अत एवेति** । साक्षादनुक्तत्वादेवे-त्यर्थः ।

सु० — **वैदिकानां शब्दानामुभयार्थत्वे प्रमाणान्तरमाह** बुद्धाविति ।

अनु० — बुद्धौ समारोहादुभयोर्योगरूढयोः ॥
त्यागे च कारणाभावादुभयार्थत्वमिष्यते ॥

**योग इति योगवृत्तिविषयः परमेश्वरः । रूढः प्रसिद्धः प्रकृत्यादिः । अयमर्थः । अस्ति तावद्विदितपदपदार्थसङ्गतेरधिगतशाब्दन्यायस्याजादिशब्दश्रवणे ब्रह्मण इव प्रधानस्यापि बुद्धावा-रोहः, धियां च (तु) स्वत एव प्रामाण्यम् । अप्रामाण्यं तु बाधकाधीनमित्युपपादितं प्रथम**

सूत्रे । न चात्रार्थद्वयाभ्युपगमे बाधकमस्ति। येन बुद्धावारूढमपि त्यज्येत। अतो निरपवाद-प्रतीतिबलात्सर्वेषामपि शब्दानामुभयार्थत्वमेष्टव्यमिति ।

एतदेव विवृणोति विपरीतेति ।

विपरीतप्रमाऽभावे पूर्वारोहस्तु कारणम् ॥

सा भवेद्यत्र स व्यर्थः पूर्वारोहो भ्रमो यथा ॥

कारणं स्वीकारस्येति शेषः । सा विपरीतप्रमा । स स्वीकारकारणत्वेनोक्तोऽपि पूर्वारोहः, व्यर्थः स्वीकारकारणं न भवति ॥ भ्रमो यथेति । प्रसिद्धशुक्तिरजतादिविपर्ययो यथेत्यर्थः । यद्वा । अजादिपदानि द्व्यर्थानि बाधकविधुरायां बुद्धौ तथा रूढत्वादिति प्रतिज्ञाहेतू कथितौ । अनेनान्वयव्यतिरेकाभ्यां व्याप्तिमाचष्टे । तत्र पूर्वार्धे यथा स्तम्भादिप्रत्यय इति दृष्टान्तोक्तिरपि द्रष्टव्या । नन्वत्राजायाः कारणत्वमुच्यते । तच्च ब्रह्मलक्षणत्वेनोक्तमित्यतो बाधकाद् बुद्धावारूढमपि प्रधानं त्याज्यमिति चेन्न । निमित्तमात्रत्वस्य ब्रह्मलक्षणत्वेन जगदुपादानत्वस्य प्रधानेऽपि सत्त्वादस्य तदर्थत्वोपपत्तेरित्याशयवानुपसंहरति अत इति ।

अतो जगदुपादानं प्रधानं वक्ति सा श्रुतिः ॥ १-४-१ ॥

सा श्रुतिः अजामेकामित्यादिका ॥ १-४-१ ॥

---

शे० — प्रमाणान्तरमिति । निरपवादप्रतीतिविषयत्वरूपमित्यर्थः । ततश्च प्रमाणान्तराभिधायकत्वान्नोत्तरवाक्यवैयर्थ्यमित्यर्थः । रूढ इति रूढिविषयग्रहणात्तदनुसारेण योगशब्दोऽपि योगवृत्तिविषयपर इत्याशयेनाह योगवृत्तिविषय इति। किमनेन प्रमाणमुक्तं भवतीत्यतोऽभिप्रायमाह अयमर्थ इति ॥ प्रथमसूत्र इति । जिज्ञासासूत्रे 'प्रत्यक्षवच्च प्रामाण्यं स्वत एव' । 'अप्रामाण्यं तथान्यतः' इत्यादिनेति शेषः ॥ विवृणोतीति। अतो न तद्वैयर्थ्यमिति भावः । विवरणत्वं चास्य दृष्टान्तोपदर्शनादिना बोध्यम् । अनुमानापेक्षितव्याप्त्यभिधायकतया पूर्वोत्तरवाक्ययोरेकवाक्यत्वेनागतार्थत्वसंभवे तद्विवरणत्वकल्प मनुचितमित्यभिप्रेत्याह यद्वेति । अजामेकामित्युपक्रमानुरोधे'नातः प्रधानं वक्तीत्ये'वोपसंहर्तव्यत्वाज्जगदुपादानमित्यधिकोक्तिरनर्थिकेत्यतो विवक्षितहेतौ विशेषणाप्रसिद्धिपरिहारार्थत्वान्नानर्थक्यमित्याशयवांस्तद्व्यावर्त्यतया तदसिद्धिशङ्कामुत्थापयति नन्विति ॥ १-४-१ ॥

प — प्रथमसूत्र इति । जिज्ञासासूत्रे 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य ही'त्यादिग्रन्थेनेति भावः ॥ कथिताविति । बुद्धाविति श्लोकेनेति योज्यम् ॥ अनेनेति । विपरीतेतिश्लोकेनेत्यर्थः ॥ अस्येति । अजावाक्ये श्रुतकारणत्वस्योपादानरूपत्वेनोपपत्तेरित्यर्थः । यद्वा अस्य वाक्यस्य प्रधानार्थत्वोपपत्तेरित्यर्थः ॥ १ । ४ । १ ॥

**या०— प्रथमसूत्र इति** । जिज्ञासासूत्र इत्यर्थः ॥ १-४-१ ॥

**श्री०—उभयार्थत्वे** भगवत्तदितररूपानेकार्थत्व इत्यर्थः । **द्व्यर्थानि** भगवत्तदितररूपार्थद्वयवन्तीत्यर्थः । **तया** द्व्यर्थतया । **आरूढत्वात्** विषयत्वात् ॥ **कथिताविति** । बुद्धौ समारोहादिति श्लोकेन इति शेषः । **अनेन** विपरीतप्रमाभाव इति श्लोकेन । व्यतिरेकव्याप्तिकथनपरे सा भवेदित्यर्धे भ्रमो यथेति दृष्टान्तस्योक्तत्वेऽप्यन्वयव्याप्तिकथनपरे विपरीतेति पूर्वार्धे तदनुक्तेर्न्यूनतेत्यत आह **यथेति** । आदिपदेन कुम्भग्रहणम् । तथा च स्तम्भकुम्भाविति समूहालम्बनप्रत्यय इत्यर्थः । एवं च यद्यद्बाधकविधुरायां बुद्धौ द्व्यर्थतया प्रतीयते तत्तथा द्व्यर्थमेव यथा स्तम्भकुम्भाविति समूहालम्बनप्रत्यये स्तम्भकुम्भौ साक्षात्करोमीत्यनुव्यवसायरूपायां निर्बाधबुद्धौ प्रतीयमानत्वं, तथा द्व्यर्थत्वं स्तम्भकुम्भोभयार्थविषयत्वं चास्ति । तद्वदजादिपदेष्वपि निर्बाधबुद्धिविषयत्वेन प्रतीयमानत्वमर्थद्वयवाचकत्वरूपं द्व्यर्थत्वं चास्तीति सामान्यव्याप्तिमूलकमनुमानं ज्ञेयम् । एवं यत् द्व्यर्थं न भवति तत् द्व्यर्थतया निर्बाधबुद्धिविषयो न, यथा भ्रमः । इदं रजतमिति भ्रमे शुक्तिमात्रविषयके द्व्यर्थत्वाभावोऽस्ति । इदं रजतमिति ज्ञानवानहमित्यनुव्यवसायरूपायां निर्बाधबुद्धौ द्व्यर्थतयाऽप्रतीयमानत्वेन द्व्यर्थतया निर्बाधबुद्धिविषयत्वाभावोऽप्यस्तीति भ्रमस्य व्यतिरेकदृष्टान्तत्वं ज्ञेयम् । केचित्तु यद्यन्निर्बाधबुद्धिविषयस्तत्तथेत्येवं सामान्यव्याप्तिर्विवक्षिता । तत्र च स्तम्भादि दृष्टान्तः । स्तम्भादौ कथं निर्बाधबुद्धिविषयत्वमिति शङ्कायां निर्बाधबुद्धिप्रदर्शनार्थमेव स्तम्भादिप्रत्ययग्रहणं न तु दृष्टान्ततया । एवं यद्यथा नास्ति नासौ तथा निर्बाधबुद्धिविषयः । यथा भ्रमसिद्धो रजतादिरिति व्यतिरेकः । अत्रापि मूले भ्रमरूपप्रत्ययग्रहणं रजतादौ कथं निर्बाधबुद्धिविषयत्वाभाव इति शङ्कायां तदुपपादनार्थमेव भ्रमरूपं ज्ञानं सबाधं प्रसिद्धमिति न तु दृष्टान्ततयेति ज्ञातव्यम् । तथा च व्याप्तिद्वयेऽप्यर्थ एव दृष्टान्तः । टीकायां प्रत्ययग्रहणं मूले च भ्रमग्रहणं अर्श आद्यजन्ततया । प्रत्ययविषयो भ्रमविषयश्च ग्राह्यः । तथा च बुद्धिविषयत्वमुक्तं भवतीत्याहुः । अपिशब्दस्तुशब्दार्थे प्रधाने त्विति जगदुपादानत्वस्यैवेत्यवधारणार्थे वा । नन्व जावाक्ये निमित्तत्वरूपब्रह्मलक्षणप्रतिपादनात्प्रधानं त्याज्यमिति शङ्कायामाह **अस्येति** । अजावाक्यस्य ॥ **तदिति** । उपादानत्वेत्यर्थः ॥ १-४-१ ॥

सु०—**'न संख्योपसंग्रहात्' इत्येतदपि प्रधानस्याश(ा)ब्दत्वप्रतिपादनार्थतया व्याचक्षते (शां. भा.) । तथा हि । 'यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्' इत्यस्मिन्मन्त्रे पञ्चपञ्चजना इति पञ्चसंख्याविषयापरा पञ्चसंख्या श्रूयते । पञ्चशब्दद्वयदर्शनात् । त एते पञ्चपञ्चकाः पञ्चविंशतिः सम्पद्यते । तथा च श्रुतिप्रसिद्धया**

पञ्चविंशतिसंख्यया तेषां स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानामुपसंग्रहात्प्राप्तं श्रुतिमत्त्वं प्रधानादीनां इत्यत्रोच्यते । न संख्योपसंग्रहादपि प्रधानादीनां श्रुतिमत्त्वप्रत्याशा कर्तव्या । कस्मात् । नानाभावात् । नाना ह्येतानि पञ्चविंशतितत्त्वानि नैषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्ति । येन पञ्चविंशतेरन्तराले पञ्च पञ्च संख्या निविशेरन् । न ह्येकं निबन्धनमन्तरेण नानाभूतेषु द्वित्वादिकाः संख्या निविशन्ते । अतिरेकाच्च । अतिरेको हि भवत्यात्माकाशाभ्यां पञ्चविंशतिसंख्यायाः । आत्मनो हि पञ्चविंशतावन्तर्भावे यस्मिन्नित्यधिकरणत्वोक्तिविरोधः । आकाशस्यापि पृथगुक्तिविरोधः । तस्मान्न प्रधानादीनां शाब्दत्वमिति ।

अत्र वक्तव्यम् । किं पञ्चविंशतितत्त्वप्रक्रिया सर्वथाऽप्रामाणिकीत्यभिप्रायः । उतैतद्वाक्यं तत्परं न भवतीति । पक्षद्वयमप्यनुपपन्नमित्याह यत्तदिति ।

अनु०— यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ॥
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥

सदसदात्मकं कार्यकारणात्मकम् । अविशेषत्वादकार्यत्वात्प्रधानं विशेषवत्त्वात्कार्यत्वात्प्रकृतिं प्राहुः ।

विशेषवदित्यस्य विवरणम् पञ्चभिरिति ।

पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ॥
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ।
इति भागवते प्राह विद्याऽधीशः स्वयं प्रभुः ॥ ३ ॥

पञ्चभिः महाभूतैः पञ्चभिस्तन्मात्राभिः चतुर्भिर्महदहङ्कारमनोबुद्धिभिः दशभिरिन्द्रियैश्च ब्रह्म पूरितम् । 'एतच्चतुर्विंशतिकं गणं प्रधानकार्यं विदुः इति सूत्रकृतैव ग्रन्थान्तरे पञ्चविंशतितत्त्वानां प्रतिपादितत्वान्न तावदाद्यः कल्पः । अनुवादोऽयमिति चेत् । किं प्रमितस्योत कल्पितस्य । आद्ये तत्प्रमाणैरेव सिद्धिस्तत्त्वानाम् । न द्वितीयः वैयर्थ्यात् । दूषणार्थमिति चेन्न तदभावात । न हि ग्रन्थान्तरे अनुवादो ग्रन्थान्तरे दूषणमिति संभवति । न द्वितीयः विरोधाभावात् ।

शे०— ननु पञ्चजनाः वाक्यशेषस्थाः प्राणादयः पञ्चाव्याकृताख्याश्चाकाशो यस्मिन्प्रतिष्ठितस्तमेव ब्रह्मामृतात्मानं मन्य इत्यर्थकत्वान्मन्त्रस्य कथमस्मान्मन्त्रात्प्रधानप्राप्तिरित्यत आह अस्मिन्मन्त्र इति । तथाऽपि कथं सांख्यमतप्रसङ्ग इत्यत आह एत इति । अत्र पञ्चविंशतिसंख्यादर्शनेऽपि कुतः सांख्यीयतत्त्वसिद्धिरित्यतः संख्यैव संख्येयाऽऽकांक्षास्मृतिसिद्धतत्त्वानि संगृह्णातीत्याह तथा चेति ।

**स्मृतिप्रसिद्धानामिति** । 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः' इति सांख्यस्मृतिप्रसिद्धानामित्यर्थः । श्रुत्युक्तसंख्ययाऽपेक्षितसंख्येय-विशेषार्पकत्वं स्मृतेर्युक्तं तयोर्मूलिमूलभावादित्याह **कस्मादिति** । सौत्रं हेतुमुपादाय व्याचष्टे **नानेति** । नानात्वमेव न विरुद्धत्वमित्याशङ्क्याभिप्रेतं नानात्वमाह **नैषामिति** । किं तेनानुपयोगिनेत्यत आह **येनेति** । पञ्चविंशतिसंख्यान्तराले पञ्चानामपि पञ्चसंख्यानां भावात्तथोक्तिरित्याशङ्क्याह **न हीति** । त्रयस्त्रिंशद्वै देवा इति महासंख्यायामष्टौ वसव इत्याद्यवान्तरसंख्याऽसाधारणधर्माधीना दृष्टा । तथा चात्रासाधरणधर्मादृष्टेर्महासंख्यायां नावान्तरसंख्यासिद्धिरित्यर्थः । न प्रधानादीनां श्रुतिमत्त्वप्रत्याशा कर्तव्येत्यत्र सूत्रावयवं हेत्वन्तरमाह **अतिरेकाच्चेति** । तदेव स्फोरयति **अतिरेको हीति** । **अतिरेको** अनिर्वाहः । तत्कथमित्यतः श्रुतावात्माकाशयोः पृथगभिधानादिति भावेनोक्तमात्माकाशाभ्यामिति । पृथगुपात्ताभ्यामिति शेषः । ततश्चायमर्थः । आत्माकाशयोः पृथग्ग्रहणे श्रुतौ जनशब्दोक्ताना तत्त्वानामात्माकाशाभ्यां सह पञ्चविंशतित्वेन पञ्चपञ्चेत्युक्तपञ्चविंशतित्वसंख्यानिर्वाहात्पञ्चपञ्चजनां इत्युक्तिसंभवेऽपि यस्मिन्निति वाक्ये आत्माकाशयोः पृथगभिधानेन तयोः पञ्चविंशत्यनन्तर्भावेन तद्व्यति-रिक्तजनशब्दोक्ततत्त्वानां त्रयोविंशतित्वेन पञ्चपञ्चेत्युक्तपञ्चविंशतित्वसंख्याया अनिर्वाहात्त्रयोविंशतिर्जना इत्येव स्यान्न पञ्चपञ्चजना इति । न चात्माकाशव्यतिरिक्तजनशब्दोक्तत्रयोविंशतितत्त्वेषु सत्त्वरजस्तमो-रूपमूलप्रकृतिभागविवक्षायां पञ्चविंशतित्वसंख्यानिर्वाहात्पञ्च पञ्चजना इति युक्तो निर्देश इति वाच्यम् । तथा सति पञ्चविंशत्यनन्तभूर्ताभ्यामात्माकाशाभ्यां तत्त्वानां सप्तविंशतित्वप्रसक्त्या पञ्चविंश-तितत्त्वानीति स्वसिद्धान्तव्याकोपः स्यादिति । ननु पञ्चविंशत्यन्तर्भूतयोरेवाकाशात्मनोरात्माकाश-शब्दाभ्यां ग्रहणान्न पञ्चविंशतितत्त्वानीति सिद्धान्तव्याकोप इत्यत आत्मनः पञ्चविंशत्यन्तर्भावे दोषमाह **आत्मनो हीति** ॥ **विरोध इति** । आत्मन आत्माधारत्वांशस्य बाधितत्वादिति भावः । आकाशस्यापि पञ्चविंशत्यन्तर्भावे तमाह **आकाशस्यापीति** । **पृथगुक्तीति** । यद्यप्यात्मपक्षेऽप्ययं दोषस्समस्तथाऽप्या-धारधेयस्यातिशयितत्वविवक्षया पृथगुक्तेरुपपादयितुं शक्यत्वात्तत्र तमनभिधायाकाशस्याप्याधेयतया-ऽऽधेयान्तरादनतिशयितत्वेनोक्तरीत्या पृथगुक्तेरुपपादयितुमशक्यत्वादत्रैवैतदुद्भावनं कृतमिति ध्येयम् । 'व्यक्ताव्यक्तात्मकं यत्तद्विद्यात्सदसदात्मकम्'इति तात्पर्यं मनसि निधाय सदसदात्मकमित्येतद्व्याचष्टे **कार्यकारणात्मकमिति** । यद्वा 'सदभिव्यक्तरूपत्वात्कार्यमित्युच्यते बुधैः । असदव्यक्तरूपत्वाकारणं चापि शब्दितम्' इत्यभिधानं मनसि निधायेदं व्याख्यानम् । 'कार्यतः सा प्रधानत्वात्प्रधानमिति कीर्त्यते । अविशेषा ह्यकार्यत्वादि'त्येततात्पर्यं मनसि निधायाह **अविशेषत्वादिति** । अनेन हिशब्दो हेत्वर्थस्त-तश्च स्वकार्यापेक्षया प्रधानत्वेऽपि स्वयं यस्य कार्यं तदपेक्षयाऽप्रधानत्वात्कथं प्रधानत्वोक्तिरित्यतोऽविशेष-

मित्युक्तं मूले । तद्व्याख्याति **अविशेषा ह्यकार्यत्वादिति** । अकार्यत्वादविशेषा यतोऽतः प्रधानमित्युच्यते इत्यर्थ इति तात्पर्यं व्याख्यातम् । 'विशेषः कार्यमुद्दिष्टं विशेषो दृश्यते यतः' इति तात्पर्यं मनसि निधायाह **विशेषवत्त्वादिति ॥ विशेषवदित्यस्य विवरणमिति** । अनेन 'तद्विवृणोति पञ्चभिः' इतीत्युत्तरवाक्यमवतारितं भवति । 'महाभूतानि पञ्चैव'इत्युत्तरवाक्यानुसारेण पञ्चभिरित्येतद्व्याचष्टे **महाभूतैरिति** । 'तन्मात्राणि च तावन्ती'त्युत्तरवाक्यानुसारेणाह **पञ्चभिस्तन्मात्राभिरिति** । 'मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मनः' इत्युत्तरग्रन्थानुसारेणाह **चतुर्भिरित्यादि** । यद्यप्यत्र चतुर्भिरित्येतद्विवरणरूपे 'मनोबुद्धिरहङ्कारश्चित्तम्' इत्यत्र चित्तस्योपात्तत्वात्तदनुसारेण मनोबुद्धिरहङ्कारचित्तैरिति वाच्यं तथाऽपि 'यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् । यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्' इत्युत्तरत्र भागवत एवोक्तत्वात्तदनुसारेण यद्वासुदेवाख्यं भगवत्स्वरूपं ततो महदात्मकं चित्तं जायते इति तात्पर्यानुसारेण च तथोक्तमित्यवधेयम् । 'इन्द्रियाणि दश श्रोत्रे'त्येतदनुसारेणाह **दशभिरिति** । अन्नेत्यनुवादेन पूरितमिति व्याख्यानम् । प्राधानिके गणे चतुर्विंशतित्वसंख्या एभिस्तत्त्वैः पूरितेति भावः ॥ **अनुवाद इति** । कपिलदेवहूतिसंवादस्यानुवाद एवायं सूत्रकारस्येत्यर्थः । ततश्च स्वार्थे तात्पर्याभावान्नानेन वचनेन पञ्चविंशतितत्त्वप्रक्रियायाः प्रामाणिकत्वसिद्धिरिति भावः । ननु न सङ्ख्येत्यस्यैव तद्दूषणत्वान्न दूषणाभाव इत्यत आह **न हीति** । एतद्वाक्यं तत्परं नेति द्वितीयं दूषयति **न द्वितीय इति** । अस्माकमिति शेषः । यस्मिन्नित्यादेर्भगवत्परत्वेन प्रधाने तात्पर्याभावस्यास्माकमविरुद्धत्वादित्यर्थः । उपलक्षणं चैतत् । यस्मिन्निति वाक्यस्य प्रधाने तात्पर्याभावमात्रेण प्रधानस्याशब्दत्वासिद्धेश्चेत्यपि द्रष्टव्यम् ।

स०— **स्मृतिप्रसिद्धानामिति** ॥ कापिलस्मृतिप्रसिद्धानामित्यर्थः । **पञ्चशः पञ्चशः साधारणो धर्म इति** ॥ यथा पञ्चमहाभूतानि पञ्चतन्मात्रा एवं सर्वेषु तत्त्वानां पञ्चकेषु पञ्चत्वावच्छेदकीभूतो धर्मो नास्तीत्यर्थः । 'व्यक्ताव्यक्तात्मकं यत्तद्विद्यात्सदसदात्मकम्' इति भागवततात्पर्यं मनसि निधायाह **अविशेषत्वादिति** । अनेन हिशब्दो हेत्वर्थः । ततश्च, स्वकार्यापेक्षया प्रधानत्वे स्वयं यस्य कार्यं तदपेक्षयाऽप्रधानत्वात् कथं प्रधानत्वोक्तिरित्यतोऽविशेषमित्युक्तं मूले । तद्व्याख्याति **अविशेषा ह्यकार्यत्वादिति** ॥ अकार्यत्वादविशेषा यतो अकार्यतः प्रधानमित्युच्यत इति अर्थ इति तात्पर्यं व्याख्यातं भवति । 'विशेषः कार्यमुद्दिष्टं विशेषो दृश्यते यतः' इति तात्पर्यं मनसि निधायाह **विशेषवत्त्वात्कार्यवत्त्वादिति** ॥ 'महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः' इत्युत्तरवाक्यानुसारेण पञ्चभिरित्येतद्व्याख्याति **महाभूतैरिति** ॥ 'तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे'इत्युत्तरवाक्यानुसारेणाह **पञ्चभिस्तन्मात्राभिरिति** ॥ **चतुर्भिर्महदहङ्कारमनोबुद्धिभिरिति** । यद्यपि मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मन इति वाक्यानुसारेण चित्तस्यैव ग्राह्यत्वान्महदहङ्कारमनोबुद्धिभिरित्ययुक्तम् तथापि 'यत्तत्सत्त्वगुणं

स्वच्छं शान्तं भगवतः पदम् । यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्' इत्यत्र भागवतवाक्यानुसारेण 'यद्वासुदेवाख्यं भगवत्स्वरूपं ततो महदात्मकं चित्तं जायत' इति तात्पर्यानुसारेण च महदहङ्कारमनोबुद्धिरित्युक्तमिति ध्येयम् । 'इन्द्रियाणि दश श्रोत्रत्वक्दृक्रसननासिका । वाक् करौ चरणौ मेढ्रं पायुर्दशम उच्यते' इति प्रमाणानुसारेणाह **दशभिरिति** ॥ ब्रह्मशब्दार्थमाह **पूरितमिति** ॥ ननु सूत्रकृता कपिलदेवहूतिसंवादस्यानुवादमात्रस्यैव क्रियमाणत्वेन तत्प्रतिपादनेऽतात्पर्यात् कथं तद्वचनेन पञ्चविंशतित्वप्रक्रियायाः प्रामाणिकत्वसिद्धिरित्याशयेन शङ्कते **अनुवादोऽयमितीति** ॥ ननु तदभावादित्ययुक्तम् 'न सङ्ख्योपसंग्रहादिति चेन्नानाभावात्' इत्यनेनैव दूषणस्य प्रतिपादितत्वादित्यत आह **ग्रन्थान्तर इति** ॥ **न द्वितीय इति** ॥ एतद्वाक्यं तत्परं नेति द्वितीयो नेत्यर्थः ।

प० — **पंचसंख्याविषयेति** । पंचजना इति समाहारसमासं प्राप्ता या पंचसंख्या तद्विषयकेत्यर्थः ॥ **पंचविंशतिरिति** । पंचपंचफ(पू)ल्य इत्यत्र यथा पंचविंशतिफ(पू)लास्संपद्यन्ते तथेति भावः ॥ **स्मृतिप्रसिद्धानामिति** । सांख्यतंत्रप्रसिद्धानामित्यर्थः ॥ **इत्यत्रेति** । पूर्वपक्ष इत्यर्थः ॥ **नैषां पंचशः पंचशः साधारणो धर्मोऽस्तीति** । पंचजनाःपंचेत्युक्ते कादिवर्गपंचकवत् पंचजनवर्गपंचकं प्रतीयते । तत्र पंचसु वर्गेषु पंचशः पंचशः संग्राहकाः पंचसाधारणधर्मा न सन्ति । यथा कादिवर्गेषु कंठ्यत्वतालव्यत्वमूर्धन्यत्वदंत्यत्वौष्ठ्यत्ववदित्यर्थः ॥ **पंचसंख्या इति** । पंचसंख्याकानि तत्त्वानि पंच निविशेरन्नित्यर्थः । सांख्यतंत्रोक्तपंचविंशतिरेव तत्त्वानि नात्र प्रतीयंते यस्मिन्निति निर्दिष्टस्य आत्मन 'आकाशश्च' इति निर्दिष्टस्याकाशस्य चाधिकस्य प्रतीतेः । तथा च कथं सांख्यप्रसिद्धतत्त्वानामप्रत्यभिज्ञानेन शाब्दत्वं प्रधानादीनां मन्यस इति भावेन सूत्रशेषार्थं परोक्तमनुवदति **अतिरेकाच्चेति** । शाब्दत्वमितीतिशब्दस्य इति व्याचक्षत इति पूर्वेणान्वयः । सदसदात्मकमित्यत्र हेतुत्वेनाविशेषं विशेषवदित्येतद्योजयति **अविशेषत्वादिति** । विधेयाप्रतीतेराह **प्रकृतिं प्राहुरिति** । हेतुद्वयपूर्वं साध्यप्रदर्शनमेतदित्येके । **आद्यः कल्पः** अप्रामाणिकत्वपक्ष इत्यर्थः । ननु तदभावादित्युक्तदूषणाभावोऽसिद्धः । न संख्येतिसूत्रेण दूषणस्य क्रियमाणत्वादित्यतो नेदं सूत्रं तत्रोक्तस्य दूषणपरं भवितुमर्हतीति भावेनाह **न हीति** । एतद्वाक्यं तत्परं नेति कल्पं निराह **न द्वितीय इति** ।

या० — ॥ **स्मृतिप्रसिद्धानामिति** । 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष' इति सांख्यस्मृतिप्रसिद्धानामित्यर्थः ॥ **नैषां पञ्चशः पञ्चशः साधारण इति** । अत्रात्माकाशयोः पृथग्ग्रहणात्तौ विहायैव पञ्चविंशतिरुक्ता । तस्यां च नावान्तरत्वेन पञ्चसंख्यानिवेशः संभवति । शब्दादिपंचके तन्मात्रत्वरूपसंग्राहकानुगतधर्मसद्भावेऽपि तदितरपञ्चकचतुष्टये तदभावात् । न खलु सत्त्वरजस्तमोमहदङ्कारागामेकः क्रिया वा गुणो वा द्रव्यं वा

जातिर्वा धर्मः पञ्चतन्मात्रादिभ्यो व्यावृत्तः सत्त्वादिषु चानुगतः कश्चिदस्ति । नापि पृथिव्यप्तेजोवायुघ्राणानाम् । नापि रसनचक्षुस्त्वक्श्रोत्रवाचाम् । नापि पाणिपादपायूपस्थमनसामित्यर्थः ॥ **अतिरेकाच्चेति** । न प्रधानादीनां श्रुतिमत्त्वप्रत्याशा कर्तव्येत्यन्वयः । तत्त्वसंख्यातिरेकश्च सिद्धान्तविरुद्ध इति भावः । ब्रह्मेत्यनुवादेन पूरितमिति व्याख्यानम् । तथाच प्राधानिके गणे चतुर्विंशतित्वसंख्या एभिस्तत्त्वैः पूरितेति भावः ॥ **अनुवादोऽयमिति** । कपिलदेवहूतिसंवादानुवादोऽयं सूत्रकारस्यातः स्वार्थे न तात्पर्यमस्य वचनस्येति भावः ॥

**श्री०— श्रुतिमत्त्वं** शब्दप्रतिपाद्यत्वम् ॥ **द्वित्वादिका इति** । यथा 'विप्रिप्राणनार्थौ इत्यादितारतम्यप्रकरणे । यथा वा लोके एतौ द्वौ इमे त्रय इति द्वित्वादिका संख्या साम्यादिनिमित्तं विना न दृष्टा तथा पञ्चत्वादिसंख्येत्यर्थः । **आत्मनो** जीवस्य । आकाशस्यापि पञ्चविंशतावन्तर्भाव इति वर्तते । **पूरितं** पूर्णं सम्बद्धमित्यर्थः । प्रधानकार्यमिति प्राधानिकमित्यस्य व्याख्यानम् । **अयं** भागवतोक्तोऽर्थः । अत्रानुवादेऽपि ग्रन्थान्तरेऽस्ति दूषणमित्यत आह **न हीति** ।

**सु०—यदुक्तं नानाभावादिति तदसत् । सूत्रकारस्यापि संग्राहकाभावेन पञ्चभिरित्याद्युक्त्यनुपपत्तिप्रसङ्गात् । अथ तत्र भूतत्वादीनि संग्राहकाणि सन्ति इति चेत् तर्हि तान्येव भूतत्वतन्मात्रत्वज्ञानेन्द्रियत्वकर्मेन्द्रियत्वतदितरत्वानि (च)श्रुतावपि सन्तीति समानम् । न चायमस्ति नियमोऽन्तराले संग्राहकेण विना न सङ्ख्यानिवेशोऽस्तीति । 'पञ्च सप्त च वर्षाणि न,ववर्ष शतक्रतुः', 'व्रतमेतदनुष्ठेयं वर्षाणिनव पञ्च च' इत्यादौ व्यभिचारात् । यदप्यतिरेकाच्चेति । तदप्यसत् । पातञ्जलैरीश्वरस्याङ्गीकृतत्वात् । आकाशश्चेत्याकाशाद्या इति व्याख्यानोपपत्तेः ।**

**शे०—सूत्रकारस्यापीति** । यद्यप्यत्र भूतत्वादीनामुपसंग्राहकाणां सत्त्वादित्येव वक्तव्यं तथाऽपि तेषामुपसंग्राहकत्वं परमुखेनैवानेतुं प्रतिबन्दीग्रहणमित्यवधेयम् । आशयमविद्वान् शङ्कते **अथेति** । भूतत्वादीत्यादिपदेन तन्मात्रत्वादीनां संग्रहः । अभिसन्धिमुद्घाटयति **तर्हीति** ॥ **ज्ञानेन्द्रियत्वेति** । बाह्यज्ञानेन्द्रियत्वेत्यर्थः । पृथिव्यादिषु भूतत्वस्य शब्दादिषु तन्मात्रत्वस्य घ्राणादिषु बाह्यज्ञानेन्द्रियत्वस्य वागादिषु कर्मेन्द्रियत्वस्य महदहङ्कारमनःप्रकृतिपुरुषेषूक्तविंशत्यन्यत्वस्य सत्त्वान्न यस्मिन्पञ्चपञ्चेत्यादिश्रुत्युक्तमहासङ्ख्यायामवान्तरसङ्ख्योपसंग्राहकाभाव इत्यर्थः । ननु श्रुतावाकाशात्मनोः पृथगुक्तत्वादतिरेकनिरासाय सत्त्वरजस्तमोरूपान्प्रकृतिभागानुपादाय सत्त्वरजस्तमोमहदहङ्काराः पृथिव्यप्तेजोवायुघ्राणानि रसनचक्षुःश्रोत्रत्वग्वाचःपाणिपादपायूपस्थमनांसि शब्दस्पर्शरूपरसगन्धा इति पञ्च पञ्चकानि वाच्यानि । तत्र चाद्ये पञ्चकचतुष्टये नास्त्युपसंग्राहको धर्मः । न खलु सत्त्वरजस्तमोमहदहङ्काराणामेकः क्रिया वा गुणो वा

द्रव्यं वा जातिर्वा पञ्चतन्मात्रादिभ्यो व्यावृत्तः सत्त्वादिषु चानुगतः कश्चिदस्ति । नापि पृथिव्यप्तेजोवायु- घ्राणानाम् । नापि रसनचक्षुस्त्वक्श्रोत्रवाचाम् । नापि पाणिपादपायूपस्थमनसाम् । येनैकेनैवासाधारणधर्मे- णोपगृहीतानां पञ्चपञ्चकत्वसिद्धिरिति चेन्न । आकाशस्थाने घ्राणस्य घ्राणस्थाने वाचः वाक्स्थाने च मनसो निवेशने उपसंग्राहकाभावेऽप्याकाशमात्रस्थाने मनो निवेश्य सत्त्वादिपंचकस्य 'मनसस्तु परा बुद्धिः' इत्यादिश्रुतिसिद्धेन मनःपरत्वेन, पृथिव्यादेश्च विंशत्यतिरिक्तत्वेन, क्रोडीकरणे उपसंग्राहकसद्भावात्पञ्चपञ्च- कोपपत्तेरिति भावः । किञ्चोपसंग्राहकाभावे कुत्रापि द्वित्वादिका संख्या नास्तीत्यभिमतं किंवा महासंख्या- यामवान्तरसंख्या नास्तीति । नाद्यः त्वन्मतेऽपि प्राणचक्षुःश्रोत्रान्नमनस्सु पञ्चत्वाभावप्रसङ्गादिति भावेन द्वितीयं दूषयति **न चेति** । नापीत्यर्थः । आदिपदेन 'दशपञ्चदिनान्याहुः पक्षं मासो द्वयात्मकः । 'तासां स्वसृरजनयत्पञ्चपञ्च' । पञ्चपञ्चाशतस्त्रिवृतः संवत्सरा' इत्यादेः संग्रहः ॥ **व्यभिचारादिति** । तत्र महा- संख्याया उपसंग्राहकाभावेऽप्यवान्तरसंख्यादर्शनादित्यर्थः । अतिरेकाच्चेत्यस्योक्त एवार्थः । आत्माकाशयोः पञ्चविंशत्यन्तर्भावेन पञ्चविंशतित्वनिर्वाहादात्माकाशाभ्यां पञ्चविंशतिसंख्याया अतिरेकापादनमनुपपन्नम् । न च यस्मिन्नित्युक्ताधिकरणत्वानुपपत्तेः न आत्मनः पञ्चविंशत्यन्तर्भाव इति वाच्यम् । पतञ्जलिना पञ्चविंश- तितत्त्वातिरिक्तस्येश्वरस्याङ्गीकारेण तत्रात्मपदोदितस्य जीवस्यान्तर्भावेपि तदतिरिक्तस्येश्वरस्य यस्मिन्नित्युक्ता- धिकरणत्वसंभवात् । न चैवं पञ्चविंशतितत्त्वानीति सिद्धान्तव्याकोपः स्यादिति वाच्यम् । तस्याधेयत्वविषय- त्वेन तदनवकाशात । ततः पञ्चविंशतावनंतर्भूतस्येश्वरस्याधिकरणत्वसंभवान्न तमादाय तत्त्वातिरेकेऽपसिद्धांत इत्याह **पातञ्जलैरिति** । ईश्वरस्याङ्गीकृतत्वादित्येव मूलकोशेषु दर्शनात्पाठः । अन्यादृशस्तु प्रक्षिप्त इत्यव- धेयम् । ननु तथाऽप्याकाशस्य पार्थक्यं पृथगभिधानान्यथाऽनुपपत्त्या वाच्यम् । तथा च चतुर्विंशतित्वा- पत्त्योक्तसंख्याऽनिर्वाह एवेत्यत आह **आकाशश्चेतीति** । तथा च पृथगभिधानमेवासिद्धमिति भावः । अनेन चशब्द आद्यर्थक आकाशाद्याः पञ्चविंशतिजना इति योजना सूचिता भवति । नन्वेवमस्तु सेश्वर- सांख्यमते पञ्चविंशतित्वसंख्यानिर्वाहो निरीश्वरस्य तु तस्य मते पञ्चविंशत्यन्तर्भूतयोरेवात्माकाशयोरा- त्माकाशशब्देन ग्रहणे यस्मिन्नित्युक्ताधिकरणत्वस्याकाशश्चेति पृथगुक्तेश्चानुपपत्तिप्रसङ्गेन पञ्चविंशतावन्त- र्भूतयोरेव तयोर्ग्रहणे तद्व्यतिरिक्ततत्त्वानां त्रयोविंशतित्वेन पञ्चविंशतित्वसंख्यायाः कथं निर्वाहः । सत्त्वरजस्तमोरूपप्रकृतिभेदविवक्षायां च जनानां सप्तविंशतित्वापत्त्या पञ्चविंशतितत्त्वानीति सिद्धान्त- व्याकोप इति चेन्न । आत्माकाशव्यतिरिक्तानां त्रयोविंशतितत्त्वानामपि, प्रधानस्योक्तरीत्या त्रिधाकरणात् पञ्चविंशतित्वमिति श्रुतावभिप्रेतं सांख्यस्मृतौ तु तत्त्वेष्वात्माकाशावन्तर्भाव्य प्रधानं चाभित्त्वा पञ्चविंशतित्वगणनाया अभिमतत्वेनाविरोधोपपत्तेरिति ।

**स०— न चेति ॥** नापीत्यर्थः । पातञ्जलैरीश्वरस्याङ्गीकृतत्वादित्येव पाठः । तथाचात्मनः पञ्चविंशत्यन्तर्भावेऽपि तदतिरिक्तस्य परमात्मनो यस्मिन्नित्यधिकरणत्वोक्तिसंभवात् । परमात्मनश्च न तत्त्वगणनायां विवक्षेति भावः । आकाशस्यापि पृथगुक्तिविरोध इत्युक्तं दोषं परिहरति **आकाशश्चेत्याकाशाद्या इतीति** ॥ अत्रैकवचनं बहुवचनार्थे । तच्चाद्यर्थकम् । कडाराः कर्मधारय इत्यत्र तथादर्शनादित्यभिप्रेत्य वा चशब्दोऽनुक्तसमुच्चायक इत्यभिप्रायेण वा आकाशाद्या इत्युक्तम् ॥

**प०— भूतत्वादीनीति** । भूतत्वतन्मात्रत्वेंद्रियत्वोक्तविंशत्यन्यत्वादीनामित्यर्थः ॥ **श्रुतावपीति** । पंचपंचजना इति श्रुतावपि पृथिव्यादिषु भूतत्वस्य शब्दादिषु तन्मात्रात्वस्य घ्राणादिषु बाह्यज्ञानेंद्रियत्वस्य वागादिषु कर्मेन्द्रियत्वस्य महदहंकारमनःप्रकृतिपुरुषेषु उक्तविंशत्यन्यत्वस्य संभवात् सौत्रः नानाभावादिति हेतुरसिद्ध इति भावः । अंगीकृत्य चेदमुक्तमिति भावेनाह **न चायमिति** ॥ **न ववर्षेति** । वृष्टिं न चकारेत्यर्थः । व्रतमिति वाक्यान्तरम् ॥ **पातंजलैरीश्वरस्येति** । तथा चात्मनः पंचविंशतावन्तर्भावेपि तदन्यस्येश्वरस्य यस्मिन्नित्यधिकरणत्वोक्तिसंभवादिति भावः । नन्वेवमप्याकाशस्य पृथगुक्तिविरोध इत्युक्तमित्यत आह **आकाशश्चेति** । आकाशाद्याः पंचपंचजनाः पंचविंशतिर्जना यस्मिन्प्रतिष्ठिता इति व्याख्यानोपपत्तेरित्यर्थः । चशब्देनेतरत्वसमुच्चय इति वा । आकाशशब्दोऽन्येषां तत्त्वानामुपलक्षणमिति वाऽभिप्रायः ॥

**या०— अथ तत्र भूतत्वादीनीति** । अनुपदमेव तर्हीत्यत्र वक्ष्यमाणानीत्यर्थः । अत्र तदितरधर्मावच्छिन्नं प्रागुक्तं महदादिचतुष्टयमेव । उत्तरत्र तु प्रधानेन संहितं महदादिचतुष्टयं तथेति ध्येयम् ॥ **पातञ्जलैरिति** । ईश्वरस्याङ्गीकृतत्वादित्येव पाठः । तथाच तन्मते पञ्चविंशतितत्त्वानीत्यस्यानीश्वरतत्त्वविषयतया तत्रात्मपदोदितस्य जीवस्यान्तर्भावेऽपि तदतिरिक्तस्येश्वरस्य यस्मिन्नित्याधारत्वेनोक्तिसम्भवेन न तमादाय तत्त्वातिरेकेऽपसिद्धान्त इति भावः । नाप्याकाशमादायातिरेक इत्याह **आकाशश्चेति** । एकवचनं बहुवचनार्थे । तच्चाद्यर्थकं कडारा इत्यादिवदिति भावः । च शब्दोऽनुक्तसमुच्चायक इत्यभिप्रायेणाकाशाद्या इत्युक्तमित्यप्याहुः ।

**श्री— तान्येव** संग्राहकाण्येव ॥ **तदितरत्वमिति** । उक्तविंशत्यन्यत्वमित्यर्थः ॥ **पातञ्जलैरिति** । तथाच यस्मिन्निति भगवतो निर्देशो युक्तः । पंचविंशतित्वं तु जीवसाहित्येन ज्ञेयम् ॥ **आकाशाद्या इति** । तथाच यस्मिन्पञ्च पञ्चजनाः प्रतिष्ठिताः सन्ति । के ते पञ्चजना इत्याकाङ्क्षायामाकाशश्चेत्युक्तम् । आकाशाद्या इत्यर्थः । आकाशस्य भूतेषु ज्यैष्ठ्यादाकाशाद्याः पञ्च जना यस्मिन्प्रतिष्ठिता इति पञ्च पञ्चजना इत्युक्तविवरणरूपत्वेनोपपत्तेरित्यर्थः ।

च० — **पातञ्जलैरिति** । पतंजलिप्रणीतशास्त्रदिशमनुरुन्धानैः सांख्यैरित्यर्थः । ईश्वरस्याङ्गीकृतत्वादित्येव मूलकोशारूढपाठः । अनीदृशस्तु प्रक्षिप्त इति स्थितम् ।

**सु० — किञ्चेदं वाक्यं पञ्चविंशतितत्त्वसिद्धये साङ्ख्येन स्वशास्त्रे गृहीतत्वाद्वा शङ्कितं संभावितत्वाद्वा । न द्वावपि संभवतः । पञ्च पञ्चजना इत्यस्य पञ्चविंशत्यप्रत्यायकत्वात् । पञ्चजना इत्यस्य समासत्वे हि द्वितीयः पञ्चशब्दो न तावत्पञ्चशब्देन संबध्यते । विशेषणस्योपसर्जनेन संबन्धायोगात् । नापि जनशब्देन । पञ्चजनाः कतीत्याकाङ्क्षानुदयेन विशेषणायोगात् । असमासत्वेऽपि न तावत्पञ्चशब्देन संबन्धः । एकार्थयोर्विशेषणविशेष्यभावानुपपत्तेः । नापि जनशब्देन । निराकाङ्क्षत्वात् । कथंचिदाकाङ्क्षायामपि दशत्वस्य प्राप्तेः ।**

शे० — ननु पञ्च पञ्चजना इत्यस्य पञ्चशब्दद्वयदर्शनेन पञ्चपञ्चकसम्पत्त्या पञ्चविंशतितत्त्वप्रतिपादकतायाः परेणोक्तत्वात्कथमप्रत्यायकत्वमित्यतः पञ्चजना इति किं समास उतासमास इति विकल्प्याद्यं प्रत्याह **पञ्चजना इत्यस्येति** । यद्यप्यत्र समासासमासविकल्पस्य नावसरोऽस्ति भाषिकग्रन्थसिद्धान्तानुदात्तस्वरप्रयुक्तैकपदत्वेन समासनिश्चयात् । तथा हि । अस्मिन्मन्त्रे प्रथमः पञ्चशब्द आद्युदात्तो द्वितीयः सर्वानुदात्तो जनशब्दश्चान्तोदात्तः । तथा च न द्वितीयपञ्चशब्दजनशब्दयोस्समासमन्तरेणान्त्यस्याकारस्योदात्तत्वमितरेषां चानुदात्तत्वं घटते समासस्येति सूत्रेण समासस्यान्तोदात्तत्वविधानात् । अनुदात्तं पदमेकवर्जमिति सूत्रेण यस्मिन्पदे उदात्तः स्वरितो वा विधीयते तमेकं विहाय शिष्टस्यानुदात्तत्वस्मरणाच्च । एवमत्रान्तोदात्तस्वरबलात्समासो निर्धारितः । भाषिकसंज्ञके तु शतपथब्राह्मणस्वरविधायकग्रन्थे स्वरितानुदात्तो वेति सूत्रेण यो मन्त्रदशायामनुदात्तः स्वरितो वा स ब्राह्मणावस्थायामुदात्तो भवतीत्यपवाद आश्रितः । ततश्चान्त्यादाकारादितरेषामनुदात्तानां ब्राह्मणदशायामुदात्तत्वं 'उदात्तमनुदात्तमनन्त्यमि'ति सूत्रेण मन्त्रदशायामुदात्तस्यान्त्यस्य परलग्नतयोच्चार्यस्यानुदात्तत्वं विहितम् । ततश्च नकारोपरितन आकार आकाशश्चेत्यनेन संलग्नतयोच्चार्यमाणोऽनुदात्तो भवति । सति चैवमन्तानुदात्तस्वरो भाषिकग्रन्थसिद्धो भाषिको भवति । ये तु 'छंदोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चावचः स्वरं प्राहुः स वै भाषिक उच्यते' इति वचनमुदाहृत्यान्तोदात्तो भाषिक इति व्याचक्षते तेषामध्ययनविरोधः । अन्तानुदात्तस्यैव पञ्चजनपदस्य समाम्नातृभिरध्ययनात् । ततश्च भाषिकेण स्वरेणैकपदत्वनिश्चयादत्र समाससिद्धिः । नन्वसमासेऽपि जनशब्दस्य पचाद्यजन्ततया चित इति सूत्रेणान्तोदात्तत्वलाभान्नान्तोदात्तस्वरेण समासनिश्चयः संभवतीति चेत् । न । तथा सति जकारोपरितन आकारस्य ब्राह्मणगतोदात्तस्थान्यनुदात्तस्वरसंभवेऽपि पञ्चशब्दगतयोरकारयोः समासं विना तदसंभवेन तत्स्वरेण समासनिश्चयसंभवात् । ततश्च

नेह टीकायामुक्तविकल्पावकाशस्तथाऽप्युक्तरीत्या स्वरेण परोक्तं समासनिश्चयमनादृत्य वैदिकं 'जना यमग्निमयजन्त पञ्च' इत्यादिकं पञ्चजनशब्दयोरसमासेन प्रयोगं, 'पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामी'ति तयोरेव समासेन प्रयोगं च मूलीकृत्येह टीकायां समासासमासविकल्प आश्रित इति द्रष्टव्यम्। सिद्धान्ते सत्यपि समासप्रापके शाङ्करभाष्योक्तविशेषणसमासमनाश्रित्य पञ्चपञ्चेति वीप्साश्रयणं तु प्रतिशरीरं प्रसिद्धप्राणादिनियामकानि भगवतः प्राणादिनामकानि पंचरूपाणि सन्तीत्यर्थातिशलाभाय कृतम् । केचित्तु समाहारद्विगुवादिमते यथा पंचजना इति पुलिङ्ग छान्दसत्वेन समाधीयते तथा सत्यपि समासप्रापके पंचजना इत्यसमासः पंचपंचेति वीप्सावादिनो मते छान्दसत्वेन समाधेय इत्याहुः ।

**विशेषणस्योपसर्जनेनेति** । शुक्लादिशब्दवत्पंचशब्दस्य सङ्ख्यामुपसर्जनं कृत्वा । प्राधान्येन द्रव्यपरत्वात् । गुणभूतसंख्याया न संख्यान्तरेण विशेषणम् । तथा सति विशेष्येण द्रव्येण विशेषणेन च सङ्ख्यया युगपदाकृष्यमाणा संख्या नैकेनाप्यन्वियादित्यर्थः ॥ **आकाङ्क्षानुदयेनेति** । पंचसंख्ययोत्पत्तिविशिष्टया जनानामवच्छिन्नत्वादिति भावः । न च संख्यान्तरश्रवणे सति रक्तपटन्यायेनाकाङ्क्षोत्थापनाददोष इति वाच्यम् । विजतीयविशेषणान्तरप्रयोग एव रक्तपटन्यायप्रवृत्त्या सजातीयप्रयोगे तदप्रवृत्तेः । न हि भवति रक्तपटो रक्त इतीति ध्येयम् । द्वितीयं प्रत्याह **असमासत्वेऽपीति** ॥ **निराकाङ्क्षत्वादिति** । पंचत्वसंख्ययाऽवच्छिन्नत्वेन स्वरसतो निराकाङ्क्षत्वादित्यर्थः । स्वरसतो निराकाङ्क्षत्वेऽपि संख्यान्तरश्रवणाद्रक्तपटन्यायेनाकाङ्क्षोत्थापनाददोष इत्यत आह **कथञ्चिदिति** । रक्तपटन्यायस्य विजातीयविशेषणप्रयोगविषयत्वान्न सजातीये तत्प्रवृत्तिरित्याशयेन कथंचिदित्युक्तम् ॥ **दशत्वस्येति** । ततश्च न पंचविंशतितत्त्वप्रत्यभिज्ञानसिद्धिरिति भावः ।

स० — **विशेषणस्योपसर्जनेनेति** ॥ पूर्वपञ्चशब्दो विशेषणं जनपदसमस्तो द्वितीयपञ्चशब्दस्तूपसर्जनभूत इति भावः ॥ **संबन्धायोगादिति** ॥ असामर्थ्यादिति भावः ॥ **विशेषणायोगादिति** ॥ द्वितीयपञ्चशब्दरूपविशेषणायोगादित्यर्थः ॥ **एकार्थयोरिति** ॥ अव्यावर्तकत्वादिति भावः । रक्तो घटस्तिष्ठतीत्यादाविव पुनः कियन्त इत्येवंरूपोत्थाप्याकाङ्क्षा भवत्येवेत्याशयेनाह **कथं चिदाकाङ्क्षायामिति** ॥ स्वारसिकाकाङ्क्षाभावाभिप्रायेण कथञ्चिदित्युक्तम् ।

प० — **समासत्वे हीति** । यद्यपि नन्वित्यादिना शंकिष्यमाणः समाहार एव पराभिमतः तथापि पक्षत्रये दोषोऽस्तीतिभावेन पुलिंगबहुवचनान्तत्वात् पंच च ते जनाश्चेति विशेषणसमासो वा असमास एव वा वाच्यः न समाहार इति भावेन क्रमेण द्वयमपि निराह **द्वितीय इत्यादिना** ॥ **पंचशब्देनेति** । जनपदविशेषणतया समासं प्राप्तेन पंचशब्देनेत्यर्थः ॥ **कथंचिदिति** । पंचजनाः कतीत्याकांक्षयामित्यर्थः ।

या० — अप्रत्यायकत्वमुपपादयितुं पञ्चजना इत्यस्य समासत्वमसमासत्वं वेति विकल्पं मनसि निधाय आद्ये आह **पञ्चजना इत्यस्येति** ॥ **उपसर्जनेनेति** । समासे गुणभूतायाः संख्यायाः न संख्यान्तरं विशेषणम् । तथा सति विशेष्येण द्रव्येण विशेषणेन च संख्यया युगपदाकृष्यमाणा संख्या नैकेनाप्यन्वियात् । अतो विशेषणस्य नोपसर्जनेन संबन्ध इति भावः । द्वितीयं दूषयति **असमासत्व इति** ॥ **निराकाङ्क्षत्वादिति** । पञ्चजनाः कतीत्याकाङ्क्षाऽनुदयादिति भावः ॥ **कथञ्चिदाकाङ्क्षायामिति** । संख्यान्तरश्रवणाद्रक्तपटन्यायेनोत्थाप्याकाङ्क्षायामपीत्यर्थः । सा च पुनः कतीत्येवंरूपा द्रष्टव्या । स्वारसिकाकाङ्क्षाभिप्रायेण कथंचिदित्युक्तम् ।

श्री० — **द्वितीय इति** । समस्तपंचशब्दापेक्षया द्वितीयः । आद्य इति यावत् । **पञ्चशब्देन** समस्तेनेत्यर्थः ॥ **विशेषस्येति** । विशेषणभूतस्याद्यपञ्चशब्दस्य पञ्चजना इति समासोपसर्जनभूतेन पञ्चशब्देन संबन्धायोगादित्यर्थः ॥ **विशेषणायोगादिति** । विशेषणभूतस्याद्यपञ्चशब्दस्य जनशब्देन सम्बन्धायोगादित्यर्थः ॥ **असमासत्वेऽपीति** । पंचजना इत्यस्य पृथक्पदत्वाङ्गीकार इत्यर्थः । अस्मिन्पक्षेऽप्याद्यस्य पंचशब्द स्यद्वितीयपञ्चशब्देन संबन्ध उत जनशब्देन । नाद्य इत्याह **न तावदिति** । **एकार्थयोरिति** । उभयोरपि पंचशब्दयोः पंचत्वसंख्यावद्वस्तुवाचित्वेन परस्परविशेषणविशेष्यभावानुपपत्तेरित्यर्थः । नापि द्वितीय इत्याह **नापीति** ॥ **निराकाङ्क्षत्वादिति** । जनाः कतीत्याकाङ्क्षायां पञ्चेत्युक्त्या आकाङ्क्षायाः पूर्णत्वात्पञ्चजनाः पुनः कतीत्याकाङ्क्षाया अनुदयेन द्वितीयस्य पञ्चेत्यस्य विशेषणस्यानाकाङ्क्षिततया वैयर्थ्यमित्याशयः । स्वारसिकाकाङ्क्षाया अभावेऽपि रक्तपटन्यायेनोत्थाप्याकाङ्क्षा संभवतीत्याशङ्क्य निषेधति **कथञ्चिदिति** । पञ्चजनाः कतीत्याकाङ्क्षा नोच्यते । किन्तु जनाः कतीत्याकाङ्क्षायां पञ्चेत्युच्यते । पुनः कतीत्याकाङ्क्षायां पुनः पञ्चेत्युच्यते इत्येवंरूपेणोत्थाप्याकाङ्क्षायामित्यर्थः ।

सु० — **ननु पञ्चजना इति समाहारद्विगुः । तस्य पञ्चेति विशेषणे पञ्चविंशतिः संपद्यते । यथा पञ्चपञ्च(फ)पूल्यं इत्युक्ते पञ्चविंशतिपूल्योलभ्यन्त इति । मैवम् । तथा सति पुल्लिङ्गानुपपत्तेरित्यलम् ॥ १-४-३ ॥**

**कारणत्वेनेत्यादिसूत्राणामपव्याख्यानं स्फुटदूषणमिति न दूषितम् ॥ छ ॥ छ ॥**

शे० — **समाहारद्विगुरिति** । तथा च समस्तेन पंचजनशब्देनोक्तस्य समाहारस्य युक्ता परिच्छेदकपंचत्वसंख्यापेक्षा । यद्यपि च पंचत्वसंख्यावच्छेदिकाऽस्ति तथापीयं समुदायिनोऽवच्छिनत्ति न तु समुदायं समासगम्यम् । अतस्तस्मिन्कति ते समुदाया इत्यपेक्षायां पदान्तराभिहिता पंचत्वसंख्या सम्बद्ध्यते पंचेति । एवं च पंच पंचकाः सम्पद्यन्त इति भावः । प्राप्तपंचत्वसंख्याकानां जनानां

ंचत्वसंख्यया विशेषणे पंचविंशतितत्त्वधीरित्येतद्दृष्टान्तेन साधयति यथेति । ईबन्तद्विगुसमासेन
समाहाराभिधानात्पदान्तरोपात्तसंख्यया समाहारोऽवच्छेद्यः । उत्पत्तिविशिष्टया तु समानपदस्थया
समाहारिणः पूला अवच्छेद्या इति पंचपूलीत्यत्र स्वगतसंख्यया समुदायिनां पंचत्वसिद्धावपि समाहा-
राणां तदसिध्द्या कति समुदाया इत्यपेक्षासम्भवेन तन्निबन्धनपदान्तरोपात्तपंचत्वसंख्याऽन्वयासंभवेन
पंचविंशतिपूलप्रतीतिसंभवेऽपि पंचजना इत्यत्र पंचपूलीत्यादाविवेबन्तत्वाश्रवणेन समाहारप्रतीत्या न
तेषां पदान्तरोपात्तपंचत्वसंख्याऽन्वयापेक्षा युक्ता । नापि जनानाम् । तेषां समानपदस्थत्वेनोत्पत्ति-
विशिष्टया पंचत्वसंख्ययाऽवच्छिन्नत्वात् । तथाच जनाः कतीत्यपेक्षाया जनानां स्वपदगतसंख्यया-
ऽवच्छिन्नत्वेनासंभवात्समुदायस्य च सर्वथैवाप्रतीतत्वेन समुदायाः कतीत्याकाङ्क्षाऽनुदयेन तन्निबन्धनपदा-
न्तरोपात्तसंख्याऽन्वयानुपपत्तेर्न पंचविंशतितत्त्वप्रतिपादकत्वं पंचपंचजनशब्दस्येत्याह तथा सतीति ।
द्विगुसमासत्वे पंचपूलीत्यादाविवेबन्तत्वापत्त्या स्त्रीलिङ्गत्वमेव स्यान्न तु पुलिङ्गत्वमित्यर्थः । ननु संख्येयानां
जनानां मा भून्छब्दान्तरवाच्यसंख्याऽवच्छेदः । पंचसंख्यायास्तु तथाऽवच्छेदो भविष्यति । न हि सा
स्वावच्छिन्ना । आत्माऽऽश्रयप्रसङ्गेन संख्यायास्तयैवावच्छेदानुपपत्तेः । तथा च संख्यान्तराकांक्षितत्वा-
द्युक्तोऽवच्छेद इत्यत आह अलमिति । तदर्थस्तु पंचशब्दस्य संख्योपसर्जनद्रव्यवाचकत्वादुपसर्जनसंख्याया
न शब्दान्तरोक्तसंख्यासम्बन्ध इत्यसमासवत्समासेऽपि दोषः । समासे पंचशब्दोपात्तसंख्याया जनशब्दार्थं
प्रति विशेषणत्वाच्च न विशेषणान्वयः । न च विशेषणस्याप्युपसर्जनान्वयः किं न स्यादिति वाच्यम् ।
तथा सति साकाङ्क्षतया स्वविशेषणेनाकृष्यमाणस्य विशेष्यान्तरान्वयानुपपत्त्या समासाभावप्रसङ्गात् ।
ऋद्धविशेषणापेक्षस्य राज्ञः पुरुषेणासमासात् । न हि भवति ऋद्धस्य राजपुरुष इति किन्तु ऋद्धस्य
राज्ञः पुरुष इति वृत्तिरेवेति । यद्वा । ईबन्तत्वाश्रयणेऽपि पंचपात्रमित्यादाविव समाहाराभिधानोपपत्तेर्युक्तः
पंचजना इत्यत्र समाहारस्यैव पदान्तरोपात्तसंख्यासम्बन्ध इत्यत उक्तम् अलमिति । तथा सति तद्व-
देव नपुंसकत्वाद्यापत्त्या पञ्चजना इति पुलिङ्गत्वाद्यनुपपत्तेरिति च तदर्थः ॥ १-४-३ ॥

कारणत्वेन जगद्वाचित्वाद्वाक्यान्वयादित्यधिकरणानामपव्याख्यानानिराकरणेन प्रसक्तां तद्व्याख्यान-
स्यानुमतताभ्रान्तिमनिरासे निमित्तोपन्यासेन परिहरति कारणत्वेनेत्यादिसूत्राणामिति ॥ अपव्या-
ख्यानमिति । 'आत्मन आकाशः संभूत' इति वेदान्तेषु क्वचिदाकाशादिकायाः सृष्टेरुक्तेः क्वचि'त्तत्ते-
जोऽसृजते'ति तेजआदिकायास्तस्या उक्तेर्वेदान्तानां विरोध इति प्राप्ते सृज्येष्वाकाशादिषु सृष्टिक्रमादि-
द्वारकविगानेऽप्येकस्मिन्वेदान्ते 'सोऽकामयते'ति चेतनस्य कारणत्वेन व्यपदेशव'त्तदैक्षत तत्तेजोऽसृजते'ति
वेदान्तान्तरेऽपि तस्यैव कारणत्वेन व्यपदेशान्न कारणत्वे विगानमिति कारणत्वेनेत्यस्य । 'यस्य
चैतत्कर्मे'ति धर्माधर्माख्यजीवलिङ्गात् 'प्राण एकधा भवती'त्युत्तरवाक्ये प्राणशब्दश्रवणा'द्यस्य चैतत्कर्म स

वेदितव्य' इति वाक्ये वेदितव्यत्वेनोक्तो जीवो वा मुख्यप्राणो वेति प्राप्ते एतत्कर्मेत्यत्रैतच्छब्दस्य प्रत्यक्षसिद्धजीववाचित्वात्कर्मशब्दस्य च क्रियत इति व्युत्पत्त्या क्रियमाणवाचित्वाज्जगत्कर्तृत्वस्य च जीवादावयोगाद् ब्रह्मैव वेदितव्यत्वेनोक्तमिति जगद्वाचित्वादित्यस्य 'न वा अरे पत्युः कामाय पतिः प्रियो भवति । आत्मनस्तु कामाय सर्वं प्रियं भवती'ति पूर्ववाक्ये प्रियाप्रिययुक्तस्य भोक्तुर्जीवस्योपक्रमात् 'आत्मा वा अरे द्रष्टव्य' इत्यादिवाक्यं जीवपरमिति प्राप्ते 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितमे'त्येकविज्ञानेन सर्वविज्ञानादिवाक्यस्य जीवपक्षेऽनन्वयाद् ब्रह्मपक्ष एव चान्वयाद् ब्रह्मपरमिति वाक्यान्वयादित्यस्याव्याख्यानमित्यर्थः ॥ **स्फुटदूषणमिति** । कारणत्वेनेत्यस्य सौत्रचशब्दे तुशब्दार्थत्वस्य कारणत्वेनेत्यस्य विच्छेदाविच्छेदाभ्यामुभयार्थत्वस्य क्लिष्टत्वादाकाशादिष्वि-त्यस्यान्वयार्थं सृष्टिद्वारकविगानशब्दस्याध्याहार्यत्वाद्विरोधनिरासस्याविरोधलक्षणएव सङ्गतत्वेनाध्यायार्थ-समन्वयाप्रतिपादकतयाऽध्यायासङ्गतेः । प्रधानाशब्दत्वाप्रतिपादकत्वेन पादासङ्गतेः । 'तत्तेजोऽसृजत' इत्यत्राकाशसृष्टिमुक्त्वा तेजःसृष्ट्युक्त्या तत्रोक्तानुक्तिमात्रसद्भावेऽप्याकाशात्पूर्वं तेजः सृष्टेरनुक्त्या विरोधशङ्कारूपपूर्वपक्षानुत्थानात् । 'सदेव सोम्येदमग्र आसीत्' 'असदेवेदमग्र आसीत्' इति कारणेऽपि विगानदर्शनेन सिद्धान्तस्याप्ययोगादिति दूषणजातम् । जगद्वाचित्वादित्यत्रापि पादार्थस्य प्रधानाशाब्द-त्वस्याप्रतिपादनेन पादासङ्गतिः । समाकर्षादित्यत्रान्वितानां शब्दानामेव मद्रीत्या अन्वयसंभवे एतच्छब्दस्येत्यध्याहारो न युक्त इति दूषणजातम् । वाक्यान्वयादित्यत्र समन्वेतव्यविशेषानुक्त्या पूर्वशेषत्वस्यैव स्पष्टत्वेन समन्वयपरत्वानुपपत्तिः पादासङ्गतिश्चेत्यादिदूषणजातं स्पष्टमेवेति कारणत्वेनेत्या-द्यपव्याख्यानं स्फुटदूषणमित्यर्थः । विस्तरस्तु चन्द्रिकायां द्रष्टव्यः ॥ **न दूषितमिति** । भाष्यकृतेति शेषः ।

स० — **तस्य पञ्चेतिविशेषण इति** ॥ पञ्चजनसमाहारस्य पञ्चकरूपस्य पञ्चत्वे पञ्चविंशतिः संपद्यत इति भावः ॥ **तथा सतीति** ॥ अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्त्रीलिङ्गत्वविधाना-त्पुलिङ्गत्वाभावः । न च पञ्चपात्रमित्यादाविव पात्रादित्वात् स्त्रीलिङ्गत्वाभाव इति वाच्यम्, तथापि तद्वदेव नपुंसकत्वापत्त्या पुलिङ्गत्वानुपपत्तेः । छान्दसत्वेन समाधानं त्वगतिकागतिः । तदिदमभिप्रेत्योक्तम् **अलमिति** ॥ **स्फुटदूषणमिति** ॥ अध्यायपादसङ्गत्यभावेन पूर्वपक्षसिद्धान्तानुत्थित्या चेत्यर्थः ।

प० — पराभिमतमाशंकते **नन्विति** ॥ **पुल्लिंगेति** । 'संख्यापूर्वो द्विगुः'इति संज्ञायां 'द्विगुरेक-वचनम्' इत्येकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे प्राप्ते 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यत' इति स्त्रीत्वे 'द्विगोरि'ति ङीप्प्रत्ययेन भाव्यत्वादिति भावः ॥ **इत्यलमिति** । विस्ततरस्तु चंद्रिकायां बोध्यः ॥ १ । ४ । ३ ॥ **स्फुटदूषणमिति** । चन्द्रिकायां, व्यक्तत्वान्नास्माभिरपि प्रपंच्यते ॥

**या०— पुल्लिङ्गत्वानुपपत्तेरिति** । 'अकारान्तो द्विगुः समाहारे स्त्रियामिष्टः' इति वचनादिति भावः । पुल्लिङ्गत्वादेव न पात्रादित्वमपि । छान्दसत्वेन समाधानं त्वगतिका गतिरित्यवधेयम् । किञ्च जनशब्दस्य न तत्त्वेषु रूढिः किन्तु योग एव । पञ्चजनशब्दस्य तु 'दिक्सङ्ख्ये संज्ञायाम्' इति समासविधानात् मनुजेषु रूढिः । ततश्च रूढत्वाभिप्रायेण केचित्पञ्चजना नाम विवक्ष्यन्ते । ते कतीत्याकाङ्क्षायां पुनः पञ्चेति प्रयुज्यते । 'सप्तर्षयः सप्त' इति यथा । एवञ्च कथं साङ्ख्यप्रसक्तिरत्रेत्याद्यभिप्रेत्याह **इत्यलमिति** ॥ १-४-३ ॥

**स्फुटदूषणमिति** । 'अध्यायसङ्गतेः पादसङ्गतेरप्यभावतः । पूर्वपक्षानुत्थितेश्च सिद्धान्तस्याप्ययोगतः' इत्यादि चन्द्रिकोक्तरीत्या दूषणानां स्फुटता ज्ञातव्या ।

**श्री०— समाहार इति** । पञ्चानां फलानामितिवत्पञ्चानां जनानां समाहार इति समाहारद्विगुरित्यर्थः । **तस्य** समाहारद्विगुसमासभूतस्य पञ्चजना इत्यस्य । पञ्चानां जनानां समाहाराः कतीत्यपेक्षायां पञ्चेत्युच्यते । तथा पञ्चवर्गरूपपञ्चजनसमाहारस्य पञ्चत्वोक्तौ पञ्चपञ्चकाः पञ्चविंशतिः सम्पद्यत इत्यर्थः ॥ **पुल्लिङ्गत्वेति** । 'अकारान्तोत्तरपदो द्विगुः समाहारे स्त्रियाम्' इति वार्तिकात् । यथा पञ्चफल इति शब्दात्समाहारद्विगुभूतात् 'स्त्रियां द्विगोः' इति ङीपि पञ्चफलीति जाते तद्बहुवचनं पञ्चफल्य इति भवति तद्वदत्रापि समाहारद्विगुभूतात्पंचजनशब्दात् स्त्रियां ङीपि पञ्चजनीति जाते तद्बहुवचनं पञ्चजन्य इति स्यात् पञ्चजना इति पुल्लिङ्गत्वमनुपपन्नमेवेत्यर्थः ॥ १-४-३ ॥

---

**च०— पुल्लिङ्गत्वानुपपत्तेरिति** । अकारान्तो द्विगुःस्त्रियामिष्ट इति वचनेन स्त्रीलिङ्गतया द्विगोरित्यनेन ङीबन्तत्वापत्त्या पुल्लिङ्गत्वानुपपत्तिप्रसङ्गेन पात्रादित्वाश्रयणस्य चायोगादित्यर्थः ।

**सु०— प्रकृतिश्चेत्येतद(त्य)धिकरणं ब्रह्मणो जगदुपादानताप्रतिपादनार्थमिति व्याचक्षते ।**

**तथा हि । जन्माद्यस्य यत इति जगत्कारणं ब्रह्मेत्युक्तम् । तत्र संशयः किमुपादानत्वेनोत निमित्तत्वेनेति । 'स ईक्षांचक्रे स प्राणमसृजत' इतीक्षापूर्वककर्तृत्वश्रवणादिना केवलं निमित्तत्वेनैवेति प्राप्तेऽभिधीयते 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' । न केवलं निमित्तकारणमेव ब्रह्म । किन्तु प्रकृतिः उपादानं च । कुतः; प्रतिज्ञादृष्टान्तानुपरोधात् । एवं हि प्रतिज्ञादृष्टान्तौ नोपरुध्येते । 'येनाश्रुतं श्रुतं भवति' इति ब्रह्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तच्चोपादानत्व एवोपपद्यते । कार्यस्योपादानाव्यतिरेकात् । न हि निमित्तकारणाव्यतिरेकः कार्यस्यास्ति । तक्ष्णः प्रासादव्यतिरेकदर्शनात् । दृष्टान्ताश्च 'यथा सोम्यैकेन**

मृत्पिण्डेन' इत्यादय उपादानगोचरा आम्नायन्ते । 'यतो वा इमानि भूतानि' इति पञ्चमी चोपादानत्वं गमयतीति । जनिकर्तुः प्रकृतिरिति विशेषस्मरणात् । 'अभिध्योपदेशाच्च' 'सोऽकामयत बहु स्यां प्रजायेय' इत्यभिधानपूर्वकबहुभवनोपदेशाच्च निमित्तत्वमुपादानत्वं च गम्यते ।

'साक्षाच्चोभयाम्नानात्' । इतश्चोपादानंब्रह्म । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' इति साक्षाद्ब्रह्मैव कारणमुपादायोभयोः प्रभवप्रलययोराम्नानात् । यद्धि यस्मात्प्रभवति यस्मिंश्च लीयते तत्तस्योपादानं प्रसिद्धम् । यथा व्रीह्यादीनां पृथिवी(ति) । प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः । 'आत्मकृतेः परिणामात्' तदात्मानं स्वयमकुरुतेत्यात्मनः कर्मत्वकर्तृत्वश्रवणा(व्यपदेशा)च्चोपादानं ब्रह्म । कथं पुनः पूर्वसिद्धस्य क्रियमाणत्वम् । परिणामात् । पूर्वसिद्धोऽप्यात्मा विकारात्मना विशेषेणात्मानं परिणामयामासेति ह्युपपन्नम् । परिणामादिति वा पृथक् सूत्रम् । सच्च त्यच्चाभवदित्यादिना ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनाम्नायते । अतश्चोपादानं ब्रह्म । 'योनिश्च हि गीयते ।' 'यद्भूतयोनिम्' इति योनिश्च ब्रह्म गीयते । योनिशब्दश्चोपादानवचनः समधिगतो लोके । अतश्चोपादानं ब्रह्मेति ।

---

तदेतन्निराकरोति न चेति ।

अनु०— न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते ॥

शे०— ॥ ॐ **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** ॐ ॥ कारणभावस्योभयथादर्शनं सन्देहबीजमिति भावेन सन्देहमाह **तत्रेति** ॥ **किमुपादानत्वेनेति** । किमुपादानत्वेनापीत्यर्थः । कर्तृत्वे सत्युपादानताया एव सिषाधयिषितत्वात् । अत एव निमित्तत्वेनेत्यस्य निमित्तत्वेनैवेत्यर्थः । निमित्तमात्रत्वस्यैवोक्तकोटिविरुद्धतया निमित्तत्वमात्रस्य तदविरोधित्वात् । अत एव जगत्कारणत्वं ब्रह्मणः किं निमित्तत्वेनैवोतोपादानत्वेनापीत्येव भामत्यां संशयो दर्शितः । अत एव चोत्तरत्र पूर्वपक्षटीकायां निमित्तमात्रैवेत्येवोपसंहार इत्यवधेयम् । ब्रह्म न द्रव्यप्रकृतिरीक्षितृत्वात्कर्तृत्वाच्च कुलालादिवत् । सुखाद्युपादानतया कुलालादौ साध्यवैकल्यपरिहाराय प्रतिज्ञायां द्रव्यपदम् । हेतुद्वयस्य श्रुतिसिद्धत्वान्नासिद्धत्वमिति भावेन पूर्वपक्षयति **स ईक्षामित्यादिना** । ईक्षितृत्वादिमात्रस्याव्यभिचारितया न विशिष्टस्य हेतुत्वमत्राभिमतं किन्त्वीक्षितृत्वकर्तृत्वयोः प्रत्येकमेवेत्यवधेयम् । अत्रादिपदेन, ब्रह्म न द्रव्यप्रकृतिर्विभुत्वाद्राजवत् । ब्रह्म, न पृथिवीप्रकृतिर्निर्गन्धत्वादभाववत् । द्रव्योत्पत्तिर्भिन्ननिमित्तोपादानपूर्वा द्रव्योत्पत्तित्वात्पटोत्पत्तिवत् । विमतमचेतनोपादानं कार्यद्रव्यत्वाद्घटादिवत् । विमतं न ब्रह्मोपादानम-

चेतनत्वादशुद्धत्वाद्धटवदित्याद्यनुमानपरिग्रहः । निमित्तत्वेनैवेत्येवकारार्थं स्फुटयति **केवलमिति** । ननु चोदाहृतानुमानैर्निमित्तत्वस्यैव सिद्धेरुपादानमपीति प्रतिज्ञा बाधितविषयेत्याशयेन शङ्कते **कुत इति** ॥ श्रौतप्रतिज्ञादिलिङ्गैरनुमानानामाभासत्वादविरोधित्वमित्याशयेन सौत्रं हेतुमुपादाय व्याचष्टे **प्रतिज्ञेति** । **एवम्** इत्युभयथा कारणत्वे सतीत्यर्थः । तयोरनुपरोधं वक्तुं प्रतिज्ञामाह **येनेति** । तदनुपरोधं स्वमते दर्शयति **तच्चेति** । निमित्तकारणविज्ञानादेव सर्वविज्ञानं किं न स्यादित्यत आह **न हीति** । दृष्टान्तानुपरोधमाह **दृष्टान्ताश्चेति** । आदिपदेन 'यथा सोम्यैकेन लोहमणिना' इत्यादेर्ग्रहणम् । न केवलमनुमानानां प्रतिज्ञाऽऽदिलिङ्गैरेव बाधः किन्तु पञ्चमीश्रुत्याऽपीत्याह **यत इति** । ननु श्रुतौ यत इति पंचमी न प्रकृता अपि तु हेतुत्वमात्रे 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य' इति हेतोर्मनुष्याच्च रूप्यप्रत्ययविधौ तत आगत इति प्रकृतस्य पंचम्यर्थस्य हेतोरिति विशेषणेन हेतावपि पंचमीज्ञापनात्तत्कथं पंचम्योपादानत्वसिद्धिरित्यतो ज्ञापनेन विद्ध्युत्पत्यनादरमिः प्रयत्नविधिप्राप्तप्रकृतिन्योपादानम् । किञ्च गुणवचनेष्वेव हेतुपंचमी दृश्यते जाड्याद्बद्ध इत्यादिषु । न च ब्रह्म गुणोऽनाश्रितत्वाद्येन यत इत्यस्य गुणवचनता स्यादिति भावेनाह **जनिकर्तुरिति** । जायमानस्य कार्यस्य प्रकृतिरुपादानमपादानसंज्ञं भवति ॥ ततः 'अपादाने पंचमी' इति सूत्रेण प्रकृतौ पंचमीस्मरणादित्यर्थः । यद्यपि चात्र सूत्रे प्रकृतिग्रहणं सर्वकारकसंग्रहार्थमित्युक्तं तथाऽपि तदनादृत्य प्रकृतिश्चेत्येतत्सूत्रस्थप्रकृतिशब्दवदेतत्सूत्रस्थप्रकृतिशब्द इत्यभिमानेनैवमुक्तमित्यवधेयम् ॥ **अभिध्यानपूर्वकं बहुभवनोपदेशादिति** । **अभिध्या** अनागते वस्तुनीच्छा । अत्राभिध्यानपूर्वकस्वतन्त्रप्रवृत्तिश्रवणान्निमित्तत्वम् । बहुस्यामित्यभिध्यायाः प्रत्यगात्मविषयत्वेन कार्यकारणाभेदसूचनादुपादानत्वमुक्तमित्यर्थः ।

सूत्राक्षराणि व्याचष्टे **इतश्चेति** ॥ **साक्षाद् ब्रह्मैवेति** । 'आकाशस्तल्लिङ्गात्' इत्याकाशस्य ब्रह्मत्वसमर्थनाद् ब्रह्मैवेत्युक्तम् । साक्षात्पदलभ्यार्थप्रदर्शनम् **एवेति** । अनेनाकाशादेवेत्येवकारसूचितमुपादानान्तरानुपादानं दर्शयितुं सूत्रे साक्षात्पदमित्युक्तं भवति । नन्वाकाशं ब्रह्मेत्युक्त्वा सर्वभूतानां तदभिप्रभवप्रलयाभिधानेऽपि कथं ब्रह्मणः सर्वोपादानत्वमित्यत्राह **यद्वीति** । उपादानान्तरव्यावृत्त्याकाशादेवेत्येवकारार्थो न भवति किन्तु निमित्तस्याकाशस्योपादानत्वव्यावृत्तिरित्याशङ्क्याह **प्रत्यस्तमयश्चेति** । निमित्ते कार्यस्य लयादेराकाशस्य तन्मात्रत्वमत्र नेष्टमित्यर्थः ॥ **कर्मत्वकर्तृत्वव्यपदेशादिति** । आत्मानमिति कर्मत्वस्य स्वयमकुरुतेति कर्तृत्वस्य व्यपदेशादित्यर्थः । उपादानमित्युपलक्षणम् । निमित्तं चेत्यपि द्रष्टव्यम् । कर्मत्वश्रवणादुपादानत्वस्य, कर्तृत्वश्रवणान्निमित्तत्वस्य च सिद्धिरिति भावः ॥ **कथं पुनरिति** । सिद्धत्वसाध्यत्वयोर्विरुद्धत्वान्नैकत्र समवाय इत्यर्थः ॥ **विकारात्मनेति** । एकेन रूपेण पूर्वसिद्धस्याप्यसिद्धरूपान्तरेण परिणामे बाधकाभावादिति भावः । एकवाक्यतया व्याख्याय वाक्य-

भेदेनापि व्याख्याति **परिणामादिति वेति** । अर्थभेदाभावे कथं पार्थक्यमित्यतो भेदमाह **सच्च त्यच्चेति** । सुवर्णं कुण्डलमितिवत्सच्च त्यच्चेति जगता सामानाधिकरण्यादभेदादुपादानत्वं । निमित्तत्वे तदयोगादिति भावः ॥ **समधिगतो लोक इति** । पृथिवी योनिरोषधिवनस्पतीनामित्यादाविति शेषः । न चोपादानत्वं विनाऽपि स्त्रीयोनौ योनिशब्ददर्शनान्न तस्य प्रकृत्यर्थत्वमिति वाच्यम् । स्त्रीयोनेरप्यवयवद्वारेण गर्भं प्रत्युपादानत्वेनादोषात् । न च क्वचित्स्थानवचनोऽपि योनिशब्दो दृश्यते । 'योनिष्ट इन्द्र निषदे अकारि' इत्यादौ हे इन्द्र ते तव निषदे निषदनायोपवेशनाय स्थित्यर्थमिति यावत् योनिः स्थानमकारीत्यर्थप्रतिभासात्कथं तेनोपादानत्वनिश्चय इति चेन् । न । 'यथोर्णनाभिः सृजते गृह्णते च' इत्येवंविधाद्वाक्यशेषात्प्रकृते प्रकृत्यर्थत्वनिश्चय इत्यभिप्रायात् ॥ **उपादानं ब्रह्मेति** । न च ईश्वरो जगन्निमित्तमात्रमीक्षितृत्वात्कर्तृत्वात्कुलालादिवत् इत्याद्यनुमानविरोध इति वाच्यम् । अत्रेश्वरासिद्ध्या हेतोराश्रयासिद्धत्वात् । न चागमात्तत्सिद्धिरिति वाच्यम् । तथा सति यादृशमीश्वरमागमोऽवगमयति तादृश एवासावभ्युपगन्तव्यः । स चोपादानकारणं च निमित्तकारणं चेश्वरमवगमयतीति विशेष्याश्रयग्राहकत्वेनोपजीव्यागमविरोधान्नानुमानप्रवृत्तिरिति कुतस्तेन निमित्तमात्रत्वाध्यवसाय इति भावः । एवमपव्याख्यानमनूद्य तन्निरासपरतयोत्तरभाष्यमवतारयति **तदिति** ।

---

स० — **जनिकर्तुः प्रकृतिरितीति** । जायमानस्य प्रकृतिर्हेतुरुपादानं स्यादिति सूत्रार्थः । उदाहरणं तु ब्रह्मणः प्रजाः प्रजायन्त इति । **ब्रह्मैव कारणमुपादायेति** । अत्राकाशशब्दस्य ब्रह्मवाचित्वादिति भावः । साक्षादिति चोपादानान्तरानुपादानं दर्शयति आकाशादेवेत्यवधारणात् । हेत्वन्तरमाह **प्रत्यस्तमयश्चेति** ॥ प्रत्यस्तमयशब्देन यत्र विनाशोऽभिधीयते तत्रोपादानमेव विनाशाधिकरणतया निर्दिश्यत इति दृष्टमिति भावः । **समधिगतो लोक इति** । पृथिवीयोनिरौषधिवनस्पतीनामित्यादावित्यर्थः ।

प० — **उपादानत्वेनेति** । उपादानत्वेनापीति निमित्त(त्वे)नैवेति चार्थो ध्येयः ॥ **जनिकर्तुरिति** ॥ जायमानस्य प्रकृतिरुपादानकारणमपादानसंज्ञं भवतीत्यपादानसंज्ञायाम् 'अपादाने पंचमी' इति परमते सूत्रार्थः । वृत्तिमञ्जर्यादौ तु प्रकृतिशब्दः कारणमात्रपरो न तु तद्विशेषोपादानपरः । पुत्रात् प्रमोदो जायत इत्याद्यसिद्धिप्रसङ्गादित्युक्तम् । अन्यत्समम् । अत्र जनेः कर्ता जनिकर्ता तस्य जनिकर्तुरिति षष्ठीसमासो यद्यपि 'कर्तरि चे'तिसूत्रेण निषिद्धः तथाप्येतन्निर्देशबलादेव कर्तरि चेति निषेधोऽनित्य इति जनिकर्तुरिति सूत्र एव मञ्जर्यामुक्तत्वाददोष इति ज्ञेयम् । स्यामित्युत्तमपुरुषैकवचनम् ॥ **ब्रह्मैवकारणमुपादायेति** । तल्लिङ्गादिति न्यायेनाकाशस्य ब्रह्मत्वादिति भावः । यद्यस्मात्प्रभवति

तत्तस्योपादानमित्येतत् दृष्टान्तेनोपपाद्य यत् यस्मिंश्च लीयते तत्तस्योपादानमित्येतद्व्यतिरेकमुखेनोपपादयति **प्रत्यस्तमयश्चेति** ।

या० — **कर्तृत्वश्रवणादिनेति** । आदिपदेन, ब्रह्म न द्रव्यप्रकृतिरीक्षितृत्वात् प्रभुत्वाच्च राजवत् । सुखाद्युपादाने राज्ञि साध्यवैकल्यव्यावृत्तये प्रतिज्ञायां द्रव्यपदम् । ब्रह्म न पृथिवीप्रकृतिः निर्गन्धत्वादभाववदित्याद्यनुमानमभिप्रेतम् ॥ **एवं हि प्रतिज्ञादृष्टान्ताविति** । तथाच पूर्वपक्ष्यनुमानानां बाधितत्वमिति भावः ॥ **जनिकर्तुः प्रकृतिरिति** । जनिकर्तुर्जायमानस्य प्रकृतिर्हेतुरुपादानं स्यादिति सूत्रार्थः । उदाहरणं तु शृङ्गाच्छरो जायत इत्यादि । विशेषस्मरणादित्यस्याभिप्रायमग्रे स्वयमेव दर्शयति ॥ **अभिध्यानपूर्वकमित्यादि** । तत्राभिध्यानपूर्वकत्वेनान्यप्रवृत्तिस्मरणान्निमित्तत्वं बहुभवनस्य स्वात्मविषयकत्वकथनेन कार्यकारणाभेदसूचनादुपादानत्वं च गम्यत इति भावः ॥ **ब्रह्मैव कारणमुपादायेति** । अत्राकाशशब्दस्य ब्रह्मवाचित्वादिति भावः। साक्षादिति चोपादानान्तरानुपादानं दर्शयति । आकाशादेवेत्यवधारणात् । नन्वत्र प्रभवप्रलययोरुभयोः प्रत्येकमुपादानतासाधकत्वमभिप्रेतम् । अन्यथा वैयर्थ्यप्रसङ्गात् । तत्र प्रभवस्योपादानभिन्नात्कर्त्रादेरपि दर्शनेन व्यभिचारसम्भावनायां सत्यामपि न द्वितीयहेतौ तत्सम्भावनेत्याशयेनाह **प्रत्यस्तमयश्चेति** । उपादानं ब्रह्मेत्यत्रोपादानग्रहणमुपलक्षणम् । निमित्तमित्यपि द्रष्टव्यम् । तथाच कर्मत्वश्रवणादुपादानं कर्तृत्वश्रवणान्निमित्तमिति विवेको द्रष्टव्यः ॥ **सच्च त्यच्चेति** । अत्र सच्छब्देनापरोक्षं पृथिव्यप्तेजोलक्षणं त्यच्छब्देन च परोक्षं वाय्वाकाशलक्षणं भूतं विवक्षितमिति ज्ञातव्यम् **सामानाधिकरण्येनेति** । सामानाधिकरण्येनाभेदसिद्धावुपादानत्वसिद्धिरिति भावः ॥ **समधिगतो लोक इति** । 'पृथिवी योनिरोषधिवनस्पतीनाम्' इत्यादावित्यर्थः । एवं स्त्रीयोनेरप्यस्त्येवावयवद्वारेण गर्भं प्रत्युपादानत्वमिति द्रष्टव्यम् ।

श्री० — **अव्यतिरेकः** । अभेद इत्यर्थः ।

**सु० — कुतो नोच्यत इति चेत् । प्रमाणान्तराविरुद्धो हि सूत्रार्थो वर्णनीयः । उपादानत्वं च ब्रह्मणः श्रुत्यादिविरुद्धम् । परिणामिकारणं ह्युपादानमुच्यते । यथा घटरुचकादीनां मृत्सुवर्णादि । ब्रह्मणश्च स्वरूपान्तरापत्तिलक्षणो विकारापरपर्यायः परिणामो निषिध्यते श्रुत्यादाविति कथं सूत्रार्थतया वक्तुं शक्यत इत्याह** अविकार इति ।

**अनु०** — अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः ॥
सदैकरूपविज्ञानबल आनन्दरूपकः ॥
निर्विकारोऽक्षरः शुद्धो निरातङ्कोऽजरोऽमरः ॥

अविश्वो विश्वकर्ताऽजो यः परः सोऽभिधीयते ॥
निर्विकारमनौपम्यं सदैकरसमक्षयम् ।
ब्रह्मेति परमात्मेति यं विदुर्वैदिका जनाः ॥
इति श्रुतिपुराणोक्त्या न विकारी जनार्दनः ॥

**सदाशब्दद्वयस्याविकारः शुद्ध इत्याभ्यां संबन्धः । विकारो द्वेधा भवति । धर्मिणो धर्मस्य चेति । तत्राविकारस्सदेत्याद्यस्य निषेधः । सदैकरूपेति द्वितीयस्य । एकरूपे निर्विकारे विज्ञानबले यस्यासौ तथोक्तः । उपमाविषय औपम्यम् । न औपम्यम् अनौपम्यम् । एकरसं स्वगतभेदवर्जितम् । प्रधानानन्दात्मकं वा । न विकारीति गम्यत इति शेषः ।**

**शे०** — ननु ब्रह्मणः श्रुत्यादिबलेन निर्विकारत्ववर्णनपरोत्तरवाक्यं व्यर्थमित्यतो, 'न च प्रकृति'- **इति** प्रतिज्ञाते ब्रह्मण उपादानतायाः सूत्रार्थत्वाभावे श्रुत्यादिविरुद्धत्वरूपहेतुकथनार्थत्वान्न तद्वैयर्थ्य- मित्याशयेन हेतुपरतयोत्तरवाक्यं सङ्गमयितुं हेत्वाशङ्कामुत्थापयति **कुत इति** । कथमस्य गमकत्वमित्यतो यः सूत्रार्थः स श्रुत्याद्यविरुद्ध इति नियमादिति भावेन व्यतिरेकव्याप्तिं सूचयति **प्रमाणान्तरेति** । यः सूत्रार्थः स प्रमाणाविरुद्ध इति हि प्रसिद्धमिति योजना । यदि हि कश्चिदपि सूत्रार्थः प्रमाण- विरुद्धो भवेत्तदा प्रमाणविरुद्धत्वस्य तत्रैव व्यभिचरिततयाऽसूत्रार्थत्वगमकत्वं न स्यात् । न चैतदस्तीत्य- भिप्रायः । व्याप्तिमुक्त्वा पक्षधर्मतामाह **उपादानत्वं चेति** । ननु 'अविकारः सदा शुद्धः' इत्युदाह- रिष्यमाणश्रुत्यादिभिर्विकारनिरासेऽप्युपादानत्वानिरासान्नोपादानत्वस्य श्रुत्यादिविरुद्धत्वमित्यत उपादानत्वस्य विकारघटितमूर्तिकत्वान्निर्विकारत्वाभिधायकश्रुत्यादिविरुद्धत्वमेवेत्यभिप्रेत्य तत्स्वरूपमाह **परिणामीति** । ननु तावतोपादानत्वेन ब्रह्मणः परिणामित्वप्राप्तावपि विकारित्वाप्राप्तेः कथं निर्विकारत्वाभिधायकश्रुत्यादि- विरोधसिद्धिः, इत्यतो रूपान्तरापत्तिरूपस्य परिणामस्य विकारापरपर्यायत्वादस्त्येव विकारित्वप्राप्तिरिति कथं न तद्विरोध इति भावेनाह **ब्रह्मणश्चेति** ॥ **आभ्यां संबन्ध इति** । सदा विकारः सदा शुद्ध इत्याभ्यां संबन्ध इत्यर्थः । अविकारत्वशुद्धत्वयोः सार्वकालिकत्ववर्णनस्य निर्विकारत्वश्रुतिविरोधोपपादकत्वेनावश्य- वक्तव्यत्वादन्यथा कादाचित्कविकारादिमतो हरेरविकारापगमे विकारवत्कारणत्वरूपोपादानत्वोपपत्तेरुपा- दानत्वस्य श्रुत्यविरुद्धत्वप्रसङ्गादिति ध्येयम् । नन्वविकारः सदेत्यनेनैव विकाराभावबोधनाच्छ्रुतौ सदैक- रूपविज्ञानबल इत्यस्यानर्थक्यमित्यतो विकारस्य द्वैविध्यादविकार इत्यनेन निरस्तविकारातिरिक्तविकारा- न्तरनिरासकत्वान्न वैयर्थ्यमित्यभिप्रेत्य तद्द्वैविध्यमाह **विकार इति** । एवं विकारद्वैविध्यमभिधाया- नियमेन यस्य कस्यचिद्यत्किञ्चिद्विकारनिवर्तकत्वमिति भ्रान्तिनिरासाय व्यवस्थया विकारद्वयनिवर्तकत्वं विशेषणद्वयस्य दर्शयति **तत्रेति** । धर्माणां विकाराभावस्य सदैकरूपविज्ञानबल इत्यत्रानभिधानात्कथं

धर्मविकारनिषेधकत्वं तस्येत्यतः प्रकृतोपयोगितया तद्व्याचष्टे **एकरूपे निर्विकार इत्यादिना ॥ उपमाविषय औपम्यमिति** । सोपम इत्यर्थः । 'तद्धिता' इति बहुवचनज्ञापित'विचित्रा तद्धितगतिः' इति वचनादुपमाया अयमित्यर्थे ष्यञि आदिवृद्धौ यस्येति चेत्याकारलोपे औपम्यशब्दसिद्धिरिति भावः । नञ्समासमभिप्रेत्याह **नेति** । उपलक्षणं चैतत् । उपमैवौपम्यम् । उक्तरीत्या स्वार्थिकोऽत्र ष्यञ् । नास्त्यौपम्यं यस्येति बहुव्रीहिरपि द्रष्टव्यः । 'एकः प्राधान्यतस्तथा' इतीशावास्यभाष्यं 'स आनन्दो रसस्ततः' इति तैत्तरीयभाष्यं च मनसि निधाय व्याचष्टे **प्रधानानन्दात्मकमिति** । श्रुत्यादेर्ज्ञापकत्वेन कारकत्वाभावाद्योग्यं शेषं पूरयति **गम्यत इति शेष इति** ।

**स०— रुचकं** कण्ठभूषणम् ॥ मूले प्रमाणान्तर'मविकार' इति । मूले प्रमाणान्तरं 'निर्विकारमि'ति ।

**प०— इत्याहेति** । यद्यपीदं न मिथ्यावादिदूषणम् । तथापि भास्करादिना जगत्सत्यत्वमुपेत्य ब्रह्मपरिणामोपगमात्तं प्रतीति ध्येयम् ॥ **आभ्यां संबन्ध इति** । सदाऽविकारः सदा शुद्धः जडाभिश्रः इति संबन्ध इत्यर्थः । नयचन्द्रिकायां तु सदात्मा मुक्तिदशायामपि स्वामीत्युक्तम् । ननु सदाऽविकार इत्यनेन सदैकरूपीत्यादि पुनरुक्तमित्यत आह **विकारो द्वेधेत्यादि** । धर्मिणो यथा मृदादेः घटाद्यापत्तिः धर्मस्य यथा बदरादिफलेषु श्यामत्वरक्तत्वादि । श्रुतिपुराणोक्तेन विकारीत्युक्तविकारित्वहेतुत्वायोगादाह **इतिगम्यत इतिशेष इति** ।

**या०— रुचकं** कण्ठभूषणम् । 'स आनन्दो रसस्तत' इति प्रमाणं मनसि निधायाह **प्रधानानन्दात्मकं चेति** । मूलेऽविकार इति निर्विकार इति च पृथक् प्रमाणमिति मन्तव्यम् ॥

**श्री०— आद्यस्य** धर्मिविकारस्य । **द्वितीयस्य** धर्मविकारस्य ।

**च०— घटरुचकानामिति** । कलशकण्ठभूषणानामित्यर्थः ।

**सु०— युक्तिविरुद्धं च ब्रह्मणो विकारित्वमिति वक्तुं विकारप्रकारांस्तावदाह** पराधानेति ।

अनु०— पराधानविशेषाप्तिरनिवर्त्योऽन्यथाभवः ॥
क्षीरादिवद्विकारः स्यात्

**विकारस्तावद् द्विविधो भवति । विशेषाप्तिर्विशेषिपरिवर्त(वृत्ति)श्चेति । तत्र विशेषाप्तिर्नाम धर्मिणस्तादवस्थ्ये सति धर्ममात्रपरिवृत्तिः । विशेषिपरिवर्त(वृत्ति)स्तु धर्मिस्वरूपस्यैव परिणामः । द्विविधोऽप्ययं पराधीनो भवति । प्रत्येकं च द्वेधा । अनिवर्त्योऽन्यथाभावो-**

**निवर्त्यश्चेति । अत्रैकैकप्रकारानुक्तिः स्फुटत्वादिति ज्ञातव्यम् । अन्यथा वाक्यस्यासामञ्जस्यं स्यात् ॥ क्षीरादिवदिति चतुर्णामुदाहरणम् । क्षीरादीनामिव दधित्वाद्यापत्तिरित्यर्थः ।**

**शे०** — निर्विकारत्वस्य समर्थितत्वात् 'न विकारी जनार्दनः' इत्युपसंहृतत्वाच्च पुनर्विकारानेकविधत्ववर्णनमनर्थकमित्यतो युक्तिविशेषोपपादकत्वान्नान र्थक्यमित्याशयेनोत्तरवाक्यं सङ्गमयति **युक्तीति ॥ वक्तुमिति ।** नैव म स्यात् इत्यादिनेति शेषः । वक्ष्यमाणं प्रत्येकं द्वैविध्यमभिप्रेत्य तावच्छब्दः । किं तद्द्विधाद्वयमित्यतो विशिष्य निर्दिशति **विशेषाप्तिरिति ।** अत्र विशेषाप्तेर्मूले कण्ठोक्तत्वात्प्राधान्यं विशेषिविपरिवर्तस्य च सूचितत्वादप्राधान्यमिति भावेन पूर्वं विशेषाप्तेर्निर्देशोऽनन्तरं च विशेषिविपरिवर्तस्येति ध्येयम् । यथोद्देशं विकारद्वयं लक्षयति **तत्रेति ।** तर्हि पराधीनविशेषाप्तिरित्येतावतैव विकारानेकविधत्वसूचनत्वात् 'अनिवर्त्योन्यथाभवः' इत्यस्य वैयर्थ्यमित्यतो विकारद्वयस्यापि प्रत्येकं द्वैविध्यसूचकत्वान्नानर्थक्यमित्याशयेन तत्सूचितं प्रत्येकं द्वैविध्यमाह **प्रत्येकं चेति ।** नन्वेवं विकाराणामनेकविधत्वविवक्षायां विशेषाप्तेरिव विशेषिविपरिवर्तस्यानिवर्त्यान्यथाभावस्येव निवर्त्यान्यथाभावस्यापि भाष्ये निर्देष्टव्यत्वात्कथं भाष्ये विशेषाप्तित्वानिवर्त्यान्यथाभावत्वरूपप्रकारद्वयस्यैवोक्तिरित्यतो विशेषाप्त्युक्त्या विशेषिविपरिवर्तस्यानिवर्त्यान्यथाभावोक्त्या च निवर्त्यान्यथाभावस्योक्तिं विनाऽपि ज्ञातुं शक्यत्वात्तदनुक्तिरन्यथासिद्धेत्याह **अत्रेति ।** ननु किमन्यथासिद्धिकल्पनया यथाभाष्यं प्रकारद्वयमेव विवक्षितं किं न स्यादित्यतो भाष्ये निर्दिष्टविधाद्वयस्य परस्परप्रतिद्वन्द्वित्वाभावेनोक्तरीत्या द्वैविध्याभिधायकस्यास्य वाक्यस्यासमञ्जसत्वापत्तेरन्यथासिद्धिरेव वर्णनीयेत्याह **अन्यथेति ।** नन्वेवमपि क्षीरादिवदिति भाष्यखण्डवैय्यर्थ्यमित्यतो निर्दिष्टानां चतुर्णां विकाराणामसम्भावितत्वशङ्कानिरासाय निदर्शनप्रदर्शनार्थत्वान्न वैयर्थ्यमित्याशयेन तत्तात्पर्यमाह **क्षीरादिवदितीति ।** क्षीरादीनामित्यादिपदेन फलादीनां परिग्रहः । दधित्वादीत्यादिपदेन पीतत्वादीनां परिग्रहः । क्षीरादीनां दधित्वाद्यापत्तेरुक्तचतुर्विधविकारोदाहरणत्वं च यथायोग्यं प्रतिपत्तव्यं, न तु यथाक्रममित्यभिप्रेत्य चतुर्णामुदाहरणमित्युक्तम् ।

**स० — एकैकप्रकारानुक्तिरिति ।** विशेषिपरिवर्त- निवर्त्यान्यथाभावरूपप्रकारानुक्तिरित्यर्थः । **अन्यथा वाक्यस्येति ।** विशेषाप्तिप्रतियोगित्वेन विशेष्यपरिवर्तिरेव वक्तव्या । अनिवर्त्यान्यथाभावकथनं न युज्यते । तथा अनिवर्त्यान्यथाभावप्रतियोगित्वेन निवर्त्यान्यथाभाव एव कथनीयः, विशेषाप्तिकथनं न युज्यते । तस्माद्विकारस्य चतुर्विधत्वे वाक्यं समञ्जसं भवति । द्विविधत्वे तु उक्तरीत्याऽसमञ्जसं स्यादिति भावः । केचित्तु । यद्यत्र पराधीनविशेषावाप्तिरूप एकएव विकारोऽभिप्रेतः स्यात्तदा क्षीरादि-

वदित्यसमञ्जसं स्यात् । विशेषिपरिवर्तोदाहरणत्वात्तस्य । अतस्तद्बलाद्विशेषिपरिवर्तोऽभिप्रेतः । नचैवं विशेषपरिवर्तोदाहरणानुक्तिः । आदिशब्देनैव तदुक्तिसंभवात् । प्रत्येकं द्वैविध्यस्य चानभिप्रेतत्वेऽनिवर्त्यान्यथाभाव इत्युक्तिर्व्यर्था स्यात् । न हि सुवर्णादेः कुण्डलादिविकारोऽनिवर्त्यान्यथाभावरूप इति अयुक्ता च स्यात् । अतो वाक्यसामञ्जस्यार्थमन्यथाभाव इत्यस्योपलक्षणत्वादादिपदेन च तयोरप्युदाहरणोक्तिसंभवादुक्तं चातुर्विध्यं युक्तमेवेति भाव इत्याहुः । पीतत्वादिविकाराणां सौरातपस्वर्णकारातञ्चनौषध्याद्यधीनत्वोक्त्या तेषां पराधीनत्वमुपपादितमिति ज्ञातव्यम् ।

प० — **वक्तुमिति** । 'नैव स स्यादि'त्यनेनेति योज्यम् । नन्वेवं चातुर्विध्यस्याभिमतत्वे सति पराधीनविशेषावाप्तिरित्यत्र पराधीनविशेषिपरिवर्तश्चेति अनिवर्त्योन्यथाभाव इत्यत्र निवर्त्यान्यथाभावश्चेति च कोटिद्वयं वक्तव्यं स्यात् । आद्ये कोटिद्वये द्वितीयकोटिद्वये चैककोट्युक्तिर्विशेषिपरिवर्तकोटेर्निवर्त्याभावकोटेश्चानुक्तिः कुः इत्यत आह **अत्रैकैकेति** ॥ **अन्यथा वाक्यस्येति** । यथान्यासं प्रकारद्वयस्यैव विवक्षायां विशेषाप्तिप्रतिद्वंद्विनो विशेषिपरिवर्तरूपकल्पस्यैव वाच्यत्वेनानिवर्त्यान्यथाभावकल्पो न वाच्यः स्यात । क्षीरस्य दधिभावरूपानिवर्त्यविशेषिपरिवर्तोदाहरणं चासङ्गतं स्यात् । अनिवर्त्यान्यथाभावप्रतिद्वंद्विनो निवर्त्यान्यथाभावरूपकल्पस्यैव वाच्यत्वेन विशेषावाप्तिकल्पो न वाच्यः स्यात् । तथा च यथा शब्दो नित्यो गुणः संभवतीति कल्पद्वयपरं वाक्यं नित्योऽनित्यः गुणो द्रव्यं चेति कल्पद्वये सति समञ्जसं अन्यथा न समञ्जसं तथेदमपि मूलवाक्यं विशेषाप्तिर्विशेषिपरिवर्तश्च अनिवर्त्यान्यथाभावो निवर्त्यान्यथाभावश्चेति कोट्यन्तरद्वये सति समञ्जसम् । अन्यथा तु यथोक्तकल्पयोः परस्परप्रतिद्वंद्विताऽभावादुक्तरूपेण द्विरूपोक्तिपरं वाक्यमसमञ्जसं स्यादित्यर्थः । यद्वा प्रकारान्तरद्वयमेवोक्त्वा नैवेति वाक्येन निषेधे प्रकारान्तरस्यानिषेध एव हरौ कृतः स्यात् । तथा च विकारनिषेधार्थं प्रवृत्तोयं श्लोकोऽभिमतार्थासाधकत्वेनासञ्जसः स्यादित्यर्थः । अत एव वक्ष्यति 'न च पंचमी विधा दृष्टा संभाविता वा' इति ।

या० — **एकैकप्रकारानुक्तिरिति** । विशेषिपरिवर्तरूपप्रकारस्य निवर्त्यान्यथाभावरूपप्रकारस्य च कण्ठरवेणानुक्तिरित्यर्थः ॥ **स्फुटत्वादिति** । उपलक्षणतया ज्ञातुं शक्यत्वादित्यर्थः ॥ **अन्यथा वाक्यस्येति** । विकाराणामुक्तरीत्या चातुर्विध्यविवक्षाभावे पराधीनान्यथाभावो विकार इत्येव वक्तव्यम् । विशेषाप्त्यनिवर्त्यपदे न समञ्जसे । तेन ज्ञायते विशेषपदं विशेषिणोऽनिवर्त्यपद निवर्त्यस्य चोपलक्षकम् । ततश्चोक्तरीत्या चातुर्विध्यविवक्षासिद्धिरिति । पीतत्वकटकादिविकाराणां सौरातपस्वर्णकारातञ्चनौषधाद्यधीनत्वोक्त्या तेषां पराधीनत्वमुपपादितमिति ज्ञातव्यम् ।

सु०— तत्रानिवर्त्यविशेषाप्तिर्यथा । श्यामस्य फलस्य पीतत्वापत्तिः । तत्र हि धर्मिणस्तादवस्थ्यं पीतत्वेऽपि फलव्यवहारानिवृत्तेः । केवलं श्यामत्वापगमेन पीतत्वमुत्पन्नं सौरातपादिवशान्न निर्निमित्तम् । न च पुनर्निवर्तते ।

निवर्त्यविशेषाप्तिर्यथा । कुण्डलाद्याकारस्य सुवर्णस्य कटकादित्वापत्तिः । अत्रापि हि धर्मिणस्तादवस्थ्यम् । कटक(ादि)त्वापन्नेऽपि सुवर्णव्यवहारदर्शनात् । परं कुण्डलत्वापायेन स्वर्णकाराद्यधीनकटकभावो जातः । निवर्त्यश्चासौ । पुनः कुण्डलीकर्तुं शक्यत्वात् ।

अनिवर्त्यो विशेषिपरिवर्तो यथा । क्षीरस्य दधिभावः । अत्र हि न धर्मिणस्तादवस्थ्यम् । दधित्वापत्तौ क्षीरव्यवहारानुपलम्भात् । किन्तु धर्मिभूतं क्षीरमेव आतश्चनादिवशाद्दधिभूतम् । न च दधिभावनिवृत्त्या तत् क्षीरं भवति ।

निवर्त्यो धर्मिपरिवर्तो यथा । शुल्बस्य तारत्वम् । अत्रापि न धर्मिणस्तादवस्थ्यम् । तारतायां शुल्बव्यवहारानुपलब्धेः । किं नामौषध्य(धा)धीनतया शुल्बमेव तारं संवृत्तम् । प्रबलौषधिबलात्तारतानिवृत्त्या शुल्बं च संपद्यते ।

नच पञ्चमी विधा दृष्टा, (संभाविता) श्रुता वेति ।

---

शे०— विधाचतुष्टयं निर्देशक्रमेणोपपादयति **तत्रेति** । कथं पीतत्वादिविशेषाप्तिः कथं चानिवर्त्येत्यतो विशेषाप्तिलक्षणसद्भावादिति भावेन तल्लक्षणान्तर्गतं धर्मिणस्तादवस्थ्यं तावद्दर्शयति **तत्र हीति** । कुतोऽत्र धर्मिणस्तादवस्थ्यं क्षीरस्य दधित्वापत्ताविव स्वरूपप्रच्युतिरेव किं न स्यादित्यतो दधित्वापन्ने क्षीरव्यवहाराभावात्तत्र धर्मिणोऽतादवस्थ्येऽपीह पीतत्वापन्नेऽपि फलव्यवहारान्न धर्मिणोऽतादवस्थ्यं कल्पयितुं शक्यत इत्याह **पीतत्वेऽपीति** । पूर्वधर्मापगमेन धर्मान्तरोत्पाद एव धर्मपरिवर्त इत्याशयेन विशेषाप्तिलक्षणान्तर्गतं धर्मपरिवर्तं दर्शयति **केवलमिति** । धर्मपरिवर्तस्य पराधीनत्वं दर्शयति **सौरातपवशादिति** । अनिवर्त्यत्वमुपपादयति **न चेति** । पराधीनत्वमुपपादयितुं **स्वर्णकाराद्यधीनेति** । विशेषिपरिवर्तस्य पराधीनत्वं दर्शयति **आतश्चनादिवशादिति** । अनिवर्त्यत्वमुपपादयति **न चेति** ॥ **शुल्बस्येति** । ताम्रस्य रजतत्वमित्यर्थः । ताम्रं शुल्बमुदुम्बरमिति हलायुधोक्तेः शुल्बशब्दस्य ताम्रवाचित्वात् । 'रजतं कलधौतं च रूप्यं तारं च कथ्यत' इत्यभिधानेन तारशब्दस्य रजतवाचित्वमिति द्रष्टव्यम् । पराधीनत्वं दर्शयितुं ओषध्यधीनतयेत्युक्तम् । निवर्त्यत्वमुपपादयति **प्रबलेति** ।

स०— **शुल्बस्येति** । 'उच्यते गैरिकं धातु ताम्रं शुल्बमुदुम्बरमि'ति हलायुधोक्तेः शुल्बशब्दस्ताम्रपरः । रजतं च रौप्यं तारं च कथ्यत' इत्यभिधानात् तारं रजतमिति द्रष्टव्यम् ।

प० — आदिपदोपात्तोदाहरणत्रयमध्ये अनिवर्त्यनिवर्त्यविशेषाप्तिरूपयोर्विकारयोः क्रमेणोदाहरणे, उदाहरणद्वये पराधीनत्वं च दर्शयति **तत्रानिवर्त्येत्यादिना** । परमित्यव्ययम् । कटकभावः परं जात इत्यर्थः । पराधीनत्वं व्यक्तमाह **आतश्चनेति** । तक्षस्थापनादीत्यर्थः । आदिपदोपात्ततृतीयोदाहरणमाह **शुल्बस्येति** । ताम्रस्य रजतभाव इत्यर्थः । तस्य पराधीनतां व्यनक्ति **किंनामेत्यादिना** ।

या० — **शुल्बं** ताम्रम् । 'ताम्रं शुल्बमुदुम्बरम्' इति हलायुधोक्तेः । **तारं** रजतम् । 'रजतं कलधौतं च रूप्यं तारं च कथ्यते' इत्यभिधानात् ।

च० — **शुल्बस्य तारत्वमिति** । ताम्रस्य रजतत्वमित्यर्थः । 'ताम्रं शुल्बमुदुम्बरमि'तिहलायुधोक्तेः शुल्बशब्दस्य ताम्रवाचित्वात् 'रजतं कलधौतं च रूप्यं तारं च कथ्यत' इत्यभिधानेन तारशब्दस्य रजतवाचित्वादित्यवसेयम् ।

**सु० — किमतो यद्येवंभूतो विकार इत्यत आह नैवेति ।**

**अनु०** — नैव स स्याद्धरेः क्वचित् ॥

**क्वचिदिति निमित्तसप्तमी ।**

**अयमाशयः । सकलोऽपि खलु विकारः पराधीनो भवतीति निदर्शितम् । न चैवमेवासौ क्वापि दृष्टः । तथात्वे वा सर्वदा स्यात् । न च ब्रह्मणो विकारनिमित्तं किञ्चिदस्ति । 'सदेव सोम्य' इति प्राक् सृष्टेर्वस्त्वन्तरनिषेधात् । न च कालादिकमपि परेण प्रलयेऽभ्युपगतम् । अभ्युपगमेऽपि पराधीनताऽऽपत्तेश्च ।**

**अस्तु जडेषु पराधीनो विकारः । चेतनं ब्रह्म तु स्वेच्छयैव जगदाकारेण विक्रियते । 'तदात्मानं स्वयमकुरुत' इत्यादिश्रुतेरिति चेन्न । प्रेक्षावतस्तस्य नानाविधानर्थरूपप्रपञ्चीभवनेच्छाया एवानुपपत्तेः । न ह्युन्मत्तोऽप्यात्मनोऽनर्थरूपतामिच्छति । दूरे प्रेक्षावान् । न च प्रपञ्चस्यानर्थरूपतां न जानाति ब्रह्म । असर्वज्ञतापातात् । नायं प्रपञ्चो ब्रह्मणोऽनर्थरूप इति चेन्न । दुःखादिरूपेण परिणतस्य न दुःखादिरूपता इत्यस्य व्याहतत्वात् । न हि विवर्तवादिनामिव कल्पितोऽयं प्रपञ्चो भवताम् । सत्यत्वाभ्युपगमात् । दुःखादिमत्त्वमनिष्टम्, न तु तद्रूपतेत्यभिप्राय इति चेन्न, तथा सति सुखरूपस्येष्टत्वमपि न स्यात् । ततश्च न मोक्षाय प्रवर्तेत ।**

शे० — **एवंभूत इति** । उक्तरीत्या चतुर्विध इत्यर्थः ॥ **सकलोऽपीति** । चतुर्विधोऽपीत्यर्थः । कुतो विकारस्य पराधीनत्वनियम इत्यतो विकारत्वपराधीनत्वयोः सहचारदर्शनादिति भावेन निदर्शित-

मित्युक्तम् । ननु न सहचारदर्शनमात्रेण नियमसिद्धिः 'सहदर्शनमात्रेण न व्याप्तिरवसीयत' इत्यादिना तन्मात्रस्य व्याप्त्यनियामकताया वक्ष्यमाणत्वादित्यतः सहचारदर्शनमात्रस्य तदगमकत्वेऽपि व्यभिचारादर्शनसहकृतस्य तस्य व्याप्त्यवगमकत्वं भविष्यत्येवेत्यभिप्रेत्य व्यभिचारादर्शनमुपपादयति **न चैवमेवासाविति** । निमित्तं विना विकारो न दृष्ट इत्यर्थः ॥ **सर्वदेति** । अपेक्षणीयान्तराभावादिति भावः । नन्वस्तु ब्रह्मणोऽपि सनिमित्तक एव विकार इत्यत आह **न चेति** । कुतो निमित्ताभाव इत्यतो निमित्तं भवद् ब्रह्मान्यद्वा स्वयं ब्रह्मैव वेति विकल्पं मनसि निधायाद्यं दूषयति **सदेवेति** । ब्रह्मान्यद् ब्रह्मणो विकारनिमित्तं भवत्किं सृज्यं जगद्वा तदन्यद्वा । नाद्यः । सृष्टेः पूर्वमसतस्तस्य विकारनिमित्तत्वायोगात् । सृष्टस्य च विकारनिमित्तताया अन्योन्याश्रयप्रसङ्गेनायोगात् । नान्त्यः । सदेवेत्यादिप्रमाणेन वस्त्वन्तराभावस्य प्रतिपादनेनासतो वस्त्वन्तरस्य विकारहेतुत्वायोगादित्यर्थः । नित्यस्य कालादेर्वस्त्वन्तरस्य तदा भावात्तस्यैव ब्रह्मविकारहेतुत्वं भविष्यतीत्यत आकल्पावस्थायित्वं नित्यत्वमिति वदता परेण कालाकाशादेर्बहुकालीनत्वस्यैव नित्यत्वरूपतयाऽङ्गीकारेण सृष्टेः पूर्वं तस्य सत्त्वानङ्गीकारान्न तस्यापि निमित्तत्वं सम्भवतीत्याह **न चेति** ॥ **पराधीनतेति** । ब्रह्मण इति शेषः । ततश्च ब्रह्म स्वेच्छयैव जगदाकारेण विक्रियत इति सिद्धान्तभङ्ग इति भावः । ब्रह्मैव ब्रह्मणो विकारे निमित्तमिति द्वितीयं पक्षमाशङ्कते **अस्त्विति** ॥ **अनुपपत्तेरिति** । अन्यथाऽप्रेक्षावत्त्वापातादिति भावः ॥ **न चेति** । अतो नाप्रेक्षावत्त्वमिति भावः । माऽस्तु तर्ह्यप्रेक्षावत्त्वमसर्वज्ञत्वं तु स्यादेवेत्याह **असर्वज्ञतेति** । गूढाभिसन्धिः शङ्कते **नायमिति** ! **अनर्थरूपः** अनिष्टरूप इत्यर्थः । गूढाभिसन्धिरेव परिहरति **न दुःखादिरूपेणेति** । पूर्ववादी स्वाभिसन्धिमुद्घाटयति **दुःखादिमत्त्वमिति** । **धनवत्त्वे** पारिवृढ्यवद्धनत्वे पारिवृढ्यभावादिति भावः । उत्तरवाद्यपि स्वाशयमुद्घाटयति **न तथा सतीति** । उदाहृतदृष्टान्तबलेन सुखादिमत्त्वस्यैवेष्टत्वनिश्चयादिति भावः । इष्टापत्तिं परिहरति **ततश्चेति** ।

**स०** — पराधीनतापत्तेश्चेत्यत्र ब्रह्मण इति वर्तते । तथा च ब्रह्मणः स्वेच्छयैव जगदाकारेण विकार इति मतभङ्गप्रसङ्ग इति भावः । गूढाभिसन्धिराशङ्कते **नायं प्रपञ्च इति** । अभिसन्धिमुद्घाटयति **दुःखादिमत्त्वमिति** ।

**प०**— 'नैव स स्याद्धरेः क्वचित्' इत्यत्र मूले युक्तेरनुक्तेस्तामाह **अयमाशय इत्यादिना दिगित्यन्तेन** ॥ **पराधीनतापत्तेश्चेति** । ब्रह्मण इत्यनुषङ्गः । तथाच स्वयमेव ब्रह्म परिणमत इति भङ्ग इति भावः ॥ **भवतामिति** । ब्रह्मजगतोर्भेदाभेदेन परिणामवादिनां भास्करप्रभृतीनामित्यर्थः ।

**या०** — पराधीनताऽऽपत्तेश्चेत्यत्र ब्रह्मण इति वर्तते । तथाच ब्रह्मणः स्वेच्छयैव जगदाकारेण विकार इति मतभङ्गप्रसङ्ग इति भावः । गूढाभिसन्धिराशङ्कते **नायं प्रपञ्च इति** । **अनर्थरूपः** अनिष्टरूपः । अभिसन्धिमुद्घाटयति **दुःखादिमत्त्वमिति** ।

**श्री०** — ननु कालादिकं प्रलये विद्यमानं विकारे भवतु निमित्तमित्यत आह **न चेति** ॥ **परेति** । भगवत्सृष्टेः कालाद्यधीनतापत्तेरित्यर्थः । नन्वनर्थरूपतां दुःखादिप्रपंचस्य ज्ञात्वा तदात्मना परिणतं चेत्तदा नह्युन्मत्त इत्युक्तं युक्तम् । न ह्येवम् । किं त्वज्ञात्वैवानर्थरूपता परिणमति पश्चादनर्थतामनुभवतीत्यत आह **न चेति** । ननु दुःखादीनां सत्यत्वे तद्रूपेण विकारोऽनर्थहेतुः स्यात् । न चैवम् । तेषां मिथ्यात्वात् । मिथ्याभूतदुःखाद्यात्मना विकारस्यानर्थताऽनापादकत्वादित्यत आह **न हीति** ॥ **इष्टत्वमिति** । दुःखादिमतोऽनिष्टत्ववत्सुखवत एवेष्टत्वादिति भावः ।

**सु०** — **किञ्च ब्रह्मणोऽनर्थाभावे कस्या(यम)नर्थ इति वक्तव्यम् । जीवस्य चेति चेत् । स किं ब्रह्मणो भिन्नोऽभिन्नो वा । नाद्यः अपसिद्धान्तात् । द्वितीये कथं ब्रह्मणो नानर्थः । भिन्नाभिन्न इति चेत्(न) अभेदेनानर्थप्रसङ्गात् । निराकरिष्यते चायं पक्षः 'अत एव चोपम' इति । अपि च, चेतनस्यापि विक्रिया दृष्टादृष्टकारणायत्ता दृष्टेति कथं ब्रह्मणः स्वेच्छामात्रेण स्यात् । सर्वशक्तित्वादिति चेत् (न) अनर्थीभवतः सर्वशक्तित्वानुपपत्तेः । न तर्कविषयं ब्रह्म येन दृष्टान्तानुगुण्यवैगुण्यचिन्ताऽत्रोपयुज्यते । किं नाम श्रुतिमात्रसिद्धम् । श्रुतिश्चान्यानपेक्षमेव प्रपञ्च(त)ापत्तिमाचष्ट इति चेन्न । तथा सति विचारशास्त्रानवतारप्रसङ्गात् । युक्तश्चायं तर्कागोचरत्ववादो यत्र श्रुतीनामविगानं स्यात् । न चैवमत्रेत्युक्तम् । अतो न सामान्यतो विकारित्वं ब्रह्मणो युज्यते । नापि विशेषतः ।**

**शे०** — **अपसिद्धान्तादिति** । जीवेश्वराभेदस्य त्वत्सिद्धान्तत्वादिति भावः । अस्तु तर्हि जीवो ब्रह्मणोऽभिन्न इति ततो नापसिद्धान्त इत्यत आह **द्वितीय इति** । जीवब्रह्मणोरभेदाज्जीवं प्रत्यनिष्टस्य ब्रह्म प्रत्यनिष्टत्वेन ब्रह्मणो नानिष्टरूपः प्रपञ्च इत्येतद्भग्नमित्यर्थः । जीवब्रह्मणोरत्यन्ताभेदे तत्प्रसक्तावपिभेदाभेदपक्षे भेदस्यापि सत्त्वाज्जीवं प्रत्यनिष्टस्यापि प्रपञ्चस्य न ब्रह्म प्रत्यनिष्टत्वमिति भावेन शङ्कते **भिन्नाभिन्न इति** । भेदकार्यस्य भेदेनेवाभेदकार्यस्य ब्रह्म प्रत्यनिष्टत्वस्याभेदेनावश्यं सम्पादनीयत्वादतिप्रसङ्गानिस्तार एवेत्याह **अभेदेनेति** । ननु च भेदस्य प्रबलत्वात्तेन प्रतिबद्धोऽभेदो न स्वकार्यकारीति नाभेदेन प्रपञ्चस्य ब्रह्म प्रत्यनिष्टत्वप्रसङ्गः । यद्वा । संसारे केवलो भेदो मुक्तावत्यन्ताभेद इति व्यवस्थितावेव भेदाभेदौ भेदाभेदवादिनोऽभिमतौ तत्कथमभेदेनानर्थप्रसङ्ग इत्यत आह **निराकरिष्यते चेति** ॥ **अपि च चेतनस्येति** । ऊर्णनाभ्यादेरित्यर्थः । ततश्च नाचेतनसम्बन्धित्वस्य विकारे पराधीनत्व-

प्रयोजकत्वं युक्तम् । चेतनविकारे पराधीनत्वे सत्यप्यचेतनसम्बन्धित्वाभावात् । तस्मिन्सत्यप्यभवतस्तेन विनाऽपि भवतस्तदप्रयोज्यत्वादिति भावः । माऽस्तु तर्ह्यचेतनसम्बन्धित्वं विकारस्य पराधीनतायां प्रयोजकमसर्वशक्तित्वं तु स्यादिति भावेन शङ्कते **सर्वेति** । साधनव्यापकत्वान्नायमुपाधिरित्याशयेनाह **अनर्थीभवत इति** । तर्कागोचरत्वे कथं तत्सिद्धिरिति शङ्कते **किं नामेति** । शब्दैकसमधिगम्यत्वान्नानुपपत्तिरित्याह **श्रुतीति** । 'औपनिषदः पुरुष' इत्यादिश्रुतेरिति भावः ॥ **श्रुतिश्चेति** । 'तदात्मानं स्वयमकुरुत' इत्याद्येत्यर्थः ॥ **तथा सतीति** । तर्कागोचरत्वे ब्रह्मण इत्यर्थः । विचारस्य युक्त्यनुसन्धानरूपत्वादिति भावः । तर्हि तर्कगोचरत्वे नैषा तर्केणेत्यादितर्कागोचरत्वप्रतिपादकश्रुतिविरोधः स्यादित्यत आह **युक्तश्चेति** । अस्तु तर्हि प्रकृतेऽपि श्रुतीनामविगानादेव तर्कागोचरतेत्यत आह **नैवमिति** । तत्कथमित्यत आह **उक्तमिति** । 'अविकारः सदा शुद्धः' इत्यादिश्रुतिविगानस्य दर्शितत्वादिति भावः ॥ **सामान्यत इति** । अविवक्षितानिवर्त्यविशेषासित्वादिविशेषविकारं विकारित्वसामान्यमित्यर्थः ॥ **नापि विशेषत इति** । विकारित्वं ब्रह्मणो युज्यत इति वर्तते । विवक्षितविशेषं विकारित्वमपि न ब्रह्मणो युक्तमित्यर्थः ।

म० — संसारदशायां भेदो मुक्तावभेद इति व्यवस्थयैव भेदाभेदावभिप्रेतौ अतो नोक्तदोष इत्यत आह **निराकरिष्यते चायमिति** । 'असदैक्यं भवेत्पश्चाद्यदि स्यात्सप्तमो रसः' इत्यनेनेत्यर्थः । परेत्याह **अपि च चेतनस्यापीति** । ऊर्णनाभ्यादेरित्यर्थः । ननु तर्हि भवद्भिरपि तर्कागोचरत्वाद्ब्रह्मणः न युक्त्यवकाश इति तत्र तत्र कथमुच्यत इत्यत आह **युक्तश्चायं तर्कागोचरत्ववाद इति** ।

प० — नन्वभेदेऽपि जीवगतदुःखाद्यनुसंधानाभावान्नानर्थप्रसङ्ग इत्यत आह **निराकरिष्यते चेति** । भक्तिपादे 'अत एव चोपमा सूर्यकादिवत्' इत्यधिकरणे भेदाभेदवादिमतेऽनुसंधानाभावेनेश्वरस्यानर्थप्रसङ्गाभावपक्षः 'अनुसंधानरहितमैक्यं चेदेकता न तत्' इत्यादिनेति भावः ॥ **विक्रियेति** । उच्चत्वनीचत्वरूपा वा औदासीन्यप्रच्युतिरूपकर्तृत्वादिलक्षणक्रियावेशादिरूपा वेत्यर्थः ॥ **स्यादिति** । विक्रियेत्यनुषङ्गः ॥ **श्रुतिश्चेति** । 'बहुस्यामि'ति 'तदात्मानमेवाकुरुते'त्यादिः । ननु भवद्भिरपि 'श्रुतेस्तु शब्दमूलत्वात्' इत्यत्र ब्रह्मणः श्रुत्येकसमधिगम्यत्वेन तर्कायोग्यत्वात्, कृत्स्नप्रसक्त्यादितर्कागम्यत्वं नेति वदद्भिरपि विचारशास्त्रावतारः स्वीक्रियत इत्यतो, निर्विवादप्रमाणप्रमितेऽर्थे तर्कबाधप्रसक्तौ तर्कागोचरत्वेन परिहारोऽस्माभिरभिधीयते । नचैवं त्वयेति वैषम्यमाह **युक्तश्चेति** ॥ **उक्तमिति** 'अविकारः सदा शुद्धः' इत्यादिना ब्रह्मणो विकारश्रुत्यादिप्रतिषेधस्य दर्शितत्वादिति भावः ।

या० — संसारदशायां भेदो मुक्तावभेद इति व्यवस्थयैव भेदाभेदावभिप्रेतावतो नोक्तदोष इत्यत आह **निराकरिष्यते चेति** । 'असदैक्यं भवेत्पश्चाद्यदि स्यात्सप्तमो रसः' इत्यनेनेत्यर्थः ।

परीत्याऽऽह **अपि च चेतनस्येति**। ऊर्णनाभ्यादेरित्यर्थः ॥ **श्रुतिश्चेति**। 'तदात्मानं स्वयमकुरुत' इत्याद्या श्रुतिरित्यर्थः ॥ **न चैवमत्रेति**। निर्विकारत्वप्रतिपादकश्रुतिविगानस्योक्तत्वादित्यर्थः।

**श्री०— चेतनस्यापीति**। ऊर्णनाभिमात्रादेरित्यर्थः। पराधीनेत्यादिना युक्तिविरुद्धत्वमुक्तम्; तन्नास्तीति शङ्कते **नेति** ॥ **दृष्टान्तेति**। क्षीरादीत्यर्थः ॥ **अन्यानपेक्षेति**। पराधीनतानपेक्षमेवेत्यर्थः ॥ **तथा सतीति**। श्रुतिमात्रसिद्धत्वमङ्गीकृत्य दृष्टान्तानुगुण्यादिरूपयुक्त्यनपेक्षत्व इत्यर्थः। **अविगानमिति**। तथाच तादृशस्थले विवादाभावेन तत्परिहाराय युक्तेरनपेक्षितत्वेन श्रुतिमात्रसिद्धत्वं ब्रह्मणः सम्भवतीत्यर्थः। अस्तु तर्हि प्रकृतेऽप्यविगानमित्यत आह **न चैवमिति**। ब्रह्मणः 'सच्च त्यच्चे'ति विकारस्य-'अविकारः सदा'इति अविकारस्य प्रतिपादनेन श्रुतिविगानस्यैव सत्त्वान्न युक्त्यनपेक्षश्रुतिमात्रेण विकारसिद्धिः। तदपेक्षायां चोक्तरीत्याऽविकारस्यैव सिद्धेरिति भावः।

**सु० — तथा हि। न तावदप्रच्युतस्वरूपस्यैव ब्रह्मणोऽयमाकारपरिणामः प्रपञ्च इति युक्तम्। अस्थूलत्वादिश्रुतिविरोधात्। स्वरूपापेक्षया तदुपपत्तिरिति चेत् (न) स्वरूप एव स्थूलत्वादिजननात्। न हि कुण्डलत्वानपगमेन कटकत्वं सुवर्णस्य भवति। स्वभावापेक्षयाऽस्त्विति चेन्न। कालभेदेन स्थूलत्वादिभावाभाववतः 'अयं स्वभावः, अयं (न) त्वस्वभाव' इति विवेकायोगात्। न हि ब्रह्मणः कारणान्तरात्प्रपंचतापत्तिं मन्यसे येन सा न स्वभावः स्यात्। प्रपंचाकारतायाश्चानिवर्त्यत्वे प्रलयश्रुतिव्याकोपः स्यात्। निष्प्रपंचब्रह्मभावापत्तिलक्षणमोक्षाभावप्रसङ्गश्च। एकदेशपरिणामस्तु निराकरिष्यते। नापि स्वरूपप्रच्युत्या प्रपंचरूपताऽऽपत्तिः स्थितिसमये ब्रह्माभावप्रसङ्गेन ब्रह्मज्ञानस्य निरालम्बनत्वापातात्। तस्याश्चानिवर्त्यत्वे न कदाऽपि ब्रह्मणोऽस्तित्वमित्येषा दिक्।**

**शे०—** तत्कथमित्यतः किमत्र विशेषाप्तिर्विकारोऽभिमतः किं वा विशेषविपरिवर्तः। अद्येऽपि किं स निवर्त्य उतानिवर्त्य इति विकल्पं मनसि निधाय साधारणदोषेण निवर्त्यानिवर्त्यविशेषाप्ति दूषयितुं विशेषाप्तिपक्षमनुवदति **तथा हि न तावदिति**। अप्रच्युतस्वरूपस्य इत्येतत् धर्मिणस्तादवस्थ्यसूचनार्थमुक्तम् ॥ **आकारपरिणाम इति**। आकारस्यास्थूलत्वादेरपगमेन स्थूलत्वाद्युत्पत्तिरूपो धर्ममात्रपरिवर्त इत्यर्थः ॥ **अस्थूलत्वादीति**। अस्थूलत्वादिश्रुत्या स्थूलत्वादिनिषेधादिति भावः। ननु ब्रह्मणः प्रपञ्चात्मना स्थूलत्वेऽपि नास्थूलत्वादिश्रुतिविरोधः। ब्रह्मस्वरूपस्यास्थूलतया श्रुतेस्तद्विषयत्वसंभवादिति शङ्कते **स्वरूपेति**। भवेत्स्वरूपविषयत्वं श्रुतेर्यदि स्वरूपेण ब्रह्मणोऽस्थूलत्वं स्यान्न चैतदस्ति। अस्थूलत्वापगमेन स्वरूपस्यैव स्थूलतयोपजननादिति भावेन परिहरति **स्वरूप एवेति**। न

वयमस्थूलत्वापगमेन स्वरूप एव स्थूलत्वादिजननं ब्रूमः किन्तु तदनपगमेनैव । ततश्च स्वरूपस्यास्थूलत्वानपायान्न श्रुत्यादिविरोध इत्यतः स्यादेतदेवं यद्यस्थूलत्वानपगमेऽपि स्थूलत्वोपजननमुपपद्येत। न च तदुपपद्यते । सुवर्णस्य कुण्डलत्वानपगमे कटकत्वाद्युपजननासंभववदस्थूलत्वाद्यनपगमे स्थूलत्वाद्युपजननायोगात् । अन्यथा सुवर्णस्यापि कुण्डलत्वाद्यनपगमेनैव कटकत्वाद्युपजननप्रसङ्गादिति भावेनाह **न हीति** । ब्रह्मण्यस्थूलत्वाद्यपगमेनैव स्थूलत्वाद्युपजननेऽपि नास्थूलत्वादिश्रुतिविरोधः । अस्थूलत्वस्य स्वभावत्वात्स्थूलत्वस्यौपाधिकत्वात् । तथा च स्थूलत्वादेरस्वभावत्वाभिप्रायेणास्थूलत्वादिश्रुतिरुपपद्यत इति भावेन शङ्कते **स्वभावेति** । भवेदयं श्रुतिविरोधपरिहारो यद्यस्थूलत्वस्थूलत्वयोः स्वाभाविकत्वौपाधिकत्वनिर्णयः स्यात् । न चासौ संभवति । निर्णायकाभावादिति भावेन परिहरति **कालभेदेनेति** । ननु कालभेदेन ब्रह्मण्यस्थूलत्वस्थूलत्वयोः सद्भावेऽप्यस्थूलत्वमेव स्वभावो न स्थूलत्वमिति शक्यते निर्णयः कर्तुम् । अस्थूलत्वस्य कारणान्तरनिरपेक्षत्वात्स्थूलत्वापत्तेश्च तत्सापेक्षत्वात्कारणान्तरनिरपेक्षस्य स्वभावत्वस्य तत्सापेक्षस्यास्वभावत्वस्य च बहुलं प्रसिद्धत्वात् । अत एवेन्द्रियाणां यथार्थज्ञानजनकत्वमेव स्वभावः कारणन्तरनैरपेक्ष्यात् । अयथार्थज्ञानजनकत्वं चास्वभावः दोषादिरूपकारणान्तरसापेक्षत्वादिति तवापि मतमित्यतः स्यादेतदेवं यदि स्थूलत्वाद्यापत्तेः कारणान्तरसापेक्षत्वं स्यान्न चैतदस्ति । ब्रह्म स्वेच्छयैव जगदात्मना विक्रियते 'तदात्मानं स्वयमकुरुते'त्यादिश्रुतेरिति वदता परेण स्थूलत्वाद्यापत्तेः कारणान्तरानपेक्षत्वस्यैवोक्तत्वात् । अन्यथाऽपसिद्धान्तप्रसङ्गादिति भावेनाह **न हीति** । एवं निवर्त्यानिवर्त्यविशेषाप्तिपक्षं साधारणदोषेण दूषयित्वाऽनिवर्त्यविशेषाप्तिपक्षमसाधारणदोषेणापि दूषयति **प्रपञ्चाकारतायाश्चेति** । ननु च मन्मते सच्छक्तिकचिच्छक्तिकभेदेन ब्रह्मणो द्विरूपत्वात्तत्र च सच्छक्तिकस्योपादानत्वाच्चिच्छक्तिकस्य निमित्तत्वात्सच्छक्तिकस्यैव जगदात्मना परिणामो न तु चिच्छक्तिकस्य । ततश्च चिच्छक्तिकब्रह्मभावो मोक्ष उपपद्यत एवेति कथं मोक्षाभावप्रसङ्गः । अत एव न निर्विकारत्वादिश्रुतिविरोधोऽपि । तस्याश्चिच्छक्तिकविषयकत्वादित्यत आह **एकदेशेति** ॥ **निराकरिष्यत इति** । 'भागेन परिणामश्चेद्भागयोर्भेद एव ही'त्यादिनेति शेषः । विशेषिविपरिवर्त इति द्वितीयमनूद्य दूषयति **नापीति** ॥ **स्वरूपेति** । धर्मिस्वरूपस्यैव परिणाम इत्यर्थः । क्षीरस्य दधिभाववद् ब्रह्मणो जगदात्मना परिणाम इति यावत् । किमत्र सुवर्णादेः कटकत्वापत्तिवद् ब्रह्मणः प्रपञ्चरूपतापत्तिर्निवर्त्या किंवा क्षीरादेर्दधित्वाद्यापत्तिवदनिवर्त्येति विकल्पद्वयं मनसि निधाय पक्षद्वयं साधारणदोषेण दूषयति **स्थितीति** । द्वितीयपक्षमसाधारणदोषेणापि दूषयति **तस्या इति** ॥ **न कदाऽपीति** । जगत्प्रवाहस्यानाद्यनन्ततया प्रमितत्वेन सर्वदा सत्त्वात्तज्ज्ञानस्य सर्वदा निरालम्बनत्वापात इति भावः । उपलक्षणं चैतत् । प्रलयश्रुतिव्याकोपः स्याद् ब्रह्मभावापत्तिलक्षणमोक्षाभावप्रसङ्गश्चेत्यपि द्रष्टव्यम् । ननु चोक्तरीत्यैकदेशस्यैव परिणामाच्चिच्छक्ति-

कस्य तदभावान्न ब्रह्मज्ञानस्य निरालम्बनत्वादिप्रसङ्ग इत्यत आह **दिगिति**। एकदेशेन परिणामस्य निरसिष्यमाणत्वान्नोक्तदोषपरिहार इति तदर्थः।

स० —**न तावदप्रच्युतस्वभावस्येति**। ब्रह्मलक्षणधर्मिणस्तादवस्थ्येऽपि अस्थूलत्वाद्यपगमेन स्थूलत्वाद्यापत्तिरितिपक्षो नेत्यर्थः॥ **अस्थूलत्वादिश्रुतीति**। प्रपञ्चाकारेण परिणामे स्थूलतादिप्राप्त्याऽस्थूलत्वादिश्रुतिविरोध इति भावः। ननु कुण्डलत्वकटकत्वयोर्विरोधेन तदनपगमे तस्यानुपपत्तावपि अस्थूलत्वादेः सुवर्णत्वादेरिव स्वभावत्वेन तदविरोधित्वात् न तदपगम इत्यत आह **स्वभावेति**। तदेवासिद्धमिति भावः। ननु कालभेदेनोभयोरुपपद्यमानत्वेपि यत् कारणानपेक्षं तत स्वभावः, यत् तत्सापेक्षं तत् न स्वभावः. इति निश्चयोपपत्तिरित्यत आह **न हि ब्रह्मण इति**। अप्रच्युतस्वभावस्यैवानिवर्त्यान्यथाभावरूपो विकारोऽयमिति पक्षे दूषणान्तरमप्याह **प्रपंचाकारतायाश्चेति**। अथ मतं द्विरूपं ब्रह्माभ्युपगम्यते निष्प्रपञ्चनिर्विकारं चिच्छक्तिकमेकं सदात्मकं चापरम्। तत्राऽद्येन रूपेण तथैवावतिष्ठते, द्वितीयेन तूपादानं अतो न मोक्षाभावप्रसङ्ग इत्यत आह **एकदेशपरिणाम इति**। भागेन परिणामश्चेदित्यादिना इति शेषः। प्रच्युतस्वरूपस्यापि अनिवर्त्यान्यथाभावोऽयमिति पक्षे दूषणान्तरं चाह **तस्याश्चानिवर्त्यत्व इति**॥ **कदापीति**। स्थितिसमये संहारसमयेऽपीत्यर्थः। निवर्त्यत्वं तु न संभवति। निवृत्तिर्नाम बाधः। स च ब्रह्मज्ञानेनैवेति परस्य मतम्। स्थितिसमये च ब्रह्माभावेन बाध एव न संभवतीत्याद्यभिप्रेत्य दिगित्युक्तम्।

प०— निवर्त्यविशेषाप्तिरूपं साक्षात् मूलोक्तं विकारविशेषं तावदपाकरोति **न तावदप्रच्युतेति**। स किं कृत्स्नस्य ब्रह्मणः, अथैकदेशस्यापरिणामेप्यंशान्तरस्य परिणामः। आद्ये आह **स्वरूपस्यैवेति**॥ **अयमाकारपरिणाम इति**। श्यामफलस्य पीताकारपरिणाम इवेति भावः॥ **अस्थूलत्वादिश्रुतीति**। अस्थूलमनण्वित्यादिश्रुतीत्यर्थः। प्रपञ्चताऽऽपत्तेरौपाधिकत्वाददोषइत्यत आह **न हीति**। एतेन पराधीनतांशोपि निरस्तः। अनिवर्त्यत्वांशं च निराह **प्रपंचाकारतायाश्चेति**॥ **प्रलयेति**। 'यत्प्रयन्ती'-त्यादिश्रुतिरित्यर्थः। द्वितीयं प्रत्याह **एकदेशेति**। 'भागेन परिणामश्चेदि'त्यादि(ना)॥ मूलोक्तक्षीरदृष्टान्तानुरोधेनोपलक्षणतयोपात्तं पराधीनानिवर्त्यविशेषिपरिवर्तरूपं विकारं निराह **नादीति**। एवं प्रायुक्तचतुर्विधविकारेषु मध्ये पराधीनानिवर्त्यविशेषाप्तिरूपस्य पराधीनानिवर्त्यविशेषिपरिवर्तरूपविकारस्य च हरावभावमुपपाद्य पराधीननिवर्त्यविशेषाप्तिरूपविकारस्य पराधीननिवर्त्यविशेषिपरिवर्तरूपविकारस्य चाभावप्रकारः उक्तमार्गेणोह्य इति भावेनाह **एषा दिगिति**। अयं मार्गः पक्षान्तरनिरास इत्यर्थः। तथाहि। आद्ये कुण्डलाद्याकारस्य सुवर्णस्य कटकादित्वस्येव सूक्ष्मरूपस्य ब्रह्मणः स्थूलप्रपंचाद्यात्मकत्वे अस्थूलत्वादिश्रुतिविरोधात्। न हि सूक्ष्मत्वानपगमेन स्थूलत्वप्राप्तिरस्ति। न च स्थूलत्वं कारणान्तरायत्तं परो

मन्यते । येन तदस्वाभाविकं स्यात् । न च स्थूलत्वनिवृत्तौ पुनः सूक्ष्मताऽऽपत्तेस्तत्परम् अस्थूलत्वादि-वाक्यमिति युक्तम् । तथात्वे स्थूलसूक्ष्मोभयस्वभावत्वापातेन श्रुतौ नित्यास्थूलत्वश्रवणविरोधादित्यादि ध्येयम् । द्वितीये स्थितिसमये ब्रह्माभावप्रसंगादित्यादि ध्येयमिति भावः । यद्वा रज्ज्वाः सूत्रद्वयवन्माया-विशिष्टं ब्रह्म वा मायाशक्तिमद्ब्रह्म वोपादानम् । निर्विकारत्वास्थूलत्वादिश्रुतिस्तु केवलब्रह्मपरेति विवरणा-द्युक्तपक्षदूषणमप्यूह्यमिति भावेनाह **एषादिगिति**। न्यायामृते ब्रह्मण उपादानत्वभङ्गे तन्निरासप्रकारो व्यक्तः।

या० — **अस्थूलत्वादिश्रुतिरिति** । प्रपञ्चाकारेण परिणामे ब्रह्मणः स्थूलतादिप्राप्त्याऽस्थूल-त्वादिश्रुतिविरोध इति भावः ॥ **स्वरूपापेक्षयेति** । यथा देवदत्ते स्थूलताप्रतीतावपि तत्स्वरूपमस्थूल-मुपपद्यते तद्वदिति भावः ॥ **स्वरूप एवेति** । देवदत्तदेहस्य तत्स्वरूपाद्भिन्नत्वेन देहगतं स्थौल्यमस्थूले तत्स्वरूपे उपचर्यते इत्येव । नैवं प्रकृते । विकारविकारिणोरभेदात्प्रपञ्चगतं स्थूलत्वादि ब्रह्मस्वरूप एव जायत इत्यङ्गीकार्यम् । तथाच विरोधतादवस्थ्यमिति भावः । नन्वनपगतास्थूलत्वादिमत्येव स्थूलत्वादे-र्जन्माङ्गीक्रियतेऽतो न विरोध इत्यत आह **न हि कुण्डलेति** । ननु पाकजरूपादिवत्कारणान्तरापेक्ष-मस्वाभाविकं तदनपेक्षं स्वाभाविकमिति विवेको भविष्यतीत्यत आह **न हि ब्रह्मण इति** । अप्रच्युत-स्वरूपस्यैवानिवर्त्यान्यथाभावरूपविकारोऽयमिति पक्षे दूषणान्तरमप्याह **प्रपंचाकारतायाश्चेति** । अथ मतम् । द्विरूपं ब्रह्माभ्युपगम्यते । निष्प्रपञ्चं निर्विकारं चिच्छक्तिकमेकं सदात्मकं चापरम् । तत्राद्येन रूपेण तथैवावतिष्ठते । द्वितीयेन तु जगदुपादानं भवति । अतो न मोक्षाभावादिप्रसङ्ग इत्यत आह **एकदेशपरिणाम इति** । 'भागेन परिणामश्चेत्' इत्यत्रेति शेषः । प्रच्युतस्वरूपस्याप्यनिवर्त्यान्यथा-भावोऽयमिति पक्षे दूषणान्तरं चाह **तस्याश्चानिवर्त्यत्व इति** ॥ **कदाऽपीति** । जगत्प्रवाहस्यानाद्य-नन्ततया प्रमितत्वादिति भावः । दिगर्थस्तु ब्रह्म न द्रव्यप्रकृतिरीक्षितृत्वादित्यादिपूर्वोक्तानुमानविरोधः । 'न चेतनविकारः स्याद्यत्र क्वापि ह्यचेतनम्', इत्यादिवक्ष्यमाणानुमानविरोधश्च । श्रुतीनामद्यापि गहननि विष्टत्वेन न तद्बाधकत्वमित्यादिरूपो द्रष्टव्यः ।

श्री० — **आकारपरिणामः** स्थूलत्वाद्याकारेण परिणाम इत्यर्थः ॥ **स्वरूपेति** । चिन्मात्रे अस्थूलता विकृते तु स्थूलतेत्यर्थः ॥ **तदुपपत्तिरिति** । अस्थूलत्वादिश्रुत्युपपत्तिरित्यर्थः ॥ **स्वरूप एवेति** । धर्मिविपरिवर्ताङ्गीकारेण ब्रह्मस्वरूप एव अस्थूलतापायेन स्थूलतादेर्जातत्वेन न स्वरूपापेक्षया तदुपपत्तिरित्यर्थः । एतदेवोपपादयति **न हीति** । ननु यथा सुवर्णस्य कटकत्वावस्थायामपि स्वर्णत्व-मस्त्येव स्वभावत्वात् तद्वत्स्वत्प्रकृतेऽप्यस्थूलत्वादीनां ब्रह्मस्वभावत्वेन स्वभावस्य चानुवृत्तिदर्शनादस्थूलादि-स्वभावस्य ब्रह्मणः स्थूलादिभावेऽपि स्वभावभूतास्थूलत्वाद्यनुवृत्तिः सम्भवतीति नास्थूलत्वादिश्रुतिविरोधः स्थूलतादशायामित्यभिप्रेत्य शङ्कते **स्वभावेति** ॥ **कालभेदेनेति** । प्रलयेऽस्थूलत्वं सृष्ट्यादौ स्थूलत्व-

मिति कालभेदेनेत्यर्थः । अयम् अस्थूलत्वादिः । अयम् स्थूलत्वादिः ॥ उभयोरपि कालाधीनत्वादिति भावः ॥ ननु यत्कारणान्तरादापन्नं तदस्वभावभूतं यथा पीतत्वादि । एवं स्थूलता कारणायत्तत्वाद-स्वभावभूता अस्थूलता तु तदभावात्स्वभावभूतेति विवेको युक्त एवेत्यत आह न हीति । कारणान्तरस्य निरूपयितुमशक्यत्वस्योक्तत्वादिति भावः । सा स्थूलता । निरालम्बनता निर्विषयता । ज्ञानविषयस्य ब्रह्मण एवाभावादिति भावः । तस्याः प्रपञ्चतापत्तेः । अस्तित्वं सत्ता । अत्र निवर्त्यान्यथाभावपक्ष-दूषणं तु स्थितिसमये ब्रह्मज्ञानस्य निरालम्बनत्वप्रसङ्ग इत्येव द्रष्टव्यमित्यभिप्रेत्याह इत्येषा दिगिति ॥

सु० — अत्र कश्चित् अन्धानुगतान्ध इव प्रकृतिश्चेत्यादीनि सूत्राणि ब्रह्मणो जगदुपानता-प्रतिपादकतया व्याख्यायोक्तदूषणगणाद्भीतः सूत्रतात्पर्यमाह "परमसूक्ष्माचिद्रूपप्रधानशरीरं ब्रह्म 'योऽव्यक्ते तिष्ठन्यस्याव्यक्तं शरीरम्' इत्यादिश्रुतिसिद्धम् । तथा च ब्रह्माधिष्ठितं ब्रह्मात्मकं प्रधानं जगदुपादानमिति ब्रह्मैव जगदुपादानतया(ऽङ्गीक्रि)गीयते । अतो नोक्तदोषः" इति । तं प्रत्याह अपादानत्वमेवेति ।

अनु० — अपादानत्वमेवास्य यद्युपादानतेष्यते ॥
अङ्गीकृतं तत्पितृवत्

---

एवं हि वदता पितुरिव पुत्रजन्मनि जगदुत्पत्तौ ब्रह्मणोऽपायावधित्वलक्षणमपादानत्व-मिष्टं स्यात् । सर्वथा निर्विकारस्य ब्रह्मणो विकारिप्रधानशरीरकस्य तदधिष्ठातृत्वेनोपादान-तयोदितत्वात् । एवंभूतं चोपादानत्वम् (ब्रह्मणः) अस्माभिरप्यङ्गीकृतमेवेति नात्रास्माकं प्रद्वेषः ।

शे० — नन्वपादानत्वमेवोपादानत्वमिति मायावादिनाऽनङ्गीकारान्न तथाऽऽशङ्क्य निराकरणं युक्तमिति तत्परोत्तरवाक्यमनर्थकमित्यतो नेदं मायावादिमतनिराकरणपरं किन्तु रामानुजमतनिराकरण-परमेवेति नानुपपत्तिरिति भावेन तत्पक्षमुत्थापयति अत्र कश्चिदिति ॥ उक्तदूषणगणादिति । माया-वाद्यभिमतव्याख्यानपक्षोक्तनिर्विकारत्वश्रुत्यादिविरोधरूपदूषणगणादित्यर्थः । ब्रह्माधिष्ठितं तत एव ब्रह्मात्मकं ब्रह्मणः शरीरमित्यर्थः ।

स० — ब्रह्माधिष्ठितं ब्रह्मात्मकमिति । ब्रह्माधिष्ठितत्वाद्ब्रह्मात्मकं न वस्तुगत्येत्यर्थः ।

प० — कश्चिदिति । रामानुजः ।

या० — ब्रह्माधिष्ठितमत एव ब्रह्मात्मकं ब्रह्मशरीररूपम् ।

सु०— ननूपादानत्वं चेद्ब्रह्मणोऽङ्गीकृतं कथं तर्हि तन्निराकरणमित्यत आह न त्विति ।

अनु०— न तु विश्वात्मना भवः ॥

शुद्धचैतन्यस्यैव ब्रह्मणो विश्वात्मना भवो भास्कराद्यभ्युपगतो नास्माभिर(ङ्गीक्रिय)-भ्युपगम्यते । अतस्तन्निराकरणमुपपन्नमि(मेवे)ति। अत्रायमभिसंधिः । यद्यपि परव्युत्पादितं जगदुपादानत्वं ब्रह्मणो नास्माकमर्थतो विरोधि । तथाऽपि नैतेषां सूत्राणामर्थः । तथा हि । किमत्रास्य व्युत्पादनस्य प्रयोजनम् । न तावद्भास्करस्येव निमित्तोपादानभेदनिराकरणम् । प्रधानस्योपादानतयाऽङ्गीकृतत्वात् । विकारित्वमस्त्वधिष्ठातृत्वमेव मुख्यमुपादानत्वमिति चेन्न । लोकविरोधात् । लोकव्यवहारानुसारेण हि परीक्षकैर्लक्षणं कार्यम् । न तु स्वाभिप्रायानुसारेण लोकव्यवहारो नियन्तव्यः । लोके च विक्रियावदुपादान(मु)मित्युच्यते ।

अथ पातञ्जलाः प्रधानस्यैव स्वातन्त्र्येण जगदुपादानत्वम् ईश्वरस्य तु तदनुग्राहकत्व-मेवेति मन्यन्ते । तन्निरासार्थं ब्रह्मशरीरतया ब्रह्मात्मकमेव प्रधानम् । तदीयमुपादानत्वमपि ब्रह्मण एवेत्यत्र व्युत्पाद्यत इति ब्रूषे । तदाऽनवसरदुस्स्थत्वम्, अस्य समयपादे कर्तव्य-त्वात् । करिष्यते च 'अन्यत्राभावात्'ति । तस्मान्नेदं सूत्रतात्पर्यमिति ।

शे०— विश्वात्मना भवस्य उपादनतयाऽनङ्गीकृतत्वाभिधानानर्थक्यमाशङ्क्य उपादानत्वाङ्गीकार-

---

निराकरणयोर्विरोधपरिहारार्थत्वान्नानर्थक्यमित्याशयेन विरोधपरिहारकतया तद्योजयितुं विरोधशङ्का-मुत्थापयति **नन्विति** ॥ **कथमिति** । अङ्गीकरणनिराकरणयोर्विरुद्धत्वादिति भावः । ननु प्रधानस्य विश्वात्मना भवस्य स्वयमङ्गीकारात्कथं तन्निषेध इत्यतः पूर्ववाक्यस्थस्य ब्रह्मपरस्यास्येत्यस्यानुवृत्तिमभिप्रेत्य व्याचष्टे **शुद्धेति** । ननु चैवं बाधिततया विश्वात्मना भवरूपस्योपादानत्वस्यासूत्रार्थत्वेऽप्यपादानत्वरूपो-पादानत्वस्य प्रमाणाबाधितत्वादस्तु सूत्रार्थत्वमित्यतो नाबाधितत्वमात्रं सूत्रार्थतायां प्रयोजकं किन्तु प्रकृतोपयोगित्वविशिष्टम् । ततश्चोक्तरूपोपादानत्वस्य प्रकृतानुपयुक्तत्वान्न तस्य सूत्रार्थत्वमित्याशयेनाह **अत्रायमिति** ।

स०— नन्वेवंभूतमुपादानत्वं अस्माभिरङ्गीकृतं चेत् पररीत्या प्रकृतिश्चेत्यादिसूत्रार्थतयापि तदङ्गीकार्यं स्यात् अबाधितत्वादित्यत आह **अत्रायमभिसंधिरिति** ॥ **लोकव्यवहारानुसारेणेत्यादि** ॥ 'सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः । न सर्वलोकसिद्धस्य लक्षणेन निवर्तनमि'त्युक्तत्वादिति भावः ।

प०— भास्करादीत्यादिपदेन विवरणकारादिः । ननुसिद्धान्ताविरोधिनः कस्यचिन्मतस्या-त्रोद्घाटनेन नात्रोपयोगोऽस्ति । अतोऽस्योपयोगमाह **अत्रायमभिसंधिरिति** ।

या० — नन्वेवंभूतमुपादानत्वमस्माभिरङ्गीकृतं चेत्पररीत्या प्रकृतिश्चेत्यादिसूत्रार्थतयाऽपि तदङ्गीकार्यं स्यात् । अबाधितत्वादित्यत आह अत्रायमभिसन्धिरिति ॥

श्री० — अर्थत इति । परिणामिकारणत्वरूपोपादानत्वशब्दतो विरोधस्य सत्त्वादिति भावः ॥ विकारीति । तथाच निमित्तोपादानयोरैक्यं प्राप्तमिति भावः । ब्रह्मण एव अधीनमिति शेषः ॥ करिष्यत इति । ईश्वरस्य पर्जन्यवदनुग्राहकमात्रत्वं नास्तीत्येवं तन्निरासः करिष्यत इत्यर्थः ।

सु० — पितृवदित्युक्तं दृष्टान्तममृष्यमाणो ब्रह्मपरिणामवादी वदति 'पिता पुत्रस्योपादानमेवातो नायं दृष्टान्तो युक्तः' इति; तत्राह न चेति ।

अनु० — न चोर्णनाभिजनितृमातॄणां च विकारिता ॥

आद्यश्चशब्दोऽवधारणे । द्वितीयः परोक्तानुवाद(क)ः । जनितृशब्दं प्रयुञ्जानः स्वग्रन्थस्य मन्त्रतुल्यतां (दर्श)सूचयति भगवानाचार्यः । जनिता मन्त्र इति स्मरणात् । अत्र प्रकृतत्वात्पितृमात्रग्रहणे प्राप्ते यदूर्णनाभिमातृग्रहणं तेनैतदपि निराकृतं भवति । यद्ब्रह्मपरिणा(मि)मवादिनोक्तं, "ब्रह्मणो जगत्कारणत्वे 'यथोर्णनाभिः सृजते (गृह्णते च)' 'पिताऽहमस्य जगतो माता' इत्यूर्णनाभ्यादिदृष्टान्तोपादानादुपादानत्वमेव विवक्षितम् । ऊर्णनाभ्यादीनां तन्त्वादिकं प्रत्युपादानत्वादि"ति । यच्च 'योनिश्च हि गीयते'इत्यत्रोक्तम् । "यद्यपि योनिशब्दो 'योनिष्ट इन्द्र निषदे अकारि' इत्यादौ स्थानाद्यर्थः प्रतीयते । तथाऽपि यथोर्णनाभिरिति वक्ष्यमाणदृष्टान्तबलादुपादानवाचीति निश्चीयत इति" (।) उदाहरिष्यमाणं ब्रह्मतर्कवचनमपि व्याख्यातं भवति ।

शे० — पितुः पुत्रं प्रत्युपादानत्वाभाववर्णनस्य न पूर्वेण सङ्गतिर्दृश्यत इत्यतस्तामाह पितृवदित्युक्तमिति ॥ परोक्तानुवाद इति । पिताऽपि पुत्रस्योपादानमिति परेणोक्तत्वात्तदनुवाद एव द्वितीयश्चशब्दः । अतो न तत्समुच्चेयाभावो दोषायेति भावः । ननु णिजन्ताज्जनेस्तृच्प्रत्यये इडागमे च कृते णेरनिटीति णिलोपाप्राप्तेर्गुणायादेशयोर्जनयितृशब्दनिष्पत्त्या जनयितृमातृणामिति निर्देष्टव्यं तत्कथं जनितृशब्दप्रयोगो भाष्य इत्यत आह जनितृशब्दमिति । 'यो नः पिता जनिता' इत्यादिप्रयोगदर्शनादिति ज्ञेयम् । ननु च वेदेऽपि कथं जनितृशब्दस्य साधुत्वमित्यत आह जनिता मन्त्र इति स्मरणादिति । इति पाणिनिसूत्रादित्यर्थः । जनितेति मन्त्रविषये इडादौ तृचि णिलोपो निपात्यत इत्युदाहृतसूत्रार्थः ॥ प्रकृतत्वादिति । 'अङ्गीकृतं तत्पितृवत्' इति पूर्ववाक्येऽपि पितृमात्रग्रहणेन तस्यैव पुत्रं प्रत्युपादानत्वशङ्कायां प्रसञ्जकसद्भावेन संभवेऽप्यूर्णनाभ्यादेस्तच्छङ्काऽनुदयात्तत्परिहाराय प्रकृतवाक्येऽपि पितृमातृ-

ग्रहणमेव कर्तव्यं नोर्णनाभ्यादिग्रहणमित्यर्थः ॥ **ऊर्णनाभ्यादिदृष्टान्तोपादानादिति** । यद्यपि पिताऽहमस्य जगतो मातेत्यत्र ब्रह्मणो जगत्कारणत्वे न पित्रादेर्दृष्टान्तत्वं प्रतिभाति । तथाऽपि 'ससर्ज मातापितृवत्' इति स्पष्टतत्परवाक्यानुसारेणेदमपि दृष्टान्तपरमेवेत्यभिप्रेत्यैवमुक्तम् । अत एव न्यायामृते ससर्ज मातापितृवदित्येवोदाहृतमित्यवधेयम् । तन्त्वादिकमित्यादिपदेनापत्यपरिग्रहः । इतीत्यस्य निराकृतं भवतीत्यनेन संबन्धः ( इतीत्यस्येति यद्ब्रह्मपरिणामिवादिनोक्तं तदेतदपि निराकृतमिति संबन्ध इति पाठान्तरम् ) ॥ **उक्तमिति** । सङ्करेणेति शेषः । इतीत्यस्येति यच्चोक्तं तदपि निरस्तं भवतीति पूर्वेणैव संबन्धः ॥ **उदाहरिष्यमाणमिति** । 'स्वदेहादिच्छया विश्वम्' इत्यादिरूपमित्यर्थः ।

स० — **द्वितीयः परोक्तानुवाद इति** ॥ तथा च या परोक्ता विकारिता सा च नैवेति योजना सूचिता भवति । ननु णिजन्ताज्जनेस्तृच्प्रत्यये इडागमे च कृते 'णेरनिटि' इति 'टि'-लोपाप्राप्तेः गुणायादेशयोः 'जनयितृ'इति स्यादित्यत आह **जनिता मन्त्र इति स्मरणादिति** ॥ जनितेति मन्त्रविषय इडादौ तृचि णिलोपो निपात्यत इति सूत्रार्थः ॥ **योनिष्ट इन्द्रेति** ॥ हे इन्द्र ते निषदे उपवेशनाय योनिः स्थानमकारीत्यर्थः । **निश्रीयत इति** ॥ यदुक्तं एतदपि निराकृतमिति पूर्वेण संम्बधः । **उदाहरिष्यमाणमिति** ॥ स्वदेहादिच्छया विश्वमित्यादिनेति शेषः ।

---

प० — **चोवधारण इति** । नैवेत्यर्थे वर्तत इत्यर्थः । **परोक्तानुवादक इति** । या चोर्णनाभ्यादीनां विकारितोक्ता सा नैवेत्येवंरूपेणानुवादक इत्यर्थः ॥ **जनिता मन्त्र इतिस्मरणादिति** । मन्त्रे वेदविषये जनयितेत्यर्थे जनितेति भवतीति पाणिन्युक्तेरित्यर्थः ॥ **योनिष्ट इति** । हे इन्द्र ते निषदेऽवस्थानाय योनिः स्थानमकारि कृतमित्यर्थः । निश्रीयत इतीतिशब्दस्य इत्येतदपि निराकृतमिति पूर्वेणान्वयः ॥ **उदाहरिष्यमाणेति** । 'संसर्ज मातापितृवदूर्णनाभिवदेव च' इति वचनमित्यर्थः ॥ **व्याख्यातमिति** । तेनेति पदमनुवर्तते ।

या० — **परोक्तानुवाद इति** । ऊर्णनाभिजनितमातृणामपि विकारितैवेति पराभिप्रेतत्वात्तदनुवाद एवायम् । अतो न स्ववाक्ये तत्समुच्चयानुक्तिर्दोषायेति भावः । एवं चात्र चकारोऽप्यर्थ इति ज्ञातव्यम् । ननु णिजन्ताज्जनेस्तृच्प्रत्यये इडागमे गुणे अयादेशे च कृते जनयितृ इति स्यात्कथं जनितृ इत्युक्तमित्यत आह **जनितृशब्दमिति** । ननु मन्त्रेऽपि कथमेतच्छब्दनिष्पत्तिरित्यत आह **जनिता मन्त्र इति** । जनितेति मन्त्रविषये इडादावार्धधातुके णिलोपो निपात्यत इति सूत्रार्थः । 'यो नः पिता जनिता' इत्युदाहरणम् । पिताहमस्येत्यादौ लुप्तोपमत्वमभिप्रेत्योर्णनाभ्यादिदृष्टान्तोपादानादित्युक्तमिति ज्ञातव्यम् । तन्त्वादिकमित्यत्रादिपदेनापत्यग्रहणम् ॥ **योनिष्ट इन्द्रेति** । हे इन्द्र, ते निषदे उपवे-

शनाय योनिः स्थानमकारीत्यर्थः ॥ **उदाहरिष्यमाणमिति** । 'स्वदेहादिच्छया विश्वम्' इत्याद्युदाहरिष्यमाणमित्यर्थः ।

श्री० — **आद्यश्च शब्द इत्यादि** । तथा चोर्णनाभिजनितृमातॄणां विकारिता च या परेणोक्ता सा नैव युज्यत इत्यनुव्याख्यानयोजना द्रष्टव्या । तेन ऊर्णनाभिमात्रोर्विकारिकारणत्वाभावकथनार्थं ग्रहणेनोपादानत्वादिति यत्परिणामवादिनोक्तं तदेतदपीत्यन्वयः ॥ **इति निश्चीयत इति** । यच्च प्रमेयान्तरं परिणामवादिनोक्तं तदपि निराकृतं भवतीत्यन्वयो ज्ञेयः ॥ **ब्रह्मतर्केति** । न चोर्णनाभीत्यनेन न केवलं परिणामवाद्युक्तं निराकृतं भवति । किंतु मातापितृवदूर्णनाभिवदेव वेत्युदाहरिष्यमाणं ब्रह्मतर्कवचनं च व्याख्यातमित्यर्थः ।

च० — **अमृष्यमाणः** असहमानः । **जनिता मन्त्र इति** । इडादावार्धधातुकेऽणि लोपो निपात्यत इत्यर्थः । योनः पिता जनितेत्यादिकमुदाहरणम् । लोके तु जनयितेत्येव प्रयोक्तव्यम् । **योनिष्ट इन्द्र निषद इति** । हे इन्द्र ते निषदे उपवेशनाय योनिः स्थानमकारीत्यर्थः । **उदाहरिष्यमाणमिति** । 'स्वदेहादिच्छया विश्वम्' इत्याद्यानुपूर्वीकमित्यर्थः ।

---

**सु० — कुतो नेति चेत् । अत्र पित्रादीनां पुत्रादीनां च चेतनाचेतनसमाहाररूपत्वाच्चत्वारः पक्षाः संभवन्ति । पित्रादिचेतनः पुत्रादिचेतनं प्रति वोपादानं, पुत्राद्यचेतनं प्रति वा; पित्राद्यचेतनः पुत्रादिचेतनं प्रति वा, पुत्राद्यचेतनं प्रति वेति । तत्राद्यं पक्षत्रयं तावन्नोपपद्यत इत्यत्र हेतुमाह** चेतनत्वादिति ।

चेतनत्वात्तदन्नं हि कार्यरूपतया भवेत् ॥

**आद्ये द्वयोश्चेतनत्वात् । उत्तरयोरन्यतरस्य । चतुर्थं त्वङ्गीकरोति तदन्नं हीति । तदूर्णनाभ्यादिभिरुपभुक्तमन्नं तत्परिणतास्तच्छरीरधातव इति यावत् । तन्त्वादिकार्यरूपतया परिणतं भवेदित्यर्थः ।**

**एतदुक्तं भवति । पित्रादिदृष्टान्तानामयं खलु निष्कृष्टोऽर्थः । यत्पित्राद्युपभुक्तमन्नं तच्छरीरी(र)भूतं पुत्रादिगताचेतनांशोपादानं भवतीति । पक्षान्तरस्यासंभावितत्वात् । न चायमस्माकमनिष्टः । महाप्रलये परमेश्वरेण निगीर्णं महदादिकार्यं तच्छरीररूपकप्रधानतां गच्छति । तच्च प्रधानं पुनर्महदादिकार्योपादानं भवतीत्यङ्गीकारादिति । एतेनोर्णनाभ्यादीनां न विकारित्वं(ता) चेन्निरुपादाना तन्त्वाद्युत्पत्तिः प्रसज्यत इत्यपि निरस्तम् ।**

शे० — पित्रादिशब्दानां चेतनमात्रपरत्वे 'तदन्नं हि' इत्यादेरयोगादचेतनमात्रपरत्वे च 'चेतनत्वात्' इत्युत्तरग्रन्थास्वारस्यात्तदनुरोधेन विकल्पमुखेन ग्रन्थमवतारयितुं करिष्यमाणविकल्पानाम् असंभावनाशङ्कापरिहाराय प्रथमतः संभावकमाह **अत्रेति** ॥ **समाहाररूपत्वादिति** । चेतनमात्रेऽचेतनमात्रे वा पित्रादिशब्दानामप्रयोगाच्चेतनाचेतनसमाहारपरत्वमिति भावः । **द्वयोः**उपादानोपादेयतयाऽभिमतयोः पितापुत्रयोः ॥ **अन्यतरस्येति** । द्वितीये उपादानतयाऽभिमतस्य पितुः, तृतीये उपादेयतया अभिमतस्य पुत्रस्येत्यर्थः **पक्षान्तरस्येति** । पित्रादिचेतनः पुत्रादिचेतनं प्रत्युपादानमित्यादिविकल्पितपक्षत्रयस्येत्यर्थः ॥ **महदादिकमिति** । अन्नस्थानीयमिति शेषः ॥ **तच्छरीररूपकेति** । भगवच्छरीररूपकेत्यर्थः । मुख्यशरीरत्वाभावज्ञापनाय कप्रत्यय इति ज्ञातव्यम् ॥ **प्रधानतां गच्छतीति** । सूक्ष्मरूपेणावतिष्ठत इत्यर्थः ॥ **पुनर्महदादीति** । सृष्टिकाल इति शेषः ॥ **एतेनेति** । 'तदन्नं हि कार्यरूपतया भवेत्' इत्यूर्णनाभ्याद्युपभुक्तान्नपरिणततच्छरीरधातूनां तन्त्वादिकार्यरूपतया परिणामकथनेनेत्यर्थः ।

प० — नन्वेवमपि जडशरीरहीनस्य हरेरूर्णनाभ्यादिदृष्टान्तबलेन जगदुपादानशरीरावलंबनत्वंप्राप्तमित्यतो दृष्टांतनिष्कर्षमाह **एतदुक्तं भवतीति** ॥ **तच्छरीररूपकेति** । भगवच्छरीरवत् तत्तंत्रतया स्थितं यच्छरीरं तस्य मुख्यशरीरत्वाभावोपपादककुत्सितत्वद्योतनाय रूपकेति कप्रत्ययप्रयोगः । व्यक्तमेतत् 'शरीररूपकविन्यस्त' इत्यत्र । **प्रधानतां** प्रकृतिरिति व्यवहारविषयतां ।

या० — **महदादिकार्यमिति** । अन्नस्थानीयमिति शेषः ॥ **प्रधानतां गच्छतीति** । सूक्ष्मरूपेणावतिष्ठत इत्यर्थः ॥ **पुनर्महदादीति** । कल्पान्तरे ब्रह्मादिशरीररूपमहदाद्युपादानं भवतीत्यर्थः ।

श्री० — आद्ये पक्षे । **उत्तरयोः** पक्षयोर्मध्ये ॥ **एतेनेति** । 'तदन्नं हि कार्यरूपतया भवेत्' इत्यनेनेत्यर्थः ॥ **निरस्तमिति** । ऊर्णनाभ्युपभुक्तान्नस्यैव तन्तूपादनत्वसंभवादित्यर्थः ।

च० — **आद्ये** पित्रादिचेतन. पुत्रादिचेतनं प्रत्युपादानमिति कल्पे । **द्वयोः** उपादानोपादेयतया अभिमतपितापुत्रयोः। **उत्तरयोः** पित्रादिचेतनः पुत्राद्यचेतनं प्रतीति पित्राद्यचेतनः पुत्रादिचेतनं प्रतीति द्वितीयतृतीयकल्पयोः **अन्यतरस्य** द्वितीये उपादानतयाऽभिमतस्य पितुः तृतीये उपादेयतयाऽभिमतस्य पुत्रस्य । **चतुर्थे** पित्राद्यचेतनः पुत्राद्यचेतनं प्रतीति तुरीयकल्पम् । **निगीर्णं** भक्षितम् । **महदादिकार्यमिति** । अन्नस्थानाभिषिक्तमित्यर्थः । **प्रधानतां गच्छति** मूलकारणात्मनाऽवतिष्ठत इत्यर्थः । **पुनर्महदादीति** । आगामिकल्पीयविरिंचादिशरीरभूतमहदाद्युपादानं भवतीत्यर्थः ।

सु० — एवं श्रुतिपुराणयुक्तिभिर्ब्रह्मणो निर्विकारत्वावगमान्न जगदुपादानकारणत्वं किन्तु निमित्तत्वमेवेत्युक्तम् । अधुना श्रुतिस्मृति(पुराणयुक्ति)भिर्निमित्तत्वस्यैवोक्तत्वादपीत्याह अपादानतयेति ।

अनु० — अपादानतया विश्वकर्तृत्वं बुद्धिपूर्वकम् ॥
उक्तं भाल्लविशाखायां ब्रह्मतर्के च सादरम् ॥

विश्वकर्तृत्वमित्येवेत्युक्ते कुलालादीनामिव तटस्थकर्तृत्वं प्रतीयते । तन्निवृत्त्यर्थमपादानतये-त्युक्तम् । अपादनत्वमि(त्येवो)क्ते परस्य नानिष्टम् । उपादानस्याप्यपादानविशेषत्वेनोपादान-त्वापादानत्वयोरविरोधात्। अपादानविशेषविवक्षायां च पर्णपतने वृक्षस्येवावधित्वमात्रं प्रतीयते । अतो विश्वकर्तृत्वमित्युक्तम् । तथाऽपि बुद्धिपूर्वकमिति व्यर्थम् । कर्तुर्बुद्धिमत्त्वनियमादिति । मैवम् । अशेषविशेषज्ञानस्य विवक्षितत्वात् । एतदुक्तं भवति । सकलकार्यक्रियाकारकफल-विषयबुद्ध्यादिमानीश्वरो बाह्येन रूपेणानुगृह्णन्नान्तरेण प्रधानादीनां परिणामादिशक्तीः प्रेरयन् स्वशरीररूपकप्रधानादिपरिणामभूतमहदादिकार्योपगमेऽवधिर्भवतीति । सादरत्वं दर्शयिष्यामः ।

तदेव वाक्यद्वयं क्रमेण पठति इच्छामात्रादिति ।

---

इच्छामात्रात्प्रभोः सृष्टिरविकारस्य सर्वदा ॥
स्वभावोऽयमनन्तस्य रजो येनाभवज्जगत् ॥
स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः ॥
ससर्ज मातापितृवदूर्णनाभिवदेव वा ॥

न तु परिणामितयेति मात्रार्थः । तत्र हेतुरविकारस्येति । किं प्रयोजनोद्देशेनेत्यत उक्तम् स्वभाव इति । उपादानाभावात्कथमित्यत उक्तम् रज इति ।

येन प्रेरितं रजश्शब्दोपलक्षितं गुणत्रयात्मकं प्रधानं जगदभवत् । अत्रोपपादनेनादरः प्रतीयते । स्वदेहात्सच्चिदानन्दाद्यात्मकादवधेः । अथवा स्वदेहात्प्रधानादुपादानात् । भुक्तपूर्वं पूर्वकल्पे (भुक्तेन) संहृतेन सदृशम् । भुक्तपूर्वं सूक्ष्मावस्थोपादानकमिति वा । एवशब्देन न तु मृदादिवदित्याह । वाशब्दो दृष्टान्तसमुच्चये ।

स्वदेहादिति भुक्तपूर्वमिति च विवृणोति प्रधानमिति ।

प्रधानं परिणाम्येशो निर्विकारः स्वयं सदा ॥

एवशब्दोक्तस्योपपादनं निर्विकार इति । अत्रापि पूर्ववदादरो गम्यते ।

शे० — ॥ **तटस्थकर्तृत्वमिति** । उपदानाद्यनन्तर्गतरूपेणैव कर्तृत्वमित्यर्थः ॥ **अपादानतयेत्युक्तमिति** । तथा च न कुलालादिरिव बाह्यरूपेणैव कर्ता भगवान् किन्तु यत्प्रधानाद्यन्तर्नियामकं महदाद्यपायावधिभूतं रूपं तेनापि कर्तेत्यर्थलाभादुक्तशङ्कानिवृत्तिरिति ध्येयम् ॥ **परस्येति** । उपादानत्ववादिन इत्यर्थः ॥ **उपादानस्यापादानविशेषत्वेनेति** । 'जनिकर्तुः प्रकृतिः' इत्युपादानस्याप्यपादानसंज्ञाविधानात् 'ध्रुवमपायेऽपादानम्' इत्यादिनाऽनुपादानस्याप्यपादानसंज्ञाविधानेनापादानत्वस्योपादानानुपादानसाधारणतया सामान्यत्वेनोपादानत्वस्य तद्विशेषत्वमित्यर्थः ॥ **अविरोधादिति** । विरोधे सामान्यविशेषभावायोगादिति भावः । ननु सामान्यविशेषयोरविरोधेऽपि विशेषाणां परस्परविरोधनियमादपादानशब्देन च तद्विशेषग्रहणात्कथमुपादानत्वापादानत्वयोरविरोध इत्यत आह **अपादानविशेषविवक्षायां चेति** । विश्लेषावधिरूपापादानविशेषविवक्षायामित्यर्थः ॥ **अवधित्वमात्रमिति** । अवधित्वमेवेत्यर्थः । अवधिर्मर्यादा न तु कर्तृत्वमिति मात्रार्थः ॥ **नियमादिति** । 'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वम्' इति वचनादिति भावः । कर्तृत्वोक्त्या कुलालादिसाधारणबुद्धिपूर्वप्रवृत्तिमात्रलाभेऽपि क्रियाकारकफलविषयबुद्धिलाभार्थं बुद्धिपूर्वकमित्युक्तमिति भावेन परिहरति **मैवमिति** ॥ **दर्शयिष्याम इति** । अत्रोपपादनेनादरः प्रतीयत इत्यादिनेति शेषः ।

इच्छामात्रादिति भगवदिच्छाऽतिरिक्तकारणमात्राभाव उच्यत इति भ्रान्तिनिरासायाह **नत्विति** । अनभिमतव्यावृत्त्यर्थो मात्रशब्द इति भावः ॥ **तत्रेति** । परिणामित्वाभाव इत्यर्थः ॥ **उपपादनेनेति** । मात्रशब्दोक्तपरिणामित्वाभावस्याविकारस्य सर्वदेत्यनेनोपपादनेनेत्यर्थः । पूर्वकल्पे संहृतस्य पुनः सृष्ट्यसंभवादाह **पूर्वेति** ॥ **दृष्टान्तेति** । मातापितृवदूर्णनाभिवदित्युक्तदृष्टान्तद्वयसमुच्चय इत्यर्थः । उभयत्रापि द्वितीयव्याख्यानमभिप्रेत्याह **स्वदेहादितीत्यादि** ॥ **एवशब्दोक्तस्येति** । एवशब्देनोक्तस्य न तु मृदादिवदित्यस्येत्यर्थः ॥ **पूर्ववदिति** ॥ उपपादनेनेत्यर्थः । एवशब्दोक्तस्यापरिणामित्वस्य निर्विकार इत्यनेनोपपादनादिति भावः ।

स० — **तटस्थकर्तृत्वमिति** ॥ उपादानाद्यनन्तर्गतस्यैव कर्तृत्वमित्यर्थः । यद्वा स्वोदराद्बहिःस्थोपादानस्य कार्यकारणपरिणामकर्तृत्वमिति प्रतीयते तन्निवृत्त्यर्थमिति व्याख्येयम् । **अपादानविशेषत्वेनेति** ॥ जनिकर्तुः प्रकृतिरित्यादिसूत्राणां ध्रुवमपायेऽपादानं इत्यनेन विरोधः प्रतीयते तन्निवृत्त्यर्थम् तद्विशेषत्वस्य परैरभ्युपगमादिति भावः । केचित्तु परमते अपायावधिभूतस्य प्रधानशरीरकस्य ब्रह्मण एव विकारिवस्त्वधिष्ठातृत्वरूपोपादनत्वस्याङ्गीकृतत्वादिति भावः इत्याहुः । **अपादानविशेषविवक्षायां चेति** ॥ विकारिवस्त्वधिष्ठातृत्वादिविवक्षया तटस्थतयैव अपायावधित्वमात्रस्य 'ध्रुवमपायेऽपादानमि'ति सूत्रोक्तस्य विवक्षायामित्यर्थः । **सादरत्वं चेति** ॥ 'अत्रोपपादनेनादरः प्रतीयते' इत्यादिनेति शेषः । **भुक्तपूर्वं सूक्ष्मावस्थो-**

**पादानकमिति** ।। पूर्वकल्पे यानि भुक्तानि तत्त्वानि तेषां यानि सूक्ष्माणि नित्यानि उपादानानि तान्यपि परमात्मना भुक्तान्येव तदुपादानकमित्यर्थः । अक्षरयोजना तु, भुक्तपूर्वा या सूक्ष्मावस्था तदुपादानकमिति । **स्वदेहादिति भुक्तपूर्वमिति च विवृणोति** । 'प्रधानं परिणाम्य'इत्यनेन आद्यस्य, 'ईश' इत्यनेन च द्वितीयस्य विवृतत्वादिति भावः । **पूर्ववदिति** ।। उपपादनेनेत्यर्थः ।

**प० — श्रुतिपुराणयुक्तिभिरिति** । यद्यपि 'अविकार इत्यादिना श्रुतिपुराणोक्तावपि, 'नैव स स्याद्धरेः क्वचित्' इत्येवोक्तया युक्तिर्नोक्ता मूले । तथाऽपि अयमाशय इत्यादिना तदभिमतयुक्तीनां विवृतत्वाद्युक्तिरप्युपात्ता । यद्वा पित्रादेरविकारस्योपपादनायोक्तचेतनत्वयुक्तेः अत्रापि साम्याद्युक्तेरप्युपादानम् । **तटस्थकर्तृत्वं** मृत्पिण्डशरीरकत्वं विना तत्कर्तृत्वमित्यर्थः ।। **अपादानविशेषेति** । विश्लेषावधिरूपेत्यर्थः ।। **बाह्येनेति** । कुलालवदनन्तर्यामितया स्थितरूपेणानुगृह्णन् परिणामयन्नित्यर्थ ।। **अवधिर्भवतीति** । आन्तरेण रूपेणेत्यनुषङ्गः । सादरमित्युक्तसतात्पर्यकत्वं कथमित्यत आह **सादरत्वमिति** ।। **अत्रोपपादनेनेति** । **अत्र श्रुतौ** । अविकारस्येति स्वभाव इति रज इति चोपपादनेनेत्यर्थः । पूर्वं भुक्तं भुक्तपूर्वमिति विग्रहं भुक्तपदस्य भुक्तपदशपरत्वं चोपेत्याह **पूर्वकल्प इति** । बहुव्रीहिं पूर्वपदस्योपादानरूपकारणपरत्वं चोपेत्याह **भुक्तपूर्वं सूक्ष्मावस्थोपादानकमिति** । पूर्वकल्पसंहृतानि उपचयभागापगमे सति सूक्ष्मरूपतया हरेरुदरे स्थितानि यानि तदुपादानकमित्यर्थः । **विवृणोतीति** । प्रधानं परिणाम्येत्यनेन सूक्ष्मावस्थोपादानकत्वस्य स्वदेहा(त्प्रधानादुपादानादित्यस्य विवरणा) न्निर्विकार इत्युक्त्या चास्वदेहभूतप्रधानस्यैव विकारप्राप्त्या सच्चिदानन्दस्वरूपदेहस्यावधित्वलाभाच्चेति भावः ।। **एवश(ब्दोक्त)ब्देनोक्तस्येति** । ऊर्णनाभिवदेवेत्येवशब्देन मृदादिवन्नेति यदुक्तं तस्येत्यर्थः ।

**या० — तटस्थकर्तृत्वमिति** । उपादानाद्यनन्तर्गतस्यैव कर्तृत्वमित्यर्थः ।। **अपादानतयेत्युक्तमिति** । तथाच न कुलालादिरिव बाह्यरूपेणैव कर्ता भगवान्किन्तु यत्प्रधानाद्यन्तर्नियामकं महदाद्यपायावधिभूतं रूपं तेनापि कर्तेत्यर्थलाभादुक्तशङ्का निरास इति भावः ।। **उपादानस्याप्यपादानेति** । परेणोपादानस्यापि 'जनिकर्तुः प्रकृतिः' इति सूत्रेणापादानत्वविध्यङ्गीकारादेवमुक्तमिति ज्ञातव्यम् ।। **अपादानविशेषेति** । विश्लेषावधिरूपोपादानविशेषविवक्षायामित्यर्थः ।। **अवधित्वमात्रं प्रतीयत इति** । न तत्कर्तृत्वमपीति शेषः ।। **दर्शयिष्याम इति** । अत्रोपपादनेनादरः प्रतीयत इत्युपपदमेव दर्शयिष्यत इत्यर्थः ।। **सूक्ष्मावस्थोपादानकमिति** । अत्र स्वदेहादित्यस्य सच्चिदानन्दाद्यात्मकादवधेरिति प्रथमव्याख्यानमेव विवक्षितं न द्वितीयमतो न पौनरुक्त्यमिति ध्येयम् । उभयत्रापि द्वितीयव्याख्यानमभिप्रेत्याह **स्वदेहादितीत्यादि** ।

श्री०— **तटस्थेति** । बहिष्ठत्वेनेत्यर्थः । अत्रेत्यनेन दर्शयिष्याम इत्युक्तं दर्शितम् ॥ **उपादानेनेति** । 'इच्छामात्रात्प्रभोः सृष्टिः' इत्युक्तसृष्टिरेवोपादानकथनेन 'रजो येनाभवज्जगदि'त्यनेनोपपादितेत्यर्थः ॥ **भुक्तपूर्वेति** । भुक्तपूर्वस्य या सूक्ष्मावस्था तदुपादानकमित्यर्थः ॥ **पूर्ववदिति** । स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः ससर्जेत्यस्य प्रधानं परिणाम्येति विवरणेन । तथोर्णनाभिवदेव ससर्जेत्युक्तस्य निमित्तत्वस्य निर्विकार इत्यनेनोपपादनाच्च पूर्ववदादरोऽवगत इत्यर्थः ।

च०— **तटस्थकर्तृत्वमिति** । उपादानाद्यप्रवेशेन कर्तृत्वमित्यर्थः । **अपादानतयेत्युक्तमिति** । एवं च न कुलालादिवदुपादानादिबहिर्भूतरूपेणैव ईश्वरो निर्मिमीते किन्तु महदाद्यपायावधिभूतप्रधानादिगतरूपेणापीति दर्शितशङ्काव्युदास इति भावः । **उपादानस्याप्यपादानेति** । अपादानसंज्ञायाः 'जनिकर्तुः प्रकृतिः' 'ध्रुवमपायेऽपादानमि'त्यादिसूत्रैः उपादानापादानसाधारण्येन विहिततया अपादानत्वस्योपादानत्वव्यापकतयोपादानत्वस्य च तद्व्याप्यत्वादिति भावः । **अपादानविशेषविवक्षायामिति** । ध्रुवमपाय इति योगप्रत्यापितापादानसंज्ञाविशेषितविश्लेषरूपापायावधिविवक्षायामित्यर्थः । **अवधित्वमात्रमिति** । न कर्तृत्वमपीति पूरणीयम् । **दर्शयिष्याम इति** । अत्रोपपादनेनादरः प्रतीयत इत्यादिनेत्यादिः ।

---

**सु०— प्राक् चेतनत्वादित्यनेन** त्रयः **प्रयोगास्सूचिताः । पितापुत्रौ नोपादानोपादेयभूतौ चेतनत्वाद्देवदत्तयज्ञदत्तवत् । पुत्राद्यचेतनो, न पित्रादिचेतनोपदानकः, अचेतनत्वात् घटवत् । पुत्रादिचेतनो न पित्राद्यचेतनोपादानकः, चेतनत्वाद्ब्रह्मव(ह्मादिव)दिति । सर्वत्र पक्षधर्मतायाश्च निश्चितत्वात् । द्वितीये तावद्व्याप्तिमुपपादयति** न चेतनविकारः स्यादिति ।

**अनु०**— न चेतनविकारः स्याद्यत्र क्वापि ह्यचेतनम् ॥

**यदि खलु यत्र क्वापि देशे काले वाऽचेतनं चेतनविकारो दृष्टः स्यात्तदैवं व्याप्तिर्भज्येत । न चैवमित्यर्थः । महदादिजगत् ब्रह्मकार्यमुपलब्धमिति चेन्न । अध्याप्यसिद्धेः । उक्तवक्ष्यमाणप्रमाणैर्निराकृतत्वात् (च) । तृतीये** व्याप्तिमुपपादयति नाचेतनेति ।

नाचेतनविकारोऽपि चेतनः स्यात्कदाचन ॥

व्याख्यानं **पूर्ववत्** । **एवं न चेतनविकारश्चेतनोऽ**प्युपलब्ध इत्याद्येऽपि **व्याप्तिरुपपादनीया ।**

**शे०**— व्याप्त्युपपादनपरोत्तरवाक्यानर्थक्यमाशङ्क्य चेतनत्वादिति पूर्ववाक्यसूचितप्रयोगोपपादनार्थत्वान्न तदिति भावेन तत्सूचितप्रयोगप्रकारप्रदर्शनपूर्वकं व्याप्तिपक्षधर्मतयोरुभयोरप्यनुमानो-

पयिकत्वात्पक्षधर्मतामप्रदर्श्य व्याप्तेरेव प्रदर्शने निमित्तं वदन्नुत्तरवाक्यमवतारयति **प्रागिति** ॥ **सर्वत्रेति** । प्रयोगत्रयेऽपीत्यर्थः । **तावदिति** । नाचेतनविकारोऽपीत्यनेन तृतीयेऽपि व्याप्तेरुपपादयिष्यमाणत्वात्तद-पेक्षया तावदित्युक्तम् । कथमनेन व्याप्तिरुपपादिता भवतीत्यतस्तत्परतया व्याचष्टे **यदीति** ॥ **अद्या-पीति** । तथा च महदादिजगतो ब्रह्मविकारत्वसिद्धौ व्याप्तिभङ्गेनानुमानाप्रामाण्यसिद्धिस्तत्सिद्धौ च बाधकाभावान्महदादेर्ब्रह्मविकारत्वसिद्धिरित्यन्योन्याश्रय इति भावः । नन्वेवं महदादेर्ब्रह्मविकारत्वाभाव-सिद्धौ व्याप्तिभङ्गाभावेनानुमानप्रामाण्यसिद्धिस्तत्सिद्धौ चानुमानविरुद्धत्वान्महदादेर्ब्रह्मविकारत्वाभाव-सिद्धिरिति तत्राप्यन्योन्याश्रय इत्यत आह **उक्तेति** । 'अविकारः सदा शुद्धः' इत्यादिभिरुक्तैः महदादिकं न चेतनविकारोऽचेतनत्वाद्घटवदित्यादिभिर्वक्ष्यमाणैश्च प्रमाणैरित्यर्थः ॥ **व्याख्यानं पूर्वव-दिति** । यदि खलु कुत्रापि देशे काले वा चेतनमचेतनविकारो दृष्टः स्यात्तदैवं व्याप्तिर्भज्येत न चैवमिति व्याख्यानं 'न चेतनविकारः स्याद्यत्र क्वापि ह्यचेतनम्' इति पूर्ववाक्यव्याख्यानवद्द्रष्टव्य-मित्यर्थः ।

**स०— व्याख्यानं पूर्ववदिति** ॥ 'न चेतनविकारः स्या'दित्येतद्वाक्यस्य तर्कपरत्वेन व्याख्यानस्य कृतत्वात् तद्वदेव यदि खलु कुत्रापि देशे काले वा चेतनमचेतनविकारो दृष्टः स्यात्तदैवं व्याप्तिर्भज्येत न चैवमिति व्याख्यानं पूर्ववत् द्रष्टव्यमित्यर्थः ॥

---

**प०— उक्तेति** । अविकार इत्यादिनोक्तश्रुति-स्मृति-युक्ति-इच्छामात्रादितिश्रुति स्वदेहादि-त्युक्तब्रह्मतर्करूपैः प्रमाणैरित्यर्थः । न चान्यस्येत्यादिवक्ष्यमाणप्रमाणैरित्यर्थः ।

**या०— पूर्ववदिति** । यदि खलु कदाऽपि कुत्रापि चेतनेऽचेतनविकारो दृष्टः स्यात् । तदैवं व्याप्तिर्भज्येत न चैवमिति व्याख्यानं पूर्ववाक्य इवात्रापि तर्के विपर्ययपर्यवसानप्रदर्शनपरतया कर्तव्यमित्यर्थः ।

**श्री०— सर्वत्रेति** । आद्यान्त्यानुमाने चेतनत्वहेतोर्द्वितीयेऽचेतनत्वहेतोश्चेत्यर्थः । अचेतनत्व हेतोर्व्यभिचारमाशङ्कते **महदादीति** । **ब्रह्मकार्यं** ब्रह्मोपादानकम् ॥ **अद्यापीति** । महदादेर्ब्रह्मविकारत्व-रूपब्रह्मकार्यत्वे सिद्धे व्यभिचारेणानुमानस्य दुष्टत्वमनुमानस्य दुष्टत्वे च तद्विरोधाभावादचेतनस्य जगत-श्चेतनभूतब्रह्मोपादानकत्वसिद्धिरित्यन्योन्याश्रय इति भावः ॥ **पूर्ववदिति** । यदि खलु यत्र क्वापि देशे काले वा चेतनमचेतनविकारो दृष्टः स्यात्तदेयं व्याप्तिर्भज्येत । न चैवमिति व्याख्यानं ज्ञेयम् ।

**च०— व्याख्यानं पूर्ववदिति** । यदि खलु कुत्रापि देशे काले वा चेतनविकारो दृष्टः स्यात्तदेयं व्याप्तिर्भज्येत न चैवमिति 'न चेतनविकारः स्याद्यत्र क्वापि ह्यचेतनमि'तिपूर्वप्रतीकव्याख्यानेन तुल्यं वर्तत इत्यर्थः ।

सु० — अथवा महदादिकं न चेतनविकारः, अचेतनत्वाद्घटवदिति युक्त्यन्तरविरुद्धं च ब्रह्मणो जगदुपादानत्वमिति चेतसि निधायास्य व्याप्तिमुपपादयति न चेतनेति। ननु घटादयोऽपि ब्रह्मविकारा इति चेन्न। मृदादिविकारत्वस्य प्रमितत्वात्। परंपरयेति चेत्। एवं तर्हि न स्वयं चेतनविकाराः। किन्तु तत्कारणानीत्युक्तं स्यात्। तथा च कथं न दृष्टान्तता। तर्हि तत्कारणेषु व्यभिचार इति चेन्न। तेषामेव पक्षत्वात्। सुखदुःखादिष्वनैकान्तिकत्वमिति चेन्न। तेषामन्तःकरणविकारत्वाभ्युपगमात्। एतेनैतदपि प्रत्युक्तम्। जगत्, अभिन्ननिमित्तोपादानम् प्रेक्षापूर्वजनितकार्यत्वात्सुखादिवदिति। घटादिषु व्यभिचार(श्च)श्च। तेषामपि पक्षीकरणे प्रमाणबाधः स्यात्। नन्वचेतनमपि जगच्चेतनविकारश्चेत्तदा को दोषः स्यात्। एवं तर्हि चेतनोऽप्यचेतनविकारः स्यात्। न चैतदस्तीत्याह नाचेतनेति।

अयमभिसन्धिः। यदि महदादिकं ब्रह्मणो विकारः स्यात्तर्हितत्स्वरूपानुगतिमत्प्रसज्येत। कार्ये कारणस्वरूपानुगमदर्शनात्। घटादयो मृद्विकारा मृदनुगतिमन्तो दृष्टाः। न चैतदस्ति। तस्मान्न महदादि(ः) ब्रह्मविकारः। यदि पुनः कारणस्वरूपानुगममन्तरेण विकारिविकारभावोऽभ्युपगम्यते तदा चेतनोऽप्यचेतनविकारः किं नाभ्युपगन्तव्यः। न चैवमङ्गीकृतं परेण। तथा हि सति 'एक आत्मनः शरीरे भावात्' इत्यत्र परस्य भूतचतुष्टयपरिणाम एवायं चेतनावान्काय इति वदन्तं चार्वाकं प्रति भूतेष्वविद्यमानं चैतन्यं कथं कार्ये स्यादिति परिहारो मदिराद्रव्ये मदशक्तिवत्स्यादिति पुनश्च चार्वाकेण चोदिते मदिरोपादानेऽपि सूक्ष्मरूपमदशक्तिव्युत्पादनं च व्याहतं स्यादिति।

शे० — चेतनत्वादिति सूचितप्रयोगाङ्गव्याप्त्युपपादकत्वे तदानन्तर्यमेव भवेद्व्यवधाने कारणाभावात्। प्रथमप्रयोगाङ्गव्याप्त्यनुपपादने निमित्तालाभाच्चेति पूर्वत्रारुच्या पक्षान्तरमाह **अथवेति**। दृष्टान्तस्य साध्यविकलत्वमित्याशङ्कते **नन्विति**॥ **प्रमितत्वादिति** अन्वयव्यतिरेकसध्रीचीनप्रत्यक्षेण निश्चितत्वादित्यर्थः॥ **तत्कारणानीति**। घटादिकारणानि मृदादीनीत्यर्थः॥ **तथा चेति**। मृदादीनां चेतनविकारत्वेऽप्यदृष्टान्तीकृतत्वाद् दृष्टान्तीकृतस्य घटादेश्च मृदादिविकारत्वेन चेतनविकारत्वाभावान्न दृष्टान्ते साध्यवैकल्यमित्यर्थः। माऽस्तु तर्हि घटादिदृष्टान्ते साध्यवैकल्यं दोषः, अदृष्टान्तीकृतेषु घटादिकारणमृदादिषु सत्यप्यचेतनत्वे चेतनविकारत्वस्यैव सत्त्वात् व्यभिचारस्तु भविष्यत्येव अतस्तेषामपि सपक्षत्वेऽवश्यमाश्रयणीये साध्यवैकल्यमेव। सपक्षविपक्षव्यतिरेकेण तेषु तृतीयविधाया असम्भवादित्याशयेन शङ्कते **तर्हीति**॥ **पक्षत्वादिति**। तथा च न तत्र व्यभिचारचोदनं युक्तमिति भावः॥ **सुखदुःखादिष्विति**। तेषां

सत्यप्यचेतनत्वे आत्मविकारस्यैव सत्त्वादिति भावः ॥ **अभ्युपगमादिति** । 'कामः सङ्कल्पः' इत्यादि-श्रुतिमाश्रित्य त्वया मया चेति शेषः । वैशेषिकादिमते तेषामात्मोपादानकत्वेऽपि न वादिप्रतिवादिमते तदिति न तत्रानैकान्त्यमिति भावः । विवरणोक्तमनुमानं दूषयति **एतेनेति** । मतद्वयेऽपि सुखादेरन्तः-करणमात्रविकारत्वेन दृष्टान्तस्य साध्यविकलत्वेनेत्यर्थः ॥ **प्रेक्षेति** । 'स ईक्षाञ्चक्रे स प्राणमसृजत' इति श्रुत्या हेतुसिद्धिरिति भावः ॥ **घटादिष्विति** । तेषां सत्यपि प्रेक्षापूर्वजनितकार्यत्वेऽभिन्ननिमित्तोपादनकत्वाभावादिति भावः । ननु पक्षत्वादेव घटादेर्न तत्र व्यभि-चार इत्यत्राह **तेषामिति** ॥ **प्रमाणबाध इति** । अन्वयव्यतिरेकसध्रीचीनप्रत्यक्षादिना घटादेर्भिन्नो-पादाननिमित्तकत्वस्यैव सिद्धत्वादिति भावः । उपलक्षणं चैतत् । कार्यत्वादित्येतावत एव हेतुत्व-संभवेन व्यर्थविशेषणत्वाज्जगदुपादानं न कर्तृ द्रव्योपादानत्वान्मृद्वत् । जगत्कर्ता वा न द्रव्योपादानं कर्तृत्वात्कुलालादिवदित्यादिना सत्प्रतिपक्षत्वाच्चेत्यपि द्रष्टव्यम् । ननु चेतनत्वादिति सूचितप्रयोगाङ्ग-व्याप्त्युपपादकत्वेन योजनापक्षे द्वितीयप्रयोगाङ्गव्याप्तेः न चेतनविकारः स्यादित्यनेनोपपादनेऽपि तृतीय-प्रयोगाङ्गव्याप्त्युपपादकतया नाचेतनविकारः स्यादित्यस्य सार्थकत्वसंभवेऽपि महदादिकं, न चेतनविकारः अचेतनत्वादिति विरोधियुक्त्यन्तरापेक्षितव्याप्त्युपपादकत्वेन वाक्ययोजनापक्षे तस्या उक्तरीत्या न चेतनविकारः स्यादित्यनेनैवोपपादनान्नाचेतनविकारः स्यादित्यस्यानर्थक्यमित्यतोऽत्रानुमाने प्राप्ताप्रयोज-कत्वशङ्कापरिहाराय विपक्षे बाधककथनार्थत्वान्नानर्थक्यमिति भावेनाप्रयोजकताशङ्कापरिहारकतयोत्तरवाक्यं योजयितुमप्रयोजकताशङ्कामुत्थापयति **नन्विति** । नन्वत्र चेतनस्याचेतनविकारत्वाभावमात्रमुच्यते न तु किञ्चिद्विपक्षे बाधकमिति कथमनेनोक्तशङ्कापरिहार इत्यतोऽत्राभिप्रेतविपक्षबाधकप्रदर्शनेनाप्रयोजकता-शङ्कापरिहारमुपपादयति **अयमिति** । नन्वेवं बाधकान्तरेणाप्रयोजकताशङ्कापरिहारेऽस्य विपक्षे बाधक-समर्पकत्वाभावादानर्थक्यमेवेत्यतोऽस्य साक्षाद्विपक्षे बाधकासमर्पकत्वेऽपयत्र विपक्षे बाधकतयाऽभिसंहित-तर्केऽप्रयोजकताशङ्कापरिहारार्थत्वेन परम्परया तादर्थ्यान्नानर्थक्यमित्याशयेनाह **यदि पुनरिति** । अत्रा-पीष्टापत्तिमाशङ्क्याह **न चेति** ॥ **भूतेति** । पृथिव्यादिभूतचतुष्टयेत्यर्थः ॥ **भूतेष्विति** । व्यस्तेषु चेति शेषः ॥ **कार्य इति** । भूतचतुष्टयपरिणामरूपे कार्य इत्यर्थः ॥ मदिरादव्ये मदशक्तिवदित्यस्यायमर्थः । यथा किण्वादीनां समस्तानां व्यस्तानां वा मदजनकत्वाभावेऽपि तत्परिणाममदिरायां मदशक्तिस्तथा समस्तेषु व्यस्तेषु पृथिव्यप्तेजोवायुषु चैतन्याभावेऽपि तत्परिणामे कार्ये चैतन्यं भविष्यतीति ।

स०— **प्रेक्षापूर्वजनितकार्यत्वादिति** ॥ प्रेक्षापूर्वः बुद्धिमान् यः तज्जनितकार्यत्वादित्यर्थः ।

प०— ननु अचेतनमपीत्यपिना उत्तरार्धं प्रकारान्तरेण योजयिष्यन् पूर्वार्धं तावत्प्रकारान्तरेण योजयति **अथवेति** । दृष्टान्ते साध्यवैकल्यमाशङ्कते **ननु घटादयोपीति** । किं साक्षाद्ब्रह्मविकाराः

असाक्षाद्वेति विकल्पौ हृदि कृत्वा क्रमेण निराह **नेत्यादिना** । **न दृष्टान्तता** घटस्येति योज्यम् । **व्यभिचार इति** । अचेतनत्वादिति हेतोरिति योज्यम् । न्यायमतरीत्या आत्मोपादानकत्वं मत्वा शङ्कते **सुखदुःखादिकेष्विति** ॥ **एतेनेति** । दुःखादीनां आत्मोपादानकत्वाभावकथनेनेत्यर्थः । ननु महदादिकं न चेतनविकार इत्यादिप्रयोगो विपक्षे बाधकाभावादप्रयोजकः । चेतनस्याचेतनपरिणामत्वोपगमेपि नास्माकमनिष्टमित्यतः श्लोकतात्पर्यमाह **अयमभिसंधिरिति** ॥ **इत्यत्रेति** । उपासनापादीयाधिकरणे । तदधिकरणस्य परेण चार्वाकमतापाकरणपरत्वोपगमात् । तत्र परभाष्योक्तमनुवदति **परस्येत्यादिना** । परस्येत्यस्य इति परिहारो व्याहतः स्यात् सूक्ष्मरूपमदशक्तिव्युत्पादनं च व्याहतं स्यादित्यन्वयः ।

श्री० — व्यभिचारमाशङ्कते **नन्विति** ॥ **मृदादीति** । तथाच ब्रह्मरूपचेतनविकारत्वाभावान्न व्यभिचार इति भावः । ' ननु घटादेः साक्षान्मृद्विकारत्वेऽपि मृदाद्यवयवानां ब्रह्मविकारत्वेन परम्परया घटादेर्ब्रह्मविकारत्वाद्व्यभिचार इत्याशङ्कते **परम्परयेति** ॥ **न स्वयमिति** । घटादिः साक्षादित्यर्थः । **तत्कारणानि** घटादिकारणानीत्यर्थः । तथाच घटादिकारणमृदाद्यवयवमहदादेरेव चेतनविकारत्वेन घटस्य तदभावाद्युक्तं घटस्य दृष्टान्तत्वमित्यर्थः ॥ **तर्हीति** । तत्र साक्षाद्ब्रह्मविकारतासत्त्वादिति भावः ॥ **सुखेति** । सुखादय आत्मविकारा इति शङ्कितुर्हृदयम् ॥ **एतेनेति** । सुखादेरन्तःकरणोपादानकत्वेन आत्मनश्च निमित्तत्वेनाभिन्ननिमित्तोपादानकत्वाभावादित्यर्थः । महदादिकार्यमभिन्ननिमित्तोपादानकं प्रेक्षापूर्वजनितकार्यत्वादित्यत्र घटादिक्रियायां व्यभिचारवारणाय प्रेक्षापूर्वेति विशेषणम् । तत्रापीश्वरप्रेक्षामादाय विशिष्टहेतुसत्त्वं शक्यमिति कथमयं व्यभिचार इति विशेषणकृत्यं विचार्यमस्ति ॥ **प्रमाणेति** । मृत्कुलालयोर्भेदस्य प्रत्यक्षसिद्धत्वादिति भावः ॥ **तथा हि सति** चेतनस्याचेतनोपादानकत्वे सति ॥ **भूतेष्विति** । तथाच कारणेऽचेतनेऽविद्यमानं चैतन्यं कथं तत्कार्ये चेतने स्यादित्यर्थः ॥ **मदिरेति** । क्रमुकपर्णचूर्णादौ मदजनके द्रव्ये प्रत्येकं मदजनकत्वाभावेऽपि समुदाये तज्जनकत्ववत्प्रत्येकं भूतेषु चैतन्याभावेऽपि समुदितेषु तत्संभवतीत्यर्थः ॥ **व्युत्पादनमिति** । तथाच मदिराद्रव्योपादान इव प्रकृते भूतेषु न सूक्ष्मरूपेणापि चैतन्यमस्ति । अतः कारणेऽविद्यमानस्वभावस्य कार्येऽयोगान्न चेतनमचेतनोपादानकमिति यत्तवाभिप्रेतं तद्व्याहतं स्यादित्यर्थः ।

**सु० — यद्वा ब्रह्मजगती नोपादानोपादेयभाववती विलक्षणत्वाद्देवदत्तघटवत् । ननु विलक्षणानामपि मृद्घटादीनामुपादानोपादेयभावो दृश्यत इति चेन्न । चेतनाचेतनरूपवैलक्षण्यस्य विवक्षितत्वात् ।**

(यत्) अत्र परेणोक्तं दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः(अपि) पुरुषादिभ्यो विलक्षणानां केशनखादीनामुत्पत्तिः । अचेतनत्वेन प्रसिद्धेभ्यो गोमयादिभ्यो वृश्चिकादीनामिति । तदेतदयुक्तम् । केशनखादीनामचेतनाच्छरीरादेवोत्पत्तेः । गोमयाद् वृश्चिकशरीरस्यैव जन्मनो वक्ष्यमाणत्वादित्याशये(यत्रा)नाह (न चेतनेति) नाचेतनेति ।

शे०— अस्मिन्पक्षे पूर्ववाक्यस्य व्याप्त्युपपादकत्वं द्वितीयस्य परम्परयाऽप्रयोजकताशङ्कापरिहारकत्वं च कल्पनीयमिति वैरूप्याश्रयणं भवतीत्यतो द्वयोरप्यभिप्रेतप्रयोगान्तरे व्यभिचारपरिहारकत्वकल्पनयैकरूप्यमित्यभिप्रेत्य तत्परतया वाक्यं योजयितुमभिमतप्रयोगान्तरप्रदर्शनपूर्वकं तत्र व्यभिचारशङ्कामुत्थाप्य तत्परिहारपरतया वाक्यद्वयं योजयति यद्वेति ॥ केशेति । तथा चात्र ययोरुपादानोपादेयभावो न तयोश्चेतनाचेतनवैलक्षण्यं, ययोश्चेतनाचेतनवैलक्षण्यं न तयोरुपादानोपादेयभाव इति न तत्र व्यभिचार इति भावः ॥ वक्ष्यमाणत्वादिति । 'कार्यदेहगतस्यास्ये'त्यादिनेति शेषः । तथा च गोमयवृश्चिकशरीरयोरुभयोरप्यचेतनयोरेवोपादानोपादेयभावान्न चेतनाचेतनयोः स इति न तत्रापि व्यभिचार इति भावः ।

स०— वक्ष्यमाणत्वादिति ॥ कार्यदेहगतस्यास्येत्यादिनेति शेषः ।

प०— यत्तु परभाष्यादौ 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' इत्यत्र ब्रह्मजगतोर्विलक्षणत्वहेतुना उपादानोपादेयभावो नेति पूर्वपक्षयित्वा 'दृश्यते तु' इत्यनेन सिद्धान्तितम् । तन्निरासपरतयापीमं श्लोकं व्याचष्टे यद्वेति । पूर्वार्धतात्पर्यमाह केशनखादीनामिति । उत्तरार्धभावमाह गोमयादिति ।

या०— वक्ष्यमाणत्वादिति । 'कार्यदेहगतस्यास्य' इत्यादिनेति शेषः ।

सु०— अनुमानान्तरं वक्तुं व्याप्तिनिश्चयाय व्यतिरेकव्याप्तिं तावदाह न चेति ।

अनु०— चान्यस्यान्यरूपत्वं विकृतत्वेऽपि दृश्यते ॥

अपि चेति युक्तिसमुच्चये । विकृति(त)त्वे विकृतिदशायामन्यस्यान्यरूपत्वमन्यविकारत्वं न दृश्यते । विकारविकारिणावन्योन्यमन्यतया क्वापि नोपलब्धाविति यावत् । अत्र दृष्टान्तमाह नेति ।

न क्षीरादन्यता दध्नः केनचिद् दृश्यते क्वचित् ।

यस्य क्षीरस्य विकारो यद्धि तस्मात्क्षीरादन्यता तस्य दध्नः केनापि क्वापि न दृश्यत इत्यर्थः । एवमन्यतादर्शनस्य सिद्धा विकारविकारिभावाद्व्यावृत्तिः । ततः किमित्यत आह सर्वज्ञादिति ।

सर्वज्ञाद्ब्रह्मणोऽन्यत्वं जगतो ह्यनुभूयते ॥

हि शब्दो यस्मादित्यर्थे । तस्मान्न तयोर्विकारविकारिभाव इति शेषः । अयमत्र

**प्रयोगः । जगत् ब्रह्मविकारो न भवति ततोऽन्यत्वेनोपलभ्यमानत्वात् । यो यतोऽन्यत्वेनोपलभ्यते न स तद्विकारो यथा घटः पटस्य । यश्च यद्विकारो नासौ ततोऽन्यत्वेनोपलभ्यते, यथा दधि क्षीरादिति ।**

शे० — भाष्यकारीयस्य विकारविकारिणोरन्योन्यमन्यत्वेनानुपलम्भवर्णनस्यानर्थक्यमाशङ्क्याह **अनुमानान्तरमिति** । जगत्, ब्रह्मविकारो न भवति ततोऽन्यत्वेनोपलभ्यमानत्वादित्याद्यनुमानान्तरमित्यर्थः ॥ **वक्तुमिति** । 'सर्वज्ञाद् ब्रह्मणोऽन्यत्वम्' इत्यादिनेति शेषः ॥ **व्याप्तिनिश्चयायेति** । अन्वयव्याप्तिनिश्चयायेत्यर्थः ॥ **अपि चेतीति** । निपातसमुदाय इत्यर्थः । अतोऽन्यतरेणैव समुच्चयसिद्धेरन्यतरवैयर्थ्यमितिशङ्का निरस्ता भवति । प्रकृतोपयोगितया व्याचष्टे **अन्यविकारत्वमिति** । क्षीरदध्नोरन्यतादर्शनस्यानुभवसिद्धत्वात्कथं तन्निषेध इत्यतो न क्षीरदध्नोरन्यत्वदर्शननिषेधः किन्तु विकारविकारिभावापन्नयोरेव तयोरिति नानुपपत्तिरिति भावेन तथैव व्याचष्टे **यस्येति** । जगतो ब्रह्मणोऽन्योन्यत्वेनानुभवस्य हेतुत्वस्य मूलारूढतासिध्यर्थं हिशब्दं यस्मादित्यर्थत्वेन व्याचष्टे **हि शब्द इति** । साध्यानुक्त्या प्राप्तां न्यूनतां शेषपूरणेन परिहरति **तस्मादिति** ।

प० — 'न चान्यस्य' इत्यादिवाक्यमवतारयति **अनुमानान्तरमिति** ।

श्री० — **व्याप्तिनिश्चयाय** अन्वयव्याप्तिनिश्चयाय । कस्माच्चित्क्षीरादन्यता कस्यचिद्दध्नो दृश्यत एवेत्यतो 'यस्य' इत्युक्तम् ॥ **व्यावृत्तिरिति** । विकारविकारिभावोपेतस्थलेऽविद्यमानतेत्यर्थः । विकारविकारिभावाभावेन व्याप्तिरिति यावत् ।

सु० — **यद्वा जगद्ब्रह्मणी नान्योन्यविकारविकारिणी । अन्योन्यमन्यत्वेनोपलभ्यमानत्वात् । घटपटवदिति प्रयोगः । न चायमसिद्धो हेतुः, यः सर्वज्ञ इति ब्रह्मणः सर्वज्ञत्वश्रवणात् । ज्ञानकार्यस्य सर्वथाऽप्यनुपलम्भेन जगतो ज्ञानाभावानुमानात् । विरुद्धधर्माधिकरणयोश्चान्योन्यमन्यत्वोपलम्भनियमादिति भावेनोक्तम्** सर्वज्ञादिति । **ननु विकारविकारिणोर्भेदाभेदाभ्युपगमात् कथमयं हेतुरिति चेन्न, भेदेनैवोपलम्भस्य हेतुत्वात् । तर्हि दृष्टान्तः साधनविकलः । सर्वत्र मया भेदाभेदाभ्यां सङ्करस्याभ्युपगमात् । तत्किं त्वदभ्युपगममात्रेण घटपटयोरभेदः, उतोपलम्भात् । नाद्यः, मदभ्युपगमेन शुद्धभेदस्यैव ग्राह्यत्वात् । न द्वितीयः असिद्धेः । अभेदानुपलम्भो वा हेतुत्वेन विवक्षितः ।**

शे० — अस्मिन्पक्षे 'न चान्यस्यान्यरूपत्वम्' इति विकारविकारिणोरन्योन्यमन्यत्वोपलम्भवर्णनं भाष्यकारीयमनर्थम् जगतो ब्रह्मान्यत्वोपलम्भवर्णनमात्रेण प्रकृतप्रमेयनिर्वाहात् इत्यतस्तत्स्वारस्याय प्रका-

रान्तरेण प्रयोगप्रकारमाह **यद्वेति** । ब्रह्मणोऽन्यत्वं जगतो ह्यनुभूयत इत्येतावता पूर्वभाष्ये सर्वज्ञादित्यंशवैयर्थ्यमित्यतोऽसिद्धिपरिहारार्थत्वान्न तदिति भावेनासिद्धिमाशङ्कते **न चेति** । कथं सर्वज्ञादित्यनेनासिद्धिशङ्कापरिहार इत्यतोऽभिप्रायगत्येत्यभिप्रायेण सर्वज्ञादित्यस्याभिप्रायमाह **य इत्यादिना** ॥ **कथमयं हेतुरिति** । मृद्घटादौ सत्यप्यन्योन्यमन्यत्वोपलम्भे विकारविकारिभावस्य विद्यमानत्वात्तत्रानैकान्त्यम् । नचान्योन्यमन्यत्वोपलम्भस्य हेतोरेव तत्रागमनात्कथमनैकान्त्यमिति वाच्यम् । विकारविकारिणोर्भेदाभेदावभ्युपगच्छताऽन्योन्यमन्यत्वानुपलम्भस्य शङ्कितुमशक्यत्वादिति भावः । नान्योन्यान्यत्वोपलम्भमात्रं हेतुः किं नामान्योन्यमन्यत्वेनैवोपलम्भः । न च मृद्घटादौ सोऽस्ति । अभेदेनाप्युपलम्भस्य सत्त्वात् । ततो नानैकान्त्यमित्याह **नेति** । ननु न भेदेनैवोपलम्भो हेतुः, तथा सति दृष्टान्तस्य साधनवैकल्यापातात् । किन्तु भेदोपलम्भमात्रमेव । तच्च मृद्घटादावस्त्येवेत्यनैकान्त्यतादवस्थ्यमेवेत्यभिप्रायेण शङ्कते **तर्हीति** ॥ **सङ्करस्येति** । घटस्वरूपेणात्यन्ताभेदः पटस्वरूपेण भेदाभेदाविति घटपटस्वरूपयोः सङ्करस्याभ्युपगमादित्यर्थः । 'एतच्च मोक्षाभावप्रसङ्गात्तथा हि' इत्यादिग्रन्थे मूल एव स्पष्टम् ॥ **असिद्धेरिति** । घटपटयोरभेदोपलम्भासिद्धेरित्यर्थः । अस्मिन्पक्षे दृष्टान्ते साधनवैकल्यपरिहारप्रयासगौरवं मनसि निधाय प्रकारान्तरमाह **अभेदानुदालम्भो वेति** । ततश्च विकारविकारिणोर्मृद्घटयोरभेदानुपलम्भाभावेन हेतोरेवागमनान्नानैकान्त्यम् । घटपटयोरभेदानुपलम्भसद्भावान्न दृष्टान्ते साधनवैकल्यमपीति भावः ।

---

म० — **भेदेनैवोपलम्भस्य हेतुत्वादिति** ॥ अत्र भेदेनेति तृतीया हेतौ सहयोगे वा विवक्षिता न प्रकारे । तथा सत्यभेदप्रकारानुपलम्भे सतीत्यवधारणबलेन लाभे वक्ष्यमाणसाधनवैकल्यशङ्काऽनवकाशप्रसङ्गात् । हेतुत्वाद्यर्थत्वे तु भेदेनैव जायमानः सहविद्यमानो वा उपलम्भो न त्वभेदेनेत्यर्थलाभेऽभेदस्याविद्यमानत्वाभेदेनोपलम्भत्वाभ्यां भेदः । भावे सति भेदोपलम्भस्य हेतुताया विवक्षायां साधनवैकल्यशङ्कावकाश इति ज्ञातव्यम् ।

प० —शङ्कते **तर्हीति** । तत्र हेतुः **सर्वत्रेति** । **मया** परिणामवादिना । निराह **तत्किमिति** ।

या० — **सङ्करस्येति** । घटो हि घटस्वरूपेणात्यन्ताभिन्नः पटादिना च भिन्नाभिन्न इति घटपटस्वरूपयोः सङ्करस्याभ्युपगतत्वादित्यर्थः ।

श्री० — **भेदाभेदाभ्युपगमादिति** । तथा चान्योन्यमन्यत्वेनोपलम्भो विकारविकारिभावसत्वेऽप्युपपद्यते । तथा हि । भेदाङ्गीकाराद्धेतोरुपपत्तिः । अभेदाङ्गीकारात्साध्याभावस्याप्युपपत्तिरितिभावः ।

च० — **भेदाभेदाभ्यां सङ्करस्येति** । घटस्य घटस्वरूपेणात्यन्ताभेदः घटस्वरूपेण भेदाभेदाविति घटपटस्वरूपयोः सङ्करस्याभ्युप्यगमादित्यर्थः । ननु भेदेनैवोपलभ्यमानत्वमभेदप्रकारकोपलब्ध्यविषयत्वेसति

भेदप्रकारकोपलब्धिविषयत्वरूपं, तस्य च हेतुत्वे उत्तरदलवैयर्थ्यमित्यरुचिमनुसन्दधान आह **अभेदानुपलम्भो वेति** ।

मु०— **नन्वयमसिद्धो हेतुः । जगत् ब्रह्मणाऽभिन्नं सत्त्वाद्ब्रह्मवदित्यनुमानेनाभेदोपलम्भादिति चे(त्)न्न । खर्वं स्वर्णेनाभिन्नं, सत्त्वात्स्वर्णवदित्याभाससमानयोगक्षेमत्वादित्याह** अभेद इति ।

अनु० अभेदः सत्त्वमात्रेण स्यात्खर्वस्वर्णयोरपि ॥

**यदि जगद्ब्रह्मणोः साध्येत तर्हीति शेषः । खर्वम् अयः खर्परं वा । नन्विदमिष्टमेव । खर्वसुवर्णयोरभेदस्य मयाऽङ्गीकृतत्वादिति चेन्न । अभेदशब्देन भेदाभावस्य विवक्षितत्वात् । अत्र प्रमाणविरोध इति चेत् । जगत् ब्रह्मणोऽत्यन्तं भिद्यते तत्स्वरूपानुगम(ति शून्यत्वादिति, त्वदनुमानस्यापि, प्रमाणविरोध इति समं समाधानम् । अत्यन्तभेदो मम न क्वापीत्यप्रसिद्धविशेषणतेति चेन्न । मोक्षाभावप्रसङ्गात् । तथा हि । ज्ञानेन निवृत्तकर्मणा च मोक्षोऽभ्युपेयते । त(च)त्र ज्ञानमज्ञानमपि भवति । निवृत्तं कर्म प्रवृत्तमपि भवतीति कथं मोक्षसाधनं स्यात् । ज्ञानत्वादिना तद्भावेऽज्ञानादेरपि (तद्भावः) तथात्वं स्यात् । ज्ञानादिकं ज्ञानादिस्वरूपेणात्यन्ताभिन्नम् अज्ञानादिस्वरूपेण(तु)भिन्नाभिन्नमतो न कार्यसङ्कर इति चेत् । तथाऽप्यज्ञानाद्यभेदेन स्वकार्यस्य कर्तव्यत्वात् । एवं मोक्षोऽपि संसाराभिन्न इत्यमोक्षस्स्यात् । मोक्षात्मता-(ना)सद्भावेन मोक्षत्वे संसारोऽपि तथा स्यात् । यदि व(च)ायमभेदोऽनुपलभ्यमानोऽर्थक्रियासु नोपयुज्यते, तदा व्यसनितयैवाभ्युपगन्तव्यः स्यादिति ।**

शे०— उत्तरवाक्ये, सत्त्वेन खर्वस्वर्णयोरभेदव्युत्पादनमनर्थकमित्यतः प्रकृतहेतोरसिद्धिसाधकानुमानस्याभाससमानयोगक्षेमत्वव्युत्पादनार्थत्वान्नानर्थक्यमित्याशयेनासिद्धिशङ्कामुत्थापयति **नन्विति** । प्रकृतहेत्वसिद्धिशङ्काया मूलारूढत्वसिध्यर्थं योग्यं शेषमाह **यदीति** । यद्यप्यत्र नानङ्गीकृतत्वमेवानिष्टत्वं किं त्वप्रामाणिकत्वादिकं खर्वस्वर्णयोरभेदश्चाप्रामाणिक इति शक्यते वक्तुं, तथाऽपि स्पष्टत्वात्तच्छिष्यैरेवोह्यतामिति भावेन समाधानान्तरमाह **अभेदशब्देनेति** ॥ **विवक्षितत्वादिति** । ततश्च भेदाभेदवादितया खर्वस्वर्णयोरभेदस्येष्टत्वेऽपि न भेदाभावस्येष्टत्वं तस्यानङ्गीकृतत्वादित्यनिष्टापादनमेवेदमिति भावः । बाधाबाधाभ्यां वैलक्षण्यान्नाभाससाम्यमिति भावेन शङ्कते **अत्रेति** । खर्वं स्वर्णेनात्यन्तभिन्नं तत्स्वरूपानुगमशून्यत्वादिति प्रमाणविरुद्धः खर्वस्वर्णयोर्भेदाभाव इत्यर्थः ॥ **त्वदनुमानस्येति** । जगद् ब्रह्मणाऽभिन्नं सत्त्वादित्यनुमानस्येत्यर्थः ॥ **त्वदनुमानस्यापीति** । प्रमाणविरोध इति सम्बन्धः । किं तत्प्रमाणमित्यतस्तत्स्वरूपप्रदर्शनम् **जगदित्यादि** । ततश्च प्रमाणविरोधस्योभयत्राविशिष्टतया नोक्तरीत्या वैषम्यमिति युक्त-

माभाससाम्यमिति भावः ॥ **अत्यन्तेति** । ततश्च व्याप्तिपक्षधर्मत्वासिद्धिभ्यां बाधकतयोपन्यस्तस्यानुमाना-भासतयाऽप्रमाणत्वान्न प्रमाणविरोध इति नाभाससाम्यमिति भावः । यद्यप्येवं पराभिप्रेतानुमानमप्युक्तरीत्याऽप्रसिद्धविशेषणत्वेनाभासतयाऽप्रमाणत्वान्न खर्वस्यापि स्वर्णभेदाभावसाधनं प्रमाणविरूद्धमिति न विशेष इति शक्यते वक्तुं, तथाऽपि तच्छिष्यैरेवोद्यतामिति भावेन तदनुक्त्वा दूषणान्तरमाह **न मोक्षेति** ॥ **ज्ञानमज्ञानमपि भवतीत्यादि** । अन्यथा सर्वत्र भेदाभेदाभ्युपगमवादविरोधप्रसक्तेरिति भावः ॥ **कथमिति** । अज्ञानप्रवृत्तकर्मणोर्बन्धहेतुत्वादिति भावः ॥ **ज्ञानत्वादिनेति** । ज्ञाननिवृत्तकर्मणोर्ज्ञान-निवृत्तकर्मतादात्म्येनेत्यर्थः । **तद्भावे** मोक्षहेतुत्वे ॥ **अज्ञानादेरपीति** । ज्ञाननिवृत्तकर्मतादात्म्यस्य ज्ञाननिवृत्तकर्मणोरिवाज्ञानप्रवृत्तकर्मणोरपि भावादज्ञानप्रवृत्तकर्मणोरपि मोक्षहेतुत्वं स्यादित्यर्थः ॥ **ज्ञानादिकमिति** । उपलक्षणं चैतत् । अज्ञानादिकमज्ञानादिस्वरूपेणात्यन्ताभिन्नं ज्ञानादि-स्वरूपेण भिन्नाभिन्नमित्यपि द्रष्टव्यम् । अत्यन्ताभेद-भेदाभेदव्युत्पादनप्रयोजनमाह **अत इति** । ज्ञानादेरज्ञानाद्यभेदेन बन्धकत्वमज्ञानादेर्ज्ञानाद्यभेदेन मोचकत्वमिति सङ्करो नेत्यर्थः ॥ **कर्तव्यत्वा-दिति** । स्वकार्यकारिण एव अभेदतया तदकारित्वे पारिभाषिकाभेदप्रसक्तेरिति भावः । युक्त्यन्तरेणा-प्यत्यन्तभेदमुपपादयति **एवमिति** ॥ **तथेति** । मोक्षः स्यादित्यर्थः । मोक्षस्येव संसारस्यापि मोक्ष-त्वप्रयोजकमोक्षतादात्म्यसद्भावात् । न च मोक्षस्य मोक्षस्वरूपेणात्यन्ताभिन्नत्वं संसारस्वरूपेण तु भिन्नाभिन्नत्वम् । एवं संसारस्य संसारस्वरूपेणात्यन्ताभिन्नत्वं मोक्षस्वरूपेण तु भिन्नाभिन्न-त्वमिति न सङ्करप्रङ्ग इति वाच्यम् । तथाऽप्यभेदेन मोक्षसंसारयोः परस्परस्वरूपत्वापत्ते-रपरिहारादिति भावः । नन्वभेदेन प्राप्ताव्यवस्थाया भेदेन परिहारो भविष्यति । भेदा-भेदयोर्भेदस्य प्राबल्येन स्वकार्यकारितया अभेदकार्यप्रतिबन्धकतायाश्च सम्भवात्ततो नोक्तदोष इत्यतस्तर्हि किमनेनाजागलस्तनायितेनाभेदेनेत्याह **यदि चेति** ।

**प०** — तत्स्वरूपानुगमशून्यत्वादितीतिशब्दस्य प्रमाणविरोध इत्यन्वयः । बाधकदण्डेनात्यन्त-भेदः कचिदङ्गीकार्यः । तथाच नाप्रसिद्धविशेषणतेति भावेनाह **मोक्षाभावप्रसङ्गादि**त्यादिना **व्यसनि-तयाऽभ्युपगन्तव्यः स्यादि**त्यन्तेन ।

**या०** — अत्यन्तभेदं साधयितुमाह **मोक्षाभावेत्यादि** ॥ **ज्ञानत्वादिनेति** । ज्ञानादितादात्म्ये नेत्यर्थः । **अज्ञानादेरपीति** । ज्ञानादितादात्म्यस्य त्वन्मते तत्रापि सत्त्वादिति भावः । ननुज्ञानादाव-ज्ञानाद्यभेदो न ज्ञानादिकार्यप्रतिबन्धायाङ्गीक्रियतेऽतो नोक्तदोष इत्यत आह **यदि चायमिति** ।

**श्री०** — **प्रमाणेति** । खर्वं स्वर्णाद्भिद्यते तत्स्वरूपानुगमशून्यत्वादित्यनुमानविरोध इत्यर्थः ॥ **अभ्युपेयत इति** । भास्करमते मोक्षस्य ज्ञानकर्मसमुच्चयसाध्यत्वादिति भावः ॥ **ज्ञानत्वादिनेति** ।

ज्ञाननिवृत्तकर्मणोरज्ञानप्रवृत्तकर्मभ्याममभेदेऽपि ज्ञानत्वनिवृत्तकर्मत्वरूपधर्मद्वयसद्भावात्तेन रूपेण तद्भावे मोक्षसाधनत्वेऽङ्गीक्रियमाण इत्यर्थः । **अज्ञानादेरिति** । तथाच अज्ञान-प्रवृत्तकर्मणोरपि तथत्वं मोक्षसाधनत्वं स्यात् । तयोर्ज्ञान-निवृत्तकर्मभ्यां अभेदस्वीकारेण त्वदुक्तमोक्षसाधनत्वप्रयोजकज्ञानत्वादेरज्ञानादावपि सत्त्वादिति भावः ॥ **अत्यन्तेति** । तथाच चेतनरूपेणैव तन्मोक्षसाधनमिति भावः ॥ **भिन्नाभिन्नमिति** । अतो न तेन रूपेण तन्मोक्षसाधनमिति भावः । **स्वकार्यस्य** मोक्षजननरूपकार्यस्य । अमोक्षः स्यादिति शेषः ॥ **मोक्षात्मतेति** । तथा च यदि मोक्षसंसारयोरभेदेऽपि मोक्षत्वस्य सत्त्वात्तेन रूपेणेष्टत्वं तर्हि संसारस्यापीष्टत्वं स्यात् । मोक्षात्मकत्वस्य सत्त्वादिति भावः ।

**च०—तद्भावे** मोक्षसाधनत्वे । **अज्ञानादेरपीति** । ज्ञानादितादात्म्यस्य त्वदीयनये तत्राप्युपगत्या मोक्षसाधनत्वं प्रसज्येतेति भावः । **कार्यसङ्करः** ज्ञानस्याज्ञानकार्यकारित्वमज्ञानस्य च ज्ञानकार्यकारित्वमित्येवं रूपः ।

**सु०— ब्रह्मस्वरूपानुगतिशून्यत्वान्न तत्परिणामोऽयं प्रपञ्च इत्युक्तम् । तत्र किं सर्वस्वरूपानुगतिशून्यताऽभिप्रेता, उत किञ्चिदनुगमशून्यता । नाद्यः । सर्वानुगमाभावेऽपि घटादीनां मृदादिविकारत्वदर्शनात् । न द्वितीयः ; सत्त्वानुगमेन विकारविकारिभावोपपत्तेरित्यत आह** अभेद इति । अभेदो **विकारविकारिभावः** ।

**शे०—** सत्त्वानुगमेन विकारविकारिभावसाधने आभाससाम्योपदर्शनार्थत्वाच्च 'अभेदः सत्त्वमात्रेण' इत्युत्तरग्रन्थस्य न वैयर्थ्यमित्यभिप्रेत्यासङ्गतत्वात्परेण सत्त्वानुगमेन विकारविकारिभावसाधनमेव न कर्तव्यम्, न च ब्रह्मस्वरूपानुगतिशून्यत्वान्न प्रपञ्चस्य ब्रह्मपरिणामत्वमित्यनुमानस्य सत्प्रतिपक्षोपदर्शकतया सङ्गतत्वमिति वाच्यम् । तस्यानुमानस्य पूर्वत्रानुक्ततया तत्रास्य प्रतिपक्षत्वायोगात् । यथाकथञ्चिदुक्तत्वेऽपि वा तत्र सर्वस्वरूपानुगमशून्यत्वस्यैव विकारविकारिभावाभावसाधकतयाऽभिमतत्वेन तत्र सत्त्वानुगममात्रेण प्रतिपक्षस्य कर्तुमशक्यत्वादित्यास्तस्यानुमानस्य सिद्धान्त्यभिमतत्वोपदर्शनेनासङ्गतिं परिहरन्नेव स्वरूपानुगतिशून्यत्वहेतौ सम्भावितं विकल्पं प्रदर्श्याऽद्यं प्रदूष्य द्वितीये प्रतिपक्षशङ्कामुत्थाप्य तत्रातिप्रसङ्गसमर्पकतयोत्तरग्रन्थं योजयितुं तावदनुवदति **ब्रह्मेति** । केचित्तु सत्त्वमात्रेण कारणस्वरूपानुगतिमत्त्वाभ्युपगमेऽतिप्रसङ्गाभिधायकत्वाच्चाभेदः सत्त्वमात्रेणेत्यादेर्वैयर्थ्यमिति भावेन प्रयोजनाभावेन परेण कारणस्वरूपानुगतेरेवावक्तव्यत्वाद्वक्तव्यत्वे वा सत्त्वमात्रेण तस्यावक्तव्यत्वेऽतिप्रसङ्गाभिधानस्यासङ्गतिप्रसङ्गात्तत्सङ्गमयितुं प्रयोजनप्रदर्शनेन कारणस्वरूपानुगतेरवश्यवक्तव्यत्वं सर्वस्वरूपानुगत्य-

सम्भवेन सत्त्वमात्रेणैव च तस्या अवश्याश्रयणीयत्वं च व्युत्पाद्य तत्रातिप्रसङ्गप्रदर्शकतयैत-द्वाक्यं योजयितुं भूमिकामारचयति ब्रह्मेत्यादिनेत्याहुः ॥ **उक्तमिति** । 'नाचेतनविकारोऽपि चेतनः स्यात्कदाचने'त्यनेनेत्यर्थः । ततश्च सिद्धान्तीयानुमाने प्रतिपक्षव्युत्पादनार्थत्वात्सत्त्वानुगमेन विकारविकारिभावसाधनं परस्य नासङ्गतमिति भावः । ननु सर्वस्वरूपानुगतिशून्यत्वमेव ब्रह्मजगतो-विकारविकारिभावाभावसाधकतया सिद्धान्तिनोऽभिमतं, तत्कथं तत्रायं प्रतिपक्ष इत्यतो न तस्मिन्पक्षेऽयं प्रतिपक्षः किन्तु यत्किञ्चिदनुगमशून्यत्वपक्ष एवेत्यतो नानुपपत्तिरित्यभिप्रेत्यात्र संभावितं विकल्पद्वयं प्रदर्श्य दूषणान्तरेणाद्यं प्रदूष्य द्वितीये प्रतिपक्षशङ्कामुत्थापयितुं विकल्पयति **तत्र किमिति** । केचित्तु हेत्वसिद्धिव्युत्पादनार्थत्वात्कारणस्वरूपानुगतिवर्णनं परस्यावश्यकमेवेत्युक्तमिति पूर्ववाक्यतात्पर्यमुक्त्वा तथाऽपि सत्त्वमात्रेण कारणस्वरूपानुगमवर्णनमनर्थकमित्यतः सर्वप्रकारेण कारणस्वरूपानुगतिशून्यत्वस्यैव हेतुत्वात्कथमसिद्धिरिति शङ्कापरिहारार्थं तदिति भावेन तं पक्षं दूषयितुं विकल्पोपदर्शकतया तत्रेति-वाक्यमवतार्य व्यभिचारासिद्धिभ्यां पक्षद्वयदूषणपरतयोत्तरग्रन्थार्थमाहुः ॥ **इत्यत आहेति** । इत्यतोऽ-प्याहेत्यर्थः । प्रकृतयोजनोपयोगितयाऽभेदशब्दं व्याचष्टे **अभेद इति** । अनेन जगद् ब्रह्मविकारस्त-त्सत्तानुगतिमत्त्वादिति परानुमानस्य खर्वं स्वर्णविकारस्तत्सत्तानुगतिमत्त्वादित्याभाससाम्यमुक्तं भवति ।

**प०**— जगद्ब्रह्मणी नान्योन्यविकारविकारिणी अन्योन्यमभेदेनानुपलभ्यमानत्वादिति हेतोः असिद्धिनिरासकत्वेन योजितमेवार्धं ब्रह्मस्वरूपानुगतिशून्यत्वादिति हेत्वसिद्धिनिरासकतयापि योजयितुमाह **ब्रह्मस्वरूपानुगतिशून्यत्वादिति ॥ सर्वानुगमाभावेपीति** । पिंडाकारत्वाल्पपरिमाणत्वादेरनुगत्य-भावादिति भावः । 'यदि जगद्ब्रह्मणोस्तर्हि' इतिपदानामध्याहारेण पूर्ववद्योजना सुशकेत्यभेदपदार्थमेवाह **अभेदो विकारविकारिभाव इति** ।

**या०— इत्यत आहेति** । जगत् ब्रह्मविकारः सत्तानुगतिमत्त्वादिति पराभिप्रेतानुमानस्याति-प्रसङ्गरूपतर्कपराहतिमाहेत्यर्थः ।

**च०**— प्रपञ्चपक्षक-ब्रह्मपरिणामत्वाभावसाध्यक-तत्स्वरूपानुगमशून्यत्वहेतुकानुमाने तत्स्वरूप-वृत्तिव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकसंबन्धानुयोगित्वाभावो हेतुतयाभिप्रेयते तद्वृत्तिप्रातिस्विकधर्मा-वच्छिन्नप्रतियोगिताकतदनुयोगित्वाभावो वेतिकल्पद्वयाभिसंधिपूर्विकामाद्येऽनैकात्यं द्वितीये जगत् ब्रह्म-विकारः सत्तानुगतिमत्वादिति प्रतिरोध इति शङ्कां प्रतिरोधानुमान आभाससाम्य-लक्षणातिप्रसङ्गरूपतर्क-पराहत्याऽपहस्तयते **इत्यत आहेति** ।

**सु०— ननु न सुवर्णगतं सत्त्वं खर्वेऽनुगतम् । तत्कथं(अयं) प्रसङ्गः । तर्किं ब्रह्मसत्त्वमेव वियदादीनाम् । अद्धेति चेन्न, प्रमाणाभावात् । 'प्राणा वै सत्यं तेषामेष सत्यम्' इत्यादिश्रुतेः**

**प्राणसत्यत्वस्य ब्रह्माधीनतार्थत्वोपपत्तेः । ब्रह्मण एव सामान्यसत्ता वियदादावनुगतेति चेत्तर्हि कथं न स्वर्णसत्ता खर्वेऽनुगता ।**

शे०— ननु खर्वे सत्त्वप्रत्ययस्य तत्स्वरूपसत्त्वविषयकत्वेन स्वर्णगतसत्त्वावलम्बित्वाभावान्न तत्र स्वर्णसत्तानुगतिमत्त्वसिद्धिरित्यसिद्धेर्न साम्यमिति शङ्कते **नन्विति** । किमत्र सत्त्वमबाध्यत्वं सत्ता-सामान्यं वेति विकल्पं मनसि निधायाद्ये तर्हि वियदादावपि सत्प्रत्ययस्य तत्स्वरूपसत्त्वावलम्बित्वेन ब्रह्मसत्त्वावलम्बित्वाभावान्न तत्सत्तानुगमो वियदादावपीत्यसिद्धिरेवेति युक्तं साम्यमित्यभिप्रेत्य गूढाभि-सन्धिः पृच्छति **तत्किमिति** । प्राणा वै सत्यं तेषामेष सत्यम्, इत्यादौ ब्रह्मसत्त्वातिरेकेण प्रपञ्च-सत्त्वाभाववर्णनाद्वियदादिषु सत्प्रत्ययो न तत्स्वरूपसत्त्वावलम्बी, किन्तु ब्रह्मस्वरूपसत्तावलम्ब्येवेति नासिद्धिरिति भावेन गूढाभिसन्धिः शङ्कते **अद्धेति चेदिति** । स्यादेवं यदि ब्रह्मसत्त्वव्यतिरेकेण प्रपञ्चे सत्त्वाभावः सिद्धः स्यात् । न चैतदस्ति । प्रमाणाभावेन तस्यैवासिद्धेः अन्यथा उक्त एवातिप्रसङ्ग इति भावेन परिहरति **प्रमाणेति** । दर्शनीं पराभिप्रेतप्रमाणस्य सावकाशत्ववर्णनेन पराभिसन्धि मुन्मूलयति **प्राणा वा इत्यादि ॥ ब्रह्माधीनतार्थत्वोपपत्तेरिति** । राजराजो देवदेवो मन्मथमन्मथः पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलं, प्राणस्य प्राणश्चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रम्, इत्यादौ राजत्वदेव-त्वादीनामन्यत्र ज्ञानाबाध्यत्वे सत्यप्यन्याधीनत्वमात्रेणापकृष्टतया तथोक्तिदर्शनादन्यथा तत्राप्यन्यत्र राजत्वदेवत्वादेः कल्पितत्वप्रसङ्गादिति भावः । सत्तासामान्यमेव सत्त्वमिति द्वितीयं पक्षं दूषयितुमुत्था-पयति **ब्रह्मण एवेति ॥ तर्हीति** । सत्तासामान्यस्यैव सत्त्वशब्दार्थत्व इत्यर्थः । ततश्च खर्वस्यापि स्वर्ण-विकारत्वप्रसङ्गो वज्रलेपायित इति भावः ।

श्री०— 'प्राणा वै सत्यं तेषामेष वै सत्यम्' इति श्रुत्या तेषां प्राणानामपेक्षया एष एव भगवान्सत्यः परमार्थिकसत्त्ववान् । प्राणास्तु ब्रह्मसत्त्वेनैव सत्त्ववन्तो न तदतिरिक्तसत्तावन्त इति प्रति-पादनात्प्रमाणाभावोऽसिद्ध इत्याशङ्क्याह **प्राणा वा इति ॥ तर्हीति** । सत्ताया एकत्वादिति भावः ।

**सु०— अथ मन्यसे कारणमेव कार्यात्मना भवतीति परिणामवादिनां मतम् । ततश्च कारणं यत्स्वभावाव्यभिचारि तदनुगमः कार्येऽवश्याभ्युपगन्तव्यः । अन्यथा कारणमेव कार्या-त्मना भवतीति रिक्तं वचः स्यात् । अव्यभिचरितस्वभावाननुगमे कारणस्यैवाननुगमप्राप्तेः । न च सन्मात्रस्वभावं सुवर्णम् । येन खर्वं तद्विकारः स्यात् । किन्तु तदव्यभिचारिसुवर्णत्वाद्यनुगमे सतीति । एवं तर्हि जगदपि कथं ब्रह्मपरिणामः स्यात् । न हि सन्मात्रस्वभावं ब्रह्म । किन्तु विज्ञानमानन्दं ब्रह्मेत्यादिश्रुत्या विज्ञानादीनामपि तदव्यभिचारिस्वभावत्वावगमात् । न च**

विज्ञानानन्दाद्यनुगमः प्रपञ्चेऽस्तीति समम् ।

**ननु च क्षीराव्यभिचारिस्वभावमाधुर्यानुगतिविधुरं दधि तद्विकारो दृष्टमिति चेन्न । सत्कार्यवादभङ्गप्रसङ्गात् । किंच क्षीरकार्यं दधीति निश्चये न माधुर्यं क्षीरस्वभाव इति कल्प्यते । माधुर्यस्य क्षीरस्वभावतानिश्चये वा क्षीरविनाशे तत्कारणस्य दध्युपादानत्वं कल्प्यत इति न दोषः । अपि चागमैरनुमानैश्च ब्रह्मणो निर्विकारत्वे सिद्धे सति अप्रच्युतस्वरूपस्वभावस्यैव (ब्रह्मणो) जगदुपादानत्वं यो मन्यते तं प्रत्येतौ प्रसङ्गविपर्ययावुक्ताविति को विरोधः । एतेन प्रधानस्य जगदुपादानत्वेऽप्ययं समानो दोष इति निरस्तम् ।**

**शे०** — ननु मृदादिविकारे घटादौ कारणत्वाभिमताव्यभिचारिस्वभावानुगमदर्शनेन तदव्यभिचारिस्वभावानुगमस्योपाधेः साध्यव्यापकत्वात्तत्सत्तानुगतिमति खर्वे स्वर्णाव्यभिचारिस्वभावानुगत्यभावेन साधनाव्यापकत्वेन खर्वस्य स्वर्णविकारत्वानुमानस्य सोपाधिकत्वेन तद्विपर्ययेण सत्प्रतिपक्षितत्वेन दुर्बलतया न साम्यमित्याशङ्क्य जगतो ब्रह्मविकारत्वानुमानस्यापि तत्साम्यादाभाससाम्यमवर्जनीयमित्याह **अथेत्यादिसममित्यन्तेन ग्रन्थेन** ॥ **न चेति** । सत्त्वस्यातिप्रसक्तत्वादिति भावः ॥ **न हीति** । सत्त्वस्यातिप्रसक्तत्वादिति भावः । तर्हि निःस्वभावत्वापत्तिरित्यभिप्रेत्य पृच्छति **किं त्विति** । परिहरति **विज्ञानमिति** । अपिरवधारणे । विज्ञानादीनामेवेत्यर्थः ।

**नन्विति** । यद्यप्युक्तरीत्या साध्याव्यापकतया खर्वस्यापि स्वर्णविकारत्वानुमाने तदव्यभिचारिस्वभावानुगमस्यानुपाधित्वप्रसङ्गान्नैतच्छङ्कावकाशः तथाऽपि नेयं पूर्वपक्षिणः शङ्का किन्तु शिष्यस्यैव । तथा च नैते शङ्कासमाधाने युक्ते इति शङ्कावाक्यशेषः ॥ **सत्कार्यवादेति** । तथा च दध्नोऽपि क्षीराव्यभिचारिस्वभावमाधुर्यानुगतिमत्त्वमस्त्येवेति न साध्याव्यापकतेति भावः । दध्नो माधुर्यादिक्षीराव्यभिचारिस्वभावानुगतिमत्त्वं प्रत्यक्षादिबाधितमित्यरुच्या समाधानान्तरमाह **किञ्चेति** ॥ **न दोष इति** । तथा चाद्ये माधुर्यस्य क्षीराव्यभिचारिस्वभावत्वस्यैवाभावात्तदननुगमेऽपि क्षीराव्यभिचारिस्वभावानुगमस्य सत्त्वान्न साध्याव्यापकत्वम् । द्वितीये च क्षीरविकारत्वस्यैवाभावेन साध्यस्यैव तत्राभावान्न दध्नि साध्याव्यापकतेति भावः । अस्मिन्नपि पक्षे सकललौकिकशास्त्रीयव्यवहारसिद्धस्य माधुर्ये क्षीरस्वभावत्वस्य दध्नः क्षीरकार्यत्वस्य च परित्यागः कल्पनीयो भवतीत्यरुच्या पक्षान्तरमाह **अपि चेति** । अत्राप्रच्युतस्वरूपस्येत्यनेन धर्मिपरिवर्ताभावः सूचितः । अप्रच्युतस्वभावस्येत्यनेन धर्मपरिवर्ताभावः सूचितः । तदुभयोपपादनार्थमागमैरित्याद्युक्तम् । 'अविकारः सदा शुद्धः' इत्याद्यागमैः 'न चेतनविकारः स्यात्' इत्याद्यनुमानैश्चेत्यर्थः । स्वरूपस्वभावयोः प्रच्युतौ विकारित्वप्रसक्त्याऽविकारित्वागमादिबाधान्न तयोः प्रच्युतिरिति भावः । यो मन्यत इत्यत्र सत्त्वानुगममात्रेणेति शेषः । **प्रसङ्गविपर्ययाविति** । यदि जगत् सत्त्व-

मात्रेणाप्रच्युतस्वरूपस्वभावस्यैव ब्रह्मणो विकारः स्यात्तदा खर्वमप्युक्तविधस्वर्णविकारः स्यादित्यतिप्रसङ्गः । तत्र शङ्कितोपाधिव्यतिरेकेणोक्तरूपविकारत्वविपर्ययश्चेत्प्रकृतेऽपि तद्विपर्ययेण विशिष्टविकारत्वविपर्ययः स्यादितीमौ प्रसङ्गविपर्ययावित्यर्थः ॥ **को विरोध इति** । ततश्चानिवर्त्यान्यथाभाव इत्येतद्व्याख्यानोक्तरीत्या दध्नि प्रच्युतस्वरूपस्वभावक्षीरविकारत्वस्यैव सत्त्वेनाप्रच्युतस्वरूपस्वभाववस्तुविकारत्वस्यैवाभावेन तत्र कारणाव्यभिचारिस्वभावमाधुर्याननुगतिर्न दोषायेति भावः ॥ **एतेनेति** । ब्रह्मणः सत्त्वानुगममात्रेण जगदुपादानत्वे उक्तातिप्रसङ्गकथनेनेत्यर्थः ॥ **अयमिति** । यदि जगत् प्रधानविकारः स्यात्खर्वमपि स्वर्णविकारः स्यादित्ययमित्यर्थः ॥ **निरस्तमिति** । तत्र प्रच्युतस्वरूपस्वभावस्यैव प्रधानस्य जगदुपादानत्वेनाप्रच्युतस्वरूपस्वभावस्य सत्त्वानुगममात्रेण विकारविकारिभावानभ्युपगमेन तदप्रसङ्गादित्यर्थः ।

स०—यदि जगत् ब्रह्मविकारः स्यात्तर्हि तदव्यभिचारिस्वभावानुगतिमत्स्यादिति तर्के, जगत् ब्रह्मविकारो न भवति तदव्यभिचारिस्वभावानुगतिविधुरत्वादित्यनुमाने च क्षीराव्यभिचारिस्वभावमाधुर्यानुगतिविधुरं दधि तद्विकारो दृष्टं इत्युक्तं व्यभिचारं प्रकारान्तरेण परिहरति **अपि चेति** । आगमैरनुमानैश्चेत्यादिकं जगतो ब्रह्माविकारित्वस्य प्रमितत्वात्प्रसङ्गस्य विपर्ययापर्यवसायित्वमिति शङ्कानिरासार्थं वक्ष्यमाणप्रसङ्गसमीकरणव्युदासार्थं चेति ज्ञातव्यम् । **अप्रच्युतस्वरूपस्यैवेति** । अप्रच्युतस्वरूपस्यैव दधिभाव इत्युक्तत्वात् । **प्रसङ्गविपर्ययाविति** । तर्कानुमाने इत्यर्थः । अन्यथा विपर्ययस्यापि तर्काङ्गतया प्रसङ्गग्रहणेनैव गृहीतत्वात्पृथगुक्तिरयुक्ता स्यात् । **एतेनेति** । ब्रह्मणो निर्विकारत्वस्य प्रमितत्वेन प्रसङ्गस्य विपर्ययपर्यवसायित्वाभावेनेत्यर्थः । **समानो दोष इति** ॥ यदि जगत् प्रधानोपादानकं स्यात् तर्हि तदव्यभिचार्यव्यक्तत्वाद्यनुगतिमत्स्यात् । सत्त्वमात्रानुगमेन विकारिविकारभावे चातिप्रसङ्गः । अतो न प्रधानमपि जगदुपादानं स्यादिति दोषः समान इत्यर्थः । एतदुक्तं भवति स्यादयं दोषः समानो यदि ब्रह्मवत् प्रधानमपि निर्विकारत्वेन प्रमितं स्यात् न चैवम्, प्रत्युत विकारित्वेनैव प्रमितं, अतः प्रधानेन प्रसङ्गस्य विपर्ययापर्यवसायित्वान्न समानत्वं दोषस्येति ।

प० — **सत्कार्येति** । क्षीरेऽविद्यमानाऽऽम्लत्वस्य दध्न्यङ्गीकारापत्तेरिति भावः । ननु कथं सत्कार्यवादभङ्गभिया माधुर्यस्य क्षीरस्वभावस्य दध्न्यनुगत्यङ्गीकारे अनुभवविरोधनिरासः । कथं वा क्षीरपरिणामे क्षीरस्वभावानुगत्यनुपलम्भ इत्यत आह (किञ्च) **क्षीरकार्यं दधीति निश्चय इति** । ननु क्षीरस्य माधुर्यस्वभावत्वं सर्वानुभवसिद्धमित्यत आह **माधुर्यस्येति** । ननु क्षीरमेव दध्यासीत् । 'पयो वाव मण्डम्भवती'त्यादिलौकिकवैदिकव्यवहारात्पयस एव दधिवि(कार)कारिता वाच्या । अन्यथा मृत्पिण्डघटादावप्येवमेवापत्तेरिति मन्वानं प्रत्याह **अपि चागमैरिति** । 'अविकारः सदा शुद्ध'

इत्यादिप्रागुक्तैरागमैः चेतनत्वाद्यनुमानैश्चेत्यर्थः ॥ **एताविति** । 'अभेदः सत्त्वमात्रेण स्यात् खर्वस्वर्णयोरपी'तिवाक्योक्तौ । यद्यपि यदि जगद्ब्रह्मणोस्सत्त्वमात्रेण विकारविकारिभावः स्यात्, तर्हि खर्वस्वर्णयोरपि विकारविकारिभावः स्यादित्यापादनरूपप्रसङ्ग एव तत्रोक्तो न विपर्ययोपि, तथापि न चैवं जगद्ब्रह्मणी न विकारविकारिभाववती इति विपर्ययस्याभिमततयोक्तप्रायत्वादुक्तावित्युक्तम् ॥ **को विरोध इति** । व्यभिचारासिद्ध्यादिविरोधो नास्तीत्यर्थः ॥ **एतेनेति** । य एवं मन्यते तं प्रत्येतौ प्रसङ्गविपर्ययावित्युक्तत्वेन । यदि जगत्प्रधानयोः सत्त्वमात्रेण विकारविकारिभावः तर्हि खर्वस्वर्णयोरपि स स्यादित्यापादनरूपो दोषः समान इति निरस्तमित्यर्थः । प्रधानस्य प्रच्युन(स्वरूप)स्वभावस्यैव जगदात्मना परिणामाङ्गीकारादिति भावः ।

**या०**— ननु तद्विकारत्वे तत्स्वभावाव्यभिचारिधर्मानुगमः प्रयोजकः । स च न खर्वेऽतो न खर्वं सुवर्णविकार इति भवदीयतर्कस्य सोपाधिकत्वादुपाधिविपर्ययेण सत्प्रतिपक्षतेत्याशयेन शङ्कते **अथ मन्यस इति** । तर्हि त्वदनुमानेऽपि स एवोपाधिरिति तद्विपर्ययेण सत्प्रतिपक्षता स्यादित्याशयेनाह **एवं तर्हीत्यादिना** ।

ननु तद्विकारत्वे तत्स्वभावाव्यभिचारिधर्मानुगमो न प्रयोजकः । क्षीरादिविकारे दध्यादौ क्षीरादिस्वभावमाधुर्यादिविधुरे व्यभिचारात् । अतः कथं भवदीयतर्के तदीयं उक्तोपाधिविपर्ययेण सत्प्रतिपक्षतावचनं, तदीयानुमाने चोक्तोपाधिविपर्ययेण भवदीयं सत्प्रतिपक्षतावचनमित्याशयेन तटस्थः शङ्कते **नन्विति** । सत्कार्यवादभङ्गप्रसङ्ग दित्येतद्वक्ष्यमाणकल्पनाद्वयोपपादकतयोक्तम् । अतः सत्कार्यवादभङ्गप्रसङ्गादित्यनन्तरं किञ्चेति पाठः प्रामादिक इति ध्येयम् ॥ **तत्कारणस्येति** । क्षीरारम्भकसूक्ष्मभागस्येत्यर्थः । ननु न मया तटस्थेन सत्कार्यवादोऽभ्युपगम्यते येन तद्भङ्गभीत्योक्तकल्पनाद्वयेऽन्यतराश्रयणेन परिहार इत्यस्वरसादाह **अपि चेति** । यद्वा माधुर्यादिविशेषस्य क्षीरस्वभावत्वानङ्गीकारे अनुभवविरोधः क्षीरस्य दध्युपादानत्वानङ्गीकारे वा 'एतेन ह वा व पयो मण्डं भवति' इति श्रुतिविरोधः, इत्यरुचेराह **अपि चेति** । **यो मन्यते** सत्त्वानुगममात्रेणेति शेषः । अप्रच्युतस्वरूपस्वभावस्यैव जगदुपादानत्वं कुतो मन्यत इत्यत उक्तम् **आगमैरित्यादि** । यदि ब्रह्मस्वरूपस्य तत्स्वभावस्य वा विकारदशायां प्रच्युतिः स्यात् तदा तन्निर्विकारत्वप्रमाणविरोधः स्यात् । अतोऽप्रच्युतस्वभावस्यापि सत्त्वानुगत्यैवोपादनत्वं मन्यत इति भावः ॥ **प्रसङ्गविपर्ययाविति** । यदि जगत् ब्रह्मविकारः स्यात्तर्हि खर्वमपि स्वर्णविकारः स्यादिति प्रसङ्गः । तत्र शङ्कितोपाधिविपर्ययेण विकारत्वविपर्ययश्चेत्प्रकृतेऽपि तद्विपर्ययेण विकारत्वविपर्यय इतीमौ प्रसङ्गविपर्ययावित्यर्थः ॥ **अतः को विरोध इति** । अयं भावः । न दध्या-

दावुक्तोपाधेर्विकाराव्यापकता शङ्कनीया। अप्रच्युतस्वरूपोपादानकत्वरूपपक्षधर्मावच्छेदेन विकारव्यापकताया विवक्षितत्वात्। दध्यादेश्च प्रच्युतस्वरूपक्षीराद्युपादानकत्वात् तर्कानुमानयोः पक्षीभूते जगत्यप्रच्युतस्वरूपोपादनकत्वरूपं धर्ममुपपादयितुमेव यो मन्यत इत्यन्तस्योक्तत्वात्। तथा चोक्ततर्के तदीयमुपाधिविपर्ययेण सत्प्रतिपक्षतावचनं तदीयानुमानेऽस्मदीयं सत्प्रतिपक्षतावचनं च युक्तमेवेति।

नन्वेवं प्रधानमपि न जगदुपादानं स्यात्। तथात्वे खर्वमपि स्वर्णविकारः स्यादिति प्रसङ्गस्य समानत्वात्। अथ तदव्यभिचरितस्वर्णत्वाद्यनुगत्यभावेन न खर्वस्य स्वर्णविकारता तदा प्रकृतेऽपि जगति प्रधानस्वभावव्यभिचरिताव्यक्तत्वाद्यनुगमाभावेन न प्रधानविकारतेत्युक्तविपर्ययरूपदोषस्यापि समानत्वादित्याशङ्क्य परिहरति **एतेनेति**। उक्तोपाधेरप्रच्युतस्वरूपोपादानकत्वरूपधर्मावच्छेदेनैव विकारव्यापकताया विवक्षितत्वेनेत्यर्थः। प्रधानं तु प्रच्युतस्वरूपमेव जगदुपादानं, महदादिदशायां प्रधानव्यवहारानुपलम्भात्। अतस्तदुपादानके जगत्युक्तोपाधिविपर्ययेणाप्रच्युतस्वरूपोपादानकत्वविशिष्टविकारत्वाभावसाधने सिद्धसाधनम्। विशेषणाभावमादायैव विशिष्टाभावसिद्धिसंभवात्। तथा च नोक्तविपर्ययरूपदोषसाम्यमिति भावः। ब्रह्मोपादनकत्वे तु तत्र विशेषणस्य प्रमितत्वान्न तदभावमादाय विशिष्टाभावपर्यवसानं किन्तु विशेष्याभावमादायैवातो न तत्र सिद्धसाधनतेति द्रष्टव्यम्।

---

**श्री० — सतीति**। तद्विकारः स्यादित्यनुवर्तते। स चानुगमो नास्तीति भावः। प्रपञ्चो न ब्रह्मपरिणामस्तत्स्वभावानुगतिशून्यत्वादित्यनुमाने व्यभिचारमाशङ्कते **ननु चेति**॥ **सत्कार्येति**। कारणात्मना सदेव कार्यं कार्यात्मना व्यज्यत इत्यङ्गीकारे माधुर्यविशेषोपेतदध्नोऽपि क्षीरात्मतया सत्वेन दधिस्वभावभूतमाधुर्यविशेषस्यापि क्षीरस्वभावतयाऽवश्यं वाच्यत्वेन हेतोरेवाभावान्न व्यभिचारः। क्षीरतादशायामनुपलब्धिस्तु घटस्य मृदात्मना सत्त्वेऽपि अनुलब्धिरिवाव्यक्तिप्रयुक्तेति वाच्यमिति भावः। किंचेत्यनन्तरं व्यभिचारं वदनस्तत्रेति शेषः। माधुर्यस्येत्यनन्तरमप्ययं शेषोऽनुवर्तते। **कल्प्यते** अस्माभिः॥ **क्षीरविनाशेति**। आतञ्चनादिना क्षीरस्याऽऽपरमाण्वन्तभङ्गरूपपीलुपाकप्रक्रिययेति शेषः। **तत्कारणस्य** क्षीरकारणस्य। परमाणोः पुनः पाकविशेषेण द्व्यणुकादिप्रक्रमेणेति शेषः। इदं च तार्किकरीत्येति ज्ञेयम्।

**च० —** अथ मृदादिविकारे घटादौ स्वकारणाभिमताव्यभिचारिस्वभावानुगमस्य दर्शनेन तादृशानुगमस्य प्रकृतसाध्यव्यापकतया, तत्सत्तानुगतिमति खर्वादौ पक्षीकृते स्वर्णाव्यभिचारिस्वभावानुगत्यदर्शनेन प्रकृतसाधनाव्यापकत्वाच्च खर्वादौ स्वर्णादिविकारत्वसाधकानुमानस्य तादृशोपाधिव्यतिरेकेण प्रकृतसाध्यव्यतिरेकस्य सुसाधतया प्रतिरोधदूषिततयाऽऽभासत्वान्न तत्साम्यमतादृशब्रह्मविकारत्वसाधकानु-

मानस्येत्याशंक्य प्रपञ्चे ब्रह्मविकारत्वानुमानस्यापि तादृक्प्रतिरोधदूषितत्वनियन्त्रिताभाससाम्यं दुर्निवार-मित्याह **अथेत्यादिकसमर्थमित्यन्तग्रन्थेन** । **न चेति** । सत्त्वस्य घटादिसाधारण्येन स्वर्णस्वभावव्यभिचारित्वादिति भावः । **न हीति** । सत्त्वं घटादौ ब्रह्मस्वभावं व्यभिचरतीति भावः । **विज्ञानादीना-मपीति** । अपिरवधारणार्थः । विज्ञानादीनामेवेत्यर्थः ।

अथ क्षीरादिविकृतिभूतदध्यादौ स्वकारणाव्यभिचारिस्वभावानुगत्यदर्शनेन प्रकृतसाध्याव्यापकत-योपाधित्वस्य दुरुपपादत्वेनोक्तशङ्कासमाहित्योर्निर्दलतां विनेयः शङ्कते **नन्विति**। **सत्कार्यवादेति** । कार्य-कारणयोरैक्येनोत्पत्तेः प्राक् कारणात्मना सदेव कार्यात्मनाऽभिव्यज्यते इति सत्कार्यवादिनां पन्थानमनु-रुन्धानेन पूर्ववादिना क्षीरकार्यत्वेन निखिलावसिते दध्नि तादृशमाधुर्यानुपगतेर्दर्शितवादभञ्जकतया कुंकुमादौ गन्धानुपलब्धेर्व्यञ्जकासमवहितिनिबन्धनतावद्दध्न्यपि तादृशमाधुर्यानुपलम्भस्य घनीभावरूप-दधिभावोत्तरमाधुर्याभावरूपव्यञ्जकाभावनियन्त्रितत्वस्योपेततया दर्शितोपाधेः साध्यव्यापकतायाः निष्प्र-त्यूहत्वादिति भावः । दध्नि तादृग्माधुर्यानुगतिमत्त्वं प्रत्यक्षबाधितमित्यभियुक्तं प्रति समाहित्यन्तरमाश्रयते **किंचेति** । **न दोष इति** । तत्राद्यकल्पे क्षीराव्यभिचारिनिसर्गत्वस्यैव माधुर्येऽनुपगमेन तदव्यभि-चारिशौक्ल्यादिरूपनिसर्गानुगतिसत्त्वान्न साध्याव्यापकत्वं, द्वितीयकल्पे च व्याप्याभिमतपयोविकारत्व-रूपसाध्यस्यैवाभावेन न दध्नि साध्यव्यापकतेत्याशयः । प्रकृतसमाहितावपि निखिललौकिकपरीक्षक-व्यवहारसिद्धस्य माधुर्ये क्षीरनिसर्गत्वस्य दध्नस्तत्कार्यत्वस्य चापन्हवाद्दुःसमाधेय इत्यरुचिमभिप्रेतान् कल्पान्तरमारचयति । **अपि चेति** । इयं च गुरुपादोक्तसरणिर्वाक्यार्थचन्द्रिकाकृत्यनुयायिनी ।

अत्र कतिपये व्याचक्षाणाः सत्कार्यवादभङ्गप्रसङ्गादित्येतत् वक्ष्यमाणकल्पनाद्वयोपपादकतयोक्तमतः सत्कार्यवादभङ्गप्रसङ्गादित्यनन्तरं किं चेति पाठः प्रामादिक इति ध्येयमिति न्यभान्त्सुः । निबन्धान्तर-दिशा सौधाक्षरानुपूर्व्याः सामंजस्यस्य सुसंपादतायां प्रामादिकतां निबध्नानामाशयं न जानीमः । किं चेत्यस्य प्रामादिकत्वे अग्रिम–'अपि चे'त्यस्यापि तथात्वमुपगन्तव्यमेव । न हि किञ्चेत्यप्रयुञ्जाना 'अपि चेति' प्रयुञ्जते । सत्कार्यवादसमर्थनौपयिकाग्रिमकल्पनाद्वयोपपादकतायाः सत्कार्यवादभङ्गप्रसङ्गादित्येतदं-शस्य दुरुपपादत्वाच्च ।

ननु न मया तटस्थेन सत्कार्यवादोऽभ्युपगम्यते येन तद्भङ्गभीत्योक्तकल्पनाद्वयान्यतराश्रयणेन परिहार इत्यरुचेराह 'अपि चेति' इत्यप्यवतारयन्ति ।

**प्रसङ्गविपर्ययाविति** । जगतो ब्रह्मविकारत्वे (स्वर्ग) खर्वस्यापि स्वर्णविकारत्वं स्यादिति प्रसङ्गस्तत्र शङ्कितोपाधिविपर्ययेण विकारत्वविपर्ययश्चेत्तर्हि प्रकृतेऽपि तद्विपर्ययेण विकारत्वविपर्यय इति इमौ प्रसङ्ग-विपर्ययावित्यर्थः । **एतेनेति** । ब्रह्मणः सत्त्वानुगममात्रेण जगदुपादानत्वोपगमेऽतिप्रसङ्गाभिधानेनेत्यर्थः ।

अयं प्रपञ्चो यदि ब्रह्मविकृतिरूपस्तदा तुल्यदिशा खर्वमपि स्वर्णविकारः प्रसज्येतेत्येवंरूपः । **निरस्तमिति** । प्रधानस्य स्वरूपस्वभावप्रच्युत्यैव प्रपञ्चोपादानत्वोरीकारेण तस्य तदप्रच्युतिपूर्वकतदनुपगत्या तदनापत्तेरित्यर्थः ।

**सु० — अथ मतम् । द्विरूपं ब्रह्माभ्युपगम्यते अनन्तानन्दचिदात्मकं सदात्मकं चेति । तत्राद्येन रूपेण निमित्तम् । द्वितीयेनोपादनम् । अतो न कश्चिदुक्तो दोषः । तथा हि । यत्तावदुक्तं निर्विकारत्वं तच्चिच्छक्तिविषयत्वाच्छ्रुत्यादेरदूषणम् । निमित्तकारणेन चिच्छक्तिकेन प्रकृतिप्रधानाद्यभिधानं सच्छक्तिकं ब्रह्म परिणमतीत्यङ्गीकारे न युक्तिविरोधोऽपि सदात्मकस्य जगदुपादानत्वाच्चैतन्याद्यननुगमेऽपि न दोषः । सदनुगमस्य विद्यमानत्वात् । अन्यत्वदर्शनं च न विरुद्ध्यते । यतो यस्मादन्यत्वमुपलभ्यते सर्वज्ञात्, तन्निमित्तमेव नोपादानम् । यच्चोपादानं सद्रूपं न तस्माद्भेदेनोपलभ्यत इत्याशङ्क्याह** भागेनेति ।

**अनु० —** भागेन परिणामश्चेद्भागयोर्भेद एव हि ।

**यदि ब्रह्मणः सद्भागेन परिणामः चिद्भागेन निर्विकारत्वमङ्गीक्रियते, तदा वक्तव्यम्; तयोर्भागयोरभेदो भेदाभेदौ वा । न तावदभेदः द्वयोरपि परिणामित्वादिप्राप्त्या भागद्वयकल्पनावैयर्थ्यात् । नापि भेदाभेदौ,अभेदेन सङ्करप्रसङ्गात् । भेदोऽभेदकार्यं निरुणद्धीति चेत् । किं तर्ह्यप्रयोजकेनाभेदेन , तस्माद्भागयोरत्यन्तभेद एवाङ्गीकरणीयः ।**

**शे० —** ननु ब्रह्मणो द्वैविध्यकल्पनस्य प्रकृतानुपयोगितया तच्छङ्काया एवानुत्थानात्तन्निराकरणपरोत्तरग्रन्थानर्थक्यमित्यतो ब्रह्मण उपादानत्वे प्रागुद्भाविताशेषदोषनिवर्तकतया द्वैविध्यकल्पनस्य तच्छङ्काया उत्थानमुपपद्यत इति भावेन शङ्कामुत्थाप्य प्रागुद्भावितसकलदोषपरिहारप्रकारं दर्शयति **अथ मतमिति ॥ द्वितीयेनेति** । रूपेणेति वर्तते ॥ **अत इति** । एकेन रूपेणोपादानत्वस्यान्येन रूपेण निमित्तत्वस्य चाङ्गीकारादित्यर्थः ॥ **उक्त इति** । 'अविकारः सदा' इत्यादिनेति शेषः । तत्कथमित्यतः प्रतिज्ञातं दोषाभावमुपपादयितुं प्रतिजानीते **तथा हीति** ॥ **युक्तिविरोधोऽपीति** । 'पराधीनविशेषाप्तिः' इत्यादिनोक्तः स्वतन्त्रस्य ब्रह्मणो विकारानुपपत्तिरूपयुक्तिविरोधोऽपि नेत्यर्थः । शेषमतिरोहितम् ।

ननु भागयोरभेदस्य भेदाभेदस्य वा सम्भवेन भेद एवेत्यवधारणस्य निर्निबन्धनत्वात्तदवधारणमूलकोत्तरदूषणाभिधानमसमञ्जसमित्यतः प्रागुक्तसकलदोषपरिजिहीर्षया द्वैविध्यं कल्पयतो विवक्षितप्रयोजनसाधकतया भेदपक्ष एव सम्मतस्तस्यैव सकलदोषोपमर्दकत्वात् , न त्वभेदादिपक्षः प्रागुक्तदोषानुपमर्दकत्वादिति भावेन सम्भावितपक्षविकल्पप्रदर्शनपूर्वकं प्रकारान्तरस्य दोषानुपमर्दकत्वं दर्शयन्नेव मौलमवधारणमुपपादयति **तदा वक्तव्यमिति** ॥ **वैयर्थ्यादिति** । निर्विकारत्वादिश्रुतिविरोधस्योपादान-

त्वानुपपत्तेश्चापरिहारादिति भाव ॥ **सङ्करेति** । चिच्छक्तिकस्य परिणामिशक्तिकाभेदेन परिणामितया, सच्छक्तिकस्यापरिणामिचिच्छक्तिकाभेदेनापरिणामितया निर्विकारत्वादिश्रुतिविरोधोपादानत्वानुपपत्त्य-परिहारादित्यर्थः । नन्वभेदेन प्रसक्तस्य सङ्करस्य भेदेन परिहारः । न चैवं भेदेन प्राप्तव्यवस्थाया अभेदेन परिहारप्रसङ्ग इति वाच्यम् । भेदाभेदयोर्भेदस्य प्रबलतया भेदेनाभेदकार्यप्रतिबन्धसम्भवेऽप्यभेदेन तत्कार्यप्रतिरोधासम्भवादिति भावेन शङ्कते **भेद इति** ॥ **किं तर्हीति** । अजागलस्तनवत्स्व-कार्याकारित्वादभेदस्य निष्प्रयोजनत्वमिति ज्ञेयम् ।

**प०** — भागेनेत्येतदवतारयति **अथ मतमित्यादिना** ॥ **न युक्तीति** । चेतनत्वान्नाचेतनात्मना विक्रियत इत्यादिप्रागुक्तयुक्तिविरोधोऽपि नेत्यर्थः । यद्वा जगत्स्थितिदशायां ब्रह्माभावापातादित्युक्ति-विरोधोऽपि नेत्यर्थः ।

**श्री०** — यदुक्तं तददूषणमित्यन्वयः । तत्र हेतुः श्रुत्यादेश्चिच्छक्तिविषयत्वादिति ॥ **तर्हीति** । यद्ययमभेदोऽर्थक्रियासु नोपयुज्यते तर्हि **अप्रयोजकेन** प्रयोजनरहितेनाभेदेनाङ्गीकृतेन किम् । प्रयोजना-भावाद्व्यसनितयैवासावभ्युपगन्तव्य इति भावः ।

**सु०** — **ततः किमित्यत आह यो भाग इति** ।

---

अनु० — यो भागो न विकारी स्यात्स एवास्माकमीश्वरः ।

**परस्परमत्यन्तभिन्ने द्वे वस्तुनी । तत्रैकं निर्विकारं जगन्निमित्तमेव । अपरं तु परि-णामि जगदुपादानमेवेत्यङ्गीकारे नेश्वरस्य केवलनिमित्तत्ववादिनामस्माकं कश्चिद्विवादः । निर्विकारस्य जगन्निमित्तस्यास्माभिरीश्वरत्वेन, परिणामिनो जगदुपादानस्य प्रधानत्वेन स्वीकृत-त्वात् । विवादाभावाच्च प्रकृतिश्चेति(त्यादि)सूत्राणामनारम्भ एवेति । अत्र यो भाग इति पराभ्युपगमेनोक्तम् । स्वमतेन तु यद्वस्त्विति ज्ञातव्यम् । न हि भागिनं विना भागः संभवति । नापि विकार्यविकारिणोः कश्चिद्भागी विद्यते ।**

**शे०** —**ततः किमिति** । भेदस्याङ्गीकर्तव्यताप्रतिपादनं न तावत्स्वतोऽनिष्टं भागयोर्भेदाङ्गीकारात् । नाप्यनिष्टान्तरप्रापकतया तदनुपलम्भादिति भावः । ततः किमिति शङ्कायाः किमुत्तरमिति तत्राह **परस्परेति** । विवादाभावमेवोपपादयति **निर्विकारस्येति** । अस्तु विवादाभावस्ततोऽपि किमित्यत आह **विवादाभावाच्चेति** । ब्रह्म निमित्तमेवेति पूर्वपक्षे न केवलं निमित्तम् अपि तूपादानमपीति समर्थनाय ह्येतानि सूत्राणि त्वन्मते प्रवृत्तानि । त्वयाऽपि चोक्तरीत्या निमित्तोपादानयोर्भेद एवाङ्गीक्रियते । तदा विवादविषयाभावान्नैतेषां सूत्राणामारम्भः सम्भवतीत्यर्थः । यद्वस्त्विति वक्तव्ये यो भाग इति वचनमयुक्त-

मित्यतः परेण तस्य भागत्वाभ्युपगमात्तदभिप्रायेण तथोक्तं न वस्तुत इत्याह **अत्रेति** । स्वमतेऽपि भागत्वमेव ब्रह्मप्रधानयोः किं न स्यादित्यतो भागयोर्भागिसापेक्षत्वात्प्रकृते च भागिनोऽभावान्न ब्रह्मादेर्भागत्वं युक्तमित्याह **न हीति** ॥ **विकार्यविकारिणोरिति** । सर्वथा विकृतस्य सर्वथाऽविकृतस्य च भागी नास्तीत्यर्थः । तेन प्रकृतेर्महदात्मना विकृतांशस्याविकृतांशस्य भागिन्याः प्रकृतेश्च सत्त्वान्न दोषः । महदात्मना विकृतस्य भागस्य स्वयमन्यविकारत्वेन सर्वथाऽविकृतत्वाभावादिति ध्येयम् ।

**स० — परिणामिनो जगदुपादानस्येति** । सच्छक्तिकस्येत्यर्थः ॥ **विवादाभावाच्चेति** । विभागेन कारणत्वे किमुपादानत्वेन कारणमुत निमित्तत्वेनेति विवादासंभवादित्यर्थः । ननु स्वमतेऽपि ब्रह्मप्रधानयोर्भागवत्त्वमेव किं न स्यात् इत्यत आह **न हि भागिनमिति** ॥ **कश्चिद्भागी** तृतीय इत्यर्थः ।

**प० —** ननु काऽत्रानुपपत्तिः । येन यो भाग इत्येतत् यद्वस्त्विति व्याक्रियत इत्यत आह **न हि भागिनं विनेति** । भागशब्दितावयवद्वयोपेतमेकं समुदायं विनेत्यर्थः । अस्तु भागी कश्चिदित्यत आह **नापि विकारीति** । विक्रियमाणाऽविक्रियमाणोभयावयवी एकः समुदायो नास्तीत्यर्थः ।

**या० — विवादाभावाच्चेति** । ब्रह्म निमित्तमेवेति पूर्वपक्षे न केवलनिमित्तमपि तूपादानमपीति समर्थनार्थैतानि सूत्राणि त्वन्मते प्रवृत्तानि । त्वयाऽपि यद्युक्तरीत्या निमित्तोपादानयोर्भेद एवाङ्गीक्रियते तदा विवादविषयाभावान्नैतेषां सूत्राणामारम्भः संभवतीत्यर्थः । ननु स्वमतेऽपि ब्रह्मप्रधानयोर्भागत्वमेव किं न स्यादित्यत आह **न हि भागिनमिति** । **कश्चिद्भागी** तृतीय इत्यर्थः ॥

**च० — विवादाभावाच्चेति** । ब्रह्मणः केवलनिमित्तताकल्पप्रत्याख्यानेन सामानाधिकरण्यप्रत्यासत्त्या निमित्तताविशेषितोपादानतासमर्थनौपयिकान्येतानि सूत्राणीत्यूरीकुर्वद्भवन्मतेपि दर्शितदिशा निमित्तोपादानयोरन्योन्यप्रतियोग्यनुयोगिकभेदोपगमे विवादाभावप्रसङ्गेन नैतद्योगारंभः संभवतीति भावः ।

**सु० — नन्वस्ति विवादविषयः । निमित्तोपादानभेदवादिना निमित्तस्यैव ब्रह्मत्वमभ्युपगम्यते । मया तु सदनन्तानन्दचितां समुदायस्येति तदर्थमधिकरणारम्भ इति चेत् । किमिदं ब्रह्मत्वम् । ( किं ) ब्रह्मनामवत्त्वमुत जगत्कारणत्वादिलक्षणार्थ(वत्)त्वम् । आद्यं दूषयति** भिन्नानामिति ।

**अनु० —** भिन्नानां सयुदायस्य नाम ब्रह्मेति त(चे)द्भवेत् ।

**तद्भवेदित्यभ्युपगममाह । ततश्चायमर्थः । यदर्थे न विवादोऽस्ति तदाऽनारम्भणीयमेवाधिकरणम् । शब्दमात्रे परेण विवादाकरणात् । करणेऽप्यशब्दशास्त्रत्वादिति ।**

**शे०**—'भिन्नानां समुदायस्य नाम' इति समुदायस्य ब्रह्मत्वशङ्काया आनर्थक्यमाशङ्क्य विवादविषयभाव-सद्भावप्रतिपादनार्थत्वान्नासङ्गतिरिति भावेन विवादविषयसद्भावोपपादकतया समुदायस्य ब्रह्मत्वशङ्कामुत्था-पयति **नन्विति ॥ मया त्विति ।** तथा च चिदात्मना निमित्तमेव ब्रह्म सदात्मनोपादानमपि भवती-त्यङ्गीकाराद्विवादविषयसिद्धिरिति भावः । नन्वत्र ब्रह्मत्वं जगत्कारणत्वादिलक्षणवत्त्वं न तु तन्नाम-वत्त्वं तत्कथं तदभ्युपगमेन दूषणं इत्यतस्तन्नामवत्त्वपक्ष एवास्य दूषणत्वेन तत्पक्षदूषणत्वाभावान्नानुपपत्ति-रित्यभिप्रेत्य संभावितविकल्पद्वयं प्रदर्श्याद्यपक्षदूषणपरतया मूलं योजयति **किमिदमिति** । ननु कथं समुदायस्य ब्रह्मत्वमभ्युपगम्यते । तथा सति प्रागुक्तप्रकृत्यधिकरणानारम्भप्रसङ्गादित्यत आह **ततश्चेति ॥ यद्यर्थ इति** । यत् जगन्निमित्तकारणं तदेव नोपादानमित्यस्मिन्नर्थ इत्यर्थः ॥ **शब्दमात्र इति** । ब्रह्म-शब्दः किं समुदायवृत्तिरुत निमित्तकारणमात्रवृत्तिरिति विवादाकरणादित्यर्थः । करणेपीऽत्यनन्तरमस्येति योजनीयम् । तथा च शब्दशास्त्रे तस्य विचारस्य सङ्गतत्वेऽपि प्रमेयमीमांसाशास्त्रे न स सङ्गतोऽन्यथा शब्दशास्त्रत्वापत्त्या प्रमेयमीमांसात्वं न स्यादिति भावः ।

**प०**— अधिकरणान्तरारम्भमाशङ्कते **नन्वस्तीति** ।

**या०**—**मया त्विति** । तथाच चिदाद्यात्मना निमित्तमेव ब्रह्म सदात्मनोपादानमपि भवतीत्य-ङ्गीकाराद्विवादविषयस्य सिद्धिरिति भावः । **यद्यर्थ इति** । यज्जगन्निमित्तकारणं तदेव नोपादानमित्य-स्मिन्नर्थ इत्यर्थः । **शब्दमात्र इति** । ब्रह्मशब्दः किं समुदायवृत्तिः किंवा निमित्तकारणमात्रवृत्तिरिति विवादाकरणादित्यर्थः । करणेऽपीत्यनन्तरमस्येति शेषः । तथा च शब्दशास्त्र एव तत्कार्यमिति भावः ।

**श्री०** — विवादाभावाच्चेत्युक्तमाशङ्कते **नन्विति । तदर्थं** सदनन्तानन्दचितां समुदायस्य ब्रह्मत्व समर्थनार्थम् । **अर्थत्वं** अर्थोक्तित्वम् ॥ **यद्यर्थ इति** । निमित्तस्यैव ब्रह्मत्वमभ्युपगन्त्राऽपि सदनन्ता-नन्दतचितां समुदायरूपः कश्चनार्थोऽङ्गीकृत एवास्तीत्यर्थः । नन्वर्थे विवादाभावेऽपि सदादिसमुदाये ब्रह्मनामवत्त्वं नाङ्गीकृतमिति तत्समर्थनार्थमिदमधिकरणमारभ्यत इत्यत आह **शब्दमात्र इति** । जगत्कारणत्वाद्यर्थं विहाय केवले नाममात्र इत्यर्थः । **करणेऽपि** विवादस्येति शेषः । शब्दे विवादे प्राप्ते ब्रह्मेति शब्दः समुदाये साधुरिति शब्दमात्रविचारः शब्दशास्त्र एव कार्यो न तु प्रमेयव्युत्पादन-परेऽर्थशास्त्र इत्यर्थः ।

**सु०— द्वितीयेऽपि विवेक्तव्यम् । किं परस्परं भिन्नाः सच्चिदानन्दाद्याः प्रत्येकं ब्रह्माणि । उत ते न ब्रह्माणि किन्तु तत्समुदाय एवेति । नाद्यः । एकमेवाद्वितीयमित्यादि-**

**श्रुतिविरोधात् । द्वितीयेऽपि तत्समुदायो नाम किं तदुपादानकं द्रव्यान्तरं संख्या वा संयोगो वा । सर्वत्रापि दोषमाह** ब्रह्मेति ।

अनु०— ब्रह्मोपादानता न स्यात्तदा विश्वस्य हि क्वचित् ॥

तदेति । **मनसि स्थितानां विकल्पितानां पक्षाणां** (वा) **अङ्गीकारे । क्वचित्पक्षे । हिशब्देनानुपपत्तेः प्रसिद्धतामाह । अत्र हि ब्रह्मोपादानस्य वा तद्गुणिनो वा जगदुपादानत्वं प्राप्तमिति विश्वस्य ब्रह्मोपादानकता न स्यात् । न ह्युपादानगुणिगताः शक्तयः कार्यद्रव्ये गुणे वा सम्भवन्ति । तदुपादानत्वादेरसम्भवात् ।**

**अथवा ब्रह्मणः कार्यत्वाद्गुणत्वाच्च न विश्वोपादानत्वं सम्भवतीति व्याख्येयम् । अत्र ब्रह्मोपादानतेत्युपलक्षणम् । ब्रह्मनिमित्तकता च न युक्तेत्यपि द्रष्टव्यम् ।**

• **शे०**— ननु कथं द्वितीये ब्रह्मोपादनत्वाभावप्रसङ्गः, परस्परं भिन्नानां सच्चिदानन्दानां प्रत्येकं ब्रह्मत्ववादिमते तदप्रसंगात् इत्यतोऽत्रापि पक्षद्वयं विकल्प्याद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतया वाक्यं योजयति **द्वितीयेऽपि विवेक्तव्यमिति** । समुदायिन एव समुदाय इति मतानुसारेणाद्यः कल्पः । समुदायिभिन्नं पदार्थान्तरमिति मतानुसारेण द्वितीयः कल्पः इति ध्येयम् ॥ **परस्परं भिन्नाः सच्चिदानन्दा इति** । ननु द्विरूपं ब्रह्मेत्यादिग्रन्थपर्यालोचनया सच्छक्तिकस्य चिदानन्दाद्यात्मकस्य च ब्रह्मणो भेदस्य परेणाङ्गीकृतत्वेऽपि चिदात्मकानन्दात्मकयोरपि भेदस्य परेणानङ्गीकाराद्भिन्नानां समुदायस्येत्यसदनुवाद इति चेन्न । चिदात्मकानन्दात्मकयोर्भेदे सत्यपि कर्तृत्वोपयुक्तत्वेनैक्यविवक्षया सदात्मकत्वरूपोपादानत्वप्रयोजकरूपापेक्षया च तस्य द्वैविध्योक्तावपि चिदात्मकानन्दात्मकयोरपि भेदस्यैव परं प्रति सम्मतत्वेन तदनुवादोपपत्तिरिति भावः ॥ **तदुपादानकमिति** । सदाद्युपादानकमित्यर्थः । पक्षत्रयनिरासस्य मूलारूढत्वसिद्ध्यर्थमाह **तदेतीति** ॥ **ब्रह्मोपादानस्येति** । समुदायरूपब्रह्मोपादानस्य सच्छक्तिकस्येत्यर्थः । सङ्ख्यासंयोगयोर्गुणत्वाल्लाघवेनोभयत्र बाधकं वक्तुं तद्गुणिन इत्युक्तम् । ननु चोपादानस्य गुणिनो वा सच्छक्तिकस्य जगदुपादानतायां तदुपादेयस्य तद्गुणस्य वा समुदायरूपब्रह्मणोऽपि जगदुपादानत्वमावश्यकम् । कारणगतशक्तेः कार्यनिष्ठत्वस्य गुणिगतशक्तेश्च गुणगतत्वस्य नियतत्वेन ब्रह्मोपादाननिष्ठाया वा तद्गुणिनिष्ठाया वा जगदुपादानताया ब्रह्मनिष्ठताया आवश्यकत्वात्; तत्कथं ब्रह्मोपादानत्वाभावापादनमित्यत आह **न हीति** । तदुपादानत्वादेरित्यत्रादिपदेन गुणित्वस्य संग्रहः ।

तदेत्युपस्थापितकार्यत्वादेर्हेतोर्ब्रह्म प्रत्युपादानादेर्जगदुपादानत्वप्राप्त्युपजीवनेन ब्रह्मणो जगदनुपादानत्वोपपादकत्ववर्णनापेक्षया तस्य साक्षादेव ब्रह्मणो जगदनुपादानत्वोपपादकत्वकल्पनं स्वरसमिति भावेन तथैव व्याचष्टे **अथवेति** ॥ **नेति** । अन्यथाऽन्यस्यापि कार्यस्यान्यस्यापि गुणस्य वा विश्वोपादनत्वप्रसङ्गा-

दिति भावः । कार्यत्वादिना विश्वानुपादानत्वस्येव तदनिमित्तत्वस्यापि ब्रह्मणि प्राप्त्या कार्यत्वादेरनुपादानत्वानिमित्तत्वोपपादकतयाऽनुपादानत्वमात्रोपपादकत्वाभावात् भाष्येऽप्युक्तहेत्वनुसारेणोभयाभावस्यैव वक्तव्यतया अनुपादानत्वमात्रत्वोक्तेरश्लिष्टत्वप्रसङ्गं परिहर्तुमुपलक्षणतया व्याचष्टे **अत्रेति** ।

स० — ननु उपादाने गुणिनि वा सच्छक्तिके विद्यमाना जगदुपादानत्वशक्तिः तत्कार्ये तद्गुणे वा समुदायरूपे ब्रह्मणि वर्तते । कारणगतशक्तेः कार्येऽपि सत्त्वात् गुणिगतशक्तेर्गुणेऽपि सत्त्वादित्यत आह **न ह्युपादानगुणिगता इति** । **तदुपादानत्वादेरिति** । उपादाननिष्ठकार्योपादानत्वस्य तत्कार्येऽभावाद्व्यभिचार इत्यर्थः । आदिपदेन गुणिगतस्य गुणित्वस्य गुणेऽभावाद्व्यभिचार उक्त इत्यपि द्रष्टव्यम् ।

प० — **संख्येति** सदनन्तानन्दचित्स्वनुगता बहुत्वसंख्या वा सदादीनां संबन्धो वेत्यर्थः ॥ **अत्र हीति** । तदुपादानकमित्यादिपक्षत्रये इत्यर्थः । त्वया ब्रह्मशब्दार्थं प्रत्युपादानतया यावत्स्वीकृतं सदादि तत्र सदंश एव जगदुपादानमित्युक्तमित्याद्यपक्षे ब्रह्म प्रत्युपादानभूतस्य सदंशस्य द्वितीयतृतीयपक्षयोर्ब्रह्मशब्दार्थभूतसंख्यासंयोगलक्षणगुणौ प्रति धर्मिभूतस्य सदंशस्यैव जगदुपादानत्वं प्राप्तमित्यर्थः । ब्रह्मोपादानकतेत्युपलक्षणम् । ब्रह्मस्थितिकता ब्रह्मप्रलयकता चेत्यपि ग्राह्यम् । ननु ब्रह्म प्रत्युपादाने धर्मिभूते वा सदंशे विद्यमानोपादानादिशक्तेः तदुपादानकादिरूपे ब्रह्मण्यपि भावाद्ब्रह्मोपादानकत्वादिकं जगति सेत्स्यतीत्यत आह **न ह्युपादानेति** । कुत इत्यत आह **तदुपादानत्वादेरिति** । उपादाननिष्ठोपादानत्वस्य तदुपादेयेऽभावात् गुणिनिष्ठगुणाश्रयत्वस्य गुणेऽभावादित्यर्थः ।

या० — **ब्रह्मोपादानस्येति** । समुदायरूपब्रह्मोपादानस्य सच्छक्तिकस्येत्यर्थः । संख्यासंयोगयोर्गुणत्वाल्लाघवेनोभयत्र बाधकं वक्तुं तद्गुणिन इत्युक्तम् । ननूपादाने गुणिनि वा सच्छक्तिके विद्यमाना जगदुपादानत्वशक्तिस्तत्कार्ये तद्गुणे वा समुदायरूपे ब्रह्मणि वर्तते । कारणगतशक्तेः कार्ये गुणिगतशक्तेर्गुणेऽपि सम्भवादित्यत आह **न ह्युपादानगुणिगता इति** । तदुपादानत्वादेरित्यत्रादिपदेन गुणित्वस्य ग्रहणम् ॥ **न विश्वोपादानत्वमिति** । ब्रह्मकारणतया तद्गुणितया वाऽभिमतस्य विश्वान्तर्गतत्वादिति भावः। ब्रह्मणः कार्यत्वे प्रलयेऽसत्त्वेन गुणत्वे च गुणस्योपादानत्वाभावेन विश्वोपादानत्वं न स्यादिति भावः।

श्री० — समुदायः ब्रह्मतयाऽङ्गीक्रियमाणः । **तदुपादानकं** सदाद्युपादानकम् ॥ **संख्येति** । बहुत्वरूपेत्यर्थः । बहवो ब्राह्मणा इति प्रयोक्तव्ये ब्राह्मणानां समुदाय इति प्रयोगदर्शनाद्विकल्पकोटिता ॥ **संयोगो वेति** । घटादयः समुदिताः सन्ति इत्युक्ते संयुक्ताः सन्तीत्यर्थो लभ्यत इत्यस्यापि युक्ता विकल्पकोटिता ॥ **ब्रह्मोपादानस्येति** । ब्रह्म प्रत्युपादानस्येत्यर्थः । सदेव सोम्येत्यादिश्रुतिबलात्सदात्मकस्यैव जगदुपादानत्वं परेण स्वीकृतम् । अथ मतमित्यादिना तथैवोक्तत्वात् । सच्चिदानन्दाद्युपादानकं

द्रव्यान्तरमित्युक्त्या समुदायरूपद्रव्यान्तरस्य सदुपादानकत्वमित्येतन्न। एवञ्च द्रव्यान्तरं प्रति समुदायरूप-ब्रह्म प्रत्युपादानस्य सत एव त्वन्गते जगदुपादानता प्राप्ता न ब्रह्मणः। तथा गुणजीवोपादानत्वं संयोगात्संख्या-संयोगात्मकब्रह्मरूपगुणवतो गुणिनः सत एव जगदुपानता प्राप्ता न ब्रह्मण इत्यर्थः। ननु ब्रह्म प्रत्युपा-दानभूतं यत्सत्, ब्रह्मरूपगुणं प्रतिगुणिभूतं च यत्सत्; तन्निष्ठा या जगदुपादानत्वशक्तिः सा तत्कार्ये द्रव्यभूते गुणभूते ब्रह्मण्यप्यस्त्येव। कारणशक्तेः कार्ये सत्त्वनियमात् अतो युक्ता जगतो ब्रह्मोपादान-कतेत्यत आह **न हीति**। कुतो न संभवतीत्यत आह **तदिति**। तच्छब्देन कार्यद्रव्यगुणयो-र्ग्रहणम्। तथा च कारणनिष्ठा शक्तिः कार्येऽस्तीति नियमो न युक्तः। कारणभूते सति तदुपादा-नत्वस्य कार्यद्रव्यभूतब्रह्मोपादानत्वस्य ब्रह्मरूपगुणं प्रति गुणित्वस्य सत्त्वेन तयोश्च कार्यद्रव्यभूते गुणभूते च ब्रह्मण्यभावाद्व्यभिचार इत्यर्थः॥ **कार्यत्वादिति**। कार्यस्य मृदादेर्घटादिव्यक्तिविशेषोपादानत्वेऽपि न विश्वोपादानता संभवति। गुणस्य तु सर्वथाऽनुपादानत्वेन विश्वोपादानता सुतरां न संभवति। ब्रह्म तु तदुभयरूपमिति भावः। **उपादनता** उपादानकता॥ **निमित्तकतेति**। कार्यत्वाद्गुण-त्वाच्चेत्यनुवर्तते। तथा च गुणभूतापेक्षाबुद्धेः कार्यभूतदण्डादेश्च द्वित्वघटादिरूपकार्यविशेषं प्रति निमित्तत्वसंभवेऽपि न विश्वोत्पत्तिनिमित्तता संभवतीत्यर्थः।

च०— **न विश्वोपादानत्वमिति**। ब्रह्म प्रति हेतुतया तद्गुणत्वस्य वाऽसिद्धत्वेऽपि विश्वा-न्तर्गतत्वादिति भावः।

---

सु०— **स्यादेतत्। कालात्ययापदिष्टमेतदनुमानम्, 'यतो वा इमानि भूतानि जायन्ते'। 'आत्मन आकाशः सम्भूतः'। 'जन्माद्यस्य यतः' इत्यादिविरोधात्। 'जनिकर्तुः प्रकृतिः' इति प्रकृतावुपादानलक्षणायां हि पञ्चमी विधीयते। तथा चोदाहृतम् 'शृङ्गाच्छरो जायते, गोमयाद् वृश्चिको जायत' इति। प्रसिद्धश्चात्रोपादानोपादेयभाव इति। तदिदमसङ्गतम्। पञ्चमीबलात्किलोपादानत्वं सिषाधयिषितम्। न चेदं सूत्रमुपादाने पञ्चम्या विधायकम्।**

**अथ मतम्। अपादाने तावत्पञ्चमी विहिता 'अपादाने पञ्चमी' इति। उपादानं चापा-दानविशेषः। जनिकर्तुः प्रकृतिरिति स्मरणात्, ततोऽपादाने विहिता पञ्चम्युपादानेऽपि भविष्यति। न चैवं सति पञ्चम्या नियमेनोपादानत्वसिद्धिः, विशेषस्मरणस्य ग्राह्यत्वादित्यत आह** शृङ्गादिति।

अनु० — **शृङ्गाच्छरोऽविलोमभ्यो दूर्वा गोमयतस्तथा।**
**वृश्चिकश्चैवमादौ स्वपादानत्वमिष्यते॥**

**तथाशब्दो द्वितीयोदाहरणेन सम्बध्यते। एवमादिषूदाहरणेषु शृङ्गादीनां प्रसिद्धोऽप्र-**

स्यपादानत्वमिष्यते । पञ्चम्यर्थतयेति शेषः । उपलक्षणं चैतत् । सूत्रे चेत्यपि ज्ञातव्यम् ।

एतदुक्तं भवति । भवेदेवं कथञ्चिद्यदि सूत्र(स्य)तदुदाहरणानां (च) परपरिकल्पितोऽर्थो भवेत् । न चैवम् । किं नाम जनिकर्तुः प्रकृतिरित्यनेनेदमुच्यते । जनेः कर्तुर्जायमानस्य या प्रकृतिरुपादानसंसृष्टमपायावधिभूतं द्रव्यं तत्कारकमपादानसंज्ञं भवतीति । उदाहरणेष्वपि यच्छृङ्गादीनां शरादीन्प्रत्यपायावधित्वमेव पञ्चमीप्रतिपाद्यमिति ।

शे० — ननु शृङ्गादित्युत्तरभाष्ये शृङ्गादीनां शरान्प्रत्यपादनत्वस्य पञ्चम्यर्थत्वदर्शनमनर्थकम् । न चोपादानत्वस्य पञ्चम्यर्थत्वाभावसिद्ध्यर्थं तदिति वाच्यम् । उपादानत्वस्य पञ्चम्यर्थत्वेऽनिष्टाभावेन तदभावसिद्धेरप्यनपेक्षितत्वादित्यतः प्राक् ब्रह्मणो जगदुपादानत्वाभावसाधकतयोपन्यस्तानुमानानां उपादानत्वार्थकपञ्चमीश्रुतिविरुद्धार्थसाधकत्वेन कालात्ययापदिष्टत्वशङ्कानिवारणार्थत्वान्न तस्य वैयर्थ्यमिति भावेन, तच्छङ्कानिवर्तकतया तद्वाक्यं योजयितुं तां शङ्कामुत्थापयति **स्यादेतदिति** ॥ **एतदिति**। न चाचेतनत इत्यादिना सूचितमित्यर्थः । **विरोधादिति** । उदाहृतश्रुतिसूत्रयोर्जगदुपादानत्वप्रतिपादकत्वादिति भावः । ननूदाहृतश्रुत्यादौ उपादानत्वप्रत्यायकशब्दाभावेन उदाहृतश्रुत्यादेरुपादानत्वाप्रत्यायकत्वात्तानुमानानामुदाहृतश्रुत्यादिविरोधः इत्यतोऽत्र 'यत' इत्यादिपञ्चमीश्रवणात्तस्याश्चोपादानत्वार्थकत्वेन युक्तमुदाहृतश्रुत्यादेरुपादानत्वप्रत्यायकत्वमिति भावेन पञ्चम्या उपादानत्वार्थकत्वमेव कुतः, इत्याशङ्कां नियामकोक्त्या परिहरति **जनिकर्तुरिति** ।

---

ननूदाहृतसूत्रे प्रकृतौ पञ्चम्या विधानादेतदनुसारेण तस्याः पञ्चम्यर्थत्वलाभेऽप्युपादानत्वस्य कथं तत्सिद्धिरित्यत उक्तम् **उपादानलक्षणायामिति** । कुतः सौत्रस्य प्रकृतिपदस्योपादानपरत्वमर्थान्तरस्यापि सम्भवात् इत्यत उपादानोपादेयभाववन्मात्रनिष्ठतत्सूत्रीयोदाहरणादेव तत्सिद्धिरित्याशयेन तदुदाहरति **तथा चैवेति** । कुतो दृष्टान्तवाक्ययोरप्युपादानोपादेयभाववन्मात्रनिष्ठत्वमित्यत आह **प्रसिद्धश्चेति** । जनिकर्तुः प्रकृतिरिति प्रकृतावुपादानलक्षणायां पञ्चमी विधीयत इत्युक्तम् । तत्रास्य वाक्यस्य किमापाततः प्रतिपन्नार्थे तात्पर्यं किंवाऽन्यत्रार्थान्तरे, इति विकल्पं मनसि निधायाद्यं पराचष्टे **पञ्चमीबलादिति** ॥ **न चेदमिति** । अस्यापादानसंज्ञामात्रविधायकत्वादिति भावः । यद्यपि जनिकर्तुरित्यस्य पञ्चमीविधायकत्वं न परस्याप्यभिमतं तथाऽपि प्रतिवादिस्खलितं नोपेक्षामर्हतीति शिष्यान् शिक्षयितुं परवाक्यादापाततः प्रतीतत्वमात्रेण दूषितमित्यवधेयम् ।

द्वितीयमाशङ्कते **अथ मतमिति** ।

अविलोमभ्यो दूर्वा जायते तथा गोमयतोऽपि जायत इत्यन्यथाप्रतीतिनिरासाय तथाशब्दस्य गोमयाद्वृश्चिको जायत इत्यनेन सम्बन्ध इत्याह **तथाशब्द इति** । यद्यप्येतद्वाक्ये इदं तृतीयमुदाहरणमिति तथैव वक्तुमुचितम् । तथापि आद्यद्वितीययोः अचेतनविषयत्वेनैक्यविवक्षया वा जनिकर्तुरितिसूत्रद्वितीयो-

दाहरणत्वाभिप्रायेण वा द्वितीयोदाहरणेनेत्युक्तम् । सूत्रेऽप्यचेतनयोरेवोपादानोपादेयभावविवक्षया शृङ्गाच्छरो जायत इति, अचेतनचेतनयोरेवोपादानोपादेयभावविवक्षया च गोमयाद्वृश्चिको जायत इति, उभयमेवोदाहृतमिति द्रष्टव्यम् । अनेन शृङ्गाच्छरोऽविलोमभ्यो दूर्वेत्येवमाद्यचेतनोदाहरणे, तथा गोमयाद्वृश्चिक इत्येवमादिचेतनोदाहरणे पञ्चम्यर्थतयाऽपादानत्वमेवेष्यत इति योजना सूचिता भवति । यद्वा । भाष्ये द्वितीयतयोदाहृतेनाविलोमभ्यो दूर्वेत्यनेन संबद्ध्यत इत्यर्थः । अनेन शृङ्गाच्छरस्तथाऽविलोमभ्यो दूर्वा गोमयतो वृश्चिकश्चेत्येवमादिषु पञ्चम्यर्थतयाऽपादानत्वमिष्यत इति मूलयोजनोक्ता भवति । एवमादिष्वित्यादिपदसंग्राह्यतावच्छेदकधर्ममाह **उदाहरणेष्विति** । शृङ्गाच्छर इत्यादिनैव सम्बन्धिद्वयसूचनान्नापादानत्वमिष्यत इत्यत्र पृथक्तदनुक्तिर्दोषायेत्याशयेन सम्बन्धिद्वयं दर्शयति **शृङ्गादीनामिति** । अपादानत्वतत्स्वरूपेण शृङ्गादेरुपादानत्वस्य पीप्यमाणत्वाद्यर्थं वचनमित्यतोऽपेक्षित योग्यशेषं पूरयति **पञ्चम्यर्थतयेति** । ननु सूत्रस्योपादानस्यापादानसंज्ञाविधायकत्वे तदुदाहरणयोरप्युपादानत्वस्यैव पञ्चम्यर्थत्वप्राप्तेः कथं पञ्चम्यर्थतयाऽपादानत्वस्यैवेष्यमाणत्वोक्तिः इत्यतस्तत्सूत्रोदाहरणेष्वपादानत्वं पञ्चम्यर्थत्वेन वदतो भाष्यकारस्य सूत्रेऽपि प्रकृतिपदस्यापादानत्वस्यैवाभिप्रेतत्वान्नानुपपत्तिरिति भावेन भाष्यमुपलक्षणतया व्याचष्टे **उपलक्षणमिति ॥ सूत्र इति** । जनिकर्तुरिति सूत्रे चेत्यर्थः ॥ **इत्यपि द्रष्टव्यमिति** । प्रकृतिशब्देनेति शेषः ।

नन्वपादानत्वस्य पञ्चम्यर्थत्ववचनं वृत्त्यादिविरुद्धमिति न तदङ्गीकारो भाष्यकाराणां युक्त इत्यतो भाष्याभिप्रायमाह **एतदुक्तं भवतीति ॥ न चैवमिति** । शब्दार्थविरोधादित्यादिना अनुपपत्तेर्वक्ष्यमाणत्वादिति भावः । तर्ह्यर्थान्तराभावात्सूत्रादेर्निरर्थकत्वप्रसङ्ग इति पृच्छति **किं नामेति** । अर्थान्तरसद्भावान्नानुपपत्तिरित्यभिप्रेत्य सूत्रार्थमाह **जनिकर्तुरिति ॥ उदाहरणेष्वपीति** । यच्छब्दश्रवणात्तदिति लभ्यते । तदेव पञ्चमीप्रतिपाद्यमिति सम्बन्धः । 'इति' इत्यस्य 'एतत्' इति पूर्वेण सम्बन्धः ।

प० —**एतदिति** । 'चेतनत्वात्तदन्नं ही'त्यादिनोक्तमनुमानजातमित्यर्थः ॥ **जनिकर्तुःप्रकृतिरितीति** । उपादानरूपायां प्रकृतौ 'जनिकर्तुः प्रकृतिरि'त्यपादानसंज्ञया 'अपादाने पञ्चमी'ति सूत्रेण पञ्चमी विधीयत इत्यर्थः । परोक्तस्य यथाश्रुतस्यानुवाद्यत्वा'ज्जनिकर्तुःप्रकृतिरि'ति पञ्चमी विधीयत इत्युक्तम् । अत एवाह **न चेदं सूत्रमुपादाने पञ्चम्या विधायकमिति** । अत्र वाक्यद्वयं ध्येयम् । इदं सूत्रं पञ्चमीविधायकं न । कथञ्चित्पञ्चमीविधायकत्वघटनायामप्युपादाने पञ्चमीविधायकं नेति । परंपरया पञ्चमीविधायकत्वाभिप्रायेण आद्यदोषोद्धारमाह **अपादाने तावदिति** । द्वितीयदोषमुद्धरति **उपादानं चेति** । प्रकृतिपदस्योपादानार्थत्वं मत्वाह **इतिस्मरणादिति ॥ एवं सतीति** । उपादानत्वस्यापादानविशेषत्वे सत्यपि अपादानसामान्ये विहिततया यतो वेत्यादिपञ्चम्या कथितस्यापादानस्य कथं नियमेन तद्विशेषोपादानत्वसिद्धिरिति न वाच्यमित्यर्थः । **विशेषेति** । जायन्त इत्यादिजनिवाचिपद-

श्रवणेन जनिकर्तुरिति विशेषस्मृत्युक्तापादानविशेषस्यैव ग्राह्यत्वादित्यर्थः । तृतीये चशब्दश्रवणादाह **द्वितीयोदाहरणेनेति** । अविलोमभ्यो दूर्वेत्यनेनेत्यर्थः ॥ **सूत्रे चेति** । पाणिनीयसूत्रे चेत्यर्थः । **अपायेति** । निर्गच्छतो वस्तुनो विश्लेषेऽवधिभूतमित्यर्थः ॥ **तत्कारकमिति** । तस्य जायमानस्य वस्तुनः कारणभूतमित्यर्थः ।

**या०— विशेषस्मरणस्येति** । जायन्ते इति जनिकर्तुरेव श्रुत्युक्तत्वादिति भावः ।

**श्री०—** प्रकृतावित्यस्य विवरणमुपादानलक्षणायामिति ॥ **स्मरणादिति** । जायमानस्य कार्यस्य प्रकृतिर्हेतुरुपादानमपादानसंज्ञं स्यादिति सूत्रार्थः । **स्मरणं** सूत्रम् । एवमुत्तरत्रापि ॥ **एवं सतीति** । उपादानेऽपादाने चेत्युभयत्रापि पञ्चमी यदि विहिता तर्हीति शेषः ॥ **नियमेनेति** । अवधित्वरूपापादानत्वस्यापि पञ्चम्यर्थतासम्भवादिति भावः । कुतो नेत्यत आह **विशेषेति** । भवन्मतेऽपादानत्वस्य विश्लेषावधिमात्रार्थकत्वमेव । मन्मते त्वपादानत्वस्य विश्लेषावध्युपादानोभयसाधारण्येऽप्युपादानस्यापादानत्वविधायकस्य जनिकर्तुरिति विशेषसूत्रस्यैव प्रबलत्वेन ग्राह्यत्वात्तद्बलेनोपादानत्वमेव पञ्चम्यर्थतया ग्राह्यमिति नियमो युक्त इत्यर्थः ॥ **सूत्रे चेति** । जनिकर्तुरिति सूत्रे चेत्यर्थः ।

**च०—कालात्ययापदिष्टं** बाधितम् । **एतदनुमानजातं** कार्यत्वाद्यनुमानसमुदायः । **सिषाधयिषितमिति** । 'स्तौतिण्योरेव षण्यभ्यासात्' अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् । षभूते सनीति नियमात् षत्वं बोध्यम् ।

**सु०—एतदेव प्रपञ्चयति** उपादानेति ।

**अनु०—** उपादानैकदेशत्वं यद्यप्यत्र प्रदृश्यते ।
अप्यपादानतैवात्र दृष्टान्तो ब्रह्मणो भवेत् ॥

**यद्यप्यत्र शृङ्गादौ शराद्युपादानभूतैकदेशवत्त्वं प्रतीयते । तथाऽपि याऽत्रापादानता अपायावधित्वलक्षणाऽस्ति सैव ब्रह्मणो दृष्टान्तो भवेत् । पञ्चम्यर्थतायामुदाहरणं भवेत् न तूपादानतेत्यर्थः । अयमभिप्रायः । शृङ्गादिकं ह्येकदेशेन शरादीन्प्रत्युपादानमेकदेशेन चापायावधितया कारकं भवति । तस्मिन्नसत्येकदेशान्तरस्योपादानताऽनुपपत्तेः । मुद्गमाषादयो हि यद्यपि तुषान्तरावस्थितेनैवांशेनांकुरोपादानम् । तथाऽपि न तुषविकलानामुप्ता(मंशा)नामंकुरजनकताऽस्ति । तत्रावधिभाग एवापादानं पञ्चमीवाच्यश्च । तद्दृष्टान्तेन ब्रह्मणोऽपि पञ्चमीबलादुपादानप्रधानसंसृष्टावधित्वमेव भवति । न तूपादानत्वमिति । ननु कथं तर्हि प्रकृतेर्महान्महतोऽहङ्कार इत्यादिप्रयोगः । तत्रापि परिणतभागसंसृष्टस्य अपरिणतभागस्य अवधिभूतस्य पञ्चमीविषयत्वमिति वदामः । यत्र सर्वस्यापि परिणामस्तत्रकथम् । न प्रयोक्तव्यैव तत्र पञ्चमी । न हि क्षीरा-**

दधि जातिमिति प्रयुञ्जते । किन्तु क्षीरमेव दधि जातमिति । यत्र क्वचित्प्रयोगो दृश्यते स गौणो वा सूत्रस्यार्थान्तरकल्पनामूलो वेति ।

शे० — **एतदेवेति** । तथा च नोत्तरवाक्यवैयर्थ्यमिति भावः । **अपायावधितया कारकं भवतीति** । अपादानकारकं भवतीत्यर्थः । कुतस्तस्य कारकत्वम् इत्यतस्तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वादिति भावेनाह **तस्मिन्नसतीति** अपायावधिभूते शृङ्गाद्येकदेशेऽसतीत्यर्थः । एकदेशान्तरस्य शृङ्गादिसारभागस्येत्यर्थः । ननु मुद्गमाषादीनामेकदेशेनोपादानत्वस्यैकदेशान्तरेण चापायावधितय कारकत्वस्य चाभावान्नोक्तनियमो युक्तः, इत्यतस्तत्रापि सतुषाणामेवाङ्कुरजनकत्वात्तत्र च तुषरूपस्यापायावधितया कारकत्वस्य तुषान्तरवस्थितेनांशेनोपादानत्वस्य च सत्त्वादंशद्वयहीनानां तुषान्तरवस्थितानामजनकत्वान्न नियमभङ्ग इत्यभिप्रेत्याह **मुद्गेति** । अस्तु शरादीनामेकदेशेनोपादानत्वमेकदेशान्तरेण चापायावधित्वं किं ततः सिद्धमित्यत आह **तत्रेति** ।

अवधिभागस्यैवापादानत्वपञ्चमीवाच्यत्वयोरभ्युपगमे अनुपपत्तिमाशङ्कते **नन्विति** । तत्रांशद्वयाभावादिति भावः । स्यादेवं यदि सर्वात्मना प्रकृत्यादेर्महदाद्यात्मना परिणामः स्यान्न चैतदस्ति किं त्वेकदेशेनैव । ततश्चैकदेशेन परिणामेऽप्यंशान्तरेणापायावधितया कारकत्वादवधिभागस्यैवापादानत्वपञ्चमीवाच्यत्वसत्त्वान्नानुपपत्तिरितिभावेन समाधत्ते । **तत्रापीति** ॥ **यत्र सर्वस्यापीति** । क्षीरस्य सर्वस्यापि दध्यात्मना परिणामाभिप्रायेणेदमुक्तम् । **कथमिति** । पञ्चमीप्रयोग इति शेषः । तत्र सर्वस्य परिणतत्वेन परिणतभागसंसृष्टापरिणतभागस्यावधिभूतस्य पञ्चमीविषयत्वासम्भवादिति भावः ॥ **सूत्रस्यार्थान्तरेति** । जनिकर्तुरिति सूत्रस्यास्मदभिप्रेतादर्थान्तरकल्पनामूल इत्यर्थः । तथा च वृत्तिकाराद्युक्तरीत्योपादानस्यापादानसंज्ञाविधायकतया सूत्रस्यानेनोपादानस्यापादानसंज्ञायां सत्यामपादाने पञ्चमीति पञ्चमीप्राप्त्या युक्तः पञ्चमीप्रयोग इति भावः ।

स० — **कारकं भवतीति** । अपादानकारकं भवतीत्यर्थः । **तस्मिन्नसतीति** । अपायावधिभूते तस्मिन् शृङ्गैकदेशेऽसति एकदेशान्तरशृङ्गसारभागस्येत्यर्थः । ननु मुद्गमाषादौ तुषान्तरवस्थितस्य सर्वस्याप्यंशस्योपादानत्वेनावशिष्टभागाभावात् तुषस्य कारकत्वात्पञ्चमीवाच्यमपादानं न संभवतीत्युपादानमेव तद्वाच्यं वाच्यमिति यद्यपीत्यादिनाऽऽशङ्क्य तुषस्यैवापायावधिभूतस्य कारकत्वात्पञ्चमीवाच्यता भविष्यतीत्यभिप्रेत्य तस्य कारकतामुपपादयति **तथापीत्यादिना** । **तत्रावधिभाग एवेति** । तुषरूप इत्यर्थः ।

प० — ननूपादानसंसृष्टभागस्याहेतुत्वेनाकारकत्वात् कथं तत्र पञ्चमीत्यत आह **अयमभिप्राय इति** ॥ **कारकं भवतीति** । शरीरजननरूपक्रियां प्रति हेतुर्भवति । 'क्रियां कुर्वद्धि कारकमि'ति

प्रसिद्धेरिति भावः । जननक्रियाहेतुत्वमेव व्यनक्ति **तस्मिन्नसतीति** । अपायावधिभूते तस्मिन् शृङ्गैकदेशेऽसति एकदेशान्तरस्य शृङ्गसारभागस्येत्यर्थः । ननु मुद्गमाषादौ सर्वस्याप्यंकुरात्मना परिणामेनावशिष्टभागाभावात् तत्र पञ्चमी न स्यादिति भावेनाशङ्क्य तत्रापि तुषभागोऽस्तीति समाधत्ते **मुद्गेति** ॥ **इत्यादिप्रयोग इति** । 'ततोऽभवन्महत्तत्त्वमव्यक्तात्कालचोदितात् । महत्तत्त्वाद्विकुर्वाणादहन्तत्त्वमजायते'त्यादितृतीयस्कन्धादिस्थस्यार्थतोऽनुवादेन प्रयोगदर्शनमेतत् । प्रयोगमङ्गीकृत्यापि तस्य गतिमाह **स गौणो वेति** । क्षीराद्दधि जातमिति प्रयोग इत्यर्थः ॥ **सूत्रेति** । जनिकर्तुरिति सूत्रे प्रकृतिरुपादानमित्येवंरूपार्थकल्पनामूलो वेत्यर्थः ।

**या० — कारकं भवतीति** । अपादानकारकं भवतीत्यर्थः ॥ **तस्मिन्नसतीति** । अपायावधिभूते तस्मिन् शृङ्गाद्येकदेशेऽसत्येकदेशान्तरस्य शृङ्गादिसारभागस्येत्यर्थः । नन्वेतदेव कथमित्यतो मुद्गमाषादिप्रसिद्धोदाहरणेषूपपादयति **मुद्गमाषादयो हीति** ॥ **तत्रावधिभाग इति** । तुषरूप इत्यर्थः ।

**श्री० — उप्तानामिति** । डुवप् बीजसन्तानेऽस्मात्कर्मणि क्तप्रत्यये ककारलोपे वकारस्योकाररूपे संप्रसारणे सति उप् त उप्तेति रूपं ध्येयम् । ननु यदि विश्लेषावधिरूपापादान एव पञ्चमी । कथं तर्हि प्रकृतेर्महानित्यादावुपादानेऽपि पञ्चमीप्रयोगः । न हि तत्र कथंचिदपादानत्वं व्युत्पादयितुं शक्यम् । अतस्तत्रोपादान एव पञ्चम्या दृष्टत्वाद्यतो वेत्यादावपि पञ्चम्युपादान एवास्त्वित्यत आह **नन्विति** ॥ **तत्रापीति** । यथा मृदो न समग्राया अपि घटाकारेण परिणामः । किन्तु किंचिदुर्वरितमपि भवतीति दृष्टं तद्वदिति भावः । **प्रयोगः** क्षीराद्दधि जातमित्येवंरूपः ॥ **अर्थान्तरेति** । जनिकर्तुरिति सूत्रस्य परोक्तरीत्याऽर्थान्तरेत्यर्थः । तथा चास्य सूत्रस्योपादानेऽपादानत्वविधायकत्वेनोपादानभूतेऽपि क्षीरे पञ्चमीप्रयोगो युक्त इत्यर्थः ।

**च० — कारकं भवतीति** । अपादानसंज्ञकं कारकं भवतीत्यर्थः । **तस्मिन्नसतीति** । अपायावधिभूते एकदेशे असतीत्यर्थः । **उप्तानामिति** । डुवप् बीजसन्ताने इति पठितात् क्षेत्रविकिरणगर्भाधानान्यतररूपबीजसंतानार्थकम् । वपतेः कर्मसाधननिष्ठायां 'वचिस्वपी'तिसंप्रसारणे निष्पन्नतया क्षेत्रविकिरणकर्मीभूतानामित्यर्थः । **सूत्रस्यार्थान्तरेति** । वृत्तिकाराद्यभिहितदिशोपादानस्यापादानसंज्ञाविधायकतया योगस्य नीततया तन्मताभिप्रायकस्तादृशप्रयोगः सङ्गच्छत इति भावः ।

**सु० — अथ मन्येत । शृङ्गमेव शरोपादानम् । न तु केचिदवयवा उपादानं केचित्तदवधय इति विभागः । तथा सति शृङ्गाच्छरो जायत इति प्रयोगानुपपत्तेः । यदि चेयं पञ्चम्युपादाने यदि वाऽवधौ तथाऽपि शृङ्गावयवादिति वक्तव्यम् । न च तर्हि अवधित्व-**

मेवास्तु इति वाच्यम् । निरुपादानोत्पत्तिप्रसङ्गात् । अतः शृङ्गस्यैवोपादानत्वात्तत्र पञ्चमी-श्रवणादुपादाने पञ्चमीति । तत्राह न हीति ।

अनु० — न ह्युपादानतैवात्र

अत्र शृङ्गाद्युपादानते(तैवे)ति न वक्तव्यम् । अपरिणतभागस्य शराङ्कुरादेरत्यन्त-भिन्नस्य प्रमितत्वात् । अन्यथेदमस्योपादानमिदं नेति व्यवस्थानुपपत्तेरिति हिशब्दार्थः ।

कथं तर्हि शृङ्गादिति प्रयोग इत्यत आह बाह्यावयवेति ।

अनु० — बाह्यावयवगौरवात् ॥

बाह्याः शराकारेण परिणतेभ्योऽन्ये येऽवधिभूतावयवास्तेषां गौरवाद्बहुत्वात् ।

एतदुक्तं भवति । कतिपयावयवेषु परिणतेषु बहूनामवशिष्टत्वेन शृङ्गान्तरोत्पत्त्या शृङ्गबुद्धिमात्रोत्पत्त्या वा शृङ्गशब्दोपपत्तिरिति ।

शे० — ननु केचिच्छृङ्गावयवा उपादानं केचित्तदवधय इत्युक्तरीत्या विभागस्यैव वाऽवधित्व-स्यैव वा सम्भवेन तत्परित्यागेन शृङ्गस्योपादानत्वमेवेति शङ्काया एव प्रापकाभावेनानुत्थानात् तन्निरा-करणपरोत्तरवाक्यानर्थक्यमित्यतः शङ्कामुज्जीवयति **अथेति** ॥ **तथा सतीति** । शृङ्गस्योपादानत्वा-पादानत्वयोरभावादिति भावः ॥ एतदेव प्रपञ्चयति **यदि चेति** ॥ **इति वक्तव्यमिति** शृङ्गावयवयोरे-वोपादानत्वापादानत्वसद्भावादिति भावः ॥ **न च तर्हीति** । शृङ्गाच्छरो जायत इति प्रयोगोपपत्त्या शृङ्गस्योपादानत्वकल्पन इत्यर्थः । अवधित्वेऽपि शृङ्गस्य शृङ्गाच्छरो जायत इति प्रयोगोपपत्तेरवधित्व-परित्यागेनोपादानत्वकल्पनायां नियामकाभावादिति भावः ॥ **निरुपादानेति** । निरुपादानभावोत्पत्ति-प्रसङ्गादित्यर्थः ॥ **अपरिणतेति** । शराद्यात्मना परिणतस्य शृङ्गादिभागस्येत्यर्थः ॥ **शराङ्कुरादेरिति** । सकाशादिति शेषः ॥ **प्रमितत्वादिति** । तथा च केचिदुपादानं केचिदवधय इति विभाग एवोचित इति भावः । अस्तु शराद्यात्मनाऽपरिणतस्य शरादेरत्यन्तभिन्नतया प्रमितस्य शृङ्गभागस्यापि शराद्यु-पादानत्वमित्यत आह **अन्यथेति** । तथा सति घटादेर्मृदाद्युपादानं न दण्डादीति व्यवस्था न स्यादित्यर्थः । अपरिणतभागबाहुल्यकल्पनमनर्थकमित्यतः शृङ्गाच्छरो जायत इति प्रयोगोपपादकत्वान्नानर्थक्यमिति भावेन प्रयोगानुपपत्तिशङ्कामुत्थापयति **कथं तर्हीति** । यदीयमुपादाने पञ्चमी यदि वाऽवधौ तथाऽपि शृङ्गावय-वयोरेवोपादानत्वापादानत्वसत्त्वेन शृङ्गावयवादित्येव वक्तव्यत्वादिति भावः । कथमनेनोक्तशङ्कापरिहार इत्यतस्तदुपयोगितया व्याचष्टे **इति बाह्या** । नन्वेवमपरिणतभागबाहुल्येऽप्यपरिणतानामप्यवयवत्वान्न तत्र शृङ्गशब्दोपपत्तिरिति तत्राह **एतदुक्तमिति** ॥ **शृङ्गान्तरेति** । वस्तुकृतशृङ्गत्वाभिप्रायेणाद्यः । बौद्धशृङ्गत्वाभिप्रायेण द्वितीयः ।

स०— प्रयोगानुपपत्तेरित्युक्तमुपपादयति **यदि चेयं पञ्चमीति** ।

प०— कथं तर्हि स्यात्प्रयोग इत्यत आह **यदि चेति** ॥ **तथापीति** । उभयथापीत्यर्थः । अत्रेत्यनुवादः । शृङ्गादाविति व्याख्या । **बाह्यावयवगौरवादि**त्यस्यार्थमाह **अपरिणतेति** । अर्थान्तर-परतयाप्यवतार्थ व्याचष्टे । **कथमित्यादिना** । शृङ्गावयवेभ्य इति भाव्यमिति भावः । तावता शृङ्गावयवेभ्य इति वक्तव्यमिति चोद्यं न परिहृतमित्यत आह **एतदुक्तं भवतीति** ॥ **शृङ्गान्तरेति** । कतिपयतन्तुनाशे खण्डपटोत्पत्तिवत् खण्डशृङ्गान्तरोत्पत्त्येत्यर्थः ।

या०— **तथा सति शृङ्गादिति** । अवयवानां शृङ्गत्वाभावादिति भावः । एतदेव प्रपञ्चयति **यदि चेयमिति** ।

श्री०— **शृङ्गमेव** समग्रमेव ॥ **न च तर्हीति** । यद्यवधावपि पञ्चम्यङ्गीकृता तर्हि शृङ्गादित्य-त्राप्यवधित्वमेव पञ्चम्यर्थोऽस्तु न तूपादानत्वमित्यर्थः ॥ **निरुपादानेति** । पञ्चम्या अवधिमात्रार्थकत्वे शरे उपादानस्यानुक्तत्वेनेति शेषः । शृङ्गसारभागेन शराङ्कुरे जाते पश्चादूष्मादिवशादापरमाण्वन्तं शृङ्गनाशे पुनः परमाणुषु पाकविशेषेण द्व्यणुकादिक्रमेण पुनः शृङ्गान्तररूपं पूर्वशृङ्गभिन्नं कार्यान्तरमुत्पन्नं सत्तदेव शृङ्गशब्दे प्रयोगविषयो भवतीति तार्किकरीत्याऽऽह **शृङ्गान्तरोत्पत्त्येति** । शृङ्गेण शराङ्कुरे जाते सत्यनन्तरमवशिष्टभागेष्विदं शृङ्गमिति ज्ञानमात्रमेव भवति न तु शृङ्गाख्यं वस्त्विति यावत् । तथा च भ्रम इति यावदिति रीत्यन्तरेणापि शृङ्गशब्दप्रयोगमुपपादयति **शृङ्गबुद्धिमात्रोत्पत्त्या वेति** ।

**सु०— ननु कुतः सूत्रादेरर्थान्तरकल्पना । शब्दार्थविरोधादिति ब्रूमः । उपादीयते कार्यमनेन स्वरूपतया स्वीक्रियत इत्युपादानम् । अपादीयते परित्यज्यते कार्यमनेनेत्यपादानम्-इति स्फुटो विप्रतिषेधः ।**

**किञ्च भाष्यकारेणायमपि योगः शक्योऽवक्तुमिति प्रत्याचक्षाणेनायमेव सूत्रार्थः सूचितः । यदि तर्हि जनिकर्तुः प्रकृतिरिति सूत्रमुपादानस्यापादानसंज्ञां विदध्यात् । कथं तर्हि ध्रुवमपायेऽपादानमित्यनेनैव गतार्थतामाह । न ह्युपादानस्यापाये ध्रुवत्वमस्ति । तस्मादुपादान-संसृष्टस्यैवावधिभागस्यापादानसंज्ञायामनेन विहितायां भाष्यकारीयं दूषणं सम्बध्यते । तथा सूत्रं समादधानैरपि तस्यैवार्थ प्रपञ्च इत्युक्तम् । अन्यथा प्रागवधेरपादानसंज्ञोक्ता । अत्र सूपादानस्य न ह्यवधिरुपादानमित्येकोऽर्थ इत्यवक्ष्यन् । अतस्तेषामपि सम्मतोऽयमर्थ इति गम्यते ।**

शे० — सूत्रादेरित्यादिपदेनोदाहरणसंग्रहः । परपरिकल्पितार्थेऽनुपपत्त्यभावान्न तत्परित्यागेनार्थान्तरकल्पनं युक्तमन्यथाऽतिप्रसङ्गादिति भावः ॥ **शब्दार्थेति** । उपादानापादानशब्दार्थेत्यर्थः । शब्दार्थविरोधमेव दर्शयति **उपादीयत इति** । तथा चाविरुद्धयोरेव सामान्यविशेषभावदर्शनादुपादानापादानयोश्च विरुद्धत्वेन सामान्यविशेषभावानुपपत्तेरेव परपरिकल्पितार्थे बाधकत्वाद्युक्तमर्थान्तरकल्पनमिति भावः । जनिकर्तुरिति सूत्रस्योपादानस्यापादानसंज्ञाविधायकत्वस्य भाष्यकारानभिमतत्वाच्च न तत्सूत्रार्थः । किन्तूपादानसंसृष्टावधिभागस्यापादानसंज्ञाविधायकत्वमेव भाष्यकाराभिमतत्वादित्याह **किञ्चेति** ॥ **अयमपीति** । योगः सूत्रम् । यथा भीत्रार्थानां भयहेतुः' इत्यादिसूत्राणि न कर्तव्यानि तथा 'जनिकर्तुः प्रकृति'रिति योगोऽप्यवक्तुमकर्तुं शक्य इत्यर्थः । गोलोमाविलोमभ्यो दूर्वा जायन्त इत्यादौ लोमादीन दूर्वादीन्प्रत्यवधित्वात् ध्रुवमपायेऽपादानमित्यनेनैवापादानसंज्ञासिद्धेर्नार्थोऽनेन सूत्रेणेति सूत्रं भाष्यकारेण प्रत्याख्यानमिति भावः । भाष्यकारेणेत्युपलक्षणम् । कैयटकारेणेत्यपि द्रष्टव्यम् । कैयटेऽपि यथा बिलाद्दीर्घभोगो भोगी निष्क्रमन्नप्यविच्छेदात्तत्रोपलभ्यते तथा दूर्वा अपीत्यादिनाऽवधित्वस्यैवोपपादनादित्यवधेयम् ॥ **ध्रुवत्वमिति** । अपायेऽवधित्वमित्यर्थः ॥ **सूत्रं समादधानैरपीति** । हरदत्तादिभिरित्यर्थः । **तस्यैवायं प्रपञ्चो** । ध्रुवमपायेऽपादानमित्यस्यैव जनिकर्तुरिति प्रपञ्चः । यथा भीत्रार्थानामित्यादिः प्रपञ्चस्तथेत्यर्थः ॥ **इत्युक्तमिति** । तच्च सूत्रे प्रकृतिशब्दस्योपादानसंसृष्टावधिभागपरत्व

---

एवोपपद्यते न त्वन्यथेत्यर्थः । तदेव दर्शयति **अन्यथेति** । सूत्रे प्रकृतिशब्दस्योपादानपरत्वाभिप्राय इत्यर्थः ॥ **अत इति** । प्रागवधेरपादानसंज्ञोक्ता अत्र तूपादानस्येत्यनुक्तेस्तस्यैवायं प्रपञ्च इत्युक्तेश्चेत्यर्थः **तेषामिति** । सूत्रं समादधानानामित्यर्थः । उपलक्षणं चैतत् । वृत्तिकारादीनामपीत्यपि द्रष्टव्यम् । अत एव वृत्तौ 'पुत्रात्प्रमोदो जायते' इत्येतदप्युदाहृतम् । न्यासेऽपि प्रकृतिपदं हेतुमात्रपरमित्याश्रित्य असति प्रकृतिग्रहणे उपादानस्यैव स्यात् प्रत्यासत्तेरनन्तरस्य प्रकृतिग्रहणात्सर्वस्य कारणस्य भवतीति 'पुत्रात्प्रमोदो जायत' इत्यादावनुपादानेऽप्युपादानसंज्ञार्थम् इत्युक्तमित्यवधेयम् ।

स० — **शब्दार्थविरोधादिति** । उपादानापादानशब्दार्थयोर्विरोधादुपादानस्यापादानविशेषत्वं न कल्पनीयमिति भावः । उक्तं हि कैयटे । ध्रुवमेकरूपमुच्यते । तच्चाध्रौव्यमपायं विषयमाश्रियते न त्वनवच्छिन्नम् । ततोपाये यदवशिष्टं तदपाये ध्रुवमुच्यत इति । **ध्रुवत्वमस्तीति** । अवधित्वमस्तीत्यर्थः । **अयमपि योगः शक्य इति** । यथा 'भीत्रार्थानां भयहेतुः इत्यादिसूत्राणि न कर्तव्यानि तथेदमपि सूत्रमवक्तुं अकर्तुं शक्यं व्यर्थमित्यर्थः ।

प० — **सूत्रादेरिति** । 'जनिकर्तुः' इतिसूत्रस्य शृङ्गादित्यादेरुदाहरणस्य चेत्यर्थः ॥ **शब्दार्थेति** । उपादानापादानशब्दार्थयोरन्योन्यविरोधात् उपादानविशेषत्वायोगादित्यर्थः । तदेवाह

**उपादीयत इति** । उपाङ्पूर्वात् दाञ्दाने इत्यतः 'कृत्यल्युटो बहुलम्' इति अकर्तरि ल्युडित्युक्तं भवति । एवमग्रेपि । शाब्दिकसमत्याप्युक्तमर्थं साधयति **किञ्चेति** । आद्यस्य चतुर्थपादेऽपादानसंज्ञा-प्रकरणे 'भीत्रार्थानां भयहेतुः पराजेरसोढः, वारणार्थानामीप्सितः अन्तर्धौ येनादर्शनमिच्छति, आख्या-तोपयोगे, जनिकर्तुःप्रकृतिः, भुवः प्रभवः' इति सप्त सूत्राणि 'ध्रुवम्' इतिसूत्रेण गतार्थतया महाभाष्ये-ऽनारभ्याणीति निराकृतानि । **तत्रायमपि योगः** जनिकर्तुरिति योगः=सूत्रम् अवक्तुं शक्यमिति निराकुर्वाणेनास्मदुक्त एव सूत्रार्थः सूचित इत्यर्थः । तदेव व्यनक्ति **यदीति** ॥ **समादधानैरिति** । न्यासमञ्जरीकारादिभिरित्यर्थः । **प्रागिति** । ध्रुवसूत्रे ॥ **अत्र त्विति** । जनिकर्तुरित्यत्र ।

**या० — सूत्रादेरित्यत्रादिपदेनोदाहरणं ग्राह्यम्** । **शब्दार्थविरोधादिति** । उपादानापादान-शब्दार्थयोर्विरोधादुपादानस्यापादानविशेषत्वस्य त्वदुक्तस्य सूत्राद्यर्थत्वासम्भवादिति भावः ॥ **अयमपि योग इति** । यथा 'भीत्रार्थानां भयहेतुरि'त्यादि सूत्राणि न कर्तव्यानि तथेदमपि सूत्रमवक्तुमकर्तुं शक्यं व्यर्थमित्यर्थः ॥ **ध्रुवत्वमस्तीति** । अवधित्वमस्तीत्यर्थः ।

**श्री० — अर्थान्तरेति** । जनिकर्तुरिति सूत्रस्य जनेः कर्तुरित्यादिनोक्तरीत्याऽवधेरपादान-संज्ञाविधायकत्वरूपार्थान्तरेत्यर्थः । सूत्रादेरित्यत्र जनिकर्तुरिति सूत्रोदाहरणरूपं शृङ्गाच्छर इत्यादि ग्राह्यम् ॥ **कथं तर्हीत्यादि** । अपायो विश्लेषस्तस्मिन्सति यद् ध्रुवमवधिभूतं तदपादानसंज्ञं भवतीत्यर्थः ।

तथा चैकार्थत्वे हि गतार्थता वाच्या । अत्र तु त्वदुक्तरीत्या जनिकर्तुरिति सूत्रमुपादाने पञ्चमी-विधायकम् । ध्रुवमिति सूत्रं त्ववधौ तद्विधायकमिति मिन्नविषयकत्वान्न ध्रुवमिति सूत्रेण जनिकर्तुरिति सूत्रस्य गतार्थताकथनं युक्तमित्याशयः । ननु सूत्रद्वयोक्तोपादानत्वध्रुवत्वयोरैक्यमेवास्तु । तथा च युक्ता गतार्थताशङ्का । तथा च तद्विरोधाभावादुपादान एवास्तु पञ्चमीत्यत आह **न हीति** । **तस्य** ध्रुवमिति सूत्रोक्तार्थस्य ॥ **अन्यथेति** । जनिकर्तुरिति सूत्रस्योपादाने पञ्चमीविधायकत्व इत्यर्थः । **तेषां** वैया-करणानाम् । **अयमर्थः** जनिकर्तुरिति सूत्रस्योक्तोऽर्थ इत्यर्थः ।

**च० — अयमपि योग इति** । 'भीत्रार्थानां भयहेतुः' इत्यादयो यथा न कर्तव्यास्तथा जनिकर्तुः प्रकृतिरित्येतदानुपूर्वीकोपीत्यर्थः **तथा समादधानैरिति** । समाहितं कुर्वाणैर्हरदत्तादिभिरि-त्यर्थः । **प्राक्** । ध्रुवमपायेऽपादानमित्यत्र । **अत्र** जनिकर्तुरिति योगे ।

**सु० — अस्तु वोपादानेऽपि पञ्चमी । तथाऽपि(यत इति)पञ्चमीबलादुपादानत्वनिश्चयो नोपपद्यते । अनेकार्थत्वात् । विशेषस्मरणादित्युक्तमिति चेत् । किमिदं विशेषस्मरणम् । जनि-धातुग्रहणेनेति चेत् । तस्मात्मन आकाशः सम्भूत इत्यादीनामनुदाहरणीयत्वं स्यात् । कुतश्च**

**यत इति पञ्चमीत्यवधृतम्। तसेः सार्वविभक्तिकत्वात्। आत्मन आकाश इत्यनेनैकार्थत्वादिति चेन्न, तस्याः पञ्चम्यां 'भुवः प्रभव' इति विशेषावि(वधि)हिताभिव्यक्त्यवधितार्थत्वात्। तथा चैवोदाहृतम्। हिमवतो गङ्गा प्रभवति प्रथममुपलभ्यत इत्यर्थ इत्यास्तां विस्तरः।**

**शे०** —एवं जनिकर्तुरित्यस्यावधेरेव अपादानसंज्ञाविधायकत्वेन उपादानस्य तत्संज्ञाविधायकत्वाभावात् उपादाने पञ्चम्येव नेति न पञ्चम्या उपादानत्वसिद्धिरित्युपपादितम्। इदानीं जनिकर्तुरित्यस्य परपरिकल्पितार्थमङ्गीकृत्योपादानम्यानेनापादानसंज्ञाप्राप्त्योपादाने पञ्चमीसिद्धावपि न ब्रह्मण उपादानत्वसिद्धिरिति परीत्यैवोपपादयति **अस्तु वेति**। ननु यद्युपादाने पञ्चमी स्वीकृता तर्हि तया ब्रह्मण उपादानत्वसिद्धिः स्यादेव, इत्यतः स्यादेतदेवं यद्युपादान एव पञ्चमीविधानं स्यात्। न चैतदस्तीत्याह **तथाऽपीति**। **अनेकार्थत्वादिति**। जाड्याद्बद्धः पुण्यात्सुखमित्यादाविव यत इत्यादि पञ्चम्या निमित्तार्थकत्वस्यापादानार्थकत्वेऽपि वृक्षात्पततीत्यादाविव विश्लेषावधिमात्रार्थत्वस्य सम्भवेनोपादानमात्रार्थत्वाभावान्न तयोपादानत्वनिश्चय इति भावः॥ **विशेषेति**। अयमर्थः। न तावदियं निमित्तपञ्चमी भवितुमर्हति। 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य' इति हेतोर्मनुष्याच्च रूप्यप्रत्ययविधौ तत आगत इति प्रकृतस्य पञ्चम्यर्थस्य हेतोरिति विशेषणेन हेतावपि पञ्चमीज्ञापनात्। ज्ञापनेन विध्युन्नयनादेव निमित्ते पञ्चम्याः कल्पनीयतया तदपेक्षया 'जनिकर्तुः प्रकृतिः' इति प्रत्यक्षविधिप्राप्तोपादानपञ्चम्या वरत्वेनोपादानपञ्चमीत्वमेवेति निर्णयात्। ध्रुवमपायेऽपादानमित्यवधेरप्यपादानत्वस्मरणाज्जनिकर्तुः प्रकृतिरित्युपादानस्यापि तत्स्मरणेनापादानत्वस्योपादानानुपादानसाधारणतया सामान्यत्वात्। उपादानत्वस्य च विशेषत्वादुपादानपञ्चमीत्वमेवेति निर्णयो युज्यत इति।

तत्र विशेषस्मरणत्वं न तावत्प्रत्यक्षविधिप्राप्तत्वम्। पाणिनीये ज्ञापकयोगविभागलभ्यस्य व्याकरणान्तरे प्रत्यक्षविधानावश्यंभावेन निमित्तपञ्चमीत्वस्यापि प्रत्यक्षविधिप्राप्तत्वात्। नाप्यपादानविशेषत्वादुपादानत्वस्य तदर्थत्वमिति युक्तम्। तथा सति ध्रुवमपायेऽपादानमित्युक्तावधेरपि तद्विशेषतया तदर्थत्वस्यापि प्रसङ्गादुपादानापादानशब्दार्थविप्रतिषेधस्योपपादितत्वेन सामान्यविशेषभावस्याशक्यशङ्कत्वाच्चेति भावेनाह **किमिदमिति**। अत एवोक्तदोषप्रसक्तिशून्यं प्रकारान्तमाशङ्कते॥ **जनिधातुग्रहणेनेति**। यद्यप्यत्र न धातुनिर्देशे इक्, तथा सति 'गमहन' इत्युपधालोपप्रसङ्गात्। तथापि 'इन्धिभवतिभ्यां च' इतिवद्धातुनिर्देशे आगान्तुकोऽयमिकार इति द्रष्टव्यम्। अवधिपञ्चम्या धातुविशेषग्रहणवत्त्वाभावादुपादानपञ्चम्याश्च तद्वत्त्वादपादानार्थत्वेऽप्युपादानपञ्चम्येव ग्राह्या नावधिपञ्चमीत्याशयः॥ **तर्हीति**। जनिकर्तुः प्रकृतिरित्यस्य जनिधातुग्रहणेन ध्रुवमपायेऽपादानमित्यस्माद्विशेषस्मरणत्व इत्यर्थः॥ **अनुदाहरणीयत्वमिति**। 'यतो वेत्यत्र जायन्त' इति जनिधातुश्रवणेन तस्योदाहरणत्वसंभवेऽपि

'आत्मन आकाशः सम्भूत' इत्यत्र जनिधात्वश्रवणेनोदाहरणत्वासंभवादित्यर्थः । अस्तु तस्यानुदाहरणीयत्वं तथाऽपि यतो वेत्यादिपञ्चम्या उपादानत्वसिद्धिरविकलैव । किञ्च जननं जनिरुत्पत्तिः । 'इञ् वपादिभ्यः' इति जनेर्भावे 'इञजनिघसिभ्य मिणि'त्युणादिसूत्रेण 'इण्वजनिवध्योश्चे'ति वृद्धिप्रतिषेधः । एवं चोत्पत्त्यर्थकधातुग्रहणेन विशेषस्मरणत्वस्य विवक्षितत्वा'दात्मन आकाशः संभूत' इत्यत्राप्यङ्गादङ्गात्संभवसीत्यादाविवोत्पत्त्यर्थकधातुयोगस्य सत्त्वाद्युक्तमेव तस्याप्युदाहरणमित्यत उक्तरीत्या पञ्चम्या कथञ्चिदुपादानत्वसिद्धिसंभवेऽपि प्रकृते ज्ञापकाभावेन यत इत्यस्य पञ्चमीत्वासिद्धेर्न तयोपादानत्वसिद्धिः संभवतीत्याह **कुतश्चेति** । येन तद्बलादुपादानत्वसिद्धिरिति वाक्यशेषः । पञ्चम्यास्तसिलिति पञ्चम्या एव तसिल्विधानेन पञ्चमीं विना तसेरनुपपत्तेस्तसिनैव यत इत्यस्य पञ्चमीत्वसिद्धिरित्यतः स्यादेतदेवं यदि पञ्चम्या एव तसिविधाननिति स्यान्न चैतदस्ति । आद्यादिभ्य उपसंख्यानेन तसेः सार्वविभक्तिकत्वावगमेन सर्वविभक्तिसाधारणस्य तसेः पञ्चमीत्वावधारकत्वायोगादित्याह **तसेरिति** । ननु 'यतो वा इमानि भूतानि जायन्ते' 'आत्मन आकाशः संभूत' इति सृष्टिवाक्ययोरेकार्थतया तत्स्थयोर्यत आत्मन इत्येतयोरेकार्थत्वादात्मन इत्यस्य पञ्चमीत्वाद्यत इत्यस्यापि पञ्चमीत्वनिश्चय इति शङ्कते **आत्मन इति** । तर्ह्यात्मन इति पञ्चम्या अभिव्यक्त्यवधितार्थत्वेन तद्वदेव यत इत्यस्याप्यभिव्यक्त्यवधितार्थत्वापत्त्योपादानार्थत्वाभावेन पञ्चम्या उपादानत्वसिद्धिरिति सिद्धान्तभङ्गप्रसङ्गादित्याह **न तस्या इति** । कुत आत्मन इति पञ्चम्या अभिव्यक्त्यवधिताऽर्थत्वमित्यतो विशेषस्मरणविहितत्वादित्यभिप्रेत्योक्तं **विशेषविहितेति** । जनिधातुग्रहणेन जनिकर्तुरित्यस्येव भूधातुग्रहणेन 'भुवः प्रभव' इत्यस्य विशेषस्मरणत्वादिति भावः ।

ननु सूत्रे प्रभव इत्येवोक्तत्वात्कथमनेनाभिव्यक्त्यवधिताऽर्थत्वसिद्धिरित्यतोऽभिव्यक्त्यवधिताऽर्थनिष्ठोदाहरणवाक्यात्तत्सिद्धिरित्याशयेन तदुदाहरति **तथा चैवेति** । ननूदाहरणेऽपि प्रभवतीत्येवोक्तत्वान्नाभिव्यक्त्यवधिताऽर्थत्वमुदाहरणस्येत्यतो वृत्तिकारीयं तद्व्याख्यानमुदाहरति **प्रथममिति** । ननु च 'आकाशाद्वायुरि'त्युपादानपञ्चमीसाहचर्यादात्मन इति पञ्चम्युपादानपञ्चम्येवेति नास्याभिव्यक्त्यवधितार्थत्वमिति यतो वेति पञ्चम्या अप्युपादानपञ्चमीत्वमित्यतः स्यादेतदेवं यद्याकाशाद्वायुरित्यस्या उपादानपञ्चमीत्वं स्यात् । न चैवम् । तत्रापि वा वात्मना परिणताकाशसंसृष्टावधिभूताकाशस्यैवोक्तरीत्याऽपादानत्वपञ्चमीवाच्यत्वयोः सिद्धतयोपादानस्य पञ्चम्यर्थत्वाभावेन तत्साहचर्येणाप्यात्मन इत्यस्योपादानपञ्चमीत्वनिश्चयायोगादित्याह **इत्यास्तां विस्तर इति** ।

स० — **भुवः प्रभव इतीति** । भवनं भूः । भूकर्तुः प्रभवोऽपादानं स्यादिति सूत्रार्थः । **विशेषविहितेति** । संभूत इति भूधातुग्रहणादिति भावः ।

**प० — कुत इति** । कस्मात्कार(का)णादियं पञ्चमीत्यर्थः । ननु 'पञ्चम्यास्तसिल्' इति पञ्चम्यन्तात्तसिलो विधानेन पञ्चम्यन्तकारकस्यापादानवत्त्वात् उपादानस्य चापादानविशेषत्वात् उपादान एव 'यतो वा इमानि' इत्यादिपञ्चमीति निश्चीयत इति चेत् । स्यादेवं यद्येवमादिशब्दस्तसिलन्त इति निश्चीयते । न चैवम् । निश्चायकलकाराश्रवणात् । स्वरस्यात्रोपनिषदादावनिर्णयात् । 'प्रतियोगे पञ्चम्यास्तसिः' इत्यत्र 'आद्यादिभ्य उपसंख्यानम्' इति वार्तिके आद्यादिशब्देभ्यः सर्वविभक्त्यर्थे तसिप्रत्ययस्य विधानेन 'यतो वा' इत्यादेस्तसिप्रत्ययान्तत्वेनापि संभवेन कर्त्रादिकारकान्तत्वोपपत्त्या, यतो येन कर्त्रा इमानि भूतानि जायन्त इत्यादिसंभवादिति भावेनाह **तसेः सार्वविभक्तिकत्वादिति** । एकार्थत्वादित्यनन्तरमपादानकारकादियं पञ्चमीति निश्चीयत इति योज्यम् ॥ **भुव इति** । भवनं भूः, भुवः भवनस्य कर्तुरिति वर्तते । यस्मिन्व्यापारे सति प्रथमं जनदृष्टिविषयो भवति तादृशव्यापारोऽत्र भवनमुच्यते । तस्य कर्तुरवधिभूतं अपादानसंज्ञं भवतीति सूत्रार्थं हृदि कृत्वाह **इतिविशेषेत्यादिना** । भुव इत्युक्तेर्विशेषविधानं ध्येयम् ॥ **प्रथममुपलभ्यत इत्यर्थ इति** । प्रथमोपलम्भानुकूलव्यापारवान्भवतीत्यर्थ इत्यर्थः । तथैच पदमञ्जर्यामुक्तेः । तथा च न पञ्चमीबलाद्ब्रह्मणः परिणामित्वरूपोपादानत्वसिद्धिरिति भावः । ननु आत्मन आकाशस्संभूत इत्यत्र संभूतोऽभिव्यक्त इति व्याख्यानमयुक्तम् । तथात्वे आकाशाद्वायुरित्याद्युत्तरत्रापि तदर्थत्वापत्तेः । तत्र विकारविकारिभावो भवतामपि संमत इति चेत् (न) । तत्र जननार्थत्वेपीह निर्विकाररूपबाधकवशेनाभिव्यक्तत्वोपपत्तेरित्याद्यभिप्रेत्याह **आस्तां विस्तर इति** ।

**या० — भुवः प्रभव इतीति** । भवनं भूः, भूकर्तुः प्रभवोऽपादानं स्यादिति सूत्रार्थः । **विशेषविवक्षितेति** । विशेषस्मरणतया विवक्षितेत्यर्थः । विशेषस्मरणं च भूधातुग्रहणेनेति मन्तव्यम् । न चाकाशाद्वायुरित्याद्युपादानपञ्चमीसाहचर्यात् 'आत्मनः' इत्युपादानपञ्चमीति वाच्यम् । आकाशादित्यादावपि निमित्तांशस्यैव पञ्चमीनिर्देशात् । किञ्च जनिकर्तुः प्रकृतिरित्यनेनापि कथमुपादान एवापादानसंज्ञा । वृत्तौ पुत्रात्प्रमोदो जायत इत्यस्याप्युदाहृतत्वात् । न्यासेऽपि प्रकृतिपदं हेतुमात्रपरमित्याश्रित्य 'असति प्रकृतिग्रहणे उपादानस्यैव स्यात् । प्रत्यासत्तेः । नेतरस्य । प्रकृतिग्रहणात्सर्वस्य कारणस्य भवति' इति प्रकृतिपदं पुत्रात्प्रमोदो जायत इत्यादावनुपादानेऽप्यपादानसंज्ञार्थमित्युक्तत्वादित्याद्यभिप्रेत्याह **इत्यास्तां विस्तर इति** ।

**श्री० —** पञ्चमी यतो वेति श्रौता । तर्हि जितं मयेत्यत आह **तथाऽपीति** ॥ **अनेकेति** । पञ्चम्या इति शेषः । ततश्चापादाने पञ्चमीत्यपादानतायामेव पञ्चम्यस्त्वित्यर्थः ॥ **विशेषेति** । अपादाने पञ्चमीत्यस्य सामान्यसूत्रत्वाज्जनिकर्तुरिति सूत्रस्य तु विशेषसूत्रत्वादत्र चोपादानस्यैवापादा

नताविधानादुपादान एवेयं यतो वेति पञ्चमीति निश्चयो युक्त इत्यर्थः ॥ **स्यादिति** ॥ संभूत इति-भूधातोरेव सत्त्वेन जनिधातोरभावात्कालात्ययापदिष्टताकथनसमये यतो वेति वाक्यानन्तरमिदं नोदाहरणीयमिति भावः । कुतश्चेत्यनन्तरं 'यतो वा इमानि भूतानि जायन्त' इति श्रुताविति शेषः । पञ्चम्यास्तसिलिति विधिरिति चेत्तत्राह **तसेरिति** । तथा च यत इति पञ्चम्या येनेति तृतीयार्थत्वसंभवेन विकारिकारणभावाभावसाधकानुमानानामुपादानार्थकपञ्चमीयुक्त'यतोवे'त्यादिश्रुतिबाधो न युक्तः । यत इति विभक्तेस्तृतीयार्थकत्वेन निमित्तत्वस्यैव तदर्थतासंभवादिति भावः ॥ **एकार्थत्वादिति** । तथा च तत्रात्मन इति पञ्चम्याः सत्त्वाच्छ्रुत्यैकार्थतालाभाय यत इत्यत्राऽपि पञ्चम्येव व्याख्येया । तथा च युक्तोऽनया श्रुत्याऽनुमानबाध इत्यर्थः । **तस्याः** आत्मन इति श्रुत्युक्तायाः ॥ **विशेषेति** । भूधातुग्रहणेनेत्यर्थः । अभिव्यक्ति प्रत्यवधिताऽभिव्यक्त्यवधिता, विशेषसूत्र विहिता याऽभिव्यक्त्यवधिता तदर्थत्वादित्यर्थः । तथा च त्वन्मते यतो वेत्यत्र पञ्चम्या जनिकर्तुरिति सूत्रेणोपादानार्थकत्वादात्मन इति पञ्चम्याश्च भुवः प्रभव इति विशेषसूत्रविहिताभिव्यक्त्यवधित्वार्थकत्वान्न 'यतो वा' 'आत्मन' इत्यनयोरैकार्थ्यमिति भावः । अत्रास्तु वेत्यादिग्रन्थः प्रौढिवादेन प्रवृत्तो, नायमपि सैद्धान्तिकोऽर्थ इति ज्ञेयम् । अस्मन्मते त्वात्मन इति यतो वा इति श्रुत्योरैकार्थ्यमेव । संभूत इति वत् 'जनी प्रादुर्भाव' इति जनिधातोरप्यभिव्यक्त्यवधितार्थत्वमेवेति ज्ञेयम् । तथा च जनिकर्तुरिति सूत्रमवधेरेवापादानसंज्ञाविधायकमिति न 'यतो वा' इत्यादिपञ्चमीयुक्तश्रुतिविरोधोऽस्मदनुमानानामिति सिद्धम् ।

च०—वृत्तिकारादिदिशमनुरुन्धानोपि समाधत्ते **अस्तु वेति** । **अनेकार्थत्वादिति** । विभाषा-गुणोऽस्त्रियामित्यादिभिर्निमित्ताद्यर्थान्तरेष्वपि जाड्याद् बद्धः धूमाद्वह्निमानित्यादौ तस्या अनुशिष्टत्वादिति भावः । **विशेषस्मरणादिति** । अवधित्वार्थकपञ्चम विधायके 'ध्रुवमपाय' इत्यादौ धातुविशेषग्रहणाभावेनोपादानत्वार्थकतद्विधायके तद्विशेषोपादानादुपादानत्वार्थिकैवाध्यवस्यते नावधित्वार्थिकेति भावः । **तर्हीति** । जनिकर्तुः प्रकृतिरित्यस्य ध्रुवमपाय इत्यस्माद्विशेषस्मरणत्वे इत्यर्थः । **अनुदाहरणीयत्वमिति** । 'यतो वा'इति वाक्ये जनेः समभिव्याहारेण तादृशवाक्यस्योदाहार्यतायामपि आत्मन इति वाक्ये भवतेरेव समभिव्याहारेण जनेस्तदभावात्तस्यानुदाहार्यता स्यादित्यर्थः । **कुतश्चेति** । येन तद्बलादुपादानसिद्धिरिति पूरणीयम् । उत्सृष्टानुबन्धयोस्तसितसिलोः सारूप्यादिति भावः । **तसेरिति** । आद्यादिभ्य उपसंख्या तस्य तसेः सर्वविभक्तिस्थानिकतया पञ्चमीत्वानवधारकत्वादिति भावः । आत्मनः 'यतो वे'ति-सृष्टिप्रतिपादकवाक्ययोरैक्यात्तद्घटकयोर्यत आत्मन इति खण्डयोस्तदवश्यंभावेन यत इत्यत्र पञ्चमीतरविभक्तिस्थानिकतसेः कल्पनाऽयोगादित्यर्थः । उदाहृतवाक्ययोरैकार्थ्योपगमे आत्मपदसमभिव्याहृतपञ्चम्याः भूधातुसमभिव्याहृततयाभिव्यक्त्यवधित्वार्थकत्वेन यत इत्यत्रापि तादृशार्थकत्वापत्त्या वोपादानत्वसिद्धिरिति

भावः । आकाशाद्वायुरित्युपादानपञ्चमीसाहचर्यादात्मन इति पञ्चम्यप्युपादानपञ्चम्येवेति नास्या अभिव्यक्त्यवधित्वार्थकत्वमिति शङ्का आकाशाद्वायुरित्यत्रापि निमित्तत्वार्थकत्वोपगत्या निरसनीया । पुत्रात्प्रमोदो जायत इत्यादीन्यपि वामनः काशिकायामुदाजहारेति तद्व्याख्यारूपन्यासे प्रकृतिपदं हेतुमात्रपरमित्याशिश्रिये न्यासकार इति जनुकर्तुरित्यनेनापि नोपादान एवापादानसंज्ञा सेत्स्यतीत्याशयेनाह आस्तां विस्तर इति ।

सु०— अथवा यदुक्तं न ब्रह्मविकारो विश्वं ततो भेदेनोपलम्भादिति । तदसत् । शरादिषु व्यभिचारात् । शरादयो हि शृङ्गाद्युपादानास्ततो भेदेनोपलभ्यन्त इत्यतो गूढाभिसन्धिराह शृङ्गादिति ।

(अनु०— पृ. २०१७ द्रष्टव्यम्)

एवमाद्येषु स्थलेषु शरादीन्प्रति शृङ्गादीनाम(प्य)पायावधित्वलक्षणमपादानत्वमेवेष्यते । न पुनरुपादानत्वम् । अतो विपक्षत्वाभावाद्भेदेनोपलम्भो न तत्र साध्यं व्यभिचरतीति । ननु कथमुच्यते शृङ्गादीनां शरादीन्प्रति नोपादानत्वमिति । तथा सत्युपादानान्तरानुपलम्भाच्छरादीनां निरुपादनोत्पत्तिः प्रसज्येतेत्यतोऽभिसन्धिमुद्घाटयति उपादानेति । (पृ. २०२०)

---

शृङ्गादेरुक्तरूपापादानत्वेऽपि न च शरादीनां निरुपादानत्वोक्तिप्रसङ्गः । कतिपयानां शृङ्गाद्यवयवानां शराद्युपादानत्वाभ्युपगमात् । न चैवमनैकान्त्यतादवस्थ्यम् । यद्यप्यत्र शृङ्गादौ शराद्युपादानैकदेशत्वं प्र(ती)दृश्यते । तथाऽप्यत्र शृङ्गादौ यस्यैकदेशस्योक्तस्य रूपापादानता स एव ब्रह्मणो दृष्टान्तो भवेत् । तत एव शरादीनां भेदोपलम्भात् । न तूपादानभागः । ततस्तदभावात् ।

एतदुक्तं भवति । शृङ्गादेरवयवा हि केचिच्छरादीनामुपादानभूताः केचिन्निमित्तभूताः । तत्र ये निमित्तभूतास्तेषु हेतुवृत्तावपि नानैकान्त्यम् । तेषां सपक्षप्रविष्टत्वात् । ये तूपादानभूतास्तेषां विपक्षप्रवेशेऽपि न तत्र हेतुवृत्तिरिति कुतोऽनैकान्त्यमिति ।

यस्तु वैयात्यान्मन्यते । नात्रापादानताऽस्ति । किन्तूपादानत्वमेव केवलम् । तथा चानैकान्तिकत्वमिति । स प्रष्टव्यः । किमत्राविनष्ट एव शृङ्गावयव्युपादानमित्यभिप्रायः, किंवा शृङ्गेऽविनष्टे तदवयवाः सर्वेऽपीति, उत नष्टे शृङ्गे तदवयवाः सर्वेऽपीति ।

नाद्य इत्याह न हीति । अत्र शृङ्गे । तथात्वे सुवर्णवच्छरे शृङ्गस्यापि प्रतीतिप्रसंगादिति हिशब्दार्थः ।

न द्वितीय इत्याह न हीति । अविनष्टश्रृङ्गेषु तदवयवेषु सर्वेषु शराद्युपादानतैवेति न युक्तम् । तथा सति श्रृङ्गशरयोः समानदेशताप्रसंगादिति हिशब्देन सूचयति ।

न तृतीय इत्याह न हीति । अत्र सर्वेष्वपि श्रृङ्गावयवेषु श्रृङ्गनाशोत्तरं शराद्युपादानतैवेति न युज्यते । अतो नानैकान्त्यमिति हिशब्दः । कुतो न युज्यत इत्यत आह बहीति । कार्याद्बाह्यानामपरिणतानामवयवानामुपलम्भात् । अपरिणतस्याप्युपादानत्वेऽतिप्रसङ्गात् ।

**शे०** — परोदीरितायाः पञ्चमीश्रुत्या ब्रह्मण उपादानत्वसिद्धेर्भाष्ये पृथगनिरासप्रयुक्ततन्न्यूनताशङ्कापरिहारायैव पञ्चम्यर्थतयेति शेषाद्याश्रयणेनेदं भाष्यव्याख्यानं न तु प्रकारान्तरेण प्रकृतोपयोगोऽस्य भाष्यस्य न सम्भवतीत्यभिप्रायेणेत्याशयवानध्याहारादिनैरपेक्ष्येणैवेमं ग्रन्थं व्याचक्षाणस्तर्हि श्रृङ्गादीनां शरादीन्प्रत्युपादानत्ववर्णनं किमर्थमित्यतो ब्रह्मणो जगदुपादानत्वाभावे प्रागुपन्यस्तानुमानस्य व्यभिचारनिवृत्त्यर्थं तदिति दर्शयन्प्रागुपन्यस्तानुमानानुवादपूर्वकं तत्र व्यभिचारशङ्कामुत्थाप्य तन्निवर्तकतयोत्तरभाष्यं योजयति **अथवेति** । ननु निरुपादानभावोत्पत्त्ययोगादुपादानान्तरस्य चाभावाच्छृङ्गादीनामेव शरादीन्प्रत्युपादानत्वस्यावश्यमङ्गीकार्यत्वान्नानुपादानत्वाङ्गीकारेण व्यभिचारपरिहारो युक्त इत्यत उक्तं **गूढाभिसन्धिरिति** । शराद्यात्मना परिणतश्रृङ्गैकदेशस्य शराद्युपादानत्वेऽपि तत्संसृष्टापरिणतश्रृङ्गभागस्योपादानत्वाभावाभिप्रायेणापादानत्वोक्तिः परिणतश्रृङ्गभागाच्च न शरादीनां भेदोपलम्भ इति न व्यभिचार इत्यभिसन्धेरत्र गूढत्वं द्रष्टव्यम । ननु च शङ्कितव्यभिचारस्य श्रृङ्गाच्छर इति वाक्येनैव परिहृतत्वादुत्तरवाक्यवैयर्थ्यमित्यतो योऽत्राभिसन्धिर्गूढस्तदुद्घाटनार्थत्वान्न वैयर्थ्यमिति भावेन किमभिसन्ध्युद्घाटनस्य प्रयोजनमित्यतस्तदभावे पूर्ववाक्येन शङ्कितदोषस्यानिवर्तनमेवेत्याह **नन्विति** । अत्र ततः श्रृङ्गस्यैवोपादानत्वे व्यभिचारस्तदवस्थ इति शङ्कावाक्यशेषः । कथमेतावताऽपि व्यभिचारपरिहार इत्यतो हेतुमति श्रृङ्गाद्येकदेशे साध्यसद्भावेन साध्याभाववति तदेकदेशे च हेत्वभावेनेति भावेन वाक्यतात्पर्यमाह **एतदुक्तं भवतीति** ।

ननु नहीत्यादिना सर्वस्योपादानत्वाभाववर्णनमनर्थकम् । न चानैकान्त्यपरिहारार्थं तदिति वाच्यम् । हेतुमति तदेकदेशे साध्यसद्भावव्युत्पादनेन साध्याभाववति तदेकदेशे च हेत्वभावव्युत्पादनेन तच्छङ्काया निरस्तत्वात् । न च सर्वस्योपादानत्वेन ततो भेदोपलम्भाद्व्यभिचार इति शङ्कापरिहारार्थं तदिति वाच्यम् । अपरिणतभागस्याप्युपादानतायामतिप्रसङ्गेन सर्वस्योपादानत्वमेवेति शङ्काया एवाप्रसरादित्यतः कारणोक्त्या शङ्कामुत्थाप्य तत्परिहारतया वाक्यं योजयति **यस्त्विति** । नन्वत्र कथमुत्तरवाक्येनोक्तशङ्कापरिहारः । न चापरिणतभागानामप्युपलम्भेन न सर्वेषामप्युपादानत्वमित्यर्थप्रतिपाद-

---

अत्र सर्वत्र 'श्रुङ्ग, श्रृङ्ग' इतिस्थाने 'श्रृङ्ग' इति पठनीयम् ।

नात्तन्निरास इतिवाच्यम् । **शृङ्गनाशोत्तरकालं** तदवयवानां सर्वेषां शराकारेण परिणामस्य तेन निरासस्य सिद्धावपि पूर्वपक्ष्यभिमतस्याप्रच्युतस्वरूपस्वभावस्यैव शृङ्गस्य शरोपादानत्वमित्यस्याविनष्टशृङ्गाणां सर्वेषां तदवयवानां वा तदुपादानत्वमित्यस्य तेन निरासासिद्धेरित्यतः सम्भावितपक्षविकल्पप्रदर्शनपूर्वकं तत्परिहारकतया मूलं योजयति **स प्रष्टव्य इति** । नन्वेवं योजनायां भाष्ये पक्षद्वयनिरासप्रतिज्ञामात्रस्यैव प्राप्त्या न विवक्षितार्थसिद्धिः । बाह्यावयवगौरवादित्यस्योक्तप्रतिज्ञाद्वये हेतुत्वायोगात् । हेत्वन्तरस्य च भाष्येऽसमर्पणादित्यतोऽपेक्षितहेतोः हिशब्देनैव समर्पणान्न हेत्वनुक्तिरिति भावेनाद्यप्रतिज्ञायामपेक्षितहेतुसमर्पकतया हिशब्दं व्याचष्टे **तथात्र इत्यादिना** । अप्रच्युतस्वरूपस्यैव शृङ्गस्य शरात्मना परिणामादिति भावः । अप्रच्युतस्वरूपस्यैव शृङ्गस्य शरात्मना परिणामेऽपि कुतः शरे तत्प्रतीतिरित्यतो धर्मिणस्तादवस्थ्यादिति भावेन तत्र सम्प्रतिपन्नं दृष्टान्तमाह **सुवर्णवदिति** । अप्रच्युतस्वरूपस्यैव सुवर्णस्य कटकत्वापत्त्या धर्मिणस्तादवस्थ्येन कटकत्वापन्नेऽपि सुवर्णप्रतीतिप्रयोगवदित्यर्थः । कथमियं द्वितीयपक्षनिरासप्रतिज्ञेत्यतस्तदुपयोगितया भाष्यं व्याचष्टे **अविनष्टेति** । कुतो नेत्यत्राप्यपेक्षितहेतुसमर्पकतया हिशब्दं व्याचष्टे **तथा सतीति** ॥ **समानदेशतेति** । समानाधिकरणतेत्यर्थः । मूर्तयोः सामानाधिकरण्यं चानुपपन्नमिति भावः । इदं च पररीत्योक्तम् । परेण मूर्तानां सामानाधिकरण्यस्य दूषणत्वाभ्युपगमात् । न तु वस्तुतः । घटतदवयवयोरेकस्मिन्भूतले वृत्तिदर्शनेन तस्य दूषणत्वाभावात् । अवयवावयविभावानापन्नयोस्तथाभावो नास्तीति चेत् । आलोकमण्डलव्याप्त एव देशे वायुसञ्चारदर्शनात् । निबिडावयवत्वे सतीति विशेष्यत इति चेन्न । तस्यापेक्षिकस्य सर्वत्र सम्भवात् । आत्यन्तिकस्य च हीरादेरन्यत्रासम्भवात्पटवत्येव भूतले तदुपरक्तमहारजनवर्तमानतानुभवाच्च । समवायवृत्त्या तथाभावो नास्तीति चेन्न । अत्रापि तया वृत्त्या तथाभावानङ्गीकारात् । समवायस्यैव सिद्धान्तेऽनङ्गीकारादुपादानोपादेययोरभेदेनान्तत आश्रयाश्रयिभावस्यैवाभावाच्चेत्यन्यत्र विस्तरः ॥ **अतो नानैकान्त्यमिति** । साध्याभाववति हेत्वभावाद्धेतुमति चोक्तरीत्या साध्यस्यापि सत्त्वादिति भावः ॥ **अतिप्रसङ्गादिति** । इदमुपादानमिदं नेति व्यवस्थाभावप्रसङ्गादित्यर्थः ।

**प०**— पूर्वं जगतो ब्रह्मोपादानकत्वनिरासकानुमानानां बाधनिरासपरत्वेन व्याख्यातमेव सार्धश्लोकद्वयं 'न चान्यस्यान्यरूपत्वं' इत्येतन्मूलोक्तानुमानस्य व्यभिचारनिरासकतयाऽपि व्याचष्टे **अथवेति** ॥ **गूढाभिसन्धिरिति** । यस्य भेदेनोपलम्भः न तस्योपादानत्वं किन्त्वन्यस्येत्यभिप्रायमप्रकाश्येत्यर्थः ॥ **इत्यभिसंधिमिति** । इत्याशङ्कायाममिसंधिमित्यर्थः । क्वचि'दित्यतोऽभिसंधिमि'ति पाठः । मूलं योजयितुं परिष्करोति **श्रृङ्गादेरिति** । योजयति **यद्यप्यत्रेत्यादिना** । किंवा श्रृङ्गे विनष्ट इत्यत्राविनष्ट इति पद-

च्छेदः । अविनष्टशृङ्गेष्विति बहुव्रीहिः ॥ **समानदेशतेति** । यावद्देशस्थता शृङ्गस्य तावद्देशस्थता शरस्य अपि स्यादित्यर्थः ।

**श्री०**— अविनष्टशृङ्गेष्विति बहुव्रीहिः । **समानदेशता** एकावयवनिष्ठत्वमित्यर्थः । तथा चैकस्मिन्नुपादाने उपादेयद्वयासमावेशादिति भावः । **अत्रेति** । तृतीयपक्षे । सर्वशब्दोपरि भारो द्रष्टव्यः ॥ **अतिप्रसङ्गः** कुलालस्याप्युपादानत्वरूपः ।

**सु०— ननु शृङ्गं चेन्नष्टं कथं तर्हि शरोत्पत्त्यनन्तरमपि शृङ्गप्रत्ययप्रयोगावित्यतो गौरवादित्युक्तम् । समाधानं पूर्ववत् । मा भूद्भेदोपलम्भस्यात्र व्यभिचारः । तथाऽपि यदुक्तं नाचेतनविकारश्चेतन इति तदत्र व्यभिचरति । अचेतनाद्गोमयादेः चेतनस्य वृश्चिकादेर्जनन-दर्शनादित्यत आह** न चेति ।

**अनु०**— न चाचेतनतस्तत्र चेतनस्य समुद्भवः ॥

तत्र **गोमयादेर्वृश्चिकादिजन्मनि । नन्वनादिश्चेतन इति पूर्वाभ्यस्ताहाराभिलाषादिना प्रसिद्धम् । अन्यथा पूर्वकर्माभावे जन्मनोऽप्यसंभवात् । मध्ये कथञ्चित्संभवेऽप्यादिसर्गे सर्वथा(अपि) अनुपपत्तेः । तत्कथं निर्दलमिदमाशङ्कितम् । सत्यम् । तथाऽपि परेण स्वग्रन्थे निवेशितत्वात् । अचेतनाच्चेतनस्य जन्माभावे गोमयाद् वृश्चिको जायत इत्यादिव्यवहारविरोध इत्यत आह** उपादानतयेति ।

उपादानतया

**पूर्वेणैव संबन्धः । न वयं कारणत्वमात्रं निषेधामो येन व्यवहारविरोधः स्यात् । किन्तूपादानतया । तस्यैव प्रकृतत्वात् ।**

**शे०**— अपरिणतभागानामप्युपलम्भेनैव सर्वेषामुपादानत्वाभावसिद्ध्याऽनैकान्त्याभावसमर्थनादपरिणतभागबाहुल्याभिधानं भाष्येऽनर्थकमित्यतः शृङ्गप्रत्ययप्रयोगसमर्थनार्थं तदिति भावेन तदनुपपत्तिमाशङ्कते **नन्विति** । कथमपरिणतभागबाहुल्यमात्राभिधानेन प्रत्ययादिसमर्थनमित्यत आह **समाधानमिति** । कतिपयावयवेषु परिणतेष्वप्यपरिणतानां बहूनामवशिष्टत्वेन शृङ्गान्तरोत्पत्त्या शृङ्गबुद्धिमात्रोत्पत्त्या वा शृङ्गप्रत्ययप्रयोगोपपत्तिरिति समाधानं पूर्ववदित्यर्थः । ननु शृङ्गादेरुपादानत्वसमर्थनमात्रेण तत्र व्यभिचारपरिहारसिद्धेः शृङ्गशरयोरुभयोरप्यचेतनतया चेतनाचेतनभावाभावेन रीत्यन्तरेणापि तत्र व्यभिचारपरिहारकत्वानुपपत्त्याऽचेतनाच्चेतनस्योत्पत्त्यसंभववर्णनपरोत्तरभाष्यमनर्थकमित्यतस्तस्य शृङ्गादौ शङ्कितव्यभिचारपरिहारकत्वाभावेऽपि ब्रह्मजगती नोपादानोपादेयभाववती चेतनाचेतनस्वरूपवैलक्षण्यात्

इत्यनुमाने शङ्कितस्य चेतनाचेतनयोरपि वृश्चिकगोमययोरुपादानोपादेयभावदर्शनाद्व्यभिचारस्य परिहारार्थ-त्वान्नानर्थक्यमितिभावेन विषयभेदप्रदर्शनपूर्वकं तां शङ्कामुत्थापयति **मा भूदिति** ॥ **पूर्वाभ्यस्तेति** । अयमर्थः। अस्ति तावत्प्रत्यग्रजातानां शिशूनां स्तनपानादौ प्रवृत्तिः शङ्कुकण्डूयनादिनिवृत्तिश्च। ततोऽनुमीयते विद्येते तेषां तत्र रागद्वेषाविति, रागद्वेषयोरेव प्रवृत्तिनिवृत्तिकारणत्वेनास्मदादौ निर्णीतत्वाद्रागद्वेषाभ्यां चेष्टानिष्टसाधनत्वज्ञानम् । तस्यैव रागादिकारणतया स्वस्मिन्निश्चितत्वात् । न च तज्ज्ञानं प्रत्यक्षसाध्यम् । कार्यकारणभावस्यातीन्द्रियत्वात् । किन्त्वनुमानोपदेशसाध्यम् । न च तेषां तदोपदेशो युक्तोऽनधि-कारात् । तस्मात्प्राग्भवीयोपदेश इति वाच्यम् । न चास्मृतोऽसौ तत्कारणमिति तत्स्मृतिसद्भावो ऽङ्गीकार्यः । यद्वाऽनुमानम् । न च तत् 'यत्स्तनपानं तदिष्टसाधनं, यदिष्टसाधनं न भवति तत्स्तनपानं न भवति, यथाऽमुकं, स्तनपानं चेदमि'त्यन्वयादिस्मरणेन विना भवितुमर्हति । न चाननुभूते स्मृति-रुत्पद्यते । न चास्मिन् जन्मनि अन्वयाद्यनुभवोऽस्ति । प्रत्यग्रजातानां तदयोगात् । न च प्रवृत्त्यादि यादृच्छिकं भवितुमर्हति । अनन्तानां तदयोगात् । नापि स्वभावनिबन्धनम् । भिन्नजातीयानामप्युप-लम्भात् । अतो जन्मान्तरानुभूतान्वयादिस्मरणमेष्टव्यम् । एवमस्मिन् जन्मनि प्राग्भवीयस्योपदेशस्या-न्वयादेश्च स्मरणसिद्धौ पूर्वपूर्वजन्मन्यप्युक्तरीत्या तत्पूर्वपूर्वजन्मानुभूतस्मरणसिद्ध्या चेतनस्यानादित्व-सिद्धिरिति । उपलक्षणं चैतत् । अस्माच्छरीरभेदादूर्ध्वम् उत्क्रम्येत्याद्यन्यत्रोदाहृतश्रुत्यादिसिद्धं चेत्यपि द्रष्टव्यम् ।

एवं चेतनस्यानादित्वे साधकमुक्त्वा तदनङ्गीकारे बाधकं चाह **अन्यथेति** । कार्यस्यादृष्टजन्यत्व-नियमाच्चेतनस्योत्पत्तिमत्त्वे चोत्पत्तेः पूर्वं तस्य चेतनस्याभावेन तदाश्रितादृष्टावस्थानानुपपत्तेः साश्रयत्व-नियमेन निराश्रयादृष्टावस्थानानुपपत्तेः । जीवं विनाऽन्यस्य च तदाश्रयत्वानुपपत्तेरदृष्टाभावप्रसङ्गेन कारणाभावान्न जीवस्योत्पत्तिः संभवतीत्यर्थः । ननु जीवस्य सादित्वेन पूर्वं स्वकर्माभावेन स्वादृष्टजन्य-त्वाभावेऽपि पित्राद्यदृष्टेनैव जन्मसंभवान्न जन्मासंभव इत्यत आह **मध्य इति** । स्वादृष्टस्य स्वजन्म-कारणतया निर्णीतत्वान्न तदभावे पित्राद्यदृष्टमात्रेण जन्मसंभव इत्यभिप्रेत्य कथञ्चिदित्युक्तम् ॥ **आदिसर्ग इति** । तदानीं पित्रादेरभावात्सतश्चेश्वरस्यादृष्टप्रेरकत्वेऽपि तदनाश्रयत्वेन निराश्रयतयाऽदृष्टाभावादित्यर्थः ॥ **तथाऽपीति** । न हि परसिद्धान्तोऽसत्पूर्वपक्षत्वमपि नार्हतीति भावः । अचेतनाच्चेतनस्योत्पत्त्यभाव-मात्रवर्णनेन पूर्वानुमाने शङ्कितव्यभिचारपरिहारसिद्धेः किमुत्तरेणेत्यतो व्यवहारविरोधपरिहारार्थं तदिति भावेन विरोधशङ्कामुत्थापयति **अचेतनादिति** । कथमनेन विरोधशङ्कापरिहार इत्यतस्तदुपयोगितया योजयति **पूर्वेणैवेति** ॥ **प्रकृतत्वादिति** । शङ्कितत्वादित्यर्थः ।

स०—**जन्मनोऽप्यसंभवादिति** । ब्राह्मणादिजन्मनोऽप्यसंभवादित्यर्थः । ननु कर्माभावेऽपीति, कर्माभावे ब्राह्मणादियोनिप्राप्तिरेव दुर्घटेत्याशये कथंचिदपि जनकजातिप्रयुक्तैव जन्ये जातिरिति व्यवस्थोपपद्यत इत्यत आह **मध्ये कथंचित्सम्भवेपीति** । कर्माभावे ब्राह्मणादियोनिप्राप्तिरेव दुर्घटेत्याशयेन कथञ्चिदित्युक्तम् । **आदिसर्ग इति** । तत्र जात्यवच्छिन्नस्यान्यस्य जनकस्यैवाभावेन कर्मण एव तत्र निमित्तता वाच्येति तत्कर्तुश्चेतनस्यानादिता प्राप्तेति भावः । यद्वा ननु जीवस्य सादित्वेन स्वकीयपूर्वकर्माभावेऽपि पित्राद्यदृष्टेनैव जीवस्य जन्म सम्भवतीति किमर्थमनादित्वाभ्युपगम इत्यत आह **मध्ये कथंचित्सम्भवेपीति** स्वादृष्टस्य स्वजन्मकारणत्वेन सिद्धत्वात्तदभावे पित्राद्यदृष्टमात्रेण न जन्मोपपत्तिरिति भावेन कथंचिदित्युक्तम् ।

प०— **समाधानं पूर्ववदिति** । श्रृङ्गान्तरोत्पत्त्या श्रृङ्गबुद्धिमात्रोत्पत्त्या वा श्रृंगपदप्रयोग इति ध्येयमित्यर्थः । विपक्षदण्डेनापि अनादित्वमित्याह **अन्यथेति** । जन्ममात्रस्यादृष्टाधीनत्वादिति भावः । ननूत्पत्तिमात्रस्य कर्मायत्तत्वेऽप्यनादित्वं चेतनस्य नोपेयम् । सर्गादावुत्पन्नस्य कर्मानुष्ठानसंभवेन तेन कर्मणा पुनरुत्पत्तिसंभवादित्यत आह **मध्य इति** । **मध्ये** सर्गकाले स्वोत्पत्त्यनन्तरकाल इत्यर्थः । (इदानीं क्रियमाण इत्यर्थः) । तदानीं क्रियमाणकर्मणोऽपि पूर्वकर्माधीनत्वावश्यम्भावात् कथञ्चिदित्युक्तम् ॥ **स्वग्रन्थ इति** । 'न विलक्षणत्वात्' इत्यधिकरणभाष्यादावित्यर्थः ।

---

या०— **पूर्वाभ्यस्ताहाराभिलाषादिनेति** । जातमात्रस्य वत्सस्य प्रवृत्तिलिङ्गः स्तन्याभिलाषो गृह्यते । स च नान्तरेणाहाराभ्यासम् । कया युक्त्या । दृश्यते हि शरीरिणां क्षुधा पीड्यमानानामाहाराभ्यासकृतात्स्मरणानुबन्धादाहाराभिलाषः । न च पूर्वशरीरमन्तरेणाहाराभ्यासो जातमात्रस्योपपद्यते । तेनानुमीयतेऽभूत्पूर्वशरीरं यत्रानेनाहारोऽभ्यस्त इति । एवं पूर्वपूर्वशरीरेष्वित्यनादिश्चेतन इति प्रसिद्धमित्यर्थः । चेतनस्य सादित्वे बाधकमाह **अन्यथेति** । ब्राह्मणादिव्यवस्थया जन्मनोऽप्यसंभवादित्यर्थः । ननु कर्माभावेऽपि जनकजातिप्रयुक्तैव जन्ये जातिरिति व्यवस्थोपपद्यत इत्यत आह **मध्ये कथञ्चित्संभवेऽपीति** । कर्माभावे ब्राह्मणादियोनिप्राप्तिरेव दुर्घटेत्याशयेन कथञ्चिदित्युक्तम् ॥ **आदिसर्ग इति** । तत्र तज्जात्यवच्छिन्नस्य जनकस्यैवाभावेन कर्मण एव तत्र निमित्तता वाच्येति तत्कर्तुश्चेतनस्यानादिता प्राप्तेति भावः ।

श्री०—पूर्ववत् श्रृङ्गान्तरोत्पत्त्या वा श्रृङ्गबुद्धिमात्रोत्पत्त्या वेत्यर्थः । भेदोपलम्भस्य ब्रह्मविकारत्वाभावसाधकस्य । अत्र श्रृङ्गाच्छर इत्यत्र । अत्रेत्युक्तं विशदयति **अचेतनादिति** ॥ **पूर्वेति** । जातमात्रस्य स्तनपानादौ प्रवृत्तिस्तावद्भवति । सा चेष्टसाधनताज्ञानसाध्या । न च स्तनपानस्येष्टसाधनत्वमस्मिन्

जन्मन्यनुभूतमतः पूर्वजन्मन्यनुभूतं तत्स्मृत्वाऽत्र प्रवर्तत इति वाच्यम्। तत्र पूर्वजन्मन्येतज्जन्मनि चानुभूतचैतन्यस्यैकत्वाभावे कथं तत्स्मरणं स्यात्। एवं पूर्वजन्मन्यपीत्यनादित्वेव चेतनस्य वाच्येत्यर्थः। **अन्यथा** अनादित्वाभावे ॥

च० — **पूर्वाभ्यस्ताहाराभिलाषादिनेति**। प्रत्यग्रस्य शिशोः स्तन्यपानादिगोचरप्रवृत्त्या लिङ्गेन तद्गोचरेच्छा, तया च जन्मान्तरीणोऽभ्यासस्तेन च शरीरमनुमीयते। एवं पूर्वपूर्वशरीरेष्वित्यनादिश्चेतन इति प्रसिद्धमित्यर्थः। **अन्यथा** चेतनस्य सादित्वोपगमे। **जन्मन इति**। ब्राह्मणादिव्यवस्थयेत्यादिः। पित्रादिजातिनिबन्धनैव पुत्रादौ जातिस्तदृदृष्टनियन्त्रितमेव तज्जन्मेति न जन्मासम्भव इत्यत आह **कथंचिदिति**। तत्तच्चेतनादृष्टस्यैव तज्जन्महेतुतयाऽवधृततया सौवादृष्टाभावे ब्राह्मणादियोनिप्राप्तेः पित्राद्यदृष्टमात्रेणासम्भवादिति भावः। **आदिसर्ग इति**। तत्तज्जात्यवच्छिन्नपित्रादेस्तदानीमभावेन तदानींतनस्यापीश्वरस्यादृष्टप्रेरकत्वेन तदनाश्रयतया निमित्ततयाऽवश्योपेतव्यादृष्टाश्रयीभूतचेतनानादिताऽसैत्सीदिति भावः।

सु० — **यदि गोमयादिकं वृश्चिकादिकं प्रति नोपादानम्, किंरूपं तर्हि कारणम्। येन व्यवहारोपपत्तिरिति पृच्छति** किं तर्हीति। **उत्तरमाह** अपादानमिति।

---

अनु० — किं तर्ह्यपादानं ह्यचेतनम्

अस्य **वृश्चिकादिशब्दाभिधेयस्य। प्रदृश्यते हीति ततो निर्गतत्वोपलम्भादित्यर्थः। नन्वेकदेशेनोपादानत्वमभ्युपगतमिति। सत्यम्। तच्छरीरापेक्षयेत्युक्तम्** कार्यदेहगतस्येति।

कार्यदेहगतस्यास्य चेतनस्य प्रदृश्यते

**गोमयाद्युपादानकदेहगतस्येत्यर्थः।**

**अयमत्र समुदायार्थः। वृश्चिकादिशब्देन द्वयमुच्यते देहश्चेतनश्च। तत्र गोमयाद्यचेतनमचेतनस्य देहस्योत्पत्तावेकदेशेनोपादानमेकदेशेनापादानं च भवति। चेतनस्य तु प्रादुर्भावलक्षणे जनने निमित्तमेव। देहहेतुत्वात्। तत्रैव चास्य प्रादुर्भावात्। अत एवास्येति प्रत्यक्षवन्निर्देशः कृतः। अपगमने तु अवधित्वेनापादानमेव। अतो नोक्तनियमभङ्ग इति।**

शे० — ननु तथाऽपि गोमयादेर्वृश्चिकादिकं प्रत्यपादानत्ववर्णनमनर्थकम्। न च तत्र तस्य कारणत्वसिद्ध्यर्थं तदिति वाच्यम्। अकारणत्वेऽपि क्षत्यभावेन कारणत्ववर्णनस्याप्यनर्थकत्वात्। न च व्यवहारविरोधपरिहारसिद्धिस्तत्प्रयोजनमिति वाच्यम्। उपादानत्वाभावमात्रवर्णनेनैव तत्सिद्धेरित्यतो गोमयाद्वृश्चिको जायत इति व्यवहारस्य तत्र तस्य कारणत्वावलम्बितया विना कारणत्वेनोपादानत्वाभाव-

मात्रवर्णनेन तद्विरोधपरिहारासिद्ध्या तत्परिहारौपयिकत्वान्न तद्वर्णनपरोत्तरवाक्यवैयर्थ्यमित्याशयेन कारणत्वोपपादकतयोत्तरवाक्यं योजयितुं शङ्कितविरोधनिवृत्त्यर्थकतया किं तर्हीति शङ्काभाष्याभिप्रायं तावदाह **यदीत्यादिना** । अस्येत्यस्य चेतनमात्रपरत्वे गोमयाद्यचेतनस्य चेतनमात्रं प्रत्यपादानत्वलाभेऽपि देहापादानत्वस्यालाभात्तल्लाभाय चेतनाचेतनपरतया व्याचष्टे **अस्येति** । अचेतनं गोमयादिकं वृश्चिकादिशब्दाभिधेयं प्रत्यपादानमित्येतावता चेतनाचेतनोभयापादानत्वसिद्धेः, 'प्रदृश्यत' इत्यस्य वैयर्थ्यमित्यत उक्तापादानत्वस्योपलम्भसिद्धत्वप्रतिपादनार्थं तदिति भावेन तदनूद्य व्याचष्टे **प्रदृश्यते हीति** । तथाऽपि कार्यदेहगतस्येत्यस्य वैयर्थ्यमित्यत उपादानत्वाभ्युपगमविरोधपरिहारार्थं तदिति भावेन तदुत्थापयति **नन्विति ॥ अभ्युपगतमिति** । अन्यथोपादानान्तराभावेन निरुपादानशरीराद्युत्पत्तिप्रसक्तेरिति भावः

ननु तथाऽपि चेतनाचेतनयोरपि वृश्चिकगोमययोरुपादानोपादेयभावसमर्थनेन व्यभिचारापरिहार एवेत्यत आह **अयमत्रेति ॥ समुदायेति** । 'न चाचेतनतत्तत्रे'त्याद्यनेकवाक्यसन्दर्भेत्यर्थः **॥ द्वयमुच्यत इति** । उभयत्र प्रयोगप्रत्यययोर्विद्यमानत्वादिति भावः **॥ एकदेशेनेति** । वृश्चिकशरीरात्मना परिणतभागेनेत्यर्थः **॥ एकदेशेनेति** । वृश्चिकदेहं प्रत्युपादानभूतो यो गोमयैकदेशस्तत्सम्पृक्त यद्गोमयैकदेशान्तरं तेनेत्यर्थः । कथं चेतनप्रादुर्भावे गोमयस्य निमित्तत्वमित्यतोऽसति गोमये उपादानाभावेन देहोत्पत्त्यसंभवात्तदसत्त्वे च तत्र प्रादुर्भावायोगात्प्रादुर्भावापेक्षितदेहकारणत्वात्तदिति भावेनाह **देहेति ॥ अत एवेति** । देहहेतुत्वमात्रेण कथं चेतननिमित्तत्वमिति न वाच्यम् । देहस्य प्रत्यक्षत्वेनाप्रत्यक्षेऽपि चेतनेऽस्येति प्रत्यक्षनिर्देशवद्देहहेतुत्वमात्रेण चेतनं प्रत्यपि निमित्तत्वोपपत्तेः । अन्यथा चेतनस्येति निर्देशोऽपि न स्यादिति भावः । यद्वा तत एव गोमयकार्यदेह एवास्य प्रादुर्भूतत्वादेवास्येति निर्देशो भाष्यकारीयः सङ्गच्छते । अन्यथा चेतनान्तरस्य चेतनान्तरं प्रत्यप्रत्यक्षत्वाद्भाष्यकारीयस्य अस्येति निर्देशस्यासंभवप्रसक्तेरिति भावः **॥ नोक्तनियमेति** । ययोश्चेतनाचेतनवैलक्षण्यं; न तयोरुपादानोपादेयभावः; इत्युक्तनियमभङ्गो नेत्यर्थः । प्रकृतोदाहरणे यत्र हेतुवृत्तिस्तस्य सपक्षप्रविष्टत्वात्, यस्य च विपक्षप्रवेशस्तत्र हेत्ववृत्तेर्नानैकान्त्यमिति भावः ।

स०— **अत एवेति** । देहहेतुत्वमात्रेण कथं चेतननिमित्तत्वमिति न वाच्यम् । देहस्य प्रत्यक्षत्वेन चेतने अस्येति प्रत्यक्षनिर्देशवद्देहहेतुत्वेन चेतने निमित्तत्वोपपत्तेः । अन्यथा चेतनेऽस्येति निर्देशोऽपि न स्यादिति भावः ।

प०— **प्रदृश्यते हि** इत्यनुवादः । **ततो निर्गतत्वोपलम्भात्** इति व्याख्या । हिर्हेताविति भावः **तच्छरीरेति** । तदेकदेशेनोपादानत्वम् । वृश्चिकशरीरापेक्षयेत्युक्तमित्यर्थः । यदि गोमयादीत्यादिचोद्यनिरासस्य अस्फुटत्वादाह **अयमत्र समुदायार्थ इति** ।

या० — **अत एवेति** । अन्यथा परचेतनस्याप्यप्रत्यक्षत्वेनास्येति प्रत्यक्षनिर्देशासंभवः । अतोऽस्येति निर्दिशताऽऽचार्येण तत्रैव चास्य प्रादुर्भाव इत्येतत्सूचितमिति भावः ।

श्री० — **निमित्तमेवेति** । गोमयाद्यचेतनमिति वर्तते । गोमयाद् वृश्चिकदेहस्यापगमने गोमयाद्यचेतनमपादानमेवेत्यर्थः ॥ **उक्तनियमेति** । 'नाचेतनविकारश्चेतनः' इति नियमेत्यर्थः ।

च० — **अत एवेति** । स्वात्मेतरचेतनस्य निसर्गतोऽप्रत्यक्षत्वेऽपि प्रत्यक्षभूतशरीरस्थत्वेनास्येति प्रत्यक्षवद्यथा निर्देशस्तथा शरीहेतुत्वमात्रेण चेतनं प्रत्यपि निमित्तत्वोपपत्त्या तादृशनिर्देशस्तत्र सङ्गच्छत इति भावः ।

**सु० — एवं ब्रह्मणो जगदुपादानत्वाभावे प्रमाणान्यभिधाय परोपन्यस्तानि प्रमाणानि निराकरिष्यन् क्रमस्याप्रयोजकत्वात्परिणामादिति सूत्रार्थतयोक्तां श्रुतिं तावन्निराचष्टे** सच्चेति ।

अनु० — सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते ॥

**'सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत्' इत्यस्यां श्रुतावस्य ब्रह्मणः सत्त्यदादिशब्दाभिधेयमूर्तामूर्तराशिद्वयात्मकविश्वभाव उच्यत इति नास्ति । कुतो नेत्यत आह** तत्सृष्ट्वेति ।

तत्सृष्ट्वेति गिरैवास्य पूर्वं विश्वस्य सिद्धितः ॥

**'स इदं सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्' इति वचनेन ब्रह्मणः सत्त्यदादिभवनात्पूर्वमेवास्य मूर्तामूर्तरूपस्य विश्वस्योत्पत्तेरवगतत्वात् ॥ एतदुक्तं भवति । नेदं सत्त्यदादिभवनं विश्वो(स्योश्व)त्पादनम् । विश्वोत्पत्त्युत्तरकालीनत्वात् । या क्रिया यदुत्तरकालीना, नासावसौ । यथा भुक्त्वा चरतीत्युक्तं चरणं न पूर्वकालीनं भोजनमति । अनुपपन्नार्थं चान्यथा वाक्यमापद्येत । न हि मृत्सुवर्णादिकं घटरुचकादि सृष्ट्वा तदनुप्रविश्य तद्भवति ।**

**यद्वा विश्वं सत्त्यदादिशब्दार्थतयाऽत्र न विवक्षितम् तद्भवनात्पूर्वकालीनोत्पत्तिकत्वाद्भोजनवदित्यादि प्रयोक्तव्यम् ।**

शे० — पूर्वभाष्यवदुत्तरभाष्यमपि ब्रह्मणो जगदुपादानत्वाभावे प्रमाणाभिधायकमिति भ्रान्तिं पूर्वोत्तरग्रन्थयोर्विषयभेदप्रदर्शनेन परिहरति **एवमिति ॥ निराकरिष्यन्निति** । अन्यथोपादानत्वबोधकप्रमाणप्रतिरुद्ध्या उक्तप्रमाणैरुपादानत्वाभावासिद्धिप्रसक्तेरिति भावः । ननु 'परिणामादि'ति सूत्रार्थतया 'सच्च त्यच्चाभवदि'त्यस्याः श्रुतेरिव प्रतिज्ञादृष्टान्तानुपरोधादित्यादिसूत्रार्थतया 'येनाश्रुतं श्रुतं भवती'त्यादिश्रुतीनां परेणोक्तत्वात्कथमितरश्रुतीरनिराकृत्यास्या एव निराकरणं भाष्यकारीयं सङ्गच्छते । अन्यथा

अस्याः श्रुतेरर्थान्तरवर्णनेनाप्रतिबन्धकत्वेऽप्युपादानत्वप्रतिपादकवाक्यान्तरविरुद्धत्वेनोक्तनिर्णयासंभवादित्यतो नात्रेतरश्रुतीनामनिराकरणमभिमतं येनोक्तदोषावकाशः किन्तु प्रथममस्या निराकरणमुत्तरत्र तु तासामपि निराकरणमित्येवेति भावेनोक्तं **तावदिति** । यदि सर्वासामपि निराकरणं सम्मतं तर्हि प्रकृतिश्चेत्यादि-सूत्रोपात्तश्रुतीनामुपादानक्रमेणैव निरसनीयतया कुतो व्युत्क्रमेण निरसनमित्यत आह **क्रमस्याप्रयोजकत्वादिति** । यतःकुतश्चित्पूर्वभावे विश्वोत्पादनस्य, न ब्रह्मणः सत्त्यदादिभवनाद्विदसिद्धिरित्यतो योग्यमध्याहरति **ब्रह्मणः सत्त्यदादिभवनात्पूर्वमिति** । ब्रह्मणः सत्त्यदादिभवनात्पूर्वं विश्वस्योत्पन्नत्वेऽपि सत्त्यदादिभवनमेव विश्वोत्पादनं किं न स्यादित्यतो भाष्यसूचितमनुमानं दर्शयति **एतदुक्तमिति** । विशेषव्याप्तौ दृष्टान्ताभावेन तदसंभवेऽपि तद्भावात्सामान्यव्याप्तिरविकलैवेति भावेन तामेव दर्शयति **या क्रियेति** । इतीत्यस्यैतदुक्तं भवतीत्यनेन संबन्धः । भाष्ये प्रतीकोपादानेन गृहीतसम्पूर्णवाक्यसूचितं युक्त्यन्तरमप्याह **अनुपपन्नार्थं चेति** । तदेव दर्शयति **न हीति** । सदादिभवनस्य विश्वोत्पादनातिरिक्तत्वसाधकानुमानसमर्पकतया भाष्यतात्पर्यमभिधाय मूर्तामूर्तात्मकविश्वस्य सत्त्यदादिशब्दार्थतयाऽविवक्षितत्वसाधकानुमानसमर्पकतया वाक्यतात्पर्यमाह **यद्वेति** । अत्रापि यद्यदपेक्षया पूर्वकालीनोत्पत्तिकं तत्तच्छब्दार्थतया न विवक्षितमिति सामान्यव्याप्तिमभिप्रेत्याह **भोजनवदिति** । चरणापेक्षया पूर्वकालीनं भोजनं, यथा न चरणशब्दार्थतया विवक्षितमित्यर्थः । आदिपदेन 'सत्त्यदादिशब्दार्थतया विवक्षितम्

पक्षः, न मूर्तामूर्तात्मकं विश्वं भवितुमर्हति, विश्वोत्पत्त्युत्तरकालीनभवनाश्रयत्वात् यत् यदुत्पत्त्युत्तरकालीनभवनाश्रयो न तत् तत्, यथा भोजनोत्पत्त्युत्तरकालीनभवनाश्रयश्चरणं न भोजनम्' इति प्रयोगपरिग्रहः ।

प० — अनुपपन्नार्थं वाक्यमापद्यते इत्युक्तं व्यनक्ति **न हीति** । इत्यादीत्यादिपदेन विश्वोत्पत्तिर्न सत्त्यदादिभवनरूपतयाऽत्राभिमता ततः पूर्वकालीनत्वादिति प्रयोगो ग्राह्यः ।

**सु० — कस्तर्हि श्रुत्यर्थ इत्यत आह** सत्त्वादिति ।

**अनु०** — सत्त्वात्ततेर्वैदिकत्वात्सम्यग्वक्तुमशक्यतः ॥
आश्रयत्वात्स्वाश्रयत्वाज्ज्ञानत्वाद् दुर्विदत्वतः ॥
सत्ततेर्यातनाच्चैव ह्यप्राप्यत्वाच्च दुर्जनैः ॥
नित्यसाधुगुणव्याप्तियन्तृरूपत्वतः सदा ॥
जगद्गतेन रूपेण ब्रह्मैव हि तथोच्यते ॥

**जगद्भावं विना सत्त्वादिधर्मयोगेन ब्रह्मैव तथा सत्त्यदादिकमुच्यते । तर्हि तदनुप्रविश्येत्यस्यान्वयो नास्ति । न हि ब्रह्मणः सत्त्वादिधर्मयोगे सदादिशब्दवाच्यत्वे वा जगत्प्रवेशस्यो-**

पयोगोऽस्ति । नापि ततः पूर्वकालीनता । किञ्चैवं सति प्रसिद्धिविरोधः सत्यदादिशब्दानां 'द्वे वाव ब्रह्मणो रूपे' इत्यादौ मूर्तामूर्तवाचितया प्रसिद्धत्वात् इत्यतो जगद्गतेन रूपेणेत्युक्तम्। यद्यप्यनन्यापेक्षया सर्वदा सत्त्वादिधर्मयोगः सदादिशब्दवाच्यता च ब्रह्मणः । तथाऽपि तत्तद्वस्तुगतरूपेणैव तत्तच्छब्दवाच्यत्वमित्यस्ति व्यवस्था । तथा च मूर्तामूर्तजगद्गतेन रूपेण ब्रह्म सदादिशब्दवाच्यमित्यतः तदनुप्रविश्येति सम्बध्यते । परमेश्वरसन्निधानादेव मूर्तामूर्तादेरपि सदादिशब्दवाच्यता चोपपद्यत इति ।

शे० — **तर्हीति** । ब्रह्मणो जगद्भावस्य वाक्यार्थत्वाभाव इत्यर्थः । ब्रह्मणो जगद्भावं विनाऽन्यस्य श्रुत्यर्थस्याभावात् । जगद्भावस्यापि श्रुत्यर्थत्वाभावे श्रुतेर्निरर्थकत्वेनाप्रामाण्यप्रसङ्ग इति भावः । ननु सत्त्यदादिशब्दाभिधेयजगन्निष्ठत्वात्सत्त्वादिधर्माणां तद्योगेन ब्रह्मणः सत्त्यादिशब्दवाच्यत्वविवक्षायां ब्रह्मणः सत्त्यदादिजगद्भावोऽवर्जनीय इत्यतो जगद्धर्मभूतसत्त्वादियोगेन तद्विवक्षायां जगद्भावप्रसक्तावपि तद्विलक्षणसत्त्वादियोगेनैव ब्रह्मणः सदादिशब्दार्थत्वाङ्गीकारान्न जगद्भावस्यावश्यकतेत्याशयेनोक्तं **जगद्भावं विनेति** । तथा इत्यनूद्य सत्त्यदादिकमिति व्याख्यानम् ॥ **तर्हीति** । सत्त्वादिधर्मयोगेन सत्त्यदादिशब्दवाच्यत्वस्यैव श्रुत्यर्थत्व इत्यर्थः । यद्यप्युक्तरीत्या जगद्भावस्य श्रुत्यर्थत्वपक्षेऽपि तदनुप्रविश्येत्यस्यानन्वयस्तुल्य इति नैतच्चोद्यावकाशः, तथाऽपि जगद्भावपक्ष इव सिद्धान्तपक्षेऽपि तदनुप्रविश्येत्यस्यानन्वयाद्वाक्यस्यानुपपन्नार्थत्वस्य तुल्यत्वान्न स्वपक्षे बाधकतेत्यभिप्रायेणेयमाशङ्केति ध्येयम् । तदनुप्रविश्येत्युपलक्षणम् । तत्सृष्ट्वेत्यस्येत्यपि द्रष्टव्यम् । कथमन्वयाभाव इत्यतोऽनुप्रवेशः किं सत्त्वादिधर्मयोगे हेतुः किंवा सदादिशब्दवाच्यत्व इति विकल्पं मनसि निधाय पक्षद्वयं दूषयति **न हीति** । ब्रह्मणः सत्त्वादिधर्मयोगस्य सदादिशब्दवाच्यतायाश्च सार्वकालिकत्वेनानन्यापेक्षत्वेन सृष्ट्याद्यप्रयोज्यत्वादिति भावः । नन्वभवदिति वचनाद्ब्रह्मणः सत्त्वादिधर्माणां सादित्वावगमात्सत्त्वादिधर्मयोगे ब्रह्मणो जगदनुप्रवेशस्योपयोगोऽस्त्वित्यतोऽस्तु तावत्सादित्वं न तावता तत्र जगत्सृष्ट्यादेर्हेतुत्वसिद्धिः । कारणत्वावधारकानन्यथासिद्धनियतपूर्ववृत्तित्वाभावादित्याशयेनाह **नापीति** । ननु न जगदनुप्रवेशस्य कारकहेतुत्वमङ्गीक्रियते येनोक्तदोषः किं नाम ज्ञापकहेतुत्वमेव । नित्यानामपि भगवद्धर्माणां सृष्टेः पूर्वमव्यक्ततया सृष्ट्यनन्तरं च व्यक्ततया व्यञ्जकत्वे सृष्ट्यादेर्बाधकाभावादित्यरुचेराह **किञ्चेति** । एवं सत्त्वादिधर्मयोगेन ब्रह्मणः सदादिशब्दवाच्यत्वस्यैव श्रुत्यर्थत्वे ।

ननु सृष्ट्यादेरनुपयोगस्योक्तत्वात्कथं जगद्गतेन रूपेणेत्यनेनोक्तशङ्कापरिहार इत्यतोऽतः प्रागुक्तानुपयोगं हेतूकृत्या द्रढयन्नेव ब्रह्मैवेत्येवकारस्य भिन्नक्रमतां चाभिप्रेत्य जगदनुप्रवेशस्य सदादिशब्दवाच्य.

त्वोपयोगप्रदर्शकतया भाष्यं व्याचष्टे **यद्यपीत्यादि ॥ अस्ति व्यवस्थेति ।** न चोक्तव्यवस्थायां नियामकाभावः । अव्यक्तबुद्ध्यादीनामेवाव्यक्तादिशब्दवाच्यत्वस्यैव तन्नियामकत्वात् । तथाहि । अस्ति तावदव्यक्तमेवाव्यक्तशब्दवाच्यं न बुद्धिः । बुद्धिरेव च बुद्धिशब्दवाच्या नाव्यक्तमिति नियमः । अव्यक्तादिशब्दानां तत्रैव प्रयोगप्रत्ययाभ्यां तदवधारणात् । न चात्र अन्यन्निमित्तमस्तीति तत्तच्छब्दवाच्यभगवद्योग एव तथाङ्गीकार्यः । यदि चाव्यक्तगतभगवतोऽव्यक्तशब्दवाच्यत्वं न स्यात्तर्हि प्रसङ्गाव्यक्तस्याव्यक्तशब्दवाच्यत्वं न स्यात् ; अव्यक्तशब्दवाच्यभगवद्योगाभावेऽप्यव्यक्तस्याव्यक्तशब्दवाच्यत्वेऽन्यस्यापि तत्प्रसङ्गात् । यदि चाव्यक्तगतस्यैव भगवतोऽव्यक्तशब्दवाच्यत्वमिति नियमो न स्यात् , अन्यगतस्यापि भगवतोऽव्यक्तशब्दवाच्यत्वं स्यादिति यावत् ; तदाऽव्यक्तस्याव्यक्तशब्दवाच्यभगवद्योगवदन्यस्यापि तद्भावादुभयोरप्यव्यक्तशब्दवाच्यत्वापत्त्याऽव्यक्तस्यैव प्रयोगप्रत्ययसिद्धमव्यक्तशब्दवाच्यत्वमनुपपन्नेव स्यात् । एवं बुद्ध्यादावपि द्रष्टव्यम् । तथा चोक्तव्यवस्थया अव्यक्तादिगतभगद्रूपस्यैव तत्तच्छब्दवाच्यतया तद्योगादव्यक्तादेरेव तत्तच्छब्दवाच्यत्वसिद्धिरिति कथमव्यक्तादिगतरूपस्यैवाव्यक्तादिशब्दवाच्यत्वमिति व्यवस्थाया निर्निबन्धनत्वम् । अयं चार्थः शरीररूपकविन्यस्तेत्यत्र विन्यस्तपदबललब्धस्तत्प्रकारश्च सङ्क्षेपेण चन्द्रिकायामुपवर्णित इति द्रष्टव्यम् । **सम्बध्यत इति ।** तथा च न तदनुप्रविश्येत्यस्यानन्वयदोषस्य तुल्यत्वमिति युक्तमेव परपक्षे तदुद्भावनमिति भावः । किञ्चित्युद्भावितं प्रसिद्धिविरोधं परिहरति **परमेश्वरेति ।**

प० — ब्रह्मैव हि तथोच्यत इत्येतद्व्याकुर्वन्नेवकारव्यावर्त्यमाह **जगद्भावं विनेति ।** कथं तर्हीत्यतः पूर्वतनश्लोकद्वयोक्तस्यानुवादः **सत्त्वादिधर्मयोगेनेति ।** तथेत्यनुवादः सत्त्वदादिकमिति व्याख्या । 'जगद्गतेन रूपेण इति पादमवतारयति **तर्हीति ॥ उपयोगो न ह्यस्तीति ।** भवत्पक्षे तयोरनन्यापेक्षत्वादिति भावः । ल्यप्प्रयोगश्च न युक्त इत्याह **नापि तत इति ।** सत्त्वादिधर्मयोगसदादिशब्दवाच्यत्वाभ्यां 'तदनुप्रविश्ये'त्युक्तप्रवेशस्य पूर्वकालीनतापि नास्ति । येन प्रविश्येति ल्यप्प्रत्ययस्योपपन्नता स्यादित्यर्थः । सदा सत्त्वादिधर्मयोगादिभावादिति भावः ॥ **तदनु प्रविश्येति संबन्ध्यत इति ।** तत्प्रकारश्च 'ततश्चायं श्रुत्यर्थः' इत्यग्रे व्यक्तः ।

**सु० — सत्त्वादुत्तमत्वात्सत् । ततेर्व्याप्तेस्त्यत् । तनु विस्तार इत्यस्माड्डचत्प्रत्ययः । वैदिकत्वान्निरुक्तम् । निश्चयेनोक्तं हि निरुक्तम् । न हि वेदादृतेऽन्येन ब्रह्म निश्चयेन वक्तुं शक्यते । सम्यग्वक्तुमशक्यत्वतोऽनिरुक्तम् । यद्यपि निश्चयेनोक्तं न भवतीत्यनिरुक्तम् ; तथाऽपि निरुक्तमित्यनेन विरोधात्सम्यक् कार्त्स्न्येन वक्तुमशक्यत्वत इत्युक्तम् । ननु वेदेतर-**

प्रमाणेनानिरुक्तमिति कुतो न व्याख्यायते । न । प्रकृतपरित्यागप्रसंगात् । वेदेन निरुक्तमिति (हि) प्रकृतम् । किञ्चोक्तेः शब्दधर्मत्वात्प्रत्यक्षानुमानाभ्यामनिरुक्तमित्ययुक्तम् । स्मृतीनामपि वेदात्मकत्वेन विरोधतादवस्थ्यम् । महिमाधिक्यं चात्र लभ्यत इति ॥ जगदाश्रयत्वान्निलयनम् । निश्चितमयन्ते प्रवर्तन्तेऽस्मिन्निति । रो ल इति योगविभागाल्लत्वम् । निपूर्वस्य ली(ङ्)श्लेषण इत्यस्य वाऽधिकरणे ल्युटि कृते रूपमेतत् । स्वाश्रयत्वादनिलयनम् । न विद्यते स्वातिरिक्तं निलयनं यस्येति । ज्ञानत्वाद्विशेषज्ञानरूपत्वाद्विज्ञानम् । दुर्विदत्वतो दुर्ज्ञेयत्वादविज्ञानम् । न विद्यते विज्ञानं सकलविशेषावगाहिजीवज्ञानं यद्विषय इति । सततेः सम्यग्व्याप्तेर्यातानाद्यतनं प्रति हेतुत्वाच्च सत्यम् । तनोतेः ड्विप्रत्यये तकारमात्रं रूपम् । तेन सच्छब्दस्य बहुव्रीहिः । यती प्रयत्न इत्यस्यान्तर्णीतण्यर्थस्य डप्रत्यये (यमिति) रूपम् । ततः कर्मधारयः । 'अयस्मायदीनि छन्दसी'ति भसंज्ञाश्रयणाज्जश्त्वाभावः। दुर्जनैरप्राप्यत्वादेवानृतश्च । न तु मिथ्यात्वात् । यद्यपि ऋतं प्राप्तं नेत्यनृतम् । तथाऽपि 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतिविरोधपरिहाराय दुर्जनैरित्युक्तम् । हिशब्दो ब्रह्मणो मिथ्यात्वाभावे प्रसिद्धिं द्योतयति । नित्यसाधुगुणव्याप्तियन्तृरूपत्वतः सत्यम् । अत्र नित्यत्वत इत्येकं व्याख्यानम् । नित्यसत्यशब्दयोरैकार्थ्यस्य वक्ष्यमाणत्वात् । सत् साधुगुणाः 'सद्भावे साधुभावे चे'ति । वचनात् तेषां व्याप्तिबाहुल्यं तकारेणोक्तम् । पूर्ववत्तनोतेर्भावे ड्विप्रत्ययः । तस्य यन्तृरूपत्वाद्यम् । यम उपरम इति धातोः (इत्यतो) डः । भक्तेषु साधुगुणबाहुल्यप्रेरकत्वादिति यावत् । अभवदिति वचनाद्ब्रह्मणः सत्त्वादिकं सादीति शङ्कानिरासायोक्तं सदेति । प्रत्येकं चास्य सम्बन्धः ।

शे० — सत्त्वादुत्तमत्वादिति । सर्वोत्तमत्वादित्यर्थः । 'सर्वोत्तमत्वात्सन्नामा हरिर्नारायणः प्रभुरि'ति छन्दोगभाष्योक्तेरिति भावः ॥ ड्यत्प्रत्यय इति । डित्वाट्टिलोपे त्यदिति रूपनिष्पत्तिरिति भावः । वैदिकत्वस्य कथं निरुक्तशब्दार्थत्वमित्यतो नैतन्निरुक्तशब्दार्थकथनं किन्तु फलितार्थकथनमितिभावेन पदार्थं कथयन्नेवास्य फलितत्वं दर्शयति निश्चयेनेति । सम्यगित्यनुवादेन कार्त्स्न्येनेति व्याख्यानम् ॥ कुतो नेति । ततश्च निरुक्तमित्यनेनाविरोधोपपत्तेर्न सम्यगिति विशेषणेन कृत्यमितिभावः । किं प्रकृतं कथं चात्र व्याख्याने तत्परित्यागप्रसङ्गः इत्यत आह वेदेनेति । ननूक्तेः शब्दधर्मत्वात्प्रत्यक्षानुमानाभ्यामनिरुक्तत्वस्य निरुक्तशब्दार्थत्वानुपपत्तावपि स्मृतेः शब्दरूपत्वेन नोक्तिस्तत्रासम्भवः । ततश्च वेदेतरप्रमाणेन स्मृतिरूपेणानिरुक्तमिति कुतो न व्याख्यायत इत्यत आह स्मृतीनामिति ॥ वेदात्मकत्वेनेति । 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इत्युक्तेरिति भावः ॥ विरोधतादवस्थ्यमिति । वेदेन निरुक्तं

वेदेनानिरुक्तमित्यर्थपर्यवसानेन निरुक्तमित्यनेनानिरुक्तमित्यस्य विरोधप्रसङ्गो न निरस्त इत्यर्थः । ननु वेदानुकूलस्मृतीनां वेदात्मकत्वात्तदनिरुक्तत्वस्य निरुक्तशब्दार्थेन विरुद्धत्वेऽपि तदननुकूलस्मृतीनां वेदानात्मकत्वात्तदनिरुक्तत्वस्यानिरुक्तशब्दार्थत्वे न निरुक्तशब्दार्थेन विरोध इति स एवानिरुक्तशब्दार्थः किं न स्यादित्यत आह **महिमाऽधिक्यं चेति ॥ अत्रेति** । वेदेन कार्त्स्न्येनानिरुक्तत्वमित्यनिरुक्तशब्दव्याख्यान इत्यर्थः । अतोऽयमेवानिरुक्तशब्दार्थ इति शेषः । 'गुणाधिक्यं येन भवेद्वेदस्यार्थः स एव ही'त्यन्यत्रोक्तेरिति भावः ।

कथं निलयनशब्देन जगदाश्रयत्वलाभ इत्यतो योगप्रदर्शनेन तद्दर्शयति **निश्चितमिति** । धातूनामनेकार्थतया गत्यर्थानां प्रवृत्त्यर्थत्वमपीति भावेन प्रवर्तन्त इत्युक्तम् । निरुपपदादयतेरधिकरणे ल्युट् तस्यानादेशे निलयनमिति सिद्ध्यतीति भावः ।

नन्वेवं निरयनमिति भवितव्यं निलयनमिति कथम् । 'कृपो रो ल' इति विशेषस्मरणेनात्र लत्वासंभवात् । न च 'उपसर्गस्यायतावि'ति सूत्रे उपसर्गस्याप्ययतौ परे लत्वविधानादत्र तदुपपत्तिरिति । निस्दुस् इत्येतयोः सान्तयोरुपसर्गयो रुत्वस्यासिद्धत्वात् लत्वाप्राप्तिरिति वृत्तावुक्तत्वेनात्रोपसर्गस्यायतावित्यनेनापि लत्वाप्राप्तेरित्यत आह **रोल इति** । कृपो रो ल इति सूत्रे कृपो रो ल इत्येको योगः रो ल इत्यपर इति योगविभागाश्रयणात्सूत्रभेदाश्रयणादित्यर्थः । न च योगविभागाश्रयणेऽपि न लत्वसंभवः । ससजुषोरुरिति रुत्वस्य पूर्वत्रासिद्धमिति लत्वं प्रत्यसिद्धत्वादिति वाच्यम् । योगविभागस्येष्टसिद्ध्यर्थत्वेन तत्सामर्थ्येन रुत्वस्यासिद्धत्वाभावस्यापि सिद्धत्वादन्यथा योगविभागाश्रयणानर्थक्यादिति भावः । ननु निरिति रेफान्त उपसर्ग एवायं तस्य चोपसर्गस्यायतावित्यनेनैव लत्वसिद्धेः किमिति योगविभागाश्रयणं टीकाकाराणाम् । न च सान्तव्यतिरेकेण रेफान्त उपसर्ग एव नास्ति तत्कथं तदाश्रयणेनोक्तसमाधानमिति वाच्यम् । 'निरःकुषः' इति सौत्रनिर्देशानुसारेण रेफान्तस्यापि तस्याकर एव स्थितत्वात् । यथोक्तं वृत्तिकृता । इट्प्रकरणस्थनिरःकुष इति सूत्रव्याख्यानावसरे निस् इति वक्तव्ये निर् इति निर्देशेन रेफान्तमप्युपसर्गान्तरमस्तीति ज्ञाप्यते । तस्य हि निलयनमित्युपसर्गस्यायतावित्ति लत्वं भवति निसो हि रुत्वस्यासिद्धत्वाल्लत्वं न स्यादिति । उक्तं च हरदत्तेन 'उपसर्गस्यायता'विति सूत्रव्याख्यावसरे सकारान्तविषयोऽयं ग्रन्थः । रेफान्तयोस्तु भवितव्यमेव लत्वेनेति । उक्तं च न्यासेनापि । निरःकुषः सुदुरोरधिकरण इत्यादिनिर्देशात् रेफान्तावप्युपसर्गौ स्तः । तयोस्तु भवितव्यमेव लत्वेनेति । तत्किमर्थं योगविभागाश्रयणमिति चेदुच्यते । प्रादिषु निस्दुस् इति सान्तयोरेव पाठात् । तथा 'निसस्तपतावनासेवन' इति सान्ततया सौत्रनिर्देशात् । 'अयोगवाहानामविशेषेणे'ति प्रकरणे निष्कृतमित्युदाहृत्य,

'इदुपधस्य सकारस्य यो विसर्जनीय' इति भाष्यकारोक्तेः, 'उपसर्गस्यायताविं'ति सूत्रे निस्दुस् इत्येतयोः रुत्वस्यासिद्धत्वा'न्निरयणं दुरयणमित्यत्र लत्वं न भवती'ति वामनोक्तेश्च, सान्त एवायमुपसर्गः । निरःकुष इति सुदुरोरधिकरण इति रेफान्तयोरनयोः सौत्रनिर्देशेऽपि प्रादिष्वपाठात्, भाष्यकारानभिमतेश्च, न रेफान्तत्वमाश्रयितुमुचितम् । सौत्रनिर्देशश्चैकमुनिनिर्देशतया मुनित्रयनिर्देशानुसारेण छान्दस एव । हरदत्ताद्युक्तिस्तु भाष्यविरोधादयुक्ता, इत्यभिप्रायकत्वाद्योगविभागाश्रयणस्यादोषत्वादिति ।

अस्मिन्पक्षे योगविभागाश्रयणेन लत्वमुपपादनीयमित्यरुच्या पक्षान्तरमाह **निपूर्वस्येति** ॥ **रूपमेतदिति** । निपूर्वात् लीश्लेषण इत्यस्मान्निलीयन्तेऽस्मिन्नित्यधिकरणे ल्युटि तस्य 'युवोरनाकावि'त्यनादेशे सार्वधातुकेति गुणेऽयादेशे च निलयनशब्दनिष्पत्तिरित्यर्थः । कथमनिलयनशब्दात्स्वाश्रयत्वस्य लाभ इत्यत आह **न विद्यत इति** । 'स भगवः कस्मिन्प्रतिष्ठितः' इति श्रुत्या भगवतः स्वनिलयनत्वस्य सिद्धत्वेन निलयनमात्रनिषेधायोगादाह **स्वातिरिक्तमिति** । **तनोतेरिति** भाव इति शेषः । तथा च डित्वाट्टिलोपे ड्विप्रत्ययस्य च क्विप्प्रत्ययवत्सर्वात्मना लोप इति व्यञ्जनमात्रावशेष इति भावः । **तेन सच्छब्दस्य बहुव्रीहिरिति** । सत् त् यस्य तत्सदिति त्शब्देन सच्छब्दस्य बहुव्रीहिरित्यर्थः ॥ **यती प्रयत्न इत्यस्येति** । अत्रेकारोऽनुबन्धार्थः । ततश्चास्मादौणादिके डप्रत्यये डित्वाट्टिलोपे यमितिरूपसिद्धिः । यतत इति यमित्यनेन प्रयत्नकर्तृत्वलाभेऽपि नियामकत्वालाभात्तल्लाभायोक्तमन्तर्णीतण्यर्थस्येति **कर्मधारय इति** ।

---

सच्च तत् यम् चेति कर्मधारय इत्यर्थः । ननु 'झलां जशोऽन्ते' इति जश्त्वापत्त्या सद्यमिति भवितव्यं सत्यमिति तु कथमित्यत आह **अयस्मयादीनीति** ॥ **वक्ष्यमाणत्वादिति** । 'सदात सत्यमिति नित्यमेवोच्यत बुधैरि'त्यादिनेति शेषः ॥ **ड्विप्रत्यय इति** डित्वाट्टिलोपे क्विब्वत् ड्विप्रत्ययस्य सर्वात्मना लोपे तकारमात्रावशेष इति भावः ॥ **ड इति** । डित्वाट्टिलोपे यमिति रूपसिद्धिः । धातूनामनेकार्थत्वाच्च प्रकृतार्थलाभ इति ध्येयम् ॥ **प्रत्येकमिति** । सदा सत्त्वात् सदा ततेः इत्यादिरूपेण प्रत्येकं संबन्ध इत्यर्थः ।

**स०** — ननूक्तिर्यद्यपि प्रत्यक्षानुमानयोर्न सम्भवति तथापि स्मृतीनां शब्दरूपत्वात्तत्र सम्भविष्यति । ततश्च वेदेतरप्रमाणेन स्मृत्या नोक्तमिति कुतो न व्याख्यातमित्यत आह **स्मृतीनामिति** ॥ 'इतिहासपुराणःपञ्चमो वेदानां वेदः' इत्युक्तत्वादिति भावः । **विरोधतादवस्थ्यमिति** ॥ वेदेन निरुक्तं वेदेनानिरुक्तमित्युक्तं विरोधतादवस्थ्यमित्यर्थः । नन्वेवं 'निरयनम्' इति स्यादित्यत आह **रो ल इतीति** ॥ कृपे रो ल इति सूत्रे रो ल इति विभागेन न रस्य लत्वमित्यर्थः । न चोपसर्गस्यायताविति लत्वं भविष्यति । न भविष्यति । निस् दुस् इत्यनयोरेफस्यासिद्धत्वात् । न च निरुपसर्ग एव

मवत्विति वाच्यम् । तस्य कैश्चिदेवाङ्गीकृतत्वादिति भावः ॥ ल्युटि कृत इत्यनन्तरं सार्वधातुके गुणे युवोरनाकावित्यनादेशे च सतीति शेषः । तनोतेर्ड्विप्रय इति । डित्वाट्टिलोपः । डिप्रत्ययस्य च क्विप्-प्रत्ययवत्सर्वस्यापि लोप इति भावः । यती प्रयत्न इत्यस्येति । अत्रेकारोऽनुबन्धार्थः डित्वाट्टिलोपश्चेति ज्ञातव्यम् । जश्त्वाभाव इति । पदसंज्ञायां 'झलां जशोऽन्ते'इति जश्त्वे सद्यमिति स्यादिति भावः । वक्ष्यमाणत्वादिति ॥ 'सदातनं सत्यमिति नित्यमेवोच्यते बुधैः'इति वाक्य इत्यर्थः ।

पं०— व्याख्येयपदानि दर्शयन् सत्त्वादित्यादि व्याचष्टे सत्त्वादुत्तमत्वादित्यादिना ॥ ड्यत्प्रत्यय इति । टिलोपे त्यदिति रूपमिति भावः । अशक्यत इति मूलपदं भावप्रधानमित्युपेत्या-शक्यत्वत इत्यनूद्यानिरुक्तमिति व्याख्येयं दर्शितम् । निषेधति नेति । तत्र हेतुः प्रकृतेत्यादि । नन्वेवं स्मृतिभिरुक्तं नेयनिरुक्तमस्त्वित्यत आह स्मृतीनामपीति । वेदात्मकत्वेन वेदार्थप्रतिपादकत्वेनार्थैक्या-द्वेदात्मकत्वेनेत्युक्तम् । यद्वा प्राग्वेदपदेन स्मृतीनामभिप्रेतत्वेनेत्यर्थ ॥ विरोधतादवस्थ्यमिति । वेदेन निरुक्तं वेदेनानिरुक्तमित्युक्तविरोधतादवस्थ्यमित्यर्थः ॥ महिमाधिक्यं चात्र लभ्यत इति । कात्स्न्येना-निरुक्तमिति व्याख्यान इत्यर्थः । निलयनशब्दाज्जगदाश्रयत्वलाभं दर्शयति निश्चितमिति । क्रियाविशे-षणमेतत् । निसित्युपसर्गोऽयम् । न तु निषेधार्थो निरित्युपसर्ग इति भावः । प्रवर्तते चराचरा इति योज्यम् । ननु निसुपपदस्य, अयगताविति धातोः करणाधिकरणयोश्चेत्यधिकरणे ल्युटि युवोरनाकावित्य-नादेशे निसः सकारस्य 'ससजुषो रुः' इति प्राप्तरुत्वस्यासिद्ध्या 'उपसर्गस्यायता वि'ति लत्वं नेति वृत्त्या-दावुक्तेर्निरयनमिति स्यादित्यत आह रोल इति । 'कृपो रो लः' इति सूत्रे रो ल इति पृथग्योगं विभज्य रेफस्य लकारो भवतीष्टविषये इत्यर्थमुपेत्यात्र लत्वं निर्वाह्यमित्यर्थः । अधिकरणे ल्युटि कृत इति । नितरां लीयतेऽस्मिन्नित्यधिकरणे ल्युटि युवोरनाकावित्यनादेशे च सार्वधातुकार्धधातुकयोरिति गुणेकृते अनादेशे रूपमित्यर्थः ॥ जीवज्ञानं जीवकर्तृकं ज्ञानम् । जीवशब्दोऽत्र 'प्रकृतिं विद्धिमे पराम् । जीवभूतां महाबाहो' इत्यत्रेव चेतनार्थः । रमादिचेतनाः यद्विषये सकलविशेषान्न विजानन्ति । तद्-विज्ञानमित्यर्थः ॥ ड्विप्रत्यय इति । भाव इति योज्यम् । डित्वात् तनुविस्तार इत्यस्य टिलोपे 'उपदे-शेऽजनुनासिक इत्' इतीकारापगमे वेरपृक्तस्येति वकारलोपे च त् इति रूपम् । सत् समीचीनं त् व्यापनं यस्येति बहुव्रीहिरित्यर्थः । तर्हि सद्यमिति स्यात् 'झलां जशोऽन्ते' इति जश्त्वप्राप्तेरित्यत आह अयस्मयेति । अयोमयेति भाव्ये सति संज्ञायां आकडारादेका संज्ञा इत्युक्तत्वेन पदसंज्ञाया अभावाज्ज-श्त्वाद्यभावेन अयस्मयानि पात्राणीत्यादौ यथा छन्दसि रूपं तथाऽत्रापि सत्यमिति रूपमित्यर्थः ॥ वक्ष्य-माणत्वादिति । 'सदातनं सत्यमिति नित्यमेवोच्यते बुधै'रिति वाचारम्भणश्रुतिव्याख्यावसरेऽत्रैव पादे वक्ष्यमाणत्वादित्यर्थः । तथाच तत्रैवतदवयवार्थव्युत्पादनं दर्शयिष्यत इति भावः । सदिति प्राति-

पदिकनिर्देशोऽयम् । सदिति पदेन साधुगुणा उच्यन्त इत्यर्थः ॥ **इतिवचनादिति** । सप्तदशे गीता वचनादित्यर्थः ॥ **अभवदिति वचनादिति** । श्रुतौ 'सच्च त्यच्चाभवत्' इत्युपक्रमे 'सत्यमभवदि'त्युपसंहारे च श्रवणादित्यर्थः ॥ **सत्त्वादिकमिति** । उत्तमत्वश्चाप्तत्वादिकमित्यर्थः ॥ **प्रत्येकं चेति** । सदा सत्त्वात् सदा ततेः सदा वैदिकत्वादित्यादिरूपेण संबन्ध्यत इत्यर्थः ।

**या०** — ननूक्तेः प्रत्यक्षानुमानयोरसंभवेऽपि स्मृतीनां शब्दरूपत्वात्तस्यास्तत्र नासंभवः । ततश्च वेदेतरप्रमाणेन स्मृतिरूपेणानिरुक्तमिति कुतो न व्याख्यातमित्यत आह **स्मृतीनामिति** । 'इतिहासपुराणः पञ्चमो वेदानां वेद' इत्युक्तत्वादिति भावः ॥ **विरोधतादवस्थ्यमिति** । वेदेन निरुक्तं वेदेनानिरुक्तमित्युक्तविरोधतादवस्थ्यमित्यर्थः । नन्वेवं निरयनमिति स्यादित्यत आह **रो ल इतीति** । कृपो रो ल इति सूत्रे रो ल इति विभागेन रस्य लत्वमित्यर्थः ॥ **ल्युटि कृत इति** । तथा च युवोरनाकावित्यनादेशे धात्वीकारस्य गुणेऽयादेशे च सति निलयनमिति रूपमिति भावः ॥ **तनोतेर्डिप्रत्यय इति** । डित्वाट्टिलोपः । डिप्रत्यये क्विप्प्रत्ययवत् मर्वस्यापि लोप इति भावः ॥ **यती प्रयत्न इत्यस्येति** । अत्रेकारोऽनुबन्धार्थः । ततश्च डप्रत्यये टिलोपे यमिति रूपमिति द्रष्टव्यम् ॥ **अयस्मयादीनि छन्दसीति** । एतत्सूत्रवार्तिकं क्वचिदुभयमपि भवतीति । तेन भसंज्ञाश्रयणादित्यर्थः । अन्यथा पदसंज्ञायां 'झलां जशोन्ते' इति जश्त्वे सद्यमिति स्यादिति भावः ॥ **वक्ष्यमाणत्वादिति** । 'सनातनं सत्यमिति नित्यमेवोच्यते बुधैरि'त्यत्रेति शेषः ॥ **यम उपरम इति** । धातूनामनेकार्थत्वात्प्रकृतार्थलाभ इति भावः ॥

**श्री०** — **डयद् इति** । तथा च तन् असात् डयद्प्रत्यये टिभूतस्यान् इत्यस्य लोपे डकारस्य तकारे च सति तद् इति रूपम् । स्मृतीनां वेदैक्याविवक्षया वेदेतरप्रमाणेन स्मृत्याऽनिरुक्तमिति कुतो न व्याख्यायते । विरोधाभावादित्यत आह **महिमेति** । अत्र वेदेन स्मृत्या कार्त्स्न्येन वक्तुमशक्यत इतिव्याख्यान इत्यर्थः । **प्रवर्तन्ते** प्रकर्षेण तिष्ठन्ति ॥ **ली श्लेषण इति** । ततश्च निपूर्वाल्ली श्लेषणे असात् श्लिषन्ति सम्बद्धा भवन्त्यस्मिन्नित्यधिकरणे ल्युट्प्रत्यये लकारटकारयोर्लोपे युकारस्यानादेशे ली अनेति स्थिते सार्वधातुकार्धधातुकयोरिति ईकारस्य ओकाररूपे गुणे तस्य चायादेशे निलयनेति रूपम् । श्रुतौ विज्ञानमिति सत्त्वादाचार्यैर्वीत्यस्यार्थाकथनाद्विशेषेत्युक्तम् ॥ जीवज्ञानं यद्विषये सकलविशेषावगाहि सत् न विद्यत इत्यन्वयः । तेन तकारेण सत् सती समीचीना ततिर्यस्यासौ तत् इति बहुव्रीहिरित्यर्थः ॥ **डप्रत्ययेति** । डित्वादन् इत्यस्य टिभूतस्य लोपः । ततः पश्चात्सत् त्, च तत् यच्चेति कर्मधारय इत्यर्थः ॥ **भसंज्ञेति** । तथा च न पदसंज्ञा । भसंज्ञायास्तदपवादकत्वादित्यर्थः **ब्रह्मविदिति** । प्राप्यं

न इति व्याख्याने तत्र ज्ञानिप्राप्यत्वोक्तेस्तद्विरोध इत्यर्थः ॥ ड्वीति । तथाच पूर्ववत् ड्विप्रत्यये डित्वाट्टिलोपे । विवब्वत्सर्वस्यापि तस्य लोपे तकारमात्रं रूपम् ॥ ड इति । डित्वात् टिभूतस्यानित्यस्य लोपे य इति रूपम् ॥ प्रत्येकमिति । सदा सत्वात्सदा ततेरित्यादिसम्बन्ध इत्यर्थः ।

च० — वेदात्मकत्वेनेति । इतिहासपुराणः पञ्चमो वेदानां वेद इत्युक्तेरिति भावः । विरोधतादवस्थ्यमिति । वेदेन निरुक्तं तेनैवानिरुक्तमित्युक्तौ विरोधतादवस्थ्यमित्यर्थः । वक्ष्यमाणत्वादिति । 'सनातनं सत्यमिति नित्यमेवोच्यते बुधैः' इत्यत्रेत्यादिः ।

सु० — तर्हि कथमभवदिति प्रयोग इत्यत आह व्यक्तिरिति ।

अनु० — व्यक्तिरुक्तगुणानां हि पुरुषापेक्षया नृणाम् ।
भवेदभवदि(त्याद्यः प्र)त्यस्मात्प्रयोगश्च त्र युज्यते ।

उक्तगुणानां सदादिशब्दोक्त(ानां)धर्माणां व्यक्तिः प्रतीतिः । नृणामुपदेष्टृपुरुषापेक्षया सृष्टौ सत्यामेव भवेत् हि यस्मा(दस्मा)त्कारणात् । अत्र च नित्यगुणेऽपि ब्रह्मणि सदादिकमभवदितिप्रयोगो युज्यते । ततश्चायं श्रुत्यर्थः संपद्यते । तत् ब्रह्म मूर्तामूर्तात्मकं विश्वं सृष्ट्वा तत्प्रेरकत्वेन नानारूपैस्तदेव विश्वं प्रविश्य प्राक् सृष्टेरुपदेष्टृणामुपदेश्यानां च शरीरेन्द्रियवतामभावादप्रतीतगुणकं सत् अथेदानीमुपदेष्टृणामुपदेश्यानां च शरीरेन्द्रियवत्त्वे सति प्रतीतसत्त्वादिगुणमभवदिति । तदनेन पारमेश्वरी सृष्टिर्योग्यानां स्वगुणज्ञानार्थेत्युक्तं भवति । यथोक्तम् । 'सोऽयं विहार इह मे तनुभृत्स्वभावसंभूतये भवति भूतिकृदेव भूत्याः' इति ।

शे० — ननु सदादिशब्दोक्तधर्माणां व्यक्तिरपि स्वं प्रति सर्वदाऽस्तीति न व्यक्त्यपेक्षयाऽप्यभवदित्यादिप्रयोगनिर्वाह इत्यत उक्तं नृणामिति । उपदेश्यानामित्यर्थः। उपदेश्यपरनृशब्दसमभिव्याहारात्पुरुषमात्रपरोऽपि पुरुषशब्द उपदेश्यपुरुषप्रतिसंबन्ध्युपदेष्टृपर इत्याह उपदेष्टृपुरुष इति ॥ सृष्टौ सत्यामिति । मूर्तामूर्तात्मकविश्वसृष्टौ सत्यामित्यर्थः । ननु सृष्टेः पूर्वं नृणामुपदेष्टृपुरुषापेक्षया भगवद्गुणानां कुतो न व्यक्तिः, सृष्टौ सत्यां च कुतो व्यक्तिः । उपदेश्योपदेशकपुरुषयोः पश्चादिव पूर्वमपि सत्त्वात् । भगवद्गुणानां चानादित्वेन सर्वदा सत्त्वादित्यतः सृष्टेः प्रतीत्युपयोगं दर्शयन्नेव श्रुतितात्पर्यार्थमाह ततश्चेति ॥ शरीरेन्द्रियवतामभावादिति । ततश्च न सृष्टेः पूर्वं तेषामुपदेश्योपदेष्टृभाव इति भावः । उक्तः सर्वोऽप्यर्थ आचार्यवाक्यार्थतयाऽनुसन्धेय इति भावेन भारततात्पर्यनिर्णयवाक्यं प्रमाणयति यथोक्तमिति । प्रथमेऽध्याय इति शेषः । तद्वाक्यं पठति स इति । अनेन तनुभृच्छब्दो योग्यजनपरः,

स्वभावशब्दश्च स्वस्य भावो धर्म इति स्वगुणपरः, संभूतिशब्दश्च ज्ञानार्थ इत्याचार्यवाक्ययोजना सूचिता भवति ।

**प०**— सृष्टौ सत्यामिति शेषोक्तिः । हीत्यनुवादो यस्मादिति व्याख्या । अत्र चेत्यनुवादः नित्येत्यादि व्याख्या । **यथोक्तमिति** । भारततात्पर्यनिर्णयाऽऽद्यभागे । तनुभृतां ये स्वभावास्तेषामभिव्यक्तये । यद्वा तनुभृतां साधूनां स्वस्य भगवतः भावानां गुणानां संभूतये ज्ञानायेत्यर्थः । **भूत्याः** श्रियः ।

**श्री०**— **सत्त्वादिगुणमिति** । सत्त्वात्ततेरित्यादिनोक्तरीत्या सत्त्वादिगुणकमित्यर्थः ॥ **तनुभृदिति**।तनुभृतां योग्यानां पुंसां स्वस्य स्वतन्त्रस्य मम ये भावाः गुणास्तेषां सम्भूतये ज्ञानायेति योजना ।

**सु०**— **ब्रह्मपरिणामनिराकरणमुपसंहरति तस्मादिति** ।

**अनु०**— तस्मादशेषकर्तैको निर्विकारो रमापतिः ॥

**निर्विकार एवाशेषकर्तेति संबन्धः । द्विभागं ब्रह्मेति यन्निराकृतं तस्योपसंहार** एक इति । **परिणामानुपपत्तावुक्तयुक्तेरनुवादो वा । अतो न ब्रह्मोपादानत्वं प्रकृत्यधिकरणार्थ इति (संबन्धः) शेषः । कस्तर्हि तदर्थ इत्यत आह** शब्दैरिति ।

शब्दैः प्रकृतिरित्यादैः स्त्रीलिङ्गैरभिधीयते ॥

---

**इत्यर्थोस्येति शेषः । अनेनापव्याख्याननिराकरणस्य स्वव्याख्यानदाढर्यार्थत्वात् नासङ्गतिरित्यपि सूचितम्** ।

**शे०**— अशेषकर्तृत्वस्य परिणामवादिनोऽप्यभिमतत्वात्कथमयं तन्निराकरणोपसंहार इत्यतो योजनामाह **निर्विकार इति** ॥ **निराकृतमिति** । भागेन परिणामश्चेदित्यादिनेति शेषः ॥ **उक्तयुक्तेरिति** । अपराधीनत्वरूपयुक्तेरित्यर्थः । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्युपक्रमानुसारेण अनुगुणं शेषं पूरयति **अत इति** ।

**म०**— **उक्तयुक्तेरनुवाद इति** । अपराधीनत्वयुक्तेरित्यर्थः । एकशब्दस्यासहायवाचित्वादिति भावः ।

**प०**— परैरुपादाननिमित्तयोरैक्योपगमेन विकारिण एव कर्तृत्वाङ्गीकारात् तस्य चात्र निरासात्तदुपसंहारत्वस्फोरणायोद्देश्यविधेयव्यत्यासेनान्वयमाह **इति संबंध इति** ॥ **परिणामेति** । ब्रह्मणः परिणामानुपपत्तौ नैव स स्यादित्यत्रोक्ता या युक्तिः विकारमात्रस्य पराधीनत्वादस्य चापराधीनत्वादिति युक्तिः, एकः=अद्वितीयः स्वतन्त्र इति यावदित्युक्त्याऽनूद्यत इत्यर्थः । एतच्च 'यच्चाविकृतमेवैकमि'त्यमेतनैकपदोक्ताभिप्रायविवरणेन व्यक्तम् । अभिधीयत इत्यनन्तरं शेषमाह **इत्यर्थोऽस्येति शेष इति** । **अस्य**

अधिकरणस्येत्यर्थः । **अनेनैवेति** । बहु स्यामिति बहुवचनस्य स्वरूपबहुभावरूपव्याख्यानेनैव प्रकृतिपर-वाक्यमपि नियामकस्वरूपबाहुल्यकरणाभिप्रायेण व्याख्यातमित्यर्थः ।

**या० — उक्तयुक्तेरनुवाद इति** । अपराधीनत्वयुक्तेरित्यर्थः । एकशब्दस्यासहायवाचित्वा-दिति भावः ।

**श्री० — उक्तेति** । सर्वपरिणामानां पराधीनत्वोक्तेर्भगवतश्चैकत्वादपराधीनत्वान्न परिणामो युक्त इत्यर्थः ॥

**सु० — ननु वक्तव्यार्थस्यावशिष्टत्वात्कथमुपसंहारः क्रियते । तथा हि । प्रतिज्ञादृष्टा-न्तानुपरोधादित्युक्तं तावद्दूषणीयम् । सत्यम् । विवर्तनिराकरणेन निराकरिष्यते । तर्ह्यभिध्यो-पदेशाच्चेत्यत्रोक्तं 'बहु स्यां प्रजायेये'ति वाक्यं दूषणीयमिति चेन्न । अस्यापि 'सच्च त्यच्चे'ति वाक्यव्याख्यानन्यायेनैव** व्याख्यातत्वादित्याह बहु स्यामिति ।

**अनु० —** बहु स्यामिति तस्यैव ह्युक्तमार्गेण युज्यते ।

तस्यैव **निर्विकारस्यैव** । **उक्तमार्गेणेत्यस्य (एव) विवरणं** तत्तद्गतेन रूपेणेति ।

तत्तद्गतेन रूपेण

---

**तत्तदनन्तपदार्थप्रेरकानन्तरूपैर्बहु स्यामिति सोऽकामयतेत्यस्याः श्रुतेरर्थ इत्यर्थः ।**

**एवं तर्हि 'स इदं सर्वमसृजते'त्युत्तरवाक्यमसङ्गतं स्यात् । न ह्यन्यार्थं सङ्कल्पमभि-धायान्यक्रियाभिधानं सङ्गच्छते । नहीश्वरे ऽस्वतन्त्रोऽप्यत्यकामो वेत्यत आह** तदर्थमिति ।

तदर्थं ह्यसृजज्जगत् ॥

**तत्तत्पदार्थनियामकबहुस्वरूपत्वकामनानन्तरं, नियम्यापेक्षत्वात् नियामकत्वस्य, तदर्थं नियामकबहुस्वरूपत्वार्थं, नियम्यं जगत्तावदसृजत्, ततो नियामकबहुस्वरूपो भूत्वा, तदेवानु-प्राविशदिति, वाक्ययोजनोपपत्तेः कात्रासङ्गतिरित्यर्थः । अनेनैव 'तदात्मानं स्वयमकुरुतेति' श्रुतिर्व्याख्याता वेदितव्या । न ह्यत्रात्मानं प्रपञ्चात्मनाऽकुरुतेति श्रूयते । उभयाम्नानं च ऊर्णनाभिदृष्टान्तोक्त्यैव निरस्तम् । न ह्यूर्णनाभेरुत्पद्यमानस्य, तस्मिन्नेव लीयमानस्य च, तन्तो-रूर्णनाभिरुपादानम् । किन्तु तदुपभुक्तमन्नमेवेत्युक्तम् । योनिश्चेत्येतत्प्रागेव निरस्तमिति युक्त एवोपसंहार इति ॥ छ ॥ छ ॥**

**शे० — निराकरिष्यत इति** । वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनमि'त्यादिना पराभिम-तार्थे बाधकव्युत्पादनेन 'वाचाऽऽरब्धं तु साङ्केतनाम स्यादि'त्यादिनाऽबाधितार्थव्युत्पादनेन चात्रैव पादे

उत्तरत्रेति शेषः । दूषणीयमिति । तत्र बहुभवनस्य प्रतिपादितत्वान्निर्विकारस्य च ब्रह्मणस्तदयोगा-दिति भावः ॥ विवरणमिति । अतो न तद्वैयर्थ्यमिति भावः । तथाऽपि कथं बहु स्यामिति श्रुत्य-विरोध इत्यत आह स्यादेवं यद्यत्र तेजआदिबहुभावः सङ्कल्पितः स्यात् । न चैतदस्ति । किन्तु स्वरूप-बहुभाव एव । स च भगवतोऽपि संभवति । गुहां प्रविष्टावित्यत्रैकस्मिन्नपि बहु वस्य, धुम्वादीत्यत्राजे-ऽपि जनेरुक्तत्वादित्यभिप्रेत्य श्रुत्यर्थमाह तत्तदिति ।

बहु स्यामिति तेजआत्मना बहुभाव एव सङ्कल्पितः । तेजआदिभावश्च न ब्रह्मणि युक्त इत्यभिप्रेत्य स्वरूपबहुभावस्यैव सङ्कल्पितत्वेऽनिष्टमाह एवं तर्हीति । तत्तत्पदार्थनियामकस्वरूपबहुभावस्यैव सङ्कल्पितत्वे इत्यर्थः ॥ असङ्गतं स्यादिति । तस्य प्रपञ्चसर्जनाभिधायकत्वादिति भावः ॥ कासङ्गतिरिति । गुरुः स्यामिति राजा स्यामिति गुरुत्वराजत्वादिसङ्कल्पानन्तरमपि गुरुत्वराजत्वादेः शिष्यभृत्यादिसापेक्षत्वेन तेन विनाऽसंभवाद्गुरुत्वाद्यर्थं शिष्यादिसंपादनदर्शनादिति भावः । तथापि 'आत्मकृतेः परिणामादि'त्यत्रोक्त 'तदात्मानं स्वयमकुरुते'त्येतद्दूषणीयमेवेति कथं तद्दूषयितव्येत्युपसंहार इत्यत आह अनेनैवेति । अस्तु तर्हि 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ती'ति ब्रह्मण्येव प्रभवप्रल-याम्नानं तत्र मानम् । निमित्ते कार्यस्य लयाभावादित्यतो निमित्तेऽप्यूर्णनाभौ तन्तोर्लयदर्शनान्न तेनोपादा-नत्वसिद्धिरित्याह उभयाम्नानं चेति । ननूर्णनाभौ न तन्तोर्लयः किन्तु बहिष्ठस्यान्तःप्रवेशमात्रमित्यत उक्तम् ऊर्णनाभिदृष्टान्तोक्त्येति । ब्रह्मण ऊर्णनाभिवदेव संहर्तृत्वस्य यथोर्णनाभिरिति श्रुत्यादिसिद्धत्वे-नेत्यर्थः । ऊर्णनाभेरपि तन्तुकेशादीन्प्रत्युपादानत्वात् कथं तद्दृष्टान्तोक्तिमात्रेण उपादानत्वनिरास इत्यत ऊर्णनाभिनाशेऽपि तन्त्वाद्युपलम्भान्न तत्र तस्योपादानत्वमित्याशयेनाह न ह्यूर्णनाभेरिति । तर्ह्युपादा-नान्तराभावान्निरुपादानैव तन्त्वाद्युत्पत्तिः प्रसज्यत इत्यभिप्रायेण पृच्छति किन्त्विति । ऊर्णनाभ्युप-भुक्तान्नपरिणतानां तच्छरीरधातूनामुपादानत्वान्नोपादानान्तराभाव इत्याशयेन परिहरति तदिति ॥ उक्त-मिति । 'तदन्नं हि कार्यरूपतया भवेदि'त्यनेनेति शेषः ॥ प्रागेवेति । 'न चोर्णनाभिजनितृमातृणां च विकारिते'त्यादिनेति शेषः । यथोर्णनाभिरिति वक्ष्यमाणोर्णनाभ्यादिदृष्टान्तबलादेव 'यद्भूतयोनि-मिति' योनिशब्दस्योपादानवाचिताया: पराभिप्रेतत्वादूर्णनाभ्यादीनां तन्त्वादिकं प्रति उपादानत्वाभाव-वर्णनेन दृष्टान्तस्यान्यथासिद्धौ च योनिशब्दस्य तद्बलेनोपादानवाचित्वं न कल्पयितुं युक्तमिति भावः ॥ उपसंहार इति । ब्रह्मोपादानत्वं न प्रकृत्यधिकरणार्थ इत्युपसंहार इत्यर्थः ।

स०— प्रागेव निरस्तमितीति ॥ 'न चोर्णनाभिजनितृमातृणां च विकारिते'त्येतद्व्याख्या-नावसरे इत्यर्थः ।

प० — साक्षाच्चोभयाम्नानादितिसूत्रे कर्तृत्वोपादानत्वयोरुभयोराम्नानमुच्यत इति परोक्तार्थं निराह **उभयाम्नानं चेति** । 'नचोर्णनाभिजनितृमातॄणामि'त्यत्रोक्तेत्यर्थः । **योनिश्चेत्येतदिति** । 'योनिश्च हि गीयत इति सूत्रार्थवर्णनमपि प्रागुक्त-'नचोर्णनाभिजनित्रि'त्यत्र ऊर्णनाभिदृष्टांतोक्त्या निरस्तमित्यर्थः । तत्प्रकारस्तत्रैव सुधायां व्यक्तः ।

या० — **निराकरिष्यत इति** । 'वाचारंभणमित्युक्ते मिथ्यैत्यश्रुतकल्पनम् । पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थते'त्यत्रेति शेषः ॥ **काऽत्रासङ्गतिरिति** । उक्तं हि 'बहु स्यामिति सङ्कल्प्य तेजः-प्रभृतिसर्जनम् । गुरुः स्यामिति सङ्कल्प्य शिष्यसम्पादनादिवदि'ति ॥ **प्रागेव निरस्तमिति** । 'न चोर्णनाभिजनितृमातॄणां च विकारिते'त्येतद्व्याख्यानावसर इत्यर्थः ।

श्री० — **न हीश्वर इति** । येनान्यार्थं सङ्कल्प्यान्यक्रियां करिष्यतीत्यर्थः ॥ **अनेनैवेति** । बहु स्यामिति वाक्यस्य स्वरूपबहुभावरूपत्वव्याख्यानेनैवात्मकृतिपरवाक्यमपि नियामकस्वरूपबहुकारणाभि-प्रायेण व्याख्यातमित्यर्थः । साक्षाच्चोभयाम्नानादिति सूत्रे कर्तृत्वोपादानत्वयोरुभयोराम्नानमुच्यत इति परोक्तार्थं निराकरोति **उभयाम्नानं चेति** । 'न चोर्णनाभिजनितृमातॄणामि'त्यत्रोक्तेत्यर्थः ।

च० — **प्रागेव निरस्तमिति** । 'न चोर्णनाभी'तिप्रतीकव्याख्यावसर इत्यर्थः ।

सु० — **अपव्याख्यानान्तरं दूषयितुमनुवदति** यच्चेति ।

अनु० — यच्चाविकृतमेवैकं ब्रह्म विश्वात्मना मृषा ॥
दृश्यते मन्ददृष्टेश्चैव स सर्ग इति कथ्यते ।

**ब्रह्म विश्वात्मना दृश्यत इति यत्, स सर्ग इति कथ्यत इत्येतावत्परिणामवादेऽपि समम् । अत उक्तमविकृतमेवेति । अविकृतत्वं कुत इत्यत उक्तमेकमिति । अद्वितीयम् । निरवयवं चेत्यर्थः ।**

**तथा हि । किं ब्रह्मणः स्वत एव विश्वाकारपरिणामः । किं वा परतः । नाद्यः, क्वाप्यदर्शनात् । यदपि क्षीरवद्धीत्युदाहृतम् । तत् कालादेर्विद्यमानत्वादयुक्तम् । स्वेच्छयैवेति चेन्न । प्रयोजनाभावात् । स्वभावोऽयमिति चेन्न । प्रेक्षावत्त्वहानेः । न द्वितीयः । अद्वितीयत्वात् । न च निरवयवं क्वापि परिणतं दृष्टम् । आकाशं संयोगादिमदुपलब्धमिति चेन्न । द्रव्याकारणपरिणामस्य प्रकृतत्वात् । परमाण्वादयस्तु स्वरूपेणैव न सिद्धा इति ।**

शे० — नन्वेकत्वेऽपि विकृतत्वे बाधकाभावेनाप्रयोजकत्वान्नैकत्वस्याविकृतत्वे हेतुत्वं युक्तम् । एकस्यापि मृत्पिण्डादेर्घटाद्यात्मना विकृतत्वदर्शनेन व्यभिचारश्चेत्यतोऽविकृतत्वोपपादकतया द्वेधा व्याचष्टे **अद्वितीयमित्यादिना** ।

एवं व्याख्यानद्वयेन कथमुक्तदूषणद्वयपरिहार इत्यतस्तं दर्शयितुमत्र सम्भावितपक्षद्वयं विकल्प्याद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतया मूलं योजयितुं विकल्पयति **तथा हीति** । मृदादेर्घटाद्यात्मना परिणामस्य कारणान्तरसापेक्षत्वस्यैव दर्शनेनानपेक्षपरिणामादृष्ट्या परिणाममात्रस्य कारणान्तराधीनत्वनियमस्थितेरसहायस्य ब्रह्मणो न प्रपञ्चात्मना परिणामः सम्भवतीत्याशयेनाह **नाद्यः क्वाप्यदर्शनादिति** । ननु यः परिणामः स परिणामिभिन्नकारणान्तरसापेक्ष एवेति नायमस्ति नियमः । असहायस्यैव क्षीरस्य दध्यात्मना परिणामदर्शनेन तत्र व्यभिचारात् । तथा चासहायस्यापि ब्रह्मणो विश्वात्मना परिणामो भविष्यतीत्याशङ्कते **यदपीति ॥ उदाहृतमिति** । 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धी'त्यत्र मृदादेर्घटादिपरिणामस्य कुलालदण्डादिसापेक्षत्वदर्शनादसहायस्य ब्रह्मणः कथं परिणाम इत्याशङ्क्य यथा क्षीरजलयोरसहाययोरेव दधिहिमभावेन परिणामस्तथाऽसहायस्यैव ब्रह्मणो विश्वात्मना परिणाम इत्यसहायस्यैव ब्रह्मणः परिणामे क्षीरं निदर्शनतयोदाहृतमित्यर्थः । स्यादेवं ब्रह्मणोऽसहायस्यापि परिणामो यदि क्षीरादेरसहायस्यापि दध्याद्यात्मना परिणामः सिद्धः स्यान्न चैतदस्ति । त्वत्पक्षेऽपि क्षीरादेर्दध्यादिपरिणामे कालप्रकृतिकर्मादेः सहकारिणः सत्त्वेन तदनपेक्षत्वव्युत्पादनस्य सिद्धान्तविरुद्धत्वादित्याह **तत् कालादेरिति** । यद्यपि क्षीरादेर्दध्यादिपरिणामस्यातञ्चनादिकारणत्वस्यान्वयव्यतिरेकसिद्धत्वात्तथैव वक्तुमुचितम्, अत एव चन्द्रिकायामपि तदेव प्रथममुद्भाव्य किञ्चेति दूषणान्तरपरतयैवेदं दूषणमुपवर्णितम्; तथाऽपीह टीकायां 'पराधीनविशेषाप्तिरनिवर्त्योऽन्यथाभव' इति विकारविभागपरवाक्यव्याख्यानावसरे दध्यात्मना परिणामस्यातञ्चनादिकारणान्तरसापेक्षत्वस्योपवर्णितत्वेन तत एव ज्ञातुं शक्यत्वादत्रानुद्भावनम् । चन्द्रिकायां तु तत्रोक्तमत्रोक्तं च दूषणं सङ्कलय्य परपक्षनिरासकतया व्यापारितमिति ध्येयम् । अस्तु जडेषु पराधीन एव विकारः । अचेतनत्वेनेच्छाऽसम्भवेन स्वेच्छया विकारासम्भवात् । ब्रह्मणस्तु चेतनत्वात्स्वेच्छयैव विकारो नानुपपन्नः 'तदात्मानं स्वयमकुरुते'ति श्रुतेरिति भावेन शङ्कते **स्वेच्छयैवेति चेदिति ॥ प्रयोजनाभावादिति** । स्यादेवं कथञ्चिद्यदि ब्रह्मणः प्रपञ्चभवनेच्छोपपन्ना स्यान्न चेयमुपपद्यते । तथाहि । स्वर्गादेरिव प्रपञ्चभवनस्य स्वतः पुरुषार्थत्वाद्ब्रह्मणस्तदिच्छाभिप्रेयते । यागादेरिव पुरुषार्थसाधनत्वाद्वा । नाद्यः । नानाविधानर्थरूपप्रपञ्चभवनस्यापुरुषार्थतया ब्रह्मणस्तदिच्छाऽयोगात् । नान्त्यः । तस्य प्रयोजनान्तरशून्यत्वादिति भावः । स्वभावत्वात्प्रपञ्चभवनेच्छाया न प्रयोजनापेक्षत्वमिति शङ्कते **स्वभावोऽयमिति चेदिति ॥ प्रेक्षावत्त्वहानेरिति** । न ह्युन्मत्तोऽप्यात्मनोऽनर्थरूपतामिच्छति दूरे प्रेक्षावानिति न प्रेक्षावतो ब्रह्मणो नानाविधानर्थप्रपञ्चभवनेच्छास्वभावत्वं युक्तम् । न च प्रपञ्चस्यानर्थरूपत्वाज्ञानात्तद्भवनेच्छा प्रेक्षावतोऽपि ब्रह्मणो युक्तेति वाच्यम् । असर्वज्ञत्वापातात् । न च सर्वज्ञस्य तदाश्रयितुं युक्तमिति भावः ।

अस्तु तर्हि द्वितीयो निरवयत्वादित्यत आह **नेति** ॥ **अद्वितीयत्वादिति** । 'सदेव सोम्येदमग्र आसीदि'ति प्राक् सृष्टेर्वस्त्वन्तरनिषेधान्न ब्रह्मणो विश्वाकारपरिणामः असहाय इति भावः । ब्रह्म न परिणामि निरवयवत्वाद्व्यतिरेकेण मृदादिवदित्यनुमानमभिप्रेत्य तन्मूलभूतव्याप्तिमुपपादयति **न चेति** । यदि हि क्वापि देशे काले वा किञ्चिदपि निरवयवं परिणामि दृष्टं स्यात्तदेयं व्याप्तिर्भज्येत, न चैवमित्यर्थः । गगनादेर्निरवयवस्यापि गुणक्रियाद्यात्मना परिणामदर्शनादनैकान्त्यमित्याशङ्कते **आकाशमिति** । स्यादाकाशादावुक्तरीत्या व्यभिचारो यदि परिणामित्वाभावमात्रं साध्येत । न चैवम् । किं नाम द्रव्याकारेणापरिणतत्वमेव । तच्च निरवयवस्य गगनादेरस्त्येवेति कथमनैकान्त्यमित्याह **द्रव्येति** । ननु वैशेषिकादिमते निरवयवानामपि परमाणूनां द्व्यणुकादिद्रव्यात्मना परिणतत्वात्तत्र व्यभिचारः । तथ साङ्ख्यमते निरवयवस्यापि प्रधानस्य महदाद्यात्मना परिणामात्प्रधानेऽपि व्यभिचारः । न च नैव तैर्निरवयवं प्रधानमभ्युपगम्यते । सत्त्वरजस्तमांसि त्रयो गुणास्तेषां साम्यावस्थैव प्रधानम् । तच्च तैरेवावयवैः सावयवमिति परसिद्धान्तादिति वाच्यम् । सत्त्वरजस्तमसामप्येकैकस्य समानं निरवयवत्वमेकैकमेव चेतरद्वयानुगृहीतं स्वसजातीयस्य प्रपञ्चस्योपादानमित्युपादानस्य निरवयवत्वापरिहारादित्यतः स्यादेतदेवं यदि निरवयवत्वादिरूपेण परमाण्वादि सिद्धं स्यान्न चैतदस्तीति न तत्रानैकान्त्योद्भावनाऽवसर इति भावेनाह **परमाण्वादयस्त्विति** ।

प० — **अपव्याख्यानानन्तरमिति** । प्रपञ्चो ब्रह्मपरिणाम इत्येतत्प्रकृत्यधिकरणार्थ इति यद्भास्करादिव्याख्यानं तत्प्राङ्निरस्तम् । ब्रह्म प्रपञ्चारोपाधिष्ठानमित्येतदत्रोच्यत इति यदपव्याख्यानं तन्निरसितुमित्यर्थः । अविकृतत्वे एकमित्यनेनोक्तार्थद्वयस्य हेतुत्वं व्यनक्ति **तथाहीत्यादिना न सिद्धा इत्यन्तेन** ॥ **तदिति** । कालादेरविकारत्वादिति भावः । ननु परमाणुप्रधानशून्यतत्त्वादयस्तादृशा दृष्टा इत्यत आह **परमाण्वादयस्त्विति** ।

या० — ननु वैशेषिकादिमते निरवयवानां परमाणूनां शून्यवादिमते निरवयवस्य शून्यस्यैव परिणाम इत्यङ्गीकारात्कथमेतदित्यत आह **परमाण्वादय इति** ।

श्री० — **क्वापीति** । स्वत एव परिणामस्येति शेषः । नन्वदर्शनमसिद्धम् । गवाद्युपभुक्तस्य तृणादेः स्वत एव क्षीराकारेण परिणामदर्शनादित्याशङ्क्याह **यदपीति** । कालादेरित्यादिपदेनाम्यादिग्रहणम् । तथा च तत्रापि परिणामः कालाद्यधीन एवेत्यर्थः ॥ **स्वेच्छयेति** । विश्वाकारपरिणाम इति वर्तते । अतो न परापेक्षेत्यर्थः । नानाप्रकारेणानर्थीभवनस्वभावस्य ब्रह्मणो भग्नं प्रेक्षावत्त्वमित्याह **प्रेक्षावत्त्वेति** । निरवयवेऽप्याकाशे संयोगादिमत्स्वरूपावस्थान्तरप्राप्तिरूपः परिणामोऽस्त्येवेति शङ्कते

**आकाशमिति** । नन्वथाऽपि निरवयवानां परमाणूनां द्व्यणुकादिद्रव्याकारेण परिणामो दृष्ट एवेत्यत आह **परमाण्वादय इति** ।

च० — ननु न्यायनये निरवयवानां परमाणूनां शून्यवादिनये च तादृशशून्यस्य परिणामदर्शनान्निरवयवं न परिणमतीति कथमित्यत आह **परमाण्वादय इति** ।

**सु० — अविकृतमेवान्यदन्यात्मना दृश्यत इत्यसंभवि इत्यत उक्तं मृषेति । मृषाशब्देन विश्वस्य ब्रह्मतादात्म्यस्य तद्दर्शनस्य चानिर्वचनीयतोच्यते । यथा रज्जुरविकृतैव मृषा भुजङ्गाद्याकारेणाभासते तथैवेति । तर्हि विश्वोपादानमन्यद्वक्तव्यमित्यत उक्तं मन्ददृष्ट्यैवेति । मन्दा भवति दृष्टिर्यया सा मन्ददृष्टिस्तया माययेत्यर्थः । अथवाऽसंभवपरिहारार्थमुक्तं मन्ददृष्ट्यैवेति । मन्दा चासौ दृष्टिश्च मन्ददृष्टिर्भ्रान्तिस्तयेत्यर्थः । भ्रान्तेरपि याथार्थ्याद्विश्व(स्य )सत्यतापत्तिरित्यत उक्तं मृषेति । तदेतन्मिथ्याप्रपञ्चारोपाधिष्ठानत्वमेव ब्रह्मणः प्रकृतिश्चेत्यादिना कथ्यत इति ।**

शे० — भाष्ये मृषात्वादिवर्णनस्यानर्थक्यमाशङ्क्य परिहरति **अविकृतमेवेति** । मृदाद्यात्मना अविकृतस्यापि मृदादेर्मृदाद्यात्मताऽवभासदर्शनात् न तदात्मना विकृतत्वमेव तदात्मत्वाऽवभासे हेतुः । अतद्रूपस्यापि मृदादेर्घटाद्यात्मताऽवभासदर्शनात् । न तद्रूपत्वमात्रमपि तत्र हेतुः, किन्तु तदात्मना विकृतत्वतद्रूपत्वान्यतरत्वमेवेति भावेनात्रोभयोपादानम् । ब्रह्मणश्च न प्रपञ्चरूपत्वं न वा प्रपञ्चात्मना विकृतत्वमिति न तदात्मताऽवभासः सम्भवतीत्यर्थः । मृषा दृश्यत इति सन्निधानाद्दर्शनमात्रस्यैवानिर्वचनीयता मृषाशब्देनोच्यत इति भ्रान्तिनिरासायाह **मृषेति** । ननु नैतावताऽपि ब्रह्मणः प्रपञ्चात्मताऽवभाससमर्थनं सम्भवति तत्प्रयोजकतया क्लृप्तयोस्तद्रूपत्वतदात्मनाविकृतत्वयोः प्रकृते अनुपपादनादित्यतः स्यादेवं यदि तदात्मताऽवभासे उक्तरीत्या द्वयमेव प्रयोजकं स्यान्न चैतदस्ति । तथा सति रज्ज्वादेर्भुजङ्गाद्यात्मताऽनवभासप्रसङ्गात् । रज्ज्वादेर्भुजङ्गादिरूपत्वस्य भुजङ्गाद्यात्मना विकृतत्वस्य वा तदात्मतावभासप्रयोजकस्य तत्राभावात्किन्त्वन्यदपि । तथा च रज्ज्वादेर्भुजङ्गाद्यात्मताऽवभासे उक्तप्रयोजकद्वयाभावेऽपि तदारोपाधिष्ठानत्वेन तदात्मताऽवभासवत् ब्रह्मणो विश्वात्मताऽवभासस्याप्युक्तनिमित्तद्वयाभावेऽपि निमित्तान्तरेण विश्वात्मताऽवभाससम्भवान्नासम्भव इत्याशयेनानुरूपं दृष्टान्तमाह **यथेति** । तथाऽपि मन्ददृष्ट्यैवेति मायोपादानकत्ववर्णनमनर्थकमित्यतो ब्रह्मण उपादानत्वाभावे निरुपादानोत्पत्तिप्रसङ्गरूपबाधकपरिहारार्थं तदिति भावेन तां शङ्कामुत्थापयति **तर्हीति** ॥ **अन्यद्वक्तव्यमिति** । निरुपादानभावसृष्टेरयोगात् ब्रह्मणश्चोक्तरीत्याऽनुपादानत्वात् रज्ज्वारोपितभुजङ्गाद्युपादानाज्ञानोपादानकत्वे तद्वदेव प्रातिभासिकत्वापत्त्याऽर्थक्रियाकारित्वाभावप्रसक्तेः तद्विलक्षणमेवोपादानं वाच्यमित्यर्थः । नन्वविकृतस्यापि प्रपञ्चात्मताया

भ्रान्त्याऽवभास इत्येवोक्त्या, उपादानानुक्तेर्नोक्तशङ्कापरिहार इत्यत प्रकृतोपयोगितया व्याचष्टे **मन्देति** । तथा च आविद्यकत्वमायिकत्वाभ्यामर्थक्रियानर्हत्वतदर्हत्वव्यवस्था युक्तेति भावः । मृषेत्यस्यासंभव-परिहारकत्वं न श्लिष्टमित्याशयेन पक्षान्तरमाह **अथवेति** ।। **असंभवेति** । अविकृतस्यैवान्यस्यान्यात्मता-दर्शनासंभवेत्यर्थः । उक्तरीत्या व्याख्यानस्य शङ्कितासंभवपरिहारानुपयोगितयाऽसंभवात्प्रकारान्तरेण व्याचष्टे **मन्दा चेति** । तर्ह्यनेनैवासंभवशङ्कापरिहारात्, भाष्ये मृषेत्यंशानर्थक्यमित्यतस्तत्प्रयोजनमाह **भ्रान्तेरपि याथार्थ्यादिति** । सत्यत्वादित्यर्थः । घटः सन्नित्यादिना घटादेरिव भ्रम आसीदित्यादिलौकिक-प्रतीतिप्रयोगाभ्यां तत्सत्यत्वसिद्धेरित्यर्थः ।। **विश्वसत्यत्वेति** । परमते भ्रमस्यार्थज्ञानात्मकत्वेन, तस्य सत्यत्वे, तद्विषयस्य विश्वस्यापि सत्यत्वस्यावश्यकत्वादित्यर्थः । यद्वा विश्वसत्यत्वापत्तिः भ्र निरूपस्य विश्वस्य सत्यत्वापत्त्या, सदद्वैतभङ्ग इति भावः । अत उक्तं **मृषेतीति** । तथा च भ्रान्तेरप्यसत्यत्वान्न सद-द्वैतभङ्ग इत्युक्तं भवति । नन्वस्त्वेवं प्रपञ्चारोपाधिष्ठानत्वं ब्रह्मणः, तथाऽपि न प्रकृतिरिति प्रतिज्ञातोपादान-त्वसिद्धिरित्यतः, सूत्रे प्रकृतिशब्देन प्रपञ्चारोपाधिष्ठानत्वस्यैव विवक्षितत्वं मूलारूढं कर्तुं, तदनुगुणमेव शेषं पूरयति **प्रकृतिश्चेत्यादिनेति** ।

स० — **अथवाऽसम्भवेति** । पूर्वमविकृतमेवान्यदन्यात्मना दृश्यत इत्यसंभवीत्यसंभवपरिहाराय मन्ददृष्टयेत्युक्तमित्युक्तम् । इदानीं तु तत्परिहाराय मन्ददृष्टयेत्युच्यत इत्यर्थः । **भ्रान्तेरपि याथार्थ्यादिति** । भ्रान्तिरूपज्ञानस्य सत्यत्वात्तद्विषयस्य विश्वस्यापि सत्यतापत्तिरित्यर्थः ।

प० — **असंभवेति** । अनिर्वचनीयेनापि भ्रमरूपज्ञानेनान्यदन्यात्मना दृश्यत इत्यस्यासंभवात्त-त्परिहारायेत्यर्थः ।। **भ्रान्तेरपि याथार्थ्यादिति** । भ्रमरूपज्ञानस्य सत्यत्वात्तद्विषयतत्कारणादेरपि सत्यत्व-(स्य)ावश्यंभावात् । अन्यथा अर्थसन्निकर्षादिसामग्र्यभावे तदुत्पत्तेरेवायोगादिति भावः । **मृषेतीति** । भ्रांतिरप्यसत्येत्यर्थः । 'स सर्ग इति कथ्यत' इत्यस्यार्थान्तरमाह **तदेतदित्यादिना** । इतिपदपरामृष्टं दर्शयति प्रकृतिश्चेत्यादिना । यद्वा प्रकृतिरिति पदं इतिशब्दात्पूर्वमनुवर्त्य अस्यार्थोक्तिः प्रकृतिश्चेत्या-दिनेति ।

या० — नन्वस्मिन् व्याख्याने मृषेति व्यर्थमित्यत आह **भ्रान्तेरपि याथार्थ्यादिति** ।। भ्रान्तिरूपज्ञानस्य सत्यत्वात्तद्विषयस्य विश्वस्यापि सत्यतापत्तिरित्यर्थः ।

श्री० — **असम्भवीति** । अन्यस्यान्यात्मताया विकृतत्वं विनाऽसम्भवादित्याशयः ।। **असम्भ-वेति** । अविकृतमेवान्यदन्यात्मना दृश्यत इत्यसम्भवीति पूर्वोक्तासंभवेत्यर्थः ।।

च० — अथैवं कर्मधारयाश्रयणेनैवासंभवशङ्काव्युदासात् मृषेति पदमनर्थकमित्यतस्तदर्थवत्तामेत-द्योजनायामपि संपादयति **भ्रान्तेरपीति** । **याथार्थ्यात्** स्वरूपतः सत्यत्वात् । सन् घट इत्यादिप्रतीति-

व्यवहाराभ्यां घटादेरिव भ्रांतिरस्तीत्यादिप्रतीतिव्यवहाराभ्यां तस्या अपि सत्यत्वं सेत्स्यतीति भावः। **विश्वसत्यत्वेति**। मतान्तरे विषयितासत्त्याऽर्थविशेषितज्ञानस्यैव भ्रमरूपत्वतया विश्वविशेषितभ्रान्तेः सत्यत्वे तद्विशेषणीभूतविश्वस्यापि तस्यावश्यकत्वादित्यर्थः। **अत उक्तं मृषेतीति**। तथा चभ्रान्तेरप्यसत्यत्वान्न तद्विषयसत्यत्वापत्तिरिति भावः। इति स्थितम्।

**सु० — एतदुक्तं भवति। प्रकृतिश्चेत्यादिसूत्रैरुक्तरीत्या ब्रह्मणो जगदुपादानत्वमुच्यते। उपादानत्वं च न परिणामितया। अपि तर्हि अविद्यापरिणाममृषाविश्वभ्रमाधिष्ठानत्वेनैव। अतो नोक्तदोष इति।**

**शे० —** ननु न ब्रह्मणः प्रपञ्चारोपाधिष्ठानत्वस्य प्रकृतिश्चेत्यादिसूत्रार्थतया वर्णनं भाष्यकारीयं युक्तम्। प्रकृतिश्चेत्यादिसूत्राणां ब्रह्मणो जगदुपादानत्वप्रतिपादकत्वस्यैव स्पष्टप्रतिभासत्वादित्यतो नेदं भाष्य ब्रह्मणो जगदारोपाधिष्ठानत्वस्य साक्षात्सूत्रार्थताऽभिप्रायं येनोक्तदोषः स्यात् किन्तु पर्यवसन्नसूत्रार्थताभिप्रायमतो नानुपपत्तिरितिभावेन साक्षात्सूत्रार्थप्रदर्शनपूर्वकं पर्यवसानगत्या तल्लाभं दर्शयति **एतदुक्तं भवतीति**। कुतः प्रकृतिश्चेत्यादिसूत्राणां ब्रह्मणो जगदुपादानत्वप्रतिपादकत्वम्। तस्याप्यप्रतिभासादित्यतः प्रागुपन्यस्तपरिणामवादिव्याख्यानरीत्या तदिति भावेनोक्तमुक्तरीत्येति। मतद्वयस्य तात्पर्यभेदे विद्यमानेऽपि योजनाप्रकारोऽविशिष्ट एवेति ज्ञापयितुमुक्तरीत्येत्युक्तम्। नन्वस्त्वेवं जगदुपादानत्वस्य सूत्रार्थत्वम्। तथाऽप्यारोपाधिष्ठानत्वस्य कथं तात्पर्यवसन्नार्थत्वमित्यतो लोके उपादानत्वस्य परिणामित्वेनेव तदारोपाधिष्ठानत्वेनापि दर्शनात् ब्रह्मणोऽप्युपादानत्वस्यान्यतर प्रकारश्रवणेनैव निर्वाह्यत्वात्परिणामित्वस्योक्तदोषत्वेन तेन निर्वाहप्रतिषेधे तदारोपाधिष्ठानत्वेनैव तन्निर्वाहसिद्धिरिति भवत्येवायमर्थः पर्यवसानलब्ध इत्याशयेनाह **उपादानत्वं चेति**॥ **न परिणामितयेति**। निर्विकारत्वादिश्रुतिविरोधादिति भावः। **उक्तदोष इति** निर्विकारत्वबोधकश्रुत्यादिविरोधरूप इत्यर्थः।

**प० —** नन्वयमर्थः सूत्राक्षरैर्न लभ्यते। नहि प्रकृतिपदमधिष्ठानार्थमित्यत आह **एतदुक्तमिति**।

**सु० — दूषयितुमुपक्रमते** कथ्यत इति। **यद् ब्रह्म विवर्तवादिना कथ्यते, तस्य दूषणं कथ्यत, इत्यावृत्त्या योजनीयम्। तच्च नेति नञनुवृत्तिर्वा कर्तव्या। कुतो नेत्यतो विकल्पेन पृच्छति** सेति।

अनु० — सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा॥

**विश्वस्य ब्रह्मविवर्तत्वे निराकर्तव्ये मन्ददृष्ट्याश्रयप्रश्नोऽनुपपन्न इत्यत उक्तं** सेति। **एकस्य तत्त्वाप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासलक्षणविवर्ततया, तदुपादानतया, चोक्तेत्यर्थः।**

**मन्ददृष्टावाश्रयानिरूपणादिना निराकृतायां सर्वमिदं निराकृतं भवतीति भावः । तस्यैव, यदवष्टम्भो विश्वो विवर्त, इत्यर्थः । ततोन्यगा जीवगतेत्यर्थः । किंशब्दस्योभयतः संबन्धः ।**

शे० — एवं योजनायां कथयत इत्यस्यावृत्तिराश्रयणीया भवतीत्यरुच्या पक्षान्तरमाह **तच्चेति** । यच्चेति श्रवणात्तच्चेत्यस्य लाभेऽपि नञोऽश्रवणात्कथं तच्च नेति योजनेत्यत उक्तं **नञनुवृत्तिरिति** । 'सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते' इत्यत्रत्यस्य नञोऽनुवृत्तिरित्यर्थः । सेत्यस्य मन्ददृष्ट्याश्रयप्रश्नानुपपत्तिपरिहारकत्वं दर्शयितुं विवरणोक्तविवर्तलक्षणसूचनपूर्वकं प्रकृतोपयुक्तमर्थमाह **एकस्येत्यादि** । यथैकस्यैव शुक्तिकादेरप्रच्युतशुक्तित्वादितत्त्वस्य शुक्तित्वादिविपरीतसत्यानेकरजतरङ्गादिरूपावभासो **विवर्त**स्तथाऽप्रच्युतज्ञानानन्दादितत्त्वस्यैव ब्रह्मणः पूर्वरूपविपरीतासत्यानेकतेजोऽबन्नादिरूपावभासो विवर्त इत्यर्थः । परिणामस्त्वेकस्य पूर्वरूपपरित्यागेन सत्यरूपान्तरापत्तिरूप इति तत्रैवोक्तम् । अत्र पूर्वस्वभावे स्थिते कथं तद्विपरीतरूपप्रतिभास इत्यत उक्तमसत्येति । मन्ददृष्टेत्यस्य द्वितीयव्याख्यानमनुसृत्योक्तं विवर्ततयेति । आद्यं व्याख्यानमनुसृत्योक्तं तदुपादानतया चोक्तेति । तावताऽपि कथमसङ्गतिशङ्कापरिहार इत्यत आह **मन्ददृष्टाविति ॥ सर्वमिदमिति** । मन्ददृष्टेरेव विवर्तत्वात्तन्निराकरणमेव विवर्तनिराकरणमिति निराकरणीयस्यैव निराकरणान्नासङ्गतिः । तथा विवर्तस्य मन्ददृष्ट्युपादानकत्वात्तन्निराकरणे तदुपादेयविवर्तस्यापि निराकृतप्रायत्वेन विवर्तनिराकरणौपयिकतया मन्ददृष्टिनिराकरणस्य सङ्गतत्वान्नासङ्गतिरिति भावः । भाष्ये तस्यैवेति तच्छब्देन पराभ्रष्टव्यं दर्शयति **यदवष्टम्भ इति** । यदधिष्ठानक इत्यर्थः । जडस्यापि ब्रह्मान्यत्वात्तद्गतत्वं विकल्प्यत इति भ्रान्तिनिरासायाह **जीवेति ॥ उभयत्रेति** । अन्यथा विकल्परूपत्वं न ज्ञायेतेति भावः ।

स० — **तच्च नेति नञनुवृत्तिर्वा कर्तव्येति** । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्यस्मात् नञनुवृत्तिः कर्तव्येत्यर्थः । **एकस्य तत्त्वाप्रच्युतस्येति** । यथा एकस्य शुक्तिकाशकलादेः शुक्तित्वादिनाऽप्रच्युतस्य पूर्वविपरीतानि यथास्थितरूपापेक्षया विपरीतानि असत्यानि यानि रूपाणि रजतादीनि तेषामवभासो विवर्तपदवाच्यः परिणामतया विवक्षितः तथा विवर्तवादिनां ब्रह्मपरिणामतया विश्वावभासः न तु क्षीरादिवत्तत्त्वप्रच्युत्या विकारविशेष इति दर्शयितुमिदमित्युक्तमिति ज्ञातव्यम् । **यदवष्टंभः** यदधिष्ठानकः ।

प० — **तच्च नेति नञोऽनुवृत्तिर्वेति** । यच्चेति श्रवणात्तच्चेति लभ्यते । 'न च प्रकृतिशब्देने'त्यतो नञनुवृत्तिर्वेत्यर्थः । अनुवृत्तिज्ञापकश्च **यच्चेति** चशब्द एवेति भावः । मन्ददृष्टिपदस्य भ्रमतदुपादानभूताज्ञानरूपार्थद्वयस्योक्तत्वात् तदनुरोधेन सेत्यस्याप्यर्थद्वयमाह **एकस्येति ॥ असत्यानेकरूपेति** ।

असत्यानेकपदार्थात्मनेत्यर्थः ॥ **तदुपादानतयेति** । असत्यानेकपदार्थतदवभासयोरुपादानतयेत्यर्थः ॥ **यदवष्टंभ इति** । यदधिष्ठानक इत्यर्थः ॥

**या० — नञनुवृत्तिर्वेति** । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्यत्रत्यस्य 'सच्च त्यच्चा-भवदिति नास्य विश्वत्वमुच्यते' इत्यत्रत्यस्य वा नञोऽनुवृत्तिरित्यर्थः । परिणामव्यावृत्तं विवर्तस्वरूपं दर्शयति **एकस्येति** । एकस्यैव ब्रह्मणो यत्तत्त्वं ज्ञानानन्दादिरूपं तेनाप्रच्युतस्य पूर्वविपरीतानि यथा-स्थितरूपापेक्षया विपरीतान्यसत्यानि यान्यनेकानि रूपाणि तेजोऽवन्नादीनि तेषामवभासो विवर्तः । यथैकस्यैव शुक्तिकादेः शुक्तित्वादिनाऽप्रच्युतस्य पूर्वविपरीतान्यसत्यानि यान्यनेकानि रजतरङ्गादीनि तेषामवभासः । परिणामस्त्वेकस्य पूर्वरूपपरित्यागेन सत्यरूपान्तरापत्तिरूपः । अतो न विवर्ताङ्गीकारे निर्विकारत्वश्रुतिविरोध इति भावः । **यदवष्टम्भो** यदधिष्ठानकः ।

**श्री० — नञनुवृत्तिरिति** । 'नास्य विश्वत्वमुच्यते' इत्यत्रस्थितस्य नञ इत्यर्थः । तथाच 'इति यत्कथ्यते तच्च ने'ति योजना द्रष्टव्या । **विवर्ततया** भ्रान्तिरूपतयेत्यर्थः । मन्ददृष्टिशब्देन भ्रान्तेरुक्त-त्वाद्भ्रान्तिरित्यर्थः ॥ **तदुपादानतयेति** । असत्यानेकरूपविश्वोपादनतया चोक्ता या मन्ददृष्टिरविद्या सेत्यर्थः । उभयतः किं ब्रह्मणः किं वाऽन्यगेत्युभयत्रेत्यर्थः ।

**च० — नञनुवृत्तिर्वेति** । 'सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते' इत्यत्रत्यस्य नञोनुवृत्ति-र्वेत्यर्थः । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्यत्रत्यस्य वा नञोनुवृत्तिरित्यर्थ इत्यप्यर्थोपयन्ति । **यदवष्टम्भो** यदधिष्ठानकः ।

**सु० —** मायावादिनो हि केचित् ब्रह्मैव स्वाविद्यया जगदाकारेण विवर्तते स्वप्नादिव-दिति मन्यन्ते । बिम्बस्थानीयं ब्रह्म मायाशक्तिमत् कारणं, जीवाश्च प्रत्येकमविद्याऽनुबद्धाः, इत्य-परे । मायाऽविद्याप्रतिबिंबितं ब्रह्म जगत्कारणम्, विशुद्धं च ब्रह्मामृतत्वालंबनं जीवाश्चाविद्या-ऽनुबद्धा इत्यन्ये । जीवा एव स्वाविद्यया प्रत्येकं प्रपञ्चाकारेण ब्रह्म विभ्राम्यन्ति, सादृश्याच्च प्रपञ्चैकतावभासः अनेकावगतद्वितीयचन्द्रवत्, स्वरूपापेक्षया च ब्रह्म जगत्कारणमित्येके ।

तत्रावान्तरभेदमविवक्षित्वा द्वेधैव विकल्पितम् । इह जीवगेत्यनुक्त्वा ततोऽन्यगेति वदता स जीवः किं ब्रह्मणोऽन्यो(ऽनन्यो वा) न वा इत्यपि विकल्पः सूचितः । तत्र द्वितीयः प्रथमे प्रविशतीति तं दूषयति ब्रह्मणश्चेदिति ।

अनु० — ब्रह्मणश्चेत्क्व सार्वज्ञम्

यदि ब्रह्मणो वि(श्व)भ्रमस्तदा भ्रमस्य विशेषाज्ञानपूर्वकत्वात्तदपि ब्रह्मणोऽङ्गीकरणीयम् ।

तथा च तस्य सार्वज्ञ्यं न स्यात् । यदि च न ब्रह्मणि सार्वज्ञ्यं, तर्हि क्व तत्स्यात् । न ताव-ज्जीवे, अनुभवविरोधात् । नापि जडे, ज्ञानमात्रासंभवात् । तथा च 'यः सर्वज्ञः' इत्यादिश्रुति-वैयर्थ्यं स्यात् । ननु सार्वज्ञ्यमपि ब्रह्मणो भ्रान्त्यैवेति चेन्न । यादृशतादृशस्यापि विशेषाज्ञान-विरोधित्वात् । अन्यथा शुक्तिज्ञानवतोऽपि तदज्ञानं न विरुद्धयेतेति भ्रमानुच्छेदप्रसङ्गः । उप-लक्षणं चैतत् । ब्रह्मणो विशेषाभावात्तदनवभासनिमित्तो भ्रमो नोपपद्यते । स्वरूपं तु स्व-प्रकाशतया सिद्धम् । असिद्धत्वे वा (च) सुतरां विभ्रमानुपपत्तिः । अधिष्ठानानुपलम्भादि-त्यपि द्रष्टव्यम् ।

द्वितीयस्याद्यं दूषयति अन्यगा चेदिति ।

अन्यगा नेस्वतोऽन्यता ॥

यदि ब्रह्मव्यतिरिक्तजीवाश्रया विश्वभ्रान्तिरङ्गीक्रियते तदा भ्रान्त्याश्रयस्य भ्रान्ति-कल्पितत्वायोगात् जीवब्रह्मणोरन्यता स्वाभाविकीत्यापन्नम् । ततश्चापसिद्धान्त इति ।

शे० — ननु वक्ष्यमाणरीत्या मायावादिनामवान्तरानेकभेदभिन्नत्वात्तदुपवर्णितस्य ब्रह्मणो जग-दुपादानत्वस्य निराकरणार्थं प्रवृत्तेन भाष्यकृता तैरुपवर्णितानामुपादानत्वे विशेषाणामप्यवश्यं निराकरणी-यतया ब्रह्मैव जगदाकारेण विवर्तते स्वप्नादिवदित्याद्यमतानुसारेण मन्ददृष्टिर्ब्रह्मण इति विकल्पवज्जीवा एव स्वाविद्यया प्रत्येकं प्रपञ्चाकारेण ब्रह्म विभ्राम्यन्तीति अन्त्यपक्षानुसारेण जीवगा वेति विकल्पवच्च बिम्ब-स्थानीयं ब्रह्म मायाशक्तिमत्, कारणं जीवाश्च प्रत्येकमविद्यानुबद्धाः, मायाऽविद्याप्रतिबिंबितं ब्रह्म जगत्का-रणं जीवाश्चाविद्यानुबद्धा इति द्वितीयतृतीयमतानुसारेण माया बिम्बस्थानीयब्रह्मगताऽविद्या च जीवगेति वा जीवस्यैव मायाऽविद्याश्रयत्वं ब्रह्मणस्तु तत्प्रतिबिंबितत्वमिति वेत्यपि विकल्पनीयत्वान्न 'मा मन्ददृष्टि-स्तस्यैव ब्रह्मणः किं ततोऽन्यगा' इति द्वेधैव विकल्पकरणमुचितमित्याशङ्क्य परिहरति **मायावादिनो हीति** । **केचिदे**कजीववादिनः । मायाशक्तिमन्मायासहकृतं मायोपसर्जनकमिति यावत् । प्रतिबिंबितं ब्रह्म कारणमिति वक्ष्यमाणमताद्वैलक्षण्यज्ञापनाय बिम्बस्थानीयमित्युक्तम् । **मायाऽविद्ये**त्यत्र मायारूपाविद्या-प्रतिबिंबितमित्यर्थः । पूर्वमते तु तयोर्भेद एवेति । **अविद्याऽनुबद्धा** मायारूपाविद्याऽनुबद्धाः । ननु यदि जीवाः स्वस्वाविद्यया प्रत्येकं प्रपञ्चाकारेण ब्रह्म विभ्राम्यन्ति कथं तर्हि देवदत्तेन ज्ञात एव घटो यज्ञदत्तेन ज्ञात इत्यादिप्रपञ्चैकत्वावभासः स्वस्वाविद्यानिमित्तकत्वेन प्रतिजीवं प्रपञ्चस्य भिन्नत्वादित्यत आह **सादृश्याच्चेति** । एतदेव दृष्टान्तप्रदर्शनेन स्पष्टयति **अनेकेति** । नन्वेवं जीवानां जगत्कारणत्वे

जगत्कारणत्वं ब्रह्मलक्षणमिति सिद्धान्तभङ्गः स्यादित्यत आह **स्वरूपापेक्षयेति** । विशिष्टचैतन्यरूपजीवस्य कल्पकत्वरूपकारणत्वे विशेष्यचैतन्यस्यापि तदवश्यंभावादिति भावः ॥ **अवान्तरभेदमविवक्षित्वेति** । मायाऽविद्यारूपेणाविद्यायामवान्तरभेदस्याविवक्षितत्वात्तादर्थ्येन ब्रह्मण्यपि बिम्बप्रतिबिम्बत्वादिरूपविशेषस्याविवक्षितत्वात्पक्षचतुष्टयेऽप्यविद्याया जीवब्रह्मगतत्वानपायात् । तन्निराकरणेनाविद्यायां निराकृतायां कारणत्वेऽवान्तरविशेषाणामपि निराकृतप्रायत्वाच्च नावान्तरभेदविवक्षेति भावः। ननु, न जीवो ब्रह्मणोऽन्यो न वेति विकल्पोऽभिप्रेतः, उत्तरत्र दूषणादर्शनादित्यत आह **तत्रेति** । तथा च तद्दूषणेनेव दूषितत्वान्न पृथग्दूषणापेक्षेति भावः ।

ननु ब्रह्मणो भ्रान्त्यङ्गीकारेऽपि नासर्वज्ञत्वमापद्यते भ्रान्तेरज्ञानत्वाभावात् । अस्तु वा कथञ्चिद् ब्रह्मणोऽसर्वज्ञत्वं तथाऽपि न सार्वज्ञ्यस्य निराश्रयत्वाक्षेपो युज्यते । ब्रह्मणः सार्वज्ञ्याभावेऽपि जीवादौ तत्संभवात्कुत्रापि सार्वज्ञं नास्तीत्यङ्गीकारेऽपि परस्यानिष्टाभावाच्चेत्यतस्तदुपपादयति **यदीति** ॥ **भ्रमस्येति** । शुक्त्यादौ रजतादिभ्रमस्य शुक्तित्वादिरूपाधिष्ठानगतविशेषाज्ञानपूर्वकत्वदर्शनेन भ्रमस्य स्वसमानाश्रयाज्ञानकार्यत्वनिश्चयादिति भावः ॥ **तदपीति** । विशेषाज्ञानमपीत्यर्थः । अन्यथाऽकारणकार्योत्पत्तिप्रसक्तेरिति भावः । अस्तु तर्हि ब्रह्मणोऽज्ञानमपात्यतो यो यद्विषयकाज्ञानवान्नासौ तज्ज्ञानवानिति व्याप्त्याऽधिष्ठानविशेषाज्ञानवत्त्वाद् ब्रह्मणस्तज्ज्ञत्वाभावान्न सर्वज्ञत्वं स्यादित्याशयेनाह **तथा चेति** ।

ननु शुद्धस्य ब्रह्मणो नासर्वज्ञत्वमनिष्टं सविशेषस्यैव ब्रह्मणः सर्वज्ञत्वाङ्गीकारादिति चेत् नानङ्गीकृतत्वमेवानिष्टत्वं किन्तु प्रमाणविरुद्धत्वादिकं, शुद्धस्यासर्वज्ञत्वं च 'तुरीयं तत्सर्वदृक् सदे'ति शुद्धेऽपि सर्वज्ञत्वश्रवणाच्छ्रुतिविरुद्धमेवेति कथं नानिष्टमिति सत्येव दोषे दोषान्तरमाह **यदि चेति** ॥ **अनुभवेति** । नाहं सर्वज्ञोऽहमज्ञो मामन्यं च न जानामीत्याद्यनुभवेनासर्वज्ञत्वस्यैव सिद्धेरिति भावः ॥ **ज्ञानमात्रेति** । तोयाभ्यवहारासमर्थस्य मुमूर्षोः शष्कुलीभक्षणस्येव ज्ञानमात्रासम्भववतो जडस्य सर्वज्ञताया असंभावितत्वादित्यर्थः । ननु च सार्वज्ञ्यस्य सर्वत्राभावोऽप्यस्तु किं बाधकमित्यत आह **तथा चेति** । **वैयर्थ्यमिति** । न च सविशेषस्यैव ब्रह्मणो 'यः सर्वज्ञः' इत्यादिश्रुतिप्रतिपाद्यत्वान्न तद्वैयर्थ्यमिति वाच्यम् तदतिरिक्तस्य ब्रह्मणोऽलीकत्वादित्यत्र तात्पर्यात् । ननु ब्रह्मणो निर्विशेषत्वेन विशेषाणामवास्तवतया तज्ज्ञानस्य प्रमात्वायोगात्तस्य विश्वभ्रमहेतुविशेषाज्ञानाविरोधाद्युक्तः सविशेषस्यैव विश्वभ्रम इत्याशङ्कते **नन्विति** । शुक्तौ रजतत्वभ्रमनिवर्तकस्य रङ्गत्वभ्रमस्य शुक्तित्वाज्ञानानिवर्तकत्वेत दुपादानकरजतत्वभ्रमानिवर्तकत्वप्रसङ्गेन प्रमाभ्रमसाधारणविशेषज्ञानमात्रस्यैवाधिष्ठानविशेषाज्ञानविरोधित्वनिश्चयान्न भ्रमरूपविशेषज्ञानवतोऽपि ब्रह्मणो विश्वभ्रमहेतुविशेषाज्ञानं सम्भवतीति कथं विश्वभ्रमः स्यादित्याह **नेति** । यादृशतादृशस्यापीत्यतःपरं विशेषज्ञानस्येति शेषः । प्रमारूपस्यैव विशेषज्ञानस्याधिष्ठानविशेषा-

ज्ञानविरोधित्वेऽनिष्टमाह **अन्यथेति** । रङ्गत्वेन शुक्तिज्ञानवतोऽपीत्यर्थः । **तदज्ञानं** रजतत्वभ्रमहेतुशुक्तित्वाज्ञानम् । **भ्रमेति** । रङ्गत्वभ्रमाद्रजतत्वभ्रमनिवृत्तिर्न स्यादित्यर्थः । विश्वभ्रमः किं विशेषानवभासनिबन्धनोऽभिप्रेतः किंवा स्वरूपानवभासनिबन्धनः इति विकल्पं मनसि निधायाद्यं दूषयति **ब्रह्मण इति** । विशेषाभावान्निर्विशेषत्वेनाङ्गीकृतत्वादित्यर्थः । अधिष्ठानगतविशेषाज्ञानस्यैव भ्रमहेतुत्वाद्ब्रह्मण एव च विश्वभ्रमाधिष्ठानत्वात्तन्निष्ठविशेषानवगम एव भ्रमहेतुर्वाच्यः । न चायमत्रास्तीति भावः । न च न सद्विशेषाज्ञानं तत्र तन्त्रम् । गौरवात् । किन्तु विशेषाज्ञानमेव । लाघवात् । तच्च निर्विशेषत्वादात्मन्यस्त्येवेति युक्तो विशेषानवभासनिमित्त एव भ्रम इति वाच्यम् । असद्विशेषाज्ञानस्य बाधकालेऽपि सत्त्वेन भ्रमप्रसक्त्या सद्विशेषाज्ञानस्यैव भ्रमहेतुत्वावधारणादिति भावः । स्वरूपाज्ञाननिमित्तको भ्रम इति द्वितीयं पक्षं दूषयति **स्वरूपं त्विति** । तथा च न स्वरूपानवभास इति भावः । ननु स्वप्रकाशत्वेऽपि न तत्स्वरूपस्य सिद्धत्वम् । तद्धि स्वविषयप्रकाशत्वं स्वप्रकाशत्वमिति पक्षे स्यात् । न चैतत्परस्य संमतम् । कर्तृकर्मविरोधप्रसक्त्या परेण तदनङ्गीकारात् किन्त्ववेद्यत्वमेव । तथा च स्वप्रकाशत्वेऽपि स्वरूपस्यानवभाससंभवाद्युक्त एव स्वरूपानवभासनिबन्धनो भ्रम इत्यत आह **असिद्धत्वे वेति** । त्वन्मतेऽपि भ्रान्तेः संस्कारादित्रयजन्यत्वादधिष्ठानस्यैव सर्वथाऽनुपलम्भे सामान्याकाराज्ञानात्संस्कारानुद्बोधेन भ्रान्तिकारणविरहान्न भ्रमावसर इति भावः ।

---

नन्वन्यगतत्वेऽपि कुतोऽन्यतायाः स्वाभाविकत्वम् । न चान्यस्यासत्त्वादन्यत्वस्याप्यसत्त्वे ब्रह्मगेत्यर्थपर्यवसानान्न प्रथमपक्षाद्भेदः सिध्येदिति वाच्यम् । अन्यस्य कल्पितत्वेन तद्भेदस्यापि कल्पितत्वे बाधकाभावादित्यतः पूर्ववाक्यान्मन्ददृष्टिरित्यस्य आवृत्तिम्, अन्यशब्दस्य ब्रह्मव्यतिरिक्तजीवपरत्वं चाश्रित्य निरसनीयपक्षं मूलारूढं कुर्वन्व्याचष्टे **यदीति** ॥ **भ्रान्त्याश्रयस्येति** । भ्रान्त्याश्रयस्यैव भ्रान्तिकल्पितत्वे भ्रान्तितदाश्रययोः परस्परापेक्षत्वादन्योन्याश्रयापत्तेरिति भावः । इष्टापत्तिं परिहरति **ततश्चेति** ।

**स० — सादृश्याच्चेति** ॥ त्वया दृष्टो मया दृष्टश्च घट एक एवेत्यादिरूप इत्यर्थः । नन्वेवमविद्यावच्छिन्नचैतन्यरूपस्य जीवस्य प्रपञ्चकल्पकत्वे ब्रह्मणः प्रपञ्चकारणता श्रुत्यादिसिद्धा कथमित्यत आह **स्वरूपापेक्षयेति** ॥ अवच्छिन्नस्य कल्पकत्वरूपे कारणत्वे शुद्धस्वरूपस्यापि तद्व्यपदेशो युक्तः, कार्यगतधर्माणां कारणेऽपि व्यपदेशस्य बहुलमुपलम्भादिति भावः । **द्वैधेवेति** । 'तस्यैवे'त्यनेनाद्यपक्षस्येतरेषां च 'ततोन्यगा' इत्यनेन संगृहीतत्वादिति भावः । ननु माऽस्तु विशेषाभावात्तदनवभासनिमित्तो भ्रमः तथापि स्वरूपानवभासनिमित्तो भविष्यतीत्यत आह **स्वरूपं त्विति** ॥

**प० — विवर्तत इति** । स्वभ्रान्तिविषयो भवतीत्यर्थः । **इत्यपर इति** । अज्ञानं मायाऽविद्याभेदेन द्विविधमिति मन्वानाः । परव्यामोहनकरी माया । स्वाश्रयव्यामोहनकरी अविद्या ।

**मायाऽविद्येति** । मायारूपाज्ञाने प्रतिबिंबितमित्यर्थः । प्राचीनस्तु न प्रतिबिंबपक्षः । **विशुद्धं** अप्रतिबिंबितं । दृष्टिसृष्टिमतमाह **जीवा एवेति** ॥ **प्रपंचैकतेति** । प्राचीन एव घटः, त्वया दृष्ट एव मया दृष्टः, इत्याद्येकत्वाभास इत्यर्थः ॥ **स्वरूपेति** । सर्वजीवानुगतं यत् ब्रह्मचैतन्यं स्वरूपं तदपेक्षयेत्यर्थः । **तत्रावान्तरभेदमिति** । ब्रह्मण इत्यत्र किं विवर्ताधिष्ठानभूतचिद्रूपशुद्धब्रह्मणः, अथ सार्वज्ञादिविशिष्टबिंबभूतब्रह्मणः । तथा मंददृष्टिरित्यत्र किं माया वा अविद्या वा इत्याद्यवांतरभेदमित्यर्थः । **द्वितीयः प्रथमे प्रविशतीति** । इतिशब्दो हेतौ । सेत्यस्य भ्रमतदुपादानरूपार्थद्वयस्योक्तत्वात्तथैव व्याचष्टे **यदि ब्रह्मणो विश्वभ्रम इत्यादिना** ॥ **विशेषाज्ञानेति** । विशेषविषयकाज्ञानेत्यर्थः । ननु माऽस्तु ब्रह्मणो विशेषाभावात्तदनवभासनिमित्तको भ्रमः । तथापि स्वस्वरूपानवभासनिमित्तोऽस्तु भ्रम इत्यत आह ॥ **स्वरूपं त्विति** ॥ **द्वितीयस्याद्यमिति** । द्वितीयस्तु प्रथमपक्षदोषेणैव निरस्त इति भावः । भ्रांतिरूपैकार्थपरत्वं 'सा' इत्यस्योपेत्य तावद्व्याचष्टे **यदि ब्रह्मव्यतिरिक्तेति** ।

**या० — ब्रह्मैव स्वाविद्ययेति** । एकजीववादिनां पक्षोऽयम् । अत्र च न बद्धमुक्तव्यवस्थेति ज्ञातव्यम् । **मायाशक्तिमत्** मायासहकृतं मायोपसर्जनकमिति यावत् । बिम्बस्थानीयमिति प्रतिबिम्बितं ब्रह्मकारणमिति वक्ष्यमाणमताद्वैलक्षण्यप्रदर्शनायोक्तमिति ज्ञातव्यम् ॥ **मायाऽविद्येति** । मायारूपाऽविद्येत्यर्थः । पूर्वमते तु मायाऽविद्ययोर्भेद एवेति ज्ञातव्यम् । प्रतिजीवं प्रपञ्चभेदे कथं तत्रैक्यप्रतिभास इत्यत आह **सादृश्याच्चेति** । त्वया दृष्टो मया दृष्टश्च घट एक एवेत्यादिरूप इत्यर्थः । नन्वेवमविद्याऽवच्छिन्नचैतन्यरूपाणां जीवानां प्रपञ्चकल्पकत्वे ब्रह्मणः प्रपञ्चकारणता श्रुत्यादिसिद्धा कथमित्यत आह **स्वरूपापेक्षयेति** । अवच्छिन्नस्य कल्पकस्वरूपे कारणत्वे, शुद्धस्वरूपस्यापि तद्व्यपदेशो युक्तः । कार्यगतधर्माणां कारणेऽपि व्यपदेशस्य बहुलमुपलम्भादिति भावः । **द्वेधैवेति** । 'तस्यैवे'त्यनेनाद्यपक्षस्येतरेषां च 'ततोऽन्यगे'त्यनेन संगृहीतत्वादिति भावः । ननु माऽस्तु विशेषाभावात्तदनवभासनिमित्तो भ्रमस्तथाऽपि स्वरूपाज्ञाननिमित्तो भविष्यतीत्यत आह **स्वरूपं त्विति** ।

**श्री०**— जीवा एव ब्रह्म, स्वाविद्यया प्रत्येकं प्रपञ्चाकारेण विभ्राम्यन्तीत्यन्वयः ॥ **तत्रेति** । जीवो ब्रह्मणोऽन्यस्तत्राज्ञानमिति द्वितीयः पक्षः । ब्रह्मण एवाज्ञानमिति प्रथमे प्रविशतीत्यर्थः ॥ **विशेषेति**। अधिष्ठानगतासाधारणधर्मेत्यर्थः ॥ **ज्ञानमात्रेति** । ततश्च सर्वविषयकज्ञानं दूरोत्सारितमित्यर्थः ॥ **वैयर्थ्यमिति** । सार्वज्ञोपेतवस्तुन एवाभावेन निर्विषयत्वादित्यर्थः ॥ **भ्रान्त्यैवेति** । तथाच भ्रान्त्यैव सर्वं जानातीत्यर्थः । यादृशतादृशस्य सार्वज्ञ्यस्य । तथाच विशेषदर्शनं प्राप्तमिति हृदयम् ॥ **विरोधित्वा-**

**दिति ॥** तथा च विशेषादर्शननिमित्ता भ्रान्तिर्न संभवतीति भ्रान्त्या सर्वं जानातीत्ययुक्तमिति ॥ **अन्यथेति** । यादृशतादृशविशेषज्ञानस्यापि विशेषादर्शनाविरोधित्व इत्यर्थः ।

च० — **विवर्तते** आरोपविषयो भवति । **ब्रह्मैव स्वाविद्ययेति** एकजीववादिनामयं पन्थाः । एतत्कल्पे च न बद्धमुक्तव्यवस्थेति ध्येयम् । **मायाशक्तिमत्** । उपसर्जनीभूतमायाऽऽख्य-सहकारिविशेषितम् । बिम्बस्थानीयमिति विशेषणोपादानं त्वभिधास्यमानमतान्तरवैलक्षण्यप्रदिदर्शयिषये-त्यवसेयम् । **मायाऽविद्याप्रतिबिंबितमिति** । मायारूपाविद्याप्रतिबिंबितमित्यर्थः । पूर्वमते तु तयोर्भेद एवेति ज्ञेयम् । **अविद्यानुबद्धाः** मायारूपाविद्यानुबद्धाः । ननु जीवाः प्रत्येकं स्वस्वाविद्यया ब्रह्म-प्रपञ्चाकारेण विभ्राम्यन्तीत्युपगतौ जीवसमसंख्यप्रपञ्चापत्त्या निखिलजीवाधिगतप्रपञ्चव्यक्तेरेकताऽध्य-वसायो निर्निबन्धनः स्यादित्यत आह **सादृश्यादिति** । प्रपञ्चकतेत्यत्रौपमेयवाचकपदप्रकृतिकसप्तम्याः 'सुपो धात्वि'ति लुप्ततया चन्द्रवदिति वतिरपि सप्तम्यन्तादेव 'तत्रे'त्यनुशासनात् । ननूक्तदिशा जीवानां जगद्धेतुत्वोपगमे जगत्कारणत्वं ब्रह्मलक्षणमिति मतप्रच्युतिः प्रसज्येतेत्यत आह **स्वरूपापेक्षयेति** । उप-हितस्य हेतुत्वेऽनुपहितस्यापि तदवश्यंभावात् कार्यगतधर्माणां कारणेऽपि व्यपदेशोपलम्भादिति भावः । **अवान्तरभेदमविवक्षित्वेति** । मायात्वाविद्यात्वावच्छिन्नप्रतियोगिताकभेदं बिम्बत्वप्रतिबिम्बत्वावच्छिन्न-प्रतियोगिताकभेदं चाविवक्षित्वेत्यर्थः । कल्पचतुष्टय्यामविद्याया जीवब्रह्माश्रितत्वानपायेन तत्प्रतिविधा-नेनाविद्यायां प्रतिविहितायां कारणत्वेऽवान्तरवैचित्र्यस्याप्यपहस्तितदैश्यत्वादिति भावः । **द्वेधैवेति** । 'तस्यैवे'त्य'न्यगे'ति च मौलप्रतीकखण्डाभ्यामाद्यस्येतरेषां च संगृहीतत्वादित्याशयः । ब्रह्मणि विशेष-वैधुर्येण तदनवभासनिमित्ततां भ्रमस्यापास्य स्वरूपानवभासनिमित्ततामपि तस्यापहस्तयते **स्वरूपं त्विति** ।

सु० — **नन्वस्तु जीवब्रह्मभेदो वास्तवः । अनात्मप्रपञ्चोऽस्तु भ्रान्तिकल्पितो ब्रह्म-णीत्यत आह नेति ।**

अनु० — नादेहयोगिनो दृष्टिरिति तत्कारणं स्वतः ॥

**यद्यपि नैवं मायावादिनो मन्यन्ते । तथाऽपि सूत्रार्थनिराकरणाय प्रवृत्तस्य तत्रैवानुप-पत्तिव्युत्पादनं श्लाघ्यमित्यारम्भः । न केवलं ब्रह्मव्यतिरिक्तानां जीवानामकल्पितत्वम् । किन्तु देहयोगरहितस्येन्द्रियाभावात्पदार्थदर्शनं न संभवतीत्यतो हेतोः आरोपकारणमिन्द्रियं तदा-श्रयो देहश्च कल्पनां विनैवास्तीत्यङ्गीकरणीयम् । न हि सुखादिवद्रजतादिवद्वाऽस्य प्रपञ्चस्य साक्षिमात्रसिद्धत्वं परो मन्यते देहेन्द्रियाणामप्युत्पत्तिमत्त्वात् । तत्कारणं च स्वत इत्यङ्गीकरणी-यम् ।**

शे०— ननु 'नादेहयोगिनः' इत्यादिना देहेन्द्रियादीनां वास्तवत्ववर्णनमनर्थकम् । 'स्वतोऽन्यते'त्यनेनैवापसिद्धान्तस्य वर्णितत्वादित्याशङ्क्यान्यगा चेदित्यादिग्रन्थस्य नापसिद्धान्तमात्रे तात्पर्यं येन स्वतोऽन्यतेत्यनेनैव तत्सिद्धेरुत्तरवैयर्थ्यं स्यात् । किन्तु परमते प्रकृतिश्चेत्यादिसूत्राणां निर्विषयत्वेनानारम्भणीयत्वेऽपि । ततश्च स्वतोऽन्यतेत्यनेनापसिद्धान्तवर्णनेऽपि अधिकरणानारम्भणीयत्वासिद्धेस्तदर्थमुत्तरो ग्रन्थ इत्यभिप्रेत्योत्तरग्रन्थमवतारयति **नन्वस्त्विति** । देहेन्द्रियादिरित्यर्थः । ततश्चानात्मप्रपञ्चस्यैव भ्रान्तिकल्पितत्वप्रतिपादनार्थमेवैतधिकरणारम्भोऽस्त्विति भावः ॥ **एवमिति** । जीवब्रह्मभेदस्य वास्तवत्वमङ्गीकृत्यानात्मप्रपञ्चस्य कल्पितत्वमस्त्वित्येवमित्यर्थः ॥ **तत्रैवेति** । प्रकृतिश्चेत्यादिसूत्रेष्वेव वक्ष्यमाणरीत्या निर्विषयत्वेनानारम्भणीयत्वानुपपत्तिव्युत्पादनार्थमित्यर्थः ॥ **देहयोगरहितस्येति** । प्रलये सत्यप्यज्ञानादौ देहादेरभावेन प्रमाया इव करणजन्यभ्रमस्याप्यदर्शनादिति भावः ॥ **इत्यतो हेतोरिति** । अनेन मूले **इति**शब्दो हेत्वर्थ इत्युक्तं भवति ॥ **कल्पनां विनैवेति** । भ्रांतिकल्पितस्य देहादेर्भ्रांतिहेतुत्वेऽन्योन्याश्रयप्रसङ्गादिति भावः । न च रूप्याद्यध्यासे देहादेर्व्यावहारिकं कारणादिसमं वा सत्त्वं तन्त्रमिति जगदध्यासेऽपि तथैव स्यादिति न देहादेरकल्पितत्वसिद्धिरिति वाच्यम् । व्यावहारिकत्वस्य अद्याप्यसिद्धत्वेनान्योन्याश्रयप्रसङ्गात् । रूप्याद्यध्यासे कारणादेरप्यधिष्ठानसमसत्ताकत्वेन जगदारोपेऽपि कारणादेः पारमार्थिकत्वाच्चेत्यन्यत्र विस्तरः । नन्वारोपस्याविद्यावृत्तिप्रतिबिंबितचैतन्यलक्षणसाक्षिरूपतया नेन्द्रियजन्यत्वमित्यत आह **न हीति** । **अस्येति** । साधारणप्रपञ्चस्येत्यर्थः । तथा चासाधारणप्रपञ्चारोपस्य उक्तसाक्षिरूपत्वेऽपि साधारणप्रपञ्चारोपस्य अन्तःकरणवृत्तिप्रतिबिंबितचैतन्यरूपत्वात् अन्तःकरणवृत्तेश्चेन्द्रियव्यापारं विनाऽनुपपत्तेः इन्द्रियजन्यत्वमेवेति भावः ।

स०— **अनुपपत्तिव्युत्पादनमिति** । निर्विषयत्वापत्तिरूपानुपपत्तिव्युत्पादनमित्यर्थः ।

प०— **तत्रैवेति** । चैतन्यादन्यत्सर्वं चैतन्ये कल्पितं । चैतन्यमेकं सत्यमित्येवंरूपसूत्रार्थ एव भ्रांतिकल्पितं वस्तु किमस्तीति वक्ष्यमाणानुपपत्तिव्युत्पादनम् उत्तममिति 'नादेह'इत्यादिः 'कल्पितमि'त्यंत आरंभ इत्यर्थः । स्वत इत्यस्यार्थमाह **कल्पनां विनैवेति** । साक्षिवेद्यत्वात् न देहाद्यपेक्षेत्यत आह **नहि सुखादिवद्रजतादिवद्वेति** । यथा अन्तःकरणवृत्त्युपहितचैतन्यरूपेण वा शुद्धचिद्रूपेण वा साक्षिणा वेद्यं सुखदुःखादिकम्, शुक्त्याद्यवच्छिन्नचैतन्यावरकाऽविद्यावृत्त्युपहितचैतन्यरूपसाक्षिवेद्यं रजतादिकं, तथा घटादि(प्रपंच इति)कं प्रपंचं परो मन्यत इत्यर्थः । तथात्वे तद्वदेव ज्ञातैकसत्त्वापातादिति भावः ।

**या०— तत्रैवेति ।** सूत्रेष्वेव वक्ष्यमाणरीत्या निर्विषयत्वापत्तिरूपानुपपत्तिव्युत्पादनमित्यर्थः । नन्वारोपस्याविद्यावृत्तिप्रतिबिम्बितचैतन्यलक्षणसाक्षिरूपतया नेन्द्रियजन्यत्वमित्यत आह **न हि सुखादिवदिति ॥ अस्य प्रपञ्चस्येति ।** साधारणप्रपञ्चस्येत्यर्थः । तथा चासाधारणप्रपञ्चारोपस्योक्तसाक्षिरूपत्वेऽपि साधारणप्रपञ्चारोपस्यान्तःकरणवृत्तिप्रतिबिम्बितचैतन्यरूपत्वमेव । अन्तःकरणवृत्तिश्च नेन्द्रियव्यापारं विना भवतीति भावः ।

**श्री०— अनात्मप्रपञ्चः** भेदातिरिक्त इति शेषः । **तत्रैव** सूत्र एवेत्यर्थः । तथा च जीवब्रह्मभेदस्य वास्तवत्वमङ्गीकृत्य तदतिरिक्तानात्मप्रपञ्चस्यैव भ्रान्तिकल्पितत्वमेतत्सूत्रार्थ इति यः कोऽपि वा ब्रूयात्तं प्रति नायं सूत्रार्थोऽनुपपन्नत्वादिति वक्तुमयमारम्भ इत्यर्थः ॥ **कल्पनां विनैवेति ।** सत्यतयैवेत्यर्थः । नन्वनात्मप्रपञ्चस्य सर्वस्यापि साक्षिसिद्धत्वाङ्गीकारात्तत्र का देहेन्द्रियाद्यपेक्षेत्यत आह **न हीत्यादि ।**

**च०— तत्रैव** सूत्रेष्वेव । **अनुपपत्तीति ।** अभिधास्यमानदिशा निर्विषयत्वापत्तिव्युत्पादनमित्यर्थः । ननु नेन्द्रियकारणकतामारोपस्य परो मन्यते । अविद्यावृत्तिप्रतिबिंबितचैतन्यलक्षणसाक्षिरूपत्वात्तस्येत्यत आह **न हि सुखादिवदिति । अस्य प्रपञ्चस्य** घटपटादिरूपचेतनमात्रज्ञेयप्रपञ्चस्य । एवं चासाधारणपदार्थारोपस्य साक्षिरूपत्वेपि साधारणप्रपञ्चस्यान्तःकरणवृत्तिप्रतिबिंबितचैतन्यरूपत्वमेवेतीन्द्रियव्यापारमन्तरेणांतःकरणवृत्तिर्नोदेतीति भावः ।

---

**सु०— अस्तु ब्रह्मव्यतिरिक्तानां जीवानां सकारणानां तदीयदेहेन्द्रियाणां चाभ्रान्तिकल्पितत्वम् । द्रष्टृत्वेन दर्शनकरणत्वेन तदाश्रयत्वेन तत्कारणत्वेन च भ्रान्तेः पूर्वभावित्वात् । तदतिरिक्तस्तु प्रपञ्चोऽस्तु भ्रान्तिकल्पित इत्यत आह** देहिन इति ।

**अनु०—** देहिनः कारणयुता देहाश्च यदि न भ्रमात् ॥

किं भ्रान्तिकल्पितं तत्र

**कारणशब्देन ज्ञानकारणानामिन्द्रियाणां देहेन्द्रियकारणानां च ग्रहणम् । सिद्धा इति शेषः । किं आक्षेपे । तत्र तर्हि प्रपञ्चे ब्रह्मणीति वा । अनन्तजीवसकारणकदेहेन्द्रियातिरिक्तस्य प्रपञ्चस्याभावात् । विषयाणामपि देहेन्द्रियनिर्वाहार्थत्वादिति भावः । तथा च न केवलमपसिद्धान्तः, प्रकृतिश्चेत्यादिसूत्राणां निर्विषयत्वापत्तिश्च स्यादिति शेषः ।**

**शे०— द्रष्टृत्वेनेत्यादि ।** द्रष्टृत्वेन जीवानां, दर्शनकरणत्वेनेन्द्रियाणां, तदाश्रयत्वेन देहस्य, तत्कारणत्वेन देहकारणानां च भ्रान्तेः पूर्वभावित्वादिति सम्बन्धः । भ्रान्तिपूर्वभावित्वाच्चेषां न

भ्रान्तिकल्पित्वम् । अन्यथाऽन्योन्याश्रयत्वापत्तेरिति भावः । कारणयुता देहाश्चेति समभिव्याहारात् कारणशब्देन देहकारणमात्रपरामर्शभ्रान्तिं वारयति **कारणशब्देनेति** । 'यदि न भ्रमात्' इत्यत्र यदीत्युक्तत्वात्तदनुसारेण तत्रेत्यस्यार्थमाह **तत्र तर्हीति** । प्रकृतत्वात्प्रपञ्चस्य तत्परतयाऽपि तत्रेत्यस्यार्थमाह **प्रपञ्च इति** । प्रपञ्चमध्य इत्यर्थः । ब्रह्मणि कल्पित इति परोक्तदूषणार्थं ब्रह्मपरतयाऽपि तत्रेत्यस्यार्थमाह **ब्रह्मणीति** । ननु विषयप्रपञ्चस्यैव भ्रान्तिकल्पितत्वव्युत्पादनार्थमेवेदमधिकरणम् । तेषां देहेन्द्रियादिरूपभ्रमहेतुभिन्नतया भ्रान्तिकल्पितत्वे उक्तदोषाप्रसरादित्यत आह **विषयाणामपीति** । घटादिविषयाणां जलाहरणादिना तन्निर्वाहार्थत्वमवधेयम् । 'अन्यगा चेत्स्वतोऽन्यते'त्यादिग्रन्थस्य पर्यवसन्नमर्थमाह **तथा चेति** ।

**स०**—द्रष्टृत्वेन जीवानां, दर्शनकरणत्वेनेन्द्रियाणां, तदाश्रयत्वेन देहस्य, देहकारणानां च पूर्वभावित्वं ज्ञातव्यम् ।

**प०**—जीवानां सकारणकदेहेन्द्रियाणां च कुतो न भ्रांतिकल्पितत्वमित्यत आह **द्रष्टृत्वेनेति** । जीवानां द्रष्टृत्वेन, इन्द्रियाणां दर्शनकरणत्वेन, देहस्येन्द्रियाश्रयत्वेन, कारणानां च देहेंद्रियकारणत्वेनेत्यर्थः । अन्यथाऽन्योन्याश्रयादिति भावः ॥ **भ्रान्तेरिति** । जीवब्रह्मभेदहेतोर्भ्रान्तेरित्यर्थः ।

**या०**— **द्रष्टृत्वेत्यादि** । द्रष्टृत्वेन जीवानां, दर्शनकारणत्वेनेन्द्रियाणां, तदाश्रयत्वेन देहस्य, देहकारणत्वेन देहकारणानां च भ्रान्तेः पूर्वभावित्वादित्यर्थः ।

**श्री०**— **भ्रान्तेः** भ्रान्त्यपेक्षया । **प्रपञ्चे** प्रपञ्चमध्ये । नन्वेतदतिरिक्तो विषयरूपः प्रपञ्चोऽस्तीत्यत आह **विषयाणामपीति** ॥ **निर्विषयत्वेति** । मिथ्यात्वेन प्रतिपादनीयस्य वस्तुनोऽभावादिति भावः ।

**च०**— **द्रष्टृत्वेनेत्यादि** । दर्शनकर्तृत्वेन जीवानां, तत्साधनत्वेनेन्द्रियाणां, तदधिष्ठानत्वेन देहस्य, तद्धेतुत्वेन तत्साधनानां च भ्रान्त्यव्यवहितपूर्वक्षणावच्छेदेन सत्त्वस्यावश्यकत्वादित्यर्थः ।

**सु०— ननु अन्यगा चेत्स्वतोऽन्यता इत्ययुक्तम् । जीवब्रह्मभेदस्यापि भ्रान्तिसिद्धत्वात् । भ्रान्त्या ब्रह्मणो भिन्नस्य जीवस्य बाह्याध्यात्मिकार्थभ्रम इति हि मन्यत इत्यत आह** भेदोऽपीति ।

**अनु०**— भेदोऽपि भ्रमजो यदि ॥

**न केवलं प्रपञ्चः, किन्तु जीवब्रणोर्भेदोऽपि यदि भ्रमजो भ्रमसिद्धः अङ्गीक्रियते । तदा अन्योन्याश्रयता स्यादिति संबन्धः ।**

**अत्रान्योन्याश्रयताशब्देन चक्रकमुच्यते तस्यापि बहुष्वन्योन्याश्रयत्वात् । कथमन्योन्याश्रयता इत्यत उक्तम्** भ्रान्तेरिति ।

भ्रान्तेरज्ञानमूलत्वात्तस्य भेदव्यपेक्षया ॥

**भ्रान्तेर्जीवब्रह्मभेदहेतोर्भावरूपाज्ञानकारणत्वात् । तस्याज्ञानस्य च भेदसापेक्षत्वात् । अज्ञानमनादित्वात्कथं भेदव्यपेक्षया स्यादित्यत उक्तम्** नाज्ञानेति ।

नाज्ञानकल्पकं किञ्चिदन्योन्याश्रयता यतः ॥

**यतो ब्रह्मव्यतिरिक्ताज्जीवादृते नाज्ञानकल्पकं किञ्चिदस्ति ।**

**शे०**— भेदस्य भ्रान्तिकल्पितत्वस्यैव शङ्कनाद् भ्रमज इत्यसदनुवाद इत्यतः अपिशब्दार्थसमुच्चयं दर्शयन्नेव प्रकृतोपयोगितया भ्रमज इत्यस्यार्थं वदन्नेव व्यवहितत्वादन्वयं च दर्शयति **नेति । चक्रमुच्यत इति** । भ्रान्तेरज्ञानमूलत्वादित्यादिना तस्यैवोत्तरत्रोपपादनादिति भावः । ननु भ्रान्तेरज्ञानमूलत्वादित्यनेन भ्रान्तेरज्ञानसापेक्षत्वस्य 'तस्य भेदव्यपेक्षये'त्यनेन चाज्ञानस्य भेदसापेक्षत्वस्य चात्रोक्तावपि भेदस्य भ्रान्तिसापेक्षत्वानुक्तेर्न चक्रकावतारः सम्भवतीत्यत आह **भ्रान्तेर्जीवब्रह्मभेदहेतोरिति** । अज्ञानमूलत्वादित्यत्र अज्ञानपदस्य ज्ञानाभावपरत्वे तस्य वक्ष्यमाणरीत्या भेदसापेक्षत्वानुपपत्तिप्रसक्तेराह **भावरूपेति** ।

---

**सु०**— एतदुक्तं भवति । जीवब्रह्म(णोः)भेदो यया भ्रान्त्या सिद्धः, सा तावदज्ञानापेक्षा । भ्रान्तेः स्वरूपतो विषयतश्चाज्ञानकार्यत्वाङ्गीकारात् । यद्यपि भेदविषया भ्रान्तिः साक्षिचैतन्यम् । तथाऽपि तस्यासङ्गस्यारोपितार्थसंसृष्टरूपं पता) नाज्ञानेन विनोत्पद्यते । तच्चाज्ञानं भेदसापेक्षम् । अनादित्वेऽपि भ्रान्तिकल्पितत्वस्याङ्गीकृतत्वात् । अन्यथा सत्यतापातात् । भ्रान्तेः (च) जीवाश्रितत्वस्याङ्गीकृतत्वात् । भेदकल्पनया विना च जीवस्याभावात् । न चाविद्यारोपो ब्रह्मण्येवेति युक्तम् । सर्वस्यापि तदाश्रयत्वोपपत्तौ अर्धजरतीयानुपपत्तेः । अतो भ्रमाज्ञानजीवभेदानामन्यसापेक्षत्वाच्चक्रकमिति ।

अथवा भेदस्य भ्रान्तिकल्पितत्वे भ्रान्तेश्च भेदसापेक्षत्वादन्योन्याश्रयत्वमनेनोक्तम् । व्युत्पादनार्थमेवाज्ञानं मध्ये निवेशितमिति द्रष्टव्यम् । अनेन जीवाज्ञानवादो(पक्षो)ऽपि निरस्तः । इतरेतराश्रयादिदोषसाम्यात् । बीजांकुरवददोष इति चेन्न । वैषम्यात् । व्यक्तिभेदेन हि तत्रादोषत्वम् । न च जीवाविद्याव्यक्तिभेदोऽस्तीति ।

**शे०**—ननु भेदभ्रान्तेः साक्षिचैतन्यरूपतया नाज्ञानकार्यत्वं युक्तम् । नाप्यज्ञानस्य भेदसापेक्षत्वमनादित्वात् तत्कथमेतदित्यतो मूलाभिप्रेतं हेतुहेतुमद्भावमुपपादयति **एतदुक्तं भवतीति ॥ स्वरूपत इति** ।

अर्थज्ञानात्मकस्य भ्रमस्याविद्यापरिणामित्वादिति भावः ॥ **साक्षिचैतन्यमिति** । तच्च पारमार्थिकमेवेति ज्ञानकार्यमिति भावः ॥ **तथाऽपीति** । साक्षिचैतन्यस्य विषयसङ्गत्यर्थमज्ञानापेक्षेत्याशयः । स्वत एव विषयसङ्गतिरस्तु किमज्ञानेनेत्यत आह **असङ्गस्येति** । 'असङ्गोऽयं पुरुष' इति श्रुतेरिति भावः । एवं भ्रान्तेरज्ञानसापेक्षत्वमुपपाद्य अज्ञानस्य भेदसापेक्षत्वव्युत्पादनपरं भाष्यमर्थतोऽनुवदति **तच्चेति** ॥ **अन्यथेति** । अज्ञानस्य भ्रान्तिकल्पितत्वानभ्युपगमे इत्यर्थः । ततश्चानिवृत्तिप्रसक्तेरिति भावः । अस्त्वेवमज्ञानस्य भ्रान्तिसापेक्षत्वं, तावताऽपि कथं भेदसापेक्षत्वमित्यतः परम्परया तदुपपादयितुं भ्रान्तेर्जीवापेक्षत्वमुपपादयति **भ्रान्तेरिति** । तावताऽपि न चक्रकसिद्धिरित्यतो जीवस्य भेदभ्रमापेक्षत्वमुपपादयति **भेदेति** । भेदभ्रमस्य च उक्तरीत्याऽज्ञानसापेक्षत्वमिति सिद्धं चक्रकमिति भावः । स्यादेवमज्ञानं भ्रान्तेर्जीवाश्रितत्वे । न चैतदस्ति । अज्ञानारोपस्य ब्रह्मण्येवाङ्गीकृतत्वात् । ततश्चाज्ञानस्य भ्रान्तिकल्पितत्वेऽपि तद्भ्रान्तेर्जीवाश्रितत्वाभावात्कथं चक्रकमिति **शङ्कते न चेति** । तथा च ब्रह्मण एवाऽविद्याकल्पकभ्रान्त्याश्रयत्वान्न भेदकल्पनासापेक्षजीवापेक्षेति भावः । सर्वस्याप्यारोपस्य ब्रह्माश्रितत्वोपपत्तौ अविद्यारोप एव तदाश्रितः अन्यस्तु जीवाश्रित इत्यर्धजरतीयानुपपत्तेरित्याह **सर्वस्यापीति** । विश्वविवर्तस्यापीत्यर्थः ।

अस्मिन्पक्षेऽन्योन्याश्रयताशब्दस्य प्रसिद्धार्थपरित्यागेन तदस्वारस्यमित्यरुच्या पक्षान्तरमाह **अथवेति** । **व्युत्पादनार्थमेवाज्ञानं मध्ये निवेशितमिति** । भ्रान्तेर्भेदसापेक्षत्वव्युत्पादनार्थमज्ञानं मध्ये निवेशितम् । अन्यथा भेदविषयकभ्रान्तेः साक्षिचैतन्यरूपत्वेन भेदसापेक्षत्वासम्भवात् । ततश्चासङ्गस्य साक्षिचैतन्यस्यारोपितार्थसंसृष्टरूपभ्रान्तेरज्ञानेन विनाऽनुपपत्तेरज्ञानस्योक्तरीत्या भेदसापेक्षत्वाद्युक्तं भ्रान्तेर्भेदसापेक्षत्वमित्युक्तं भवति । न च भ्रान्तेर्भ्रमभिन्नजीवाश्रयत्वेनैव भेदसापेक्षत्वं व्युत्पादयितुं शक्यमिति वाच्यम् । भ्रान्तेः साक्षिचैतन्यरूपत्वेन तस्या जीवाश्रितत्वाभावेन भेदानपेक्षत्वात् । तथा च भ्रान्तेर्जीवाश्रितत्वोपपत्त्यर्थमेवाज्ञानं मध्ये वाच्यमेव । अत एव पूर्वत्र भेदस्य भ्रान्तिसापेक्षत्वाद्भ्रान्तेश्च भिन्नजीवाश्रितत्वाद्भेदापेक्षत्वमित्युपपादनं न कृतं, किन्तु भ्रान्तेरज्ञानसापेक्षत्वात्तस्यापि च भ्रान्तिकल्पितत्वान्यथाऽनुपपत्त्या भेदसापेक्षत्वमित्येवोपपादनमुपपन्नम् । अन्यथा तदनवकाशादिति ध्येयम् ॥ **मन्ददृष्ट्यैवेति** । मन्ददृष्टिशब्देन भ्रान्तिस्तत्कारणमविद्या चेति द्वयं विवक्षितम् । तदुभयमपीश्वरगतं जीवगतं चेति पक्षद्वयम् । तत्र मन्ददृष्टिशब्दार्थद्वयमपि ब्रह्मगतमिति 'ब्रह्मणश्चेदि'त्यनेन निराकृतम् । इदानीं तदुभयमपि जीवगतमिति पक्षो निराकरणीयः । तत्र मन्ददृष्टिशब्दार्थभूतभ्रान्तेर्जीवगतत्वं, 'भ्रान्तेरज्ञानमूलत्वादि'त्यनेन निराकृतम् । मन्ददृष्टिशब्दार्थभूतभ्रान्तेः जीवगतभ्रान्तेः अज्ञानमूलत्वात् इत्यनेन निराकृतमन्ददृष्टिशब्दार्थभूतभ्रान्तिकारणाविद्याया जीवगतत्वपक्षो न निराकृतो भाष्ये; अतो भ्रान्तेर्जीवगतत्वपक्षदूषणपरभ्रान्तेरज्ञानमूलत्वादितिवाक्योक्तदूषणातिदेशेन तं निराचष्टे **अने-**

**नेति ॥ इतरेतराश्रयादिति** । अविद्याऽऽविद्यकबुद्ध्यादिना वाऽवच्छिन्नस्य तत्प्रतिबिंबितस्य वा कल्पितभेदस्य चेतनस्यैव जीवशब्दार्थत्वेनाविद्यासिद्धौ जीवसिद्धिः तत्सिद्धौ च तदाश्रिताविद्यादिसिद्धिरित्यन्योन्याश्रयः स्यादित्यर्थः । आदिपदेन जीवत्वप्रयोजकस्याज्ञानान्तरत्वे चक्रकमनवस्था वेति सूचयति । न च यथा निरंशेऽप्याकाशे घटस्तटस्थ एव तमुपलक्ष्यैकदेशं सम्पाद्य सम्बध्यते, तद्वदविद्याऽपि तटस्थैव चिन्मात्रमुपलक्ष्यैकदेशरूपं जीवं सम्पाद्य तत्रावतिष्ठत इति नेतरेतराश्रय इति वाच्यम् । निराश्रयाविद्यायोगेन जीवसिद्धावविद्यासिद्धिः तत्सिद्धौ च तदुपलक्षितजीवसिद्धिरित्यन्योन्याश्रयापरिहारादिति भावः । न च जीवाज्ञानयोरनादित्वेनोत्पत्त्याद्यप्रतिबन्धकत्वान्नायं दोष इति वाच्यम् । सर्वथाऽनपेक्षत्वे तदधीनत्वानुपपत्त्या प्रत्युक्त्यादौ परस्परापेक्षताया अवश्यवाच्यतया तत्प्रतिबन्धकत्वेनेतरेतराश्रयाद्यनिस्तारादित्यन्यत्र विस्तरः ॥ **व्यक्तिभेदेनेति** । न च तत्रापि बीजाङ्कुरसन्तानद्वित्वान्न व्यक्तिभेद इति वाच्यम् । तयोरन्योन्यानपेक्षत्वात् । यत्र वाऽपेक्षा न तयोर्द्वित्वमिति नान्योन्याश्रय इति भावः ॥ **व्यक्तिभेदोऽस्तीति** । अत्रापि व्यक्तिभेदाङ्गीकारे चक्रकाद्यपरिहारादिति भावः ।

स० — **अनेन जीवाज्ञानवादोपीति** । यत्प्रथमाधिकरणे 'निर्विशेषे स्वयंभाते किमज्ञानावृतं भवेत्' इत्यत्र विकल्पितं 'यत्परेण भावरूपाज्ञानमङ्गीकृतं तत्किं जीवाश्रयं उत जडाश्रयं अथवा ब्रह्माश्रयमि'ति तत्राद्यपक्षदूषणमपि **अनेन** विश्वभ्रान्तेस्तदुपादानभूतमायायाश्च जीवाश्रितत्वखण्डनेन लब्धमित्यर्थः । अत एव 'तत्र नाद्यः प्रकृत्यधिकरणे निराकरिष्यमाणत्वादि'ति तत्रोक्तम् । नन्वत्र विश्वोपादानमायाया जीवाश्रितत्वं खण्डितं तत्र चाध्यात्मिकबन्धोपादानाविद्याया जीवाश्रितत्वं विकल्पितम् । तथा च कथमनेन तद्दूषणं लब्धमित्यत आह **इतरेतराश्रयादिति** । दोषसाम्येन तदप्यत्र निराकार्यत्वेनाभिप्रेतमिति भावः ।

प० — चक्रकस्फोरणायोक्तं चक्रकाश्रयप्रकारं व्यनक्ति **एतदुक्तं भवतीति ॥ भ्रमेति** । भ्रमश्चाज्ञानं च जीवभेदश्चेत्येतेषामित्यर्थः । 'मा ततोऽन्यगे'त्यत्र सेत्यस्य भ्रांतिरूपैकार्थपरामर्शित्वमुपेत्य तद्दूषणपरतया 'अन्यगा चेत् स्वतोऽन्यते'त्यादिग्रंथो योजितः । अधुना सा इत्यस्याविद्यारूपार्थपरामर्शित्वमुपेत्य जीवगताऽविद्येति पक्षमुक्तातिदेशेन निराह **अनेनेति** । 'भेदोपि भ्रमजो यदी'त्यादिसपादश्लोकेनेत्यर्थः । मूले भ्रमज इति भ्रांतेरिति भ्रमस्यैवोपपादनात् सहैवायं निरस्तः । जीवाज्ञानवादोऽपीत्यनुवादबलादेव जिज्ञासाधिकरणे 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेदि'त्यत्र सुधायां 'तत्कि जीवाश्रयम् उत जडाश्रयं अथवा ब्रह्माश्रयमि'ति विकल्प्य नाद्यः प्रकृत्यधिकरणे निराकरिष्यमाणत्वादिति यदुक्तं तद्विवृतं भवतीति ज्ञेयं ॥ **इतरेतरेति** । सिद्धे चाज्ञाने तदधीनजीवसिद्धिः, सिद्धे च जीवे तदाश्रिता-

ज्ञानसिद्धिरितीतरेतराश्रयेत्यर्थः । आदिपदेन सिद्धे चाज्ञाने तदधीनजीवब्रह्मभेदसिद्धिः, सिद्धे च भेदे आविद्यकभेदभिन्नजीवाश्रितत्वेनाज्ञानसिद्धिरिति चक्रकाश्रयो ग्राह्यः।

या०— **साक्षिचैतन्यमिति** । तच्च पारमार्थिकमेवेति नाज्ञानकार्यमिति भावः ॥ **सर्वस्यापीति** । विश्वविवर्तस्यापीत्यर्थः । सार्वज्ञानुपपत्तेरुभयत्राविशिष्टत्वादिति भावः ॥ **अनेन जीवाज्ञानवादोऽपीति** । यत्प्रथमाधिकरणे 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेदि'त्यनुव्याख्यानव्याख्यावसरे विकल्पितं 'यत्परेण भावरूपमज्ञानमङ्गीकृतं तत्किं जीवाश्रयमुत जडाश्रयमथवा ब्रह्माश्रयमि'ति । तत्राद्यपक्षोऽप्यनेन विश्वभ्रान्तेस्तदुपादानभूतमायायाश्च जीवाश्रितत्वनिरासेन निरस्त इत्यर्थः । अत एव तत्र 'नाद्यः प्रकृत्यधिकरणे निराकरिष्यमाणत्वादि'त्युक्तम् । नन्वत्र विश्वोपादानमायाया जीवाश्रितत्वं निरस्तम् । तत्र चाध्यात्मिकबन्धोपादानाविद्याया जीवाश्रितत्वं विकल्पितम् । तथा च कथमनेन तन्निरास इत्यत आह **इतरेतराश्रयादीति** । दोषसाम्येन तदप्यत्र निराकार्यतयाऽभिप्रेतमेवेति भावः ।

श्री०— ननु भेदविषयकभ्रान्तेः साक्षिचैतन्यरूपत्वात्किं तत्राज्ञानापेक्षयेत्याशङ्क्याह **यद्यपीत्यादिना** ॥ **अन्यथेति** । अनादिनोऽज्ञानस्य भ्रान्तिकल्पितत्वाभाव इत्यर्थः । ननु यदि कल्पितभेदोपेते जीवेऽज्ञानमस्तीत्यङ्गीक्रियते तदाऽज्ञानं कल्पनाधीनं स्यात् । न चैवम् । किं त्वज्ञानस्य ब्रह्मण्येवारोपितत्वेन ब्रह्मनिष्ठत्वोपगमादित्याशङ्क्य निषेधति **न चेति** । सर्वस्यापि अविद्याऽऽरोपव्यतिरिक्तस्याज्ञानकार्यस्य जीवेश्वरभेदादिसर्वभ्रमस्यापीत्यर्थः ॥ **अर्धेति** । अविद्यारोपो ब्रह्मणि तदितरारोपस्तु जीव इत्यर्धजरतीयेत्यर्थः ॥ **अत इत्यादि** । तथा च जीवेश्वरभेदसिद्धौ भ्रान्त्या भिन्ने जीवेऽज्ञानसिद्धिः, तत्सिद्धौ च तत्कार्यभ्रमसिद्धिः, तत्सिद्धौ च तत्कल्पितजीवेश्वरभेदसिद्धिः, तत्सिद्धौ च पुनरज्ञानसिद्धिरित्यादिप्रकारेण चक्रकमित्यर्थः ॥ **मध्य इति** । भ्रमसिद्धौ तत्कल्पितभेदसिद्धिः, तत्सिद्धौ च भ्रमसिद्धिः । एतत्कथमित्यतो व्युत्पादनार्थमज्ञानं मध्ये निवेशितम् । तथा च भेदसिद्धौ भ्रान्त्या भिन्ने जीवेऽज्ञानप्राप्त्या तत्कार्यभ्रमसिद्धिरिति भ्रमभेदरूपव्यक्तिद्वयमेव गृहीत्वा तत्रान्योन्याश्रयो बोध्य इत्यर्थः ।

च०— **अनेन जीवाज्ञानवादोपीति** । जिज्ञासानये 'निर्विशेषे स्वयंभाते किमज्ञानावृतं भवेदि'तिमौलप्रतीकव्याख्याऽवसरे कल्पितं 'यत्परेण भावरूपमज्ञानमङ्गीकृतं तत्किं जीवाश्रयं उत जडाश्रयं अथ ब्रह्माश्रयमि'ति। तत्राऽद्यपक्षोप्यनेन विश्वभ्रान्तेस्तदुपादानभूतमायायाश्च जीवाश्रितत्वव्युदासेन व्युदस्त इत्यर्थः । अत एव तन्नये 'नाद्यः प्रकृत्यधिकरणे निराकरिष्यमाणत्वादि'त्यभिहितम् । कल्पभेदेन मन्ददृष्टिपदेनोपात्तयोर्विश्वोपादानमायातद्भ्रान्त्योर्मध्ये तद्भ्रान्तेर्जीवाश्रितत्वनिरासेन तदुपादानाज्ञानस्यापि तदाश्रितत्वकल्पो निरस्त इति वार्थः ।

सु० — यदुक्तं नादेहयोगिन इत्यादि तदनुपपन्नम् । देहादेरपि भ्रान्तिकल्पितत्वात् । न च तत्र कारणाभावः पूर्वदेहादेर्विद्यमानत्वात् । न चैवमनवस्था, अनादित्वादिति । मैवम् । आदिसर्गे देहादिदर्शनानुपपत्तेः । न ह्ययं साक्षिमात्रसिद्धोऽर्थ इत्युक्तम् । किञ्च स्यादयमनवस्थापरिहारः, यदि पूर्वपूर्वतरादिदेहादेरपि भ्रान्तिसिद्धत्वं प्रमितं स्यात् । अन्यथैवं, सर्वत्रानवस्थापरिहारः प्रसज्येत । न चात्र प्रमाणं अस्ति । ननु कथं नास्ति, 'नेह नाना' इत्यादिश्रुतेर्विद्यमानत्वादिति एतदाह (इत्यत आह) भ्रमत्वे त्विति ।

अनु० — भ्रमत्वे त्वियमुक्तिश्च तदन्तःपतनान्न हि ॥

यद्वा सर्वोऽप्ययं प्रसङ्गो विपर्ययपर्यवसानहीनत्वादाभास एव । नेह नानेत्यादिश्रुत्या सर्वस्यापि वियदादेः प्रपञ्चस्य भ्रान्तिकल्पितत्वाभिधानात् इत्याशङ्क्येदमुदितम् । उपपत्त्यविरुद्धो हि वेदार्थो ग्राह्यः । अन्यथा अन्धो मणिमविन्दत् इत्यादेरपि ग्रहणप्रसङ्गात् । विचारशास्त्रानारम्भप्रसङ्गाच्च । नेह नानेत्यादिवाक्यं चोपपत्तिविरुद्धम् । तथा हि । यदि वियदादिकं सर्वं भ्रमसिद्धं स्यात् तदा तदन्तःपातित्वादियं श्रुतिश्च तथा स्यात् । भ्रमारोपितं चासदिति श्रुतेरप्यसत्त्वान्नार्थधीहेतुत्वमिति । भ्रमशब्दः ज्ञाने अर्थे च परेषां प्रसिद्ध इति भ्रमत्व इत्युक्तम् । यद्यप्ययमर्थः प्रथमसूत्रे वर्णितः तथाऽपि तत्राध्यात्मिकः प्रसङ्गः (प्रपञ्चो) अत्र तु बाह्यविषय इति भेदः । अधिकविवक्षया चोक्तस्य पुनरुक्तिरिति ।

शे० — न च तत्रेति । देहादिभ्रान्तिकल्पितस्य देहादेर्देहादिभ्रान्तिहेतुत्वेऽन्योन्याश्रयप्रसङ्गेन देहादिभ्रान्तिहेतुत्वासंभवादिति भावः । पूर्वपूर्वभ्रान्तिकल्पितदेहादेरुत्तरोत्तरदेहादिभ्रान्तिहेतुत्वेन व्यक्तिभेदेन कोटिद्वयानङ्गीकारात् न इतरेतराश्रय इत्याह पूर्वेति । नन्वेवमन्योन्याश्रयाभावेऽप्यपर्यवसितदेहादिभ्रान्तिपरम्पराश्रयणात्, आदिशब्दोक्तानवस्थाया न परिहार इत्याशङ्कते न चेति । बीजाङ्कुरादाविव प्रवाहस्यानादित्वान्नानवस्था दोषायेति परिहरति अनादित्वादिति ॥ आदिसर्ग इति । ततः पूर्वं प्रलये देहादिभ्रान्तेरभावादिति भावः । न च कल्पान्तरीयदेहादिभ्रमादेवादिसर्गेऽपि देहादिदर्शनमस्त्विति वाच्यम् । तथा सत्यतिप्रसङ्गादित्यत्र तात्पर्यात् । ननु च देहाद्यारोपस्य विद्यावृत्तिप्रतिबिम्बितचैतन्यलक्षणसाक्षिरूपत्वात् न देहाद्यपेक्षत्वमित्यतः साधारणप्रपञ्चस्यान्तःकरणवृत्तिप्रतिबिम्बितचिद्वेद्यताया उपपादितत्वान्न देहाद्यभावे देहादिप्रतिभाससंभव इत्याह न हीति । अयमिति । साधारण इत्यर्थः ॥ यदीति । बीजाङ्कुरपरम्परायाः सिद्धविषयत्वेन तत्रानवस्थाया अदोषत्वेऽपि प्रकृते भ्रान्तिकल्पितदेहपरम्पराया असिद्धविषयत्वात् दूषणत्वमेवेति भावः ॥ अन्यथेति । असिद्धयत्नविषयेऽप्यदूषणत्व इत्यर्थः ॥ सर्वत्रेति । यत्रानवस्था दूषणत्वेनोच्यते तत्रापीत्यर्थः ॥

**न चात्रेति** । पूर्वपूर्वतरदेहादेर्भ्रान्तिसिद्धत्व इत्यर्थः । न तावत्प्रत्यक्षमत्र प्रमाणम् । तस्य सत्यता-ग्राहकत्वात् । नाप्यनुमानम् । प्रत्यक्षादिबाधितस्य प्रामाण्यायोगात् । नाप्यागमः । प्रपञ्चमिथ्यात्वं प्रतिपादयतस्तस्याभावादित्याक्षेपार्थः ।

**इदमुदितमिति** । 'भ्रमत्वे त्वियमुक्तिर्भवेत्तदुदितमित्यर्थः । ननु श्रुतेः प्रबलत्वेनोपपत्तिविरोध-मात्राद्भयाभावेन भाष्यकारीयमुपपत्तिविरोधकथनमनर्थकमित्यत उपपत्तिविरोधकथनेन, प्रबलयाऽपि श्रुत्या तदविरुद्धार्थ एव प्रतिपादनीयः, अन्यथा मीमांसावैयर्थ्यप्रसङ्ग इत्यस्य तात्पर्यलिङ्गेष्वपि प्रबलयोपपत्त्या विरोधकथनेन च परोक्तोपक्रमादीनां तद्विरोधस्य च भाष्यकारेण सूचनान्नानुपपत्तिरित्याशयेन भाष्या-भिप्रायमाह **उपपत्तीति** ॥ **अन्यथेति** । आपाततः प्रतिपन्नस्यापि वेदार्थत्व इत्यर्थः । **अन्धो मणिमविन्ददित्यादेरिति** । आदिपदेन 'तमनङ्गुलिरावयत्, अग्रीवः प्रत्यमुञ्चत्, तमजिह्वोऽसश्चत' इति वाक्यत्रयसंग्रहः । असश्चत प्राशंसदित्यर्थः । अत्र ह्यन्धो मणिमविन्ददित्यादिवाक्यचतुष्टयस्य नापातप्रतीत एवार्थो गृह्यते । तस्योपपत्तिविरुद्धत्वात् । लोके हि पुरुषश्चक्षुषा मणिं दृष्ट्वा तानङ्गु-लिभिस्तन्तुनाऽऽवीय ग्रीवायां प्रतिमुच्य जिह्वया प्रशंसति । न चान्धादेश्चक्षुरादिना दर्शनादिकं संभवति । किन्तूपपत्त्यविरुद्ध एव । तथा हि । अन्धादिवाक्यानन्तर'मूर्ध्वमूलमवाक् शाखं वृक्षं यो वेद संप्रती'त्यादिना संसारस्य परमात्माधीनत्वं व्रश्चनयोग्यत्वेन वृक्षत्वं तद्विदो मृत्युभयाभावं चोक्त्वा 'हसितं रुदितं गीतं वीणापणविलासितमि'त्यादिना शरीरस्यापि परमात्माधीनत्वमुक्त्वा तस्मिन् शरीरे प्रविष्टस्य जीवस्य स्वतो ज्ञानाद्यशक्तस्य परमात्मदत्तेन्द्रियस्य ज्ञातृत्वादिकमुच्यते । अचेता इत्यादिवाक्येष्वचेता यश्च चेतनः स तं मणिमविन्दत् सोऽनङ्गुलिरावयत्, सोऽग्रीवः प्रत्यमुञ्चत् सोऽजि-ह्वोऽसश्चतेति । तथा च यथा नान्धादिवाक्यस्यापाततः प्रतीतोऽर्थः किन्तूत्तरवाक्यानुसारेणाविरुद्ध एव, तथा 'नेह नाने'त्यस्याप्यविरुद्ध एवार्थः, न त्वापातप्रतीत एव । तथा सत्यन्धादिवाक्यस्यापि तत्प्रसङ्गादिति भावः ॥ **विचारशास्त्रेति** । 'आज्यैः स्तुवते, आकाशादेव समुत्पद्यन्ते, मृदब्रवीत् इत्यादेरपि चित्राज्याधिकरणाकाशाद्यधिकरणपूर्वपक्षरीत्या घृतगगनाद्यर्थत्वस्य प्रसङ्गेन पूर्वोत्तरविचार-शास्त्रानारम्भप्रसङ्गाच्चेत्यर्थः । अस्त्वेवमुपपत्त्यविरुद्धस्यैव वेदार्थत्वं किमेतावतेत्यत आह **नेति** ।

प्रतिज्ञातमुपपत्तिविरोधमेव दर्शयति **तथा हीति** । ननु वियदादेर्भ्रमसिद्धत्वे कुतो 'नेह नाना' इत्यस्य भ्रमसिद्धत्वम् व्याप्त्यभावादित्यतः, यस्य यद्भवति तदन्तःपातिनोऽपि तद्भवतीत्यविशेष-व्याप्तिसद्भावान्नानुपपत्तिरिति भावेन तां सूचयति **तदन्तःपातित्वादिति** । **तथा स्यादिति** । अन्यथा स्वस्मिन्नेवास्य प्रामाण्यप्रतिहत्या न कस्याप्यर्थस्य प्रतिपादकता स्यादिति भावः । अस्तु

श्रुतेरपि भ्रमसिद्धत्वम् किं ततोऽपीत्यतः यदि इयं श्रुतिर्भ्रमसिद्धा स्यात् तदाऽसती स्यात् । ततश्च वियदादेः भ्रमसिद्धत्वं न प्रतिपादयेत् । भ्रमसिद्धस्यासतः शुक्तिरजतादेरर्थक्रियाकारित्वादर्शनादिति न श्रुत्या वियदादेः भ्रमसिद्धत्वसिद्धिरित्याह **भ्रमारोपितमिति** । नन्वेवं भाष्ये 'भ्रमसिद्धत्वे' इत्येव वक्तव्यम् । तत्कथं 'भ्रमत्वे' इत्युक्तिरित्यत आह **भ्रमशब्द इति** ॥ **प्रथमसूत्रे वर्णित इति** । 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याप्रतो भवेत्' इत्यादिनेति शेषः ॥ **अधिकविवक्षयेति** । स्वप्नादिषु व्यभिचारपरिहारविवक्षया चेत्यर्थः ।

प०—ननु देहेन्द्रियादिकं विनैव, सुखादिवत्, साक्षिमात्रसिद्धो भविष्यति सर्गादौ देहादिप्रपञ्च इत्यत आह **न ह्ययमिति** ॥ **इत्युक्तमिति** । पूर्वतनसमीपग्रन्थे । **अयं प्रसङ्गः** अन्योन्याश्रयादिप्रसङ्गः । **भ्रमशब्दो ज्ञाने अर्थे चेति** । यथाक्रमं भावकर्मव्युत्पत्तिभ्यामिति भावः ॥ **प्रथमसूत्र इति** । जिज्ञासासूत्रे 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याप्रतो भवेदि'त्यादिना वर्णित इत्यर्थः ॥ **अधिकविवक्षयेति** । सा च 'व्यावहारिकता चाऽस्ये'त्यादिना व्यक्ता ।

या०— **अन्यथाऽन्धो मणिमविन्ददिति** । आदिपदेन 'तमनङ्गुलिरावयत् । अग्रीवः प्रत्यमुञ्चत् । तमजिह्वोऽसश्चते'ति वाक्यत्रयं ग्राह्यम् । **असश्चत** प्राशंसत् । अत्रान्ध इत्यादिवाक्यचतुष्टयस्य नापातप्रतीत एवार्थो गृह्यते । उपपत्तिविरुद्धत्वात् । लोके हि पुरुषश्चक्षुषा मणिं दृष्ट्वा तमङ्गुलिभिस्तन्तुनाऽऽवीय ग्रीवायां प्रतिमुच्य जिह्वया प्रशंसति । न चान्धादेश्चक्षुरादिना दर्शनादिकं संभवतीति । किन्तूपपत्तिविरुद्ध एव । तथाहि । अन्धादिवाक्यानन्तरं 'हसितं रुदितं गीतं वीणापणविलासितमि'त्यादिना शरीरस्य परमात्माधीनत्वमुक्त्वा तस्मिन् शरीरे प्रविष्टस्य जीवस्य स्वतो ज्ञानाद्यशक्तस्य परमात्मदत्तेन्द्रियस्य ज्ञातृत्वादिकमुच्यते । अचेता इत्यादिवाक्येषु 'अचेता यश्च चेतनः । स तं मणिमविन्दत् । सोऽनङ्गुलिरावयत् । सोऽग्रीवः प्रत्यमुञ्चत् । सोऽजिह्वोऽसश्चते'ति । तथा चोत्तरसन्दर्भानुसारेण पूर्ववाक्यानामर्थो ग्राह्यः । स चाविरुद्ध एवेति स्थितिः । अन्यथोपपत्तिविरुद्धस्यापि वेदार्थत्वेऽन्धादिवाक्यानामप्युपपत्तिविरुद्धः प्रतीतार्थ एव ग्राह्यः स्यादित्यर्थः ॥ **प्रथमसूत्रे वर्णित इति** । 'तद्वाक्यस्याप्रतो भवेदि'त्यादिनेति शेषः ।

श्री०— नन्वादिसर्गे पूर्वदेहेन्द्रियाद्यभावेन तत्कालीनदेहादिदर्शनानुपपत्तेरित्युक्तं अयुक्तम् । आदिसर्गे सर्वस्यापि प्रपञ्चस्य सुखादिवत्साक्षिमात्रसिद्धत्वेन तत्र देहेन्द्रियाद्यपेक्षाया अभावादित्यत आह **न हीति** । परो नैवं मन्यत इत्युक्तमित्यर्थः ॥ **पूर्वपूर्वेति** । यदर्थमुत्तरोत्तरानुसरणं तन्मूलं तादृशेत्यर्थः । **अन्यथेति** । यदि कार्यं प्रमितं स्यात् तदा तन्निर्वाहायोत्तरोत्तरा परम्परा अवश्यमनुसर्तव्या स्यात् ।

तथाच तादृशस्थले साऽनवस्था न दोषाय । यदि च कार्यस्याप्रमितत्वेऽपि तूष्णीं तादृशाप्रामाणिक-कार्यनिर्वाहाय अप्रामाणिकीं परम्परामङ्गीकृत्य साऽनवस्था न दूषणमित्यप्यङ्गीकृत्य प्रकृतानवस्थाया अपि परिहार इत्यर्थः । अत्र प्रकृतपरम्परायाम् । ननु प्रकृते ज्ञानस्यैव भ्रमत्वं नार्थस्येति तावदस्ति । तथा चार्थस्य वियदादेर्भ्रमसिद्धत्व इति वाच्यम् । भ्रमत्व इति कथमुक्तमत आह **भ्रमशब्द इति ॥ प्रसिद्ध इति ।** अर्थज्ञानात्मकोभयविधो हि भ्रम इति तन्मते प्रसिद्ध इत्यर्थः ॥ **आध्यात्मिक इति ।** 'मिथ्यात्वं यदि दुःखादेरि'त्युक्तत्वादिति भावः ।

**च०—अन्यथान्धो मणिमविन्ददित्यादेरपीति ।** आदिपदं 'तमनंगुलिरावयत् अग्रीवःप्रत्य-मुञ्चत् तमजिह्वोऽसश्चते'ति वाक्यत्रयसंग्राहकम् । **असश्चत** प्राशसत् । उदाहृतवाक्यचतुष्टयस्य तात्पर्यं पूर्वोत्तरपदसमभिव्याहाराद्यप्रतिसन्धानदशायां तादृशवाक्यश्रवणाव्यवहितोत्तरक्षणावच्छेदेनोत्पद्यमानप्रतीति-विषयीभूत एवार्थो न परिगृहीतव्यः । चक्षुष्मान् पुरुषश्चक्षुषा मणिं निरीक्षमाणस्तमंगुलिभिस्तंतुना आवीय ग्रीवायां प्रतिमुच्य जिह्वया प्रतिसंशति । अयं चार्थः प्रज्ञाचक्षुष्कस्य चक्षुरादिना दर्शनादिकं न संभवतीत्युपपत्तिविरुद्ध एवेति तादृशार्थपरित्यागेन तदविरुद्ध एवार्थो यथा ग्राह्यः; — तथाहि उदाहृतवाक्यचतुष्टयानन्तरं 'ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद सम्प्रती'त्यादिना संसारस्य भगवदधीनत्वं तद्विदो मृत्युभयाभावं चाभिधाय 'हसितं रुदितं गीतं वीणापणविलासित'मित्यादिना शरीरस्यापि तत्तन्त्रत्वमुक्त्वा तादृशदेहप्रविष्टस्य स्वातन्त्र्येण ज्ञानादिसम्पादनेऽनीशानस्येशदत्तेन्द्रियस्वाम्यस्य जीवस्य ज्ञातृत्वादिकमभिधीयते अचेता इत्यादिवाक्येषु । अचेता यश्च चेतनः स तं मणिमविन्दत् सोनंगुलि-रावयत् सोऽग्रीवः प्रत्यमुञ्चत् सो जिह्वोसश्चतेत्युत्तरसंदर्भमनुरुन्धान एव । — तथा नेह नानेत्यस्याप्यु-पपत्त्याद्यविरुद्ध एवार्थो ग्राह्यः न त्वतादृश इति भाव इतीति व्याचचक्षिरे । **प्रथमसूत्रे वर्णित इति ।** 'तद्वाक्यस्याग्रतो भवेदि'त्यादिनेत्यादिः ।

**सु०— ननु सर्वोऽप्ययं प्रपञ्चो भ्रान्तिसिद्धोऽपि व्यावहारिको भवत्येव । अत-स्तदन्तःपतिता श्रुतिरपि व्यावहारिकत्वादर्थहेतुर्भविष्यतीत्यत आह व्यावहारिकतेति ।**

अनु०— व्यावहारिकता चास्य स्यादबाध्यत्व एव हि ॥

**चस्त्वर्थः । स्यादप्येवं यदि प्रपञ्चस्य व्यावहारिकता तावत् (तव) शक्याङ्गीकारा स्यात् । न चैवम् । यतोऽस्य प्रपञ्चस्य व्यावहारिकता तु अबाध्यत्व एव स्यात् । एतदुक्तं भवति । यदि प्रपञ्चो व्यावहारिकोऽङ्गीक्रियेत, तर्ह्यबाध्योऽप्यङ्गीकर्तव्यः प्रसज्येत । न च तथाऽङ्गीक्रियते भवता । अतो न व्यावहारिकोऽप्यङ्गीकर्तुमुचित इति । सत्यत्वाङ्गीकारा-**

पादने त्विष्टापादनं स्यात् । परेणापि कथञ्चित्सत्यत्वस्याप्यङ्गीकृतत्वात् । अतोऽबाध्यत्व एवे-त्युक्तम् ।

शे०— ननु नेह नानेतिवाक्यबललब्धासत्त्ववत्प्रपञ्चान्तर्गतश्रुतेरसत्त्वमङ्गीकुर्वता व्यावहारिक-सत्त्वस्य शङ्कितुमशक्यतया व्यावहारिकसत्त्वप्रसक्तेः तन्निरासकोत्तरवाक्यमसङ्गतमित्यत आह नन्विति । नेहनानेति वाक्यं च पारमार्थिकत्वाभावविषयमित्याशयेन शङ्क्यमिति ध्येयम् । समुच्चयार्थत्वानुपपत्ते-राह चस्त्वर्थ इति । अबाध्यत्व एव व्यावहारिकता स्यादित्यवधारणेन सूचितं यद्व्यावहारिकं तद-बाध्यमिति व्याप्त्युपपादनमनर्थकमित्यतः प्रसङ्गार्थं तदिति भावेन सूचितं प्रसङ्गं दर्शयति एतदिति ॥ प्रसज्येतेति । व्याप्यवति व्यापकावश्यंभावनियमादिति भावः । इष्टापत्तेस्तर्काभासोऽयमित्यत आह न चेति । अङ्गीकारे वा 'नेह नाना' इति श्रुतिविरोधः । तस्या अबाध्यत्वरूपपारमर्थिकत्वाभावपरत्वाभ्युप-गतेरिति भावः ॥ कथञ्चित्सत्त्वस्येति । सत्त्वेन व्यवहारमात्रस्य वा मायिकस्य चेत्यर्थः ।

या०— कथञ्चित्सत्यत्वस्येति । सत्त्वेन व्यवहारमात्ररूपस्य वा मायिकस्य वेत्यर्थः ।

च०— कथंचित्सत्वस्येति । मायानियन्त्रितस्येत्यर्थः । यथा चैतत्तथेति । 'संध्ये सृष्टि-राह ही'त्यादिनयेष्विति पूरणीयम् ।

---

सु०— ननु शुक्तिरजतादेर्बाध्यस्याप्यभिज्ञाभिवदनरूपव्यवहारविषयत्वाद्व्याप्तिहीनोऽयं तर्क इत्यत आह बाध्यमिति ।

अनु०— बाध्यं नार्थक्रियाकारि

सत्यं बाध्यं शुक्तिरजतादिकम्, अभिज्ञादिकं व्यवहारविषय इति । तथाप्यर्थक्रिया-कारि न भवति। न हि तेन रजतोचिता वलयनिर्माणाद्यर्थक्रियाजायमाना दृष्टा । अर्थक्रियाकारि-त्वलक्षणमेव व्यावहारिकत्वमिह प्रकृतम् । नाभिज्ञादिविषयत्वम् । श्रुतेरर्थधीजनकत्वोपन्यस्त-त्वात् । अतो न तर्कस्याङ्गवैकल्यमिति ।

ननु बाध्यत्वं शुक्तिकाद्यधिष्ठानस्य धर्मः । 'विज्ञातस्यान्यथा' इत्युक्तत्वात् । शुक्तिका-दिकं चार्थक्रियाकारीति कथमुच्यते बाध्यं नार्थक्रियाकारीति । मैवम् । निषेध्यत्वलक्षण-बाध्यत्वस्य पराभ्युपगतस्यात्राश्रयणात् ।

शे०— नन्वर्थक्रियाकारित्वरूपत्वेन व्यावहारिकत्वविवरणं भाष्यकारीयमनर्थकम् । यादृशता-दृशव्यावहारिकत्वस्यैवाबाध्यत्वापादकत्वोपपत्त्या, विशेषपर्यन्तानुसरणस्य निरर्थकत्वात् इत्यतः सामान्यस्य

व्यभिचरितत्वेन तर्काभासत्वशङ्कापरिहारार्थं तदितिभावेन तां शङ्कामुत्थापयति **नन्विति** ॥ **अयं तर्क इति** । यदि प्रपञ्चो व्यावहारिकः स्यात्, तर्ह्यबाध्यः स्यादिति तर्क इत्यर्थः । व्यवहारविषयत्वरूप-व्यावहारिकत्वरूपव्याप्यवति अबाध्यत्वरूपव्यापकाभावादिति भावः । भाष्यकारीयमर्थक्रियाकारकत्वेन व्यावहारिकत्वविवरणमबाध्यत्वविवरणोपलक्षणमित्याशयेन तत्र तन्निवर्त्यशङ्कामुत्थापयति **नन्विति** । कथं शुक्त्यादौ व्यभिचार इत्यतो व्यापकीभूतापाद्याभावं तत्रोपपादयति **बाध्यत्वमिति** । व्याप्यभूतापादक-सद्भावं तत्रोपपादयति **शुक्तिकादिकं चेति** ॥ **आश्रयणादिति** । ततश्चानिषेध्यस्वरूपाबाध्यत्वस्यापि शुक्त्यादौ सत्त्वान्नानैकान्त्यमिति भावः ।

**श्री० — श्रुतेरिति** । अर्थधीजनकत्वोपपादकं च व्यावहारिकत्वमर्थक्रियाकारित्वरूपमेव युक्तं नाभिज्ञाऽऽदिविषयत्वरूपमित्यर्थः ।

**सु० — ननु तथाप्यसत्यस्य स्वाप्नकामिनीसंभोगादेः चरमधातुविसर्गाद्यर्थक्रियाकारित्व-दर्शनात् व्याप्तिविकलस्तर्क इत्यत आह** न चेति ।

**अनु० —** न च स्वप्नोऽपि नो मृषा ।

**स्वप्न इति स्वप्नावस्थोपलब्धोर्थः । नोऽस्माकं बादरायणीयानां** मते । **तर्हि मम मतेन व्याप्तिभङ्गोऽस्तु मया मृषात्वेनाङ्गीकृतत्वात् इति चेन्न, बादरायणीयेन तथाऽङ्गीकर्तुमशक्य-त्वात् । ननु कथं बादरायणस्य न मृषा स्वप्न इत्यत आह** वासनेति ।

वासनाजनितत्वेन तस्याप्यङ्गीकृतत्वतः ।

**तस्य स्वप्नस्यापि मायामात्रमिति** वदता **सूत्रकारेण वासनाजनितत्वेनाङ्गीकृतत्वात् इदं ज्ञायते, यत् न तस्य स्वप्नो मृषाऽभिमत इति । न हि कश्चिदविद्यमानस्य कारणं निरूपयेत् । किंञ्च श्रुत्यनुसारी हि सूत्रकारस्य सिद्धान्तः स्यात् । श्रुत्या च स्वाप्नार्थस्य कर्तारं वदन्त्या सत्यत्वमेवाभिप्रेतमिति न मृषात्वं सूत्रकृतोऽभिमतमित्याह** स हीति ।

स हि कर्तेति वाक्याच्च

**शे० —** अर्थक्रियाकारित्वेनोद्भावितस्य कामिनीसम्भोगादेरमृषात्वे वर्णनीये अवस्थाविशेषरूप स्वप्नस्यामृषात्ववर्णनमसङ्गतमित्यतः स्वप्नशब्देन लक्षणया तस्यैव ग्रहणान्नानुपपत्तिरिति भावेन, लक्षणा-बीजशक्यसम्बन्धं सूचयति **स्वप्नावस्थोपलब्धोऽर्थ इति** । 'नः'इत्यस्यास्माकमित्येव व्याख्यानमात्रेण, शङ्कितव्यभिचारपरिहारसम्भवात् किमिति बादरायणीयानामस्माकमित्यर्थनिरूपणमित्यतस्तत्प्रयोजनं दर्शयति **तर्हि मम मतेनेति** ॥ **न मृषात्वमिति** । तथा सति विरुद्धभाषित्वेनाप्रेक्षावत्त्वप्रसक्तेरिति भावः ।

**श्री० —** असत्ये स्वाप्नेर्थे व्यभिचारे दत्ते, तस्य सत्यतासमर्थनं विहाय स्वप्नावस्थायाः सत्यता-कथनमसङ्गतमित्यत आह **स्वप्न इतीति** ।

सु० — ननु कथं स्वप्नो न मृषा । 'मायामात्रमि'ति सूत्रकृतैव तन्मिथ्यात्वस्य वक्ष्यमाणत्वादित्यतो वाह वासनेति ।

न मायामात्रपदेन स्वप्नस्य मृषात्वमभिमतम्, किन्तु वासनाजनितत्वम् । अतो न मृषेत्यर्थः । यथाचैतत्तथा उपपादयिष्यते । तस्यागामिनः सूत्रस्य वासनाजनितत्वप्रतिपादकत्वेन अस्माभिरङ्गीकृतत्वादिति वा योज्यम् । न केवलं वक्ष्यमाणोपपत्तिवशात् मृषात्वं न सूत्रार्थः, किं तु श्रुतिवशाच्चेत्याह स हीति ।

शे० — उपपादयिष्यत इति । 'सन्ध्ये सृष्टिराह हि' इत्यधिकरणे 'अन्तःप्रज्ञाऽत्र मायोक्ता जैव्युत्पादनमेव सा' इत्यादिनेति शेषः । अङ्गीकृतत्वत इत्यस्यास्वारस्यमस्मिन्व्याख्याने भवतीत्यतस्तत्स्वारस्याय तस्येति न स्वप्नपरामर्शः, किन्त्वागामिसूत्रपरामर्शः इति भावेन प्रकारान्तरेण व्याचष्टे तस्येति । अस्मिन्पक्षे वासनाजनितत्वेनेत्येतदनन्वितमित्यतः तत् अध्याहारेण योजयति वासनाजनितत्वप्रतिपादकत्वेनेति ।

स० — यथा चैतत्तथोपपादयिष्यत इति । 'सन्ध्ये सृष्टिराह हि' इत्यधिकरण इति शेषः ।

प० — यथा चैतत्तथोपपादयिष्यत इति । भक्तिपादे 'सन्ध्ये सृष्टिराह ही'ति नय इति भावः ॥ तस्यागामिन इति । मायामात्रमिति सूत्रस्येत्यर्थः ॥ श्रुतिवशाच्चेति । प्रागुक्तमेव तात्पर्यं ध्येयम् ।

या० — तथोपपादयिष्यत इति । 'सन्ध्ये सृष्टिराह ही'त्यधिकरण इति शेषः ।

सु० — यद्वा स्वाप्नार्थो न तावदनादिनित्यः, पश्चात् अदृष्ट्यादिविरोधात् । नापि सादिविनाशी, उपादाननिमित्तयोरनिरूपणात् । न च प्रकारान्तरं संभवति । तत्कथं न मृषेत्यत आह वासनेति । नोपादानाभाव इति शेषः । 'न मृषा' इति पूर्वेण वा सम्बन्धः । एवम् उपादानं निरूप्य निमित्तमुपपादयति सहीति । निमित्तं चेश्वरो ज्ञायते, इति शेषः । 'न मृषा' इति पूर्वेणैव वा अन्वयः ।

शे० — अत्रापि जनितत्वेनेत्यस्यास्वारस्यं मनसि निधाय पक्षान्तरमाह यद्वेति ॥ पश्चादिति । स्वप्नावस्थात इति शेषः । उपलक्षणं चैतत् । प्रागित्यपि द्रष्टव्यम् । ततश्च स्वप्नावस्थातः प्रागूर्ध्वं चानुपलम्भादित्यर्थः । आदिपदेन मध्यमपरिमाणस्य अनादिनित्यस्यादर्शनेन मध्यमपरिमाणत्वेन दृश्यमानानामनादिनित्यत्वमनुमानबाधितं चेत्यादिवक्ष्यमाणदूषणपरिग्रहः ॥ उपादानेति । यद्यप्यत्रापि प्रागूर्ध्वमुपलम्भप्रसङ्ग एव बाधकतया वक्ष्यते । तथाऽपि विद्युदादिवत् तदैवोत्पत्तिविनाशाङ्गीकारेण तस्य परिहर्तुं शक्यत्वात् नासाविहोदित इति ज्ञेयम् ॥ अनिरूपणादिति । न तावद्ब्राह्ममृदादिकं तदुपादानम् ।

तथा सति प्राङ्मृदादीनाम् ऊर्ध्वं च कपालादीनामुपलम्भप्रसङ्गात् । नापि तद्विलक्षणम् तस्यादर्शनात् । कर्ताऽपि न तावज्जीवात्मा, द्रष्टुर्निर्व्यापारत्वात् । अन्यस्य चादर्शनात् । नापीश्वरः प्रमाणाभावादिति भावः । ननु स्वाप्नार्थो नानादिनित्योऽभ्युपगम्यते, नापि सादिविनाशी; येनोक्तदोषः स्यात् । किन्तु तृतीयप्रकारविशिष्ट एव । तत्कुतस्तस्य मृषात्वमित्यतः स्यादेतदेवं यद्युक्तप्रकारद्वयव्यतिरेकेण तृतीयोऽपि प्रकारः संभावितः स्यात् ; न चैतदस्तीत्याह **न चेति** । प्रकारद्वयस्यैवोपलम्भान्न तृतीयः प्रकारः शङ्कितुमपि शक्य इति भावः ॥ **नोपादानाभाव इति शेष इति** । प्रमाणं च 'मनोविकारा विषयाः स्वाप्ना यद्वाह्यवन्न ते । स्थूला भवन्त्यतस्तेषां स्पष्टता न तथा क्वचित्' इत्यादिना वक्ष्यत इत्याशयः । नोपादानाभाव इति शेषपूरणेऽरुचिं मनसि निधायाह **न मृषेतीति** ।

**प०** - **इति शेष इति** । अंगीकृतत्वत इत्यनंतरमयं शेषः ॥

**सु०— ननु कथं तर्हि 'स्वप्नमायासरूपा' इत्यादौ स्वप्नस्य भ्रान्तित्वोक्तिरित्यत आह** जाग्रत्वमिति ।

अनु० —  जाग्रत्त्वमिति हि भ्रमः ॥

**इतिशब्द आद्यर्थे, उल्लेखार्थे वा । जाग्रदहमस्मीति द्रष्टर्यज्जाग्रत्त्वं, यच्चैतत्पदार्थानां जाग्रद्दृशा दृशादृष्टपदार्थैः ऐक्यं, बाह्यमृदादिजन्यत्वं वा; एवमादिप्रतिभासो भ्रमः । बाध्यत्वादिति हिशब्दार्थः । तदपेक्षया श्रुत्यादिवचनानीति भावः ।**

**शे०** — 'जाग्रत्त्वंभ्रान्तिः' इत्येतावता पूर्तेः इतिशब्दानर्थक्यमित्यतः, शशत्वविषाणित्वादिसामानाधिकरण्यादेरपि भ्रान्तिकल्पितत्वस्य वक्ष्यमाणत्वेन तत्संग्राहकतयाऽर्थवत्त्वोपपत्तेरित्याशयेनाह **आद्यर्थ इति** । अनेन जाग्रत्त्वादिकं भ्रान्तिरिति मूलयोजनोक्ता भवति । इतिशब्दस्य आद्यर्थत्वं कुत्राप्यदृष्टमित्यतो रीत्यन्तरेण व्याचष्टे **उल्लेखार्थे वेति** । ननु जाग्रत्त्वस्यापि प्रतीतिरस्त्येवेति सोपादानत्वसंभवान्न तत्प्रतीतेरपि भ्रान्तित्वम् अन्यथाऽर्थप्रतीतेरपि भ्रान्तित्वं स्यात्; इत्यतो न वयं कारणसामग्रीसम्पादनसंभावनामात्रेणार्थानां सत्यत्वमातिष्ठामहे, किन्तु बाधकाभावेनैव, अस्ति च जाग्रत्त्वप्रतीतेर्बाधः 'स्वप्न एवायं, न जागरोऽनुभूतः' इत्याद्युदयात्; इत्युपपत्तिसूचनार्थं भाष्ये हिशब्द इत्याशयेनाह **बाध्यत्वादितीति** ॥ **तदपेक्षयेति** । जाग्रत्त्वादिप्रतीतेर्भ्रान्तित्वापेक्षयेत्यर्थः ॥ **श्रुत्यादीति** । 'स्वप्नमायासरूपा' इत्यादिश्रुत्यादीत्यर्थः ।

**प०— श्रुत्यादीति** । **प्रागुक्तमाण्डूकश्रुत्यादीत्यर्थः** ।

**श्री०** — उल्लेखं दर्शयति **जाग्रदिति** । आद्यर्थ इत्युक्तं दर्शयति **बाह्येति** ।

सु० — ननु च रज्जौ सर्पभ्रमे, असत्यस्यापि सर्पस्य सर्पोचितभयकम्पाद्यर्थक्रिया-कारित्वं दृश्यते; तथा सर्पे समारोपितायाः कुसुममालायाः सन्तोषकारिता उपलभ्यते; अतो व्याप्तिभङ्गस्तर्कस्येत्यत आह सर्पेति ।

अनु० — सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् ॥

'ना भूदत्र सर्पः' इतिवत् 'न सर्पज्ञानमभूत्' इति बाधकानुदयात् । अभूदेवेत्यनुवृत्तेश्च । भ्रमत्वस्य विषयवैपरीत्यमात्रेणोपपत्तेरिति हिशब्दार्थः । कि(मतो)न्ततो यदि ज्ञानमस्त्येवेत्यत आह तदेवेति ।

तदेवार्थक्रियाकारि

एवशब्देन सर्पादिकं व्यावर्तयति । सत्यपि सर्पादौ असति च ज्ञाने, भयकम्पाद्यनुत्पत्तेः । सति च (तस्मिन्) तदुत्पत्तेर्ज्ञानकार्यमेव भयकम्पादिकं न सर्पकार्यम् । तत्कार्यं तु अभिसर्पणदंशनादिकम् । मरणमपि धातुव्याकुलतानिमित्तकम् । सा च विषद्रव्येणेव भयादिनाऽपि भवतीति न बाध्यस्य(ापि) सर्पादेरर्थक्रियाकारित्वम् ।

श्रे० — सर्पभ्रमादावित्यादिशब्दसंग्राह्यं दर्शयति **तथा सर्पे समारोपिताया इति** ॥ **व्याप्तीति** । यत् अर्थक्रियाकारि तत् अबाध्यमिति व्याप्तीत्यर्थः । ननु सर्पवत्तज्ज्ञानस्याप्यसत्त्वोपपत्तेः निर्निबन्धनो भाष्यकारीयस्तत्सत्त्वाभ्युपगमः, इत्यतः सत्त्वे बाधकसद्भावाद्वा तदनभ्युपगमः, सत्त्वे साधकाभावाद्वा, असत्त्वे साधकसद्भावात् बाधकाभावाद्वा; इति विकल्पान्मनसि निधाय तन्निरासकतया हिशब्दः प्रयुक्तो भाष्य इति भावेन, हिशब्दार्थमाह **मा भूदत्रेत्यादिना** । तत्राद्यपक्षनिराकरणं **नात्रेति** । द्वितीय-निराकरणम् **अभूदित्येवेति** । अनेनैव चतुर्थोऽपि निरस्तः । सत्त्वसाधकप्रमाणस्यैवासत्त्वबाधकत्वात् । तृतीयेऽपि भ्रमत्वमेव साधकम् अन्यद्वा । नान्त्यः तस्यादर्शनात् । नाद्यः तस्यान्यथासिद्धत्वेनासत्त्वा-नवगमकत्वादित्याह **भ्रमत्वस्येति** । तथा च साधकबाधकभावाभावाभ्यां विशेषाद्युक्तो भाष्यकारीयो ज्ञानसत्त्वाभ्युपगम इति भावः । कुतः सर्पादिज्ञानस्यैवार्थक्रियाकारित्वं न सर्पादेरर्थस्य, इत्यतः तदेवे-त्येवकारसूचितान्वयव्यतिरेकभावाभावाभ्यामिति भावेनान्वयव्यतिरेकभावाभावौ दर्शयति **सत्यपीति** । ननु सर्पादिज्ञानस्य सत्यसर्पाद्यर्थक्रियाकारित्वेऽर्थक्रियाकारित्वाभावेन सत्यसर्पादेरव्यावहारिकत्वापत्त्या तद्व्या-वहारिकत्वोपपत्यर्थं सत्यसर्पादिमात्रसाध्यार्थक्रियाविशेषस्यावश्यकल्पनीयतया भ्रमस्थलेऽपि तदर्थक्रियाया ज्ञानासाध्यतया कल्पितसर्पादिसाध्यत्वस्यैव प्राप्त्या बाध्यस्याप्यर्थक्रियाकारित्वसिद्धेर्व्याप्तिभङ्गतादव-स्थ्यमित्यतः, सत्यं सत्यसर्पादिमात्रसाध्याऽप्यर्थक्रियाऽस्तीति; तेन सत्यसर्पादेर्व्यावहारिकत्वमुपपन्नम् ।

तस्याश्च भ्रमस्थलेऽभावान्न बाध्यस्याप्यर्थक्रियाकारित्वप्राप्तिरिति न व्याप्तिभङ्गोऽपीति भावेन भ्रमस्थले असतीं सत्यसर्पादिमात्रसाध्यामर्थक्रियां दर्शयति **तत्कार्यं त्विति**। सत्यसर्पादिकार्यमित्यर्थः। नन्वभिसर्पण-दंशनादेरिव मरणस्यापि सत्यसर्पमात्रसाध्यत्वात् भ्रमस्थलेऽभिसर्पणदंशनादेरभावेन बाध्यस्य सर्पस्य तद्रू-पार्थक्रियाकारित्वाभावेन व्यभिचाराभावेऽपि, सर्पभ्रमस्थले सत्यसर्पकार्यस्य मरणस्य दर्शनेन, कल्पित-सर्पस्यैव तत्कारिताया वक्तव्यत्वेन, बाध्यस्यार्थक्रियाकारित्वप्राप्तेर्व्यभिचारतादवस्थ्यमित्यतः; स्यादेवं यदि मरणस्य सत्यसर्पकार्यत्वं स्यात्, न चैतदस्ति, तस्य धातुव्याकुलतासाध्यत्वेन सत्यसर्पकार्यत्वा-भावात्; तथा च सत्यसर्पकार्यमरणकारणत्वाभावान्न कल्पितसर्पे व्यभिचार इत्याह **मरणमपीति**। ननु तथाऽपि न व्यभिचारपरिहारः, मरणरूपकार्यकारित्वाभावप्राप्तावपि कल्पितसर्पस्य मरणहेतुधातुव्याकुल-तारूपसत्यसर्पविषयकार्यकारिताया अपरिहारात् इत्यतः स्यादेतदेवं यदि धातुव्याकुलताया विषद्रव्य-मात्रकार्यत्वं स्यात्। न चैतदस्ति, तस्या विषद्रव्येणेव भयादिनाऽपि जायमानत्वेनोभयकार्यतया विषद्रव्यमात्रकार्यत्वाभावात्। तथा च सर्पभ्रमादिकार्यभयादिनाऽपि भ्रमस्थले धातुव्याकुलतोत्पत्त्या कल्पितस्य सर्पस्य तत्कारिताया अप्राप्त्या, न व्यभिचारप्रसक्तिरित्याशयेनाह **सा चेति**।

स० — ननु भ्रमरूपज्ञानस्य सत्यत्वे भ्रमत्वमेव तस्यानुपपन्नमित्यत आह **भ्रमत्वस्य विषय-वैपरीत्येति**।

---

प० — **व्याप्तिभङ्गस्तर्कस्येति**। 'बाध्यं नार्थक्रियाकारी'त्यत्रोक्तस्य बाध्यत्वेऽर्थक्रियाकारित्वं न स्यादित्युक्ततर्कस्येत्यर्थः। ज्ञानस्य सत्यत्वे भ्रमत्वं न स्यादित्यत आह **भ्रमत्वस्येति**॥

या० — ननु भ्रमरूपज्ञानस्य सत्यत्वे भ्रमत्वमेव तस्य न स्यादित्यत आह **भ्रमत्वस्य विषय-वैपरीत्येति**।

श्री० — **सति** सर्पज्ञान इति वर्तते॥ **तदिति**। भयादीत्यर्थः। **तत्कार्यं** सर्पकार्यम्। सर्पा-दिना मरणस्य जायमानत्वेन मरणरूपार्थक्रियाकारिता सत्यसर्पादेर्वाच्येत्यत आह **मरणमपीति**॥ **धात्विति**। सर्पादिज्ञानजन्यभयादिजन्येत्यर्थः। ननु विषद्रव्यस्यैव धातुव्याकुलतानिमित्तत्वप्रसिद्धेः कथं भयादेस्तदिति तत्राह **सा चेति**। धातुव्याकुलतेत्यर्थः।

च० — **विषयवैपरीत्येति**। अलीकार्थावगाहित्वमात्रेणेत्यर्थः।

**सु० — ननु किं ज्ञानमात्रं भयादिजनकं किंवा विषयावच्छिन्नम्। नाद्यः घटज्ञान-स्यापि ज्ञानत्वेन तदापत्तेः। द्वितीये न तावद्विषयो रज्ज्वादिः। रज्जुरियमित्यादि-ज्ञानस्यापि भयादिहेतुतापातात्। सर्पादिश्चेद्विशेषणतया तस्यापि भयादिहेतुत्वं प्राप्तम्।**

शे० — ननु ज्ञानमस्त्येवेत्येतावतैव पूर्तेः तादृशमिति विशेषणमनर्थकम् । न च ज्ञानगत-विशेषसमर्पणार्थं तदिति वाच्यम् । तस्य प्रकृतानुपयुक्ततयाऽसमर्पणीयत्वात् । न च विषयावच्छिन्नस्य ज्ञानस्य हेतुत्वे, विषयस्य विशेषणतया हेतुत्वप्रसक्तिशङ्कापरिहारार्थं तदिति वाच्यम् । अनवच्छिन्न-ज्ञानमात्रस्यैव भयादिहेतुत्वोपपत्तौ अवच्छिन्नस्यैव हेतुत्वमित्यत्र नियामकाभावात् । भावे वा परोक्तरीत्या विषयस्योपलक्षणत्वाङ्गीकारमात्रेणैव तत्परिहारोपपत्तेश्च, इत्यनर्थकं ज्ञाने विशेषसूचनमित्यतः ज्ञाने विषय-स्योपलक्षणत्वपक्षस्यानुपपन्नत्वात्तदावश्यकमेवेति भावेन तद्व्युत्पादयितुं विषयावच्छिन्नस्यैव ज्ञानस्य हेतुत्वं तावद्व्युत्पादयति **नन्विति ॥ तदापत्तेरिति** । भयादिजनकत्वापत्तेरित्यर्थः । कारणतावच्छेद-कावच्छिन्नयत्किञ्चित्कारणस्य कार्याव्यभिचारादिति भावः । रज्ज्वादिरित्यादिपदेन पुष्पमालायाः परिग्रहः ॥ **प्राप्तमिति** । विशिष्टकारणताग्राहकस्य प्रमाणस्यासति बाधके विशेषणकारणताग्राहकत्व-स्येन्द्रियसन्निकर्षादौ दर्शनात् विषयविशिष्टज्ञानस्य हेतुत्वग्राहकप्रमाणेन विशेषणस्य विषयस्यापि तद्ग्रहणात् । अन्यथेन्द्रियस्य घटसाक्षात्कारादौ जनकत्वाभावप्रसक्तेरिति भावः ।

प० — उत्तरवाक्यमवतारयितुं शंकामाह **ननु किमित्यादिना** ।

श्री० — **तदापत्तेः** भयादिजनकत्वापत्तेरित्यर्थः ।

च० — **ज्ञानमात्रम्** विषयिताप्रत्यासत्त्या विषयविशेषितम् । विषयावच्छिन्नमित्यत्र तादृश-प्रत्यासत्त्येत्यादिः । **ज्ञानत्वेन** भयादिजनकतावच्छेदकज्ञानत्वरूपधर्मावच्छिन्नत्वेन । **तदापत्तेः** भया-द्यापत्तेः ।

**सु० — अत्र कश्चिदाह । नायं दोषः, ज्ञानव्यावर्तकतयोपयुक्तस्य सर्पादेर्विषयस्य ज्ञानजन्यार्थक्रियायामप्रवेशात् । न हि कुरूणां क्षेत्रे वसति, गुरूणां टीकां पठति इत्यादौ विशेषणस्यापि कारकत्वमस्ति । किन्त्वतिप्रसक्तयोः क्षेत्रटीकयोर्व्यावृत्तिमात्रेण चरितार्थत्व-मिति । तदसत् । एवमपि बाध्यस्य सर्पादेर्व्यावर्तकत्वस्यावश्याभ्युपगमनीयत्वात् । व्यावृत्ति-बुद्धिजनकत्वं हि व्यावर्तकत्वम् । तत्रापि ज्ञानाभ्युपगमेन परिहारे व्यावर्तकोपादानेन प्रसङ्गतादवस्थ्यमिति । तत्राह तादृशमिति । यादृशं सत्यसर्पोल्लेखि ज्ञानं, तादृशमित्यर्थः ।**

**सत्यसर्पज्ञानं तावद्घटादिज्ञानाद्व्यावृत्तमनुभूयते । व्यावृत्तिश्च व्यावर्तक(धर्म)योगकृता सर्वत्रोपलब्धा । न च विषयो व्यावर्तकः, तस्यातद्धर्मत्वात् । संबद्धं हि व्यावर्तकं भवति । अन्यथाऽतिप्रसङ्गात् । विषयसंबन्धो व्यावर्तकोऽस्त्विति चेन्न । तस्य संयोगादिरूपस्याभावात् । अतः कश्चिज्ज्ञानगत एव धर्मोऽभ्युपगन्तव्यः ।**

किञ्च विलक्षणसामग्रीजन्मनोर्ज्ञानयोर्यथा परोक्षत्वापरोक्षत्वरूपो विशेषः विषयोपाधिना विनाऽभ्युपगम्यते, एवमपरोक्षज्ञानेऽपि कथं स्वगतो विशेषो नाङ्गीकरणीयः । अपि च सर्पज्ञानस्य विलक्षणार्थक्रिया न स्वगतेनातिशयेन विनोपपद्यते । न हि देवदत्तसंबन्धिता-मात्रेण कलमबीजं कलमबीजान्तरकार्यविलक्षणं कार्यमुपजनयति । स चायं विशेषः सत्यसर्प-ज्ञाने समीचीनया सामग्र्या जातः, मिथ्यासर्पज्ञाने त्वसमीचीनया इति न कश्चिद्विशेषः । अतो विषयान्तर्भावमन्तरेण स्वगतेनैव विशेषेण सर्पादिज्ञानस्य भयादिजनकत्वान्न सर्पस्य किञ्चित्करत्वमिति ।। तदेवं यत्रार्थक्रिया निश्चिता न तत्र मिथ्यात्वम् , यत्र तु मिथ्यात्वं न तत्रार्थक्रियेति न तर्कमूलव्याप्तेः क्वापि भङ्गः; इत्युपसंहरति तदिति ।

अनु० — तत्सदेवार्थकारकम् ॥

शे० — एवं विषयावच्छिन्नस्यैव हेतुत्वमुपपाद्य, विषयस्योपलक्षणत्वपक्षं प्रतिक्षेप्तुमुत्थापयति अत्रेति ।। एवमपीति । भयादिरूपज्ञानजन्यक्रियायामप्रवेशोऽपीत्यर्थः ।। व्यावर्तकत्वस्येति । ज्ञानं प्रतीति शेषः । ननु च विषयस्य व्यावर्तकत्वमभ्युपगम्यत एवेति नेदमनिष्टमित्यतः तथा सति बाध्यस्य सर्पादेरर्थक्रियाकारित्वप्रसङ्गान्न तदभ्युपगमो युक्त इत्याशयेन व्यावर्तकत्वं निरूपयति व्यावृत्तीति । न व्यावर्तकत्वं व्यावृत्तिबुद्धिजनकत्वमुच्यते, येन बाध्यस्याप्यर्थक्रियाकारित्वप्रसङ्गः, किन्तु व्यावृत्तिधीहेतु-धीविषयत्वमेव । सत्यपि दण्डादौ, तदज्ञाने व्यावृत्त्यज्ञानेन तज्ज्ञानस्यैव व्यावृत्तिधीहेतुत्वसिद्धेः । अतो न सर्पादेर्विषयस्य व्यावृत्तिधीहेतुत्वप्राप्तिरित्याशङ्कयाह तत्रापीति ।। व्यावर्तकोपादाने-नेति । अनवच्छिन्नज्ञानमात्रस्यैव व्यावृत्तिधीजनकत्वेऽतिप्रसङ्गेन विषयावच्छिन्नस्यैव व्यावृत्तिधीजनकत्वस्य वक्तव्यतया विषयस्य विशेषणत्वे चोक्तरीत्या व्यावृत्तिबुद्धिजनकत्वप्रसङ्गेनोपलक्षणत्वरूपव्यावर्तकत्वस्यैव वाच्यत्वात् व्यावृत्तिबुद्धिजनकत्वरूपव्यावर्तकत्वस्वीकारे उक्तदोषापरिहारेण व्यावृत्तिधीहेतुधीविषयत्वमेव वाच्यम् । एवं तत्रतत्रापीत्युक्तप्रसङ्गानिस्तार इत्यर्थः ।। यादृशमिति । सर्पभ्रमादावपीति भ्रमशब्देन ज्ञापितं बुद्धिस्थं सत्यसर्पज्ञानं तादृशमिति तच्छब्देन परामृश्यत इति भावः ।। ।। ननु सत्यसर्पो लेखिज्ञान-सादृश्यकथनेन कथमुक्तशङ्कापरिहार इत्यतो विषयानवच्छिन्नस्यैव तस्य हेतुत्वाद् भ्रमस्थलेऽप्यनवच्छिन्नस्यैव हेतुत्वसिद्ध्या, न मिथ्याभूतस्यार्थक्रियाकारित्वापत्तिरिति भावेनातिप्रसङ्गपरिहाराय, विषयसंबन्धमनपेक्ष्य ज्ञाने स्वत एव वैलक्षण्यमुपपादयति सत्यसर्पज्ञानं तावदित्यादिना । अस्त्वेवं व्यावर्तकधर्मसिद्धिः तथाऽपि स्वाभाविकत्वं कुतः, इत्यतो विषय-विषयसंबन्धयोर्ज्ञानव्यावर्तकतया संभावितत्तया प्रसक्तयोः तन्निरासेऽन्यत्राप्रसङ्गात्परिशिष्यमाणस्य ज्ञानगतधर्मस्यैव तद्व्यावर्तकत्वसिद्धिः इति परिशेषप्रमाणेन तमर्थं साधयितुं प्रसक्तप्रतिषेधं विधास्यन् विषयपक्षं तावत्प्रतिषेधति न चेति । ननु विषयस्य ज्ञानधर्मत्वा-

भावेऽपि ज्ञानव्यावर्तकत्वं किं न स्यादित्यत्राह **सम्बद्धं हीति**। तद्धर्मत्वेनेति शेषः। तद्धर्मत्वेन तत्संबद्धस्यैव तद्व्यावर्तकत्वदर्शनाद्विषयस्य च ज्ञानधर्मत्वेन ज्ञानसंबद्धत्वाभावान्न तद्व्यावर्तकत्वमित्यर्थः ॥ **अन्यथेति**। तद्धर्मत्वेन संबद्धत्वाभावेऽपि। व्यावर्तकत्व इत्यर्थः। अस्तु तर्हि धर्मत्वेन ज्ञानसंबद्धत्वाद्विषयसंबन्धो ज्ञानव्यावर्तक इति पक्ष इति भावेन तमाशङ्कते **विषयेति**। स्यादेवं यदि ज्ञानज्ञेययोः संबन्धो घटेत। न चासौ संभवति। स हि भवन् द्विष्ठः संयोगादिर्वा विषयविषयिभावो वा। नान्त्यः। विषयविषयिभावस्य विषयत्वविषयित्वरूपत्वेन, विषयत्वस्य च अतद्धर्मत्वेन उक्तरीत्या ज्ञानव्यावर्तकत्वानुपपत्त्या; विषयित्वस्यैव संबद्धत्वेन वाच्यत्वेन, ज्ञानगतधर्म एव व्यावर्तकः इति परिशिष्यमाणतयाऽभिप्रेततृतीयपक्षान्तर्भावेन अस्मदभिमतसिद्धिप्रसक्तेः, इति भावेनाद्यं दूषयति **तस्येति**। विषयसंबन्धस्येत्यर्थः। द्रव्ययोरेव संयोगनियमेन गुणगुणिनोर्ज्ञानज्ञेययोः संयोगस्य, अन्यगुणस्य अन्येन समवायानुपपत्त्या समवायस्य च असंभवादित्यर्थः। ज्ञानज्ञेययोः स्वरूपातिरिक्तद्विष्ठसंयोगसमवाययोरभावान्न विषयसंयोगोऽपि ज्ञानव्यावर्तक इति भावः। एवं प्रसक्तप्रतिषेधं विधाय परिशेषसिद्धमर्थं दर्शयति **अत इति**।

अनुमानेनापि ज्ञानगतं विशेषं साधयति **किञ्चेति**। विलक्षणसामग्रीजन्मनोरिति हेतुगर्भं विशेषणम्। तथा च - सर्पज्ञानम् असर्पज्ञानाद्धर्म्यन्तरसंबन्धमनपेक्ष्य विलक्षणम् तत्सामग्रीविलक्षणसामग्रीजन्यत्वात् परोक्षज्ञानादपरोक्षज्ञानवत्। न चासिद्धिः। असर्पज्ञानजनको योऽसर्पेन्द्रियसंप्रयोगः तद्विलक्षणसर्पेन्द्रियसंयोगजन्यत्वात्सर्पज्ञानस्य। न च दृष्टान्तस्य साध्यवैकल्यम्। एकविषययोरपि परोक्षत्वापरोक्षत्वलक्षणवैलक्षण्यदर्शनेन अपरोक्षत्वस्य विषयोपाधिकत्वाभावात् -इत्यनुमानमत्रोक्तं भवतीति ज्ञातव्यम्। अनुमानान्तरमप्याह **अपि चेति**। अनेन सर्पज्ञानमुक्तसाध्यकं तज्जन्यविलक्षणजनकत्वात् यवबीजात्कलमबीजवत् इत्यनुमानमुक्तं भवतीति ज्ञातव्यम्। ननु विलक्षणविषयसंबन्धेनैव तज्जनकविलक्षणजन्यत्व-तज्जन्यविलक्षणजनकत्वयोरुपपत्त्योरप्रयोजकत्वमित्यत आह **न हि देवदत्तेति**। उपलक्षणं चैतत्। न हि देवदत्तसंबन्धितामात्रेण कलमाङ्कुरो यवाङ्कुरसामग्रीविलक्षणसामग्रीजन्य इत्यपि द्रष्टव्यम्। तथा चानेन यदि विलक्षणविषयसंबन्धेनैवोक्तहेत्वोरुपपत्तिः स्यात् तर्हि यवबीजतदङ्कुरविलक्षणजन्यजनके कलमाङ्कुरतद्बीजे अपि कदाचिद्यवाङ्कुरतद्बीजाभ्यां कलमाङ्कुरतद्बीजत्वरूपस्वाभाविकवैलक्षण्यं विना उपलक्षणभूतदेवदत्तादिसंबन्धित्वमात्रेण विलक्षणे स्याताम् अविशेषात् इति तर्कः सूचितो भवतीति ध्येयम्। अस्त्वेवं सत्यसर्पज्ञानस्यासर्पज्ञानात्स्वाभाविकं वैलक्षण्यम्। असत्यसर्पज्ञानस्य तु किमायातमित्यतः, सत्यतद्विषयज्ञानसदृशत्वात् असत्यसर्पज्ञानस्यापि तत्सिद्धिः, इत्यभिप्रेत्यासर्पेन्द्रियसंप्रयोगादिरूपासर्पज्ञानविलक्षणसर्पेन्द्रियसंप्रयोगादिसर्पज्ञानसामग्रीजन्यतया सत्यसर्पज्ञानस्यासर्पज्ञानात्स्वा-

भाविकवैलक्षण्यस्योक्तरीत्योपपत्तावपि, असर्पेन्द्रियसंप्रयोगादिजन्यतयाऽसर्पज्ञानजनकविलक्षणसर्पेन्द्रियसंप्रयोगाद्यजन्यस्य असत्यसर्पज्ञानस्य असर्पज्ञानान्न स्वाभाविकवैलक्षण्यम्; इत्याशङ्कां परिहरति **स चेति** । तथा च द्विविधा सर्पज्ञानसामग्री सर्पेन्द्रियसंप्रयोगादिरूपा दोषरूपा चेति । तत्रासत्यसर्पज्ञाने सर्पेन्द्रियसंप्रयोगादिरूपायास्तस्या अभावेऽपि दोषरूपायास्तस्याः सत्त्वात् असर्पज्ञानसामग्रीविलक्षणसामग्रीजन्यत्वमस्त्येवेति युक्तमेवासत्यसर्पज्ञानस्याप्यसर्पज्ञानाद्विषयोपाधिमनपेक्ष्य स्वाभाविकवैलक्षण्यम् इति भावः । उपसंहरति **अत इति** ॥ **सर्पादिज्ञानस्येति** । प्रमाभ्रमसाधारणसर्पादिज्ञानस्येत्यर्थः ॥ **किञ्चित्करत्वमिति** । भयादिजनकत्वं चेत्यर्थः । **क्वापीति** । शुक्तिरजतादौ, स्वाप्नकामिनीसंभोगादौ, रज्जुसर्पादौ चेत्येवं क्वापीत्यर्थः ।

स०— **विशेषणस्यापीति** । व्यावर्तकस्यापीत्यर्थः । **तत्रापि ज्ञानाभ्युपगमेनेति** । व्यावर्तकत्वं न व्यावृत्तिबुद्धिजनकत्वं किन्तु व्यावृत्तिबुद्धिजनकज्ञानविषयत्वम् । अतो न विषयस्य जनकताप्राप्तिरिति परिहार इत्यर्थः । **व्यावर्तकोपादानेनेति** । विषयानवच्छिन्नज्ञानमात्रस्य व्यावृत्तिबुद्धिजनकत्वेऽतिप्रसङ्गात् । तत्र विषयलक्षणव्यावर्तकोपादाने विषयस्यापि जनकत्वप्रसङ्गतादवस्थ्यमित्यर्थः । पुनस्तत्रापि ज्ञानाङ्गीकारेण परिहारे अनवस्थेति भावः । किञ्चित्यत्र विलक्षणसामग्रीजन्मनोरिति तु हेतुगर्भविशेषणम् । तथा च सर्पज्ञानम् असर्पज्ञानव्यावर्तकस्वाभाविकविशेषवत् तत्सामग्रीविलक्षणसामग्रीजन्यत्वात् परोक्षज्ञानादिवदित्यनुमानं मानमत्रेति सूचितं भवति । अनुमानान्तरमाह **अपि च सर्पज्ञानस्येति** । अनेन सर्पज्ञानमसर्पज्ञानव्यावृत्तस्वाभाविकविशेषवत् तत्कार्यविलक्षणकार्यजनकत्वात् यवबीजात्कलमबीजवत् इत्यनुमानमुक्तमिति ज्ञातव्यम् ॥ अत्र तत्कार्यविलक्षणकार्यजनकतावच्छेदकत्वेन ज्ञानगान्तःस्वाभाविकातिशयोऽङ्गीकार्य इति प्रघट्टकतात्पर्यार्थः । नन्वत्रोभयत्र विषयसम्बन्धेनैवान्यथासिद्धिरित्यत आह **न हि देवदत्तेति** । उपलक्षणं चैतत् । न हि देवदत्तसम्बन्धितामात्रेण कलमाङ्कुरो यवाङ्कुरसामग्रीविलक्षणसामग्रीजन्य इत्यपि द्रष्टव्यम् । तथा चानेन यदि विलक्षणविषयसम्बन्धेनैवोक्तहेत्वोरुपपत्तिःस्यात् तर्हि यवबीजतदङ्कुरविलक्षणजन्यजनके कलमाङ्कुरतद्बीजे अपि कदाचिद्यवाङ्कुरतद्बीजाभ्यां कलमाङ्कुरत्वतद्बीजत्वरूपस्वाभाविकवैलक्षण्यं विना उपलक्षणभूतदेवदत्तादिसम्बन्धित्वमात्रेण विलक्षणे स्यातामविशेषादिति तर्क उक्तो भवति ।

प०— शंकि(तैव के)त्वेवं केनचिदुक्तमुपलक्षणपक्षमनूद्य निराह **अत्र कश्चिदित्यादिना तादवस्थ्यमितीत्यंतेन** ॥ **व्यावर्तकत्वस्येति** । इदं सर्पज्ञानं न तु घटादिज्ञानमिति ज्ञानं प्रति सर्पादेर्व्यावर्तकत्वस्येत्यर्थः ॥ **तत्रापीति** । सर्पादेर्ज्ञानं प्रति व्यावर्तकत्वमित्यत्रापि व्यावर्तकत्वं न व्यावृत्तिबुद्धिजनकत्वं किन्तु व्यावृत्तिबुद्धिजनकज्ञानविषयत्वमित्यभ्युपगमे च ज्ञानमात्रस्य सर्पज्ञानव्यावृत्ति-

बुद्धिजनकत्वायोगेन सर्पव्याव(र्तकज्ञानज्ञानस्यै)र्त्तितज्ञानस्यैवेति वाच्यत्वाद्व्यावृत्तिबुद्धिजनकज्ञानं प्रति सर्पादेर्व्यावर्तकत्वं स्यादित्यापादनं प्राप्नोति । तथाच बाध्यस्य सर्पादेर्व्यावृत्तिबुद्धिजनकत्वरूपं व्यावर्तकत्वं स्यादित्यतिप्रसंगतादवस्थ्यमित्यर्थः । तत्रापि ज्ञानाभ्युपगमेऽनवस्थेति भावः । ननु तादृशमित्युक्तिमात्रेण कथमुक्तशंकानिरास इत्यतः सत्यसर्पज्ञाने विषयोपाधिं विना कृतस्वगतविशेषेणैव व्यावर्तकेन व्यावृत्तत्वं तावत्साधयति **सत्यसर्पज्ञानं तावदित्यादिना कार्यमुपजनयतीत्यन्तेन ॥ अत इति ।** परिशेषादित्यर्थः । एवं परिशेषेण विषयं विना कृतं ज्ञानगतमेव कञ्चिद्व्यावर्तकविशेषं समर्थ्येदानीं 'सर्पोयमिति जायमानं सत्यसर्पापरोक्षज्ञानं असर्पज्ञानाद्विषयसंबंधमनपेक्ष्य विलक्षणम् तज्जनकसामग्रीविलक्षणसामग्रीजन्यत्वात् परोक्षज्ञानादपरोक्षज्ञानवत्' इत्यनुमानेनापि तत्सिद्धिं मन्वानो दृष्टांते साध्यसाधनोपपादनपूर्वं दार्ष्टान्तिकमाह **किंचेत्यादिना ।** सामग्रीभेदेन ज्ञानानां स्वतो वैलक्षण्यं प्रसाध्य सत्यसर्पज्ञानमसर्पज्ञानात् स्वतो विशेषवत् तज्जन्यकार्यविलक्षणकार्यकारित्वात् यवबीजात्कलमबीजवदिति कार्यभेदरूपहेत्वंतरेणापि तत्सिद्धिं मन्वानो हेतोस्साध्येन विनाऽनुपपत्तिरूपव्याप्तिमुपपादयति **अपि चेति ।** ननु कार्यभेदस्य विलक्षणविषयसंबंधेनोपपत्तेरप्रयोजको हेतुरित्यत उपलक्षणविषयसंबंधेन कार्यभेदेऽतिप्रसंगं व्यतिरेकमुखेनाह **नहीति । कलमबीजान्तरेति ।** यज्ञदत्तसंबद्धेति योज्यं । अन्यथा तदपि तथा कुर्यादिति भावः । एतदुपलक्षणम् । सामग्रीरूपभेदहेतोरप्येवमप्रयोजकत्वपरिहारो ध्येयः । विवृतमेतत्प्रमेयं न्यायामृते असतः साधकत्वाभावे बाधकोद्धारवादे । नन्वस्त्वेवं सत्यसर्पज्ञाने, रज्जुसर्पज्ञाने तु कथमित्यत आह **स चायं विशेष इति ।** विषयनिरपेक्षो ज्ञानगतो व्यावर्तकरूपोऽतिशय इत्यर्थः । यत्तु यद्येवं 'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' इत्यत्र स्वाप्नपदार्थानां शुभाशुभसूचकत्वेन सत्यत्वसमर्थनं तन्नोपपद्यते (तन्न साध्वापद्यते) स्वाप्नपदार्थानामसत्यत्वेपि तदनवच्छिन्नतज्ज्ञानानामेव शुभाशुभसूचकत्वोपपत्तेरिति, चोद्यं तु तदधिकरण एव भावदीपेऽस्माभिः परिहृतं ध्येयम् । अत्रापि किंचित्स्वस्थान एव वक्ष्यामः ॥ **न तर्कमूलव्याप्तेरिति ।** 'बाध्यं नार्थक्रियाकारी'त्युक्ततर्केत्यर्थः ।

**या०— विशेषणस्यापीति ।** उपलक्षणव्यावर्तकस्यापीत्यर्थः ॥ **तत्रापि ज्ञानाभ्युपगमेनेति ।** न व्यावर्तकत्वं व्यावृत्तिबुद्धिजनकत्वं किन्तु व्यावृत्तिबुद्धिजनकज्ञानविषयत्वम् । सत्यपि दण्डादौ तदज्ञाने व्यावृत्त्यज्ञानात् । अतो न विषयस्य सर्पादेर्जनकताप्राप्तिरिति परिहार इत्यर्थः ॥ **व्यावर्तकोपादानेनेति ।** विषयानवच्छिन्नज्ञानमात्रस्य व्यावृत्तिबुद्धिजनकत्वेऽतिप्रसङ्गात्तत्र विषयलक्षणव्यावर्तकोपादाने विषयस्यापि जनकत्वप्रसङ्गतादवस्थ्यमित्यर्थः । पुनस्तत्रापि ज्ञानाङ्गीकारेण परिहारेऽनवस्थेति भावः ॥ **तादृशमिति ।** विषयसंबन्धमनपेक्ष्य स्वत एवासर्पज्ञानाद्व्यावृत्तमित्यर्थः । **तस्य संयोगादिरूपस्येति ।** द्विष्ठसम्बन्धस्येत्यर्थः । संबन्धान्तरमन्तरेण विशिष्टव्यवहारजननयोग्यं स्वरूपमेव संबन्धोऽस्त्विति

चेत् । तादृशसंबन्धरूपत्वं किं विषये उत ज्ञाने । नाद्यः तस्यातद्धर्मत्वादित्युक्तत्वात् द्वितीये तु । विषयमनन्तर्भाव्य ज्ञान एव विशेषः स्वीकृत इति किमनेनेति भावः ॥ **किञ्चेति** । अत्र विलक्षणसामग्रीजन्मनोरिति हेतुगर्भविशेषणम् । तथा च सर्पज्ञानमसर्पज्ञानाद्धर्म्यन्तरसंबन्धमनपेक्ष्य विलक्षणम् तत्सामग्रीविलक्षणसामग्रीजन्यत्वात् परोक्षज्ञानादपरोक्षज्ञानवत् इत्यनुमानं मानमत्रोक्तमिति ज्ञातव्यम् । अनुमानान्तरमाह **अपि चेति** । अनेनोक्तप्रतिज्ञायां तज्जन्यविलक्षणजनकत्वात् यवबीजात्कलमबीजवदित्यनुमानमुक्तमिति ज्ञातव्यम् । नन्वत्रोभयत्र विषयसंबन्धेनैव हेतोरुपपत्तेरप्रयोजकत्वमित्यत आह **न हि देवदत्तेति** । उपलक्षणं चैतत् । न हि देवदत्तसंबन्धितामात्रेण कलमाङ्कुरो यवाङ्कुरसामग्रीविलक्षणसामग्रीजन्य इत्यपि द्रष्टव्यम् । तथा चानेन यदि विलक्षणविषयसंबन्धेनैवोक्तहेत्वोरुपपत्तिः स्यात् तर्हि यवबीजतदङ्कुरविलक्षणजन्यजनके कलमाङ्कुरतद्बीजे अपि कदाचिद्यवाङ्कुरतद्बीजाभ्यां कलमाङ्कुरत्वतद्बीजत्वरूपस्वाभाविकवैलक्षण्यं विना उपलक्षणभूतदेवदत्तादिसंबन्धित्वमात्रेण विलक्षणे स्यातामविशेषादिति तर्क उक्तो भवतीति ज्ञातव्यम् । नन्वस्तु सत्यसर्पज्ञानेऽसर्पज्ञानव्यावृत्तिप्रयोजकः स्वाभाविको विशेषः । तस्यासर्पज्ञानसामग्रीविलक्षणया सर्पसन्निकर्षरूपया सर्पज्ञानसामग्र्या जातत्वात् । न रज्जुसर्पज्ञाने । तस्य रज्जुसन्निकर्षजन्यत्वाङ्गीकारेण सर्पसन्निकर्षरूपसर्पज्ञानसामग्रीजन्यत्वाभावात् । अतः कथं तादृशमित्युक्तमित्यत आह **स चायमिति** । तथा च सर्पज्ञानसामग्री द्विविधा सर्पसन्निकर्षरूपा दोषरूपा चेति । रज्जुसर्पज्ञाने च दोषरूपा सर्पज्ञानसामग्र्यस्त्येवेति तादृशमित्युक्तिरुपपन्नेति भावः ।

**श्री० —अप्रवेशात्** अर्थक्रियाजनकत्वाभावादिति यावत् । **कारकत्वं** पठनादिक्रियाकर्मत्वरूपम् । ततश्च विशिष्टस्य यद्भवति तद्विशेषणस्यापि भवतीति न्यायस्यात्र व्यभिचार इति हृदयम् । क्षेत्रटीकयोरिति सप्तमीद्विवचनम् ॥ **व्यावृत्तीति** । इतरव्यावृत्तिबोधमात्रेणेत्यर्थः । **चरितार्थत्वं** कुरुगुर्वोरिति शेषः । **तस्य** विषयस्य । ज्ञानधर्मत्वाभावादित्यर्थः । **संयोगादिरूपस्येति** । विषयविषयिभावस्य च तत्स्वरूपत्वेन सम्बन्धत्वाभावादिति भावः ॥ **विलक्षणार्थक्रियेति** । घटादिज्ञानविलक्षणेत्यर्थः ॥ **कलमबीजान्तरेति** । यज्ञदत्तसंबन्धीत्यर्थः । **असमीचीनया** दोषघटितया । **यत्र** ज्ञाने । **यत्र** सर्पादिरूपविषये । यदि जगदर्थक्रियाकारि स्यात्तर्ह्यबाध्यमपि स्यादिति तर्को जगदबाध्यमर्थक्रियाकारित्वादित्यनुमानरूपं च भवति ।

**च०** – द्वितीये विषयपदेन विशेष्यतापन्नं प्रकारतापन्नं वा उपादीयत इति कल्पद्वयमभिप्रेत्य क्रमेण सम्प्रति तादृग्विषयोपलक्षितज्ञानस्यैव तद्धेतुतामूरीकुर्वतः कस्यचिन्मतं प्रतिविधित्समानोऽनुवदति **अत्र कश्चिदिति** । अयमाशयः। तादृशप्रत्यासत्त्या तादृशविषयविशेषितज्ञानत्वं न भयादिजनकतावच्छेदकम् ।

येन विशिष्टहेतुताग्राहकमानेनैव विशेषणस्यापि हेतुताधिगतिः प्रसज्येत । किं तु सर्पादिनिरूपितत्वोपलक्षितविषयिताविशेषितज्ञानत्वमेव तदवच्छेदकमाद्रियते । तच्च तदजनकज्ञानव्यावृत्तं संग्राह्याखिलग्राहकं च भवत्येवेति न क्षतिः । कुरुप्रतियोगिकत्वोपलक्षितसंसर्गविशेषितक्षेत्रे निवासस्य, गुरुप्रतियोगिकत्वोपलक्षितसंसर्गविशेषितटीकायां पठनकर्मत्वस्य चोपगमे क्षेत्रटीकाविशेषणीभूतक्षेत्रान्तरटीकान्तरव्यावृत्तिप्रयोजकसंसर्गांशे यदुपलक्षणं तच्छरीरनिविष्टकुरुगुरुषु निवासाधारत्वपठनकर्मत्वयोरदर्शनादिति । **विशेषस्यापीति** । विशेषणांशे यदुपलक्षणं तस्यापीत्यर्थः । अनूदितमपहस्तयते **तदसदिति** । **एवमपि** ज्ञानजन्यार्थक्रियाया अप्रवेशेपि । **व्यावर्तकत्वस्येति** । ज्ञानविशेषणीभूतविषयितायां विषयितान्तरप्रतियोगिकव्यावृत्तिप्रयोजकत्वस्य तदुपलक्षणशरीरनिविष्टसर्पादौ क्षेत्रान्तरटीकान्तरसंसर्गव्यावृत्तिप्रयोजकत्वस्य तदुपलक्षणीभूतकुरुगुरुप्रतियोगिकत्वनिविष्टकुरुगुरुषु प्रसङ्गादिति भावः । **व्यावर्तकोपादानेनेति** । विषयाविशेषितज्ञानत्वेन व्यावृत्तिधीजनकत्वे घटादिज्ञानस्यापि तदापत्त्या तद्विशेषितज्ञानत्वेनैव तद्धेतुत्वस्याभिधातव्यतया विषयस्य ज्ञानांशे विशेषणत्वोपगमे तद्विशेषणीभूतविषयांशेपि तद्धेतुत्वाऽऽपत्त्या तस्य तत्रोपलक्षणत्वे च विषयस्य व्यावृत्तिधीजनकत्वरूपव्यावर्तकत्वस्योपेतव्यतापत्तिरित्यर्थः । **तत्रापि ज्ञानाभ्युपगमेनेति** । सर्पादिज्ञानमेव व्यावृत्तिधीजनकं न तु सर्पादिर्विषय इत्युपगमेपि ज्ञानांशे व्यावर्तकविषयस्योपादेयतया विषयस्य । व्यावर्तकत्वप्रसङ्गतादवस्थ्यमिति भावः । **तादृशमिति** । सत्यसर्पोल्लेखिज्ञानसदृशमित्यर्थः । सादृश्यं च विषयतत्संसर्गानियन्त्रितं यद्घटज्ञानादिप्रतियोगिकव्यावृत्तिमत्वं तेन रूपेणेत्यवसेयम् । **तस्य** विषयस्य **अतद्धर्मत्वात्** ज्ञानधर्मत्वाभावात् । **अन्यथा** व्यावृत्त्यसमानाधिकरणस्यापि व्यावृत्तिप्रयोजकत्वे । **अतिप्रसङ्गात्** पटत्वस्यापि घटादौ दण्डादिव्यावृत्तिप्रयोजकत्वापातात् । **तस्य** विषयसम्बन्धस्य । **संयोगमिति** । आदिपदं समवायसंग्राहकम् । प्रतियोग्यनुयोगिनोर्द्रव्यत्वे हि संयोगस्तयोर्गुणगुण्यादित्वे हि समवायस्ताद्रूप्याभावान्नान्यतरदिति भावः । **ज्ञानगत एव धर्म इति** । अत्र कतिपये व्याकर्तारस्तादृशधर्मस्य विषयतालक्षणत्वमप्यभ्युपयन्ति ज्ञानमात्रसाधारणविषयितात्वावच्छिन्नस्याव्यावर्तकतया सर्पादिविषयकत्वस्य च किञ्चिन्निष्ठविषयतानिरूपितत्वघटितमूर्तिकतया तन्मते विषयोपाधिना विनेत्यग्रिमफक्किकासङ्गमनप्रकारो भावनीयः ।

सर्पज्ञानधर्मिकासर्पज्ञानवृत्तिविषयत्वसंसर्गनियन्त्रितविलक्षणधर्मवत्तासाध्यकं तत्सामग्रीविलक्षणसामग्रीजन्यत्वहेतुकं परोक्षापरोक्षज्ञाननिदर्शनकमनुमानमभिप्रेत्य तेन तादृशधर्मं सिषाधयिषति **किञ्चेति** । तथा च विलक्षणसामग्रीजन्यतावच्छेदकतया सिद्धो जातिविशेष एव विषयाघटितो ज्ञानान्तरव्यावर्तक इति भावः । सर्पज्ञाननिष्ठविलक्षणार्थक्रियाजनकता किञ्चिद्धर्मावच्छिन्ना जनकतात्वात् दण्डनिष्ठ-

जनकतावत् इत्यनुमानेनापि तादृशविशेषमनुमिमीते **अपि चेति**। एवं च तादृशक्रियाजनकताऽवच्छेदकतया सिद्धोऽखण्डधर्मविशेष एव ज्ञानान्तरव्यावृत्तिप्रत्यायक इति भावः। अनुमानद्वयेपि विषयसम्बन्धनियन्त्रितहेतूपपत्त्याऽप्रयोजकतां वारयति **न हि देवदत्तेति**। **सामग्र्या जात इति**। सामग्रीजन्यतावच्छेदक इत्यर्थः। विलक्षणार्थक्रियाजनकतावच्छेदकश्चेत्यपि द्रष्टव्यम्। **बीजान्तरकार्यविलक्षणम्**। यवबीजकार्यविलक्षणम्। तथा च विषयसम्बन्धस्योक्तहेतूपपादकत्वोपगमेऽवैशेष्यात् देवदत्तसम्बन्धस्यापि यवबीजकार्यविलक्षणकार्यजनकत्वापत्तिलक्षणतर्कोऽनेन ध्वन्यते।

**सु० — नन्वर्थक्रियाकारित्वं यथा विपक्षान्मिथ्याभूताद्व्यावृत्तम्, एवं सपक्षाद्ब्रह्मणोऽपि व्यावृत्तत्वादसाधारणम्। न च ज्ञानस्य सत्यस्यार्थक्रियोक्तेति वाच्यम्, तस्यापि प्रपञ्चान्तर्भावेन विप्रतिपन्नत्वादित्यत आह** ब्रह्म त्विति।

**अनु० —** ब्रह्म त्वर्थक्रियाकारि परतः स्वत एव वा॥
अङ्गीकृतं हि तेनैव

**तेन मायावादिनैव ब्रह्म प्रपञ्चादप्यतिशयेनार्थक्रियाकार्यङ्गीकृतमेव हि जन्मादिसूत्रे जगत्कारणत्वेनोक्तत्वात्। अतः सपक्षप्रवेशित्वान्नासाधारण्यं मन्तव्यम्।**

**ननु मयाऽङ्गीक्रियमाणं ब्रह्मणोऽर्थक्रियाकारित्वं च न स्वाभाविकम्। किन्तु परत एव। मायायां तदाप(यत्तमि)तत इत्यङ्गीकारात्। अतः कथमापादकस्य सपक्षप्रवेश इत्यत आह** परत इति।

**अङ्गीकृतं तावदर्थक्रियाकारित्वं ब्रह्मणः, तत्स्वतः परतो वाऽस्तु किमनेन प्रकृतानुपयुक्तेन। न हि स्वतोऽर्थक्रियाकारित्वमापादकत्वेनास्माभिरभिहितम्, परेण वा प्रस्तावितम्। अन्यथा सामान्यतः प्रयुक्तस्य धूमादेर्विशेषाकारेण सपक्षाप्रवेशितयाऽसाधारण्य(ण)स्य वक्तुं शक्यत्वेन तद्भङ्गः स्यात्।**

**शे० विपक्षान्मिथ्याभूतादिति**। साध्यस्थानापन्नाबाध्यत्वरूपापाद्याभाववत्त्वेन निश्चितत्वाच्छुक्तिरजतादेर्विपक्षत्वम्। चिदात्मनस्तु साध्यस्थानापन्नाबाध्यत्वरूपापाद्यवत्तया निश्चितत्वात्सपक्षत्वमिति ध्येयम्॥ **ब्रह्मणो व्यावृत्तत्वादिति**। ब्रह्मणः क्रियावेशशून्यत्वेनार्थक्रियाकारित्वाभावादिति भावः॥ **असाधारणमिति**। सत्याच्चिदात्मनो व्यावृत्तस्यार्थक्रियाकारित्वस्य योगाद्वियदादिकं मिथ्या वा मिथ्याभूताच्छुक्तिरजतादेर्व्यावृत्तार्थक्रियाकारित्वयोगात्सत्यं वेति संशयाधायकतयाऽर्थक्रियाकारित्वस्य तत्सत्यत्वनिश्चायकत्वं न स्यादित्यर्थः। ननु साधनस्य न सकलसपक्षप्रवेशनियमः। तथा

सत्यतादृग्रूपस्य धूमस्याप्यसाधारण्यप्रसङ्गात् । किन्तु यत्किञ्चित्सपक्षवृत्तित्वमपि । ततश्चार्थक्रियाकारित्वस्य सत्ये चिदात्मन्यवृत्तावप्युक्तरीत्याऽसत्ये सर्पभ्रमादिरूपे ज्ञाने वृत्तेर्नासाधारण्यमिति शङ्कते **न चेति** । **प्रपञ्चान्तर्गतत्वेन** वियदादिरूपप्रपञ्चान्तर्गतत्वेन ॥ **विप्रतिपन्नत्वादिति** । सत्यत्वमिथ्यात्वाभ्यां विप्रतिपन्नत्वादित्यर्थः । तथा च विप्रतिपत्तिविषयतया पक्षत्वेन न सपक्षत्वं ज्ञानस्येति यत्किञ्चित्सपक्षवृत्तित्वमपि नेति भावः ॥ **प्रपञ्चादप्यतिशयेनेति** । अनेन ब्रह्म त्वित्यत्र तुशब्दो विशेषार्थ इत्युक्तं भवति । कथमतिशय इत्यत आह **जगत्कारणत्वेनोक्तत्वादिति** । सूत्रे इति श्रुतेरप्युपलक्षणम् ॥ **सपक्षप्रवेशित्वादिति** । सत्येऽपि ब्रह्मण्यर्थक्रियाकारित्वरूपस्यापादकस्य वृत्तेरिति भावः ॥ **न स्वाभाविकमिति** । ब्रह्मणो निर्विकारत्वेन सतो जगत्कारणत्वायोगादित्यर्थः । किंरूपं तर्हि कारणत्वं ब्रह्मणः श्रुतिसूत्रयोरभिमतमिति पृच्छति **किन्त्विति** । मायावशादेव ब्रह्मणो जगत्कारणत्वात्तदभिप्रायकं श्रुत्यादिकमित्याशयेन परिहरति ॥ **परत एवेति** । नन्वेवमपि निर्विकारत्वश्रुत्यादिविरोध इत्यत आह **मायायां तदापतत इति** । केवलस्य ब्रह्मणोऽकारणत्वान्मायोपरागादेव कारणत्वात्प्राप्ताप्राप्तविवेकेन ब्रह्मकारणत्वोक्तेर्मायाकारणत्व एव पर्यवसानमित्यर्थः । मायोपरक्तस्य विकारित्वेऽप्यनुपरक्तस्य निर्विकारत्वेन तद्विषयकत्वाच्छ्रुत्यादेर्न तद्विरोध इति भावः ॥ **अत इति** । ब्रह्मणः परतोऽर्थक्रियाकारित्वेऽपि स्वतोऽर्थक्रियाकारित्वाभावादित्यर्थः ॥ **अङ्गीकृतं तावदिति** । यद्यपि मायायां तदापतत इति ग्रन्थपर्यालोचनया

मायाया एव कारणत्वं ब्रह्मणस्तु तदाश्रयत्वात्कारणत्वोपचार इत्येव पराभिप्रायः प्रतीयत इति न ब्रह्मणोऽर्थक्रियाकारित्वस्याङ्गीकृतत्वोक्तिर्युक्ता । तथाऽपि परत इत्येतत्स्वारस्यानुसारेणैवमुक्तम् । पराभिप्रेतार्थवर्णनं च पराशयमुद्घाट्योत्तरत्र दूषयिष्यतीति ध्येयम् ॥ **अभिहितमिति** । 'व्यावहारिकता चास्ये'त्यत्रेति शेषः । अभिहितस्य चार्थक्रियाकारित्वमात्रस्य ब्रह्मण्यपि सद्भावान्न सपक्षाप्रवेश इति भावः । **ननु** चात्र सामान्यस्यैवापादकत्वोक्तावपि सामान्योक्तेरुपक्रमानुसारेण विशेषपरत्वेन स्वतोऽर्थक्रियाकारित्वस्यैवापादकतया पर्यवसानान्न सपक्षप्रवेश इत्यतः स्यादेतदेवं यद्यत्र विशेषपरत्वनिर्णायकमुपक्रमादिकं किञ्चित्स्यात् । न चैतदस्तीत्याह **परेण वेति** । विशेषस्यापादकत्वेनानुक्तावपि सामान्योक्तेर्विशेषपरत्वनिर्णायकप्रस्तावाद्यभावेऽपि विशेषपरत्वमङ्गीकृत्य सपक्षाप्रवेशवादिनोऽनिष्टमाह **अन्यथेति** ॥ **विशेषाकारेणेति** । धूमस्य महानसे सत्त्वेऽपि पर्वतीयधूमस्य तत्राभावादित्यर्थः ।

प० — **अर्थक्रियाकारित्वमिति** । 'व्यावहारिकता चास्य स्यादबाध्यत्व एव ही'त्यत्रोक्तम् । यद्यर्थक्रियाकारित्वरूपव्यावहारिकत्वं चाङ्गीक्रियते प्रपञ्चस्य, तर्ह्यबाध्योप्यङ्गीक्रियेतेत्यत्रोक्तमापादकमिति योज्यम् । सपक्षान्तरे हेतुसत्त्वमाशङ्क्य निराह **न च ज्ञानस्येति** । तुशब्दार्थोऽतिशयेनेति ॥ **धूमादेर्विशेषाकारेणेति** । पर्वतादिदेशविशेषसम्बन्धत्वादिरूपेणेत्यर्थः ।

श्री०— अत्रासाधारण्यमाशङ्कते **नन्विति**। ननु सर्वसपक्षवृत्तित्वं नापेक्षितम्, तथात्वे धूमानुमानस्याप्यसाधारण्यप्राप्तेः किंतु क्वचित्सपक्षे वृत्तित्वं; तदस्तीति नासाधारण्यमिति शङ्कते **न चेति**। **आपादकस्य** अर्थक्रियाकारित्वरूपहेतोः। अन्यथा भूर्नित्या गन्धवत्त्वादित्यत्रापि मायिकस्य गन्धवत्त्वस्य यथाकथंचिद्गगनेऽपि वक्तुं शक्यत्वादसाधारण्यं न स्यात्। तस्मात्साक्षात्सम्बन्धेन गन्धवत्त्वाभावान्नासाधारण्यमिति वाच्यम्। तद्वत्प्रकृतेऽप्यर्थक्रियाकारित्वस्यापि ब्रह्मणि मायाऽऽयत्तत्वाङ्गीकारान्नासाधारण्यमिति हृदयम्।

सु०— **स्यादेतत्। ब्रह्मणोऽर्थक्रियाकारित्वं परत इत्यस्य नायमर्थः दारुयन्त्रस्येव पराधीनमिति, नापि कुलालस्येव प्रयोजनाद्यपेक्षमिति; किन्तु गगने मलिनतेव निष्क्रिय एव ब्रह्मणि मायासम्बन्धादर्थक्रिया(दि) अवभासत इति। न चैवंविधेन सपक्षप्रवेशो भवत्यापादकस्येत्यत** आह परतस्त्व इति।

परतस्त्वे न च प्रमा ॥

**ब्रह्मणोऽर्थक्रियाकारित्वस्येति शेषः। परतस्त्वे निरूपितरूपे। प्रमा प्रमाणम्।**

शे०— 'परतस्त्वे न च प्रमे'ति ब्रह्मणोऽर्थक्रियाकारित्वस्य कल्पितत्वनिराकरणमनर्थकमित्यतः परतो जगत्कारणत्वमिति शङ्कित्रभिसन्धिनिराकरणार्थं तदिति भावेन तावदभिसन्धिकल्पनप्रयोजनं दर्शयन्नेवाभिसन्धिमुद्घाटयति **स्यादेतदिति**। ब्रह्मणोऽर्थक्रियाकारित्वस्य कल्पितत्वे प्रमाणाभावस्यानेनाभिधानात्कथमनेनोक्तशङ्कापरिहार इत्यतस्तदुपपत्तयेऽपेक्षितं शेषं पूरयति **ब्रह्मण इति**। कल्पितत्वे प्रमाणाभावे वक्तव्ये किमेतदसङ्गतमुच्यते 'परतस्त्वे न च प्रमे'तीत्यतः प्रकृतोपयोगितया परतस्त्वशब्दं व्याचष्टे **निरूपितरूप इति**। कल्पितत्वरूप इत्यर्थः।

प०— **दारुयन्त्रस्येवेति**। सूत्रेण चेष्टमानदारुप्रतिमाया इवेत्यर्थः।

या०— **निरूपित इति**। मायाकल्पित इत्यर्थः। एवमग्रेऽपि।

श्री०— **एवंविधेन** यथाकथंचिद्ध्रियमानेन, प्रकृते च मायिकार्थक्रियाकारित्वेन ब्रह्मण्यङ्गीकृतेन निमित्तेन। **निरूपितरूपे** मायिकत्वरूपे।

सु०— **अयमत्राशयः। ब्रह्मणो जगन्निर्माणाद्यर्थक्रिया प्रतीता न वा। न चेत्कथं लक्षणत्वेनोच्यते। कस्य च मायामयत्वमङ्गीक्रियते। प्रतीतत्वेऽपि न तावत्प्रत्यक्षानुमानाभ्याम्। तदगोचरत्वात्। अतः श्रुत्यैवेति वक्तव्यम्। तथा च कथं मायिकत्वम्। तत्किं श्रुतिप्रतीतं सर्वमेव सत्यम्। अद्धा। बाधकाभावे तु तथैव। न चैवं ब्रह्मणोऽर्थक्रियायाः**

**परतस्त्वे प्रमाणमस्ति यद्बाधकं भवेत् । बाधकाभावमात्रेण कथं सत्यार्थत्वमिति चेत् । प्रामाण्यस्य स्वतस्त्वादिति ब्रूमः । परतस्त्वे च प्रामाण्यस्यानवस्थापातेन न प्रमा निश्चीयेत । सन्ति 'निष्कलं निष्क्रियमि'त्यादिश्रुतयो बाधिका इति चेत् । एवं श्रुतिबलेन परस्त्वेऽर्थक्रियायाः स्वीकृते तदभिधात्री 'स इदं सर्वमसृजते'त्यादिश्रुतिर्न प्रमा स्यात् । प्रतिपादितार्थमिथ्यात्वातिरिक्तस्याप्रामाण्यस्याभावात् । किञ्चाविशेषा'न्निष्कलं निष्क्रियमि'ति श्रुतिरेतच्छ्रुतिविरोधात्परतस्त्वे न प्रमेति किं न स्यात् । अन्यदुत्तरत्र वक्ष्याम इति ।**

शे० — ननु भाष्यकारीयं कल्पितत्वे प्रमाणाभाववर्णनमनर्थकम् । न चाकल्पितत्वसिद्ध्यर्थं तदिति वाच्यम् । साधकसहकृतबाधकाभावस्यैव वस्तुव्यवस्थापकत्वेन बाधकाभावमात्रस्य वस्तुतत्त्वाव्यवस्थापकत्वात् । अन्यथा कुत्रापि साधकस्यावक्तव्यत्वापातात् । न च ब्रह्मणोऽर्थक्रियाकारित्वस्याकल्पितत्वे प्रमाणमस्ति । भावे वा तस्यापि वक्तव्यतया तदनुक्तिरनुपपन्नैव । निष्क्रियत्वबोधकस्य 'निष्कलं निष्क्रियं शान्तमि'त्यादेरेव बाधकत्वान्न बाधकाभावोऽपि इत्यतोऽर्थक्रियाकारित्वस्य कल्पितत्ववादिना तद्बोधकस्याङ्गीकृतत्वात्तस्यैव तत्साधकत्वोपपत्तौ न पृथक् साधकमवश्यं वक्तव्यमित्याशयेनैव साधकानुक्तिर्भाष्यकाराणां, न तु बाधकाभावमात्रस्यैव साधकत्वाभिप्राय इति नोक्तदोष इत्याशयेन भाष्याभिप्रायमाह **अयमाशय इति** । **तदगोचरत्वादिति** । शास्त्रयोनित्वादिति सूत्रे जगत्कारणत्वस्य शास्त्रैकसमधिगम्यत्ववर्णनेन प्रत्यक्षाद्यगोचरत्वादित्यर्थः । तर्ह्येतावतैवामायिकत्वसिद्धेः किमिति बाधकाभाववर्णनमित्यतस्तन्निवर्त्यां शङ्कामुत्थापयति **तत्किमिति** । तत्त्वमस्यादिवाक्यप्रतीततया जीवेश्वरैक्यस्याप्यमायिकत्वप्रसङ्गादिति भावः । भवेदेतद्यदि श्रुतिजनितप्रतीतिमात्रं वस्तुव्यवस्थापकतयोच्येत । न चैवम् । किन्तु बाधकाभावसहकृतमेव । न च जीवेश्वरैक्ये तदस्ति । अत एव भाष्ये विपरीतप्रमाणाभाववर्णनमित्याशयेनाह **अद्धेति** । तर्हि ब्रह्मणोऽर्थक्रियाकारित्वस्यापि श्रुतिप्रतीतस्य कथममायिकत्वमित्यतो बाधकाभावादित्याशयेन मूलं योजयति **न चेति** । अकल्पितत्वबोधकप्रमाणविशेषाभावे, कल्पितत्वबोधकप्रमाणाभावसहकृतकर्तृत्वमात्रबोधकवाक्यमात्रेण कथं सत्यत्वसिद्धिरित्याशङ्कते **बाधकाभावमात्रेणेति** । स्वतस्त्वोपपादकत्वेनापीदमेव वाक्यमपेक्षिताध्याहारं दर्शयन्नेव योजयति **परतस्त्वे चेति** । ननु न प्रामाण्यस्य स्वतस्त्वं नियतं किन्त्वौत्सर्गिकमेव । तथा च बाधकादपवादोपपत्तेः कथमकल्पितत्वसाधकत्वमर्थक्रियाकारित्वस्येति शङ्कते **सन्तीति** । एतच्छङ्कापरिहारत्वेनापेक्षिताध्याहारप्रदर्शनपूर्वकं तर्कपरत्वमाश्रित्य भाष्यं व्याचष्टे **एवमिति** । इष्टापत्तिमाशङ्क्यापेक्षिताध्याहारप्रदर्शनपूर्वकं प्रकारान्तरेण व्याचष्टे **किञ्चेति** । ननु 'स इदमसृजते'ति सृष्टिश्रुतेर्व्यावहारिकविषयत्वान्निष्क्रियत्वश्रुतेश्च पारमार्थिकविषयत्वादविशेषासिद्धेर्निष्कलमिति श्रुतिविरोधात्'स इदमि'त्यस्या एवाप्रामाण्यं

न तु 'स इदमि'ति श्रुतिविरोधेन 'निष्कलमि'त्यस्याः परतत्त्व इति निश्चीयत इत्यतः स्यादेतदेवं यदि श्रुतिद्वयस्योक्तरीत्या व्यावहारिकपारमार्थिकविषयत्वं भवेत् । न चैतदस्तीत्याह **अन्यदिति** । यद्वा श्रुतित्वाविशेषेऽपि 'निष्कलं निष्क्रियमि'ति श्रुतिर्बाधिकैव न बाध्या, निष्प्रपञ्चात्मज्ञानसाध्या-द्वितीयताऽऽपत्तिरूपपुरुषार्थानुकूलत्वेन स्वार्थे तात्पर्यवत्त्वात् । 'स इदं सर्वमसृजते'त्यादिश्रुतिस्तु बाध्यैव । तस्या उक्तपुरुषार्थविरोधित्वेन स्वार्थे तात्पर्याभावादित्यत आह **अन्यदुत्तरत्रेति** । 'विश्वं सत्यं यच्चिकेत प्रधान्वस्य यथार्थतः' इत्युत्तरग्रन्थव्याख्यानावसरे सत्यजगन्निर्मातृत्वादिपारमेश्वर-माहात्म्यज्ञानस्यैव पुरुषार्थहेतुत्वं न निष्प्रपञ्चाऽऽत्मज्ञानस्येति वक्ष्याम इत्यर्थः । यद्वा 'स इदं सर्वम-सृजते'ति श्रुत्या जगत्कर्तृत्वमनूद्य 'निष्कल'मित्यादिश्रुत्या निषिध्यतेऽतः कथमेतद्विरोधेन तस्या अप्रामाण्यमित्यत आह **अन्यदिति** ।

स० — **किं चाविशेषान्निष्कलमिति** । साक्षिसिद्धप्रामाण्यकत्वाविशेषादित्यर्थः । ननूभय-प्रामाण्यस्य साक्षिसिद्धत्वेपि 'स इदं सर्वमसृजते'त्यादिश्रुतिप्रामाण्यं साक्षी तत्कालिकमेव गृह्णाति, सर्वस्य मिथ्यात्वेन तत्कर्तृत्वस्यापि मिथ्यात्वात् । 'निष्कलं निष्क्रियमि'त्यादिश्रुतिप्रामाण्यं त्वौत्पत्तिकमेव गृह्णाति सत्यभूतब्रह्मप्रतिपादकत्वात् । अतः कथं 'स इदं सर्वमि'त्यादिश्रुतिविरोधेन 'निष्कलं निष्क्रियमि'त्यादिश्रुत्यप्रामाण्यमित्यत आह **अन्यदुत्तरत्र वक्ष्याम इति** । ब्रह्मसत्यत्ववत् विश्वसत्यत्व-मपि प्रामाणिकमिति 'विश्वं सत्यं यच्चिकेते'त्याद्यनुव्याख्याव्याख्याऽवसरे वक्ष्यामः । अतः 'स इदं सर्वमसृजते'त्यादिश्रुतेरपि तत्त्वावेदकत्वाद्बाधकतोपपत्तिरिति भावः । अन्यथा 'अन्यथा श्रुतियुक्त्यादि-प्रमाणैश्च सहैव तु । अकस्माद्विनिवृत्तिश्च किं विश्वस्य न शङ्क्यते' इति विपक्षे बाधकं च वक्ष्याम इति । यद्वा ननु प्रामाण्यस्य स्वतस्त्वात् यदि ब्रह्मार्थक्रियायाः सत्यत्वं तर्हि शुक्तिरजतादेरपि सत्यत्वं स्यात् । तत्रापि ज्ञानग्राहकस्य साक्षिणः तत्प्रामाण्यग्राहकत्वस्वाभाव्यात् । न च तत्र प्रामाण्याभावा-देवाग्रहणम् । अर्थक्रियाज्ञानेऽपि सामान्यादित्यत आह **अन्यदिति** । 'अतोऽदोषप्रतीतस्य सत्यत्वं साक्षिणा मतम् । परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेदि'त्येतद्व्याख्यावसरे सम्यगेतदाशङ्कानिवर्तकमुत्तरं वक्ष्याम इत्यर्थः । अथवा ननु 'स इदं सर्वमसृजते'त्यादिश्रुतेरनुवादकत्वेन दुर्बलत्वात् अन्यस्याश्च निषेधकत्वेन प्राबल्याद्युक्तः तया तस्या बाध इत्यत आह **अन्यदिति** ॥ 'अप्राप्तां भ्रान्तिमापाद्य' इत्या-दिनेति शेषः । सर्वकर्तृत्वादेः मिथ्याभूतपरसापेक्षत्वेन मिथ्यात्वात् तस्या अप्रामाण्यं भविष्यतीत्यतो वाह **अन्यदिति** । 'अन्यापेक्षा यदि स्युष्टे'इत्यादिनेति शेषः ।

प० — कथमनेनोक्तशङ्कानिरास इत्यत आह **अयमाशय इति** । शङ्कते, **तत्किमिति** । उत्तरमाह **अद्धेति** । बाधकाभावे श्रुतिप्रतीतं सर्वमेव सत्यमित्येतत्सत्यमित्यर्थः । 'अद्धा प्रत्यक्ष(सत्ययो)-

सिद्धयो'रित्यभिधानात् । 'परतस्त्वे न च प्रमे'त्येतद्योजयति **नचेति** । तदेव वाक्यमाकाङ्क्षितपदाध्याहारेण प्रकृतोपयोगितया प्रकारान्तरेण योजयति **परतस्त्वे च प्रामाण्यस्येत्यादिना** । शङ्कते **सन्तीति** । **निष्कलं** षोडशकलात्मकदेहशून्यम् । तदेव मूलम् अपेक्षितशेषपूर्त्या प्रकारान्तरेण योजयति **एवं श्रुतिबलेन परतस्त्व इति** । तदेव वाक्यं प्रकारान्तरेणापि योजयति **किंचाविशेषादिति** । नन्वविशेषादित्ययुक्तम् । 'स इदं सर्वमि'त्यादेरनुवादकत्वेन दुर्बलत्वान्निष्कलमित्यादेर्निषेधकत्वेन प्रबलत्वादित्यत आह **अन्यदिति** । 'अप्राप्तां भ्रान्तिमापाद्य किं चेशे ( वेदो ) मानतां व्रजेदि'त्यादिना । तथा यदि मायिकं मिथ्याभूतं कारणत्वं ब्रह्मणो वेदो वदेत् तर्ह्यप्रमाणं स्यादित्यादि 'मिथ्याधर्मविधातुश्च वेदस्यैवाप्रमाणते'त्यनेन । तथा कारणत्वादेर्मिथ्यात्वे शास्त्रवेद्यतैव न स्यादित्यादि च 'सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते' इत्यादिना । तथा विश्वकर्तृत्वादेर्मिथ्याभूतविश्वसापेक्षत्वेन मिथ्यात्वात् तच्छ्रुतेरेव अमानत्वं युक्तमित्येतन्निराकरणमपि 'अन्यापेक्षा यदि स्युः' इत्यादिना भक्तिपादे वक्ष्याम इत्यर्थः । ननु मया किमपि नाङ्गीक्रियते, ब्रह्मणो विश्वकर्तृत्वादिकं पररीत्यैव, अतः कथं तेनैवाङ्गीकृतम्; इत्यादिचोद्यनिरसनमप्यनुपदं वक्ष्याम इत्यर्थः ।

**या०** — अर्थक्रियाया यत्र परतस्त्वमुच्यते तत्र मायिकत्वमेव परतस्त्वशब्देन ग्राह्यम् । परतस्त्वे च प्रामाण्यस्येत्यत्र तु स्वाश्रयग्राहकातिरिक्तग्राह्यत्वं परतस्त्वशब्दार्थ इति ज्ञातव्यम् । ननु श्रुतित्वाविशेषेऽपि 'निष्कलं निष्क्रियमि'त्यादिश्रुतिर्बाधिकैव न बाध्या । निष्प्रपञ्चात्मज्ञानसाध्याद्वितीयताऽऽपत्तिरूपपुरुषार्थानुकूलत्वेन स्वार्थे तात्पर्यवत्त्वात् । 'स इदं सर्वमसृजत'श्रुत्यादिश्रुतिस्तु बाध्यैव । तस्या उक्तपुरुषार्थविरोधित्वेन स्वार्थे तात्पर्याभावादित्यत आह **अन्यदुत्तरत्रेति** । 'विश्वं सत्यं यच्चिकेत प्र घा न्वस्य यथार्थतः' इत्यनुव्याख्यानव्याख्यानावसरे सत्यजगन्निर्मातृत्वादिपारमेश्वरमाहात्म्यज्ञानस्यैव पुरुषार्थहेतुत्वं न निष्प्रपञ्चात्मज्ञानस्येति वक्ष्याम इत्यर्थः ।

**श्री०** — शङ्कते **तत्किमिति** । अद्वेत्युत्तरम् । **तथैव** सत्यमेव । **परतस्त्वे** मायिकत्वे । शङ्कते **बाधकेति** । श्रुतेरिति शेषः । **सत्यार्थत्वं** सत्यार्थप्रतिपादकत्वम् । प्रमा प्रामाण्यं । न निश्चीयेत अनवस्थापत्तेरित्यन्वयः । 'न च ब्रह्मण' इत्युक्तं न सिद्धमिति शङ्कते **सतीति** । सत्यभूत इत्यर्थः । अर्थक्रियानर्ह इति यावत् । अर्थक्रियाकारित्वेऽङ्गीकृत इति शेषः । **परतस्त्वे** मायिकत्वरूपमिथ्यात्वे ॥ **तदिति** । अर्थक्रियेत्यर्थः ॥ **एतदिति** । अर्थक्रियाभिधात्री 'इदं सर्वमि'ति श्रुतीत्यर्थः । **परतस्त्वे** मायिकत्वरूपेऽर्थे ।

**च०** — **अन्यदुत्तरत्रेति** । 'विश्वं सत्यं यच्चिकेत प्र घा न्वस्य यथार्थतः' इति मौलप्रतीकव्याख्याऽवसरे सत्यजगन्निर्मातृत्वादिपारमेश्वरमाहात्म्यज्ञानस्यैव पुरुषार्थहेतुत्वं न निष्प्रपञ्चात्मज्ञानस्येत्यभिधास्याम इत्यर्थः ।

सु० — नन्वरत्वबाध्यमेवार्थक्रियाकारि प्रपञ्चमप्यबाध्यमङ्गीकरोमि । आत्यन्तिकाबाध्यत्वाभावेऽपि प्राग्ब्रह्मात्मैक्यज्ञानादबाध्यत्वात् । अतस्तदन्तर्गता श्रुतिरप्यमुख्यसत्यत्वात्साधिका भविष्यतीत्यत आह अमुख्येति ।

अनु० — अमुख्यसत्यमानस्य साधकत्वे सदाऽऽन्वयोः ॥
न हि सम्प्रतिपत्तिः स्यादतस्तिष्ठतु सा(ऽ)प्रमा ॥

सदा इत्य(नेन)स्य प्रमेयस्य प्रागेवोपपादितत्वमित्याचष्टे । ततश्च पुनरुक्तिदोषः परिहृतो भवति । तिष्ठतु न वक्तव्येति यावत् । सा प्रमा ब्रह्मज्ञानबाध्यं प्रमाणमित्यर्थः । यस्मात्सा श्रुतिरप्रमा तस्मात्तिष्ठत्विति वा । प्रपञ्चमिथ्यात्वं हि तदर्थः । न चासौ ब्रह्मस्वरूपम् । सोपाधिकत्वात् । ततोऽस्य बाध्यत्वमावश्यकम् । बाध्यार्थं चाप्रमाणमिति प्रसिद्धमेव । बाध्यार्थत्वेऽपि प्राग्ब्रह्मज्ञानादबाध्यार्थत्वेन प्रामाण्यमस्त्वित्यत उक्तम् अमुख्येति । सत्यमबाध्यार्थम् । न हि कालविलम्बेन बाधितार्थं प्रमाणं भवतीति वक्ष्यामः ।

अस्त्वेवं स्वरूपतो विषयतश्चासत्यत्वात्साधकत्वेन विप्रतिपन्ना श्रुतिः, तथाऽपि प्रपञ्चमिथ्यात्वसाधनाय तदुपन्यासः कुतो न कार्यः, इत्यत आह न हीति ।

न हि विप्रतिपन्नेन शक्यं साधयितुं क्वचित् ॥

तथात्वे स्वरूपासिद्धकालातीतयोरप्युपन्यासः स्यात । आरोपमात्रस्य तत्राऽपि सुलभत्वादिति भावः ।

शे० — संप्रतिपत्त्यभाववचनेनैव अमुख्यसत्यमानस्य साधकत्वाभावस्य सिद्धेस्तस्य सार्वकालिकत्वबोधकस्य सदेत्यस्य न वैय्यर्थ्यमित्याशयेन तत्तात्पर्यमाह सदेत्यनेनेति ॥ प्रागेवेति । 'मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः' इत्यादिनेत्यर्थः । किं प्रागुपपादितत्ववचनस्य प्रयोजनमित्यत आह ततश्चेति । उक्तस्मारणार्थत्वान्न पुनरुक्तिरिति भावः । एवममुख्यसत्यमानस्येत्येतत्स्वरूपतोऽसत्यस्येत्यभिप्रेत्य योजितम् । अर्थतोऽसत्यस्येत्यप्यर्थमभिप्रेत्य योजयति यस्मादिति । अप्रमेत्युक्तं बाध्यार्थत्वमेवोपपादयति प्रपञ्चेति ॥ न चासाविति । प्रपञ्चमिथ्यात्वरूपोऽर्थः इत्यर्थः ॥ सोपाधिकत्वादिति । उपलक्षणं चैतत् । ब्रह्मणो निरुपाधिकत्वादित्यपि द्रष्टव्यम् ॥ आवश्यकमिति । ब्रह्मातिरिक्तस्य सत्त्वेऽद्वैतहानिप्रसङ्गादिति भावः । पूर्वयोजनायामिवैतद्योजनायाममुख्यसत्यमानस्येत्यत्र सत्यत्वस्याबाध्यत्वरूपस्य विवक्षाऽयोगाद्योग्यं सत्यशब्दार्थमाह सत्यमबाध्यार्थमिति । वक्ष्यामः 'दीर्घभ्रान्तिकरी चेत्स्यादतत्त्वावेदकप्रमा । रज्जुसर्पादिविज्ञानादप्याधिक्यादमानता । स्यादागमस्यानिवर्त्यमहामोहप्रदत्वतः' इत्यादिना

चतुर्थस्य द्वितीय इति शेषः ॥ **तथात्व इति** । स्वरूपतो विषयतश्चासत्यस्यापि साधनायोपन्यास इत्यर्थः ॥ **आरोपमात्रस्येति** । स्वरूपारोपमात्रस्यार्थारोपमात्रस्य चेत्यर्थः ।

**स०— वक्ष्याम इति** ॥ 'दीर्घभ्रान्तिकरी चेदि'त्यादिनेति शेषः । **स्वरूपासिद्धकालातीतयोरपीति** । स्वरूपतः असत्यत्वे स्वरूपासिद्धस्य अर्थतः असत्यत्वे कालातीतस्य दृष्टान्तत्वमिति ध्येयम् ।

**प०** — एवमियता ग्रन्थेन बाध्यं नार्थक्रियाकारीत्येतत्समर्थ्य नेहनानेति श्रुतेर्न सर्वमिथ्यात्वबोधजनकत्वमित्युक्तम् । इदानीमस्त्वबाध्यमेवार्थक्रियाकारि श्रुतिरप्यबाध्यैवेति शङ्कित्वा तदपि निरस्यति **नन्विति** ॥ **प्रागेवेति** । 'व्यवहारसतश्चापि साधकत्वं तु पूर्ववत्' इत्यादिना जिज्ञासानय एवेत्यर्थः । **ततश्चेति** । स्मारणमात्रस्यात्र क्रियमाणत्वादित्यर्थः । अप्रमेति विच्छिद्यार्थमाह **यस्मादिति** । कुतो 'नेह नाने'ति श्रुतिरप्रमेत्यत आह **प्रपञ्चेति** ॥ **सोपाधिकत्वादिति** । प्रतिपन्नोपाधिस्थत्रैकालिकनिषेधप्रतियोगित्व(मात्र)सदसद्विलक्षणत्वादिरूपत्वान्मिथ्यात्वस्येति भावः ॥ **ततोऽस्येति** । ब्रह्मस्वरूपत्वायोगेनातिरिक्तत्वस्य वाच्यत्वादस्य ब्रह्मभिन्नस्य मिथ्यात्वस्य बाध्यत्वमावश्यकम् । अन्यथा सदद्वैतभङ्गापत्तेरिति भावः । बाध्यार्थमिति बहुव्रीहिः ॥ **इति वक्ष्याम इति** । 'प्रामाण्यस्य च मर्यादा कालतो व्याहता भवेदि'त्यादिना भक्तिपादे । तथैकान्तिपादे च 'दीर्घभ्रान्तिकरी चेत्स्यादि'त्यादिना चेति भावः ॥ **स्वरूपासिद्धकालातीतयोरपीति** । अत्र नेह नानेतिश्रुतौ स्वरूपतोऽर्थतश्चासत्यत्वं प्रकृतमिति स्वरूपासिद्धकालातीतयोरित्युक्तम् ॥ **तत्रापीति** । असिद्धादिहेतुप्रयोगस्थले हेतुस्वरूपारोपस्य विषयारोपस्य च सम्भवादित्यर्थः ।

**या०— प्रागेवेति** । 'मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः' इत्यत्रेत्यर्थः । एवममुख्यसत्यमानस्येत्येतत्स्वरूपतोऽसत्यस्येत्याशयेन योजयित्वाऽर्थतोऽसत्यस्येत्याशयेनापि योजयति **यस्मात्सा श्रुतिरिति** । अप्रमा बाध्यार्था । बाध्यार्थत्वमेवोपपादयति **प्रपञ्चमिथ्यात्वमित्यादिना** । अस्मिन्व्याख्याने 'अमुख्यस्य' इत्यत्र विवक्षितं सत्यशब्दार्थं दर्शयति **सत्यमबाध्यार्थमिति** । न तु पूर्वमिवाबाध्यम् । तथा चामुख्याबाध्यार्थमानस्येत्युक्तं भवति ॥ **वक्ष्याम इति** । 'रज्जुसर्पादिविज्ञानादप्याधिक्यादमानता । स्यादागमस्यानिवर्त्यमहामोहप्रदत्वतः' इत्येतद्व्याख्यावसर इति शेषः ॥ **आरोपमात्रस्येति** । स्वरूपारोपमात्रस्यार्थारोपमात्रस्य वेत्यर्थः ।

**श्री०— श्रुतिः** 'नेह नाने'त्यादिका । **साधिका** । पूर्वोक्तस्य वियदादिप्रपञ्चस्य भ्रान्तिकल्पितत्वरूपार्थस्य ॥ **मदेतीति** । मिथ्याभूतस्य साधकत्वप्रमेये आवयोः संप्रतिपत्तिः सर्वदा नास्त्येव । अतस्त्वया पुनःपुनस्तदेवाशङ्क्यते । तच्च न सम्भवतीति 'मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः' इत्यनेनास्माभिः प्रागेवोपपादितं हि यस्मात्तस्मात्सा प्रमा तिष्ठत्वित्यर्थः ॥ **ततश्चेति** । दूषित-

त्वात्तन्न वाच्यमिति पूर्वोक्तस्मरणार्थत्वादित्यर्थः । ननु कथं श्रुतेरप्रामाण्यमित्यतो बाध्यार्थकत्वादित्याह **प्रपञ्चेति** । तदर्थः श्रुत्यर्थः । असौ मिथ्यात्वम् । प्रतिपन्नोपाधौ त्रैकालिकनिषेधरूपत्वेन मिथ्यात्वस्य सोपाधिकत्वं ज्ञेयम् । ब्रह्मणस्तु निरुपाधिकत्वेन तयोरैक्यं विरुद्धमिति भावः । अस्य मिथ्यात्वरूपार्थस्य ॥ **तथात्व इति** । यदि स्वरूपतो विषयतश्चासत्यमपि साधनायोपन्यस्यते तर्हीत्यर्थः ॥ **स्वरूपासिद्धकालातीतयोरिति** । चाक्षुषत्वरूपहेतोः शब्दे स्वरूपत एवासत्त्वात् । वन्हिरनुष्ण इत्यत्र बाधस्थले विषयस्यानुष्णत्वस्यासत्वादित्यर्थः । प्रकृते तु साम्यादनयोरेव ग्रहणम् । न तु विरुद्धानैकान्तिकयोरिति ध्येयम् ॥ **उपन्यास इति** । साधकत्वेनेति शेषः ॥ ननु तत्र विप्रतिपत्तिरेव नास्ति । असाधकत्वेनैवोभयसंप्रतिपत्तेरित्यत आह **आरोपेति** । अमुख्यप्रामाण्यमारोप्य तेन साधकत्वारोपस्येत्यर्थः । **तत्रापि** असिद्धादिस्थलेऽपि । वक्तुमिति शेषः । ततश्च प्राप्ता विप्रतिपत्तिरिति भावः ।

**सु० — स्यादेतत् । आस्तामियं प्रमाणमदसत्त्वचिन्ता । प्रमाणेनैव प्रमेयसिद्धेः । अन्यथा भवतामपि प्रपञ्चमिथ्यात्वनिराकरणे तत्सत्यत्वसाधने च प्रमाणाभावेन कथाऽभावप्रसङ्गात् । युष्माभिरुपन्यस्यमानं प्रमाणं सत्यमसत्यं वा स्यात् । न तावत्सत्यं मां प्रति वक्तुमुचितम् मया सत्यस्य साधकत्वानङ्गीकारात्, यत्सत्यं न तत्र क्रियाऽऽवेशः यत्र च क्रियाऽऽवेशो न तत्सत्यमिति । न च वाच्यं साक्षिणः सत्यस्य साधकत्वं त्वयाङ्गीकृतमिति । कथञ्चित्सुखादौ तस्य शक्योपन्यासत्वेऽपि बाह्यप्रपञ्चे तदयोगात् । बाह्यप्रमाणविषयो ह्यसौ । अन्यथाऽन्धबधिराद्यभावप्रसङ्गात् । स एव चात्र प्रकृत इति । नाप्यसत्यं भवद्भिरनङ्गीकृतत्वादित्यत आह** साधकत्वमिति ।

**अनु० —** साधकत्वं तु सत्यस्य साक्षिणो ह्यावयोर्द्वयोः ॥
सम्यक्सम्प्रतिपन्नं तन्न विवर्तमतं भवेत् ॥

**सत्यस्य त्विति सम्बन्धः । सम्यगिति मुख्यत एव, न त्वधिकरणसिद्धान्तत्वेन । हिशब्दः, सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एवेत्यादितत्प्रसिद्धिद्योतकः । तदित्यव्ययम् । तेन साक्षिणा । विश्वविवर्तमतं न भवेत् । निराकुर्म इति यावत् । उपलक्षणं चैतत् । विश्वस्य सत्यतामपि तेनैव साधयाम इत्यपि द्रष्टव्यम् । तथा च वक्ष्यते ।**

शे० — ननु 'साधकत्वं तु सत्यस्ये'त्यादिभाष्ये वादिप्रतिवादिसंबन्धितत्साधकत्वाङ्गीकारव्युत्पादनमसङ्गतं फलाभावात् । न च मिथ्याभूतस्य साधकत्वाभावे सत्यस्यापि तन्न स्यादिति प्रतिबन्दीमोचनं तत्प्रयोजनमिति वाच्यम् । मूलाभावेन परस्य सतः साधकत्वानङ्गीकाराद्ययोगात् । योगे वा

प्रत्यक्षादेः साधकत्वेनास्माभिरनुपन्यस्तत्वेन सिद्धान्तिनं प्रति प्रतिबन्द्या अनुत्थानात्प्रयोजनविशेषाभावेन प्रतिबन्दीग्रहणस्य व्यर्थत्वाच्चेत्यतः, कथाऽभावप्रसङ्गपरिहारार्थं सत्त्वासत्त्वौदासीन्येन प्रमाणेनैव कथा-प्रवृत्तेरुभाभ्यामपि स्वीकार्यतया मिथ्यात्वसाधकतया श्रुत्याद्युपन्यासो ममाप्युपपन्न एवेति परेण शङ्किते; स्वोपन्यस्तप्रमाणस्योभयसिद्धसाधकभावतया प्रमाणसदसत्त्वविचारपूर्वककथाप्रवृत्तावपि न स्वस्य काऽपि क्षतिरित्याशयेन भाष्यकृता स्वप्रमाणस्योभयसिद्धसाधकभावः प्रदर्श्यत इति नासङ्गतिरित्यभिप्रेत्य कथा-ऽभावप्रसङ्गव्युत्पादनपूर्वकमुत्तरभाष्यं योजयति **स्यादेतदिति** । कथाऽभावप्रसङ्गादित्युक्तं तदभावप्रसङ्गमेव विशदयति **युष्माभिरिति** । अनङ्गीकारमूलप्रदर्शनं **यदिति** ॥ **साधकत्वमिति** । भावरूपाज्ञानसाधक-त्वमित्यर्थः । **सुखादाविति** । असाधारणप्रपञ्च इत्यर्थः । अविद्यावृत्तिप्रतिबिम्बितचैतन्यस्यैव साक्षि-त्वात्तस्य च मिथ्यात्वान्न सतः क्वापि साधकत्वमिति भावेन कथञ्चिदित्युक्तम् ॥ **बाह्यप्रपञ्च इति** । साधारणप्रपञ्च इत्यर्थः ॥ **बाह्येति** । प्रत्यक्षादिप्रमाणजन्यमनोवृत्तिविषयत्वात्साधारणप्रपञ्चस्येत्यर्थः । कुतः साधारणप्रपञ्चस्य बाह्यप्रमाणविषयत्वम्, सुखादिवद्रूप्यादिवच्च साक्षिवेद्यत्वमेव किं न स्यादित्यत आह **अन्यथेति** । अन्धबधिरादेरपि साक्षिणैव रूपादिग्रहणोपपत्तेरिति भावः । अस्तु बाह्यप्रमाण-विषये प्रपञ्चे साक्षिणोऽनुपन्यसनीयत्वं, साक्षिवेद्ये सुखादिप्रपञ्चे साक्षिणा सत्यत्वसाधनं मिथ्यात्वनिराकरणं च कर्तुं शक्यत एवेति न कथाऽभावप्रसङ्गः; इत्यतोऽत्र श्रुत्यादिरूपप्रमाणविषयबाह्यप्रपञ्चस्यैव प्रस्तु-तत्वात्तस्य च सत्यस्य साधकत्वानङ्गीकारात् सत्यत्वे साधकत्वं न स्यादिति प्रसङ्गो युक्त एवेति भावेनाह **स एव चेति** । ननु बाह्याबाह्यसाधारणप्रपञ्चमात्रस्य कथं साक्षिणैव सत्यत्वसाधनं मिथ्यात्वनिराकरणं चेत्यत आह **तथा चेति** ॥ **वक्ष्यत इति** । 'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितमि'त्यादिनेति शेषः ।

स० - **बाह्यप्रमाणविषयो ह्यसाविति** । प्रत्यक्षादिप्रमाणजन्यमनोवृत्तिविषयः प्रपञ्च इत्यर्थः । **अन्यथाऽन्धबधिरेति** । रूपादिबाह्यप्रपञ्चस्यापि साक्षात्साक्षिवेद्यत्वे अन्धबधिराद्यभावप्रसङ्गः तेषामपि साक्षिसद्भावेन तेन रूपादिग्रहणोपपत्तेरिति भावः ॥ **स एव चात्रेति** ॥ बाह्यप्रपञ्च एवेत्यर्थः । **तथा च वक्ष्यत इति** । 'सत्यत्वं गगनादेश्चे'त्यत्रेति शेषः ।

प०— उत्तरवाक्यमवतारयितुमाह **स्यादेतदिति** ॥ **मयेति** । न तत्सत्यमिति वदता मयेति योज्यम् । क्रियाऽऽवेशः क्रियानिष्पत्त्यनुकूलव्यापारवत्त्वम् । 'साधकत्वं सतस्तेने'ति जिज्ञासानयोक्त्या पौनरुक्त्यनिरासायाभ्यधिकाशङ्कां वक्तुमाह **न च वाच्यमिति** । **अन्यथेति** । बाह्यप्रपञ्चस्यापि साक्षि-विषयत्वोपगम इत्यर्थः । अन्धादेरपि साक्षिणा हि रूपवत्पदार्थादिधीसंभवादिति भावः ॥ **स एव चेति** । बाह्यप्रपञ्च एव । **अत्र प्रकृतिनये** । 'ब्रह्म विश्वात्मना मृषा'इत्यादिना प्रकृत इत्यर्थः । **नाप्यसत्यमिति** ।

युष्माभिरुपन्यस्तं प्रमाणमित्यन्वेति ॥ **न त्वधिकरणसिद्धान्तत्वेनेति** । कस्मिंश्चिदर्थे सिद्ध्यति, अर्थात्सिद्धं ह्यधिकरणसिद्धान्तत्वेन सिद्धम् । यथा क्षित्यादिकं सकर्तृकमिति कार्यत्वहेतुना क्षित्यादिकर्तृसिद्धौ सार्वज्ञमर्थात्तस्य सिध्यति । एवमर्थसिद्धत्वेन संप्रतिपन्नं नेत्यर्थः । **ज्ञाततयेत्यादि** । वृत्तिरूपज्ञानविषयतया भावरूपाज्ञानविषयतया चेत्यर्थः ॥ **तथा च वक्ष्यत इति** । अत्रोपलक्षणतया गृहीते सति 'सत्यत्वं गगनादेश्च'इत्यादिनाऽत्रैवाग्रे तद्विविच्य वक्ष्यत इत्यर्थः ।

**या०　क्रियाऽऽवेश इति** । क्रियाजनकत्वरूपं कारकत्वमित्यर्थः । अविद्यावृत्त्यवच्छिन्नचैतन्यरूपस्य साक्षिणोऽपि वस्तुतो मिथ्यात्वमेवेत्याशयेन कथञ्चिदित्युक्तम् ॥ **बाह्यप्रमाणेति** । प्रत्यक्षादिप्रमाणजन्यमनोवृत्तिविषयः प्रपञ्च इत्यर्थः ॥ **अन्यथाऽन्धेति** । रूपादिबाह्यप्रपञ्चस्यापि साक्षात्साक्षिवेद्यत्वेऽन्धबधिराद्यभावप्रसङ्गः । तेषामपि साक्षिसद्भावेन तेनैव रूपादिग्रहणोपपत्तेरिति भावः । ननु साक्षिविषयभूते सुखाद्यान्तरप्रपञ्च एव मया मिथ्यात्वनिराकरणं सत्यत्वसाधनं वा कर्तुं शक्यत इत्यत आह ॥ **तथा चेति** । 'सत्यत्वं गगनादेश्चे'त्यत्र सर्वस्यापि विश्वस्य सत्यत्वं क्वचित्साक्षात्क्वचित्परम्परया साक्षिणा सिद्धमिति वक्ष्यत इत्यर्थः ।

**श्री०— प्रमाणेनैवेति** । उदासीनसदसत्ताकप्रमाणेनैवेत्यर्थः । **क्रियाऽऽवेशः** अर्थक्रियाकारित्वरूप । साधकत्वमपि सिद्धिजननरूपार्थक्रियाकारित्वरूपमेवेति व्याप्तेः प्रकृते पर्यवसानमिति हृदयम् । **तदयोगात्** साधकत्वेनानुपङ्क्तियेत्यर्थः ॥ **ज्ञाततयाऽज्ञाततया वेत्यादि** । साक्षात् साक्षिविषयीभूतज्ञानावच्छेदकत्वेनेत्यर्थः । तथा च बाह्यप्रपञ्चे तदयोगादित्युक्तं युक्तमिति हृदयम् । **तत्प्रसिद्धीति** । साक्षिणस्तत्तद्वस्त्ववच्छिन्नाज्ञानादिसाधकत्वं मायिनः सम्मतमित्यर्थः । तदित्यस्याव्ययत्वे लब्धमर्थमाह **तेनेति** ।

**च०— क्रियाऽऽवेशः** क्रियानुकूलत्वरूपकारकत्वम् । **वक्ष्यत इति** । 'सत्यत्वं गगनादेश्च'इत्यत्र निखिलस्यापि प्रपञ्चस्य सत्यत्वं कचित्साक्षात्कचित्पारम्पर्येण साक्षिणा सिद्धमित्यभिधास्यत इत्यर्थः ।

**सु०— न कापि प्रमाणप्रमेयादिव्यवस्था मयाङ्गीकृता । किन्तु परकीयरीत्यैव सर्वमुच्यते । तत्कथं किमप्यनङ्गीकुर्वाणं मां प्रति साक्षिणः साधकत्वं त्वयाऽङ्गीकृतमित्युच्यत इत्यत** आह यदीति ।

**अनु०—** यदि नाङ्गीकृतं किञ्चिदनङ्गीकृतताऽपि हि ॥
नाङ्गीकृतेति मूकः स्यादिति नास्मद्विवादिता ॥

न विद्यतेऽङ्गीकृतमङ्गीकारो यस्येत्यनङ्गीकृतः । तस्य भावोऽनङ्गीकृतता । अनङ्गीकारित्वमित्यर्थः । इतिशब्दद्वयं हेतौ । यदि परो ब्रूयान्मया किञ्चिन्नाङ्गीकृतमिति । तदाऽसौ वक्तव्यः । सर्वथाऽनङ्गीकृतत्वम् आत्मनस्त्वयाऽङ्गीकृतं न वा । आद्ये(ऽपि) किञ्चिदपि नाङ्गीकृतमिति पक्षहानेः आत्मनोऽनङ्गीकर्तृताऽपि नाङ्गीकृतेति द्वितीय एवाङ्गीकरणीयः । तथा च असौ मूकः स्यात् । अङ्गीकारानङ्गीकारोदासीनस्य मृतकस्येव वाक्यप्रवृत्तेरयुक्तत्वात् । तथा च मौनमवलम्बमानस्य नास्मत्प्रतिवादितेति किमत्र वक्तव्यम् ॥ सत्यमेतत् । वस्तुतस्तु वयं सर्वतो निवृत्ताः स्वतःसिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भारमवलम्ब्य चरितार्थाः सुखमास्महे । ये तु स्वपरिकल्पितसाधनदूषणादिव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान्प्रति ब्रूमो न साध्वीयं भवतां विचारव्यवस्थेति । मैवम् । एवमपि परकीयविचारव्यवस्थितेरसाधुत्वस्यावश्यमङ्गीकरणीयत्वात् । अन्यथा तद्व्युत्पादनं व्यर्थं स्यात् ।

अथ तन्मात्रमङ्गीकृत्य प्रमाणादिव्यवस्था नाङ्गीकृतेति मन्यसे । तन्न । प्रमाणादिना विना परव्यवस्थाया असाधुत्वस्य व्युत्पादयितुमशक्यत्वात् । भवत्कल्पितव्यवस्थयैव व्याहतत्वादसाध्वी भवद्व्यवस्थेति ब्रूमो न पुनरत्र किमपि प्रमाणमङ्कुर्म इति चेन्न, यत्स्वाभ्युपगतव्यवस्थाविरुद्धं तदमाधित्यस्यापि प्रमाणस्याङ्गीकर्तव्यत्वात् । एतदपि परेणाभ्युपगतमेवाश्रीयत इति चेत् न । किं परकीयव्यवस्थाया असाधुत्वं स्वयमवबुद्ध्य परं प्रति बोध्यतेऽनवबुद्ध्यैव वा । द्वितीये विप्रलम्भकत्वं स्यात् । विजिगीषुकथायामेवमेवेति चेत् न । शिष्यस्यापि बोद्धव्यत्वात् । आद्येऽस्मादन्यस्माद्वा प्रमाणात्स्वयं बोद्धव्यम् । तत्कथं प्रमाणाद्यनङ्गीकर्तृत्वम् । प्रमितिकरणत्वादिनोपादानस्यैव प्रमाणाद्यङ्गीकारित्वात् । तस्मात् सत्त्वासत्त्वा(सत्यत्वासत्यत्वा)-भ्युपगमोदासीनैः प्रमाणादिकमङ्गीकृत्योच्यत इति वक्तव्यम् । तच्च प्रागेव निरस्तमिति ।

१ शे० — ननु भाष्ये 'यदि नाङ्गीकृतम्' इति प्रमाणादिव्यवस्थाऽनङ्गीकारित्वमाशङ्क्य निराक्रियते । तदयुक्तम् । परेणापि प्रमाणविशेषेण प्रमेयविशेषं साधयता प्रमाणादिव्यवस्थाया अङ्गीकारात् । अन्यथा तदयोगात् । फलाभावेनानङ्गीकारित्वस्यानाशङ्कनीयत्वाच्चेत्यतोऽनङ्गीकारिणोऽपि तत्तत्पक्षसाधनमुपपादयन्प्रमाणादिव्यवस्थाऽनङ्गीकारप्रयोजनं च दर्शयन्नेवानङ्गीकारित्वशङ्कामुत्थापयति **न काऽपीति** । अङ्गीक्रियत इत्यङ्गीकृतमिति कर्मव्युत्पन्नाङ्गीकृतशब्दस्याङ्गीकारविषयप्रमेयपरत्वादनङ्गीकृतशब्देन प्रमेयविशेषाभावलाभेऽपि न मूकत्वोपपादकस्याङ्गीकाराभावास्य लाभः इति तल्लाभाय भावे क्तम् अभिप्रेत्यानङ्गीकृतमित्यस्यार्थमाह **न विद्यतेऽङ्गीकृतमङ्गीकार इत्यादि** । ननु भाष्यकारीयं मायावादिनः स्वं प्रति प्रतिवादित्वाभाववर्णनमयुक्तम् । तत्र हेत्वनुक्तेः । न च मूकः स्यादित्यनेन मूकत्वं

तत्र हेतुरुक्त इति वाच्यम् । हेतुत्वसूचकाभावेन तस्य तत्र हेतुत्वायोगात् । इतिशब्दस्यैव तत्सूचकत्वाभिप्रायेऽपि च न तस्य हेतुत्वम् । वचनप्रवृत्तेः प्रत्यक्षेणोपलब्ध्याऽसिद्धत्वात् । न चानङ्गीकृतत्वस्यानङ्गीकृतत्वेन तत्सिद्धिः । तस्यापि हेतुत्वसूचकाभावेन तत्र हेतुत्वायोगात् । भावेऽपि वा तदसिद्ध्या हेतुत्वानुपपत्तिरेव । न चानङ्गीकृतत्वेनानङ्गीकृतत्वस्याप्यनङ्गीकृतत्वसिद्धिः । प्रमाणप्रमेयादिव्यवस्थामनङ्गीकुर्वताऽनङ्गीकृतत्वमपि नाङ्गीकर्तव्यमित्यत्र नियामकाभावात् । कथञ्चित्तत्सिद्धावपि न मूकत्वसिद्धिः । न ह्यमूकत्वमङ्गीकारित्वं येनानङ्गीकर्तुस्तद्विरुद्धं स्यात् । किन्तु वचनक्रियाकर्तृत्वमेव । तच्चानङ्गीकारिणोप्युपपद्यत इति न तेन तत्सिद्धिरित्यतोऽत्र भाष्येऽभिप्रेतहेतुहेतुमद्भावोपपादनपूर्वकं भाष्यं योजयति **यदीत्यादिना** । अङ्गीकारानङ्गीकारोदासीनस्यापि वाक्प्रवृत्तिमाशङ्कते **सत्यमेतदिति** ॥ **सर्वतो निवृत्ता इति** । अङ्गीकारानङ्गीकाररहिता इत्यर्थः । नन्वेवमङ्गीकारानङ्गीकारोदासीनत्वे सकलप्रवृत्तिविलयापत्त्या मृतकस्येवावस्थानमेव दुर्लभमित्यत उक्तं स्वतः सिद्ध इत्यादि । **अङ्गीकरणीयत्वादिति** । तथा च किञ्चिदपि नाङ्गीकृतमिति पक्षहानिरिति भावः । परकीयविचारव्यवस्थितेः असाधुत्वस्याप्यनङ्गीकारान्न तत्पक्षहानिरित्यत आह **अन्यथेति** ।

ननु किञ्चिदपि मया नाङ्गीकृतमिति न मत्पक्षः, येन परकीयविचारव्यवस्थितेरसाधुत्वाङ्गीकारे तद्धानिः स्यात् । (न चैवम् ?) किं नाम प्रमाणादिव्यवस्था नाङ्गीकृतेत्येव मत्पक्षः । तथा च परकीयव्यवस्थाया असाधुत्वाङ्गीकारेऽपि न तत्पक्षहानिरित्याशङ्कते **अथेति** । यद्यप्यत्र परकीयव्यवस्थाऽसाधुत्वस्यापि प्रमेयत्वात्तदङ्गीकारे प्रमाणादिव्यवस्था नाङ्गीकृतेति पक्षहानिरेव । तथाऽपि प्रमाणव्यवस्थामात्रानङ्गीकाराभिप्रायेणापि परेण स्वपक्षनिष्कर्षस्य वक्तुं शक्यत्वात्प्रमेयाङ्गीकारप्रयुक्ततत्पक्षहानिमनुद्भाव्य प्रमाणाङ्गीकारप्रयुक्ततत्पक्षहानिमेवोद्भावयति **तन्नेति** ॥ **अशक्यत्वादिति** । 'मानाधीना मेयसिद्धिरि'तिन्यायेन प्रमेयसिद्धेः प्रमाणाधीनत्वव्यवस्थित्या, परकीयविचारव्यवस्थितेरसाधुत्वरूपप्रमेयस्यापि प्रमाणाधीनत्वसिद्धिकत्वेन प्रमाणेन विना व्युत्पादनानुपपत्त्या परकीयव्यस्थितेरसाधुत्वं व्युत्पादयता तदसाधुत्वव्युत्पादकप्रमाणस्यावश्यमङ्गीकार्यत्वेन मया प्रमाणादिव्यवस्था नाङ्गीकृतेति पक्षहानिरेवेति भावः। स्यादेतदेवं यदि स्वाभ्युपगतव्यवस्थाविरोधेन परकीयप्रमाणादिविचारव्यवस्थाया असाधुत्वं व्युत्पाद्येत । न चैतदस्ति । पराभ्युपगतव्यवस्थाविरोधेन परकीयप्रमाणादिविचारव्यवस्थाया असाधुत्वस्योच्यमानत्वात् । तथा च तदसाधुत्वव्युत्पादकप्रमाणस्य स्वयमनङ्गीकारान्न पक्षहानिरिति भावेन शङ्कते **भवदिति** । साधनदूषणादिव्यवस्थयेत्यर्थः । यदि साधनं स्वविषयव्यवस्थापकं, दूषणं तु तदभावव्यवस्थापकमिति व्यवस्थाऽङ्गीक्रियते, तर्हि दृश्यत्वादिसाधनमपि स्वविषयीभूतविश्वमिथ्यात्वव्यवस्थापकं स्यात् । विश्वसत्यत्वसाधकेषु प्रमाणदृष्टत्वाद्यनुमानेष्वसिद्धत्वादिदूषणमपि तत्सत्यत्वाभावव्यवस्थापकं स्यादिति

भवत्कल्पितव्यवस्थयैव विरोधादसाध्वी विचारव्यवस्थेति भावः । तदभ्युपगतव्यवस्थाविरुद्धत्वेन तद्व्यवस्थाया असाधुत्वं व्युत्पादयता, तन्मूलभूता यत्स्वाभ्युपगतविरुद्धं तदसाध्विति व्याप्तिः स्वयमङ्गीक्रियते न वेति विकल्पं मनसि निधायाद्यं दूषयति **न यदिति** । तथा चोक्तव्याप्तिरूपप्रमाणस्यानङ्गीकारे मूलशैथिल्येनासाधुत्वव्युत्पादनानुपपत्तिप्रसक्त्या व्याप्तिरूपप्रमाणाङ्गीकारेऽवश्यं वक्तव्ये उक्तपक्षहानिरेवेति भावः । यत्स्वाभ्युपगतव्यवस्थाविरुद्धं तदसाध्विति व्याप्तिरूपप्रमाणमपि न स्वयमभ्युपगम्यते, किन्तु पराभ्युपगतमेव स्वाभ्युपगतव्यवस्थाविरुद्धत्वेन परकीयव्यवस्थाया असाधुत्वव्युत्पादनप्रयोजकतयोच्यते, इत्यतो न तद्व्युत्पादनानुपपत्तिर्नापि पक्षहानिरिति भावेन द्वितीयं पक्षमाशङ्कते **एतदपीति** ॥ **शिष्यस्यापीति** । अन्यथा महावाक्यार्थाधिगमाभावप्रसङ्गात् । चतुर्भिश्च प्रकारैर्विद्या उपयुक्ता भवतीति व्याख्यानस्यापि वाक्यार्थाधिगतिहेतुत्वेन प्रसिद्धत्वादिति भावः ॥ **अस्मादिति** । स्वाभ्युपगतव्यवस्थाविरुद्धत्वरूपप्रमाणादित्यर्थः । **अन्यस्मात्** उदाहृतप्रमाणादन्यस्माद्वेत्यर्थः ॥ **बोद्धव्यमिति** । परकीयव्यवस्थाया असाधुत्वमिति शेषः । अस्त्वेवमस्मादन्यस्माद्वा प्रमाणात्परकीयव्यवस्थाया असाधुत्वावगमः, तावताऽप्यसाधुत्वं स्वयमवबुद्ध्य परं प्रति बोध्यत इत्याद्यपक्षस्य तु किं दूषणमित्यतस्तथा सति प्रमाणाद्यङ्गीकारापत्त्या पक्षहानिरेवेत्यभिप्रेत्य कथमेतावता प्रमाणाद्यङ्गीकारप्रसक्तिरित्यतस्तामुपपादयति **तत्कथमित्यादिना** ॥ **तस्मादिति** । सर्वथा प्रमाणाद्यनङ्गीकारस्योक्तरीत्या व्याहतत्वादित्यर्थः ॥ **इत्येव वक्तव्यमिति** । गत्यन्तराभावादिति भावः । अस्तु तर्हि तथैवोच्यत इत्यत आह **तच्चेति** ॥ **प्रागेवेति** । आद्यसूत्रे खण्डनमतनिरासावसर इत्यर्थः ॥ **निरस्तमिति** । अनिर्वचनीयत्वस्य निरस्तत्वात् तृतीयप्रकारासिद्ध्या सत्त्वासत्त्वे विहाय प्रमाणस्वरूपस्य बुद्धावारोपयितुमशक्यत्वेनोदासीनस्य तत्स्वीकारानुपपत्तेरिति निरस्तमित्यर्थः ॥

स० — **भवत्कल्पितव्यवस्थयैवेति** ॥ यदि प्रमाणं प्रत्यक्षादिकं स्वस्वप्रमेयव्यवस्थापकमिति व्यवस्थाऽङ्गीक्रियते तर्हि 'नेह नानास्ति किञ्चन' 'विमतं मिथ्या दृश्यत्वादि'त्याद्यपि प्रमाणं स्वार्थव्यवस्थापकं स्यात् । तथा चैतद्विरोधादसाध्वी असत्या प्रमाणप्रमेयादिव्यवस्थेति ब्रूम इत्यर्थः ॥ **अस्मादिति** । यत्स्वाभ्युपगतव्यवस्थाविरुद्धं तदसाध्वित्यस्मादित्यर्थः । **तच्च प्रागेव निरस्तमिति** । प्रथमाधिकरणे 'अनङ्गीकुर्वतां विश्वसत्यतां तन्न वादिता' इत्येतद्व्याख्यावसरे खण्डनखण्डने 'सत्त्वासत्त्वे विहाय प्रमाणस्वरूपस्य बुद्धावारोपयितुमशक्यत्वेनोदासीनस्य तत्स्वीकारानुपपत्तेरि'त्यादिना निरस्तमित्यर्थः ।

प० — शङ्कते **भवत्कल्पितेति** । सत्येनैव प्रमाणेन प्रमेयसिद्धिरिति भवत्कल्पितव्यवस्थयैव भवद्व्यवस्था न साध्वीति ब्रूमः । कुतः व्याहतत्वात् । मां प्रति सत्त्वासत्त्वौदासीन्येन प्रमाणेनैव प्रमेयसिद्धिरित्युपेत्यैव प्रपञ्चसत्यत्वादिसाधनस्य कार्यत्वेन व्याघातादित्यर्थः । यद्वा किमप्यनङ्गीकुर्वाणं मां

प्रति साक्षिणस्साधकत्वं त्वयाङ्गीकृतमित्युक्ते व्याहतत्वात्सत्येनैव मानेन प्रमेयसिद्धिरिति भवद्व्यवस्थया प्रपञ्चसत्यत्वादिरूपभवद्व्यवस्था न साध्वीति ब्रूम इत्यर्थः ॥ **यदिति ।** प्रपञ्चसत्यत्वादिकं स्वाभ्युपगत-प्रपञ्चमिथ्यात्वव्यवस्थाविरुद्धमित्यर्थः ॥ **इत्यस्यापीति ।** एतद्वाक्यरूपप्रमाणस्येत्यर्थः । अन्यथा तदर्थस्यासिद्धेरिति भावः ॥ **एतदपीति ।** उक्तरूपवाक्यं प्रमाणमित्येतदपीत्यर्थः ॥ **अस्मादिति ।** यत् स्वाभ्युपगतव्यवस्थाविरुद्धं तदसाधु इत्युक्तरूपवाक्यादित्यर्थः । प्रामाण्यादीत्यादिपदेन प्रमाणभूत-वाक्यार्थावबोधाद्यनङ्गीकर्तृत्वमिति गृह्यते ॥ **प्रमितिकरणत्वादिनेति ।** प्रमितिकरणत्वेनोपादानं प्रामाण्याङ्गीकारित्वं, तज्जन्यज्ञानत्वेनोपादानं प्रमित्यङ्गीकारित्वं, तद्विषयत्वेनोपादानं ह्यर्थस्याङ्गीकारित्व-मित्यर्थः ॥ **प्रागेव निरस्तमिति ।** 'अनङ्गीकुर्वतां विश्वसत्यतां तत्र वादिते'ति जिज्ञासानयानुव्याख्या-सुधायां खण्डनोक्तनिरासप्रस्तावे 'सत्त्वासत्त्वे विहाय प्रमाणस्वरूपस्य बुद्धावारोपयितुमशक्यत्वेने'त्यादिना निरस्तमित्यर्थः ॥

**ब्रह्मविवर्तत्वनिरासः ।**

**या० — भवत्कल्पितव्यवस्थयैवेति ।** साधनदूषणादिव्यवस्थयेत्यर्थः । तथा च यदि साधनं स्वविषयव्यवस्थापकं दूषणं तु तदभावसंपादकमिति व्यवस्थाऽङ्गीक्रियते तदा दृश्यत्वादिसाधनमपि स्वविष-यीभूतविश्वमिथ्यात्वव्यवस्थापकं स्यात् । विश्वसत्यत्वसाधकेषु प्रमाणादृष्टत्वाद्यनुमानेष्वसिद्ध्यादिदूषणमपि तत्सत्यत्वाभावसंपादकं स्यादिति भवत्कल्पितव्यवस्थयैव विरोधादसाध्वी असत्या विचारव्यवस्थेति भावः । **तच्च प्रागेव निरस्तमिति ।** प्रथमाधिकरणे'अनङ्गीकुर्वतां विश्वसत्यतां तत्र वादिते'त्येतद्व्याख्यावसरे 'सत्त्वासत्त्वे विहाय प्रमाणस्वरूपस्य बुद्धावारोपयितुमशक्यत्वेनोदासीनस्य तत्स्वीकारानुपपत्तेः' इत्यादिना निरस्तमित्यर्थः ।

**श्री०** — अत्रानङ्गीकृतता आत्मनो यदि नाङ्गीकृता तर्हि मूकः स्यादिति तर्केण आपाद्यापादकयोः पुरुषनिष्ठतया भाव्यम् । अत्र त्वापाद्यस्य पुरुषनिष्ठत्वेऽप्यापादके आत्मनो यद्यनङ्गीकृतता नाङ्गीकृतेति वक्तुं न शक्यते । अङ्गीकाराविषयत्वरूपानङ्गीकृततताया विषयनिष्ठत्वेनात्मनिष्ठत्वाभावादित्यतो व्याचष्टे **न विद्यत इति ।** तथा चाङ्गीकृतमिति क्तप्रत्ययो भावे, न कर्मणीत्यर्थः । **तद्व्युत्पादनं** परकीय-व्यवस्थाया असाधुत्वव्युत्पादनम् । **तन्मात्रं** परव्यवस्थाया असाधुत्वमात्रम् ॥ **विजिगीष्विति ।** जल्पवितण्डयोरित्यर्थः ॥ **एवमेवेति ।** भवत्कल्पितव्यवस्थयैव व्याहतत्वादसाध्वी भवद्व्यवस्थेति पर-बोधनसमये परकीयव्यवस्थाया असाधुत्वं मया नावबोद्धव्यमेव । तर्हि स्वयमनवबुध्य परं प्रति बोधयेत चेत्प्रतारकत्वप्रसङ्ग इति चेन्न न । जल्पादाविष्टत्वादिति भावः ॥ **शिष्यस्यापीति ।** वादकथाया-मिति शेषः ॥ **आद्येऽस्मादेवेति ।** यत्स्वाभ्युपगतव्यवस्थाविरुद्धं तदसाध्वित्यस्मादेव प्रमाणात्परकीय व्यवस्थाया असाधुत्वं स्वयं बोद्धव्यमित्यर्थः । उदासीनैः मायावादिभिरस्माभिरिति शेषः । उच्यत

इत्यनन्तरं तथा च प्रमाणादिसत्ताऽङ्गीकारित्वं प्राप्तमिति भवदुक्तं दूषणं नेति शेषः । **वक्तव्यं** मायिभिरिति शेषः ।

**च०— तच्च प्रागेव निरस्तमिति** । जिज्ञासानये 'अनङ्गीकुर्वतां विश्वसत्यतामि'तिप्रतीकव्याख्याऽवसरे । 'सत्त्वासत्त्वे विहाय प्रमाणस्वरूपस्य बुद्धावारोपयितुमशक्यत्वेनोदासीनस्य तत्स्वीकारानुपपत्तेः' इत्यादिनाऽपास्तमित्यर्थः ।

**सु०— एवं विश्वस्य ब्रह्मविवर्तत्वं निराकृत्य तत्स(त्ता)त्यतायां प्रमाणमाह** विश्वमिति ।

**अनु०—** विश्वं सत्यं यच्चिकेत प्रघान्वस्य यथार्थतः ॥
इत्यादिश्रुतयः सर्वा विश्वसत्यत्ववाचिकाः ॥

**यथार्थत इत्यनेन 'कविर्मनीषी'इति श्रुतिमुपादत्ते । व्यावहारिकसत्यतापराः श्रुतय इति चेन्न । 'तत्सत्यमि'त्यस्या अपि तथात्वप्रसङ्गात् । श्रुत्यन्तरविरोधादिति चेदत्रापि 'असदेवेदमि'ति श्रुतिविरोधात् । अपुरुषार्थत्वान्न प्रपञ्चसत्यतायां तात्पर्यमिति चेन्न । सत्यजगन्निर्मातृत्वादिपारमेश्वरमाहात्म्यज्ञानस्यैव पुरुषार्थहेतु(प्रयोजन)त्वात् । निष्प्रपञ्चात्मज्ञानसाध्याद्वितीयतापत्तिरूपपुरुषार्थविरुद्धं प्रपञ्चसत्यत्वमिति चेत् तर्हि ब्रह्मसत्यत्वमपि शून्यपरिभावनालभ्यशून्यतापत्तिलक्षणमोक्षविरुद्धमिति समानम् । तत् प्रमाणाननुगुणमिति चेत् । सममेतदपीति वक्ष्यामः । अनुमानमपि प्रपञ्चसत्यतायामर्थक्रियाकारित्वं द्रष्टव्यम् । प्रागुक्ततर्कोपपादनेनैव अस्योपपादितत्वादिति ।**

**शे०** — ननु विवर्तमतनिराकरणावसरे स्वमतसाधकप्रमाणोपन्यासोऽसङ्गत इत्यतः पूर्वोत्तरग्रन्थयोरसङ्कीर्णतासिद्धयेऽर्थभेदं दर्शयति **एवमिति** । अत्र 'विश्वं सत्यमि'त्यस्य 'विश्वं सत्यं मघवाना युवोरिदापश्चन प्र मिनन्ति व्रतं वामि'ति श्रुतिप्रतीकस्वरूपानुवादत्वेन 'यच्चिकेते'त्यस्य'यच्चिकेत'सत्यमित्तन्न मोघमि'ति श्रुतिप्रतीकस्वरूपानुवादत्वेन, 'प्रघान्वस्ये'त्यस्य 'प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचमि'ति श्रुतिप्रतीकस्वरूपानुवादत्वेनार्थकथनरूपत्वाभावात्'यथार्थत' इत्यर्थानुवादरूपोत्तरभाष्यखण्डसंग्राह्यमेव दर्शयति **यथार्थत इत्यनेनेति ॥ व्यावहारिकेति** । ततश्च नैतच्छ्रुत्यवष्टम्भेन पारमार्थिकत्वसिद्धिः । व्यावहारिकसत्यत्वसमर्थनं चानर्थकं । मिथ्यात्ववादिना मयाऽपि तस्याङ्गीकृतत्वादिति भावः । व्यावहारिकशब्देनाबाध्योक्ता विष्ठापत्तिर्बाध्योक्तावुदाहृतश्रुतीनां चिरकालानुवृत्तदृढभ्रान्तिहेतुत्वेनात्यन्ताप्रामाण्यप्रसङ्गात् । न बाधाभावे तदङ्गीकर्तुं शक्यम् । अन्यथा तत्सत्यमित्यादिब्रह्मसत्यताबोधकवाक्यानामपि

व्यावहारिकपरत्वस्याप्रामाण्यस्य च प्रसक्त्या तत्त्वावेदकत्वसिद्धान्तभङ्गप्रसङ्गादित्याशयवानाह **न तत्सत्यमित्यस्या अपीति** । ननु नेह नानेत्यादिविश्वमिथ्यात्वबोधकवाक्यविरुद्धत्वात् विश्वसत्यत्वबोधकवाक्यानामप्रामाण्यमिष्टमेवेति कथं तदापादनम् । न चैवं तत्सत्यमित्यस्या अपि तत्प्रसङ्गः । भवेदेवं यदि श्रुतिद्वयस्य साम्यं स्यान्न चैतदस्ति । विश्वं सत्यमित्यादीनां श्रुतिबाधितत्वात् । तत्सत्यमित्यादेश्च तदबाधितत्वादविशेषासिद्धया प्रतिबन्द्यनुत्थानादित्याशयेन शङ्कते **श्रुत्यन्तरविरोधादिति चेदिति** । यद्यप्यत्र नेह नानेति श्रुतेः प्रामाण्यसंरक्षणाय त्वत्पक्षे लक्षणयाऽखण्डचिन्मात्रपरत्वेन न जगत्सत्यत्वविरोधित्वं जगत्सत्यत्वश्रुतिविरोधेन तन्मिथ्यात्वश्रुतेरेवाप्रामाण्यमित्यपि वक्तुं शक्यम् । तथाऽपि स्पष्टत्वाच्छिष्यैरेव तदूह्यतामिति भावेन तदनुद्भाव्य पूर्वपरिगृहीतप्रतिबन्दीसंरक्षणाय बाध्याबाधकत्कृतवैलक्षण्यमेव निराकरोति **अत्रापीति** । ननु अद्वैतश्रुतेः पुरुषार्थवत्त्वेनाद्वैते निर्णीततात्पर्यकत्वेन तात्पर्यग्राहकप्रमाणाभावेनानिर्णीततात्पर्यकजगत्सत्यत्वश्रुत्यपेक्षया प्रबलत्वेन तद्बाधकत्वेऽप्यसद्वेत्यादिब्रह्मासत्यत्वबोधकवाक्यस्यापुरुषार्थत्वेनानिर्णीततात्पर्यकत्वात्तत्सत्यमित्यादेरेव च पुरुषार्थवत्त्वेन निर्णीततात्पर्यकत्वाद्निर्णीतबलाबलप्राप्त्या ब्रह्मसत्यत्वबोधकवाक्येनैवासद्वेत्यादिवाक्यबाधो न त्वसद्वेत्यादिवाक्येन तत्सत्यमित्यादेरिति न प्रतिबन्दीग्रहो युक्त इत्याशयवानाशङ्कते **अपुरुषार्थत्वादिति** ॥ किमपुरुषार्थत्वादिति पुरुषार्थहेतुज्ञानविषयत्वाभावोऽभिप्रेतः किंवा पुरुषार्थविरोधित्वं वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **सत्येति** । ततश्च नोक्तरीत्या अद्वैतवाक्येन प्राबल्यसिद्धिरिति भावः । द्वितीयमाशङ्कते **निष्प्रपञ्चेति** ॥ **समानमिति** । ततश्चासद्वेत्यादिवाक्यस्योक्तरीत्या प्राबल्यप्रसक्त्या तेन तत्सत्यमित्यादेर्बाधः स्यादिति प्रतिबन्दी सुस्थिरेति भावः । भवेदेवं ब्रह्मसत्त्ववचनस्य शून्यभावरूपमोक्षविरुद्धत्वेन तत्सत्यत्वेऽतात्पर्यम् । यदि शून्यभावो मोक्ष इति सिद्धं स्यात् । न चैतदस्ति । चतुर्थस्य द्वितीयोक्तरीत्याऽप्रामाणिकत्वेन प्रमाणविरुद्धत्वेन च तस्यैवासिद्धेर्वक्ष्यमाणत्वादित्याशयवानाशङ्कते **तदिति** । तर्हि जगत्सत्यत्ववचनस्यापि नाद्वितीयतारूपमोक्षविरुद्धत्वेन जगत्सत्यत्वेऽतात्पर्यं कल्प्यम् । अद्वितीयतापत्तेरमोक्षत्वस्य चतुर्थस्य द्वितीये अप्रामाणिकत्वप्रमाणविरुद्धत्वाभ्यां वक्ष्यमाणत्वात् । तथा च कथमुदाहृतवाक्यैर्विश्वस्य न सत्यत्वसिद्धिरिति भावेनाह **सममिति** । 'प्रत्यक्षमुपपत्तिश्च बहवश्चागमाः' इत्यादिना तृतीयस्य चतुर्थे प्रत्यक्षागमयोरिवार्थक्रियाकारित्वानुमानस्यापि विश्वसत्यत्वसाधकत्वेनैवोपन्यासादत्राप्यनुमानमभिप्रेतमेवेत्यभिप्रेत्याह **अनुमानमपीति** । ननु स्वाप्नकामिनीसम्भोगादावर्थक्रियाकारित्वस्य सत्त्वेन व्यभिचरितत्वात्कथमनुमानस्य सत्यत्वसाधकत्वमित्यतो 'व्यावहारिकता चास्य स्यादबाध्यत्व एव ही'ति प्रागुपन्यस्ततर्कस्य, 'न च स्वप्नोऽपि नो मृषा' इत्यादिनोक्तव्यभिचारस्य परिहारेण तदुपपादनेनैवास्याप्युपपादितत्वान्न व्यभिचार इत्याह **प्रागुक्तेति** ।

**स० — श्रुत्यन्तरविरोधादिति** 'नेह नानास्ति किंचन' इत्यादिश्रुत्यन्तरविरोधादित्यर्थः । अपुरुषार्थत्वादित्यस्य पुरुषार्थहेतुज्ञानविषयत्वाभावादित्यर्थो वा पुरुषार्थविरोधित्वादित्यर्थो वेति विकल्पं मनसि निधायाद्यं दूषयति **सत्यजगन्निर्मातृत्वादीति** । द्वितीयमाशङ्कते **निष्प्रपञ्चाऽत्मज्ञानेति** । **तत्प्रमाणाननुगुणमिति** । शून्यभावनया शून्यतापत्तिलक्षणो मोक्षो भवतीत्येतदप्रामाणिकं प्रमाणविरुद्धं चेत्यर्थः । **सममेतदपीति** । अद्वितीयब्रह्मभावनयाऽद्वितीयब्रह्मभावापत्तिरूपमोक्षो भवतीत्येतदपि न प्रामाणिकं, प्रमाणविरुद्धं चेति तृतीयाध्याये उपासनापादे मोक्षसाधनपरीक्षायां वक्ष्याम इत्यर्थः ।

**प० —** 'विश्वं सत्यम्'इत्यादिना 'विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम्' 'यच्चिकेत सत्यमित्तन्न मोघं वसुस्पार्हमुत जेतोत दाता', 'प्र घा न्वस्य महतो महानि सत्या सत्यस्य करणानि वोचमि'ति श्रुतीनामुपादानस्य स्पष्टत्वात् । 'कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः' इति श्रुतौ यथार्थत इतिपदाभावेन तच्छ्रुत्युपादानस्यास्फुटत्वादाह **यथार्थत इत्यनेनेति** । एतासामर्थस्य तत्त्वोद्योतादौ स्पष्टमुक्तत्वात् सन्न्यायरत्नावल्यामर्थस्योक्तत्वाच्चार्थमनुक्त्वा तासाममुख्यसत्यतापरत्वेन वा सत्यत्वरूपे स्वार्थे तात्पर्याभावेन वा विश्वस्य परमार्थसत्त्वा(त्त्व)निर्णायकत्वमाशङ्क्य प्रतिबन्द्या निराह **व्यावहारिकेति** । 'इति चेन्ने'त्यनन्तरं 'कल्पकाभावादन्यथे'ति पदद्वयमध्याहार्यम् । कल्पकमाशङ्कते **श्रुत्यन्तरेति** । नेहनानेत्यादि श्रुत्यन्तरेत्यर्थः ॥ **अत्रापीति** : ब्रह्मसत्यत्वेपीत्यर्थः । अपुरुषार्थत्वादित्यत्र नञोऽभावार्थत्वमुपेत्य विश्वसत्यत्वज्ञानस्य पुमर्थाहेतुत्वात् न एतासां श्रुतीनां तत्र तात्पर्यमुच्यते, अथ पुमर्थविरुद्धत्वात् । आद्ये आह **सत्येति** । अन्त्यमाशङ्कते **निष्प्रपञ्चेति ॥ इति वक्ष्याम इति** । उपासनापादे विद्यैव तु निर्धारणादित्यधिकरणाद्यसूत्रव्यावर्त्यसाधनान्तरनिरासप्रस्तावे 'न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यते' इति निष्प्रपञ्चात्मैक्यज्ञानं मुक्तिसाधनमित्येतत् । तथा उत्क्रान्तिपादे 'निर्विशेषं स्वयंभातम्' इत्यादिना शून्यवाद्यभिमतमोक्षमुक्त्वा 'इत्येवं मायिनश्चाहुरि'त्यादिनाऽद्वितीयताऽऽपत्तिरूपमोक्ष इत्येतच्च प्रमाणाननुगुणमिति वक्ष्याम इत्यर्थः ॥ **प्रागुक्ततर्केति** । 'व्यावहारिकता चास्य स्यादबाध्यत्व एव ही'त्युक्ततर्कस्य 'बाध्यं नार्थक्रियाकारी'त्यादिना 'तत्सदेवार्थकारकमि'त्यन्तेन यद्व्याप्त्यादिमत्त्वेनोपपादनं कृतं तेनैवास्यानुमानस्योपपादितत्वादित्यर्थः । सन्न्यायरत्नावल्यां तु व्यावहारिकतेत्यादिना युक्त्या, विश्वं सत्यमित्यादिना श्रुत्या, सत्यमित्यादिना प्रत्यक्षेण सत्यत्वोपपादनमित्युक्तम् ।

**या० —** अपुरुषार्थत्वादित्यस्य पुरुषार्थहेतुज्ञानविषयत्वाभावादित्यर्थो वा पुरुषार्थविरोधित्वादित्यर्थो वेति विकल्पं मनसि निधायाद्यं दूषयति **सत्यजगन्निर्मातृत्वादीति** । द्वितीयमाशङ्कते **निष्प्रपञ्चात्मेति ॥ तत्प्रमाणाननुगुणमिति** । शून्यभावनया शून्यताऽऽपत्तिलक्षणो मोक्षो भवतीत्येत-

दप्रामाणिकं प्रमाणविरुद्धं चेत्यर्थः ॥ **सममिति** । अद्वितीयब्रह्मभावनयाऽद्वितीयब्रह्मभावापत्तिरूपमोक्षो भवतीत्येतदपि न प्रामाणिकं प्रमाणविरुद्धं चेति तृतीये मोक्षसाधनपरीक्षायां वक्ष्याम इत्यर्थः ॥ **प्रागुक्त-तर्केति** । 'भ्रमत्वे नियमुक्तिश्च तदन्तःपतनान्न ही'ति प्रागुक्ततर्कस्य यदुपपादनम् 'व्यावहारिकता चास्य स्यादबाध्यत्व एव हि । बाध्यं नार्थक्रियाकारी'त्यादिरूपं, तेनैवेत्यर्थः ।

**श्री०— श्रुतयः** प्रपञ्चसत्यताप्रतिपादिकाः । **इत्यस्याः** ब्रह्मसत्यताप्रतिपादिकाया इत्यर्थः ॥ **तथात्वेति** । व्यवहारिकसत्यताप्रतिपादकत्वेत्यर्थः । श्रुतीनां व्यावहरिकसत्यत्वमङ्गीकार्यमित्यत्र हेतुमाशङ्कते **श्रुत्यन्तरेति** । जगतः पारमार्थिकसत्यत्वाङ्गीकारे 'नेह नाना' इत्यादिश्रुत्यन्तरविरोधापत्त्या 'विश्वं सत्यम्' इत्याद्याः श्रुतयो व्यावहारिकसत्यतापरा इत्यर्थः ॥ **अत्रापीति** । ब्रह्मणोऽपि पारमार्थिकसत्यत्वाङ्गीकारे 'असदेवेदमग्र आसीत्' इत्यादिश्रुतिविरोधसाम्येन तत्सत्यमित्यस्या अपि ब्रह्मणः पारमार्थिकसत्यतापरत्वं न स्यादित्यर्थः । असदेवेदमिति श्रुतिर्ब्रह्मणो नासत्त्वपरा । अन्यार्थत्वादिति चेत्सममन्यत्रापि । 'नेह नाना' इत्यादिश्रुतेरप्यन्यपरत्वेन विश्वमिथ्यात्वाप्रतिपादकत्वादिति । ननु विश्वं सत्यमित्यादिश्रुतिभिर्न विश्वसत्यता सिध्यति श्रुतीनां विश्वसत्यतायां तात्पर्याभावादित्याशङ्कते **अपुरुषार्थत्वादिति** ॥ **अनुमानमिति** । जगत्सत्यमर्थक्रियाकारित्वादित्यनुमानमित्यर्थः । अत्र स्वाप्नार्थादौ व्यभिचार इत्यत आह **प्रागुक्तेति** । यदि जगद्व्यावहारिकं स्यात् तदाऽबाध्यमपि स्यादिति तर्कस्य स्वाप्नार्थानां सत्यतामङ्गीकृत्य व्यभिचारादिकं परिहृत्योपपादनेनेत्यर्थः । **अस्य** अनुमानस्य ।

च०— 'अपुरुषार्थत्वात्' इत्यभिदधानेन पुरुषार्थसाधनज्ञानविषयत्वाभावोऽभिप्रेयते पुरुषार्थविरोधित्वं वेति वितर्कद्वयमभिसंदधान आद्यं प्रत्यस्यति **सत्येति** । द्वितीयं प्रतिविधत्ते **निष्प्रपञ्चेति** । **तत्प्रमाणेति** । शून्यपरिभावनानिबन्धनतद्भावापत्तिलक्षणमोक्षस्वरूपं निष्प्रमाणं प्रमाणविरुद्धं चेत्यर्थः । **सममिति** । अद्वितीयब्रह्मभावनानियन्त्रिततद्भावापत्तिलक्षणं मोक्षस्वरूपमपि तादृशं तद्विरुद्धं चेति साधनलक्षणे मोक्षसाधनविचारावसरेऽभिधास्याम इत्यर्थः । **अनुमानमपीति** । तृतीयस्य तुरीये 'प्रत्यक्षमुपपत्तिश्चे'त्यादिना विश्वपारमार्थ्यसाधकार्थक्रियाकारित्वानुमानस्याप्युपन्यसिष्यमाणत्वादिति भावः ।

सु०— **एवमागमानुमानाभ्यां सिद्धे विश्वसत्यत्वे प्रत्यक्षमप्याह** सत्यत्वमिति ।

**अनु०**— सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम् ॥

**चशब्दः प्रमाणसमुच्चये । न केवलमान्तरस्य सुखादेः किन्तु बाह्यस्य गगनादेश्चेति वा । तत्रापि कालगगनदिगादयः साक्षात्साक्षिसिद्धसत्यत्वाः । स्तम्भकुम्भादयस्तु वक्ष्यमाणेन प्रकारेणेति ज्ञापयितुं गगनादेरित्युक्तम् । अन्यथा विश्वस्य प्रकृतत्वात्तदेवात्रानुवर्तिष्यते किमनेन । साक्षीत्येवोक्ते साक्षिणोऽप्रामाण्यात् प्रामाण्ये वा प्रमाणत्रित्वभङ्गात् न विश्वसत्यत्वं**

**प्रमितमिति शङ्का स्यात् । तन्निवृत्त्यर्थं प्रत्यक्षेत्युक्तम् । तथा च वक्ष्यते । प्रत्यक्षेत्येवोक्ते अतीन्द्रियार्थसत्यतायां न प्रमाणमुक्तं स्यात् । न च साक्षिणा विना बाह्यप्रत्यक्षमात्रेणैन्द्रियकाणामपि सत्यता सिध्यतीत्यतः साक्षीत्युक्तम् । उभयवादिसिद्धं प्रमाणमस्मत्पक्षेऽस्तीत्युक्तेनैव अस्यार्थस्य लब्धत्वात्साधितमित्याह । तथाऽपि तदुपपादनाय पुनरुपन्यासः ।**

शे० — **एवमिति** । यद्यप्यत्र प्रत्यक्षस्य ज्येष्ठत्वात्प्रत्यक्षादिक्रमेण सत्यत्वसाधकप्रमाणोपन्यास एवोचितः, अत एव तृतीयस्य चतुर्थे 'प्रत्यक्षमुपपत्तिश्च बहवश्चागमा यदा' इत्यादिना तथैव निर्देशः, तथाऽपि प्रत्यक्षनिरूपणस्य बहुत्वादनुमानागमनिरूपणस्य चाल्पत्वात्सूचीकटाहन्यायेन श्रुत्यादिक्रमेण निर्देशः कृत इति ध्येयम् ॥ **प्रमाणसमुच्चयेति** । अनेन गगनादेश्चेति चशब्दो भिन्नक्रम इत्युक्तं भवति । अत्र पक्षे भिन्नक्रमत्वमाश्रयणीयं भवतीत्यरुच्या पक्षान्तरमाह **न केवलमिति** । गगनकालदिगादय इत्यत्र दिक्शब्देनाव्याकृताकाशभागानां ग्रहणम् । आदिपदेनात्ममनआदीनां सुखादीनां च परिग्रहः ॥ **वक्ष्यमाणेनेति** । 'अतोऽदोषप्रतीतस्य सत्यत्वं साक्षिणा मतम्' इत्यादिना वक्ष्यमाणेनेत्यर्थः ॥ **प्रकारान्तरेणेति** । स्तम्भादिग्राहकप्रत्यक्षादिप्रामाण्यव्यवस्थापकत्वेनेत्यर्थः ॥ **प्रकृतत्वादिति** । विश्वसत्यत्ववाचिका इत्यत्रेति शेषः ॥ **साक्षिणोऽप्रामाण्यादिति** । अकरणत्वादफलत्वाच्च न तस्य प्रामाण्यमिति भावः ॥ **प्रामाण्ये वेति** । सुखादिविषयस्वरूपभूतचैतन्यस्य वा तदभिव्यक्तसुखादिज्ञानस्य वा साक्षित्वेन वक्ष्यमाणरीत्या करणत्वफलत्वयोरुपपत्त्या प्रामाण्येऽपि वेत्यर्थः ॥ **प्रमाणत्रित्वभङ्गादिति** । प्रत्यक्षादिष्वनन्तर्भावात् अतिरेके चापसिद्धान्तान्न तस्य प्रमाणान्तरतयोपन्यासो युक्त इति न विश्वसत्यत्वस्य प्रमितत्वसिद्धिरिति भावः । तेन प्रमाणत्रित्वभङ्गस्य साक्षाद्विश्वसत्यत्वस्याप्रमितत्वे हेतुत्वाभावादसङ्गतिरिति शङ्काऽनवकाश इति ध्येयम् । ननु कथं तस्य प्रत्यक्षेऽन्तर्भाव इत्यत आह **तथा चेति** । 'प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम्' इत्यादिनेति शेषः ॥ **अतीन्द्रियार्थेति** । न च प्रत्यक्षेत्येवोक्तेऽपि साक्षिणोऽपि प्रत्यक्षत्वात्स एवातीन्द्रियार्थसत्यतायां प्रमाणं भविष्यतीति काऽनुपपत्तिरिति वाच्यम् । तस्य प्रत्यक्षतायां विवादेन प्रत्यक्षशब्देन तदप्राप्तेरित्याशयात् । माऽस्त्वतीन्द्रियार्थसत्यतायाः प्रत्यक्षेण सिद्धिः, ऐन्द्रियकार्थसत्यतायास्तु बाह्यप्रत्यक्षेण सिद्धिरविकलैव; इत्यतो गृहीतप्रमाणभावस्यैव बाह्यप्रत्यक्षस्य तत्सत्यत्वसाधकत्वात् वक्ष्यमाणरीत्या साक्षिणा विना प्रामाण्यनिश्चयानुपपत्त्या, साक्षिणा गृहीतप्रामाण्यस्यैव बाह्यप्रत्यक्षस्य स्वविषयसत्यत्वसाधकत्वेन केवलस्य तस्य तदसाधकत्वात् न बाह्यप्रत्यक्षेणैन्द्रियकार्थानामपि सत्त्वसिद्धिरित्याह **न च साक्षिणा विनेति** । ननु गगनादिसत्यत्वस्य साक्षिसिद्धताया इतःपूर्वमसाधितत्वात् कथं भाष्ये साधितमिति साधितत्वोक्तिरित्यतः 'साधकत्वं तु सत्यस्य साक्षिणो ह्यावयोः' इत्युक्त्यैव गगनादिसत्यत्वस्य साक्षिसिद्धत्वस्यार्थतो लब्धत्वात्तदभिप्राय-

कत्वाच्च साधितत्वोक्तेर्नानुपपत्तिरित्याह **उभयेति** । तर्हि लब्धत्वादस्यार्थस्य पुनरभिधानमनर्थकमित्यत आह **तथाऽपीति** । लब्धत्वेऽपीत्यर्थः ।

**स०— वक्ष्यमाणेन प्रकारान्तरेणेति** । 'एवमक्षजमानत्वसिद्धां विश्वस्य सत्यतां । किमिति स्थापयेन्नायं निर्दोषज्ञानशक्तितः' इत्यत्र वक्ष्यमाणेन स्तम्भादिग्राहकप्रत्यक्षादिप्रामाण्यव्यवस्थापनद्वारेति प्रकारान्तरेणेत्यर्थः । **तथा च वक्ष्यत इति** । द्वितीयाध्याये 'न विलक्षण'ाधिकरणे 'प्राकृतं शुद्ध-चैतन्यमक्षं तु द्विविधं मतमि'त्यत्र साक्षिणः प्रत्यक्षत्वं वक्ष्यत इत्यर्थः ।

**प०— किं** चेति चार्थमभिप्रेत्याह **चशब्द इति** । यथाश्रुतान्वयमुपेत्याह **न केवलमिति** । 'मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधत' इत्यादिना जिज्ञासानये । यत् आन्तरसुखादेः साक्षिणा सत्यत्वमुक्तं तेन साकं समुच्चय इति भावः ॥ **तत्रापीति**[1] । बाह्यवस्तुष्वपीत्यर्थः । आदिपदेन दिग्वि-शेषाः प्राच्यादयो ग्राह्याः ॥ **वक्ष्यमाणेनेति** । 'एवमक्षजमानत्वसिद्धामि'त्यादिनाऽत्रैवोत्तरत्र अर्थ-सत्त्वघटितप्रत्यक्षादिप्रामाण्यव्यवस्थापनप्रकारेणेत्यर्थः ॥ **प्रकृतत्वादिति** । विश्वसत्यत्ववाचिका इति पूर्वप्रकृतत्वाद्विभागपरिणामाभ्यां विश्वस्येत्यनुवर्तिष्यते ॥ **किमनेनेति** । गगनादेरिति कथनेन किमि-त्यर्थः । तावता कथमुक्तशङ्कानिरास इत्यत आह **तथा च वक्ष्यत इति** । युक्तिपादे । 'प्राकृतं शुद्ध-चैतन्यमक्षं तु द्विविधं मतमि'त्यादौ न विलक्षणत्वनयानुव्याख्याने साक्षिणः प्रत्यक्षप्रमाणत्वं वक्ष्यत इत्यर्थः । साक्षीन्युक्तेः कृत्यमाह **प्रत्यक्षेत्येवोक्ते** इत्यादिना । गगनादेरित्यादिपदेनैन्द्रियकानैन्द्रियक-रूपराशिद्वयस्य ग्रहणं कृत्वा प्रत्यक्षसाधितमित्युक्ते प्रसिद्धत्वेन बाह्यप्रत्यक्षस्यैव प्रत्यक्षपदेन ग्रहणाऽपत्त्या गगनादिरूपाऽतीन्द्रियार्थसत्यत्वे प्रमाणं नोक्तं स्यादित्यर्थः । **नन्वेवं** साक्षिपदे दत्तेऽपि बाह्यप्रत्यक्षादि-प्रमाणवेद्यार्थसत्यतायां प्रमाणं **नोक्तं** स्यादिति चेन्न । तत्प्रमाणप्रामाण्यव्यवस्थापनद्वारा तत्तत्प्रमाणवेद्यार्थ-सत्यत्वस्यापि साक्षिणैव व्यवस्थाप्यतया साक्षिप्रत्यक्षेत्युक्त्यैव ऐन्द्रियकानैन्द्रियकसर्वपदार्थसत्यत्वे प्रमाण मुक्तं भवत्येवेत्याशयेन साक्षिप्रत्यक्षेत्युक्तमिति भावेनाह **न च साक्षिणा विनेति** । ऐन्द्रियकाणामपीत्य-पिपदस्य न केवलमानुमानिकादीनामित्यर्थः । 'साधकत्वं तु सत्यस्ये'त्यादित्रिपाद्यास्तात्पर्यमनुवदति **उभयवादीत्यादिना** । **अस्यार्थस्य** सत्यत्वरूपार्थस्य । तर्हि पुनरत्र तदुपन्यासो व्यर्थ इत्यत आह **तथाऽपीति** ।

**या०—** दिगादय इत्यत्रादिपदेन प्रकृतिर्गाह्या ॥ **वक्ष्यमाणेनेति** । 'एवमक्षजमान-त्वसिद्धां विश्वस्य सत्यताम् । किमिति स्थापयेन्नायं निर्दोषज्ञानशक्तितः' इत्यत्र वक्ष्यमाणेन स्तम्भादिग्राहकप्रत्यक्षप्रामाण्यव्यवस्थापनद्वारेति प्रकारान्तरेणत्यर्थः ॥ **तथाच वक्ष्यत इति** । 'प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम्' इत्यत्र साक्षिणः प्रत्यक्षप्रमाणत्वं वक्ष्यत इत्यर्थः ।

श्री० — अन्यथा उक्तरीत्या प्रकारान्तरज्ञापनाभिप्रायाभावे सर्वस्यापि विश्वस्यैकप्रकारेणैव साक्षिसिद्धत्वे इति यावत्। गगनादेरित्युक्तिर्व्यर्थैव। ननु तर्हि सत्यत्वं साक्षिप्रत्यक्षसाधितमित्युक्ते कस्येत्यपेक्षा स्यात्तदर्थं गगनादेरिति वाच्यमित्यत उक्तं **विश्वस्येति**। 'विश्वसत्यत्ववाचिकाः' इति पूर्वं विश्वस्य प्रकृतत्वात्तद्विश्वपदमेव बुद्ध्या विविक्तं सत् षष्ठ्यन्तमत्रानुवृत्तं भविष्यतीति किमनेन गगनादेरिति पदेनेत्यर्थः। तथा च गगनादेरिति पदोक्तिमहिम्ना न गगनघटादिरूपस्य विश्वस्यैकप्रकारेण साक्षिसिद्धत्वं किन्तु प्रकारान्तरेणेत्यर्थः सूचित इति ज्ञेयम्। नन्वतीन्द्रियपदार्थसत्यतायां प्रमाणं मास्तु। ऐन्द्रियकपदार्थानां तु सत्यता बाह्यप्रत्यक्षेण चक्षुरादिना सिद्धा भविष्यतीत्यत आह **न च साक्षिणेति॥ सिध्यतीति**। ऐन्द्रियकघटादिसत्यताग्राहिप्रत्यक्षप्रामाण्यग्राहकतया साक्षिण एव वाच्यत्वादिति हृदयम्। ननु गगनादीनां सत्यतायाः साक्षिप्रत्यक्षसिद्धत्वं पूर्वं कुत्र साधितमित्यतः पूर्वमयमर्थो लब्धोऽस्तीत्याशयेन साधितमित्याहेत्याह **उभयेति**। तर्हि यथाकथंचित्पूर्वमस्यार्थस्योक्तत्वात्पुनः सत्यत्वमित्यादिना किमर्थमुपन्यस्यत इत्यत आह **तथाऽपीति**। यद्यपि प्राक् सिद्धं तथाऽपीत्यर्थः। यद्वा ननूभयवादिसिद्धत्वे न वक्तव्यमेतदित्यत आह **तथाऽपीति**। यद्यप्युभयवादिसिद्धं तथाऽपीत्यर्थः।

च० — **वक्ष्यमाणेन**। 'एवमक्षजमानत्वसिद्धां विश्वस्य सत्यतां। किमिति स्थापयेन्नायं निर्दोषज्ञानशक्तितः' इत्यत्राभिधास्यमानेन। **प्रकारान्तरेण**। स्तम्भादिग्राहकप्रत्यक्षादिप्रामाण्यव्यवस्थापकत्वेनेत्यर्थः। **तथा च वक्ष्यत इति**। 'प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतमि'त्यत्र साक्षिणः प्रत्यक्षप्रमाणत्वमभिधास्यत इत्यर्थः।

सु० — **केचिदिह विहङ्गमः पततीति चक्षुर्व्यापारानन्तरं प्रतिभासनादाकाशादेः (दीनां) चाक्षुषतामास्थिषत। तदनुपपन्नम्। रूपरहितद्रव्यत्वेन चाक्षुषतासामग्रीवैकल्यात्। अन्यथाऽऽत्मपवनयोरपि तत्प्रसङ्गात्। कथं तर्ह्येष प्रतिभास इति चेत्। साक्षिसिद्धाकाशादिसंबन्धितयेति ब्रूमः। दृष्टो हि प्रमाणान्तरोपनीतेनापि सुरभि चन्दनमित्यादिविशिष्टप्रत्ययः। परेषां च इह भूतले घटाभाव इति।**

शे० — मूले गगनादेः साक्षिसिद्धत्वोक्त्या तदितरप्रमाणाविषयत्वं सूचितं तत्समर्थनार्थमुत्तरो ग्रन्थः।

तत्र क्षपणकवार्तिककारीयतच्चाक्षुषत्वपक्षं तावदुत्थापयति **केचिदिति**। आकाशादेरित्यादिपदेन कालपरिग्रहः। 'इह विहङ्गमः पततीति प्रतिभासनात्' इत्युपलक्षणम् 'इदानीं विहङ्गमः पततीति भासनात्' इत्यपि द्रष्टव्यम्। इह पक्षीति इहप्रत्ययश्चाक्षुषः अनन्यथासिद्धचक्षुरन्वयव्यतिरेकानुविधा-

यित्वात् पक्षिप्रत्ययवत् इति 'इह'प्रत्ययस्य चाक्षुषत्वसिद्धौ तद्विषयतयाऽऽकाशस्य चाक्षुषत्वसिद्धिरिति भावः । आकाशो न चाक्षुषो रूपादिरहितद्रव्यत्वादात्मवदिति प्रतिपक्षश्चैस्तमनुमानमिति दूषयति **तदिति** ॥ **रूपेति** । रूपादौ व्यभिचारनिरासाय द्रव्यत्वग्रहणम् । घटादौ व्यभिचारवारणाय रूपरहितेत्युक्तम् । न च नीलं नभ इति प्रतीतेराकाशोऽपि रूपवानेवेति रूपरहितेति विशेषणमसिद्धमिति वाच्यम् । स्पर्शरहितत्वेन तदनुमानादिति भावः । विपक्षे बाधकमाह **अन्यथेति** । रूपरहितद्रव्यस्यापि चाक्षुषत्व इत्यर्थः । नन्वाकाशस्यातीन्द्रियतायाम् 'इह पक्षी'इत्याकाशाश्रयतया चाक्षुषप्रत्ययानुपपत्तेराकाशं चाक्षुषमेवास्थेयमित्याशङ्कते **कथमिति** । न रूपरहितद्रव्यत्वेनाकाशस्य प्रत्यक्षत्वमात्रं निराक्रियते किन्तु प्रसक्तं चाक्षुषत्वमेव । तथा च साक्षिप्रत्यक्षत्वादाकाशस्योपपद्यत एव तदाश्रयतया इह पक्षीति चाक्षुषः प्रतिभास इति परिहरति **साक्षीति** । ननु पक्ष्याकाशयोर्विलक्षणप्रमाणोपनीतयोः कथमिह पक्षीति विशिष्टप्रत्यय इत्यतोऽन्यत्र दृष्टत्वादित्याह **दृष्टो हीति** । स्वमते घटाभावस्यापि भूतलवत्प्रत्यक्षत्वेन विलक्षणप्रमाणोपनीतभूतलाधेयभावेन घटाभावप्रतिभासाभावेऽपि अनुपलब्धिकरणकोऽभावप्रत्यय इति वदतां परेषां मते चक्षुषोपनीतस्य भूतलस्येह घटाभाव इति केवलानुपलब्धिकरणकाभावप्रत्यये विषयत्वदर्शनेन तत्र विलक्षणप्रमाणोपनीताश्रयाधेयभावदर्शनाद्विलक्षणप्रमाणोपनीताकाशाधारत्वेन युक्तोऽयमपि 'इह विहङ्गमः पतति' इति प्रतिभास इति भावः ॥

---

म०— नन्विह पक्षीति इहप्रत्ययः चाक्षुषः अनन्यथासिद्धतदन्वयव्यतिरेकानुविधायित्वात् पक्षिप्रत्ययवदिति, इह प्रत्ययविषयस्याकाशस्य चाक्षुषप्रत्यक्षसिद्धत्वात् न केवलं साक्षिसिद्धतेति शङ्कते **केचिदिति** ॥ **आकाशादेरिति** । अत्रादिपदेन कालो गृह्यते । इदानीं पततीत्यपि प्रतीतेरिति द्रष्टव्यम् । आकाशो न चाक्षुषः रूपरहितद्रव्यत्वादात्मवदिति दूषयति **तदिति** । न चासिद्धो हेतुः नीलमाकाशमितिप्रतीतेरिति वाच्यम् । इन्द्रनीले नैल्याभावात् । अन्यथा संनिहित आकाशेऽपि तज्ज्ञानापत्तिः । आलोकेन तदभिभवे दूरेऽपि तदापत्तेरिति वदन्ति । वस्तुतस्तु तत्त्वनिर्णयटीकायां प्रकारान्तरेण नैल्यप्रतीतिरुपपादिता । विपक्षे बाधकमाह **अन्यथेति** न चाकाशस्यातीन्द्रियत्वेऽप्रत्यक्षत्वे तदाधारत्वेन कथं पक्षिप्रतिभास इति शङ्कते । **कथमिति** । न रूपरहितत्वेनाकाशस्य प्रत्यक्षत्वमात्रं निषिध्यते किं तु प्रसक्तं चाक्षुषत्वमेवेत्युत्तरमाह **साक्षीति** । ननु पक्ष्याकाशयोर्विलक्षणप्रमाणोपनीतयोः कथं विशिष्टतया प्रत्यय इत्यत आह **दृष्टो हीति** ॥ अत्रैव दृष्टान्तान्तरमाह **परेषां चेति** ॥ प्राभाकरमते अनुपलब्धिजन्याभावज्ञाने चक्षुरादिभानान्तरोपनीतस्य भूतलस्य भानदर्शनादिति भावः । स्वमते योग्यप्रतियोगिकाभावस्यापि प्रत्यक्षत्वेन न विलक्षणप्रमाणोपनीतत्वं भूतलघटाभावयोरिति द्रष्टव्यम् ।

प० — साक्षीत्युक्तेर्मतान्तरनिरासोऽपि फलमिति भावेनाह **केचिदिति** । इहेत्युपलक्षणम् । इदानीमित्यपि ग्राह्यम् । आकाशादेरित्यस्याकाशकालयोरित्यर्थः । आस्थिषतेति लुङात्मनेपदबहुवचनम् । अङ्गीकृतवन्त इत्यर्थः । **चाक्षुषतासामग्रीति** । महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वरूपसामग्रीत्यर्थः । कथं ज्ञानान्तरसिद्धत्वेपि चाक्षुषज्ञाने भानमित्यत आह **दृष्टो हीति** । सौर(भे)भ्येणेति योज्यम् । कस्मिंश्चिच्चन्दनखण्डे घ्राणेन सौर(भे)भ्येऽवगते सति तत्र वा तत्सजातीयेऽन्यत्र वा चक्षुषा सुरभिश्चन्दनखण्डोयमिति ज्ञानोदयस्यानुभवादित्यर्थः ॥ **परेषां चेति** । अनुपलब्धिरूपषष्ठप्रमाणवेद्योऽभाव इति मतेऽभावस्याचाक्षुषत्वेपि इह भूतले घटाभाव इति विशिष्टचाक्षुषप्रत्ययो दृष्ट इत्यर्थः ।

या० — **आकाशादेरिति** । अत्रादिपदेन कालो गृह्यते । इदानीं पततीत्यपि प्रतीतेरिति द्रष्टव्यम् ॥ **परेषां चेहेति** । घटाभावज्ञानमनुपलब्धिगम्यमित्यङ्गीकुर्वतां भाट्टानां मते चक्षुरादिप्रमाणान्तरोपनीतभूतलविशिष्टघटाभावप्रत्ययोप्युपलब्ध इत्यर्थः । स्वमते तु घटाभावस्यापि प्रत्यक्षत्वेन न विलक्षणप्रमाणोपनीतत्वं भूतलस्येति द्रष्टव्यम् ।

श्री० — आकाशो न चाक्षुषः रूपरहितद्रव्यत्वादात्मपवनवदित्यनुमानविरोधात् इह प्रत्ययविषयत्वेन नाकाशस्य चाक्षुषत्वं मन्तव्यमित्याह **रूपेति** ॥ **सामग्रीति** । तदेव हि द्रव्यं चाक्षुषं यन्महत्त्वे सत्युद्भूतरूपवदिति भावः ॥ **अन्यथेति** । रूपरहितद्रव्यत्वेऽप्यस्त्वाकाशस्य चाक्षुषत्वमित्यनुमानेऽप्रयोजकतायामित्यर्थः । **तत्** चाक्षुषत्वम् । नन्वाकाशस्याप्रत्यक्षत्वे कथं तर्हि इह पक्षीतीहप्रत्ययविषयाकाशसम्बन्धित्वेन पक्षिप्रतिभास इत्याशङ्कते **कथमिति** । रूपरहितत्वेनास्माभिः प्रत्यक्षत्वमात्रं न निषिध्यते किं नाम इहेतिप्रत्ययविषयत्वेन प्रसक्तं चाक्षुषत्वमेवेत्याह **साक्षीति** । तथा च साक्ष्युपनीतमेवाकाशमिहेति चाक्षुषप्रत्यये भासत इत्यर्थः । ननु कथं साक्षिरूपप्रमाणान्तरोपनीताकाशेन विशेषणेन विशिष्ट इहेतिचाक्षुषः प्रत्यय इत्यतो यथा घ्राणोपनीतं सौरभ्यं चक्षुषा गृहीते चन्दनखण्डे सुरभि चन्दनमिति चक्षुषा भासते । यथा वा भाट्टानां मतेऽनुपलब्धिरूपषष्ठप्रमाणोपनीतो घटाभावः भूतले घटाभाव इति चाक्षुषप्रत्ययेऽवभासते । एवं प्रकृतेऽपीत्याह **दृष्टो हीत्यादिना** । उपनीतेनापि विशेषणेन विशिष्टेति सम्बन्धः ।

च० — **आकाशादेरिति** । आदिपदं कालपरिग्राहकं इदानीं पत्री पततीत्यपि प्रतीतेः । **आस्थिषत** प्रत्यज्ञासिषुः । आङः स्थः प्रतिज्ञान इति स्मृतेः । **प्रमाणान्तरोपनीतेनेति** । घ्राणजादिप्रत्यक्षरूपोपनायकज्ञानविषयीकृतसौरभादिनेत्यर्थः । **परेषां चेहेति** । अभावस्यानुपलब्धिकरणकप्रतीत्यन्तरविषयतामुपगच्छतां भट्टानां मते भूतलादिचाक्षुषरूपोपनायकज्ञानविषयीकृतभूतलप्रतियोगिस्मृत्यादिरूपतादृशज्ञानविषयीभूतघटादिविशेषिताभावप्रत्ययोऽनुपलब्धिकरणक इत्यर्थः । 'उपनीतं विशेषणतयैव

भासते मानसे त्वनियम' इति नियमेनोपनीतयोरुक्तधर्मिप्रतियोगिनोराधेयत्वानुयोगित्वप्रत्यासत्तिभ्यामभावांशे विशेषणतया भानमिति ध्येयम् । सिद्धान्ते घटाद्यभावस्य प्रत्यक्षत्वोपगमेन सन्निकृष्टभूतलांशस्य नोपनीतत्वमित्यवसेयम् ।

सु०— **अपर आह । आलोकमण्डलमाश्रित्यायं प्रत्यय इति । तदसत् । इहालोक इत्यपि प्रत्ययदर्शनात् । सोऽपि तदवयवानाश्रित्येति चेन्न । लौकिकानामवयवाश्रयतयाऽवयविबुद्धेरभावात् । न हि ते हस्तादिषु शरीरमिति व्यवहरन्ति । किन्तु तदात्मकतयैव । किञ्चैवमपि नेहालोक इतीहालोकत्र्यणुकमिति च प्रत्ययो दुःसंपादः । प्रमाणान्तरोपनीतावयवमाश्रित्येति चेत् । एवं तर्हि तथाभूतमाकाशादिकमेवाश्रित्य 'इह पक्षी' इत्यादिप्रत्ययः कुतो न समर्थनीयः । तथा च लौकिकानुभवोऽप्यनुसृतः स्यात् । तथाऽप्यनुमानवेद्यमाकाशमस्त्विति चेन्न । लिङ्गाभावात् ।**

शे०— एवं स्वमतेन 'इह विहङ्गमः पतति' इति प्रतिभासं समर्थ्य किरणावलीकारीयं तत्समर्थनप्रकारं दूषयितुमनुवदति **अपर आहेति** । अस्त्विहप्रत्ययस्य स्वोक्तरीत्या चाक्षुषत्वम् । न चैतावता आकाशस्य चाक्षुषत्वं सिद्ध्यति । किन्त्वाकाशस्य तद्विषयतायां सत्यामेव । न चासावस्ति । आलोकमण्डलस्यैवेहप्रत्ययविषयत्वेनाभ्युपगमात् । तस्य च चाक्षुषताया इष्टत्वादिति भावः ॥ **इहालोक इत्यपीति** । इहालोक इति प्रतीतौ नेहप्रत्ययस्यालोकविषयत्वं सम्भवति । तथा सति स्वात्मनि स्ववृत्तिप्रसक्तेरिति भावः । लोकव्यवहारविरोधेन दूषयति **नेति** । अवयवाश्रितत्वपक्षे दोषान्तरमाह **किञ्चेति** ॥ **एवमपीति** । आलोकावयवस्य इहप्रत्ययावलम्बनत्व इत्यर्थः ॥ **नेहेति** । आलोकावयवस्येहप्रत्ययालम्बनत्वे नेहालोक इति प्रत्ययो न स्यात् । आलोकावयवेष्वालोकावयविनोऽभावायोगादिति भावः ॥ **इहालोकत्र्यणुकमिति** । अवयवस्येहप्रत्ययालम्बनत्वे इहालोक इत्यादीनाम् इहालोकचतुरणुकमित्यन्तानां प्रत्ययानां तत्तदवयवपरम्परायाश्चाक्षुषत्वेन चाक्षुषेहप्रत्ययालम्बनत्वेन निर्वाहेऽपीहालोकत्र्यणुकमिति न प्रत्ययः संभवति । तदवयवानां द्व्यणुकानामचाक्षुषत्वेन चाक्षुषेहप्रत्ययालम्बनत्वानुपपत्त्या तदाश्रयतयेहालोकत्र्यणुकमिति प्रत्ययस्योपपादयितुमशक्यत्वादित्यर्थः । ननु न 'इहालोकत्र्यणुकमिति प्रत्ययानुपपत्तिः । त्र्यणुकावयवानां द्व्यणुकानामप्रत्यक्षत्वेऽप्यनुमानसिद्धतयाऽनुमानोपनीतद्व्यणुकाश्रयतयाऽऽलोकत्र्यणुकावभासोपपत्तिरिति शङ्कते **प्रमाणान्तरेति** । हन्तैवं लाघवादावश्यकत्वाच्च प्रमाणान्तरोपनीताकाशाश्रयतयैव 'इह पक्षी' इत्यादिप्रत्ययस्य समर्थनसंभवात् आलोकमण्डलविषयत्वकल्पनमनर्थकमित्याह **एवं तर्हीति** । द्वितीयेनादिपदेन इहालोको नेहालोक इहालोकत्र्यणुकमिति प्रतीतीनां संग्रहः । प्रमाणान्तरसिद्धाकाशा-

श्रयतयैव इह पक्षीत्यादिप्रत्ययः समर्थनीयो न तु प्रमाणान्तरोपनीतालोकावयवाश्रयतया इत्यत्र नियामकान्तरमप्याह **तथा चेति** । प्रमाणान्तरोपनीतद्व्यणुकाश्रयतयेहालोकत्र्यणुकमिति प्रत्ययसमर्थने विलक्षणप्रमाणोपनीताश्रयाश्रयित्वेन प्रत्ययकल्पनमेको दोषः । लौकिकानामवयवाश्रयतयाऽवयविबुद्धेरभावादित्युक्तोऽपरो दोष इति दोषद्वयम् । मानान्तरसिद्धाकाशाश्रयतया इह पक्षीत्यादिप्रत्ययनिर्वाहपक्षे तु न तदिति स एव पक्ष आश्रणीय इति भावः ॥ **तथाऽपीति** । रूपरहितद्रव्यत्वेन गगनादेरचाक्षुषतया चक्षुषा तत्सिद्ध्यसंभवेऽपीत्यर्थः । तथा च न तस्य साक्षिसिद्धत्वमिति भावः । लिङ्गाभावेनानुमानानुपपत्तेः साक्षिसिद्धत्वमेव तस्येत्याशयेनाह **नेति** ।

**स०**— अस्त्विहप्रत्ययस्य चाक्षुषत्वं सत्त्वालोकविषय इति कस्यचित्समाधिमनुवदति **अपर-आहेति** । किमिहालोक इतीहप्रत्यय आलोकविषयस्तदवयवविषयो वेति विकल्प्याद्यमनुवदति **तदिति** । स्वात्मनि क्रियाविरोधादिति भावः । द्वितीयं शङ्कते **सोपीति** । लोकव्यवहारविरोधेनैतद्दूषयति **नेति** । अस्तु वा इहालोक इत्यत्रेह प्रत्यय आलोकविषयः नेहालोक इति तु कथम् आलोकप्रतीतौ तन्निषेधानुपपत्तेः, अप्रतीताविहप्रत्ययानुपपत्तेः । तथा इह आलोकत्रसरेणुरिति न संभवति । तदवयवानां द्व्यणुकानां अप्रत्यक्षत्वादित्याह **किंचेति** । अवयवस्याप्रत्यक्षत्वेऽपि प्रमाणान्तरसिद्धतयेह प्रत्ययत्वमिति शङ्कते **प्रमाणेति** । तत एव प्रमाणान्तरसिद्धाकाशविषयत्वसंभवात् किमालोकादेर्विषयत्वकल्पनयेत्याह **एव-मिति** । विनिगमकमाह **तथा चेति** । साक्षिसिद्धाकाशविषयत्वं तथापि न लभ्यत इति शङ्कते **तथाऽपीति** । अनुमानासंभवात्साक्षिविषयत्वमेव सिद्ध्यतीत्याह **नेति** ।

**प०**— **अयमिति** । इह विहङ्गमः पततीति प्रत्यय इत्यर्थः । तार्किकाणां तथा प्रतीत्यभिमानसत्वादाह **लौकिकानामिति** ॥ **त इति** । लौकिका इत्यर्थः ॥ **नेहेति** । इहेत्युक्ताधिकरणस्य आलोकावयवत्वे तदाश्रितस्य तत्र निषेधप्रत्ययायोगादिति भावः ॥ **इहालोकत्र्यणुकमितीति** । त्र्यणुकावयवानां द्व्यणुकत्वेनातीन्द्रियतया इहेति प्रत्ययायोगादिति भावः । द्वितीयप्रत्ययोपपत्तिं शङ्कते **प्रमाणान्तरेति** । यद्वा अन्धकारावृतदेशे न इहालोक इति प्रत्यये इहेति आलोकपरमाणव एवाधिकरणतया निर्दिश्यन्त इति भावेन नेहालोक इति प्रत्ययो दुःसंपाद इत्युक्तम् । एवं च प्रत्ययद्वयेऽप्युपपत्तिं शङ्कते प्रमाणान्तरेतीत्यवतरणीयम् ।

**या०**— इहालोकत्र्यणुकमिति प्रत्ययः अनुमानोपनीतद्व्यणुकरूपतदवयवमाश्रित्य सुसम्पाद इत्याशङ्के **प्रमाणान्तरेति** ॥ **इह पक्षीत्यादिप्रत्यय इति** । अत्रादिपदेनेहालोकत्र्यणुकमित्यादिप्रत्ययसंग्रहः ॥ **तथा चेति** । अन्यथा लौकिकानामवयवाश्रयतयाऽवयविबुद्धेरभावादित्युक्तदोषप्रसङ्ग इति भावः ॥

श्री० — अस्त्विहप्रत्ययस्य चाक्षुषत्वम् । स च न साक्ष्युपनीतविषयकः । किंतु प्रत्यक्षसिद्धालोकमण्डलविषय एवेति कश्चित्समाधत्ते **अपर इति** । अयमिह विहङ्गम इति प्रत्ययः ॥ **इहेति** । तथा च नालोकस्येहप्रत्ययविषयत्वं सम्भवति । आलोके आलोक इति प्राप्त्याऽऽत्माश्रयापत्तेरिति भावः । **सोऽपि** इहालोक इति प्रत्ययोऽपि । **ते** लौकिकाः । **हस्तादिषु** आश्रितं शरीरमिति शेषः ॥ **किन्त्विति** । हस्ताद्यवयवं दृष्ट्वा इदमेव शरीरमिति इह हस्ताद्यात्मकतयैव व्यवहरन्तीत्यर्थः । एवमपि इहालोक इति प्रत्ययस्यास्त्वालोकावयवविषयकत्वमित्यर्थः । नेहालोक इत्यत्रेहप्रत्ययविषयत्वं तदवयवस्य न सम्भवति । आलोकाभावावयवाभावादित्यर्थः । यद्वा इहालोकावयवे आलोको नास्तीति वक्तुं शक्यते अवयवे ध्वंसप्रागभावयोः सम्भवात्तथाऽपि नेहालोक इत्यत्रात्यन्ताभावस्यैव प्रतीयमानत्वात्तदधिकरणत्वमवयवस्य न युक्तमित्यर्थः । तथेहालोकत्र्यणुकमिति प्रत्ययोऽपि दुःसम्पादः । तत्रापि तदवयवस्य आलोकद्व्यणुकस्यातीन्द्रियत्वेन इहेति चाक्षुषप्रत्ययेऽनवभासादित्यर्थः । इहालोकत्र्यणुकमिति प्रत्ययः सुसम्पाद इत्याशङ्कते **प्रमाणान्तरेति** । त्र्यणुकं स्वापेक्षया स्वल्पपरिमाणद्रव्यारब्धं कार्यद्रव्यत्वाद्घटादिवदित्यनुमानरूपप्रमाणान्तरापनीतं द्व्यणुकरूपावयवमित्यर्थः । यथाकथञ्चिदुपनीतभानस्यावश्यकतया त्वयाऽप्यङ्गीकारादिहालोकत्र्यणुकमित्यत्रेव इह विहङ्गमः पततीत्यत्रापि साक्षिरूपप्रमाणान्तरोपनीताकाशविषयकत्वमेवास्त्वित्याह **एवं तर्हीति** । **तथाभूतं** प्रमाणान्तरोपनीतम् ॥ **तथा चेति** । आकाशस्येहप्रत्ययविषयत्वे सतीत्यर्थः ॥ **लौकिकेति** । यथा तव इहालोक इत्यादेरवयवविषयत्वकल्पने लोकानुभवविरोधस्तथाऽत्र नेत्यर्थः । तथा हि । लौकिका आकाशे पक्षी पततीति वक्तव्ये आकाशमिहेति निर्दिश्य तत्र पक्षी पततीति भवद्भिर्द्रष्टव्यमिति लौकिकानुभव इत्यर्थः । अस्त्विह पक्षीत्यत्र प्रमाणान्तरोपनीताकाशस्येहप्रत्ययविषयत्वम् । तथाऽपि तदुपनायकं प्रमाणं न भवदुक्तरीत्या साक्षिरूपम् । किंत्वनुमानमेव भविष्यतीत्याशयेन शङ्कते **तथाऽपीति** ॥ **अस्त्विति** । ततश्चानुमानोपनीतमेवाकाशम् इहप्रत्यये भासत इत्यर्थः ॥ **लिङ्गेति** । आकाशानुमापकलिङ्गेत्यर्थः ।

च० — अत्रार्थे किरणावलीकृन्मतं दुदूषयिषुरनुवदति **आलोकेति** । **सोपि** । आलोकोऽपि । **ते** लौकिकाः । **दुःसंपाद इति** । ईषद्दुस्सुष्विति कर्मसाधनखलन्तोऽयं । अवयवेषु अवयव्यभावराहित्येनाद्यो (ऽघटः) दुर्घटः । द्व्यणुकस्यातीन्द्रियतया द्वितीयश्च संपादयितुमशक्य इत्यर्थः ।

**सु० — अथ मतम् । 'शब्दस्तावत्प्रत्यक्षसिद्धः । स च गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वाद्रूपवत् इति । गुणत्वात् द्रव्याश्रितस्तद्वदेव' इति सामान्यतो द्रव्यसिद्धेः (द्रव्य सिद्धौ) (द्रव्ये सिद्धे) । 'शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात्, अयावद्-**

द्रव्यभावित्वात् । सुखादिवत् । स्पर्शव(द्विशेषगुण)त्वे तदनुपलम्भप्रसङ्गः । शब्दो हि श्रोत्रेण प्राप्तो वा गृह्यतेऽप्राप्तो वा । अप्राप्तग्रहणेऽतिप्रसङ्गः । प्राप्तिस्तु शब्दश्रवसोर्न संभवति । सा हि न तावच्छ्रोत्रस्य गमनेन संभवति । तस्यामूर्तस्य गत्यभा(तेरसंभ)वात् । नापि शब्दस्यागमनेन । स हि न तावच्छङ्खादिकमाश्रयं परित्यज्यागन्तुमलम् । गुणत्वात् । नापि शङ्खाद्यागमनेन श्रोत्र(स्य )प्रत्यासत्तिः । तदनुपलम्भात् । न च शब्दान्तरोत्पादपरंपरया । गुणस्य स्वाश्रये स्वाश्रयाश्रिते वा गुणेऽसमवायिकारणत्वात् । न च शङ्खश्रवसोर्मध्ये शङ्खो वा तदारब्धद्रव्यं वाऽस्ति । तस्माच्छङ्खादिनिमित्तान्यपहायाश्रयान्तरे वर्तमानो वीचीतरङ्गन्यायेन कर्णशष्कुली(ग)मन्तमाकाशदेशमापन्न उपलभ्यते नान्यथेति स्थितम् । नाप्यात्मगुणः । बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वादात्मन्यसमवायात् अहङ्कारेण विभक्तस्य ग्रहणाद्रूपादिवत् । न दिक्कालमनसां (गुणः), प्रत्यक्षत्वाद्विशेषगुणत्वाच्च' इति प्रसक्तप्रतिषेधे परिशेषादेभ्योऽतिरिक्तं द्रव्यं सिद्ध्यति । तदाकाशमिति ।

तदयं प्रमाणार्थः । शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः । तद्वृत्तौ बाधकोपपन्नत्वे सति गुणत्वाद्रूपत्वादिति ।

तदिदमयुक्तं जातिबधिराणामाकाश(ादि)प्रतिभासानुपपत्तिप्रसङ्गात् । ततश्चेहालोको नास्तीति प्रतीतिर्न स्यात् । मूर्तावकाशेन तेषामाकाशानुमानमिति चेन्न । मूर्तान्तराभावेनान्यथासिद्धत्वात् । मूर्ताभावस्याधिकरणेन भाव्यमिति चेत् । सत्यम् । तथाऽपि तस्याप्रतीतावाश्रयासिद्धेः । प्रतीतौ च साधिकरणस्यैव प्रतीतत्वादनुमानानवकाशः ।

शे० — शब्दस्यैवाकाशानुमापकस्य भावान्न लिङ्गाभाव इति शङ्कते **अथेति** ॥ **शब्दस्तावदिति** । तथा च न शब्दपक्षकानुमानेऽसिद्धिरिति भावः । करिष्यमाणसामान्यसिद्धावाश्रयासिद्धिं परिहृत्य तत्र हेत्वसिद्धिं परिहरति **स चेति** ॥ **सामान्यवत्त्वे सतीति** । इन्द्रियग्राह्यत्वादित्युक्ते घटादौ व्यभिचारस्तदर्थमेकेति । तथाऽप्यात्मनि गतं तदर्थं बाह्येति । तथाऽपि यौगिकप्रत्यक्षे वाय्वादौ व्यभिचारस्तदर्थमस्मदादीति । तथाऽपि रूपत्वादौ व्यभिचारस्तदर्थं सामान्यवत्त्वे सतीत्युक्तम् । न च सामान्यवत्त्वे सतीति हेतुविशेषणासिद्धिः । कार्यत्वे सति प्रतिनियतेन्द्रियग्राह्यत्वेनैव तत्सिद्धेरिति भावः । अस्त्वेवं गुणत्वं ततः किमित्यत आह **गुणत्वादिति** ॥ **तद्वदेवेति** । रूपवदेवेत्यर्थः । नन्वेवं शब्दाश्रयद्रव्यमात्रसिद्धावपि नाकाशसिद्धिरित्याशङ्क्य परिशेषादाकाशसिद्धिरिति वक्तुं प्रसक्तप्रतिषेधं तावत्करोति **इतीति** । 'सामान्यतो द्रव्यसिद्धौ' इत्यस्य 'परिशेषात् एभ्योऽतिरिक्तं द्रव्यं सिद्ध्यती'ति वक्ष्यमाणेनान्वयः ।

**न स्पर्शवद्विशेषगुण इति।** कर्मजन्यस्य स्थाणुश्येनसंयोगस्य प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वायावद्द्रव्यभावित्वयोः सत्त्वेऽपि स्पर्शवद्गुणत्वेन तत्र व्यभिचारपरिहाराय साध्ये विशेषपदमिति द्रष्टव्यम्। शब्दस्य विशेषगुणत्वसिद्धिस्तु शब्दो विशेषगुणोऽस्पर्शवत्त्वे सति बाह्यैकेन्द्रियग्राह्यसामान्यवत्त्वात् रूपवदित्यनुमानाद्द्रष्टव्या। बहिरिन्द्रियेणैकेन चक्षुर्मात्रेण गृह्यमाणप्रभात्वसामान्यवत्याः प्रभाया द्रव्यतया गुणत्वाभावात्तत्र व्यभिचारवारणायास्पर्शवत्त्वोपादानम्। प्रभाकुम्भसंयोगस्य गुणत्वेनास्पर्शवत्त्वेऽप्यनेकसाधारणतया विशेषगुणत्वाभावात्तत्र व्यभिचारवारणाय द्वितीयं विशेषणम्। तस्य च दर्शनस्पर्शनगम्यसंयोगत्वसामान्यवत्त्वान्न बाह्यैकेन्द्रियग्राह्यसामान्यवत्त्वमिति न व्यभिचारः। आत्मनि व्यभिचारं वारयितुं बाह्यपदम्॥ **प्रत्यक्षत्वे सतीति।** स्पर्शवतां शङ्खादीनां यानि समवायिकारणानि तेषां ये गुणास्तदनपेक्षत्वादित्यर्थः। अत्र परमाणुगुणैर्व्यभिचारनिरासार्थं प्रत्यक्षत्वे सतीत्युक्तम्। तन्तुरूपादिजन्यपटरूपादौ व्यभिचारवारणायोक्तमकारणगुणपूर्वकत्वादिति। पिठरपाकानभ्युपगमान्न पाकजगुणैर्व्यभिचार इति ध्येयम्॥ **अयावदिति।** सत्त्वेव शङ्खादिषु निवृत्तेरित्यर्थः। शङ्खादिसमानकालीनध्वंसप्रतियोगित्वादिति यावत्। न चेदमसिद्धम्। यावच्छङ्खमनुपलम्भादेव तत्सिद्धेरिति भावः। अत्रापि प्रत्यक्षत्वे सतीति विशेषणीयम्। अन्यथा पार्थिवपरिमाणुरूपादिभिर्व्यभिचारप्रसक्तेरिति बोध्यम। प्रत्यक्षत्वमात्रं घटरूपादिष्वप्यस्तीति तद्व्यावृत्तये विशेष्यभागः। उक्तयोर्हेत्वोरप्रयोजकत्वमित्यतो यदि शब्दः स्पर्शवच्छङ्खविशेषगुणः स्यात्तर्हि तदसंबद्धेन्द्रियग्राह्यो न स्यात् रूपादिवदिति विपक्षे बाधकतर्कसद्भावान्नाप्रयोजकतेति भावेन तर्कमुपपादयति **स्पर्शवदिति॥ अतिप्रसङ्ग इति।** सर्वेषां सर्वत्र सर्वशब्दोपलम्भः स्यादित्यतिप्रसङ्ग इत्यर्थः॥ **अमूर्तस्येति।** अमूर्ताकाशात्मकत्वाच्छ्रोत्रस्यामूर्तत्वमिति स्वमतावष्टम्भेनोक्तमिति ध्येयम्॥ **गुणत्वादिति।** अन्यथाऽयुतसिद्धत्वभङ्गप्रसङ्गादिति भावः॥ **गुणस्य स्वाश्रय इत्यादि।** स्वाश्रये गुणे स्वाश्रयाश्रिते गुणे वा गुणस्यासमवायिकारणत्वादिति संबन्धः। अत्र स्वशब्दो गुणपरः। आद्ये स्वाश्रय आश्रयो यस्येति स्वाश्रयस्तस्मिन्निति द्वितीये स्वाश्रय आश्रयो यस्येति स्वाश्रयस्तमाश्रितः स्वाश्रयाश्रितस्तस्मिन्निति च विग्रहः। तेन स्वाश्रये गुणे इति स्वाश्रयाश्रिते गुणे इति सामानाधिकरण्यनिर्वाह इति द्रष्टव्यम्। तेजःसंयोगादेः स्वाश्रये गुणे तन्तुरूपादेश्च स्वाश्रयाश्रिते गुणेऽसमवायिकारणत्वमिति विवेको बोध्यः। यद्वा स्वाश्रये यो गुणः स्वाश्रयाश्रिते यो गुणस्तत्रेति वैयधिकरण्येनैवान्वयान्न किञ्चिदेतत्। यदि हि शङ्खश्रवसोर्मध्ये शङ्खः स्यात्तदा घटाद्याश्रिततेजःसंयोगेन स्वाश्रये घटे पाकजादेरिव शङ्खाश्रितेन शब्देन स्वाश्रये शब्दान्तरोत्पत्त्या श्रोत्रे प्रत्यासत्तिः स्यात्। यदि वा शङ्खारब्धं द्रव्यान्तरं भवेत्तदा तन्तुरूपेण स्वाश्रयाश्रिते पटे रूपस्येव शङ्खाश्रितेन शब्देन स्वाश्रयारब्धे मध्यवर्तिनि द्रव्ये शब्दान्तरोत्पत्त्या श्रोत्रे प्रत्यासत्तिः

स्यात् । न चैतदस्ति । शङ्खश्रवसोर्मध्ये शङ्खतदारब्धद्रव्ययोरनुभवबाधितत्वेन कल्पयितुमशक्यत्वा-दित्याशयः । तर्ह्याकाशगुणत्वमपि न स्यात् । उक्ततर्कपराहतेस्तत्रापि वक्तुं शक्यत्वादित्यत आकाश-गुणत्वे तदप्रवृत्तिं दर्शयति **तस्मादिति** ॥ **आश्रयान्तर इति** । तदेवाकाशमिति भावः ॥ **वीचीतरङ्गन्यायेनेति** । यथा वीची प्रथमोत्पन्ना वीच्यन्तरमारभते तच्च तरङ्गान्तरं तथा शब्दोऽप्याद्यः सर्वतो दिक्षु सजातीयं शब्दान्तरं तदपि शब्दान्तरमारभत इति वीचीतरङ्गन्यायेनेत्यर्थः । यदि च कदम्बमुकुलकन्यायेनानेकं शब्दमारभते तदा भिन्नदिगवस्थितयोर्य एव शब्दस्त्वया श्रुतः स एव मयाऽपीति प्रत्यभिज्ञानानुपपत्तिः । न च त एवेमे शालय इत्यादिवत्तज्जातीयविषयकत्वादिकं कल्पनीयम् । बाधकाभावेन तदनवकाशादिति भावः ।

**नापीति** । शब्द इति वर्तते ॥ **बाह्येन्द्रियेति** । मनसोऽन्यदिन्द्रियं बाह्येन्द्रियं तत्प्रत्यक्षत्वा-दित्यर्थः । श्रोत्रं बाह्येन्द्रियं प्रतिनियतविषयत्वाच्चक्षुर्वत् । अनात्मगुणत्वे सति महद्द्रव्यवृत्तित्वमुद्भूतत्वं च बाह्येन्द्रियग्राह्यत्वे गुणानां योग्यता । सा चात्मगुणत्वे दुर्लभा स्यात् । अन्यथा बुद्ध्यादीनामपि बाह्येन्द्रियाग्राह्यत्वप्रसक्तेरिति भावः । हेत्वन्तरमाह **आत्मान्तरेति** । अनेकप्रतिपत्तृसाधारणत्वा-दित्यर्थः । ये ह्यात्मगुणाः सुखादयो न ते आत्मान्तरेण गृह्यन्ते । शब्दश्चानेकैरात्मभिर्गृह्यतेऽतो नात्म-गुण इत्यर्थः । यद्वा यत्रस्थः शब्दस्ततोऽन्य आत्मान्तरं तत्प्रत्यक्षत्वादित्यर्थः । वीणाद्याश्रयतया हि शब्दः प्रतीयते । तत्सन्तानन्यायेन श्रोत्रस्थो वा तस्मादन्यश्चास्य ग्राहक आत्मा । ये त्वात्मगुणा गृह्यन्ते ते ग्राहकस्था एवं गृह्यन्ते सुखादयः । गृह्यमाणस्तु शब्दो न ग्राहकस्थ इति । ततश्च यद्ययं शब्द आत्म-गुणः स्यात्तर्ह्यात्माविषयकप्रत्यक्षविषयो न स्यात्तादृशश्चायं तस्मान्न गन्धादिवदात्मगुण इत्युक्तं भवति । एतदेव कुत इत्यत आह **आत्मनीति** । ग्राहकेऽसमवायादित्यर्थः । इदमप्यसिद्धमित्यत आह **अहङ्कारेणेति** । अहङ्कारेण विभक्तस्य व्यधिकरणस्य ग्रहणात् । वीणा वाद्यते वेणुः पूर्यते, न त्वहं वाद्ये पूर्ये वेति कस्यचित्प्रत्ययः । यद्यहंप्रत्ययो यत्र तत्रैव विषये शब्दः स्यात्तर्हि ग्राहके मनसाऽध्यव-सीयमाने तद्गततया शब्दोऽपि सुखादिवन्मनसाऽध्यवसीयेत । गुणस्य मानसप्रत्यक्षत्वे, उद्भूतत्वे सति ग्राहकवर्तित्वस्य योग्यतारूपत्वात् । न चैवम् । तस्माद्यत्राहंप्रत्ययस्ततोऽन्यत्रात्मनि शब्दो वाच्यः । तथा चानात्मवर्तिनोऽपि शब्दस्यात्मवृत्तित्वव्याघातः । अहङ्कारेण व्यधिकरणतया प्रतीयमानस्याप्यात्मस-मवाये गन्धादीनामपि तथात्वप्रसङ्ग इति भावः ।

**नेति** । शब्दो गुण इत्यनुवर्तते । यत्तु किरणावलीकृता विशेषगुण इति शेष इत्युक्तम् । तदसत् । दिक्कालमनोविशेषगुणत्वस्याप्रसिद्धतया प्रतियोग्यप्रसिद्ध्या दिक्कालमनोविशेषगुणत्वाभावस्य साधयितुमशक्यत्वात् । न च विशेषगुण इति पक्षविशेषणं कृत्वा दिक्कालमनोगुणत्वाभावस्य साध्यत्वान्न

प्रतियोग्यप्रसिद्धिरिति वाच्यम् । तथाऽपि वैयर्थ्यानिस्तारादनुषङ्ग इत्येव वक्तव्यतया शेषपदस्यास्वारस्याच्च । अत एव न दिक्कालमनोगुण इत्येव लीलावत्यामुक्तमिति द्रष्टव्यम् ॥ **प्रत्यक्षत्वादिति** । रूपादिवदित्यनुवर्तते । ननु यदि नाम शब्दः पृथिव्यादीनामष्टानां गुणो न भवति चेन्मा भूत् । आकाशं त्वतिरिक्तमस्तीत्यत्र किं प्रमाणमित्यत आह **इति प्रसक्तेति** । उक्तमर्थं प्रमाणमारोहयति **तदयमिति** ।

**जातिबधिराणामिति** । तेषां शब्दज्ञानाभावादिति भावः । पूर्वमबधिरस्य पश्चात्कारणविशेषाद्बधिरस्य पूर्वानुभूतशब्दस्मरणमुपादाय तत्पक्षकानुमानं स्यादेवेत्याशङ्कापरिहाराय जातीत्युक्तम् । तेषामपि प्राग्भवीयसंस्कारेणाकाशस्मरणकल्पनं तु प्रमाणाभावनिरस्तमिति ध्येयम् । ननु जातिबधिराणां शब्दाश्रवणाच्छब्दस्य व्यवस्थापकत्वाभावेऽप्यन्यदेवाकाशस्य व्यवस्थापकं स्यादिति शङ्कते **मूर्तेति** । तथा चायं प्रदेश आकाशवान् मूर्तावकाशवत्त्वात्, इत्यनुमानमनेनोक्तं भवति । मूर्तावकाशस्य मूर्तान्तराभावेनान्यथासिद्धस्य व्याप्तिविधुरत्वेन नाकाशानुमापकत्वमित्याह **नेति** । मूर्ताभावः साधिकरणोऽभावत्वात् । योऽभावः स साधिकरणो यथा घटाभावो भूतलाधिकरण इत्यभावाधिकरणतयाऽऽकाशसिद्धिरिति शङ्कते **मूर्तेति** । किमत्राभावोऽप्रतीत एवाधिकरणमनुमापयति किंवा प्रतीत इति विकल्पद्वयं मनसि निधायाद्यं दूषयति **तथाऽपीति** । द्वितीयं दूषयति **प्रतीतौ चेति** ॥ **अनवकाश इति** । सिद्धसाधनत्वप्रसक्तेरिति भावः ।

स० — आकाशानुमापकस्य भावान्न लिङ्गाभाव इति चोदयति **अथेति** । ननु शब्दस्य गुणत्वाभावात् तस्य कथमाकाशव्यवस्थापकत्वम् अन्यथा घटादेरपि तत्स्यादित्यत आह **स चेति** । इन्द्रियग्राह्यत्वादित्युक्ते घटादिषु व्यभिचारः । **तदर्थमेकेति** । तथाप्यात्मनि व्यभिचारः । तदर्थं **बाह्येति** । तथापि योगिप्रत्यक्षे वायौ व्यभिचारः तदर्थम् **अस्मदादीति** ॥ तथापि गन्धत्वादौ व्यभिचारः तदर्थं **सामान्यवत्त्वे सतीति** । किमतो यद्येवमित्यत आह **गुणत्वादिति** ॥ ननु शब्दाश्रयद्रव्यमात्रसिद्धावपि नाकाशसिद्धिरित्याशङ्क्य परिशेषादाकाशसिद्धिं वक्तुं प्रतिषेधं तावत्करोति **इतीति** । सामान्यतो द्रव्ये सिद्धे इत्यस्य परिशेषादेभ्योऽतिरिक्तं द्रव्यं सिद्ध्यतीति वक्ष्यमाणेनान्वयः ।

**शब्दो न स्पर्शवद्विशेषगुण इति** । अत्र हेत्वोः कर्मजे स्थाणुश्येनसंयोगादौ व्यभिचारवारणाय साध्ये विशेषेत्युक्तम् । तथापि पटगतरूपादौ व्यभिचारः । अतोऽकारणगुणपूर्वकेत्युक्तम् । स्पर्शवतां शंखादीनां यानि समवायिकारणानि तेषां ये गुणाः तदनपेक्षत्वादित्यर्थः । एतन्मते न पिठरपाकप्रक्रियाऽभिमता । अतो न पाकजे घटरूपादौ व्यभिचारः । द्वितीयहेतौ, सत्स्वेव शंखादिषु निवृत्तत्वान्न तद्विशेषगुणत्वं रूपादीनां तथात्वादर्शनात् । न चेदमसिद्धं यावच्छंखमुपलम्भापत्तेः । न च व्यञ्जकाभावाद्-

ग्रहः । दण्डादिसंयोगाभावेपि घटनाशस्योपलम्भात् । अन्यस्य व्यञ्जकस्यानिर्वचनात् । निर्वचनेप्य-न्यूनातिरिक्तदेशस्य समानेन्द्रियग्राह्यस्य प्रतिनियतव्यञ्जकव्यंग्यत्वाभावात् सर्वोपलब्धिप्रत्ययादिति समाधानं विधेयम् । अत्रापि पूर्ववत् 'प्रत्यक्षत्वे सति' इत्यनुषञ्जनीयम् । अन्यथा परमाणुगुणैरेव विरोधः स्यात् । अत्रानुकूलतर्कमाह **स्पर्शवद्गुणत्व इत्यादिना** । अनेन यदि शब्दः स्पर्शवच्छङ्खादिगुणः स्यात् । तर्हि शब्दान्तरोत्पादकपरंपरया श्रोत्रदेशसमासन्नो नोपलभ्येत शङ्खगतरूपादिवत् । उपलभ्यते च तथा । तस्मान्न स्पर्शवच्छङ्खादिगुण इति तर्क उक्तो भवति । शिष्टमेतदुपपादकमवगन्तव्यम् । **अति-प्रसङ्ग इति** । अप्राप्तस्य ग्रहणे सर्वदैव सर्वत्र सर्वेषां सर्वशब्दोपलम्भप्रसङ्गादित्यर्थः । **स्वाश्रय इति** । तेजस्संयोगस्य स्वाश्रये, तन्तुरूपादेः स्वाश्रयाश्रितगुणेऽसमवायिकारणत्वादित्यर्थः । आकाशगुणत्वे तु नैतत्तर्कपराहतिरित्याह **तस्माच्छङ्खादीति** ॥ **आश्रयान्तर इति** । आकाश इत्यर्थः ॥ **वीचीतरङ्ग-न्यायेनेति** ॥ यथा वीचिः प्रथमोत्पन्ना वीच्यन्तरमारभते तच्च तरङ्गान्तरं तथा शब्दोप्याद्यः सर्वतो दिक्षु सजातीयशब्दान्तरं तदपि शब्दान्तरमित्यर्थः । यदि च कदम्बमुकुलन्यायेन अनेकशब्दमारभते तदा-भिन्नदिगवस्थितयोर्य एव शब्दस्त्वया श्रुतः स एव मयापीति प्रत्यभिज्ञानं नोपपद्यते । तज्जातीय-विषयत्वकल्पनस्य भ्रमत्वकल्पनस्य वा बाधकाभावेनापास्तत्वादित्यर्थः । **बाह्येति** । मनसोऽन्यदिन्द्रियं बाह्येन्द्रियं तत्प्रत्यक्षत्वादित्यथः । श्रोत्रं बाह्येन्द्रियं प्रतिनियतविषयत्वात् चक्षुर्वत् । अनात्मगुणत्वे सति-महद्द्रव्यवृत्तित्वं उद्भूतत्वं च बाह्येन्द्रियग्राह्यत्वे गुणानां योग्यता । सा चात्मगुणत्वे दुर्लभा स्यात् । अन्यथा बुद्ध्यादीनामपि बाह्येन्द्रियग्राह्यत्वं स्यात । हेत्वन्तरमाह **आत्मान्तरेति** ॥ अनेकप्रतिपत्तृसाधारण-त्वादित्येकं व्याख्यानम् । अन्यत्तु यत्रस्थः शब्दः ततोन्य आत्मा आत्मान्तरं तत्प्रत्यक्षत्वादिति । वीणा-द्याश्रयतया हि शब्दः प्रतीयते, तत्सन्तानन्यायेन श्रोत्रस्थो वा, न स्वात्मनिष्ठतया, तस्मादन्यश्चास्य ग्राहक आत्मा इति । ये त्वात्मगुणा गृह्यन्ते ते ग्राहकस्था एव गृह्यन्ते । सुखादयो यथा । गृह्यमाणस्तु शब्दो न ग्राहकस्थ इति । तदेव कुत इत्यत उक्तम् **आत्मनीति** । ग्राहकेऽसमवायादित्यर्थः । इदमप्यसिद्ध-मित्यत उक्तम् । **अहंकारेणेति** ॥ अहंकारेण विभक्तस्य व्यधिकरणस्य ग्रहणात् । वीणा वाद्यते वेणुः पूर्यते, न त्वहं वाद्ये अहं पूर्ये चेति कस्यचित्प्रत्ययः । यदि अहंप्रत्ययो यत्र तत्रैव विषये शब्दः स्यात् तर्हि ग्राहके मनसाऽध्यवसीयमाने तद्गततया शब्दोऽपि सुखादिवत् मनसाऽध्यवसीयेत । गुणस्य मानस-प्रत्यक्षत्वे उद्भूतत्वे सति ग्राहकवर्तित्वस्य योग्यतारूपत्वात् । न चैवम् । तस्माद्यत्राहं प्रत्ययः ततोन्यत्र

शब्दो वाच्यः । तथाचानात्मवर्तिनोऽपि शब्दस्य आत्मवर्तित्वे व्याघातः । एवमप्यात्मवृत्तित्वं शङ्क्येत चेत् गन्धादेरप्यात्मवृत्तित्वं प्रसज्येतेति । **न दिक्कालमनसामिति** । विशेषगुण इति शेषः । उपपादितमर्थं प्रमाणमारोहयति **तदयमिति** । एतच्चोद्यं परिहरति **तदिति** ॥ **जातिबधिराणामिति** । न च जन्मान्तरानुभवजन्यसंस्कारसहकृतमनसैव तद्बोधो जन्मान्तरानुभूतेष्टसाधनताज्ञानवत् कल्प्यत इति वाच्यम् । प्रत्यग्रोत्पन्नस्य शिशोः जीवनानुपपत्त्या तत्कल्पनेऽपि प्रकृते तत्कल्पकाभावादिति भावः । ननु जातिबधिराणां शब्दाश्रवणात् शब्दस्य व्यवस्थापकत्वाभावेऽप्यन्यदेवाकाशस्य व्यवस्थापकं स्यादिति शङ्कते **मूर्तेति** । **मूर्तानां** पटादीनां, **अवकाशेन** अवस्थानेनेत्यर्थः । मूर्तावकाशः अन्यथासिद्धत्वेन व्याप्तिविधुरो नाकाशमनुमापयितुं शक्नोतीत्याह **नेति** ॥ मूर्ताभावः साधिकरणः अभावत्वात्, योऽभावः स साधिकरणः यथा घटाभावः भूतलाधिकरण(क) इत्यभावाधिकरणतया आकाशसिद्धिरिति शङ्कते **मूर्तेति** ॥ किमत्राभावः प्रमितोधिकरणमनुमापयति अप्रमितो वा नोभयथापीत्याह **तथापीति** ॥

प०— सामान्यपरिशेषरूपानुमानाभ्यां गगनादिसिद्धिनिरासोऽपि साक्षिप्रत्यक्षपदप्रयोगफलमिति भावेन तन्मतमाशङ्कते **अथ मतमित्यादिना** ॥ आश्रयासिद्धिशङ्कानिरासायाह **शब्दस्तावत्प्रत्यक्षसिद्ध इति** । गुण इति साध्यनिर्देशः । हेतौ (तोर्ग्रा)ग्राह्यत्वमात्रस्य गगनादौ व्यभिचारादिन्द्रियेति विशेषणम् । घटादावव्यभिचाराय एकेन्द्रियेति । जीवात्मन्यव्यभिचाराय **बाह्येति** । योगिबाह्येन्द्रियग्राह्यात्माकाशादावव्यभिचाराय **अस्मदादीति** । शब्दत्वादावव्यभिचाराय **सत्यन्तम्** । अयं च प्रयोगो वक्ष्यमाणगुणत्वहेतोरसिद्धिनिरासाय । परोक्तप्रतिज्ञादिक्रमनियमभञ्जनाय हेतुपूर्वकं गगनसाधकसामान्यानुमानप्रयोगमाह **गुणत्वाद्द्रव्याश्रित इति** । शब्द इति धर्मिवाचिपदमनुवर्त्यम् । सामान्यतो द्रव्ये सिद्ध इत्यस्य परिशेषादित्यादिना वक्ष्यमाणेनान्वयः । गगनरूपविशेषद्रव्यसिद्धये परिशेषं वक्तुं प्रसक्तं निराह **शब्द इत्यादिना** । स्पर्शवतः पृथिव्यादिचतुष्टयस्य गुणो नेत्यर्थः । कर्मजसंयोगादौ हेतोरव्यभिचाराय साध्ये विशेषपदम् । कारणगुणपूर्वकत्वं नाम स्वसमवायिकारणमात्रसमवेतगुणासमवायिकारणकत्वम् । यथा घटगतरूपस्य स्वाश्रयसमवायिकारणमृत्पिण्डगतरूपासमवायिकारणकत्वं । तदभावः, अकारणगुणपूर्वकत्वं । तस्मादिति हेत्वंशस्यार्थः । शब्दश्चोक्तरूपकारणगुणपूर्वको नेति नासिद्धिः । परमाणुरूपादावव्यभिचाराय प्रत्यक्षत्वे सतीति विशेषणम् । तन्तुरूपजन्ये पटरूपेऽ(घटगतपूर्वरूपादाव)व्यभिचाराय विशेष्यम् ॥ **अयावद्द्रव्यभावित्वादिति** । अत्रापि प्रत्यक्षत्वे सतीत्यनुवर्तनीयम् । तेन पाकजे पार्थिवपरमाणुरूपादौ व्यभिचारः । हेतोरप्रयोजकत्वनिरासाय विपक्षे बाधकतर्कमाह **स्पर्शवद्गुणत्व इत्यादिना** ॥ **तदिति** । शब्दानुपलम्भप्रसङ्ग इत्यर्थः । तत्कथमित्यतो व्यनक्ति **शब्दो हीत्यादिना द्रव्यं वाऽस्तीत्यन्तेन** ॥ **गुणस्य स्वाश्रय इति** । स्वाश्रये वर्तमानं गुणं प्रति वा स्वाश्रयाश्रिते विद्यमानं गुणं प्रति

**गुणस्या**समवायिकारणत्वादित्यर्थः । आद्यं यथा । आत्मगतमनःसंयोगस्य आत्मगतज्ञानादिगुणासमवायिकारणत्वम् । द्वितीयं तु तन्तुरूपस्य पटगतरूपं प्रत्यसमवायिकारणत्वम् । न चैवं स्पर्शवद्गुणत्वे सम्भवतीति भावः । कथं तर्हि तदुपलम्भ इत्यत आह **तस्मादिति** । **वीचीतरङ्गेति** । सूक्ष्मस्थूलत्वाभ्यां वीचीतरङ्गयोर्भेदः । यथा तटाकादिमध्ये पाषाणादिप्रक्षेपे सति वलयाकारेण दशदिक्संबद्धा काचिद्वीची जायते । तदनन्तरं तथैव कश्चित्तरङ्गः पुनर्वीची पुनस्तरङ्ग इत्येवं तीरपर्यंतं वीचीतरङ्गपरम्परया तीरप्राप्तिः । तथा शंखादिशब्दस्यापि परम्परया कर्णशष्कुलीयुक्तदेशप्राप्तिरित्यर्थः । **नाप्यात्मगुण इति** । शंखशब्दं कुर्वन्न्य आत्मा तद्गुण इत्यर्थः । शब्द इति वर्तते ॥ **अहंकारेण विविक्तस्येति** । अहं सुखीत्यादिवत् अहमर्थसंसृष्टत्वभावेनाऽहमर्थाऽसंसृष्टस्येत्यर्थः । **न दिक्कालमनसामिति** । गुणः शब्द इत्यनुकर्षः ॥ **प्रसक्तेति** । आश्रयत्वेन प्रसक्तपृथिव्याद्यष्टद्रव्याणामाश्रयत्वप्रतिषेध इत्यर्थः । रूपवदितीतिशब्दस्य अथ मतमिति पूर्वेणान्वयः ॥ **तदिदमिति** । उक्तदिशा शब्दलिङ्गकत्वमित्यर्थः ॥ **जातिबधिराणामिति** । न च तेषामपि जन्मान्तरीयव्याप्त्यनुसंधानादाकाशप्रतिभास इति वाच्यम् । अन्यथोपपत्तौ तत्कल्पकाभावात् । अन्यथाऽतिप्रसङ्गादिति भावः ॥ **मूर्तावकाशेनेति** । कुम्भकुमूलादिमूर्तपदार्थानामवस्थानप्रतिहत्यभावेनेत्यर्थः । आकाशसिद्धिं शङ्कते **मूर्ताभावस्याप्यधिकरणेति** । स्तम्भकुम्भादिमूर्ताभावः साधिकरणो मूर्ताभावत्वात् घटाद्यधिकरणपटाद्यभाववत् इत्यनेन जातिबधिराणामाकाशप्रतिभास इति भावः ॥ **तस्येति** । पक्षतयोपात्तमूर्ताभावस्येत्यर्थः ॥ **साधिकरणस्यैवेति** । अधिकरणप्रतियोगिघटितत्वेनैवाभावप्रतीतिनियमात् सद्भ्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यत इत्यङ्गीकारादिति भावः ।

या० — **सामान्यवत्त्वे सतीति** । अत्र रूपत्वादिसामान्ये योगिबाह्येन्द्रियग्राह्ये वाय्वादावात्मनि घटादौ च व्यभिचारवारणाय क्रमेण विशेषणानि । सामान्यतो द्रव्ये सिद्धे इत्यस्य परिशेषादेभ्योऽतिरिक्तं द्रव्यं सिद्ध्यतीति वक्ष्यमाणेनान्वयः ॥ **शब्दो न स्पर्शवद्विशेषगुण इति** । अत्र हेत्वोः कर्मजे स्थाणुश्येनसंयोगादौ व्यभिचारवारणाय साध्ये विशेषपदम् । प्रतिनियतेन्द्रियग्राह्यत्वेन च शब्दस्य विशेषगुणत्वसिद्धिरूह्या । परमाणुरूपादौ व्यभिचारवारणाय **प्रत्यक्षेति** । तन्तुरूपादिजन्ये पटरूपादौ व्यभिचारवारणाय **कारगुणपूर्वकेति** । एतन्मते पिठरपाकानभ्युपगमात्र पाकजे घटरूपादौ व्यभिचारः । द्वितीयहेतावपि प्रत्यक्षत्वे सतीत्यनुषञ्जनीयम् । अन्यथा पार्थिवपरमाणुरूपादौ व्यभिचारप्रसङ्गादिति द्रष्टव्यम् । अनयोरनुकूलतर्कमाह **स्पर्शवद्गुणत्व इत्यादिना** । अनेन शब्दो यदि स्पर्शवच्छङ्खादिविशेषगुणः स्यात् । तर्हि तदसम्बद्धेन्द्रियग्राह्यो न स्यात्तद्रूपादिवदिति तर्क उक्तो भवति । शिष्टमेतदुपपादकमिति मन्तव्यम् ॥ **गुणस्य स्वाश्रय इति** । कर्मणः स्वाश्रय एवासमवायिकारणत्वेन द्वैविध्याभावाद्गुणस्येत्युक्तम् । तेजःसंयोगादेः स्वाश्रये तन्तुरूपादेः स्वाश्रयाश्रित

इति विवेकः । आकाशगुणत्वे तु नैतत्तर्कपराहतिरित्याह **तस्माच्छब्दादिति** ॥ **आश्रयान्तर इति** । आकाश इत्यर्थः ॥ **वीचीतरङ्गन्यायेनेति** । यथा वीची प्रथमोत्पन्ना वीच्यन्तरमारभते । तच्च तरङ्गान्तरम् । तथाऽऽद्यः शब्दोऽपि सर्वतो दिक्षु सजातीयं शब्दान्तरम् । तदपि शब्दान्तरमित्यर्थः । कदम्बगोलकन्यायेनानेकशब्दारम्भस्तु न युक्तः । भिन्नदिगवस्थितयोर्य एव शब्दस्त्वया श्रुतः स एव मयाऽपीति प्रत्यभिज्ञाविरोधात् । तस्यास्तज्जातीयविषयकत्वकल्पनस्य भ्रमत्वकल्पनस्य वा बाधकाभावेनासम्भवात् ॥ **बाह्येन्द्रियेति** । मनसोऽन्यदिन्द्रियं बाह्यम् । तत्प्रत्यक्षत्वाद्गन्धवदित्यन्वयी । बाह्येन्द्रियत्वं तु श्रोत्रस्य प्रतिनियतविषयत्वाच्चक्षुर्वत् । आत्मगुणानां बाह्येन्द्रियेण ग्रहीतुमशक्यत्वात् । अन्यथा बुद्ध्यादीनां तथात्वप्रसङ्ग इति किरणावल्युक्तमुपपादनमत्र द्रष्टव्यम् । हेत्वन्तरमाह **आत्मान्तरेति** । ये ह्यात्मगुणाः सुखादयो न ते आत्मान्तरेण गृह्यन्ते । शब्दश्चानेकैरात्मभिर्गृह्यतेऽतो नात्मगुण इत्यर्थः । अथवा यत्रस्थः शब्दस्ततोऽन्य आत्मा आत्मान्तरं तत्प्रत्यक्षत्वादित्यर्थः । वीणाद्याश्रयतया हि शब्दः प्रतीयते । तत्सन्तानन्यायेन श्रोत्रस्थो वा न स्वात्मनिष्ठतया । तस्मादन्यश्चास्य ग्राहक आत्मा । तथा च यद्ययं शब्द आत्मगुण स्यात्तर्ह्यात्माविषयकप्रत्यक्षविषयो न स्यात् । तादृशश्चायम् । तस्मान्न गन्धादिवदात्मगुण इति भावः । एतदेव कुत इति चेत्तत्राह **आत्मन्यसमवायादिति** । ग्राहकासमवाया[illegible]दित्यर्थः । इदमप्यसिद्धमित्यत आह **अहङ्कारेणेति** । **विभक्तस्य** व्यधिकरणस्य । वीणा वाद्यते वेणु[illegible] पूर्यते, न त्वहं वाद्येऽहं पूर्ये वेति कस्यचित्प्रत्ययः । अहङ्कारेण व्यधिकरणतया प्रतीयमानस्याप्यात्म[illegible] समवाये गन्धादीनामपि तथात्वप्रसङ्ग इति भावः ॥ **जातिबधिराणामिति** । तेषां शब्दस्तावत्प्रत्यक्ष[illegible] सिद्धः, स च गुण इत्याद्युक्तरीत्याऽनुमानसम्भवादिति भावः । तेषामपि प्राग्भावीयसंस्कारेणा[illegible]शभानकल्पनं त्वप्रामाणिकमिति ध्येयम् ॥ **मूर्ताभावस्यापीति** । तथा च मूर्ताभावः साधि[illegible] अभावत्वात् सम्प्रतिपन्नाभाववदित्यनुमानादाकाशसिद्धिरिति भावः ॥ [illegible]

**श्री०**— लिङ्गाभावोऽसिद्धः यावता शब्द एवकाशानुमापकं लिङ्गमित्यभिप्रेत्य [illegible] **अथ मतमित्यादिना** ॥ **सामान्यवत्त्वे सतीत्यादि** । इन्द्रियग्राह्यत्वादित्युक्ते पटादौ व्यभि[illegible] **एकेति** । तथापीन्द्रियरूपमनसैव ग्राह्ये आत्मनि; तदर्थं **बाह्येति** । तथाऽपि योगिबाह्ये[illegible] वाय्वादौ अत **अस्मदादीति** । तथाऽपि सामान्येऽतः **समान्यवत्त्वे सतीत्युक्तम्** । [illegible]पदत्यागे समग्रहेतोरपि घटादौ व्यभिचारः स्यादतः सर्वं विशेषणं सार्थकम् । अकारणगुणपूर्वकत्वादित्यत्र कारण[illegible] शब्देन स्वस्य यत्समवायिकारणं तत्समवायिकारणं गृह्यते । यथा पटरूपं कारणगुणपूर्वकं [illegible] स्वसमवायिकारणसमवायिकारणगुणपूर्वको न भवति समवायिकारणीभूताकाशसमवायिकार[illegible]भावादिति पक्षे हेतूपपादनं द्रष्टव्यम् । एवमुत्तरत्रापि कारणशब्दव्याख्यानं द्रष्टव्यम् । तद्द[illegible]

अप्रयोजकतां परिहरति ॥ **स्पर्शवद्गुणत्वे इति** ॥ **तदिति** । शब्देत्यर्थः । उपपादयति **शब्दो हीति** । **श्रवः** श्रोत्रम् । **सा हि** प्राप्तिरित्यर्थः ॥ **तस्येति** । श्रोत्रस्याकाशात्मकत्वेनामूर्तत्वाद्गतिरयुक्तेत्यर्थः ॥ **स हीति** । स्पर्शवच्छङ्खादावुत्पन्नः शब्द इत्यर्थः ॥ **गुणत्वादिति** । गुणस्याश्रयपरित्यागेन गमनानुपलब्धेरिति भावः । **तदिति** । शङ्खागमनेत्यर्थः ॥ **गुणस्येत्यादि** । स्वाश्रय इत्यत्र स्वस्य आश्रय एवाश्रयो यस्यासौ स्वाश्रय इति बहुव्रीहिस्तदाश्रितेत्यर्थः । पाकरूपतेजःसंयोगस्य स्वाश्रये परमाणौ विद्यमाने रूपादिगुणेऽसमवायिकारणत्वं दृष्टम् । तथा तन्तुरूपादेर्गुणस्य स्वाश्रयभूततन्त्वाश्रिते पटे जायमानरूपादिगुणेऽसमवायिकारणत्वं दृष्टम् । न चैवं शब्दे संभवति । तथाहि । असमवायिकारणीभूतः शब्दः किं शब्दान्तररूपं गुणं स्वाश्रयभूतः शङ्ख एव मध्येऽपि तिष्ठति; तत्र जनयति, उत स्वाश्रयभूतशङ्खाश्रिते तदारब्धे कस्मिंश्चिद्द्रव्ये वेति विकल्पं हृदि निधायाद्यं निराकरोति **न चेति** । द्वितीयं पराचष्टे **तदारब्धमिति** । शङ्खादिनिमित्तानि निमित्तकारणीभूतशङ्खादीनीत्यर्थः । अनेन शङ्खो निमित्तकारणमेव, न समवायिकारणमिति ध्वनितम् । **आश्रयान्तरे** स्वसमवायिकारणभूते आकाशे । तथा च नास्माकं शङ्खगुणकत्वपक्षोक्तदोषः । शङ्खावच्छिन्नाकाशे उत्पन्नः शब्दः स्वाश्रये आकाश एव शब्दान्तररूपं गुणं जनयतीत्यङ्गीकारादिति । **शष्कुलीगतं** शष्कुलीयुक्तम् । कर्णशष्कुल्यवच्छिन्नमित्यर्थः । बाह्यपदं सुखादौ व्यभिचारवारणाय ॥ **बधिराणामिति** । तेषामाकाशानुमापकशब्दरूपलिङ्गज्ञानाभावादिति भावः । इष्टापत्तिं परिहरति **ततश्चेति** । उक्तरीत्या इहप्रत्ययविषयस्यान्यस्याभावेनाकाशस्यैव तद्विषयत्वादिति भावः । तर्हि बधिराणामाकाशानुमापकं लिङ्गं शब्दातिरिक्तमन्यदेव भविष्यतीत्याशङ्कते **मूर्तेति** । आकाशाभावे मूर्तानामवस्थानं न स्यात् । तस्मान्मूर्तावकाशान्यथाऽनुपपत्त्याऽऽकाशसिद्धिरिति भावः ॥ **अन्यथासिद्धत्वादिति** । मूर्तावकाशरूपहेतोराकाशं विना मूर्तान्तराभावेनैवान्यथासिद्धत्वान्नाकाशानुमापकत्वमित्यर्थः । ननु यदि मूर्तान्तराभावेनान्यथासिद्धिः शङ्क्यते तर्हि मूर्ताभावाधिकरणत्वेनैवाकाशसिद्धिः स्यात् । मूर्ताभावः साधिकरणोऽभावत्वाद्घटाभाववत् इत्यनुमानसंभवादित्याशयेन शङ्कते **मूर्ताभावस्यापीति** ॥ **तस्येति** । पक्षीभूतस्य मूर्ताभावस्येत्यर्थः । **अनवकाशः** तथा चाधिकरणतयाऽऽकाशस्य प्रतीतत्वेन सिद्धसाधनतापत्तेरिति भावः ।

**च०**— घटादावनैकान्त्यव्युदसनायैकपदोपादानम् । नचैवमपि घटादिग्राहके चक्षुरादावेकत्वसंख्याऽनपायेन तादृशसंख्याविशेषितेन्द्रियग्राह्यत्वमक्षुण्णमेवेत्युक्तक्षतितादवस्थ्यमिति वाच्यम् । स्वावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणतानिरूपकग्रहविषयत्वे सति स्वावच्छिन्नकरणतानिरूपकग्रहविषयत्वस्यैव विवक्षिततया स्वपदेनेन्द्रियविभाजकधर्मोपादानेन सामञ्जस्यात् । **ग्रहाविषयत्वं** तन्निरूपितलौकिकविषयताराहित्यरूपम् । तेन शब्दसमानकालीनरूपमिति चाक्षुषोपनीतभानादौ सर्वं प्रमेयमिति

शाब्दबोधे च तस्य विषयत्वेपि न क्षतिः। आत्मनि तदपहस्तयितुं **बाह्येति**। योगिबाह्येन्द्रियग्राह्ये वाय्वादौ तद्विधूननाय **अस्मदादीति**। रूपत्वादिसामान्ये तदपाकर्तुं **सत्यन्तमुपात्तम्**। कार्यत्वे सति नियतेन्द्रियग्राह्यत्वेन हेतुना सामान्यवत्त्वस्य सुसाधतया न विशेषणासिद्धिरिति मन्तव्यम्। **सामान्यतो द्रव्ये सिद्धे** इत्येतत् **परिशेषादेभ्योतिरिक्तद्रव्यं सिद्ध्यतीत्या**गामिनाऽन्वेति। शब्दइत्यादिप्रकृत-हेतु-द्वयविशेषिते श्येनकर्मजनितस्थाणुश्येनसंयोगेऽनैकान्त्यवारणाय प्रतिज्ञाघटकतया विशेषपदोपादानम्। रूपादिवत्प्रतिनियतेन्द्रियग्राह्यत्वेन हेतुना शब्दे विशेषगुणवत्त्वं सुसाधमित्यवसेयम्। परमाणुरूपादाव-नैकान्त्यवारणाय हेतुशरीरे सप्तम्यन्तमुपात्तम्। अवयवगुणपूर्वकावयविरूपादौ तद्व्युदासाय पञ्चम्यन्तम्। पीलुपाकवादिनां पन्थानमनुरुन्ध्येदम्। तेन पाकजावयविरूपादिषूक्तक्षत्यनवकाशः। **अयावदिति**। पूर्वहेतुवाक्यघटकसप्तम्यन्तं तद्दोषापनोदायात्रानुषञ्जनीयम्। प्रकृतानुमानद्वयेऽप्रयोजकत्वशङ्कानिरसनाया-नुकूलतर्कमभिधत्ते **स्पर्शवद्गुणत्व इत्यादि**। शब्दधर्मिकस्पर्शवद्गुणत्वापादककतदसन्निकृष्टेन्द्रियग्राह्यत्वा-भावापाद्यकरूपादिनिदर्शनकापत्तिः तच्छङ्कानिरसनौपयिक्यवसेया। स्थितमित्यन्तस्तदुपपादकः। गुणस्य संयोगादेः स्वाश्रये, तन्तुरूपादेः स्वाश्रयाश्रय' इत्यर्थोऽवसेयः। कर्मणः स्वाश्रय एव तथात्वेन द्वैविध्य-विरहाद्गुणपदोपादानम्। हेतुचतुष्टयेनात्मगुणत्वाभावमनुमिमीते **नाप्यात्मेति**। 'संभेदे नान्यतरवैयर्थ्यम्' इतिन्यायादिति भावः। **जातिबधिरेति**। शब्दसाक्षात्कारविधुराणां दर्शितभंग्याऽनुमानासंभवादिति भावः। जन्मान्तरीयसंस्कारनिबन्धनस्मृत्युपनीततया आकाशस्य भानमिति तु लौकिकीं मर्यादामति-शेते। **मूर्ताभावस्येति**। घटाद्यभावं निदर्शनीकृत्याभावत्वेन हेतुना मूर्ताभावे साधिकरणत्वस्य सुसाधतया आकाशं सेत्स्यतीति भावः।

**सु० — किञ्च शब्दो वर्णात्मा वा पक्षो ध्वनिरूपो वा ?**

**नाद्यः। तस्य गुणत्वासिद्धेः। न चोक्तानुमानात्तत्सिद्धिः। घटादीनामेकेन्द्रियग्राह्यत्वाभावेऽपि आत्मनस्तथात्ववद् द्रव्यस्यैव सतो बाह्यैकेन्द्रियग्राह्यत्वेऽपि विरोधाभावात्। यदि (शब्दो) द्रव्यं स्यात् बाह्येन्द्रियग्राह्यो न स्यात्। निरवयवद्रव्यस्य बाह्येन्द्रियाग्राह्यत्वेन प्रतिबन्धादिति चेत् (न)। निरवयवस्यापीन्द्रियग्राह्यत्ववद्बाह्येन्द्रियग्राह्यत्वे(ऽपि) बाधकाभावेन प्रतिबन्धानिश्चयात्।**

**द्वितीये स्वाश्रयद्रव्यसिद्धावपि नाकाशसिद्धिः। पृथिव्यादिगुणत्वोपपत्तेः। प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वायावद्द्रव्यभावित्वयोः पिठरपाकपक्षे तद्गतरूपादिना व्यभिचारात्। प्रत्यक्षत्वे सतीति च किमर्थं वक्तव्यम्। पार्थिवपरमाणुरूपादि(व्यावृत्त्य)परिहारार्थमिति चेत्,**

कुतस्तत्परिहरणीयम् । प्रमितत्वादिति चेत् । तर्हि शब्दस्यापि शङ्खाद्याश्रयतया प्रमितत्वात्- व्याप्तिग्रहणसमये तद्व्यवच्छेदार्थं (अपि) विशेषणमुपादेयमेव । न च स्पर्शवद्विशेषगुणत्वे बाधकं पश्यामः । अनुपलब्धिस्तु न प्रसज्यते । चक्षुष इव श्रोत्रस्य गत्या सन्निकर्षोपपत्तेः । अमूर्तस्य तदनुपपत्तिस्तु आकाशसिद्ध्युत्तरकालीनैव । श्रोत्रस्य चक्षुष इव गत्वाग्राहित्वे शब्दे दिक्संशयो न स्यादिति चेत् । अगत्वाग्राहित्वे दिङ्निश्चयोऽपि न स्यात् । संशयादपि निश्चयो महीयान् (गरीयान्) । शङ्खाद्यवयवागमनेन वा सन्निकर्षोपपत्तिः । न चोक्तदोषः । घ्राणगन्धसन्निकर्षतुल्ययोगक्षेमत्वात् ।

शे० — नन्वेवं जातिबधिराणामुक्तरीत्याऽऽकाशावभासानुपपत्तावपि तदन्येषामुक्तरीत्याऽनुमानेनैवाकाशावभासोपपत्तेः किं साक्षिणेत्यतः शब्दो द्रव्याश्रितो गुणत्वादिति सामान्यसिद्धिं विकल्प्य दूषयति **किश्चेति** । यद्यपि जातिबधिराणामनुमानेनाकाशसिद्ध्यसंभवव्युत्पादनेनाकाशग्राहकतया साक्षी सिद्ध एव । तथाऽपि स्वाभिमतस्य, आकाशादेस्साक्षिमात्रसिद्धत्वस्य असिद्धेस्तत्सिद्ध्यर्थमनुमानस्याभासत्ववर्णनमित्यवधेयम् ।

स्वरूपासिद्ध्या आद्यं दूषयति **नाद्य इति** । शब्दो गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वात् रूपवदित्यनुमानाद्वर्णात्मनोऽपि शब्दस्य गुणत्वसिद्धेरुपपादितत्वान्नासिद्धिरित्याशङ्क्य निराकरोति न **चोक्तेति** ॥ **घटादीनामिति** । सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वेऽपि द्रव्यत्वाङ्गीकारे बाधकाभावादप्रयोजको हेतुः । न च द्रव्यत्वे घटादिवद् द्वीन्द्रियग्राह्यत्वापत्तिरिति वाच्यम् । द्रव्यत्वाविशेषेऽपि घटादीनां द्वीन्द्रियग्राह्यत्वेऽप्यात्मन एकेन्द्रियग्राह्यत्ववद्द्रव्यत्वाविशेषेऽपि घटादीनां द्वीन्द्रियग्राह्यत्वेऽपि शब्दस्य बाह्यैकेन्द्रियग्राह्यत्वोपपत्तेः । अन्यथा घटादेर्द्रव्यस्य द्वीन्द्रियग्राह्यताया दृष्टत्वादात्मनोऽपि द्रव्यत्वे तत्प्रसङ्गेन सामान्यवत्त्वे सत्यस्मदाद्येकेन्द्रियग्राह्यत्वादात्मनोऽपि गुणत्वसिद्धिप्रसक्तेरिति भावः । विपक्षे बाधकसद्भावान्नाप्रयोजकत्वमित्याशयेन लीलावतीकारोक्तं विपक्षबाधकमाशङ्कते **यदीति** । अत्र द्रव्यशब्दो निरवयवद्रव्यपरः । अतो न घटादौ व्यभिचारः । अत एव निरवयवद्रव्यस्येत्येवोत्तरत्राबाधकप्रदर्शनमित्यवधेयम् । कुत एतदित्याह **निरिति** । **प्रतिबन्धात्** व्याप्तेरित्यर्थः । विपक्षे बाधकाभावेनाप्रयोजकत्वशङ्काकलङ्कितत्वेन तर्कमूलभूतव्याप्त्यसिद्धेस्तर्काभासोऽयमित्याशयेनाह **निरवयवस्यापीति** । अन्यथा यद्यात्मा द्रव्यं स्यादिन्द्रियग्राह्यो न स्यान्निरवयवद्रव्यस्येन्द्रियाग्राह्यत्वेन व्याप्तेरित्यस्यापि तर्कस्य साधकत्वापत्त्याऽऽत्मनोऽपि द्रव्यत्वं न स्यादिति बाधकं सूचयितुं निरवयवस्यापीन्द्रियग्राह्यत्ववदिति दृष्टान्तीकरणम् । **निरवयवस्यापि** निरवयवद्रव्यस्यापि ।

शाब्दबोधे च तस्य विषयत्वेपि न क्षतिः। आत्मनि तदपहस्तयितुं **बाह्येति**। योगिबाह्येन्द्रियग्राह्ये वाय्वादौ तद्विधूननाय **अस्मदादीति**। रूपत्वादिसामान्ये तदपाकर्तुं **सत्यन्तमुपात्तम्**। कार्यत्वे सति नियतेन्द्रियग्राह्यत्वेन हेतुना सामान्यवत्त्वस्य सुसाधतया न विशेषणासिद्धिरिति मन्तव्यम्। **सामान्यतो द्रव्ये सिद्धे** इत्येतत् **परिशेषादेभ्योतिरिक्तद्रव्यं सिद्धयतीत्या**गामिनाऽन्वेति। शब्दइत्यादिप्रकृत-हेतु-द्वयविशेषिते श्येनकर्मजनितस्थाणुश्येनसंयोगेऽनैकान्त्यवारणाय प्रतिज्ञाघटकतया विशेषपदोपादानम्। रूपादिवत्प्रतिनियतेन्द्रियग्राह्यत्वेन हेतुना शब्दे विशेषगुणवत्त्वं सुसाधमित्यवसेयम्। परमाणुरूपादाव-नैकान्त्यवारणाय हेतुशरीरे सप्तम्यन्तमुपात्तम्। अवयवगुणपूर्वकावयविरूपादौ तद्व्युदासाय पञ्चम्यन्तम्। पीलुपाकवादिनां पन्थानमनुरुन्ध्येदम्। तेन पाकजावयविरूपादिषूक्तक्षत्यनवकाशः। **अयावदिति**। पूर्वहेतुवाक्यघटकसप्तम्यन्तं तद्दोषापनोदायात्रानुषञ्जनीयम्। प्रकृतानुमानद्वयेऽप्रयोजकत्वशङ्कानिरसनाया-नुकूलतर्कमभिधत्ते **स्पर्शवद्गुणत्व इत्यादि**। शब्दधर्मिकस्पर्शवद्गुणत्वापादककतदसन्निकृष्टेन्द्रियग्राह्यत्वा-भावापाद्यकरूपादिनिदर्शनकापत्तिः तच्छङ्कानिरसनौपयिक्यवसेया। स्थितमित्यन्तस्तदुपपादकः। गुणस्य संयोगादेः स्वाश्रये, तन्तुरूपादेः स्वाश्रयाश्रय' इत्यर्थोऽवसेयः। कर्मणः स्वाश्रय एव तथात्वेन द्वैविध्य-विरहाद्गुणपदोपादानम्। हेतुचतुष्टयेनात्मगुणत्वाभावमनुमिमीते **नाप्यात्मेति**। 'संभेदे नान्यतरवैयर्थ्यम्' इतिन्यायादिति भावः। **जातिबधिरेति**। शब्दसाक्षात्कारविधुराणां दर्शितभंग्याऽनुमानासंभवादिति भावः। जन्मान्तरीणसंस्कारनिबन्धनस्मृत्युपनीततया आकाशस्य भानमिति तु लौकिकीं मर्यादामति-शेते। **मूर्ताभावस्येति**। घटाद्यभावं निदर्शनीकृत्याभावत्वेन हेतुना मूर्ताभावे साधिकरणत्वस्य सुसाधतया आकाशं सेत्स्यतीति भावः।

**सु० —** किञ्च शब्दो वर्णात्मा वा पक्षो ध्वनिरूपो वा ?

नाद्यः। तस्य गुणत्वासिद्धेः। न चोक्तानुमानात्तत्सिद्धिः। घटादीनामेकेन्द्रियग्राह्य-त्वाभावेऽपि आत्मनस्तथात्ववद् द्रव्यस्यैव सतो बाह्यैकेन्द्रियग्राह्यत्वेऽपि विरोधाभावात्। यदि (शब्दो) द्रव्यं स्यात् बाह्येन्द्रियग्राह्यो न स्यात्। निरवयवद्रव्यस्य बाह्येन्द्रियाग्राह्यत्वेन प्रतिबन्धा-दिति चेत् (न)। निरवयवस्यापीन्द्रियग्राह्यत्ववद्बाह्येन्द्रियग्राह्यत्वे(ऽपि) बाधकाभावेन प्रति-बन्धानिश्चयात्।

द्वितीये स्वाश्रयद्रव्यसिद्धावपि नाकाशसिद्धिः। पृथिव्यादिगुणत्वोपपत्तेः। प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वायावद्द्रव्यभावित्वयोः पिठरपाकपक्षे तद्गतरूपादिना व्यभिचारात्। प्रत्यक्षत्वे सतीति च किमर्थं वक्तव्यम्। पार्थिवपरमाणुरूपादि(व्यावृत्त्य)परिहारार्थमिति चेत्,

कुतस्तत्परिहरणीयम् । प्रमितत्वादिति चेत् । तर्हि शब्दस्यापि शङ्खाद्याश्रयतया प्रमितत्वा-द्व्याप्तिग्रहणसमये तद्व्यवच्छेदार्थं (अपि) विशेषणमुपादेयमेव । न च स्पर्शवद्विशेषगुणत्वे बाधकं पश्यामः । अनुपलब्धिस्तु न प्रसज्यते । चक्षुष इव श्रोत्रस्य गत्या सन्निकर्षोपपत्तेः । अमूर्तस्य तदनुपपत्तिस्तु आकाशसिद्ध्युत्तरकालीनैव । श्रोत्रस्य चक्षुष इव गत्वाग्राहित्वे शब्दे दिक्संशयो न स्यादिति चेत् । अगत्वाग्राहित्वे दिङ्निश्चयोऽपि न स्यात् । संशयादपि निश्चयो महीयान् (गरीयान्) । शङ्खाद्यवयवागमनेन वा सन्निकर्षोपपत्तिः । न चोक्तदोषः । घ्राणगन्धसन्निकर्षतुल्ययोगक्षेमत्वात् ।

शे० — नन्वेवं जातिबधिराणामुक्तरीत्याऽऽकाशावभासानुपपत्तावपि तदन्येषामुक्तरीत्याऽनुमानेनैवाकाशावभासोपपत्तेः किं साक्षिणेत्यतः शब्दो द्रव्याश्रितो गुणत्वादिति सामान्यसिद्धिं विकल्प्य दूषयति **किञ्चेति** । यद्यपि जातिबधिराणामनुमानेनाकाशसिद्ध्यसंभवव्युत्पादनेनाकाशग्राहकतया साक्षी सिद्ध एव । तथाऽपि स्वाभिमतस्य, आकाशादेस्साक्षिमात्रसिद्धत्वस्य असिद्धेस्तत्सिद्ध्यर्थमनुमानस्याभासत्ववर्णनमित्यवधेयम् ।

स्वरूपासिद्ध्या आद्यं दूषयति **नाद्य इति** । शब्दो गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वात् रूपवदित्यनुमानाद्वर्णात्मनोऽपि शब्दस्य गुणत्वसिद्धेरुपपादितत्वान्नासिद्धिरित्याशङ्क्य निराकरोति **न चोक्तेति** ॥ **घटादीनामिति** । सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वेऽपि द्रव्यत्वाङ्गीकारे बाधकाभावादप्रयोजको हेतुः । न च द्रव्यत्वे घटादिवद् द्वीन्द्रियग्राह्यत्वापत्तिरिति वाच्यम् । द्रव्यत्वाविशेषेऽपि घटादीनां द्वीन्द्रियग्राह्यत्वेऽप्यात्मन एकेन्द्रियग्राह्यत्ववद्द्रव्यत्वाविशेषेऽपि घटादीनां द्वीन्द्रियग्राह्यत्वेऽपि शब्दस्य बाह्यैकेन्द्रियग्राह्यत्वोपपत्तेः । अन्यथा घटादेर्द्रव्यस्य द्वींद्रियग्राह्यतया दृष्टत्वादात्मनोऽपि द्रव्यत्वे तत्प्रसङ्गेन सामान्यवत्त्वे सत्यस्मदाद्येकेन्द्रियग्राह्यत्वादात्मनोऽपि गुणत्वसिद्धिप्रसक्तेरिति भावः । विपक्षे बाधकसद्भावान्नाप्रयोजकत्वमित्याशयेन लीलावतीकारोक्तं विपक्षे बाधकमाशङ्कते **यदीति** । अत्र द्रव्यशब्दो निरवयवद्रव्यपरः । अतो न घटादौ व्यभिचारः । अत एव निरवयवद्रव्यस्येत्येवोत्तरत्रापादकप्रदर्शनमित्यवधेयम् । कुत एतदित्याह **निरिति** । **प्रतिबन्धात्** व्याप्तेरित्यर्थः । विपक्षे बाधकाभावेनाप्रयोजकत्वशङ्काकलङ्कितत्वेन तर्कमूलभूतव्याप्त्यसिद्धेस्तर्काभासोऽयमित्याशयेनाह **निरवयवस्यापीति** । अन्यथा यद्यात्मा द्रव्यं स्यादिन्द्रियग्राह्यो न स्यान्निरवयवद्रव्यस्येन्द्रियाग्राह्यत्वेन व्याप्तेरित्यस्यापि तर्कस्य साधकत्वापत्त्याऽऽत्मनोऽपि द्रव्यत्वं न स्यादिति बाधकं सूचयितुं निरवयवस्यापीन्द्रियग्राह्यत्ववदिति दृष्टान्तीकरणम् । **निरवयवस्यापि** निरवयवद्रव्यस्यापि ।

अवयवसंयोगनाशेनावयविनाश इत्येवं क्रमेण परमाणुपर्यन्तनाशे सति पुनर्भोजकादृष्टवशेन परमाणुक्रियोत्पत्तौ तत्संयोगे द्व्यणुकादिक्रमेण घटादिरूपान्त्यावयविन उत्पत्तिरिति पीलुपाकप्रक्रिया । परमाणुपर्यन्तमवयविनो नाशं विनैव तथैव घटादीनां पाकः पिठरपाकप्रक्रिया । इति प्रक्रियाद्वयमङ्गीकृतम् । तत्र पीलुपाकप्रक्रियायां कारणगुणपूर्वकत्वादिसत्त्वेन हेत्वभावेपि पिठरपाकक्रियायां घटादौ तेजस्संयोगेनैव रूपान्तरादेर्जातत्वेन तत्रोक्तहेतुद्वयसत्त्वात्साध्याभावाच्च व्यभिचार इत्यर्थः । **प्रमितत्वादिति चेदिति** । स्पर्शवद्गुणत्वस्य प्रमितत्वादित्यर्थः ॥ **विशेषणमिति** । यः प्रत्यक्षत्वे सत्यश्रावणत्वे सत्यकारणगुणपूर्वक इति वा श्रवणेतरप्रत्यक्षत्वे सत्यकारणगुणपूर्वकः स स्पर्शवद्गुणो नेति वा विशेषणमुपादेयमित्यर्थः । तथाच शब्दस्यापि व्यावर्तितत्वया स्पर्शवद्गुणत्वेपि नानुमानविरोध इति भावः । यद्यपि सिद्धान्ते ध्वनिराकाशगुण एव । यदाहुर्भगवत्पादाः 'आकाशगुणे शब्दे व्यज्यमाना वर्णा' इत्यादि तत्त्वनिर्णये । तथापि कस्यचिन्मतरीत्या परस्येत्थमापादनमात्रमिति ध्येयम् । यद्वा सर्वस्यापि पञ्चीकरणप्रक्रियायामाकाशाद्यनुस्यूतत्वात् एवं स्पर्शवद्गुणत्वप्रतिपादनमिति ज्ञेयम् । ननु तत्र तदनुपलम्भप्रसङ्गो बाधक इति तत्राह **अनुपलब्धिस्त्विति** ॥ **चक्षुष इव श्रोत्रस्यापीति** । तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्'इत्यादिस्मृत्या सर्वेषामपीन्द्रियाणां चक्षुष इव 'तैजसत्वादिति भावः । नन्वेवं संदेह एव भवेत् न तु श्रोत्रस्य गतिनिश्चय इत्यत आह **संशयादपीति** ॥ **महीयानिति** । बहुल इत्यर्थः । एतद्दिग्भवोयं शब्द इति निश्चय एव बहुलः, संशयस्तु काचित्कः प्रतिहत्यादिदोषनिमित्तकः । एवञ्च बहुतरदिङ्निश्चयबलाद्दूरत्वाग्रहणमेव निश्चीयत इति भावः । यद्वा संशयानुगुण्यापेक्षया निश्चयानुगुण्येन श्रोत्रस्य गतिरेव कल्प्या निश्चयस्य संशयादपि श्रेष्ठत्वादित्यर्थः ॥ **न चोक्तदोष इति** । 'नापि शङ्खाद्यागमनेन श्रोत्रप्रत्यासत्तिः तदनुपलम्भादि'त्युक्तदोषो नास्ति । यथा कस्तूरिकाद्यवयवानामेव घ्राणदेशपर्यन्तागमने कस्तूरिकागन्धस्य घ्राणेन सह संयुक्तसमवायसंबन्धमुपेत्य ग्रहणमुपेयते तद्वदत्राप्युपपत्तेः । सूक्ष्मतया अवयवागमनानुपलम्भस्योभयत्र साम्यात् । नचैवं शङ्खावयवापगमे शङ्खस्य ह्रासः स्यादिति शङ्क्यम् । कस्तूर्यादावपि साम्यात् । अवयवान्तरप्रवेशेन पूर्वसाम्यस्यात्रापि तुल्यत्वादिति भावः ।

या० — **विरोधाभावादिति** । तथा चाप्रयोजकतेति भावः । विपक्षे बाधकं शङ्कते **यदीति** । यदि निरवयवद्रव्यं स्यादित्यर्थः ॥ **प्रतिबन्धेति** । तर्केऽप्यप्रयोजकतेति भावः ॥ **पिठरपाकेति** । पीलुपाकपक्षस्य निर्बाधप्रत्यभिज्ञाविरोधादिनाऽयुक्तत्वेन पिठरपाकानभ्युपगमस्यानुचितत्वादिति भावः ॥ **तर्हि शब्दस्यापीति** । तथाऽपि शब्दातिरिक्तस्थल एवोक्तनियमः । शब्दे तु हेत्वोरप्रयोजकतैवेति भावः । बाधितविषयत्वेऽस्य तात्पर्यमित्यप्याहुः । उक्तमनुकूलतर्कं विघटयितुमाह **न**

चेति । ननु श्रोत्रस्याकाशात्मकत्वात्तस्य चामूर्तत्वात्कथं गतिरित्यत आह **अमूर्तस्येति** । तथा चान्योन्याश्रय इति भावः । श्रोत्रस्य गत्वाग्राहित्वे इतो वा शब्दः श्रूयते ततो वेति दिक्संशयो न स्यात् । न हि चक्षुर्ग्राह्ये रूपे कदाऽपि दिक्संशय इत्याशङ्कते **श्रोत्रस्येति** ॥ **अगत्वेति** । दिक्सम्बन्धाभावादिति भावः । न चैवं साम्यं मन्तव्यमित्याह **संशयादपीति** । गरीयान् व्यवहारेष्वत्यन्तमुपयुक्तः । तथा च संशयाभावादपि निश्चयाभावोऽतिशयेनानिष्ट इति भावः ॥ **न चोक्तदोष इति** । शङ्खागमनपक्षे यो दोषोऽभिहितस्तदनुपलम्भादिति स तदवयवागमनपक्षेऽपि समान इति नेत्यर्थः । **घ्राणगन्धेति** । यथाऽतीन्द्रियपुष्पाद्यवयवागमनेन गन्धस्य घ्राणसन्निकर्षोऽभ्युपगम्यते तथाऽतीन्द्रियशङ्खावयवागमनेन शब्दस्य श्रोत्रसन्निकर्षोऽभ्युपगम्यताम् । अतो नानुपलम्भबाधः । अन्यथा तत्राप्यनुपलम्भबाधप्रसङ्ग इति भावः ।

श्री० — **घटादीनामिति** । तथा च घटादिद्रव्याणामेकेन्द्रियग्राह्यत्वाभावेऽप्यात्मनस्तत्स्वीकृत्य यथा द्रव्य एव द्वैविध्यं कल्पितमेवमेव घटादिद्रव्याणां द्वीन्द्रियग्राह्यत्वेऽपि वर्णात्मकशब्दरूपद्रव्यस्य बाह्यैकेन्द्रियग्राह्यत्वमेवास्तु । अन्यथा वयमपि ब्रूमो यद्द्रव्यं तद्बाह्यैकेन्द्रियग्राह्यम् । यथा शब्दः । आत्मादेश्च तदभावाद्द्रव्यत्वं न स्यादिति । तदनेनानुमानेऽप्रयोजकतेत्युक्तं भवति । द्रव्यं स्यादित्यत्र शब्द इति वर्तते । तदेति शेषः । **प्रतिबन्धो** व्याप्तिः ॥ **निरवयवस्यापीति** । यथा निरवयवद्रव्यस्यापि गगनादेरिन्द्रियाग्राह्यत्वेऽपि तथाभूतस्यात्मन इन्द्रियग्राह्यत्वमिति द्वैविध्यं स्वीकृतम्, एवं निरवयवद्रव्यस्यापि शब्दरूपस्य बाह्येन्द्रियग्राह्यत्वेऽपि बाधकाभावात् । अन्यथेत्थमपि ब्रूमो यन्निरवयवद्रव्यं तद्बाह्येन्द्रियग्राह्यम् । यथा शब्दः । आत्मादेश्च तदभावाद्द्रव्यत्वं न स्यादिति । तथा च तर्केऽप्यप्रयोजकतेति भावः ॥ **प्रमितत्वादिति** । स्पर्शवद्विशेषगुणत्वस्येति शेषः । शङ्खाद्याश्रयतयेति बहुव्रीहिः ॥ **तदनुपपत्तिरिति** । गत्यनुपपत्तिरित्यर्थः । **उत्तरकालीनेवेति** । अधुनाऽऽकाशस्यैवासिद्धेरित्यर्थः ।

च० — **विरोधाभावादिति** । साध्यमन्तरेणापि हेतुसद्भावोपपत्त्याऽप्रयोजकतेत्याशयः । तन्निरसनौपयिकं निरवयवद्रव्यत्वापादकबाह्येन्द्रियग्राह्यत्वाभावापाद्यकलीलावत्यभिहिततर्कमाशङ्कते **यदीति** । **प्रतिबन्धादिति** । प्रकृतापाद्यापादकयोर्व्याप्तेरित्यर्थः । **प्रतिबन्धानिश्चयादिति** । अप्रयोजकतया मूलशैथिल्येनापाद्यापादकयोर्व्याप्त्यनिश्चयादित्यर्थः । **पिठरपाकेति** । सोऽयं घट इत्यादिनिर्बाधप्रत्यभिज्ञाविरोधेन पीलुपदवाच्यपरमाणुषु पाकाभ्युपगमकल्पस्य प्रत्याख्याततया अवयविपदाभिधेयपिठरेष्वेव तदभ्युपगमकल्पस्यैव समर्थिततया तदनुपगतेरनौचित्या तद्गतरूपादावनैकान्त्यं दुर्वारमित्याशयः । **तर्हि शब्दस्यापीति** । तथा च शब्दान्यत्वस्य तद्व्यवच्छेदकविशेषणस्योपादेयतया तद्घटितहेतोर-

सिद्धिः तदघटितहेतोरप्रयोजकता बाधो वेत्याशयः । **पश्याम इति** । तथा च मूलशैथिल्यान्नोक्ततर्कोदय इति भावः । **गरीयान्** । अतीव व्यवहारौपयिकः । **न चोक्तदोष इति** । श्रोत्रोपकंठ शङ्खागमनकल्पे यो दोषोऽभिहितः अनुपलम्भबाधाख्यः स तदवयवागमनकल्पेऽपि समान इति नेत्यर्थः । **घ्राणगन्धेति** । यथा सूक्ष्माः कुसुमावयवाः घ्राणसदेशमायास्यन्तीति गन्धघ्राणयोः सन्निकर्षस्तथा तादृशशंखावयवाः श्रोत्रसमीपमायास्यन्तीति शब्दश्रोत्रयोः सन्निकर्षः सूपपाद इति तत्रेवात्रापि नानुपलम्भबाध इति भावः ।

सु० — **किञ्च वायुगुणत्वे हेतुद्वयमसिद्धम् । तर्कश्चानुपपन्नः । नैवं युक्तम् । श्रोत्रस्य प्रतिनियतार्थग्राहकत्वेन बहिरिन्द्रियत्वात् । बहिरिन्द्रियस्य ग्राह्यसजातीयविशेषगुणवत्त्व-नियमात् । शब्दस्य वायवीयत्वे श्रोत्रस्यापि तथात्वप्रसङ्गादिति चेन्न । 'प्रतिनियतार्थग्राहक'-शब्दस्येन्द्रियान्तराग्राह्यग्राहकार्थत्वे मनसि व्यभिचारात् । इन्द्रियान्तराग्राह्यस्यैव ग्राहकमित्य-भिप्राये सत्तादिग्राहकत्वेनासिद्धिः । बहिरिन्द्रियत्वेऽपि न ग्राह्यसजातीयविशेषगुणवत्त्वनियमः । स्नेहग्राहके चक्षुषि व्यभिचारात् । श्रोत्रस्य वायवीयत्वेऽपि न बाधकं पश्यामः । सामग्रीभेदेन प्रतिनियतार्थत्वोपपत्तेः ।**

**घ्राणादीनामप्येवमेकप्रकृतित्वं स्यादिति चेत् । अस्तु । बाध(क)सद्भावे तु तत एवान्या गतिर्भविष्यति । शब्दो न वायवीयः विशेषगुणत्वे सति त्वगिन्द्रियावेद्यत्वाद्गन्धवदिति चेन्न । विपक्षे बाधकाभावात् । अन्यथा पाकजरूपादयोऽपि न पार्थिवाः, घ्राणावेद्यत्वात् शब्दवदि-(ति)त्यपि स्यात् ।**

शे० — माऽस्तूक्तहेतुभ्यां सतर्काभ्यां शब्दस्य पृथिव्यादित्रितयगुणत्वम्, स्पर्शवद्वायुविशेष-गुणत्वं तु स्यादेवेत्याह **हेतुद्वयमसिद्धमिति** । वायुगुणत्ववादिना कारणगुणपूर्वकत्वस्य यावद्द्रव्यभावि-त्वस्यैवाङ्गीकारेण उक्तहेतुद्वयमसिद्धमित्यर्थः ॥ **तर्कश्चेति** । अनुपलब्धिप्रसङ्गरूप इत्यर्थः । वायोरेव श्रोत्रदेशागमनेन वा वीचीतरङ्गन्यायेन वायावेव शब्दसन्तानोत्पत्त्या वा श्रोत्रसन्निकर्षसम्भवात् । शङ्ख-श्रवसोर्मध्ये तदनुपलब्धिस्त्वतीन्द्रियत्वाद्वायोरुपपद्यत एव । अन्यथा शङ्खश्रवसोर्मध्ये आकाशस्याप्यनुप-लम्भबाधितत्वात्तद्गुणत्वमपि न स्यादिति भावः । शब्दस्य वायुगुणत्वे बाधकमाशङ्कते **नैवमिति** ॥ **बहिरिन्द्रियत्वादिति** । प्रतिनियतार्थग्राहकस्य घ्राणादेर्बहिरिन्द्रियत्वदर्शनादिति भावः ॥ **नियमादिति** । गन्धादिग्राहकस्य घ्राणादेर्गन्धादिमत्त्वदर्शनादिति भावः ॥ **तथात्वे इति** । वायवीयत्व इत्यर्थः । तत्र बहिरिन्द्रियत्वसाधकतयोपन्यस्तं प्रतिनियतार्थग्राहकत्वं दूषयति **प्रतीति** ॥ **मनसि व्यभिचारादिति** ।

तस्येन्द्रियान्तराग्राह्यसुखादिग्राहकत्वेऽपि बहिरिन्द्रियत्वाभावादिति भावः । ननु मनस इन्द्रियान्तराग्राह्यसुखादिग्राहकत्वेऽपि तद्ग्राह्यरूपादिग्राहकत्वस्यापि सत्त्वेनेन्द्रियान्तराग्राह्यस्यैव ग्राहकत्वाभावान्न व्यभिचार इत्यतो माऽस्तु तर्हि व्यभिचार इन्द्रियान्तरग्राह्यसत्ताग्राहकत्वेन श्रोत्रस्येन्द्रियान्तराग्राह्यस्यैव ग्राहकत्वाभावादसिद्धिः स्यादेवेत्याह **इन्द्रियान्तरेति** । न चेन्द्रियान्तराग्राह्यस्यैव गुणस्य ग्राहकतया विवक्षितत्वान्न सत्तादिग्राहकत्वेनासिद्धिः नापि मनसि व्यभिचार इति वाच्यम् । शब्दस्य गुणत्वासिद्ध्या एवमप्यसिद्ध्यपरिहारात् । गुणत्वसिद्धौ वा श्रोत्रस्यापि मनोरूपेन्द्रियान्तरग्राह्यशब्दलक्षणगुणग्राहकत्वेनासिद्धितादवस्थ्याच्च । न च बाह्येन्द्रियान्तराग्राह्यस्यैव गुणस्य ग्राहकत्वं हेतुरतो नासिद्धिरिति वाच्यम् । उपनीतस्य सौरभस्य चक्षुषेवोपनीतशब्दस्यापि बाह्येन्द्रियान्तरग्राह्यत्वेनोक्तदोषानतिवृत्तेः । न च बाह्येन्द्रियान्तरजन्यलौकिकप्रत्यक्षाविषयत्वं तथा । लौकिकप्रत्यक्षत्वानिर्वचनात् । समवायस्य निराकरिष्यमाणत्वेन संयोगेन ग्राहकत्वस्य च परासंप्रतिपत्त्या षोढाप्रत्यासत्त्यन्यतमप्रत्यासत्तिजन्यत्वेन वक्तुमशक्यत्वादिति भावः । एवं प्रतिनियतार्थग्राहकत्वेन श्रोत्रस्य न बहिरिन्द्रियत्वं सिद्ध्यतीत्युक्तम् । अस्तु वा कथञ्चित्तेन बहिरिन्द्रियत्वसिद्धिः । तथापि न बहिरिन्द्रियत्वेन ग्राह्यसजातीयविशेषगुणवत्त्वसाधनं युक्तमनैकान्त्यादित्याह **बहिरिति** ॥ **स्नेहेति** । न च रूपादिषु पञ्चसु मध्ये यदिन्द्रियं यं गुणं गृह्णाति तदिन्द्रियं तद्वदिति नियमस्य विवक्षितत्वान्नायं दोषः, रूपादिषु पञ्चसु मध्ये इत्यस्यासिद्धिवारकतया व्यर्थत्वात् । नियामकाभावेनाप्रयोजकत्वाच्च । अन्यथा यदिन्द्रियं चतुर्षु गुणेष्विति वा षट्सु सप्तसु मध्ये इत्यपि विशेषणप्रक्षेपापत्तेरिति भावः । यदुक्तं शब्दस्य वायवीयत्वे श्रोत्रस्यापि तथात्वं प्रसज्यत इति तदिष्टापादनत्वादनुपपन्नमित्याह **श्रोत्रस्येति** । ननु श्रोत्रस्य वायवीयत्वे त्वक्श्रोत्रयोरुभयोरपि वायवीयत्वेनाविशेषात् त्वचा स्पर्शस्येव शब्दस्यापि, श्रोत्रेण च शब्दस्येव स्पर्शस्यापि ग्रहणं स्यात् । ततश्च प्रतिनियतार्थग्राहकत्वाभावाद्बधिरस्यापि त्वचा शब्दज्ञानोपपत्तेर्बधिराभावप्रसङ्ग इत्यत आह **सामग्रीभेदेनेति** । व्यक्तिभेदेनेत्यर्थः । वायवीयत्वाविशेषेऽपि त्वक्श्रोत्रयोर्व्यक्तिभेदेन प्रतिनियतार्थत्वाविरोधादिति किरणावल्युक्तेः । यद्वा दृष्टादृष्टसामग्रीभेदेनेत्यर्थः । पार्थिवत्वाविशेषेऽपि तन्तुमृत्पिण्डयोस्तन्तुरेव पटजनको, न मृत्पिण्डो, मृत्पिण्ड एव घटजनको न तन्तुरिति दृष्टादृष्टकारणभेदेन व्यवस्थावद्वायवीयत्वाविशेषेऽपि त्वक्श्रोत्रयोस्त्वक् स्पर्शमात्रं गृह्णाति न शब्दं, श्रोत्रं शब्दमेव गृह्णाति न स्पर्शमिति व्यवस्थोपपत्तेर्न बधिराभावप्रसङ्ग इति भावः ।

त्वक्श्रोत्रयोरेकप्रकृतिकत्वे इन्द्रियमात्रस्याप्येकप्रकृतिकत्वमेव स्यात् । त्वक्श्रोत्रयोरेकप्रकृतिकत्वेऽपि सामग्रीभेदेन प्रतिनियतार्थत्ववदिन्द्रियमात्रस्यापि तत एव प्रतिनियतार्थत्वोपपत्तेरिति बाधकसद्भावात्कथं तदभाव इत्याशङ्कते **घ्राणादीनामिति** । **एकप्रकृतिकत्वम्** एकभूतकार्यत्वम् । एतदपि

नास्माकमनिष्टमित्याह **अस्त्विति** । एकप्रकृतिकत्वे बाधकसद्भावे हि भवेदिदमनिष्टम् । न च तद्-स्तीत्यतो नेदमनिष्टमिति भावः । ननु कथं घ्राणादीनामेकप्रकृतिकत्वे बाधकाभावः । 'घ्राणं पार्थिवं रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतवत् । रसनमाप्यं रूपाव्यञ्जकत्वे सति रसव्यञ्जकत्वाल्लालावत् । चक्षुस्तैजसं स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्वात्प्रदीपवत् । स्पर्शनं वायवीयं शब्दाव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वात् व्यजनवातवत्' इत्यनुमानानामेव बाधकत्वादित्यतो युक्तिपादे वक्ष्यमाणरीत्या सिद्धसाधनत्वादिकलङ्कितत्वेन एतेषामाभासत्वेऽपि अङ्गीकृत्यानाभासत्वं बाधकसद्भावाभावाभ्यां वैषम्यात् बाधकाभावेन त्वक्श्रोत्रयोरेकप्रकृतिकत्वस्य, तद्भावाच्च घ्राणादीनामनेकप्रकृतिकत्वस्य, च संभवान्न प्रतिबन्दीग्रहो युक्त इत्याह **बाधकसद्भावे त्विति** । लीलावतीकारीयं बाधकमाशङ्कते **शब्द इति ॥ विशेषगुणत्वे सतीति** । अत्रासिद्धिवारणाय त्वगिन्द्रियेति विशेषणम् । त्वगिन्द्रिये व्यभिचार-वारणार्थं गुणत्वे सतीति । वायुसंयोगादौ व्यभिचारवारणाय विशेषेत्युक्तम् । न चैवमपि त्वगिन्द्रियस्पर्शे वायुपरमाण्वादिस्पर्शे च व्यभिचारः । स्पर्शेतरविशेषगुणत्वे सति त्वगिन्द्रियावेद्यत्वस्यैव हेतुत्वेन विवक्षित-त्वात् । अत एव लीलावतीवर्धमानकृता एवमेव हेत्वर्थो वर्णित इति ध्येयम् । अप्रयोजकत्वेनैतद्-दूषयति **नेति** । अप्रयोजकस्यापि साधकत्वेऽतिप्रसङ्गं चाह **अन्यथेति ॥ घ्राणवेद्यत्वादिति** । घ्राण-ग्रहणमसिद्धिपरिहाराय कृतम् । अत्रापि विशेषगुणत्वे सतीत्यस्य विवक्षितत्वान्न घ्राणे तद्गतसंख्यादौ व्यभिचार इत्यवधेयम् ।

स० — माभूत्पृथिव्यादित्रयगुणः शब्दः वायुगुणस्तु भविष्यतीत्याह **किञ्चेति** । आकाश-गुणस्य शब्दस्य संतानन्यायेन कर्णशष्कुलीसमवेतस्योपलब्धिपक्षेपि भेर्यादिषु ताडितेषु यावद्वेगमभिप्रतिष्ठ-मानः पवमानो निमित्तीभवतीत्यभ्युपगमात्तेन शष्कुलीसंयुक्तस्य पवनवर्तिनः शब्दस्य संयुक्तसमवायादुप-लब्धिरुपपन्ना । द्वितीयादिशब्देष्वपि पवनस्य कारणत्वं शब्दमात्रस्योत्तरशब्दान्तरं भवत्येवं शब्दसंताना-वच्छेदप्रसङ्गादित्यवसेयम् । तथाचाहुः । 'वायुरापाद्यते शब्दमि'ति ॥ **तर्काश्चानुपपन्न इति** । वायुगुणस्य शब्दस्य वायावेव शब्दान्तरोत्पादपरम्परया श्रोत्रसन्निकर्षेणोपलम्भसंभवादिति भावः । शब्दस्य वायु-गुणत्वे बाधकतर्कमाशङ्कते **नैवमिति । प्रतिनियतार्थग्राहकत्वेनेति** । असर्वविषयत्वेनेत्यर्थः । **ग्राह्यसजा-तीयेति** । विशेषगुणवत्त्वस्यानियामकत्वे बहिरिन्द्रियाणां गुणत्वावान्तरजात्या ग्राह्यविजातीयविशेषगुण-ग्रहणविरहे नियामकाभावेन सर्वाणि सर्वग्राहकाणि स्युः(…) । एवमेव वा सर्वग्राहको न प्रथमोऽन्धबधि-राद्यभावप्रसङ्गात् । न द्वितीयः तद्व्यावृत्तौ गुणान्तरानुपलम्भप्रसङ्गात् । तथाच श्रोत्रस्य शब्दग्राहकत्वेन शब्दवत्त्वस्थितौ शब्दस्य विशेषगुणत्वेन पवमानापवमानसाधारणत्वानुपपत्तौ श्रोत्रस्यावायवीयत्वे शब्द-स्यापि वायवीयत्वानुपपत्तेरिति भावः । **श्रोत्रस्यापि तथात्वप्रसङ्गादिति** । वायवीयत्वप्रसङ्गादित्यर्थः ।

श्रोत्रस्य बहिरिन्द्रियत्वेन बहिरिन्द्रियस्य च ग्राह्यसजातीयविशेषगुणवत्त्वनियमेन शब्दवत्त्वे प्राप्ते शब्दस्य च वायुगुणत्वस्वीकारात्तद्वतः श्रोत्रस्य वायवीयत्वप्रसङ्ग इति भाव इति केचिद्भावमाहुः । यत्तावत्प्रतिनियतार्थग्राहकत्वं बहिरिन्द्रियत्वे हेतुत्वेनोक्तं तत्र प्रतिनियतार्थग्राहकत्वशब्देन किमुच्यते किमिन्द्रियान्तराग्राह्यग्राहकत्वं । किं वेन्द्रियान्तराग्राह्यस्यैव ग्राहकत्वमिति । पक्षद्वयेपि दूषणमाह **न प्रतीति** । एतेन असर्वविषयत्वमेव दूषितं भवति । प्रतिनियतार्थग्राहकत्वेन श्रोत्रस्य बहिरिन्द्रियत्वं दुःसाधनमित्युक्तम् । न हि बहिरिन्द्रियत्वेन ग्राह्यसजातीयविशेषगुणत्वमपि साधयितुं शक्यतेऽनैकान्त्यादित्याह **बहिरिति** । यदुक्तं शब्दस्य वायवीयत्वे श्रोत्रस्यापि तथात्वं प्रसज्यत इति तदयुक्तमिष्टत्वादेवेत्याह **श्रोत्रस्येति** । ननु श्रोत्रस्य वायवीयत्वे त्वगिन्द्रियस्येव स्पर्शग्राहकत्वमपि स्यात्, न शब्दमात्रग्राहकत्वमित्यत आह **सामग्रीभेदेनेति** । कर्णशष्कुल्यवच्छिन्नत्वादिरूपसामग्रीभेदेनेत्यर्थः । **घ्राणादीनामपीति** । यथा त्वगिन्द्रियश्रोत्रेन्द्रिययोरेव वायुभूतकार्यत्वं स्वीकृत्य प्रतिनियतार्थत्वं सामग्रीभेदेनोक्तं तथा घ्राणादीनामपि वायवीयत्वमेवाङ्गीकृत्य प्रतिनियतार्थत्वं तत्तद्गोलकावच्छिन्नत्वादिसामग्रीभेदेनैवेत्यस्तु । एवंच घ्राणादीनां पार्थिवत्वादिस्वीकारो न युक्त इति भावः । एकप्रकृतिकत्वं एकभूतकार्यत्वम् । ननु कथं घ्राणादीनामेकप्रकृतिकत्वं तथात्वे चक्षुषो गत्वाग्राहित्वं घ्राणादेस्तदभाव इति विलक्षणस्वभावानुपपत्तेरित्यत आह **बाधकसद्भावे त्विति** । तर्ह्यस्माद्बाधकाच्चक्षुरेकं तैजसमस्तु इतराणि तु अगत्वाग्राहीणीति तेजोभिन्नभूतप्रकृतिकान्येव सन्त्वित्यर्थः । शब्दस्य वायवीयत्वेऽनुमानं बाधकं शङ्कते **शब्द इति** । चक्षुराद्यवेद्यत्वं स्पर्शे विद्यत इति तत्र व्यभिचारः तदर्थं त्वगित्युक्तम् । तथापि त्वगिन्द्रिये व्यभिचारः तदर्थं गुणत्वे सतीति । तथापि वायुसंयोगादौ, तदर्थं विशेषेति । अप्रयोजकत्वेन परिहरति **नेति** । अतिप्रसङ्गत्वलक्षणप्रतिकूलतर्कपराहतत्वं चेत्याह **अन्यथेति** ।

प० — **हेतुद्वयमसिद्धमिति** । शब्दो न स्पर्शवद्विशेषगुण इत्यत्र यद्धेतुद्वयमुक्तं तेन पृथिव्यादिगुणत्वाभावसिद्धावपि न वायुगुणत्वाभावसिद्धिः । शब्दस्य वायुगुणत्वेन वायुगतस्पर्शस्येव प्रत्यक्षत्वे सति कारणगुणपूर्वकत्वस्य, यावद्द्रव्यभावित्वस्य च संभवेन हेत्वोः स्वरूपासिद्धत्वेन वायुगुणत्वाभावासाधकत्वात् । वायुगुणत्वपक्षे प्रागुक्तस्तदनुपलम्भप्रसङ्गरूपस्तर्कश्चायुक्तः । तत्पक्षे वायुना सह श्रोत्रदेशप्राप्तिसंभवेनोपलम्भोपपत्तेरिति भावः । शङ्कते **न चैवं युक्तमिति** । कुत इत्यतः श्रोत्रस्यापि वायवीयत्वप्रसङ्गरूपबाधकसद्भावादित्याह **श्रोत्रस्येति** ॥ **प्रतिनियतेति** । अस्यार्थोऽग्रे व्यक्तः ॥ **वायवीयत्वे श्रोत्रस्यापि तथात्वप्रसङ्गादिति** । न चेष्टापत्तिः । तथात्वे त्वगिन्द्रियवत्स्पर्शस्यापि ग्रहणप्रसङ्गात् । त्वचोपि शब्दग्राहकत्वप्रसङ्गादिति भावः ॥ **स्नेहेति** । जलगुणचिक्कणताग्राहक इत्यर्थः ।

ननु रूपादिषु पञ्चसु मध्य इति विशेषणान्न दोष इत्याशयादाह **श्रोत्रस्येति**। ननु श्रोत्रस्पर्शनयोर्द्वयोरपि वायवीयत्वे शब्दमात्रग्राहकत्वं स्पर्शमात्रग्राहकत्वमिति नियमभङ्ग एव बाधक इत्यत आह **सामग्रीभेदेनेति**। वायुविकारत्वस्योभयत्र साम्येपि श्रोत्रादिजनकेतरकारणकलापवैचित्र्येण श्रोत्रत्वचोर्वैचित्र्यात् प्रतिनियतार्थग्राहकत्वोपपत्तेरित्यर्थः। यद्वा ग्रहणे सहकारिसंपत्तिरूपसामग्रीभेदेनेत्यर्थः। बाधकान्तरमाशङ्कते **घ्राणादीनामिति**। **एकप्रकृतित्वं** एकभूतोपादानकत्वमित्यर्थः। अस्त्वित्यङ्गीकारः। ननु बाधके सति कथमित्यत आह **बाधकसद्भाव इति**। **तत एव** बाधकादेवेत्यर्थः। वायवीयत्वेऽनुमानविरोधं बाधकमाशङ्कते **शब्द इति**। वायुगतसंख्यापरिमाणादावव्यभिचाराय हेतौ सत्यन्तम्। स्पर्शे व्यभिचारवारणाय विशेष्यम्।

या० —**हेतुद्वयमसिद्धमिति**। शब्देऽपि वायुगुणत्वे कारणगुणपूर्वकत्वस्य यावद्द्रव्यभावित्वस्य च वक्तुं शक्यत्वादिति भावः॥ **तर्कश्चेति**। अतीन्द्रियवायोरागमनेन वा वीचीतरङ्गन्यायेन वायवीयशब्दसन्तानोत्पत्त्या वा श्रोत्रसन्निकृष्टस्य शब्दस्योपलब्धिसंभवादिति भावः॥ **तथात्वप्रसङ्गादिति**। वायवीयत्वप्रसङ्गादित्यर्थः। बहिरिन्द्रियस्य ग्राह्यसजातीयविशेषगुणवत्त्वनियमात् श्रोत्रस्यापि शब्दवत्त्वे प्राप्ते शब्दस्य च वायुगुणत्वस्वीकारात्तद्वतः श्रोत्रस्य वायवीयत्वप्रसङ्ग इति भावः। ननु श्रोत्रस्य वायवीयत्वे त्वगिन्द्रियवत् स्पर्शग्राहकत्वमपि स्यात्। ततश्च प्रतिनियतार्थत्वानुपपत्तिरित्यत आह **सामग्रीभेदेनेति**। त्वक्श्रोत्रयोर्वायवीयत्वाविशेषेऽपि व्यक्तिविशेषभेदेन वाऽदृष्टविशेषभेदेन वा प्रतिनियतार्थतोपपत्तेरिति भावः॥ **घ्राणादीनामपीति**। यथा त्वक्श्रोत्रयोर्वायवीयत्वं स्वीकृत्य सामग्रीभेदेन प्रतिनियतार्थत्वमुक्तं तथा घ्राणादीनामपि वायवीयत्वमेवाङ्गीकृत्य प्रतिनियतार्थत्वं सामग्रीभेदेनैवेत्यस्तु। ततश्च घ्राणादीनां पार्थिवत्वादिस्वीकारो भज्यतेति भावः। **एकप्रकृतित्वं** एकभूतकार्यत्वम्। ननु कथं घ्राणादीनामेकप्रकृतिकत्वम्। घ्राणं पार्थिवं रसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुंकुमगन्धाभिव्यञ्जकघृतवत्। रसनमाप्यं रूपाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् लालावत्। चक्षुस्तैजसं स्पर्शाद्यव्यञ्जकत्वे सति रूपव्यञ्जकत्वात् प्रदीपवत्। स्पर्शनं वायवीयं शब्दाद्यव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वात् व्यजनवातवत्। इति बाधकानां सत्त्वादित्यत आह **बाधकसद्भाव इति**। **अन्या गतिः** तत्तद्भूतप्रकृतिकत्वम्। श्रोत्रस्य वायवीयत्वे च न किञ्चिद्बाधकमस्तीति भावः॥ **विशेषगुणत्वे सतीति**। अत्रासिद्धिवारणाय त्वगिति। त्वगिन्द्रिये व्यभिचारवारणाय सत्यन्तम्। वायुगुणे सङ्ख्यापरिमाणादौ व्यभिचारवारणाय विशेषपदमिति मन्तव्यम्। न चैवमपि त्वगिन्द्रियस्पर्शे वायुपरमाण्वादिस्पर्शे च व्यभिचारः। विशेषपदस्य प्रत्यक्षपरत्वात्। **घ्राणावेद्यत्वादिति**। न च घ्राणे घटादौ च व्यभिचारः। विशेषगुणत्वे सतीत्यस्यात्रापि विवक्षितत्वात्। अत्र घ्राणगतसङ्ख्यादौ व्यभिचारवारणाय विशेषणपदमिति ध्येयम्।

श्री० — **हेतुद्वयमिति** । स्पर्शवद्वायुगुणत्वाङ्गीकारपक्षे स्पर्शवद्वायुगुणत्वाभावसाधकं हेतुद्वयम सिद्धमित्यर्थः । तथाहि । वायुगुणत्वेऽपि वायुकारणनिष्ठशब्दरूपगुणेन वायावपि शब्दोत्पत्तिसंभवाद कारणगुणपूर्वकत्वं, वायूनां तत्तत्कालभिन्नानामेवोत्पद्यमानत्वात्तद्गुणानामपि शब्दानां यावद्द्रव्यभावित्व मेवेति द्वितीयहेतुश्चासिद्ध इत्युक्तं भवति ॥ **प्रतिनियतेति** । रूपादिपञ्चकमध्य इत्यर्थः ॥ **मनसीति** सुखादिग्राहकत्वेन हेतुसद्भावादन्तरिन्द्रियत्वेन साध्याभावादिति भावः ॥ **इन्द्रियान्तरेति** । मनसस्स र्वोपलब्धिसाधनत्वेन चक्षुरादीन्द्रियग्राह्यरूपादिग्राहकत्वान्न व्यभिचार इति भावः ॥ **सत्तादीति** सत्ताया एकत्वेनेन्द्रियान्तरग्राह्यशब्दनिष्ठसत्ताजातिग्राहकत्वेन स्वरूपासिद्धिप्रसङ्गः । आदिपदेन गुणत्व ग्रहणम् ॥ **सामग्रीति** । कर्णशष्कुल्यवच्छिन्नत्वग्भागस्यैव शब्दग्राहकत्वं, तदितरत्वग्भागस्यैव स्पर्श ग्राहकत्वमित्यर्थः ।

च० — **असिद्धमिति** । उभयत्र विशेष्यदलाभावनिबन्धनमसिद्धत्वमिति भावः । **तर्कश्चेति** श्रोत्रसविधं वायोरेवागमनेन वीचीतरङ्गन्यायेन वायोः सकाशाच्छब्दान्तरोत्पत्त्या वा शब्दश्रोत्रसन्निकर्ष संभवाच्छब्दोपलब्धिसंभवादिति भावः । **तथात्वप्रसङ्गादिति** । वायवीयत्वप्रसङ्गादित्यर्थः । श्रोत्र धर्मिकबहिरिन्द्रियत्वविधेयकानुमित्यौपयिकत्वेनाभिप्रेतं प्रतिनियतार्थग्राहकत्वमपहस्तयते **प्रतीति** व्यभिचारनिरूपकाधिकरणे मनसीन्द्रियान्तराग्राह्यसुखादिग्राहकत्वसत्त्वादिति भावः । **असिद्धेरिति** चक्षुरादिरूपेन्द्रियान्तरग्राह्यरूपादिग्राहकत्वस्यापि मनसि सत्त्वेन तद्ग्राहकत्वाभावविशेषिततद्ग्राह्यग्राहक त्वरूपपरिष्कृतहेत्वभावेन तत्रानैकान्त्यव्युदासेपि पक्षीकृतश्रोत्रे चक्षुरादिग्राह्यसत्तागुणत्वादिग्राहकत्वसत्त्वे तदभावघटितहेतोरसत्त्वेनासिद्धिर्दुर्वारेत्याशयः । **व्यभिचारादिति** । व्यभिचारनिरूपकाधिकरणे चक्षु बहिरिन्द्रियत्वहेतोः सत्त्वादिति भावः । श्रोत्रस्य वायवीयत्वे त्वगिन्द्रियस्येव स्पर्शग्राहकत्वापत्त्या प्रति नियतार्थग्राहकत्वानुपपत्तिरित्यतोऽभिधत्ते **सामग्रीभेदेति** । त्वक्श्रोत्रयोर्वायवीयत्वविशेष्येपि व्यक्तिभेदेन द्रव्यवैचित्र्येण वा प्रतिनियतार्थतोपपद्यत इति भावः । **एवं** व्यक्तिभेदेन सामंजस्योपपादने । **एक** **प्रकृति(क)त्वं** बहुव्रीहेर्भावप्रत्ययः एकभूतकार्यत्वम् । **अस्त्विति** । 'शरीरं पार्थिवं ज्ञेयं इन्द्रियाण्यौ दकानि तु । तैजसः कोष्ठगो वह्निः छिद्रमाकाशसंभवम्' इति निखिलेन्द्रियाणामौदकत्वोक्तेरिति भावः अथ घ्राणं पार्थिवं रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुंकुमगन्धादिव्यञ्जकघृतवत् । रसनमौद कं गन्धाव्यञ्जकत्वे सति रसव्यञ्जकत्वात् लालावत् । चक्षुस्तैजसं स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्व प्रदीपवत् । स्पर्शनं वायवीयं शब्दाव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वाद्व्यजनवातवदिति बाधकानां स्फुटत्वा दित्यत आह **बाधकसद्भाव इति** । **अन्या गतिरिति** । तत्तद्भूतप्रकृतिकत्वरूपेत्यर्थः । लीलावतीप्रका शितं बाधकं निराचिकीर्षुराशङ्कते **शब्द इति** । त्वगिन्द्रियजनितवेदनाविषयत्वं विशेष्यदलार्थः । त

असंभवेऽपिसंदिग्धासिद्धेः संभवादिति भावः । ननूक्तरीत्या श्रूयमाणे एकस्मिन्शब्दे अनेकप्रतिपत्तृ-साधारण्यानिश्चयेपि तत्सन्तानलक्षणकार्यात् तदारंभकमूलशब्दानुमितिरनेकेषां शब्दस्य प्रतिपत्तॄणा-मविशिष्टा । तथा चानेकानुमितिविषयस्यैकस्यैव मूलशब्दस्यानेकप्रतिपत्तृसाधारण्यान्नासिद्धिरित्याशङ्कते **सन्तानानुमानेति** । सन्तानलक्षणानुमानेनेत्यर्थः । **मूलप्रत्यभिज्ञानादिति** । य एव त्वयाऽनुमितः स एव मयापीति प्रत्यभिज्ञानादित्यर्थः ॥ **तर्हीति** । अनुमानेनानेकप्रतिपत्तृसाधारणत्वमनैकान्तिकमिति भावः ॥ **आत्मसमवेतस्यैवेति** । यद्युक्तरीत्या सन्तानानुमानेन मूलस्य प्रत्यभिज्ञानमेवानेकप्रतिपत्तृ-साधारण्यमित्युच्यते तर्हीदं शब्दस्यात्मगुणत्वेऽप्युपपन्नमित्यप्रयोजकतेत्यर्थः । वीचीतरङ्गन्यायेनेत्यनन्तरं सन्तानानुमानादिति शेषः । तथा च सर्वदिक्ष्ववस्थितैः प्रतिपत्तृभिः तरङ्गसन्तानलक्षणकार्येण तदारम्भक-मूलतरङ्गोऽनुमीयते एवं मूलशब्दोऽपीत्युक्तं भवति । अत्रात्मगुणस्यैव सन्तानानुमानात् मूलप्रत्यभिज्ञोप-पत्तावित्येव वक्तव्ये यदात्मसमवेतस्यैव वीचीतरङ्गन्यायेनेति वचनं तच्छ्रोत्रस्याकाशात्मकत्वेन शब्दस्यात्म-गुणत्वे श्रोत्रेण सन्निकर्षाभावात् कथं तद्ग्रह इति विपक्षे बाधकशङ्कापरिहारायेति ज्ञातव्यम् । तेन कर्णशष्कुल्यवच्छिन्न एवात्मा श्रोत्रम् । वीचीतरङ्गन्यायेन तत्रोत्पन्नाः शब्दाः । समवायसन्निकर्षेण तद्ग्रह इत्यर्थसूचनात् ।

**प०** — ननूक्तमात्मगुणत्वाभावे बाह्येन्द्रियप्रत्यक्षत्वादिहेतुचतुष्टयमित्यतः सर्वं क्रमेण निरस्यन्नाद्यं निराह **धर्मादीनामप्रत्यक्षत्वेऽपीत्यादिना** ॥ **तत्सिद्धाविति** । अष्टद्रव्यातिरिक्तद्रव्यसिद्धौ शब्द-गुणकत्वेनैव तस्य सिद्ध्या धर्मिग्राहकमानबाधः, 'शब्दो नाष्टद्रव्यातिरिक्तद्रव्यगुणः प्रत्यक्षत्वात् तदीय-परिमाणवत्' इत्यनुमानस्य । तादृशद्रव्यासिद्धावप्रसिद्धविशेषणतेति शङ्कार्थः ॥ **परिशेषेति** । तदयं प्रमाणार्थ इत्यादिना प्रागुक्तपरिशेषेत्यर्थः । **साम्यादिति** । तत्सिद्धौ सिद्धसाधनं असिद्धावप्रसिद्ध-विशेषणतेति दोषसाम्यादित्यर्थः । आत्मान्तरग्राह्यत्वादितिद्वितीयहेतुं निराह **आत्मान्तरेति** ॥ **संदिग्धासिद्धेरिति** । एकेन श्रुत एव शब्दोऽन्येनापि श्रुत इति निश्चयासंभवात् । स्तम्भकुम्भादिवत् स्थायित्वे तत्स्यात् । न चैवम् । तस्य आशुतरविनाशित्वेन वीचीतरङ्गन्यायेन शब्दान्तराण्युत्पाद्य पूर्व-पूर्वशब्दानां नष्टत्वेन अन्यान्यशब्दानामेव पुरुषान्तरैर्ज्ञातत्वसंभवादिति भावः । ननु पुरुषान्तरैरन्यान्य-शब्दश्रवणेऽपि तज्जनकशब्दपरम्परया मूलशब्दज्ञानमस्तीति मूलभूतशब्दप्रतिपत्तिः सर्वसाधारणीति शङ्कते **सन्तानेति** ॥ **प्रत्यभिज्ञानादिति** । शङ्खशब्द एव मयापि श्रुत इति ज्ञानादित्यर्थः ॥ **सुखादीनामप्यनुमानेनेति** । मुखप्रसादादिना चैत्रादिगतसुखस्यानेकैरनुमातुं शक्यत्वादिति भावः ॥ **आत्मसमवेतस्यैवेति** । आत्मनोऽपि विभुत्वादिति भावः । एतेन तृतीयहेतुरप्यप्रयोजकत्वेन निरस्तो ध्येयः ।

या० — **तत्सिद्धौ बाध इति** । शब्दोऽष्टद्रव्यातिरिक्तद्रव्यगुणो न भवति प्रत्यक्षत्वादित्यत्रा-अष्टद्रव्यातिरिक्तं द्रव्यं सिद्धं न वा । आद्ये बाधः । शब्दगुणकत्वेनैव तत्सिद्धेः । द्वितीयेऽप्रसिद्ध-विशेषणतेत्यर्थः ॥ **परिशेषानुमानेऽपीति** । शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रित इति त्वदीयपरिशेषा-नुमानेऽपि अष्टद्रव्यातिरिक्तं द्रव्यं सिद्धं न वा । आद्ये सिद्धसाध्यता । द्वितीयेऽप्रसिद्धविशेषणतेति साम्यादित्यर्थः ॥ **आत्मान्तरग्राह्यत्वस्य चेति** । तत्प्रतिपादकवाक्यस्येत्यर्थः । तेनार्थस्य कोऽर्थ इति कथं प्रश्न इति शङ्कानवकाश इति ध्येयम् । उक्तव्याख्यानद्वयमध्ये किं व्याख्यानमिति प्रश्नाशयः । प्रथमं व्याख्यानमाशङ्क्य निराकरोति **अनेकेत्यादिना** ॥ **संदिग्धेति** । शब्दस्यात्मगुणत्ववादिमते सर्वैरपि स्वस्वसमवेतशब्दस्यैव ग्रहेणात्मान्तरस्थस्याग्रहेणानेकप्रतिपत्तृसाधारणत्वरूपहेतोरनिश्चयेन संदिग्धा-सिद्धेरित्यर्थः । ननूक्तरीत्या तैस्तैरात्मभिः श्रूयमाणे भेरीशब्देऽनेकप्रतिपत्तृसाधारण्यानिश्चयेऽपि तत्सन्ता-नलक्षणकार्येण तदारम्भकमूलशब्दानुमितिरनेकेषां शब्दप्रतिपत्तॄणामविशिष्टा । तथा चैकस्यैव प्रथमोत्पन्न-स्यानेकसन्तानमूलभूतस्य भेरीशब्दस्यानुमित्याऽनेकप्रतिपत्तृसाधारण्यान्नासिद्धिरिति शङ्कते **सन्तानानु-मानेनेति** । सन्तानलक्षणानुमानेनेत्यर्थः ॥ **प्रत्यभिज्ञानादिति** । तथा च य एव भेरीशब्दस्त्वया श्रुतः स एव मयाऽपीति प्रत्यभिज्ञा उक्तरीत्या मूलशब्दविषयैव न श्रूयमाणशब्दविषयाऽतस्तद्विरोधोऽपि नेति भावः । अनुमानेनानेकप्रतिपत्तृसाधारण्यमनैकान्तिकमित्याह **तर्हीति** ॥ **आत्मसमवेतस्यैवेति** । यदुक्तरीत्या सन्तानानुमानेन मूलस्य प्रत्यभिज्ञानमेवानेकप्रतिपत्तृसाधारण्यमित्युच्यते तर्हीदं शब्दस्यात्म-गुणत्वेऽप्युपपन्नम् । स्वस्वात्मोत्पन्नशब्दसन्तानमूलशब्दस्यैवानुमानेनानेकेषां प्रत्यभिज्ञानोपपत्तेः । तथा चाप्रयोजकतेति भावः ।

श्री० — **धर्मादीनामिति** । यथाऽऽत्मनिष्ठगुणेष्वपि द्वैविध्यं कल्पितमेवं शब्दरूपस्याप्यात्म-गुणस्य बाह्येंद्रियप्रत्यक्षत्वमपि किं न स्यात् । अन्यथा य आत्मगुणः सुखादिः स प्रत्यक्षो दृष्टः । धर्मादीनां च तदभावादात्मगुणत्वं न स्यादित्यपि वक्तुं शक्यत्वादित्यर्थः । **अन्यथा** बाह्येंद्रियप्रत्यक्षत्व-प्रसङ्गीकृत्यात्मगुणत्वानङ्गीकारे ॥ **प्रत्यक्षत्वेनेति** । बाह्येंद्रियप्रत्यक्षत्वेनेत्यर्थः ॥ **साम्यादिति** । अति-रिक्तद्रव्यसिद्धौ सिद्धसाध्यताऽसिद्धावप्रसिद्धविशेषणतेति साम्यादित्यर्थः ॥ **संदिग्धासिद्धेरिति** । वीचीतरङ्गन्यायपक्षे य एव त्वया श्रुतः शब्दः स एव मयाऽपीत्यस्य कथंचिद्भ्रांतित्वेऽपि कदम्बमुकुल-न्यायपक्षे दशदिक्षूत्पद्यमानानां शब्दानां भिन्नानामेव दशदिक्ष्ववस्थितैः पुरुषैर्ग्रहणात्तत्प्रत्यभिज्ञाया भ्रमत्वस्यापि सम्भवादिति भावः । **सुखादीनामपीति** । मूलशब्दः कस्यचित्प्रत्यक्षः । तदितरस्य तु सन्तानलक्षणकार्येण मूलशब्दस्यानुमानमित्येवंरूपमेव चेदनेकप्रतिपत्तृसाधारण्यमात्मगुणत्वाभावे हेतुत्वेनो-च्यते तर्ह्येकस्यात्मनः सुखमुत्पन्नं तस्यैव साक्षात्सुखानुभवो भवति । तदितरस्य तु तदीयमुखविकासा-

असंभवेऽपिसंदिग्धासिद्धेः संभवादिति भावः। ननूक्तरीत्या श्रूयमाणे एकस्मिन्शब्दे अनेकप्रतिपत्तृसाधारण्यानिश्चयेपि तत्सन्तानलक्षणकार्यात् तदारंभकमूलशब्दानुमितिरनेकेषां शब्दस्य प्रतिपत्तृणामविशिष्टा। तथा चानेकानुमितिविषयस्यैकस्यैव मूलशब्दस्यानेकप्रतिपत्तृसाधारण्यान्नासिद्धिरित्याशङ्कते **सन्तानानुमानेति**। सन्तानलक्षणानुमानेनेत्यर्थः। **मूलप्रत्यभिज्ञानादिति**। य एव त्वयाऽनुमितः स एव मयापीति प्रत्यभिज्ञानादित्यर्थः॥ **तर्हीति**। अनुमानेनानेकप्रतिपत्तृसाधारणत्वमनैकान्तिकमिति भावः॥ **आत्मसमवेतस्यैवेति**। यद्युक्तरीत्या सन्तानानुमानेन मूलस्य प्रत्यभिज्ञानमेवानेकप्रतिपत्तृसाधारण्यमित्युच्यते तर्हीदं शब्दस्यात्मगुणत्वेऽप्युपपन्नमित्यप्रयोजकतेत्यर्थः। वीचीतरङ्गन्यायेनेत्यनन्तरं सन्तानानुमानादिति शेषः। तथा च सर्वदिक्ष्ववस्थितैः प्रतिपत्तृभिः तरङ्गसन्तानलक्षणकार्येण तदारम्भकमूलतरङ्गोऽनुमीयते एवं मूलशब्दोऽपीत्युक्तं भवति। अत्रात्मगुणस्यैव सन्तानानुमानात् मूलप्रत्यभिज्ञोपपत्तावित्येव वक्तव्ये यदात्मसमवेतस्यैव वीचीतरङ्गन्यायेनेति वचनं तच्छ्रोत्रस्याकाशात्मकत्वेन शब्दस्यात्मगुणत्वे श्रोत्रेण सन्निकर्षाभावात् कथं तद्ग्रह इति विपक्षे बाधकशङ्कापरिहारायेति ज्ञातव्यम्। तेन कर्णशष्कुल्यवच्छिन्न एवात्मा श्रोत्रम्। वीचीतरङ्गन्यायेन तत्रोत्पन्नाः शब्दाः। समवायसन्निकर्षेण तद्ग्रह इत्यर्थसूचनात्।

प० — ननूक्तमात्मगुणत्वाभावे बाह्येन्द्रियप्रत्यक्षत्वादिहेतुचतुष्टयमित्यतः सर्वं क्रमेण निरस्यन्नाद्यं निराह **धर्मादीनामप्रत्यक्षत्वेऽपीत्यादिना**॥ **तत्सिद्धाविति**। अष्टद्रव्यातिरिक्तद्रव्यसिद्धौ शब्दगुणकत्वेनैव तस्य सिद्ध्या धर्मिग्राहकमानबाधः, 'शब्दो नाष्टद्रव्यातिरिक्तद्रव्यगुणः प्रत्यक्षत्वात् तदीयपरिमाणवत्' इत्यनुमानस्य। तादृशद्रव्यासिद्धावप्रसिद्धविशेषणतेति शङ्कार्थः॥ **परिशेषेति**। तदयं प्रमाणार्थ इत्यादिना प्रागुक्तपरिशेषेत्यर्थः। **साम्यादिति**। तत्सिद्धौ सिद्धसाधनं असिद्धावप्रसिद्धविशेषणतेति दोषसाम्यादित्यर्थः। आत्मान्तरग्राह्यत्वादितिद्वितीयहेतुं निराह **आत्मान्तरेति**॥ **संदिग्धासिद्धेरिति**। एकेन श्रुत एव शब्दोऽन्येनापि श्रुत इति निश्चयासंभवात्। स्तम्भकुम्भादिवत् स्थायित्वे तत्स्यात्। न चैवम्। तस्य आशुतरविनाशित्वेन वीचीतरङ्गन्यायेन शब्दान्तराण्युत्पाद्य पूर्वपूर्वशब्दानां नष्टत्वेन अन्यान्यशब्दानामेव पुरुषान्तरैर्ज्ञातत्वसंभवादिति भावः। ननु पुरुषान्तरैरन्यान्यशब्दश्रवणेऽपि तज्जनकशब्दपरम्परया मूलशब्दज्ञानमस्तीति मूलभूतशब्दप्रतिपत्तिः सर्वसाधारणीति शङ्कते **सन्तानेति**॥ **प्रत्यभिज्ञानादिति**। शङ्खशब्द एव मयापि श्रुत इति ज्ञानादित्यर्थः॥ **सुखादीनामप्यनुमानेनेति**। मुखप्रसादादिना चैत्रादिगतसुखस्यानेकैरनुमातुं शक्यत्वादिति भावः॥ **आत्मसमवेतस्यैवेति**। आत्मनोऽपि विभुत्वादिति भावः। एतेन तृतीयहेतुरप्यप्रयोजकत्वेन निरस्तो ध्येयः।

या० — **तत्सिद्धौ बाध इति** । शब्दोऽष्टद्रव्यातिरिक्तद्रव्यगुणो न भवति प्रत्यक्षत्वादित्यत्रा-अष्टद्रव्यातिरिक्तं द्रव्यं सिद्धं न वा । आद्ये बाधः । शब्दगुणकत्वेनैव तत्सिद्धेः । द्वितीयेऽप्रसिद्ध-विशेषणतेत्यर्थः ॥ **परिशेषानुमानेऽपीति** । शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रित इति त्वदीयपरिशेषा-नुमानेऽपि अष्टद्रव्यातिरिक्तं द्रव्यं सिद्धं न वा । आद्ये सिद्धसाध्यता । द्वितीयेऽप्रसिद्धविशेषणतेति साम्यादित्यर्थः ॥ **आत्मान्तरग्राह्यत्वस्य चेति** । तत्प्रतिपादकवाक्यस्येत्यर्थः । तेनार्थस्य कोऽर्थ इति कथं प्रश्न इति **शङ्कानवकाश** इति ध्येयम् । उक्तव्याख्यानद्वयमध्ये किं व्याख्यानमिति प्रश्नाशयः । प्रथमं व्याख्यानमाशङ्क्य निराकरोति **अनेकेत्यादिना** ॥ **संदिग्धेति** । शब्दस्यात्मगुणत्ववादिमते सर्वैरपि स्वस्वसमवेतशब्दस्यैव ग्रहेणात्मान्तरस्थस्याग्रहेणानेकप्रतिपत्तृसाधारणत्वरूपहेतोरनिश्चयेन संदिग्धा सिद्धेरित्यर्थः । ननूक्तरीत्या तैस्तैरात्मभिः श्रूयमाणे भेरीशब्देऽनेकप्रतिपत्तृसाधारण्यानिश्चयेऽपि तत्सन्ता-नलक्षणकार्येण तदारम्भकमूलशब्दानुमितिरनेकेषां शब्दप्रतिपत्तॄणामविशिष्टा । तथा चैकस्यैव प्रथमोत्पन्न-स्यानेकसन्तानमूलभूतस्य भेरीशब्दस्यानुमित्याऽनेकप्रतिपत्तृसाधारण्यान्नासिद्धिरिति शङ्कते **सन्तानानु-मानेनेति** । सन्तानलक्षणानुमानेनेत्यर्थः ॥ **प्रत्यभिज्ञानादिति** । तथा च य एव भेरीशब्दस्त्वया श्रुतः स एव मयाऽपीति प्रत्यभिज्ञा उक्तरीत्या मूलशब्दविषयैव न श्रूयमाणशब्दविषयाऽतस्तद्विरोधोऽपि नेति भावः । अनुमानेनानेकप्रतिपत्तृसाधारण्यमनैकान्तिकमित्याह **तर्हीति** ॥ **आत्मसमवेतस्यैवेति** । यदुक्तरीत्या सन्तानानुमानेन मूलस्य प्रत्यभिज्ञानमेवानेकप्रतिपत्तृसाधारण्यमित्युच्यते तर्हीदं शब्दस्यात्म-गुणत्वेऽप्युपपन्नम् । स्वस्वात्मोत्पन्नशब्दसन्तानमूलशब्दस्यैवानुमानेनानेकेषां प्रत्यभिज्ञानोपपत्तेः । तथा चाप्रयोजकतेति भावः ।

श्री० — **धर्मादीनामिति** । यथाऽऽत्मनिष्ठगुणेष्वपि द्वैविध्यं कल्पितमेवं शब्दरूपस्याप्यात्म-गुणस्य बाह्येंद्रियप्रत्यक्षत्वमपि किं न स्यात् । अन्यथा य आत्मगुणः सुखादिः स प्रत्यक्षो दृष्टः । धर्मादीनां च तदभावादात्मगुणत्वं न स्यादित्यपि वक्तुं शक्यत्वादित्यर्थः । **अन्यथा** बाह्येंद्रियप्रत्यक्षत्व-मङ्गीकृत्यात्मगुणत्वानङ्गीकारे ॥ **प्रत्यक्षत्वेनेति** । बाह्येंद्रियप्रत्यक्षत्वेनेत्यर्थः ॥ **साम्यादिति** । अति-रिक्तद्रव्यसिद्धौ सिद्धसाध्यताऽसिद्धावप्रसिद्धविशेषणतेति साम्यादित्यर्थः ॥ **संदिग्धासिद्धेरिति** । वीचीतरङ्गन्यायपक्षे य एव त्वया श्रुतः शब्दः स एव मयाऽपीत्यस्य कथंचिद्भ्रांतित्वेऽपि कदम्बमुकुल-न्यायपक्षे दशदिक्षूत्पद्यमानानां शब्दानां भिन्नानामेव दशदिक्ष्ववस्थितैः पुरुषैर्ग्रहणात्तत्प्रत्यभिज्ञाया भ्रमत्वस्यापि सम्भवादिति भावः । **सुखादीनामपीति** । मूलशब्दः कस्यचित्प्रत्यक्षः । तदितरस्य तु सन्तानलक्षणकार्येण मूलशब्दस्यानुमानमित्येवंरूपमेव चेदनेकप्रतिपत्तृसाधारण्यमात्मगुणत्वाभावे हेतुत्वेनो-च्यते तर्ह्येकस्यात्मनः सुखमुत्पन्नं तस्यैव साक्षात्सुखानुभवो भवति । तदितरस्य तु तदीयमुखविकासा-

दिना सुखानुमानं भवतीति तत्राप्येतादृशानेकप्रतिपत्तृसाधारण्यस्य विद्यमानत्वेऽप्यात्मगुणत्वस्यैव सत्त्वेन सुखे व्यभिचार इत्यर्थः ।

च०— **तत्सिद्धौ** अष्टद्रव्यातिरिक्तद्रव्यसिद्धौ । **असिद्धौ** तदनिश्चये । **परिशेषानुमाने** शब्दधर्मिकाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसाध्यकानुमाने । तादृशद्रव्यं सिद्धमसिद्धं वा । आद्ये सिद्धसाधनं, द्वितीये अप्रसिद्धविशेषणतेत्यर्थः । **आत्मान्तरग्राह्यत्वस्य** हेतुविभवत्यन्तवाक्यस्य । **सन्दिग्धासिद्धेरिति** । शब्दस्यात्मगुणत्वमुपगच्छतां नये सुखादिवत्तत्तदात्ममात्रवेद्यत्वोपगत्याऽनेकप्रतिपत्तृसाधारण्यरूपहेतोः संदिग्धासिद्धेरित्यर्थः । **संतानानुमानेति** । संतानरूपकार्येणानुमिततदारंभकमूलीभूतशब्दस्यानेकप्रतिपत्तृसाधारण्यान्नोक्तक्षत्यवकाश इति भावः ॥

**सु०— अपर आह ॥ ग्राहकस्थत्वेनाग्रहणमात्मान्तरग्राह्यत्वमिति । तदसिद्धम् । आत्मन्यसमवायात्तत्सिद्धिरिति चेन्न । तस्याप्यसिद्धेः । अहङ्कारेण विभक्तस्य ग्रहणात्तत्सिद्धिरिति चेन्न । पादे मे सुखं शिरसि मे दुःखं मनो मे दुःखितमिति दर्शनात्सुखादिषु व्यभिचारात् । ग्रहणं प्रमितिरिति चेन्न । संदिग्धासिद्धत्वात् । कालादिगुणो वा किं न स्यात् । प्रत्यक्षत्वादिति चेन्न । स्पर्शस्यापि प्रत्यक्षत्वेन अवायवीयत्वप्रसङ्गात् । कालादीनां विशेषगुणवत्त्वे बाधकाभावात् । तद्विरहिततयैव तत्सिद्धिरिति चेन्न । अन्यथा तत्सिद्धेर्वक्ष्यमाणत्वात् ।**

शे०— द्वितीयव्याख्यानमनूद्य दूषयति **अपर इति** । शब्दस्य वीणाद्याश्रयतया सन्तानन्यायेन श्रोत्रस्थतया वा प्रतीयमानत्वादात्मनिष्ठतया चाप्रतीयमानत्वान्नात्मगुणत्वम् । ततश्च यद्ययमात्मगुणः स्यादात्माविषयकग्रहणविषयो न स्यात् । तद्गुणानां सुखादीनां ग्राहकविषयकज्ञानविषयत्वदर्शनात् । न चायं ग्राहकविषयज्ञानविषयकः तस्मान्न गन्धादिवत्तद्गुण इत्याशयः । ग्राहकाविषयग्रहणविषयत्वमसिद्धमित्याह **तदसिद्धमिति** । ततश्चेष्टापत्तिरिति भावः । शब्द आत्माविषयकग्रहणविषयः तत्रासमवेतत्वात् गन्धादिवत् इत्यनुमानेन तत्सिद्धेः, कथमसिद्धत्वमिति शङ्कते **आत्मनीति** । भवेदेवं कथञ्चिद्यद्यात्मन्यसमवेतत्वमेव सिद्धं स्यात् । न चैतदस्ति । तत्कथं तेनात्माविषयकग्रहणविषयत्वसिद्धिः स्यादित्याह **तस्याप्यसिद्धेरिति** । ननु शब्दो नात्मसमवेतोऽहन्त्वव्यधिकरणतया प्रतीयमानत्वात् इत्यनुमानात्तत्सिद्धिरिति शङ्कते **अहङ्कारेणेति** । वीणा वाद्यते, वेणुः पूर्यते, इतिवत्; अहं वाद्ये, पूर्ये वा, इति कस्यचिदप्रत्ययादिति भावः । नाहन्त्वव्यधिकरणतया गृह्यमाणत्वेन शब्दस्यात्मन्यसमवेतत्वसाधनं युक्तम् । पादे मे दुःखम्, शिरसि मे सुखम्, इत्यहन्त्वव्यधिकरणतया प्रतीयमानानामपि सुखादीनाम् आत्मसमवेतत्वदर्श-

नेन व्यभिचरितत्वादित्याह **पादे म इति** । नन्वहङ्कारेण विभक्तस्य ग्रहणादित्यत्र ग्रहणं प्रमितिरेव । 'पादे मे सुखम्' इत्यादेश्च भ्रमत्वान्न तत्रानैकान्त्यमिति शङ्कते **ग्रहणमिति** । एवं तर्हि माऽस्त्वनैकान्त्यम् । वीणा वाद्यते, वेणुः पूर्यते, इति वीणाद्याश्रयत्वेनाहन्त्वव्यधिकरणतया शब्दग्रहणस्यापि भ्रमत्वप्रमात्वशङ्काकवलितत्वेन प्रमितत्वानिश्चयात् संदिग्धासिद्धत्वादेव न तेनात्मन्यसमवेतत्वसिद्धिरिति भावेनाह **सन्दिग्धेति** । अत्र च टीकायां 'तथा तत्सिद्धेर्वक्ष्यमाणत्वात्' इति काचित्कः पाठः । स तु मूलपुस्तकेष्वदर्शनात्प्रक्षिप्त एव 'आत्मन्यसमवायात्तत्सिद्धिरिति चेन्न । तस्याप्यसिद्धेः । अहङ्कारेण विभक्तस्य ग्रहणात्तत्सिद्धिरिति चेन्न । पादे म' इत्यादिरेव च सर्वत्राकरे पाठदर्शनान्मूलपाठ इत्यवधेयम् । कालादिगुणत्वमप्यभ्युपेत्य तत्रोक्तं दूषणमुद्धर्तुमाह **कालादीति** । कालदिङ्मनोगुण इत्यर्थः । कालादिगुणत्वाभावसाधकतयोपन्यस्तमाद्यं हेतुं दूषयितुमाशङ्कते **प्रत्यक्षत्वादिति चेदिति** ॥ **स्पर्शस्यापीति** । स्पर्शो न वायवीयः प्रत्यक्षत्वाद्रूपादिवदित्यपि प्रसङ्गात् तदितरवायुगुणानामप्रत्यक्षत्वादिति भावः । द्वितीयं हेतुमप्रयोजकत्वेन दूषयति **कालादीनामिति** ॥ **तद्विरहिततयैवेति** । विशेषगुणविरहवत्त्वरूपेणेत्यर्थः । धर्मिग्राहकप्रमाणेन तेषां विशेषगुणवत्त्वप्रतिक्षेपान्न विशेषगुणवत्त्वमिति भावः । भवेदेवं कथञ्चिद्यदि क्रियोपनायकत्वसंयोगोपनायकत्वादिप्रकारेण कालादिसिद्धिः स्यात् । न चैवम् । साक्षिणैव कालादिसिद्धेः । 'कालो हि साक्षिप्रत्यक्षः' इत्यादिनाऽनुपदमेव वक्ष्यमाणत्वात् । ततश्च धर्मिग्राहकप्रमाणेन विशेषगुणशून्यत्वासिद्धेरप्रयोजकत्वतादवस्थ्यमित्याह **अन्यथेति** ।

स० — द्वितीयव्याख्यानमनूद्य दूषयति **अपर इत्यादिना** । **ग्राहकस्थत्वेनेति** । प्रतिपत्तृपुरुषगतत्वेनेत्यर्थः । **तदसिद्धमिति** । कर्णशष्कुल्यवच्छिन्नात्मगतस्यैव शब्दस्य ग्रहणाङ्गीकारादिति भावः । यद्वा यत्रस्थः शब्दः ततोऽन्य आत्मा आत्मान्तरं तद्ग्राह्यत्वं आत्मान्तरग्राह्यत्वमित्यर्थः । अयं भावः । शब्दस्य वीणाश्रयत्वेन वाप्रतीयमानत्वेन श्रोत्रस्थत्वेन वा प्रतीयमानत्वेनात्मनिष्ठतया अप्रतीयमानत्वेन नात्मगुणत्वम् यद्ययमात्मगुणः स्यात् तर्हि ग्राहकाविषयकग्रहणविषयो न स्यात् तद्गुणानां ग्राहकविषयकज्ञानविषयत्वदर्शनात् । न चायं ग्राहकविषयकज्ञानविषयकः तस्मान्न वेगादिवदात्मगुण इति ॥ **तदसिद्धमिति** । ग्राहकाविषयकग्रहणविषयत्वमसिद्धमित्यर्थः । **आत्मन्यसमवायादिति** । वीणा वाद्यते वेणुःपूर्यते इतिवदहं वाद्ये पूर्ये चेति कस्यचिदपि प्रत्ययाभावेन ग्राहकस्यात्मनस्तद्ग्रहणाविषयत्वसिद्धिरित्यर्थः । आत्माविषयकप्रत्यक्षविषयत्वेनात्मगुणत्वाभावसाधनमनुपपन्नम् । पादे मे सुखमिति सुखादीनामपि आत्माविषयकग्रहणविषयत्वेन तत्र चात्मगुणत्वस्यैव सत्त्वेन व्यभिचारादित्याह **पाद इति** । **तद्दर्शनात्** आत्माविषयकसुखादिग्रहणदर्शनादित्यर्थः । क्वचित्पुस्तके पादे मे सुखम् इत्येतद्वाक्यात्पूर्वं तथा तत्सिद्धेर्वक्ष्यमाणत्वादिति ग्रन्थो दृश्यते । स तु मूलपुस्तकेष्वदर्शनात् उत्तरवाक्यस्यैतदुपपादकत्वाभावेन तस्यापि दूषणान्तर-

परत्वे चशब्दापत्तेश्च कल्पितः । यद्वा क्वचिद्दर्शनात् चशब्दाभावेपि तदुत्तरवाक्यस्योपपन्नत्वाद्युक्त एव पाठः । तस्य च, **तथा** आत्मन्यसमवायेन **तत्सिद्धे**रात्माविषयकग्रहणविषयत्वस्य सिद्धेर्वक्ष्यमाणत्वादित्यर्थः । अत एव स्वप्नाधिकरणे 'यत्र याहतता नास्ति कोऽतिसङ्गोस्ति साधने' इत्यनुव्याख्याव्याख्यावसरे 'केचिदन्यसमवेता अपि अन्यमुपरञ्जयन्ति यथा ज्ञानादयो घटादीनाम्' इत्युत्तरत्र ग्रन्थकार एव वक्ष्यतीति द्रष्टव्यम् । केचित्तु '**तथा** आत्मसमवेततयैव **तत्सिद्धेः** शब्दसिद्धेरिदानीमस्माभिरुच्यमानत्वादसिद्धिरिति । वक्ष्यमाणत्वादितिवचनं तूत्तरस्य पश्चाद्भावित्वादित्यवगन्तव्यमिति । तदर्थमाह त एव ग्राहकस्थत्वेनाग्रहणमित्यस्य व्यभिचारमप्याह **पादे मे सुखमित्यादिना** । अत्र सुखादेः पादादिगतत्वेन प्रतीत्या ग्राहकभिन्ननिष्ठत्वेन ग्रहणरूपं ग्राहकस्थत्वेनाग्रहणमस्तीति भावः । उदाहृतक्वचित्पाठे तु अहङ्कारेण विभक्तस्य ग्रहणादित्यस्य व्यभिचारमाह पादे मे सुखमित्यवतारिका द्रष्टव्या । अत्र शब्दवत्सुखादेरप्यहङ्कारभिन्नाधिकरणनिष्ठतया ग्रहणाव्यभिचार इत्यर्थः' इत्युत्तरवाक्यं व्याचक्षते । ननु ग्राहकाविषयकग्रहणविषयत्वमानस्यात्मगुणत्वाभावे हेतुत्वेनानभिप्रेतत्वात् ग्राहकाविषयत्वप्रमितिविषयत्वस्यैव च तत्त्वेनाभिप्रेतत्वात् पादे मे सुखमित्यादिप्रतीतेश्च भ्रमत्वेन सुखादेरात्माविषयकप्रमितिविषयत्वाभावेन हेत्वभावादेव न व्यभिचार इति भावेन शङ्कते **ग्रहणमिति** । तथात्वे वीणा वाद्यते वेणुः पूर्यते इति प्रतीतेरपि भ्रमत्वेनात्माविषयकभ्रमरूपप्रतीतिविषयत्वस्य शब्दे सत्त्वेपि तादृशप्रमितिविषयत्वस्य पक्षे संदिग्धत्वेन संदिग्धासिद्ध्या न शब्दस्यात्मगुणत्वाभावानुमानमित्याशयेनाह **संदिग्धासिद्धत्वादिति** । **स्पर्शस्यापीति** । तदितरवायुगुणानामप्रत्यक्षत्वादिति भावः । तथा च स्पर्शः न वायवीयप्रत्यक्षत्वात् रूपादिवदित्यतिप्रसङ्गादित्यर्थः । विशेषगुणत्वादिति हेत्वन्तरविघटनायाह **कालादीनामिति** । धर्मिकल्पनातो वरं धर्मकल्पनमितिन्यायादित्यर्थः ॥ **अन्यथा तत्सिद्धेरिति** । **अन्यथा** तदुक्तप्रकारापेक्षया प्रकारान्तरेण साक्षिणैवेति यावत् ।

प०— **ग्राहकस्थत्वेनेति** । श्रोतृपुरुषस्थत्वेनेत्यर्थः ॥ **तस्याप्यसिद्धत्वादिति** । एतेन तृतीयहेतोरप्यप्रसिद्धिरुक्ता ध्येया । **व्यभिचारादिति** । एतेन चतुर्थहेतुरपि व्यभिचारेण निरस्तो ध्येयः । नन्वहंकारेण वि(वि भक्तस्य ग्रहणादित्यत्र ग्रहणादित्यस्य प्रतीयमानत्वादित्यर्थः । पादे मे सुखमिति भ्रमः अतो न दोष इति शंकते **ग्रहणमिति** ॥ **संदिग्धेति** । आत्मगुणत्वाभावस्याद्याप्यसिद्ध्या अहंकारविविक्तत्वेन शब्दग्रहणमिदं भ्रांतिः, उत प्रमितिरिति संदेहास्कंदनादिति भावः । यदपि दिक्कालमनसां गुणत्वाभावे प्रत्यक्षत्वाद्विशेषगुणत्वाच्चेति हेतुद्वयम् । तत्राद्यमाशंक्य निराह **प्रत्यक्षत्वादितीति** । द्वितीयं निराह **कालादीनामिति** ॥ **अन्यथा तत्सिद्धेरिति** । आनुमानिकत्वप्रकारापेक्षया प्रकारांतरेण साक्षिणैव सिद्धेरनुपदमग्रे वक्ष्यमाणत्वादित्यर्थः । येन धर्मिग्राहकमानबाध इति भावः ।

**या०** — द्वितीयं व्याख्यानमनूद्य दूषयति **अपर आहेति** ॥ **ग्राहकस्थत्वेनेति** । ज्ञातृपुरुषगतत्वेनेत्यर्थः ॥ **तदसिद्धमिति** । स्वस्वात्मगतस्यैव शब्दस्य ग्रहणाङ्गीकारादिति भावः । आत्मन्यसमवायाचत्सिद्धिरिति चेन्नेति फक्किकानन्तरं 'तस्याप्यसिद्धेः । अहङ्कारेण विभक्तस्य ग्रहणाचत्सिद्धिरिति चेन्ने'ति पाठः सुगमः स्वरसश्च । 'तथा तत्सिद्धेर्वक्ष्यमाणत्वादि'ति पाठो मृग्यार्थः । पादे मे सुखमित्युत्तरवाक्यस्य तदुपपादकत्वाभावात् । चशब्दाभावेन तस्य दूषणान्तरत्वासंभवाच्चेति ज्ञातव्यम् ॥ **पादे म इति** । शब्दवत्सुखादेरप्यहङ्कारभिन्नाधिकरणनिष्ठतया ग्रहणाद्व्यभिचार इत्यर्थः ॥ **ग्रहणं प्रमितिरिति** । एवंच सुखादीनां पादाद्याश्रितत्वेन ग्रहणं भ्रम एवेति नोक्तदोष इति भावः ॥ **संदिग्धेति** । वीणायां शब्द इत्यादिप्रतीतेरपि न प्रमात्वं निश्चितमिति भावः । **स्पर्शस्यापीति** । तदितरवायुगुणानामप्रत्यक्षत्वादिति भावः ॥ **कालादीनामिति** । तथा च विशेषगुणत्वादिति हेतुरप्रयोजक इति भावः ॥ **तद्विरहितत्तयैवेति** । तपनपरिस्पन्दानां पिण्डं प्रत्युपनायकतया हि कालसिद्धिः । विशेषगुणवतस्तदुपनायकत्वे आकाशादिनाऽन्यथासिद्धिप्रसङ्गात् कालासिद्धिरेव स्यात् । अतो विशेषगुणशून्यमेव द्रव्यं तदुपनायकं कल्पनीयमिति कालः सिध्यन्विशेषगुणविरहिततयैव सिध्यतीत्यर्थः ॥ **अन्यथासिद्धेरिति** । साक्षिणैव कालसिद्धेरनुपदमेव वक्ष्यमाणत्वादित्यर्थः ।

**श्री०** — **सुखादिषु व्यभिचारादिति** । अहंकारभिन्नाधिकरणनिष्ठतया ग्रहणेऽप्यात्मन्यसमवेतत्वाभावाद्व्यभिचार इत्यर्थः ॥ **प्रमितिरिति** । तथा चाहङ्कारभिन्नाधिकरणनिष्ठतया प्रमीयमाणत्वादित्यर्थः । पादाद्याश्रितत्वेन च ग्रहणं न प्रमितिः किन्तु भ्रम एवेति न व्यभिचार इति भावः ॥ **संदिग्धेति** । वीणायां शब्द इत्येवमहङ्कारभिन्नाधिकरणनिष्ठताप्रतीतेरपि न प्रमात्वं निश्चितमिति भावः ।

**च०** — तादृशहेतुवाक्यस्यार्थान्तरं दुदूषयिषुरनुवदति **अपर इति** ॥ **ग्राहकस्थत्वेन** प्रत्येतृपुरुषाश्रितत्वेन **तदसिद्धमिति** । सुखादिकल्पत्वोपगमादिति भावः । **तत्सिद्धिः** ग्राहकाविषयकग्रहणविषयत्वसिद्धिः । इत उत्तरं तस्याप्यसिद्धेरहङ्कारेण विभक्तस्य ग्रहणात्तत्सिद्धिरिति चेन्नेत्यानुपूर्वीक एव पाठो व्याचक्षाणैरादृतः, तथा तत्सिद्धेर्वक्ष्यमाणत्वादिति तु न तादृश इति स्थितम् । **स्पर्शस्यापीति** । प्रत्यक्षत्वेन शब्दे कालगुणत्वाभावसाधने तेनैव हेतुना स्पर्शे वायुगुणत्वाभावसाधनप्रसङ्ग इति भावः । तथा च आभाससाम्यमिति हृदयम् । **कालादीनामिति** । तथाच अप्रयोजकेन विशेषगुणत्वेन शब्दे कालाश्रितत्वाभावसाधनं न संगच्छत इत्याशयः । **तद्विरहिततयैवेति** । विशेषगुणाभाववत्तयैवेत्यर्थः । विशेषगुणवतः पिण्डं प्रति तरणिपरिस्पन्दोपनायकत्वे आकाशादिनाऽन्यथासिद्ध्या कालासिद्धिप्रसङ्गेन विशेषगुणशून्यतदुपनायकं कल्पनीयमिति विशेषगुणाभाववत्तयैव कालः सिध्यतीति भावः । **अन्यथा**

**तत्सिद्धेरिति** । 'कालो हि साक्षिप्रत्यक्ष इत्यादिनाऽनुपदमेव साक्षिणैव कालसिद्धेरभिधास्यमानत्वादित्यर्थः ।

सु० — **किञ्चात्र सर्वत्र साहचर्यदर्शने सङ्कोच एव द्रव्यान्तरकल्पनाया लघीयान् । परिशेषानुमानं त्वष्टद्रव्यातिरिक्तद्रव्याप्रसिद्धेरप्रसिद्धविशेषणम् । प्रसिद्धौ चानुमानवैयर्थ्यम् । अष्टद्रव्यातिरिक्ताश्रित इत्येव साधने गुणादिवृत्तिसामान्यादपि व्यावृत्तत्वेनासाधारणता स्यात् । शब्दाश्रयः इतरेभ्यो भिद्यते शब्दाश्रयत्वात् व्यतिरेकेण पृथिवीवत् इति प्रयोग इति चेत्(न) । पृथिव्यादिप्रतियोगिकानेकभेदानां प्रत्येकं साधनेऽबादीनां सपक्षत्वेन तत्रावृत्तेरसाधारण्यात् । समुदितसाधने पुनरप्रसिद्धविशेषणत्वात् । अभावस्य साध्यत्वादभावाभावस्य च भावत्वेन प्रतियोग्यनपेक्षतया व्याप्तिग्रहणसंभवान्न दोष इति चेन्न । तथाऽपि प्रतिषेधमुखेन प्रतीतेरनिवारणात् । शब्दाश्रयो नेतरेभ्यो भिद्यते प्रमेयत्वाद्घटवदिति सत्प्रतिपक्षत्वाच्च । सर्वप्रतियोगिकैकभेदसाधने तु प्रमाणबाधश्चाधिकः । प्रतियोगिभेदेन भेदभेदस्यापि दर्शनादिति ।**

शे० — एवं पृथिव्यादिगुणत्वे बाधकानि परिहृत्य तद्गुणत्वे साधकमप्याह **किञ्चेति** ॥ **अत्र सर्वत्रेति** । शब्दो न स्पर्शवद्विशेषगुण इत्यादिप्रसक्तप्रतिषेधसाधकानुमानेष्वित्यर्थः ॥ **साहचर्येति** । पक्षातिरिक्त एव हेतुसाध्ययोर्व्याप्तिर्न तु पक्षतदितरसाधारण्येनेति साहचर्यदर्शनसङ्कोच एवेत्यर्थः ॥ **लघीयानिति** । धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वादिति न्यायादिति भावः । अष्टद्रव्यातिरिक्तद्रव्याश्रित इत्यत्राष्टद्रव्यातिरिक्तद्रव्यमप्रसिद्धं प्रसिद्धं वेति विकल्पौ मनसि निधाय क्रमेण दूषयति **परिशेषानुमानं त्वित्यादि** । षट्सहस्रीकृतोक्तमिति शेषः ॥ **अप्रसिद्धविशेषणमिति** । ततश्च न व्याप्तिग्रह इति भावः । ननु द्रव्याश्रितः शब्दोऽष्टद्रव्यातिरिक्ताश्रित इत्येव साध्यते न तु तादृशद्रव्याश्रित इत्यपि । तथा च नोक्तविकल्पदोषप्रसङ्गः । द्रव्याश्रित इति पक्षविशेषणमहिम्ना अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वस्यैव पर्यवसानगत्या सिद्धत्वान्न प्रकृतानुपयोगोऽपीति युक्तः परिशेष इति किरणावलीवर्धमानोक्तं पक्षं दूषयति **अष्टेति** ॥ **व्यावृत्तत्वेनेति** । तद्गुणे बाधकोपपन्नत्वे सति गुणत्वहेतोरिति शेषः । उक्तहेतोर्विपक्षभूताद्गुणादेः सपक्षभूताद्गुणादिवृत्तिसामान्याच्च व्यावृत्त्या पक्षमात्रवृत्तित्वादिति भावः । किरणावलीलीलावतीकारोक्तं परिशेषानुमानमाशङ्कते **शब्दाश्रय इति** । नन्वितरभेदः पृथिव्यादिप्रतियोगिकान्योन्याभावः । तत्र किं पृथिव्यादिप्रतियोगिनोऽनेके भेदाः प्रत्येकं साध्यन्ते, उतैकाधिकरण्यावच्छिन्नाः, किंवाऽनेकप्रतियोगिक एको भेदः; इति विकल्पान्मनसि निधायाद्यं दूषयति **पृथिव्यादीति** । द्वितीयं दूषयति **समुदितेति** । इतरभेदानां प्रत्येकं प्रसिद्धत्वेऽपि एकाधिकरण्यावच्छेदेनाप्रसिद्ध्या

समुदितानामप्रसिद्धेरिति भावः ॥ नन्वप्रसिद्धविशेषणत्वं व्याप्तिग्रहप्रतिबन्धकत्वेन दूषणम् । साध्यस्याप्रसिद्धौ प्रतियोगिप्रसिद्धेरभावेन साध्याभावस्य ज्ञातुमशक्यत्वात् तदभावे च सम्बन्धिज्ञानाभावेन ससम्बन्धिकपदार्थरूपसाधनाभावनिरूपितसाध्याभावनिष्ठव्याप्तेर्गृहीतुमशक्यत्वात् । इदं च व्याप्तिग्रहप्रतिबन्धकत्वं 'भावः केवलव्यतिरेकिणा साध्यते' इति पक्ष एव सम्भवति । तत्र साध्याभावस्याभावतया साध्याप्रसिद्धावुक्तरीत्या साध्याभावज्ञानासम्भवात् । न तु 'अभाव एव केवलव्यतिरेकिणा साध्यते' इति पक्षे । तत्कथमप्रसिद्धविशेषणत्वमिति शङ्कते **अभावस्येति ॥ प्रतियोग्यनपेक्षत्वादिति** । प्रतियोगिप्रतीत्यनपेक्षप्रतीतिकत्वादित्यर्थः । पृथिव्याद्यन्योन्याभावानामत्र साध्यत्वात् अन्योन्याभावाभावस्य च प्रतियोगितावच्छेदकरूपत्वात् पृथिवीत्वादेर्भावस्यैव व्यतिरेकव्याप्तौ व्याप्यतया तद्ग्रहे प्रतियोगिज्ञानानपेक्षणात्सुशको व्याप्तिग्रहः । न चैवमप्यनुमितेर्विशिष्टज्ञानतया विशेषणज्ञानजन्यत्वात्साध्यप्रसिद्ध्यभावे कथमनुमितिः स्यादिति वाच्यम् । एतन्मते प्रथमतः साध्यविशेष्यकानुमितेरेव स्वीकारेण तत्सम्भवादिति भावः ॥ **तथाऽपीति** । व्यतिरेकिणि साध्यस्याभावतया तदभावस्य वस्तुतो भावत्वेऽपि तस्य साध्याभावत्वेन ज्ञानमावश्यकम्, साध्याभावत्वेन ज्ञायमानसाध्याभावव्यापकाभावप्रतियोगिरूपहेतुमत्तया पक्षज्ञानस्य व्यतिरेकिणि गमकतोपयोगित्वात् । न च साध्यप्रसिद्धिं विनैतादृशप्रतिसन्धानं सम्भवतीति कथं तस्यादोषत्वम् । न च वस्तुतो यः साध्याभावः तद्व्यापकाभावप्रतियोगिहेतुमत्तया ज्ञानमेव लाघवात्तत्र गमकम्, न तूक्तरूपं गौरवात्, तच्च व्याप्यत्वेनाभिमतस्य भावस्य साध्याभावत्वेनाज्ञानेऽपि सम्भवतीति न साध्यप्रसिद्धिसापेक्षत्वम् इति वाच्यम् । तथा सति यत्र पटादौ घटाद्यभावत्वमारोप्य तद्व्यापकतया लोष्टत्वादि गृहीतं तत्र लोष्टत्वाद्यभावेन घटाननुमानप्रसङ्गेन व्यतिरेक्याभासविलयप्रसङ्गात् । न च योऽभावो यस्य भावस्य व्यापकतया गृहीतः तदभावाभावरूपेण हेतुना तस्य व्याप्यस्याभावः पक्षे साध्यत इत्येतदेव तत्र गमकम्, व्यापकाभाववत्तया ज्ञाते व्याप्याभावज्ञानावश्यंभावादिति वाच्यम् । तथा सति विवादादं पृथिवीत्वाद्यभाववत् तद्व्यापकशब्दाश्रयत्वाभावरहितत्वात् यत् यद्व्यापकशून्यं तत् तदभाववत् यथा सम्प्रतिपन्नम् इत्यन्वयित्वप्रसङ्गेन व्यतिरेकित्वभङ्गप्रसक्तेः । तथा च व्यतिरेकिणः पृथक्त्वमभिलषता पूर्वोक्तमेव प्रयोजकं तत्राङ्गीकार्यम् । तत्र च व्याप्यतयाऽभिमतस्य भावस्य साध्याभावत्वेन ज्ञातव्यत्वात्साध्यज्ञानाभावे च तदसम्भवाद्व्याप्तिग्रहानुपपत्तिरेवेति युक्तमप्रसिद्धविशेषणस्य दूषणत्वमिति भावः ॥ **नेतरेभ्यो भिद्यत इति** । नन्वत्रेतरभेदनिषेधः पृथिवीत्वादिरूप एव । स किमेकैकः साध्यतया विवक्षित उत मिलितः । नाद्यः व्यभिचारात् । नान्त्यः दृष्टान्ते साध्यवैकल्यात् । न हि घटे जलत्वादिकमस्तीति चेन्न । चतुर्दशत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य इतरभेदनिषेधस्य पृथिवीत्वाद्यतिरिक्तस्यैवात्र साध्यतया विवक्षितत्वात् । पृथिवीत्वादेस्त-

तद्भेदनिषेधरूपत्वेऽपि चतुर्दशभेदनिषेधरूपत्वाभावात् । घटे जलादित्रयोदशप्रतियोगिकभेदसत्त्वेऽपि पृथिवीभेदाभावेन, साध्यतया विवक्षितस्य चतुर्दशभेदाभावस्य सत्त्वेन साध्यवैकल्याभावादित्याशयात् ॥ तृतीयं निराकरोति **सर्वेति** । अत्र चशब्दोऽप्रसिद्धविशेषणत्वसमुच्चयार्थः । प्रमाणबाधं विशदयति **प्रतियोगीति** । एतच्च परीत्युक्तम् । सिद्धान्ते एकस्मिन्नधिकरणेऽनेकप्रतियोगिकस्य भेदस्यैकत्वव्यवस्थापनेन प्रतियोगिभेदेन भेदभेदासिद्धेरिति द्रष्टव्यम् ।

स० — **किञ्चात्र सर्वत्रेति** । आत्माद्यगुणत्वे ये हेतवस्तेषु सर्वेषु । पक्षातिरिक्ते व्याप्तिर्न तु पक्षेऽपीति सङ्कोच एव लघं यानित्यर्थः । अष्टद्रव्यातिरिक्तद्रव्याश्रित इत्यत्र द्रव्यपदं विवक्षितं न वा । आद्यं दूषयति **परीति** । द्वितीयं प्रत्याचक्षते **अष्टेति** । तद्वृत्तौ बाधकोपपन्नत्वे सति गुणत्वं यथा विपक्षाद्रूपादेर्व्यावृत्तं सपक्षाद्गुणादिवर्तिन सामान्यादपि व्यावर्तमानत्वादसाधारणानैकान्तिकमित्यर्थः । **इतरेभ्यो भिद्यत इति** । किमनेकप्रतियोगिनोऽनेकभेदाः प्रत्येकं साध्यन्ते उत समुदिताः अथवाऽनेकप्रतियोगिक एको भेदः । क्रमेण सर्वत्र दूषणान्याह **पृथिवीत्यादिना** । अप्रसिद्धस्य साध्यस्य सिद्धिर्भविष्यतीत्याशङ्कते **अभावस्येत्यादिना** । पृथिव्याद्यन्योन्याभावानामत्र साध्यत्वात् अन्योन्याभावाभावस्य च प्रतियोगितावच्छेदकरूपस्य पृथिवीत्वादेर्भावतया तादृशव्याप्यग्रहं प्रति न प्रतियोगिज्ञानतया साध्यज्ञानमपेक्षितमित्यर्थः । इदमुपलक्षणम् । अत्र मते प्रथमं साध्यविशेष्यकानुमितिस्वीकारेण न विशेषणज्ञानतयाऽपि साध्यप्रसिद्धिरपेक्षितेति द्रष्टव्यम् । **न दोष इति** । साध्याप्रसिद्धिरनुमितिप्रतिबन्धिका नेत्यर्थः । **तथाऽपि प्रतिषेधमुखेनेति** । साध्याभावत्वेनाभिमते भावरूपेऽपि साध्याभावत्वप्रकारकबुद्धेरावश्यकतया तदर्थं प्रतियोगिज्ञानतया साध्यप्रसिद्धेरपेक्षितत्वात् । अन्यथा साध्याभावत्वेनोपस्थितव्यापकाभावप्रतियोगित्वरूपस्य व्यतिरेकिणि गमकतौपयिकस्याज्ञानेनानुमित्यनुपपत्तेः । न च वास्तवसाध्याभावव्यापकाभावप्रतियोगित्वज्ञानमेव गमकं तच्च व्याप्यत्वेनाभिमतस्य साध्याभावत्वेनाज्ञानेऽपि सम्भवतीति वाच्यम् । तथा सति व्यतिरेक्याभासविलयापत्तेः । विस्तरस्तु तत्त्वोद्योतटीकाव्याख्याने द्रष्टव्यः । यद्वा अभावस्य साध्यत्वेन तदभावस्य भावरूपत्वेन व्यतिरेकव्याप्तिज्ञाने प्रतियोगिज्ञानानपेक्षायामपि अविप्रतिपन्नं प्रति साधनस्य व्यर्थत्वेन साध्यं नास्तीति वदन्तं प्रत्येव साधनस्य कर्तव्यत्वेन वस्तुतो भावरूपत्वेऽपि साध्याभावत्वेन तज्ज्ञानस्यावश्यकत्वेन तस्य च प्रतियोग्यप्रसिद्धौ असम्भवेन प्रतियोगिज्ञानापेक्षत्वेनाप्रसिद्धविशेषणत्वस्य दूषणत्वोक्तिर्युक्तैवेति भावः । अभावस्य साध्यत्वेन तदभावस्य भावरूपत्वात् व्याप्तिग्रहणदशायां प्रतियोगित्वेन साध्यज्ञानानपेक्षायामपि भावेनाभावसाधनं कथमितिशङ्कायां तदभावयोर्व्याप्यव्यापकभावापन्नत्वादितिवक्तव्यत्वेन तदा साध्यप्रसिद्ध्यभावे तदभावयोर्व्याप्यव्यापकभावस्य ज्ञातुमशक्यत्वेन साध्यप्रसिद्धेरनिवारणादित्यर्थः । इति तत्त्वम् ।

**शब्दाश्रयो नेतरेभ्यो भिद्यते इति**। नन्वत्रेतरभेदनिषेधो नाम तद्गतोऽसाधारणधर्मः पृथिवीत्वादिः। स किमेकैकः साध्यतया विवक्षितः उत मिलितः। नाद्यो व्यभिचारात्। न द्वितीयः। दृष्टान्तस्य साध्यवैकल्यात्। न हि घटे जलत्वादिकमस्तीति चेत् न अत्रेतरभेदनिषेधस्य व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य पृथिवीत्वाद्यतिरिक्तस्यैव साध्यतया विवक्षितत्वात्। पृथिवीत्वादेः तद्भेदनिषेधरूपत्वेपि चतुर्दशभेदनिषेधरूपत्वाभावात्। घटे च जलादित्रयोदशभेदसत्वेपि पृथिवीभेदाभावेन चतुर्दशभेदस्य साध्यतया विवक्षितस्य सत्त्वेन साध्यवैकल्याभावादित्यभिप्रायात्। प्रमाणबाधश्चेत्यत्राप्रसिद्धविशेषणत्वमेव केवलं, न किं तु बाधश्च स्यादित्यर्थः॥ **प्रतियोगिभेदेनेति**। इदं च पररीत्यैवोक्तम्। स्वमते तु भेदस्याधिकरणस्वरूपत्वेनाधिकरणभेदेनैव तद्भेद इत्यवधेयम्।

प० — **किञ्चात्र सर्वत्रेति**। शब्दस्य आत्माद्यष्टद्रव्यगुणत्वाभावे ये प्रयोगा अभिहिताः तत्र सर्वत्र व्याप्तिग्रहणसमये यत्र शब्दान्यत्वे सति बाह्यप्रत्यक्षत्वादिकं तत्रात्मादिगुणत्वाभाव इत्यादिरूपेण सहचारदर्शनं सङ्कोचनीयमित्यर्थः। एतत्सङ्कोचस्यैव लघुतमत्वादिति भावः। ननु प्रामाणिकत्वान्न द्रव्यान्तरकल्पनं दोषायेत्यत आह **परिशेषेति॥ असाधारणता स्यादिति**। अष्टद्रव्यवृत्तौ बाधकोपपन्नत्वे सति गुणत्वादिति हेतोरिति बोध्यम्॥ **इतरेभ्यो भिद्यत इति**। पृथिव्याद्यष्टद्रव्यप्रतियोगिकभेदवानित्यर्थः। ननु समुदितानामेवास्तु साधनम्। न चैकाधिकरणा व्यावच्छेदकावच्छिन्नानामेतेषां क्वाप्यप्रसिद्धत्वेन अप्रसिद्धविशेषणत्वं शङ्क्यम्। असिद्धविशेषणत्वस्य साध्याप्रसिद्धौ तन्निरूपितव्याप्तिज्ञानायोगेन व्याप्तिग्रहप्रतिबन्धकत्वेन दोषत्वात्। इह च साध्यसाधनव्यतिरेकयोरेव व्याप्यव्यापकभावाङ्गीकारेणान्वयव्याप्तेरनभ्युपगमात् अभावसाध्यकव्यतिरेकिप्रयोगे च साध्यत्वेनाभिमतेतरान्योन्याभावानां समुदितानां व्यतिरेकस्य इतरत्वरूपभावपदार्थत्वेनान्योन्याभावरूपसाध्यज्ञानं विनैव यत्रेतरत्वं तत्र शब्दाश्रयत्वाभाव इति पृथिव्यादौ व्यतिरेकव्याप्तिग्रहसंभवेन अभावसाध्यकव्यतिरेकिणि साध्याप्रसि(द्धे)ध्यादेरदोषत्वादिति भावेन शंकते **अभावस्येति॥ न दोष इति**। अप्रसिद्धविशेषणत्वमिति योज्यम्॥ **तथापीति**। साध्यभूताभावव्यतिरेकस्य भावत्वेपि साध्याभावरूपेण प्रतिषेधमुखेन साध्यभूताभावव्यतिरेकज्ञानमावश्यकम्। साध्याभावव्यापकाभावप्रतियोगित्वस्य व्यतिरेकिहेतौ गमकताप्रयोजकरूपम्। तच्च न स्वरूपसत्तया। व्यतिरेक्याभासोच्छेदापत्तेः। किंतु ज्ञातमेव तत्। ज्ञानं च न वस्तुगत्या साध्याभावव्यापकाभावप्रतियोगिज्ञानतया। यत्र पटादौ घटाभावाभावत्वमारोप्य तद्व्यापकतया लोष्ठत्वादिकं गृहीतं तत्र लोष्ठत्वाद्यभावेन घटाभावानुमानाऽऽपातात्। तत्र पटस्य वस्तुतः साध्यभूतघटाभावाभावत्वाभावात्। किन्तु साध्याभावत्वेन ज्ञायमानाभावव्यापकाभावप्रतियोगिज्ञानत्वेनैव

वाच्यमित्यप्रसिद्धिर्दोष एवेति भावः ॥ **सर्वप्रतियोगिकैकेति** । पृथिव्यादित्रयोदशपदार्थपरः सर्वशब्दः ।

**या० — किश्चात्र सर्वत्रेति** । शब्दो न स्पर्शवद्विशेषगुण इत्यादिप्रतिषेधसाधकानुमानेषु व्याप्तिः पक्षातिरिक्तस्थल एव न तु पक्षेऽपीत्येवं संकोचनीया । धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायात् । तथा च गौरवतर्कपराहतिरिति भावः ॥ **समुदितसाधन इति** । ऐकाधिकरण्यावच्छिन्नेतरभेदानां साधन इत्यर्थः । अप्रसिद्धस्यापि साध्यस्य सिद्धिरप्रत्यूहेत्याशङ्कते **अभावस्येत्यादिना** । पृथिव्याद्यन्योन्याभावानामत्र साध्यत्वादन्योन्याभावाभावस्य च प्रतियोगितावच्छेदकरूपतया पृथिवीत्वादेर्भावस्यैवात्र व्याप्यतया तद्ग्रहे प्रतियोगिज्ञानानपेक्षणात्सुशको व्याप्तिग्रह इत्यर्थः । एतन्मते प्रथमं साध्यविशेष्यकानुमितेरेव स्वीकारेण न विशेषणज्ञानतयाऽपि साध्यप्रसिद्धिरपेक्षितेति द्रष्टव्यम् ॥ **तथापि प्रतिषेधमुखेनेति** । साध्याभावत्वेनाभिमते भावरूपे पृथिव्यादौ साध्याभावत्वप्रकारकबुद्धेरावश्यकत्वादित्यर्थः । अन्यथा साध्याभावत्वेनोपस्थितव्यापकाभावप्रतियोगित्वरूपस्य व्यतिरेकिणि गमकतौपयिकस्याज्ञानेनानुमित्यनुपपत्तेः ॥ न च वास्तवसाध्याभावव्यापकाभावप्रतियोगित्वज्ञानमेव व्यतिरेकिणि गमकतौपयिकम् । तच्च व्याप्यत्वेनाभिमतस्य भावस्य साध्याभावत्वेनाज्ञानेऽपि संभवतीति वाच्यम् । तथा सति व्यतिरेक्याभासविलयापत्तेः । ननु नेदं व्यतिरेकिणि गमकतौपयिकं तदभिप्रेतं किन्तु यस्य भावस्य व्यापकतया हेत्वाभावो गृहीतस्तदभावाभावेन तदभावः सिद्ध्यतीत्येवंरूपम् । न चातिप्रसङ्गः । व्यापकाभाववत्तया ज्ञाते व्याप्याभावज्ञानावश्यंभावादिति चेत् । तर्हि विवादपदं पृथिवीत्वाद्यभाववत् तद्व्यापकशब्दाश्रयत्वाभावशून्यत्वात् । यद्यद्व्यापकशून्यं तत्तदभाववत् यथा संप्रतिपन्नमित्यन्वयित्वमेवास्य स्यान्न व्यतिरेकित्वम् । तथाच व्यतिरेक्यनुमानं पृथगभिलषितोक्तमेव प्रयोजकं तत्राङ्गीकार्यम् । तत्र च व्याप्तत्वेनाभिमतस्य भावस्य साध्याभावत्वेन ज्ञातव्यत्वात्साध्याज्ञाने च तदसंभवाद्व्याप्तिग्रहानुपपत्तिरेवेति भावः । अन्ये त्वविप्रतिपन्नं प्रति साधनस्य व्यर्थत्वेन अभावः साध्यं नास्तीति वदन्तं प्रत्येव तस्य कर्तव्यत्वाद्भावरूपस्यापि साध्याभावत्वेन ज्ञानमावश्यकमिति भावमाहुः ॥ **नेतरेभ्यो भिद्यत इति** । नन्वत्रेतरभेदनिषेधः पृथिवीत्वादिरूप एव । स किमेकैकः साध्यतया विवक्षित उत मिलितः । नाद्यः व्यभिचारात् । न द्वितीयः । दृष्टान्ते साध्यवैकल्यात् । न हि घटे जलत्वादिकमस्तीति चेन्न । इतरभेदनिषेधस्य चतुर्दशत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिकस्य पृथिवीत्वाद्यतिरिक्तस्यैवात्र साध्यतया विवक्षितत्वात् । पृथिवीत्वादेस्तद्भेदनिषेधरूपत्वेऽपि चतुर्दशभेदनिषेधरूपत्वाभावात् । घटे जलादित्रयोदशभेदसत्त्वेऽपि पृथिवीभेदाभावेन चतुर्दशभेदाभावस्य साध्यतया विवक्षितस्य सत्त्वेन साध्यवैकल्याभावादित्यभिप्रायात् । प्रमाणबाधश्चेत्यत्र चशब्दोऽप्रसिद्धविशेषणत्वसमुच्चायकः । अपिक

इत्यनेनेदं दूषणं न प्रत्येकभेदसमुदायसाधनपक्ष इति सूचयति । अन्यथा चशब्दस्य सत्त्वेन तस्य वैयर्थ्यात् ॥ **प्रतियोगिभेदेनेति** । न च प्रतियोगिभेदेनाभावभेदे एकघटप्रतियोगिकाभावचतुष्टया-नुपपत्तिः । प्रतियोगिभेदेनाभावेऽपि भेदभेदे बाधकाभावात् । तदिदमुक्तम् ॥ **भेदभेदस्यापीति** । इदं पररीत्योक्तम् । स्वमते तु भेदस्याधिकरणस्वरूपत्वेनाधिकरणभेदेनैव तद्भेद इत्यवधेयम् ।

श्री० — **साहचर्यदर्शनसङ्कोच इति** । सर्वत्र सहचरितत्वेन दर्शनस्य पक्षे सङ्कोच इत्यर्थः ॥ **द्रव्यान्तरेति** । आकाशरूपद्रव्यान्तरेत्यर्थः । धर्मिकल्पनातो धर्मकल्पना शब्दे स्पर्शवद्गुणत्वरूप-धर्मकल्पना लघीयसीति भावः ॥ **अष्टद्रव्यातिरिक्तेति** । इदं च गुणत्वादौ प्रसिद्धमिति नाप्रसिद्ध-विशेषणत्वमित्यर्थः । **तत्रावृत्तेः** परस्परमवृत्तेः । अप्रसिद्धविशेषणत्वं नास्तीत्याशङ्कते **अभावस्येति** । अत एव नेदं निरात्मकमित्येव प्राचां प्रयोग इति भावः ॥ **अभावाभावस्येति** । इतरेभ्यो भिद्यत इत्यत्रान्योन्याभावानां साध्यत्वादन्योन्याभावाभावस्य पृथिवीत्वादिरूपप्रतियोगितावच्छेदकरूपत्वेन भावरूपतया न प्रतियोगिज्ञानापेक्षेत्यर्थः । ननु पृथिव्यादिप्रतियोगिकानेकभेदानां प्रत्येकं साधने अस्त्वसाधारण्यम् । पृथिव्यादिसर्वप्रतियोगिकस्यैकभेदस्य साधने तु नोक्तदोष इत्यत आह **सर्वप्रति-योगिकेति** । प्रमाणबाधमुपपादयति **प्रतियोगीति** ॥ **भेदभेदस्येति** । भेदानां भेदस्येत्यर्थः ।

**च०**—उक्तदिशा शब्दस्य पृथिव्यादिगुणत्वोपगतौ बाधकानि प्रतिविधाय तत्तद्गुणत्वसमर्थनौपयिक-

---

मप्याह **किञ्चात्र सर्वत्रेति** । प्रसक्तप्रतिषेधविधेयकानुमितिजनकेषु शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सतीत्याद्यनुमानेषु साध्यनिरूपिता हेतुनिष्ठा व्याप्तिः पक्षान्यावच्छेदेनैव न तु पक्षीकृतव्यक्त्यवच्छे-देनेत्येव सङ्कोचनीया । द्रव्यान्तराख्यधर्मिकल्पनातो व्याप्तिसङ्कोचाख्यधर्मकल्पनस्य लघीयस्त्वात् । तथा च गौरवप्रतिसन्धानपराहतमनुमानजातमिति भावः । **असाधारणता स्यादिति** । तद्वृत्तौ बाध-कोपपन्नत्वविशेषितगुणत्वहेतोरिति पूरणीयम् । किरणावलीकारीयं परिशेषानुमानमाशङ्कते **शब्दा-श्रय इति** । पृथिवीत्वजलत्वाद्यवच्छिन्नप्रतियोगिताकाः यावन्तो भेदाः प्रत्येकं तत्तद्व्यक्तित्वावच्छिन्न-विधेयताकानुमितीनामुद्देश्यतोपेयते, तावद्भेदकूटनिष्ठव्यासज्यवृत्तिधर्मावच्छिन्नविधेयताकैकानुमितेर्वा, पृथिव्यादयो यावन्तोऽर्थास्तावदर्थकूटनिष्ठव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकैकभेदवृत्तिविधेयताकानु-मितेर्वेति कल्पत्रयीमनुसन्दधानस्तद्घटकाद्यकल्पं दूषयति **पृथिव्यादीति** । **असाधारण्यादिति** । सपक्षा-ज्जलादितो विपक्षभूतपृथिवीतश्च व्यावृत्तत्वाच्छब्दाश्रयत्वस्येति भावः । तादृशं द्वितीयं प्रतिविधत्ते **समुदितेत्यादि** । **अप्रसिद्धविशेषणत्वादिति** । प्रकृतसाध्यताऽवच्छेदकीभूतव्यासज्यवृत्तिधर्मावच्छिन्न-निरूपिताधिकरणताया अप्रसिद्धत्वादिति भावः । अभावरूपसाध्यस्य पक्षादन्यत्राप्रसिद्धत्वेपि भावरूपतदभावहेत्वभावयोर्व्याप्यव्यापकभावग्रहसम्भवेन अनुमितिर्निष्प्रत्यूहमुदेश्यते वेत्याशङ्कते

**अभावाभावस्य चेति** । पृथिवीत्वाद्यवच्छिन्नप्रतियोगिताकभेदानां प्रकृते सिषाधयिषिततया भेदाभावस्य भेदप्रतियोगितावच्छेदकधर्मस्वरूपतया तादृशसाध्याभावात्मकपृथिवीत्वादेर्भावरूपस्य प्रतियोगिप्रतिपत्त्यनधीनप्रतिपत्तिकतया तत्र तादृशहेत्वभावनिरूपितव्याप्तेर्ग्रहः सुशक इति भावः । साध्यीभूताभावविशेष्यिकैवानुमितिरेतन्मतेऽभिप्रेयत इति साध्यविशेषणकानुमित्यनुपगमात्साध्यस्यानुपस्थितावपि न क्षतिरिति हृदयम् । **तथापि प्रतिषेधेति** । पृथिवीत्वाद्यात्मकसाध्याभावानां स्वरूपतः पृथिवीत्वत्वादिना वा ग्रहस्य प्रतियोगिभूतसाध्योपस्थित्यनधीनत्वेपि भेदाभावत्वोपरागेण तद्ग्रहस्यानुमित्यौपयिकस्य प्रतियोगिप्रतिपत्तिनिबन्धनतया तदभावदशायां प्रतियोगितासंसर्गावच्छिन्नसाध्यनिष्ठविषयतानिरूपिताभावनिष्ठविषयतानिरूपितव्यापकत्वविषयतानिरूपिताभावविषयतानिरूपिताप्रतियोगित्वनिष्ठविषयताशालिग्रहत्वरूपानुमितिजनकतावच्छेदकावच्छिन्नस्य दुरुत्पादतया अनुमित्यनुदयप्रसङ्ग इति भावः । न च वस्तुतो यः साध्याभावस्तन्निष्ठविषयतेत्येवं क्रमेणैव जनकतावच्छेदकशरीरे निवेशात्साध्याभावत्वेन तदनवगाहनेपि स्वरूपतः पृथिवीत्वत्वादिना वा तदवगाहमाना पृथिवीत्वादिव्यापकाभावप्रतियोगीति ज्ञानादनुमितिर्निर्वहतीति वाच्यम् । तथा सति साध्याभावत्वादिना वस्त्वन्तरावगाहिज्ञानादनुमित्यनुदयापत्तेर्व्यतिरेक्याभासविलयप्रसङ्गेन प्रतियोगितासंसर्गावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतेत्येवं क्रमेणैव तच्छरीरे निवेशावश्यंभावादुक्तादवस्थ्यात् । विमतं पृथिवीत्वाद्यभाववत् तद्व्यापकाभावप्रतियोगिमत्त्वात्संप्रतिपन्नवदित्येव विन्यासोपगमस्तु व्यतिरेक्यनुमानविलोपप्रसङ्गेन न संगच्छत एव । अथ प्रकृतसाध्यतावच्छेदकीभूता ये पृथिवीत्वाद्यवच्छिन्नप्रतियोगिताकभेदत्वादयो धर्माः प्रत्येकं तत्तदवच्छिन्नप्रतियोगिताकाभावानां तादृशभेदप्रतियोगितावच्छेदकीभूतपृथिवीत्वाद्यात्मकत्वेऽपि द्वितीयकल्पीयसाध्यतावच्छेदकाभिमतव्यासज्यवृत्तिधर्मावच्छिन्नतादृशभेदनिष्ठप्रतियोगिताकाभावस्य पृथिव्यादिचतुर्दशसाधारणपृथिवीत्वाद्यनात्मकतायाः सौवान्यदीयनिखिलतन्त्रनिरूढतया तादृशाभावप्रतिपत्तेश्च प्रतियोगिप्रतीतिनियन्त्रिततताध्रौव्येनाप्रसिद्धविशेषणत्वापन्नशङ्काङ्कुरस्यैव दुरुत्पादतयोपेत्य तच्छङ्कां कथमित्थं 'अनिवारणात्'इत्यन्तेन तत्प्रातिष्ठिपन् ग्रन्थकारा व्याकर्तारो वा तदाशयं न व्यवीभवन्निति चेन्न । आद्यकल्पे कालभेदेनोत्पद्यमानानां पृथिवीभेदत्वाद्यवच्छिन्नविधेयकानुमितीनां, द्वितीयकल्पे च पृथिवीभेदत्वादिप्रातिस्विकधर्मावच्छिन्नचतुर्दशविधेयतानिरूपिता या शब्दाश्रयत्वावच्छिन्नैकोद्देश्यता तन्निरूपकसमुच्चयात्मिकाया एकस्या एवानुमतेः, तृतीयकल्पे च सर्वप्रतियोगिकैकभेदत्वावच्छिन्नविधेयकानुमितेरुद्देश्यताया उपगत्या पृथिवीभेदत्वादिचतुर्दशप्रातिस्विकधर्माणामेव साध्यतावच्छेदकत्वस्य द्वितीयकल्पाभिप्रेततया तावद्भेदकूटनिष्ठव्यासज्यवृत्तिधर्मस्य तथात्वानुपगमेन सामञ्जस्यात् । तादृशधर्मस्य तथात्वे समुदायसाधने पुनरित्येव न्यासेन भवितव्यतय

समुदितसाधन इति विन्यासासांगत्यं प्रसज्यते । समुदितानामेकाधिकरणवर्तिनां यौगपद्येन साधन- इत्याशयाविष्कृत्या दर्शितार्थलाभात् अतएवतावन्तं तद्ग्रन्थाशयं प्रतिसन्दधानाः व्याचक्षणाः समुदितसाधन इति प्रतीकमुपादायैकाधिकरण्यावच्छिन्नेतरभेदानां साधन इत्यर्थापयन्निति विभावनीयम् । प्रत्येकभेद- समुदायसाधनपक्ष इति कतिपयव्याकर्तृविन्यासस्तु फलिताभिप्रायकतया नेयः । नन्वेवं सति शब्दाश्रयो नेतरेभ्योभिद्यत इत्यग्रिमप्रतिपक्षानुमानबोधकग्रन्थं व्याकरिष्यमाणश्चातुर्दशत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्न- प्रतियोगिताकस्येतरभेदनिषेधस्य पृथिवीत्वाद्यतिरिक्तस्येति कथं व्याचख्युः । न हि व्यासज्यवृत्तिधर्मावच्छि- न्नस्यासाधने तदवच्छिन्नाभावसाधकप्रतिपक्षावतारः सङ्गच्छत इति चेन्मैवं भौमाभौमोभयवह्नित्वावच्छिन्ना- भाववत्ताप्रतीतेः भौमवह्निमानभौमवह्निमांश्च पर्वत इत्याकारकभौमाभौमवह्नित्वावच्छिन्नविषयकपर्वतविशे- ष्यकसमुच्चयविरोधित्वस्य स्थिततया प्रकृतेऽपि व्यासज्यवृत्तिधर्मावच्छिन्नाभावानुमितेः प्रातिस्विकनिखिल दर्शितधर्मावच्छिन्नगोचरसमुच्चयविरोधित्वाशयेन तथा व्याख्यानादिति गुरुपादोक्तसरणिरियमवसेयेत्यलं पल्लवेन । तृतीयकल्पं प्रत्याचष्टे **सर्वप्रतियोगिकेति** । अत्र चशब्देनाप्रसिद्धविशेषणत्वं समुच्चीयते । अधिक इत्यनेन तु प्रथमद्वितीयकल्पयोर्नेदं दूषणमिति ध्वन्यते । तेन चशब्देनैव निर्वृततयैतस्य मन्दप्रयोजनतेतिशङ्काऽनवकाशः । अथ व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्यैको न द्वाविति प्रतीतिसाक्षिकस्य केवलान्वयितया कथं प्रमाणबाधाभिधानमिति चेन्न । शब्दाश्रये इतरव्यक्तितादात्म्य- मुपगच्छतां मतेऽपि तादृशकेवलान्वयिभेदस्य सिद्ध्या सिद्धसाधनताप्रसङ्गेन प्रतियोगिताव्यधिकरणत्वेन भेदस्य विशेषणीयतया प्रमाणबाधोक्तेरनाबाधत्वात् । दर्शितकेवलान्वयिभेदस्य प्रतियोगितावैयधिकरण्य- विरहात् । प्रातिस्विकव्यक्तिभेदानां च सर्वप्रतियोगिकत्वायोगात् । तदेव स्फुटयति **प्रतियोगिभेदे- नेति** । न च सिद्धान्ते भेदस्याधिकरणात्मकतयाऽधिकरणभेदस्यैव भावभेदकतयैव मतान्तरे चैकव्यक्ति- प्रतियोगिकप्रागभावादिचतुष्टयस्य घटत्वाद्यवच्छिन्नानेकव्यक्तिनिष्ठप्रतियोगिताकैकभेदस्य च दर्शनेन तद्दिशापि दुःसंगममिति वाच्यम् । प्रतियोगिभेदस्य भेदभेदकत्वस्यैवोपगमेनाभावचतुष्टयव्यवस्थाऽनुप- पत्त्यनवकाशात् । तद्व्यक्तिभेदमन्तरेण सामान्यधर्मावच्छिन्नप्रतियोगिताकभेदस्य मन्मतेऽनुपगतिः तदभि- प्रायकतया प्रकृतग्रन्थस्य व्याकर्तृभिर्नीतत्वात् ।

**सु० — अस्तु वा शब्दगुणकाकाशसिद्धिरनुमानात् । तथाप्यव्याकृताकाशसिद्धिः साक्षिणैव । तत्साधकलिङ्गाभावात् ।**

**आकाशद्वैतं च वियदधिकरणे वक्ष्यते । जातिबधिराणामप्याकाशप्रतीतेर्नागमोऽपि तत्र प्रमाणमिति साक्षिसिद्धमेव गगनम् । तद्भागा एव दिशो न द्रव्यान्तरमिति तासामपि साक्षिवेद्य(सिद्ध)तैव । अन्यत्स्वावसरे वक्ष्यामः ।**

शे०— ननु भूताकाशस्यानुमानिकत्वनिराकरणेन साक्षिसिद्धत्ववर्णनमनुपपन्नम् । 'भूतमप्यसितं दिव्यदृष्टिगोचरमेवे'त्यादिना तस्यातीन्द्रियत्ववर्णनेन साक्षिसिद्धत्वाभावात्तत्कथं तत्साधकत्वेन साक्षिप्रत्यक्षत्ववर्णनमित्यत उक्तरीत्या तस्यानुमानिकत्वेऽप्यव्याकृताकाशसाधकतया साक्षिप्रत्यक्षत्ववर्णनमुपपन्नमित्याशयेनाह **अस्तु वेति** ॥ **शब्दगुणकेति** । भूताकाशेत्यर्थः । न चानुमाननिरासात्कथं स्वमतेऽपि भूताकाशस्याप्यनुमानासिद्धिः स्यादिति वाच्यम् । आगमावष्टम्भेनोक्तदूषणाभासत्वस्य व्युत्पादयितुं शक्यत्वात् । परेण चागमतिरस्कारेणानुमानप्राधान्यस्याङ्गीकारात् न तदवष्टम्भेनानुमानदोषाणामाभासत्ववर्णनं कर्तुं शक्यमिति न तन्मतेऽनुमानेन तत्सिद्धिरिति ज्ञेयम् ॥ **तत्साधकेति** । शब्दस्य तद्गुणत्वाभावेन तदलिङ्गत्वात् प्राणिसञ्चरणाद्यनुकूलत्वरूपविवरत्वस्यापि 'प्राणेन सृष्टावन्तरिक्षं च वायुश्चे'त्यादिश्रुत्या 'शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम् । भूतानां छिद्रदातृत्वम्' इत्यादिस्मृत्या च भूताकाशस्वभावतया सिद्धत्वादन्यस्य च तद्गमकत्वाभावादिति भावः । ननु स्यादेवमव्याकृताकाशसाधकतया साक्षिणः प्रत्यक्षत्वसमर्थनम् यदि भूताकाशोऽव्याकृताकाशश्चेत्याकाशद्वैविध्यं भवेत् । भूताकाशेनैवाङ्गीकृतेन श्रौतस्मार्ताकाशव्यवहारनिर्वाहोपपत्तौ तद्द्वैविध्यकल्पकाभावादित्यत आह **आकाशद्वैतं चेति** ॥ **वक्ष्यत इति** । 'रूपित्वारूपित्वव्याकृतत्वाव्याकृतत्वपरिच्छिन्नत्वापरिच्छिन्नत्व-उत्पत्त्यनुत्पत्तिश्रुतीनां सत्त्वात् व्यवस्थयाऽविरोधोपपत्तौ अरूपत्वादिश्रुत्यादेरौपचारिकत्वकल्पनाऽयोगादाकाशद्वैतसिद्धेः' इति 'अव्याकृतं हि गगनं साक्षिगोचरं प्रदेश इति विज्ञेयम्' इत्यादिना वक्ष्यत इत्यर्थः । अस्तु तर्ह्यागमावष्टम्भेनैव अव्याकृताकाशसिद्धिरिति न तस्य साक्षिप्रत्यक्षविषयत्वसिद्धिरित्यत आह **जातीति** । एवं 'सत्यत्वं गगनादेश्च' इत्यत्र स्वशब्देनोपात्तस्य गगनस्य साक्षिसिद्धत्वमुपपाद्य आदिपदसङ्गृहीतदिशामपि तदुपपादयति **तद्भागा एवेति** ॥ **न द्रव्यान्तरमिति** । द्रव्यान्तरत्वकल्पकं चाग्रे निराकरिष्यत इति भावः । नन्वस्त्वेवं गगनदिशोरुक्तरीत्या साक्षिमात्रभास्यत्वं प्रमाणान्तरासम्भवस्य वर्णितत्वात् । तथाऽपि 'गगनकालदिगादयः साक्षात्साक्षिसिद्धसत्यत्वाः'इत्यादिना सूचितं कालमनआदीना साक्षिमात्रासिद्धत्वं तु कथं, परोपन्यस्ततत्तदनुमापकलिङ्गैरेव तत्सिद्धेः सम्भवादित्यत आह **अन्यदिति** ॥ **वक्ष्याम इति** । 'कालो हि साक्षिप्रत्यक्षः' इत्यादिना तत्तत्पदार्थनिरूपणप्रसङ्गे तत्तदनुमापकलिङ्गानामाभासत्ववर्णनेन तस्य साक्षिसिद्धत्वमुपपादयिष्याम इत्यर्थः ।

म०— नन्वेवं भूताकाशस्यानुमानसिद्धिमुक्तरीत्या निराकृत्य तस्य साक्षिसिद्धत्वाभ्युपगमे अपसिद्धान्तः स्यात् । 'भूतमप्यसितं दिव्यदृष्टिगोचरमेव तु' इत्यादिना सिद्धान्तस्य दिव्यदृष्टिगोचरत्वमभ्युपगम्यते । 'अव्याकृतं हि गगनं साक्षिगोचरम्' इत्यनेन अव्याकृताकाशस्यैव साक्षिसिद्धत्वोक्तेः अत आह **अस्तु वेति** । **वक्ष्यत इति** । 'अव्याकृतं हि' इत्यादिनेति शेषः । ननु साक्षात्साक्षिभास्याः

बाह्याः पदार्थाः आकाशकालदिक्प्रकृतयः पूर्वमुक्ताः । तत्रादिशब्देन कालप्रकृत्योर्ग्रहणात् तेष्वाकाश-दिशोः साक्षिसिद्धित्वमुपपादितं कालप्रकृत्योस्तत् कुत इत्यत आह **अन्यत्स्वावसर इति** । कालप्रकृत्योः साक्षिसिद्धत्वं तदवसरे वक्ष्यामः । कालस्य साक्षिसिद्धत्वमत्रैवानुपदं वक्ष्यामः । प्रकृतेस्तु समयपाद इति ज्ञातव्यम् । यद्वा कथमाकाशस्यैव दिक्त्वमित्यत आह **अन्यदिति** । स्वावसरे वैशेषिकपरीक्षाया-मिति द्रष्टव्यम् ।

**प०**— ननु 'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितमि'त्यत्र गगनस्य साक्षिसिद्धत्वं प्रसक्त-प्रतिषेधेन परिशेषतः साधितम् । आदिपदोपात्तकालदिगादेरानुमानिकत्वस्य परैरंगीकारात् तन्निरासेन साक्षिसिद्धत्वं कुतो नोपपाद्यत इत्यत आह **अन्यदिति** । तत्तत्प्रस्तावकालेऽत्रैवोत्तरत्र वक्ष्याम इत्यर्थः ।

**या०**— नन्वेवमाकाशस्यानुमानिकत्वं निराकृत्य साक्षिवेद्यत्वसमर्थने 'भूतमप्यसितं दिव्यदृष्टि गोचरमेव तु' इति तस्यातींद्रियत्वप्रतिपदकागमविरोध इत्यत आह **अस्तु वेति** ॥ **शब्दगुणकेति** । भूताकाशसिद्धिरित्यर्थः । आगमावष्टम्भेनैवोक्तदूषणानामाभासत्वादिति भावः ॥ **तत्साधकेति** । शब्दस्यातद्गुणत्वात् । निष्क्रमणप्रवेशनादेश्च मूर्ताभावेनान्यथासिद्धस्याकाशागमकत्वादिति भावः । **न द्रव्यान्तरमिति** । द्रव्यान्तरकल्पनाया अग्रे निराकरिष्यमाणत्वादिति भावः । ननु साक्षात्साक्षि-भास्या बाह्या आकाशकालदिक्प्रकृतयः पूर्वमुक्तास्तत्रादिशब्देन प्रकृतेर्ग्रहणात् तेष्वाकाशदिशोः साक्षि-सिद्धत्वमुपपादितम् । कालप्रकृत्योस्तत्कुत इत्यत आह ॥ **अन्यत्स्वावसर इति** । कालप्रकृत्योः साक्षि-सिद्धत्वं तत्तदवसरे वक्ष्यामः । कालस्य साक्षिवेद्यत्वमत्रैवानुपदं वक्ष्यामः । प्रकृतेस्तु समयपाद इति ज्ञातव्यम् ।

**च०**—ननूक्तदिशा आकाशस्याऽऽनुमानिकत्वमपास्य साक्षिसिद्धत्वसमर्थने 'भूतमप्यसितं दिव्य-दृष्टिगोचरमेव तु' इति तस्यातीन्द्रियत्वप्रतिपादकागमविरोध इत्यत आह **अस्तु वेति** । भूताकाश-सिद्धिरित्यर्थः । आगममनुरुध्याभिहितदूषणानामाभासत्वस्य व्युत्पादयितुं सुशकत्वादिति भावः । **लिङ्गाभावादिति** । शब्दस्य तद्गुणत्वाभावेन तदनुमापकत्वात् । प्राणिसञ्चारानुकूलविवरत्वस्यापि प्राणेन सृष्टावन्तरिक्षं च वायुश्चेति श्रुत्या 'शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगं' 'भूतानां छिद्रदातृत्वम्' इत्यादिस्मृत्या च भूताकाशनिसर्गतया प्रमितत्वादन्यस्य च तदनुमापकस्याभावादिति भावः ॥ **वक्ष्यत इति** । रूपित्वनीरूपित्वपरिच्छेद्यत्वाविकृतत्वादिश्रुतीनां व्यवस्थया प्रामाण्ये संभवत्यौपचारिकत्वकल्पना ऽयोगेनाकाशद्वैतं सिद्ध्यतीति 'अव्याकृतं हि गगनं साक्षिगोचरम् । प्रदेश इति विज्ञेयम्' इत्यादिना अभिधास्यत इत्यर्थः ॥ **न द्रव्यान्तरमिति** । तद्भावकल्पकानां प्रतिविधास्यमानत्वादिति भावः ॥

**वक्ष्याम इति**। कालप्रकृत्योः साक्षिणा प्रत्याय्यमानत्वं तत्र निरूपणावसरेऽभिधास्यामः। कालस्यैतदनुपदमेव, प्रकृतेस्तु समयचरण इत्यवसेयम् ।

सु०— (ननु) अस्तु गगनादिकं साक्षिसिद्धम्। न तावता तस्य त्रैकालिकबाधवैधुर्यलक्षणं सत्त्वं सिध्यति, प्रतीतस्यापि शुक्तिरजतादेः बाधदर्शनात् ; इत्यत आह साक्षिसिद्धस्येति ।

अनु०— साक्षिसिद्धस्य न क्वापि बाध्यत्वं तददोषतः ॥

क्वापि काले तस्य साक्षिणः अदोषत्वात्। औत्सर्गिकं हि प्रत्ययानां प्रामाण्यम्। अप्रामाण्यं तु दोषापवादात्। न च साक्षिज्ञानं दोषजन्यम्, तस्य अनादित्वात्। एवमेवायथार्थत्वे मुक्तावपि (तथात्व)तथाप्रसङ्गात्। अविद्यादोषसंसर्गात् साक्षिणः बाध्यार्थप्रतिभास(सि)त्वम् इति चेन्न, अविद्यासम्बन्धस्य त्वन्मते अनुपपत्तेः उक्तत्वात्। अस्माभिरपि अविद्यायाः कार्यान्तरस्यैव अभ्युपगतत्वात् इति ।

शे० — ननु 'साक्षिसिद्धस्य'इत्युत्तरभाष्यम् अनर्थकम्। न च गगनादिसत्यत्वस्य साक्षिसिद्धत्ववर्णनपरं तदिति वाच्यम्, गगनादिसाधकत्वोक्त्यैव तत्सत्यत्वसाधकताया लब्धत्वेन तस्य पृथगवर्णनीयत्वात्। अलाभेऽपि वा सत्यत्वस्यैव तत्सिद्धताया वर्णनीयत्वेन अबाध्यत्ववर्णनस्य असङ्गतत्वात् ; अबाध्यत्वस्यापि स्वरूपग्राहकेणैव सिद्धिसम्भवेन पृथगवर्णनीयत्वाच्च; इत्यत आह **अस्त्विति** ।

ननु साक्षिणः अदोषत्वोक्तिमात्रेण कथं साक्षिसिद्धस्य त्रिकालाबाध्यत्वसिद्धिः ? इत्यतः, विषयस्याबाध्यत्वे ज्ञानप्रामाण्यस्यैव तन्त्रत्वात् प्रामाण्यस्य च स्वतस्त्वेन ज्ञानग्राहकेणैव ग्रहणात्, विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणानिरूपणाच्च ज्ञानप्रामाण्यग्राहकेणैव विषयस्याबाध्यत्वसिद्धिः, इत्याशयवानाह **औत्सर्गिकमिति** ॥ अत्र च औत्सर्गिकत्ववर्णनं तथा सति शुक्तिरजतादेरपि अबाध्यत्वसिद्धिशङ्कापरिहाराय। अन्यथा हि तज्ज्ञानग्राहकेण उक्तरीत्या तत्प्रामाण्यस्य ग्रहणात् त्रिकालाबाध्यत्वसिद्धिः स्यात्, प्रत्ययानां प्रामाण्यस्य औत्सर्गिकत्वे तु दोषादिसमवधानदशायां ज्ञानजनकग्राहकयोः प्रामाण्यजनकत्वग्राहकत्वाभावात् प्रत्युत अप्रामाण्यजनकत्वग्राहकत्वयोरेव च भावात्, न तेन तद्विषयाबाध्यत्वसिद्धिः; इत्युक्तं भवति। तदेव स्पष्टयति **अप्रामाण्यं त्विति** ॥ ननु तर्हि शुक्तिरजतज्ञान इव इहापि दोषादिवशादेव ज्ञानग्राहकेण प्रामाण्याग्रहस्य, अप्रामाण्यग्रहस्य च उपपत्तेः कथमत्रापि गगनादेस्त्रिकालाबाध्यत्वसिद्धिः ? इत्यतः स्यादेतदेवं यदि शुक्तिरजतादिज्ञान इव अत्रापि अपवादकं दोषादि किञ्चित्स्यात्, न चैतदस्ति; इत्याशयेन भाष्योक्तमदोषत्वमुपपादयति **न चेति** ॥ भाष्ये 'अदोषतः' इति सिद्धवदुपन्यासेन सूचितं व्युत्पादनानपेक्षत्वं तज्ज्ञापकस्य स्पष्टत्वाभिप्रायम् ;

इत्याशयेन स्वयं तदाह **तस्यानादित्वादिति** । उपलक्षणं चैतत् । ज्ञप्तौ स्वतस्त्वापवादकस्य बाधकस्य अभावाच्च इत्यपि द्रष्टव्यम् । सत्यत्वसाधकतयोपन्यस्तश्रुत्यादेः अबाधवर्णनेनैव जगत्सत्यत्वग्राहकप्रत्यक्षस्यापि अबाध्यत्वस्य उपपादितप्रायत्वात्, इह टीकायां बाधाभावस्य पृथगनभिधानम् । अत एव न्यायामृते रूप्यादिज्ञानेष्विव बाधो वा दोषो वा इत्युभयोपादानम् इत्यवधेयम् ॥ **एवमेवेति** । निर्दोषत्वेऽबाधे च सत्यपि अयथार्थत्वे इत्यर्थः । ततश्च मुक्तेरपुरुषार्थत्वप्रसङ्ग इति भावः ॥ **अविद्येति** । यद्यपि गगनादिप्रतीतिः साक्षिचैतन्यरूपा तथापि साक्षिचैतन्यस्य असङ्गतया आरोपितार्थसंसृष्टरूपस्य अविद्यादोषसंसर्गसापेक्षत्वम् अस्त्येवेति अदोषत्वमेव असिद्धम् इति भावः ॥ यद्यपि गगनादिप्रपञ्चस्य आरोपिततायाः अद्याप्यसिद्ध्या अन्योन्याश्रयत्वं वक्तुं शक्यम्, तथापि तत् स्पष्टत्वात् शिष्यैरेवोह्यताम्; इति भावेन दूषणान्तरमाह **नेति** । **उक्तत्वादिति** । 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा । ब्रह्मणश्चेत्क सार्वज्ञं' इत्यादिना इति शेषः ॥ ननु अज्ञानबद्धत्वं वदता त्वयैव तत्संसर्गवशादेव साक्षिणो गगनादिरूपबाध्यार्थप्रतिभासत्वस्य वक्तव्यत्वात् कथं तस्य अदोषत्वम् ? इत्यत आह **अस्माभिरपीति** ॥ **कार्यान्तरस्येति** । जीवस्वरूपसुखाद्याच्छादनमेव अविद्याकार्यम्, न तु त्वन्मत इव बाध्यार्थप्रतिभासरूपो विक्षेपः; इति भावः ।

**स०— प्रत्ययानां प्रामाण्यमिति** । ज्ञायते इति शेषः ॥ **दोषापवादादिति** । दोषलक्षणापवादादित्यर्थः ॥ **त्वन्मतेऽनुपपत्तेरुक्तत्वादिति** । 'निर्विशेषे स्वयंभाते किमज्ञानावृतं भवेत्' इत्यादिना इति शेषः ॥ ननु भवद्भिरपि जीवचैतन्यस्य अविद्याबद्धत्वाङ्गीकारात् तस्य दोषयुक्तत्वं प्राप्तमेव; इत्यत आह **अस्माभिरपीति** ॥ **कार्यान्तरस्यैवेति** । जीवस्वरूपभूतानन्दादिप्रकाशप्रतिबन्धस्यैव इत्यर्थः । न तु त्वद्वत् बाध्यार्थविषयकत्वम् अविद्याबलादुच्यते, क्वचित्क्वचिद्दोष इति प्रसिद्धेः; इति भावः ।

**प०— औत्सर्गिकम्** । कारणगतसहजशक्तिलब्धम् ॥ **दोषेति** । ज्ञानजनकेषु दोषाहितागन्तुकशक्तिबलात् इत्यर्थः । **एवमेव** निष्कारणमेव ॥ **उक्तत्वादिति** । 'निर्विशेषे स्वयंभाते किमज्ञाना…' इत्यादिना जिज्ञासानये, 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं' इत्यादिना अत्रैव पूर्वग्रन्थे विषयस्य आश्रयस्य च अभावेन अनुपपत्तेः उक्तत्वात् इत्यर्थः ॥ भवन्मते अस्ति खलु अविद्या, इत्यत आह **अस्माभिरिति** ॥ **कार्यान्तरस्येति** । एतच्च 'स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेत्' इत्यत्रैव व्यक्तम् ।

**या०— दोषापवादादिति** । दोषलक्षणापवादादित्यर्थः ॥ **उक्तत्वादिति** । 'निर्विशेषे स्वयंभाते किमज्ञानावृतं भवेत्' इत्यादिना इति भावः ॥ ननु भवद्भिरपि जीवचैतन्यस्य अविद्याबद्धत्वा-

ङ्गीकारात् तस्य दोषयुक्तत्वं प्राप्तमेव; इत्यत आह ॥ **अस्माभिरपीति** ॥ **कार्यान्तरस्यैवेति** । जीव-स्वरूपभूतानन्दादिप्रकाशप्रतिबन्धरूपावरणस्यैवेत्यर्थः । न तु त्वन्मत इव बाध्यार्थविषयकत्वरूप-विक्षेपस्य इति भावः ।

श्री० — **मुक्तावपीति** । मुक्त्यवस्थाकालीनसाक्षिणोऽपीत्यर्थः । ननु साक्षिरूपज्ञानस्य अनादित्वेन दोषजन्यत्वाभावेऽपि बाध्यार्थविषयकत्वं युक्तम्; इत्याशङ्कते **अविद्येति** ।

च० — **दोषापवादात्** तल्लक्षणापवादात् ॥ **उक्तत्वादिति** । 'निर्विशेषे स्वयंभाते'इत्यादिना इत्यादिः ॥ **कार्यान्तरस्यैवेति** । जीवानां स्वरूपभूतानन्दादिप्रकाशप्रतिबन्धरूपावरणस्यैवेत्यर्थः ।

**सु० — ननु तर्हीदमापन्नम् । गगनादिस्वरूपं साक्षिसिद्धम् । कालत्रयाबाध्यत्वंतु तस्य साक्षिप्रामाण्यग्राहकेणेति । प्रामाण्यस्यापि अबाध्यविषयतानतिरेकात् । तथा च 'सत्य-त्वं गगनादेश्च, इत्ययुक्तमित्यत आह** सर्वेति ।

**अनु०** — सर्वकालेष्वबाध्यत्वं साक्षिणैव प्रतीयते ।

**अबाध्यत्वं गगनादीनामिति शेषः । साक्षिण एव हि साक्षिप्रामाण्यग्राहकत्वस्य वक्ष्य-माणत्वादिति भावः ।**

**यद्वा गगनादिस्वरूपं साक्षिसिद्धम्, तस्य त्रैकालिकाबाध्यत्वं तु तत्प्रामाण्यग्रहणद्वारा सिद्ध्यतीत्युक्तम् । इदानीं साक्षिणस्त्रैकालिकाबाध्यार्थगोचरत्वस्य वक्ष्यमाणत्वात्सार्वकालिक-बाधाभावविशिष्टतयैव गगनादिग्राहकत्वमस्तीत्याह** सर्वकालेष्विति ।

शे० — ननु सर्वकालेष्वित्युत्तरभाष्यमनर्थकम् । न च साक्षिण एव प्रामाण्यग्राहकत्वं न त्वन्यस्येति प्रतिपादनार्थं तदिति वाच्यम् । प्रामाण्यग्राहकेण विषयस्याबाध्यत्वसिद्धेः । साक्षिणः प्रामाण्यग्राहकत्वपक्ष इव तदितरप्रमाणस्यापि तद्ग्राहकत्वपक्षेऽविशेषेणेष्टसिद्ध्यविघातितयैतत्प्रतिपादन-स्यानर्थक्यादित्यतो यत्किञ्चित्प्रामाण्यग्राहकेण विषयाबाध्यत्वसिद्धावपि 'सत्यत्वं गगनादेरि'ति प्रतिज्ञा-तायाः साक्षिणा गगनादिसत्यत्वसिद्धेरलाभात्तत्सिद्ध्यर्थत्वेन तद्वर्णनमर्थवदित्याशयेन पूर्वं प्रामाण्यग्राहकेण गगनादेस्त्रिकालाबाध्यत्वसिद्धेः स्पष्टमाशयतयाऽवर्णितत्वात्तदाशयवर्णनपूर्वकमुत्तरवाक्यमवतारयति **नन्विति** ॥ **तस्येति** । गगनादेरित्यर्थः । प्रामाण्यग्राहकेणेत्यतःपरं सिद्धमिति शेषः । नन्वेवं साक्षिण एव त्रिकालाबाध्यत्वग्राहकत्वे साक्षिप्रामाण्यग्राहकेण गगनादेस्त्रिकालाबाध्यत्वसिद्धिरिति गतः पक्ष इत्यत आह **साक्षिण एवेति** । कथं स्वस्यैव स्वप्रामाण्यग्राहकत्वम् । अन्यथा घटादिज्ञानस्यापि स्वप्रामाण्य-ग्राहकत्वप्रसङ्गादित्यतोऽन्तःकरणवृत्तेरस्वप्रकाशतया स्वप्रामाण्यग्राहकत्वाभावेऽपि साक्षिणः स्वप्रकाशत्वा-

द्युक्तं स्वप्रामाण्यग्राहकत्वमित्याह **वक्ष्यमाणत्वादिति** । 'परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेदि'त्या-दिनेति शेषः । साक्षात्त्रिकालाबाध्यत्वोपपादकतया प्रतीयमानस्यास्य वाक्यस्य स्वप्रामाण्यग्रहणद्वारा स्वविषयाबाध्यत्वोपपादकपूर्ववाक्यशेषत्ववर्णनमनुचितमित्याशयवान्पूर्वोत्तरवाक्ययोरर्थभेदं प्रकारान्तरेणाह **यद्वेति ॥ प्रामाण्यग्रहणद्वारेति** । विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणानिरूपणादिति भावः । ननु वर्तमानमात्रग्राहकत्वात्प्रत्यक्षस्य कथं तद्रूपस्य साक्षिणः सार्वकालिकबाधाभावविशिष्टतया गगनादिग्राहकत्वं स्यादित्यतो 'अतीतानागतौ कालावपी'त्यादिना प्रत्यक्षविशेषस्यापि साक्षिणस्त्रैकालिकार्थगोचरत्वस्योप-पादयिष्यमाणत्वान्नानुपपत्तिरित्याह **त्रैकालिकेति** ।

स० — **साक्षिप्रामाण्यग्राहकेणेतीति** । साक्षिसिद्धस्य त्रैकालिकाबाध्यत्वं कुत इति पृष्टे तस्य निरपवादौत्सर्गिकस्वतःप्रमाण्यत्वादिति भावः । एतदर्थमेव पूर्वं ज्ञायते इति शेषपूरणम् । अन्यथैतच्छ-ङ्काऽनवकाश इत्यवधेयम् । **साक्षिण एव स्वप्रामाण्यग्राहकत्वस्य वक्ष्यमाणत्वादिति** । 'परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेदि'त्यत्रेति भावः । **त्रैकालिकाबाध्यार्थगोचरत्वस्येति** ।

प० — **साक्षिण एव साक्षिप्रामाण्यग्राहकत्वस्य वक्ष्यमाणत्वादिति** । 'यदि साक्षी स्वयंभातो न मा(त्वं)नं केन गम्यते । अक्षजादेश्च मान(त्वन्तत एवा)त्वमनवस्थाऽन्यथा भवेदि'त्यादिना वैशेषि-काधिकरणादौ वक्ष्यमाणत्वादित्यर्थः ॥ **त्रैकालिकाबाध्यार्थगोचरत्वस्य वक्ष्यमाणत्वादिति** । 'एवमेव हि सर्वकालेष्वपि स्थैर्यादि'त्युत्तरग्रन्थ इति भावः ।

या० — **वक्ष्यमाणत्वादिति** । 'परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेदि'त्येतद्व्याख्यानावसर इति शेषः ॥ **वक्ष्यमाणत्वादिति** । 'अतीतानागतौ कालावपि नासाक्षिगोचरौ'इत्यादाविति शेषः ।

श्री० — कालत्रयाबाध्यत्वं= तद्रूपं सत्यत्वमित्यर्थः । तस्य= गगनादिस्वरूपस्य ॥ **साक्षिप्रामा-ण्येति** । साक्षिनिष्ठं यत्प्रामाण्यं तद्ग्राहकेणान्येनेत्यर्थः ।

च० — **वक्ष्यमाणत्वादिति** । 'परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेदि'तिप्रतीकव्याख्या-ऽवसरेऽभिधास्यमानत्वादित्यर्थः । **वक्ष्यमाणत्वादिति** । 'अतीतानागतौ कालावपि नासाक्षिगोचरावि'-त्यादिनेत्यादिः ।

सु० — **ननु काल एव कुतः सिद्धः । येन सर्वकालेष्वबाध्यत्वं साक्षिणा प्रतीयत इत्यत आह कालो हीति** ।

अनु० — कालो हि साक्षिप्रत्यक्षः सुषुप्तौ च प्रतीतितः ॥

**सुषुप्तौ हीन्द्रियाणामुपरतत्वान्न बाह्यप्रत्यक्षानुमानागमानां तत्र प्रवृत्तिः। अस्ति तदाऽपि कालप्रतिभासः। एतावन्तं कालं सुखमहमस्वाप्समिति सुषुप्त्युत्थितस्य परामर्शदर्शनात् न ह्यननुभूतस्य परामर्शो युज्यते, अतिप्रसङ्गात्। अतः परिशेषात्साक्षिवेद्य एवेति गम्यते।**

**अत्रायं प्रयोगः। कालः बाह्यप्रत्यक्षाद्यतिरिक्तप्रमाणवेद्यः, असत्स्वपि तेषु प्रतीयमानत्वात्, यद्यस्मिन्निति प्रतीयते तत्ततोऽतिरिक्तप्रमाणवेद्यम्। यथाऽसति चक्षुषि प्रतीयमानो गन्धस्तदतिरिक्तघ्राणवेद्य इति।**

**शे०** — ननु कालो हीति कालस्य साक्षिप्रत्यक्षत्ववर्णनमनर्थकमित्यतः पूर्ववाक्योक्तस्य साक्षिणः सार्वकालिकबाधाभावविशिष्टार्थग्राहकत्वस्य सम्भावनार्थत्वान्नानर्थक्यमित्याशयेन तदवतारयति **नन्विति**। ननु 'कालो हि साक्षिप्रत्यक्षः' इत्येतावतैव भाष्यखण्डेन कालस्य साक्षिसिद्धत्वोक्तेः सुषुप्तावित्युत्तरभाष्यखण्डवैयर्थ्यम्। न च विप्रतिपत्तेः प्रतिज्ञातस्य साक्षिसिद्धत्वस्य समर्थनार्थं तत्र हेतूपन्यासपरं तदिति वाच्यम्। यत्र सुषुप्तौ प्रतीयमानत्वं तत्र साक्षिसिद्धत्वमिति व्याप्तौ दृष्टान्ताभावेन व्याप्त्यसिद्ध्या तत्र तस्य हेतुत्वासामर्थ्यात्। न च प्रतीतेः कार्यतया सकरणकत्वेन तत्सिद्धिरिति वाच्यम्। सुषुप्तौ प्रतीतेः परं प्रत्यसिद्ध्या तदनवकाशात्। सम्प्रतिपत्तावपि कथञ्चित्सकरणकत्वमात्रसिद्धावपि विवक्षितस्य सकरणकत्वस्यासिद्धेः। करणान्तरानुपपत्तिहकृतप्रतीत्या तत्सिद्धिरित्यभिप्रायकत्वे च विवक्षितसाधकतया करणान्तरानुपपत्तेरेव वक्तव्यतयाऽवश्यवक्तव्यानुक्तिप्रसङ्गात्सुषुप्तावित्यस्यावक्तव्यस्योक्त्याऽवक्तव्योक्तिप्रसङ्गाच्चेत्यतोऽत्र सामान्यसिद्धिपरिशेषाभ्यां कालस्य साक्षिसिद्धत्वसाधनस्याभिमतत्वात्सामान्यसिद्धिसमर्पकतया प्रतीतत्वांशस्य, प्रसक्तप्रतिषेधसमर्पकतया सुषुप्तावित्यंशस्य सप्रयोजनत्वान्नानर्थक्यमित्याशयेन सुषुप्तावित्यस्य प्रसक्तप्रतिषेधसमर्पकतां दर्शयति **सुषुप्तौ हीति**॥ **इन्द्रियाणामिति**। मूर्छाऽन्यत्वे सतीन्द्रियोपरमस्यैव सुप्तिशब्दार्थत्वादिति भावः। नन्वनेनेन्द्रियनिराससिद्धावप्यनुमानागमयोरनिरासात्कथं प्रसक्तकारणान्तरमात्रप्रतिषेधसिद्धिरित्यतोऽनुमानागमयोः प्रत्यक्षमूलकत्वात्सुषुप्तित्वेन प्रत्यक्षव्यावृत्तिसिद्धौ तन्मूलकानुमानागमयोरपि तदाऽसत्त्वसिद्धेर्युक्तः प्रसक्तप्रतिषेध इत्याशयेनेन्द्रियाणामुपरतत्वादिति हेतुतयोपन्यास इति ध्येयम्॥ **न बाह्येति**। बाह्यत्वमत्र मनःसाधारणं प्राकृतत्वमेव विवक्षितं न तु तद्व्यावृत्तं प्रतिनियतार्थविषयत्वम्। अतो बाह्यप्रत्यक्षानुमानागमव्यावृत्तावपि मनसो व्यावृत्त्यसिद्ध्या तेनैव कालप्रतीतिसंभवेन परिशेषेण साक्षिसिद्धत्वोक्तेर्नासामञ्जस्यम्। यद्वा साक्षिव्यावृत्त्यर्थमेवेदं बाह्यत्वविशेषणं न तु मनोव्यावृत्त्यर्थम्। सुषुप्ताविन्द्रियान्तरवन्मनसोऽप्युपरतत्वात्कालस्य मनोवेद्यत्वाभावस्यापि सिषाधयिषितत्वाच्च। अन्यथा तेनैव कालसिद्धिर्भविष्यतीति शङ्काकलङ्कितत्वेन परिशेषानुपपत्तिप्रसङ्गाच्च। कालस्य बहिरर्थतया स्वातन्त्र्येण मनोवेद्यत्वस्य, प्रमाणान्तराप्रवृत्त्या

...हकारेणापि मनसः कालग्राहकत्वायोगाच्चेति द्रष्टव्यम् । एवं प्रसक्तप्रतिषेधं विधाय सुषुप्तौ प्रतीतेरेवासिद्धेः सामान्यसिद्धिराश्रयासिद्ध्या आभास इति, न सामान्यसिद्धिपरिशेषाभ्यां कालस्य साक्षिवेद्यत्वसिद्धिरित्यतस्तामुपपादयति **अस्तीति** । किमत्र मानमित्यत आह **एतावन्तं कालमिति** । **परामर्शदर्शनात्** कालविषयकमानसानुभवदर्शनात् ।

नन्वेवं कालस्य साक्षिसिद्धतायाः परिशेषेण प्राप्तावपि प्रमाणतस्तन्सिद्धिरिति कथं वस्तुतत्त्वसिद्धिः । तस्याः प्रमाणाधीनत्वात् । परिशेषस्य च प्रामाण्याभावाद्भावे वाऽनुप्रमाणत्रित्वभङ्गप्रसङ्गादित्यतः परिशेषोऽपि प्रमाणमेवेति युक्ता वस्तुतत्त्वसिद्धिः, तस्य चानुमानत्वान्न त्रित्वभङ्गोऽपीत्याशयवान्प्रयोगप्रकारमाह **अत्रेति** । दृष्टान्ताभावेन विशेषव्याप्तेरयोगेऽपि तद्भावात्सामान्यव्याप्तिरप्रत्यूहेत्याशयेन तामाह **यदिति** ।

**च० — परामर्शदर्शनादिति** । कालविषयकमानसानुभवदर्शनादित्यर्थः । अनुभूतार्थानुभवस्य विवक्षितत्वादिति वा ।

**सु० — स्यादेतदेवम् । यदि सु(षु)प्तावनुभूयमानस्यायं परामर्शो भवेत् । नैतदस्ति । किन्तु तदैवातीतं सुषुप्तिकालमनुभूय तदातनो दुःखाभावोऽनुमीयत इत्यत आह** अतीतेति ।

**अनु० —** अतीतानागतौ कालावपि नासाक्षिगोचरौ ।

---

**उत्थितस्य किं साक्षिणाऽतीतकालानुभवमभ्युपगम्य सुखपरामर्शो निराक्रियते उत प्रमाणान्तरेण । आद्ये सिद्धं नः समीहितम्, परेणापि कालस्य साक्षिवेद्यतया अङ्गीकृतत्वात् । द्वितीये त्विदमुपतिष्ठते । असाक्षिगोचरौ=साक्षीतरप्रमाणविषयौ ।**

**अथवा सौषुप्तिकप्रतीतिबलादस्तु वर्तमानकालस्य साक्षिवेद्यत्वं । अतीतानागतकालयोस्तु साक्षिवेद्यत्वाभावात्कथं त्रैकालिकाबाधभावः साक्षिणा प्रपञ्चस्य सिद्ध्यतीत्यत आह** अतीतेति । **अपिपदेन साक्षिप्रतीताविति समाकृष्यते । कुत इत्यत आह** नेति ।

**साक्षीतरप्रमाणागोचरौ । प्रतीयेते च । तस्मात्साक्षिगोचरावित्यर्थः ।**

**शे० —** नन्वेतावन्तं कालं सुखमस्वाप्समिति न कालपरामर्शः । न चैवं सुखाद्यंशेऽप्यस्य परामर्शत्वं न स्यात् । सुखादेः कालसंबन्धितया परामर्शेन कालसंबन्धित्वानुभवं विनाऽयोगादिति वाच्यम् । मद्रीत्या स्वरूपसुखस्याप्रामाणिकत्वेन सुप्तौ स्वरूपसुखानुभवायोगात् । त्वन्मतेऽपि सुखस्वरूपाणां कथञ्चित्स्वरूपसुखानुभवसंभवेऽप्यसुखस्वरूपाणां तदनुपपत्तेर्विषयसंबन्धाभावेन तेषां वैषयिकसुखानुभवस्याप्ययोगात् । जाग्रदादौ स्रक्चन्दनादिजन्यमेतदितिवत्प्राज्ञसंबन्धजन्यमेतत्सुखमिति पराम-

र्शाभावेन प्राज्ञसंबन्धस्यैव सुखोत्पादकत्वासंभवाच्च तदा सुखानुभवानुपपत्त्या सुखांशेऽप्यपरामर्शत्वस्यै- वेष्टत्वात् । तथा चास्य परामर्शत्वाभावान्नैतदनुरोधेन सुषुप्तौ कालानुभवसिद्धिः । न चैवमेतावन्त- मित्यादेः का गतिरिति वाच्यम् । एतावन्तं कालमित्यस्यातीतसुप्तिकालानुभवत्वेन सुखमस्वाप्समित्यस्याहं तदा दुःखाभाववानस्तद्वत्तया स्मर्यमाणत्वादिति तत्कालीनदुःखाभावानुमितित्वोपपत्तेरिति भावेन शङ्कते **स्यादेतदेवमिति** ॥ **प्रमाणान्तरेणेति** । सुप्त्यवस्था कालाधिकरणिका अवस्थात्वाज्जाग्रद्वदित्यनिद्राण- स्योदयास्तमयान्तरालकालानुभवात्तद्दृष्टान्तेन निद्राकालात्पूर्वोत्तरास्तमयोदयकालयोरपि तत्कालत्वेन हेतुना अन्तरालकालवत्त्वमित्यनुमानेनेत्यर्थः । कथं समीहितसिद्धिरित्यत आह **परेणापीति** । अस्मिन्व्याख्याने अतीतानागतौ कालाविति मूलेऽनागतपदवैयर्थ्यं सुप्तेरुत्थितस्यातीतकालानुभवः प्रमाणान्तरेण भविष्य- तीत्याशङ्कायामतीतकालो नासाक्षिगोचर इत्येव वक्तव्यत्वात्, सुषुप्तौ कालस्य साक्षिवेद्यत्वे पूर्ववाक्येनोक्ते तत्र हेत्वाकाङ्क्षापरिहारत्वेनाभिप्रेतायामौत्तरिकानुस्मृतौ प्राप्तानुपपत्तिपरिहारार्थमतीतानागताविति ग्रन्थप्रवृत्तिव्युत्पादनापेक्षया साक्षात्पूर्वोक्ताक्षेपपरिहारकत्वेन तत्प्रवृत्तिव्युत्पादनस्यैव स्वरसत्वेनोक्तरीत्या तद्व्युत्पादनस्यास्वारस्यं स्याच्चेत्यपरितोषं मनसि निधायाह **अथवेति** ॥ **त्रैकालिकेति** । तथा च 'सर्व- कालेष्वबाध्यत्वं साक्षिणैव प्रतीयते' इति साक्षादुक्तस्यैवायमाक्षेप इति भावः ॥ **समाकृष्यत इति** । यद्यप्यत्रातीतानागतौ कालौ नासाक्षिगोचरावित्येकवाक्यतया योजनायां द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायेन साक्षिगोचरावेवेत्यभिलषितस्य सिद्धेः संभवात्, साक्षिप्रत्यक्ष इत्येतद्वचनविपरिणामेन अनुकृष्य असाक्षिगोचरावित्यत्र विविच्य साक्षिगोचरावित्येतद्वा समाकृष्य, न वाक्यभेदाश्रयणं युक्तम् । तथाऽप्येकवाक्यतया योजनायां प्रतिज्ञामात्रं कृतं स्यात् । न च तावता किञ्चित्सिद्ध्यतीत्यतो वचन- विपरिणामेन साक्षिप्रत्यक्ष इत्येतदनुकृष्य विविच्य साक्षिगोचरावित्येतदाकृष्य वा साक्षिविषयत्वं प्रतिज्ञाय नासाक्षिगोचरावित्यंशो हेतुसमर्पकत्वेन योजित इति द्रष्टव्यम् । सर्वथाऽप्रतीतत्वेनाप्युपपत्तेर्न तावन्मात्रेणा- पीष्टसिद्धिरित्यतोऽपेक्षितं पूरयति **प्रतीयेते चेति** ।

स० — **समाकृष्यत इति** । 'कालो हि साक्षिप्रत्यक्षः' इति पूर्ववाक्यात्साक्षिप्रत्यक्ष इत्यस्य विभक्तिविपरिणामेन समाकर्षोऽत्र द्रष्टव्यः ।

प० — **किन्तु तदेवेति** । अनुभूयेत्यन्वयः । **तदातनः** सुषुप्तिकालीनः ॥ **इदमुपतिष्ठत इति** । अतीतानागतावित्यादिकमित्यर्थः ॥ **इति समाकृष्यत इति** । द्विवचनान्ततया विपरिणाम्यानु- वर्तिष्यत इत्यर्थः ।

या० — **साक्षिप्रत्यक्षावितीति** । यद्यपि द्विवचनान्तं साक्षिप्रत्यक्षपदं न पूर्वमस्ति तथाऽप्ये- कवचनान्तं तदस्ति, तत्तु वचनविपरिणामेन द्विवचनान्तं सत् समाकृष्यत इति द्रष्टव्यम् ।

श्री० — प्रमाणान्तरेत्यत्र अतीतकालानुभवमभ्युपगम्येति वर्तते ।

सु० — **तत्कथमेतदिति चेत् (न । न तावत्प्रत्यक्षवेद्यः काल इत्युक्तम् । जातिबधिराणामपि प्रतिभासनात् नागमवेद्योऽपि । अनुमानमपि, कालमेव पक्षोकृत्य प्रवर्ततेऽन्यद्वा । नाद्य इत्याह** पक्षीकर्तुमिति ।

अनु० — पक्षीकर्तुमशक्यत्वान्नानुमा तत्र वर्तते ।

**कालस्यासिद्धौ आश्रयासिद्ध्या, सिद्धौ सिद्धसाधनत्वेन पक्षीकर्तुमशक्यत्व(ात्)म् । द्वितीयेऽप्येतदेवोत्तरम् । पक्षीकर्तुमशक्यत्वादित्युपलक्षणम् । व्याप्तिस्मरणपक्षधर्मताज्ञानयोरयोगादित्यपि द्रष्टव्यम् । कालप्रतीतिमन्तरेणेति शेषः ।**

शे० — ननु 'पक्षीकर्तुमशक्यत्वादि'त्यादिना कालस्यानुमानवेद्यत्वं निराक्रियते । तदयुक्तम् । 'सुषुप्तौ च प्रतीतितः' इत्यनेनैव साक्षीतरप्रमाणाविषयत्वस्योक्तत्वात् । न च सामान्यतः साक्षीतरप्रमाणाविषयत्वस्य तेनोक्तावपि विशिष्य निराकरणार्थमयमारम्भ इति वाच्यम् । तथा सति विशिष्य प्रत्यक्षागमवेद्यत्वनिराकरणस्यापि कर्तव्यत्वप्रसङ्गादित्याशङ्कां परिहरन्नवतारयति **तत्कथमित्यादिना ।** यद्वाऽतीतानागतौ कालौ साक्षिवेद्यौ साक्षीतरप्रमाणागोचरत्वे सति प्रतीयमानत्वादित्युक्तानुमाने हेतुविशेषणासिद्धिपरिहारार्थत्वान्न पक्षीकर्तुमशक्यत्वादित्याद्युत्तरभाष्यमनर्थकमित्यभिप्रेत्य तथा तद्योजयितुं विशेषणासिद्धिमाशङ्कते **तत्कथमिति** । अनुमानागम्यताया उत्तरग्रन्थेन लाभेऽपि प्रत्यक्षागमवेद्यताया अलाभान्मूले न्यूनतामाशङ्क्य परिहरति **न तावदिति** ॥ **प्रत्यक्षवेद्य इति** । प्राकृतप्रत्यक्षवेद्य इत्यर्थः ॥ **इत्युक्तमिति** । सुषुप्तौ च प्रतीतित इत्यनेनेति शेषः । सर्वेषामिन्द्रियाणामुपरतत्वान्न चक्षुरादिवेद्यत्वं तस्येति भावः । उपलक्षणं चैतत् । अरूपिद्रव्यत्वान्न चाक्षुषत्वम् । अस्पर्शत्वान्न स्पार्शनत्वम् । मनसो बहिरस्वातन्त्र्यात् । स्वातन्त्र्येण, प्रमाणान्तराप्रवृत्त्या तत्सहकारेणापि, मनोवेद्यत्वायोगान्न मानसत्वमित्यपि द्रष्टव्यम् । अनेन सामान्यनिराकरणमेव प्रत्यक्षांशे विशिष्यनिराकरणत्वेन योजितमिति द्रष्टव्यम् । यद्वाऽऽकाशस्य चाक्षुषत्वनिरासावसर इति शेषः । अत एव तत्राकाशादेरित्यादिपदं प्रयुक्तम् । स्पर्शनमनोभ्यामवेद्यत्वं तु तत्राप्यभिमतमेवेत्युक्तमित्युक्तप्रायमित्यर्थः । अन्यथाऽऽकाशस्यापि मनआदिवेद्यत्वप्रसक्त्या परिशेषेण साक्षिवेद्यत्वसमर्थनानौचित्यप्रसङ्गादिति द्रष्टव्यम् । "नागमवेद्योऽपी"त्यतःपरमिति स्पष्टत्वान्नोक्तमिति शेषः । **उपलक्षणमिति** । उत्तरत्र व्याप्तिस्मृत्यादेरप्यनुपपत्तेरुपपादनादिति भावः ।

स०— **न तावत्प्रत्यक्षवेद्यः काल इत्युक्तमिति** । रूपरहितद्रव्यत्वेन चाक्षुषतासामग्रीवैकल्यादिति भावः । अत एव तत्रादिपदेन कालोऽपि संगृहीत इति व्याख्यातम् ! गन्धाद्यभावेन घ्राणाद्यवेद्यताया अपि तत्राभिप्रेतत्वात् बाह्यत्वान्मनोवेद्यत्वाभावस्य च तत्राभिप्रेतत्वादिति द्रष्टव्यम् ।

प०—**इत्युक्तमिति** । रूपरहितद्रव्यत्वेन चाक्षुषतासामग्रीवैकल्यादित्युक्तं 'सत्यत्वं गगनादेश्च'-त्येतद्व्याख्यावसरे इत्यर्थः ।

या०— **न तावत्प्रत्यक्षवेद्य इति** । रूपरहितद्रव्यत्वेन चाक्षुषतासामग्रीवैकल्यादित्युक्तत्वादिति भावः । अत एव तत्रादिपदेन कालोऽपि सङ्ग्राह्य इत्युक्तम् । स्पर्शाभावेन त्वगिन्द्रियावेद्यत्वस्य बाह्य पदार्थत्वेन मनोवेद्यत्वाभावस्य च तत्राभिप्रेतत्वात्प्रत्यक्षावेद्यत्वं तत्रोक्तमेवेति ज्ञातव्यम् ।

च०— **न तावत्प्रत्यक्षवेद्य इति** । उद्भूतरूपादिघटितचाक्षुषसामग्र्यसमवहितेरिति भावः ।

सु०— **तदेव प्रपञ्चयति** तदेतदिति ।

अनु०— तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् ॥
साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते ॥
तस्मान्न तं विना किञ्चित्स्मर्तुं द्रष्टुमथापि वा ।
शक्यं

**यस्मात्तदिति स्मृतिगोचरमेतदिति दृश्यं वा सर्वमपि सक्षिसिद्धेन कालेन खचितं संबद्धमेव वर्तते । तस्मात्तं कालं विना कालप्रतिभासं विना किञ्चिद्व्याप्त्यादिकं स्मर्तुं वा धर्म्यादिकं द्रष्टुमपि वा न शक्यमित्यर्थः ।**

**इदमुक्तं भवति । अनुभूतव्याप्तिकस्य पुंसोऽनुभूयमाने स्मर्यमाणे वा धर्मिणि व्याप्य-धर्मस्यानुभवात् स्मरणाद्वा प्रागनुभूतां व्याप्तिं स्मृतवतो व्याप्तस्य पक्षेऽनुसंधानमनुमानम् । तच्च व्यापकसंबन्धप्रमितिलक्षणानुमितिकरणम् । स्मृत्यनुभवरूपाश्च सर्वाः प्रतीतयो न केवल-मर्थमवगाहन्ते । अपि तु कालकलितमेव । तदिति हि स्मृतिरुत्पद्यते । न पुना रूपमित्येव तत्ता च पूर्वकालसम्बन्धितैव । एवमनुभवोऽपि चक्षुरादिजन्यस्तावत् एतदिति जायते। अनुमा-नादिजन्योऽप्यभूदिति वा भवतीति वा भविष्यतीति वोदेति । एतत्त्वादिकं च न वर्तमानादि-कालसंबन्धित्वातिरिक्तं किञ्चित् । एतच्च सर्वानुभवसिद्धत्वान्नापलापमर्हति । न चैवं सति कालस्य चाक्षुषत्वादिप्रसङ्गः । साक्षिसिद्धविशेषणविशिष्टप्रत्ययोपपत्तेः । तथा च व्याप्त्यादि-**

**विषया अपि प्रतीतयो न कालाविशिष्टं स्वार्थं गोचरयितुं शक्नुवन्ति । तासामपीदं तदित्येवमाकारेणैवोत्पत्तेरिति ।**

**ततः किमित्यत** आह तदिति ।

तन्नित्यसिद्धेर्हि नानुमावसरो भवेत् ॥

**तस्य कालस्य नित्यसिद्धेर्व्याप्त्यादिग्रहण एव साक्षिणा सिद्धत्वान्न कालानुमानस्यावसरो भवेत् अनिश्चिते ह्यर्थे न्यायस्यावसरः । निश्चितविषयं तु सिद्धसाधनत्वात् परेषामाश्रयासिद्धम् अस्माकं त्वसङ्गतमिति ।**

**शे** — 'तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरमि'ति मूले यथायोग्यमन्वयो न तु यथाक्रममतो नानुपपत्तिरित्यभिप्रेत्य तमाह **तदितीति** । टीकायां स्मृतिगोचर इत्येव मूलपाठः । स्मृतिगोचरमिति पाठस्तु तादृशानुव्याख्यानपाठानुसारेण मूलटीकयोरेकप्रकारत्वमिति व्याख्यातृभ्रान्तिकल्पित एव । अनुव्याख्याने तु विष्णवीत्यादिवत्परमवैदिकत्वख्यापनार्थ इत्यवधेयम् । यद्वा स्मृतिः गोचरो यस्येति तथोक्तम् । गोचरत्वं च विषयितासंबन्धेन विवक्षितमिति न किञ्चिदेतत् । अत एव टीकायामपि 'प्रामाण्यं साक्षिगोचरमि'त्येतदेवमेव समाहितमिति द्रष्टव्यम् । ननु कालप्रतिभासं विना व्याप्तिस्मरणाद्यसंभवेऽपि कुतोऽनुमानाप्रवृत्तिः । कथं च कालप्रतिभासं विना व्याप्तिस्मरणाद्यसंभवः । न च वाच्यं तदित्यादिरूपेणैव स्मृत्यादेर्घटादिविषयकत्वात्साक्षिसिद्धकालविषयकत्वं सिद्धमिति । तत्रापि कालविषयकत्वासिद्धेः । न हि तदित्यादिरूपेण घटादिविषयकत्वे कालविषयकत्वेन भाव्यमित्यत्र नियामकमस्ति । तथात्वेऽपि वा तद्विषयस्य कालस्य न साक्षिवेद्यत्वं किन्तु चक्षुरादिवेद्यत्वमेवेत्यत आह **इदमुक्तं भवतीति** ॥ **अभूदिति वेति** । अनेन तदेतदिति मूलमुपलक्षणमित्युक्तं भवति ॥ **सर्वानुभवसिद्धत्वादिति** । अनेन मूले हिशब्दोऽनुभवप्रसिद्ध्यर्थकतया व्याख्यातो भवति ॥ **उपपत्तेरिति** । अन्यथा, परस्यापि मते परमाण्वादेर्मानसप्रत्यक्षत्वप्रसक्तेरिति भावः । **अनिश्चिते ह्यर्थ इति** । 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क' इति गौतमसूत्रादिति भावः **परेषामिति** । तार्किकादीनामित्यर्थः ॥ **आश्रयासिद्धमिति** । सिद्धसाधनस्थले सन्देहगर्भितपक्षताया अभावेन पक्षरूपाश्रयाभावादाश्रयासिद्धिरिति भावः ॥ **असङ्गतमिति** । सिद्धसाधकोऽसङ्गत इत्यन्यत्रोक्तेरिति भावः ।

**स०— असङ्गतमिति** । सिद्धसाधकोऽसङ्गत इत्युक्तत्वादिति भावः ।

**प०— स्मृतिगोचरमिति** । गोचरशब्दस्य क्लीबतानिर्वाहो 'यदि तत्स्यादगोचरमि'त्यत्र ईक्षतिनये व्यक्तः ॥ **न पुना रूपमित्येवेति** । न पुनः पदार्थ इत्येवेत्यर्थः ॥ **एतत्त्वादिकमिति** । एतत्त्वं तत्त्वं चेत्यर्थः । हिशब्दार्थं व्यनक्ति **एतच्चेति** । सिद्धसाधनत्वे को दोष इत्यत आह **परेषामिति** ॥

**असंगतमिति** । सिद्धसाधकोऽसङ्गत इत्युक्तेर्विरोधासङ्गतिरूपार्थदोषमध्ये असङ्गतिरूपदोषान्तर्भावात् असङ्गताख्यदूषणमस्मन्मते बोध्यमित्यर्थः ॥

**या०** — हिशब्दाभिप्रायमाह **एतच्च सर्वानुभवेति** ।

**श्री०** — **तत्र व्यापकसम्बन्धेति** । सम्बन्धप्रमितीत्यर्थः ॥ **एवं सतीति** । एतदिति प्रतीतौ कालप्रतिभासाङ्गीकार इत्यर्थः । कुतो न प्रसङ्ग इत्यत उपनीतभानसम्भवादित्याह **साक्षिसिद्धेति** । साक्षिसिद्धं यत्कालरूपं विशेषणं तद्विशिष्टप्रत्ययस्य सुरभिचन्दनमितिवच्चक्षुषैवोपपत्तेरिति भावः । **असङ्गत-मिति** । सिद्धसाधकोऽसङ्गत इत्युक्तत्वादिति भावः ।

**सु०** — **एवं कालविषयाणि सर्वानुमानानि सामान्यतो निराकृत्य विशेषतो निराकरोति** तदेतदिति । **तथा हि** । **कालः परापरव्यतिकर-यौगपद्यायौगपद्य-चिरक्षिप्र-प्रत्ययलिङ्ग इति परेषां भाष्यम्** । **तदेवं केचिद्व्याचक्षते** । **अस्ति तावत्स्थविरे परोयमिति प्रत्ययः । यूनि चापर इति । सोयं दिक्कृतपरापरप्रत्ययविलक्षणत्वात् परापरव्यतिकरप्रत्ययः । तथा युगपदागतौ अयुगपदागतौ चिरेणागतः क्षिप्रमागतः इति प्रत्ययाः । (त) एते षट्प्रत्ययाः कालस्य लिङ्गानि । कथम् । स्थविरादिविषयेषु जायमानानामेषां कालमन्तरेण विषयानवक्लृप्तेः । न हि द्रव्यादिकमेवैषामालम्बनम् । तत्प्रत्ययविलक्षणत्वादिति ।**

**एतदयुक्तम्** । **तथा हि** । **तदिति परमिति एतदपरमिति** । **युगपदादीनामुपलक्षण-मेतत् । दृश्यं वा स्मृतिगोचरं (वा) प्रतीयमानमिति** यावत् । **तत्सर्वं साक्षिसिद्धेन कालेन खचितमेव वर्तते** । **तस्मात्तन्नित्यसिद्धेः नानुमानावसरो भवेत्** । **तस्मादित्यस्यैव विवरणं न तं विनेति** । **न शक्यं हीति सम्बन्धः** ।

**एतदुक्तं भवति** । **परापरादि(विषयाः)प्रत्ययास्तावत् कालविशिष्टपिण्डविषयाः इति परेणैवोक्तम्** । **तथा च लिङ्गप्रतीतावेव लिङ्गिनः कालस्य स्फुरणात्कथं तेन तदनुमानम्** । **न हि दण्डिज्ञानेन दण्डोऽनुमीयते** ।

**शे०** — परकीयकालानुमानानां विशेषतोऽनिरासेन प्रसक्तां भाष्ये न्यूनतामसहमानः सामान्यतः कालविषयकानुमाननिरासपरतया योजितं तदेतदित्यादिभाष्यमेव विशेषतोऽनुमाननिरासपरत्वेनापि योजयति **एवमिति** । तत्र कानि तानि विशेषानुमानानीत्यतः प्रशस्तपादभाष्योदितान्येवेत्याशयेन कालानुमान-संग्राहकं प्रशस्तपादभाष्यमेवोदाहरति **काल इति** । अस्य भाष्यस्य चिरन्तनव्याख्यानमनुवदति **तदेव-मिति** । अस्मिंश्च व्याख्याने परत्वं बहुकालीनत्वमपरत्वमल्पकालीनत्वं यौगपद्यमेककालीनत्वमयौगपद्यम-

नेककालीनत्वं चिरत्वं दीर्घकालत्वं क्षिप्रत्वमल्पकालत्वमभिप्रेतमिति द्रष्टव्यम् । **कथमिति** । नैते प्रत्ययाः कारणतया कालव्यवस्थापका आत्मेन्द्रियादीनामेव तत्कारणत्वात् । तथा च कथमेतैः प्रत्ययैः कालसिद्धिरिति भावः । न कारणतया कालव्यवस्थापकत्वं प्रत्ययानामभिमतं येनोक्तदोषः, किन्तु विषयतयैव । कालमन्तरेणैतेषां प्रत्ययानां विषयानवक्लृप्तेरित्याह **स्थविरादिविषयेष्विति** । ननु स्थविरादिद्रव्यस्यैव वा तद्गतगुणकर्मादेरेव वैतत्प्रत्ययालम्बनत्वसम्भवात्कथं कालमन्तरेण विषयानवक्लृप्तिरित्यत आह **न हीति** ॥ **तत्प्रत्ययेति** । द्रव्यगुणादिप्रत्ययेत्यर्थः ।

ननु तदेतदिति प्रतीयमानस्य कालखचितत्ववर्णनपरेण कथं परादिप्रत्ययानां कालानुमापकत्वनिराकरणसिद्धिः । परादिप्रत्ययानां कालखचितवस्तुविषयत्वासिद्धेरित्यतस्तदेतदित्येतत्परापरमित्येतत्परतया व्याचष्टे **तथा हीति** । ननु तथाऽपि परापरप्रत्ययस्य कालखचितवस्तुविषयकत्ववर्णनेन परापरप्रत्ययस्य तदननुमापकत्वप्राप्तावपि यौगपद्यादिप्रत्ययस्य तदप्राप्त्या कालानुमापकत्वोपपत्तेः कथमनेन परोक्तसर्वानुमाननिराकरणमित्यत आह **युगपदादीनामुपलक्षणमेतदिति** । ननु परमपरमिति प्रतीयमानस्य कुतः कालखचितत्वम् । तथात्वेऽपि कुतोऽनुमानानवसर इत्यत आह **एतदुक्तं भवतीति** ॥ **परेणैवोक्तमिति** । द्रव्यादिप्रत्ययवैलक्षण्येन द्रव्याद्यालम्बनत्वानुपपत्त्या स्थविरादिविषयेषु जायमानानामेषां प्रत्ययानां कालमन्तरेण विषयानवक्लृप्तिं वर्णयता परेण परादिप्रत्ययानां कालविशिष्टपिण्डविषयताया वर्णितत्वान्न तदुपपादनं पृथङ्मूले कर्तव्यमिति भावः । अस्तु परापरादिप्रत्ययानां कालविशिष्टपिण्डविषयत्वम् । तथाऽपि कुतोऽनुमानानवसर इत्यतः किमत्र कालमात्रमनुमेयतयाऽभिमतं किंवा विशिष्टज्ञानत्वेन विशेषणज्ञानपूर्वकत्वं तथाऽभिमतमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **तथा चेति** ।

स० — **न हि द्रव्यादिकमेवैषामालम्बनमिति** । स्थविरादिपिण्डगतद्रव्यगुणादिकमेव तत्प्रत्ययविषयो नेत्यर्थः । ननु 'तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् । साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते । तस्मात्तन्नित्यसिद्धेर्हि नानुमाऽवसरो भवेदि'त्येतावता पूर्णत्वात् 'न तं विने'त्यादि व्यर्थमित्यत आह **तस्मादित्यस्यैव विवरणमित्यादि** ।

प० — प्रकारान्तरेणापि व्याख्यातुं तदेव वाक्यमन्यथाऽप्यवतारयति **एवमिति** । परेषाम्= तार्किकाणाम् । स्थविरे= वृद्धे ॥ **प्रत्यया इति** । सन्तीति शेषः । कथमिति प्रश्नस्योत्तरं **स्थविरादीत्यादि** ॥ **न हि द्रव्यादिकमिति** । स्थविरादिपिण्डरूपद्रव्यं यत्तद्गतगुणकर्मादिकं तन्न विषय इत्यर्थः । एतन्निरासकतया मूलं योजयितुमाह **तथा हीति** । अनुभवत्वादिविशेषस्य प्रकृतेऽनुपयोगात् 'तदेतदिति दृश्यं वा स्मृतिगोचरम्' इत्यस्य परमपरमिति प्रतीयमानं युगपदागताविव्यादिरूपेण प्रतीयमानमित्यर्थ-

परतया योजयति **तदितीत्यादिना** । तदितीत्यस्य प्रतिपदं परमितीति । एवमग्रेपि । तस्मादित्येतद्विवरणत्वद्योतनाय हिशब्दस्य यस्मादित्यर्थमुपेत्य योजनामाह **न शक्यं हीति संबन्ध इति** ।

**या० — न हि द्रव्यादिकमेवेति** । स्थविरादिपिण्डगतं द्रव्यगुणादिकमेतत्प्रत्ययविषयो नेत्यर्थः ॥ **परेणैवोक्तमिति** । स्वग्रन्थ इति शेषः । यद्यपि यौगपद्यमेककालता, अयौगपद्यमनेककालता, चिरत्वं दीर्घकालता, क्षिप्रत्वमदीर्घकालतेत्येवं यौगपद्यादिप्रत्ययानामेव कालविशिष्टपिण्डविषयत्वम् । परापरशब्दौ तु भावप्रधानौ गुणविशेषवाचकौ न कालविशिष्टस्य । ततश्च परापरव्यतिकरश्च यौगपद्यादिप्रत्ययश्चेति समासः । ते लिङ्गानि यस्य स तथोक्त इति परत्वापरत्वे यौगपद्यादिप्रत्ययाश्च कालानुमापका इत्येवं किरणावलीकारेणोक्तम् । तथाऽपि बहुकालीनत्वं परत्वम्, अल्पकालीनत्वमपरत्वं, यौगपद्यादिकं चोक्तमेव; तेषां प्रत्यया लिङ्गानि यस्य स तथोक्त इति चिरन्तनव्याख्यानमभिप्रेत्यैवमुक्तमित्यवगन्तव्यम् । अत एव पूर्वं त एते षट्प्रत्यया इत्यनुवादः कृतः ।

**च०** तत्र कालसाधकविशेषानुमानजिज्ञासापूरणाय तादृशानुमानसंग्राहकं प्रशस्तपादभाष्यमेवोदाहरति **काल इति** ॥ **परेणैवोक्तमिति** । स्वग्रन्थ इत्यादिः । किरणावल्यां कृतद्वंद्वानां यौगपद्यायौगपद्यचिरक्षिप्रपदानां प्रत्ययपदेन तत्पुरुषस्ततः परापरव्यतिकरपदेन प्रत्ययान्तस्येतरेतरयोगद्वंद्वस्ततो लिङ्गपदेन षष्ठ्यर्थे बहुव्रीहिः परापरशब्दौ भावप्रधानौ गुणविशेषाभिधायकौ न कालकलितार्थकौ क्षिप्रान्तस्तु कालकलितार्थक इति यद्यपि व्याकुशासीत् तथापि तदपेक्षया चिरन्तनव्याकर्तारः परत्वं बहुकालीनत्वम् अपरत्वम् अल्पकालीनत्वमिति व्याचख्युरिति तदनुरुन्धानाः प्रकृतेपि द्वंद्वगर्भतत्पुरुषगर्भबहुव्रीहिमेवान्ववदन्न तु द्वंद्वगर्भबहुव्रीहिमिति मन्तव्यम् ।

**सु० — अथ विशिष्टज्ञानत्वादिदं विशेषणज्ञानपूर्वकम् । विशेषणं च न कालातिरिक्तमस्तीत्यनुमीयते । तर्हि नेदं कालानुमानम् । किन्तु ज्ञानानुमानम् । तच्च सिद्धसाधनम् । साक्षिसिद्धकालविशिष्टप्रत्ययाभ्युपगमादिति ।**

**अथ वलीपलितकार्कश्यादिना कालसंबन्धेऽनुमिते, विप्रतिपन्नं प्रति परापरादिप्रत्ययानां कार्यत्वेन निमित्तानुमानमिदं भाष्यमिति । मैवम् । शरीरावस्थया हि तस्य कालसंबन्धोऽनुमीयते, यत्किञ्चिद्द्रव्यसंबन्धो वा । आद्ये किमस्मादनुमानात्प्राक्कालः सिद्धोऽथवा नेति वाच्यम् । आद्ये तन्नित्यसिद्धस्तस्य कालस्य प्रागनुमानान्नित्येन साक्षिणा सिद्धः । द्वितीये चाप्रसिद्धविशेषणत्वान्नानुमानावसरो भवेत् । किञ्च वलीपलित(कार्कश्य)ादिशरीरावस्था-**

**कारणत्वेन कालानुमाने तन्नित्यसिद्धेस्तस्य कालसंबन्धस्य नित्यं सर्वदा वलीपलितादिवैधुर्यदशायामपि सिद्धेर्नित्ये परमाणावपि सिद्धेर्बाधितविषयत्वेन नानुमानावसरो भवेत् ।**

**अथ बहुकालसंबन्धोऽनुमीयते । तन्न । बहुत्वं हि कालस्य किं परमाणूनामिव सहैव, उत क्रियाणामिव पूर्वापरभा(वित)वेन । नाद्यः, तत्संबन्धस्यापि नित्यसिद्धेः । नेतरः (नोत्तरः) तस्य कालस्य नित्यसिद्धेः । नित्यतयाऽङ्गीकृतत्वात् । न द्वितीयः, तस्य नित्यसिद्धेः सिद्धसाधनत्वात् । अथ परिशेषादितरनिषेधः करिष्यत इति चेन्न । परिशेषावधारणानुपपत्तेरिति ॥**

शे० — द्वितीयं शङ्कते **अथेति** । अस्तु तर्हि कालज्ञानानुमानमेवेदमित्यत आह **तच्चेति** । कथं तदित्यतः साक्षिरूपकालज्ञानपूर्वकताया मयाऽप्यङ्गीकारादित्याह **साक्षीति** । ननु न परापरादिप्रत्ययैः कालानुमानं ब्रूमो येन लिङ्गप्रतीतावेव लिङ्गिनः कालस्य स्फुरणात्कथं तेन तदनुमानमिति पर्यनुयुज्येत किन्तु वलीपलितकार्कश्यादिना तदनुमानम् । तथा च नानुमानवैयर्थ्यम् । वलीपलितादिलिङ्गावगतौ लिङ्गिनः कालस्य स्फुरणात् परापरादिप्रत्ययानामिव कार्कश्यादिप्रत्ययानामपि कालखचितवस्त्वालम्बनत्वासिद्धेः । न चैवं भाष्ये परापरादिप्रत्ययरूपलिङ्गोपन्यासानर्थक्यमिति वाच्यम् । भाष्ये न कालानुमापकतया परापरादिप्रत्ययोपन्यासः किन्तु कालसिद्धिमुक्तरीत्याऽङ्गीकृत्यापि परापरादिप्रत्ययानां कालनिमित्तकत्वे यो विप्रतिपद्यते तं प्रति परापरादिप्रत्ययानां कार्यत्वेन कालनिमित्तकत्वानुमानार्थं भाष्ये परापरादिप्रत्ययरूपलिङ्गोपन्यासस्यार्थवत्त्वादित्यभिप्रायेण शङ्कते **अथेति** । अत्र शरीरावस्थाविशेषो वलीशब्दार्थः । पलितशब्दः केशशौक्ल्यपरः । यद्यपि वलीपलितादिना कालसम्बन्धेऽनुमित इति पूर्वपक्षिणा स्पष्टमभिधानान्न वक्ष्यमाणरीत्या विकल्पावसरोऽस्ति । तथाऽपि साक्षात्कालसम्बन्धसाधनपक्षोक्तदोषभिया यत्किञ्चिद्द्रव्यसम्बन्ध एव वलीपलितादिना साध्यते । कालसम्बन्धसिद्धिस्तु वक्ष्यमाणरीत्या परिशेषादितरप्रतिषेधेनेति कालसम्बन्धस्यैव पर्यवसानगत्या सिद्ध्यभिप्रायेण पूर्वपक्षीया विशेषोक्तिरित्यपि पूर्वपक्ष्यभिसन्धेर्वर्णयितुं शक्यत्वादस्त्येव विकल्पावसर इति भावेन विकल्प्यैव दूषयति **नैवमित्यादिना** । **नानुमानावसर इति** । आद्ये सिद्धसाधनत्वे परस्याश्रयासिद्धिप्रसक्तेरस्माकं त्वसङ्गतिप्रसक्तेः । द्वितीये च व्याप्तिपक्षधर्मताविरहप्रसक्तेर्नानुमानावसर इत्यर्थः ॥ **वलीपलितादिवैधुर्यदशायामपीति** । तथा च यूनि कालसम्बन्धे सत्यपि वलीपलिताद्यभावात्तत्रान्वयव्यभिचार इति भावः ॥ **नित्ये परमाणावपीति** । तथा च तत्राप्यन्वयव्यभिचार इति भावः ॥ **बाधितविषयत्वेनेति** । उक्तरीत्याऽन्वयव्यभिचारेण कारणताशरीरप्रविष्टनियमानुपपत्त्या कालसम्बन्धस्य वलीपलिताद्यवस्थाकारणत्वाभावस्यैव सिद्धत्वेन वलीपलितादिकारणत्वेन कालानुमानस्य बाधितविषयत्वेनेत्यर्थः ।

ननु कालसम्बन्धमात्रस्य वलीपलिताद्यवस्थाकारणत्वानभ्युपगमाद्बहुकालसम्बन्धस्यैव तद्धेतुत्वेनाभ्युपगमाद्वलीपलिताद्यवस्थाविधुरे यूनि च बहुकालसम्बन्धस्याप्यभावेनान्वयव्यभिचाराभावादुक्तनियमोपपत्तेरवस्थाकारणत्वेन बहुकालसम्बन्धानुमाने न बाधितविषयत्वमिति शङ्कते **अथ बह्विति ॥ तत्सम्बन्धस्यापीति** । यून्युक्तरीत्या व्यभिचारपरिहारेऽपि नित्ये परमाणाववस्थाविधुरेऽपि कालसम्बन्धस्य सत्त्वेनान्वयव्यभिचारापरिहारादुक्तदोषतादवस्थ्यमिति भावः । इदं च काले सहैव बहुत्वमङ्गीकृत्यैवोक्तम् । सिद्धान्ते सहैव बहुत्वस्य कालेऽनङ्गीकारादिति ध्येयम् ॥ **नित्यतयाऽङ्गीकृतत्वादिति** । परेणेति शेषः । तथा च पूर्वापरीभावापन्नबहुकालसम्बन्धसाधने बाध इति भावः । यत्किञ्चिद्द्रव्यसम्बन्धोऽनुमीयत इति द्वितीयं दूषयति **न द्वितीय इति** ॥ छ ॥ छ ॥

**स०** — ननु कालसम्बन्धस्य पूर्वानुमानेनैव सिद्धत्वाद्व्यर्थमिदमनुमानमित्यत आह **विप्रतिपन्नं प्रतीति** । पूर्वानुमानेन सिद्धेपि काले तस्य परापरादिविषयप्रत्ययजनकत्वे यो विप्रतिपन्नस्तं प्रतीदमनुमानमित्यर्थः । तथा च विशिष्टप्रत्ययानां विशेषणसम्बन्धपूर्वकतानियमादिति भावः । पूर्वानुमानेनैव विशेषणीभूतकालसिद्धेर्न लिङ्गप्रतीतावेवेत्यादिनोक्तदोषावकाशोऽत्रेति द्रष्टव्यम् । **तस्येति** । शरीरस्येत्यर्थः । **बाधितविषयत्वेनेति** । कार्येण कारणानुमानस्थले कार्यसमानकालीनाया एव कारणसिद्धेर्दृष्टत्वात् कार्यवत्येव च दृष्टत्वेन कारणाभाववति सर्वथा तत्सिद्धेरदृष्टत्वाच्च प्रकृतेऽपि शरीरकारणत्वेन कालसम्बन्धवत् तत्कार्यवलीपलितादिमत्त्वादित्यत्र कार्यभूतवलीपलिताद्यभावदशायामपि यूनि कालसम्बन्धस्यैव दर्शनेन कार्यसमानकालीनकारणसिद्धेरभावेन वलीपलितादिरूपकार्याभावभाववत्यपि परमाणौ कालसम्बन्धदर्शनेन कार्यवत्येव तत्सिद्धेरभावेन कालसम्बन्धस्य वलीपलिताद्यवस्थाकारणत्वाभावेन तत्साधने बाध स्यादिति भावः । कार्येणैव यत्र कारणानुमानं तत्र कार्याभावेपि कारणस्य कालसम्बन्धस्य सत्त्वेन कालसम्बन्धानुमानं बाधितविषयम् । न च कारणीभूतस्य कालसम्बन्धस्य सत्त्वेपि कारणान्तराभावेन कार्याभावस्योपपन्नत्वान्न बाधितविषयत्वमिति वाच्यम् । कालसम्बन्धस्यैव सामग्रीरूपत्वेन तदतिरिक्तकारणाभावादिति सम्प्रदायविदः । **अथ बह्विति** । तथा च न बाध इति भावः । **तत्सम्बन्धस्यापीति** । बहूनां कालानां नित्यत्वेन तत्सम्बन्धस्यापि नित्यसिद्धत्वात्सिद्धसाधनमिति भावः । अन्ये तु **बहुकालसम्बन्धस्यापि नित्यतयाऽङ्गीकृतत्वादिति** । तथा च पूर्वापरभावसाधने बाध इति भावः । नित्ये परमाणौ सिद्धेर्व्यभिचाराद्बाध इत्यर्थः । इदं च काले सहैव बहुत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु तदेव नास्तीति ज्ञातव्यमित्याहुः ।

**प०** — **साक्षिसिद्धकालविशिष्टप्रत्ययेति** । सुरभि चन्दनमिति चाक्षुषप्रत्ययवदिति भावः ॥ **वलीपलितेति** । वलीति लम्बमानचर्मवत्त्वमुच्यते । पलितेति शुक्लकेशत्वम् । कार्कश्यं चालम्बमान-

चर्मोपेतसर्वावयवदेहकत्वम् । यौवनावस्थेत्यर्थः । कार्कश्यादिना तत्कारण(त्वेन)कालसंबन्धेऽनुमिते सति लिङ्गषट्कोक्तिपरभाष्यं व्यर्थमापद्येतेत्यत आह **विप्रतिपन्नं प्रतीति** । स्वार्थानुमानेन स्वस्य कालसंबन्धज्ञाने सत्यपि यस्तु कालसंबन्धे विप्रतिपद्यते तादृशवादिनं प्रति 'परत्वादिप्रत्ययाः किञ्चिन्निमित्तकाः कार्यत्वाद्घटादिवदि'ति कार्यत्वेन हेतुना परापरादिप्रत्ययनिमित्तस्य कस्यचिद्वस्तुनोऽनुमानार्थं परार्थानुमानषट्कप्रदर्शनपरं परापरव्यतिरेकेत्यादिप्रागुक्तभाष्यमित्यर्थः । परिशेषात्स कालसंबन्ध एव सेत्स्यतीति भावः । एके तु कालसंबन्धस्य परापरादिप्रत्ययनिमित्तत्वे विप्रतिपन्नं प्रति तन्निमित्तत्वानुमानार्थमित्यर्थ इति व्याचक्षते । तन्नित्यसिद्धेरित्यादि योजयति **तन्नित्यसिद्धेरिति** । कालसंबन्धेऽनुमिते इत्यत्र कालसंबन्धमात्रं बहुकालसंबन्धो वा । आद्ये आह **किञ्चेति** । नित्यपदस्यार्थद्वयमुपेत्याह **नित्यं सर्वदेति ॥ नित्ये परमाणाविति** । बाधितविषयत्वेन वलीपलितादिदेहावस्थारहितेपि देहे स्वतःकालसंबन्धस्यान्वयव्यभिचारेण देहावस्थाकारणत्वस्य बाधेन कारणत्वेन कालसंबन्धानुमानं बाधितविषयमित्यर्थः ॥ द्वितीयं शङ्कते **अथ बहुकालेति ॥ तत्संबन्धस्यापीति** । न्यायमते बहुत्वस्यौपाधिकत्वेनोपाधीनां युगपद्बाहुल्यसंभवेन कालबहुत्वस्यापि संभवादौपाधिकबहुकालसंबन्धस्य वलीपलितादिवैधुर्यदशायामपि सिद्धत्वेन व्यभिचारितया वलीपलितादिकारणत्वेन तदनुमानं बाधितविषयमिति भावः । यद्वा काले परमाणूनामिव युगपद्बहुत्वाभावमभ्युपेत्य दोषोक्तिरियम् । अथवा सिद्धान्ते क्षणलवादेरप्यनन्तांशोपेतत्वात्तेषां च भिन्नाभिन्नत्वादेकक्षणादिसंबन्धदशायामेव बहुकालसंबन्धोऽस्तीत्येवमुक्तिः । **नित्यतयेति** । ननु औपाधिकानां कालानां पौर्वापर्यमस्त्येवेति चेन्न । उपाधीनां कारकत्वस्याग्रे समयपादे निरसिष्यमाणत्वात् । ज्ञापकत्वे च स्वत एव पूर्वापरभावापन्नकालविशेषाणां प्राप्त्या अपसिद्धान्तापत्तेरिति भावः । यत्किञ्चिद्द्रव्यसंबन्धो वेति पक्षं निराह **न द्वितीय इति ॥ तस्येति** । पृथिव्यादिरूपयत्किञ्चिद्द्रव्यसंबन्धस्य शरीरे नित्यं सिद्धेरित्यर्थः । **परिशेषावधारणेति** । पूर्वत्राकाशे परिशेषावधारणोक्त्या तत्तुल्यन्यायतया वा काल एवाग्रे वक्ष्यमाणपरिशेषानुपपत्तितुल्यन्यायतया वा द्रव्यान्तरकल्पनापेक्षया पृथिव्याद्यष्टद्रव्येष्वेव परापरव्यतिकरादिप्रत्ययनिर्वाहकल्पनौचित्येन वा अष्टद्रव्यातिरिक्तकालाख्यनवमद्रव्यपरिशेषावधारणायोगादित्यर्थः ॥ छ ॥

या० — ननु कालसम्बन्धस्य पूर्वानुमानेनैव सिद्धत्वाद्व्यर्थमिदमनुमानमित्यत आह **विप्रतिपन्नं प्रतीति** । पूर्वानुमानेन काले सिद्धेऽपि तस्य परापरादिप्रत्ययजनकत्वे यो विप्रतिपन्नस्तं प्रतीदमनुमानमित्यर्थः । **निमित्तानुमानार्थमिति** । जन्यविशिष्टप्रत्ययानां विशेषणसम्बन्धपूर्वकतानियमादिति भावः । पूर्वानुमानेनैव विशेषणीभूतकालसिद्धेर्न लिङ्गप्रतीतावेवेत्यादिनोक्तदोषावकाशोऽत्रेति ज्ञातव्यम् । यद्वा पूर्वानुमानेन काले सिद्धेऽपि प्रतिवादिवाक्यादिना यो विप्रतिपन्नस्तं प्रति दार्ढ्यायानुमानान्तरमुच्यत इत्यर्थः ।

**बाधितविषयत्वेनेति** । अन्वयव्यभिचारेण कारणताप्रविष्टनियमानुपपत्तौ कारणतैव बाधितेति भावः ॥ **तत्सम्बन्धस्यापीति** । नित्ये परमाण्वादौ सिद्धेरन्वयव्यभिचारेणोक्तदोषतादवस्थ्यमित्यर्थः । इदं च काले सहैव बहुत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु तदेव नास्तीति ज्ञातव्यम् ।

श्री० — **इदं विशेषणज्ञानपूर्वकमिति** । परापरादिप्रत्ययषट्कमित्यर्थः । कथमित्यत उपनीतभानाङ्गीकारादित्याह **साक्षिसिद्धेति** ॥ **प्रत्ययेति** । परापरादिप्रत्ययेत्यर्थः । **कालसंबन्धे** शरीरस्येति शेषः । **विप्रतिपन्न** तस्य कालस्य परापरादिप्रत्ययजनकत्वे विप्रतिपन्नं प्रतीत्यर्थः ॥ **निमित्तेति** परापरादिप्रत्यये पूर्वानुमानसिद्धकालसंबन्धस्य निमित्तत्वानुमानार्थमित्यर्थः ; **तस्य शरीरस्य** । **कालसंबन्धः** कालेनैव संबन्धः । **अस्मादनुमानादिति** । शरीरावस्थया कालसंबन्धानुमानात्प्रागित्यर्थः । तथाच तादृशकालसंबन्धस्य पक्षीभूते शरीरे सिद्धत्वान्नानुमानावसरः । अन्यथेदमिति पक्षीकरणायोग इति भावः ॥ **अप्रसिद्धेति** । कालस्यासिद्धौ तत्संबन्धस्याप्यप्रसिद्धत्वादित्यर्थः ॥ **कारणत्वेनेति** । वलीपलितादिशरीरावस्थया तत्कारणत्वेन कालानुमाने तत्संबन्धानुमान इत्यर्थः । अनुमीयमानं कारणत्वं नियमगर्भम् । तच्चान्वयव्यतिरेकावसेयम् । तथाच कालसंबन्धे सति वलीपलितादिकं तदभावे तदभाव इत्यन्वयव्यतिरेकौ वाच्यौ । तत्र नियमज्ञापकान्वयो न संभवतीत्याह **नित्यं सर्वदेति** । वैधुर्यदशायामपीत्युक्त्या साध्याभाव उक्तः । तथा च यौवनावस्थायां व्यभिचारेण कारणत्वं बाधितमिति भावः ॥ **परमाणावपीति** । कालसंबन्धे सत्यपि वलीपलितादेरभावेनान्वयव्यभिचारादत्रापि कारणत्वं बाधितमित्याशयः । वलीपलितादिशरीरावस्थाकारणत्वेन केवलकालसम्बन्धो नानुमीयते । किं नाम बहुकालसम्बन्ध एव शरीरावस्थाकारणत्वेनानुमीयत इत्याशङ्कते **अथेति** ॥ **सहैवेति** ॥ युगपन्मेलनरूपमित्यर्थः ॥ **क्रियाणामेवेति** । त्रिक्षणावस्थायित्वेन परमाणूनामिव मेलनासम्भवात्पूर्वापरीभावेनैव बहुत्वम् । पूर्वक्रियाणां नाशे क्रियान्तराणामुत्पाद एव बहुत्वमित्यर्थः । अत्रापि बहुकालसम्बन्धस्य वलीपलितादिशरीरावस्थाकारणत्वस्य परमाण्वादौ व्यभिचारेण नियमो न युक्त इति, कारणत्वं बाधितमित्याह ॥ **तत्सम्बन्धस्यापीति** ॥ **नित्यतयेति** । नित्यत्वात्क्रियाणामिव पूर्वापरीभावेन बहुत्वायोगात्तस्मिन्साध्ये बाध इति भावः । वलीपलितादिशरीरावस्थया तस्य यत्किञ्चिद्द्रव्यसम्बन्धोऽनुमीयत इति द्वितीयो न सम्भवतीत्याह **न द्वितीय इति** ॥ **सिद्धसाधनत्वादिति** । पृथिव्यादियत्किञ्चिद्द्रव्यसम्बन्धस्य शरीरे सिद्धत्वादित्यर्थः । सिद्धसाधनत्वं नास्तीति शङ्कते **अथेति** । शरीरावस्थया यत्किञ्चिद्द्रव्यसम्बन्धेऽनुमिते तद् द्रव्यमन्यन्न सम्भवति । अतः परिशेषात्काल एवेत्यङ्गीकार्यमित्याशयः ॥ **परिशेषावधारणेति** । परिशेषं विधाय काल एवेत्यवधारणानुपपत्तेरित्यर्थः । परिशेष एवानुपपन्न इत्याशयः ।

च० — **वलीशब्दः** शारीरावस्थाविशेषवचनः । **पलित**शब्दः केशधावल्यवचनः । **निमित्तानुमानार्थमिति** । परापरादिप्रत्ययानां कालकार्यत्वेन तादृशप्रत्ययनिमित्तभूतकालानुमानार्थमित्यर्थः । **बाधितविषयत्वेनेति** । सत्यपि तस्मिन् कार्यानुत्पत्त्यान्वयव्यभिचारेण तद्धेतुत्वैव बाधितेति भावः । **तत्सम्बन्धस्यापीति** । परमाण्वाद्यवच्छेदेन कालसम्बन्धस्यान्वयव्यभिचारान्न तस्यापि हेतुतेति भावः ।

सु० — **अन्ये तु व्याचक्षते । बहुतरतरणिपरिस्पन्दान्तरितजन्मत्वं परत्वम् । अल्पतरसौरसञ्चारान्तरितजन्मत्वं चापरत्वम् । एकतपनप्रचारविशिष्टत्वं यौगपद्यम् । अनेकतद्विशिष्टत्वमयौगपद्यम् । बहुक्रियाविशिष्टत्वं चिरत्वम् । कतिपयक्रियाविशिष्टत्वं क्षिप्रत्वम् । तत्प्रत्ययैः कालोऽनुमीयते । तरणिपरिस्पन्दा हि पदार्थसार्थे विशिष्टप्रत्ययोत्पत्तौ स्वप्रत्यासत्तिमपेक्षन्ते । स्वरसतोऽप्रत्यासन्नत्वे सति विशिष्टव्यवहारजनकत्वात् । चन्दनसौरभवत् । परंपरासंबन्धिनश्च साक्षात्संबन्धविरहे सति संबन्धित्वात् । पटसंसृष्ट(संबन्धि)नीलिमवत् । अतः पिण्डतपनपरिस्पन्दयोः संयुक्तसंयोगिसमवायात्मनि परंपरासंबन्धे यद्द्रव्यं निमित्तं स काल इति ।**

शे० — श्रीवल्लभोदीरितकालसमर्थनरीतिं दूषयितुं तद्रीतिमुद्भावयति **अन्ये त्विति** ॥ **तरणीति** ।

---

तरणिः=सूर्यः ॥ **पदार्थसार्थ इति** । स्थविरयुवादिशरीरपिण्डसमुदाय इत्यर्थः । अयमाशयः । अनुभूयते तावदन्वयव्यतिरेकाभ्यां तरणिपरिस्पन्दविशेषाणां युवस्थविरशरीरादिपिण्डेषु मासदिवसादिविचित्रबुद्धिजननद्वारेण तत्तदुपहितेषु परत्वादिविशिष्टबुद्धिजनकत्वम् । न च पिण्डैरसंबद्धानां रविस्पन्दानां तत्र बुद्धिजनकत्वं संभवति । अतिप्रसङ्गात् । किन्तु प्रत्यासन्नानामेवेति रविस्पन्दानां पिण्डैः प्रत्यासत्तिसिद्धिः तथा चायं प्रयोगः । तरणिपरिस्पन्दा घटनिष्ठविशिष्टबुद्धिजनकप्रत्यासत्तिमन्तो घटविषयकविशिष्टधीजनकविशेषणत्वाद्धटरूपवदिति । अस्त्वेवं तरणिपरिस्पन्दानां पिण्डैः सह प्रत्यासत्तिः । सा तु स्वभावप्रत्यासत्तिरेवास्त्विति । किं कालेनेत्यत्राप्येतदेवोत्तरं स्वप्रत्यासत्तिमपेक्षन्त इति । स्वभावप्रत्यासत्त्यतिरिक्तप्रत्यासत्तिमित्यर्थः । ननु स्वभावप्रत्यासत्तिमात्रेणैव विशिष्टप्रत्ययजनकत्वनिर्वाहोपपत्तौ किं तदतिरिक्तसम्बन्धेनेत्यतः स्यादप्येवं यदि पिण्डैः परिस्पन्दानां स्वभावप्रत्यासत्तिः स्यात् । न चैवम् । ततश्च स्वभावतोऽप्रत्यासन्नानामेतेषां विशिष्टबुद्धिजनकतायाः स्वभावप्रत्यासत्त्यतिरिक्तप्रत्यासत्तिं विनाऽनुपपत्तेर्नानुपपत्तिरित्याशयेनोक्तप्रतिज्ञायामनुरूपं हेतुमाह **स्वरसत इति** । सम्बन्धान्तरं विना विशिष्टधीजनकत्वाभावे सतीत्यर्थः । इदं च विशेषणं घटवद्भूतलमित्यादौ व्यभिचारवारणार्थम् । अस्त्वेवं स्वाभाविकसम्बन्धातिरिक्तसम्बन्धसिद्धिः तरणिपरिस्पन्दानां पिण्डैः । स च सम्बन्धः साक्षादेव

भविष्यतीति न वक्ष्यमाणरीत्या कालसिद्धिरित्यतः स्यादेवं यदि तरणिपरिस्पन्दानां पिण्डैः साक्षात्सम्बन्ध उपपद्येत । न चैतदस्ति । न तावत्पिण्डसंयोगः परिस्पन्दानां सम्भवति । अद्रव्यत्वात् । नापि समवायः । तरणिसमवेतस्य तस्य पिण्डेन तदयोगात् । अतः परम्परासम्बन्ध एव वाच्य इति, काल-सिद्धिरित्याह **परम्परासम्बन्धिनश्चेति** ॥ **नीलिमवदिति** । नीलद्रव्यवृत्तिनीलिमवदित्यर्थः ॥ **संयुक्तेति** । पिण्डसंयुक्तद्रव्यसंयोगवति तपने समवेतानां परिस्पन्दानां संयुक्तसंयोगिसमवायोऽस्ति सम्बन्धः । अतः संयुक्तवर्तिधर्माणां स्वयं संयुक्तवस्त्वन्तरसङ्क्रामकः कश्चिद्द्रव्यविशेषः स्वीकर्तव्यः । तस्यैव कालसंज्ञेत्यर्थः । स काल इति वक्ष्यमाणरीत्येतरस्य निमित्तत्वासम्भवादिति भावः । अत्र परि-शेषस्य परेण व्युत्पादितत्वेऽपि निरासावसर एव तत्स्पष्टं भविष्यतीत्याशयेन पृथगत्र परिशेषो न प्रदर्शित इति द्रष्टव्यम् ।

स० — **स्वप्रत्यासत्तिमिति** । साक्षात्परम्परया स्वनिरूपितातिरिक्तसंबन्धमपेक्षन्त इत्यर्थः । **स्वरसतोऽप्रत्यासन्नत्वे सतीति** । स्वरूपसम्बन्धेनाप्रत्यासन्नत्वे सतीत्यर्थः । इदं, घटाद्यभाववद्भूतलमित्यादौ, व्यभिचारवारणाय द्रष्टव्यम् । **निमित्तमिति** । घटकमित्यर्थः ।

प० — **बहुतरतरणीति** । यस्य जन्मानन्तरं सूर्यमण्डलगतगमनक्रियारूपपरिस्पन्दाः बहवो-ऽतीताः तद्वत्त्वं पिण्डे परत्वं सूर्यमण्डलगतातीतबहुपरिस्पन्दविशेषणकत्वं पिण्डे परत्वमित्यर्थः । एवमग्रेपि । **सूरेति** । सूर्यशब्दपर्यायः सूरशब्दः । 'सूरसूर्यार्यमादित्ये'त्यमरकोशात् । सौरेति पाठे सूरशब्दात्तस्येद-मित्यण्प्रत्यये रूपम् ॥ **एकेति** । चैत्रमैत्रौ युगपदागतावित्यत्र चैत्रमैत्रागत्योर्यौगपद्यं नाम यस्मिंस्तपन-परिस्पन्दे चैत्रागतिस्तस्मिन्नेकस्मिन्नेव परिस्पन्दे मैत्रस्यागतिश्चेत् तदा एकपरिस्पन्दविशेषणयुक्तत्वमागति-मतोः पिण्डयोर्यौगपद्यमित्यर्थः ॥ **अनेकेति** । यस्मिन्प्रचारे चैत्र आगतः ततोऽन्यस्मिन्परिस्पन्दे मैत्र आगतश्चेदयौगपद्यमित्यर्थः ॥ **तत्प्रत्ययैरिति** । रविबिम्बगतबहुतरपरिस्पन्दविशेषणकपिण्डविशेष्यक-प्रत्ययरूपपरत्वप्रत्ययेन १ अल्पतरतत्संचारविशेषणकपिण्डविशेष्यकप्रत्ययरूपापरत्वप्रत्ययेन २ रवि-मण्डलगतैकक्रियाविशेषणकाऽनेकवस्तुविशेष्यकप्रत्ययरूपयौगपद्यप्रत्ययेन ३ अनेकतद्विशेषणकानेक-विशेष्यकप्रत्ययरूपायौगपद्यप्रत्ययेन ४ रविमण्डलगतबहुक्रियाविशेषणकवस्तुविशेष्यकप्रत्ययरूपचिरत्व-प्रत्ययेन ५ अल्पतक्रियाविशेषणकवस्तुविशेष्यकप्रत्ययरूपाचिरत्वप्रत्ययेन चेत्यर्थः ६ । कथमेतैः काला-नुमानमित्यतो रविबिम्बगतक्रियाणामवनिगतपिण्डविशेष्यकोक्तरूपषड्विधप्रत्ययेषु विशेषणतया उप-नायकप्रत्यासत्तित्वेन कालस्यानुमानमिति भावेनाह **तरणिपरिस्पन्दा हीति** ॥ **पदार्थसार्थ इति** । पदार्थसमूहविशेष्यकस्वविशेषणकप्रत्ययरूपविशिष्टप्रत्ययोत्पत्तावित्यर्थः ॥ **स्वप्रत्यासत्तिमिति** । स्वात्मना

पदार्थैः सह प्रत्यासत्तिं साक्षात्परम्परासाधारणं सम्बन्धमात्रमित्यर्थः ॥ **स्वरसत इति** । दण्ड्यादौ दण्डादेरिव संयोगेन, गुणादेर्गुण्यादिनेव समवायेन, ज्ञानादेर्ज्ञेयादिनेव स्वरूपसम्बन्धेन वेत्यर्थः ॥ **चन्दनसौरभवदिति** । सुरभिचन्दनमिति चाक्षुषप्रत्ययविषयचन्दनविशेषणरूपसौरभवदित्यर्थः । तत्र संस्कारो ज्ञानं वा प्रत्यासत्तिरिति भावः । हेतौ सत्यन्तमात्रोक्तौ घटत्वपटत्वादौ व्यभिचारः । घटत्वपटत्वयोरन्योन्यं तादृशत्वेपि प्रत्यासत्त्यपेक्षाभावात् अतो विशेष्योक्तिः । तावन्मात्रस्य घटादिस्थगुणक्रियादौ व्यभिचारात्सत्यन्तम् । सा च प्रत्यासत्तिः साक्षाच्चेत् कालसिद्धिर्नेति भावेनाह **परम्परासम्बन्धिनश्चेति** । परिस्पन्दा इति प्राक्तनपक्षनिर्देशस्यानुषङ्गः । न केवलं प्रत्यासन्ना इति चार्थः ॥ **पटेति** । कर्दमादिलिप्तपटसंयुक्तकर्दमादिद्रव्यसमवेतनीलिमगुणवदित्यर्थः ॥ **अत इति** । परम्परासम्बन्धरूपप्रत्यासत्तेः प्रमितत्वादित्यर्थः ॥ **पिण्डेति** । भूम्यादिगतपिण्डस्य गगनगततपनपरिस्पन्दस्य चेत्यर्थः ॥ **संयुक्तसंयोगीति** । भूम्यादिस्थपिण्डसंयुक्तं किञ्चिद्द्रव्यं तत्संयोगोपेतं तपनमण्डलं तत्समवायात्मनीत्यर्थः । रविबिम्बसमवेतानां परिस्पन्दानां रविबिम्बस्य भूमिस्थपिण्डस्य च मध्ये तन्तुवत् उभाभ्यां संयुक्तं महद्द्रव्यं किञ्चित्सिध्यति; स काल इत्यर्थः ।

**या० —** स्वप्रत्यासत्तिं स्वनिरूपितातिरिक्तसंबन्धमपेक्षन्त इत्यर्थः ॥ **स्वरसत इति** । स्वभावत इत्यर्थः । इदं च, घटाभाववद्भूतलमित्यादौ, व्यभिचारवारणाय ॥ **निमित्तमिति** । घटकमित्यर्थः ।

---

**श्री० — एकतपनेति** । उभयोरपीति शेषः । सार्थे= समूहे ॥ **स्वरसत इति** । स्वरूपसंबन्धेनेत्यर्थः ।

**च० — अन्ये** श्रीवल्लभप्रभृतयः । **स्वरसतः** निसर्गतः । इदं च घटाभाववद्भूतलमित्यादावनैकान्त्यव्युदासकम् । **निमित्तम्** घटकम् ।

**सु० — एतदप्यसत्** । घटशून्यं भूतलमित्यादिवत्स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययोपपत्तेः । अन्यथा अभावे परापरयौगपद्यादिप्रत्ययानुपपत्तिप्रसङ्गात् । दृश्यते च युगपदुत्पन्नावभावावित्यादिप्रत्ययः । अत्र संबन्धे बाधकाभावान्नैवमिति चेन्न । अन्यसमवेतत्वस्यैव बाधकत्वात् । उपनायकद्रव्यान्तरकल्पनया तदुपपत्तिरिति चेत् । तर्हि भूतलघटाभावयोस्तृतीयसंबन्धकल्पनयोपपत्तौ बाधकाभावात् । स्वारसिकसंबन्धेनैव विशिष्टप्रत्ययोपपत्तौ किमप्रतीयमानसम्बन्धकल्पनया इति चेत् । तर्हि तथैव परापरादिविशिष्टप्रत्ययोत्पत्तौ किमप्रतीयमानद्रव्यकल्पनयेति समानम् । तदिदमुक्तम् तेषां विशिष्टप्रत्ययानां नित्यसिद्धेर्द्रव्यान्तर-

**कल्पानां विना स्वभावादेव सिद्धेः द्रव्यान्तरानुमानावसरो न भवेदिति । तदनेन स्वरमतोऽप्रत्यासन्नत्वे सतीति विशेषणासिद्धिः । विशिष्टव्यवहारजनकत्वमात्रस्य चानैकान्त्यमुक्तं भवति ।**

**शे०** — किमत्र स्वभावतोऽप्रत्यासन्नत्वे सति विशिष्टप्रत्ययजनकत्वं हेतुः किंवा विशिष्टप्रत्ययजनकत्वमात्रमिति विकल्पद्वयं मनसि निधायाद्ये विशेषणासिद्धिरिति भावेन द्वितीयमनैकान्त्येन दूषयति **घटशून्यमिति ॥ विशिष्टेति** । परापरादिविशिष्टप्रत्ययोपपत्तेरित्यर्थः । ननु स्वभावप्रत्यासत्त्या यत्किञ्चिद्विशिष्टप्रत्ययोत्पत्तावपि तस्यात्राहेतुत्वात् । हेतूकृतस्य च विशिष्टप्रत्ययजनकत्वस्य निर्घटं भूतलमित्यादिविशिष्टज्ञानजनकेऽभावान्न तत्रानैकान्त्यमित्यत आह **अन्यथेति** । परापरादिविशिष्टप्रत्ययस्यातिरिक्तसम्बन्धमात्रनिबन्धनत्व इत्यर्थः । तत्राभावेन तरणिपरिस्पन्दानां स्वभावप्रत्यासत्त्यतिरिक्तसम्बन्धाभावादिति भावः । नन्वभावे परापरादिविशिष्टप्रत्यय एव नास्तीति न तदनुपपत्तिर्दोषायेति चेन्न । तत्र तस्य दृष्टतयाऽपलापायोगादन्यथाऽतिप्रसङ्गादित्याह **दृश्यते चेति** ।

अयमत्र समुदायार्थः । तरणिपरिस्पन्दमात्रपक्षीकारेऽभावे विशिष्टप्रत्ययहेतुतरणिपरिस्पन्दांशे बाधः । भावे तद्धेतुपरिस्पन्दानामेव पक्षीकारे चाभावे तद्धेतुपरिस्पन्देष्वेव व्यभिचारः । अभाव इव भावेऽपि स्वभावप्रत्यासत्त्यैव परापरादिप्रत्ययोपपत्तेर्विशिष्टसाध्येन विनाऽप्युक्तहेतूपपत्तेरन्यथासिद्धिश्च । अभावे स्वभावप्रत्यासत्त्यैव तन्निर्वाहः । भावे तु स्वभावप्रत्यासत्त्यन्यप्रत्यासत्त्यैव तन्निर्वाह इति द्विधाकल्पनायाः कल्पकाभावेनायोगाच्चेति ।

ननु न द्विधाकल्पनायां कल्पकाभावः । अभावे सम्बन्धे बाधकसद्भावेन स्वभावप्रत्यासत्त्यैव तन्निर्वाहकल्पनात् । भावे च सम्बन्धे बाधकाभावेन स्वभावप्रत्यासत्त्यन्यप्रत्यासत्त्यैव तन्निर्वाहकल्पनादिति शङ्कते **अत्रेति** । तरणिपरिस्पन्दपिण्डयोरित्यर्थः ॥ **सम्बन्ध इति** । अतिरिक्तसम्बन्ध इत्यर्थः । अभावे च द्रव्ययोरेव संयोग इत्यादिकमेव बाधकमिति भावः । यद्वा न विशिष्टप्रत्ययजनकत्वमात्रं हेतुर्येनाभाववद्भूतलमिति स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययजनके व्यभिचारश्चोद्येत । किं तर्हि स्वभावतोऽप्रत्यासन्नत्वे सति विशिष्टप्रत्ययजनकत्वमेव । न चाघटं भूतलमिति विशिष्टप्रत्ययजनकस्य स्वभावतोऽप्रत्यासन्नत्वमस्तीति विशिष्टहेत्वगमान्न व्यभिचारः । न चैवं व्यभिचाराप्रसक्तावपि तरणिपरिस्पन्दानां युवस्थविरशरीरादिपिण्डैः स्वभावतः प्रत्यासन्नत्वेनाप्रत्यासन्नत्वविरहाद्धेतुविशेषणासिद्धिः स्यादिति वाच्यम् । तरणिपरिस्पन्दा युवादिपिण्डैः स्वभावप्रत्यासत्तिरहिताश्चातिरिक्तसम्बन्धे बाधकाभावादिति लीलावत्युपदर्शितमार्गेण विशेषणसिद्धेः सम्भवादिति शङ्कते **अत्रेति** । सम्बन्ध इत्यस्य पूर्व एवार्थः । **समवेतत्वस्येति** । रविकर्मणः पिण्डसमवेतत्वे तत्र चलतीति धीप्रसङ्गादिति भावः ॥ **बाधकत्वादिति** ।

तथा चाभाव इव भावेऽप्यतिरिक्तसम्बन्धे बाधकसद्भावेनोभयत्रापि स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययोत्पादप्रसक्त्या क्वचित्स्वभावप्रत्यासत्त्या क्वचिच्च स्वभावप्रत्यासत्त्यन्यप्रत्यासत्त्या विशिष्टप्रत्ययनिर्वाह इति वैलक्षण्यकल्पनाऽनवकाशः । अतिरिक्तसम्बन्धे बाधकाभावासिद्ध्या तेन स्वरसप्रत्यासत्तिराहित्यासिद्धेर्हेतुविशेषणासिद्धिश्चेत्यभिप्रायः ।

न तरणिपरिस्पन्दानां पिण्डेन साक्षात्सम्बन्धं ब्रूमः । येनान्यसमवेतत्वं बाधकं स्यात् । किं तु परम्परासम्बन्ध एव । अस्ति च संयुक्तसंयोगिसमवायरूपः परम्परासम्बन्धः पिण्डपरिस्पन्दयोः । पिण्डसंयुक्तकालसंयोगवति तपने परिस्पन्दानां समवेतत्वादतः स्वसंयुक्तवर्तिधर्माणां स्वसंयुक्तवस्त्वन्तरे सङ्क्रामकद्रव्यान्तरकल्पनयाऽन्यसमवेतत्वोपपत्तेरत्रस्त्येव बाधकाभाव इति नोक्तदोष इति शङ्कते **उपनायकेति** । तथा चातिरिक्तसम्बन्धेनैव विशिष्टप्रत्ययनिर्वाह इति भावः । तर्हि भूतलाभावयोरपि न स्वभावप्रत्यासत्त्या विशिष्टप्रत्ययनिर्वाहोऽभ्युपगमनीयः स्यात् । स ह्यतिरिक्तसम्बन्धे बाधकादेव कल्पनीयः । न चातिरिक्तसम्बन्धे बाधकं तत्रास्ति । अद्रव्यत्वादिना संयोगसमवाययोरसम्भवेऽपि तदन्यस्य सम्बन्धस्योपपत्त्या स्वभावप्रत्यासत्तेरन्येन तेनैव विशिष्टप्रत्ययनिर्वाहस्योपपन्नत्वात् । तथा च नोक्तरीत्या वैषम्यकल्पनाऽवकाश इति भावेनाह **तर्हीति** । स्यादेतदेवं यदि सम्बन्धान्तरकल्पना तत्रोपपद्यते । अप्रतीयमानसम्बन्धान्तरकल्पनाया अन्यथाऽनुपपत्तिमात्रकारणत्वात् । न च कल्पिकान्यथाऽनुपपत्तिरत्रास्ति । स्वारसिकसम्बन्धेनाघटं भूतलमित्यादिविशिष्टप्रत्ययनिर्वाहसम्भवात्तत्कथं साम्यमित्याशङ्कते **स्वारसिकेति** । तर्हि तरणिपरिस्पन्दानामपि पिण्डेन सम्बन्धोपनायकद्रव्यान्तरकल्पनाऽपि न स्यात् । अप्रतीयमानद्रव्यान्तरकल्पनाया अपि विशिष्टप्रत्ययान्यथाऽनुपपत्तिमात्रनिबन्धनत्वात् । न चात्र विशिष्टप्रत्ययान्यथाऽनुपपत्तिरस्ति । तरणिपरिस्पन्दानां पिण्डेन स्वभावप्रत्यासत्त्यैव परापरादिविशिष्टप्रत्ययनिर्वाहसम्भवात् । तथा चाभाव इव भावेऽपि स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययनिर्वाहान्नोक्तरीत्या वैषम्यसिद्धिरित्याह **तर्हीति** ॥ **तथैवेति** । स्वभावप्रत्यासत्त्यैवेत्यर्थः । कृतस्य व्युत्पादनस्योद्ग्राह्यत्वशङ्कापरिहारायाह **तदिदमिति** ।

स० — **विशिष्टप्रत्ययोपपत्तेरिति** । तथाचाप्रयोजकतेति भावः । **अत्र संबन्ध इति** । अत्र पिण्डतपनपरिस्पन्दयोरित्यर्थः । **तृतीयसम्बन्धकल्पनेति** । तथा च तत्रापि विशिष्टप्रत्ययार्थं स्वरूपसम्बन्धो न कल्पनीय इति भावः ।

प० — **अत्रेति** । भूम्यादिस्थपिण्डरविबिम्बक्रिययोरित्यर्थः । परोक्तानुमानस्य किं दूषणमुक्तं स्यादित्यत आह **तदनेनेति** । स्वभावसम्बन्धकथनेनेत्यर्थः ॥ **अनैकान्त्यमुक्तमिति** । भूतलनिष्ठघटाभावादौ ।

या०— **अत्रेति** । पिण्डे तपनपरिस्पन्दनिरूपितसंबन्ध इत्यर्थः ॥ **तृतीयसंबन्धेति** । तथाऽपि तत्रापि विशिष्टप्रत्ययार्थं स्वरूपसंबन्धो न कल्पनीय इति भावः ।

श्री०— **अन्यसमवेतत्वस्यैवेति** । परिस्पन्दस्य तपनसमवेतत्वेन पिण्डसमवेतत्वाभावरूपबाधकात्पिण्डतपनपरिस्पन्दयोरतिरिक्तसंबन्धो नास्तीत्यर्थः । द्रव्यान्तरं=कालः ॥ **तदुपपत्तिरिति** । पिण्डेऽन्यसंबद्धस्यापि परिस्पन्दस्योपपत्तिरित्यर्थः । तर्हि त्यज्यते तद्विशेषणमिति तत्राह **विशिष्टेति** ! अनैकान्त्यम् अभाव इति शेषः ।

सु०— **ननु विषम उपन्यासः । भूतलाभावयोरस्ति सान्निध्यम् । तेन संबन्धाभावेऽपि भविष्यति विशिष्टव्यवहारः । दर्शनस्य दुरपह्नवत्वात् । सम्बन्धान्तरकल्पनस्य च व्यर्थत्वात् । न च तरणिपरिस्पन्दानां पिण्डसान्निध्यमस्ति । ततो भवितव्यं मध्ये द्रव्यान्तरेणेति । मैवम् । विनाऽपि सान्निध्येन घटज्ञानमिति विशिष्टप्रत्ययदर्शनात् ।**

**किञ्चाभावस्यापि न भूतलसान्निध्यं परपक्षे किमपि पश्यामः । अस्तु वा तपनपरिस्पन्दानां पिण्डं प्रत्युपनायकं द्रव्यान्तरम् । तच्च पृथिव्यादिकं किं न स्यात् । तपनपिण्डाभ्यामसंसर्गादिति चेन्न । एकैकस्याव्यापकत्वेऽपि बहूनां संयुक्तसंयोगभूयस्त्वेन क्रियोपनायकत्वोपपत्तेः । न च तरणिपिण्डान्तराले तानि न सन्त्यनुपलम्भादिति वाच्यम् । सूक्ष्माणां कल्पनीयत्वात् । न च विनिगमनायां कारणाभावः । संशयेऽपि परिशेषावधारणानुपपत्तेः । धर्मिकल्पनातो धर्मकल्पनस्य लघीयस्त्वात् । आकाशो वा किं न स्यात् । न स्यात् । विशेषगुणवत्त्वात्पृथिव्यादिवदिति चेन्न । विशेषगुणवतोऽपि नीलद्रव्यस्य पटे नीलिमोपसंक्रामकत्वदर्शनात् । सूर्यगत्युपनायकत्वं च द्रव्यस्वरूपं वा अतीन्द्रियशक्तिर्वा सहकारिशक्तिर्वा । नाद्यः द्रव्यमात्रे प्रसङ्गात् । न द्वितीयः, अनभ्युपगमात् । तृतीये(ऽपि) किं तद्व्यापकत्वं वा, विशेषगुणविरहो वेति वा(विवे)क्तव्यम् ।**

शे०— ननु भूतलघटाभावयोः स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययोपपत्तेर्नाप्रतीयमानसम्बन्धस्याकल्पनीयत्वमभिमतम् । येन तथा सति तयैव प्रत्यासत्त्या परत्वादिविशिष्टप्रत्ययस्याप्युपपत्तेर्नाप्रतीयमानद्रव्यान्तरकल्पनमित्युक्तदोषावकाशः स्यात् । किन्त्वभावभूतलयोरसत्यपि सम्बन्धे निमित्तान्तरादेव तत्र विशिष्टप्रत्यय इत्येव । तथा च तादृशनिमित्तभावाभावाभ्यां वैषम्यान्न प्रतिबन्दीग्रहो युक्त इति शङ्कते **नन्विति** । ननु भूतलाभावयोर्विशिष्टप्रत्यय एव नास्तीति वा सतोऽपि तृतीयसम्बन्धनिमित्तकत्वमेवेति वा वैषम्यस्य शङ्कितुं शक्यत्वात् तथा वैषम्यमनाशङ्क्योक्तरीत्या वैषम्यशङ्कायां नियामकभाव इत्यत

आद्यप्रकारासम्भवे हेतुमाह **दर्शनस्येति** । भूतलाभावयोर्विशिष्टप्रत्ययस्य दृष्टत्वान्न तदपलापो युक्तः । अन्यथा सकलव्यवस्थोच्छेदप्रसक्तेरिति भावः । द्वितीयप्रकारासम्भवेऽपि तमाह **सम्बन्धान्तरेति** । क्लृप्तेन सान्निध्येनैव विशिष्टप्रत्ययोपपत्तेर्न सम्बन्धान्तरकल्पनस्य विशिष्टप्रत्ययोपपत्तिः प्रयोजनं सम्भवति । न च तदतिरिक्तं किञ्चित्सम्बन्धान्तरकल्पनस्य प्रयोजनमस्तीति व्यर्थत्वान्न तत्कल्पनमपि युक्तमिति भावः । नन्वेवं भूतलाभावयोरिव स्वभावप्रत्यासत्त्या परत्वादिविशिष्टप्रत्ययानिर्वाहेऽपि तद्वदेव सान्निध्येन तद्वैशिष्ट्यप्रत्ययस्याप्युपपत्तेर्न वैषम्यमिति युक्त एव प्रतिबन्दीग्रह इत्यतः स्यादेवं यदि तरणिपरिस्पन्दानां स्थविरादिपिण्डेन भूतलाभावयोरिव सान्निध्यं स्यात् । न चैतदस्तीति वैषम्यमेवेत्याह **न च तरणीति** ॥ **विनाऽपीति** । आत्मसमवेतत्वाद्घटज्ञानस्य, तरणिपरिस्पन्दस्य पिण्डेनेव, न घटेन सान्निध्यमस्तीत्यर्थः ।

एवमङ्गीकृत्य घटाभावभूतलयोः सान्निध्यमुदाहरणस्यानादरणीयत्वाद्भूतलाभावयोः सान्निध्येन विशिष्टप्रत्यनिर्वाहेऽपि घटतज्ज्ञानयोरसान्निध्येन तत्र स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययनिर्वाहस्य वाच्यत्वात्तद्वदेव तरणिपरिस्पन्दानां पिण्डेन स्वभावप्रत्यासत्त्यैव विशिष्टप्रत्ययोपपत्तेर्न द्रव्यान्तरकल्पनं युक्तमित्यभिहितम् । इदानीं तु घटाभावभूतलयोरपि न सान्निध्यमिति न तेन तत्र विशिष्टप्रत्ययनिर्वाह इत्यगत्या तत्रापि स्वभावप्रत्यासत्तिरेव विशिष्टप्रत्ययनिर्वाहकतयेष्टव्या । तथा चाविशेषाद्युक्त एव प्रतिबन्दीग्रह इत्याशयेनाह **किञ्चेति** ॥ **सान्निध्यमिति** । सामीप्यापरपर्यायसान्निध्यस्य वक्ष्यमाणरीत्याऽतिरिक्तसम्बन्धघटितत्वात्स्वातिरिक्तसम्बन्धाभावे न भूतलाभावयोः सान्निध्यमपीति भावः ॥ **उपनायकमिति** । स्वसंयुक्तवर्तिधर्माणां स्वसंयुक्तवस्त्वन्तरे सङ्क्रामकमित्यर्थः । अत्रास्तु वा तपनपरिस्पन्दानां पिण्डं प्रत्युपनायकं द्रव्यम् । तच्च न द्रव्यान्तरं नवमं द्रव्यम् । पृथिव्यादिभिरेवास्यार्थस्य सम्पादयितुं शक्यत्वादिति योजना ॥ **पृथिव्यादिकमिति** । पृथिव्यादिचतुष्टयमित्यर्थः ॥ **तपनेति** । पृथिव्यादिचतुष्टयस्येति शेषः । अव्यापकत्वादिति भावः ॥ **न सन्तीति** । मध्येऽसतां च न सम्बन्धघटकत्वमिति भावः । असत्त्वमेव कुतः सिद्धमित्यत उक्तम् **अनुपलम्भादिति** । नानुपलम्भमात्रमभावनिश्चायकमतिप्रसङ्गात्किन्तु योग्यानुपलम्भ एव । तथा च तन मध्ये योग्यद्रव्याभावसिद्धावपि परमाण्वादिरूपसूक्ष्मद्रव्याणां मध्ये सत्त्वेऽप्यनुपलम्भोपपत्त्याऽनुपलम्भेन मध्ये तदभावनिश्चयासम्भवेन मध्ये स्थितानां तेषामेवोपसङ्क्रामकत्वमस्त्वित्याशयेनाह **सूक्ष्माणामिति** ॥ **विनिगमनायामिति** । सूक्ष्माणामेवोपसङ्क्रामकत्वं न द्रव्यान्तरस्येति विनिगमनायामित्यर्थः । द्रव्यान्तरापेक्षया सूक्ष्माणामगृह्यमाणविशेषत्वादिति भावः । अगृह्यमाणविशेषतयाऽन्यतरपक्षानवधारणेऽपि नास्माकं काचित्क्षतिरित्याह **संशयेऽपीति** । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु न विनिगमनायां कारणाभाव इत्याह **धर्मीति** ॥ **आकाशो वेति** । भवत्वाकाशस्तरणिपिण्डसम्बन्धघटकस्तस्य सर्वगतत्वेनोभयसंसर्गवत्तयोक्तसर्वानुपपत्तिरहितत्वादिति भावः । व्योम-

शिवाचार्यमतमाशङ्कते **विशेषगुणवत्त्वादिति** । आत्मनोऽपि पक्षतुल्यत्वान्न तत्र व्यभिचार इति भावः । किमत्र यद्विशेषगुणवत्तन्नोपनायकमिति सामान्यव्याप्तिरभिमता किंवा यद्विशेषगुणवत्तत्सूर्यगत्युपनायकं नेति विशेषव्याप्तिरिति विकल्पं मनसि निधायाद्यं व्यभिचारेण दूषयति **विशेषगुणवतोऽपीति** । द्वितीयेऽपि विशेषगुणवतोऽपि सूर्यगत्युपनायकत्वे बाधकाभावादप्रयोजकत्वम् । उपनायकत्वं हि परम्परासम्बन्धघटकत्वम् । तत्र चोभयसम्बन्धित्वमेव प्रयोजकं न तु विशेषगुणशून्यत्वम् । तच्चाकाशेऽप्यस्तीति युक्तं तस्योपनायकत्वमिति भावेन सूर्यगत्युपनायकत्वं विवेचयति **सूर्येति** ॥ **सहकारिशक्तिर्वेति** । सहकारिभूतः ऐन्द्रियको विशेषधर्म इत्यर्थः ॥ **प्रसङ्गादिति** । स्वरूपमात्रस्य द्रव्यमात्रे सत्त्वादिति भावः ॥ **अनभ्युपगमादिति** । अभ्युपगमे चापसिद्धान्तादिति भावः ।

स०— **विनापि साध्यसान्निध्येनेति** । स्वरूपसम्बन्धेनैवेति शेषः । **सान्निध्यमिति** । वक्ष्यमाणरीत्या सामीप्यापरपर्यायस्य सान्निध्यस्यातिरिक्तसम्बन्धघटितत्वादिति भावः । किं विशेषगुणवतः अन्यधर्मस्यान्यत्रोपसंक्रामकत्वमनुपपन्नमित्यभिप्रायः किं वा सूर्यगत्युपनायकत्वमेव न सम्भवतीति । नाद्य इत्याह **विशेषगुणवतोऽपीति** । नान्त्य इत्याह **सूर्यगत्युपनायकत्वं चेति** । अन्ये तु विशेषगुणवत्त्वादित्यत्राप्रयोजकतां वक्तुं साध्यप्रविष्टसूर्यगत्युपनायकत्वं विवेचयति सूर्यगत्युपनायकत्वं चेतीत्याहुः । **सहकारिशक्तिर्वेति** । सहकारिण उपनायकद्रव्यस्य शक्तिः सामर्थ्यं उपनायकताऽवच्छेदकधर्म इति यावत् ।

प०— **विशिष्टप्रत्ययदर्शनादिति** । घटविशेषणकज्ञानविशेष्यकप्रत्ययेत्यर्थः ॥ **परपक्षे किमपि न पश्याम इति** । सामीप्यशब्दितसान्निध्यस्य संयोगादिसंबंधहेतुकत्वात् । सिद्धांते भूतलाभावयोः संयोगांगीकारेण तत्संभवेपि परपक्षे तदभावादिति भावः ॥ **क्रियोपनायकत्वेति** । अन्यगतक्रियाणामन्यत्रोपसंक्रामकत्वोपपत्तेरित्यर्थः ॥ **संशय इति** । सूक्ष्मद्रव्याणि मध्ये सन्ति, अथानुपलंभान्न संतिवेति संशये सति कालाख्यापूर्वद्रव्यपरिशेषनिश्चयायोगादित्यर्थः ॥ **धर्मकल्पनस्येति** । क्लृप्तद्रव्येष्वेव क्रियोपनायकत्वरूपधर्मकल्पनस्येत्यर्थः ॥ **विशेषगुणवत्त्वादिति** । आकाशो नोपसंक्रामक इति प्रतिज्ञा ध्येया । गुणोपसंक्रामकत्वोपलंभेपि क्रियोपसंक्रामकत्वं विशेषगुणवतो नोपलब्धमित्यतोऽप्रयोजकोयं विशेषगुणवत्त्वहेतुः क्रियोपनायकत्वाभावे इति वक्तुं साध्यप्रविष्टं सूर्यगत्युपनायकत्वं विकल्प्य निराह **सूर्यगत्युपनायकत्वं चेति** । उपनायकत्वप्रयोजकत्वं च किमित्यर्थः । व्यापकत्वस्य प्रयोजकतायां इत्यग्रे व्यवहारात् ॥ **व्यापकत्वं वेति** ॥ सकलमूर्तद्रव्यसंयोगित्वरूपं विभुत्वमित्यर्थः ।

**या०— विनापि साध्यसान्निध्येनेति** । स्वरूपसंबन्धेनैवेति शेषः ॥ **सान्निध्यमिति** । सामीप्यापरपर्यायस्य सान्निध्यस्य वक्ष्यमाणरीत्याऽतिरिक्तसंबन्धघटितत्वादिति भावः ॥ **विशेषगुणवतोऽपीति** । तथा च यद्विशेषगुणवत् तन्नान्यत्रान्यधर्मोपनायकमिति सामान्यव्याप्तिरनुपपन्नेति भावः । आकाशो न पिण्डे सूर्यगत्युपनायको विशेषगुणवत्त्वादित्यत्राप्रयोजकतामपि वक्तुं साध्यप्रविष्टं सूर्यगत्युपनायकत्वं विवेचयति **सूर्यगत्युपनायकत्वमिति** ।

**श्री०**—सान्निध्याभावस्थले विशिष्टव्यवहारनिर्वाहाय मध्ये किञ्चिद् द्रव्यान्तरकल्पनेऽतिप्रसङ्गमाह **विनाऽपीति** । घटस्य बहिष्ठत्वेन ज्ञानस्य चात्मगतत्वेन तयोः सान्निध्याभावाद्घटज्ञानमिति विशिष्टप्रत्ययदर्शनाच्चान्यसमवेतज्ञानस्य घटस्य च विशिष्टप्रत्ययनिर्वाहाय तत्रापि मध्ये किञ्चिद् द्रव्यान्तरं कल्पनीयं स्यादित्यर्थः ॥ **एकैकस्येति** । पृथिव्यप्तेजोवायूनां मध्ये एकैकस्येत्यर्थः ॥ **बहूनामिति** । पिण्डसंबद्धा पृथिवी तत्संबद्धा बहवः परमाणवो मिलित्वा पृथिवीमारभ्य तपनपर्यन्तं व्याप्ताः सन्तीत्येवं संयुक्तसंयोगानां भूयस्त्वेनेत्यर्थः । **तानि** बहूनि क्रियोपनायकद्रव्याणि । **सूक्ष्माणां** परमाणूनां ॥ **विनिगमनायामिति** । पृथिव्यादिकमेवोपनायकमित्यत्र कारणाभावात्काल एव किं न स्यादिति भावः ॥ **परिशेषेति** । काल एवेत्यवधारणेत्यर्थः ॥ **धर्मीति** । कालरूपाप्रसिद्धद्रव्यकल्पनापेक्षया, सिद्धस्य पृथिव्यादेरेवोपनायकत्वरूपधर्मकल्पने लाघवमित्यर्थः ।

---

**च० — विनापि सान्निध्येनेति** । स्वरूपसंबन्धेनेति पूरणीयम् ॥ **घटज्ञानमिति** । घटस्य भूतलादिनिष्ठत्वात् । ज्ञानस्य च मतभेदेनात्माऽन्तःकरणनिष्ठत्वादिति भावः ।

**सु०— वयं तु ब्रूमः । व्यापकत्वमेव तदिति । अन्यथा मनसोऽपि तत्प्रसङ्गात् । व्यापकत्वस्य प्रयोजकतायामात्मनोऽपि तत्प्रसङ्ग इति चेन्न । तद्व्यापकत्वाभावस्य वक्ष्यमाणत्वात् । व्यापकत्वेऽप्यनिष्टाभावात् । क्रियोपनायकत्वं खल्वान्तरालिकस्य द्रव्यस्य नोभयसंयोगातिरिक्तं किञ्चित् । तदेकस्येवानेकेषामपि समानम् । यद्याकाशं(:) स्वसंबन्धेनान्यगतं धर्मम् अन्यत्र संक्रामयेत्, तदा सर्वं सर्वत्र संक्रामयेत् अविशेषादिति चेन्न । नियतोपसंक्रामकत्वस्यैव कल्पनीयत्वात् । गुर्वी हि धर्ममात्रकल्पनतो धर्मिकल्पना । अन्यथा कालेऽपि समानः प्रसङ्गः ।**

**शे०**— ननु विनिगमनायां कारणाभावादुभयमपि प्रयोजकमित्युच्यते । ततश्च नाकाशस्योपनायकत्वं सम्भवति । तत्र सत्यपि व्यापकत्वे विशेषगुणविरहाभावादित्यत आह **वयं त्विति** । उभयोरपि प्रयोजकत्वे गौरवापत्तेरिति भावः । अस्तु तर्हि विशेषगुणविरह एव तत्र प्रयोजको लाघवस्यैवमप्यनपायादित्यत आह **अन्यथेति** । **तत्प्रसङ्गात्** उपनायकत्वप्रसङ्गादित्यर्थः । विशेषगुणरहितस्य

तत्राप्यविशिष्टत्वादिति भावः । तर्हि व्यापकत्वमपि न प्रयोजकमिति प्रसङ्गतौल्यादिति कथमाकाशस्यो-॥पनायकत्वमिति शङ्कते **व्यापकत्वस्येति** । आत्मनोऽपि व्यापकत्वादिति भावः । भवेदेवं यदि व्यापकत्वस्य प्रयोजकतायामतिप्रसङ्गः स्यात् । न चैतदस्ति । आत्मनो व्यापकत्वाभावस्योत्क्रान्तिगत्यागतीनामित्यत्र वक्ष्यमाणत्वेन तदप्रसङ्गात् । ततश्च व्यापकत्वस्य प्रयोजकत्वनिश्चयोपपत्तेर्युक्तमाकाशस्योपनायकत्वमित्याशयेनाह **तद्व्यापकत्वाभावस्येति** । अस्तु वाऽऽत्मनो व्यापकत्वम् । न चैवं तस्याप्युपनायकत्वप्रसङ्गः । तदङ्गीकारेऽप्यनिष्टाभावादित्याह **व्यापकत्वेऽपीति** । नन्वात्मनामनेकत्वात्कथमुपनायकत्वमित्यत आह **क्रियोपनायकत्वमिति** । तपनपरिस्पन्दरूपक्रियोपनायकत्वमित्यर्थः ॥ **उभयसंयोगेति** । तपनपिण्डसंयोगेत्यर्थः । यद्याकाशमित्युपलक्षणम् । यद्यात्मा चेत्यपि द्रष्टव्यम् ॥ **नियतेति** । सूर्यगतिमात्रोपनायकत्वस्येत्यर्थः ॥ **अन्यथेति** । नियतोपसङ्क्रामकत्वकल्पनयाऽतिप्रसङ्गापरिहार इत्यर्थः । **प्रसङ्ग इति** । यदि कालः स्वसम्बन्धेनान्यगतं धर्ममन्यत्र सङ्क्रामयेत्तदा सर्वं सर्वत्र सङ्क्रामयेदविशेषादिति समानः प्रसङ्ग इत्यर्थः ।

स०— **व्यापकत्वमेव तदिति** । तथा च विशेषगुणराहित्यस्योपनायकतायामप्रयोजकत्वे विशेषगुणवत्त्वं नानुपनायकत्वे प्रयोजकमिति भावः । **प्रयोजकतायामिति** । अवच्छेदकतायामित्यर्थः । **तद्व्यापकताभावस्येति** । आत्मनो व्यापकत्वाभावस्य 'उत्क्रान्तिगत्यागतीनामि'त्यत्र वक्ष्यमाणत्वादित्यर्थः । अस्तु वाऽऽत्मनो व्यापकत्वम् । न चैवं तस्याप्युनायकत्वापत्तिरिति वाच्यम् । आकाशवदात्मनोप्युपनायकत्वाङ्गीकारेऽनिष्टाभावादित्याह **व्यापकत्वेऽपीति** ।

प०—**अन्यथेति** । विशेषगुणरहितस्यैवोपनायकत्वतन्त्रत्व इत्यर्थः ॥ **तद्व्यापकताऽभावस्येति** । आत्मनो व्यापकत्वाभावस्य द्वितीये 'उत्क्रांतिगत्यागतीनामि'त्यत्र वक्ष्यमाणत्वादित्यर्थः । व्यापकत्वेंगीकृतेपि नानिष्ट इत्याह **व्यापकत्वेऽपीति** । आत्मन इत्यनुषंगः । आकाशवदात्मनोपि, गत्युपनायकत्वप्रसंग इत्यतो नैषोऽनिष्ट इत्याह **क्रियेति** । न चात्मनोऽनेकत्वाद्विनिगमनाभावात् अनेकेषामुपनायकत्वं स्यादित्यतो नैतदप्यनिष्टमित्याह **अनेकेषामिति** । आत्माकाशपृथिव्यादीनामितिवाऽर्थः ।

या०— **व्यापकत्वमेव तदिति** । तथा च विशेषगुणराहित्यस्योपनायकतायामप्रयोजकत्वे विशेषगुणवत्त्वं नानुपनायकत्वे प्रयोजकमिति भावः ॥ **वक्ष्यमाणत्वादिति** । उत्क्रान्तिगत्यागतीनामित्यत्र सूत्रकारेणेति शेषः ॥ **उभयसंयोगेति** । पिण्डतपनसंयोगातिरिक्तमित्यर्थः ॥ **अनेकेषामिति** । तथा च व्यापकत्ववतामाकाशदिशां सूर्यक्रियोपनायकत्वं यत्प्रसक्तं तन्नानिष्टमिति भावः । **नियतोपसंक्रामकत्वस्यैवेति** । सूर्यगतिमात्रोपनायकत्वस्येत्यर्थः ।

**श्री०— तदिति ।** उपनायकतावच्छेदकमित्यर्थः । तथा चाकाशस्योपनायकत्वसिद्धिरिति भावः ॥ **अन्यथेति ।** व्यापकत्वं नोपनायकताऽवच्छेदकं किन्तु विशेषगुणविरह एवेत्युच्यमान इत्यर्थः ॥ **मनसोऽपीति ।** तस्य विशेषगुणरहितत्वादिति भावः । तत्प्रसङ्गात्=उपनायकत्वप्रसङ्गात् । **अनेकेषामपि समानमिति ।** तथा चात्माकाशयोरुभयोरपि पिण्डतपनसंयुक्तत्वादुपनायकत्वं स्यादिति भावः । कुत इत्यत आह **गुर्वी हीति ।** प्रसिद्धस्याकाशस्योपनायकत्वरूपधर्मकल्पनापेक्षयाऽप्रसिद्धकालरूपधर्मिकल्पना गुरुभूतेत्यर्थः ।

**सु०— तत्सिद्ध्यसिद्धिभ्यामनवसरदुःस्थत्वमिति चेन्न । भावानवबोधात् । विशिष्टप्रत्ययदर्शनानन्तरं हि बहवः पक्षाः प्राप्नुवन्ति । किमयं स्वरसंबन्धनिबन्धनः किंवा अतिरिक्तसंबन्धाधीन इति । द्वितीयेऽपि किं साक्षात्संबन्धोऽत्र निमित्तमुत द्रव्यान्तरकृत इति । उत्तरत्रापि तद्द्रव्यं प्रसिद्धेष्वन्यतमं वा भवत्वन्यद्वेति । सर्वत्र बाधकानि पर्यालोचयन्प्रसिद्धद्रव्येषु यद्बाधकं पश्येत्तदप्रसिद्धेऽपि कल्प्यमाने कथं नानुसन्दध्यात् । अनुसन्दधानश्च तत्स्वाभाव्येन परिहारं चिन्तयन्कल्पनागौरवव्यसनमपहाय लघीयांसमेव पक्षं न कथं (वा) रोचयत इत्यस्यार्थस्य विवक्षितत्वात्। पर(प्र)सिद्धत्वेन प्रसङ्गस्य न दोष इत्यस्याप्ययमेवाभिप्रायः।**

---

**शे०—** ननु च यत्र स्वसंयुक्तसमवेतस्य परिस्पन्दस्य स्वसंयुक्तेऽन्यस्मिन्सङ्क्रामकत्वं तत्र स्वसंयुक्तसमवेतधर्माणां स्वसंयुक्तेऽन्यस्मिन्संक्रामकत्वमिति प्रसङ्गमूलभूतव्याप्तेर्दृष्टान्ताभावेन विशिष्यासम्भवादविशेषलक्षणैव व्याप्तिस्तन्मूलतया वाच्या । न च साऽपि सम्भवति । कालसिद्धौ तस्य धर्मिग्राहकमानेन नियतपरधर्मोपसंक्रामकत्वेनैव सिद्ध्या स्वसंयुक्तसमवेतपरिस्पन्दोपसंक्रामकत्वस्य प्रामाणिकत्वेन स्वसंयुक्तसमवेतसकलधर्मोपसंक्रामकत्वस्य च तेनासिद्ध्याऽप्रामाणिकत्वेन प्रामाणिकत्वाप्रामाणिकत्वाभ्यां वैलक्षण्येनाविशेषासिद्धेः । तथा च प्रसङ्गमूलभूतव्याप्तिशैथिल्ये नोक्तप्रसङ्गस्य कालेऽवसरोऽस्ति । अथ कालासिद्धावुक्तप्रसङ्गोऽभिधीयतेऽतो नाविशेषानुपपत्तिः । न । तथा सति प्रसङ्गस्याश्रयासिद्धिप्रसक्त्याऽनवसरप्रसक्तेः । तत्कथं कालेऽप्युक्तप्रसङ्गस्य समीकरणमिति भावेन शङ्कते **तत्सिद्ध्यसिद्धिभ्यामिति ।** यद्यप्यसिद्धिदशायां प्रसङ्गस्याश्रयासिद्धेः सिद्धिदशायां च बाधितत्वादिति किरणावल्यां तस्यासिद्धावाश्रयासिद्धेः सिद्धौ वा नियतपरधर्मोपसंक्रामकत्वेनैव सिद्ध्या बाधादिति लीलावत्यां चोपाधिसम्बन्धोपनायकत्वेनैव कालसिद्धेस्तत्पक्षीकारेण तद्विपर्ययप्रसञ्जने धर्मिग्राहकप्रमाणबाध एव स्यात् । तदसिद्धावाश्रयासिद्धेः । इत्येतद्वाक्यार्थानुवादपरपरःसहस्रानेकवेदान्तग्रन्थेषु च कालसिद्धौ धर्मिग्राहकप्रमाणबाध एवोक्तः । तथाऽपि बाधस्य प्रसङ्गेऽनुकूलत्वेन तथातात्पर्यस्य वर्णयितुमशक्यत्वात् अन्यथातात्पर्यमुपवर्णितम् । अत एव

लीलावतीवर्धमानकृता यद्यपि बाधस्तर्केऽनुकूल एवेत्याशङ्क्यैवमेव तात्पर्यमुपवर्णितमिति ध्येयम् । वस्तुतस्तु प्रसङ्गस्य विपर्यये पर्यवसानहीनस्य तदाभासत्वात् । न च कालः स्वसंयुक्तसर्वधर्माणां सर्वत्र संक्रामकः । तस्मान्न स्वसंयुक्तपरिस्पन्दस्य पिण्डे उपसंक्रामक इति विपर्यये पर्यवसानं वाच्यम् । न च तद्वक्तुं शक्यम् । सूर्यपरिस्पन्दोपनायकत्वस्य धर्मिग्राहकमानसिद्धत्वेन तद्विपर्ययस्य तद्बाधितत्वात् । विपर्ययपर्यवसाने बाधस्य च तर्केऽपि दूषणत्वस्य स्वपरसम्मतत्वात्तदभिप्रायकमेवेदं बाधाभिधानम् । ततश्च सिद्धिपक्षे सूर्यगत्युपसंक्रामकत्वस्य धर्मिग्राहकमानसिद्धत्वान्न सूर्यगत्युपसंक्रामक इति विपर्ययः प्रमाणबाधित इत्येव तात्पर्यमुपवर्णनीयम् । लीलावतीवर्धमानस्य च तदुक्तेरापाद्यस्य प्रमाणबाधितताया: तर्केऽनुकूलत्वाभिप्रायकत्वेन स्थूलदृश्यत्वान्न कश्चिद्विरोध इति दिक् । न वयं कालविषयकपरार्थानुमाने उक्तप्रसङ्गपराहतिं ब्रूमो येन कालः सिद्धो न वेति विकल्प्य दूषणाभिधानं परकीयं प्रवर्तेत । किन्तु कालविषयस्वार्थानुमान एव । तत्र तर्कितं कालमादायोक्तप्रसङ्गपराहत्यादिप्रतिसन्धानदशायां स्वार्थानुमानासम्भवस्य न्यायप्राप्तत्वादित्याशयवान्समाधत्ते **नेति** ॥ **प्रसिद्धद्रव्येष्विति** । आकाशादिष्वित्यर्थः । **यद्बाधकमिति** । यद्याकाश आत्मा वा स्वसम्बन्धेनान्यगतं धर्ममन्यत्र संक्रामयेत्तदा सर्वं सर्वत्र संक्रामयेदविशेषादित्येवंरूपमित्यर्थः ॥ **तत्स्वाभाव्येनेति** । अप्रसिद्धं कालाख्यं द्रव्यं सिद्ध्यद्धर्मिग्राहकमानेन अन्यगतक्रियामात्रोपनायकस्वभाववत्त्वैव सिध्यतीत्यतो नातिप्रसङ्ग इति परिहारमित्यर्थः ॥ **लघीयांसमिति** । प्रसिद्धद्रव्ये आकाशादावन्यगतक्रियामात्रोपनायकत्वस्वभावत्वकल्पनायामप्यतिप्रसङ्गाभावेन धर्ममात्रकल्पनालाघवोपेतमित्यर्थः । ननु परन्यायैश्च दूषणमिति वक्ष्यमाणरीत्या परसिद्धैरेवाश्रयादिभिस्तर्कप्रवृत्तिसिद्धेर्नाश्रयासिद्धिरित्येव कस्मान्न समाधीयत इत्यत आह **परसिद्धत्वेनेति** । परमात्रसिद्धाश्रयादिमत्त्वेनेत्यर्थः ॥ **अयमेवेति** । स्वन्यायप्राप्ताश्रयाद्युपजीवनेन प्रवृत्तैतादृशतर्कपराहतिप्रतिसन्धाने परस्यापि स्वार्थानुमितिर्न भवितुमर्हतीत्युक्त एवाभिप्राय इत्यर्थः ।

स० — **तत्सिद्ध्यसिद्धिभ्यामिति** । कालसिद्ध्यसिद्धिभ्यामित्यर्थः । कालसिद्धौ नियतोपसंक्रामकत्वेनैव तस्य सिद्धत्वेन सर्वत्र संक्रामयेदितिप्रसङ्गानुपपत्तेः, असिद्धौ च कस्य सर्वत्र संक्रामकत्वापादनमिति भावः । **दुःस्थत्वं** स्थातुमशक्यत्वम् । अप्रवृत्तिरिति यावत् । **प्रसिद्धद्रव्येषु यद् बाधकमिति** । आकाशादिषु यद्बाधकम् यदि आकाशं स्वसम्बन्धेनान्यगतं धर्ममन्यत्र संक्रामयेत्तदा सर्वं सर्वत्र संक्रामयेदविशेषादित्येवंरूपमित्यर्थः । **तत्स्वाभाव्येनेति** । अप्रसिद्धं कालाख्यं द्रव्यं सिध्यत् धर्मिग्राहकमानेनान्यगतक्रियामात्रोपनायकस्वभाववत्त्वैव सिध्यति अतो नातिप्रसङ्ग इति परिहारमित्यर्थः । **लघीयांसं पक्षमिति** । प्रसिद्धद्रव्य एवाकाशे अन्यगतक्रियामात्रोपनायकत्वस्वभावकल्पनायामप्यतिप्रसङ्गाभावेन धर्ममात्रकल्पना-

लाघवमिति भावः । तत्सिद्ध्यसिद्धिभ्यामित्यादिनोक्तस्य भावानवबोधादित्यादिना किमुत्तरं जातमिति चेदुच्यते । कालेऽतिप्रसङ्गपराहतावुच्यमानायां कालः सिद्धो न वेति विकल्प्य दूषणाभिधानं त्वदीयं कथंचित् परं प्रति स्यात् । स्वार्थानुमानावसरे तर्कितं कालमादायोक्तप्रसङ्गपराहत्यादिप्रतिसन्धाने स्वार्थानुमितिर्न भविष्यतीति परिहाराभिप्राय इति । ननु स्वन्यायैः साधनं कार्यं परन्यायैश्च दूषणमित्युक्तत्वेन परसिद्धेरेवाश्रयादिभिस्तर्कप्रवृत्तेर्नाश्रयासिद्धिरिति कस्मान्न समाधीयत इत्यत आह **परसिद्धत्वेन प्रसङ्गस्येति** । परमात्रसिद्धाश्रयादिमत्त्वेनेत्यर्थः । **अयमेवाभिप्राय इति** । स्वमात्रसिद्धाश्रयाद्युपजीवनेन प्रवृत्तौ तादृशतर्कपराहतिप्रतिसन्धाने परस्यापि स्वार्थानुमितिर्न भविष्यतीत्युक्त एवाभिप्राय इत्यर्थः ।

**प०— तत्सिद्ध्यसिद्धिभ्यामिति** । कालस्य सिद्धौ न कल्पनागौरवप्रसंगस्यावसरः । प्रमितत्वात् । असिद्धौ त्वनाश्रयत्वात् न कल्पनागौरवप्रसंगस्यावसरः अतोऽनवसरदुःस्थत्वान्नैव का(ले)लस्य समानः प्रसंग इत्यर्थः ॥ **विशिष्टप्रत्यदर्शनेति** । अयं परोऽयमपर इत्यादितपनक्रियाविशिष्टज्ञानानुभवानंतरमित्यर्थः ॥ **अन्यतमद्वेति** । अन्यतमं वेति पाठः साधुः । अन्यतमदिति लेखकदोषमूलम् । 'अद्ड्डतरादिभ्यः पंचभ्य' इति सूत्रे डतर-डतम-इतर अन्य-अन्यतरेतिपंचानामेव ग्रहणेनान्यतमशब्दस्य अग्रहणात् । न चायं डतमप्रत्ययांत एवेति शङ्क्यम् । अन्यशब्दे डतमो विधानाभावात् । 'अन्यतरान्यतमशब्दावव्युत्पन्नावि'ति कैयटोक्तेश्च । आचारार्थक्विबन्तादन्यतमशब्दाच्छतृप्रत्ययेऽन्यतमदितिरूपं भविष्यतीत्येके समादधुः ॥ **सर्वत्र च बाधकानीति** । स्वरससंबन्धेऽसान्निध्यं बाधकम् । साक्षात्संबन्धे तदनुपलंभनम् । प्रसिद्धेष्वाकाशादिरूपमन्यतममिति पक्षे सर्वसंक्रामकत्वमिति बाधकानीत्यर्थः ॥ **तदिति** । सर्वसंक्रामकत्वरूपं बाधकमित्यर्थः । तत्स्वाभा(विकत्वे)व्येन= क्रियामात्रोपसंक्रामकत्वस्वाभाविकत्वेन । ननु यदि कालः स्वसंबन्धेनान्यगतं धर्ममन्यत्रोपनयेत् तदा सर्वं सर्वत्र संक्रामयेदविशेषात् इत्युक्तप्रसङ्गस्य कालस्य सिद्ध्यसिद्धिभ्यामनवसरदुःस्थत्वे परेण चोदिते सति परसिद्धत्वात्कालस्य परिसिद्धेन कालेन परस्यापादनात् न दोष इत्येव परिहारः सुवचः । स एवात्र कुतो नोक्त इत्यत आह **परसिद्धत्वेनेति ॥ प्रसङ्गस्येति** । कालेपि समान इत्युक्तप्रसंगस्येत्यर्थः ॥ **अयमेवेति** । विशिष्टप्रत्ययेत्यादिनोक्त एवेत्यर्थः ।

**या०— तत्सिद्ध्यसिद्धिभ्यामिति** । कालोऽसिद्धश्चेदुक्तप्रसङ्गस्याश्रयासिद्धिः । सिद्धश्चेन्नोक्तप्रसङ्गपराहतिः तस्य नियतोपसंक्रामकतयैव सिद्ध्या प्रसङ्गस्य बाधितत्वादित्युभयथाऽप्युक्तप्रसङ्गस्यावसराभावेन दुःस्थत्वं स्थातुमशक्यत्वमप्रवृत्तिरिति यावत् ॥ **प्रसिद्धद्रव्येष्विति** । आकाशादिषु यद्बाधकं यद्याकाशं स्वसम्बन्धेनान्यगतधर्ममन्यत्र संक्रामयेत्तदा सर्वं सर्वत्र संक्रामयेदविशेषादित्येवंरूपमित्यर्थः ॥

**तत्स्वाभाव्येनेति** । अप्रसिद्धं कालाख्यं द्रव्यं सिध्यद्धर्मिग्राहकमानेनान्यगतक्रियामात्रोपनायकस्वभाववत्तयैव सिध्यति । अतो नातिप्रसङ्ग इति परिहारमित्यर्थः ॥ **लघीयांसमिति** । प्रसिद्धद्रव्य एवाकाशेऽन्यगतक्रियामात्रोपनायकत्वस्वभावकल्पनायामप्यतिप्रसङ्गाभावेन धर्ममात्रकल्पनालाघवोपेतमित्यर्थः । तत्सिद्ध्यसिद्धिभ्यामित्यादिनोक्तस्य भावानवबोधादित्यादिना किमुत्तरं जातमिति चेदुच्यते । कालेऽपि प्रसङ्गपराहततायामुच्यमानायां कालः सिद्धो न वेति विकल्प्य दूषणाभिधानं त्वदीयं कथञ्चित्परं प्रति स्यात् । स्वार्थानुमित्यवसरे तर्कितं कालमादायोक्तप्रसङ्गपराहत्यादिप्रतिसन्धाने स्वार्थानुमितिर्न भविष्यतीत्युत्तरमत्राभिप्रेतमिति । ननु परन्यायैश्च दूषणमित्युक्तत्वेन परसिद्धैरेवाश्रयादिभिस्तर्कप्रवृत्तेर्नाश्रयासिद्धिरिति कस्मान्न समाधीयत इत्यत आह ॥ **परसिद्धत्वेनेति** । परमात्रसिद्धाश्रयादिमत्त्वेनेत्यर्थः ॥ **अयमेवेति** । स्वन्यायप्राप्ताश्रयाद्युपजीवनेन प्रवृत्तौ तादृशतर्कपराहतिप्रतिसन्धाने परस्यापि स्वार्थानुमितिर्न भविष्यतीत्युक्त एवाभिप्राय इत्यर्थः ।

**सु० — किञ्चायं प्रसंगो वस्तुतः साधुः अथाभासः । नाद्यः कालप्रतीत्युत्तरकालं व्याप्तिभङ्गात् । द्वितीये कथमाकाशस्य क्रियोपनायकत्वं त्याजयेत् । अन्यथा जातिनिराकरणमपि न स्यादिति ।**

**अस्तु वाऽऽकाशस्य विशेषगुणवतः क्रियोपनायकत्वाभावः दिशस्तु स्यात् विशेषगुणशून्यत्वात् व्यापकत्वाच्च । तस्याः संयोगोपनायकत्वेन सिद्धत्वादिति चेन्न । उभयोपनायकत्वेऽपि बाधकाभावात् । सहकारिभेदेन च व्यवस्थिताव्यवस्थितप्रतीतिजनकत्वं कल्प्यतां लाघवादेव । अन्यथा कालेऽपि भेदकल्पनाप्रसङ्गादिति । तदिदमुक्तम् । तस्य विशिष्टप्रत्ययस्य नित्येन नियतेन प्रसिद्धेनैव पृथिव्यादिना सिद्धेनाप्रसिद्धे द्रव्येऽनुमानावसरो भवेदिति ।**

**शे० — अयं प्रसङ्ग इति** । यद्याकाशादिकं स्वसंयुक्तधर्ममन्यत्र संक्रामयेत्तदा सर्वं सर्वत्र संक्रामयेदित्ययं प्रसङ्ग इत्यर्थः ॥ **अन्यथेति** । आभासस्यापि साधकत्व इत्यर्थः ॥ **जातिनिराकरणमिति** । स्वन्यायविरोधिन जात्युत्तरनिराकरणं न स्यात् । तत्राप्याभासस्य साधकतायाः परेण वक्तुं शक्यत्वादिति भावः ॥ **संयोगोपनायकत्वेनेति** । मूर्तद्रव्यमवधिं कृत्वा मूर्तद्रव्येष्वेवेदमस्मात्पूर्वमिदमस्माद्दक्षिणमिदमस्मात्पश्चिममिति पूर्वत्वादिविशिष्टप्रत्ययानां जायमानत्वात्तेषां च कादाचित्कत्वेन निर्निमित्तत्वानुपपत्त्या सनिमित्तकत्वेऽपि द्रव्यगुणादीनां व्यभिचारेण निमित्तत्वानुपपत्त्या प्रथमचरमादित्यसंयोगानामेव निमित्तत्वेन वाच्यत्वात्तेषां च सूर्यसमवेतानां, पिण्डेन विना संबन्धेन, पिण्डे संयोगविशिष्टप्रत्ययजनकत्वस्यातिप्रसङ्गेनायोगेन संबद्धानामेव पिण्डे स्वविशिष्टप्रत्ययजनकत्वस्याभ्युपगमनीयत्वात् । अन्यसमवेतत्वादेव

पिण्डेन साक्षात्संबन्धस्य बाधितत्वाद्द्रव्यान्तरकृतसंबन्धपक्षेऽपि पृथिव्याद्यव्यापकसंबन्धमाश्रित्य सूर्यसंयोगानां विशिष्टप्रत्ययजनकत्वायोगात्संयोगोपनायकतया व्यापकद्रव्यसिद्धौ तत्राप्यात्माकाशयोर्विशेषगुणवत्त्वेनोक्तरीत्योपनायकत्वायोगात्कालस्य विशेषगुणरहितत्वेऽपि धर्मिग्राहकमानेन तरणिपरिस्पन्दमात्रोपनायकतया सिद्धत्वेन पिण्डे सूर्यसंयोगोपनायकत्वासंभवात्तदतिरिक्तमेव परममहत्परिमाणं किञ्चिद्द्रव्यं सूर्यसंयोगोपनायकमङ्गीकार्यमिति सैव दिगिति दिक्सिद्धिरिति संयोगोपनायकत्वेन दिशः सिद्धत्वादित्यर्थः ॥ **उभयेति ।** तरणिपरिस्पन्दतत्संयोगलक्षणोभयोपनायकत्वेऽपीत्यर्थः । ननु संयोगक्रियोपनायकं नैकं द्रव्यमङ्गीकर्तुमुचितम् । एकस्माद्व्यवस्थिताव्यवस्थितप्रतीतिरूपविरुद्धकार्यद्वयायोगात् वर्तमानत्वादिकं हि व्यवस्थितमेव । यदेकं प्रति वर्तमानं तस्य सर्वान्प्रति वर्तमानत्वात् पूर्वत्वादिक त्वव्यवस्थितम् । अस्माकं प्राच्या एवान्येषां प्रतीचीत्वात् । तथा च विरुद्धोभयप्रतीतिजनकं भिन्नभिन्नस्वभावं द्रव्यद्वयमङ्गीकार्यम् तत्कथमेकस्या एव दिशो विरुद्धोभयजनकत्वमित्यत आदित्यक्रियासंयोगरूपसहकारिभेदेनैकस्या एव दिशो व्यवस्थिताव्यवस्थितकार्यजनकत्वं नानुपपन्नमित्याह **सहकारीति ॥ अन्यथेति ।** कस्मात्चित्परस्याप्यन्यस्मादपरत्वेन परापरादिप्रत्ययस्याव्यवस्थितत्वाद्वर्तमानत्वस्य चोक्तरीत्या व्यवस्थितत्वेन तद्व्यवहारस्य व्यवस्थितत्वाद्व्यवस्थिताव्यवस्थितविरुद्धकार्यजनकतया कालस्यापि भेदप्रसक्त्या कालैक्यवादिना त्वया सहकारिभेदेनैव विरुद्धकार्यद्वयजनकत्वनिर्वाहो वाच्यः । स च प्रकृतेऽप्यविशिष्ट इति भावः ।

यद्वा । ननु दिशः क्रियोपनायकत्वे तस्या एव पूर्वापरादिप्रत्ययजनकत्वं परापरादिप्रत्ययजनकत्वं च वाच्यम् । तच्च न सम्भवति । अस्माकं प्राच्या एवान्येषां प्रतीचीत्वेन पूर्वापरादिप्रत्ययानामव्यवस्थितत्वात्परापरादिप्रत्ययानां च व्यवस्थितत्वादेकस्य च विरुद्धोभयकार्यजनकत्वायोगादित्यतः क्रियासंयोगरूपसहकारिभेदेन व्यवस्थिताव्यवस्थितकार्यजनकत्वोपपत्तेर्नानुपपत्तिरित्याह **सहकारीति ।** केचित्तु दिक्कृतयोः परत्वापरत्वयोरव्यवस्थितत्वात्कालकृतयोश्च तयोर्व्यवस्थितत्वात्कथं विरुद्धोभयकार्यजनकत्वं दिशः स्यादित्यतः क्रियारूपसहकारिसमवहितायास्तस्या व्यवस्थितकार्यजनकत्वस्य संयोगरूपसहकारिसमवहितायाश्चाव्यवस्थितकार्यजनकत्वोपपत्तेरदोष इत्याह सहकारीति ग्रन्थार्थ इत्याहु ॥ **अन्यथेति ।** परत्वापरत्वयौगपद्यादीनामपि परस्परविरुद्धत्वात्तत्कारित्वेन कालरूपव्यक्त्यैक्यमपि न स्यादित्यर्थः ।

**स० — अन्यथा जातिनिराकरणमिति ।** असाधोरपि प्रसङ्गस्य यदि स्वार्थसाधकत्वं तदसदुत्तररूपजातिनिराकरणं परीक्षकाणां न स्यात् । इदं जात्युत्तरमतो न स्वार्थसाधकमिति निराकरणं न स्यादित्यर्थः । तदपि स्वार्थसाधकं स्यादिति भावः । **संयोगोपनायकत्वेनेति ।** मूर्तद्रव्यमवधिं कृत्वा

मूर्तद्रव्येष्वेव एतस्मादिदं पूर्वेण दक्षिणेन पश्चिमेन उत्तरेण पूर्वदक्षिणेन दक्षिणापरेणापरोत्तरेणोत्तरपूर्वेणाधस्तादुपरिष्टाच्चेति जायमानपूर्वादिप्रत्ययानां निर्निमित्तत्वासम्भवेन सनिमित्तत्वे च द्रव्यगुणादीनां व्यभिचारेण निमित्तत्वानुपपत्त्या प्रथममाचरदित्यसंयोगानामेव तन्निमित्तत्वेन वक्तव्यत्वात्तेषां च द्रव्यान्तरवर्तिना परममहतोपनायकेन द्रव्यान्तरेण विना द्रव्यान्तरेणेदृशविशिष्टप्रत्ययोत्पादकत्वानुपपत्त्या आत्माऽऽकाशकालानां तदसम्भवेन तदुपनायकत्वेन दिशोऽभ्युपेया इति भावः । अन्ये तु यद्देशापेक्षया समीपस्थे स्थविरपिण्डेऽल्पदेशसंयोगान्तरितदेशत्वलक्षणमपरत्वं दूरस्थे यूनि च बहुलदेशसंयोगव्यवहितदेशत्वलक्षणं परत्वं प्रतीयते तद्देशमारभ्य परत्वाश्रयपिण्डपर्यन्तं ये देशांशानां परस्परसंयोगाः पिण्डे तदुपनायकत्वेन दिशः सिद्धत्वादिति भाव इत्याहुः **उभयोपनायकत्वेपीति** । क्रियासंयोगरूपोभयोपनायकत्वेऽपीत्यर्थः । ननु दिशः क्रियोपनायकत्वे तस्या एव पूर्वापरादिप्रत्ययानामव्यवस्थितत्वात् परादिप्रत्ययानां च व्यवस्थितत्वेन विरुद्धोभयकार्यजनकत्वं कथमित्यतः क्रियासंयोगरूपसहकारिभेदेन व्यवस्थिताव्यवस्थितकार्यजनकत्वोपपत्तिरितिभावेनाह **सहकारिभेदेनेति** । अन्ये तु ननु दिश एवोभयोपनायकत्वे समीपस्थे स्थविरपिण्डेऽपरत्वं, यूनि च परत्वं, यद्दिक्कृतं व्यवस्थितं, तत्रैव स्थविरे परत्वं यूनि चापरत्वं कालकृतं दिक्कृतपरत्वापरत्वापेक्षयाऽव्यवस्थितं विपरीतं यत्प्रतीयते तदयुक्तं स्यात् । दिश एवोभयप्रतीतिजनकत्वाङ्गीकारेण तद्वैचित्र्ये कारणाभावादित्यत आह **सहकारिभेदेनेति** । विषयीभूतयोश्च परत्वापरत्वयोश्च देशसंयोगतरणिपरिस्पन्दविशेषघटितत्वेन विलक्षणतया सहकारिभेदेनेत्यर्थः । **व्यवस्थिताव्यवस्थितेति** दिक्कृतपरत्वापरत्वे व्यवस्थिते, ये च तदपेक्षयाऽव्यवस्थिते विपरीते परत्वापरत्वे तत्प्रतीतिजनकत्वं दिशः कल्प्यतामित्यर्थ इत्याहुः । **अन्यथा कालेऽपीति** । कालस्यापि एकस्मात्परस्यापि कस्माच्चिदपरत्वेन परापरादिव्यवहारस्याव्यवस्थितत्वेन तज्जनकत्वेनाव्यवस्थितव्यवहारजनकत्वात् वर्तमानस्य सर्वान्प्रति वर्तमानत्वेन तद्व्यवहारजनकत्वेन व्यवस्थितव्यवहारजनकत्वेन भेदकल्पना स्यादिति भावः । अन्ये तु प्रतीतिवैचित्र्येणैवोपनायकवैचित्र्ये परत्वापरत्वचिरक्षिप्रादिप्रतीतिवैचित्र्येण तदुपनायकतयाऽङ्गीकृते कालेऽपि भेदप्रसङ्गादित्यर्थ इत्याहुः ।

प० — यद्याकाशः स्वसंबंधेनेत्यादिनोक्तप्रसंगं स्वव्याहत्या निरस्य व्याप्तिहीनत्वरूपप्रकारान्तरेणापि निराह **किंचायमिति** । किमाकाशस्येत्यत्र किंशब्द आक्षेपार्थः ॥ **अन्यथेति** । असाधुप्रसंगस्यापि परबाधनक्षमत्वे सिद्धमपि दूषणासमर्थमुत्तरं जातिरित्यसाधुत्वेनोक्तजात्युत्तरस्यापि परबाधकत्वसंभवेन जात्युत्तरं सदुत्तरं नेति निराकरणं न स्यादित्यर्थः । असाधुप्रसङ्गस्यास्मदुक्तदिशा निरासाभावे सिद्धमपि दूषणासमर्थमुत्तरं जातिरिति व्याहत्यादिनाऽसाधुत्वेनोक्तजात्युत्तरस्यापि निराकरणं न स्यादित्यर्थः ।

त्वदुक्तप्रसङ्गस्यापि व्याहतियुक्ताङ्गहीनत्वरूपसाधारणासाधारणासामर्थ्ये(थ्योपे)तत्वेन जात्युत्तरत्वादिति भावः ॥ **संयोगोपनायकत्वेनेति** । दूरस्थे पिण्डे परत्वप्रत्ययः समीपस्थे चापरत्वप्रत्ययश्च यौ जायेते तौ च दूरदेशसंयोगसमीपदेशसंयोगविशेषणकपिण्डविशेष्यकौ भवत इति कालकृतपरत्वापरत्वविपरीतपरत्वापरत्वप्रत्यये विशेषणीभूतसंयोगोपनायकत्वेनेत्यर्थः । ननु समीपस्थेऽपरत्वं दूरस्थे च परत्वं चाव्यवस्थितम् । कालकृतं तु व्यवस्थितम् । समीपस्थो युवा चेदपरः स्थविरश्चेत्परः । एवं दूरस्थोपि । तथाच कथं दिश एव व्यवस्थिताव्यवस्थितपरत्वापरत्वप्रत्ययजनकतेत्यत आह **सहकारीति** । संयोगपरिस्पन्दरूपगुणक्रियालक्षणसहकारिभेदेनेत्यर्थः । व्यवस्थिताव्यवस्थितेत्यस्यान्योन्यं विपरीतेत्यर्थः ॥ **अयन्था कालेऽपीति** । कालेऽपि सहकारिभेदेन विचित्रप्रतीतिजनकत्वानङ्गीकारे एकस्मिन्नेव पुरुषे स्थविरापेक्षयाऽपरत्वेन प्रतीतेऽपि ततो न्यूनवयस्कपुरुषापेक्षया परत्वप्रतीतेः स्थविरे ततोपि स्थविरापेक्षयाऽपरत्वप्रतीतेश्च जायमानत्वेन कालस्यापि व्यवस्थिताऽव्यवस्थितपरत्वापरत्वप्रतीतिजनकत्वात् तत्रापि कालेऽवान्तरभेदः कल्प्येतेत्यर्थः । अस्तु वेत्यादिनोक्तमपि मूलारूढं दर्शयति **तदिदमिति** ।

**या—अन्यथेति** । आभासस्यापि साधकत्व इत्यर्थः ॥ **जातिनिराकरणमिति** । स्वन्यायविरोधादिना जात्युत्तरनिराकरणं परीक्षकाणां न स्यादित्यर्थः । तत्राप्याभासे साधकत्वस्य परेण वक्तुं शक्यत्वादिति भावः ॥ **तस्याः संयोगोपनायकत्वेनेति** । मूर्तद्रव्यमवधिं कृत्वा मूर्तेष्वेव द्रव्येष्वसदादिपूर्वमसदादिपश्चिममिति पूर्वत्वादिविशिष्टप्रत्ययस्तावदुत्पद्यते । तत्र पूर्वत्वमवध्यपेक्षया सूर्योदयाचलसंयोगसन्निहितत्वम् । पश्चिमत्वमवध्यपेक्षया सूर्यास्ताचलसंयोगसन्निहितत्वं । सन्निधिस्तु सूर्यसंयुक्तसंयोगाल्पीयस्त्वम् । प्रथमरविसंयोगवत्त्वं पूर्वत्वं, चरमसंयोगवत्त्वं पश्चिमत्वमिति यावत् । एवञ्च भूतलवर्तिनि द्रव्ये प्रथमचरमसूर्यसंयोगोपनायकं किञ्चिद्व्यापकमेव द्रव्यमङ्गीकर्तव्यम् । अन्यथोक्तविशिष्टप्रत्ययानुपपत्तेः । आत्माकाशयोः विशेषगुणवत्त्वेन कालस्य च क्रियामात्रोपनायकतया सिद्धत्वेन, विवक्षितपिण्डे सूर्यसंयोगोपनायकत्वासम्भवे तदुपनायकतया परममहत्परिमाणं किंचिदतिरिक्तं द्रव्यमङ्गीकार्यं सैव दिगित्यादित्यसंयोगोपनायकत्वेन दिशः सिद्धत्वादित्यर्थः ॥ **उभयेति** । क्रियासंयोगरूपोभयोपनायकत्वेऽपीत्यर्थ । ननु संयोगक्रियोपनायकं नैकमङ्गीकर्तुमुचितम् । एकस्माद्व्यवस्थिताव्यवस्थितप्रतीतिरूपविरुद्धकार्यद्वयासम्भवात् । वर्तमानत्वादिकं हि व्यवस्थितमेव । यदेकं प्रति वर्तमानं तस्य सर्वान्प्रति वर्तमानत्वात् । पूर्वत्वादिकं त्वव्यवस्थितम् । अस्माकं पूर्वस्यान्येषां पश्चिमत्वात् । तथा च विरुद्धोभयप्रतीतिजनकं भिन्नस्वभावं द्रव्यद्वयमेवाङ्गीकार्यमित्यत आह **सहकारिभेदेनेति** । आदित्यक्रियासंयोगरूपसहकारिभेदेनेत्यर्थः ॥ **लाघवादिति** । क्लृप्त एव धर्मिणि धर्ममात्रकल्पनालाघवादित्यर्थः ॥ **अन्यथेति** । एकस्मादेव कालाद्व्यवस्थितं वर्तमानत्वादिकमव्यवस्थितं परत्वापरत्वचिरत्वादिकं च प्रतीयत इत्यङ्गीकारे भज्येतेति भावः ।

च० — **अन्यथा जातिनिराकरणमिति ।** आभासस्यापि साधकत्वे स्वन्यायविरोधादिना जात्युत्तरनिराकरणं परीक्षकाणां न स्यादित्यर्थः । **तस्याः संयोगोपनायकत्वेनेति ।** किञ्चिन्मूर्तद्रव्यमवधिभूतं विधाय मूर्तान्तरेषु इदमस्मात्पूर्वमिदमस्मात्पश्चिममिति च पूर्वत्वादिविशिष्टप्रत्ययास्तावदुत्पद्यन्ते । तत्र पूर्वत्वं किञ्चिदवधिकं सूर्योदयाचलसंयोगसन्निहितत्वम् । पश्चिमत्वमपि किञ्चिदवधिकं सूर्यास्ताचलसंयोगसन्निहितत्वं । सन्निधिस्तु सूर्यसंयुक्तसंयोगाल्पीयस्त्वं । प्रथमतरणिसंयोगवत्त्वं पश्चिमत्वमिति फलितम्। इत्थं च भूतलाद्याश्रितद्रव्ये प्रथमचरमतरणिसंयोगोपनायकं किञ्चिद्व्यापकमेव द्रव्यं विशिष्टप्रत्ययानुरोधेनोरीकार्यम् । तच्च नात्माकाशौ विशेषगुणवत्त्वात्। क्रियामात्रोपनायकत्वात् न कालश्चेति तदुपनायकतया परममहत्परिमाणकिञ्चिद्द्रव्यान्तरमास्थेयं । सैव दिगिति तरणिसंयोगोपनायकतया दिशः सिद्धत्वादित्यर्थः । **उभयेति ।** क्रियासंयोगरूपोभयेत्यर्थः । सहकारिभेदेन= तरणिपरिस्पन्दसंयोगरूपसहकारिभेदेन । **व्यवस्थिताव्यवस्थितेति** । वर्तमानत्वादिकं हि व्यवस्थितम्। पूर्वत्वादिकं त्वव्यवस्थितम् तदुभयप्रतीतिजनकत्वमित्यर्थः । **लाघवादिति** । द्रव्यान्तरकल्पनात् क्लृप्त एव धर्मिणि तादृशधर्मकल्पनायाः लघीयस्त्वादित्यर्थः । **अन्यथा** एकस्य व्यवस्थिताव्यवस्थितप्रतीत्यजनकत्वे । **कालेपीति ।** एकस्मादेव कालाद्व्यवस्थितं वर्तमानत्वादिकमव्यवस्थितं च परत्वादिकं प्रतीयत इत्यङ्गीकारादिति भावः ।

---

मु० — **अन्ये तु परापरशब्दाभ्यां परत्वापरत्वे गुणौ युवस्थविरपिण्ड(वर्तिनौ)गतौ आचक्षते । तौ असमवायिकारणसंयोगाश्रयतया निमित्तकारणापेक्षाबुद्धिसंपादकतया वा कालमनुमापयत इति । तदप्युक्तन्यायेन निरस्तमिति ।**

शे० — किरणावलीकारमतमुत्थापयति **अन्येत्विति । परापरत्वे गुणाविति** । परापरेति भाष्ये भावप्रधानो निर्देश इति भावः ॥ **तावसमवायिकारणेति** । बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यमानमसमवायिकारणवत्, भावकार्यत्वादिति स्थिते, रूपादीनां च नीरूपेऽपि वायौ नीरसे तेजसि निर्गन्धे जलेऽपि परत्वोत्पत्त्या व्यभिचारेण स्पर्शस्य च मनसि व्यभिचारेण वोष्णशीतादिभेदेन भिन्नस्य प्रत्येकं व्यभिचारेण वा परिमाणस्य विजातीयानारम्भकत्वेन तपनपरिस्पन्दानां च वैयधिकरण्येनासमवायिकारणत्वायोगात्तदवच्छिन्नद्रव्यसंयोगोऽसमवायिकारणमिति विज्ञायते । न चाविभुनो द्रव्यस्य संयोगस्तथा भवितुमर्हति व्यभिचारादिति पिण्डमार्तण्डाभ्यां संयुक्तं तद्द्रव्यं विभ्वेव स्यात् । न चात्माकाशौ तथा भवितुमर्हतो विशेषगुणवत्त्वात्पृथिव्यादिवदिति । अतः परत्वासमवायिकारणसंयोगाश्रयभूतमतिरिक्तद्रव्यमङ्गीकार्यम् । एवं स्थविरमवधिं कृत्वोत्पद्यमानं यून्यपरत्वमपि पक्षीकृत्य प्रयोक्तव्यमिति कालसिद्धिरिति तद्व्युत्पादनप्रकारोऽत्रानुसन्धेयः ॥ **अपेक्षाबुद्धि-**

**संपादकतयेति।** विप्रकृष्टसन्निकृष्टबुद्धिकारणसंबन्धघटकतयेत्यर्थः । युवानमवधिं कृत्वा स्थविरे विप्रकृष्टबुद्धिमपेक्ष्योत्पद्यमानं परत्वं विप्रकृष्टबुद्धिं निमित्तीकरोति । एवं स्थविरमवधिं कृत्वा यूनि सन्निकृष्टबुद्धिमपेक्ष्योत्पद्यमानमपरत्वं सन्निकृष्टबुद्धिं निमित्तीकरोति । बहुतरतरणिपरिस्पन्दान्तरितजन्मत्वं विप्रकर्षः । अल्पतरसूर्यपरिस्पन्दान्तरितजन्मत्वं च सन्निकर्षः । न च विप्रकर्षसन्निकर्षौ स्थविरादेः स्वतः संभवतः । तपनसमवेतकर्मणा स्थविरादेः साक्षात्संबन्धासंभवात् । अतो यद्द्वारेण संयुक्तसमवायलक्षणया प्रत्त्यासत्त्या आदित्यगतिः स्थविरादिपिण्डमुपावर्तते तद्द्रव्यमस्ति । तच्चोक्तरीत्या नेतरदिति अपेक्षाबुद्धिकारणसंबन्धघटकतया कालसिद्धिः । तदमी प्रयोगाः । स्थविरादौ परत्वादिकं तपनपरिस्पन्दविप्रकृष्टसन्निकृष्टबुद्धिजन्यम् । तदनुविधायित्वात् । ते च परिस्पन्दाः स्थविरशरीरप्रत्यासत्तिमपेक्षन्ते । स्वभावतोऽप्रत्यासन्नत्वे सति तदवच्छेदकत्वात् । पटावच्छेदकमहारजनरागवत् । सा च प्रत्यासत्तिर्द्रव्यकृता प्रकारान्तराभावे सति प्रत्यासत्तित्वान्महारजनरागप्रत्यासत्तिवत् । तच्च द्रव्यमितरेभ्यो भिद्यते विशिष्टपरत्वापरत्वानुमेयत्वादिति ॥ **उक्तन्यायेनेति** । क्रियोपनायकत्वोपपादकन्यायेनाकाशादेरेवासमवायिकारणसंयोगाश्रयत्वापेक्षाबुद्धिसंपादकत्वयोरुपपादितप्रायत्वादिति भावः ।

**स० — उक्तन्यायेनेति** । आकाशादेरेवासमवायिकारणसंयोगाश्रयत्वनिमित्तकारणापेक्षाबुद्धिसम्पादकत्वयोरुक्तन्यायेन सम्भवादिति भावः ।

**प० — निमित्तकारणेति** । स्थविरे परत्वगुणोत्पत्तौ युवापेक्षाबुद्धिः यूनि अपरत्वोत्पत्तौ स्थविरापेक्षाबुद्धिः निमित्तकारणमिति निमित्तकारणापेक्षाबुद्धीत्युक्तम् । **उक्तन्यायेनेति** । तस्य असमवायिकारणसंयोगाश्रयत्वस्य अपेक्षाबुद्धिसंपादनस्य च नित्येन प्रसिद्धेनाकाशादिना द्रव्येण सिद्धेर्न कालस्यानुमावसरो भवेदित्युक्तन्यायेन निरस्तमित्यर्थः ।

**या० — तावसमवायिकारणेति** । बहुतरतपनपरिस्पन्दान्तरितजन्मनि स्थविरे युवानमवधिं कृत्वा परत्वमुत्पद्यमानमसमवायिकारणवत्कार्यत्वादिति स्थिते रूपादीनां च नीरूपादावपि परत्वोत्पत्त्या व्यभिचारे तपनपरिस्पन्दानां च वैयधिकरण्येन तदवच्छिन्नद्रव्यसंयोगोऽसमवायिकारणमिति विज्ञायते । न चाविभुनो द्रव्यस्य संयोगस्तथा भवितुमर्हति व्यभिचारादिति तद्द्रव्यम् विभु स्यात् । न चात्माकाशौ तथा भवितुमर्हतः । विशेषगुणवत्त्वात्पृथिव्यादिवत् । अतः परत्वासमवायिकारणसंयोगाश्रयभूतमतिरिक्तं कालाख्यद्रव्यमङ्गीकार्यम्। एवमपरत्वमपि पक्षीकृत्य प्रयोक्तव्यमित्यर्थः । **अपेक्षाबुद्धिसंपादकतयेति ।** विप्रकृष्टसन्निकृष्टबुद्धिकारणसंबन्धघटकतयेत्यर्थः । परत्वं विप्रकृष्टबुद्धिमपेक्ष्योत्पद्यमानं विप्रकृष्टबुद्धिं निमित्तीकरोति । अल्पतरसूर्यसञ्चरणापेक्षया बहुतरतरणिपरिस्पन्दान्तरितजन्मत्वं च विप्रकर्षः ।

न चैष: स्थविरशरीरस्य स्वत: संभवति। तपनसमवेतेन कर्मणास्य संबन्धाभावात् । अतो यद्द्वारेण संयुक्तसमवायलक्षणया प्रत्यासत्त्याऽऽदित्यगति: स्थविरमुपावर्तते तद्द्रव्यमस्ति। तच्चोक्तरीत्या नेतरदित्यपेक्षाबुद्धिकारणसंबन्धघटकतया कालः सिद्ध्यति । तदमी प्रयोगा: । स्थविरादौ परत्वं तपनपरिस्पन्दविप्रकृष्टबुद्धिजन्यं तदनुविधायित्वात् । ते च परिस्पन्दा: स्थविरशरीरप्रत्यासत्तिमपेक्षन्ते स्वभावतोऽप्रत्यासन्नत्वे सति तदवच्छेदकत्वात् पटावच्छेदकमहारजनरागवत् । सा च प्रत्यासत्तिर्द्रव्यकृता प्रकारान्तराभावे सति प्रत्यासत्तित्वात् महारजनरागप्रत्यासत्तिवत् । तच्च द्रव्यमितरेभ्यो भिद्यते विशिष्टपरत्वानुमेयत्वाद्व्यतिरेकेण पृथिव्यादिवत् । एवमपरत्वमपि पक्षीकृत्य प्रयोक्तव्यमिति ॥ **उक्तन्यायेनेति**। आकाशो वा किं न स्यादित्याद्युक्तन्यायेनाकाशादेरेवासमवायिकारणसंयोगाश्रयत्वादेर्वक्तुं शक्यत्वादित्यर्थ: ।

श्री० — **अपेक्षाबुद्धीति** । अयमेतत्तदपेक्षया पर:, अयमेतत्तदपेक्षयाऽपर इत्येवं परस्परावधिकपरत्वापरत्वविषयकापेक्षाबुद्धिसंपादकतयेत्यर्थ: । कालाभाव एतादृशापेक्षाबुद्धेरजननादिति भाव: ।

च० — **असमवायिकारणेति** । परत्वाद्यसमवायिकारणीभूतो यो विभुद्रव्यसंयोगस्तदाश्रयतयेत्यर्थ: । **अपेक्षाबुद्धिसम्पादकतयेति** । सन्निकृष्टविप्रकृष्टबुद्धिहेतुभूतसम्बन्धघटकतयेत्यर्थ: । युवावधिकं स्थविरे विप्रकृष्टबुद्धौ सत्यां जायमानपरत्वं तादृशबुद्धिं निमित्तीकरोति। स्थविरावधिकं सन्निकृष्टबुद्धौ सत्यां यून्युत्पद्यमानपरत्वं तादृशबुद्धिं निमित्तीकुरुते। बहुतरणिपरिस्पन्दान्तरितजन्मत्वं विप्रकर्ष: । अल्पतरतत्स्पन्दान्तरितजन्मत्वं सन्निकर्ष: । तादृशौ च तौ तरणिसमवेतकर्मणा स्थविरादे: साक्षात्सम्बन्धाभावेन निसर्गतो न सम्भवत इति यद्द्रव्यं मध्येकृत्य स्वाश्रयसंयुक्तसमवायलक्षणप्रत्यासत्त्या तरणिपरिस्पन्द: स्थविरादिपिण्डेषु वर्तते तद्द्रव्यं नेतरदित्युक्तदिशाऽपेक्षाबुद्धिकारणसम्बन्धघटकतया काल: सिध्यतीत्यर्थ: । प्रपञ्चितं चैतदन्यत्रेति नेह वितन्यते ।

सु० — किञ्च परापरादिप्रत्ययानां सूर्यगतयो वा पर(त्व)ापरत्वे वा यद्यालम्बनं तदा अस्तु कालानुमानम् । न चैतदस्ति । कालभेदानामेव विशेषणतया प्रतीते: । तथा हि । परोऽयमित्यादि प्रयुक्तवन्त: कोऽस्यार्थ इति पृष्टा: लौकिका: परीक्षिकाश्च बहुकालीन(नोयमित्यादि) इति व्याचक्षाणा दृश्यन्ते । तत्र कालस्वरूपं साक्षिसिद्धम् । तद्भेदस्तु दि च क्वचित्साक्षिणा क्वचिदनुमानादिना च ज्ञायत इति । एतदप्युक्तम् तदेतदिति श्लोकाभ्याम् । अनयैव दिशा दिशोऽपि परापरप्रत्ययादिलिङ्गत्वं निराकर्तव्यम् ।

**शे०**—एवं परभाष्यव्याख्यानान्यसाधारणदोषेण दूषयित्वा साधारणदोषेणापि दूषयति **किञ्चेति॥ कालानुमानमिति** उक्तरीत्येति शेषः ॥ **क्वचित्साक्षिणेति**। स्वात्मसम्बन्धिनि काले बहुत्वं स्वसुतादिसम्बन्धिनि च तस्मिन्नल्पत्वं साक्षिसिद्धमित्यर्थः ॥ **क्वचिदनुमानादिनेति**। परात्मादिसम्बन्धिनि काले बहुत्वादिकमानुमानिकं ब्रह्मादिसम्बन्धिनि काले तु तदागमिकमित्यर्थः ॥ **अनयैव दिशेति**। अयमाशयः। नप्रथमादित्यसंयोगसन्निहितत्वमपरत्वं चरमादित्यसंयोगसन्निहितत्वं च परत्वं येनादित्यसंयोगोपनायकतयोक्तरीत्या दिगनुमानं स्यात्। न चैतदस्ति तथाऽनुभवाभावात्। किन्तु द्रष्टृपुरुषापेक्षया पिण्डस्य समीपदेशस्थत्वमपरत्वं तदपेक्षया दूरप्रदेशस्थत्वं च परत्वम्। समीपदूरदेशादिशब्दाश्च दिग्विशेषवाचकाः। तथा च परापरादिप्रत्ययानां साक्षिसिद्धस्वाभाविकदिग्विशेषरूपविशेषणविशिष्टपिण्डविषयकत्वमेव, न तु तरणिसंयोगविशिष्टविषयकत्वमिति कथं संयोगोपनायकतया दिक्सिद्धिः। अस्तु वा त्वदुक्तरीत्याऽऽदित्यसंयोगविशिष्टपिण्डविषयकत्वमुक्तप्रत्ययानां तथाऽपि तरणिपरिस्पन्दानामिव तरणिसंयोगानामपि स्वभावप्रत्यासत्त्यैव स्वविशिष्टप्रत्ययनिर्वाहकत्वसम्भवेन पिण्डसम्बन्धस्यैवानपेक्षितत्वान्नोपनायकतयाऽपि द्रव्यापेक्षेति न दिक्सिद्धिः। अस्तु वा तरणिसंयोगानां पिण्डं प्रत्युपनायकद्रव्यापेक्षा तथाऽपि पृथिव्यादिक्लृप्तद्रव्याणामेव तदुपनायकत्वसम्भवान्न दिगपनवमद्रव्यसिद्धिः। न च तपनपिण्डाभ्यामसंसर्गान्न तेषामुपनायकत्वमिति वाच्यम्। प्रत्येकमव्यापकत्वेऽपि बहूनां संयुक्तसंयोगभूयस्त्वेन संयोगोपनायकतायाः सम्भवेन तद्व्यापकत्वस्यानपेक्षितत्वात्। अपेक्षायामप्युक्तरीत्या विशेषगुणरहितत्वस्याप्रयोजकत्वसिद्ध्याऽऽत्माकाशयोर्व्यापकयोरुभयसंसर्गिणयोपनायकत्वसम्भवात्। विशेषगुणरहितत्वस्यैवोपनायकतायां प्रयोजकत्वेऽपि कालस्य विशेषगुणरहिततया संयोगोपनायकत्वसम्भवात्सहकारिभेदेनैकस्यापि कालस्य व्यवस्थिताव्यवस्थितप्रतीतिजनकत्वसम्भवान्न दिक्सिद्धिः। परापरादिप्रत्ययानां स्वाभाविकदिग्विशेषविषयकत्वेन परत्वापरत्वाद्यनालम्बनत्वात्। तदालम्बनत्वेवोक्तरीत्याऽऽकाशादेरेव वा कालस्यैव वा तदसमवायिकारणसंयोगाश्रयत्व-तन्निमित्तकारणापेक्षाबुद्धिसम्पादकत्वयोरुपपत्तेर्न कयाऽपि विधया परापरादिप्रत्ययानां दिगनुमापकत्वमिति।

**स०**— **क्वचित्साक्षिणेति**। स्वात्मसम्बन्धिनि काले बहुत्वं स्वसुखादिसम्बन्धिनि च तस्मिन्नल्पत्वं इत्येतत्साक्षिगम्यमित्यर्थः ॥ **क्वचिदनुमानादिनेति**। परात्मादौ काले बहुत्वादिकमानुमानिकं ब्रह्मादावागमिकमित्यर्थः।

**प०**— **क्वचित्साक्षिणेति**। सुषुप्त्यादावित्यर्थः। अन्यथा बहुकालं अहमस्वाप्समल्पकालमहं सुप्तिमानभूवमित्याद्यौत्तरीयकस्मृतिर्न स्यादिति भावः। क्वचिज्जाग्रत्कालीनपदार्थेषु सूर्योदयास्तमयादिलिङ्गेन मोक्षभाक्त्वश्रुत्यन्यथानुपपत्त्यादिरूपजीवादिनित्यत्वसाधकयुक्त्या च बहुत्वादिज्ञानम्। ब्रह्मादौ

नित्यं सर्वगतं सुसूक्ष्मं; इदमग्र आसीत्। अथ मर्त्योऽमृतो भवति' इत्यादिश्रुत्या। 'आकाशवत्सर्वगतश्च, नित्यः' इत्याद्यागमेन च कालनित्यत्वं ज्ञेयम्। 'क्षीयन्ते चास्य कर्माणी'त्यागमेन च कालाल्पत्वं ज्ञायत इत्यर्थः। किञ्चेत्यादिनोक्तमपि मूलारूढमित्याह **एतदपीति**। मूले साक्षिसिद्धेनेत्युपलक्षणम्। कालेनेत्यस्य बह्वल्पकालेनेत्यर्थः। तदेतच्छब्दयोः परापरेत्यर्थकत्वं च प्रागुक्तदिशा ध्येयमिति भावः।

**या०— सूर्यगतय इति**। विशेषणीभूतगत्युपनायकतया कालानुमानमित्यर्थः। परत्वापरत्वे गुणरूपे ताभ्यां चासमवायिकारणसंयोगाश्रयतया कालानुमानमित्यर्थः। **क्वचित्साक्षिणेति**। स्वात्मसम्बन्धिनि काले बहुत्वं स्वसुखादिसम्बन्धिनि काले चाल्पत्वं साक्षिगम्यमित्यर्थः। **क्वचिदनुमानादिनेति**। परात्मादिसम्बन्धिनि काले बहुत्वादिकमानुमानिकं ब्रह्मादिसम्बन्धिनि त्वागमिकमित्यर्थः॥ **अनयैव दिशेति**। अत्र परत्वं द्रष्टृपुरुषापेक्षया पिण्डस्य दूरदेशस्थत्वम्। अपरत्वं तदपेक्षया समीपदेशस्थत्वम्। दूरदेशादिशब्दाश्च दिग्विशेषपराः। तथा च परापरादिप्रत्ययेषु स्वाभाविकदिग्विशेषाणामेव विशेषणतया प्रतीतिः। न तु प्रथमादित्यसंयोगसन्निहितत्वमपरत्वं चरमादित्यसंयोगसन्निहितत्वं परत्वं येनादित्यसंयोगोपनायकतयोक्तरीत्या दिगनुमानम्। तथाऽनुभवाभावात्। नापि परत्वापरत्वे गुणरूपे अस्माकं सम्मते इति भावः।

---

**सु०— त(मे)देतं चिरन्तनं पन्थानमरोचयमाना नवीनास्तु दिक्कालयोरन्यथानुमानमाहुः। विवादाध्यासितं कार्यं विशेषगुणरहितद्रव्याभ्यां जन्यते कार्यत्वात् अन्तःकरणद्वयसंयोगवदिति।**

**(ए)तद(प्य)युक्तम्। साध्ये बहुवचनप्रयोगे(क्षेपे)ऽतिप्रसङ्गात्। न च दृष्टान्ताभावः। अन्तःकरणगतबहुत्वस्य सत्त्वात्। न चान्तःकरणद्वयसंयोगे प्रमाणमस्ति, मनो मनसा संयुज्यते मूर्तत्वाच्छरीरवदिति च आकालिके विद्युदादौ संदिग्धव्यभिचारम्।**

**शे०— चिरन्तनं पन्थानमिति**। एष तावच्चिरन्तनः पन्था इति लीलावत्युक्तेरिति भावः। तत्र मानमनोहरीयमनुमानं दूषयितुमनुवदति **विवादाध्यासितं कार्यमिति**। अत्र घटादिकं पक्षः। मृद्दण्डादिद्रव्यजन्यत्वेनार्थान्तरतानिवृत्त्यर्थं विशेषगुणरहितग्रहणम्। अदृष्टेश्वरेच्छादिभिरर्थान्तरतानिवृत्त्यै द्रव्यग्रहणम्।

अत्र कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति मनसो विशेषगुणवत्त्वश्रुतेर्दृष्टान्ते साध्यवैकल्यमिति स्पष्टत्वाद्दोषमुपेक्ष्यानयैव रीत्या विशेषगुणरहितं दशममपि

द्रव्य शक्यसाधनमित्याभाससमानयोगक्षेमत्वमित्याह **तदयुक्तमिति** ॥ **बहुवचनप्रयोग इति** । विशेष-गुणशून्यद्रव्यैर्जन्यमिति बहुवचनप्रयोग इत्यर्थः ।

ननु विशेषगुणरहितद्रव्यैर्जन्यत इत्यत्र नास्ति दृष्टान्तः । न हि बहुभिरन्तःकरणैरेकः संयोगो जन्यत इति वैषम्यान्नाभाससाम्यमित्याशङ्क्य दूषयति **न चेति** । उक्तरीत्या बहूनामन्तःकरणानां संयोगस्याप्रामाणिकत्वेन तस्योक्तानुमाने दृष्टान्तत्वासम्भवेऽप्यनेकान्तःकरणाधिकरणस्यापेक्षाबुद्धिजन्यस्य बहुत्वस्यैव दृष्टान्तत्वान्न दृष्टान्तभावाभावाभ्यां वैषम्यमित्याशयः । न च निमित्तकारणेति विशेषणेन निस्तारः । तथा सति परकीयानुमाने साध्यवैकल्यापातादित्यत्र तात्पर्यात् । उपलक्षणं चैतत् । विवादास्पदं विशेषगुणरहितद्रव्याभ्यां न जन्यतेऽन्तःकरणगुणव्यतिरिक्तत्वादाकाशवदिति सत्प्रति-पक्षत्वाच्चेत्यपि द्रष्टव्यम् । न चाकार्यत्वमुपाधिः । वेदान्तिभिराकाशस्यापि कार्यत्वाङ्गीकारेण साध्या-व्यापकत्वादित्याशयात् । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु बहूनामन्तःकरणानां संयोग एव दृष्टान्त इति नोक्तानुमाने दृष्टान्ताभावः । न चैकस्य संयोगस्यान्तःकरणत्रयजन्यत्वे प्रमाणाभावेन तदसिद्धेर्न तस्य दृष्टान्तत्वमिति वाच्यम् । तथा सत्यन्तःकरणद्वयसंयोगस्याप्यप्रामाणिकत्वेन तदसिद्ध्या परकीयानुमानेऽपि दृष्टान्तासिद्धिप्रसङ्गादित्याह **न चेति** । नापीत्यर्थः । अत्र तदीयमेव दृष्टान्तसिद्धि-समर्थनमनूद्य दूषयति **मन इति** ॥ **आकालिकेति**। समानकालावाद्यन्तावुत्पत्तिविनाशावस्य तत् आकालि-कमित्यर्थः । 'आकालिकडाद्यन्तवचने' इति सूत्रे समानकालशब्दस्याकालेत्यादेशस्य समानकालत्वस्या-द्यन्तयोर्विशेषणत्वस्येकट्प्रत्ययस्य च निपातनात् । अत्र चोत्पादविनाशयोरेककालत्वासम्भवादव्यवहित-कालत्वमेवैककालत्वं विवक्षितम् । निरन्तरे हि काले भेदाग्रहणात्स एव काल इति भवति प्रतीतिः । तथा चोत्पत्त्यव्यवहितक्षण एव विनष्टमाकालिकमिति पर्यवस्यतीति ध्येयम् । विद्युदादावित्यादिपदेन स्तनयित्नुपरिग्रहः ॥ **सन्दिग्धव्यभिचारादिति** । निश्चितहेतुमति साध्यसन्देहात्सन्दिग्धव्यभिचार इति भावः । यद्यपि निश्चितहेतुमति साध्याभावसन्देहो न दोषः । तथा सत्यनुमानमात्रोच्छेद-प्रसङ्गात् । तथाऽप्याहितस्य तस्य दोषत्वमेव । प्रकृते च तस्मिन्प्रदेशे मनसोऽसत्त्वसन्देहाहितस्तत्संयोग-सन्देह इति भावेनास्योद्भावनमिति ध्येयम् ।

स० — **नचान्तःकरणद्वयेति** । नापीत्यर्थः । **आकालिक इति** । समानकालौ आद्यन्तावस्य तदाकालिकमित्यर्थः। आदिपदेन स्तनयित्नुपरिग्रहः। 'आकालिकडाद्यन्तवचने' इत्यत्र समानकालशब्दस्य आकालिकेत्यादेशस्य समानकालत्वस्याद्यन्तयोर्विशेषणत्वस्य इकट्प्रत्ययान्तत्वस्य च निपातित्वादिति भावः । अत्राद्यन्तयोः समानकालत्वं चोत्पादविनाशयोरेककालत्वासम्भवादव्यवहितकालत्वमेककालत्वम् । निरन्तरे हि काले भेदाव्यवहारात् स एव काल इति भवति प्रतीतिरिति ध्येयम् ।

प०— **विवादेति** । वक्ष्यमाणसाध्यकत्वतदभावाभ्यां विमतं क्षित्यादिकार्यमित्यर्थः ॥ **बहुवचनेति** । विशेषगुणरहितद्रव्येभ्य इति प्रक्षेपे दिक्कालयोरिव विशेषगुणरहितद्रव्यान्तरसिद्ध्यापत्तेरित्यर्थः । ननु द्वयोरेव मनसोः संयोगो न बहूनामित्यत आह **न चेति** ॥ **द्वयेति** । द्वयमात्रसंयोग इत्यर्थः । मनो मनसेत्येकवचनं विवक्षितं तेनेष्टसिद्धिरिति भावः ॥ **आकालिक इति** । यस्यादिः अन्तश्चैककालीनौ तदाकालिकमुच्यते । तथाच पूर्वतन्त्रेऽर्थवादनये आकालिकेप्सेति गुणसूत्रे प्रयोगः । 'आकालिकडाद्यन्तवचन'इति पाणिनीयसूत्रे आकालशब्दस्य इकट्प्रत्ययान्तत्वनिपातनात्साधुत्वं ध्येयम् ।

या०— **आकालिक इति** । समानकालावाद्यन्तौ यस्य तदाकालिकमित्युच्यते । 'आकालिकडाद्यन्तवचन'इति सूत्रात् । तथा चोत्पत्त्यनन्तरमेव विनष्ट इत्यर्थः । आदिपदेन स्तनयित्नुपरिग्रहः ॥ **सन्दिग्धव्यभिचारादिति** । यद्यपि निश्चितहेतुमति साध्याभावसन्देहोऽनुमानमात्रोच्छेदकत्वान्न दोषस्तथाऽप्याहितस्य दोषत्वेन प्रकृते च तस्मिन् प्रदेशे मनोऽसत्त्वसन्देहाहितस्तत्संयोगाभावसन्देहोऽतो दोष एवेति भावः । वस्तुतस्तूत्पत्त्यनन्तरमेव विनष्टे वस्तुनि तन्मते न संयोगोत्पत्तिः सम्भवति । कार्यसहभूतासमवायिकारणाभावादतो निश्चितव्यभिचार एवेति ध्येयम् ।

श्री०— **विवादेति** । परत्वापरत्वरूपं कार्यमित्यर्थः ॥ **संदिग्धव्यभिचारादिति** । नन्वत्र निश्चितसाध्याभाववति हेतुसन्देहरूपसन्दिग्धव्यभिचाराभावात् निश्चितहेतुमिति साध्यसन्देहरूपस्य च तस्य सर्वानुमानोच्छेदकत्वेनायोगात्कथमत्र सन्दिग्धानैकान्तिकतेति चेत् । उच्यते । पक्षातिरिक्ते निश्चितहेतुमिति साध्यसन्देहेऽपि सन्दिग्धानैकान्तिकत्वेन प्रकृते तस्य सम्भवादित्याहुः । वस्तुतस्तु पक्षातिरिक्त इति न देयमेव । अनुकूलतर्काभावदशायां निश्चितहेतुमिति साध्यसंदेहरूपस्यापि सन्दिग्धानैकान्तिकत्वस्य दोषत्वमेवेति ।

च०— **आकालिक इति** । आकालिकडाद्यन्तवचन इति योगादुत्पत्त्यव्यवहितोत्तरक्षणावच्छेदेन विनष्ट इत्यर्थः । **संदिग्धव्यभिचारमिति** । आहितसंदेहस्य प्रतिबन्धकत्वाशयेनेदम् । तेन स्वारसिकतथाविधसंदेहस्याविरोधित्वेपि न क्षतिः ।

**सु०— अपर आह । परममहत्परिमाणं द्रव्यचतुष्टयवृत्ति परिमाणत्वादणुत्ववदिति । अत्र यद्याकाशात्म(गत)परिमाणपक्षीकारस्तदा सिद्धसाधनम् आत्मनां बहुत्वात् । आत्मत्वेनैक्यमुपादाय प्रयोगेऽपि बाधः । परिमाणद्वयस्य द्रव्यचतुष्टयवृत्तित्वायोगात् । एकैकद्रव्यवृत्ति खलु परिमाणम् । अत एव न कालादिगतस्य पक्षीकारः । आश्रयासिद्धिश्चाधिका ।**

**परममहत्परिमाणसामान्यं विशेषगुणशून्यद्रव्याधिकरणानेकव्यक्तिवृत्ति परिमाणतारतम्य-**

विश्रान्तिविषयजातित्वात् अणुपरिमाणवृत्तिजातिवत् इति चानुपपन्नम् । परममहत्परिमाणसामान्यं हि परिमाणत्वं वा तदवान्तरजातिर्वा । आद्ये मनःसिद्ध्याऽप्यस्य संभवेनार्थान्तरता । सामान्यस्याप्यनेकवृत्तिताया निराकरिष्यमाणत्वेन बाधाश्रयासिद्धी च । न द्वितीयः । तस्याः (तस्य) निराकरिष्यमाणत्वात् । वर्णसिद्ध्या अर्थान्तरत्वाच्च । अनेकपदस्थाने बहुपदप्रक्षेपे अतिप्रसङ्गश्च ।

अस्तु कालस्य दिशश्च बहुत्वम्, आत्मवदुपसंग्राहकैक्येन द्रव्याणां नवत्वोपपत्तिरिति चेत्तर्हि दिशा कालेन वा साध्यपर्यवसान(संभव)ादुभयसाधकत्वमस्य न स्यात् । मा भूदिति चेन्न । अनेकपदवैयर्थ्यात् । अन्यतरसाधनेऽन्यतरेणार्थान्तरताप्रसङ्गात् । हेतुदृष्टान्तयोश्चानुपपत्तिर्वक्ष्यत इत्यलं पल्लवेन ।

शे०— **अत एवेति** । कालदिग्गतस्य परिमाणस्य पक्षीकारे सिद्धसाधनं, दिशां बहुत्वेन परममहत्परिमाणस्य द्रव्यचतुष्टयवृत्तित्वसिद्धेः । आत्मनामात्मत्वेनेव दिशामपि दिक्त्वेनैक्यमुपादाय प्रयोगे एकैकद्रव्यवृत्तित्वात्परिमाणस्य परिमाणद्वयस्य द्रव्यचतुष्टयवृत्तित्वस्य बाधितत्वादित्युक्तदोष देवेत्यर्थः । न केवलं कालदिग्गतपरिमाणस्य पक्षत्वे उक्तरीत्या सिद्धसाधनत्वमेव दोषः । किन्नाम कालदिशोरेवासिद्ध्या तत्परिमाणस्य सुतरामसिद्धेराश्रयासिद्धिश्चेत्याह **आश्रयासिद्धिश्चेति** । चतुष्टयसम्बन्धिपरिमाणस्य पक्षीकारान्न बाध इत्यत आह आश्रयासिद्धिश्चेत्यप्याहुः । लीलावतीकारेण दिक्कालयोः साधनायोक्तमनुमानमनूद्य दूषयति **परममहत्परिमाणेति** । अणुत्वे सिद्धसाधनवारणाय परममहदिति विशेषणम् ॥ **विशेषगुणेति** । विशेषगुणशून्यं यद्द्रव्यं तदधिकरणा याऽनेकव्यक्तिः परममहत्परिमाणरूपा तद्वृत्तीत्यर्थः । द्रव्याधिकरणानेकवृत्तीत्युक्ते गगनात्मघटादिवृत्त्यनेकमहत्परिमाणनिष्ठतासाधनेनार्थान्तरता स्यात् । तदर्थं विशेषगुणशून्येत्युक्तम् । अनेकव्यक्तिग्रहणेन च तदधिकरणविशेषगुणशून्यद्रव्यानेकत्वसिद्धौ कालदिशोः सिद्धिः । परिमाणवृत्तित्वेन सिद्धसाधनताव्यावृत्त्यै द्रव्याधिकरणपदम् । घटत्वादिनिवृत्त्यै विश्रान्तीत्यादिविशेषणम् । ज्ञानत्वादिनिवृत्त्यै परिमाणेति विशेषणमिति भावः । अत्र हेतौ विश्रान्तिविषयजातित्वं विश्रान्तिविषयनिष्ठजातित्वमेव विवक्षितम् । क्वचित्तु तथैव पाठः ॥ **अणुपरिमाणवृत्तिजातिवदिति** । विशेषगुणशून्यानेकमनोगताणुपरिमाणनिष्ठाणुत्वजातिवदित्यर्थः ।

अत्रानेकव्यक्तिवृत्तित्वं यद्येकत्वानधिकरणव्यक्तिवृत्तित्वं तदा सिद्धसाधनम् । अथानेकत्वसङ्ख्याधिकरणमहत्त्वनिष्ठत्वं तदा बाध इति सत्येव दोषे दोषान्तरमाह **परममहदिति** ॥ **मनःसिद्ध्याऽपीति** । विशेषगुणशून्यमनोव्यक्तीनामनेकत्वेन तत्परिमाणवृत्तितामादायापि साध्यपर्यवसानसम्भवादिति

भावः ॥ **निराकरिष्यमाणत्वेनेति** । 'नरत्वादिकमप्येवं तत्तद्धर्मतयेयत' इत्यादिना वैशेषिकपरीक्षाया-मिति शेषः ॥ **तस्या इति** । परिमाणत्वावान्तरजातेरित्यर्थः । तस्येत्यपि क्वचित्पाठः । तत्र परिमाण-वृत्त्यणुत्वात्वादेः परिमाणत्वावान्त त्वस्येत्यर्थो बोध्यः ॥ **निराकरिष्यमाणत्वादिति**। 'महत्त्वं चैव दीर्घत्वं त्र्यणुकाद्येषु कल्पितमि'त्यादिना वैशेषिकपरीक्षायामिति शेषः । ततश्चाश्रयासिद्धिरिति भावः । परि-माणत्वावान्तरजातिमभ्युपेत्याप्याह **वर्णसिद्धयेति** । समधिगतमेतदपौरुषेयत्ववादे यद्वर्णानामनेकत्वं विभुत्वं च । न तेषां गुणाः सन्ति नादानामन्यधर्मत्वादन्यस्य चाभावात् । अतस्तद्वृत्तित्वसाधनेनापि विश्रान्तेरर्थान्तरतेत्यर्थः । आभाससाम्येनापि दूषयति ॥ **अनेकपदस्थान इति** । विशेषगुणशून्यद्रव्या-धिकरणबहुव्यक्तिवृत्तीत्येवमनेकपदस्थाने बहुपदप्रयोग इत्यर्थः ॥ **अतिप्रसङ्गश्चेति** । अनेकव्यक्तिग्रहणेन तदधिकरणविशेषगुणशून्यद्रव्यानेकत्वसिद्धौ कालदिशोरिव बहुव्यक्तिग्रहणेन तदधिकरणविशेषगुणशून्य-द्रव्यबहुत्वसिद्धौ विशेषगुणशून्यानां बहूनां द्रव्याणां सिद्धिः स्यादित्यतिप्रसङ्ग इत्यर्थः ।

तथा च नैकस्यापि सिद्धिरिति भावः ॥ **हेतुदृष्टान्तयोरिति** । परिमाणोत्कर्षापकर्षयोरनवधिक-त्वस्यैव 'न महत्त्वस्यापि विश्रमः । दृश्यतेऽनन्त इत्येव तथाऽऽनन्त्यमणावपी'त्यादिना वैशेषिकपरीक्षायां वक्ष्यमाणत्वेन परिमाणतारतम्यस्य अविश्रान्तिसिद्ध्या विश्रान्तिघटितहेतोः पक्षेऽसिद्ध्याऽसिद्धिः । दृष्टान्ते च साधनवैकल्यमित्यर्थः । ननु तथाऽऽप्याधुनिकोन्नीतदिक्कालसाधकानुमानजातमनूद्य निराकुर्वताऽनुमाना-न्तराणामिव तदुपन्यस्तं विवादाध्यासितानि मूर्तद्रव्याणि युगपद्विशेषगुणशून्यानेकद्रव्यसंसर्गीणि द्रव्य-त्वादात्मवदित्यनुमानमपि निराकर्तव्यमेव । अन्यथा तेनैव तत्सिद्ध्युपपत्त्या परिशेषानुमानासम्भवेन तेन साक्षिमात्रसिद्धत्वसमर्थनायोगात् । अत्र साध्ये द्रव्यसंसर्गीणीत्युक्ते गगनसंसर्गितयाऽर्थान्तरता तदर्थम-नेकद्रव्येत्युक्तम् । तथाऽपि घटसंसर्गितयाऽर्थान्तरता तदर्थं विशेषगुणशून्येत्युक्तम् । तथाऽपि मुक्तात्म-संसर्गितयाऽर्थान्तरता तदर्थं युगपदित्युक्तम् । तेषां क्रमेणैव मुच्यमानानां युगपद्विशेषगुणशून्यत्वाभावात् युगपत्संसर्गीणीति वा साध्यं तदा लोकान्तरं प्रतिष्ठमानैर्मनोभिः क्रमेण सम्बद्ध्यमानपृथिव्यादिना सिद्ध-साधनतापरिहारार्थं युगपदिति पदम् । बाधपरिहारार्थं विशेषपदम् ।मनोभिः संसर्गेण चात्मनि साध्य-सिद्धिरित्यतः, परममहत्परिमाणसामान्यमिति लीलावतीकृता उन्नीतानुमाननिरासेन तदुन्नीतस्याप्यनुमानस्य निरस्तप्रायत्वाद्युक्तः पृथग्निरास इति भावेनाह **अलमिति** । तथा हि । उक्तरीत्या वर्णानामप्युक्तविशेषण-विशिष्टत्वेन तत्संसर्गसाधनेनार्थान्तरताप्रसक्तेः । दृष्टान्तस्य साध्यवैकल्याच्च । मनसोविशेषगुणशून्यत्वे ह्यात्मनो युगपद्विशेषगुणशून्यद्रव्यसंसर्गित्वं भवेत् । तच्च वेदान्तिनं प्रत्यसिद्धम् । तेन मनसोऽपि विशेष-गुणवत्त्वाभ्युपगमात् । न च तत्र प्रमाणाभावः । विप्रतिपन्नं विशेषगुणवत्, मूर्तत्वाद् घटवदित्यनुमानस्यैव तत्र मानत्वात् । न च द्रव्यारम्भकत्वमुपाधिः । विशेषगुणवत्स्वप्यन्त्यावयविषु द्रव्यारम्भकत्वाभावेन

साध्याव्यापकत्वात् । न च द्रव्यारम्भकवृत्तिद्रव्यत्वावान्तरजातिमत्त्वमुपाधिः । अन्त्यावयविष्वप्युक्तरूपपृथिवीत्वजातिसद्भावेन साध्यव्यापकत्वात् । मनस्त्वस्य द्रव्यत्वावान्तरजातित्वेऽपि द्रव्यारम्भकावृत्तित्वेन साधनवति पक्षे उक्तोपाध्यभावेन साधनाव्यापकत्वाच्चेति वाच्यम् । आकाशे विशेषगुणवत्त्वेऽपि द्रव्यत्वावान्तरजातेस्तत्राभावेन,आत्मनि विशेषगुणवति च तत्सत्त्वेऽपि द्रव्यारम्भकवृत्तित्वाभावेन आकाशात्मनोः साध्याव्यापकत्वात् । न च बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वमेवोपाधिः । तच्चाकाशेऽप्यस्तीति न तत्र साध्याव्याप्तिरिति वाच्यम् । तथाऽप्यात्मनि साध्याव्याप्तेरपरिहारात् । कामः सङ्कल्प इति मनसो विशेषगुणवत्त्वश्रवणाच्चेति । एवमेवानुमानान्तरं निरसनीयमिति सङ्क्षेपः ।

स० — **अत एवेति** । कालादिगतस्य परिमाणस्य पक्षीकारे सिद्धसाधनत्वात् परममहत्परिमाणस्य द्रव्यचतुष्टयवृत्तित्वसिद्धेः दिक्कालैक्यमुपादाय प्रयोगे परिमाणद्वयस्य द्रव्यचतुष्टयवृत्तित्वबाधादित्यर्थः । चतुष्टयसम्बन्धिपरिमाणस्य पक्षीकारान्नोक्तदोष इत्यत आह **आश्रयासिद्धिश्चेति** । **विशेषगुणशून्येति** । विशेषगुणशून्यद्रव्ययोरधिकरणयोः परममहत्परिमाणलक्षणा याऽनेकव्यक्तिस्तद्वृत्तीत्यर्थः । **विश्रान्तिविषयजातित्वादिति** । विश्रान्तिविषयीभूतपरिमाणं तन्निष्ठजातित्वादित्यर्थ ॥ **मनःसिद्ध्याऽपीति** । मनसां विशेषगुणशून्यानामनेकत्वेन तत्परिमाणवृत्तितामादायापि साध्यपर्यवसानसम्भवादिति भावः ॥ **निराकरिष्यमाणत्वेनेति** । समयपादे 'नरत्वादिकमप्येवं तत्तद्धर्मतयेयत इत्यादिनेति शेषः । **तस्य इति** । परिमाणत्वावान्तरजातिरिति द्वितीयपक्षस्य समयपादे निराकरिष्यमाणत्वादित्यर्थः । परिमाणत्वावान्तरसामान्यस्येति वा । **वर्णसिद्ध्येति** । वर्णानामपि विशेषगुणशून्यत्वादनेकत्वाच्चेति भावः । **अतिप्रसङ्गश्चेति** । विशेषगुणशून्यं परममहत्परिमाणं तृतीयं द्रव्यं सिध्येतेति भावः । ननु बहुपदप्रक्षेपेपि न तृतीयद्रव्यसिद्धिः येनातिप्रसङ्गःस्यात् किं तु कालदिशोरेव बहुत्वं सिद्ध्येदित्याशङ्कते **अस्तु कालस्येति** । तर्हि **दिशा कालेन वेति** । एकैकस्य बहुत्वात् विशेषगुणशून्यत्वाच्चेति भावः ॥ **हेतुदृष्टान्तयोश्चेति** समयपादे परिमाणतारतम्यस्याविश्रान्तिरेव वक्ष्यत इति हेतुदृष्टान्तयोरनुपपत्तिरिति । अनेकवृत्तिजातेरपि तत्रैव निराकरिष्यमाणत्वेन दृष्टान्तानुपपत्तिश्चेत्यर्थः ।

प० — **द्रव्यचतुष्टयेति** अनेनाकाशकालदिगात्मरूपद्रव्यचतुष्टयसिद्धिरिति भावः ॥ **अणुत्ववदिति** । अणुत्वस्य पार्थिवपरमाण्वादिचतुष्टयवृत्तित्वादिति भावः । किमत्राविप्रतिपन्नात्माकाशयोः परिमाणं पक्षीक्रियते । अथ विप्रतिपन्नदिक्कालयोः । तत्राद्यं निराह **अत्र यदीति** । द्वितीयं निराह **अत एवेति** । बाधादेवेत्यर्थः ॥ **परममहत्परिमाणसामान्यमिति** । परममहत्परिमाणनिष्ठजातिरित्यर्थः ॥ **विशेषेति** । विशेषगुणशून्ये च ते द्रव्ये च विशेषणगुणशून्यद्रव्ये अधिकरणे ययोस्ते, ते च ते अनेक-

व्यक्ती च, तद्वृत्तीत्यर्थः । अनेनोक्तजात्यधिकरणपरिमाणद्वयाश्रयविशेषगुणहीनद्रव्यद्वयसिद्धौ दिक्कालयोः सिद्धिः । आत्माकाशयोर्विशेषगुणवत्त्वादिति भावः । क्वचिद्विशेषगुणशून्यद्रव्यत्वाधिकरणानेकव्यक्तिवृत्तीति पाठः ॥ **परिमाणतारतम्येति** । विश्रान्तिविषयपरिमाणनिष्ठजातित्वादित्यर्थः । अणुपरिमाणपरममहत्परिमाणयोः पश्चात् परतोन्यूनाधिकपरिमाणान्तराभावादिति भावः ॥ **मनःसिद्ध्यापीति** । मनसामनेकत्वेन तन्निष्ठपरिमाणस्याप्यनेकव्यक्तित्वात् मनसो विशेषगुणशून्यद्रव्यत्वाच्चेति भावः ॥ **निराकरिष्यमाणत्वेनेति** । वैशेषिकनये 'नरत्वादिकमप्येवं तत्तद्धर्मतयेयते । न सर्वधर्म एकोऽस्ति समुदायमृते क्वचिद्'त्यादिनेति भावः ॥ **तस्या इति** । परिमाणत्वव्याप्यस्य परममहत्परिमाणत्वरूपसामान्यस्य वैशेषिकनये । 'महत्त्वं च परमाणावणावपी'त्यादिनेति भावः । व्याप्यजातिमभ्युपेत्याह **वर्णसिध्येति** । वर्णानामनेकत्वाद्विशेषगुणशून्यद्रव्यत्वात् परममहत्परिमाणाश्रयत्वाच्चेति भावः । वर्णानां द्रव्यत्वे विप्रतिपन्नं प्रत्याह **अनेकेति** । दिक्कालयोर्बहुत्वस्य तादृशद्रव्यान्तरस्य वा सिद्धिप्रसङ्ग इत्यर्थः । ननु द्रव्यान्तरसिद्धौ बाधात्कल्पनागौरवाच्च दिक्कालयोरेव बहुत्वेन साध्यपर्यवसानं भविष्यतीति तटस्थशङ्कामनूद्य निराह **अस्त्विति** ॥ **आत्मवदिति** । आत्मत्वेन यथासंग्रहः पूर्वमुक्तः तथेहापि दिक्कालादीनां भविष्यतीत्यर्थः ॥ **हेतुदृष्टान्तयोश्चानुपपत्तिरिति** । असिद्धिसाध्यसाधनवैकल्यरूपेत्यर्थः । 'न महत्त्वस्यापि विश्रमः। दृश्यतेऽनन्त इत्येव तथाऽऽनन्त्यमणावपि'इत्यादिना वैशेषिकनये परिमाणतारतम्यविश्रान्तेः जातेरनेकवृत्तित्वाभावस्य [च] वक्ष्यमाणत्वादिति भावः ।

**या०**— ननु द्रव्यचतुष्टयवृत्तित्वं संयोगद्वयवत्परिमाणद्वयस्य किं न स्यादित्यत आह **एकैकेति** ॥ **अत एवेति** । यदि दिक्कालगतपरिमाणपक्षीकारस्तदा सिद्धसाधनम् । दिक्कालयोर्बहुत्वात् । दिक्त्वेन कालत्वेन चैक्यमुपादाय प्रयोगेऽपि बाध इत्युक्तन्यायादेवेत्यर्थः । चतुष्टयसम्बन्धिपरिमाणस्य पक्षीकारान्न बाध इत्यत आह **आश्रयासिद्धिश्चेति** । सिद्धसाधनता तावदनिवार्येति भावः ॥ **विशेषगुणशून्येति** । विशेषगुणशून्ये द्रव्येऽधिकरणे ययोः परिमाणयोस्तल्लक्षणानेकव्यक्तिवृत्तीत्यर्थः ॥ **विश्रान्तिविषयजातित्वादिति** । विश्रान्तिविषयभूतं यत्परिमाणं तन्निष्ठजातित्वादित्यर्थः ॥ **मनःसिद्ध्याऽपीति** । मनसां विशेषगुणशून्यानामनेकत्वेन तत्परिमाणवृत्तितामादायापि साध्यपर्यवसानसम्भवादिति भावः ॥ **निराकरिष्यमाणत्वेनेति** । वैशेषिकपरीक्षायामिति शेषः ॥ **तस्या इति** । परिमाणत्वावान्तरजातेर्वैशेषिकपरीक्षायां निराकरिष्यमाणत्वादित्यर्थः । तस्येति पाठे द्वितीयपक्षस्येत्यर्थः । परिमाणवृत्त्यणुत्वादेः परिमाणत्वावान्तरस्येति वाऽर्थः ॥ **वर्णसिद्ध्येति** । वर्णानामपि परममहत्परिमाणत्वाद्विशेषगुणशून्यत्वादेकत्वाच्चेति भावः ॥ **अतिप्रसङ्गश्चेति** । परममहत्परिमाणानां विशेषगुणशून्यानां बहूनां

द्रव्याणां सिद्धिप्रसङ्ग इत्यर्थः । ततश्च द्रव्याणां नवत्वानुपपत्तिरिति भावः ॥ ननु बहुपदप्रक्षेपेऽपि न तादृशविजातीयबहुद्रव्यसिद्धिर्येनातिप्रसङ्गः किन्तु कालदिशोरेव बहुत्वं सिद्ध्येदित्याशङ्कते **अस्तु कालस्येति । तर्हि दिशा कालेन वेति ।** एकैकस्य बहुत्वाद्विशेषगुणशून्यत्वाच्चेति भावः ॥ **हेतुदृष्टान्तयोश्चेति ।** वैशेषिकपरीक्षायां परिमाणतारतम्यस्याविश्रान्तिरेवेति वक्ष्यमाणत्वेन हेतोरनुपपत्तिः । अनेकवृत्तिजात्यभावस्यापि तत्र वक्ष्यमाणत्वेन दृष्टान्तस्याप्यनुपपत्तेरित्यर्थः । दिक्कालयोर्बहुत्वमौपाधिकमिति परे वर्णयन्ति । तदपि न प्रामाणिकमित्याशयेनोक्तम् **इत्यलमिति ।**

**श्री०— अपर आहेति ।** दिक्कालयोरन्यथानुमानमाहेत्यर्थः ॥ **परिमाणद्वयस्येति** आत्माकाशगतपरिमाणद्वयस्यात्माकाशरूपद्रव्यद्वयवृत्तित्वेनेत्यर्थः ॥ **अणुपरिमाणवृत्तीति ।** अत्र दृष्टान्ते मनः समादाय साध्यमुपपादनीयम् । परममहत्परिमाणसामान्यमित्यस्य परममहत्परिमाणनिष्ठं यत्सामान्य परिमाणत्वं भवति । सामान्यस्य विशेषवृत्तित्वात् । तथा परममहत्परिमाणनिष्ठं यत्सामान्यं परममहत्परिमाणत्वरूपं परिमाणत्वावान्तरजातिः साऽप्यर्थतयाऽऽयाति । अतः परिमाणत्वं तदवान्तरजातिर्वेति युक्तो विकल्पः । ननु कालस्य दिशश्च बहुत्वे द्रव्याणां नवत्वानुपपत्तिरिति चेत्तत्राह **आत्मवदिति ।** यथाऽऽत्मनां क्षेत्रज्ञपरमात्मभेदेन द्वित्वेऽपि क्षेत्रज्ञानामनन्तत्वेऽपि न द्रव्याणां नवत्वहानिः । आत्मत्वरूपोपसंग्राहकैक्येनात्मन एकत्वाद् द्रव्याणां नवत्वोपपत्तेः । तथा कालदिशोर्बहुत्वे पि कालत्वदिक्त्वरूपोपसंग्राहकैक्येन कालादेरेकत्वाद् द्रव्याणां नवत्वमविरुद्धमित्यर्थः । **उभयसाधकत्वं** युगपदुभयसाधकत्वम् । **अस्य** अनुमानस्य । ननु न युगपदुभयं साध्यते । किन्तु क्रमेणैवेत्यत आह **अन्यतरेति ।**

**च०— निराकरिष्यमाणत्वेनेति ।** वैशेषिकपरीक्षायामिति पूरणीयम् । **तस्या इति ।** परिमाणत्वावरन्तरजातेर्वैशेषिकपरीक्षाय प्रत्याख्यास्यमानत्वादित्यर्थः । तस्येत्यपि पाठमुपेत्य द्वितीयपक्षस्येत्यर्थः । परिमाणवृत्त्यणुत्वादेः परिमाणत्वावान्तरस्येति वार्थ इत्यप्यर्थापयन्ति **वर्णसिध्येति ।** वर्णानामपि परममहत्परिमाणविशेषगुणशून्यत्वानेकत्वाश्रयत्वादिति भावः । **अतिप्रसङ्गश्चेति ।** परममहत्परिमाण-विशेषगुणवैधुर्य-बहुत्व-विशेषितानां द्रव्याणां सिद्धिप्रसङ्ग इत्यर्थः । तथा च द्रव्याणि नवैवेति नियमोनोपपद्यत इति भावः। **वक्ष्यत इति ।** अविरोधलक्षणे वैशेषिकपरीक्षायां 'न महत्वस्यापि विश्रमः । दृश्यतेऽनन्त इत्येव तथानन्त्यनमण वपि' इत्यादिना परिमाणोत्कर्षापकर्षयोरनिरवधिकत्वस्यैवाभिधास्यमानत्वेन परिमाणतारतम्यस्य विश्रान्तिराहित्यसिध्या विश्रान्तिघटितहेतुताऽवच्छेदकावच्छिन्नस्य पक्षवृत्तिताराहित्येना सिद्धिर्दिर्शने च साधनवैकल्यमित्यर्थः । अलमित्यस्याभिप्रेतार्थप्रपञ्चनं निबन्धान्तरादिताऽवसेयम् ।

सु० — गगनादेस्सकलप्रपञ्चस्य त्रैकालिकाबाध्यत्वं साक्षिसिद्धमित्युक्तमर्थमुपसंहरन्विवृणोति अत इति ।

अनु० — अतोऽदोषप्रतीतस्य सत्यत्वं साक्षिणा मतम् ।

न विद्यते दोषः कारणं यस्य ज्ञानस्य तेन प्रतीतस्य विषयीकृतस्यादोषेण प्रत्यक्षादिना वा प्रतीतस्य गगनादेः प्रपञ्चस्य सत्यत्वं त्रैकालिकाबाध्यत्वं साक्षिणा मतं सिद्धम् । प्रामाण्यग्रहणादिनेति शेषः ।

शे० — ननु सर्वकालेष्वबाध्यत्वं साक्षिणैव प्रतीयत इत्युक्तस्यैव साक्षिणः प्रामाण्यग्रहणादिना सकलप्रपञ्चसत्यत्वग्राहकत्वस्याभिधाना'दतोऽदोषप्रतीतस्ये'त्युत्तरानुव्याख्यानवैयर्थ्यमित्यतस्तदुपसंहारार्थत्वान्नानर्थक्यमित्यभिप्रेत्य तत्परतयोत्तरवाक्यं सङ्गमयति **गगनादेः प्रपञ्चस्येति** । अदोषप्रतीतस्येत्यस्य सार्थक्यमाह **विवृणोतीति** । उक्तमिति वर्तते । विवरणनिमित्तं चोत्तरत्र आकर एव स्पष्टम् । अदोषशब्देनान्यपदार्थतया ज्ञानलाभाज्ज्ञानविषयत्वार्थकप्रतीतपदास्वारस्यमित्यतो विशिष्टवाचकानां पदानां विशेषणवाचकपदसन्निधाने विशेष्यमात्रपरत्वव्युत्पत्तेस्तत्र प्रतीतशब्देन विषयीकृतत्वमात्रमेव ग्राह्यमित्याशयेनाह **प्रतीतस्य विषयीकृतस्येति** । प्रतीतपदस्वारस्यार्थं पक्षान्तरमाह **अदोषेण प्रत्यक्षादिना वेति** । 'सत्यत्वं गगनादेश्चे'त्यतो गगनादेरित्यस्यानुवृत्तिमाश्रित्योक्तं गगनादेरिति । गगनादेरित्युक्त्या साक्षात्साक्षिसिद्धानां गगनादीनामेव ग्रहणे सकलप्रपञ्चसत्यत्वस्य साक्षिसिद्धतायाः सर्वकालेष्वित्युक्ताया अनुपसंहारप्रसङ्गाद्गगनादेरित्यस्य तात्पर्यमाह **प्रपञ्चस्येति** । पूर्वं सर्वकालेष्वबाध्यत्वस्यैव साक्षिसिद्धत्वोक्तेस्तदुपसंहारत्वसिद्धये उपक्रमानुसारेण सत्यत्वशब्दं व्याचष्टे **सत्यत्वं त्रिकालाबाध्यत्वमिति** । अतोऽदोषप्रतीतस्येत्यस्योक्तोपसंहारत्वद्योतकतया मतशब्दार्थमाह **मतं सिद्धमिति** । ननु साक्षात्साक्षिविषयगगनादेः त्रिकालाबाध्यत्वग्राहकत्वसम्भवेऽपि कथं स्वाविषयस्य कुम्भादेस्त्रिकालाबाध्यत्वग्राहकत्वं साक्षिण इत्यत आह **प्रामाण्यग्रहणादिनेति शेष इति** । साक्षादपि इति आदिपदार्थः ।

प० — **प्रामाण्यग्रहणादिनेति** । स्वविषये साक्षात् इति आदिपदम् ।

या० — प्रामाण्यग्रहणादिनेत्यत्रादिपदेन क्वचित्साक्षादपीत्यस्य संग्रहः ।

च० — **प्रामाण्यग्रहणादिनेति** । आदिपदं साक्षादपीत्यस्य संग्राहकम् । घटादीनां त्रिकालाबाध्यत्वं प्रामाण्यग्रहणद्वारा साक्षी गृह्णाति गगनादीनां तु साक्षादिति विवेकः ।

सु० — अयम(त्रा)भिप्रायः । आकाशकालदिगात्ममनांसि सुखादयश्च साक्षात्साक्षिसिद्धाः । तदितरे तु पदार्था यथास्वम्(यथायथम्) इन्द्रियलिङ्गशब्दगम्याः । ज्ञानं च भावा-

भावलक्षणं स्वविषयं सत्त्वेनैवावगाहते, नासत्त्वेन, नाप्युदासीनेन रूपेण । न चैवं घटोऽस्ति घटो नास्तीतिप्रत्ययानुपपत्तिः पौनरुक्त्याद्व्याघाताच्चेति युक्तम् । घटोऽस्तीति देशकालविशेषसंबन्धिसत्ताविषयत्वात्, क्वचिद्विपरीताकाङ्क्षाव्यवच्छेदार्थत्वात्, क्वापि व्याख्यानव्याख्येयभावात् । नास्तीत्यस्य च देशकालविशेषसंबन्धिसत्ताप्रतिषेधपरत्वात् । न हि सता सकलदेशकालसता भवितव्यमिति नियामकमस्ति । ज्ञानगतं च याथार्थ्यलक्षणं प्रामाण्यं ज्ञानग्राहकेणैव गृह्यते । ज्ञानग्राहकश्च साक्षीत्यविवादं वादिप्रतिवादिनोः । तथा च साक्षिणा ज्ञानप्रामाण्यं गृह्णता तद्विषयस्य सकलप्रपञ्चस्य त्रैकालिकाबाध्यत्वलक्षणं सत्यत्वमेव गृहीतं भवति । यदि हि ज्ञानगोचरस्य नित्यस्य वा अनित्यस्य वा सर्वगतस्य वा असर्वगतस्य वा अर्थस्य स्वदेशकालप्रकारोपाधावसत्त्वाऽऽवेदनलक्षणो बाधः स्यात्, कोऽर्थस्तदा ज्ञानप्रामाण्यं साक्षिणा प्रमितमित्यस्येति ।

यदि तर्हि ज्ञानस्वरूपग्राहकः साक्षी तत्प्रामाण्यमपि गृह्णन्प्रपञ्चसत्यतां निश्चिनुयात्, शुक्तिरजतादिज्ञानस्वरूपग्राहकोऽपि स एवेति तत्प्रामाण्यमपि गृह्णन् शुक्तिरजतादिकमपि सत्यं व्यवस्थापयेत् । न च शुक्तिरजतादिज्ञानानां प्रामाण्यमेव नास्ति, किं साक्षिणा गृह्यताम् इति युक्तम्, प्रपञ्चगोचराणामपि ज्ञानानां प्राणाण्याभावात्किं साक्षिणा गृह्यत इत्यपि वक्तुं शक्यत्वात् । तस्मात्साक्षिणा प्रपञ्चसत्यतासिद्धिमभिलषता ज्ञानग्राहकस्य साक्षिणः प्रामाण्यग्राहकत्वं स्वभाव इति वक्तव्यम् । तथा चोक्तोऽतिप्रसङ्ग इत्यत उक्तम् अदोषेति ।

शे०— अत्र सर्वस्मिन्प्रपञ्चे साक्षात्प्रामाण्यग्रहणद्वारा चाबाध्यत्वं साक्षी गृह्णतीत्युच्यते । तदयुक्तम् । गगनादेः साक्षिविषयतया तदबाध्यत्वग्राहकत्वोपपत्तावपि घटादेः साक्ष्यविषयतया तदंशे प्रामाण्यग्रहणमद्वारीकृत्य साक्षिणस्तदबाध्यत्वग्राहकत्वासम्भवात् । अभ्युपेत्य चेदमुदितम् । वस्तुतस्तु न प्रामाण्यग्राहकत्वेन विषयसत्यत्वग्राहकत्वं सम्भवति । ज्ञानस्यासत्त्वेन वा सत्त्वासत्त्वौदासीन्येन वा स्वविषयग्राहकत्वेन, सत्त्वेन तद्ग्राहकत्वाभावेन, प्रामाण्यग्रहणद्वारा ज्ञानविषयसत्त्वस्य स्वरूपमात्रस्य वा सिद्धावपि तत्सत्यत्वसिद्धेरयोगात् । न च ज्ञानं स्वविषयं सत्त्वेनैव गृह्णाति न तूक्तरीत्या इति प्रामाण्यग्रहणद्वारा सत्त्वस्यैव सिद्धिरिति वाच्यम् । तथा सति पौनरुक्त्यादिप्रसङ्गेन घटोऽस्तीत्यादिप्रत्ययानामनुपपन्नत्वप्रसङ्गात् । अस्तु वा ज्ञानस्य सत्त्वेनैव स्वविषयग्राहकतया प्रामाण्यग्राहकस्य स्वविषयाबाध्यत्वग्राहकत्वम् । तथाऽपि न साक्षिणो विषयाबाध्यत्वसाधकत्वप्राप्तिः । तेन प्रामाण्यग्राहकस्यानुमानस्य विषयाबाध्यत्वसाधकत्वप्राप्तेः । न च साक्षिण एव प्रामाण्यग्राहकत्वात्तत्प्राप्तिरिति वाच्यम् । नियामकप्रमाणाभावेन साक्षिणः प्रामाण्यग्राहकत्वासिद्धेः । नच प्रामाण्यस्य स्वतस्त्वेन

ज्ञानग्राहकग्राह्यत्वात्तत्सिद्धिः । ज्ञानग्राहकमात्रग्राह्यत्वेन स्वतस्त्वोपपत्त्या तेन साक्षिग्राह्यत्वासिद्धेः । न च साक्षिण एव ज्ञानग्राहकत्वात्तस्यैव प्रामाण्यग्राहकत्वमिति वाच्यम् । साक्षिणो ज्ञानग्राहकत्वस्यैवासिद्ध्या मूलशैथिल्यात् । अस्तु वा साक्षिण एव ज्ञानग्राहकत्वेन प्रामाण्यग्राहकत्वम् । तथाऽपि न तेन तज्ज्ञानविषयघटादिसत्त्वसिद्धिः । साक्षिणा घटादिज्ञानप्रामाण्ये गृहीतेऽपि तज्ज्ञानविषयस्य घटादेरसत्त्वावेदनलक्षणबाधाभ्युपगमे दोषाभावादित्यतोऽभिप्रायमाह **अयमभिप्राय इति** ॥ **पौनरुक्त्यादिति** । घटपदेन प्रतिपादितायाः सत्ताया अस्तीत्यनेनापि प्रतिपादनादिति भावः । घटो नास्तीत्यत्र घटपदेन प्रतिपादितयाऽस्तितया तन्नास्तिताया व्याहतत्वादित्याह **व्याघाताच्चेति** । प्रयोजनसद्भावान्न पौनरुक्त्यमित्याशयेन प्रयोजनमाह **घटोऽस्तीत्यादिना** । घटपदेन प्राप्तायाः सत्ताया अस्तीत्यत्र प्रकृत्याऽनूद्य प्रत्ययेन तस्या देशकालविशेषसम्बन्धबोधनान्न पौनरुक्त्यमित्याशयः ॥ **क्वचिदिति** । घट इत्येवोक्ते नास्ति किमेति विपरीताकाङ्क्षाया अपि कदाचित्सम्भवात्तद्व्यवच्छेदार्थमस्तीति वचनमित्यर्थः । ननु यदाऽत्र भूतले किमस्तीति प्रश्ने सत्युच्यते घटोऽस्तीति तदा प्रकरणवशादेव घटसत्ताया देशकालविशेषसम्बन्धस्यापि घटपदेनैव सिद्धेरस्तीत्यस्य वैयर्थ्यमेवेत्यत आह **क्वापीति** ॥ व्याघातं परिहरति **नास्तीत्यस्य चेति** । घटो नास्तीत्यत्र घटपदेन तत्सत्त्वमात्रलाभेऽपि नास्तीत्यनेन तस्य देशकालविशेषसम्बन्धः प्रतिषिध्यते । तथा चान्यत्र देशे काले च सन्घटोऽत्रेदानीं नास्तीत्यर्थलाभान्न विरोध इत्यर्थः । ननु च यस्मिन्देशे काले च घटसत्ता नास्तीत्यनेन प्रतिषिध्यते तस्मिन्नपि देशे काले च घटसत्तायाः सामान्यतो घटपदेनाभिधानाद्विरोधतादवस्थ्यमित्यतो निषेधाधिकरणदेशकालभिन्नदेशकालाधिकरणतयाऽपि सामान्यतः सत्त्वाभिधानस्य पर्यवसानसम्भवान्न विरोध इति भावेनाह **न हीति** ॥ **ज्ञानग्राहकेणैव गृह्यत इति** । प्रामाण्यस्य स्वतस्त्वादिति भावः ॥ **अविवादमिति** । अतो न तत्साधकयुक्तिरुपन्यसनीयेति भावः ॥ **गृहीतं भवतीति** । विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणाभावादिति भावः । तदेवाह **यदि हीति** ॥ **स्वदेशकालप्रकारोपाधाविति** । स्वदेशकालप्रकारावच्छेदेनेत्यर्थः । यद्देशकालप्रकारावच्छेदेन यस्य येन सत्ता गृह्यते तस्य तदवच्छेदेन तस्याबाध्यतायाः प्रामाण्यप्रयुक्तत्वात्तदभावे प्रामाण्यग्रहणमिति रिक्तं वच इति भावः । अदोषप्रतीतस्येत्येतद्व्यावर्त्यशङ्कां दर्शयति **यदि तर्हीति** ॥ **तथा चोक्तोऽतिप्रसङ्ग इति** । शुक्तिरजतादिकमपि सत्यं व्यवस्थापयेदित्यतिप्रसङ्ग इत्यर्थः ।

**स०**—आकाशकालदिगित्यादौ दिक्शब्देन अव्याकृताकाशभागानां, आकाशशब्देन चाव्याकृताकाशस्य ग्रहणान्न पौनरुक्त्यं । **पौनरुक्त्याद्व्याघाताच्चेति** । घट इत्यनेनास्तित्वस्याभिधानात् पुनरस्तीतिप्रयोगे पौन-

रुक्त्यमेव । घटो नास्तीत्यत्र घट इत्यंशेन अस्तिताभिधाने पुनर्नास्तीतिवचने व्याघात इत्यर्थः ॥ **घटोऽस्तीति** । घट इत्यनेन तत्सत्तामात्रलाभेपि देशकालविशेषसम्बन्धिसत्ताऽभिधानार्थमस्तीत्युच्यत इत्यर्थः । **क्वचिद्विपरीतेति** । घट इत्येवोक्ते नास्ति किमिति विपरीताकाङ्क्षाव्यवच्छेदार्थमस्तीति वचनमित्यर्थः । **नास्तीत्यस्य चेति** । घटो नास्तीत्यत्र घट इत्यनेन तत्सत्त्वमात्रलाभेपि नास्तीत्यनेन देशविशेषे कालविशेषे च तत्प्रतिषिध्यते तथाचान्यत्र देशे काले च सन् घटोत्रेदानीं नास्तीत्यर्थो लभ्यत इति को विरोध इत्यर्थः । ननु यस्मिन्देशे काले च घटसत्ता नास्तीत्यनेनैव प्रतिषिध्यते तस्मिन्नपि देशे काले च सत्ता घट इत्यनेनाभिधीयते अतो विरोधतादवस्थ्यमित्यत आह **न हि सत्तेति** । तथा च निषेधाधिकरणदेशकालभिन्नदेशकालाधिकरणतयापि सत्त्वाभिधानसंभवान्न विरोध इति भावः ॥ **स्वदेशकालप्रकारोपाधाविति** । स्वस्वदेशकालप्रकारलक्षणाधिकरण इत्यर्थः । यद्यपि प्रकारोऽनेन प्रकारेण नास्तीति प्रतीत्या निषेध्यतावच्छेदकरूप एव, नाधिकरणं, तथाप्यधिकरणत्वविवक्षयेत्थमुक्तमित्यवगन्तव्यम् । **तथा चोक्तातिप्रसङ्ग इति** । शुक्तिरजतादिज्ञानस्वरूपग्राहकत्वेन तत्प्रामाण्यग्राहकत्वं स्यादित्युक्तातिप्रसङ्ग इत्यर्थः ।

**प०**— ननु स्वस्वविषयमात्रग्राहिभिः प्रमाणैः कथं विषयसत्यत्वसिद्धिः । प्रामाण्यग्राहकेण वा कथं तत्सिद्धिरित्यत आह **अयमत्राभिप्राय इति** ॥ **पौनरुक्त्याद्व्याघाताच्चेति** । घट इत्यनेनैव घटसत्त्वप्राप्तेः पुनरस्तीति पौनरुक्त्यं नास्तीति च व्याहतमित्यर्थः । घट इत्यनेन त्रैकालिकनिषेधाप्रतियोगित्वरूपसत्त्वलाभेऽपि देशकालविशेषसंबन्धित्वालाभात तदर्थमस्त्यासीदित्यादिप्रयोग इत्यादिभावेन परिहरति **घटोऽस्तीति** ॥ **विपरीतेति** । घट इत्युक्तौ नास्तीति विपरीताकाङ्क्षापि भवतीति तन्निरासार्थं नस्तीत्याद्यक्तिरित्यर्थः । ननु यदुक्तं घटोऽस्तीत्यत्र घटपदेन सत्त्वमात्रप्राप्तावपि गृहादिदेशविशेषे वर्तमानादिकालविशेषे सत्त्वमसत्त्वं वा वक्तुमस्तीत्याद्युक्तिरतो न पौनरुक्त्यादीति । तन्न । सत्त्वे सर्वत्र सत्त्वस्यैव प्राप्तेः । उक्तं हि वाचस्पत्ये । यत्सत्तत्सदा सर्वत्र सदेव । न हि रूपं कदाचित् कुत्रचित् गन्धो भवतीत्यत आह **न हीति** । एवं साक्ष्यादेः स्वविषये साक्षात्सत्त्वावगाहित्वमुक्त्वा साक्षिणः प्रत्यक्षादिप्रामाण्यग्रहणद्वाराऽपि सर्वसत्त्वावगाहित्वमाह **ज्ञानगतं चेति** । अर्थसत्त्वलाभायोक्तं **याथार्थ्यलक्षणमिति** ॥ **स्वदेशेत्यादि** । भूतलादिस्वदेशे वर्तमानादिस्वकाले घटत्वादिस्वधर्मेण कपालादि(रूप)स्वसमवायिलक्षणोपाधावित्यर्थः । यद्वा स्वयं यद्देशे यत्कालेऽस्ति तादृशदेशकाललक्षणे उपाधौ आश्रय इत्यर्थः । इत्यस्येतीतिशब्दस्यायमत्राभिप्राय इति पूर्वेणान्वयः ।

**या०**— **आकाशकालदिगिति** । यद्यपि नाव्याकृताकाशव्यतिरिक्ता दिक् सिद्धान्तेऽस्ति । तथाऽप्याकाशभागानां दिक्त्वेनाभिमतत्त्वात्तेषामेवात्र दिक्शब्देन ग्रहणमिति मन्तव्यम् ॥ **पौनरुक्त्या**

**दित्यादि** । घटोऽस्तीत्यत्र घट इत्यनेनैव तदस्तित्वस्याप्यभिधानात्पुनरस्तीति प्रयोगे पौनरुक्त्यम् । घटो नास्तीत्यत्र तु घटपदेन तदस्तिताऽभिधानान्नास्तीति तन्निषेधे व्याघात इत्यर्थः । प्रयोजनसद्भावान्न पौनरुक्त्यमित्याशयेन प्रयोजनान्याह **घटोऽस्तीत्यादिना** । घटपदेनैव प्राप्तां सत्तामस्तीत्यत्र प्रकृत्याऽनूद्य प्रत्ययेन तस्य देशकालविशेषसम्बन्धो बोध्यते । अतो न पौनरुक्त्यमित्यर्थः ॥ **क्वचिद्विपरीतेति** । घट इत्येवोक्ते नास्ति किमिति विपरीताकाङ्क्षाया अपि कदाचित्सम्भवात्तद्व्यवच्छेदार्थमस्तीति वचनमित्यर्थः । ननु यदाऽत्र भूतले किमस्तीति प्रश्ने सत्युच्यते घटोऽस्तीति, तदा प्रकरणवशादेव घटसत्ताया देशकालविशेषसम्बन्धित्वस्यापि घटपदेनैव बोधसम्भवादस्तीति व्यर्थमित्यत आह **क्वापीति** ॥ **नास्तीत्यस्य चेति** । घटो नास्तीत्यत्र घटपदेन तत्सत्त्वमात्रलाभेऽपि नास्तीत्यनेन तस्य देशकालविशेषसम्बन्धितैव प्रतिषिध्यते । तथा चान्यत्र देशे काले च सन् घटोऽत्रेदानीं नास्तीत्यर्थो लभ्यत इति को विरोध इत्यर्थः । ननु यस्मिन्देशे काले च घटसत्ता नास्तीत्यनेन प्रतिषिध्यते, तस्मिन्नपि देशे काले च सत्त्व घट इत्यनेन सामान्यतोऽभिधीयतेऽतो विरोधतादवस्थ्यमित्यत आह **न हि सतेति** । तथा च निषेधाधिकरणदेशकालभिन्नदेशकालाधिकरणतयाऽपि सामान्यतः सत्त्वाभिधानस्य पर्यवसानसम्भवान्न विरोध इति भावः ॥ **स्वदेशकालेति** । स्वस्य देशकालप्रकारलक्षणाधिकरण इत्यर्थः । यद्यपि प्रकारोऽनेन प्रकारेण नास्तीति प्रतीत्या निषेध्यतावच्छेदकरूप एव नाधिकरणम् । तथाऽपि

---

तस्याप्यधिकरणत्वविवक्षयेत्थमुक्तमित्यवगन्तव्यम् ।

श्री० — **यथा स्वमिति** । स्वस्वरूपानुसारेणेत्यर्थः ॥ **एवमिति** । यदि स्वविषयं सत्त्वेनैवावगाहत इत्युच्यत इत्यर्थः ॥ **याथार्थ्यलक्षणमिति** । यथावस्थितभावाभावलक्षणज्ञेयविषयीकारित्वरूपं प्रामाण्यमित्यर्थः ॥ **उक्तोऽतिप्रसङ्ग इति** । शुक्तिरजतादिकमपि सत्यं व्यवस्थापयेदित्युक्त इत्यर्थः ।

च० — **पौनरुक्त्यापातादिति** । घटपदाभिहितास्तित्वस्य अस्तिना प्रतिपादनाद्घटोऽस्तीत्यत्र पौनरुक्त्यस्य, स नास्तीत्यत्र च तत्पदाभिहितास्तित्वस्यैव नास्तीत्यनेन पुनर्निषेधनाद्व्याघातस्य चापत्तिरित्यर्थः । फलसद्भावान्नोक्तापत्त्यवकाश इत्याह **घटोऽस्तीत्यादिना** । समभिव्याहृतपदाभिहित सत्तां प्रकृत्यंशेनानूद्य तत्प्रकृतिकलडादिप्रत्ययेन कालविशेषसंबन्धः प्रत्याप्यते, अतो पौनरुक्त्यम्, एवं तादृशप्रकृत्यंशानूदिता लकारप्रत्यापितकालविशेषसंबन्धावच्छिन्ना या सत्ता तन्निषेधो निपातेन प्रत्याप्यत इति न व्याघातश्चेत्यर्थः । अविवादः= विवादाभावः । 'अर्थाभावे यदव्ययमि'त्यव्ययीभावत्वादव्ययमेतद् ।

**सु० — अयमर्थः । न साक्षी ज्ञानं गृह्णन्प्रमाणमेवैतदिति गृह्णाति । किन्तर्ह्य(त्व)दोषं चेत्प्रमाणं सदोषमप्रमाणमिति व्यवस्थया । यदा त्वर्थित्वेन प्रामाण्यं निर्दिधारयिषितं तदा**

**सजातीयविजातीयसंवादविसंवादभावाभावलक्षणया परीक्षया दोषाभावं निश्चित्य प्रामाण्यमवधारयति दोषदर्शने त्वप्रामाण्यम्। प्रपञ्चप्रतीतेश्च प्रयत्नेनान्विष्यापि दोषमपश्यन्प्रामाण्यमेवावधारयतीति तत्सत्यत्वं साक्षिसिद्धम्। न चैवम् शुक्तिरजतादीनाम्। दोषाप्रतीतिदशायां प्रामाण्यानवधारणात्, तत्प्रतीतौ त्वप्रामाण्यनिश्चयात्। ननु शुक्तिरजतादिज्ञानस्यापि प्रामाण्यं निर्धार्यत एव। कथमन्यथा निःशङ्का प्रवृत्तिरिति चेत्। सत्यम्। नासौ साक्षिरूपावधारणा। अपि तु मानसीति वक्ष्यामः। मनसश्च दोषसंसर्गसम्भवेन न तावता प्रामाण्यसिद्धिरिति।**

शे० — नन्वेतावतापि नोक्तातिप्रसङ्गपरिहारः। शुक्तिरजतादिज्ञाने साक्षिणः प्रामाण्यानवधारकत्वे स्वभावभङ्गप्रसङ्गात्। न चादुष्टत्वेन निश्चिते ज्ञाने प्रामाण्यग्राहकत्वस्यैव तत्स्वभावत्वान्नोक्तदोष इति वाच्यम्। तथा सति दोषाभावनिश्चयोपायाभावात्प्रामाण्यग्राहकत्वाभावप्रसङ्गात्। न च परीक्षाया एव दोषाभावनिश्चयोपायत्वम्। तथा सत्युदासीनतृणादिदर्शने साक्षिणः प्रामाण्यग्राहकत्वं न स्यात्। तत्र परीक्षाया अभावात्। अस्तु वा तत्र यथाकथञ्चित्। प्रस्तुते प्रपञ्चज्ञानेऽपि दोषनिश्चयात्साक्षिणोऽप्रामाण्यग्राहकत्वं किं न स्यात्। अभ्युपेत्य चेदमुदितम्। वस्तुतस्त्वदोषत्वेन निश्चिते ज्ञाने प्रामाण्यग्राहकत्वं न साक्षिणः स्वभावः। निश्शङ्कप्रवृत्त्यन्यथाऽनुपपत्त्या शुक्तिरजतादिज्ञानेऽपि प्रामाण्यनिश्चयसिद्ध्या साक्षिण एव तद्ग्राहकत्वस्यावश्यमङ्गीकर्तव्यत्वादित्यत आह **अयमर्थ इति**। नन्वेवं व्यवस्थया प्रामाण्याप्रामाण्यग्रहणे प्रमाणमेवेदमित्यप्रमाणमेवेदमिति प्रामाण्याप्रामाण्ययोरनवधारणान्न क्वापि प्रवृत्तिनिवृत्ती स्यातामित्यत आह **यदा त्विति** ॥ **सजातीयेत्यादि**। सजातीयविजातीयसंवादतद्विसंवादभावाभावौ परीक्षेत्यर्थः। अत्र विशेषदर्शनजन्यस्वसमानविषयकज्ञानान्तररूपः सजातीयसंवादोऽर्थक्रियादिरूपो विजातीयसंवाद इत्यवधेयम्। दोषदर्शने त्वित्यत्रापि परीक्षयेति सम्बध्यते। तथा च क्वाचित्कप्रामाण्याप्रामाण्यावधारणसम्भवात्तदधीनप्रवृत्त्यादेरुपपत्तिरिति भावः ॥ **प्रपञ्चप्रतीतेश्चेति**। अत्र विशेषदर्शनजन्यस्य सन्घट इति ज्ञानान्तररूपस्य सजातीयसंवादस्य घटाद्यर्थक्रियारूपविजातीयसंवादस्य सत्त्वात्तद्विसंवादस्य चाभावादुक्तः प्रपञ्चप्रतीतेः परीक्षया दोषाभावनिश्चय इति भावः ॥ **दोषाप्रतीतिदशायामिति**। परीक्षाप्रवृत्त्यभावेनेति शेषः ॥ **तत्प्रतीताविति**। परीक्षाप्रवृत्त्या दोषप्रतीतावित्यर्थः। विशेषदर्शनजन्यस्य समानविषयकज्ञानान्तरसंवादरूपसजातीयसंवादस्य रूप्यार्थक्रियादिरूपविजातीयसंवादस्य च शुक्तिरजतप्रतीतावभावात्। प्रत्युत तद्विसंवादस्यैव भावात्तत्र दोषनिश्चय इति भावः ॥ **वक्ष्याम इति**। 'अमानस्य तु मानत्वं मानसत्वाच्चकं भवेत्। यत्किञ्चिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदि'त्यादिनेति शेषः। ननु शुक्तिरजतादिप्रतीतौ प्रामाण्यावधारणाया अस्तु मानसत्वम्। तथाऽपि प्रामाण्यावधारणाया ज्ञानविषयाबाध्यत्वसाधकत्वान्मानसप्रामाण्या-

वधारणेनापि शुक्तिरजताद्यबाध्यत्वसिद्धिः स्यात् । अन्यथा साक्षिरूपप्रपञ्चज्ञानप्रामाण्यावधारणयाऽपि प्रपञ्चाबाध्यत्वसिद्धिः स्यादविशेषादित्यतो निर्दोषत्वात्साक्षिणः साक्षिरूपप्रामाण्यावधारणेन विषयाबाध्यत्वसिद्धिसंभवेऽपि मनसस्तदभावान्न मानसप्रामाण्यावधारणेन तद्विषयाबाध्यत्वसिद्धिरित्याह **मनसश्चेति** ।

स०— **अदोषं चेत्प्रमाणमिति** । अत्र निर्दोषं भवति न वेति संशयाहिताप्रामाण्यशङ्कानिवर्तकत्वाभावेऽपि निर्दोषत्वेऽपि प्रमाणं न वेति शङ्कायाः निर्दोषत्वे प्रमाणमेव सदोषत्वे अप्रमाणमेवेति व्यवस्थया सामान्याकारेण प्रामाण्यं गृह्णता साक्षिणा निरासात् युक्तं प्रामाण्यस्य तद्रूपत्वमिति भावः । **व्यवस्थयेति** । अत्र केचिदेवं वदन्ति । नन्वेवं चेत्साक्षिणः संशयरूपत्वं स्यादिति चेत् । अत्र यथा सिद्धान्ते चिन्ता आत्मनो भिन्नाऽभिन्नाङ्गीकृता तद्वद्दोषत्वेन प्रमाणं स दोषं चेदप्रमाणमिति ज्ञानं साक्षिरूपमपि न तन्मात्रमपि तु तेन भिन्नं चातः शुद्धसाक्षिणो निश्चयरूपत्वेऽप्युक्तरूपस्य संशयत्वे न कोऽपि विरोधः । यद्वा व्यवसायोत्पत्त्यनन्तरं करणदोषादिविषयके मानसे संशये तदाहितप्रामाण्यविषयके च तादृशे संशये सति पूर्वसंशयोपनीतदोषादिसदसद्भावविषयकतया तद्व्यवस्थयैव द्वितीयसंशयोपनीतप्रामाण्याप्रामाण्ये अपि स्वयं निश्चयरूप एव साक्षी गृह्णाति प्रामाण्यसंशयानुव्यवसाय इवेति का अनुपपत्तिः । अत एव ज्ञानादौ प्रथमं संमुग्धं प्रामाण्यं गृहीतमित्युक्तम् । पूर्वमानससंशयविषयतया सन्दिग्धमित्यर्थः । न चैवं न्यायसाम्येन निश्चयदशायामपि मानसानुव्यवसाय एव प्रामाण्यग्राहकः । साक्षी तु तदुपनीतमेव प्रामाण्यं गृह्णातीति कल्पनीयम् वैषम्यात् । संशयसामग्रीदशायां हि ज्ञानसाक्षी तु तदुपनीतमेव प्रामाण्यं गृह्णातीति कल्पनीयम्

ग्राहकस्य साक्षिणः प्रमाण्यावधारणशक्तिः प्रतिबद्धा । अतः साक्षी तत्र ज्ञानमात्रं गृहीत्वा प्रामाण्यावधारणादुदास्ते । अथेदानीं मानससंशयावकाशः । एवं विशेषजिज्ञासायां परीक्षाया अलाभे परीक्षाद्यायं रागादिकलुषितं मन एव प्रामाण्यादिकमवधारयति । यदा तु स्वत एव वा परीक्षादिना वा दोषाभावनिश्चयः तदा ज्ञानग्राहकः साक्षी ज्ञानग्रहणसमय एवाप्रतिबद्धशक्तित्वात् प्रामाण्यमप्यवधारयतीति न तद्ग्राहकमानसानुव्यवसायावकाश इति सर्वमनवद्यम् । वक्ष्यते चैतत् भक्तिपादे 'अमानस्य तु मानत्वं मानसत्वाच्चलं भवेत्' इत्यनुव्याख्यानव्याख्याऽवसरे टीकाकारैरितीति ॥ **मानसीति वक्ष्याम इति** । 'अमानस्य तु मानत्वं मानसत्वाच्चलं भवेत्' तथा 'यत्किञ्चिद्व्यभिचारि स्याद्दर्शनं मानसं हि तत्' इत्यादिना वक्ष्याम इत्यर्थः ।

प० [illegible]मनेनोक्तशङ्कानिरास इत्यतो 'दोषाभावे प्रमाणत्वम्' इति ज्ञानपादीयानुव्याख्यां हृदि कृत्वाह **अयमर्थ इति** ॥ **अर्थित्वेनेति** । पुरुषस्याकाङ्क्षावत्त्वेन, निर्दिधारयिषितं=निर्धारयितुमिष्टं

इत्यर्थः । **दोषदर्शने त्वप्रामाण्यमिति** । अवधारयतीत्यनुषङ्गः । अप्रामाण्यमनुमेयमिति तत्त्वनिर्णयटीकाद्यनुरोधोऽत्र विषये तर्कताण्डवे प्रामाण्यानुमित्यसंभववादे व्यक्तः ॥ **इति वक्ष्याम इति** । 'यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदि'त्यादौ ज्ञानपादीयानुव्याख्यानसुधायामिति भावः ।

**या० — व्यवस्थयेति** । ननु 'सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनमि'ति वचनविरोधात्कथं साक्षिणः संशयरूपत्वमत्रोच्यते इति चेत् । अत्र केचित् । सिद्धान्ते चिन्ता आत्मनो भिन्नाभिन्नाऽङ्गीकृता । तद्वददोषं चेत्प्रमाणं सदोषं चेदप्रमाणमिति ज्ञानमपि साक्षिणा भिन्नाभिन्नम् । अतोऽप्रतिबद्धसाक्षिणो निश्चयरूपत्वेऽप्युक्तरूपस्य संशयत्वे न कोऽपि विरोध इत्याहुः । अन्ये तु व्यवस्थितविकल्पस्थल इव साक्षिणो विरुद्धानेककोटिविषयत्वेऽपि निश्चयत्वमेव । न च व्यवस्थितविकल्पस्थले व्यवस्थापकद्वयानुसारेण जायमानं व्यवस्थाप्यद्वयविषयं ज्ञानद्वयं न त्वेकम् अतस्तत्रोभयोर्निश्चयरूपत्वेऽपि न विरोधः । अत्र तु साक्षिण एकत्वात्तस्यैकस्मिन् धर्मिणि विरुद्धानेककोटिविषयकैकज्ञानत्वरूपं संशयत्वमनिवार्यमिति वाच्यम् । सिद्धान्ते विशेषबलेनैकस्यापि साक्षिणोऽनेकत्वसद्भावेनात्रापि ज्ञानद्वयत्वसंभवात् । संशयलक्षणे चैकपदेनानेकत्वाभावमात्रस्य विवक्षितत्वात् । अतो न साक्षिणः संशयरूपत्वप्राप्तिरित्याहुः । वस्तुतस्तु व्यवसायोत्पत्त्यनन्तरं करणदोषविषयके मानसे संशये तदाहितप्रामाण्याप्रामाण्यविषयके च तादृशे संशये सति साक्षी उक्तसंशयद्वयोपनीतकोटीरनूद्य पूर्वसंशयोपस्थितादोषत्वादिव्यवस्थाप्यत्वमेवोत्तरसंशयोपस्थितप्रामाण्याप्रामाण्ययोरवधारयति । अतस्तत्र स निश्चयरूप एव । सदोषत्वादिकोटिचतुष्टयं तु संशयद्वयोपनीतमनुवदत्येव न विधत्ते तदवधारणे उदासीन इति न कुत्रापि तस्य संशयरूपत्वप्रसङ्ग इति । न चैवं प्रथमं सम्मुग्धं प्रामाण्यं गृहीत्वेति ज्ञानपादीयसुधया विरोधः । तत्र सम्मुग्धं सन्दिग्धं यथा स्यात्तथेति प्रामाण्यग्राहकस्य साक्षिणः संशयरूपत्वकथनादिति वाच्यम् । तत्रापि सम्मुग्धं, पूर्वमानससंशयविषयतया सन्दिग्धं, प्रामाण्यमदोषत्वव्यवस्थाप्यतया गृहीत्वेत्येव व्याख्यानस्य विवक्षितत्वेन सम्मुग्धमित्यस्य क्रियाविशेषणत्वाभावात् । अतो न कोऽपि विरोध इति प्रतिभाति ॥ **मानसीति वक्ष्याम इति** । 'अमानस्य तु मानत्वं मानमत्वाच्चलं भवेदि'त्यादाविति शेषः ।

**श्री० — न चैवमिति** । दोषमपश्यन्प्रामाण्यमेवावधारयतीति नेत्यर्थः । कुतो नेत्यत आह **दोषेति ॥ निर्धार्यत एवेति** । साक्षिणा दोषाप्रतीतिदशायामिति शेषः । तथा च दोषाप्रतीतौ प्रामाण्यानिश्चयादित्युक्तमसदिति भावः । ननु तर्हि मनसैव शुक्तिरजतादिज्ञानप्रामाण्यसिद्धिर्भविष्यतीत्यत आह **मनसश्चेति** ।

**च० — मानसीति वक्ष्याम इति** । 'अमानस्य तु मानत्वं मानमत्वाच्चलं भवेदि'त्यादावित्यादिः ।

सु० — ननु यदि परीक्षासहकृतस्साक्षी ज्ञानप्रामाण्यं गृह्णीयात् तदाऽनवस्था स्यात् । परीक्षाऽपि हि स्वयं प्रमाणत्वेनावधृता परप्रामाण्यावधारणायालम् । नान्यथा । तथा च तत्रापि परीक्षान्तरमवतरणीयमिति । किञ्च साक्षिणोऽप्यनवधृतप्रमाणभावस्य स्वयं दुःस्थस्य न परप्रामाण्यावधारणसामर्थ्यमिति तत्प्रामाण्यावधारणाय परीक्षान्तरापेक्षा ग्राहकान्तरापेक्षा चेत्यनवस्थैवेत्यत आह परीक्षादेश्चेति ।

अनु० — परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेत् ॥

आदिपदेन साक्षी गृह्यते । चस्त्वर्थः । सत्यत्वं यथार्थत्वम् । तेन साक्षिणैव केवलेन न तु परीक्षायुक्तेन(सहकृतेन) । हिशब्दोऽस्यार्थस्यानुभवसिद्धत्वं द्योतयति । तस्मान्नानवस्थेति हेतौ वा ।

शे० — ननु परीक्षाऽऽदेः प्रामाण्यस्य परीक्षानपेक्षसाक्षिग्राह्यत्ववर्णनमनर्थकमिति तत्परोत्तरवाक्यवैयर्थ्यमित्यतो घटादिज्ञानप्रामाण्यनिश्चायकपरीक्षाप्रामाण्यनिश्चयाय परीक्षाऽपेक्षतया प्राप्तानवस्थापरिहारार्थत्वान्नानर्थक्यमिति भावेन परीक्षाऽऽदिप्रामाण्यनिश्चयस्य परीक्षापेक्षसाक्षिग्राह्यत्वेऽप्यनवधृतप्रमाणभावाया एव परीक्षाया घटादिज्ञानप्रामाण्यनिश्चायकत्वेन तन्निश्चये परीक्षाप्रामाण्यनिश्चयस्यानपेक्षितत्वेनानवस्थाया एवाप्रसङ्ग इत्यतोऽनिश्चयपक्षं प्रदूष्य निश्चयपक्षमेव परिशेष्यानवस्थोपपादनपूर्वकं तत्परिहारकतयोत्तरवाक्यमवतारयति नन्विति ॥ परेति । घटादिज्ञानेत्यर्थः । एवमुत्तरमूले परीक्षापदव्यावर्त्यशङ्कामुत्थाप्य परीक्षाऽऽदेरित्यादिपदव्यावर्त्यशङ्काप्रदर्शनेन तदनर्थकत्वशङ्कां वारयति किञ्चेति ॥ परीक्षान्तरापेक्षेति । तथा च तस्या अपि परीक्षायाः स्वयं प्रमाणत्वेनानवधृतायाः साक्षिप्रामाण्यावधारकत्वायोगात्साक्षिप्रामाण्यनिश्चायकपरीक्षायामपि प्रामाण्यनिश्चयो वाच्यः । तथा च तत्रापि परीक्षाऽन्तरमवतारणीयमिति परीक्षाऽनवस्थेत्यर्थः ॥ ग्राहकान्तरेति । घटादिज्ञानप्रामाण्यग्राहकस्य साक्षिणः स्वप्रामाण्यग्राहकत्वे घटादिज्ञानस्यापि स्वप्रामाण्यग्राहकत्वप्रसङ्गेन स्वप्रामाण्यग्राहकत्वानुपपत्त्या ग्राहकान्तरेणैव साक्षिप्रामाण्यग्रहस्य वक्तव्यत्वात्तस्याप्युक्तन्यायेनानवधृतप्रमाणभावस्य साक्षिप्रामाण्यनिश्चायकत्वासम्भवादुक्तातिप्रसङ्गेनैव स्वग्राह्यप्रामाण्यत्वस्याप्ययोगेन तत्रापि ग्राहकान्तरमवतरणीयमिति ग्राहकानवस्थेत्यर्थः ।

चस्त्वर्थ इति । न केवलं घटादिज्ञानप्रामाण्यं परीक्षाऽनपेक्षसाक्षिग्राह्यं किन्तु परीक्षाऽऽदिप्रामाण्यमपीति समुच्चयस्य घटादिज्ञानप्रामाण्यस्य परीक्षासहकृतसाक्षिसिद्धत्ववर्णनेन बाधितत्वेन समुच्चयार्थत्वानुपपत्तेरिति भावः । 'सत्यत्वं गगनादेरि'त्यादाविव त्रिकालाबाध्यत्वरूपसत्यत्वस्य परीक्षाऽपेक्षसाक्षिग्राह्यत्वस्यानवस्थाऽनापादकत्वात्तदनपेक्षसाक्षिग्राह्यत्ववर्णनस्य तत्परिहारकत्वाभावाच्च प्रकृतोपयोगि-

तया सत्यत्वशब्दं व्याचष्टे **सत्यत्वं यथार्थत्वमिति** ॥ **तेन साक्षिणेति** । 'सत्यत्वं साक्षिणा मतमि'ति ग्राहकतया साक्षिण एव प्रकृतत्वादिति भावः । एवेत्यनुवादेन केवलेनेति व्याख्यानम् । व्यावर्त्यं दर्शयति **न त्विति** ॥ **अस्यार्थस्येति** । परीक्षाप्रामाण्यनिश्चयस्य परीक्षानपेक्षत्वमित्यस्यार्थस्येत्यर्थः ।

प० — **परीक्षासहकृत इति** । दोषाभावनिश्चयार्थं परीक्षासहकृत इत्यर्थः ॥ **परप्रामाण्यावधारणायेति** । परप्रामाण्यावधारणोपयुक्तदोषाभावावधारणायेत्यर्थः ।

सु० — **एतदुक्तं भवति । दोषाभावावधारणार्थं न्यायानुसन्धानं हि खलु परीक्षा । सन्दिग्धश्चार्थो न्यायविषयः । सन्देहश्चोभयकोटिप्रापकसद्भावे भवति । एवञ्च यत्र यत्र दोषसम्भावनया तत्सन्देहस्तत्र तत्रैव परीक्षापेक्षा नान्यत्र । न च सर्वत्र दोषसन्देहोऽस्ति । साक्षिसिद्धेऽर्थे तत्प्राप्त्यभावात् । अतो न तावत्परीक्षाऽनवस्था । तथा हि । अस्त्यत्र पुरतः पानीयमिति वाक्यं श्रुतवतो भवति सन्देहः किमिदं विपर्ययादिमूलमुत नेति । पुरुषवचसामुभयथा दर्शनात् । तत एवार्थे सन्दिहानः प्रत्यासीदन् रूपविशेषादिनाऽनुमिनोति पानीयमेतदिति । तत्रापि भवति संशयः । किमिदमनुमानमुताभासम्(स)इति । व्याप्त्यादिग्राहिणां याथार्थ्यायाथार्थ्योपलम्भात् । प्रत्यासन्नश्चोदकाभ्यवहारानन्तरं रसविशेषेणानुमायापि पूर्ववत्सन्दिग्धे । पीतोदकस्तूदन्यादिनिमित्तदुःखाभावं सुखं चानुभवन्न तत्र संशेते । सुखादौ तदभावे च साक्षिसिद्धे कदाऽप्यन्यथाभावाद्यनुपलम्भात् । न च प्रतीतत्वसामान्येन तत्रापि संशयः । विशेषनिष्ठस्य निश्चायकस्य सद्भावात् । अन्यथा संशयानुच्छेदेन व्यवहाराभावप्रसङ्गात् । संशयाभावे च न तत्पूर्विका परीक्षेति कुतोऽनवस्था । अत एव साक्षिप्रामाण्यावधारणे परीक्षाऽनवस्थाऽपि परिहृता । ग्राहकानवस्था तु नास्त्येव । साक्षिणः स्वप्रकाशत्वेन स्वप्रामाण्यग्राहकत्वात् ।**

शे० — नन्वेवं परीक्षाप्रामाण्यस्य परीक्षाऽनपेक्षसाक्षिमात्रग्राह्यत्वे घटादिज्ञानप्रामाण्यस्यापि तदनपेक्षसाक्षिग्राह्यत्वमेव वाच्यम् । नियामकविशेषाभावेन घटादिज्ञानप्रामाण्यग्रहे परीक्षापेक्षा परीक्षाप्रामाण्यग्रहे च नेति वैषम्यकल्पनाऽयोगात् । न च तत्सम्भवति । 'अतोऽदोषप्रतीतस्ये'ति परीक्षापेक्षस्यैव साक्षिणो घटादिज्ञानप्रामाण्यग्राहकत्वस्य समर्थितत्वात् । ततो घटादिज्ञानप्रामाण्यस्येव परीक्षाप्रामाण्यस्यापि परीक्षापेक्षसाक्षिग्राह्यत्वमेवाभ्युपेयमिति कथं नानवस्थेत्यत आह **एतदुक्तं भवतीति** ॥ **सन्दिग्धश्चार्थ इति** । 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तित' इत्युक्तेरिति भावः ॥ **अत इति** । परीक्षाप्रामाण्यनिश्चयस्य परीक्षानपेक्षसाक्षिग्राह्यत्वादित्यर्थः ॥ **न तावदिति** । घटादिज्ञानप्रामाण्यनिश्चायकपरीक्षाप्रामाण्यनिश्चयाय परीक्षापेक्षाया अभावान्न तदपेक्षानिबन्धना परीक्षाऽनवस्थेत्यर्थः ॥ **विशेषनिष्ठस्येति** ।

एककोटिविषयकनिर्णयजनकस्येत्यर्थः । साक्षिसिद्धत्वमेव वाऽत्रैककोटिनिर्णायकमिति हृदयम् ॥ **अन्यथेति** । विशेषदर्शनस्य संशयाविरोधित्व इत्यर्थः ॥ **संशयानुच्छेदेनेति** । विशेषदर्शनातिरेकेण संशयोच्छेदकाभावादिति भावः ॥ **व्यवहाराभावेति** । निःशङ्कप्रवृत्त्यभावेत्यर्थः । अस्त्वेवं साक्षिसिद्धे सुखादौ सन्देहाभावः । किमेतावतेत्यत आह **संशयाभावे चेति** ॥ **तत्पूर्विकेति** । सन्देहपूर्विकेत्यर्थः ॥ **अत एवेति** । परीक्षाप्रामाण्यनिश्चयस्य परीक्षानपेक्षत्वादेवेत्यर्थः ॥ **साक्षिप्रामाण्येति** । साक्षिनिष्ठप्रामाण्यनिश्चायकपरीक्षाप्रामाण्यनिश्चयस्य परीक्षाऽनपेक्षत्वेन तदपेक्षानिबन्धनपरीक्षाऽनवस्थाऽपि परिहृतेत्यर्थः । नन्वेवं घटज्ञानस्यापि स्वप्रामाण्यग्राहकत्वप्रसङ्ग इत्यतोऽन्तःकरणवृत्तितया तस्य जडत्वे, नास्वप्रकाशत्वान्न स्वप्रामाण्यग्राहकत्वम् । साक्षिणस्तु चेतनत्वेन कर्मकर्तृसूत्रीयटीकोक्तरीत्या स्वप्रकाशत्वेन युक्तं स्वस्यैव स्वप्रामाण्यग्राहकत्वमिति भावेनोक्तं **स्वप्रकाशत्वेनेति** ।

स० — **विशेषनिष्ठस्य निश्चायकस्येति** । प्रतीतिविशेषनिष्ठस्य साक्षित्वस्येत्यर्थः ।

प० — कथमनेनोक्तशङ्कानिरास इत्यतो 'न परीक्षानवस्था स्यात् साक्षिसिद्धे त्वसंशयात्' इत्यादिज्ञानपादीयानुव्याख्यां हृदि कृत्वाह **एतदुक्तं भवतीति** । संदेहबीजमाह **पुरुषवचसामिति** । व्याप्त्यादिग्राहिणामिति च संशयाभावे हेतुः । **सुखादौ तदभावे चेति** । सुखदुःखाद्यभावे चेत्यर्थः ननु सुखादावपि साधारणधर्मदर्शनात्स्यादेव संदेह इत्यत आह **न च प्रतीतत्वेति** । साक्षिप्रतीतत्वेत्यर्थः ॥ **विशेषनिष्ठस्येति** । साक्षिप्रतीतरूपविशेषनिष्ठस्य साक्षिप्रतीतत्वस्येत्यर्थः । यद्वा प्रतीतिविशेषनिष्ठसाक्षित्वरूपधर्मस्येत्यर्थः । न्यायमतेऽनुव्यवसायत्वस्येवेति भावः । ननु न साक्षित्वमपि स्वयं संशयनिवर्तकम् । अतिप्रसङ्गात् । नापि येन केनचिद्रूपेण ज्ञातं अतिप्रसङ्गादेव । किं तु प्रामाण्यादिव्याप्यत्वेन ज्ञातमेव । व्याप्यत्वेन ज्ञानं चान्येनेत्यनवस्थेति युक्तम् । साक्षिणः स्वप्रकाशत्वेन स्वेनैव तज्ज्ञानसंभवादिति भावः । यद्वा सुखत्वादिविशेषविषयकत्वस्येत्यर्थः ॥ **अन्यथेति** । सत्यपि विशेषदर्शने साधारणधर्ममात्रेण संदेह इत्यर्थः ॥ **अत एवेति** । साक्षिणः संदेहानुत्पादादेवेत्यर्थः ।

या० — **विशेषनिष्ठस्येति** । एककोटिविषयकनिश्चयजनकस्येत्यर्थः । साक्षिसिद्धत्वमेवात्रैककोटिनिश्चायकमस्तीति ज्ञातव्यम् ।

श्री० — **रूपविशेषेति** । शुक्लरूपेत्यर्थः ॥ **अनुमानमिति** । निर्दोषोपपत्तिरित्यर्थः । एतत्संशयाधायकं संशयमाह **व्याप्त्यादीति** । व्याप्त्यादिग्राहिणां याथार्थ्ये इदमनुमानं स्यात् । अन्यथाऽऽभास इत्यर्थः ॥ **पूर्ववदिति** । किमिदमनुमानमुताभास इति पूर्वोक्तरीत्येत्यर्थः ॥ **न चेति** । यत्प्रतीतं शुक्तिरजतादि तन्मिथ्या । यच्च प्रतीतं घटादि तत्सत्यम् । सुखादि च प्रतीतं । तस्मात्सत्यं मिथ्या वेत्यन्यथाभावसंशयः प्रतीतत्वरूपसाधारणधर्मेण भविष्यतीत्यर्थः ॥ **विशेषेति** । प्रतीति-

विशेषसाक्षिनिष्ठस्य नित्यज्ञानत्वरूपस्य निश्चायकत्वेत्यर्थः । तथा च सुखादेः साक्षिणा प्रतीतत्वात्तस्य च नित्यज्ञानत्वेन तत्सिद्धेर्न कदाचिदपि संशयः । नित्यज्ञानत्वरूपेतरप्रमाणवैलक्षण्यस्य सत्त्वादित्यर्थः ॥ अन्यथेति । निश्चायकसद्भावेऽपि प्रतीतत्वमात्रेणैव यदि संशय इत्यर्थः ॥ व्यवहारेति । सुखादिकं सत्यमित्यादिव्यवहारेत्यर्थः । यद्वा । व्यवहारो निःशङ्कप्रवृत्तिः । अत एव संशयाभावादेव ।

**सु० — एतावानत्र विशेषः । इन्द्रियलिङ्गशब्दजन्येषु ज्ञानेष्वनादौ संसारे द्वयीं गतिमनुसन्दधत्साक्षी न सहसैव प्रमाणमेतदिति निश्चेतुं शक्नोति । किन्तु दोषाभावनिश्चयद्वारैव । दोषाभावं च न स्वयम् (एव)अवधारयितुमीष्टे । (अपि) किं तु परीक्षासहकृत एव । परीक्षायां चेन्द्रियलिङ्गशब्दजायां पूर्वन्यायेन परीक्षान्तरमनुसरति यावत्साक्षात्स्वविषये सुखादाववतरति । न च स्वात्मन्यनेन कदाऽप्यन्यथाभावोऽवगत इति सन्देहाभावात्परीक्षानुसरणान्निवर्तते । न चैवं परतःप्रामाण्यग्रहापत्तिः । परीक्षाया दोषशङ्कालक्षणबुद्धिदोषनिरासमात्रकारणत्वात् । साक्षी हि ज्ञानस्वरूपं प्रामाण्यं च विषयीकर्तुं स्वमहिम्नैव शक्नोति । तस्य तु मानस्या दोषशङ्कया प्रामाण्यग्रहणशक्तिः प्रतिबद्धा । अतो व्यवस्थयैव तत्स्पृशति । न त्ववधारणस्येष्टे । परीक्षया च प्रतिबन्धेऽपगते निजयैव शक्त्या प्रामाण्यमवधारयति ।** न चास्य व्युत्पादनस्याप्रामाण्येऽपि समत्वात्तस्यापि स्वतो ग्रहणमिति वाच्यम् । वैषम्यात् । प्रामाण्यावधारणे हि परीक्षायाः प्रतिबन्धकनिवर्तकत्वमात्रं शक्यतेऽवधारयितुम् । प्रतिबन्धकरहिते साक्षिप्रामाण्यग्रहे तदनपेक्षणात् सहकारित्वे हि सर्वत्र तदपेक्षा स्यात् । तथा चानवस्थेत्युक्तम् । अन्यथा कारणत्वं व्याहन्येत न चाप्रामाण्यं कापि परीक्षाऽनपेक्षेण साक्षिणा निश्चितचरम् । येन प्रतिबन्धकनिवर्तकत्वं तस्याः प्रतीमः । किन्तु सार्वत्रिकत्वात्कारणत्वमेव । प्रतिबन्धकस्य सार्वत्रिकत्वादन्यथासिद्धं सार्वत्रिकत्वमिति चेन्न । प्रतिबन्धकनिवृत्तावप्रामाण्यग्र(हे ह)णे च परीक्षायाः कारणत्वोपपत्तेः । एवं सति गौरवमिति चेन्न । विशेषावधारणाया अशक्यत्वस्यैव कल्पकत्वात् । तथाऽपि परीक्षान्वयव्यतिरेकानुविधायि(यक)त्वस्यान्यथासिद्धिः शङ्क्यत इति चेत् (न) । प्रतिबन्धकस्य सार्वत्रिकतायाः क्वाप्यदर्शनेनान्यथासिद्धिशङ्कानिरासात् । अन्यथा सर्वत्र सहकारिणां तथात्वं स्यात् । यदि ज्ञान ग्राहकातिरिक्तस्य यथाकथमपि प्रवेशात्प्रामाण्यस्य परतस्त्वमिति मतम्, तदा साक्षिण एव स्वतःप्रामाण्यमन्यस्य परत इत्यङ्गीकारेऽपि न कश्चिद्विरोध इति सङ्क्षेपः । विस्तरस्तु स्वयम्(एव)आचार्येण वक्ष्यते ।

शे०–नन्विन्द्रियलिङ्गशब्दजन्यघटादिज्ञानप्रामाण्यस्य सुखादिज्ञानप्रामाण्यस्य च साक्षिविषयत्वा- विशेषात्कुतो घटादिज्ञानप्रामाण्ये साक्षिणा ग्राह्ये परीक्षाऽपेक्षा सुखादिज्ञानप्रामाण्ये च तदनपेक्षेति वैषम्यं येन सुखादिपर्यन्तप्राप्तौ परीक्षाऽपेक्षाभावेनानवस्थाभावः स्यादित्यत आह **एतावानिति** । ननु परीक्षायामपि परीक्षान्तरानुसरणेऽनवस्थेत्यत आह **यावदिति** । तथा च परीक्षायां परीक्षाऽन्तरापेक्षायामपि सुखादाववस्थानेनानवस्थिताच्छिद्रपरम्पराया अभावान्नानवस्थेत्याशयः ॥ **न चैवमिति** । घटादिज्ञान- प्रामाण्यस्य परापेक्षसाक्षिग्राह्यत्वेन ज्ञानग्राहकमात्रग्राह्यत्वाभावादिति भावः ॥ **परीक्षाया इति** । तथा च प्रामाण्यस्य केवलेन साक्षिणैव ग्रहणान्न परतस्त्वप्रसङ्ग इति भावः ।

ननु च परीक्षायाः प्रामाण्यग्रहे बुद्धिदोषनिरासे चोपयोगोपपत्तेर्न तस्या बुद्धिदोषनिरासमात्रो- पयुक्तत्वमित्यतस्तया विनाऽपि साक्षिमात्रेण प्रामाण्यस्य ग्रहीतुं शक्यत्वान्न परीक्षायाः प्रामाण्यग्रहणे उपयोगः कल्पयितुं शक्यत इत्याह **साक्षीति** । तर्हि संशयस्थलेऽपि प्रामाण्यग्रहणापत्तिः समर्थस्य अपेक्षायोगादित्यतो यथा स्वयमेव गतिसमर्थस्य गजस्य गोक्षुरकादिना प्रतिबद्धस्याचालनं तथा स्वमहिम्नैव प्रामाण्यमवधारयितुं समर्थस्यापि साक्षिणः प्रतिबद्धत्वात्तद्ग्राहकत्वमुपपन्नमित्याशयेनाह **तस्य त्विति** ॥ **प्रामाण्यग्रहणशक्तिरिति** । न च ज्ञानप्रामाण्यग्रहणशक्तेरेकत्वाद्दोषशङ्कया तत्प्रतिबन्धे प्रामाण्यस्येव ज्ञानस्यापि साक्षिणा ग्रहो न स्यादिति वाच्यम् । ज्ञानप्रामाण्यग्रहणशक्त्योर्भेदस्येष्टत्वेनाप्रतिबद्धज्ञान- ग्रहणशक्त्या ज्ञानग्रहणस्य प्रतिबद्धया प्रामाण्यग्रहणशक्त्या च प्रामाण्याग्रहस्य चोपपत्तेः । न चातिरिक्तप्रामाण्यग्रहणशक्तेः प्रामाण्यग्रहणेऽपेक्षायां प्रामाण्यस्य परतस्त्वप्रसङ्गः । तच्छक्त्योर्भेदेऽपि ज्ञानत्वग्रहणशक्तिवत्प्रामाण्यग्रहणशक्तिः सहजा न त्वप्रामाण्यग्रहणशक्तिरित्येतावतैव प्रामाण्यस्य स्वतस्त्वोपपत्तेः । न च शक्तिद्वयस्य सहजत्वे कथमेकशक्तिप्रतिबन्धे द्वितीयशक्तेरप्रतिबन्धः । तथा च ज्ञानत्वग्रहोऽपि न स्यादिति वाच्यम् । वह्नौ दाहप्रकाशनशक्त्योः सहजत्वेऽपि मण्यादिना प्रकाशन- शक्तेरप्रतिबन्धस्य दाहशक्तेः प्रतिबन्धस्य च दर्शनेन प्रतिबन्धकभेदसम्भवात् । अस्तु वा तयोरेकैव ग्रहणशक्तिस्तथाऽपि तस्या 'एनं मा दहे'त्यादौ दाहशक्तेरेव विषयभेदेन प्रतिबन्धाप्रतिबन्धयोरुपपत्तेर्युक्तं ज्ञानग्रहणेऽपि प्रामाण्याग्रहणमित्यन्यत्र विस्तरः । **निजयैव शक्त्येति** । गोक्षुरकाद्यपसरणे स्वसामर्थ्येन गजस्य गतिवदिति भावः ॥ **समत्वादिति** । परीक्षाया बुद्धिदोषनिरासमात्रकारणत्वेनाप्रामाण्यग्रहणे नोपयोगः किन्तु साक्षी स्वसामर्थ्येनैव प्रामाण्यवदप्रामाण्यस्यापि ग्राहक इति व्युत्पादनस्य समत्वा- दित्यर्थः ॥ **साक्षिप्रामाण्यग्रह इति** । साक्षिनिष्ठप्रामाण्यग्रह इत्यर्थः ॥ **सर्वत्रेति** । प्रतिबन्धक- रहितसाक्षिज्ञानप्रामाण्येऽपीत्यर्थः । इष्टापत्तिं परिहरति **तथा चेति** । ननु सहकारित्वेऽपि प्रतिबन्धक- रहितसाक्षिज्ञानप्रामाण्ये तदनपेक्षाऽस्त्वित्यत आह **अन्यथेति** । व्यभिचारादिति भावः ॥ **विशेषा-**

**वधारणाया इति** । उभयत्र व्यभिचाराभावे नपरीक्षायाः प्रतिबन्धकनिवृत्तावेव कारणत्वं प्रामाण्यग्रह इत्यत्र नियामकाभावादिति भावः । अन्यथासिद्धिशङ्कैव नियामिकेत्याशयेन शङ्कते **तथाऽपीति** ॥ **अन्यथेति** । प्रतिबन्धकस्य सार्वत्रिकत्वेन सार्वत्रिकत्वस्यान्यथासिद्धिशङ्का चेदित्यर्थः ॥ **सर्वत्रेति** । सहकारितया निश्चितस्य दण्डादेरपि न सहकारित्वं तत्रापि दण्डाद्यभावस्य प्रतिबन्धकत्वं प्रकल्प्य दण्डादेस्तन्निवर्तकत्वेनान्यथासिद्धेर्वक्तुं शक्यत्वादित्यर्थः ॥ **यथाकथमपीति** । प्रतिबन्धकशङ्का निवर्तकत्वेनापीत्यर्थः ॥ **तदा साक्षिण एवेति** । तत्र प्रतिबन्धकशङ्काया एवाभावेन तन्निवर्तकत्वेनापि परीक्षायअनपेक्षणादिति भावः । अयं चाभ्युपगमवादः । अत एवाङ्गीकारेऽपीत्यपिशब्द इति बोध्यम् । ननु किमनया द्विधा कल्पनया साक्षिवत्प्रत्यक्षादिज्ञानस्यापि प्रामाण्यग्रहः परीक्षानपेक्ष एव प्राभाकररीत्या स्वत इति वक्तुं शक्यत्वात् । यद्वा प्रत्यक्षादिवत्साक्षिणोऽपि प्रामाण्यं परीक्षापेक्षग्रहणमेव भवत्वित्यत आह **सङ्क्षेप इति** ॥ **वक्ष्यत इति** । 'न ज्ञानदृष्टिमात्रेण प्रामाण्यं तस्य दृश्यते । नियमेन सुखाद्येषु प्रामाण्यं साक्षिगोचरमित्यादि'ना ज्ञानपादे प्राभाकरादिमतनिरासेनोक्तकल्पनाद्वैविध्यस्य कलङ्कसद्भावेनादूषणत्वं स्वयमेवाचार्येण वक्ष्यत इत्यर्थः ।

स० — **विशेषावधारणाया अशक्यत्वस्यैवेति** । प्रतिबन्धकनिवृत्तावेव परीक्षा कारणं न प्रामाण्यग्रहण इत्यत्र नियामकं नास्ति उभयत्र व्यभिचाराभावादिति भावः ॥ **अन्यथा सर्वत्रेति** । सहकारितया निश्चितस्य दण्डादेरपि प्रतिबन्धकनिरासमात्रोपक्षीणताशङ्का स्यादित्यर्थः ननु प्रामाण्यवदप्रामाण्यमपि साङ्ख्यादिरीत्या स्वत एव किं न स्यात् । अप्रामाण्यवद्वा प्रामाण्यमपि नैयायिकरीत्या परतः किं न स्यादित्यत आह **विस्तरस्त्विति** । तृतीयचतुर्थ इति शेषः । यद्वा समयपाद इति शेषः ।

प० — ननु साक्षिणः स्वप्रामाण्यविषये यथा न परीक्षापेक्षा तथा सर्वत्राप्यस्तु प्रमाणत्वाविशेषात्; किंपरीक्षाव्य(वसायेने)सनेनेत्यत आह **एतावानिति** । **द्वयीं** याथार्थ्याऽयाथार्थ्यरूपां । दोषाभावस्य साक्षिणैव निश्चितत्वमिति ज्ञानपादीयानुव्याख्यानानुरोधादाह **दोषाभावं चेति** ॥ **परीक्षायां चेति** । सजातीयज्ञानान्तरसंवादिरूपायामित्यर्थः ॥ **पूर्वेति** । अस्य पुरतः पानीयमित्यादिनोक्तरीत्येत्यर्थः । परीक्षान्तरं सजातीयज्ञानान्तरसंवादादिरूपम् । स्वविषय इत्यादौ स्वपदेन साक्षी गृह्यते । बुद्धिदोषनिरासमात्रकारणत्वाद्युक्तीनामिति तत्त्वनिर्णयोक्तमाह **परीक्षाया इति** । ननु साक्षिणो ग्रहणशक्तेर्ज्ञान इव **प्रामाण्येपि** सहजत्वे विलम्बो न युक्तोऽतो नैवमित्याह **साक्षी हीति** । ज्ञानग्रहणशक्तिप्रामाण्यग्रहणशक्त्योर्भेदमुपेत्योक्तं प्रामाण्यग्रहणशक्तिः प्रतिबद्धेति । तेन तत्प्रतिबन्धे ज्ञानमपि न गृह्येतेति न शङ्क्यम् । द्वयोर्भेदेपि (सजातीयत्व)सहजत्वमात्रेण प्रामाण्ये स्वतस्त्वोपपत्तेरिति भावः । शक्त्यैक्यपक्षे तु प्रामाण्यांशग्रहशक्तिरिति व्याख्येयम् ॥ **अन्यथा कारणत्वं व्याहन्येतेति** । अनवस्थानिवृत्त्यर्थं

क्वचिदनपेक्षायामित्यर्थः ॥ **कारणत्वमेवेति** । प्रतीम इत्यन्वयः । अन्यथासिद्धं=प्रतिबन्धकनिरासोपक्षीणम् । सार्वत्रिकत्वं परीक्षायाः साक्षिणोऽप्रामाण्यग्रहण इति योज्यम् । निषेधति **नेति** ॥ **एवं सतीति** । उभयत्र व्यापारे सतीत्यर्थः । प्रामाणिकत्वाद्गौरवं न दोष एवेति भावेनाह **विशेषेति** । प्रतिबन्धकनिवृत्तावेव न्यायानुसन्धानरूपपरीक्षाया उपयोगो नाप्रामाण्यग्रह इति विशेषावधारणायां कर्तव्यायामशक्यत्वं तादृशनिर्धारणस्य कर्तुमशक्यत्वं यतस्तस्यैवेत्यर्थः । उभयत्राप्यन्वयव्यतिरेकाभावादिति भावः । **तथापीति** । विशेषावधारणस्याशक्यत्वेपीत्यर्थः ॥ **तथात्वमिति** । अन्यथासिद्धत्वमित्यर्थः । ननु स्वत एव ज्ञानानां प्रामाण्यं गृह्यते न साक्षिणा । नापि परीक्षाधीनम् । सर्वज्ञानानां स्वप्रकाशत्वाद्यथार्थत्वाच्च । तथाच न वैरूप्यम् । परीक्षाऽनवस्थाप्रसङ्गश्च नास्ति । किंच ज्ञानं प्रामाण्यं वा न साक्षिवेद्यम् । किन्तूभयमप्यनुमेयमेवेत्यादिचोद्यं हृदि निधायाह **विस्तरस्त्विति** । 'न परीक्षाऽनवस्था स्यादि'त्यादिना ज्ञानपादे वक्ष्यत इत्यर्थः ।

या० — **विशेषावधारणाया इति** । परीक्षा प्रतिबन्धनिवृत्तावेव कारणं न प्रामाण्यग्रहण इत्यत्र नियामकं नास्ति । उभयत्रापि व्यभिचाराभावादिति भावः । अन्यथासिद्धिशङ्कैव नियामिकेत्याशयेन शङ्कते **तथाऽपीति** ॥ **अन्यथा सर्वत्रेति** । सहकारितया निश्चितस्य दण्डादेरपि स्वाभावलक्षणप्रतिबन्धकनिरासमात्रोपक्षीणताशङ्काऽऽस्पदत्वं स्यादित्यर्थः । ननु किमनया द्विविधकल्पनया । साक्षिवत्प्रत्यक्षादिज्ञानस्यापि प्रामाण्यग्रहः परीक्षाऽनपेक्ष एव प्राभाकरादिरीत्या स्वतः किं न स्यादित्यत आह **विस्तरस्त्विति** । 'न ज्ञानदृष्टिमात्रेण प्रामाण्यं तस्यदृश्यते'इत्यादिना ज्ञानपादे प्राभाकरादिमतनिरासेनोक्तकल्पनाद्वैविध्यं सर्वैरङ्गीकार्यमिति वक्ष्यत इत्यर्थः ।

श्री० — अत्र साक्षिणः प्रामाण्यग्राहकत्वे । **पूर्वन्यायेन** = इन्द्रियलिङ्गशब्दजज्ञानेष्विति पूर्वोक्तन्यायेनेत्यर्थः । **स्वात्मनि** स्वरूपेन्द्रियभूते साक्षिणि ॥ **परत इति** । परीक्षाऽपेक्षणादित्यर्थः ॥ **दोषेति** । अप्रामाण्यशङ्कारूपेत्यर्थः । मानस्या = मनोजन्यया । प्रतिबन्धे = दोषशङ्कारूपे ॥ **न चास्येति** । साक्षी ज्ञानस्वरूपमप्रामाण्यं च स्वमहिम्नैव विषयीकर्तुं क्षमः । प्रामाण्यशङ्कारूपेण दोषेण सा शक्तिः प्रतिबद्धा, पश्चाद्धि संवादरूपपरीक्षया प्रामाण्यशङ्कारूपे प्रतिबन्धेऽपगते सति निजया शक्त्यैवाप्रामाण्यं व्यवस्थापयतीति व्युत्पादनप्रकारस्येत्यर्थः । प्रतिबन्धकः = अप्रामाण्यशङ्कारूपः । **प्रतिबन्धकेत्यादि** । अप्रामाण्यशङ्कारहितसुखादिप्रामाण्यग्रह इत्यर्थः ॥ **तदिति** । परीक्षेत्यर्थः । सहकारित्वे = प्रामाण्यग्रहणे परीक्षायाः कारणत्व इत्यर्थः ॥ **सर्वत्रेति** । सुखादिज्ञानप्रामाण्यग्रहणेऽपीत्यर्थः । इष्टापत्तिरिति चेत्तत्राह । **तथा चेति** । साक्षिसिद्धसुखादिकमादाय परीक्षाऽनवस्था परिहरणीया । तत्रापि चेत्परीक्षाऽन्तरापेक्षा, तदा तत्परिहारोपायाभावादनवस्था स्यादेवेति भावः ॥ **अन्यथेति** ।

सर्वत्र सत्त्वेऽपि यदि तदनपेक्षेत्यर्थः । कारणत्वं = नियतपूर्ववृत्तित्वरूपम् । प्रतिबन्धकः = प्रामाण्य-
शङ्कारूपः । तस्याः = परीक्षायाः । कारणत्वमेव = अप्रामाण्यग्रहण इत्यर्थः । शङ्कते प्रतिबन्धक-
स्येति । अप्रामाण्यग्रहण इति शेषः । प्रामाण्यशङ्कारूपप्रतिबन्धकस्येत्यर्थः ॥ अन्यथासिद्धमिति ।
विसंवादरूपायाः परीक्षायाः प्रामाण्यशङ्कारूपप्रतिबन्धकनिरास एवोपक्षीणत्वान्नाप्रामाण्यग्रहेऽनन्यथासिद्धि-
घटितकारणत्वमस्तीत्यर्थः ॥ एवं सतीति । उभयत्रापि कारणत्वकल्पन इत्यर्थः ॥
विशेषावधारणाया इति । प्रतिबन्धकनिवृत्तावेव कारणत्वम् अप्रामाण्यग्रहण एव कारणत्वमिति
विशेषावधारणाया इत्यर्थः ॥ कल्पकत्वादिति । उभयकारणत्वकल्पकत्वादित्यर्थः ।
परीक्षायाः प्रामाण्यशङ्कारूपप्रतिबन्धकनिरासकत्वेन, अन्यथासिद्धं सार्वत्रिकत्वमिति निश्चयाभावेऽपि शङ्का
तु स्यादेवेत्याशङ्कते तथाऽपीति । प्रामाण्यशङ्कारूपप्रतिबन्धकस्य सार्वत्रिकत्वात्तन्निरासे परीक्षान्वय-
व्यतिरेकयोरन्यथासिद्धिः शङ्क्यत इत्यर्थः । तथा च विसंवादरूपपरीक्षाया अप्रामाण्यग्रहण एव
कारणत्वमनन्यथासिद्धतदन्वयव्यतिरेकानुविधायित्वादिति निश्चयो न युक्त इति भावः ॥ प्रतिबन्धक-
स्येति । तथा च तस्यासार्वत्रिकत्वाद्यत्र प्रामाण्यशङ्कारूपप्रतिबन्धकं नास्ति तत्राप्रामाण्यग्रहण एव
कारणत्वं तत्सत्त्वे तु तन्निवर्तनेऽप्रामाण्यग्रहणे चेत्युभयत्रापि परीक्षायाः कारणत्वमिति निश्चयो युक्त

इत्यर्थः । ननु तर्हि यत्राप्रामाण्यशङ्का तत्र तन्निवर्तने प्रामाण्यग्रहणे चेत्युभयत्राप्यस्तु परीक्षायाः कारण-
त्वम् । यत्र तच्छङ्का नास्ति तत्र प्रामाण्यग्रहण एव कारणत्वमित्यहमपि वदिष्यामि । तथा च
प्रामाण्यस्य परतस्त्वमिति चेन्न । वक्तुं शक्यतेऽस्माभिः परीक्षाया अप्रामाण्यशङ्कानिवर्तन एव
चारितार्थ्यम् । न तु प्रामाण्यग्रहणेऽपि कारणत्वमिति । अप्रामाण्यशङ्काया अभावेऽपि परीक्षानपेक्ष-
साक्षिणा सुखादिप्रामाण्यस्य ग्रहणदर्शनात् । न चैवं साक्षिणा परीक्षाया अभावेऽप्यप्रामाण्यग्रहणं
क्वचित्स्थलविशेषे दृष्टम् । येन परीक्षायाः प्रामाण्यशङ्कानिरास एव चारितार्थ्यम् न त्वप्रामाण्यग्रहणेऽपि
कारणत्वम् ततश्च न परतस्त्वमिति वक्तुं शक्यत इति द्रष्टव्यम् ॥ अन्यथेति । प्रतिबन्धकस्य सार्व-
त्रिकत्वं प्रकल्प्य कारणस्यान्यथासिद्धिशङ्कायामित्यर्थः । अतिरिक्तस्य= परीक्षारूपकारणस्य । यथाकथ
मपि = अप्रामाण्यशङ्कारूपप्रतिबन्धकनिरासकत्वेनापीत्यर्थः । स्वतः = सुखादिग्रहणे परीक्षानपेक्षया ।
अन्यस्य= अप्रत्यक्षादिज्ञानस्य । परतः= परीक्षापेक्षया । तथा च प्रतिबन्धनिरासे तत्सापेक्षत्वे सत्यपि
तद्ग्राह्यत्वाभावेन ज्ञानग्राहकग्राह्यत्वरूपं स्वतस्त्वमपेक्षितमेव वैवक्षिकोक्तरूपपरतस्त्वाङ्गीकारे न कश्चिद्दोष
इति भावः ।

च० —विस्तरस्त्विति । साधनलक्षणे तुरीयचरणे 'न ज्ञानदृष्टिमात्रेण प्रामाण्यं तस्य दृश्यते'
इत्यादिना प्राभाकरादिमतव्युदासेनाभिहितकल्पनात् द्वैविध्यमखिलैरुरीकार्यमित्यभिधास्यत इत्यर्थः ।

सु० अथ मतम् । साक्षी प्रत्यक्षादीनां प्रामाण्यं गृह्णन्नपि कतिपयकालकतिपयपुरुषसंबन्धिबाधवैधुर्यरूपमेव । न पुनरस्य कदाचित्कुत्रापि केनापि स्वार्थव्यभिचारो न भविष्यतीत्येवंरूपम् । तत्कथं तेनात्यन्तिकबाधाभावलक्षणं सत्यत्वं विश्वस्य सिद्ध्येदित्यत आह अन्यथेति ।

अनु०— अन्यथा श्रुतियुक्त्यादिप्रमाणैश्च सहैव तु ।
अकस्माद्विनिवृत्ति(श्च)स्तु किं विश्वस्य न शङ्क्यते ॥

साक्षिणः सर्वथा बाधवैधुर्यलक्षणप्रामाण्याग्राहकत्वे विश्वस्य पूर्णस्य ब्रह्मणोऽपि प्रपञ्चवद्विनिवृत्तिः किं कस्मान्न शङ्क्यते । निवर्तकाभावादित्यत उक्तम् अकस्मादिति । ननु च 'सत्यं ज्ञानं' 'तत्सत्यमि'त्यादिश्रुत्या, ब्रह्म न निवृत्तिमत् अज्ञानतत्कार्यातिरिक्तत्वात् इत्याद्यनुमानेन, निरधिष्ठानकस्यासाक्षिकस्य भ्रमस्य, निरवधिकस्य बाधस्य चादर्शनात्प्रपञ्चारोपाद्यन्यथाऽनुपपत्त्या, ब्रह्मणस्सत्यताऽवगमात्तन्नेत्यत उक्तम् श्रुतीति । एतेषामपि प्रमाणानां प्रत्यक्षादीनामिव विनिवृत्तिः शङ्क्यतामित्यर्थः ।

एतदुक्तं भवति । 'प्रपञ्चविषयाणां प्रत्यक्षादिप्रमाणानां नात्यन्तिकं प्रामाण्यं साक्षी गृह्णाति । किन्तु तात्कालिकमेव' इति वदन्वक्तव्यः । साक्षिणः किमात्यन्तिकप्रामाण्यग्रहणे शक्तिरस्त्युत नास्ति । आद्ये कथं प्रपञ्चविषयाणां प्रत्यक्षादीनां प्रामाण्यमात्यन्तिकं न गृह्णीयात् । द्वितीये ब्रह्मणः सत्यताप्रतिपादकानां श्रुत्यादीनामपि नात्यन्तिकं प्रामाण्यं गृह्णीयात् । तथा च न ब्रह्मणोऽबाध्यत्वमात्यन्तिकं सिद्ध्येत् । ततश्च साधकबाधकप्रमाणाभावात्तस्यापि बाधः शङ्क्येत । एवं च तज्ज्ञानमपि न तत्त्वज्ञानमिति न तदर्थः प्रयत्नः स्यात् । अथ क्वचिच्छक्तिः क्वचिन्नेति ब्रूयात्तदा नियामकं वाच्यमिति ।

ननु यदि ब्रह्म बाधार्हं स्यात्तर्हीयता कालेन कुतो न निवृत्तम् । तस्मादितःपूर्वं बाधरहितत्वान्नोत्तरत्रापि बाधः शङ्क्यत इति चेन्न । उक्तोत्तरत्वात् । अस्या अप्युपपत्तेः साक्षिग्राह्यप्रमाणभावाया आत्यन्तिकप्रामाण्यासिद्धेः । अन्यथा प्रपञ्चग्राहिणां प्रत्यक्षादीनामपि तथात्वस्यानिवारणात् । व्यवस्थापकाभावात ।

दूषणान्तरमाह इतःपूर्वमिति ।

इतःपूर्वं तथाभावाद्यदि नो संसृतेर्गतिः ।

तथाभावात्= निवृत्त्यभावात् । यदि ब्रह्मणो निवृत्तिर्न शङ्क्यत इति संबन्धः । तर्हीत्यध्याहारः । गतिर्निवृत्तिः स्यादिति शेषः ।

अयमाशयः । इतःपूर्वमनिवृत्तत्वादिति किं ब्रह्मणो निवृत्त्यभावे संभावनोक्तोतानुमानम् । नाद्यः । संभावनाया अपि संशयरूपत्वेन शङ्कानिवारणासामर्थ्यात् । न द्वितीयः । तथा सति संसृतेरविद्याया निवृत्त्यभावप्रसङ्गात् । न हीतःप्राङ्मूलाविद्या निवृत्ता । अन्यथा तस्यामेव व्यभिचारस्स्यादिति ।

किञ्च शुक्तिरजतादिकं प्रागनिवृत्तमेव निवर्तते । निवृत्तस्य निवृत्त्ययोगात् । अतो विरुद्धता च ।

शे० — कतिपयेति शङ्काग्रन्थे देशोऽपि ग्राह्यः । अत एव कदाऽपि कुत्राऽपीत्युत्तरग्रन्थे देशकालयोरुभयोरपि ग्रहणम् । श्रुतियुक्त्यादीति मूले विवक्षिते श्रुतियुक्ती दर्शयति **ननु चेति** । तथाऽपि श्रुतियुक्त्य दीत्यादिपदमनर्थकमित्यतोऽर्थापत्तिसंग्रहार्थं नदिति भावेन तत्संगृहीतामर्थापत्तिं दर्शयति **निरधिष्ठानस्येत्यादि** । यद्यप्यर्थापत्तेरनुमानत्वात्स्वमते युक्तिपदेनैव तत्परिग्रहस्तथाऽपि तत्पार्थक्यवादिमायावादिरीत्या युक्तिपदेन तदप्राप्तेस्तत्संग्रहार्थमादिपदमर्थवदिति द्रष्टव्यम् । प्रपञ्चारोपादीत्यादिपदेन तद्बाधपरिग्रहः ।

ननु जगत्सत्यत्वग्राहिप्रत्यक्षादेस्तात्कालिकप्रामाण्यग्राहकत्वेऽपि साक्षिणो ब्रह्मसत्यत्वप्रतिपादकश्रुत्यादेरात्यन्तिकाबाध्यत्वग्राहकत्वोपपत्तेर्न तत्तात्कालिकाबाध्यत्वग्राहकत्वापादनं युक्तम् । न च साक्षिण आत्यन्तिकाबाध्यत्वग्राहकत्वेऽसामर्थ्यान्न ब्रह्मसत्यत्वप्रतिपादकश्रुत्यादेरात्यन्तिकाबाध्यत्वग्राहकत्वं तस्येत्यभिप्रायकत्वान्नापादनानुपपत्तिरिति वाच्यम् । साक्षिणस्तत्र सामर्थ्यस्यापि पराभिप्रेततया सम्भावयितुं शक्यत्वेनासामर्थ्यावधारणायोगात् । न चैवं जगत्सत्यत्वग्राहकप्रत्यक्षादेरपि तद्ग्राहकत्वप्रसक्तेस्तस्य तत्रासामर्थ्यस्य पराभिप्रेततासिद्धिरिति वाच्यम् । क्वचित्समर्थस्यान्यत्रापि सामर्थ्यनियमासिद्ध्या जगत्सत्यत्वग्राहकप्रत्यक्षादेरात्यन्तिकाबाध्यत्वग्राहकत्वेऽसामर्थ्यस्य, ब्रह्मसत्यत्वप्रतिपादकश्रुत्यादेस्तद्ग्राहकत्वे सामर्थ्यस्यापि सम्भावितत्वेन तदप्रसङ्गात् । नियामकविशेषाभावेनोक्तव्यवस्थाऽसिद्ध्या ब्रह्मणः सत्यत्वप्रमाणानामात्यन्तिकाबाध्यत्वग्राहकत्वाभावेऽपि परस्य क्षत्यभावेन तात्कालिकाबाध्यत्वग्राहकत्वापादनस्येष्टत्वाच्च । न च तथा सति ब्रह्मणोऽपि बाध्यत्वप्रसक्तेः कथं तत्सत्यत्वप्रमाणानां तात्कालिकाबाध्यत्वग्राहकत्वं परस्य नानिष्टम् । अत एव मूले विश्वस्येति ब्रह्म संगृहीतमिति वाच्यम् । प्रयोज्यप्रयोजकभावस्यास्फुटतया ब्रह्मणो बाध्यत्वापादनस्यैवानुपपन्नत्वात् । ब्रह्मणो बाध्यत्वेऽप्यनिष्टाभावेनेष्टापादनत्वाच्चेति नानेन मूलेनोक्ताक्षेपपरिहार इत्यतोऽभिप्रायमाह **एतदुक्तं भवतीति** । उक्तोत्तरत्वादित्येतदेव प्रपञ्चयति **अस्या अपीति** ॥ अन्यथेति साक्षिग्राह्यप्रमाणभावाया अप्युपपत्तेरात्यन्तिकप्रामाण्य इत्यर्थः ॥ **तथात्वस्येति** । आत्यन्तिकप्रामाण्यस्येत्यर्थः ॥ **निवृत्त्यभावा-**

दिति । अनेन मूले तथेत्यनेन निवृत्तेः परामर्शोऽभावादिति च पदच्छेद इत्युक्तं भवति ॥ **तर्हीत्य-ध्याहार इति** । यदीति श्रवणादिति भावः । ननु परेण ब्रह्मणो निवृत्त्यभावे सम्भावकतयैवेतःपूर्वम-निवृत्तत्वादिति युक्तेरुपन्यस्तत्वान्न 'नो संसृतेर्गतिरि'ति संसृतौ व्यभिचारचोदनं युक्तम् । नापि तत्र व्यभिचारः सम्भवति । दुःखादिरूपत्वात्संसृतेरितःपूर्वं निवृत्तिदर्शनेनोक्तहेत्वगमनादित्यत आह **अय-माशय इति** ॥ **संशयरूपत्वेनेति** । उत्कटैककोटिकसंशयस्यैव सम्भावनात्वादिति भावः ॥ **शङ्केति** । ब्रह्मबाधशङ्केत्यर्थः ॥ **मूलाविद्येति** । मूलाविद्यानामितःप्राङ्निवृत्त्यदर्शनादिति भावः ॥ **अन्यथेति** । इत.पूर्वमनिवृत्ताया अप्यविद्याया निवृत्त्यभ्युपगम इत्यर्थः ॥ **तस्यामेवेति** । अविद्यायामेवेत्यर्थः ॥ **व्यभिचार इति** । यदितःपूर्वं बाधरहितं तन्नोत्तरत्रापि बाध्यमिति व्याप्तेरिति शेषः ।

स० — उक्तोत्तरत्वादित्युक्तमेव विवृणोति **अस्या अपीति** ।

प० — प्रपञ्चारोपाद्यन्यथानुपपत्तेरित्यत्र आदिपदेन प्रपञ्चे बाधग्रहः । कुतस्तयोरनुपपत्तिरित्यतो **निरधिष्ठानस्येत्यादि** । उक्तद्विरूपभ्रमस्या दर्शनान्निरवधिकबाधस्य चादर्शनादित्यर्थः ॥ **विनिवृत्तिरिति** । आत्यन्तिकप्रामाण्याभावेत्यर्थः । किमनेनेक्तचोद्यस्योत्तरं दत्तमित्यत आह **एतदुक्तं भवतीति** । नियामकं वाच्यमितीतिशब्दस्य इतिवक्तव्य इति पूर्वेणान्वयः । उक्तोत्तरत्वादित्येतद्व्यनक्ति **अस्या इति** । यदीत्यस्य 'विनिवृत्तिश्च किं विश्वस्य न शङ्कयते' इति पूर्ववाक्येन किंशब्दं विनाकृतेनान्वय इति भावे-

नाह **यदि ब्रह्मणो निवृत्तिर्न शङ्कयत इति सम्बन्ध इति** । विश्वस्येत्यस्य ब्रह्मण इति पूर्वव्याख्यानात् ब्रह्मण इत्युक्तम् । अस्फुटत्वादाह **अयमाशय इति** । करणव्युत्पत्तिमुपेत्याह **संसृतेरविद्याया इति** ॥ **व्यभिचारः स्यादिति** । इतः पूर्वं तथाभावादित्युक्तहेतोरित्यर्थः ॥ **विरुद्धता चेति** । प्रागनिवृत्तत्व-हेतोरिति योज्यम् ।

या० — उक्तोत्तरत्वादित्युक्तमेव विवृणोति **अस्या अपीति** ।

श्री० — तेन साक्षिणा । **असाक्षिकस्य** अद्रष्टृकस्य ॥ **निरवधिकस्येति** । अत्रेदं नास्तीति बाधः सावधिक एव दृष्टो न विदं नास्तीति निरवधिक इत्यर्थः । ततश्च भ्रमाधिष्ठानत्वेन तत्साक्षित्वेन निषेधरूपबाधावधित्वेनात्मसिद्धिरिति भावः । आरोपादीत्यत्रादिपदेन बाधग्रहणम् । तथा चाधिष्ठान-द्रष्ट्रोरभावादारोपानुपपत्तिः । अवधेरभावाद्बाधानुपपत्तिश्चेत्यर्थः । सत्यत्वावगमान्नेतीत्यनन्तरं निवृत्तिम-द्भवेत्यनुवर्तते ॥ **साधकेत्यादि** । ब्रह्मण आत्यन्तिकाबाध्यत्वसाधकस्य तात्कालिकबाध्यत्वबाधकस्य च प्रमाणस्येत्यर्थः । **तस्यापि** ब्रह्मणोऽपि । **तज्ज्ञानं** बाध्यस्य ब्रह्मणो ज्ञानम् ॥ **न तत्त्वज्ञानमिति** । तत्त्वमनारोपितमित्युक्तत्वादिति भावः । **क्वचित्** श्रुत्यादावात्यन्तिकप्रामाण्यग्रहणे शक्तिः । **क्वचित्** प्रत्यक्षादौ तद्ग्रहणे शक्तेरित्यर्थः ॥ **उक्तोत्तरत्वादिति** । अकस्मादित्युक्तोत्तरत्वादित्यर्थः । तदेव

विशदयति अस्या अपीति। तथा च नानयोरस्या इत पूर्वं बाधाभावान्नोत्तरत्रापीति त्वयोच्यमानं ब्रह्मणो-ऽबाध्यत्वं सिध्यतीत्यर्थः ॥ अन्यथेति । साक्षिगृहीतप्रामाण्याया अप्युपपत्तेर्यद्यात्यन्तिकं प्रामाण्यमङ्गीकृत्य त्वदुक्तार्थसाधकत्वमुच्यत इत्यर्थः ॥ प्रत्यक्षादीनामपीति । साक्षिगृहीतप्रामाण्यकानामित्यर्थः । तथात्वस्य आत्यन्तिकप्रामाण्यस्य । तथा च तेषामपि स्वार्थसाधकत्वमस्त्विति भावः ॥ व्यवस्थापकेति । ब्रह्मणोऽबाध्यत्वसाधिकाया इतःपूर्वमित्युपपत्तेः प्रपञ्चग्राहिप्रत्यक्षादीनां च साक्षिगृहीत-प्रामाण्यत्वाविशेषेप्युक्तोपपत्तेरात्यन्तिकं प्रामाण्यं प्रत्यक्षादीनां तु तदभाव इत्यत्र व्यवस्थापकप्रमाणा-भावादित्यर्थः ॥ शङ्केति । अकस्माद्विनिवृत्तिरित्येवंरूपेत्यर्थः । हेतुसद्भावमुपपादयति । न हीत-प्रागिति । अन्यथा अविद्याया इतःपूर्वमनिवृत्ताया अपि निवृत्त्यङ्गीकार इत्यर्थः ॥ विरुद्धतेति । इतःपूर्वमनिवृत्तित्वहेतोः शुक्तिरजतादौ निवृत्तिरूपो यः साध्याभावस्तेनैव व्याप्तत्वादित्यर्थः ॥

च० — उक्तोत्तरत्वादित्युक्तमेव विशदयति अस्या अपीति । प्राक्प्रपञ्चेति भ्रमत्वे त्विय-मुक्तिश्चत्यादावित्यर्थः ।

सु० — अन्यथेत्याद्यन्यथा व्याख्यायते । अन्यथा साक्षिणः प्रपञ्चग्राहकप्रत्यक्षाद्यात्यन्तिकप्रामाण्यग्राहकत्वे, विश्वस्य वियदादेरुत्तरक्षण एव निवृत्तिर्विनाशः किं न शङ्क्यते । तथा च सर्वप्रवृत्तिविलयः स्यात् । परमेश्वरसञ्जिहीर्षाद्यभावादित्यत उक्तम् अकस्मादिति । (अनु०—२२१७ पृष्ठे द्रष्टव्यम् ।) नन्वीश्वरेच्छयैव श्रुतिस्मृतीतिहासपुराणानि प्रपञ्च-प्रलयं प्रतिपादयन्ति; विश्वविनाशो न निर्हेतुको विनाशत्वात्घटनाशवदित्यनुमानमपि । तत्कथमेवं शङ्क्यत इत्यत उक्तम् श्रुतीति । प्रमाणानां निवृत्तिर्नामात्यन्तिकप्रामाण्याभावः । तात्पर्यं पूर्ववत् ।

ननु प्रागितो न प्रपञ्च(वि)लयोऽकस्मादभूत् । तत्कथमुत्तरत्रापि शङ्क्येत इत्यत (उक्तम्) आह इतः पूर्वमिति । किमत्र यत्पूर्वं नाभूत्तदुत्तरत्रापि न भविष्यतीति व्याप्तिः, किंवा यत्पूर्वं न निर्हेतुकं विनष्टं न तदुत्तरत्रापि तथा विनाशवदिति, यद्वा यन्निर्हेतुकं न तद्भविष्यतीति व्याप्तिः, पूर्वोक्तिस्तु तदुपपादनायेति । नाद्यः । संसृतेरविद्याया निवृत्त्यभावप्रसङ्गात् । न द्वितीयः । संसारनिवृत्तिप्रसङ्गात् । तथा हि । विद्या संसारनिवृत्तिहेतुः । साऽप्यविद्यात्मकत्वात्संसृतिरेव । न च तस्या निवर्तकान्तरमस्ति । तथा चाकस्मात्किमपि न निवर्तत इत्यङ्गीकारे नो संसृतेर्गतिः । विद्या स्वयमेव स्वनिवृत्तिहेतुरविद्यामात्रविरोधित्वा-दिति चेन्न । एवं तर्हि प्रपञ्चोऽप्युत्तरक्षणे (स्वयमेव)निवर्तिष्यत इति शङ्का स्यात् । अत एव न तृतीयोऽपीति ।

शे० — **अन्ययेत्याद्यन्यथा व्याख्यायत इति** । अनेनावतारिका सैव व्याख्यानमेवान्यथा क्रियत इत्युक्तं भवति। श्रुतियुक्त्यादीत्यादिपदेन स्मृत्यादीनां परिग्रह इत्याशयेनोक्तम् **श्रुतिस्मृतीतिहासपुराणानीति ॥ तात्पर्यं पूर्ववदिति** । साक्षिण आत्यन्तिकप्रामाण्यग्रहणे शक्तिसद्भावे जगत्सत्यत्वग्राहकप्रत्यक्षादेरप्यात्यन्तिकप्रामाण्यग्राहकत्वस्य प्रसक्तिः । अशक्तत्वे च सञ्जिहीर्षायाः प्रलयनिमित्तत्वप्रतिपादकश्रुत्यादेरप्यात्यन्तिकप्रामाण्यग्राहकत्वानुपपत्तिप्रसक्तेर्व्यवस्थापकाभावेन क्वचिच्छक्तिः क्वचिन्नेत्यपि कल्पयितुमशक्यत्वादिति तात्पर्यमन्यथेत्यादेः पूर्वयोजनायामिव द्रष्टव्यमित्यर्थः । ननु यत्पूर्वं नाभूत्तदुत्तरत्रापि न भविष्यतीति वा, यत्पूर्वं न निर्हेतुकं विनष्टं, न तदुत्तरत्रापि तथा विनाशवदिति वा, व्याप्तिविवक्षाया'मितःपूर्वं तथाऽभावादि'ति मूले पूर्वमित्येवंरूपायाः पूर्वोक्तेरर्थवत्त्वसम्भवेऽपि यन्निर्हेतुकं न तद्भवतीत्येव व्याप्तिविवक्षायां तस्याः 'तथाऽभावात्' इत्येतावतैव समर्पणात्पूर्वोक्तिर्वैयर्थ्यमित्यत आह **पूर्वोक्तिस्त्विति ॥ तदुपपादनायेति** । यन्निर्हेतुकं न तदुत्पद्यत इति पूर्वोक्तव्याप्त्युपपादनायेत्यर्थः । निर्हेतुकं नोत्पद्यत इत्येतत्कुत इत्याशङ्कायामितःपूर्वं निर्हेतुकस्योत्पत्तेरदृष्टत्वादिति पूर्वोक्तेस्तदुपपादकत्वमिति भावः ॥ **निवृत्त्यभावप्रसङ्गादिति** । अविद्यानिवृत्तेः पूर्वमसत्त्वाद्यत्पूर्वं नाभूत्तन्नोत्तरत्रापि भविष्यतीति नियमादिति भावः ॥ **संसारेति** । संसारस्य निर्हेतुकं पूर्वमविनष्टत्वेनोत्तरत्रापि निर्हेतुकं विनाशायोगात्; उक्तव्याप्तेरिति भावः । ननु चोत्तरत्र न संसारस्य निर्हेतुकं विनाशं ब्रूमो येनोक्तरीत्या तदनुपपत्तिरापद्येत । किन्तु सहेतुकमेव । तत्कथं तदनिवृत्त्यापादनमित्यत आह **तथा हीति** । अत्रेयं योजना । विद्याऽप्यविद्यात्मकत्वात्संसृतिशब्देनोच्यते । तस्याश्च न निवर्तकान्तरमस्ति । ननु च संसारनिवर्तकमेव तन्निवर्तकं भविष्यतीति कथं विद्यायां निवर्तकान्तराभाव इत्यतः स्यादेतदेवं यदि विद्यातिरिक्तं संसारनिवर्तकं स्यात् । न च तदस्तीत्युक्तम् **विद्या हि संसारनिवृत्तिहेतुरितीति ॥ अविद्यामात्रेति** । विद्याया अप्यविद्याकार्यत्वादविद्यात्वमिति युक्तमविद्यानिवर्तकविद्याया विद्यानिवर्तकत्वमिति भावः ॥ **एवं तर्हीति** । तथा च स्वस्य स्वनिवर्तकत्वायोगेन विद्याया निर्हेतुकस्यैव विनाशस्य वक्तव्यत्वादुक्तं युक्तमिति भावः ॥ **अत एवेति** । उक्तरीत्या संसारानिवृत्तिप्रसङ्गादेरित्यर्थः ।

स० — **तात्पर्यं पूर्ववदिति** । एवं वदन् प्रष्टव्यः । साक्षिणः किमात्यन्तिकप्रामाण्यग्रहणे शक्तिरस्ति उत नास्तीति । आद्ये कथं प्रपञ्चविषयप्रत्यक्षादीनां प्रामाण्यमात्यन्तिकं न गृह्णीयात् । द्वितीये ईश्वरेच्छयैव प्रपञ्चलयो भवतीत्येवं प्रतिपादकानां श्रुत्यादीनामपि नात्यन्तिकं प्रामाण्यं गृह्णीयात् । अथ क्वचिच्छक्तिः क्वचिन्नेति ब्रूयात् तदा विनिगमकं वाच्यमिति तात्पर्यं पूर्वयोजनायामिव द्रष्टव्यमित्यर्थः । **यद्वा यन्निर्हेतुकं न तद्भविष्यतीति** । अनेन तथाऽभावादित्येतत् तथाऽहेतुकस्याभावादनु-

त्पत्तेरिति योजितं भवतीति भावः ॥ **पूर्वोक्तिस्त्विति** । इतः पूर्वं तथाऽभावादिति पूर्वोक्तिरित्यर्थः । निर्हेतुकं नोत्पद्यत इत्येतत्कुत इत्याशङ्कायां इतःपूर्वं निर्हेतुकस्योत्पत्तेरदृष्टत्वादिति तदुपपादनायेति भावः । **संसृतिरेवेति** । अत्र विद्या संसृतिपदेन ग्राह्येति भावः । **अविद्यामात्रविरोधित्वादिति** । अत्राविद्याकार्यस्याप्यविद्यात्मकत्वविवक्षया अविद्यामात्रेत्युक्तम् । तथाचाविद्यातत्कार्ययोरन्यतरत्वस्य निवर्त्यतावच्छेदकस्य विद्यायामपि सत्त्वेन स्वनिवर्त्यतोपपद्यते इति भावः । **अत एवेति** । विद्यायां व्यभिचारादेवेत्यर्थः ।

प० — शिष्यमनस्समाधानाय प्रतिजानीते **अन्यथेत्यादीति** ॥ **श्रुतिस्मृतीति** । यत्प्रयन्त्य-भिसंविशन्ति' । 'यमप्येति भुवनं सांपराये' । 'तस्याभिध्यानाद्योजनादि'त्यादिश्रुतिः । 'यतो जगत्स्थान-निरोधसंभवः' । 'प्रकृतिस्तुद्रूपेण सर्वमावृत्य तिष्ठति । प्रलयेऽनो लयं प्राहुः सर्वतः संप्लुतोदकमि'ति स्मृतिः । 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथे'त्यादीतिहासः । 'स्रष्टा पाता च संहर्ता स एको हरिरीश्वर' इत्यादिपुराणमिति भावः ॥ **तात्पर्यं पूर्ववदिति** । एतदुक्तं भवतीत्यादिना पूर्वमुक्तं यत्तात्पर्यं तद्वदेवेत्यर्थः । तथाहि । किमात्यन्तिकप्रामाण्यग्रहणे साक्षिणः शक्तिरस्त्युत नास्ति । आद्ये कथं प्रपञ्च-विषयाणां प्रत्यक्षादीनां प्रामाण्यमात्यन्तिकं न गृह्णीयात् । द्वितीये ईश्वरेच्छया विश्वलय इति बोधक-श्रुत्यादीनामपि नात्यन्तिकं प्रामाण्यं गृह्णीयात् । अथ क्वचिच्छक्तिः क्वचिन्नेति ब्रूयात् तदा नियामकं वाच्यमित्येवं ध्येयमिति ॥ **इत्यत(उक्तं)आहेति** । इतःपूर्वं तथाऽभावात् यद्यकस्माद्विनिवृत्तिर्विश्वस्य न शङ्क्यते तर्हि न संसृतेर्गतिः स्यादित्येवं पूर्ववाक्यान्वयादिना इत इत्यादिमूलस्य पूर्वत्र यथाऽवसरोक्त-दिशा समग्रत्वे सत्युक्तशङ्का तन्निरासश्च लभ्यत इति भावः । तर्हि नो संसृतेर्गतिः स्यादिति परिहारोक्ति-परांशं पक्षत्रयनिरासपरतया योजयितुं त्रेधा विकल्पयति **किमत्रेति** । ननु कथमत्र तृतीयकल्पस्योत्थितिः । मूले निर्हेतुकस्याभावात् यदीत्यापादकानुवादाभावात् । 'इतःपूर्वं तथाभावाद्यदी'त्यनुवादेन तु पूर्वकल्प-द्वयस्योत्थानप्रतीतेरित्यत आह **पूर्वोक्तिस्त्विति** ॥ इतःपूर्वमिति पूर्वपदोक्तिस्तु निर्हेतुकं न भविष्यती-त्येतदुपपादनायेत्यर्थः । यदि निर्हेतुकं भविष्यति तर्हि पूर्वमपि तथा स्यात् । न चासीत्तथा । अतो नोत्तरत्रापीत्येवमुपपादनायेति भावः । (यद्वा इतःपूर्वं निवृत्त्यभावाभावादुत्तरत्रापि विश्वस्य ब्रह्मणो न निवृत्तिर्न शङ्क्यत इति इतःपूर्वं निर्हेतुकविनाशस्योत्तरस्मादिति ब्रूषे इति कल्पत्रयोपपादनाय पूर्वोक्तिरि-त्यर्थः । यद्वा इतःपूर्वं तथाऽभावाद्विश्वस्य ब्रह्मणो न निवृत्तिरिति पूर्वोक्तदृष्टान्तत्वाद्युपपादनायेत्यर्थः ।) संसारानिवृत्तिप्रसङ्गादित्यत्र संसारशब्देन तत्त्वज्ञानरूपसंसार उच्यते । संसारनिवृत्तिहेतुरित्यत्र सुखदुःखा-दिबन्धः । **अविद्यात्मकत्वात्** अविद्यापरिणामात्मकत्वात् । मूलं योजयति **तथा चेति** ॥ **अविद्या-**

**मात्रेति** । अविद्या(तत्कार्यरू)मात्रारोपसर्वविरोधित्वादित्यर्थः ॥ **अत एवेति** । विद्याख्यसंसृतेरिव विश्वस्यापि स्वेनैव निवृत्तिरिति शङ्कोदयसंभवादेवेत्यर्थः ।

**या० — तात्पर्यं पूर्ववदिति** । एवं वदन् प्रष्टव्यः । साक्षिणः किमात्यन्तिकप्रामाण्यग्रहणे शक्तिरस्त्युत नास्तीति । आद्ये कथं प्रपञ्चविषयप्रत्यक्षादीनां प्रामाण्यमात्यन्तिकं न गृह्णीयात् । द्वितीये ईश्वरेच्छयैव प्रपञ्चलयो भवतीत्येवंप्रतिपादकानां श्रुत्यादीनामपि नात्यन्तिकं प्रामाण्यं गृह्णीयात् । अथ क्वचिच्छक्तिः क्वचिन्नेति ब्रूयात्, तदा नियामकं वाच्यमिति तात्पर्यं पूर्वयोजनायामिव द्रष्टव्यमित्यर्थः । नन्वेवं व्याप्तौ विवक्षितायां तथाभावादित्येतावता पूर्तावित पूर्वमिति पूर्वोक्तिर्व्यर्थेत्यत आह **पूर्वोक्तिस्त्विति** । निर्हेतुकं नोत्पद्यत इत्याशङ्कायामितःपूर्वं तथाऽदृष्टत्वादिति तदुपपादनायेत पूर्वमिति पूर्वोक्तिरित्यर्थः ॥ **संसृतिरेवेति** । तथा चात्राविद्या संसृतिपदेन ग्राह्या इति भावः ॥ **अविद्यामात्रेति** । अत्राविद्याकार्यमप्यविद्यात्मकमित्यभिप्रेत्याविद्यामात्रेत्युक्तम् । तथा चाविद्यातत्कार्ययोरन्यतरत्वस्य निवर्त्यतावच्छेदकस्य विद्यायामपि सत्त्वेन तस्याः स्वनिवर्त्यतोपपद्यत इति भावः ।

**श्री० — इत्यादि** मूलवाक्यम् । अस्मिन्पक्षेऽ'प्यन्यथे'ति वाक्यस्य 'अथ मतमि'त्याद्येवावतारिका ज्ञेया तथा = निर्हेतुकम् । भवति = उत्पद्यते । नन्वियं व्याप्तिस्तथाभावान्निर्हेतुकस्याभावादनुत्पद्यमानत्वादिति मूलेनैवावगता । इतःपूर्वमित्युक्तिस्तु किमर्थेत्यत आह **पूर्वोक्तिस्त्विति** ॥ **संसारेति** ।

विद्येत्यर्थः । ननु कथं विद्याया अविद्यापरपर्यायसंसृतित्वमित्यत आह **साऽपीति** । विद्येत्यर्थः । विद्याया अविद्यात्मकत्वं तु सर्वप्रपञ्चस्याप्यविद्याकार्यत्वेन तदन्तर्गतविद्याया अप्यविद्याकार्यत्वाद्द्रष्टव्यम् । तस्याः= विद्यायाः । सर्वस्याप्यविद्यादे स्वयमेव विद्या निवर्तिका न तस्याः किञ्चिन्निवर्तकान्तरमस्तीत्यर्थः । यत्पूर्वं न निर्हेतुकं विनष्टं तदुत्तरत्रापि तथा न विनाशवदित्युक्तव्याप्तेरनुवादोऽकस्मात्किमपि न निवर्तत इत्यङ्गीकार इति । संसृतेः=विद्यायाः । गतिः=निवृत्तिः । तथा च विद्यानाशे व्यभिचार इति भावः । शङ्कते **विद्येति** । कुत इत्यत आह **अविद्यामात्रविरोधित्वादिति** । अत्राविद्याशब्देनाविद्याकार्यं ग्राह्यम् । कार्यकारणयोरभेदेनाविद्याकार्यस्याप्यविद्यात्मकत्वात् । मात्रशब्दः कार्त्स्न्यार्थः । तथाच विद्यायाः समस्ताविद्याकार्यविरोधित्वेन तन्निवर्तकत्वाद्विद्याया अपि जगदन्तःपातित्वेनाविद्याकार्यत्वाद्विद्या स्वयमेव स्वनिवृत्तिहेतुरित्यर्थः ॥ **शङ्का स्यादिति** । आकस्मिकोत्तरक्षण एव प्रलयशङ्का स्यादित्यर्थः । तथा चाप्रयोजकतेति भावः ॥ **अत एवेति** । निर्हेतुकस्यापि विद्यानाशस्य जायमानत्वाद्विद्याविनाशे व्यभिचारादेवेत्यर्थः । यद्येतदुपरि विद्याविनाशे निर्हेतुकत्वमसिद्धं विद्या स्वयमेव स्वनिवृत्तिहेतुरिति व्यभिचारशङ्कां कुर्यात्तर्हि प्रपञ्चोऽप्युत्तरक्षणे स्वयमेव निवर्तिष्यत इत्यप्रयोजकताशङ्का स्यादिति पूर्वोक्तमुत्तरं वाच्यमिति हृदयम् ।

सु०— **उक्तमेवार्थं विवृणोति** वाक्येति ।

अनु०— वाक्यानुमादितश्चेत्स्यात्तत्प्रामाण्यं च साक्षिणः ॥

अथवा नो संसृतेर्गतिरित्ययुक्तम् । संसारगतेः श्रुत्यादिसिद्धत्वात् । तदसिद्ध्या च हेतोर्विशेषणादित्यत आह वाक्येति । ब्रह्मणोऽपि निवृत्त्याशङ्कायामापादितायां यदि परो वाक्यानुमादितो निवृत्त्यभावनिश्चयः स्यादिति ब्रूयात्, यदि वा आकस्मिकोत्तरक्षणे प्रलय-शङ्कापादने वाक्यानुमादितः परमेश्वरेच्छादिनैव स्यादिति मन्येत, यदि च वाक्यानुमादितः संसारनिवृत्तिः स्यादिति वदेत्; तदा तस्य वाक्यादेः प्रामाण्यं केन निश्चितमिति वक्तव्यम् । साक्षीतरेणेत्यङ्गीकारे ज्ञानस्य साक्षिवेद्यत्वेन परतः प्रामाण्यग्रहापत्तेः साक्षिणैवेति वक्तव्यम् ।

शे०— **विवृणोतीति** । तथा च नोत्तरवाक्यवैयर्थ्यमिति भावः । प्रयोजनाभावान्न विवरणे-नापि कृत्यमित्यतः प्रकारान्तरेण तत्सार्थक्यमाह **अथवेति** । अस्तु संसारगतेः श्रुत्यादिसिद्धत्वं तथाऽपि इतःपूर्वमनिवृत्तत्वेन निवृत्त्यभावानुमानस्य नोक्तव्यभिचारशङ्कापरिहार इत्यतः स्यादेतदेवं यद्यत्रेतःपूर्वम-निवृत्तत्वमात्रं हेतुः स्यात् । न चैतदस्तीत्याह **तदसिद्ध्या चेति** । श्रुत्याद्यसिद्धनिवृत्तिमत्त्वे सतीतःपूर्व मनिवृत्तत्वादिति हेतोस्तदसिद्ध्या विशेषणादित्यर्थः । तथा च हेतोरेवागमनान्न तत्र व्यभिचार इति भावः । नन्वत्र सत्यन्तमात्रस्यैवोत्तरत्र निवृत्त्यभावगमकत्वोपपत्तेर्विशेष्यवैयर्थ्यम् । न चासतः सदा निवृत्तिमत उत्तरत्रापि निवृत्तिमत्त्वेन तत्र व्यभिचारपरिहारार्थं तदिति वाच्यम् । तस्य प्रत्यक्षसिद्ध-निवृत्तिमत्त्वेन श्रुत्याद्यसिद्धनिवृत्तिमत्त्वेनैव तद्व्यवच्छेदसिद्धेरिति चेन्न । आदिपदेन स्मृत्यादेरिव प्रत्यक्ष-स्यासंग्रहात् । अत एव शङ्काग्रन्थे निवृत्तिसाधकतया श्रुतिस्मृतिपुराणयुक्तीनामेवोपन्यासः । श्रुत्याद्य-सिद्धनिवृत्तिमत्त्वमात्रं चासतोऽपीति तद्व्यावृत्त्यर्थमेव विशेष्योपादानमित्यत्र तात्पर्यात् । वाक्यानुमादित-श्चेत्स्यादित्यादेरुक्तार्थविवरणरूपत्वं संसारगतेः श्रुत्यादिसिद्धत्वादिति शङ्कापरिहाररूपत्वं च प्रतिपादयति **ब्रह्मणोऽपीत्यादिना** । अत एव ब्रह्मणोऽपीति यदि वाऽऽकस्मिकेति च वाक्यद्वयमत्रार्थवत् । अन्यथा यदि वाक्यानुमादितः संसारविनिवृत्तिः स्यादिति चेदित्येवावक्ष्यदिति ध्येयम् ।

स०— **तदसिद्ध्या चेति** । श्रुत्याद्यसिद्धनिवृत्तिमत्त्वे सति प्रागनिवृत्तत्वादित्यर्थः ।

प०— व्याख्यानमेकमेलनया(हेलया)करिष्यन् गमनिकान्तरमाह **अथवेति** ॥ **तदसिद्ध्या चेति** । यत्पूर्वं नाभूदित्यादिप्रागुक्तपक्षप्रविष्टो यो हेतुः तस्य श्रुत्यादिसिद्धिरहितं तदिति विशेषणा-दिति वा तदनुवादतया प्राप्तस्य इतःपूर्वं तथाऽभावादिति हेतोर्(वे)रित्यर्थः । उक्तव्यभिचारस्थले अविद्या-निवृत्त्यादौ च विशेषणाभावप्रयुक्तस्य विशिष्टहेत्वभावस्यैव सत्त्वेनाव्यभिचारादिति भावः ।

या० — **तदसिद्धया चेति** । श्रुत्याद्यसिद्धनिवृत्तिमत्त्वे सति प्रागनिवृत्तत्वादिति हेतोर्विवक्षितत्वादित्यर्थः ।

श्री० — उक्तमेवार्थमित्युक्तं स्वयमेव दर्शयति **ब्रह्मणोऽपीत्यारभ्य मन्येतेत्यन्तेन** । विश्वस्य पूर्णस्य ब्रह्मण इति व्याख्यानोपरि जातशङ्कानुवादो **ब्रह्मण इति** । तथा विश्वस्य प्रपञ्चस्येति व्याख्यानोपरि जातशङ्कानुवादो यदि वेति च । विवरणरूपत्वं च श्रुतियुक्त्यादिप्रमाणैश्चेत्यादिमूलोपरिजातशङ्कानिवर्तकत्वेनेति ज्ञेयम् ॥ **प्रलयेति** । प्रपञ्चप्रलयेत्यर्थः । अथवा नो संसृतेर्गतिरित्युक्तशङ्कामनुवदति **यदि चेति** । मूले चशब्द एवार्थे । तेन साक्षिणैवेत्याह ।

सु० — **ततः किमिति चेत्** । **साक्षी किं ब्रह्मसत्यत्वादिप्रतिपादकानां वाक्यादीनां प्रामाण्यं तात्कालिकमेव गृह्णाति किंवाऽऽत्यन्तिकम्** । **आद्ये न तेन ब्रह्माबाध्यत्वादिसिद्धिरिति नोक्तशङ्कानिवृत्तिः** ।

**द्वितीये त्वाह** तत्प्रामाण्यमिति ।

अनु० — तत्प्रामाण्यं यथा साक्षी स्थापयत्येवमेव हि ॥
सर्वकालेष्वपि स्थैर्याद्व्यभिचारमपोह्य च ॥
एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम् ॥
किमिति स्थापयेन्नायं

**यथाशब्दस्यात्रोत्तरत्र च संबन्धः । तस्य ब्रह्मसत्यत्वादिप्रतिपादकवाक्यादेः प्रामाण्यं यथा साक्षी वर्तमानकालीनं स्थापयति गृह्णाति । एवमेव सर्वकालेष्वपि स्थैर्येण गृह्णाति । हिशब्दः परप्रसिद्धिद्योतकः । स्थैर्यमेव विवृणोति** व्यभिचारं **बाधम्** अपोह्य **निराकृत्यैवेति । न केवलं ब्रह्मसत्यत्वादिवाक्यादिप्रामाण्यं साक्षी तात्कालिकं गृह्णाति किन्त्वात्यन्तिकमेवेत्यर्थः ।**

शे० — ननु ब्रह्मसत्यत्वादिप्रतिपादकश्रुत्यादीनामपि तात्कालिकप्रामाण्यग्राहकत्वस्यैवाङ्गीकारेण तत्र त्रिकालाबाध्यत्वग्राहकत्वानभ्युपगमात्तत्प्रामाण्यमित्युत्तरग्रन्थासङ्गतिरित्यतोऽत्र सम्भावितत्वेन पक्षद्वयं विकल्प्याद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षदूषणतया मूलप्रवृत्तेर्नासङ्गतिरिति भावेन तद्वाक्यं तथा योजयितुं शङ्कते **ततः किमिति चेदिति** ॥ **उक्तशङ्केति** । ब्रह्मनिवृत्त्यादिशङ्केत्यर्थः ॥ **यथाशब्दस्येति** । तत्प्रामाण्यं यथा साक्षीत्यादिमूले आद्येनैवंशब्देनावान्तरदार्ष्टान्तिकस्य द्वितीयेन तेन परमप्रकृतदार्ष्टान्तिकस्य चोक्तत्वात्तदनुसारेण साक्षी तत्सत्यमित्यादेर्यथा तात्कालिकं प्रामाण्यं गृह्णाति तथा सर्वकालेष्वपीति पूर्वत्र, यथा च तत्सत्यमित्यादेरात्यन्तिकं प्रामाण्यं गृह्णाति तथा विश्वसत्यत्वग्राह-

क्षजादेरप्यात्यन्तिकं गृह्णातीत्युत्तरत्र च यथाशब्दस्य सम्बन्ध इत्यर्थः । अवान्तरदृष्टान्तदार्ष्टान्तिकभावप्रदर्शनपूर्वकं यथाशब्दस्यात्र सम्बन्धं स्पष्टयति **तस्येत्यादिना** ॥ **निराकृत्यैवेति** । अनेनापोह्य चेत्यत्र चशब्द एवार्थ इत्युक्तं भवति । अवान्तरवाक्यतात्पर्यप्रदर्शनं **न केवलमिति** ।

**स० — यथाशब्दस्यात्रोत्तरत्र च सम्बन्ध इति** । यथा स्थापयति एवमेव हीत्यत्र सम्बन्धः । तथा 'एवमक्षजमानत्वसिद्धां विश्वस्य सत्यतामि'त्युत्तरत्र च सम्बन्ध इत्यर्थः ।

**प० — यथाशब्दस्यात्रोत्तरत्र चेति** । एवमेव हीत्येतत्प्रतियोगितयाऽत्र श्लोके । एवमक्षजमानत्वेत्युत्तरश्लोकस्थैवंशब्दप्रतिद्वंद्वितयोत्तरश्लोके चेत्यर्थः । तत्प्रामाण्यमित्यत्र तच्छब्दार्थमाह **तस्येत्यादि** । चशब्दो निराकृत्यैवेत्येवकारार्थः । अपिशब्दार्थो न केवलमित्यादि । इति शब्दाध्याहारेण लब्धयोजनामाह **सर्वेति** ।

**या० — अत्रोत्तरत्र च सम्बन्ध इति** । एवंशब्दयोर्द्वयोःसत्त्वाद्यथाशब्दस्योभयत्र संबन्ध उक्त इति ध्येयम् ।

**श्री० —** तेन=साक्षिणा । अबाध्यत्वादीत्यादिपदेन प्रलयाभावसंसारनिवृत्त्योर्ग्रहणम् ॥ **उक्तशङ्केति** । ब्रह्मप्रपञ्चयोर्निवृत्तिः संसृतेर्निवृत्तिरिति शङ्कात्रयमित्यर्थः । उत्तरत्र समग्रश्लोकोक्तप्रमेयस्य एवमक्षजेत्यत्र दृष्टान्तत्वकथनायेत्यर्थः । अत्र संबन्ध इत्युक्तं दर्शयति **यथा वर्तमानेति** ।

---

**सु० — अथवा यथाशब्दस्योत्तरेणैव संबन्धः । स्थापयत्यात्यन्तिकमेव गृह्णातीत्यर्थः । अस्यैव विवरणमेवमेवेति । इतिशब्दोऽध्याहार्यः । सर्वकालेष्वपीदमेवमेव न कदाऽपि विषयापहारलक्षणं बाधमाप्नोतीति व्यभिचारमपोह्य तत एव स्थैर्येण गृह्णातीति । यद्वैवंशब्दः समुच्चये । साक्षी ब्रह्मादिविषयवाक्यादिप्रामाण्यं स्थापयत्यात्यन्तिकं गृह्णाति । अत एव तद्विषयमपि ब्रह्मादिकं सर्वकालेष्वपि स्थैर्यादतिशयेन व्यभिचारमपोह्यैव स्थापयतीति । प्रामाण्या(त्यन्तिकत्वा)न्तर्गतत्वाद्विषयाबाध्यताया इति हिशब्दार्थः । एवमिति दार्ष्टान्तिकोक्तिः । अयं साक्षी यदि तत्सत्यमित्यादिप्रमाणप्रामाण्यमात्यन्तिकं गृह्णन् तद्विषयस्य ब्रह्मादेस्त्रैकालिकाबाध्यत्वं व्यवस्थापयेत्तर्हि तथैव विश्वविषयस्याक्षजादिज्ञानस्यात्यन्तिकं प्रामाण्यं गृह्णन् तदन्तर्गतां विश्वस्याबाध्यतामपि स्थापये(देव)त् अविशेषादिति समुदायार्थः ।**

**शे० —** साक्षिणस्तत्सत्यमित्यादिब्रह्मसत्यत्वप्रतिपादकश्रुत्यादेरात्यन्तिकप्रामाण्यग्राहित्वस्य परेणैवोक्तत्वात्तदनुवादे, यथा तात्कालिकं तथा सार्वकालिकमपीति दृष्टान्तप्रदर्शनपूर्वकं तद्विधानपरग्रन्थास्वारस्यम् । स्थापयतीत्यस्य गृह्णातीति व्याख्यानं च न स्वरसम् । आत्यन्तिकग्राहकत्वार्थ-

कत्वेन तस्य प्रसिद्धया ग्राहकत्वमत्रास्य स्वरसप्रतिपन्नार्थत्वाभावादिति पूर्वत्रारुच्या पक्षान्तरमाह **अथ-वेति** । अत एव तथैव व्याचष्टे **स्थापयत्यात्यन्तिकमेव गृह्णातीत्यर्थ इति** । ननु न यथाशब्दस्योत्तरेणैव सम्बन्धोऽङ्गीकर्तुं युक्तः । एवमेव हीत्येवंशब्दोक्तदार्ष्टान्तिके दृष्टान्तोक्त्यर्थं तस्य पूर्वत्रापि सम्बन्धस्यावश्यकत्वादित्यतोऽस्यैवंशब्दस्य दार्ष्टान्तिकपरत्वाभावान्नानुपपत्तिरित्यभिप्रेत्य तत्प्रयोजनमाह **अस्यैव विवरणमेवमेवेतीति** । अत्रापीतिशब्दाध्याहारो भवतीत्यरुच्या प्रकारान्तरमाह **यद्वेति** । समुच्चेयमेव दर्शयति **तद्विषयमपीति** । तदन्तर्गतां प्रामाण्यात्यन्तिकत्वान्तर्गताम् । दृष्टान्ताभावेन तर्कमूलभूतव्याप्तेर्विशिष्यासम्भवेऽप्यविशेषलक्षणव्याप्तेरविकलत्वान्न तस्याभासत्वमित्याशयेन तामाह **अविशेषादितीति** ।

प० — **एवमिति दार्ष्टान्तिकोक्तिरिति** । यद्यपि पूर्वश्लोकस्य प्रागुक्तयोजनात्रयमध्ये प्रथमयोजनायां यथाशब्दान्वितदृष्टान्तस्य दार्ष्टान्तिकोक्तिरेवमेव हीत्यादौ पूर्वत्रैवास्ति । तथापि द्वितीयतृतीययोजनयोः पूर्वोत्तरार्धोक्तार्थस्य दृष्टान्तत्वमस्तीति तदपेक्षया 'एवमक्षज...' इत्यादौ दार्ष्टान्तिकोक्तिरित्यर्थः । आद्यकल्पेपि दृष्टान्तदार्ष्टान्तिकभावेन पूर्वोत्तरार्धयोजने कृतेऽपि तदर्थस्य दृष्टान्तत्वसंभवाच्च दृष्टान्ततया पूर्वश्लोकोक्तं सर्वमनुवदति **यदीति** । तर्हीत्यनन्तरं यथेतिपदं यदीत्यादिव्यवस्थापयेदित्यन्तं वाक्यं च यदिशब्दं हित्वा योज्यम् । तेन यथाशब्दस्योत्तरेणान्वय इति प्रागुक्तं स्पष्टीकृतं ध्येयम् ॥

**समुदायेति** । पादन्यूनपूर्वोत्तरश्लोकद्वयार्थ इत्यर्थः ।

श्री० — समुच्चये=विषयाबाध्यत्वसमुच्चय इत्यर्थः । अस्मिन्नपि पक्षे यथाशब्दस्योत्तरत्रैव संबन्धो ज्ञेयः । समुच्चेयं दर्शयति **अत एवेति** । आत्यन्तिप्रामाण्यग्राहकत्वादेवेत्यर्थः ॥ **दार्ष्टान्तिकेति** । योजनात्रयेऽपीत्यर्थः । ततश्चेत्थं योजना । साक्षी तेषां श्रुत्यादीनां प्रामाण्यं यथा वर्तमानकाले स्थापयति । एवमेव सर्वकालेष्वपि स्थैर्याद्यभिचारमपोह्य स्थापयति । कालत्रये गृह्णातीति यावदिति यथा । एवमक्षजेत्यादि । तथा, तेषां श्रुत्यादीनां प्रामाण्यं साक्षी सर्वकालेष्वपि स्थैर्याद्यभिचारमपोह्य एवमेवेति गृह्णाति यथा । एवमक्षजेत्यादि । तथा, तेषां श्रुत्यादीनां प्रामाण्यं साक्षी स्थापयति, एवं प्रामाण्यस्थापकत्वादेव सर्वकालेष्वपि स्थैर्याद्यभिचारमपोह्य विषयाबाध्यत्वमपि स्थापयति यथा । एवं क्षजमानत्वं स्थापयेत् । तत्सिद्धां=प्रामाण्यग्रहणेन सिद्धां विश्वस्य सत्यतां च स्थापयेदिति ॥ **अविशेषादिति** । त्रिकालाबाध्यताग्राहकत्वाविशेषादित्यर्थः ।

**सु०—ननु गृह्णात्वात्यन्तिकं प्रामाण्यमक्षजादीनां साक्षी । तस्य तथात्वं तु कुतः । ततश्च न विश्वसत्यतासिद्धिरित्यत आह** निर्दोषेति ।

अनु० — निर्दोषज्ञानशक्तितः ॥

साक्षिणो निर्दोषज्ञानरूपत्वशक्त्या तथात्वमपि सिद्ध्यति । अन्यथा ब्रह्मसत्यत्वाद्यपि न सिद्ध्येत् ।

यद्वा तत्सत्यमित्यादेरात्यन्तिकं प्रामाण्यं गृह्णाति साक्षी, विश्वविषयस्याक्षजादेस्तु तात्कालिकमेवेति किं न स्यादित्यत आह निर्दोषेति । अयमर्थः । तत्सत्यमित्यादिज्ञानस्यात्यन्तिकं प्रामाण्यं गृह्णाति साक्षीत्यत्र किं निमित्तम् । ज्ञानं गृह्णन् तस्य निर्दोषतायां प्रामाण्यमपि गृह्णातीति साक्षिणः स्वभावोऽयमिति चेत् । कथं तर्ह्यक्षजादेरपि आत्यन्तिकं प्रामाण्यं न गृह्णीयात् । तस्यापि निर्दोषज्ञानरूप(त्व)शक्तिसद्भावादिति ।

शे० — तथात्वम्=आत्यन्तिकप्रामाण्यम् ॥ अन्यथेति । साक्षिणाऽक्षजादेरात्यन्तिकप्रामाण्यग्रहेऽपि तस्यातथात्वेन विश्वसत्यत्वासिद्धावित्यर्थः । साक्षिणा तत्सत्यमित्यादेरात्यन्तिकप्रामाण्यग्रहणेऽपि तस्य तथात्वासिद्धेरविशिष्टत्वादिति भावः ।

प० — तस्य तथात्वमिति । साक्षिण आत्यन्तिकप्रामाण्यमित्यर्थः । यद्वा अक्षजादिज्ञानप्रामाण्यस्येत्यर्थः ।

श्री० तस्य=साक्षिणः । तथात्वं= विषयाबाध्यताव्यवस्थापकत्वात् । एवमुत्तरत्रापि ॥ अन्यथेति । यदि साक्षी विषयाबाध्यताव्यवस्थापको न स्यादित्यर्थः । शङ्कते ज्ञानमिति । तस्य=ज्ञानस्य । आत्यन्तिकं प्रामाण्यमिति वर्तते । कुत इत्यत आह तस्यापीति । अक्षजादिज्ञानस्यापीत्यर्थः ।

सु० — अथवा किं साक्षी कुत्रापि प्रामाण्यमात्यंतिकं ग्रहीतुं न शक्नोति । किंवा क्वचिच्छक्तः क्वचिदशक्तः । आद्यस्योत्तरम् अन्यथेत्यादि ( अनु. २२१७ पृष्ठे द्रष्टव्यम् ) । द्वितीयस्योत्तरं वाक्येति (अनु. २२२४ द्रष्टव्यम् ) ।

शे० — उक्तरीत्याऽन्यथेत्यादिग्रन्थयोजनायां 'वाक्यानुमादिनश्चेत्स्यादि'त्यादेरुक्तार्थविवरणत्वादिकुसृष्टेराश्रयणीत्वाद्वक्ष्यमाणरीत्या विकल्पितपक्षद्वयोत्तरत्वेन तद्योजनायां तदप्रसक्तेर्विकल्पोत्तरत्वेनैव ग्रन्थं सङ्गमयितुमाह अथवेति । सङ्गतिमात्रमत्र पूर्वपक्षाद्विशेषः । योजना तु पूर्वोक्तैवेति द्रष्टव्यम् ।

प० — अन्यथा श्रुतियुक्त्यादीत्यादिश्लोकचतुष्टयस्य तात्पर्यान्तरमाह अथवा किं साक्षीत्यादिना । अर्थो योजना च प्रागुक्तदिशैवेति भावः । (एतावान्भेदः पूर्वत्र निर्दोषज्ञानेत्यनेन साक्षिग्रहः उत्तरपक्षद्वये तदग्राह्यजन्यज्ञानग्रह इति । )

श्री० — अथवेति पक्षे मूलेऽन्यथेत्यस्य यदि साक्षी कुत्राप्यात्यन्तिकं प्रामाण्यं न गृह्णातीत्युच्यत इत्यर्थः । श्रुतियुक्त्यादिसंसृतेर्गतिरित्येतत्पर्यन्तं पूर्ववदेव योज्यम् । क्वचिच्छक्तः क्वचिदशक्त इति द्वितीयशङ्कानिरासकं वाक्यानुमादिन इत्यादिवाक्यम् । तत्प्रकारस्तु वाक्यानुमादितश्चेत्स्याद्ब्रह्मानिवृत्त्यादिकं तर्हि तेषां प्रामाण्यं च साक्ष्येव गृह्णाति इति वाच्यम् । ततः किम् । क्वचित्तेषां वाक्यादीनामात्यन्तिकप्रामाण्यग्रहणे साक्षी शक्तः क्वचित्प्रत्यक्षादेरात्यन्तिकतद्ग्रहणेऽशक्त इति यदि अङ्गीक्रियते तर्हि क्वचिच्छक्तिः क्वचिन्नेति वैषम्यं कुतः । वाक्यादिवत्प्रत्यक्षादीनामप्यात्यन्तिकमेव प्रामाण्यं गृह्णीयादित्यभिप्रायकं 'तत्प्रामाण्यं यथे'त्यादिमूलं पूर्ववद्योज्यमिति ।

**सु० स्यादेतदेवं यद्यक्षजादिज्ञानं निर्दोषं स्यात् । न चैवम् । अविद्याकृतप्रपञ्चविषयत्वात् शुक्तिकारजतादिज्ञानवत् । नन्वविद्या किमाश्रितेति चेत् । जीवाश्रितेति ब्रूमः । नन्वत्रापि दूषणमुक्तम् 'स्वतोऽन्यते'ति । नैतदस्ति । तद्भेदस्याप्याविद्यकत्वात् । न च चक्रकादिदोषः । प्रपञ्च(विश्व)स्य जीवाज्ञानकृतत्वेन श्रुत्यादिसिद्धत्वात् । प्रमिते चार्थे तर्काणामवकाशाभावात् । न च कल्प्याभावदोषः । विश्वस्यैकाज्ञानकृतत्वाङ्गीकारात् । तदतिरिक्तजीवजडप्रपञ्चस्य कल्प्यत्वोपपत्तेः । एकजीववादो हि मायावादिनां परं हृदयम् । बहुजीववादस्तु मन्दानामाभिमुख्यायावतारित इत्यत आह एकेति ।**

अनु० — एकाज्ञानकृतं विश्वमिति यच्चोच्यते मृषा ॥
बहुज्ञानकृतं विश्वमिति तस्योत्थं भवेत् ॥

**उच्यते ब्रह्मविवर्तवादिभिः; मृषा प्रमाणेन विना । एतदुक्तं भवति । स्यादपीदं कथञ्चित् । यदि विश्वस्यैकजीवाज्ञानकल्पितत्वं स्यात् । न चैतदस्ति । प्रमाणाभावात् । श्रुत्यादेरनुपदमेव सम्यग्व्याख्यास्यमानत्वात् । बहूनामीश्वरस्य तत्प्रेरितानां ब्रह्मादीनां च ज्ञानेच्छाप्रयत्नैर्निमित्तत्वे श्रुत्यादिप्रमाणसद्भावेन तद्विरुद्धत्वाच्चेति ।**

शे० — ननु विश्वस्यैकाज्ञानकृतत्ववादिमतनिराकरणं प्रकृतासङ्गतत्वान्न कार्यमिति तत्परोत्तरवाक्यवैयर्थ्यमित्यतः प्रागभिहितस्य साक्षिणोऽक्षजादिज्ञानप्रामाण्यग्रहणद्वारा तद्विषयाबाध्यत्वस्योपपादकं यदक्षजादिज्ञाननिर्दोषत्वं तत्सिद्ध्यर्थत्वान्न तदिति भावेनाक्षजादिज्ञानस्य सदोषत्वशङ्कामुत्थापयति **स्यादेतदेवमिति** । ननु 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगे'त्याश्रयविकल्पेनाविद्याया एव परमतेऽनुपपत्त्या नाक्षजादिज्ञानस्याविद्याकृतप्रपञ्चविषयकत्वमिति कथं न निर्दोषत्वमिति भावेन गूढाभिसन्धिः **शङ्कते नन्विति** । द्वितीयपक्षोक्तदूषणस्याभासत्वान्नाश्रयानुपपत्त्या तन्निरासो **युक्त इति** गूढाभि-

सन्निधेरेव तं पक्षं तावत्परिगृह्णाति जीवेति । पूर्ववादी स्वाभिसन्धिमुद्घाटयति नन्वत्रेति । अविद्याश्रयस्याविद्याकल्पितत्वायोगाज्जीवब्रह्मणोरन्यता स्वाभाविकीत्यास्याऽपसिद्धान्त इति दूषणं 'स्वतोऽन्यता' इत्यनेनोक्तमित्यर्थः । इदानीमुत्तरवाद्यपि स्वाशयमुद्घाटयति नैतदस्तीति । तत्कथमित्यतो 'भेदो विभ्रमजो यदी'ति पूर्वानुव्याख्यानं मनसि निधायापसिद्धान्तं परिहरति तद्भेदस्येति ॥ न च चक्रकादीति । 'भ्रान्तेरज्ञानमूलत्वात्तस्य भेदव्यपक्षये'त्यादिपूर्वोक्तरीत्येति शेषः ॥ तर्काणामिति । अन्योन्याश्रयादितर्काणामित्यर्थः ॥ अवकाशेति । विपर्ययपर्यवसानहीनस्याऽऽभासत्वादिति भावः । न देहयोगिनो दृष्टिरि'त्यादिपूर्वोक्तरीत्याऽनन्तजीवानां सकारणकानां तदीयदेहेन्द्रियाणां चानाविद्यकत्वाद्विषयाणामपि देहेन्द्रियादिनिर्वाहार्थत्वेनाभ्रान्तिकल्पितत्वात्तदतिरिक्तस्य च प्रपञ्चस्यैवाभावान्न किञ्चिदपि परपक्षेऽविद्याकल्पितमस्तीत्यपसिद्धान्त एवेत्याशङ्कते न च कल्प्येति । भवेदेवं कथञ्चिद्यदि सर्वेषां जीवानां कल्पकत्वं स्यात् । न चैतदस्ति । किन्त्वेकस्यैव तस्य । तथा च सर्वेषां कल्पकत्वे तद्देहेन्द्रियादिरूपस्य सकारणकस्य प्रपञ्चस्याकल्पितत्वप्राप्त्या कल्प्याभावप्राप्तावप्येकस्यैव कल्पकत्वपक्षे तद्देहेन्द्रियाणां सकारणकानामकल्पितत्वप्राप्त्या तदतिरिक्तस्य जीवजडात्मकसकलप्रपञ्चस्य कल्पितत्वोपपत्तेर्न कल्प्याभावो दोष इत्याशयेनाह विश्वस्येति ।

ननु शङ्कितायां अक्षजादिज्ञानस्याविद्याकृतप्रपञ्चविषयत्वेन सदोषतायां एव निरसनीयत्वान्नैकाज्ञानकृतत्वनिरसनं सङ्गतम् । तादर्थ्येन निरासात्कथञ्चित्सङ्गतिसम्भवेऽपि तन्निरासकन्यायानुक्तेर्न्यूनत्वमेव । मृषेत्यनेन प्रमाणाभावकथनं चानुपपन्नमेव । प्रपञ्चो यदीत्यादिश्रुत्याद्यवलम्बनेनैकजीवाज्ञानकल्पिततायाः परेण शङ्कितत्वात् । श्रुत्यादेरन्यथासिद्धिमनुपपाद्य तदभाववचनस्याकिञ्चित्करत्वात् । किञ्चैवं मृषेत्यनेनैव प्रमाणाभावसूचनद्वारैकजीवाज्ञानकृतत्वपक्षदूषणसिद्धेः 'बह्वज्ञानकृतं विश्वमि'त्युत्तरार्धस्यानर्थक्यप्रसक्तिरेवेत्यतोऽभिप्रायमाह एतदुक्तं भवतीति ॥ स्यादपीदमिति । अक्षजादिज्ञानस्य अविद्याकृतप्रपञ्चविषयत्वेनानिर्दोषत्वमित्यर्थः । नाविद्याकल्पितविश्वविषयत्वेनाक्षजादिज्ञानस्य निर्दोषत्वाभावसिद्धिः । तथा सति विश्वस्य कल्पितत्वप्रतिपादकप्रमाणानामपि प्रपञ्चान्तर्गतत्वेनाविद्याकल्पितत्वात्तत्प्रामाण्यग्राहकस्य साक्षिणोऽपि निर्दोषत्वाभावप्रसङ्गात् तथा च तेन तत्प्रामाण्यानिश्चयान्न विश्वस्य कल्पितत्वं सिद्ध्यतीति भावेन कथञ्चिदित्युक्तम् । ननु प्रपञ्चो यदीत्यादिवाक्यमेव तत्र मानम् । तत्र 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यत' इत्येकवचनेनैकस्यैव जीवस्य प्रपञ्चकल्पकाज्ञानाश्रयतया प्रतीयमानत्वादित्यत आह श्रुत्यादेरिति । आदिपदेनैकविज्ञानेन सर्वविज्ञानप्रतिपादकस्य प्रपञ्चमिथ्यात्वाक्षेपकवाक्यस्य, वाचारम्भणमित्यादिदृष्टान्तोपपादकवाक्यस्य च परिग्रहः ॥ अनुपदमेवेति । प्रपञ्चो यदि विद्येतेत्यादिनेत्यर्थः ।

स० न च कल्प्याभाव इति । 'अन्यथा चेत्स्वतोऽन्यता । नादेहयोगिनो दृष्टिरिति तत्कारणं स्वतः' इत्यादिप्रागुक्तप्रकारेण सर्वेषां कल्पकत्वे तद्देहेन्द्रियादिरूपस्य सर्वस्यापि प्रपञ्चस्याकल्पितत्वात् कल्प्याभाव इति न वाच्यमित्यर्थः । सर्वेषां कल्पकत्वे उक्तरीत्या कल्प्याभावप्राप्तावपि एकस्यैव कल्पकत्वाङ्गीकारेण तद्देहेन्द्रियादेरकल्पितत्वेऽपि तदतिरिक्तसर्वस्य कल्प्यत्वोपपत्तेर्नायं दोष इत्यर्थः ॥ अनुपदमेवेति । 'प्रपञ्चो यदि विद्येते'त्यादिनेति शेषः ।

प०— उत्तरवाक्यमवतारयति स्यादेतदिति ॥ शुक्तिरजतादिज्ञानवदिति । तन्मते शुक्तिकारूपाधिष्ठानावच्छिन्नचैतन्यगताज्ञानमेव दुष्टचक्षुरादिसंप्रयोगजन्यशुक्तिकाद्याकारान्तःकरणवृत्ति क्षुभितं सत् रजतादिरूपेण भ्रान्तिज्ञानरूपेण च द्वेधा परिणमत इत्यङ्गीकाराच्छुक्तिरजतादावविद्याकृतत्वमस्तीति भावः । नन्वविद्यायाः 'निर्विशेषे स्वयं भाते' इत्यादिना आद्यसूत्रे चिन्मात्राश्रितत्वपक्षस्य 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यतः' इत्यादेशात्रै। पूर्वत्र सर्वज्ञब्रह्माश्रितत्वपक्षस्य जीवाश्रितत्वपक्षस्यापि चायोगेन निरस्तत्वात्पुनः कथमियमाशङ्केति भावेन सिद्धान्ती शङ्कते नन्वविद्येति ॥ स्वतोऽन्यतेतीति । 'अन्यथा चेत्स्वतोऽन्यता' इति ग्रन्थे जीवगतेतिपक्षे जीवब्रह्मभेदः स्वाभाविकः स्यात्तथा चापसिद्धान्त इत्युक्तमित्यर्थः । नन्वस्मिन्नपि पक्षे 'नाज्ञानकल्पकं किञ्चिदन्योन्याश्रयता यत' इत्यनेनैव दोष उक्तः तमाशङ्क्य निराह न चेति । भेदेऽविद्यापेक्षा, अविद्यायां च जीवापेक्षा, जीवश्च भेदापेक्ष इति चक्रकेत्यर्थः । भिन्नजीवापेक्षमज्ञानमज्ञानाधीनो ब्रह्मभिन्नो जीव इति विवक्षयाऽन्योन्याश्रय आदिपदेन ग्राह्य ॥ श्रुत्यादेरिति । 'अनादिमायया सुप्तो यदा जीव' इत्यादिसिद्धत्वादित्यर्थः । यद्यप्येषा अभ्यधिकाशङ्का न मूले भाति । तथाऽपि 'वाक्यऽनुमादिभिश्चास्यादि'ति प्रकरणबलाद्वा 'प्रपञ्चो यदी'ति श्रुतेरग्रे प्रथमव्याख्यानबलाद्वा लभ्यत इति भावः यद्वा मृषापदव्यावर्त्योक्तिरियमिति ध्येयम् । ननु 'नादेहयोगिनो दृष्टिरि'त्यादिना 'किं भ्रान्तिकल्पितं तत्रे'ति ग्रन्थेन पूर्वत्रैव कल्प्याभावस्योक्तत्वात् जीवाश्रिताज्ञानवादोक्तिरयुक्तेति भावेनाशङ्क्य निराह न चेति । आत्माश्रयनिरासायोक्तम् तदतिरिक्तेति । कल्पकजीवातिरिक्तेत्यर्थः । अभ्यधिकाशङ्कया प्रातिस्विकरूपेणैतत्पक्ष(स्यात्रो)स्योत्तरग्रोत्थानमुपेत्य दूषणोक्तौ किं बीजमित्यत आह एकजीवेति । यच्चेति चशब्दः यच्चाविकृतमेवैकमित्युक्तेन समुच्चयार्थ इति भावेनाह ब्रह्मविवर्तवादिभिरिति ज्ञानेत्युपलक्षणं मत्वोक्तं ज्ञानेच्छाप्रयत्नैरिति ।

या०— 'देहिनः कारणयुजा देहाश्च यदि न भ्रमात् । किं भ्रान्तिकल्पितं तत्रे'त्युक्तदोषमाशङ्क्य परिहरति न च कल्प्याभ वेत्यादिना तथाऽपि 'नादेहयोगिनो दृष्टिरिति तत्कारणं स्वतः' इत्युक्तदोषो नात्र परिहर्तुं शक्य इत्याशयेन कथञ्चिदित्युक्तम् ॥ श्रुत्यादेरिति । अनादिमायया सुप्त

इत्यादिश्रुतेरित्यर्थः । आदिपदेनैकविज्ञानेन सर्वविज्ञानप्रतिपादकस्य प्रपञ्चमिथ्यात्वाक्षेपकवाक्यस्य वाचारम्भणमित्यादिदृष्टान्तोपपादकवाक्यस्य च संग्रहः ।

श्री० — तद्भेदस्य=जीवब्रह्मभेदस्य । आविद्यकत्वात्=भ्रान्तिकल्पितत्वात् ॥ चक्रकेति । जीवेशभेदसिद्धौ भिन्ने जीवेऽज्ञानसिद्धिस्तत्सिद्धौ भ्रमसिद्धिस्तत्सिद्धौ च तत्कल्पितभेदसिद्धिरिति पूर्वोक्तं चक्रकमित्यर्थः ॥ सिद्धत्वादिति । तथा च न विपर्यये पर्यवसानमिति भावः ॥ दोष इति । 'देहिनः कारणयुता देहाश्चे'त्याद्युक्तरीत्येत्यर्थः ॥ एकाज्ञानेति । एकजीवाज्ञानेत्यर्थः ॥ तदतिरिक्तेति । कल्पकैकजीवव्यतिरिक्तेत्यर्थः । यद्यपि कल्प्याभावदोषो नास्ति । तथाऽपि नादेहयोगिनो दृष्टिरित्युक्तदूषणं स्वपरिहार्यमेवेति द्रष्टव्यम् । अत एवोत्तरत्र कथंचिदिति वदिष्यति ।

सु० — किञ्चैकजीवाज्ञानपरिकल्पितं जीवजडात्मकं समस्तमिति वदन्प्रष्टव्यः किमसावेको जीवस्त्वम् उतान्य इति । अन्यश्चेत्तदज्ञानकल्पितस्य तव बन्धमोक्षाभावान्मोक्षार्थं पारिव्राज्यादिकम(मित्य)पार्थेत । आद्येऽपि प्रतिवादिप्रमुखान्जीवान्पश्यसि न वा । प्रथमेऽपि (किं) सन्तीत्युत न सन्तीति । आद्यं दूषयति परस्येति ।

अनु० परस्य सत्यतां जानन्नपि यः स्वात्मतस्करः ॥
परो नास्तीति वदति

यः परस्य प्रतिवाद्यादेः सत्यतां जानन्नपि परो नास्तीति वदति । स स्वात्मतस्कर इति योजना । स्वात्मानमिव परमपि सत्यतया पश्यतोऽहमेक एव सत्यो मदज्ञानकल्पिताः सर्वे जीवा जडाश्चेति वचनं स्वानुभवविरुद्धमित्यर्थः । न हि त्वदज्ञान(परि)कल्पितं समस्तमित्यत्र बलवत्प्रमाणमस्ति । येन दर्शनमपि बाध्येत । न हि सत्त्वेन प्रतीयमानस्यापि गन्धर्वनगरादेरसत्त्वमेवमेवाङ्गीक्रीयते । किन्तु बलवत्प्रमाणबाधात् । अन्यथा प्रतिवाद्यज्ञानकल्पितस्त्वमिति कथं न स्याः । तथा चानिश्चयेन न मोक्षार्था प्रवृत्तिः स्यादिति ।

शे० — कल्पको जीवोऽमुक इत्यनिश्चितो निश्चितो वेति विकल्पद्वयं मनसि निधाय बह्वायाससाध्यमोक्षसाधनाननुष्ठानप्रसक्त्याऽनिश्चयपक्षं बहिरेव प्रदूष्य निश्चयपक्षं दूषयितुं तं विकल्पयति किमसावित्यादि । यथास्थितोद्देश्यविधेयभावविवक्षायामसिद्धस्यानुवादः सिद्धस्य विधानमित्यापत्तेस्तं दर्शयति य इति । स्वात्मतस्करोक्तिर्बाधितेत्यतस्तदभिप्रायमाह स्वात्मानमिवेति । ननु प्रतिवादिप्रमुखानां सत्यत्वदर्शनस्य शुक्तिरजतादिसत्त्वदर्शनवद् भ्रमत्वात्तद्विरोधोऽकिञ्चित्कर इत्यतो भ्रमत्वस्य बाधकैकसमधिगम्यत्वेन प्रकृते च तदभावान्न तस्य भ्रमत्वमित्याह न हीति ॥ दर्शनमपीति । प्रतिवादिमुखानां

सत्त्वेन दर्शनमपीत्यर्थः । कुतो भ्रमत्वस्य बाधकैकसमधिगम्यत्वमित्यतो विपक्षे बाधक सहकृतान्निरुपाधिक-सहचारदर्शनादित्याह **न हीति** ॥ **एवमेवेति** । बलवत्प्रमाणबाधं विनैवेत्यर्थः ॥ **अन्यथेति** । त्वद-ज्ञानकल्पितं सर्वमित्यत्र बलवत्प्रमाणाभावेऽपि प्रतिवाद्यादिसत्त्वविषयकत्वदीयदर्शनस्य भ्रमत्वाङ्गीकार इत्यर्थः ।

प० — सत्यत्वदृष्टेर्बाध्यत्वाददो इत्यत आह **न हि त्वदज्ञानेति** ॥ **बलवत्प्रमाणेति** । श्रुत्यादि तु न दूषितो बलवान् निरसिष्यते चेति भावः । तदभावेऽप्यस्तीत्यत आह **न हीति** ।

श्री० — त्वमिति सङ्करं प्रति । अतः पारिव्राज्यादिकमित्युक्तम् । **आद्यं** एको जीवस्त्वं प्रतिवादिमुखान् जीवान् सन्तीति पश्यसीत्याद्यं पक्षमित्यर्थः । दर्शनं=प्रतिवादिमुखजीवदर्शनम् । प्रतिवादिमुखजीवसत्त्वज्ञानं यन्मम तत्सत्त्वेन प्रतीतगन्धर्वनगरमिव बाध्यमिति चेत्तत्राह **न हीति** । तर्हि दृष्टान्ते कथमत आह **न हीति** । प्रकृते चासत्त्वावेदकं बलवत्प्रमाणं नास्तीति भावः । अन्यथा= बलवत्प्रमाणाभावेऽपि यदि कल्पितत्वमित्यर्थः । इष्टापत्तिरिति चेत्तत्राह **तथा चेति** ॥ **अनिश्चयेनेति** । अकल्पितत्वनिश्चयाभावेनेत्यर्थः ।

---

सु० — **द्वितीयतृतीयौ निराचष्टे** किमिति ।

अनु० — किमित्युन्मत्तवद्वदेत् ॥

**यदि परः प्रतिवादिजीवान्न पश्यति, पश्यन्वा न सन्तीति पश्यति; तदा किमित्यु-न्मत्तवद्वदेत् । न कथायां प्रविशेत् । न शास्त्रं विरचयेद्व्याकुर्याद्वा । अन्यथोन्मत्तवन्नायं लौकिको नापि परीक्षक इत्युपेक्षणीयः स्यात् ।**

**कुतो न वदेत् । येन वदन्नुन्मत्तपदवीमासादयेदित्यत आह** पराभाव इति ।

पराभावेऽपि वाग्व्यर्था

**वाचः परबोधनार्थत्वात् । पराभावे च तद्वैयर्थ्याद्व्यर्थां वाचं न प्रयुञ्जीत । प्रयुञ्जानश्च कथमुन्मत्तो न स्यादिति ।**

**सत्यं पराभावे वचनमनर्थकम् । मयाऽपि किमपि नोच्यत इत्यत आह** यदीति ।

यदि नैवोच्यते तदा ॥

कशावेत्रादिकं तस्य तस्करस्योत्तरं वदेत् ॥

**मया किमपि कदापि नैवोच्यत इति यद्युच्यते तदा स्वक्रियाविरोधिनः सकललोकाव-गतार्थापलापिनस्तस्य तस्करस्येव दण्ड एवोचितो न प्रत्युत्तरम् । परमार्थतो नोच्यत इत्युच्यत**

इति चेत् । तत्किं प्रतियोग्यभावे निश्चिते व्यवहारतोऽपि वदन्तः प्रेक्षावन्तो भवन्ति, येने-दमुच्येतेति ।

शे०— **द्वितीयतृतीयाविति** । न सन्तीति, न पश्यसीति द्वितीयतृतीयावित्यर्थः । यद्यपि न पश्यसीति द्वितीय पक्षस्तथाऽपि पश्यसीति प्रथमस्य द्वेधा विकल्पितत्वात्तदभिप्रायेण न पश्यसीत्यस्य तृतीयत्वमित्यवधेयम् ।

स०— **प्रतियोग्यभावे निश्चित इति** । प्रतिवाद्यभावे निश्चित इत्यर्थः ।

प०— द्वितीयतृतीयावित्युक्तकल्पद्वयं व्यञ्जयन्नेव व्याचष्टे **यदि पर इत्यादिना** ॥ **अन्यथेति** । अपश्यन्नास्तीति पश्यन्वा यदि वदेत्तदेत्यर्थ ॥ **प्रतियोग्यभाव इति** । प्रतिभटस्याभाव इत्यर्थः ।

या०— **द्वितीयतृतीयाविति** । न सन्ति न पश्यसीति द्वितीयतृतीयावित्यर्थः । अत्र प्रथमपक्षस्य द्वेधा विकल्पितत्वान्न पश्यसीत्यस्य द्वितीयस्यापि तृतीयत्वमिति ज्ञातव्यम् ॥ **प्रतियोग्यभाव इति** । प्रतिवाद्यभाव इत्यर्थः ।

श्री०— **द्वितीयतृतीयाविति** । प्रतिवादिमुखान् न सन्तीति पश्यसीति द्वितीयः पक्षः प्रतिवादिमुखान् जीवान् न पश्यसीति तृतीय पक्षः । प्रथमपक्षस्य द्वेधा विकल्पितत्वान्न पश्यसीति द्वितीयत्वेनोक्तस्यापि तृतीयत्वं मन्तव्यम् । अन्यथा = यदि वदेदित्यर्थ. ॥ **कुत इति** । निमित्तादित्यर्थः ॥ **येन वदन्निति** । येन अवचने निमित्तसद्भावेनेत्यर्थः ॥ **स्वक्रियेति** । मया कदाऽपि किमपि नोच्यत इत्यस्या एव वचनक्रियायाः प्राप्तत्वादित्यर्थः । कदाचित्कमित्यस्य तात्पर्यं दण्ड एवेत्यादि । प्रतियोगी = प्रतिवादी ॥ **व्यवहारत इति** । भ्रान्तिसिद्धसत्त्वरूपव्यावहारिकसत्त्वमङ्गीकृत्यापीत्यर्थः । **येन** यदि प्रेक्षावन्तो भवन्तीत्यर्थः ।

सु०— **प्राक् प्रपञ्चमिथ्यात्वसिद्धये परोदाहृतानां श्रुतीनां बाह्योपपत्तिविरोधः (प्रतिपा)व्युत्पादितः । इदानीमान्तरानुपपत्तिप्रदर्शनपूर्वकं तासामविरुद्धार्थव्याख्यानार्थ-मुत्तरो ग्रन्थः । अथवा सर्वश्रुतिसाधारणानुपपत्तिः प्राक् प्रपञ्चिता इदानीमसाधारणानु-पपत्तिर्व्युत्पाद्यते । तत्र तावत्प्रपञ्चो यदि विद्येतेत्यादिवाक्यद्वयं पठित्वा पराभिमतेऽर्थेऽनु-पपत्तिमाह** प्रपञ्च इति ।

**अनु०**— प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ॥
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥

विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ॥
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥
इत्यत्र यदिशब्दौ च निवर्तेतेति च द्वयम् ॥
विश्वस्य सत्यतामाहुः

**नन्वत्र सूत्रगृहीततया परेणोपात्तानां श्रुतीनामनुपपत्त्यादिकं प्रथमतो वक्तव्यम् । सत्यम् । तथाऽप्येकजीवाज्ञानपरिकल्पितत्वे समस्तस्य, न प्रमाणमस्तीत्यनन्तरमेवोक्तम् । अस्यां च तदापाततः प्रतीयते । 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यत' इत्युक्तत्वात् । अत उभयानुगुण्यादस्याः प्रथमप्राप्तिः । इत्यत्र श्लोकद्वये यदिशब्दद्वयं निवर्तेतेति लिङ्प्रयोगद्वयं च । उपलक्षणं चैतत् । विद्येतेत्यपि ग्राह्यम् । तथा केनचिदिति । सत्यतामित्युपलक्षणम् । अनादितां चेति ग्राह्यम् । आहुरित्यवगमयन्तीत्यर्थः । तथा च विश्वमिथ्यात्वपरतया व्याख्याने तदनुपपत्तिरिति शेषः । यद्यत्र प्रपञ्चमिथ्यात्वमभि(सं)धित्सितं स्यात्तदा योऽयं प्रपञ्चो विद्यत इव दृश्यते स निवर्तिष्यते । अज्ञानेन कल्पितो विकल्पो विनिवर्तिष्यत इति वक्तव्यम् । यद्याद्यास्तुशब्दा विगतार्था विरुद्धार्थाश्च । तत्प्रयोगे हि प्रसङ्गद्वयपरमेतद्वाक्यद्वयमिति विज्ञायते । यदि पर्वतो निरग्निको भवेत् तर्हि निर्धूमोऽपि स्यादिति यथा ।**

शे० — अनन्ते नियमुक्तिश्चेत्यादिनैव प्रपञ्चमिथ्यात्वसाधकत्वेनोदाहृतश्रुत्यादेर्निरस्तत्वात्किमुत्तरेण ग्रन्थेनेत्यतोऽसङ्कीर्णतासिद्धये पूर्वोत्तरप्रकरणयोरर्थभेदं दर्शयति **प्रागिति** । ननु प्रत्येकं बाह्योपपत्तिविरोधाप्रतिपादनात्कथमेतत् । न च साधारणबाह्यानुपपत्तिः प्रागभिहितेत्यभिप्रायः । तर्ह्यावश्यकत्वात्तावत एव वक्तव्यतया बाह्यत्वविशेषणवैयर्थ्यादित्यरुच्या पक्षान्तरमाह **अथवेति** ॥ **सूत्रगृहीततयेति** । प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रखण्डगृहीततयेत्यर्थः । **श्रुतीनामिति** । 'उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवती'त्यादीनामित्यर्थः । अनुपपत्त्यादिकमित्यादिपदेनाविरुद्धार्थसंग्रहः ॥ **तदिति** । एकजीवाज्ञानकल्पितत्वमित्यर्थः । उपलक्षणं चैतत् । प्रपञ्चमिथ्यात्वमपीति द्रष्टव्यम् ॥ **प्रथमत इति** । उपात्तश्रुतिपरित्यागेनानुपात्तश्रुत्यादेरेवानुपपत्त्यादिप्रदर्शने कारणविशेषाभावादिति भावः ॥ **उभयानुगुण्यादिति** । यत्प्रकृतिश्चेत्यादिसूत्रार्थतया प्रकृतं प्रपञ्चमिथ्यात्वं यच्चानन्तरप्रकृतं सर्वस्यैकजीवाज्ञानकल्पितत्वं तदुभयप्रतिपादकत्वादित्यर्थः ॥ **प्रथमप्राप्तिरिति** । प्रथमं निराकर्तव्यतया प्रसक्तिरित्यर्थः । मूले यदिशब्दौ चेत्यत्र यदिशब्दस्यैकत्वेऽपि स्थानद्वयपठितत्वाद्यदिशब्दावित्युक्तमित्यवधेयम् । अपेक्षिताध्याहारं प्रदर्शयन्नेव चशब्दस्य भिन्नक्रमत्वं चाश्रित्य निवर्तेतेति च द्वयमित्येतद्व्याचष्टे **निवर्तेतेतीति** ।

यद्यपि लिङ्गैकत्वाद् द्वयशब्देनोक्तद्वित्वान्वयो बाधितो धातोरप्येकत्वेन धातुभेदेन समुदाययोर्भेद इति तत्त्वनिर्णयटीकोक्तरीत्या न तदन्वय उचितः । तथाऽपि निवर्तेतेत्यस्य स्थानभेदेन द्विप्रयोगात्तत्प्रयोगस्य द्वित्वान्वयो न बाधित इति भावेन लिङ्गद्वयमित्यनुक्त्वा तत्प्रयोगद्वयमित्युक्तमित्यवधेयम् । विद्येतेति प्रसङ्गरूपेण कथनमिति तत्त्वनि ये सत्यत्वावगमकत्वेन विश्वमिथ्यात्वपरतया तदनुपपत्तेरुक्तत्वात्तदनुसारेण निवर्तेतेति च द्वयमित्येतदुपलक्षणमित्याह **उपलक्षणमेतदिति** ॥ **तथा केनचिदितीति** । केनचित्कल्पित इत्यपि ग्राह्यमित्यर्थः । इदं च केनचित्कल्पित इत्यस्य केनचित्कल्प्येतेत्यर्थकत्वमभिप्रेत्योक्तम्। अत एवान्यत्र लिङ्प्रत्ययचतुष्टयमित्युक्तिः सङ्गच्छत इति ध्येयम् । अतः प्रपञ्चस्यानादिसत्यत्वपरमिति तत्त्वनिर्णयानुसारेण सादिश्चेन्नाशमाप्नुयादित्युत्तरग्रन्थानुसारेण चाह **सत्यतामित्युपलक्षणमिति** । वक्ष्यमाणरीत्या सत्यत्वादेर्वाक्यसामर्थ्यलभ्यत्वेन शाब्दत्वाभावादाहुरित्युक्त्यनुपपत्तिरित्यत आह **आहुरितीति** । ननु विश्वस्य सत्यतामाहुरित्यनेन प्रपञ्चो यदीत्यस्य मिथ्यात्वपरत्वे किं दूषणमुक्तं भवति । पराभिमतार्थेऽनुपपत्तिप्रदर्शनपूर्वमविरुद्धकथनार्थमेवास्य ग्रन्थस्य प्रवृत्तत्वादित्यत आह **तथा चेति** । कासौ ,यद्यादिशब्दानामनुपपत्तिरित्यतो विगतप्रयोजनत्वं विरुद्धार्थत्वं चेति मनसि निधाय विगतप्रयोजनत्वं तावदुपपादयति **यद्यत्रेत्यादि** । विरुद्धार्थत्वमेवोपपादयति **तत्प्रयोगेति** । यद्यादिशब्दप्रयोग इत्यर्थः । कुतो यद्यादिशब्दप्रयोगमात्रेणास्य वाक्यद्वयस्य प्रसङ्गद्वयपरत्वविज्ञापकत्वमित्यतो यदिशब्दसहितस्य लिङो, यदि पर्वतो निरग्निकः स्यात्तर्हि निर्धूमोऽपि स्यादित्यादौ प्रसङ्ग एव दृष्टत्वादित्याशयेनाह **यदीति** ।

स० — **प्रपञ्चमिथ्यात्वसिद्धय इति** । 'भ्रमत्वे विषयमुक्तिश्च' इत्यादिनेत्यर्थः । **अत उभयानुगुण्यादिति** । यत्सूत्रार्थतया पूर्वप्रकृतं प्रपञ्चमिथ्यात्वं यच्चानन्तरप्रकृतमेकजीवाज्ञानकल्पितत्वं तदुभयानुगुण्यादित्यर्थः ।

प० — 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेदि'त्यादिजिज्ञासासूत्रानुभाष्येण 'भ्रमत्वे विषयमुक्तिश्च तदन्तः पतनान्न ही'त्यादिना अत्रत्यपूर्वानुभाष्येण च पौनरुक्त्यनिरासायाह **प्राक् प्रपञ्चेति** । बाह्याभ्यन्तरप्रपञ्चेत्यर्थः ॥ **सर्वश्रुतीति** । सर्वासां मिथ्यात्वश्रुतीनामित्यर्थः ॥ **वाक्यद्वयमिति** । अनेन प्रपञ्चो यदीत्यादिवाक्यद्वयं नास्त्येव माण्डूक्ये गौडपादेन कल्पितमिति केषाञ्चिद्वचनमसाम्प्रदायिकत्वादुपेक्ष्यमिति सूचितम् ॥ **श्रुतीनामिति** । वाचारम्भणमित्यादीनामित्यर्थः ॥ **अनन्तरमेवोक्तमिति** । अव्यवहितपूर्वग्रन्थ एवोक्तमित्यर्थः ॥ **अस्यां चेति** । व्याक्रियमाणप्रपञ्च इत्यादिश्रुतावित्यर्थः ॥ **उक्तत्वादिति** । पूर्वतनमन्त्रे एकवचनेनैकजीववादस्योक्तत्वादित्यर्थः ॥ **उभयानु-**

**गुण्यादिति** । प्राक्प्रकृतप्रपञ्चमिथ्यात्वानन्तरप्रकृतैकाज्ञानकल्पितत्वरूपोभयानुगुण्यादित्यर्थः । चशब्द-स्यान्वयोक्तिः लिङ्प्रयोगद्वयं चेति ॥ **यद्याद्यास्त्विति** । यदिशब्दप्रभृतिशब्दास्त्वित्यर्थः ।

**या० — प्राक प्रपञ्चेति** । भ्रमत्वे त्वियमुक्तिश्चेत्यादावित्यर्थः । **उभयानुगुण्यादिति** । यत्सूत्रार्थतया पूर्वं प्रकृतं प्रपञ्चमिथ्यात्वं यच्चानन्तरप्रकृतमेकजीवाज्ञानकल्पितत्वं तदुभयानुगुण्यादित्यर्थः ॥ विरुद्धार्थत्वमुपपादयति **तत्प्रयोगे हीत्यादिना** ।

**श्री० — सूत्रेति** । प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रखण्डेत्यर्थः । अनन्तरं= अन्तरमवकाशं विनेत्यनन्तरम् । अव्यवधानेन= पूर्वमित्यर्थः । अस्यां= प्रपञ्चो यदीति श्रुतौ । तत्= एकजीवाज्ञान-कल्पितत्वम् । तदुपपादयति **अनादीति** । यदिशब्दद्वयवन्निवर्तेतेतिशब्दद्वयं व्यर्थमिति प्रतीयतेऽत आह **लिङिति** । विद्येतेत्यत्रापि लिङ्व्यर्थ इत्यर्थः । वचनस्य पुरुषधर्मत्वादाहुरिति कथमत आह **आहुरितीति** । केनचिदित्यस्य वैयर्थ्यमुक्तम् । तद्दर्शयति **अज्ञानेनेति** । लभ्यत इति तात्पर्यं सूचितमित्यन्वयः ।

**च० — उभयानुगुण्यादिति** । सूत्रार्थतया प्राक् प्रकृतप्रपञ्चमिथ्यात्वं तदानन्तर्येण प्रकृतमेक-जीवाज्ञानकल्पितत्वं चेत्येतदुभयानुगुण्यादित्यर्थः । विरूद्धार्थमुपपादयति । **तत्प्रयोगे हीत्यादिना** । यद्याद्यशब्दप्रयोग इत्यर्थः ।

---

**सु० — प्रसङ्गस्य च विपर्यये पर्यवसानादनिवृत्त्यादिकमेव वाक्यसामर्थ्याल्लभ्यत इति परकीयमर्थमपाकुर्वतैव श्रुतितात्पर्यं सूचितम्** । **तत्स्पष्टीकुर्वन्विद्येतेत्यस्यार्थं तावदाह** विद्येतेति ।

**अनु० —** विद्येतोत्पत्तिमेव च ।

**इत्येतच्छब्दरूपमुत्पत्तिमेवाह । न तु सत्तामिति प्रकृत्यर्थकथनम् । च शब्देन निवर्तेतेति विनाशमाह । न तु बाधमिति समुच्चिनोति ।**

**विद्यतेरुत्पत्त्यर्थत्वं कुत इत्यत आह** विदेति ।

विदोत्पत्ताविति ह्यस्माद्धातोः

**विदोत्पत्ताविति ह्यस्माद्धातोः । धातोर्धातुव्याख्यानादित्यर्थः । विद्यतेरुत्पत्त्यर्थत्वं प्रत्येतव्यमिति पूर्वेण संबन्धः । धातोरिति षष्ठ्यन्तं वा । तस्य व्याख्यानादिति शेषः । मन्दानामप्रसिद्धमपीदं धातुव्याख्यानं बहुज्ञानां प्रसिद्धमेवेति हिशब्द(ार्थ)ः । तथाऽप्युत्पत्ति-रेवेति कुतः, सत्ताऽत्र कुतो नेत्यत आह** उत्पत्तिरेवेति ।

उत्पत्तिरेव हि ॥

निवृत्तिव्याप्तियुक् प्रायः

अत्र हि प्रपञ्चो यदि विद्येत तर्हि निवर्तेतेति यदिशब्दादिबलात्प्रसङ्गोऽयमिति ज्ञायते। प्रसङ्गश्च व्याप्तिमूलः। व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनं तर्क इति तल्लक्षणात्। तथा च विद्येतेत्यापादकतयोक्तस्यार्थस्य निवर्तेतेत्यापाद्यतयोक्तया निवृत्त्या व्याप्तिरवश्यम्भाविनी। उत्पत्तिरेव निवृत्तिव्याप्तियुक्(क्ता)। न सत्ता। अस्माकं व्यभिचारित्वात्। परस्य विरुद्धत्वात् अतः प्रतीयमानान्वययोग्यताऽभावान्न सत्ता विद्यतेरर्थः किन्तूत्पत्तिरेव तद्योग्यत्वादिति। प्रध्वंसव्युदासाय प्राय इत्युक्तम्। उत्पत्तिर्निवृत्तियुगित्ययं प्रायो बाहुल्यमित्यर्थः। तथा च भावत्वे सतीत्यापादकविशेषणं विवक्षितमित्युक्तं भवति एतेनाल्पज्ञानां धातुव्याख्याने विप्रतिपत्तिरपि निरस्ता वेदितव्या।

ननूत्पत्तिर्नाम कारणायत्तसत्तालाभः। न चाभावे सत्ताऽस्तीत्यभावस्य प्रसक्त्यभावात्प्राय इति व्यर्थम् मैवम्। केयं सत्ता नामानुगतरूपा वा स्वरूपमेव वा नाद्यः। तस्या घटादावप्यभावस्य वक्ष्यमाणत्वात्। न द्वितीयः। अभावे तद्भावस्यास्त्यभावोऽस्ति च ध्वंस इत्यादौ वक्ष्यमाणत्वादिति।

---

**शे०** — अस्तु वाक्यद्वयस्य प्रसङ्गद्वयपरत्वसिद्धिस्तावताऽपि कथं पराभिमतमिथ्यात्वविरुद्धार्थत्वमित्यत आह **प्रसङ्गस्य चेति**। विपर्यये पर्यवसानात्तन्नियमादित्यर्थः। तद्धीनस्य प्रसङ्गाभासत्वादिति भावः। नन्वेवं पराभिप्रेतार्थेऽनुपपत्तिप्रदर्शन एवास्य ग्रन्थस्य तात्पर्ये विद्येतेत्यादिना स्वाभिप्रेतश्रुत्यर्थोपपादनं क्रियमाणमनुपपन्नं प्रसज्यते। श्रुत्यभिप्रायस्य पूर्वमनुक्तत्वेनोपपादनानपेक्षत्वादित्यत उक्तं **परकीयमर्थमपाकुर्वतैवेति**। विद्येतेत्यस्येत्युपलक्षणम्। निवर्तेतेत्यस्येत्यपि द्रष्टव्यम्। अत एव वक्ष्यति चशब्देनेत्यादीति ध्येयम्। प्रपञ्चादिशब्दानामप्युत्तरत्र व्याख्यानात्तावदित्युक्तम्। निर्देशक्रमभङ्गस्त्वाकाङ्क्षाक्रमस्य बलवत्त्वादनुसृत इत्यवधेयम्। उक्तार्थोपपादनस्योत्तरत्र करिष्यमाणत्वात्तावदित्युक्तमित्यप्याहुः॥ **प्रकृत्यर्थेति**। धात्वर्थेत्यर्थः। लिङ्प्रत्ययान्तस्य विद्येतेत्यस्योत्पत्त्यर्थकत्वाभावादिति भावः। **कुत इति**। सत्त्वाद्यर्थकत्वप्रसिद्धेरिति भावः। विदोत्पत्तावित्यस्याधातुत्वात्कथं सामानाधिकरण्यमित्यतो धातुशब्देन धातुव्याख्यानलक्षणामभिप्रेत्य तदुपपादयति **धातोर्धातुव्याख्यानादित्यर्थ इति**। तथा च विदोत्पत्तावित्यस्याधातुत्वेऽपि धातुव्याख्यानत्वान्नानुपपत्तिरिति भावः। अस्मिन्पक्षे धातुशब्दे लक्षणा भवतीत्यरुच्या पक्षान्तरमाह **धातोरिति षष्ठ्यन्तं वेति**। तर्हि धातोरिति षष्ठ्याः कथं विदोत्पत्तावित्यस्मादिति पञ्चम्या सम्बन्ध, इत्यतोऽपेक्षितशेषपूरणेन तमाह **तस्येति** ॥ **कुत इति**। व्याख्यानेन विद्यतेरुत्पत्त्यर्थकत्वमात्रप्राप्तावपि विद्येतेत्यत्रोत्पत्तिमात्रवाचित्वाप्राप्तेरिति भावः। नन्वति-

प्रसङ्गेन वाक्यस्थैकपदार्थस्य तत्स्थापरपदार्थं प्रति व्याप्यतायां विवक्षितपदार्थतायामनुपयोगित्वात्सत्ताया निवृत्तिव्याप्तियुक्तत्वाभावेऽपि विद्यतेः सत्तार्थकत्वोपपत्तेः कथं निवृत्तिव्याप्तिराहित्येन सत्ताया विद्यर्थत्व-निराकरणम्, कथं च सत्ताया निवृत्तिव्याप्तिराहित्यमित्यतो वाक्यमात्रे पदार्थमात्रस्य तन्नियमाभावेऽपि प्रसङ्गपरवाक्ये लक्षणव्याघातेन व्याप्ये आव्यापकस्यापादनासम्भवादापादकतयोक्तार्थस्यापाद्यतयोक्तार्थव्याप्य-ताया आवश्यकत्वाद्युक्तं व्याप्तिराहित्येन सत्तार्थत्वनिराकरणमिति भावेन कुतोऽस्य प्रसङ्गपरत्वमिति शङ्कां तावत्परिहरति **अत्र हीति ॥ यदिशब्दादिबलादिति** । यद्यादिशब्दबलादित्यर्थः । अस्तु प्रसङ्गपरत्वं तथाऽपि कुतो व्याप्त्यपेक्षत्वमित्यतः अन्यथा लक्षणव्याघातप्रसक्तेरिति भावेनाह **प्रसङ्गश्चेति** । ननु चिरन्त-नरीत्या कस्यचिदर्थस्यारोपेणार्थान्तरापादनस्यैव वा मणिकण्ठादिरीत्या कस्यचिदर्थस्याङ्गीकारेऽर्थान्तरप्र-सञ्जनस्यैव वा तर्कलक्षणत्वान्न लक्षणव्याघात इत्यतो धूलीपटले धूमभ्रमानन्तरं वह्न्यनुमितिस्थले यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति तर्के तत्र निरग्निकत्वस्य सत्त्वेनारोपाभावादव्याप्तिप्रसक्तेः, प्रसङ्गस्यैव निरुच्यमानत्वेन व्यर्थविशेषणत्वेन च प्रसङ्गशब्देन प्रसङ्गप्रहणायोगादुक्तरीत्या भ्रमानुमितावव्याप्त्या-आरोपविवक्षाया अप्यनुपपत्त्या द्वितीयस्याप्यनुपपत्तेर्नेदं लक्षणमिति भावेन तल्लक्षणमाह **व्याप्याङ्गीकार इति** । न चात्राप्युक्तदोषः प्रसङ्ग आपादनमिति तृतीये वक्ष्यमाणत्वात् । न चैवमप्यनिस्तारः । तत्रैवापादनमङ्गीकर्तव्यतया ज्ञापनमिति वक्ष्यमाणत्वात् ।

---

ननु व्याप्त्यादिवदव्यावर्त्यमस्ति न वा । अस्ति चेदन्यत्रापि तस्य ग्राह्यत्वेन कस्यचि-दर्थस्याङ्गीकारेऽर्थान्तरस्यापादनमित्येव तल्लक्षणप्रणयनानुपपत्तिः । अन्त्ये त्वत्रापि तदकर्तव्यत्वप्रसक्तिरिति चेत् । मैवम् । भावानवबोधात् । सेतिकर्तव्यताकं हि करणम् । तत्र प्रसङ्गः करणं धर्मी तस्य च व्याप्त्यादीन्यङ्गानि । तत्र करणधर्मिणः प्राधान्यविवक्षयाऽङ्गेभ्यः पृथक्कृत्यान्यत्र प्रसङ्गतयोक्तिः । अत्र तु सेतिकर्तव्यताकस्येति को दोषः । न चैवमत्रोक्तलक्षणस्याभावेऽप्यन्यत्रोक्तलक्षणसत्त्वेनाव्यापके-ष्टापादनानामपि प्रसङ्गत्वं स्यादिति वाच्यम् । इष्टापत्तेः । न चैवं ततोऽप्यनुमितिप्रसक्तिरिति वाच्यम् । अङ्गरहितस्य करणस्य क्रियाजनकत्वादर्शनेन तत्सविवस्यैव तज्जनकत्वनियमेनाङ्गसाचिव्याभावेनानुमित्य-भावोपपत्तेरित्यन्यत्र विस्तरः ॥ किमतो यद्येवमियत आह **तथा चेति** । अस्तु व्याप्तिसापेक्षत्वं प्रसङ्गस्य तथाऽपि कथं सत्ताया निवृत्तिव्याप्तिराहित्यं येन विद्यतेः सत्तार्थत्वाभाव इत्यत आह **उत्पत्तिरेवेति ॥ अस्माकमिति** । अनेकसत्यवादिनामित्यर्थः ॥ **व्यभिचारित्वादिति** । घटादीनां सतां निवृत्तावपि गगनादीनां सत्यपि सत्त्वे निवृत्त्यभावाद्यत्सत्तन्निवर्तत इति न व्याप्तिरित्यर्थः । परमते तु गगनादीनां सत्त्वस्यैवाभावान्न तत्र व्यभिचार इति भावेनास्माकमित्युक्तमिति । एवं स्वमतेन साध्यसम्बन्धे सति तदभावेन सम्बन्धरूपामव्याप्तिमभिधाय मायिपक्षे साध्यसम्बन्धाभावे सति तदभावेनैव सम्बन्धरूपां तामाह

**परस्येति** । तन्मते ब्रह्मण एकस्यैव सत्यत्वेन सत्त्वस्य निवृत्त्यभावव्याप्यतया विरुद्धत्वादित्यर्थः ॥ **अत इति** । उक्तरीत्याऽव्याप्तेरित्यर्थः ॥ **प्रतीयमानेति** । आपाद्यापादकयोः प्रतीयमानो यो व्याप्य-व्यापकभावेनान्वयस्तस्यायोग्यत्वादित्यर्थः ॥ **तद्योग्यत्वादिति** । प्रतीयमानान्वययोग्यत्वादित्यर्थः । ननु नियतसम्बन्धस्यैव व्याप्तित्वाद्व्याप्तियुक्प्राय इत्यनयोर्विरोधात्कथमन्वय इत्यतो व्याप्तिपदाविवक्षयाऽन्वय-माह **उत्पत्तिरिति** । तथा चोत्पत्तिमत्सु विधीयमानो निवृत्तियुक्तस्वरूपोऽर्थो बाहुल्यं बहुलानामेव धर्मो न तु सर्वोत्पत्तिमन्नियत इत्यन्वय इत्यर्थः । अस्त्वेवमन्वयस्तथाऽपि कथं प्राय इत्यनेन ध्वंस-व्युदासः । तद्व्यवच्छेदकधर्मविशेषानुक्तेरित्यत आह **तथा चेति** ॥ **एतेनेति** । उत्पत्तेरेव निवृत्ति-व्याप्तिप्रतिपादनेनेत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । वैशेषिकपरीक्षायामिति शेषः ।

स० — **प्रकृत्यर्थकथनमिति** । विधेतेत्येतदन्तर्गतप्रकृत्यर्थमात्रकथनमिदम् । प्रत्ययार्थस्य विध्यादेरुत्पत्तिरूपत्वाभावादिति भावः । **अस्माकं व्यभिचारित्वादिति** । जगत्सत्यत्ववादिनामस्माकं घटादौ सत्वे सत्यत्वनिवृत्त्योः सामानाधिकरण्येऽपि नित्ये गगनादौ व्यभिचारित्वादित्यर्थः ॥ **परस्य विरुद्धत्वादिति** । परमते नित्यस्य ब्रह्मण एकस्यैव सत्त्वेन सत्त्वस्य निवृत्त्यभावव्याप्यतया विरुद्धत्वा-दित्यर्थः । **वक्ष्यमाणत्वादिति** । समयपाद इति शेषः ।

प० — असाङ्गत्यनिरासायाह **परकीयमिति** । विधेतेत्यनन्तरं पूर्वस्मात् इतिपदमनुषज्यमिति भावेन व्याचष्टे **इत्येतच्छब्दरूपमिति** । विधेतेत्यनुवादात्प्रकृतिप्रत्यययोर्द्वयोरप्युत्पत्तिरर्थ इति भ्रमं निराह **प्रकृत्यर्थेति** । धातोरित्यस्य विशेषणतया तस्येति पदं अस्मादित्यस्य विशेष्यतया व्याख्याना-दिति पदं चाध्याहार्यमितिभावेनाह **तस्य व्याख्यानादिति शेष इति** ॥ **अस्माकं व्यभिचारित्वा-दिति** । यदि सत् स्यान्निवर्तेतेत्युक्तौ नित्यपदार्थे व्यभिचारित्वात्सत्त्वहेतोरित्यर्थः ॥ **विरुद्धत्वादिति** । सत्त्वहेतोः ब्रह्मणि नित्यत्वेनाभावेन संबन्धाद्विरुद्धहेत्वाभासादित्यर्थः । उत्पत्तिरेव निवृत्तिव्याप्तियुक् सत्ता तु प्राय इति प्रतीतेः कथमेवं व्याख्येत्यत आह **उत्पत्तिरिति** । **बाहुल्यं** बहुल इति स्वार्थे ष्यञ् ॥ **एतेनेति** । सत्तार्थत्वेऽनुपपत्तिकथनेन वा उत्पत्त्यर्थत्वेन वा उपपत्तिकथनेनेत्यर्थः ॥ **वक्ष्यमाणत्वा-दिति** । वैशेषिकनये 'न सर्वधर्म एकोऽस्ती'त्यादिनेति भावः ॥ **इत्यादाविति** । वैशेषिकाधिकरणे ।

या० — **प्रकृत्यर्थकथनमिति** । प्रत्ययार्थस्य विध्यादेरुत्पत्तिरूपत्वाभावादिति भावः ॥ **अस्माकमिति** । अनेकसत्यवादिनां गगनादौ व्यभिचारित्वादित्यर्थः ॥ **परस्येति** । परमते ब्रह्मण एकस्यैव सत्यत्वेन सत्त्वस्य निवृत्त्यभावव्याप्ततया विरुद्धत्वादित्यर्थः । ननु व्याप्तियुक् प्राय इत्यनयो-र्विरोधात्प्राय इत्यस्य केनान्वय इत्यतो व्याप्तिपदाविवक्षया पूर्ववाक्येनैवास्यान्वय इत्याह **उत्पत्तिरिति** ।

प्राय शब्दस्य पुल्लिङ्गत्वाद्विधेयलिङ्गतामाश्रित्यायमित्युक्तम् । तथा चायमुत्पत्तिषु विधीयमानो निवृत्तियुक्तस्वरूपोऽर्थो बाहुल्यं बहुलानां धर्मो न तु सर्वोत्पत्तिनियत इत्यर्थः ॥ **एतेनेति** । योग्यताऽभावप्रसक्त्या श्रुत्यर्थस्यान्यथाऽसंभवेन श्रुत्यभिप्रेतत्वेनेत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । वैशेषिकपरीक्षायामिति शेषः ।

**श्री०** — पूर्वं धातोरिति पञ्चम्यन्तं कृत्वाऽस्माद्धातोरिति सामानाधिकरण्येनान्वयं कृत्वा धातोरित्यस्य धातुव्याख्यानादित्यर्थः कृतः । इदानीं तु धातोरिति षष्ठीमङ्गीकृत्य तस्य धातोर्विद्धातोर्विदोऽस्तावित्यसाध्यव्याख्यानाद्विद्यतेरुत्पत्त्यर्थत्वं ज्ञेयमित्यभिप्रेत्याह **षष्ठ्यन्तं वेति** । मूलो मूलकः ॥ **परस्येति** । सत्त्वस्यासन्मते निवृत्तिरूपसाध्यसंबन्धस्य घटादावपि सत्त्वेन साध्यसंबन्धाभावे सति तदभावेनैव संबन्धरूपविरुद्धताया अभावादित्यर्थः ॥ **एतेनेति** । सत्त्वनिवृत्त्योः प्रतीयमानस्य संबन्धस्य बाधितत्वादेवेत्यर्थः । अत्र= धातौ । अल्पज्ञैर्विप्रतिपत्तिर्न कार्या सत्त्वनिवृत्तिसंबन्धस्य व्यभिचारित्वादतोऽकामैरप्ययं धातुः स्वीकार्यः । उत्पत्तिनिवृत्तिसंबन्धस्य भावपदार्थेऽव्यभिचारादित्युक्तं भवति ।

**च०** **प्रकृत्यर्थेति** । प्रातिपदिकस्येव धातोरपि प्रकृतित्वाद्धात्वर्थेत्यर्थः । **विद्यतेरिति** । श्तिपा निर्देशोयम् विदधातोरित्यर्थः ॥ **अस्माकमिति** । जगत्सत्यमुपगच्छतां मते गगनादावनैकान्त्यादित्यर्थः । **परस्येति** विश्वमिथ्यात्वमङ्गीकुर्वतः परस्य मते ब्रह्मण एकस्यैव सत्यत्वेन सत्त्वस्य निवृत्त्यभावव्याप्ततया विरुद्धत्वादित्यर्थः । **वक्ष्यमाणत्वादिति** । वैशेषिकपरीक्षायामित्यादिः ।

**सु०** — नन्वस्मिन्नपि व्याख्याने नान्वययोग्यताऽस्ति । तर्कस्य व्याप्तिरिव विपर्यये पर्यवसानमवश्यम्भावि । तथा च प्रपञ्चो यद्युत्पद्येत तर्हि विनश्येत । न च विनश्यति । तस्मान्नोत्पद्यत इति वक्तव्यम् । न चैतद्युक्तम् । क्षित्यादेः प्रपञ्चस्योत्पत्तिविनाशयोः प्रमाणदृष्टत्वात् । अत एव तर्काङ्गभूतमापाद्यस्यानिष्टत्वं च नोपपद्यत इत्यतः प्रपञ्चशब्दमन्यथा व्याचष्टे प्रपञ्च इति ।

**अनु०** — प्रपञ्चो भेदपञ्चकः ॥

नायं प्रपञ्चशब्दो विश्वविस्तारवाची । येनोक्तदोषः स्यात् । किन्तु पञ्चानां वर्गः पञ्चः । पञ्चद्शतौ वर्गे वेति वाशब्देन पञ्चशब्दस्यापि निपातनाङ्गीकारात् । प्रकृष्टः पञ्चः प्रपञ्चः । प्रकृष्टता च मोक्षाङ्गज्ञानतया भवति । सा च भेदसम्बन्धिन एव पञ्चकस्योपपन्ना । 'वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बद्ध्यतेऽन्यथे'त्यादेः । अतः प्रपञ्चो भेदपञ्चकः । स च जीवेश्वरप्रकृत्यादिनित्यस्वरूपभूतोऽनादिनित्य एवेति नोक्तदोषः ।

**टीकाकारास्तु मन्यते । भेदो नामान्योन्याभावः । स चान्योन्यतादात्म्यापत्त्यैव निवर्तनीयः । प्रतियोग्याप(ग्युत्प)त्तेरेवाभावविपत्तित्वस्य प्रागभावे दृष्टत्वात् । न च कदाऽपि पदार्थानामन्योन्यं तादात्म्यमस्तीत्यनित्यानामपि भेदो नित्य एवेति ।**

**अन्येऽप्याहुः । 'नित्ये च त्रयाणां सिद्धिरि'ति ।**

**शे०** — ननु प्रपञ्चशब्दस्य प्रसिद्धार्थपरित्यागे ऽप्रसिद्धार्थवर्णनमयुक्तमिति तत्परोत्तरवाक्यमनर्थकमित्यतोऽसति बाधके तदुभयाश्रयणस्यायुक्तत्वेऽपि प्रकृते बाधकवशात्प्रसिद्धार्थपरित्यागाप्रसिद्धार्थस्वीकारयोरुपपत्तिरेवेत्याशयेन प्रसिद्धार्थत्वे प्रपञ्चशब्दस्यानुपपत्तिशङ्कामुत्थापयति **नन्विति** ॥ **अत एवेति** । विनाशस्य प्रमाणदृष्टत्वादेवेत्यर्थः ॥ **अनिष्टत्वं चेति** । तस्य प्रामाणिकहानाप्रामाणिककल्पनारूपत्वादिति भावः ॥ **पञ्चानां वर्ग इति** । इदं च तात्पर्यकथनमात्रम् । व्युत्पत्तिस्तु पञ्च परिमाणमस्य वर्गस्येति पञ्च इत्येव द्रष्टव्या । ननु वर्गेऽभिधेये पञ्चदित्येव रूपं स्यात् । पञ्चद्दशतौ वर्गे वेति निपातनात्तत्कथं पञ्चेति रूपमित्यत आह **पञ्चद्दशताविति** । न च पञ्चद्दशतौ वर्गे वेत्यत्र वर्गेऽभिधेये तदस्य परिमाणमित्येतस्मिन्विषये पञ्चन् दशन् शब्दाभ्यां 'सङ्ख्याया अतिशदन्तायाः कन्नि'ति कनि पञ्चको दशक इति नित्यं प्राप्तौ डतिप्रत्ययविधानेन डित्त्वाट्टिलोपे पञ्चद्दशदित्येव निपातनाद्वाशब्देन च पक्षे कन्प्रत्ययविधानेन पञ्चको दशक इति पूर्वप्राप्तरूपस्याभ्यनुज्ञानात् ॥ डप्रत्ययस्यानभ्यनुज्ञानेन पञ्च इति न रूपनिष्पत्त्युपपत्तिरिति वाच्यम् । पञ्चक इत्याद्यभियुक्तप्रयोगानुसारेण पक्षे वाशब्देन कन्प्रत्ययस्येव पञ्च इत्याद्यभियुक्तप्रयोगानुसारेण पक्षेऽप्राप्तडप्रत्ययस्यापि वाशब्दार्थत्वेनाभ्यनुज्ञातव्यत्वाविशेषादित्यत्र तात्पर्यात् । सम्मतश्चायमर्थष्टीकाकृतः । अत एवेह टीकायां क्वचित्पञ्चशब्दस्यापीत्यपिशब्दः । अन्यथा वाशब्देन पञ्चशब्दस्य निपातनादित्येवावक्ष्यदित्यवधेयम् । ननु भेदपञ्चकस्यापि प्रपञ्चशब्देन ग्रहणे नोक्तदोषपरिहारः । घटपटादिनाशेन तत्स्वरूपस्य भेदस्य नाशावश्यम्भावादित्यत आह **स चेति** । तथा च न भेदमात्रस्यानादिनित्यत्वपरमिदं वाक्यं किं नाम जीवेश्वरयोर्भेदो जीवानामन्योन्यं भेदः प्रकृत्यादिरूपनित्यजडजीवयोर्भेदस्तद्रूपजडेश्वरयोर्भेदः प्रकृतिवर्णादीनां नित्यजडानां परस्परं भेद इति पञ्चकस्यवानादिनित्यत्वपरम्, उक्तभेदपञ्चकं चानादिनित्यमिति नानुपपत्तिरिति ध्येयम् ॥ **उक्तेति** । विपर्यये पर्यवसाने बाध आपाद्यस्य विनाशस्येष्टत्वमित्युक्तेत्यर्थः ।

एवं नित्यधर्मिको नित्योऽनित्यधर्मिकस्त्वनित्य इति स्वमतमुक्त्वा दृष्टान्तोपदर्शनादिना तत्पक्षमुपपादयन्नेव विनाशिनोऽपि घटादेर्धर्मरूपो भेदः परवाद्यभ्युपगतघटत्वादिजातिवन्नित्योऽवगन्तव्यः । वस्त्वन्तरताऽऽपत्त्यभावात्कालत्रयेऽपीति सन्न्यायरत्नावलीकृतां मतमुपन्यस्यति **टीकाकारास्त्वित्यादिना** ॥ **अनित्यानामपीति** । अत्र च 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति तैत्तिरीय-

भाष्योदाहृतप्रमाणं मूलमिति ज्ञेयम् । न च 'इत्याहुः केचिदज्ञानादि'त्यस्य पक्षस्याज्ञानिपक्षत्वोक्तेः कथं टीकाकाराणां तत्पक्षाश्रयणमिति वाच्यम् । 'तत्राहुः सूक्ष्मदर्शिनः' इत्युत्तरग्रन्थानुसारेणोपादानरूपेण सतो घटस्येव तद्रूपेण सतो भेदस्यापि व्यवहारानुपयोगित्वेन स्थूलां दृष्टिमाश्रित्येत्येवाभिप्रेततयाऽस्य पक्षस्याज्ञानिपक्षत्वासम्मतेः । न ह्यज्ञानिनः केऽपि भेदस्य धर्मिस्वरूपत्वमभ्युपेत्य तन्नित्यत्वमभ्युपयन्ति येन तन्मतानुवादोऽयं स्यादिति द्रष्टव्यम् । ननु ग्रन्थकृन्मते कथमनित्यधर्मिकस्य भेदस्यानित्यत्वं घटनाशेन घटभेदनाशे घटस्य पटतादात्म्यप्रसङ्गात् । तादात्म्यस्यान्योन्याभावप्रतियोगित्वात्प्रतियोगिन एवाभावध्वंसरूपत्वस्य प्रागभावे दृष्टत्वादिति चेन्न । घटधर्मिकपटप्रतियोगिकभेदवत्पटधर्मिकघटप्रतियोगिकभेदस्यापि घटपटतादात्म्यविरोधितया घटनाशेन तद्धर्मिकभेदनाशेऽपि पटस्यानष्टतया तद्धर्मिकभेदसत्त्वेन नष्टघटस्य पटतादात्म्याभावोपपत्तेः । न चैवं घटपटयोरुभयोरपि विनाशे तदात्मकभेदद्वयस्यापि विनाशाद्घटपटतादात्म्यं स्यादिति वाच्यम् । घटवद्घटध्वंसस्यापि घटप्रागभावविरोधित्ववद्भेदवद्भेदध्वंसस्यापि तादात्म्यविरोधित्वोपपत्तेः । अन्यथा घटप्रागभावध्वंसरूपघटविनाशे घटप्रागभावोन्मज्जनप्रसक्तेः । न च प्रतियोगिन एवाभावनाशत्वस्य प्रागभावे दृष्टत्वादत्रापि तथैव कल्पनीयमिति वाच्यम् । धर्मिभिन्नप्रागभावनाशस्य प्रतियोगिरूपत्वेऽपि धर्म्यात्मकान्योन्याभावनाशस्य धर्मिनाशत्वप्रतियोगिभिन्नत्वस्यापि संभवात् । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु यत्र घटनाशेन तद्धर्मिकभेदनाशो यत्र घटपटयोरुभयोरपि नाशेन तद्धर्मिकभेदद्वयस्यापि नाशस्तत्र न भेदनाशेन तत्तादात्म्यमापादयितुं शक्यते । धर्मिण एवासत्त्वात् । अत एव वक्ष्यति 'विनष्टस्य भेदाभेदचिन्ताऽनवसरादिती'ति न किञ्चिदेतत् । विस्तरस्तु समयपरीक्षायां द्रष्टव्यः । अत्र ग्रन्थकृट्टीकाकारमतयोरविरोधो मृग्यः ।

**नित्ये च त्रयाणामिति** । नित्ये जडे प्रकृत्यादौ त्रयाणामीश्वरभेदस्य जीवभेदस्य जडान्तरभेदस्य चेति त्रयाणां भेदानां नित्यत्वसिद्धिः । जीवेश्वरभेदस्य मिथो जीवभेदस्य नित्यत्वे न विवाद इति पञ्चविधभेदस्य च नित्यत्वसिद्धिरिति भावः । यद्वा नित्ये नित्यवर्गे त्रयाणां प्रध्वंसान्योन्याभावात्यन्ताभावानां सिद्धिरन्तर्भाव इत्यर्थः । तथा चान्योन्याभावनित्यत्वस्य नैयायिकैरङ्गीकृतत्वादन्योन्याभावभेदयोश्चानतिरेकाद्भेदस्य नित्यत्वं तत्संमतमेवेति भेदनित्यत्वरूपे स्वोक्तार्थे तार्किकसंमतिपरमिदं वाक्यमिति ध्येयम् ।

**स०—पञ्चानां वर्गः पञ्च इति** । इदं च तात्पर्यकथनम् । व्युत्पत्तिस्तु पञ्चपरिमाणमस्येति पञ्च इत्येव द्रष्टव्यम् । ननु वर्गे अभिधेये पञ्चत् इत्येव स्यात् पञ्च इत्यनुपपन्नमित्यत आह **पञ्चद्दशतौ वर्गे वेतीति** । वर्गे अभिधेये तदस्य परिमाणमित्यस्मिन्विषये पञ्चत्-दशत्-शब्दाभ्यां संख्याया इति कनि पञ्चको दशक इति नित्यं प्राप्ते डति प्रत्ययविधानेन डित्त्वाट्टिलोपे सति पञ्चत् दशत् शब्दयोर्निपा-

तनात् । वाशब्देन पक्षे कन्प्रत्ययोऽपि भातीत्युक्तत्वेन पञ्चकशब्दस्य निष्पत्त्युपपत्तावपि वाशब्देन डप्रत्ययस्यानभ्यनुज्ञानेन कथं पञ्चशब्दनिष्पत्तिरिति चेत् न । पञ्च इत्यभियुक्तप्रयोगानुसारेण डप्रत्ययस्यापि वाशब्दार्थत्वेनाभ्यनुज्ञातत्वादित्याशयात् । अत एवाङ्गीकारादित्युक्तम् । अन्यथा निपातनादित्येव ब्रूयादिति भावः । **स च जीवेश्वरप्रकृत्यादीति** । जीवेश्वरभेदः । जीवानां परस्परभेदः । नित्यप्रकृत्यादिजडेश भेदः । प्रकृत्यादिरूपनित्यजडजीवभेदः । प्रकृतेरव्याकृताकाशवर्णादेर्नित्यजडस्य परस्परं भेद इति भेदपञ्चकस्याप्यादिनित्यत्वोपपत्त्वन इति भावः । **अनित्यानामपि भेदो नित्य एवेति** । 'नष्टानामपि वस्तूनां भेदो नैव विनश्यति' इति तैत्तिरीयभाष्येऽभिहितत्वादिति भावः । नन्वेवं चेत्सुधाकारैः प्रकृत्यादिनित्यजडस्वरूपभेदमादाय कथं समाधानं कृतमिति चेत् । उच्यते । अनित्यानां हि न सर्वथाऽसम्मते नाशः । किन्तु कार्याकारेणैव । कारणात्मना त्ववस्थानमेव । तेषां मते अनित्यस्वरूपभेदोऽपि कारणस्वरूपेणावतिष्ठत इति टीकाकाराणाम् अभिप्रायः । इममभिप्रायं सूचयितुं सुधाकारैः प्रकृतिमूलकारणस्वरूपभेदस्य नित्यतोक्तेति मन्तव्यम् । **नित्ये च त्रयाणामिति** । नित्ये जडप्रकृत्यादौ धर्मिणि त्रयाणां ईश्वरभेदस्य जीवभेदस्य जडान्तरभेदस्य चेति त्रयाणां भेदानां नित्यतासिद्धिः । जीवेश्वरस्वरूपभेदयोर्द्वयोस्तु नित्यता प्रसिद्धैवेति तन्मताभिप्रायः । यद्वा नित्ये नित्यवर्गे त्रयाणां प्रध्वंसान्योन्याभावात्यन्ताभावानां सिद्धिः प्रसिद्धिः । त्रयोऽभावाः नित्यत्वेन प्रसिद्धा इत्यर्थः । तथाचान्योन्याभावनित्यत्वस्य नैयायिकैरप्यङ्गीकृतत्वात् । अन्योन्याभावभेदयोश्चानतिरिक्तत्वात् । भेदस्य नित्यत्वे एतत्संमतिकथनं युक्तमिति भावः

प० — **वाशब्देनेति** । यद्यपि वृत्तौ पञ्चशब्दो दशशब्दश्च(डन्प्र डतिप्रत्ययान्तो निपात्यते वर्गेऽभिधेये । 'तदस्य परिमाणमि'त्येतस्मिन्विषये वाशब्दात् संख्याया अतिशदन्तायाः कन्नि'त्यतोऽनुवर्तमानकन्प्रत्ययश्च भाति । पञ्चादिगणनाय वर्गस्य पञ्चद्वर्गः पञ्चको वर्गः दशद्वर्गः दशको वर्ग इत्येवोक्तं पञ्चमाध्याये । न तु डप्रत्ययान्तोपि निपात इति । तथापि श्रौतप्रयोगानुसारात्सोऽप्यङ्गीकार्य इति भावेन वाशब्देनेत्याद्युक्तम् ॥ **नित्यस्वरूपभूतोऽनादिनित्य एवेति** । 'यस्माद्वस्तुविनाशे तु तद्भेदो नास्ति कुत्रचिदि'त्यादितैत्तिरीयभाष्योक्तेरिति भावः । विनाशेपि घटादेर्धर्मरूपो भेदः परवाद्यभ्युपगतघटत्वादिजातिवन्नित्योऽभ्युपगन्तव्यः । वस्त्वन्तरताऽऽपत्त्यभावात् कालत्रयेऽपीति सन्न्यायरत्नावल्युक्तं विवृण्वन्नेतदभिप्रायमाह **टीकाकारारित्वति** ॥ **अन्येपीति** । तार्किका इत्यर्थः । नित्ये च त्रयाणामन्योन्याभाववैधर्म्यभेदस्वरूपभेदानां सिद्धिरित्यर्थ इत्येके । अन्येऽपि सिद्धान्त्येकदेशिनो नित्यवर्गे जीवभेदेश्वरभेदजडभेदानां त्रयाणां नित्यतासिद्धिरित्याहुरित्यन्ये व्याचक्षते ।

या०— **पञ्चानां वर्ग इति** । इदं च तात्पर्यकथनम् । व्युत्पत्तिस्तु पञ्च परिमाणमस्य वर्गस्येति पञ्च इति द्रष्टव्या । ननु वर्गेऽभिधेये पञ्चत् इत्येवंरूपं स्यात् । पञ्चद्दशतौ वर्गे इति निपातनादित्यत आह **पञ्चद्दशताविति** । यद्यपि वाशब्दः पक्षे संख्याया इति कनि पञ्चको दशक इति पूर्वप्राप्तरूपस्यैवाभ्यनुज्ञापको न पञ्च इत्यस्य अप्राप्तत्वात् । थाऽप्यप्राप्तेऽपि विकल्पस्य बहुलमुपलम्भात्पक्षे पञ्च इत्यस्यापि रूपस्य वर्गार्थे निपातनमत्राभिप्रेतम् । अभियुक्तप्रयोगबलादिति भावः ॥ **स च जीवेश्वरप्रकृत्यादीति** । तथा च जीवेश्वरभेदो जीवानां परस्परं भेदः प्रकृत्यादिनित्यजडेश्वरभेदः प्रकृत्यादिरूपनित्यजडजीवभेदः प्रकृतिवर्णादीनां नित्यजडादीनां परस्परं भेद इति भेदपञ्चकस्याप्यनादिनित्यत्वमनेनोक्तमिति ज्ञातव्यम् ॥ **भेदो नामेत्यादि** । इदं च विनाशिनोऽपि घटादेर्धर्मरूपो भेदः परवाद्यभ्युपगतघटादिजातिवन्नित्योऽवगन्तव्यः । वस्त्वन्तरताऽऽपत्त्यभावात्कालत्रयेऽपीति टीकावाक्योपपादनमेव न टीकावाक्यमित्यवधेयम् ॥ **अनित्यानामपीति** । इदं च 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति तैत्तिरीयभाष्योक्तं मतमवलम्ब्योक्तं । नन्वेवं चेत्सुधाकारैः प्रकृत्यादिनित्यजडस्वरूपभेदमादाय समाधानं कस्मात्कृतमिति चेत् । उच्यते । अनित्यानां हि न सर्वथाऽस्मन्मते नाशः । किन्तु कार्याकारेणैव । कारणात्मना त्ववस्थानमेव तेषाम् । अतोऽनित्यस्वरूपभूतभेदोऽपि कारणात्मनाऽवतिष्ठत इति टीकाकाराणामभिप्रायः । इममेवाभिप्रायं सूचयितुं सुधायां प्रकृतिरूपमूलकारणस्वरूपभेदस्य नित्यतोक्ता । सुधायामनित्यप्रपञ्चस्वरूपभेदस्यानित्यताङ्गीकारस्तूपादानरूपेण सतो घटस्येव तद्रूपेण सतो भेदस्यापि व्यवहारानुपयोगित्वमभिप्रेत्यैवातो न कोऽपि विरोध इति मन्तव्यम् ॥ **नित्ये च त्रयाणामिति** । नित्ये जडे प्रकृत्यादौ धर्मिणि त्रयाणामीश्वरभेदस्य जीवभेदस्य जडान्तरभेदस्य चेति त्रयाणां भेदानां नित्यतासिद्धि । जीवेश्वरयोः परस्परं जीवानां च भेदो नित्य इति प्रसिद्धमेवेत्येतन्मताभिप्रायः । तथा च मतत्रयमप्येकाभिप्रायकमेवेति ज्ञातव्यम् । केचित्तु नित्ये नित्यवर्गे त्रयाणां प्रध्वंसान्योन्यात्यन्ताभावानां सिद्धिः प्रसिद्धिः त्रयोऽभावा नित्यत्वेन प्रसिद्धा इति यावत् । तथा चान्योन्याभावनित्यत्वस्य नैयायिकैरप्यङ्गीकृतत्वादन्योन्याभावभेदयोश्चानतिरेकाद्भेदस्यनित्यत्वे एतत्सम्मतिकथनं युक्तमित्याहुः ।

च०— **विपर्यये पर्यवसानमवश्यंभावीति** । विपर्यये तत्कोटिमात्रपर्यवसायिन एव तर्कस्य तदभावकोटिकशङ्कानिवर्तकत्वादिति तर्कग्रन्थे दीधितिकारोक्तेस्तत्कोटितावच्छेदकावच्छिन्नसाधकविपर्ययप्रतियोगितावच्छेदकावच्छिन्नापादकस्तर्कस्तत्कोटितावच्छेदकावच्छिन्नकोटिकशङ्कानिवर्तक इति तदुक्तिं व्याचचक्षिरे व्याकर्तार इत्यवसेयम् । **पञ्चानां वर्ग इति** । फलिताशयप्रदर्शकमेतत् । पञ्चपरिमाणस्य वर्गस्येत्येव तद्धितवृत्त्यर्थप्रदर्शकं वाक्यमिति ध्येयम् । अत्र 'पचद्दशतौ वर्गे' इति निपातनेन वर्गे अभिधेये

पञ्चदित्येव स्यात् वाशब्दः पक्षे संख्याया अतिशदन्तायाः कनिति-कनि पञ्चक इत्यस्याभ्यनुज्ञापक इति पञ्चक इति वा स्यात् न तु पञ्च इतीत्याशङ्कयाभियुक्तप्रयोगानुरोधेनासाधोरपि पञ्च इत्यस्याभ्यनुज्ञापकः वाशब्द इति हृदयं टीकाकृतामिति व्याचक्षाणाः समादधति । **स च जीवेश्वरप्रकृत्यादीति** । जीवप्रतियोगिकेश्वरानुयोगिकत्वेश्वरप्रतियोगिकजीवानुयोगिकत्वान्यतरविशेषितो भेदो जीवेश्वरभेदपदेन, कतिपयजीवप्रतियोगिकजीवान्तरानुयोगिकत्वजीवान्तरप्रतियोगिककतिपयजीवानुयोगिकत्वान्यतरविशेषितो भेदो जीवानामन्योन्यभेद, इत्यनेनैवमेव प्रकृत्यादिनित्यजडेश्वरभेदः प्रकृत्यादिरूपनित्यजडजीवभेदः प्रकृतिवर्णादिरूपनित्यजडानां परस्परभेदो ग्राह्य इति तादृशभेदपञ्चकस्यानादिनित्यत्वमनेनाभिहितमित्यवधेयम् । सन्न्यायरत्नावलीकृतां मतमुपन्यस्यति **टीकाकारास्त्विति** । **अनित्यानामपीति** । 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति तैत्तिरीयभाष्यप्रतिसन्धाननिबन्धनमिदम् । तथा सति प्रकृत्यादिनित्यजडस्वरूपभेदपर्यन्तानुधावनं ग्रन्थकारीयं निर्बीजमिति तु न शङ्कनीयम् । अनित्यानामपि घटादीनां न सर्वात्मना विनाशः किन्तु कार्यात्मनैव, कारणात्मना त्ववस्थितिरेवेत्यनित्यस्वरूपभेदोपि (तदात्मना त्ववस्थितिरेवेत्यनित्यस्वरूपभेदोपि) तदात्मनाऽवतिष्ठत एवेति चिरन्तनटीकाकारीयं पन्थानमनुरुन्धानाः प्रत्यग्रटीकाकृपादास्तादृगाशयं ध्वनयितुं नित्यप्रकृत्यादिजडभेदपर्यन्तमन्वधावन् । अत एव समयचरणे 'तस्मात्प्रपञ्चस्त-भेदादि सदित्येवावगम्यते'इति मौलप्रतीकं सन्न्यायरत्नावलीकृदभिहितदिशैव व्याख्यास्यति । प्रकृते अनित्यप्रपञ्चस्वरूपभेदस्यानित्यत्वोपगतिस्तूपादानरूपेण सतो घटादेर्व्यवहारानौपयिकत्वात्तद्रूपेण सतो भेदस्यापि तदनौपयिकत्वाशयेनेति न प्रत्नतव्यटीकयोर्विरोध इति स्थितम् । अत्र ग्रन्थकृट्टीकाकारमतयोरविरोधो मृग्य इति च निबन्धान्तरीयो विन्यासः । **नित्ये च त्रयाणामिति** । नित्ये जडप्रकृत्यादौ त्रयाणामीश्वरभेदजीवभेदजडान्तरभेदानां नित्यत्वसिद्धिः । जीवेश्वरभेदस्य जीवधर्मिकजीवान्तरभेदस्य च नित्यत्वे अविवादात्पञ्चविधभेदानां नित्यत्वं सिध्यतीति भावः । एवं च मतत्रयमप्येकाशयमिति मन्तव्यम् । निबन्धान्तरे **नित्ये** नित्ये वर्गे **त्रयाणां** प्रध्वंसान्योन्याभावात्यन्ताभावानां **सिद्धिरन्तर्भाव** इत्यर्थः । तथाचाभावनित्यत्वस्य नैयायिकैरङ्गीकृतत्वादन्योन्याभावभेदयोश्चानतिरेकाद्भेदस्य नित्यत्वं तत्सम्मतमेवेति भेदनित्यत्वरूपस्योक्तार्थे तार्किकसम्मतिपरमिदं वाक्यमित्यपि विन्यस्तम् ।

**सु० — प्रपञ्चशब्दो भेदपञ्चकवाचीत्येतत्कुत इति चेत् । परोक्तानुपपत्तेरेवेति ब्रूमः । समानार्थायाः श्रुतेश्चेत्याह** जीवेति ।

अनु० — "जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ॥
जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥

मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः ॥

सोऽयं सत्यो ह्यनादिश्च ॥

अत्र चशब्दास्तथाशब्दौ चान्योन्यसमुच्चये। एवशब्दावभेदसाहित्यव्यवच्छेदार्थौ। एष भेदपञ्चकः प्रपञ्च उक्तः। प्रपञ्चो यदि विद्येतेत्यादावित्यर्थः।

सोऽयं सत्यो ह्यनादिश्चेत्यनेन अत्रापि प्रतिज्ञाद्वयं बहिरेव कर्तव्यमिति ज्ञायते। तत्रानादित्वानङ्गीकारे बाधकं सादिश्चेदिति।

सादिश्चेन्नाशमाप्नुयात् ॥

अनेन प्रथमश्लोकस्य पूर्वार्धो व्याख्यातो भवति। सत्यत्वाभावे बाधकं स्वयमूहनीयमित्यभिप्रेत्य तदुपसंहृतं द्वैतमिति।

द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ॥"

इति श्रुतेः

तेनाज्ञात इत्युक्तार्थं भवति। श्रुत्यन्तरेणाव्याख्यातत्वान्मायामात्रमित्येतद्व्याचष्टे मितमिति।

मितं त्रातं मायाख्यहरिविद्यया ॥

माङ् माने त्रैङ् पालन इत्याभ्यां घञर्थे कविधानमिति कर्मणि कप्रत्यये मात्रमिति भवति। धातुद्वयादप्येकः प्रत्ययः अदिभूभ्यां डुतच् अद्भुतमित्यादौ दृष्टः। 'विष्णोः प्रज्ञप्तिरेवैका शब्दैरेवाभिधीयते' इत्यतो मायाख्यहरिविद्ययेत्युपपन्नम्।

शे० — अनेनेति। समानार्थायां श्रुतावुक्तप्रतिज्ञाद्वयकरणेनेत्यर्थः॥ अत्रापीति। प्रपञ्चो यदीत्यादिश्रुतावित्यर्थः॥ बाधकमिति। कल्पितश्चेन्निवर्तेतेत्येवंरूपमित्यर्थः॥ तेनेति। द्वैतमित्याद्युपसंहारेणेत्यर्थः। नन्वातोऽनुपसर्गे क इति कर्तरि कप्रत्ययविधानेऽपि कर्मणि तदविधानात्कथमत्र कर्मणि कप्रत्यय इत्यत आह घञर्थ इति। 'गृहवृदृनिश्चिगमश्चे'त्येतत्सूत्रीयाद्घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थमि'ति वार्तिकान्मीयते त्रायत इति कर्मणि कप्रत्यये आदेच उपदेशेऽशितीत्यात्वे आतो लोप इटि चेत्याकारलोपे मात्रशब्दनिष्पत्तिरिति भावः। न च स्थास्नादिष्वभावादस्मात्कथं कप्रत्यय इति वाच्यम्। अभियुक्तप्रयोगानुसारेणास्यापि तत्रोपक्षेयत्वादित्यत्र तात्पर्यात्। ननु कथं धातुद्वयादेकः प्रत्ययः। परश्चेति सूत्राद्धातोरिति पञ्चम्या च प्रत्ययस्य धातोरव्यवहितपरत्वस्यैव प्राप्तत्वात्तस्मादित्युत्तरस्येत्यत्र नैरन्तर्येणोच्चारणार्थकनिर्दिष्टग्रहणानुवृत्त्या पञ्चमीनिर्दिष्टादव्यवहितोत्तरमेव कार्यं भवतीति

विज्ञानात् । न हि धातुद्वयात्प्रत्ययोत्पत्तावव्यवहितपरत्वं संभवति, मध्ये धात्वन्तरेण व्यवधानात् । धातोरित्येकवचनादपि न धातुद्वयादेकप्रत्ययोत्पत्तिरिति लाभाच्च । विधायकोदाहरणयोरभावाच्चेत्यत आह **धातुद्वयादपीति** । अदभक्षणे भूसत्तायामिति धातुद्वयात् डुतच्प्रत्यये टिलोपे व सत्यद्भुतमिति रूपसिद्धिरिति भावः । न च 'अदिभुवो डुतच्' इति सूत्रं पठित्वा अद्युपपदे भूधातोर्डुतच्प्रत्ययो भवतीत्येव प्रसिद्धोणादिसूत्रवृत्तौ व्याख्यानात्कथमदिभूभ्यां डुतजित्यस्य धातुद्वयादेकप्रत्ययविधायकतयोपन्यासः । कथं च अद्युपपदे भूधातोः डुतचि निष्पन्नस्याद्भुतशब्दस्य धातुद्वयादेकः प्रत्यय इत्यत्र दृष्टान्तीकरणमिति वाच्यम् । अदिभूभ्यामित्येव मूलकोशेषु पाठदर्शनात् । वृत्त्यन्तरेऽप्यदिभूभ्यामित्येव पठितत्वात्तथैव व्याख्यातत्वात् । धातुव्यतिरिक्तस्यादीत्युपपदस्याभावेन चादिभुवो डुतजिति पाठस्य कल्पितत्वात् । अत एव निघण्टुभाष्ये धातुसमुदायादेकः प्रत्ययो बहुषु स्थलेषु व्याख्यातः तत्संग्रहायैव चेह टीकायामद्भुतमित्यादावित्यादि पदमित्यवधेयम् ।

स० — **घञर्थे कविधानमिति** । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थमिति वार्तिकादिति भावः । न च स्थास्नादिष्वभावात् कथं कप्रत्यय इति वाच्यम् । अभियुक्तप्रयोगानुसारेण अस्यापि तत्रोपसंख्येयत्वात् । अन्यथा स्थास्नादीनामपि तत्राग्रहणप्रसंगादिति भावः कप्रत्यय इत्यनन्तरं 'आदेच उपदेशे शिती'त्यात्वे आतो लोप इटि चे'त्याकारलोपे चेति शेषः ॥ **अदिभूभ्यामिति** । अनेनोणादिसूत्रेण डुतच्प्रत्यये विहिते अद्भुतमित्यादिरूपनिष्पत्तिर्दृष्टेत्यर्थः । अदिभूभ्यामित्येव मूलकोशे वृत्त्यन्तरे च पाठदर्शनात् अदिभुवो डुतजिति पाठः कल्पित एव । अत एव निघण्टुभाष्ये धातुसमुदायादेकः प्रत्ययो बहुषु स्थलेषु व्याख्यात इति भावः ।

प० — **परोक्तेति** । अस्मिन्नपि व्याख्यान इत्यादिना परोक्तेत्यर्थः ॥ **च शब्दा इति** । त्रय इत्यर्थः । यच्छब्दश्रवणमदाकाङ्क्षां पूरयन्योजयति **एष भेदपञ्चक इति** ॥ **अत्रापीति** । प्रागुदाहृताद्यमन्त्रेऽपि प्रपञ्चशब्दितो भेदपञ्चकोऽनादिर्भवितुमर्हतीति । सत्यो भवितुमर्हतीति प्रतिज्ञाद्वयं मन्त्राद्बहिरेव कर्तव्यमित्यर्थः । मायामात्रमित्युत्तरार्धे तत्सत्यत्वस्यापि साधनादिति भावः । प्रथमश्लोकस्य = प्रथममन्त्रस्य ॥ **ऊहनीयमिति** । भेदप्रपञ्चोऽमत्यश्चेद्वा येते त्याद्य त्यूहनीयमित्यर्थः ॥ **तेनेति** । उपसंहारपरार्धेन'अज्ञाते द्वैतं न विद्यत' इत्येतद्व्याख्यातमित्यर्थः ॥ **श्रुत्यन्तरेणेति** । इतिश्रुतेरित्युदाहृतश्रुत्यन्तरेणेत्यर्थः ॥ **कप्रत्यय इति** । 'लशक्वतद्धिते' इति ककारव्यञ्जनस्यापगमे 'आदेच उपदेशेऽशिती'त्यैकारस्यात्वे 'आतो लोप इटि च' इत्याकारलोपे रूपमिति भावः । ननु धातोरित्यधिकारसूत्रे एकवचनेन धातोर्निर्देशाद्धातुद्वयात्कथं प्रत्ययोत्पत्तिरित्यत आह **धातुद्वयादिति** ।

**या०** — ननु कर्मणि कप्रत्ययस्याविधानात्कथमत्र कर्मणि कप्रत्यय इत्यत आह **घञर्थ इति** । घञर्थे कविधानमिति वार्तिकादित्यर्थः । घञ् चाकर्तरि च कारके इति कर्तृव्यतिरिक्ते कारके विहित इति भावः । कप्रत्यय इत्यस्यानन्तरं 'आदेच उपदेशेऽशिती'त्यात्वे 'आतो लोप इटि चे'त्याकारलोपे च सतीति शेषः । ननु धातुद्वयादेकः प्रत्ययो न कुत्रापि दृष्ट इत्यत आह **अदिभूभ्यामिति** । अदभक्षणे भूसत्तायामिति धातुद्वयात् डुतच्प्रत्यये टिलोपे च सति अद्भुतमिति रूपमुणादिसूत्रेण साधितं दृष्टमित्यर्थः । नन्वदिभुवो डुतजित्येवोणादिसूत्रपाठः । तस्य च अद्युपपदे भुवो डुतच्प्रत्ययो भवतीति व्याख्यानात्कथमेतन्निदर्शनं प्रकृत इति चेन्न । धातुसमुदायादेकस्य प्रत्ययस्य प्रायशो दर्शनेनाधुनिकैरेवं सूत्रपाठस्य साम्प्रतं कल्पितत्वात् । पूर्वतनस्तु पाठः अदिभूभ्यामित्येव । मूलकोशे वृत्त्यन्तरे च तथा दर्शनात् । अत एव निघण्टुभाष्ये धातुसमुदायात्प्रत्ययो बहुलस्थलेषु व्याख्यातः । तदेव च सुधायामादिपदेन विवक्षितमिति ध्येयम् ।

**श्री०** — **अत्रापि** प्रपञ्चो यदीति वाक्येऽपि । 'सोऽयं सत्यो ह्यनादिश्चे'ति प्रतिज्ञाद्वयं कृत्वा तत्रानादित्वमेवोपपादित सत्यता तु नोपपादिता, अत आह **सत्यत्वेति** । बाधकं=मायामात्रत्वानुपपत्तिरूपम् ॥ **मात्रमिति** मा त्रै आभ्यां धातुभ्यां कप्रत्यये ऐकारस्यात्वे तस्यापि लोपे प्रत्ययाकारे च मिलिते च सति मात्रेति प्रातिपदिकम् । ननु कर्मणि कप्रत्ययाविधानात्कथं कर्मणि कप्रत्यय इत्यतो घञर्थे इति वार्तिकमुदाहृतम् । घञर्थस्तु कर्मापि भवतीत्यर्थः ।

**च०** — **घञर्थ इति** । तादृग्वार्तिकानुशिष्टकर्मसाधनकप्रत्ययस्य कित्त्वादादेच उपदेशेऽशितीत्यात्वे 'आतो लोप इटि च' इत्याकारलोपे सति मात्रमिति निष्पद्यत इति भावः । धातुद्वयप्रकृतिकतामेकप्रत्ययस्यानुरूपनिदर्शनप्रदर्शनेनैव संघटयति **अदिभूभ्यामिति** । अदिभवत्युभयप्रकृतिके डुतचि डित्त्वाट्टिलोपेऽद्भुतमित्यौणादिकसूत्रनिष्पन्नं दृष्टमित्यर्थः । अथादिभुवो डुतजित्यौणादिसूत्रपाठस्तस्य चाद्युपपदे भुवो डुतजित्यर्थापत्तेर्नेदं निदर्शनं सङ्गच्छते । धातोरिति पञ्चमीनिर्दिष्टादव्यवहितोत्तरमेव कार्यं भवतीति 'प्रत्ययः' 'परश्च'इत्यतो विज्ञानान्मध्यधातुनाऽव्यवहित्या कथं धातुद्वयप्रकृतिकप्रत्ययोपगम इति चेन्मैवम्। मूलकोशेषु तादृशपाठस्यैवादर्शनात्तथैव वृत्त्यन्तरेषु व्याख्यातत्वाद्धातुव्यतिरिक्ततादृशोपपदराहित्यात्पाठान्तरस्य कल्पितत्वान्निघण्टुभाष्ये धातुसमुदायप्रकृतिकप्रत्ययोपगतेश्च सामञ्जस्यमिति स्थितम् ।

सु० अद्वैतं परमार्थत इत्येतद्व्याख्याति उत्तमोर्थ इति ।

अनु०— उत्तमोऽर्थो हरिस्त्वेकस्तदन्यन्मध्यमाधमम् ॥

तस्योपपादनं तदन्यदिति । यतस्तस्माद्धरेरन्यत्किञ्चिन्मध्यमं किञ्चिदधमं तस्मादुत्तमोऽर्थो हरिरेवेक इति । 'विकल्पो विनिवर्तेते'त्येतत्प्रपञ्चमत्यतायां स्फुटमिति न व्याकृतम् ।

इयमत्र योजना । 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा'इति पूर्वश्लोकेऽनादिमायया परमेश्वरप्रज्ञया तदिच्छया वा जीवजातस्य प्रकृत्यादिजडावृतज्ञानत्वलक्षणं सुप्तत्वं तयैव परमेश्वरादितत्त्वविषयपरोक्षज्ञानलक्षणं प्रबोधमभिधाय अपरोक्षज्ञानमप्युक्तम् । तेन जीवेश्वरयोर्जडेश्वरयोर्जीवजडयोश्च भेदाः प्रतिपादिताः । प्रभोरिच्छया निगडादिना पुरुषे बद्धे मुक्ते वा भेदत्रयदर्शनात् । →

शे०— तदन्यन्मध्यमाधममिति तदन्यस्य सर्वस्य मध्यमत्वमधमत्वं चोच्यत इत्यन्यथाप्रतीतिनिरासायाह किञ्चिदिति । ननु भवेदेवं पञ्चविधभेदस्यानादित्वसत्यत्वोपपादकतया श्लोकद्वयव्याख्यानम् । यदि प्रपञ्चो यदीत्यतः पूर्वत्र श्रुतौ भेदपञ्चकं तदनादित्वादिकं वा प्रसक्तं स्यात् । न चैतदस्ति । तत्कथं तत्समर्थनपरतया व्याख्यानम् । अस्तु वा कथञ्चित्प्रसक्तिव्युत्पादनेन श्लोकद्वयस्य तत्समर्थनपरत्वम् । तथाऽपि प्रथमश्लोके मायामात्रमित्य देरानर्थक्यमेव । तद्वचनस्य प्रकृतोपयोगाप्रतिभासादित्यत आह इयमत्रेति । विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते' इति प्रमाणं मनसि निधायाह परमेश्वरप्रज्ञयेति ॥ 'महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' इति प्रमाणं मनसि निधायाह तदिच्छया वेति । जीव इत्येकवचनं 'यदा नीतिपरो राजे'त्यादिवत् 'स्वर्गकामो यजेते'त्यादिवच्च जात्यभिप्रायं न तु जीवैक्याभिप्रायम् । तथा सति 'इति सृष्टौ विनिश्चिता' इति पूर्वेण 'स पूज्यः सर्वभावानामि'त्युत्तरेण च, जीवभेदवाक्येन विरोधप्रसङ्गादिति भावेनोक्तं जीवजातस्येति । न केवलं श्रुतौ 'अनादिमायया सुप्तः' इति यथास्थित एव सम्बन्धः किन्तु 'अतः प्रबोधोऽस्मादि'त्युक्तरीत्या 'अनादिमाया प्रबुध्यते' इत्यपीति भावेनोक्तं तयैवेति । प्रबुध्यत इति परोक्षज्ञानस्यैवोक्तत्वात् 'अद्वैतं बुध्यते' इति न परोक्षज्ञानाभिधायकं पौनरुक्त्यप्रसङ्गादिति भावेनोक्तमपरोक्षज्ञानमप्युक्तमिति । अत्रापि तयैवेत्यनुवर्तते । ईश्वरादितत्त्वविषयकमपरोक्षज्ञानमित्यर्थः ॥ भेदाः प्रतिपादिता इति । सन्तीति लब्धमित्यर्थः । अत एवाह प्रभोरित्यादि ।

स०— ननु पूर्वं भेदपञ्चकस्याप्रकृतत्वात्कथं तस्यानादिनित्यत्वं चोपपादयितुं श्लोकद्वयमिति व्याख्यानमित्याशङ्कां परिहरन् श्लोकद्वययोजनामाह इयमत्र योजनेति ।

प० — **इत्येतदिति** । द्वितीयमन्त्रस्य पूर्वार्धमित्यर्थः । अप्रकृतोपपादनपरत्वं मन्त्रयोर्निरस्यन्मन्त्रद्वयार्थं व्यनक्ति **इयमत्र योजनेत्यादिना दुर्वाद इत्यन्तेन** । मायाशब्दो जडप्रकृत्यादिसूक्ष्मतत्त्वपरोप्यत्रेति भावेनोक्तम् । **प्रकृत्यादिजडेति** । अनादिमाययेत्येतत्प्रबुध्यत इत्यत्राप्यन्वेतीति भावेनाह **तयैवेति** । परमेश्वरेच्छयैवेत्यर्थः । 'अद्वैतं बुध्यते तदा'इत्यत्रत्यबोधशब्दार्थोऽपरोक्षज्ञानमिति ।

या० — ननु पूर्वं भेदपञ्चकस्याप्रकृतत्वात्कथं तस्यानादिनित्यत्वं सत्यत्वं च क्रमेणोपपादयितुमिदं श्लोकद्वयमिति व्याख्यानमित्याशङ्कां परिहरन् श्लोकद्वययोजनां सम्यग्दर्शयति **इयमत्रेत्यादिना** ।

श्री० — किञ्चित् = श्रीतत्त्वम् । किञ्चित् = ब्रह्मादि ॥ **तयैवेति** । इच्छयैवेत्यर्थः । अनेन माययेत्यस्य प्रबुध्यत इत्यत्राप्यन्वयः सूचितः ।

च० — प्राक्भेदपञ्चकस्याप्रकान्ततया कथं तदनादित्वनित्यत्वसत्यत्वानि क्रमेण प्रतिपादयितुं श्लोकद्वयं प्रावर्तिष्टेत्याशङ्कामपाकुर्वन् श्लोकद्वययोजनां दर्शयति **इयमत्र योजनेति** ॥ **इत्यादिविशेषसामर्थ्यादिति** । धर्मिणामनादित्वोक्त्या भेदपञ्चकेऽप्यनादित्वं लब्धमित्यर्थः ।

—> **सु० — प्राक् 'प्रभवस्सर्वभावानामि'ति भावशब्दोक्तानां जीवानां मिथो भेदोऽप्युक्तः । तत एवावरणानां जडानामपि मिथो भेदोऽर्थाल्लभ्यते । तेषां च पञ्चानामपि भेदानाम् 'अनादिमायया' 'अजमनिद्रम्' इत्यादिविशेषणसामर्थ्यादिनाऽनादित्वमपि लब्धम् । तदेतत्पञ्चभेदस्य सत्यत्वमनादित्वं चोपपादयितुमिदं श्लोकद्वयम् । तत्र तावदनादित्वं विपक्षे बाधकप्रदर्शनेनोपपादयति** प्रपञ्च इति । (अनु· २२३४ पृष्ठे द्रष्टव्यम् )

**यदि च जडजीवभेदो निवर्तेत तदा जीवानां जडत्वापत्त्या मोक्षशास्त्रवैयर्थ्यमित्यादिरूपेण निवर्तेतेत्यस्यानिष्टत्वं द्रष्टव्यम् । न संशय इति** व्याप्तेर्निश्चयमाह । **एवं भेदपञ्चकस्यानादितामुपपाद्य सत्यतायां प्रमाणमाह** मायामात्रमिति । **यस्मादिदं प्रपञ्चशब्दोक्तं द्वैतमुक्तरीत्या मायामात्रं तस्मात्सत्यम् । न ह्यविद्यमानमीश्वरप्रज्ञाविषयो भवति । भ्रान्तित्वप्रसङ्गात् । नाप्यविद्यमानं केनापि रक्ष्यते । अत्र द्वयोर्भावो द्विता । तदीयो वर्गो द्वैतम् । सामान्ये नपुंसकम् । प्रपञ्चसंबन्धस्तु प्रकरणाल्लभ्यत इति ज्ञातव्यम् । तर्ह्यद्वैतस्सर्वभावानामित्यादिकथमुक्तमित्यत** आह अद्वैतमिति । **यदिदं परमेश्वरस्याद्वैतत्वं (च) विशेषणमुक्तं न तत् द्वितीयवस्तुराहित्याभिप्रायेण । किन्तु परमार्थतः ।** ल्यब्लोपनिमित्ता **पञ्चमी । उत्तममर्थममिप्रेत्येति । सप्तम्यर्थे वा तसिः । उत्तमार्थविषय इति । भेदसत्यताऽनङ्गीकारे बाधकं चाह** विकल्प इति । **विकल्पः प्रकृतो भेदो यदि केनचिदज्ञानादिना कल्पितः स्यात्तर्हि चन्द्रभेदवन्निवर्तेत । बाध्येत । न च बाध्यते । तस्मान्न कल्पितः । किन्तु सत्य एवेति । उपसंहरति**

उपदेशादिति । **तदेवमुपदेशाच्छ्रुत्याद्यनुसारित्वात् अयमेव सतां वादः** । **यो भेदसत्यत्वादिविषयः । द्वैतं न विद्यत इति तु तत्त्वेऽज्ञाते सति भवति । अतो दुर्वाद इति ।**

**शे० — मिथो भेद इति** । भावानामिति बहुवचनेन भावशब्दोक्तजीवानां बहुत्वोक्तेर्बहुत्वस्य च बाधकाभावे भेदसामानाधिकरण्यनियमादिति भावः ॥ **तत एवेति** । आव्रियमाणजीवभेदादेवेत्यर्थः । जीवानां भेदेऽप्यावरणैक्ये एकस्य तत्त्वज्ञानेनावरणनिवृत्तौ अनिर्मोक्षप्रसक्तेस्तन्निवृत्तौ च सर्वेषां मुक्तिप्रसक्तेः तदावरणभेदसिद्धिरिति भावः । एवं पञ्चविधभेदप्रसक्तिं तत्सत्यत्वप्रसक्तिं चोक्त्वा तदनादित्वप्रसक्तिमपि दर्शयति **तेषां चेति** । **इत्यादिविशेषणसामर्थ्यादिति** । अत्रादिपदेनोक्तरूपसुप्तत्वविशेषणपरिग्रहः । तेनानाद्यावरणावृतत्वमाव्रियमाणानादित्वं विना न सम्भवतीति मायागतानादित्वविशेषणसामर्थ्यात्सुप्तपदेनैवावृततयोक्तानां जीवानामप्यनादित्वसिद्धिः । एवं च धर्मिणामनादित्वोक्त्या आक्षेपाद्वा सिद्ध्या तद्भेदपञ्चकस्याप्यनादित्वं लब्धमित्यर्थः । निवर्तेतेत्यस्येष्टापादनत्वं परिहरति **यदि चेति** ॥ **इत्यादिरूपेणेति** । यदि जडेश्वरयोर्भेदो नश्येत्तदेश्वरस्य जडत्वप्रसक्त्या सत्यं ज्ञानमित्यादिशास्त्रस्य विरुद्धार्थत्वप्रसङ्गः । यदि जडानां परस्परं भेदो नश्येत्तदा विद्याया अप्यविद्यात्वापत्त्या तमेवं विद्वानित्यादिशास्त्रस्य विरुद्धार्थत्वापत्तिः । यदि जीवानां परस्परं भेदो नश्येत्तदा परस्परमैक्यापत्त्या परस्परगतसुखदुःखाद्यनुसन्धानापत्तिः । यदि च जीवेश्वरभेदो नश्येत्तदैक्यप्राप्त्येश्वरस्य जीवस्येव सुखदुःखाद्यनुभवस्य, जीवस्यापीश्वरस्येव सार्वज्ञ्याद्यनुभवस्य च प्रसक्त्या यथायथं श्रुत्यनुभवरूपप्रमाणविरोधाद्यापत्तिरित्येवंरूपेणेत्यर्थः ॥ **उक्तरीत्येति** । मितं त्रातं चेत्याद्युक्तरीत्येत्यर्थः । ईश्वरेण ज्ञातत्वाद्रक्षितत्वाच्च न द्वैतं भ्रान्तिकल्पितमिति भावः । परमेश्वरेण ज्ञातत्वेऽपि कुतो न भ्रान्तिकल्पितत्वमित्यतो 'न हीश्वरस्य भ्रान्तिरि'ति तत्त्वनिर्णयं मनसि निधायाह **न हीति** ॥ **भ्रान्तित्वप्रसङ्गादिति** । न च तद्युक्तं निरवद्यत्वश्रुतिविरोधादिति भावः । द्वितीयहेतोरप्यप्रयोजकत्वं परिहरति **नापीति** । **द्वयोर्भावो द्वितेति** । भेद इत्यर्थः । ननु तदीयो वर्गो द्वैतश्चेत्कथं द्वैतमिति नपुंसकमित्यत आह **सामान्य इति** ॥ **पञ्चसम्बन्धस्त्विति** । भेदवर्गस्य पञ्चवर्गात्मकत्वं प्रकरणलभ्यमित्यर्थः । निवर्त्यशङ्काप्रदर्शनपूर्वकं चतुर्थं पादमवतारयति **तर्हीति** । यदि पञ्चविधो भेदः सत्यः स्यादित्यर्थः । **कथं** न कथञ्चिदुपपद्यतेऽतोऽयुक्तमिति । अथवा कथं व्याख्येय इत्यर्थः । **आह** विरोधित्वेन शङ्कितस्य श्रुत्यन्तरस्यार्थान्तरमिति शेषः ॥ **अद्वैतत्वमिति** । अनेनाद्वैतमिति भावप्रधानो निर्देश इत्युक्तं भवति ॥ **उक्तमिति** । अद्वैतः सर्वभावानामित्यादाविति शेषः ॥ **ल्यब्लोप इति** । कृतव्याख्यानमेतत् ॥ **सप्तम्यर्थ इति** । आद्यादिभ्य उपसंख्यानादिति भावः । सप्तम्यर्थमेव दर्शयति **उत्तमेति** । **बाधकं चेति** । चशब्दो मायामात्रमित्युक्ततत्सत्यत्वसाधकसमुच्चयार्थः । श्रुत्याद्यनुसारादित्यादिपदेन न्यथा यद्यादिशब्दवैयर्थ्यमित्युक्तयुक्तिपरिग्रहः ।

स० — **इत्यादिविशेषणसामर्थ्यादिनेति** । मायाशब्देनानन्तजीवावरकप्रकृतेरभिप्रेतत्वेन तत्समभिव्याहृततृतीयया चावरणताऽभिधाने आवरकत्वविशिष्टाया मायाया अनादित्वमित्युक्तं स्यात् । इदं चाध्रियमाणजीवानादित्वं विना न संभवतीति जीवानामप्यनादित्वं प्राप्तम् । अजमित्यनेन चेश्वरस्य अनादित्वम् । एवं च भेदपञ्चकेऽप्यनादित्वं प्राप्तमित्यूह्यम् । सामर्थ्यादिनेत्यत्रादिपदेन मायेश्वरयो-रनाद्यजपदाभ्यां साक्षादप्यनादित्वमुच्यत इति सूचयति । क्वचिदित्यादिविशेषणसामर्थ्यादित्येव पाठः ।

प० — **लब्धमिति** । अजमितीश्वरस्य, अनादीत्युक्त्या जडप्रकृत्यादेः, तदावृतत्वोक्त्या जीवानां चानादित्वोक्त्याऽर्थात्तद्भेदानामपि लब्धमित्यर्थः ॥ **उक्तरीत्येति** । 'मितं त्रातं मायाख्यहरि-विग्रये'त्युक्तरीत्येत्यर्थः । ततश्च किमित्याकाङ्क्षायामध्याहारेण पूरयति **तत्सत्यमिति** । तत्तस्माद्भगवता मितत्वात्त्रातत्वाच्चेत्यर्थः । अत एव प्राक् यस्मादित्युक्तम् । क्रमेण हेतुद्वयस्याप्रयोजकत्वं निराह **न हीति** । द्वैतपदेन पूर्वार्धोक्तभेदपञ्चकलाभप्रकारं दर्शयति **अत्र द्वयोरिति** ॥ **द्वितेति** । भेद इत्यर्थः ॥ **सामान्येति** । नपुंसकं पुलिङ्गस्त्रीलिङ्गयोरनुगतं सामान्यमेव न तु लिङ्गान्तरमिति शाब्दिकमर्यादया सामान्ये विवक्षिते पुलिङ्गेऽपि वर्गेऽर्थे नपुंसकं युक्तमित्यर्थः । नन्वेतावता पदार्थद्वयसंबन्धिभेदवर्ग एव लभ्यते पञ्चवर्गः कथं लभ्यत इत्यत आह **पञ्चसम्बन्ध इति** ॥ **बाधकं चेति** । न केवलं मायामात्र-मित्यनेनोक्तं प्रमाणमात्रमिति चशब्दार्थः । तत्त्वे ज्ञात इत्यत्र अज्ञात इति विभागः ॥ छ ॥ प्रपञ्चो यदीति श्रुत्यर्थ ॥ छ ॥

या० — **इत्यादिविशेषणसामर्थ्यादिनेति** । अत्र प्रथमादिपदेनानादिमाययावृतज्ञानत्वलक्षणं सुप्तत्वलक्षणं सुप्तविशेषणं ग्राह्यम् । तेनानाद्यावरणावृतत्वमाध्रियमाणानादित्वं विना न संभवतीति सुप्तपदेनावृततयोक्तानां जीवानामप्यनादितासिद्धिः । एवञ्च धर्मिणामनादित्वोक्त्या भेदपञ्चकेऽप्यनादित्वं लब्धमित्यर्थः । अत्रानादित्वमावरणभूतजडप्रकृतीनामीश्वरस्य चानाद्यजडपदाभ्यां साक्षादेवोक्तम् । न तथा सुप्तपदोदितजीवानां किन्तु तत्रानाद्यावरणावृतत्वरूपसुप्तत्वाक्षिप्तमेवेत्याशयेन सामर्थ्यादिनेत्युक्तम् । एवञ्च क्वचिच्छ्रुतेनैव धर्म्यनादित्वेन भेदानादित्वलाभः । क्वचिच्चाक्षिप्तेन धर्म्यनादित्वेनेत्युक्तं भवति ॥ **द्वयोर्भावो द्वितेति** । भेद इत्यर्थः ।

श्री० — **मिथो भेद इति** । भावानामिति बहुवचनेनेत्यर्थः ॥ **तत एवेति** । जीवानां भेदेऽप्यावरणस्याभेदे एकस्य तत्त्वज्ञानादावरणनिवृत्तौ सर्वेषां मुक्तिः स्यादिति भावः ॥ **अनिष्टत्वमिति** । यदि जडेश्वरभेदो नश्येत् तदेश्वरस्य जडत्वापत्त्या 'सत्यं ज्ञानमि'त्यादिशास्त्रस्य विरुद्धार्थतापत्तिः । यदि जडानां परस्परभेदो नश्येत् तदा विद्याया अप्यविद्यात्वापत्त्या 'तमेवं विद्वानि'त्यादिशास्त्रस्य विरुद्धार्थतापत्तिः । यदि जीवानां परस्परभेदो नश्येत् तदा परस्परैक्यापत्त्या परस्परगतसुखाद्यनुसन्धा-

नापत्तिः । यदि च जीवेश्वरयोर्भेदो नश्येत् तदेश्वरस्य दुःखानुभवो जीवस्य वा सार्वज्ञ्याद्यनुभवः स्यात् । न चात्रेष्टापत्तिरिति वाच्यम् । प्रमाणाभावात् । यथायथं श्रुत्यनुभवरूपप्रमाणविरोधाच्च अप्रामाणिकप्रमाणविरुद्धार्थस्वीकारापत्तिः इत्यादिरूपेणानिष्टत्वमित्यर्थः । द्विता = भेद इत्यर्थः । तदीयः = भेदसम्बन्धी । तर्हि वर्गार्थकद्वैतशब्दस्य पुलिङ्गता स्यादित्यत आह **सामान्य इति** । भेदसामान्यं= सामान्याकारेण भेदः । ननु भेदसमुदायस्य पञ्चत्वं कथं लभ्यत इत्यत आह **पञ्चेति** । 'प्रपञ्चो यदी'ति प्रकरणादित्यर्थः ।

च० — **द्वयोर्भावो द्वितेति** । भेद इत्यर्थः ॥ **ल्यब्लोपनिमित्तेति** । ल्यब्लोपे कर्मण्यधिकरणे चोपसङ्ख्यानमिति वार्तिकादिति भावः ।

सु० — अधुना परिणामवादिना विवर्तवादिना च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रार्थतया गृहीताम् 'उत तमादेशमप्राक्ष' इत्यादिकां श्रुतिं व्याख्याति ।

तत्र परिणामवादिनो व्याख्यानम् 'उत तमादेशमप्राक्षः, येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि'ति जगतो ब्रह्मपरिणामतया ततोऽनन्यत्वाभिप्रायेण तद्विज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तत्र सर्वस्य ब्रह्मोपादानतामजानता उपादानोपादेययोरपि भेदं मन्यमानेन श्वेतकेतुना अन्यज्ञाने सत्यन्यज्ञानस्य क्वाप्यदर्शनात् । 'कथं नु भगवः स आदेशो भवती'ति चोदिते जगतो ब्रह्मोपादानतया तदनन्यत्वमुपदेक्ष्यन् लौकिकप्रतीतिसिद्धं कारणात्कार्यस्यानन्यत्वं, तज्ज्ञानेन तज्ज्ञानं च दर्शयति 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् यथा । सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात् । वाचाऽऽरम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यम्' इति । यथैकमृत्पिण्डादिपरिणामानां घटादीनां तदनन्यया तज्ज्ञानेन ज्ञाततेति दृष्टान्तत्रयार्थः । अनन्यत्वे कथं कार्यत्वमित्याशङ्क्य व्यवहारार्थमित्याह वाचाऽऽरम्भणमिति ( छां. उ. ६-१ ) । वाचेति षष्ठ्यर्थे तृतीया । वाग्ग्रहणं समस्तेन्द्रियव्यवहारोपलक्षणम् । विकारोऽभिधेयो घटादिः, नामधेयं तदभिधानमिति कुम्भादेर्वाच्यस्य तद्वाचकानां च स्वरूपकार्यव्यपदेशादिभेदात्परस्परं भेदो वास्तव इत्युक्तम् । एतैर्हेतुभिः परस्परं भेदश्चेत्कारणादपि तैरेव भेद इति पूर्वपक्षं निषेद्धुमाह मृत्तिकेत्येव सत्यमिति । इतिशब्दः प्रकारवचनः । यत्प्रकारेण यत्सत्तया मृत्तिका सती तत्प्रकारेणैव मृण्मयं सत्यम् ।

नाश्वमहिषादिवन्नैरपेक्ष्येणेति ।

विवर्तवादी तु व्याचष्टे । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्ताकाङ्क्षायामुच्यते यथा सोम्येति । एतदुक्तं भवति । एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृण्मयं घटादिकं मृदात्मकत्वाविशेषाद्विज्ञातं भवेत् । यतो वाचारम्भणं विकारो नामधेयम् । वाचा केवलमस्तीत्यारभ्यते । विकारो घटः शराव उदश्चनं चेति । न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति । नामधेयमात्रं ह्येतदनृतम् । मृत्तिकेत्येव सत्यमित्येष ब्रह्मणो दृष्टान्त आम्नात इति ।

शे० — अनन्यत्वे कथं कार्यत्वमित्याशङ्क्येति । घटादीनां मृदादित इति शेषः । तथा च घटादीनां मृदाद्यनन्यत्वे न मृदादिकार्यत्वं भवेत् । काणादवादेन कारणात्कार्यस्य द्रव्यान्तरत्वस्यैव स्थितेरिति शङ्कार्थः । भवेदेवं यदि कारणात्कार्यस्य द्रव्यान्तरत्वं स्यात् । न चैतदस्ति । यथा ह्येकस्यैव देवदत्तस्यावस्थाभेदैर्बालो युवा स्थविर इति बुद्धिशब्दादयः कार्यविशेषाश्च दृश्यन्ते, तथा मृद्धिरण्यादेः द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण बुद्धिशब्दान्तराद्युपपत्त्या घटादेर्मृदाद्यन्यत्वासाधकत्वादिति परिहार-वाक्याभिप्रायं मनसि निधायोक्तशङ्कापरिहारकत्वेन तद्योजयति व्यवहारार्थमित्याहेति । वागादिपूर्वक-तत्तदिन्द्रियसाध्यजलाहरणादिव्यवहारार्थमित्यर्थः । अनेन श्रुतौ वाचारम्भणमित्यत्र वाचेति व्यस्तं पदमित्युक्तं भवति । कथं व्यवहारार्थत्वस्य श्रुतौ लाभ इत्यतो वाचेति पदादेवेत्यभिप्रेत्य तेन तल्लाभ-मुपपादयितुं तृतीयार्थं तावदाह वाचेतीति ॥ षष्ठ्यर्थ इति । षष्ठ्यर्थश्चात्र तादर्थ्यमित्यवधेयम् । तथाऽपि वागर्थत्वमात्रलाभेऽपि न वाग्व्यवहारार्थताया लाभः । लक्षणया कथञ्चिद्वाग्व्यवहारार्थत्व-लाभेऽपि न सकलेन्द्रियसाध्यव्यवहारार्थत्वस्य लाभ इत्यतोऽत्र वाक्पदेनेन्द्रियविशेषवाचिना तत्सामान्यं लक्षयित्वा लक्षितलक्षणया तत्तत्साध्यव्यवहारस्य लाभोपपत्तेर्नानुपपत्तिरित्याशयेनाह वाग्ग्रहणमिति । संस्थानान्तरनामधेयान्तरसमर्पकपदाश्रवणात्कथं संस्थानान्तरादिभाक्त्वमात्रेण बुद्धिशब्दान्तरादेरुपपत्तिवर्णन-मित्यतो विकारनामधेयपदे तत्समर्पके इति भावेन तयोरर्थमाह विकार इत्यादिना । तथा चायं श्रुत्यर्थः । विकारो घटादिर्नामधेयं च वाचा वाक्पूर्वकजलाहरणादिव्यवहारार्थम् । आरम्भणमारभ्यत इत्यारम्भणमिति कर्मणि ल्युट् । आरभ्यते रलयोरभेदात् स्पृश्यते मृदादिद्रव्येणेति शेषः । मृद्धिरण्यादि-द्रव्यमेव व्यवहारार्थं विकारादिभाग्भवतीति यावदिति । इदानीं 'मृत्तिकेत्येव सत्यमि'त्येतद्व्यावर्त्यशङ्का-प्रदर्शनेन योजयितुं तदुपयोगितया 'वाचारम्भणं विकारो नामधेयमि'त्येतद्वाक्यसिद्धमर्थं तावदनुवदति इति कुम्भादेरिति। स्वरूपेत्यादि। विकारत्वनामधेयत्वरूपस्वरूपभेदात् जलाहरणादिरूपकार्यभेदाद्विकारो नामधेयमिति शब्दभेदादादिपदगृहीताद्बुद्धिभेदाच्च विकारनामधेययोर्भेद इति सिद्धमित्यर्थः । इदानी-

मुत्तरवाक्यव्यावर्त्यशङ्कां दर्शयित्वा तत्परिहारत्वेन तत्पठति **एतैरिति** । स्वरूपभेदादिभिः कार्याणां परस्परं भेदश्चेत्कार्यत्वादिरूपैस्तैरेव हेतुभिः कारणादपि कार्यस्य स स्यादित्यर्थः । अन्यथा तत्रैव व्यभिचरितस्य तस्य विकारनामधेययोरपि तत्साधकत्वं न स्यादिति भावः । इतिशब्दस्य प्रकारार्थत्वे लब्धमर्थमाह **यत्प्रकारेणेति** । मृत्तिकाप्रकारेणेत्यर्थः । तस्यैव विशिष्य प्रदर्शनं यत्सत्तयेति । तथा च तत्सत्तानिरपेक्षसत्ताकत्वोपाधिग्रस्ततयोक्तहेतूनां न कार्यकारणभेदसाधकत्वमिति भावः । उक्तव्याख्यानद्वयसंग्रहार्थं विकारविवर्तेति द्वयं गृहीतम् ।

स० — **अनन्यत्वे कथं कार्यत्वमित्याशङ्क्येति** । घटादिरूपकार्यस्य मृदादिकारणानन्यत्वे तस्यापि कारणत्वापत्त्या तद्विरुद्धकार्यत्वानुपपत्त्या न तस्य कारणाभेद इत्याशङ्क्याभेदेऽपि वागादिसमस्तेन्द्रियव्यवहारनिष्पादकत्वेन व्यक्तेरेव कार्यत्वरूपत्वात् युक्तं कार्यत्वमिति भावः । **नामधेयं तदभिधानमिति** । तथाच वाच्यवाचकात्मकसर्वं व्यक्त्या व्यवहारनिष्पादकत्वात् कार्यमिति, 'कथं कार्यत्वमि'तिशङ्कानिरास इति ध्येयम् । वाचारम्भणं विकारो नामधेयमित्येतद्वाक्यार्थानुवादपूर्वकं अधिकं च शङ्कते **इति कुम्भादेरित्यादिना** । इतिशब्दस्य नैरर्थक्यं परिहरति **इतिशब्द इति** । फलितमाह **यत्प्रकारेणेति** । मृत्तिकाप्रकारेणैवेत्यर्थः । तस्यैव तात्पर्यमाह **यत्सत्तयेति** । इति यावदिति शेषः । तथाच सत्तारूपप्रकारेणेत्यर्थ इत्युक्तं भवति ।

नवीनास्तु **'अनन्यत्वे कथं कार्यत्वमिति** । घटादीनामिति वर्तते । एवञ्च घटादीनां मृदनन्यत्वे मृत्कार्यत्वं कथमङ्गीकार्यम् । एकस्यैव पौर्वापर्यायोगात् । तथाच कार्यकारणभावस्य भेदव्याप्तत्वादनन्यत्वं नोपपद्यत इति शङ्कार्थः । कार्यकारणभावेऽप्यनन्यत्वं व्यवहारादिप्रमाणादिसिद्धत्वादङ्गीकार्यम् । व्याप्तेरप्रयोजकत्वात् । तन्मते कार्यस्य कारणानन्यत्वेऽपि कारणस्य कार्यानन्यत्वेन उक्तदोषाभावाच्चेति भावेन परिहरतीत्याह **व्यवहारार्थमित्याहेति** ॥ **समस्तेन्द्रियव्यवहारेति** । घटादौ संभावितसमस्तेन्द्रियव्यवहारेत्यर्थः । एतन्मते मृदाद्युपादानं घटाद्यभिधेयात्मना तदभिधायकशब्दात्मना च परिणमत इत्यभिप्रेतम् । तन्नामरूपाभ्यां व्याक्रियतेत्यादिश्रुत्यर्थसाम्यात् । अतो मृद्विकारप्रसङ्गे नामधेयग्रहणमुपपन्नमिति ज्ञातव्यम् । अत एव सिद्धान्ते विकारग्रहणेनैव नामधेयस्यापि ग्रहणसंभवादिति वक्ष्यति । ततश्चायं श्रुतिवाक्यार्थः । विकारो घटादि तदभिधानं चेति द्वयं मृत्कार्यं मृदभिन्नमङ्गीकार्यं कुतः । यतस्तद्वाचारम्भणं वाचा मृद्घट इति सामानाधिकरण्येन व्यवह्रियते । चक्षुरादिना च तथा ज्ञायत इति उपोद्घातसङ्गत्या एतद्वाक्यलब्धमानुषङ्गिकप्रमेयं दर्शयन् उत्तरवाक्यमवतारयति **इति कुम्भादेरित्यादिना** ॥ **स्वरूपेति** । अत्र स्वरूपशब्देन स्वस्य रूपं स्वरूपमिति व्युत्पत्त्या असाधारणधर्मो विवक्षितः । अन्यथा साध्याविशिष्ट्यप्रसङ्गादित्यवधेयम् । विकारो नामधेयमित्युक्त्या विकारत्वनामधेयत्वरूपस्वरूपभेदः,

विकारनामधेयशब्दात्मकव्यपदेशभेदः, जलाहरणादितदुचितार्थक्रियारूपकार्यभेदश्च सूचित इति ज्ञातव्यम् ॥ **इत्युक्तमिति** । इत्यपि लब्धमित्यर्थः ॥ **पूर्वपक्षमिति** । पूर्वं अनन्यत्वे कथं कार्यत्वमित्याशङ्का तदवस्थेति भावः ॥ **यत्प्रकारेणेत्यादि** । तथाच तत्सत्तानिरपेक्षसत्ताकत्वोपाधिग्रस्तत्वादनुमानानां दुर्बलतयोक्तप्रमाणैः अनन्यतासिद्धिरप्रत्यूहैवेति भावः' इति व्याचक्षते ।

**प०** — परिणामिवादिकृतं व्याख्यानं श्रीभाष्याद्युक्त श्रुतिवाक्योदाहरणपूर्वमनुवदति **उत तमित्यादिना विवर्तवादीत्यतः प्राक्तनग्रन्थेन** ॥ **उपदेक्ष्यन्निति** । 'एवमेव खलु सोम्येमाः प्रजाः सन्मूलाः' इत्यादिना ब्रह्मानन्यत्वोपदेशं करिष्यन्नित्यर्थः । उदाहृतश्रुतिवाक्यार्थमाह **यथैकमृत्पिण्डादीति** । मृत्पिण्डलोहमणिनखनिकृन्तनपरिणामानामित्यर्थः । घटादीनां घटलोहमयकार्ष्णायसानामित्यर्थः । दृष्टान्तत्रयगतवाक्यशेषत्रयमवतारयति **अनन्यत्व इति** । मृत्पिण्डादिभिर्घटादीनामनन्यत्वइत्यर्थः ॥ **व्यवहारार्थमिति** । अयं घटः घटेन जलमाहरेत्याद्यभिज्ञाभिलपनादिव्यवहारसिद्ध्यर्थमित्यर्थः । **षष्ठ्यर्थ इति** । वाचः वाग्व्यवहारस्येत्यर्थे तृतीयेत्यर्थः ॥ **समस्तेन्द्रिय(व्यापार)व्यवहारेति** । अभिज्ञा=प्रत्यभिज्ञा । हानोपादानादिरूपज्ञानेन्द्रियमात्रजन्यव्यापारस्येत्युपलक्ष्यत इति भावः । सिद्ध्यर्थमिति शेषः । रलयोरभेदेनारम्भणशब्दोत्र कर्मणि ल्युडन्तः सन् स्पृश्यमानवाची । तथाच घटेनोदकमाहरेत्यादिव्यवहारार्थं घटादिविकारो घटादिनामधेयं वाचारम्भणमालभ्यमानं मृदादिद्रव्येण स्पृश्यत इत्यर्थः । व्यवहारसिद्ध्यर्थं मृदादिकारणमेवावस्थान्तरनामान्तरभाग्भवतीति यावत् । अत्र सुधायां लेखकदोषात्किञ्चिद्वाक्यं पतितं न समग्रमित्याहुः । मृत्तिकेत्येव सत्यमिति योजयितुं पूर्वभागलब्धार्थमाह **इति कुम्भादेरित्यादिना** ॥ **स्वरूपेति** । पृथुबुध्नोदराद्याकारभेदजलाहरणादिकार्यभेदघटादिव्यपदेशाभिज्ञादिभेदादित्यर्थः ॥ **परस्परमिति** । वाच्यानां घटपटादीनां घटपटादिशब्दरूपवाचकानां च परस्परं भेद इत्यर्थः ॥ **पूर्वपक्षमिति** । अनन्यत्वे कथं कार्यत्वमिति शङ्कितपक्षं निषेद्धुं प्रत्यभिज्ञाप्रमाणं श्रुतिशेषो ब्रूत इत्यर्थः ॥ **प्रतिज्ञायेति** । 'येनाश्रुतं श्रुतमिति' वाक्येनेति भावः । **यथा सोम्येतीति** । प्रागुक्तवाक्यत्रयमित्यर्थः । पूर्वोक्तोपपादकतया वाक्यशेषार्थमाह **यत इति** । नामधेयमात्रं ह्येतदित्यस्य फलितार्थमाह **अनृतमिति** ।

**या०** — **अनन्यत्वे कथं कार्यत्वमिति** । घटादीनामिति वर्तते । एवञ्च घटादीनां मृदनन्यत्वे मृत्कार्यत्वं कथमङ्गीकर्तुं शक्यम् । कणादादिरीत्या कार्यस्य कारणात् द्रव्यान्तरत्वादित्याशङ्कार्थः । तत्तदिन्द्रियसाध्योदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृदादिद्रव्यमेव संस्थानान्तरनामधेयान्तरभाग्भवति । न तु घटादिकं मृदादितो द्रव्यान्तरम् । यथैक एव देवदत्तोऽवस्थाभेदैर्बालो युवा स्थविर इति शब्दान्तरभाक् कार्यान्तरभाग्भवति तथा इत्याशयेन परिहरतीत्याह **व्यवहारार्थमित्याहेति** ॥ **षष्ठ्यर्थ इति** ।

षष्ठ्यर्थश्च तादर्थ्यमत्र विवक्षितम् । तथा च विकारो घटादिर्नामधेयं वाचा तत्तदिन्द्रियसाध्यजलाहरणादिव्यवहारार्थं मृदादिद्रव्येणारम्भणं रलयोरभेदेनालम्भनम् । कर्मणि ल्युट् । स्पृश्यत इत्यर्थः । मृद्द्रव्यमेव व्यवहाराय विकारादिभाग्भवतीति श्रुत्यर्थ उक्तो भवतीति ज्ञातव्यम् । उत्तरवाक्यमुत्थापयितुम् एतद्वाक्यलब्धमर्थं तावद्दर्शयति **इति कुम्भादेरिति** ।। **स्वरूपेति** । अत्र स्वरूपशब्देन, स्वस्य रूपमिति व्युत्पत्त्याऽसाधारणधर्मो विवक्षितः । अन्यथा साध्याविशेषप्रसङ्गादिति ध्येयम् । एवञ्च विकारत्वनामधेयत्वरूपासाधारणधर्मभेदात् जलाहरणादिरूपकार्यभेदात् विकार इति नामधेयमिति शब्दभेदात्, आदिपदेन गृहीताद् बुद्धिभेदाच्च परस्परं भेद इत्यर्थः ॥ **यत्प्रकारेणेत्यादि** । तथा च तत्सत्तानिरपेक्षसत्ताकत्वोपाधिग्रस्तान्यनुमानानि न स्वार्थसाधकानीति भावः ।

**श्री०—** ब्रह्मोपादानतया = ब्रह्मोपादानकतया ॥ **कथमिति** । कार्यकारणभावस्य भेदव्याप्तत्वाद्घटादीनां मृदनन्यत्वे मृत्कार्यत्वं न सम्भवति । कार्यत्वं तु प्रामाणिकम् । तथा च तस्यानन्यत्वमेव कथमिति शङ्काभिप्रायः । न तु कार्यत्वमेव कथमित्यभिप्रायः । कार्यत्वोपपादकोत्तराभावात् । प्रत्युत कार्यत्वमङ्गीकृत्यानन्यत्वस्योपपादनादिति ध्येयम् ॥ **व्यवहारार्थमिति** । यथा वह्निरवश्यमङ्गीकार्यः । कुतः । धूमार्थम् धूमरूपकार्यार्थम् । अन्यथा तन्न सिध्येत् । तेन वह्निरनुमीयत इति यावत् । तद्वत्प्रकृतेऽपि घटादीनां मृत्कार्यत्वेऽपि मृदनन्यत्वमङ्गीकार्यम् । कुतः । व्यवहारार्थम् अभेदव्यवहाररूपकार्यसिध्यर्थम् । अभेदव्यवहारकार्येणानन्यत्वमङ्गीकार्यमिति ज्ञायत इत्यर्थः ॥ **वाचेतीत्यादि** । तथा च घटादिर्विकारः घट इत्यादि नामधेयं चेति द्वयमित्यध्याहार्यम् । अत एव सिद्धान्ते पदान्तराध्याहारस्येष्टत्वादिति वक्ष्यति । वाचारम्भणं = वाचा वागिन्द्रियस्य वागिन्द्रियजन्यव्यवहारस्य आरम्भणमुत्पादनम् । कर्मणि ल्युट् । वागिन्द्रियजन्याभेदव्यवहारविषयो यतोऽतो मृत्कार्यत्वेऽपि मृदनन्यत्वमवश्यमङ्गीकार्यमिति पदान्तरमध्याहार्यम् । अन्यथा 'विकारो नामधेयं वाचारम्भणमि'त्युक्तौ अनन्वयः । ततः किमित्याकाङ्क्षायां तन्निवर्तकपदाभावादिति ज्ञेयम् । तथा च, विकारो नामधेयं चेति द्वयम् मृदनन्यत् वाचा मृद्घट इत्यभेदेन व्यवह्रियमाणत्वात्, अभेदेन चक्षुषा ज्ञायमानत्वात्; यद्यदभेदेन व्यवह्रियते ज्ञायते तत्तदभिन्नं यथा घटो घटेन इत्यनुमानं ध्येयम् । एतन्मते नामात्मकप्रपञ्चस्यापि मृत्कार्यत्वेन मृदनन्यत्वमेवेति न दोष इति ध्येयम् । अत्र विकारो नामधेयं चेति द्वयं यतो वाचारम्भणमतः कारणेनान्यदित्यङ्गीकार्यमिति प्रधानप्रमेयम्। एतदनुषङ्गसिद्धं प्रमेयान्तरमाहोपोद्घातसङ्गत्या **इतीत्यादिना** । इति विकारो नामधेयमिति शब्दद्वयोक्त्येत्यर्थः । तद्वाचकानां=कुम्भादिवाचकानां नामधेयानाम् । परस्परं=विकाररूपवाच्य-नामधेयरूपवाचकस्वरूपयोरित्यर्थः । विकारनामधेयस्वरूपयोर्भेदः स्वाकार्थः । स्वरूपभेदादित्युक्तौ साध्याविशेषप्रसङ्गात् स्वरूपशब्देन स्वस्य रूपोऽसाधारणधर्मो

विकारित्वनामधेयत्वरूपो विवक्षितः । जलाहरणादिरूपकार्यभेदः । विकारनामधेयरूपव्यपदेशभेदः शब्दभेदः । तथा च यदि तयोः परस्परं भेदो यथार्थो न स्यात्तर्हि धर्मभेदो न स्यात् । कार्यभेदश्च न स्यात् । असङ्कीर्णशब्दद्वयेन व्यवहारोऽपि न स्यादिति विकारनामधेयरूपवाच्यवाचकयोः परस्परं भेदो वास्तव इति लब्धमित्यर्थः । परस्परं = विकारनामधेयस्वरूपयोः । तेनैव = स्वरूपकार्यव्यपदेशादिहेतुभिः । **भेद इति** । कुम्भादेस्तद्वाचकानां चेति वर्तते । तथा च कार्यं घटादिविकारतन्नामधेयरूपम्, मृदादिकारणाद्भिन्नं, मृत् घट इत्यादिभिन्नव्यपदेशविषयत्वात् । यद्भिन्नव्यपदेशविषयस्तद्भिन्नं यथा नामधेयविकारौ परस्परमित्यनुमानं बोध्यम् । यत्प्रकारेणेत्यादिनाऽस्मिन्ननुमाने तत्सत्तानिरपेक्षसत्ताकत्वमुपाधिरित्युक्तं भवति । आरभ्यते=व्यवह्रियते ॥ **ब्रह्मण इति** । सत्यत्वे तदितरस्य मिथ्यात्वे चेति शेषः ।

च० — **षष्ठ्यर्थे तृतीयेति** । तादर्थ्ये तृतीयार्थः, न तदिन्द्रियसाध्यजलाहरणादिव्यवहारार्थमिति भावः ॥

सु० — **तत्रैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं मृत्पिण्डादिदृष्टान्ताश्च विकारविवर्ताभिप्राया इत्ये(वं)तत् न तावद्वाक्यात्प्रतीयते** । किन्तु वाचारम्भणमित्युपपादकवाक्यबलादिति **वक्तव्यम् । अतस्तदेव प्रथमं व्याकुर्वन्वाचारम्भणशब्दार्थमाह** वाचारब्धमिति ।

अनु० — वाचारब्धं तु साङ्केत्यं नाम स्यात्

**नन्वारम्भणशब्दो** ल्युडन्तः । ल्युट् च **भावे करणाधिकरणयोश्च विहितो न कर्मणि न च 'कृत्यल्युटो बहुलमि'ति कर्मणि** ल्युट् । **प्रबलनियामकमन्तरेण बहुलग्रहणस्य कर्मणि** व्याख्यातुमशक्यत्वात् । **'न चारभ्यस्यारम्भणमिति युज्यते शब्द' इति स्ववचनविरोधाच्च** । **तत्कथमारब्ध इति** व्याख्यानमिति । **मैवम्** । **भाव एवारम्भणशब्दस्याङ्गीकारात्** । **वाचा वागिन्द्रियेणारम्भणमुत्पादनं यस्येति तृतीयाया अलुक्** । **'टापं चापि हलन्तानां यथा वाचा निशा दिशा' इति** वचनात्, वाचयाऽऽरम्भणं यस्येति वा **बहुव्रीहिरयम्** । **तस्यार्थकथनं** वाचारब्धमिति ।

तुशब्दोऽवधारणार्थ उत्तरत्र संबध्यते ।

**वाचारम्भणशब्दादेव विकारत्वलाभाद्विकार इति पुनरुक्तं स्यादतस्तात्पर्यमाह** साङ्केत्येति । **वाचारम्भणशब्देन** साङ्केतिकं **नामैव वाच्यं स्यात्** । अवयवार्थकथनं तु वैशद्यार्थमेव । यथा चष्टेऽनेनेति चक्षुरिति निर्वचनलभ्येपि दर्शनकरणत्वे चक्षुषा पश्यतीति नोक्तार्थता । तस्यां दशायामवयवार्थस्याविवक्षितत्वात् । तथा च वाचारम्भणशब्दोऽपि साङ्केतिकपर्याय इति ।

शे० — **उपपादकेति** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृत्पिण्डादिदृष्टान्तत्रयस्य चोपपादकेत्यर्थः ॥ **स्ववचनविरोधाच्चेति** । छान्दोग्यभाष्यस्थैतद्वचनविरोधाच्चेत्यर्थः ॥ **भाव एवेति** । आरम्भ आरम्भणमिति भाव एवेत्यर्थः । कथं तर्हि वाचाऽऽरब्धत्वलाभ इत्यतो नेमे व्यस्ते पदे किन्तु समस्तमेकं पदमिति युक्त एवोक्तार्थलाभ इति तदनुगुणं समासमेवाह **वाचेत्यादि** । नन्वारम्भणशब्दयोगे 'कर्तृकर्मणोः कृती'ति षष्ठ्या भाव्यमित्यतो वाक्शब्दार्थस्येन्द्रियस्य करणत्वेन कर्तृत्वकर्मत्वयोरभावान्न षष्ठीप्रसङ्ग इत्याशयेनाह **वागिन्द्रियेणेति** । ननु यदि समासस्तदा 'सुपो धातुप्रातिपदिकयोरि'ति वाचेति तृतीयालोपे वागारम्भणमिति भवितव्यम् । वाचारम्भणमिति तृतीयाश्रवणमयुक्तमिति तत्राह **तृतीयाया इति** । यद्यपि 'ओजःसहोऽम्भस्तमसस्तृतीयायाः' इति ओजस् सहस् अम्भस् तमस् इति शब्देभ्य उत्तरस्यास्तृतीयाया अलुक् स्मृतः, न तु वाक्शब्दात्परस्यास्तस्याः मः । तथाऽपि 'अञ्जसा कृतम्' इत्यभियुक्तप्रयोगसंरक्षणायाञ्जसोऽप्यत्रोपसंख्यानस्येव वाचोऽप्यत्रोपसंख्यानस्य च कर्तव्यत्वाभिप्रायेणैवमुक्तमित्यवधेयम् । तृतीयाया अलुग्व्याख्यानपक्षे उपसंख्यानस्य कर्तव्यत्वपर्यन्तं धावनाश्रयणप्रसङ्गात्पक्षान्तरमाह **टापं चापीति** ॥ **वचनादिति** । भागुरिवचनादित्यर्थः । कथं तर्हि वाचारब्धमिति विग्रहप्रदर्शनमित्यतो नेदं विग्रहप्रदर्शनं किन्तु तस्यार्थकथनमेवेत्याह **तस्येति** ॥ **उत्तरत्रेति** । साङ्केत्यनाम स्यादित्युत्तरत्रेत्यर्थः । अत एव साङ्केतिकं नामैवेति वक्ष्यतीति ध्येयम् ॥ **तात्पर्यमिति** । वाचारम्भणमित्यस्येति शेषः ॥ **नोक्तार्थतेति** । चक्षुषेति तृतीयाया इति शेषः ॥ **अविवक्षितत्वादिति** । तद्विवक्षायामनभिहितत्वाभावेन तदधिकारविहिततृतीयानुपपत्तिप्रसङ्गादिति भावः ।

स० — **स्ववचनविरोधादिति** । छान्दोग्यभाष्यस्थवचनविरोधादित्यर्थः । नन्वेवं सुपो धातुप्रातिपदिकयोरिति सुपो लोपे वागालम्बनमिति स्यात् न तु वाचारम्भणमितीत्यत आह **तृतीयाया अलुक् इति** । 'ओजः सहोऽम्भस्तमसस्तृतीयाया' इत्यत्र वक्शब्दस्याभावेऽपि बाहुलकादेव तृतीयायाः अलुक् इति भावः ॥ **उत्तरत्र संबध्यत इति** । साङ्केतिकं नामेत्युत्तरत्र संबध्यत इत्यर्थः ।

प० -- रामानुजभाष्याद्युक्तमाशङ्क्य निराह **न च कृत्यल्युट इति** ॥ **स्ववचनेति** । षष्ठे छान्दोग्यभाष्ये कर्मार्थकल्युडन्तत्वप्रत्याख्यानपरस्ववचनेन वाचाऽऽरब्धत्वमिति कर्मार्थकत्वोक्तिर्विरोधाच्चेत्यर्थः ॥ **तृतीयाया अलुगिति** । छान्दसोऽलुगिति भावः ॥ **टापं चेति** । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरि'ति पूर्वाधिगतेन वष्टीति क्रियापदेन भागुरिरिति कर्तृवाचकपदेन च टापञ्चेति द्वितीयान्तस्यान्वयः ॥ **इति वचनादिति** । शाब्दिकानां वचनादित्यर्थः ॥ **उत्तरत्रेति** । नामैवेति सम्बध्यत इत्यर्थः ॥ **अवयवार्थेति** । वाचेति शब्दारम्भणशब्दरूपावयवार्थकथनं त्वित्यर्थः । वैशद्यार्थं=शब्दार्थस्पष्टतार्थमित्यर्थः ॥ **नोक्तार्थतेति** । चक्षुःप्रातिपदिकेन चक्षुषा पश्यतीति वाक्यस्य न गतार्थतेत्यर्थः ।

या० — छान्दोग्यभाष्यविरोधं चाह **न चारभ्यस्येति** ॥ **भाव एवेति** । आरम्भ एवारम्भणमिति भाव एवेत्यर्थः । नन्वेवं 'सुपो धातुप्रातिपदिकयोरि'ति सुलोपे वागारम्भणमिति स्यादित्यत आह **तृतीयाया इति** । छान्दसत्वादिति भावः ॥ **उत्तरत्रेति** । साङ्केत्यनामेत्यत्रेत्यर्थः । **साङ्केतिकपर्याय इति** । रूढतया विवक्षित इति भावः ।

श्री० — **ल्युडन्त इति** । आङ्पूर्वकाद्धातूनामनेकार्थत्वात् रभिरारम्भण इत्यस्माद्धातोर्ल्युट्-प्रत्यये लकारटकारयोर्लोपे 'युवोरनाकौ' इति युकारस्य अनादेशे धात्विकारलोपे 'इदितो नुम् धातोः' इति इदित्वान्नुमागमे रम्भ् अनेति स्थिते, नस्य णत्वे च आरम्भणमिति रूपम् ॥ **न चेति** । आरम्भण-मिति शब्द आरभ्यस्य वस्तुनो न युज्यते । आरब्धं वस्तु भावव्युत्पन्नारम्भणशब्दवाच्यं न भवति अन्यथाऽऽरम्भणशब्दवाच्यत्वे कर्मणि ल्युटः स्वीकारापत्तेरिति छान्दोग्यभाष्योक्तवाक्यस्य भावः । वाचारम्भणमित्येकमेव पदमङ्गीकृत्य, बहुव्रीहित्वं चाङ्गीकृत्य, वाचेत्येतत्प्रकारद्वयेन व्याख्याति **वाचे-त्यादिना** । ननु वाचेति तृतीयालोपे वागारम्भणमिति स्यादित्यत उक्तम् **तृतीयाया इति** । अलुक्= लोपाभावः । वाचेत्येतत्र तृतीयान्तं सत् आरम्भणपदेन समस्तमिति । किं त्वाकारान्तं सदेवेत्याशयेनाह **टापं चेति** ॥ **तस्यार्थकथनमिति** । ततश्च भावव्युत्पन्नस्य वाचारम्भणशब्दस्य बहुव्रीहितामङ्गीकृत्य व्याख्याने योऽर्थः सम्पन्नः तत्कथनमात्रमेव, न तु कर्मणि ल्युटमङ्गीकृत्यारम्भणशब्दव्याख्यानपर-मित्यर्थः ॥ **वैशद्यार्थमिति** । सन्ति ह्यन्वर्था अपि संज्ञा इति भावः **उक्तार्थतेति** । चक्षुषेति करणत्वार्थकतृतीयायाश्चक्षुःशब्देन गतार्थतेत्यर्थः । **तस्यां दशायां** चक्षुषा पश्यतीति प्रयोगवेलायां, चक्षुःशब्दावयवार्थस्येत्यर्थः ॥ **पर्याय इति** । तथा च विकारशब्दसमभिव्याहारदशायां वाचारम्भण-शब्दस्य यौगिकत्वं न विवक्षितमित्यर्थः । योगकथनं तु शब्दसाधुत्वाद्याख्यानाय वैशद्यार्थमित्युक्तमेवेति भावः ।

सु० — **विकारशब्दार्थमाह** विकृतमिति ।

अनु० —　　　　　　विकृतं बहु ॥

**अनेन विक्रियत इति विकार इति कर्मणि घञित्युक्तं भवति । विकृतत्वोपपादकमर्थान्तरं चाह** बह्विति। **विविधः कारः प्रकारो विकारः। प्रकारप्रकारिणोरभेदाद्बह्वित्युक्तम्। बहुविधमित्यर्थः।**

**नामधेयं मृत्तिकेत्येव सत्यमित्यस्यार्थमाह** नित्यं त्विति ।

नित्यं तु नामधेयं यन्मृत्तिकेत्यादि वैदिकम् ॥

**सत्यशब्दार्थो** नित्यमिति । **तुशब्दोऽवधारणे । आदिशब्देन लोहमण्यादेर्ग्रहणम् । यन्मृत्तिकेत्यादि संस्कृतं नामधेयम् तदेव नित्यमिति सम्बन्धः । वैदिकमिति तदुपपादनम् ।**

शे० — **कर्मणीति** । 'अकर्तरि च कारके संज्ञायामि'ति तत्स्मरणादिति भावः । विकृतमित्य-नेनैव विकारशब्दस्य व्याख्यानाद्बह्विहित्यनर्थकम् । न चेदं तस्यार्थान्तरकथनम् । तत्कथनस्य प्रकृतानुप-युक्तत्वादित्यत आह **विकृतत्वोपपादकमिति** । उपपादकत्वप्रकारश्चोत्तरत्र आकरे एव स्पष्टः । बह्वित्यस्य विकारशब्दार्थान्तराभिधायकत्वं दर्शयितुं विकारशब्दार्थमाह **विविध इति** । नन्वेवं साङ्केतिक-नामगतप्रकाराणामनेकत्वस्य विकारशब्दार्थत्वप्राप्त्या भाष्येऽपि प्रकाराणामेव बहुत्वं वक्तव्यम् । तत्कथं बह्विति नाम्नो बहुत्वाभिधानमित्यत आह **प्रकारेति** ; लोहमण्यादेरित्यादिपदेन नखनिकृन्तन-ग्रहणम् । तथाऽपि भाष्ये वैदिकत्वाभिधानमनर्थकम् । 'नित्यं तु नामधेयं यन्मृत्तिकेत्यादी'त्येतावतैव नामधेयं मृत्तिकेत्येव सत्यमित्यस्यार्थोक्तेरित्यतो नेदं तद्व्याख्यानमपि तु सत्यपदोक्तनित्यत्वोपपादकहेत्व-भिधानमेवेत्याह **वैदिकमितीति** ।

प० — **कर्मणि घञिति** । 'अकर्तरि च कारके संज्ञायामि'त्यनेनेति भावः ॥ **अर्थान्तरं चेति** । विक्रियत इति कर्मणि घञन्तत्वेन प्राप्तार्थादर्थान्तरं चेत्यर्थः । नन्वेवं बहुत्वस्य प्रकारविशेषणत्वाद्बहु-प्रकारमिति वक्तव्ये विकृतं बह्विति कथं विकृतविशेषणत्वेनोक्तिरित्यत आह **प्रकारेति** ।

---

श्री० — **कर्मणीति** । तथा च विपूर्वात् कृञ् करणेऽस्मात् घञ्प्रत्यये, ऋवर्णस्याकाररूपे गुणे कृते, तस्य च रपरत्वे, घकारञकारयोर्लोपे, अकारमात्रे उर्वरिते सति, ञित्वादादिवृद्धौ, प्रत्ययाकारे च मिलिते सति, विकारेति रूपम् । साङ्केत्यनामधेयस्य विविधप्रकारवत्त्वेन प्रकारत्वं कथमत आह **अभेदादिति** । तथा च यतो बहुविधमतो विकृतमिति बहुत्वं विकृतत्वोपपादकं ज्ञेयम् ।

सु० — **ततश्चैवं योजना । वाचारंभणं साङ्केतिकं नामधेयं विकार उत्पत्तिमत् । तत एवानित्यम् । कुतः । बहुविधत्वात् । पुरुषेच्छानुसारेणानेक(विध)प्रकारत्वात् । मृत्तिकेत्यादि नामधेयं वैदिकत्वान्नित्यमनादि चेति । न च वाचारंभणं विकार इति लिङ्गवैषम्यदोषः । नामधेयविकारशब्दयोर्नियतलिङ्गत्वात् । वाचारंभणशब्दस्य च नामधेयविशेषणत्वात् । विशेषणानां च विशेष्यनिघ्नत्वात् । अत एव साङ्केत्यमित्येव वक्तव्ये साङ्केत्यनामेत्यवोचत् । यदा तु वाचा यस्यारंभणं तन्नामधेयं विकारो जनिमदिति; वाचा नाम्नामारंभणं विविधाकारः, आकाराकारिणोरभेदात् । विकारित्वादुत्पत्तिविनाशवदिति यावदिति वा ग्रन्थान्तरोक्ता योजना; तदा(तु) लिङ्गव्यत्यासशङ्कैव नास्तीति ।**

शे०— ननु विकारशब्दार्थभूतस्य बहुविधत्वस्य वैदिकनामसाधारणत्वात्कथं तदर्थभूतविकृतत्वोपपादकत्वं, कथं च वैदिकत्वस्य सत्यशब्दार्थभूतनित्यत्वोपपादकत्वमित्यतस्तदुभयं प्रदर्शयन्नेव समग्रवाक्ययोजनां दर्शयति **ततश्चेति ॥ तत एवेति ।** उत्पत्तिमत्त्वादेवेत्यर्थः । उत्पत्तिमतो भावस्य विनाशित्वनियमादिति भावः । स्यादेवमुत्पत्तिमत्त्वेन विनाशित्वसिद्धिर्यद्युत्पत्तिमत्त्वमेव सिद्धं स्यात् । न चैतदस्ति । साधकाभावादित्याक्षिपति **कुत इति ।** तदुत्तरत्वेन विकारशब्दार्थान्तरं हेतुतया योजयति **बह्विति ।** वैदिकनामसाधारणत्वान्न तस्य तत्साधकत्वमित्यतो नात्रानेकप्रकारत्वमात्रं तद्विवक्षितं येन वैदिकनामसाधारण्यं स्यात् । किन्तु पुरुषेच्छानुसारेणानेकप्रकारत्वमेव । तच्च न वैदिकनामसाधारणमिति नोक्तानुपपत्तिरित्याशयेनाह **पुरुषेच्छेति ॥ अनादि चेति ।** अत्रापि तत एवेति वर्तते । नित्यत्वादेवानादित्वं वैदिकनाम्न इत्यर्थः । नित्यभावस्यानादित्वनियमादिति भावः । भाष्ये साङ्कत्यमित्येतावता वाचारम्भणशब्दतात्पर्यार्थनिरूपणान्नामग्रहणानर्थक्यमित्यतो लिङ्गवैषम्यदोषशङ्कानिरासार्थत्वान्नानर्थक्यमित्याशयेन नामग्रहणव्यावर्त्यतया लिङ्गवैषम्यदोषशङ्कामुत्थापयति **न चेति ॥ इतीति ।** इति योजनायामित्यर्थः । वाचारम्भणमित्यस्य नपुंसकलिङ्गत्वाद्विकार इत्यस्य च पुलिङ्गतया भिन्नलिङ्गत्वादिति भावः । स्यादेतदेवं यदि वाचारम्भणं विकार इति योजनाऽत्र विवक्षिता स्यात् । न चैवम् । किन्नाम वाचारम्भणं नामधेयं विकार इत्येव । तथा च वाचारम्भणनामधेयशब्दयोर्नपुंसकलिङ्गतया समानलिङ्गत्वान्न वैषम्यदोष इत्याशयेन समाधत्ते **वाचारम्भणशब्दस्येति ।** नन्वेवं वाचारम्भणशब्दस्य नामधेयविशेषणतया लिङ्गवैषम्यदोषाभावेऽपि, नामधेयं विकारः, इति योजनायां तद्दोषतादवस्थ्यमित्यत उक्तं नामधेयविकारशब्दयोरिति । तथा चोद्देश्यलिङ्गत्वं न विधेयस्य सार्वत्रिकं, किन्त्वनियतलिङ्गविषयकमेव । विकारशब्दस्य च नियतलिङ्गत्वान्नोद्देश्यलिङ्गत्वमिति भावः ॥ **वाचा यस्येति ।** यद्यपि वाचा नाम्नामिति द्वितीययोजनैवान्यत्र दृश्यते न त्वियम् । तथाऽपि 'अतोऽन्यन्नामधेयं तु वाचारम्भणहेतुतः । साङ्कैत्येन विकारः स्यात्' इति छान्दोग्यभाष्योदाहृतप्रमाणानुसारेण इयमपि योजना तत्राभिप्रेतेति युक्तमस्याः समाश्रयणेन लिङ्गवैषम्यदोषपरिहरणमिति ध्येयम् ॥ **तदा लिङ्गव्यत्यासशङ्कैवेति ।** आद्ययोजनायामारम्भणशब्दस्य नामधेयविशेषणतया विकारविशेषणत्वाभावात् द्वितीययोजनायां वेदाः प्रमाणमितिवदुद्देश्यविधेयभावस्य विवक्षितत्वात्पक्षद्वयेऽपि बहुव्रीहित्वाभावेनारम्भणशब्दस्य भावे ल्युडन्तस्य नियतलिङ्गत्वेन विशेष्यलिङ्गतानियमाभावाच्च न लिङ्गव्यत्यासदोषावकाश इति भावः ।

स०— **लिङ्गवैषम्यदोष इति ।** विशेष्यविकारशब्दस्य पुलिङ्गत्वात्तद्विशेषणबहुव्रीहिभूतवाचारम्भणशब्देऽपि पुलिङ्गतैव स्यादिति भावः ॥ **तदा लिङ्गव्यत्यासशङ्कैव नेति ।** आद्ययोजनायां आरम्भणशब्दस्य भावे ल्युट्त्वेन नियतलिङ्गत्वान्न लिङ्गव्यत्यासशङ्कावकाश इति भावः ।

प० — निष्कृ(ष्य)ष्टश्रुत्यर्थमाह **ततश्चैवं योजनेति** । बहुव्रीहिभूतस्य वाचारम्भणशब्दस्य विकारविशेषणत्वं मत्वा नपुंसकत्वायोगं शङ्कते **न च वाचेति** ॥ **निघ्नत्वादिति** । अधीनत्वादित्यर्थः । 'अधीनो निघ्न आयत्त' इत्युक्तेः । 'अतोऽन्यनामधेयं तु वाचारम्भणहेतुतः । सांकेत्येन विकारः स्यात्' इति छान्दोग्यभाष्योक्तं प्रमाणं हृदि कृत्वाह **वाचा यस्येत्यादि** । तत्त्वनिर्णयच्छान्दोग्यभाष्यबृहदारण्यक-भाष्येषूक्तमाह **वाचा नाम्नामित्यादि** । **लिङ्गव्यत्यासशङ्कैव नेति** । पक्षद्वयेऽप्यबहुव्रीहित्वेन भावार्थ-ल्युडन्ततया नित्यनपुंसकत्वादिति भावः ।

या० — **लिङ्गवैषम्यदोष इति** । विशेष्यस्य विकारशब्दस्य पुलिङ्गत्वात्तद्विशेषणे बहुव्रीहिरूपे वाचारम्भणशब्देऽपि पुलिङ्गतैव युक्तेति भावः । ननु वाचारम्भणशब्दस्य नामधेयविशेषणत्वेन लिङ्ग-वैषम्यदोषाभावेऽपि नामधेयं विकार इति योजनायां तद्दोषतादवस्थ्यमित्यत उक्तम् **नामधेयविकार-शब्दयोरिति** । तथा चोद्देश्यलिङ्गत्वं विधेयस्यानियतलिङ्गविषयमिति भावः ॥ **वाचा यस्येति** । यद्यपि वाचा नाम्नामिति वक्ष्यमाणयोजनैव तत्त्वनिर्णये, छान्दोग्यभाष्ये, बृहद्भाष्ये च दृश्यते न नियम् । तथापि 'अतोऽन्यनामधेयं तु वाचारम्भणहेतुतः । साङ्केत्येन विकारः स्यादि'ति छान्दोग्यभाष्योदाहृत-प्रमाणसूचितेयं योजनेति द्रष्टव्यम् ॥ **तदा तु लिङ्गव्यत्यासेति** । आद्ययोजनायामारम्भणशब्दस्य विकाराविशेषणत्वात् । द्वितीययोजनायां 'वेदाः प्रमाणमि'तिवदुद्देश्यविधेयभावस्य विवक्षितत्वात् । उभयत्रापि बहुव्रीहित्वाभावेनारम्भणशब्दस्य भावे ल्युडन्तस्य नियतलिङ्गत्वाच्च न लिङ्गव्यत्यासशङ्का-ऽवकाश इत्यर्थः ।

श्री० — **लिङ्गेति** । वाचारम्भणशब्दस्य बहुव्रीहित्वाद्बहुव्रीह्यन्तस्य विशेष्यनिघ्नत्वाद्विशेष्य-भूतविकारशब्दस्य पुलिङ्गत्वात्तद्विशेषणीभूते वाचारम्भणशब्दे पुलिङ्गतैव स्यादिति भावः ॥ **विशेष्य-निघ्नत्वादिति** । निघ्न = अधीनः । 'अधीनो निघ्न आयत्तः' इत्यमरः । तथा च वाचारम्भणशब्दस्य नामधेयविशेषणत्वेन विकारविशेषणत्वाभावात्तस्य च नपुंसकलिङ्गत्वात्तदनुसारेण वाचारम्भणशब्दे नपुंसकता युक्तेति ध्येयम् ॥ **अत एवेति** । साङ्केत्यापरपर्यायवाचारम्भणशब्दस्य नामधेयविशेषणत्व-प्रदर्शनार्थमेवेत्यर्थः । **यदा त्विति** । पक्षद्वयेऽपि वाचारम्भणमिति भिन्नमेव पदं, न नामधेयविशेषणम् । तर्हि वाचा वागिन्द्रियेणारम्भणमुत्पादनं कस्येति शङ्का स्यात्तदर्थं यस्य नाम्न इत्यध्याहृतम् । ननु वाचा-म्भणं यस्य तन्नामधेयमित्युक्त्या जनिमत्त्वस्य प्राप्तत्वात् विकारेण पौनरुक्त्यमिति शङ्का स्यादेव इति चेन्न । वाचा आरम्भणं यस्य तन्नामधेयमित्यस्य साङ्केतिकं नामेति पूर्ववदर्थकरणात् । पूर्वयोजनाया भेदस्तु भिन्न-पदत्वनङ्गीकृत्यैवेति ध्येयम् । यद्वा विकारो जनिमत् । कुतः । यतो वागिन्द्रियेणोत्पद्यत इति सामान्य-विशेषभावेनापौनरुक्त्यं ध्येयम् ॥ **वाचा नाम्नामिति** । मृत्तिकेति नामधेयं सत्यमिति नामधेयपदस्योत्तर-

त्रैवान्वयः । अत्रापि भिन्नमेव पदम्, वाचा आरम्भणमुत्पादनं केषामिति शङ्कायां नाम्नामित्यध्याहृतम् । उत्पादनस्य विविधाकारवत्त्वेन विविधाकारत्वं कथमित्यतोऽभेदादित्युक्तम् । आकारेत्यारभ्य यावदित्यन्तं विक्रियमाण इति छान्दोग्यभाष्योक्तविवरणरूपम् । ततश्च वाचा वागिन्द्रियेण नाम्नामारम्भणमुत्पादनं विविधप्रकार इति योजना ॥ **शङ्कैव नास्तीति** । पूर्वं वाचारम्भणशब्दस्य भावे ल्युडन्तत्वेऽपि समस्तपदत्वं बहुव्रीहित्वं चाङ्गीकृतमिति लिङ्गव्यत्यासशङ्काऽभूत् । ग्रन्थान्तरोक्तयोजनाद्वये तु वाचा आरम्भणमिति पदद्वयाङ्गीकारेण समासस्यैवाभावेन बहुव्रीहित्वस्यैवाभावाद्भावे ल्युडन्तस्य नियतनपुंसकत्वाच्च लिङ्गव्यत्यासशङ्कैव नास्तीति द्रष्टव्यम् ।

च० — **लिङ्गवैषम्यमिति** । विशेष्यवाचकस्य विकारशब्दस्य पुलिङ्गत्वात्तद्विशेषणे कृतबहुव्रीहिवाचारम्भणशब्देऽपि पुलिङ्गतैवेति भावः ॥ **नामधेयविकारशब्दयोरिति** । तथा चोद्देश्यवाचकसमानलिङ्गवचनकत्वं विधेयवाचकस्यानियतलिङ्गविषयमिति भावः ।

**सु० — ननु च साङ्केतिकनाम्नामुत्पत्तिविनाशवत्त्वं संस्कृतनाम्नामनादिनित्यत्वं किमर्थमत्रोच्यते । परमप्रकृते ब्रह्मविज्ञानेन सर्वविज्ञानेऽवान्तरप्रकृतेऽस्माकमिव दृष्टान्ते (वो)चोपयोगाभावात् । अतोऽसङ्गतत्वान्नायं श्रुत्यर्थ इति । मैवम् । यद्यपि परस्येव नेदं दृष्टान्तोपपादकम् । तथाऽपि ब्रह्मज्ञानेन सर्वविज्ञाने दृष्टान्तान्तरतयोपयोक्ष्यते । यथा तेन तद्विज्ञातं स्यादिति, प्रकृतानुवृत्तेरित्याशयवानाह** प्राधान्यादिति ।

अनु० — प्राधान्यात्तत्परिज्ञानात्प्राकृताज्ञोऽपि पूरुषः ॥
विद्वानित्युच्यते सद्भिरेवं नित्यपरात्मवित् ॥

**इदमुक्तं भवति । कृतकत्वादनित्यत्वाच्च परापेक्षत्वेन साङ्केतिकं नामाप्रधानम् । अनादिनित्यत्वात्परानपेक्षत्वेन संस्कृतं प्रधानम् । तत्र यथा प्राधान्यात्संस्कृतज्ञानमात्रेण साङ्केतिकं ज्ञातं भवति । तज्ज्ञानेन यत्फलं विद्वद्व्यवहारगोचरत्वादिकं तद्भवतीति यावत् । एवमनित्यत्वादिनाऽप्रधानस्य देवताकर्मादिमिश्रस्य सकलस्यापि जगतो ज्ञानेन यत्फलं तत्समस्तमपि नित्यत्वादिना प्रधानस्य परमात्मनो ज्ञानाल्लभ्यते । तत्फलेऽन्तर्भवतीति । अत्र प्राकृताज्ञोऽपीत्यनेन फलापेक्षयेदमिति सूचितं (भवति) । एवं तर्ह्येकविज्ञानेन सर्वविज्ञानममुख्यं स्यादिति चेत् । सत्यम् । न हि परेणापि तन्मुख्यं व्याख्यातुं शक्यम् । तथा सति दृष्टमृदः पुरुषस्य घटशरावादिसंस्थानविशेषादिजिज्ञासाऽभावप्रसङ्गात् । पामरा न हि विद्वानिति वदन्ति, अतः सद्भिरित्युक्तम् । एवं नित्यपरात्मविदिति वाक्यस्योक्तानुसारेण शेषो ज्ञातव्यः ।**

**शे०** — ननु प्राधान्यादित्युत्तरभाष्यमनर्थकमित्यतः स्वाभिहितस्य वाचारम्भणश्रुत्यर्थस्य प्रकृतसङ्गतिप्रदर्शनेन श्रुत्यर्थसमर्थनार्थत्वान्नानर्थक्यमित्याशयेन स्वाभिहिते श्रुत्यर्थेऽसङ्गतिशङ्कामुत्थापयति **नन्विति** । साङ्केतिकनामादेरुत्पत्त्यादिप्रतिपादनस्योपयोगो भवन् किं परमप्रकृते वाऽवान्तरप्रकृते वेति विकल्पं मनसि निधाय पक्षद्वयं प्रत्याह **परमप्रकृत इति** । अवान्तरप्रकृते दृष्टान्तेऽस्माकं तदुपपादकतया यथाऽस्त्युपयोगो न तथा भवन्मत इति योजना । परमप्रकृते ब्रह्मविज्ञानेन सर्वविज्ञान एव दृष्टान्ततयोपयोगान्नासङ्गतिः । एतावान्परं विशेषः । परमतेऽवान्तरप्रकृते दृष्टान्ते उपयोगोऽस्माकं तु परमप्रकृत एवेति नानुपपत्तिरित्याशयेनाह **मैवमिति** । ननु 'यथा सोम्यैकेन मृत्पिण्डेने'त्यादिनैवान्यज्ञानेनान्यज्ञानं भवतीत्यर्थाभिधायिना ब्रह्मज्ञानेन सर्वज्ञानासंभवशङ्कायाः परिहारान्न दृष्टान्ततया तत्रास्योपयोग इत्यतो दृष्टान्तान्तरतयेत्युक्तम् । ननु यथेत्यादिदृष्टान्तत्वगमकपदसन्दर्भबलात्पूर्वस्य दृष्टान्ततया रमप्रकृते ब्रह्मज्ञानेन सर्वविज्ञाने उपयोगसंभवेऽपि वाचारम्भणवाक्यस्य दृष्टान्तावगमकपदसन्दर्भबलहीनस्य न तत्र दृष्टान्ततयोपयोगो युक्त इत्यतस्तन्पूर्वेर्षिष्टेत्यादिवत्प्रकृतस्य यथा सोम्येत्यादेरनुषङ्ग युक्तमस्यापि दृष्टान्तगमकत्वमित्याशयेनाह **यथेत्यादि** । ननु संस्कृतज्ञानेन साङ्केतिकज्ञानस्य मुख्यस्यैव व्याख्यातुं शक्यत्वात्तज्ज्ञानेन यत्फलं तत्संस्कृतज्ञानेन भवतीत्युपचरिततया तद्व्याख्याने न किमपि निमित्तमित्यतः प्राकृताज्ञ इत्यनेन साङ्केतिकाज्ञस्य स्पष्टमभिहितत्वेन मुख्यस्य तज्ज्ञानस्यानुपपत्तेस्तथा व्याख्यानमावश्यकमेवेत्याह **अत्रेति** । नन्वेकविज्ञानेन सर्वविज्ञाने मुख्ये संभवत्यमुख्यतदाश्रयणं दोष इत्याशङ्कते **एवमिति** । मुख्यत्वे बाधकसद्भावाद्युक्तं तदाश्रयणमित्याशयेन न च मृन्मात्रविज्ञानाद्घटशरावादिसंस्थाविशेषा विज्ञाता भवन्ति मुख्यतः, तथा सति दृष्टमृदः पुरुषस्य घटशरावादिजिज्ञासा न स्यादिति बृहद्भाष्यं मनसि निधायाह **न हीति** ॥ **जिज्ञासाऽभावप्रसङ्गादिति** । ज्ञाते जिज्ञासाविरहादिति भावः ॥ **उक्तानुसारेणेति** । एवं नित्यपरात्मविदित्यनन्तरं देवताकर्मादिसकलजगदज्ञोऽपि स्वर्गादिफलभागित्युच्यते सद्भिरिति शेषो ज्ञातव्य इत्यर्थः ।

**स०** — **उक्तानुसारेण शेषो ज्ञातव्य इति** । 'एवं नित्यपरात्मविदि'त्यनन्तरं अप्रधानदेवताकर्माद्यज्ञोऽपि तज्ज्ञानसाध्यफलवान्भवतीति वाक्यशेषो ज्ञातव्य इत्यर्थः ।

**प०** — **अस्माकमिवेति** । अद्वैतवादिनामिवेत्यर्थः । व्यक्तमेतद्यतो वाचारम्भणमित्यादिपूर्वग्रन्थे । ननु, यथा सोम्य संस्कृतेन विज्ञातेन सर्वं साङ्केतिकं विज्ञातं स्यादिति दृष्टान्तत्वद्योतकपदानामभावात्कथं दृष्टान्तान्तरतयोपयुज्यत इत्यत आह **यथेति** ॥ **प्रकृतेति** । प्रकरणप्राप्तेत्यर्थः ॥ **फलापेक्षयेदमितीति** । संस्कृतज्ञानेन साङ्केतिकं ज्ञातं भवतीत्येतदित्यर्थः । यद्वा प्रधानज्ञानादप्रधानं

ज्ञातं भवतीत्येतदित्यर्थः ॥ **उक्तानुसारेण शेषो ज्ञातव्य इति ।** अप्रधानदेवताकर्माद्यज्ञोऽपि तत्तज्ज्ञानफलं समस्तं लभत इति शेषो ध्येय इत्यर्थः ।

**या०— फलापेक्षयेति** । अन्यथा साङ्केतिकं ज्ञातं भवतीति वचनापर्यवसानादिति भावः ॥ **सूचितमिति** । उपपादितमित्यर्थः ॥ **उक्तानुसारेणेति** । 'एवं नित्यपरात्मविदि'त्यनन्तरमप्रधानदेवता-कर्माद्यज्ञोऽपि स्वर्गादिफलभागित्युच्यते सद्भिरिति शेषो ज्ञातव्य इत्यर्थः ।

**श्री०** — ननु दृष्टान्तान्तरज्ञापकं नास्तीति चेत्तत्राह **यथा तेनेति** ॥ **परेति** । कारणेत्यर्थः । तज्ज्ञानेन साङ्केतिकज्ञानेन । ननु साङ्केतिकं ज्ञातफलकं भवतीति फलपर्यन्तं कस्माद्व्याख्यायते । मूले ज्ञापकाभावादित्यत आह **अत्रेति** । तथा च संस्कृतनामपरिज्ञानमात्रेणायं विद्वानित्युच्यत इत्युक्तौ कथं विद्वान् भविष्यति प्राकृतभाषाऽपरिज्ञानादित्यतः प्राकृताज्ञोऽपीत्युक्तम् । तथाऽपि कथं । **विद्वानित्युच्यते** । प्राकृतभाषाज्ञानाभावेऽप्ययं विद्वानित्युच्यत एव । प्राकृतभाषापरिज्ञानेन यत्फलं विद्वद्व्यवहारगोचरत्वादिकं तस्यानेनैव लाभादिति सूचितमिति भावः । अमुख्यं फलापेक्षया व्याख्यानादिति भावः ।

**सु० — ननु सत्यशब्दः कथं नित्यार्थः । रूढेर्योगस्य चाभावादित्यतो योगं ताव-**

**दर्शयति** सदातनमिति ।

अनु० — सदातनं सत्यमिति नित्यमेवोच्यते बुधैः ॥

**सत्यमितीत्यावर्तनीयम् । सदातनं सत्यमिति निर्वचनेन सत्यमिति पदेन नित्यमुच्यत एव । न तूपचर्यत इति । बुधैर्वैयाकरणैरिति निर्वचनमूलं सूचयति । सदाशब्दात्तत्र भव इत्यर्थे 'अव्ययात्त्यप्'इति त्यप्प्रत्यये कृते 'सर्वस्य सोऽन्यतरस्यां दि' इत्यत्र योगविभागात्सदा-शब्दस्य सोऽन्यतरस्यां भवति । सदाशब्दाद्भवार्थे तद्धिता इति डचप्रत्ययो वोत्पाद्यः । दकारस्य च तकारः ।**

**शे० - तावदिति** । प्रयोगश्चोत्तरत्रास्तीत्यादिना रूढेरपि दर्शयिष्यमाणत्वात्तावदित्युक्तम् । सत्यपदेन नित्यमुच्यत इत्यर्थस्य यथास्थितभाष्यादलाभात्तल्लाभायाह **सत्यमितीत्यावर्तनीयमिति** । यथास्थितस्यैवशब्दस्य व्यर्थत्वाद्विरुद्धार्थत्वाच्चापेक्षितसंबन्धं तत्फलं च दर्शयन्नेवापेक्षिताध्याहारेण वाक्यं योजयति **सदातनमिति** । ननु सर्वस्य स इत्यादेशो भवत्यन्यतरस्यां दकारादौ प्रत्यये परे इति ह्यस्य सूत्रस्यार्थः । तथा च सर्वशब्दस्य स इत्यादेशविधायकत्वादस्य कथं सदाशब्दस्य स इत्यादेशसिद्धिः ।

दकारादौ प्रत्यये परत एव तद्विधायकस्य कथमत्र तदभावेऽपि स इत्यादेशविधायकत्वमित्यत उक्तम् अत्र **योगविभागादिति** । 'अमेहक्वतसित्रेभ्यस्त्यप् विधिर्योऽव्ययात्स्मृत' इति वृत्तिकृताऽव्ययात्त्यपो नियमितत्वान्न सदाशब्दाद्भवार्थेऽनेन त्यप्विधानमाश्रयितुं युक्तम् । 'सर्वस्य सोऽन्यतरस्यां दि' इत्यत्र सदाशब्दस्य सोऽन्यतरस्यामिति योगविभागश्च न परेषां सम्मतो नापि तत्कल्पकं किञ्चित् वक्ष्यमाणरीत्या प्रयोगस्यान्यथोपपत्तेरित्यरुचिं मनसि निधाय पक्षान्तरमाह **सदाशब्दादिति** । तद्धिता इति बहुवचनस्यानुक्तप्रत्ययसंग्राहकत्वाभिप्रायेणेदमुक्तमिति ध्येयम् । नन्वेवं टिलोपे सद्यमिति स्यात्सत्यमिति तु कथमित्यत आह **दकारस्य चेति** । निरुक्तत्वादिति भावः ।

स० — अमेहक्कतसित्रेभ्य एवेति त्यपो नियमितत्वाद्योगविभागस्य चागतिकागतित्वात्प्रकारान्तरमाह **सदाशब्दाद्भवार्थ इति ॥ तद्धिता इति** । बहुवचनस्यानुक्तप्रत्ययसंग्राहकत्वादिति भावः । **दकारस्य च तकार इति** । निर्वचनत्वादिति भावः ॥

प० — ननु सर्वशब्दस्य दकारादौ प्रत्यये परतः सादेशो विकल्पेन विहितः सदा सर्वदेति रूपसिद्ध्यर्थम् । तत्कथमिहास्य सदाशब्दस्य विकल्पेन सादेशो भवति । स्थाननिमित्तयोरभावादित्यत आह **योगविभागादिति** । सोऽन्यतरस्यामित्येको योगः । सादेशो विकल्पेन भवतीष्टविषय इति तदर्थो ध्येय इति भावः । अव्ययात्त्यबिति चतुर्थाध्यायद्वितीयपादीयसूत्रे 'अमेहक्वतसित्रेभ्यः' इति त्यपो वार्तिककारादिभिर्नियमितत्वात् योगविभागस्य क्लिष्टत्वाच्च पक्षान्तरमाह **सदाशब्दादिति ॥ तद्धिता इतीति** । यद्यपि चतुर्थाद्यपादे तद्धिता इति सूत्रं तत् आपञ्चमाध्यायपरिसमाप्ति अधिकारार्थम् । तथापि 'प्रत्ययः, परश्च' इत्यादाविव तद्धित इत्येव वक्तव्ये बहुवचनमनुक्ततद्धितपरिग्रहार्थमिति वृत्त्यादावुक्तत्वात् ड्यप्रत्यय इत्युक्तम् । डित्वाट्टिलोप इति भावः ।

या० — अमेहक्वतसित्रेभ्य एवेत्यपो नियमितत्वाद्योगविभागस्य चागतिकागतित्वात्प्रकारान्तरमाह **सदाशब्दादिति ॥ तद्धिता इति** । बहुवचनस्यानुक्तप्रत्ययसंग्राहकत्वादिति भावः । नन्वेवं टिलोपे सद्यमिति रूपं स्यादित्यत आह **दकारस्य चेति** । निर्वचनत्वादिति भावः ।

श्री० — **सदाशब्दादित्यादि** । तथा च सदाशब्दात् त्यप्प्रत्यये, सदाशब्दस्य सकारादेशे यकारलोपे सत्यमिति रूपम् । तत्र=सर्वकाले । भवः=स्थितः । ननु 'सर्वस्य सोऽन्यतरस्यामि'ति सर्वशब्दस्यैव सकारादेशविधानात्कथमनेन सदाशब्दस्य सादेश इत्यतो योगेत्युक्तम् । तथा च सर्वस्य सो भवतीत्येकं वाक्यम् अन्यस्यापि शब्दस्य सोऽन्यतरस्यां विकल्पेन भवतीत्यपरं वाक्यं कार्यमित्यर्थः ॥ **डचेति** । तथा च सदाऽस्मात् डयप्रत्यये टिभूतस्य दकारस्याकारलोपे निर्वचनत्वाद्दकारस्य तकारे सत् य सत्येति रूपम् ।

सु० — इदानीं रूढिमपि दर्शयति प्रयोगश्चेति ।

अनु० — प्रयोगश्चोत्तरत्रास्ति

उत्तरत्राष्टमे प्रपाठ(षष्ठ)के सत्यशब्दस्य नित्यत्व एव प्रयोगश्चास्तीति संबन्धः । तमेव प्रयोगं दर्शयितुं 'यदैनं जराऽवाप्नोति प्रध्वंसते वा किं ततोऽ(स्याति)वशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमि'ति वाक्यमर्थतः पठति जरेति ।

जरा यदैनमाप्नुयात् ॥

देहः प्रध्वंसते चायं किं ततोऽस्याति(वि)शिष्यते ॥

हन्यते न वधेनायं जरया च न जीर्यते ॥

एतत्सत्यं ब्रह्मपुरमिति नित्यत्व एव हि ॥

यदैनं देहं जराऽवाप्नोति प्रध्वंसते वाऽयं देहः, (तदा)ततस्तदस्य देहस्यान्तर्गतः परमात्मा दह्यमानगेहान्तर्गतगगनवत्किमतिशिष्यते किंवा पटादिवन्नश्यतीति पृष्टे; नास्य देहस्य जरयाऽयं परमात्मा जीर्यते, अस्य वधेन न हन्यते, किन्त्वेतद्ब्रह्म पूर्णत्वात्पुरं सत्यं नित्यमिति परिहारोऽभिधीयते । इतिशब्दस्य पूर्वेणान्वयः । अत्रापि सत्यशब्दः कुतो नित्यार्थ इत्यत आह नित्यत्व एव हीति ।

शे० — इदानीमिति । यद्यपि रूढियोगयो रूढेर्बलीयस्त्वात्सैवादौ दर्शनीया तथाऽप्यर्थविशेषप्रतिपत्तौ अन्तरङ्गत्वेन योगप्राबल्यमाश्रित्य स एवादौ दर्शित इत्यवधेयम् । प्रपाठकः अध्यायः ॥ इतिशब्दस्य पूर्वेणान्वय इति । इति प्रयोगश्चोत्तरत्रास्तीति पूर्वेणान्वय इत्यर्थः ।

स० — उत्तरत्रेति । वाचारम्भणवाक्यादुत्तरत्रेत्यर्थः ।

प० — वाचारम्भणवाक्यस्य षष्ठप्रपाठकगतत्वात् तदुत्तरत्रेत्यस्यात्रैवोपरीति भ्रमनिरासाय अष्टमप्रपाठक इति व्याख्या कृता ॥ पूर्वेणान्वय इति । प्रयोगश्चोत्तरत्रास्तीति पूर्वेणान्वय इत्यर्थः ।

श्री० — पूर्वेणेति । इति प्रयोगोऽस्तीत्यन्वय इत्यर्थः ।

सु० — अत्र सत्यशब्दो नित्यार्थश्चेत्सङ्गच्छते । विनाशस्य प्रकृतत्वात् । तथ्यार्थतायामसङ्गतिः । अनृतताया अप्रस्तुतत्वादिति हिशब्दार्थः । एतदेव स्पष्टीकर्तुमेतत्सत्यं ब्रह्मपुरमित्येतावति पठितव्ये पूर्ववाक्यमपि पठितम् । पूर्वेणैव संबन्धः । ब्रह्मणो जरावधयोरभावे सत्यत्वं हेतुत्वेनोच्यत इति चेत् । न । त्वया ब्रह्मव्यतिरिक्त(स्य)सत्यस्यानभ्युपग(मे)तत्वेनान्वयाभावात् । जराद्युपेतानां देहानामसत्यत्वस्यासिद्धेः असत्यानां च शुक्तिरजतादीनां

जराद्यभावेन व्यतिरेकस्याप्यभावात् ॥ ननु तथाऽपि वाचारम्भणवाक्यं त्रिवारं कस्मात्पठ्यते । शब्दान्तरं दृष्टान्तीकर्तुमिति ब्रूमः । तर्हि षडेते दृष्टान्ताः स्युः । एवमेवैतत् । तथा सति संस्कृतशब्ददृष्टान्तत्रयमेकत्रैव वक्तव्यम् । मैवम् । तत्तदभिधेयप्रसङ्गायत्तस्य तदभिधानस्य तदैव वक्तव्यत्वात् । तथाऽपि प्रतिशब्दं दृष्टान्तीकरणेऽपर्यवसानप्रसक्तेरुपलक्षणत्वे चैकेनापि कृतत्वाच्छब्दत्रयोपादानमनुपपन्नमिति चेन्न । मृत्पिण्डादिदृष्टान्तत्रयोपादानेऽप्यस्य समानत्वात् । गहने प्रमेये त्रयोपादानं न दोषाय । किन्तु बुद्धिवैशद्यहेतुतया गुणायैवेति चेत् । समं प्रकृतेऽपीति ।

**शे०** — **पूर्वेणैव संबन्ध इति** । प्रयोगश्चोत्तरत्रास्तीति पूर्वेणैव संबन्ध इत्यर्थः । सत्यशब्दस्य तथ्यार्थतायामपि सङ्गतिसंभवान्न तन्नित्यत्वार्थकत्वमिति शङ्कते **ब्रह्मण इति** । किमत्र यत्सत्यं न तज्जरादिमदित्यन्वयव्याप्तिरभिमता किंवा यज्जरादिमन्न तत्सत्यमिति व्यतिरेकव्याप्तिरिति विकल्पं मनसि निधाय दृष्टान्ताभावेनाद्यं दूषयति **त्वयेति** । द्वितीये जरादिमत्त्वेन निश्चितं देहादिकं वा दृष्टान्तः किंवाऽसत्यत्वेन निश्चितं शुक्तिरजतादिकमिति विकल्पं मनसि निधाय पक्षद्वयं दूषयति **जराद्युपेतानामिति** । व्याप्यवत्तया निश्चिते व्यापकनिश्चयाभावाद्व्यापकवत्तया निश्चिते च व्याप्यनिश्चयाभावेन व्याप्यव्यापकोभयनिश्चयायत्तो व्यतिरेकव्याप्तिग्रहो न कुत्रापि संभवतीत्यर्थः ।

---

**प०** — शङ्कते **ब्रह्मण इति** । हेतुत्वे हि यत्सत्यं तज्जरादिहीनमित्यन्वयव्याप्त्या वा यज्जरादिमन्न तत्सत्यमिति व्यतिरेकव्याप्त्या वा भाव्यम् । न तद् द्वयमपीति क्रमेण निराह **त्वयेत्यादिना** ।

**या०** — व्यतिरेकस्याप्यभावं दर्शयति **जराद्युपेतानामित्यादिना** ।

**श्री०** — सत्यशब्दस्तथ्यार्थकः किं न स्यादित्यत आह **तथ्येति** । तामेवोपपादयति **अनृताया इति** । एतदेव= अप्रस्तुतत्वमेव ॥ **पूर्वेणैवेति** । नित्यत्व एव प्रयोगोऽस्तीत्येवमन्वय इत्यर्थः । ननु सत्यशब्दस्तथ्यार्थक एव सङ्गतः स्यादिति चेन्नेत्याह **ब्रह्मण इति** ॥ **त्वयेति** । ब्रह्म जरामरणशून्यं सत्यत्वादित्यनुमानेऽन्वयव्याप्तिर्नास्तीत्यर्थः । कुतो नेत्यतो दृष्टान्ताभावादिति ज्ञेयम् । तदुपपादकम् **ब्रह्मेति** । यत्र जरामरणाद्युपेतत्वं तत्र सत्यत्वाभाव इति व्यतिरेकव्याप्तिरपि नास्ति । अस्मद्रीत्या देहादौ व्यभिचारात् । जरामरणाभावरूपसाध्योपेतेऽपि शुक्तिरजतादौ सत्यत्वहेतोरभावेनासाधारण्यं चेत्याह **जरादीति** । असिद्ध व्यतिरेकस्याभावादित्यन्वयः । असत्यानां चेत्यत्र चशब्दोऽसाधारण्यस्य समुच्चायकः । तदुपपादकम् **असत्यानां चेति** । शब्दान्तरं= मृत्तिकालोहमणिकार्ष्णायसरूपविलक्षणशब्दमित्यर्थः ।

सु० — एवं स्वमतेन वाचारम्भणमित्यादिवाक्यं व्याख्याय विवर्तवाद(दि)व्याख्याने दोषमाह वाचारम्भणमिति ।

अनु० — वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।

उक्तम्=उक्तिः शब्द इति यावत् । वाचारम्भणमिति शब्दे मिथ्येतिव्याख्यायमाने सतीति शेषः । तथा हि । किं रूढिमाश्रित्य वाचारम्भणमित्यस्य मिथ्येति व्याख्यानं क्रियते । किंवा योगम् । आद्ये रूढिज्ञापकप्रमाणाभावादश्रुतकल्पनम् । अथारभ्यत इत्यारम्भणमिति द्वितीयः । तथाऽपि कृद्योगे षष्ठ्यां प्राप्तायां तृतीयाङ्गीकारेऽश्रुतकल्पनम् । ल्युटः कर्मणि विधानाभावाच्चाश्रुतकल्पनमेव । अस्मिन्नपि पक्षे मिथ्यात्वस्यालाभादश्रुतकल्पनम् । वाचारभ्यत्वमात्रेण तथात्वे ब्रह्मणोऽपि तत्प्रसङ्गात् । वाचा केवलमारभ्यते विकारो न तु वस्तुवृत्तेनास्तीति व्याख्याने मिथ्यात्वं लभ्यत इति चेन्न । यतः श्रुत्या वाचारंभणमित्येवोक्ते केवलशब्दप्रक्षेपेण मिथ्येति व्याख्यानेऽश्रुतकल्पनमेवेति ।

शे० — उक्तमुक्तिरिति । भावे क्तो न कर्मणीति भावः ॥ ज्ञापकप्रमाणाभावादिति । अभिधानाद्यभावादित्यर्थः ॥ कृद्योगे षष्ठ्यां प्राप्तायामिति । कर्तृकर्मणोः कृतीत्यनेनेति शेषः । कर्तृकर्मणोः कृतीति षष्ठ्या बाधितत्वात्तृतीया नोपपद्यत इत्यर्थः । न चायं दोषः स्वमतेऽपि समः । वाचा वागिन्द्रियेणेति स्वकीयव्याख्यानानुसारेण वाक्शब्दस्य स्वमते इन्द्रियपरत्वेन वाक्शब्दार्थस्येन्द्रियस्य च करणत्वेन कर्तृत्वकर्मत्वयोरभावात्करणे च कृद्योगस्य षष्ठ्यनभिधायकत्वेन तृतीयोपपत्तेः । वागिति समस्तेन्द्रियव्यवहारोपलक्षणमिति परव्याख्यानानुसारेण परमते वाक्शब्दस्य व्यवहारपरत्वाद्व्यवहारस्य चेन्द्रियस्येव करणत्वासंभवेन करणे तृतीयाया अयोगात् । अत एव करणे तृतीया भविष्यतीति पूर्वत्रारुच्युद्भावनं तरङ्गिणीकारीयमपास्तम् ॥ ल्युट इति । आरम्भणशब्दस्य ल्युडन्तत्वाल्ल्युटश्च भावे करणे अधिकरणे च विधानेऽपि कर्मण्यविधानादित्यर्थः । न च कृत्यल्युटो बहुलमिति बहुलग्रहणात्कर्मण्यपि ल्युडिति वाच्यम् । वाचारम्भणशब्दस्य मिथ्यात्वपरत्वे नियामकस्य प्रमाणविशेषस्याभावेन बहुलग्रहणस्य कर्मणि व्याख्यातुमशक्यत्वादिति टीकायामेव पूर्वमुक्तत्वादिति भावः । यद्वैतदस्वरसादेवाह अस्मिन्नपि पक्ष इति ।

म० — तथापि कृद्योग षष्ठीति । कर्तृकर्मणोः कृतीत्यनेनेत्यर्थः । ननु वाचेति तृतीया करणे भविष्यतीति नाद्यो दोषः, नापि द्वितीयः कृत्यल्युटो बहुलमिति कथितत्वेन कर्मण्यपि ल्युट् संभवादित्यत आह अस्मिन्नपि पक्ष इति । एवमपीत्यर्थः ॥ मिथ्यात्वस्यालाभादिति । वाचारब्धकार्यादेरिवेति भावः ।

**प०** — उक्तमिति भावे निष्ठाप्रत्यय इति भावेनाह **उक्तमुक्तिः शब्द इति यावदिति ॥ इति द्वितीय इति ।** योगमाश्रित्येति पक्ष इत्यर्थः । किमयं भावे ल्युडंतः? अथ कर्मणि । आद्ये आह **कृद्योग इति ।** आरंभणशब्दस्य ल्युडंतत्वात् ल्युटश्च कृदतिङितिसूत्रेण कृत्संज्ञत्वेन तद्योगे 'कर्तृकर्मणोः कृती'तिसूत्रेण षष्ठ्यां प्राप्तायामित्यर्थः । अस्माकं तु सांकेतिकनाम्न एव तद्योगेन 'वाचेत्यस्ये'ति नायं दोष इति भावः । अन्त्य आह **ल्युटः कर्मणि विधानाभावाचेति ।** न च कृत्यल्युटो बहुलमिति बहुलग्रहणात्कर्मण्यपि ल्युड्भवतीति शक्यम् । अस्य पक्षस्य वाचारब्धं त्वित्येतद्व्याख्यावसरे प्रागेव निरस्तत्वात् । एतच्चोपलक्षणं । वाचारभ्यस्यारंभणमिति युज्यते शब्द इति प्रागुदाहृतछांदोग्यभाष्योक्त-नपुंसकानुपपत्तिदोषश्च ध्येयः ॥ **ब्रह्मणोपीति ।** त्वत्पक्षे वाचेत्यस्य शब्दपरत्वाच्छब्देनारभ्यते व्यवह्रियत इत्यस्य ब्रह्मण्यपि भावात् । वागिन्द्रियपरत्वे वाचा वागिन्द्रियेण व्यवह्रियमाणत्वरूपारम्भणस्य ब्रह्मणोऽपि सत्त्वादिति भावः । उक्त इत्येतत्कर्मणि निष्ठान्तमुपेत्याधुनार्थमाह **श्रुत्या वाचारम्भणमित्येवोक्त इति ।**

**या०** — **तथाऽपि कृद्योग इति ।** कर्तृकर्मणोः कृतीत्यनेनेत्यर्थः । ननु वाचेति तृतीया करणे भविष्यतीति नाद्यो दोषः । न द्वितीयः । 'कृत्यल्युटो बहुलमि'त्युक्तत्वेन कर्मण्यपि ल्युड्विधान-सम्भवादित्यस्वरसादाह **अस्मिन्नपीति ।**

---

**श्री०** — **उक्तिरिति ।** तथा च भावे क्तप्रत्यय इति भावः ॥ **तथाऽपीति ।** कृदतिङ् तिङ्वर्जप्रत्ययः कृत्संज्ञः स्यादित्युक्तत्वेन ल्युटोऽपि तिप् तस् इत्यादेर्यथा तिङ्पेतत्वं तथा तिङ्पेतत्वा-भावेन कृत्त्वात् तदन्तारम्भणशब्दस्य कृदन्तत्वात् तदन्तशब्दयोगे कर्तृकर्मणोः कृतीति सूत्रेण षष्ठी प्राप्ता । तथा च वाच आरम्भणमिति स्यान्न तु वाचेति तृतीयेत्यर्थः । नन्वस्माभिरपि कृद्योगे वाचेति तृतीयाऽङ्गीकारादश्रुतकल्पनेति चेन्न । कृद्योगे तृतीयामङ्गीकृत्यैतच्छ्रुतेश्छान्दोग्यभाष्योदाहृतप्रमाणे तथा व्याख्यातत्वेन श्रुतत्वान्नाश्रुतकल्पनेति ज्ञेयम् । तथात्वे=मिथ्यात्वे ।

**च०** — विवर्तवादव्याख्याने= भ्रमाधिष्ठानत्वव्याख्याने ।

**सु०** — **दूषणान्तरमाह** पुनरुक्तिरिति ।

**अनु०** — पुनरुक्तिर्नामधेयम्

इतिशब्दोऽत्राध्याहार्यः । **आगामिनो वा काकाक्षिन्यायेनोभयत्र संबन्धः । नामधेय-मित्येतन्नामधेयमात्रं ह्येतदनृतमिति परेण व्याख्यातम् । तस्य वाचारंभणमित्यनेनैव गतार्थत्वा-न्नामधेयमिति पुनरुक्तिः स्यात् । अथ विकारो नामधेयं च द्वयमपि वाचारंभणमिति व्याख्यानं;**

तथाऽपि विकारशब्देनैवाभिधेयाभिधानयोर्ग्रहणसंभवान्नामधेयमिति पुनरुक्तिरेव । तन्नामरूपाभ्यां व्याक्रियत इत्यादिश्रुतेः ।

शे०— अध्याहाराश्रयणेऽरुच्या पक्षान्तरमाह **आगामिनो वेति** ॥ **पुनरुक्तिः स्यादिति** । व्याख्यानव्याख्येयभावश्चागतिका गतिरिति भावः । **इति व्याख्यानमिति** । ततश्च न वाचारम्भणशब्देन नामधेयपदस्य गतार्थतेत्याशयः । एवं तर्हि माऽस्तु वाचारम्भणशब्देन नामधेयपदस्य गतार्थत्वम् । विकारपदेन तु तस्य गतार्थत्वमवर्जनीयमेवेत्याह **तथाऽपीति** । कुरुपाण्डवन्यायस्त्वगतिका गतिरिति भावः । ननु कथं विकारशब्देन नामधेयग्रहणमित्यत आह **तन्नामरूपभ्यामिति** ।

प०—ननु कथं विकारशब्देनैव शब्दार्थयोर्द्वयोरपि ग्रहणमित्यत आह **तन्नामरूपाभ्यामिति** । तत्= तेजोबन्नम् ।

श्री०— ननु कथं विकारशब्देनाभिधानग्रहणमित्यत आह **तन्नामरूपाभ्यामिति** । तथा च नामधेयस्यापि विकारत्वेन विकारशब्देन युक्तं तद्ग्रहणमिति भावः ।

सु०— **दोषान्तरमाह** इतीत्यस्येति ।

अनु०— इतीत्यस्य निरर्थता ॥

मृत्तिकायाः सत्यत्वं हि परस्य विवक्षितम् । तत्र मृत्तिकेव सत्येति वक्त(व्यम्)व्ये इतिशब्दस्तु निरर्थक एव । स हि क्वचित्पदार्थविपर्यासकृत्, क्वचिद्धेतौ, क्वाप्येवमित्यर्थे, कुत्रचिदादिशब्दार्थे, क्वचित्प्रकारार्थे, क्वचित्परिसमाप्तौ । न चात्रै(ते)वमादिष्वन्यतमेनार्थेनार्थवान् । अस्माकं तु 'शब्दादर्थे संप्रत्यय' इति मृत्तिकाऽर्थे प्राप्ते तत्परिहारेण शब्दस्वरूपग्रहणार्थं तदुपपत्तिः । परिणामवादिनोऽपि कृद्योगे तृतीयाया अङ्गीकृतत्वात् ल्युटः कर्मणि व्याख्यातत्वाद्वाचारंभणं विकारो नामधेयमित्येतेषां पदानामन्वयाभावेन पदान्तराध्याहारस्येष्टत्वादश्रुतकल्पनम्, नामधेयस्यापि विकारग्रहणेन ग्रहणसंभवात्पुनरुक्तिः, इतिशब्दस्य निरर्थकता चेति स्फुटत्वान्नोक्तम् ।

शे०— **पदान्तराध्याहारस्येति** । विकारो घटादिर्नामधेयं च वाचा वाक्पूर्वकजलाहरणादिव्यवहारायारभ्यते आलभ्यत इत्यारम्भणं मृद्द्रव्येण स्पृश्यत इति परव्याख्याने नामधेयमित्यत्र चशब्दाध्याहारस्यारम्भणमित्यत्र मृद्द्रव्येणेत्यध्याहारस्य चेष्टत्वादित्यर्थः ।

**स०— पदान्तराध्याहारस्येष्टत्वादिति** । विकारः नामधेयमिति द्वयं वाचारम्भणमिति इतिशब्दस्याध्याहारस्येष्टत्वादित्यर्थः ।

**प०— क्वचित्पदार्थविपर्यासकृदिति** । व्यक्तमेतज्जिज्ञासासूत्रे 'इतिशब्दोऽन्वये' इत्येतद्व्याख्यानसुधायाम् ॥ **क्वचिद्वेताविति** । एतच्च ग्रन्थ एव तत्र तत्र व्यक्तम् ॥ **एवमित्यर्थ इति** । 'विकारशब्दान्नेति चेदि'त्यादौ ॥ **आदिशब्दार्थ इति** । 'य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते' इत्यादौ ॥ **प्रकारार्थ इति** । आत्मेत्येवोपासीत । आत्मेति तूपगच्छन्तीत्यादौ ॥ **परिणामवादिनोऽपीति** । तदीयं व्याख्यानं प्राक्प्रदर्शितम् ।

**या०— पदान्तराध्याहारस्येति** । विकारो नामधेयं चेति द्वयं वाचारम्भणं वागादीन्द्रियजन्यव्यवहारार्थं मृदा स्पृश्यत इति व्याख्याने चादिपदानां मृदेत्यस्य चाध्याहारस्येष्टत्वादित्यर्थः ।

**श्री०**—मृत्तिकाऽर्थे= मृत्तिकाशब्दादिति शेषः । परिणामवादिनोऽपीत्येतत्पूर्वोक्तरीत्या स्पष्टम् ।

**सु०— ननु तेनेतिशब्दः प्रकारवचन इत्युक्तम् । तत्कथं निरर्थकता । उच्यते । कार्यकारणयोर्भेदाशङ्कानिरासार्थं हीदमुच्यते । तत्र यत्सत्तया मृत्तिका सती तयैव मृण्मयं सत्यमिति व्याचक्षाणेन वक्तव्यम् , केयं सत्ता विवक्षितेति । स्वरूपसत्ता चेत्साध्याविशिष्टता । यो हि कार्यकारणयोर्भेदं मन्यते, स कथं कारणस्वरूपेणैव कार्यं स्वरूपवदित्यङ्गीकुर्यात् । अथ सामान्यसत्ता । साऽनैकान्तिकी । न हि महिषसत्तया सन्नश्वो महिषान्न भिद्यते । अथ मृत्तिकासत्ताधीनसत्ताकं मृण्मयमिति विवक्षितमिति, तथाऽपि कुलालादिसत्ताधीनसत्ताकमपि भवतीत्यनैकान्त्यमेव । विरुद्धं च(चै)तत् । यद्यदधीनं तदेव तदिति । अतो विवक्षितसाधनानुपयोगित्वादितिशब्दस्य तन्मतेऽपि निरर्थकतैवेति ।**

**शे०— तेनेति** । परिणामवादिनेत्यर्थः ॥ **भेदशङ्कानिरासार्थमिति** । कार्यकारणभेदसाधकानां स्वरूपभेदादीनां सत्प्रतिपक्षतया पक्षे उपाध्यभाव उच्यत इत्यर्थः ॥ **केयं सत्तेत्यादि** । कार्यं कारणाद्भिन्नं न भवति तत्सत्तयैव सत्तावत्त्वादित्यनुमाने हेतुशरीरप्रविष्टा सत्ता केत्यर्थः ॥ **साध्याविशिष्टतेति** । साध्यवद्धेतुरपि सन्दिग्ध इत्यर्थः । साध्यावैशिष्ट्यमेवोपपादयति **यो हीति** ।

**प०—** इतिशब्दसार्थक्यमाशङ्क्य निराह **नन्वित्यादिना निरर्थकतैवेतीत्यन्तेन** ॥ **साध्याविशिष्टतैवेति** । उपादानोपादेयाभेदरूपसाध्याविशिष्टतेत्यर्थः ॥

या० — **भेदशङ्कानिरासार्थमिति** । कार्यकारणभेदसाधकानां स्वरूपभेदादीनां सत्प्रतिपक्षतया पक्षे उपाध्यभाव उच्यत इत्यर्थः ॥ **केयं सत्तेत्यादि** । कार्यं कारणाद्भिन्नं न भवति, तत्सत्तयैव सत्तावत्त्वात् इत्यनुमाने हेतुशरीरप्रविष्टा सत्ता केत्यर्थः ॥ **साध्याविशिष्टतेति** । साध्यवद्धेतुरपि सन्दिग्ध इत्यर्थः । तदेव दर्शयति **यो हीति** ।

श्री० — तेन=भास्करेण । इदं=मृत्तिकेतीति वाक्यम् ॥ **केयमिति** । कार्यं कारणेनाभिन्नं तत्सत्तया सत्तावत्त्वात् । यद्यत्सत्तया सत् तत् तदभिन्नमित्यनुमाने हेत्वन्तर्गता सत्ता कीदृशीत्यर्थः ॥ **साध्याविशिष्टतेति** । साध्यं यथा सन्दिग्धमेवमेव हेतुरपि सन्दिग्ध इत्यर्थः । एतदुपपादयति **यो हीति** । अनैकान्तिकत्वमुपपादयति **महिषसत्तयेति** । सत्ताजातेरैक्यत्वादिति हृदयम् । मृन्मयमित्यनन्तरं मृदभिन्नमिति शेषः । तथा च मृन्मयं घटादिः मृदभिन्नं मृत्तिकासत्ताधीनसत्ताकत्वात् । यत् यत्सत्ताधीनसत्ताकं तत् तदभिन्नमिति सामान्यव्याप्तिमूलकमनुमानं विवक्षितम् । न चैवं सति अश्वमहिषादौ व्यभिचारोऽस्ति । सत्ताया ऐक्येन तत्सत्तया सत्तावानप्यश्वो न तत्सत्ताऽधीनसत्ताक इति भावः ॥ **सत्ताकमपीति** । तथा च कुलालेनैक्याभावाद्घटादावेव व्यभिचार इत्यर्थः । विरुद्धत्वमेवोपपादयति **यद्यदधीनमिति** ॥ **विवक्षितेति** । कार्यस्य कारणानन्यत्वरूपविवक्षितेत्यर्थः ।

---

**सु० — इदानीं यथा सोम्येत्यादीनि दृष्टान्तवाक्यानि स्वमतेन व्याकरिष्यन्परकीयव्याख्यायां तावद्दोषमाह** एक इति ।

**अनु०** — एकः पिण्डो मणिश्चेति पदवैयर्थ्यमेव च ॥
विकारित्वविवक्षायां

**पदसमुच्चये प्रथमश्चशब्दः । इतिशब्दस्य प्रत्येकं संबन्धः । वैयर्थ्यं विगतार्थत्वं विरुद्धार्थत्वं च । एवशब्देन वैयर्थ्यस्यापरिहार्यतामाह । चशब्दस्य विवर्तविवक्षायां चेत्यर्थः । जगतो ब्रह्मविकारत्वेन तदारोपितत्वेन चैकविज्ञानेन सर्वविज्ञाने विवक्षिते मृदा विज्ञातया मृण्मयं विज्ञातं स्यात् । लोहेन विज्ञातेन लोहमयं विज्ञातं स्यात् । कृष्णायसा विज्ञातेन कार्ष्णायसं विज्ञातं स्यादित्येतावता पूर्णत्वात्त्रयाणामेकशब्दानां पिण्डमणिनखनिकृन्तनशब्दानां सर्वशब्दानां च विगतार्थत्वं स्यात् । सर्वमृण्मयादीनामेकमृत्पिण्डादिविकारत्वाभावाद्विरुद्धार्थता च स्यात् । आरोपितत्वं त्वेकस्यापि मृण्मयस्यैकस्मिन्मृत्पिण्डे नास्ति । कुतः सर्वस्य । युक्त्या समर्थ्यत इति चेत् । तर्हि विवादपदत्वेन दृष्टान्तताऽनुपपत्तिः । 'लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त' इति हि न्यायविदः । किन्तु घटादीनामबाधितप्रत्यक्षादि-**

**सिद्धत्वेन युक्तिरेवाभासभूतेति परमाणुपुञ्जवादनिरासे वक्ष्यते । आरोपितत्वेऽपि नैकस्मिन्सर्वमित्येकादिपदानां वैयर्थ्यमेव ।**

**नन्वेकेनेति परमकारणस्यैकत्वं पिण्डेनेति कार्याभिमुख्यं सर्वमिति कार्यनानात्वं विवक्षितम् । अतः कथं वैयर्थ्यमिति । मैवम् । दार्ष्टान्तिकवाक्ये तद्विवक्षायामत्र वैयर्थ्यापरिहारात् ।**

**शे०— पदसमुच्चय इति** । न केवलं यथा सोम्येत्यादेः परव्याख्यायामेकपदं व्यर्थं किन्तु मणिपदं पिण्डपदं चेत्येवमेकपदपिण्डपदमणिपदानां समुच्चय इत्यर्थः ॥ **प्रत्येकमिति** । एक इति पिण्ड इति मणिरिति प्रत्येकमित्यर्थः ॥ **वैयर्थ्यस्येति** । विगतार्थत्वविरुद्धार्थत्वरूपस्येत्यर्थः ॥ **चशब्दस्येति** । पदवैयर्थ्यमेव चेत्येवशब्दात्परस्य चशब्दस्येत्यर्थः । अनेन द्वितीयश्चशब्दो भिन्नक्रमो विकारित्वविवक्षायां चेति संबध्यत इत्युक्तं भवति । कथं वैयर्थ्यमित्यतो विगतार्थत्वं तावदुपपादयति **जगत इत्यादिना** । परिणामवादमाश्रित्याह **ब्रह्मविकारित्वेनेति** । विवर्तवादमाश्रित्याह **तदारोपितत्वेनेति** ॥ **पूर्णत्वादिति** । विवक्षितार्थप्रतिपादनस्येति शेषः । येन विना विवक्षितवाक्यार्थप्रतिपत्तिर्भवति तद्वचनाकाङ्क्षितत्वाद्विगतप्रयोजनमिति प्रसिद्धमेवेति भावः । विरुद्धार्थत्वमप्युपपादयति **सर्वेति** । मृन्मयादीनामित्यादिपदेन लोहमयादेः संग्रहः । एकमृत्पिण्डादीत्यादिपदेनैकलोहमण्यादेः संग्रहः ॥ **आरोपितत्वं त्विति** । मृत्त्वज्ञानेऽपि घटाद्यनिवृत्तेर्न तस्य तत्रारोपितत्वमिति भावः ॥ **युक्त्येति** । ये हि दृष्टनष्टस्वरूपाः, न ते वस्तुसन्तो यथा मृगतृष्णिकोदकादयः । तथा च सर्वं विकारजातं । तस्मादवस्तुसदिति युक्त्या समर्थ्यत इत्यर्थः ॥ **विवादपदत्वेनेति** । अविवादपदत्वे युक्त्या तत्समर्थनानर्थक्यमिति भावः । विवादपदत्वेऽपि कुतो न दृष्टान्तत्वमित्यतो दृष्टान्तलक्षणाभावादिति भावेन गौतमोक्तं लक्षणसूत्रमुदाहरति **लौकिकेति** । शास्त्रपरिशीलनजन्यबुद्ध्यतिशयशून्या लौकिकाः । प्रमाणतर्काभ्यामर्थं परीक्षमाणाः परीक्षकास्तेषामुभयेषामपि यस्मिन्नर्थे बुद्धिसाम्यं व्याप्यव्यापकवत्तया संप्रतिपत्तिः स दृष्टान्त इति सूत्रार्थः । अत्र वादिप्रतिवादिनोः संप्रतिपत्तौ तात्पर्यं, न पुनर्लोकसिद्धत्वमप्यत्र विवक्षितम् । अन्यथा लोकाप्रसिद्धपरमाण्वादेः शास्त्रे दृष्टान्ततयोपादानमनुपपन्नं स्यादित्यवधेयम् । तर्हि निरवकाशोक्तयुक्तेः का गतिरिति पृच्छति **किंत्विति** । परिहरति **घटादीनामिति** ॥ **वक्ष्यत इति** । 'दृश्यते प्रत्यभिज्ञातः स्थिरत्वं सर्ववस्तुष्वि'त्यादिनेति शेषः । दृष्टानां विकारिणामवयवोपचयाभ्यां नष्टस्वरूपत्वं त्वया हेतूकृतम् । तच्च क्षणिकत्वमिव स्थिरत्वसाधकाबाधितप्रत्यभिज्ञाऽदिना वक्ष्यमाणेन विरुद्धमिति भावः । दार्ष्टान्तिकवाक्ये एकत्वादिकं विवक्षितमुत नेति विकल्पं मनसि निधायाद्यं दूषयति **दार्ष्टान्तिकवाक्य इति** । अत्र तद्विवक्षायामिति पदच्छेदः । दार्ष्टान्तिकवाक्ये एकत्वादिविवक्षायां तद्विवक्षयैव दृष्टान्त-

वाक्येऽप्येकत्वादिलाभसंभवेन पृथगेकत्वादेरप्रतिपादनीयत्वात् तत्प्रतिपादकैकादिपदवैयर्थ्यमित्यर्थः । यद्वा दार्ष्टान्तिके एकत्वादिविवक्षायां दार्ष्टान्तिके एकादिपदवैयर्थ्यमेव दृष्टान्तवाक्यस्थैकादिपदैरेव दार्ष्टान्तिके परमकारणैकत्वादेर्लाभात् उभयत्र परमकारणस्यैकत्वादित्यर्थः । द्वितीयं दूषयति **दार्ष्टान्तिक इति** । अत्रातद्विवक्षायामिति पदच्छेदः । दार्ष्टान्तिके विवक्षितस्यैवार्थस्य दृष्टान्ते वक्तव्यतया दार्ष्टान्तिकवाक्ये एकत्वाद्यविवक्षायां दृष्टान्ते तत्कथनस्यानपेक्षितत्वेन तत्प्रतिपादकैकादिपदानां वैयर्थ्यमेवेति भावः ।

स० — **दार्ष्टान्तिकवाक्ये तद्विवक्षायामिति** । एकादिपदानां दृष्टान्तवाक्ये परमकारणैकत्वादिति प्रतिपादकत्वाभावे दृष्टान्तवाक्यस्थैरेवैकादिपदैर्दार्ष्टान्तिके तत्प्रतिपादनासंभवात् संभवे वा दृष्टान्तवाक्ये तद्वैयर्थ्यापरिहारादित्यर्थः ।

प० — **पदसमुच्चय इति** । उक्तानुक्तपदानां समुच्चय इत्यर्थः । तद्व्यनक्ति **त्रयाणामित्यादिना** । विवर्तपक्षेऽयं दृष्टान्तोऽत्यन्तायुक्त इत्याह **आरोपितत्वं त्विति** । विवर्तवादी शङ्कते **युक्त्येति** । ननु युक्त्या साधिते सति लौकिकपरीक्षकाणां तत्र बुद्धिसाम्यं स्यात् । अन्यथा तत्साधकयुक्तेः का गतिः स्यादिति भावेन पृच्छति **किं त्विति** । उत्तरयति **घटादीनामिति** । **वक्ष्यते** समयपादे 'समुदाय उभयहेतुकेऽपी'तिनये । 'नैकस्मिन्सर्वमिती'तिशब्दो हेतौ । येनाश्रुतं श्रुतमित्यादिप्रतिज्ञावाक्ये अर्थविशेषविवक्षार्थमेकादिपदं सार्थकमित्याशङ्क्य तर्हि तत्रैवैकादिपदं प्रयोज्यम् । न तु दृष्टान्तेषु । तत्र तु प्रयोगो व्यर्थ एवेति निराह **नन्वेकेत्यादिना** ।

या० — **युक्त्या समर्थ्यत इति** । ये हि दृष्टनष्टस्वरूपाः न ते वस्तुसन्तः; यथा मृगतृष्णिकोदकादयः । तथा चेदं सर्वं विकारजातं, तस्मादवस्तुसदिति युक्त्या समर्थ्यत इत्यर्थः ॥ **विवादास्पदत्वेनेति** । परीक्षकाणां सत्यत्ववादिनामसम्मतेरिति भावः ॥ **बुद्धिसाम्यमिति** । सम्प्रतिपत्तिरित्यर्थः । ननूक्तयुक्तेर्निरवकाशत्वेन सर्वेषां परीक्षकाणां तस्मिन्नर्थे सम्प्रतिपत्तिरेव युक्ता । लौकिकानां तदभावेऽपि न दोषः । अत्र वादिप्रतिवादिनोः प्रमाणसिद्धत्वमात्रे तात्पर्यमिति अक्षपादसूत्रव्याख्यातृभिरुक्तत्वात् अन्यथा लोकाप्रसिद्धपरमाण्वादेः शास्त्रे दृष्टान्ततयोपपादनमनुपपन्नं स्यादित्याशयेन शङ्कते **किन्त्विति** । उत्तरमाह **घटादीनामिति** ॥ **वक्ष्यत इति** । 'दृश्यते प्रत्यभिज्ञातः स्थिरत्वं सर्ववस्तुष्वि'त्यादिनेति शेषः । दृष्टानां विकाराणां अवयवोपचयापचयाभ्यां नष्टस्वरूपत्वं त्वया हेतूकृतम् । तच्च क्षणिकत्वमिव स्थिरत्वसाधकाबाधितप्रत्यभिज्ञादिना वक्ष्यमाणेनावरुद्धमेवेति भावः ॥ **दार्ष्टान्तिकवाक्य इति** । येनाश्रुतमित्यादिदार्ष्टान्तिकवाक्ये विद्यमानैकादिपदानां तद्विवक्षायामपि दृष्टान्ते श्रुतानां तेषां वैयर्थ्यमपरिहार्यमित्यर्थः । इदं च दार्ष्टान्तिकवाक्येऽप्येकादिपदाध्याहार आवश्यक इत्यभिप्रेत्य । अन्यथा 'एकविज्ञानेन

सर्वविज्ञान'प्रतिज्ञाया अलाभात् । न च दार्ष्टान्तिकवाक्ये उक्तविवक्षाप्रयोजनकैकादिपदाध्याहार-सूचनार्थमेवात्र एकादिपदोपादानमिति वाच्यम् । तत्रैव तदुपादानं विहायात्र तत्करणे बीजाभावादित्या-शयात् । यद्वाऽतद्विवक्षायामिति छेदः । तथाच दार्ष्टान्तिकवाक्येऽविवक्षितार्थस्य दृष्टान्तवाक्ये कथनम-सङ्गतमिति भावः । अस्मन्मते त्वेकादिपदानां प्रयोजनं छान्दोग्यभाष्यटीकायामस्मद्गुरुचरणैः प्रदर्शित-मनुसन्धेयम् ।

**श्री० — पदसमुच्चय इति** । एकादिपदानां परस्परसमुच्चय इत्यर्थः । ननु नैकादिपदानां वैयर्थ्यम् । सर्वस्य मृन्मयस्यैकस्मिन्नारोपितत्वकथनार्थत्वादित्यत आह **आरोपितत्वं त्विति** ॥ **सर्व-स्येति** । सर्वस्य मृन्मयस्य एकस्मिन्मृत्पिण्डे आरोपः कुत इत्यर्थः । नन्वेकस्यापि मृन्मयस्यैकस्मिन्मृत्पिण्डे आरोपितत्वं नेत्ययुक्तम् । अयं घटः एतन्मृत्पिण्डनिष्ठात्यन्ताभावप्रतियोगी घटत्वात् घटान्तरवदित्यनु-मानेन समर्थ्यत इत्याशङ्कते **युक्त्येति** ॥ **दृष्टान्तत्वे इति** । जगतो ब्रह्मण्यारोपितत्वे इति शेषः ॥ **किं त्विति** । दृष्टान्तत्वानुपपत्तिरित्येव न, किं त्वित्यर्थः । घटादीनामवयविनां प्रत्यक्षादिना सत्यतया सिद्धत्वेनेत्यर्थः । अभ्युपेत्याह **आरोपितत्वेऽपीति** । एकस्य मृन्मयस्यैकस्मिन्नारोपितत्वेऽपीत्यर्थः । एकस्मिन्=मृत्पिण्डे । सर्वं=मृन्मयमारोपितम् । परमकारणस्य=ब्रह्मणः ॥ **कार्येति** । कार्याभिमुखाया-मेव मृदि पिण्डशब्दप्रयोगादिति ध्येयम् । अत्र=दृष्टान्तवाक्ये ।

---

सु० — अपि चाद्ययोर्दृष्टान्तयोः कार्यकारणभावमात्रमस्ति । किन्त्वेकादिपदवैयर्थ्य-मेव । इदन्तु सर्वथा नोपपद्यते, यथा सोम्यैकेन नखनिकृन्तनेनेति । नखनिकृन्तनस्यान्त्या-वयवित्वेन कार्ष्णायसान्तरं प्रति कारणत्वस्यैवासंभवात् । किम्वेकस्य सर्वं प्रतीत्याह न चेति ।

अनु० — न चैकनखकृन्तनम् ॥

सर्वं कार्ष्णायसं च स्यात्

सर्वं चेति द्वितीयचशब्दसंबन्धः ।

यद्यत्र दृष्टान्तत्रये न विकारविवर्तविवक्षा किं तर्हि विवक्षितमित्यत आह अत इति ।

अतः सादृश्य एव च ॥

विवक्षाऽत्र तु नित्यत्वे प्राधान्ये चोक्तवर्त्मना ॥

अर्थान्तरस्य दूषितत्वादित्यर्थः । चशब्दावितरेतरसमुच्चये । तुशब्देन नित्यत्वं विशिनष्टि । नित्यत्वं प्राधान्योपपादकमेव न तु स्वतन्त्रमेकविज्ञानेन सर्वविज्ञानस्येति । मृत्पिण्डादिदृष्टान्तत्रयं सादृश्यविषयम् । वाचारंभणमित्यादि तु प्राधान्यविषयमिति विवेक्त-

व्यम् । वाचारंभणदृष्टान्तस्य पूर्वमेव व्याख्यातत्वात्किं पुनर्वचनेनेति चेन्न । बुद्ध्यारोहार्थमुक्तस्याप्यनुक्तेन सहैकेन वाक्येनोक्तिसंभवादित्याशयेनोक्तम् उक्तेति । सादृश्यादेकविज्ञानेन सर्वविज्ञानमाचार्येणान्यत्र व्युत्पादितमत्रानुसन्धेयम् । तथा मृत्पिण्डादिदृष्टान्तानामवान्तरभेदोऽपीति ।

शे० — अन्त्यावयवित्वेनेति । न च नखनिकृन्तनग्रहणम् अयःपिण्डोपलक्षणमिति वाच्यम् । असद्रीत्या मुख्यार्थे संभवति लक्षणाया अयोगादित्यत्र तात्पर्यात् । तुशब्दोक्तं विशेषमेव व्यनक्ति नित्यत्वमिति । अत्राविशेषेण सादृश्यप्राधान्यविषयकत्वं षण्णामपि मृत्पिण्डादिदृष्टान्तानामिति भ्रमं परिहरति मृत्पिण्डादीति ॥ अन्यत्रेति । 'सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीज्ञानमि'त्यादिना तत्त्वनिर्णयादावित्यर्थः ॥ अवान्तरभेदोऽपीति । मृत्पिण्डदृष्टान्ते सादृश्ये सति कार्यकारणभावः । लोहमणिदृष्टान्ते सादृश्ये सति प्राधान्याप्राधान्यभावः । नखनिकृन्तनदृष्टान्ते सादृश्ये सत्यपि बहुत्वाल्पत्वमित्यवान्तरभेदोऽपीत्यर्थः । अत्राप्यन्यत्रोपपादितोऽनुसन्धेय इति लिङ्गविपरिणामेन संबन्धनीयम् । अत्र चान्यत्रेत्यस्य छान्दोग्यभाष्य इत्यर्थो द्रष्टव्यः । 'यथा मृत्पिण्डविज्ञानात्सादृश्यादेव मृन्मयाः । विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च । यथा स्वर्णस्य विज्ञानात्सर्वे लोहमयास्तथा । प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा । अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु । ज्ञायते नखकृन्तन्यां यथा सर्वमयोमयम् । किमु विष्णोर्बहुज्ञानादत्यल्पं जगदीदृश'मित्यादिना छान्दोग्यभाष्येऽवान्तरभेदस्योक्तत्वादिति भावः ।

स० — तुशब्दोक्तं विशेषमेव व्यनक्ति नित्यत्वमिति ॥ अन्यत्राचार्येण व्युत्पादितमिति । 'सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीविज्ञानमि'त्यादिना तत्त्वनिर्णयादौ व्युत्पादितमत्रानुसन्धेयमित्यर्थः । तथा मृत्पिण्डादिदृष्टान्तानाम् अवान्तरभेदोऽपीति । मृत्पिण्डदृष्टान्ते सादृश्ये सति कार्यकारणभावः । लोहमणिदृष्टान्ते सादृश्ये सति प्रधानाप्रधानभावः । नखनिकृन्तनदृष्टान्ते सादृश्ये सति बहुत्वाल्पत्वमित्येवंरूपो योऽवान्तरभेदः ''यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयः । विज्ञायते तथा विष्णोः सादृश्याज्जगदेव च । यथा स्वर्णस्य विज्ञानात् सर्वलोहमयास्तथा । प्राधान्याद्विष्णुविज्ञानात् विज्ञातं स्याज्जगत्सदा । अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु । ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् । किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् । अनन्याधीनविज्ञानादन्याधीनं तथैव च । मृदयोलोहनाम्नां च ज्ञानात्साङ्केतिकं यथा ।' इत्यादि सामसंहितायामि''त्यादिना छान्दोग्यभाष्यादौ व्युत्पादितोऽत्रानुसन्धेय इति भावः ।

प०— **सर्वविज्ञानस्येति** । इतिशब्दस्येति विशिनष्टीति पूर्वेणान्वयः ॥ **अन्यत्रेति** । 'सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीज्ञानमि'ति तत्त्वनिर्णये व्युत्पादितमत्रानुसन्धेयमित्यर्थः ॥ **अवान्तरभेदोऽपीति** । 'यथा मृत्पिण्डविज्ञानात्सादृश्यादेव मृण्मयाः । विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च । यथा स्वर्णस्य विज्ञानात्सर्वे लोहमयास्तथा । प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा । अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु । ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् । किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् । अनन्याधीनविज्ञानादन्याधीनं तथैव च । मृदयोलोहनाम्नां हि ज्ञानात्साङ्केतिकं यथा' इति छान्दोग्यभाष्योक्तोऽत्रानुसन्धेय इत्यर्थः । बृहद्भाष्ये तु 'सादृश्य एव नखनिकृन्तनदृष्टान्तः । अभ्यासस्तात्पर्यार्थे' इत्युक्तम् ।

या०— **इति** विशिनष्टीत्यन्वयः ॥ **अन्यत्रेति** । 'सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीज्ञानमि'त्यादिना तत्त्वनिर्णयादौ व्युत्पादितमित्यर्थः ॥ **अवान्तरभेदोऽपीति** । 'यथा मृत्पिण्डविज्ञानात्सादृश्यादेव मृन्मयाः । विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च । यथा स्वर्णस्य विज्ञानात्सर्वे लोहमयास्तथा । प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा । अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु । ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् । किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशमि'त्यादिना छान्दोग्यभाष्ये व्युत्पादितोऽत्रानुसन्धेय इत्यर्थः ।

श्री०— **सर्वं चेति** । ततश्च नखनिकृन्तनं कार्ष्णायसान्तरं न स्यादन्यावयवित्वात् । एकं नखनिकृन्तनं सर्वं च कार्ष्णायसं न स्यादिति मूलयोजना द्रष्टव्या । तमेव विशेषं व्यनक्ति **नित्यत्वमिति** । **सर्वविज्ञानस्य** । उपपादकमिति वर्तते । पूर्वमेव 'प्राधान्यात्तत्परिज्ञानादि'त्यादिनेत्यर्थः । **उक्तस्यापि** प्राधान्यस्य । **अनुक्तेन** सादृश्येन । बुध्यारोहार्थमुक्तिसम्भवादित्यन्वयः ॥ **अवान्तरेति** । सदृशज्ञानात्सदृशज्ञानमित्यत्राद्यो दृष्टान्तः, प्रधानसदृशज्ञानादप्रधानसदृशज्ञानमित्यत्र द्वितीयः, अल्पसदृशज्ञानाद्बहुसदृशज्ञानमित्यत्र तृतीयः, इति दृष्टान्तत्रयेऽप्यन्यवान्तरभेदोऽप्यत्रोपपादितोऽनुसन्धेय इत्यर्थः ।

**सु०— नन्वस्मिन्नपि पक्षे 'सदेव सोम्येदमग्र आसीत्'इत्यादेरुत्तरग्रन्थस्य सङ्गत्यभावो दोषः । अस्माकं तु कार्यकारणभावादिप्रपञ्चार्थत्वेन अस्त्युपयोग इत्यत आह** प्राधान्येति ।

**अनु०**— प्राधान्यप्रतिपत्त्यर्थं सृष्ट्यादेश्चैव(ष)विस्तरः ॥

**आदिपदेन प्रलयेऽवस्थानं त्रिवृत्करणं जीवरूपेण प्रवेशनमित्यादिकं गृह्यते । प्राधान्याद्ब्रह्मज्ञानेन सर्वज्ञानस्य फलं भवतीत्युक्तं, कुतस्तस्य प्राधान्यमित्याशङ्कायां, तत्प्रतिपत्त्यर्थं सृष्ट्यादेः प्रतिपादक एष ग्रन्थविस्तरः प्रवृत्तोऽतः कथमसङ्गतिरिति । चशब्दोऽवधारणे ।**

**न तूपादानत्वादिप्रतिपत्त्यर्थमिति । न ह्युपादानं प्रेक्षापूर्वं कार्यं करोति । नाप्यधिष्ठानमध्यस्तम् । एष चेति वा संबन्धः । तेन 'अपागादग्नेरग्नित्वम्' इत्याद्यपि परस्य ब्रह्मणः प्राधान्यप्रतिपत्त्यर्थमेवेत्युक्तं भवति । तथा चोक्तं भाष्ये ।**

**श्री०** — 'सृष्ट्यादेश्चैष विस्तरः' इति मूलमसाधु । 'प्रथने वावशब्द' इति विपूर्वात्स्तृञो घञ्विधानेन घञि सति विस्तार इत्येव वक्तव्यत्वादित्यत आह **ग्रन्थविस्तर इति** । उपादानत्वादीत्यादिपदेनारोपितत्वपरिग्रहः । तत्कथमित्यतः परिणामवादे तदयोगं दर्शयति **न हीति** । उपादानं कर्तृ । विवर्तवादेऽपि तदयोगं दर्शयति **नापीति** । **अधिष्ठानं** कर्तृ । **अध्यस्तं** करोतीति सम्बन्धः । प्रयोजनविशेषसिद्ध्यर्थं चशब्दोऽवधारणार्थतया व्याख्यातः । अर्थविशेषलाभार्थमेव समुच्चयार्थतयाऽपि तं व्याचष्टे **एष चेति वेति** । सम्बन्धकथनप्रयोजनमाह **तेनेति** । कथमेतद्ब्रह्मणः प्राधान्यप्रतिपत्त्यर्थमित्यत आह **तथा चोक्तमिति** । 'तस्मादग्नेर्यदग्नित्वमग्निनामप्रवर्तकम् । लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः । मुख्यैवमाददानत्वमादित्यस्य तदुद्भवमि'त्यादिना छान्दोग्यभाष्य उक्तमित्यर्थः ।

**स०** — **नाप्यधिष्ठानमध्यस्तमिति** । प्रेक्षापूर्वं करोतीति पूर्ववाक्यादनुषङ्गोऽत्र द्रष्टव्यः । **तथा चोक्तं भाष्य इति** । 'अतो यल्लोहितं रूपं श्रियस्तद्रूपसंभवम् । यच्छुक्लं वायुजं विद्यात् कृष्णं चैव शिवोद्भवम् । तस्मादग्नेर्यदग्नित्वमग्निनामप्रवर्तकम् । लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः । मुख्यैवमाददानत्वमादित्यस्य तदुद्भवम्' इत्यादिना छान्दोग्यभाष्ये उक्तमित्यर्थः ।

**प०** — **जीवरूपेणेति** । 'अनेन जीवेनात्मनानुप्रविश्ये'तिवाक्योक्तजीवशब्दितानिरुद्धरूपेण प्रवेशनमित्यर्थः ॥ **अधिष्ठानमध्यस्तमिति** । अधिष्ठानं कर्तृ अध्यस्तं कर्म प्रेक्षापूर्वं करोतीत्यनुषङ्गः । एष चेत्यन्वितश्चशब्दोऽनुक्तसमुच्चय इति भावेनाह **तेनेति** । 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यमि'त्याद्यग्न्यादित्यादेरग्न्यादित्वाद्यभावकथनमित्यर्थः ॥ **तथाचोक्तं भाष्य इति** । 'अतो यल्लोहितं रूपं श्रियस्तद्रूपसम्भवमि'त्यादिना । 'एक एवाद्वितीयोऽसावतः सर्वोत्तमत्वतः' इत्यन्तेन षष्ठे छान्दोग्यभाष्ये उक्तमित्यर्थः ।

**या०** — **अधिष्ठानं** कर्तृ । **अध्यस्तं** करोतीति सम्बन्धः ॥ **तथा चोक्तमिति** । 'तस्मादग्नेर्यदग्नित्वमग्निनामप्रवर्तकम् । लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः । मुख्यैवमाददानत्वमादित्यस्य तदुद्भवमि'त्यादिना छान्दोग्यभाष्ये उक्तमित्यर्थः ।

श्री० — कार्यकारणभावादीत्यत्रादिपदेनाधिष्ठानाध्यस्तभावग्रहणम् । इत्यादिकमित्यनन्तरं 'सदेव सोम्येदमग्र आसीत् , तासां त्रिवृतं त्रिवृतमेकैकामकरोत् , अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यादिवाक्यप्रतिपाद्यमिति शेषः ॥ **चशब्द इति** । तथा च प्राधान्यप्रतिपत्त्यर्थमेवैष सृष्ट्यादेर्विस्तर इत्यर्थः । अवधारणव्यावृत्त्यर्थकथनम् **न त्विति** । अत एव 'प्राधान्यज्ञापनार्थमेव सृष्ट्यादिकथनमि'त्युक्तं तत्त्वोद्योत इति ध्येयम् । परिणामवादिमते विवर्तवादिमते चेदं विरुद्धमित्याह **न हीत्यादिना ॥ एष चेति वेत्यादि** । तथा च सृष्ट्यादेर्विस्तरः प्राधान्यप्रतिपत्त्यर्थमेष यो बुद्धिस्थः अपागादित्यादिवाक्यविस्तरश्च प्राधान्यप्रतिपत्त्यर्थमेवेति योजना द्रष्टव्या ।

च० — **तथा चोक्तं भाष्य इति** । 'तस्मादग्रेर्यदत्तृत्वमग्निनामप्रवर्तकम् । लक्ष्म्यादिदेवतानां तन्नैवाग्नेऽग्निनामतः । मुख्यैवम(ो)ादादानत्वमादित्यस्य तदुद्भवमि'त्यादिछान्दोग्यभाष्ये उक्तमित्यर्थः ।

सु० — **विवर्तमतनिराकरणमुपसंहरति** तस्मादिति ।

**अनु०** — तस्मात्केनापि मार्गेण न विवर्तमतं भवेत् ॥

केनापि मार्गेणेति । **ब्रह्माविद्यापक्षेण वा, जीवाविद्यापक्षेण वा, एकजीवमतेन वा, अनेकजीवमतेन वा, स्वपक्षसाधनेन वा, परपक्षनिरासेन वा, युक्तिपर्यालोचनया वा, श्रुतिपर्यालोचनया वा, विचारितमिति शेषः** । न भवेत् **उपपन्नमित्यध्याहारः** । **ततः किमित्यत आह** तदिति ।

तदसंख्यातदोषेतं हेयमेव शुभार्थिभिः ॥

**तत्=विवर्तमतम् । तस्मादिति वा । तस्यैव विवरणं असङ्ख्यातदोषेतं यस्मादिति । हेयमेव तत् । न तु तदुक्तरीत्या सूत्रार्थो ग्राह्यः । एतेन परमतनिराकरणस्यासङ्गतिरपि निरस्ता वेदितव्या ।**

प० — **एतेनेति** । तदुक्तरीत्या सूत्रार्थस्याग्राह्यत्वफलकथनेनेत्यर्थः । अन्यथाऽत्रोक्तसूत्रार्थस्य निःशङ्कं परिग्रहानापत्तेरिति भावः ।

श्री० — **विचारितमिति** । केनापि मार्गेण विवर्तवादिमतं विचारितमस्माभिस्तदुपपन्नं न भवेदिति योजना ॥ **एतेनेति** । परोक्तव्याख्याननिराकरणस्य स्वव्याख्यानदार्ढ्यार्थत्वेनेत्यर्थः । **असङ्गतिः** सूत्रव्याख्यानमुपक्रम्यापव्याख्याननिराकरणमसङ्गतम् । न हि तन्निराकरणं कस्यचित्सूत्रस्यार्थ इत्यसङ्गतिरित्यर्थः ।

सु०— यद्युक्तातिरिक्तदोषाः सन्ति । तर्हि दूषणाभिधानाय प्रवृत्तैर्वक्तव्याः । किमुपरमेणेत्यत आह असंख्यत्वेनेति ।

अनु०— असङ्ख्यत्वेन दोषाणां ग्रन्थाधिक्यभयादपि ॥
उपरम्यते

दोषाणामतिबहुत्वेन कांश्चिदुक्त्वा केषांचिदुपलक्षणे(णत्वे)नैवोपरन्तव्यम् । उपलक्षणं चैतावताऽपि भवतीत्युपरम्यत इति । सर्वेऽपि वक्तव्याः, किमुपलक्षणत्वेनेत्यत उक्तम् ग्रन्थेति । ग्रन्थाधिक्ये हि श्रोतॄणां प्रवृत्तिर्न स्यात् । तथा च कृतमप्यकृतं स्यादिति भयादपीत्यर्थः ॥

यदि नोपादानतया विभ्रमाधिष्ठानतया वा, ब्रह्मणो जगत्कारणत्वं, कीदृशं तर्हि जन्मादिसूत्रेऽभिहितमित्यत आह तत इति ।

अनु०— ततो विष्णुरिच्छापूर्वकमश्रमः ॥
करोति पितृवद्विश्वं

परिणामादिवादस्य निरस्तत्वादित्यर्थः । पितृवदिच्छापूर्वकमिति कर्तृत्वेन निमित्तत्वमभिप्रैति । विचित्रानेककार्यकर्तृत्वे श्रमादिदोषाः प्रसज्यन्त इत्यत उक्तम् अश्रम इति । तदुक्तमन्तर्याम्यधिकरणे । यद्वाऽश्रम इत्यनेनेदमभिप्रैति । 'अधिकं तु भेदनिर्देशादि'त्यादिना ब्रह्मणः श्रमादिर्निरसिष्यते । न चोपादानादेः श्रमादिप्रसक्तिरस्ति । अतोऽपि कर्तृत्वमेवाभिप्रेतं सूत्रकारस्येति ।

एवमस्मिन्नध्याये परब्रह्मणि नारायणे प्रतिपादितस्य सकलश्रुतिसमन्वयस्य फलं जन्मादिसूत्रोदितलक्षणसिद्धिमुपसंहरति पूर्णेति ।

पूर्णाशेषगुणात्मकः ॥ ६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
प्रथमाध्यायस्य चतुर्थपादः ॥ १–४ ॥

पूर्णाः प्रत्येकं निरवधिकाः ।

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ॥
कृतायां टीकायां विषमपदवाक्यार्थविवृतावयं पूर्वाध्याये चरमचरणः पर्यवसितः ॥

शे० — **तदुक्तमन्तर्याम्यधिकरण इति** । 'रमणं नातियत्नस्य विक्षेपादेव युज्यते । इति चेत्सर्वनियमो यस्य कस्मान्न शक्यते । स्वात्मनाऽनियतं वस्तु प्रतीपं ह्यात्मनो भवेत् । स्वाधीनसत्ता-शक्त्यादि कथमात्मप्रतीपकमि'त्यादिना श्रमादिराहित्यमुक्तमित्यर्थः ॥ **लक्षणसिद्धमिति** । जगज्जन्मा-दिकारणत्वरूपतत्सूत्रोदितलक्षणसिद्धमनन्तगुणपूर्णत्वमित्यर्थः । अशेषपदेन पौनरुक्त्यपरिहारायाह **प्रत्येकं निरवधिका इति** ॥ १-४-६ ॥

सर्वाभीष्टप्रदं रामं सर्वानिष्टनिवारकम् । जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ १ ॥
विद्वन्मत्तेभकुम्भाद्रिविपाटनविचक्षणः । विद्याधीशनृसिंहो मे गुरुर्नित्यं भवेन्मुदे ॥ २ ॥
यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् । अस्त्वेषा भक्तियुता श्रीविद्याधीशपादयोः सेवा ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशपूज्यपादानां निजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥ १-४ ॥

स० — **तदुक्तमन्तर्याम्यधिकरणे इति** । 'रमणं नातियत्नस्य विक्षेपादेव युज्यते । इति चेत्सर्वनियमो यस्य कस्मान्न शङ्क्यते । स्वात्मना नियतं वस्तु प्रतीपं ह्यात्मनो भवेत् । स्वाधीनसत्ता-शक्त्यादि कथमात्मप्रतीपकमित्युक्तमित्यर्थः । अशेषपदपौनरुक्त्यं परिहरति **पूर्णाः प्रत्येकं निरवधिका इति** ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य जयतीर्थविरचितसुधाया विद्याधीशतीर्थपूज्यपादशिष्यसत्यव्रततीर्थकृतायां टिप्पणिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥

प० — **अन्तर्याम्यधिकरण इति** । 'रमणं नातियत्नस्य विक्षेपादेव युज्यते' इत्यादिना 'कथमात्मप्रतीपकमि'त्यन्तेन श्रमाभाव इत्येतदुक्तमित्यर्थः । अश्रम इत्युक्तेरर्थवत्त्वाय हेतुगर्भविशेषण-मुपेत्याह **यद्वेति** ॥ **इत्यादिनेति** । इतरव्यपदेशादिति युक्तिपादीयाधिकरणगुणसूत्रादिनेत्यर्थः ॥ **जन्मादिसूत्रोदितेति** । एतच्चोपलक्षणम् । जिज्ञासासूत्रस्थब्रह्मपदोक्तप्रधानलक्षणमित्यपि ध्येयम् । तेन सकलश्रुतिसमन्वयः फलमिति युक्तम् । यद्वा 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तमि'त्यानन्दमयनयानुव्याख्यानोक्त्या जन्मादिहेतुत्वलक्षणसिद्ध्या प्रधानलक्षणं फलतः सिद्ध्यतीति

भावेन जन्मादिसूत्रेत्येवोक्तम् । मूले गुणपदेन स्रष्टृत्वादीनां तदाक्षिप्तज्ञानानन्दादीनां अज्ञानदुःख-द्वेषादिदोषाभावानां च ग्रहः । जन्मादीतिपदेन जन्मसूत्रमादिसूत्रं च ग्राह्यमित्येके । मूलेऽशेषगुणेति जन्मादिसूत्रोक्तगुणाष्टकस्यैव ग्रहः । अतो जन्मादिसूत्रेति युक्तमित्यन्ये । अशेषपदेनापौनरुक्त्यायाह **पूर्णाः प्रत्येकं निरवधिका इति** ॥

इतिश्रीमत्सुधीन्द्रतीर्थपूज्यपादशिष्यश्रीराघवेन्द्रयतिकृते श्रीमन्न्यायसुधापरिमळे
प्रथमाध्यायस्य चतुर्थः पादः ॥

**या० — तदुक्तमन्तर्याम्यधिकरण इति** । 'रमणं नातियत्नस्य विक्षेपादेव युज्यते । इति चेत्सर्वनियमो यस्य कस्मान्न शक्यते । स्वात्मनाऽनियतं वस्तु प्रतीपं ह्यात्मनो भवेत् । स्वाधीनसत्ताशक्त्यादि कथमात्मप्रतीपकमि'त्यादिना श्रमराहित्यमुपपादितमित्यर्थः ॥ **प्रत्येकं निरवधिका इति** । अन्यथाऽशेषपदेन पौनरुक्त्यं स्यादिति भावः ॥ १-४-६ ॥

आनन्दादिगुणोद्रिक्तमानन्दादिपदाभिधम् । आनन्दमुनिपं व्यासं स्वानन्दाय भजे मुहुः ॥ १ ॥
सुधायाः प्रथमाध्यायो यदुपत्याख्यसूरिणा । व्याख्यातः श्रीहरिप्रीत्यै वेदेशगुरुशिक्षया ॥ २ ॥
श्रीव्यासरामालवबोधपादसेवाप्तवेदेशगुरूपदिष्टः ।
अर्थो निबद्धोऽत्र विचार्य सद्भिरार्यैरुपेक्ष्यो न भवेदतोऽयम् ॥ ३ ॥

इति श्रीवेदेशतीर्थपूज्यपादशिष्ययदुपतिविरचितायां श्रीमन्न्यायसुधाटिप्पण्यां
प्रथमाध्यायस्य चतुर्थः पादः ॥ १-४ ॥

**श्री० — प्रसक्तिरस्तीति** । तथा च तन्निराकरण'मधिकं त्वि'त्यादिना क्रियमाणमप्रसक्तप्रतिषेधरूपं स्यादिति ध्येयम् । पूर्णेत्यस्याशेषेत्यनेन पौनरुक्त्यपरिहारायाह **पूर्णा इति** । प्रत्येकमित्यस्यैकैकोऽपि गुणो निरवधिक इत्यर्थः । तथा चापरिच्छिन्नानन्तगुणात्मक इति यावदिति ज्ञेयम् । यथोक्तम् 'प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते । तदानन्त्यं हि गुणतस्ते चानन्ता हि संख्यया' इत्यशेषमतिमङ्गलम् ॥ १-४-६ ॥

**इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽधृतसुधावाक्यार्थविवरणे**
**प्रथमाध्यायस्य चतुर्थः पादः ॥ १-४ ॥**

च०— प्रत्येकं निरवधिका इति । निरादय इत्यनुशासनादत्रध्यगादानकनिष्कान्ति विशेषिता इत्यर्थः । अन्यथाऽशेषपदेन पौनरुक्त्यं स्यादिति भावः । इत्यशेषमतिमङ्गलम् ॥

सौधावरुक्षणीयार्थ(म)प्रतिव्याकृत मन्दधी । मनोहत्य गुरुश्रीशप्रसत्या जडचेतसे ॥

श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः । सुनन्दतात्सेवया मे भक्त्याऽलङ्कृतयाऽनया ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीण-श्रीसत्यप्रियतीर्थपूज्यपादतनूजसर्वतन्त्रस्वतन्त्र-गालवपुरीश्रीनिवासार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां श्रीमन्न्यायसुधाचषकनाम्न्यां व्याख्यायां प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ इति प्रथमोऽध्यायः ॥

श्रीमत्-जयतीर्थविरचिता

सनाभिः

# श्रीमन्-न्यायसुधा

षट्टिप्पणीसमेता

## अथ द्वितीयोऽध्यायः

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

सु० — यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम् ।
न क्षमन्ते विमतयस्तमुपासे श्रियः पतिम् ॥ १ ॥

एकवाक्यता(दि)सिद्धये प्रथमाध्यायार्थसङ्गतत्वेन द्वितीयाध्यायार्थं विवक्षुरबुद्धिस्थेन सङ्गतेर्दर्शयितुमशक्यत्वात् प्रथमाध्यायार्थं तावदनुवदति उक्त इति ।

अनु० — उक्तः समन्वयः साक्षात्

(सकल)जगज्जन्मादिनिमित्तकारणे सार्वज्ञ्यसर्वैश्वर्याद्यनन्तगुणपरिपूर्णेऽविद्याद्यवद्यगन्धविधुरे परे ब्रह्मणि नारायणे स्वरवर्णपदवाक्यमहावाक्यरूपस्य समस्तस्य शास्त्रस्य, साक्षात्परममुख्यया वृत्त्या न तु लक्षणया, तथा महातात्पर्येण न तु पारार्थ्येन समन्वयः प्रथमेऽध्याये समर्थित इत्यर्थः ।

यद्यपि समन्वयशब्देनैव साक्षादित्यर्थो लभ्यते । तथाऽपि परकीयसंशब्दव्याख्याननिरसनेऽवहितैर्भवितव्यमिति सूचनाय तद्व्याख्यानमिदं कृतमित्यदोषः । अथवा समन्वयशब्देन मुख्यया वृत्त्याऽन्वयः प्रतीयते । परममुख्यया तु वृत्त्या अन्वयं दर्शयितुं साक्षादित्युक्तम् । यद्वा न प्रधानपरमाण्वादिनिरसनेन उपादानत्वादिप्रतिपादनेन च परम्परया किन्तु साक्षादेवेत्यनेनाचष्ट ।

श्लो० - सर्वाभीष्टप्रदं रामं सर्वानिष्टनिवारकम् । जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ १ ॥
विद्वन्मत्तेभकुम्भाद्रिविपाटनविचक्षणः । विद्याधीशनृसिंहो मे गुरुर्नित्यं भवेन्मुदे ॥ २ ॥
यद्विद्याधीशगुरोः शिश्रूषाऽन्या न रोचते तस्मात् । अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥३॥

अविरोधलक्षणं व्याचिख्यासुर्ग्रन्थकारः पूर्वाध्यायार्थानुवादपूर्वकं तत्सङ्गतत्वेन द्वितीयाध्यायार्थमेकवाक्यतादिसिद्धये सूचयन्नेव प्रारिप्सितस्यानन्तरायपरिसमाप्तेः प्रचयस्य च हेतुतयाऽविगीतशिष्टाचारपरम्परादिनाऽवगतमवश्यकरणीयं श्रीपत्युपासनारूपमेतदध्यायप्रतिपाद्यगुणविशिष्टतया तत्स्तुतिरूपं च मङ्गलमनुष्ठाय शिष्यशिक्षायै अध्यायादावुपनिबध्नाति यत्पदमिति । अत्र वेदसंवेद्यमित्याद्याध्यायार्थसङ्कीर्तनम् । विमतयो यत्पदं नाभिवीक्षितुं क्षमन्त इत्येतदध्यायार्थकथनम् । अत्र च विरुद्धा मतिर्भवति येभ्यो युक्त्यादिभ्यस्ते युक्त्यादयो वा, युक्त्यादिभिर्विरुद्धमतयो येषामिति वादिनो वा, विरुद्धाश्च ता मतयश्चेति युक्त्यादिजन्यचतुर्विधविरोधिप्रतीतयो वा, विमतिशब्देन विवक्षिताः । ते च वेदसंवेद्यं यत्पदं नाभिवीक्षितुं क्षमन्त इत्यस्य वेदसमन्वयसिद्धमर्थं नान्यथयितुं शक्नुवन्तीत्यर्थः । अन्यथा पूर्वा-

ध्यायार्थेन सङ्गत्यसूचनप्रसङ्गाद्वेदसंवेद्यमित्यस्याऽऽनर्थक्यं स्यादिति द्रष्टव्यम् । मूले 'उक्तः समन्वयः साक्षादि'ति पूर्वाध्यायार्थानुवादवैयर्थ्यशङ्कां तत्प्रयोजनप्रदर्शनेन परिहरति **एकवाक्यतादीति** । स्वस्मिन्निति शेषः । आदिपदेन पूर्वोत्तरभेदसंग्रहः । अध्यायार्थानुक्तौ हि कुतोऽस्य वाक्यसमुदायस्यैकवाक्यत्वं कुतश्च पूर्वोत्तराभ्यां भेद इति शङ्क्येत । तदुक्तौ त्वविरोधलक्षणैकार्थप्रतिपादकत्वादेकवाक्यत्वस्य तस्य पूर्वोत्तरव्यावृत्तत्वात्पूर्वोत्तरभेदस्य च सिद्धिरिति भावः । नन्वेवमविरोधः साध्यत इत्यध्यायार्थोक्त्यैव स्वस्मिन्नेकवाक्यत्वस्य पूर्वोत्तराभ्यां भेदस्य च समर्थितत्वाद्भाष्ये 'अत्र'इत्यस्यानर्थक्यमित्यतोऽध्यायार्थोक्त्या एकवाक्यत्वादिसिद्धावप्यसङ्गतार्थप्रतिपादने प्रेक्षावदप्रवृत्त्या तत्प्रवृत्त्यर्थतया सङ्गतेरप्यवश्यं दर्शनीयत्वात् तत्सूचकतया 'अत्र'इत्यस्यार्थवत्त्वोपपत्तेर्नानर्थक्यमित्याशयेन प्रथमाध्यायार्थसङ्गतत्वेनेत्युक्तम् ॥ **दर्शयितुमशक्यत्वादिति** । सङ्गतेः ससम्बन्धिकपदार्थतया सम्बन्धिनिरूपणाधीननिरूपणत्वादिति भावः । 'अविरोधोऽत्र साध्यते' इति द्वितीयाध्यायार्थस्याप्युत्तरत्र कथनात्तावदित्युक्तम् । प्रकृत्यधिकरणे परोक्तोपादानत्वनिरासायाह **निमित्तकारण इति** । उपादानत्वे ब्रह्मणो निर्विकारत्वानुपपत्तिः विवर्ताधिष्ठानत्वे तु, श्रुतौ 'यतो वा इमानि भूतानि जायन्ते' इति निर्देशः, सूत्रे जन्मादीति निर्देशश्चासङ्गतः स्यात् । न हि शुक्तिकातो रजतं जायत इति व्यपदेशोऽस्तीति भावः । द्युभ्वादीति तृतीयपादे परोक्तस्य निर्गुणे समन्वयस्य निरासं सूचयितुमाह **सार्वज्ञ्येत्यादि** । पूर्वाध्याय एव प्रथमद्वितीयपादयोः परोक्तस्य मायाशबले ब्रह्मणि समन्वयस्य निरासं सूचयितुमुक्तम् **अविग्रादीति** । नारायणस्यापरब्रह्मत्वमिति परमतनिरासायोक्तं **परे ब्रह्मणीति** । प्रधानस्याशब्दत्वं चतुर्थपादार्थ इति परमतमश्रद्धेयमिति भावेनाह **स्वरेत्यादि** । यद्वा समन्वयादित्यत्र कार्त्स्न्यं संशब्दार्थ इत्याशयेनोक्तं **स्वरेत्यादि** ॥ **नत्विति** । परमत इवेति शेषः ॥ **पारार्थ्येनेति** । उपासनाविधिशेषत्वेनेत्यर्थः समन्वयसूत्रे तस्योक्तत्वेऽप्यानन्दमयोऽभ्यासादित्यादिनाऽध्यायेन तस्यानुक्तत्वादुक्तपदास्वारस्यमित्यत उक्तशब्दः समर्थनरूपतद्विशेष इत्याह **समर्थित इति** ॥ **समन्वयशब्देनैवेति** । सौत्रसमन्वयशब्दान्तर्गतसंशब्देनेत्यर्थः ॥ **साक्षादित्यर्थ इति** । साक्षादित्यस्य योऽर्थः परममुख्यादिरुक्तः स इत्यर्थः ॥ **लभ्यत इति** । समिति ह्युपसर्गेण परममुख्यार्थ उच्यत इति वक्ष्यमाणप्रकारेणेति शेषः । ततश्च साक्षात्पदानर्थक्यमिति भावः । व्याख्यानव्याख्येयभावाश्रयणान्न वैयर्थ्यमिति भावेन, किं व्याख्यानेनापीत्यतः परकीयसंशब्दव्याख्याननिरासस्तत्प्रयोजनमित्याशयेनाह **तथाऽपीति** ॥ **परकीयेति** । समीचीनोऽन्वयः समन्वयः समीचीनता त्वन्वयस्य तात्पर्यवत्ता, सा च लाक्षणिकेऽप्यर्थे शब्दानां सम्भवतीति न समन्वयसिद्ध्यर्थं वाच्यत्वापेक्षेति परकीयव्याख्यानेत्यर्थः । एतन्निरासप्रकारश्च 'कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम्'इतीक्षत्यधिकरणोक्तरीत्याऽनुसन्धेयः । व्याख्यानव्याख्येयभावाश्रयणमगतिका गतिरित्यपरितुष्यन्नाह **अथवेति** ॥ **मुख्यया**

**वृत्त्याऽन्वय इति** । एतच्च कारणाभावेऽपि सङ्कोचाभ्युपगमेन प्रवृत्त'मुख्यार्थो भगवान्विष्णुरि'तिसमन्वयसूत्रीयानुव्याख्यानानुसारेणोक्तम् । अत एवास्वरसात्साक्षाच्छब्दस्वारस्यानुसारेण पक्षान्तरमाह **यद्वेति** ॥ **परम्परयेति** । कारणवाक्यानां प्रधानादिपरत्वनिरासेन ब्रह्मण उपादानत्वादिप्रतिपादनेन च ब्रह्मपरत्वं सिध्यतीत्येवं परम्परयेत्यर्थः । चतुर्थपादे परेण कारणवाक्यानां ब्रह्मणि परम्परया स न्वयसिद्धेरङ्गीकारात्तन्निरासाय साक्षादित्युक्तमिति भावः ।

**स०**— श्रीवेदव्यासाय नमः ॥ श्रीरस्तु ॥ द्वितीयाध्यायार्थत्वेन परमात्मानं स्तौति **यत्पदमिति** ॥ यत्स्वरूपमित्यर्थः । कुमतयः कुत्सिता मतयः । साकल्येनाविषयीकरणेऽपि कथञ्चित् कुमतिविषयत्वं संभवतीत्यत आह **कटाक्षेणापीति** । अथवा यत्पदं यस्य परमात्मनः पदं पादम् । कुमतयः कुत्सिता मतयो येषां ते पुरुषाः ।

**एकवाक्यतादीति** ॥ स्वस्मिन्नेवेति शेषः । आदिपदेन पूर्वोत्तराभ्यां भेदसिद्धये चेत्यपि द्रष्टव्यम् । क्वचित्पुस्तके **एकवाक्यतासिद्धये इत्येव पाठः** । 'ततो विष्णुरिच्छापूर्वकमश्रमः । करोति पितृवद्विश्वं पूर्णाशेषगुणात्मकः' इति पूर्वोक्तं विभक्तिविपरिणामेनानुषज्य योजयति **जगज्जन्मादीति** ॥ ननु सकलगुणपूर्णत्वस्यैव प्रथमाध्यायार्थत्वेन तदनुवादस्यैव कर्तव्यत्वेन अविद्याद्यवद्यगन्धविधुरत्वस्य द्वितीयाध्यायार्थत्वेन कथं तदनुवाद इति चेन्न । अर्थात् सिद्धस्यापि तदर्थत्वात् । प्रकृते च यस्मिन् अधिकरणे यो यो गुण उच्यते तद्विरोधिदोषराहित्यस्यार्थात् तदर्थत्वेनानुवादो युक्त एव । अत एव टीकाकारः सार्वज्ञ्य-सर्वैश्वर्याद्यनन्तगुणपरिपूर्णेत्युक्त्वा सार्वज्ञ्यादिविरोध्यविद्यादिराहित्यमेवानूदितवान् । **उपादानत्वादिप्रतिपादनेन चेति** ॥ प्रकृतिश्चेत्यादिसूत्रैः ब्रह्मणः उपादानत्वं प्रतिपाद्य कारणवाक्यानामुपादानपरत्वेन ब्रह्मणोऽपि उपादानत्वात् तत्परत्वमेवेति परम्परया समन्वयप्रतिपादनेनेत्यर्थः ।

**प०**—भवापदो विनश्यन्ति यत्पादस्मृतिमात्रतः । तं वन्दे कुमतध्वान्तभास्करं नृहरिं सदा ॥ करिष्यमाणैतदध्यायार्थप्रतिपादनमेवंविधभगवदुपासनरूपमिति भावेनाध्यायादौ मङ्गलमाचरति **यत्पदमिति** । यस्य स्वरूपम् । अथवा **यत्पदं** यस्य परमात्मनः पदं पादम् । कटाक्षेणापीत्यादेस्तद्विषयमल्पमपि ज्ञानं संपादयितुमशक्ता इत्यर्थः । **विमतयो** विरुद्धमतियुक्ताः ॥ **एकवाक्यतासिद्धय इति** । पादचतुष्टयात्मकेऽस्मिन्निति योज्यम् । एकवाक्यतादीति क्वचित्पाठः । तत्रादिपदेन पूर्वोत्तरभेदसिद्धये चेत्यपि ग्राह्यम् । द्वितीयाध्यायार्थं विवक्षुरित्यन्वयः । 'अर्थैकत्वादेकं वाक्यमि'त्युक्तं जिज्ञासान्यसुधायाम् । कथं विवक्षुरित्यतः **प्रथमाध्यायार्थसंगतत्वेनेति** । 'ततो विष्णुरिच्छापूर्वकमश्रमः । करोति पितृवद्विश्वं पूर्णाशेषगुणात्मक' इति पूर्वपादान्तोक्तं विभक्तिविपरिणामेन अनुषज्य योजयति **जगज्जन्मादीति** । जन्माऽदिहेतुत्वेन लब्धं ब्रह्मपदेनोक्तमाह **सार्वज्ञ्येत्यादि** । अत एवाविद्याद्यवद्यगन्धविधुर इति । ननु **सकलगुणपूर्णत्वस्य प्रथमाध्यायार्थत्वात्तदनुवादस्यैव कर्तव्यत्वेनाविद्यावद्यगन्धविधुर इत्यस्य द्वितीयाध्या-**

यार्थत्वेन कथं तदनुवाद इति चेन्न । अर्थात्सिद्धस्यापि तदर्थत्वात् । प्रकृते च यस्मिन्यस्मिन्नधिकरणे यो यो गुण उच्यते तद्विरोधिदोषराहित्यस्यार्थाल्लब्धत्वात्तदर्थत्वेनानुवादो युक्त एव । अत एव सार्वज्ञ्य-सर्वैश्वर्याद्यनन्तगुणपरिपूर्ण इत्युक्त्या सार्वज्ञ्यादिविरोध्यविद्यादिदोषराहित्यमेवानूदितवानिति भावः । गुणपूर्णत्वं निर्दोषत्वं च सूत्रादिस्थब्रह्मपदलब्धमिति भावेनोक्तम् **ब्रह्मणीति** । तच्च ब्रह्म जन्मादिहेतुत्व-लक्षणबलाच्चिदचिद्विलक्षणमेव न जीवादिरूपम् । येन ततः सार्वज्ञ्यादिगुणपूर्त्यादेरलाभः स्यादिति भावेनोक्तम् **पर इति** । साक्षादित्यनुवादः । परमेत्यादि व्याख्या ॥ **पारार्थ्येनेति** । धर्मादिशेषत्वे-नेत्यर्थः । पौनरुक्त्यमाशङ्क्य निराह **यद्यपीति** । समन्वयशब्दस्थसंशब्देनेत्यर्थः । **इत्यर्थो लभ्यत इति** । साक्षात्पदस्य यः परममुख्यत्वरूपोऽर्थ उक्तः स लभ्यत इत्यर्थः । तथैव समन्वयसूत्रादावुक्तेरिति भावः ॥ **परकीयेति** । अमुख्यवृत्तिरूपेत्यर्थः । तद्व्याख्यानं संशब्दव्याख्यानम् ॥ **उपादानत्वादीति** । प्रकृतिश्चेत्यादिसूत्रैः (ब्रह्मणः) उपादानत्वप्रतिपादकवाक्यमुपादानपरत्वेन ब्रह्मणोऽप्युपादानत्वात्तत्परं इति परंपरया समन्वयप्रतिपादनेन चेत्यर्थः ॥ **परंपरयेति** । प्रधानादिस्वरूपस्यैव निरासे ब्रह्मण उपादानत्वे च साधिते सति सदेव सोम्येत्यादेर्निरर्थकत्वायोगेनार्थादीश्वरार्थत्वं सेत्स्यतीत्येवं न भवति किन्तु प्रधानादिस्वरूपे सत्यपि क्वचिद्वाक्ये तस्य प्रतिपाद्यत्वेऽपि परममुख्यवृत्त्या साक्षादेवेत्यर्थः ।

**या०** — युक्तिदुःसमयवेदविरोधः शक्त उक्तगुणजातनिरासे ॥

यस्य नो भवति दोषविदूरं तं भजे श्रुतिसमन्वयगम्यम् ॥ १ ॥

न्यासमानम्य मध्वादीन् गुरूनपि यथामति ॥

व्याकरिष्ये सुधाऽस्पष्टद्वितीयाध्यायफक्किकाः ॥ २ ॥

। गुरुतरकार्ये मध्येऽपि मङ्गलाचरणस्याभीष्टसमाप्त्यादिहेतुतया शिष्टाचारपरम्पराऽवगतत्वेन मध्येऽप्येतदध्यायप्रतिपाद्यार्थविशिष्टश्रीपत्युपासनरूपं मङ्गलं कृत्वा शिष्यान्ग्राहयितुं तदुपनिबध्नाति **यत्पद-मिति** । युक्त्यादिभिर्विरुद्धा मतयो येषां ते विमतय इति बहुव्रीहिः । एकवाक्यताऽऽदीत्यत्रादिपदेन पूर्वोत्तराध्यायाभ्यां भेदो ग्राह्यः । सङ्गतेरेकवाक्यताप्रयोजकाकाङ्क्षाजनकज्ञानविषयरूपत्वात्तद्वचनेनैक-वाक्यतासिद्धिः । असङ्कीर्णार्थान्तरतावचनेन च पूर्वोत्तराध्यायभेदसिद्धिरित्यवगन्तव्यम् । मायाशबल-व्यावृत्तयेऽविद्याद्यवद्यगन्धविधुर इति । इदं चादृश्यत्वाद्यधिकरणेऽभिप्रेतस्य निरनिष्टो निरवद्य इत्यादिदोषाभावप्रतिपादकश्रुतिसमन्वयसिद्धस्यानुवादायोक्तमिति ज्ञातव्यं सर्वधर्मोपपत्तेश्चेत्यस्याध्यायान्त-र्भावमुपपादयितुमनन्तगुण रिपूर्ण इत्यादिविशेषणमित्यप्याहुः ।

**पारार्थ्येनेति** । उपासनादिविधिशेषत्वेनेत्यर्थः ॥ **समन्वयशब्देनेति** । समन्वयशब्दान्तर्गत-संशब्देनेत्यर्थः ॥ **साक्षादित्यर्थ इति** । साक्षादित्यस्य योऽर्थ उक्तः स लभ्यत इत्यर्थः ॥ **तद्व्याख्यान-**

**मिति** । संशब्दव्याख्यानमित्यर्थः ॥ **प्रधानपरमाण्वादिनिरासेनेति** । परेण चतुर्थपादे तथाऽभिहितत्वात्तन्निरासायेदं व्याख्यानमिति मन्तव्यम् ।

**श्री०**— श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ **एकवाक्यतादीति** । स्वस्मिन्द्वितीयेऽध्याय इति शेषः । आदिपदेन पूर्वोत्तराभ्यामध्यायाभ्यां भेदसिद्धय इति ग्राह्यम् । अबुद्धिस्थे=प्रथमाध्यायेन । साक्षादित्यस्य व्याख्यानान्तरं **तथेति** । उक्त इत्यस्य व्याख्यानं **समर्थित इति** ॥ **साक्षादित्यर्थ इति** । परममुख्यया वृत्त्येत्ययमर्थ इत्यर्थः । 'योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वय' इत्युक्तेरिति ध्येयम् ॥ **व्याख्यानेति** । लक्षणारूपेत्यर्थः । **तद्व्याख्यानं** संशब्दव्याख्यानम ॥ **उपादानत्वादीति** । परमाण्वादीनामिति शेषः ॥ **परम्परयेति** । परिशेषाद्भगवतो निमित्तत्वं प्रतिपादितं भवतीत्येवंरूपयेत्यर्थः ।

**च०**— त्रयीतात्पर्यविषयगुणरत्नौघसंस्कृतः । दुर्दर्शः कुदृशामव्यादपाङ्गैर्मां हयाननः ॥ १ ॥

श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः । नन्दतात्सेवया मे भक्त्यलङ्कृतयाऽनया ॥ २ ॥

प्रथमलक्षणीयतृतीयचरणस्थभूवादिसूत्रं व्याचक्षाणेन भाष्यकृता 'वकारागमोयं मङ्गलार्थः । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते, वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ता यथा स्युरि'ति भाष्ये भाषणात्प्रकृतग्रन्थस्य वीरपुरुषायुष्मत्पुरुषत्वयोरध्येतॄणां माङ्गलिकतायाश्च सिद्धये ग्रन्थमध्येऽनुष्ठितं श्रीजान्युपास्तिरूपं प्रकृतलक्षणप्रतिपाद्यविमनीषिदुष्प्रतिपदत्वगुणविशेषितत्वोपरक्तस्तुतिरूपं च मङ्गलमनुपकण्ठवर्तिविनेयाधिकरणकतत्कर्तव्यताप्रतिसंहित्यै लक्षणादावुपनिबध्नाति **यत्पदमिति** । अत्र च कृत्यान्तेन वृत्तलक्षणार्थमनूद्य लकारान्तोत्तरदलेन तादृशार्थनिरूपितसङ्गतिविशेषितत्वेन वर्तिष्यमाणलक्षणार्थमेकवाक्यताधिगत्यै ध्वनयति । द्विर्वचनेचि, अनुदात्तपदमेकवर्जम्, आद्यमिदं नगरमित्यादाविव संवेद्यमित्येतत् अर्शआद्यजन्तमिति विभाव्यैतत्पद्याशयं चन्द्रिकाविरोधलक्षणीयप्रकाशे । 'आम्नायोदितकल्याणगुणं श्रीरमणं भजे । यद् द्रष्टुं नेशतेऽपांगवीक्षयापि कुबुद्धयः' इति प्राकाशयन् परिमलकृत इति त्रयीतात्पर्येत्यादिना तथैव प्राकाशयाम । **विमतयः** विरुद्धमतियुक्ताः । पञ्चम्यर्थे बहुव्रीहिणा वादिनो वा समानाधिकरणतत्पुरुषेण चतुर्विधविरोधिगोचरप्रतीतयो वा विमतिपदबोध्याः ते च वेदसमन्वयसिद्धमर्थमन्यथयितुं न शक्नुवन्तीत्यर्थ इत्यप्यातीथपन् । इदं तु वैशेष्यमेतन्मते आद्यतृतीययोर्जानाति मन्थाचल इत्यादाविव तुमुन्प्रकृतिभूतेक्षतिःअन्यथानयनरूपगौणार्थः, द्वितीयवर्णके मुख्यार्थः कटाक्षपदमपि तथैवेत्यवसेयम् । 'उक्तः समन्वय' इत्यानुपूर्वीकमौलानुवादस्य मन्दप्रयोजनताशङ्कां तत्फलवचनेनापहस्तयते **एकवाक्यतेत्यादि** । चरणचतुष्टयात्मके स्वस्मिन्नित्यादिः । आदिपदं पूर्वोत्तराध्यायवृत्तिप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकभेदयोः प्रेक्षावत्प्रवृत्तेश्च परिग्राहकम् । सिद्धिशब्दो निश्चयवचनो निर्वाहवचनश्च । **प्रथमाध्यायार्थसङ्गतत्वेन** तन्निष्ठकारणतानिरूपितकार्यतालक्षणया तद्वृत्तिकार्यतानिरूपितकारण-

तारूपया वा सङ्गत्या विशिष्टत्वेन एकार्थतात्पर्यकतारूपैकवाक्यतायास्तादृशभेदद्वयस्य चाधिगतिरविरोध-रूपपूर्वोत्तरासङ्कीर्णार्थप्रदर्शनस्य प्रवृत्तिप्रतिबन्धकपूर्वापरग्रन्थासांगत्यशङ्काविघटकतत्प्रतियोग्यनुयोगिक-सङ्गतिप्रदर्शनस्य तु तादृशप्रवृत्तिनिर्वाहः फलमित्याशयः । इदं च मौलात्रेत्यंशलब्धं । द्वितीयाध्यायार्थं अविरोधलक्षणं । विवक्षुरित्यनुदात्ताद्वचेः सन्नन्तादुकारे निष्पन्नो वचनगोचरेच्छाश्रयतारूपकर्तृताविशेषित-माचष्टे । **अबुद्धिस्थेन** विषयताप्रत्यासत्त्या स्मृत्यविशेषितेन । **अशक्यत्वादिति** । सङ्गतेः प्रतियोग्य-नुयोगिप्रतिपत्त्यधीनप्रतिपत्तिकत्वादिति भावः । प्रथमाध्यायार्थानुवादेऽविरोधोत्र साध्यत इति द्वितीया-ध्यायार्थाभिहित्यवधिकप्राथम्यद्योतनार्थस्तावच्छब्दः । ब्रह्मणः प्रकृतिनयेऽन्याभिहिता परिणाम्युपादानता विवर्तोपादानता च निर्विकारत्वस्य, 'यतो वा इमानि भूतानि जायन्त' इतिश्रौतजन्मादीतिसौत्रनिर्देश-योश्चानुपपत्तिप्रसङ्गेन न सङ्गच्छत इत्यधिगमयितुं निमित्तपदमुपात्तं । प्रथमलक्षणतृतीयचरणेऽद्वैत्यभिहित-निर्गुणाधिकरणकशब्दसमन्वयमपहस्तयितुं **सार्वज्ञ्येत्यादि** । मन्दोपास्यमायाशबलव्यावर्तनाय **अविद्या-दीति** । अदृश्यत्वादिनयाभिप्रेत'निरनिष्टो निरवद्य'इत्यादिश्रुतिसमन्वयसिद्धप्रमेयानुवादरूपमेतत् । निर्गुणमेव परब्रह्म न तूपहितो नारायण इति मतान्तरं व्यवच्छेत्तुं परब्रह्मपदसमानाधिकरणनारायणपदो-पादानम् । आद्यलक्षणीयस्तुरीयचरणः प्रधानाशब्दत्वगोचर इत्यवधारयितुं समन्वयसूत्रघटकाद्योपसर्गा-र्थः । कार्त्स्न्यमिति ध्वनयितुं वा स्वरेत्यादि ।

---

**सु० — एवं प्रथमाध्यायार्थमभिधाय तत्सङ्गतत्वेन द्वितीयाध्यायार्थमाह** अविरोध इति ।

**अनु० —** अविरोधोऽत्र साध्यते ॥

**अत्रोक्तेऽर्थेऽविरोधो विरोधाभावोऽत्र व्याचिख्यासिततया बुद्धिसन्निहिते द्वितीये-(ऽध्याये) साध्यते । अनेनास्याध्यायस्यातीताध्यायेन कार्यकारणभावलक्षण(ा )सङ्गतिः सूचिता भवति । सकलशास्त्रस्य समन्वयेन जगज्जन्मादिकारणत्वे समस्तगुणपूर्णत्वेऽशेषदोषविधुरत्वे च परस्य ब्रह्मणोऽभिहित एव(हि) तत्र विरोधः स्फुरति । नान्यथा निराश्रयत्वात् । विरोध-स्फूर्तावेव तदभावसाधनस्यावसरो नेतरथा । अप्राप्तप्रतिषेधायोगात् । अतोऽतीताध्यायार्थस्य कारणत्वमेतदध्यायार्थस्य कार्यत्वं निश्चीयते । अथवा श्रुतिसमन्वयेनोपपादितोऽप्यर्थो नताव-च्छ्रोतॄणां दृढनिरूढो भवति, यावदत्र प्रतीते विरोधाभावो न साध्यते । विरोधेन श्रुतीनामेवा प्रामाण्यशङ्कनात् । तथा चानुपपादितकल्प एवापद्यते । विरोधाभावसाधने तु भवत्येव दृढ-निरूढः । यथोक्तम् । 'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः' इति । अतो विपरीत-कार्यकारणभावलक्षणा अनयोस्सङ्गतिः ।**

**ननूक्तार्थे विरोधस्तत्र तत्रैव परिहृतः । किमत्र परि(तत्किमपरमत्र)शिष्यते यदर्थमध्यायान्तरारम्भः । सत्यम् । प्रतिवक्ष्यत्यत्राचार्यः ।**

**शे०** — नन्वत्र द्वितीयेऽविरोधः साध्यत इति द्वितीयाध्यायार्थमात्रोक्तेः कथमस्य भाष्यस्य पूर्वाध्यायसङ्गतत्वेनोत्तराध्यायार्थाभिधायकत्वमित्यतः अत्रेत्येतदावृत्त्याश्रयणात्तल्लाभ इत्याशयेन तथा योजयति **अत्रोक्तेऽर्थ इति** । नञोऽभावाद्यनेकार्थत्वात्तावदर्थतायाश्च प्रकृतेऽयोगादत्राभिमतमर्थविशेषं दर्शयति **अविरोधो विरोधाभाव इति** । अत्र च नञ्विशिष्टेन विरोधपदेनाभावविशेषस्य लक्षणया उत्तरपदार्थप्राधान्यप्राप्तेर्युक्तमस्य तत्पुरुषत्वम् । न चाक्षपरिसूपप्रतीत्यादावुत्तरपदार्थप्राधान्येऽपि तत्पुरुषादर्शनादतिमालोऽतिसर्व इत्यादौ चासत्युत्तरपदार्थप्राधान्ये तद्दर्शनात् न तस्योत्तरपदार्थप्राधान्यनियम इति लक्षणाश्रयणमनर्थकमिति वाच्यम् । तत्पुरुषे उत्तरपदार्थप्राधान्यस्यौत्सर्गिकतया क्वचिद्बाधकेनापवादेऽप्यन्यत्र तस्याविकलतया लक्षणाश्रयणस्यावश्यकत्वात् । अस्तु वाऽन्यत्र तत्पुरुषो यथातथा । प्रकृतस्य नञ्तत्पुरुषत्वादुत्तरपदार्थप्राधान्यमावश्यकम् । नञ्समासस्योत्तरपदार्थप्राधान्यस्य भाष्यादिसिद्धत्वात् । तथा हि । न तावन्नञ्समासोऽन्यपदार्थप्रधान इत्याश्रयितुं युक्तम् । तथा सत्यब्राह्मणको देश इत्यादौ कप्प्रत्ययानुपपत्तेः । समासान्तरप्राप्तौ तदपवादकत्वेन नञ्समासस्यैव विधानेन तत्रापि न विद्यते ब्राह्मणो ब्राह्मण्यं यस्मिन्नित्यन्यपदार्थप्रधानकतत्पुरुषस्यैव प्रसङ्गेन बहुव्रीह्यप्रसङ्गेन 'शेषाद्विभाषा' इति बहुव्रीहौ विहितस्य कस्यानवकाशात् । किञ्चैवमस इत्यत्र तच्छब्दार्थस्य गौणत्वप्रसङ्गेन मुख्यत्यदादिविषयत्वं 'त्यदादीनामः, तदोः सः सावनन्त्ययोरि'त्यादि त्यदादिकार्यम् , असर्वस्मै इत्यत्र सर्वशब्दार्थस्य गौणत्वेन तन्मुख्यार्थविषयकसर्वनामसंज्ञाऽप्राप्त्या स्मायादेशश्च न स्यात् । अत एव न पूर्वपदार्थप्रधानोऽयं नञ्समासः । न चोत्तरपदार्थप्रधानकत्वे काचिदियं कुसृष्टिः प्रसरतीत्युत्तरपदार्थप्रधानकत्वसिद्धिः । अत्र च लिङ्गम्'एतत्तदोः सुलोपो' इत्यत्रानञ्समासग्रहणम्। अन्यथैतत्तदोरर्थद्वारेण सम्बन्धिनः सोर्लोपो विधीयमानः'अनेषो ददात्यसो ददाति'इत्यत्र कथं प्राप्नुयात । ततश्चोत्तरपदार्थप्रधानत्वान्नञ्समासस्य तत्सिद्धये युक्तं लक्षणाश्रयणम् । नन्वेवमपि पूर्वपदार्थप्राधान्यादव्ययीभावस्यापि प्राप्तेरविरोधमिति स्यादिति चेदत्र वदन्ति । न पूर्वपदार्थप्राधान्येनाव्ययीभावस्यात्र प्रसक्तिः । तथा सति पापाभावोऽपापमिति परकीये तत्पुरुषोदाहरणेऽपि पूर्वपदार्थस्याभावस्यैव प्राधान्येन तत्राप्यव्ययीभावप्रसङ्गात् । यदि च, यदाऽभावसामान्ये नञ् वर्तते तदाऽर्थाभावेऽपापमित्यव्ययीभावेऽप्यभावविशेषविवक्षायां तत्पुरुष एव तस्य नञर्थत्वाभावेन पूर्वपदार्थप्राधान्याभावादिति मन्यसे; तदाऽत्रापि तुल्यम् । प्रकृतेऽप्यभावसामान्यविवक्षायामव्ययीभावप्रसङ्गेऽपि तद्विशेषविवक्षायामपूर्वपदार्थप्रधानत्वादेव नाव्ययीभावप्रसङ्ग इति । उक्तं चाग्रहणमिति ग्रहणाभावमात्रविवक्षायामव्ययीभावोदाहरणम् । अभावविशेषविवक्षायां तु तत्पुरुषस्येति । तच्चिन्त्यम् । तथा

सति पापाभावोऽपापमिति तत्पुरुषोदाहरणेऽप्यभावत्वेनैवाभावभानेनाव्ययीभावस्यैव प्राप्तेः । यदप्यभाव-विशेषस्य नञर्थत्वं नास्तीति तदप्यसत् । निर्विशेषस्य सामान्यस्याभावात् । विशेषरूपेण वाच्यत्वं नास्तीत्यभिप्राये चाविघ्नमित्यादिरव्ययीभावो दत्तजलाञ्जलिः स्यादिति । अत्र ब्रूमः । अर्थाभावेऽव्ययी-भावेन सह नञ्समासस्य वैकल्पिकत्वात् । अविरोधपदेऽभावेऽव्ययीभावपक्षेऽविरोधमिति प्रसङ्गेऽपि तत्पुरुषपक्षेऽविरोध इति पुल्लिङ्ग श्लिष्टमेव । वैकल्पिकत्वं च 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति 'अद्रुतायामसंहितम्' इति च भाष्यवार्तिकप्रयोगादवसीयते । अत एव चानुपलब्धिरविवादोऽविघ्न-मित्यादि सिध्यतीति सङ्क्षेपः । नन्वस्याध्यायस्य का पूर्वेण सङ्गतिर्यत्सूचकत्वम् 'अत्र'इत्यस्य स्यादित्यतः श्रृङ्गिग्राहिकतया तां दर्शयति **अनेनेति** । कथमनयोः कार्यकारणभाव इत्यत आह **सकलेति** ॥ **अत इति** । द्वितीयाध्यायनिरसनीयविरोधशङ्काविषयभूतसमन्वयोपस्थापकतया पूर्वो द्वितीयस्य हेतुरिति यतो अत इत्यर्थः । तथा च समन्वयाक्षेपसमाधानार्थत्वादस्य तदनन्तरता युक्तेति भावः । अत्रेतिपदस्यावृत्तिं विनापि 'उक्त'पदस्वारस्येनव सङ्गतिलाभेन तदावृत्त्याश्रयणेनोक्तसङ्गतिसमर्पणेऽरुचिं मनसि निधाय पक्षान्तरमारचयति **अथवेति** । अत्र न्यायसूत्रसम्मतिमाह **यथोक्तमिति** । अत्र पक्षप्रतिपक्षशब्दाभ्यां तत्साधनोपालम्भौ लक्ष्येते, विमर्शशब्देन च साधनोपालम्भविषयौ सम्भवासम्भवौ, द्विवचनेन मेलनम् । तथा च सम्भवासम्भवविषयीभूताभ्यां स्वपक्षसाधनोपा-लम्भाभ्यां परपक्षसाधनोपालम्भाभ्यां स्वपरपक्षसाधनोपालम्भसम्भवासम्भवाभ्यामिति यावत् । मिलिताभ्यां ताभ्यामर्थावधारणं निर्णय इति तर्कनिर्णयविषयलक्षणमेतदिति ज्ञेयम् ॥ **विपरीतेति** । अतीताध्यायार्थस्य कार्यत्वमेतदध्यायार्थस्य कारणत्वमिति विपरीतेत्यर्थः । न चैवं द्वयोः परस्परापेक्षत्वादन्योन्याश्रयः । आपाततो जातस्य प्रथमाध्यायार्थज्ञानस्य द्वितीयाध्यायार्थकारणत्वेऽपि न तस्य द्वितीयाध्यायार्थकार्यत्वम् । यस्य चेदमित्थमेवेत्यवधारणात्मकज्ञानस्य कार्यत्वं न तस्य तत्कारणत्व-मिति तदनवकाशात् ॥ **तत्र तत्रैवेति** । तेषु तेष्वधिकरणेष्वित्यर्थः । **विकारशब्दान्नेति चेन्न प्राचुर्यादित्यादिनेति शेषः** ॥ **प्रतिवक्ष्यतीति** 'विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते । नारायणस्य त्वध्याये तदन्ये तत्र तत्रगाः' इत्यादिना । द्वये विरोधाः परिहरणीया भवन्ति । द्वितीय-सूत्रसिद्धसर्ववैशिष्ट्यविषयाः शास्त्रसमन्वयविषयाश्च । तत्र द्वितीया विकारशब्दादित्यादिना परिहृताः, न तु सर्ववैशिष्ट्यविषया इति तत्परिहारार्थमध्यायारम्भ इति वक्ष्यतीत्यर्थः ।

स० — विमर्शशब्देन संदेहो गृह्यते ॥ **विमृश्य** संदेहं संपाद्य । अत्र पक्षप्रतिपक्षशब्दौ स्वपक्षसाधनपरपक्षोपालम्भनपरौ । तथाच संदेहपूर्वं स्वपक्षसाधन-परपक्षोपालम्भाभ्यां जायमानमर्थावधारणं निर्णय इत्यर्थः । परार्थनिर्णयलक्षणत्वात् स्वपक्षादिसाधनेन विना जायमाने करस्थितामलकनिर्णये

नाव्याप्तिरिति ध्येयम् । यद्वा विमर्शशब्दो विचरार्थकः । तथा च विचारापूर्वकमित्यर्थः । **प्रवक्ष्यतीति** । 'विरोधस्सर्ववैशिष्ट्ये यो द्वितीये निरस्यते । नारायणस्य त्वध्याये तदन्ये तत्र तत्रगाः' इत्यादिना एतत्पादे प्रवक्ष्यतीत्यर्थः ।

**प०**— 'अत्रे'त्यनुवादेनार्थद्वयोक्तिः उक्तेऽर्थे द्वितीयेऽध्याये इति च । प्रथमाध्यायेन प्रकृतत्वादस्तूक्तेऽर्थे इत्येतदर्थकत्वं 'अत्रे'त्यस्य । द्वितीयेऽध्याये इत्येतदर्थकत्वं कथम् । तस्याप्रकृतत्वादित्यत आह **व्याचिख्यासिततयेति ॥ अनेनेति** । द्वितीयपादेन । सन्न्यायरत्नावल्युक्तां तावदादौ व्यनक्ति **सकलेति** । तां, उपलक्षणं मत्वा 'विरोधहीनस्य स्यात्समन्व ता यत' इति तार्तीयानुव्याख्योक्तां चाह **अथवेति** । **यथोक्तमिति** । तार्किकैः ॥ **विमृश्येति** । संदेहमुत्पाद्येत्यर्थः । विचार्येति वा । स्वपक्षसाधनपरपक्षनिरासाभ्यां विमृश्य क्रियमाणमिति शेषः । परार्थनिर्णयलक्षणमिदम् । तेन स्वपक्षसाधनादिना विना जायमाने करस्थितामलकनिर्णये नाव्याप्तिरिति ध्येयम् ॥ **तत्रतत्रैवेति** । विकारशब्दान्नेति चेन्न प्राचुर्यात्' 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधादि'त्यादिनेति भावः ॥ **प्रतिवक्ष्यतीति** । 'विरोधस्सर्ववैशिष्ट्ये यो द्वितीये निरस्यते । नारायणस्य त्वध्याये तदन्ये तत्रतत्रगाः' इत्यादिना 'श्रुतेस्तु शब्दमूलत्वादि'त्यधिकरणान्ते प्रतिवक्ष्यतीत्यर्थः ।

**या०— अविरोधो विरोधाभाव इति** । नन्वविरोध इति कः समासः । न तावदव्ययीभावः ।

---

अविरोधमिति प्रयोगप्रसङ्गात् । नापि तत्पुरुषः । पूर्वपदार्थप्राधान्यासंभवात् । तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् । समासान्तरं त्वसामर्थ्यादिना प्रतिहतम् । अतः कथमेतदिति चेदुच्यते । तत्पुरुष एवायम् । न चैवं पूर्वपदार्थप्राधान्यासंभवः । अतिमालोऽतिसर्व इत्यादौ व्यभिचारेण तत्पुरुषे उत्तरपदार्थप्राधान्यनियमाभावात्। न च 'एतत्तदोरि'ति सूत्रे अनञ्समासवचनबलान्नञ्तत्पुरुषे उत्तरपदार्थप्राधान्यं नियतमेवेति वाच्यम् । एतद्वचनस्योपसर्जनत्वेऽपि नञ्समासे सर्वनामगणकार्यं भवतीत्यर्थज्ञापकतयाऽपि सावकाशत्वात् । अत एव सूत्रकारो 'न बहुव्रीहावि'ति बहुव्रीहावेव सर्वनामकार्याभावमाह नोपसर्जनत्वमात्रे । तथा च भाष्यकारीयस्य, गौणत्वमात्रे तत्प्रतिषेधस्य, प्रायिकत्वकल्पनमेव न्याय्यम् । ततश्च नञ्समासे उत्तरपदार्थस्योपसर्जनत्वेऽप्यसः अतस्मिन्नित्यादिकमुपपन्नमेव । अन्यथा अब्राह्मणःअसुरोःअनुपलब्धिः इत्यादौ नञर्थतया प्रमाणप्रसिद्धानामन्यत्वविरोधाभावानां नञ्समभिव्याहृतोत्तरपदलक्ष्यत्वं वा, आरोपमात्रं नञर्थो विषयत्वं तु संसर्गः अन्यत्वादिकं त्वार्थिकमेवेति वा, अप्रामाणिकं बहुकल्पनीयं स्यात् । ततो वरं क्वचिदुपसर्जनत्वेऽपि सर्वनामकार्यं भवतीति कल्पनमतो नञ्तत्पुरुषे उत्तरपदार्थप्राधान्याभावे न किञ्चिद्बाधकमित्याशयः । अत एवाग्रे एतदेवाभिप्रेत्य वक्ष्यति विरोधश्च समासे गुणभूत इति ॥ **विमृश्येति** । अत्र विमर्शशब्देन सन्देहो विवक्षितः । पक्षप्रतिपक्षशब्दौ स्वपक्षसाधन-

परपक्षोपालम्भपरौ । तथा च 'सन्देहपूर्वं स्वपक्षसाधनपरपक्षोपालम्भाभ्यां जायमानार्थावधारणं निर्णय' इति न्यायसूत्रार्थ ईक्षत्यधिकरणे प्रदर्शितोऽनुसन्धेयः ॥ **अतो विपरीतेति** । पूर्वमापाततो जातं प्रथमाध्यायार्थविषयं ज्ञानं धर्मिज्ञानतयैतदध्यायार्थज्ञानकारणमित्यभिहितम् । इदानीं तस्मिन्ज्ञाने परीक्षया प्रामाण्यनिश्चयानन्तरं यत् इत्थमेव इत्यवधारणात्मकं तद्विषयं ज्ञानान्तरं जायते तदेतदध्यायार्थज्ञान-कार्यमित्युच्यते । अतः कारणत्वेनोक्तस्य कथं कार्यत्वेनोक्तिरन्योन्याश्रयप्रसङ्गादिति शङ्काऽनवकाश इति ध्येयम् ॥ **तत्र तत्रैवेति** । विकारशब्दान्नेति चेन्नेत्यादिभिस्तत्र तत्राधिकरणे परिहृत इत्यर्थः ॥ **प्रति-वक्ष्यत्यत्रेति** । 'विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते' इत्याद्यनुव्याख्याने परब्रह्मणो नारायणस्य सर्वस्माच्चेतनादचेतनाच्च वैशिष्ट्ये वैलक्षण्ये परमोत्कृष्टत्वेऽत्यन्तव्यावृत्तत्वे च यो युक्त्यादिविरोधः स एवात्र द्वितीये निरस्यते । तदन्ये ये विरोधाः शास्त्रसमन्वयविषयास्ते विकारशब्दादित्यादिना तत्र तत्रैवाधि-करणे परिहृता इति प्रतिवक्ष्यतीत्यर्थः ।

श्री० — अविरोध इत्यत्र नञः पर्युदासार्थकत्वप्रतीत्या विरोधभिन्नं किञ्चित्साध्यत इत्यसङ्गतिः स्यादित्यतः प्रसज्यप्रतिषेधार्थतया व्याचष्टे **विरोधाभाव इति** ॥ **विमृश्येति** । विमर्शशब्देन सन्देहो गृह्यते । ततश्च विमृश्य सन्देहं सम्पाद्येत्यर्थः । अत्र पक्षप्रतिपक्षशब्दौ स्वपक्षसाधनपरपक्षोपालम्भपरौ । तथा च सन्देहपूर्वकं स्वपक्षसाधनपरपक्षोपालम्भाभ्यां जायमानार्थावधारणं निर्णय इत्यर्थः ।

च० — प्रकृते नञः पर्युदासार्थकत्वस्यानुपयुक्ततया प्रसज्यप्रतिषेधार्थकत्वमाश्रित्य व्याचष्टे **अविरोधो विरोधाभाव इति** । अथात्र 'नाव्ययीभावात्' इत्यमादेशेनाविरोधमितिरूपापत्त्याऽव्ययीभावस्य राजपुरुष इत्यादाविव समासघटकोत्तरपदार्थविशेष्यकशाब्दधीजनकत्वरूपोत्तरपदार्थप्राधान्यात्मकतत्पुरुष-लक्षणलक्षितत्वाभावेन तत्पुरुषस्य, समासान्तरस्य चासामर्थ्येन दुरुपपादतयाऽसामञ्जस्यमिति चेदत्र व्याचक्षाणाः । अतिमालादौ तत्पुरुषेऽभावेन उत्तरपदार्थप्रधानस्तत्पुरुष इति प्राचां प्रवादः प्रायोऽभिप्राय इति पाणिनीया अभ्यधुरिति तद्राहित्येपि तत्पुरुषत्वस्य सूपगमत्वात् । न च तत्पुरुषत्वावच्छेदेनोत्तर-पदार्थप्राधान्यस्य दुरुपगमत्वेपि नञ्तत्पुरुषत्वावच्छेदेन तदवश्योपेतव्यमेव । संज्ञोपसर्जनीभूतानां सर्वनाम-गणकार्यं भाष्यकारः प्रत्याचख्यौ इत्युत्तरपदार्थप्राधान्यानुपगतावस इत्यत्र त्यदादीनाम इति त्यदाद्यत्वम्, असर्वस्मा इत्यत्र स्मायादेशश्च कथं स्यातामेवमेतत्तदोरिति सूत्रेऽर्थद्वारेणैतत्तदोः सम्बन्धिनः सोर्लोपो विधीयमानः कथं अनेषो ददात्यसो ददातीत्यत्र प्राप्नुयादिति तद्व्युदासफलकमनञ्समासग्रहणं मन्दप्रयो-जनतामापद्येतेति वाच्यम् । 'न बहुव्रीहाविति'तिसूत्रे बहुव्रीहावेव सर्वनामकार्यं प्रतिव्यधात्सूत्रकारो नोप-सर्जनसामान्य इति भाष्यकारीयायाः गौणमात्रे तत्प्रतिविहितेः प्रायिकत्वस्यैव तादृशानञ्समासग्रहणेन

ज्ञापिततया तदनुरोधेन नञ्तत्पुरुषत्वावच्छेदेन तदवश्यंभावासिद्धेः । दर्शितनञ्तत्पुरुषप्रदेशेषु तत्तदर्थानां नञ्समभिव्याहृतोत्तरपदलक्ष्यतामुपेत्योत्तरपदार्थप्राधान्योपपादनभङ्ग्याश्च क्लिष्टत्वात् एतदभिसन्धायैवाभिधास्यति विरोधः समासे गुणभूत इति समादधुः । वस्तुतस्तु । अर्थाभावे अव्ययीभावेन सहायं विकल्प्यते। रक्षोहागमलघ्वसन्देहाः प्रयोजनम् अद्रुतायामसंहितमिति भाष्यवार्तिकप्रयोगात्तेनानुपलब्धिरविवादोऽविघ्नमित्यादिसिद्धमित्याकरदृशां निरूढः पन्थाः । **अनेन** प्रथमाध्यायोक्तार्थधर्मिकविरोधाभावसमर्थनं प्रकृताध्यायेन क्रियत इति वचनेन । **अस्याध्यायस्य** प्रकृताध्यायनिष्ठाम् । **अतीताध्यायेन** पूर्वाध्यायनिरूपितां । कार्यकारणभावलक्षणामेव सङ्गतिं संघटयति **सकलेति । तत्र विरोधः** तदधिकरणको विरोधः । **स्फूर्तावेवेति** । प्रतियोगिज्ञानस्याभावधीहेतुत्वादिति भावः । **अत इति** । प्रकृताध्यायोत्पत्स्यमाना या अभावधीस्तद्धेतुभूतप्रतियोगिप्रतिपत्तौ धर्मिज्ञानविषयोपपादकसमन्वयोपस्थितिजनकतया पूर्वाध्यायस्य तादृशाध्यायनिरूपिततदुत्पादितधर्म्युपस्थितिप्रयोज्यप्रतियोगिप्रतिपत्तिनियन्त्रिताभावधीहेतुत्वरूपा प्रकृताध्यायाधिकरणिका सङ्गतिरनर्गलाऽसैत्सीदिति भावः । मौलसप्तम्यन्तपदस्य तन्त्रावृत्त्याद्याश्रयणेनोक्तार्थ-व्याचिख्यासितशास्त्रोभयप्रत्यायकोपगतिमन्तरेणापि भूताधिकारीयकर्मसाधननिष्ठान्तपदसमभिव्याहारमहिम्नैव वृत्ताध्यायनिरूपितैतदध्यायवृत्तिसंगतेः सुप्रतिपादतायां तादृशदिशा तदुपपादनेऽरुचिं मन्वानः कल्पान्तरमाश्रयते **अथवेति** । अत्र न्यायसूत्रं प्रमाणयति **यथोक्तमिति । विमृश्य** संदिह्य **पक्षप्रतिपक्षाभ्यां** स्वपक्षसमर्थनपरपक्षप्रत्याख्यानाभ्याम् । जायमानार्थावधारणं निर्णय इति सूत्रार्थोऽवसेयः । प्रकृतसमर्थनीयतद्विरहरूपकोटिद्वयावगाहिसंदेहोत्तरकालीनं यत्सिषाधयिषितार्थव्याप्यवत्तापरामर्शरूपं विपक्ष बाधकतर्कानुसन्धानरूपं च ज्ञानं तदुभयाधीनानुमितिरूपज्ञानं निर्णय इति समुदिताशयः । **अतो विपरीतेति** । वृत्ताध्यायार्थज्ञानस्य कार्यत्वं वर्तिष्यमाणाध्यायार्थज्ञानस्य कारणत्वमिति विपरीतेत्यर्थः । न चेयमन्योन्याश्रयप्रसङ्गेन दुर्निरूपेति वाच्यम् । प्रथमाध्यायीयप्रधानयोगश्रवणाव्यवहितोत्तरक्षणावच्छेदेन तत्तदुत्पादितज्ञानं धर्मिज्ञानमुद्रया प्रकृताध्यायोत्पत्स्यमानाभावधीहेतुभूतप्रतियोगिज्ञानजनकमित्यभिहितमधस्तात् । संप्रति तु तादृशधर्मिज्ञानधर्मिकपरीक्षानिबन्धनप्रामाण्योपरक्तप्रतिसंहित्युत्तरकालीनवृत्ताध्यायार्थगोचरावधारणात्मकज्ञानान्तरस्यैव प्रकृताध्यायार्थधीकार्यताभिधीयत इत्युक्तक्षत्यनववकाशात् । **तत्र तत्रैवेति** । सर्वनाम्नां बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोपस्थापकतया सप्तमीप्रकृत्यंशेनानन्दमयनयत्वाद्यवच्छिन्नाः परामृश्यन्ते। सप्तमीप्रत्यापिता घटकता उपस्कृतविकारशब्दादित्यादिनेत्यनेनान्वेति **प्रतिवक्ष्यतीति** । प्रत्युपसृष्टादनुदात्ताद्वचेः लृटि स्यप्रत्यये निष्पन्नोयं । 'विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते । नारायणस्य त्वध्याये तदन्ये तत्रतत्रगाः'इति मौलप्रतीकव्याख्यानावसरे **द्वये विरोधाः परिहरणीयाः भवन्ति । द्वितीयसूत्रसिद्धसर्ववैशिष्ट्यविषयाः शास्त्रसमन्वयविषयाश्च** । तत्र

द्वितीयाः विकारशब्दादित्यादिना परिहृताः । न तु सर्ववैशिष्ट्यविषया इति तत्परिहारार्थमध्यायारम्भ इति प्रतिवचनं करिष्यतीत्यर्थः ।

सु० — नन्वेवमध्यायस्याविरोधलक्षणैकार्थत्वेनैकवाक्यत्वे सति पादभेदः किंन्नि-बन्धनः । तत्राप्यस्य पादस्य प्राथम्यं किंन्निबन्धनमित्यपेक्षायामाह चतुर्विधस्येति ।

अनु० — चतुर्विधस्य तस्यादौ यौक्तः

तस्याविरोधस्य । निर्धारणे षष्ठी । आदौ प्रथमपादे । अविरोधः साध्यत इत्यनुवर्तते । चतुर्विधस्य तस्येत्यनुवादात्स चतुर्विध इति लभ्यते ।

तदयमर्थः । यद्यप्युक्तेऽर्थे विरोधाभाव इत्येकोऽर्थः । तथाऽपि युक्तिसमयश्रुतिन्यायो-पेतश्रुतिविरोधाभावरूपावान्तरभेदेन स चतुर्विधो भवति । तत्प्रतिपादनेन चतुर्णां पादानां भेदो युज्यते । तस्य चतुर्विधस्यापि विरोधाभावस्य मध्ये युक्तिविरोधाभावः प्रथमपादे साध्यते । सर्वेषामपि विरोधानां युक्त्युपजीवित्वेन तद्विरोधस्य प्रबलतया तदभावसाधनस्य प्राथम्योपपत्तेः । युक्तिपुरस्कारेण प्रवर्तना(मानत्वा)च्च विचारशास्त्रस्येति ।

ननु कथमभावस्य चातुर्विध्यम् । उच्यते । चतुर्विधा हि विरोधिनो(न्यो) युक्त्या-दयः । तदुपधानाद्विरोधोऽपि चतुर्विधोऽभिधीयते । ततस्तत्प्रतियोगिकोऽभावोऽपि तथोच्यते । अत एव यौक्त इत्युपपन्नम् । अभावस्यापि परम्परया युक्तिसंबन्धित्वात् । अथवाऽविरोधपद-सन्निधापितो विरोधस्तस्येति परामृश्यते । तथा च विरोधस्य युक्त्याद्युपधानेन चतुर्विधत्वा तदभावसाधनेन पादभेदो युज्यते ।

चतुर्विधस्य तस्य विरोधस्य मध्ये यौक्तो विरोध आदावुक्तप्रकारेण प्रबलो यतस्तस्मा-त्तदभावोऽत्रादौ साध्यत इति योजनीयम् । यद्वा तस्येति विरोधिपरामर्शोऽयम् । तस्याप्य-विरोधपदेन बुद्धिसन्निहितत्वात् । अविरोधो हि विरोध(निरूपण)ाधीननिरूपणः । विरोधश्च विरोधिना विना नोपपद्यते । ततश्च विरोधिनो युक्त्यादिभेदेन चतुर्विधत्वा(त्त)द्विरोधाभाव-साधनेन पादभेदोपपत्तिः । चतुर्विधस्यापि तस्य विरोधिनो मध्ये युक्तेः प्रबलत्वादादौ यौक्तो युक्तिसंबन्धी विरोधाभावः साध्यत इति योज्यम् ।

शे० — नन्वविरोधचातुर्विध्यकथनं तत्रापि यौक्तस्या विरोधस्य प्राबल्यकथनं चानर्थकमित्यतः पादभेदसमर्थनार्थत्वाच्चचातुर्विध्यकथनस्य प्राथमिकत्वसमर्थनार्थत्वात्तत्प्राबल्यकथनस्य च नानर्थक्यमित्या-शयेन तद्वाक्यं तथा योजयितुं तद्यावर्त्यशङ्काद्वयमुत्थापयति नन्विति । ननु सम्बन्धे षष्ठ्या विधाना-

दत्राविरोधसम्बन्धी यौक्तो विरोध इति लभ्यते । तथा च सम्बन्धस्य भेदव्याप्तत्वाद्यौक्तस्यातिरिक्तत्वापत्त्या चातुर्विध्यभङ्गापत्तिरित्यतो गुणक्रियाजातिभिर्यतः पृथक्करणं तत्र 'यतश्च निर्धारणमि'त्यनेन विहितैवेयं षष्ठी न त्वपरेति नानुपपत्तिरिति भावेनाह **निर्धारण इति** । नन्वविरोधचातुर्विध्यस्य पूर्वमनुक्तत्वात्कथं चतुर्विधस्य तस्येति तच्चातुर्विध्यानुवाद इत्यतश्चातुर्विध्यानुवादसामर्थ्यादेवाविरोधोऽत्र साध्यत इत्येतदनन्तरं स चाविरोधश्चतुर्विध इति लाभान्नानुपपत्तिरित्याह **चतुर्विधस्येति** । ननु विरोधाभावस्यैकत्वान्न चातुर्विध्यं सम्भवति तत्कथं तन्निबन्धनः पादभेदः स्यात्कथं च यौक्तस्याविरोधस्यादिशब्दसूचितं प्राबल्यं येन तस्यैव प्रथमनिरूपणीयत्वमित्यत आह **तदयमर्थ इति** । अलौकिकार्थगोचरबहुजनपरिगृहीतवाक्यसन्दर्भः समयः । यद्यपि तृतीयेऽपि क्वचिद्विरोधिन्यः श्रुतयो न्यायोपेतास्तथाऽपि न चतुर्थ इव श्रुत्याद्युक्तन्यायोपेता इति ततो भेद इत्यवधेयम् । नन्वत्र महामल्लभङ्गन्यायेनातिप्रयत्नसाध्यस्य प्राथम्ये, युक्तिविरोधपरिहारस्य प्राथम्यानुपपत्तिः । न्यायोपेतश्रुतिविरोधपरिहारस्यैव तदापत्तिश्च । सोपानारोहणन्यायेनानतिप्रयत्नसाध्यस्य प्राथम्ये तु समयानामनादिकालतोऽविच्छेदेन बहुजनपरिग्रहेण च वेदतुल्यत्वेऽपि वेदवन्निर्मूलत्वाभावादत्यन्तभ्रमहेतुतया, तत्त्वज्ञानस्यातिविरोधित्वाच्च, श्रुतिविरोधात्समयविरोधस्य प्रबलत्वेन, द्वितीये श्रुतिविरोधपरिहारस्य, तृतीये च समयविरोधपरिहारस्य कर्तव्यत्वप्रसङ्गेन समयश्रुतिविरोधपरिहारयोः पौर्वापर्यानुपपत्तिरिति युक्तिविरोधपरिहारस्य पूर्वनिरूपणम् अनन्तरं समयविरोधपरिहारस्य अनंतरं श्रुतिविरोधपरिहारस्य, ततो न्यायोपेतश्रुतिविरोधपरिहारस्येति क्रमस्य सर्वथाऽप्यनुपपत्तिरित्यतश्चतुर्थपादव्युत्पाद्यश्रुतियुक्तिविरोधपरिहारस्यातिप्रबलत्वेऽपि मुमुक्षुणाऽन्ते जिज्ञास्याध्यात्मविषयत्वेन प्राथम्यानौचित्यतास्य चतुर्थे निवेशः । इतरविरोधत्रयपरिहारस्य चानतिप्रयत्नसाध्यतया तदपेक्षया दौर्बल्यात्सोपानारोहणन्यायेन तत्पूर्वं निवेशः । इतरविरोधत्रयपरिहारस्य च महामल्लभङ्गन्यायेन पौर्वापर्यमिति भावेन युक्तिविरोधस्य समयादिविरोधापेक्षया प्राबल्यमुपपादयति **सर्वेषामपीति** । विरोधपदमविरोधस्योपलक्षणम् । ततश्च विरोधाविरोधादेर्युक्त्यधीनत्वेन युक्तेः प्राबल्यमित्यर्थः । तस्याः प्राधान्ये हेत्वन्तरं चाह **युक्तीति** । उपलक्षणमेतत् । वेदोऽप्रमाणमाप्तप्रणीतत्वादिति साक्षात्कृत्स्नवेदाप्रामाण्यसाधकत्वात् । एकस्य समयिनः समयान्तर इव युक्तावनादराभावाच्चेत्यपि द्रष्टव्यम् । समयविरोधस्य श्रुतिविरोधापेक्षया प्राबल्यं तु समूलत्वाद्युक्तयुक्तिसिद्धम् । वक्ष्यति चैतद् ग्रन्थकारः स्वयमेव 'इतरविरोधत्रयेऽनादिकालानुवृत्तसमयविरोधस्यैव प्रबलत्वादि'त्यादिना । अनादिकालानुवृत्तत्वादेर्वेदतुल्यत्वेन तदपेक्षया प्राबल्यानापादकत्वेनोक्तयुक्तावेव तद्ग्रन्थस्य तात्पर्यात् । अत एवोत्तरग्रन्थतात्पर्यमित्थमेव तात्पर्यचन्द्रिकायां वर्णितमित्यवधेयम् ॥ **कथमिति** न तावत्स्वतोऽभावस्य चातुर्विध्यं तस्यैकत्वात् । नापि तत्प्रतियोगि-

विरोधभेदोपाधिकम् । तत्प्रतियोगिनो विरोधस्याप्येकत्वेन चातुर्विध्याभावादिति भावः । विरोधस्य स्वतश्चातुर्विध्याभावेऽप्यौपाधिकं तदस्त्येवेति युक्तमविरोधचातुर्विध्योपधानत्वमित्याशयेन सिद्धान्तयति उच्यत इति । ननु तथाऽपि तस्येति नाविरोधपरामर्शो युक्तस्तथा सति तस्य युक्तिसम्बन्धित्वाभावेन यौक्त इत्यस्यानुपपत्तिप्रसङ्गादित्यतो न साक्षाद्युक्तिसम्बन्धित्वमेव यौक्तत्वं किन्तु युक्तिसम्बन्धित्वमात्रम् । तच्च साक्षात्परम्परासम्बन्धसाधारणम् । तथा चाविरोधस्य साक्षाद्युक्त्यसम्बन्धेऽपि विरोधद्वारा अस्त्येव सम्बन्ध इति नोक्तानुपपत्तिरिति भावेनाह **अत एवेति**। तत्परामृष्टमेव दर्शयति **अभावस्यापीति** । **युक्त्यादि**चातुर्विध्येन विरोधस्य, तच्चातुर्विध्येन चाभावचातुर्विध्यस्याश्रयणे उपधानद्वयकल्पनं परम्परया युक्तिसम्बन्धकल्पनं च भवतीति चतुर्विधस्य यौक्त इति पदद्वयस्याप्यस्वारस्यमिति पूर्वत्रापरितोषात्पक्षान्तरमारचयति **अथवेति** । नन्वस्मिन्नपि पक्षे प्रकृतपरामर्शकतच्छब्दानुपपत्तिरित्यतो गौरवेण स्वप्राधान्येन प्रकृतत्वस्य परामृष्टव्यताथामप्रयोजकत्वाद्यथाकथञ्चित्प्रकृततायाश्च विरोधेऽपि सत्त्वान्न तच्छब्देन परामर्शानुपपत्तिरिति भावेनोक्तम् **अविरोधपदसन्निधापित इति** । अत्रापि युक्त्यादिचातुर्विध्येन तन्निरूपितविरोधचातुर्विध्यकल्पनादुपधानकल्पनमवर्जनीयमेवेति चतुर्विधस्येत्यस्यास्वारस्यमित्यपरितोषादाह **यद्वेति** ॥ **अविरोधो हीति** । विरोधितावच्छेदकप्रकारकविरोधिज्ञानसाध्यत्वादविरोधिज्ञानस्येति भावः ॥ **विरोधश्चेति** । ससम्बन्धिकपदार्थज्ञाने सम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानस्य कारणत्वात्सम्बन्धिभूतयुक्त्यादिनिरूपणं विना विरोधो न निरूपयितुं शक्यत इत्यर्थः ॥ **ततश्चेति** । ततश्चास्मिन्पक्षे उपधानस्यैवाभावाच्चतुर्विधस्येत्यस्यातिस्वारस्यमिति भावः । यद्यप्यत्रापि तच्छब्दस्य यथाकथञ्चिदविरोधपदोपस्थापितविरोधयुक्त्यादिपरामर्शकत्वाङ्गीकारात्तच्छब्दस्यास्वारस्यमविशिष्टं तथाऽपि 'तत्रापि च स्मृतेः । 'तस्याश्चतुःस्वरूपत्वादि'ति विरोधिपरोत्तरग्रन्थस्वारस्यानुरोधेनैवं व्याख्यातमिति द्रष्टव्यम् ।

स० — **निर्धारणे षष्ठीति** । गुणक्रियाजातिभिः यतः पृथक्करणं तत्र 'यतश्च निर्धारणमि'त्यनेन षष्ठीत्यर्थः । 'आदौ उक्तप्रकारेण प्रबलो यतः' इत्यनेनादिशब्दः प्राबल्यार्थ इत्युक्तं भवति ।

प० — **निर्धारणे षष्ठीति** । गुणक्रियाजातिभिः यतः पृथक्करणं तत्र 'यतश्च निर्धारणं' इति सूत्रेण षष्ठीत्यर्थः । अस्मिन्पक्षे यौक्त इत्यस्य घटनामाह **चतुर्विधस्येति** । युक्तेः प्राधान्ये हेत्वंतरं **युक्तिपुरस्कारेणेति** ॥ **ननु कथमिति** । अभावस्य स्वतो विधाऽसंभवादिति भावः ।

या० — **निर्धारण इति** । गुणक्रियाजातिभिर्यतः पृथक्करणं तत्र 'यतश्च निर्धारणमि'त्यनेन षष्ठीत्यर्थः ॥ **सर्वेषामपि विरोधानामिति** । विरोधिनां युक्त्यादीनां प्राबल्याभावे तद्विरोधशङ्काया एवासंभवेन तत्प्राबल्योपपादिका युक्तयः सर्वविरोधानामुपजीव्या इत्यर्थः । युक्तेः प्राधान्ये हेत्वन्तरमाह **युक्तिपुरस्कारेणेति** । एवं च महामल्लभङ्गन्यायेन युक्तिविरोधपरिहारस्य प्राथम्यमिति मन्तव्यम् ।

समयादिविरोधपरिहाराणां क्रमेणानन्तर्ये प्रयोजनं तु टीकाकार एवाग्रे प्रदर्शयिष्यति । **ननु कथमभावस्येति** । प्रतियोगिनो विरोधस्यैकत्वादिति भावः । यौक्त इत्यत्र परम्परासंबन्धेन व्याख्यानं न स्वरसमत आह **अथवेति** । विरोधे चतुर्विधत्वमुक्तपक्षद्वये न स्वाभाविकं किन्तूपहितमेवेत्यरुच्या 'तस्याश्चतुःस्वरूपत्वादि'त्यग्रे विरोधिनामेव चातुर्विध्यस्य स्पष्टमुक्तत्वेन च पक्षान्तरमाह **यद्वेति** । अत्र चतुर्विधत्वस्य स्वरसत्वेऽपि **'यौक्त'** इत्येतन्न स्वरसमतः पूर्वव्याख्यानमिति मन्तव्यम् ।

**श्री० — निर्धारण इति** । अविरोधस्य मध्य इत्यर्थः **एकार्थ इति** । तथा च चातुर्विध्यं यद्यप्यनुपपन्नमित्यर्थः । **सः** विरोधाभावः ॥ **तत्प्रतिपादनेनेति** । चतुर्विधविरोधाभावप्रतिपादनेनेत्यर्थः । प्राथम्ये हेत्वन्तरमाह **युक्तीति** । उपपन्नमित्युक्तमेव दर्शयति **अभावस्यापीति** । आदावित्यस्यावृत्त्या व्याख्यानं करोति **आदावित्यादिना** । आदावित्यस्य प्रबल इति व्याख्यानम् । यथाऽस्मिन्ग्रामेऽयमेव सर्वापेक्षयाऽऽदावित्युक्तेऽतीव प्रबल इति लभ्यते तद्वत् ॥ प्राबल्योपपादकम् **उक्तप्रकारेणेति** । सर्वेषामपि विरोधानामित्याद्युक्तप्रकारेणेत्यर्थः । आवादो भवत्यपीत्युत्तरग्रन्थस्वारस्यात् ।

**च० — निर्धारण इति** । नेयं शैषिकी षष्ठी, किं तु 'यतश्च निर्धारणमि'ति योगविहितेत्यर्थः । जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणनिर्धारणं यतः, ततः षष्ठीसप्तम्यौ स्तः । नृणां नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा संपन्नक्षीरा । अध्वगानामध्वगेषु वा रथिकाः शीघ्रतराः । छात्राणां छात्रेषु वा मैत्रः पटुरिति तत्प्रदेशा अवसेयाः । इत्थं चेयं षष्ठी शैषिकी नेति न चातुर्विध्यभङ्गापत्तिरिति भावः । **युक्तिपुरस्कारेणेति** । इत्थं च महामल्लभङ्गन्यायेन युक्तिविरोधपरिहारस्य प्राथम्यमिति भावः । इतरविरोधत्रयेऽनादिकालानुवृत्तसमयविरोधस्यैव प्रबलत्वादित्यादिना क्रमेणानन्तर्यबीजं ग्रन्थकृदेवाभिधास्यतीति ध्येयम् । **तदुपधानात्** । स्वनिरूपितविषयितात्वावच्छिन्नव्यापकतावच्छेदकतद्विषयितात्वकत्वरूपतद्धटितत्वात् । **तथोच्यत इति** । प्रतियोगितावच्छेदकभेदनिबन्धनोऽभावभेदः सूपपाद इति भावः । **इत्युपपन्नमिति** । तथा च तस्येदमिति सूत्रानुशिष्टयुक्तिपदप्रकृतिकाण्प्रत्ययेन प्रकृत्यर्थाश्रितविरोधप्रतियोगिताकलक्षणः संसर्गो बोध्यत इत्युपेयत इति भावः । दर्शिततद्धितप्रत्ययस्योक्तपरंपरासंबन्धबोधकत्वोपगतिर्न श्रेयसीति मन्वानः कल्पान्तरमारचयति । **अथवेति** । गुणाश्रयो द्रव्यं, स च द्रव्यसमवायिकारणक इत्यादौ प्रक्रान्तोपसर्जनपरामर्शकत्वस्यापि सर्वनाम्नो दर्शनेन प्रकृतेपि पूर्वोच्चरितपदजनितोपस्थितिविशेष्यीभूताभावनिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतापन्नस्यापि विरोधस्य सर्वनाम्ना परामर्शोपगमे न क्षतिरित्यभिप्रेत्याह **परामृश्यत इति** ॥ **यौक्तो विरोध इति** । तादृशप्रत्ययेनाश्रयाश्रयिभाव एव प्रत्याय्यत इति भावः । तस्याश्चतुःस्वरूपत्वादिति नैसर्गिकचातुर्विध्यस्यैवानुव्याख्यास्यमानतया नैसर्गिकतद्विशेषितयुक्त्याद्याश्रितविरोधप्रतियोगिकत्वनिबन्धनचातुर्विध्यस्य नैस-

गिकतद्विशेषितयुक्त्याश्रितत्वनियन्त्रितस्य वा तस्य कल्पद्वयदिशा व्याकृतिमूलकृत्यर्थमतिशेत इति प्रतिसंदधानः कल्पान्तरमनुधावति **यद्वेति** । एतत्कल्पे युक्तिपदप्रकृतिकोक्तप्रत्ययस्य द्वितीयकल्प इव सामञ्जस्यस्य दुःसंपादतयाऽऽद्यकल्पीयभङ्गीमेवाशिश्रिय इति मन्तव्यम्। **अविरोधो हीति** । विरोधनिरूपणाधीननिरूपणः इति बहुव्रीहिः । प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावधीहेतुत्वादिति भावः । विरोधितावच्छेदकप्रकारकविरोधिज्ञानसाध्यत्वादविरोधज्ञानस्येति भाव इत्यप्याशयं प्रकाशयन्ति ॥ **विरोधश्चेति** । निरूप्याधिगतेर्निरूपकतावच्छेदकोपरागेण निरूपकाधिगतिमन्तरेणानुदयादिति भावः ।

**सु० — प्रथमाधिकरणे विशेषमाह** तत्रापीति ।

**अनु० —** तत्रापि च स्मृतेः ॥

**अपिपदमादावित्यस्यानुकर्षणार्थम् । तत्र युक्तिविरोधाभावप्रतिपादकेऽपि पाद इत्यनौचित्यशङ्कासूचनार्थं वा । चशब्देनाविरोधः साध्यत इत्येतदनुकृष्यते । स्मृतेः पाशुपतादिकायाः । यद्यपि स्मृतेरित्यस्य न नञर्थेन संबन्धो घटते विरोधश्च समासे गुणभूतः । तथाऽपि बुद्ध्या विविक्तेन तेन संबन्धः संभवति ।**

शे० — **अनौचित्येति** । युक्तिविरोधपरिहारकेऽस्मिन्पादे स्मृत्यविरोधसाधनस्यासङ्गतत्वेनाकर्तव्यत्वेत्यर्थः । पाशुपतादिकाया इत्यादिपदेन साङ्ख्यबौद्धार्हतादिस्मृतिपरिग्रहः ॥ **नञर्थेनेति** । अविरोधपदार्थान्तर्गतनञर्थेनेत्यर्थः । तथा सति स्मृतेरभाव इत्यर्थप्राप्त्याऽसङ्गत्यापत्तेरिति भावः ॥ **समास इति** । अविरोध इति नञ्तत्पुरुष इत्यर्थः ॥ **गुणभूत इति** । नञ्तत्पुरुषस्योक्तरीत्योत्तरपदार्थप्राधान्यान्नञ्विशिष्टविरोधपदलक्षितस्याभावविशेषस्य प्राधान्येऽपि, वाच्यस्य विरोधस्याप्राधान्यमभिप्रेत्येदमुक्तमित्यवधेयम् ॥ **बुद्ध्या विविक्तेनेति** । स्मृतेर्यो विरोधः स नेत्येवं बुद्ध्या विविक्तेन विरोधेनान्वय इत्यर्थः ।

स० — ननु स्मृतेरित्यस्य नञर्थेन संबन्धासंभवेऽपि विरोध इत्यनेन संबन्धो भविष्यतीत्यत आह **विरोधश्चेति** । **समासे** नञ्समासे । गुणभूतः क्रियासापेक्षत्वेनेति शेषः । **तेन** विरोध इत्यनेन ।

**प० — इत्यनौचित्यशंकासूचनार्थं वेति** । तत्सूचने सत्येव 'तस्याश्चतुःस्वरूपत्वादि'तिपरिहारो युक्तः स्यादिति भावः ॥ **न घटत इति** । तस्याः विरोधकत्वेनाविरोधोपपादकत्वाभावादिति भावः । अत एव 'न संख्योपसंग्रहादि'तिसूत्रे पूर्वस्मादविरोधपदाकर्षे सति संख्योपसंग्रहादपीति पंचम्या अविरोधपदेनान्वयास्वारस्यात् । पूर्वस्मात् बुद्ध्या विभागेन विरोधपदमात्रमाकृष्यत इति भावेन पृथक् नञुपात्त इति भावः । ननु स्मृतेरित्यस्य नञर्थेन संबंधाभावेपि विरोध इत्यनेन संबंधो भविष्य-

तीत्यत आह **विरोधश्चेति** । **समासे** नञ्समासे । **गुणभूतः** क्रियासापेक्षत्वेनेति शेषः । **तेन** विरोध इत्यनेन ।

**या० — अनौचित्यशङ्केति** । तथा च युक्तिविरोधाभावप्रतिपादकेऽस्मिन्पादे यद्यपि स्मृत्यविरोधसाधनमनुचितं तथाऽपि वक्ष्यमाणरीत्याऽनुसन्धाने उचितमेवेति योजनीयमिति भावः ॥ **नञर्थेनेति** । अविरोधपदान्तर्गतनञर्थेनेत्यर्थः । स्मृतेरभाव इत्यर्थप्राप्त्याऽसङ्गत्यापत्तेरिति भावः ॥ **समास इति** । अविरोध इति नञ्तत्पुरुष इत्यर्थः । इदं च पूर्वमेव व्याख्यातम् ।

**श्री० — सूचनार्थं वेति** । अपिपदमिति वर्तते ॥ **विरोधश्चेति** । यद्यपि नञर्थ एव समासे गुणभूतो न विरोधस्तथाऽप्यविरोधपदस्य विरोधाभाव इति व्याख्यातत्वात्समासे गुणभूत इत्यर्थः । **तेन** विरोधपदेन ।

**च० — अनौचित्येति** । युक्तिविरोधाभावव्युत्पादकप्रकृतचरणे स्मृत्यविरोधव्युत्पादनानौचितीशङ्काऽभिधास्यमानभङ्गीमननुसन्दधतामेवेति भावः । पाशुपतादिकया इत्यादिपदं सांख्यबौद्धार्हतादिस्मृतिपरिग्राहकम् । **नञर्थेनेति** । अविरोधपदघटकनञुपस्थाप्याभावेनेत्यर्थः । तथासति स्मृतेः स्वनिरूपितानुयोगितासंसर्गेण तादृशाभावेऽन्वयप्राप्त्याऽसाङ्गत्यापत्तेरिति भावः । **समास इति** । नञित्यनेन नञः सुपा समस्ततया नञ्तत्पुरुष इत्यर्थः । **गुणभूत इति** । भूप्राप्तावात्मनेपदीति व्याख्यानात् भवतिरयं प्राप्त्यर्थः । निष्ठाप्रत्ययश्च कर्तृसाधनः 'गत्यर्थाकर्मक' 'इति स्मृतेः (पा सू ) । गुणशब्दश्च भावप्रधानस्तथाच अविरोधपदाधीनान्वयबोधीयाभावनिष्ठविशेष्यतानिरूपितप्रकारतापन्नं इत्यर्थः । **बुद्ध्या विविक्तेनेति** । स्मृतेर्यो विरोधः स नेत्येवं बुद्ध्या विविक्तेन विरोधपदेनान्वय इत्यर्थः ।

**सु० — युक्तिविरोधपरिहारलक्षणेऽत्र पादे स्मृतिविरोधपरिहारो न कर्तव्योऽसङ्गतत्वात् । कर्तव्यतायां वा प्राथम्यं कुत इत्यत आह तस्या इति ।**

अनु० — तस्याश्चतुस्स्वरूपत्वात्

**तस्याः पाशुपतादिस्मृतेर्युक्तिसमयादिविरोधिचतुस्स्वरूपत्वात् । एतदुक्तं भवति । पाशुपतादिस्मृतयो हि स्वयमाप्ताभिमतवाक्यतया समयरूपा अपि स्वाभिमतार्थे युक्तीः श्रुतीश्च संवादयन्त्यो युक्तिसमयादिविरोधिचतुष्टयरूपाः । ततश्चोक्तेऽर्थे तद्विरोधपरिहारोऽध्यायेऽन्तर्भवत्येव । किन्तु पादचतुष्टयार्थसङ्गतोऽप्ययं न निष्कृष्यैकत्रैव पादेऽन्तर्भवति । ततोऽध्यायादौ तदन्ते वा वक्तव्यः । प्रथमातिक्रमे च कारणं न किञ्चिदस्तीत्याद्याधिकरणे निरूप्यत इति । एवञ्च तत्रापि च स्मृतेरित्ययमुक्तस्यापवादो भवन्नपि न सर्वथेत्युक्तं भवति ।**

**समयादिविरोधस्यापि परिहारेण निष्कृष्टपादार्थाभावाद्युक्तिविरोधपरिहारस्यापि भावेनान्तर्भावसम्भवाच्च ।**

शो० — स्मृतेः चतुःस्वरूपत्वव्युत्पादनानर्थक्यमाशङ्क्य तत्प्रयोजनप्रदर्शनेन परिहरति **युक्तीति** । कथं पाशुपतादिस्मृतेर्युक्त्यादिचतुःस्वरूपत्वं तथात्वेऽपि वा कुतः स्मृतिविरोधपरिहारस्य प्राथम्यमित्यत आह **एतदुक्तं भवतीति** ॥ **आप्ताभिमतवाक्यतयेति** । अत्रालौकिकार्थविषयत्वस्यापि विशेषणतयाऽभिप्रेतत्वान्नातिप्रसङ्ग इति ध्येयम् । अत्र पाशुपतादीत्यादिपदेन साङ्ख्यादिस्मृतिरेवाभिमता न तु बौद्धार्हतादिस्मृतिरपि । तत्र श्रुतिसंवादाभावेन चतुष्टयरूपत्वासम्भवादिति ध्येयम् । अध्यायान्तर्भावेऽपि कुतः प्राथम्यमिति शङ्कते **किन्त्विति** । परिहरति **पादचतुष्टयेति** ॥ **निष्कृष्येति** । असाधारणो भूत्वेत्यर्थः । एकैकाविरोधमात्रप्रतिपादकत्वात्पादविशेषाणां न तत्रास्यान्तर्भाव इत्यर्थः । प्रथमातिक्रमे च न किञ्चित्कारणमस्तीत्युपलक्षणम् । चतुरात्मकत्वेन प्रबलतया प्रथमं निरसनीयत्वाच्चेत्यपि द्रष्टव्यम् । अभ्युपेत्य चेदमुदितम् । वस्तुतस्तु चतुःस्वरूपत्वादस्य चतुर्ष्वपि पादेष्वन्तर्भावसम्भवादुक्तहेतुभ्यां प्रबलत्वाच्चाद्यपादस्यादावस्य निवेशः अत एवोत्तरत्र वक्ष्यति 'युक्तिविरोधपरिहारस्यापि भावेनान्तर्भावसम्भवाच्चे'तीत्यवधेयम् । अपवादो भवन्नित्यंशमुपपादयति **समयादीति** । न सर्वथेत्यंशमुपपादयति **युक्तिविरोधेति** ।

---

प० — तावता कथमसंगतिनिरास इत्यत आह **एतदुक्तं भवतीति** । अपवादत्वं सर्वथैवापवादत्वं नेत्येतत् द्वयमपि व्यनक्ति **समयादीति** ।

था० — **विरोधिचतुष्टयरूपा इति** । इदं च पाशुपतसांख्यादिस्मृतीरभिप्रेत्य न तु बौद्धार्हतादिस्मृतीः । तत्र श्रुतिसंवादासंभवेन चतुष्टयरूपत्वासं भवादित्यवधेयम् ॥ **निष्कृष्येति** । असाधारणो भूत्वेत्यर्थः । एवमग्रेऽपि निष्कृष्यपदमसाधारणपरम् ।

श्री० — अनौचित्यशङ्केत्युक्तं विशदयन्नेवोत्तरवाक्यमवतारयति **युक्तिविरोधेत्यादिना** । उक्तस्य 'आदौ यौक्तः' इत्युक्तस्य । तदेव विशदयति **समयादीत्यादिना** ।

च० — अत एव 'न संख्योपसंग्रहादि'ति सूत्रे कल्पनोपदेशादिति सूत्रादविरोधपदानुषङ्गे सति संख्योपसंग्रहादिति पञ्चम्यादिरूपत्वे स्मृतिविरोधपरिहृतेः प्राथम्ये च बीजं प्रकाशयति **एतदुक्तं भवतीति** ॥ **पाशुपतादिस्मृतय इति** । अत्रत्यादिपदं सांख्यादिस्मृतिसंग्राहकमेव । न बौद्धार्हतादिस्मृतिपरिग्राहकम् । तासां श्रुतिसंवादवैधुर्येण विरोधिचतुष्टयरूपत्वायोगादित्यवधेयम् । **आप्ताभिमतवाक्यतया** अलौकिकार्थविषयकाप्तिमत्त्वोपरक्ताभिमतिविषयीभूतकर्तृकप्रणयनक्रियाकर्मीभूतवाक्यतया । चरणचतुष्टयार्थनिरूपितसङ्गतिविशेषिततयैतस्यासाधारण्येन प्राथम्येन निवेशनं निर्बीजमित्याशङ्कते **किं**

त्विति ॥ **निष्कृष्य** । असाधारणो भूत्वा । **एकत्रैवेति** । चरणविशेषाणां चरणविशेषान्तरप्रतिपाद्यतावच्छेदकधर्मासमानाधिकरणधर्मावच्छिन्नप्रतिपादकतया चरणचतुष्टयीप्रतिपाद्यतावच्छेदकधर्मचतुष्टयीविशेषितस्यैतस्य तत्रान्तर्भाव इत्यर्थः । **न किञ्चिदिति** । उक्तधर्मचतुष्टयीविशेषितत्वनियन्त्रितप्राबल्येन प्राथम्येन व्युदसनीयत्वाच्चेत्यपि बोध्यम् । अपवादो भवन्नित्यंश विवृणोति **समयादीति** । थालन्तेनाभिप्रेतं विशदयति । **युक्तिविरोधेति** ।

**सु० — एकस्यैवाधिकरणस्य पादचतुष्टयार्थसंबन्धेन चतुरस्वरूपत्वकथन(नेन )प्रसङ्गाच्छिष्याणां शास्त्रे बहुमानोत्पादनायान्यदपि चातुर्विध्यं वक्ति** प्रत्येकमिति ।

**अनु० —** प्रत्येकं चतुरात्मकाः ॥

पादाः सर्वे तदंशाश्च

**चत्वारोऽपि पादाः प्रत्येकं चतुरात्मकाः पादचतुष्टयार्थवन्तो द्रष्टव्याः । तद्यथा । युक्तिविरोधपरिहारलक्षणोऽप्ययं पादः समयादित्रयविरोधपरिहारात्मकोऽपि भवति । तथा समयविरोधपरिहारलक्षणोऽपि द्वितीयो युक्त्यादित्रयविरोधपरिहारात्मकोऽपि भवतीत्यादि । पादा इत्येवोक्ते सन्निहितत्वादेतदध्यायगता एवेति ज्ञायते । तदर्थं सर्वे इत्युक्तम् । सर्वाध्यायसंबन्धिनोऽपीत्यर्थः । यो यदध्यायगतः पादः स तदध्याय(गत)पादचतुष्टयार्थवानवधे(से यः । न केवलमेवं पादाः, किन्तु तदंशाश्च ते पादा अंशा येषां ते तदंशा अध्याया इत्यर्थः । प्रथमाध्यायः समन्वयस्येवाविरोधादित्रयस्यापि प्रतिपादको भवतीत्यादि । पादानां चतुरात्मकत्वेऽधिकरणानां तथात्वं सिद्धमेव । न चैवमध्यायादिभेदानुपपत्तिः पौनरुक्त्यदोषश्चेति वाच्यम् । विवक्षाभेदेन सामञ्जस्यात् । यदा प्रथमः समन्वयार्थो विवक्ष्यते न तदा तदर्थेतरेषामित्यादि ।**

**शे० — तथेति** । अत्रादिपदेन श्रुतिविरोधपरिहारलक्षणस्तृतीयो युक्त्यादिविरोधत्रयपरिहारात्मको भवतीत्यादेः संग्रहः । ननु सर्वे इत्युक्तावप्येतदध्यायगता एव सर्वे इति भविष्यतीति कथमुक्तशङ्कापरिहार इत्यत आह **सर्वाध्यायेति** । 'अविरोधत्रयस्यापि प्रतिपादको भवतीत्यादी'त्यादिपदेन द्वितीयाध्यायोऽविरोधस्येव समन्वयादित्रयस्यापि प्रतिपादको भवतीत्यादेः संग्रहः । ननु तदंशा इत्यस्य बहुव्रीहिमाश्रित्याध्यायपरत्ववत्तेषामंशा इति तत्पुरुषमाश्रित्याधिकरणपरत्वमप्यवश्यमाश्रयणीयमन्यथाऽधिकरणानां चातुरात्म्यानुक्तिप्रसङ्गात् तत्कथं बहुव्रीहिमात्रमाश्रित्याध्यायपरत्वाश्रयणमित्यत आह **पादानामिति ॥ सिद्धमेवेति** । अतस्तदंशा इत्यस्याधिकरणपरत्वे सिद्धार्थप्रतिपादकत्वेन वैयर्थ्यप्रसङ्गाद्बहुव्रीहि-

मात्राश्रयणेनाध्यायपरत्वमेव तस्याश्रयणीयमिति भावः । एवं प्रथमाध्यायादेः, समन्वयादिप्रतिपादकत्ववदविरोधादित्रयप्रतिपादकत्वे तदध्यायगततत्तत्पादानां तदध्यायगतपादचतुष्टयार्थवत्त्वे चेत्यर्थः । सर्वेषां सर्वार्थप्रतिपादकत्वेनाध्यायादिभेदकस्यार्थभेदस्याभावादिति भावः । विवक्षाभेदमेव दर्शयति **यदेति ।** आदिपदेन, यदा द्वितीयाध्यायोऽविरोधार्थो विवक्ष्यते न तदा तदर्थतेतरेषामित्यादेः यदा च प्रथमाद्यपादो नामसमन्वयलक्षणो विवक्ष्यते न तदा तदर्थत्वं तदध्यायगतेतरपादत्रयस्येत्यादेश्च परिग्रहः ।

प० — विवक्षाभेदेन सामंजस्यादित्येतद्व्यनक्ति **यदा प्रथम इति ।**

श्री० — **तथात्वं** चतुरात्मकत्वम् । पादान्तर्गतत्वादिति भावः । विवक्षाभेदमेव दर्शयति **यदेति । प्रथमः** अध्यायः ।

च० — विवक्षाभेदमेवोपपादयति **यदा हीति ।**

**सु० — अन्यदपि चातुर्विध्यं शास्त्रस्य दर्शयति** मूर्तीनामिति ।

**अनु० —**　　मूर्तीनां वर्णमागमात् ॥

**चतसृणां वासुदेवादिमूर्तीनां प्रतिपादकत्वेनापि चतुरात्मकत्वं ज्ञातव्यमिति योजना । नन्वेतदुक्तमेव, पुनः कस्मादुच्यत इत्यत आह** वर्णमिति ।

**अत्रागमादित्याङ्द्वयस्योपश्लेषो द्रष्टव्यः । तत्राद्यस्यारभ्येत्यर्थः । द्वितीयोऽभिविधौ । आगम इति चतुरध्यायिशास्त्रमुच्यते । ततश्चायमर्थः । न केवलं प्रत्यक्षरं प्रतिपदं प्रतिसूत्रं प्रत्यधिकरणं किन्त्वेतच्छास्त्रगतमेकं वर्णमारभ्य आ सर्वशास्त्रात्, प्रत्यधिकरणं प्रतिपादं प्रत्यध्यायं समस्तेन शास्त्रेण च चतस्रो मूर्तयः प्रतिपाद्यन्त इत्यर्थः ।**

**कुत एतदवगन्तव्यमित्यत आह** आगमादिति । **बृहत्तन्त्रादेरित्यर्थः ।**

शे० — **अन्यदपीति ।** शिष्याणां शास्त्रबहुमानोत्पादनायेति शेषः ॥ **उक्तमेवेति ।** 'वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वश' इत्यादिनेति शेषः । विवक्षितार्थस्य भाष्यारूढतासिद्ध्यर्थमाह **अत्रागमादित्यादि ।** आगमादित्यत्राङ् 'आङ् मर्यादावचन' इति कर्मप्रवचनीयः । वचनग्रहणादभिविधावपि । 'पञ्चम्यपाङ्परिभिरि'ति पञ्चमीति द्रष्टव्यम् ॥ **चतुरध्यायिशास्त्रमुच्यत इति ।** आगमशब्दस्य निर्दोषवाक्यमात्रपरत्वेऽपि पादाध्यायादिपदसमभिव्याहारात्सामान्यपरस्याप्यागमशब्दस्य चतुरध्यायिशास्त्रपरत्वमिति भावः । तावताऽपि 'उक्तमेव' इति न शङ्कापरिहारः, इत्यतोऽधिकविधानार्थमुक्तानुवादोऽयमित्यभिप्रेत्याह **ततश्चेति ।** ततश्चेत्यस्य इत्यर्थ इति वक्ष्यमाणेनान्वयः ॥ **अयमर्थ इति ।** वासुदेवादिरूपेण चतुर्मूर्तिलक्षणोऽर्थ इत्यर्थः । 'बृहत्तन्त्रप्रमाणेने'ति नामपादीयानुव्याख्यानं मनसि

निधायागमपदं तद्विशेषपरत्वेन व्याचष्टे **बृहत्तन्त्रादेरिति**। यद्यप्यत्र तदनुसारेण बृहत्तन्त्रादित्येव वक्तुमुचितम्। तथाऽपि तदुपलक्षगमिति भावेन बृहत्तन्त्रादेरित्युक्तमिति ध्येयम्।

**स०** **नन्वेतदुक्तमेवेति**। वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः। अथवा पञ्चमूर्तिस्स प्रोक्तोऽधिकरणं प्रति। प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथापि वा' इत्यनेनेति शेषः। वर्णमागमादित्यत्र आगमादिति पदभ्रान्तिं वारयितुमाह **अत्राङ्द्वयस्येति**॥ **आगमादिति**। अनेनाभिविध्यर्थकाङ् संबन्धमकृत्वा आगमात् बृहत्तन्त्रादेरिति व्याख्यानमित्युक्तं भवति।

**प०** **उक्तमेवेति**। प्रथमपादांते। 'वर्णमागमादि'त्यत्र आ आगमादिति पदच्छेदभ्रांतिं निराचष्टे **अत्रागमादित्याङ्द्वयस्येति**। तथा च आ आ आगमादिति पदविभागः कार्य इति भावः। आगमादित्यनेनाभिविध्यर्थकाङ्संबंधमकृत्वा आगमादिति बृहत्तंत्रादेरिति व्याख्यातमिति ध्येयम्। (प्रथम)प्रथमपादांतोक्तमनुवदति **न केवलमिति**॥ **बृहत्तंत्रादेरिति**। तथैव प्रागुक्तेरिति भावः।

**या०— नन्वेनदुक्तमेवेति**। 'वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः' इत्यत्रेति शेषः।

**श्री०— नन्वेतदिति**। वासुदेवादिमूर्तिचतुष्टयप्रतिपादकत्वमित्यर्थः। **उक्तमेव** प्रथमपादान्त इत्यर्थः॥ **आङ्द्वयस्येति**। तथा च वर्णं आ, आ आगमादिति पदच्छेदो द्रष्टव्यः॥ **न केवलमिति**। प्रथमाध्याय एवेति शेषः। प्रत्यधिकरणमित्यनन्तरं वासुदेवादिमूर्तिचतुष्टयप्रतिपादकत्वमिति शेषः। तथा च पूर्वं प्रथमाध्यायगतपदानामेव वासुदेवादिमूर्तिचतुष्टयप्रतिपादकत्वं 'सर्वश' इत्यनेनोक्तम्, इदानीं तु चतुरध्यायगतसर्वपदादिप्रतिपाद्यत्वमुच्यत इति न पुनरुक्तिरिति भावः।

**च०— नन्वेतदुक्तमिति**। 'वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः' इत्यादिनेति पूरणीयम्। अत्राभिप्सितार्थस्य मौलाक्षरानुपूर्वीमहिम्नैवाधिगततां दर्शयति **अत्रागमादित्यादि**॥ **आङ्द्वयस्येति**। आरम्भार्थकस्याभिविध्यर्थकस्य चाङः खट्वाटकमित्यादिवत्सवर्णदीर्घे पश्चादुपसर्गसंज्ञकाङः सवर्णदीर्घे आगमादित्यत्र पाणिनीयप्रक्रियाधिगतिमतामाकारत्रयानुसंहितिर्भविष्यति। तत्रोपसर्गांशः पञ्चम्यन्तपदावयवः। 'संहितैकपदे नित्या नित्या धातूपसर्गयोरि'ति वचनात्। दर्शितार्थकौ द्वावाङौ तु तद्बहिर्भूतावसमस्तौ। आतृणादाविरिञ्चादीशनियमः मित्य दिवत्। आङ्मर्यादाऽभिविध्योरित्यनेन तु प्रकृतेन समासः। समासविधेर्विभाषाधिकारीयत्वात्। तत्रारम्भार्थकेनाङा द्वितीयान्तमभिविध्यर्थकेन तेन पञ्चम्यन्तमन्वेति। तत्र वृत्त्याद्याश्रयणेन पञ्चम्यन्तं बृहत्तन्त्रत्वाद्यवच्छिन्नप्रमाणलक्षकं सत् अध्याहृतेनावगन्तव्यमित्यनेनान्वेति। तत्र चाङ्मर्यादावचन इति योगानुशिष्टकर्मप्रवचनीयसंज्ञो मर्यादार्थकाङ् तत्र वचनग्रहणबलाधीनतत्संज्ञकश्चाभिविध्यर्थकः। 'पञ्चम्यपाङ्परिभिरे'तैः कर्मवचनीयैर्योगे पञ्चमी भवतीत्यागम-

पदस्य पञ्चम्यन्ततावसेया । **चतुरध्यायिशास्त्रमिति** । द्विगोरिति ङीप् । नन्वागमपदस्य चतुर्लक्षणीशास्त्रपरत्वोपगत्या न पौनरुक्त्यशङ्कापहस्तितेत्याशङ्कायामधिकविधानफलकोऽयं प्रथमपादान्तोक्तानुवाद इत्यभिप्रेत्यविवानभिधत्ते **ततश्चेति** । आगामिना 'इत्यर्थ' इत्यनेनान्वेति । इत्थं, चात्र नामपादान्तोक्तां प्रत्यक्षरं प्रतिपदं प्रतिसूत्रं प्रत्यधिकरणं भगवन्मूर्तीनां प्रतिपाद्यतामनूद्य प्रकृते कृत्स्नशास्त्रप्रतिपाद्यतालक्षणाधिकार्थो विधीयत इति नोक्तक्षत्यवकाश इति भावः । न च सुधायां प्रथमपादान्ते कथनादस्मिन्नेव पाद इति भाति तन्निरासायोक्तं **सर्वशः** । 'सर्वेषु पादेष्वि'ति व्याख्याततया सर्वपादात्मकृत्स्नशास्त्रप्रतिपाद्यतापि तत्राभिहितैवेति नायमधिकांश इति वाच्यम् । एकदेशप्रतिपाद्यतातः समुदायप्रतिपद्यताया अनतिरेके, प्रत्यक्षरं प्रतिपदमित्येतावतैव पूर्तौ शेषोदाहरणावैयर्थ्यप्रसङ्गात् । पङ्कजपाचकादिपदेष्वेकदेशप्रतिपाद्यताकूटादपि समुदायप्रतिपाद्यतायाः पृथक् दर्शनाच्च । प्रकृतेपि तत्तद्व्यक्तित्वावच्छिन्नतत्तत्पादव्यक्तिवृत्तिनिरूपकताकप्रतिपाद्यताकूटात्पादचतुष्टयपर्याप्तव्यासज्यवृत्त्यध्यायत्वावच्छिन्ननिरूपकताकप्रतिपाद्यतायाः भेदसंभवात् । व्याचक्षाणा अपि अधिकविधानार्थमुक्तानुवादोऽयमित्यभिप्रेत्याह ततश्चतीति व्याकुशासिषुः । प्रथमपादोक्तमनुवदति **न केवलमिति** इत्यप्यवतारयन्निति मन्तव्यम् । अत्र चन्द्रिकायां " 'पदात्यादिषु भग्नेषु गजाश्वादिप्रवृत्तिवत् । युक्त्यादिषु निरस्तेषु समयादिप्रवृत्तितः ।' अनुमानमात्रस्य कामचारत्वेनातिदुर्बलत्वात्, समयानां च वेदवदकामचारित्वेपि अतिदार्ढ्येन बहुजनपरिगृहीतत्वेपि पौरुषेयतया शङ्कितदोषत्वेन दुर्बलत्वात्, श्रुतिमात्रस्य समयाद्बलवत्त्वेपि सोपपत्तिकश्रुतिवत् बलवत्त्वाभावात्, पदात्यादिभङ्गानन्तरमेवाश्वादिवत् अनुमानादिनिरासानन्तरमेव विरोधिसमयादेः प्रवृत्तेः पादक्रमः । 'यद्वा बहिरङ्गैर्विरोधो हि झटित्येव प्रतीयते । अन्तरङ्गैः स्वगोत्रैस्तु विलम्बेन प्रतीयते ।' अनुमानस्याशब्दत्वेन विजातीयतयाऽतिबहिरङ्गत्वं, समयानां शब्दत्वेपि श्रुतित्वाभावात् बहिरङ्गत्वम् । श्रुतेः सिद्धान्त्यभिमतसयुक्तिकश्रुत्यन्तरङ्गत्वम् । सयुक्तिकश्रुतेस्तु तथात्यन्तान्तरङ्गत्वम्, लोके चातिबहिरङ्गादिविरोधज्ञानानन्तरमेव बहिरङ्गादिविरोधधीरिति निरसनीयविरोधधीक्रमात् पादक्रमः । यद्वा विरोधादेर्युक्त्यधीनत्वात्, तथा मीमांसाया युक्तिपुरस्कारेण प्रवृत्तेः, तथा समयानामपि युक्तिमूलत्वात्, तथा वेदोऽप्रमाणं आप्ताप्रणीतत्वादिति साक्षात्कृत्स्नवेदाप्रामाण्यसाधकत्वात्, एकस्य समयिनः समयान्तर इव युक्तावनादराभावाच्च युक्तिविरोधः समयविरोधादपि प्रबलः । समयानां तु अनादिकालतोऽविच्छेदेन बहुजनपरिग्रहेण वेदतुल्यत्वेपि वेदवन्निर्मूलत्वाभावात् अत्यन्तभ्रमहेतुतया तत्त्वज्ञानस्यातिविरोधित्वात्, श्रुतिविरोधवत् समयविरोधस्य प्रातीतिकमात्रत्वाभावाच्च श्रुतिविरोधात् समयविरोधः प्रबलः । एवं च महामल्लभङ्गन्यायेन पादक्रमः । इममेव च क्रममभिप्रेत्य टीकायां 'तत्र सर्वविरोधानां युक्तिमूलत्वेने'त्यादि, द्वितीयपादे च 'इतरविरोधत्रयेऽनादिकालानुवृत्तसमयविरोधस्यैव प्रबलत्वादि'त्युक्तम्। अयं च महामल्लभङ्ग-

न्याय: पादत्रय एवाभिप्रेत: । चतुर्थपादस्य तु युक्तिश्रुत्युभयविरोधप्रपञ्चनपरत्वाद्वा मुमुक्षुणा अन्ते जिज्ञास्याध्यात्मविषयत्वाद्वा अन्त्यतेति द्रष्टव्यम् । यद्वा उक्तरीत्या युक्ते: प्रबलत्वादादौ तदविरोध: । अथ 'इतरेषां चानुपलब्धेरि'ति आद्यपादोक्तहेतुप्रपञ्चनरूपत्वात् समयाविरोध:। अनन्तरं, यदि 'विप्रतिषेधाच्चे'ति द्वितीयान्त्यन्यायेन श्रुतिविरोधात्परस्परविरोधाच्च मतान्तराप्रामाण्यम् तर्हि तत एव परस्परविरोधात् श्रुतीनामप्रामाण्यमिति शङ्कोदयाच्छ्रुत्यविरोध: । पश्चाद्यदि 'यावद्विकारं तु विभागो लोकवदि'ति युक्त्यनुगृहीतयाऽऽकाशादेरुत्पत्तिश्रुत्यानुत्पत्तिश्रुतिर्गौणी तद्वदुपादानाभावादियुक्तिसहितया प्राणानामनुत्पत्तिश्रुत्या तदनित्यत्वादिश्रुतिर्गौणीति शङ्कोदयात् सयुक्तिकश्रुत्यविरोध इति पादक्रम:" इति स्थितम् ।

**सु०— एतत्पादाधिकरणपूर्वपक्षसिद्धान्तयुक्ती: सङ्क्षेपेणाह** आप्ततेत्यादिना ।

**अनु०—** आप्तता समताऽदृष्टिश्रुतिसाम्यबलोद्भवा: ॥
सर्वानुसारो लघुता विशेषादर्शनाफले ॥
इष्टासिद्धिश्च नियम: पूर्वपक्षेषु युक्तय: ॥
एता एव त्वतिबला: सिद्धान्तस्य नियामिका: ॥

**स०— आप्ततेत्यादिनेति** । अस्यार्थ: न्यायविवरणादवगन्तव्य: ।

---

**प०— आप्ततेत्यादिनेति** । आप्ततेत्यादियुक्तिमालाया न्यायविवरण एव विवृतत्वादत्राव्याख्यानमिति पूर्वाध्याय एव व्यक्तम् । आद्यनये आप्तता ॥ १ ॥ न विलक्षणत्वादित्यत्र समता ॥ २ ॥ अभिमानीत्यत्रादृष्टि: ॥ ३ ॥ असदितिचेदित्यत्र श्रुतिसाम्यम् ॥ ४ ॥ भोक्रापत्तेरित्यत्र बलोद्भव: ॥ ५ ॥ तदनन्यत्वनये सर्वानुसार: ॥ ६ ॥ इतरव्यपदेशादित्यत्र लघुता ॥ ७ ॥ अधिकं त्वित्यत्र विशेषादर्शनं ॥ ८ ॥ न प्रयोजनेत्यत्राफलं ॥ ९ ॥ वैषम्येत्यत्रेष्टासिद्धि: ॥ १० ॥ सर्वधर्मेत्यत्र नियम इति विवेक: ॥ ११ ॥

सु० — **उक्तार्थं स्मृतिविरोधेनाक्षिप्य समादधत्सूत्रम्** ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ इति ॥ **अस्यार्थ:** । **यदुक्तं परस्य ब्रह्मणो विष्णो: सकलजगज्जन्मादिकारणत्वं सार्वज्ञ्यादिसकलगुणपूर्णत्वं समस्तदोषदूरत्वं च तदयुक्तम्** । पाशुपतसांख्यबौद्धार्हतादिस्मृतिविरुद्धत्वात् । ता हि शिवप्रभृतीनामेव जगज्जन्मादिकारणत्वादिकं प्रतिपादयन्ति । न च तासामन्योऽवकाशोऽस्ति येन प्रतीतेऽप्यर्थे तात्पर्याभावं प्रतीम: । अन्यथा तासां स्मृतीनामनवकाशेनाप्रामाण्यलक्षणदोषप्रसङ्ग इति । तन्न । पुरुषोत्तमस्यैव

पञ्चरात्रादिस्मृतिभिरखिलजगत्कारणत्वादेरुक्तत्वात् । अपर(न्य)था तासां पाशुपतादि(स्मृति)-भ्योऽन्यासां पञ्चरात्रादिस्मृतीनामवकाशान्तराभावेनाप्रामाण्यदोषप्रसङ्गादिति ।

तत्राक्षेपस्तावदयमयुक्तः । श्रुतिसमन्वयेनास्यार्थस्य साधितत्वात् । श्रुतिविरुद्धानां(च) स्मृतीनामप्रामाण्यस्येष्टत्वात् । श्रुतिसमन्वयन्यायेन पाशुपतादिस्मृतीनामपि परब्रह्मणि समन्वयेन शिवार्चनादिपरत्वेन वा सावकाशत्वाच्च । समाधानमपीदमयुक्तम् । सकलशास्त्रप्रमाणकत्वमुक्तार्थस्याभिधायेदानीं स्मृतिमात्रोपादाने कारणाभावात् । पराभिधित्सितं दोषमवबुध्य श्रुतिपरित्यागस्त्वयुक्तः । किन्तु स परिहर्तव्यः । अन्यथा प्रागपि श्रुतिरनादेया स्यात् । किञ्च पञ्चरात्रादिस्मृतीनामप्रामाण्यं परस्येष्टमेव । वासुदेवार्चनादिपरतया सावकाशताऽपि तेन सम्भाव्येत । साम्यापादनमात्रेऽपि परस्यैव जयो निश्चयप्रतिबन्धकत्वादित्यतो निर्दलं पूर्वपक्षं तावदुज्जीवयति आप्तैरिति ।

अनु० — ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥

आप्तैः प्रत्यक्षतो दृष्ट्वा प्रोक्तमर्थं कथं श्रुतिः ।
पिपीलिकालिपिनिभा वारयेत्सर्वगा हि ते ॥

अयमिहाभिसन्धिः पूर्वपक्षिणः । श्रुतिविरोधेन स्मृतीनामप्रामाण्यमभिलषता प्रबलदुर्बलत्वे सर्वथा समर्थनीये । अन्यथाऽतिप्रसङ्गात् । न तावत्प्रामाण्यकारणभावाभावाभ्यां प्राबल्यदौर्बल्ये । प्रामाण्यस्य स्वतस्त्वेनाङ्गीकृतत्वात् । वैपरीत्याच्च । वाक्यप्रामाण्ये हि कारणं वक्तुराप्तत्वम् । वक्तारश्च स्मृतीनामाप्ताः । न श्रुतेः । अपौरुषेयत्वेनाङ्गीकृतत्वात् । अत एव न समूलत्वनिर्मूलत्वाभ्याम् । स्मृतीनामाप्तमूलत्वात् । श्रुतेस्तदभावात् । नापि कृत्रिमत्वाकृत्रिमत्वाभ्याम् । स्वरूपतोऽप्रयोजकत्वात् । उक्तरीत्या वैपरीत्याच्च । तदिदमुक्तमाप्तै रुद्रकपिलकमलासनादिभिः उक्तमर्थं शिवादीनां जगत्कारणत्वादिकं, पिपीलिकालिपिनिभा बुद्धिपूर्वप्रणयहीना, श्रुतिः, कथं वारयेत् न कथमपीति ।

टी० — ॥ ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥

नन्वाप्तैरित्याद्युत्तरभाष्यमनर्थकम् । न च पूर्वपक्षाद्युज्जीवनार्थं तदिति वाच्यम् । सूत्रभाष्यस्थितपूर्वपक्षादिस्वरूपेऽनुपपत्त्यप्रतिभासेन तदुज्जीवनानपेक्षणादित्यतस्तत्रानुपपत्तेर्विद्यमानत्वात्तदुज्जीवनमर्थवदित्याशयेन पूर्वपक्षादिस्वरूपेऽनुपपत्तिं दर्शयितुं तस्याः पूर्वपक्षादिस्वरूपज्ञानसाध्यत्वात्सूत्रप्रयोजनदर्शनपूर्वकं सूत्रमुपन्यस्य पूर्वपक्षादिस्वरूपं च प्रदर्श्य तत्रानुपपत्तिमप्युपदर्श्य तत्परिहारकतयोत्तरभाष्यं योजयितुं सूत्रप्रयोजनं तावद्दर्शयति उक्तार्थमिति । पाशुपतसांख्यबौद्धार्हतादीति । अत्र पाशुपतसांख्यमते

वेदस्यापौरुषेयत्वप्रामाण्ययोः सत्त्वात्तन्मते स्मृत्यनुसारेण श्रुतिर्नेयेति श्रुतिप्रामाण्येनैव पूर्वपक्षस्य, बौद्धादिमते त्वाप्तप्रणीतबौद्धागमविरोधादाप्ताप्रणीतो वेदो न प्रमाणमिति तदप्रामाण्येनैव पूर्वपक्षस्य सम्भवात्पाशुपतादीनां बौद्धादीनां चेह पूर्वपक्षत्वमिति दर्शयितुमिह टीकायां पाशुपतसांख्येति बौद्धार्हतादीति च विशिष्य तत्तद्ग्रहणमिति द्रष्टव्यम् । काणादादिभिस्तु वेदस्य पौरुषेयत्वप्रामाण्ययोरङ्गीकारेण सर्वज्ञेशप्रणीता श्रुतिः काणादादिस्मृत्यनुसारेण नेयेत्यत्र बीजाभावेनोक्तरीत्या पूर्वपक्षासम्भवान्न त इह पूर्वपक्षिण इति दर्शयितुं काणादादीनामग्रहणम् । बौद्धार्हतादीत्यादिशब्दस्तु शाक्तेयादिपर इति द्रष्टव्यम् । यद्वा काणादादिस्मृतेः स्पष्टार्थतया सयुक्तिकत्वेन च सर्वज्ञेशप्रणीतश्रुत्यपेक्षया प्रबलत्वात्तदनुसारेण सर्वज्ञेशप्रणीताऽपि श्रुतिर्नेयेति पूर्वपक्षसम्भवेन काणादादीनामप्यत्र पूर्वपक्षित्वमेव । अत्र च पक्षे टीकास्थ आदिशब्द एव तत्पर इति न तद्ग्रहणमिति ध्येयम् । 'तस्याश्चतुःस्वरूपत्वादि'ति विरोधिस्मृतीनां चतुरात्मकत्ववचनं च पाशुपतसांख्यादिस्मृत्यभिप्रायमेव । न तु विरोधिसकलस्मृत्यभिप्रायम् । तेन पाशुपतादिस्मृतिविरोधपरिहारस्य चतुर्विधविरोधपरिहारात्मकत्वादत्र सङ्गतत्वेऽपि बौद्धादिस्मृतीनामनेवंविधत्वेन तद्विरोधपरिहारस्याप्यनेवंरूपत्वान्नात्र कर्तव्यता युक्तेति शङ्काऽनवकाश इति द्रष्टव्यम् ॥ **विरुद्धत्वादिति** । न तावत् षोडशिग्रहणाग्रहणवद्व्यवस्थितविकल्पस्य वा व्रीहियववदव्यवस्थितविकल्पस्य वाऽत्राश्रयणादविरोधः । पुंस्तन्त्रेऽनुष्ठेये विकल्पसम्भवेऽपि तदतन्त्रे सिद्धे वस्तुनि तदयोगात् । न हीदमेवमनेवं वा कर्तव्यमितिवदिदमेवमनेवं वा भवतीति सम्भवति । नापि समुच्चयाश्रयणेनाविरोधः । सापेक्षयोरेव समुच्चयावगमात् । प्रकृते च श्रुतौ स्मृतौ च निरपेक्षस्यैव विष्णोः शिवस्यैव च हेतुत्वोक्त्यतदभावात् । नापि देशकालकार्यभेदादविरोधः । श्रुतौ स्मृतौ च विष्णोः शिवस्य च सदा सर्वत्र सर्वकार्यहेतुत्वोक्त्या तदसम्भवादिति भावः ॥ **उक्तत्वादिति** । शास्त्रयोनिसूत्र इति शेषः ॥ **अस्यार्थस्येति** । विष्णोः सकलजगज्जन्मादिकारणत्वादेरित्यर्थः ॥ **इष्टत्वादिति** । तथा च न तद्विरोधेनोक्तार्थस्यायुक्तत्वशङ्कावकाश इति । अप्रामाण्यापादनमिष्टत्वादयुक्तमित्युक्तम् । कथं च तदापादनं तत्प्रयोजकस्यानवकाशत्वस्याभावादित्याह **श्रुतिसमन्वयन्यायेनेति** । 'नामानि सर्वाणी'त्यादिश्रुत्यवष्टम्भेन श्रौतशिवादिशब्दानामिव स्मार्तशिवादिशब्दानामपि विष्णुवाचित्वसिद्ध्या, तत एव शिवादेर्जगत्कारणत्वादिप्रतिपादकश्रुतीनामिव तत्कारणत्वाद्यभिधायकपाशुपतादिस्मृतीनामपि विष्णुपरत्वेन, न तासां विषयान्तराभाव इति भावः ॥ **शिवार्चनादीति** । तथा च शिवादेर्जगत्कारणत्वाद्यभिधायकवाक्यानां शिवार्चनादिविध्युपयोग्यर्थवादत्वेन तद्विध्येकवाक्यतया शिवार्चनादावेव तात्पर्येण शिवादिकारणत्वे तात्पर्याभावान्न तद्विरोधो नाप्यनवकाशत्वदोष इति भावः । **सकलशास्त्रेति** । श्रुत्यादिरूपसकलसच्छास्त्रेत्यर्थः ॥ **दोषमिति** । पिपीलिकालिपिनिभत्वलक्षणमित्यर्थः ॥ **प्रागिति** । शास्त्रयोनिसूत्र इत्यर्थः । ननु सूत्रे

सिद्धान्तांशस्य न पञ्चरात्रादिस्मृत्यप्रामाण्यापादने तात्पर्यं येन परस्येष्टापादनं स्यात् । किन्तु पाशुपता-दिस्मृतिवत्पञ्चरात्रादिस्मृतीनामप्याप्तप्रणीतत्वेनान्यत्रानवकाशात्पाशुपतादिस्मृतिसाम्यमेव तासां स्यादिति साम्यापादनमात्र इत्यत आह **साम्यापादनमात्रेऽपीति ॥ परस्यैवेति** । पूर्वपक्षिण इत्यर्थः ॥ **निश्चयेति** । सिद्धान्तीयनिश्चयेत्यर्थः । पूर्वपक्षिणस्तु वैतण्डिकत्वान्न स्वपक्षनिर्णयापेक्षेति भावः । सिद्धान्तस्यापि 'यद्यशेषज्ञाः' इत्यादिनोज्जीवनात्तावदित्युक्तम् ॥ **अयमिहाभिसन्धिरिति** । पूर्वपक्षसूत्र-भागस्यानुभाष्यकारैरभिधीयमान इत्यर्थः । परतस्स्वपक्षमभ्युपेत्याप्याह **वैपरीत्याच्चेति** । तदेव स्पष्टयति **वाक्येति ॥ अङ्गीकृतत्वादिति** । पाशुपतादीनां पूर्वपक्षत्वे वादिप्रतिवादिभ्यामिति शेषः । काणादादीनां तत्त्वे तु सिद्धान्तिनेति शेषः । पाशुपतादिमते वेदस्यापौरुषेयत्वेऽपि काणादादिमते पौरुषेयत्वादिति द्रष्टव्यम् । अत एवेत्युक्तमेव दर्शयति **स्मृतीनामिति ॥ तदभावादिति** । अपौरुषेयत्वेनाङ्गीकृतत्वादिति भावः ॥ **स्वरूपत इति** । कृत्रिमत्वाकृत्रिमत्वविशेषस्य स्वरूपतः साक्षात्प्राबल्याप्राबल्यप्रयोजकत्वं नास्तीत्यर्थः । माऽस्तु कृत्रिमत्वादेः स्वरूपेण प्राबल्यादिप्रयोजकत्वं प्रामाण्यादिप्रयोजकाप्तिमूलकत्वा-दिसम्पादकतया तु भविष्यतीत्यत आह **उक्तरीत्येति** । वक्तारश्च स्मृतीनामाप्ता न श्रुतेः अपौरुषेयत्वा-ङ्गीकारादित्युक्तरीत्येत्यर्थः । कृतं व्युत्पादनमुद्भाव्यत्वशङ्कानिरासाय भाष्यारूढं करोति **तदिदमुक्तमिति** ।

स० --- **उक्तार्थं** पूर्वाध्यायोक्तार्थन् । **अन्यथेति** । प्रतीतार्थतात्पर्यानङ्गीकारे । अनवकाशेन

अर्थान्तर इति शेषः । **अपरथेति** । तत्कारणत्वादौ तात्पर्यानङ्गीकारे । **पाशुपतादिस्मृतिभ्यो-ऽन्यासामिति** । सूत्रकारेण 'अन्यस्मृत्यनवकाशे'ति अन्यशब्दस्योपात्तत्वात् प्रथमस्मृतिशब्दः न सर्व-स्मृतिपरः, अपितु स्मृतिविशेषपर एव । अन्यथा अन्यशब्दवैयर्थ्यापत्तेः । स च स्मृतिविशेषः पाशुपतादिरेवेति सूत्राभिप्रायः इत्याशयः । **अस्यार्थस्य** सकलजगज्जन्मादिकारणत्वादेः । ननु श्रुत्यपेक्षया पाशुपतादिस्मृतीनां विस्पष्टवादित्वात् तद्विरोधेन कथमप्रामाण्यमित्यत आह **श्रुतिसमन्वय-न्यायेनेति** ॥ अस्तु वा प्रामाण्यं, तथापि सावकाशत्वेन प्राबल्याभावात् न तद्विरोधेनाप्रामाण्यं श्रुतेरिति प्रतिज्ञाभागो द्रष्टव्यः । **श्रुतिसमन्वयन्यायेनेति** ॥ 'नामानि सर्वाणि यमाविशन्ती'ति विष्णोरेव सर्वशब्दमुख्यवाच्यत्वात् तत्तल्लिङ्गानां तत्तदन्तर्यामिपरत्वात् सर्वा अपि श्रुतयः तत्परा एवेति योऽयं पूर्वोक्तन्यायः तेनेत्यर्थः । **सकलशास्त्रप्रमाणकत्वमिति** । शास्त्रयोनित्वाधिकरण इति शेषः । ननु श्रुति-विरोधस्य परेणाज्ञातत्वात् स्मृतिविरोधस्यैव ज्ञातत्वेन तदभिधाने स एव परिह्रियते इत्यत आह **पराभिधित्सितमिति** । **सः** श्रुतिविरोधः । **अन्यथेति** । श्रुतिविरोधापरिहार इत्यर्थः । **प्रागपि** शास्त्रयोनित्वाधिकरणेऽपि । ननु वेदसंवादित्वात् पञ्चरात्रादीनामप्रामाण्यं कथं परस्येष्टमित्यत आह **वासु-देवार्चनादिपरतयेति** । अस्तु वा प्रामाण्यम् तथाऽपीति शेषः । ननु असदिष्टस्यैव पाशुपतादिस्मृत्य-

प्रामाण्यस्य असान्प्रत्यापादनात् अस्माभिरपि परं प्रति इदमेव पञ्चरात्रादिस्मृत्यप्रामाण्यमापाद्यत इत्यत आह **साम्यापादनमात्रेऽपीति** । भवदभिप्रेतो यो विष्णोरेव जगत्कारणत्वादिकमिति निश्चयः तत्प्रतिबन्धकत्वादित्यर्थः ।

**नापि कृत्रिमत्वाकृत्रिमत्वाभ्यामिति** । नात्र 'प्राबल्यदौर्बल्ये' इत्यनुवर्तमानस्य यथाक्रमं संबन्धः किं तु योग्यतयेति द्रष्टव्यम् । **स्वरूपत इति** । अन्यानाधानेनेत्यर्थः । **उक्तरीत्येति** । वेदस्यापौरुषेयत्वेन अकृत्रिमत्वेऽपि तस्य च स्वरूपतोऽप्रयोजकत्वात् तदाहितस्य कस्यचिद्धर्मस्याभावेन प्रत्युताप्तोक्तत्वलक्षणगुणाभावेनाप्रामाण्यमेव प्राप्नोति । स्मृतीनां च कृत्रिमत्वेऽपि तस्य च स्वरूपतोऽप्रयोजकत्वात् तदाहितस्य चाप्तोक्तत्वलक्षणगुणस्याप्रामाण्यं प्रत्यप्रयोजकत्वात् प्रत्युत प्रामाण्यं प्रत्येव प्रयोजकत्वेन प्रामाण्यमेव प्राप्नोतीति वैपरीत्याच्चेत्यर्थः । यदा तु कृत्रिमाकृत्रिमयोः कृत्रिमं बलीयः इति न्यायार्थः तदा स्पष्ट एव योजनाविरोध इति ।

प० — ॐ **स्मृत्यनवकाशदोषप्रसङ्ग...**ॐ । आप्तैरित्यादिभाष्यमवतारयितुमुपोद्घातमाह **उक्तार्थमित्यादि** । **पूर्वाध्यायोक्तार्थमित्यर्थः** । एवमग्रेपि ज्ञेयम् । तद्विवृण्वन्सूत्रार्थमाह **यदुक्तमित्यादिना** । भाष्याद्युक्तादयनन्योर्थ इति ध्येयम् । कथं श्रुतिर्वारयेदित्येतद्व्यावर्त्यमाह **श्रुतीति** ॥ **अस्यार्थस्येति** । 'यदुक्तं परस्ये'त्यादिनोक्तार्थस्येत्यर्थः । 'प्रत्यक्षतो दृष्टे'त्येतद्व्यावर्त्यमाह **श्रुतिविरुद्धानां चेति** । प्रोक्तमित्यत्र प्रशब्दव्यावर्त्यमाह **श्रुतिसमन्वयन्यायेनेति** । सममित्यस्य मया सहितमित्यर्थमुपेत्य तद्व्यावर्त्यमाह **पराभिधित्सितमिति** । परस्याभिधातुमिष्टमित्यर्थः । अवबुध्येत्यनन्तरं कृत इति योज्यम् । तेन स्यबन्तोपपत्तिः । 'हरिपूर्वकाः । किं नाशेषविदः' इत्येतद्व्यावर्त्यमाह **किञ्च पञ्चरात्रादीति** । प्रामाण्यस्य गुणजन्यत्वमुपेत्याह **वैपरीत्याच्चेति** । तदेव व्यनक्ति **वाक्येति** ।

या० —ॐ **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्** ॐ ॥ बौद्धार्हतादीत्यत्रादिपदेन कणादादिग्रहणम् ॥ **श्रुतिसमन्वयन्यायेनेति**। नामानि सर्वाणि यमाविशन्तीति श्रुत्यवष्टम्भेन 'ज्ञात्वा शिवं शान्तिमत्यन्तमेती'त्यादिश्रौतशिवादिशब्दानां विष्णुपरत्वमेवेति न्यायेनेत्यर्थः ॥ **सकलशास्त्रेति** । श्रुत्यादिसकलशास्त्रेत्यर्थः ॥ **पराभिधित्सितमिति** । पिपीलिकालिपिनिभत्वरूपमित्यर्थः । ननु सूत्रे सिद्धान्तांशस्य न पञ्चरात्रादिस्मृत्यप्रामाण्यापादने तात्पर्यं येनेष्टापादनं स्यात्किन्तु पाशुपतादिस्मृतिवत्पञ्चरात्रादिस्मृतीनामप्याप्तप्रणीतत्वेनान्यत्रानवकाशात्पाशुपतादिस्मृतिसाम्यमेव तासां स्यात् ततश्च न पूर्वपक्षनिर्णय इति साम्यापादनमात्र इत्यत आह **साम्यापादनमात्र इति** । पूर्वपक्षिणो वैतण्डिकत्वादिति भावः । अपौरुषेयत्वेनाङ्गीकृतत्वादित्यत्र साङ्ख्यपाशुपतादयः पूर्वपक्षिणश्चेदुभाभ्यामिति शेषः । तेषां मते वेदस्यापौरुषेयत्वात् । कणादादयश्चेत्सिद्धान्तिनेति शेषः । तेन कणादादिमते वेदस्य पौरुषेयत्वादेते

प्रामाण्यकारणाभावनिर्मूलत्वादयः पूर्वपक्षहेतवोऽसिद्धा इति शङ्काऽनवकाश इति ध्येयम् ॥ **कृत्रिमत्वाकृत्रिमत्वाभ्यामिति** । 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः' इति परिभाषया कृत्रिमत्वमेव प्राबल्ये प्रयोजकमकृत्रिमत्वं तु दौर्बल्ये । अन्यथा 'आन्नद्याः' इत्यादौ 'यूस्त्र्याख्यौ नदी'ति परिभाषिता स्थालीत्यादिका नदीशब्देन ग्राह्या न स्यात् । किन्तु गङ्गाद्याः सरित एव ग्राह्याः स्युरिति भावः ॥ **स्वरूपत इति** । साक्षादेवेत्यर्थः । अप्रयोजकत्वादतिप्रसङ्गाच्चेति भावः । अथ कृत्रिमत्वादिकं न स्वरूपेण प्राबल्यादिप्रयोजकं किन्त्वाप्तिमूलकत्वादिसम्भावकं सदित्यत आह **उक्तरीत्येति** ।

**श्री०** — ॥ ॐ **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्** ॐ ॥ **अवकाशः** अन्यस्मिन्नर्थे घटनेत्यर्थः ॥ **अन्यथेति** । प्रतीतेऽप्यर्थे तात्पर्यं न चेदित्यर्थः । **सः** दोषः । **अन्यथा** । पिपीलिकालिपिनिभत्वेन प्रामाण्यं श्रुतेरिति प्रबलं परोक्तं दोषं ज्ञात्वा तमपरिहृत्य श्रुतित्यागेन स्मृतिमात्रस्यैवोपादानं यदि क्रियत इत्यर्थः । **स्यात्** । समन्वेतव्यतया । ननु नास्माभिः पञ्चरात्रादिस्मृत्येतरस्मृतीनां बाध उच्यते किन्तु सत्प्रतिपक्षत्वेन साम्यमिति साम्यापादनमात्र एव तात्पर्यमिति चेत्तत्राह **साम्येति** ॥ **निश्चयेति** । सिद्धान्तिनां विष्णोः कारणत्वनिश्चयेत्यर्थः ॥ **स्वतस्त्वेनेति** । गुणरूपकारणापेक्षाऽभावादिति भावः ॥ **वैपरीत्याच्चेति** । प्रत्युत स्मृतावेव प्रामाण्यकारणभावात्प्राबल्यं, तदभावाच्छ्रुतीनामेव दौर्बल्यमित्यर्थः । एतदेव विशदयति **वाक्येत्यादिना** ।

---

ननु कृत्रिमत्वादिकं न स्वरूपेण प्राबल्याद्युपपादकं किं नाम कृत्रिमत्वे आप्तिमूलकत्वं प्राप्तम् अकृत्रिमत्वे च तदभावः । तथा चाप्तिमूलकत्वसम्भावकत्वादिना प्राबल्याद्युपपादकं भविष्यतीत्यत आह **उक्तरीत्येति** । 'वाक्यप्रामाण्ये ही'त्युक्तरीत्या प्राबल्यप्रयोजकं आप्तिमूलकत्वसम्भावकं कृत्रिमत्वं स्मृतावेवास्तीत्यर्थः ।

**च०** — ॥ ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥ **पाशुपतेत्यादि** । आदिपदं कणादादिस्मृतिसंग्राहकम् । अत्र पाशुपताः सांख्याश्च वेदस्य पौरुषेयत्वप्रामाण्येऽभ्युपगच्छंतीति तन्मते स्मृत्यनुरु(स)न्ध्यानैव श्रुतिरिति तत्प्रामाण्योपगत्यैव पूर्वमतस्य प्रवृत्तिः। बौद्धादयस्त्वाप्तप्रणीतस्वागमविरुद्धश्रुतेरपौरुषेयत्वप्रामाण्ये नाभ्युपयन्तीति तदप्रामाण्योरीकारेणैव तन्मते तत्प्रवृत्तिरिति ध्येयम् । अत्र व्याचक्षाणाः । काणादादिभिस्तु वेदस्य पौरुषेयत्वप्रामाण्ययोरङ्गीकारेण सर्वज्ञेशप्रणीता श्रुतिः काणादादिस्मृत्यनुसारेण नेयेत्यत्र बीजाभावेनोक्तरीत्या पूर्वपक्षासम्भवान्न त इह पूर्वपक्षिण इति दर्शयितुं काणादादीनामग्रहणम् । **बौद्धार्हतादीत्या**दिशब्दस्तु शाक्तेयादिपर इति द्रष्टव्यम् । यद्वा कणादादिस्मृतेः स्पष्टार्थतया सयुक्तिकत्वेन च सर्वज्ञेशप्रणीतश्रुत्यपेक्षया प्रबलत्वात्तदनुसारेण सर्वज्ञेशप्रणीतापि श्रुतिर्नेयेति पूर्वपक्षसम्भवेन काणादादीनामप्यत्र पूर्वपक्षित्वमेवेति टीकास्थ आदिशब्दः त्र

तत्पर इति व्याचक्षते। **विरुद्धत्वादिति।** श्रुतौ स्मृतौ चेतरेतरसाचिव्यविनिर्मोकेणैवाखिलदेशकालावच्छेदेनोत्पद्यमाननिखिलकार्यजनकताया एव विष्णुशिवयोरभिहित्या समुच्चयः देशकालकार्यभेदानां, पुंस्तन्त्रानुष्ठेयत्वाननुष्ठेयत्वाभ्यां षोडशिग्रहणव्रीहियवद्रव्यवद्यवस्थिताव्यवस्थितविकल्पाश्रयणयोश्च विरोधभञ्जकता न सङ्गच्छत इति भावः । **उक्तत्वादिति** । शास्त्रयोनियोग इत्यादिः । **श्रुतिसमन्वयेन** । वैदिकपदानां ब्रह्मण्युपक्रमादिप्रमाणकशक्तितात्पर्यलक्षणसम्बन्धव्युत्पादनेन। **अस्यार्थस्य** निखिलजगज्जनकत्वस्य। **साधितत्वात्** समर्थितत्वात् । **श्रुतिसमन्वयन्यायेनेति** । 'नामानि सर्वाणी'तिश्रुत्यनुरोधेन 'ज्ञात्वा शिवं शान्तिमि'ति श्रौतशिवादिपदानां विष्णुतात्पर्यकत्वमेवेति न्यायेनेत्यर्थः । **सकलशास्त्रेति** । श्रुत्यादिसकलशास्त्रेत्यर्थः । **पराभिधित्सितमिति** । अभ्युपसृष्टात् दधातेः सन्नन्तात्कर्मसाधननिष्ठायां निष्पद्यत इति परकर्तृकाभिधानगोचरेच्छाविषयीभूतमित्यर्थः । **दोषं** पिपीलिकालिपिनिभत्वलक्षणम् । **प्राक्** शास्त्रयोनिनये । ननु सौत्रोत्तरखण्डस्य न पञ्चरात्रादिस्मृत्यप्रामाण्यप्रसञ्जनतात्पर्यकताऽन्यदीयसमीहितसविव्युपेयते । किन्तु पञ्चरात्रादिस्मृतीनामप्याप्तप्रणीतत्वनिबन्धनार्थान्तरानवकाशत्वनियन्त्रितपाशुपतादिस्मृतिसाम्यप्रसञ्जनतात्पर्यकतैवेति न पूर्वमतनिर्णय इत्यत आह **साम्यापादनेति** । **परस्य** पूर्ववादिनः । **निश्चयप्रतिबन्धकत्वात्** । उत्तरवाद्यभिमतनिर्णयानुत्पादप्रयोजकत्वात् । पूर्ववादी तु वितण्डामेवाशिश्रिये इति न स्वपक्षनिर्णयं समीहत इति भावः । यद्यशेषज्ञा इत्यादिनोत्तरवादिमतस्याप्युपजीवयिष्यमाणतया तदवधिकप्राथम्यद्योतनार्थः तावच्छब्दः । **अयमिहाभिसन्धिरिति** । अनुव्याख्याकर्तृकसाम्प्रतिकाभिहितिगोचर इत्यर्थः । **स्वतस्त्वेन** औत्पत्तिकेन गुणाजन्यत्वरूपेण । **अङ्गीकृतत्वादिति** । उत्तरवादिनेति भावः । गुणजन्यत्वरूपौत्पत्तिकपरतस्त्वमुपेयुषां भङ्गीमाश्रित्याह **वैपरीत्याच्चेति** । तदेव स्फुटयति **वाक्येति** । यदा वेदापौरुषेयत्वोपगन्तृपाशुपतादयः प्रत्यवतिष्ठन्ते तदा पूर्वोत्तरवादिभ्यां तत्पौरुषेयतामुपगच्छन्तो वैशेषिकादयः सिद्धान्तिनेति पूरणीयम् । **अत एव** दर्शितदिशा वेदपौरुषेयत्वोपगतिविषयत्वादेव । **तदभावादिति** उक्तदिशा पौरुषेयत्वोपरक्तोरीकृतिविषयत्वादिति भावः । **कृत्रिमाकृत्रिमत्वाभ्य मिति** । यूस्त्र्याख्यौ नदीति पाणिनीसङ्केतिता नित्यस्त्रीलिङ्गेदूदन्तशब्दव्यक्तिरेव 'आण्नद्याः ङेराम्नद्याम्नीभ्यः' इत्यादितत्प्रदेशेषु ग्राह्याः । 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय' इति परिभाषया कृत्रिमत्वस्य प्राबल्यहेतुत्वात्, अकृत्रिमा गङ्गाद्याः सरितस्तु न ग्राह्या इत्याकरे निरूढामेति भावः। अथ कृतिनिर्वर्त्यत्वरूपकृत्रिमत्वस्य स्वरूपतः प्राबल्यानौपयिकत्वेपि प्रामाण्यौपयिकाप्तिमूलकतासम्भावकतया प्राबल्ये तदुपयोक्ष्यत इत्यत आह **उक्तरीत्येति** । वक्तारश्च स्मृतीनामित्यादिकाङ्गीकृतत्वादित्यन्तोक्तदिशेत्यर्थः । आशयोद्भावनस्योत्प्रतीकत्वशङ्कानियन्त्रितावधीरणीयतामपहस्तयितुं तत्प्रतीकमारोहयति **तदिदमुक्तमिति** ।

सु० — नन्वौदुम्बरीं स्पृष्ट्वोद्गायेदित्यादिश्रुतिविरुद्धानामौदुम्बरी सर्वा वेष्टयितव्येत्यादिस्मृतीनामप्रामाण्यमुपलब्धं तथाऽत्र स्यात् । न स्यात् । वैषम्यात् । श्रुतिमूलतयाऽभिमता हि ताः स्मृतयोऽतस्तासां मूलश्रुत्यनुमापकत्वेन प्रामाण्यमिष्टम् । न च श्रुतिविरुद्धायाः स्मृतेर्मूलश्रुत्यनुमापकत्वं सम्भवतीत्यप्रामाण्यमेव युक्तम् । यथाऽऽह जैमिनिः 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि'ति । न चैवं प्रकृते । पाशुपतादिस्मृतीनां शिवादिप्रत्यक्षमूलत्वेन श्रुतिमूलत्वाभावात् । तदिदमाह प्रत्यक्षतो दृष्ट्वेति । ननु तर्हि स्मृतीनामुक्तरीत्या सावकाशत्वान्निरवकाशश्रुतिविरोधेनाप्रामाण्यमस्तु । मैवम् । वैपरीत्यात् । स्मृतयो हि विस्पष्टवादिन्यो न विवक्षितार्थात्प्रच्यावनमर्हन्ति । श्रुतयस्त्वस्फुट(स्पष्ट)विक्षिप्तवादिन्योऽव्यवस्थितालौकिकशाब्दलक्षणविषया अशक्याध्ययनानन्तापरिपूर्णवाक्यरूपा नार्थविशेषनिष्ठा लक्ष्यन्ते । अत एव भवतां मीमांसायासः । एतदप्युक्तं प्रकर्षेणोक्तमिति । विस्पष्टमुक्तमित्यर्थः । पिपीलिकालिपिनिभेति च । अस्फुटे(स्पष्टे)त्यर्थः ।

शे० — भाष्ये प्रत्यक्षतो दृष्ट्वेत्यधिकम् । न च पाशुपतादिस्मृतीनां प्रत्यक्षमूलकत्वव्युत्पादनार्थं तदिति वाच्यम् । श्रुतिरित्यनेन प्रत्यक्षमूलकत्वव्युत्पादनस्याप्यनर्थकत्वात् । न च 'औदुम्बरी सर्वा वेष्टयितव्ये'त्यादिस्मृतिवैषम्यप्रतिपादनार्थं तदिति वाच्यम् । तत्साम्येऽप्यनुपपत्त्यभावेन तद्वैषम्यप्रदर्शनस्याप्यनर्थकत्वादित्यतः सर्ववेष्टनादिस्मृतेः स्पर्शश्रुतिविरोधेनेव, श्रुतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्यशङ्कापरिहारार्थत्वान्न तदानर्थक्यमित्याशयेन साम्यशङ्कामुत्थापयति **नन्विति** । औदुम्बरीं स्पृशता सर्वस्यास्तस्या वेष्टयितुमशक्यत्वाद्वेष्टयित्रा च स्प्रष्टुमशक्यत्वेनाशक्यानुष्ठानमर्थद्वयं बोधयन्त्योः श्रुतिस्मृत्योः प्रमेयविरोधेनोभयोरपि प्रामाण्यायोगात् अन्यतरबाधे कर्तव्ये औष्ण्यप्रत्यक्षेण वह्निशैत्यानुमानस्येव श्रुतिविरोधेन सर्ववेष्टनस्मृतीनामप्रामाण्यवच्छ्रुतिविरोधेन पाशुपतादिस्मृतीनामेवाप्रामाण्यान्न तद्विरोधेनोक्तार्थस्यायुक्ततेत्यर्थः ॥ **श्रुतिमूलतयाऽभिमता हि ता इति** । प्रत्यक्षादेर्धर्माधर्मयोरप्रवृत्त्या प्रत्यक्षादिमूलकत्वस्य, पौरुषेयवाक्यतया वेदवत्स्वातन्त्र्येण प्रामाण्यस्य चानुपपत्तेः श्रुतिमूलतयैव तासां प्रामाण्यमिति भावः । **अप्रामाण्यमेवेति** । एतच्च प्राभाकरमतमाश्रित्योक्तम् । भट्टमते श्रुतिमूलत्वेनाभिमतायाः सर्ववेष्टनादिस्मृतेः स्पर्शनश्रुतिविरोधेन स्पर्शनार्थं द्वित्राङ्गुलं हित्वा तदितरसर्ववेष्टनरूपार्थान्तरपरत्वेन प्रतीतेऽर्थेऽप्रामाण्येऽपि सर्वथाऽप्रामाण्याभावादिति द्रष्टव्यम् । अत्रैव जैमिनिसूत्रं प्रमाणयति **यथोक्तमिति** । स्मृतिचरण इति शेषः । श्रुतिविरोधे स्मृतिप्रामाण्यमनपेक्ष्यमनादरणीयं स्यात् । हि यस्मादसति श्रुतिविरोधे मूलश्रुत्यनुमानमुक्तं न तु सतीति सूत्रार्थः । ननु भाष्ये प्रेति पिपीलिकानिभेति च व्यर्थम् । न च पाशुपतादिस्मृतीनां स्पष्टवादित्वप्रतिपादनार्थत्वात्प्रशब्दस्य, श्रुतेरस्पष्टवादित्वप्रति-

पादनार्थत्वाच्च पिपीलिकानिभेत्यस्य, नानर्थक्यमिति वाच्यम् । स्मृतिश्रुत्योः स्पष्टास्पष्टवादित्वप्रतिपादनस्यापि प्रयोजनाभावेनानर्थकत्वादित्यत आशङ्कान्तरपरिहारार्थत्वान्न तदिति भावेन तद्व्यावर्त्यां शङ्कामुत्थापयति **ननु तर्हीति** । यद्वा मूले प्रशब्दस्य प्रयोजनं पिपीलिकानिभेत्यस्य प्रयोजनान्तरं च वक्तुं तद्व्यावर्त्यां शङ्कामुत्थापयति **ननु तर्हीति** । स्यादेतदेवं यदि पाशुपतादिस्मृतेः सावकाशत्वं श्रुतेश्च निरवकाशत्वं स्यात्तदेव कुत इत्यतः श्रुतिसमन्वयन्यायेन पाशुपतादिस्मृतीनां विष्णुपरत्वेन शिवार्चनपरत्वाद्वा तच्छ्रुतेस्तु विषयान्तराभावान्निरवकाशत्वमिति भावेनोक्तं **उक्तरीत्येति** ॥ **अव्यवस्थितेति** । अव्यवस्थितमलौकिकं लोकाननुसारि यच्छाब्दलक्षणं 'मन्त्रेष्वाङ्यादेरात्मनः'इत्यादिशास्त्रं तद्विषयास्तन्निष्पाद्याः त्मना त्मन इत्याद्याः श्रुतय इत्यर्थः । वेद एव क्वचित्प्रवृत्तावपि क्वचिदप्रवृत्तेरुक्तशाब्दलक्षणस्याव्यवस्थितत्वं लोके सर्वथाऽप्यप्रवृत्तेरलौकिकत्वं च तस्येति बोध्यम् ॥ **अशक्येति** । अशक्यमध्ययनं येषां तथाविधान्यनन्तान्यपरिपूर्णानि यानि वाक्यानि तद्रूपा इत्युक्तार्थे हेत्वन्तरम् ।

**स०** — श्रुतिस्मृत्योर्विरोधे अनपेक्षं श्रुतिवाक्यं प्रमाणं स्यात् । असति विरोधे **अनुमानं** स्मृतिः प्रमाणमिति सूत्रार्थः । **ननु तर्हीति** । **उक्तरीत्या** श्रुतिसमन्वयन्यायेन शिवाद्यर्चनपरतयेत्युक्तरीत्येत्यर्थः । **अव्यवस्थितेति** । अव्यवस्थितं च तत् अलौकिकं च तत् शाब्दलक्षणं चेति विग्रहः **मीमांसायासः** मीमांसारम्भ इत्यर्थः ।

---

**प०** —**औदुम्बरीमिति** । 'यजमानसम्मितौदुम्बरी भवती'त्युक्तोदुम्बरवृक्षविकारः यजमानसमपरिमाणस्थाणुविशेषः सदसि नैर्ऋत्य(ति)भागे स्थापितः, तं स्पृष्ट्वोद्गातोद्गायेदित्यर्थः ॥ **वेष्टयितव्येति** । वस्त्रेण स्थाणुः सर्वोपि वेष्टनेनाच्छादनीय इत्यर्थः । यदि सर्ववेष्टनं तदौदुम्बरीस्पर्शनं न लभ्यते । यदि स्पर्शनं तदा न सर्ववेष्टनम् । त्रिचतुरङ्गुलमात्रस्य स्पर्शनस्थलस्य वेष्टनेन विना स्थाप्यत्वात् परस्परविरोधो ध्येयः ॥ **अप्रामाण्यमिति** । (गुरुमता)प्राभाकरमताभिप्रायेण । भट्टमते सर्ववेष्टनस्मृतेः सङ्कोचः प्रामाण्यं च ध्येयम् । निराह **न स्यादिति** ॥ **श्रुतिमूलतयाभिमता हीति** । पूर्वतन्त्रे आद्याध्यायतृतीयपादीयाद्यनये 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादि'त्यत्र तथोक्तेरिति भावः ॥ **यथाऽऽहेति** । तत्रैव द्वितीयेऽधिकरणे । सर्ववेष्टनादिस्मृतीनां प्रत्यक्षश्रुतिविरोधे तु सति तादृशस्मृतिजातं प्रमाणत्वेनानपेक्षं स्यात् आदरणहीनं स्यात् । ननु पूर्वतनस्मृत्यधिकरणन्यायेन मूलश्रुत्यनुमापकतया प्रमाणं किं नेति चेत् । न । हि यस्मादसति श्रुतिविरोधे अनुमानं मूलश्रुत्यनुमापकं तस्मादनपेक्षमेवमादिस्मृतिजातमिति सूत्रार्थः ॥ **अलौकिकशाब्दलक्षणविषया इति** । प्रचोदयात् अगृभ्णन् रुद्रेभिः ब्राह्मणास इत्यादीनामलौकिकानि यानि शब्दसम्बन्धिलक्षणानि तद्विषयत्वात् । यद्वा अलौकिकानि शब्दसम्बन्धिलक्षणानि अलौकिकाः शब्दसम्बन्धिविषयाश्च यासामिति बहुव्रीहिः, तानि च न व्यवस्थितानि । क्वचित्प्रचोदयेत्

अगृह्णन् ब्राह्मणा इत्यादिप्रयोगस्यापि दर्शनात् ॥ **अनन्तेनेति** । 'अनन्ता वै वेदा इति श्रुतेरिति भावः ॥ **अपरिपूर्णेति** । 'इषे त्वोर्जे त्वे'त्येवमादेरपि दर्शनादिति भावः ।

**या० अप्रामाण्यमेवेति** । इदं च प्राभाकरमतमाश्रित्योक्तं, भाट्टमते तु स्पर्शनार्थं द्वित्राङ्गुलं हित्वा तदितरसर्ववेष्टनरूपमर्थान्तरमेवोक्तम् । अतः प्रतीतार्थ एवाप्रामाण्यमिति व्याख्येयम् ॥ **विरोधे त्वनपेक्षमिति** । स्मरणं प्रत्यक्षश्रुतिविरोधेऽनपेक्षमनादरणीयं स्यात् । असति प्रत्यक्षश्रुतिविरोधे मूलश्रुत्यनुमापकमष्टकादिस्मरणमिति सूत्रार्थो जन्माधिकरणे पूर्वमेवोक्तः । तदीयाधिकरणरचना च तत्रैव प्रदर्शिता द्रष्टव्या । **अव्यवस्थितालौकिकेति** । शब्दस्येमे शाब्दाः, लक्षणानि च विषयाश्च लक्षणविषयाः, न लौकिका अलौकिकाः, अलौकिकाश्च ते शाब्दाश्च ते लक्षणविषयाश्चालौकिकशाब्दलक्षणविषयाः, अव्यवस्थिता अनेकरूपा अलौकिकशाब्दलक्षणविषया यासां तास्तथोक्ता इति विग्रहः । तथा च श्रुतीनां यानि लक्षणानि ब्राह्मणासः सोमिनो वाचमक्रतेत्यादिपदस्वरूपाणि, ये विषयाः स्वरूपेणाहवनीयादिपदार्थास्ते न लौकिकशब्दलक्षणादिसदृशा, न चैकरूपा, आरभन्त ब्राह्मणा इत्यपि दर्शनात् । नापि 'इषे त्वे'त्याद्याः परिपूर्णवाक्यरूपा अतोऽर्थविशेषपरतया न ज्ञातुं शक्यन्त इत्यर्थः । अत्र यद्यप्युपक्रमादिभिरेव तात्पर्यनिर्णय इति समन्वयसूत्र एवोक्तम् । शास्त्राभिमननन्तत्वेऽप्यविरोध इति जातिसामान्यादित्यत्रोक्तम् । पदपदार्थनिर्णयस्तु व्याकरणनिरुक्तादिभिरेव सुलभः । साकाङ्क्षवाक्यपूरणं चाध्याहारादिनेति लोकत एव सिद्धम् । तथाऽपि समूलस्मृतिविरोधे निर्मूलश्रुतिप्रामाण्यायोगादिति पूर्वोक्तयुक्त्यैव श्रौतोपक्रमादिकं स्मृत्यनुसारेणैव नेयमिति पूर्वपक्षिणः सारस्याऽऽशयः । बौद्धादेरप्यप्रमाणमेवेति । अव्यवस्थितेत्यादेरनिरुक्तानि लौकिकशब्दानि लक्षणानि यानि शब्दसंबन्धीनि सूत्राणि तद्विषया इति वाऽर्थः ।

**श्री०** — तदेव दर्शयति **स्मृतयो हीत्यादिना** । अत एव, अर्थविशेषनिष्ठतानिर्धारणार्थमेवेत्यर्थः ।

**च०** — **मन्वित्यादि** । उद्गाता औदुम्बरीं शाखां स्पृष्ट्वोद्गायेदित्यर्थः । **श्रुतिमूलतयेति** । वेदस्यापौरुषेयत्वनिबन्धनप्रामाण्यस्यातीन्द्रियार्थे प्रत्यक्षाप्रवृत्त्या तन्मूलकत्वस्य दुरुपपमत्वादिति भावः । **अप्रामाण्यमेवेति** । प्राभाकरमतमभिसन्धायैतत् । भट्टदिशा तु तां शाखां स्प्रष्टुं द्वित्राङ्गुलं हित्वा तदितरनिखिलभागवेष्टनरूपार्थान्तरस्यैवाभिहिततया यथाश्रुतार्थ एवाप्रामाण्यमिति योजनीयम् । अभिहितार्थे जैमिनिसूत्रं प्रमाणमात्रष्टं । **यथाहेति** । प्रमाणलक्षणे तृतीयचरणीयद्वितीयनय इति पूरणीयम् । सर्ववेष्टनादिस्मृतीनां प्रत्यक्षश्रुतिविरोधे सति ताडशस्मृतिजातं अप्रमाणत्वेनादरणीयं न स्यात् । हि अस्मात्ताडशश्रुतिविरोधेऽसति मूलभूतश्रुत्यनुमापकमष्टकादिस्मरणमिति सूत्रार्थो जन्मादिनय एवाभिहितः । **अव्यवस्थितेत्यादि** । अव्यवस्थितानि अनेकविधानि अलौकिकानि लौकिकशब्दव्याकृतागमादेशादि-

प्रतिपादकानि यानि लक्षणानि 'आज्जसेरसुक्' 'मन्त्रेष्वाङ्यादेरात्मनः' 'हृग्रहोर्भश्छन्दसी'त्यादीनि शास्त्राणि तद्विषया इति तत्पुरुषोऽनेकरूपाणि लौकिकशब्दव्यावृत्तानि शब्दसम्बन्धीन्यागमादेशरूपचिह्नानि तादृशरूपाहवनीयादिविषयाश्च येषामिति बहुव्रीहिर्वा ।

सु० — **किञ्च श्रुतयस्तावदविस्पष्टार्थाः । प्रणेतृव्याख्यानसम्प्रदायविकला न स्वतन्त्राः कमप्यर्थं प्रतिपादयितुमीशते । किन्तु सहजसिद्धेन योगर्धिलब्धेन वा प्रत्यक्षेणाशेषार्थदर्शिनामाप्तानां वचनमनुसृत्य नेतव्याः । यथोक्तम् । इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति । इतिहासपुराणग्रहणमुपलक्षणम् । तथा च कथं पाशुपतादिस्मृत्युक्तार्थनिवारणाय समर्थास्स्युः । तदिदमुक्तं पिपीलिकालिपिनिभा संवादेन विना कमप्यर्थं प्रतिपादयितुमसमर्था श्रुतिर्यद्वचनसंवादापेक्षिणी तैरेवाप्तैः प्रत्यक्षतो दृष्ट्वा प्रोक्तमर्थं कथं वारयेत् । स्वतन्त्र(स्वातन्त्र्य)दशायामप्रतिपादकत्वात् । पारतन्त्र्ये तु विरोधाभावादेव । किन्तु तदनुसारेणैव नेतव्येति ।**

शे० भाष्यं प्रकारान्तरेणापि प्राबल्यदौर्बल्यव्युत्पादकतया व्याचष्टे **किञ्चेति । अविस्पष्टार्थाः** दुर्बोधपदार्थाः, दुरधिगमवाक्यार्थाश्चेत्यर्थः । ईश्वरसंग्रहार्थं सहजसिद्धेनेत्युक्तम् । तदितरयोगिसाधारणार्थमाह **योगर्धीति** । नन्वत्रेतिहासपुराणयोरेव वेदनिर्णायकत्वमुच्यते । न त्वाप्तवाक्यमात्रस्य तत्कथमेतद्बले पाशुपतादिस्मृतीनां वेदार्थनिर्णायकत्वसिद्धिरित्यत आह **इतिहासेति** । अशेषार्थप्रदर्श्याप्तवचनमात्रस्योपलक्षणमित्यर्थः॥ **स्वतन्त्रदशायामिति** । स्वव्याख्यानरूपपाशुपतादिस्मृत्यननुसरणदशायामित्यर्थः । **पारतन्त्र्य इति** । पाशुपतादिस्मृत्यनुसरण इत्यर्थः । नन्वनिश्चिततात्पर्यस्य शैवाद्यागमस्य वेदतात्पर्यनिश्चायकत्वेऽतिप्रसङ्गात् । निश्चिततात्पर्यस्यैव तस्य तत्तात्पर्यनिश्चायकत्वं वाच्यम् । न च शैवाद्यागमतात्पर्यनिश्चयो वक्त्रुद्देशेन वा तन्मूलकव्याख्यानेन वाङ्गीकर्तुं शक्यस्तथा सति वक्तरि तात्पर्यमनुपदिश्य नष्टे तत्तात्पर्यानवगमप्रसङ्गात् । कितूपक्रमादिभिरेवेति वेदेऽपि तैरेव लोके कल्पमस्तात्पर्यनिश्चय इत्यस्यार्थस्य समन्वसूत्रे उक्तत्वेन प्रणेतृव्याख्यानसम्प्रदायविकलानामपि श्रुतीनामर्थविशेषनिष्ठत्वोपपत्तेः प्रणेतृव्याख्यानसम्प्रदायविकलत्वमप्रयोजकम् । एवमनन्तत्वेऽपि शाखानामविरोधस्य **गतिसामान्या**दित्यत्रैव सिद्धेरनन्तशाखात्वमपि । तथा नानानिगमनिरुक्तव्याकरणादिभिरेव पदार्थनिर्णयोपपत्तेर्न दुर्गमपदार्थत्वमपि । नानान्यायकलापादेव वाक्यार्थाधिगमसंभवान्न दुरधिगमवाक्यार्थत्वमप्यस्ति । साकाङ्क्षवाक्यपरिपूरणस्याध्याहारादिना लोकत एव सिद्धत्वान्न 'इषेत्वा'इत्यादीनामपरिपूर्णत्वमपीति कथमेतैर्हेतुभिः श्रुतीनामर्थविशेषनिष्ठत्वासम्भववर्णनमिति चेत् । सत्यम् । इयं वस्तु-

गतिः। तथाऽपि समूलस्मृतिविरोधे निर्मूलश्रुतिप्रामाण्यानुपपत्तेः स्मृत्यनुसारेण श्रौतोपक्रमादिकं नेयमिति भावेनैतत्पूर्वपक्षवर्णनमिति ध्येयम्।

स०— **स्वातन्त्र्यदशायामिति**। व्याख्याननैरपेक्ष्येण स्वातन्त्र्याङ्गीकारे इत्यर्थः। **पारतन्त्र्ये तु विरोधाभावादिति**। क्वचित्पुस्तके **पारतन्त्र्ये विरोधाभावादेरिति** पाठः। तत्रादिपदेन प्राबल्याभावपरिग्रहः। तथा च न स्मृतिबाधकत्वं श्रुतेरिति भावः।

प०— **किंत्वित्यादि**। यद्यप्येषा शङ्का उपक्रमादिभिरेव वेदार्थो ग्राह्यः न पाशुपतादिभिरित्यर्थसाधकसमन्वयसूत्र एव निरस्ता। तथाप्युपक्रमादयोपि तदनुसारेण नेतव्या इत्येवमत्राभिप्रेतमिति चन्द्रिकोक्तं ध्येयम्।

या०— **उपलक्षणमिति**। अशेषार्थदर्शिनामाप्तानां वचनमात्रस्येति शेषः॥ **स्वतन्त्रदशायामिति**। आप्तशिवादिवचनाननुसरणदशायामित्यर्थः॥ **पारतन्त्र्य इति**। तद्वचनानुसरण इत्यर्थः।

श्री०— नन्वत्रेतिहासपुराणयोरेव श्रवणात्कथमाप्तवचनानुसारेण नेतव्या इत्युच्यत इत्यत आह **इतिहासपुराणग्रहणमुपलक्षणमिति**।

च०— **उपलक्षणमिति**। अशेषार्थदर्शिनामाप्तानां वचनमात्रस्येति पूरणीयम्। **स्वतन्त्रदशायाम्**। पाशुपतादिस्मृत्यननुरोधदशायाम्। **पारतन्त्र्ये**। तादृशस्मृत्यनुरोधे।

सु०— **भवेदेतद्यदि पाशुपतादिस्मृतिप्रणेतॄणामाप्तत्वं स्यात्। तदेव कुत इत्यत आह** सर्वगा हीति। **सर्वं गच्छन्त्यवगच्छन्तीति सर्वगाः। आप्तत्वोपलक्षणमेतत्। ते रुद्रादयः। हीति तत्र प्रमाणप्रसिद्धिं द्योतयति।**

**अथवा सर्वज्ञत्वमेवात्र प्रमाणप्रसिद्ध्या साध्यते। तत एवान्यस्य सिद्धेः।**

**तथा हि। हरिहरहिरण्यगर्भास्तावत्सर्वज्ञतया श्रुतीतिहासपुराणेषु प्रसिद्धाः। तत्र हरेरेवावतारा बुद्धर्षभकपिलाः सौगतादिस्मृतिप्रणेतारः। तथा च तेषां मोहाभावेन रागद्वेषयोरप्यभावात् विप्रलिप्सा च निवर्तते॥ किञ्च ज्ञानेच्छाप्रयत्नस्थानकरणपाटवानि तावदुपदेशमात्रेण तेषां निश्चीयन्ते। ज्ञानं तु यथार्थमयथार्थं वा स्यात्। इच्छाऽपि प्रतिपिपादयिषा वा विप्रलिप्सा वेति सन्देहोऽवशिष्यते। तत्राभ्यासदशापन्नोऽयमर्थोऽस्येति सामान्यतो निश्चये भवत्येव तस्य ज्ञानस्य यथार्थत्वनिश्चयः। यथाऽभ्यासदशापन्नमिदमरण्यममीषां म्लेच्छानामतोऽस्मिन्नेते मार्गाभिज्ञा इति पान्थानामेव निश्चयः। विप्रलिप्सा च हेतुदर्शनेन व्याप्ता हेतौ सति स्यात्। स च द्विरूपः। स्वोपकारः परापकारो वा। न तावत्पान्थेषु**

**विमार्गेण प्रतिष्ठमानेषु म्लेञ्छानां कश्चित्स्वोपकारः । स्वस्य गृहीतत्वात् । शरीरस्य च करणीयान्तारभावात् । भावे वा परित्यागायोगात् । नापि द्वितीयः । न ह्यनुन्मत्ता अनपकारिणमपकुर्वते । नापि परापकारमात्रं पुरुषार्थः । तथा सति सर्वः सर्वमपकुर्यादिति । एवं विप्रलिप्साऽपि निवार्यते । अनभ्यासदशापन्ने तु विषये प्रमाणान्तरसंवादात्प्रवृत्तिसामर्थ्याद्वा मोहविप्रलिप्सयोर्निवृत्तिरित्यतो म्लेञ्छा अप्याप्ता भवन्ति । किमुत महानुभावा रुद्रादय इति ॥**

**शे०** — 'सर्वगा हि ते' इति रुद्रादेः सर्वज्ञत्ववर्णनानर्थक्यमाशङ्क्याप्तत्वसिध्यर्थं तदिति भावेन तन्निवर्त्यशङ्काप्रदर्शनपूर्वकं तत्परिहारकतयोत्तरवाक्यं योजयति **भवेदेतदिति** । ननु रुद्रादीनां सर्वज्ञत्वकथनमात्रेण कथमाप्तत्वसिद्धिरविप्रलिप्सादेरकथनादित्यत आह **आप्तत्वोपलक्षणमेतदिति** । आप्त्येकदेशवाचिना सर्वगशब्देन तदेकदेशभूताविप्रलिप्सादेरुपलक्षणमित्यर्थः । उपलक्षणत्वपक्षस्य स्वायत्तन्यायविरुद्धत्वात्पक्षान्तरमाह **अथवेति** ॥ **अन्यस्येति** । अविप्रलिप्सादेरित्यर्थः । अस्तु सर्वज्ञत्वं किं तावतेत्यतस्तत्त्वज्ञानस्य समानाश्रयविषयाज्ञानमिथ्याज्ञाननिवर्तकत्वस्वाभाव्यात्सर्वज्ञत्वेन मिथ्याज्ञानाभावसिद्धिरित्याह **तथा चेति** ॥ **रागद्वेषयोरिति** । तयोर्मिथ्याज्ञानकार्यत्वात्कारणाभावे च कार्याभावसौलभ्यादिति भावः ॥ **विप्रलिप्सा चेति** । तस्या रागादिकार्यतया तद्रहितस्य तदसम्भवादिति भावः ।

---

एवं सार्वज्ञपुरस्कारेणाप्तत्वं प्रसाध्य अनङ्गीकृत्यापि सर्वज्ञत्वमाप्तत्वं साधयति **किञ्चेति** । अत एव द्विविधो हि पुरुषः सर्वज्ञोऽसर्वज्ञश्चेति । तत्र पूर्वस्य तावत्सर्वज्ञत्वसाधकादेव प्रमाणाद्रागद्वेषमोहविरहसिद्धेरनाप्तत्वं निरस्तम् । उत्तरस्यापि 'ज्ञानेच्छाप्रयत्नस्थानकरणपाटवानि तावदुपदेशमात्रेणैव निश्चीयन्ते' इत्यादिना सर्वज्ञत्वतिरस्कारेणाप्याप्तत्वसमर्थनमित्थमेव प्रमाणनिबन्धकृता कृतमिति द्रष्टव्यम् । **प्रयत्नो** बाह्याभ्यन्तरभेदेन द्विरूपः । **स्थानं** ताल्वादि । ननु कथं तर्हि तद्याथार्थ्याद्यवधारणमित्यतो रुद्रादयोऽर्थविशेषे यथार्थज्ञानवन्तस्तद्विषयेऽभ्यासातिशयवत्त्वादित्यनुमानाज्ज्ञानयाथार्थ्यसिद्धिरित्यभिप्रेत्य विवक्षितानुमाने यो यत्राभ्यासातिशयवान्स तद्विशेषयथार्थज्ञानवानिति सामान्यव्याप्तिं सूचयन्नाह **तत्रेत्यादिना** । कुतोऽत्र सामान्यव्याप्तिराश्रीयते विशेषव्याप्तिरेव किन्न स्यादित्यतो दृष्टान्ताभावादिति भावेन दृष्टान्तोक्त्या सामान्यव्याप्तिमुपपादयति **यथेति** ॥ **पान्थानामेवेति** । म्लेञ्छापहृतसर्वस्वानामेवेत्यर्थः । एवमनुमानेन मोहाभावः साधितः । इदानीं रुद्रादयो विप्रलिप्साशून्या हेतुदर्शनशून्यत्वादित्यनुमानाद्विप्रलिप्साऽभावसिद्धिरित्यभिप्रेत्य व्यापकाभाववति व्याप्याभावनियमान्नाप्रयोजकत्वमिति दर्शयितुं विप्रलिप्साहेतुदर्शनयोर्व्याप्यव्यापकभावं तावद्दर्शयति **विप्रलिप्सा चेति** । यत्र हेतुदर्शनाभावस्तत्र विप्रलिप्साऽभाव इत्यभिप्रेतानुमानमूलव्याप्तौ म्लेञ्छानामेव दृष्टान्तत्वमित्यभिप्रेत्य तत्र व्यापकाभावोप-

पादनपूर्वकं व्याप्याभावमाह **न तावदित्यादिना** ॥ **स्वस्येति** । धनस्येत्यर्थः । तथा च तदीयधन-लाभलक्षणः स्वोपकारः प्रयोजनमिति भावः । ननु धनग्रहणेऽपि शरीरमवशिष्टमस्तीत्यत आह **शरीरस्य चेति** । जात्यभिप्रायं चेदकमेकवचनम् । पान्थशरीराणामित्यर्थः । धनापहारानुकूलस्य ताडनादेः पूर्वमेव कृतत्वादन्यस्य च स्वोपकारकस्य तत्र करणीयस्याभावादिति भावः ॥ **भावे वेति** ॥ यद्यप्यमार्गेण गच्छन्तः स्वयमेव मरिष्यन्ति पान्थाः किं स्वव्यापारेण सुमार्गेण गच्छन्तस्तु जीवित्वा-द्राजानमावेद्यास्मान् घातयिष्यन्तीत्याशयेन स्वसंरक्षणार्थमेवामार्गमुपदिशन्तीत्याशयसम्भवादस्त्येव हेतु-दर्शनं तथाऽपि यत्रैवं शङ्का नास्ति म्लेच्छेषु तत्परमेवैतदिति ध्येयम् । यद्वा यत्र म्लेच्छोक्तेनैव मार्गेण गच्छन्तो विवक्षितग्रामादिकं प्राप्नुवन्ति तत्र संवादेन म्लेच्छानामप्याप्तत्वं तेनैवावधारयन्तीत्येवम्परोऽयं ग्रन्थ इति द्रष्टव्यम् । अस्त्वेवमभ्यासदशापन्ने विषये उक्तानुमानद्वयेन मोहविप्रलिप्सयोरभावसिद्धिर-नभ्यासदशापन्नविषये तु कथमित्यतोऽनभ्यासदशापन्नविषये म्लेच्छानां तदुभयसिद्धिवच्छिवादीनामप्यु-क्तविषये तदुभयसिद्धिरित्यभिप्रेत्य म्लेच्छेषु तदुभयसिद्धिप्रकारमाह **अनभ्यासेति** ॥ **प्रवृत्तिसामर्थ्या-दिति** । ततोऽर्थमवबुध्य प्रवृत्तस्य फलोपलम्भः प्रवृत्तिसामर्थ्यं तस्मादित्यर्थः । अस्त्वेवमुक्तरीत्या मोहविप्रलिप्सयोर्निवृत्तिः किं तावताऽपीत्यत आह **अत इति** ।

स० — **रागद्वेषयोरप्यभावादिति** । न च रागद्वेषाभावेन विप्रलिप्साभावसाधने बुद्धे

---

व्यभिचार इति वाच्यम् । एवं स्वाभ्युगताचार्यस्यैव सार्वज्ञ्यमङ्गीकृत्य तत्प्रणीतवाक्यस्य प्रामाण्यं साधयन्तीत्युक्तत्वात् तस्यापि पक्षकोटिप्रवेशान्न व्यभिचार इति भावः । **स्थानेति** । देशसंपत्तिरित्यर्थः । अथवा संस्थानविशेष इत्यर्थः । ननु द्रव्यसंपन्नेन म्लेच्छं प्रति कोऽयं मार्ग इति पृष्टे द्रव्यापहारेच्छया अयं मार्ग इत्युपदेशस्य कृतत्वेन स्वोपकारस्यैव विद्यमानत्वात् कथं स्वोपकाराभाव इत्यत आह **स्वस्येति** । द्रव्यस्येत्यर्थः । ननु शरीरग्रहणेच्छयोपदिष्टत्वेन स्वोपकार एव वर्तत इत्यत आह **शरीर-स्येति** । शरीरेण कर्तव्यप्रयोजनाभावात् न तस्य ग्रहणेच्छया उपदेश इति भावः । परकीयप्रयोजनस्य ज्ञातुमशक्यत्वात्कथं शरीरेण प्रयोजनाभाव इत्यत आह **भावे वेति** । परित्यागायोगात् गृह्णन्त्येवेत्यर्थः ।

प० — **आप्तत्वेति** । विवक्षितार्थतत्त्वज्ञानाविप्रलिप्साकरणपाटवविवक्षारूपधर्मचतुष्टयवत्त्वो-पलक्षणमित्यर्थः ॥ **अन्यस्येति** । आप्तशब्दार्थप्रविष्टाविप्रलिप्सादिधर्मस्येत्यर्थः ॥ **मोहाभावेनेति** । मिथ्याज्ञानकार्यत्वाद्रागद्वेषयोरिति भावः ॥ **विप्रलिप्सा निवर्तत इति** । रागादिमूलत्वात्तस्या इति भावः । **ज्ञानेति** । विवक्षितवाक्यार्थज्ञानम् । **इच्छा** वाक्यप्रयोगेच्छा । **प्रयत्नः** प्रयोगानुकूलो व्यापारः । 'अकुहविसर्जनीयानां कण्ठः, इचुयशानां तालु' इत्यादिनोक्तकण्ठताल्वादिस्थानरूपकरणपाटवमित्येता-

नीत्यर्थः । पाटवपदं प्रयत्नेप्यन्वेति । तथा च विवृतमूष्मणां स्वराणां च स्पृष्टं प्रयतनं स्पर्शानामित्याद्युक्तविवृतादिप्रयत्नपाटवमर्थ इत्येके । ज्ञानयाथार्थ्यनिश्चयप्रकारं हेतुदृष्टां(ताभ्यां)तोक्त्या व्यनक्ति **तत्रेत्यादिना** । अविप्रलिप्सां च दृष्टान्तेन व्यनक्ति **विप्रलिप्सा चेति** । अरण्यवासिषु म्लेच्छेषु पान्थविषयकविप्रलिप्सा चेत्यर्थः । **हेतौ सति** हेतुज्ञाने सतीत्यर्थः । **प्रतिष्ठमानेषु** गच्छत्स्वित्यर्थः । 'समवप्रविभ्यःस्थ'इति प्रपूर्वस्य तिष्ठतेरात्मनेपदम् । द्रव्यापहार एवोपकार इत्यत आह **स्वस्येति** । द्रव्यस्येत्यर्थः । तदीयं शरीरं अस्ति खल्वित्यत आह **शरीरस्य चेति** ॥ **अनभ्यासेति** । म्लेंछानामिति योज्यम् । रुद्रादय इतीतिपदस्य तत एवान्यस्य सिद्धेरिति पूर्वेणान्वयः ॥छ॥

**य।०**— स्थानेत्यत्र वर्णोच्चारणस्थानं ताल्वादि विवक्षितम् ॥ **पान्थानामेवेति** । म्लेच्छापहृतसर्वस्वानामेवेत्यर्थः । म्लेच्छेषु विप्रलिप्साऽभावमुपपादयितुमाह **विप्रलिप्सा चेत्यादिना** ॥ **स्वस्येति** । धनस्येत्यर्थः । तथा च तदीयधनलाभलक्षणस्वोपकारः पूर्वमेव जातोऽस्तीति भावः ॥ **शरीरस्य चेति** । जात्यभिप्रायमेकवचनम् । पान्थशरीराणामित्यर्थः । तदीयशरीरेषु धनापहारानुकूलं यत्ताडनादिकं तत्कृतमन्यच्च तत्र करणीयं स्वोपकारकं किमपि नास्तीति भावः । ननु कथं नास्ति, पान्था मुक्ताश्चेद्राजानं प्रति वक्ष्यन्ति स चास्माकमनिष्टं करिष्यत्यत एषां शिरश्छेद एव कर्तव्य इत्यभिप्रायवतामनिष्टनिवृत्तिरूपस्वोपकारजनकशिरश्छेद एव तत्र करणीयोऽस्तीत्यत आह **भावे वेति** । दार्ष्टान्तिके विप्रलिप्साऽभावं दर्शयति **एवं विप्रलिप्साऽपीति** । रुद्रादीनामिति शेषः । स्वोपकारपरापकाररूपहेत्वोरदर्शनादिति भावः ॥ **मोहविप्रलिप्सयोरिति** । दृष्टान्ते म्लेच्छाऽदौ दार्ष्टान्तिके रुद्रादावपीति शेषः। 'अतो म्लेच्छा' इति तु समग्रासत्वस्योपसंहारः ।

**श्री०**— अनेनाप्त्येकदेशभूततत्त्वज्ञानस्यैकस्यैवोक्तत्वेनाविप्रलिप्साकरणपाटवयोरनुक्तत्वादाह **आप्तत्वेति** । **प्रमाणप्रसिद्ध्या** हिशब्दोक्तया । **तत एव** सार्वज्ञमात्रेणैव. **अन्यस्य** अविप्रलिप्सादेः सिद्धेः; नात्र पूर्ववदाप्तत्वोपलक्षणं कार्यमिति भावः । तमेव सिद्धिप्रकारं दर्शयति **तथा हीत्यादिना किमु महानुभवा रुद्रादय इत्यन्तेन** । विप्रलिप्सा चेत्यतःपूर्वं तन्मूलकेति शेषः **निवर्तते** । न ह्येवमेव कश्चित्कञ्चिद्विप्रलब्धुमिच्छतीति हृदयम् । रुद्रादौ तत्सिद्धिप्रकारं दर्शयति **किञ्चेत्यादिना** । स्थानपाटवं करणपाटवं चेति सम्बन्धः । स्थानं नामाक्षरोच्चारणहेतुभूतोरःप्रभृत्यष्टस्थलविशेषः ॥ **पान्थानामिति** । मार्गे केचिद्गच्छन्ति, तेषां द्रव्यादिकं चोरभूता म्लेच्छा अपहृतवन्तोऽपहृतसर्वस्वैः पान्थैरसदीयं द्रव्यं तावत्सर्वमपहृतमस्माकं समीचीनं मार्गं वा गन्तुमुपदिशतेति पृष्टा अनेन मार्गेण गन्तव्यमित्युपदिशन्ति । पश्चादेवमुपदिष्टानां तेषां पान्थानां मार्गविषये म्लेच्छज्ञानेऽभ्यासदशापन्नत्वेन याथार्थ्यं

निश्चित्य तेष्वाप्तिं च निश्चित्य पश्चाद्गच्छन्तीति म्लेच्छा अप्याप्ता भवन्तीत्यन्वयः । ननु तेष्वेतेषामाप्ति-निश्चयः कथं घटते । अमार्गमेवैते मार्गतयोपदिशन्त्यसद्गननार्थमिति सन्देहेनानिश्चय एव स्यादिति चेत् । सत्यम् द्रव्यादिसद्भावदशायामेवमेतत् । यतस्ते पान्थाः । कोऽर्थः । म्लेच्छापहृतसर्वस्वाः । तथाचासदीयं सर्वस्वमपहृतमतःपरमस्मानेते किं करिष्यन्ति । अतः समीचीनमेव मार्गमेते उपदिशन्तीति भविष्यत्येवाप्ति-निश्चय इति हृदयम् । स्वोपकारोऽपि पान्थद्रव्यापहारो वा तदीयशरीरच्छेदादिकं वेति विकल्प्याऽद्यं निराह **स्वस्येति** । द्वितीये त्वाह **शरीरस्येति** ॥ **द्वितीय इति** । म्लेच्छा अमार्गमेव मार्गतया विप्र-लिप्सयोपदिशन्ति । पान्थेषु विमार्गेण गच्छत्सु सत्सु तेषां कश्चनापकारो भविष्यति स एव तेषां विप्रलिप्साहेतुरिति द्वितीयोऽपि नेत्यर्थः ॥ **न हीति** । तथा च म्लेच्छानां पान्थकृतापकारप्रसक्तेरेवा-भावात्पान्थानां म्लेच्छा विमार्गोपदेशेन किमर्थमपकारं चिन्तयेयुरिति तद्धेतुका विप्रलिप्सा निवार्यत इत्यर्थः । तत्कृतापकाराभावेऽपि परेषामपकारचिन्तनमात्रमेव पुरुषार्थ इति भवति विप्रलिप्सायां हेतु-रित्याशङ्क्याह **नापीति** ॥ **अनभ्यासेति** । यथा कश्चिदनभ्यस्ते मार्गे सन्देहेन गच्छति पश्चात्तेन मार्गेण गच्छमानं कञ्चिद्दृष्ट्वा'अस्य ग्रामस्यायं मार्गो भवति न वे'ति पृष्टे, 'भवति, सुखेन गन्तव्यमि'ति तेनोक्ते तथा पुरतोऽन्येनापि तथैवोक्ते प्रमाणान्तरसंवादेन पुरतो गमनानन्तरं ग्रामो लब्ध इत्येवं समर्थ-प्रवृत्त्या वा पूर्वमुपदेष्टरि म्लेच्छे भवत्येवाप्तिनिश्चय इति भावः ॥ छ ॥

---

च० — **आप्तत्वोपलक्षणमिति** । तद्घटकविवक्षितार्थतत्त्वज्ञानवाचिना सर्वगपदेन तद्घट-कान्तराविप्रलिप्सादेरुपलक्षणमित्यर्थः । **प्रयत्नो** बाह्यान्तरभेदेन द्विरूपः । स्थानशब्दोऽधिकरणसाधन-ल्युडन्तो मूर्धादीन्याचष्टे । **पान्थानाम्** । म्लेच्छापहृतसर्वस्वानाम् । **प्रतिष्ठमानेषु** गच्छत्सु । समवप्रविभ्यः स्थ इति प्रोपसृष्टात्तिष्ठतेरात्मनेपदविधानम् । तङानावात्मनेपदमिति तत्संज्ञकः **शानच्** । **स्वस्य** धनस्य ।

सु० — **एवं पूर्वपक्षसूत्राभिप्रायमभिधाय सिद्धान्तसूत्रतात्पर्यमाह** इति चेदिति ।

**अनु०** — इति चेद्ययशेषज्ञा रुद्राद्या हरिपूर्वकाः ॥

किन्त्वशेषविदः

**तन्नेति शेषः । कुतः । निश्चिते हि पाशुपतादिस्मृतिप्रामाण्ये तद्विरुद्धं विष्णोस्सर्व-जगत्कारणत्वादिकमसत्स्यात् । न चैवम् । सत्प्रतिपक्षत्वात् । आस्तां तावच्छ्रुतिः । पञ्च-रात्रादिस्मृतयो हि विष्णोरेव सकलजगत्कारणत्वादिकमभिदधाना दृश्यन्ते ।**

**ननु विरुद्धयोः प्रमाणयोः साम्ये सति सत्प्रतिपक्षता स्यात् । न चैवं प्रकृते । पाशुपतादिस्मृतीनामाप्तप्रणीतत्वात् विस्पष्टवादित्वेन निरवकाशत्वाच्च । पञ्चरात्रादिस्मृतीनां** तदभावादित्यत आह यदीति । अशेषज्ञा अशेषविद इत्याप्तत्वोपलक्षणम् । हरिपूर्वका **हरिमनुप्रभृतयः पञ्चरात्रादिस्मृतिप्रणेतारः । येन न्यायेन पाशुपतादिस्मृतीनामाप्तरचितत्वमुपेयते तेनैव पञ्चरात्रादीनामपि तदुपेयम् । न च विशेषहेतुरस्तीति** भावः । **उपलक्षणं चैतत् । विस्पष्टवादित्वेन निर(ान)वकाशत्वं च द्रष्टव्यम् ।**

**शे० —** यद्यशेषज्ञा इत्यादेः प्रकृतेन साक्षात्सङ्गत्यप्रतीतेस्तत्सङ्गमयितुमपेक्षितं तावत्पूरयति **निश्चिते हीत्यादिना ॥ आस्तामिति ।** अनेनं श्रुतिपरित्यागानौचित्यशङ्का निरस्ता भवति । एवमपेक्षितमभिधायेदानीं सङ्गतिमाह **नन्विति ।** विरुद्धयोः प्रमाणयोः साम्ये सतीत्यस्य विरुद्धयोः प्रमाणत्वेन साम्ये सतीत्यर्थः । हरिपूर्वका इत्यत्र पूर्वशब्देन रुद्रादिग्रहणायोगादन्यस्य च संग्राह्यस्याभावादानर्थक्यमित्याशङ्कां संग्राह्योक्त्या परिहरति **मनुप्रभृतय इति ।** कथनेनोक्तशङ्कापरिहार इत्यत आह **येन न्यायेनेति ।**

**स० — एवं पूर्वपक्षसूत्राभिप्रायमिति ।** सूत्रस्थपूर्वपक्षांशाभिप्रायमित्यर्थः । सूत्रांशस्यापि सूत्रत्वेन पूर्वपक्षसूत्राभिप्रायमित्युक्तम् । **सिद्धान्तसूत्रतात्पर्य**मित्यत्राप्येवमेव व्याख्येयम् । इति चेदितस्य तदित्यादिग्रन्थेन समन्वयासम्भवादसङ्गतत्वमित्यत आह **तत्रेति शेष इति ।** ननु सत्प्रतिपक्षत्वेऽपि परस्यैव जयः निश्चयप्रतिबन्धकत्वादित्यत आह **आस्तां तावदिति ।** अनेन सूत्राभिप्रायकथनेन पराभिधित्सितदोषमवबुध्येत्यादि शङ्काऽपि परास्ता । **ननु विरुद्धयोरिति ।** प्रमाणत्वेन साम्ये सतीत्यर्थः । अवच्छेदकमाह **पञ्चरात्रादिस्मृतिप्रणेतार इति । उपलक्षणं चैतदिति ।** 'यद्यशेषज्ञा रुद्राद्या हरिपूर्वकाः । किं नाशेषविदः' इत्यनेन, तथा चाप्तोक्तत्वात् पञ्चरात्रादिस्मृतीनां प्रामाण्यमङ्गीकृतमेवेति यल्लब्धं तदुपलक्षणमित्यर्थः ।

**प० —** सिद्धान्तः ॥छ॥ **दृश्यन्त इति ।** भाष्यकारैः तत्रतत्र बहुधोदाहृतत्वात्तासामिति भावः। आप्तत्वोपलक्षणमित्येतदुपलक्षणम् । पूर्वोक्तदिशा तत एव अन्यस्य लाभो वेत्यपि ध्येयम् । हरिकारणका इति भ्रमं निराह **हरिमनुप्रभृतय इति ॥ अनवकाशत्वं चेति ।** पञ्चरात्रादिस्मृतीनामिति योज्यम् । एतेन श्रुतिपरित्यागो न सिद्धान्ते युक्त इतिपूर्वकृतचोद्यं निरस्तं ध्येयम् ।

**या० — प्रमाणयोरिति ।** प्रमाणत्वेनाभिमतयोरित्यर्थः । एवमग्रेपि ।

**श्री० —** ननु पूर्वं श्रुत्यादिसकलशास्त्रस्य प्रकृतत्वेन श्रुत्युपादानं कुतो न कृतं सूत्रकृतेत्यस्याभिप्रायमाह **आस्तामिति ।**

सु० — किमतो यद्येवमित्यत आह मानमिति ।

अनु० — मानं ह्युभयत्र समं भवेत् ॥

हिशब्दो हेतौ । यस्मादेवं तस्मादुभयत्र पूर्वपक्षसिद्धान्तयोर्मानं स्मृतिद्वयं समं भवेत् । तथा च पाशुपतादिस्मृतीनां सत्प्रतिपक्षत्वं स्थितमिति शेषः ।

ननु ये विरुद्धे प्रमाणे न तयोः साम्यम् । शुक्तिरजतज्ञानयोस्तदभावदर्शनात् । ये च समे न तयोर्विरोधः । पटश्शुक्लो दीर्घश्चेत्यत्र तदभावात् । तत्कथं पाशुपतादिस्मृतेः सत्प्रतिपक्षत्वसम्भवः । सम्भवेऽपि जितं परेण । सिद्धान्तनिर्णयस्यायोगादित्यत आह मानमिति । उभयत्र द्वयोस्स्मरणयोर्मध्ये यत्समं सह मया मूलप्रमाणेन वर्तते, तदेव मानमन्यदप्रमाणम् । एतदुक्तं भवति । विशेषानिर्धारणायामेव सत्प्रतिपक्षत्वम् । वस्तुतस्तु समूलं मानमन्यदमानमिति । ननु समूलत्वेन प्रामाण्यावधारणे प्रामाण्यस्य परतन्त्वापत्तिः । मैवम् । परस्परविरोधेनाप्रामाण्यशङ्काप्राप्तौ समूलत्वेन तदपनयनात् । तथोभयत्र स्मरणे यत्पञ्चरात्रादिस्मरणं समम् समूलप्रमाणं संवादिप्रमाणान्तरोपेतं च, तदेव मानं भवेन्न तु पाशुपतादिकम्, मूलाद्यभावात् । अतो नोक्तदोष इति योज्यम् । वक्ष्येते हि श्रुतिमूलत्वतत्संवादित्वे च पञ्चरात्रादीनाम् ।

शे० — मानं ह्युपयत्र समं भवेदिति पूर्वपक्षसिद्धान्तीयस्मरणद्वयस्य साम्यात्सत्प्रतिपक्षत्वमुक्तम् । तदयुक्तम् । विरुद्धप्रमाणद्वयस्य साम्यानुपपत्तेर्ययोर्विरुद्धत्वं न तयोः प्रमाणत्वेन साम्यं, ययोश्च तेन रूपेण साम्यं न तयोर्विरुद्धत्वमिति नियमादित्यभिप्रायेण नियमद्वयमुपपादयति **नन्वित्यादिना** । अत्र च नञनुवृत्त्या विरुद्धे ये न ते प्रमाणे, अप्रमाणत्वादेव च न तयोः साम्यमिति वा ययोर्विरुद्धत्वं न तयोः प्रमाणत्वेन साम्यमिति वाऽभिमतम् । न तु ये विरुद्धे प्रमाणे, न तयोः साम्यमिति यथाश्रुतम् । तथा सति शुक्तिरजतज्ञानयोस्तदभावदर्शनादित्युत्तरग्रन्थासङ्गतिप्रसङ्गादिति द्रष्टव्यम् । **शुक्तिरजतज्ञानयोरिति** । शुक्ताविदं रजतं नेदं रजतमिति शुक्तिरजतज्ञानयोः सत्यपि विरुद्धत्वे एकस्यैव प्रमाणत्वेनापरस्य चाप्रमाणत्वेन प्रमाणत्वेन द्वयोः साम्याभावादित्यर्थः । ये च समे इत्यत्र प्रमाणत्वेनेति शेषः ॥ **तदभावादिति** । वि(रोधि)रुद्धत्वाभावादित्यर्थः । नन्वेवं समूलस्य प्रमाणत्वान्निर्मूलस्य चाप्रमाणत्वात्समूलेन निर्मूलस्य बाधस्यैव लाभान्न सत्प्रतिपक्षावसरोऽवसरे वा न बाधावसर इत्यत आह **एतदुक्तं भवतीति** । नन्वेवं समूलेन स्मरणेन निर्मूलस्य तस्य बाधसिद्धावपि पञ्चरात्रादिस्मरणेन पाशुपतादिस्मरणस्यैव बाध इत्यर्थस्यासिद्धेर्न सिद्धान्तनिर्णयोपपत्तिरित्यत उक्तार्थसमर्पकतयाऽप्येतदेव मूलं योजयति

**तथेति मूलाद्यभावादिति** । प्रमाणमूलत्वतत्संवादित्वयोरभावादित्यर्थः । ननु कुतः पञ्चरात्रादिस्मरणस्य श्रुतिमूलत्वतत्संवादित्वे येन तदेव मानमित्यवधार्येतेत्यत आह **वक्ष्यते हीति** । 'निर्दोषवाक्यमूलत्वादि'-त्यादिनाऽत्रैवाधिकरणे 'तन्मूलत्वात्स्मृतीनां चे'त्यादिनोत्तराधिकरणे वेति शेषः । यद्यपि पञ्चरात्रस्य न श्रुतिसंवादित्वातिरिक्तं श्रुतिमूलत्वमस्ति तथाऽपि मन्वादिस्मृत्यभिप्रायेण श्रुतिमूलत्वश्रुतिसंवादित्वयोर्ग्रहणम् । अतद्गुणसंविज्ञानबहुव्रीहिणा मन्वादिस्मरणमेव पञ्चरात्रादिस्मृतीनामित्यनेन विवक्षितमित्यप्याहुः ।

स० — **यस्मादेवमिति** । आप्तोक्तत्वेन प्रामाण्यं, विसंवादित्वेनानवकाशत्वं तस्मादित्यर्थः । ननु 'मानं ह्युभयत्र समं भवेत्' इत्यनेन पूर्वपक्षसिद्धान्तयोर्मानं स्मृतिद्वयं समं भवेत् । तथा च सत्प्रतिपक्षत्वमित्युक्तम्, तदनुपपन्नम्, विरुद्धप्रमाणद्वयस्य साम्यस्यैवायोगात् । ययोर्विरुद्धत्वं, न तयोः प्रमाणत्वेन साम्यम् । ययोश्च तत्त्वेन साम्यं न तयोर्विरोध इति नियमादित्यभिप्रायेण क्रमेण नियमद्वयमप्युपपादयति **ननु ये विरुद्ध इति** । अत्र ये विरुद्धप्रमाणे न तयोस्साम्यमिति यथास्थित एवार्थो नाभिमतः । तथा सति शुक्तिरजतज्ञानयोस्तदभावादित्युत्तरग्रन्थासङ्गतेः । किं तु ययोर्विरुद्धत्वं, तयोर्न प्रमाणत्वेन साम्यमित्येवेति द्रष्टव्यम् । **शुक्ति-रजतज्ञानयोरिति** । इदं रजतं नेदं रजतमिति शुक्तिरजतज्ञानयोः सत्यपि विरुद्धत्वे एकस्यैव प्रमाणत्वेन अपरस्य च तदभावेन प्रमाणत्वेन साम्याभावादित्यर्थः । **ये च समे इति** । प्रमाणत्वेनेति शेषः । **तदभावात्** । विरुद्धत्वाभावादित्यर्थः ।

नन्वेवं समूलस्यैव प्रमाणत्वे, निर्मूलस्य चाप्रमाणत्वे साम्याभावात् न सत्प्रतिपक्ष इत्यत आह **एतदुक्तं भवतीति** । आभिमानिकस्य प्रमाणत्वेन साम्यस्य सत्त्वात् तदभिप्रायेण सत्प्रतिपक्ष इति भावः । **मूलाद्यभावादिति** । आदिपदेन प्रमाणान्तरशून्यत्वपरिग्रहः । **वक्ष्यत इति** । 'तन्मूलत्वात्स्मृतीनां च विरोधो यत्र न क्वचित्' इत्यादिना उत्तराधिकरण इति शेषः ।

प० — **प्रमाणे इति** । प्रमाणत्वेन प्रतीते इत्यर्थः ॥ **शुक्तीति** । शुक्तिज्ञानतदध्यस्तरजतज्ञानयोरित्यर्थः ॥ **तदभावेति** । बाध्यबाधकभावस्येति भावः ॥ **समे इति** । बाध्यबाधकभावशून्ये इत्यर्थः ॥ **मूलप्रमाणेनेति** । विष्णवाद्याप्तिरूपमूलप्रमाणेनेत्यर्थः । श्रुतिरूपमूलप्रमाणेन चेत्यर्थः । 'उभयत्र समं भवेदि'त्यस्यार्थान्तरमाह **तथोभयत्रेति** ॥ **संवादिप्रमाणान्तरेति** । श्रुतिरूपेत्यर्थः ॥ **नोक्तेति** । ननु ये विरुद्धे इत्यादिनोक्तदोष इत्यर्थः ॥ **वक्ष्यते हीति** । उत्तराधिकरणे ॥ **श्रुतिमूलत्वं** श्रुतितोऽर्थमुपलभ्य रचितत्वम् ।

या०— **शुक्तिरजतज्ञानयोरिति** । शुक्तिज्ञानरजतज्ञानयोरित्यर्थः ॥ **वक्ष्येते हीति** । 'निर्दोषवाक्यमूलत्वादि'त्यस्मिन्नधिकरणे 'तन्मूलत्वात्स्मृतीनां चे'त्युत्तराधिकरणे चेति शेषः ।

श्री० — **साम्यं** समबलत्वम् । **समे** समबले प्रमाणे । 'मया सह वर्तते' इत्यन्वयः ।

च० — **शुक्तिरजतज्ञानयोरिति** । शुक्तिनिष्ठेदंत्वावच्छिन्नविशेष्यतानिरूपिततादात्म्यसंसर्गावच्छिन्नरजतनिष्ठप्रकारताशालिज्ञानस्य नेदं रजतमिति तादृशविशेष्यतानिरूपितरजतभेदनिष्ठप्रकारताशालिज्ञानस्य च परस्परं विरुद्धत्वेप्येकस्यैव विशेष्यतासमानाधिकरणत्वनियन्त्रितप्रामाण्येनापरस्य तद्व्यधिकरणप्रकारकत्वनिबन्धनाप्रामाण्येनोभयोः साम्यादित्यर्थः । **तदभावात्** । विरुद्धत्वाभावात् । **वक्ष्येते हीति** । प्रकृत एव नये निर्दोषवाक्यमूलत्वात्स्मृतीनां चेत्यादिनेत्युपस्कार्यम् ।

**सु० — ननु कथं पाशुपतादिस्मृतीनां निर्मूलत्वम्** । **यावता पशुपतिप्रभृतीनामाप्तिस्तत्र मूलमुदितेत्यत** आह न चेति ।

अनु० — न चाप्तिनिश्चयस्तत्र शक्यते व्यभिचारतः ॥

**तत्र शिवादिषु निश्चयोपायाभावादिति** शेषः । **ननूक्तमत्र 'सर्वगा हि ते' इति** । **मैवम्** । **'नित्यं वृद्धिक्षयापेतमि'त्यादिना परमपुरुषादितरेषां सार्वज्ञ्याभावस्योक्तत्वात्** । **श्रुत्यादीनां चोपचरितत्वात्** ।

**नन्वस्ति तावद्विष्णोरनुपचरितसार्वज्ञ्यम्** । **शिवादीनामप्युपायोपेयविषयम्** । **किं गङ्गावालुकाकीटसंख्यापरिज्ञानेन** । **सत्यम्** । **न तावत्तत्त्वज्ञानमेवाप्तिः** । **विप्रलम्भकेऽतिव्याप्तेरित्याह** व्यभिचारत इति ।

**शे०**— ननु 'न चाप्तिनिश्चयः' इति शिवादिष्वाप्तिनिश्चयस्याशक्यत्ववर्णनमनर्थकमित्यतः प्रागुपन्यस्तस्य पाशुपतादिस्मृतिनिर्मूलत्वस्य समर्थनार्थत्वान्नानर्थक्यमिति भावेन समूलत्वशङ्कापरिहारकतयोत्तरमूलं योजयितुं तां शङ्कामुत्थापयति **नन्विति** । 'न चाप्तिनिश्चयस्तत्रे'ति तच्छब्देनाव्यवहितप्रकृतहयादिपरामर्श इति भ्रान्तिं वारयति **तत्र शिवादिष्विति** । शिवादिष्वाप्तिनिश्चयो न शक्यते व्यभिचारादित्यनन्वितमित्यतो व्यभिचारादित्येतद्घटयितुं मध्ये उपयुक्तमाह **निश्चयोपायेति** । अत्र यद्यपि 'ननूक्तमत्र सर्वगा हि ते' इत्यनन्तरमेव 'सत्यं न तावत्तत्त्वज्ञानमेवाप्तिरि'त्यादिरूपेण 'व्यभिचारतः' इति मूलमवतारयितुं शक्यमिति मध्ये मैवमित्यादिग्रन्थो व्यर्थस्तथाऽपि तथात्वे सिद्धान्तिना रुद्रादीनां निरुपचरितं सार्वज्ञ्यमङ्गीकृतमिति प्रतीतिः स्यात्तच्च सिद्धान्तविरुद्धमित्याशङ्कानिरासाय तस्य सार्थक्यमिति ध्येयम् । ननु शिवादेरसार्वज्ञ्ये तत्सार्वज्ञ्यप्रतिपादकवाक्यानां का गतिरित्यत आह

**श्रुत्यादीनां चेति** ॥ **नन्वस्ति तावदिति** । ततश्च तदवताराणां बुद्धादीनां निरुपचरितसार्वज्ञसिद्धिरिति भावः ।

प० — **उक्तत्वादिति** । आद्याध्यायतृतीयपादान्ते । ननूक्तं श्रुतीतिहासपुराणप्रसिद्धं शिवादेः सार्वज्ञ्यमिति । तत्राह **श्रुत्यादीनां चेति** । विवक्षितार्थतत्त्वज्ञानं शिवादीनामस्तीति शङ्कते **नन्वस्तीति** ॥ **उपायोपेयेति** । साधनसाध्यविषयमित्यर्थः । तावता आप्तिमूलत्वं न प्राप्तमेवेति निराह **सत्यमित्यादिना** । व्यभिचारशब्दार्थं वदन्नेवाह **अतिव्याप्तेरित्याहेति** । निश्चय इतीतिशब्दस्य अथोच्येतेति पूर्वेणान्वयः ।

या० — **श्रुत्यादीनामिति** । शिवादिसार्वज्ञ्यप्रतिपादकानामिति शेषः ॥ **विष्णोरिति** । तेन तदवतारेषु बुद्धादिषु सार्वज्ञ्यसिद्धिरिति भावः ।

श्री० — ननु 'ईशानः सर्वविद्यानाम्'इत्यादिश्रुतिभिरेव रुद्रादीनां सार्वज्ञ्यं सिध्यतीति चेत्तत्राह **श्रुत्यादीनां चेति** । उपायोपेयविषयं स्वर्गादिरूपसाध्यतत्साधनविषयं सार्वज्ञ्यमित्यर्थः ।

च० — **श्रुत्यादीनाम्** । शिवादिसार्वज्ञ्यप्रतिपादिकानाम् ।

सु० — **अथोच्येत सर्वज्ञानां मोहाभावात्तन्मूलयो रागद्वेषयोरभावे विप्रलिप्साऽपि निवर्तत इत्याप्तिनिश्चय इति** । किं तत्र सर्वेऽपि तीर्थकरा आप्ता इत्यङ्गीकृत्यैवमनुमीयते । उत स्वस्वाभिमतमेकमेव । आद्यं दूषयति व्यभिचारत इति । **पञ्चरात्रादिस्मृतिप्रणेतरि नारायणे अस्याङ्गीकारस्य भग्नत्वादित्यर्थः । अभङ्गे वा सिद्धं नः समीहितम्** । यद्वा । व्यभिचारोऽन्योन्यविरोधः । **न हि परस्परविरुद्धवादिनः सर्वेऽप्याप्ता इत्यङ्गीकर्तुमुचितम्** । **वस्तुविकल्पप्रसङ्गात्** । **द्वितीयं पराचष्टे** व्यभिचारत इति । **यस्य तीर्थकरस्याप्तत्वं नाङ्गीक्रियते । तत्रैव सार्वज्ञ्यस्य व्यभिचारादित्यर्थः । न च तत्र सार्वज्ञ्यं नाङ्गीक्रियत इति युक्तम्** । **समानन्यायत्वात्** । **अथ हेतुं विशिंष्यात्तदा सन्दिग्धासिद्ध्यादिकम्** ।

शे० — **तीर्थकरा इति** । शास्त्रप्रणेतार इत्यर्थः । **सिद्धं नः समीहितमिति** । सत्प्रतिपक्षत्वं सिद्धमित्यर्थः । **वस्तुविकल्पेति** । वस्तुनि द्वैरूप्येत्यर्थः ॥ **समानन्यायत्वादिति** । सम्प्रतिपन्नतीर्थकरसार्वज्ञसाधकन्यायस्य तत्रापि समत्वादित्यर्थः । न्यायसाम्येऽपि तस्य सर्वज्ञत्वानङ्गीकारे सम्प्रतिपन्नस्यापि तन्न स्यादविशेषादिति भावः ॥ **अथ हेतुं विशिंष्यादिति** । विप्रलिप्साशून्यत्वे सति सर्वज्ञत्वादिति वा स्तोत्रकारपराकारकारूपहेतुदर्शनाभावे सति सर्वज्ञत्वादिति वाऽस्खलितवाक्त्वे सति सर्वज्ञ-

त्वादिति वा हेतुं विशिंष्यादित्यर्थः । सर्वत्र दोषमाह **सन्दिग्धासिद्ध्यादिकमिति** । पक्षीकृतेऽपि तीर्थकरे उक्तरूपसार्वज्ञ्यस्यानिश्चितत्वात्सन्दिग्धासिद्ध्यादिरित्यर्थः । आदिपदेन तीर्थकरान्तरे सन्दिग्ध-व्यभिचारपरिग्रहः ।

**स०** — **तीर्थकराः** शास्त्रकर्तारः । **अस्माङ्गीकारस्येति** । सर्वेऽपि तीर्थकरा आप्ताः इत्यस्ये-त्यर्थः । ननु सार्वज्ञ्यमात्रस्य हेतुत्वानङ्गीकारात् आप्तिप्रयोजकसार्वज्ञ्यस्यैव च हेतुत्वेन विवक्षणात् न व्यभिचार इति शङ्कते- **अथेति** । सार्वज्ञ्यरूपहेतोः आप्तिप्रयोजकत्वरूपं विशेषणं यद्युपेयेत इत्यर्थः । **सन्दिग्धासिद्धत्वादिकमिति** । आदिपदेन तीर्थकरान्तरे सन्दिग्धव्यभिचार इत्यर्थो गृह्यते ।

**प०** — **तीर्थकराः** । शास्त्रकराः ॥ **वस्तुविकल्पप्रसङ्गादिति** । शिवादिरूपं वस्तु जग-त्कारणं भवति न भवति चेति विकल्पस्यायोगादिति भावः । ननु शिव आप्तः रागद्वेषविदूरत्वे सति तत्त्वज्ञानित्वादिति वा विप्रलम्भहेतुप्रयोजनशून्यत्वे सतीति वा हेतुविशेषणान्न व्यभिचार इत्यत आह **अथेति** । आदिपदेन सन्दिग्धव्यभिचारग्रहः । पक्षे हेतुसन्देहस्येव विपक्षेपि तत्सन्देहस्यावर्जनादिति भावः ।

---

**या०** — **तीर्थकराः** शास्त्रकर्तारः ॥ **अथ हेतुं विशिंष्यादिति** । सर्वज्ञत्वादिति हेतुमना-प्ततीर्थकरव्यतिरिक्तत्वेन विशिंष्टं कुर्यादित्यर्थः ॥ **सन्दिग्धासिद्ध्यादिकमिति** । आदिपदेन तीर्थ-करान्तरे सन्दिग्धव्यभिचारो ग्राह्यः ।

**श्री०** — **एवमिति** । शिवादय आप्ताः सर्वज्ञत्वादित्यनुमीयत इत्यर्थः ॥ **भग्नत्वादिति** । सत्यपि सर्वज्ञत्वे आप्तत्वाभावादिति भावः । ननु कथमस्मदभिप्रायमबुद्ध्वा व्यभिचारश्चोद्यते । यतो-ऽस्माभिस्तेषामप्याप्तत्वमङ्गीकृतमित्यत आह **अभङ्गेति** ॥ **समीहितमिति** । आप्तभूतनारायणप्रणीतत्वेन पञ्चरात्रप्रामाण्यं सिद्धमित्यर्थः ॥ **वस्त्विति** । तत्तदाप्तप्रणीतशास्त्रानुसारेण रुद्रादिवस्तूनां कदाचित्सर्वो-त्तमत्वं कदाचिदपकृष्टत्वं च प्राप्तमित्यर्थः ॥ **न च तत्रेति** । तथा च हेतोरेवाभावान्न व्यभिचार इति भावः ॥ **समानेति** । स्वाभिमतस्यैकस्य सार्वज्ञ्यसाधने यो न्यायः प्रकारः स इतरस्यापि सार्वज्ञ्यसाधने तुल्य इति स एव व्यभिचार भावः ॥ **सन्दिग्धेति** । तथा च विमत आप्तस्तीर्थकरव्यतिरिक्तत्वे सति सर्वज्ञत्वादित्यनुमाने यदि पक्षीभूतस्तीर्थकरः, अनाप्तोऽसर्वज्ञो वा स्यात्तदा सन्दिग्धविशेषणविशेष्या-सिद्धिः । आदिपदेन तीर्थकरान्तरे सन्दिग्धव्यभिचारो द्रष्टव्यः ।

च०— **तीर्थकराः** । शास्त्रप्रणेतारः । सरहरेत्यादिवत् षष्ठ्यन्तस्य कृदन्तेन वृत्तिः । **समीहितम्** । सत्प्रतिपक्षत्वम् । **वस्तुविकल्पप्रसङ्गादिति** । शिवादिवस्तुषु जगत्कारणत्व-तदभावरूपविरुद्धधर्मसमावेशप्रसङ्गादित्यर्थः । **समानन्यायत्वादिति** । बहुव्रीहिप्रकृतिको भाव-प्रत्ययः । सार्वज्ञ्यसाधकन्यायस्य संप्रतिपन्नतीर्थक इव व्यभिचारनिरूपकाधिकरणेपि चेदित्यर्थः । एवमपि तस्य तत्रानुपगतौ संप्रतिपत्तिगोचरेपि तदनुपगतिप्रसङ्गादिति भावः । **अथ हेतुं विशिंष्यादिति** । रौधादिकस्य शिषेर्विधिलिङि यासुटः ङित्त्वेन श्नमो रलोपेऽनुस्वारागमे च निष्पद्यते । सार्वज्ञ्येनासत्वे साध-नीये दर्शितानैकान्त्यव्युदसनाय हेत्वंशे सामानाधिकरण्यप्रत्यासत्त्या विप्रलिप्साभाववैशिष्ट्यस्य विप्रलम्भ-हेतुग्रन्थकृदभिप्रास्यमानस्त्रोपकारपरापकारदर्शनाभावविशेषितहेतोः संदिग्धासिद्धिर्व्यभिचारनिरूपकाधि-करणे हेतुविशेषणसंदेहेन विशिष्टसंदेहात्संदिग्धानैकान्त्यं चेत्यर्थः । न वैशिष्ट्यस्यास्खलितवाक्त्ववैशिष्ट्यस्य निवेशं कुर्यादित्यर्थः । **संदिग्धासिध्यादिकमिति** । पक्षीकृतशास्त्रप्रणेतर्येव हेतुशरीरघटकोक्तविशे-षणसंदेहाधीना तद्विशेषितहेतोः संदिग्धासिद्धिर्व्यभिचारनिरूपकाधिकरणे हेतुविशेषणसंदेहेन विशिष्ट-संदेहात्संदिग्धानैकान्त्यं चेत्यर्थः ।

सु०— **यदप्युक्तं ज्ञानेच्छाप्रयत्नस्थानकरणपाटवानि तावदुपदेशमात्रेण निश्चीयन्त इति । तन्न । अपटुकरणानामप्युपदेशदर्शनेन व्यभिचारादित्याह** व्यभिचारत इति । **उपदेश-विशेषणे चोक्तो दोषः । निश्चीयतां ज्ञानम्, तस्य याथार्थ्यं तु कुतः । अभ्यासदशापन्नोऽयम् अर्थोऽस्येति सामान्यनिश्चये सति तत्सिद्धिरिति नेत्याह** व्यभिचारत इति । व्यभिचारः **विप्रकर्षः; तेषामेव सन्निधानं दुर्लभमस्मदादीनां, दूरे तदीयाभ्यासावधारणमिति भावः । विनेयवचनपरम्परया तदवधारणमिति चेत् (न) । तीर्थकरान्तरे व्यभिचारादित्याह** व्यभिचारत इति ।

**तासु तासु स्मृतिष्वभिनिविष्टाः सर्वेऽपि हि तं तमाचार्यं तत्र तत्रार्थेऽभ्यासवन्तमेवा-चक्षते । न च तदीयं ज्ञानं यथार्थमेवाङ्गीकर्तुं शक्यं, स्वसिद्धान्तविरोधित्वात् । अन्यथा स्वदीयसिद्धान्तस्यावास्तवत्वापातादित्याह** व्यभिचारत इति । व्यभिचारः **विरोधः । इच्छाऽपि विप्रलिप्सा कुतो नेति वाच्यम् । स्वोपकारपरापकाररूपहेतुदर्शनाभावादिति चेत् तत्किं स्मृतिप्रणेतारस्सर्वेऽपि न विप्रलम्भकाः । अद्धेति चेत् । अस्य नियमस्य बुद्धादिषु भग्नत्वा-दित्याह** व्यभिचारत इति । **नियमे च स्वव्याघातः । यस्य कस्यापि विप्रलम्भकत्वे, हेतुदर्शना-भावस्य तत्रैव व्यभिचारः । न हि तत्तत्पुरुषविशेषानुसंहितास्ते ते प्रयोजनविशेषाः पिशितन-**

यनैरस्मदादिभिरवधारयितुं शक्यन्त इत्याशयेनाह व्यभिचारत इति । केनापि प्रमाणेन हेतूपलम्भाभावोऽविप्रलम्भहेतुरिति चेन्न । सन्दिग्धत्वात् । प्रयोजनाभावोऽविप्रलम्भहेतुः । प्रयोजनाभावश्च परवञ्चनस्यापुरुषार्थत्वादतत्साधनत्वाच्च निश्चीयत इति चेन्न । सम्प्रतिपन्नविप्रलम्भकेषु व्यभिचारादित्याह व्यभिचारत इति । अपुरुषार्थमपि पुरुषार्थतया विभ्रम्य वञ्चयत्ययमाविति चेत् । किं तावता । प्रकृतस्तु विवेकितया नैवमिति चेन्न । तीर्थकरान्तरे अविद्यमानस्य विवेकस्यास्मिन्नवधारणानुपपत्तेः ।

अथ विग्रहिणोपदेशार्थं प्रवृत्त्या विप्रलम्भाभावोऽनुमीयत इति चेन्न । बुद्धादिषु तत्साम्येन व्यभिचारादित्याह व्यभिचारत इति ।

अथ ते न तथा, किन्त्वयोग्यजनव्यामोहनार्थमिति चेत् । प्रकृतोऽपि न तथेति कुतो निश्चितम् । निश्चयोपायस्येतरत्रापि तुल्यत्वात् ।

शे० — ननु नोपदेशमात्रं हेतुः किन्तु पटुकरणकर्तृकोपदेश एवेति कथं व्यभिचार इत्यत आह **उपदेशविशेषणे चेति । उक्तदोष इति ।** पक्षेऽपि पटुकरणकर्तृकोपदेशत्वस्यानिश्चयात्सन्दिग्धासिद्ध्यादिकमित्यर्थः ॥ **विनेयवचनपरम्परयेति ।** शिष्यवचनपरम्परयेत्यर्थः । 'विनेयो वचनग्राह्य' इत्यभिधानात् ॥ **अन्ययेति ।** स्वसिद्धान्तविरोधिनोऽपि तस्य यथार्थत्वे विरुद्धयोर्द्वयोरपि याथार्थ्यासम्भवात्स्वसिद्धान्तस्यायाथार्थ्यं स्यादित्यर्थः । किं सर्वेऽपि स्मृतिप्रणेतारो न विप्रलम्भका इति नियमोऽभिप्रेत उत कश्चिद्विप्रलम्भकोऽस्तीति विकल्पं मनसि निधायाद्यं पृच्छति **तत्किमिति ॥ अस्य नियमस्येति ।** बुद्धादिषु हेतुदर्शनाभावे सत्यप्यविप्रलम्भकत्वाभावेन स्वोपकारपरापकाररूपहेतुदर्शनाभावस्यापि विप्रलम्भकत्वेन व्याप्तेर्भग्नत्वादित्यर्थः । ननु बुद्धादीनामप्यविप्रलम्भकत्वान्न तत्रोक्तनियमभङ्ग इत्यत आह **नियमे चेति ।** हेतुदर्शनाभावस्याविप्रलम्भकत्वेन नियमे हेतुदर्शनाभाववत्सु अविप्रलम्भकत्वप्राप्त्या तद्विरुद्धवादिनस्त्वदीयाचार्यस्य यदविप्रलम्भकत्वं प्रतिज्ञातं तद् व्याहतं स्याद्विरुद्धवादिनोरुभयोरासत्वायोगादित्याशयः । द्वितीये त्वाह **यस्य कस्यापीति ।** अतीन्द्रियहेतुभिर्विप्रलम्भोपपत्तेरप्रयोजकश्च हेतुदर्शनाभाव इत्याशयेनाह **न हीति ।** यद्वा कथं तत्र हेतुदर्शनाभाव इत्यत आह **न हीति ॥ पिशितनयनैरिति ।** चर्मचक्षुर्भिरित्यर्थः । प्रत्यक्षेण तत्तत्पुरुषविशेषानुसंहितप्रयोजनविशेषानवधारणेऽप्यनुमानादिना तन्निश्चयान्न तत्र सर्वथा हेतूपलम्भाभाव इति कथं व्यभिचार इति शङ्कते **केनापीति ।** एवं तर्हि माऽस्तु व्यभिचारः पक्षीकृतेऽपि तीर्थकरे प्रत्यक्षेण हेतूपलम्भाभावेऽपि केनापि प्रमाणेन हेतूपलम्भाभावस्यानिश्चितत्वात्सन्दिग्धासिद्धिः स्यादित्याह **सन्दिग्धत्वादिति ।** गूढाभिसन्धिः

शङ्कते **अपुरुषार्थमपीति** । अविदिताशय इव परिहरति **किं तावतेति** । वस्तुतोऽपुरुषार्थमपि पुरुषार्थत्वेन भ्राम्यतीत्येतावता प्रयोजनाभावलक्षणहेतुसिद्धेस्तत्रानपायादुक्तहेतोर्व्यभिचारतादवस्थ्यमिति भावः । ननु यथा कथञ्चिदप्युद्देश्याभाव एवाविप्रलम्भकत्वे हेतुत्वेनाभिमतः । न प्रयोजनाभावमात्रं सम्प्रतिपन्नविप्रलम्भकेषु परवञ्चनस्य भ्रान्त्याऽप्युद्देश्यस्य सत्त्वेन तदभावाभावान्न व्यभिचारः, प्रकृतशास्त्रकर्तुश्च विवेकित्वेन परवञ्चनस्यानुद्देश्यत्वात् तस्मिन्निवक्षितहेतुः सम्भवतीति स्वाशयमुद्घाटयति **प्रकृतस्त्विति** । **अथ ते न तथेति** । ते बुद्धादयो विश्वहितोपदेशाय न प्रवृत्ता इत्यर्थः । एवं तर्हि माऽस्तु व्यभिचारः सन्दिग्धासिद्धिस्तु स्यादेवेत्याह **प्रकृतोऽपीति** बुद्धादिवदस्याप्ययोग्यजनव्यामोहनार्थमेव प्रवृत्तत्वसम्भवान्न विश्वहितार्थं प्रवृत्तत्वसिद्धिरिति भावः । ननु शिवप्रणीतागमेन वा विनेयवचनपरम्परया वा तीर्थकरत्वादेव वा प्रकृतस्य विश्वहितोपदेशार्थं प्रवृत्तत्वनिश्चय इत्यतस्तर्हि बौद्धागमेन वा विनेयवचनपरम्परया वा तीर्थकरत्वादेव वा बुद्धादीनामपि विश्वहितोपदेशार्थं प्रवृत्तत्वसिद्ध्यापत्त्या व्यभिचारतादवस्थ्यमेवेत्याशयेनाह **निश्चयोपायस्येति** ।

म० — ननु नोपदेशमात्रं हेतुः येनापटुकरणानामप्युपदेशसंभवेन तत्र व्यभिचारः स्यात्, किं नाम । पटुकरणकर्तृकोपदेश एवेति न व्यभिचार इत्यत आह **उपदेशविशेषणे चेति** । पटुकरणकर्तृकत्वं यदुपदेशरूपहेतौ विशेषणमुपादीयत इत्यर्थः । **उक्तो दोष इति** । पक्षेऽपि पटुकरणकर्तृकोपदेशत्वस्यानिश्चयात् संदिग्धासिद्ध्यादिकमित्यर्थः । **विनेयवचनेति** । विशेषेण नीयन्ते प्रेर्यन्ते ते विनेयाः शिष्याः, तद्वचनपरम्परयेत्यर्थः । **अन्यथेति** । स्वसिद्धान्तविरोधिनोऽपि तस्य च यथार्थत्वे विरुद्धयोर्द्वयोरपि याथार्थ्यासम्भवात् स्वसिद्धान्तस्यायथार्थत्वं स्यादित्यर्थः । **अस्य नियमस्येति** । स्वोपकार–परोपकाररूपहेतुदर्शनाभावस्याविप्रलम्भकत्वेन व्याप्तिर्नोपपद्यते । बुद्धादिषु व्यभिचारात् । सत्यपि तत्र हेतुदर्शनाभावरूपहेतौ विप्रलम्भकत्वस्यैव सत्त्वादित्यर्थः । ननु च हेतुदर्शनाभाववत्सु बुद्धादिष्वपि अविप्रलम्भकत्वस्याङ्गीकृतत्त्वेन साध्यस्यापि सत्त्वात् न व्यभिचार इत्यत आह **नियमे चेति** । स्वसिद्धान्तविरोधित्वेनाविप्रलम्भकत्वानुपपत्तेः । अन्यथा तद्विरोधित्वेन स्वसिद्धान्तस्य विप्रलम्भमूलकत्वं स्यात् । विरुद्धयोरुभयोरविप्रलम्भमूलकत्वानुपपत्त्या एकस्याविप्रलम्भमूलकत्वाभ्युपगमे अपरस्य विप्रलम्भमूलकत्वस्यैवाभ्युपेत(य)त्वेन पुनरविप्रलम्भमूलकत्ववचनस्य व्याहतत्वादिति भावः । **पिशितनयनैरिति** । चर्मचक्षुर्भिरित्यर्थः । प्रत्यक्षेण तत्तत्पुरुषविशेषानुसंहितप्रयोजनविशेषानवधारणेऽपि अनुमानादिप्रमाणेन तन्निश्चयात् सर्वथा प्रमाणेन हेतूपलम्भाभावस्यैव हेतुत्वान्न व्यभिचार इत्यत आह **केनापीति** । **सन्दिग्धत्वादिति** । पक्षीकृतेऽपि तीर्थकरे प्रत्यक्षेण हेतुदर्शनाभावेऽपि सर्वथा प्रमाणेन

हेतुदर्शनाभावस्य सन्दिग्धत्वादित्यर्थः। **प्रकृतस्त्विति**। तथा च विवेकित्वे सति प्रयोजनशून्यत्वं हेतुरित्युक्तं भवति। **अथ ते न तथेति**। विश्वहितोपदेशाय प्रवृत्तिमन्तो नेत्यर्थः। अथ वा ते सन्निहिततया बुद्धिस्था उपदेशा न तथा विश्वहितप्रयोजना न भवन्तीत्यर्थः। ननु शिवप्रणीतागमेषु विश्वहितोपदेशायैव अस्य प्रवृत्तिरित्युक्तत्वात् तत्प्रवृत्तेः विश्वहितसाधनत्वनिश्चय इत्यत आह **निश्चयोपायस्येति**। बुद्धादिप्रणीतागमेषु बुद्धादीनामपि विश्वहितोपदेशायैवेषा प्रवृत्तिरित्युक्तत्वेन व्यभिचारादित्यर्थः।

प० — **उपदेशविशेषणे चेति**। अपटुकरणकोपदेशविलक्षणो(पटुकरणको)पदेशत्वादित्यादिरूपेणोपदेशविशेषणे सन्दिग्धासिद्ध्यादिदोष इत्यर्थः॥ **विनेयेति**। शिष्यवचनपरम्परया रुद्रादीनामुपदिष्टेऽभ्यासपाटवावधारणमित्यर्थः। साध्यस्यापि सत्त्वान्न व्यभिचार इत्याशङ्क्य निराह **न चेति**। ज्ञानयाथार्थ्यं निरस्येच्छायाथार्थ्यं च निराह **इच्छेति**। **नियमे चेति**। बुद्धादिष्वपि अविप्रलम्भनियमे च तदभिमतं वस्तु न जगत्कारणम्, किन्तु शिवादिरेवेत्यादिस्वोक्तिः व्याहन्येतेत्यर्थः॥ **हेतुदर्शनेति**। स्वोपकारादिरूपहेतुदर्शनाभावस्येत्यर्थः। तत्र हेतोरेवाभावान्न व्यभिचार इत्यतस्तत्र हेतुसत्त्वं व्यनक्ति **न हीति**। पिशितनयनैर्मांसचक्षुष्करिति बहुव्रीहिः। ननु शिवादीच्छा न विप्रलिप्सारूपा केनापि प्रमाणेनानुपलभ्यमानविप्रलम्भनहेतुकत्वादिति साध्यते अतो न दोष इति शङ्कते **केनापीति**। हेतुस्वरूपं वदन्नेव तस्य सन्दिग्धत्वं निरसितुं निश्चितत्वं शङ्कते **प्रयोजनेति**। **अतत्साधनत्वादिति**। पुरुषार्थासाधनत्वाच्चेत्यर्थः॥ **व्यभिचारादित्याहेति**। प्रयोजनाभावहेतोरविप्रलम्भं प्रति व्यभिचारादित्याहेत्यर्थः। यद्वा अपुरुषार्थत्वादिति हेतोर्व्यभिचारादित्याहेत्यर्थः॥ **विभ्रम्येति**। भ्रान्त्वेत्यर्थः। अत्र विभ्रम्येति पाठः साधुः। न तु विभ्राम्येति। ल्यपो झलादित्वाभावेन 'अनुनासिकस्य क्विझलोः क्ङिति'तिदीर्घप्राप्तेरभावात्। न च स्थानिवद्भावः। तत्र अनल्विधावित्युक्तेः। अस्य च झलादावित्यल्विधित्वात्। न च समासाद्यपेक्षितबहिरंगल्यबपेक्षया क्त्वाप्रत्ययनिमित्तान्तरंगदीर्घत्वमेव ल्यबादेशात्पूर्वं भवत्विति शङ्क्यम्। अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यप् बाधत इत्युक्त्या ल्यप एव पूर्वं प्राप्तेः। णिजन्तत्वं त्वत्राशक्यशङ्कम्। तस्मिन्नपि पक्षे 'मितां ह्रस्वः' इति ह्रस्वेन भाव्यतया ल्यपि लघुपूर्वादि'त्ययादेशे विभ्रमय्येति भाव्यत्वाच्च। विभ्राम्यन्निति क्वचित्पाठः। तदा तु न क्लेशः॥ **असाविति**। सम्प्रतिपन्नविप्रलम्भक इत्यर्थः। तथाचापुरुषार्थत्वहेतुस्तत्र नेति न व्यभिचार इति भावः।

या० — **उपदेशविशेषणे चेति**। आप्तकृतत्वेनोपदेशविशेषण इत्यर्थः। **विनेयाः** शिष्याः। किं सर्वेऽपि स्मृतिप्रणेतारो न विप्रलम्भका इति नियममङ्गीकृत्यैवमुच्यते उत यस्य कस्यापि स्मृतिप्रणेतुर्विप्रलम्भकत्वमङ्गीकृत्येति विकल्पं मनसि निधायाऽद्यं पृच्छति **तत्किं सर्वेऽपीति**। ननु बुद्धाऽदयोऽ-

प्यविप्रलम्भका एवातो न नियमभङ्ग इत्यत आह **नियमे चेति** । हेतुदर्शनाभावस्य अविप्रलम्भकत्वेन नियमे हेतुदर्शनाभाववत्सु बुद्धादिष्वप्यविप्रलम्भकत्वप्राप्त्या तद्विरुद्धवादिनस्त्वदीयाचार्यस्य यदविप्र-लम्भकत्वं प्रतिज्ञातं तद्व्याहतं स्यात् । विरुद्धवादिनोरुभयोराप्तत्वायोगादित्याशयः । द्वितीये त्वाह **यस्य कस्यापीति** । अतीन्द्रियहेतुभिर्विप्रलिप्सोपपत्तेर्हेतुदर्शनाभावोऽप्रयोजकश्चेत्याशयेनाह **न च तत्तत्पुरुषेति** । **पिशितनयनैः** मांसचक्षुष्कैः दिव्यनेत्रशून्यैरिति यावत् । गूढाशयः शङ्कते **अपुरुषार्थ-मपीति** । अविदिताशय इव परिहरति **किं तावतेति** । उक्तहेतोर्व्यभिचार एवमपि न परिहृत इति भावः । ननु न वञ्चनस्यापुरुषार्थत्वं हेतुर्येन व्यभिचारः स्यात्किन्तु तस्य पुरुषार्थत्वप्रमाभाव एवातो नोक्तव्यभिचार इति पूर्वपक्षी स्वाशयमुद्घाटयति **प्रकृतस्त्विति** । ननु शिवादयो नायोग्यजनव्यामोहनाय प्रवृत्तिमन्तः किन्तु विश्वहितोपदेशार्थमेवेति निश्चयस्य तदागमेन तच्छिष्यवचनेनानुमानेन वा सम्भ-वात्कथमनिश्चय इत्यत आह **निश्चयोपायस्येति** । एवंविधनिश्चयोपायस्य बुद्धादिष्वपि सम्भवादिति भावः ।

श्री० — **निश्चीयन्त इति** । तथा च विमतो ज्ञानेच्छादिमान् उपदेष्टृत्वादित्यनुमानेनेत्यर्थः । ननु नोपदेशमात्रं हेतुर्येनापटुकरणानामप्युपदेशदर्शनेन व्यभिचारः स्यात्किन्नाम पटुकरणकर्तृकोपदेश एवेति न व्यभिचार इत्यत आह **उपदेशविशेषणे चेति** । यदि उपदेशे पटुकरणकर्तृकत्वरूपं विशेषणमुपपादीयत इत्यर्थः ॥ **उक्तेति** । पटुकरणकर्तृकोपदेशत्वस्यानिश्चयात्सन्दिग्धासिद्ध्यादिक-मित्यर्थः । **ज्ञानं** विप्रतिपन्नस्येति शेषः । **तस्य** ज्ञानस्य । **तत्सिद्धिः** तदीयज्ञानस्य याथार्थ्यसिद्धिः ॥ **विनेयेति** । विशेषेण नीयन्ते प्रेर्यन्त इति विनेयाः शिष्यास्तेषां यद्वचनमस्मिन्नर्थेऽस्मद्गुरूणामतीवाभ्यास इत्येवं रूपं तत्परम्परया तदीयाभ्यासावधारणं युक्तमित्यर्थः **अन्यथा** त्वत्सिद्धान्तविरोधिनोऽपि तदीय-ज्ञानस्य याथार्थ्ये ॥ **विरोध इति** । तदीयज्ञानस्य याथार्थ्ये स्वत्सिद्धान्तस्य तद्विरोध इत्यर्थः ॥ **हेतु-दर्शनेति** । विप्रलिप्साहेतुदर्शनेत्यर्थः । **पिशितनयनाः** मांसमयचक्षुष्काश्चर्मचक्षुष्का दिव्यदृष्टिशून्या इति यावत् । तैरित्यर्थः । **सन्दिग्धत्वादिति** । पक्षीकृते तीर्थकरे प्रत्यक्षेण हेतुदर्शनाभावेऽपि तदति-रिक्तेन केनचित्प्रमाणेन तद्दर्शनसम्भवात्केनापि प्रमाणेन हेतूपलम्भाभावः सन्दिग्ध इति सन्दिग्धासिद्धि-रित्यर्थः । हेतुभूतं प्रयोजनाभावमुपपादयति **प्रयोजनाभावश्चेति । तदसाधनत्वात्** पुरुषार्थासाधनत्वात् । तथा च यदि विप्रतिपन्नस्तीर्थकरो विप्रलम्भकस्तर्हि विप्रलम्भनेन तस्य किञ्चित्प्रयोजनं वाच्यम् । न हि विप्रलम्भनं स्वयमेव प्रयोजनरूपम् । न वा तत्साधनम् । तस्माद्विप्रलिप्सायाः प्रयोजनाभावात्प्रयो-जनाभावेनाविप्रलिप्साऽनुमीयत इति हृदयम् ॥ **सम्प्रतिपन्नेति** । प्रयोजनाभावेऽपि विप्रलब्धृत्वेन

सम्मतेष्वित्यर्थः । **विभ्राम्य** भ्रान्त्या ज्ञात्वेत्यर्थः । **असौ** सम्प्रतिपन्नविप्रलम्भकः । **प्रकृतस्तीर्थकरः** ॥ **नैवमिति** । अपुरुषार्थं पुरुषार्थतया ज्ञात्वा न वञ्चयतीत्यर्थः । **तत्साम्येन** विश्वहितोपदेशाय प्रवृत्तिसाम्येन ॥ **ते न तथेति** । **ते** बुद्धादय**स्तथा** विश्वहितोपदेशाय प्रवृत्ता नेत्यर्थः । व्यामोहनार्थं प्रवृत्ता इति शेषः । **प्रकृतोऽपि तीर्थकर**स्त्वदभिमतः ॥ **न तथेति** । बुद्धादिवदयोग्यजनव्यामोहनाय प्रवृत्तो न, किन्तु विश्वहितार्थमेवेति कुतो निश्चय इत्यर्थः । ननु शिवप्रणीतागमेषु शिवस्य विश्वहितोपदेशायैव प्रवृत्तिरित्युक्तेस्तत्प्रवृत्तेर्विश्वहितसाधनत्वं निश्चीयत इति चेत्तत्राह **तुल्यत्वादिति** । बुद्धादिप्रणीतागमेषु बुद्धाऽदीनामपि विश्वहितोपदेशायैव प्रवृत्तिरित्युक्तत्वेन विप्रलम्भाभावसाधकविश्वहितोपदेशाय प्रवृत्तिरूपहेतोर्बुद्धादिषु व्यभिचार इति भावः ।

च० — ननु पटुकरणकर्तृकत्वांशस्य हेतुतावच्छेदकघटकत्वोपगमेन तद्घटितहेतुतावच्छेदकपर्याप्तावच्छेदकताकसाध्याभावाधिकरणनिरुपिताधेयताकत्वविरहात् द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादिवन्नानैकान्त्यावकाश इत्यत आह **उपदेशविशेषणे चेति** । उक्तदिशा सन्दिग्धासिद्धिः संदिग्धानैकान्त्यञ्चेत्यर्थः । 'विनेयशब्दः शिष्यवचनः । विनेयो वचनग्राहीत्यमरोक्तेः । **अन्यथा** त्वत्सिद्धान्तविरोधिनोपि याथार्थ्ये । **अयाथार्थ्यापातात्** अयाथार्थ्यापातात् । स्मृतिप्रणेतृत्वावच्छेदेन विप्रलंभकत्वाभावोऽभ्युपेयते तत्सामानाधिकरण्येन वेति कल्पद्वयीमभिसन्दधान आद्यं प्रत्याचष्टे **अस्य नियमस्येति** । स्वोपकारपरापकाररूपहेतुदर्शनाभावनिष्ठाविप्रलंभकतानिरूपितव्याप्तेरित्यर्थः । **नियमे चेति** । उक्तहेतुदर्शनाभावनिष्ठाविप्रलम्भकतानिरूपितव्याप्त्युपगमे चेत्यर्थः । तथा सति तादृशहेतुदर्शनाभावविशेषितबुद्धादिष्वविप्रलंभकता प्रासांक्षीदिति तत्प्रतीपाभिधायिभवदीयाचार्यस्य प्रतिज्ञाताविप्रलंभकता व्याहन्येत परस्परप्रतीपाभिधायिनोर्द्वयोराप्तत्वायोगादिति भावः । द्वितीयकल्पं पराकुरुते **यस्यकस्यापीति** । विप्रलम्भहेतूनामतीन्द्रियत्वेन तद्दर्शनाभावः सूपपाद इति तत्र हेतुसत्त्वमनर्गलमित्याह **न हीति** । **अनुसंहिताः** ज्ञाताः । **पिशितनयनैः** मांसचक्षुष्कैः । विप्रलम्भहेतुकर्मकदर्शनत्वरूपविशेषधर्मावच्छिन्नाभावस्य हेतुत्वावधारणेनानुमितिसाधारणज्ञानत्वावच्छिन्नाभावस्य हेतुत्वाश्रयणान्न क्षतिरित्याशङ्कते **केनापीति** ॥ **संदिग्धत्वादिति** । पक्षीकृतशास्त्रप्रणेतर्यपि तादृशसामान्यधर्मावच्छिन्नाभावानिर्णयेन संदिग्धासिद्धिरित्यर्थः । पूर्ववादी स्वाशयमस्फुटीकुर्वाणः शङ्कते । **अपुरुषार्थमपीति** । आशयमनभिसंदधान इव परिहरति **किं तावतापीति** । शुक्तिं रजतत्वेन भ्राम्यतीत्येतावता न शुक्ती रजतं भवतीत्यपुरुषार्थेपुरुषार्थताभ्रमेप्यपुरुषार्थतानपायादनैकांत्यतादवस्थ्यमिति भावः । ननु वस्तुतः प्रयोजनत्वावच्छिन्नप्रतियोगिताकाभावस्य हेतुता नैवोपेयते । किन्तु प्रयोजनत्वप्रकारकप्रतीतिविषयत्वावच्छिन्नाभावस्यैव संप्र-

तिपन्नविप्रलम्भकेषु वास्तवप्रयोजनाभावसत्त्वेपि प्रयोजनत्वोपरक्तविपर्यासगोचरसमवधानेन तद्धर्मावच्छिन्नाभावविरहान्न क्षतिरिति स्वाशयं स्फुटीकरोति **प्रकृतस्त्विति । अथ ते न तथेति ।** सर्वनाम्ना बुद्धादयः परामृश्यन्ते । नञ्समभिव्याहृतथालन्तेन विश्वहितोपदेशार्थं न प्रावर्तिषतेति प्रत्याख्यते । अनैकांत्याप्रसंजनेपि संदिग्धासिद्धिः प्रसज्ज्यत एवेत्याह **प्रकृतोपीति । निश्चयोपायस्य** शैवागमतद्विनेयवचनानुमानाद्यन्यतमस्य । **तुल्यत्वादिति ।** बौद्धागमतद्विनेयवचनानुमानाद्यन्यतमस्य तत्रापि सुवचत्वादिति भावः ।

**सु० — यदप्युक्तं प्रमाणान्तरसंवादान्मोहविप्रलिप्सयोर्निवृत्तिरिति तदसत् । प्रमाणान्तरं हि न तावत्प्रत्यक्षम् । अतीन्द्रियत्वाद्विप्रतिपन्नार्थस्य । अनुमानं चेद्व्यभिचारो बुद्धादिषु । आभासमेव तत् मदीयं त्वनुमानमेवेति चेन्न । यतो निवारयिष्यामस्तव (वचन)चमत्कारं मा त्वरिष्ठा इत्याशयेनाह** व्यभिचारत इति ।

**अथागमः स किं वेदादिरुत तद्विरुद्धं स्मृत्यन्तरमथवा स्वयूथ्यरचितं ग्रन्थान्तरम् । न प्रथमद्वितीयौ । विरोधित्वेन संवादासंभवादित्याह** व्यभिचारत इति । **नापि तृतीयः । बुद्धादिप्रणीतस्मृतीनामपि स्वयूथ्यपुरुषान्तरवचनसंवादित्वेन व्यभिचारादित्याह** व्यभिचारत इति । **तेऽपि सन्दिग्धाप्तभावा इति चेन्न । प्रकृतेष्वपि तन्निश्चयोपायाभावात् ।**

---

**शे० —** ननु पाशुपतादिशास्त्रप्रतिपाद्यस्य रुद्रादिकारणत्वादेरतीन्द्रियत्वेन प्रत्यक्षेण तदसिद्ध्या तेन संवादासम्भवेऽपि क्षित्यादिकं सकर्तृकं कार्यत्वादित्याद्यनुमानेन तत्सिद्ध्याऽनुमानसंवादः सम्भवतीत्यत आह **अनुमानं चेदिति ॥ व्यभिचारो बुद्धादिष्विति ।** शिवो मोहविप्रलिप्साशून्योऽनुमानसंवाद्यर्थप्रतिपादकशास्त्रप्रणेतृत्वादितिविवक्षितानुमाने बुद्धादिशास्त्रप्रतिपाद्यस्य जगत्क्षणिकत्वादेरपि यत्सत्तत्क्षणिकं यथा दीपादि; इत्याद्यनुमानसिद्धत्वात् । बुद्धादेरुक्तहेतुमत्त्वेऽपि मोहविप्रलिप्साशून्यत्वाभावाद्व्यभिचार इत्यर्थः ॥ **आभासमेवेति ।** 'आकाशे चाविशेषादि'त्यादिसूत्रोक्तप्रतिपक्षादिग्रस्तत्वेनोक्तानुमानस्याभासत्वेन तत्संवादस्याकिञ्चित्करत्वान्न तत्र व्यभिचार इत्यर्थः ॥ **अनुमानमेवेति ।** अनुकूलतर्कसनाथत्वेन कार्यत्वाद्यनुमानस्यानाभासत्वसिद्धेरित्यर्थः ॥ **निवारयिष्याम इति ।** 'पत्युरसामञ्जस्यादि'त्यधिकरणे दोषित्वाशरीरत्वादिसत्प्रतिपक्षग्रस्ततया त्वदनुमानस्याप्याभासत्वस्य वक्ष्यमाणत्वादिति भावः ॥ **विरोधित्वेनेति ।** अनेन मूले व्यभिचारपदं विरोधिपरमित्युक्तं भवति ॥ **तेऽपीति ।** स्वयूथ्यपुरुषा अपीत्यर्थः । तथा च तद्वचनस्य प्रामाण्यासिद्धेर्न बुद्धादिष्वागमसंवादितार्थप्रतिपादकत्वसिद्धिरिति न तत्र व्यभिचार इति भावः । एवं तर्हि माऽस्तु व्यभिचारः प्रकृतस्वयूथ्येष्वपि तन्निश्चयो-

पायाभावेन तेषामपि सन्दिग्धाप्तभावत्वात्तद्वचनस्यापि प्रामाण्यासिद्धेर्न शिवादीनामप्यागमसंवादितार्थ-प्रतिपादकत्वसिद्धिरिति हेत्वसिद्धिरपरिहार्यैवेत्याह **न प्रकृतेष्वपीति ।**

स० — **अनुमानं चेदिति ।** प्रमाणान्तरस्यानुमानरूपत्वे शिवः मोह-विप्रलिप्सारहितः अनुमानसंवाद्यर्थोपदेशकत्वादित्येव हेतोर्वक्तव्यत्वात् तस्य च अनुमानसंवाद्यर्थोपदेशके बुद्धादौ व्यभि-चारादित्यर्थः । **आभासमेवेति** । तथा च अनुमानसंवाद्यर्थोपदेशकत्वाभावान्न तत्र व्यभिचार इत्यर्थः । **निवारयिष्याम इति** । 'पत्युरसामञ्जस्यात्' इत्यधिकरणे अशरीरत्वादिसत्प्रतिपक्षेण त्वदनुमानस्याप्या-भासत्वस्य स्पष्टं वक्ष्यमाणत्वादित्यर्थः । **तेऽपि सन्दिग्धाप्तभावा इति** । बुद्धादिप्रणीतस्मृतीनां यत् पुरुषरचितवचनसंवादित्वं वर्तते, तस्य यूथ्याः सन्दिग्धाप्तभावा इत्यर्थः । तथा च आप्तस्वयूथ्यरचित-ग्रन्थान्तरसंवादित्वस्यैव हेतुत्वान्न व्यभिचार इति भावः । **प्रकृतेष्वपीति । तन्निश्चयोपायाभावात्** आप्तत्वनिश्चयोपायाभावादित्यर्थः । तथा च सन्दिग्धासिद्धिरिति भावः । तन्निश्चयोपायसत्त्वे च सन्दिग्धव्यभिचार इत्यपि द्रष्टव्यम् ।

प० — **विप्रतिपन्नार्थस्येति** । जगत्कारणत्वालौकिकश्रेयःसाधनत्वादिरूपार्थस्येत्यर्थः ॥ **अनु-मानं चेदिति** । लोकहितैषिभिरुपदिष्टत्वादाप्तोपदिष्टत्वादित्यादिरूपमित्यर्थः ॥ **निवारयिष्याम इति** । 'पत्युरसामञ्जस्यादि'त्यत्र । यद्वा 'अधिकारो हि सुलभः' इत्यादिना फलव्यभिचारस्य कर्त्रादिवैगुण्येन समाधातुमशक्यत्वस्य वक्ष्यमाणत्वेन तदभिप्रायेण निवारयिष्याम इत्युक्तम् ॥ **आगम इति** । प्रमाणा-न्तरमित्यनुकर्षः । **तद्विरुद्धं** पाशुपतादिविरुद्धम् ॥ **व्यभिचारत इतीति** । व्यभिचारोऽत्र विरोधो ध्येयः ॥ **तेपीति** । न केवलं बुद्धादयः किं तु बुद्धादियूथ्यपुरुषा अपीत्यर्थः ॥ **प्रकृतेष्वपीति** । पशुपतिप्रभृतिष्वपीत्यर्थः ।

या० — **अनुमानं चेदिति** । क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवत् । विप्रतिपन्ने पृथिव्युदके प्रयत्नवता धृते गुरुत्वे सत्यपातित्वात्सम्प्रतिपन्नवत् । क्षित्यादिकं प्रयत्नवद्विनाश्यं विनाशित्वात्सम्प्रति-पन्नवदित्यादिभिरनुमानैर्विश्वोदयस्थितिलयकर्तरि सामान्यतः सिद्धेऽस्मदादीनां तदसम्भवाद्भगवाञ्छिव एव परिशेषाज्जगज्जन्मादिकर्ता सिध्यतीति सामान्यसिद्धिपरिशेषरूपमनुमानं चेदित्यर्थः ॥ **व्यभिचारो बुद्धादिष्विति** । शिवो मोहविप्रलिप्साशून्योऽनुमानसंवाद्यर्थप्रतिपादकशास्त्रप्रणेतृत्वादिति विवक्षितस्य हेतोर्बुद्धादिषु व्यभिचार इत्यर्थः । तच्छास्त्रप्रतिपाद्यस्य जगत्क्षणिकत्वादेरपि यत्सत्तत्क्षणिकं यथा दीपादिकं सन्तश्चामी भावा इत्याद्यनुमानसिद्धत्वेन तस्याप्यनुमानसंवाद्यर्थप्रतिपादकशास्त्रप्रणेतृत्वादिति भावः ॥ **आभासमेवेति** । सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञाबाधितमित्यर्थः ॥ **यतो निवारयिष्याम**

इति । 'पत्युरसामञ्जस्यादि'त्यत्र त्वदीयानुमानमपि श्रुत्यादिबाधितमिति वक्ष्याम इति भावः । अत्र व्यभिचारत इत्येतत् आभिमुख्येन चरणाभावरूपयोगेन पक्षेऽसिद्धेरिति व्याख्येयम् ॥ **विरोधित्वेनेति ।** तथा च व्यभिचारत इत्यस्य विरोधादित्यर्थोऽत्राभिप्रेत इति ज्ञातव्यम् ।

श्री० — **प्रमाणान्तरं** संवादभूतं प्रमाणान्तरमित्यर्थः ॥ **विप्रतिपन्नार्थस्येति ।** शिवादेरसन्निहितत्वेन तदीयमोहविप्रलिप्साऽभावरूपस्य विप्रतिपन्नार्थस्यातीन्द्रियत्वेन तत्र प्रत्यक्षसंवादो नेत्यर्थः ॥ **अनुमानं चेदिति ।** शिवो मोहविप्रलिप्साशून्योऽनुमानसंवाद्यर्थप्रतिपादकशास्त्रप्रणेतृत्वादित्यनुमानं चेदित्यर्थः ॥ **आभासमिति ।** बुद्धादिप्रणीतशास्त्रस्य संवादिरूपं यत्सत्तत्क्षणिकमित्याद्यनुमानं प्रत्यभिज्ञाबाधितत्वादाभासमित्यर्थः ॥ **मदीयमिति ।** शिवप्रणीतशास्त्रस्य संवादि तु अनुमानमेव निर्दोषोपपत्तिरेवेत्यर्थः ॥ **तदविरुद्धमिति ।** वेदाविरुद्धं मन्वादिस्मृत्यन्तरमित्यर्थः । तद्विरुद्धमिति पाठे वेदविरुद्धं सांख्यादिस्मृत्यन्तरमित्यर्थः ॥ **सन्दिग्धेति ।** बुद्धादिप्रणीतस्मृतीनां संवादित्वेन यत्स्वयूथ्यरचितं ग्रन्थान्तरमुच्यते ते ग्रन्थान्तरकर्तारः स्वयूथ्या बुद्धसम्बन्धिन आप्तत्वेन संदिग्धा इति, न तद्वचनसंवादेन बुद्धादिस्मृतीनां विप्रलिप्सादिमूलकत्वाभावसिद्धिरित्यर्थः ॥ **प्रकृतेष्वपीति ।** शिवप्रणीतस्मृतीनां संवादित्वेन, यत्स्वयूथ्यरचितं ग्रन्थान्तरमुच्यते, ते ग्रन्थकर्तारः स्वयूथ्याः शिवसम्बन्धिनोऽप्याप्तत्वेन सन्दिग्धा इति न तद्वचनसंवादेन शिवस्मृतीनां विप्रलम्भादिमूलकत्वाभावसिद्धिरित्यर्थः ॥

---

च० — **अतीन्द्रियत्वादिति ।** पाशुपतादिशास्त्रप्रतिपाद्यस्य शिवादेर्जगत्कारणत्वादेरिन्द्रियपथमतिक्रांतत्वादिति भावः । **अनुमानं चेदिति ।** क्षित्यादिकं सकर्तृकं कार्यत्वादित्याद्यनुमानं चेदित्यर्थः । **बुद्धादिष्विति ।** शिवपक्षकमोहविप्रलिप्साराहित्यसाध्यकानुमानसंवाद्यर्थप्रतिपादकशास्त्रप्रणेतृत्वहेतुकानुमानस्य बुद्धादिष्वनैकांत्यमित्यर्थः । बुद्धादेरपि, 'यत्सत्तत्क्षणिकं यथा दीपादि । संतश्चामी भावाः' इत्याद्यनुमानसिद्धजगत्क्षणिकत्वादिप्रतिपादकशास्त्रप्रणेतृत्वरूपहेतुमत्तया तत्र च मोहविप्रलिप्साराहित्यलक्षणसाध्यविरहाद्व्यभिचार इति भावः । **आभासमेवेति ।** दर्शितानुमानस्याकाशे चाविशेषादिति योगाभिहितप्रतिरोधादिदूषितत्वरूपाभासत्वेन तत्संवादस्याकिञ्चित्करतया न तत्र अनैकान्त्यमित्यर्थः । प्रत्यभिज्ञाबाधि मित्यर्थः इत्यपि व्याकुर्वते । **अनुमानमेवेति ।** अनुकूलतर्कसानाथ्यापादितनिरवग्रहव्याप्तिकमित्यर्थः । **निवारयिष्याम इति ।** पत्युरसामञ्जस्यादिति नये । दोषित्वाशरीरत्वादिप्रतिरोधदूषिततया भवदीयानुमानमपि प्रतिविधास्याम इति भावः । **विरोधित्वेनेति ।** अनेन मौलंतसिलंत विरोधित्वतात्पर्यकमित्ययोजीत्यवसेयम् । **स्वयूथ्याः** स्वसमुदायप्रविष्टाः । **तेपि** तत्प्रविष्टा **अपि** । तथा च तदीयवचनस्यानवधृतप्रामाण्यकतया बुद्धादिष्वागमसंवादि-

तार्थप्रतिपादकत्वानिर्णीतेर्न तत्रानैकान्त्यमिति भावः। **प्रकृतेष्वपीति**। शिवादिष्वित्यर्थः। तथाच संदिग्धासिद्धिरिति भावः।

**सु०— यच्चोक्तं प्रवृत्तिसामर्थ्याद्व्यामोहविप्रलिप्सयोर्निरास इति। तदयुक्तम्। प्रवृत्तिसामर्थ्यं हि ततोऽर्थमवबुध्य प्रवृत्तस्य फलोपलम्भः। न च विप्रतिपन्नस्मृतिफलं स्वर्गापवर्गलक्षणं प्रत्यक्षेणेक्ष्यते। इन्द्रियाणां तादृगर्थाविषयत्वादित्याह** व्यभिचारत इति। **आभिमुख्येन चारोऽभिचारस्तदभावो व्यभिचारः। नाप्यनुमानेन। स्मृतित्वादेर्व्यभिचारित्वात्। अन्यस्य चाभावादित्याह** व्यभिचारत इति। **अथागमेन। सोऽपि न तावत्सम्प्रतिपन्नोऽस्ति। न च विप्रतिपन्नेन। तस्य बौद्धादिविषयेऽपि विद्यमानत्वेन व्यभिचारादित्याह** व्यभिचारत इति।

शे०— **आभिमुख्येन चार इत्यादि**। इदं च तात्पर्यकथनं, न समासप्रदर्शनम्। समासस्तु विगत अभिचारो व्यभिचार इति प्रादिसमास एव द्रष्टव्यः। तेन व्यभिचार इति पुल्लिङ्गोपपत्तिः। अस्तु तर्ह्यनुमानेनैव विप्रतिपन्नस्मृतिफलस्य स्वर्गापवर्गलक्षणस्योपलम्भ इत्यतस्तत्किं विप्रतिपन्ना स्मृतिः समर्थप्रवृत्तिजनिका स्मृतित्वादाप्तवाक्यत्वादित्याकारं स्यादन्यद्वेति विकल्प्याद्यं दूषयति **स्मृतित्वादेरिति**। बौद्धादिस्मृतौ स्मृतित्वाप्तवाक्यत्वयोः सत्त्वेऽपि समर्थप्रवृत्तिजनकत्वाभावादिति भावः। न च बौद्धादिस्मृतावाप्तवाक्यत्वस्यैवाभावात्कथं तत्र व्यभिचार इति वाच्यम्। तथा सति पाशुपतादिस्मृतावप्युक्तन्यायेन तदसिद्ध्यापत्त्याऽसिद्धिप्रसङ्गात्। द्वितीयं दूषयति **अन्यस्य चेति**। तस्य सतो निर्देशप्रसङ्गान्निर्देष्टुं चाशक्यत्वादिति भावः। किमत्र प्रमाणतया सम्प्रतिपन्नेनागमेन फलोपलम्भोऽभिमतः किंवा तत्त्वेन विप्रतिपन्नेनागमेनेति विकल्पं मनसि निधाय स्वरूपासिद्ध्याऽऽद्यं दूषयति **न तावदिति**। द्वितीयं दूषयति **न चेति**। **विप्रतिपन्नेन** विप्रतिपन्नप्रामाण्यकेन स्वयूथ्यरचितग्रन्थान्तरेणेत्यर्थः।

स०— **विप्रतिपन्नस्मृतिफलमित्यत्र** प्राप्तमिति शेषः। **आभिमुख्येनेति**। विगतः अभिचारो व्यभिचार इति विग्रहो द्रष्टव्यः। तदभाव इति तु अर्थकथनम्। **नाप्यनुमानेनेति**। पाशुपतस्मृतिः तादृशसाधनेन फलप्रापिका भवति तादृशसाधनबोधकस्मृतित्वात् आप्तवाक्यत्वादित्यनुमानेनेति। **व्यभिचारित्वादिति**। स्मृतित्वादेर्बौद्धादिस्मृतावपि सत्त्वादिति भावः।

प० — व्यभिचारत इत्यस्यार्थः **इन्द्रियाणान्तादृगर्थाविषयत्वादिति** ॥ **विप्रतिपन्नेनेति**। स्वयूथ्यानां वचनरूपेणेत्यर्थः।

या० — विप्रतिपन्नस्मृतिफलमित्यत्र प्राप्तं सदिति शेषः ॥ **स्मृतित्वादेरिति** । विप्रतिपन्ना स्मृतिः समर्थप्रवृत्तिजनिका स्मृतित्वादाप्तवाक्यत्वादित्यादेरित्यर्थः ॥ **अन्यस्य चेति** । अन्यस्याभावा-त्स्मृतित्वादिकमेव वाच्यं तस्य च व्यभिचारित्वादित्याहेत्यर्थः ॥ **न च विप्रतिपन्नेनेति** । विप्रतिपन्नप्रा-माण्यकेन स्वयूथ्यरचितग्रन्थान्तरेणेत्यर्थः । ईक्ष्यत इति पूर्वेणान्वयः ।

श्री० — **विप्रतिपन्नस्मृतिः** पाशुपतादिशास्त्रम् ॥ **तादृगर्थेति** । स्वर्गापवर्गरूपातीन्द्रियार्थे-त्यर्थः । **नाप्यनुमानेन** । फलमीक्ष्यत इत्यन्वयः ॥ **व्यभिचारित्वादिति** । समर्थप्रवृत्त्यजनकबौद्धा-दिस्मृतावपि स्मृतित्वहेतोः सत्त्वादिति भावः । **अन्यस्य** हेतोः । आगमेनेत्यस्यापीक्ष्यत इति पूर्वेणा-न्वयः । **तस्य** विप्रतिपन्नप्रामाण्यकस्वयूथ्यरचितग्रन्थान्तररूपागमस्य । **बौद्धादिविषये** बुद्धादिप्रणीत-स्मृतिफलभूतस्वर्गादौ ।

च० — स्मृतिफलमित्यतः प्राप्तमित्युपस्कार्यम् । **तदभावो व्यभिचार इति** । अव्ययी-भावत्वे क्लीबत्वापत्त्या तात्पर्यकथनमेवैतत् न समासप्रदर्शनम् । तत्प्रदर्शनं तु विगत अभिचारो व्यभिचार इत्येव प्राचार्य इत्यादिवदित्यवधेयम् । **स्मृतित्वादेरिति** । समर्थप्रवृत्तिजनकत्वसाध्यके स्मृति-त्वाप्तवाक्यत्वे बौद्धादिस्मृतौ तादृक्साध्यं व्यभ्यचीचरत इत्यर्थः । बौद्धादिस्मृतावाप्तवाक्यत्वरूपहेत्व-भावोक्तिस्तु पाशुपतादिस्मृतिष्वपि तदभावोक्तिदेश्यैवेत्यवसेयम् । **विप्रतिपन्नेन** विप्रतिपन्नप्रामाण्य-क[illegible]यूथ्यरचितग्रन्थान्तरेण ।

सु० — **स्यादेतत् । द्विविधा खलु शिवादिप्रणीता स्मृतिः । एका तावददृष्टं फल-मुद्दिश्य प्रवृत्ता । परा तु सम्पदादिकं दृष्टम् । तत्र दृष्टार्थायाः प्रवृत्तिसामर्थ्यं प्रत्यक्षेणोप-लभ्यते । ततस्तत्प्रणेतुराप्तत्वमिति । तन्न । तथाऽपि विप्रतिपन्नस्मृतेराप्तमूलत्वे प्रमाणा-भावात् । तत एवास्या अपि तत्सिद्धिरिति चेन्न । व्यभिचारात् । न ह्येकत्राप्तेन सर्वत्रापि तथा भाव्यमिति नियमोऽस्ति । तथा च सति सर्वासामपि स्मृतीनामाप्तमूलतापातात् । तत्रापि दृष्टार्थानां प्रवृत्तिसामर्थ्योपलम्भादित्याह** व्यभिचारत इति ॥ **अङ्गीकृत्य चेदमुदितम् । दृष्टार्था-नामपि तासां बहुलं (फल)व्यभिचारो दृश्यते । तथा च कथं तद्दृष्टान्तेनेतरासामाप्तमूलता-नुमानमित्याह** व्यभिचारत इति ।

**किञ्च फलव्यभिचारतस्तदंशस्यानाप्तमूलत्वस्थितौ पशुपतिप्रणीतत्वादेस्तत्र व्यभि-चारतः कथमनुमानं स्यादित्याह** व्यभिचारत इति ।

**तदेवं पाशुपतादिस्मृतीनामाप्तिमूलत्वानिश्चयेन निर्मूलानां पञ्चरात्रादिस्मृतिविरोधेनाप्रामाण्यमेव युक्तम् ।**

**शे०— तत एवेति** । तद्दृष्टान्तेनैव शिवप्रणीतस्मृतित्वादेव वेत्यर्थः ॥ **व्यभिचारादिति** । तत्प्रणीताप्रमाणीभूतवाक्य इति शेषः । नन्वाप्तिमूलत्वस्य तत्र सत्त्वेनाप्रामाण्यासम्मतेर्न तत्र व्यभिचार इत्यत आह **न हीति** । उक्तनियमाङ्गीकारे बाधकमाह **तथा चेति** । न्यायसाम्यमुपपादयति **तत्रापीति** ।

**स०— अङ्गीकृत्य चेदमुदितमिति** । इदं दृष्टार्थानां प्रवृत्तिसामर्थ्येन प्रामाण्यमङ्गीकृत्य उक्तम् । तथाप्यदृष्टार्थानां प्रामाण्यं न सम्भवतीति दूषणमुक्तमित्यर्थः ।

**प०— तत एवेति** । एकांशे आप्तोक्तत्वादेव तद्दृष्टान्तत एवेति वार्थः ।

**या०— तत एवेति** । दृष्टार्थाया य आप्तस्तत्प्रणीतत्वादेवेत्यर्थः ।

**श्री०— विप्रतिपन्नस्मृतेः** अदृष्टफलविधायिकायाः ॥ **तत एवेति** । दृष्टफलविधायकेशवाक्यदृष्टान्तेनादृष्टफलविधायिकाया अपि स्मृतेरीशवाक्यत्वेन हेतुना आप्तिमूलकत्वसिद्धिरित्यर्थः । **इदं दृष्टार्थानां प्रवृत्तिसामर्थ्योपलम्भादित्येतत्** । **तदंशस्य** पशुपतिप्रणीतदृष्टफलविधायकवाक्यैकदेशस्य ।

**च०—** तत इत्येतत्तत्रावृत्त्याद्याश्रयणेन सप्तम्यर्थकतस्यंततसिलन्तञ्चेति तादृशस्मृतिवच्छिवप्रणीतस्मृतित्वादिति चार्थः ।

**सु०— तदनेन** 'इतरेषां चानुपलब्धेः, एतेन योगः प्रत्युक्तः' इति **सूत्रद्वयं व्याख्यातं भवति** ।

**यच्चेतरेषां महदहङ्कारादितत्त्वानामनुपलब्धेश्च सांख्यस्मृतेरप्रामाण्यमिति व्याख्यानम् । तत्प्रत्यक्षानुपलब्धेर्वेदान्तेष्वपि व्यभिचारतः सर्वथाऽनुपलब्धेरसिद्धेरुक्तत्वादयुक्तमिति ।**

**शे०—** 'न चाप्तिनिश्चयस्तत्रे'त्यादिभाष्यस्योत्सूत्रितत्वशङ्कां निरस्यति **तदनेनेति** ॥ **इतरेषामिति** । प्रधानादिति शेषः ॥ **वेदान्तेष्वपीति** । प्रत्यक्षतोऽनुपलभ्यमानतत्त्वप्रतिपादकत्वस्य प्रमाणीभूतवेदान्तेष्वपि सत्त्वादित्यर्थः ॥ **असिद्धेरुक्तत्वादिति** । 'न संख्योपसंग्रहा'धिकरणे महदादीनामागमिकत्वसमर्थनेन सर्वथाऽनुपलब्धेरसिद्धेरुक्तत्वादित्यर्थः ।

**स०— असिद्धेरुक्तत्वादिति** । 'यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्' इत्यादिनोक्तत्वादित्यर्थः ।

प० — **तदनेनेति** । 'न चास्तिनिश्चयस्तत्र शक्यते व्यभिचारतः'इत्यनेनेत्यर्थः । सूत्रद्वयार्थस्तन्त्रदीपिकायां व्यक्तमुक्तः । परोक्तार्थं निराह **यच्चेत्यादिना** ॥ **उक्तत्वादिति** । 'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथे'त्यादिना पूर्वपाद एवोक्तत्वादित्यर्थः ।

या० —**तदनेनेति** । **इतरेषां** तासु स्मृतिषूक्तानां, 'फलादीनां प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यमेव तासां युक्तमि'ति प्रथमसूत्रस्य, 'योगफलं प्रत्यक्षोपलभ्यमिति न मन्तव्यमुक्ताभ्यासे तत्काल एव फलादृष्टेरि'ति द्वितीयसूत्रस्य च व्याख्यानं कृतमिति ज्ञातव्यम् ॥ **इतरेषामिति** । प्रधानादितरेषामित्यर्थः ॥ **वेदान्तेष्वपीति** । प्रत्यक्षतोऽनुपलभ्यमानतत्त्वप्रतिपादकत्वस्य प्रमाणभूतेषु वेदान्तेष्वपि सत्त्वेनाप्रामाण्यव्यभिचार इत्यर्थः ॥ **असिद्धेरुक्तत्वादिति** । 'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा । एतच्चतुर्विंशतिकं गणं प्राधानिकं विदु'रित्याद्यागमात्तेषामुपलब्धेरुक्तत्वादित्यर्थः ।

श्री० — प्रत्यक्षेणानुपलब्धेर्हेतुत्व इति शेषः । त्वया वेदान्तानामपि प्रत्यक्षायोग्यार्थप्रतिपादकत्वेऽपि प्रामाण्याङ्गीकाराद्व्यभिचार इत्यर्थः ।

च० — **वेदान्तेष्वपीति** । प्रत्यक्षानुपलभ्यमानार्थप्रतिपादकत्वस्य प्रमाणीभूतवेदान्तसाधारण्यादित्यर्थः । **असिद्धेरुक्तत्वादिति** । पञ्चभिः पञ्चभिरित्यादिकविदुरित्यन्तोदाहरणेन तेषामुपलब्धेरभिहितत्वादित्यर्थः ।

---

सु० — **ननुपञ्चरात्रादिस्मृतयोऽपि फलं व्यभिचरन्ति । क्वचित्तदुक्तानुष्ठानेऽपि दृष्टफलानुपलम्भात् । अतस्तासामप्रामाण्यान्न तद्विरोधेन पाशुपतादिस्मृतीनामप्रामाण्यम् । अन्यथा फलव्यभिचारस्यानैकान्तिकत्वमित्यत आह न चेति ।**

अनु० — न चास्या व्यभिचारेऽपि हीयते मानता क्वचित् ।

**अस्याःपञ्चरात्रादिस्मृतेः क्वचिद्व्यभिचारेऽपीति सम्बन्धः । कुतो न हीयत इति चेत् । किमदृष्टार्थायाः प्रामाण्याभावोऽभिधीयते, उत दृष्टार्थाया एव । नाद्यः । यतः फलव्यभिचारे हेतौ क्वचिद् दृष्टार्थायां वर्तमाने अस्या अदृष्टार्थाया मानता न हीयते । व्यधिकरणत्वादिति भावः । न द्वितीयः । यस्मात्क्वचिद् दृष्टार्थायां फलव्यभिचारे, तत एवाप्रामाण्ये सत्यप्यस्या अदृष्टार्थायास्तावन्मानता न हीयते । कारणाभावात् । तद्विरोधादेव च पाशुपतादीनामप्रामाण्यमुक्तम् । दृष्टार्थाया अप्रामाण्यवचनं तु प्रकृतानुपयुक्तमित्यभिसन्धिः ।**

शे० — ननु फलव्यभिचारेण पाशुपतादिस्मृतीनामप्रामाण्यं प्रतिपाद्य कथं तद्विरुद्धं फलव्यभिचारेऽपि तासामप्रामाण्याभाववर्णनं 'नच' इत्यादिनोत्तरग्रन्थेन क्रियते । नच नैतत्पाशुपतादि-

स्मृतीनां फलव्यभिचारेऽप्यप्रामाण्यवर्णनं किन्तु पञ्चरात्रादिस्मृतीनामिति न पूर्वोत्तरविरोध इति वाच्यम् । तत्र फलव्यभिचारस्याप्रसक्त्याऽप्रामाण्यप्रसक्तेरेवाभावात् । तथा च 'न चे'त्यादिपञ्चरात्रादिस्मृतिप्रामाण्यवर्णनमनर्थकमित्यतः प्रागुक्तस्य पञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्यस्य समर्थनार्थत्वान्न तस्यानर्थक्यमित्याशयेन तद्व्यावर्त्यशङ्कामुत्थापयति **नन्विति** । ननु पञ्चरात्रादिस्मृतीनां फलव्यभिचारेऽप्यप्रामाण्यासम्प्रतिपत्तेर्युक्तमेव तद्विरोधेन पाशुपतादिस्मृत्यप्रामाण्यमित्यतस्तर्हि फलव्यभिचारस्य पञ्चरात्रादिस्मृतिष्वप्रामाण्यव्यभिचारेण तदसाधकत्वात्फलव्यभिचारेण पाशुपतादिस्मृतीनामप्रामाण्यसाधनं प्राक्तनमसमञ्जसं स्यादित्याशयेनाह **अन्यथेति** । व्यवहितत्वेऽपि योग्यत्वात् क्वचिदित्यस्य व्यभिचारेऽपीत्यनेन सम्बन्ध इत्याह **क्वचिद्व्यभिचारेऽपीति सम्बन्ध इति ॥ अप्रामाण्ये सत्यपीति** । अनेन मूले व्यभिचारेऽपीत्यपिशब्दोऽप्रामाण्यसमुच्चयार्थ इत्युक्तं भवति ॥ **कारणाभावादिति** । फलव्यभिचारलक्षणाप्रामाण्यकारणाभावादित्यर्थः । नन्वेवमदृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्याप्राप्तावपि दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यवर्जनीयमेवेति न पञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्यसिद्धिरित्यत आह **तद्विरोधादेवेति** । अदृष्टार्थपञ्चरात्रादिस्मृतिविरोधादेवेत्यर्थः । न तु दृष्टार्थपञ्चरात्रादिस्मृतिविरोधादित्येवर्थः । अदृष्टार्थपञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाणस्य प्रतिपाद्यमानत्वात् अदृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्ये सत्यपि तद्विरोधे पाशुपतादिस्मृतिप्रामाण्योपपत्त्या तद्विरोधस्य पाशुपतादिस्मृत्यप्रामाण्यानापादकतया तदप्रामाण्यप्रतिपादनस्य प्रकृतोपयोगित्वेऽपि फलव्यभिचाररूपकारणाभावेन तस्याशक्यत्वात् । दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यप्रतिपादनस्योक्तकारणसम्पत्त्या शक्यत्वेऽपि तद्विरोधेन पाशुपतादिस्मृत्यप्रामाण्यप्रतिपादनपक्षे, दृष्टार्थस्य तस्याप्रामाण्ये सत्यपि तद्विरोधे पाशुपतादिस्मृतिप्रामाण्योपपत्त्या, तद्विरोधस्य पाशुपतादिस्मृत्यप्रामाण्यानापादकत्वेन, दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यप्रतिपादनस्य प्रकृतोपयोगित्वप्राप्तावपि च दृष्टार्थपञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्यप्रतिपादनस्येहानभिमतत्वात् । अभिमते चादृष्टार्थपञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्यप्रतिपादने दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्येऽपि प्रमाणीभूतादृष्टार्थपञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्योपपत्त्या तद्विरोधस्याप्रामाण्यानापादकत्वाभावेन दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यव्युत्पादनस्य प्रकृतानुपयोगित्वेनाकर्तव्यत्वान्नोक्तशङ्कावकाश इत्यभिसन्धिरिति भावः ।

**म०** — ननु कारणाभावेनादृष्टार्थाया अप्रामाण्याभावे दृष्टार्थायाः फलव्यभिचारलक्षणकारणसत्त्वेनाप्रामाण्यात् तद्विरोधेन कथं पाशुपतादिस्मृतीनामप्रामाण्यमुक्तमित्यत आह **तद्विरोधादेवेति** । अदृष्टार्थपञ्चरात्रस्मृतिविरोधादेवेत्यर्थः । जगत्कारणत्वादेरतीन्द्रियत्वादिति भावः ।

प० — तदेव वाक्यं आवृत्त्या शेषोक्तिपूर्वं योजयति **यत इति** ॥ **फलव्यभिचारे हेताविति** । फलव्यभिचारित्वरूपे हेतौ वर्तमान इत्यन्वयः । क्वचिदित्यनुवादः । दृष्टार्थायामिति व्याख्या । सम्पदादिदृष्टफलसाधनबोधकस्मृतिभाग इत्यर्थः । अस्या इत्यनुवादः । अदृष्टार्थाया इति व्याख्या । एवमग्रेपि ॥ **कारणाभावादिति** । फलव्यभिचाररूपकारणस्य तद्भागेऽदृष्टेरिति भावः ।

श्री० -- **अन्यथा** पञ्चरात्रस्मृतेर्दृष्टफलव्यभिचारेऽपि चेत्प्रामाण्यमित्यर्थः । **फलव्यभिचारस्य** शैवादिस्मृत्यप्रामाण्यसाधकहेतुभूतस्य ॥ **व्यधिकरणत्वादिति** । अदृष्टार्था पञ्चरात्रादिस्मृतिरप्रमाणं दृष्टार्थे फलव्यभिचारादिति व्यधिकरणमित्यर्थः । ननु तर्हि दृष्टफलार्थपञ्चरात्रस्मृतिविरोधेन पाशुपतादिस्मृतीनामप्रामाण्यं न सम्भवतीत्याह **तद्विरोधादेवेति** । अदृष्टार्थकपञ्चरात्रादिस्मृतिविरोधादेवेत्यर्थः ।

**सु० — अथ दृष्टार्थायाः फलव्यभिचारेणाप्रामाण्ये सति तत एवादृष्टार्था अप्यप्रमाणं भविष्यतीति चेन्न । तत इति किं तेन हेतुनोत तेन दृष्टान्तेन । नाद्यः । क्वचिद्व्यभिचारे(णा)ऽप्रामाण्येऽप्यस्या मानता हीयत इति न युक्तम्, व्याप्त्यभावात् । न द्वितीयः । क्वचिद्व्यभिचारेऽप्रामाण्ये(ऽपि) अस्या मानता हीयत इत्येतन्न युक्तम् । हेत्वभावात् । नारायणवाक्यत्वादेर्व्यभिचारात् । न हि भूतफलमपि नारायणवाक्यमप्रमाणम् । दृष्टार्थायां फलव्यभिचारे अप्रामाण्ये च सत्यस्या अपि मानता शङ्कास्पदत्वेन हीयत इति च न वाच्यम् । अत्र हेतुमाह निर्दोषेति ।**

अनु० — निर्दोषवाक्यमूलत्वान्न च तद्युक्तिमूलता ।

**निर्दोषवाक्यं वेदः तद्युक्तिः समर्थप्रवृत्तिजनकत्वं प्रामाण्यावधारणस्य यत इति शेषः । अयमभिसन्धिः । किमिदं दृष्टार्थायाः पञ्चरात्रादिस्मृतेः फलव्यभिचारेणाप्रामाण्यानुमानम् । तत एवेतरस्या अप्यप्रामाण्यशङ्कनं च स्वातन्त्र्येण क्रियते किंवा प्रतिबन्दीग्रहणम् । आद्यं तूत्तराधिकरणे निराकरिष्यामः । न द्वितीयः । प्रतिबन्दीग्रहणं हि प्रमेयसाध्ये भवति । न चैवं प्रकृते । परेण खलु फलसंवादादिना पाशुपतादिस्मृतेराप्तमूलत्वप्रामाण्ययोरनुमितयोरस्माभिस्तन्न्यायेन फलविसंवादं प्रदर्श्य दोषोऽभिहितः । यदि नाम पञ्चरात्रादिस्मृतिप्रामाण्यावधारणं फलसंवादयुक्त्याऽऽश्रीयेत । स्यादिदं तदा प्रतिबन्दीग्रहणम् । न चास्माभिः पञ्चरात्रादिप्रामाण्यावधारणस्य तद्युक्तिमूलतेष्यते । न चैवं तत्प्रामाण्यावधारणं निर्मूलं स्यादिति वाच्यम् । बोधकत्वेन स्वतःसिद्धत्वात् । अप्रामाण्यशङ्कानिवृत्तिः कुत इति चेदाप्तमूलत्वेनेत्युक्तम् । तदवधारणं निर्मूलमिति चेन्न । श्रुतिसंवादनिबन्धनत्वादिति ।**

ननु श्रुतेरेव वक्तृगुणहीनाया न प्रामाण्यमित्यतो निर्दोषवाक्येत्युक्तम् । बोधकत्वेनैव हि प्रामाण्यं व्यवस्थापितं तच्च वाक्यत्वाच्छ्रुतेरुभयसम्मतम् । दोषस्तु तदपवादकः । न चापौरुषेये स संभवतीति निष्कंपमेव श्रुतिप्रामाण्यमिति वक्ष्याम इत्यर्थः । अस्यां दशायां श्रुतिविरोधेनापि पाशुपतादिस्मृतीनामप्रामाण्यं शक्यसाधनम् । यदप्युक्त'मितिहासपुराणाभ्यां वेदं समुपबृंहयेदि'ति, तत्तथा । किन्त्वविरुद्धानामेवोपायत्वं न तु विरुद्धानाम् । न चैवमितरेतराश्रयत्वम् । श्रुत्यर्थनिश्चयस्य स्मृतिसंवादैकनिबन्धनत्वाभावादिति ।

**शे०** -- फलव्यभिचारेण दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यव्युत्पादनस्य साक्षात्प्रकृतानुपयोगित्वेऽपि परम्परया तदस्त्येवेति कथमकर्तव्यतेति शङ्कते **अथेति ॥ व्याप्त्यभावादिति** । दृष्टार्थायाः फलव्यभिचारेणाप्रामाण्यकरूपस्य हेतोरदृष्टार्थतदप्रामाण्यरूपसाध्येन व्याप्तौ दृष्टान्ताभावेन व्याप्त्यभावादित्यर्थः ॥ **व्यभिचारादिति** । प्रमाणीभूतनारायणवाक्य इति शेषः । ननु नारायणवाक्यमात्रस्याप्रमाणत्वेन प्रमाणीभूततद्वाक्यासिद्धेर्न तत्र व्यभिचार इत्यत आह **मा हि भूदिति** । न भवति हीत्यर्थः । निर्दोषेत्यादिमूलमुत्थापयितुमपेक्षितप्रतिज्ञारूपतयाऽपि 'न चे'त्यादिमूलं योजयति **दृष्टार्थायामिति** ।

ननु पञ्चरात्रादिस्मृतिप्रामाण्यावधारणस्य फलसंवादरूपयुक्त्यमूलत्वकथनमनर्थकम् । न चेदं पाशुपतादिस्मृतिवैषम्योपदर्शनेन प्रतिबन्दीपरिहारार्थमिति वाच्यम् । फलव्यभिचारेण दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यानुमानादेः परेण स्वातन्त्र्येणापि कर्तुं शक्यत्वेन प्रतिबन्दीत्वेनैव तस्य कर्तव्यतायां नियामकाभावात् । भावे वा वैषम्योपदर्शनेन प्रतिबन्दीपरिहारस्य 'न च तद्युक्तिमूलते'त्येतावता भाष्यखण्डेनैव सिद्ध्या निर्दोषवाक्यमूलत्वादित्यंशवैयर्थ्यमेव । न चोक्तयुक्तिमूलत्वाभावे तत्प्रामाण्यावधारणस्य निर्मूलत्वशङ्कापरिहार्थं तदिति वाच्यम् । तथा सति प्रामाण्यावधारणस्य निर्दोषवाक्यमूलत्वेन प्रामाणस्य परतस्त्वापत्त्याऽपसिद्धान्तप्रसङ्गादित्यतोऽत्र विकल्पमुखेन ग्रन्थप्रवृत्तिं, बहिरेवाद्यपक्षदूषणं चाभिप्रेत्य प्रतिबन्दीग्रहणपक्षमात्रनिरासकतया मूलप्रवृत्तेर्नानुपपत्तिरिति भावेन विकल्पद्वयं प्रदर्श्याद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षनिरासकतया भाष्यं योजयितुं विकल्पं तावद्दर्शयति **अयमभिसन्धिरित्यादिना ॥ उत्तराधिकरण इति** । 'तन्मूलत्वात्स्मृतीनां चे'त्यादिनेति शेषः । भाष्ये वेदमूलत्वोपन्यासस्यानर्थक्यं परिहर्तुं तदुपयुक्तं प्रमेयमाशङ्कासमाधानाभ्यां स्वयमाह **न चेत्यादिना** । श्रुतिमूलत्वोक्त्यैव विवक्षितसिद्धेरनर्थकं भाष्ये तन्निर्दोषत्वकथनमित्यतः श्रुत्यप्रामाण्यशङ्कानिरासार्थत्वान्नानर्थक्यमित्याशयेन प्रसञ्जकोक्त्या तदप्रामाण्यशङ्कां निर्दोषत्वेन तत्परिहारप्रकारं च दर्शयति **नन्वित्यादिना ॥ तच्च वाक्यत्वाच्छ्रुतेरुभयसंमतमिति** । अनेन मूले वाक्यग्रहणस्य प्रयोजनमुक्तं भवति । अन्यथा निर्दोषवेदमूलत्वादित्येव वक्तव्यतया वाक्यग्रहणं न

कुर्यादिति भावः ॥ **वक्ष्याम इति** । 'नित्यत्वात्पुरुषोद्भवैः । 'उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेदि'त्यादिनोत्तराधिकरण इति शेषः ॥ **अस्यां दशायामिति** । निष्कम्प-श्रुतिप्रामाण्यसिद्धिदशायामित्यर्थः ॥ **इतरेतराश्रयत्वमिति** । स्मृतेः श्रुत्यविरुद्धत्वे निश्चिते तत्संवादेन श्रुत्यर्थनिश्चयस्तन्निश्चये च स्मृतेस्तदविरुद्धत्वनिश्चय इतीतरेतराश्रयत्वमित्यर्थः । **स्मृतिसंवादैक-निबन्धनत्वाभावादिति** । विनाऽपि स्मृतिसंवादमुपक्रमादिभिरपि श्रुत्यर्थनिर्णयसम्भवादिति भावः । स्पष्टार्थश्रुतेरर्थनिर्णयाय स्मृतिसंवादो नापेक्षित इति भावेनैवमुक्तमित्यप्याहुः ।

स० — **व्याप्त्यभावादिति** । अदृष्टार्थायाः स्मृतेः अप्रामाण्यम्, दृष्टार्थायाः फलव्यभिचारेणाप्रामाण्यमित्यनयोः व्याप्तिग्रहणस्थलाभावेन व्याप्त्यभावादित्यर्थः । **नारायणवाक्यत्वादेरिति** । प्रमाणीभूते तद्वाक्ये इति शेषः । तत्र साध्यस्याप्रामाण्यस्यापि सत्त्वान्न व्यभिचार इत्यत आह **मा हि भूदिति** । न भवति हीत्यर्थः । **तदवधारणमिति** । आप्तिमूलत्वावधारणमित्यर्थः । **अस्यां दशायामिति** । वेदस्यापौरुषेयत्वेनाप्रामाण्यशङ्काऽभावेन, बोधकत्वेन च स्वत एव प्रामण्यसमर्थनदशायामित्यर्थः । **न चैवमितरेतराश्रयत्वमिति** । स्मृतेः श्रुत्यविरुद्धत्वे निश्चिते तया श्रुत्यर्थनिश्चयः । श्रुत्यर्थनिश्चये च स्मृतेस्तदविरुद्धत्वनिश्चय इत्यन्योन्याश्रयत्वमिति भावः । **श्रुत्यर्थनिश्चयस्येति** । स्पष्टार्थश्रुतेरर्थ-निश्चयाय स्मृत्यनपेक्षणात् तदर्थनिश्चयानन्तरं तयोरविरोधज्ञानसम्भवादिति भावः ।

प० — **व्याप्त्यभावादिति** । अदृष्टार्थकत्वांशेपि पञ्चरात्रस्मृतिः फलव्यभिचाराप्रामाण्याभ्या-मुपेता । दृष्टार्थकत्वांशे ताभ्यामुपेतत्वादित्यत्र यथाऽमुक इति सम्प्रतिपन्नदृष्टान्ताभावात् । यत्कचिदंशे तदुभयोपेतं तदंशान्तरेपि तदुभयोपेतमिति सामान्यव्याप्तेश्च देवदत्तादिवाक्येषु व्यभिचारादिति भावः । नारायणवाक्यत्वादेर्व्यभिचारादिति कुत इत्यत आह **मा हि भूदिति** । नारायणवाक्यं सकलमप्यप्रमाणं हि यस्मान्माभूत् न भवति अत इत्यर्थः । अन्यथा तद्वाक्यं सकलमप्यप्रमाणं प्रसज्येतेति भावः । उत्तरवाक्यमवतारयितुं योजनाऽन्तरमाह **दृष्टार्थायामिति** ॥ **स्वातन्त्र्येणेति** । पाशुपतादेरप्रामाण्यादिकं परिहर्तुं प्रतिबन्दीरूपेण ग्रहणं विनेत्यर्थः ॥ **उत्तरेति** । 'न विलक्षणत्वादि'त्यत्र ॥ **तद्युक्तिमूलतेति** । फलसंवादयुक्तिमूलतेत्यर्थः ॥ **स्वत इति** । फलसंवादापेक्षां विनैवेत्यर्थः ॥ **इत्युक्तमिति** । 'हरिपूर्वकाः । किं नाशेषविदः'इत्यनेनोक्तमित्यर्थः । एवं तर्हि निर्दोषवाक्यमूलत्वादिति किमर्थमुक्तमित्यतस्तदुपयोगं व्यनक्ति **तदवधारणमित्यादिना** ॥ **व्यवस्थापितमिति** । 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि' इत्यत्र जिज्ञासानये ॥ **वाक्यत्वादिति** । आकाङ्क्षायोग्यतासन्निधिमत्पदकदम्बकत्वरूपत्वादित्यर्थः ॥ **वक्ष्याम इति** । उत्तराधिकरणे ॥ **अस्यां दशायामिति** । निष्कंपप्रामाण्य(ण्यावधारण)दशायामित्यर्थः ॥

**न चैवमितरेतराश्रयत्वमिति** । स्मृत्यनुरोधेन श्रुत्यर्थनिर्णये सति स्मृतेः श्रुत्यविरुद्धत्वेनोपादेयत्वनिश्चयः तस्मिद्धौ च स्मृत्यनुसारेण श्रुत्यर्थनिर्णयः) र्थे निश्चिते सत्यविरुद्धत्वं अविरुद्धत्वे सति तदनुरोधेन श्रुत्यर्थनिर्णयः इतीतरेतराश्रयत्वमित्यर्थः ॥ **स्मृतिसंवादैकनिबन्धनत्वाभावादिति** । उपक्रमादिभिरेव श्रुत्यर्थनिर्णय इति समन्वयसूत्रे व्यवस्थापितत्वात् उपक्रमादिसिद्धेर्थे स्मृत्यादिकमभ्युच्चयत्वेनेष्यत इति वक्ष्यमाणत्वादिति भावः ।

**या०** — व्यभिचारमुपपादयति— **मा हि भूदिति** । न हि भवतीत्यर्थः । तथा च प्रमाणभूते नारायणवाक्ये व्यभिचार इति भावः ॥ **उत्तराधिकरण इति** । तन्मूलत्वात्स्मृतीनां चेत्यत्रेत्यर्थः ॥ **वक्ष्याम इति** । 'नित्यत्वात्पुरुषोद्भवैः । उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेदि'त्युत्तराधिकरण इति शेषः ॥ **न चैवमिति** । विष्णुजगज्जन्मादिकारणत्वादिकमेव श्रुतेरर्थ इति निश्चये तदविरुद्धानां पञ्चरात्रादिस्मृतीनामेवोपादेयत्वं न तु विरुद्धानां पाशुपतादिस्मृतीनामिति निश्चयः । तस्मिंश्च सत्यविरुद्धपञ्चरात्रादिस्मृत्यनुसारेणोक्तवेदार्थनिर्णय इतीतरेतराश्रयत्वमित्यर्थः ॥ **श्रुत्यर्थनिश्चयस्येति** । ऋज्वादियोगिश्रुत्यर्थनिश्चयस्यानादिसिद्धत्वेन स्मृतिसंवादनिबन्धनत्वाभावादिति भावः । इतरेषामपि तेष्वासितनिश्चये तदीयव्याख्यानेनैव श्रुत्यर्थनिश्चयः। **अन्यथा** पञ्चरात्रादिस्मृतिसंवादेनैव । तदिदमुक्तं स्मृतिसंवादैकनिबन्धनत्वाभावादिति । अन्ये तु स्पष्टार्थश्रुतेरर्थनिश्चयाय स्मृतिसंवादो नापेक्षित इत्यर्थ इत्याहुः ।

**श्री०** — **क्वचिद्** दृष्टार्थे । **अस्याः** अदृष्टार्थायाः ॥ **व्याप्त्यभावादिति** । यत्र दृष्टफलविधायकवाक्याप्रामाण्यं तत्रादृष्टफलविधायकवाक्याप्रामाण्यमिति व्याप्त्यभावादित्यर्थः । **क्वचित्** स्थले । ननु पञ्चरात्रादिस्मृतिरप्रमाणमित्यत्र नारायणवाक्यत्वमेव हेतुर्भविष्यतीत्यत आह **नारायणेति** । गामानयेत्यादिवाक्य इत्यर्थः । तत्राप्रामाण्यरूपसाध्यस्यापि सत्त्वान्न व्यभिचार इत्यत आह **मा हि भूदिति** । न भवति हीत्यर्थः । **तदवधारणम्** आप्त्यवधारणम् । **तच्च** बोधकत्वम् ॥ **तदिति** । प्रामाण्येत्यर्थ । **अस्यां दशायाम्** श्रुतेरपौरुषेयतया निष्कम्पप्रामाण्यस्य व्यवस्थितिदशायाम् । ततश्च 'परोक्तं दोषं बुद्ध्वा श्रुतिपरित्यागस्त्वयुक्त'इति दोषानवकाश इति ध्येयम् ।

**च०** — व्यभिचारमुपपादयति **मा हि भूदिति** । 'माङि लुङ्' सर्वलकारापवादः । 'न माङ्योगे' इत्याडागमनिषेधः । न हि भवतीत्यर्थः। तथाच प्रमाणभूतनारायणवाक्येऽनैकान्त्यमिति भावः । **उत्तराधिकरण इति** । तन्मूलत्वात्स्मृतीनां चेत्यादिनेत्यादिः । **वक्ष्याम इति** । नित्यत्वात्पुरुषोद्भवैरित्यादिनोत्तरनयेऽभिधास्याम इत्यर्थः । **अस्यां दशायां** निष्कंपश्रुतिप्रामाण्यावधृतिदशायां इतरेतराश्रयत्वमित्यर्थः । **श्रुत्यर्थनिश्चयस्येति** । अत्र व्याचक्षाणाः । स्मृतिसंवादमन्तरेणाप्युपक्रमा

दिभिः श्रुत्यर्थनिर्णयसंभवादिति भावः इत्याशयमुदबीभवन् । स्पष्टार्थश्रुतेरर्थनिर्णयाय स्मृतिसंवादो नापेक्षित इत्यपि व्याचक्रिरे । ऋज्वादियोगिनां श्रुत्यर्थनिश्चयस्यानादिसिद्धत्वेन स्मृतिसंवादनिबन्धनत्वाभावादिति भाव इत्यप्यभिसंधिमाविष्कुर्वन्ति ।

सु० — ननु च पञ्चरात्रादिस्मृतीनां प्रामाण्यमङ्गीकुर्वाणैः सर्वथा प्रवृत्तिसामर्थ्यमङ्गीकरणीयम् । व्यभिचारस्य च कर्तृकरणादिवैगुण्यनिबन्धनत्वमभ्युपेयम् । अन्यथा फलव्यभिचारि च प्रमाणं चेति व्याघातापातात् । तथा च फलसंवादेनापि प्रामाण्यादिसाधनं सुशकमेवेति किमुच्यते, न च तद्युक्तिमूलतेति सुहृद्भावेन पृच्छन्तं प्रत्याह वेदोक्तस्येति ।

अनु० — वेदोक्तस्याधिकारस्य दुर्निरूपत्वतः सदा ।
नियमो व्यभिचारो वा नैव ज्ञातुं हि शक्यते ॥

वैदिकग्रन्थोपदिष्टानुष्ठाने वेदोक्ता निषेकादिसंस्कारा एवाधिकारतामापद्यन्त इति वेदोक्तस्येत्युक्तम् । यद्वा वेदशब्देन पञ्चरात्रादयोऽपि गृह्यन्ते । अधिकारस्येत्युपलक्षणम् । साधनानुष्ठानस्येत्यपि द्रष्टव्यम् । दुर्निरूपत्वमस्मदाद्यप्रत्यक्षत्वम् । सदेति स्वभावत एव न तु देशादिव्यवधानेनेत्यर्थः । नियमो व्यभिचारो वा फलस्येति शेषः । हिशब्दो यस्मादित्यर्थे । तस्मात्फलसंवादेन प्रामाण्यादि नानुमीयत इति शेषः ।

एतदुक्तं भवति । प्रमितं खलु लिङ्गमनुमितेः करणम् । न सत्तामात्रेण । अतिप्रसङ्गात् । अत्र (च) एवं प्रयोक्तव्यम् । पञ्चरात्रादिकं प्रमाणम् । समर्थप्रवृत्तिजनकत्वात्सम्प्रतिपन्नवदिति । तस्य चायमर्थः । एतद्विहितसाधनानुष्ठानवद्भिस्तत्फलस्य नियमेन प्राप्तेरिति । न चैतल्लिङ्गं शक्यावधारणम् । व्यभिचारस्य बहुलमुपलम्भेन नियमस्य प्रत्येतुमशक्यत्वात् । तदवधारणे च काकतालीयतायाः शङ्कनात् । तत्रैतावद्वक्तव्यम् । कार्यं कारणसामग्रीसम्पाद्यं न तु तदेकदेशेन । तथात्वेऽतिप्रसक्तेः । प्रकृते चोभयकुलशुद्धिवैदिकनिषेकादिसंस्काराद्यधिकारपूर्वकं विशुद्धाभिसन्ध्यादिमता सम्यगनुष्ठितं कर्म असति प्रतिबन्धके, सति चेश्वरेच्छादौ हि सहकारिणि, सम्पदादिफलजननायालम् । तथा च यत्र फलं नोपलब्धं तत्राधिकारादिवैगुण्यमितरत्र तु तत्साद्गुण्यमित्यतो नियमनिश्चय इति । न चैतद्युक्तम् । परगतयोरधिकारादिभावाभावयोरस्मदादिभिरवगन्तुमशक्यत्वात् । न हि खलु परकीयपितृपितामहादीनां मानसा-

दिविशुद्धिर्वा, निषेकादिसमीचीनता वा, मन्त्राणामयातयामत्वादिकं वा, द्रव्यादीनां शुचित्वादिकं वा, अर्वाचीनैरवगन्तुं शक्यते । तथा चास्य फलनियम एव व्यभिचारस्तु वैगुण्यनिमित्त इति वाऽस्तु । व्यभिचार एवास्य । क्वचित्फलोपलम्भस्तु काकतालीयोऽन्यनिमित्त एवेति वा भवत्विति सन्देहो न निवर्तते । न च सन्दिग्धेन प्रामाण्यानुमानं युज्यते । प्रामाण्यसिद्ध्युत्तरकालं तु व्यभिचारस्य वैगुण्यनिमित्तताकल्पनायामितरेतराश्रयत्वं स्यात् । वेदसंवादेन तु प्रामाण्येऽवधारिते शक्यते फलव्यभिचारस्यान्या गतिः कल्पयितुम् । अतो वेदसंवादेनैव प्रामाण्यं पञ्चरात्रादीनामवधार्यते न प्रवृत्तिसामर्थ्येनेति ।

शे० — **प्रामाण्यादिसाधनमिति** । पञ्चरात्रादिस्मृतीनामिति वर्तते ॥ **सुशकमेवेति** । तथा च युक्तं मदीयं फलसंवादेन पाशुपतादिस्मृतिप्रामाण्यसाधनं व्यभिचारस्य कर्तृकरणादिवैगुण्यनिबन्धनत्वकल्पनं चेति प्रतिबन्दीग्रहण एव शङ्कितुस्तात्पर्यमिति द्रष्टव्यम् । सुहृद्भावेनेति तु गुडजिह्विकामात्रम् । अत एव 'यदपि प्रतिबन्दीनाददानस्य विवक्षितमि'त्युत्तरत्र वक्ष्यतीति द्रष्टव्यम् । यद्वा यथास्थितैवेयमुक्तिरन्यथा स्वातन्त्र्येण फलव्यभिचारेणाप्रामाण्यशङ्काया उत्तराधिकरणे निराकरिष्यमाणत्वेन व्यभिचारस्यान्यथासिद्धेरत्राप्युत्पादनीयत्वात्प्रतिबन्द्याश्च मौचितत्वादुक्तशङ्कानुदयादिति द्रष्टव्यम् । ननु पञ्चरात्रादिस्मृतीनां युक्तिमूलत्वेन प्रामाण्यस्य शङ्कितत्वात्तदभावप्रतिपादनाय स्मार्तकर्मानुष्ठाने स्मृत्युक्ताधिकारस्यैव दुर्निरूपत्वस्य वक्तव्यतया वेदोक्ताधिकारस्य दुर्निरूपत्ववर्णनमसङ्गतमित्यतो वेदोक्ताधिकारातिरिक्तस्य स्मृत्युक्ताधिकारस्यैवाभावात्स्मार्तकर्मानुष्ठानेऽपि वेदोक्त एवाधिकार इति ज्ञापयितुं वेदोक्ताधिकारस्य दुर्निरूपत्ववर्णनमित्याह **वैदिकेति** ॥ **निषेकादीति** । गर्भाधानादीत्यर्थः । **उपलक्षणमिति** । अत एव 'अशक्यसाधनं चोक्त्वा'इत्युत्तरत्र वक्ष्यतीति भावः । ननु वेदोक्तस्याधिकारस्य वेदेनैव निरूपणात्कथं दुर्निरूपत्वमित्यत आह **दुर्निरूपत्वमिति** । ननु समर्थप्रवृत्तिजनकत्वेनैव पञ्चरात्रादेः प्रामाण्यानुमानसम्भवात् किमिति वेदमूलकत्वाश्रयणमिति शङ्कायां, मूले वेदोक्ताधिकारस्य दुर्निरूपत्वेन फलनियमो व्यभिचारो वा न ज्ञातुं शक्यत इत्युक्तम् । तदयुक्तम् । तावताऽपि समर्थप्रवृत्तिजनकत्वेन प्रामाण्यानुमाने दोषानभिधानेन तस्यादुष्टत्वप्रसङ्गात् । कथं च वेदोक्ताधिकारदुर्निरूपत्वस्य फलनियमव्यभिचारयोरनवधारणप्रयोजकत्वम् । के चात्र वेदोक्ताधिकाराः । कथं च तेषां दुर्निरूपत्वमित्यत आह **एतदुक्तं भवतीति** ॥ **प्रमितं खल्विति** । अनेन 'फलस्य नियमो व्यभिचारो वा ज्ञातुं न शक्यते' इत्यंशेन मूले समर्थप्रवृत्तिजनकत्वरूपलिङ्गस्य सन्दिग्धासिद्धत्वमुच्यत इत्युक्तं भवति । ननु फलनियमस्य दुरवधारणत्वकथनेन कथमुक्तलिङ्गस्यानवधारणोक्तिलाभ इत्यत आह

**तस्य चेति** ॥ **व्यभिचारस्येति** । एतत्स्मृतिविहितसाधनानुष्ठानवतामपि तत्फलाभावस्य बहुलमुपलम्भेनेत्यर्थः । कथं तर्हि साधनानुष्ठानेन क्वचित्फलोपलम्भ इत्यत आह **तदवधारणे चेति** । अत्र साधनानुष्ठानेन काचित्कफलोपलम्भ एव तदवधारणपदेन विवक्षितः । अत एव वक्ष्यति 'क्वचित्फलोपलम्भस्तु काकतालीय' इत्यादि इति द्रष्टव्यम् । क्वचित्तदनवधारणे चेति पाठः । तत्र ननु लिङ्गस्य नियमगर्भत्वमेव कुत इत्यत आह **तदनवधारणे चेति** । **लिङ्गस्य** नियमाघटितत्व इत्यर्थ इति योज्यम् । इदानीं वेदोक्ताधिकारनिरूपणपूर्वकं तेषां दुर्निरूपतायाः फलनियमव्यभिचारयोरनवधारणप्रयोजकत्वमुपपादयितुमुपक्रमते **तत्रैतावद्वक्तव्यमित्यादिना** ॥ **कारणसामग्रीति** । कारणपौष्कल्यमित्यर्थः । **अयातयामत्वम्** अगतवीर्यत्वम् । आदिपदेनोचितस्वरवर्णाद्युपेतत्वपरिग्रहः ॥ **काकतालीय इति** । अत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ तेन काकागमनमिव तालपतनमिव काकतालमिति इवार्थे 'समासाच्च तद्विषयादि'ति ज्ञापकात्सुप्सुपेति वा समासः । उभयत्रोपमेयदेवदत्तागमनं तदानीमेव दस्योरुपनिपातश्च । तेन देवदत्तस्य दस्योश्च समागमः काकतालसमागमसदृश इति फलति । ततश्च काकतालमिव काकतालीयमितिद्वितीयस्मिन्निवार्थे 'समासाच्चतद्विषयादि'ति सूत्रेण 'इवे प्रतिकृतौ'इत्याधिकारिकस्थेन छप्रत्ययः। तथा च पतता तालेन काकवधस्येवोपनिपतता दस्युना देवदत्तवधः कृत इति तदर्थः। ततश्च काकागमनतालपतनसमागमरूपस्य तालकृतकाकवधरूपस्य चोपमानस्यानुपादानात्प्रत्ययार्थोपमायामुपमानलोपः । समासार्थोपमायां वाचनिकोपमानलोपः सर्वोऽप्ययं लोपः छप्रत्ययविधायकशास्त्रकृतः । ततश्च यद्यपि 'समासाच्च तद्विषयादि'ति सूत्रेणेवार्थविषयात्समासादपरस्मिन्निवार्थे छप्रत्ययेन निष्पादितः काकतालीयशब्द उपमाद्वयगर्भस्तथा च काकतालयोरिव यादृच्छिको दस्युदेवदत्तयोःसमागम इत्येका समासार्थोपमा । तदानीमेव पतता तालेन काकस्येव दस्युना देवदत्तस्य वधः कृत इत्यन्या तद्धितार्थोपमा चेति यत्रोपमाद्वयं तत्रैवास्य शब्दस्य सम्पूर्णार्थता तथाऽपि यादृच्छिकसमागममात्रेऽप्यस्य प्रचुरः प्रयोगो दृश्यत इत्ययमपि प्रयोगो यादृच्छिकसमागममात्रविषय इति ध्येयम् ॥ **अन्यनिमित्तक इति** । गुडजिह्विकानिमित्तक इत्यर्थः ॥ **सन्दिग्धेनेति** । नियमगर्भप्रवृत्तिजनकत्वरूपलिङ्गेनेति शेषः । ननु प्रामाण्यनिश्चयेनैवोक्तसन्देहनिवृत्तिद्वारा नियमगर्भसमर्थप्रवृत्तिजनकत्वरूपलिङ्गनिश्चयसम्भवात्कथं सन्दिग्धत्वमित्यत आह **प्रामाण्यसिद्ध्युत्तरकालं त्विति** ॥ **इतरेतराश्रयत्वमिति** । प्रामाण्यसिद्धौ व्यभिचारस्य वैगुण्यादिनिमित्तताकल्पनया-नियमगर्भसमर्थप्रवृत्तिजनकत्वरूपलिङ्गनिश्चयः तन्निश्चये च निश्चितेन तेन प्रामाण्यनिश्चयः इतीतरेतराश्रयत्वमित्यर्थः । वेदसंवादेन तु प्रामाण्यावधारणे नायं दोषः । फलव्यभिचारस्यान्यनिमित्तताकल्पनायाः प्रामाण्यनिश्चयाधीनत्वेऽपि प्रामाण्यनिश्चयस्यान्यनिमित्तताकल्पनाधीनत्वाभावादित्याशयेनाह **वेदसंवादेन त्विति** ।

स० — ननु पञ्चरात्रादिस्मृतीनाम् आतिपूरुत्वेन प्रामाण्यस्य शङ्कितत्वात् तदभावप्रतिपादनाय स्मार्तकर्मानुष्ठाने स्मृत्युक्ताधिकारस्यैव दुर्निरूपत्वस्यैव वक्तव्यतया वेदोक्ताधिकारस्य दुर्निरूपत्ववर्णनमसङ्गतमित्यतो वेदोक्ताधिकारातिरिक्तस्य स्मृत्युक्ताधिकारस्याभावात् स्मार्तकर्मानुष्ठानेऽपि वेदोक्त एवाधिकार इति द्योतयितुं वेदोक्ताधिकारस्य दुर्निरूपत्ववर्णनमित्याह **वैदिकग्रन्थोपदिष्टानुष्ठान इति** । **हिशब्दो यस्मादित्यर्थे इति** । ननु हिशब्दो हेतावित्यनुक्त्वा यस्मादित्यर्थ इति किमर्थमुक्त इति चेन्न । हेतुत्वबोधनाय पञ्चम्या उद्देश्यसमर्पणार्थयच्छब्दस्य च सार्थकत्वादिति भावः ।

ननु व्यभिचारस्योपलम्भात् समर्थप्रवृत्तिजनकत्वानवधारणं चेत् तर्हि फलसंवाददर्शनेन तदवधारणमपि स्यात्तत्राह **तदवधारणे चेति** । फलसंवादेन लिङ्गावधारणे करिष्यमाणे चेत्यर्थः । **तन्न** संभवतीतिशेषः । फलोपलब्ध्या लिङ्गावधारणं नोपपन्नम् । फलोपलब्धेः काकतालीयतायाः शङ्कनेन तदसम्भवादिति भावः । क्वचित्तदनवधारणे इति पाठः । तत्र पूर्ववाक्यस्यैकवाक्यतया एवं योजना । तदनवधारणे नियमानवधारणे । अत एव तस्य हेत्वविषयत्वे चेत्यर्थः । किं तु फलोपलम्भमात्रस्यैव हेतुत्वे इत्यपि । तथा च हेतोरप्रयोजकत्वमिति भावः । **कारणसामग्री** कारणसाकल्यमित्यर्थः । **विशुद्धाभिसन्ध्यादिमतेति** । विशुद्धाभिप्रायादिमतेत्यर्थः । **अन्यनिमित्त इति** । गुडजिह्विकानिमित्त इत्यर्थः । ननु प्रामाण्यसिद्ध्यनन्तरं फलव्यभिचारस्य कर्त्रादिवैगुण्यनिमित्तत्वं प्रकल्प्य फलसंवादेन प्रामाण्यनिश्चयोपपत्तिरित्यत आह **प्रामाण्यसिद्ध्युत्तरकालमिति** ॥ **इतरेतराश्रयत्वम्** फलसंवादेन प्रामाण्ये निश्चिते फलव्यभिचारस्य कर्त्रादिवैगुण्यनिमित्तत्वसिद्धिः । तत्सिद्धौ च बाधकाभावेन फलसंवादेन प्रामाण्यनिश्चय इत्यन्योन्याश्रयत्वमित्यर्थः ।

प० —स्मृत्यादिप्रसङ्गे वेदप्रत्यक्षानङ्गतमित्यत आह **वैदिकेति** ॥ स्मृत्युक्तस्यापि वैदिकत्वादिति भावः ॥ **पञ्चरात्रादयोपीति** । 'भारतं पञ्चरात्रं च वेदा इत्येव शब्दिता' इति नविलक्षणत्वनयभाष्योक्तस्मृतेरिति भावः । 'न च तद्युक्तिमूलते'त्यनेनान्वय इति अर्थतस्तदनुवादेन दर्शयति **तस्मात्फलसंवादेनेत्यादिना** ॥ तात्पर्यस्यास्फुटत्वादाह **एतदुक्तमिति** ॥ **प्रमितमिति** । लिङ्गप्रमितावेव तात्पर्यं न तु लिङ्गकरणतायाम् । परामर्शकरणताया एव तर्कताण्डवे समर्थनात् ॥ **तस्य चेति** । हेतोरित्यर्थः ॥ **काकतालीयताया इति** । काकागमनसमय एव तालफलपतनं यथा तथेत्यर्थः । उपमानाच्छ इति छ प्रत्ययः । काकागमनतालफलपतनयोर्यथा यादृच्छिकत्वं तथात्वस्येह शङ्कनादित्यर्थः ॥ **कारणसामग्रीति** । कारणानां मेलनमित्यर्थः ॥ **अयातयामत्वादिकं** वीर्यवत्त्वादिकमित्यर्थः । प्रवृत्तिसामर्थ्येनेतीतिशब्दस्यैतदुक्तं भवतीतिपूर्वेणान्वयः ।

या० — **व्यभिचारस्य बहुलमुपलम्भेनेति** । एतत्स्मृतिविहितसाधनानुष्ठानवतामपि तत्फला-भावस्य बहुलमुपलम्भेनेत्यर्थः । ननु फलस्यापि क्वचिदवधारणेनोक्तलिङ्गावधारणमपि किन्न स्यादित्यत आह **तदवधारण इति** । क्वचित्साधनानुष्ठानेन फलावधारण इत्यर्थः ॥ **निषेकादीति** । गर्भाधाना-दीत्यर्थः । **अयातयामत्वम**गतवीर्यत्वम् । आदिपदेन चित्स्वरवर्णाद्युपेतत्वं ग्राह्यम् ॥ **अन्यनिमित्त एवेति** । पूर्वादृष्टनिमित्त एवेत्यर्थः । यद्वा स्मृतिकर्तुर्गुडजिह्विकानिमित्त एवेत्यर्थः ॥ **सन्दिग्धेनेति** । नियमगर्भेण प्रवृत्तिजनकत्वेनेत्यर्थः । ननु प्रामाण्यनिश्चयेनैवोक्तसन्देहनिवृत्तिर्भविष्यतीत्यत आह **प्रामाण्यसिद्ध्युत्तरेति** । प्रामाण्यसिद्धौ व्यभिचारस्य वैगुण्यादिनिमित्तताकल्पनया नियमगर्भसमर्थ-प्रवृत्तिजनकत्वनिश्चयः । तन्निश्चये च तेन प्रामाण्यनिश्चय इतीतरेतराश्रयत्वं स्यादित्यर्थः ।

श्री० — **अन्यथा** व्यभिचारस्य वैगुण्यनिबन्धनताऽनङ्गीकारे । ननु पञ्चरात्रादिवैदिकग्रन्थोक्ता-नुष्ठाने वैदिकोक्तस्येति वक्तव्यं वेदोक्तस्येति कथमुक्तमित्यत आह **वैदिकेति** । **तस्य** हेतोः । **तदवधारणे** फलविसंवादेन लिङ्गावधारणे । **शङ्कनात्** फलसंवादस्येति शेषः । **निश्चय इति** एतावद्वक्तव्यमित्यन्वयः । **सामग्री** साकल्यम् । द्रव्यस्य शुचित्वं नाम न्यायार्जितत्वम् । **सन्दिग्धेन** फलोपलम्भरूपेण लिङ्गेन । ननु न भविष्यति सन्देहः फलनियममेवाङ्गीकृत्य फलसंवादेन प्रामाण्यसिद्ध्यनन्तरं फलव्यभिचारस्य वैगुण्यनिमित्तताकल्पनसम्भवेनैककोटेर्निश्चितत्वादित्याशङ्क्य फलसंवादेन प्रामाण्यसिद्धौ तदन्यथाऽनुप-पत्त्या व्यभिचारस्य वैगुण्यनिमित्तत्वं कल्पनीयम् । व्यभिचारस्य वैगुण्याऽदिनाऽन्यथासिद्धौ कल्पितायां फलनियमसम्भवेन फलसंवादेन प्रामाण्यसिद्धिरित्यन्योन्याश्रयः स्यादत एककोटिनिश्चायकाभावेन सन्देहः स्यादेवेति न सन्दिग्धेन फलसंवादेन प्रामाण्यानुमानं युक्तमित्याशयेनाह **प्रामाण्यसिद्धीत्यादिना** ।

च० — **व्यभिचारस्य बहुलमुपलम्भेनेति** । पञ्चरात्रस्मृतिविहितसाधनानुष्ठानवतामपि तत्फलाभावस्य बहुलमुपलम्भेनेत्यर्थः । **तदवधारणे चेति** । काचित्कसाधनानुष्ठाननियन्त्रितफला-वधारण इत्यर्थः । **निषेकादीति** । गर्भाधानादीत्यर्थः । **अयातयामत्वम**गतवीर्यत्वम् । **संदिग्धे-नेति** । नियमघटितप्रवृत्तिजनकत्वेनेत्यर्थः । प्रामाण्यसिद्ध्यधीनव्यभिचारधर्मिकवैगुण्यादिनिमित्तकता-कल्पनानिबन्धनं नियमघटितसमर्थप्रवृत्तिजनकत्वावधारणं तन्नियन्त्रितश्च प्रामाण्यनिश्चय इतीतरेतराश्र-यत्वं प्रसज्ज्येतेत्यर्थः ।

सु० — **एवं न्यायसाम्याभावेन प्रतिबन्दी मोचिता । यदपि प्रतिबन्दीमाददानस्य विवक्षितम् । यथा च पञ्चरात्रादिप्रामाण्यमभिलषता फलव्यभिचारस्याधिकारादिवैकल्यनिबन्ध-**

नता कल्प्या तथाऽहमपि पाशुपतादिस्मृतिषु कल्पयिष्यामीति; तदयुक्तं वैषम्यादित्याह अधिकारो हीति ।

अनु० — अधिकारो हि सुलभः कथितोऽन्यागमेष्वलम् ।
वेदोक्तो ह्यधिकारस्तु दुर्लभस्सर्वमानुषैः ॥

**अधिकारग्रहणं साधनस्याप्युपलक्षणम् । अन्यागमेषु पाशुपतादिषु कथितोऽधिकारोऽलं सुलभोऽनायाससाध्यः । कुतः । यस्मादन्यागमेषु तथा कथितः । तथा च तद्वैकल्यकल्पनमसंभावनाप्रतिहतम् । वेदोक्तस्त्वधिकारो विशुद्धसन्तानजत्वादिः सर्वमानुषैर्दुर्लभ इति प्रसिद्धमेव । अतस्तद्वैकल्यकल्पनं सम्भावितमेवेति ।**

**शे० — एवं न्यायसाम्याभावेनेति ।** फलविसंवादेन पाशुपतादिस्मृतीनामप्रामाण्ये तर्हि तत एव पाञ्चरात्रादिस्मृतीनामप्यप्रामाण्यं स्यादिति प्रतिबन्दी परेण गृहीता सा न्यायसाम्याभावोपपादनेन परिहृतेत्यर्थः । **यदपि प्रतिबन्दीमाददानस्य विवक्षितमिति ।** अनेन प्राचीनसुहृद्भावेन पृच्छन्तमिन्युक्तिर्गुडजिह्विकामात्रमित्युक्तं भवति । अभ्युच्चयेनैतद्विवक्षितनिराकरणं प्रतिबन्द्या मोचितत्वेन तन्मूलविवक्षाया अप्रयोजकत्वादित्यप्याहुः ।

**स० — एवं न्यायसाम्याभावेन प्रतिबन्दी मोचितेति ।** प्रवृत्तिसामर्थ्येनाप्तिमूलत्वे फलविसंवादेनाप्तिमूलत्वाभावश्च स्यादित्यस्माभिरुक्ते तथा सति फलविसंवादात् पञ्चरात्रादीनामप्यप्रामाण्यं स्यादिति प्रतिबन्दी अभिहिता । सा उक्तन्यायेन साम्याभावप्रतिपादनेन परिहृतेत्यर्थः ।

**प० —** अन्यागमेष्विति विषयसप्तमीमुपेत्य तावद्योजनामाह **अन्यागमेषु पाशुपतादिष्विति ।** अधिकरणसप्तमीमभ्युपेत्य योजनान्तरमाह **यस्मादित्यादिना । तथा कथितः** अधिकारः सुलभः कथित इत्यर्थः । तुशब्दस्य व्युत्क्रमेणान्वयमुपेत्य वेदोक्त इत्यादेरर्थमाह **वेदोक्तस्त्विति ।** हिशब्दार्थः प्रसिद्धमेवेति ।

**श्री० — न्यायसाम्येति ।** पाशुपतादिस्मृतीनां प्रामाण्यावधारणस्य यथा फलसंवादादियुक्त्यधीनत्वं तथा न पञ्चरात्रादिस्मृतिप्रामाण्यावधारणस्य तदधीनत्वम् । किन्नाम वेदसंवादाधीनत्वमेवेति न न्यायसाम्यमित्यर्थः । **तथा कथितः** सुलभत्वेन कथित इत्यर्थः ।

**सु० — ननु कथमन्यागमेष्वधिकारः साधनं च सुलभमुक्तमित्यतो लेशेन दर्शयति अन्यागमेष्विति ।**

अनु० — अन्यागमेषु विप्रत्वमपि चण्डालजन्मनाम् ।
मण्डलान्तःप्रवेशेन क्रमशः प्रतिपाद्यते ।

यद्भवान्तरेण महता तपसा विना वा(न)ऽलभ्यं तदपीत्यर्थः। यतित्वादिकमपीति वा। चण्डालजन्मनामपि किमु क्षत्रियादीनामिति वा। विप्रा एव ये कर्मणा चण्डालास्तेषां कथञ्चित्प्रत्यापत्तिर्वैदिकैरप्यङ्गीक्रियत इत्यतश्चण्डालजन्मनामित्युक्तम्। चण्डालेषु जन्म येषामिति वा। चण्डालसंबन्धित्वाच्चण्डालं जन्म येषामिति वा तथोक्ताः। क्रमशो मण्डलान्तःप्रवेशेनेत्यनेनेदमुच्यते। यो यावज्जातिव्यवहितस्तस्य तावन्ति मण्डलानि पूज्यानि (कल्प्यानि)। तत्र यद्यन्मण्डलं प्रविशति तत्तज्जातीयो भवति। चरममण्डलप्रवेशे तु विप्रः संपद्यत इत्यन्यागमेषु प्रतिपाद्यत इति संबन्धः। तथा चोक्तम् 'दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति क्षणात्। कापालं व्रतमास्थाय यतिर्भवति मानवः' इति। एतदधिकारसौलभ्यमुदाहृतम्। एवं साधनसौलभ्यमपि द्रष्टव्यम्। यथाऽऽहुः कापालिकाः। 'मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः। भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति। कर्णिका रुचकं चैव कुण्डलं च शिखामणिः। भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते। आभिर्मुद्रितदेहस्तु न भूय इह जायते (कायभाक्)'इत्यादि। तथा कालामुखा अपि। रुद्राक्षकङ्कणं हस्ते जटा चैका च मस्तके। कपालं भस्मना स्नानं लकुटं (च कला) कलशार्चनम्'इत्यादि।

शे० — साधनसौलभ्यस्याप्रदर्शितत्वाल्लेशेनेत्युक्तम्। विश्वामित्रादिसंग्रहायाह **महता तपसेति** ॥ **प्रत्यापत्तिरिति**। प्रायश्चित्तादिना ब्राह्मणत्वादेः पुनः प्राप्तिरित्यर्थः ॥ **चण्डालसम्बन्धित्वादिति**। अत्र सम्बधार्थे विहितस्याणो लुक् द्रष्टव्यः। तेन चण्डालमिति साधु। अन्यथाऽऽदिवृद्धौ सत्यां चाण्डालमित्येव स्यादिति द्रष्टव्यम्। अणि वृद्ध्यभावश्छान्दस इत्यप्याहुः ॥ **दीक्षाप्रवेशमात्रेणेति**। उक्तरीत्या चरममण्डलप्रवेशमात्रेणेत्यर्थः। **कर्णिका** कर्णभूषणविशेषः। योगानुशासनं वा। परमुद्रां दर्शयति **तथेति**। **लकुटं** चक्रकाष्ठम्। कुण्डलं च कलार्चनमित्यपि क्वचित्पाठः। तत्र कलाशब्दो लिङ्गपर इति द्रष्टव्यम्।

स० — **चण्डालसंबन्धित्वादिति**। तथा च सम्बन्धार्थकाण्प्रत्ययस्य लोपेन एवं व्युत्पत्तिकथनमिति भावः।

प० — गाधिराजपुत्रस्य जन्मान्तरेण विनैव विप्रत्वस्य पुराणेषु श्रवणादाह **महता तपसा विना वेति**। अलभ्यमिति पदच्छेदः। क्वचिन्न लभ्यमिति पाठः ॥ **प्रत्यापत्तिः**। प्रतिप्रसवः। पुनर्विप्रत्वप्राप्तिरिति यावत् ॥ **चण्डालेषु जन्मेति**। 'सप्तमी शौण्डैरि'त्यत्र योगविभागात्समास इति भावः।

या० — **चण्डालसंबन्धित्वादिति** । तथा चाणि वृद्ध्यभावश्छान्दसः । प्रत्ययान्तरं वा कल्पनीयमिति भावः । **दीक्षा पूर्वोक्ता** । कापालं व्रतं तच्छास्त्रोदितं द्रष्टव्यम् । 'कपालं भस्मना स्नानमि'ति वक्ष्यमाणं वा । परमुद्राप्रदर्शनार्थमाह **तथा कालामुखा अपीति** । **कर्णिका** कर्णभूषण-विशेषः । **कर्णिका** योगासनमिति केचित् । **लकुटं** वक्रकाष्ठम् । कुण्डलं च कलार्चनमिति पाठे **कलार्चनं** लिङ्गपूजा ॥ २=१=१ ॥

श्री० — जन्मपदकृत्यमाह **विप्रा एवेत्यादिना** । व्यधिकरणबहुव्रीहिमङ्गीकृत्य व्याख्याय समानाधिकरणबहुव्रीहिमङ्गीकृत्यापि व्याख्याति **चण्डालसंबन्धित्वादिति** । **कलशार्चनं** घटपूजा ।

च० —**चण्डालेषु जन्मेति** । सप्तमी शौण्डैरित्यत्र योगविभागात्समासस्याकरे व्यक्तत्वादिति भावः । **चण्डालसंबन्धित्वादिति** । तथा चाणि वृद्ध्यभावश्छन्दसः प्रत्ययान्तरं वा कल्पनीयमिति स्थितम् ।

सु० — **ननु यथाऽधिकारसाधनयोः सौलभ्यमुक्तमेवं तद्दौर्लभ्यमपि तत्रैवोक्तमिति चेत्तर्हि न केवलं फलविसंवादेन पाशुपतादीनामप्रामाण्यम् । किन्नाम परस्परविसंवादेनापीत्याह** अधिकारमिति ।

अनु० — अधिकारं दुरापाद्यमुक्त्वाऽतिसुलभं पुनः ।
अशक्यं साधनं चोक्त्वा सुशकं तत्फलाप्तये ।
उच्यतेऽतस्तदुक्तं हि व्यभिचारि फलेऽपि तु ।
कथं प्रमाणतां गच्छेत् ॥ २ । १ । १ ॥

**यस्मात्कचिदधिकारं दुरापाद्यमुक्त्वा पुनरपि सुलभं ब्रवीति, यस्माच्च तत्फलाप्तये सम्पदादिफलाप्तये, साधनमशक्यमुक्त्वा सुशकं चोच्यते । यस्माच्च तदुक्तं साधनं फलेऽपि विषये व्यभिचारि अतस्तदुक्तं सा पाशुपताद्युक्तिः कथं प्रमाणतां गच्छेन्न कथमपीत्यर्थः । दुर्लभत्वोक्त्यनुरोधेन सौलभ्यवचनं प्ररोचनार्थं व्याख्यायताम् । तथा च फलविसंवादोऽप्य-धिकारादिवैगुण्यनिमित्तो भविष्यति यथा पञ्चरात्रादाविति चेन्न । वैषम्यात् । युक्तं हि पञ्चरात्रादिषु तथा कल्पनम् । श्रुतिमूलत्वेन प्रामाण्यस्य निश्चिततया कल्पकस्य विद्यमानत्वात् । पाशुपतादौ तु तदभावेन विसंवादस्याप्रामाण्यनिबन्धनतोपपत्तौ कल्पकाभावात् । क्वचित्संवा-दस्तु काकतालीयो वा गुडजिह्विकानिमित्तो वा भविष्यति । तदिदमुक्तं तुशब्देन । तदुक्तं त्विति संबन्धः । तदेवं पाशुपतादीनामपस्मृतित्वान्न तद्विरोधेनोक्तार्थासंभवः शङ्कनीय इति स्थितम् ॥ २ । १ । १ ॥**

शे०— व्यभिचारि फले त्विति तुशब्दव्यावर्त्यां शङ्कामुत्थापयति **दुर्लभत्वोक्त्यनुरोधेने-त्यादिना ।** गुडजिह्विकानिमित्तो वेत्यत्र लोकव्यामोहनायेति शेषः ॥ २=१=१ ॥

स०— **गुडजिह्विकानिमित्त इति ।** गुडजिह्विका निमित्तं प्रयोजनं यस्येति विग्रह । गुडस्याधेयत्वमिव जिह्वाया आधारत्वमिवेति गुडजिह्विका । उच्यत्वात् । ( रुच्यर्थत्वम् ) अनुमानेन गृह्यते । तत्प्रयोजकतेति भावः ॥ २ । १ । १ ॥

प०— तदुक्तमिति कर्मणि निष्ठेति भावेनाह **यस्माच्च तदुक्तं साधनमिति ।** भावे निष्ठेत्यु-पेत्यार्थान्तरमाह **तदुक्तं सा पाशुपताद्युक्तिरिति ।** शङ्कते **दुर्लभत्वेति । तदुक्तं त्विति संबन्ध इति ।** पाशुपताद्युक्तिस्त्वित्यर्थः ॥ २ । १ । १ ॥ छ ॥

श्री०— **तत्रैवोक्तं** तथा च भगवन्मत इवास्मन्मतेऽप्यधिकारस्य दुर्लभत्वात्फलव्यभिचारं वैगुण्यनिमित्तकमेव कलयिष्यतीति युक्तं फलसंवादेन पाशुपतादिस्मृतिप्रामाण्यानुमानमिति हृदयम् । पञ्चरात्रपाशुपतस्मृत्योर्विशेषसूचकतुशब्दार्थमाह **दुर्लभत्वोक्तीत्यादिना । तदभावेन कल्पकाभावात् ।** फलविसंवादस्य वैगुण्यनिमित्ततायां कल्पकस्य प्रामाण्यनिश्चयस्याभावादित्यर्थः ॥ २ । १ । १ ॥

सु०— ॥ ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ॥ **परिहृतः स्मृतिविरोधः । संप्रति युक्तिविरोधः परिह्रियते । तथा हि । श्रुत्यादिसमन्वयेन खलु जगज्जन्मादिकारणत्वं ब्रह्मणो निरूपितम् । तत्र श्रुतेरेव प्रामाण्यं तावद्दुर्लभम् । यद्धि फलव्यभिचारि तदप्रमाणं दृष्टम् । यथा विप्रलंभकवाक्यम् । फलव्यभिचारिणी च श्रुतिः । पुत्रकामेष्ट्याद्यनुष्ठानेऽपि कदाचित्पुत्रजन्माद्यनुपलब्धेः । अन्यथा फलानुपलब्ध्योक्तं पाशुपताद्यप्रामाण्यमपि न स्यात् । एकदेशे चाप्रामाण्ये तन्न्यायेनैकदेशान्तरस्याप्यप्रामाण्यानुमानं सुलभमेव ॥ किञ्च यदबुद्धि-पूर्वकं तदप्रमाणं यथा पिपीलिकालिपिः । अबुद्धिपूर्वकश्च वेदोऽपौरुषेयत्वाङ्गीकारात् । पौरुषेयत्वे च मूलप्रमाणशून्यत्वादप्रमाणमेव, विप्रलंभकवाक्यवत् । अपि चाप्ताप्रणीतवाक्यत्वा दुन्मत्तवाक्यवदप्रामाण्यं वेदस्यानुमेयम् । यदा वेदस्य ई(ए)ता दृशी दशा तदा का वात-स्मृतीतिहासपुराणानां फलव्यभिचारादि(दोष)झर्झराणां प्रामाण्यस्य । तथा च वेदादिसमन्व-येन न जगज्जन्मादिकारणत्वं ब्रह्मणः सिद्ध्यतीत्येवं प्राप्ते तत्प्रतिविधानार्थस्य** न विलक्षणत्वादिति **सूत्रस्य तात्पर्यमाह** नित्यत्वादिति ।

अनु०— ॥ ॐ **न विलक्षणत्वादस्य तथात्वं च शब्दात्** ॐ ॥

नित्यत्वात्पुरुषोद्भवैः ।
उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेत् ।

वेदवाक्यमिति शेषः । अयमर्थः । बोधकत्वेन खलु करणानां प्रामाण्यं दोषात्तु, कदाचिदपनीयते । वेदवाक्यं च बोधकत्वेन वादिप्रतिवादिसंमतम् । अन्यथा फलव्यभिचारोऽपि तत्र(स्य) न स्यात् । वाक्ये च प्रामाणस्यापवादका दोषा अबोधकत्वविपरीतबोधकत्वादयः सर्वेऽपि वक्तृदोषनिबन्धना एव । अन्वयव्यतिरेकाभ्यां तदवगमात् । वेदवाक्यं च नित्यत्वादपौरुषेयत्वात्पुरुषदोषनिबन्धनैः सर्वदोषैर्वर्जितं स्वत एव प्रामाण्यमाप्नोति । प्रामाण्ये च निश्चिते सति फलव्यभिचारस्य सामग्रीवैकल्यं वा प्रतिबन्धकसद्भावो वा कारणं कल्पयिष्यते । अन्यथासिद्धानन्यथासिद्धयोरनन्यथासिद्धस्य बलवत्त्वादिति ।

अत्रैते प्रयोगा भवन्ति । वेदः प्रमाणं बोधकत्वे सति विपरीताबोधकत्वात्संप्रतिपन्नवत् । विमतो विपरीतबोधको न भवति अनाप्तप्रणीतवाक्यत्वात्संप्रतिपन्नवाक्यवत् । विमतो अनाप्तप्रणीतो न भवति अपौरुषेयत्वाद्व्योमवत् । विमतः फलव्यभिचारो वैकल्यादिनिबन्धनो भव(वितुमर्ह)ति प्रमाणसिद्धफलव्यभिचारत्वात चरकाद्युक्तफलव्यभिचारवदिति ।

शे०— ॥ ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ॥ अत्रापि पूर्वमेव स्मृतिविरोधः परिहृियत इति भ्रान्तिनिरासाय पूर्वोत्तराधिकरणयोरर्थभेदमाह **परिहृत इत्यादिना** । सम्प्रतीत्यनेन 'इतरेषां चानुपलब्धेरि'ति पूर्वाधिकरणसिद्धान्तन्यायेनेह पूर्वपक्षोत्थानादनन्तरसङ्गतिः सूचिता भवतीति ज्ञेयम् । उत्तरत्र पञ्चरात्रादिस्मृतिप्रामाण्यादिदौर्लभ्यस्यापि वक्ष्यमाणत्वात्तावदित्युक्तम् । 'नित्यत्वात्पुरुषोद्भवैः । उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेदि'त्यनेन मूले प्रथमतो वेदप्रामाण्यव्युत्पादनेन फलव्यभिचारस्यान्यथासिद्धिसूचनात्तदनुरोधेन प्रथमतः फलव्यभिचारेण तदप्रामाण्यशङ्कामेवोत्थापयति **यद्वीत्यादिना** । फलव्यभिचारेऽप्यस्तु वेदस्य प्रामाण्यं बाधकाभावादित्यप्रयोजकताशङ्कां परिहरति **अन्यथेति** । ननु 'पुत्रकामः पुत्रेष्ट्या यजेते'त्यादेः फलव्यभिचारेणाप्रामाण्येऽपि जगत्कारणत्वाभिधायकानां 'यतो वे'त्यादिवाक्यानां फलव्यभिचारशून्यानामप्रामाण्यं निर्निबन्धनमित्यतः फलव्यभिचारेण तद्वतो वेदभागस्याप्रामाण्यसिद्धौ तद्दृष्टान्तेन वेदत्वेन हेतुना 'यतो वे'त्यादिवेदभागस्याप्यप्रामाण्यसाधनात् युक्तैव कृत्स्नस्यापि वेदस्याप्रामाण्यसिद्धिरित्याह **एकदेशे चेति** । पिपीलिकालिपिश्चेत्याद्युत्तरानुव्याख्यानव्यावर्त्यत्वेन सूचितयुक्त्याऽपि तामुत्थापयति **किञ्चेति** । हेत्वसिद्धिं परिहरति **अबुद्धिपूर्वकश्चेति** । ननु च वेदस्य पौरुषेयत्वमेवाङ्गीकुर्मस्तथा च कहेत्वसिद्धेर्नाप्रामाण्यप्रसङ्ग इत्यतो वृथाऽयं पौरुषेयत्वाङ्गीकारः परस्य । पौरुषेयत्वेऽप्यप्रामाण्यस्य वज्रलेपत्वादित्याशयेनाह **पौरुषेयत्वे चेति** । पौरुषेयवाक्यत्वात्स्मृत्यादिवत्स्वातन्त्र्येण प्रामाण्यानुपपत्त्या प्रमाणमूलकत्वेनैव प्रामाण्यं वाच्यम् ।

न च तत्सम्भवति । वैदिकार्थस्य प्रत्यक्षाद्ययोग्यत्वेन तत्र प्रत्यक्षानुमानयोरप्रवृत्त्या तयोर्वेदं प्रति मूलत्वासम्भवाद्वाक्यस्याप्यपौरुषेयस्यान्यस्यानभ्युपगमात् पौरुषेयवाक्यस्यैव तन्मूलत्वे च तत्प्रामाण्यस्याप्युक्तरीत्या मूलप्रमाणसापेक्षतया ऽनवस्थितासिद्धवाक्यपरम्पराकल्पनायामनवस्थापत्तेर्मूलप्रमाणशून्यत्वादप्रामाण्यमित्याशयः । प्रमाणीभूतस्यापि प्रत्यक्षादेराप्तप्रणीततया तत्र व्यभिचारपरिहाराय वाक्यत्वादित्युक्तम् । अस्तु तर्हि स्मृत्यादिसमन्वयेन ब्रह्मणो जगत्कारणत्वसिद्धिरित्यतस्तस्य श्रुतिमूलत्वतत्संवादित्वाभ्यां प्रामाण्यस्येष्टत्वात् श्रुत्यप्रामाण्ये न स्मृत्यादेः प्रामाण्यमित्यभिप्रेत्य तावत्पदसूचितं स्मृत्यादिप्रामाण्यस्य दुर्लभत्वमप्युपपादयति **यदा चेति** ॥ **झर्झराणामिति** । शिथिलावयवानामित्यर्थः ॥ **वेदवाक्यमिति शेष इति** । अत्र वेद इति शेष इति वक्तव्येऽपि वाक्यग्रहणं मूले उज्झितमिति नपुंसकोपपत्त्यर्थम्। मूलेऽपि वेदस्य वाक्यत्वाद्बोधकत्वसिद्धिरित्यभिप्रायेणैव नपुंसकमेव प्रयुक्तमिति द्रष्टव्यम् । ननु वाक्ये यथार्थज्ञानसाधनत्वलक्षणप्रामाण्यस्याप्तोक्तत्वलक्षणगुणाधीनतायाः सर्वत्रोपलब्धत्वादपौरुषेयत्वे च वेदस्याप्तोक्तत्वलक्षणगुणाभावात्प्रामाण्यकारणगुणाभावे कथं दोषाभावमात्रेण प्रामाण्यं स्यादित्यतः प्रामाण्यस्य स्वतस्त्वान्न गुणापेक्षत्वमिति भावेन वेदप्रामाण्यस्योत्पत्तौ स्वतस्त्वं व्युत्पादयितुं प्रत्यक्षानुमानागमप्रामाण्यस्य तावत्तदुपपादयति **अयमर्थ इति** ॥ **बोधकत्वेनेति** ज्ञानजननशक्त्यैव न तु तदतिरिक्तशक्त्या । इत्थम्भूतलक्षणे चेयं तृतीया । प्रामाण्यं यथार्थज्ञानजननशक्तिरूपं यथार्थज्ञानसाधनत्वमित्यर्थः । ततश्चायमर्थः । **करणानां** प्रत्यक्षानुमानागमानां, **प्रामाण्यं** यथार्थज्ञानजननशक्तिः, **बोधकत्वेन** ज्ञानजननशक्त्या ज्ञानजननशक्तिरूपा, करणनिष्ठकरणहेत्वासादितज्ञानजननशक्त्यभिन्नेत्यर्थः । यद्वा बोधकत्वेनेति सहयोगे तृतीया । तथा च करणनिष्ठप्रामाण्यरूपा यथार्थज्ञानजननशक्तिर्बोधकत्वेन ज्ञानजननशक्त्या सहितैवेत्युक्त्या ज्ञानजननशक्तिवद्यथार्थज्ञानजननशक्तेः सहजत्वं लभ्यते । तदनेन करणनिष्ठकरणहेत्वासादितज्ञानजननशक्त्यभिन्नयथार्थज्ञानजननशक्तिमत्त्वं वा ज्ञानजननशक्तिवत्सहजतद्यथार्थजननशक्तिमत्त्वं वा करणानां प्रामाण्यस्योत्पत्तौ स्वतस्त्वमित्युक्तं भवति । नन्वेवं दुष्टेन्द्रियादेरपि ज्ञानजननशक्तिमत्त्वात्तदभिन्नयथार्थज्ञानजननशक्तिमत्त्वं तद्वत्सहजतद्याथार्थ्यजननशक्तिमत्त्वं च स्यादिति तस्यापि प्रामाण्यापत्त्या प्रमाणतदाभासविवेकानुपपत्तिरित्यतो नायमस्ति नियमो यत् करणनिष्ठज्ञानजननशक्त्यभिन्ना तद्वत्सहजा वा सर्वत्र यथार्थज्ञानजननशक्तिरिति, येनोक्तातिप्रसङ्गः स्यात् । किन्तु दोषाभावे सत्येव तथा नियमः । दुष्टेन्द्रियादौ दोषस्यैव सत्त्वात्तेन च यथार्थज्ञानजननशक्तेः प्रतिबन्धान्नाशाद्वा न ज्ञानजननशक्तिमतोऽपि दुष्टेन्द्रियादेः प्रामाण्यं प्रसज्यते प्रामाण्यस्वतस्त्वस्यौत्सर्गिकत्वादित्याशयेनाह **दोषास्त्विति** । अस्त्वेवं करणप्रामाण्यस्य स्वतस्त्वाद्गुणानपेक्षत्वम् । किमेतावता वेदस्येत्यतो वेदस्यापि करणविशेषत्वात्तन्निष्ठयथार्थज्ञानजननशक्तेरपि वेदनिष्ठज्ञानजननशक्त्यभिन्नत्वस्य तद्वत्सहजत्वस्य वोक्तन्यायेन सिद्ध्या तस्य

गुणानपेक्षप्रामाण्यसिद्धिरिति भावेनोभयसम्मत्या तत्र ज्ञानजननशक्तिमुपपादयति **वेदवाक्यं चेति** । ननु दुष्टेन्द्रियादिवद्वेदस्याप्यपवादविषयत्वोपपत्तेर्न तन्निष्ठयथार्थज्ञानजननशक्तेस्तन्निष्ठज्ञानजननशक्त्यभिन्नत्वादित्यतोऽपवादकदोषसद्भावेन दुष्टेन्द्रियादेरपवादविषयत्वेऽपि वेदस्य निर्दोषतयाऽपवादशून्यत्वान्नापवादविषयत्वमित्याशयवान्के ते वाक्यदोषाः कुतश्च तेषां पुरुषदोषाधीनत्वं कथं च वेदस्य तद्राहित्यमित्याशङ्काः क्रमेण परिहरति **वाक्ये चेत्यादिना** । नित्यत्वस्याप्रयोजकत्वेन पुरुषदोषराहित्यानुपपादकत्वात्कथं तस्य मूले हेतुत्वेनोपन्यास इत्यतस्तदनूद्य प्रकृतोपयोगितया व्याचष्टे **नित्यत्वादपौरुषेयत्वादिति ॥ स्वत एवेति** । गुणानपेक्षमेवेत्यर्थः । न त्वपवादविषयो भवतीत्येवार्थः । अस्तु वेदस्य प्रामाण्यं तथाऽपि फलव्यभिचारस्य का गतिरित्यतः फलवादेन प्रामाण्यसिद्ध्यङ्गीकारे उक्तरीत्याऽन्योन्याश्रयप्रसङ्गात्फलव्यभिचारस्य कर्तृकरणादिवैगुण्यनिमित्तताकल्पनाऽनुपपत्तावप्यपौरुषेयादियुक्त्योक्तरीत्या प्रामाण्यसिद्ध्यङ्गीकारेऽन्योन्याश्रयाप्रसङ्गात्फलव्यभिचारस्य कर्तृकरणादिवैगुण्यनिमित्तत्वकल्पनेत्याह **प्रामाण्ये चेति** । अन्यथा फलव्यभिचारि च प्रमाणं चेति व्याघातापातादिति भावः । ननु यथा भवताऽपौरुषेययुक्त्या वेदस्य प्रामाण्यं प्रसाध्य फलव्यभिचारस्य गत्यन्तरं कल्पयितुं शक्यते तथा परेणापि फलव्यभिचारेणाप्रामाण्यं प्रसाध्य प्रामाण्यसाधकापौरुषेयत्वस्य गत्यन्तरं कल्पयितुं शक्यत एव । अप्रामाण्यसाधकफलव्यभिचारस्यैवान्यथासिद्धिर्वर्णनीया न तु प्रामाण्यसाधकापौरुषेयत्वस्येत्यत्र नियामकाभावात्तत्कथं निर्णय इत्यतोऽप्रामाण्यसाधकस्य फलव्यभिचारस्य सावकाशत्वात्प्रामाण्यसाधकस्य चापौरुषेयत्वस्य निरवकाशत्वात्सावकाशान्निरवकाशस्यैव बलवत्त्वेन निरवकाशापौरुषेयत्वनिबन्धनप्रामाण्यनिश्चयाङ्गीकारेण सावकाशफलव्यभिचारस्यैवान्यथासिद्धिर्वर्णनीयेति निर्णयोपपत्तिरित्याशयेनाह **अन्यथासिद्धानन्यथासिद्धयोरनन्यथासिद्धस्य बलवत्त्वादिति** । अत्र चान्यथासिद्धशब्दः सावकाशपरः । अनन्यथासिद्धशब्दश्च निरवकाशपर इति द्रष्टव्यम् । क्वचिदन्यथासिद्धानन्यथासिद्धयोरन्यथासिद्धस्य बलवत्त्वादित्यपि पाठः । तत्राप्यन्यथासिद्धस्येत्यतःपरं सकाशादनन्यथासिद्धस्येति शेषपूरणेन उक्तरीत्याऽनन्यथासिद्धप्रामाण्यसाधकापौरुषेयत्वस्य प्रबलत्वादित्यर्थलाभादुक्तावधारणोपपत्तिरित्यर्थो द्रष्टव्यः । यद्यपि विपरीताबोधकत्वरूपविशेष्यस्येव बोधकत्वरूपविशेषणस्याप्यसिद्धिः शङ्कितुं शक्यते तथाऽपि वेदवाक्यं च बोधकत्वेन सम्प्रतिपन्नमित्यादिना तदसिद्धेः पूर्वमेव परिहृतत्वाद्विशेष्यासिद्धिमेव परिहरति **विमतो विपरीतबोधको न भवतीत्यादिना** । अत्र हेतौ विपरीतबोधकत्ववति प्रत्यक्षादावप्यनाप्तप्रणीतत्वसत्त्वात्तत्र व्यभिचारवारणाय वाक्यत्वादित्युक्तम् । वैकल्यादीत्यादिपदेन प्रतिबन्धसद्भावपरिग्रहः ॥ **प्रमाणसिद्धेति** । प्रमाणसिद्धं यत्फलं तद्व्यभिचारत्वादित्यर्थः । **चरकं** वैद्यशास्त्रम् ।

स०— **अपौरुषेयत्वेनेति** । क्वचित्पौरुषेयत्वे चेति पाठः । तत्र पौरुषेयत्वाङ्गीकारे आप्तनिश्चयस्योक्तरीत्या असंभवेन अप्रामाण्यापत्त्या अपौरुषेयत्वमङ्गीकार्यमित्युक्तार्थसिद्धिरिति भावः । **झर्झराणाम्** । शिथिलावयवानाम् । **बोधकत्वेन खल्विति** । इत्थम्भूतलक्षणे तृतीया । बोधकत्वरूपं प्रामाण्यमित्यर्थः । **अन्यथेति** । बोधकत्वानङ्गीकारे । फलव्यभिचारोऽपि ज्ञातुं न शक्येतेति भावः । ननु प्रामाण्यमङ्गीकृत्य फलव्यभिचारस्य सामग्रीवैकल्यं वा प्रतिबन्धकसद्भावो वा कारणत्वेन न कल्पनीयः । फलव्यभिचारेण वेदाप्रामाण्यमेवाभ्युपेत्य फलसंवादस्य काकतालीयताया अपि कल्पनाप्रसङ्गात् ।-नियामकप्रमाणाभावादित्यत आह **अन्यथेति** । अन्यथासिद्धानन्यथासिद्धयोरन्यथासिद्धस्य बलवत्त्वादित्येव पाठः अयमाशयः - फलसंवादमात्रेण वेदप्रामाण्यमभ्युपेत्य फलविसंवादे सामग्रीवैकल्यनिमित्तत्वकल्पनायां विसंवादे ।प्रामाण्यमङ्गीकृत्य फलसंवादस्य काकतालीयत्वं वाच्यम् । न चैनदसाभिरुच्यते किन्तु फलसंवादपरित्यागेन अप्रामाण्यकारणदोषशून्यस्य बोधकत्वेनैव प्रामाण्यमिति स्वत एव प्रामाण्यस्य सिद्धत्वेन तस्यान्यथासिद्धत्वात् । वेदाप्रामाण्ये च फलविसंवादातिरिक्तसाधकाभावेन फलविसंवादेनैव तस्य वाच्यतया अप्रामाणस्य अनन्यथासिद्धत्वात् । अन्यथासिद्धानन्यथासिद्धयोश्च अन्यथासिद्धस्यैव बलवत्त्वान्नियमोपपत्तिरिति । क्वचिदनन्यथासिद्धस्य बलस्त्वादिति पाठः । तस्य, फलव्यभिचारस्य सामग्रीवैकल्यादिनाऽप्युपपन्नत्वेनान्यथासिद्धत्वात, बोधकत्वे सति अपौरुषेयत्वस्य च प्रामाण्यं विना असम्भवेन अनन्यथासिद्धत्वात्, अन्यथाऽनन्यथासिद्धयोश्चानन्यथासिद्धस्य बलवत्त्वात्, वेदस्य प्रामाण्यमेवाभ्युपेयमित्यर्थः । विपरीतबोधकत्ववति प्रत्यक्षे आप्तप्रणीतत्वाभावरूपानाप्तप्रणीतत्वस्य सत्त्वेन तत्रानैकान्त्यं मा भूदिति वाक्यत्वादित्युक्तम् । **प्रमाणसिद्धेति** । प्रमाणसिद्धं यत्फलं तद्व्यभिचारत्वादित्यर्थः । चरकमिति वैद्यकशास्त्रसंज्ञेति ज्ञेयम् ।

प०— ॥ **ॐ न विलक्षणत्वादस्य च तथात्वं च शब्दात् ॐ** ॥ भाष्यमवतारयितुमुपोद्धातमाह **परिहृतः स्मृतिविरोध इत्यादिना** । नित्यत्वादित्यादित्रिपादीव्यावर्त्यार्थं विवृण्वन्वेदाप्रामाण्यवादिनो बौद्धत्वात्तन्मतरीत्योदाहरणोपनयरूपावयवद्वयात्मकप्रयोगमाह **यद्वीति** । पक्षधर्मतां व्यनक्ति **पुत्रेति** । हेतोरप्रयोजकत्वनिरासाय विपक्षे बाधकमाह **अन्यथेति** । तावता न सर्वप्रामाण्यसिद्धिरित्यत आह **एकदेशे चेति** । पुत्रकामेष्ट्यादिबोधकवाक्ये चेत्यर्थः ॥ **सुलभमिति** । ज्योतिष्टोमादिबोधकवाक्यम् अप्रमाणं वेदत्वात् पुत्रकामेष्ट्यादिवाक्यवदितिप्रयोगसम्भवादिति भावः । ' पिपीलिकालिपिश्चापी'त्यादिवाक्यव्यावर्त्यमाह **किञ्चेति** । व्यावर्त्यान्तरं चाह **अपि चेति** । तन्मूलत्वादित्यादेर्व्यावर्त्यमाह **यदा वेदस्येति** ॥ **फलेति** । फलव्यभिचार—आप्तोक्तत्वादिरहित्यादिना । **झर्झराणाम्** अदृढानामित्यर्थः । ननु नित्यत्वमात्रेण कथं पुरुषोद्भवदोषहीनत्वमित्यतो नित्यत्वादित्यनूद्य व्याचष्टे

**अपौरुषेयत्वादिति** । स्वतन्त्रपुरुषकृतत्वाभावादित्यर्थः ॥ **अन्यथासिद्धानन्यथासिद्धयोरिति** । फलव्यभिचारप्रामाण्ययोरिति योज्यम् । फलव्यभिचारस्य सामग्रीवैकल्यादिनाप्युपपन्नत्वेनान्यथासिद्धत्वात् बोधकत्वे सत्यपौरुषेयत्वस्य च प्रामाण्यं विनाऽसम्भवेनानन्यथासिद्धत्वात् अन्यथासिद्धानन्यथासिद्धयोश्चानन्यथासिद्धस्य बलवत्त्वाद्वेदस्य प्रामाण्यमेवाभ्युपेयमित्यर्थः ॥ **चरकाद्युक्तेति** । चरकेति वैद्यग्रन्थविशेषस्य नामधेयम् ।

या० — ॥ ॐ **न विलक्षणत्वादस्य तथात्वं च शब्दात्** ॐ ॥ **सम्प्रतीति** । अनेनात्रावसरसङ्गतिं सूचयति । पूर्वसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेरनन्तरता चास्याधिकरणस्येति ज्ञातव्यम् । **झर्झराणां** कम्पमानानाम् ॥ **बोधकत्वेनेति** । बोधजनकत्वशक्त्येत्यर्थः । **प्रामाण्यं** भवतीति शेषः । तथा च बोधजनकत्वेनेति तृतीया हेताविति ज्ञातव्यम ॥ **अन्यथा फलव्यभिचार इति** । पुत्रकामेष्ट्यादौ फलसाधनतां वेदेन ज्ञात्वा तदनुष्ठातुः फलालाभे खलु फलव्यभिचारो वक्तव्यः । वेदवाक्यस्याबोधकत्वे तु साधनताऽज्ञानेऽनुष्ठानस्याभावेन क व्यभिचारोद्भावनावसर इत्यर्थः ॥ **स्वत एव प्रामाण्यमिति** । करणरूपे वेदवाक्ये यथार्थज्ञानजनकत्वरूपप्रामाण्यस्य स्वतस्त्वं नाम ज्ञानजनकत्वशक्त्यभिन्नशक्तिरूपत्वं ज्ञानजनकमात्रजन्यत्वं वा द्रष्टव्यम् । अनन्यथासिद्धस्य बलस्त्वादित्येव पाठः । तत्रानन्यथासिद्धस्येत्यस्य निरवकाशस्येत्यर्थः । अत्रान्यथासिद्धः फलव्यभिचारः । अपौरुषेयत्वनिबन्धनं प्रामाण्यमनन्यथासिद्धमिति ज्ञातव्यम् । विपरीतबोधकत्ववति प्रत्यक्षादावनाप्तप्रणीते व्यभिचारवारणाय वाक्यत्वादित्युक्तम् ॥ **प्रमाणसिद्धेति** । प्रमाणसिद्धं यत्फलं तद्व्यभिचारत्वादित्यर्थः । **चरकं** वैद्यशास्त्रम् ।

श्री० — ॥ ॐ **न विलक्षणत्वादस्य तथात्वं च शब्दात्** ॐ ॥ **अन्यथा** फलव्यभिचारेऽपि चेत्प्रामाण्यमित्यर्थः । अस्तु तर्ह्यपौरुषेयत्वेनैव प्रामाण्यमित्यतोऽपौरुषेयत्वं प्रत्युताप्रामाण्यमेव साधयतीत्याह **अपौरुषेयत्वे चेति** । **अन्यथा** प्रतिवादिनो मम मते वेदस्य बोधकत्वं न सम्मतमिति यदुच्यत इत्यर्थः । तथा च, यदि वेदवाक्यमबोधकं स्यात्तदा पुत्रकामः पुत्रकामेष्ट्या यजेतेत्यादिवाक्यस्यार्थं बुद्ध्वा पश्चादिदमप्रमाणं कृतायामपीष्टौ पुत्रजन्मानुपलम्भादिति तस्य वेदस्य फलव्यभिचारश्चोद्यते । तन्न स्यात् । तस्माद्वेदवाक्यस्य बोधकत्वमुभयसम्मतमित्यर्थः । ननु वेदस्य प्रामाण्यमङ्गीकृत्य फलव्यभिचारस्य सामग्रीवैकल्यादिना कुतोऽन्यथासिद्धिः कल्पनीया नियामकाभावात्फलव्यभिचारेणाप्रामाण्यमेव किं न स्यादित्यत आह **अन्यथासिद्धेति** । फलव्यभिचार उक्तरीत्याऽन्यथासिद्धोऽतो दुर्बलः । वेदप्रामाण्यं त्वपौरुषेयतया स्वत एव सिद्धमिति प्रबलमित्ययं न्याय एव नियामक इति नोक्तदोष इति भावः । स्वरूपासिद्धिपरिहारायाह **विमतो विपरीतेति** । एवमुत्तरत्रापि ।

**च० — ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात्.ॐ ॥** पूर्वोत्तरनययोरर्थैक्यविपर्यासं तद्भेदोक्त्या प्रत्यस्यति **परिहृतः स्मृतिविरोध इत्यादिना** । भाष्यमवतारयितुमुपोद्घातमाह परिहृतः स्मृतिविरोध इत्यादीत्यपि स्थितम् । **संप्रति** इदानीं । एतेन स्मृतिविरोधपरिहारगोचरप्रतिबन्धकीभूत-विनेयजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यतोक्त्याऽवसरसङ्गतिं ध्वनयति । इतरेषां चानुपलब्धेरिति पूर्वनयीयसिद्धान्तन्यायेनेह पूर्ववादिमतप्रवर्तनादानन्तर्यमेतन्नयस्येत्यवसेयम् । मूले नित्यत्वादित्यादि-पादत्रिकव्यावर्त्यं विवृण्वानः प्रकृते वेदाप्रामाण्यवादिनो बौद्धस्य प्रत्यवस्थितत्तया तन्मतदिशोदाहरणोप-नयात्मकन्यायप्रयोगमभिधत्ते **यद्वीति** ॥ हेतोः पक्षधर्मतां दर्शयति । **पुत्रेति** । अप्रयोजकताशङ्कानिरस-नौपयिकं विपक्षे बाधकतर्कमाह **अन्यथेति** ॥ **झर्झराणां** शिथिलावयवानामिव स्थितानाम् । **अदृढानां** कम्पमानानामिति । **बोधकत्वेनेति** । ज्ञानजननशक्त्यैव न तु तदतिरिक्तशक्त्येत्यर्थः । अत्र व्याकर्तारः । इत्थंभूतलक्षणे चेयं तृतीया । करणानां प्रत्यक्षानुमानागमानां प्रामाण्यं यथार्थज्ञानजनन-शक्तिः ज्ञानजननशक्त्यभिन्नेत्यर्थः । यद्वा सहयोगे तृतीया । तथा च करणगतयथार्थज्ञानजननशक्तिः ज्ञानजननशक्त्या सहितैवेत्युक्त्या ज्ञानजननशक्तिवत् यथार्थज्ञानजननशक्तेः सहजत्वं लभ्यते । ज्ञानजनन-शक्त्यभिन्नयथार्थज्ञानजननशक्तिमत्त्वं तादृशशक्तिवन्नैसर्गिकयथार्थज्ञानजननशक्तिमत्त्वं वा करणानां प्रामाण्यस्योत्पत्तौ स्वतस्त्वमित्युक्तं भवतीति व्याकुर्वते । प्रामाण्यं भवतीति शेषः । तथा च बोधकत्वेनेति तृतीया हेताविति ज्ञातव्यमित्यपि व्याचक्षते । **अन्यथा फलव्यभिचार इति** । पुत्रकामेष्टिधर्मिक-फलसाधनत्वप्रकारकवेदवाक्यजनितान्वयबोधानन्तरं तदनुष्ठानकर्तुः फलालाभे फलव्यभिचारोऽभिधातव्यः । तस्यान्वयबोधाजनकत्वे तदधीनानुष्ठानाभावप्रसङ्गेन व्यभिचारोद्भावनस्य निराश्रयत्वप्रसङ्ग इत्यर्थः । **स्वत एव प्रामाण्यमिति** । तस्य स्वतस्त्वं ज्ञानजनकशक्त्यभिन्नत्वरूपं ज्ञानजनकसामग्रीमात्रजन्यत्वरूपं वेति मन्तव्यम् । अन्यथासिद्धस्य बलवत्त्वादित्येव पाठः साधीयान् । अन्यथासिद्धशब्दश्च निरवकाश-तात्पर्यक इत्यवसेयम् । आद्यानुमाने हेतुशरीरे दलद्वयप्रयोजनं (..[1]) दुष्टेन्द्रियादौ तद्विधूननाय वाक्यत्वांशनिवेशनम् । वैकल्यादीत्यादिपदं प्रतिबन्धसमवधानपरम् । प्रमाणसिद्धत्वं फलांशे विशेषणम् । **चरकं** वैद्यशास्त्रम् ।

**सु० — स्यादेतत् । नित्यत्वमेव वेदस्य कुतः । प्रागुक्तसामान्यसिद्धिपरिशेषाभ्यामिति ब्रूमः ।**

**ये तु स्वयूथ्या वेदप्रामाण्यमङ्गीकृत्यापि तन्नित्यतां नानुमन्यन्ते तान्प्रति सूत्रसूचिताभिः श्रुतिभिस्तामुपपादयति** विरूपेति ।

---

१. अत्र ग्रन्थपातः । 'घटे विप्रलम्भकवाक्ये च व्यभिचारवारणम् । द्वितीयानुवाके' इति शब्दाः पूरणीयाः ।

अनु० — विरूप नित्यया वाचा

अनेन 'तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिमि'ति श्रुति-मुपादत्ते ।

अत्र वाचो नित्यत्वमुच्यते । न वेदस्य । तदपि बहुकालीनत्वं भविष्यतीत्यतो 'नित्य-याऽनित्यया स्तौमि ब्रह्म तत्परमं पदमि'ति 'श्रुतिरेव नित्याऽनित्या वाक् स्मृतयो याश्चान्या वाच' इति श्रुतिमुपादत्ते नित्ययेति ।

नित्ययाऽनित्यया सदा ।

इत्यादिश्रुतिभिर्वेदो नित्य इत्येव गम्यते ।

व्याख्यानान्तरनिरासाय नित्ययेत्येतत्सदा विद्यमानयेति व्याख्यातम् । वाक्यशेषे हि बहुकालीना अपि स्मृतीरनित्यपक्षे निक्षिप्य श्रुतिमेव नित्यामाह । पौरुषेयतामपि श्रुतयोऽभि-दधतीति चेन्न । आप्तोक्तत्वस्य दुरवधारणतायाः प्रागुक्तत्वेन पौरुषेयत्वे प्रामाण्यावधारणानुप-पत्तिप्रसङ्गेन दुर्बलत्वात् । प्रामाण्यस्य स्वतस्त्वेनापौरुषेयत्वेऽपि कारणाभावात्प्रामाण्यं न स्यादिति प्रसङ्गस्याभासत्वात् । प्रबलश्रुत्यनुसारेण तत्तत्पुरुषप्रवर्तितत्वमेव तासामर्थोऽवगन्तव्यः । तथा च 'ऋचः सामानि जज्ञिरे' 'ऋग्वेद एवाग्नेरजायते'त्याद्युपपन्नं भवति । न ह्येकं वाक्य-मनेककर्तृकमिति सम्भवति । सम्भवति त्वनेकप्रवर्तितमिति ।

शे० — ननु वेदस्य नित्यत्वमेव कुत इत्याशङ्कायां मूले 'विरूप नित्यया वाचे'त्यादिना श्रुति-भिर्नित्यत्वं साध्यते । न तद्युक्तम् । धर्मादिकं प्रमाणोपेतं वस्तुत्वाद् घटादिवदिति सामान्यतो धर्मादि-विषयप्रमाणसिद्धौ तस्य प्रत्यक्षानुमानपौरुषेयवाक्यत्वप्रतिषेधेनापौरुषेयत्वस्यैव प्राप्तत्वेन सामान्यसिद्धि-परिशेषाभ्यामेव नित्यत्वस्य सिद्धत्वात् । न च सामान्यसिद्धिपरिशेषाभ्यामिव श्रुत्याऽपि नित्यत्वं सुसाधमित्यभिप्रायेण श्रुत्युपन्यासो मूले इति वाच्यम् । श्रुतिप्रामाण्ये विवदमानं प्रति श्रुतिभिस्तत्साध-नायोगादित्यतो नात्र श्रुतिप्रामाण्ये विवदमानं प्रति श्रुतिभिस्तत्साधनमभिप्रेतं येनोक्तानुपपत्तिः स्यात् । न चैवं नित्यत्वासिद्धिप्रसङ्गः । सामान्यसिद्धिपरिशेषाभ्यामेव तत्सिद्धेरभिप्रेतत्वात् । 'न हि धर्मादि-सिद्धिः स्यादि'त्यादिना सामान्यसिद्धिपरिशेषयोः प्रागुपन्यस्तत्वादेव चात्र नित्यत्वसाधकतयाऽनुक्ति-र्भाष्यकाराणामित्यभिप्रेत्य तद्भाष्यं मनसि निधाय नित्यत्वाक्षेपं परिहरति **प्रागुक्तेति** । नन्वेवं सामान्य-सिद्धिपरिशेषाभ्यामेव वेदनित्यत्वसिद्धेः श्रुतिभिर्नित्यत्वसमर्थनं मूलेऽनर्थकमापन्नमित्यतोऽङ्गीकृत्य वेद-प्रामाण्यं तन्नित्यतायां विवदमानं प्रति तत्समर्थनार्थत्वान्नानर्थक्यं तस्येत्याशयेनोत्तरभाष्यं तथैव योजयति ये त्विति । ननु 'विरूप नित्यये'त्यादिरूपश्रुत्यप्रसिद्धेः 'इत्यादिश्रुतिभिः'इतिभाष्यासामाञ्जस्यमित्यतो

नेदं श्रुतिप्रतीकोपादानं किन्त्वर्थानुवादोऽयमित्यभिप्रेत्य तदंशसूचिततत्तच्छ्रुतिस्वरूपमाह **अनेनेत्यादिना** ॥ **वाच इति** । वागिन्द्रियस्येत्यर्थः ॥ **व्याख्यानान्तरे ते** । बहुकालीनत्वमात्रेण नित्यत्वमित्येवंरूप-व्याख्यानान्तरनिरासायेत्यर्थः । बहुकालीनत्वं न नित्यत्वं किन्तु सदा विद्यमानत्वमेव इत्यत्र नियामकमाह **वाक्यशेषे हीति** ॥ **श्रुतय इति** । 'ऋचः सामानि जज्ञिरे' इत्याद्या इति शेषः । तथा च पौरुषेय-त्वप्रतिपादकश्रुतिभिः सत्प्रतिपक्षत्वान्नोदाहृतश्रुभिरपौरुषेयत्वसिद्धिरिति भावः । तर्कपराहतत्वेन पौरुषेय-त्वश्रुतीनां दुर्बलत्वान्न सत्प्रतिपक्षत्वमित्याह **आप्तोक्तत्वस्येति** ॥ **प्रागिति** । अविप्रलम्भस्तज्ज्ञानमित्या-दिनेत्यर्थः । नन्वपौरुषेयत्वे श्रुतेराप्तोक्तत्वरूपकारणाभावात्प्रामाण्यं न स्यादिति तर्कपराहतत्वेनापौरुषेय-त्वश्रुतेरपि दुर्बलत्वात् श्रुतिद्वयस्यापि साम्यमेवेति मुक्तः सत्प्रतिपक्ष इत्याशङ्क्याह **अपौरुषेयत्वेऽपीति** । अभासत्वमेवोपपादयितुं प्रामाण्यस्य स्वतस्त्वेनेत्युक्तम् । गुणानपेक्षत्वेनेत्यर्थः । का तर्हि पौरुषेयत्वश्रुतीनां गतिरित्यत आह **प्रबलश्रुत्यनुसारेणेति** । प्रबलनित्यत्वश्रुत्यनुसारेणेत्यर्थः । सामान्यसिद्धिपरिशेष-रूपन्यायोपेतत्वेन च नित्यत्वश्रुतेः प्राबल्यमित्यवधेयम् । तर्कपराहतिशून्यत्वेन नित्यत्वश्रुतेः प्राबल्य-मित्यप्याहुः । तत्तत्पुरुषप्रवर्तितत्वमेवेत्यवधारणमुपपादयति **तथा चेति** । **तथात्व एव च** तत्तत्पुरुष-प्रवर्तितत्वार्थत्व एव चेत्यर्थः । कथं तत्तत्कृतत्वार्थत्वेऽनुपपन्नत्वमित्यतस्तदुपपादयति **न हीति** । तत्तत्प्र-वर्तितत्वार्थत्वे तदुपपत्तिमुपपादयति **सम्भवति त्विति** ।

---

**स० — प्रागुक्तेति** । 'अविप्रलम्भस्तज्ज्ञानं' इत्यादिना जिज्ञासाधिकरणोक्तेरित्यर्थः । **आख्यानान्तरेति** । बहुकालीनत्वादिरूपेत्यर्थः । तर्कपराहतत्वेनापौरुषेयत्वश्रुतेर्दुर्बलत्वान्न सत्प्रतिपक्ष-तेत्यत आह– **आप्तोक्तत्वस्येति** । अपौरुषेयत्वश्रुतेः तर्कपराहतिमाशङ्क्य परिहरति–**प्रामाण्यस्येति** । **प्रबलश्रुत्यनुसारेणेति** । 'नित्ययाऽनित्यया स्तौमि' इत्यादिश्रुत्यनुसारेणेत्यर्थः । तर्कपराहतिशून्यत्वेन प्रबलत्वादिति भावः ।

**प० — प्रागुक्तेति** 'नहि धर्मादिसिद्धिस्स्यान्नित्यवाक्यं विना क्वचिदि'त्यादिजिज्ञासानयानु-व्याख्याव्याख्यानावसरे 'धर्मादिकं सप्रमाणं वस्तुत्वात् घटवत् । तच्च प्रमाणं न प्रत्यक्षादी'त्युक्तसामान्य-सिद्धिपरिशेषाभ्यामित्यर्थः । **स्वयूथ्याः** वैशेषिकादयः । एतेन पुनरुक्तिर्निरस्ता । तस्मा इत्यादिश्रुत्योरर्थो त्भाष्यटीकायामुक्तत्वादत्र नोक्तः ॥ **व्याख्यानान्तरेति** । बहुकालीनत्वरूपव्याख्यानान्तरेत्यर्थः । सदे-त्यस्यार्थः सदाविद्यमानयेति ॥ **पौरुषेयतामपीति** । 'ऋचः सामानि जज्ञिरे'इतिश्रुतौ पुरुषाज्जात-त्वमृगादीनामुच्यते ।

**या० — प्रागुक्तेति** । 'न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचित् । अविप्रलम्भ-स्तज्ज्ञानं तत्कृतत्वादयोऽपि च । कल्प्या गौरवदोषेण पुंवाक्यं ज्ञापकं न तदि'त्यत्रोक्तसामान्यसिद्धि-

परिशेषाभ्यामित्यर्थः । तत्र हि, धर्मादिकं प्रमाणोपेतं वस्तुत्वाद्घटवदिति सामान्यतः सिद्धं धर्मादिविषयं प्रमाणं न तावत्प्रत्यक्षं धर्मादेरतीन्द्रियत्वात् । नाप्यनुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । नापि पौरुषेय आगमः । आप्त्यनिश्चयात् । अतः परिशेषादपौरुषेयमेव तदिति सामान्यसिद्धिपरिशेषावुक्ताविति ज्ञातव्यम् ॥ **अनेन तस्मै नूनमिति** । अभितो द्यौः प्रकाशो यस्यासावभिद्युस्तस्मै अभिद्यवे वृष्णे वर्षित्रे नूनं निश्चितं हे विरूप नित्यया वाचा वेदलक्षणया सुष्टुतिं शोभनां स्तुतिं चोदस्व प्रेरय कुर्विति मन्त्रार्थः ॥ **अत्र वाच इति** । वागिन्द्रियस्येत्यर्थः ॥ **व्याख्यानान्तरेति** । बहुकालीनत्वरूपव्याख्यानान्तरनिरासायेत्यर्थः ॥ **पौरुषेयतामपीति** । 'ऋचः सामानि जज्ञिरे' इत्याद्या इत्यर्थः ॥ **प्रागुक्तत्वेनेति** । 'अविप्रलम्भस्तज्ज्ञानमि'त्यत्रोक्तत्वेनेत्यर्थः ॥ **दुर्बलत्वादिति** । तथा च न सत्प्रतिपक्षतेति भावः । नन्वपौरुषेयत्वे श्रुतेराप्तत्वोक्तरूपकारणाभावात्प्रामाण्यं न स्यादिति प्रसङ्गबाधितत्वेनापौरुषेयत्वश्रुतेरपि दुर्बलत्वमित्यत आह **अपौरुषेयत्वेऽपीति** । कुत आभासत्वमित्यत उक्तं **प्रामाण्यस्य स्वतस्त्वेनेति** । गुणानपेक्षत्वेनेत्यर्थः ।

**श्री० — स्वयूथ्याः** सत्यतावादित्वेन तार्किकाः । **तां** नित्यताम् । **वाचो** वागिन्द्रियस्य । 'तदपी'त्यतः पूर्वं 'मस्तु वाऽत्र वेदस्य नित्यत्वमुच्यत इति तथाऽपी'ति शेषः । **तदपि** नित्यत्वमपि । ननु श्रुतेः पौरुषेयत्वे यथा प्रामाण्यावधारणानुपपत्तिरूपतर्कबाधोऽस्ति । तथा प्रामाण्यस्य स्वतस्त्वमङ्गीकृत्य वेदस्यापौरुषेयत्वेऽपि यदि वेदोऽपौरुषेयः स्यात्तदाऽऽप्तिरूपगुणलक्षणकारणाभावात्प्रामाण्यं न स्यादिति प्रसङ्गावतारादित्याशङ्क्याऽऽह **प्रामाण्यस्येति** ॥ **आभासत्वादिति** । भवति च प्रमाणं वेदः तस्मादाप्तोक्तत्वादपौरुषेयो नेति विपर्ययपर्यवसानं तर्के न सम्भवति । अपौरुषेयताया उक्तश्रुतिसिद्धत्वेन विपर्ययपर्यवसाने बाधापत्तेरिति भावः । यद्वा गुणलक्षणकारणाभावे प्रमाण्यं न स्यादिति तर्को न युक्तः । यादृच्छिकसंवादिस्थले सल्लिङ्गपरामर्शरूपगुणाभावेऽपि प्रामाण्यदर्शनेन व्यभिचारदर्शनात्तद्वत्प्रकृतेऽपौरुषेयत्वेनाप्तोक्तत्वरूपगुणलक्षणकारणाभावेऽपि प्रामाण्यमस्त्विति तर्क आभास इत्यर्थः । नन्वपौरुषेयताश्रुतयो 'ऋचः सामानी'ति पौरुषेयताऽभिधायकश्रुत्या सत्प्रतिपक्षा इति चेत्तत्राह **प्रबलेति** । 'वाक्यशेषेऽही'त्याद्युक्तरीत्या प्राबल्योपेतनित्यया नित्ययेत्यादिश्रुत्यनुसारेणेत्यर्थः । प्रत्युतेदं वाक्यं पौरुषेयतापक्षे विरुद्धमित्याह **न हीति** । पुरुषसूक्ते 'ऋचः सामानी'ति ऋग्वेदसामवेदयोः पुरुषनामकभगवज्जातत्वं कथ्यते । तथा तयोरेव वेदयो'र्ऋग्वेद एवाग्नेरजायतादित्यात्सामवेद' इति वाक्याभ्याममग्न्यादित्यजातत्वं कथ्यते । न हीदं सम्भवति । एकस्य वाक्यस्यानेककर्तृकताऽयोगादिति भावः । प्रवर्तितत्वपक्षे तु नानुपपत्तिरित्याह **सम्भवतीति** ।

च०— **प्रागुक्तेति** । 'न हि धर्मादिसिद्धिः स्यादि'त्यादिक'पुंवाक्यं ज्ञापकं न तदि'त्यन्तानुव्याख्याव्याख्यावसरे– धर्मादिकं प्रमाणं वस्तुत्वात् तच्च प्रमाणं न प्रत्यक्षादी-त्युक्तसामान्यसिद्धिपरिशेषाभ्यामित्यर्थः । **स्वयूथ्याः** स्वसमुदायप्रविष्टाः वैशेषिकादयः । **तस्मै नूनमिति** । विरूपेति ऋषिसंबोधनम् । सर्वतः प्रकाशमानाय भक्ताभिलषितवर्षणशीलाय, **नूनं** निश्चितं, वेदलक्षणया वाचा शोभना स्तुतिं चोदस्व प्रेरय कुर्विति मन्त्रार्थोऽवसेयः । **वाचः** वागिन्द्रियस्य । **व्याख्यानान्तरेति** । बहुकालीनत्वरूपव्याख्यानान्तरनिरासायेत्यर्थः । **श्रुतयः** 'ऋचः सामानि जज्ञिरे' इत्याद्याः । **प्रागुक्तत्वेनेति** । 'अविप्रलम्भस्तज्ज्ञानमि'त्यत्रोक्तत्वेनेत्यर्थः । **प्रामाण्यस्य स्वतस्त्वेनेति** । गुणनैरपेक्ष्यलक्षणेनेत्यर्थः ।

**सु०— यदपि पिपीलिकालिपिवदबुद्धिपूर्वकत्वादप्रामाण्यं श्रुतेरिति, तन्निराकरोति** पिपीलिकेति ।

अनु०— पिपीलिकालिपिश्चापि प्रमाणमविरोधतः ॥

**चो यस्मादित्यर्थे । बोधकत्वसमुच्चये वा । तस्मात् दृष्टान्तस्य साध्यविकलत्वादसदनुमानमिति शेषः । न केवलं श्रुतिः किन्तु पिपीलिकालिपिरपीत्यपेरर्थः ।**

**अप्रामाण्यं खलु पिपीलिकालिपेरबोधकत्वेन वा स्याद्विपरीतबोधकत्वेन वा । नाद्यः । अनुभवविरुद्धत्वात् । अन्यथा पुरुषलिपेरप्यबोधकत्वं स्यात् । तथा च तद्वयर्थ्यमापद्येत । अपि चैवं सत्याकाशादिकमेवोदाह्रियेत तत्किं पिपीलिकालिपिगवेषणया । न द्वितीयः । तद्धि बलवत्प्रमाणविरोधतः कल्पनीयमन्यथाऽतिप्रसङ्गात् । न च पिपीलिकालिपिबोधितेऽर्थे प्रमाणविरोधोऽस्ति । अतः कथमसावप्रमाणं स्यात् ।**

**स्यादेतत् । लिपिस्तावन्न प्रमाणं पृथक् । अनुप्रमाणत्रित्वाभ्युपगमात् । न च प्रत्यक्षागमयोरन्तर्भवति । अतल्लक्षणत्वात् । अतोऽनुमानमेवेति वाच्यम् । तच्च लेखकबुद्धिस्थशब्द विषयं वा तदवबुद्धार्थविषयं वा स्यात् । न चैतत्पिपीलिकालिपौ सम्भवति । प्रमाणबाधितत्वात्तत्कथमसौ प्रमाणमिति । मैवं । तथासत्येडमूकलिपेरप्यप्रामाण्यप्रसङ्गात् । भवतु साऽप्रमाणमितरा त्वनुमानमिति चेन्न । एडमूकलिपेरपि सांव्यावहारिकत्वदर्शनात् । किञ्चेतरत्राप्यनुमाने किमेडमूकव्यावृत्त्यर्थं किमपि विशेषणमुपादेयमुत नेति वाच्यम् । नाद्यः । सन्दिग्धासिद्धिप्रसङ्गात् । निर्णीतलेखकैव लिपिरनुमानमिति चेन्न । अनिर्णीतलेखकाया अपि सांव्यावहारिकत्वात् । न द्वितीयः । एडमूकलिपावनैकान्त्यात् । अथ मूललेखकबुद्धिस्थशब्दार्थानुमाने न**

**कोऽपि दोष इति मतम् । तदपि न । पिपीलिकालिपावनैकान्त्यात् । तद्व्यावर्तने च सन्दिग्धासिद्धेः । न हि पिपीलिकालिपेः पुरुषलिपेरस्ति कश्चिद्विशेषोयेन नेयं पिपीलिकालिपिरिति निश्चिनुयात् । तस्मात्पुरुषलिपिरपि पदमिव पदार्थस्य वर्णानां स्मरणहेतुरेष्टव्या । तत्समं पिपीलिकालिपावपि । स्मृतेश्च प्रमितित्वं वक्ष्यामः ।**

शे० — अपिशब्देनैव समुच्चयसिद्धेश्चशब्दवैयर्थ्यमित्यतोऽर्थान्तरसमर्पणार्थत्वान्न वैयर्थ्यमित्याह **चेति** ॥ प्रामणं चेति भिन्नक्रमत्वमाश्रित्य समुच्चयार्थश्चशब्द इत्यभिप्रेत्य समुच्चेतव्यं दर्शयति **बोधकत्वसमुच्चये वेति** । अनेन मूलेऽविरोधमात्रेण कथं प्रामाण्यवर्णनमिति शङ्का निरस्ता भवति । बोधकस्य सतोऽविरोधे प्रामाण्यावश्यम्भावादिति द्रष्टव्यम् । तर्हि समुच्चयस्य चशब्देनैव सिद्धेरपिशब्दवैयर्थ्यमित्यतश्चशब्दोक्तसमुच्चयभिन्नसमुच्चयप्रतिपादनार्थत्वात्तस्य नानर्थक्यमित्यभिप्रेत्य समुच्चेतव्यप्रदर्शनपूर्वकमपिशब्दोक्तसमुच्चयं दर्शयति **न केवलमिति** । चशब्दोक्तबोधकत्वस्याविरोधपदसूचितविपरीतबोधकत्वाभावस्य च कथं प्रायाण्यसाधने उपयोग इत्यतस्तमुपपादयति **अप्रामाण्यं खल्विति** ॥ **अन्यथेति** । पिपीलिकालिपेरबोधकत्व इत्यर्थः । इष्टापत्तिं परिहरति ॥ **तथा चेति** । पुरुषलिपेरबोधकत्वे चेत्यर्थः । पिपीलिकालिपेरबोधकत्वाङ्गीकारेऽबोधकस्यानेकस्य गगनादेरेवाबुद्धिपूर्वकत्वेनाप्रामाण्यानुमाने दृष्टान्ततयोदाहरणसम्भवात्तदनुदाहृत्य पिपीलिकालिपिमेकामेव दृष्टान्ततयोदाहरतः परस्य कथमचातुर्यं न स्यादित्याह **अपि चेति** ॥ **अन्यथेति** । बलवत्प्रमाणविरोधादेरभावेऽपि विपरीतबोधकत्वकल्पने पुरुषलिपेरपि विपरीतबोधकत्वप्रसङ्गादित्यर्थः । तर्ह्यस्तु बलवत्प्रमाणविरोधादेव पिपीलिकालिपेर्विपरीतबोधकत्वमित्यत आह **न चेति** । लिपिः प्रमाणमिति वदन्प्रष्टव्यः किं सा स्वतन्त्रं प्रमाणं किंवा प्रत्यक्षाद्यन्तर्गतमिति विकल्पद्वयं मनसि निधायाद्यमनूद्य दूषयति **लिपिस्तावदिति** । लिपेः स्वातन्त्र्येण प्रामाण्येऽनुप्रमाणचातुर्विध्यप्रसक्त्या तत्त्रित्वाभ्युपगमो बाधितः स्यादित्यर्थः । द्वितीयेऽपि किं प्रत्यक्षागमयोरन्तर्भावं किंवाऽनुमाने इति विकल्प्याद्यं प्रत्याह **न चेति** ॥ **अतल्लक्षणत्वादिति** ॥ निर्दोषार्थेन्द्रियसन्निकर्षत्वनिर्दोषशब्दत्वरूपप्रत्यक्षागमलक्षणानाक्रान्तत्वादित्यर्थः । अतो द्वितीय एवाङ्गीकार्य इत्याह **अत इति** । अस्तु तर्हि पुरुषलिपिवत्पिपीलिकालिपिरप्यनुमानमेवेत्यत आह **तच्चेति** । विप्रतिपन्ना लिपिः स्वसङ्केतितशब्दज्ञानपूर्विका स्वसङ्केतितशब्दप्रतिपाद्यार्थज्ञानपूर्विका वा शब्दस्मारकलिपित्वादित्यनुमानं लेखकस्य शब्दविषयमर्थविषयं वा ज्ञानमादाय पर्यवस्यतीत्यर्थः । ततश्च पुरुषलिपौ लेखकपुरुषस्य शब्दार्थविषयज्ञानवत्त्वेन पर्यवसन्नार्थस्य तत्राबाधितत्वात्पुरुषलिपेरनुमानत्वेऽपि पिपीलिकालिपौ लेखकस्य तदुभयज्ञानवत्त्वाभावेन पर्यवसन्नार्थस्य तत्र बाधितत्वान्नास्या अनुमानत्वमिति भावः ॥ **एडमूकलिपेरपीति** । 'स्यादेडे बधिरः

प्रज्ञौ गडुलः कुकरे कुणिरि'त्यभिधानादेडो बधिरश्चासौ मूकश्चैडमूकस्तल्लिपेरित्यर्थः । स्वस्य लिपिसङ्केतितशब्दज्ञानाद्यभावेऽपि तदभिज्ञपुरुषान्तरलिखितलिपिदर्शनमात्रेण लिखिततल्लिपेरपीति यावत् । तत्राप्युक्तन्यायेन लेखकस्यैडमूकतया शब्दादिविषयकज्ञानाभावेन पर्यवसन्नार्थस्य तत्र बाधितत्वादिति भावः ॥ **इतरा त्विति** । अनेडमूकपुरुषलिपिरित्यर्थः । तत्र लेखकपुरुषस्य शब्दादिज्ञानवत्तया पर्यवसन्नार्थस्य तत्राबाधितत्वादिति भावः ॥ **सांव्यावहारिकत्वेति** । तथा च न तस्या अप्रामाण्यमिति नेष्टापत्तिरिति भावः ॥ **इतरत्राप्यनुमान इति** । इतरद्यदनुमानमनेडमूकपुरुषलिपिरूपमिति सामानाधिकरण्येनान्वयः ॥ **एडमूकव्यावृत्त्यर्थमिति** एडमूकलिखितलिपिव्यावृत्त्यर्थमित्यर्थः ॥ **विशेषणमिति** । अनेडमूकलिखितत्वरूपमित्यर्थः ॥ **सन्दिग्धासिद्धिप्रसङ्गादिति** । पक्षीभूतपुरुषलिपावेडमूकलिपिव्यतिरिक्तत्वरूपहेतुविशेषणस्य निश्चायकप्रमाणाभावेन निश्चेतुमशक्यत्वादिति भावः ॥ **निर्णीतेति** । तथा च तल्लिपावेडमूकलिपिव्यतिरिक्तत्वनिश्चयोपपत्तेर्न सन्दिग्धासिद्धिरिति भावः ॥ **सांव्यावहारिकत्वादिति** तथा च तत्रोक्तनिश्चयानुपपत्त्या सन्दिग्धासिद्धिर्नादवश्यमिति भावः ॥ **शब्दार्थानुमान इति** । शब्दार्थयोरनुमान इत्यर्थः ॥ **न कोऽपि दोष इति** । एडमूकलिपिव्यतिरिक्तत्वस्य लिपिविशेषणस्यानुपादानान्न सन्दिग्धासिद्धिः । एडमूकलिपौ साक्षाल्लेखकबुद्धिस्थशब्दार्थविषयत्वाभावेऽपि एडमूको यस्य लेखकस्य लिपिं दृष्ट्वा लिखति तल्लेखकबुद्धिस्थशब्दार्थविषयवत्तायाः सत्त्वेन विवक्षितसाध्यस्य तत्रापि सत्त्वान्न व्यभिचारोऽपीत्येवं पक्षद्वयोक्तदोषो नेत्यर्थः ॥ **अनैकान्त्यादिति** । तत्र मूललेखकबुद्धिस्थशब्दार्थविषयत्वाभावादिति भावः । ननु च पिपीलिकालिपिव्यतिरिक्तत्वेन लिपिविशेषणान्न पिपीलिकालिपावपि व्यभिचार इत्यत आह **तद्व्यावर्तने चेति** सन्दिग्धासिद्धिमेवोपपादयति **न हीति** ॥ **तत्समिति** । तथा च पुरुषलिपेरिव पिपीलिकालिपेरपि स्मरणसाधनत्वेन प्रत्यक्षान्तर्भावसम्भवेन पृथक् प्रामाण्याभावान्नानुप्रमाणत्रित्वविरोध इति भावः । ननु च न लिपेः स्मरणसाधनत्वमात्रेण प्रामाण्यं स्मृतेः प्रमात्वाभावेन प्रमाकरणत्वाभावादित्यत आह **स्मृतेश्चेति** ॥ **वक्ष्याम इति** 'प्रामाण्यं नानुवादस्य स्मृतेरपि विहीयते' इत्यादिना साधकबाधकभावाभावव्युत्पादनेनेति शेषः ।

स० — **चो यस्मादित्यर्थ इति** । उद्देश्यसमर्पको यच्छब्दः । अपिशब्दस्य दृष्टान्तान्तरसमुच्चायकत्वाभावाद्वैयर्थ्यमित्यत आह **न केवलं श्रुतिरिति** । **अनुप्रमाणत्रित्वाभ्युपगमादिति** । लिपेर्ज्ञानरूपत्वाभावेन न केवलप्रमाणत्वप्रसक्तिरिति भावः । **तथा सति एडमूकलिपेरपीति** । एडश्चासौ

१ 'प्रसंभ्यां जानुनोर्ज्ञुः' इतिसूत्रानुसारेण प्रगते जानुनी अस्येति प्रज्ञुः, इति कुब्जशब्दसमानार्थकप्रज्ञुशब्दस्यापि स्थलान्तरे पाठात् । (इति वाक्यार्थरत्नमाला)

मूकश्चेति विग्रहः । **इतरा लिपिरिति** । एडमूकातिरिक्तपुरुषलिपिरित्यर्थः। **इतरत्राप्यनुमाने इति** । इतरत् एडमूकलिपिव्यतिरिक्तं यदनुमानं पुरुषलिपिरूपो यो हेतुः तत्रेत्यर्थः । **सन्दिग्धासिद्धीति** । एडमूक-लिपिव्यावृत्त्यर्थं विशेषणोपादाने विमता पुरुषलिपिः लेखकबुद्धिस्थशब्दादिविषयज्ञानपूर्विका एडमूक-लिपिव्यतिरिक्तलिपित्वादिति वक्तव्यम् । तत्र च लिपौ एडमूकलिपिव्यतिरिक्तस्वरूपविशेषणनिश्चायक-प्रमाणाभावेन संदिग्धासिद्धिप्रसङ्गादिति भावः ।

**ननु** पुरुषलिपिपक्षीकारेण तत्र मूललेखकबुद्धिस्थशब्दार्थानुमानकरणात् एडमूकलिपौ साक्षाल्ले-खकबुद्धिस्थशब्दार्थविषयत्वाभावेऽपि विवक्षितसाध्यस्य सत्त्वान्न व्यभिचार इति शङ्कते **अथेति** । यस्य लिपिं दृष्ट्वा कोऽपि लिखति स मूललेखकः । ननु पिपीलिकालिपिव्यतिरिक्तत्वं हेतुविशेषणमिति **न** व्यभिचारस्तत्राह **तद्व्यावर्तने चेति** । संदिग्धासिद्धिमेव व्युत्पादयति **न हीति** । **वक्ष्याम इति** । 'केन स्मृतिरपोद्यते । पूर्वानुभूते किं मानमित्युक्ते स्यात्किमुत्तरम्' । इत्यादिना अस्मिन्नेव पादे वक्ष्याम इति ।

**प०** **बोधकत्वसमुच्चये वेति** । पिपीलिकालिपिश्च बोधिकेत्यर्थः ॥ **अपि चैवं सतीति** । पिपीलिकालिपेः सर्वथैवाबोधकत्वे सतीत्यर्थः । लिपीनां वर्णस्मृतिजनकत्वेन प्रामाण्यं स्वाभिमतं स्फुटी-कर्तुं पराभिप्रेतमनूद्य निराह **स्यादेतदित्यादिना** ॥ **लेखकबुद्धिस्थेत्यादि** । इयं लिपिः कर्तृबुद्धिस्थ-शब्दपूर्विका तदवगतार्थपूर्विका वा लिपित्वाच्चैत्रलिखितलिपिवदित्येवमिति भावः ॥ **एडमूकलिपेरिति** । प्राज्ञलिखितलिपिं दृष्ट्वा लिखत्येडमूक इति नाश्रयासिद्धिरिति भावः ॥ **किमपि विशेषणमिति** । अनेड-मूकलिपित्वादित्यादिरूपविशेषणमित्यर्थः ॥ **संदिग्धासिद्धीति** । पक्षीकृतलिपिरेडमूकलिपिर्वा तदन्या वेति सन्देहावस्कन्दनेन तदन्यैवेति निर्णयासम्भवादिति भावः ॥ **मूललेखकेति** । यदीयलिपिं दृष्ट्वा एडमूको लिखितवान् तद्बुद्धिस्थेत्यर्थ । न कोऽपि दोष इति विभागः । ननु स्मारणहेतुत्वेऽपि स्मृते-रप्रमितित्वेन लिपेरप्रामाण्यमेवेत्यत आह **स्मृतेश्चेति** । 'अनुभूतिः प्रमाणं चेत्केन स्मृतिरपोद्यते । पूर्वानु-भूते किं मानमित्युक्ते स्यात्किमुत्तरम् ।' इति उत्तरत्रैतदधिकरण एव वक्ष्याम इत्यर्थः ।

**या० —तच्च लेखकबुद्धिस्थेति** । विप्रतिपन्ना लिपिः स्वसङ्केतितशब्दज्ञानपूर्विका स्वसङ्केतित-शब्दप्रतिपाद्यार्थज्ञानपूर्विका वा शब्दस्मारकलिपित्वात्सम्प्रतिपन्नलिपिवदित्यनुमानं लेखकस्य शब्दविषय-मर्थविषयं वा ज्ञानमादाय पर्यवस्यतीत्यर्थः ॥ **एडमूकलिपेरपीति** । स्वस्य लिपिसङ्केतितशब्दज्ञानाद्य-भावेऽपि तज्ज्ञ-अन्यलिखितलिपिदर्शनमात्रेणैडमूकलिखितलिपेरपीत्यर्थः ॥ **इतरत्रापीति** । अमूकपुरुषलिपा-वपीत्यर्थः । **एडमूकव्यावृत्त्यर्थमिति** । एडमूकलिखितलिपिव्यावृत्त्यर्थमित्यर्थः ॥ **किमपि विशेषण-मिति** । एडमूकालिखितत्वं लिपिविशेषणमित्यर्थः ॥ **सन्दिग्धासिद्धीति** । पक्षीकृतलिपावप्येडमूक-

लिखितत्वसन्देहादिति भावः ॥ **अथ मूललेखकेति** एडमूकलिपिर्यस्य पुरुषस्य लिपिं दृष्ट्वा लिखिता स मूललेखकस्तद्बुद्धिस्थशब्दार्थयोरनुमानेनेत्यर्थः ॥ **तत्सममिति** । तथा च पिपीलिकालिपेः स्मरणसाधनत्वेन प्रत्यक्षान्तर्भावान्न पृथक्प्रामाण्यमिति भावः । ननु स्मृतेरप्रामाण्यात्कथं तत्साधनत्वेन लिपेः प्रामाण्यमित्यत आह **स्मृतेश्चेति** । 'प्रामाण्यं नानुवादस्य स्मृतेरपि विहीयते' इत्यादाविति शेषः ।

श्री० — **अन्यथेति** । अनुभवविरुद्धमप्यबोधकत्वं यद्यङ्गीक्रियत इत्यर्थः । इष्टापत्तिरिति चेत्तत्राह **तथाचेति** ॥ **तदिति** । पुरुषलिपीत्यर्थः । **एवं सति** लिपेः सर्वथाऽबोधकत्वे । **आकाशादिकमबोधकत्वेनोभयसिद्धम्** । तथा च श्रुतिरबोधकतयाऽप्रमाणमित्यत्राकाशनिभेति वाच्यम् । किं पिपीलिकालिपिनिभेति विप्रतिपन्नबोधकत्वोपेतपिपीलिकालिपिग्रहणेनेति भावः । **अन्यथा** बलवत्प्रमाणविरोधाभावेऽपि यदि तद्विपरीतबोधकत्वं कल्प्यत इत्यर्थः ॥ **अतदिति** । प्रत्यक्षागमलक्षणाक्रान्तत्वाभावादित्यर्थः । प्रसङ्गादुक्तरीत्या प्रमाणबाधस्य तत्रापि साम्यादिति ज्ञेयम् । **सा** एडमूकलिपिः ॥ **इतरेति** । एडमूकातिरिक्तपुरुषलिपिरित्यर्थः । तत्रोक्तबाधाभावादिति हृदयम् । ननु पुरुषलिपिपक्षीकारेण तत्र मूललेखकबुद्धिस्थशब्दार्थानुमानकरणादेडमूकलिपौ साक्षाल्लेखकबुद्धिस्थशब्दार्थविषयकत्वाभावेप्युक्तमाध्यसत्त्वान्न लिपित्वहेतोर्व्यभिचार इति शङ्कते **अथेति** । ननु पिपीलिकालिपिव्यतिरिक्तत्वं हेतुविशेषणं विवक्षितमतो न व्यभिचार इत्यत आह **तद्व्यावर्तने चेति** । तामेवोपपादयति **न हीति** ।

---

च० — **अतल्लक्षणत्वादिति** । निर्दोषार्थेन्द्रियसन्निकर्षत्वनिर्दोषशब्दत्वरूपप्रत्यक्षागमलक्षणानाक्रान्तत्वादित्यर्थः । **तच्चेति** । विप्रतिपन्ना लिपिः स्वसङ्केतितशब्दज्ञानपूर्विका तादृशशब्दप्रतिपाद्यार्थज्ञानपूर्विका वा शब्दस्मारकलिपित्वादित्यनुमानं लेखकस्य शब्दविषयमर्थविषयं वा ज्ञानमादाय पर्यवस्यतीत्यर्थः । **एडमूकलिपेरपीति** । एडो बधिरश्चासौ मूकश्चेति विग्रहः । स्वस्य लिपिसङ्केतितशब्दस्य तत्प्रतिपाद्यार्थस्य वा ज्ञानविधुरेऽपि तत्प्रतिसंदधानपुरुषान्तरलिखितलिपिदर्शनैकनिबन्धनैडमूकलिखितलिपेरित्यर्थः । **किमपीति** । अनेडमूकलिपित्वादिरूपविशेषणमित्यर्थः । **सन्दिग्धेति** । पक्षीकृतलिपौ उक्तव्यतिरिक्तत्वविशेषणावधारकाभावेन तन्निश्चयाभावादिति भावः । **मूललेखकेति** । एडमूकलिपिर्यदीयलिपिदर्शनपूर्विका स मूललेखकस्तद्बुद्धिस्थशब्दार्थयोरनुमानेनेत्यर्थः । **तत्सममिति** । तथा च पुरुषलिपिवत्पिपीलिकालिपेरपि स्मृतिसाधनतया प्रत्यक्षान्तर्गत्या पृथक् प्रामाण्याभावो 'नानुवादस्य स्मृतेरपि विहीयते' इत्यादिनेति पूरणीयः ।

सु० — **ननु प्रमात्वेऽपि स्मृतेर्न तद्धेतुमात्रस्य प्रामाण्यम् । प्रमात्रादीनामपि तत्प्रसङ्गात् । किन्तु साधकतमस्यैव । तच्च मन एवेति सिद्धान्तः । लिपिदर्शनादिकं तु संस्कारो**

---

१. अत्र ग्रन्थपातः शो. या. टिप्पण्योरनुसारेण योजनीयः ।

द्बोधाभिधसहकारिसम्पादनेनैव चरितार्थमिति कथं तस्य प्रामाण्यम् । मैवम् । अर्थसन्निकर्ष-लक्षणावान्तरव्यापारसहितं हीन्द्रियं प्रत्यक्षं नेन्द्रियमात्रम् । मनसश्च स्मरणोदये संस्कारोद्बोध एवार्थसन्निकर्षः । तथा च चक्षुष इवार्थोपसर्पणतत्संयोगसहितस्य प्रामाण्यमेवं लिपिदर्शनतदुद्-बुद्धसंस्कारसहितस्यैव मनस इति कथं न लिपेः प्रामाण्यम् । केवलायास्तु नास्तीति चेत् । श्रुतेरपि तन्नाङ्गीक्रियत एवेति ।

नन्वत्र प्रमाणशब्दो भावसाधनो वा स्यात्करणसाधनो वा । आद्ये पिपीलिकालिपिः प्रमाणमिति सामानाधिकरण्यं न स्यात् । द्वितीये तु प्रमाणीति भवितव्यम् । कथं वेदाः प्रमाणं स्मृतिः प्रमाणमिति । प्रमाणमिति सामान्येनोद्दिश्य वेदादित्वविधानात् । अन्यथा तत्रापि दौर्घट्यमेवेति । मैवम् । भावसाधनत्वाभ्युपगमात् । सामानाधिकरण्यं तु भाक्तमिति ।

शे० — शिष्यः शङ्कते **नन्विति** ॥ **चक्षुष इवेति** । चक्षुषो यथेत्यर्थः । यद्यप्यर्थोपसर्पणस्यार्थसंयोगजनकत्वेनान्यथासिद्धत्वान्न तस्य व्यापारकोटौ निवेशो युक्तस्तथाऽपि कदाचिदिन्द्रियं कदाचिदिन्द्रियार्थसन्निकर्षः कदाचिज्ज्ञानं चेति करणभेदमुक्त्वा सर्वेषामपीन्द्रियमेव करणं यावन्ति त्वान्तरालिकानि तानि सर्वाण्यवान्तरव्यापार इति करणफलमध्यवर्तिनां सर्वेषामप्यवान्तरव्यापारत्वस्य परैरभिधानात्सुखसाधनशरीरजनकत्वेनान्यथासिद्धस्याप्यपूर्वस्य यागस्वर्गमध्यवर्तितया व्यापारत्ववद्धानादिबुद्धिजनकसविकल्पकजनकत्वेनान्यथासिद्धस्येन्द्रियसन्निकर्षस्य करणफलमध्यवर्तितया व्यापारकोटिनिवेशवच्चार्थसंयोगजनकत्वेनान्यथासिद्धस्याप्यर्थोपसर्पणस्य करणफलमध्यवर्तित्वेन व्यापारकोटिनिवेशो युक्त इत्यवधेयम् ॥ **एवं लिपिदर्शनेति** । ननु चोद्बुद्धसंस्कारस्यैव स्मृतिजनकत्वात्कथं लिपिदर्शनस्य व्यापारकोटौ निवेश इति चेन्न । उद्बुद्धसंस्कारस्य स्मृतिजनकत्ववादिना न तावदुद्बुद्धत्वं जातिरिति वक्तुं शक्यम् संस्कारत्वादिना सङ्करप्रसङ्गात् ; उपाधित्वे चोद्बुद्धत्वं सहकारिलाभो वक्तव्यस्तत्साहित्यमिति यावत् । सहकारिभूतं च लिपिदर्शनमेवेति युज्यते तस्य संस्कारोद्बोधान्तर्गतत्वेन व्यापारकोटिनिवेश इत्याहुः । वस्तुतोऽर्थोपसर्पणादिवत्करणमध्यफलवर्तित्वाल्लिपिदर्शनस्य व्यापारत्वोक्तिरित्यवधेयम् ॥ **भावसाधन इति** । **भावो** धात्वर्थः, **साधनम्** अभिधेयं, यस्य स तथोक्तः । एवं करणं साधनं यस्य स करणसाधन इति द्रष्टव्यम् । तथा च भाववाचकः करणवाचको वेत्यर्थः । किमत्र भावे ल्युट् किंवा करण इति प्रश्नाशयः ॥ **सामानाधिकरण्यं न स्यादिति** । लिपेः प्रमितिरूपत्वाभावादिति भावः ॥ **द्वितीये त्विति** । भावे ल्युडन्तस्य नित्यनपुंसकत्वेऽपि करणे ल्युडन्तस्य विशेष्यनिघ्नत्वेन त्रिलिङ्गतया नित्यनपुंसकत्वाभावात्प्रमाणशब्दस्यापि करणे ल्युडन्तत्वे विशेष्यभूतलिपिनिघ्नत्वेन टिड्ढाणञित्यादिना ङीपि सति प्रमाणीति भवितव्यमित्यर्थः ॥ **कथं तर्हीति** । तत्रापि भावसाधनत्वे सामानाधिकरण्यानुपपत्तेः करण-

साधनत्वे च त्रिलिङ्गत्वेन विशेष्यनिघ्नत्वाद्विशेष्यलिङ्गानुसारेण प्रमाण इति प्रमाणीति च भवितव्य-त्वादिति भावः । 'यदत्र प्रमाणमिष्टं स वेदादिरि'ति प्रमाणमुद्दिश्य वेदादित्वस्यैव विधानादुद्देश्यवाचक-प्रमाणशब्दस्य नपुंसकत्वेऽप्यनियतलिङ्गस्यैव विधेयस्योद्देश्यसमानलिङ्गतानियमाद्वेदस्मृतिशब्दयोश्च विधेय-समर्पकयोर्नित्यपुलिङ्गस्त्रीलिङ्गत्वेनोद्देश्यसमानलिङ्गत्वाप्राप्तेर्नानुपपत्तिरित्याशयेन परिहरति **प्रमाणमितीति** । ननु करणे ल्युडन्तस्य प्रमाणशब्दस्य त्रिलिङ्गतया प्रमाण इति प्रमाणीति चोद्देशसम्भवात्प्रमाणमिति नपुंसकेनोद्देश्यसमर्पणं निर्निबन्धनमित्यतः करणे ल्युडन्तस्यापि सामान्ये नपुंसकमिति नपुंसकत्वानुशास-नात्प्रमाणशब्दस्यापि सामान्यपरत्वे नपुंसकत्वोपपत्तेर्नानुपपत्तिरित्याशयेनोक्तं **सामान्येनेति** । प्रकृते तु लिपिर्न प्रमाणमित्याक्षेपपरिहाराय लिपिमुद्दिश्य प्रामाण्यस्यैव विधेयत्वान्नैतत्समाधानावकाश इति हृदयम् ॥ **अन्यथेति** । वेदादिकमुद्दिश्य प्रमाणमिति विधान इत्यर्थः ॥ **दौर्घट्यमेवेति** । करणे ल्युडन्तस्य प्रमाणशब्दस्यानियतलिङ्गत्वेन विधेयवाचकस्य तस्योद्देश्यसमानलिङ्गतानियमात्प्रमाणः प्रमाणी-त्येव वक्तव्यतया प्रमाणमित्यस्य दौर्घट्यमेवेत्यर्थः । तर्हि लिपेः प्रमितिरूपत्वाभावात्सामानाधिकरण्या-नुपपत्तिरित्यत आह **सामानाधिकरण्यं त्विति** ॥ **भाक्तमिति** । गौणमित्यर्थः । प्रमितिसाधनत्वात्प्र-मितिरिति व्यपदेश इति भावः । एवमेव वेदोद्देशेन प्रमाणमिति प्रयोगोऽपि समाहितो वेदितव्यः ।

---

स० — **केवलाया इति** । संस्कारोद्बोधलक्षणावान्तरव्यापाररहिताया इत्यर्थः । **श्रुतेरपीति** । शब्दश्रवण-संकेतस्मरणाद्यवान्तरव्यापाररहिताया इत्यर्थः । तथा च केवललिपिदृष्टान्तेन केवलश्रुतेर-प्रामाण्ये साध्ये सिद्धसाधनमित्यर्थः । **प्रमाणानीति** । प्रमीयते अनेनेति वा अन्येति वा प्रमाणमिति करणे निष्पन्नल्युडन्तप्रमाणशब्दस्य विशेष्यलिङ्गत्वेन त्रिलिङ्गत्वेन नियतनपुंसकत्वाभावादित्यर्थः । **प्रमाणमिति सामान्येति** । यदत्र प्रमाणत्वेन पृष्टं, स वेदादिरित्यर्थः । तथा च प्रमाणशब्दस्य समान्यपरत्वात् 'सामान्ये नपुंसकम्' इति नपुंसकत्वोपपत्तिरिति भावः । प्रमाणमुद्दिश्य वेदादित्वस्यैवात्र विधेयत्वेन विशेष्यभूतप्रमाणशब्दस्य नपुंसकत्वेऽपि वेद-स्मृतिशब्दयोर्नित्यपुलिङ्ग-स्त्रीलिङ्गत्वेन विशेष्य-लिङ्गानापत्त्या वेदः प्रमाणं, स्मृतिः प्रमाणमिति प्रयोगोपपत्तिरिति भावः । नन्वत्र प्रमाणमुद्दिश्य वेदादित्वं न विधेयम्, किं तु वेदादिकमुद्दिश्य प्रमाणत्वमेवेत्यत आह- **अन्यथेति** । तथा सति प्रमाणशब्दस्य विशेष्यपरत्वेन वेदः प्रमाणः स्मृतिः प्रमाणीति प्रयोगापत्त्या प्रमाणमित्यस्य दौर्घट्य-मित्यर्थः । **भाक्तमिति** । प्रमि(म)तिसाधनत्वात् प्रमि(मे)तिरिति व्यपदेशो गौण इत्यर्थः ।

प० — **इति सिद्धान्त इति** । 'मानसप्रत्यक्षजा स्मृतिरि'ति प्रमाणलक्षणाद्युक्तेरिति भावः । **सामानाधिकरण्यं न स्यादिति** । पिपीलिकालिपिः प्रमितिरित्यभेदस्य बाधादिति भावः ॥ **इति**

**भवितव्यमिति** । ल्युट्छितिकरणसामर्थ्येन करणाधिकरणयोस्त्रिलिङ्गतायाः अवश्यंभावादिति भावः ॥ **भाक्तमिति** । 'आयुर्घृतमि'त्यादिवत्तत्साधने तद्व्यपदेशो गौण इत्यर्थः ।

या० — **चक्षुष इवेति** । चक्षुषा यथेत्यर्थः । करणफलमध्यवर्तिनां सर्वेषामप्यवान्तरव्यापारत्वमेवेति मतमाश्रित्येदमुक्तमित्यवधेयम् । यदाह । 'यावन्ति त्वान्तरालिकानि तानि सर्वाण्यवान्तरव्यापार' इति ॥ **भावसाधन इति** । भावो धात्वर्थस्तं साधयति प्रतिपादयतीति भावसाधनो भावप्रतिपादक इति यावत् । एवं करणसाधन इत्यत्रापि करणप्रतिपादक इत्यर्थोऽवगन्तव्यः ॥ **द्वितीये त्विति** । करणार्थकल्युडन्तस्य त्रिलिङ्गत्वेन विशेष्यनिघ्नत्वाद्विशेष्यस्य च स्त्रीलिङ्गत्वाट्टिड्ढाणेत्यादिना ङीपा भवितव्यमिति भावः अयं च दोषो नाद्यपक्षे । भावार्थकल्युडन्तस्य नित्यनपुंसकत्वादिति ज्ञातव्यम् ॥ **प्रमाणमिति सामान्येनेति** । यदत्र प्रमाणमिदं स वेदादिरिति विधीयत इत्यर्थः । ननु करणसाधनस्य प्रमाणशब्दस्य त्रिलिङ्गत्वात्प्रमाणः प्रमाणीति वा कस्मान्नोद्दिश्यत इत्यत उक्तं **सामान्येनेति** । तथा च सामान्ये नपुंसकमिति वचनात्प्रमाणमित्येवोद्दिश्यत इति भावः ॥ **वेदादिस्त्वेति** । तथा च अनियतलिङ्गस्यैव विधेयस्योद्देश्यसमानलिङ्गत्वनियमेऽपि विधेयवचनयोर्वेदस्मृतिशब्दयोर्नियतलिङ्गत्वान्नोद्देश्यसमानलिङ्गताप्राप्तिरिति भावः । प्रकृते तु लिपिरप्रमाणमित्याक्षेपे लिपिमुद्दिश्य प्रामाण्यमेव विधेयमिति नैतत्समाधानावकाश इति भावः ॥ **अन्यथेति** । वेदादिकमुद्दिश्य प्रमाणमिति विधान इत्यर्थः ॥ **दौर्घट्यमिति** । करणे प्रमाणशब्दस्यानियतलिङ्गत्वेन विधेयवाचकस्य तस्योद्देश्यसमानलिङ्गतानियमेन प्रमाणः प्रमाणीति वा प्रयोगप्रसङ्गेन प्रमाणमित्यस्य दौर्घट्यमेवेत्यर्थः ॥ **भाक्तमिति** । सादृश्यपरतयाऽमुख्यमित्यर्थः ।

श्री० — **तद्धेत्विति** । स्मृतिहेत्वित्यर्थः ॥ **तदिति** । प्रामाण्येत्यर्थः ॥ **तच्चेति** । साधकतमं करणमित्यर्थः । **चरितार्थमन्यथासिद्धमिति** भावः ॥ **एवं लिपिदर्शनेत्यादि** । ततश्च विशिष्टस्यैव मनसःकरणत्वाल्लिपेरपि करणकोटौ प्रवेशाद्युक्तो मनोरूपप्रत्यक्षेऽन्तर्भाव इति हृदयम् ॥ **केवलाया इति** । करणकोटिनिविष्टत्वैव प्रामाण्यं प्राप्तं न तु केवलायाः संस्कारोद्बोधकताशून्यायाः लिपेः प्रामाण्यमित्यर्थः । **श्रुतेरपि** केवलाया इति शेषः । **तत्** प्रामाण्यम् । ततश्च शक्तिस्मृत्यादिसहिताया एव श्रुतेः प्रामाण्यं न केवलाया इत्यर्थः । भावं साधयति प्रतिपादयतीति भावसाधनः ॥ **न स्यादिति** । लिपेः प्रमितित्वाभावादिति भावः । करणाधिकरणयोर्ल्युडन्तस्य त्रिलिङ्गत्वात् । इध्मव्रश्चनो गोदोहन इत्यादिप्रयोगदर्शनात्प्रमाणीति स्यादिति यदुक्तं तन्न । करणसाधनत्वेऽपि नपुंसकत्वदर्शनादित्याशयेन शङ्कते **कथं तर्हीति** ॥ **अन्यथेति** । वेदादिकमुद्दिश्य यदि प्रामाण्यमेव विधेयमित्युच्यत इत्यर्थः ॥ **दौर्घट्यमिति** । ततश्च वेदाः प्रमाणाः स्मृतिः प्रमाणीत्येव प्रयोगापत्त्या प्रमाणमिति नपुंसकप्रयोगस्य

दीर्घंट्यमेवेति भावः ॥ **भाक्तमिति** । तथा च प्रमितिरूपत्वाभावेऽपि प्रमितिसाधनत्वात्प्रमाणमिति व्यपदेशो गौण इत्यर्थः । **प्रमितिर्यथार्थज्ञानम्** ।

च० —**चक्षुष इवेति** । चक्षुषो यथेत्यर्थः । अर्थसंयोगजनकत्वेनान्यथासिद्धस्याप्यर्थोपसर्पणस्य यावन्त्यान्तरालिकानि तानि सर्वाण्यवान्तरव्यापार इति करणफलमध्यवर्तिनां सर्वेषामप्यवान्तरव्यापारत्वस्य परोपगत्या सुखसाधनशरीरजनकत्वेनान्यथासिद्धस्याप्यपूर्वस्य यागस्वर्गमध्यवर्तितया व्यापारत्ववत् हानादिबुद्धिजनकसविकल्पकजनकत्वेनान्यथासिद्धस्येन्द्रियसन्निकर्षस्य करणफलमध्यवर्तितया तद्वच्च व्यापारत्वोक्तिरिति ध्येयम् ।

**सु० — ननु च श्रुतेः सम्यगनुभवसाधनत्वेन प्रामाण्यमिष्टं न तु स्मारकत्वेन । तथा च न श्रुतिः सम्यगनुभवसाधनमबुद्धिपूर्वकत्वात्पिपीलिकालिपिवदित्यनुमास्यत इत्यत आह** यथेति ।

अनु० — यथा द्रौणेरुलूकेन कृतमप्यास बोधकम् ।
अविरुद्धम्

**यथाऽबुद्धिपूर्वकमप्येकेनोलूकेन कृतमनेककाकनाशनमश्वत्थाम्नोऽहमेक एवानेकान्वधिष्यामीत्यस्यार्थस्य बोधकं सम्यगनुभवं प्रति साधनं जातम् । तथा श्रुतिरबुद्धिपूर्वाऽपि सम्यगनुभवसाधनम् । एतदुक्तं भवति । अबुद्धिपूर्वकत्वं किमनादित्वं विवक्षितम्, सादित्वेऽपि बुद्धिजन्यत्वाभावो वा प्रतिपाद्यार्थबुद्धिपूर्वकत्वाभावो वाऽनेनैतदेवं प्रतिपादयिष्यामीत्यभिसन्धिपूर्वकतावैधुर्यं वा । नाद्यः । पिपीलिकालिपावभावात् । गगनमेव दृष्टान्तो भविष्यतीति चेत् । तथाऽपि श्रुतेरनादित्वस्य परेणानङ्गीकृतत्वेनासिद्धेः । न द्वितीयः । उत्पद्यमानं बुद्धिजन्यमेवेति मयाऽङ्गीकृतत्वात् । न तृतीयचतुर्थौ । उलूककृतव्यापारे व्यभिचारादिति । यद्यपि प्रत्यक्षे व्यभिचारोऽत्र वक्तुं शक्यते । तथाऽपि ज्ञातकरणसजातीयत्वेन शक्यपरिहारोऽसाविति नोदितः । अनुमानमात्रे सुवचोऽपि चेतनव्यापारविषयस्य तथाभूत एव शाकुने प्रदर्शयितुमुचित इति न प्रदर्शितः । ननु शाकुनमर्थविसंवाद्यपि दृश्यते । सत्यम् । यत्तु प्रमाणाविरुद्धं तद्व्यभिचारस्थलं भविष्यतीति भावेनोक्त**मविरुद्धमिति । **शाकुनमात्रे व्यभिचारस्य दर्शयितुं शक्यत्वेऽप्यागमिकत्वेन विसंवादानर्हतयेदमुदाहृतम् ।**

**नन्वासेति कथम् । अस्तेर्भूरित्यस्य नित्यत्वात् । विभक्तिप्रतिरूपकं चायव्ययं भवतीति वचनादव्ययमेतदिति न दोषः । विभक्तिप्रतिरूपकमित्युच्यते । न चैवं विभक्तिरस्ति । न नास्ति । आमन्तानुप्रयोगस्य विद्यमानत्वात् ।**

शे० — ननु दृष्टान्तस्य साध्यविकलत्वेन श्रुत्यप्रामाण्यानुमानस्य दूषितत्वादुलूककृतव्यापारे अबुद्धिपूर्वकत्वस्य व्यभिचारप्रदर्शनपरोत्तरवाक्यानर्थक्यमित्यतो न सम्यगनुभवसाधनमिति प्रतिज्ञार्थपरिष्कारेण साध्यवैकल्यस्य परेण परिहारेण तद्दुष्टत्वासिद्ध्या व्यभिचारोपदर्शनेन तद्दुष्टत्वसमर्थनार्थत्वान्नानर्थक्यमित्याशयेन प्रतिज्ञार्थपरिष्कारेण साध्यवैकल्यपरिहारशङ्कामुत्थापयति **ननु चेति ।** वक्ष्यमाणरीत्या प्रतिज्ञार्थपरिष्कारे नियामकमाह **श्रुतेरिति । इत्यनुमास्यत इति ।** तथा च लिपेः स्मारकत्वेऽप्युक्तरीत्या सम्यगनुभवसाधनत्वाभावेनोक्तसाध्यस्यापि सत्त्वान्न दृष्टान्ते साध्यवैकल्यमिति भावः । ननु कथमनेन वाक्येनोलूककृतव्यापारे व्यभिचारसमर्थनं घटते । तदौपयिकसाध्याभावोपपादनेऽपि तदौपयिकहेतुसत्त्वानुपपादनादित्यतः स्पष्टत्वात्तस्यानुपपादनमित्याशयेन स्वयं तत्र हेतुसद्भावमाह **अबुद्धिपूर्वकमपीति ।** ननूलूककृतव्यापारस्यापि बुद्धिपूर्वकत्वेनाबुद्धिपूर्वकत्वरूपहेत्वगमनान्न तत्र व्यभिचार इत्यतो बुद्धिपूर्वकत्वं विकल्प्य पक्षान्तरं बहिरेव प्रदूष्य परिशिष्टपक्षे व्यभिचारप्रदर्शनपरतया मूलं योजयति **एतदुक्तं भवतीति ॥ किमनादित्वमित्यादि ।** अत्राबुद्धिपूर्वकत्वस्य सर्वथाऽजन्यत्वेन वा जन्यत्वेऽपि बुद्ध्यजन्यत्वेन वा सम्भवादाद्यपक्षद्वयप्रसक्तिः । बुद्धावेवावान्तरविवक्षया चोत्तरपक्षद्वयप्रसक्तिरिति द्रष्टव्यम् । किमत्र पिपीलिकालिपिरेव दृष्टान्तः किंवा गगनादिकमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **पिपीलिकालिपाविति ।** तथा च साध्यवैकल्यस्यात्राप्रसङ्गेपि साधनवैकल्यमवर्जनीयमिति भावः । द्वितीयमाशङ्कते **गगनादिकमिति ।** तथा च न साध्यसाधनवैकल्यप्रसङ्गोऽत्रेति भावः । एवं तर्हि माऽस्तु दृष्टान्तदोषेणानुमानस्याभासत्वसिद्धिर्वादिनो हेत्वसिद्ध्या तु भविष्यतीत्याह **तथाऽपीति ॥ बुद्ध्यजन्यत्वमेवेति ।** इदं च जन्यमात्रस्येश्वरबुद्धिजन्यत्वमित्यभिप्रायेणोक्तम् । ततश्च पिपीलिकालिपेरपि बुद्धिजन्यत्वाद् दृष्टान्तस्य साधनवैकल्यं गगनादेरेव दृष्टान्तत्वाश्रयणे च श्रुतेरपि परेण जन्यत्वाङ्गीकारेणोक्तव्याप्तिबलाद् बुद्धिजन्यत्वप्राप्त्याऽन्यतरासिद्धिरिति भावः । ननु मूले प्रत्यक्षानुमानमात्रं विहायानुमानविशेषे शाकुने व्यभिचारोद्भावनं किमिति कृतमित्यतः प्रत्यक्षे तस्यानुद्भावनीयतामाह **यद्यपीत्यादिना ॥ ज्ञातकरणसजातीयत्वेनेति ।** श्रुतिर्न सम्यगनुभवसाधनं ज्ञातकरणजातीयत्वे सत्यबुद्धिपूर्वकत्वादित्येवं हेतुविशेषणदानेनाज्ञातकरणे प्रत्यक्षे व्यभिचारस्य परिहर्तुं शक्यत्वान्न तत्र व्यभिचारोद्भावनं कृतमित्यर्थः । यद्यप्यत्र ज्ञातकरणत्वमात्रविवक्षयाऽप्यज्ञातकरणे प्रत्यक्षे व्यभिचारस्य परिहारसिद्धेस्तावदेव वक्तुमुचितं तथाऽपिभागासिद्धिपरिहारार्थं ज्ञातकरणजातीयत्वपर्यन्तं धावनं कृतमिति द्रष्टव्यम् । ननु ज्ञातकरणजातीयत्वविवक्षया प्रत्यक्षे व्यभिचारपरिहारेऽप्यनुमानमात्रस्य तद्रूपत्वात्तत्र व्यभिचारः सुवच एवेति किमिति तदुपेक्षणमित्यत आह **अनुमानमात्र इति ॥ चेतनव्यापारेति ।** उच्चारणादिरूपचेतनव्यापारविषयस्य बुद्धिपूर्वकत्वाभावेन सम्यगनुभवसाधनत्वाभावे परेण साधिते

तथाभूत एव चेतनव्यापारविषय एव शाकुने व्यभिचारः प्रदर्शयितुमुचितः । अन्यथा चेतनव्यापार-विषयत्वे सति इत्यपि परेण विशेषणस्य ग्रहीतुं शक्यत्वेन व्यभिचारपरिहारप्रसक्तेरिति भावः । यद्वा चेतनव्यापारो बुद्धिरभिसन्धिर्वा तद्विषयस्य तद्घटितस्य हेतोरित्यर्थः ॥ **तथाभूत एवेति** । चेतनव्यापारी-भूतबुद्ध्यादिप्रसक्तिमत्येवेत्यर्थः । प्रतियोगिप्रसक्तिमत्येव तदभावस्य प्रतिपादनदर्शनेनाभिसन्ध्यादि-पूर्वकत्वप्रसक्तिमत्येव तदभावो वाच्यः । चेतनव्यापार एव चाभिसन्ध्यादिपूर्वकत्वप्रसक्तिर्न त्वन्यत्रेति चेतनव्यापारप्रसक्तिमत्त्वात्तत्रैव व्यभिचारश्चोदित इति भावः । तथाऽपि प्रमाणाविरुद्धशाकुनमात्रे व्यभिचारमनुक्त्वा तद्विशेषभूतोलूककृतव्यापारे तत्प्रदर्शनं किमिति मूले कृतमित्यत आह **शाकुनमात्र इति** ॥ **आगमिकत्वेनेति** । भारताद्यागमसिद्धत्वेनेत्यर्थः । नन्वस्तेर्लिटि द्वित्वे हलादिशेषे अत आदेरि'ति दीर्घत्वे द्विहल्त्वाभावान्नुडभावे सवर्णदीर्घत्वे च सत्यासेति रूपनिष्पत्तिर्भवतीति काऽत्र कथन्तेत्यत आर्धधातुके परे 'अस्तेर्भू' इत्यस्तेर्भूरादेशविधानेन बभूवेत्येव लिटि तद्रूपनिष्पत्तेर्न लिटि आसेतिरूप निष्पत्तिः सम्भवतीत्याशयेनाह **अस्तेर्भूरित्यस्येति** । परिहरति **विभक्तीति** । विभक्त्यन्तसदृश-मित्यर्थः । बभूवार्थ इति शेषः । यथा चिरायेत्यादिकमिति भावः ॥ **न चैवमिति** । अतिचिरायेत्या-दिबहुव्रीहिसमासस्य साक्षाद्विभक्त्यन्तत्वमस्तीति युक्तं तत्प्रतिरूपकत्वं चिरायेत्यादेः । प्रकृते च सर्व-त्रार्धधातुकेऽस्तेर्भूरादेशविधानेनासेति विभक्त्यन्तशब्दस्यैवाभावान्न तत्प्रतिरूपकत्वमस्येति भावः ॥

---

**आमन्तेति** । 'कृञ् चानुप्रयुज्यते लिटि' इत्यस्तेरामन्तानुप्रयोगविधानात् । इदामित्याद्यामन्तं पदम् । अनु पश्चात्प्रयुज्यमानस्य लिडन्तस्यासेत्यस्य विद्यमानत्वाद्युक्तं तिङन्तप्रतिरूपकाव्ययत्वमासेत्यस्येति भावः । ननु चास्तेर्भूभावस्य नित्यतयेन्दामासेत्यादावपि तत्प्रसङ्गोऽवर्जनीय इति चेत् । कृञ् चानुप्रयुज्यते लिटीत्यत्र कृञिति प्रत्याहारग्रहणसामर्थ्येन तत्र भूरादेशाभावोपपत्तेः अन्यथा हि प्रतिपत्तिलाघवाय कृभ्वनुप्रयुज्यत इत्येव ब्रूयादित्याशयः । यद्यपि च चान्द्रैरनुप्रयोगादन्यत्रापि क्वचित्क्वचिद्भूरादेशमनभ्यु-पगम्यैव प्रादुरास, बहुलक्षपाच्छविरित्यादिमहाकाव्यप्रयोगसमर्थनादत्रापि तदभावव्युत्पादनसम्भवादनु-प्रयोगपर्यन्तधावनानर्थक्य तथाऽप्युक्तयुक्त्याऽनुप्रयोगे भूरादेशाभावसिद्धावपि ततोऽन्यत्रापि भूरादेशाभावे निमित्ताभावेन तदसिद्ध्याऽनुप्रयोगपर्यन्तं धावनम् । अत एवोक्तप्रयोगोऽपि विस्तरे बभूवार्थे विभक्ति-प्रतिरूपकनिपातत्वेनैव समाहितः । एतदेवाभिप्रेत्योक्तं धातुवृत्तिकृता 'अत्र युक्तिर्न दृश्यत इती'ति सर्वमनवद्यम् ।

स० — **असिद्धेरिति** । अन्यतरासिद्धेरित्यर्थः । **उत्पद्यमानमिति** । तथा च सादित्वे सति बुद्धिजन्यत्वाभावादिति हेतुपदयोर्विरोध इति भावः ।

ननु ज्ञातकरणजातीयत्वविवक्षया प्रत्यक्ष व्यभिचारपरिहारेऽपि अनुमानमात्रस्य तद्रूपत्वात् तत्र च प्रतिपाद्यार्थबुद्धिपूर्वकत्वाभावस्य 'अनेनैतत्प्रतिपादयिष्यामि' इत्यभिसंधिपूर्वकत्वावैधुर्यस्य सद्भावेऽपि सम्यगनुभवसाधनत्वेन व्यभिचार इत्यत आह **अनुमानमात्र इति** । चेतनव्यापारो बुद्धिः अभिसन्धिर्वा तद्विषयस्य तद्धटितस्य हेतोरित्यर्थः । यद्वा चेतनव्यापारो विषयो यस्य स तथोक्तः अभिसन्ध्यादिः तस्य भावः । तथाभूते चेतनव्यापारे एवेत्यर्थः । प्रतियोगिप्रसक्तिमत्येव तदभावस्य वाच्यत्वात् चेतनव्यापारस्यैवाभिसन्ध्यादिपूर्वकत्वरूपप्रतियोगिप्रसक्तिमत्त्वात्, तत्रैव तदभावो वाच्य इति भावेन स्थलविशेषोदाहरणमिति भावः ।

ननु संवादिशाकुनमात्र एव व्यभिचार किं नोच्यते । किं 'यथा द्रौणेरुलूकेन' इति 'कृतमप्यास बोधकम्' इति तद्विशेषोदाहरणेनेत्यत आह **शाकुनमात्र इति** । **नित्यत्वादिति** । आर्धधातुके परत इति शेषः । **विभक्तिप्रतिरूपकमिति** । विभक्त्यन्तसदृशमित्यर्थः । **आमन्तेति** । इन्द्रामास कारयामासेत्याद्यामन्तप्रयोगस्य सत्त्वादित्यर्थः ।

**प०— पिपीलिकालिपावभावादिति** । तथाच श्रुतिरप्रमाणं अबुद्धिपूर्वकत्वात्पिपीलिकालिपिवदिति प्रागुक्तप्रयोगे दृष्टान्तसिद्धिरिति भावः ॥ **परेणेति** । अप्रामाण्यवादिना बौद्धेन तार्किकादिनेति वार्थः ॥ **मयेति** । 'स्वमतिप्रभवं जगदस्य यतः' इत्युक्तेरिति भावः ॥ **अत्रेति** । तृतीयचतुर्थपक्षयोरित्यर्थः ॥ **असाविति** । प्रत्यक्षे व्यभिचारः ज्ञातकरणजातीयत्वविशेषणदानेन शक्यपरिहार इत्यर्थः ॥ **सुवचोऽपीति** । व्यभिचार इत्यनुकर्षः ॥ **शाकुनमात्र इति** । लौकिकाऽगमिकसाधारणशाकुनमात्र इत्यर्थः ॥ **आगमिकत्वेनेति** । भारतसिद्धत्वेनेत्यर्थः । तथाचोक्तं भारततात्पर्यनिर्णयेऽष्टाविंशेऽध्याये 'नाऽगान्निद्रा निशीथे च ध्वांक्षान्न्यग्रोधवासिनः । हतान्सुबहुसाहस्रानेकेनातिबलेन तु । कौशिकेन निरीक्ष्यैव प्राह तौ कृपसात्वतौ । निदर्शनेन ह्येतेन प्रेरितः परमात्मना । यामि पांडुसुतान्हन्तुमित्युक्त्वाऽऽरुरुहे रथमि'त्यादि ॥ **अस्तेरिति** । अस्भुवीतिधातोरार्धधातुके परतो भूरित्ययमादेशो भवतीति पाणिनीयसूत्रार्थः । तथाच बभूवेति स्यादिति भावः ॥ **इति वचनादिति** । 'चादयोऽसत्वे' इत्यत्र चादिगणपाठमध्ये 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः' इति पाठादिति भावः । शङ्कते **विभक्तिप्रतिरूपकमित्युच्यत इत्यादि** । केवलस्यासेति तिङ्विभक्त्यन्तस्याभावेऽपि कारयामासेत्यादिप्रयोगेषु आम्प्रत्ययान्तादव्ययादनुप्रयुज्यमानं त्वासेति विभक्त्यन्तमस्त्येवेति भावेन समाधत्ते **न नास्तीति** । 'कृञ्चानुप्रयुज्यते लिटो'ति सूत्रेण कृभ्वस्तीनामामन्तादनुप्रयोगस्योक्तत्वादिति भावः ।

**या०— बुद्धिजन्यमेवेति** । ईश्वरबुद्धिजन्यत्वस्य सर्वत्रापि कार्ये सत्त्वादिति भावः ॥ **ज्ञातकरणसजातीयत्वेनेति** । यद्यप्यत्र ज्ञातकरणत्वेनेत्येव वक्तुमुचितं तथाऽपि सर्वज्ञज्ञातकरणत्वस्येन्द्रियेऽपि सत्त्वेनास्मदादिज्ञातकरणत्वस्य विवक्षणीयत्वे वेदानामनन्तत्वेनास्माभिर्ज्ञातुमशक्यत्वेन भागा-

सिद्धिः स्यात् । अतस्तत्परिहाराय ज्ञातकरणजातीयत्वेनेत्युक्तमित्यवधेयम् ॥ **चेतनव्यापारविषयस्येति** । चेतनव्यापारो बुद्धिरभिसन्धिर्वा तद्विषयस्य तद्घटितस्य हेतोरित्यर्थः ॥ **शाकुनमात्र इति** । वायसदक्षिणगमनादिरूपे चेतनव्यापारघटिते शाकुनमात्र इत्यर्थः ॥ **आगमिकत्वेनेति** । भारताद्यागमसिद्धत्वादिति भावः ॥ **अस्तेर्भूरित्यस्येति** । अस्तेर्भूरादेशः स्यादार्धधातुक इति सूत्रार्थः । तथा च बभूवेति भवितव्यमिति भावः ॥ **विभक्तिप्रतिरूपकमिति** । चिरायेत्यादिवद्विभक्त्यन्तसदृशमित्यर्थः ॥ **न चैवं विभक्तिरिति** । बहुव्रीहिविवक्षयाऽतिचिरायेति यद्विभक्त्यन्तं पदं तत्प्रतिरूपकं चिरायेत्यादेः । न चैवं प्रकृते । अस्तेर्भूरित्यस्य नित्यत्वेनाऽमेति विभक्तेः कदाऽप्यनुपपत्तेरिति भावः ॥ **आमन्तेति** । इन्दामामेत्यादावित्यर्थः । 'कृञ्चानुप्रयुज्यते लिटी'त्यस्तेरामन्तानुप्रयोगविधानात् । तत्र च विधानसामर्थ्यादस्तेर्भूभावो नेति वैयाकरणैरुक्तत्वादिति भावः ।

**श्री०** — वक्ष्यमाणानुमाने सिद्धसाधनता श्रुतेः स्मारकत्वेनैव प्रामाण्याङ्गीकारादित्याशङ्कापरिहारायाह **ननु च श्रुतेरिति** । **असिद्धेरन्यतरासिद्धेः** ॥ **उत्पद्यमानमिति** । तथा च पिपीलिकालिपेरपीश्वरबुद्धिजन्यत्वात्साधनवैकल्यम् । अबुद्धिजन्यस्य कस्याप्यभावेन बुद्धीति विशेषणवैयर्थ्यं चेति भावः। ज्ञातकरणजातीयत्वेनाबुद्धिपूर्वकत्वहेतौ विशेषणेन दत्तेनेति शेषः । अत्र ज्ञातकरणत्वविशेषणेनैव प्रत्यक्षव्यभिचारपरिहारः । जातीयपदं तु वेदानामनन्तरेण ज्ञातकरणताया अयोगेन भागासिद्धिपरिहारायेति ध्येयम् ॥ **सुवच इति** । प्रतिपाद्यार्थबुद्धिपूर्वकतावैधुर्यरूपस्यानेनैतदेवं प्रतिपादयिष्यामीत्यभिसन्धिपूर्वकतावैधुर्यरूपस्य चाबुद्धिपूर्वकत्वरूपहेतोरनुमाने सत्त्वादिति भावः । **चेतनव्यापारो** बुद्धिरभिसन्धिर्वा । **तद्विषयस्य** तद्घटितस्य । तथाचानुमाने बुद्ध्यभिसन्ध्योः प्रसक्तेरेवाभावेन तन्निषेधायोगादुलूकादौ तत्प्रसक्तेः सत्त्वेन तन्निषेधसम्भवाद्युक्तं तत्रैव व्यभिचारप्रदर्शनमिति ध्येयम् । **शाकुनमात्रे** प्रमाणाविरुद्धशाकुनमात्रे । **इदं** यथा द्रौणेरित्येतच्छाकुनम् । उत्तरमाह **विभक्तीति** । पुनश्शङ्कते **विभक्तीति** । एकवचनादिरूपा विभक्तिरित्यर्थः । उत्तरमाह **न नास्तीति** । अस्तीत्यर्थः ॥ **आमन्तेति** । कारयामासेत्यादावाम्प्रत्ययान्ताव्ययमनु आसेत्येकवचनरूपविभक्तिप्रयोगस्य सत्त्वादित्यर्थः । अनु प्रयुज्यते लिटीति विधानसामर्थ्यादामन्तानुप्रयोगेऽस्तेर्भूभावो नेति भावः ।

**न्य०** — अतिचिरायेत्यादिबहुव्रीहिसमासस्य कृत्तद्धितेत्यनुशिष्टप्रातिपदिकसंज्ञानियन्त्रितविभक्त्यन्तत्वेन तत्सादृश्यं चिरायेत्यादेरस्ति प्रकृते च दर्शितादेशस्य नित्यतया आसेति विभक्त्यन्तस्याभावेन न तत्प्रतिरूपमस्येति हृदयम् । **आमन्तेति** । कृञ् चान्वितिसूत्रे कृञितिप्रत्याहारग्रहणसामर्थ्येनास्तेर्भूभावो नेति पाणिनीया अभ्युधुरितीन्दामासेत्यादिकमेव विभक्त्यन्तमस्तीति तत्सादृश्यं सूपपादमिति भावः । प्रपञ्चितं चैतत्प्रपञ्चकैः ।

सु० — नन्वेवं तर्हि प्रयुज्यते । श्रुतिर्न सम्यगनुभवसाधनं शब्दत्वे सत्यबुद्धिपूर्वकत्वादिति । यद्वा श्रुतिर्नागमोऽबुद्धिपूर्वकत्वादिति । अबुद्धिपूर्वकत्वं च विवक्षितार्थतत्त्वज्ञानपूर्वकत्वाभावः । आद्य(स्यापि)स्य पिपीलिकालिपावप्रवेशेऽप्युन्मत्तवाक्यं दृष्टान्तो भविष्यति । न चोन्मत्तवाक्यमपि प्रमाणं प्रमाणविरुद्धत्वादित्यत आह विरुद्धं त्विति ।

अनु० — विरुद्धं तु विरोधादेव बाधितम् ।

प्रमाणविरुद्धं यदुन्मत्तवाक्यं तत् प्रमाणविरोधादेव बाधितमयथार्थमिति यावत् । न तूक्तहेतुभ्यामिति । सोपाधिकतामनेनाचष्टे । अत्र एवाप्ताप्रणीतवाक्यत्वहेतुरप्यपास्तः । अयमभिसन्धिः । न तावत्सम्यगनुभवसाधनत्वाभावो ज्ञानसाधनत्वाभावेन । ज्ञानसाधनत्वस्योभयसिद्धत्वात् । नापि स्मृतिसाधनत्वेन । अननुभूतविषयत्वसम्मतेः । ततो विपरीतबोधकत्वेनैवेति वाच्यम् । एवं द्वितीयप्रयोगेऽपि न तावदनागमत्वमशब्दत्वेन । शब्दत्वस्योभयसम्मतत्वात् । तस्मादयथार्थत्वेनेति वक्तव्यम् । एवं तृतीयप्रयोगेऽपि साध्यनिष्कर्षः कर्तव्यः । तथा च तत्र प्रमाणबाधितत्वमुपाधिः । यद्वाऽनुभवसाधनत्वावच्छिन्ने प्रथमसाध्ये, वाक्यत्वावच्छिन्ने द्वितीयसाध्ये. बोधकत्वावच्छिन्ने तृतीये चायमुपाधिरिति ।

नन्वस्योपाधेर्यदयथार्थं तत्प्रमाणविरुद्धमिति साध्यव्यापकत्वेऽपि साधनाव्यापकत्वं कथमित्यत आह विरोधेति ।

विरोधादर्शनात्

पक्षीकृतायां श्रुतावुक्तसाधनसद्भावेऽपि प्रमाणविरोधस्यादर्शनात् । साधनाव्यापकत्वमिति शेषः । अत्र विरोधाभावादिति वक्तव्येऽदर्शनादित्युक्तं विरोधाभावसाधनार्थमिति द्रष्टव्यम् ।

शे० — व्यभिचारेणैव शङ्कितानुमानस्य दूषितत्वादुपाधिप्रदर्शनपरोत्तरवाक्यानर्थक्यमित्यतः प्रयोगपरिष्कारेण व्यभिचारेण परेण परिहृते तदाभासत्वव्युत्पादनार्थं तदिति भावेनोक्तव्यभिचारपरिहाराय तत्प्रयोगपरिष्कारमाह नन्वेवं तर्हीति ॥ शब्दत्वे सतीति । इदं च शाकुने व्यभिचारपरिहारायेति द्रष्टव्यम् । एवं हेतुविशेषणदानेन व्यभिचारं परिहृत्य साध्यविशेषपरिष्कारेणापि व्यभिचारं परिहरति यद्वति । ततश्च शाकुने सम्यगनुभवसाधनत्वेऽप्यागमत्वाभावान्न तत्र व्यभिचर इति भावः । नन्वबुद्धिपूर्वकं नानादित्वमिह सम्भवति । श्रुतेरनादित्वस्य परेणानङ्गीकारेणानुमानद्वयेऽप्यन्यतरासिद्धिप्रसक्तेः । आद्यहेतौ दृष्टान्ततयाऽभिमते उन्मत्तवाक्ये द्वितीयहेतौ च तेनाभिमतपिपी-

लिकालिपौ च साधनवैकल्यापाताच्च । नापि बुद्ध्यजन्यत्वं तत् । जन्यमात्रस्य बुद्धिजन्यत्वस्यास्मा-भिरङ्गीकारेणोन्मत्तवाक्यस्यापि बुद्धिजन्यत्वसिद्ध्या दृष्टान्तस्य साधनवैकल्यप्रसङ्गात् । द्वितीयहेतौ दृष्टान्ततयाऽभिप्रेतपिपीलिकलिपेरपि बुद्धिजन्यत्वेन तत्रापि साधनवैकल्यप्रसङ्गात् । नापि प्रतिपाद्यार्थ-बुद्ध्यादिपूर्वकताविरहः । उन्मत्तवाक्यस्यापि भ्रमरूपवाक्यार्थज्ञानपूर्वकत्वादुक्ताभिसन्धिपूर्वकत्वाच्च साधनवैकल्यानिस्तारात्कथमेतदित्यत आह **अबुद्धिपूर्वकत्वं चेति** । ततश्चोन्मत्तवाक्यस्य प्रतिपाद्यार्थभ्रमपूर्वकत्वेऽपि तत्त्वज्ञानपूर्वकत्वाभावेन हेतुसत्त्वान्न दृष्टान्ते साधनवैकल्यमिति भावः । ननु मूले विरोधादेव बाधितमित्ययुक्तम् । प्रमाणविरोधस्यैव बाधकत्वादित्यत आह **अयथार्थमिति यावदिति** । विरोधादेवेत्येवकारव्यावर्त्यमाह **न तूक्तहेतुभ्यामिति** । शब्दत्वे सत्यबुद्धिपूर्वकत्व–बुद्धिपूर्वकत्व–रूपहेतुभ्यामित्यर्थः । एतावताऽपि किमनुमानस्य दूषणमुक्तं भवतीत्यत आह **सोपाधिकतामिति** ॥ **अत एवेति** । वेदो न प्रमाणमाप्ताप्रणीतवाक्यत्वादुन्मत्त-वाक्यवदिति पूर्वपक्षदशायामुपन्यस्तहेतुरपि प्रमाणविरुद्धत्वरूपोपाध्याक्रान्तत्वान्निरस्त इत्यर्थः । ननु सम्य-गनुभवसाधनत्वाभाववति घटादौ प्रमाणविरुद्धत्वाभावान्न प्रथमप्रयोगे तस्य साध्यव्यापकत्वं सम्भवति । प्रमाणीभूतप्रत्यक्षानुमानयोरनागमत्वेऽपि प्रमाणविरुद्धत्वाभावान्न द्वितीयप्रयोगेऽपि तस्य साध्यव्यापकत्वं सम्भवति । यथार्थज्ञानजनकत्वरूपप्रामाण्याभाववति कचटतपादिशब्दे प्रमाणविरुद्धत्वाभावान्न तृतीय-प्रयोगेऽपि तस्य साध्यव्यापकत्वं सम्भवति । तत्कथमस्योपाधित्वमित्यतो वाच्युक्तसाध्यव्यापकत्वाभावेऽपि पर्यवसितसाध्यव्यापकत्वेनास्योपाधित्वमुपपद्यते । 'वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः । पर्यवसितं नियमयन्दूषकताबीजसाम्राज्यादि'ति पर्यवसितसाध्यव्यापकस्यापि दूषकतायाः परैरङ्गीकृतत्वादि-त्यभिप्रायेणानुमानत्रयेऽपि पर्यवसितसाध्यव्यापकतामुपपादयितुं साध्यपर्यवसानमाह **अयमभिसन्धिरिति एवं तृतीयप्रयोगेऽपीति** । वेदो न प्रमाणमाप्ताप्रणीतवाक्यत्वादिति तृतीयप्रयोगेऽपि न तावदप्रामाण्य-मबोधकत्वेन बोधकत्वस्योभयसम्मतत्वात् । अन्यथा तत्र फलव्यभिचारस्योत्थानानुपपत्तेः । ततो विपरीतबोधकत्वेनैवाप्रामाण्यं वाच्यमिति साध्यनिष्कर्षः कर्तव्य इत्यर्थः ॥ **तथा चेति** । घटादौ विपरीतबोधकत्वादिरूपपर्यवसितसाध्यस्यैवाभावान्न तत्र साध्याव्यापकतेति भावः । शुद्धसाध्यव्यापकस्य पक्षधर्मावच्छिन्नसाध्यव्यापकस्य साधनावच्छिन्नसाध्यव्यापकस्य वा यथा शास्त्रे उपाधित्वेन संव्यव-हारो न तथा पर्यवसितसाध्यव्यापकस्येति पर्यवसितसाध्यव्यापकस्योपाधित्वस्वीकारो न स्वरस इत्यतोऽत्रापि पक्षधर्मावच्छिन्नसाध्यव्यापकत्वेनैवोपाधित्वमुपपादयति **यद्वेति** । ज्ञानसाधनत्वावच्छिन्नत्वविवक्षया घटादौ साध्याव्यापकत्वपरिहारेऽपि स्मृतिसाधनत्वेन सम्यगनुभवसाधनत्वाभाववति संस्कारे साध्याव्यापकत्वपरिहा-रार्थमनुभवसाधनत्वावच्छिन्नत्वोक्तिरिति ध्येयम् । अत्र चानुभवसाधनत्वावच्छिन्ने प्रथमसाध्य इत्युक्त्यो

क्तोपाधिव्याप्यतावच्छेदकत्वं न केवलस्य किन्नाम विशिष्टस्यैवेत्येतदभिप्रेयते न त्वनुभवसाधनत्वस्य सम्यगनुभवसाधनत्वाभावं प्रत्यवच्छेदकत्वम् । तदन्यूनानतिरिक्तवृत्तित्वरूपस्य तस्य प्रकृतेऽसम्भवात् । सम्यगनुभवसाधनत्वाभाववति घटादावनुभवसाधनत्वाभावेन तन्न्यूनवृत्तित्वात् । न चानतिरिक्तवृत्तित्वमेव तत् । तत्रश्चानुभवसाधनत्वस्य न्यूनवृत्तित्वेऽप्यतिरिक्तदेशवृत्तित्वाभावेनावच्छेदकत्वमुपपद्यत इति वाच्यम् । तथा सति द्रव्यत्वस्य प्रत्यक्षत्वावच्छेदकत्वाभावप्रसङ्गात् । अप्रत्यक्षत्ववत्यप्याकाशादौ द्रव्यत्वस्य सत्त्वेनातिरिक्तदेशवृत्तित्वात् । प्रत्यक्षे रूपादावभावेनान्यूनवृत्तित्वाभावाच्चेति द्रष्टव्यम् । ननु विरोधादर्शनादिति ग्रन्थो न साधनाव्यापकत्वप्रदर्शनार्थतया व्याख्यातुं शक्यते । तथा सति प्रमाणविरोधस्यैवोपाधितयोपन्यासात्पक्षे तदभावं प्रतिपादयितुं विरोधाभावादित्येव वक्तव्यतया विरोधादर्शनादित्युक्त्यसामञ्जस्यप्रसङ्गादित्यत आह **अत्र विरोधेति** ।

स० — **उक्तहेतुभ्यामिति** । शब्दत्वे सत्यबुद्धिपूर्वकत्व-(केवल)बुद्धिपूर्वकत्वरूपहेतुभ्यामित्यर्थः । **अत एवेति** । प्रमाणविरुद्धत्वलक्षणोपाधिग्रस्तत्वादेवेत्यर्थः । **एवं तृतीयप्रयोगेऽपीति** । प्रामाण्याभावसाधके आप्ताप्रणीतत्वादिति तृतीयप्रयोगेऽपीत्यर्थः । **साध्यनिष्कर्ष इति** । प्रामाण्याभावो हि न ज्ञानसाधन (... ? ) अनुभवसाधनत्वस्यावच्छेदकत्वे, यत्रानुभवसाधनत्वे सति आगमत्वाभावः तत्र प्रमाणविरुद्धत्वमिति व्याप्तेर्वाच्यत्वात् तस्याश्च प्रत्यक्षे व्यभिचारस्य सम्भवेन तस्यैवावच्छेदकत्वानुपपत्त्या वाक्यत्वावच्छिन्नेत्युक्तम् । न चैवं प्रथमसाध्येऽपीदमेवावच्छेदकमास्तमिति शङ्क्यम् । अगृहीतसङ्गतिके वाक्ये वाक्यत्वे सति सम्यगनुभवसाधनत्वाभावेऽपि प्रमाणविरुद्धत्वाभावेन साध्यव्यापकत्वाभावापातादित्यर्थः । **बोधकत्वावच्छिन्नेति** । न च संस्कारे बोधकत्वे सति प्रामाण्याभावेऽपि प्रमाणविरुद्धत्वाभावेन तत्र साध्याव्यापकत्वमिति वाच्यम् । अनुभवसाधनत्वरूपबोधकत्वस्यात्राभिप्रेतत्वेन संस्कारस्य तदभावेनादोषादिति भावः । वस्तुतस्तु विशेष्यवति विशिष्टाभावो विशेषणाभावेनैव वाच्य इति भावेन तत्तद्विशेषणरूपाणामनेकेषां धर्माणामवच्छेदकत्वोक्तिरिति द्रष्टव्यम् ।

प० — **नन्वेवं तर्हीति** । अबुद्धिपूर्वकत्वात्पिपीलिकालिपिवच्छ्रुतिरप्रमाणमिति प्राक्तनप्रयोगे सम्यगनुभवसाधनं न भवतीति विवक्षायामपि हेतुविकल्पेनोल्लकव्यापारे व्यभिचारेण दूषणपक्षे एवं वक्ष्यमाणदिशोल्लकव्यापारे व्यभिचाराभावाय द्वेधा प्रयोग उच्यत इत्यर्थः ॥ **आद्यस्यापीति** । शब्दत्वे सतीत्यादिहेतोरित्यर्थः । न केवलं प्रागविकल्पितानादित्वादिहेतोरित्यपेरर्थः ॥ **उक्तहेतुभ्यामितीति** । केवलाबुद्धिपूर्वकत्वहेतुना । शब्दत्वविशेषणयुक्तेन चेत्यर्थः ॥ **अत एव** सोपाधिकत्वादेव आप्ताप्रणीतवाक्यत्वादुन्मत्तवाक्यवत् वेदस्याप्रामाण्यमिति पूर्वपक्षदशोक्तप्रयोगस्य हेतुरपीत्यर्थः ॥ **अननुभूतेति** ।

अननुभूतार्थविषयकत्वस्य श्रुतावुभयसम्मतत्वादित्यर्थः ॥ **तृतीयेति** । आप्ताप्रणीतत्वादुन्मत्तवाक्यवद्वेदस्याप्रामाण्यमिति प्रयोगेपि अप्रामाण्यं न तावदबोधकत्वेन बोधकत्वस्योभयवादिसम्मतेः । किंत्वयथार्थत्वेनेत्ययं निष्कर्षः कर्तव्य इत्यर्थः । निष्कर्षमकृत्वा यथाश्रुत(वाक्य ए)साध्य एव सोपाधिकत्वमाह **यद्वेति** । **प्रथमसाध्य इति** । सम्यगनुभवसाधनत्वाभावरूपे अनागमत्वरूपे द्वितीये साध्ये अप्रामाण्यरूपे तृतीय इत्यर्थः । घटादौ साध्याव्यापकत्वनिरासाय सर्वत्रावच्छेदकोक्तिः । साध्यत्रयेपि निष्कृष्टार्थानुवादः **यदयथार्थमिति** ।

**या०** — न च बुद्धिपूर्वकत्वं न तावद्बुद्धिजन्यत्वरूपमिह सम्भवति । दृष्टान्ततया वक्ष्यमाणोन्मत्तवाक्येऽन्ततो पदावलीबुद्धिपूर्वकत्वस्यापि सम्भवेन साधनवैकल्यप्रसङ्गात् । नापि प्रतिपाद्यार्थबुद्ध्यादिपूर्वकताविरहरूपं तदत्र वक्तुं शक्यम् । उन्मत्तवाक्यस्यापि भ्रमरूपवाक्यार्थज्ञानपूर्वकत्वात् उक्ततदभिसन्धिपूर्वकत्वाच्च साधनवैकल्यानिस्तारात् । अत आह **अबुद्धिपूर्वकत्वं चेति** । तथा चोन्मत्तवाक्यस्य प्रतिपाद्यार्थज्ञानपूर्वकत्वेऽपि तत्त्वज्ञानपूर्वकत्वं नास्तीति हेतुसत्त्वान्न साधनवैकल्यमिति भावः । **अत एवेति** । वेदोऽप्रमाणमाप्ताप्रणीतवाक्यत्वादुन्मत्तवाक्यवदिति पूर्वपक्षसमये कथितहेतुरपि सोपाधिकत्वादेवापास्त इत्यर्थः । ननु प्रथमसाध्ये सम्यग्ज्ञानरूपस्मृतिजनके संस्कारे द्वितीयसाध्ये प्रत्यक्षादिप्रमाणे यथार्थज्ञानजनकत्वरूपतृतीयसाध्ये चाबोधके कचटतपादिशब्दे व्यभिचारेण साध्याव्यापकतया कथमस्योपाधित्वमित्यत आह **अयमभिसन्धिरिति** । तथा च वाद्युक्तसाध्यव्यापकत्वाभावेऽपि पर्यवसितसाध्यव्यापकतयाऽस्योपाधित्वमुपपद्यत एव तस्याप्यभियुक्तैर्दूषणतयोच्यमानत्वादिति भावः । तदुक्तम् । 'पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । पर्यवसितं साध्यं पक्षधर्मताबललभ्यम् । यथा शब्दोऽनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान्मेयत्वादित्यत्र पर्यवसितं यत्साध्यमनित्यत्वं तस्य व्यापकं कृतकत्वमुपाधिरि'ति । अन्यत्राप्युक्तम् । 'वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः । पर्यवसितं नियमयन्दूषकताबीजसाम्राज्यादि'ति ॥ **एवं तृतीयेति** । आप्ताप्रणीतवाक्यत्वादित्यत्रापि यथार्थज्ञानाजनकत्वलक्षणाप्रामाण्यरूपस्य साध्यस्यायथार्थज्ञानजनकत्व एव पर्यवसानं वाच्यमित्यर्थः ।

**श्री०** — **एवं तर्हीति** । उक्तरीत्या तर्हि प्रयुज्यत इति शङ्कितुः प्रतिज्ञेयम् । प्रत्यक्षादौ व्यभिचारवारणाय शब्दत्वे सतीत्युक्तम् । **आगमो निर्दोषः शब्दः** । ननु यद्यपि द्वितीयानुमाने पिपीलिकालिपेर्दृष्टान्तत्वं युक्तं, न प्रथमानुमाने; पिपीलिकालिपेरशब्दत्वात्; तथाऽपि दृष्टान्तान्तरमाद्यानुमाने भविष्यतीत्याह **आद्यस्येति** । तत्र साध्यवैकल्यमाशङ्क्य निषेधति **न चेति** । **प्रमाणं** येन दृष्टान्तता न स्यादिति शेषः ॥ **उक्तहेतुभ्यामिति** । तथा चोन्मत्तवाक्येऽयाथार्थ्ये विरुद्धत्वस्यैव प्रयोजकत्वं न शब्दत्वे

सत्यबुद्धिपूर्वकत्वाबुद्धिपूर्वकत्वहेत्वोरिति ध्येयम् । प्रयोजकश्चोपाधिरिति भावः । **अत एव** सोपाधिक-त्वादेव ॥ **तथा च तत्रेति** । एवं च न संस्कार-प्रत्यक्षादिप्रमाण-कचटतपादिशब्देषु साध्याव्यापकतेति भावः । एवं शुद्धसाध्यव्यापकतापर्यवसन्नपर्यवसितसाध्यव्यापकोपाधिमुक्त्वा पक्षधर्मावच्छिन्नसाध्यव्यापकं तमेवोपाधिमाह **यद्वेत्यादिना** । तथा च न संस्कारादौ साध्याव्यापकतेति ध्येयम् ।

**च०** — पूर्ववादिना शङ्कितानुमाने हेतुशरीरे विशेषणांशनिवेशोऽनैकान्त्यस्य सुनिरासतयोपाधि-प्रतिपादकोत्तरमूलसाफल्यं संपिपादयिषुरवतारयति **नन्वेवमिति** । शाकुनानैकान्त्यव्युदासकं सप्तम्यन्त-मित्यवसेयम् । हेतुपरिष्कृत्या नानैकान्त्यमिति भावः । **विवक्षितार्थेति** । उन्मत्तवाक्ये प्रतिपाद्यार्थगोचर-विपर्यासपूर्वकतासत्त्वेपि तादृशार्थावगाहिप्रमितिपूर्वकताविधुर्यात्साधनसमवहितेन साधनवैकल्यमिति भावः । **अत एव** वेदो न प्रमाणमाप्तप्रणीतवाक्यत्वादुन्मत्तवाक्यवदितिपूर्ववाद्युपन्यस्तहेतोरपि प्रमाणविरुद्धत्व-लक्षणोपाधिविशेषितत्वादेव । ननु अत्र सम्यगनुभवसाधनत्वाभावागमत्वाभावाप्रामाण्याभावसाधकानुमान-त्रये तत्साध्यवति घटादौ, प्रत्यक्षानुमानयोः कचटतपादिशब्दे चोक्तोपाधिविरहेण साध्याव्यापकतया नोपाधिता सङ्गच्छत इत्यत आह **अयमभिसन्धिरिति** । वादिना कण्ठोदीरितसाध्यव्यापकत्वाभावेपि तत्तात्पर्यगोचरसाध्यव्यापकत्वेनोपाधिताऽस्योपपद्यत एव । तादृशस्यापि परीक्षकैरुपाधित्वस्योरीकृतत्वादिति भावः । अत एव पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वं । पर्यवसितसाध्यं पक्षधर्मता-बललभ्यं यथा शब्दः अनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान्मेयत्वादित्यत्र पर्यवसितं यत्साध्यनित्यत्वं तद्व्यापकं कृतकत्वमुपाधिः । 'वाद्युक्तसाध्यनियमच्युतोपि कथकैरुपाधिरुद्भाव्यः पर्यवसितं नियमयन् दूषक-ताबीजसाम्राज्यादि'तिकानैयायिकानां प्रवादः सङ्गच्छत इत्यवसेयम् । शुद्धसाध्यव्यापकादीनामुपाधित्वेन संव्यवहार्यतेव पर्यवसितसाध्यव्यापकस्य साऽस्फुटेत्यरुचिमनुरुन्धानः पक्षधर्मावच्छिन्नसाध्यव्यापकत्वेनैवो पाधितां सङ्गमयति **यद्वेति** । स्मृतिरूपज्ञानसाधने संस्कारे साध्यव्यापकत्वभङ्गपरिजिहीर्षयाऽनुभवसाधन-त्वपर्यन्तानुधावनम् ।

**सु०— किमतो यद्येवं प्रमाणविरुद्धत्वमुपाधिरिति चेत् । उपाधेः प्रतिपक्षोन्नायकत्वस्य वक्ष्यमाणत्वेनानुमानानां सत्प्रतिपक्षत्वमित्याशयेनाह** तस्मादिति ।

**अनु०** — तस्माद्वेदप्रामाण्यमिष्यते ।

**यस्मात्प्रमाणविरुद्धत्वमयथार्थत्वस्य व्यापकं व्यावृत्तं च पक्षीकृताद्वेदात् । व्यापक-निवृत्तौ व्याप्यनिवृत्तिरवश्यम्भाविनी । तस्माद्वेदप्रामाण्यमेष्टव्यम् । अयमत्र प्रयोगः । वेदो नायथार्थः प्रमाणाविरुद्धत्वात्प्रत्यक्षवत् । यद्वा वेदो यथार्थो बोधकत्वे सति प्रमाणाविरुद्ध-**

**स्वात्प्रत्यक्षवत् । एवं वेदः सम्यगनुभवसाधनमनुभवसाधनत्वे सति प्रमाणाविरुद्धत्वात्प्रत्यक्षवत् । वेद आगमो वाक्यत्वे सति प्रमाणाविरुद्धत्वात्सम्प्रतिपन्नवदिति । एवं वाक्यत्वावच्छिन्ने साध्येऽनाप्तप्रणीतत्वमुपाधिस्तद्विपर्ययेण च प्रतिपक्षोऽभिधेय इति ।**

**शे०—** उपाधेर्निष्कृष्टसाध्यव्यापकत्वपक्षे तद्व्यतिरेकेण निष्कृष्टसाध्यव्यावृत्तिसाधनप्रकारं दर्शयति **अयमत्र प्रयोग इति** । प्रथमतृतीयसाध्ययोर्विपरीतबोधकत्वरूपेण निष्कर्षेऽपि विपरीतबोधकत्वस्यायथार्थत्वानतिरेकादनुमानत्रयेऽप्ययथार्थत्वमेव निष्कृष्टं साध्यमित्यभिप्रायेण तद्व्यतिरेकमेव साधयति **वेदो नायथार्थ इति** । इदानीमुपाधेरवच्छिन्नसाध्यव्यापकतापक्षे तद्व्यतिरेकेणावच्छिन्नसाध्यव्यतिरेकसाधने पराभिप्रेतशुद्धसाध्यव्यतिरेकासिद्ध्याऽर्थान्तरता स्यादित्याशङ्क्य साध्यविशेषणमुपाधिव्यतिरेकरूपसाधनविशेषणं कृत्वा तादृशविशिष्टसाधनेन शुद्धसाध्यव्यतिरेकसाधनान्नार्थान्तरतेत्यभिप्रायेण प्रयोगप्रकारं दर्शयति **यद्वेति ॥ बोधकत्वे सतीति** । एतच्चाबोधके कचटतपादिशब्दे व्यभिचारपरिहारायोक्तम् ॥ **एवं वेद इति** । घटादौ व्यभिचारपरिहाराय सत्यन्तम् । **वेद इति** । प्रमाणीभूतप्रत्यक्षानुमानयोरव्यभिचाराय वाक्यत्वे सतीत्युक्तम् । एवं भिन्नभिन्नधर्मावच्छिन्नसाध्यव्यापकोपाधिमुक्त्वा विरोधादेवेति मूलमुपलक्षणमित्यभिप्रेत्यानुमानत्रयेऽप्येकधर्मावच्छिन्नसाध्यव्यापकोपाधिमाह **एवमिति** । सम्यगनुभवसाधनत्वाभावस्य घटादावागमत्वाभावस्य प्रमाणीभूतप्रत्यक्षादावप्रमाणत्वस्य दुष्टेन्द्रियादौ सत्त्वेऽपि तत्रानाप्तत्वप्रणीतत्वाभावेन शुद्धसाध्यव्यापकत्वाभावेऽपि वाक्यत्वरूपपक्षधर्मावच्छिन्नसम्यगनुभवसाधनत्वाभावस्य, तत्त्वे सत्यागमत्वाभावस्य वा, तत्त्वे सत्यप्रमाणत्वस्य वोदाहृतस्थलेष्वभावेन तत्रानाप्तप्रणीतत्वाभावेऽप्युक्तसाध्यवत्युन्मत्तवाक्यादावनाप्तप्रणीतत्वस्य सत्त्वेनोपाधेः साध्यव्यापकत्वादनाप्तप्रणीतत्वमपि प्रयोगत्रय उपाधिः । वेदः सम्यगनुभवसाधनं वाक्यत्वे सत्यनाप्ताप्रणीतत्वादाप्तवाक्यवत् । वेद आगमो वाक्यत्वे सत्यनाप्तत्वाप्रणीतत्वात् । वेद प्रमाणं वाक्यत्वे सत्यनाप्ताप्रणीतत्वात्सम्मतवदिति सत्प्रतिपक्षश्चाभिधेय इत्यर्थः । केचित्तु बोधकत्वावच्छिन्ने तृतीये चायमुपाधिरिति बोधकत्वावच्छिन्नाप्रामाण्यरूपतृतीयसाध्ये प्रमाणविरुद्धत्वमुपाधिरित्युक्तम् । इदानीं वाक्यत्वावच्छिन्नेऽस्मिन्साध्येऽनाप्तप्रणीतत्वमुपाधिः । वेदः प्रमाणं वाक्यत्वे सत्यनाप्ताप्रणीतत्वादिति तद्व्यतिरेकेण साध्यव्यतिरेकश्चाभिधेय इत्येतद्ग्रन्थार्थमाहुः ।

**स०— वक्ष्यमाणत्वेनेति** । 'साध्यव्यापकवैलोम्यमव्याप्तिस्साधनस्य च' इत्यादिनेति शेषः । भिन्न-भिन्नधर्मावच्छिन्नसाध्यव्यापकमुपाधिमुक्त्वा एकधर्मावच्छिन्नसाध्यव्यापकमुपाधिमप्याह **एवमिति** । सम्यगनुभवसाधनत्वाभावस्य च घटादौ सत्त्वेऽपि अनाप्तप्रणीतत्वाभावेन तत्र साध्याव्यापकत्वेऽपि वाक्यत्वेऽपि सति यत्र सम्यगनुभवसाधनत्वाभावो वा आगमत्वाभावो वा अप्रमाणत्वाभावो वा, तत्रानाप्त-

प्रणीतत्वस्य नियमेन साध्यव्यापकत्वोपपत्तिरिति भावः । विमतं प्रमाणम् अनाप्तप्रणीतत्वादिति सत्प्रतिपक्षो द्रष्टव्यः ।

**प०— वक्ष्यमाणत्वेनेति ।** 'साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य च इत्यत्राग्रेऽत्रैव नये वक्ष्यमाणत्वेनेत्यर्थः । 'उपाधिप्रतिरूपं हि साधनं तच्च नापरमि'ति चतुर्थाध्याये द्वितीयपादे साक्षाद्वक्ष्यमाणत्वेनेति वार्थः । घटादावव्यभिचाराय बोधकत्वे सतीति अनुभवसाधनत्वे सतीति वाक्यत्वेसतीति च हेतुविशेषणानि ॥ **एवं वाक्यत्वेत्यादि** । यत्र वाक्यत्वे सत्यप्रामाण्यं तत्रानाप्तप्रणीतत्वमिति साध्यव्यापकत्वस्य, साधनवति पक्षे अभावेन साधनाव्यापकत्वस्य च सम्भवात् । वेदो यथार्थः वाक्यत्वे सत्यनाप्तप्रणीतत्वशून्यत्वात् । आप्तवाक्यवदिति प्रतिपक्षोऽभिधेय इत्यर्थः ।

**या०— वक्ष्यमाणत्वेनेति ।** 'साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य चे'त्यत्रेति शेषः । वेदो नायथार्थो, वेदो यथार्थः, इत्यनुमानद्वयं तृतीयानुमानसत्प्रतिपक्षरूपमित्यवगन्तव्यम् । भिन्नभिन्नधर्मावच्छिन्नसाध्यव्यापकोपाधिमुक्त्वा मूलमुपलक्षणपरमित्यभिप्रेत्य अनुमानत्रयेऽप्येकधर्मावच्छिन्नसाध्यव्यापकोपाधिमाह **एवं वाक्यत्वेति ॥ तद्विपर्ययेण चेति ।** वेदो यथार्थो वाक्यत्वे सत्यनाप्तप्रणीतत्वात्सम्प्रतिपन्नवदिति प्रयोगो ज्ञातव्यः ।

---

**श्री०—** एवं वेद इत्यतःपूर्वं वेदो नायथार्थज्ञानजनकः प्रमाणाविरुद्धत्वात्प्रत्यक्षवदिति तृतीयानुमानेऽप्युपाध्यभावेन सत्प्रतिपक्षता वाच्या । पर्यवसितसाध्यव्यापकोपाध्यभावेन सत्प्रतिपक्षतामभिधाय पक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यभावेनापि तामाह **एवं वेद इति । अत्रापि** तृतीयानुमानस्यापि । वेदो यथार्थज्ञानाजनको न भवति बोधकत्वे सति प्रमाणाविरुद्धत्वात्सम्प्रतिपन्नवदिति सत्प्रतिपक्षता वाच्या । वेदो यथार्थो बोधकत्वे सतीत्यत्र यथावस्थितार्थप्रतिपादकत्वरूपं प्रामाण्यं साध्यम् । तथा च कचटतपादिशब्देषु व्यभिचारपरिहाराय बोधकत्वे सतीत्युक्तम् । अनुभवसाधनत्वे सतीति विशेषणं संस्कारे व्यभिचारवारणायेति ध्येयम् । प्रत्यक्षादिप्रमाणे व्यभिचारवारणाय वाक्यत्वे सतीत्युक्तम् । मूलोक्तं प्रमाणाविरुद्धत्वरूपमुपाधिं समर्थ्य स्वयमुक्तानुमानत्रये उपाध्यन्तरमाह **एवमित्यादिना । साध्ये** सम्यगनुभवसाधनत्वाभावरूपे आगमत्वाभावरूपे प्रमाणत्वरूपे च साध्य इत्यर्थः । उक्तसाध्यद्वये घटादौ तृतीयसाध्ये दुष्टेन्द्रिये साध्याव्यापकता । प्रणीतत्वस्य वाक्य एव प्रयुज्यमानत्वेन वाक्यासाधारणधर्मत्वाद्घटादौ अनाप्तप्रणीतत्वाभावादतो वाक्यत्वावच्छिन्नेत्युक्तम् । पक्षधर्मावच्छिन्नेत्यर्थः ॥ **प्रतिपक्ष इति ।** वेदः साम्यगनुभवसाधनम् । वेद आगमः । वेदः प्रमाणम् वाक्यत्वे सत्यनाप्तप्रणीतत्वादित्युपाधिव्यतिरेकेण सत्प्रतिपक्षोऽभिधेय इति भावः ।

सु०—अस्त्वेवं वेदप्रामाण्यम् । पञ्चरात्रादिस्मृतीनां तु कथम् । न हि ता अप्यपौरुषेयाः । येन प्रामाण्यमवधार्य फलव्यभिचारमन्यथा नेष्याम इत्यत आह तन्मूलत्वादिति ।

अनु०— तन्मूलत्वात्स्मृतीनां च

प्रामाण्यमिष्यत इति सम्बन्धः । यद्यपि भगवद्रचितानां वेदा(द)र्थमुपलभ्य रचितत्वं वेदमूलत्वं नास्ति । तस्य स्वतः सर्वज्ञत्वात् । तथाऽपि तमनुसृत्य रचितत्वं तन्मूलत्वमिह विवक्षितमिति नोक्तदोषः । अयमत्र प्रयोगः । पञ्चरात्रादिस्मृतिः प्रमाणं प्रमाणमूलत्वात्प्रमाणसंवादित्वात्सम्प्रतिपन्नवदिति । यद्वा विमतं प्रमाणं वेदसंवादित्वात्पराभ्युपगताहिंसादिवाक्यवत् । आप्तवाक्यत्वमुपाधिरिति चेत् (न) । प्रत्यक्षादौ साध्याव्यापनात् । वाक्यत्वावच्छिन्नसाध्यव्यापकत्वाददोष इति चेन्न । तथाऽपि वेदेतरवाक्यत्वावच्छिन्नसाधनेनोपाधेः पक्षे साधनसौलभ्यात् । सति चैवं स्मृतीनां प्रामाण्ये तद्बलेन फलव्यभिचारोऽप्यन्यथयितव्य इति ।

ननु चोक्तार्थविरुद्धान्यादीन्यपि स्मृतीतिहासपुराणान्युपलभ्यन्ते । तेषां प्रामाण्यसाधने च बहुविप्लवः स्यादित्यत आह विरोध इति ।

विरोधो यत्र न कश्चित् ।

---

पूर्वेणैवान्वयः । यासां स्मृतीनां सर्वथा प्रमाणविरोधो नास्ति तासामेव पक्षीकरणान्न कश्चिद्दोष इत्याशयः । नन्वेवं सति वेदमूलत्वोपन्यासो व्यर्थः । ज्ञानजनकानामवश्याङ्गीकरणीयेन विरोधाभावेनैव प्रामाण्यसिद्धेरिति चेन्न । फलव्यभिचारलक्षणविरोधदर्शनेनासिद्धिप्रसङ्गात् । प्रामाण्येन तदपनयने चेतरेतराश्रयत्वापातात् । वेदमूलत्वेन तु प्रामाण्ये सिद्धे न कोऽपि दोष इति ।

शे०— अन्यथेति । कर्तृकरणादिवैगुण्यनिबन्धनत्वेनेत्यर्थः ॥ प्रामाण्यमिष्यत इति ॥ सम्बन्ध इति । यद्यपि प्रामाण्यशब्दो वेदशब्देन समस्तस्तथाऽपि स्मृतीनां चेति चशब्दसामर्थ्यात्तुबुद्ध्या विविक्तेनप्रामाण्यमिष्यत इत्यनेन सम्बन्ध इति भावः ॥ भगवद्रचितानामिति । किन्तु मन्वादिस्मृतीनामेव वेदादर्थमुपलभ्य रचितत्वरूपतन्मूलत्वमस्तीति तेन मन्वादिस्मृतीनामप्रामाण्यशङ्कानिरासम्भवेऽपि पञ्चरात्रादेस्तदभावान्न तेन तन्निरास इति भावः ॥ स्वत इति । स्वभावप्रज्ञयेत्यर्थः ॥ तमनुस्मृत्येति । गौणप्रयोगे प्रयोजनं च श्रुतिसंवादस्य काकतालीयताशङ्कानिरासरूपं वक्ष्यमाणमनुसन्धेयम् । न चैवम्पञ्चरात्रस्य श्रुतिसंवादित्वातिरिक्ततन्मूलत्वाभावा'द्वक्ष्यते हि श्रुतिमूलत्वतत्संवादित्वे पञ्चरात्रादीनामि'ति पूर्वग्रन्थविरोध इति वाच्यम् । मन्वादिस्मृत्यसाधारण्येन श्रुतिमूलत्वस्य सर्वस्मृतिसाधारण्येन श्रुतिसंवा-

दित्वस्यैव तत्राभिप्रेतत्वेन श्रुतिमूलत्वश्रुतिसंवादित्वयोरुभयोरपि पञ्चरात्रादिभगवद्रचितस्मृत्यभिप्रायकत्वाभावेन तदविरोधोपपत्तेरित्याशयात् ।

केचित्तु पञ्चरात्रादीनामित्यतद्गुणसंविज्ञानबहुव्रीहिणा मन्वादिस्मृतीनामेवोक्तत्वेन तद्ग्रन्थानुरोधेन मन्वादिस्मृतीनामेव श्रुतिमूलत्वतत्संवादित्वलाभो न पञ्चरात्रस्यापीति तस्य श्रुतिसंवादित्वमात्राभ्युपगमेऽपि न पूर्वग्रन्थविरोध इत्याहु ।

पञ्चरात्रादीनामिति तद्गुणबहुव्रीह्याश्रयणेन भगवत्तदितररचितप्रमाणीभूतस्मृतिमात्रोक्तावपि तत्र श्रुतिपदस्य प्रमाणोपलक्षणत्वेन प्रमाणमूलत्वप्रमाणसंवादित्वयोरेव सर्वत्र प्राप्त्या मन्वादिस्मृत्यादौ वेदमूलत्ववेदसंवादित्वाभ्यां भगवद्रचितेष्वपि भगवत्प्रत्यक्षमूलत्ववेदसंवादित्वाभ्यां तदुभयवत्ताया अविकलत्वान्नानुपपत्तिरित्यप्याहुः ।

तन्मूलत्वादिति मूले तच्छब्देन प्रकृतवेदस्यैव परामर्शाद्वेदमूलत्वेन पञ्चरात्रादिस्मृतिप्रामाण्यं साध्यत इति भाति । न च तद्युक्तम् । मन्वादिस्मृतीनामपि पक्षनिक्षिप्तत्वेन दृष्टान्ताभावादित्यतः प्रयोगप्रकारं दर्शयति **अयमत्र प्रयोग इति ॥ प्रमाणमूलत्वादिति** । तथा च तन्मूलत्वादिति मूले वेदत्वमविवक्षित्वा प्रमाणत्वेनैव वेदस्य परामर्श इत्युक्तं भवति । इदं च प्रमाणमूलत्वं मन्वादिस्मृत्यभिप्रायेणोक्तम् । तत्र वेदादर्थमुपलभ्य रचितत्वरूपस्य वेदरूपप्रमाणमूलत्वस्य मुख्यस्यैव सम्भवान्न तु भगवद्रचितस्मृत्यभिप्रायेणोक्तरूपस्य तस्य मुख्यस्यासम्भवात्किन्तु तदनुरोधेनोक्तरीत्या गौणं तन्मूलत्वं हेतुतया द्रष्टव्यमित्यभिप्रायेण तदाह **प्रमाणसंवादित्वादिति** । यद्यप्यत्र हेत्वन्तरत्वज्ञापकशब्दाश्रवणात्प्रमाणमूलत्वादित्यनूद्य प्रमाणसंवादित्वादिति व्याख्यानं कृतमिति ाक्यते व्याख्यातुं तथाऽपि वक्ष्येते हि श्रुतिमूलत्वतत्संवादित्वे पञ्चरात्रादीनामिति पूर्वग्रन्थे द्विवचनश्रुत्यन्यथाऽनुपपत्त्या चशब्दाध्याहारेण हेत्वन्तरत्वाश्रयणमेवास्योचितमित्येवं व्याख्यातम् । यदप्यनुपदमेव वेदसंवादित्वस्यैवोपादानं तदपि वेदसंवादित्वं पञ्चरात्रादिसाधारणमित्यभिप्रायेण वेदमूलत्वेन प्रामाण्यसाधने दृष्टान्तालाभेन च । न त्वेकदेशेऽपि वेदमूलत्वं नास्तीत्यभिप्रायेणेति न तेनाप्यस्य विरोध इत्यवधेयम् । इदानीं तन्मूलत्वादिति मूलस्थतच्छब्दस्वारस्यानुरोधेन वेदमूलकत्वेनैव पञ्चरात्रादिस्मृतिप्रामाण्यसाधनमभ्युपगम्य मुख्येन तेन तत्साधने दृष्टान्ताभावेन तदनुपपत्तेस्तत्परित्यज्य गौणमेव च तदभ्युपगम्य प्रामाण्यं साधयति **यद्वेति ॥ पराभ्युपगतेति** । 'न हिंस्यात्सर्वाभूतानि' इत्येतद्वाक्यसंवादि 'अहिंसा परमो धर्मस्त्वधर्मः प्राणिनां वध' इनि वाक्यवदित्यर्थः । न च भ्रान्तप्रतारकवाक्ये प्रमाणसंवादित्ववेदसंवादित्वयोः सद्भावेऽपि प्रामाण्याभावादनुमानद्वयेऽपि तत्र व्यभिचार इति वाच्यम् । तत्र यज्जातीयानन्तरं नियमेन कार्यं भवतीत्यादिविवक्षितयथार्थज्ञानसाधनत्वरूपप्रामाण्यस्याभावेऽपि यथार्थज्ञानकरणत्वरूपस्य तस्य त्रापित

सत्त्वेन तदप्राप्तेः । न चैवं वाक्यत्वावच्छिन्नसाध्यव्यापकत्वाददोष इत्युत्तरग्रन्थासङ्गतिः । वाक्यत्वावच्छिन्नोक्तरूपप्रामाण्यवत्यपि भ्रान्तप्रतारकवाक्ये आप्तवाक्यत्वाभावेन साध्याव्यापकतयाऽवच्छिन्नसाध्यव्यापकत्वविवक्षावैयर्थ्यादिति वाच्यम् । तस्याप्तवाक्यत्वेन साध्यव्यापकत्वमेवेत्युत्तरग्रन्थतात्पर्यात् । न च भ्रममूलस्य कथमाप्तवाक्यत्वं तत्त्वज्ञानादिरूपत्वादाप्तेरिति वाच्यम् । प्रमितस्यैव वक्ताऽऽप्त इत्यादिलक्षणाभिप्रायेण तस्याप्युक्तरूपाप्तवाक्यत्वसम्भवादित्याहुः । ॥ **आप्तवाक्यत्वमिति** । पञ्चरात्रादिस्मृतिः प्रमाणं, विमतं प्रमाणमित्यनुमानद्वयेऽपीत्यर्थः ॥ **वेदेतरेति** । पञ्चरात्रादिस्मृतिराप्तवाक्यं वेदेतरवाक्यत्वे सति प्रमाणसंवादित्वादिति, वेदेतरवाक्यत्वे सति वेदसंवादित्वादिति हेतुभ्यां पक्षेऽप्याप्तवाक्यत्वसाधनसौलभ्येन साधनव्यापकत्वान्नायमुपाधिरित्यर्थः । न च भ्रान्तप्रतारकवाक्येऽप्युक्तसाधनवति आप्तवाक्यत्वाभावाद्व्यभिचार इति वाच्यम् । तस्याप्युक्तरीत्याऽऽप्तवाक्यत्वेन साध्यस्यापि तत्र सत्त्वादित्यप्याहुः । वेदादिविषयविवक्षापूर्वकत्वरूपस्यैव वेदादिसंवादित्वरूपतया विवक्षितत्वाद्वैवक्षिकस्य च तस्य तत्राभावान्न व्यभिचार इत्यप्याहुः । वेदादेरर्थमुपलभ्य रचितत्वमेव वेदादिसंवादित्वमिति न व्यभिचार इति प्राञ्चः । न चात्र प्रमाणत्वमुपाधिः । आप्तवाक्यत्वरूपसाध्यवति प्रामाण्यसद्भावादुक्तसाधनवति च पक्षे तदनिश्चयादिति वाच्यम् । प्रामाण्याभावे वेदेतरवाक्यत्वे सति तत्संवादित्वं न स्यादित्यनुकूलतर्केणोक्तहेतोः साध्यव्याप्यत्वे निश्चिते साध्यव्याप्यहेत्वव्यापकत्वेनोपाधेः साध्याव्यापकत्वप्रसङ्गात् । तद्व्यापकत्वे च साधनव्यापकत्वप्रसङ्गादेवानुपाधित्वमित्यवधेयम् । स्मृतिप्रामाण्यसमर्थनस्य फलमाह **सतीति** । प्रमाणसिद्धफलव्यभिचारस्य वैगुण्यादिनिमित्तकत्वानियमादिति भावः ॥ **बह्विति** । तेषां परस्परविरुद्धार्थप्रतिपादकत्वाद्वस्तुनि विकल्पप्रसङ्गः । वेदसंवादित्वस्य तत्राभावाद्धेतोरसिद्धिश्चेत्यादि बहुविप्लवापातादित्यर्थः ॥ **न कश्चिदिति** । शङ्कितासिद्ध्यादिरूपदोषो नेत्यर्थः ॥ **अवश्याङ्गीकरणीयेनेति** । वेदमूलत्वमङ्गीकुर्वताऽप्यविरुद्धस्मृतीनामेव पक्षत्वाङ्गीकारेण विरोधाभावस्याङ्गीकरणीयत्वमिति भावः ॥ **फलेति** । पञ्चरात्रादीनां स्वोक्तविपरीतग्राहिप्रमाणविरोधाभावेऽपि फलव्यभिचारलक्षणविरोधसद्भावेन विरोधाभावहेतोः स्वरूपासिद्धिप्रसङ्गादित्यर्थः ॥ **इतरेतरेति** । प्रामाण्यसिद्धौ फलव्यभिचारस्यान्यथासिद्ध्या विरोधाभावसिद्धिस्तत्सिद्धौ च प्रामाण्यसिद्धिरितीतरेतराश्रयत्वापातादित्यर्थः ॥ **न कोऽपीति** । असिद्ध्यादिलक्षण इत्यर्थः ।

**स० — तमनुसृत्य रचितत्वमिति** । श्रुत्यर्थतया पुराणानि करिष्य इति बुद्धिपूर्वं रचितत्वं तमनुसृत्य रचितत्वं द्रष्टव्यम् । **वेदसंवादित्वादिति** । अत्र वेदमूलत्वरूपहेत्वनुक्तिस्तु पराभ्युपगताहिंसावादिवाक्यस्य वेदसंवादित्वेऽपि वेदमूलत्वाभावेन दृष्टान्ते साधनवैकल्यापत्तेः । दृष्टान्तान्तरस्य च अभावादिति ज्ञेयम् । **तथापि वेदेतरेति** । विमतमाप्तवाक्यं वेदेतरवाक्यत्वे सति वेद

संवादित्वादिति साधनसौलभ्यादित्यर्थः । अत्र भ्रान्तप्रतारकवाक्यस्यापि आप्तवाक्यत्वाङ्गीकारात् न तत्र व्यभिचारः । न च भ्रममूलकस्य कथमाप्तिमूलकत्वम् । अविप्रलिप्सादिरूपत्वात्तस्या इति वाच्यम् । विवक्षितार्थतत्त्वज्ञानादिरूपाप्तिमूलकवाक्यत्वस्याप्तवाक्यत्वरूपशब्दार्थत्वेनानभ्युपगमात् । प्रमितस्यैव वक्ता आप्तः । तद्वाक्यस्यैव तथात्वाङ्गीकारात् । तथा च वैवक्षिकाप्तवाक्यत्वस्यैव सत्त्वान्न व्यभिचारः । अवश्यं चैतत् । अन्यथा वेदसंवादित्वेन प्रामाण्यानुमानेऽपि अत्र व्यभिचारापत्तेः । वैवक्षिकप्रामाण्याङ्गीकारेण व्यभिचारपरिहारे प्रकृतेऽपि तुल्यम् । वाक्यत्वावच्छिन्नसाध्यव्यापकत्वविवक्षायां उपाधेः पक्षे साधनं टीकाकारीयं चेममेवार्थं ज्ञापयति । अन्यथा तद्विवक्षायामपि भ्रान्तप्रतारकवाक्ये साध्याव्यापकत्वादित्येवं वक्तुं शक्यत्वात् तदनुक्त्वा साधनव्यापकत्वोपपादनस्यासमञ्जसत्वादिति द्रष्टव्यम् । **तेषां प्रामाण्यसाधन इति** । प्रमाणमूलत्वादिहेतोः स्वरूपासिद्धिः । तेषामपि प्रामाण्याङ्गीकारे तदुक्तार्थस्वीकाराऽऽपत्तिः । तथा च वस्तुविकल्प इत्यादिबहुविप्लव इत्यर्थः । **नन्वेवं सतीति** । प्रमाण विरोधेन पञ्चरात्रादीनां प्रामाण्ये साधिते चेत्यर्थः । **असिद्धिप्रमङ्गादिति** । प्रम णविरुद्धत्वहेतोरितिशेषः ॥ **इतरेतराश्रयापातादिति** । सति प्रामाण्ये फलव्यभिचारलक्षणविरोधाभावसिद्धिः । तत्सिद्धौ च तत्सिद्धिररितीतरेतराश्रयादित्यर्थः । **न कोऽपि दोष इति** । असिद्ध्यन्योन्याश्रयादिदोषः कोऽपि नास्तीत्यर्थः ।

**प०— तमनुस्मृत्येति** । वेदार्थं स्वरूपप्रज्ञयावगत्येर्थः । वेदसंवादित्वमिति फलितार्थः ।

---

प्रमाणमूलत्वादित्यस्यार्थः प्रमाणसंवादित्वादिति । **वेदेतरेति** । पंचरात्रादिस्मृतिराप्तप्रणीता वेदेतरवाक्यत्वे सति प्रमाणसंवादित्वात्संमतवाक्यवदिति पक्ष एवोपाधेः साधने साधनाव्यापकत्वाभावेनानुपाधित्वादिति भावः ॥ **असिद्धिप्रसंगादिति** । विरोधभावहेतोरिति भावः ।

**या०— तमनुसृत्येति** तत्संवादमविहायेत्यर्थः । प्रमाणमूलत्वादित्यनूद्य प्रमाणसंवादित्वादितिव्याख्यानं न तु हेत्वन्तरमिति ज्ञातव्यम् ॥ **तथाऽपि वेदेतरेति** । अत्र प्रमाणसंवादित्वं नाम प्रमाणविषयविवक्षापूर्वकत्वं विवक्षितम् । अतो न भ्रान्तप्रतारकवाक्ये व्यभिचार इति ध्येयम् ।

**श्री— तमनुसृत्येति** । तत्संवादेनेत्यर्थः न तूपलभ्येति भावः । प्रमाणमूलत्वादित्यस्यार्थमाह **प्रमाणसंवादित्वादिति ॥ तथाऽपीति** । विमता स्मृतिराप्तवाक्यं वेदसंवादित्वादिति हेतुनाऽऽप्तवाक्यत्वरूपोपाधेः पक्षे पञ्चरात्रस्मृत्यादौ साधनं सुलभम् । योगिप्रत्यक्षे वेदसंवादिनि व्यभिचारवारणाय वाक्यत्वे सतीत्युक्तम् । तथा च साधनव्यापकत्वादनुपाधित्वमिति भावः । **अवच्छिन्नसाधनेन** । प्रमाणसंवादित्वरूपहेतुना । 'यतो वा इमानि भूतानि जायन्त' इत्यादिवेदसंवादिनि 'स हि सर्वस्य कर्ते'त्यादिवेदवाक्य एव व्यभिचारवारणाय वेदेतरेत्युक्तम् । उन्मत्तवाक्ये तद्वारणाय वेदसंवादित्वादिति । जीवासार्वज्ञ्यप्रतिपादकवेदसंवादिन्यसर्वज्ञतया जीवस्वरूपग्राहकसाक्षिप्रत्यक्षे वेदेतर-

रस्मिस्तद्वारणाय वाक्यत्वे सतीत्युक्तम् ॥ **पूर्वेणैवेति** । यत्र स्मृतिवाक्ये विरोधो नास्ति तासामेव स्मृतीनां प्रामाण्यमिष्यत इति पूर्वेणान्वयो ज्ञेयः । **एवं सति** अविरोधस्यैव प्रामाण्यप्रयोजकत्व इत्यर्थः ॥ **सिद्धेरिति** ॥ तथा च स्मृतिः प्रमाणं ज्ञानजनकत्वे सति प्रमाणाविरुद्धत्वादित्यनुमानेनेत्यर्थः ॥ **असिद्धीति** । विशेष्यासिद्धीत्यर्थः ॥ **तदिति** । फलव्यभिचाररूपविरोधेत्यर्थः । तथा च सिद्धे प्रामाण्ये फलव्यभिचाररूपविरोधाभावसिद्धिः तत्सिद्धौ च तेन हेतुना प्रामाण्यसिद्धिरित्यन्योन्याश्रय इत्यर्थः ॥ **न कोऽपि दोष इति** अस्मन्मते तु प्रामाण्ये सिद्धे फलव्यभिचाररूपविरोधाभावसिद्धिरित्यङ्गीक्रियते । तत्सिद्धौ च प्रामाण्यसिद्धिरित्येतन्नाङ्गीक्रियते । वेदमूलकत्वेनैव प्रामाण्यसिद्ध्यङ्गीकारात् । तथा च नान्योन्याश्रयरूपो दोष इत्यर्थः ।

च० — **तथापि वेदेतरेति** । अत्र भ्रान्तप्रतारकवाक्येष्युक्तसाधनवति आप्तवाक्यत्वाभावा व्यभिचार इत्याशङ्कमानाः वेदादिविषयविवक्षापूर्वकत्वरूपस्यैव वेदादिसंवादित्वरूपतया विवक्षितत्वाद्वैवक्षिकस्याभावान्न तत्र व्यभिचार इति समादधुः । **इतरेतरेति** । प्रामाण्यसिद्धिनियन्त्रितफलव्यभिचारस्यान्यथासिध्या विरोधाभावसिद्धिः तत्सिद्ध्यधीना च प्रामाण्यसिद्धिरितीतरेतराश्रयतापातादित्यर्थः ।

---

**सु० — अप्रामाण्यप्रयोजकस्य प्रमाणविरोधस्याभावान्न श्रुतिस्मृत्योरप्रामाण्यमित्युक्तम् । तदयुक्तम् । श्रुत्याद्युक्तस्य ईश्वरसार्वज्ञादेरीश्वरो न सर्वज्ञः पुरुषत्वात् । यज्ञदत्तवत् । इत्याद्यनुमानविरुद्धत्वादित्यत आह** विरोधोऽपीति ।

**अनु० —** विरोधोऽपि स एवोक्तः प्रत्यक्षेणागमेन वा ॥

**प्रकृतसंबन्धार्थोऽपिशब्दः । यच्छब्दोऽध्याहार्यः । विरोधादेव बाधितमित्यप्रामाण्यप्रयोजकतयोक्तो विरोधोऽपि स एव यः प्रत्यक्षेणागमेन वा स्यात् । न पुनरनुमानेन । अयमभिसन्धिः । अप्रामाण्यप्रयोजकतया यदस्माभिरभिहितं तत्पक्षेऽप्युपपादयितुं खलु परस्यायं प्रयत्नः । अस्माभिश्च प्रत्यक्षागमविरोध एव तथाऽभिप्रेतो नानुमानविरोधः । तथा च पक्षे तदनुपपादनं प्रकृतासङ्गतमेव । स्वतन्त्रानुमानविरोधं तूत्तरत्र निराकरिष्यति सूत्रकृदिति ।**

**ननु प्रमाणविरोध एवाप्रामाण्ये प्रयोजकोऽस्तु किं प्रत्यक्षेणागमेन वेति विशेषणेन । तथा चोक्तानुमानविरोधाद्वेदादेरप्रामाण्यमिति । मैवम् । वक्ष्यामो ह्यत्र ब्रह्मादिवस्तुषु प्रमाणं वेद एवैक इति वैदिकेऽर्थेऽनुमानस्यानवकाशम् । यत्र च यस्याप्रवेशो न तस्य तद्बाधकम् ।**

**न हि नयनं स्पर्शापबाधनस्येष्टे । तथा च कथमनुमानं वेदा(द्य)र्थबाधनेन तदप्रामाण्ये प्रयोजकं स्यात् । प्रकृतं च वेदादिकमेवेति ।**

**शे०** — फलव्यभिचारस्यान्यथासिद्ध्यर्थं प्रामाण्यापेक्षायामपि प्रामाण्यसिद्ध्यर्थं फलव्यभिचारान्यथासिद्धेरनपेक्षितत्वादिति भावः । प्रमाणविरुद्धत्वोपाध्युद्भावनेनैव पूर्वपक्ष्युत्प्रेक्षितानुमानस्याभासत्वसिद्धेस्तस्य प्रत्यक्षागमविरुद्धत्वे पर्यवसानपरोत्तरवाक्यमनर्थकमित्यत उक्तोपाधेः साधनाव्यापकत्वसिद्ध्यर्थत्वात्तस्य न तदित्याशयेन साधनव्यापकताशङ्कामुत्थापयति **प्रामाण्येति** । **प्रकृतेति** । अप्रामाण्यप्रयोजकत्वेनोक्तो विरोध इत्येवं प्रकृतसम्बन्धार्थ इत्यर्थः ॥ **यच्छब्दोऽध्याहार्य इति** । स एवेति तच्छब्दश्रवणादिति भावः । नन्वस्त्वप्रामाण्यप्रयोजकोक्तविरोधस्य प्रत्यक्षादिविरुद्धत्वे पर्यवसानं तथाऽप्युक्तानुमानविरोधेन श्रुत्यादेरप्रामाण्यशङ्कायां कः परिहार इत्यतो मूले उक्तो विरोधः स एवे'त्यत्रोक्तपदसूचितमभिप्रायमाह **अयमभिसन्धिरिति** । ननु प्रमाणविरुद्धत्वोपाधेः पक्षे सद्भावप्रतिपादनेन साधनव्यापकत्वमुपपादयितुं नास्माभिर्युक्तिविरोधः शङ्क्यते, येन श्रुत्यादेः प्रत्यक्षागमाविरुद्धतया विवक्षितोपाधेः पक्षे सत्त्वेन साधनाव्यापकत्वाप्रतिहतेः प्रकृतसङ्गतिः स्यात्किन्तूक्तयुक्तिविरुद्धार्थप्रतिपादकत्वा'द्यः सर्वज्ञ' इत्यादिश्रुत्यादेरप्रामाण्यमिति स्वातन्त्र्येणैव युक्तिरोध उपन्यस्यते तत्कथमसङ्गतिरित्यत आह **स्वतन्त्रेति** ॥ **उत्तरत्रेति** । सर्वधर्मोपपत्तेश्चेत्यत्रेत्यर्थः । 'आगमेनागमस्यैवे'त्याद्युत्तरग्रन्थस्य न पूर्वेण साक्षात्सङ्गतिः सम्भवतीत्यतस्तत्सङ्गमयितुमाह **नन्वित्यादि** । ननु वैदिकेऽर्थेऽनुमानस्यानवकाशेन तद्बाधकत्वाभावेऽपि सार्वज्ञादौ तदवकाशादस्तु तद्बाधकत्वमित्यत आह **प्रकृतं चेति** । सार्वज्ञ्यादिसाधकतया प्रकृतं च वेदादिकमेवेत्यर्थः । ततश्च सार्वज्ञ्यादेरपि वैदिकत्वान्न तत्रानुमानस्यावकाश इति न सार्वज्ञ्यादिप्रतिपादकश्रुत्यादि बाधकत्वमनुमानस्येतिभावः । प्रकृतं सार्वज्ञ्यादिकं वेदादिकं वेद आदिर्ज्ञप्तिकारणं यस्येति तथोक्तम् वैदिकमिति न तत्रानुमानस्यावकाश इत्यर्थ इति वा ।

**स०** — ननु प्रमाणविरुद्धत्वरूपोपाधेः पक्षे सत्त्वप्रतिपादनेन साधनव्यापकत्वमुपपादयितुं न युक्तिविरोधः शङ्क्यते येन प्रकृतासंगतिः स्यात् । किं नाम युक्तिविरोधादेव नागमस्य मानत्वमिति स्वातन्त्र्येणैवेत्यत आह **स्वतंत्रानुमानविरोधं त्विति** । ननु वैदिकेऽर्थेऽनुमानस्याप्रवेशेन बाधकत्वाभावेऽपि, सार्वज्ञ्यादिप्रतिपादकवाक्येऽनुमानस्यावकाशोपपत्त्या तद्बाधकत्वं भवतु इत्यतः प्रकृतस्यापि वैदिकत्वान्न तत्र तस्यावकाश इत्याह **प्रकृतं च वेदादिकमिति** । **प्रकृतं** सार्वज्ञ्यादिकं । **वेदादिकं** वेदः आदिः कारणं यस्येति वेदादिकं वेदप्रतिपाद्यमित्यर्थः । यद्वा ननु वैदिकेऽर्थे युक्तेः प्रसराभावेऽपि प्रकृते वेदादेः प्रसक्तेरभावात् तत्र च युक्तेरवकाशसंभवेन युक्तिविरोधाभिधानं युक्तमित्यत आह **प्रकृतं चेति** । 'उपजीव्यविरोधे चे'त्यादिना वेदादिकमेव प्रकृतमिति भावः ।

प० — प्रकृतसंबधार्थ इत्येतद्व्यञ्जयन् योजयति **विरोधादेवेत्यादिना** ॥ **उत्तरत्रेति** । 'श्रुतेस्तुशब्दमूलत्वादि'त्यत्र निराकरिष्यतीत्यर्थः ॥ **वक्ष्यामो ह्यत्रेति** । श्रुतेस्त्विति नये । इतिशब्दो हेतोरित्यर्थः । वेद एवैक इति हेतोरित्यर्थः ।

या० — अप्रामाण्यप्रयोजकतयोक्तस्य प्रमाणविरोधस्य पक्षेऽप्युपपादनादेतदनुमानविरोधो नोक्तो येनासङ्गतिः, किन्तु सार्वज्ञादिप्रतिपादक आगमो न प्रमाणमुक्तयुक्तिविरोधादिति स्वातन्त्र्येणैवानुमानविरोध आगमाप्रामाण्ये हेतुतयोच्यते तत्प्रामाण्यसाधकानुमानस्य सत्प्रतिपक्षतयेत्यत आह ॥ **स्वतन्त्रेति** ॥ **उत्तरत्रेति** । 'सर्वधर्मोपपत्ते'रित्यत्रेत्यर्थः ।

श्री० — प्रकृतसम्बन्धार्थं इत्युक्तं दर्शयति **विरोधादेवेति** । यत्प्रमाणविरुद्धत्वम् । **पक्षे** श्रुतिस्मृतिरूपे । **तथा,** अप्रामाण्यप्रयोजकत्वेन । व्युत्पादनम् अनुमानविरोधव्युत्पादनमित्यर्थः । ननु वैदिकेऽर्थेऽनुमानस्याप्रवेशेनानुमानस्य वेदादिबाधकत्वाभावेऽपि सर्वज्ञ्यादिप्रतिपादकवाक्यबाधकत्वं स्यादित्यत तु आह **प्रकृत चेति** । **प्रकृतं** सार्वज्ञादिप्रतिपादकं वाक्यं वेदादिकमेवेति न तत्रानुमानस्य प्रवृत्तिरित्यर्थः ।

सु० — नन्वेवं (सति) तर्हि वेदार्थमीमांसा नारम्भणीया स्यात् मीमांसाया युक्त्यनुसंधानात्मकत्वादित्यत आह आगमेनेति ।

अनु० — आगमेनागमस्यैव विरोधे युक्तिरिष्यते ॥

एवशब्दो विरोध इत्यतःपरो द्रष्टव्यः । निर्णयार्थमिति शेषः । एतदुक्तं भवति । अनुमानं हि धर्म्यादिप्रमितिमपेक्षते । न च धर्म्यादिरूपं ब्रह्मादिकं वेदादृते सिध्यतीति तदनपेक्षायामाश्रयासिद्ध्यादिकम्, अपेक्षायां तु विरोधिनो धर्म्यादिग्राहकविरोध इत्येवं वैदिकेऽर्थेऽनुमानस्यानवकाशोऽभिधित्सितः । मीमांसायां तु क्वचिदागमस्यागमान्तरेण विरोध एवार्थनिर्णयार्थं युक्तिरुपादीयते । सा खल्वन्यतरागम(प्रामाण्य)मुपोद्बलयन्त्य(ा)न्यतरागमबाधयाऽर्थनिर्णयाय प्रभवति । अन्यतरागमसिद्धधर्म्याद्याश्रयणेन(येण)ाश्रयासिद्ध्याद्यनवकाशात् । अन्यतरागमस्य धर्म्यादिग्राहकत्वाभावेनाप्रबलस्य, आगमसचिवतयोपपत्तेस्ततो दुर्बलस्य, अकिञ्चित्करत्वात् । तदेवमेवंविधोपपत्तेरागमिकेऽप्यर्थे सावकाशत्वापदुपपन्ना मीमांसेति ।

शे० — एवमुपयुक्तमभिप्रायोत्तरवाक्यं सङ्गमयति **नन्विति** ॥ **एवं तर्हीति** । वैदिकेऽर्थेनुमानस्यानवकाश इत्यर्थः । ब्रह्मादिवस्तुष्वित्यादिना वैदिकेऽर्थे युक्तेर्निरवकाशत्वस्य वक्ष्यमाणत्वादिह तस्यास्तत्र सावकाशत्ववर्णनं तद्विरुद्धमित्याशङ्क्याह **विरोध इत्यतः पर इति** । नन्वेतावताऽपि

कथमुक्तशङ्कापरिहार इत्यतो वैदिकेऽनुमानस्यानवकाशाङ्गीकारे ब्रह्मादिष्वित्यादिना वक्ष्यमाणं नियामकं दर्शयन्नेव मीमांसायां तदवकाशे मूले 'विरोधे निर्णयार्थं युक्तिरिष्यते' इत्यनेन सूचितं नियामकमाह **एतदुक्तं भवतीत्यादिना** ॥ **इत्थंत्वमिति** । तथा च धर्म्यादिप्रमित्यसम्भव एव तत्रानुमानाप्रवृत्तौ नियामक इति भावः । अस्तु तर्हि प्रकृतेऽपि धर्म्यादिप्रमित्यसम्भवादेव मीमांसायामप्यनुमानाप्रवृत्तिरित्यतः प्रकृते तदभावमुपपादयति **मीमांसायां त्विति** ॥ **आगमसचिवतयेति** । अत्रागमसचिवतयेत्यतः परं प्रबलत्वादिति शेषः । तत इत्यस्योपपत्तेः सकाशादित्यर्थः ।

स० **आश्रयासिद्ध्याद्यनवकाशादिति** । धर्म्यादेरन्य मानान्तराविरोधेन तस्य सिद्धत्वात् असिद्धत्वे च धर्म्यसिद्ध्या ऐक्यबोधकत्वमपि न स्यादिति भावः । **अन्यतरागमस्येति** । धर्म्यादि-ग्राहकत्वाभावेनेत्यनेनम अप्राबल्यहेतुः । **ततो** र्वदस्य । तत उपपत्तेः आगमसचि तया उपपत्तः आगमसहकारित्वेन निमित्तेनेति योज्यम् । **तदेवंविधेति** । आगमसहकारिण्या इत्यर्थः ।

प० — कथमनेनोक्तशङ्कानिरासः । क्वचिदागमार्थस्य युक्त्या बाधे सर्वत्र तद्बाधस्यावर्जना-दित्यत आह **एतदुक्तमिति** ॥ **धर्म्यादीति** । पक्षलिङ्गादीत्यर्थः । सिध्यतीतीतिशब्दो हेत्वर्थः ॥ **विरोधेन इति** । अनुमानस्येति योज्यम् । **अभिधित्सितः** अभिधातुमिष्टः ॥ **आगमबाधयेति** । आगमस्य प्रतीतार्थबाधयेत्यर्थः ।

श्री० — **एवं** यदि वेदिकेऽर्थेऽनुमानस्यानवकाशस्तर्हीत्यर्थः ॥ **तदिति** । धर्म्यादिप्रमिती-त्यर्थः । विरोधिनोऽसार्वज्ञप्रतिपादकस्यानुमानस्येत्यर्थः । नन्वितरागमस्यापि धर्म्यादिग्राहकत्वेनोपजी-व्यत्वात्कथं युक्तेस्तद्बाधकत्वमित्यत आह **अन्यतरागमस्येति** ॥ **सचिवतयेति** । युक्त्यनुगृहीतप्रबला-गमानुकूलत्वेनेत्यर्थः । तता युक्त्युपेतागमात् ॥ **एवंविधेति** । आगमसहकृतेत्यर्थः ।

सु० — **अपि च प्रत्यक्षागमविरोधोऽपि न स्वरूपेणाप्रामाण्यं प्रयोजयति । किन्तु तयो-रुपजीव्यत्वादिना प्राबल्ये सत्येव दुर्बलयोः स्वयं बाधितत्वेन समबलयोः प्रतिबन्धमात्र-हेतुत्वेनाप्रामाण्यनिश्चयानुपपत्तेः । उपजीव्यादिविरोधेन चाप्रामाण्यं भवद्वेदस्य न सर्वथाऽ-यथार्थत्वलक्षणम् । किन्नाम प्रतीतार्थपच्यावनमात्रम् । अपौरुषेयतया निर्दोषस्य सर्वथा-ऽप्रामाण्यानुपपत्तेः । तथा चान्यार्थकल्पनाऽवश्यं कार्येत्याशयवानाह** उपजीव्येति ।

**अनु०** — उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पना ॥

**उपलक्षणमेतत् । निरवकाशत्वादिकमपि ग्राह्यम् ।**

भवत्वेवं ततः किम् । वेदोपजीव्यत्वादिकं च प्रत्यक्षागमयोरेव प्रायेण संभवति । युक्तेस्तु क्वचिदेव । पुरुषत्वादियुक्तेस्तु नास्त्येव । अतश्च न तद्विरोधेन वेदस्याप्रामाण्यं मन्तव्यमित्याशयेनाह प्रत्यक्षमिति ।

प्रत्यक्षमुपजीव्यं स्यात्प्रायो युक्तिरपि क्वचित् ॥
आगमैकप्रमाणेषु तस्यैव ह्युपजीव्यता ॥

वेदस्येत्यनुवर्तते । स्यादित्यतःपरमितिशब्दोऽध्याहार्यः तत्त्वमसीत्यादिवेदस्य प्रत्यक्षमुपजीव्यम् । युक्तिरपि क्वचिद्वेदस्योपजीव्येति संबन्धः । यथा 'प्राणा वा अणव' इत्यादेः । आगमैकप्रमाणकेषु विष्ण्वादिविषयेषु प्रवर्तमानं 'जनितोत विष्णोरि'त्यादिवेदं प्रति निरनिष्टो निरवद्य इत्यादेस्तस्य वेदो(दस्यो)पजीव्यतेत्यर्थः । एवं निरवकाशत्वादिकमपि प्रत्यक्षागमयोरेव प्रायेण संभवति युक्तेस्तु क्वचिदेव । तच्च न प्रकृतयुक्तेरित्यपि द्रष्टव्यम् ।

शे॰— ननु वक्तव्यस्य सर्वस्याप्युक्तत्वात् किमुपजीव्यविरोधे तु इत्यादिनेत्यतो, युक्तिविरोधेन श्रुतेरप्रामाण्यशङ्कायाः प्रत्यक्षागमविरोधस्यैवाप्रामाण्यप्रयोजकत्वेन युक्तिविरोधस्य तदभावान्न युक्तिविरोधेन श्रुतेरप्रामाण्यप्रसङ्ग इति 'विरोधोऽपि स एवोक्तः' इत्येवं समाधानमुक्तं; तत्रैवोत्तरग्रन्थेन तूपजीव्यविरोधस्यैव तत्प्रयोजकत्वात्प्रकृतयुक्तेश्चानुपजीव्यत्वेनोपजीव्यविरोधाभावान्नाप्रामाण्यप्रसङ्ग इति समाधानान्तरमुच्यत इति नानर्थक्यमिति भावेन तथैवोत्तरग्रन्थमवतारयति अपि चेत्यादिना । स्वरूपेण प्रत्यक्षागमविरोधत्वेनेत्यर्थः । यदि स्वरूपेण प्रत्यक्षागमविरोधस्याप्रामाण्याप्रयोजकत्वं केन तर्हि रूपेण प्रयोजकत्वमिति पृच्छति किन्त्विति । उत्तरमाह नयोरिति ॥ उपजीव्यत्वादिनेत्यादिपदेन निरवकाशत्वपरिग्रहः । स्वरूपेणैव तद्विरोधस्य प्रयोजकत्वोपपत्तौ किं रूपान्तराश्रयणेनेत्यत आह दुर्बलयोरिति । नन्वस्त्वेवमुपजीव्यविरोधस्यैवाप्रामाण्यप्रयोजकत्वसिद्धिस्तथाऽपि भाष्ये वेदस्यान्यार्थकल्पनावर्णनमनर्थकमुपजीव्यविरोधेन वेदाप्रामाण्यस्यैव वर्णनीयत्वात् । न चोपजीव्यविरोधप्रयुक्तमप्रामाण्यमेतदेवेति दर्शयितुमन्यार्थकल्पनावर्णनमिति वाच्यम् । अन्यत्र कल्पनायाश्चाथरूपाप्रामाण्यस्यैव वेदेऽपि तत्प्रयुक्तत्वस्य सम्भवेन तत्परित्यागायोगादित्यत आह उपजीव्यादिविरोधेनेति ॥ सर्वथाऽप्रामाण्येति । अयथार्थत्वलक्षणाप्रामाण्येत्यर्थः । निरवकाशत्वादिकमित्यादिपदेन बहुत्वपरिग्रहः । तथाऽपि वेदं प्रति प्रत्यक्षागमयोरेव प्रायेणोपजीव्यत्वस्य युक्तेस्तु क्वचिदेव तदुपजीव्यत्वस्य पुरुषत्वादियुक्तेश्च सर्वथाऽनुपजीव्यत्वस्य च वर्णनपरोत्तरवाक्यानर्थक्यमित्यत उपजीव्यविरोधस्यापि प्रकृते सत्त्वेन साधनव्यापकतयोपजीव्यविरोधस्य नोपाधित्वमित्याशङ्कापरिहारार्थं तदिति भावेन तां शङ्कामुत्थापयति भवत्वेवमिति । उपजीव्यविरोध-

स्यैवाप्रामाण्यप्रयोजकत्वं भवत्वित्यर्थः ॥ **तत इति** । प्रकृतेऽप्युपजीव्यविरोधाच्छ्रुतेरप्रामाण्यमुपपन्नमिति भावः ॥ **अतश्चेति** । न केवलं प्रत्यक्षागमविरोधस्यैवाप्रामाण्यप्रयोजकत्वेन युक्तिविरोधस्य तदभावान्न पुरुषत्वादियुक्तिविरोधेन श्रुतेरप्रामाण्यमित्येव किन्त्वमोपजीव्यविरोधस्यैवाप्रामाण्यप्रयोजकत्वेन पुरुषत्वादियुक्तेश्चानुपजीव्यत्वेन तद्विरोधस्याप्रामाण्याप्रयोजकत्वाच्च न तद्विरोधेन श्रुतेरप्रामाण्यं वक्तुं शक्यमित्यर्थः ॥ **अनुवर्तत इति** । वेदस्यान्यार्थकल्पनेति पूर्ववाक्यादिति शेषः । अत्र प्राय इत्यस्य युक्तिशब्देन सन्निहितत्वात्तेनैवान्वयः प्रतीयते न चासौ युक्तः । तथा सति वेदं प्रति युक्तेरेव बाहुल्येनोपजीव्यत्वमित्यापातात् । न चागमं प्रति युक्तेर्बाहुल्येनोपजीव्यत्वं सम्भवति । क्वचिदित्युक्तक्वाचित्कत्वेन विरुद्धत्वाच्च । न च क्वचिदित्यस्य प्रत्यक्षं प्राय उपजीव्यं स्यादित्यन्वये न दोष इति । तथा सति सन्निहितान्वयपरित्यागापत्ते । प्रत्यक्षस्य वेदं प्रत्युपजीव्यतानियमस्य प्रायिकत्वालाभाच्चेत्यत आह ॥**स्यादित्यतःपरमितिशब्दोऽध्याहार्य इति** । अनेन प्रत्यक्षमुपजीव्य स्यादित्येतत्प्रायो बाहुल्येनेत्यन्वय इत्युक्तं भवति ॥ **प्राणा वा अणव इत्यादेरिति** । अत्र रूपाद्युपलब्धिः सकरणिका क्रियात्वाच्छिदिक्रियावदित्यनुमानसिद्धचक्षुरादीनि प्राणपदेनानूद्य तेषामणुत्वविधानाद्युक्तेरागमं प्रत्युपजीव्यत्वमिति द्रष्टव्यम् । 'युक्तोऽयुक्तश्च यद्यर्थ आगमस्य' इत्युत्तरग्रन्थस्याव्यवहितपूर्वग्रन्थेन संगतिर्नप्रतीयत इत्यतस्तं सङ्गमयति **आगमयोरित्यादि** ।

---

स० — **उपजीव्यत्वादिनेति** । आदिशब्देन निरवकाशत्वं ग्राह्यम् । निरवकाशत्वादिकमित्यत्रादिपदेन स्वरूपप्राबल्यसंग्रहः । प्राय इत्यस्य न युक्तिरित्यनेनान्वयः । क्वचिदित्यनेन विरोधात् । 'विरोधोऽपि स एवोक्तः प्रत्यक्षेणागमेन वा' इत्युक्तस्यानुवादेन प्रायिकत्वस्यैव विधातव्यत्वात् तस्य च इतिशब्दमन्तरेणासंभवात् तदध्याहारेणाह **स्यादित्यतः परमिति** । तथा च 'प्रत्यक्षमुपजीव्यं स्यात्' इत्येतत् प्रायो बाहुल्यमिति योजना । **यथा प्राणा वेति** । प्राणाः अणव उत्क्रान्त्यादिमत्त्वात् जीववदिति युक्तिः उपजीव्येत्यर्थः ।

प० —कैमुत्यन्यायेनाप्यागमस्यानुमानविरोधोऽकिंचित्कर इत्याह **अपि चेति** ॥ **उपजीव्यत्वादिनेति** । निरवकाशत्वादिरादिपदार्थः । प्राबल्ये सत्येवेत्येतदुपपादयति **दुर्बलयोरिति** ॥ **वेदेति** । वेदं प्रत्युपजीव्यत्वादिकं चेत्यर्थः ॥ **क्वचिदेवेति** । एतच्च 'प्राणा वा अणवः' इत्याद्यागमस्थल इत्यग्रे व्यक्तम् ॥ **पुरुषत्वादीति** । ईश्वरो न सर्वज्ञः पुरुषत्वाद्यज्ञदत्तवदिति प्रागुक्तयुक्तेरित्यर्थः । **इतिशब्दोध्याहार्य इति** । स च हेत्वर्थः । प्रायः प्रत्यक्षमुपजीव्यं स्यादिति हेतोः पुरुषत्वयुक्तेस्तदभावात्तद्विरोधो वेदस्याकिंचित्कर इति योज्यमिति भावः ॥ **इत्यादिवेदस्येति** । प्रत्यक्षसिद्धं जीवं

त्वमित्युद्दिश्य तदसीति ब्रह्माभेदस्य वाच्यत्वादिति भावः ॥ **यथा प्राणा वा अणव इति ।** रूपाद्युपलब्धयः करणसाध्याः क्रियात्वात् छिदिक्रियावदित्यादियुक्तिसिद्धानि प्रमाणसिद्धेन्द्रियाण्युद्दिश्य अणुत्वस्य विधेयत्वादिति भावः ॥ **जनितेति** । जनयिता विष्णोरित्यर्थः । **न प्रकृतेति** । पुरुषत्वादि-युक्तेरित्यर्थः ॥

**या०**— पूर्वं प्रत्यक्षागमविरोध एवाप्रामाण्यप्रयोजको न युक्तिविरोधः, तथा च तद्व्युत्पादनं प्रकृतासङ्गतमित्युक्तम् । इदानीमुपजीव्यत्वादिना प्रबलप्रत्यक्षादिविरोध एवाप्रामाण्यप्रयोजकतयाऽवश्यं वाच्यस्तथा प्राबल्यं च न पुरुषत्वादियुक्तेरस्तीति वक्तुमाह **अपिचेत्यादिना** । प्रसङ्गादाह **उपजी-व्यादिविरोधेन चेति** ॥ **इतिशब्द इति** । तथा च वेदस्य प्रत्यक्षमुपजीव्यं स्यादिति योऽर्थः स प्रायो बहुस्थलसम्बन्धीत्यर्थः । इतिशब्दाध्याहाराभावे त्वनन्वय इति ज्ञातव्यम् ॥ **यथा प्राणा वा इति** । अत्र प्राणपदेनानुमानसिद्धानि चक्षुरादीन्यनूद्य तेषामणुत्वं विधीयत इति भावः ।

**श्री०**— **दुर्बलयोरिति** । प्रत्यक्षागमयोः । बाधितत्वेनागमेनैव ॥ **प्रतिबन्धेति** । अत्र प्रत्यक्षागमविरोधो यस्यागमस्योच्यते तदागमोक्तार्थप्रतिबन्धेत्यर्थः ॥ **निश्चयेति** । तद्विरोधो नेति शेषः । ननूपजीव्यतद्विरोधेनाप्यपौरुषेयस्याप्रामाण्यं नाम कीदृशमित्यत आह **उपजीव्यादीति** । **सर्वथा** निर्विष-यत्वेन ॥ **ग्राह्यमिति** । **तथाच** उपजीव्यविरोधे निरवकाशप्रत्यक्षागमविरोधे चेत्यर्थः । **प्रायेण** बाहुल्येन । क्वचिदेवोपजीव्यत्वमिति वर्तते । नास्त्येवेत्यत्राप्येतदनुवर्तते ॥ **इतिशब्द इति** । वेदस्य प्रत्यक्षमुप-जीव्यं स्यादित्येतत्प्राय इत्यर्थः । यथा प्राणा वा इत्यनेन युक्तेस्तु क्वचिदेवेत्येतद्विवृतं भवति । निरवकाशप्रत्याक्षगमविरोधेचेत्यर्थः । **प्रायेण** बाहुल्येन । । **युक्तेः** मूत्र वक्त्री जडत्वा-दित्येवंरूपायाः । **तच्च** निरवकाशत्वम् । **प्रकृतयुक्तेः** पुरुषत्वदियुक्तेरित्यर्थः ।

**सु०**— **आगमयोः परस्परविरोधे सत्यन्यतरागमाश्रयेण युक्तेरनुप्रवेशोपपत्तेर्युक्ता मीमांसेत्युक्तम् । तदनुपपन्नम् । असार्वत्रिकत्वात् । न हि सर्वत्रागमयोः परस्परविरोध एव मीमांसाऽवतार्यत इत्यत आह युक्त इति ।**

**अनु०**— युक्तोऽयुक्तश्च यद्यर्थ आगमस्य प्रतीयते ॥
स्यात्तत्र युक्त एवार्थो ॥

**तत्र तर्ह्ययमभिसन्धिः । सत्यमेतत्क्वचिदेवायं न्याय इति । तथाऽपि यत्र नैवं**

तत्रैकस्यैवागमस्यानेकार्थप्रतीतौ युक्त्यनुसारिणमर्थमुपादाय तदननुगुणतद्विरुद्धार्थपरित्यागः क्रियत इति नोक्तनियमभङ्गः । केवलयुक्तेर्वैदिकेऽर्थेऽनुप्रवेशस्यानङ्गीकृतत्वात् । नापि मीमांसाऽनुपपत्तिः । अन्यतरवैदिकार्थानुसारिण्या युक्तेरङ्गीकृतत्वादिति ।

शे० — असार्वत्रिकत्वमेवोपपादयति तत्र तर्हीति । 'युक्तोऽयुक्तश्च यद्यर्थः' इति पूर्वत्र यदीति श्रवणादिति भावः । कथमनेनोक्तशङ्कापरिहार इत्यत आह अयमभिसन्धिरिति ॥ इति नोक्तेति । इति नोक्तनियमभङ्गो नापि मीमांसारम्भानुपपत्तिरिति सम्बन्धः । न चानेनोक्तनियमभङ्गाभावे मीमांसारम्भानुपपत्त्यभावे च को हेतुरुक्त इत्यत उभयत्रैतन्मूलसूचितौ हेतू दर्शयति केवलेति ॥ अन्यतरेति च ।

स० — असार्वत्रिकत्वादिति । आगमेनागमस्य विरोधस्येति शेषः । उक्तनियमाभङ्गमेव दर्शयति केवलयुक्तेरिति ।

प० — न हि सर्वत्रेति । जिज्ञासासूत्रादौ । जिज्ञासा न कार्येति विरोधिश्रुतेरभावादिति भावः ।

या० — असार्वत्रिकत्वादिति । तथा च क्वचिद्वैदिकेऽर्थे केवलयुक्तेः प्रवेशप्राप्त्या 'ब्रह्मादिवस्तुषु । प्रमाणं वेद एवैक' इत्युक्तनियमभङ्ग इति भावः ।

श्री० — अयं न्यायः । आगमेनागमस्यैव विरोधे युक्तिरित्ययमित्यर्थः । नैवं आगमेनागमस्य विरोधो नेत्यर्थः । कुत इत्यतस्तद्विवृणोति केवलयुक्तेरिति ।

सु० — प्राक् पुरुषत्वादियुक्तिविरोधेनागमस्याप्रामाण्यं न वाच्यमित्युक्तम् । इदानीं तु युक्तिरेवासौ प्रत्यक्षागमविरोधेनाप्रमाणम् । तस्यास्तदुपजीवित्वेन ततो दुर्बलत्वादित्याशयवानाह युक्तिश्चेति ।

अनु० — युक्तिश्च त्रिविधा मता ॥

यद्वा यत्सिद्धवत्कृत्य तत्र मीमांसारम्भानुपपत्तिः परिहृता तदिदानीं दर्शयितुमाह युक्तिश्चेति ।

चशब्दः प्रकृतानुसन्धानार्थः ।

कथं त्रैविध्यमित्यत आह व्याप्तिरिति ।

व्याप्तिः प्रत्यक्षगा यस्या युक्तिगाऽऽगमगा तथा ॥

यस्या युक्तेः साध्येन व्याप्तिः प्रत्यक्षगा प्रत्यक्षावगता सैका । युक्तिगा युक्त्यवगता यस्या व्याप्तिः सा द्वितीया । तथाऽऽगमगा आगमावगता यस्या व्याप्तिः सा तृतीयेति । एवं त्रिविधेति योज्यम् ।

उपलक्षणं चैतत् । ध(र्मो)र्म्यादिग्राहकभेदेनापि त्रैविध्यं द्रष्टव्यम् । एतच्च स्पष्टयिष्यामः ।

श्रे० — मूले 'युक्तिश्च त्रिविधा मते'ति युक्तित्रैविध्यं किमर्थमुच्यत इत्यतस्तत्प्रयोजनं दर्शयन्नुत्तरमूलमवतारयति **प्रागिति ॥ यत्सिद्धवत्कृत्येति** । आगममूलकयुक्तेर्वैदिकेऽप्यर्थेऽवकाशं सिद्धवत्कृत्यागमेनागमस्यैवेति पूर्ववाक्ये मीमांसारम्भानुपपत्तिः परिहृता । सा तदा स्याद्यद्यागमादिमूलकत्वं युक्तेः स्यात्तदेव नास्तीत्यतस्तन्मूलत्वं दर्शयितुं युक्तेर्विभागमाहेत्यर्थः । अत एव पूर्वमेवंविधोपपत्तेरागमिकेऽप्यर्थे सावकाशत्वादुपपन्ना मीमांसेत्युपसंहृतम् । तत्रत्यस्यैवंविधोपपत्तेरित्यस्य पदस्य समूलोपपत्तेरित्यर्थकत्वात् ॥ **प्रकृतानुसन्धानार्थ इति** । आगमयोः परस्परविरोधे सति निर्णयार्थमनुसृतप्रकृतयुक्त्यनुसन्धानार्थ इत्यर्थः । मूले यस्या युक्तेर्व्याप्तिः प्रत्यक्षगा सा युक्तिस्त्रिविधेत्येव प्रत्येकं त्रैविध्यान्वयभ्रान्तिं निवारयति **यस्या इत्यादिना ॥ उपलक्षणमिति** । प्रत्यक्षादिगृहीतव्याप्तिकत्वेन युक्तित्रैविध्यकथनमुपलक्षणं प्रत्यक्षादिगृहीतधर्म्यादिकत्वेनापि युक्तेस्त्रैविध्यं द्रष्टव्यमित्यर्थः ॥ **एतच्च स्पष्टयिष्याम इति** । समयचरणे 'प्रत्यक्षमागमो वाऽपि भवेद्यत्र नियामकः' इत्यनुव्याख्यानव्याख्यावसरे त्रिविधव्याप्तेरुदाहरणप्रदर्शनेन युक्तित्रैविध्यं स्पष्टयिष्याम इत्यर्थः ।

स० **युक्तिश्चेतीति** । अत्र 'व्याप्तिः प्रत्यक्षगा यस्या युक्तिगा आगमगा तथा' इत्यनेन युक्तिं प्रति प्रत्यक्षागमयोरुपजीव्यत्वस्य कथितत्वेन ततो दुर्बला युक्तिरेवाप्रमाणमित्युक्तं भवतीत्यनुव्याख्यानतात्पर्यमिति भावः । **यत्सिद्धवत्कृत्येति** । आगमस्यागमेन विरोधे प्राप्ते अन्यतरागमाश्रयणेन प्रवृत्ताया युक्तेरन्यतरागमबाधेन तदर्थनिर्णायकत्वाद्युक्तः वैदिकेऽप्यर्थे युक्तेः प्रसर इति एतत्सिद्धवत्कृत्येत्यर्थः । 'तच्चागम' इत्यनेन युक्तेरागममूलकत्वकथनेन वैदिकेऽप्यर्थे युक्तेः प्रसरः संभवतीति प्रदर्शित इत्यर्थः । यत्सिद्धवत्कृत्येति इति पूर्ववाक्ये मीमांसाऽऽरम्भानुपपत्तिः परिहृता । सा तदा स्यात् । यदि तन्मूलत्वमेव भवेत् । तदेव कुतः इत्यतः तन्मूलत्वं दर्शयितुं युक्तेर्विभागमाहेत्यर्थः इति वा ॥ **चशब्दः प्रकृतानुसंधानार्थ इति** । पूर्वमन्यप्रमाणत्रैविध्यस्यानुक्तत्वात् समुच्चायकत्वं न संभवतीति भावः । अनेन तु-शब्दार्थ इति व्याख्यातं भवति । प्रत्येकं त्रैविध्य-परिहारेण योजयति **प्रत्यक्षगेत्यादिना धर्म्यादीति** । प्रत्यक्षावगतधर्मिका युक्त्यवगतधर्मिका आगमावगतधर्मिका इत्येवं त्रैविध्यमित्यर्थः ।

प० — **परिहृतेति** । 'आगमेनागमस्यैवे'त्यत्रेति भावः ॥ **दर्शयितुं** । 'प्रत्यक्षागममूला तु युक्तिस्तत्र बलीयसी'त्यत्र ॥ **धर्मादीति** । यस्याः युक्तेः साध्यो धर्मः प्रत्यक्षयोग्यः सैका विधेत्येवंरूपेण द्रष्टव्यमिति भावः । क्वचिद्धर्म्यादीति पाठः ॥ **एतच्च स्पष्टयिष्याम इति** । 'प्रत्यक्षमागमो वापि भवेद्यत्र नियामकः । सैव व्याप्तिर्भवेन्मानं नान्या संदिग्धमूलत' इति वैशेषिकनयानुव्याख्यावसरे धूमाग्न्योः प्रत्यक्षावगता व्याप्तिः । ब्राह्मणो न हंतव्य इत्यत्रागमगृहीता व्याप्तिः । जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यादिकेवलव्यतिरेकिण्यनुमानगृहीतव्याप्तिरिति स्पष्टयिष्याम इत्यर्थः । अत्रैव प्रकरणे 'व्याप्तिरेव तु सा स्मृते'त्येतद्व्याख्यावसरे च स्पष्टयिष्याम इत्यर्थः । तत्र व्यतिरेकिणि व्याप्त्यनुमानप्रकारस्य विवरिष्यमाणत्वात् ।

या० — **यत्सिद्धवत्कृत्येति** । **यत्** वैदिकेऽर्थे युक्तेरप्रवेशेनाबाधकत्वं । **सिद्धवत्कृत्य** अभिप्रेततयोक्त्वेति यावत् । **परिहृता** आगमेनागमस्यैवेत्यत्रेति शेषः । दर्शयितुं 'प्रत्यक्षागममूला तु युक्तिस्तत्र बलीयसी'त्यत्रेति शेषः । **आह** ॥ आदौ तावद्युक्तेस्त्रैविध्यमिति शेषः ॥ **स्पष्टयिष्याम इति** । 'प्रत्यक्षमागमो वाऽपि भवेद्यत्र नियामकः । सैव व्याप्तिर्भवेन्मानं नान्या सन्दिग्धमूलतः' इत्यनुव्याख्यानव्याख्यावसरे, प्रत्यक्षगृहीतव्याप्तिर्यथा, धूमस्याग्निना । आगमगृहीता यथा, ब्राह्मणो न हन्तव्य इति । अनुमानगृहीता यथा, व्यतिरेकप्रयोग इति स्पष्टयिष्याम इत्यर्थः ।

श्री० — असौ पुरुषत्वादिरूपः ॥ **तदिति** । प्रत्यक्षागमेत्यर्थः । **ततः** प्रत्यक्षगमाभ्याम् ॥ **यत्सिद्धवत्कृत्येति** । युक्तेरागमाद्युपजीवित्वप्रकारमित्यर्थः । **धर्म्यादीति** । तथा च प्रत्यक्षगृहीतधर्मिकैका युक्तिः,आगमावगतधर्मिकाऽन्या, युक्त्यवगतधर्मिकाऽपरेत्येवंरूपेणापि युक्तेस्त्रैविध्यं द्रष्टव्यमित्यर्थः ॥ आदिपदेन प्रत्यक्षगृहीतहेतुका, आगमगृहीतहेतुका, युक्तिगृहीतहेतुका इत्यादिरूपेणापि त्रिविधत्वं ग्राह्यम् । तस्यागमादेर्बाधिका भवत्वित्यन्वयः । आगमाद्युपजीव्यत्वे खलु तद्बाधकत्वं स्यात् । इयं च न तथेत्याशयः ।

**सु० — एवं तर्हि या युक्तिमूला युक्तिः सा नागमाद्युपजीविनीति तस्य बाधिका । तदबाध्या च भवत्वित्यत आह प्रत्यक्षेति ।**

**अनु०** — प्रत्यक्षागममूला तु युक्तिस्तत्र बलीयसी ॥

**तत्र तासु त्रिविधासु युक्तिषु** । प्रत्यक्षागममूलेति । **प्रत्यक्षमूलाऽऽगममूला चेत्यर्थः । युक्तिमूलाऽपि हि युक्तिरन्ततः प्रत्यक्षागममूलैव(द्र)एष्टव्या । अन्यथा तन्मूलयुक्तेर्निर्मूलत्वमनवस्था वाऽऽपद्येत । तथा च प्रत्यक्षाद्यपेक्षत्वेन साम्येऽपि बहुसंविधानानपेक्षयोः प्रत्यक्षा-**

**गममूलयोर्युक्त्योः प्रबलत्वं तदपेक्षायास्तु युक्तिमूलाया दुर्बलत्वं युक्तमेव। तथा ५ प्रबलयो(र्युक्त्यो)र्यदेदृशी दशा तदा का (वार्ता) दुर्बलाया युक्तेरागमबाधनादाविति।**

**श्रे०**— आगमोपजीवियुक्तेरागमबाध्यत्वेनागमाबाधकत्वेऽपि युक्तिमूलयुक्तेरागमोपजीवित्वाभावेन तस्यां आगमबाधकत्वतदबाध्यत्वयोरुपपत्त्या सार्वज्ञ्यादिविरोधित्वेनोच्यमानाया अपि युक्तेर्युक्तिमूलत्वाद्यु-क्तमागमबाधकत्वं तदबाध्यत्वं चेति भावेन शङ्कते **एवं तर्हीति**। प्रत्यक्षोऽयमागम इत्यन्यथाप्रतीति-निरासाय व्याचष्टे **प्रत्यक्षागममूलेतीति**। प्रत्यक्षागममूला त्विति मूले तुशब्दानर्थक्यमित्यत प्रत्यक्षागममूलकयुक्त्योः प्राबल्ये युक्तिमूलकयुक्तेस्ततो दौर्बल्ये च हेतुसूचनार्थत्वान्न तस्या-नर्थक्यमिति भावेन तद्व्यावर्त्यसाम्यशङ्काप्रदर्शनपूर्वकं तुशब्दोक्तं प्राबल्यदौर्बल्यहेतुं निरूपयितुं साम्यशङ्कामुत्थापयति **युक्तिमूलाऽपीति**। ननु युक्तिमूलयुक्तेर्युक्तिमूलत्वनिर्मूलत्वयोरेव संभवात्कि-मिति प्रत्यक्षागममूलकत्वनिर्बन्ध इत्यत आह **अन्यथेति**॥ **निर्मूलत्वमिति**। ततश्चाप्रामाण्यप्रसङ्ग इति भावः॥ **अनवस्था वेति**। युक्तिमूलत्व इति शेषः। अस्त्वेवं तस्याः प्रत्यक्षागममूलकत्वं किं तावतेत्यतः प्रत्यक्षागममूलकत्वे तस्यास्तमूलकयुक्तिसाम्यप्रसङ्गात् न तदपेक्षया दौर्बल्यमित्याशयेनाह **तथा चेति**। एवं साम्यशङ्कामुत्थाप्य तत्परिहारकतया तुशब्दसूचितं प्राबल्यदौर्बल्यहेतुं दर्शयति **बह्विति**। संविधानं व्यवधानम्। तदिति बहुसंविधानपरामर्शः। ननु युक्तिमूलकयुक्तेरागमाद्य-बाध्यत्वशङ्कायां प्रत्यक्षागममूलकयुक्त्यपेक्षया युक्त्यपेक्षयुक्तेर्दौर्बल्यनिरूपणमसङ्गतमित्यतः प्रत्यक्षागममूल-कयुक्त्योः स्वोपजीव्यागमाबाधकत्वे तद्बाध्यत्वे वा, कैमुत्येनैव तन्मूलकयुक्तेरपि तदबाधकत्वतद्बाध्यत्व-सिद्धिरिति कैमुत्योपपादकत्वान्नासङ्गतिरिति भावेन प्राबल्यदौर्बल्यसिद्धिफलतया कैमुत्यमुपपादयति **तथा चेति**॥ **ईदृशीति**। वैदिकेऽर्थे अप्रवेशेन तदबाधकत्वादिरूपेत्यर्थः।

**स०**— एवं तर्हीत्यादिशङ्काग्रन्थस्यायमाशयः। आगमोपजीवियुक्तेरागमबाधकत्वानुपपत्त्या तद्बाध्यत्वेऽपि युक्तिमूलकयुक्तेरागमोपजीवित्वाभावेन तस्याः आगमबाधकत्वतदबाध्यत्वयोरुपपत्त्या सार्वज्ञ्यादिविरोधित्वेनोच्यमानायाः युक्तेस्तु युक्तिमूलत्वेन आगमबाधकत्वमुपपन्नमिति। प्रत्यक्षागममूलक-युक्त्योः स्वोपजीव्यागमाबाधकत्वे तद्बाध्यत्वे वा, कैमुत्येनैव युक्तिमूलकयुक्तेस्तदबाधकत्वं तद्बाध्यत्वं सिध्यति, युक्तिमूलकयुक्तेः प्रत्यक्षादिमूलकयुक्त्यपेक्षया दुर्बलत्वमित्यभिप्रेत्य प्राबल्यदौर्बल्ययोर्हेतुं निरूपयन्नेवाह **युक्तिमूलाऽपीति**। ननु प्रत्यक्षागमयोर्मूलत्वाभावेऽपि न निर्मूलत्वं, युक्तेरेव तदभ्युपग-मादित्यत आह **अनवस्थावेति**। युक्तिमूलत्व इति शेषः। **संविधानं** व्यवधानम्।

**प०**— **अनवस्था वेति**। युक्तिमूलयुक्तेः युक्त्यंतरमूलतयाऽनवस्थेत्यर्थः॥ **साम्येऽपीति**। प्रत्यक्षादिप्रमाणत्रयमूलकयुक्तित्रयस्येतियोज्यं॥ **बहुसंविधानेति**। अनेकमेलनेत्यर्थः॥ **तदपेक्षेति**।

प्रत्यक्षागमान्यतरमूलकयुक्तिसापेक्षयुक्तेरित्यर्थः ॥ **प्रबलयोरिति** । प्रत्यक्षागममूलयोः ॥ **ईदृशी दशा** वैदिकेऽर्थे प्रवेशाभावेन तद्बाधकत्वतद्बाध्यत्वावस्थेत्यर्थः ।

**या०** — तुशब्दाभिप्रायं तन्निवर्त्याशङ्काप्रदर्शनपूर्वकमाह **युक्तिमूलाऽपीत्यादिना** । बहुसंविधानानपेक्षत्वरूपोऽर्थो विशेषवाचितुशब्देन लब्ध इति भावः । **संविधानं** व्यवधानम् ॥ **प्रबलयोरिति** । साक्षात्प्रत्यक्षागममूलयोरित्यर्थः ॥ **ईदृशी दशेति** । वैदिकेऽर्थे प्रवेशाभावेनाबाधकत्वमित्यर्थः ।

**श्री०** — **तदिति** । प्रत्यक्षागमेत्यर्थः । अन्यथाऽन्ततः प्रत्यक्षागममूलत्वाभावे **तन्मूलेति** । युक्तिमूलेत्यर्थः । ननु कथं निर्मूलत्वं, प्रत्यक्षागमयोर्मूलत्वाभावेऽपि युक्तेरेव मूलत्वसम्भवादित्यत आह **अनवस्था वेति** । युक्तिमूलभूतयुक्तेरपि पुनर्युक्तिरेवम्, तस्या अपि पुनर्मूलं सैवेत्यादिरूपेणेत्यर्थः ॥ **बहुसंविधानेति** । प्रत्यक्षागममूलयुक्त्योः साक्षात्तन्मूलकत्वेन परम्परा नेत्यर्थः । तदपेक्षाया युक्तेरेका युक्तिर्मूलं तस्याः प्रत्यक्षादिकं मूलमिति बहुसंविधानापेक्षाया इत्यर्थः । **युक्तेः** । पुरुषत्वादिरूपायाः ।

**सु०** — **तदेवमप्रामाण्ये प्रमाणविरोधस्यैव प्रयोजकत्वाच्छ्रुत्यादेश्च प्रत्यक्षागमविरोधाभावात् । अनुमानविरोधस्याप्रयोजकत्वान्नाप्रामाण्यम् । किन्नाम बोधकत्वेन स्वत एव प्रामाण्यमित्युपपादितम् । तदेतत्प्रमाणाप्रमाणविवेकमविदुषां दुरवधारणमित्युद्देशलक्षणविभागपरीक्षाभिस्तन्निरूपणार्थमुत्तरो ग्रन्थसन्दर्भः । न च सांव्यावहारिकत्वात्प्रमाणादेः किं तन्निरूपणेनेति वाच्यम् । तथाऽपि स्वरूपसङ्ख्याविषयफलगोचराणां वादिविवादानां विद्यमानत्वेन निरूपणार्हत्वात् । यद्यप्येषोऽर्थस्तर्कशास्त्रस्य विषयो न मीमांसाशास्त्रस्य । तथाऽपि शिष्यहितैषिणा भाष्यकृता प्रसङ्गागतो निरूप्यते । यथा पूर्वमीमांसाभाष्यकारेणेत्यदोषः । अत एव प्रमाणलक्षणादौ निरूपितस्यार्थस्य पुनरत्र निरूपणं न दोषाय । एकीकृत्य निरूपणस्यापि शिष्यहितार्थत्वात् ।**

**श्री०** — ननु वक्तव्यस्य सर्वस्याप्युक्तत्वात्किमुत्तरेण प्रबन्धेनेत्यतः प्रकृतसङ्गततया तं सङ्गमयितुमेतदधिकरणसिद्धमर्थं तावदनुवदति **तदेवमिति** । इदानीं तत्सङ्गततयोत्तरप्रघट्टकप्रतिपाद्यं दर्शयति **तदेतदिति** ॥ **उद्देशेति** । यद्यपि विभागस्य विशेषोद्देशरूपतदोद्देशरूपत्वेनोद्देशशब्देनैव संगृहीततया पृथग्ग्रहणं न युक्तं तथाऽपि कुरुपाण्डवन्यायेन पृथगुक्तिरिति ध्येयम् । लक्षणशब्दः सामान्यविशेषलक्षणपरः ॥ **सांव्यावहारिकत्वादिति** । इदं प्रमाणमिदमप्रमाणमिति लोकव्यवहारसिद्धिकत्वादित्यर्थः ॥ **तथाऽपीति** । सांव्यावहारिकत्वेऽपीत्यर्थः । करणं प्रमाणं फलं वेति स्वरूपगोचरः, किं प्रत्यक्षमेकमेव प्रमाणं किंवा प्रत्यक्षानुमाने द्वे अपीत्यादिः संख्यागोचरः, गगनादिकं किमानुमानिकं किंवा प्रात्यक्षिक-

मित्यादिर्विषयगोचरः, ज्ञानं फलं किंवा ज्ञातता उत व्यवहार इति हानादिबुद्धयः किं प्रत्यक्षफलमुतानुमानफलमिति च फलगोचरो विवाद, इत्यवधेयम् ॥ **तर्कशास्त्रस्येति** । न्यायतर्काभिधतर्कशास्त्रस्येत्यर्थः । तस्य प्रमाणशास्त्रत्वादिति भावः ॥ **न मीमांसाशास्त्रस्येति** । तस्य तदन्यप्रमेयव्युत्पादनपरत्वादन्यथा विद्या-भेदानुपपत्तिप्रसक्तेरिति भावः ॥ **यथेति** । धर्मे चोदनैव प्रमाणं न प्रत्यक्षादीत्येतत्प्रत्यक्षाद्यज्ञाने दुरवधारणमिति तन्निरूपणं पूर्वमीमांसाभाष्यकारेण शबरस्वामिना यथा कृतमित्यर्थः ॥ ननु प्रमाण-लक्षणादौ प्रमाणादिस्वरूपस्याचार्यैरेव निरूपितत्वात्तत एव च प्रमाणाप्रमाणविवेकोपपत्तेः किमर्थमन्यत्र निरूपितस्य पुनरत्र निरूपणमित्यत आह **अत एवेति** । शिष्यहितैषित्वादेवेत्यर्थः । एतदेव विवृणोति **एकीकृत्येति** । तथा च प्रमाणलक्षणादौ प्रमाणादेर्निरूपितत्वेऽपि विक्षिप्य वर्णितत्वेन मन्दैः सुखेन बोद्धुमशक्यत्वात्तदर्थमेकीकृत्य निरूपणमप्यावश्यकमिति भावः ।

**स० — तथाऽपीति** । **स्वरूपविषयविवादः** चार्वाकस्य अनुमानादिस्वरूपविषयविवादः । **संङ्ख्याविषयः** कणादादीनां । **विषयविषयः** ईश्वरादिकम् अनुमानस्यैव विषय इति तार्किकादीनाम् । फलगोचराः हानादिबुद्धयः अनुमानस्येति ।

**प० — स्वरूपसंख्येत्यादि** । अनुभूतिरेव मानं नान्यत् । प्रमाकरणमेव मानं नान्यत् इत्यादिः स्वरूपगोचरो विवादः । प्रत्यक्षमेकमेव प्रमाणमित्यादिः संख्यागोचरः । धर्माद्यभाव प्रत्यक्ष-विषयः, कालाकाशवाक्यार्थादिः अनुमानविषयः आत्मसुखदुःखादिः मनोविषय इत्यादिर्विषयगोचरः, संभावनैवानुमा(ना)गमफलं न तु प्रमितिः, हानादिबुद्धय प्रत्यक्षफलमित्यादिः फलगोचरो, विवादो ध्येयः ॥ **यथा पूर्वमीमांसाभाष्यकारेणेति** । प्रथमपादे । 'अथातो धर्मजिज्ञासे'ति प्रथमसूत्रे निर्दिष्टो धर्मः क इति जिज्ञासायां 'चोदनालक्षणोऽर्थो धर्म' इति द्वितीयसूत्रेण चोदनैकप्रमाणकोर्थरूपो धर्म इति धर्मस्य विध्येकप्रमाणकत्वं लक्षणमभिधाय 'तस्य निमित्तपरीष्टिरि'ति तृतीयसूत्रे धर्मे प्रमाणपरीक्षा कार्येत्युक्त्वा तत्संप्रयोगे पुरुषस्येंद्रियाणां बुद्धिजन्मतत्प्रत्यक्षमनिमित्तं विद्यमानोपलंभनत्वादि'ति चतुर्थसूत्रे प्रत्यक्षस्य एकस्य लक्षणमुक्त्वा धर्मस्य प्रत्यक्षागोचरत्वमुक्तं तदुपलक्षणं मत्वा शाबरभाष्ये अनुमानोपमानादेर्लक्षणादिप्रपंचनं कृतं यथा तथेत्यर्थः । अतएवेत्युक्तं व्यनक्ति ॥ **एकीकृत्येति** । विक्षिप्य तत्र तत्र निरूपितं सर्वमेकत्रोपसंहृत्य कथनस्येत्यर्थः ।

**या० — स्वरूसपङ्ख्येत्यादि** । करणं प्रमाणं फलं वेति स्वरूपगोचरो विवादः । प्रत्यक्षमेकमेव प्रमाणमुत प्रत्यक्षानुमाने द्वे इत्यादिः संख्यागोचरः । पदार्थसंसर्गः किमनुमितिविषय उतागमविषय इत्यादिर्विषयगोचरः । ज्ञानफलं किं ज्ञाततोत व्यवहार इति, हानादिबुद्धयः किं प्रत्यक्षफलमुतानुमानफलमिति वा फलगोचर इति ज्ञातव्यम् ॥ **यथा पूर्वमीमांसेति** । प्रत्यक्षादीनामनिमित्तत्वं

चोदनैव निमित्तमित्येतत्प्रत्यक्षाद्यज्ञाने दुरवधारणमिति तन्निरूपणं यथा ...तमित्यर्थः । **अत एवेति ।** शिष्यहितैषित्वादेवेत्यर्थः । ननु कथमनेन शिष्यहितैषिता भाष्यकारस्येत्यत आह **एकीकृत्येति ।** मीमांसाविषयेण सहेति शेषः । अन्यथा मीमांसापर्यालोचनदशायां शिष्याणां ग्रन्थान्तरानुसन्धान-प्रसङ्ग इति भावः ।

**श्री०—तर्केति ।** ब्रह्मतर्केत्यर्थः । भाष्यकारेण शबरेण यथा प्रमाणलक्षणादि निरूपितमित्यर्थः । अत एवेत्युक्तं विशदयति **एकीकृत्येति ॥**

**सु०— तत्र निर्धारित(निर्ज्ञात)स्वरूपस्यैव सङ्ख्यादिजिज्ञासा । लक्षणं च तन्निर्धारणोपायः । न च सामान्यलक्षणेन विना विशेषलक्षण(स्या)वसर इत्यतः प्रमाणसामान्यलक्षणं प्रथमं तावदाह** याथार्थ्यमेवेति ।

**अनु०—** याथार्थ्यमेव मानत्वम् ॥

**शे०—** ननु प्रयोजनाभावेन लक्षणस्यैवावक्तव्यत्वाद्वक्तव्यत्वे वा नियामकाभावेन प्रथमतोऽवक्तव्यत्वात्प्रथमतो वक्तव्यत्वे वा विशेषलक्षणान्यनभिधाय सामान्यलक्षणस्यैव प्राथमिकत्वे नियामकाभावात्सामान्यलक्षणाभिधानपरोत्तरवाक्यानर्थक्यमित्यतो लक्षणाभिधानप्रयोजनदर्शनपूर्वकं लक्षणस्यैव प्रथमम-भिधाने नियामकं वदन्नेव नियामकोक्त्या सामान्यलक्षणस्य प्राथमिकत्वं समर्थयमानस्तदभिधानपरतयोत्तरं वाक्यं योजयति **तत्रेति ।** स्वरूपसंख्याविषयफलैरनेकधा प्रमाणे निरूपणीय इत्यर्थः ॥ **न च सामान्य लक्षणेन विनेति ।** यद्यपि सामान्यलक्षणाभिधानेन विना न विभज्योद्देशावसरः । अवच्छेदकैक्येनैक्यमा-पन्नस्यैव वस्तुनो विभज्योद्देष्टव्यत्वात्तथाऽपि विभज्योद्देशार्थस्यापि सामान्यलक्षणाभिधानस्य तद्द्वारा तत्कार्यभूतविशेषलक्षणाभिधानार्थत्वमप्यविकलमित्यभिप्रेत्य न विशेषलक्षणावसर इत्युक्तमत एव कथालक्षणटीकायामेवमेव सामान्यलक्षणाभिधानस्यार्थवत्त्वमुपवर्णितमिति ध्येयम् ॥

**प०—** तन्निर्धारणोपायो लक्षणं चेतर्हि विशेषलक्षणमेवादौ वाच्यमित्यत आह **न च सामान्येति ।**

**श्री०— निर्ज्ञातेति ।** निर्धारितेत्यर्थः ॥

**सु०— अत्र कश्चिदाह । किमर्थं लक्षणमुच्यते । किं सजातीयविजातीयव्यवच्छिन्न-लक्ष्यप्रतीत्यर्थम् । उत प्रमाणत्वादिप्रतीतये तच्चिन्होपदर्शनमिदम् । उत प्रमाणादिशब्द-प्रवृत्तिनिमित्तावधारणार्थम् । अन्यस्मै कस्मैचित्प्रयोजनाय वा ।**

शे०— लक्षणप्रणेतुरनर्थकं नाम निग्रहस्थानमिति लक्षणप्रणयनमाक्षिपन्तं श्रीहर्षं दूषयितुमुत्थापयति अत्रेति । यद्यप्येतल्लक्षणखण्डनं परकीयप्रस्तावानुसारेण प्रत्यक्षलक्षण एवोत्थापयितुमुचितम् । तथाऽपि लक्षणमात्रखण्डनत्वादस्यात्रोत्थापनं कृतमिति द्रष्टव्यम् । आनर्थक्यसिद्ध्यर्थं लक्षणप्रयोजनं विकल्पयति किमिति । हृदि कृतान्विकल्पान्विशदयति किमिति । अत्र यथार्थज्ञानतत्साधनरूपस्य प्रमाणस्य ज्ञानं तत्साधनं च सजातीयम् । यन्न ज्ञानं नापि तत्साधनं तद्विजातीयं तेभ्यो व्यवच्छिन्नतया प्रमाणसिद्ध्यर्थमिद लक्षणप्रणयनम् । सजातीयविजातीयव्यावर्तकधर्मस्य लक्षणत्वादित्यर्थः । साजात्यवैजात्ययोर्लक्ष्यसिद्ध्यधीनसिद्धिकत्वादन्योन्याश्रयत्वमित्यतः कल्पान्तरमाह उतेति । विमतं, प्रमाणत्वादिसमवायि कथितलक्षणयोगित्वाद्यतिरेकेण घटवदिति प्रमाणत्वादिप्रतीतये तल्लिङ्गोपदर्शनमित्यर्थः । प्रमाणं जातिर्न भवति साक्षात्त्वादिना सङ्करात् । अतो यथार्थज्ञानत्वमेव तद्वाच्यमिति साध्याविशिष्ट्यप्रसङ्ग इत्यतः कल्पान्तरमाह उतेति । इदं प्रमाणमिति व्यवहर्तव्यमेतल्लक्षणयोगित्वादिति व्यवहारसिध्यर्थं लक्षणप्रणनयनमित्यर्थः । व्यवहारसिद्धौ सिद्धसाधनताऽसिद्धावप्रसिद्धविशेषणतेति पूर्वत्रापरितोषात्कल्पान्तरमाह उतेति । प्रमाणं यथार्थमित्यादिशब्दप्रवृत्तावितं निमित्तमिति लक्षणकरणमित्यर्थः । न्यूनतापरिहाराय कल्पान्तरमाह अन्यस्मा इति । न चैतादृशविकल्पकरणेऽधिकं नाम निग्रहस्थानमन्यस्यासम्भवादिति वाच्यम् । ग्रन्थोक्तदोषेण सम्भावितत्वादन्यविकल्पस्याधिकत्वाभावात् । तस्मादन्यस्य च दूषणस्यानुपलम्भादिति भावः ।

स०— खण्डनकारमतमाशङ्कते अत्रेति । न च लक्ष्यस्वरूपज्ञानार्थं लक्षणमिति वाच्यम् । तस्य यथायथं प्रत्यक्षादिभिरवगन्तुं शक्यत्वेन लक्षणप्रयोजनाभावात् । छलप्रसंगपरिहाराय हृदि कृतान् विकल्पान् विशदयति किं सजातीयेति । अत्र साजात्यं पदार्थताऽवच्छेकतद्घटिततत्समनियतधर्मातिरिक्तयावद्धर्मैः साजात्यं विवक्षितम् । तादृशं चानुमानादि । अन्यद्विजातीयम् । तद्व्यवच्छिन्नतया प्रमाणसिद्ध्यर्थमिदं लक्षणप्रणयनम् । सजातीय–विजातीयव्यावर्तकधर्मस्य लक्षणत्वादित्यर्थः । साजात्य वैजात्ययोर्लक्ष्यसिद्ध्यधीनसिद्धित्वादन्योन्याश्रयत्वात्कल्पान्तरमाह उतेति । प्रमाण यथार्थत्वसमवायि कथितलक्षणयोगित्वात्, व्यतिरेकेण घटवदिति प्रमाणत्वप्रतीतये उक्तलक्षणं लिङ्गोपदर्शनमित्यर्थः । प्रमात्वं जातिर्न संभवति । साक्षात्त्वादिना संकरात् । अतो यथार्थज्ञानत्वमेव तदिति साध्याविशिष्टता स्यादिति । इदं प्रमाण (पद) व्यवहर्तव्यम् एतलक्षणवत्त्व दिति व्यवहारसिद्ध्यर्थं लक्षणप्रणयनमित्यर्थः । व्यवहारसिद्धौ सिद्धसाधनता । असिद्धावप्रसिद्धविशेषणतेति ततोऽपि पक्षान्तरमुपक्षिपति उतेति । प्रमाणं यथार्थमित्यादिशब्दप्रवृत्तौ निमित्तमिति लक्षणकरणमित्यर्थः । न्यूनतापरिहाराय विकल्पान्तरमाह अन्यस्मा इति । नन्वीदृगविकल्पकरणे अधिकं नाम निग्रहस्थानम् ।

अन्यस्यासंभवादिति । मैवम् । ग्रन्थोक्तदोषेण संभावितत्वादधिकत्वं नान्त्यविकल्पस्य । तस्मादस्य दूषणं नोपलक्ष्यत इति ।

**प०— कश्चिदिति ।** खण्डनकारादिर्लक्षणोक्तिविषये दूषणमाहेत्यर्थः । यद्वाऽत्रोच्यत इत्यतः प्राक्तनेनाशक्यत्वादितीतिशब्दान्तेन आहेत्यस्य इत्याहेत्यन्वयो ध्येयः ॥ **व्यवच्छिन्नेति ।** व्यावृत्तेत्यर्थः । विशेषलक्षणोक्तिखण्डनाभिप्रायेणोक्तं प्रमाणत्वादीत्यादिपदम् । प्रत्यक्षत्वादिस्तदर्थः । यद्वा गवादिसामान्यलक्षणदूषणाभिप्रायेणादिपदम् । गोत्वादिरादिपदार्थः ॥ **तच्चिह्नेति ।** तज्ज्ञापकेत्यर्थः ॥ **इदमिति ।** याथार्थ्यादिलक्षणोपदर्शनमित्यर्थः । **व्यवहारार्थमिति ।** इदं प्रमाणं इयं गौरित्यादिव्यवहारार्थं लक्षणमुच्यत इत्यन्वयः ॥ **अवधारणार्थमिति ।** याथार्थ्यादिलक्षणरूपं यत्तदेव प्रमाणादिशब्दानां प्रवृत्तिनिमित्तमित्यवधारणार्थमित्यर्थः ।

**या०—** लक्षणप्रणेतुरनर्थकं नाम निग्रहस्थानमिति मन्वानं श्रीहर्षं दूषयितुमुत्थापयति **अत्र कश्चिदिति ॥ तच्चिन्होपदर्शनमिति ।** तल्लिङ्गोपदर्शनमित्यर्थः । लक्षणस्य केवलव्यतिरेक्यनुमानत्वादिति भावः ॥ **प्रवृत्तिनिमित्तेति ।** प्रमाणादिशब्दप्रवृत्तौ याथार्थ्यादिकमेव निमित्तं नान्यदित्यवधारणार्थमित्यर्थः ॥

**श्री०— प्रमाणत्वादिति ।** लक्ष्यतावच्छेदकीभूतेत्यर्थः ॥ **तच्चिन्हेति ।** तज्ज्ञापकेत्यर्थः **इदं** याथार्थ्यम् ॥

**च०—** लक्षणप्रणेतुरनर्थकं नाम निग्रहस्थानमित्याक्षिपन्तं श्रीहर्षं, दुदूषयिषुरुत्थापयति **अत्र कश्चिदिति ॥ सजातीयविजातीयेति ।** सजातीयविजातीयप्रतियोगिकव्यवच्छित्तिविशेषितलक्ष्य प्रतीतय इत्यर्थः ॥ **तच्चिन्हेति ।** लक्षणस्य केवलव्यतिरेकिलिङ्गरूपतया तज्ज्ञापकोपदर्शनमित्यर्थः ।

**सु०— नाद्यः । तस्या एव दुरवधारणत्वात् ।**

**तथा हि। किं सजातीयेति प्रमाणत्वेन (सजातीयत्वं) विवक्षितं रूपान्तरेण वा। नाद्यः। स्वव्यवच्छेदावधेः सजातीयाद्व्यावृत्तत्वेन व्यवच्छेदकत्वानुपपत्त्या व्यावृत्तिस्वीकारेण(च) अव्यापकत्वात् । नापि द्वितीयः । विजातीयपदोपादानवैयर्थ्यात् । अस्तिहि प्रमेय(त्वादिना) सर्वसाजात्यम् । अथ ज्ञानत्वेन विशेषेण साजात्यं विवक्षित्वेदमुच्यते । तर्हि लक्ष्यस्यापि ज्ञानत्वादिना साजात्याद्व्यवच्छेद्यकोटिप्रविष्टतया सङ्ग्राह्याभावप्रसङ्गः । लक्ष्यस्य यज्ज्ञानत्वादिभिः सजातीयं तद्व्यवच्छेद्यम् । न च लक्ष्यस्य लक्ष्यं सजातीयम् । षष्ठ्यर्थस्य संबन्धस्य भेदे व्यवस्थितत्वादिति चेत् । एवं तर्हि लक्ष्यापेक्षया भिन्नाद्व्यवच्छेद इत्येवोच्यतां कृतं ज्ञानत्वा-**

दिना साजात्येन प्रकृतानुपयोगिना वर्णितेन ॥ यदा च लक्ष्यादन्यत्वं परेषामवगतं तदा परेभ्योऽन्यत्वमपि लक्ष्यस्यार्थादवगम्यत इति सिद्धमग्रतो लक्षणप्रयोजनमिति वैयर्थ्यमेव स्याल्लक्षणाख्यानस्य ।

अपि च न तावदनेन लक्षणेनानवगतेनैव व्यवच्छिन्नप्रतीतिसंभवः । अतिप्रसङ्गात् । नापि ज्ञातेन । दुरवधारणत्वात् । न तावल्लक्षणं प्रत्यक्षम् । निर्दोषाक्षोद्भवत्वादेरप्रत्यक्षविशेषणत्वात् । नापि कार्येण लिङ्गेन तदनुपपत्त्या वा तदवगमः । ताभ्यां सामान्यतः कारणमात्राक्षेपेण कारणगतानुगतरूपासिद्धावेकरूपलक्षणासिद्धेः । कार्यस्यैकजात्यादेकजातीयकारणसिद्धिरिति चेत् । तर्हि कार्यगतैकजात्यस्य पूर्वमवश्यं प्रत्येतव्यत्वाङ्गीकारे(ण) तत एव सजातीयविजातीयव्यवच्छेदप्रति(दोप)पत्तिरस्तु । कृतमनया पारम्पर्यकुसृष्ट्या ।

नन्वेतावताऽपि न प्रकृतलक्षणखण्डनं (सं)भवति । अव्याप्तेरतिव्याप्तेर्वाऽनुद्भावनादिति चेत् मैवम् । प्रथमभावितयाऽवश्याभ्युपेयतया लघोरुपायात्साध्यसिद्धौ संभवत्यां चरमभावितया अवश्यानुष्ठेयत्वाभावेन गुरावुपाये प्रवर्तमानस्य तवैवेदं (दूषणो)दोषोद्भावनम् । प्रदीपे प्रदीपं प्रज्वाल्य तमोनिरासाय यतमानस्यैव पुंसः । न हि तत्र कश्चिद्दीपदोषः । किन्तु तथाकारी पुरुष एव पर्यनुयोज्यः । सर्वसाधनसाधारणो वाऽयं दोषः । यत्संभवदेवविमलघूपायत्वं नाम स्वरूपासिद्धिरिव सर्वप्रमाणानाम् । तस्मान्मा नाम भूदतिव्याप्त्यादिदोषः । सामान्यदोषादेव दुष्टं लक्षणमिति ।

शे०— विकल्पक्रमेण निराकरोति **नाद्य इति** । एतल्लक्षणस्य सजातीयादेरव्यावर्तकत्वं दर्शयितुं सजातीयपदार्थं विकल्पयति **तथा हीति** । समाना जातिर्येषां तानि हि सजातीयानि । तत्र समाना जातिः किं प्रमाणत्वमेवोत रूपान्तरमेवानुगतं किमपीति विकल्प्याद्यं दूषयति **नेति** । कुत इत्यपेक्षायां हेतुमाह **व्यवच्छेदावधेरिति** । यस्मात्प्रमाणत्वेन सजातीयादिदं व्यवच्छिद्यते तस्माद्व्यवच्छेदावधेर्व्यावृत्तिप्रतियोगिनो लक्षणस्य ह्यव्यावृत्तत्वेऽव्यावृत्तत्वेनैव हेतुना व्यवच्छेदकत्वानुपपत्तिः । वैधर्म्यस्यव व्यावर्तकत्वात् । अतो व्यवच्छेदकत्वानुपपत्त्या व्यावृत्तत्वं स्वीकरणीयं, तेन तत्र लक्षणमव्यापकं स्यात् । प्रमाणत्वाक्रान्ततया तस्यापि लक्ष्यैकदेशत्वात् । अस्यापि प्रमाणसामान्यलक्षणत्वादित्यर्थः । अस्तु तर्हि रूपान्तरेण सजातीयत्वमिति द्वितीयो निरवद्यत्वादित्यत आह **नापीति** । हेतुमाह **विजातीयेति** । सजातीयविजातीयव्यवच्छिन्नतत्प्रतीत्यर्थमित्यत्र विजातीयपदं व्यर्थं सर्वस्यैव सजातीयतया सजातीयव्यवच्छेदेनैव लक्षणस्य चरितार्थत्वादित्यर्थः । सर्वपदार्थेषु भावाभावरूपेष्वनुगतरूपाभावात्सर्वेषां साजात्याभावेन विजातीयपदसंग्राह्यमस्त्येवेत्याशङ्क्याह **अस्ति हीति** । प्रमेयत्वा-

भिधेयत्वाद्यनुगतरूपस्य सत्त्वात्सर्वेषां साजात्यमेव । तथा च कस्योपसंग्रहाय विजातीयपदमित्यर्थः । ननु न प्रमेयत्वादिसामान्यरूपेण साजात्यं विवक्षितं येन तेन रूपेण सर्वस्य सजातीयतया सजातीयव्यवच्छेदेनैव लक्षणस्य चारितार्थ्याद्विजातीयपदवैयर्थ्यं स्यात् । किन्नाम ज्ञानत्वादिना रूपेण, तेन च रूपेण न सर्वस्य साजात्यमिति तद्व्यावृत्तत्वलाभेऽपि विजातीयव्यावृत्तिलाभार्थं विजातीयपदं सार्थकमिति भावेन द्वितीयपक्षदूषणपरिहारं शङ्कते **अथेति** । ज्ञानत्वादिनेत्यादिपदेन ज्ञानसाधनत्वपरिग्रहः । यदि ज्ञानत्वतत्साधनत्वाभ्यां सजातीयाद्यवच्छेदो लक्षणफलं तदा स्वस्यापि ज्ञानत्वाद्याकारतया साजात्यमस्तीति व्यवच्छेद्यकोटिनिविष्टत्वं स्यात् । तथा च ततो व्यावृत्तावसम्भवोऽव्यावृत्तावतिव्याप्तिरिति भावेन परिहरति **तर्हीति** । ननु प्रमाणेऽपि प्रणीतं लक्षणं वर्तत एवेति नासम्भवः । नैवमतिव्याप्तिः । तदितरस्य ज्ञानत्वादिना सजातीयस्य व्यवच्छेद्यत्वादिति शङ्कते **लक्ष्यस्येति** । ननु लक्ष्यस्य लक्ष्यमपि सजातीयमेवेत्यतो गदितावद्यतादवस्थ्यमित्याशङ्क्याह **न चेति** । कुत इत्यत आह **षष्ठीति** । सजातीयमित्युक्ते कस्येति मीमांसने लक्ष्यस्येति वाच्यम् । अतः षष्ठ्या लक्ष्यसम्बन्धिनः साजात्यं प्रतीयते । न च लक्ष्यं लक्ष्यसंबन्धि । सम्बन्धस्य भेदनियतत्वादित्यर्थः । एवं सति यल्लक्ष्यादन्यत्ततो व्यवच्छेदो लक्षणप्रयोजनमिति वाच्यम्। लाघवात् न 'ज्ञानत्वादिना' इत्यादि, आनर्थक्यापातादिति परिहरति **एवमिति** । ननु चालक्ष्याल्लक्ष्यव्यावृत्तये लक्षणप्रणयनमिष्टमस्माभिरित्यत आह **यदा चेति** । किं लक्ष्यादन्यतया प्रतिपन्नमलक्ष्यं किंवा प्रतिपन्नमात्रम् । नान्त्यः । लक्ष्यस्यापि तथात्वेन तद्व्यावर्त्यापातात् । यद्याद्यस्तदाऽपि लक्ष्यप्रतियोगिकमन्यत्वमलक्ष्यस्य ततो लक्ष्यस्यान्यत्वप्रतीतिमन्तरेण प्रतिपत्तुं न शक्यमात्मनोऽपि तत्प्रसङ्गात् । ततश्चालक्ष्यस्य लक्ष्यान्यत्वप्रतीतावेव लक्ष्यस्यापि ततोऽन्यत्वं लक्षणोदीरणात्पुरैव सिद्धमिति व्यर्थं लक्षणमित्यर्थः ।

घटप्रत्यक्षं यथा घटादन्यत्वेनानवगतपटादेर्व्यावृत्तं घटं बोधयति । तथा लक्षणमपि लक्ष्याद्न्यत्वेनानवगतादलक्ष्याद्वस्तुतोऽन्यस्माल्लक्ष्यं किन्न व्यवच्छिन्द्यादित्याशङ्क्य दोषान्तराभिधानायाङ्गीकृत्य लक्ष्याद्वस्तुतोऽन्यत्सजातीयपदवाच्यमिति व्यवस्थाप्य किमिदं लक्षणमज्ञातं व्यवच्छिन्नप्रतीतिहेतुरुत ज्ञातमिति विकल्प्याद्यं दूषयति **अपि चेति** । तत्र हेतुमाह **अतिप्रसङ्गादिति** । सत्तामात्रेण व्यवच्छेदकत्वे सर्वदा सर्वेषामेव सर्वान्प्रति व्यवच्छेदकत्वं स्यादविशेषादित्यतिप्रसङ्गादित्यर्थः । द्वितीयमसंभवेन दूषयति **नापीति** । लक्षणस्य दुरवधारणत्वान्न ज्ञातमपि व्यवच्छिन्नलक्ष्यज्ञानहेतुरित्यर्थः । दुरवधारणत्वं च तत्साधकप्रमाणाभावात् । तथा हि । प्रमाणलक्षणं प्रत्यक्षेण ज्ञायते किंवा लिङ्गादिनेति विकल्प्य प्रथमं तावन्निराकरोति **न तावदिति** । निर्दोषाक्षोद्भवं प्रत्यक्षमिति हि प्रत्यक्षलक्षणम् । न च तत्प्रत्यक्षगम्यम् । अप्रत्यक्षविशेषणत्वात् अप्रत्यक्षं विशेषणं यस्मिंस्तदप्रत्यक्षविशेषणं तस्य भावस्तत्त्वं तस्मादि-

त्यर्थः । इन्द्रियस्य तत्सन्निकर्षस्य तद्दोषस्य तदभावस्य चाप्रत्यक्षत्वेन प्रत्यक्षेण तद्विशिष्टलक्षणस्य प्रतीत्यनुपपत्तेः । 'नागृहीतविशेषणा विशेष्ये बुद्धिरि'ति न्यायादिति भावः । आदिशब्दः प्रमाणलक्षणाद्यभिप्रायः । तस्यापि यद्देशकालयोर्यद्वस्तु यथाऽस्ति तद्देशकालयोस्तथा तद्वस्त्ववगाहित्वे पर्यवसन्नस्याप्रत्यक्षविशेषणत्वादिति द्रष्टव्यम् । ननु प्रत्यक्षस्येतरभिन्नत्वेन ज्ञानं तल्लक्षणसाध्यमिति कार्यमेव लक्षणे लिङ्गं तदन्यथाऽनुपपत्तिर्वा लक्षणज्ञापिकेति द्वितीयमाशङ्क्याह **नापीति** इति केचित् । वस्तुतस्तु साक्षात्कारिप्रमारूपं कार्यमेव स्वकारणं निर्दोषमक्षमनुमापयिष्यति । तदन्यथाऽनुपपत्तिरूपार्थापत्त्या वा तदवगम इति द्वितीयमाशङ्क्याह **नापीति ॥ तदवगम इति** । यद्यपि कार्येण कारणतया लक्षणविशेषणीभूतनिर्दोषाक्षस्यैव सिद्धिर्न तु तदुद्भवत्वरूपलक्षणस्यापि तथाऽपि समानसंवित्संवेद्यत्वात्कारणतया निर्दोषाक्षावगमे कार्ये तदुद्भवत्वमप्यवगम्यत एवेत्याशयेनैवमुक्तमिति मन्तव्यम् । कथमनवगम इत्यतस्तमुपपादयति **ताभ्यामिति** । लिङ्गानुपपत्तिभ्यामित्यर्थः ॥ **अनुगतरूपासिद्धाविति** । ज्ञानादिरूपकार्येण लिङ्गेन तदन्यथाऽनुपपत्त्या वा किञ्चित्कारणं सिध्यति । कार्यं कारणपूर्वकमिति नियमात् । न पुनः कारणस्यानुगतधर्मसिद्धिरपि । कार्यमनुगतकारणपूर्वकमिति नियमाभावात् । तदसिद्धौ च न निर्दोषाक्षोद्भवत्वादिरूपलक्षणसिद्धिरित्यर्थः । विमतं ज्ञानमेकजातीयकारणजन्यमपरोक्षत्वेनैकजातीयकार्यत्वात् । यदेकजातीयं कार्यं तदेकजातीयकारणजन्यं यथा घट इति सामान्यतो दृष्टात्कारणस्यानुगतरूपसिद्धिरिति युक्तालक्षणसिद्धिरिति शङ्कते **कार्यस्येति** । एवं तर्हि कार्यगतं यदैकजात्यं कारणैकजात्ये लिङ्गमुच्यते तस्यैवसाक्षात्कारिज्ञानत्वस्य लक्षणभवनसमर्थस्योपजीव्यस्य प्रत्यक्षलक्षणत्वमस्तु कृतमनुमितलक्षणेनेति परिहरति **तर्हीति ॥ पारम्पर्येति** । कार्यगतैकजात्येन कारणगतैकजात्यद्वारा लक्षणमनुमाय तेन लक्ष्यस्य सजातीयविजातीयव्यवच्छिन्नप्रतीतिरिति यत्नगौरवात्पारम्पर्यस्य या कुत्सिता सृष्टिस्तया कृतमलमित्यर्थः ।

कार्यगतैकरूपप्रमित्या लक्ष्यस्य सजातीयादिव्यवच्छेदोपपत्त्या लक्षणस्योक्तं वैयर्थ्यमभ्युपगम्यापि लक्षणस्यादुष्टत्वं चोदयति **नन्विति** । नन्वेवं पारम्पर्याश्रयणे गौरवमुक्तं किमेतावता । न हि गौरवं लक्षणदूषणम् । तथा च लक्षणदूषणाय प्रवृत्तस्यान्याभिधाने कथं नासङ्गतिरिति चोदयति **नन्वितीत्यन्ये ॥ एतावतेति** । गौरवप्राप्त्येत्यर्थः । लक्षणान्तरसम्भवेपि न प्रकृतस्य लक्षणत्वक्षतिः । लक्षणदोषस्यातिव्याप्त्यादेरकथनादित्यर्थः । परोदीरितलक्षणस्य दूषणोदीरणं स्वरूपेण न प्रयोजनं किन्तु जयहेतुतया । तदिह लक्षणं स्वयमदुष्टमपि स्वप्रणेतुर्दोषानापादयन्मम जयहेतुर्भवेदेवेति परिहरति **मैवमिति** । लघोरुपायात्साध्यसिद्धौ सम्भवत्यां गुरावुपाये प्रवर्तमानस्य तवैवेदं दोषोद्भावनमिति संबन्धः । गौरवं चात्र हेतुः । 'इष्टस्यायत्नसंसिद्धौ को विद्वान्यत्नमाचरेदि'ति न्यायात् । उपायान्तरस्य लाघवे हेतुमाह **अवश्येति** ।

कार्यगतैकरूप्यानवगतौ कथितलक्षणस्यैवावगत्यसम्भवेनावश्यानुष्ठेयत्वमवश्यज्ञेयत्वमिति यावत्। तदेव कुत इत्यत आह **प्रथमेति** । कार्यगतैकरूप्यावगमस्यैवैकजातीयकारणरूपलक्षणावगमं प्रति हेतुत्वाभावात्प्राथम्यमिति भावः । इतरस्य गुरुत्वे कारणमाह **अवश्येति** । तस्यावश्यानुष्ठेयत्वाभावश्च साधनान्तरादेवावश्यकात्साध्यसिद्धेरिति ज्ञेयम् । विपरीतं किन्न स्यादित्यत आह **चरमेति** । लक्षणस्य चरमभावित्वेनाविशिष्टत्वासिद्धेर्न वैपरीत्यचोदनावकाश इति भावः । उक्तमेवोदाहरणप्रदर्शनेनोपपादयति । **प्रदीप इति** । द्वितीयप्रदीपहेतुतया प्रथमप्रदीपस्यावश्यकस्य दीपान्तरानपेक्षतया तमोनिरसनसामर्थ्ये सति दीपान्तरमुज्वाल्य तमोनिरासाय यतमानस्य यथाऽप्रतिपत्त्यादिदोषस्तद्वदित्यर्थः । विषम उपन्यासः तत्र द्वितीयदीपस्य दुष्टत्वात्तत्कारी पर्यनुयुज्यते । अत्र तु कथितलक्षणस्यानवद्यत्वात्कथं तत्प्रणेतुर्मम पराजय इत्यत आह **न हीति** । तर्हि साधनस्यादुष्टत्वात्ततोऽपि साध्यसिद्धिरित्याशङ्क्य कर्तृदोषान्नेत्याह **किन्त्विति** । नन्वस्तु पुरुषदोषस्तथाऽपि लक्षणस्यादुष्टत्वात्तेन सजातीयविजातीयव्यावृत्तलक्ष्यप्रतीतिरवर्जनीयैवेत्यतो लक्षणदोषोऽप्यस्तीत्याह **सर्वेति** । एवंविधं प्राथमिकमवश्यानुष्ठेयं संभवति यस्मिन् लघूपायरूपं तत्सम्भवदेवंविधलघूपायं तस्य भावस्तत्त्वम् । एतदुक्तं भवति । लघावुपाये संभवति सति गुरोरुपायस्योपायत्वमेव नास्त्युपेयस्यान्यत एव सिद्धेः । उपेयतेऽनेनेति ह्युपायः । प्राथमिकेन दीपेन निरस्ते तमसि जायमानस्य दीपान्तरस्य निराससाधनत्वाभावादिति । बुद्धिसाम्योपपादनार्थं दृष्टान्तमाह **स्वरूपेति** । प्रत्यक्षादिप्रमाणानां यथा स्वरूपासिद्धिर्दोषस्तद्वदित्यर्थः । अतिव्याप्त्यादिदोषाभावेऽपि सामान्यदोषेण दुष्टं लक्षणमिति प्रथमपक्षदूषणमुपसंहरति **तस्मादिति** । मा नाम भूत् मा भून्नामेति संबन्धः ।

**स०** — विकल्पक्रमेण निराकरोति **नाद्य इति** । लक्षणस्य सजातीयादेरव्यावर्तकत्वं दर्शयितुं सजातीयपदार्थं विकल्पयते **तथा हीति** । समाना जातिः येषां तानि तत्र । समानजातिः किं प्रमाणत्वमेव उत रूपान्तरमेवानुगतं किमपीति विकल्प्याद्यं दूषयति **नेति** । कुत इत्याकाङ्क्षायां हेतुमाह— **व्यवच्छेदावधिरिति** । यस्मात्प्रमाणत्वेन सजातीयादिदं व्यवच्छिद्यते, तस्मात् व्यवच्छेदावधेर्व्यावृत्तिप्रतियोगिनो लक्षणस्याव्यावृत्तत्वे ह्यव्यावृत्तत्वेनैव हेतुना व्यवच्छेदकत्वानुपपत्तेः वैधर्म्यस्यैव व्यवच्छेदकत्वादतो व्यवच्छेदकत्वानुपपत्त्या व्यावृत्तत्वं स्वीकरणीयम् । तेन लक्षणं तत्राव्यापकं स्यात् । प्रमाणत्वाक्रान्ततया तस्यापि लक्ष्यैकदेशत्वात् । अस्यापि प्रमाणसामान्यलक्षणत्वादित्यर्थः । अस्तु तर्हि रूपान्तरेण सजातीयत्वमिति द्वितीयो निरवद्यत्वादित्यत आह **नापीति** । **विजातीयेति** । सजातीय विजातीयव्यवच्छिन्नतःप्रतीत्यर्थमित्यत्र विजातीयेति पदं व्यर्थम् । सर्वस्यैव सजातीयतया सजातीयव्यवच्छेदेनैव लक्षणस्य चरितार्थत्वादित्यर्थः । सर्वपदार्थेषु भावाभावरूपेषु अनुगतरूपाभावात् सर्वेषां

साजात्याभावेन विजातीयपदसंग्राह्यमस्त्येवेत्याशङ्क्याह **अस्तीति** । प्रमेयत्वाभिधेयत्वादिना सर्वं सजातीयमेव । तथा च कस्योपग्रहाय विजातीयपदमित्यर्थः । ननु न प्रमेयत्वादिसामान्यरूपेण साजात्यं विवक्षितं, येन तेन रूपेण सर्वस्य सजातीयतया सजातीयव्यवच्छेदेनैव लक्षणस्य चरितार्थत्वात् विजातीयपदवैयर्थ्यं स्यात् । किं तु ज्ञानत्वादिना । तेन च रूपेण न सर्वस्य साजात्यमिति तद्व्यावृत्तत्व-लाभेऽपि विजातीयव्यावृत्तिलाभार्थं विजातीयपदं सार्थकमिति भावेन शङ्कते **अथ ज्ञानत्वा-दिनेति** । आदिपदेन ज्ञानसाधनत्वपरिग्रहः । यदि ज्ञानत्वेन सजातीयात् व्यच्छेदो लक्षणफलं तदा स्वस्यापि ज्ञानत्वाक्रान्ततया साजात्यमस्तीति व्यवच्छेद्यत्वमेव स्यात् । तथा च ततो व्यावृत्तावसंभवः । अव्यावृत्तावतिव्याप्तिरिति भावेन परिहरति । ननु स्वयमेव न सजातीयम् । किं-त्वन्यदेवेति शङ्कते **लक्ष्यस्येति** । एवं सति लक्ष्यभिन्नव्यवच्छेदफलकं लक्षणमित्येवोच्यताम् । सजातीय-विजातीयव्यवच्छेदफलकत्वोक्तिरतन्त्रमिति परिहरति **एवमिति** । ननु तथैवाऽस्तु । तावताऽपि लक्षणं सफलमेवेत्यत आह **यदा चेति** । परेभ्यः प्रमाणस्य भेदं विना परेषां प्रमाणाद्भिन्नत्वमनुपपन्नमिति अर्थवशात्सिद्धमेवेतरभिन्नत्वमित्यर्थः ।

ननु वस्तुतो लक्ष्यापेक्षया यद्भिन्नं तद्व्यवच्छेद इत्युच्यते । न तु तद्भिन्नत्वेन ज्ञानमपेक्षितम् । येन लक्षणाऽऽख्यानमनर्थकं स्यादित्यत्राह **अपि चेति** । दुरवधारणत्वमेवाह **न तावदिति** । **अप्रत्यक्षवि-शेषणत्वादिति** । अप्रत्यक्षं विशेषणं यस्मिन् तत् अप्रत्यक्षविशेषणम् । तस्य भावः तत्त्वम् तस्मादित्यर्थः । इन्द्रियस्य तत्संनिकर्षस्य वा अप्रत्यक्षत्वेन तद्विशिष्टप्रतीत्यनुपपत्तेरिति भावः । ननु प्रत्यक्षस्य इतरभिन्न-त्वेन ज्ञानं लक्षणसाध्यमिति तदेव लक्षणे लिङ्गं तदन्यथानुपपत्तिर्वा लक्षणज्ञापिका इत्यत आह **नापीति** । यद्वा साक्षात्कारजातीयं ज्ञानमिन्द्रियार्थसंनिकर्षाख्यकारणमनुमापयिष्यतीत्यत आह **नापीति** । **ताभ्यां** लिङ्गानुपपत्तिभ्याम् । **अनुगतरूपासिद्धाविति** । कार्येण लिङ्गेन तदनुपपत्त्या कारणमात्रसिद्धिः स्यात् । न तु कारणगतसत्त्वादिरूपानुगतधर्मसिद्धिः । तदसिद्धौ च निर्दोषाक्षोद्भवत्वरूपलक्षणसिद्धिर्न स्यादि-त्यर्थः । साक्षात्कारित्वावच्छिन्नकार्यं प्रति इन्द्रियार्थसंनिकर्षत्वेनैव कारणतेति तदेव तेनानुमेयमिति शङ्कते **कार्यस्येति** । तर्हि साक्षात्कारिज्ञानत्वमेव प्रत्यक्षलक्षणमस्तु । कृतमनुमितलक्षणेनेति परिहरति **तर्हीति** । **प्रथमभावितयेति** । कार्यगतानुगतरूपेण कारणगतानुगतरूपसिद्धेरङ्गीकारेण कार्यगतरूपोपस्थितेः प्रथमभावित्वमवश्याभ्युपेयत्वं च द्रष्टव्यम् ।

प० — **व्यवच्छेदेति** । (स्वेति) स्वनिष्ठो यो व्यवच्छेदः तं प्रत्यवधेः निरूपकीभूतात् प्रमाणत्वादिना सजातीयात् प्रमाणान्तरादितः, अव्यावृत्तत्वेन तत्र विद्यमानत्वेन लक्षणस्येति योज्यम् । **व्यावृत्तत्वस्वीकारे** तत्राप्यविद्यमानत्वाङ्गीकारे चेत्यर्थः ॥ **अव्यापकत्वादिति** । लक्ष्यैकदेशे

वर्तमानत्वाभावादिति भावः । **शङ्कते लक्ष्यस्येति** ॥ **एवं तर्हीति** । संबन्धस्य भेदघटितत्वे सतीत्यर्थः ॥ **प्रकृतानुपयोगिनेति** । लक्ष्यासंग्राहकत्वादिति भावः । अस्त्वेवं तावता लक्षणफल-स्येतरभेदस्य लक्ष्येऽसिद्ध्यभावेन लक्षणवैयर्थ्यानापत्तेरित्यत आह **यदेति** । एवं लक्षणोक्तिकृत्यं इतर व्यवच्छेदरूपं निरस्येदानीं अशक्यं च लक्षणेन तत्प्रयोजनसंपादनमित्याह **अपि चेति** । यद्यप्येतत्खण्डनं विकल्पितप्रयोजनपञ्चकनिरासानन्तरं प्रदर्शनीयम् । सर्वलक्षणसाधारणत्वात् । तथाप्येतदतिदेशेन द्वितीयादिपक्षनिराससौकर्यायात्रानूदितमित्यदोषः ॥ **अतिप्रसङ्गादिति** । गवादिलक्षणाज्ञानिनोऽप्यगो-व्यावृत्तिबुद्धिप्रसङ्गादित्यर्थः ॥ अप्रत्यक्षविशेषणत्वादिति बहुव्रीहिः । दोषाभावादिरूपायोग्योपाधिघटित त्वादित्यर्थः ॥ **कार्येणेति** । अर्थाविसंवादिरेखोपरेखादिगोचरविशिष्टव्यवहारादिकार्येणेत्यर्थः । अर्थापत्तेः पृथक् प्रमाणत्वमुपेत्याह **तदनुपपत्त्या वेति** । ताभ्यां लिङ्गानुपपत्तिभ्याम् ॥ **अनुगतेति** । सर्वलक्ष्य-निष्ठधर्मासिद्धावित्यर्थः । **शङ्कते कार्यस्येति** । निर्दोषाक्षोद्भवप्रमितिजन्यव्यवहारविशेषस्येत्यर्थः ॥ **व्यवच्छेदप्रतिपत्तिरिति** । निर्दोषाक्षजन्यप्रमिताविति योज्यम् । **पारंपर्येति** । कार्यगतैकरूप्येण तत्कारणीभूतलक्षणेऽप्यैकरूप्यमनुमाय तेन लक्ष्याभिमते सजातीयप्रतीतिरूपपारम्पर्यकुसृष्ट्येत्यर्थः । उक्तदूषणस्यासङ्गतत्वमाशङ्क्य समाधत्ते **नन्वित्यादिना** । तावताऽर्थदोषो न प्राप्त इत्यत आह **सर्वसाधन इति** ।

---

या० — **व्यवच्छेदावधेरिति** । यतः प्रमाणात् प्रमाणं व्यावर्तनीयं तत्र लक्षणस्य सत्त्वेऽव्यावर्तकत्वमसत्त्वे तदव्याप्तिर्लक्षणदोष इत्यर्थः । एवं सति लक्ष्यभिन्नव्यवच्छेदफलकं लक्षण-मित्येवोच्यताम् लाघवात् । सजातीयविजातीयव्यवच्छेदफलकत्वोक्तिरयुक्तेति परिहरति **एवमिति** । ननु तथैवास्तु तावताऽपि लक्षणं सफलमेवेत्यत आह **यदा चेति** । परेभ्यः प्रमाणस्य भेदं विना, परेषां प्रमाणाद्भिन्नत्वमनुपपन्नमित्यर्थवशाल्लक्षणाभिधानात्पूर्वमेव सिद्धमितरभिन्नत्वमित्यर्थः । ननु स्वतो लक्ष्या-पेक्षया भिन्नाद्व्यवच्छेद इत्युच्यते न तु लक्ष्यभिन्नत्वेन परेषां ज्ञानमपेक्षितं, येन लक्षणाख्यानमनर्थकं स्यादित्यरुचेराह **अपि चेति** ॥ **अतिप्रसङ्गादिति** । लक्षणस्य सत्तामात्रेण व्यवच्छिन्नप्रतीतिहेतुत्वे काश्यां स्थितेनापि लक्षणेन दाक्षिणात्यस्य व्यवच्छिन्नप्रतीतिप्रसङ्ग इत्यतिप्रसङ्ग इत्यर्थः । दुरवधारणत्व-मेवाह **न तावदिति** । लक्षणं सर्वं न प्रत्यक्षमित्यर्थः । निर्दोषाक्षोद्भवत्वादेरित्यत्रादिपदेन प्रकृतलक्षण-संग्रहः ॥ **अप्रत्यक्षविशेषणत्वादिति** । अप्रत्यक्षं विशेषणं यस्मिंस्तदप्रत्यक्षविशेषणं तस्य भावस्तत्त्वं तस्मादित्यर्थः । इन्द्रियस्याप्रत्यक्षत्वेन तद्विशिष्टस्य लक्षणस्य प्रत्यक्षेण प्रतीतिरनुपपन्नेति भावः । एवं प्रकृतलक्षणमपि यद्देशकालयोर्यद्वस्तु यथाऽस्ति, तद्देशकालयोस्तथा तद्वस्त्ववगाहित्वे पर्यवसन्नमप्रत्यक्ष-विशेषणमेवेति ज्ञातव्यम् । ननु साक्षात्कारिप्रमारूपं कार्यं स्वकारणं निर्दोषमक्षमनुमापयिष्यति,

तदन्यथाऽनुपपत्तिर्वा तज्ज्ञापिकेत्यत **आह नापीति** ॥ **तदवगम इति** । यद्यपि कार्येण कारणतया लक्षणविशेषणीभूताक्षमेव सिध्यति, न तदुद्भवत्वरूपं लक्षणम् । तथाऽपि समानसंवित्संवेद्यत्वात् । कारणतयाऽक्षावगमे कार्ये तदुद्भवत्वमप्यवगम्यत एवेत्याशयेनेदमुक्तमित्यवगन्तव्यम् ॥ **ताभ्यामिति** । लिङ्गानुपपत्तिभ्यामित्यर्थः ॥ **अनुगतरूपासिद्धाविति** । कार्येण लिङ्गेन तदनुपपत्त्या वा कारणीभूताक्षव्यक्तिमात्रं सिध्यति न त्वक्षत्वेनानुगतम् । कार्यं कारणपूर्वकमित्येव हि व्याप्तिः न त्वनुगतकारणपूर्वकमिति । तदसिद्धौ चाक्षोद्भवत्वादिरूपानुगतलक्षणासिद्धिरित्यर्थः । अक्षव्यक्तिविशेषोद्भवत्वं तु अव्याप्तत्वाद-लक्षणमिति भावः । ननु न किञ्चित्कार्यव्यक्तिरूपेण लिङ्गेन कारणमनुमीयते येनानुगतलक्षणासिद्धिः, किन्तु साक्षात्त्वावच्छिन्नं कार्यं प्रतीन्द्रियत्वेनैव कारणतेति तदेव तेनानुमेयमिति शङ्कते **कार्यस्येति** । तर्हि साक्षात्कारिज्ञानत्वमेव प्रत्यक्षलक्षणमस्तु कृतमनुमितलक्षणेनेति परिहरति **तर्हीति** ।

लक्षणदूषणाय प्रवृत्तस्यान्याभिधानमनुचितमित्याशङ्कते **नन्विति** । परोदीरितलक्षणे दूषणोद्भावनं स्वरूपेण न प्रयोजनं किन्तु जयहेतुतया । तदिह लक्षणं स्वयमदुष्टमपि स्वप्रणेतुर्दोषमापादयन्मम जयहेतुर्भवेदेवेति परिहरति **मैवमिति** ॥ **प्रथमभावितयेति** । कार्यैकजात्यवगमस्यैकजातीयकारणावगमं प्रति हेतुत्वादिति भावः ॥ **अवश्याभ्युपेयतयेति** । अन्यथा कथितलक्षणावगमस्यैवासम्भवादिति भावः ॥ **तत्रैवेदमिति** । 'इष्टस्यायत्नसंसिद्धौ को विद्वान्यत्नमाचरेदि'ति न्यायादिति भावः । पुरुषस्य दुष्टत्वेऽपि लक्षणादुष्ट्या तद्बलाल्लक्ष्यादिसिद्ध्युपपत्तिरित्याशङ्क्य लक्षणमपि दुष्टमित्याह **सर्वेति** । एतदुक्तं भवति । लघावुपाये सम्भवति गुरोरुपायस्योपायत्वमेव नास्ति । उपेयस्यान्यत एव सिद्धेः । उपेयते साध्यमनेनेति ह्युपायः । प्राथमिकदीपे निरस्ते तमसि जायमानदीपान्तरस्य तमोनिरास-साधनत्वाभावादिति । **मा नाम भूत्** मा भून्नामेति सम्बन्धः ।

श्री० — **व्यवच्छेदावधेरिति** । यस्मात्प्रमाणत्वेन सजातीयादिदं व्यवच्छिद्यते तस्माद्व्यवच्छेदावधेर्व्यावृत्तिप्रतियोगिनः सकाशाल्लक्षणस्याव्यावृत्तत्वे तत्र सत्त्वे तस्माद्व्यवच्छेदकत्वानुपपत्तेस्तस्मात्सजातीयाद्व्यावृत्तिस्वीकारे च लक्षणस्याव्याप्तिप्रसङ्ग इति भावः । ज्ञानत्वादिनेत्यत्रादिपदेन तत्करणत्वं ग्राह्यम् । सङ्ग्राह्याभावो लक्षणेनेति शेषः ॥ **अर्थादिति** । लक्ष्यस्य प्रमाणस्य परेभ्यो भेदं विना परेषां प्रमाणाद्भिन्नत्वमनुपपन्नमित्यर्थात्समानसंवित्संवेद्यतयेतरभिन्नत्वं सिद्धमेवेत्यर्थः ॥ **व्यवच्छिन्नेति** । व्यवच्छिन्नलक्ष्यप्रतीतीत्यर्थः । **अतिप्रसङ्गः** सर्वेषामनवगतलक्षणानामपीतरभेदज्ञानरूपोऽतिप्रसङ्ग इत्यर्थः ॥ **अप्रत्यक्षेति** । अतीन्द्रियाक्षादिघटितत्वेन प्रत्यक्षाविषयत्वादित्यर्थः । **तदनुपपत्त्या** कार्यान्यथाऽनुपपत्त्या । अर्थापत्तेरनुमानाद्भेदमङ्गीकृत्यैवमुक्तम् । **ताभ्यां** अन्यथानुपपत्तिलिङ्गाभ्याम् ।

च० — **तस्याः** तादृशव्यवस्थितेः । **व्यवच्छेदावधेरिति** । लक्षणत्वेनाभिमतधर्मस्य व्यवच्छित्ति-प्रतियोगीभूतसजातीयाव्यावृत्तत्वे व्यावर्तकत्वानुपपत्तिः, व्यावृत्तत्वे चाव्याप्तिरित्यर्थः । **अप्रत्यक्षविशेषणत्वादिति** । बहुव्रीहिप्रकृतिको भावप्रत्ययः । निर्दोषाक्षोद्भवत्वरूपप्रत्यक्षलक्षणस्यातीन्द्रियाक्षघटित-तयातीन्द्रियत्वादिति भावः । **पारंपर्येति** । कार्यगतैकजात्येन कारणगतैकजात्यद्वारा लक्षणानुमित्या सजातीयविजातीयव्यवच्छेदविशिष्टप्रतिपत्तिरिति प्रयत्नगौरवापत्त्या तादृशकुसृष्ट्याऽलमित्यर्थः ।

**सु० — एतेन द्वितीयोऽपि निरस्तः । प्रमाणत्वाद्यवगममन्तरेण तदवगमानुपपत्ते-स्तदवगमायास्य प्रतीतावन्योन्याश्रयप्रसङ्गः । अस्तु वाऽन्यदपि लक्षणे किञ्चिल्लिङ्गम् । तथाऽपि तदेव लक्ष्याविनाभूततया लक्षणमुपन्यस्यतां सन्निहितप्रतिपत्तिकत्वात् । न तदवश्यं व्यापकं वक्तव्यम् । लिङ्गत्वस्य व्याप्यत्वेनैवोपपत्तेरिति चेन्न, यत्र लिङ्गमव्यापकत्वान्नास्ति तत्र लक्षणस्य प्रमाणाभावात्प्रत्येतुमशक्यत्वेन कथं ततः प्रामाण्याद्यवगमः । यदा च क्वचि-ल्लक्ष्यजातीय एव प्रमाणाभावाल्लक्षणम(स्या)नवधारणीयतया लक्ष्यव्यापकताऽनवगमेऽपि लक्षणम् । तदा किमपराद्धं लिङ्गान्तरेणाव्यापकेन । अथ यत्र तल्लक्षणे लिङ्गं नास्ति तत्र लिङ्गा-न्तरात्प्रत्येतव्यम् । तथाऽपि (तावेवा) ते एवास्तां लक्ष्ये लिङ्गम् । किं लक्षणानुमानपूर्वकं तदनुमानकल्पनया । अथ तथा(विधं) लिङ्गद्वयं यत्तत्प्रत्येकमव्यापकतया न लक्षणम् । तद-नुमितं तु तथात्वाल्लक्षणमिति चेन्न । लक्ष्यानुमानस्य लक्षणप्रयोजनस्योभाभ्यामेव सिद्धेः कृतं व्यापकेन तेन ।**

शे० — अस्तु तर्हि 'प्रमाणत्वादिप्रतीतये तच्चिह्नोपदर्शनमि'ति द्वितीयो निरवद्यत्वादित्यत आह **एतेनेति** । लक्षणस्य दुरवधारणत्वकथनेनेत्यर्थः । अत्र पक्षे दुर्ज्ञेयत्वमुपपादयति **प्रमाणत्वादीति** । आदिपदेन साक्षात्कारित्वपरामर्शः । प्रमाणत्वसाक्षात्कारित्वप्रतीतिव्यतिरेकेण याथार्थ्यनि-र्दोषाक्षोद्भवत्वरूपकथितलक्षणावगमानुपपत्तेरित्यर्थः । अस्तु तर्हि प्रमाणत्वसाक्षात्कारित्वाभ्यामेव याथार्थ्याद्यवगमः को दोष इत्यत आह **तदिति** । प्रमाणत्वसाक्षात्कारित्वसिद्धौ याथार्थ्या-दिलक्षणसिद्धिस्तत्सिद्धौ च प्रमाणत्वादिसिद्धिरित्यन्योन्याश्रय इत्यर्थः । ननु याथार्थ्यादि-रूपलक्षणस्य प्रमाणत्वाद्यवगमकत्वेऽपि न याथार्थ्यादिलक्षणज्ञानाय प्रमाणत्वादिज्ञानापेक्षा यथार्थव्यवहारहेतुप्रत्ययत्वस्य अपरोक्षव्यवहारहेतुप्रत्ययत्वस्य वा लिङ्गस्य याथार्थ्याद्यवगमकत्वात् तत्कथमन्योन्याश्रय इत्यत आह **अस्तु वेति** । याथार्थ्यादौ लिङ्गान्तरमुपगतं चेत् परस्पराश्रयपरिहारात्सिद्धस्तर्हि द्वितीयः कल्प इत्यत आह **तथाऽपीति** । यथार्थव्यवहारहेतुप्रत्ययत्वादि कमेव लक्षणमुच्यतां कृतमनेनेत्यर्थः ॥ **लक्ष्याविनाभूततयेति** । लक्ष्यतावच्छेदकव्याप्यतयेत्यर्थः । कुत

एतत्तत्राह **सन्निहितेति** । प्रथमज्ञेयतया सन्निहितप्रतिपत्तिकत्वादित्यर्थः । ननु लक्षणं सकललक्ष्यव्यक्तिव्यापकं वक्तव्यम् । यथार्थव्यवहारहेतुप्रत्ययत्वादिकं च न व्यापकम् । उपेक्ष्यतृणादिविषययथार्थज्ञानाद्युत्पत्तावपि पथि गच्छतो यथार्थव्यवहाराद्यभावादिति शङ्कते **न तदिति** । अव्यापकत्वे याथार्थ्यादिलिङ्गत्वमेव तस्य न स्यात् । कृतकत्वादेरनित्यत्वं प्रति व्यापकस्यैव लिङ्गत्वादित्यत आह **लिङ्गत्वस्येति** । व्याप्यत्वमेव कृतकत्वादेरनित्यत्वादिलिङ्गत्वे प्रयोजकम् न तु तद्व्यापकत्वं, सपक्षैकदेशवर्तिनोऽपि धूमादेरग्न्यादिलिङ्गत्वादन्यथा तन्न स्यात् । ततश्च युक्तमव्यापकस्यापि याथार्थ्यादिलिङ्गत्वमिति भावः । अव्यापकस्य लिङ्गत्वोपपत्तावपि याथार्थ्यादिलिङ्गं व्यापकमेव वाच्यम् । अन्यथा तस्य सार्वत्रिकत्वानुपपत्त्या सर्वत्र लक्ष्ये याथार्थ्यादिलक्षणावगतिहेतुत्वं न स्यादिति परिहरति **न यत्रेति** । ननु च यत्र लिङ्गाभावाद्याथार्थ्यादिरूपं लक्षणमनवगतं तत्र स्वरूपसत्त्वात्प्रमाणत्वादिव्यापकतयाऽनवगतमपि लक्षणं भवतीत्यत आह **यदा चेति** । याथार्थ्यादिकं क्वचित्प्रमाणादिजातीय एव प्रमाणाभावात्प्रमाणत्वादिव्यापकतयाऽनवगतमपि लक्षणम् । तदाऽव्यापकेन लिङ्गान्तरेण किमपराद्धं कोऽपराधः कृतो येन तस्य लक्षणत्वं न भवेदित्यर्थः । सार्वत्रिकव्यवहारहेतुत्वाभावस्योभयत्राप्यविशिष्टत्वादिति भावः । लिङ्गद्वयेन याथार्थ्यादेः प्रमाणत्वादिव्यापकतयाऽवगतस्य सार्वत्रिकव्यवहारहेतुत्वाल्लक्षणत्वं भवत्विति शङ्कते **अथेति** । तद्यथार्थव्यवहारहेतुत्वादिकं लिङ्गं यत्र प्रमाणादिभागे नास्ति तत्र लिङ्गान्तरेणैव याथार्थ्याद्यनुमानान्नाव्याप्तिरित्यर्थः । एवं तर्हि ताभ्यामेव लिङ्गाभ्यामाहत्य प्रामाण्यमेवानुमीयतां किं याथार्थ्यानुमानेनेति परिहरति **तावेव**, लिङ्गविशेषावेवेत्यर्थः । क्वचित्ते एवेति पाठः । तत्र लिङ्गे इति व्याख्येयम् । यथार्थत्वव्यवहारहेतुप्रत्ययत्वादिरूपलिङ्गविशेषावेव प्रमाणत्वादौ लिङ्गं स्यातां ताभ्यां याथार्थ्यादिरूपलक्षणमनुमाय तत्पूर्वकया प्रमाणत्वाद्यनुमानकल्पनयाऽलं गौरवापातादित्यर्थः । ननु लक्षणं व्यापकं वाच्यम् । लिङ्गद्वयं प्रत्येकं मिलितं च प्रमाणत्वादिव्यापकं न भवति । अतो याथार्थ्यादिकमेव व्यापकत्वाल्लक्षणमिति शङ्कते **अथेति** । यद्यप्युक्तलिङ्गाभ्यामेवाहत्य प्रमाणत्वाद्यनुमानोपपत्तौ किं याथार्थ्याद्यनुमानेनेति वैयर्थ्याभिप्रायेण गूढाभिसन्धिना तावेवास्तामित्युक्तम् । न तु लिङ्गद्वयस्यैव लक्षणत्वेन लिङ्गत्वं तथाऽप्युक्ताभिप्रायमज्ञात्वा लिङ्गद्वयस्यैव लक्षणत्वेन लिङ्गत्वं पूर्वोक्तमिति भ्रान्त्या शङ्क्यमिति द्रष्टव्यम् । यत्र ह्यव्यापकेन लक्षणेन लक्ष्यानुमानं न सिध्येत् तत्रैव व्यापकं लक्षणं वाच्यम् । इह तु याथार्थ्याद्यनुमापकलिङ्गद्वयेनैव प्रमाणत्वादिसिद्धेर्न याथार्थ्यादिकं लक्षणमिति परिहरति लक्ष्येति । यद्वा स्वाशयमुद्घाटयति **लक्ष्येति** ।

**स०** — प्रमाणत्वचिह्नोपदर्शनमिति पक्षं दूषयति **एतेनेति** । अत्र एतेन इत्यनेन पूर्वपक्षे व्युत्पादितं प्रमाणत्वस्य याथार्थ्यज्ञापकत्वमेव परामृश्यते । अन्यथा तदभावे याथार्थ्यस्य प्रमाणत्व-

ज्ञापकत्वेऽपि प्रमाणत्वस्य याथार्थ्यज्ञापकत्वाभावेन वक्ष्यमाणान्योन्याश्रयानुपपत्तिप्रसङ्गात् । न तु 'एतेन' इत्यनेन अन्योन्याश्रयपरामर्शः । पूर्वपक्षे तदनुक्त्या तत्परामर्शानुपपत्तेरिति द्रष्टव्यम् **तदवगमानुपपत्तेरिति** । याथार्थ्यावगमानुपपत्तेरित्यर्थः । **तदवगमायेति** । प्रमाणत्वावगमाय याथार्थ्यस्य प्रतीतावित्यर्थः । ननु याथार्थ्यरूपलक्षणस्य प्रमाणत्वज्ञापकत्वेऽपि याथार्थ्यावगमाय न प्रमाणत्वज्ञानापेक्षोच्यते, येन अन्योन्याश्रयः । किन्तु अन्यदेव तज्ज्ञापकमित्यत आह **अस्तु वेति** । **सन्निहितप्रतिपत्तिकत्वादिति** । याथार्थ्यलिङ्गस्यैव प्रमाणलक्षणत्वाभ्युपगमे लाघवं, प्रथमं ज्ञेयतया सन्निहितप्रतिपत्तिकत्वात् । याथार्थ्यमनुमाय अनुमितस्य तु तत्त्वे गौरवं स्यादिति भावः । ननु न याथार्थ्यावगमकस्यैव प्रमाणलक्षणत्वं सम्भवति । तथा सति तस्य प्रमाणमात्रेऽभावेन तदव्यापकत्वात् । न चैवं याथार्थ्यलिङ्गत्वमपि न स्यादिति वाच्यम् । याथार्थ्यव्याप्यतामात्रेणापि तदुपपत्त्या लिङ्गत्वार्थं व्यापकत्वस्यानपेक्षितत्वादित्याशयेन शङ्कते **न तदवश्यमिति** । यत्र प्रमाणभागे याथार्थ्यं व्याप्यैकरूपेण तेन लिङ्गेन न याथार्थ्यमनुमेयं, तत्राव्याप्तिः स्यादिति परिहरति **यत्र हीति** । तत्रापि प्रमाणभागे लिङ्गान्तरेणैव याथार्थ्यानुमानान्नाव्याप्तिरिति शङ्कते **अथेति** । ताभ्यां लिङ्गाभ्याम् आहत्य साक्षात्प्रमाणत्वानुमानोपपत्तौ किं याथार्थ्यानुमानेन इति वैयर्थ्याभिप्रायेणैव गूढाभिसन्धिना 'ते एव स्ताम्' इत्युक्तम् । तदभिप्रायमज्ञात्वा लिङ्गद्वयस्यैव लक्षणत्वेन लिङ्गत्वमुच्यत इति भ्रान्तः शङ्कते । **अथेति** । स्वाशयमुद्घाटयति **लक्ष्येति** । ताभ्यां लिङ्गाभ्याम् आहत्य साक्षात्प्रमाणत्वमेवानुमीयताम् । किं याथार्थ्यानुमानेनेति परिहरति **तथाऽपीति** । **ते एवेति** । लिङ्गे एवेत्यर्थः । लिङ्गद्वयस्य प्रत्येकं मिलितस्य वा प्रमाणत्वाव्यापकत्वात् लक्षणत्वासम्भवेन याथार्थ्यस्य च तद्व्यापकत्वाल्लक्षणत्वमिति भावेन शङ्कते **अथेति** । **लक्ष्यानुमानस्येति** । यदि व्यापकेन विना लक्ष्यानुमानं न स्यात्, तदा तत्सिद्ध्यर्थं व्यापकं लक्षणं वाच्यम् । प्रकृते तु याथार्थ्यानुमापकलिङ्गद्वयेनैव तत्सिद्धेस्तद्वैयर्थ्यमिति भावः ।

प०— प्रमाणत्वादिप्रतीतये लक्षणमुच्यत इति कल्पं निराह **एतेनेति** । अपिचेत्यादिनोक्तदोषेणेत्यर्थः । ननु प्रमाणत्वादिनैव याथार्थ्यादिरूपलक्षणावगमोऽस्त्वित्यत आह **प्रमाणत्वादीति** । आदिपदेन प्रत्यक्षत्वादिग्रहः । विशेषलक्षणाभिप्रायेणादिपदोक्तिः । नन्वविसंवादिप्रवृत्तिहेतुकत्वादिकमेव लिङ्गं चेन्नोक्तदोष इत्यत आह **अस्तु वेति** ॥ **सन्निहितप्रतिपत्तिकत्वादिति** । अन्यदनपेक्ष्योपस्थितत्वादित्यर्थः । ननु तदेव लक्षणमुपन्यस्यतामित्ययुक्तम् । तस्य ल(क्ष्याव्यापक)क्ष्यव्याप्यत्वात् । लक्षणस्य च लक्ष्यव्यापकत्वावश्यंभावादिति भावेन शङ्कते **न तदवश्यमिति** । लिङ्गस्यापि व्यापकत्वमावश्यकमिति भावेन समाधत्ते **यत्रेति** ॥ **किमपराद्धं लिङ्गान्तरेणेति** । लक्षणापेक्षया लिङ्गान्तरेणे-

त्यन्तरशब्दप्रयोगः । लक्षणावगमकेन लिङ्गेनेत्यर्थः । व्यापकत्वाज्ञाने तस्याव्यापक(त्व)तौल्यादिति भावः ॥ **अथ यत्रेति** । लक्ष्यभागे । **तल्लक्षणे** विषये ॥ **तावेवेति** लक्ष्यैकदेशे वर्तमानौ हेतू एवेत्यर्थः ॥ क्वचित्तु ते एवेति पाठः । तदा तु प्राक्प्रकृतलिंगद्वयपरामर्शः स्पष्टः ॥ **लक्ष्ये लिंगमिति** । लक्ष्यगतेतरव्यावृत्तिर्लिंगमित्यर्थः ॥ **तदनुमानेति** । इतरव्यावृत्तलक्ष्यस्वरूपानुमानकल्पनयेत्यर्थः । तावेवास्तां लक्ष्ये लिङ्गमित्ययुक्तमिति शङ्कते **अथेति** ।

**या०— एतेनेति** । लक्षणस्य दुरवधारणत्वेनेत्यर्थः । एतदेव दर्शयति **प्रमाणत्वाद्यवगममिति** । आदिपदेन साक्षात्त्वादिपरिग्रहः । लक्ष्यतावच्छेदकं प्रमाणत्वाद्येव तदवगमकं वाच्यमन्यस्यानुपलम्भादित्यभिमानेनेदमुक्तम् । अत एवाह **अस्तु वेति** । **अन्यदपि** लक्ष्यतावच्छेदकातिरिक्तमपि । यथा केवलप्रमाणे यथार्थज्ञानत्वम् ॥ **लक्ष्याविनाभूततयेति** । लक्ष्यतावच्छेदकव्याप्यतयेत्यर्थः । **सन्निहितप्रतिपत्तिकत्वं** प्रथमोपस्थितत्वम् । लक्षणं सकललक्ष्यव्यापकं वक्तव्यमिदं तु न व्यापकमनुप्रमाणेऽभावादित्याशयेन शङ्कते **न तदवश्यमिति** । अव्यापकत्वे लिङ्गत्वमेव तस्य न स्यादित्यत आह **लिङ्गत्वस्येति** । अन्यथा धूमादेरलिङ्गत्वप्रसङ्ग इति भावः ॥ **यत्रेति** । अनुप्रमाण इत्यर्थः ॥ **प्रामाण्याद्यवगम इति** । अत्र सर्वत्र प्रामाण्यं लक्ष्यतावच्छेदकभूतं लक्षणातिरिक्तं किञ्चिद्गोत्वादिवदखण्डमेवाभिप्रेतमित्यवगन्तव्यम् । क्वचिल्लक्ष्यभागेऽनुप्रमाणे यथार्थज्ञानत्वरूपलिङ्गाख्यप्रमाणाभावेन तत्र याथार्थ्यरूपलक्षणानवगमेऽपि केवलप्रमाणे तेन **लिङ्गेन** ज्ञातं तल्लक्षणं भविष्यति । लक्षणस्य हि स्वरूपसतः सर्वलक्ष्यव्याप्तिर्वक्तव्या, न तु तज्ज्ञानस्यापि सर्वत्र लक्ष्येऽवश्यम्भावनियम इत्याशयेन शङ्कते **यदा चेति** । क्वचिल्लक्ष्यजातीय एवानवधारणीयतयेत्यन्वयः ॥ **किमपराद्धमिति** । सार्वत्रिकव्यवहारहेतुत्वाभावस्योभयत्राविशेषादिति भावः ॥ **तत्र लिङ्गान्तरादिति** । अनुप्रमाणे यथार्थज्ञानसाधनत्वादिरूपलिङ्गान्तराद्याथार्थ्यं प्रत्येतव्यम् । ततश्च लिङ्गद्वयेन सर्वत्र ज्ञातं तत्सार्वत्रिकव्यवहारोपयोगि भविष्यतीति भावः ॥ **ते एवेति** । यथार्थज्ञानत्वतत्साधनत्वे इत्यर्थः । **लक्ष्ये** लक्ष्यतावच्छेदके प्रमाणत्वादावित्यर्थः । एवमग्रेऽपि लक्ष्यपदं लक्ष्यतावच्छेदकधर्मपरम् ।

**श्री०** — एतेनेत्युक्तं विशदयति **प्रमाणत्वादिति** ॥ **तदिति** । तदनुमापकलिङ्गभूतलक्षणेत्यर्थः । **अस्य** प्रमाणत्वस्य । अवगतस्यैव लिङ्गत्वात्प्रमाणत्वादिलिङ्गभूतलक्षणावगमकस्याभावात्प्रमाणत्वमेव तदवगमकं वक्तव्यम् । ततश्च लक्ष्यतावच्छेदकीभूते प्रमाणत्वेऽवगते, तेन लक्षणावगमोऽवगतेन तेन लक्षणेन प्रमाणत्वावगम इत्यन्योन्याश्रय इति भावः । ननु लक्षणावगमोऽन्येन भविष्यतीति नोक्तदोष इत्याशङ्क्याह **अस्तु वेति** । **अन्यत्** लक्ष्यतावच्छेदकीभूतप्रमाणत्वाद्यन्यत् । **लक्षणे** याथार्थ्यरूपे लक्षणे । **तदेव** लक्षणानुमापकं लिङ्गमेव ॥ **सन्निहितेति** । प्रथमज्ञेयतया लघूपायत्वेन प्रतिपत्ति-

**सौकर्या**दित्यर्थः । तथा च किं याथार्थ्यरूपलक्षणकथनेनेति भावः ॥ **तदिति** । तथा च यल्लक्षणानुमापकं लिङ्गमुच्यते तल्लक्षणस्य व्यापकं लक्षणान्यूनातिरिक्तदेशवृत्ति अवश्यं वक्तव्यमिति यदि नियमः स्यात् तर्ह्येव लक्षणवत्तस्यापि सर्वत्र लक्ष्ये सत्त्वात्तदेवास्तु लक्षणं किमनेनेत्युच्येतेत्यर्थः । ननु तद्यदि लक्षणस्य न व्यापकं कथं तर्हि लक्षणे लिङ्गमत आह **लिङ्गत्वस्येति** । यथा धूमस्य वन्ह्यव्यापकत्वेऽपि तल्लिङ्गत्वं तद्व्याप्तत्वाद्दृष्टं तद्वदित्यर्थः । **ततः** अव्यापकालिङ्गात् । तथा चावश्यं व्यापके वक्तव्ये तदेव लक्षणमस्त्विति भावः । **प्रमाणाभावात्** प्रमापकाभावात् । तस्य लक्षणत्वेऽव्याप्तिप्रसङ्ग इति भावः । याथार्थ्यरूपं लक्षणं लक्षणं भवतीति शेषः । लक्षणत्वेनोपादेयत्वं भवतीत्यर्थः । **अव्यापकेन** लक्षणतया कथितेनेति शेषः । **यत्र** लक्ष्ये । तल्लक्षणे तल्लक्षणज्ञाने । लक्ष्ये लक्ष्यतावच्छेदके ॥ **तदिति** । लक्ष्यतावच्छेदकेत्यर्थः ॥ **तथाविधेति** । अननुगतेत्यर्थः । **तदनुमितं** ताभ्यामनुमितं याथार्थ्यम् । **तथात्वात्** एकत्वात् । **लक्ष्यानुमानस्य** लक्ष्यतावच्छेदकीभूतप्रमाणत्वानुमानस्य ।

च० — **द्वितीयोऽपि निरस्त इति** । लक्षणस्य दुरवधारणत्वकथनेन तच्चिह्नोपदर्शनमिति द्वितीयोपि प्रत्याख्यात इत्यर्थः ।

**सु० — नापि तृतीयः । स ह्येवंरूपः यद्यथार्थं तत्प्रमाणमिति व्यवहर्तव्यमिति । अयमनुपपन्नः । सर्वत्र लक्षणस्य ज्ञातुमशक्यत्वात् । प्रमाणत्वादिना तदवगमे तदेवास्तु व्यवहारनियमनिदानम् । अव्यवहितप्रतिपत्तिकत्वादित्यावेदितम् ।**

शे० — व्यवहारार्थं व्यतिरेकिलक्षणमिति तृतीयं कल्पं निराचष्टे **नापीति** । निषेध्ये सम्यगवगते तन्निषेधः सुशक इति निषेध्यकल्पमेव दर्शयति **स हीति** । किंरूपमित्यत आह **यदिति** यद्यथार्थं तत्प्रमाणमिति व्यवहर्तव्यमित्येवंरूपः स तृतीयकल्प इत्यर्थः । एवमनूद्यापवदति **अयमिति** । लक्षणस्य ज्ञातुमशक्यत्वमसिद्धं प्रमाणत्वादिनैव तदवगमादित्याशङ्क्याह **प्रमाणत्वादिनेति** ॥ **अव्यवहितेति** । प्रथमज्ञेयतया लघूपायत्वादित्यर्थः ।

स० — व्यवहारसाधकं व्यतिरेकिलक्षणमिति तृतीयं खण्डयति **नापीति** । **अव्यवहितेति** । प्रथमज्ञेयतया लघूपायत्वादित्यर्थः ।

प० — व्यवहारार्थमिति पक्षं निराह **नापि तृतीय इति** ।

श्री० — **सर्वत्र** प्रमाणव्यक्तिषु । **लक्षणस्य** याथार्थ्यस्य । तत्रैवायुःपर्यवसानापत्तेरिति हृदयम् । **तदवगमे** याथार्थ्यरूपलक्षणावगमे । **तदेव** प्रमाणत्वमेव ॥ **व्यवहारेति** । व्यवहारेत्यर्थः । **आवेदितम्** अन्योन्याश्रयस्याप्युपलक्षणमेतत् ।

च० — **नापि तृतीय इति** । व्यवहारार्थमिति तृतीयोऽपि नेत्यर्थः ।

**सु० — अत एव न चतुर्थः । कल्पनागौरवदोषश्चाधिकः ।**

**शे० —** प्रमाणशब्दप्रवृत्तिनिमित्तावधारणार्थं लक्षणमुच्यत इति चतुर्थं कल्पमतिदेशेन **दूषयति अत एवेति** । अव्यवहितप्रतिपत्तिकत्वादेवेत्यर्थः । लक्षणस्य ज्ञातुमशक्यत्वादेवेत्यर्थ इत्यप्याहुः । अस्मन्कल्पेऽसाधारणं दोषमाह **कल्पनेति** । अन्वयव्यतिरेकावगतप्रमाणत्वजातेरेव प्रमाणशब्दप्रवृत्तिनिमित्तत्वोपपत्तावनेकविशेषणविशिष्टस्य यथार्थत्वादिरूपलक्षणस्य तन्निमित्तत्वकल्पने गौरवं स्यादित्यर्थः ।

**स० — अत एवेति** । अव्यवहितप्रतिपत्तिकत्वादेवेत्यर्थः । **कल्पनेति** । अन्वयव्यतिरेकावगतप्रमाणत्वजातेरेव प्रमाणशब्दप्रवृत्तिनिमित्तत्वोपपत्तौ अनेकविशेषणविशिष्टस्य याथार्थ्यत्वादिरूपलक्षणस्य तन्निमित्तत्वकल्पने कल्पनागौरवं च स्यादित्यर्थः ।

**प० —** प्रमाणशब्दप्रवृत्तिनिमित्तावधारणार्थमिति कल्पं निराह **अत एव न चतुर्थ इति** । सर्वत्र लक्षणस्य ज्ञातुमशक्यत्वादेवेत्यर्थः ॥ **कल्पनागौरवेति** । लक्षणज्ञापकतयाऽव(श्यकलिङ्ग)श्यकल्पितस्यैव प्रमाणादिशब्दप्रवृत्तिनिमित्तत्वोपपत्तौ तदनुमितलक्षणस्य तथात्वकल्पनं गुर्विति भावः ।

**या० — अत एवेति** । लक्षणस्य ज्ञातुमशक्यत्वादेवेत्यर्थः ॥ **कल्पनेति** । लक्षणानुमापकत्वेनावश्यकप्रमाणत्वाद्यखण्डधर्मस्यैव तच्छब्दप्रवृत्तिनिमित्तत्वोपपत्तौ अनेकविशेषणविशिष्टस्य याथार्थ्यादेस्तन्निमित्तताकल्पने गौरवमिति भावः ॥ छ ॥

**श्री० — अत एवेति** । प्रमाणादिशब्दप्रवृत्तिनिमित्तमिदं लक्षणमेव नान्यदित्येतदप्युक्तरीत्या न सर्वत्र ज्ञातुं शक्यमित्यर्थः ।

**च० — न चतुर्थ इति** । प्रमाणादिशब्दप्रवृत्तिनिमित्तावधारणमिति चतुर्थोपि नेत्यर्थः ।

**सु० — (नापि) न पञ्चमः । तादृशस्य दर्शयितुमशक्यत्वादिति ॥ छ ॥**

**शे० —** अस्तु तर्ह्यन्यत्किञ्चिदर्थमिति पञ्चमः कल्पो नेत्याह **नापीति** । हेतुमाह **तादृशस्येति** । तस्य सतो निर्वचनापातान्निर्वक्तुं चाशक्यत्वादित्यर्थः ।

**स० —** अस्तु तर्हि अन्यस्मै कस्मैचिदिति कल्पः । नेत्याह **तादृशस्येति** । तस्य सतो निर्वचनापातात् निर्वक्तुमशक्यत्वादित्यर्थः ।

**प० —** अन्यस्मै कस्मैचित् प्रयोजनायेत्येतन्निराह **नापि पञ्चम इति** ॥ छ ॥

**श्री० — तादृशस्य** तथाविधप्रयोजनस्य ।

**च० — नापि पञ्चम इति** । अन्यस्मै कस्मैचिदिति पञ्चमोऽपि न संभवतीत्यर्थः ।

**सु०— अत्रोच्यते । अस्तु तावत्सजातीयविजातीयव्यवच्छिन्नलक्ष्यप्रतीत्यर्थं लक्षणमिति पक्षः । सास्नादिमान्गौरिति विदितलक्ष्यलक्षणसंबन्धो हि यं पिण्डं सास्नादिमन्तं पश्यति तं नायमश्वादिर्नापि घटादिरिति प्रतिपद्यते ।**

**ननु व्यवच्छेदोऽन्योन्याभावो भेद इत्यनर्थान्तरम् । भेदश्च वस्तुस्वरूपमेव । तथा च लक्ष्यस्वरूपप्रतिपत्तिरेव तत्प्रतिपत्तिरिति कृतं लक्षणेन । अथ लक्ष्यप्रतीतिनिरपेक्षमेव लक्षणेन व्यवच्छेदो बोध्यत इति मतम् । तन्न । निराश्रयस्य तस्य बोध(दर्श)यितुमशक्यत्वादिति ।**

**सत्यं स्वरूप(वस्तु)प्रतीतिरेव भेदप्रतीतिरिति । तथाऽपि प्रतियोगिविशेषघटिततदवगमाय लक्षणस्योपयोगः । असङ्कीर्णतया गोपिण्डं पश्यन्नपि हि न तावदयं नाश्वो न घट इति प्रत्येति यावल्लक्षणं नावगच्छति । सास्नादिमत्त्वं तदा प्रतीतमिति चेन्न । सास्नादिमान् गौरित्येवमवगमस्य विवक्षितत्वात् । अत एव सजातीयेत्यादिविशेषणोपादानम् ।**

**शे०—** उक्तनिरासाय तत्समाधानाभिधानं प्रतिजानीते **अत्रेति** । विकल्पितेषु लक्षणप्रयोजनेषु कः पक्षोऽभिमत इत्यतः प्रथमं पक्षं तावदुपादत्ते **अस्तु तावदिति** । कथं लक्षणस्य सजातीयविजातीयव्यवच्छिन्नलक्ष्यप्रतीत्यर्थत्वमित्यतोऽत्राभिप्रेतलक्षणज्ञानप्रकारप्रदर्शनपूर्वकं तत्साध्यव्यवच्छेदज्ञानप्रकारं च दर्शयति **सास्नादिमान्गौरित्यादिना** । अत्र सास्नादिमान्गौरिति लक्षणज्ञानप्रकारप्रदर्शनम् । नायमश्वादिरित्यादि तु व्यवच्छेदज्ञानप्रकारमिति द्रष्टव्यम् । ननु व्यवच्छेदज्ञानमात्रस्यैव लक्षणज्ञानप्रयोजनत्वसम्भवान्नायमश्वादिरिति प्रतियोगिविशेषघटितभेदज्ञानस्य तत्प्रयोजनपर्यन्तं धावनमनर्थकमित्यतो व्यतिरेकव्यभिचारपरिहारार्थं तदिति भावेन तद्व्यावर्त्यतया व्यवच्छेदज्ञानमात्रस्य लक्षणज्ञानप्रयोजनत्वे व्यतिरेकव्यभिचारशङ्कामुत्थापयति **नन्वित्यादिना** । एवं व्यवच्छेदज्ञानमात्रस्य व्यतिरेकव्यभिचारेण लक्षणज्ञानप्रयोजनत्वं निराकृत्य प्रतियोगिविशेषघटितभेदज्ञानस्य लक्षणप्रयोजनत्वे तदप्रसक्तिं प्रदर्शयितुं तं पक्षमुपादत्ते **सत्यमित्यादिना** ॥ **असङ्कीर्णतयेति** । स्वेतरसर्वविलक्षणतया गोपिण्डं पश्यन्नपि नायमश्वादिरिति प्रतियोगिविशेषघटितवैलक्षण्यं लक्षणज्ञानं विना न प्रतिपद्यत इति न व्यतिरेकव्यभिचार उक्तरूपभेदज्ञानस्य लक्षणज्ञानप्रयोजनत्व इति भावः । तथाऽपि सास्नादिमान्गौरिति विदितलक्ष्यलक्षणसम्बन्धो हीति लक्षणज्ञानप्रकारदर्शनमनर्थकं लक्षणज्ञानमात्रस्यैव प्रतियोगिविशेषघटितभेदज्ञानजनकत्वसम्भवादित्यतोऽन्वयव्यभिचारपरिहारार्थं तदिति भावेन लक्षणज्ञानमात्रस्य प्रतियोगिविशेषघटितभेदज्ञानप्रयोजनकत्वेऽन्वयव्यभिचारशङ्कामुत्थापयति **सास्नादिमत्त्वमिति** ॥ **तदेति** । लक्ष्ये प्रतियोगिविशेषघटितभेदानवगमदशायामित्यर्थः । तथा च लक्षणप्रतीतौ सत्यामप्युक्तरूपभेदानवगमादन्वयव्यभिचार इति भावः । भेदज्ञानमात्रस्य लक्षणज्ञान-

प्रयोजनत्वे सजातीयेत्यादिविशेषणवैयर्थ्यप्रसक्तावप्यश्वादिघटादिरूपप्रतियोगिविशेषघटितभेदज्ञानस्य तत्प्रयोजनत्वे न तस्य वैयर्थ्यमापद्यते । उक्तरूपप्रतियोगिविशेषसमर्पकत्वेनार्थवत्त्वादित्याह **अत एवेति** । यतः प्रतियोगिविशेषघटितभेदावगतिर्लक्षणज्ञानफलमत एवेत्यर्थः ॥ **सजातीयेत्यादीति** । प्रमाणत्वादि-रूपलक्ष्यतावच्छेदकधर्मेण साजात्यविवक्षायामुक्तरीत्याऽव्याप्ती रूपान्तरेण विवक्षायां विजातीयपद-वैयर्थ्यमित्युक्तमित्यर्थः ।

**प्र०** —लक्ष्य–लक्षणसम्बन्धज्ञानस्य व्यवच्छेदज्ञानमात्रप्रयोजनकत्वमेव परस्याभिप्रेतमिति मन्वानो व्यतिरेकव्यभिचारं शङ्कते **ननु व्यवच्छेद इत्यादिना** । नायमश्वादिः नापि घटादिरिति प्रतियोगिविशेष-घटितसजातीय–विजातीयव्यवच्छिन्नलक्ष्यप्रतीतेरेव लक्षणज्ञानसाध्यत्वेनाभिप्रेतत्वात् लक्षणज्ञानाभावे व्यवच्छेदज्ञानमात्रसत्त्वेऽपि उक्तरूपव्यवच्छेदज्ञानाभावान्न व्यभिचार इत्याह **सत्यमित्यादिना** । ननु तथापिलक्षणज्ञानसत्त्वेऽपि उक्तरूपलक्ष्यज्ञानाभावात् अन्वयव्यभिचार इत्याशङ्कते **सास्नादिमत्त्वमिति** । **विदितलक्ष्य-लक्षणसम्बन्ध इति** । प्रागुक्तमेव स्मारयति **सास्नादिमानिति** । **अत एवेति** । नायमश्वादिर्नापि घटादिरिति प्रतियोगिविशेषघटितव्यवच्छेदप्रतीतेर्लक्षणज्ञानसाध्यत्वादित्यर्थः ।

**प०** अस्तुतावदित्यनेनोक्तं लक्षणप्रयोजनं व्यनक्ति **सास्नादिमानिति** । असिद्धमेतत्प्रयो-जनमिति शङ्कते **नन्विति** ॥ **प्रतियोगिविशेषघटिततदवगमायेति** । स चावश्यमपेक्षितः । अन्यथा तत्तद्विशेषार्थिनस्तत्र तत्र प्रवृत्तिर्न स्यादिति भावः ॥ **सास्नादिमत्त्वमिति** । तस्यापि भेदस्येव धर्म्यभेदादिति भावः ॥ **एवमवगमस्येति** । सास्नादिमत्त्वादेः गवादिवाच्यतां प्रति व्याप्तत्वग्रहस्य विवक्षितत्वादित्यर्थः ॥ **अत एवेति** । लक्षणस्य प्रतियोगिविशेषघटितव्यवच्छेदबोधार्थत्वादेवेत्यर्थः ।

**या०** — सजातीयेत्यादिविशेषणप्रयोजनं वक्तुं तटस्थमुत्थापयति **नन्विति** ॥ **सास्नादिमत्त्वं तदेति** । तस्यापि धर्मिस्वरूपत्वादिति भावः । यदर्थमिदमुक्तं तदाह **अत एवेति** । अश्वघटादिरूप-प्रतियोगिविशेषघटितव्यावृत्त्यवगमाय लक्षणस्यापेक्षितत्वादेवेत्यर्थः ।

**श्री०** — कथं लक्षणत्वेन तत्प्रतीतिरित्यत आदौ तावत्तां प्रतीतिमुपपादयति **सास्नेत्यादिना** । **तत्प्रतिपत्तिः** भेदप्रतिपत्तिः । ननु लक्ष्यप्रतीतौ भेद एव प्रतीतो न व्यवच्छेदोऽतः सार्थकं लक्षण-मित्यतो व्यवच्छेद इति पूर्ववाक्यम् ॥ **निराश्रयस्येति** । कुत्र व्यवच्छेदो बोध्य इति भावः । तदुप-पादयति **असङ्कीर्णेति** । नन्वसङ्कीर्णतया गोपिण्डदर्शनसमये सास्नादिरूपं लक्षणमपि प्रतीतमेव । तदभिन्नत्वात् । अतो गोपिण्डं पश्यन्नपि यावल्लक्षणं नावगच्छतीत्युक्तमयुक्तम् । तथा च लक्षणप्रयोजन-भूतं प्रतियोगिविशेषघटितव्यावृत्तिज्ञानमपि गोपिण्डदर्शनसमये जातमेवेति लक्षणं व्यर्थमित्यभिप्रेत्य शङ्कते **सास्नादीति** ।

च० — उक्तशङ्कासमाधित्सया प्रतिजानीते **अत्रेति** ॥ **प्रतियोगिविशेषघटिततयेति** । प्रतियोगितासंसर्गावच्छिन्नकिञ्चिन्निष्ठप्रकारतानिरूपितभेदत्वावच्छिन्नविशेष्यताशाल्यवगमायेत्यर्थः । **अत एव** भेदांशे प्रतियोगितासंसर्गेण कस्यचिद्भानावश्यंभावादेव ।

सु० — **यदत्रोक्तं किं सजातीयेत्यादि । तदसत् । पौरुषेयवचसां पुरुषविवक्षाधीनत्वेन नियन्तुमशक्यत्वात् । लक्ष्यातिरिक्तं हि सजातीयविजातीयतया द्वैराश्येन विवक्ष्यते । यथा यथार्थज्ञानतत्साधनस्य प्रमाणस्य ज्ञानं तत्साधनं च सजातीयम् । यन्न ज्ञानं नापि तत्साधनं तद्विजातीयम् । यथा च प्रत्यक्षस्यानुमानादिकं सजातीयं, विजातीयं तु घटादिकम् । एवमन्यत्रापि विवेक्तव्यमिति ।**

**एवं तर्हि लक्ष्यापेक्षया भिन्नाद्व्यवच्छेद इत्युक्तं स्यादिति चेत् । को नेत्याह । न हि कोऽपि स्वस्यात्मा स्वस्मादेव व्यवच्छेदं लक्षणप्रयोजनमाचक्षति(ष्टे) ।**

श्रे० — ज्ञानत्वादिना लक्ष्यतावच्छेदकव्यापकधर्मेणैव साजात्यस्य विवक्षितत्वेन विकल्पितरूपद्वयेनापि साजात्यस्याविवक्षितत्वात्तद्विवक्षायामुक्तरीत्या दोषद्वयप्रसक्तावपि ज्ञानत्वादिना तद्विवक्षायां नाव्याप्त्यादिप्रसङ्ग इत्याशयेन दूषयति **तदसदिति** । ज्ञानत्वादिसाजात्यविवक्षायां अव्याप्त्यादिदोषपरिहारेऽपि लक्ष्यस्यापि ज्ञानत्वेन साजात्याद्व्यवच्छेद्यकोटिप्रविष्टत्वात्ततो लक्षणस्य व्यावृत्तावसम्भवोऽव्यावृत्तावतिव्याप्तिप्रसङ्ग इत्यतो लक्ष्यातिरिक्तस्यैव सजातीयत्वादिना विवक्षणान्न तत्प्रसङ्गोऽपीत्याशयेनोक्तविवक्षायां नियामकमाह **पौरुषेयवचसामिति** । पुरुषविवक्षामेव दर्शयति **लक्ष्यातिरिक्तं हीति** ॥ **एवमन्यत्रापीति** । गोरश्वादिकं सजातीयं घटादिकं विजातीयमिति विवेक्तव्यमित्यर्थः ॥ **इत्युक्तं स्यादिति** । इत्येव वक्तव्यं स्यादित्यर्थः । अलक्ष्याल्लक्ष्यव्यावृत्तये लक्षणप्रणयनमिष्टमेवेति परिहरति **क इति** । यदत्र किं लक्ष्यान्यतया प्रतिपन्नमलक्ष्यं व्यावर्त्यते किंवा प्रतिपन्नमात्रमिति विकल्प्यान्त्ये लक्ष्यस्यापि तथात्वेन व्यावर्त्यापातादिति दूषणमभिसंहितं तदनङ्गीकारपराहतमित्याह **न हीति** ।

स० — **एवमिति** । यथा अनुमानस्य अक्षादिकं सजातीयम्, विजातीयं तु घटादिकमिति विवेक्तव्यमित्यर्थः ।

प० — **किं सजातीयेत्यादीति** । प्रमाणत्वादिना साजात्यं चेदव्यापकं लक्षणं स्यात् । रूपान्तरेण चेद्विजातीयपदं व्यर्थमिति यदुक्तं तदसदित्यर्थः । तत्र द्वितीयपक्षमुपेत्य तत्रोक्तदोषं निराह **पौरुषेयेति** । लक्ष्यतावच्छेदकं प्रति साक्षाद्व्यापकधर्मेण साजात्यं वैजात्यं च ध्येयमिति भावेनाह **लक्ष्यातिरिक्तं हीति** ।

श्री० — ज्ञानमयथार्थम् । तत्साधनं ज्ञानसाधनं दुष्टेन्द्रियम । एवमन्यत्रापीति । सास्नादिमत्स्वरूपे गोलक्षणे पशुत्वेन महिष्यादि सजातीयं विजातीयं तु घटादीति विवेक्तव्यमित्यर्थः ।

सु० — यदत्रोक्तं यदा चेत्यादि । तदसङ्गतम् । वस्तुतो यल्लक्ष्याद्भिन्नं ततो व्यवच्छेदावगमार्थत्वाल्लक्षणस्य । प्रतिपादकस्य यद्यपि लक्ष्यान्यत्वज्ञानमलक्ष्ये(वश्या)पेक्षितम् तथापि प्रतिपाद्यस्यातद(तदन)पेक्षत्वान्न दोषः ।

तस्यापि पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्य सजातीयविजातीयपदोपात्तलक्ष्यान्य(त्व)ज्ञानं विना लक्ष्यस्य अलक्ष्यान्यत्वज्ञानं लक्षणप्रयोजनं न सिध्यतीति कश्चित् । तदनुपपन्नम् । न हि लक्ष्यान्यव्यावृत्तिर्लक्षणवाक्यप्रतिपाद्या । किन्नाम तज्ज्ञानं लक्षणप्रयोजनत्वेनोच्यते । लक्षणवाक्यार्थ एव प्रतिपाद्येन बोद्धव्यः ।

शे० — लक्ष्यान्यज्ञाने तदन्यत्वं लक्ष्यस्यावगतमेवेति किं लक्षणेनेत्याद्यपक्षदूषणमनुभाष्य दूषयति यदत्रेति । लक्ष्यादन्यत्वेनानवगतादपि वस्तुतो लक्ष्यान्यस्मादलक्ष्याल्लक्ष्यव्यावर्तकं लक्षणमित्यर्थः । ननु वस्तुतो यल्लक्ष्याद्भिन्नं ततो व्यवच्छेदावगमविवक्षायां लक्ष्यभिन्नस्य तत्त्वेन ज्ञानाभावेन ततो व्यवच्छेदानवगमात्तदर्थं लक्षणकथनमेवानुपपन्नमित्यत आह प्रतिपादकस्येति । लक्षणवाक्यार्थोपदेशकस्येत्यर्थः ॥ अपेक्षितमिति । अन्यथा तत्प्रतिपादकत्वानुपपत्तेरित्यर्थः । तं प्रति च लक्षणवैयर्थ्यमिष्टमेवेति हृदयम् ॥ प्रतिपाद्यस्येति । उद्देश्यपुरुषस्येत्यर्थः । लक्षणवाक्येन बोध्यस्य पुरुषस्येति यावत् । तदनपेक्षत्वात् अलक्ष्ये लक्ष्यान्यत्वज्ञानानपेक्षत्वादित्यर्थः । तथा चालक्ष्यभिन्नतया लक्ष्यावगमासिद्धेस्तदर्थलक्षणस्य न वैयर्थ्यमिति भावः ।

तस्यापीति । प्रतिपाद्यस्यापीत्यर्थः ॥ लक्षणप्रयोजनत्वेनोच्यत इति । तथा च लक्षणवाक्यार्थावगमदशायां न लक्ष्यान्यत्वज्ञानापेक्षेति भावः ॥ लक्षणवाक्यार्थ एवेति । तथा च लक्षणवाक्यार्थज्ञानौपयिकत्वेन तद्गतपदार्थज्ञानस्य बोध्यं प्रत्यावश्यकत्वेऽपि तदनन्तर्गतसजातीयेत्यादिपदोपात्तलक्ष्यान्यज्ञानमनावश्यकमेवेति भावः ।

स० — प्रतिपादकस्येति । बोधकस्येत्यर्थः । प्रतिपाद्यस्य बोध्यस्येत्यर्थः ।

प० — प्रतिपादकस्येति । परं प्रति प्रतिपादयितुं प्रवृत्तस्येत्यर्थः । प्रतिपाद्यस्य बोध्यस्येत्यर्थः ॥ न दोष इति । लक्षणवैयर्थ्यदोषो नेत्यर्थः । कस्यचिन्मतमाह तस्यापीति । प्रतिपाद्यस्यापीत्यर्थः । लक्षणवाक्याप्रतिपाद्या चेत् किं तत इत्यत आह लक्षणवाक्यार्थ एवेति । स च लक्षणस्य लक्ष्यतावच्छेदकसामानाधिकरण्यादिरूप एवेति भावः ।

या० — **प्रतिपादकस्येति** । बोधकस्य पुरुषस्येत्यर्थः । **प्रतिपाद्यस्य** बोध्यस्य पुरुषस्य ॥ **लक्षणवाक्यार्थ एवेति** । लक्षणवाक्ये च न सजातीयेत्यादिपदानि सन्तीति भावः ।

श्री० — **लक्षणस्येति** । तथा च लक्ष्याद्भिन्नत्वेन ज्ञानं नापेक्षितम् । येनार्थादितरभेदस्य सिद्धत्वेन लक्षणमनर्थकं स्यादित्यर्थः । कुतो नापेक्षितमित्यत आह **प्रतिपादकस्येति** । उपदेष्टुरित्यर्थः । **प्रतिपाद्यस्य** उपदेश्यस्य श्रोतुरित्यर्थः ॥ **तदिति** । लक्ष्यान्यत्वज्ञानेत्यर्थः । **तस्यापि** श्रोतुरपीत्यर्थः । सजातीयविजातीयपदोपात्तं यल्लक्ष्यान्यदिति विग्रहः ॥ **प्रतिपाद्येति** । येन पदार्थज्ञानपूर्वकत्वादित्युक्तदोषः स्यादिति शेषः ॥ **तज्ज्ञानमिति** । लक्ष्यादन्यस्माद्व्यावृत्तिज्ञानमित्यर्थः । ननु व्यावृत्तिज्ञानस्य लक्षणप्रयोजनत्वेऽपि प्रतिपाद्यस्य व्यावृत्तिज्ञानं भवतु को दोष इत्यत आह **लक्षणेति** । लक्षणवाक्यं च न सजातीयादिपदघटितमिति भावः ।

च० — **वस्तुत इति** । नाश्वो न घट इत्यादि प्रतीयमानाश्वघटादिरूपप्रतियोगिविशेषाणामश्वत्वादिनैव भानेन गवान्यत्वादिना अभानादिति भावः । **प्रतिपादकस्य** लक्षणवाक्यार्थोपदेशकस्य । **प्रतिपाद्यस्य** उपदेश्यपुरुषस्य । **तस्यापि** प्रतिपाद्यपुरुषस्यापि । **प्रतिपाद्येन** उपदेश्येन ।

**सु० — यदप्यपि चेत्यादिना पृष्टम् । तत्रावगतमेव लक्षणं व्यावृत्तलक्ष्यज्ञानमुपजनयतीति वदामः । न च तस्य दुरवधारणता । यथायथं प्रत्यक्षादिना तदवधारणात् ॥ यत्र लिङ्गात्तदवगमस्तत्र तत एव लक्षणप्रयोजनसिद्धेर्व्यर्था परम्पराकुसृष्टिरिति चेन्न । प्रयोजनसद्भावे गौरवस्याप्यनादरण(प्यादरण)सम्भवात् । यथेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वेनाक्षोद्भवत्वमनुमाय तेन प्रत्यक्षं लक्ष्यते । तत्रान्वर्थसंज्ञाज्ञापनं प्रयोजनम् । एवमन्यत्रापि द्रष्टव्यम् ॥ गौरवमनुरुध्य प्रयोजनमवधीर्यतामिति चेन्न । पुरुषाभिप्रायाणां नियन्तुमशक्यत्वात् । गरीयांश्च प्रतिपत्तौ गौरवात्प्रमेयाधिक्यलाभः । प्रयोजनाभावे तु परम्पराकुसृष्टिरनादरणीयैवेति तदीयदोषताव्युत्पादनं नास्माकमनिष्टम् । एतेन द्वितीयतृतीयचतुर्था अपि समाहिता वेदितव्याः । लक्षणावधारणोपायस्योक्तत्वात् । गौरवस्य च समाहितत्वात् ।**

शे० — यदुक्तं लक्षणमनवगतं व्यवच्छिन्नलक्ष्यप्रतीतिहेतुः किंवाऽवगतमित्यादि तदनुवदन्द्वितीयं कल्पमभ्युपैति **यदपीति** । तथा च नानवगतपक्षोक्तदोष इति भावः । माऽस्त्वाद्यपक्षोक्तोऽति-

प्रसङ्गोऽत्रैतत्पक्षोक्तदोषस्तु स्यादेवेत्याशङ्कते **न चेति**। प्रत्यक्षानुमानार्थापत्तिभिस्तदवगमासम्भवस्य पूर्वमुपपादितत्वादिति भावः। न वयं प्रत्यक्षेणैव लक्षणावगमं ब्रूमः किन्नाम प्रत्यक्षयोग्यस्य लक्षणस्य प्रत्यक्षेण तदयोग्यस्य च लिङ्गादिनेति। तथा चाप्रत्यक्षविशेषणत्वान्निर्दोषाक्षोद्भवत्वादेः प्रत्यक्षेणानवगमेऽपि, लिङ्गेन तदवगतिसम्भवाददोष इति भावेनोक्तं **यथायथमिति**। लक्षणावगमार्थादावश्यकाल्लिङ्गादेव लक्ष्यावधारणोपपत्तेर्लक्षणाश्रयणे गौरवमिति न लिङ्गेन लक्षणावगमाङ्गीकारो युक्त इति पूर्वोक्तं दोषमनुवदति **यत्रेति**। फलवत्त्वाद्गौरवं न दोषायेत्याह **प्रयोजनेति**। प्रयोजनानुसारेण गौरवाश्रयणमुदाहरणनिष्ठतया दर्शयति **यथेति**। किं तत्र प्रयोजनमित्यत आह **तत्रेति**। निर्दोषाक्षोद्भवत्वेन लक्षणेनाक्षं प्रति स्थितं प्रत्यक्षमित्यन्वर्थसंज्ञा ज्ञायते नेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वेनेत्यर्थः॥ **एवमन्यत्रेति**। अदुष्टकरणजन्यत्वादिना याथार्थ्यमनुमाय तेन प्रमाणं लक्ष्यते तत्र प्रकृष्टं मानं प्रमाणमित्यन्वर्थसंज्ञाज्ञापनं प्रयोजनं यथावस्थितज्ञेयविषयाकारित्वस्य विशेषस्यानेन ज्ञापितत्वादिति द्रष्टव्यमित्यर्थः। गौरवदोषपरिजिहीर्षया फलमेव किन्न त्यज्यत इति शङ्कते **गौरवमिति**। धृङ् अनादर इत्यस्येदं रूपम्॥ **प्रमेयाधिक्येति**। अन्वर्थसंज्ञारूपप्रमेयाधिक्येत्यर्थः। ननु यदि गौरवं न दोषः, कथं तर्हि भवतां तद्दोषव्युत्पादनं शास्त्रे सङ्गच्छते। अथ दोषः, कथं तर्हि तदाश्रयणमित्यत आह **प्रयोजनाभाव इति**। उक्तमेव समाधानं पक्षान्तरेऽप्यतिदिशति **एतेनेति**। एतेनेत्युक्तमेव हेतुं विवृणोति **लक्षणेत्यादिना**।

स० — **अनादरणीयैवेति**। गौरवस्य दोषत्वमनादरणीयमित्यर्थः। **अवधा(धी)र्यतामिति**। परित्यज्यतामित्यर्थः। गौरवस्य दोषत्वमङ्गीकृत्य प्रयोजनत्यागः कर्तव्य इति भावः।

प० — शङ्कते **यत्र लिङ्गादिति**॥ **इन्द्रियेति**। निर्दोषेन्द्रियेत्यर्थः। **अक्षोद्भवत्वमित्यत्र** निर्दोषा(क्षेत्यर्थः)क्षोद्भवत्वमित्यर्थः। यद्वा प्रत्यक्षमित्यत्र प्रमाणतदाभाससाधारणं प्रत्यक्षं ग्राह्यम्। तेन यथाश्रुतमेव साधु॥ **लक्ष्यते**=लक्षणवत्तयोच्यते। एवमुक्तौ किं प्रयोजनमित्यत आह **तत्रान्वर्थेति**। अर्थमनुसृत्य वर्तमाना या संज्ञा तज्ज्ञापनमित्यर्थः। प्रत्यक्षमित्यनेन सन्निकर्षविशिष्टमिन्द्रियं ग्राह्यम्। विशिष्टस्य शुद्धाक्षोद्भवत्वात्। तस्य विषयान्प्रतिस्थितं ह्यक्षमिति तत्वनिर्णयाद्युक्तदिशा प्रतिस्थितं च तदक्षं च प्रत्यक्षं विषयसन्निकृष्टमेव चाक्षं तादृशं भवतीति प्रत्यक्षमिति संज्ञाऽन्वर्थरूपा स्यादित्येवमर्थमक्षोद्भवत्वरूपमन्यानुमितमपि तदेव लक्षणत्वेनोच्यत इत्यर्थः। यदा तु प्रत्यक्षपदेन साक्षात्कारज्ञानं विवक्षितं तदाक्षोद्भवत्वं स्पष्टमेव। तत्र प्रत्यक्षमिति संज्ञाया अन्वर्थत्वं चविषयविषयकत्वाभिमुख्यरूपेण विषयं

प्रति स्थितत्वेन बोध्यम् ॥ **एवमन्यत्रापीति** । सफलप्रवृत्तिहेतुत्वादिलिङ्गेनानुमितयाथार्थ्यादिरूपधर्मस्यैव लक्षणत्वोक्तेः प्रमाणमित्यादिसंज्ञायाः अर्थाव्यभिचारित्वरूपप्रकृष्टमानत्वस्यान्वर्थत्वज्ञापनायेति द्रष्टव्य-मित्यर्थः ॥ **गौरवमनुरुद्ध्येति** । प्रतिपत्तिगौरवं न दोषायेति(रीत्याप्र)भीत्वा प्रयोजनं तिरस्क्रियता-मित्यर्थः ॥ **प्रमेयाधिक्यलाभ इति** । संज्ञाया अन्वर्थत्वरूपप्रमेयाधिक्यलाभ इत्यर्थः । एवं तर्हि शास्त्रे गौरवस्य दोषत्वोक्तिरयुक्ता स्यादित्यत आह **प्रयोजनाभावे त्विति** ॥ **द्वितीयतृतीयचतुर्था अपीति** । उत प्रमाणत्वादिप्रतीतय इत्यादिना प्राग्विकल्पितपक्षा इत्यर्थः । एतेनेत्युक्तं व्यनक्ति **लक्षणेति** । ननूक्तमत्र लक्षणज्ञापकमेव लक्ष्यावधारकमस्तु । सन्निहितप्रतिपत्तिकत्वात् । अन्यथा गौरवदोषः स्यादि(तितत्राह)त्यत आह **गौरवस्य चेति** । 'गरीयांश्च प्रतिपत्तिगौरवात् प्रमेयाधिक्यलाभ' इत्यादिग्रन्थेन समाहितत्वादित्यर्थः ।

या०— **तत्रान्वर्थसंज्ञाज्ञापनमिति** । 'विषयान्प्रति स्थितमक्षं प्रत्यक्षमि'त्यन्वर्थसंज्ञाज्ञापन-मित्यर्थः । ननु निर्दोषाक्षोद्भवत्वेन कथमिदं ज्ञाप्यत इति चेत् । निर्दोषाक्षोद्भवत्वस्य निर्दोषार्थेन्द्रिय-सन्निकर्षोद्भवत्वे पर्यवसानस्य वक्ष्यमाणत्वेन, तेनोक्तान्वर्थसंज्ञाज्ञापनमित्याशयात् ॥ **एवमन्यत्रेति** । एवं प्रकृतलक्षणेऽप्यदुष्टकरणजन्यत्वादिना ज्ञाने याथार्थ्यं निश्चित्य, तेन प्रमाणं लक्ष्यते प्रकृष्टं मानं प्रमाण-मित्यन्वर्थसंज्ञाज्ञापनाय । यथावस्थितज्ञेयविषयीकारित्वरूपप्रकर्षस्यानेन ज्ञापनादिति द्रष्टव्यमित्यर्थः ॥ **अवधीर्यतामिति** । धृङनादर इत्यस्येदं रूपम् । तथा च प्रयोजनस्यानादर एव क्रियतामित्यर्थः ॥ **प्रमेयाधिक्येति** । अन्वर्थसंज्ञादिरूपप्रमेयाधिक्यलाभ इत्यर्थः ।

श्री०— **तदिति** । लक्षणेत्यर्थः । **तत एव** लिङ्गादेव ॥ **प्रयोजनेति** । व्यावृत्ति-रूपेत्यर्थः ॥ **परम्परेति** । लिङ्गेन लक्षणज्ञानं तेन लक्ष्यज्ञानमिति परम्परेत्यर्थः ॥ **अनादरणेति** । दोषत्वेनेति शेषः । **गौरवम्** उक्तरीत्या परम्पराकल्पने । **अनुरुद्ध्य** अदोषत्वेनाङ्गीकृत्य ॥ **प्रमेयेति** । अन्वर्थसंज्ञादिरूपेत्यर्थः । **इति** हेतोः ॥ **तदीयेति** । मैवं प्रथमभावितयेत्यादिना तदीयं तेन क्रियमाणं लक्षणप्रणेतॄणामस्माकं गौरवदोषवत्त्वव्युत्पादनमित्यर्थः । तथा चान्वर्थसंज्ञाज्ञापनरूपप्रमेयाधिक्यलाभरूप-प्रयोजनसद्भावेन गौरवस्येष्टत्वादिति भावः ॥ **समाहितत्वादिति** । प्रयोजनसद्भावमङ्गीकृत्येति शेषः ।

च०— **अवधीर्यतामिति** । धृङ् अनादर इत्यस्य कर्मणि लोटो रूपमेतत् । **प्रतिपत्तिगौरवं न दोषायेति** भीत्वा तादृशप्रयोजनं तिरस्क्रियतामित्यर्थः । **एतेन** लक्षणावधारणोपायस्य च ध्रुवत्वेन ।

सु- ननु तथाऽपि किं तत्त्वम् । यथायथं चतुष्टयमपि । तथा हि । क्वचिल्लक्ष्यातिरिक्तं लक्षणं भवति । यथा गन्धवती पृथिवीति । क्वचिल्लक्ष्यानतिरिक्तम् । यथा पृथिवीत्ववती पृथिवी, यथार्थं प्रमाणमित्यादि । तत्राद्यं लक्ष्यस्वरूपप्रतिपत्तिकारणं भवत् तस्यान्यतो व्यवच्छेदतच्छब्दव्यवहर्तव्यते च प्रतिपादयति । द्वितीयन्तु प्रवृत्तिनिमित्तं भवद्व्यवहारमात्रकारणं भवति । तत्र सिद्धांशेन पक्षीकरणमसिद्धांशेन साध्यत्वं स्वयमूहनीयम् ।

शे० — ननु लक्षणमात्रस्य व्यवहारकारणत्वं व्यावृत्तिकारणत्वं च वक्ष्यमाणरीत्या विरुद्धमेव । तथा प्रमाणत्वादिप्रदर्शनाय तच्चिन्होपदर्शकत्वोक्त्या लक्षणस्य प्रवृत्तिनिमित्तत्वाभावः प्राप्यते प्रमाणशब्दप्रवृत्तिनिमित्तावधारणार्थत्वोक्त्या च तस्य प्रवृत्तिनिमित्तत्वमिति प्राप्यते तदुभयं च विरुद्धमित्येतेषां चतुर्णां पक्षाणां न तात्त्विकत्वं सम्भवतीत्येतेषु कस्यचिदेव तात्त्विकत्वमास्थेयं स कः पक्ष इति भावेन पृच्छति **नन्विति** । ननु चतुर्णामपि पक्षाणां समाहितत्वात्कथं न तत्त्वतेत्यत उक्तं **तथापीति** । समाधानेऽपीत्यर्थः । अतात्त्विकत्वेऽपि प्रौढवादेन समाधानसम्भवान्न तेन तात्त्विकत्वसिद्धिरिति भावः । पक्षचतुष्टयमपीत्येतावन्मात्रेण नोक्तशङ्कानिरास इत्यतो नात्रैकलक्षणाभिप्रायेण पक्षचतुष्टयमभ्युपगम्यते येन विरोधः स्यात्किन्तु कस्यचिल्लक्षणस्य किञ्चिदिति लक्षणभेदेनैव । तथा च कुतो विरोध इत्याशयेनोक्तं **यथायथमिति** । यथायथमित्युक्तमेवोदाहरणनिष्ठत्वेनोपपादयितुमाह **तथा हीति** । किं तदित्यतः शृङ्गिग्राहिकतया दर्शयति **यथेति** । लक्ष्यानतिरिक्तमपि तथा दर्शयति **यथेति** कुत्र लक्षणे किं फलमित्यतस्तद्विविच्य दर्शयति **तत्रेति** ॥ **लक्ष्यस्वरूपेति** । असाधारणधर्मविशिष्टतया लक्ष्यस्वरूपप्रतीतिकारणमित्यर्थः । अत्राद्ये दले साक्षादित्युत्तरदले चार्थादिति पूरणीयम् । लक्षणवाक्यं हि साक्षाल्लक्ष्यस्यासाधारणधर्मसंसर्गं प्रतिपादयदर्थादितरव्यावृत्तिं प्रतिपादयतीति पूर्वग्रन्थानुसारादिति ध्येयम् । उक्तरूपलक्ष्यप्रतीतेः पक्षधर्मताप्रतीतित्वेन व्यवच्छेदाद्यनुमितिकारणतया तत्पूर्वभावित्वमावश्यकमिति दर्शयितुं भवदित्युक्तम् । तथा चातिरिक्तं लक्षणमादावुक्तविधलक्ष्यप्रतीतिमुपजनय्य पश्चादर्थतः कदाचिद्व्यवहारानुमितिं चोपजनयतीत्यर्थः । अनेनातिरिक्तलक्षणे चरमपक्षव्यतिरिक्तं पक्षत्रयमप्यस्तीत्युक्तं भवति । **द्वितीयं त्विति** । अत्रापि प्रवृत्तिनिमित्तावधारणस्य वाच्यताग्रहोपयोगित्वेन पूर्वभावित्वमावश्यकमिति द्योतयितुं भवदित्युक्तम् । ततश्चानतिरिक्तलक्षणं प्रवृत्तिनिमित्तावधारणद्वारा वाच्यताग्रहमु जनयतीत्यर्थः । अनेनानतिरिक्तलक्षणेऽन्त्योपान्त्यपक्षावेव स्त इति सूचितं भवति ॥ **व्यवहारमात्रकारणं भवतीति** ।

ननु स्वरूपं वा तटस्थं वा लक्षणं भेदकं मतम् । 'सजातीयाद्विजातीयात्' इत्युक्तन्यायेन लक्ष्यानतिरिक्तस्य पूर्णगुणत्वादेरितरव्यावृत्तिसाधकत्ववत्तादृशस्य पृथिवीत्वादेरपीतरव्यार्तकत्वाङ्गीकृतौ बाध-

काभावात्पृथिवीतरभिन्ना पृथिवीत्वादिति तेनेतरभेदसाधनदर्शनाच्च कथं लक्ष्यानतिरिक्तलक्षणस्य व्यवहारमात्रकारणत्वाभिधानम् । न च पूर्णगुणत्वादेर्न व्यावर्तकत्वं किन्तु लक्ष्यातिरिक्तधर्मस्यैवेति वाच्यम् । तथा सति ब्रह्मणि तादृशलक्षणाभावेन तस्येतरभेदासिद्ध्यापातात् । स्वरूपस्यापि व्यावर्तकताया जिज्ञासासूत्रीयटीकादौ स्पष्टप्रतिभासेन तदनभ्युपगमे तद्विरोधापाताच्च तत्कथमेनदिति चेदत्राहुः । नात्र लक्ष्यातिरिक्तानतिरिक्तपदाभ्यां लक्ष्यभिन्नत्वाभिन्नत्वे अभिमते । किन्तु लक्ष्यपरपदार्थानन्तर्गतत्वतदन्तर्गतत्वे एव । तथा च गन्धादेर्लक्ष्यपरपदार्थानन्तर्भूतत्वमेव लक्ष्यातिरिक्तत्वम् । पृथिवीत्वादेश्च तदन्तर्भूतत्वाल्लक्ष्यानतिरिक्तत्वम् । ततश्च नोक्तदोषावकाशः । तथा हि । न तावल्लक्ष्यपरपदार्थान्तर्गतस्य व्यावृत्तिकारणत्वे बाधकाभावः । लक्ष्यतावच्छेदकतया पक्षतावच्छेदकभूतस्य पृथिवीत्वस्यैव हेतुत्वाभिधाने व्याप्तिग्रहदशायामेव पक्षतावच्छेदकावच्छेदेन साध्यसिद्ध्याऽनुमानवैयर्थ्यापत्तेरेव तथात्वात् । तदभावादेव च वैवक्षिकलक्ष्यातिरिक्तस्य गन्धवत्त्वादेर्लक्षणस्य व्यावृत्तिकारणत्वोपगमात् । न च व्यतिरेकव्याप्तिरेव तत्र गृह्यत इति नानुमानवैयर्थ्यमिति वाच्यम् । तस्याः साक्षादगमकत्वेनोक्तदोषानिस्तारात् । सत्यत्वादेर्लक्ष्येण ब्रह्मणाऽभिन्नत्वेऽपि लक्ष्यपरब्रह्मपदार्थानन्तर्गतत्वेन वैवक्षिकलक्ष्यातिरिक्तलक्षणतया गन्धवत्त्वादिवद्व्यावर्तकत्वोपपत्त्या द्वितीयदोषस्याप्यनवकाशः । ततश्चोक्तरूपलक्ष्यातिरिक्तत्वानतिरिक्तत्वे गन्धवत्त्वपृथिवीत्वयोर्युक्ते इति । अन्ये त्वत्र लक्षणवाक्येन व्यवहारनिदानत्वेन व्यावृत्तिनिदानत्वेन

---

च लक्षणप्रतीत्यनन्तरं यत्र यत्र लक्षणं पश्यति तत्र तत्र तल्लक्षणवत्त्वेनेतरव्यावृत्तिमपि जानातीति तावदनुभवसिद्धम् । तादृशव्यावर्तकत्वमेव चात्र व्यावर्तकत्वशब्दार्थत्वेनाभिमतम् । तादृशं च व्यावर्तकत्वं स्वरूपातिरिक्तस्यैव लक्षणस्योपपन्नम् । सास्नादिमत्त्वस्य स्वरूपातिरिक्तत्वेन तदवधारणदशायां लक्ष्यव्यावृत्त्यसिद्ध्या तेनापूर्वाया एव व्यावृत्तेर्बोधसम्भवात् । न तु स्वरूपानतिरिक्तस्य । तस्य स्वरूपात्मकत्वेन तदवधारणदशायां स्वरूपस्यापि व्यावृत्ततयाऽवधारितत्वेन तादृशलक्षणस्यापूर्वव्यावृत्तिसाधकत्वाभावात् । तदभिप्रायेण व्यवहारमात्रकारणं भवतीत्युक्तमित्यप्याहुः । अपरे तु पृथिवीत्वज्ञानमात्रेणेतरव्यवच्छिन्नलक्ष्यप्रतीत्यभावाद्गन्धवती पृथिवीति पृथिवीत्वस्य जलादिव्यावृत्तत्वेन ज्ञानोपयोगिना आवश्यकेन गन्धवत्त्वेनैवेतरव्यवच्छिन्नलक्ष्यप्रतीतेर्जातत्वाच्च न लक्ष्यानतिरिक्तलक्षणस्य सजातीयादिव्यवच्छिन्नलक्ष्यस्वरूपप्रतीतिकारणत्वम् । न चैवं तेनैव व्यवहारस्यापि सिद्धेः प्रवृत्तिनिमित्तभूतलक्षणस्य व्यवहारकारणत्वमपि न स्यादिति वाच्यम् । प्रवृत्तिनिमित्तज्ञानस्यापि व्यवहारकारणत्वाभिप्रायेण तदुपपत्तेरिति भाव इत्याहुः । ननु पृथिव्यां पृथिवीशब्दवाच्यत्वसिद्धौ तत्साधने सिद्धसाधनत्वमसिद्धौ च पृथिवीति पक्षीकरणायोग इत्यत इदन्त्वादिना सिद्धेन रूपेण पक्षीकरणादसिद्धेन पृथिवीशब्दवाच्यत्वेन साध्यत्वाददोष इत्याह **तत्रेति** । व्यवहारकारणत्वपक्ष इत्यर्थः ।

स०— लक्षणमात्रस्य व्यावृत्तिकारणत्वं व्यवहारकारणत्वं च वक्ष्यमाणरीत्या विरुद्धं प्रमाणादिना प्रतीयते । तच्चिह्नोपदर्शकत्वोक्त्या लक्षणस्य प्रवृत्तिनिमित्तत्वाभावः प्राप्तः । प्रमाणशब्द-प्रवृत्तिनिमित्तावधारणत्वोक्त्या लक्षणस्याप्रवृत्तिनिमित्तत्वं प्राप्तम् । तदुभयं च विरुद्धम् इत्यतः चतुर्णामपि पक्षाणां न तत्त्वं संभवति । समाधानमात्रं चाभ्युच्चयमात्रेणाप्युपपद्यते । अतः किं तत्त्वमित्याक्षिपति **नन्विति** । उक्तशङ्कापरिहाराय यथायथमित्युक्तम् । तथाच लक्षणभेदेन सर्वेषां पक्षाणां संभवान्न विरोध इति भावः ।

**व्यवहारमात्रकारणं भवतीति** । ननु लक्ष्यानतिरिक्तस्यापि अनन्तगुणपूर्णत्वरूपलक्षणस्य "जिज्ञास्यं जीवाद्भिन्नम् । अनन्तगुणपूर्णत्वात्" इति इतरव्यावृत्तिसाधकत्वस्य दर्शनेन तद्वदेव पृथिवीत्वादिरूपस्य लक्ष्यानतिरिक्तलक्षणस्यापि इतरव्यावर्तकत्वाङ्गीकारे बाधकाभावात् । 'पृथिवीतरभिन्ना पृथिवीत्वात्' इति तेन इतरभेदसाधनदर्शनाच्च कथं लक्ष्यानतिरिक्तलक्षणस्य व्यवहारमात्रकारणत्वाभिधानम् । न चानन्तगुणपूर्णत्वस्य न व्यावर्तकत्वं, किन्तु लक्ष्यातिरिक्तस्यैव तदिति वाच्यम् । तथात्वे ब्रह्मणि तादृशस्य लक्षणस्याभावेन ब्रह्मण इतरभेदासिद्ध्या जिज्ञासायाः कर्तव्यत्वाभावापत्तिः । तत्र स्वरूपभूतस्यैव व्यावर्तकत्वमभ्युपेयम् । उक्तं चैतज्जिज्ञासासूत्रे टीकाकारैरपि । चन्द्रिकाकारैरपि 'स्वरूपं वा तटस्थं वा लक्षणं भेदकं मतम् । सजातीयाद्विजातीयात्तच्चाद्वैतिमते कथम्' । इत्यादिना जन्माधिकरणे तटस्थवत् स्वरूपस्यापि व्यार्तकत्वमुक्तमिति चेन्न । पृथिवीत्वादिरूपस्य स्वरूपलक्षणस्य व्यावृत्त्यकारणत्वेऽपि स्वरूपानतिरिक्तलक्षणमात्रस्य व्यवहारकारणत्वमेव । न तु व्यावृत्तिकारणत्वमिति नियमस्यानभ्युपगतत्वेन अनन्तगुणपूर्णत्वादिरूपलक्षणस्य व्यावर्तकत्वोक्तेरुपपत्तेः । न चैवं तद्वदेव पृथिवीत्वस्यापि व्यावर्तकत्वोपपत्त्याऽवधारणानुपपत्तिरिति वाच्यम् । अनन्तगुणपूर्णत्वादिरूपलक्षणस्य आगमादवगतत्वेन तस्य व्यावर्तकत्वेऽपि पृथिवीत्वादेर्लक्ष्यातिरिक्तलक्षणज्ञाप्यत्वेन लक्ष्यातिरिक्तलक्षणेन च यदा लक्षणं ज्ञायते तदा इदं लक्षणमन्यत्र नास्ति अत्रैवास्तीति अर्थात् व्यावृत्तेरपि बोधितत्वेन स्वरूपभूतस्य व्यावर्तकत्वानुपपत्तेः । न च विनिगमनाभावादागमादवगतस्य व्यावर्तकत्वे अन्यस्यापि तदापत्तिरिति वाच्यम् । 'यः सर्वज्ञः' इत्याद्यागमस्थलक्षणस्य सार्वज्ञादिमात्र-बोधकत्वेन व्यावर्तकत्वानुपपत्त्या तद्बोधितलिङ्गस्य व्यावर्तकत्वोपपत्तेः । अपि च गन्धादिरूपस्य लक्ष्यातिरिक्तलक्षणस्यैव व्यावर्तकत्वेन व्यावृत्तेः प्रकारान्तरेण सिद्धत्वेन पृथिवीत्वादेस्तदभावोपपत्तेः । न चैवं लक्ष्यातिरिक्तस्य व्यवहारहेतुत्वस्यापि सत्त्वेन स्वरूपलक्षणस्यापि व्यवहारहेतुत्वमपि न स्यादिति वाच्यम् । स्वरूपलक्षणस्य प्रवृत्तिनिमित्तत्वेन मुख्यतस्तस्यैव व्यवहारहेतुत्वात् । लक्ष्यातिरिक्तस्य तु लक्षणस्य स्वरूपभूतपृथिवीत्वादिज्ञापकतयैव व्यवहारहेतुत्वेन मुख्यतो व्यवहारहेतुत्वाभावात् । तस्य

स्वरूपलक्षणस्य यत्रागमेन प्रत्यक्षेण वाऽवगमस्तत्र स्वरूपलक्षणस्य व्यवहारहेतुत्वात्, व्यावृत्तिहेतुत्वे विद्यमानेऽपि लिङ्गेन यत्र तदवगमस्तत्रैव स्वरूपलक्षणस्य, व्यवहारहेतुत्वमात्राभिधानात् न कश्चिद्दोष इति ध्येयम् । ननु लक्षणद्वयस्यापि व्यवहारादिकारणत्वमुक्तम् । तत्र च पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादिति प्रयोक्तव्यम । न चैवं संभवति । साध्याविशिष्टत्वात् इत्यत आह **सिद्धांशेनेति** । पृथिवीत्वाधिकरणत्वरूपेणेत्यर्थः । अथवा गन्धवत्त्वरूपेणेत्यर्थः । असिद्धांशेन पृथिवीशब्दवाच्यत्व-रूपेणेत्यर्थः ।

**प०**—एतेनेत्यादिना द्वितीयादिपक्षाणामपि समाधानोक्तिरयुक्ता एकपक्षेणैव चारितार्थ्यादित्यतः सर्वस्योपयोगं शङ्कोत्तराभ्यां व्यनक्ति **नन्वित्यादिना** । लक्षणभेदेन प्रयोजनचतुष्टयमपि व्यनक्ति **लक्ष्येत्यादिना** । अत्र लक्ष्यपदेन लक्ष्यतावच्छेदकविशिष्टधर्मिस्वरूपं गृह्यते । लक्ष्यस्वरूपप्रतिपत्ति-कारणं भवदित्यनेन प्रमाणत्वादिप्रतीतय इति द्वितीयपक्ष उपपादितः । अन्यतो व्यवच्छेद-तच्छब्दव्यवहर्तव्यते चेत्यनेन आद्यतृतीयपक्षौ उपपादितौ ध्येयौ । तत्र लक्ष्यतावच्छेदकविशिष्ट-लक्ष्यस्वरूपप्रतीत्यधीनत्वात् व्यवच्छेदव्यवहारप्रतिपादनस्येति हेतोर्लक्ष्यस्वरूपप्रतिपत्तिकारणं भवदि-त्युक्तम् ॥ **व्यवहारमात्रेति** । मात्रपदेनेतरव्यवच्छेदप्रतिपादनादि व्यावर्त्यते । तथाच पक्षद्वयमने-नोपपादितं भवति । जलादौ सर्वत्र पृथिवीत्वं मन्वानस्य पृथिवीत्वरूपलक्ष्याभिन्नलक्षणेनेतरव्यवच्छेद-बुद्धेरनुदयेन तत्प्रतिपादनासामर्थ्यात् लक्षणस्यैव लक्ष्यतावच्छेदकतया तयोर्भेदाभावेन प्रमाणत्वादिप्रति-पत्तय इति पक्षस्याप्यनवकाशादिति भावः । नन्वियं पृथिवी पृथिवीशब्दवाच्येत्यनुमानप्रयोगे सिद्ध-साधनता स्यादित्यत आह **तत्र सिद्धांशेनेति** । पृथिवीत्वं पृथिवीपदप्रवृत्तिनिमित्तमिति, इयं पृथिवीत्व-धर्मवत्त्वात् पृथिवीति व्यवहारभाजनमित्यादिरूपेण प्रयोक्तव्यमित्यर्थः ।

**या०**— चतुर्णां पक्षाणामेकत्रासंभवादेकस्वीकारे कः पक्षोऽभिमत इति पृच्छति **नन्विति** ॥ **यथार्थमिति** । लक्षणभेदेनावस्थाभेदेन चेत्याशयः। एतदेव दर्शयति **तथा हीत्यादिना**। अवस्थाभेदमप्यग्रे दर्शयिष्यति **लक्ष्यातिरिक्तमित्यादि** । अत्र लक्ष्यातिरिक्तत्वं लक्ष्यवाचकशब्दार्थान्तर्भूतत्वाभावरूपं तदनतिरिक्तत्वं च लक्ष्यवाचकशब्दान्तर्भूतत्वरूपं विवक्षितमित्यवगन्तव्यम् ॥ **लक्ष्यस्वरूपप्रतिपत्तीति** । लक्ष्यतावच्छेदकविशिष्टलक्ष्यस्वरूपप्रतीतिकारणमित्यर्थः । अनेन द्वितीयपक्ष उपपादित इति ध्येयम् । तथा चातिरिक्तं लक्षणमुक्तलक्ष्यप्रतीतिं जनयत्कदाचिद्व्यवच्छेदानुमितिं कदाचिद्व्यवहारानुमितिं च करोतीत्यर्थः । अनेनातिरिक्तलक्षणे चरमपक्षातिरिक्तं पक्षत्रयमुपपादितं चरमपक्षस्य तु तत्र नावकाशः । गन्धादेः पृथिव्यादिशब्दार्थान्तर्गत्यभावेन तत्प्रवृत्तिनिमित्तत्वासंभवादित्याशयः ॥ **द्वितीयं त्विति** । अत्रापि प्रवृत्तिनिमित्तावधारणस्य वाच्यताग्रहोपयोगित्वेन प्रथममावश्यकत्वद्योतनाय भवदित्युक्तम् । तथा

चानतिरिक्तलक्षणेऽभिहिते प्रथमं प्रवृत्तिनिमित्तावधारणं भवति, पश्चात्तेन वाच्यताग्रहो भवतीत्याशयः। अनेनानतिरिक्तलक्षणे अन्त्योपान्त्यपक्षावेवोपपादिताविति ज्ञातव्यम् ॥ **व्यवहारमात्रेति**। मात्रपदेनाद्यपक्षद्वयस्य तत्र व्यावर्तितत्वात्। यस्य हि सजातीयं जलादिद्रव्यं, विजातीयं गुणकर्मादिकं सर्वं पृथिव्येवेति बुद्धिः तं प्रति तद्व्यवच्छिन्नलक्ष्यप्रतीतिजनकं लक्षणं वाच्यम्। अन्यथाऽनाकाङ्क्षिताभिधानत्वेनासङ्गतिप्रसङ्गात्। तादृशं च गन्धवत्त्वादिकमेव न पृथिवीत्वम्। तस्यातिप्रसक्ततया परेण ज्ञातत्वात्। अतो नाद्यपक्षस्यात्रावकाशो नापि द्वितीयस्य। पृथिवीत्वरूपलक्ष्यतावच्छेदकविशिष्टलक्ष्यप्रतीतये पृथिवीत्वस्यैवाभिधाने आत्माश्रयत्वप्रसङ्गात्। अतश्चरमपक्षद्वयस्यैवात्रावकाश इति तदेवोपपादितम्। यद्यपि जगज्जन्मादिहेतुत्वरूपब्रह्मस्वरूपलक्षणस्यापि सजातीयजीवादिव्यावर्तकत्वं जन्माधिकरणे प्रतिपादितं, तथाऽपि तत्र ब्रह्मशब्दार्थान्तर्गतलक्षणं ब्रह्म जगत्कारणमिति सहप्रयोगात्। पृथिवीत्वादिकं तु पृथिव्यादिशब्दार्थान्तर्गतमेव। अत एतादृशस्वरूपलक्षणे उक्तरीत्या व्यवच्छेदकता नास्तीति न कोऽपि विरोध इति। पृथिवी इतरभिन्ना पृथिवीत्वादित्यादिप्रयोगास्तु नास्मत्सम्मता इत्याशयः। ननु पृथिवीशब्दवाच्यत्वं पृथिव्यां सिद्धं, न वा। आद्ये तत्र तच्छब्दवाच्यतासाधने सिद्धसाध्यता, द्वितीये पृथिवीति पक्षीकरणमनुपपन्नमित्यत आह **तत्र सिद्धांशेनेति**। विवादाध्यासितेति वा इयमिति वा पक्षीकरणमित्यर्थः ॥ **असिद्धेनेति**। पृथिवीशब्दवाच्यत्वरूपेणेत्यर्थः ॥

---

**श्री० — व्यवहारमात्रकारणं भवतीति**। नेतरव्यावृत्तिबोधहेतुर्भवतीत्यर्थः। नन्विदमयुक्तम्। जगज्जन्मादिकारणत्वरूपस्वरूपलक्षणस्यापि व्यावृत्तिहेतुताया जन्मादिसूत्रे कथितत्वात्। यथोक्तम् 'अतो जीवैक्यमपि स निराचक्रे जगद्गुरुरि'ति। अतः कथमेतदिति चेत्। उच्यते जगत्कारणत्वं न ब्रह्मशब्दार्थान्तर्गतं लक्षणम्। तादृशं तु पूर्णत्वमेव। पृथिवीत्वं तु तच्छब्दान्तर्गतम्। जातौ शक्तिरिति मते जातिविशिष्टायां व्यक्तौ शक्तिरिति मते च पृथिवीत्वं पृथिवीस्वरूपमित्यस्मन्मते च पृथिवीत्वस्य पृथिवीशब्दार्थान्तर्गतत्वात्। यदा इतरभेदः पृथिव्यां सन्दिग्धः तदा पृथिवीत्वमेव सन्दिग्धं जातम्। तथा च पृथिवीतरभिन्ना पृथिवीत्वादित्यत्र कथं तस्य हेतुत्वम्। अनिश्चितत्वादतस्तच्छब्दान्तर्गतस्य स्वरूपलक्षणस्य न व्यावृत्तिहेतुत्वमित्यभिप्रायः। तच्छब्दानन्तर्गतस्य स्वरूपलक्षणस्य सास्नादिमत्त्वादेर्भवत्येव व्यावृत्तिबुद्धिहेतुत्वम्। तत्रोक्तदोषाभावादित्यवधेयम् ॥

**च० — लक्ष्यातिरिक्तमिति**। लक्ष्यातिरिक्तत्वं लक्ष्यवाचकशब्दशक्तिग्रहाविषयत्वरूपम् तदनतिरिक्तत्वं च तादृशशक्तिग्रहविषयत्वरूपं द्रष्टव्यम्। **लक्ष्यस्वरूपेति** लक्ष्यतावच्छेदकोपरागेण लक्ष्यस्वरूपगोचरप्रतीतिकारणमित्यर्थः।

सु० — ननु लक्षणं व्यावृत्तं व्यावर्तयत्युताव्यावृत्तम् । आद्ये स्वव्यावृत्तिर्लक्षणान्तराधीना न वा । न प्रथमः । तत्रापि लक्षणापेक्षायामनवस्थापातात् । न द्वितीयः । लक्ष्येऽपि तत्प्रसङ्गात् । निर्निमित्तकार्याभ्युपगमे कादाचित्कताऽनुपपत्तेश्च । नान्त्यः । अतिप्रसङ्गादेवेति । उच्यते । लक्षणमपि व्यावृत्तमेव व्यावर्तयति । तदपि लक्षणेनैव । न चैवमनवस्था । प्राङ्निर्ज्ञातेष्वर्थेषु व्यवस्थानात् । यस्तु काष्ठलोष्ठायितः कश्चित्पदार्थं वा कस्यचित्किञ्चिच्छब्दवाच्यत्वं वा न वेत्ति नासौ लक्षणशास्त्रेऽधिक्रियते । किन्नामोपदेशादिना विदितपदतदर्थसङ्गत्यादिः स्वतन्त्रव्यवहाराद्यर्थं लक्षणमपेक्षत इति ।

शे०—प्रकारान्तरेण व्यावृत्तिबुद्धिजनकत्वाभावं लक्षणस्य शङ्कते **नन्विति** व्यावृत्तमिति व्यावृत्तत्वेन ज्ञातं सदित्यर्थः । लक्षणं स्वयं व्यावृत्तं सलक्ष्यं व्यावर्तयतीति कल्पमपि विकल्पयति **आद्य इति** । न वेति द्वितीयपक्षेऽप्यन्याधीनत्वमङ्गीकृत्य लक्षणान्तराधीनत्वमात्रं नाभिप्रेतं किंवाऽन्याधीनत्वमेव नाभिप्रेतमिति विकल्पं मनसि निधाय क्रमेण दूषयति **लक्ष्येऽपीति** । लक्षणेन विनाऽपि लक्षणस्य व्यावृत्तिवत् तेन विनैव लक्ष्यस्यापि व्यावृत्तेः सम्भवाल्लक्षणोक्तिवैयर्थ्यमित्यर्थः । अव्यावृत्तमेव लक्षणं लक्ष्यं व्यावर्तयतीति द्वितीयं दूषयति **नान्त्य इति ॥ अतिप्रसङ्गादेवेति** । व्यावृत्तत्वेनाज्ञातस्यापि लक्षणस्य लक्ष्यव्यावृत्तिप्रतिपादकत्वे व्यावृत्तत्वेनाज्ञातस्य लक्ष्यस्यैव स्वव्यावृत्तिहेतुत्वं स्यादित्यतिप्रसङ्गादेवेत्यर्थः । यद्वा पशुत्वादिधर्माणामपि गवि अगोव्यावर्तकत्वप्रसङ्गादेवेत्यर्थः । लक्षणान्तरेण व्यावृत्तस्यैव लक्षणस्य लक्ष्यव्यावृत्तिप्रत्यायकत्वमभ्युपेत्यानवस्थां परिहरति **उच्यत इति** । व्युत्पन्नपदपदार्थसंसर्गादिकस्य तत्रैवाकाङ्क्षाविच्छेदान्नानवस्थेति भावः । अनेतादृशस्य जडप्रायस्य लक्षणान्तरापेक्षा विद्यत इत्यनवस्था स्यादित्यत आह **यस्त्विति** । कस्य तर्हि लक्षणशास्त्रेऽधिकार इत्याशङ्कते **किन्नामेति** ॥ परिहरति **उपदेशादिनेति** । ननु व्युत्पन्नस्य लक्षणमन्तरेणैव लक्ष्यावधारणसम्भवान्नार्थो लक्षणेनेत्यत आह **स्वतन्त्रेति** । योऽसौ अधिक्रियत इति सम्बन्धः ।

स० — न वेति द्वितीयपक्षेऽपि अन्याधीनत्वमभ्युपेत्य लक्षणाधीनत्वं नास्तीत्यभिप्रेतं किं वा अन्याधीनत्वमेव नास्तीति विकल्पं मनसि निधाय क्रमेण दूषयति **लक्ष्येत्यादिना । तदपि लक्षणेनैवेति** । एतच्च लिङ्गेन यत्र लक्षणावगमस्तदभिप्रायेणैव, न तु लक्षणस्य तन्मात्रवेद्यत्वम् । आगमादिनाऽपि तदवगमादिति ध्येयम् ।

प० — **कादाचित्कतेति** । कार्यं पूर्वेद्युर्नोत्पन्नमद्य तदुत्पन्नमिति यत्कादाचित्कत्वं कार्यस्यास्ति तन्न स्यात् । तद्धि सामग्रीमेलनरूपनिमित्तस्य यद्दशायां सत्त्वं तदाहि कार्यमिति कादाचित्कत्वं निर्बाधम् । निर्निमित्ततापक्षे तु यदा कार्योत्पत्तिरपेयते ततः प्रागपि कार्यं स्यादिति भावः ॥ अति-

**प्रसङ्गादेवेति** । तत् द्रव्यत्वाद्यपि घटात्पटं व्यावर्तयेदिति भावः ॥ **प्राङ्निर्ज्ञातेष्विति** । उपदेशादिनेति भावः । यथा गोः सास्नादिमत्त्वं लक्षणं सास्नादिकं चेदं सास्नेत्युपदेशादिना इतरव्यावृत्ततया निर्ज्ञातमिति नानवस्थादोष इति । **काष्ठलोष्ठायितः** काष्ठलोष्ठादिवत् विद्यमानः । तस्य विवरणं कश्चिदित्यादि । कस्तर्ह्यधिकारीति पृच्छति **किं नामेति** । उत्तरयति **उपदेशादिनेति** । सोऽधिक्रियत इति योज्यम् ।

**या०— अतिप्रसङ्गादिति** । पशुत्वादिधर्माणामपि गवि अगोव्यावर्तकत्वप्रसङ्गादेवेत्यर्थः ॥ **प्राङ्निर्ज्ञातेष्विति** । वैद्यकादौ रोगादिलक्षणवद्व्याकरणादौ शब्दादिलक्षणवच्चेत्यर्थः । क्वचिन्मानान्तरेण ज्ञातो धर्मो लक्षणतयोपदिश्यत इति भावः । लक्षणमपेक्षत इति योऽसावधिक्रियत इति योजना ।

**श्री०— व्यावृत्तमिति** । स्वयमन्येन व्यावृत्तं सदित्यर्थः । **स्वव्यावृत्तीति** । स्वस्मिंल्लक्षणे व्यावृत्तीत्यर्थः । **तत्रापि** लक्षणेऽपि । व्यावृत्तिज्ञानार्थमितिशेषः ॥ **लक्ष्येऽपीति** । यथा लक्षणे व्यावृत्तिः न लक्षणान्तराधीना, एवं लक्ष्येऽपीतरव्यावृत्तेर्लक्षणान्तरानधीनत्वप्रसङ्गेन लक्षणस्य वैयर्थ्यमेव स्यादित्यर्थः ॥ **निर्निमित्तेति** । व्यावर्तकरूपनिमित्ताभावेऽपीत्यर्थः ॥ **कार्येति** । व्यावृत्तिरूपेत्यर्थः ॥ **कादाचित्कतेति** । व्यावृत्तिरूपकार्यस्येति शेषः । ततश्च सदा व्यावृत्तिबोधः स्यादित्यर्थः । **व्यावृत्तमेव** व्यावृत्तं सदेव ॥ **लक्ष्येऽपीति** । व्यावृत्तेर्लक्षणानधीनत्वप्रसङ्गादित्यर्थः । **तदपि** व्यावृत्तत्वमपि । **प्रागिति** । लक्ष्ये व्यावृत्तिर्लक्षणाधीना तल्लक्षणेऽपि व्यावृत्तिर्लक्षणाधीनेत्येवं किञ्चिद्दूरं गत्वा कस्मिंश्चिल्लक्षणे व्यावृत्तिर्न लक्षणान्तराधीना, किन्तु तल्लक्षणं प्रत्यक्षसिद्धमेव भविष्यति । तत्र व्यावृत्तिरपि प्रत्यक्षेणैव ज्ञायत इति नानवस्थेति भावः । **निः** नितराम् । येन किमपि प्रत्यक्षेण न ज्ञातं तं प्रति कथं दोषपरिहार इत्यत आह **यस्त्विति** ॥ **स्वतन्त्रेति** । स्वयमेव सर्वत्र व्यवहारार्थमित्यर्थः ।

सु— **अथाऽपि स्यात्** । **किमवगतं लक्षणं फलहेतुः, किंवाऽनवगतम् । न तावच्चरमः । तदभिधानवैयर्थ्यप्रसङ्गात । अभिधानस्य ज्ञानोत्पादनो(पयोगि)पायत्वात् । तस्य चानवगतस्यैव फलसाधनत्वाभ्युपगमात् । आद्ये किमन्यस्मात्तदवगम उत त्वदीयाल्लक्षणवाक्यात् । यद्यन्यस्मात् । कृतममुना लक्षणाभिधानप्रयासेन । अभिधानस्य ज्ञानोत्पादातिरिक्तप्रयोजनाभावात् । तस्यान्यत एव सिद्धेः । अन्त्ये किमिदं त्वदभिधानमाप्तोपदेशतया लक्षणं बोधयत्युत लिङ्गादिभावेन । न तावच्चरमः । त्वद्वचनलक्षणाविनाभावादेर्दर्शयितुमशक्यत्वात् । नापि प्रथमः । परं प्रति भवत्याप्तत्वासिद्धेः । सिद्धौ हि प्रतिज्ञामात्रादेव साध्यसिद्धेर्हेत्व(द्य)भिधानमनर्थकं स्यात् ।**

ननु प्रतिवादिनं प्रति लक्षणाभिधानं नार्थवत् । तेन वाद्याप्तभावानङ्गीकारात् । किन्तु शिष्यार्थं लक्षणमुच्यते शास्त्रे । स हि सर्वस्य शास्त्रस्य कर्तारमाप्तमेव मन्यते । तस्माच्छिष्यं प्रत्याप्तवचनतयैव लक्षणवाक्यमर्थं प्रतिपादयिष्यतीति । मैवम् । यदि न प्रतिवादिनं प्रति शास्त्रं किन्तु शिष्यं प्रति तदा प्रतिज्ञामात्रादेवाप्तवचनाच्छिष्यस्यार्थनिश्चयोपपत्तेर्हेत्वाद्यभिधानमनर्थकतामापन्नं शास्त्रे ॥ अथ भवतु प्रतिवादिनमपि प्रति (तच्छा)शास्त्रवाक्यं यत्र हेत्वाद्युपात्तम्; लक्षणवाक्यं तु शिष्यमेव प्रति प्रयोजकं प्रतिपन्नशास्त्रकाराप्तभावमिति मन्यसे । तदप्यनुपपन्नम् । शास्त्रान्तरसाध्यत्वादस्यार्थस्य । अस्ति हि समयग्राहकं शास्त्रं मुनिभिः प्रणीतं नामलिङ्गानुशासनव्याकरणादीति ।

अत्र ब्रूमः । उक्तं ह्येतदवगतमेव लक्षणं फलहेतुरिति । तदवगमश्च यथायथं प्रत्यक्षादिप्रमाणादित्यपि । न च यथार्थं प्रमाणमिति सास्नादिमान्गौरिति वाक्यस्य लक्षणं प्रतिपाद्यमभ्युपगच्छामः । येनान्यतः सिद्धत्वात्तस्येदमनर्थकं स्यात् । किन्तु यो लक्षणमन्यतो जानाति, न जानाति च व्यवहारनिदानत्वादिना; तं प्रति तदवबोधायेदं वाक्यम् । तथा हि । अयं गौरित्याद्युपदेशादिनैकस्यां व्यक्तौ गोशब्दार्थतयाऽवगतायां किमियमेव व्यक्तिः (एवम्) उतान्याऽपीति जिज्ञासमानं प्रत्यन्यत्रापि गोशब्दार्थतां विजिज्ञापयिषुरुपदेशादेरानन्त्यादिना कर्तुमशक्यत्वादिदं व्याप्तिविषयं वाक्यमाह 'यः सास्नादिमान्स गोशब्दार्थ' इति । इदं च नाप्तोपदेशतयैव व्याप्तिबोधकम् । अपि तु प्रयोगान्तरवत्प्रतीताया व्याप्तेः स्मारकत्वेन । अप्रतीतायास्तु तदेव जिज्ञासाजननद्वारेण प्रमोत्पादकत्वेनोपयुज्यते । स्मृतव्याप्तिश्च यां यां व्यक्तिं सास्नादिमतीमवलोकयति । तां तां गोशब्दार्थतयाऽनुमिनोतीति को दोषः ।

यद्वा यः पृथिवीति पदं वा व्यक्तिविशेषस्य तदर्थतां वाऽवगच्छंस्तत्प्रवृत्तिनिमित्तं जिज्ञासते तं प्रति पृथिवीत्ववती पृथिवीति पृथिवीत्वं पृथिवीशब्दप्रवृत्तिनिमित्तमुच्यते । तत्र यस्य वक्तर्याप्तबुद्धिः स तावता सन्तुष्यति । अपरं प्रति त्वव्याप्त्यादिशून्यत्वादिति वाक्यशेषः प्रवर्तते ।

अथवाऽस्ति गौर्नामार्थ इति विदितवतो यत्र तत्र गवि घटादावश्वादौ च गोबुद्धौ प्रसक्तायां गोः स्वरूपावधारणमुखेनेतरव्यवच्छेदं कुर्वत्सास्नादिमानेव गौर्न तु तद्विरही घटादिरश्वादिर्वेति वाक्यं प्रयुज्यते । इदमपि पूर्ववदाप्तत्वावधारणानवधारणाभ्यां द्वयीं गतिमवलम्बत इति किमत्रानुपपन्नम् ।

**शे०** — लक्षणप्रणयनस्यार्थवत्त्वं विधान्तरेणाक्षिपति **अथाऽपीति**। याथार्थ्यादिकं लक्षणं स्वयं ज्ञातमितरेभ्यो व्यवच्छेदादिज्ञानहेतुरुत सत्तामात्रेणेति विकल्पार्थः। बहुवक्तव्याभावाद्द्वितीयकल्पमेव **दौ** दूषयति **नेति**। अनवगतलक्षणस्य लक्ष्यव्यवच्छेदप्रतीतिहेतुत्वे लक्षणाभिधानवैयर्थ्यप्रसङ्गादिति हेतुमाह **तदिति**। तदेव कुत इत्यत आह **अभिधानस्येति**। अस्तु तर्हि ज्ञानोत्पादकत्वेनेदं लक्षणं सार्थकमित्यत आह **तस्य चेति**। तस्य लक्षणस्यानवगतस्यैव व्यावृत्तज्ञानहेतुत्वान्न तदभिधानस्य प्रयोजनमित्यर्थः। अवगतं तर्हि तत्फलहेतुरिति प्रथमकल्पमाशङ्क्य पराकर्तुं विकल्पयति **आद्य इति**। प्रमाणान्तराल्लक्षणावगमपक्षं दूषयति **यदीति**। अन्यतो लक्षणावगममात्रेण लक्षणप्रणयनवैयर्थ्यं कुत इत्यत आह **अभिधानस्येति**। वाक्यप्रयोगस्य परप्रत्यायनार्थत्वादिति भावः। लक्षणज्ञानस्य साधनान्तरायत्ततयाऽनन्यसाधनत्वाभावान्नाभिधानप्रयोजनत्वमित्याह **तस्येति**। लक्षणाभिधानमनर्थकमित्यर्थः। प्रणेतृवचनादवगम्यते लक्षणमिति चरमकल्पमाशङ्क्य विकल्पयति **अन्त्य इति**। चरमकल्पं बुद्धिस्थत्वादादौ दूषयति **नेति**। हेतुमाह **तद्दिति**। तद्वचनस्य लक्षणेन सहाविनाभावस्य दर्शयितुमशक्यत्वान्न लिङ्गतया बोधकत्वं, नाप्यर्थापत्तितया तदन्तरेणानुपपत्त्यभावात्, नाप्युपमानादितया सादृश्यादेर्दर्शयितुमशक्यत्वादित्यर्थः। आप्तोपदेशतया तर्हि मद्वाक्यं लक्षणबोधकमिति प्रथमं निषेधति **नापीति**। हेतुमाह **परं प्रतीति**। उक्तमेव व्यतिरेके दण्डप्रदर्शनेन समर्थयते **सिद्धौ हीति**।

---

कथायां प्रतिवादिना वादिनं प्रति लक्षणं प्रणीयत इत्येव नेष्यत येनेयमुक्तदोषपरम्परा स्यादिति चोदयति **नन्विति**। कुतो नार्थवदित्यत आह **तेनेति**। आप्तवाक्यतयाऽनुमानतया वा लक्षणवाक्यस्य लक्ष्यप्रमापकत्वायोगादित्यर्थः। कस्य तर्हि लक्षणतो बोधनमित्यत आह **नन्विति**। शिष्यार्थे लक्षणप्रणयनमित्यस्मिन्पक्षे को लाभ इत्यत आह **स हीति**। तं च प्रतिलक्षणवाक्यमनुमानत्वेनाबोधकमप्याप्तवाक्यतया बोधकमित्याह **तस्मादिति**। हेतुदृष्टान्तादिकथनानुपपत्त्या वादिनं प्रत्येव शास्त्रं न शिष्यं प्रतीति परिहरति **मैवमिति**। हेत्वाद्यभिधानलक्षणप्रणयनयोरर्थवत्त्वमापादयितुं शास्त्रे द्वैराश्यमाशङ्कते **अथेति**। न वयं सर्वं शास्त्रं शिष्यार्थं ब्रूमः किन्तु लक्षणवाक्यांशं तस्य तं प्रति लक्ष्यप्रमितिजनकत्वात्। यश्च शास्त्रांशो हेत्वाद्यभिधानसहितः स वादिनं प्रति, तेन न कश्चिद्दोष इत्यर्थः। न भवच्छास्त्रस्य समयग्रहणत्वमर्थस्तस्यान्यत एव सिद्धेरिति परिहरति। तादृशं शास्त्रान्तरमेव नास्तीत्यत आह **सन्ति हीति**। **समयः** सङ्गतिः। **नामानुशासनम्** अभिधानग्रन्थः। **लिङ्गानुशासनं** वररुच्यादि। तस्मिन्नर्थेऽयं शब्दः साधुरित्याद्याकारेण लिङ्गानुशासकत्वात्समयग्राहकत्वमप्यस्तीति भावेन तद्ग्रहणम्। व्याकरणादीत्यादिपदेन निगमादिपरिग्रहः।

समाधानाभिधानं प्रतिजानीते अत्रेति । निरवद्यत्वात्प्रथमं पक्षं परिगृह्णाति उक्तमिति । नत श्चानवगतपक्षोक्तदोषोऽनङ्गीकारपराहत इति भावः । नन्वत्रापि दोषोऽभिहितः । किमन्यस्मात्तदवगम उत त्वदीयाल्लक्षणवाक्यादित्यतः प्रथमं पक्षं परिगृह्णाति तदवगमश्चेति । नन्वेवं लक्षणस्य प्रत्यक्षादि सिद्धत्वात्तदभिधानवैयर्थ्यमित्यत आह न चेति । तर्ह्यनवगतस्यावगन्तव्यस्य असत्त्वात्तदभिधानवैयर्थ्य-मिति शङ्कते किन्त्विति । लक्षणाभिधानस्य न लक्षणस्वरूपज्ञानं प्रयोजनं येनान्यतस्तत्सिद्धावभिधान-वैयर्थ्यं स्यात् अस्य चाप्तवाक्यत्वेनाबोधकत्वं स्यात् अपि त्वन्यदेव व्यवहारादिनिदानत्वज्ञानं प्रयोजन मित्याशयेन परिहरति य इति । यथार्थत्वं प्रमाणव्यवहारहेतुरिति न जानातीत्यर्थः । आदिपदेन प्रागुक्तस्येतरपक्षत्रयस्य संग्रहः । कथं लक्षणवाक्येन लक्षणस्य व्यवहारनिदानत्वादिकं बोध्यत इत्यतो व्यवस्थया तद्दर्शयितुमाह तथा हीति । उपदेशादिनैवैतत्फलसिद्धिसम्भवात्किं लक्षणेनेत्यत आह उप-देशादेरिति । आदिपदेन शृङ्गग्रहणादिना प्रदर्शनादिपरिग्रहः । आनन्त्यादिनेत्यादिपदेन व्यभिचार परिग्रहः । नन्वेतद्वाक्यमनुमानतया व्याप्तिं बोधयति किंवाऽऽप्तवाक्यतया । आद्येऽनवस्था द्वितीये त्वसम्भवो वादिन आप्तत्वासिद्धेरित्याशङ्क्याह इदं चेति । तर्हि प्रकारान्तरासम्भवेन तद्वैयर्थ्यमित्या-शङ्क्य प्रकारद्वयेन तत्सार्थक्यमाह अपि त्विति ॥ प्रयोगान्तरवदिति । यो धूमवानसावग्निमानिति कथायां प्रतिवादिनं प्रति वादिना क्रियमाणप्रयोगवदित्यर्थः । एकसम्बन्धिदर्शनमपरसम्बन्धिस्मारकमिति न्यायाद्व्याप्त्यादिविषयशब्ददर्शने वादिना पूर्वानुभूतव्याप्तिपदार्थः स्मार्यते तत्स्मारकत्वेन वाक्यस्यार्थवत्त्व-मित्याशयः । भवत्वेवं पूर्वप्रतिपन्नव्याप्तिविषये । यत्र पुनरप्रतिपन्नव्याप्तिविषयकमेव व्याप्तिवाक्यं प्रयुज्यते तत्र कथं स्मारकत्वमित्यत आह अप्रतीतायास्त्विति । वादिना प्रयुक्तं वाक्यमुपश्रुत्य प्रति-वादिनो जिज्ञासा जायते किमनेन साधनमुपन्यस्तमिति । जिज्ञासमानस्य च तत्साधकप्रमाणप्रवृत्त्या व्याप्तिप्रमोत्पत्तिः स्वात्मनीति प्रमोत्पादकमिति कृत्वा न तद्वैयर्थ्यमिति भावः ।

इदानीं लक्ष्यानतिरिक्तलक्षणप्रतिपादकवाक्यस्य प्रवृत्तिनिमित्तावधारकत्वमुपपादयति यद्वेति । वाक्यस्य प्रवृत्तिनिमित्तत्वबोधकत्वं किमाप्तवाक्यतया किंवाऽनुमानत्वेनेत्यतः पुरुषभेदेनोभयथाऽपीत्याह तत्रेति ।

लक्ष्यातिरिक्तलक्षणप्रतिपादकवाक्यस्यैव सजातीयादिव्यवच्छेदेन लक्ष्यस्वरूपावधारकत्वं प्रागुक्त-मुपपादयति अथवेति ॥ द्वयीं गतिमिति । यस्य वक्तर्याप्तिबुद्धिः स तावता सन्तुष्यति । अपरं प्रति स्वव्याप्त्यादिशून्यत्वादिति वाक्यशेषः प्रवर्तत इति द्वयीं गतिमित्यर्थः ।

स०— अधिकं वक्तुम् उक्तमेव पुनरनुवदति अथापि स्यादिति । किमिति । यथा-वस्थितज्ञेयविषयीकारित्वरूपं लक्षणं स्वयं ज्ञातमितरेभ्यो व्यवच्छेदज्ञानहेतुः उत सत्तामात्रेणेति विकल्पार्थः ।

द्वितीयं कल्पमादौ दूषयति **नेति** । अनवगतलक्षणस्य लक्ष्यव्यवच्छेदप्रतीतिहेतुत्वे लक्षणाभिधानवैयर्थ्यप्रसंगादिति हेतुमाह **तदिति** । तदेव कुत इत्यत आह **अभिधानेति** । अस्तु तर्हि ज्ञानोत्पादकत्वेन लक्षणस्य लक्ष्यव्यवच्छेदप्रतीतिहेतुत्वं इत्यत आह **तस्य चेति** । तस्य लक्षणस्यानवगतस्यैव व्यावृत्तिज्ञानहेतुत्वात् न तदभिधानस्य प्रयोजनमित्यर्थः । अवगतं तर्हि तत्फलहेतुरिति प्रथमकल्पमाशङ्क्य पराकर्तुं विकल्पयति **आद्य इति** । प्रमाणमन्तरा लक्षणावगमपक्षं दूषयति **यदीति** । अन्यतो लक्षणावगममात्रेण लक्षणप्रणयनवैयर्थ्यं कुत इत्यत आह **अभिधानस्येति** । वाक्यप्रयोगस्य परप्रत्ययार्थत्वादिति भावः । लक्षणज्ञानस्य साधनान्तरायत्ततया तत्साधनत्वाभावान्नाभिधानप्रयोजनत्वमित्याह **तस्येति** । लक्षणाभिधानम् अनर्थकमित्यर्थः । प्रणेतृवचनादवगम्यते लक्षणमिति चरमकल्पमाशङ्क्य विकल्पयति **अन्य इति** । चरमकल्पं बुद्धिस्थत्वादादौ दूषयति **नेति** । हेतुमाह **त्वदिति** । त्वद्वचनस्य याथार्थ्यरूपलक्षणाविनाभावस्य दर्शयितुमशक्यत्वान्न लिङ्गतया बोधकत्वम् । नाप्यर्थापत्तितया । तदन्तरेणानुपपत्त्यभावात् । नाप्युपमानादितया । सादृश्यस्य दर्शयितुमशक्यत्वादित्यर्थः । आप्तोपदेशतया तर्हि मद्वाक्यं लक्षणबोधकमिति प्रथमं प्रतिषेधति **नापीति** । कुतो नैवमित्यत आह **परं प्रतीति** । उक्तमेव व्यतिरेकदण्डप्रदर्शनेन द्रढयति **सिद्धौ हीति** ।

कथायां प्रतिवादिना वादिनं प्रति लक्षणं प्रणीयत इत्येवं नेष्यते येनेयमुक्तदोषपरम्परा स्यादिति चोदयति **नन्विति** । कुतो नार्थवत् इत्यत आह **तेनेति** । आप्तवाक्यतया अनुमानतया वा लक्षणवाक्यस्य लक्ष्यप्रमापकत्वायोगादित्यर्थः । कस्य तर्हि लक्षणतो बोधनमित्यत आह **किन्त्विति** । शिष्यार्थं लक्षणप्रणयनमित्यस्मिन्पक्षे को लाभ इत्यत आह **स हीति** । तच्च लक्षणवाक्यमनुमानत्वेनाबोधकमपि आप्तवाक्यतया बोधकमित्याह **तस्मादिति** । हेतुदृष्टान्तादिकथनानुपपत्त्या वादिनं प्रति शास्त्रप्रणयनं न शिष्यं प्रतीति परिहरति **नैवमिति** । हेत्वाद्यभिधानलक्षणप्रणयनयोरर्थवत्त्वमापादयितुं शास्त्रोद्देश्यमाशङ्कते **अथेति** । न वयं सर्वशास्त्रं शिष्यार्थं ब्रूमः । किन्तु लक्षणवाक्यांशम् । तस्य तं प्रति लक्ष्यप्रमितिप्रयोजकत्वात् । यः शास्त्रांशो हेत्वाद्यभिधानसहितः स वादिनं प्रति । तेन न कश्चिद्दोष इति भावः । तर्कशास्त्रस्य न समयग्राहकत्वमर्थः । तस्यान्यत एव सिद्धेरिति परिहरति **तदिति** । तादृशं शास्त्रान्तरमेव नास्तीत्यत आह **अस्तीति** । **नामानुशासनम्** अभिधानग्रन्थः ।

लक्ष्यातिरिक्तलक्षणस्य व्यवहारहेतुत्वमुपपादयति **तथा हीति** । उपदेशादेरित्यादिपदेन वृद्धव्यवहारपरामर्शः । आनन्त्यादेरित्यनेन च व्यभिचारस्येति ज्ञेयम् । उपदेशस्याशक्यत्वे व्यक्त्यानन्त्यं हेतुः । आदिशब्दोक्तव्यभिचारस्तु वृद्धव्यवहारेण तदसंभवे । तत्र च वृद्धव्यवहारस्य नियतैकव्यक्तिविषयत्वाभावो व्यभिचारपदेनोक्त इति भावः ॥ **जिज्ञासाजननद्वारेणेति** । किमनेन साधनमुक्तं भवति

इत्येवं जिज्ञासाजननद्वारेणेत्यर्थः ॥ **प्रमोत्पादकत्वेनेति** । अत्र प्रमाणशब्दस्य करणसाधनत्वं भावसाधनत्वं चाभिप्रेतम् । तथाच लिङ्गानुसन्धानरूपप्रमाणस्य तत्साध्यप्रमितेश्चोत्पादकत्वेनेत्यर्थः । स्वरूपानतिरिक्तस्य व्यवहारकारणत्वमुपपादयति **यद्वेति** । लक्ष्यातिरिक्तस्य व्यावृत्तिहेतुत्वमुपपादयितुमाह **अथवेति** ॥ **पूर्ववदिति** । यस्य वक्तरि आप्तिबुद्धिः स तावता सन्तुष्यति । अपरं प्रति त्वव्याप्त्यादिशून्यत्वादिति वाक्यशेषः इति पूर्ववदित्यर्थः ।

**प०** — लक्षणज्ञापनमेव लक्षणवाक्यप्रयोजनं मत्वा तं पक्षं विकल्पमुखेन दूषयति **किमवगतमित्यादिना** ॥ **फलहेतुरिति** । व्यावृत्तिव्यवहारादिबोधरूपफलहेतुरित्यर्थः ॥ **कृतममुनेत्यादि** । एतेन यथायथं प्रत्यक्षादिना तदवधारणादिति प्राचीनसमाधिरपि निरस्तो ध्येयः ॥ **अस्येति** । लक्षणस्येत्यर्थः ॥ **लिङ्गादिभावेनेति** । लिङ्गविधयाऽर्थापत्त्यादिविधया वेत्यर्थः ॥ **त्वद्वचनलक्षणेति** । त्वद्वचनस्य लक्षणेन सहाविनाभावस्यानुपपत्त्यादेर्वा दर्शयितुमशक्यत्वादित्यर्थः । क्वापि सहचारादृष्टेरिति भावः ॥ **भवत्याप्तत्वेति** । त्वय्याप्तत्वासिद्धेरित्यर्थः ॥ **हेत्वाद्यभिधानमिति** । अव्याप्त्यादिराहित्यादिरूपहेत्वभिधानं व्याप्तिदृष्टान्ताद्यभिधानं चानर्थकमित्यर्थः । किं तच्छास्त्रान्तरमित्यत आह **अस्तीति** । पुंलिङ्गस्त्रीलिङ्गादिज्ञापकममरसिंहादिकं लिङ्गानुशासनम् ; उपमानवृद्धव्यवहारादिरादिपदार्थः । नन्वेवं लक्षणोक्तिर्व्यर्थेत्युक्तमित्यत आह **न च यथार्थमिति** । वक्ष्यमाणव्युत्पादनसौकर्याय सास्नादिमानिति वाक्यान्तरोक्तिः । यद्वा लक्ष्यभिन्नलक्षणवाक्योक्त्यर्थमेव तदुक्तिः ॥ **इदमिति** । लक्षणवाक्यमित्यर्थः ॥ **व्यवहारनिदानत्वादिनेति** । व्यवहारनिमित्तेतरव्यवच्छेदबोधहेतुत्वादिनेत्यर्थः । उपदेशादिनेत्यादिपदेन व्यवहारादिग्रहः ॥ **एवमिति** । गोशब्दार्थ इत्यर्थः । **विजिज्ञापयिषुः** विज्ञापनेच्छावान् । **उपदेशादेः** उपदेशव्यवहारादेः ॥ **आनन्त्यादिना** । आनन्त्यव्यभिचाराभ्यां गवादिव्यक्तीनामिति योज्यम् । इदं त्वभिधानमाप्तोपदेशतया लक्षणं बोधयत्युत लिङ्गादिभावेनेत्यादिना विकल्प्य दूषितस्योत्तरमाह **इदं चेति** ॥ **प्रयोगान्तरवदिति** । कथायां वाद्यन्तरप्रयुक्तप्रयोगो यथा स्मारकत्वादिनोपयुज्यते तथेत्यर्थः ॥ **जिज्ञासेति** । कथं व्याप्तिरिति व्या(प्तौ)प्तिप्रमाणजिज्ञासाजनकत्वेनेत्यर्थः ॥ स्मारकत्वेनोपयुज्यत इत्येतं पक्षं उपपाद्य जिज्ञासाजनकत्वेनेतिपक्षं पक्षभेदेनोपपादयति **यद्वेति** ॥ यद्वा व्यवहारार्थं लक्षणाभिधानमित्येतत् उपपाद्य प्रवृत्तिनिमित्तावधारणार्थं तदितिपक्षमुपपादयति **यद्वेति** । इतरव्यवच्छेदबोधार्थं लक्षणोक्तिरित्येतद्व्यनक्ति **अथवेति** । यद्वा लक्ष्याद्भिन्नं लक्षणं इतरव्यवच्छेदव्यवहर्तव्यते प्रतिपादयतीति प्रागुक्तम् । तत्र व्यवहारोपपादकत्वं स्मृतव्याप्तिश्चेत्यादिनोपपादितम् ॥ इतरव्यवच्छेदव्यवहर्तव्यताप्रतिपादकत्वं व्यनक्ति **अथवेति** । लक्ष्यानतिरिक्तं लक्षणं तु प्रवृत्तिनिमित्तावधारणार्थमित्येतत् यद्वेत्यादिनोपपादितमिति ज्ञेयम् ॥ **इदमपीति** । सास्नादिमानेव

गौरित्यादिवाक्यमपि पूर्ववत् पृथिवीत्वं पृथिवीपदप्रवृत्तिनिमित्तमिति वाक्यवत् वक्तुराप्तत्वावधारणे तावतैव श्रोतुः परितोषः। तदनवधारणे तु श्रोतारं प्रति सास्नादिमत्त्वस्य गोत्वेनैव व्याप्तत्वादिति हेतुवाक्यमपेक्षितमिति द्वयीं गतिमवलम्बत इत्यर्थः।

या० — यथायथं प्रत्यक्षादिना तदवधारणादित्येतद्दूषयितुं पुनः पृच्छति **किमवगतमिति**। लिङ्गादिभावेनेत्यत्रादिपदेनार्थापत्त्युपमानादेर्ग्रहणम्। अविनाभावादेरित्यत्रादिपदेनानुपपत्तिसादृश्यादेर्ग्रहणम्॥ **प्रतिज्ञामात्रादेवेति**। सास्नादिमत्त्वं गोर्लक्षणं भवितुमर्हतीति प्रतिज्ञामात्रादेव लक्षणत्वरूपसाध्यसिद्धावतिव्याप्त्यादिदोषशून्यत्वादिति हेत्वभिधानमनर्थकं स्यादित्यर्थः। आदिपदेन व्याप्त्याद्यभिधानग्रहणम्। तादृशं शास्त्रान्तरमेव नास्तीत्यत आह **अस्ति हीति**। नामानुशासनमभिधानग्रन्थो लिङ्गानुशासनं वाररुचादि। ननु लक्षणस्य प्रत्यक्षादिसिद्धत्वे तदभिधानवैयर्थ्यमुक्तमेवेत्यत आह **न च यथार्थमिति**। व्यवहारनिदानत्वादिनेत्यत्रादिपदेनेतरपक्षत्रयपरिग्रहः। पूर्वं लक्षणभेदेनोक्तं पक्षचतुष्टयमवस्थाभेदेन तत्रोपपादयितुमाह **तथा हीति**। यद्यपीदमुपपादनं तत्रैव कर्तव्यं तथाऽपि लक्षणवाक्यप्रतिपाद्यं न केवलं लक्षणं, किन्तु व्यवहारनिदानत्वादिनैवेति प्रमेयाज्ञाने तदुपपादनस्यावसरो नेत्यत्रैव तत्कृतमिति ज्ञेयम्। तत्र तावदतिरिक्तलक्षणे व्यवहारनिदानत्वमुपपादयति **अयं गौरिति**। उपदेशादेरित्यत्रादिपदेन शृङ्गग्रहणादिना प्रदर्शनादिसंग्रहः किमिदं त्वदभिधानमाप्तोपदेशतया लक्षणं बोधयत्युत लिङ्गादिभावेनेति पृष्टस्य परिहारमाह **इदं चेत्यादिना**॥ **प्रयोगान्तरवदिति**। कथायां प्रतिवादिनं प्रति क्रियमाणानुमानप्रयोगवदित्यर्थः। प्रवृत्तिनिमित्तावधारणार्थं लक्षणप्रणयनमित्येतदनतिरिक्तलक्षणे उपपादयति **यद्वेति**। अत्र प्रयोगान्तरवदित्युक्तसमाधानासम्भवादाह **तत्र यस्येति**। इदमुपलक्षणम्। इतरव्यक्तिषु स्वतन्त्रव्यवहारार्थत्वमपि प्रागुक्तत्वाद् ग्राह्यम्। प्रथमद्वितीयपक्षावतिरिक्तलक्षणे उपपादयति **अथवेति**। गोस्वरूपावधारणमुखेनेत्यनेन द्वितीयपक्षोपपादनम्। विप्रतिपन्ना गौर्भवितुमर्हति सास्नादिमत्त्वादिति प्रयोगसूचनात्। अस्यावधारणस्य व्यवच्छेदानुमित्युपयोगं दर्शयितुमवधारणमुखेनेत्युक्तम्॥ **पूर्ववदिति**। प्रयोगान्तरवदित्यादिनोक्तवदित्यर्थः।

श्री० — अधिकं वक्तुमुक्तमेव पुनरनुवदति **अथाऽपीति**। **अभिधानं** वचनम्। एवमुत्तरत्रापि। वैयर्थ्यमेवोपपादयति **अभिधानस्येति**। लक्षणवचनस्येत्यर्थः॥ **ज्ञानेति**। लक्षणज्ञानेत्यर्थः। **तस्य च** लक्षणस्य। तथाच यद्यवगतस्यैव लक्षणस्य व्यावृत्त्यादिरूपफलहेतुत्वमभ्युपगतं स्यात्तदैव लक्षणज्ञानजननाय लक्षणाभिधानं सार्थकं स्यात् न चैवमभ्युपगतम् अतो व्यर्थं लक्षणवचनमित्यर्थः। एवमुत्तरत्र वाक्यमपि योज्यम्। **तस्य** लक्षणज्ञानस्य। **अन्यतः** लक्षणवाक्यं विनाऽन्यस्मादित्यर्थः। **यत्र** यस्मिन् शास्त्रप्रदेशे। **प्रतिपन्नशास्त्रकाराप्तभावम्** आप्तभावमाप्तत्वोपेतं शिष्यं प्रत्येव प्रयोजकं

सार्थकमिति योजना ॥ **शास्त्रान्तरेति** । हेत्वाद्यभिधानं विना दानवारयः सुरा इत्यादिवत्सास्नादिमान्गौरिति वाच्यवाचकभावसम्बन्धग्रहणस्याभिधानादिशास्त्रान्तरसाध्यत्वादत्रावक्तव्यतेत्यर्थः । तदेव विशदयति **अस्ति हीति** ॥ **अभ्युपगच्छाम इति** । यद्यपि सास्नादिमान्गौरिति वाक्ये लक्षणमपि प्रतिपाद्यं भवति, तथाऽपि तत्प्रतिपादने न तात्पर्यं किन्तु प्रत्यक्षादिना ज्ञातं लक्षणमनूद्य तस्य व्यवहारकारणत्वबोधन एवेति न दोष इति ज्ञेयम् । **अन्यतः** प्रत्यक्षादितः । **तस्य** लक्षणस्य । **इदं** लक्षणवाक्यम् ॥ **तदिति** । व्यवहारकारणत्वेत्यर्थः । लक्ष्यातिरिक्तलक्षणस्य व्यवहारहेतुत्वमुपपादयति **तथा हीति** । इयमेव व्यक्तिर्गोशब्दार्थ इति शेषः ॥ **प्रयोगान्तरेति** । यो धूमवान्सोऽग्निमानित्यादिप्रयोगान्तरेत्यर्थः । लक्ष्यानतिरिक्तलक्षणस्य व्यवहारहेतुतामुपपादयति **यद्वेति** । **अपरं** यस्य वक्तर्याप्तिबुद्धिर्नास्ति तं प्रतीत्यर्थः । **गौर्नाम** गौरिति प्रसिद्धः । लक्ष्यातिरिक्तलक्षणस्येतरव्यावृत्तिहेतुत्वमुपपादयति **अथवेति** । **इदमपि** वाक्यम् । **पूर्ववत्** यस्य वक्तरीत्याद्युक्तरीत्या । द्वयीं ज्ञाताप्तभावं प्रति तावत एव वाक्यस्य बोधकता अपरा तु हेतुवाक्यसापेक्षस्येति गतिद्वयमित्यर्थः ॥

**सु०— नन्वत्र तावदेवं प्रयोक्तव्यम् । अयं गोत्वेन व्यवहर्तव्यः सास्नादिमत्त्वादिति । तत्र किं गोर्व्यवहारस्य विशेषणं गोशब्दो वा । आद्ये यद्यसौ गोविशिष्टं व्यवहारं नाज्ञासीत् तदा कथं पुरोवर्तिव्यक्तौ तस्य कर्तव्यतामनुमानादपि जानीयात् । न ह्यविदिताग्निरनुमानादग्निसंबन्धं बोधयितुं शक्यः । अथाज्ञासीत्तदा ज्ञातज्ञापकत्वेन व्यर्थमनुमानम् । न द्वितीयः । तदा ह्ययं गोशब्दाभिधेयः सास्नादिमत्त्वादित्यनुमानं स्यात् । तत्र चातिप्रसङ्गः । तत एव जबगडदशादिशब्दाभिधेयत्वमपि साध्यं स्यात् । ते सामान्यतोऽप्यर्थवत्तया न प्रसिद्धाः । नैवं गोशब्द इत्यस्ति विशेष इति चेत् । तथाऽपि शशविषाणादिशब्दाभिधेयत्वं साध्यताम् । तेऽप्यसद्विषयतयैव प्रसिद्धाः । गौरस्तीत्यादिप्रयोगाद्गोशब्दो नैवमिति चेत् । एवमपि स्वस्तिमतीत्यादिशब्दवाच्यतानुमानं गोमात्रे स्यात् । अथ सत्यपि गोत्वे तदन्यत्र तदप्रयोगान्नेति चेत् । एवं तर्हि यत्र सास्नादिमत्त्वं नास्ति तत्र गोशब्दप्रयोगोऽपि नास्ति, यत्र सास्नादिमत्त्वमस्ति तत्र सर्वत्रास्तीति यो जानीते तं प्रति लक्षणाभिधानमिति स्यात् । स च व्यवहारान्तरवदन्वयव्यतिरेकाभ्यामेव वाच्यवाचकभावमवधारितवानिति व्यर्थमनुमानमिति ।**

**। मैवम् । उभयत्रापि दोषाभावात् । केवलव्यतिरेकित्वे हि कथञ्चिदेतदभिधातुं युक्तम् । उपदेशादिना विशेषणेन गवा विशेषितं व्यवहारमवगतवतो हि तदन्यत्र तत्कर्तव्यताऽनुमानसाध्येत्यङ्गीकारे को विरोधः स्यात् । शब्दविशेषितव्यवहारकर्तव्यतासाधनेऽतिप्रसङ्गः किं**

**बोध्यस्य बोधकस्य वेति वाच्यम् । नाद्यः । तेन तद्व्याप्तेरनवगतत्वात् । अवगतत्वाच्च गोशब्द-वाच्यताव्याप्तेः । न द्वितीयः । तेनाऽपि पूर्वं वृद्धवचनादिना तथैव व्याप्तेरवगतत्वात् । प्रयोगभावाभावाभ्यां बाधस्य निर्णीतत्वाच्च । न हि बोध्यो बाधपरिचयशून्य इत्येतावता परिचितबाधेनापि बोधकेन विपरीतं बोधनीयम् । विप्रलम्भकत्वापातात् । तत्त्वनिर्णयार्थत्वाच्च वादकथानुसारिणः शास्त्रस्येति । एवं पक्षान्तरेऽप्यनुमानप्रयोगप्रकारो बोद्धव्यः ।**

शे० — लक्षणवाक्यं परार्थानुमानप्रयोगवद्व्यवहारानुमित्युपयोगीत्युक्तम् । तदाक्षिपति **नन्विति** । नात्र 'व्यवहर्तव्य' इतिव्यवहारमात्रविषयत्वं साध्यम् । तथा सति गोत्वेनेति विशेषणवैयर्थ्यप्रसङ्गात् । किन्नाम व्यवहारविशेषविषयत्वमेव । स च विशेषः किं विषयभेदः किंवा शब्दभेद इति भावेन विकल्पयति **तत्रेति** । व्यवहारविषयो गौरेव विशेषणमिति प्रथमपक्षमाशङ्क्य दूषयति **आद्य इति** । अयमर्थः असौ बोध्यस्तद्विषयविशिष्टं व्यवहारं किमज्ञासीदन्यतः किंवा नाज्ञासीत्, यदि नाज्ञासीत्तदा कथं गवादिव्यक्तौ तस्य व्यवहारस्य कर्तव्यतां जानीयात् न कथञ्चित् अप्रसिद्धविशेषणत्वेन पक्षाभास-त्वापातादिति । सर्वप्रमाणानामनवगताभिगन्तृत्वस्वाभाव्यादन्यत उक्तव्यवहारस्यानवगतावपि व्यतिरेक्य-नुमानरूपलक्षणवाक्यादेव तदधिगतिः किन्न स्यादित्यतः, प्रमाणानामज्ञातज्ञापकत्वेऽपि तद्भेदस्यानुमानस्य सामान्यतोऽन्यत्र प्रसिद्धगोचरत्वमेव, व्याप्त्यादिसापेक्षतया बोधकत्वात् अन्यथाऽप्रसिद्धविशेषणत्वादेरुच्छे-दापातात् । अन्वयिनि तद्दूषणं केवलव्यतिरेकिणि नेति तु कोशपानमेव शरणमिति भावेनाह **न हीति** । अविदितोऽग्निर्येन सोऽविदिताग्निः । विषयविशेषविशिष्टं व्यवहारमन्यतो ज्ञातवानित्याद्यकल्पमाशङ्कते **अथेति** । लक्षणप्रवृत्तेः प्रागेव तत्कृत्यस्य व्यवहारविशेषज्ञानस्य सिद्धत्वादनुमानरूपत्वेऽपि लक्षणवैयर्थ्यमे-वेति भावेन दूषयति **तदेति** । व्यवहारस्य शब्दभेदो विशेष इति द्वितीयं कल्पमपवदति **नेति** । द्वितीयक-ल्पेऽनुपपत्तिं प्रथयितुमनुमानं प्रथयति । इष्यत एवायमनुमानार्थ इत्यतः किमत्र गोशब्दस्यागोव्यक्ताव-प्रयोगात्तदभिधेयत्वं सास्नादिमति साध्यते किंवा सास्नादिमत्स्येव प्रयोगादिति विकल्प्याद्यमतिप्रसङ्गेन दूष-यति **तत्र चेति** । अतिप्रसङ्गमेव प्रथयति **तत एवेति** । सास्नादिमत्त्वादेवेत्यर्थः ॥ **स्यादिति** । अन्यत्रा-प्रयोगस्य गोशब्द इव जबगडादिशब्देष्वप्यविशेषादिति भावः । सामान्यतोऽर्थवत्तया प्रसिद्धत्वे सत्यन्य-त्राप्रयोगाद्गोशब्दाभिधेयत्वं साध्यते, नैवं जबगडादिशब्दा इति वैषम्यात्कथमतिप्रसङ्ग इति शङ्कते **अत इति** । एवं तर्हि सास्नादिमत्त्वेन जबगडादिशब्दाभिधेयत्वसाधननिरासेऽपि शशविषाणादिशब्दाभिधेय-त्वसाधनानिरासादतिप्रसङ्गलक्षणप्रतिकूलतर्कपराहतिस्तदवस्थैवेत्याशयेन दूषयति **तथाऽपीति** । सद्विषयत्वे सत्यन्यत्राप्रयोगाद्गोशब्दाभिधेयत्वं साध्यते नैवं शशविषाणादिशब्दा इत्यत्रयेव विशेष इत्याशयेन तेषामस-द्विषयत्वे व्यवस्थापकत्वमाह **तेऽपीति** । एवं विशेषणेनातिप्रसङ्गपरिहारेऽपि नासिद्धिपरिहारः । गोशब्द-

स्याप्यनेवंरूपत्वादित्यत आह **गौरस्तीत्यादीति** । अतिप्रसङ्गेनैव दूषयति **एवमपीति** । स्वस्तिमत्यादिशब्दानामप्युक्तविशेषवत्त्वाद्गोमात्रे प्रयोगः प्रसज्येत गोशब्दवत् । अतः अस्वस्तिमत्यादीनामपि स्वस्तिमत्यादिशब्दवाच्यत्वं विरुद्धमापद्येतेत्यर्थः । तत्रैव प्रयोगाद्गोशब्दाभिधेयत्वं सास्नादिमति साध्यत इति द्वितीयपक्षमाशङ्कते **अथेति** । अत्र गोत्वशब्देन गोर्भावत्वात्सास्नादिमत्त्वमेव विवक्षितं तस्यैव प्रकृतत्वादिति द्रष्टव्यम् । अस्मिन्पक्षे लक्षणवैयर्थ्यं प्रथयितुमुपोद्घातं करोति **एवमिति** । यदर्थमुपोद्घातितं तद्दर्शयति **स चेति** । वृद्धव्यवहारेऽन्वयव्यतिरेकाभ्यामेव घटादिशब्दासङ्गत्यधिगतिवद्गोशब्दस्यापि तत एव सङ्गत्यधिगतेर्लक्षणं व्यर्थमित्यर्थः ॥ **उभयत्रेति** । विषयविशेषो विशेषणं शब्दविशेषो विशेषणमिति पक्षद्वयेऽपीत्यर्थः । तत्कथमित्यतो विषयविशेषस्य विशेषणत्वपक्षे उद्भावितमप्रसिद्धविशेषणत्वं तावद्विघटयति **केवलेति** ॥ **कथञ्चिदेतदिति** । अप्रसिद्धविशेषणत्वमित्यर्थः । केवलव्यतिरेकित्वपक्षेऽपि नानुपपत्तिः । तत्रापि सामान्यतः साध्यप्रसिद्धेर्वक्तुं शक्यत्वात् । अन्यथा केवलव्यतिरेकित्वलयापत्तेरिति भावेन कथञ्चिदित्युक्तम् । नन्वयमपि केवलव्यतिरेक्येव अन्वयव्याप्तौ दृष्टान्ताभावादित्यत आह **उपदेशादिनेति** । विमतो गौरिति व्यवहर्तव्यः सास्नादिमत्त्वात् य एवमुक्तरूपसाधनवान्स उक्तरूपसाध्यवान् यथोपदेशावगतो गौरिति प्रयोगो द्रष्टव्यः । शब्दविशेषस्य विशेषणत्वपक्षेऽप्युक्तमतिप्रसङ्गं विकल्पेनापाकरोति **शब्देति** ॥ **तेनेति** । बोध्येनेत्यर्थः ॥ **तद्व्याप्तेरिति** । जबगडशब्दवाच्यत्वादिव्याप्तेरित्यर्थः ॥ **अवगतत्वाच्चेति** । यः सास्नादिमान्स गोशब्दार्थ इति व्याप्तिविषयकबोधकप्रयुक्तलक्षणवाक्येन सास्नादिमत्त्वस्य गोशब्दवाच्यत्वेन व्याप्तेर्बोध्येनावगतत्वादित्यर्थः । तथा च सास्नादिमत्त्वस्य गोशब्दवाच्यत्वेन सह व्याप्तेरवगतत्वेन तेन तच्छब्दवाच्यत्वानुमानसम्भवेऽपि जबगडदशब्दवाच्यत्वादिना व्याप्तिग्रहाभावेन व्याप्तेरनवगमेन न तेन तच्छब्दवाच्यत्वाद्यनुमानप्रसङ्गः । व्याप्तिज्ञानभावाभावाभ्यां विशेषणाविशेषासिद्धेर्न तन्मूलकोऽतिप्रसङ्ग इति भावः ॥ **तेनापीति** । बोधकेनापीत्यर्थः ॥ **वृद्धवचनादिनेति** । स्वोपदेशकपुरुषप्रयुक्तोक्तविधव्याप्तिविषयकलक्षणवाक्येनेत्यर्थः । **तथैवेति** । सास्नादिमत्त्वस्य गोशब्दवाच्यत्वेनैव व्याप्तेरवगतत्वादित्यर्थः । तथा चोक्तरीत्या व्याप्तिज्ञानभावाभावाभ्यां विशेषान्न बोधकं प्रत्यतिप्रसङ्ग इत्यर्थः । द्वितीये दोषान्तरमाह **प्रयोगेति** । ननु माऽस्तु बोधकस्य जबगडदशब्दवाच्यत्वाद्यनुमानप्रसङ्गस्तेन प्रयोगभावाभावाभ्यां बाधस्य निर्णीतत्वेनानुमानासम्भवात् । बोध्यस्य तु तदनुमानं किन्न स्यात्तथा च तदवस्थोऽतिप्रसङ्गः । न हि तेनापि प्रयोगभावाभावाभ्यां बाधोऽवगतोऽस्ति । तथात्वे प्रयोगान्तरवद्गोशब्दवाच्यतामप्यन्वयव्यतिरेकाभ्यामेव ज्ञास्यतीति व्यर्थमनुमानं स्यात् । न च बोधकेन गोशब्दवाच्यताव्याप्तेरेव प्रतिपादनेन जबगडदशब्दवाच्यतादिव्याप्तेर्बोध्येनानवगतत्वात् न तस्य जबगडदशब्दवाच्यत्वाद्यनुमानप्रसङ्ग इत्युक्तमिति

वाच्यम् । बोध्यस्य बाधपरिचयशून्यत्वेन तं प्रति बोधकेन जबगडदशब्दवाच्यत्वादिव्याप्तेरपि प्रतिपादनेन बोध्यस्य तद्व्याप्त्यवगमसम्भवादित्यत आह **न हीति** । बोधकस्य विप्रलम्भकत्वे नानिष्टमितीष्टापादनमेतदित्यत आह **तत्त्वेति** । व्यवहारो लक्षणप्रयोजनमिति पक्षे उपदेशादिनेत्यादिनाऽन्वयव्यतिरेकिप्रयोगं प्रदर्श्येतरव्यावृत्तलक्ष्यस्वरूपावधारणं लक्षणप्रयोजनमिति पक्षेऽपि स एव प्रकारो द्रष्टव्य इत्याह **एवमिति** । उपदेशादिनैकत्र व्यक्तिविशेष इतरभेदनिश्चये तद्दृष्टान्तेनान्यत्रेतरभेदसाधनान्नाप्रसिद्धविशेषणत्वमिति भावः ।

स०— **व्यवहर्तव्य इति** । व्यवहारमात्रविषयत्वं न साध्यते । गोत्वेनेति विशेषणवैयर्थ्यप्रसङ्गात् । किन्तु व्यवहारविशेषविषयत्वम् । स पक्षभेद एव विशेष इति प्रथमकल्पमाशङ्क्य दूषयति **आद्य इति** । अयमर्थः । असौ बोध्यस्तु विषयविशिष्टतद्व्यवहारं किमज्ञासीदन्यतः, नाज्ञासीद्वा । यदि नाज्ञासीत् साक्षात्कारिज्ञाने तस्य व्यवहारस्य (कर्तव्यतां) कथं जानीयात् । न कथञ्चित् । अप्रसिद्धविशेषणत्वेन पक्षाभासत्वादिति । सर्वप्रमाणानामनवगताधिगन्तृत्वस्वाभाव्यादन्यतो व्यवहारस्य अनवगतावपि व्यतिरेक्यनुमानरूपलक्षणवाक्यादेव तदधिगतिः किं न स्यादित्यत आह **न हीति** । अविदितोऽग्निः येन सः अविदिताग्निः । प्रमाणानामज्ञातज्ञापकत्वेऽपि तद्भेदस्य अनुमानस्य सामान्यतोऽन्यत्र प्रसिद्धगोचरत्वमेव । व्याप्त्यादिसापेक्षतया बोधकत्वात् । अन्यथा अप्रसिद्धविशेषणत्वादेरुच्छेदापातात् । अन्वयिनि तद्दूषणं केवलव्यतिरेकिणि नेति तु कोशपानमेव शरणमित्यर्थः । विषयविशेषविशिष्टव्यवहारमन्यतो ज्ञातवानिति द्वितीयं कल्पमाशङ्कते **अथेति** । लक्षणप्रवृत्तेः प्रागेव तत्कृत्यस्य व्यवहारविशेषज्ञानस्य सिद्धतया अनुमानरूपमपि लक्षणं व्यर्थमिति दूषयति **व्यवहारस्य शब्दभेदो विशेष इति** । द्वितीयं कल्पमपवदति **नापीति** । द्वितीयकल्पे अनुपपत्तिं प्रथयितुं अनुमानार्थं प्रथयति **तदा हीति** । इष्यत एवानुमानार्थ इत्यत्राह **तत्र चेति** । ननु सामान्यतो अर्थवत्तया प्रसिद्धत्वे सति अन्यत्राप्रयोगात् शब्दाभिधेयत्वं विप्रतिपन्नं साध्यते । तेन जबगडादिशब्दाभिधेयत्वसाधनप्रसङ्गो अनुपपन्न इत्यत्राह **ते सामान्यत इति** । तथा च जबगडादिशब्दानां निरभिधेयत्वेनैव प्रसिद्धत्वात् तदभिधेयत्वे साध्यमाने बाध इति भावः । एवं विशेषणेऽतिप्रसङ्गपरिहारेऽपि नासिद्धिपरिहारः गोशब्दस्याप्यनेवंरूपत्वादित्यत्राह **गोशब्द इति** । ननु सद्विषयत्वे सति अन्यत्राप्रयोगो निमित्तमित्यत्राह **तेऽपीति** । तथा च शशविषाणादिशब्दानामसद्विषयत्वेनैव प्रसिद्धत्वात् सद्विषयत्वे साध्यमाने बाध एवेति भावः ॥ **नेति** । स्वस्तिमत्यादिशब्दानामप्युक्तविशेषणवत्त्वात् गोमात्रे प्रयोगः प्रसज्येत । तथा च विरुद्धत्वमित्यर्थः ॥ **अथ सत्यपि गोत्वे इति** । तथा च सत्यपि सास्नादिमत्त्वे व्यक्तिविशेषे

स्वस्तिमत्यादिशब्दवाच्यत्वाभावात् तद्वाच्यत्वे साध्यमाने व्यभिचार इति भावः । अस्मिन्पक्षे लक्षण-वैयर्थ्यं कथयितुमुपोद्घातं करोति । **एवमिति ।** यदर्थमुपोद्घातितं तद्दर्शयति **स चेति ।** वृद्धव्यवहारे अन्वय-व्यतिरेकाभ्यामेव घटादिशब्दसङ्गत्यधिगतिवत् गोशब्दस्यापि तत एव सङ्गत्यधिगतेर्लक्षणं व्यर्थ-मित्यर्थः ।

**उभयत्रापीति ।** गोरूपार्थविषयकव्यवहारविषयत्वे वा गोशब्दविषयकव्यवहारविषयत्वे वा साध्यमान इत्यर्थः । प्रथमपक्षे विकल्प्याभिहितदोषं परिहर्तुं गोविशिष्टव्यवहारं नाज्ञासीदिति पक्षं नाङ्गीकरोमीत्याह **केवलव्यतिरेकित्वे हीति ॥ कथञ्चिदिति ।** केवलव्यतिरेकित्वेऽपि पृथिवी इतर-भिन्नेत्यत्र घटस्यापि पृथिवीत्वेन पक्षत्वेऽपि घटत्वेन सपक्षवत् रूपभेदेन वा सामान्यप्रसिद्ध्या वा साध्यस्य भावरूपत्वसंपादनेन वा सामान्यव्याप्त्यङ्गीकारेणाप्रसिद्धविशेषणत्वस्य परिहर्तुं शक्यत्वात् कथञ्चिदित्यु-क्तम् । अथ व्यवहारं अज्ञासीदिति द्वितीयपक्षमङ्गीकृत्य तत्रोक्तं दूषणं परिहरति **उपदेशादिनेति ।** विषयेणेत्येव पाठः । न तु विशेषणेनेति वा, विशेषेणेति वा ॥ **तेनेति ।** **तेन** बोध्येन, **तेन** स्वस्तिमत्यादिशब्दवाच्यत्वेन चेत्यर्थः । ननु बोध्येन व्याप्तेरनवगतत्वेऽपि बोधकेन विपरीतं किमिति न बोध्यते इत्यत आह **न हीति ।** अस्तु विप्रलम्भकत्वम् । ततः को दोष इत्यत आह **तत्त्वनिर्णयार्थ-त्वादिति ।** वादकथाऽनुसारिण इत्येतत् तत्त्वनिर्णयार्थहेतुत्वे हेतुगर्भविशेषणम् । तथा च विपरीतबोधे तत्त्वनिर्णयो न स्यादिति भावः ॥ **पक्षान्तरेऽपीति ।** यद्वा यः पृथिवीपदं व्यक्तिविशेषस्य तदर्थतां वा अवगच्छन् तत्प्रवृत्तिनिमित्तं जिज्ञासते, तं प्रति पृथिवीत्ववती पृथिवीति, पृथिवीत्व पृथिवीशब्दप्रवृत्ति-निमित्तमित्युच्यते इत्यस्मिन्पक्षे इदं पृथिवीशब्दवाच्यं तत्प्रवृत्तिनिमित्तपृथिवीत्ववत्त्वात् घटवत् । अथवा अस्ति गौर्नामार्थ इति विदितवतः यत्र तत्र गवि घटादौ अश्वादौ च गोबुद्धौ प्रसक्तायां गोस्वरूपाव-धारणमुखेनेतरव्यवच्छेदं कुर्वन् सास्नादिमानेव गौः, न तु तद्विहीनो घटादिरश्वादिर्वेति वाक्यं प्रयुज्यत इत्यस्मिन्पक्षे गौः इतरेभ्यो भिद्यते सास्नादिमत्त्वात् उपदिष्टगोव्यक्तिवत् । इत्यनुमानप्रयोगप्रकारो बोद्धव्य इत्यर्थः ।

प०— अयं गौरित्युपदेशादिनैकस्यां गोव्यक्तौ गोशब्दार्थतयावगतायामिति प्रागुक्तौपदेशिक-प्राथमिकज्ञानस्योपयोगं लक्षणस्यान्वयव्यतिरेकिलिङ्गतासंपादनेनेति विवक्षुः लक्षणमपि केवलव्यतिरेकीति परोक्तेर्दूषणं वक्तुं शङ्कामुट्टङ्कयति **नन्वत्रेत्यादिना नैवमित्यन्तेन ॥ अत्रेति ।** यस्सास्नादिमान्स गो-शब्दार्थ इत्यभिमतव्याप्तिविषय इत्यर्थः ॥ **गौर्व्यवहारस्य विशेषणं गोशब्दो वेति ।** गौर्व्यवहारस्य-

विषमतया व्यावर्तक इत्यर्थः । गोत्वप्रकारकगोपिण्डविशेष्यकव्यवहारोत्र पुरोवर्तिपिण्डे कर्तव्य इति साध्यार्थो विवक्षित उत गोशब्दघटितव्यवहारोत्र कर्तव्य इति साध्यार्थो विवक्षित इति विकल्पद्वयस्य फलितार्थः ॥ अविदिताग्निरिति बहुव्रीहिः ॥ पुमानिति शेषः ॥ **अथाज्ञासीदिति** । ज्ञातवानित्यर्थः । तज्ज्ञानं च केवलव्यतिरेकित्वं लक्षणस्य जानतो मते पुरोवर्तिन्येवेति वाच्यम् । नत्वन्यत्र । तथात्वेऽन्वयित्वापत्तेः । तथाच दोषमाह **तदा ज्ञातज्ञापकत्वेनेति** । अतिप्रसङ्ग इत्युक्तमेव व्यनक्ति **तत एवेति** । अस्मादेव हेतोरित्यर्थः । अनेनैव हेतुनेति यावत् । गोशब्दस्तु सद्विषय इति भावेनाह **गौरस्तीत्यादिप्रयोगाद्गोशब्दो नैवमिति चेदिति** । असद्विषयो नेत्यर्थः ॥ **स्वस्तिमतीत्यादीति** । स्वस्तिमतीति गोविशेषस्य नाम । आदिशब्देनगृष्ट्यादिशब्दग्रहः । अस्मिन्पक्षे लक्षणवैयर्थ्यं कथयितुमुपोद्धातयति **एवं तर्हीति** । यदर्थमुपोद्धातितं तद्दर्शयति **स चेति** ॥ **व्यवहारान्तरवदिति** । वृद्धव्यवहारेन्वयव्यतिरेकाभ्यां घटादिशब्दान्तरसङ्केतमिवेत्यर्थः ॥ **उभयत्रेति** । गौर्व्यवहारस्य विशेषणमिति पक्षे गोशब्दः विशेषणमिति च पक्ष इत्यर्थः । प्रथमपक्षे विक(ल्पाभि,ल्प्याभिमतं दोषं परिहर्तुं गोविशिष्टव्यवहारं नाज्ञासीदिति पक्षं नाङ्गीकरोमीत्याह **केवलव्यतिरेकित्वे हीति** । व्यवहारादिसा(धक)-ध्यकलक्षणरूपहेतोरिति योज्यम् ॥ **एतदिति** । अप्रसिद्धविशेषणत्वादिकमित्यर्थः । साध्यप्रसिद्धेर्वादिवाक्यादिनापि संभवात् कथञ्चिदित्युक्तिः ॥ द्वितीयपक्षेऽभिहितं दोषं निराह **शब्देति** ॥ **बोध्यस्येति** । व्युत्पित्सोः पुरुषस्येत्यर्थः ॥ **बोधकस्य** व्युत्पादकपुरुषस्य । **तद्व्याप्तेरिति** । जबगडदशादिशब्दवाच्यत्वरूपसाध्येन लक्षणरूपहेतोर्व्याप्तेरज्ञानादित्यर्थः ॥ **पूर्वं वृद्धवचनादिनेति** । आदिपदेन व्यवहारादिग्रहः । विपरीतं कुतो न बुध्यते बोधक इत्यत आह **प्रयोगेति** । गवादिशब्दप्रयोगस्य भावेन जबगडदशादिशब्दप्रयोगस्याभावेन च गवादिशब्दवाच्यत्वस्येतरशब्दावाच्यत्वस्य (बोध्येनैवनि)बुद्ध्येकनिर्णीतत्वाच्चेत्यर्थः । परं प्रति विपरीतं वा बोधको बोधयत्वित्यत आह **न हीति** । अस्तु विप्रलम्भकतेत्यत आह **तत्त्वेति** ॥ **एवं पक्षान्तरेऽपीति** । यद्वेति अथवेति चोक्ते पक्षद्वयेऽपीत्यर्थ । पृथिवीत्वं पृथिवीशब्दप्रवृत्तिनिमित्तम् । अव्याप्त्यादिशून्यत्वात् सामान्यव्याप्त्या घटशब्दप्रवृत्तिनिमित्तघटत्ववदिति । गौरितरभिन्ना सास्नादिमत्त्वात् उपदेशावगतपूर्वगोव्यक्तिवदित्यादिरूपेण प्रयोगो द्रष्टव्यः ।

**या०**— लक्षणवाक्यं परार्थानुमानप्रयोगवद्व्यवहारानुमित्युपयोगीत्युक्तं तदाक्षिपति **नन्वत्रेति** । व्यवहारमात्रविषयत्वं त्वया न साध्यते गोत्वेनेति विशेषणवैयर्थ्यप्रसङ्गात् किन्तु व्यवहारविशेषविषयत्वम् । स च व्यवहारविशेषः पक्ष एवेति प्रथमकल्पार्थमभिप्रेत्य दूषयति **आद्य इति** ॥ **तदा कथमिति** । अप्रसिद्धविशेषणत्वेन पक्षाभासत्वादिति भावः । सर्वप्रमाणानामनधिगतगन्तृस्वभावत्वादन्यतो

व्यवहारस्यानवगतावपि व्यतिरेक्यनुमानरूपलक्षणवाक्यादेव तदधिगतिः किन्न स्यादित्यत आह **न हीति** । अविदितोऽर्थियेन सोऽविदिताभिः । प्रमाणानामनधिगतज्ञापकत्वेऽप्यनुमानस्य सामान्यतोऽन्यत्र प्रसिद्धज्ञापकत्वमेव । अन्यथा व्याप्तिग्रहाद्यसम्भवादिति भावः । सास्नादिमत्त्वेन गोशब्दाभिधेयत्व-साधने किं गोशब्दस्य सास्नादिमद्भिन्नेऽप्रयोगमात्रं मूलम् उत सास्नादिमति सर्वत्र प्रयोगोऽपि वेति विकल्पं मनसि निधायाद्येऽतिप्रसङ्गमाह **तत्र चेति** । तमेवाह **तत एवेति** । सास्नादिमत्त्वादेवेत्यर्थः । अनुमाने मूलस्यान्यत्राप्रयोगमात्रस्याविशेषादिति भावः । नन्वर्थवत्तया प्रसिद्धत्वे सत्यन्यत्राप्रयोगो मूलमतो नोक्तातिप्रसङ्ग इत्याशयेन शङ्कते **ते सामान्यत इति** । ननु सदर्थकत्वे सत्यन्यत्राप्रयोगो मूलमतो नोक्तातिप्रसङ्ग इत्याशङ्कते **तेऽपीति** । सास्नादिमति सर्वत्र प्रयोगोऽपि मूलं स्वस्तिमतीत्यादि-शब्देषु तदभावान्नोक्तदोष इति द्वितीयमाशङ्कते **अथ सत्यपीति** । गोशब्देन गोभावः सास्नादिमत्त्वं ग्राह्यम् । तस्यैव प्रकृतत्वात् । तथा च तदन्यत्र स्वस्तिमदन्यगोव्यक्तिषु सास्नादिमत्त्वे सत्यपि तदप्रयो-गात् स्वस्तिमत्यादिशब्दाप्रयोगादित्यर्थः ॥ **व्यवहारान्तरवदिति** । शब्दान्तरवदित्यर्थः । तथा च यथा वृद्धव्यवहारेऽन्वयव्यतिरेकाभ्यां घटादिशब्दे सङ्गत्यधिगतिः तथा गोशब्देऽपि तत एव सङ्गत्यधिगते-र्व्यर्थं लक्षणमित्यर्थः ॥ **कथञ्चिदेतदिति** । अप्रसिद्धविशेषणत्वमित्यर्थः । तत्रापि सामान्यत साध्य-प्रसिद्धेर्वक्तुं शक्यत्वादित्याशयेनोक्तं **कथञ्चिदिति** ॥ **तेन तद्व्याप्तेरिति** । तथा च सास्नादिमत्त्वेन गोशब्दवाच्यतानुमाने तदन्यत्राप्रयोगादिकं न मूलं येनोक्तदोषः किन्तु व्याप्तिज्ञानमेव । तच्च सास्ना-दिमत्त्वे गोशब्दवाच्यतयाऽस्ति न स्वस्तिमतीत्यादिशब्दवाच्यतयाऽतो नातिप्रसङ्गः । व्याप्तिज्ञानार्थमेव च लक्षणवाक्यमुपयुज्यत इति भावः ॥ **बाधस्येति** । स्वस्तिमतीत्यादिशब्दवाच्यत्वरूपसाध्याभावस्ये-त्यर्थः । ननु येनानाप्तोपदेशेन सास्नादिमत्त्वे स्वस्तिमतीत्यादिशब्दवाच्यताव्याप्तिर्गृहीता तादृशं बोध्यं प्रति बोधकेन तच्छब्दवाच्यत्वं सास्नादिमत्त्वेन कुतो न बोधनीयम् । प्रयोगभावाभावयोस्तेनाज्ञातत्वेन बाधनिर्णयाभावादित्यत आह **न हीति** ॥ **एवं पक्षान्तरेऽपीति** । यद्वाऽथवेत्युक्तपक्षान्तरेऽपीत्यर्थः । विवादास्पदं पृथिवीत्वेन व्यवहर्तव्यं पृथिवीत्ववत्त्वादित्यत्रोक्तरीत्यैव समाधानसम्भवात् गौरितरेभ्यो भिद्यते सास्नादिमत्त्वादित्यत्रापीतरभेदस्य पूर्वमवगमेऽनुमानं व्यर्थम् अनवगमेऽप्रसिद्धविशेषणतेति शङ्काया उपदेशादिना व्यक्तिविशेषे इतरभेदनिश्चये तद्दृष्टान्तेनान्यत्रेतरभेदसाधनं सुलभमिति परिहार-सम्भवादिति भावः ।

श्री० — **गोर्व्यवहारस्येति** । गोरूपार्थविषयको व्यवहार इत्यर्थः । साध्यभूतं गोधर्मिकं व्यवहारं जानाति वा । द्वितीये आह **यद्यसाविति** ॥ **जानीयादिति** । अप्रसिद्धविशेषणताप-

**स्येति** शेषः। **तस्य** व्यवहारस्य। अविदितोऽभिधेयेनासौ तथा। आद्ये त्वाह **अथेति**। तत एव सास्नादिमत्त्वहेतुनैव साध्यं स्यात्। श्रोतृपुरुषेण न **प्रसिद्धाः** प्रतिपाद्येन न ज्ञाताः॥ **अस्ति विशेष इति**। तथा च गोशब्दस्यार्थविशेषवत्त्वेन ज्ञातत्वात्तच्छब्दवाच्यत्वमेव साधयतीत्यर्थः। **प्रसिद्धा** असद्विषयकत्वेन ज्ञाता इत्यर्थः। **नैवम्** असद्विषयको न। अपि तु सद्विशेषवाचकत्वेन ज्ञातत्वात्तच्छब्दवाच्यत्वमेवानुमिनोतीत्यर्थः। **स्वस्तिमती** साधुत्वादिस्वभाववती क्षेमवती वाऽङ्गदार्ढ्यवती वा। ननु स्वस्तिमच्छब्दवाच्यत्वं गोमात्रे नानुमीयते। गोत्वरूपे लक्ष्यतावच्छेदके तत्समनियतसास्नादिमत्त्वे वा सत्यपि स्वस्तिमद्भिन्नगोव्यक्तौ स्वस्तिमच्छब्दो न प्रयुज्यते। प्रयुज्यते च गोशब्द इति तेन ज्ञातत्वादित्याह **अथेति**। अस्मिन्पक्षे लक्षणवैयर्थ्यं वक्तुमुपोद्घातमाह **एवं तर्हीति**। गोत्वादिके सत्यपि स्वस्तिमच्छब्दप्रयोगो नास्तीति गोमात्रे स्वस्तिमच्छब्दवाच्यतां नानुमिनोतीत्युक्त्या यत्र सास्नादिमत्त्वं गोत्वं वा वर्तते तत्रैव गोशब्दवाच्यत्वमस्ति नो चेन्नेति यो जानीते तं प्रत्येवेदं लक्षणवचनमिति वाच्यम्। तथा च व्यर्थमनुमानमनुमानफलस्य पूर्वमेव सिद्धत्वादित्याह **स चेति**। **व्यवहारान्तरवदिति**। घटं प्रति दण्डस्य कारणत्वव्यवहारवदित्यर्थः। गोधर्मिक एव व्यवहारः साध्यते। तत्र तं जानाति न वेति पृष्टम्। तत्र न जानातीति वदामः। तर्ह्यप्रसिद्धविशेषणतेति चेत्तत्राह **केवलेति**। अयं गोविषयकव्यवहारविषय इत्यनुमानस्येत्यर्थः। विशेषणेन गवा गोरूपविशेषणेनेत्यर्थः। **तदन्यत्र** उपदेशादिनाऽवगतगोव्यक्तिभिन्नव्यक्त्यन्तर इत्यर्थः। तथा च दृष्टान्तस्य संभवाद्न्वयव्यतिरेक्यनुमानमिदम्। तथा च गोधर्मिकं व्यवहारं न जानातीत्यस्य कुत्रचिज्जानाति कुत्रचिन्न जानातीत्येवार्थो न तु न सर्वथा जानातीति। **तेन** बोध्येन। **तद्व्याप्तेः** सास्नादिमत्त्वे स्वस्तिमत्यादिशब्दवाच्यताव्याप्तेः। **अवगतत्वादिति**। उपदेशादिनैकस्यां गोव्यक्तावित्यर्थः। **तेन** बोधकेन। **तथैव** सास्नादिमत्त्वस्य गोशब्दवाच्यत्वेनैव। बोधकस्य सास्नादिमत्त्वेन गोशब्दवाच्यतानुमितिरेव भवति। कुतः। सास्नादिमद्व्यक्तौ गोशब्दप्रयोगभावस्य जबगडदादिशब्दप्रयोगाभावस्य च निर्णीतत्वेन जबगडदशादिशब्दवाच्यतासाधने बाधस्य निर्णीतत्वान्न तच्छब्दवाच्यतानुमितिर्भवति। अपि तु गोशब्दवाच्यतानुमितिरेवेत्याह **प्रयोगेति**। **परिचयो** ज्ञानम्।

च०— **किं गौर्व्यवहारस्य विशेषणमिति**। स्वनिरूपितविषयिताप्रत्यासत्त्या गोरूपार्थविशेषितव्यवहारविषयत्वं साध्यमित्यर्थः। **जानीयादिति**। अप्रसिद्धविशेषणत्वादिति भावः।

सु०— यदप्युक्तं शास्त्रान्तरसाध्यत्वादयमर्थो न वक्तव्य इति । तदयुक्तम् । न ह्येवमस्माभिः प्रतिज्ञातं यत्सर्वथा शास्त्रान्तरसाध्यं तन्नोच्यत इति । न चैवं शास्त्रसाङ्कर्यमाशङ्कनीयम् । विषयप्रयोजनभेदात् । यदि च शास्त्रान्तरसाध्योऽप्यर्थो भवदीयशास्त्रस्य विषयः तर्हि व्याकरणादिसाध्यमन्यदपि कस्मान्नोच्यत इति चेन्न । सन्दिग्धत्वसप्रयोजनत्वसदसद्भावाभ्यां वैषम्यात् । सन्दिग्धतादिसद्भावेऽपि यदवचनं तदुक्तदिशा शिष्यैरेव शक्यज्ञानत्वादिति यत्किञ्चिदेतत् । अन्यथा परस्यापि कुलीरस्येव स्वापत्ययुक्तिहतत्वं स्यात् । तेनापि हि स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास इत्यादीनि लक्षणानि स्वशास्त्रे निबद्धानि । सूत्रकृता च जन्माद्यस्य यत इति । तत्रैते दोषास्तानि लक्षणानि किं समास्कन्दन्त्युत नेति वक्तव्यम् । न तावद्द्वितीयः । (सामान्य)समानन्यायत्वात् । नाद्यः । दुष्टोपादानस्य पराजयहेतुत्वात् । दोषास्कन्दितान्यपि तानि व्यवहारं निर्वहन्तीति चेन्न । आपाततोऽपि दुष्टानां तथात्वे कथमुन्मत्तभाषितानामपि तद्भावो न स्यात् । न हि तेषामनिर्वाहकत्वेऽनुपपत्तेरन्यत्कारणमस्ति ।

शे०— तत्रैव प्रयोगाद्गोशब्दवाच्यत्वं सास्नादिमति साध्यत इत्यत्र लक्षणवैयर्थ्यमुक्तमनुभाष्य दूषयति **यदिति** ॥ **विषयेति** । विषयभेदात्प्रयोजनभेदाच्चेत्यर्थः । नामलिङ्गानुशासनव्याकरणादिनैतच्छास्त्रस्य विषयप्रयोजनैक्य एव तत्साङ्कर्यप्रसक्तिः च प्रकृते तदस्तीति न साङ्कर्यमिति भावः । **अन्यदपीति** प्रकृतिप्रत्ययविभागेन शब्दानां साधनादिकमपीत्यर्थः । ननु सन्दिग्धत्वसप्रयोजनत्वाभ्यां वैषम्यादित्ययुक्तम् । सन्दिग्धत्वादिभावेऽपि प्रत्यक्षानुमानयोरिवागमलक्षणस्यात्रानभिधानादित्यत आह **सन्दिग्धतादीति** । सप्रयोजनत्वमादिशब्दार्थः ॥ **यत्किञ्चिदेतदिति** ।

यदेतल्लक्षणप्रयोजनखण्डनं तत्किञ्चित्फल्गु इत्यर्थः । शास्त्रान्तरविषयलक्षणाभिधानानर्थक्योक्तौ परस्य व्याहतिः स्यादित्याह **अन्यथेति** । यद्वोक्तदिशा लक्षणप्रयोजनानुपपत्तिसमाधानानङ्गीकारे स्वव्याहतिः स्यादित्याह **अन्यथेति** । कुलीरः कर्कटकः । 'स्यात्कुलीरः कर्कटकः' इत्यमरोक्तेः । तथा च कर्कटकस्य स्वापत्ययुक्त्या स्वापत्ययोगेन तदुत्पत्त्या हननवस्त्वोत्प्रेक्षितत्वेन स्वापत्यतुल्यया लक्षणप्रयोजनखण्डनयुक्त्या परस्य बाधः स्यादित्यर्थः । कथं परस्य स्वापत्ययुक्त्या बाध इत्यत आह **तेनापीति** ।

**स्मृतिरूप इति** । यद्यपि परभाष्ये स्मृतिरूपः परत्र दृष्टावभास इत्येव पठितं तथाऽपि साकाङ्क्षत्वपरिहाराय प्रश्नवाक्यस्थाध्यासपदानुषङ्गं सिद्धवत्कृत्याध्यासपदगर्भतयैवानुवादः कृत इति द्रष्टव्यम् ।

अत्र परत्रेत्युक्त्या परस्येत्यस्यार्थतो लाभात्परत्र परस्यावभास इत्येव लक्षणमभिमतं तदुपपादनाय स्मृतिरूपत्वसङ्कीर्तनं स्मृतिरूपत्वोपपादनाय च पूर्वदृष्टत्वसङ्कीर्तनम् । तथा हि । अत्राध्यासद्वयेऽपि परत्रेति सामान्यतो धीयोग्यमधिष्ठानमुक्तम् । तत्रार्थपक्षेऽवभास्यत इत्यवभासः परश्चासाववभासश्च परावभास इति विग्रहः । ज्ञानपक्षे चावभासनमवभासः परस्यावभासः परावभास इति विग्रहो द्रष्टव्यः । परावभास इत्येवोक्ते घटात्परस्य पटस्यावभासेऽवभास्यमाने पटे चातिव्याप्तिः स्यात्तन्निवृत्तये परत्रेत्युक्तम् । न चैवमपि खण्डो गौरित्यादावतिव्याप्तिः । परत्रेत्यारोप्यात्यन्ताभाववतोऽधिष्ठानस्य विवक्षितत्वात् । खण्डगवादीनां तादात्म्यवतां संसर्गशून्यत्वासम्भवात् । दोषसंस्कारसम्प्रयोज्यत्वादवभासः सम्भवतीति वक्तुं स्मृतिरूप इत्युक्तम् । स्मर्यत इति स्मृतिः स्मर्यमाणोऽर्थः । भावे, अकर्तरि च कारके संज्ञायामिति सूत्रद्वयमधिकृत्य स्त्रियां क्तिन्निति सूत्रेण भावे कर्तृव्यतिरिक्ते च कारके कर्मादौ संज्ञायां चकारादसंज्ञायां च क्तिन्विधानात् । ततश्चार्थपक्षे स्मर्यमाणस्य रूपमिव रूपमस्येति स्मृतिरूपः । न तु स्मर्यत एवास्पष्टं पुरोवस्थितत्वेन भानात् । ज्ञानपक्षे च स्मरणं स्मृतिः । उक्तसूत्रेण भावेऽपि क्तिन्विधानात्स्मृते रूपमिव रूपमस्येति स्मृतिरूपः । न पुनः स्मृतिरेव पूर्वानुभूतस्य तथाभानात् । स्मृतिरूपता चास्य दोषादित्रयोत्पन्नत्वाचादृग्विषयत्वाद्वाऽदृष्टरजतस्य रजतभ्रमादृष्टेस्तत्संस्काराभावाच्च संस्कारद्वारा स्मृतिरूपतोपयोगित्वं पूर्वदृष्टत्वस्य । ततश्चात्र भाष्ये परत्र परावभास इत्येवाध्यासलक्षणमभिमतम् इतरदुक्तरीत्या तच्छेषभूतमित्यवधेयम् । यद्वाऽत्रावभास इत्यनेन मिथ्याज्ञानमध्यास इति सङ्क्षिप्तमध्यासलक्षणमुक्तम् । अवसन्नोऽवमतो भासोऽवभासः । प्रत्ययान्तरबाध एवात्रास्यावसादोऽवमानो वेति यौगिकेन तेन मिथ्याज्ञानस्यैव लाभसम्भवात् । पूर्वदृष्टेत्यादिना त्ववभासपदस्य रूढमर्थमादाय विस्तृतमध्यासलक्षणमुच्यत इति द्रष्टव्यम् ।

तथा हि । पूर्वदृष्टस्यावभासः पूर्वदृष्टावभासः । अत्र पूर्वदृष्टेत्यनेनानृतमारोपणीयमुपस्थाप्यते मिथ्याप्रत्ययस्यारोपविषयारोपणीयरूपसत्यानृतमिथुनमन्तरेणासम्भवात् तस्य च दृष्टत्वमात्रमुपयुज्यते न वस्तुसत्ता इत्यभिप्रेत्य दृष्टग्रहणम् । तत्रापि वर्तमानं दृष्टदर्शनं नारोपोपयोगीति भावेन पूर्वेत्युक्तम् । तच्च पूर्वदृष्टं स्वरूपेण सदप्यारोपणीयतयाऽनिर्वाच्यमित्यनृतम् । आरोपविषयं सत्यमाह **परत्रेति** । परत्र शुक्तिकादौ परमार्थसतीत्यर्थः । तदनेन विशेषणद्वयेन सत्यानृतं मिथुनमुक्तं भवति । पूर्वदृष्टस्य परत्रावभासोऽध्यास इत्युक्ते, स्वस्तिमत्यां गवि पूर्वदृष्टस्य गोत्वस्य परत्र कालाक्ष्यामवभासे, तथा पाटलिपुत्रे पूर्वदृष्टस्य देवदत्तस्य परत्र माहिष्मत्यामवभासे च, यथार्थप्रत्यये प्रत्यभिज्ञारूपेऽतिव्याप्तिः । न च मिथ्याज्ञानत्वरूपावभासपदार्थस्य तत्राभावात्कथं तत्पदाङ्कितलक्षणस्य तत्रातिव्याप्तिरिति वाच्यम् । अत्र लक्षणेऽवभासपदस्य रूढार्थत्वाश्रयणेन योगेन मिथ्याज्ञानार्थत्वाभावात् । नीलस्यावभासः पीत-

स्यावभास इत्यादौ समीचीनप्रत्ययेऽप्यवभासप्रसिद्धया समीचीनप्रत्ययस्याप्यवभासपदरूढार्थत्वात् । न चैवमपि पूर्वदृष्टेत्यनेनानृतस्यारोपणीयस्योक्तत्वात्कथं तत्पदाङ्कितलक्षणस्य प्रत्यभिज्ञायामतिव्याप्तिरिति वाच्यम्। स्मृतिरूपपदाभिधास्यमानासन्निधानसिद्धत्वत्कारेण पूर्वदृष्टेत्यनेनानृतारोपणीयसमर्पणस्योक्तत्वेन तस्य पूर्वदृष्टपदसामर्थ्याप्रयुक्ततया तत्पदाङ्कितलक्षणस्यापि तत्रातिव्याप्तेर्वज्रलेपत्वात् । अतस्तत्रातिव्याप्तिपरिहारार्थं स्मृतिरूप इत्युक्तम् । स्मृतिरूपमिव रूपमस्येति स्मृतिरूपः । न चोक्तप्रत्यभिज्ञाया अपि संस्कारजन्यत्वेन स्मृतिरूपत्वान्न तेन तद्व्यावृत्तिरिति वाच्यम् । स्मृतिरूपपदेनासन्निहितविषयत्वस्योक्त्या संस्कारजन्यस्याप्युक्तप्रत्यभिज्ञानस्य समीचीनप्रत्ययत्वेन सन्निहितविषयत्वेनासन्निहितविषयत्वाभावात्तदर्थकस्मृतिरूपपदेन तद्व्यावृत्तेः सम्भवात् । न च देशान्तरादौ सत्त्वरूपासन्निहितत्वस्य प्रत्यभिज्ञाविषयेऽपि सत्त्वान्नासन्निहितविषयत्वोक्त्याऽपि प्रत्यभिज्ञानिरास इति वाच्यम् । आरोप्यस्याधिष्ठाने परमार्थतोऽसत्त्वरूपस्यैवासन्निहितत्वस्य स्मृतिरूपपदेन विवक्षिततया तेनोक्तप्रत्यभिज्ञाव्यावृत्तेः सम्भवात् । ततश्चासन्निहितस्यावभासोऽध्यास इत्येव तल्लक्षणमितरत्तु तच्छेषभूतं न तु स्मृतावतिव्याप्तिपरिहाराय परत्रेत्यपि लक्षणे निवेश्यम् । 'स्मृतिरूप'विशेषणेनैव स्मृतिव्यावृत्तिसिद्धेः । तदर्थस्याधिष्ठाने परमार्थतोऽसत्त्वमिति निरुक्त्याऽधिष्ठानसमसत्ताकत्वाभावरूपस्य प्रत्यभिज्ञाविषये गोत्व इव स्मृतिविषयीभूतायामप्यभावात् । उभयोरपि गोव्यक्त्यन्तरस्मर्यमाणधर्मिरूपाधिष्ठानसमसत्ताकत्वादधिष्ठाने सत्यत्वार्थकेन परत्रेत्यनेन स्मृतिव्यावर्तनाच्चेत्यन्यत्र विस्तरः । आदिपदेन भ्रमोपादानत्वाद्यविद्यादिलक्षणसंग्रहः ॥ **सूत्रकृता चेति** । लक्षणं शास्त्रे निबद्धमिति सम्बन्धः ।

कथं लक्षणानां शास्त्रे निबन्धनमात्रेण परस्य स्वव्याहतिरित्यत आह **तत्रेति** ॥ **दुष्टोपादानस्येति** । दुष्टस्वीकारस्येत्यर्थः ॥ **पराजयेति** । तथा चानर्थकं नाम निग्रहस्थानं परस्यापि स्यादिति भावः । ननु दुष्टोपादानेऽपि न मम पराजयो मया तादृशानामेव व्यवहारनिर्वाहकत्वाभ्युपगमादिति शङ्कते **दोषेति** । न तावद्भवदीयलक्षणानामव्यक्तदोषत्वम् । व्यक्तदोषाणामपि व्यवहारनिर्वाहकत्वे चातिप्रसङ्ग इत्याह **नेति** ॥ **आपातत इति** । व्यक्तदोषाणामपीत्यर्थः ।

स० — **अयमर्थ इति** । लक्षणवाक्यबोध्यार्थ इत्यर्थः । **कुलीरस्येवेति** । कर्कटस्य स्वापत्येन हननवत् स्वोक्तयुक्तिबाधः स्यादित्यर्थः । **दोषास्कन्दितान्यपीति** । दोषाणां पारमार्थिकत्वाभावादिति भावः । आपाततो दुष्टानामित्यस्य यथास्थितान्वये दोषाणामपारमार्थिकत्वं तदर्थः । आपाततस्तथात्वे इत्युत्तरत्र संबन्धे कार्यस्यापारमार्थिकत्वं तदर्थ इति द्रष्टव्यम् । **तद्भाव इति** । व्यवहारनिर्वाहकत्वाभाव इत्यर्थः । **अनुपपत्तेरन्यत्** लक्षणानुपपत्तेरन्यदित्यर्थः ।

प० — **विषयप्रयोजनेति** । परब्रह्माख्यविषयमोक्षाख्यप्रयोजनवत्त्वमेतच्छास्त्रस्य, लिङ्गानुशासनव्याकरणादिशास्त्रान्तरस्य तु साधुशब्दतद्व्यवहारौ विषयप्रयोजने इति तद्भेदान्न साङ्कर्यमित्यर्थः । शङ्कते **यदीति** ॥ **अन्यदपीति** । स्वरादिकमपीत्यर्थः ॥ **संदिग्धत्वादीति** । सुवर्णपार्थिवत्वतमोद्रव्यत्वादौ संदिग्धत्वादिसद्भावेऽपीत्यर्थः ॥ **उक्तदिशेति**। लक्षणसार्थक्यादिकमस्माभिर्यथोक्तं तथैवान्यस्यापि शक्यज्ञानत्वादित्यर्थः ॥ **अन्यथेति** । लक्षणोक्तेरस्मदुक्तदिशा सार्थक्यानङ्गीकारे परस्यापि लक्षणोक्तिं दूषयतो मायावादिनोपि कुलीराख्यजन्तुविशेषस्य स्वापत्यहतत्वं यथा तथा मायावाद्यभिहितयुक्तिहतत्वं मायावादिनः स्यात् । कुत इत्यत आह **तेनापीति** ॥ **स्मृतिरूप इति** । स्मृत्या रूप्यते उ(त्पाद्य)-त्पद्यत इति स्मृतिरूपः । आदिपदेन सदसद्विलक्षणत्वादिरूपस्यानिर्वचनीयत्वादिलक्षणस्य ग्रहः । यत इतीत्यनन्तरं लक्षणं निबद्धमित्यन्वयः ॥ **एते दोषाः** ॥ अस्मान्प्रति त्वदुक्तदोषा इत्यर्थः । लक्षणानीति द्वितीयान्तं कर्मकारकम् ।

या० — **विषयप्रयोजनेति** । एतच्छास्त्रमुख्यविषयो हि भगवान्, प्रयोजनं मोक्षः । नामलिङ्गानुशासनव्याकरणादिषु नामादिकमेव विषयः तत्परिज्ञानेन शुद्धव्यवहारो वा स्वर्गो वा प्रयोजनमिति विषयप्रयोजनभेदादित्यर्थः ॥ **अन्यदपीति** । प्रकृतिप्रत्ययादिविभागेन शब्दसाधनादिकमपीत्यर्थः ॥ **सन्दिग्धतासद्भावेऽपीति** । भावशब्दस्य स्वरूपसत्त्वसत्तासामान्याद्यर्थत्वेऽधिकरणशब्दस्य पतनप्रतिबन्धकत्वसमवायित्वाद्यर्थकत्वे एवमन्यस्मिन्नपि बहौ पदार्थे सन्दिग्धतादिसद्भावेऽपीत्यर्थः ॥ **अन्यथेति** । अस्मदीयलक्षणाभिधानस्योक्तरीत्या सार्थक्यानङ्गीकार इत्यर्थः ॥ **कुलीरस्येवेति** । कर्कटकस्य **स्वापत्ययुक्त्या** स्वापत्ययोगेन तदुत्पत्त्या हननवत्स्वोत्प्रेक्षितत्वेन स्वापत्यरूपया युक्त्या स्वोक्तस्य बाधः स्यादित्यर्थः । तथा च स्वव्याघात इति भावः ॥ **स्मृतिरूप इति** । स्मृते रूपमिव रूपमस्येति स्मृतिरूपः । असन्निहितविषयक इति यावत् । एतावत्येवोक्ते स्मृतावतिव्याप्तिरतः **परत्रे**त्युक्तम् । पारमार्थिके शुक्त्यादावधिष्ठान इत्यर्थः । मिथ्याप्रत्यय आरोपाधिष्ठान-आरोपणीयमिथुनमन्तरेण न भवतीति पूर्वदृष्टग्रहणेनानृतमुपस्थापयति । तस्य च दृष्टत्वमात्रमुपयुज्यते न तु वस्तुसत्तेति दृष्टग्रहणम् । वर्तमानं दृष्टदर्शनं नारोपोपयोगीति पूर्वेत्युक्तम् । तच्च पूर्वदृष्टं स्वरूपेण सदपि आरोपणीयतयाऽनिर्वाच्यमित्यनृतम् । तदनेन सत्यानृतमिथुनमुक्तम् । पूर्वदृष्टस्य परत्रावभास इत्येवोक्ते, प्रत्यभिज्ञारूपे समीचीनप्रत्ययेऽतिव्याप्तिः तस्यापि पूर्वं कस्मिंश्चिद्देशे काले वा दृष्टस्य परत्र देशान्तरादाववभासरूपत्वादतः स्मृतिरूपपदम् । असन्निहितविषयत्वं च स्मृतिरूपत्वं, प्रत्यभिज्ञानं च सन्निहितविषयमतो नातिव्याप्तिः । ननु पूर्वदृष्टमारोपणीयमनृतमित्युक्तं कथं तत्पदाङ्कितलक्षणस्य प्रत्यभिज्ञायामतिव्याप्तिः । उच्यते ।

स्मृतिरूपपदाभिधास्यमानासन्निधानसिद्धवत्कारेण तदभिधानं, न तु पूर्वदृष्टपदसामर्थ्येनेत्यदोषः। अनेनासन्निहितस्य परत्र प्रतीतिरध्यास इत्येव लक्षणम्। असन्निधानं चारोप्यस्याधिष्ठाने परमार्थतोऽसत्त्वं न देशान्तरसत्त्वादीति नापराद्धान्तः। पूर्वदृष्टपदं तु पूर्वदृष्टमिव तत्त्वतस्तु न पूर्वदृष्टमिति तस्यानृतत्वोपपादनार्थमेवेत्युक्तं भवति। नन्वेवं स्मृतावतिव्याप्तिवारणार्थं परत्रेति विशेषणमित्ययुक्तम्। विवक्षितस्यासन्निधानस्य तत्राभावादिति चेत्। सत्यम्। यथाश्रुताभिप्रायेणैव तदभिधानम्। असत्त्वरूपासन्निधानविवक्षायां तु परत्रेति विशेषणं नापेक्षितमेव। तथा चासन्निहितस्यावभास इत्येव लक्षणं तदा विवक्षितम्। यथाऽऽह कल्पतरुकारः। 'अथवाऽसन्निधानेन सत्ख्यातिरिह वारिता। अवभासादसत्ख्यातिर्नृशृङ्गे तददर्शनादि'ति। इत्यादीनीत्यत्रादिपदेन भ्रमोपादानत्वादिरूपाविद्यादिलक्षणसंग्रहः॥ **पराजयहेतुत्वादिति**। तथा चानर्थकं नाम निग्रहस्थानं त्वदीयानामपि स्यादिति भावः। ननु नास्माकं दुष्टोपादानेऽपि पराजयः। अस्माभिस्तादृशानामेव व्यवहारनिर्वाहकत्वाभ्युपगमादिति शङ्कते **दोषेति**।

श्री०— **शास्त्रान्तरेति**। नामानुशासनादिशास्त्रान्तरेत्यर्थः। **एवं** प्रतिपाद्यैक्यादित्यर्थः। **विषयेति**। मुख्यविषयादिकं भिन्नमेवास्तीदं तु प्रासङ्गिकमिति भावः। शङ्कते **यदि चेति**। **विषयः** अमुख्यतयाऽपि यदि विषय इत्यर्थः। **वैषम्यात्**। शब्दसाधुत्वविषये यदि सन्देहस्तन्निर्णयेन च यदि प्रयोजनमस्ति तर्ह्यवश्यं कथ्यते। एवं नो चेन्नेति भावः॥ **इति यत्किञ्चिदेतदिति**। अत्राह कश्चिदित्यादिना खण्डनकारेण यदुक्तं तदेतदुक्तरीत्या यत्किञ्चित्फलिवत्यर्थः। **अन्यथा** यद्युक्तविकल्पेनास्मदीयं लक्षणं खण्ड्यत इत्यर्थः॥ **कुलीरस्येति**। यथा कुलीरः स्वापत्योत्पत्त्यनन्तरमुत्पन्नेन तेन स्वयं हतो भवत्येवं परस्यापि स्वोक्तयुक्तिहतत्वं प्राप्तमित्यर्थः। तानि लक्षणानीति द्वितीया। तथा च **त्वया** सूत्रकारेण चोक्तेषु लक्षणेष्वेते दोषाः समास्कन्दन्ति प्राप्नुवन्त्युत नेत्यर्थः॥ **उपपत्तितोऽपि दुष्टानामिति**। युक्तिविरोधतो दुष्टानामपीत्यर्थः। **तथात्वे** व्यवहारनिर्वाहकत्वे। **तद्भावः** व्यवहारनिर्वाहहेतुत्वम्; अस्ति। तथा च साऽनुपपत्तिस्त्वत्पक्षेऽप्यविशिष्टेति हृदयम्।

च०— **कुलीरस्य** कर्कटकस्य। 'स्यात्कुलीरः कर्कटक' इत्यमरोक्तेः। **स्वापत्ययुक्त्या** स्वापत्ययोगेन तदुत्पत्त्याहतत्ववत् स्वोत्प्रेक्षितत्वेन स्वापत्यरूपयुक्त्या स्वोक्तस्य बाधः स्यादित्यर्थः।

**सु०— किञ्चैवं वदता प्राग्ब्रह्मसाक्षात्काराद्बाध्यमव्यावहारिकं ब्रह्मसाक्षात्कारबाध्यं व्यावहारिकमिति मतमपि परित्यक्तं स्यात् । न ह्ययं ब्रह्मसाक्षात्कारो नापि बाधः ।**

**शे०—** प्रसङ्गमूलभूतव्याप्तौ दृष्टान्ताभावेन व्याप्तिवैधुर्यात्तर्का ऽसोऽयमित्यतो विशेषव्याप्त्यभावेऽप्यविशेषरूपसामान्यव्याप्तेः सत्त्वान्नानुपपत्तिरित्यभिप्रेत्य विशेषराहित्यमुपपादयति **एवं वदतेति** । अनुपपत्तिदुष्टमपि लक्षणं व्यावहारिकमिति वदतेत्यर्थः । **न ह्ययमिति** । अयमनुपपत्तिरूप इत्यर्थः ॥ **नापि बाध इति** । उक्तानुपपत्तिप्रत्ययो लक्षणानां दुष्टत्वप्रत्यय एव । न तु त्रैकालिकनिषेधप्रत्ययरूपो बाध इत्यर्थः । तथा च नास्य ब्रह्मसाक्षात्कारत्वबाधत्वे येन ब्रह्मसाक्षात्कारबाध्यत्वेन व्यावहारिकत्वं लक्षणानां स्यादिति भावः । यद्वा न हीत्यादेरयम्भावः । अनुपपत्तिलक्षणदोषस्य ब्रह्मसाक्षात्कारत्वाभावान्न तद्बाध्यत्वेन लक्षणानां व्यावहारिकमित्यर्थः । ननु च माऽस्तु ब्रह्मसाक्षात्कारत्वं तथाऽपि बाधत्वं किन्न स्यादित्यत आह **नापीति** । बाधत्वाभ्युपगमे तद्बाध्यलक्षणानामब्रह्मसाक्षात्कारबाध्यतया प्रातिभासिकत्वं स्यादिति । 'नापि न बाध' इत्यपि क्वचित्पाठः । तत्रेत्थं योजना । ब्रह्मसाक्षात्कारबाध्यं व्यावहारिकमिति मतत्यागो हि द्वेधा सम्भवति । अनुपपत्तिरूपलक्षणदोषस्य ब्रह्मसाक्षात्कारत्वेन वाऽबाधत्वेन वा । न तावदाद्यप्रकार इत्याह **न हीति** । अयमनुपपत्तिलक्षणो न ब्रह्मसाक्षात्कार इत्यर्थः । तथा चानुपपत्तिलक्षणदोषस्याब्रह्मसाक्षात्कारत्वात्तद्बाध्यलक्षणानामप्यब्रह्मसाक्षात्कारबाध्यत्वान्न व्यावहारिकत्वसिद्धिरिति भावः । द्वितीयं प्रकारं प्रतिषेधति **नापि न बाध इति** । ततश्चानुपपत्तिलक्षणदोषस्याब्रह्मसाक्षात्कारत्वेऽप्यबाधकत्वे तदुपन्यासवैयर्थ्यप्रसक्त्याऽबाधकत्वाभावान्न तेनापि रूपेण मतात्याग इति भावः । अनुपपत्तिलक्षणो बाधः किं ब्रह्मसाक्षात्काररूपः किंवा तदितर इति विकल्पं मनसि निधायाद्यं दूषयति **न ह्ययमिति** । तथा च न लक्षणानां व्यावहारिकत्वं स्यात् । न च तत्परेणेष्यते । तथा च ब्रह्मसाक्षात्काराबाध्यस्यापि व्यावहारिकत्वे ब्रह्मसाक्षात्कारबाध्यं व्यावहारिकमिति मतं त्यक्तमेवेत्याशयः । द्वितीयं दूषयति **नापीति** । तदितरे इति शेषः । तथा सत्यब्रह्मसाक्षात्कारबाध्यत्वेन लक्षणानां प्रातिभासिकत्वमेव स्यात् । न च तत्परेणेष्यते । तथा चाब्रह्मसाक्षात्कारबाध्यस्यापि व्यावहारिकत्वे प्राग्ब्रह्मसाक्षात्काराद्बाध्यमव्यावहारिकमिति मतत्याग एवेति भाव इत्यप्याहुः ।

**स०— किं चेति** । ब्रह्मसाक्षात्कारस्य तदितरसाक्षात्कारस्य चापारमार्थिकत्वेन तद्बाधस्याप्यपारमार्थिकत्वेन बाध्यत्वाबाध्यत्वाभ्यां व्यावहारिकाव्यावहारिकविभागो न स्यादित्यर्थः । **न ह्ययमिति** । लक्षणदोष इत्यर्थः ।

प० — **एवं वदतेति** । दुष्टमपि लक्षणं व्यवहारनिर्वाहकमिति वदता त्वदुत्प्रेक्षिततर्कबाधितान्यपि लक्षणानि व्यवहारनिर्वाहकाणीत्युक्त्या व्यावहारिकाणीत्यङ्गीकृतत्वादिति भावः । अनुपपत्तिप्रतिसंधानस्य ब्रह्मसाक्षात्कारत्वेन (न)लक्षणदुष्टत्वज्ञानस्य बाधत्वे(न) च व्यावहारिकता लक्षणस्य वक्तुं शक्या । न चैवमित्याह **न ह्ययमिति** । अनुपपत्त्यवमर्शः ब्रह्मसाक्षात्कारो न भवति तेन लक्षणस्य दुष्टत्वज्ञानं त्रैकालिकनिषेधादिरूपबाधश्च न भवतीत्यर्थः ।

या० — **एवं वदतेति** । उक्तानुपपत्तिदुष्टमपि लक्षणं व्यावहारिकमिति वदतेत्यर्थः ॥ **न ह्ययमिति** । उक्तानुपपत्तिप्रत्यय इत्यर्थः ॥ **नापि बाध इति** । उक्तानुपपत्तिप्रत्ययेन लक्षणानां दुष्टत्वप्रत्यय एव भवति न त्रैकालिकनिषेधरूपो बाध इत्यर्थः ।

श्री० — ननूक्तानुपपत्तिप्रत्ययदुष्टस्यापि व्यावहारिकत्वं वदता ब्रह्मसाक्षात्कारबाध्यं व्यावहारिकमिति मतं न त्यक्तम् । उक्तानुपपत्तिप्रत्ययस्य ब्रह्मसाक्षात्काररूपत्वाङ्गीकारादित्यत आह **न ह्ययमिति** । किञ्चोक्तानुपपत्तिप्रत्ययस्य ब्रह्मसाक्षात्काररूपत्वे तेन लक्षणानां त्रैकालिकनिषेधरूपो बाधबोधः स्यात् । न चैवम् । किन्नाम दुष्टत्वप्रत्यय एव भवतीत्याशयेनाह **नापि बाध इति** ।

---

**सु० — किञ्चैवमस्मदीयमपि लक्षणं कुतो न व्यवहारं निर्वहेत् । न च व्यवहारनिर्वाहातिरिक्तं किमपि तत्साध्यमभिलषामः । भवदभिलषिता पारमार्थिकता बाध्यत इति चेत् । किं लक्षणस्योत लक्ष्यस्य । नाद्यः । तथा हि । विमतमपारमार्थिकमप्रयोजनाभिधानत्वादित्याद्युक्तं स्यात् । न चास्यास्मान्प्रति व्याप्तिः शक्याभिधाना । किञ्चास्मिन्पक्षेऽध्यासलक्षणानुपपत्तिश्च भवता न परिहरणीया । तस्या व्यवहारनिर्वाहाविरोधात् । पारमार्थिकतानिषेधौपयिकत्वेनेष्टसाधनत्वाच्च । एतेनातिव्याप्त्यादिदोषोऽपि नापरमार्थ(पारमार्थिक)तासाधकः । अलक्षणतासाधकस्तु स्यात् । न द्वितीयः । अनुपपद्यमानलक्षणत्वेन लक्ष्यमिथ्यात्वसाधने ब्रह्मणि व्यभिचारात् । उक्ताया लक्षणानुपपत्तेस्तल्लक्षणेऽपि साम्यात् ।**

शे० — अनुपपन्नानामपि व्यावहारिकत्वेऽनुपपन्नस्याप्यस्मदीयलक्षणस्य व्यवहारनिर्वाहकत्वसम्भवादनुपपत्तिव्युत्पादनवैयर्थ्यमित्यभिप्रेत्याह **किञ्चेति** । नन्वनुपपत्तिव्युत्पादनेन व्यवहारो न निषिध्यते किन्त्वन्यदेवेति न तद्व्युत्पादनवैयर्थ्यमित्यत आह **न चेति** । तथा चानुपपत्तिव्युत्पादनवैयर्थ्यं तदव-

स्यमेवेति भावः । अनुपपत्त्युत्पादनस्य व्यवहारनिर्वाहकत्वानिषेधकत्वेऽपि न वैयर्थ्यं प्रयोजनान्तरसद्भावादिति शङ्कते भवदिति । दूषणसौकर्यार्थमाद्यं निष्कृष्य दर्शयति **तथा हीति ॥ अप्रयोजनत्वेनेति** । अप्रयोजनमभिधानं यस्य तत्तथोक्तं तस्य भावस्तत्त्वं तस्मादित्यर्थः॥ **न चेति** । उदासीने तृणादावप्रयोजनाभिधानत्वसत्त्वेऽपि मिथ्यात्वस्य मन्मतेऽभावेन तत्र व्यभिचारादिति भावः । अप्रयोजनाभिधानत्वेऽप्यमिथ्यात्वे बाधकाभावान्नेयं व्याप्तिरभिधातुं शक्यत इति भाव इत्यप्याहुः । किञ्च यद्यनुपपत्त्या लक्षणस्य पारमार्थिकता बाध्यते इति मन्यसे तर्ह्यतिव्याप्त्यादिदोषोऽपि लक्षणस्य पारमार्थिकताबाधक एव स्यान्न तु लक्षणबाधकः । तथा च लक्षणस्य सत्यप्यतिव्याप्त्यादौ अलक्षणत्वाभावात् पारमार्थिकताभावस्य चेष्टत्वादतिव्याप्त्यादिपरिहारायासो व्यर्थः स्यादित्याह **एतेनेति** । एवञ्च नापरमार्थेत्यत्रत्यस्य नञो लक्षणत्वसाधको न स्यादिति व्यवहितेनापि योग्यतयाऽन्वयो द्रष्टव्यः । यद्वा नन्वेवमतिव्याप्त्यादिदोषस्यापि लक्षणापारमार्थिकत्वसाधकत्वं न स्यादित्यतोऽतिव्याप्त्यादिदोषस्यापि मिथ्यात्वाविनाभावासम्मतेर्न लक्षणस्य मिथ्यात्वसाधकतेतीष्टापादनमेतदित्याह **एतेनेति** । अनुपपत्तिदोषस्य मिथ्यात्वासाधकत्ववर्णनेनेत्यर्थः । किन्तर्ह्यतिव्याप्त्यादिना कृत्यमित्यत आह **अलक्षणतेति** । अतिव्याप्त्यादिना पशुत्वादेर्नापारमार्थिकत्वं विज्ञायते किन्त्वलक्षणमेतदित्येव विज्ञायत इत्यलक्षणत्वसाधकत्वमेव तस्येति भावः ।

स० — **एतेनेति** । दुष्टानामपि व्यवहारनिर्वाहहेतुत्वाङ्गीकारेणेत्यर्थः ।

प० — **इत्याद्युक्तं स्यादिति** । दुर्ज्ञानत्वादिरादिपदार्थः ॥ **अस्मान्प्रतीति** । अस्माभिः प्रयोजनहीनाभिधानवतामुन्मत्तभाषितादीनां पारमार्थिकत्वाभ्युपगमादिति भावः । नन्वेवं कथं तर्ह्यतिव्याप्त्यादिदोषो लक्षणस्यापारमार्थिकतासाधक इत्यतो न भवत्येवेत्याह **एतेनेति** । अध्यासादिलक्षणेऽनुपपत्तेरपरिहार्यतापातेनेत्यर्थः । लक्षणस्येति पक्षं निराह **न द्वितीय इति** । अनुपपद्यमानलक्षणत्वेनेति बहुव्रीहिः ।

या० — **न चास्येति** । निष्प्रयोजने काकस्याष्टौ दन्ता इत्यादिवाक्येऽस्मन्मते मिथ्यात्वाभावेन दृष्टान्ताभावादिति भावः । नन्वेवमतिव्याप्त्यादिदोषोऽपि लक्षणापारमार्थिकतासाधको न स्यादित्यत आह **एतेनेति** । तथात्वेऽध्यासादिलक्षणेऽतिव्याप्त्यादिदोषपरिहारोऽपि भवता न कार्यः स्याद्व्यवहाराविरोधित्वादिष्टसाधनत्वाच्चेत्युक्तदूषणेनेत्यर्थः । तथा चेष्टापत्तिरिति भावः । तर्ह्यतिव्याप्त्यादिना किं कृत्यमित्यत आह **अलक्षणतेति** । अतिव्याप्त्यादियुतं पशुत्वादिकं नापारमार्थिकमिति ज्ञायते किन्त्वलक्षणमेवेति भावः ।

श्री० — तत्साध्यं लक्षणसाध्यम् । किश्चास्मिन्पक्ष इति । अपारमार्थिकस्यापि लक्षणस्य व्यवहारनिर्वाहकत्वमिति पक्ष इत्यर्थः ॥ इष्टसाधनत्वाच्चेति । अनुपपत्तेरिति शेषः ॥ नापरमार्थतासाधक इति । अपरमार्थताप्रयुक्तव्यवहारनिर्वाहकत्वाङ्गीकारेण त्वदिष्टत्वादित्यर्थः । तथा चातिव्याप्त्यादिदोषपरिहारोऽपि त्वया न कर्तव्यः स्यादिति भावः । दोषोऽपीत्यनन्तरं लक्षणस्येति वर्तते । ब्रह्मणि निर्धर्मकत्वाङ्गीकारादित्यर्थः । तल्लक्षणे ब्रह्मलक्षणे ।

**सु० — किश्चाध्यासलक्षणमुपपन्नं न वा । आद्ये सपक्षाप्रवेशः साधनस्य । द्वितीये तदनुपपत्तिनिरासायासो व्यर्थः स्यादित्यास्तां विस्तरः ॥ छ ॥**

शे० — सपक्षाप्रवेश इति । अध्यासलक्षणस्योपपन्नत्वाङ्गीकारे मिथ्याभूतेऽप्यध्यासेऽनुपपद्यमानलक्षणत्वाभावेन हेतोः सपक्षाप्रवेशित्वादसाधारण्यमिति भावः । ननु वैतण्डिकेन मया लक्षणाभिधानं न समर्थनीयम् । यत्तु सूत्रकारादिभिः शास्त्रे लक्षणस्य निबन्धनं तत्परीत्यैव अतो न मम स्वव्याघात इत्यत आह आस्तां विस्तर इति । कथायामेवंविधपरिहारस्य कथञ्चित्सम्भवेऽपि शिष्यादेर्मोक्षोपयोगित्वेनैतद्व्यावृत्त्यवधारणस्यावश्यकत्वात्तदुपयुक्तं लक्षणमप्यनुपपत्तिपरिहारेण स्वरीत्यैव सम्यग्वक्तव्यम् । न हि दुष्टा पररीतिः स्वात्मतत्त्वज्ञानाय प्रभवति । अतिप्रसङ्गादिति भावः ।

स० — सपक्षाप्रवेश इति । अध्यासलक्षणमिथ्यात्वस्याङ्गीकृतत्वेन सपक्षत्वेऽपि तल्लक्षणस्योपपन्नत्वाङ्गीकारे अनुपपद्यमानलक्षणत्वरूपहेत्वभावादसाधारण्यमिति भावः ।

प० — सपक्षाप्रवेशः साधनस्येति । अनुपपद्यमानलक्षणत्वादिति साधनस्य मिथ्यात्वरूपसाध्यवति अध्यासमात्रेऽभावेनासाधारणानैकान्तिकतेति भावः ।

या० — सपक्षाप्रवेश इति । मिथ्याभूतेऽध्यासमात्रेऽनुपपद्यमानलक्षणत्वं नास्तीत्यङ्गीकारे हेतोः सपक्षाप्रवेशित्वेनासाधारण्यं स्यादिति भावः । ननु वैतण्डिकेन मया न लक्षणाद्यभिधानं समर्थनीयं, यत्त सूत्रकारादिभिरुक्तं तत्परीतिमाश्रित्यैव अतो न मम स्वव्याघात इत्यत आह आस्तां विस्तर इति । कथायामेवं परिहारस्य कथञ्चित्सम्भावितत्वेऽपि स्वस्य शिष्यस्य वा मोक्षोपयुक्तस्येतरव्यावृत्ततत्त्वावधारणस्यावश्यमपेक्षितत्वेन तदुपयुक्तं लक्षणं स्वरीत्यैवानुपपत्तिपरिहारेण सम्यग् व्यक्तम् । न हि दुष्टा परीतिः स्वात्मतत्त्वज्ञानाय प्रभवति । अतिप्रसङ्गादिति भावः ॥ छ ॥

श्री० — सपक्षाप्रवेश इति । भ्रमस्यापि मिथ्यात्वाङ्गीकारान्मिथ्याभूतेऽप्यध्यासेऽनुपपन्नलक्षणवत्त्वाभावेनासाधारण्यमिति भावः ॥ तदिति । तस्मिन्नध्यासलक्षणेऽनुपपन्नत्वापादकानामतिव्याप्त्याद्यनुपपत्तीनां दोषाणां निरासाय यत्नो व्यर्थ इति भावः ॥

**सु० — अर्थं नातिवर्तत इति यथार्थं, तस्य भावो याथार्थ्यं, तदेव मानत्वं मानशब्द-प्रवृत्तिनिमित्तं मानलक्षणमिति यावत्। यद्यपि सास्नादिमान्गौरितिवद्यथार्थं प्रमाणमित्युक्तेऽपि भवत्येव लक्ष्यलक्षणभावप्रतीतिः। तथाऽपि तद्वदेव लक्ष्यं लक्षणातिरिक्तं शङ्क्येत। ततश्च पृथङ्निरूप्यमपि स्यात्तन्मा शङ्कीति याथार्थ्यमेव मानत्वं न तु सास्नादिमत्त्वाद्गोत्वमिव ततोऽतिरिक्तमित्युक्तम्।**

शे० — लक्षणप्रणयनस्यानर्थक्यनिरासानन्तरमेव तद्व्याख्यानावसर इत्यतोऽर्थवत्तामुपपाद्येदानीं लक्षणवाक्यं व्याचष्टे **अर्थमिति**। यथाशब्दस्य योग्यताद्यनेकार्थत्वेऽपि वक्ष्यमाणरीत्या तदसम्भवात्पदार्थानतिवृत्त्यर्थत्वमेव सिद्धवत्कृत्यैवं व्याख्यातमिति ध्येयम्। याथार्थ्यमेवेति सावधारणभावनिर्देशस्य वैयर्थ्यमाशङ्क्य परिहरति **यद्यपीति** ॥ **लक्ष्यमिति**। लक्ष्यतावच्छेदकमित्यर्थः ॥ **पृथगिति**। सास्नादिमत्त्वाद्गोत्वस्य पृथङ्निरूपणीयत्वदर्शनाद्याथार्थ्यलक्षणात्प्रमाणत्वरूपलक्ष्यतावच्छेदकस्य पृथङ्निरूपणीयत्वं स्यादित्यर्थः ॥ **तन्मा शङ्कीतीति**। यत्र लक्ष्यतावच्छेदकातिरिक्तं लक्षणं तत्र न धर्मनिर्देशः सम्भवति। न हि सास्नादिमत्त्वं गोत्वमिति शक्यते वक्तुम्। तयोर्धर्मयोर्भिन्नत्वेनोक्तरीत्या सामानाधिकरण्यव्यपदेशस्य बाधितत्वात्। प्रवृत्तिनिमित्तस्वरूपलक्षणे तु धर्मप्राधान्येन निर्देशो युज्यते। तत्र लक्ष्यतावच्छेदकलक्षणयोरभेदेन सामानाधिकरण्यव्यपदेशस्योपपन्नत्वादिति भावः।

स० — वक्ष्यमाणानुसारेण यथाशब्दस्य सादृश्याद्यर्थकत्वे बाधकस्य विद्यमानत्वेन अनतिक्रमार्थकत्वमेवाङ्गीकर्तव्यमिति सिद्धवत्कृत्याह **अर्थं नातिवर्तत इतीति**। 'याथार्थ्यमेव मानत्वम्' इत्यत्र भावप्रत्ययो व्यर्थः। किन्तु यथार्थमेव मानत्वमित्येवास्त्वित्यभिप्रेत्य शङ्कते **यद्यपीति**। उत्तरमाह **तथाऽपीति** ॥ **पृथङ्निरूप्यमपीति**। यथा सास्नादिमत्त्वापेक्षया गोत्वं नाम जातिरिति पृथङ्निरूप्यते एवं याथार्थ्यापेक्षया मानत्वं नाम किमित्युक्ते तन्निर्वक्तव्यं स्यादित्यर्थः।

प० — योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यरूपार्थचतुष्टयमध्येऽत्रानतिक्रमार्थको 'यथाऽसादृश्ये' इत्यव्ययीभावश्च समास इत्युपेत्याह **अर्थं नातिवर्तत इतीति**। उपाधिखण्डनटीकाव्याख्यानमन्दारमञ्जर्यां तु यथाशब्दस्य सादृश्यार्थत्वमुपेत्य यथा सादृश्यविशिष्ट एवार्थो यस्येति बहुव्रीह्याश्रयणेन यथार्थशब्दस्य यथार्था प्रतीतिरित्यभिधेयवल्लिङ्गं लोकसिद्धं सिद्धम्। अर्थमनतिक्रम्य वर्तत इत्यादिटीकाकारवचनं तु फलितप्रदर्शनपरतया व्याख्येयम्। ज्ञानार्थयोस्सत्तया सादृश्यकथने ज्ञानस्यार्थानतिक्रमस्या-

वश्यकत्वादित्युक्तम् ॥ **लक्ष्यमिति** । लक्ष्यतावच्छेदकमित्यर्थः ॥ **पृथङ्निरूप्यमपीति** । सास्नादिमत्त्वं विनापि गौरितिपृथगुक्तिवत् याथार्थ्यं विना मानमिति पृथक् वाच्यं स्यादित्यर्थः ।

**या०** — ननु धर्मिप्राधान्येनैव कुतो लक्षणं नाभिहितमित्याशङ्क्य धर्मप्राधान्येन तदभिधाने प्रयोजनमाह **यद्यपीत्यादिना** ॥ **पृथङ्निरूप्यमपीति** । यथा सास्नादिमत्त्वं विहाय कदाचिच्छब्दादिना गोत्वेनापि गौः प्रतीयते तथा याथार्थ्यं विहाय मानत्वेन रूपेण मानं कदाचित्प्रतीयेत । न च तथा प्रतीयतेऽतो न लक्ष्यमेतल्लक्षणातिरिक्तमिति भावः ॥ **तन्मा शङ्कीति** । यत्र लक्ष्यातिरिक्तं लक्षणं तत्र न धर्मप्राधान्येन तदुक्तिः सम्भवति । न हि गोत्वं सास्नादिमत्त्वमिति शक्यते वक्तुम् । तयोर्धर्मयोर्भिन्नत्वेन सामानाधिकरण्यव्यपदेशायोगात् । प्रवृत्तिनिमित्तरूपस्वरूपलक्षण एव तु धर्मप्राधान्येनोक्तिर्नानुपपन्ना । तत्र लक्ष्यतावच्छेदकलक्षणयोरभेदेनोक्तशङ्कानवकाशादिति भावः ।

**श्री०** — ननु मूले याथार्थ्यमेवेत्येवकारः कुतः । न च याथार्थ्यं प्रामाण्यमित्युक्ते लक्ष्यलक्षणवैपरीत्यशङ्का तदर्थं याथार्थ्यमेव मानत्वमित्युच्यते । ततश्च याथार्थ्यस्य लक्षणत्वं मानत्वस्य लक्ष्यत्वं ज्ञापितं भवतीति वाच्यम् । एवकाराभावेऽपि तज्ज्ञापनसम्भवादित्याशङ्क्य समाधत्ते **यद्यपीत्यादिना** । **पृथक्** वाक्यान्तरेण । **निरूप्यं** लक्ष्यस्य मानत्वस्य याथार्थ्यरूपलक्षणानतिरिक्तत्वमिति शेषः । ततो याथार्थ्यान्मानत्वमतिरिक्तं नेत्यर्थः ।

**च०** — लक्षणप्रणयनानर्थक्यप्रतिविधानानन्तरमेव लक्षणवाक्यव्याख्यानौचितीति तदर्थवत्तामुपपाद्य संप्रति योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यरूपार्थचतुष्टयमध्येऽनतिक्रमार्थको यथाशब्दो 'यथाऽसादृश्ये' इत्यव्ययीभावसमास इत्युपेत्य तद्वाक्यं व्याकुरुते **अर्थमिति** । उपाधिखण्डनटीकाव्याख्यानमन्दरमञ्जर्यां तु तथा यथाशब्दस्य सादृश्यार्थत्वमुपेत्य यथा सादृश्यविशिष्ट एवार्थो यस्येति बहुव्रीह्याश्रयणेन यथार्थः शब्दः यथार्था प्रतीतिरित्यभिधेयवल्लिङ्गं लोकसिद्धं सिद्धं अर्थमनतिक्रम्य वर्तत इत्यादि टीकाकारवचनं तु फलितप्रदर्शनपरतया व्याख्येयम् । ज्ञानार्थयोः सादृश्यकथने ज्ञानस्यार्थानतिक्रमस्य आवश्यकत्वादित्युक्तम् । **लक्ष्यमिति** । लक्ष्यतावच्छेदकमित्यर्थः । **पृथङ्निरूप्यमिति** । यथा सास्नादिमत्ताप्रत्यापकपदासमभिव्याहारेऽपि गोपदादिना गोत्वेन गौः प्रतीयते तथा याथार्थ्याभिधायकपदासमभिव्याहारे मानत्वेन न प्रतीयत इति । लक्ष्यतावच्छेदकं न लक्षणातिरिक्तमित्यर्थः ।

**सु०— ननु किमिदं लक्षणं नाम । लक्ष्यस्यासाधारणो धर्मः । यावत्स्वेकः शब्दो निवेशयितुमिष्टः, यावन्ति चेतरस्माद्व्यावर्तनीयानि तान्युच्यन्ते लक्ष्याणीति ।**

**शे०—** याथार्थ्यस्य प्रमाणलक्षणत्वं मूलारूढं कर्तुं 'मानत्वं मानशब्दस्य प्रवृत्तिनिमित्तं मानलक्षणमिति यावदि'ति व्याख्यातम् । तच्च लक्षणनिरूपणसापेक्षमित्यतो लक्षणलक्षणं पृच्छति **नन्विति** । धर्ममात्रस्य वा तद्धर्ममात्रस्य वाऽतिव्यापकत्वेन तल्लक्षणत्वानुपपत्तेरिति भावः । परिहरति **लक्ष्येति** । अत्र यद्यपि यो यस्यासाधारणो धर्मः स तस्य लक्षणमित्येव वक्तु युक्तं न तु लक्ष्यत्वमपि तत्र निवेश्यं व्यर्थत्वात् । तथाऽपि प्रसङ्गाल्लक्ष्यस्यापि स्वरूपनिरूपणाय तदन्तर्भावेनेदं लक्षणाभिधानम् । यथा निर्दोषं वाक्यमागम इत्यागमलक्षणे प्रसङ्गाद्वाक्यस्यापि स्वरूपनिरूपणार्थमेव वाक्यान्तर्भावेन आगमलक्षणाभिधानमिति द्रष्टव्यम् । वक्ष्यमाणाव्याप्त्यादिशङ्कानिरासार्थं लक्ष्यस्वरूपनिरूपणमप्यावश्यकमेवेति तदन्तर्भावेन लक्षणाभिधानम् । अत एव वक्ष्यति तच्च लक्ष्यस्य धर्म इत्युक्तमेवेतीत्यप्याहुः । असाधारणपदं शृङ्गित्वे प्रसङ्गवारणाय । तस्य लक्ष्यधर्मत्वेऽप्यसाधारण्याभावात् । अन्ये तु शृङ्गित्वेन महिष्यादिसाधारणेन गोमात्रस्यान्यतो व्यावर्तयितुमयोग्यतया तस्य तत्प्रति अलक्ष्यत्वादेव तत्रातिव्याप्तिपरिहारात्तद्वैयर्थ्यमित्याशङ्क्य अन्यसाधारणेन तेन गोमात्रस्यान्यतो व्यावर्तयितुमयोग्यत्वेऽपि, तद्योग्यत्वस्य लक्ष्यपदार्थत्वाभावात्तत्त्वेनेष्टत्वस्यैव च तच्छब्दार्थत्वेन विवक्षितत्वात् शृङ्गित्वेन गोमात्रस्येतरस्माद्व्यावृत्तेश्च कदाचिदिष्टत्वेन तत्राप्युक्तरूपलक्ष्यतासद्भावेन तदनिवारणेनासाधारणपदस्यावश्यकत्वादित्यभिप्राय इत्यप्याहुः । किन्तल्लक्ष्यं यस्यासाधारणो धर्मो लक्षणमित्युच्यत इत्यतो लक्षणप्रयोजनद्वैविध्यानुरोधेन प्रयोजनद्वयघटितं लक्ष्यस्य लक्षणमाह **यावत्स्वित्यादिना** । अन्यव्यावृत्ति-शब्दवाच्यत्वान्यतरबुद्ध्युत्पादनेच्छाविशेष्यमित्यर्थः । अन्यथा परस्पराव्याप्तिप्रसङ्गादिति बोध्यम् ।

**स०—** यदि किञ्चिल्लक्षणं वदिष्यति तर्हि अव्याप्त्यादिकम् वदिष्यामीति गूढाभिसन्धिश्शङ्कते **नन्विति** । यद्यव्याप्तिं वदिष्यति तर्हि तस्या दोषत्वमेव नास्तीति उपपादयिष्यामीति गूढाभिसन्धिरेवाह **लक्ष्यस्येति** । अत्र यद्यपि यो यस्यासाधारणो धर्मः स तस्य लक्षणमित्येवाभिप्रेतं न तु लक्ष्यत्वमपि निवेश्यम् । व्यर्थत्वात् । तथापि प्रसङ्गाल्लक्ष्यस्यापि स्वरूपनिरूपणाय तस्य प्रवेशः । निर्दोषं वाक्यमिति आगमलक्षणे वाक्यग्रहणवदिति द्रष्टव्यम् । असाधारणपदं शृङ्गित्वे अतिप्रसङ्गनिरासाय । धर्म इत्यनेनासंभवो निराकृतः ॥ **यावत्स्वेक इति** । लक्षणप्रयोजनद्वयानुसारेण लक्ष्यस्य लक्षणद्वयमुक्तमिति द्रष्टव्यम् ।

प०— लक्षणं हि ज्ञातमेव लक्ष्यावधारणस्येष्टे । तज्ज्ञानं च लक्षणाधीनमिति भावेन पृच्छति **ननु किमिदमिति** । किं लक्ष्यमित्यतो व्यवहारव्यावृत्तिरूपलक्षणप्रयोजनद्वयानुरोधेन लक्ष्यस्य च लक्षणद्वयमाह **यावत्त्विति ॥ निवेशयितुं** व्युत्पादयितुम् ।

या०— **निवेशयितुमिति** । व्यवहर्तुमित्यर्थः ।

**सु०— नन्वसाधार(णो)णधर्मश्चेल्लक्षणमव्यापकस्यापि तदा लक्षणतापत्तिः । अतिव्याप्त्यसम्भवाविव अव्याप्तिरपि हि लक्षणदोषः । उच्यते । लिङ्गतया हि लक्षणमुपयुज्यते । न च व्यापकता लिङ्गत्वोपयोगिनी । व्याप्यत्वेनैव तदुपपत्तेः । इतरथा धूमादीनामलिङ्गतापातात् । किन्नाम पक्षीकृतदृष्टान्तीकृतव्यापकतात्वपेक्षितैव । उपायत्वेनोपन्यस्तस्याभावे तदुपेयप्राप्तेरसम्भवात् । उभयधर्मभूताया व्याप्तेरन्यतराभावे दर्शयितुमशक्यत्वात् । तथा च तदानीं लिलक्षयिषितमात्रव्यापित्वं लक्षणस्यापेक्षितम् । तच्च लक्ष्यस्य धर्म इत्युक्तमेव । अव्यापकत्व(धर्म)स्य लक्षणदोषतावादस्तु सर्वस्यापि लिलक्षयिषितत्वे द्रष्टव्यः ।**

**शे०**— ननु लक्ष्यस्य धर्म इत्यनेनासम्भवस्यासाधारण इत्यनेनातिव्याप्तेश्च व्यावर्तितत्वेनोक्तलक्षणस्यासम्भवातिव्याप्तिव्यावृत्तौ सिद्धायामप्यव्याप्तिवारकपदाभावेनोक्तलक्षणस्याव्यापकव्यावृत्त्यसिद्ध्या तत्रातिव्यापकं लक्षणलक्षणमिति शङ्कते **नन्विति** । लक्षणतया तल्लक्ष्यत्वादेव न तत्रातिव्याप्तिरित्यतोऽतिव्याप्त्यसम्भवयोरिवाव्याप्तेरपि लक्षणदोषत्वान्न लक्षणतया लक्ष्यत्वमित्यतिव्याप्तिर्वज्रलेपायितैवेत्याह **अतिव्याप्त्यसम्भवाविवेति** । तथा चातिव्याप्त्यादिपरिहारायासाधारणधर्म इति विशेषणं यथोपादीयते तथाऽव्यापके शबलत्वादावतिप्रसङ्गपरिहाराय यावल्लक्ष्यासाधारणो धर्म इति वा लक्ष्यव्यापकधर्म इति वा तल्लक्षणं वक्तव्यमिति नोक्तं लक्षणलक्षणमनुपपन्नमिति भावः । लक्षणस्य लिङ्गतयोपयोगित्वेन साध्यव्याप्यताया लिङ्गत्वोपयोगेनावश्यकत्वेऽपि तद्व्यापकताया अनावश्यकत्वान्न व्यापकत्वाभावो दोषायेति परिहरति **उच्यत इति** । साध्यव्यापकताया लिङ्गत्वोपयोगित्वे बाधकमाह **इतरथेति** । अग्निमति पर्वते महानसे वा धूमस्य सत्त्वेऽप्यग्निमत्ययोगोलके तदभावेन वन्ह्यव्यापकत्वादिति भावः । ननु साध्यव्यापकताया लिङ्गत्वानुपयोगित्वात्तद्व्याप्यतामात्रेणैव लिङ्गत्वाभ्युपगमे निर्धूमपक्षदृष्टान्तकधूमवत्त्वस्यापि लिङ्गत्वं स्यादित्याशयेन शङ्कते **किन्नामेति** । न च व्यापकता लिङ्गतोपयोगिनीति न व्यापकतामात्रस्य लिङ्गत्वोपयोगो निषिध्यते येनोक्तातिप्रसङ्गः स्यात् । किन्तु साध्यव्यापकताया एव । पक्षीकृतदृष्टान्तीकृतव्यक्तिव्यापकताया उपयोगोऽभ्युपगम्यत एव । ततश्च तदभावान्नोक्तातिप्रसङ्ग इत्याशयेन परिहरति **पक्षीकृतेति** ॥

**व्यापकता त्विति** । व्यापित्वमित्यर्थः । तत्कुत इत्यतस्तदुभयं क्रमेणोपपादयति **उपायत्वेनेत्यादिना** । यद्यपि व्याप्ति. साधनस्यैव धर्मो न साध्यस्य तथाऽपि साधनाश्रिताया अपि तस्याः साध्यनिरूपितत्वेन तद्धर्मत्वव्यपदेश औपचारिक इति द्रष्टव्यम् । यदर्थं लक्षणस्य लिङ्गतयोपयोगित्ववर्णनं यदर्थं च लिङ्गत्वोपयोगिरूपावधारणं तदिदानीमाह **तथा चेति** । ननु तदानीं लिलक्षयिषितमात्रव्यापित्वस्य लक्षणापेक्षितरूपस्य लक्षणलक्षणे प्रत्यायकपदाभावात्कथमनेवंरूपस्यालक्षणस्यानेन व्यावृत्तिरित्यतस्तस्य लक्ष्यस्य धर्म इत्यनेनैवोक्तत्वाद्युक्ता तेनानेवंरूपस्य व्यावृत्तिरित्याह **तच्चेति** । तदानीं लिलक्षयिषितमात्रव्यापित्वं चेत्यर्थः । ततश्च तदानीं लिलक्षयिषितमात्रव्यापित्वेन शबलत्वस्यापि लक्षणत्वेन लक्ष्यत्वान्न तत्रातिव्याप्तिरिति भावः । इदं च लिलक्षयिषितमात्रव्यापित्वस्य लक्ष्यस्य धर्म इत्यनेनोक्तत्ववचनं लक्ष्यस्य धर्म इत्यनेन लिलक्षयिषितव्यापित्वस्योक्तत्वान्न व्यापकतालाभार्थं लक्षणलक्षणे पृथक् व्यापकतापदापेक्षेत्यभिप्रायेणैव । न तु लक्ष्यस्य धर्म इत्यनेनैव तदानीं लिलक्षयिषितमात्रव्यापित्वस्याप्युक्तत्वाभिप्रायेण । लक्ष्यपदेन तदानीं लिलक्षयिषितत्वस्य षष्ठ्युत्तरधर्मपदेन च तद्व्यापित्वस्य कथञ्चिदुक्ततालाभेऽपि मात्रार्थस्य तेनानुक्त्या लक्षणलक्षणान्तर्गतपदद्वयेन लिलक्षयिषितमात्रव्यापिताया अनुक्तेः । उक्तौ चात्रासाधारणपदस्यान्यत्र च न वर्तते चान्यत्रेत्यस्य वैयर्थ्यापातात् । न चैवं सति यो धर्मो लक्ष्ये व्याप्त्या वर्तत इत्यादौ व्याप्त्येति विशेषणवैयर्थ्यं स्यात् । तत्रापि यो धर्मो लक्ष्ये वर्तत इत्येतावतैव तदानीं लिलक्षयिषितव्याप्तित्वलाभसंभवादिति वाच्यम् । तत्रापि लिलक्षयिषितमात्रव्यापित्वस्यैव विशिष्टलक्षणार्थत्वेनाभिप्रेतार्थत्वादिति ध्येयम् । का तर्ह्यतिव्याप्त्यसंभवयोरिवाव्याप्तेर्लक्षणदोषत्वोक्तेर्गतिरित्यत आह **अव्यापकत्वस्येति** । तत्राव्यापकधर्मस्य सार्वत्रिकव्यावृत्त्याद्यहेतुत्वादिति भावः । तथा च तदानीं लिलक्षयिषितसकलगोव्यापित्वाभावान्न तत्रातिव्याप्तिरिति न तद्व्यावृत्त्यर्थं लक्षणलक्षणे पदान्तरापेक्षेति हृदयम् ।

म० — पूर्वपक्षी स्वाशयमुद्घाटयति **नन्विति** । नन्वस्तु अव्याप्तिः । तस्य अतिव्याप्त्यादिवत् लक्षणदोषत्वाभावात् नानुपपत्तिरित्यत आह **अतिव्याप्त्यसंभवाविवेति** । तथाच तयोरदोषत्वे तत्परिहारार्थं विशेषणोपादानं व्यर्थं स्यात् । तयोरेव दोषत्वमङ्गीकृत्य अव्याप्तिदोषत्वानङ्गीकारे तद्वृत्तयोरपि दोषत्वं न स्यात्, विशेषनियामकाभावादिति भावः । लक्ष्यासाधारणधर्मत्वमात्रस्य न लक्षणलक्षणत्वं युक्तम् । अव्यापकस्य शबलत्वादेरपि गोमात्रलक्षणत्वापातात् । किन्तु यावल्लक्ष्यासाधारणधर्मत्वं वा लक्ष्यमात्रव्यापकधर्मत्वं वा तदिति वक्तव्यम् । तथा च लक्ष्यव्यापकधर्मस्यैव लक्षणत्वे व्याप्त्या कथं लक्ष्यासाधारणधर्ममात्रस्य तत्त्वमुच्यत इति भावः । सिद्धान्ती स्वाशयमुद्घाटयति **उच्यत इति** । लक्ष्यासाधारणधर्मस्य लक्षणत्वमित्यभिहिते लक्ष्यमात्रव्यापकत्वं तदिति वाच्यमिति वदतः किं साध्यव्याप-

कत्वमप्यपेक्षितमित्यभिप्रेतं किंवा पक्षदृष्टान्तव्यापकत्वमेव वेति विकल्पं मनसि निधाय न तावत्प्रथम इत्याह **लिङ्गतया हीति** ॥ लक्षणस्य लिङ्गतयोपयुक्तत्वेन लिङ्गस्य साध्यव्याप्यत्वमात्रापेक्षायामपि तद्व्यापकत्वस्यानपेक्षितत्वेन तदनभिधानेऽपि दोषाभावात् । अन्यथा धूमादीनामपि वन्हिव्यापकत्वाभावेन लिङ्गत्वं न स्यादिति भावः । द्वितीये त्वङ्गीकार इत्याह **किं नामेति** ॥ लक्ष्यासाधारणधर्मत्वमित्येतावन्मात्रेणैव पक्षदृष्टान्तव्यापकत्वलाभात् तत्प्रतिपादनाय पुनर्व्यापकत्वविशेषणस्यानावश्यकत्वादिति भावः । हेतोः पक्षव्यापित्वमावश्यकमित्युपपादयति **उपायत्वेनेति** । तथा चोपायभूतो धूमो यदि पक्षे न स्यात् तुदुपेयभूतोऽग्निरपि पक्षे दुर्लभस्स्यादित्यर्थः । दृष्टान्तव्यापित्वमावश्यकमित्युपपादयति **उभयधर्मेति** । लिङ्गनिष्ठाया अपि व्याप्तेरुभयधर्मत्वकथनं साध्यस्य निरूपकत्वादौपचारिकमिति ज्ञातव्यम् । **उभयधर्मभूतयोः** साध्यसाधनधर्मभूतयोः । **अन्यतराभावे** साधनस्य साध्यस्य वा अभावे इत्यर्थः । ननु तदानीं लिलक्षयिषितमात्रव्यापित्वं लक्षणस्यापेक्षितं भवतु । तदर्थमेव च लक्षणलक्षणे व्यापकपदमावश्यकमित्यत आह **तथा चेति** । लिलक्षयिषितमात्रवृत्तित्वं= पक्षदृष्टान्तमात्रव्यापित्वमित्यर्थः । **तच्च** लक्ष्यस्यासाधारणो धर्म इत्यनेनोक्तम इत्यर्थः । तदवृत्तिनस्तद्धर्मत्वानुपपत्त्या लिलक्षयिषितधर्मत्वोक्त्या तद्व्यापकत्वस्य लाभेन लक्ष्य-लिलक्षयिषितशब्दयोश्च समानार्थत्वेन लक्ष्यस्य धर्म इत्यनेनैव तद्व्यापकस्य लब्धत्वात् न तदर्थं पृथग्व्यापकपदमुपादेयमिति भावः । न चैवं यो धर्मो लक्ष्ये वर्तते

---

इत्येतावतैव लक्ष्यव्यापकतालाभात् व्याप्येत्यस्य वैयर्थ्यं स्यादिति वाच्यम् । लिलक्षयिषिते व्यापकत्वमात्रस्यैव तत्र विशिष्टपदार्थत्वेन विवक्षणाददोषः । नन्वेवं गोविशेषत्वावच्छिन्नगोविशेषरूपलिलक्षयिषितव्यापकत्वस्य शबलत्वादपि सत्त्वेन तस्यापि लक्षणत्वस्यैव सत्त्वेन तस्याव्यापकत्वरूपलक्षणदोषत्वोक्तिः ग्रन्थान्तरीया अनुपपन्ना स्यादित्यत आह **अव्यापकत्वस्येति** । यद्वा ननु लिलक्षयिषितं हि लक्ष्यतावच्छेदकाक्रान्तम्, न तु लक्ष्यतावच्छेदकावच्छिन्नम् । एवं च लक्ष्यतावच्छेदकाक्रान्ते पक्षे दृष्टान्ते च शबलत्वस्य व्यापकत्वात् ग्रन्थान्तरे तस्याव्यापकत्वोक्तिरयुक्तेत्यत आह **अव्यापकत्वस्येति** । **सर्वस्यापि** । लक्ष्यतावच्छेदकावच्छिन्नस्य सर्वस्यापीत्यर्थः । तत्र शबलत्वस्याव्यापित्वादिति भावः ।

प० — अस्तु लक्षणतेत्यत आह **अतिव्याप्तीति** ॥ **व्यापकतेति** । इतरभेदादिसाध्यव्यापकतेत्यर्थः ॥ **अलिंगतापातादिति** । धूमादीनां वह्निं प्रत्यव्यापकत्वादिति भावः ॥ **व्यापकता त्विति** । विद्यमानता त्वित्यर्थः । पक्षे सत्ता कुत इत्यत आह **उपायत्वेनेति** । दृष्टांते सत्त्वस्योपयोगमाह **उभयधर्मेति** । एवं तर्हि लिलक्षयिषितमात्रव्यापित्वे सति लक्ष्यस्यासाधारणोधर्मो लक्षणमिति वक्तव्यमित्यतो नेत्याह **तच्चेति** । लिलक्षयिषितमात्रव्यापित्वं लक्ष्यस्य धर्म इति पदद्वयेनोक्तमेवेत्यर्थः । लक्ष्यशब्देन लिलक्षयिषितत्वस्य धर्मशब्देन व्यापित्वस्य प्राप्तेरिति भावः ।

या० —इष्टापत्तिं परिहरति **अव्याप्त्यसम्भवाविति** ॥ **व्यापकतेति** । इतरभेदादिरूपसाध्यनिरूपितेति शेषः ॥ **व्यापकता त्विति** व्यापित्वं त्वित्यर्थः । तच्च पक्षीकृतमपेक्ष्यैव । दृष्टान्तीकृते तु वृत्तिमात्रं विवक्षितमिति ध्येयम् । पक्षीकृतव्यापकता लक्षणरूपहेतोरपेक्षितेत्येतदुपपादयति **उपायत्वेनेति** । हेतुत्वेनोपन्यस्तस्य पक्षधर्मत्वाभावे तदुपेयस्य तत्साध्यस्यापि पक्षीयत्वं न सिध्यतीत्यर्थः । दृष्टान्तीकृतवृत्तिताऽपेक्षितेत्येतदुपपादयति **उभयधर्मेति** । यद्यपि व्याप्तिः साधनस्यैव धर्मो न साध्यस्य तथाऽपि साधनाश्रितायाः तस्याः साध्यनिरूपितत्वेनोभयधर्मत्वव्यपदेश औपचारिक इति ध्येयम् ॥ **तदनीमिति** । तदानीं लिलक्षयिषितं च, यावत्तु शबलत्वं वर्तते तावद्दृष्टान्तीकृतं चेति भावः । नन्वेवमपि लिलक्षयिषितमात्रव्यापित्वरहितमपि लक्ष्यासाधारणधर्मभूतं लक्षणं स्यादित्यत आह **तच्चेति** । तदानीं लिलक्षयिषितमात्रव्यापित्वं च 'लक्ष्यस्य धर्म' इति लक्षणलक्षणान्तर्गतेन पदद्वयेनोक्तमेवेत्यर्थः । 'यावत्त्वेकः शब्दो निवेशयितुमिष्ट' इति लक्ष्यशब्दार्थस्योक्तत्वेन लक्ष्यशब्देन तदानींलिलक्षयिषितस्य षष्ठ्युत्तरधर्मपदेन च तन्मात्रव्यापित्वस्य लाभेन, न लक्षणलक्षणस्योक्तधर्मेऽतिव्याप्तिशङ्केति भावः । नन्वेवमव्यापकस्यालक्षणविशेषत्वोक्तिर्ग्रन्थान्तरस्था कथमित्यत आह **अव्यापकत्वस्येति** । एतेन यो धर्मो लक्ष्ये वर्तत इत्येतावतैवोक्तरीत्याऽव्याप्तलक्षणस्य व्यावर्तितत्वात् व्याप्त्या इत्यस्य पद्धत्युक्तलक्षणान्तर्गतस्य वैयर्थ्यमिति निरस्तम् । तत्रत्यलक्ष्यपदस्य सर्वलिलक्षयिषितपरत्वात् ॥

---

श्री० लक्ष्यस्यासाधारणो धर्म इत्युक्त्या सर्वलक्ष्यसाधारणो यो धर्मो न भवति स लक्षणमित्युक्तं स्यात् । तत्र शङ्कते **नन्वसाधारण इति** । **इतरथा** व्यापकताया लिङ्गत्वोपयोगित्वे । व्यापकतैवापेक्षितेत्यन्वयः ॥ **उभयेति** । साध्यहेत्वोरित्यर्थः । **अन्यतराभावे** साध्यहेत्वोरन्यतरस्य दृष्टान्तेऽभाव इत्यर्थः ।

**सु० — यद्वाऽन्यत्र लक्षणान्तराभावनिश्चयनिमित्ता तदुक्तिः । वस्तुतस्त्वेकमिवानेकमपि स्वस्वाश्रये व्यावृत्त्यादिकं कुर्वद्भवत्येव लक्षणम् । अत एव कणादः क्रियावद्गुणवत्समवायिकारणमिति क्रियावत्त्वमपि द्रव्यलक्षणत्वेनाह । क्रियावद्ग्रहणमन्यार्थमिति चेत् । तत्किमव्यापकस्य लक्षणतानुपपत्तेरन्यथाव्याख्यानमुत निमित्तान्तरात् । नान्त्यः । तददर्शनात् । न प्रथमः । अनुपपत्तेरप्राकृतत्वात् ।**

शे० —एवं गोत्वावच्छिन्नसकलगोव्यक्तीनां लिलक्षयिषितत्व एव शबलत्वादेरव्यापकत्वेनालक्षणत्वात्तदभिप्रायेण दोषत्वोक्तिरित्युक्तम् । इदानीं त्वव्यापकधर्मस्य लक्षणत्वेऽपि निमित्तान्तरेण लक्षणदोषत्वोक्तिं समर्थयते **यद्वेति** । लक्षणत्वेनोक्ताव्यापकधर्माश्रयालक्ष्यादन्यत्र तज्जातीये लक्ष्ये व्यावृत्त्यादिसाधकमन्यलक्षणं नास्तीति निश्चयो यदा तदैवाव्याप्तधर्मस्य सार्वत्रिकव्यावृत्त्याद्यसाधकत्वात्तद्दोषत्वोक्तिरित्यर्थः ।

अन्यत्र लक्षणान्तरसद्भावे तु लक्ष्यजातीयस्य तेनैव व्यावृत्त्यादिसिद्धेर्नाव्याप्तिदोष इति भावः । ननु किमेवं क्लिष्टकल्पनया अव्यापकधर्माणामलक्षणत्वादेव लक्षणदोषत्वोक्तिरिति किन्न स्यादित्यतो लक्षणत्वप्रयोजकस्य व्यावृत्त्यादिसाधकत्वस्य तत्रापि सत्त्वान्न अलक्षणत्वाभिप्रायकत्वं तदुक्तेरित्याशयवानाह **वस्तुतस्त्विति** ॥ **एकमिवेति** । सर्वलक्ष्यसाधारणैकलक्षणमिवेत्यर्थः ॥ **अनेकमपीति** । कतिपयलक्ष्यमात्रवृत्त्यनेकमपीत्यर्थः । अत्र स्वाश्रयव्यावृत्त्यादिकारित्वादनेकस्य लक्षणत्वमित्येव वक्तव्ये यदेकमिवेति दृष्टान्तप्रदर्शनं तत्स्वाश्रये व्यावृत्त्यादिकारिणोऽप्यव्यापकस्यालक्षणत्वे तत्कारिणो व्यापकस्यापि तदापद्येतेत्यनिष्टसूचनार्थमित्यवधेयम् । व्यापकधर्मस्य लक्षणत्वेऽभियुक्तसम्मतिं चाह **अत एवेति** । अव्यापकस्यापि धर्मस्य स्वस्वाश्रये व्यावृत्त्यादिकारित्वेन लक्षणत्वादेवेत्यर्थः । यद्यपि क्रियागुणवदित्येव परेण पठितं न तु क्रियावद्गुणवदिति । तथाऽपि क्रिया च गुणाश्च विद्यन्ते यस्मिन्निति क्रियागुणवदिति तदर्थानुवादोऽयमित्यवधेयम् । ननु द्रव्यमात्रनिष्ठो धर्मः क्रियावत्त्वमद्रव्ये नास्ति समवायिकारणत्ववद्गुणवत्त्ववच्चेति प्रतिपादनार्थमेव द्रव्यलक्षणेषु पाठो न तु लक्षणत्वेनेति कथमनेनाव्यापकस्य लक्षणत्वसिद्धिः । न च क्रियावत्त्वस्य द्रव्यासाधारणधर्मत्वप्रतिपादनं किमर्थमिति वाच्यम् । वायुमनसोरप्रत्यक्षत्वेन द्रव्यत्वविप्रतिपत्तौ क्रियावत्त्वेन द्रव्यत्वसाधनार्थत्वादित्यभिप्रायेण किरणावलीकारमतमाशङ्कते **क्रियावद्ग्रहणमिति** । विकल्पेनैतत्पराचष्टे **तदिति** ॥ **अपाकृतत्वादिति** । उच्यत इत्यादिनेति शेषः । लक्षणस्य लिङ्गत्वेनोपयोगित्वाल्लिङ्गत्वस्य च व्याप्यत्वमात्रेणैव संभवान्न व्यापकत्वस्य लक्षणतायामुपयोग इत्यव्यापकस्यापि क्रियावत्त्वस्य युक्तं लक्षणत्वमित्यर्थः ।

**स०** — प्रकारान्तरेण अव्यापकस्य लक्षणदोषत्वोक्तिं समर्थयते **यद्वेति** । अन्यत्र पक्षी (लक्ष्यी,-भूतव्यक्त्यतिरिक्तस्थले सास्नादिमत्त्वापेक्षया अन्यत् यच्छबलत्वादिकं तदभावनिश्चयनिमित्तेत्यर्थः । यद्वा **अन्यत्र** व्यापकीभूतैकलक्षणवतीत्यर्थः । **लक्षणान्तरं** व्यापकलक्षणापेक्षया अन्यलक्षणं लक्षणान्तरं शबलत्वादि । तदभावनिश्चयनिमित्ताऽलक्षणत्वोक्तिः शबलत्वादीनामित्यर्थः । सास्नादिमत्त्वस्य शबलत्वादेश्च गोलक्षणत्वेऽपि सास्नादिमत्त्वस्य व्यापकत्वेन सर्वत्र वृत्तित्वेन तद्वत्यपि शबलत्वादिधर्माणामभावेन असार्वत्रिकत्वात् उभयोरपि सार्वत्रिकत्वासार्वत्रिकत्वरूपनिमित्तभेदेन लक्षणत्वोक्तिरुपपन्नेति भावः । ननु किमेवं क्लिष्टकल्पनया । अव्यापकधर्माणां अलक्षणत्वमेव किं न स्यादित्यत आह **वस्तुतस्त्विति** । **एकमिवेति** । व्यापकमिवेत्यर्थः । अनेकमव्यापकं शबलत्वादिकमित्यर्थः । अत्र स्वाश्रये व्यावृत्त्यादिकारित्वादनेकस्यापि लक्षणत्वमित्येव वक्तव्ये एकमिवेति दृष्टान्तमभिदधता स्वाश्रये व्यावृत्त्यादिकारिणोऽपि अलक्षणत्वे व्यापकस्यापि तदापद्येतेत्यनिष्टप्रसङ्गं सूचयति । अत्र पूर्वपक्षे लिलक्षयिषितगोमात्रव्यापकत्वाभावेन तस्यालक्षणत्वोक्तिरित्युक्तम् । अत्र तु सत्यपि तल्लक्षणत्वे असार्वत्रिकत्वात्तदुक्तिरिति पक्षयोर्भेदः ।

**अत एवेति** । अव्यापकस्यापि लक्षणत्वादेवेत्यर्थः । **अन्यार्थमिति** । क्रियावदक्रियावच्चेति द्विविधं द्रव्यमिति विभागार्थमित्यर्थः । यद्वा द्रव्यस्यैवायमसाधारणो धर्मः । समवायिकारणत्ववत् गुणवत्त्ववच्चेति प्रतिपादनार्थमेव शास्त्रे क्रियावद्द्रव्यमिति द्रव्यलक्षणेषु पठ्यते न नु लक्षणत्वेनेत्यर्थः । **अपाकृतत्वादिति** । उच्यत इत्यादिनेति शेषः ।

**प०— अन्यार्थमिति** । समवायिकारणत्वं गुणवत्त्वं च द्रव्यस्यासाधारणधर्मो यथा तथा क्रियावत्त्वमपि तस्यैव धर्म इति व्युत्पादनार्थं न तु लक्षणत्वार्थमित्यर्थः ॥ **अपाकृतत्वादिति** । उच्यत इत्यादिनेति भावः ।

**या०— यद्वाऽन्यच्चेति** । लक्षणत्वेनोक्ताव्याप्तधर्माश्रयालक्ष्यादन्यत्र लक्ष्ये व्यावृत्त्यादिज्ञापकमन्यल्लक्षणं नास्तीति निश्चयो यदा तदैवाव्याप्तधर्मस्य सार्वत्रिकव्यावृत्त्याद्यसाधकत्वेन दुष्टत्वोक्तिरित्यर्थः । अन्यत्र लक्ष्ये लक्षणान्तरसद्भावनिश्चये त्वाह **वस्तुतस्त्विति** ॥ **एवमिवेति** । सर्वलक्ष्यसाधारणैकलक्षणमिवेत्यर्थः ॥ **अनेकमपीति** । कतिपयलक्ष्यमात्रवृत्त्यनेकमपीत्यर्थः । अत्रैकमिवेति दृष्टान्तकथनं स्वाश्रये व्यावृत्त्यादिकारिणोऽप्यनेकस्यालक्षणत्वे एकस्यापि तदापद्येतेत्यनिष्टं सूचयितुमिति ज्ञातव्यम् । अव्याप्तधर्मस्यापि लक्षणत्वेऽभियुक्तसम्मतिमाह **अत एवेति** । अव्याप्तस्यापि लक्षणत्वादेवेत्यर्थः ॥ **अन्यार्थमिति** । द्रव्यस्यैवायमसाधारणो धर्मः समवायिकारणत्ववद्गुणवत्त्ववच्चेति प्रतिपादनार्थं, वायुमनसोरप्रत्यक्षत्वेन द्रव्यत्वविप्रतिपत्तौ क्रियावत्त्वेन तत्र द्रव्यत्वसाधनार्थं च न तु लक्षणतयेति किरणावलीकारेण व्याख्यातत्वादित्याशयः ॥ **अपाकृतत्वादिति** । उच्यत इत्यादिनेति शेषः ।

**श्री०— अन्यार्थं** किञ्चिद्द्रव्यं क्रियायुक्तं किञ्चिन्नेति द्रव्ये द्वैविध्यं दर्शयितुमेवोक्तं, न लक्षणत्वेनोक्तमित्यर्थ इत्याहुः ॥

**सु०— ननु(च) अत्र पृथिव्यादीनि नवापि पक्षीकृत्यैतानि द्रव्याणि क्रियावत्त्वादिति प्रयोक्तव्यम्, क्रियावन्त्येव वा मूर्तानि । नाद्यः भागासिद्धेः । न द्वितीयः अनध्यवसितत्वात् । तत्कथं नानुपपत्तिः । मैवम् । कैश्चिदनध्यवसितस्य दोषतानङ्गीकारात् । येषां च स दोषस्तेषामप्युपदेशादिना घटादेर्द्रव्यत्वनिश्चये सति तदितरमूर्तपक्षीकारेण द्रव्यत्वसाधने कीदृशो दोषः स्यादित्यलम् ।**

**शे० —** क्रियावत्त्वस्य लिङ्गत्वानुपपत्तेर्न लक्षणत्वमित्याशङ्कते **नन्वत्रेति** ॥ **अनध्यवसितत्वादिति** । क्रियावत्त्वस्य सपक्षे आकाशादौ विपक्षे गुणादौ चावृत्तेः पक्षमात्र एव वृत्तेरसाधारणत्वमित्यर्थः । अनुकूलतर्कवतोऽसाधारणस्य न दोषत्वमित्यभिप्रेत्याह **कैश्चिदिति** । अनध्यवसितस्या-

साधारणत्वात्तस्य च सत्प्रतिपक्षोत्थापकतयैव दूषणत्वात्पूर्वानुमाने चानुकूलतर्कसद्भावे प्रबलतदनुमानबाधितत्वेन प्रतिपक्षासम्भवात् नानुकूलतर्कावतारेऽसाधारणस्य दूषणत्वमिति भावः । नन्वस्त्वनुकूलतर्कावतारदशायामसाधारणस्यादूषणत्वं तथाऽपि तदनवतारदशायामस्त्येव दूषणत्वम् । हेतुः सकलसाध्यवद्व्यावृत्त्या किं साध्याभावसाधकः किंवा सकलसाध्याभाववद्व्यावृत्त्या साध्यसाधक इति संशयाधायकत्वात्तत्कथं क्रियावत्त्वेन द्रव्यत्वसाधनमित्यत आह **येषां चेति** ॥ **कीदृश इति** । तत्र यत्किञ्चित्सपक्षवृत्तित्वेनासाधारण्याभावादिति भावः ।

**स०— अनध्यवसितत्वादिति** । असाधारणत्वादित्यर्थः । **केश्चिदिति** अयमाशयः । असाधारण्यस्य हि साध्याभाववद्व्यावृत्तत्वात् साध्यवान् हेतुः, साध्यवतोऽपि व्यावृत्तत्वात् साध्याभाववान् वेति संदेहकारणत्वेनैव दोषत्वम् । न चैतदसाधारण्यस्य संभवति । अनुकूलतर्केण हेतोः साध्यव्याप्यत्वस्य निर्णीतत्वेन संशयस्याप्रयोजकत्वादिति ।

**प०— अनध्यवसितत्वादिति** । सत्यपि सपक्षे तत्रावर्तमानत्वेनासाधारणानैकांत्यादित्यर्थः ॥ **घटादेर्द्रव्यत्वनिश्चये सतीति** । गगनादिरूपसपक्षावृत्तित्वेपि घटादिरूपसपक्षवृत्तित्वमात्रेण सद्धेतुत्वसंभवेनानध्यवसितत्वाभावेन कीदृशो दोषस्स्यात् न कोऽपीति भावः ।

**या०—** तददर्शनादित्यसहमान आह **नन्वत्रेति** ॥ **अनध्यवसितत्वादिति** । सपक्षविपक्षव्यावृत्तत्वेनासाधारण्यादिति भावः ॥ **कश्चिदिति** । एकत्रानुकूलतर्कावतारे साधकतासम्भवादिति तेषामाशयः ॥ **येषामिति** । तर्कानवतारदशायां हेतुः किं सर्वसाध्यवद्व्यावृत्त्या साध्याभावस्य साधकः उत सर्वसाध्याभाववद्व्यावृत्त्या साध्यस्येति संशयाधायकतया दोष इत्यर्थः । नन्वेवममूर्तद्रव्यविशेषरूपं गगनमेव यदा लिलक्षयिषितं तदाऽभिधीयमानममूर्तद्रव्यलक्षणं शब्दवत्त्वं गगनस्यामूर्तद्रव्यत्वसाधने प्रयुज्यमानमसाधारणं स्यादेव । तत्र गगनस्यैकत्वेनोक्तरीत्या सपक्षासम्भवादिति चेन्न । एकव्यक्तिस्थले उपदेशादिनैव व्युत्पत्त्यादिसम्भवे लक्षणाभिधानस्य तदर्थकस्य तत्रानपेक्षितत्वात् । तदिदमाह **इत्यलमिति** ।

**श्री०— अनध्यवसितत्वादिति** । अमूर्तद्रव्ये गगनादौ क्रियावत्त्वाभावेनासाधारण्यमित्यर्थः ॥ **घटादेरिति** । तथा च सपक्षे घटादौ हेतोः सत्त्वेन यावत्सपक्षवृत्तित्वस्य धूमानुमानेऽप्यभावेनाप्रयोजकतया नासाधारण्यमिति भावः ।

सु० — केचिद्वादिनो विज्ञानस्य प्रामाण्यमाश्रिषत । अपरे तु तत्करणस्य । तत् किमत्र तत्त्वम् । द्वयमपीति ब्रूमः । प्रमितिः प्रमाणम्, प्रमीयतेऽनेनेति प्रमाणमिति भावकरणयोः प्रमाणशब्दस्य सामर्थ्यात् । यद्यपि ल्युट् भावकरणयोरिवाधिकरणेऽपि स्मर्यते । तथाऽपि प्रमाणशब्दस्याभिधानाभावान्न तत्र वृत्तिः । कृत्तद्धितसमासानामभिधानाधीनत्वात् ।

नन्वस्ति विप्राः प्रमाणमित्यधिकरणेऽपि प्रयोगः । मैवम् । विप्राणां प्रमायां (प्रमां प्रति) स्वातन्त्र्येण कर्तृणामधिकरणत्वाभावात् । न हि क्रियाधारोऽधिकरणम् । किन्नाम कर्तृकर्मणोः क्रियाश्रययोर्धारणक्रियां प्रति य आधारस्तत्कारकम् । तस्मात्तदीयविज्ञानस्य वाक्यस्य वा प्रामाण्याद्विप्राः प्रमाणमित्युपचर्यते । यदि तर्हि विज्ञानं तत्करणं च प्रमाणं द्वयमपि । तत्रोभयत्र याथार्थ्यापरपर्यायं प्रामाण्यं किमेकप्रकारं वर्तते, उतानेकप्रकारम् । आद्ये विज्ञानं केवलप्रमाणं प्रत्यक्षानुमानागमलक्षणं तत्करणमनुप्रमाणमिति सिद्धान्तविरोधापातः । द्वितीये लक्षणस्यानुपपत्तिः । प्रकारद्वयस्यान्योन्यस्मिन्नवर्तनेनाव्याप्तत्वादित्यत आह तदिति ।

अनु० — तन्मुख्यं ज्ञानशब्दयोः ॥

करणभूतयोः प्रत्यक्षानुमानयोस्त्वमुख्यमिति शेषः । एतच्च (स्पष्टी)स्फुटीकरिष्यते ।

---

शे० — ननु तन्मुख्यं ज्ञानशब्दयोरित्युत्तरत्र मूले ज्ञाने याथार्थ्यं मुख्यं करणेष्वपि शब्दे मुख्यम् अन्यत्रामुख्यमित्युच्यते न तद्युक्तम् । ज्ञानकरणयोरुभयोरपि प्रामाण्ये नियामकाभावे तदसिद्धेः । उभयप्रामाण्यसिद्धावप्युभयत्र मुख्यत्वेनैव वाऽमुख्यत्वेनैव वैकरूप्ये सम्भवति क्वचिन्मुख्यत्वं क्वचिदमुख्यत्वमिति वैरूप्याश्रयणस्य निर्निबन्धनत्वादित्यत उभयोरपि प्रामाण्ये नियामकं कथयन् ऐकरूप्ये च बाधकं च दर्शयन्नुत्तरमूलमवतारयति **केचिदित्यादिना** । ज्ञानकरणयोरुभयोरपि प्रामाण्ये नियामकमाह **प्रमितिरिति** । अनेनोभयोरपि प्रामाण्ये सामर्थ्यमेव नियामकमित्युक्तं भवति । भावकरणयोः प्रमाणशब्दस्य सामर्थ्योपपादनपूर्वकमतिप्रसङ्गान्न तन्नियामकमित्यभिप्रेत्य शङ्कते **यद्यपीति** । 'नपुंसके भावे क्तः' इत्यतो भाव इत्यनुवर्तमाने 'ल्युट्चे'ति भावे ल्युड्विधानात्करणाधिकरणयोश्चेति करणाधिकरणयोरुभयोरपि ल्युड्विधानान्न ल्युटो भावकरणमात्रनिष्ठत्वमिति ल्युडन्तप्रमाणशब्दस्य सामर्थ्याद्भावकरणाधिकरणानां प्रामाण्यप्रसक्त्या न तेन द्वयोरेव प्रामाण्यसिद्धिरिति भावः । न केवलमनुशासनमात्रं नियामकं ब्रूमः । किन्नामाभिधाने सत्येव । न चाधिकरणे विशिष्टमनुशासनमस्ति येन तस्यापि प्रामाण्यं प्रसज्येत । तथा च विशिष्टस्यानुशासनस्योभयमात्रनिष्ठत्वात्तेनोभयोरेव प्रामाण्यसिद्धिर्भविष्यतीत्याशयेन समाधत्ते **तथाऽपीति** ॥ **तत्रेति** । अधिकरण इत्यर्थः ।

अनुशासनस्याभिधानसापेक्षत्वे नियामकमाह **कृत्तद्धितेति** । प्रमाणशब्दश्च कृदन्त इति भावः । **अभिधानाधीनत्वादिति** । प्रयोगानुसारित्वादित्यर्थः । ग्रामं गच्छतीत्यादावनभिधानेन कर्मण्यण् इत्यादिलक्षणप्राप्तकृदाद्यनुत्पत्तिदर्शनादिति भावः ।

विशिष्टानुशासनस्याप्यधिकरणसाधारणत्वान्नोभयोरेव प्रामाण्यनियामकत्वमिति शङ्कते **नन्विति** । नाभिधानमात्रसापेक्षानुशासनस्य नियामकत्वमभ्युपगच्छामः किन्नामानुपचरिताभिधानसहकृतस्यैव । प्रकृते च विप्राः प्रमाणमिति प्रयोगस्यौपचारिकत्वेन विशिष्टानुशासनस्य तत्राभावान्नातिप्रसङ्ग इत्याशयवान्कुतो अस्य प्रयोगस्यौपचारिकत्वमित्यतो मुख्यार्थानुपपत्तिं तावदुपपादयति **विप्राणामिति** । विप्राणां प्रमायां कर्तृत्वे हेतुमाह **स्वातन्त्र्येणेति** । हेतौ तृतीयेयं, स्वतन्त्रत्वादित्यर्थः । नन्वस्तु विप्राणां स्वातन्त्र्यात्कर्तृत्वं तथाऽपि कर्तॄणामपि तेषां साक्षात्क्रियाधारत्वेनाधिकरणत्वमपि किन्न स्यादित्यतो भवेदेवं यदि क्रियाधारत्वमेवाधिकरणत्वं स्यान्न चैवं कर्तॄणां, तेषामनवकाशया कर्तृसंज्ञया स्वविषये बाधेनाधिकरणत्वायोगादित्याह **न हीति** । तद्व्यतिरिक्तस्य तस्य दुर्निरूपत्वादधिकरणकारकोच्छेदः स्यादित्यभिप्रेत्य शङ्कते **किन्नामेति** । 'कर्तृकर्मव्यवहितामसाक्षात्साधयत् क्रियाम् । उपकुर्वन्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमि'त्याधारोऽधिकरणमिति सूत्रीयाभियुक्तोक्तिं मनसि निधायाधिकरणलक्षणमाह **कर्तृकर्मणोरित्यादिना** । ततश्च शयनरूपक्रियाश्रयकर्त्राधारतया कटस्य शयनं प्रत्यधिकरणत्ववद्विक्लित्याख्यक्रियाश्रयौदनरूपकर्माधारतया स्थाल्याः क्रियां प्रत्यधिकरणत्ववच्चेह कर्तृकर्मव्यवहितक्रियां प्रत्याधारत्वमेवाधिकरणत्वं विप्राणामभिलषता वाच्यम् । न च तत्संभवति । प्रमाश्रयाणां विप्राणां स्वाश्रितत्वस्यात्माश्रयप्रसङ्गेनासंभवादिति न मुख्यमधिकरणत्वं तेषामिति भावः । एवं मुख्यार्थानुपपत्तिमभिधायोपचारप्रयोजकं मुख्यार्थसंबन्धं दर्शयन्निगमयति **तस्मादिति** ।

**सिद्धान्तेति** । ज्ञाने याथार्थ्यस्य मुख्यत्वादेव हि तस्य केवलत्वमन्यत्रामुख्यत्वादनुप्रमाणत्वमिति हि सिद्धान्तः । तत्रोभयत्रापि प्रामाण्यस्यैकप्रकारत्वे विभागानुपपत्त्या सिद्धान्तविरोध इत्यर्थः । उभयत्र प्रामाण्यस्यानेकप्रकारतया मूलारूढत्वसिद्ध्यर्थमपेक्षितं पूरयति **करणेति** । ननु 'तन्मुख्यं ज्ञानशब्दयो'रित्युक्तम् । तथा सति ज्ञानवच्छब्दस्यापि केवलत्वापातादित्यत आह **एतच्चेति** । 'ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरमि'त्यादिना 'न ज्ञानसमकक्षतया शब्दे याथार्थ्यं मुख्यं किन्तु करणत्रयापेक्षया ज्ञान एव तन्मुख्यं करणेष्वपि निर्धारणायां शब्दे मुख्यं प्रत्यक्षानुमानयोस्त्वमुख्यम् । ते एते परममुख्यमुख्ये एकीकृत्य तन्मुख्यं ज्ञानशब्दयोरित्युक्तमि'ति स्फुटीकरिष्यत इत्यर्थः । यद्वा ननु च प्रामाण्यस्यानेकप्रकारत्वे प्रकारद्वयस्यान्योन्यस्मिन्नवर्तनादुक्ताव्याप्तितादवस्थ्यमित्यत आह **एतच्चेति** । अनुप्रमाणमेतानि ह्यक्षयुक्ति वचांस्यतः' इत्यादिनेति शेषः ।

स० **सामर्थ्यादिति**। योग रूढिभ्यां प्रवृत्तत्वादित्यर्थः। **अभिधानाभावादिति**। प्रयोगाभावादित्यर्थः। ननु अभिधानाभावेऽपि स्मरणस्य विद्यमानत्वेन अधिकरणेऽपि ल्युट्स्यादित्यत आह **कृत्तद्धितेति**। **स्वातन्त्र्येणेति**। कर्तृत्वोपपादकमेतत्। स्वतन्त्रः कर्तेति द्रष्टव्यम्। ननु ईश्वरस्य प्रमाधिकरणत्वस्य विद्यमानत्वेन तस्यापि प्रामाण्यमुपपन्नमित्येव चेत्परस्याभिप्रायः तर्हि अभिधानाभावादित्येव परिहारोऽभिधेयः 'कर्तरि प्रमाणशब्दस्याननुशासनादि'ति पद्धत्युक्तसमाधानमसंगतमिति चेत् तदभिप्रायानवबोधात्। तत्र हि एवमभिप्रायः। वैवक्षिकमधिकरणत्वमीश्वरस्य नास्त्येव। एवं च प्रमाकर्तृत्वलक्षणमेव प्रमाऽऽश्रत्वं वक्तव्यम्। न चैवं वक्तुं शक्यम्। कर्तरि ल्युटः अनुशासनाभावादिति। **उपचर्यत इति**। विप्रशब्देन लक्षणया तज्ज्ञानं तद्वाक्यं वा गृह्यते इत्यर्थः। **एतच्चोपपादयिष्यत इति**। 'ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरम्' इत्यादिनोपपादयिष्यत इत्यर्थः।

प० — **केचिदिति**। अनुभूतिः प्रमाणमिति वदंतः प्राभाकराः॥ **अपरे त्विति**। प्रमाकरणं प्रमाणमिति वदंतस्तार्किका इत्यर्थः॥ **सामर्थ्यादिति** भावे ल्युट् **करणाधिकरणयोश्चेति** भावकरणार्थयोः पाणिनिना ल्युटोऽनुशासनादिति भावः। स्मर्यते पाणिनिस्मृत्योच्यत इत्यर्थः॥ **अभिधानाभावादिति**। प्रमाधिकरणवाचित्वेन प्रमाणशब्दस्य प्रयोगाभावादित्यर्थः। अभिधानाभावेपि कुतस्तस्य न संग्रह इत्यत आह **कृत्तद्धितेति**। ल्युटः कृदतिङिति सूत्रेण कृत्संज्ञकत्वेन प्रमाणशब्दस्य कृदंतत्वादिति भावः॥ **विप्राणामिति**। कर्तृणामित्यन्वयः। कर्तृत्वे हेतुः **स्वातन्त्र्येणेति**। 'स्वतंत्रः कर्ते'ति पाणिनिस्मरणात्। कर्तृकारकभूतानां कथमधिकरणकारकत्वमिति भावः। ननु विप्राणां प्रमाश्रयत्वात्कथं नाधिकरणतेत्यत आह **नहीति**॥ **क्रियेति**। धात्वर्थरूपमित्यादिलक्षणक्रियाधार इत्यर्थः। आधारोऽधिकरणमिति सूत्रे वृत्त्यादावुक्तमाह **कर्तृकर्मणोरित्यादि**॥ **तत्कारकमिति**। अधिकरणमित्यनुषंगः। यथा कटे शेते स्थाल्यामोदनं पचतीति। **(स्फुटीक)स्पष्टीकरिष्यत इति**। 'ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनंतरमि'त्येतद्व्याख्यावसर इति भावः।

या० ननु ल्युट् भावे करणाधिकरणयोश्चेति स्मरणाद्भावकरणयोरिवाधिकरणेऽपि प्रमाणशब्दस्य सामर्थ्यावगमादधिकरणमपि प्रमाणं स्यादित्याशङ्क्य निराकरोति **यद्यपीत्यादिना**॥ **अभिधानाभावादिति**। प्रयोभावादित्यर्थः॥ **कृत्तद्धितेति**। प्रमाणशब्दश्च कृदन्त इति भावः॥ **कर्तृकर्मणोरिति**। कटे शेते स्थाल्यां पचतीत्यादौ दर्शनात्। प्रकृते च क्रियाश्रयाणां विप्राणां न स्वाश्रितत्वमात्माश्रयत्वप्रसङ्गादिति भावः॥ **सिद्धान्तेति**। केवलानुशब्दयोरुपपदत्वाभ्युपगमविरोध इत्यर्थः। **अव्याप्तत्वादिति**। सर्वस्यापि विलक्षयिषितत्वादिति भावः।

**श्री०**— प्रोपपदात् माङ्मानेऽस्माल्ल्युट्प्रत्यये लकारटकारयोर्लोपे युवोरनाकाविति योरनादेशे नकारस्य णत्वे च प्रमाणति ल्युडन्तः शब्दः स्मर्यते । तथा च प्रमाणं त्रिविधमिति वाच्यमिति भावः । **अभिधानं** प्रयोगः । **सामर्थ्यं** व्युत्पन्नत्वात् ॥ **कृत्तद्धितेति** । ल्युटः कृत्प्रत्ययत्वादिति भावः । **विप्रा इति** । विप्राः प्रमाणं ज्ञानाश्रया इत्यर्थः । कर्तृत्वोपपादकं कारकान्तराप्रयोज्यत्वं स्वातन्त्र्यम् ॥ **स्वातन्त्र्येणेति** । प्रमायां 'स्वतन्त्रः कर्ते'ति तल्लक्षणादिति भावः ॥ **न हीति** । येन ज्ञानरूपक्रियाधारत्वेन विप्राणामधिकरणत्वं स्यादित्यर्थः ॥ **किन्नामेत्यादि** । यथा कटे शेत इत्यत्र शयनरूपक्रियाश्रयो यः कर्ता पुरुषः तद्धारणक्रियां प्रति य आधारः कटः तत्राधिकरणसंज्ञा भवति, तथा स्थाल्यां पचतीत्यत्र पचनरूपक्रियाश्रयभूतं यदोदनरूपं कर्म तद्धारणक्रियां प्रत्याधारः स्थालीरूपः तत्राधिकरणसंज्ञा भवति । न ह्येतदाधारलक्षणं विप्राः प्रमाणमित्यत्र सम्भवतीत्यर्थः । तर्हि कथमयमुपदेश इत्यत औपचारिक इत्याह **तस्मादिति** । तथा च विप्राणां ज्ञानं प्रमाणमिति कृत्वा विप्राः प्रमाणमित्युपचर्यते । तथा च भाव एव ल्युडिति भावः । अथवा विप्राणां वाक्यस्य प्रामाण्याद्विप्राः प्रमाणमित्युपचारः । तथा च करणे ल्युडिति हृदयम् । विज्ञानं तत्करणं चेति द्वयमपि यदि प्रमाणं तर्हीत्यन्वयः । साक्षाज्ज्ञेयविषयीकारित्वं परम्परया तद्विषयीकारित्वं चेति प्रकारद्वयं ज्ञेयम् ॥

---

**च०**— आधारेऽधिकरणमिति सूत्रे वृत्त्याद्युक्तदिशाह **कर्तृकर्मणोरित्यादि** । कटे शेते स्थाल्यामोदनं पचतीत्युदाहरणे द्रष्टव्ये । (किमत्र । **खण्डवृत्तिरिति** ।? रूढ इत्यर्थः ।) **स्फुटीकरिष्यत इति** । 'ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरमि'ति प्रतीकव्याख्यावसर इत्यादिः ।

**सु०— स्यादेतत् । यदि याथार्थ्यं प्रमाणलक्षणं स्यात् । न च तत्संभवत्यतिव्याप्तेः । तथा हि । योग्यता, वीप्सा, पदार्थानतिवृत्तिः, सादृश्यं चेति यथाशब्दार्थाः । अर्थशब्दश्चाभिधेयधनवस्तुप्रयोजननिवृत्तिषु वर्तते । तत्र सादृश्यार्थस्य यथाशब्दस्य तावदत्र न परिग्रहः । 'यथाऽसादृश्ये' इत्यव्ययीभावविधाने विशेषणात् । समासान्तरस्य च असामर्थ्यादिप्रतिहतत्वात् । अत एव यथार्थानुभवः प्रमेत्यत्र किं याथार्थ्यमर्थसादृश्यमित्यादिः कस्यचित्प्रश्नोऽनुपपन्नः । नापि योग्यतावीप्सार्थस्य । वाक्यशेषा(दोषा)भावेनार्थयोग्यताया (अर्थानां )अर्थवीप्साया वा प्रामाण्यापत्तेः । तस्मात्पदार्थानतिवृत्त्यर्थस्येदं ग्रहणम् । अर्थशब्दस्याभिधेयवाचिनो ग्रहणे अव्याप्तिप्रसङ्गात् विषयापरपर्यायवस्तुवचनस्यैव ग्रहणम् ।**

**तथा चार्थं विषयं नातिवर्तते न व्यभिचरति यत्तत्प्रमाणमित्युक्तं स्यात् । एतच्च सकर्मकक्रियामात्रेऽस्ति । न हि गमनं गम्यमतिवर्तते, नापि छिदा छेद्यम् । यदेव(हि) गत्यादिना प्राप्यं तदेव गम्यादि । ततो नेदं लक्षणमित्यत आह** अर्थत्वमिति ।

अनु०— अर्थत्वमर्यतैव स्यात्

**अर्यतैव ज्ञेयतैवार्थत्वमर्थशब्दप्रवृत्तिनिमित्तमस्माकं विवक्षि(ता)तं स्यात् । न तु विषयत्वमित्यर्थः । एतदुक्तं भवति । यथाशब्दस्य पदार्थानतिवृत्तिवाचित्वमङ्गीकृतमेव । अर्थशब्दस्तु न विषयपर्यायो गृह्यते । किन्तु ज्ञेयवाची । यद्यपि न तत्र तस्य रूढिस्तथाऽप्यर्यत(इत्यर्थ)इति व्युत्पत्त्या तद्वाचिताऽस्त्येव । अर्तेरौणादिकस्य थन्प्रत्ययस्य प्रसिद्धत्वात् । गत्यर्थानां च ज्ञानार्थत्वादिति । नन्वर्यतेति कथम् । 'अर्यः स्वामिवैश्ययोरि'ति विशेषणात् । मैवम् । स्वामित्वोपचारात् । अर्थो हि ज्ञानाद्यपेक्षया प्रधानं विवक्ष्यते ।**

शे० — ननु 'अर्थत्वमर्यतैव स्यादि'त्युत्तरवाक्यमनर्थकम् । न च लक्षणान्तर्गतस्यार्थशब्दस्य व्याख्यानार्थं तदिति वाच्यम् । तथा सति यथाशब्दार्थस्यापि वक्तव्यत्वापातात् । न च प्रसिद्धेषु योग्यताद्यर्थेषु प्रकृताविरुद्धो यथाशब्दार्थो ज्ञातुं शक्यत इति तदनभिधानमिति वाच्यम् । तथा सति प्रसिद्धेष्वभिधेयाद्यर्थेषु प्रकृताविरुद्धस्यार्थशब्दार्थस्य ज्ञातुं शक्यत्वेन तदभिधानवैयर्थ्यापातादित्यतोऽर्थशब्दस्यैव व्याख्याने नियामकं वदंस्तद्वाक्यमवतारयति **स्यादेतदिति ॥ अतिव्याप्तेरिति** । सकर्मकगमनादिक्रियामात्र इति शेषः । कथं गमनादिक्रियाया याथार्थ्यं येन तत्रातिव्याप्तिरित्यतो विषयमनतिक्रम्य वर्तमानत्वात्तदिति वक्तुं कुतोऽत्रानेकार्थयथाशब्दस्यानतिक्रममात्रार्थत्वं कुतश्चानेकार्थस्यार्थशब्दस्य विषयमात्रार्थत्वमित्यतोऽर्थान्तरासंभवप्रदर्शनपूर्वकं तदुभयं व्यवस्थापयितुं संभावितान्यथार्थशब्दयोरर्थांस्तावद्दर्शयति **तथा हीत्यादिना ॥ यथाशब्दार्थ इति** । 'यथा सादृश्ययोग्यत्ववीप्सास्वार्थानतिक्रम' इत्यमरोक्तेरिति भावः । **वर्तत इति** । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु'इत्यमरोक्तेरिति भावः । इदानीं परिशेषेणानतिक्रमार्थत्वं व्यवस्थापयितुं यथाशब्दार्थान्तराणि पराचष्टे **तत्रेति** । कुतो न परिग्रह इत्यतः सादृश्यार्थत्वे यथाशब्दस्य किमत्राव्ययीभावोऽभिमतः किंवा ततोऽन्य इति विकल्पं मनसि निधायाद्यं प्रत्याह **यथेति ॥ विशेषणादिति** । असादृश्य इति सादृश्यव्यतिरिक्तत्वेन यथाशब्दार्थस्य विशेषणादित्यर्थः । असादृश्यार्थकस्यैव यथाशब्दस्य 'यथाऽसादृश्ये' इत्यनेनाव्ययीभावनियमनान्न सादृश्यार्थकस्य तस्यार्थशब्देनाव्ययीभावोऽन्यथा हि यथार्थे यदव्ययमिति पूर्वेणैव समासस्य सिद्धत्वा'**द्यथा** असादृश्ये'इति सूत्रस्य वैयर्थ्यप्रसङ्गात् । अत एवोक्तं वामनेन 'यथार्थे यदव्ययमिति पूर्वेण सिद्धम् ।

इदन्तु वचनं सादृश्यप्रतिषेधार्थमि'तीत्याशयः । द्वितीयं प्रत्याह **समासान्तरस्य चेति** । सादृश्यस्य सापेक्षत्वात्तदर्थकयथाशब्दस्यासमर्थत्वान्न समासान्तरं संभवतीत्यर्थः । नित्यसापेक्षत्वादसामर्थ्येऽपि समासोऽर्थशब्देनावश्यमभ्युपगमनीयः । अन्यथा 'यथाऽसादृश्ये' इति सादृश्यार्थकयथाशब्दस्य समासाप्रसक्त्या तन्निषेधानर्थक्यप्रसङ्गादित्यपरितोषादाह **आदीति** । अनेन प्रकृतानुपयोगित्वपरिग्रहः । तत्पुरुषादेः प्रकृतप्रामाण्यानुपपादकत्वेन प्रकृतानुपयोगित्वादिति ध्येयम् । अन्ये तु समासान्तरेऽर्थसादृश्यस्य लक्षणार्थतया पर्यवसानात् अस्त्यादिक्रियासापेक्षयथाशब्दस्यार्थशब्देन असामर्थ्यान्न समासः संभवतीत्यर्थः । आदिशब्देन समासान्तरेऽर्थशब्दस्यैवोपसर्जनत्वात्पूर्वनिपातप्रसङ्गस्य संग्रह इत्याहुः । केचित्त्वसादृश्य इति विशेषणादव्ययीभावासंभवेऽपीह यथासदृशोऽर्थो यस्येत्येव बहुव्रीहिरेव किं न स्यादित्यत आह **समासान्तरस्येति** । सादृश्यस्येतरान्वितत्वेन तदर्थकयथाशब्दस्यान्यपदार्थेनासामर्थ्यात्सादृश्यवाचकयथाशब्दस्य सादृश्यवत्परत्वाश्रयणाल्लक्षणापत्तिश्चेत्याशय इत्याहुः । **अत एवेति** । सादृश्यार्थत्वे समासानुपपत्त्या समासेन सादृश्यार्थत्वाभावस्यैव निर्णीतत्वादेवेत्यर्थः । इत्यादीत्यादिपदेन तत्त्वविषयकत्वरूपविधान्तरपरिग्रहः ॥ **कस्यचिदिति** । खण्डनकारस्येत्यर्थः । संभावितस्यैव प्रष्टव्यत्वादिति भावः । एवं प्रकृते सादृश्यार्थत्वासंभवमुपपाद्य योग्यत्वाद्यर्थत्वासंभवमप्युपपादयति **नापीति** । अत्र परिग्रह इत्यनुवर्तते । उभयत्र हेतुमाह **वाक्येति** । योग्यार्थत्वे यथाशब्दस्यार्थस्य योग्यतेत्यर्थपर्यवसानाद्वीप्सार्थत्वे चार्थमर्थं प्रतीत्यर्थपर्यवसानादर्थयोग्यताया वाऽर्थवीप्साया वा प्रामाण्यं स्यादित्यर्थः । नन्वत्रैव सादृश्यार्थत्वपक्षेऽप्यर्थसादृश्यस्य प्रामाण्यमापादयितुं शक्यत इति कुतस्तदनापादनम् । तत्र तदापादनासंभवादनापादने च कुतोऽत्रापि तदापादनसंभवो येनार्थयोग्यतादेस्तदापाद्यत इत्यतः सादृश्यार्थत्वे यथाशब्दस्योक्तरीत्या समासानुपपत्त्या तद्रूपवाक्यदोषेणार्थसादृश्यस्य लक्षणवाक्यार्थतया अलाभान्न तन्मूलकमर्थसादृश्यस्य प्रामाण्यापादनं शक्यते कर्तुमिति नार्थसादृश्यस्य प्रामाण्यमिहापादितम् । योग्यताद्यर्थत्वे तु समासानुपपत्तिरूपवाक्यदोषाभावेनार्थयोग्यतायास्तद्वीप्साया वा लक्षणवाक्यार्थतया लाभसंभवात्तन्मूलकमर्थयोग्यतादेः शक्यते प्रामाण्यमापादयितुमिति तदेवेहापाद्यत इत्याशयेनोक्तं **वाक्यदोषाभावेनेति** । वाक्यशेषाभावेनेति पाठे लक्षणे तद्व्यावर्तकपदाश्रवणेनेत्यर्थः । एवं प्रसक्तयथाशब्दार्थान्तरप्रतिषेधं विधायेदानीं परिशेषयति **तस्मादिति** ॥ **पदार्थेति** । समभिव्याहृतपदार्थेत्यर्थः । नन्वनतिक्रमार्थत्वं न यथाशब्दस्य युज्यते तथा सति यथाशब्दस्यानतिक्रमार्थे यथाऽसादृश्य इत्यव्ययीभावविधानादव्ययीभावस्य च नपुंसकत्वविधानादुपकुम्भमित्यादिवद्यथार्थं प्रतीतिरित्यादिप्रयोगप्रसङ्गेन यथार्था प्रतीतिरित्यादिप्रयोगस्यासाधुत्वप्रसङ्गादिति चेन्न । तस्येष्टत्वात् । वक्ष्यति चैनत्स्वयमेव ग्रन्थकारो

'यथार्था युक्तय' इत्येतद्व्याख्यानावसर इति ध्येयम् । एवं यथाशब्दार्थमभिधायार्थशब्दस्यापि प्रसक्तार्थान्तरप्रतिषेधप्रदर्शनपूर्वकं विषयार्थत्वं परिशेषेण दर्शयति **अर्थशब्दस्य चेति** ॥ **अव्याप्तिप्रसङ्गादिति**। अभिधेयवाचिनो ग्रहणे तदनतिक्रमस्य शब्दमात्रगतत्वेऽपि प्रत्यक्षादावभावात्तत्राव्याप्तिप्रसङ्गः । धनप्रयोजननिवृत्तिवाचिनो ग्रहणे च तत्तदनतिक्रमस्य तत्तज्ज्ञानमात्रवृत्तित्वेऽपि तदन्यत्र घटादिज्ञानेऽसत्त्वात्तत्राव्याप्तिप्रसङ्ग इत्यर्थः ॥ **विषयापरपर्यायेति** । 'अर्थो विषयार्थतयोर्धनकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने' इति मेदिनीकारोक्तेरिति भावः ।

एवं लक्षणवाक्यान्तर्गतपदार्थो निरूपितः । तेनार्थशब्देन विषयस्य यथाशब्देन च तदनतिक्रमस्य लाभेऽपि विषयमनतिक्रम्य वर्तमानत्वस्य कथं लाभ इत्यतो यथार्थशब्दयोरव्ययीभावसमासेन तल्लाभ इत्याशयेनाव्ययीभावसमासप्रदर्शनपूर्वकमभिमतं वाक्यार्थमाह **तथा चेति** । एवमतिव्याप्त्युपयोगिनो लक्षणवाक्याल्लाभमुपपाद्येदानी'मतिव्याप्तेरि'ति प्रतिज्ञातामतिव्याप्तिं दर्शयति **एतच्चेति** । विषयमनतिक्रम्य वर्तमानं चेत्यर्थः । सकर्मकक्रियामात्रे गमनादिरूपक्रियायामित्यर्थः ॥ **न हीति** । छेद्यमतिवर्तत इति संबन्धः । ननु कर्मानेकविधं तन्निर्वर्त्यं विकार्यं च । तत्र 'यदसज्जायते, सद्वा जन्मना यत्प्रकाशते; तन्निर्वर्त्यं । विकार्यं तु कर्म द्वेधा व्यवस्थितम् । प्रकृत्युच्छेदसंभूतं किञ्चित्काष्ठादिभस्मवत् । किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवदित्युक्तेः । तत्र निर्वर्त्यं यथा कटं करोतीत्यादि । प्रकृत्युच्छेदसंभूतं विकार्यं यथा काष्ठं भस्म करोतीत्यादि । गुणान्तरोत्पत्त्या यथा सुवर्णं कुण्डलं करोतीति । तत्रासतोर्भस्मकुण्डलयोर्जायमानत्वेन निवर्त्यत्वम् । काष्ठसुवर्णादेस्तु विक्रियमाणत्वेन विकार्यत्वम् । तदिह कथं ग्रामदारुणोर्गम्यादिकर्मत्वं येन ग्रामदारुणी गम्यच्छेद्ये स्याताम् । न चात्र गत्यादिनिर्वर्त्यं विकार्यं वा किञ्चिद्दृश्यते यद्गम्यादि स्यात् । ततो गत्यादेरपि गम्याद्यतिक्रम्यवृत्तेर्न तत्रातिव्याप्तिरित्यतो नोक्तरूपेण द्विविधमेव कर्म किन्तु प्राप्यान्तर्भावेन त्रिविधम् 'निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतमि'ति हरिणोक्तेः । 'क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते' इति तल्लक्षणम् । तद्यथाऽऽदित्यं पश्यति हरिं भजतीत्यादि । तत्र रज्जुं सृजति काष्ठं दहतीत्यादौ प्रत्यक्षेणैव देवदत्तं रोषयतीत्यादौ च सुखवैकल्यादिकार्यानुमानेनैव च नात्र प्रत्यक्षेणानुमानेन वा क्रियाकृतः कश्चिदतिशयो दृश्यत इत्यादित्यादेः प्राप्यत्वमेव । तथा च ग्रामादेराद्यप्रकारद्वयाभावेऽप्यादित्यादिवत्तृतीयप्रकाराक्रान्तत्वाद्युक्तं ग्रामादेरपि गत्यादिकर्मत्वमिति न गम्याद्यतिक्रमो गत्यादेरित्यतिव्याप्तिरेवेत्याशयेनाह **यदेवेति** ।

ननु च याथार्थ्यमिति लक्षणवाक्यान्तर्गतार्थशब्दार्थस्यैव वक्तव्यत्वादर्थत्वमर्यतैवेत्यर्थत्वार्यत्वयोरभेदकथनं प्रकृतानुपयुक्तमित्यत आह **अर्थत्वमर्थशब्दप्रवृत्तिनिमित्तमिति** । नन्वभिधेयत्वादेरप्यर्थ-

शब्दप्रवृत्तिनिमित्तत्वात्कथमर्थ्यतेत्यवधारणमित्यत उक्तम् **अत्रेति** । तथा च प्रकृतलक्षणान्तर्गतार्थे शब्दप्रवृत्तावभिधेयत्वादेरनिमित्तत्वाद्युक्तमवधारणमिति भावः । ननु मूले यथाशब्दस्यार्थान्तरमनुक्त्वा कुतोऽर्थशब्दस्यैव प्रसिद्धार्थपरित्यागेनार्थान्तरवर्णनं कथं चार्थशब्दस्य ज्ञेयवाचित्वं तत्र तस्य रूढेरभावाद्योगस्य चाप्रतिभासादित्यत आह **एतदुक्तं भवतीति** ॥ **अङ्गीकृतमेवेति** । प्रसिद्धार्थाङ्गीकारेऽनुपपत्तेरभावान्न यथाशब्दस्यार्थान्तरमुक्तमिति भावः ॥ **औणादिकथप्रत्ययस्येति** । कर्मणीति शेषः । ऋ गतावित्यस्मा'दुषिकुषिगार्तिभ्यः स्थनि'त्यौणादिकसूत्रेण कर्मणि थन्प्रत्यये सार्वधातुकार्धधातुकयोरित्यार्धधातुके परतो गुणे उरण् रपर इति रपरत्वे अचो रहाभ्यामिति थस्य द्वित्वेऽर्थशब्दनिष्पत्तिरिति भावः । ननु तथाऽप्यर्थशब्दस्य गतिकर्ममात्रवाचित्वलाभेऽपि न ज्ञेयवाचित्वलाभ इत्यत आह **गत्यर्थानामिति** । अनेकार्थत्वाद्धातूनामिति भावः । यद्वा सर्वे गत्यर्था ज्ञानार्था इति न्यायादिति भावः । ननु 'अर्तेरचो यदि'ति सामान्यलक्षणप्राप्त'यद'पवादकस्य 'ऋहलोर्ण्यदि'ति ण्यतः स्वामिवैश्ययोरभिधेययोः सतोरेवापवादेनार्यस्वामिवैश्ययोरिति यत्प्रत्ययविधानादर्यः स्वामीत्यादिवत्प्रकृतेऽर्थस्य स्वामित्वाद्यभावेन प्रकृते तदप्राप्ते'रपवादाभावे पुनरुत्सर्गस्य स्थितिरिति' न्यायेन 'ऋहलोर्ण्यदि'ति ण्यति तस्य णित्वा'दचो ञ्णिती'ति वृद्धौ रपरत्वे चार्यो ब्राह्मण इत्यादिवदार्यतेति भवितव्यमर्थ्यतेति तु कथमित्याशयेनाक्षिपति **नन्वित्यादिना** । स्वामित्वोपचारे बीजभूतं गुणमाह **अर्थो हीति** । अर्थतथात्वस्य ज्ञानप्रामाण्यप्रयोजकत्वादर्थस्य ज्ञानापेक्षया प्राधान्यमित्यवधेयम् ।

**स०—अतिव्याप्तिरिति** । सकर्मकगमनादिक्रियामात्रे अतिव्याप्तिरित्यर्थः । क्रियामात्रे अतिव्याप्तिमुपपादयितुं परिशेषयति **तथा हीति** । **अव्ययीभावविधाने विशेषणादिति** । असादृश्य इति विशेषणात् । सादृश्यार्थकत्वे अव्ययीभावासंभवादिति भावः । ननु च यथा सादृश्यविशिष्टार्थो यस्येति एवं बहुव्रीहेरेव किं न स्यादित्यत आह **समासान्तरस्य चेति** । सादृश्यस्य अन्यान्वितत्वेन तदर्थकयथाशब्दस्य अन्यपदार्थेन समासासंभवादित्यर्थः । आदिपदेन संख्यापूर्वकत्वाद्यभावेन द्विगुतत्पुरुषादेरनुपपत्तिसंग्रहः । यद्वा आदिपदेन अर्थानुपपत्तिसंग्रहः । उपमानमात्रस्य सादृश्यविशिष्टार्थविषयकत्वेऽपि प्रामाण्यमात्रस्य तदभावादिति द्रष्टव्यम् । **अत एवेति** । यथाशब्दस्य सादृश्यार्थकत्वे समासानुपपत्तेरेवेत्यर्थः । **वाक्यशेषाभावेनेति** । योग्यताऽर्थकत्वे अर्थस्य योग्यतामनतिक्रम्य वर्तमानम्, वीप्साऽर्थकत्वे अर्थमर्थंप्रति स्थितमित्यादिवाक्यशेषाभावेनेत्यर्थः । अतिव्याप्तेरित्युक्तामतिव्याप्तिमेव स्पष्टयति **एतच्चेति** । ननु गम्यस्य गमनं प्रति छेद्यस्य छिदां प्रति विषयत्वस्यैवाभावेन कथं गमनादेर्विषयाव्यभिचारित्वमित्यत आह **यदेव हीति** । **अर्तेरौणादिकस्य थन्प्रत्ययस्येति** । ऋ गति-

प्रापणयोः ' इत्यस्मात् 'उषि-कुषि-गार्तिभ्यस्थन्' इत्यादिकेन औणादिके थन्प्रत्यये तस्यार्धधातुकं शेष इत्यनेन आर्धधातुकत्वसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणे रपरत्वे च अर्थशब्दनिष्पत्तिर्द्रष्टव्या । ननु 'ऋ गतौ' इत्यस्मात् ऋहलोर्ण्यत् इति ण्यति णित्त्वात् अचोञ्णितीति वृद्धौ रपरत्वे च आर्यतेति स्यात् , अर्यतेति कथमित्याशङ्कते **नन्विति** । ननु ण्यदपवादेन 'अचो यदि'ति विहितो यत्प्रत्यय एवात्र किं न स्यादित्यत आह **अर्यस्स्वामीति** । अर्तेर्ण्यदिति प्राप्ते स्वामि-वैश्ययोरभिधेययोर्यत्प्रत्ययो भवतीत्यचो यदिति सूत्रार्थः । ननु अर्यःस्वामिवैश्ययोरित्यनेन यत्प्रत्यये अर्यतेति साध्वित्यत आह **अर्य स्स्वामि-वैश्ययोरिति । विशेषणादिति ।** ऋ गतावित्यस्माद्धातोर्ण्यति प्राप्ते स्वामिवैश्ययोरभिधेययोर्य-त्प्रत्ययो निपात्यत इति सूत्रार्थः । तथा च अर्यः स्वामी अर्यो वैश्य इति स्वामित्वे वैश्यत्वे वा अभिधेय एव यत्प्रत्ययस्यानेन विधानात् । तदभावे आर्यो ब्राह्मण इतिवत् ण्यत्प्रत्ययस्यैव दर्शनादत्रापि ण्यदेव स्यादिति भावः । उपचारप्रयोजकं गुणमाह **अर्थो हीति** । अर्थतथात्वस्य ज्ञानप्रमात्वप्रयोजकत्वात् अर्थस्य ज्ञानापेक्षया प्राधान्यमिति द्रष्टव्यम् ।

प० — उत्तरवाक्यमवतारयति **स्यादेतदित्यादिना** । वृत्त्याद्युक्तमाह **योग्यतेति** । 'अर्थो-ऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु' इत्यमरोक्तिं हृदि कृत्वाह **अर्थशब्दश्चेति** । अभिधेयशब्देन शब्द-निष्ठाभिधा(वृत्ति)विषयो गृह्यते ॥ **यथाऽसादृश्य इतीति** । असादृश्ये सादृश्यव्यतिरिक्ते योग्यता-

वीप्सादिरूऽपेर्थे वर्तमानो यथाशब्दः समस्यते स चाव्ययीभाव इति समासविधायकपाणिनिसूत्रेऽसादृश्य इति विशेषणोपादानेन सादृश्यार्थे यथाशब्दस्याव्ययीभावसमासनिषेधात् । इह च **यथार्थमित्यव्ययीभाव**-परिग्रहान्नात्र सादृश्यार्थो यथाशब्द इति भावः ॥ **समासान्तरस्येति** । कर्मधारयतत्पुरुषबहुव्रीह्यादि-रूपस्येत्यर्थः । आदिपदेन प्रमाणस्यार्थस्य च सादृश्यानिरूपणग्रहः ॥ **अत एवेति** । सादृश्यव्यतिरि-क्तार्थ एव यथाशब्दसमासस्य युक्तत्वादेवेत्यर्थः ॥ **योग्यतावीप्सार्थस्येति** । बहुव्रीहिरयम् । **यथा**-शब्दस्येत्यनुषङ्गः ॥ **वाक्यशेषाभावेनेति** । अर्थस्य योग्यमित्यर्थे अर्थमर्थमित्यर्थे वा यथार्थमित्यव्ययी-भावसमासे सति यथार्थज्ञानं प्रमाणमिति वा यथार्थज्ञानकरणं प्रमाणमिति वा यथार्थज्ञानतत्साधने प्रमाणमिति वा यदि वाक्यविन्यासः स्यात्तर्ह्यर्थानुरूपस्य सर्वार्थविषयकस्य वा ज्ञानादेः प्रामाण्यं स्यात् । न चैवमुक्तमाचार्यैः । किन्तु याथार्थ्यमेव मानत्वमित्युक्तम् । एवमुक्तौ तु योग्यतादेरेव प्रामाण्यापत्त्या विवक्षितार्थासिद्धिरिति भावः । वीप्सार्थाभिप्रायेणोक्तं **अर्थानामिति** ॥ **अव्याप्तिप्रसङ्गादिति** । अभिधेयधनाद्यनतिवर्तिनः शब्दादेरेव प्रामाण्यापत्त्या प्रत्यक्षादेः प्रामाण्याप्राप्तेरिति भावः । अतिव्याप्तेरिति प्राक् प्रतिज्ञातामतिव्याप्तिं व्यनक्ति **एतच्चेति** । गत्यादेः स्वविषयानतिक्रमं व्यनक्ति **यदेव हीति** । गतिप्राप्यमेव हि गम्यम् । छिदा प्राप्यमेव हि छेद्यमित्यादिरर्थोऽस्त

ध्येयः । कथमनेनोक्तशङ्कानिरास इत्यत आह **एतदुक्तं भवतीति** ॥ **अर्तेरौणादिकस्येति** । ऋगता-वित्यस्मात्कर्मणि 'उषिकुषिगार्तिभ्यस्थन्' इति थन्प्रत्यये सार्वधातुकार्धधातुकयोरिति गुणे चार्थ इति रूपमिति भावः ॥ **अर्थतेतिः कथमिति** । ऋहलोर्ण्यदिति ण्यत्प्रत्यये 'अचो ञ्णिती'ति वृद्धौ आर्थतेति भाव्यमिति भावः । ननु ऋगतावित्यस्मात् अचोयदितिसूत्रेण यत्प्रत्यये स्यादेवार्यतेत्यतो यत्प्रत्ययोऽर्थ-विशेष एव नियमितो नान्यत्रेति भावेनाह **अर्य इति** । स्वामिनि वैश्ये च वाच्ये अर्य इति भवति नान्यत्रेति सूत्रार्थः । चोद्यस्योत्तरमाह **स्वामित्वोपचारादिति** । तदेव व्यनक्ति **अर्थो हीति** ।

**या०**— ननु तन्मुख्यं ज्ञानशब्दयोरिति न युक्तम् । तथा सति ज्ञानवच्छब्दस्यापि केवल-त्वप्रसङ्गादित्यत आह **एतच्चेति** । 'ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरमि'त्यत्रेति शेषः । 'तत्र हि न ज्ञानसमकक्षतया याथार्थ्यं शब्दे मुख्यं किन्तु करणत्रयापेक्षया ज्ञान एव मुख्यं, करणेष्वपि निर्धारणायां शब्दे मुख्यं, प्रत्यक्षानुमानयोस्त्वमुख्यम् । तदेते परममुख्यमुख्ये एकीकृत्य तन्मुख्यं ज्ञानशब्द-योरित्युक्तमि'तिस्फुटीकरिष्यत इत्यर्थः । इदमुपलक्षणम् । उक्ताव्याप्तिपरिहारोऽपि 'अनुप्रमाणमेतानि ह्यक्ष-युक्तिवचांस्यतः'इत्यत्र वक्ष्यत इत्यपि द्रष्टव्यम् ॥ **यथार्था इति** । यथाशब्दस्यार्था इत्यर्थः ॥ **यथाऽ-सादृश्य इति** । असादृश्येऽर्थे यथाशब्दः सुपा नित्यं समस्यत इति सूत्रार्थः । उदाहरणं तु यथाशक्ती-त्यादि । सादृश्ये तु यथा हरिस्तथा हर इत्येव न तु समासः ॥ **विशेषणादिति** । सादृश्यभिन्नतया यथा-शब्दार्थविशेषणादित्यर्थः । अन्यथा 'यथार्थे यदव्ययमि'ति पूर्वेणैव सिद्धत्वादिदं सूत्रं व्यर्थमेव स्यादिति भावः । यथाऽऽह वामनः । 'यथार्थे यदव्ययमि'ति पूर्वेणैव सिद्धमिदं वचनं सादृश्यप्रतिषेधार्थ-मि'ति । विशेषणादित्यनन्तरं प्रकृते चाव्ययीभावसमासस्यैव विवक्षितत्वादिति वाक्यशेषः । असामर्थ्या-दीत्यत्रादिपदेन सङ्ख्यापूर्वकत्वाभावपरिग्रहः । तथा च प्रकृतवाक्यार्थासम्भवरूपासामर्थ्येन तत्पुरुष-कर्मधारयबहुव्रीहीणां प्रतिहतिः । सङ्ख्यापूर्वकत्वाभावेन द्विगोरपीत्यर्थः । केचित्तु यथाशब्दस्य सादृश्यार्थत्वेऽपि किमव्ययीभावसमासोऽभिप्रेत उतान्यः । नाद्य इत्याह **यथाऽसादृश्य इति** । द्वितीयं प्रत्याह **समासान्तरस्येति** । तदा ह्यर्थसादृश्यमित्यर्थः स्यात्तथा चास्त्यादिक्रियासापेक्षस्य यथाशब्द-स्यार्थशब्देनासामर्थ्यान्न समासः सम्भवतीत्यर्थः । आदिपदेन समासान्तरेऽर्थशब्दस्यैवोपसर्जनत्व प्राप्त्या पूर्वनिपातप्रसङ्गसंग्रह इत्याहुः ॥ **अत एवेति** । सादृश्यार्थस्योक्तरीत्याऽसम्भवादेवेत्यर्थः । सम्भावितमेव प्रश्नार्हमिति भावः ॥ **वाक्यशेषाभावेनेति** । यदि हि यथार्थमिति वाक्यशेषभूत-मन्यत्पदं स्यात्तदा तदर्थनिष्ठयोग्यताया वा तदर्थस्य वा प्रामाण्यं सम्भावितं स्यात् । न च तादृशं शेषभूतं पदमत्र श्रूयते । अतोऽर्थपदार्थ एव योग्यताद्यन्वयो वाच्यः । तथा चार्थयोग्यतादावति-व्याप्तिरित्यर्थः । अर्थानामिति बहुवचनं वीप्साया एकस्मिन्नर्थेऽसम्भवादिति द्रष्टव्यम् ॥ **पदार्थानति-**

**वृत्तीति** । समभिव्याहृतपदार्थानतिक्रमस्येत्यर्थः ॥ **अव्याप्तिप्रसङ्गादिति** । अभिधेयवाचिनो ग्रहणे तदनतिक्रमस्य शब्दमात्रगतत्वेन प्रत्यक्षाद्यव्याप्तिप्रसङ्गः । धनप्रयोजननिवृत्तिवाचिनो ग्रहणे तत्तदनतिक्रमस्य तत्तज्ज्ञानमात्रवृत्तित्वेन घटादिज्ञानाद्यव्याप्तिप्रसङ्ग इत्यर्थः । इदानीमतिव्याप्तेरित्युक्तामतिव्याप्तिं दर्शयति **एतच्चेति** । ननु कर्मानेकविधं दृश्यते । यथा कटं करोतीत्यत्रासदेव जायमानं निर्वर्त्यरूपम्, यथा वा काष्ठं भस्म करोति ओदनं पचतीत्यादौ लब्धसत्ताकमेवावस्थान्तरमापद्यमानं विकार्यसंज्ञं तदिह गत्यादिकर्मतया विवक्षितयोर्ग्रामदारुणोर्न प्रागसतोर्गत्यादिना जन्म, न वाऽवस्थान्तरप्राप्तिः; अतः कथं तयोर्गत्यादिकर्मता येन ग्रामदारुणी गम्यच्छेद्ये स्याताम् । न चान्यत्तत्र गत्यादिनिर्वर्त्यं विकार्यं वा दृश्यते, यद्गम्यादि स्यात् । अतो गमनादिकं गम्यादिकमतिवर्तत एवेत्यत आह **यदेव हीति** । तथाच कर्तुरीप्सिततमं कर्म तच्च त्रिविधम् । निर्वर्त्यं विकार्यं प्राप्यं चेति । तत्र ग्रामादेराद्यप्रकारद्वयासम्भवेऽपि तृतीयः प्रकारोऽस्त्येव । यत्र निर्वर्त्यविकार्यसम्बन्धिनो विशेषाः सर्वथा न प्रतीयन्ते, केवलं प्राप्तिमात्रं प्रतीयते, यथाऽऽदित्यं पश्यतीति, तदेव हि प्राप्यं नाम । तादृशं च ग्रामादिकमिति भावः । उक्तं चैतद्भर्तृहरिणा 'निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् । तत्रेप्सिततमं कर्म' इति । 'क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते' इति च ॥ **अर्तेरौणादिकस्येति** । 'उषिकुषिगार्तिभ्यस्थन्' इत्युणादिसूत्रेण ऋ गतिप्रापणयोरित्यस्मात्कर्मणि थन्प्रत्यये हलन्त्यमिति नलोपे सार्वधातुकार्धधातुकयोरित्यनेन गुणे रपरत्वे चार्थ इति रूपनिष्पत्तिरिति भावः । नन्वर्तेः ऋहलोर्ण्यदिति ण्यति अचो ञ्णितीति वृद्धौ रपरत्वे च आर्यतेति वक्तव्यं, कथमर्यतेति वचनमित्याशयेन शङ्कते **नन्विति** । ननु ण्यदपवादेनाचो यदिति विहितो यत्प्रत्यय एवात्र किन्न स्यादित्यत आह **अर्यः स्वामीति** । अर्तेर्ण्यति प्राप्ते स्वामिवैश्ययोरभिधेययोर्यत्प्रत्ययो भवतीति सूत्रार्थः । उदाहरणं तु अर्यः स्वामीत्यादि । अत्र स्वामिवैश्ययोरित्यभिधेयविशेषणादर्थस्य च स्वामित्वाद्यसम्भवे तदुपाधिकयत्प्रत्ययाप्रसङ्गादर्यतेति वचनमनुपपन्नमेवेत्याशयः । उत्तरमाह **स्वामिन्वेति** । मैवमिति पाठे तु स्पष्टमस्योत्तरत्वम् । उपचारबीजं गुणमाह **अर्थो हीति** ॥

श्री० — **अतिव्याप्तेरिति** । सकर्मकगमनच्छिदादिरूपक्रियामात्रेऽतिव्याप्तिरित्यर्थः । तामेव परिशेषादुपपादयति **तथा हीत्यादिना** । वीप्सार्थस्य परिग्रह इत्यन्वयः ॥ **वाक्येति** । यथार्थमित्येव सत्त्वाज्ज्ञानं तत्करणं वेत्येवंरूपस्य यथार्थमिति वाक्यशेषस्याभावात् । यथार्थमित्युक्ते वीप्सायोग्यतावानर्थः । अर्थनिष्ठा योग्यता वीप्सा वेति प्राप्नोति । द्वितीयपक्षेऽर्थयोग्यताऽर्थवीप्सयोः प्रामाण्यापत्तिः आद्येऽर्थानां प्रामाण्यापत्तिरित्यतिव्याप्तिः । यदि कश्चिदुक्तो वाक्यशेषः स्यात् तदैव योग्यतावीप्सारूपार्थोपेतज्ञानं तत्करणं वा प्रमाणं स्यात् । न चैवमस्तीत्यर्थः । **पदार्थेति** । पदार्थानतिवृत्ति-

रूपस्यार्थस्येदमनेन यथाशब्देन ग्रहणमित्यर्थः । **वस्तुवचनस्य** वस्त्वभिधायकस्य । यदर्थं परिशेषः कृत-स्तदाह **एतच्चेति** । **अति** अतिक्रम्य । छेद्यमतिवर्तत इत्यन्वयः । ननु देवदत्तगृहं जिगमिषुर्व्या-सङ्गाद्यज्ञदत्तगृहं गच्छति, तत्र गमनं देवदत्तगृहरूपं गम्यं व्यभिचरत्येवातो नातिव्याप्तिरिति चेत्तत्राह **यदेवेति** । जिगमिषाया अप्रयोजकत्वाद्यज्ञदत्तगृहमेव तत्र गम्यमिति भावः । **तत्र** ज्ञेये । **तस्य** अर्थशब्दस्य ॥ **अर्तेरिति** । ऋगतावस्मात् 'उषिकुषिगार्तिभ्यस्थन्' इत्युणादिसूत्रेण थप्रत्यये आर्धधातुकं शेष इत्यार्धधातुकसंज्ञायां सार्वधातुकार्धधातुकयोरित्यनेन गुणे तस्य रपरत्वे च अर् थ अर्थेति रूपम् । ननु ऋगतावित्यस्मात् ऋहलोर्ण्यदिति ण्यत्प्रत्यये णकारतकारयोर्लोपे णित्वादचो ञ्णितीति ऋवर्णस्याऽऽकाररू-पवृद्धौ सत्यामाकारस्य रपरत्वे च आर् य आर्येति रूपे सति आर्यस्य भाव आर्यतेति स्यादर्यतेति कथं प्रयुक्त-मित्याशयेन शङ्कते **नन्विति** । ननु ऋगतावित्यस्मात् 'अर्यः स्वामिवैश्ययोरि'ति सूत्रेण यत्प्रत्यये तकार-लोपे पूर्ववत्सार्वधातुकेति गुणे तस्य च रपरत्वे अर् य अर्येति रूपे तस्य भावोऽर्यतेति भविष्यतीति चेत्त-त्राह **अर्य इति** । ऋगतावित्यस्मात् ऋहलोर्ण्यदिति ण्यति प्राप्ते तदपवादकत्वेन स्वामिवैश्ययोरभिधे-ययोः सतोर्यत्प्रत्ययो भवतीतिसूत्रार्थः । अर्यः स्वामी, अर्यो वैश्य इत्युदाहरणम् । तथा च स्वामित्वे वैश्यत्वे वाऽभिधेये सत्येव यत्प्रत्ययविधानात्प्रकृते च तयोरर्थयोरसम्भवात्; तथा च ऋहलोरिति ण्यदेव स्यात् । आर्यो ब्राह्मण इत्यादेर्दर्शनात्ततश्चार्य इत्येव स्यादिति भावः । अर्यःस्वामिवैश्ययोरित्यनेन सूत्रेण यत्प्रत्ययेऽर्यतेत्येव रूपे तस्य भावोऽर्यतेति भविष्यति । न चोक्तदोषः । स्वामित्वस्यैवात्र विवक्षित-त्वादित्याह **स्वामित्वेति** । उपचारबीज गुणमाह **अर्यो हीति** ॥

च० — '**अर्थो**ऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि'ति प्रतिसंदधानोऽभिधत्ते **अर्थशब्दश्चेति** । सप्त-म्यर्थो वाचकत्वं धात्वर्थ आधेयत्वं तन्निरूपितवाचकत्वाश्रय इत्यर्थः । **यथाऽसादृश्य इति** । सादृ-श्यभिन्नवाचको यथाशब्दः सुपा नित्यं समस्यते, स चाव्ययीभाव इति तदर्थोऽवसेयः । यथाशक्ती-त्यादिकं तदुदाहरणम् । **विशेषणादिति** । सादृश्यान्यत्वेन यथाशब्दार्थस्य विशेषणादित्यर्थः । अत एव वामनः काशिकायां यथार्थे यदव्ययमिति पूर्वेणैव सिद्धमिदं वचनं सादृश्यप्रतिषेधार्थमित्यभ्यधात् । **समासान्तरस्य** कर्मधारयादिरूपस्य । अत्र व्याचक्षाणाः समासान्तरे अर्थसादृश्यस्यार्थतया पर्यव-सानात् अस्त्यादिक्रियासापेक्षयथाशब्दस्यार्थशब्देनासामर्थ्यान्न समासः संभवतीत्यादिदिशा व्याचक्षते । **वाक्यशेषाभावेनेति** । यथार्थज्ञानं प्रमाणं यथार्थज्ञानसाधनं प्रमाणं यथार्थे ज्ञानसाधने प्रमाणे इति वा यदि वाक्यघटकपदानुपूर्वी श्रूयेत तदा ह्यर्थानुरूपस्य सर्वार्थविषयकस्य वा ज्ञानादेः प्रामाण्यं स्यात् । न चैवम् । याथार्थ्यमेव मानत्वमित्येवमभिहितौ तु योग्यतादेरेव प्रामाण्यापत्त्या विवक्षितार्थासिद्धिरिति भावः । **सकर्मकक्रियामात्रे** तादृशक्रियासामान्ये ।

सु०— किमतो यद्येवं ज्ञेयतैवार्थत्वमित्यत आह नेति ।

अनु०— न क्रियार्थेषु सा मता ॥

क्रियार्थेषु क्रियाविषयेषु सा अर्यता । तदभावाच्च न यथार्थता । क्रियास्विति नातिव्यापकं प्रमाणलक्षणमिति शेषः ।

नन्वेतावताऽपि नातिव्याप्तिपरिहारः । गमनादीनामपि ज्ञेयानतिवृत्तित्वात् । न हि तद्विषयो ग्रामादिः सर्वथा न ज्ञेय इति शक्यते वक्तुम् । तदत्यन्ताभावप्रसङ्गादिति । मैवम् । यथा हि पितरि साधुर्मातरि साधुरितिवाक्यं यत्किञ्चित्पित्रादौ साधुत्वेन न पर्यवस्यति, किन्तु स्वीये पित्रादौ । तत्कस्य हेतोः । पित्रादिशब्दानां संबन्धिशब्दत्वात् । संबन्धिशब्दानां ह्येष महिमा । अन्यथा पितुर्धनमुपादद्यादित्यादौ बहुविप्लवः स्यात् । सति चैवं शब्दमहिमानमनादृत्य प्रत्यवतिष्ठमानः छलवादितया जीयेत । तथा प्रकृतेऽपि ज्ञेयशब्दस्य संबन्धिशब्दत्वात्स्वज्ञेयं नातिवर्तते यत् तत्प्रमाणमित्युक्तं स्यात् । न च गम(ने)नोपाधिना गमनेन वा निमित्तेन ग्रामो ज्ञेयः । येन तमनतिक्रम्य वर्तमानं गमनं यथार्थं स्यात् । किन्तु गम्य एव । तत्कथमतिव्याप्तिः । भवति च घटादिज्ञानतत्करणाभ्यामुपाधिनिमित्ताभ्यां ज्ञेय इति । तदिदमुक्तं क्रियार्थेषु सा न मता शब्दार्थतत्त्वविदुषामिति ।

ननु तथाऽप्यन्योन्याश्रयत्वमात्माश्रयत्वं वा; स्वशब्देन प्रमाणस्याभिधानादिति चेन्न । ज्ञानतत्करणमात्रोपादानेन लक्षणस्य व्याख्यातत्वात् । स्वगुण(ग्राहक)ग्रहणमिन्द्रियं श्रोत्रमित्यत्र यथेति ।

शे०— क्रियार्थेष्वित्यत्र क्रियासाध्यफलेष्विति तज्ज्ञेयेष्विति वाऽन्यथाप्रतीतिनिरासाय व्याचष्टे क्रियाविषयेष्विति । सेति स्त्रीलिङ्गनिर्देशादर्थत्वव्याख्यानस्यैवायं परामर्शो नार्थत्वस्येत्यभिप्रेत्याह साऽर्यतेति । लक्षणस्यातिव्याप्तौ शङ्कितायां क्रियायां लक्षणाभावस्यैव व्युत्पादनीयत्वात् । क्रियाविषयेष्वर्थत्वाभावव्युत्पादनमसङ्गतमित्यतो लक्षणाभावव्युत्पादनार्थत्वान्नासङ्गतिरिति भावेनापेक्षिताध्याहारेण साकाङ्क्षवाक्यं तत्परतया योजयति तदभावाच्चेति ।

क्रियार्थेषु न सेत्येतावतैव पूर्तेः किं मतग्रहणेनेत्यतोऽतिव्याप्तिपरिहारार्थं तदिति भावेन पुनरतिव्याप्तिशङ्कामुत्थापयति नन्वेतावताऽपीति । अर्थशब्दस्य ज्ञेयवाचित्वपरिग्रहमात्रेणापीत्यर्थः ॥ तदत्यन्ताभावेति । सर्वथाऽज्ञेयस्य ग्रामादेः सत्त्वे प्रमाणाभावेन तदत्यन्तासत्त्वप्रसङ्गादित्यर्थः ।

**विप्लव इति** । यस्यकस्यचित्पुत्रो यस्यकस्यचिद्धनमुपादद्यादित्येवंरूप इत्यर्थः ॥ **स्वज्ञेयमिति** । स्वेनोपाधिना स्वेन निमित्तेन वा ज्ञेयमित्यर्थः । कथमुक्तविवक्षयाऽतिव्याप्तिनिरास इत्यतः किं गमनस्य ज्ञेयत्वोपाधित्वमभिमतं किं वोपाधिनिमित्तत्वमिति विकल्पं मनसि निधाय पक्षद्वयस्यापि क्रियायामसम्भवमाह **न चेति** । माऽस्तु तर्ह्यतिव्याप्तिरसम्भवस्तु स्यादेवोक्तरूपज्ञेयानतिक्रमस्य ज्ञानतत्करणयोरयोगादित्यत आह **भवति चेति** । घटादेर्ज्ञानविषयत्वरूपज्ञेयतायां ज्ञानस्य तच्छरीरान्तःप्रविष्टतयोपाधित्वस्य चक्षुरादेश्च ज्ञेयत्वोपाधिज्ञाननिमित्तत्वस्य सत्त्वान्नासम्भवो गमनस्य चोक्तरूपज्ञेयताशरीरानन्तर्भावान्न ज्ञेयोपाधित्वं ज्ञानवत्, नापि ज्ञानकरणवदुपाधिरूपज्ञाननिमित्तत्वमिति न तत्रातिव्याप्तिरित्याखण्डलार्थः ॥ **शब्दार्थतत्त्वेति** । सम्बन्धिशब्दार्थतत्त्वेत्यर्थः ।

भाष्यकारीयमतिव्याप्तिनिराकरणं दोषान्तरनिरासोपलक्षणमित्यभिप्रेत्य दोषान्तरमाशङ्कते **ननु तथाऽपीति** । अतिव्याप्तिपरिहारेऽपीत्यर्थः । नेदं लक्षणमिति शेषः । लक्षणदोषाभावे कुतो न लक्षणत्वमित्यतोऽतिव्याप्त्यभावेऽप्यसम्भवाख्यतद्दोषान्न लक्षणत्वमित्याशयवानसम्भवमुपपादयति **अन्योन्याश्रयत्वमित्यादि** । यतोऽत्र भवतीति शेषः । अन्योन्याश्रयादिकमुपपादयति **स्वशब्देन प्रमाणस्येति** । अननुसंहितोपाधेरुपहितप्रत्ययायोगात्स्वशब्दार्थभूतप्रमाणज्ञाने सत्येव विषयस्य प्रमाणज्ञेयत्वसिद्धिस्तज्ज्ञेयत्वसिद्धौ च तद्विषयीकारिप्रमाणसिद्धिरित्यन्योन्याश्रयत्वं । प्रमाणं स्वसिद्ध्यर्थं स्वज्ञेयमपेक्षमाणमन्ततः स्वात्मानमपेक्ष्यत एवेत्यात्माश्रयत्वमिति भावः । स्वशब्देन प्रमाणस्याभिधानेऽपि ज्ञानत्वेन तत्करणत्वेनैव च रूपेण तदभिधानस्याभिमतत्वेन प्रमाणत्वेन रूपेण तदभिधानानङ्गीकारान्नोक्तरीत्याऽन्योन्याश्रयादिप्रसङ्ग इति नासम्भवो लक्षणस्येत्याशयेन समाधत्ते **ज्ञानतत्करणमात्रेति** । प्रमाणत्वेन रूपेण प्रमाणस्य स्वशब्देनानभिधानेऽपि ज्ञानत्वादिरूपेणाभिधानात्कथमन्योन्याश्रयादिनिरास इत्यतो न यथाकथञ्चित् स्वशब्देन प्रमाणस्याभिधानमात्रेणान्योन्याश्रयत्वादि किन्तु लक्ष्यतावच्छेदकरूपेण तदभिधान एवेति परेणाङ्गीकारयितुमनुरूपं दृष्टान्तमाह **स्वेति** । अत्र हि स्वशब्देन श्रोत्रत्वेन रूपेण श्रोत्रग्रहणे उक्तरीत्याऽन्योन्याश्रयादिप्राप्त्येन्द्रियत्वादिना रूपेण श्रोत्रग्रहणेन श्रोत्रत्वेन रूपेण तदनभिधानान्नान्योन्याश्रयादीति नासंभव इत्येव परेण समाधीयते । तत्र यदि यथाकथञ्चित्प्रमाणाभिधानेऽपि प्रकृतलक्षणेऽन्योन्याश्रयाद्यपरिहारेणासंभव इति मन्यसे तदा परकीयलक्षणेऽपि श्रोत्रस्य श्रोत्रत्वेन रूपेण स्वशब्देनानभिधानेऽपि यथाकथञ्चिदभिधानस्य परेषामपि संमतेरन्योन्याश्रयाद्यपरिहारापत्त्या तल्लक्षणस्याप्यसंभव एव स्यादिति लक्ष्यतावच्छेदकरूपेण लक्ष्यस्य स्वशब्देनाभिधान एवान्योन्याश्रयादि भवति । न तु यथाकथञ्चित्तदभिधानमात्रेणेति परेषामपि संमतमेवेति न प्रकृतलक्षणस्याप्यसंभव इति भावः ।

स०— **तदत्यन्ताभावप्रसङ्गादिति** । तस्य सत्त्वं न सिध्येदित्यर्थः । **अन्योन्याश्रयत्व-मात्माश्रयत्वं वेति** । प्रमाणत्वे ज्ञाते प्रमाणज्ञेयत्वज्ञानसंभवात् तद्घटितलक्षणज्ञाने सति तस्मिन् अनुप्रमाणत्वज्ञानमित्यन्योन्याश्रयः । प्रमाणत्वज्ञाने प्रमाणत्वज्ञानस्यापेक्षणात् आत्माश्रयत्वमित्यर्थः । **स्वगुणग्रहणमिति** । अत्र स्वशब्देन श्रोत्रस्य ग्रहणे स्वज्ञाने स्वज्ञानापेक्षया आत्माश्रयत्वम् । अन्योन्याश्रयत्वं वा स्यात् । तन्निरासायैव स्वशब्देन इन्द्रियमात्रग्रहणात् यथा अन्योन्याश्रयाद्यभावः, तथा प्रकृतेऽपि स्वशब्देन ज्ञानतत्कारणयोरेव ग्रहणान्न दोषः ।

प०— **यथार्थतेति** । यथावस्थितज्ञेयविषयीकारितेत्यर्थः । मतेत्यस्य तात्पर्यं शङ्कोत्तराभ्यां व्यनक्ति **नन्वेतावताऽपीति** ॥ **तदत्यन्ताभावेति** ॥ शशविषाणादेरिवाप्रामाणिकतया अत्यन्तासत्त्वापाता-दिति भावः । केवलानुप्रमाणयोः क्रमादुपाधित्वनिमित्तत्वभावात्तत्तात्पर्येणोक्तं **गमनेनोपाधिनेत्यादि** ॥ **यथार्थं स्यात्** यथावस्थितार्थविषयीकारि स्यादित्यर्थः ॥ **गम्य एवेति** । गमनेनोपाधिना गमनेन निमित्तेन वा ग्राम इत्यनुवर्तते । अतिव्याप्तिं निरस्यासंभवाव्याप्ती निराह **भवति चेति** ॥ **अन्योन्या-श्रयत्वमित्यादि** । प्रमाणस्वरूपे ज्ञाते तन्निरूपितज्ञेयत्वज्ञानद्वारा ज्ञेयविषयीकारित्वज्ञानं तज्ज्ञाने च सति तेन प्रमाणस्वरूपज्ञानं इत्यन्योन्याश्रयत्वम् । स्वज्ञाने स्वोपहितवस्तुज्ञानापेक्षणात् आत्माश्रयत्व-मित्यर्थः ॥ **स्वगुणेति** । तत्र यथा स्वशब्देन प्रमितिकारणतदाभाससरूपसाधारण्येनोपादानं श्रोत्रपदेन च प्रमाणभूतश्रोत्रोपादानं कृत्वा दोषः परिह्रियते तथेत्यर्थः ।

या०— **तदत्यन्ताभावेति** । तस्यासत्त्वप्रसङ्गादित्यर्थः ॥ **ननु तथाऽपीति** । **स्वशब्दाभि-धेयप्रमाणे** सिद्धे तज्ज्ञेयसिद्धिः तत्सिद्धौ च तद्विषयीकारिप्रमाणसिद्धिरित्यन्योन्याश्रयत्वं **स्वज्ञेयमपेक्ष-**माणमन्ततः स्वमेवापेक्षत इत्यात्माश्रयत्वं वेत्यर्थः । **स्वगुणग्रहणमिति** । यथाऽत्र **स्वशब्देन** श्रोत्रस्य विवक्षितत्वेऽपि तस्येन्द्रियत्वेनाकाशत्वेन वा सामान्यत एवोपादानं, न श्रोत्रत्वेन अतो नात्माश्रय इति परैरुच्यते । तथाऽस्माभिरपि प्रमाणं ज्ञानत्वेन तत्करणत्वेन वा सामान्यत एव स्वशब्देनोपादीयते, न तु प्रमाणत्वेनातो नान्योन्याश्रयादीत्यर्थः ।

श्री०— **तदभावादिति** । क्रियाविषयेऽर्थताया अभावात्तदनतिक्रम्य वर्तमानत्वरूपा यथार्थता क्रियासु नेत्यर्थः ॥ **तदिति** । ग्रामादेः सर्वथाऽज्ञेयत्वेऽत्यन्तासत्त्वमेव स्यादित्यर्थः । **संबन्धिशब्दानां** पित्रादिशब्दानाम् । **एषः** स्वीयपित्रादिकमादायैव पर्यवसानरूपः । **अन्यथा** स्वीयपित्रादिकमादायाप-र्यवसान इत्यर्थः । **विप्लवः** यस्यकस्यचित्पितुर्द्रव्यं यस्यकस्यचित्पुत्र उपाददीतेत्यर्थः ॥ **सति चेति** ।

विप्लवाङ्गीकारे चेत्यर्थः ॥ **शब्देति** । पित्रादिशब्दानां संबन्धिशब्दत्वात्तन्महिमलभ्यं स्वीयपित्रादिकमादाय पर्यवसानरूपामिप्रेतमर्थमनादृत्य, यत्किंचित्पित्रादिकमादाय विप्लवाङ्गीकारेण दूषणे प्रत्यवतिष्ठमानश्छलवादितया जीयेत । छलेनैव तस्य जयः प्राप्तो न तु समीचीनदूषणेनेत्यर्थः ॥ **स्वज्ञेयमिति** । तथा च स्वनिमित्तकज्ञेयत्वोपेतज्ञेयविषयीकारित्वं पर्यवस्यतीति ज्ञेयम् । साक्षाज्ज्ञेयत्वसंपादक उपाधिः, ज्ञानद्वारा परंपरया ज्ञेयत्वसंपादको निमित्तम् । तादृशं च ज्ञानमिन्द्रियं चेत्युभयम् । न हि गमनं साक्षाद्वा परंपरया वा ज्ञेयत्वं ग्रामे संपादयतीत्यर्थः । **सा** अर्थताऽपरपर्याया ज्ञेयता । **न मता** क्रियाप्रयुक्तत्वेनेति शेषः ॥ **अन्योन्येति** । प्रमाणज्ञाने तद्घटितलक्षणज्ञानं, तज्ज्ञाने तेन लक्षणेन लक्ष्यभूतप्रमाणज्ञानमित्यन्योन्याश्रय इत्यर्थः । **ज्ञानतत्करणमात्रोपादानेनेति** । ज्ञानतत्करणयोः स्वशब्देनोपादानेनेत्यर्थः । न तु प्रमाणत्वेनेत्यभिप्रायः ॥ **स्वेति** । श्रोत्रस्य स्वत्वेनैव प्रवेशो न श्रोत्रत्वेन । एवं ज्ञानत्वेन तत्करणत्वेन च प्रमाणस्य लक्षणे प्रवेशो न प्रमाणत्वेनेति नात्माश्रय इति भावः ।

**सु०— ननु किमिदं प्रमाणस्य ज्ञेयाव्यभिचारित्वं नाम । किं प्रमेयव्याप्यत्वं किंवा यावत्प्रमेयगोचरत्वम् । आद्येऽपि व्याप्तिः किं देशतः किंवा कालतः । न प्रथमः । प्रमाणासमानदेशार्थविषयप्रमाणेष्वव्याप्तेः । न द्वितीयः । अतीतादिविषयप्रमाणाव्याप्तेः । नान्त्यः । असर्वज्ञज्ञानानां तत्करणानां वाऽप्रामाण्यप्रसङ्गादिति ।**

**मैवम् । अद्वैतागमादेस्तत्त्वावेदकत्वलक्षणं प्रामाण्यमभ्युपगच्छता परेणा(पि तस्या)प्यस्यार्थस्य निर्वक्तव्यत्वात् ।**

**परेणाङ्गीकृतमुपादाय मया व्यवहारयास्माभिर्व्यवह्रियते न तु किमपि लक्षणं व्यवस्थाप्यत इति चेन्न । स्वप्रतिपत्ताववश्याश्रयणीयत्वाद्व्यवस्थायाः । न हि स्वप्रकाशं तत्त्वमित्येतावता विना वेदान्ताधिगमं तदधिगमः शक्योऽङ्गीकर्तुम् । अथावेदितस्य सत्त्वं तत्त्वावेदकत्वमिति निर्ब्रूयात्तदा विभ्रमेऽतिव्याप्तिः स्यात् । तत्राप्यावेदितस्येदमाकारस्य सत्त्वात् । अथ यावदावेदितस्य सत्त्वं तत्त्वावेदकत्वं सदेकगोचरत्वमिति यावदिति वदेत् ; तदेवास्माकमपि याथार्थ्यमिति वदामः ।**

**शे०—** ज्ञेयाव्यभिचारित्वं किं तत्त्वविषयकत्वमभिमतं किंवा ज्ञेयव्यभिचारशून्यत्वम् । नाद्यः । वक्ष्यमाणरीत्या विभ्रमेऽतिव्याप्तेरित्यभिप्रेत्य द्वितीयं पक्षं प्रतिक्षेप्तुं विकल्पयति **नन्विति** । धूमादौ वह्निव्याप्यत्वरूपतया तदव्यभिचारित्वप्रसिद्धेराद्यकोटिप्रसक्तिः । आभिमुख्येन चारोऽभिचारस्तदभावो व्यभिचारस्तदभावोऽव्यभिचारित्वं । ततश्च द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायाद्यावत्प्रमेय-

गोचरत्वं लक्ष्यत इत्यभिप्रायेण द्वितीयकोटिप्रसक्तिरिति ध्येयम् । यद्वा प्रमेयं न व्यभिचरति परित्यजति सर्वमपि गृह्णातीति यावदित्यभिप्रायेण द्वितीयकोटिलाभः । अथवा प्रमाणस्य किञ्चित्प्रमेयमविषयीकृत्य विद्यमानत्वमेव प्रमेयव्यभिचारित्वं, तदभावो यावत्प्रमेयगोचरत्वमेव तदव्यभिचारित्वमित्याशयेन द्वितीय-कोटिप्रसक्तिरिति द्रष्टव्यम् । दूषणभागप्रज्ञप्तये आद्यं विकल्पयति **आद्येऽपीति** । धूमाग्न्योरिव किमि-हैकदेशसंबन्धो व्याप्तिः किंवा समुद्रवृद्धिचन्द्रोदयवदेककालनियम इति प्रश्नार्थः । तत्राद्यमपवदति **नेति** । हेतुमाह **प्रमाणेति** । ज्ञानतत्करणरूपप्रामाण्येन सह विभिन्नदेशा ये घटाद्या अर्थास्तज्ज्ञाना-दीनां प्रामाण्यं न स्यात् । ज्ञानस्यात्मैकगुणस्यात्मनिष्ठत्वात्करणानां च देहनिष्ठत्वाद्घटादीनां धराद्यधि-करणत्वादिति भावः । आत्मसमवेता ये सुखादयस्तज्ज्ञानानामप्यात्मसमवेतत्वेन समानदेशत्वात्प्रमाणत्वं संभवतीत्याशयेनोक्तं **प्रमाणासमानदेशेति** । उपलक्षणं चैतत् देहादावात्मत्वादिभ्रमेऽतिव्याप्तिः । तत्रात्मत्वादिधर्मस्यान्यत्र देहादावारोपकज्ञानानामारोप्यमाणधर्मस्यात्मत्वादेश्चात्ममात्रनिष्ठत्वेन देशाव्यभि-चारस्य सत्त्वादित्यपि द्रष्टव्यम् । एककालसंबन्ध एव प्रमाणप्रमेययोर्व्याप्तिरिति द्वितीयोऽपि नेत्याह **नेति** । कुत इत्यत आह **अतीतेति** । अतीतानागतविषयानुमानागमयोरव्याप्तेरित्यर्थः । विशिष्टनदीपूरेण लिङ्गेनाभूद्वृष्टिरित्यनुमीयते मेघोदयदर्शनाच्च भविष्यति सेति । तत्रानुमेयार्थेन वृष्ट्यनुमानस्यासमान-कालत्वादनुमाने, कालान्तरभाविनियोगादिबोधकागमादेरप्यर्थेनासमानकालत्वादागमे चाव्याप्तिरिति भावः ॥ **असर्वज्ञविज्ञानानामिति** । तेषां यावत्प्रमेयगोचरत्वाभावात्तद्भावे च सर्वेषामपि सार्वज्ञ्यं स्यादित्याशयेनासर्वज्ञेति हेतुगर्भं विशेषणम् । तत्त्वविषयकत्वमेव ज्ञेयाव्यभिचारित्वमिह विवक्षितमिति न ज्ञेयाव्यभिचारित्वस्य दुर्निरूपत्वमित्याशयेनाद्यपक्षोक्तदोषपरिहारं परेणैव वाचयितुं गूढाभिसन्धिः प्रतिबन्दीमुपादत्ते **मैवमिति** ॥ **अस्यार्थस्येति** । भ्रमव्यावृत्ततत्त्वावेदकत्वशब्दार्थस्येत्यर्थः ।

परं प्रति व्यवहारदशायां पराङ्गीकृतमुपादाय व्यवहारोपपत्तावपि स्वस्य प्रामाण्यप्रतिपत्त्यर्थं लक्षणव्यवस्थाऽवश्याश्रयणीयेत्याह **स्वप्रतिपत्ताविति** । अन्यथा तत्त्वप्रतिपत्त्यर्थं तदुपादानं न स्यादिति भावः । ननु स्वप्रतिपत्तावपि न मया व्यवस्थाऽवश्याश्रयणीया तत्त्वस्य स्वप्रकाशत्वेन प्रमाणावेद्यत्वादित्यत आह **न हीति** । अन्यथा दर्शनार्थं श्रवणादिविधिवैयर्थ्यप्रसङ्गादिति भावः । भ्रमव्यावृत्तं तत्त्वावेदकत्वं निर्वक्तव्यमिति प्रतिबन्दीमाददानस्याशयमजानानः शङ्कते **अथेति** । भ्रमसाधारणत्वान्नायं तत्त्वावेद-कत्वशब्दार्थ इति स्वाभिसन्धिमुद्घाटयति **सत्त्वादिति** । रजतं नेति रजतांशे बाधवदिदं नेति बाधाभावान्नेदमास्पदस्य भ्रमेऽसत्त्वमिति भावः । भ्रमव्यावृत्ततत्त्वावेदकत्वशब्दार्थं परेणैव वाचयति **अथेति** । तथा च न भ्रमेऽतिव्याप्तिः । तत्रेदमास्पदस्य सत्त्वेऽपि यावदावेदितं तस्य सत्त्वाभावादिति भावः । नन्वेवं माऽस्त्वतिव्याप्तिर्यावदावेदितसत्त्वरूपतत्त्वावेदकस्य यावदावेदितमात्रवृत्तित्वेन प्रमाणमात्र-

वृत्तेरसंभवः स्यादित्यत आह **सदेकेति** । तथा च नोक्तदोषद्वयमपीति भावः । एवं तर्हि मन्मतेऽपि न ज्ञेयाव्यभिचारित्वस्य दुर्निरूपत्वमुक्तरूपतत्त्वावेदकत्वस्यैव ज्ञेयाव्यभिचारित्वशब्दार्थत्वसंभवात्ततश्च न भ्रमेऽतिव्याप्तिरिति स्वाभिसन्धिमुद्घाटयति **तदेवेति** ।

स० — **नन्विति** । धूमादौ वह्नेः व्याप्यत्वरूपस्यैव अव्यभिचारस्य दृष्टत्वात् तदनुसारेण आद्यः कल्पः । आभिमुख्येन चारः तदभावो व्यभिचारः । तदभावः अव्यभिचारित्वम् । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायेन यावत्प्रमेयगोचरत्वं लक्ष्यत इत्यभिप्रायेण द्वितीयः कल्पः इति ध्येयम् । धूमाग्न्योरिवैकदेशसंबन्धः अविनाभावः इत्येकं शृङ्गमाह **किं देशत इति** । समुद्रवृद्धि-चन्द्रोदयवत् एककालनियमः अविनाभावः इत्यपरं शृङ्गमाह **किं वेति** । एकदेशसंबन्धो ज्ञानज्ञेययो-रविनाभाव इति प्रथमं निराह **प्रथम इति** । प्रमाणेन सह विभिन्नदेशा ये घटाद्यर्थाः तज्ज्ञानानां प्रमात्वं न स्यात् । ज्ञानादिरूपप्रमाणस्य आत्मगुणस्य तन्निष्ठत्वात् घटादीनां धराद्यधिकरणत्वादिति भावः । आत्मसमवेताः सुखादयः । तज्ज्ञानानामात्मसमवेततया समानदेशत्वात् प्रमात्वं संभवतीत्यत उक्तम् **प्रमाणासमानदेशेति** । अव्याप्तेरित्युपलक्षणम् । देहादावात्मत्वादिभ्रमे अतिव्याप्तेरिति द्रष्टव्यम् । नान्त्य इत्याह **नेति** । तत्र हेतुमाह **अतीतेति** । विशिष्टनदीपूरलेङ्गेन अभूद्वृष्टिरित्यनुमीयते । विशिष्टमेघोदयदर्शनात् भविष्यतीति । न चानुमानकाले सोऽर्थोऽस्तीति तत्राव्याप्तिरित्यर्थः । न चानु-मितिकाले अर्थातीतत्वस्य सत्त्वात् कालतः समानदेशत्वोपपत्तिरिति वाच्यम् । तावताप्यर्थस्यापि विषय-त्वात् तस्य चासमानकालत्वाभिप्रायेण तदभिधानात् । आदिपदेन कालान्तरभाविनियोगादिबोधकागमा-द्युपादीयते । **तस्यार्थस्य निर्वक्तव्यत्वादिति** । तत्त्वावेदकत्वलक्षणस्यार्थस्य निर्वक्तव्यत्वादित्यर्थः । तथा च परस्य यत्तत्त्वावेदकत्वशब्दार्थत्वेनाभिप्रेतं, तदेवास्माकमपि ज्ञेयाव्यभिचारित्वाभावेऽप्यस्तीति भावः । **तदधिगम इति** । स्वप्रकाशत्वाधिगम इत्यर्थः ।

प० — अव्यभिचारशब्दार्थस्य व्याप्तिरूपत्वादाह **प्रमेयव्याप्यत्वमिति** । प्रकृतप्रमाणस्य सविषयकत्वात् तदभिप्रायेणाह **यावदिति** ॥ **प्रमाणासमानदेशेति** । घटादिविषयकप्रमातत्साध-नेष्वित्यर्थः । स्वरूपसुखादिविषयकसाक्षिणि त्वस्ति समानदेशत्वमित्यव्याप्तेरित्युक्तम् । परीत्या सुखादि-ज्ञानस्य समानदेशत्वमस्तीति वा एवमुक्तम् ॥ **तस्येति** । तत्त्वावेदकत्वरूपप्रामाण्यस्येत्यर्थः । शङ्कते **परेणेति** । द्वैतवादिनेत्यर्थः ॥ **(अस्माभिरिति)मयेति** । अद्वैतवादि(भिः)ना । **स्वप्रतिपत्तौ** स्वस्य ज्ञानार्थम् । ननु तत्त्वस्य स्वप्रकाशतया प्रमाणानपेक्षत्वान्न तत्त्वप्रतिपत्त्यर्थं प्रामाण्यं मया निर्वक्तव्यमित्यत आह **न हीति** । निर्वचननिर्बन्धेऽवश्यंभाविनि परस्तत्वावेदकत्वरूपप्रामाण्यं निर्वक्ति **अथेति** । यावदावेदितसत्त्वस्य प्रमाणानिष्ठतया असंभववारणायाह **सदेकेति** ।

या० — **किं प्रमेयव्याप्यत्वमिति** । धूमादौ वह्निव्याप्यत्वस्यैवाव्यभिचारतया प्रसिद्धत्वा-त्तदनुसारेणायं कल्पः । **किं वा यावदिति** । व्यभिचारो हि परित्यागः । एवं च प्रमाणं प्रमेयं न व्यभिचरति न परित्यजति सर्वमपि गृह्णातीति यावदित्यर्थविवक्षयाऽयं कल्पः । अन्ये तु आभिमुख्येन चारोऽभिचारस्तदभावो व्यभिचारस्तदभावोऽव्यभिचारित्वम् । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इति न्यायेन यावत्प्रमेयगोचरत्वं लभ्यत इत्यभिप्रायेणायं कल्प इत्याहुः ॥ **प्रमाणासमानेति** । **ज्ञानकरणरूपप्रमाणाभ्यामसमानेति** । ज्ञानकरणरूपप्रमाणाभ्याम् असमानदेशा ये घटादयोऽर्थास्तज्ज्ञानादीनां प्रामाण्यं न स्यादित्यर्थः । सुखादीनां तत्तज्ज्ञानानां चात्म-समवेततया समानदेशत्वमस्तीति तज्ज्ञानप्रामाण्यं सम्भवतीत्यभिप्रायेणाव्याप्तेरित्युक्तम् ॥ **अप्रामाण्यप्रस-ङ्गादिति** । तथा च याथार्थ्यं दुर्निरूपमिति शङ्कितुराशयः ॥ **परेणाप्यस्येति** । याथार्थ्यशब्दार्थस्ये-त्यर्थः । एवं च तदेवास्माकमपि याथार्थ्यमित्यग्रिमवाक्यं श्लिष्टं भवतीति ध्येयम् । नन्वस्मन्मते यत्तत्त्वं मतं तत्स्वप्रकाशं न प्रमाणवेद्यमतो मया न प्रमाणस्य तत्त्वावेदकत्वं निर्वक्तव्यमित्यत आह **न हि स्वप्रका-शमिति** । अन्यथा दर्शनार्थं श्रवणादिविधिवैयर्थ्यप्रसङ्गादिति भावः । यावदावेदितसत्त्वस्य प्रमाणनि-ष्ठत्वाभावादाह **सदेकगोचरत्वमिति** ।

---

श्री० — धूमादौ वह्निव्याप्तत्वरूपस्यैवाव्यभिचारस्य दृष्टत्वात्तदनुसारेण प्रमेयव्याप्तत्वमित्याद्यः कल्पः । **यद्वा यावदिति** । किञ्चिज्ज्ञेयं विषयीकरोति किञ्चिज्ज्ञेयं नेत्येवंरूपो व्यभिचारो न । किन्तु यावज्ज्ञेयविषयकत्वं लभ्यत इति भावः ॥ **प्रमाणेत्यादि** । प्रमाणेनासमानदेशो भिन्नदेशो योऽर्थस्तद्विषयाणि यानि प्रमाणानि तेष्वव्याप्तिरित्यर्थः । ततश्च यत्र ज्ञानरूपं प्रमाणं तत्र ज्ञेयमिति न व्याप्तिः । आत्मनि ज्ञानस्य सत्त्वेन तत्र ज्ञेयभूतघटादेरभावादिति ध्येयम् । ननु नाव्याप्तिः । यत्र ज्ञानं तत्र ज्ञेयमिति व्याप्तेः सत्त्वात् । सुखादिज्ञानस्यात्मनिष्ठत्वेन तद्विषयसुखादेरप्यात्मनिष्ठतया समानदेशत्वा-दित्यतः प्रमाणासमानदेशार्थेत्युक्तम् ॥ **अतीतादीति** । तथा च यदा ज्ञानं तदा ज्ञेयमिति नास्ति व्याप्तिः । अतीतादिविषयज्ञानस्येदानीं सत्त्वेऽपि तद्विषयवस्तुनोऽतीतादेरिदानीमभावादव्याप्तिरित्यर्थः ॥ **असर्वज्ञेति** । असर्वज्ञानां पुरुषाणामित्यर्थः । यावत्प्रमेयगोचरत्वाभावोपपादनार्थमिदं विशेषणम् ॥ **अस्येति** । तत्त्वावे-दकत्वरूपप्रामाण्यलक्षणस्यार्थस्येत्यर्थः । **तदधिगमः** तत्त्वाधिगमः । तथा च वेदान्तेनैव तत्त्वाधिगमस्य जायमानत्वेन तत्त्वावेदकत्वरूपं प्रामाण्यमवश्यमभ्युपेयम् । तच्च त्वया निर्वक्तव्यमेवेत्यर्थः । **आवेदितस्य** विषयीकृतस्य **यावदिति** । तथा च न भ्रमेऽतिव्याप्तिः । रजतादेरसत्त्वेन यावदावेदितस्य सत्त्वाभावा-दित्यर्थः । **एवमपि** सदेकगोचरत्वमेव याथार्थ्यमित्यङ्गीकार इत्यर्थः ।

**सु०— नन्वेवमपि भ्रमेऽतिव्याप्तिः । न हीदमंशो वा रजतत्वादिजातिर्वा तत्संबन्धः समवायो वा तत्तादात्म्यं वा न सत् । अन्यत्र सत्त्वेऽप्यत्रासदिति चेत् । न हि देवदत्तो गृहेऽसन्नित्यसन्नेव । न चायमस्त्यस्माकं प्रसङ्गः । अधिष्ठानेतरस्य सर्वस्यानिर्वचनीयतयाऽङ्गीकारादिति । मैवम् । अस्माभिरपि तस्यात्यन्तासत्त्वस्वीकारात् ।**

**शे०—** सदेकगोचरत्वं भ्रमव्यावृत्तत्वात्स्वमते भवति प्रामाण्यं न त्वन्मते भ्रमसाधारणत्वादिति वैषम्यान्न प्रतिबन्दीग्रहणमुपपद्यत इत्याशयेन शङ्कते **नन्वेवमपीति** । कथं भ्रमस्य सदेकगोचरत्वमित्यतो भ्रमस्य संसर्गारोपत्वेन तादात्म्यारोपत्वेन च द्वैविध्याद्द्विविधारोपविषयप्रदर्शनपूर्वकं तत्सत्त्वमुपपादयति **न हीति** । भ्रमस्य विशिष्टज्ञानत्वात्तत्र विशेष्यविशेषणतत्संसर्गाणामेव भानं वाच्यम् । तत्र इदमिति द्विविधारोपेऽपि भासमानविशेष्यप्रदर्शनम् । तादृशं विशेषणं दर्शयति **रजतत्वादिजातिरिति** । एतच्च संसर्गारोपाभिप्रायेण । तादात्म्यारोपे रजतमित्यपि ग्राह्यम् । संसर्गारोपे भासमानं संसर्गं दर्शयति **तत्संबन्धः समवायो वेति** । रजतत्वादिजातिसंबन्ध इत्यर्थः । तादात्म्यारोपे भासमानं संबन्धमाह **तदिति** । विशेषणीभूतरजतादितादात्म्यमित्यर्थः । यद्वा नन्वेवमिति ग्रन्थस्यायमर्थः । सद्गोचरत्वं प्रामाण्यमित्युक्ते भ्रमेऽतिव्याप्तिस्तन्निरासार्थमेकेति विशेषणमिति वक्तव्यम् । न च तद्युक्तम् । एवं विशेषणेऽप्यतिव्याप्तेस्तादवस्थ्यादिति । मिथ्याध्यवसायो विपर्यय इति तल्लक्षणपर्यालोचनया सदेकगोचरत्वाभावादुक्तलक्षणव्यावृत्तिः प्रतीयते तत्कथं तत्रातिव्याप्तिरित्यतो रजतप्रत्ययस्येदमंशो वा रजतत्वादिजातिर्वा तयोः संबन्धो वा विषयो न पुनर्विषयान्तरमपि संभवति । इदं रजतमित्यत्र त्रयाणामेव प्रतिभासात्तत्र किमिदमंशस्य सत्त्वं नेत्युच्यते रजतत्वादिजातेर्वा तत्संबन्धस्य वेति विकल्पत्रयं मनसि निधायाद्यपक्षद्वयं क्रमेण दूषयति । **न हीति** । सदिति वक्ष्यमाणं लिङ्गविपरिणामेनेदमंश इत्यादिनापि संबध्यते । बाधाभावादिदमंशरजतत्वजात्योर्नासत्त्वं संभवतीत्यर्थः । अस्तु तर्हि तृतीयो निरवद्यत्वादित्यतः स तावन्नाप्रतिभासमानो विषयोऽतिप्रसङ्गात्किन्तु प्रतिभासमान एवेति न तस्यासत्त्वमित्याह **तत्संबन्ध इति** । न हीत्यनुवर्तते । अवभासमानोऽपि भ्रान्तिविषयत्वादसत्किं न स्यादित्याशङ्क्य तत्स्वरूपं दर्शयितुं तत्तत्पक्षविशेषमाश्रित्य संबन्धविशेषमाह **समवाय इति** । इदमिति सामान्यं रजतमिति विशेषोऽथवा रजतमिति सामान्यमिदमिति विशेषोऽनयोश्च संबन्धः समवाय इति तार्किकाः । तादात्म्यमिति भाट्टाः । तत्र तार्किकसमयमनुसृत्योक्तं **समवाय इति** । भाट्टसमयमनुसृत्याह **तत्तादात्म्यमिति** । इदमंशस्य रजतत्वादिजातेश्च तादात्म्यमित्यर्थः । किमुक्तरूपसंबन्धस्य सत्त्वमात्रं निषिध्यते किंवा यद्विशेषणविशिष्टतयाऽसौ प्रतिपन्नस्तस्य तद्विशेषणविशिष्टतया सत्त्वम् । आद्ये समवायविलोपेन पदार्थन्यूनतापत्तिरित्यभिप्रेत्य द्वितीयमाशङ्कते **अन्यत्रेति** । न सत्त्वमात्रं निषिध्यते किन्तु विशिष्टसत्त्वम् ।

न चात्र शुक्तिरजतत्वाभ्यां विशिष्टं सत्त्वमस्तीति कथं भ्रमस्य सदेकगोचरत्वमित्यर्थः । शुक्तौ रजतत्व-समवायो नेति नञः केन संबन्धः किं समवायस्वरूपेण किंवा तस्य ताभ्यां संबन्धान्तरेण । नाद्यः । तथा सति समवायविलोपेन पदार्थन्यूनत्वापरिहारात् । द्वितीये संबन्धान्तरनिषेधेऽपि समवायस्य न काचित्क्षतिरित्यभिप्रेत्योक्तार्थेऽनुरूपं दृष्टान्तमेवाह **न हीति** । देवदत्तस्य गृहसंसर्गनिषेधेऽपि न देवदत्तस्य सत्त्वहानिस्तद्वत्समवायस्य शुक्तिसंसर्गनिषेधेऽपि न सत्त्वव्यावृत्तिरिति भावः । यद्यपि चेह तद्दूषणं परेण नोक्तम् । तथाऽपि 'तत्त्वानुभूतिः प्रमे'ति लक्षणान्तर्गततत्त्वशब्दस्य रूढिपक्षं खण्डयता खण्डनकृता लक्षणान्तरे उद्भावितं तुल्यन्यायतया प्रसक्तत्वादाशङ्कितमित्यवधेयम् । तर्हि उक्तरीत्या भ्रमसाधारणत्वादेव न त्वन्मतेऽपि सदेकगोचरत्वं तत्त्वावेदकत्वमित्यविशेष एवेत्यतोऽन्यथाख्यातिवादित्वा-त्वन्मते सदेकगोचरत्वप्राप्तावप्यनिर्वचनीयख्यातिवादिमते न भ्रमस्य सदेकगोचरत्वप्रसङ्ग इत्याशयेनाह **न चेति** । भ्रमेऽवभासमानस्य सर्वस्य निर्वचनीयत्वेऽधिष्ठानस्यापि तत्प्रसङ्गाद्ब्रह्मणोऽपि सत्त्वं न स्यादित्यत उक्तं **अधिष्ठानेतरस्येति** ॥ **अस्माभिरपीति** । अत्यन्तासदेव रजतं दोषवशाच्छुक्तिकायामारोप्यत इत्यभि-नवान्यथाख्यातिवादिभिरित्यर्थः ॥ **तस्येति** । अधिष्ठानेतरस्येत्यर्थः । तथा चारोपितस्यान्यत्र सत्तामभ्यु-पगच्छतां वैशेषिकादीनां मते भ्रमस्य सदेकगोचरत्वेन सदेकगोचरत्वस्य भ्रमव्यावृत्तत्वाभावेऽपि त्वन्मते भ्रमस्यानिर्वचनीयगोचरत्वेन सदेकगोचरत्वाभाववन्मन्मतेऽप्यसद्गोचरत्वेन सदेकगोचरत्वाभावेनोक्तरूपप्रामा

ण्यस्य भ्रमव्यावृत्तत्वमेवेत्यविशेषाद्युक्तं प्रतिबन्दीग्रहणमिति भावः ।

स०— रजतमिति प्रत्ययस्य किमिदमंशो विषय , किं वा रजतत्वम् , उत तयोः संबन्धः । तदा असौ प्रतिभासमानविषयो वा अप्रतिभासमानो वा । नान्त्यः । अतिप्रसङ्गात् । यद्याद्यस्तत्राह **तत्संबन्ध इति** । अवभासमान इति शेषः अवभासमानोऽपि भ्रान्तिविषयत्वात् असन्नित्याशङ्क्य तस्य स्वरूपं दर्शयितुं तत्तत्पक्षविशेषमाश्रित्य संबन्धविशेषमाह **समवायं इति** । इदमिति सामान्यम् रजतमिति विशेषः । तद्रूपत्वेन वा अनयोः संबन्धः समवाय इति तार्किकाः । तादात्म्यमिति भाट्टाः । तत्र तार्किकसमयमनुसृत्योक्तं समवायः स्वरूपमेवेति । अन्यथा समवायविलोपेन पदार्थन्यूनतापातात् । न सत्त्वमात्रं स्वरूपम् । किन्तु विशिष्टम् । न चात्र शुक्ति-रजतत्वाभ्यां विशिष्टं सत्त्वमस्तीति द्वितीयं शङ्कते **अत्रेति** । सत्यम् । समवायः स्वरूपम् । स एव तु शुक्तिव्यक्तौ रजतत्वस्य नास्तीति भाव । शुक्तिव्यक्तौ रजतत्वस्य समवायो नेति नञः केन संबन्धः । किं समवायस्वरूपेण किं वा तस्य ताभ्यां संबन्धान्तरेण । नाद्यः उक्तदोषानुषङ्गात् । द्वितीये संबन्धान्तरनिषेधेऽपि न समवायस्य काचित्क्षतिरिति परिहरति **न हीति** । देवदत्तस्य गृहसंसर्गनिषेधेऽपि न देवदत्तस्य स्वरूपहानिः । तद्वत् समवायस्य शुक्तिसंसर्गनिषेधेऽपि न स्वरूपहानिरित्यर्थः ।

प०— न्यायमतरीत्या शङ्कते **नन्वेवमिति** ॥ **तत्तादात्म्यमिति** । रजततादात्म्यमित्यर्थः ॥ **तस्येति** । अधिष्ठानेतरस्येत्यर्थः । तादृशस्याप्यारोपो जिज्ञासाधिकरणे समर्थित इति भावः ।

**या०** — विशेष्यं विशेषणं तत्संसर्गश्चेति त्रयमेव विशिष्टज्ञानेऽवभासते । इदंरजतमितिविशिष्टज्ञानेऽवभासमानं तत्त्रयं सदेव । अतः सदेकगोचरत्वं तत्रातिव्याप्तमित्याशयेनोपपादयति **न हीति** । **रजत**त्वजातिरित्युपलक्षणम् । रजतमित्यपि ग्राह्यम् । तादात्म्यारोपे रजतस्य विशेषणत्वम् । अत एवाह **तत्तादात्म्यं वेति** ॥ **न हि देवदत्त इति** । तथाच सदेकगोचरत्वमक्षतमेवेति भावः । **तस्येति** । अधिष्ठानेतरस्येत्यर्थः ।

**श्री०— समवायो वेत्यादि** । संसर्गतादात्म्यारोपद्वयाभिप्रायेण । **अत्र** पुरोदेशे । **असन्नेव** सर्वथेति शेषः । तथाच पुरोदेशेऽत्रासत्त्वमत्रेण सर्वत्राप्यसत्त्वं न वाच्यम् । तथात्वे गृहेऽसत्त्वमात्रेण देवदत्तोऽप्यसन्नेव स्यादतो रजतत्वादेरन्यत्र सत्त्वेन भ्रमस्यापि सदेकगोरत्वादतिव्यप्तिः स्यादेवेत्यर्थः । ननु यावदावेदितस्य सत्त्वं तत्त्वावेदकत्वमित्यङ्गीकर्तुस्तव मतेऽप्यस्य तत्त्वावदेकत्वलक्षणस्योक्तरीत्या भ्रमेऽतिव्याप्तिः स्यादेवेत्यत आह **न चायमिति** । **अस्माकम्** एवंविधं तत्त्वावेदकत्वलक्षणं वदताम् । प्रतीयमानरजतादेरिति शेषः । यावदावेदितस्य सत्त्वं मया नाङ्गीकियत इति मन्मते नातिव्याप्तिरित्यर्थः । **अस्माभिः** यावदावेदितस्य सत्त्वमेव याथार्थ्यमिति वदद्भिः । **तस्य** अधिष्ठानेतरस्य सर्वस्य । तथा च त्वद्वदेव मयाऽप्यतिव्याप्तिः परिह्रियते । परन्त्वेतावान्विशेषः । त्वयाऽधिष्ठनेतरस्य सर्वस्य प्रतीयमानस्यानिर्वचनीयत्वमङ्गीकृत्यातिव्याप्तिः परिह्रियते । मया त्वत्यन्तासत्त्वमङ्गीकृत्येति । तथा च सदेकगोचरत्वमेव याथार्थ्यमिति भावः ।

**सु०— अथ मतं किं विषयसत्त्वं तदानीमभिमतमुत पूर्वमथ पश्चाद्यद्वा सर्वदाऽथवा यदाकदाचिद्यदि वा यद्यद्देशकालयोर्यथाप्रतीतं तस्य तद्देशकालयोस्तथात्वेन । नाद्यः अतीतानागतविषयप्रमाणाव्यापनात् । न द्वितीयः वर्तमानानागतविषयाव्याप्तेः । पाकरक्तेऽपि घटे नीलप्रतीतौ विभागोत्तरकालं संयुक्तप्रत्यये वाऽतिव्याप्तेश्च । न तृतीयः अतीतादिविषयाव्याप्तेः । भाविपाकजरागे कुम्भे श्यामेऽपि रक्तपित्तिना रक्तताप्रतिभासेऽतिव्याप्तेश्च । न चतुर्थः । अनित्यविषयाव्याप्तेः । न पञ्चमः । पूर्वोक्तविभ्रमेऽतिव्याप्तेः । नापि षष्ठः । देशकालप्रमाणाव्याप्तेः । न हि देशकालयोर्देशकालान्तरमस्तीति ।**

**मैवम् । देशकालयोरपि स्वसंबन्धेन निरूपणस्य वक्ष्यमाणत्वात् । यद्वा यद्यथाभूतं प्रतीतं तस्य तथाभूतस्य सत्त्वमित्युक्त एव नातिप्रसङ्गः । देशकालयोरपि विशेषणान्तरवद् यथाभूतमित्यनेनैव गृहीतत्वात् । विशेषानुक्तेरुक्तदोषा(प्राप्ते)प्रसक्तेश्च ।**

शे०-- **तदानीमिति** । ज्ञानसमय इत्यर्थः ॥ **पूर्वमिति** । ज्ञानादिति शेषः । एवं पश्चादित्यत्रापि ॥ **सर्वदेति** । तदानीमित्यादिना निर्दिष्टसमयत्रयेऽपीत्यर्थः ॥ **यदा कदाचिदिति** । उक्तसमयेषु यस्मिन्कस्मिश्चित्समय इत्यर्थः ॥ **अतीतेति** । तत्र विषयस्यातीतत्वादिना ज्ञानकालेऽसत्त्वादित्यर्थः ॥ **वर्तमानेति** । इदं च वर्तमानविषयकनित्यज्ञानाभिप्रायेण, तात्कालिकविद्युदादिविषयकानित्यज्ञानाभिप्रायेण वा। उभयत्र ज्ञानापेक्षया विषयस्य पूर्वमसत्त्वादिति द्रष्टव्यम् । **पाकरक्तेऽपीति** । तत्र नीलप्रतीतिसमये घटस्य नीलत्वाभावेऽपि पूर्वं घटे नीलत्वस्य सत्त्वेन, प्रतीतेः पूर्वं नीलत्वस्य सत्त्वादिति भावः । **विभागेति** । विभागस्य संयोगपूर्वकत्वेन विभागसमानकालीनसंयोगप्रतीतेः पूर्वं संयोगस्य सत्त्वादिति भावः ॥ **अतीतादिति** । अतीतस्य प्रतीतेः पूर्वं सत्त्वेऽपि तात्कालिकविद्युदादेश्च प्रतीतिसमये सत्त्वेऽपि ततः पश्चात्सत्त्वाभावात्तद्विषयकप्रमाणयोरव्याप्तिरिति भावः ॥ **भावीति** । पाकेन जायत इति पाकजः स चासौ रागश्चेति तथोक्तः । भावी पाकजरागो यस्य स तथोक्तस्तस्मिन्नित्यर्थः ॥ **रक्तपित्तिन इति** । रक्तपित्तदुष्टचक्षुष इत्यर्थः । तत्रापि प्रतीतेः पश्चाद्रक्तिम्नः सत्त्वादिति भावः ॥ **अनित्येति** । अनित्यघटादिविषयकनित्यानित्याज्ञानाव्याप्तेरित्यर्थः । तत्र विषयस्यानित्यत्वेन सर्वदा सत्त्वाभावादिति भावः । **पूर्वोक्तविभ्रम इति** । भाविपाकजरागे कुम्भे श्यामेऽपि रक्तपित्तिनो रक्तताप्रतिभास इत्यर्थः । तत्रापि विषयभूतस्य रक्तिम्नः पश्चात्सत्त्वेन कदाचित्सत्त्वानपायादिति भावः ॥ **देशेति** । तद्विषयस्य देशादेर्देशादिवैशिष्ट्याभावादित्यर्थः । देशादेर्देशादिवैशिष्ट्यमभ्युपगच्छन्प्रष्टव्यः । किं तस्यैव देशादेस्तेनैव देशादिना वैशिष्ट्यमुच्यते किंवा देशान्तरादिना । नाद्यः । स्वस्य स्ववैशिष्ट्यस्य विरुद्धत्वादिति भावेन द्वितीयं दूषयति **न हीति** । सद्भावे वा तद्विषयप्रमाणाव्याप्तिरेव । तत्रापि देशान्तराद्यभ्युपगमेऽनवस्था पूर्वदेशाद्यभ्युपगमे चान्योन्याश्रय इति भावः । श्रुत्यादिसिद्धत्वान्न तस्यैव देशादेस्तेनैव देशादिना वैशिष्ट्यानुपपत्तिरिति न तत्प्रमाणाव्याप्तिरित्याह **मैवमिति** ॥ **वक्ष्यमाणत्वादिति** । वैशेषिकपरीक्षाया'मीशो देशश्च कालश्च स्वगता एव सर्वदे'त्यादिनेति शेषः ॥ **नातिप्रसङ्ग इति** । भाविपाकजरागे कुम्भे श्यामेऽपि रक्तपित्तिनो रक्तताप्रतिभासेऽतिव्याप्तिलक्षणोऽतिप्रसङ्गो नेत्यर्थः । ननु यदा तदेति विशेषणानुपादाने यदाकदाचित्सत्त्वस्यैव प्राप्तेः पूर्वोक्तभ्रमेऽतिव्याप्तिरेवेत्यत आह **देशकालयोरिति** । यथाभूतमित्यनेन येन प्रकारेण येन संबन्धेनेत्यादिविशेषणान्तरस्यैव देशकालयोरपि संगृहीतत्वात्कदाचित्सत्त्वेऽपि रक्तिम्नो यद्देशकालावच्छेदेन प्रतीतं तद्देशकालयोस्तथात्वाभावान्नातिव्याप्तिरित्यर्थः । एवं तर्हि माऽस्तु पूर्वोक्तभ्रमेऽतिव्याप्तिः । विशेषणान्तरवद्देशकालयोरपि गृहीतत्व देशकालयोश्च देशकालवैशिष्ट्यस्य पूर्वोक्तरीत्याऽनुपपत्तेर्देशकालविषयप्रमाणाव्याप्तिस्तु स्यादित्यत आह **विशेषेति** । देशकालयोर्विशेषणा-

न्तरवद्यथाभूतमित्यनेन संगृहीतत्वेऽपि यत्र यदा तत्र तदेति विशिष्यानुपादानान्न देशकालविषयप्रमाण-व्याप्तिरित्यर्थः ।

**स०— भावीति** । पाकजश्चासौ रागश्च पाकजरागः । स च भावी चेति भाविपाकजरागः । स यस्य तथोक्तः । स चासौ कुम्भश्च तादृक् । रक्तपित्तिनो नायनरश्मयो घटग्रहणाय प्रवृत्ता दुष्टाः सन्तो वस्त्वन्तरवर्तिनं पीतिमानं घटत्वसमानाधिकरणतया गृह्णन्ति, तदैव गत्वा परस्ताद्भविष्यन्तीति तदपि तत्त्वं स्यादिति तज्ज्ञानस्यापि प्रमात्वापत्तेरित्यर्थः । **पूर्वोक्तविभ्रम इति** । पाकरक्तेऽपि घटे नीलप्रतीतौ, विभागोत्तरकालं संयुक्तप्रत्यये, भाविपाकजरागकुम्भे श्यामेऽपि रक्तपित्तिनो रक्तताप्रतिभासे चेति पूर्वोक्तविभ्रमे इत्यर्थः । **देशकालप्रमाणेति** । देशकालविषयकप्रमाणेष्वित्यर्थः ॥ **वक्ष्यमाणत्वादिति** । वैशेषिकप्रमाणपरीक्षायां 'ईशो देशश्च कालश्च स्वगता एव सर्वदा' इत्यनेन वक्ष्यमाणत्वादित्यर्थः । **इत्युक्त एवेति** । एवेति एवकारेण पूर्वपक्षे बहुविशेषणप्रक्षेपेण गौरवेऽपि अत्र तदभावान्न गौरवमिति । ननु तत् यथाभूतं प्रतीतम् इत्यत्र यत्र यदेति देशकालवाचिपदद्वयमवश्यं प्रवेश्यम् । अन्यथा पाकरक्तस्य घटस्य कालान्तरे देशान्तरे सत्त्वाभावात् रक्ततादशायामपि तज्ज्ञानस्य अप्रमाणत्वापातात् । तत्राह **देशेति** । यथाभूतमित्यनेन येन प्रकारेण येन संबन्धेनेत्यादिविशेषणान्तरलाभवत् देशकालवाचि यत्र यदेत्यादिकमपि संगृहीतमित्यर्थः ॥ **विशेषेति** । देशकालयोरिति विशेषानुक्त्या देशकालविषयप्रमाणव्याप्तिरित्युक्तदोषानवकाशादित्यर्थः ।

**प०— तदानीमिति** । ज्ञानकाल इत्यर्थः । **तथात्वेनेति** । सत्त्वमभिमतमित्यनुषङ्गः । भाविपाकजराग इति बहुव्रीहिः ॥ **पूर्वोक्तेति** । पाकरक्तेऽपीत्यादिनोक्तविभ्रमेष्वतिव्याप्तेरित्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'ईशो देशश्च कालश्च स्वगता एव सर्वदा' इत्यनेन वैशेषिकाधिकरणान्त इति भावः । इत्युक्त इति सप्तम्यन्तम् । इत्युक्ते सत्येवेत्यर्थः । देशकालरूपविशेषणयोर्देशकालत्वरूपविशेषेणावचनाद्देशकालप्रमाणाव्याप्तिरूपदोषाप्राप्तेश्चेत्यर्थः । न केवलं भ्रमेऽतिप्रसङ्गदोषो नेति चार्थः ।

**या०— तदानीमिति** । ज्ञानकाल इत्यर्थः ॥ **भाविपाकेति** । भाविना पाकेन रागो रक्तिमा यस्य स तथोक्तस्तस्मिन्नित्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'ईशो देशश्च कालश्च स्वगता एव सर्वदा' इत्यादिनेति शेषः ॥ **विशेषानुक्तेरिति** । देशकालरूपविशेषणयोर्न देशकालत्वरूपविशेषाकारेण लक्षणे प्रवेशः । येन देशकालप्रमाणाव्याप्तेरित्युक्तदोषप्राप्तिः स्यात्किन्तूक्तेन सामान्यरूपेणैवेत्याशयः ।

**श्री०**–अस्तु यावदावेदितस्य सत्त्वमेव याथार्थ्यं तथाऽपीदमयुक्तमित्याशङ्कते **अथेत्यादिना** । **तदानीं** ज्ञानसमये । **पूर्वं** ज्ञानात् । पश्चादित्यत्रापि ज्ञानादिति शेषः । **सर्वदा** ज्ञानात्पूर्वं पश्चाज्ज्ञानसमये चेति सर्वदा सत्त्वं विषयस्याभिप्रेतम् । नित्यत्वमभिप्रेतमिति यावत्। **यदाकदाचित्**पूर्वमेव पश्चादेव तदानीमेवेति नियमो नाभिप्रेतः किन्नाम पूर्वं वा पश्चाद्वा तदानीं वेति यदाकदाचिदित्यर्थः । तथात्वेन सत्त्वमेव विषयस्य सत्त्वमित्यर्थः ॥ **अतीतेति** । ज्ञानसमयेऽभावादित्यर्थः ॥ **वर्तमानेति** । ज्ञानात्पूर्वमभावेनानागतवर्तमानविषयकज्ञानरूपप्रमाणाव्याप्तिरित्यर्थः ॥ **नीलेति** । नैल्यस्य पाकात्पूर्वं सत्त्वात्पूर्वं विद्यमाननीलरूपविषयकत्वेन रक्ततादशायां भ्रमरूपनैल्यप्रतीतौ, तथा संयोगस्यापि विभागात्पूर्वं सत्त्वात्पूर्वं विद्यमानसंयोगविषयकत्वेन विभक्ततादशायां भ्रमरूपसंयुक्तप्रत्यये चातिव्याप्तिरित्यर्थः ॥ **अतीतेति** । ज्ञानात्पश्चात्सत्त्वात्तद्विषयज्ञानेऽव्याप्तिरित्यर्थः ॥ **श्यामेऽपीति** । तथा च यदा श्यामतादशायामपि रक्तपित्तिना रक्ताप्रदर्शकदोषेण यो भ्रमरूपो रक्तताप्रतिभासो भवति तस्मिन्नतिव्याप्तिः । तद्विषयस्य रक्तत्वस्य पश्चाद्भावित्वेन तद्विषयसत्त्वम् । पश्चाद्भावित्वमुपपादयितुमेव भाविपाकजरागे कुम्भ इत्युक्तम् । भावी यः पाकस्तज्जन्यो यो रागस्तद्वति कुम्भ इत्यर्थः ॥ **अनित्येति** । सर्वदा सत्त्वाभावेनानित्यघटादिविषयकप्रमाणेऽव्याप्तिरित्यर्थः ॥ **पूर्वोक्तेति** । वस्तुतो रक्तेऽपि घटे नैल्यप्रतीतौ । यदाकदाचित्पूर्वविषयस्य नैल्यस्य सत्त्वात् । तथा वस्तुतः श्यामेऽपि दोषेण रक्तताप्रतीतौ च यदाकदाचित्पश्चाद्विषयस्य रक्तरूपस्य सत्त्वात्तत्रातिव्याप्तिरित्यर्थः ॥ **देशकालप्रमाणेति** । अयं देशोऽयं काल इत्येवं देशकालविषयज्ञानेऽव्याप्तिरित्यर्थः ॥ **अस्तीति** । तथा च यद्देशः कालश्चेति द्वयं यद्देशकालयोर्यथा प्रतीतमिति वक्तुं न शक्यते । आत्माश्रयापत्त्या स्वस्मिन्स्वस्य वृत्त्ययोगेनाऽधिकरणत्वाऽयोगादिति ध्येयम् । **यथाभूतं** यादृशम् । **तथाभूतस्य** तादृशस्य । तथा चात्र लक्षणे सत्त्वं पूर्वं पश्चादिदानीमिति विशेषो न विवक्षितः किन्तु सत्त्वमात्रम् । तत्तु ज्ञानविषयेऽतीतादौ वर्तत एव यदाकदाचित्सत्त्वात् । तथा रक्ततादशायां श्यामताप्रतीतौ श्यामतादशायां रक्तताप्रतीतौ च नास्त्यतिव्याप्तिः । प्रतीतस्य श्यामतादेः पूर्वं पश्चाद्वा सत्त्वेन तज्ज्ञानस्यापि प्रमात्वात् । इदानीं श्याम इदानीं रक्त इति प्रतीतिस्त्वप्रमेति ध्येयम् । **सत्त्वम्** एतदेव विषयस्य सत्त्वं तादृशसदर्थविषयकमेव ज्ञानं प्रमाणमित्यर्थः ॥ **इत्युक्त एवेति** । इत्येवोक्ते देशकालवाचिपदघटिततया लक्षणकरण इत्यर्थः । नन्वस्मिन् लक्षणे यत्र यदा यद्यथाभूतं प्रतीतं तस्य तथाभूतस्य तस्मिन्देशे तस्मिन्काले च सत्त्वमिति देशकालवाचिपदं प्रवेश्यमेव । अन्यथा रक्ततादशायामपि रक्तघटज्ञानमप्रमाणं स्यात् । **तथाप्रतीतस्य** रक्तत्वेन प्रतीतस्य घटस्य देशान्तरे कालान्तरे च सत्त्वाभावादतः कथं देशकालाघटिततया लक्षणमित्यत आह **देशकालयोरपीति** । कथं यथाभूतमित्यनेन देशकालयोर्ग्रहणमित्यत उक्तं **विशेषणान्तरवदिति** । येन प्रकारेण येन संबन्धेनेति विशेषणान्तरवदित्यर्थः । अनेनेदमपि विशेषणद्वयमभिप्रेत-

मित्युक्तं भवति । अन्यथा यद्यथाभूतं घटत्वेन प्रतीतं तस्य पटत्वेन प्रकारेण समवायेन संबन्धेन च भूतलादावसत्त्वादव्याप्तिः स्यादतस्तत्परिहाराय यथाभूतमित्यनेनैव येन प्रकारादिना प्रतीतं तेनैव प्रकारादिना सत्त्वमभिप्रेतमित्यवश्यं वाच्यम् । तद्वद्देशकालादिवाचि यत्र यदेति पदमपि संगृहीतमस्त्येवेति भावः । ननु यदि देशकालादिवाचिपदं लक्षणे दीयते तर्हि देशकालादिविषयप्रमाणे पूर्वोक्ताऽव्याप्तिः स्यादेवेत्यत आह **विशेषेति** । देशकालादिवाचिपदं तथाभूतस्येति पदेनाभिप्रेतमस्तीत्येव, न तु यत्र यदेति विशिष्य तद्वाचिपदं कण्ठत उच्यत इत्यर्थः । तथा च यद्देशादिकं यथा देशत्वादिना प्रतीतं तस्य तथाभूतस्य सत्त्वमस्तीत्येतल्लक्षणस्य सत्त्वान्नाव्याप्तिरित्यर्थः ।

**सु० — तथाऽपि निश्चायकाभावेनासंभवीदं लक्षणम् । तथा हि । ज्ञानयाथार्थ्यं किमदुष्टकरणजन्यत्वेनावधारणीयम्, उत दुष्टकरणाजन्यत्वेन, अथ प्रवृत्तिसामर्थ्येन, यद्वा ज्ञानान्तरसंवादेन, किंवा विसंवादाभावेन । नाद्यः तस्यापि दुरवधारणत्वात् । ज्ञानयाथार्थ्येन तदनुमाने चेतरेतराश्रयत्वापत्तेः । नित्यज्ञानेषु तदभावाच्च । न द्वितीयः अशक्यावधारणत्वात् । न तृतीयः सर्वत्र तदभावात् । न चतुर्थः सुखादिज्ञाने तदभावात् । ज्ञानमात्रसंवादाङ्गीकारे च धारावाहिकविभ्रमे(ऽपि) तद्ग्रहापत्तिः । यथार्थज्ञानसंवादाभ्युपगमे तु तत्तद्याथार्थ्यावधारणेनानवस्था । न पञ्चमः असञ्जातबाधभ्रमेष्वपि तदापातात् । पुरुषदेशकालविकल्पानुपपत्तेश्चेति ।**

**मैवम् । तथा सति वेदान्तजनितविज्ञानस्यापि याथार्थ्यानवधारणप्रसङ्गात् ॥ विषयसत्यत्वात्तदवधारणमिति चेत्तदेव कथम् । ज्ञानसामर्थ्यादिति चेत् । किं ज्ञानमात्रस्य सामर्थ्यमुत यथार्थतया निश्चितस्य । आद्ये शुक्तिरजतादेरपि सत्यतापत्तिः । द्वितीये(ऽपि) किमेतस्यैव ज्ञानस्योत ज्ञानान्तरस्य । न प्रथमः परस्पराश्रयप्रसङ्गात् । न द्वितीयः अनवस्थाद्यापातात् ।**

**शे० — प्रवृत्तिसामर्थ्येनेति** । फलसंवादेनेत्यर्थः ॥ **तस्यापीति** । अदुष्टकरणजन्यत्वस्यापि इत्यर्थः । तदवधारकं भवज्ज्ञानयाथार्थ्यमेव वा स्यादन्यद्वा किञ्चिदिति विकल्पं मनसि निधायाद्यं दूषयति **ज्ञानेति** । ज्ञानयाथार्थ्यसिद्धावदुष्टकरणजन्यत्वसिद्धिस्तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयापत्तेरित्यर्थः । न द्वितीयः तदभावात् । अभ्युपेत्यापि निश्चायकान्तराभावं दोषान्तरमाह **नित्येति** । तत्रादुष्टकरणजन्यत्वाभावेऽपि प्रकारान्तरेणैव याथार्थ्यावधारणे तत एव सर्वत्र याथार्थ्यावधारणसिद्धिसंभवान्नादुष्टकरणजन्यत्वस्य तदवधारणोपायत्वमिति भावः ॥ **अशक्येति** । ज्ञानयाथार्थ्येनैव तदनुमाने चेतरेतराश्रयत्वमिति भावः ॥ **सर्वत्रेति** । उदासीनवस्तुज्ञानात्प्रवृत्त्यभावेन तत्र याथार्थ्यानवधारण-

प्रसङ्गात्तत्राप्युपायान्तरेणैव याथार्थ्यावधारणे च तत एव सर्वत्र याथार्थ्यावधारणोपपत्तेः प्रवृत्तिसामर्थ्यकल्पनमनर्थकमिति भावः ॥ **सुखादीति** । परसुखादेः परं प्रत्यप्रत्यक्षत्वेन सुखादिज्ञाने ज्ञानान्तरसंवादानुपपत्तेरित्यर्थः । ननु माऽस्तु परसुखादिविषयकः परस्य प्रात्यक्षिकोऽनुभवः । आनुमानिकस्तु सोऽस्त्येवेति कथं ज्ञानान्तरसंवादाभावः । किञ्च योगिनां प्रत्यक्षरूपोऽपि सोऽस्त्येवेति न तदभावोऽपीत्याशङ्क्य किमत्र यथार्थत्वेनानवधारितज्ञानान्तरसंवादोऽभिमतः किंवा तत्त्वेनावधारिततत्संवाद इति विकल्पद्वयं मनसि निधायाद्यमनूद्य दूषयति **ज्ञानमात्रेति** । द्वितीयमनूद्य दूषयति **यथार्थेति** । याथार्थ्यावधारणमपि यथार्थतयाऽवधारितज्ञानान्तरसंवादेनैव । ज्ञानमात्रसंवादस्य धारावाहिकभ्रमसाधारणत्वात् । एवं तज्ज्ञानयाथार्थ्यमपि तत्त्वेनावधारितज्ञानान्तरसंवादेनैव । एवं तदपीत्यनवस्था स्यात् । उपलक्षणमेतत् । अन्योन्याश्रयादिकमपि स्यादित्यपि द्रष्टव्यम् । नन्वसञ्जातबाधभ्रमेऽपि पुरुषान्तरीयो वा तस्यैव पुरुषस्य कालान्तरीयो वा बाधोऽस्त्येवेति न विसंवादाभावस्तत्कथं तत्रातिप्रसङ्ग इत्यतो विसंवादाभावेन ज्ञानयाथार्थ्यावधारणं वदन्प्रष्टव्यः किं किञ्चित्पुरुषीयविसंवादाभावोऽभिमतः किंवा सर्वपुरुषीयः । एवं तद्देशीयबाधाभावो वा सर्वदेशीयो वा तथा तत्कालीयविसंवादाभावोऽभिमतः किंवा सर्वकालसम्बन्धी स विवक्षित इति पुरुषादिविकल्पनानामाद्ये भ्रमसाधारण्यमन्त्ये दुरवधारणत्वमित्याद्यनुपपत्तीनां च प्रसक्तिरित्याह **पुरुषेति** ॥ **किमिति** । यथार्थत्वेनानिश्चितज्ञानसामर्थ्यं विषयसत्त्वावधारकमित्यर्थः । निश्चितस्येत्यतः परं ज्ञानस्य सामर्थ्यमिति पूरणीयम् ॥ **आद्य इति** । विषयसत्त्वावधारकत्वेनाभिमतज्ञानमात्रसंवादस्य तत्रापि सत्त्वादिति भावः ॥ **एतस्यैवेति** । वेदान्तजनितज्ञानस्यैवेत्यर्थः ॥ **परस्परेति** । वेदान्तजनितविज्ञानस्य याथार्थ्यावधारणे हि तत्सामर्थ्याद्विषयसत्यत्वावधारणसिद्धिः । तदवधारणे च तेन वेदान्तजनितविज्ञानयाथार्थ्यावधारणसिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थः ॥ **अनवस्थादीति** । यथार्थतया निश्चितज्ञानान्तरसामर्थ्याद्विषयसत्यत्वावधारणे तज्ज्ञानयाथार्थ्यावधारणहेतुभूतविषयसत्यत्वावधारणस्य यथार्थतया निश्चितज्ञानान्तरसामार्थ्याधीनत्वात्तत्रापि यथार्थतया निश्चितज्ञानान्तरसामर्थ्यादेव विषयसत्यत्वावधारणाद्विषयसत्यत्वावधारकयथार्थतया निश्चितानवस्थितानेकज्ञानसामर्थ्यकल्पनायामनवस्था स्यादित्यर्थः । न वयं वेदान्तजनितविज्ञानयाथार्थ्यावधारणहेतुभूतविषयसत्यत्वावधारकज्ञानान्तरयाथार्थ्यावधारणाय विषयसत्यत्वावधारकयथार्थतयानिश्चितज्ञानान्तरसामर्थ्यमेव विकल्पयामो येनानवस्था स्यात्किन्नाम विषयसत्यत्वावधारकयथार्थतयानिश्चितपूर्वज्ञानसामर्थ्यमेवेति कथमनवस्थेत्यत एवं तर्हि माऽस्त्वनवस्था विषयसत्यत्वावधारकज्ञानान्तरयाथार्थ्यावधारणाय विषयसत्यत्वावधारकपूर्वज्ञानयाथार्थ्यावधारणापेक्षायामन्योन्याश्रयत्वम् । एवं त्रयाणां परस्परापेक्षायां चक्रकत्वं तज्ज्ञानयाथार्थ्यनिश्चयाय तज्ज्ञानयाथार्थ्यनिश्चयापेक्षायामात्माश्रयत्वमवर्जनीयमेवेत्यभिप्रायेणानवस्थादीत्यादिपदमिति द्रष्टव्यम् ।

स० — **ज्ञानयाथार्थ्येनेति** । अदुष्टकरणजन्यत्वे ज्ञाते ज्ञानयाथार्थ्यज्ञानं, ज्ञानयाथार्थ्ये ज्ञाते तज्ज्ञानमित्यन्योन्याश्रयत्वमित्यर्थः। **तद्ग्रहापत्तिरिति** याथार्थ्यग्रहापत्तिरित्यर्थः। **तत्तद्याथार्थ्यावधारणे इति** । यस्य यथार्थज्ञानस्य संवादः अङ्गीक्रियते तत्र ज्ञाने याथार्थ्यावधारणे करिष्यमाणे यथार्थज्ञानान्तर-संवादापेक्षा, तद्याथार्थ्यावधारणार्थं पुनरिति अनवस्थेत्यर्थः । किं च किं कस्यचित् पुरुषस्य वा बाधाभावः, सर्वेषां वा । नाद्यः । भ्रमेऽपि तदनुमानापातात् । न द्वितीयः । संदिग्धासिद्धेः । एवं कस्मिंश्चिद्देशे वा सर्वदेशे वेति पक्षद्वये दूषणं पूर्ववत् । एवं कस्मिंश्चित्काले वा सर्वकाले वेत्यादि-विकल्पानुपपत्तेश्चेत्याह **पुरुषेति** ।। **परस्परेति** । यथार्थतया निश्चितस्यैव ज्ञानस्य सामर्थ्यात् विषय-सत्त्वावधारणं, सति तस्मिन् याथार्थ्यावधारणमिति परस्पराश्रय इति भावः । **अनवस्थाऽऽदीति** । ज्ञानान्तरस्यापि याथार्थ्यावधारणं ज्ञानान्तरसामर्थ्यादित्येवमनवस्थेत्यर्थः । पूर्वज्ञानसामर्थ्यात् तदवधार-णाङ्गीकारे चाऽदिशब्दोक्तान्योन्याश्रयः । व्यक्तित्रयाङ्गीकारे चक्रकमिति द्रष्टव्यम ।

प० — **पुरुषेति** । यत्किञ्चित्पुरुषीयविसंवादाभावो वा सर्वपुरुषीयतदभावो वा । नाद्यः । व्यभिचारात् । नान्त्यः । तस्य दुरवधारणत्वात् । एवं यत्किञ्चिद्देशकालसंबन्धिविसंवादाभावो व्यभिचारी सर्वदेशकालसंबन्धिविसंवादाभावो दुरवधारण इति भावः ॥ **वेदान्तजनितेति** । उपनिषज्जनितेत्यर्थः ॥ **कथमिति** । अवधार्यमिति योज्यम् । ज्ञानसामर्थ्यादित्यादावप्येवं योज्यम् । फलवत्प्रवृत्तिजनकत्वादि-रूपाज्ज्ञानसामर्थ्यादित्यर्थः ॥ **एतस्यैव ज्ञानस्येति** । वेदान्तजनितज्ञानस्यैव यथार्थतया निश्चितस्य सामर्थ्यात् । विषयसत्यत्वमवधार्यत इति योज्यम् ॥ **परस्परेति** । विषयसत्यत्वनिश्चये सति तज्ज्ञान-याथार्थ्यनिश्चयः तन्निश्चये सति तत्सामर्थ्याद्विषयसत्यत्वनिश्चय इति परस्पराश्रयप्रसङ्गादित्यर्थः ॥ **अनवस्थाद्यापातादिति** । वेदान्तजनितज्ञानसमानविषयकमानान्तरजन्यज्ञानान्तरस्योक्तरूपसामर्थ्या-द्विषयसत्यत्वनिश्चयः, तेन च वेदान्तजन्यज्ञानस्य याथार्थ्यनिश्चय इत्युक्तौ अन्योन्याश्रयाभावेपि ज्ञानान्तरे याथार्थ्यनिश्चयोपि तादृशज्ञानान्तरसामर्थ्यात् तत्रापि तन्निश्चयः तादृशज्ञानान्तर(जन्यस्य)सामर्थ्यादित्यन-वस्थापातादित्यर्थः । आदिपदेनाऽन्योन्याश्रयादिर्ग्राह्यः(मूलहत्यादिर्वा) ।

या० — **पुरुषदेशकालेति** । किं कस्यचित्पुरुषस्य कस्मिंश्चिद्देशे कस्मिंश्चित्काले विसंवादा-भावो हेतुरुत सर्वेषां सर्वस्मिन्देशे काले च विसंवादाभावः । नाद्यः । भ्रमे व्यभिचारात् । न द्वितीयः । तस्य दुरवधारणत्वादिति विकल्पानुपपत्तेरित्यर्थः ॥ **एतस्यैवेति** । वेदान्तजनितज्ञानस्यै-वेत्यर्थः । सामर्थ्यादिति पूर्वेणान्वयः ॥ **ज्ञानान्तरस्येति** । सजातीयसंवादरूपस्य विजातीयसंवादरूपस्य वा ज्ञानान्तरस्येत्यर्थः ॥

**श्री०— तस्यापि** अदुष्टकरणजन्यस्यापि ॥ **तदिति** । अदुष्टकरणजन्यत्वेत्यर्थः । तथा च ज्ञानयाथार्थ्ये ज्ञाते तेनादुष्टकरणजन्यत्वज्ञानं तज्ज्ञाने च तेन ज्ञानयाथार्थ्यज्ञानमित्यन्योन्याश्रय इत्यर्थः ॥ **तदिति** । जन्यत्वेत्यर्थः । द्वितीये नित्यज्ञानस्य सर्वथाऽजन्यत्वेन दुष्टकरणाजन्यत्वमस्तीति तेन ज्ञानयाथार्थ्यं निश्चेतुं शक्यते इति पूर्वोक्तदोषायोगादाह **अशक्येति** । दुष्टकरणाजन्यत्वस्येति शेषः ॥ **तदिति** । प्रवृत्तिसामर्थ्येत्यर्थः ॥ **तदिति** । ज्ञानान्तरसंवादेत्यर्थः । देवदत्तसुखादेस्तन्मात्रवेद्यत्वेन तत्र यज्ञदत्तादिज्ञानाप्रसरादिति हृदयम् ॥ **ज्ञानमात्रेति** । तथा च देवदत्तसुखेनाहं सुखीति भ्रमरूपयज्ञदत्त-ज्ञानसंवादोऽस्तीति न पूर्वोक्तदोष इत्यर्थः ॥ **भ्रमेति** । तथा चोत्तरोत्तरभ्रमसंवादस्य पूर्वपूर्वभ्रमे सत्त्वेन तादृशभ्रमरूपज्ञानसंवादेन, तत्रापि याथार्थ्यग्रहः स्यादिति भावः ॥ **अनवस्थेति** । तद्याथार्थ्यमपि पुनर्यथार्थज्ञानसंवादेनैव ज्ञेयं तद्याथार्थ्यमपि पुनस्तथेत्यनवस्थेत्यर्थः । विसंवादाभावोपपादनाय असञ्जात-बाधेत्युक्तम् । यदि बाधः स्यात्तर्हि विसंवादिप्रमाणं स्यान्न चासावस्तीत्यर्थः । **तदापातात्** याथार्थ्यावधा-रणापातात् । **विज्ञानस्य** ब्रह्मज्ञानस्य । **तदिति** । वेदान्तजनितज्ञानस्य याथार्थ्येत्यर्थः । **तदेव** विषय-सत्यतावधारणमेव । **सामर्थ्यात्** वेदान्तजन्यज्ञानसामर्थ्यादेव तद्विषयसत्यतावधारणमिति शेषः । **सामर्थ्यं** विषयसत्यतानिश्चायकत्वरूपं सामर्थ्यमङ्गीक्रियत इत्यर्थः । निश्चितस्य ज्ञानस्य सामर्थ्यमिति वर्तते ॥ **शुक्तिरजतेति** । ज्ञानमात्रस्य विषयसत्यतानिश्चायकत्वाङ्गीकारेण शुक्तिरजतज्ञानस्यापि विषयसत्यतानिश्चा-यकत्वापत्त्येति वाक्यशेषः ॥ **एतस्यैवेति** । विषयसत्त्वेन यस्मिन्ज्ञाने याथार्थ्यं निश्चीयते तस्यैव यथार्थतया निश्चितस्य ज्ञानस्य विषयसत्यतानिश्चायकत्वसामर्थ्यमङ्गीक्रियत इत्यर्थः ॥ **परस्परेति** । विषयसत्त्वे सिद्धे तेन ज्ञाने याथार्थ्यसिद्धिः, तत्सिद्धौ च तेन ज्ञानयाथार्थ्येन विषयसत्यतासिद्धि-रित्यन्योन्याश्रय इत्यर्थः ॥ **अनवस्थेति** । ज्ञाने याथार्थ्यावधारणं विषयसत्यत्वेनोच्यते । विषय-सत्यतावधारणं च यथार्थतया निश्चितज्ञानान्तरसामर्थ्येनेत्युच्यते । तस्मिन्ज्ञानान्तरेऽपि याथार्थ्यं विषय-सत्यत्वेनैव निश्चेयं, तद्विषयसत्यत्वं च पुनर्यथार्थतया निश्चितज्ञानान्तरसामर्थ्येनैव निश्चेयं, तत्रापि याथार्थ्यं पुनर्विषयसत्यत्वेनैव निश्चेयं, तद्विषयसत्यत्वं पुनर्यथार्थतया निश्चितज्ञानसामर्थ्येनेत्यनवस्था द्रष्टव्या ।

**सु०— अथ मन्येत स्वत एव विज्ञानानां प्रामाण्यग्रहः बाधेन क्वचिदपोद्यते । न च ब्रह्मज्ञानस्य बाधः संभवति । यथाशक्ति परीक्षायामपि तददर्शनात् । निर्मूलशङ्कायाश्च अनुदयात् । निरवधिकस्य निस्साक्षिकस्य बाधस्यादर्शनात । अवध्यादिस्वीकारे च तस्यैव ब्रह्मत्वेन बाधितुमशक्यत्वादिति । तदेतत्समानमस्मन्मतेऽपि । विवृतश्चायमर्थस्तत्र तत्रेत्युपपन्नं**

याथार्थ्यस्य प्रमाणलक्षणत्वमिति । तन्मुख्यं ज्ञानशब्दयोरिति न युक्तम् । तथा सति ज्ञान-वच्छब्दस्यापि केवलत्वापत्तेः । इत्याशङ्कां सोपपत्तिकं परिहरति ज्ञानार्थ इति ।

अनु०— ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरम् ॥

यस्माज्ज्ञानार्थे ज्ञानविषये ज्ञेयता मुख्या शब्दार्थे शब्दविषये तदनन्तरं ज्ञेयताऽमुख्येति यावत् । तस्माज्ज्ञान एव याथार्थ्यलक्षणं प्रामाण्यं मुख्यं, शब्दे त्वमुख्यम् । तथा च न तस्य केवलत्वापत्तिरित्यर्थः । ज्ञानार्थेष्वर्यता मुख्येति प्रकृतत्वाद्वक्तव्येऽर्यताऽपि गतिकर्मसु विद्यत इति गतावतिव्याप्तिस्तदवस्थेत्याशङ्कानिरासाय ज्ञेयतेत्यर्यताव्याख्यानं कृतम् । इदमुक्तं भवति । न ज्ञानसमकक्षतया शब्दे याथार्थ्यं मुख्यम् । किन्तु करण(मात्रा)त्रयापेक्षया । ज्ञान एव मुख्यं याथार्थ्यं करणेष्वपि निर्धारणायां शब्दे मुख्यम् । तदेते परममुख्यमुख्ये एकीकृत्य तन्मुख्यं ज्ञानशब्दयोरित्युक्तमिति ।

शे०— नन्वेवं शुक्तिरजतादिज्ञानस्यापि स्वत एव प्रामाण्यप्रसङ्ग इत्यतः प्रामाण्यस्यतस्त्वस्यौ-त्सर्गिकत्वेनापवादाभावनिबन्धनत्वाच्छुक्तिरजतादिज्ञाने चापवादकसद्भावान्न तत्प्रामाण्यप्रसङ्ग इत्याशयेनाह बाधेनेति । तर्हि तद्वदेव ब्रह्मज्ञानेऽपि बाधादेव प्रामाण्यापवादोऽस्त्वित्यतः किमत्र क्लृप्तो बाधः प्रामाण्यापवादकत्वेनाभिमतः किंवा कल्प्यः स इति विकल्पं मनसि निधायाद्यं प्रत्याह न चेति । द्वितीयं दूषयति निर्मूलेति । ज्ञानस्य डोलायमानत्वादिरूपतत्कल्पकाभावान्न बाधकल्पना संभवतीत्यर्थः । अन्यथा सर्वत्र तादृशशङ्काप्रसङ्गात्सकललोकव्यवहारोच्छेदः स्यादिति भावः । ब्रह्मज्ञानस्य बाधो न संभवतीति वस्तुस्थितिमात्रमुक्तम् । इदानीमङ्गीकृत्यापि बाधं ब्रह्मणः सत्यत्वमुपपादयति निरवधिकस्येति । न हि रजतं नेत्येव क्वचिद्बाधः किन्त्विदं नेति । तथा च वेदान्तजनितविज्ञानस्य बाधमङ्गीकुर्वाणेनापि बाधावधिभूतं तत्त्वं वाच्यम् । तदेव चास्माकं ब्रह्म । एवं बाधस्य विपरीतप्रमारूपस्य ज्ञानत्वेन ज्ञातृ-सापेक्षत्वात्तदभावे बाधस्यानुपपत्तिः सद्भावे च तस्यैव ब्रह्मत्वमिति न ब्रह्म बाधितुं शक्यमित्याशयः । अबाध्यादीत्यादिपदेन साक्षिपरिग्रहः । इतीत्यस्य अथ मन्येतेत्यनेन संबन्धः । तर्हि स्वत एव तत्र ज्ञानयाथार्थ्यावधारणसंभवान्न लक्षणस्यासंभवित्वमिति समाधिसाम्यमिति परिहरति तदेतदिति । स्यादेवं यदि ब्रह्मज्ञानवज्जगतोऽपि बाधाभावः स्यात् । न चासावस्ति । नेह नानेत्यादिश्रौतस्य विमतं दृश्यत्वादित्याद्यनुमानस्य च बाधस्य सत्त्वादित्यत आह विवृतश्चायमर्थ इति ॥ तत्र तत्रेति । 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याप्रतो भवेत्' 'भ्रमत्वे वियमुक्तिश्च तदन्तःपातनान्न हि' 'दृश्यत्वा-द्विमतं मिथ्या स्वप्नवच्चेदियं च मे'त्यादिना पूर्वत्रोत्तरत्र चेत्यर्थः । 'ज्ञानार्थे ज्ञेयता मुख्ये'त्युत्तरग्रन्थस्य

पूर्वेण **सङ्गत्यभावादानर्थक्यमित्याशङ्क्या**व्यवहितपूर्वग्रन्थेन सङ्गत्यभावेऽपि व्यवहितेन तेन सङ्गतिसद्भावा-न्नानर्थक्यमित्याशयेनोत्तरग्रन्थं तथैवावतारयति **तन्मुख्यमिति** । तन्मुख्यं ज्ञानशब्दयोरिति ज्ञानशब्द-योर्याथार्थ्यं मुख्यमित्युक्त्या प्राप्तायाः शब्दस्य ज्ञानसमकक्ष्यत्वशङ्कायाः कथमनेन परिहारः । स हि ज्ञाने याथार्थ्यं मुख्यं शब्दे त्वनुख्यत्वमित्युक्त्या भवेत् । न चैवमत्रोच्यते किन्तु ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे त्वमुख्येत्येवोच्यते । तथा चासङ्गतिरित्यत उक्तं **सोपपत्तिकमिति** । ततश्च ज्ञानशब्दगत-याथार्थ्यमुख्यत्वामुख्यत्वोपपत्तित्वेन तदर्थगतज्ञेयतामुख्यत्वामुख्यत्वस्य कथनात्तस्य च ज्ञानशब्दगत-याथार्थ्यमुख्यत्वामुख्यत्व एव पर्यवसन्नत्वाद्युक्तोऽनेनोक्तशङ्कापरिहार इति भावः । मुख्यत्वप्रतिद्वन्द्वित्वेन अमुख्यताया एवेह वक्तव्यत्वात् 'तदनन्तर'शब्दस्तत्पर इति भावेनाह **अमुख्येति यावदिति** । अर्थता मुख्येति वक्तव्यतायां किन्नियामकं इत्यत उक्तं **प्रकृतत्वादितीति** ॥ **तदवस्थैवेति** । विषयापरपर्यायवस्तु-वचनस्यार्थशब्दस्य ग्रहणे प्राप्ता या गमनेऽतिव्याप्तिः साऽर्यत्वार्थकस्यार्थशब्दस्य ग्रहणेऽपि तदवस्थैवे-त्यर्थः तर्हि तन्मुख्यमिति ज्ञानशब्दयोर्याथार्थ्यमुख्यत्वकथनविरोध इत्यत आह **इदमुक्तं भवतीति** ।

स० — ननु यथाशक्तिपरीक्षायां तददर्शनेऽपि बाधः किं न स्यादित्याशङ्क्यत इत्यत आह **निर्मूलमिति** । अस्तु वा भ्रमः । न तथाऽपि ब्रह्मणस्तत्त्वहानिरित्याह **निरवधिकस्येति** । **विवृत-श्चेति** । 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि' इत्यादिनेति शेषः । **तदवस्थेति** । विषयापरपर्या-यवस्तुवचनस्यार्थशब्दस्याभ्युपगमे प्राप्ता या गमने अतिव्याप्तिः सा अर्यार्थकस्य ग्रहणेऽपि तदवस्थै-वेत्यर्थः ।

प० — **स्वत एवेति** । अन्यानपेक्षज्ञानग्राहकादेवेत्यर्थः ॥ **ब्रह्मज्ञानस्येति** । वेदान्तजनित-ज्ञानस्य ब्रह्मविषयकस्येत्यर्थः ॥ **परीक्षायामिति** । सजातीयविजातीयविसंवादाख्यबाधान्वेषणरूप-परीक्षायां क्रियमाणायामपीत्यर्थः ॥ **निर्मूलशङ्कायाः** ब्रह्मज्ञानं प्रमाणं अप्रमाणं वेति शङ्काया इत्यर्थः । **निरवधिकस्येति** । यत्किञ्चिदप्यनवलम्बमानस्येत्यर्थः । **निस्साक्षिकस्येति** । अननुव्यवसितस्येत्यर्थः ॥ **अवध्यादीति** । बाधालम्बनस्य बाधविषयकसाक्षिणश्च स्वीकार इत्यर्थः ।**तत्रतत्रेति** । 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि' इति जिज्ञासाधिकरणे तथा 'तत्प्रामाण्यं च साक्षितः', 'तत्प्रामाण्यं यथा साक्षी स्थापयत्येवमेव ही'त्यादिना प्रकृतिनये । तथाऽऽनुमानिकपादे 'यदि साक्षी स्वयंभातो न मानं केन गम्यते । अक्षजादेश्च मानत्वं' इत्यादिना वैशेषिकाधिकरणे 'वैधर्म्याच्च न स्वप्नादिवत्' इत्यादिव्याख्या-वसरादौ च तत्र तत्रेत्यर्थः ॥ **प्रकृतत्वादिति** ! 'अर्थत्वमर्यतैव स्यादि'ति पूर्ववाक्ये अर्यतेत्यस्य प्रस्तुतत्वात् । ज्ञानार्थेष्वर्यता मुख्येति वक्तव्य इत्यर्थः ॥ **अर्यतापीति** । न केवलमभिधेयत्वपर्याय-

मर्थत्वं किन्तु तद्व्याख्यानत्वेनोक्तार्यतापीत्यर्थः । ऋ गताविति धातोः कर्मणि ऋहलोर्ण्यदिति प्राप्तण्यत्प्रत्ययापवादत्वेन 'अर्यःस्वामिवैश्ययोः' इत्यनेनोक्तयत्प्रत्यये भावप्रत्यये च अर्यतेति भवति । सा च गमनक्रियाकर्मसु गम्येषु ग्रामादिषु वर्तते । अतोऽत्र ऋगताविल्यत्र गतिपदेन न गमनक्रिया विवक्षिता किन्तु ये गत्यर्थास्ते ज्ञानार्था इति ज्ञानमेव वितक्षितमिति भावेनार्यता ज्ञेयतेति व्याख्या(तं । अतो न क्रि)नं कृतमित्यर्थः । तेन 'न क्रियार्थेषु सा मते'(त्येतद्यु)त्याद्युक्तमिति भावः । एवं हि 'तन्मुख्यं ज्ञानशब्दयोरि'ति प्रागुक्तविरोध इत्यतो भावमाह **इदमुक्तं भवती**त्यादिना **वारयितु**मित्यन्तेन । अयमर्थो व्याख्यातव्य इत्युक्तमेव व्यनक्ति **ज्ञान इत्यादिना** ।

श्री० — शङ्काया ब्रह्मज्ञानस्यापि बाधो भविष्यतीत्येवंरूपायाः ॥ **इतीति** । तथा च वेदान्तजन्यज्ञाने याथार्थ्यावधारणं भविष्यतीत्यर्थः ॥ **सममिति** । तथा च घटादिज्ञानेऽपि याथार्थ्यरूपप्रामाण्यस्य स्वतस्त्वाङ्गीकारात् यथाशक्तिपरीक्षायामपि बाधादर्शने स्वत एव प्रामाण्यग्रहो भविष्यतीति न किञ्चिदनुपपन्नमित्यर्थः । ज्ञानार्थेष्वर्यता मुख्येति वक्तव्य इत्यन्वय । तत्र हेतुः **प्रकृतत्वादिति** । **'अर्थत्वमर्यतैव स्यादि'**ति प्रकृतत्वादित्यर्थः । **गतिकर्मसु** गत्यर्थकधातुषु । **विद्यते** पठितम्तिष्ठतीत्यर्थः ॥ **तदवस्थेति** । अर्थशब्दस्य विषयापरपर्यायवस्तुवाचकत्वाभ्युपगमे यथा गमनेऽतिव्याप्तिस्तथाऽर्थशब्दस्यार्यत्वार्थकत्वेऽप्यर्यताया गत्यर्थकधातुषु पाठादर्यमर्थं गम्यमित्यर्थस्तदनतिक्रम्य विद्यमानत्वं गतावस्तीत्यतिव्याप्तिस्तदवस्थेत्यर्थः । **ज्ञान एव मुख्यं** परममुख्यम् ।

**सु० — यद्वा तन्मुख्यं ज्ञानशब्दयोरित्यत्रैवायमर्थो व्याख्यातव्यः । तथा हि । तद्याथार्थ्यं ज्ञाने मुख्यं करणेषु त्वमुख्यम् । करणेष्वपि किमेकप्रकारमनेकप्रकारं वेति जिज्ञासायां शब्दे मुख्यं प्रत्यक्षानुमानयोरमुख्यमित्युक्तम् । अत्र च शब्दशब्देन वेदमेवाधिकुरुते भगवान्मुनिः । तन्मुख्यताकथनस्यैव मीमांसोपयोगित्वात् । अन्यथा व्यर्थाया जिज्ञासायास्तत्परिहारस्य चासङ्गतिप्रसङ्गात् । यद्यपि ज्ञान(शब्द)शब्दौ द्वन्द्वनिर्दिष्टौ तथाऽपि बुद्ध्या विविच्य व्याख्यानमेतदिति । तत्र कथं ज्ञाने यथार्थत्वं मुख्यं करणेष्वमुख्यमित्यत आह ज्ञानार्थे इति । शब्द इत्युपलक्षणम् । प्रत्यक्षानुमानयोरपीति द्रष्टव्यम् । व्याख्यानं तु पूर्ववत् । शब्दस्य स्वशब्देनोपादानं (तु) पूर्वत्र ज्ञानसमकक्षतया प्रतीतिं वारयितुमिति ।**

शे०—एवं 'ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरमि'ति मूले शब्दशब्दस्वारस्यानुरोधेन 'तन्मुख्यं ज्ञानशब्दयोरि'ति द्वन्द्वनिर्देशप्राप्तायाः शब्दस्य केवलप्रमाणत्वशङ्काया निराकरणपरत्वेन ज्ञानार्थ-

इत्यादिमूलं व्याख्यातम् । अत्र च पक्षे 'यथार्थज्ञानजनका यथार्था युक्तयः स्मृताः' इत्युत्तरग्रन्थे युक्त्यादीनां यथार्थज्ञानजनकत्वेन हेतुना साक्षादुपपाद्यस्य करणविषयनिष्ठज्ञेयताऽमुख्यत्वस्यावश्यवक्तव्यस्य 'शब्दार्थे तदनन्तरमि'त्यत्रानुक्त्योत्तरग्रन्थानुपपत्तिर्भवति । द्वन्द्वनिर्देशमात्रेण प्राप्तोक्तशङ्कायास्तु ज्ञानार्थे इत्यादिना मूलेनैव परिहार इति पूर्वत्रापरितोषं मनसि निधाय शब्दार्थे तदनन्तरमिति मूलस्थशब्दशब्दस्योपलक्षणत्वमङ्गीकृत्यापि ज्ञानार्थे इत्यादिमूलमन्यथायोजयितुं 'तन्मुख्यं ज्ञानशब्दयोरि'ति द्वन्द्वनिर्देशप्राप्तशब्दकेवलप्रामाण्यशङ्कायास्तद्वाक्यव्याख्यानादेव निरास इत्याशयेन पक्षान्तरमारचयति **यद्वेति** । ननु प्रत्यक्षादिमात्रस्येव न शब्दमात्रस्यापि यथार्थज्ञानजनकत्वमस्ति तद्विशेषस्येव प्रत्यक्षादिविशेषस्यापि तदस्तीत्ययुक्त एवायं विभाग इत्यत आह **अत्र चेति** । ततश्चेन्द्रियलिङ्गयोरिव शब्दविशेषस्य वेदस्य सर्वथाऽयाथार्थ्याभावाद्युक्तो विभाग इति भावः । कुत इत्यतस्तत्र हेतुमाह **तन्मुख्येति** ॥ **जिज्ञासाया इति** ॥ करणेष्वपि किमेकप्रकारमुतानेकप्रकारमिति जिज्ञासायाः शब्दे मुख्यं प्रत्यक्षानुमानयोरमुख्यमिति परिहारस्य चेत्यर्थः ॥ **व्याख्यानं तु पूर्ववदिति** । यस्माज्ज्ञानार्थे ज्ञानविषये ज्ञेयता मुख्या शब्दार्थे शब्दादिविषये तदनन्तरं ज्ञेयताऽमुख्येति यावत्तस्माज्ज्ञान एव याथार्थ्यलक्षणं प्रामाण्यं मुख्यं, शब्दादिषु त्वमुख्यमिति पूर्ववदित्यर्थः । शब्दशब्दस्य प्रत्यक्षाद्युपलक्षणत्वे प्रथमातिक्रमे कारणाभावेनेतरोपलक्षकतया प्रत्यक्षस्यैव ग्रहणसम्भवे कुतस्तत्परित्यागेनेतरोपलक्षकतया शब्दस्यैवोपादानमित्यत आह **शब्दस्येति** । स्वशब्देन स्ववाचकशब्दशब्देनेत्यर्थः ।

**स०— अन्यथेति** । करणेष्वपि किमेकप्रकारं, किं वा अनेकप्रकारमिति जिज्ञासायाः शब्दे मुख्यम्, प्रत्यक्षानुमानयोरमुख्यमितिपरिहारस्य चासङ्गतिप्रसङ्गादित्यर्थः । ननु द्वन्द्वस्योभयपदार्थप्राधान्यात् ज्ञानशब्दयोश्च द्वन्द्वनिष्ठत्वात् उभयत्र याथार्थ्यं मुख्यमेव किं न स्यादित्यत आह **यद्यपीति** । ननु करणमात्रे ज्ञेयतोपाधिनिमित्तत्वेनैव ज्ञेयविषयीकारित्वमेकप्रकारमेव । तत्कथं मुख्यामुख्यविभाग इति चेन्न । प्रत्यक्षाद्यपेक्षया आगमस्य जात्या प्राबल्याभिप्रायेण तन्मुख्यत्वोक्तिरित्यदोषः । **व्याख्यानं पूर्ववदिति** । 'शब्दार्थे तदनन्तरम्' इत्यत्र **शब्दार्थे** शब्दविषये ज्ञेयता **तदनन्तरं** अमुख्येति यावत् । **उपलक्षितयोः** प्रत्यक्षानुमानयोः । शब्दापेक्षयाऽपि अमुख्येति व्याख्यानं पूर्ववत् । **शब्दस्येति** । **स्वशब्देन** स्ववाचकशब्देन । **पूर्वत्र** 'तन्मुख्यं ज्ञानशब्दयोः' इत्यत्र । न च 'करणार्थे तदनन्तरमि'-त्युक्तेऽपि ज्ञानसमकक्षत्वनिराससंभवेन स्वशब्देनोपादानं व्यर्थमिति वाच्यम् । तत्र शब्दस्य ज्ञानसमकक्ष्यत्वस्योक्तत्वात्, अत्र करणशब्दः शब्दातिरिक्तकरणपर इत्यप्युपपत्तेः । पूर्ववदिति पाठे पूर्वव्याख्याने शब्दार्थे ज्ञेयताऽमुख्या कुतः । ज्ञानसमकक्ष्यतया उपात्तत्वेन तद्वत् मुख्यैव किं न स्यादित्यतः 'ज्ञानार्थे'

इत्यादिवाक्यं तन्निरासार्थं प्रवृत्तम् । द्वितीयव्याख्यानं करणे ज्ञेयताऽमुख्या कुतः इति शङ्कानिरासार्थं प्रवृत्तम् । तत्र लक्षणया शब्दशब्दः करणमात्रपरः । एवं च सति पूर्ववत् ज्ञानसमकक्ष्यत्वशङ्का चेत्प्राप्ता तदा शब्दस्य स्वशब्देनोपादानात् न ज्ञानसमकक्ष्यत्वमिति व्याख्येयम् ।

प०— **मुनिः** प्रमाणतत्वविचारपरो भाष्यकार इत्यर्थः ॥ **मीमांसोपयोगित्वादिति** । मुख्यप्रामाण्यकत्वादेव वेदस्य तन्मीमांसारंभो युक्त इत्येवंरूपेण फलवत्त्वादित्यर्थः ॥ **अन्यथेति** । शब्दमात्रग्रहण इत्यर्थः ॥ **जिज्ञासाया इति** । करणेष्वपि किमेकप्रकारमनेकप्रकारं वेति जिज्ञासायाः शब्दे मुख्यं प्रत्यक्षानुमानयोरमुख्यमिति परिहारस्य चासंगतिप्रसंगात् । कुत इत्यतो व्यर्थाया इति हेतुगर्भं व्यर्थस्य चेत्यपि ध्येयं । ननु ज्ञानशब्दयोरित्यत्र ज्ञाने मुख्यम् , करणेष्वमुख्यम्; करणेष्वपि शब्दे मुख्यम्, अन्ययोरमुख्यमित्यर्थः कथं लभ्यते इत्याशंकामनूद्योत्तरमाह **यद्यपीति** । बुद्ध्या विविच्येत्युपलक्षणं । करणेष्वमुख्यम् । करणेष्वपि शब्दे मुख्यमन्ययोरमुख्यमित्यध्याहारेणेत्यपि ध्येयम् ॥ **पूर्ववदिति** । यस्माज्ज्ञानार्थे इत्यादिकमिवेत्यर्थः । शब्द इत्यस्य शब्दादाविति व्याख्येयत्वात् पूर्ववदित्युक्तं । न तु पूर्वक्तमेवेत्युक्तम् ।

या०— **अन्यथा व्यर्थाया इति** । करणेष्वपि किमेकप्रकारमुतानेकप्रकारमिति जिज्ञासायाः शब्दे मुख्यं प्रत्यक्षानुमानयोरमुख्यमिति परिहारस्य चासङ्गतिप्रसङ्गादित्यर्थः ।

---

श्री०— **अयमर्थ इति** । 'ज्ञानार्थे ज्ञेयतामुख्ये'त्यनुव्याख्यानार्थो द्रष्टव्य इत्यर्थः । **अन्यथा** वेदरूपशब्दस्य यदि मुख्यतामनभिप्रेत्य शब्दशब्देन वेदो न गृह्यते, तर्हि तद्याथार्थ्यं करणेऽपि किमेकप्रकारमनेकप्रकारं वेति जिज्ञासायाः, शब्दे मुख्यं प्रत्यक्षानुमानयोरमुख्यमिति परिहारकथनस्य व्यर्थत्वेनासङ्गतिः स्यात्,तेन ज्ञायते शब्दशब्देन वेद एवोच्यत इति ॥ **द्वन्द्वेति** । ज्ञानशब्दयोरिति द्वन्द्वेत्यर्थः । ननु यद्वेति पक्षे ज्ञानार्थे इत्यनुव्याख्यानं व्यर्थमापन्नमित्यत आह **तत्र कथमिति** । नन्वस्मिन्व्याख्याने अनुप्रमाणार्थेऽमुख्येति सामान्यतो वाच्यं तत्र शब्दस्यैव किमर्थं कण्ठत उपादानमित्यत आह **शब्दस्येति** । **पूर्वत्र** 'तन्मुख्यं ज्ञानशब्दये रि'त्यत्र ॥ **समकक्ष्यतयेति** । शब्दस्येति शेषः ॥

सु०— **ज्ञाने मुख्यं याथार्थ्यं करणेष्वमुख्यम्** । **तत्रापि शब्दे मुख्यमित्युक्तम्** । **तत्र ज्ञानकरणयोर्याथार्थ्यस्य मुख्यत्वामुख्यत्वोपपादनाय तद्विषययोर्ज्ञेयताया मुख्यामुख्यत्वे हेतुतयोक्ते** । **तदुपपादनार्थमाह** यथार्थेति ।

अनु०— यथार्थज्ञानजनका यथार्था युक्तयः स्मृताः ॥

**सोपस्कराणि वाक्यानि भवन्ति** । **तेन ज्ञानं साक्षाद्यथार्थमित्यादौ पठितव्यम्** ।

**बहुवचनमाद्यर्थे** । **युक्त्यादय इत्यर्थः** । **तेन जनका इत्युपपन्नम्** ।

अव्ययीभावस्य क्लीबाव्ययत्वं छन्दस्तुल्यत्वेनानाश्रित्य यथार्था इत्युक्तम्, कथञ्चिद्बहुव्रीहितामाश्रित्य वा, यद्वा भावप्रधानाद्यथार्थशब्दान्मत्वर्थेऽर्श आदित्वादच् याथार्थ्योपेता इत्यर्थः ।

तदयमर्थः । ज्ञानमेव हि विषयस्य ज्ञेयस्य ज्ञेयतायां साक्षादुपाधिर्भवति । ज्ञाततायां निराकरिष्यमाणत्वात् । अतस्तद्विषयस्य (एव) ज्ञेयत्वं मुख्यमिति ज्ञानस्यैव मुख्यतो याथार्थ्यम् । युक्त्यादिकरणानि तु विषयस्य ज्ञेयतायामुपाधिभूतं ज्ञानं जनयन्तीति तद्विषयस्य ज्ञेयत्वममुख्यम् । तत एव तेषां याथार्थ्यमप्यमुख्यमिति ।

शे० — **तदिति** । ज्ञानकरणविषयनिष्ठज्ञेयत्वमुख्यत्वामुख्यत्वोपपादनपूर्वकं तद्धेतुत्वोपपादनार्थमित्यर्थः । नन्वत्र ज्ञाननिष्ठयाथार्थ्यमुख्यत्वं प्रति हेतुतयोक्तस्य ज्ञानविषयनिष्ठज्ञेयतामुख्यत्वस्यानुपादानान्न तदुपपादनार्थत्वमस्य वाक्यस्येत्यत आह **सोपस्कराणीति** ।

ननु युक्तेरेकत्वाद्युक्तय इति बहुवचनमनर्थकम् । प्रत्यक्षादिकरणविषयनिष्ठज्ञेयताया अमुख्यत्वमुपपादयितुं प्रवृत्तेऽस्मिन्वाक्ये प्रत्यक्षादीनां त्रयाणामपि यथार्थज्ञानजनकत्वेन याथार्थ्यस्य वक्तव्यत्वाद्युक्तिमात्रस्य यथार्थज्ञानजनकत्वेन याथार्थ्योपादानानुपपत्तिश्च । स्त्रीलिङ्गयुक्तिविशेषणत्वे जनकशब्दस्य 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप' इति ककारात्पूर्वस्याकारस्येकारे जनिका इत्येव भवितव्यत्वाज्जनका इत्यस्यानुपपत्तिश्चेत्यतो भवेदेवं यद्यत्र युक्तिशब्दो युक्तिमात्रपरः स्यान्न चैवं, किं तर्हि यथा छत्रिणो गच्छन्तीत्यत्र छत्रिशब्दः छत्रिसहचरितेष्वच्छत्रिष्वजहत्स्वार्थलक्षणया प्रवर्तते, यथा वा 'सप्तमी शौण्डैः' 'कडाराः कर्मधारये' इत्यादौ शौण्डशब्दः कडारशब्दश्च स्वार्थसहचारिषु धूर्तादिषु तथा प्रवर्तते । एवं युक्तिशब्दोऽपि स्वार्थसहचारिणि प्रत्यक्षादावजहत्स्वार्थलक्षणया प्रवर्तत इत्यङ्गीकारात् । न चात्र ज्ञापकाभावः । छत्रिणः शौण्डैः कडारा इत्यादिबहुवचनस्येव युक्तय इति बहुवचनस्यैव तत्र ज्ञापकत्वात् । अत एव न तद्वैयर्थ्यमपीत्याशयवानाह **बहुवचनमिति** । आद्यर्थे युक्तिशब्दस्याजहत्स्वार्थलक्षणया स्वार्थसहचारिणि प्रत्यक्षादौ वृत्तौ युक्तय इति बहुवचनं तात्पर्यग्राहकं प्रमाणमित्यर्थः । युक्तिशब्दस्य युक्त्यादिपरत्वादेव करणविषयनिष्ठज्ञेयताया अमुख्यत्वस्यैवानेनोपपादनान्न द्वितीयोऽपि दोष इत्याशयवांस्तृतीयदोषं परिहरति **तेनेति** । ननु युक्तिशब्दस्य बहुवचननिर्देशरूपज्ञापकबलेनादिशब्दार्थलक्षकत्वेऽपि यष्टीः प्रवेशयेत्यादाविव स्त्रीलिङ्गत्वानपगमाद्विशेषणानां च विशेष्यनिघ्नत्वात्कथं स्त्रीलिङ्गयुक्तिशब्दविशेषणजनकशब्दे स्त्रीलिङ्गकार्याभाव इति चेत् । उच्यते । युक्तिशब्दस्यादिशब्दार्थलक्षकत्वे शब्दतः स्त्रीलिङ्गत्वेऽप्यर्थतः पुंस्त्वात् अनियतलिङ्गानां विशेषणानां च विशेष्यनिघ्नत्व-

नियमेऽपि 'क्वचित्पदार्थशेषः स्यात् क्रियाशेषः क्वचिद्भवेत् । क्वचित्तद्भावशेषः स्यादिदमादिस्त्रिधा स्मृतः' इत्यनुशासनबलात् 'अजानता महिमानं तवेदम्' इत्यत्र गीतायां महिमशब्दस्य पुल्लिङ्गत्वेऽपीदमित्यस्य तदर्थभूतमहत्त्वविशेषणत्वस्य, 'इदं सर्वोऽस्मि' इति बृहदारण्यके च 'इदमिति पूर्णत्वविशेषणम्' इति बृहद्भाष्योक्तरीत्येदंशब्दस्य सर्वपदतदर्थभूतपूर्णविशेषणत्वासम्भवेऽपि तद्धर्मभूतपूर्णत्वविशेषणतायास्तण्डुलानिदं पचतीत्यादौ पचनादिक्रियाविशेषणत्वस्य च दृष्टत्वात् । 'भूतं महदीश्वरं चे'ति भूतमहेश्वरमिति गीताभाष्यव्याख्यानावसरे भावं याथार्थ्यमिति व्याख्यानापेक्षया नपुंसकमिति टीकाकारैरप्यस्य प्रकारस्याश्रयणेन तन्नियमस्यौत्सर्गिकत्वात् । स्मृतौ चेदमादिरित्यादिपदेन विशेषणत्वावच्छिन्नस्य सर्वस्यापि ग्रहणाल्लाघवेन विशेष्यपदप्रतिपाद्यलिङ्गत्वस्यैव प्रयोजकत्वेन, गौरवेण विशेष्यपदशक्यार्थलिङ्गत्वस्यातथात्वादिहापि युक्तिशब्दप्रतिपाद्यभूतयुक्तिप्रत्यक्षागमरूपपुल्लिङ्गार्थविशेषणत्वेन जनका इत्यस्योपपन्नत्वात् । न चैवं गम्भीरायां नद्यामित्यत्र नदीपदलक्ष्यस्य तीरस्य नपुंसकत्वात्तद्विशेषणीभूतगम्भीरपदेऽपि नपुंसकलिङ्गापत्त्या गम्भीरे नद्यामित्यनिष्टप्रयोगाऽऽपत्तिरिति वाच्यम् । अनुशासनस्य प्रयोगानुरोधित्वेन तदुन्नेयप्रयोगाभावेऽप्रवृत्तेः । अवश्यं चैतदेवम् । अन्यथा ग्रामं गच्छतीत्यादावपि कर्मण्यणित्यादिलक्षणप्रवृत्त्यापत्त्या ग्रामगाम इत्याद्यनिष्टप्रयोगस्याप्यापातादिति दिक् ।

ननु 'यथाऽसादृश्ये' इत्यनतिक्रमार्थकयथाशब्दस्यार्थशब्देनाव्ययीभावसमासविधाना'दव्ययीभावश्चे'त्यव्ययीभावस्याव्ययत्वविधाना'दव्ययीभावश्चे'ति सूत्रान्तरेण तस्य नपुंसकत्वस्यापि विधानाद्यथार्थं युक्तय इति भवितव्यम्, यथार्था युक्तय इति तु कथमित्यतः 'सर्वे विधयः छन्दसि विकल्प्यन्ते' इति वचनादाचार्यवचनस्यापि छन्दस्तुल्यत्वेन क्लीबत्वाद्यभावोपपत्तेर्नानुपपत्तिरित्याह **अव्ययीभावस्येति** । क्लीबत्वाश्रयणेऽप्यव्ययत्वानाश्रयणे यथार्थानीति बहुवचनप्रसङ्गादव्ययत्वाश्रयणेऽपि क्लीबत्वानाश्रयणे **यथार्थमिति** प्रसङ्गादुभयथाऽपि यथार्था इति प्रयोगानुपपत्तिरित्युभयस्याप्यनाश्रयणोक्तिरिति द्रष्टव्यम् । छन्दःकल्पत्वाश्रयणं सति गत्यन्तरे न युक्तमिति पूर्वत्रारुच्या पक्षान्तरमाह **कथञ्चिदिति** । यथाऽनतिक्रान्ता अर्था यैस्ते यथार्था इति बहुव्रीहितामित्यर्थः । नन्वनतिक्रमार्थकयथाशब्दयोगेऽव्ययं विभक्तीति यथापदार्थत्वेनाव्ययीभावस्यैव विधानाद्विशेषसूत्रविहितमव्ययीभावं विहायानेकमन्यपदार्थ इति सामान्यसूत्रविहितबहुव्रीह्याश्रयणं कथमित्यतो यथार्था प्रतीतिर्यथार्थानुभव इत्यभियुक्तप्रयोगसद्भावाद्विशेषसूत्रविहिताव्ययीभावपरित्यागेन सामान्यसूत्रविहितबहुव्रीह्याश्रयणमुचितमिति भावेन कथञ्चिदित्युक्तम् । यद्वैतदस्वरसादेवाह **यद्वेति** ॥ **भावप्रधानादिति** । लक्षणया भावप्रतिपादकादित्यर्थः । यत्तु केषाञ्चिद्याथार्थ्यमेव मानमित्यत्रत्ये यथार्था युक्तय इत्यत्रत्ये च यथार्थशब्दे यथा सदृशोऽर्थो यस्य तद्यथार्थमिति यथा सदृशोऽर्थो येषां ते यथार्था इति च सादृश्यार्थकस्य

यथाशब्दस्य बहुव्रीहिरेव समासः । न च सादृश्यानिरुक्तिः । प्रमेयत्वादिसाधारणधर्मेण सादृश्यस्य भ्रमसाधारणत्वादत्यन्तसादृश्यस्य चासंभवित्वादिति वाच्यम् । सत्तया सादृश्यस्याभ्युपगमात् । अत एव न भ्रमेऽतिव्याप्तिः । तत्र ज्ञानस्य सत्त्वेऽप्यर्थस्यासत्त्वेन ज्ञानार्थयोः सत्तया सादृश्यस्याभावात् । न च यथाऽसादृश्ये इति सादृश्यार्थकस्य यथाशब्दस्य समासनिषेधात्समासानुपपत्तिरिति वाच्यम् । तस्य निषेधस्याव्ययीभावविषयकत्वेन बहुव्रीह्यनिषेधकत्वात् । अर्थं नातिवर्तत इति यथार्थमित्यादिटीकाकारीयं वचनं तु फलितप्रदर्शनपरतया व्याख्यातव्यम् । ज्ञानार्थयोः सादृश्यकथने ज्ञानस्यार्थानतिक्रमस्यावश्यकत्वादिति व्युत्पादनम् । तत्तु समासान्तरस्यासामर्थ्यादिप्रतिहतत्वात् । अत एव यथार्थानुभवः प्रमेत्यत्र किं याथार्थ्यमर्थसादृश्यमित्यादिः कस्यचित्प्रश्नोऽनुपपन्नः । यथाशब्दस्य पदार्थानतिवृत्तिवाचित्वमङ्गीकृतमेव । कथञ्चिद्बहुव्रीहितामाश्रित्यैवेत्यादिनिरवकाशटीकाग्रन्थास्वारस्यं सोढ्वा कृतमिति द्रष्टव्यम् । ननु न ज्ञानार्थे ज्ञेयताया मुख्यत्वं युज्यते हेतोरभावात् । कथं च युक्त्यादीनां यथार्थज्ञानजनकत्वकथनेन तद्विषयनिष्ठज्ञेयताया अमुख्यत्वमुपपादितं भवतीत्यत आह **तदयमर्थ इति** ॥ **साक्षादिति** । लाभाद्युपाधिना कृतमित्यादावुपाधिशब्दस्य निमित्तेऽपि प्रयोगात्तत्साधारणोपाधित्वनिरासाय साक्षादित्युक्तम् । ज्ञानविषयत्वरूपज्ञेयत्वान्तर्गतत्वेन तच्छरीरघटकता उपाधिरित्यर्थः । ननु ज्ञानजन्यज्ञातताधारत्वरूपविषयनिष्ठज्ञेयतायां ज्ञाततैव साक्षादुपाधिर्न तु ज्ञानमित्यत आह **ज्ञातताया इति** ॥ **निराकरिष्यमाणत्वादिति** । 'न परिच्छेदकार्येव प्रमाणमिति च प्रमा'इत्यादिनाऽस्मिन्नेव पादे संक्षेपेण 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचिदि'त्यादिना भक्तिपादे च विस्तरेणेति शेषः । तया च ज्ञातताया असिद्धेर्नोक्तरूपा ज्ञेयता किन्तु स्वरूपसंबन्धविशेषरूपा ज्ञानविषयतैव । तत्र च ज्ञानमेव साक्षादुपाधिरिति भावः ।

स० — **सोपस्कराणीति** । साध्याहाराणीत्यर्थः । युक्तेरेकत्वात् युक्तयः इति बहुवचनानुपपत्तिः । (यथार्थजनका इत्यस्य) युक्तिविशेषणत्वे प्रत्ययस्थात्कात्पूर्वस्यात इकारे जनिका इति स्यादित्यत आह **बहुवचनमाद्यर्थे इति** । आद्यर्थे प्रमाणमिति शेषः । अयं भावः । 'छत्रिणो गच्छन्ति इत्यत्र छत्रिसहचरितेषु अच्छत्रिषु छत्रिशब्दस्य अजहत्स्वार्थलक्षणया प्रवृत्तिवत् युक्तिसहचरितप्रत्यक्षादौ अजहत्स्वार्थलक्षणया युक्तिशब्दो वर्तते । तत्र बहुवचननिर्देश एव प्रमाणमिति ॥ अत एवोक्तं 'सप्तमी शौण्डैः' इत्यत्र पदमञ्जर्याम् । तत्र साहचर्यात् तद्धितादिषु अजहत्स्वार्थ एव शौण्डशब्दः प्रवर्तते, यथा छत्रिणो गच्छन्तीति । अत्र बहुवचननिर्देशः प्रमाणम् । अतोऽन्तरेणाप्यादिशब्दं तदर्थो गम्यत इत्याह शौण्डादिभिरिति । कडाराः कर्मधारय इतिसूत्रे बहुवचननिर्देशात् आद्यर्थोऽवगम्यत इत्याह कडारा

इतीत्यप्युक्तत्वात् । न चैवं व्याख्यानेऽपि जनका इत्यनुपपन्नम् । 'गभीरायां नद्यां घोषः' इत्यादौ तद-दर्शनात् इति वाच्यम् । 'क्वचित्पदार्थशेषस्स्यात् क्रियाशेषः क्वचिद्भवेत्' इति बृहद्भाष्ये उदाहृतप्रमाणा-नुसारेण 'इदं महिमानम्' इत्यादाविव व्याख्यानापेक्षया पुल्लिङ्गोपपत्तिरिति तत्त्वम् । ननु च यथार्थमिति वक्तव्ये यथार्था इति कथमुक्तमित्यत आह **अव्ययीभावस्येति । कथञ्चिदिति ।** अनतिक्रमा-र्थस्य यथाशब्दस्य परिग्रहे अनतिक्रान्तः अर्थः यस्येति बहुव्रीह्या प्रमाणाव्यभिचारित्वं प्रमेयस्यैव प्राप्नोतीति यथाशब्देन अनतिक्रमविषयो ग्राह्यः इति कथञ्चिदित्युक्तम् । सादृश्यार्थकस्य परिग्रहे असामर्थ्यं अर्थानुपपत्तिश्चेति । यद्वा । ननु अनतिक्रमार्थकयथाशब्दयोगे यथाऽसादृश्य इत्यव्ययीभावस्य विधानात् विशेषसूत्रविहितमव्ययीभावं विहाय 'अनेकमन्यपदार्थे' इति सामान्यसूत्रविहितबहुव्रीह्याश्रयणमनु-पपन्नम् (इत्यतः) यथार्था प्रतीतिः इति महत्प्रयोगसद्भावात् । विशेषसूत्रविहिताव्ययीभावपरित्या-गेनापि सामान्यशास्त्रप्राप्तबहुव्रीह्याश्रयणमावश्यकमिति भावः । **साक्षादिति ।** लवूपाधिना कृत-मित्यादौ उपाधिशब्दस्य निमित्तेऽपि दृष्टत्वेन निमित्तसाधारणोपाधित्वनिरासाय साक्षादित्युक्तम् । ज्ञान-विषयत्वरूपज्ञेयत्वान्तर्गतत्वेन तच्छरीरघटकत्वेन उपाधित्वमित्यर्थः । ननु विषयस्य ज्ञेयतायां साक्षा-दुपाधिर्ज्ञानमित्यनुपपन्नम् । ज्ञातताद्वारैव ज्ञानेन विषये ज्ञेयतासंपादनात् । ज्ञानजनितज्ञातताऽऽधार त्वस्यैव ज्ञानविषयत्वादित्यत आह **ज्ञाततायाः इति ।** 'न परिच्छेदकार्येव प्रमाणम्' इत्यादिनेति शेषः ।

पं० — **तदुपपादनार्थमिति ।** तयोरवान्तरसाध्यपरमसाध्ययोरुपपादनार्थमित्यर्थः । नन्वत्र युक्तिरेव श्रुता न तु ज्ञानं करणानि वा तत्कथं तदुपपादनार्थमाहेयुक्तिरित्यत आह **ज्ञानमित्यादि ॥ बहुवचनमाद्यर्थ इति ।** आदिशब्दार्थे बहुवचनं ज्ञापकमित्यर्थः । तेन 'फणां च सप्तानामि'त्यादाविव युक्तय इत्यत्र प्रकृतिप्रत्यययोर्मध्ये 'यत्रानवसरोऽन्यत्रे'तिन्यायेनादिपदमध्याहार्यमिति भावेनाह **युक्त्यादय इत्यर्थ इति ।** तथाच युक्तिश्च आदी च युक्त्यादय इति बहुवचनोपपत्तिरिति भावः । केचित्तु प्रोद्गा-तृणां चमसभक्षणमित्यत्रेव युक्तिशब्दोऽजहल्लक्षणया आदिपदार्थद्वयं लक्षयित्वा तद्वाचकमादिपदं लक्षय-तीति लक्षितलक्षणया युक्त्यादय इत्यर्थ इत्युक्त इत्याहुः । युक्तिशब्द एवाजहल्लक्षणया आदिशब्दं लक्षयति बहुवचननिर्वाहायेत्यन्ये । एवं हि करणगतयाथार्थ्यस्यामुख्यत्वोपपादनमात्रस्यैव न लाभः किंत्वन्यदप्यनुकूलितमित्याह **तेनेति ।** अन्यथा हि जनका इत्यस्य युक्तिशब्दविशेषणतया स्त्रीलिङ्गत्वा-पातेन 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' इति सूत्रेणेत्वे सति जनिका इति स्यादिति भावः । नन्वर्थं नातिवर्तत इति यथार्थमिति प्रागुक्तरीत्या यथार्थशब्दस्याव्ययीभावतया स नपुंसकं अव्ययीभावश्चेति सूत्राभ्यां नपुंसकत्वाव्ययत्वाभ्यां भाव्यतया यथार्थमिति वक्तव्ये कथं यथार्था इत्युक्तिरित्यत आह

**अव्ययीभावस्येति ॥ कथञ्चिद्बहुव्रीहितामिति** । विवृतमेतदुपाधिखण्डनटीकाभावदीपिकायां चन्द्रिकाकारैः । यथाशब्दस्य सादृश्यार्थत्वं उपेत्य यथा सदृशः अर्थो यस्य तद्याथार्थ्यं अर्थस्य ज्ञानादेश्चाबाधितत्वमेव सादृश्यमित्यादिवदद्भिः । यथाशब्दस्यानतिक्रमार्थत्वोक्तिरव्ययीभावसमासपक्ष एव । यथाऽसादृश्य इति सूत्रे सादृश्यव्यतिरिक्तेर्थे यथाशब्दस्याव्ययीभावत्वोक्तेः । अस्फुटत्वादाह **तदयमर्थ इति ॥ साक्षादुपाधिरिति** । अव्यवधानेन निमित्तमित्यर्थः । ननु ज्ञाततैव साक्षात्तत्रोपाधिरित्यत आह **ज्ञाततायाः निराकरिष्यमाणत्वादिति** । 'न परिच्छेदकार्येव प्रमाणमिति च प्रमे'त्यत्रैवोत्तरत्र । तथा 'न च प्रमाणतोऽन्या स्यात् प्रमितिर्नाम कुत्रचिदि'त्यादिना भक्तिपादे चेति भावः ।

**या०** — ननु युक्तिशब्दस्य स्त्रीलिङ्गत्वेन तद्विशेषणस्य जनका इत्यस्यापि स्त्रीलिङ्गत्वात् 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप' इतीत्वस्य प्राप्त्या जनिका इति स्यादित्यत आह **बहुवचनमिति** । युक्तिशब्दः प्रमाकरणयोः प्रत्यक्षानुमानयोरजहत्स्वार्थ एव छत्रिन्यायेन प्रयुज्यते । तत्र च प्रमाणं बहुवचननिर्देश इत्यर्थः । तया चादिशब्दाभावेऽपि तदर्थोऽत्रावगम्यत इति भावः ॥ **तेन जनका इति** । ननु युक्तिशब्दस्य बहुवचननिर्देशरूपज्ञापकबलेनादिशब्दार्थलक्षकत्वेऽपि 'यष्टीः प्रवेशये'त्यादाविव स्त्रीलिङ्गत्वानपगमात्कथं तद्विशेषणे जनकशब्दे स्त्रीलिङ्गकार्याभावः । उच्यते । अनियतलिङ्गानां विशेषणपदानां विशेष्यपदलिङ्गत्वमेवेति नियमो न सर्वत्र । 'अहमेवेदं सर्वोऽस्मि' 'अजानता महिमानं तवेदमि'त्यादौ व्यभिचारात् । सर्वमहिमशब्दयोः पुल्लिङ्गत्वेऽपि तद्विशेषणयोरिदंशब्दयोर्नपुंसकत्वात् । किन्तु लिङ्गानामर्थधर्मत्वमिति पक्षे क्वचिद्विशेष्यपदप्रतिपाद्यार्थलिङ्गत्वमप्यस्ति । ततश्च सर्वमहिमशब्दप्रतिपाद्ययोः सर्वत्वमहिमत्वयोरर्थयोर्नपुंसकत्वात्तद्विशेषणयोरिदंशब्दयोर्नपुंसकतोपपद्यते । यथोक्तं बृहद्भाष्ये भगवत्पादैः । 'इदमिति पूर्णत्वविशेषणम् । अजानता महिमानं तवेदमितिवदि'ति । उक्तं च गीताभाष्यटीकायाम् । भूतं महदीश्वरं चेति भूतमहेश्वरमिति वाक्यव्याख्यावसरे भावं याथार्थ्यमिति व्याख्यानापेक्षया नपुंसकमिति । एतेनेदंशब्द एवेयं व्यवस्था नान्यत्रेति शङ्कानवकाशः । अत एव बृहद्भाष्योदाहृतप्रमाणे 'इदमादित्रिधा मत' इत्यादिशब्दप्रयोगः । तदिहात्रापि युक्तिशब्दप्रतिपाद्यानुप्रमाणसमुदायरूपार्थधर्मभूतं यत्पुल्लिङ्गं तदेव जनकशब्दस्य लिङ्गमित्यभिप्रायः । ननूक्तोदाहरणे विशेष्यपदशक्यार्थलिङ्गत्वमेव विशेषणपदस्य,न तु प्रकृत इव लक्ष्यार्थलिङ्गत्वमिति चेन्न । लाघवेन विशेष्यपदप्रतिपाद्यलिङ्गत्वस्यैवाङ्गीकर्तुमुचितत्वात् । न चैवं गम्भीरायां नद्यां घोष इत्यत्र नदीपदलक्ष्यस्य तीरस्य नपुंसकत्वाद्गम्भीरपदेऽपि नपुंसकलिङ्गापत्तिः । अभियुक्तप्रयोगे सति निमित्तानुसरणं, न तु निमित्तमस्तीति प्रयोगोऽभियुक्तानां, तथा सति बहुविप्लवापत्तेः । आचार्यश्च सर्वज्ञशिखामणितयाऽभियुक्ततम एवेति युक्तं तत्प्रयोगे उक्तनिमित्तानुसरणमिति सम्प्रदायः । नन्वव्ययी-

भावश्चे'ति सूत्रेणाव्ययीभावसमासे क्लीबत्वमव्ययत्वं च विवक्षितमतो यथार्थमिति वक्तव्यं, कथं यथार्था इत्युक्तिरित्यत आह **अव्ययीभावस्येति ॥ कथञ्चिद्बहुव्रीहितामिति** । यथाऽनतिक्रान्ता अर्था यैस्ते यथार्था इति बहुव्रीहितामित्यर्थः । यद्यप्यनतिक्रमार्थकयथाशब्दयोगे 'यथाऽसादृश्ये' इति विशेषसूत्रेण विहितमव्ययीभावं विहायानेकमन्यपदार्थे' इति सामान्यसूत्रविहितबहुव्रीह्याद्याश्रयणमनुचितम् । तथाऽपि 'यथार्था प्रतीति'रित्याद्यभियुक्तप्रयोगबलेन बहुव्रीह्याद्याश्रयणमित्याशयेन कथञ्चिदित्युक्तम् ॥ **साक्षादिति** । इदं चोपाधिशब्दस्य लाभाद्युपाधिना कृतमित्यादौ निमित्तेऽपि प्रयोगात्करणसाधारण्यनिरासाय । ननु ज्ञानजन्यज्ञातताधारत्वरूपज्ञेयतायां ज्ञाततैव साक्षादुपाधिर्न ज्ञानमित्यत आह **ज्ञाततायाः इति** । 'न परिच्छेदकार्येव प्रमाणमिति च प्रमे'त्यस्मिन्नेव पादे सङ्क्षेपेण 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचित् । मानाभावाद् गौरवाच्च कल्पनायाः किमेतया'इति भक्तिपादे विस्तरेण च ज्ञातताया निराकरिष्यमाणत्वाज्ज्ञेयता नोक्तरूपा, किन्तु स्वरूपसम्बन्धविशेषरूपा ज्ञानविषयतैव । तत्र च ज्ञानमेव साक्षादुपाधिरिति भावः ॥

श्री— **बहुवचनमाद्यर्थ इति** । नन्वत्राद्यर्थे बहुवचनस्य जसो न तावच्छक्तिरस्ति । बहुषु बहुवचनमिति बहुत्वस्यैव बहुवचनवाच्यत्वेनाद्यर्थस्य तद्वाच्यत्वाभावात् । किञ्च यदि बहुवचनस्याद्यर्थकत्वं तदा युक्तय इत्यस्य युक्त्यादीत्येव प्राप्त्या युक्त्यादय इत्यर्थलाभो न स्यात् । नापि लक्षणा । सुब्विभक्तौ लक्षणाऽनङ्गीकारात् । तस्मादेतत्कथमिति चेदुच्यते । युक्तिप्रातिपदिकस्यैवाद्यर्थे लक्षणा, तथा च युक्तिप्रातिपदिकस्याद्यर्थलक्षकत्वे किं ज्ञापकमिति चेत् । युक्तय इति बहुवचनमेवेति वदामः । यदि युक्तिप्रातिपदिकमाद्यर्थलक्षकं न स्यादेकस्यामेव युक्तौ युक्तय इति बहुवचनं न स्यात् । तेन ज्ञायते युक्तिप्रातिपदिकमाद्यर्थलक्षकमिति । तथा च **बहुवचनमाद्यर्थे** युक्तिप्रतिपादिकमाद्यर्थे लक्षणया वर्तत इत्यस्य ज्ञापकम् । यद्वाऽऽद्यर्थ इति भावप्रधानो निर्देशः तथा च बहुवचनमेव युक्तिप्रतिपादिकस्याद्यर्थत्वे ज्ञापकम् । अन्यथा तदनुपपन्नं स्यादित्यर्थः । अनेनैकस्यामेव युक्तौ बहुवचनायोग इति मुख्यानुपपत्तिर्लक्षणबीजभूताऽस्तीति सूचितं भवतीति ज्ञातव्यम् । ननु यथार्थेत्यस्याव्ययीभावसमासत्वादव्ययीभावश्चाव्ययीभावेऽप्यव्ययं स्यादित्यव्ययसंज्ञायां 'स नपुंसकं, यस्याव्ययीभावः स नपुंसकं स्यादि'त्युक्तत्वेन यथाक्रममित्यादिवत् यथार्थमिति वाच्ये यथार्था युक्तय इति कथमुक्तमित्यत आह **अव्ययीभावस्येत्यादि** । अव्ययत्वे सति क्लीबत्वम् क्लीबसहितमव्ययत्वं वा क्लीबाव्ययत्वम् । क्लीबत्वमव्ययत्वं चेति यावत् ॥ **बहुव्रीहितामिति** । यथाऽनतिक्रान्ता अर्था यैस्ते इति बहुव्रीहिर्नाव्ययीभाव इत्यर्थः ॥ **भावेति** । याथार्थ्या इति भावप्रधानेत्यर्थः ।

च०— **कथञ्चिद्बहुव्रीहिताभिति** । विवृतमेतदुपाधिखण्डनटीकाभावदीपिकायां चन्द्रिका-कारैर्यथाशब्दस्य सादृश्यार्थत्वमुपेत्य यथा सदृशः अर्थो यस्य तद्यथार्थमर्थस्य ज्ञानादेश्चाबाधितत्वमेव सादृश्यमित्यादिवदद्भिरिति स्थितम् । **साक्षादुपाधिरिति** । द्वारमन्तरेण निमित्तमित्यर्थः । ननु ज्ञानजन्यज्ञातताश्रयत्वरूपज्ञेयतायां ज्ञाततैव साक्षादुपाधिर्न ज्ञानमित्यत आह **ज्ञातताया इति** । 'न परि-च्छेदकार्येव प्रमाणमिति च प्रमे'ति प्रकृतपादे 'न च प्रमाणतोन्या स्यात्प्रमितिर्नाम' इत्यादि'ककल्पनायाः किमेतये'त्यन्तेन भक्तिपादे ज्ञाततायाः प्रत्याख्यास्यमानतया ज्ञेयता न दर्शितरूपा किन्तु ज्ञानविषयता-रूपैव । तत्र च ज्ञानमेव साक्षादुपाधिरिति भावः ।

**सु०— अत्र 'यथार्थज्ञानजनका यथार्थाः' इत्युक्तिस्तु परमसाध्यमपि सूचयितुम् । युक्तेरमुख्यतायामादित्वेन ग्रहणं त्रिष्वप्यपकर्षसूचनार्थम् । आगमयुक्त्योरुत्कर्षापकर्षौ तत्र तत्र समर्थिताविति नेहोक्तम् ।**

शे०— ननु 'यथार्थज्ञानजनका यथार्था' इति मूले यथार्थज्ञानजनका इत्येतावतैव पूर्तेर्यथार्था इत्यंशवैयर्थ्यम् । न च यथार्थज्ञानजनका इत्यनेनापेक्षितहेतुसमर्पणेऽपि साध्यासमर्पणात्तत्समर्पकतया यथार्था इत्यंशस्य न वैयर्थ्यमिति वाच्यम् । यथार्थज्ञानजनकत्वेन यथार्थत्वसाधनपक्षेऽपेक्षितसाध्य-समर्पकत्वसम्भवेऽपीह तेन तदसाधनात्करणविषयनिष्ठज्ञेयताऽमुख्यत्वस्यैव च साधनेन करणविषये ज्ञेयत्वममुख्यमित्यस्य तादृशसाध्यसमर्पकत्वसम्भवेऽपि यथार्था इत्यस्य तादृशसाध्यप्रतिपादनासामर्थ्येन तत्समर्पकत्वासम्भवात् । न च यथार्थज्ञानजनकत्वं प्रति साध्यभूतस्यापि विषयनिष्ठज्ञेयत्वामुख्यत्वस्य करणनिष्ठयाथार्थ्यामुख्यत्वसाधकत्वेन न मुख्यसाध्यत्वं तस्य किन्त्ववान्तरसाध्यत्वमेव । मुख्यसाध्यत्वं तु करणनिष्ठयाथार्थ्यामुख्यत्वस्यैव । तथा च यथार्था इत्यस्योक्तरूपावान्तरसाध्यासमर्पकत्वेऽपि परमसाध्य-समर्पकत्वान्नानर्थक्यं तस्येति वाच्यम् । याथार्थ्यमात्रप्रतिपादनसमर्थस्य तस्योक्तरूपपरमसाध्यसमर्पकत्व-स्याप्यसम्भवादित्यतो यथार्था इत्यस्य परमसाध्यानभिधायकत्वेऽपि यथाकथञ्चित्सूचकत्वेन तत्समर्प-कत्वमविकलमेवेति न तदंशस्य वैयर्थ्यमिति युक्तैव साध्यसाधनभावापन्नवस्तुद्वयाभिधायकतया मौली यथार्थज्ञानजनका यथार्था इत्युक्तिरित्याह **अत्रेति** । युक्त्यादयो ज्ञेयत्वोपाधीभूतज्ञानजनकत्वेनैव यथार्था न तु ज्ञानवत्स्वविषयज्ञेयतायामुपाधीभूतयथार्था इति । तत्र याथार्थ्यममुख्यमित्येवमुक्तरूपपरम-साध्यसूचनप्रकारोऽनुसन्धेयः ॥ **अमुख्यतायामिति** । अमुख्यतागणनायामित्यर्थः ॥ **आगमयुक्त्यो-रिति** । त्रिष्वागमस्योत्कर्षो युक्तेश्चापकर्ष इत्यर्थः । ननु कथं युक्तेः प्रत्यक्षादिषु त्रिष्वपकर्षः ।

प्रत्यक्षस्योपजीव्यत्वेन तदपेक्षया युक्तेरपकर्षसंभवेऽप्यागमापेक्षया तदपकर्षस्य निर्निबन्धनत्वात् । एवमागमस्यैव युक्त्याद्यपेक्षयोत्कर्षोऽपि निर्निबन्धन एवेत्यत आह **तत्र तत्रेति** । 'आ समन्ताद्गमयति धर्माधर्मौ परं पदम् । यच्चाप्यतीन्द्रियं त्वन्यत्तेनासावागमः स्मृतः' 'इत्याद्यनुमया स्पर्धिनाऽनुमानं परेशितुः । शक्यं विज्ञापने' 'अनुमा कामवृत्ता हि कुत्र नावसरं व्रजेत्' इत्यनुव्याख्याने 'सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा । तस्मान्न सा शक्तिमती विनागममुदीक्षितुमि'त्यपि भाष्ये चेत्येवं तत्र तत्रेत्यर्थः ।

**स०— परमसाध्यमपि सूचयितुमिति** । यथार्थजनका युक्तय इत्येतावतैव ज्ञानकरणविषययोर्ज्ञेयतामुख्यामुख्यत्वयोः हेतुसूचनात् तावत्येव वक्तव्ये 'यथार्था' इति व्यर्थमिति नाशङ्कनीयम् । ज्ञानस्य स्वज्ञेयविषयतायां साक्षादुपाधित्वेन तद्विषये ज्ञेयत्वस्य मुख्यत्वात् तत्रैव याथार्थ्यं मुख्यम् । करणानां तु विषयस्य ज्ञेयत्वे उपाधिभूतज्ञानजनकत्वेन तद्विषये ज्ञेयत्वस्यामुख्यत्वम् । तत्र याथार्थ्यममुख्यमिति परमसाध्यसूचकत्वेन सार्थक्यादिति भावः । **अमुख्यतायामिति** । अमुख्यतागणनायामित्यर्थः । **उत्कर्षापकर्षौ** । आगमस्य प्रत्यक्षयुक्त्यपेक्षया, युक्तेः आगमप्रत्यक्षापेक्षया उत्कर्षापकर्षावित्यर्थः । **नेहोक्तमिति** । उपपादकमिति शेषः । **तत्र तत्रेति** । 'आ समन्ताद्गमयति धर्माधर्मौ परं पदं' इत्यादिनेति शेषः ।

**प०— परमसाध्यमपीति** । तत एव तेषां याथार्थ्यममुख्यमित्युक्तपरमसाध्यमपीत्यर्थः । अन्यथा ज्ञेयत्वममुख्यमित्यवान्तरसाध्योपपादनस्य यथार्थज्ञानजनका इत्यनेनैव प्राप्तेर्यथार्था इति न वाच्यं स्यादिति भावः ॥ **तत्र तत्रेति** । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इत्यादिना तत्त्वनिर्णये श्रीमद्भाष्यादौ च तत्र तत्रेत्यर्थः ।

**या०— परमसाध्यमपीति** । तत एव तेषां याथार्थ्यमप्यमुख्यमिति परमसाध्यमित्यर्थः । अन्यथा करणविषये ज्ञेयत्वममुख्यमित्यवान्तरसाध्यस्यैवोपपादनीयत्वाद्यथार्था इत्युक्तिर्व्यर्था स्यादिति भावः । एतदनुसारेणैव पूर्ववाक्येऽपि ज्ञानस्यैव मुख्यतो याथार्थ्यमिति परमसाध्यमुक्तमिति ज्ञातव्यम् ॥ **अमुख्यतायामिति** । अमुख्ययाथार्थ्योपेतेष्वित्यर्थः ॥ **तत्र तत्रेति** । 'सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा । तस्मान्न सा शक्तिमती विनाऽऽगममुदीक्षितुम्' । आ समन्ताद्गमयति धर्माधर्मौ परं पदम् । यच्चाप्यतीन्द्रियं वस्तु तेनासावागमः स्मृतः' इत्यादावित्यर्थः ।

**श्री०—** ज्ञानकरणविषययोर्ज्ञेयतायां मुख्यत्वोपपादनायास्यानुव्याख्यानस्य प्रवृत्तत्वात्तदर्थं यथार्थज्ञानजनका इत्येव वाच्यम् । यथार्था इत्युक्तिस्तु किमर्थेत्यत आह **अत्रेति** । ज्ञानस्य स्वविषये ज्ञेयतायां साक्षादुपाधित्वेन तद्विषये ज्ञेयत्वस्य मुख्यत्वात्तत्रैव याथार्थ्यं मुख्यं करणानां तु विषयस्य ज्ञेयत्वे

उपाधीभूतज्ञानजनकत्वेन तद्विषयत्वस्यामुख्यत्वात्तत्र याथार्थ्यममुख्यमिति याथार्थ्यमुख्यत्वामुख्यत्वरूपपरम-साध्यसूचकत्वेन सार्थक्यादिति ध्येयम् । अत एव पूर्वं तत्र ज्ञानकरणयोर्याथार्थ्यस्य मुख्यत्वामुख्यत्वो-पपादनायेत्युक्तमिति ज्ञेयम् । **अमुख्यतायाम्** अमुख्यतया गणनायामित्यर्थः ।

**च०—परमसाध्यमिति** । तत एव तेषां याथार्थ्यमप्यमुख्यमिति परमसाध्यमपीत्यर्थः । अन्यथा 'यथार्थज्ञानजनका' इत्यनेनैव ज्ञेयत्वममुख्यमित्यवान्तरसाध्योपादानसंभवेन यथार्था इत्युक्ति-र्मन्दप्रयोजना स्यादिति भावः । **तत्र तत्रेति** । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमि'त्यादिना तत्त्वनिर्णये श्रीमद्भाष्यादौ चेत्यर्थः ।

**सु०— किमतो यद्येवं ज्ञानस्य याथार्थ्यं मुख्यं प्रत्यक्षादिकरणानां चामुख्यमित्यत** आह अनुप्रमाणमिति ।

**अनु०**— अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यतः ॥

**अत्रापि ज्ञानं केवलप्रमाणमिति प्रथमं पठितव्यम् । हि यस्मादेवमत इति संबन्धः । अनुप्रमाणमित्येकवचनं बहुवचनार्थे । सुपां सुलुगिति स्मरणात् । अथवाऽक्षयुक्तवचांसीति द्वन्द्वनिर्दिष्टानामपि बुद्ध्या विवेकेन प्रत्येकमनुप्रमाणमिति संबन्धः । यद्वाऽनुप्रमाणानुवादेन अक्षादित्वकथनमत्रेति न दोषः । अवान्तरव्यापारमविवक्षित्वा करणधर्मिण एव विवक्षया ऽ(क्षेत्यु)क्षमित्युक्तम् । अन्यथा प्रत्यक्षमिति वक्तव्यम् । वच इत्यागमोपलक्षणम् ।**

**शे०**— मूले ज्ञाननिष्ठयाथार्थ्यमुख्यत्वप्रतिपादनस्य च प्रयोजनस्यावश्यवक्तव्यस्यानुक्त्या प्राप्ता न्यूनताशङ्कां परिहरति **अत्रापीति** । सोपस्कराणि वाक्यानि भवन्तीति न्यायादिति भावः । एकवचन-मिति बहुत्ववाचिनो बहुवचनस्यैकवचनादेश इत्यर्थः । अत्र विधायकमाह **सुपामिति** । सति गत्यन्तरे छान्दसत्वाश्रयणमनुचितमिति पूर्वत्रापरितोषात्पक्षान्तरमाह **अथवेति** । अस्मिन्नपि पक्षे प्रतिपत्तिगौरवं संभवतीत्यरुचिं मनसि निधायाह **यद्वेति** । यदनुप्रमाणं तान्यक्षयुक्तिवचांसीत्यनुप्रमाणानुवादेनाक्षादित्व-विधानमित्यर्थः । तथा च यत्र समानाधिकरणप्रयोगे उद्देश्यस्य विशेष्यत्वं विधेयस्य विशेषणत्वं च विवक्षितं तत्रैव विधेये उद्देश्यवचननियमो यथा पर्वतोऽग्निमानिति । अत एव पूर्वमक्षादेरुद्देश्यस्य विशेष्यत्वं विधेयस्य अनुप्रमाणत्वस्य विशेषणत्वं च विवक्षितमिति समानवचनतयैव प्रकारद्वयेन समाहितम् । यत्र तूक्तविधप्रयोगे उद्देश्यविधेययोर्न विशेष्यविशेषणभावविवक्षा तत्र न विधेयस्योद्देश्यवचननियमो यथा प्रमाणं वेदा इति । प्रकृते चोद्देश्यविधेययोर्विशेषणविशेष्यभावस्याविवक्षितत्वान्नोद्देश्यवचनत्वं

विधेयस्येति भावः । अनेन हि यस्मादेवं तस्मात्करणमनुप्रमाणं, यदनुप्रमाणमेतान्यक्षयुक्तिवचांसीति वाक्ययोजनया, 'किमत' इति शङ्कापरिहार इति द्रष्टव्यम् । अत्राविवक्षितत्वेत्येव पाठः ॥ **करणधर्मिण इति** । अवान्तरव्यापारविशिष्टाक्षरूपकरणे यो धर्म्यंशस्तस्येत्यर्थः । ननु किं करणधर्मिणः प्राधान्य-विवक्षाकल्पनया करणविवक्षयैवाक्षमित्युक्तमिति किन्न स्यादित्यत आह **अन्यथेति** । करणविवक्षाया-मित्यर्थः । प्रत्यक्षस्यैव करणत्वेनाक्षमात्रस्य करणत्वाभावादिति भावः ॥ **वच इतीति** । प्रमाणाप्रमाणीभूत-शब्दमात्रपरो वचःशब्दो निर्दोषशब्दोपलक्षणमित्यर्थः ।

**स०** — छान्दसत्वस्यागतिकागतिकत्वात् पक्षान्तरमाह **अथवेति** । अस्मिन्नपि पक्षे प्रतिपत्तिगौरवं भवतीत्यरुचिं हृदि निधायाह **यद्वेति** । **प्रमाणानुवादेनेति** । यदनुप्रमाणत्वेन प्रकृतं तान्यक्षा-दीनीत्यर्थः । उद्देश्यविधेयभावे च न वचनतौल्यापेक्षेति हृदयम् । **करणधर्मिण एवेति** । सन्नि-कर्षलक्षणं यत्करणं तत् प्रति यद्धर्मि इन्द्रियं तस्य प्राधान्यविवक्षयेत्यर्थः । **वच इत्यागमोपलक्षणा मिति** । वचश्शब्दस्य प्रमाणाप्रमाणमात्रपरस्य प्रमाणीभूतवचनोपलक्षणमित्यर्थः । सन्निकर्षस्य इंद्रियं प्रति विशेषणत्वेन तत्र विशिष्टस्य करणत्ववत् व्याप्तिज्ञानादिरूपव्यापारस्य लिङ्गज्ञानादिरूप-करणविशेषणत्वाभावेन विशिष्टस्य करणत्वानुपपत्त्या तस्य सहकारित्वस्यैव वाच्यत्वात् । अक्षवत् अवान्तर-व्यापारमविक्षित्वा करणधर्मिविवक्षया अक्षमित्युक्तिवत् वच इत्यत्रापि तथा समाधानस्यासंभवात् । वचन-त्वावच्छिन्नप्रमाणाप्रमाणशब्दमात्रसाधारणस्य वचनशब्दस्य प्रमाणमात्रोपलक्षणत्ववत् अक्षत्वावच्छिन्न-सन्निकृष्टासन्निकृष्टाक्षसाधारणस्य सन्निकृष्टाक्षोपलक्षणत्वसंभवेऽपि तस्यागतिकत्वात् अक्षे गत्यन्तर-सद्भावात् तदनाश्रित्य वचन एव तदाश्रितमिति ध्येयम् ।

**प०** — **सुपांसुलुगितीति** । 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति सूत्रेण सुपां सप्तविभक्तीनां स्थाने सुरिति प्रथमैकवचनं भवति । लुग्भवति । पूर्वसवर्णो भवतीत्यादेशविधानादि-त्यर्थः । तस्य छन्दोविषयत्वेप्यस्य छन्दःकल्पत्वादिति प्रागुक्तत्वादिति भावः । 'विषयान्प्रति स्थितं ह्यक्षं प्रत्यक्षमिति कीर्तितं' इतितत्त्वनिर्णयोक्त्या विषयसन्निकृष्टाक्षस्यैव प्रत्यक्षप्रमाणत्वेन प्रत्यक्षेति वाच्यमित्यत आह **अवान्तरेति** ॥ **करणधर्मिण इति** । अदुष्टेन्द्रियरूपस्येत्यर्थः ॥ **आगमेति** । अदुष्टवाक्योप-लक्षणमित्यर्थः । 'आगमोऽदुष्टवाक्यं च' इति तत्त्वनिर्णयोक्तेः ।

**या०** — **एकवचनं बहुवचनार्थ इति** । बहुत्ववाचिनो बहुवचनस्यैकवचनादेश इति भावः । अत्र विधायकमाह **सुपां सुलुगिति** । एतत्सूत्रार्थस्त्वानन्दमयाधिकरण एवोक्तोऽनुसन्धेयः। गत्यन्तरसत्त्वे छान्दसेन विधिना समाधानमनुचितमित्याशयेनाह **अथवेति** । अत्र प्रतिपत्तिगौरवभयादाह **यद्वेति** । यदनुप्रमाणं तान्यक्षयुक्तिवचांसीत्यर्थः । तथा च यत्र समानाधिकरणप्रयोगे उद्देश्यस्य विशेष्यत्वं विधेयस्य

विशेषणत्वं विवक्षितम् तत्रैव विधेये उद्देश्यवचनं नियतं, यथा पर्वतो वह्निमानिति । अत एव पूर्वमक्षादेरुद्देश्यविशेष्यत्वं विधेयस्यानुप्रमाणशब्दवाच्यत्वस्य विशेषणत्वं विवक्षितमिति प्रकारद्वयेन समाहितम् । यत्र तु तादृशप्रयोगे उद्देश्यादौ विशेष्यत्वादिकं न विवक्षितं केवलं स्वतन्त्रो धर्म्येव विधीयते तत्र विधेये नोद्देश्यवचननियमो यथा 'अत्र प्रमाणं वेदाः' इति । प्रकृते च विशेषणविशेष्य-भावाविवक्षया स्वतन्त्राणामक्षादीनां धर्मिणामेव विधानान्न तत्रोद्देश्यानुसारेणैवमेकवचनमिति भावः ॥ **करणधर्मिण एवेति** । करणशब्दार्थभूते सन्निकर्षरूपव्यापारविशिष्टेऽक्षे यो धर्मिभागस्तस्यैवेत्यर्थः । **अन्यथेति** । प्रत्यक्षशब्दस्य 'विषयान्प्रति स्थितमक्षं प्रत्यक्षमि'ति व्युत्पत्त्या सन्निकृष्टाक्षवाचित्वादिति भावः । अक्षशब्दार्थश्च 'अदुष्टमिन्द्रियं त्वक्षमि'ति प्रमाणोक्तो ग्राह्यः । अतो न दुष्टेन्द्रियेऽनुप्रमाणत्व-प्रसङ्गः । अत एव शब्दमात्रपर्यायस्य वचःशब्दस्य दुष्टशब्दसाधारण्यादाह **वच इत्यागमेति** । निर्दोषशब्दोपलक्षणमित्यर्थः । एवं युक्तिशब्दार्थेऽपि निर्दोषत्वमन्तर्भूतमिति वक्ष्यमाणत्वेन नानुमाना-भासेऽतिप्रसङ्ग इति ध्येयम् ।

**श्री०— संबन्ध इति** । अतः 'तन्मुख्यं ज्ञानशब्दयोरि'त्यनेन संबन्ध इत्यर्थः । प्रत्येकमक्ष-मनुप्रमाणमित्यादिरूपेण ज्ञेयम् । **करणेति** । निर्दोषार्थसन्निकृष्टस्येन्द्रियस्य करणत्वात्तन्मध्ये धर्मिभूतं यदिन्द्रियं तद्विवक्षयेत्यर्थः । वचोमात्रस्यानुप्रमाणत्वोक्तेर्दुष्टवचसोऽपि तत्प्राप्तेराह **वच इतीति** ॥ **आगमेति** । निर्दोषशब्देत्यर्थः ।

**च०— बहुवचनार्थ इति** । 'ऋजवः सन्तु पन्थाः' इत्यादाविवैकवचनं बहुवचनादेश इति भावः । एतत्सूत्रार्थमानन्दमयनये एवाभ्यधाम ॥ **बुद्ध्याविवेकेनेति** । अक्षं युक्तिर्वचश्चेति व्यस्तैक-वचनान्तपदानुसन्धानेनेत्यर्थः । अत्र कल्पे प्रतिपत्तिगौरवं प्रतिसन्दधानः कल्पान्तरमाश्रयते **यद्वेति** । अत्र व्याकर्तारः । यदनुप्रमाणं तान्यक्षयुक्तिवचांसीत्यर्थः । तथाच यत्र समानाधिकरणप्रयोगे उद्देश्यस्य विशेष्यत्वं विधेयस्य विशेषणत्वं विवक्षितम्; तत्रैव विधेये उद्देश्यवचनम् । यथा पर्वतो वह्निमानिति । अत एव पूर्वपक्षादेरुद्देश्यस्य विशेष्यत्वं विधेयस्यानुप्रमाणशब्दवाच्यत्वस्य विशेषणत्वं च विवक्षितमिति प्रकारद्वयेन समाहितम् । यत्र तु तादृशप्रयोगे तथा न विवक्षितं तत्र विधेयस्य नोद्देश्यवचननियमः । यथा अत्र प्रमाणं वेदा इति । प्रकृते च तयोर्विशेष्यविशेषणभावाविवक्षया स्वतन्त्राणां धर्मिणामेव विधानान्नोद्देश्यवचनत्वं विधेयस्येति भाव इति निबध्नन्ति ।

सु० — न चैवमप्यव्याप्तिर्लक्षणस्येति वाच्यम् ॥ ज्ञानमेव यथार्थं करणानि तु तज्जनकतया तथोपचर्यन्त इत्यङ्गीकारे हि सा स्यात् । न चैवम् । यथावस्थितार्थविषयित्वस्योभयत्रापि साम्यात् । ज्ञानविषय एव हि करणानां विषयः । न हि कमप्यविषयीकुर्वन्त्येव तानि ज्ञानं जनयन्ति । नाप्यन्यविषयाणि । अतिप्रसङ्गात् । केवलं विषयस्य ज्ञेयतां ज्ञानमुपाधितया करणानि तु तज्जनकतया संपादयन्तीत्येतावन्तं विशेषमाश्रित्य केवलानुप्रमाणभेदः समर्थितः । यदि चैतावताऽप्यव्याप्तिदोषस्तदा सर्वत्रापि यत्किञ्चिद्वैलक्षण्यस्य वक्तुं शक्यत्वादतिप्रसङ्गः स्यादिति ।

शे० — ज्ञानकरणयोर्याथार्थ्यस्यानेकविधत्वे पूर्वोक्ताव्याप्तितादवस्थ्यमित्याशङ्क्य निषेधति न चैवमिति । ननु ज्ञेयविषयीकारित्वस्य ज्ञानधर्मत्वेऽपि करणधर्मत्वाभावान्न तस्योभयत्र साम्यमित्यतो ज्ञान इव तज्ज्ञानकरणेऽपि विषयविषयीकारित्वव्यवहाराविशेषेणाबाधितव्यवहारानुरोधेन तस्योभयधर्मत्वान्नानुपपत्तिरित्यभिप्रेत्य घटादेस्तज्ज्ञानविषयत्वेऽपि करणानां विषयस्यैवानिरूपणान्न तद्विषयीकारित्वं सम्भवतीत्यतो ज्ञानविषयस्यैव तज्ज्ञानकरणविषयत्वान्नानुपपत्तिरित्याह ज्ञानेति । कुतो ज्ञानविषयस्य करणविषयत्वमित्यतः सम्भाविततया प्रसक्तेषु निर्विषयत्वान्यविषयत्वज्ञानविषयविषयकत्वरूपप्रकारेषु निर्विषयत्वान्यविषयत्वयोरयोगात्तत्सिद्धिरिति भावेन तत्प्रकारद्वयं निराकरोति न हीति ॥ अतिप्रसङ्गादिति । चक्षुरादिनाऽपि गन्धादिग्रहप्रसङ्गादित्यर्थः । ननु यथावस्थितार्थविषयत्वस्योभयत्र साम्ये कथं केवलानुप्रमाणभेद इत्यत आह केवलमिति । नन्वेवमपि ज्ञानवत्करणानां स्वविषयज्ञेयतायां साक्षादुपाधित्वाभावात्करणवच्च ज्ञानस्य स्वविषयज्ञेयतायां उपाधिभूतज्ञानजनकत्वाभावादुक्तप्रकारद्वयस्यान्योन्यावर्तनादव्याप्तितादवस्थ्यमित्याशङ्क्य परिहरति यदि चेति ॥ तदेति । पृथिव्यादिलक्षणभूतगन्धादेरपि सुरभित्वासुरभित्वादिना वैलक्षण्यस्य वक्तुं शक्यत्वेनाव्याप्त्यापत्त्या लक्षणमात्रोच्छेदः स्यादित्यर्थः ।

स० — अतिप्रसङ्गादिति । देशान्तरस्थपुरुषस्य चक्षुरादिना देशान्तरस्थपदार्थज्ञानापत्तेरित्यर्थः । ननु सन्निकृष्टानां करणानां ज्ञानजनकत्वात् देशान्तरस्थेन चासंनिकर्षात् तदज्ञानोपपत्तौ न तदन्यथानुपपत्त्या करणानाम् अर्थविषयीकारित्वसिद्धिरिति चेन्न । चक्षुषो रूपेणेव आकाशेनापि सन्निकृष्टत्वेन चक्षुषा सन्निकृष्टरूपज्ञानवत् स्वसन्निकृष्टाकाशज्ञानापत्त्या सन्निकर्षस्याप्रयोजकत्वात् तद्विषयीकारित्वस्यावश्यकत्वात् । न चाकाशस्यारूपित्वाद्रूपवत्सन्निकर्षस्यैव प्रयोजकत्वान्न तज्ज्ञानापत्तिरिति वाच्यम् । अनेकरूपवद्द्रव्यैः सन्निकृष्टस्यापि चक्षुषस्तावज्ज्ञानजनकत्वापातात् । न च समनस्केन्द्रियासन्निकर्षात् न तावज्ज्ञानापत्तिरिति वाच्यम् । चक्षुर्मनसोः सन्निकर्षे सति समनस्केन्द्रियसन्निकर्षस्यापि अवर्जनीयत्वात् । न च

सन्निकर्षविशेषस्यैव हेतुत्वात् नातिप्रसङ्गः । सन्निकर्षविशेषस्यैव विषयीकारित्वशब्दार्थत्वात् । तथा च सन्निकर्षस्यापि प्रयोजकत्वमभ्युपेत्यापि अतिप्रसङ्गपरिहारानुपपत्त्या विषयीकारित्वमावश्यकमित्यभिप्रायः । ननु ज्ञानवत् करणस्यापि ज्ञेयविषयीकारित्वे केवलानुप्रमाणविभागानुपपत्तिः । तत्राह **केवलमिति** । ननु तथापि ज्ञानवत् करणस्य ज्ञेयताघटकोपाधित्वाभावात् अव्याप्तिरित्यत आह **यदि चेति** । तदेति । क्वचिद्रक्तसास्नायाःसत्त्वात् क्वचिच्छुक्लसास्नायाःसत्त्वेन सास्नावत्त्वेऽपि वैलक्षण्यसद्भावेन तस्यापि लक्षणत्वं न स्यात् । एवं 'प्रमाकरणं प्रमाणम्' इत्यत्रापि प्रमायाः प्रत्यक्षादिभेदेन अनेकप्रकारत्वेन वैलक्षण्यसंभवात्तस्यापि लक्षणत्वं न स्यादित्यर्थः । अयमत्र लक्षणनिष्कर्षः । स्वप्रयोज्यज्ञेयतोपेतज्ञेयविषयीकारित्वम् । स्वस्य प्रयोजकत्वं च ज्ञेयताघटकत्वेन तच्छरीरप्रविष्टत्वेन, तन्निमित्तेनेति द्वेधेति । नन्वेवं ज्ञेयविषयीकारित्वस्योभयत्र साम्ये तावन्मात्रस्य अनुप्रमाणे अव्याप्तिमाशङ्क्य ज्ञेयविषकारित्वं च साक्षादित्यादिग्रन्थान्तरीयपरिहारोऽसङ्गतः इति चेन्न । अभिप्रायानवबोधात् । ननु ज्ञेयविषयीकारित्वमेव लक्षणं चेत् तदा गमनस्यापि ज्ञेयविषयीकारित्वस्य सत्त्वेन तत्रातिव्याप्तेः । न च साक्षाज्ज्ञेयविषयीकारित्वस्य विवक्षितत्वेन तस्य च तत्राभावान्नातिव्याप्तिरिति वाच्यम् । तथात्वे तस्यानुप्रमाणेष्वभावेनाव्याप्तिरित्यत आह **ज्ञेयविषयीकारित्वं चेति** । साक्षाज्ज्ञेयतोपाधित्वेन साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन साक्षाज्ज्ञेयविषयीकारिज्ञानं तत्साधनत्वेन च ज्ञेयविषयीकारित्वं विवक्षितम् । एवं च सति अनुप्रमाणेष्वव्याप्तिप्रसक्तेरेवाभावादित्यभिप्रेत्य प्रवृत्तत्वात् ।

प० — **न चैवमिति** । ज्ञानतत्करणेषु याथार्थ्यस्य मुख्यामुख्यत्व इत्यर्थः ॥ **अतिप्रसङ्गादिति** । गन्धादिविषयकघ्राणादिना रूपादिज्ञानोदयापत्तेरित्यर्थः ॥ **अतिप्रसङ्ग इति** । सास्नादिमत्त्वादेरलक्षणत्वप्रसङ्गात् । शुक्लपीतादिना सास्नादावपि वैलक्षण्यस्य सुवचत्वादिति भावः ।

या० — ज्ञानकरणयोर्याथार्थ्यस्यानेकविधत्वे पूर्वोक्तामव्याप्तिमाशङ्क्य निषेधति **न चैवमिति** ॥ **अतिप्रसङ्गादिति** । रूपादिविषयकचक्षुरादिनाऽपि गन्धादिज्ञानजननापत्तेरित्यर्थः । ननु ज्ञानत्वकरणानामपि स्वभावत एव ज्ञेयविषयीकारित्वे केवलानुप्रमाणयोर्भेदानुपपत्तिरित्यत आह **केवलमिति** । ननु करणं ज्ञेयतायां ज्ञानमिव न साक्षादुपाधिरतोऽव्याप्तिस्तदवस्थेत्यत आह **यदि चेति** ॥ **सदा सर्वत्रेति** । गन्धवती पृथिवीत्यादावपि गन्धादेः सुरभित्वादिना वैलक्षण्यस्य वक्तुं शक्यत्वेनाव्याप्त्यापत्त्या लक्षणमात्रोच्छेदप्रसङ्ग इत्यर्थः ॥

श्री० — **तथा** यथार्थतया । किमप्यविषयीकुर्वतो ज्ञानजनकत्वे गन्धाविषयकचक्षुषोऽपि गन्धज्ञानजनकत्वरूपोऽतिप्रसङ्गः । अन्यविषयकस्यान्यज्ञानजनकत्वे पटविषयकस्यापि घटज्ञानजनकत्वलक्षणोऽतिप्रसङ्गो ध्येयः । ननु ज्ञानवत्तत्करणस्यापि ज्ञेयविषयीकारित्वे केवलानुप्रमाणविभागानुपपत्ति-

रिति पूर्वोक्तदोष इत्यत आह **केवलमिति** । ज्ञानं स्वविषयस्य ज्ञेयतामुपाधितया सम्पादयतीत्यन्वय. । **एतावता** विशेषेणेत्यर्थः । क्वचिद्रक्तसास्नायाः सत्त्वात्क्वचिच्छुक्लायाः सत्त्वेन सास्नावत्त्वेऽपि वैलक्षण्य-सत्त्वात्तस्यापि लक्षणत्वं न स्यादित्यादिरूपोऽतिप्रसङ्गः स्यादित्यर्थः ।

सु०— **अयमत्र समुदायार्थः । यथार्थं प्रमाणम् । तद् द्विविधम् । केवलमनुप्रमाणं च । तत्र यथार्थज्ञानं केवलम् । तत्साधनमनुप्रमाणम् । केवलमपि द्विविधम् । चैतन्यं वृत्तिरूपं चेति । चैतन्यमपि त्रिविधम् । उत्तममध्यमाधमभेदात् । तत्रोत्तमं यथार्थमेव । मध्यमं मिश्रम् । अधममयथार्थमेव । द्वितीयमपि केवलं प्रत्यक्षानुमानागमजभेदात्त्रिविध-मेवेति । अनुप्रमाणमपि प्रत्यक्षानुमानागमभेदात्त्रिविधमेवेति ।**

शे०— मूले याथार्थ्यमेवेत्यादिनोक्तं प्रमेयं बुद्ध्यारोहार्थमेकीकृत्याह **अयमत्रेति** । यद्वा केवलानुप्रमाणलक्षणयोः खण्डनकारोक्तातिव्याप्तिशङ्कासमाधानोपक्षेपाय ते विशिष्य दर्शयितुं प्रसङ्गा-द्याथार्थ्यमेवेत्यादिनोक्तं सकलं प्रमेयं सङ्गृह्य दर्शयति **अयमत्रेति** । तत्र याथार्थ्यमेवेत्यनेनोक्तं प्रमाण-सामान्यलक्षणमाह **यथार्थं प्रमाणमिति** । 'ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरमित्यनेन सूचितं तद्विभागमाह **केवलमनुप्रमाणं चेति** । 'यथार्थज्ञानजनका यथार्था युक्तयः' इत्यादिना सूचिते तयोर्लक्षणे आह **तत्र यथार्थज्ञानं केवलमित्यादिना** । यथार्थज्ञानजनका इत्यत्र यथार्थेति ज्ञानविशेषणेन केवलभूते ज्ञाने याथार्थ्यायाथार्थ्यभेदेन द्वैविध्यं सूचितं तदाह **केवलमपीति** । यथार्थज्ञानरूपचैतन्ये यथार्थपदव्यावर्त्यं तत्सङ्ग्राह्यं च दर्शयन्नेव चैतन्यमात्रं विभजते **चैतन्यम-पीति** । सर्वमपि चैतन्यं केवलं नेत्याहेत्यप्याहुः । केवलं द्विविधमित्युक्त्या केवलत्वेनैव ज्ञानं परामृश्यते न तु प्रमाणत्वेनापीति न वक्ष्यमाणविभागानुपपत्तिरित्यप्याहुः । अनुप्रमाणमेतानीत्या-दिना सूचितं केवलत्रैविध्यमाह **द्वितीयमपि केवलमिति** । **प्रत्यक्षानुमानागमभेदात्** प्रत्यक्षानुमाना-गमजभेदादित्यर्थः । अनुप्रमाणमेतानीत्यादिना कथितमनुप्रमाणत्रैविध्यमाह **अनुप्रमाणमपीति** ।

स०—ननु केवलानुप्रमाणविभागस्यानुक्तत्वात् उक्तवैलक्षण्यकथनमयुक्तमित्यत आह **अयमत्रेति** । **यथार्थज्ञानरूपचैतन्ये यथार्थपदव्यावर्त्यं तत्संग्राह्यं च दर्शयन्नेव चैतन्यमात्रं विभजते चैतन्यमपीति** ।

प०— बुद्धिसौकर्याय निष्कृष्टार्थमाह **अयमत्रेति** । याथार्थ्यमेव मानत्वमित्यनेनोक्तमाह **यथार्थं प्रमाणमिति** । ज्ञानार्थ इत्यादिना सूचितमर्थमाह **तद्द्विविधमिति**। यथार्थज्ञानजनका इत्यनेन

सूचितमर्थमाह **यथार्थेति** । जनकपदेन साधनत्वं विवक्षितमिति भावेनाह **तत्साधनमिति** । अनुप्रमाणविभागोक्तया प्रकृतं, 'प्राकृतं शुद्धचैतन्यमि'त्यादिनोत्तरत्र शुद्धादिभेदेनाक्षविभागकथनेन च सूचितं केवलविभागं, चैतन्यविभागं च यथार्थज्ञानमित्यत्र यथार्थपदव्यावर्त्याय, प्रत्यक्षादेर्यथार्थचैतन्यज्ञानजनकत्वप्रसक्तिवारणाय चाह **केवलमपीति** । अत एव द्विविधं द्वितीयमपीत्यादिना यथार्थायथार्थरूपद्विविधवृत्तिज्ञानस्यैव प्रत्यक्षादिभेदेन त्रैविध्योक्तिः । अक्षयुक्तीत्यादिना सूचितमाह **अनुप्रमाणमपीति** । अनुप्रमाणानुवादेन त्रित्वविधानमहिम्ना लब्धार्थोक्तिः **एवेति** ।

या० — **अयमत्र समुदायार्थ इति** । नन्वत्र यद्यपि प्रमाणसामान्यलक्षणं याथार्थ्यमित्यनेनैवोक्तं केवलमनुप्रमाणं चेति तद्विभागोऽपि ज्ञानार्थे ज्ञेयता मुख्येत्यनेन सूचितः । 'यथार्थज्ञानजनका' इत्यनेन च तयोर्लक्षणे सूचिते । 'अनुप्रमाणमेतानी'त्यनेन चानुप्रमाणत्रैविध्यमप्युक्तम् । तथाऽपि केवलमपि द्विविधमित्यादि सपरिकरः केवलप्रमाणविभागः केनापि प्रकृतमूलेनानुक्तोऽसूचितश्च कथमुक्तः । असङ्गतं चात्र मध्यमाधमचैतन्यनिरूपणम् । न हि तत्केवलप्रमाणं येन तद्विभागावसरे निरूपणार्हमिति चेन्मैवम् । अनुप्रमाणविभागपरं मूलं केवलप्रमाणविभागाद्युपलक्षकमित्यभिप्रेतत्वात् । अन्यथा अनुप्रमाणविभागस्यात्रोक्तत्वात्तदवान्तरप्रत्यक्षादिविभागानामपि वक्ष्यमाणत्वात्केवलप्रमाणे सामान्यतो विशेषतश्च विभागानुक्तौ न्यूनता स्यात् । अयथार्थज्ञाननिरूपणं च केवलप्रमाणलक्षणगतयथार्थपदव्यवच्छेद्यप्रदर्शनायैव न तु लक्ष्यतया । अत एवाग्रेऽनुप्रमाणप्रत्यक्षविभागकथनावसरे 'यावदत्र सदोषमुक्तं तन्निर्दोषग्रहणव्यच्छेद्यमि'ति विभावयिष्यति । अतो नासङ्गतिशङ्काऽपीति ।

श्री० — **द्वितीयमपि केवलं वृत्तिरूपं ज्ञानम् ॥ प्रत्यक्षेति** । तथा च तत्करणस्यापि त्रित्वात्तज्जन्यं ज्ञानमपि त्रिविधमिति ज्ञेयम् ।

**सु० — ननु तथाऽपि काकतालीयेऽतिव्याप्तिरपरिहार्या । तथा हि । पाणौ पञ्च वराटकान्पिधाय कश्चित्कञ्चित्पृच्छति मम करे कति वराटका इति । स च पृष्टोऽजाकृपाणीयन्यायेनाह पञ्चेति । तदेतत्प्रष्टुर्वक्तुश्च ज्ञानं यथार्थमिति प्रमाणं प्रसज्यते । न च निस्साधनं तदुत्पन्नमिति तत्साधनस्यापि प्रमाणत्वापातः । यादृच्छिकसंवादिलिङ्गविभ्रमादिष्वप्येवं प्रसङ्गो दुर्वार इति ।**

**मैवम् । वक्तुर्ज्ञानस्य संशयत्वेनाप्रसङ्गात् । तत्र (च) पाक्षिकव्यवहारस्तु वैयात्यनिबन्धनः । न स्वज्ञाननिबन्धनः । अन्यथा विप्रलम्भकस्यापि तादृशनिश्चयापत्तौ विपर्यस्ताविशेषप्रसङ्गात् । एतेनाहार्यनिश्चयकल्पनमप्यपास्तम् ॥ प्रष्टुस्तु प्रागूर्ध्वं च ज्ञानं**

(यथार्थ)प्रमाणमेव। तन्मूलं च प्रत्यक्षम्। वाक्यजनितमपि पार्श्वस्थादेर्विज्ञानमेवमेव। वाक्यं तु यादृच्छिकसंवादि। यादृच्छिकसंवादिलिङ्गविभ्रमवाक्याभासजन्यस्य केवलप्रमाणत्वेऽपि न तयोः प्रामाण्यम्। तथा हि। न तावत्तत्र बाष्पस्य बाष्पतया (वि)ज्ञातस्य वा यथार्थज्ञान-साधनत्वं वक्तुं शक्यम्। नापि धूमस्य। असतः साधनत्वायोगात्। सत्त्वेऽप्यपरामृष्टत्वात्। ततो धूमत्वेन ज्ञातस्य बाष्पस्य बाष्पविषयस्य धूमविभ्रमस्य वेति वक्तव्यं; न च तत्संभवति। तज्जातीयस्य सर्वत्र यथार्थज्ञानजनकत्वाभावात्। तथाविधस्यैव साधनत्वेनास्माभिर्विवक्षितत्वात्। तथा सत्यकारणिका कार्यो(करणिकाक्रियो)(कारणकार्यो)त्पत्तिरापन्नेति चेन्न। लिङ्गविभ्रमस्य लौकिककार(कर)णत्वेऽपि पारिभाषिकसाधनत्वाभावस्योक्तत्वात्।

वाक्याभासस्यापि प्रामाण्यप्रसङ्गोऽनेन निरस्तः। तस्य प्रामाण्यप्रसङ्गेऽपि न काचिद-स्माकं क्षतिः। न हि तार्किकाणामिवास्माकमाप्तोक्ततया प्रामाण्यानुमानादिकमस्ति।

शे०—काकतालीय इति। यथार्थज्ञान इति शेषः। तथा च यादृच्छिके यथार्थज्ञान इत्यर्थः। अत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ। तेन काकागमनमिव तालपतनमिव काकतालं काकतालमिव काकतालीयमिति विग्रहः। काकस्यागमनं यादृच्छिकं तालस्य पतनं च। तेन पतता तालेन काकस्य वधः कृतः। एवमेव यादृच्छिकं विषयसत्त्वम्। तत्र दुष्टकरणसन्निपातश्च। तेन च यथार्थज्ञानोत्पत्तिः। तत्र काकागमनं यादृच्छिकविषयसत्त्वस्योपमानं; तालपतनं च दुष्टकरणसन्निपा-तस्य। तालेन काकस्य यो वधः स दुष्टकरणसन्निपातेन यथार्थज्ञानोत्पत्तेः। अत्र यो यादृच्छिकसद्विषय-दुष्टकरणयोः सन्निपातः स काकतालसंबन्धसदृश इत्येकोपमार्थः। यच्च तेन यथार्थज्ञानजन्म तत्पतत्तालेन काकवधसदृश इति द्वितीयोपमार्थः। तत्राद्यः समासार्थः, द्वितीयः प्रत्ययार्थ इति विवेकः। काकताल-शब्दे समासश्चास्मादेव ज्ञापकाद्द्रष्टव्यः। अत एवोक्तम् 'इवार्थे काकतालाद्याः समासाः स्युरमी इति। ज्ञाप्यतेऽनेन योगेन प्रत्ययश्च विधीयते' इति। यादृच्छिकं यथार्थज्ञानमेव नास्तीत्याशङ्क्य तदुदाहरणे-नोपपादयति। तथा हीति। वराटकाः कपर्दकाः॥ अजाकृपाणीयन्यायेनेति। अत्राजाकृपाण-शब्दावजाकृपाणसमवेतक्रियावर्तिनौ। अजाग्रीवाप्रसारणमिव कृपाणपतनमिवाजाकृपाणम् अजाकृपाणमिवे-त्यजाकृपाणीयमिति विग्रहः। अत्र हि कण्डूयमानार्थं शिथिलबन्धखड्गे स्तम्भादौ यादृच्छिकं छाग्या ग्रीवाप्रसारणं कृपाणपतनं च, तेन च पतता तद्वधः। एवमेव देवदत्तस्य गमनं दस्यूनां चोपनिपातः। तैश्च तद्वधः। तत्र यो देवदत्तस्य दस्यूनां च समागमः सोऽजाकृपाणसमागमसदृश इत्येकोपमार्थः। यश्च तैर्देवदत्तस्य वधः सोऽजावधसदृश इति द्वितीयोपमार्थः। तेन भवति देवदत्तस्य वधोऽजाकृपाणीयः स चासौ न्यायश्चेति विग्रहः। अतश्चाजाकृपाणीयदेवदत्तवधन्यायेनेत्यर्थः। समासादिव्युत्पादनप्रकारश्च

काकतालीयशब्देन प्रदर्शितोऽनुसन्धेयः ॥ **प्रसज्यत इति** । ततश्च केवलप्रमाणलक्षणस्य तत्रातिव्याप्तिरिति भावः ॥ **न चेति** । ततश्चानुप्रमाणलक्षणस्य तत्रातिव्याप्तिरिति भावः । लिङ्गविभ्रमादिष्वित्यादिपदेन यादृच्छिकसंवादिवाक्याभासपरिग्रहः ।

पञ्चसङ्ख्यावच्छिन्नज्ञानं यद्वक्तृसमवेतं तत्रातिव्याप्तिरुच्यते उत प्रष्टृसमवेतज्ञाने उत पार्श्वस्थज्ञाने वेति विकल्पत्रयं मनसि निधायाद्यं दूषयति **वक्तुर्ज्ञानस्येति** ॥ **संशयत्वेनेति** । चक्षुषः संप्रयोगादिरूपनिश्चायकप्रमाणाभावादिति भावः ॥ **पञ्चैवेति** । निश्चयाभावे तथात्वेनाभिवदनव्यवहारो न स्यात्किन्तु पञ्च वाऽधिका वेत्येव व्यवहारः स्यात् । व्यवहारस्य ज्ञानपरतन्त्रत्वादित्यत आह **तत्रेति** ॥ **पाक्षिकेति** । एकमात्रकोटिक इत्यर्थः । ननु किमेककोटिकव्यवहारस्य वैयात्यनिबन्धनत्वकल्पनया, तादृशव्यवहाराद्वक्तृज्ञानमेककोटिमात्रविषयकं किन्न स्यादित्यत आह **अन्यथेति** । एककोटिकव्यवहारानुरोधेन तादृशज्ञानाभ्युपगम इत्यर्थः । व्यवहारानुसारित्वे ज्ञानस्य विप्रलम्भकस्यापि नदीतीरे पञ्च फलानि सन्तीति व्यवहारानुरोधेन तादृशमेव ज्ञानं कल्पनीयं स्यात् । ततश्च भ्रान्तस्यापि तादृशज्ञानसद्भावादेको भ्रान्तोऽपरस्तु विप्रलम्भक इति सर्वसंप्रतिपन्नस्तयोर्भेदो न स्यादित्यर्थः । नन्वेकतरकोटिव्यवहारस्य वैयात्यनिबन्धनत्वान्न स्वज्ञानहेतुकत्वमित्युक्तं तदयुक्तम् । स्वज्ञानहेतुकत्वस्य युक्तिसिद्धत्वेन निरासायोगात् । तथा हि । वक्तुः पञ्चसङ्ख्यावच्छिन्नत्वज्ञानस्यानेककोट्यनवलम्बित्वेन न संशयत्वम् । तथा सति व्यवहारस्य स्वविषयनिश्चयजन्यत्वनियमेन तदभावे तादृशव्यवहारानुपपत्तिप्रसङ्गात् । अतस्तद्व्यवहारमूलतया पञ्चसङ्ख्यावच्छिन्नत्वकोटौ तस्य निश्चयत्वमेव स्यात् । एवमेवान्यकोटावपि तस्य निश्चयत्वमभ्युपेयम् । स्थाणुरेव पुरुषो वेत्याद्यपाक्षिककोटिद्वयविषयकसंशयादर्शनात् । तेन पञ्चैव नैवेति विरुद्धकोटिद्वयनिश्चयसमुच्चयत्वं विरुद्धमापद्यते । अतो यथा दृष्टफले कृष्यादौ कर्षकस्य निष्पन्नफलावश्यकत्वसन्देहेऽप्याहार्यफलावश्यकत्वनिर्णयजन्यैव प्रवृत्तिः । प्रवृत्तेः स्वविषयनिश्चयपुरःसरत्वनियमात् । तथा वक्तुः पञ्चसङ्ख्यावच्छिन्नसंदेहेऽप्याहार्यतत्कोटिनिश्चयादेवोक्तव्यवहार इति कथं न तस्य स्वज्ञानहेतुकत्वमिति खण्डनकृतोक्तं समाधानम्, एवं सति विप्रलम्भकस्यापि तादृशव्यवहारानुसारेण तादृशनिश्चयापत्तौ विपर्यस्ताविशेषप्रसङ्गादित्युक्तदूषणातिदेशेन दूषयति **एतेनेति** । अत्राहार्येति पाठः सुगमार्थः । आहारेति पाठे त्वाहरणमाहार उत्प्रेक्षेति यावत् । स चासौ निश्चयश्चेत्याहारनिश्चय इत्यर्थः ।

द्वितीयं दूषयति **प्रष्टुस्त्विति** । तथा च लक्ष्यत्वान्न केवलप्रमाणलक्षणस्य तत्रातिव्याप्तिरिति भावः । तर्हि निस्साधनस्य तस्यानुत्पत्तेस्तत्साधनेऽनुप्रमाणलक्षणस्यातिव्याप्तिरेवेत्यतो भवेदेवं **यदि** प्रत्यक्षाद्यन्यदेव तत्साधनं स्यात् । न चैतदस्तीत्याह **तन्मूलं चेति** ।

तृतीयं दूषयति **वाक्येति** । पार्श्वस्थादेरित्यादिपदेन प्रष्टुः संग्रहः । पञ्च वराटक इति वाक्येत्यर्थः ॥ **एवमेवेति** । प्रमाणमेवेत्यर्थः । ततश्च न केवलप्रमाणलक्षणस्य तत्रातिव्याप्तिरिति भावः । तर्हि तत्करणस्य वाक्यस्य प्रामाण्यं स्यात् । न च तत्संभवति । अनाप्तवाक्यत्वादित्यत आह **वाक्यं त्विति** । तथा च यादृच्छिकसंवादिलिङ्गविभ्रमे यः परिहारः स एवात्रापि भविष्यतीति भावः । यादृच्छिकसंवादिलिङ्गविभ्रमादिष्वप्येवं प्रसङ्ग इति किं तज्जनितवह्न्यादिज्ञानस्य केवलप्रमाणत्वापादनमभिमतमुत तज्जनकलिङ्गविभ्रमादेरिति विकल्पद्वयं मनसि निधायाद्यमिष्टापत्त्या दूषयन्नेव द्वितीयं प्रतिषेधति **यादृच्छिकेति** ॥ **वाक्येति** । विप्रलम्भादिवाक्याभासजन्यस्येत्यर्थः । जन्यस्येत्यतः परं ज्ञानस्येति शेषः । लिङ्गकरणतापक्षमाश्रित्याह **बाष्पस्येति** । बाष्पस्य वह्न्यविनाभावानवगत्या तस्य तज्ज्ञानाजनकत्वाद्यथार्थज्ञानजनकत्वं तस्यासम्भावितमिति भावः । अस्तु तर्हि तत्र गृहीतवन्ह्यविनाभावस्य धूमस्यैव यथार्थज्ञानजनकत्वमित्यतस्तस्य वह्न्यविनाभावेऽपि पक्षेऽसत्त्वेन पक्षधर्मत्वाभावान्न तज्ज्ञानजनकत्वमित्याह **असत इति** । यत्र पक्षे धूमस्यासत्त्वं तत्र धूमस्य यथार्थज्ञानजनकत्वायोगेऽपि यत्र यादृच्छिकसंवादिप्रमानुमितिस्थले धूमस्यापि पक्षे सत्त्वं तत्र धूमस्य व्याप्तिपक्षधर्मताक्रान्तत्वाद्यथार्थज्ञानजनकत्वं किन्न स्यादित्यतस्तत्र बाष्पस्यैव करणसन्निकृष्टत्वेन परामर्शविषयतयाऽनुमितिजनकत्वसम्भवेऽपि धूमस्यासन्निकृष्टत्वेन परामर्शविषयत्वाभावान्न तस्य तत्र यथार्थानुमितिजनकत्वमित्याह **सत्त्वेऽपीति** । लिङ्गकरणतापक्षमाश्रित्योक्तं **धूमत्वेन ज्ञातस्य बाष्पस्येति** । तज्ज्ञानकरणतापक्षमाश्रित्योक्तं **बाष्पविषयस्य धूमभ्रमस्येति** ॥ **सर्वत्रेति** । वन्हिमति तस्य तज्जनकत्वेऽप्यवन्हिमति तस्य तदजनकत्वादिति भावः । ननु तज्जातीयस्य सर्वत्र यथार्थज्ञानजनकत्वाभावेऽपि धूमत्वेन ज्ञातस्य बाष्पस्य बाष्पविषयस्य धूमभ्रमस्य वन्हिमति यथार्थज्ञानजनकत्वाद्यथार्थज्ञानसाधनत्वमस्त्येवेति कथमतिव्याप्तिपरिहार इत्यतः स्यादेतदेवं यदि जनकत्वमात्रमिह साधनत्वं विवक्षितं स्यान्न चैवं किन्तु यज्जातीयानन्तरं नियमेन कार्यमुत्पद्यते तदेवेह साधनत्वं विवक्षितम् । तच्च नोक्तरीत्या तत्रास्तीति नातिव्याप्तिरित्याशयेनाह **तथाविधस्यैवेति** ॥ **तथा सतीति** । लिङ्गविभ्रमस्य यथार्थज्ञानजनकत्वाभाव इत्यर्थः ॥ **लौकिककरणत्वेऽपीति** । लोकप्रसिद्धासाधारणकारणत्वरूपकरणत्वेऽपीत्यर्थः । ततश्च लोकप्रसिद्धकरणशून्यतया एवाकरणक्रियोत्पत्त्यापादकत्वात्प्रकृते च तदभावान्न तदापत्तिरिति भावः ।

एवं पारिभाषिकसाधनत्वघटितलक्षणाभावेन यादृच्छिकसंवादिलिङ्गविभ्रमेऽतिव्याप्तिं परिहृत्य यादृच्छिकसंवादिनि विप्रलम्भकवाक्येऽपि तां परिहरति **वाक्याभासस्येति** । तस्यार्थसत्त्वस्थले यथार्थज्ञानजनकत्वेऽपि तदभावस्थले तज्जनकत्वाभावेन यज्जातीयानन्तरमिति पारिभाषिकसाधनत्वाभावान्न तत्रातिव्याप्तिरिति भावः । न चैवमपि यथार्थं प्रमाणमिति प्रमाणसामान्यलक्षणस्य लिङ्गविभ्रमादावति-

ध्याप्तिरिति वाच्यम् । साक्षाज्ज्ञेयविषयीकारितत्साधनान्यतरत्वस्यैव लक्षणार्थतया विवक्षितत्वेन तदनवकाशात् । लौकिककरणत्वातिरिक्तपारिभाषिकसाधनत्वाश्रयणे गौरवं मनसि निधाय विप्रलम्भकवाक्यस्यानुप्रमाणतया लक्ष्यत्वान्न तत्रातिव्याप्तिरित्यभ्युपगमवादेनाह **तस्येति** । वाक्याभासस्येत्यर्थः । उपलक्षणं चैतत् । यादृच्छिकसंवादिलिङ्गविभ्रमस्येत्यपि द्रष्टव्यम् । **अस्माकं** प्रामाण्यस्वतस्त्ववादिनाम् । कथं न क्षतिरित्यतोऽस्माकमित्येतद्व्यावर्त्यप्रदर्शनपूर्वकं क्षत्यभावमुपपादयति **न हीति** ॥ **आप्तोक्ततयेति** । उपलक्षणं चैतत् । सल्लिङ्गपरामर्शतयेत्यपि द्रष्टव्यम् । प्रामाण्यानु.,नादिकमित्यादिपदेन प्रामाण्योत्पत्तिपरिग्रहः । अत्र लिङ्गाभासवाक्याभासयोर्यथार्थज्ञानजनकत्वाविशेषेऽपि वाक्यज्ञानस्य वाक्यांशे केवलप्रमाणत्ववलिङ्गभ्रमस्य लिङ्गांशे तदभावात्तत्परित्यागेनोभयथा प्रमाणभूतत्वाद्वाक्याभासस्यैवाभ्युपगमवादेन स्वशब्देन प्रमाणतयोक्तिर्न तु लिङ्गविभ्रस्येति ध्येयम् ।

स० — **काकतालीये इति** । समासाच्च तद्विषयात् इवार्थविषयात् समासवाक्याच्च छप्रत्ययो भवतीत्यनेन छप्रत्यये तस्य इयाऽऽदेशे काकतालीयेति शब्दनिष्पत्तिः । तथा चात्र काकपदेन काकागमनस्य तालपदेन तालपतनस्य ग्रहणात् काकागमनस्येव तालपतनस्येवेति काकतालीयमित्यर्थो लभ्यत इति भावः । परिणततालफलपतनकाले काकोऽपि तद्वृक्षमाश्रयते । तत्र काकयोगस्य तालपतने अन्वयव्यतिरेकविरहात् यादृच्छिकः काकयोग इति । तथा दैवगत्याऽऽगतविज्ञानं यादृच्छिकं काकतालीयसमं काकतालीयज्ञानमुच्यते । यादृच्छिकं यथार्थज्ञानमेव नास्तीत्याशङ्क्य उदाहरणेनोपपादयति **तथा हीति** । **वराटकाः** कपर्दकाः । **अजाकृपाणीयेति** । अजाशब्देन अजायाः ग्रीवाप्रसारणम्, कृपाणशब्देन कृपाणपतनं ग्राह्यम्। तथा च अजाग्रीवाप्रसारणस्येव कृपाणपतनस्येवेति अजाकृपाणीयः। स चासौ न्यायश्चेत्यर्थः । यथा कण्डूयनार्थं प्रबिल शिथिल)बन्धनखड्गयुक्ते स्तम्भे बद्धया छाग्या ग्रीवाप्रसारणे क्रियमाणे दैवात् तद्ग्रीवायां खड्गे पतिते ग्रीवाच्छेदो भवति । स यथा कादाचित्कस्तद्वदित्यर्थः । **न च निस्साधनमिति** । ज्ञानस्वरूपं न निर्हेतुकम् । भावकार्यस्य सहेतुकत्वनियमात् । नापि याथार्थ्यमस्य निर्हेतुकम् । तथा सति नियामकाभावेन भ्रान्त्यादावपि यथार्थत्वाऽऽपातात् । प्रमायामपि करणसंबन्धनिरपेक्षत्वेन अयथार्थत्वप्रसंगाच्च इत्याशयः । **एवमिति** । दैवगत्या अनलवति शैले बाष्पधूमेन सम्यग्धूमतया परिगृहीतेन अत्र कृशानुरस्तीति यत्र मतिरुत्पद्यते सा तावन्न स्मृतिः । अननुभूतगोचरत्वात् । नापि प्रमा । आभासकरणजन्यत्वात् । न च तत्त्वपदव्यवच्छेद्यता । स्थितवस्तुगोचरत्वात् । तथा च तत्रातिव्याप्तेः(प्तिः) । आदिपदेनार्थापत्त्याद्याभासपरिग्रहः । ननु वक्तुर्ज्ञानस्य संशयरूपत्वे पञ्च वराटकाः अधिका वा इति व्यवहारो भवेत् । एककोटिव्यवहारस्तु

कथमित्यत आह **पाक्षिक इति** । पक्षसंबन्धी पाक्षिकः । पक्षशब्देन कोटिर्ग्राह्या । पञ्चैवेति एकतरकोटिक-व्यवहार इत्यर्थः । **न स्वज्ञाननिबन्धन इति** । पञ्च वराटका इति निश्चयरूपस्वज्ञाननिबन्धनो नेत्यर्थः । ज्ञानमात्रस्याप्रयोजकत्वादिति भावः । **अन्यथेति** । एककोटिव्यवहारस्य ज्ञानाभावे असंभवात् ज्ञाना-भ्युपगम इत्यर्थः । व्यवहारानुसारेण ज्ञानाङ्गीकारे विप्रलम्भकस्य नदीतीरे पञ्च फलानीति व्यवहारस्य दृष्टत्वात् तस्य तथाभूतनिश्चयरूपमेव ज्ञानमङ्गीकार्यम् । विपर्यस्तस्यापि तादृशनिश्चयरूपज्ञानमस्तीति तयोर्भेदो न स्यादिति भावः । ननु शङ्खः श्वेतः शङ्खत्वात् इति विशेषदर्शनाप्रतिबध्यपीतत्वारोपवत् प्रकृतेऽपि पञ्चवराटका इति वक्तृविशेषदर्शनाप्रतिबध्याहार्यारोपस्य सद्भावात् कथं तदव्यवहारस्य ज्ञान-मूलत्वाभावः इत्यपि निरस्तमित्याह **एतेनेति** । विप्रलम्भकस्यापि विपर्यस्ताविशेषप्रसङ्गेनेत्यर्थः ।

**तन्मूलमिति** । यथार्थमिति पूर्वेण संबन्धः । तत्करणमिति वक्तव्ये तन्मूलमिति वचनं तु ज्ञानस्य समूलत्वेन प्रामाण्योपपादनार्थमिति ध्येयम् ॥ **वाक्यं त्विति** । तथा च यादृच्छिकलिङ्गे यः परिहारः स एवात्रापि भविष्यतीति शेषः । **अपरामृष्टत्वादिति** । परामर्शाविषत्वादित्यर्थः । बाध्य-स्यैव करणसन्निकर्षविषयत्वेन परामर्शविषयत्वादिति भावः । **लौकिककरणत्वेऽपीति** । लोकसिद्ध-करणत्वे सत्यपि अस्मदभ्युपगममात्रसिद्धत्वेन अलौकिकपारिभाषिकसाधनत्वस्यैव लक्षणे विवक्षितत्वेन तदभावान्न लक्षणस्यातिव्याप्तिरिति भावः । **अनेनैवेति** । पारिभाषिकसाधनत्वाभावेनैवेत्यर्थः । **तस्येति** । वाक्याभासस्येत्यर्थः । अत्र यथार्थज्ञानजनकत्वस्य लिङ्गाभासे वाक्याभासे च सत्त्वेऽपि वाक्यज्ञानस्य वाक्यांशे केवलत्वेऽपि लिङ्गाभासस्य लिङ्गांशे केवलप्रमाणत्वाभावेन तयोर्वैलक्षण्यं मनसि निधाय वाक्याभासस्यैव ग्रहणम् । **वाक्याभासस्यापि प्रामाण्यप्रसङ्गो निरस्त इति** । न तावत्प्रयोगहेतु-भूतज्ञानसमानविषयकवाक्यस्य तज्ज्ञानस्य वा यथार्थज्ञानसाधनत्वं वक्तुं शक्यम् । प्रयोगहेतुभूतघटा-भावज्ञानस्य घटोऽस्तीति वाक्याभाससमानविषयत्वात् । ततो भिन्नविषयस्यैव तस्य तत्साधनत्वं वाच्यम् । न च तद्युक्तम् । तज्जातीयस्य सर्वत्र साधनत्वाभावादित्युपपादनप्रकारः ।

प० —'यथार्थज्ञानजनकाः' इत्यत्र साधनत्वं विवक्षीकृत्य वक्तुं शङ्कासमाधी आह **नन्वित्यादिना** ॥ **काकतालीय इति** । काकशब्दः काकागमनपरः । तालशब्दः 'फले लुगि'ति तालफलपरः सन् तत्पतन-क्रियापरः । 'समासाच्च तद्विषयादि'तीवार्थे छप्रत्ययान्तोयं काकागमनमिव तालपतनं इव स्थित इत्यर्थः । दैवात्काकागमनवेलायां पक्वतालफलस्य काकभक्षणयोग्यस्य पतनं यथा तथैव करणसामर्थ्यं विना दैवाज्जा-तप्रमारूपज्ञाने तत्करणे चातिव्याप्तिरित्यर्थः । काकागमनतालफलपतनवत् यादृच्छिकं किं तदित्यत आह **पाणावित्यादिना** ॥ **वराटका इति** । कपर्दिका इत्यर्थः ॥ **अजाकृपाणीयेति** । अजाया आगमनवेलायां कृपाणस्य दैवात्पाते सति तद्वधोऽतर्कित एव भवति । तद्वदतर्कितामेव सङ्ख्यामाहेत्यर्थः । पूर्ववदुप-

निष्पत्तिर्ध्येया ॥ **अप्रसङ्गादिति** । तज्ज्ञाने तज्जनके चातिव्याप्त्यप्रसङ्गादित्यर्थः । ननु तस्य संशयत्वे कथं पञ्चत्वपक्षमात्रव्यवहार इत्यत आह **तत्र पाक्षिकेति** । एककोटिव्यवहारो धार्ष्ट्यनिमित्त इत्यर्थः ॥ **अन्यथेति** । व्यवहारबलात्तादृशनिश्चयकल्पने नास्तीति जानन्नपि अस्तीत्यादि वदन् प्रतारकोप्यस्तित्वा-दिनिश्चयवान् स्यात् । तथाच भ्रान्तप्रतारकयोरविशेषः स्यादित्यर्थः ॥ **एतेनेति** । भ्रान्ताविशेष-प्रसङ्गेनेत्यर्थः । पाक्षिकव्यवहारस्यान्यनिमित्तकथनेनेति वाऽर्थः ॥ **वाक्येति** । पञ्चेतिवाक्यजनित इत्यर्थः । इतश्च किमित्यत आह **यादृच्छिकसंवादिलिङ्गविभ्रमवाक्याभासेति** ॥ **अपरामृष्टत्वात्** । परामर्शाविषयत्वादित्यर्थः ॥ **पारिभाषिकेति** । यज्जातीयानन्तरं नियमेन प्रमोत्पत्तिः तादृशसाधनत्वा-भावस्येत्यर्थः ॥ **अनेनेति** । विवक्षितसाधनत्वाभावेन निरस्त इत्यर्थः । कथं न क्षतिः आप्तोक्तत्व-लिङ्गाभावेन तत्र प्रामाण्यज्ञप्तेरयोगात् । आप्तोक्तत्वगुणाभावेन प्रामाण्योत्पत्तेरयोगात् । तथाच प्रामाण्यो-त्पत्तिज्ञप्त्योरयोग एवेत्यत आह **न हीति** । **अस्माकं** स्वतस्त्ववादिनाम् ।

**या०—काकतालीय इति** । काकतालीयं यादृच्छिकसंवादिज्ञानं, तत्रातिव्याप्तिरित्यर्थः । समा-साच्च तद्विषया'दित्यनेनेवार्थविषयात्समासपदादन्यस्मिन्निवार्थे छप्रत्यये तस्येयादेशे च सति काकताली-यम् अजाकृपाणीयमित्यादिरूपनिष्पत्तिरिति द्रष्टव्यम् । काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ । काकस्यागमनं यादृच्छिकं तालस्य च पतनं, तेन पतता तालेन काकस्य वधः । एवं यादृच्छिकं विषयसत्त्वं तत्र दुष्टकरणसन्निपातः । तेन यथार्थज्ञानोत्पत्तिः । तत्र काकागमनं यादृच्छिकविषयसत्त्वस्योपमानम् । तालपतनं दुष्टकरणसन्निपातस्य । तालेन तु यः काकस्य वधः, स यथार्थज्ञानोत्पत्तेः । तथा च काका-गमनमिव तालपतनमिव काकतालम्, काकतालमिव काकतालीयमिति विग्रहः । अत्र यादृच्छिकसद्वि-षयदुष्टकरणयोः सन्निपातः स काकतालसंबन्धसदृशः इत्येक उपमार्थः । यच्च तेन यथार्थज्ञानजन्म तत्काकवधसदृशमिति द्वितीयः । तत्राद्यः समासार्थो द्वितीयः प्रत्ययार्थ इति ज्ञातव्यम् । काकतालादि-शब्दयोरुक्तार्थे समासश्चास्मादेव ज्ञापकात् । यथाऽऽहुः 'इवार्थे काकतालाद्याः समासाः स्युरमी इति । ज्ञाप्यतेऽनेन योगेन प्रत्ययश्च विधीयते' इति । यत्तु खण्डनटीकाकारेणोक्तम् 'परिणततालपतनकाले काको-ऽपि तद्वृक्षमाश्रयते । तत्र काकयोगस्य तालपतनेऽन्वयव्यतिरेकविरहाद्यादृच्छिकः काकयोगः'इति, तथा दैवादागतविज्ञानं यादृच्छिककाकतालीयसमं काकतालीयमित्युच्यत इति । तदुक्तव्याकरणविध्यज्ञानमूल-मित्युपेक्षणीयम् । वराटकाः कपर्दकाः ॥ **अजाकृपाणीयन्यायेनेति** । अत्र न्यायेनेत्युक्त्याऽजाकृपाणीयो देवदत्तवधस्तन्न्यायेनेत्यर्थः । यत्र शिथिलबन्धनकृपाणयुक्तस्तम्भे कण्डूयनार्थमजाया आगमनं यादृच्छिकं, कृपाणस्य च पतनं च, तेन तद्वधः । एवमेव देवदत्तस्य गमनं यादृच्छिकम् । दस्यूनां चोपनिपातः ।

तैश्च वधः अत्र यो देवदत्तस्य दस्यूनां च समागमः सोऽजाकृपाणीसमागमसदृश इत्येक उपमार्थः । यश्च देवदत्तवधः सोऽजावधसदृश इति द्वितीयः । अतो देवदत्तवधोऽजाकृपाणीय इत्युच्यते । तन्न्यायेन युक्तं प्रकृतं पञ्चवराटका इति वाक्यजन्यं ज्ञानम् । प्रयोगमूलं ज्ञानमत्र चोपमार्थद्वयं प्रागेव प्रदर्शितम् । ननु ज्ञानस्य संशयत्वे कथं पञ्चेत्येककोटिकव्यवहार इत्यत आह **तत्र पाक्षिक इति।** एकपक्षावलम्बीत्यर्थः। अत्र पक्षपदेन कोटिरेव विवक्षिता। **वैयात्यं** धाष्टर्यम्॥ **अन्यथेति** ॥ व्यवहारानुरोधेन ज्ञानकल्पन इत्यर्थः। **एतेनेति** । विप्रलम्भकस्यापि व्यवहारानुरोधेन तादृशाहार्यभ्रमकल्पनापत्तौ विप्रलम्भकोऽपि विपर्यस्त एव स्यात्, न विप्रलम्भक इत्युक्तदूषणेनेत्यर्थः । एतेन वैयात्यनिबन्धनत्वव्युत्पादनेनेत्यप्याहुः । **वाक्यजनित-मिति ।** पञ्चेतिवक्तृवाक्यजनितं विज्ञानं यथार्थमेवेत्यर्थः । तर्हि तत्करणं वाक्यं प्रमाणं स्यादित्यत आह **वाक्यं त्विति** । तथाच यादृच्छिकसंवादिनि लिङ्गविभ्रमे यः परिहारः स एवात्रापि भविष्यतीति भावः ॥ **वाक्याभासेति** । भ्रान्तप्रतारकवाक्यजन्यस्येत्यर्थः । जन्यस्येत्यनन्तरं ज्ञानस्येति शेषः । बाष्पस्येत्याद्युक्ति-लिङ्गकरणतापक्षमाश्रित्येति द्रष्टव्यम् । ननु तत्र यादृच्छिकवह्नेः सत्त्वेन तत्कार्यस्य धूमस्याप्यल्पस्य सत्त्वात्कथमसत्त्वमित्यत आह **सत्त्वेऽपीति** । तस्य बाष्पेणाभिभूतस्याज्ञातत्वादित्यर्थः । तथा च यः सन्नल्पो धूमः स बाष्पाभिभूतत्वान्न ज्ञायते । यश्च ज्ञायते स बाष्पारोपितोऽसन्नेवेति भावः ॥ **लौकिकेति** । लोकप्रसिद्धेत्यर्थः । धूमज्ञानस्य सामान्यतो वह्न्यनुमितिं प्रति करणत्वं लोकसिद्धान्वय-व्यतिरेकसिद्धमिति भावः । न च दोषस्य प्रमाप्रतिबन्धकत्वात्कथं दुष्टकरणेन प्रमोत्पत्तिः । विषयस-त्त्वस्य तत्रोत्तेजकतयाऽङ्गीकृतत्वात् ॥ **तथाविधस्येति** । यज्जातीयानन्तरं नियमेन कार्योत्पत्तिः तथाविधस्येत्यर्थः ॥ **अनेन निरस्त इति** । विप्रलम्भकवाक्यजातीयस्य सर्वत्र यथार्थज्ञानजनकत्वा-भावेनेत्यर्थः । नन्वेवं ज्ञातज्ञापकवाक्यादावतिव्याप्तिः तज्जातीयानन्तरं नियमेन यथार्थज्ञानजननादि-त्यरुचेराह **तस्येति** । अनुमानादिकमित्यत्रादिपदेन प्रामाण्योत्पत्तिपरिग्रहः । इदमुपलक्षणम् । यादृच्छिकसंवादिलिङ्गविभ्रमस्यापि प्रामाण्यप्रसङ्गे न काचिदस्माकं क्षतिः । न ह्यस्माकं सल्लिङ्गपरामर्शतया प्रामाण्यानुमानादिकमित्यपि द्रष्टव्यम् । ज्ञातज्ञापकादिवाक्यमप्यस्मन्मते प्रमाणतया सङ्ग्राह्यमेवेति भावः ।

श्री॰—वराटकाः कपर्दिकाः इत्याहुः । **वक्तुर्ज्ञानस्येति** । चक्षुःसन्निकर्षादिप्रमाणजन्यत्वेनेति भावः । **अतिप्रसङ्गात्** तथा च न तज्ज्ञानस्य यथार्थत्वेन केवलत्वं न वा तत्साधनस्यानुप्रमाणत्वमिति नातिव्याप्तिदोषः ॥ **अन्यथेति** । एकपक्षावलम्बिव्यवहारस्य तथाज्ञानाभावेऽसंभवात्तदनुसारेण ज्ञान-स्याप्यभ्युपगम इत्यर्थः । तथा च नदीतीरे न सन्ति फलानीति ज्ञात्वा विप्रलम्भार्थं सन्तीति

व्यवहरति । ततश्च तस्यापि तदनुरोधेन सन्तीति ज्ञानं कल्प्यं स्यात् । ओमिति चेत् । तर्हि फलाभावेऽपि तेषां सत्त्वेन ज्ञानं भ्रान्तस्याप्यस्तीति विप्रलम्भकभ्रान्तयोर्विशेषो न स्यात् । तदर्थं **विप्रलम्भके** व्यवहारानुरोधेन भ्रान्त इव ज्ञानं न कल्पनीयं तद्वत्प्रकृतेऽपीति नोक्तदोष इति भावः । **एवमेव प्रमाणमेव । वाक्यं त्विति** । तथा यादृच्छिकलिङ्गे यः परिहारः स एवात्रापि भविष्यतीति शेषः । **वाक्याभासो** भ्रान्तप्रतारकवाक्यम् । **जन्यस्य ज्ञानस्य । बाष्पतया** इदं बाष्पमिति बाष्पत्वेन ज्ञातस्येत्यर्थः । **असतो** धूमस्य । **सत्त्वेऽपि** धूमस्य । **अपरामृष्टत्वात्** परामर्शाविषयत्वात् धूमत्वेनाज्ञातत्वादिति भावः । **बाष्पविषयस्य** तदधिष्ठानकस्येत्यर्थः ॥ **धूमेति** । धूमप्रकारकेत्यर्थः । लिङ्गज्ञानं करणमिति मतेनेदं मन्तव्यम् । वक्तव्यमित्यत्र यथार्थज्ञानसाधनत्वमिति वर्तते । **तज्जातीयस्य** एतादृशभ्रमजातीयस्य ॥ **तथाविधस्यैवेति** । यज्जातीयानन्तरं नियमेन कार्योत्पत्तिस्तादृशस्यैवेत्यर्थः । **तथासति** लिङ्गविभ्रमस्याकरणत्वे सति ॥ **लौकिकेति** । लोकदृष्टेत्यर्थः ॥ **पारिभाषिकेति** । यज्जातीयानन्तरमित्यादिना निरुक्तेत्यर्थः । **अनेन** पारिभाषिकसाधनत्वाभावेन । **तस्य** वाक्याभासस्य । लिङ्गविभ्रमस्य च । आप्तोक्ततयेत्युपलक्षणम् । सल्लिङ्गपरामर्शेन चेत्यपि द्रष्टव्यम् ।

**च० — काकतालीये** दैववशसंपन्नसंपादिनि । **अजाकृपाणीयन्यायेनेति** । यादृच्छिकमजाया आगमनं कृपाणस्य च पतनं तज्जनिताजावधसदृशो देवदत्तवधोऽजाकृपाणीयस्तन्यायेनेत्यर्थः ।

**सु० — यद्वा निर्दोषतया साधनं विशिष्यते । निर्दोषता च लिङ्गज्ञानादेर्यथार्थत्वादिलक्षणा व्याख्येया । तथात्वे निर्दोषं ज्ञानसाधनमनुप्रमाणमित्येवास्तु । कृतं यथार्थेति ज्ञानविशेषणेनेति चेत् (न) । तत्फलितार्थस्यैव निर्दोषग्रहणेन वर्णितत्वात् । निर्दोषकरणजं ज्ञानं याथार्थ्यं न व्यभिचरतीति स्वरूपकथनं वा तदिति ।**

**शे० —** ननु तथाऽपि ज्ञातज्ञापकवाक्यादावतिव्याप्तिरपरिहार्या । तथा हि । **तज्जातीयस्य** सर्वत्र यथार्थज्ञानसाधनत्वस्यापि सत्त्वेन पारिभाषिकसाधनत्वविवक्षयाऽपि लिङ्गभ्रमादाविव तत्परिहारासम्भवात् । न च ज्ञातज्ञापकवाक्यादेरलक्ष्यत्वमेव नास्ति तथा सति स्मृत्यनुवादयोर्नाप्रामाण्यमित्यादिविरोधापातात्तत्कथं तत्रातिव्याप्तिशङ्कावकाश इति वाच्यम् । अयथार्थज्ञानसाधनत्वाभावमात्रस्यैव तत्र विवक्षितत्वात् । न च तावता वाक्यस्य प्रामाण्यम् । तज्जन्यज्ञानस्य यथार्थत्वनियमेऽपि वाक्यस्य दुष्टत्वेन भ्रान्तप्रतारकवाक्यवदप्रमाणत्वादत एव पद्धत्यादौ निर्दोषः शब्द आगम इत्यत्र निर्दोषग्रहणेन ज्ञातज्ञापकादिवाक्यमागमाद्बहिष्कृतमित्यतो नेदमनुप्रमाणलक्षणं युक्तमित्यस्वरसादाह **यद्वेति** । नन्वेवम-

पि नातिव्याप्तिपरिहारः । लिङ्गविभ्रमादेर्दोषजन्यत्वेऽपि स्वयं निर्दोषत्वादित्यत आह **निर्दोषता चेति** । आद्येनादिपदेन वाक्याभासस्य परिग्रहः । द्वितीयेन चाप्तिमूलत्वादिपरिग्रहः ॥ **तत्फलितार्थस्यैवेति** । ज्ञानविशेषणीभूतयथार्थपदमहिम्नैव साधनस्य निर्दोषत्वविवक्षाया लब्धत्वेन न तस्याः स्वोपजीव्यविशेषण-वैयर्थ्यापादकत्वमिति भावः । ननु च याहच्छिकसंवादिलिङ्गविभ्रमस्थल एव सत्यपि ज्ञानयाथार्थ्ये करणनिर्दोषत्वाभावेन व्यभिचारात्कथं तेन तल्लाभ इत्यत आह **निर्दोषेति** ॥ **तदिति** । यथार्थत्वरूपं ज्ञानविशेषणमित्यर्थः । एवञ्च निर्दोषत्वे सति ज्ञेयविषयीकारित्वमेव प्रमाणसामान्यलक्षणं विवक्षितमिति न तस्य ज्ञातज्ञापकादावतिव्याप्तिरिति द्रष्टव्यम् ।

**प०** — प्रमाण्याप्तत्वादिरूपनिर्दोषत्वं याहच्छिकेप्यस्तीत्यत आह **निर्दोषता चेति** । यथार्थ-त्वाप्तोक्तत्वलक्षणेत्यर्थ ॥ **तत्फलितार्थस्येति** । तथा च निर्दोषपदे दत्ते तत्र देयमित्यर्थः ॥ **तदिति** । ज्ञाने याथार्थ्यकथनमित्यर्थः ।

**या०** — ननु याहच्छिकसंवादिलिङ्गविभ्रमादेरनुप्रमाणतया सङ्ग्राह्यत्वे तस्य प्रत्यक्षादिष्व-न्तर्भावो वाच्यः । न चासौ सम्भवति । तल्लक्षणानां तत्रासम्भवादतो न तदनुप्रमाणमित्यरुच्याऽऽह **यद्वेति** । ननु करणे निर्दोषत्वं नाम फलाव्यभिचारित्वं वा, तदविनाभूतं वा, किञ्चिद्वक्तव्यम् । तदुभयं च याहच्छिकसंवादिनि लिङ्गविभ्रमादावस्तीत्यतिव्याप्तितादवस्थ्यमित्यत आह **निर्दोषता चेति** । आद्येनादिपदेन वाक्याभासपरिग्रहः । द्वितीयेनाप्तिमूलकत्वादिपरिग्रहः ॥ **तत्फलितार्थस्येति** । याथार्थ्यपदमहिम्नैव साधने निर्दोषत्वं लब्धम् अतो न ज्ञाने याथार्थ्यं पृथग्विशेषणं विवक्षितं येन वैयर्थ्यं स्यादिति भावः । ज्ञानविशेषणेन याथार्थ्येन करणे निर्दोषतालाभो न शाब्द इत्यरुचेराह **स्वरूपकथन-मिति** । एवं प्रमाणसामान्यलक्षणेऽपि निर्दोषत्वेन ज्ञेयविषयीकारि विशेषणीयम् । अन्यथोक्तातिव्याप्तेरप-रिहारादिति द्रष्टव्यम्

**श्री०** — यथार्थपदमहिम्नैवैषोऽर्थो लभ्यत इत्याह **तत्फलितेति** ।

**सु०** — **ननु दर्शनान्तरोक्ते लक्षणे सति किमपूर्वनिर्माणेनेत्यत आह** प्रामाण्यमिति ।

**अनु०** — प्रामाण्यं नानुवादस्य स्मृतेरपि विहीयते ॥

याथार्थ्यमेव प्रामाण्यशब्दार्थो यद्विवक्षितः ॥

**यद्यदा याथार्थ्यमेव प्रामाण्यशब्दार्थो विवक्षितो भवति तदैव यथार्थयोः स्मृत्यनु-वादयोः प्रामाण्यं न हीयते । दर्शनान्तरोक्तलक्षणकक्षीकारे तु, तैः स्वलक्षणस्य व्यापकतया**

**अङ्गीकृतत्वात् । स्मृत्यादौ तदभावात्प्रामाण्याभाव एव प्रसज्यत इति युक्तं तदनादरेण लक्षणान्तरनिर्माणमिति ।**

**तथा हि अनधिगतार्थगन्तृ प्रमाणमिति मीमांसकाकोक्तस्य लक्षणस्य स्मृत्यादावभावः स्फुटः । तस्याधिगतगोचरत्वात् ॥ अनुभूतिः प्रमाणमिति प्राभाकरो(भास्करो)क्तं लक्षणमपि न तत्रास्ति । स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिरिति निर्वचनात् । तथा प्रमाव्याप्तं प्रमाणं प्रमाकरणं प्रमाणमिति नैयायिकोक्तमपि । तैरपि यथार्थानुभवः प्रमेति व्याख्यातत्वात् । अत एव प्रमासामग्री माणमिति निरस्तम् । अविसंवादिविज्ञानं प्रमाणमिति सौगतोक्तमपि । तदभिप्रेतस्यार्थजत्वादेरविसंवादस्याभावात्स्मृत्यादेरव्यापकम् ॥ स्वापूर्वार्थव्यवसायात्मकं ज्ञानं प्रमाणमिति जैनोक्तमपि न स्मृत्यादौ वर्तते । तस्यापूर्वार्थविषयत्वाभावात् । ननु स्मृतिरपूर्वार्थविषया । तदित्युल्लेखात् । तस्य चानुभवेनाविषयीकरणादिति चेत् (न) । तथा सत्यपूर्वग्रहणस्य व्यवच्छेद्याभावप्रसङ्गात् । धारावाहिकं तद्व्यवच्छेद्यमिति चेन्न । अनेकान्त(ता)वादे पदार्थानां क्षणिकत्वस्याङ्गीकृतत्वेन धारावाहिके(कविभ्रमे)ऽप्येवमपूर्वार्थताऽभ्युपगमसौलभ्यात् । मा भूद्वाऽत्र स्मृतिप्रामाण्यहानिर्दोषः । धारावाहिके तु तद्धानिरवर्जनीया । तदपि स्मृत्यनुवादपदाभ्यामुपलक्ष्यत इति ।**

शे० — ननु 'प्रामाण्यं नानुवादस्ये'त्यादिमूलमनर्थकम् । न चैतत्परोक्तलक्षणानां तत्राव्याप्तिप्रतिपादनद्वाराऽऽभासत्वव्युत्पादनार्थत्वान्नानर्थकमिति वाच्यम् । तद्व्युत्पादनस्याप्यनर्थकत्वादित्यतोऽपूर्वस्वकीयलक्षणप्रणयनानर्थक्यशङ्कापरिहारार्थत्वादाभासत्वव्युत्पादनस्य नानर्थक्यमित्याशयवानानर्थक्यशङ्कानिवर्तकतयोत्तरमूलं योजयितुं तदानर्थक्यशङ्कामुत्थापयति **नन्विति**। लक्षणान्तरनिर्माणे हेतुभूतपरकीयलक्षणाव्याप्तिदोषस्य मूलारूढतायै यदित्यस्य यदेत्यर्थं तद्बलात्तदेत्यस्य लाभमेवशब्दाध्याहारं चाभिप्रेत्य प्रामाण्यविघा हेतुं वदन्वाक्यं योजयति **यद्यदेत्यादिना** । यथार्थयोरिति स्मृत्यनुवादविशेषणं तु तत्र लक्षणोपपादनार्थमयथार्थस्मृत्यनुवादव्यावृत्त्यर्थं वेति द्रष्टव्यम् । तदैवेत्येवशब्दलभ्यमर्थं दर्शयन्नुक्तमेव विवृणोति **दर्शनान्तरेति** ॥ **व्यापकतयेति** । प्रामाण्यव्यापकतयेत्यर्थः । अव्याप्तेर्लक्षणदोषत्वाङ्गीकारादिति भावः । लिङ्गतया लक्षणस्योपयोगित्वेन लक्षणस्य तद्व्याप्यत्वमेवापेक्षितं न तु तद्व्यापकत्वमप्यत **एवाव्याप्तिर्न** लक्षणदोष इति स्वमतवैलक्षण्यं परमतस्य दर्शयितुं तैरित्युक्तम् ॥ **प्रसज्यत इति** । व्यापकाभावे व्याप्याभावस्यावश्यकत्वादिति भावः ॥ **तस्येति** । स्मृत्यादेरित्यर्थः । प्रतिपत्त्यनुबन्धितया स्मृतेः व्यापारानुबन्धितयाऽनुवादस्य चाऽधिगतार्थगोचरत्वादित्याशयः ॥ **प्रमाव्याप्तमिति** । प्रमया नियतसम्बन्धवदि-

त्यर्थः ॥ **अपीति** । न तत्रास्तीति वर्तते । तत्कथमित्यतः किमत्र करणादित्वेन स्मृतेः सङ्ग्रहोऽभिमतः किंवा प्रमारूपत्वेन । नाद्यः । स्मृतेः प्रमाकरणत्वाद्यभावादिति मनसि निधाय द्वितीयं दूषयति **तैरपीति** । तथा च प्रमारूपफलतयाऽपि न तस्याः सङ्ग्रह इत्याशयः ॥ **अत एवेति** । उक्तरीत्या प्रमासामग्री-स्वप्रमात्वायोगेन करणतया फलतया वोक्तलक्षणानाक्रान्तत्वादेवेत्यर्थः ॥ **अर्थजत्वादेरिति** । अर्थेन स्वलक्षणेन क्रियाया ज्ञानरूपायाः स्थितिरुत्पत्तिरिति अर्थक्रियास्थितिरविसंवादनमिति तद्वचनार्थ इत्येक-देशमतमनुरुध्यार्थजत्वग्रहणम् । आदिपदेनचार्थेन स्वलक्षणेन क्रियाया ज्ञानरूपायाः स्थितिर्निरूपणमर्थ-विषयकत्वमुच्यत इति तद्वचनार्थतया तदेकदेश्यन्तराभ्युपगतस्यार्थविषयत्वस्य परिग्रहः । शुद्धवस्त्वात्म-कार्थजत्वादेः स्वरूपमात्रावगाहिनिर्विकल्पकमात्रनिष्ठत्वेन विशिष्टाकारावगाहिसविकल्पकानिष्ठत्वेन तादृ-शस्मृत्यादेरपि तदभाव एव । यद्यपि निर्विकल्पकद्वारा स्मृत्यादेरपि स्वलक्षणजन्यत्वादिकमस्ति । तथाऽपि न तत्परस्याभिमतम् । तथा सति सविकल्पकस्यापि तद्द्वारा स्वलक्षणजन्यत्वसम्भवेन प्रामाण्यप्रसंगात् । किन्त्वाहत्य तज्जन्यत्वमेव । तच्च सविकल्पकवत्स्मृत्यादावपि नास्तीत्यभिप्रायेणेदमुक्तमत एव तदभिप्रेत-स्येति पूर्वमुक्तमिति ध्येयम् ॥ **स्वापूर्वेति** । स्वस्य प्रमातुरपूर्वो योऽर्थः स्वेन पूर्वमज्ञात इति यावत् । तद्विषयकव्यवसायात्मकमित्यर्थः । अत्र यस्यकस्यचिदर्थस्य येनकेनचित्पूर्वं ज्ञातत्वेनापूर्वत्वाभावादसम्भवः स्यात् । तत्परिहारार्थं स्वपदम् । **तस्येति** । स्मृत्यादेरनुभूतार्थव्यवसायात्मकत्वान्नापूर्वार्थविषयकत्वं तस्येत्यर्थः ॥ **तस्य चेति** । तत्ताविशिष्टस्येत्यर्थः । इदं चानुभवदेशकालसम्बन्धध्वंस एव तत्ता न त्वनुभवदेशकालसंबन्ध इत्यभिप्रेत्योक्तमित्यवधेयम् । अर्थव्यवसायात्मकत्वस्य स्मृतिसाधारणत्वात्तद्व्या-वृत्तये खल्वत्रापूर्वग्रहणम् । तत्र यदि स्मृतेरप्यपूर्वार्थग्राहकत्वं तदाऽपूर्वग्रहणेन स्मृतिव्यावर्तनासंभवादर्थ-व्यवसायात्मकत्वमेव लक्षणमस्तु कृतमर्थविशेषणेनापूर्वत्वेनेति परिहरति **तथा सतीति** । स्मृतेरपूर्वार्थ-व्यवसायात्मकत्वान्न तत्राव्याप्तिः । व्यवच्छेद्यान्तरस्य सत्त्वान्नापूर्वग्रहणवैयर्थ्यमपीति शङ्कते **धारावा-हिकमिति** ॥ **अनैकान्तवाद इति** । सप्तभङ्गिनय इत्यर्थः ॥ **क्षणिकत्वस्येति** । क्षणिकत्ववादिभि-र्विश्वस्य प्रमाणैः क्षणिकत्वस्य प्रतिष्ठापितत्वात्तदनङ्गीकारे दोषाणां चोक्तत्वेन विश्वस्य क्षणिकत्वानङ्गीकारे तदुपन्यस्तप्रमाणोपरोधस्य तदुपन्यस्तदूषणानुषङ्गस्य च प्रसक्त्या तत्प्रमाणानुसरणार्थं तद्दूषणपरिहारार्थं च विश्वस्य क्षणिकत्वं परेणाङ्गीकृतमिति भावः ॥ **एवमिति** । स्मृतिवदित्यर्थः । अयं घट इत्युल्लेखात्तस्य च पूर्वक्षणेऽसत्त्वेन वर्तमानमात्रग्राहिणा प्रत्यक्षेणाविषयीकरणात्ततश्च धारावाहिकस्याप्यपूर्वार्थविषयकत्वे-नापूर्वग्रहणव्यवच्छेद्यत्वमिति भावः । वस्तुस्थितिकथनमात्रं चेदम् । वस्तुतस्तु धारावाहिकस्यापूर्व-ग्रहणव्यवच्छेद्यत्वेऽपि नास्माकं काचित्क्षतिः । न चैवं स्मृतेरपूर्वार्थविषयकत्वप्राप्त्योक्तलक्षणस्य तत्र सत्त्वान्न पूर्वोद्भाविताव्याप्तिरस्य लक्षणस्येति कथं न क्षतिरिति वाच्यम् । उदाहरणस्यानादरणीयत्वेनैत-

लक्षणस्य स्मृत्यादावव्याप्त्यभावेऽपि धारावाहिकस्यापूर्वग्रहणव्यवच्छेद्यतायामुक्तलक्षणस्य तत्रासत्त्वप्रसक्त्या तत्राव्याप्तेरवर्जनीयतया तदनादरेण लक्षणान्तरनिर्माणोपपत्तिरित्याशयवानाह **मा भूदेति** । तर्हि दर्शनान्तरोक्तलक्षणानां स्मृत्यनुवादयोरव्याप्तिप्रदर्शनपरभाष्यानुपपत्तिरित्यतो भाष्यस्थस्मृत्यनुवादपदयोर्धारावाहिकोपलक्षकत्वेन स्मृत्यनुवादमात्रपरत्वाभावान्नानुपपत्तिरित्याह **तदपीति** । अत्र यद्यपि स्मृतिपदस्यैव वाऽनुवादपदस्यैव वा धारावाहिकोपलक्षकत्वाङ्गीकारेऽपि भवत्येव चेष्टसिद्धिस्तथाऽपि विनिगमनविरहादुभयत्र लक्षणाश्रयणमेति ध्येयम् ।

**स०** ननु स्मृत्यादौ प्रमाणलक्षणाभावेऽपि तदतिरिक्तस्थले सत्त्वेन तस्य च लिङ्गतयोपयुक्तत्वेन लिङ्गत्वस्य व्याप्यत्वमात्रेण संभवात् अव्याप्तिः कथं दोषत्वेनोच्यते इत्यत आह **तैः स्वलक्षणस्येति** । अनधिगतार्थगन्तृत्वादेः प्रामाण्यज्ञापकत्वस्याङ्गीकृतत्वादित्यर्थः । एतच्चोत्तरत्र स्पष्टम् । **अत एवेति** । प्रमासामग्री प्रमाणमिति लक्षणेऽपि प्रविष्टायाः प्रमायाः यथार्थानुभवः प्रमेति परैर्व्याख्यातत्वादेवेत्यर्थः । **अर्थजत्वादेरिति** । शुद्धं वस्तु अर्थशब्देन गृह्यते । तज्जत्वस्य निर्विकल्पकेऽङ्गीकृतत्वेन स्मृतेश्च विशिष्टज्ञानरूपत्वेन तस्यां तदभावो ज्ञातव्यः । आदिशब्देन प्रवृत्तिसामर्थ्यादिकं ग्राह्यम् । **स्वापूर्वार्थेति** । स्वेनान्येन वाऽज्ञात इत्यर्थः । **अनेकान्ततावाद इति** ॥ सप्तभङ्गिवाद इत्यर्थः । ननु सप्तभङ्गिवादे स्थायित्वस्याप्यङ्गीकृतत्वेन तत् कथं धारावाहिके अपूर्वार्थाभ्युपगमतासौलभ्यमित्यत आह **तदपीति** ।

**प०— व्यापकतयेति** । लक्ष्ये व्याप्त्या वर्तमानत्वेनेत्यर्थः ॥ **अनधिगतार्थगन्त्रिति** । अज्ञातार्थविषयकमित्यर्थः ॥ **प्रमाव्याप्तम्** नियमेन प्रमाजनकम् ॥ **नैयायिकोक्तमपीति** । लक्षणं न तत्रास्तीत्यनुषङ्गः ॥ **सौगतोक्तमपीति** । लक्षणं न तत्रास्तीत्यनुषङ्गः ॥ **अर्थजत्वादेरिति** । निर्विकल्पकरूपार्थजत्वतादृशार्थविषयकत्वयोरित्यर्थः । स्मृत्यादेर्विशिष्टार्थविषयकत्वादिति भावः ॥ **स्वापूर्वेति** । येन पुंसा योऽर्थः पूर्वं न ज्ञातः तस्य तदर्थविषयकनिश्चय इत्यर्थः ॥ तेन पुमन्तरेण ज्ञातस्यापि पुमन्तरेणाज्ञातत्वात्तद्विषयज्ञानं ज्ञातृपुरुषस्य प्रमाणत्वाप्रसङ्गः ॥ **तस्य चेति** । देशकालयोः व्यवहितत्वरूपतत्त्वस्येत्यर्थः ॥ **अनेकान्ततावाद इति** । अनियतानेकस्वभावस्वीकारवादे क्षणिकत्ववायुक्तक्षणिकत्वस्याप्यङ्गीकृतत्वादिति भावः । मूलकृतेदं नोक्तमित्यत आह **स्मृत्यनुवादपदाभ्यामिति** ।

**या०— तैः स्वलक्षणस्येति** । लक्ष्यतावच्छेदकव्यापकताया अङ्गीकृतत्वादिति भावः । स्वमते तु लिङ्गतया हि लक्षणमुपयुज्यत इत्यादिना तद्व्याप्यत्वमेवापेक्षितं न व्यापकमपीत्युक्तत्वादव्याप्तिर्न

दोषायेति भावः ॥ **अर्थजत्वादेरिति** । आदिपदेनार्थविषयत्वसङ्ग्रहः । तथा च शुद्धवस्त्वात्मकार्थजन्यत्वादिकं रूपमसंवादिनिर्विकल्पक एव साक्षादस्ति नान्यत्रेति तैरङ्गीकृतत्वादिति भावः । **स्वापूर्वार्थेति** । स्वस्य ज्ञातुरपूर्वः पूर्वमज्ञातो योऽर्थस्तद्व्यवसायात्मकमित्यर्थः । स्वपदत्यागे सर्वस्याप्यर्थस्य केनचित्पूर्वं ज्ञातत्वेनापूर्वत्वाभावादसम्भवः स्यादतः स्वेत्युक्तम् ॥ **तस्य चेति** । तत्ताविशिष्टस्य चेत्यर्थः । इदं चानुभवदेशकालसम्बन्धध्वंस एव तत्ता नानुभवदेशकालसम्बन्ध इत्यभिप्रेत्य ॥ **अनेकान्ततावाद इति** । अनियतवाद इत्यर्थः । तैस्तैर्वादिभिरङ्गीकृतानां स्थायित्वक्षणिकत्वादीनां पदार्थस्वभावानां सप्तभङ्गि जगदिति वदद्भिर्जैनैः सर्वत्राङ्गीकृतत्वादिति भावः । ननु मूलानुक्तं कथमिदमुक्तमित्यत आह **तदपीति** । यद्यप्येकस्यैव पदस्योपलक्षकत्वाङ्गीकारे भवतीष्टसिद्धिः । तथाऽपि विनिगमनाविरहादुभयोरपि लक्षकत्वमित्यभिप्रेत्य द्विवचनमिति ज्ञातव्यम् । एवम् एवंजातीये सर्वत्र द्रष्टव्यम् ।

**श्री०— स्वेति** । स्वकीयेत्यर्थः । **व्यापकतया** लक्ष्यतावच्छेदकव्यापकतया ॥ **तदिति** । व्यापकीभूतस्य लक्षणस्येत्यर्थः । **प्रामाण्याभावो** व्याप्यभूत इत्यर्थः । नैयायिकोक्तमपि न तत्रास्तीत्यनुवर्तते ॥ **अत एवेति** । लक्षणान्तर्गतप्रमाया यथार्थानुभवः प्रमेति परैर्व्याख्यातत्वादेवेत्यर्थः ॥ **अर्थजत्वेति** । शुद्धवस्तुन एवार्थत्वात्तज्जन्यत्वस्य निर्विकल्पक एव सत्त्वेन स्मृतेश्च विशिष्टज्ञानरूपत्वेन तदनङ्गीकारादिति भावः ॥ **स्वापूर्वेति** । अनधिगतार्थनिश्चयात्मकेत्यर्थः । **तस्य** तत्त्वस्य । तत्ताया इति यावत् ॥ **तदिति** । अपूर्वपदेनेत्यर्थः । **सौलभ्यात्** पूर्वोत्तरज्ञानविषयीभूतवस्तुनोर्भिन्नत्वादिति हृदयम् । अस्तु वाऽपूर्वग्रहणेन धारावाहिकमेव व्यवच्छेद्यम् । ननु तर्हि स्मृतिप्रामाण्यस्यैतल्लक्षणेन संगृहीततया भवदभिलषितसिद्धेरिदमेवाद्रियतामिति चेत् । सत्यम् । अथाऽपि मीमांसकादिलक्षणमिवेदं जैनलक्षणं न स्मृतिप्रामाण्यप्रच्युतिभीत्या नाद्रियते, किन्नाम धारावाहिकस्य तैर्लक्षणेन व्यावर्तितत्वेनासङ्गृहीतत्वात्तत्प्रामाण्यसङ्ग्रहायेदमपूर्वलक्षणनिर्माणमिति वदामः । तर्ह्याचार्यैः 'प्रामाण्यं नानुवादस्य स्मृतेरपी'ति द्वयमेव कस्मादुक्तमिति चेत् । सत्यम् । तदपि धारावाहिकमनुव्याख्याने उपलक्षणीयमित्याह **मा भूद्देत्यादिना** । **तद्धानिः** प्रामाण्यहानिः ।

**च०— अधिगतगोचरत्वात्** पूर्वानुभवविषयीकृतार्थविषयकत्वात् । **स्वापूर्वेति** । यादृशार्थं यो नाज्ञासीत्तस्य तादृशार्थविषयनिश्चय इत्यर्थः । **अनेकान्ततावाद इति** । अनियतवाद इत्यर्थः । सप्तभङ्गि जगदिति वाद इति यावत् ।

तु० ननु भवत्पक्षेऽपि स्मृतेः प्रामाण्यं हीयत एव । तस्या याथार्थ्याभावात् । न हि यादृशोऽर्थः स्मर्यते यदा, तादृश एवासौ तदा । पूर्वावस्थाया वर्तमाने निवृत्तत्वात् । अनिवृत्तौ हि पूर्वतैव न स्यात । न च निवृत्तपूर्वावस्थतयैव तमर्थं स्मृतिरालम्बते । पूर्वावस्थानिवृत्तावनुभवाप्रवृत्तेः । ननु समानविषयत्वेऽपि स्मृत्यनुभवयोरनुभवो यथार्थो न तु स्मृतिरिति कुत एतत् । अनुभवकाले तस्यार्थस्य तादवस्थ्यात् । स्मृतिकाले त्वतादवस्थ्यात् । ननु पूर्वं तावत्तदवस्थ एवासावासीदेतावतैव ज्ञानमस्तु यथार्थम् । न । पाकरक्तेऽपि श्यामताप्रत्ययस्य यथार्थत्वप्रसङ्गात् । नन्वतीतश्यामताप्रत्ययस्तत्र यथार्थ एव । सत्यम् । तद्विषयस्य तदानीमेव तदवस्थत्वात् । न तु स्मर्यमाणावस्थस्तदानीं तदवस्थः । तस्मात्स्मृतिरयथार्थैव ।

मैवम् । अपसिद्धान्तापातात् । तथा हि । उपलब्धिहेतुः प्रमाणमित्यत्र संशयादावतिव्याप्तिमाशङ्क्य प्रकृतयाथार्थ्येनोपलब्धिर्विशेषिता । तस्यापि स्मृतिहेतावतिव्याप्तिमाशङ्क्योपलब्धिशब्दोऽनुभववचनो न ज्ञानसामान्यवचन इत्युक्तं वाचस्पतिना । तेन ज्ञायते तेनाभ्युपगतं स्मृतेर्याथार्थ्यमिति । अन्यथा याथार्थ्येन स्मृतौ व्यावृत्तायां पुनर्न शङ्केत । शङ्कमानो वा तमेव परिहारमनतिदिशन्नुपलब्धिपदमनुभूतिपरतया न व्याकुर्यात् । यथार्थानुभवः प्रमा सम्यगनुभवसाधनं प्रमाणमित्यादीनि न्यायविदां वचनान्यपीममेवार्थमवगमयन्ति अन्यथा व्यङ्गविकलत्वात्स्मृतेरनुभवपदव्यावर्त्यता न स्यात् ।

काणादैरपि प्रत्यक्षलैङ्गिकस्मृत्यार्षभेदेन विद्याचातुर्विध्यमङ्गीकुर्वाणैर्यथार्थत्वं स्मृतेरङ्गीकृतम् ।

यदपि 'न हि (यदा) यो यादृश' इत्यादि, तदनेन किमुक्तं भवति । स्मरणकालेऽर्थस्य तदवस्थत्वाभावादयाथार्थ्यं स्मृतेरिति वा, पूर्वावस्थानिवृत्तेरविषयीकरणादिति वा, अनिवृत्तपूर्वावस्थत्वेन विषयीकरणादिति वा । आद्येऽतीतानागतविषयानुमानागमप्रामाण्यप्रच्युतिः । अतीतादिविषयस्य तदानीमसत्त्वात् । द्वितीये सर्वप्रमाणाप्रामाण्यप्रसङ्गः । कस्यापि सर्वात्मना विषयीकरणाभावात् । तृतीये त्वसिद्धिः । न ह्यनिवृत्ततदवस्थोऽसाविति स्मृतिरालम्बते । किन्तु तदाऽसौ तादृश इति । तदवस्थानिवृत्त्यनिवृत्त्योस्तूदासीनैव ।

नन्वनुभवेन 'तदा(ऽसौ) तादृश' इत्यविषयीकृतं तथा विषयीकुर्वाणाः कथं याथार्थ्यं लभन्त इति चेत् न । स्यादिदम् यद्यनुभवानुसारित्वं याथार्थ्यमिति वदामः । अर्थानुसारित्वं तु तथेत्युक्तम् । अनुभवेऽन्याकारे कुतस्त्योऽयं स्मृतेरन्याकार इति चेत् । किमयं नास्तीत्यभिमानः, उत निर्हेतुक इति वा, यद्वा प्रश्नमात्रम् । नाद्यः साक्षिसिद्धत्वात् । न द्वितीयः

व्याघातात् । तृतीयेऽनुभवस्यापि कुतस्त्यः । स्वहेतुसमासादित इति चेत्तुल्यम् । यदि च संस्कारमात्रजन्यता स्मृतेः स्यात् । (स्यात्त) तदा कथञ्चिद्वैसादृश्यानुपपत्तिः । मानसं तद्धि विज्ञानमिति वक्ष्यते । तस्माद्वैयात्यमात्रनिमित्तं स्मृतियाथार्थ्यनिराकरणम् । तथा च स्मृत्यनुवादप्रामाण्यसंग्रहाय लक्षणान्तररचनमिति सूक्तम् ।

शे० — एवं यदा याथार्थ्यं प्रामाण्यशब्दार्थो विवक्षितस्तदैव स्मृत्यादेः प्रामाण्यं न हीयत इत्यत्रावधारणेनोक्तं परोक्तलक्षणैः स्मृत्यादीनामसंग्रहमुपपादयेदानीं यदा विवक्षितस्तदा न हीयत इत्यनेनोक्तं स्वोक्तलक्षणेन स्मृत्यादीनां संग्रहमुपपादयितुं शङ्कते **नन्विति** । कुतो न तस्या याथार्थ्यमित्यत उदयनीयनिबन्धोक्ततद्याथार्थ्याक्षेपसमाधानाय तदाक्षेपप्रकारमनुवदति **न हीति** । स घट इति स्मृत्या पूर्वावस्थाविशिष्टो घटो विषयीक्रियते । घटोऽयमिति वर्तमानविषयकानुभवजन्यत्वात्स्मृतेः । न च स्मृतिकाले पूर्वावस्था वर्तमाना येन तस्या याथार्थ्यं स्यादित्यर्थः ॥ **पूर्वतैवेति** । वर्तमानध्वंसप्रतियोगिन एव पूर्वत्वादित्यर्थः ॥ **अनुभवाप्रवृत्तेरिति** । अननुभूते चार्थे स्मृतेरप्रवृत्तेरिति भावः । यथार्थ इत्यादिपुल्लिङ्गाद्युपपादनं यथार्था युक्तय इत्यत्रेव द्रष्टव्यम् ॥ **कुत एतदिति** । स्मृत्यनुभवयोरन्यूनानतिरिक्तविषयत्वाद्विषयनिबन्धनत्वाच्च प्रमात्वस्य स्मृतेरेवाप्रमात्वं न त्वनुभवस्येति कुत इत्यर्थः । परिहरति **अनुभवेति** । घटोऽयमित्यनुभवकाले घटस्य वर्तमानत्वात् स्मृतिकाले चावर्तमानत्वात्तुल्यविषयेऽप्यनुभवस्मृत्योर्वैषम्यमित्यर्थः ॥ **नन्विति** । पूर्वं वर्तमानैव पूर्वावस्थाऽऽसीदित्यत एव स्मृतिस्तद्वर्तमानत्वविषयाऽपि यथार्था स्यादित्यर्थः । **पाकरक्त इति** । यदि यदाकदाचिद्वर्तमानत्वेनैवातीतस्यापि वर्तमानत्वप्रतीतिर्यथार्था स्यादिति शेषः । पाकरागकालीनश्यामत्वानुभवकाले घटस्य श्यामत्वाभावेऽपि पूर्वं श्यामत्वादिति भावः । ननु पाकरक्ते इदानीमयं श्याम इति न प्रतीतिरास्त, किन्तु श्याम इत्येव तत्र प्रतीतिः । सा च यथार्थैव । अतीतश्यामताया एव तद्विषयत्वादिति शङ्कते **नन्विति** । एवञ्चातीता पूर्वावस्था स्मृत्या न स्वकाले वर्तमानत्वेन विषयीक्रियते येनैतदयाथार्थ्यं स्यात्किन्त्वतीतस्यातीतत्वेनाविषकत्वेऽपि यो वस्तुगत्याऽतीतः स सर्व एव स्मृतेर्विषयः । तथा चेदानीमतीतावस्थाविशिष्ट इति स्मृतेरभावान्न तस्या अयाथार्थ्यमिति भावः । युज्यतेऽतीतार्थावगाहित्वेन श्यामताप्रत्ययस्य याथार्थ्यम् अतीतकाले श्यामतारूपतद्विषयस्य सत्त्वात् । तद्वर्तमानतायाश्च तेनाविषयीकरणात्स्मरणं तु स्वविषयमनुभवदेशकालविशिष्टमर्थमतीतकालीनतया न विषयीकरोति । तस्या अननुभूतत्वात् । नापि कालौदासीन्येन । तथाऽननुभवात् । किन्त्वनुभववद्वर्तमानकालतयैव । तथा च स्मरणोल्लिखितवर्तमानकालेऽनुभवदेशकालसंबद्धत्वरूपतत्ताविशिष्टस्य स्मरणविषयस्यासत्त्वात्स्मृतेरयाथार्थ्यमेवेति न श्यामता

प्रत्ययाविशेषस्तस्या इत्याशयेन परिहरति **सत्यमित्यादिना** ॥ **तदानीमेवेति** । अतीतकाल एवेत्यर्थः । **तदानीमिति** । वर्तमानकाल इत्यर्थः ।

केचित्तु पाकरक्ते श्यामताप्रत्ययस्य तथात्वं स्यादित्यनेन रक्तामिदानीमयं श्याम इति श्यामताप्रत्ययविशेषस्यैव कदाचित् श्यामतास्वरूपप्रामाण्यप्रयोजकाक्रान्तत्वेन प्रामाण्यमापादितं तदेतदज्ञात्वा श्यामत्वप्रत्ययमात्रस्यैव याथार्थ्यमापादितम् । तत्र चेष्टापत्तिरतीतत्वेन श्यामताप्रत्ययस्य यथार्थत्वमिति भ्रान्त्या शङ्कते **नन्विति** । पूर्ववादी स्वाशयमनुद्घाट्यैव तावताऽपि न स्मृतिप्रामाण्यसिद्धिर्वैषम्यादिति परिहरति सत्यमित्यादिना इति ग्रन्थाभिप्रायमाहुः ।

इतरे तु अतीतत्वं श्यामताविशेषणम् । तथा चातीता या श्यामता तत्प्रत्ययः, अत्र श्यामताऽसीदित्येवंरूपः । तस्यापि श्यामताप्रत्ययत्वात्तस्य च यथार्थत्वादिष्टापादनमिति शङ्कते **न चेति** । तत्प्रत्ययविषयीभूतश्यामताऽतीतत्वस्य तत्प्रत्ययसमानकालीनत्वेन यथार्थत्वेऽपि पूर्वावस्थानिवृत्तेः स्मृतिकाले सत्त्वेपि तस्या अनुभवाविषयत्वेन स्मृत्या विषयीकर्तुमशक्यत्वात्पूर्वावस्थावर्तमानताया एव विषयीकरणात्तस्याश्च स्मृतिकालेऽसत्त्वेन विषयशून्यत्वान्न स्मृतेर्याथार्थ्यमित्याह **सत्यमित्यादिना** इति पूर्वोत्तरग्रन्थाभिप्रायमाहुः ।

**इत्यत्रेति** । न्यायमहावार्तिक इत्यर्थः । अस्येत्युक्तमिति वक्ष्यमाणेनान्वयः ॥ **संशयादाविति** । संशब्दोऽयथार्थज्ञानमात्रोपलक्षकः । तथा चायथार्थज्ञानमात्रहेताविल्यर्थः । संशयादेरप्युपलब्धित्वेन तद्धेतोरप्युपलब्धिहेतुत्वादिति भावः ॥ **प्रकृतेति** । वार्तिकेऽर्थवदित्यधिकारादिति भावः ॥ **विशेषितेति** । संशयादेरुपदर्शितार्थव्यभिचारेणानर्थवत्त्वादर्थवदुपलब्धिहेतुत्वं न संशयादिहेतोरस्तीति न तत्रातिव्याप्तिरिति भावः ॥ **उक्तमिति** । यद्यपि नैवं तस्योक्तिरस्ति तथाऽप्यर्थानुवादोऽयमित्यदोषः ॥ **वाचस्पतिनेति** । न्यायवाचस्पतिनेत्यर्थः ॥ **अन्यथेति** । स्मृतेर्याथार्थ्यानभ्युपगताविल्यर्थः । **इममेवेति** । स्मृतेर्याथार्थ्यरूपमेवेत्यर्थः ॥ **द्यङ्गेति** । यथार्थत्वानुभवत्वरूपप्रमाशरीरप्रविष्टाङ्गद्वयेत्यर्थः ॥ **न स्यादिति** । यथार्थपदेनैव स्मृतिव्यावृत्तिसिद्धेरिति भावः । न च धर्मिण्यपि स्मृतेः प्रामाण्यं मा भूदित्येवमर्थमनुभवग्रहणम् । धर्मिण्यंशेऽपि वर्तमानत्वाभावेन प्रमात्वस्यैव संभवेन तद्व्यावर्तनायोगात् ॥ **आर्षेति** । ऋषीणामतीतानागतवर्तमानेष्वर्थेष्वतीन्द्रियेषु धर्माधर्मादिषु च लिङ्गाद्यनपेक्षादात्ममनसोः संयोगविशेषाद्धर्मविशेषाच्च यत्प्रातिभं ज्ञानं, यच्च लौकिकानामपि भवति श्वो मे भ्राताऽगन्तेति हृदयं मे कथयतीति तच्चार्षमभिमतमिति ध्येयम् ।

ननु च नोदाहृतव्यवहारानुसारेण स्मृतेर्याथार्थ्यं सिध्यति । प्रथमज्ञानयाथार्थ्यायाथार्थ्यानुविधायिनी स्मृतिः कथं यथार्थेति कथ्यते तत्त्ववादिभिरित्यभियुक्तवचनाद्याथार्थ्यनिरासकयुक्तिपराहतत्वाच्च

तद्याथार्थ्यव्यवहारस्य तज्जनकानुभवयाथार्थ्यनिबन्धनतयौपचारिकत्वादित्यतः परोक्तयुक्तेराभासत्वं व्युत्पादयति **यदपीति** ॥ **स्मरणकाल इत्यादि** । अयं च पक्षो न हि यदा यादृशोऽर्थः स्मर्यत इति शङ्काग्रन्थात्स्पष्टं प्रतीयते । न च स्मृतिर्निवृत्तपूर्वावस्थतयेत्यादितद्ग्रन्थाद्द्वितीयतृतीययोर्लाभः । पूर्वावस्थानिवृत्त्यविषयीकारित्वेन तदनिवृत्तिविषयीकारित्वेनापि निवृत्तपूर्वावस्थतया विषयीकारित्वाभावस्य संभवादित्यवधेयम् । यद्वा तद्विषयस्य तदानीमेव तदवस्थत्वान्न तु स्मर्यमाणावस्थस्तदानीं तदवस्थ इति स्मृतेरतीतश्यामताप्रत्ययवैषम्यकथनेन द्वितीयतृतीयौ सूचितौ । तत्र हि युक्तमतीतश्यामताप्रत्ययस्य यथार्थत्वमतीतत्वस्यापि तत्र विषयत्वान्न तु स्मृतेः पूर्वावस्थानिवृत्तेस्तत्राविषयत्वादिति हि वैषम्यमुक्तम् । तथा च द्वितीयकल्पप्रसक्तिः। स्मृतेः पूर्वावस्थानिवृत्त्यविषयत्वं चानिवृत्तपूर्वावस्थात्वेन विषयीकरणेऽपि सम्भवतीति तत एव तृतीयकल्पस्यापि प्रसक्तिरित्यवधेयम् ॥ **अनिवृत्तेति** । वर्तमानपूर्वावस्थात्वेनेत्यर्थः ॥ **तदानीमिति** । अतीतानुमित्यादिकाल इत्यर्थः । निवृत्त्यविषयीकारित्वेनापि न स्मृतेर्याथार्थ्यं भवति अप्रयोजकत्वात् । न च वर्तमाननिवृत्तेरविषयीकरणासम्भव एव बाधकः । वर्तमानं सर्वं विषयीकर्तव्यमेवेति नियमाभावात् अन्यथाऽतिप्रसङ्गादित्याह **द्वितीय इति** ॥ **कस्यापीति** । प्रमाणस्येति शेषः ॥ **निवृत्त्यनिवृत्त्योरिति** । उदासीनैवेत्यभ्युपगमवाद एवायम् । न त्वेतद्ग्रन्थानुरोधेन स्मृतेः पूर्वावस्थानिवृत्त्यविषयत्वमेवेति मन्तव्यम् । तथा सत्यनुभवानधिगतातीतत्वविषयत्वस्यानुपदमेव व्युत्पादयिष्यमाणत्वेन तद्विरोधापातात् । 'आधिक्यमनुभूतात्तु यदतीतत्वमिष्यते' इत्यादिनाऽपि स्पष्टमतीतत्वविषयकत्वोक्तेश्च । 'संस्कारसहकृतं मनोऽननुभूतामपि निवृत्तपूर्वावस्थां विषयीकुर्वत्स्मरणं जनयती'त्यादिग्रन्थास्वारस्यापाताच्चेति ध्येयम् । केचित्तु यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इत्युक्तविषयत्वस्य देशकालविशेषणीभूतनिवृत्तावभावाद्विशेषणतया प्रतीतिविषयत्वेऽपि निवृत्तेरुक्तरूपविषयत्वाभावाभिप्रायेणोदासीनत्वोक्तिरिति भाव इत्याहुः । अङ्गीकारवादस्य चेदं प्रयोजनम् । यद्बुध्यमानेनोक्तस्य स्मृतौ तत्ताविशिष्टस्य वर्तमानत्वावभासस्य निराकरणम् । तथा हि । स्मृतौ तत्ताविशिष्टस्य वर्तमानताऽवभासत एव । संस्कारस्य वर्तमानतावभाससामग्रीसहितस्यैव स्मृतिहेतुत्वात् । सोऽयमिदानीमिति प्रत्यभिज्ञायां तथा कल्पनात् । गेहे स घट इति स्मरणान्निष्कम्पप्रवृत्तेश्च । अन्यथा तत्ताविशिष्टस्य तदानीं संशये सा न स्यात् । तथा च प्रयोगः । विवादाध्यासिता स्मृतिः स्वविषयवर्तमानत्वविषया अतीतानागताविषयत्वे सति प्रतीतित्वात् प्रत्यभिज्ञावदिति । तथा च कथं स्मृतेर्याथार्थ्यमिति । तदसत् । संस्कारस्य स्मृतौ जनयितव्यायां वर्तमानतावभाससामग्रीसाहित्यनियमे मानाभावात् । स्मृत्यनन्तरभाविन्या तद्विषयवर्तमानत्वसंभावनया वा शब्दादितन्निश्चयेन वा निष्कम्पप्रवृत्त्युपपत्तावनुभवविरुद्धायाः स्मृतौ वर्तमानतावभासकल्पनाया अयोगाच्च । अनुमानं चायुक्तम् । तदाऽसौ तादृश

इत्याकारबलेन स्मृतावतीतगोचरतायाः सिद्धत्वेन विशेषणासिद्धत्वात् । अन्यथा पूर्वकालसंबन्धरूपतायाः स्मृतौ वर्तमानतावभासेऽनुभव इव स्मृतावपीदन्तोल्लेखापत्तेः ॥ स्मृत्यनुभवयोः संस्कारजन्यत्वाजन्यत्वाभ्यां भेदेऽप्यनुभवकाले सतो विषयस्य स्मृतिकाले वस्तुतोऽतीतत्वेऽपि विषयकृतवैलक्षण्याभावात् । वर्तमानतावभाससामग्रीसाहित्यस्योपाधित्वाच्चेति दिक् ।

**नन्विति ।** अन्यथा संस्कारसीमोल्लङ्घनेन स्मृतेरननुभूतार्थान्तरविषयत्वमपि स्यादिति भावः ॥ **उक्तमिति ।** 'याथार्थ्यमेव मानत्वमि'ति लक्षणवाक्यव्याख्यानावसर इति शेषः । अनुभवजन्यसंस्कारजन्यत्वात्स्मृतेरनुभवाकारत्वमेव युक्तम् । तत्कथं तद्विरुद्धतत्ताकारत्वमिति शङ्कते **अनुभव इति ।** कुतस्त्य इत्यत्र किंशब्द आक्षेपार्थः, किंवा प्रश्नार्थः। आद्येऽपि किं स्वरूपाक्षेपोऽभिमतः, किंवा कारणाक्षेप इत्यभिप्रेत्य विकल्पयति **किमयमिति ॥ व्याघातादिति ।** यत उत्पन्नस्तद्धेतुकत्वादाकारस्य निर्हेतुकत्वं व्याहतमित्यर्थः । **तुल्यमिति ।** स्मृतावपि स इत्याकारः स्मृतिहेतुसंस्कारसमासादित इत्यर्थः । ननु चानुभवस्यान्याकारत्वात्तत एव तज्जन्यसंस्कारस्याप्यन्याकारत्वात्तज्जन्यस्मरणस्यापि तदाकारत्वमेव स्यान्न तु तद्विपरीताकारत्वमित्यत आह **यदि चेति ।** इदन्त्वाविषयकसंस्कारस्यैव स इत्याकारजनकतायाः प्रत्यभिज्ञायां दृष्टत्वेन जन्यजनकयोरेकाकारत्वनियमासिद्ध्या संस्कारमात्रजन्यत्वेऽपि न क्षतिरिति भावेन कथञ्चिदित्युक्तम् ॥ **मानसमिति ।** सहकारिसमवधानेन करणानां शक्त्यन्तराविर्भावस्य बहुलमुपलम्भात् संस्कारसहकृतं मनोऽनुभवेऽक्रियमाणमपि तदा तादृश इत्याकारं स्मृतौ जनयतीति युज्यत एवानुभवस्मृत्योर्वैसादृश्यमिति भावः । नन्वेवं मनोजन्यत्वात्स्मृतेः संस्कारसीमोल्लङ्घनस्यादोषत्वेऽपीन्द्रियाणां प्राप्यप्रकाशकारित्वनियमात्पूर्वावस्थानिवृत्त्यंशे च प्राप्त्यभावान्मनसस्तद्विषयीकारित्वानुपपत्तिस्तदवस्थैव । न हि तदंशेऽपि संस्कार एव प्राप्तिरिति शक्यते वक्तुम् । पूर्वावस्थानिवृत्त्यविषयकपूर्वानुभवजन्यसंस्कारस्य तन्निवृत्त्यविषयकतया तदंशे प्रत्यासत्तित्वायोगात् । संयोगसमवायलक्षणप्रत्यासत्त्यन्तरं तु मनसः पूर्वावस्थानिवृत्त्या सह न शक्यशङ्कमिति चेन्न । तद्देशकालसम्बन्धेन सह संस्काराख्यप्रत्यासत्तियुक्ते न मनसा करणेन तद्देशकालसम्बन्धातीतत्वमसन्निकृष्टमपि विषयीक्रियते । सम्बद्धमात्रविषयकत्वेऽनुभवत्वप्रसङ्गादित्याशयात् । यद्वा मनसः स घट इति स्मृतिसाधनत्वनिर्वाहाय प्रत्यासत्तितया कल्प्यमानसंस्कारस्य पूर्वावस्थामात्रविषयकस्याप्यनन्यगत्या निवृत्त्यंशेऽपि प्रत्यासत्तित्वं कल्प्यते कार्यबलात् । अतो नासन्निकृष्टार्थग्राहकत्वमिति ।

वस्तुतस्तु अतीतानां तत्तदर्थानां मनोविषयतया तन्निवृत्त्याऽपि, घटनिवृत्त्या सह चक्षुष इव, साक्षादेव सन्निकर्षः । न च तत्तदर्थानां बाह्यत्वेन तन्निवृत्तेरपि बाह्यतयाऽन्तरिन्द्रियस्य कथं तया सह

साक्षात्सन्निकर्ष इति वाच्यम् । बाह्यार्थानामपि संस्कारोपनीतत्वेन प्रत्यासन्नत्वात् । अन्यथा संस्कार-मात्रजन्यत्वेऽपि पूर्वमननुभूतस्य तद्देशकालसम्बन्धस्य यदतीतत्वं तस्यैवातीतत्वस्याननुभूतस्यापि स्मरण-मन्यस्य तु सर्वस्यानुभूतस्यैव स्मरणमिति नियमाभ्युपगमेन वाऽनन्यगत्या भिन्नविषयस्यापि संस्कारस्य स्वाविषयातीतत्वविषयकस्मृतिजनकत्वाभ्युपगमेन वाऽतिप्रसङ्गपरिहारसम्भवेन संस्कारमात्रजन्यत्वा-नभ्युपगमेन मानसमिति मनोजन्यत्वोक्तेरस्वारस्यापातात् । न च सन्निकर्षनिरूपणाय वस्तुगतिरियमुक्तेति वाच्यम् । तथा सति यदि च संस्कारमात्रजन्यता स्मृतेः स्यादित्यादिप्रकृतग्रन्थस्यास्वारस्यापातात् । 'भवेदेवं यदि संस्कारमात्रजन्यत्वमि'त्यादिपद्धतिग्रन्थस्याप्यस्वारस्यापाताच्च । तस्मान्मनोजन्यत्वोक्ति-स्वारस्याय वर्तमानया पूर्वावस्थानिवृत्त्या सह स्यादेव सन्निकर्षो मनसो न त्वसन्निकर्षः । नापि संस्कारः सन्निकर्ष इत्यवधेयम् ॥

वक्ष्यत इति । 'मानसं तद्धि विज्ञानं तच्च साक्षिप्रमाणकमि'त्यादिनैतदधिकरणान्त इति शेषः । उदयनमतनिराकरणमुपसंहरति तस्मादिति । ततश्चापसिद्धान्त एवेति भावः ।

स० — **पूर्वतैवेति** । पूर्वकाले एव वृत्तितेत्यर्थः । पूर्वकालमात्रवर्तिन्याः पूर्वावस्थायाः उत्तर-कालेऽपि सत्त्वं स्यात् । तर्हि पूर्वकाल एव वृत्तिता न स्यादित्यभिप्रायः । पाकरक्ते इदानीं अयं श्याम इति श्यामताप्रत्ययस्यापि याथार्थ्यं स्यात् । तत्प्रयोजकस्य कदाचिदर्थसत्त्वस्य तत्रापि सत्त्वादित्यभि-प्रायेण श्यामताप्रत्ययस्य याथार्थ्यमापादितम् । तदभिप्रायमज्ञात्वा श्यामताप्रत्ययमात्रस्य याथार्थ्य-मापाद्यत इति विभ्रान्तश्चोदयति **नन्वतीतेति** । स्वाभिप्रायमनुद्घाट्य यथाकथञ्चित् मया स्मृतेरयाथा-र्थ्यमुपपादनीयमिति अभिप्रेत्याह **सत्यमिति** । तद्विषयस्य श्यामताप्रत्ययविषयस्य अतीतत्वस्येतियावत् । **तदानीमेव** प्रत्ययोत्पत्तिकाल एव । न तु कदाचिदिति कृत्वेत्यर्थः । **स्मर्यमाणावस्थ इति** । अतीतदेशकालसंबन्धवत्त्वेन स्मरणविषयीभूत इत्यर्थः । तदानीं स्मरणदशायामतीतदेशकालसंबन्धस्य तदभावादिति भावः । 'तत्प्रत्ययविषयीभूतश्यामताऽतीतत्वस्य तत्प्रत्ययसमानकालीनत्वेन यथार्थत्वेऽपि पूर्वावस्थानिवृत्तेः स्मृतिकाले सत्त्वेऽपि तस्याः अनुभवाविषयत्वेन स्मृत्या विषयीकर्तुमशक्यत्वात् पूर्वाव-स्थावर्तमानतयैव विषयीकरणात् तस्याश्च स्मृतिकालेऽभावेन विषयशून्यत्वान्न स्मृतेः याथार्थ्यमित्याह **तद्विषयस्येति** इत्यपि केचित् । **संशयादाविति** । संशयादिहेतौ अतिव्याप्तौ संशयादेरुपलब्धित्वस्य प्रयोजकत्वादेवमुक्तम् । यद्वा । संशयादौ संशयादिकमादाय तत्साधने उपलब्धिसाधनत्वस्य विद्यमान-त्वेन तत्रातिव्याप्तिमाशङ्क्येत्यर्थः । अन्यस्मृतेर्याथार्थ्याङ्गीकारेऽप्यङ्गविकलत्वात् यथार्थत्वलक्षणविशेषणस्य अनुभवत्वलक्षणविशेष्यस्य वाऽभावेन अनुभवपदव्यावर्त्यता न स्यादित्यर्थः ।

भेदेनेति । आर्षं नाम प्रातिभं ज्ञानम । ननु आर्षस्य योगिज्ञानत्वेन प्रमाणलक्षणे आर्षस्य योगिज्ञाने अन्तर्भावस्योक्तत्वात् तस्य परानभिप्रेतार्थत्वात् कथमार्षस्य योगिज्ञानेत्युक्तमिति चेन्न । परेण योगिज्ञानत्वमेवाङ्गीकार्यम् । अन्यथा प्रकारान्तरमेव न संभवतीत्यभिप्रायेण प्रवृत्तत्वादिति न दोषः । स्मरणकाल इत्यादि । अत्र न हि यदा यादृशार्थः स्मर्यते इत्येतद्वाक्यपर्यालोचनया ज्ञानकाले वस्तुसत्त्वस्य याथार्थ्योपयोगित्वलाभात् तदनुसारेण प्रथमः कल्पः । न च स्मृतिर्निवृत्तपूर्वावस्थतयेत्येतद्वाक्यपर्यालोचनया द्वितीयतृतीयौ । निवृत्त्यविषयीकारित्वेन वा अनिवृत्तिविषयीकारित्वेन वा निवृत्तपूर्वावस्थतया विषयीकारित्वाभावसंभवादिति ध्येयम् । ज्ञानेन यादृशोऽर्थः विषयीक्रियते तस्य तादृशत्वमेव ज्ञानायाथार्थ्ये प्रयोजकमिति स्मृतिविषयीकृतस्यानुभवकाले अर्थसत्त्वस्य विद्यमानत्वात् । ज्ञानकाले वस्तुसत्त्वस्य च यथार्थताप्रयोजकत्वाभावात् स्मृतेर्याथार्थ्यम् । अन्यथा अतीतादिविषयानुमानादेरपि याथार्थ्यं न स्यात् । अनुमितिकाले विषयस्यासत्त्वात् । न च वह्न्यतीतत्वस्यैव अनुमितिविषयत्वात् तस्य च सत्त्वान्नानुमित्यादेरयाथार्थ्यमिति वाच्यम् । यत्संनिकृष्टकरणेन यद्ज्ञानं जन्यते तस्यैव तद्विषयत्वेन वह्निनैव सन्निकर्षसद्भावेन तदतीतत्वेन तदभावेन तस्य मुख्यविषयत्वाभावेन मुख्यविषयीभूतवह्न्यादेश्चानुमितिकालेऽसत्त्वेन ज्ञानकाले वस्तुसत्त्वस्य अप्रयोजकत्वात् न तेन स्मृतेरयाथार्थ्यसिद्धिरित्याह आद्य इति ॥ अतीतादिविषयस्येति । अतीतादिश्चासौ विषयश्चेति विग्रहः । निवृत्त्यविषयीकरणेनापि न अयाथार्थ्यम् । अप्रयोजकत्वात् । न च विद्यमाननिवृत्त्यग्रहणे अयाथार्थ्यमावश्यकमिति वाच्यम् । वर्तमानं सर्वं विषयीक्रियत इति नियमाभावात् । अन्यथा सर्वप्रमाणानामप्रामाण्यापातात् । तथा च अप्रयोजकत्वान्नायाथार्थ्यमित्याह द्वितीय इति । निवृत्त्यनिवृत्त्योरिति । अत्र 'तदवस्थानिवृत्त्यनिवृत्त्योस्तूदासीनैव' इत्यतःपरं भवतु इति शेषः । तथा च निवृत्त्याद्यविषयीकरणेन नायाथार्थ्यसिद्धिरित्यप्रयोजकत्व एव तात्पर्यम् । न तु सर्वथा निवृत्त्यविषयीकारित्वे तात्पर्यम् । तथा सति, अनधिगतार्थगन्तृत्वलक्षणप्रमाणलक्षणे स्मृतावुपपादयितुं अनुभवानधिगतातीतत्वविषयत्वस्य अनुपदमेव व्युत्पादयिष्यमाणत्वात् । 'आधिक्यमनुभूतात्तु यदातीतत्वमिष्यत' इत्यादिना विस्पष्टमतीतविषयकत्वोक्तेश्च । तद्विरोधापत्तेश्चेति ध्येयम । यद्वा । 'यत्सन्निकृष्टकरणेन' इत्याद्युक्तविषयस्य देशकालविशेषणीभूतनिवृत्त्यावभावेन सविशेषणतया अतीतविषयत्वेऽपि मुख्यविषयत्वाभावाभिप्रायेण तदुक्तिरिति न कश्चिद्दोषः ।

अनुभव इति । अनुभवस्य इदन्ताकारे विद्यमाने स्मृतेस्तद्विरुद्धताकारत्वं कथमित्यर्थः । व्याघातादिति । आकारस्य कार्यत्वात् तदङ्गीकारे कारणमङ्गाप्यङ्गीकृतमिति पुनर्निर्हेतुकत्वाभ्युपगमे व्याघातादिति भावः । ननु स्मृतिं प्रति अनुभवस्यैव हेतुत्वात् तस्य च 'तदाऽसौ तादृश' इत्यतीतार्थ-

विषयकत्वाभावात् तज्जन्यसंस्कारस्यापि तद्विषयत्वाभावात् तज्जन्यस्मृतेरपि नोक्ताकारत्वसिद्धिः स्वहेतु-सामर्थ्यादपीत्यत आह **यदि चेति** । जन्यजनकयोः सविकल्पकनिर्विकल्पकयोः एकाकारत्वाभावस्य नियमाभावाभिप्रायेण कथञ्चिदित्युक्तम् । **मानसमिति** । करणानां सहकारिवशेन शक्त्यन्तराविर्भावस्य विद्यमानत्वेन संस्कारसहकृतं मनः अनुभवेऽविद्यमानं तदा तादृश इत्याकारं स्मृतौ जनयतीत्यङ्गी-कारात् अनुभवस्मृत्योर्वैसादृश्यानुपपत्तिर्नास्तीति भावः ।

**प०** — तार्किकः शङ्कते **नन्विति** ॥ **वर्तमान इति** । स्मृतिकाल इत्यर्थः । ननु निवृत्तां पूर्वावस्थामिदानीमस्तित्वेन स्मृतिर्न विषयीकरोति येन याथार्थ्यहानिः ॥ किन्तु निवृत्तत्वेन । तथा च न दोष इत्याशङ्क्य तथानुभवाभावेन तथा स्मृत्युत्पत्तिर्न युक्तेत्याह **न च निवृत्तेति** । सिद्धान्ती शङ्कते **ननु समानेति** । पूर्ववादी उत्तरमाह **अनुभवेति** । पुनः सिद्धान्ती शङ्कते **नन्विति** । पूर्ववादी निराह **नेति** । ननु कीदृशप्रत्ययस्य प्रामाण्यमापाद्यते । किमिदानीमयं श्याम इति प्रत्ययस्य, अथ पूर्वमयं श्याम आसीदित्येवंरूपस्य । नाद्यः इष्टापत्तेः । अन्त्ये तु नास्ति दोष इत्याशङ्कते **नन्विति** । पूर्ववादी वैषम्येण निराह **सत्यमित्यादिना** । **अपसिद्धान्तेति** । न्यायमते स्मृतेर्याथार्थ्यानङ्गमादिति भावः । तदेवाह **तथा हीत्यादिना स्मृतेरङ्गीकृतमित्यन्तेन** ॥ **संशयादाविति** । उपलब्धिपदस्येति योज्यम् । **सम्यगनुभवेति** । अन्यथा सम्यज्ज्ञानसाधनमित्येव ब्रूयादिति भावः । **न्यायविदां** नैयायिकानाम् । **व्यङ्गेति** । स्मृतेर्यथार्थत्वानुभवत्वरूपाङ्गद्वयहीनत्वेन यथार्थपदेनैव व्यावर्तितत्वादनुभवपदव्यावर्त्यता न स्यादित्यर्थः । परोक्तायाथार्थ्यबीजं च निराह **यदपीत्यादिना** ॥ **द्वितीय इति** । स्वविषयं सर्वात्मना यद्विषयीकरोति तत्प्रमाणमिति पक्षे ॥ **व्याघातादिति** । कार्यं सहेतुकमिति नियमात्कार्यत्वमुपेत्य निर्हेतुकत्वोक्तौ स्वक्रियाविरोधादित्यर्थ । अनुभवजन्यसंस्कारहेतुकस्य कथं अन्याकारतेत्यत आह **यदि (च) संस्कारेति** । अभिज्ञाजन्यसंस्कारस्य विसदृशप्रत्यभिज्ञाहेतुत्वदर्शनात् कथञ्चिदित्युक्तम् **वक्ष्यत इति** । एतद्ग्रन्थान्त्यभागे ।

**या०** — **श्यामताप्रत्ययस्येति** । इदानीमयं श्याम इति प्रत्ययस्येत्यर्थः । ननु पाकरक्ते इदानीमयं श्याम इति प्रत्ययस्याकार एव नास्ति । श्याम इत्याकारकस्य प्रत्ययस्य तत्र सत्त्वेऽपि तस्य याथार्थ्यमेव । वस्तुनोऽतीतश्यामताया एव तद्विषयत्वात् । एवमेव वस्तुनोऽतीतपूर्वावस्थाव-गाहिनी स्मृतिरपि यथार्थैव भविष्यतीत्याशयेन शङ्कते **नन्वतीतेति** । अतीता या श्यामता तत्प्रत्यय इत्यर्थः ॥ **तदानीमेवेति** । अतीतकाल एवेत्यर्थः ॥ **न तु स्मर्यमाणेति** । स्मर्यमाणा स्मरणेन विषयीक्रियमाणाऽवस्था अनुभवदेशकालसम्बन्धत्वरूपा यस्य विषयस्य स तथोक्तः, तदानीं वर्तमानकाले, तदवस्थो विद्यमानो नैवेत्यर्थः । युक्तमयं श्याम इति प्रत्ययस्यातीतार्थावगाहित्वेऽपि यथार्थत्वमतीतकाले

श्यामतारूपविषयस्य सत्त्वात् । वर्तमानत्वस्य च तेनाविषयीकरणात् । स्मरणं तु स्वविषयमनुभवदेशकालविशिष्टमर्थं नातीतकालीनतयोल्लिखति । अतीतकालीनताया अननुभूतत्वात् । नापि कालौदासीन्येन । किन्त्वनुभववत् वर्तमानकालीनतयैव । तथा च स्मरणोल्लिखिते वर्तमानकालेऽनुभवदेशकालसम्बन्धत्वरूपतत्ताविशिष्टस्य स्मरणविषयस्यासत्त्वात्स्मृतिरयथार्थैवेत्यतीतश्यामताप्रत्ययवैषम्यमिति भावः ॥ **संशयादाविति** । संशयहेतावित्यर्थः ॥ **द्यङ्गेति** । याथार्थ्यमनुभवत्वं चेत्यङ्गद्वयं प्रमाप्रविष्टं तदुभयमपि यदा स्मृतौ नास्ति तदा कथमनुभवपदेनैव तद्व्यावृत्तिः । याथार्थ्यपदेनापि तत्सम्भवादित्यर्थः ॥

**आर्षेति** । ऋषीणमतीतानागतवर्तमानेष्वर्थेष्वतीन्द्रियेषु धर्मादिषु च लिङ्गाद्यनपेक्षादात्ममनसोः संयोगविशेषाद्धर्मविशेषाच्च यत्प्रातिभं ज्ञानमुत्पद्यते तदार्षम् । तच्च कदाचिल्लौकिकानामपि भवति । यथा कन्या ब्रवीति श्वो मे भ्राताऽऽगन्तेति हृदयं मे कथयतीत्याहुः । एवं स्मृतेरयाथार्थ्ये अपसिद्धान्तं बाधकमभिधायेदानीं तदुक्तमयाथार्थ्यसाधकं विकल्प्य दूषयति **यच्चेत्यादिना** ॥ **अनिवृत्तपूर्वावस्थत्वेनेति** । वर्तमानपूर्वावस्थत्वेनेत्यर्थः । तथा च न हि यदा यादृशोऽर्थः स्मर्यत इत्युक्त्या प्रथमपक्षस्य प्राप्तिः । न च निवृत्तपूर्वावस्थतयैतमर्थमित्यनेन द्वितीयस्य । न तु स्मर्यमाणावस्थस्तदानीं तदवस्थ इति वाक्येन तृतीयस्येति ज्ञातव्यम् ॥ **तदानीमसत्त्वादिति** । न च घट आसीद्धटो भविष्यतीति ज्ञानयोर्ध्वंसप्रागभावविषयकत्वात्तयोश्च ज्ञानकाले सत्त्वात्कथमेतदिति वाच्यम् । अत्रातीतादिकालसम्बन्ध एव घटस्य प्रतीयते न नष्टो घट इत्यादाविव ध्वंसादिः । अन्यथा गगनमासीदित्यादावपि तद्ध्वंसादिरेव प्रतीयत इति स्यादित्याशयात् । विशेष्यरूपमुख्यविषयाभिधायकोऽयं पक्ष इत्यप्याहुः । एवं च ज्ञानकाले विषयासत्त्वेनायाथार्थ्यसाधने व्यभिचार इति भावः ॥ **सर्वप्रमाणेति** । यत्स्वविषयं सर्वात्मना न विषयीकरोति तदयथार्थमिति नियमो न सम्भवति । ज्ञानमात्रे व्यभिचारादित्याशयः । व्यभिचारमेवोपपादयति **कस्यापीति** ॥ **अनिवृत्तेति** वर्तमानेत्यर्थः । एवमग्रेऽनिवृत्तिपदेन वर्तमानतैव ग्राह्या ॥ **उदासीनैवेति** । इदं च तदा तादृश इत्यनयोरनुभवकालेऽनुभूतधर्मविशिष्ट इत्यर्थमाश्रित्य पराभिमानखण्डनायैवोक्तम् । वस्तुतस्तु तदा तादृश इत्यनयोरतीतकालेऽतीतदेशकालसम्बद्ध इत्यर्थकत्वात्स्मृतिः पूर्वावस्थानिवृत्तिं विषयीकरोत्येव । अत एवाग्रे तथैव विभावयिष्यतीति ज्ञातव्यम् । एतेन यदुक्तं वर्धमानेन स्मृतौ तत्ताविशिष्टस्य वर्तमानतावभासत एव । संस्कारस्य वर्तमानताऽवभाससामग्रीसहितस्यैव हेतुत्वात्सोऽयमिदानीमित्यादौ प्रत्यभिज्ञाने तथा कल्पनात् । गेहे स घट इति स्मृतेर्निष्कम्पप्रवृत्तेश्च । अन्यथा तत्ताविशिष्टस्येदानीं संशये सा न स्यात् । विवादाध्यासिता स्मृतिः स्वविषयवर्तमानत्वविषया अतीतानागतागोचरत्वे सति ज्ञानत्वात् प्रत्यभिज्ञावदित्यनुमानाच्च अतोऽयथार्था स्मृतिः ॥ न चैवं प्रमालक्षणेऽनुभवपदं व्यर्थम् । धर्म्यंशेऽपि तत्र

प्रमात्वं मा भूदित्येवमर्थत्वात्तस्येति । तदपि निरस्तं वेदितव्यम् । संस्कारस्य ज्ञाने जनयितव्ये वर्तमानतावभाससामग्रीसाहित्यनियमे मानाभावात् । निष्कम्पप्रवृत्तेश्च स्मृत्यनन्तरभाविन्या तद्विषय वर्तमानत्वसम्भावनया शाब्दादितन्निश्चयेन वोपपत्तौ स्मृतौ वर्तमानत्वभानकल्पनाया अनुभवविरुद्धत्वात् । अनुमानं चायुक्तम् । विशेषणासिद्धेः । तदाऽसौ तादृश इत्याकारबलेनैव स्मृतावतीतगोचरत्वस्यावगमात् । अन्यथा पूर्वकालसम्बन्धरूपतत्तायाः स्मृतौ वर्तमानतावभासेऽनुभव इव स्मृतावपीदन्तोल्लेखापत्तिः । स्मृत्यनुभवयोः संस्कारजन्यत्वाजन्यत्वाभ्यां भेदेऽप्यनुभवकाले सतो विषयस्य स्मृतिकाले वस्तुतोऽतीतत्वेऽपि च विषयकृतवैलक्षण्याभावात् । तस्मात्साधूक्तमुदासीनैवेति । धर्म्यंशव्यावृत्त्यर्थमनुभवपदमित्यप्यसत् । धर्म्यंशेऽपि वर्तमानत्वाभावेन प्रमाणत्वस्यैव सम्भवे तद्व्यावर्तनाय यत्नस्यानुचितत्वात् ॥ अन्यथा भ्रमेऽपि धर्म्यंशे यथार्थानुभवत्वसत्त्वेन तद्व्यावृत्त्यर्थमपि पदान्तरं प्रयोज्यं स्यादित्यास्तां विस्तरः ॥ **व्याघातादिति** । कार्यस्याकारस्याङ्गीकारे तत्कारणमप्यङ्गीकृतमेवेति पुनर्निर्हेतुकत्वाभ्युपगमे व्याघात इत्यर्थः ॥ **तुल्यमिति** । स्मृतावपि स इत्याकारः संस्काररूपहेतुमासादित इत्यर्थः । नन्वनुभवजन्यस्येदन्ताविषयकस्य संस्कारस्य कथं स इत्याकारहेतुत्वमित्याशङ्कयाह **यदि चेति** । इदन्ताविषयकसंस्कारस्यैव स इत्याकारप्रयोजकताया प्रत्यभिज्ञायां क्लृप्ततया संस्कारमात्रजन्यत्वेनापि वैसादृश्यमुपपद्यत एवेत्याशयेन कथञ्चिदित्युक्तम् ॥ **मानसमिति** । तथा चानुभवकरणविलक्षणकरणजन्यत्वात्स्मृतेरनुभवाकारवैसादृश्यं तदाकारस्येति भावः । इदमुपलक्षणम् 'आधिक्यमनुभूतात्तु यदातीतत्वमिष्यते' इति वक्ष्यमाणत्वेन विषयकृतवैलक्षण्याच्च वैसादृश्यमिति ज्ञातव्यम् । **वक्ष्यत इति** । 'मानसं तद्धि विज्ञानं तच्च साक्षिप्रमाणकमि'त्यग्रेऽस्मिन्नेवाधिकरण इति शेषः ।

श्री० — **यादृशः** पूर्वावस्थाविशिष्टः । **पूर्वावस्थाया** अनुभवदेशकालसंबन्धरूपतत्तारूपायाः । एवमेवोत्तरत्र पूर्वावस्थाशब्दार्थो द्रष्टव्यः । **वर्तमाने** वर्तमानकाले । स्मृतिसमय इति यावत् । अनिवृतावित्यत्र पूर्वावस्थाया इत्येतत्पूर्वत्वेत्यत्रावस्थाया इत्येतच्चानुवर्तते । अतीतत्वमेव पूर्वत्वमिति भावः ॥ **न चेति** । स्मृतिसमये पूर्वावस्थाया अभावेऽपि पूर्वावस्थानिवृत्तेः सत्त्वात्तद्विषयत्वेनायुक्त स्मृतेर्याथार्थ्यमिति भावः ॥ **निवृत्ताविति** । निवृत्तिविषये । तथा च स्मृतेरनुभवसमानविषयकत्वनियमादनुभवेन पूर्वावस्थानिवृत्तरविषयीकरणे स्मृतावपि तज्ज्ञानमयुक्तमेवेति अननुभूतविषयकत्वादयाथार्थ्यं स्मृतेरिति भावः । उत्तरमाह **अनुभवकाल इति** । **तदवस्थः** तद्देशकालविशिष्टः । **ज्ञानं** स्मृतिरूपम् ॥ **पाकेति** । पूर्वं श्यामतायाः सत्त्वादित्यर्थः । इष्टापत्तिमाशङ्कते **नन्विति** । अतीतत्वं श्यामताविशेषणम् । तथा चातीता या श्यामता तत्प्रत्ययः, श्यामता तत्रासीदित्येवंरूपोऽतीतश्यामताप्रत्ययः, तत्र पाकरक्तेऽपि घटे रक्ततादशायां यथार्थ एवेत्यर्थः । **तस्यापि** यथार्थज्ञानसाधनत्वस्य । **स्मृतिहेतौ** संस्कारे । **आन्यथ**

अयाथार्थ्ये । **न शङ्क्येत** यथार्थज्ञानहेतुत्वलक्षणस्य स्मृतिहेतावतिव्याप्तिरिति शेषः । **तमेवेति** । स्मृतेरयाथार्थ्यान्न यथार्थज्ञानसाधनत्वं तद्धेतावतिव्याप्तमित्येवंरूपम् । **इमं** स्मृतेर्याथार्थ्यरूपम् । **अन्यथा** स्मृतेरयाथार्थ्ये ॥ **कस्यापीति** । घटादिज्ञानादेः कस्यापि केनापि प्रकारेण पूर्वावस्थानिवृत्तिविषयी-कारित्वाभावात् । न ह्ययं घट इत्यादौ पूर्वावस्थानिवृत्तिर्विषयतया प्रतीयत इति भावः ॥ **तथेति** । तदाऽसौ तादृश इति निवृत्तपूर्वावस्थत्वेन । **अनुभवानुसारित्वं** नामानुभवसमानविषयकत्वम् ॥ **अर्थानुसारित्वमिति** । यद्देशकालयोर्यद्वस्तु यथा प्रतीतं तद्देशकालयोस्तद्वस्तुनस्तथात्वरूपमर्थानुसारित्व-मेव । **तथा** याथार्थ्यम् । इदं चास्त्यनुभवकालमादाय स्मृताविति न दोषः । **व्याघातादिति** । आकारस्य कार्यत्वात्तदङ्गीकारे तत्कारणमपि किञ्चिदङ्गीकृतमेवेति पुनर्निर्हेतुकत्वाभ्युपगमे व्याघात इत्यर्थः । **तुल्यमिति** । स्मृताविति शेषः । तदुपपादयति । **यदि चेति** ॥ **संस्कारेति** । तथा हि सति संस्कारस्यानुभूतार्थ एव जातत्वेन तज्जन्यस्मृतेरपि तत्समानविषयकत्वेन वैसादृश्यं न स्यान्न चैवं किन्त्विति शेषः । **मानसमिति** । तथाच करणानां सहकारिवशेन शक्त्यन्तराविर्भावस्य सत्त्वेन संस्कारसहकृतेन मनसाऽनुभवेऽविद्यमानोऽपि स इत्याकारः स्मृतौ जायत इत्यङ्गीकारादनुभवस्मृत्योर्वैसादृश्यानुपपत्तिः नास्तीति भावः ।

**च०— न्यायविदां** नैयायिकानाम् । **आङ्केति** । यथार्थत्वानुभवत्वरूपाङ्कद्वयेत्यर्थः । तथाच यथार्थपदेनैव व्यावर्तिततयाऽनुभवपदव्यावर्त्यता न स्यादित्यर्थः ।

**सु०—ननु च संग्राह्यस्य संग्रहो गुणो, न त्वसंग्राह्यस्यापि । किन्नामातिव्याप्त्या दोष एव । न च स्मृत्यादि लक्षणसंग्राह्यम् । प्रामाण्याभावादिति चेत् । तत्किं स्मृत्यादिप्रामाण्यं साधकप्रमाणाभावान्नाङ्गीकार्यम्, उत बाधकसद्भावात् ।**

**शे०—** नन्वङ्गीकृतं चेदित्याद्युत्तरवाक्यमनर्थकम् । न च स्मृतेः प्रामाण्ये बाधकाभावप्रति-पादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च स्मृतिप्रामाण्यसिध्यर्थं तदिति वाच्यम् । तथा सति साधकसहकृतबाधकाभावस्यैव वस्तुव्यवस्थापकत्वेन साधकस्याप्यवश्यवक्तव्यतया केवलबाधकाभावोक्तेरश्लिष्टत्वादित्यतो 'वेदानुमानादिप्रामाण्यप्रसिद्धेश्चे'ति लोकव्यवहारस्य प्रमाणलक्ष-णादौ साधकस्याभिधानादत्र तदनभिधानं न दोषायेत्याशयवान्सम्भावितविकल्पद्वयं प्रदर्श्योदाहृतमूलं मनसि निधायाद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतयोत्तरमूलं योजयितुं तद्व्यावर्त्यां शङ्कामुत्था-

पयति नन्वित्यादिना ॥ अतिव्याप्त्या दोष एवेति । इयं च प्रकृत्यादिभ्यस्तृतीयेति प्रकृत्यादित्वात्तृतीया । तथा चातिव्याप्तिरेव दोष इत्यर्थः ।

स० — अतिव्याप्त्या दोष एवेति । इत्थम्भूतलक्षणे तृतीया । अतिव्याप्तिरूपो दोष एवेत्यर्थः ।

प० — अतिव्याप्त्येति । अतिव्याप्त्या निमित्तेनासंग्राह्यसंग्रहदोष एवेत्यर्थः ।

या० — अतिव्याप्त्येति । अत्र 'प्रकृत्यादिभ्यस्तृतीये'त्यनेन तृतीया । एवं चातिव्याप्तिरेव दोष इत्यर्थः । हेतौ वा । अत्र दोषोऽसाधकता । तथा चातिव्याप्त्या लक्षणस्य व्यावृत्त्याद्यसाधकता स्यादित्यर्थः ।

सु० — नाद्यः । लोकव्यवहारस्य सत्त्वात् । यथार्थज्ञानतत्साधने हि प्रमाणतया लोको व्यवहरति । न ह्यस्ति प्रत्यक्षादिप्रामाण्यसाधकमन्यल्लोकव्यवहारात् ।

ननु प्रमाणाभियुक्तानां कणभुग(भक्षा)क्षपादादीनां तत्र (प्रामाण्य)प्रमाणव्यवहारो नास्तीति चेन्न । 'स्मृतिः प्रत्यक्षमैतिह्यमि'त्यादिश्रुति(स्मृति)सिद्धार्थमनङ्गीकुर्वतामाप्तत्वस्यासिद्धेः । स्मृतिः पौरुषेयो ग्रन्थ इति चेत् । किमत्रायमखण्डवृत्तिः शब्दः किंवा यौगिकः । नाद्यः । कृदन्ततायाः स्पष्टावभासत्वात् । न द्वितीयः अव्याप्त्यतिव्याप्तिभ्यां योगानुपपत्तेः । तस्मान्मन्वादिस्मरणमूलत्वात्स्मृतिरित्युपचारो ग्राह्यः । ते हि श्रुत्यादिनाऽनुभूतमर्थं स्मृत्वा तत्प्रतिपादकं ग्रन्थमारचयन्ति व्यासादिप्रणीतेषु तत्सादृश्यात्प्रयोगः । न च मुख्ये बाधकमन्तरेणोपचारो लभ्यते ।

सन्तु वाऽक्षचरणादयो(ऽप्या)ह्याप्ताः । तथापि तत्तद्व्यवहाराभावमात्रेण स्मृत्यादिप्रामाण्यानभ्युपगमोऽयुक्तः । न हि तैः प्रतिव्यक्ति पदार्था निरूपिताः । तथाऽप्युक्तलक्षणैः संगृहीता इति चेत् । तुल्यं स्मृत्यादेरपि । प्रत्यक्षाद्यन्तर्भावस्य सुवचत्वात् ।

अपि च स्मृत्यादिकं प्रमाणपदवाच्यम् यथार्थत्वात् प्रत्यक्षवत् । न चानुभवत्वमुपाधिः । समव्याप्तिपक्षे संशयादौ व्याप्तिभङ्गात् । विषमव्याप्तित्वे(पक्षे)ऽपि करणरूपे प्रत्यक्षे साध्याव्यापकत्वात् । किञ्चेदमनुभवत्वं स्मृतिव्यतिरिक्तज्ञानत्वमिति चेत् । किमर्थमिदं विशेषणम् । पक्षव्यावृत्त्यर्थमिति चेत् । तर्हि पक्षेतरत्वेनानुपाधित्वम् । अन्यथेश्वरानुमानेऽप्युपाधिरशक्यनिरासः स्यात् । एतेनानुभवतत्करणयोरन्यतरत्वमपि प्रत्युक्तम् ।

शे० — उदाहृतमूलं मनसि निधायाद्यं दूषयति **नाद्यो लोकेति** । तस्यासिद्धिं परिहरति **यथार्थेति** । यथार्थज्ञानत्वं च स्मृतेः प्रागेव समर्थितमिति भावः । नन्वप्रयोजकत्वान्न लोकव्यवहारेण स्मृतेः प्रामाण्यसिद्धिरित्यतोऽन्यत्र प्रामाण्यसाधकत्वेन क्लृप्तत्वात् तस्य नाप्रयोजकत्वमित्याह **न हीति** । अन्यत्र अन्यदित्यर्थः । अन्यदित्यपि क्वचित्पाठः ।

ननु न लोकव्यवहारमात्रेण प्रत्यक्षादेः प्रामाण्यसिद्धिः किन्तु प्रमाणामियुक्तव्यवहारादेव । तथा च तद्व्यवहारेण प्रत्यक्षादेः प्रामाण्यसिद्धिसंभवेऽपि स्मृतौ तद्व्यवहाराभावाल्लोकव्यवहारमात्रस्य च अप्रयोजकत्वान्न प्रामाण्यसिद्धिरिति शङ्कते **नन्विति** । श्रौतस्मृतिशब्दस्य स्मरणान्यपरत्वान्न श्रुतिसिद्धार्थानङ्गीकारित्वमिति न अनाप्तत्वमित्याशयेन शङ्कते **स्मृतिरिति ॥ कृदन्ततायाः इति** । स्मृ चिन्तायामित्यस्मात् स्त्रियां क्तिन्निति कृत्संज्ञकक्तिन्प्रत्यये कित्त्वाद्गुणाभावे निष्पन्नस्मृतिशब्दस्य कृदन्ततायाः स्पष्टावभासत्वेन यौगिकत्वान्नाखण्डवृत्तित्वमिति भावः । अत्र स्पष्टावभासत्वादित्यनेन योगस्य क्लृप्तत्वोक्त्या रूढेर्लब्धात्मकत्वसूचनान्न तया योगापहार इति सूचयति । न तु कृदन्ततामात्रं योगित्वस्वीकारे नियामकम् । शम्भ्वादिशब्दानामपि तदापत्तेरिति ध्येयम् ॥ **अव्याप्त्यतिव्याप्तिभ्यामिति** । अकर्तरि च कारके भावे च स्त्रियां क्तिन्विधानात्स्मृतिशब्दस्य भावसाधनत्वे पौरुषेयग्रन्थस्यातथात्वादव्याप्तिः स्मरणेऽतिव्याप्तिश्च । स्मर्यत इति कर्मसाधनत्वे च सर्वैः स्मर्यमाणत्वाभिप्राये पौरुषेयग्रन्थानामतथात्वादव्याप्तिः । स्मर्यमाणमात्रविवक्षायां च घटादावतिव्याप्तिः । स्मर्यतेऽनेनेति करणसाधनत्वे चानुभवमात्रजनकत्वात्पौरुषेयग्रन्थेऽतिव्याप्तिः । संस्कारादौ चातिव्याप्तिरित्यव्याप्त्यतिव्याप्तिभ्यामित्यर्थः । कथं तर्हि पौरुषेयग्रन्थेषु स्मृतिशब्दप्रयोग इत्यत आह **तस्मादिति** । नन्वेवं स्वतः सर्वज्ञप्रणीतव्यासादिप्रणीतेषु ग्रन्थेषु श्रुत्यादिजनितानुभवमापेक्षस्मरणमूलत्वरूपप्रवृत्तिनिमित्ताभावान्न तत्र स्मृतिपदप्रयोगः स्यादित्यत आह **व्यासादीति** । तत्सादृश्यादर्थमुपलभ्य रचितत्वरूपान्मन्वादिस्मृतिसादृश्यात्प्रयोगः स्मृतिशब्दस्येति शेषः । ननु स्मृतिशब्दस्य मन्वादिस्मृतावौपचारिकत्वादौपचारिकार्थसादृश्यस्य च गौणत्वेऽप्रयोजकत्वादप्रयोजकीभूतमुख्यार्थसादृश्यस्य च व्यासादिप्रणीतेष्वभावात्कथं स्मृतिशब्दस्य तत्र गौणी वृत्तिरिति चेन्न । स्मृतिशब्दस्य मन्वादिस्मृतावुपचारेऽपि रूढोपचारेण तत्र प्रवृत्त्या मन्वादिस्मृतेरपि रूढ्यभिप्रायेण स्मृतिशब्दमुख्यार्थत्वस्यापि सत्त्वेन तत्सादृश्येन गौणत्वोपपत्तेरित्याशयात् । अस्तु तर्हि उदाहृतश्रुतौ स्मृतिशब्द औपचारिकस्मृतिशब्दार्थभूतपौरुषेयग्रन्थपर इत्यत आह **न चेति** । तथा च बाधकाभावेन श्रौतस्मृतिशब्दस्य मुख्यार्थत्वसिद्धौ श्रुतिसिद्धार्थानङ्गीकारित्वसिद्धिरिति भावः ।

**न हीति** । पदार्थानामनन्तत्वेन प्रतिव्यक्ति पदार्थनिरूपणस्य जन्मसहस्रेणाप्यशक्यत्वादिति भावः ॥ **उक्तलक्षणैरिति** । समवायिकारणं द्रव्यम् , सामान्यवान् असमवायिकारणम् , अस्पन्दात्मा गुणः

इत्याद्युक्तलक्षणैः संगृहीतत्वान्न प्रतिव्यक्ति पदार्थानामनिरूपणं दोषायेत्यर्थः । तर्हि स्मृतेरप्युक्तलक्षणसंगृहीतत्वान्न पृथक् प्रमाणत्वेन तदसङ्कीर्तनं दोषायेत्याह **तुल्यमिति** । ननु स्मृत्यादेरसाक्षात्कारादिरूपत्वान्न केवललक्षणेन संग्रहस्संभवति । नापि तत्करणस्य । अनिन्द्रियसन्निकर्षरूपत्वेन प्रत्यक्षे अज्ञातकरणत्वेनानुमानादावन्तर्भावानुपपत्तेः, उक्तातिरिक्ते चानुप्रमाणत्रैविध्यभङ्गात्; तत्कथमुक्तलक्षणसंगृहीतत्वं स्मृत्यादेरित्यत आह **स्मृत्यादेरपीति** । आदिपदेनानुवादस्य परिग्रहः । प्रत्यक्षादीत्यादिपदेनागमपरिग्रहः । स्मृतेर्विज्ञानमित्यादिना साक्षात्कारत्वस्योत्तरोत्तरत्रोपपादयिष्यमाणत्वेन प्रत्यक्षफलेऽन्तर्भावात् संस्कारस्य तत्करणत्वपक्षे तस्यानिन्द्रियसन्निकर्षरूपत्वेन प्रत्यक्षे, अज्ञातकरणत्वेनानुमानादौ चान्तर्भावासंभवेऽपि मनःकरणत्वपक्षे स्मृतिकरणस्य मनसः प्रत्यक्षकरणेऽन्तर्भावान्नानुप्रमाणत्रैविध्यभङ्ग इति भावः । **अनुभवत्वमिति** । अनधिगतार्थविषयकज्ञानत्वमित्यर्थः । तेन स्मृत्यादिकमित्यत्रादिपदेनानुवादजनितज्ञानस्यापि पक्षत्वेन संगृहीतत्वात्तत्र चानुभवस्य सत्त्वात्साधनव्यापकत्वं तद्व्यतिरेकेण साध्यव्यतिरेकसाधने च भागासिद्धिशङ्कानवकाश इति ध्येयम् । उदयनाचार्यमतमाश्रित्याह **समेति** । नवीनमतमाश्रित्याह **विषमेति** । ननु ज्ञानत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वस्य विवक्षितत्वान्न करणरूपे प्रत्यक्षे साध्याव्यापकत्वमित्यत आह **किञ्चेति** ॥ **किमर्थमिति** । ज्ञानत्वमात्रस्यापि साध्यव्यापकत्वसंभवादिति भावः । ज्ञानत्वमात्रस्य साध्यव्यापकत्ववत्साधनवति पक्षेऽपि सत्त्वेन साधनव्यापकत्वात्साधनाव्यापकत्वार्थं विशेषणोपादानमिति भावेन शङ्कते **तर्हीति** । पक्षमात्रव्यावर्तकविशेषणवत्त्वादित्यर्थः ॥ **अन्यथेति** । पक्षमात्रव्यावर्तकविशेषणवतोऽप्युपाधित्व इत्यर्थः ॥ **ईश्वरेति** । विमतं सकर्तृकं कार्यत्वादितीश्वरानुमाने प्रतिवाद्युक्तशरीरिजन्यत्वरूपोपाधिस्तार्किकेण न निराकर्तुं शक्यः । तत्र पक्षमात्रव्यावर्तकविशेषणवत्त्वं विनाऽन्यस्योपाधिदोषस्याभावात् तथा चेश्वरानुमानमपि सोपाधिकत्वादीश्वरसाधकं न स्यादिति भावः । नन्वनुभवतत्करणयोरन्यतरत्वमुपाधिर्न त्वनुभवत्वमात्रम् । तथाच करणरूपे प्रत्यक्षेऽनुभवत्वाभावेऽप्यनुभवतत्करणयोरन्यतरत्वसत्त्वान्न साध्याव्यापकत्वम् । न च स्मृत्यादिकमित्यादिपदेनानुवादस्यापि पक्षत्वाङ्गीकारात्स्मृतितत्करणयोरनुभवतत्करणयोरन्यतरत्वाभावेनोपाधेः साधनाव्यापकत्वेऽप्यनुवादवाक्यतज्जन्यज्ञानयोरनुभवतत्करणान्यतरत्वसत्त्वेनोपाधेः साधनव्यापकत्वात्कथमस्योपाधित्वमिति वाच्यम् । अनुवादवाक्यस्य स्मृतिव्यतिरिक्तज्ञानकरणत्वेऽप्यत्र वैवक्षिकाज्ञानज्ञानकरणत्वरूपतत्करणत्वाभावेन साधनव्यापकत्वसंभवात् । अनुवादसंग्रहायैतादृशस्यैव तत्करणत्वस्यात्र विवक्षितत्वादित्यत आह **एतेनेति** । किञ्चिदमनुभवत्वमित्युक्ते पक्षेतरत्वेनेत्यर्थः । उक्तोपाधेरपि स्मृतिव्यतिरिक्तज्ञानतत्करणयोरन्यतरत्वरूपत्वात्तत्र स्मृतिव्यतिरिक्तपदाभावे ज्ञानतत्करणयोरन्यतरत्वस्य पक्षीभूतस्मृतितत्करणयोः सत्त्वेन साधनव्यापकत्वप्रसङ्गेन तत्परिहारार्थतया

स्मृतिव्यतिरिक्तपदस्योक्तोपाधेरपि पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरत्वादनुपाधित्वमेवेत्याशयः । अत्र च प्रागुक्तसाध्याव्यापकत्वमात्रोपमर्दकत्वेन शङ्कायामाधिक्यादतिदेश इति द्रष्टव्यम् ।

म० — ननु स्मृतिः प्रमाणं इति स्पष्टव्यवहाराभावात् कथं लोकव्यवहारस्य सत्त्वमित्यत आह **यथार्थज्ञानेति** । अत्र तद्विरुद्धप्रमाणत्वाव्यवहाराभिप्रायेण प्रमाणत्वाव्यवहारोऽभिप्रेतः, किं वा प्रमाणत्वाव्यवहार एवेति विकल्पं मनसि निधायाद्यं दूषयति **श्रुतिसिद्धार्थमिति** । 'स्मृतिः प्रत्यक्षमैतिह्यम्' इत्येतद्वाक्यस्य श्रुतित्वात् । अत एव मानलक्षणे 'श्रुतिश्चास्ति' इत्युक्तम् । क्वचित् स्मृतिसिद्धार्थमिति पाठः । तत्र तादृशस्मृतेरपि सद्भावात् तथोक्तमिति ध्येयम् । ननु 'स्मृतिः प्रत्यक्षमैतिह्यम्'इति श्रुतिस्थस्मृतिशब्दस्य स्मरणार्थकत्वात् तत्र च स्मृतेः प्रामाण्यस्योक्तत्वात् तद्विरुद्धवादित्वेनासत्वासिद्धिरित्युक्तम् । तत्र स्मृतिशब्दस्य पौरुषेयग्रन्थरूपत्वेन तत्प्रामाण्यस्यैवोक्तत्वात् तद्विरुद्धत्वस्यैवाभावेनासत्वमुपपन्नमिति शङ्कते **स्मृतिरिति** ॥ **कृदन्ततया इति** । अत्र स्पष्टावभासत्वादित्यनेन योगस्य क्लृप्तत्वमुच्यते । तथा च रूढेर्योगापेक्षया प्रबलत्वेऽपि क्लृप्तयोगस्याक्लृप्तरूढ्यपेक्षया प्राबल्यस्य प्रेक्षण्यादिशब्देषु दृष्टत्वादत्रापि योगेन रूढेरेव बाध इति भावः ॥ **अव्याप्त्यतिव्याप्तिभ्यामिति** । स्मर्यतेऽनेन इति स्मृतिशब्दार्थभूतस्य स्मरणसाधनत्वस्य क्वचित्पौरुषेयग्रन्थे सत्त्वेऽपि सर्वत्राभावेनाव्याप्तिः । संस्कारे स्मृतिसाधनत्वस्य सत्त्वेऽपिस्मृतित्वाभावेनातिव्याप्तिरित्यव्याप्त्यतिव्याप्तिभ्यामित्यर्थः । यद्वा स्मर्यत इति स्मृतिरिति योगो वाच्यः । स च न संभवति । स्मरणविषयत्वस्य स्मरणेऽभावेनाव्याप्तेः । घटादावपि सत्त्वेन स्मृतिविषयत्वस्यातिव्याप्तेश्चेत्यर्थः । ननु व्यासस्य स्वतः सर्वज्ञत्वेन श्रुत्यादिना **अर्थमनुभूय** स्मृत्वा ग्रन्थकर्तृत्वाभावेन तत्कृतग्रन्थस्य श्रुत्यादिना अनुभूतार्थस्मरणमूलकत्वाभावेन तत्कृतग्रन्थे स्मृतिपदप्रयोगो न स्यादित्याशङ्क्य अर्थमनुसृत्य रचितत्वरूपगुणयोगेन मन्वादिस्मृतिसादृश्यात् स्मृतिपदप्रयोगः संभवतीत्याह **व्यासादिप्रणीतेष्विति** । न चैवं लक्षितार्थसादृश्येऽपि मुख्यार्थसादृश्याभावात् न गौणी वृत्तिरिति वाच्यम् । मन्वादिस्मृतौ रूढलक्षणया स्मृतिशब्दस्य प्रवृत्तत्वेन रूढ्यभिप्रायेण मुख्यार्थत्वेन तत्सादृश्येन गौणीत्वोपपत्तिरित्यभिप्रायात् । ननु तथापि 'स्मृतिः प्रत्यक्षम्' इत्यत्र पौरुषेयग्रन्थरूपस्य स्मृतिशब्दामुख्यार्थस्यैव ग्रहणं किं न स्यादित्यत आह **न चेति** ।

प्रमाणत्वव्यवहाराभावमेवाभिप्रेत्य द्वितीयं दूषयति **सन्तु वेति** । स्मृत्यादिकमित्यत्र आदिपदेन एतत्साधनपरामर्शः । साध्यसमव्याप्त एवोपाधिरित्युदयनमतानुसारेणाह **समव्याप्तिपक्ष इति** । समव्याप्तवत् विषमव्याप्तस्योपाधित्वेन शास्त्रसिद्धत्वान्न समव्याप्तस्यैवोपाधित्वमित्यत्राह **विषमव्याप्तत्वे इति** । ननु ज्ञानत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वविवक्षणान्न करणीभूते प्रत्यक्षे साध्याव्याप्तिरित्यत आह **किं चेति** ॥ **एतेनेति** । पक्षमात्रव्यावर्तकविशेषणत्वेन पक्षेतरत्वेनेत्यर्थः । न चानुवादरूपपक्ष

अनुभवकरणत्वसत्त्वात् तत्र साधनव्यापकत्वमिति वाच्यम् । परोक्तानुसारेण अत्र अज्ञातज्ञापकत्वस्यापि तत्करणशब्दार्थत्वेन विवक्षणेन अनुभवकरणत्वेऽपि अज्ञातज्ञापकत्वाभावेन तत्रापि साधनाव्यापकत्व-संभवात् । **ईश्वरानुमानेऽपीति** । विमतं सकर्तृकं कार्यत्वात् इत्यत्रापि अस्माभिरुद्भावितस्य शरीर-जन्यत्वलक्षणोपाधेः पक्षेतरत्वेनानुपाधित्ववर्णनं न स्यादिति भावः । ननु अनुभवतत्करणयोरन्यतरत्व-मुपाधिः । न चोक्तदोषः । करणरूपे प्रत्यक्षे अनुभवत्वाभावेऽपि अनुभवतत्करणयोरन्यतरत्वरूपोपाधि-त्वसद्भावेन तत्र साध्याव्यापकत्वरूपोक्तदोषाभावादित्यत आह **एतेनेति** । किंच इदमनुभवत्वम् इत्युक्तपक्षेतरत्वेनेत्यर्थः । अनुभवतत्करणयोरन्यतरत्वस्य स्मृतिव्यतिरिक्तज्ञान-स्मृतिव्यतिरिक्तज्ञानकरण-योरन्यतरत्वरूपत्वात् तत्र च ज्ञानतत्करणयोरन्यतरत्वमात्रस्यैवोपाधित्वेन स्मृतितत्करणरूपपक्षेऽपि ज्ञानतत्करणयोरन्यतरत्वसद्भावेन साधनव्यापकत्वापत्त्या तन्निवृत्त्यर्थमेव स्मृतिव्यतिरिक्तज्ञान-स्मृतिव्यति-रिक्तज्ञानकरणयोरन्यतरत्वस्योपाधित्वे वाच्ये पक्षेतरत्वान्नोपाधित्वमिति भावः ।

प०— **इत्यादिश्रुतीति** । 'स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् । प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिः' इति प्रमाणलक्षणोक्तश्रुतिः । 'स्मृतिस्तु' इत्यादि ब्रह्मतर्कादिरूपा स्मृतिः इति श्रुत्यादिस्थस्मृतिशब्दार्थः । **अखण्डवृत्तिरिति** । रूढ इत्यर्थः । **कृदन्ततायाः इति** । अत्र स्पष्ट-प्रतिभासत्वादित्यनेन योगस्य क्लृप्तत्वमुच्यते । स्मृञ् चिन्तायामित्यतो धातोः स्त्रियां क्तिन्निति क्तिन्प्रत्य-यस्य कृदतिङिल्यनेन कृत्संज्ञत्वेन कृत्संज्ञकक्तिन्प्रत्ययान्ततायाः इत्यर्थः । तथाच ज्ञानविशेष एव स्मृति-शब्दार्थो न ग्रन्थ इति भावः ॥ **अव्याप्त्यतिव्याप्तिभ्यामिति** । भावे अकर्तरि च कारके संज्ञाया-मित्यधिकारे स्त्रियां क्तिन्नित्युक्तत्वात् स्मर्यतेऽनेनेति करणकारके क्तिन्प्रत्ययमुपेत्य पौरुषेयग्रन्थे स्मृतिशब्दो व्याख्येयः । योगान्तरस्यासंभवात् । अयं च योगः क्वचित्स्मारकवाक्ये सन्नप्यनुभवजनके नास्तीति अव्याप्तिः । स्मृतिहेतुसंस्कारादौ अस्तीत्यतिरेतिव्याप्तिरतो न योगो युक्त इत्यर्थः । मन्वादिस्मरण-मूलत्वादित्येतद्व्यनक्ति **ते हीति** । प्रत्यक्षमूलग्रन्थेषु कथमित्यत आह **व्यासादीति** । आप्तोक्तवाक्यत्व-ज्ञानपूर्वकवाक्यत्वालौकिकार्थप्रतिपादकाप्तवाक्यत्वादिसादृश्यादित्यर्थः । ननूपचारेणापि स्मृतिपदस्य मन्वादिग्रन्थेषु प्रयोगसत्त्वात् 'स्मृतिः प्रत्यक्षमैतिह्यम्' इत्यादौ स्मृतिपदेन (स्मृति)ग्रन्थ एव ग्राह्य इत्यत आह **न चेति** ॥ **स्मृत्यादीति** । स्मृत्यनुवादयोरित्यर्थः ॥ **प्रत्यक्षाद्यन्तर्भावस्येति** । 'मानसं तद्धि विज्ञानम्' इत्यत्र वक्ष्यमाणदिशा प्रत्यक्षे, 'पूर्वानुभूते किं मानमि'त्युत्तरत्र वक्ष्यमाणदिशानुमाने, वाक्यस्यापि स्मारकत्वाङ्गीकारेण शब्दे चान्तर्भावस्य सुवचत्वादिति भावः । अनुवादस्याप्यादिपदोपात्त-स्यैवं ध्येयम् ॥ **अन्यथेश्वरानुमान इति** । पक्षव्यावर्तकविशेषणवतोऽप्युपाधित्वे क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र मीमांसकोक्तशरीरजन्यत्वरूपोपाधिनिरासोऽशक्यः स्यात् । पक्षव्यावर्तकविशेषणरूप-

दोषेणैव तस्य निराकार्यत्वादिति भावः । ननु अनुभवतत्करणान्यतरत्वमुपाधिरस्तु । तथा च न प्रत्यक्षं साध्याव्यापकत्वमित्यत आह **एतेनेति** । पक्षव्यावर्तकविशेषणवत्स्वरूपदोषेणेत्यर्थः ।

या० — **कृदन्ततया इति** । स्मृ चिन्तायामित्यस्माद्धातोः 'स्त्रियां क्तिन्'इति कृत्संज्ञके क्तिन्प्रत्यये कृते किच्त्वाद् गुणाभावे स्मृतिरितिरूपस्य कृदन्ततया इत्यर्थः॥ **अव्याप्त्यतिव्याप्तिभ्यामिति** । 'स्त्रियां क्तिन्'इत्यत्र 'अकर्तरि च कारके' इत्यनुवृत्तिरभिप्रेता । एवं च यदि करणे क्तिन् तदा स्मर्यतेऽनयेति स्मृतिरिति योगो वाच्यः । न चासौ संभवति । स्मृतिसाधनत्वस्यानुभवमात्रजनके क्वचित्पौरुषेयग्रन्थेऽभावेनाव्याप्तेः । संस्कारादावपौरुषेये वेदेऽपि सत्त्वेनातिव्याप्तेरित्यर्थः । **यदि च** कर्मणि, तदा स्मर्यत इति स्मृतिरिति योगो वक्तव्यः । अयमपि न संभवति । स्मृतिविषयत्वस्यानुभवमात्रविषये क्वचित्पौरुषेयग्रन्थविशेषेऽभावेनाव्याप्तेः । वेदेऽपि सत्त्वेनातिव्याप्तेरित्यर्थः । एवं कारकान्तरेऽप्यूह्यम् । ननु स्वतः सर्वज्ञव्यासादिप्रणीतेषु ग्रन्थेषु श्रुत्यादिजनितानुभवसापेक्षस्मरणमूलकत्वरूपनिमित्ताभावात् कथं स्मृतिपदप्रयोग इत्यत आह **व्यासादीति** । **तत्सादृश्यात्** अर्थमुपलभ्यरचितत्वरूपात् मन्वादिस्मृतिसादृश्यात् । **प्रयोगः** स्मृतिपदस्येति शेषः । नन्वेवं 'स्मृतिः प्रत्यक्षमि'त्यत्र पौरुषेयग्रन्थरूप औपचारिक एवार्थो विवक्षितोऽस्त्वित्यत आह **न च मुख्य इति** । स्मरणस्य भावव्युत्पत्त्या स्मृतिशब्दमुख्यार्थस्यैवात्र ग्रहणसंभवेऽमुख्यार्थग्रहणायोगादिति भावः । पक्षमात्रव्यावर्तकविशेषणवतोऽप्युपाधित्वे विमतं सकर्तृकमितीश्वरानुमाने मीमांसकोक्तः शरीरजन्यत्वरूप उपाधिस्तार्किकेण निराकर्तुं न शक्यः । तत्र पक्षमात्रव्यावर्तकविशेषणवत्त्वं विनाऽन्यस्योपाधिदोषस्याभावात् । तथा च ईश्वरानुमानमपि सोपाधिकं स्यादिति भावः । ननु न करणरूपे प्रत्यक्षे साध्याव्यापकता । अनुभवतत्करणान्यतरत्वस्यैवोपाधितया विवक्षितत्वादित्यत आह **एतेनेति** । अत्रापि स्मृतिव्यतिरिक्तज्ञानत्वरूपानुभवत्वस्य प्रवेशेन पक्षमात्रव्यावर्तकविशेषणवत्त्वेनेत्यर्थः ।

श्री० — ननु स्मृतिप्रामाण्ये कथं लोकव्यवहारोऽस्तीत्यत आह **यथार्थेति** । ततश्च स्मृतेरपि यथार्थज्ञानत्वाल्लोकव्यवहारः प्रामाण्यसाधको भविष्यतीति भावः । प्रमाणनिरूपणेऽभियुक्तानाम् । **अयं शब्दः** स्मृतिः प्रत्यक्षमित्यत्र श्रुतस्मृतिशब्दः । **अत्र** अपौरुषेयग्रन्थे । **वृत्तिर्वृत्तियुक्तः** । ननु व्यासस्य स्वतः सर्वज्ञत्वेनादौ श्रुत्यादिनाऽर्थमनुभूय पश्चात्स्मृत्वा भागवतादिग्रन्थस्याकृतत्वेनानुभूतार्थस्मरणमूलकत्वाभावात्कथं तत्कृतग्रन्थे स्मृतिपदप्रयोग इत्याशङ्क्य अर्थमनुसृत्य रचितत्वरूपगुणयोगेन मन्वादिस्मृतिसादृश्याद्युक्तः स्मृतिपदप्रयोग इत्याह **व्यासादीति** । ननु तथाऽपि 'स्मृतिः प्रत्यक्षमि'त्यत्र स्मृतिशब्देन स्मरणरूपमुख्यार्थं विहाय पौरुषेयग्रन्थरूपामुख्यार्थ एव कस्माद्गृह्यत इत्यत आह **न चेति** । **पदार्थाः प्रतिव्यक्ति** प्रत्येकं प्रत्येकमित्यर्थः । तथा च स्मृतिप्रामाण्यं विशिष्य न निरूपितमित्येतावता

तदनभ्युपगमो न मन्तव्यः । तथा सति विशिष्य घटज्ञानस्य प्रमात्वं न निरूपितमिति तदप्यनभ्युपेयं स्यादिति भावः ॥ **उक्तेति** । घटज्ञानस्यापि प्रमात्वं तद्वतीत्यादिस्वग्रन्थोक्तलक्षणेन संगृहीतमिति भावः । **तुल्यं** स्मृतावपीति शेषः । एतदेवोपपादयति **स्मृत्यादेरिति** । एवं लोके व्यवहारेण स्मृतिप्रामाण्यं साधयित्वा साधकान्तरमाह **अपि चेति** । साध्याविशिष्ट्यपरिहाराय वाच्यमित्युक्तम् । अनुपाधित्वं पक्षमात्रव्यावर्तकविशेषणवत्त्वेन । स्मृतिः प्रमाणपदवाच्या न भवति स्मृतित्वादित्यनुभवत्वरूपोपाध्यभावेन सत्प्रतिपक्षकरणेऽसाधारण्यं घटादाविति भावः ॥ **एतेनेति** । करणरूपप्रत्यक्षे पूर्ववत्साध्याव्यापकत्वा-भावेऽपि किञ्चिदमित्युक्तरीत्या पक्षेतरत्वेनेत्यर्थः ।

**च०** — **अखण्डवृत्तिः** रूढियुक्तः । **यौगिक** अवयवशक्तिमान् । **कृदन्ततया अव्या-प्त्यतिव्याप्तिभ्यामिति** । 'भावे', 'अकर्तरि च कारके संज्ञायामि'त्यधिकृत्य 'स्त्रियां क्तिन्नि'ति क्तिनो विहिततया तस्य करणसाधनतायामनुभवमात्रजनकपौरुषेयग्रन्थविशेषे अभावेनाव्याप्तेः संस्कारादाव-पौरुषेये वेदेपि सत्त्वेनातिव्याप्तेः । कर्मसाधनतायां चानुभवमात्रविषये पौरुषेयग्रन्थविशेषेऽव्याप्तेर्वेदेऽपि सत्त्वेनातिप्रसङ्गाच्चेत्यर्थः । **ते** मन्वादयः । **व्यासादीति** । तस्य नैसर्गिकसार्वज्ञशालितया तत्प्रणीत ग्रन्थेषु श्रुत्यादिजनितानुभवनियन्त्रितस्मरणनिबन्धनत्वरूपप्रवृत्तिनिमित्तविरहेपि मन्वादिस्मृतिनिरूपिताद-र्थोपलब्धिनिबन्धनरचनाकर्मत्वरूपसादृश्यात्स्मृतिपदप्रयोग इति भावः । **न च मुख्य इति** । क्तिनो भावसाधनतया मुख्यार्थग्रहणसंभवे तत्परित्यागायोगादिति भावः । **अन्यथेश्वरानुमान इति** । विमतं पक्षीकृत्य कार्यत्वेन सकर्तृकत्वमनुमिमानान्नैयायिकान् प्रति ईषद्द्वेषिमीमांसकोपन्यस्तः शरीरजन्यत्वलक्षणो-पाधिरपि पक्षेतरत्वस्येव पक्षमात्रव्यावर्तकविशेषणघटिततया नोपाधिरिति नैयायिकैर्न प्रत्याख्येयः स्यादिति तादृशानुमानमपि सोपधिकं प्रसज्येतेति भावः । **अनुभवतत्करणयोरन्यतरत्वमिति** । अनुभवत्वाव-च्छिन्नप्रतियोगिताकभेदविशिष्टतत्करणत्वावच्छिन्नप्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदवत्त्वमित्यर्थः। **प्रत्युक्तमिति** । स्मृतिभिन्नज्ञानत्वरूपानुभवत्वप्रवेशेन पक्षमात्रव्यावर्तकविशेषणघटितत्वेन प्रतिविहित-मित्यर्थः ।

सु० — अस्तु तर्हि बाधकसद्भावादिति द्वितीय इत्यत आह अङ्गीकृतं चेदिति ।

अनु० — अङ्गीकृतं चेत्प्रामाण्यं स्मृत्यादेः का विरुद्धता ॥

स्मृत्यादेः प्रामाण्यमिति संबन्धः । किमाक्षेपे । तर्हीति शेषः । स्मृतिरनुवादश्चा-प्रमाणम् निष्फलत्वात् । यद्यत्प्रमाणं तत्तत्सफलं दृष्टं यथा प्रत्यक्षादीति बाधकसद्भावात्कथमेत-दिति चेत् । किमत्र सर्वा स्मृतिः सर्वोऽप्यनुवादश्च (सर्वश्चानुवादः) पक्षीक्रियते, किंवा तदेकदेशः । आद्ये भागासिद्धिरित्याह न चेति ।

न चाफलत्वं वक्तव्यं सर्वस्मृत्यनुवादयोः ॥

**कासाञ्चित्स्मृतीनां केषाञ्चिदनुवादानां च सफलत्वोपलम्भादिति चार्थः । उपपादयिष्यते चैतत् । अप्रयोजकश्चायं हेतुरित्याह** फलवत्त्वमिति ।

अनु०— फलवत्त्वं न चास्माभिः प्रामाण्यं च (हि) विवक्षितम् ॥

**यदि हि फलवत्त्वं प्रामाण्यं प्रामाण्यस्य व्यापकमस्माभिः परीक्षकैर्विवक्षितं स्यात् । स्यान्नाम तदा व्यापकस्य तस्य निवृत्त्या स्मृत्यादेः प्रामाण्यनिवृत्तिः । न चैवमित्यर्थः ॥ अयमभिसन्धिः । अप्रमाण(प्रामाण्य)व्यवहारे याथार्थ्याभाव एव प्रयोजकः, अप्रामाण्ये तु करणदोषबाधकप्रत्ययौ न निष्फलत्वमिति । एतेनाफलांशस्यैव पक्षीकरणमिति द्वितीयोऽपि निरस्तः ।**

शे०— एवं वेदानुमानादिप्रामाण्यप्रसिद्धेश्चेति प्रमाणलक्षणानुरोधेनाद्यं बहिरेव निरस्य द्वितीयनिरासकतयोत्तरमूलमवतारयितुं तमुत्थापयति **अस्तु तर्हीति** । स्मृत्यादेः प्रामाण्ये बाधकाभावस्य मूलारूढतासिद्ध्यर्थमपेक्षितं संबन्धमाह **स्मृत्यादेरिति ॥ तर्हीति शेष इति ।** चेच्छब्दश्रवणादिति भावः । ननु सर्वासां स्मृतीनां सर्वेषामनुवादानां च धर्माधर्मान्यतरजन्यत्वेन सुखदुःखान्यतरफलकत्वमस्त्येव अन्यथा तद्बोधकश्रुत्यादेरप्रामाण्यप्रसङ्गात् । ततश्च निष्फलत्वस्य स्वरूपासिद्धत्वात्कथं भागासिद्धत्वोक्तिरित्यत आह **उपपादयिष्यते चैतदिति** । 'सुखदुःखादिकं किञ्चित्स्मृतावपि हि दृश्यते' इत्यादिनेति शेषः । सत्यमेतद्यत्सर्वत्र स्मृत्यादौ फलमस्तीति तथापि क्वचिद्दृष्टार्थस्मृत्यादौ सुखादिकं फलं स्पष्टमुपलभ्यते न सर्वत्र । तस्माद्दृष्टफलोपलम्भस्यासार्वत्रिकत्वात् भागासिद्धत्वम् । अन्यथा तु स्वरूपासिद्धत्वमेवेति भावः । ननु फलवत्त्वस्य प्रामाण्यव्यापकत्वात्तन्निवृत्त्या प्रामाण्यनिवृत्तिं साधयन्तं प्रति फलवत्त्वस्य प्रामाण्यव्यापकत्वमेवासम्मतमिति वक्तव्यम् । अप्रयोजकत्वोपपादकत्वात् । फलवत्त्वस्य प्रामाण्यरूपत्वेनासम्मतत्वाभिधानं त्वनर्थकं प्रकृताप्रयोजकत्वानुपपादकत्वादित्यतः प्रामाण्यपदं तथा व्याचष्टे **प्रामाण्यं प्रामाण्यव्यापकमिति** । यद्वा ननु फलवत्त्वं न प्रामाण्यमस्माभिर्विवक्षितमित्यसङ्गतं परेणापि फलवत्त्वं प्रामाण्यमित्यनुक्तेः; किन्तु प्रामाण्यव्यापकत्वात्तस्य तन्निवृत्त्या प्रामाण्यनिवृत्तिरेव साध्यते । तथा च कथमस्य तत्राप्रयोजकत्वसमर्पकत्वमित्यत आह **प्रामाण्यं प्रामाण्यव्यापकमिति ।** फलवत्त्वस्य स्वकीयप्रामाण्यव्यापकत्वविवक्षाभावस्योक्तदोषानुपपादकत्वादुपयोग्यर्थसमर्पकतयाऽस्माभिरित्येतद्व्याचष्टे **परीक्षकैरिति** । ननु निरुपाधिकसाध्यसंबन्धभङ्गस्यैव विपक्षे बाधकत्वान्नाप्रयोजकत्वमित्यत उपाधेरेव सत्त्वान्न निरुपाधिकसाध्यसंबन्धभङ्गो विपक्षे बाधक इत्याह **अयमिति** । किमत्राप्रमाणतया व्यवहर्तव्यत्वं साध्यं किंवाऽप्रामाण्यमेवेति विकल्पं मनसि निधाय आद्ये उपाधिमाह **अप्रमाणेति ।**

द्वितीये तमाह **अप्रामाण्येति** । केचित्तु ननु माऽस्तु फलवत्त्वं प्रामाण्यव्यापकं तथाऽपि तन्निवृत्त्या प्रामाण्यनिवृत्तिसाधने को दोषः । न चाप्रयोजकत्वमित्युक्तमिति वाच्यम् । प्रयोजकान्तराभावेन निष्फलत्वस्यैवाप्रामाण्यप्रयोजकत्वनिश्चयेन तदनवकाशादित्यतः किमत्राप्रामाण्यव्यवहारे प्रयोजकान्तरं नास्तीत्यभिमतं किंवाऽप्रामाण्ये नास्तीति विकल्पं मनसि निधाय क्रमेण दूषयति । अयमभिसन्धिरिती-त्याहुः । साध्याभेदप्रसक्त्या याथार्थ्याभावस्योपाधित्वायोगात्तत्परित्यागेनोपाध्यन्तरमेवाह **करणेति** । अप्रामाण्योत्पत्तौ करणदोषस्य ज्ञप्तौ च बाधकप्रत्ययस्य प्रयोजकत्वमिति भावेनोभयोपादानम् । यद्यपि करणदोषोऽपि ज्ञापकस्तथाऽपि करणदोषस्यापि बाधकप्रत्ययेनैव ज्ञेयत्वेनावश्यकत्वाद्बाधकप्रत्ययस्यैव ज्ञापकत्वविवक्षयेदमिति द्रष्टव्यम् ॥ **एतेनेति** । निष्फलत्वस्याप्रामाण्येऽप्रयोजकत्वव्युत्पादनेनेत्यर्थः ।

**स०— उपपादयिष्यते चैतदिति** । 'सुखदुःखादिकं किञ्चित्स्मृतावपि हि दृश्यते' इत्यादिनेति शेषः । **करणेति** । अप्रामाण्योत्पत्तौ दोषस्य, ज्ञप्तौ बाधाभावस्य च प्रयोजकत्वादुभयो-रुपादानम् । **एतेनेति** । फलवत्त्वस्य प्रामाण्ये अप्रयोजकत्वव्युत्पादनेनेत्यर्थः ।

**प०— उपपादयिष्यत इति** । 'सुखदुःखादिकं किञ्चित् स्मृतावपि हि दृश्यते' इत्यत्रानु-पदमेवेति भावः । प्रयोजकान्तराभावादेतदेव प्रयोजकमित्यत आह **अयमभिसंधिरिति** ॥ **एतेनेति** । अप्रयोजकत्वकथनेनेत्यर्थः ।

**या०—** ननु सर्वासां स्मृतीनां सर्वेषामनुवादानां च धर्माधर्मान्यतरजन्यत्वेन सुखदुःखान्यतर-फलकत्वमस्त्येव । अन्यथा तद्बोधकश्रुत्यादेरप्रामाण्यप्रसङ्गः । अतः स्वरूपासिद्धिरेव वक्तव्या कथं भागासिद्धिरित्यत आह **उपपादयिष्यते चेति** । 'सुखदुःखादिकं किञ्चित्स्मृतावपि हि दृश्यते' इत्यत्र 'सत्यं सर्वत्र स्मृत्यादौ फलमस्तीति । तथाऽपि क्वचिदिष्टार्थस्मृत्यादौ सुखादिकमनिष्टार्थस्मृत्यादौ दुःखादिकं फलं स्पष्टमुपलभ्यते, न सर्वत्र स्मृत्यादौ । अतः स्पष्टफलोपलम्भस्यासार्वत्रिकत्वाद्भागा-सिद्धिरेवोक्ता न स्वरूपासिद्धिरित्युपपादयिष्यत इत्यर्थः । ननु नाप्रयोजकत्वम् अन्यथा निरुपाधिकः साध्यसंबन्धो भज्येत इत्यनुकूलतर्कसंभवादित्यत उपाधिरप्यत्राभिप्रेत इत्याह **अयमभिसन्धिरिति** । किमप्रमाणतया व्यवहर्तव्यत्वं साध्यं किंवाऽप्रामाण्यमेवेति विकल्पं मनसि निधायाद्ये उपाधिमाह **अप्रमाणव्यवहार इति** । द्वितीये तमाह **अप्रामाण्ये त्विति** । साध्याभेदप्रसङ्गान्न याथार्थ्याभावः अत्रोपाधितया वक्तुं शक्यः । अत उपाध्यन्तरमुक्तमिति ज्ञातव्यम् ॥ **एतेनेति** । अप्रयोजकत्वेनेत्यर्थः ।

**श्री०—** स्मृत्यादेर्विरुद्धता केत्यन्वयप्रतीतेराह **स्मृत्यादेरिति** ॥ **तदेकदेशोऽ**फलांशभागः । न वक्तव्यमित्यत्र हेतुसूचकस्य चशब्दस्यार्थमाह **कासाञ्चिदिति** । **तस्य** फलवत्त्वस्य । **अयमभि-**

**सन्धिरिति** । तथा च यदि पूर्वानुमानेऽप्रमाणव्यवहारः साध्यः तदा याथार्थ्याभाव उपाधिः यदि चाप्रामाण्यमेव साध्यं तर्हि करणदोषबाधकप्रत्ययोपेतत्वमुपाधिरित्याशयः ।

**एतेनेति** । उक्तरीत्याऽप्रयोजकत्वेनेत्यर्थः ।

**च० — उपपादयिष्यत इति** । 'सुखदुःखादिकं किञ्चित्स्मृतावपि हि दृश्यते' इत्यत्रानुपदमेवेति भावः । स्पष्टदृष्टफलोपलम्भस्यासार्वत्रिकत्वाद्भागासिद्धत्वमन्यथा स्वरूपासिद्धत्वमेवेति हृदयम् । अप्रामाण्योपरक्तव्यवहृतिविषयत्वं सिषाधयिषितमप्रामाण्यं वेति कल्पद्वयीमभिसन्दधान आद्यं याथार्थ्याभावलक्षणोपाधिना प्रत्याख्याति **अप्रमाणेति** । द्वितीयमपि दोषादिरूपोपाधिदूषिततयाऽपहस्तयते **अप्रामाण्ये त्विति** ।

**सु० — करणदोषबाधकप्रत्ययाविव विफलत्वमप्यप्रामाण्यप्रयोजकं किन्न स्यादित्यत** आह तृणादीति ।

**अनु० —** तृणादिदर्शने किञ्च फलवत्त्वं निगद्यते ॥

**धर्मस्य धर्म्यधिकरणमिति सप्तमी । ग्रामं गच्छतः पथि पतिततृणादिदर्शनस्य । उपलक्षणं चैतत् । स्व(क)कारणसामर्थ्यायातानुमितेश्चेत्यपि द्रष्टव्यम् । किमाक्षेपे । विफलत्वस्याप्रामाण्यप्रयोजकत्वे तृणादिदर्शनादेस्तथात्वेनाप्रामाण्यं स्यात् । न चैवम् । लोकव्यवहारविरोधादित्याशयः ।**

**यद्वाऽनैकान्तिकश्चायं हेतुरिति अनेनाचष्टे । प्रमाणतया सम्मते विपक्षभूते तृणादिदर्शने किं फलवत्त्वं निगद्यते न किञ्चिद(किम)पीत्यफलत्वं तत्र गतमिति ।**

**ननु कार्यजातं प्राणिनां धर्माधर्माभ्यामुपजायत इति तावदविवादम् । ततश्च धर्माधर्माभ्यामुपजनिततृणादिदर्शनं स्वयमसुखदुःखात्मकं यदि सुखं दुःखं वा तत्साधनं वा न जनयेत् तदा धर्माधर्मयोर्वैयर्थ्यं श्रुत्यादेरप्रामाण्यं वा(चा)पद्येत । ततश्च तृणादिदर्शनेनापि सुखदुःखादिकं किञ्चिदुपजनयितव्यमेव । अतः कथं तस्य विफलत्वमित्यत आह** सुखेति ।

सुखदुःखादिकं किञ्चित्स्मृतावपि हि दृश्यते ॥

**अनेन न्यायेन सर्वस्याः स्मृतेः सर्वस्य चानुवादस्य सफलत्वात्स्वरूपासिद्ध एव हेतुः स्यात्** । भागासिद्धता तु स्पष्टफलोपलम्भा(भावा)भिप्रायेणोक्तेति भावः । **इयांस्तु विशेषः । तृणादिदर्शनस्य फलं सर्वथाऽ(प्य)व्यक्तम् नैवं स्मृत्यादेरित्युक्तं दृश्यतेऽपि हीति । अत्रानु**वादोऽपि ग्राह्यः । तथा हि । **इष्टार्थस्मृतौ सुखं, तज्जातीये रागः, संस्कारपाटवं च ।**

**अनिष्टार्थस्मृतौ दुःखं, तज्जातीये द्वेषः, संस्कारपाटवं च । प्रशस्तार्थस्मरणे धर्मः, अप्रशस्तार्थस्मरणे त्वधर्मः । एवमनुवादेऽपि द्रष्टव्यम् । अन्यथा प्रणिधानादिवैयर्थ्यप्रसङ्गात् । 'शब्दार्थयोः पुनर्वचनं पुनरुक्तम् अन्यत्रानुवादादि'ति वदताऽक्षपादेनाप्यनुवादस्य साफल्यमङ्गीकृतम् । निगमनस्य च प्रयोजनानि न्यायविद्भिरुपपादितानीति ।**

शे० — ननु फलवत्त्वस्य तृणादिदर्शनधर्मत्वात्तृणादिदर्शनस्य च फलवत्त्वरूपधर्मं प्रति धर्मित्वाद्धर्मधर्मिभावरूपसंबन्धे तृणादिदर्शनस्येति षष्ठ्यैव भवितव्यम् । तत्कथं तृणादिदर्शन इति सप्तमी । आधारोऽधिकरणमिति सूत्रे क्रियाश्रययोः कर्तृकर्मणोर्धारणक्रियां प्रत्याधारस्यैवाधिकरणत्वोक्तेः । प्रकृते च फलवत्त्वस्य निगदनरूपक्रियाश्रयत्वाभावेन तृणादिदर्शनस्याधिकरणकारकत्वाभावादित्यतः 'विवक्षातः कारकाणि भवन्ती'ति न्यायेन तृणादिदर्शनफलवत्त्वयोः सतोऽपि धर्मधर्मिभावस्याविवक्षयाऽसतोऽप्यधिकरणाधेयभावस्यैव च विवक्षया सप्तम्युपपत्तिरित्याशयवानाह **धर्मस्येति** । एतच्च स्वतस्त्वधर्मस्य प्रामाण्यं धर्म्यधिकरणतया विवक्षितमिति सप्तम्युपपत्तिरि'त्युत्तरटीकाग्रन्थानुसारेण योज्यम् । तृणादिकमुद्दिश्य गच्छतस्तद्दर्शनादिकं सफलमेवेत्यतस्तृणादिदर्शनपदं तद्विशेषपरमित्याह **ग्रामं गच्छत इति** । दर्शनपदं प्रत्यक्षपरमित्याशयेनाह **उपलक्षणमिति** ॥ **स्वकारणेति** । सिसाधयिषाया अभावेऽपि जातेन घनगर्जितेनोत्पन्नाया उपेक्षणीयमेवाद्यनुमितिश्चेत्यर्थः । फलवत्त्वस्य वाक्यप्रामाण्ये प्रयोजकत्वस्य स्वेनाप्यङ्गीकारात्फलाभावे तत्प्रामाण्यासंमत्याऽनुमितिरित्येवोक्तं न तु वाक्यार्थज्ञानमप्युपलक्षणतया संगृहीतमित्यवधेयम् ।

**श्रुत्यादेरिति** । धर्माधर्मयोः सुखदुःखादिहेतुत्वप्रतिपादकश्रुतिस्मृत्योरित्यर्थः ॥ **अनेनैव न्यायेनेति** । कार्यजातं प्राणिनां धर्माधर्माभ्यामुपजायत इत्याद्युक्तन्यायेनेत्यर्थः । तावता मूलेऽनुमानस्य किं दूषणमुक्तं भवतीत्यत आह **स्वरूपासिद्ध एवेति** । तर्हि कथं 'न चाफलत्वं वक्तव्यं सर्वस्मृत्यनुवादयोरि'ति भागासिद्धत्वाभिधानमित्यत आह **भागेति** । स्मृत्यनुवादविशेषे स्पष्टदृष्टफलोपलम्भेपि सर्वस्मृत्यनुवादयोस्तदभावाद्भागासिद्धत्वोक्तिरप्युपपन्नेति भावः । ननु तृणादिदर्शनस्य सफलत्वेन तत्र हेत्वगमनान्न व्यभिचार इत्याशङ्कापरिहारार्थतया सुखदुःखादिकमित्युत्तरमूलप्रवृत्त्युपवर्णनमयुक्तम् । तथा सति तृणादिदर्शनस्य सफलत्वोपपादकन्यायेनैव स्मृत्यादेरपि सफलत्वप्रसक्त्योक्तशङ्कानुत्थानादित्यतो न परोक्तन्यायेनैव स्मृत्यादेः फलवत्त्वं वक्तुमिदं वाक्यं प्रवृत्तं किन्तु प्रकारान्तरेणापीति । ततश्च स्पष्टत्वेऽप्यधिकोक्त्यर्थत्वात्तथाशङ्कोपपत्तिरित्यभिप्रेत्य 'दृश्यते ही'ति मूलमवतारयति **इयांस्तु विशेष इति** । मद्वोक्ताभिप्रायं मूलारूढं कर्तुमाह **इयांस्त्विति** ॥ **अनुवादोऽपीति** । स्मृत्यादेरिति तस्यापि प्रकृत-

त्वादिति भावः ॥ **एवमिति** । इष्टार्थानुवादे सुखं, तज्जातीये रागः, संस्कारपाटवं च । अनिष्टार्थानुवादे दुःखं, तज्जातीये द्वेषः, संस्कारपाटवं च । प्रशस्तानुवादो धर्मोऽप्रशस्तानुवादोऽधर्म इति द्रष्टव्यमित्यर्थः ॥ **अन्यथेति** । स्मृतेर्वैयर्थ्ये प्रणिधानवैयर्थ्यं स्यात्तस्य स्मृत्यर्थत्वात्स्मृतेश्च नैरर्थ्यादिति भावः । यद्वा प्रशस्तार्थस्मरणे धर्मादेरभावे प्रशस्तस्मरणार्थं यन्मनःप्रणिधानं यच्चाप्रशस्तार्थसंबन्ध्यदर्शनादि तदनर्थकमेव स्यादित्यर्थः । आदिपदेन पुनः पुनस्तच्छ्रवणादेः परिग्रह इत्यन्ये ॥ **शब्दार्थयोरिति** । पुनरुक्तिर्द्विविधा शब्दतोऽर्थतश्चेति । तद्भेदप्रतिपादनार्थं शब्दार्थयोरित्युक्तम् । अनुवादेऽतिव्याप्तिपरिहारायोक्तम् **अन्यत्रेति** । ततश्चानुवादव्यतिरिक्तं पुनर्वचनमित्यर्थः । प्रयोजनशून्यं पुनर्वचनं पुनरुक्तमिति तु परमार्थः । सप्रयोजनं पुनर्वचनं चानुवाद इति न तत्रातिव्याप्तिरिति भावः ॥ **साफल्यमिति** । अनुवादस्य निष्प्रयोजनत्वे प्रयोजनशून्यमित्यस्य तद्व्यवच्छेदकत्वायोगात्पुनर्वचनमात्रं पुनरुक्तमित्येव तल्लक्षणस्य कर्तव्यतया प्रयोजनशून्यमिति विशेषणवैयर्थ्यप्रसङ्गादिति भावः ॥ **निगमनस्य चेति** । सर्वस्य बुद्ध्यारोहायैकवाक्यताऽऽपादनं, हेत्वनुवादेन तस्मादेव नान्यस्मादिति सिद्धसाधनतापरिहारः, साध्यानुवादेन त्वग्निमानेव न त्वनग्निक इति बाधप्रतिरोधप्रतिक्षेपश्च निगमनस्य प्रयोजनमिति प्रयोजनान्युपपादितानीत्यर्थः ।

स०— ननु तृणादिदर्शनस्य फलं प्रति अधिकरणत्वाभावात् कथं सप्तमीत्यत आह **धर्मस्येति** । **सप्तमी** अधिकरणसप्तमीत्यर्थः । यद्यपि अधिकरणत्वं मुख्यं न संभवति तथापि (अमुख्या) अधिकरणत्वापेक्षया सप्तमी भविष्यतीति उपचारनिमित्तं दर्शयितुं 'धर्मस्य' इत्युक्तम् । तथा च यत्र अधिकरणाधेयभावो वर्तते तत्रापि धर्मधर्मिभावस्य दृष्टत्वेन, प्रकृतेऽपि तृणादिदर्शने धर्मित्वस्य विद्यमानत्वात् स एव गुण इत्यभिप्रायः ॥ **स्वकारणसामर्थ्येति** । सिषाधयिषाविरहदशायामपि जायमानानुमितेश्चत्यर्थः । **भागासिद्धतेति** । स्मृत्यनुवादविशेषस्य स्पष्टफलोपलम्भेऽपि सर्वस्मृत्यनुवादयोः स्पष्टफलोपलम्भाभावादिति भावः । **एवमिति** । इष्टार्थानुवादे सुखं, तज्जातीये रागः, संस्कारपाटवं च । अनिष्टार्थस्मृतौ दुःखं, तज्जातीये द्वेषः, संस्कारपाटवं च । तथा प्रशस्तार्थानुवादे धर्मः अप्रशस्तार्थानुवादे अधर्मः इत्येवं द्रष्टव्यमित्यर्थः । **अन्यथेति** । स्मृतेः वैयर्थ्ये ध्यानादेर्वैयर्थ्यं स्यात् । तस्य स्मृत्यर्थत्वात् । स्मृतेश्च वैयर्थ्यादिति भावः । **अन्यत्रानुवादादिति** । अनुवादव्यतिरिक्तस्थले पुनरुक्तं निष्फलमित्यर्थः । **निगमनस्येति** । व्याप्तिपक्षधर्मतयोश्च चतुर्भिरेवावयवैः प्रतीतत्वात् किं निगमनेनेत्याशङ्क्य अबाधितासत्प्रतिपक्षत्वार्थं तस्य सार्थक्यादित्यादिनोपपादितानीत्यर्थः ।

प०— ननु 'षष्ठी शेषे' इत्यत्र कारकप्रातिपदिकार्थव्यतिरिक्तस्वस्वामिभावादिसंबन्धेऽर्थे षष्ठीविधानात्, इह च धर्मधर्मिभावसंबन्धात् षष्ठ्या भाव्यमित्यत आह **इति सप्तमीति** । अधिकरणत्व-

विवक्षया सप्तमीत्यर्थः । 'विवक्षातः कारकाणी'ति प्रसिद्धेरिति भावः । कस्यचित्फलोपलम्भादाह **ग्राममित्यादि** । निष्फलत्वादाह **स्वकरणेति** । इदमहं जानामीतीच्छां विनापि जायमानाया इत्यर्थः ॥ **अविवादमिति** । विवादाभाव इत्यर्थः । अर्थाभावेऽव्ययीभावः ॥ **श्रुत्यादेरिति** । 'यजेत स्वर्गकामः', 'न कलंजं भक्षयेत्' इत्यादेर्धर्माधर्मयोरिष्टानिष्टसाधनत्वबोधकश्रुत्यादेरित्यर्थः ॥ **हेतुरिति** । प्रागुक्तो निष्फलत्वादिति हेतुरित्यर्थः । ननूक्तन्यायेन तृणादिदर्शनस्य सुखदुःखादिकमङ्गीकार्यं चेत् स्मृतावपि तथा स्यादेवेति वक्तव्ये दृश्यत इत्युक्तिरयुक्ता । न हि पूर्ववादिना तृणादिदर्शनस्य सुखदुःखादिकं न दृश्यत इति शङ्कितमित्यत आह **इयांस्त्विति** । दृश्यत इत्युक्तं स्पष्टफलोपलम्भनं व्यनक्ति **तथा हीति** । सुखदुःखादिकमित्यत्रादिपदार्थमाह **तज्जातीय इत्यादि** ॥ **एवमिति** । इष्टार्थानुवादे सुखमित्यादि ध्येयमित्यर्थः ॥ **अन्यथेति** । इष्टाद्यर्थस्मृतौ सुखादेरभावे मनःसमाधानादिना इष्टार्थस्मृत्यर्थं प्रयत्नो न स्यादित्यर्थः । स्मृत्यादावपीत्युक्तानुवादोऽपि कण्ठतः कुतो नोपात्त इत्यतोऽनुवादसाफल्यं परेषामपि समानमतो नोपात्त इति भावेनाह **शब्दार्थयोरिति** । पुनरुक्तं पुनरुक्तरूपनिग्रहस्थानम् । तद्यथा पर्वतोऽग्निमान्पर्वतोऽग्निमानिति शब्दतः पुनरुक्तम् । पर्वतोऽग्निमान् गिरिर्वह्निमानित्यर्थत इति ज्ञेयम् ॥ **प्रयोजनानीति** । तानि च 'त्रिपञ्चावयवा एवे'त्यादि व्याख्यावसरे व्यक्तीभविष्यन्ति ।

**या०** — ननु तृणादिदर्शनस्य फलवत्त्वरूपधर्मं प्रति धर्मित्वात् धर्मधर्मिभावरूपसंबन्धे षष्ठ्या भवितव्यम् । एकशतं षष्ठ्यर्था इति वचनात् । अतः कथं सप्तमीत्यत आह **धर्मस्येति** । यद्यपि धर्मधर्मिभावः संबन्धोऽत्रास्ति, तथापि स न विवक्षितः, किन्तु धर्मिणो धर्मं प्रत्यधिकरणत्वमेव विवक्षितम् । 'विवक्षातः कारकाणि भवन्ती'ति वचनात् । अतोऽधिकरणकारकतया विवक्षिते दर्शने सप्तम्युपपत्तिरिति भावः । ननु यत्किञ्चित्प्रत्याधारत्वमधिकरणत्वमिति न वैयाकरणप्रक्रिया, किन्तु क्रियाश्रयीभूतकर्तृकर्मान्यतराधारत्वमेव । न च तदत्र संभवति । निगदनक्रियायाः फलवत्त्वरूपधर्मानाश्रितत्वादिति चेन्न । विद्यमानमित्यध्याहारस्यात्राभिप्रेतत्वेन फलवत्त्वस्यापि क्रियाश्रयत्वादित्याशयात् । अत एव भक्तिपादे 'यदि स्वतस्त्वं प्रामाण्ये' इत्येतद्व्याख्यावसरे 'स्वतस्त्वधर्मस्य प्रामाण्यं धर्म्यधिकरणतया विवक्षितमिति सप्तम्युपपत्तिरि'त्युक्तम् । केचित्तु यद्यप्यत्राधिकरणत्वं मुख्यं न संभवति, तथाऽप्यधिकरणत्वोपचारेण सप्तमी भविष्यति । उपचारे निमित्तप्रदर्शनाय धर्मस्येत्युक्तम् । तथा च यत्राधिकरणाधेयभावोऽस्ति तत्र धर्मधर्मिभावस्यापि दृष्टत्वेन, प्रकृते तृणादिदर्शने धर्मित्वस्य विद्यमानत्वात्स एव गुण इत्यभिप्राय इत्याहुः । तत्रोक्तभक्तिपादीयफक्किकास्वारस्यं कथमिति चिन्त्यम् । न हि उपचारे अधिकरणतया विवक्षितमिति वचनं संभवतीति । अत एवाधिकरणत्वाविवक्षायां षष्ठ्येव प्रयोक्तव्येत्याशयेनाह

**तृणादिदर्शनस्येति** । दर्शनपदं प्रत्यक्षमात्रपरमित्याशयेनाह **उपलक्षणं चेति** ॥ **स्वकारणेति** । सिषाधयिषाभावेऽपि जातेन गर्जनज्ञानेनोपेक्षणीयमेघाद्यनुमितेश्चेत्यर्थः ॥ **श्रुत्यादेरिति** । धर्माधर्मादेः सुखदुःखादिहेतुता प्रतिपादकश्रुतिस्मृत्यादेरित्यर्थः । उक्ताभिप्रायं मूलारूढं कर्तुमाह **इयांस्त्विति** ॥ **अन्यथा प्रणिधानादीति** । इष्टार्थस्मरणादेः सुखादिसाधनत्वाभावे तत्साधनसंस्कारोद्बोधाय चित्तैकाग्र्यतादिरूपप्रणिधानवैयर्थ्यप्रसङ्गादित्यर्थः । आदिपदेन पुनःपुनस्तच्छ्रवणादिसंग्रहः ॥ **शब्दार्थयोरिति** । पुनरुक्तिर्द्विधा शब्दतोऽर्थतश्चेति प्रतिपादनायेदम् । नन्वेवमनुवादेऽतिव्याप्तिरित्यत उक्तम् **अन्यत्रेति** । अनुवादव्यतिरिक्तं पुनर्वचनमित्यर्थः ॥ **साफल्यमङ्गीकृतमिति** । ननु पुनर्वचनत्वमात्रस्यैव दोषताप्रयोजकत्वे तस्य चानुवादेऽपि सत्त्वात् कथं तस्यात्राऽलक्ष्यता इत्याशङ्क्य सप्रयोजनं पुनर्वचनमनुवादो न दोषाय, प्रयोजनशून्यं पुनर्वचनं तु पुनरुक्तमतो दुष्टमित्यस्याभिप्राय इति परैर्व्याख्यातत्वात् ॥ **निगमनस्य चेति** । निगमनं चानुवादरूपमिति प्रसिद्धमेवेति भावः ॥ **प्रयोजनानीति** । सर्वस्य बुद्ध्यारोहायैकवाक्यतामापादयितुं, निगमनमुक्तोपसंहारार्थं वा । तस्मादेव नान्यस्मादिति सिद्धसाधनतानिरासो हेत्वनुवादांशस्य प्रयोजनं, पक्षानुवादांशस्य तु बाधप्रतिरोधनिरासः प्रयोजनमिति प्रयोजनान्युपपादितानीत्यर्थः ।

**श्री०**— श्राद्धाद्यर्थं दर्भादिरूपतृणानयनायारण्यं गच्छति तदा तज्ज्ञानं सफलमेवात आह **ग्राममिति** । उत्तरवाक्यमवतारयितुं योजनान्तरमाह **यद्वेति** । **अयम्** इदमप्रमाणं निष्फलत्वादित्यनुमाने निष्फलत्वादित्ययं हेतुरित्यर्थः । व्यभिचारमुपपादयति **प्रमाणतयेति** । तृणादिदर्शनस्य विपक्षत्वोपपादनायेदं विशेषणम् । हेतोरेवाभावान्न व्यभिचार इति वक्तुमुपयुक्तं तावदाह **नन्विति** । **अविवादं** श्रुत्यादिसिद्धमित्यर्थः ॥ **स्वयमिति** । तथा च धर्माधर्मयोरेव सुखादिरूपत्वात्तत्फलत्वमिति शङ्काऽनवकाशः । अस्त्विति चेत्तत्राह **श्रुत्यादेरिति** । कार्यजातं प्रति धर्माधर्मादेः कारणत्वेन सार्थक्यप्रतिपादकश्रुत्यादेरित्यर्थः । **हेतुः** निष्फलत्वादित्ययम् । ननु सर्वस्या अपि स्मृतिरेवं यदि साफल्यं कथं तर्हि सर्वस्मृतिपक्षीकारे निष्फलत्वहेतोः पूर्वं भागासिद्धिरुक्तेत्यत आह **भागेति** । स्मृत्यनुवादविशेषे स्पष्टफलोपलम्भेऽपि सर्वस्मृत्यनुवादयोः स्पष्टं फलं नोपलभ्यत इत्यभिप्रायेणेत्यर्थः । **अव्यक्तम्** उक्तरीत्या कल्प्यमिति भावः । **नैवं** सर्वथाऽव्यक्तं नेत्यर्थः । **स्मृतौ** चिन्तायां सत्याम् । स्मृति चिन्तायामिति धातोः । **पाटवं** 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इत्युक्तेः । एवमुत्तरत्रापि ॥ **एवमिति** । सज्जनानां वृत्तान्तानुवादे धर्मोऽसज्जनानां वृत्तान्तानुवादेऽधर्म इत्यादि ज्ञेयम् । ननु प्रतिज्ञावाक्योक्तानुवादरूपस्य निगमनवाक्यस्य वैयर्थ्यं न्यायनये स्वीकृतमेवेति चेत्तत्राह **निगमनस्येति** । उक्तोपसंहाररूपस्याबाधितासत्प्रतिपक्षत्वलाभाय सार्थक्यादियुक्तत्वान्मणाववयवग्रन्थ इति ज्ञेयम् ।

च०— ननु वृक्षस्य फलमित्यादाविव संबन्धत्वरूपव्यापकधर्मावच्छिन्नधर्मधर्मिभावादिसंबन्धवृत्तिप्रकारताशाल्यन्वयबोधौपयिकाकांक्षाविशेषतया शैषिक्यषष्ठ्या भवितव्यतया 'आधारोऽधिकरणमि'ति सूत्रे क्रियाश्रयीभूतकर्तृकर्मान्यतराधारत्वमेवाधिकरणत्वमिति पाणिनीयैः परिष्कृततया, प्रकृते च फलवत्त्वस्य निगदनक्रियाश्रयत्वाभावेन तृणादिदर्शनस्याधिकरणकारकताया: दुरुपपादतया कथं तृणादिदर्शन इति सप्तम्यन्तविन्यासः सङ्गच्छत इत्याशङ्कायां विद्यमानमित्यध्याहारस्यात्राभिप्रेतत्वेन फलवत्त्वस्यापि क्रियाश्रयत्वा'द्विवक्षातः कारकाणि नाना भवन्ती'तिन्यायेन तादृशसंबन्धत्वव्याप्याधिकरणतात्वावच्छिन्नप्रकारताशाल्यन्वयबोधस्य विवक्षिततया तदौपयिकी सप्तमी सङ्गच्छत इत्याह **धर्मस्येति** । एतच्च स्वतस्त्वधर्मस्य प्रामाण्यं धर्म्यधिकरणतया विवक्षितमिति सप्तम्युपपत्तिरिति भक्तिपादीयटीकादिशा योजनीयमिति व्याकर्तारः । **स्वकारणेति** । अनुमित्सासमवधानाभावकालीनपरामर्शसिध्यभावबोधाभावघटितसामग्र्यधीनोपेक्षणीयवस्तुगोचरानुमितेरित्यर्थः । फलवत्त्वस्य वाक्यप्रामाण्यं प्रयोजकतायाः सिद्धान्तिनाऽप्यूरीकृततया फलवैधुर्ये तत्प्रामाण्यासंप्रतिपत्त्या विशिष्यानुमितिपदोपादानमित्यवसेयम् । **श्रुत्यादेरिति** । धर्माधर्मसुखदुःखादीनामन्योन्यं हेतुहेतुमद्भावप्रत्यायकश्रुत्यादेरित्यर्थः । **अन्यथा** इष्टार्थगोचरस्मृत्यादेः सुखादिहेतुत्वानुपगमे । **प्रणिधानेति** । तत्साधनसंस्कारोद्बोधौपयिकचित्तैकाग्र्येत्यर्थः । **न्यायविद्भिः** नैयायिकैः उपपादितानीति ।

---

**सु०— अथाऽपि स्यात् । प्राकट्यापरपर्यायामर्थगतां ज्ञाततामुपजनयदेव प्रमाणम् । यथा प्रत्यक्षादि । न च स्मृत्यादिनाऽर्थे ज्ञाततोपजनिः संभवति । अनुभवेनैव तस्या जातत्वात् । न हि छिन्ने छिदा पुनरुत्पद्यते । तत्कथं तस्य प्रामाण्यं स्यादिति । तत्राह नेति ।**

**अनु०—** न परिच्छेदकार्येव प्रमाणमिति च प्रमा ॥

**परिच्छेदो ज्ञातता । एवेति प्रतिज्ञाद्युक्तानुवादः । परिच्छेदकार्येव प्रमाणम् । तदभावात्स्मृत्यादिकमप्रमाणमिति नेत्यर्थः । कुतो नेत्यत आह इति चेति । इतिशब्देनार्थगतां ज्ञाततां परामृशति । नेत्यस्यानुकर्षणार्थश्चकारः । ज्ञाततायां प्रमा प्रमाणं नास्तीत्यर्थः । तथा च ज्ञातताऽजनकत्वं सपक्षे विभ्रमादाविव विपक्षे प्रत्यक्षादावपि वर्तत इति साधारणानैकान्तिकमिति भावः । किञ्च धारावाहिकविज्ञानानि स्मृत्यादिकमिव न ज्ञाततामुपजनयन्तीति कुतो नानैकान्त्यम् । अपि च संशयविपर्ययावपि ज्ञाततामुपजनयत इति त्वयाऽङ्गीकरणीयम् । समानन्यायत्वात् । ततश्च विपक्षा(त्प्रत्यक्षा)दिव सपक्षादपि व्यावृत्तेस्तत्रासाधारणो हेतुः स्यात् । यद्वा ज्ञाततालक्षणस्य परिच्छेदस्यैवाप्रामाणिकत्वात्परिच्छेदकार्येव प्रमाणमित्यस्यां**

**व्याप्तौ न प्रमाणमस्तीत्येकग्रन्थतया योज्यम् । तथाच व्यापकानुपलब्धिलिङ्गकमनुमानं दूरापास्तमिति भावः ।**

**शे०** — परिच्छेदकार्येव प्रमाणमित्यत्रधारणनिषेधेन नियममात्रनिराकरणस्यैव लाभात्तस्य च क्वचित्परिच्छेदकारिणः प्रामाण्येऽप्युपपन्नत्वात्क्वचित्परिच्छेदकारिणः प्रामाण्यमनुमतमिति शङ्कानिरासार्थमाह **एवेति प्रतिवाद्युक्तानुवाद इति ॥ तदभावादिति** । अनेन स्मृत्यादिकमप्रमाणं ज्ञातताऽजनकत्वाद्विभ्रमवदिति प्रयोगः सूचितो भवति । ननु मूले ज्ञाततायां प्रमाणाभावोक्त्या परकीयप्रयोगे किं दूषणमुक्तं भवति । ज्ञातताऽजनकत्वहेतोः पक्षसपक्षवृत्तित्वानपायेनासिद्ध्यादेरसंभवादित्यत आह **तथा चेति** । सपक्षे विभ्रमादावित्युपलक्षणम् । पक्षीकृते स्मृत्यादावित्यपि द्रष्टव्यम् । एवं ज्ञाततमनङ्गीकृत्यानैकान्त्योपपादकतया मूलं योजितम् । इदानीमङ्गीकृत्यापि तामनैकान्त्योपपादकतया मूलं योजयति **किंश्चेति**। अनेन, 'इति' इति 'तदभावात्' इति प्रकृतानुमानपरामर्शः, तस्य साधारणानैकान्त्येनाप्रमाणत्वादिति मूलयोजना सूचिता भवति । कुतो न धारावाहिकज्ञानानां तज्जनकत्वमित्यतस्तेषां स्मृत्यादिसमानयोगक्षेमत्वादिति भावेनोक्तं **स्मृत्यादिकमिवेति** । यथा ह्यनुभवेनैवार्थे ज्ञातताया उपजनितत्वान्न स्मृत्यादेरप्यर्थे तज्जनकत्वमित्युच्यते तथा धारावाहिकेऽपि पूर्वज्ञानेनैवार्थे तज्जननान्नोत्तरज्ञानानां तज्जनकत्वमित्यनैकान्त्यम् । अन्यथा तद्वदेव स्मृत्यादेरप्यर्थे तज्जनकत्वप्रसक्त्या हेतोरसिद्धिः स्यादिति भावः । प्रकृतानुमानस्यासाधारणानैकान्त्येनाप्यप्रमाणत्वादित्यपि योजनामभिप्रेत्याह **अपि चेति ॥ समानन्यायत्वादिति**। संशयविपर्ययविषययोर्ज्ञातत्वव्यवहारस्य संशयविपर्यययोर्ज्ञातताजनकत्वकल्पकस्य तुल्यत्वादित्यर्थः। एवं 'परिच्छेदकार्येव प्रमाणमि'ति पर्यवसितानुमानमूलभूतव्याप्तावौदासीन्येनानैकान्त्येन तदनुमानदूषणपरतया मूलं योजितम् । अत्र च पक्षे प्रतिज्ञांशस्य 'इति च प्रमा'इत्यनेन समर्पितहेत्वंशस्य च साक्षाद्धेतुहेतुमद्भावालाभात्तल्लाभाय पर्यवसितानुमानमूलभूतोक्तव्याप्तिखण्डनेनाप्रयोजकत्वलक्षणानुमानदूषणपरत्वेनापि तद्योजयति **यद्वेति** ।

**स०** — परिच्छेदकार्येव प्रमाणमिति नेति नियमनिषेधात् क्वचित्परिच्छेदकारिणः प्रमाणत्वमिति लभ्यते । तच्चानुपपन्नम् । क्वचिदपि परिच्छेदकारिणः प्रमाणत्वस्यासंमतत्वादित्यत आह **एवेति प्रतिवाद्युक्तानुवाद इति** । तदेवोपपादयति **परिच्छेदकारीति** । वाक्यभेदेनान्वये 'न'इत्यनुकर्षः कर्तव्यो भवतीत्यरुचिं मनसि निधायैकवाक्यतया योजयति **यद्वेति** । 'ज्ञाततालक्षणस्य परिच्छेदस्यैवाप्रामाणिकत्वादि'त्येतत् बहिरेव वक्तव्यमिति भावः । **व्यापकेति** । ज्ञातताया: प्रामाण्यव्यापकत्वात् तस्याश्च

स्मृतावभावेन तदभावेनाप्रामाण्यानुमानमित्यर्थः । स्मृतिः अप्रमाणम् ज्ञातताऽजनकत्वादित्यनुमानप्रकारः । अज्ञातज्ञापनमेव प्रमाणमित्येतदर्थतयाऽपि तद्व्याख्याति **यद्वेति** ।

प० — स्मृतिरनुवादश्चाप्रमाणं निष्फलत्वादित्युक्तनिष्फलत्वहेतोर्दूषितत्वेपि स्मृत्यादिकं न प्रमाणं ज्ञातताऽनुत्पादकत्वात् व्यतिरेकेण प्रत्यक्षादिवदिति हेत्वन्तरादप्रामाण्यं तयोः स्यादिति भावेन मीमांसकमतमनुसृत्य शङ्कते **अथापीति** । इति च प्रमेत्यस्य फलितार्थमाह **ज्ञाततायामिति** । किमनेन दूषणमुक्तं उक्तहेतोरित्यत आह **तथा चेति** । **ज्ञातताऽजनकत्वं** ज्ञातताऽनुत्पादकत्वमित्यर्थः । पूर्वयोजनायां वाक्यभेददूषणं मन्वान आह **यद्वेति** । ज्ञातताऽनुत्पादकत्वहेतोरत्र पक्षे को दोष उक्त इत्यत आह **तथा चेति** ॥ **व्यापकेति** । प्रामाण्यस्य व्यापकभूतज्ञाततोत्पादकत्वस्य या अनुपलब्धिस्तल्लिङ्कमित्यर्थः ।

या० — **तदभावादिति** । ततश्च स्मृत्यादिकं न प्रमाणं ज्ञातताऽजनकत्वाद्विभ्रमादिवदिति प्रयोगो द्रष्टव्यः । अत्र व्यभिचारमाह **तथा चेति** । 'न परिच्छेदकार्येव प्रमाणमि'ति मूलांशस्याभिप्रायान्तरमाह **किञ्च धारावाहिकेति** । 'प्रमाणमेव परिच्छेदकारीति च ने'त्यपि योजनामभिप्रेत्याह **अपि चेति** ।

श्री० — **न चेत्यादि** । तथा च स्मृतिरप्रमाणं ज्ञातताऽजनकत्वात्संशयादिवदित्यनुमानं बोध्यम् । **वर्तते** ज्ञाततायाः एवाप्रामाणिकत्वादिति भावः ॥ **(न) ज्ञाततेति** । ज्ञाते पुनर्ज्ञाततया अजननादित्यर्थः ॥ **समानेति** । घटादिज्ञानसमानेत्यर्थः । अनुभवेनैव ज्ञातताजननाङ्गीकारात्संशयविपर्ययोरप्यनुभवत्वादित्यर्थः । **विपक्षात्** प्रत्यक्षादेः। **सपक्षात्** संशयादेः ॥ **तथा चेति** । परिच्छेदकारित्वस्य प्रामाण्यव्यापकत्वे एव प्रमाणाभावाद्व्यापकीभूतपरिच्छेदकारित्वाभावेन स्मृत्यादेरप्रामाण्यानुमानं दूरनिरस्तं ध्येयम् ।

च० — बाधप्रतिरोधनिरासः साध्यांशोपादानस्य, सिद्धसाधनतानिरासः सावधारणसाधनांशोपादानस्य प्रयोजनमिति विवृण्वते **तदभावादिति** । स्मृत्यादिपक्षकप्रमात्वाभावसाध्यकज्ञातताजनकत्वाभावहेतुकविभ्रमनिदर्शनकमनुमानमनेनाभिप्रैति । **साधारणानैकान्तिकम्** साध्याभाववन्निरूपितवृत्तित्वावच्छिन्नम् । **धारावाहिकज्ञानानि** । स्वाव्यवहितपूर्वक्षणावच्छिन्नस्वाधिकरणनिरूपिताधेयताकज्ञानीयविषयतात्वावच्छिन्नसमनियतस्वनिरूपितविषयतात्वावच्छिन्नकद्वितीयादिज्ञानानि । तेन घटज्ञानानन्तरोत्पन्नदण्डपटादिज्ञानानां न्यूनाधिकगोचराणां च व्युदासः ।

सु० — ननु चाज्ञातज्ञापकमेव प्रमाणम्, अज्ञातज्ञानमेव वा । न चैतत्स्मृत्यादावस्तीति तदप्रमाणमित्यतो वाऽऽह नेति । परिच्छेदोऽज्ञातज्ञानं, तत्कर्तुं शीलमस्यास्तीति परिच्छेदकारि(री) । यद्वा परिच्छेद एव कार आकारः परिच्छेदकारः सोऽस्यास्तीति परिच्छेदकारि । किं परिच्छेदकारित्वं प्रामाण्यस्य व्याप्यव्यापकभूतं लक्षणमिति तदभावात्स्मृत्यादेरप्रामाण्यमुच्यते, किंवा व्यापकमेवेति ।

आद्ये परिच्छेदकार्येव प्रमाणमिति लक्षणं न प्रमा नोपपन्नमिति योजना । अव्याप्तेरतिव्याप्तेश्चेति । तथाहि । धर्मिणमादायानधिगतार्थगन्तृत्वमुच्यते प्रकारं वा । आद्ये नित्यविषयाणामप्रामाण्यापातः । व्याप्यवत्तयाऽवगतं धर्मिणं व्यापकवत्तया विषयीकुर्वतोऽनुमानस्य पृथगवगतानर्थान्संसृष्टतया गोचरयतः शब्दस्य चाप्रामाण्यप्रसङ्गः । द्वितीये तु धारावाहिकविज्ञानानामप्रामाण्यं स्यात् । न हि वैनाशिकानामिव मीमांसकानामन्य एव घटः । नापि साङ्ख्यानामिव परिणामी । नापि प्रकारमप्युपजनापायवन्तमीक्षामहे ॥ ननु यद्यपि स्वरूपस्य प्रकारस्य वा तादवस्थ्यम् । तथाऽपि घटोऽयं घटोऽयमिति प्रत्यक्षज्ञानधारायां वर्तमान एवार्थः (परि)स्फुरति । न च क्रमभाविनां ज्ञानानामेक एव वर्तमानकालो विषयो नानाप्रतिपत्तृवत् ज्ञानयौगपद्यप्रसङ्गात् । (तत्)प्रत्यभिज्ञानानुपपत्तेश्च । ज्ञानानेकत्वेऽप्येककालावस्थानाकलनात् । तस्मात्पूर्वपूर्वविज्ञानैरनाकलित एव वर्तमानोऽर्थ उत्तरोत्तरैरवसीयत इत्यनधिगतार्थत्वमेवेति । एवं तर्हि स्मृत्यादेरप्यनधिगतार्थत्वमेव । स्मृतिरपि वर्तमानतत्कालतयाऽनुभूतमर्थमतीततत्कालतयाऽवगाहते । अन्यथा स इति न स्यात् । अनुवादोऽपि यदि वादविषयस्तदा स्फुटमनधिगतार्थत्वम् । यदि च पूर्वविज्ञानविशिष्टार्थगोचरस्तथाऽपि धारावाहिकसमानो न्यायः । अधिकविधानेनैकवाक्यतायामपि तथेति । संशयविपर्यासयोरप्यनधिगतविषयत्वात् प्रामाण्यं स्यात् । अनधिगततथाभूतार्थ(गन्तृ)त्वं विवक्षितमिति चेन्न । अनधिगतविशेषणवैयर्थ्यात् । स्मृत्यादिव्यावृत्त्यर्थं तदिति चेत् (न) । स्मृत्यादिकमेव कुतो व्यावर्तनीयम् । लक्षणाभावादिति चेत् । तदिदमितरेतराश्रयत्वमिति ।

शे० — स्मृत्यादाविति । स्मृतेर्ज्ञातज्ञानत्वेनाज्ञातज्ञापकत्वस्याज्ञातज्ञानत्वस्य चाभावादनुवादस्य च ज्ञातज्ञापकत्वेऽप्यज्ञातज्ञापकत्वाज्ञातज्ञानत्वयोरभावादित्यर्थः । अज्ञातज्ञापकमेव प्रमाणमित्येतदर्थपरतया परिच्छेदकारीति मूलं व्याख्यायाज्ञातज्ञानमेव तदित्यर्थपरतयाऽपि तद्व्याचष्टे यद्वेति ॥ समव्याप्तमित्यर्थः । इदं च परिच्छेदकार्येव प्रमाणमिति, प्रमाणमेव परिच्छेदकारीति चैवकारस्योभयत्र सम्बन्धाल्लभ्यते । समभिव्याहृतपदार्थतावच्छेदकस्येतरपदार्थतावच्छेदकव्यापकताया

एव एवकारार्थत्वात् । समव्याप्तत्वकथनं च लक्षणत्वनिर्वाहार्थम् । तथा चाद्यपक्षप्रवृत्तिः । परिच्छेदकार्येव प्रमाणमिति यथाश्रुतमूलाच्च द्वितीयपक्षस्य प्रसक्तिः । ततश्च परिच्छेदकारित्वस्य प्रमाणलक्षणत्वात्तदभावात्स्मृत्यादेर्न प्रामाण्यमिति मतम्, किंवा तस्यालक्षणत्वेऽपि प्रामाण्यव्यापकत्वात्तदभावेन प्रामाण्याभाव इति विकल्पो द्रष्टव्यः ॥ **व्यापकमेवेति** । अत्रैवशब्देन लक्षणत्वस्य व्यावृत्तिरिति ध्येयम् । क्वचित्तु प्रामाण्यव्यापकभूतं लक्षणमित्येव पाठः । तत्रायम्भावः । न लक्षणाभावेन प्रामाण्याभावोऽभिधातुं युज्यते । लिङ्गतया हि लक्षणमुपयुज्यते । न च व्यापकता लिङ्गत्वोपयोगिनी व्याप्यत्वेनैव तदुपपत्तेः । इतरथा धूमादीनामलिङ्गत्वापातात् । तथा च कथं व्याप्यभूतस्य परिच्छेदकारित्वरूपतल्लक्षणस्याभावेन तद्व्यापकीभूतस्य प्रामाण्यस्याभावः सिध्येत् । अन्यथा धूमाभावेन वन्ह्यभावस्यापि सिद्धिप्रसक्तिरित्यतः सत्यमियं वस्तुस्थितिस्तथाऽपि अतिव्याप्त्यसंभवाविवाव्याप्तिरपि लक्षणदोष एवेति वदद्भिः परैर्लक्षणस्य लक्ष्यतावच्छेदकव्यापकतायाः स्वीकृतत्वाद्व्यापकीभूतस्य तस्याभावेन तद्व्याप्यप्रामाण्याभावाभिधानमुपपन्नमेवेति भावेन व्यापकभूतमिति व्यापकत्वाभिधानमिति । अत्र च व्यापकभूतं लक्षणमित्येव स्वरसः पाठः । दर्शनान्तरोक्तलक्षणकक्षीकारे तु तैः स्वलक्षणस्य व्यापकतयाऽङ्गीकृतत्वात् स्मृत्यादौ च तदभावादिति पूर्वग्रन्थानुसाराल्लक्षणत्वमात्रव्यावृत्तिपरव्यापकमेवेत्युत्तरग्रन्थानुसाराच्च । अन्यथा व्याप्यव्यापकत्वपक्षस्यैव व्याप्यव्यापकभूतलक्षणत्वप्रतिद्वन्द्वितया व्याप्यव्यापकमेवेत्येव वक्तव्यतया व्यापकमेवेत्युक्त्यस्वारस्यापातादिति द्रष्टव्यम् । अत एव व्याप्यव्यापकभूतमिति पाठे व्याप्यमिति स्वरूपसङ्कीर्तनमेव व्यापकभूतं लक्षणमित्येव च विवक्षितमतो न पूर्वोत्तरग्रन्थास्वारस्यमिति ध्येयम् ।

किमत्र सामान्यतोऽनधिगतत्वं विवक्षितं किंवा विशेषतः । नाद्यः । सामान्यतः प्रमेयत्वादिना सर्वेषामेव सर्वैरवगमादसंभवप्रसङ्गादिति भावेन द्वितीयं दूषयितुं विकल्पयति **धर्मिणमादायेति** ॥ **नित्यविषयाणामिति** । नित्यपदार्थविषयाणामित्यर्थः । नित्यपदार्थेषु नानधिगतत्वं संभवति । यदि हि नेह जन्मनि, जन्मान्तरे; यदि च न प्रत्यक्षेण, तदाप्यनुमानोपदेशाभ्यामेवानादौ संसारे तेषामधिगतत्वात् । ततश्च तत्राव्याप्तिरिति भावः । अत्रैव दोषान्तरमाह **व्याप्यवत्तयेति** ॥ **धारावाहिकेति** । तत्र पूर्वज्ञानेन विषयीकृतस्य घटत्वादेः प्रकारस्य द्वितीयादिज्ञानैरवगमान्न प्रकारमादायानधिगतार्थगन्तृत्वं तेषामिति भावः । ननु च प्रतिक्षणं घटभेदेन घटत्वभेदात्पूर्वपूर्वज्ञानाविषयघटत्वान्तरविषयकत्वादुत्तरोत्तरज्ञानानां न तत्र प्रकारमादायानधिगतार्थत्वानुपपत्तिः । यद्वा घटाभेदेन प्रतिक्षणं घटत्वभेदाभावेन तदादाय धारावाहिकज्ञानेष्वर्थस्यानधिगतत्वासंभवेऽपि क्षणिकप्रकारान्तरमादायैवानधिगतार्थगन्तृत्वमुपपद्यते तत्कथं तत्राव्याप्तिरित्यतो भवेदेवं कथञ्चिद्यदि प्रतिक्षणं घटभेदः स्यात् । न चासावस्ति । तथा हि ।

स किं घटस्य क्षणिकत्वाद्वा परिणामित्वाद्वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **न हीति** । क्षणिकत्ववादिनां सौगतानामित्यर्थः । वैनाशिकानां मीमांसकानामित्युभयत्र मत इति योज्यम् । **तथा च** क्षणिकत्ववादिमते घटस्य प्रतिक्षणमन्यत्वेऽपि न मीमांसकमतेऽस्य प्रतिक्षणमन्यत्वम् । अन्यथा बौद्धमतप्रवेशापत्तेरिति भावः । द्वितीयं दूषयति **नापीति** । साङ्ख्यानां मत इव मीमांसकानांमते न प्रतिक्षणं घटः परिणामीत्यर्थः । तथा च साङ्ख्यैरचेतनमात्रस्य फलाङ्कुरशरीरादिवत्प्रतिक्षणविक्रियाविशेषवत्त्वाङ्गीकारात्प्रतिक्षणं तन्मते घटस्य भेदेऽपि मीमांसकैस्तदनङ्गीकारादङ्गीकारे च साङ्ख्यमतप्रवेशापत्तेर्न तन्मते प्रतिक्षणं घटभेद इति भावः । तथा चोक्तप्रकारद्वयेनापि घटभेदासिद्ध्या न प्रतिक्षणं घटत्वभेद इति न पूर्वपूर्वज्ञानाविषयीकृतघटत्वान्तरविषयकतयोत्तरोत्तरज्ञानानामनधिगतार्थगन्तृतेति हृदयम् । क्षणिकप्रकारान्तरमादायैवानधिगतार्थगन्तृत्वमिति पक्षं दूषयति **नापीति** । प्रतिक्षणमुत्पत्तिविनाशवन्तमित्यर्थः । अनुपलम्भान्नासावस्तीति भावः । उपलक्षणं चैतत् । नापि मीमांसकैरभ्युपेत इत्यपि द्रष्टव्यम् ।

केचित्तु धर्मिणमादायेत्यस्य धर्मिमात्रमादायेत्यर्थः । प्रकारं चेत्यत्र वाशब्दस्य समुच्चयार्थत्वेन धर्मिणं प्रकारं चादायेत्यर्थः । आद्ये नित्यविषयाणामित्यादेरुक्त एवार्थः ॥ **द्वितीये त्विति** । घटोऽयं घटोऽयमिति धारावाहिकज्ञानेषु धर्मिणो घटस्य प्रकारस्य च घटत्वस्य च पूर्वज्ञातस्यैवोत्तरज्ञानेन विषयीकरणान्न प्रकारं धर्मिणं चादायानधिगतार्थगन्तृता तत्रेत्यर्थः । ननु धर्मिणो घटस्य प्रकारस्य च घटत्वस्य प्रतिक्षणं भिन्नत्वान्न तदुभयमादायानधिगतार्थगन्तृत्वानुपपत्तिरित्यतो धर्मिणो घटस्य प्रतिक्षणं भिन्नत्वं क्षणिकत्वाद्वा परिणामित्वाद्वेति विकल्पद्वयं मनसि निधाय क्रमेण पक्षद्वयं दूषयति **न हीत्यादिना** । पूर्व[कल्प] एवाभिप्रायः । प्रतिक्षणं घटत्वोपजननापाययोरनुपलम्भबाधितत्वान्न प्रकारस्य घटत्वस्यापि प्रतिक्षणं भिन्नत्वमित्याशयेनाह **नापीति** व्याचक्षते ।

प्रत्यक्षस्य वर्तमानमात्रग्राहित्वनियमेन स्वाश्रयक्षणविशिष्टस्तम्भादिग्राहित्वेनागृहीतग्राहित्वं भविष्यतीति शङ्कते **नन्विति** ॥ **नानेति** । नानाप्रतिपत्तृकैककालविषयकज्ञानानां यौगपद्यवदेकप्रतिपत्तृकानेकज्ञानानामप्येककालविषयत्वाद्यौगपद्यं स्यादित्यर्थः । न च स्थूलकालस्यैकस्यैव विषयत्वेऽप्यौपाधिकसूक्ष्मकालानामनेकत्वेन तत्रोत्पत्त्या न यौगपद्यमिति वाच्यम् । औपाधिककालाभ्युपगमे तस्यैव विषयत्वेनानधिगतार्थगन्तृत्वापत्त्या स्थूलकालस्यैव विषयत्वेनाधिगतार्थत्वं वदता तथा वक्तुमशक्यत्वात् । तथा च ज्ञानमात्रस्यैककालविषयकत्वाद्यौगपद्यापत्तिर्दुर्वारैवेति भावः । अद्वैतदस्वरसादाह **प्रत्यभिज्ञेति** । तदनुपपत्तिमेवोपपादयति **ज्ञानेति** । धारावाहिकज्ञानानामनेकत्वेऽपि तद्विषयस्य वस्तुन एककालावस्थानस्यैककालसंबन्धित्वस्याकलनाद्भानादित्यर्थः । अयम्भावः । एकस्य वस्तुनः पूर्वापरकालावस्थानं हि

प्रत्यभिज्ञाविषयः । तथा च धारावाहिकज्ञानेषु यदि पूर्वज्ञानकालावस्थानमेवोत्तरज्ञानविषयः स्यात्तदा प्रत्यभिज्ञानस्यापि पूर्वानुभवकालावस्थानमेव विषयः स्यादविशेषात् । यदि च प्रत्यभिज्ञानेनापि पूर्वानुभवकालावस्थानमेव विषयीक्रियेत । तदैकस्य वस्तुनः पूर्वापरकालावस्थानरूपप्रत्यभिज्ञाविषयशून्यत्वेन सोऽयमित्यादिज्ञानस्य प्रत्यभिज्ञात्वं न सिध्येत । तदसिद्धौ च न तया स्थैर्यमपि सिध्येदित्यत उक्तरूपप्रयोजनसिद्ध्यर्थं सोऽयमित्यादिज्ञानस्य प्रत्यभिज्ञात्वसंरक्षणाय तस्य पूर्वानुभवकालावस्थानमात्रविषयकत्वाभावे वक्तव्येऽनेकज्ञानानामेककालावस्थानविषयकत्वाभावसिद्धेर्धारावाहिकस्थलेऽप्यनेकज्ञानानामेककालावस्थानविषयकत्वमित्यनधिगतार्थगन्तृता तस्य युक्तैवेति । यद्वा क्रमभाविष्वनेकेष्वपि ज्ञानेष्वेक एव स्थूलकालोऽवभासत इति यद्युच्यते तदा सोऽयमित्येकज्ञानरूपा प्रत्यभिज्ञा दत्तजलाञ्जलिः स्यात् । अत्रापि सोऽयमिति स्मृत्यभिज्ञारूपज्ञानद्वयस्यैव संभवेनैकज्ञानत्वकल्पकाभावादित्यर्थः । नन्वेवं पूर्वकालीनेनैतत्कालीनस्याभेदासिद्ध्या पदार्थानां स्थायित्वं न स्यादित्यत आह **ज्ञानानेकत्वेऽपीति** । प्रत्यभिज्ञास्थले स्मृत्यभिज्ञारूपयोर्ज्ञानयोरनेकत्वेऽपि वस्तुनः संवत्सरादिरूपैकस्थूलकालावस्थानाकलनसंभवादित्यर्थः । यथा हि धारावाहिकज्ञानस्थले त्वयैक एव घटिकादिरूपस्थूलकालो भासत इत्युच्यते तथा प्रत्यभिज्ञास्थले मयाऽपि संवत्सरादिरूपः स्थूलकाल एव ज्ञानद्वये भासत इति वक्तुं शक्यत एव । ततश्च ज्ञानद्वयविषयत्वेऽपि वस्तुनः संवत्सरादिरूपैककालावस्थानसिद्ध्या स्थायित्वस्य ज्ञानानेकत्वेऽपि सिद्धेरिति

भावः ॥ **वर्तमान इति** । स्वाश्रयेण विशिष्ट इत्यर्थः ॥ **अनधिगतार्थत्वमेवेति** । तथा च तदभावस्यासिद्धत्वान्न तेन प्रामाण्याभावसाधनोपपत्तिरिति भावः । कथं स्मृत्यादेरनधिगतार्थगन्तृत्वमित्यतः स्मृतेस्तावत्तदुपपादयति **स्मृतिरपीति** ॥ **अन्यथेति** । वर्तमानतत्कालतयाऽनुभूतस्यार्थस्य वर्तमानतत्कालतयैव स्मृत्याऽवगाहनेऽनुभवस्येव स्मृतेरप्ययमित्याकारत्वापत्त्या स इत्याकारत्वं न स्यादित्यर्थः । अनुवादस्य तदुपपादयति **अनुवाद इति** ॥ **स्फुटमिति** । वादे वादस्याभावेन वादाविषयवादविषयकत्वादित्यर्थः ॥ **पूर्वज्ञानेति** । वादविषयीकृतार्थगोचर इत्यर्थः । अत्र प्रष्टव्यम् । किमत्र वादविषयीकृतार्थमात्रप्रतिपादनमुताधिकविधानार्थं तदिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **तथाऽपि धारावाहिकेति** । धारावाहिकज्ञानेष्विवात्रापि कालविशेषमादायानधिगतार्थगन्तृत्वस्य सूपपादनत्वादिति भावः । द्वितीयं दूषयति **अधिकेति** ॥ **तथेति** । स्फुटमनधिगतार्थत्वमित्यर्थः । यदा ह्यधिकविधानार्थमुक्तमनूद्यते तदा पूर्वानुवादेन विधीयमानस्यान्यस्य प्रागनधिगतस्यैव प्रतिपादनादनधिगतार्थत्वं तस्य स्फुटमिति भावः । एवमव्याप्तेरतिव्याप्तेश्चेति प्रतिज्ञातामव्याप्तिमुपपाद्यातिव्याप्तिमप्युपपादयति **संशयेति** ॥ **इतरेतराश्रयत्वमिति** । अनधिगतविशेषणस्य लक्षणानुप्रवेशसिद्धौ लक्षणाभावात्स्मृतेर्व्यावर्त्यत्वसिद्धिः तत्सिद्धौ चानधिगतविशेषणस्य लक्षणानुप्रवेशसिद्धिरितीतरेतराश्रयत्वमित्यर्थः ।

स० **प्रामाण्यस्य व्याप्यव्यापकभूतं लक्षणमिति** । अत्र व्याप्यत्वग्रहणं स्वरूपकथनार्थम् । अत एव क्वचित् प्रामाण्यव्यापकभूतं लक्षणमित्येव पाठः । तथा च, परिच्छेदकारित्वस्य प्रामाण्यलक्षणत्वात् तदभावेन प्रामाण्याभावोऽभिप्रेतः, किंवा तस्यालक्षणत्वेऽपि व्यापकत्वात् तदभावेन प्रामाण्याभाव इति विकल्पार्थः । वस्तुतस्तु लक्षणत्वोपपादनार्थं व्याप्यत्वग्रहणम् केवलव्यतिरेकिहेतुविशेषो लक्षणमित्युक्तत्वात् तदभावेन प्रामाण्याभावमुपपादयितुं व्यापकत्वमित्युभयोरपि सार्थक्यं द्रष्टव्यम् । **नित्यविषयाणामिति** । तत्र धर्मिणो नित्यत्वेन पूर्वमप्यधिगतिसत्त्वेन न धर्मिणमादाय अनधिगतार्थगन्तृत्वमिति भावः **धारावाहिकविज्ञानानामिति** । घटत्वादिरूपप्रकारस्य पूर्वं ज्ञातस्यैवोत्तरत्र भावादिति भावः । ननु तत्रापि पूर्वाज्ञात एव कश्चित्प्रकारोऽभ्युपगम्यते । अतो नोक्तदोष इति चेत् । तर्किं धर्मिण एव प्रतिक्षणं विनाशित्वेन तद्धर्माणामपि विनाशात् धारावाहिकज्ञाने पूर्वज्ञानविषयीकृतप्रकारस्य अभावेन अनधिगतार्थगन्तृत्वान्नाव्याप्तिरित्यभिप्रायः । किंवा धर्मिऽणोऽविनाशेऽपि तद्धर्माणामेव प्रतिक्षणमुत्पत्तिविनाशयोरभ्युपगमेन प्रकारमादाय अनधिगतार्थगन्तृत्वान्नाव्याप्तिरिति वेति विकल्पं मनसि निधाय आद्यं दूषयति **न हि वैनाशिकानामिवेति** । नान्त्य इत्याह **नापि प्रकारमिति** । **उपजनम्** उत्पत्तिः ।

**नानाप्रतिपत्तृवदिति** । एकार्थविषयकनानाप्रतिपत्तृकज्ञानानां यौगपद्यवत् एकप्रतिपत्तृकज्ञानानामपि यौगपद्यप्रसंगादित्यर्थः । **प्रत्यभिज्ञानानुपपत्तेश्चेति** । प्रत्यभिज्ञाया एकज्ञानत्वानुपपत्तेरित्यर्थः । अयमाशयः । सोऽयं देवदत्त इति प्रत्यभिज्ञाया ज्ञानद्वयत्वे सामानाधिकरण्यप्रत्ययाभावेन कालादिभेदलक्षणविरोधपरिहारकल्पकाभावेन विरोधपरिहारासंभवेन तद्देशकालविशिष्टत्वैतद्देशकालविशिष्टत्वरूपविरुद्धधर्माधिकरणत्वेन देवदत्तभेदापत्त्या तदैक्यसिद्ध्यर्थं ज्ञानद्वित्वं परित्यज्य एकज्ञानत्वमभ्युपगम्य एकज्ञानत्वे च सामानाधिकरण्यप्रत्ययेन विरोधपरिहारककालादिभेदकल्पनया धर्मद्वयस्याप्येकत्रोपपत्त्या अनन्यथासिद्धविरुद्धधर्माधिकरणत्वाभावेन तादृशस्यैव च भेदसाधकत्वेन अन्यथासिद्धविरुद्धधर्माधिकरणत्वेन भेदस्य वक्तुमशक्यत्वान्न देवदत्ते भेद इत्येवं देवदत्तैक्यसिद्ध्यर्थं प्रत्यभिज्ञैकत्वमभ्युपगतं परेण । तत्र क्रमभाविज्ञानेषु एकस्यैव वर्तमानकालस्य भानेन अधिगतार्थगन्तृत्वादव्याप्त्यभिधाने सोऽयं देवदत्त इत्यत्रापि वर्तमानकालस्यैकस्यैव 'सः अयम्' इत्येवं ज्ञानद्वयभानेन कालभेदस्यानाकलनेन भेदप्रसक्तेरेवाभावेन ज्ञानद्वित्वेऽपि बाधकाभावेन प्रत्यभिज्ञैक्यं नाभ्युपेयं स्यात् । तच्चानिष्टम् । तथाच एकस्यैव वर्तमानकालस्य सर्वत्र भानस्य वक्तुमशक्यत्वेन धारावाहिकज्ञानेऽपि पूर्वज्ञानाविषयीकृतकालविशेषस्यैव भानेन अनधिगतार्थगन्तृत्वरूपप्रमाणलक्षणसत्त्वान्नाव्याप्तिरिति तदेवोपपादयति **ज्ञानानेकत्वेऽपीति** । एककालावस्थानस्याकलनादिति संबंधः । क्वचिज्ज्ञानानेकत्वेऽपि अनेककालावस्थानाकलना-

दित्यपि पाठः । स च स्पष्ट एव । वस्तुतस्तु एवमर्थः । नानाप्रतिपत्तॄणामेककालविषयज्ञानानां यौगपद्यवत् एकप्रतिपत्तृकानेकज्ञानानामपि एककालविषयत्वापत्त्या यौगपद्यं स्यात् । न च स्थूलकाल-स्यैव विषयत्वेऽपि औपाधिककालानामनेकत्वेन तत्र तत्रोत्पन्नज्ञानानां नैव यौगपद्यमिति वाच्यम् । औपाधिककालाभ्युपगमे तस्यैव विषयत्वेन अनधिगतार्थगन्तृत्वोपपत्त्या स्थूलकालविषयत्वेन अनधिगतार्थ-गन्तृत्वं वदता तथा वक्तुमशक्यत्वात् । तथा च सर्वेषां एककालविषयत्वाय यौगपद्यापत्तिर्दुर्वारैवेति । **प्रत्यभिज्ञानेति** । अभिज्ञायामपि प्रत्यभिज्ञायामपि कालभेदस्याविषयत्वेन तस्या अप्यभिज्ञात्वापत्त्या प्रत्यभिज्ञात्वमेव न स्यादित्यर्थः । दोषद्वयमपि उपपादयति **ज्ञानानेकत्वेऽपीति** । अभिज्ञाद्वयस्यानेक-त्वेऽपि एककालावस्थानाकलनादभिज्ञात्वमेव । न तु अन्यतरस्य प्रत्यभिज्ञात्वम् । तथा प्रत्यभिज्ञात्वेन अभिमतज्ञानस्याभिज्ञानरूपस्य च अनेकत्वेऽपि उभयत्रैककालावस्थानाकलनादभिज्ञाविजातीयज्ञानान्तरत्वं न स्यादिति द्वितीयदोषोपपादकत्वं द्रष्टव्यम् । **वादविषय इति** । 'इति यदुक्तं तन्न स्यात्' इत्येवं वाद-विषय इत्यर्थः । वादे वादाभावेन वादाविषयीभूतवादविषयकत्वादिति भावः । **यदि च पूर्वज्ञानेति** । पूर्वज्ञानेन विशिष्टः विशेषितः अर्थः तद्गोचरः । अव्याप्तिमुपपाद्य अतिव्याप्तिमप्युपपादयति **संशयविपर्यययोरपीति** । **तदिदमितरेतराश्रयत्वमिति** । अनधिगतेतिविशेषणस्य लक्षणे प्रवेशसिद्धौ लक्षणाभावात् स्मृतेर्व्यावर्त्यत्वसिद्धिः, तत्सिद्धौ च अनधिगतेतिविशेषणस्य लक्षणे प्रवेशसिद्धिः इत्यन्योन्याश्रयत्वमिति भावः ।

**प०** — स्मृतिरप्रमाणं ज्ञातगोचरज्ञानत्वात्, अनुवादो न प्रमाणं ज्ञातज्ञापकत्वात् व्यतिरेकेण प्रत्यक्षवदिति हेत्वन्तरनिरासकतयापि योजयति **नन्वित्यादिना** ॥ **शीलमस्येति** । ताच्छील्यकणिनि-प्रत्यये कारीति रूपमिति भावः । आकारतद्वतोस्सविशेषाभेदात्सोऽस्यास्तीति युज्यत इति भावेनोक्तम् **सोऽस्यास्तीति** । **व्याप्यव्यापकभूतं** प्रामाण्यं प्रति व्याप्यत्वे सति व्यापकभूतं, समव्याप्तमित्यर्थः । अव्याप्त्यतिव्याप्तिशून्यतया लक्षणत्वोपपादनायैतदुक्तिः । न्यूनवृत्तित्वे अधिकवृत्तित्वे चाव्याप्त्यतिव्याप्त्यो-रवर्जनात् ॥ **इति योजनेति** । लक्षणपदाध्याहारेण योजनेत्यर्थः । अव्याप्तिं तावदुपपादयति **धर्मिणमित्यादिना ईक्षामह इत्यन्तेन** ॥ **नित्येति** । नित्यवस्तुविषयकाणामित्यर्थः । कस्मिंश्चिज्जन्मनि तेन तस्य ज्ञानत्वसंभवात्तत्राव्याप्तिरिति भावः । तज्जन्मन्यनवगतत्वं ब्रूम इत्यतोऽन्यत्राव्याप्तिमाह **व्याप्यवत्तयेति** । **धर्मिणं** पर्वतादिकम् । **पृथगिति** । अन्वयविशेषं विनाऽवगतानित्यर्थः ॥ **वैना-शिकानां** क्षणिकवादिनाम् । ननु वस्तुनस्तथात्वेऽपि धर्ममात्रमन्यथेत्यतः अनुभवविरोध इत्याह **नापीति** । भिन्नभिन्नकालविशिष्टवस्तुविषयकत्वाद्धारावाहिकज्ञानानामज्ञातविषयकतेति भावेनाव्याप्त्यु-द्धारमाशङ्क्य तर्हि स्मृत्यादेरपि स्यादेव प्रामाण्यमित्याह **ननु यद्यपीत्यादिना** ॥ **नानाप्रतिपत्तृव-**

-**दिति** । एकदैकत्र सन्निकृष्टचक्षुष्मतां पुंसां युगपदेव ज्ञानानामुदयः तथैवैकस्यापि पुंसो जायमानधारा-वाहिकज्ञानानां यौगपद्यापत्तिरित्यर्थः ॥ **प्रत्यभिज्ञेति** । एकस्यैव वर्तमानकालस्य स्फुरणपक्षे सोऽयमिति कालभेदावगाह्येकज्ञानरूपप्रत्यभिज्ञानायोग इत्यर्थः । ननु स इत्येकं ज्ञानं अयमिति चापरं अतो न दोष इत्यत आह **ज्ञानानेकत्वेपीति** ॥ **प्रत्यभिज्ञानस्येति** । वस्तुन इति योज्यम् ॥ **अनेककालेति** । तथा चैककालस्यैव ज्ञानेषु स्फुरणमित्यस्यानुभवविरोध इति भावः । वर्तमानोऽर्थ इतिवर्तमानकाल-विशिष्टोऽर्थ इत्यर्थः ॥ **वादविषय इति** । वादविशिष्टार्थविषय इत्यर्थः । घटोऽस्तीति त्वयोक्तमित्येव-मादिरूपः ॥ **पूर्वज्ञानेति** । घटमहं जानामि ज्ञातो घटो मयेत्येवमादिरूप इत्येतद्धारावाहिकस्थलेऽन्या-न्यकालविशिष्टार्थगोचरतया यथाऽनधिगतार्थत्वं तथा अत्रापि पूर्वमज्ञातज्ञानविशेषणकार्थविषयतयाऽनधि-गतार्थत्वमेवेति भावः ॥ **तथेतीति** । अज्ञाताधिकविज्ञेयविषयकत्वादनधिगतार्थतेत्यर्थः । अतिव्याप्तेश्चेति प्राक् प्रतिज्ञातातिव्याप्तिमुपपादयति **संशयविपर्यासयोरपीति** ॥ **इतरेतराश्रयत्वमिति** । व्यावर्त्यत्व-सिद्धौ लक्षणे विशेषणमर्थवत् । सिद्धेच तत्सार्थक्ये लक्षणाभावेन स्मृत्यादेर्व्यावर्त्यत्वसिद्धिरित्येवंरूपेणेति भावः । इतिशब्दः प्रामाण्यस्य व्याप्यव्यापकभूतं लक्षणमित्युक्ताद्यपक्षदूषणसमाप्तौ ।

या० - **स्मृत्यादाविति** । आद्यपक्षविवक्षायां स्मृतिशब्देन करणव्युत्पत्त्या संस्कारो ग्राह्यः । आदिपदेनानुवादो द्वितीयपक्षविवक्षायामादिपदेनानुवादजन्यज्ञानं ग्राह्यम् । स्मृतिपदं च भावव्युत्पत्त्या स्मरणपरमेवेति ध्येयम् । द्वितीयपक्षलाभायापि मूलं योजयति **यद्वेति** । सोऽस्यास्तीत्येतत्तादात्म्येन संबन्धेनेति ज्ञेयम् ॥ **व्याप्यव्यापकभूतमिति** । समव्याप्तमित्यर्थः । एतच्च लक्षणत्वोपपादनाय । व्यापकमात्रत्वेऽतिव्याप्तेः । व्याप्यमात्रत्वे चाव्याप्तेः । समव्याप्तत्वे च तदुभयनिरासात् । इदं च परिच्छेदकार्येव प्रमाणं, प्रमाणमेव परिच्छेदकारीत्येवकारस्योभयत्र संबन्धेन लभ्यते, समभिव्याहृतपदार्थ-तावच्छेदकस्येतरपदार्थतावच्छेदकव्यापकत्वस्य एवकारार्थत्वादिति ज्ञातव्यम् । तथा च किं परिच्छेद-कारित्वस्य प्रमाणलक्षणत्वात्तदभावेन स्मृत्यादेः प्रामाण्याभावोऽभिप्रेतः । किंवाऽस्यालक्षणत्वेपि प्रामाण्य-व्यापकत्वात्तदभावेन प्रामाण्याभाव इति विकल्पार्थः । अत एव व्यापकमेवेति एवकारेण लक्षणत्वमेव व्यावर्तितं न तु व्याप्यत्वमित्यवधेयम् । मूले एवकारस्य यथाश्रुतसंबन्धमेवाश्रित्य द्वितीयपक्षस्य प्रसक्ति-रुपपादनीया ॥ **नित्यविषयाणामिति** । अनादौ संसारे नित्यानां धर्मिणां पूर्वमवगतत्वादिति भावः ॥ **धारावाहिकेति** । तत्र पूर्वज्ञानेनावगतस्य घटत्वादेः प्रकारस्य द्वितीयादिज्ञानैरवगतादिति भावः । ननु तत्राप्यनधिगतार्थविषयकत्वमस्त्येवेति गूढाभिसन्धेराशङ्कायां, किं घटादिस्वरूपस्यैव प्रतिक्षणमुत्पत्त्या-ऽनधिगतार्थविषयकत्वं ज्ञानानामभिप्रेतम् उत प्रकारस्यैव कस्यचिदिति विकल्पं मनसि निधायाद्यं दूषयति **न हीत्यादिना** । वैनाशिकानां क्षणिकत्ववादिनां मत इवेत्यर्थः । मीमांसकानां मत इति शेषः ।

एवं साङ्ख्यानामित्यत्रापि । साङ्ख्यैरचेतनमात्रं फलाङ्कुरशरीरादिवत्प्रतिक्षणं विक्रियाविशेषवदित्यङ्गीकारादिति भावः । द्वितीयं दूषयति **नापि प्रकारमिति** ॥ **उपजनेति** । प्रतिक्षणमुत्पत्तिनाशवन्तमित्यर्थः । अनुपलम्भान्नास्तीति भावः ।

पूर्वपक्षी स्वाशयमुद्धाटयितुमाह **ननु यद्यपीति** ॥ **नानाप्रतिपत्तृवदिति** । यथाऽनेकप्रतिपत्तॄणामेकक्षणरूपकालविषयकेषु ज्ञानेषु यौगपद्यम् एवमेकप्रतिपत्तृकाणां वस्तुतः क्रमभाविनामेककालविषयकत्वे यौगपद्यं स्यादित्यर्थः । ननु ज्ञानयौगपद्ये न विषयीभूतकालैक्यं तन्त्रं, किन्त्वधिकरणक्षणैक्यमेवेत्यरुचेराह **प्रत्यभिज्ञेति** । यदि क्रमभाविष्वनेकेषु ज्ञानेष्वेक एव स्थूलकालोऽवभासेत, तदैकज्ञानरूपा प्रत्यभिज्ञा नोपपद्येत, किन्तु सोऽयमिति स्मृत्यभिज्ञारूपं ज्ञानद्वयमेव स्यादित्यर्थः । नन्वेवं पूर्वकालीनेन एतत्कालीनस्याभेदासिद्ध्या पदार्थानां स्थायितासिद्धिर्न स्यादित्यत आह **ज्ञानानेकत्वेऽपीति** । प्रत्यभिज्ञास्थले स्मृत्यभिज्ञारूपयोर्ज्ञानयोरनेकत्वेऽपि वस्तुनः संवत्सरादिरूपैकस्थूलकालावस्थानाकलनसंभवादित्यर्थः । यथा धारावाहिकज्ञानस्थले त्वयैक एव घटिकादिरूपः स्थूलकालो भासत इत्युच्यते तथा प्रत्यभिज्ञास्थले मयाऽपि संवत्सरादिरूपः स्थूलकाल एक एव ज्ञानद्वये भासत इति वक्तुं शक्यते ततश्च ज्ञानद्वयविषयस्य वस्तुनः संवत्सरादिरूपकालावस्थानसिद्ध्या स्थायिता ज्ञानानेकत्वेऽपि सिध्यतीति भावः । यद्वा प्रत्यभिज्ञाऽनुपपत्तिः कुत इत्यत आह **ज्ञानानेकत्वेऽपीति** । धारावाहिकज्ञानानामनेकत्वेऽपि तद्विषयस्य वस्तुन एककालावस्थानस्यैककालसम्बन्धित्वस्याकलनं भानं तस्याङ्गीकारादित्यर्थः । अयमाशयः । एकस्य वस्तुनः कालद्वयसम्बन्धावगाहिज्ञानं हि प्रत्यभिज्ञा । यदि च धारावहिकज्ञानेष्वेक एव वर्तमानकालोऽवभासत इत्युच्यते, तर्हि पूर्वानुभवप्रत्यभिज्ञयोरप्येकस्यैव वर्तमानकालस्य भानप्रसङ्गोऽविशेषात्ततश्चोक्तरूपप्रत्यभिज्ञाऽनुपपत्तिरिति । एवं च प्रत्यभिज्ञासंरक्षणाय यदनेकं ज्ञानं न तदेककालविषयकमिति नियमोऽङ्गीकार्यः । ततश्च धारावाहिकज्ञानानामनेकत्वान्नैककालविषयकत्वमिति ॥ **वर्तमानार्थ इति** । वर्तमानकालरूपतत्तत्क्षणविशिष्ट इत्यर्थः । **वादविषयो** वादावच्छिन्नार्थविषयः । यथा शब्दो नित्य इति यदुक्तं त्वयेत्यादिरूपः ॥ **तदा स्फुटमिति** । वादे वादस्याभानादिति भावः । **यदि च पूर्वविज्ञानेति** । पूर्वविज्ञानेन विशिष्टः सम्बद्धो विषयीकृत इति यावत् । यथा 'अग्निर्हिमस्य भेषजम' इत्यादिरूपः । पूर्वविज्ञानविषयीभूतार्थगोचररूपेऽनुवादेऽपि द्रष्टव्यम् । किं तत्राधिकविधानादिकं नास्त्युतास्तीत्याद्ये आह **तथापीति** । धारावाहिकज्ञानेष्विवात्रापि कालविशेषमादाय न अधिगतार्थत्वमुपपादनीयमिति भावः । द्वितीये त्वाह **अधिकविधानेनेति** । तथेत्यनेन स्फुटमनधिगतार्थत्वमित्यस्य परामर्शः । तथा च यदाऽधिकविधानार्थमुक्तमेवोच्यते तदोक्तेऽर्थे विधीयमानान्वयस्य पूर्वमनधिगतत्वात् अनधिगतार्थत्वमेव स्पष्टमिति भावः । एवमव्याप्तिमुपपाद्यातिव्याप्तिमप्युपपादयति **संशयविपर्यासयोरिति** ॥ **इतरेतरा-**

**श्रयत्वमिति** । अनधिगतेति विशेषणस्य लक्षणानुप्रवेशे सिद्धे लक्षणाभावात्स्मृतेर्व्यावर्त्यतासिद्धिः तत्सिद्धौ चानधिगतविशेषणस्य लक्षणे प्रवेशसिद्धिः इतीतरेतराश्रयत्वमित्यर्थः ।

श्री० — अज्ञातस्य ज्ञानमज्ञातज्ञानम् । **एतत्** द्वयमपीत्यर्थः । किं परिच्छेदकारीत्यादावुक्तं द्वयमपि विवक्षितं मन्तव्यम् । व्याप्येति स्वरूपसङ्कीर्तनमत एव क्वचित्तद्विहायैव पाठः । अत्र लक्षणपदोपरिभारः । तथा च यथा कृतकत्वस्यानित्यत्वं व्यापकमेव न तु लक्षणम् । एवं न भवति, किन्तु व्यापकभूतं लक्षणत्वेन विवक्षितमित्यर्थः । **व्यापकमेवेति** । न लक्षणत्वेन विवक्षितमित्यर्थः । **प्रमा** प्रमितिविषयः । न प्रमेत्यस्य नोपपन्नमिति तात्पर्यतो व्याख्यानम् । अव्याप्तिमुपपादयति **धर्मिणमित्यादिना** । धर्मिणं धर्म्यंशमिति यावत् ॥ **नित्येति** । तेषां पदार्थानां नित्यत्वादेवानादौ संसारे कस्मिंश्चिद्वा जन्मन्यधिगतिसंभवेन धर्म्यंशे नानधिगतार्थगन्तृतेति ध्येयम् । **अनुमानस्य** धूमवान्पर्वतो वह्निमानित्यस्य । धर्म्यंशेऽनधिगतार्थगन्तृत्वाभावमुपपादयितुं व्याप्यवत्तयाऽवगतमित्युक्तम् । एवमेव पृथगवगतान् विशकलिततयाऽवगतार्थानित्यस्यापि विशेषणस्य कृत्यं ज्ञेयम् । **शब्दस्य** नदीतीरे पञ्च फलानि सन्तीत्यादिरूपस्य ॥ **धारेति** । घटत्वादिरूपप्रकारस्य पूर्वं ज्ञातस्यैवोत्तरत्रापि ज्ञाने भानान्न प्रकारमादायाप्यनधिगतार्थगन्तृतेत्यर्थः । ननु पूर्वज्ञानाविषय एव प्रकार उत्तरज्ञानेऽवभासत इति प्रकारमादायानधिगतार्थत्वं युक्तमिति चेत् । अत्रापि पृच्छामः । बौद्धानामिव प्रतिक्षणं घटादेर्भेदमङ्गीकृत्य, सांख्यानामिव प्रतिक्षणं परिणामं वाऽङ्गीकृत्य प्रकारस्याप्युपजननापायौ स्वीक्रियेते उत धर्मिणः स्थायित्वमङ्गीकृत्य धर्माणामेवोत्पत्तिविनाशौ । नाद्य इत्याह **न हीत्यादिना** । द्वितीयं निराह **नापीति** । धर्मिणः स्थायित्वेऽपीति शेषः । **तादवस्थ्यं** तथा च तदंशेऽप्यधिगतार्थगन्तृत्वमेवेत्यर्थः । तर्हि कथं घटादिज्ञानेऽनधिगतार्थत्वमित्यतोऽखण्डः काल एक एव प्रतीयत इति पक्षस्यायुक्तत्वादन्यान्यक्षणलवविशिष्टार्थविषयीकरणस्यैव वक्तव्यत्वादनधिगतार्थगन्तृतैवास्तीत्याह **तथाऽपीत्यादिना** । **वर्तमान एवार्थः** वर्तमानतत्तत्क्षणलवादिविशिष्टोऽर्थः । ननु वर्तमानकालस्य वा पूर्वोत्तरज्ञाने प्रतीतस्यैकत्वे पुनरनधिततार्थत्वायोग एवेत्यत आह **न चेति**। वर्तमानकालस्याविषयत्वे। क्रमभाविनामिति हेतुगर्भम्। क्रमभाविज्ञानानां वर्तमानैककालरूपस्थूलकालविषयकत्वे प्रत्यभिज्ञा न संभवति। पूर्वकाले ज्ञातस्यैव पुनः कालान्तरे ज्ञाने हि प्रत्यभिज्ञात्वम्। पूर्वोत्तरज्ञानयोरेककालविषयकत्वे ज्ञानयोरभिज्ञात्वस्यैव प्राप्त्या प्रत्यभिज्ञात्वं न स्यादित्याह **प्रत्यभिज्ञेति** । एतदेवोपपादयति **ज्ञानेति** । ज्ञानानामनेकत्वेऽप्येकस्मिन्नखण्डे काल एवावस्थानस्य सम्यग्ज्ञातत्वादित्यर्थः । **वर्तमानोऽर्थः** तत्तत्क्षणविशिष्टोऽर्थः । तदुपपादयति **स्मृतिरपीति** । अनुभूतमनुभवेन विषयीकृतम् । **अन्यथा** अतीततत्कालतया नावगाहत इत्यधिगतार्थगन्तृत्वं यदि ब्रूषे ॥ **वादविषय इति** । 'यदुक्तं त्वया तन्न'त्येवं वादविषय इत्यर्थः । **स्फुटमिति** । अनुवादे वादविषयकत्वस्य प्रतीयमानत्वेनास्य च

वादेऽप्रतीतत्वादनधिगतार्थत्वमित्यर्थः । विशिष्टो विषयीभूतः । तथा चाधिगतार्थत्वं यद्युच्यत इति भावः । **समान इति** । अन्यान्यक्षणादिविषयीकरणेनानधिगतार्थत्वमित्यर्थः । अतिव्याप्तिमुपपादयति **संशयेति** ॥ **इतरेतरेति** । अनधिगतेति विशेषणस्य लक्षणप्रवेशे सिद्धे लक्षणाभावात्स्मृतेर्व्यावर्त्यत्वसिद्धिस्तत्सिद्धौ च तद्व्यावर्तकत्वेनानधिगतविशेषणस्य लक्षणे प्रवेशसिद्धिरित्यन्योन्याश्रय इत्यर्थः ।

च० — **व्याप्यव्यापकभूतं** समनियतम् । **लक्षणमिति** प्रमाणलक्षणमित्यर्थः । लक्ष्यतावच्छेदकव्यापकमेयत्वादावतिप्रसङ्गव्युदासाय व्याप्यत्वांशस्य तद्व्याप्यतत्तद्व्यक्तित्वादौ तदपनोदाय व्यापकत्वांशस्य च निवेशनमित्यवसेयम् । इदं च परिच्छेदकार्येव प्रमाणं प्रमाणमेव परिच्छेदकारीति च विन्यासोपगमेन द्रव्यमेव गुणवद्गुणवदेव द्रव्यमित्यादाविव समभिव्याहृतपदार्थतावच्छेदक इतरपदार्थतावच्छेदकव्यापकता लभ्यत इति समनैयत्यनिर्वाह इति मन्तव्यम् । नित्यविषयाणामिति बहुव्रीहिः । भवस्यानादितया नित्यपदार्थानामवगतत्वसंभवादिति भावः । **नानाप्रतिपत्तृवदिति** । षष्ठ्यन्ताद्वतिः । नानाप्रतिपत्तृकैककालविषयकज्ञानानां यौगपद्यवदेकप्रतिपत्तृकक्रमभाव्येककालविषयकाणामपि यौगपद्यं स्यादिति भावः । ननु विषयीभूतकालैक्यस्य यौगपद्यातन्त्रतयाधिकरणक्षणैक्यरूपतन्त्रतापन्नस्य च प्रकृते विरहेण न यौगपद्यापादनं सङ्गच्छत इत्यरुचेराह **प्रत्यभिज्ञेति** । तदेवोपपादयति **ज्ञानानेकत्वेपीति** । धारावाहिकज्ञानेष्वेक एव वर्तमानकालोऽवभासत इति यद्युपेयते तदा वैशेष्यविरहेण पूर्वानुभवप्रत्यभिज्ञयोरपि तदुपगमापत्त्यैकस्य वस्तुनः कालद्वयसंबन्धावगाहिप्रत्यभिज्ञानुपपत्तिरित्यर्थः । **वादविषयः** वादावच्छिन्नार्थविषयः । **स्फुटमिति** । वादे वादस्याभानादिति भावः । **समानो न्याय इति** । धारावाहिकज्ञानेष्विव कालविशेषमादायानधिगतार्थत्वमुपपादनीयमिति भावः ।

**सु० — अस्तु तर्हि व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति द्वितीयः पक्षः । स्यादप्येवम् । यदि परिच्छेदकार्येव प्रमाणमिति प्रमा प्रमाणं स्यान्न च तदस्ति । तथा हि । प्रामाण्यस्यानधिगतार्थत्वेन व्याप्तिः किं साहचर्यदर्शनमात्रात्सिध्यति, उत व्यभिचारादर्शनसहकृतात्, उत विपक्षे बाधकोपेतात् । नाद्यः अतिप्रसङ्गात् । न द्वितीयः धारावाहिनि व्यभिचारदर्शनात्, अतिप्रसङ्गापरिहाराच्च । न तृतीयः तदभावात् ।**

**अधिगतमेवार्थमधिगमयता प्रमाणेन पिष्टं पिष्टं स्यादिति चेत् । किमिदं पिष्टपेषणं नाम । किमधिगतेऽर्थेऽधिगत्यन्तरस्यानुदयः, किंवा विफलत्वम्, उताविशिष्टफलत्वम्, अथ अनपेक्षितफलत्वम् । नाद्यः । स्यादप्येवं यदि ज्ञानाभावोऽपि ज्ञानसामग्र्येकदेशः स्यात् । ज्ञानं वा तत्प्रतिबन्धकं भवेत् । न चैवम् । तथात्वे स्मृतेरेवानुदयप्रसङ्गात् । न द्वितीयः**

उक्तोत्तरत्वात् । न तृतीयः आद्येऽप्यापत्तेः । न चतुर्थः तृणादिदर्शने, हेयदर्शने च प्रसङ्गात् ।

ननु च करणविशेषः प्रमाणम् । कारणं च साधकतमम् । न च साध्यसिद्धौ तज्जातीयस्यापि साधकतमत्वमस्ति, छिन्ने परशोरिवेति चेत् । मैवम् । न हि करणस्य साधकतमत्वं साधकतमान्तरापेक्षया । किन्तु प्रधानक्रियाकारकान्तरापेक्षया । अन्यथा यत्र करणानां समुच्चयस्तत्र परस्परापेक्षयाऽनतिशयितत्वादकरणत्वं स्यात् । छिन्ने कुठारस्याकरणत्वं तु फलानुदयात् । न च प्रकृते तथाऽस्तीत्युक्तमिति ।

शे०— अतिप्रसङ्गादिति । व्यभिचारिण्यपि सहचारदर्शनमात्रस्य सद्भावात्तत्रापि व्याप्तिसिद्धिप्रसङ्गादित्यर्थः ॥ धारावाहिनीति । तत्र सत्यपि प्रामाण्येऽनधिगतार्थत्वाभावादिति भावः ॥ अतिप्रसङ्गेति । धूमादिव्यभिचारिणि वन्ह्यादौ व्यभिचारादर्शनस्यापि संभवात्तत्सहकृतसाहचर्यदर्शनाद्व्याप्तिसिद्धिप्रसक्तेरित्यतिप्रसङ्गेत्यर्थः । विपक्षे बाधकमाशङ्कते अधिगतमेवेति ॥ तथात्व इति । ज्ञानाभावस्य ज्ञानसामग्र्येकदेशत्वे ज्ञानस्य वा ज्ञानप्रतिबन्धकत्व इत्यर्थः ॥ अनुदयेति । ज्ञानाभावरूपज्ञानसामग्र्येकदेशस्याभावाज्ज्ञानरूपज्ञानोत्पत्तिप्रतिबन्धकसद्भावाच्चेति भावः॥ उक्तोत्तरत्वादिति । अधिगतमर्थमवगमयतो विफलत्वेन नाप्रामाण्यं वक्तुं शक्यं, 'तृणादिदर्शने किञ्च फलवत्त्वं निगद्यते' इत्यादिना विफलत्वस्याप्रामाण्यप्रयोजकत्वाभावस्योक्तत्वादित्यर्थः ॥ आद्येऽप्यापत्तेरिति । प्रथमप्रमाणफलतोऽप्यविशिष्टफलतया यदि द्वितीयादेरानर्थक्यं तर्हि तद्वदेव प्रथमप्रामाण्यस्यापि द्वितीयादिप्रमाणाविशिष्टफलतया आनर्थक्यं स्यादित्यर्थः ॥ तृणादिदर्शन इति । ग्रामं गच्छतः पथि पतिततृणादिदर्शन इत्यर्थः । विपक्षे बाधकान्तरमाशङ्कते ननु चेति । अधिगतेऽधिगत्यन्तरस्योत्पादेऽपि नाधिगतमवगमयतो द्वितीयस्य प्रामाण्यमुपपद्यते । स्मृतिकरणस्यानुभवकरणापेक्षया तमबर्थभूतातिशयशून्यत्वेन तदपेक्षया साधकतमत्वाभावादिति भावः ॥ छिन्ने परशोरिवेति। परश्वन्तरछिन्ने पूर्वच्छिदाजनकपरशुजातीयस्य साधकतमत्वाभावादित्यर्थः ॥ न हीति । करणस्य करणान्तरापेक्षयाऽतिशयसाधकत्वस्याविवक्षितत्वात्पूर्वप्रवृत्तप्रमाणापेक्षयाऽतिशयितविषयकज्ञानमनुत्पादयतोऽपि द्वितीयस्य प्रधानक्रियाकारकान्तरापेक्षयाऽतिशयमात्रेण प्रामाण्यमुपपद्यते । न चास्य कथं कारकान्तरापेक्षयाऽप्यतिशय इति वाच्यम् । सत्यपि कर्त्रादावेतद्व्यतिरेकेण कार्यव्यतिरेकवदन्यव्यतिरेकदशायामेतत्सत्त्वस्यैवासंभवेन सत्यप्येतस्मिन्नन्यव्यतिरेकेण कार्यव्यतिरेकाभावेन तत्संभवादिति भावः । किं कारकान्तरापेक्षयाऽतिशयकल्पनेन, करणस्य करणान्तरापेक्षयाऽतिशय एव तदर्थः किन्न स्यादित्यत आह अन्यथेति ॥ यत्रेति । अनेककरणनिष्पाद्यं यत्रैकं कार्यं भवति यथाऽनेकदीपचक्षुरादिकरणकमेकं प्रत्यक्षं यथा वाऽभ्रेन दीपिकायाः पथा सञ्चरन्त इत्यनेक-

करणमपि सञ्चरणं तत्रेत्यर्थः । ननु प्रधानक्रियाकारकान्तरापेक्षया साधकतमत्वं परशुजातीयस्याप्यस्त्येवेति छिन्नेऽपि कुठारस्य करणत्वप्रसङ्ग इत्यत आह **छिन्न इति ॥ फलानुदयादिति** । छिदालक्षणफलानुदयादित्यर्थः । अवयवसंयोगध्वंसस्यैव छिदात्वादिति भावः । नन्वेवं तर्हि छिन्ने कुठारस्येवाधिगतेऽप्यर्थेऽधिगत्यन्तररूपफलानुदयादेव तत्कारणस्यापि प्रधानक्रियाकारकान्तरापेक्षया साधकतमत्वेन करणत्वं न स्यादित्यतो भवेदेवं यदि छिन्ने छिदान्तरासंभव इवाधिगतेऽर्थेऽधिगत्यन्तरासंभवः स्यात् । यदि ज्ञानाभावोऽपि ज्ञानसामग्र्येकदेशः स्यात्, ज्ञानं वा तत्प्रतिबन्धकं भवेत् । न चैवम् । तथात्वे स्मृतेरेवानुदयप्रसङ्गादित्युक्तत्वादित्यत आह **न चेति** ।

स० — **अतिप्रसङ्गादिति** । पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्त्यापत्तिरित्यर्थः । सहचारदर्शनमात्रस्य तत्रापि सत्त्वादित्यर्थः । **अतिप्रसङ्गपरिहाराच्चेति** । व्यभिचारादर्शनसहकृतसहचारदर्शने सत्यपि विपक्षे बाधकाभावप्रयुक्ताप्रयोजकत्वशङ्कायामपि व्याप्तिसिद्ध्यापत्तेरित्यर्थः । विपक्षे बाधकमेव शङ्कते **अधिगतमेवेति ॥ उत्तोत्तरत्वादिति** । तथात्वे हि अधिगतार्थं विफलत्वेनाप्रमाणमिति वक्तव्यम् । तच्च न संभवति । विफलत्वस्य अप्रामाण्यप्रयोजकत्वाभावस्य उक्तत्वादित्यर्थः । **आद्येऽपीति** । विशिष्टफलरहितं यदाद्यम् अनधिगतार्थं तस्य प्रामाण्यं न स्यादित्यर्थः । तस्यापि द्वितीयापेक्षयाऽविशिष्टफलत्वादिति भावः । विपक्षे बाधकान्तरमाशङ्कते **ननु चेति** । अत्राधिगतेऽधिगत्यन्तरस्योत्पादेऽपि नाधिगतमवगमयतः प्रामाण्यम्, येन हि चक्षुर्घटसन्निकर्षेण यद्विषयकघटज्ञानमुत्पादितं तज्जातीयेनैव द्वितीयेन सन्निकर्षेण पूर्वोत्पन्नसमानविषयकज्ञानान्तरस्यैवोत्पादेन तदपेक्षयाऽधिकविषयकज्ञानानुत्पादनेन अतिशयितसाधकत्वाभावात् । अतिशयितसाधकत्वस्यैव प्रमाणशब्दार्थत्वात् इति शङ्काभिप्रायः । **मैवमिति** । करणापेक्षया अतिशयितसाधकत्वरूपप्रमाकरणत्वस्याविवक्षितत्वात् पूर्वप्रवृत्तकरणापेक्षया अतिशयितविषयकज्ञानमनुत्पादयतोऽपि द्वितीयस्य प्रामाण्यमुपपद्यत एव । प्रधानक्रियाकारकान्तरापेक्षया अतिशयितत्वसद्भावात् । न च तदप्यसिद्धम् । सत्यपि कारकान्तरे एतदभावे ज्ञानानुत्पादात् । न चैवं तदभावे अनेनापि तदनुत्पादात् न (..) अतिशयितसाधकतमान्तरापेक्षयैव भवत्वित्यत आह **अन्यथेति** । प्रमाणद्वयसमाहारात् यत्र सुरभि चन्दनमित्यादिज्ञानमुत्पद्यते, तत्र तयोः करणत्वं न स्यादित्यर्थः । नन्वेवं परशोरपि साधकतमत्वं प्रधानक्रियाकारकान्तरापेक्षया संभवत्येवेति तेनापि छिन्ने छिदान्तरमुत्पादनीयं स्यादित्यत्राह **छिन्न इति** । तत्र कार्यादर्शनेन प्रधानक्रियाकारकान्तरापेक्षया अतिशयितत्वरूपसाधकतमत्वे कल्पकं नास्तीति भावः । न चैवम् तद्वदेव अधिगतेऽप्यधिगत्यन्तररूपफलाभावेन तत्करणस्यापि प्रधानक्रियाकारकान्तरापेक्षया साधकतमत्वमिति प्रामाण्यं न स्यादित्यत आह

**न च प्रकृते तथाऽस्तीत्युक्तमिति** । स्यादप्येवं यदि ज्ञानाभावोऽपि ज्ञानसामग्र्येकदेशः स्यात् । ज्ञानं वा तत्प्रतिबन्धकं भवेत् । न चैवम् । तथात्वे स्मृतेरेवानुदयप्रसङ्गादित्यादिनोक्तमित्यर्थः ॥

प० — **अतिप्रसंगादिति** । वह्न्यादेर्धूमादिना व्याप्त्यापत्तेरित्यर्थः । ननु यद्यपीत्यादिना धारावाहिकस्थलेऽनधिगतार्थत्वमुपपादितं इत्यतो दोषांतरमाह **अतिप्रसंगेति** । वह्न्यादेरपि धूमादिना व्यभिचारादृष्टिसंभवादिति भावः ॥ पिष्टपेषणरूपबाधकमाशंकते **अधिगतमेवेति** ॥ **उत्कोत्तरत्वादिति** । तृणादिदर्शन इति श्लोकव्याख्यावसरे फलवत्त्वं न प्रामाण्यप्रयोजकं, प्रयोजकं चेदपि अस्त्येव तत्स्मृत्यादावित्युक्तत्वादित्यर्थः । करणत्वभंगरूपं बाधकांतरमाशंकते **ननु चेति** ॥ **साधकतममिति** । साधकेषु मध्येऽतिशयितं साधकमित्यर्थः । अतिशयितत्वं च फलोपधायकत्वम् । अविलंबेन कार्यजनकत्वमिति यावत् ॥ **तज्जातीयस्येति** । करणजातीयस्येत्यर्थः । धारावाहिकस्थले चक्षुरादेरेतन्मते भिन्नभिन्नकालविशिष्टवस्तुसन्निकर्षाणां भेदेन तत्सन्निकृष्टकरणस्यापि भेदात्तज्जातीयस्येत्युक्तम् ॥ **साधकतमत्वमिति** ॥ अविलंबेन साध्यसिद्धिकरत्वरूपातिशयितकारणत्वमित्यर्थः ॥ **छिन्न इति** । येन केनचिच्छिन्ने दारुणि परशोर्यथा प्राचीनच्छेदनकरणापेक्षया साधकतमत्वं नास्ति तथेत्यर्थः । करणानामर्थविषयीकरणत्वावान्तरक्रियायां कर्तृतया ज्ञानच्छिदादिरूपक्रियास्वेव करणत्वादाह **प्रधानक्रियेति** । प्रधानक्रियायां छेदनज्ञानादिरूपायां यानि कारकाणि कर्तृकर्माधिकरणादिरूपाणि तदपेक्षयेत्यर्थः ॥ **यत्रेति** । अजया क्रीणाति, वाससा क्रीणाति, हिरण्येन क्रीणाति गवा क्रीणातीत्यादिनोक्तसोमक्रयकरणानां अजाप्रभृतिदशद्रव्याणां सोमक्रयरूपक्रियां प्रति समुच्चय इति द्वादशान्त्यपादीयतृतीयाधिकरणे मीमांसकोक्तरीत्या समुच्चय इत्यर्थः ॥ **अकरणत्वमिति** । तथाच प्रतिद्रव्यं कर्तृकरणयोस्तृतीयेति प्राप्तकरणार्थतृतीया न स्यादिति भावः ॥ **फलानुदयादिति** । स च वस्तुस्वभावप्रयुक्तो न परशोरकरणत्वप्रयुक्त इति भावः ॥ **इत्युक्तमिति** । यदि ज्ञानाभावोपि ज्ञानसामग्र्येकदेश इत्यादिनोक्तमित्यर्थः ।

या० — **अतिप्रसङ्गापरिहारादिति** । धूमादिव्यभिचारिणि वन्ह्यादौ व्यभिचारादर्शनस्यापि संभवादिति भावः । विपक्षबाधकमेव शङ्कते **अधिगतमेवेति** ॥ **उत्कोत्तरत्वादिति** । 'तृणादिदर्शने किञ्च फलवत्त्वं निगद्यते' इत्यत्राफलवत्त्वस्याप्रामाण्यप्रयोजकत्वाभावस्योक्तत्वादित्यर्थः । विपक्षे बाधकान्तरमाशङ्कते **ननु चेति** ॥ **तज्जातीयस्यापीति** । ननु पूर्वज्ञानजनकमेवेन्द्रियमुत्तरज्ञानस्यापि जनकं तत्कथं तज्जातीयम् । मैवम् । प्रतिक्षणमवान्तरव्यापारीभूतसन्निकर्षाणां भिन्नत्वेन तद्विशिष्टेन्द्रियेपि भेदस्य विवक्षितत्वात् । एवं परशोरिवेत्यत्राप्यवान्तरव्यापारभेदेन भेदस्य विवक्षितत्वात्तज्जातीयत्वमुपपादनीयम् ॥ **प्रधानेति** । उद्यमननिपतनरूपावान्तरक्रियाणां कुठारस्य कर्मत्वादसम्भवपरिहाराय प्रधानेत्युक्तम् ॥

**यत्र करणानामिति** । स्थूलवृक्षच्छेदनेऽनेकेषां कुठाराणां समुच्चयो यत्रेत्यर्थः । नन्वेवं प्रधानक्रियाकान्तरापेक्षया साधकतमत्वं परशुजातीयस्यापि सम्भवतीति तेनापि छिन्ने छिदान्तरमुत्पादनीयमित्यत आह **छिन्न इति** । तत्र कार्यादर्शनेनातिशयकल्पकं नास्तीति भावः । न च फलाभावेनाकारणत्वसिद्धिः तत्सिद्धौ च फलाभावसिद्धिः इतीतरेतराश्रयत्वमिति वाच्यम्। छिदाऽभावोपि छिदासामग्र्येकदेश इति वा छिदा छिदान्तरप्रतिबन्धिकेति वा कल्प्यतेऽतो न तत्र फलमित्याशयात् । नन्वेवं तद्वदेवाधिगतेऽप्यधिगत्यन्तरूपफलाभावेन तत्करणतयाऽभिमतस्यापि प्रधानक्रियाकारकान्तरापेक्षया अतिशयकल्पकाभावात्प्रामाण्यं न स्यादित्यत आह **न च प्रकृत इति** ।

श्री० — **परिच्छेदकार्येवेति** । वन्हिमत्त्वादेव धूमवत्त्वमितिवद्यत्र प्रामाण्यं तत्र परिच्छेदकारित्वमिति व्याप्तिर्लभ्यत इत्यर्थः ॥ **अतिप्रसङ्गादिति** । वह्नेरपि धूमेन व्याप्तिः स्यात् साहचर्यदर्शन सत्त्वादित्यर्थः ॥ **तदभावादिति** । तथा च विपक्षे बाधकाभावादस्तु प्रामाण्यमधिगतार्थमेव स्त्वित्यप्रयोजकतेत्यर्थः । विपक्षे बाधकमाशङ्कते **अधिगतेति** ॥ **किं वेत्यादि** । तथा चाधिगतार्थत्वादुत्तरज्ञानस्य विफलत्वं प्राप्त तथाऽत्रिशिष्टमविलक्षणं पूर्वज्ञानसमानफलकं जातमुत्तरज्ञानं तथाऽनपेक्षितफलं जातमुत्तरज्ञानमतो न प्रमाणमिति विकल्पानां साध्यं द्रष्टव्यम् ॥ **न चैवमिति** । अधिगतेऽर्थेऽधिगत्यन्तरानुत्पादः । यदीन्द्रियसन्निकर्षादिरूपोत्तरज्ञानसामग्रीमध्ये पूर्वज्ञानाभावोऽपि सामग्र्येकदेशः स्यात् , यदि वा पूर्वज्ञानमुत्तरज्ञानजनने प्रतिबन्धकं स्यात् तदा कारणाभावात्प्रतिबन्धकसद्भावाद्वाऽधिगत्यनन्तरमधिगत्यन्तरं नोत्पद्यत इति स्यान्न चैवमित्यर्थः । **तथात्वे** सामग्र्येकदेशत्वे प्रतिबन्धकत्वे वेत्यर्थः ॥ **स्मृतेरेवेति** । तत्रापि पूर्वानुभवस्यैव प्रतिबन्धस्य सत्त्वाद्वा स्मृतिरेव नोदयमासादयेदित्यर्थः । **उक्तोत्तरत्वादिति** । अधिगतार्थत्वे विफलत्वेनाप्रामाण्यं वाच्यं, तच्च न संभवति । विफलत्वस्याप्रामाण्यप्रयोजकत्वाभावस्योक्तत्वादित्यर्थः ॥ **आद्येऽपीति** । यदि पूर्वज्ञानाविशिष्टफलकत्वादुत्तरज्ञानानामप्रामाण्यं तर्ह्युत्तरज्ञानोत्पत्त्यनन्तरं तत्समानफलकत्वस्य आद्यज्ञानेऽपि सत्त्वात्तस्याप्यप्रामाण्यापत्तेरित्यर्थः ॥ **प्रसङ्गादिति** । अनपेक्षितफलत्वस्य सत्त्वेनाप्रामाण्यप्रसङ्गात् । न च तदिष्टम् । ततश्च व्यभिचार इति भावः ।

यदीन्द्रियादिकमधिगतमेवार्थमधिगमयेत्तर्हि तस्य प्रामाण्यमेव न स्यादिति विपक्षे बाधकान्तरमाशङ्कते **ननु चेति** । अयमर्थः । साधकतमं हि करणम् । कारणस्य साधकतमत्वं च साधकतमान्तरापेक्षयैव विवक्षितम् । साधकतमान्तरापेक्षया साधकतमत्वं नाम पूर्वेणेन्द्रियार्थसन्निकर्षेण यज्ज्ञानमुत्पन्नं तज्ज्ञानं प्रति यथा तस्येन्द्रियार्थसन्निकर्षस्य साधकतमत्वमस्त्येवं द्वितीयादिसन्निकर्षस्यापि तज्ज्ञानं प्रत्येव

तदिन्द्रियार्थसन्निकर्षापेक्षयाऽतिशयेन साधकत्वम् । न चैवं संभवति । प्रथमसन्निकर्षेण ज्ञानरूपसाध्यसिद्धौ जातायां तज्जनकसन्निकर्षस्य यथा साधकतमत्वमस्ति एवं तज्जातीयस्यापि द्वितीयादिसन्निकर्षस्य साधकतमत्वं न चास्ति । पूर्वोत्पन्नक्रियासाधकत्वमेव दुर्लभं साधकतमत्वं तु दूरतो निरस्तमित्यतोऽकरणत्वमिति भावः ॥ **छिन्न इति ।** यथा पूर्वेण परशुना छिदिक्रियायां जातायां तत्परशोर्यथा साधकतमत्वमस्त्येवं तज्जातीयस्य द्वितीयस्यापि परशोस्तन्नैवास्ति । तत्क्रियासाधकत्वस्यैवाभावेनातिशयितसाधकत्वरूपसाधकतमत्वस्य दूरनिरस्तत्वादित्यकरणत्वमेवेति भावः । ननु धारावाहिकस्थले इन्द्रियार्थसन्निकर्षस्यैकत्वात्तज्जातीयस्य द्वितीयसन्निकर्षस्येत्युक्तिः कथम् । तथा दृष्टान्ते परशोरप्येकत्वात्तत्रापि कथमियमुक्तिरिति चेत् । सत्यम् । तथापि पूर्वोत्तरावस्थाभेदेन तद्विशिष्टस्यापि सन्निकर्षादेर्भेदमाश्रित्येति ध्येयम् ॥ **न हीति ।** यदि करणस्य साधकतमान्तरापेक्षया साधकतमत्वं विवक्षितं स्यात्तर्ह्येवाधिगतार्थबोधकस्य द्वितीयादिसन्निकर्षस्य पूर्वक्रियां प्रति साधकतमत्वस्याभावेन करणत्वाभावात्प्रामाण्यं न स्यात् । किन्नाम ज्ञानरूपप्रधानक्रियां प्रति यत्कारकान्तरं प्रमात्रादिकं तदपेक्षयाऽतिशयितसाधकत्वमेव साधकतमशब्देन विवक्षितम् । तच्च द्वितीयादिसन्निकर्षस्याप्याद्यसन्निकर्षवदस्तीति युक्तं साधकतमत्वरूपकरणत्वेन प्रामाण्यमिति भावः ॥ **अन्यथेति ।** करणस्य साधकतमत्वं साधकतमान्तरापेक्ष्यैव यदि विवक्षितमित्यर्थः ॥ **परस्परेति ।** करणरूपानुमानागमयोः साधकतमरूपप्रत्यक्षापेक्षयाऽतिशयितसाधकत्वरूपसाधकतमत्वाभावादित्यर्थः । ननु यदि द्वितीयादिसन्निकर्षस्य प्रधानक्रियाकारकान्तरापेक्षयाऽतिशयितत्वेन करणत्वं यथोच्यते । एवं परशोरपि छिदारूपप्रधानक्रियायां कर्त्रादिकारकापेक्षयाऽतिशयितसाधकत्वरूपकरणत्वमस्त्येवेति ज्ञाते ज्ञानान्तरवत् छिन्ने छिदा जायेतेति चेत्तत्राह **छिन्न इति ।** छिदान्तररूपफले इत्यर्थः । यदि तत्र द्वितीयादिपरशुना छिदान्तररूपं फलमुत्पद्येत तर्हि तत्क्रियाकारकान्तरापेक्षयाऽतिशयितसाधकस्य सत्त्वेन करणत्वं वाच्यं स्यात् । न चैवमस्तीत्यर्थः । नन्वेवं तद्वदेवाधिगतेऽप्यधिगत्यन्तररूपफलाभावेन तत्करणस्यापि न प्रधानक्रियाकारकान्तरापेक्षया साधकतमत्वमिति प्रामाण्यं न स्यादिति चेत्तत्राह **न च प्रकृत इति ।** स्यादेतदेवं यदि ज्ञानाभावोऽपि ज्ञानसामग्र्येकदेशः स्याज्ज्ञानं वा तत्प्रतिबन्धकं भवेत् । न चैवं तथात्वे स्मृतेरेवानुदयप्रसङ्गादित्यादिनोक्तमित्यर्थः ।

च०— **अधिगत्यन्तरस्य** ज्ञानान्तरस्य ॥ ॥ प्रमाणसामान्यलक्षणनिरूपणम् ॥

सु०— **नन्वनपेक्षत्वं प्रामाण्यस्य व्यापकम्, अन्योन्यनिरपेक्षा(स्तु) धारावाहिका बुद्धयः । अतः प्रामाण्यमश्नुवते । न चैवं स्मृत्यादीत्यप्रमाणमेवेति चेन्न । अस्या अपि व्याप्तेरप्रामाणिकत्वादित्याह नेति । परिच्छेदोऽनपेक्षं ज्ञानम् । किञ्चानपेक्षत्वं सर्वथा चेद-**

**नित्यप्रमाणेषु नास्ति । ज्ञानान्तरानपेक्षत्वं चेदनुमित्यादौ तदभावः । उत्पत्तावेवानुमित्यादिकं लिङ्गाद्यपेक्षं नार्थपरिच्छेद इति चेत् (न) । ज्ञानव्यतिरिक्तस्यार्थपरिच्छेदस्यैवाभावात् । स्मृत्यादावप्येवमेव सुवचत्वाच्च । समानविषय(क)ज्ञानानपेक्षत्वं चेद्धर्मिणमादायानुमित्यादावपि तदभावः । प्रकारतोऽपि स्मृत्यादावस्तीत्यसिद्धिरिति ।**

**अननुभवत्वात्स्मृतिरप्रमाणम् । अनुभवतत्साधनयोरेव प्रामाण्यादित्येतदप्यसत् । पूर्ववद्व्याप्तेरसिद्धेरित्याह नेति । परिच्छेदोऽनुभवः ॥**

शे०– एवमनधिगतार्थगन्तृत्वरूपप्रामाण्यव्यापकव्यावृत्त्या स्मृत्यादेः प्रामाण्यव्यावृत्तिसाधननिरासपरतया योजितमेव ग्रन्थं व्यापकान्तरव्यावृत्त्या प्रामाण्यव्यावृत्तिसाधननिरासपरतयाऽपि योजयितुं शङ्कामुत्थापयति **नन्विति** । स्मृत्यादिकं न प्रमाणं सापेक्षत्वादिति करिष्यमाणानुमाने हेतोरेवागमान्न धारावाहिके व्यभिचार इत्याह **अन्योन्येति** । एवं व्यभिचारं परिहृत्यासिद्धिं परिहरन्ननुमानप्रयोगं सूचयति **न चैवमिति ॥ अस्या अपि व्याप्तेरिति** । प्रामाण्यस्यानपेक्षत्वेन व्याप्तिस्तावन्न साहचर्यदर्शनमात्रात्सिध्यति । अतिप्रसङ्गात् । अत एव न व्यभिचारादर्शनसहकृतात्साहचर्यदर्शनात्तत्सिद्धिः । नापि विपक्षे बाधकोपेतात् । तदभावादिति पूर्वोक्तन्यायेन विवक्षितव्याप्त्यसिद्धेर्व्यापकव्यावृत्त्याऽव्याप्यव्यावृत्तिसाधनमयुक्तमित्यर्थः । उक्तस्यार्थस्य मूलारूढतायै प्रकृतोपयोगितया परिच्छेदशब्दं व्याचष्टे **परिच्छेद इति** । अनपेक्षत्वं प्रामाण्यव्यापकमिति वदन्प्रष्टव्यः किं सर्वथाऽनपेक्षत्वं प्रामाण्यस्य व्यापकमिति, किंवा ज्ञानान्तरानपेक्षत्वम् , आहोस्वित्समानविषयकज्ञानानपेक्षत्वमिति विकल्पान्मनसि निधायाद्यमनूद्य व्यभिचारेण दूषयति **किंश्चेति ॥ अनित्यप्रमाणेष्विति** । तेषामुत्पत्तिमत्त्वेनोत्पादकवस्त्वपेक्षत्वेन सर्वथाऽनपेक्षत्वासंभवादिति भावः ॥ द्वितीयपक्षमुत्थाप्य व्यभिचारेण दूषयति **ज्ञानान्तरेति** । अनुमित्यादेर्लिङ्गज्ञानाद्यपेक्षत्वेन ज्ञानान्तरानपेक्षत्वस्य तत्रासंभवादिति भावः ॥ **लिङ्गाद्यपेक्षमिति** । तज्ज्ञानापेक्षमित्यर्थः ॥ **नेति** । तथा च नानुमित्यादौ व्यभिचार इति भावः ॥ **परिच्छेदस्यैवाभावादिति** । ज्ञाततायाः निरस्तत्वादित्यर्थः । तथा च तत्र व्यभिचारो दुष्परिहर इति भावः । अङ्गीकृत्यापि ज्ञाततां दूषयति **स्मृत्यादावपीति** । उत्पत्त्यर्थमेव स्मृत्यादिकं ज्ञानान्तरमपेक्षते न त्वर्थपरिच्छेद इति वक्तुं शक्यत्वादसिद्धिरित्यर्थः । केचित्तु नन्वर्थे विपरीतकोटिव्यवच्छेद एव परिच्छेदोऽस्तीति न तत्र व्यभिचार इत्याशङ्क्य माऽस्तु तर्ह्यस्मिन्पक्षे व्यभिचारः स्वरूपासिद्धिस्तु स्यादेवेत्याशयवानाहेत्येतद्ग्रन्थावतारमाहुः । तृतीयमनुवदति **समानेति** । किमत्र धर्मिणमादाय समानविषयकज्ञानानपेक्षत्वमभिमतं किंवा प्रकारमिति विकल्पं मनसि निधाय आद्यमनैकान्त्येन दूषयति **धर्मिणमादायेति** । व्याप्यवत्तया धर्म्यवगमादेरनुमित्यादिकं

प्रति कारणत्वादिति भावः । द्वितीयं दूषयति **प्रकारतोऽपीति** । अयमिति वर्तमानतत्कालतयाऽनुभूतस्यार्थस्य स इत्याकारस्मृत्याऽतीततत्कालतयाऽवगाहनेन स्मृत्यनुभवयोः समानप्रकारकत्वाभावेन प्रकारतः समानविषयकज्ञानापेक्षत्वस्य स्मृतावसत्त्वात् एवमनुवादेऽपीति भावः ।

मूले न्यूनतापरिहाराय व्यापकान्तरव्यावृत्त्या प्रामाण्यव्यावृत्तिसाधननिरासपरतयाऽपीदमेव मूलं योजयितुं तं पक्षमुत्थापयति **अननुभवत्वादिति** । यद्यपि करणरूपे प्रत्यक्षे सत्यपि प्रामाण्ये नानुभवत्वमिति तत्र व्यभिचारेणानुभवत्वस्य प्रामाण्यव्यापकत्वाभावात्तद्व्यावृत्त्या प्रामाण्याभावसाधनमयुक्तमित्याभाति । तथाऽप्यनुभवतत्साधनयोरन्यतरत्वस्य प्रामाण्यव्यापकतायामुक्तव्यभिचाराभावादनुभवतत्साधनयोरन्यतरत्वाभावेन प्रामाण्यव्यावृत्तिसाधने न दोषः । अननुभवत्वादित्यनेन चानुभवतत्साधनान्यतरत्वाभाव एव विवक्षितः । अत एवानुभवतत्साधनयोरेव प्रमाणत्वादित्यनुभवतत्साधनान्यतरत्वस्य प्रामाण्यव्यापकत्वाभिधानं सङ्गच्छते । अन्यथाऽनुभवस्यैव प्रमाणत्वादित्येवावक्ष्यदिति द्रष्टव्यम् ॥ **पूर्ववदिति** । साहचर्यदर्शनव्यभिचारादर्शनयोरतिप्रसङ्गेन व्याप्त्यसाधकत्वाद्विपक्षे बाधकस्य चाभावेन तदुपेतेनापि साहचर्यदर्शनेन व्याप्तेरनिश्चयादिति भावः ।

प०— निरपेक्षत्वभङ्गरूपं विपक्षे बाधकान्तरमाशङ्क्य तन्निरासकतयापि योजयति **नन्वित्यादिना** ॥ **न चैवं स्मृत्यादीति** । पूर्वानुभवपुरोवादसापेक्षत्वात्स्मृत्यनुवादयोरिति भावः ॥ **नास्तीति** । स्वोत्पादकत्वापेक्षत्वादिति भावः ॥ **लिङ्गाद्यपेक्षमिति** । लिङ्गज्ञानव्याप्तिज्ञानाद्यपेक्षमित्यर्थः । नन्विदमित्थमिति व्यवहारादिरेव परिच्छेद इत्यत आह **स्मृत्यादावपीति** ॥ **स्मृत्यादावस्तीति** । स्मृत्यादेरप्यनभिगतार्थत्वमेवेत्यादिना प्रागुपपादितमेतदिति भावः ॥ ॥ प्रमाणसामान्यलक्षणम् ॥

या०— स्यादेवं यदि ज्ञानाभावोऽपि ज्ञानसामग्र्येकदेशः स्यात् । ज्ञानं तत्प्रतिबन्धकं भवेत् । न चैवं तथात्वे स्मृतेरेवानुदयप्रसङ्गादित्युक्तमित्यर्थः । नन्वर्थे विपरीतकोटिव्यवच्छेद एव परिच्छेदोऽस्तीत्यत आह **स्मृत्याद्यावपीति** ॥

श्री०— **न चैवं स्मृत्यादीति** । पूर्वानुभवसापेक्षत्वादिति भावः ॥ **सर्वथेति** । स्वकारणापेक्षत्वादिति भावः ॥ **अनुमित्यादाविति** । लिङ्गज्ञानाद्यपेक्षत्वादिति भावः । **अर्थपरिच्छदे** स्वविषयनिश्चये । ततश्च स्वविषयीभूतवन्ह्यादिनिश्चयाय ज्ञानान्तरानपेक्षत्वं प्राप्तमित्यर्थः ॥ **अर्थपरिच्छेदस्येति** । तथा चार्थपरिच्छेदेऽपि ज्ञानान्तरानपेक्षत्वं नास्त्येव । स्वार्थे परिच्छेदस्य निश्चयस्य ज्ञानव्यतिरिक्तस्यान्यस्याभावेन अनुमित्यादिरूपज्ञानस्यैवार्थनिश्चयरूपत्वात्तदुत्पत्तावस्त्येव लिङ्गज्ञानाद्यपेक्षेति भावः ॥ **एवमिति** । स्मृतिरूपज्ञानोत्पत्तावेवानुभव-

रूपज्ञानान्तरापेक्षा नार्थपरिच्छेदे । तथा च स्वार्थनिश्चये ज्ञानान्तरापेक्षत्वस्य सत्त्वादनुमित्यादिवत्प्रामाण्यं स्यादित्यर्थः ॥ **समानेति** । ततश्चानुमित्यादौ लिङ्गादिज्ञानापेक्षत्वेऽपि तज्ज्ञानं न स्वसमानविषयम् । स्वस्य वन्ह्यादिरूपसाध्यविषयकत्वात् । लिङ्गादिज्ञानस्य लिङ्गादिविषयकत्वात् । स्मृत्यादौ तु स्वसमानविषयकानुभवान्तरापेक्षैवास्तीति द्रष्टव्यम् ॥ **तदभाव इति** । अनुमितेर्धर्म्यंशे स्वसमानविषयकवह्निव्याप्यधूमवानयमिति लिङ्गपरामर्शरूपज्ञानान्तरापेक्षत्वस्यैव सत्त्वेन तदनपेक्षत्वं नेति भावः ॥ **प्रकारत इति** । वर्तत इदमनुमित्यादौ; परामर्शादेर्धर्म्यंशे समानविषकत्वेऽपि प्रकारांशे तदभावात्प्रकारांशे स्वसमानविषयकज्ञानान्तरानपेक्षत्वं वर्तत एवेति नाव्याप्तिरिति भावः ॥ **अस्तीति** । तथा च स्मृत्यादौ प्रकारत्वेन प्रतीयमानस्यातीतत्वादेरनुभवेऽप्रकारत्वेन प्रकारांशे स्वसमानविषयकज्ञानान्तरापेक्षत्वस्यासत्त्वात् 'स्मृत्यादिकमप्रमाणं, प्रकारांशे स्वसमानविषयकज्ञानान्तरसापेक्षत्वादि'त्यनुमानेऽसिद्धिरित्यर्थः । अननुभवत्वादित्युपलक्षणम् । अनुभवासाधनत्वाच्चेत्यपि द्रष्टव्यम् । अन्यथोत्तरवाक्यासङ्गतेः ॥ **पूर्ववदिति** । परिच्छेद एव प्रामाण्यं परिच्छेदकार्येव प्रमाणमित्यत्र यथा प्रमाणाभाव उक्तस्तद्वदत्रापि प्रमाणाभावाद्व्याप्त्यसिद्धेरित्यर्थः । उपलक्षणमेतत् । इन्द्रियादावाद्यहेतोर्व्यभिचारो द्वितीयस्यानुभवे व्यभिचार इत्यपि द्रष्टव्यम् ॥

**सु० — एवं प्रमाणसामान्यलक्षणमभिधाय तद्विशेषान् लिलक्षयिषुरादौ प्रत्यक्षस्योद्दिष्टत्वात्तल्लक्षणमाह** निर्दोषेति ।

अनु० — निर्दोषाक्षोद्भवं ह्यत्र प्रत्यक्षमिति गीयते ॥

**अत्र प्रमाणेषु । लोकवेदयोरिति वा ।**

**ननु कथमिदं विज्ञायते । किं निर्दोषैरक्षैरुद्भवो यस्येति, किंवा निर्दोषं च तदक्षोद्भवं चेति । नाद्यः अव्याप्तेरतिव्याप्तेश्च । तथा हि । ईश्वरादिप्रत्यक्षं नाक्षोद्भवं नित्यत्वात् । अक्षकार्यं क्रियादिकमपि प्रत्यक्षं स्यात् । न द्वितीयः द्वयोरपि विशेषणत्वेन समासानुपपत्तेः । उक्ताव्याप्त्यतिव्याप्त्यनिस्ताराच्चेति । उच्यते । अस्तु तावदाद्यः । अज्ञानविपरीतज्ञानहेतुभिः काचकामलादिदोषै रहितानि यान्यक्षाणीन्द्रियाणि तैरुद्भवो यस्येति । न चाव्याप्तिः । उद्भवशब्दस्योत्पत्त्यभिव्यक्त्यन्यतरार्थत्वात् । यथोक्तम् 'सर्वमक्षात्मकं मतमि'ति । नाप्यतिव्याप्तिः । ज्ञानस्य प्रकरणप्राप्तत्वात् । तथाऽप्यक्षलिङ्गकेऽनुमानेऽतिव्याप्तिरिति चेन्न । तस्याक्षज्ञानोद्भवत्वेनाक्षमात्रोद्भवत्वाभावात् । निर्दोषाक्षोद्भवमप्यर्थदोषादयथार्थमुत्पद्यते ज्ञानम् । यथोक्तम् । 'अतिदूरादतिसामीप्यादिन्द्रियदोषान्मनोऽनवस्थानात् । सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिघाताच्चे'ति । तथाऽपि निर्दोषार्थसन्निकृष्टेति विशेषणाददोषः ।**

शे०—आदावित्येतल्लक्षणमाहेत्यनेनापि संबध्यते । कुतः प्रत्यक्षस्यैवादौ लक्षणकथनमित्यतः 'अक्षयुक्त-वचांस्यपी'तिविभागपरे वाक्ये अनुमानादितः प्रत्यक्षस्यैव पूर्वं सङ्कीर्तनादित्याह **आदौ प्रत्यक्षस्योद्दिष्टत्वादिति** । तन्निमित्तं, प्रायेणासन्नाव्यवहितवर्तमानकतिपयार्थग्राहकं प्रत्यक्षम् । अनासन्नातीतानागतव्यवहितार्थगोचरमनुमानं स्वातन्त्र्येणाशेषार्थविषय आगमः इत्यर्थग्रहणक्रमादिति मानलक्षणटीकोक्तमवधेयम् । 'यथोद्देशं लक्षणप्रणनयनमि'ति न्यायात्प्रत्यक्षस्यादौ लक्षणकथनमिति भावः । प्रतिज्ञातामव्याप्तिमुपपादयति **ईश्वरादिप्रत्यक्षमिति** । प्रतिज्ञातामतिव्याप्तिमुपपादयति **अक्षेति** ॥ **द्वयोरपि विशेषणत्वेनेति** । 'विशेषणं विशेष्येण बहुलमि'ति सूत्रे विशेषणविशेष्ययोरेव समासविधानादिति भावः । ननु सर्वोपाधिव्यभिचारार्थकबहुलग्रहणादेव विशेषणयोरपि समासोपपत्तिरित्यरुचेराह **उक्ताव्याप्तीति** । ईश्वरादिप्रत्यक्षे अव्याप्तिः,अक्षकार्यक्रियादावतिव्याप्तिश्चेत्यर्थः । नन्वीश्वरलक्ष्म्योः शरीरेन्द्रियविकलत्वात्तत्प्रत्यक्षमेव नास्ति, कथं तत्राव्याप्तिरित्येव किन्न समाधीयते , किं तल्लक्ष्यत्वमङ्गीकृत्य तत्राव्याप्तिपरिहारायोद्भवशब्दस्योत्पत्त्यभिव्यक्त्यन्यतरार्थत्वकल्पनयेत्याशङ्क्याह **यथोक्तमिति** । ब्रह्मतर्के इति शेषः । प्रत्यक्षमैश्वरमित्यादिना प्रागुक्ते ऐश्वरं यौगिकं चेत्येवंरूपे प्रत्यक्षे यथा यौगिकमयौगिकं चाक्षात्मकमिष्यते तथा **सर्वमैश्वरमपीति** यावत् । अक्षात्मकं प्रत्यक्षमेवेति ब्रह्मतर्कवाक्यार्थः । तथा चेश्वरादिप्रत्यक्षस्य प्रामाणिकत्वेन तद्लक्ष्यत्वाङ्गीकारेणाव्याप्तिपरिहारायोगादुद्भवशब्दस्योत्पत्त्याद्यन्यतरार्थत्वानुसरणमेव युक्तमिति भावः ॥ **प्रकरणप्राप्तत्वादिति** । तथाच निर्दोषाक्षोद्भवज्ञानत्वस्यैव लक्षणत्वेन विवक्षितत्वान्नाक्षकार्यक्रियादावतिव्याप्तिरिति भावः । लिङ्गकरणतापक्षमवलम्ब्यानुमितावतिव्याप्तिमाशङ्कते **तथाऽपीति** । अयं चक्षुष्मान् रूपज्ञत्वादिति रूपज्ञत्वेन चक्षुरनुमायानुमितेन चक्षुषा लिङ्गेन जायमानायास्तत्सामग्र्यनुमितेरप्यक्षोद्भवज्ञानत्वादिति भावः । लिङ्गज्ञानकरणतापक्षमाश्रित्य समाधत्ते **तस्येति** ॥ **अक्षमात्रेति** । इदं च लिङ्गस्य क्वचित्करणशरीरान्तर्भावमभ्युपगम्योक्तम् । अन्यथाऽक्षज्ञानोद्भवत्वेनाक्षोद्भवत्वाभावादित्येव वक्तव्यत्वेनाक्षमात्रोद्भवत्वाभावादित्युक्तेरश्लिष्टत्वापातादिति भावः ॥ **यथोक्तमिति** । साङ्ख्यपरीक्षायामिति शेषः । 'सौक्ष्म्यात्तदनुपलब्धिर्नाभावादि'त्युत्तरश्लोकेऽनुपलब्धिरिति वक्ष्यमाणस्य सिंहावलोकनन्यायेनात्राप्यनुषङ्गः । उत्पतन्वियति पतत्री अतिदूरतया सन्नपि न प्रत्यक्षेणोपलभ्यते । यद्यपि सामीप्यादित्येव तत्पाठस्तथाऽप्यत्रापि अतिरनुवर्तनीय इति भावेनातिसामीप्यादित्यनुवादः । क्वचित्तु सामीप्यादित्यपि पाठः । यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते । बाह्येन्द्रियघातोऽन्धत्वबधिरत्वादिः । मनोऽनवस्थानात् यथा कामाद्युपद्रुतमनाः स्फीतालोकवर्तिनमिन्द्रियसन्निकृष्टमप्यर्थं न पश्यति । सौक्ष्म्यात् यथेन्द्रियसन्निकृष्टमपि परमाण्वादि न प्रणिहितमना अपि पश्यति । व्यवधानात् यथा कुड्यादिव्यवहितं राजदारादि न पश्यति । अभिभवः बलवत्सजातीयसंबन्धकृतं सम्यगग्रहणं यथा सौरालोके दीपस्य । समानाभि-

घातस्तु बलवत्सजातीयसंबन्धेनाग्रहणम्, यथा क्षीरेण नीरस्येति । चकारोऽनुक्तसमुच्चयार्थः । तेनानुद्भवोऽपि संगृहीतः । तद्यथा क्षीरावस्थायां दध्याद्यनुद्भवान्न दृश्यत इति तत्कारिकार्थः ।

स० — **द्वयोरपि विशेषणत्वेनेति** । विशेषणं विशेष्येण बहुलम् इत्यनेन विशेषणविशेष्ययोरेव समासविधानात् प्रकृते च निर्दोषाक्षोद्भवत्वयोः ज्ञानविशेषणत्वात्परस्परं समासासंभवादिति भावः । यद्यप्यत्र बहुलग्रहणादेव विशेषणयोरपि समासः संभवत्येवेति समाधातुं शक्यते । तथापि सति गत्यन्तरे बाहुलकाश्रयणमनुचितमिति भावेन समाधानान्तरमेव भविष्यतीति भावः । **उक्ताव्याप्त्यतिव्याप्त्यनिस्ताराच्चेति** । ईश्वरादिप्रत्यक्षस्य नित्यत्वेन अक्षोद्भवत्वाभावेन निर्दोषत्वे सति अक्षोद्भवत्वाभावादव्याप्तिः । अक्षकार्यस्य क्रियादेरपि निर्दोषत्वे सति अक्षोद्भवत्वेनातिव्याप्तिरित्यर्थः । **अक्षलिङ्गक इति** । रूपादिज्ञत्वेन चक्षुरादिमत्तयाऽनुमितेन चक्षुरादिना तत्सामग्र्यनुमानात् तत्र अतिव्याप्तिरित्यर्थः । **यथोक्तमिति** । सांख्यपरीक्षायामिति शेषः । 'सौक्ष्म्यात्तदनुपलब्धिर्नाभावादि'त्युत्तरश्लोके अनुपलब्धिरिति वक्ष्यमाणं सिंहावलोकनन्यायेनात्राप्यनुषञ्जनीयम् । उत्पतन् वियति पतत्री अतिदूरतया सन्नपि न प्रत्यक्षेणोपलभ्यते । सामीप्यादित्यत्रापि अतिरित्यनुवर्तनीयम् । यथा च लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते बाह्येन्द्रियाद्याश्रितोऽन्धत्वबधिरत्वादिः । **मनोऽनवस्थानात्** यथा कामाद्युपद्रुतं मनः स्फीतालोकवर्तिनमिन्द्रियसन्निकृष्टमप्यर्थं न पश्यति । **सौक्ष्म्यात्** यथा इन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमना अपि न पश्यति । **व्यवधानात्** यथा कुड्यादिव्यवहितं राजदारादि न पश्यति । **समानाभिहाराच्च** यथा तोयदमुक्तोदबिन्दून् जलाशये न पश्यति । चकारोऽनुक्तसमुच्चयार्थः । तेनानुद्भवः संगृहीतः । यथा क्षीराद्यवस्थायां दध्यादि अनुद्भवान्न दृश्यत इति ।

प० — **लिलक्षयिषुरिति** । लक्षणवत्तया वक्तुमिच्छावानित्यर्थः । अक्षपदेनान्वयं मत्वाह **अत्र प्रमाणेष्विति** । अत्र गीयत इत्यन्वयमुपेत्याह **लोकवेदयोरिति वेति** । पौरुषेयग्रन्थवेदयोरिति वेत्यर्थः ॥ **इदमिति** । लक्षणवाक्यमित्यर्थः । कथमित्युक्तप्रकारमेव व्यनक्ति **किमिति** । अतिव्याप्तिं व्यनक्ति **अक्षकार्यमिति** । अक्षमिन्द्रियं अक्षैरुद्भवोऽक्षोद्भव इति तत्पुरुषं मत्वाह **द्वयोरपि विशेषणत्वेनेति** । विशेषणं विशेष्येण बहुलमिति विशेषणविशेष्ययोरेव समासोक्तेरिति भावः । बहुव्रीहित्वपक्षोक्तदोषावप्याह **उक्तेति** । यस्मिन्सति ज्ञानमेव न जायते विपरीतज्ञानं वोत्पद्यते स दोष इति काचादेः दोषत्वनिर्वाहायोक्तम् **अज्ञानेति** । ज्ञानानुदयनिमित्तैरित्यर्थः । ज्ञानोत्पत्तिप्रतिबन्धकैरिति यावत् ॥ **उत्पत्तिव्यक्त्यन्यतरेति** । तदुभयार्थत्वादित्यर्थः । कुत एवं, अक्षबहिर्भाव एव कुतो न स्यादित्यतस्तत्त्वनिर्णयोक्तेः प्रत्यक्षान्तर्भाव इति भावेनाह **यथोक्तमिति** । 'प्रत्यक्षं त्रिविधं ज्ञेयं ऐश्वरं यौगिकं तथा । अयौगिकं चेति तथा सर्वमक्षात्मकं मतम्' इत्यक्षात्मकत्वमुक्तमित्यर्थः ॥ **ज्ञानस्य प्रकरणप्राप्तत्वा-**

**दिति** । 'प्रामाण्यं नानुवादस्य स्मृतेरपी'त्यादिना ज्ञानस्य प्राधान्येन प्रकृतत्वात् प्रकरणबलेन ज्ञानस्य विशेष्यत्वलाभ इति भावः ॥ **अनुमान इति** । भावे ल्युट् । अयं मार्गदर्शी चक्षुष्मत्त्वादिति लिङ्ग-जन्यानुमितौ प्रत्यक्षत्वप्रसङ्ग इत्यर्थः । लिङ्गस्यापि परामर्शभूतज्ञानरूपकरणकोटौ ज्ञानव्यावर्तकतया-ऽस्त्यनुप्रवेश इति मतेनाह **अक्षज्ञानोद्भवत्वेनेति** । अक्षज्ञानं च रूपादिज्ञानरूपकार्यलिङ्गजमिति भावः ॥ **यथोक्तमिति** । सांख्येनोक्तमित्यर्थः । तदुक्तमेव श्लोकं पठति **अतिदूरादिति** ॥ **अभिभवात्** भेरीशब्दादिना वीणाशब्दादेरिव बलवत्सजातीयसंपर्कजाततिरस्कारादित्यर्थः ॥ **समानाभिघाताच्चेति** । नीरस्य क्षीरेणेव सजातीयमेलनादित्यर्थः । पञ्चम्यन्तानां तदनुपलब्धिरिति तदीयोत्तरवाक्यस्थेनान्वयः ॥ **विशेषणादिति** । अक्षविशेषणादित्यर्थः ।

**या० — द्वयोरपि विशेषणत्वेनेति** । 'विशेषणं विशेष्येण बहुलमि'ति विशेषणविशेष्ययोरेव समासविधानादिति भाव. । नन्वीश्वरस्य शरीरेन्द्रियरहितत्वात्तदीयं प्रत्यक्षमेव नास्तीति कुतो न समा-धीयत इत्यत आह **यथोक्तमिति** । ब्रह्मतर्क इति शेषः । 'ऐश्वरं यौगिकमयौगिकं चे'ति ग्रन्थे पूर्वोक्तं सर्वमक्षात्मकं प्रत्यक्षमेवेत्यर्थः । तथा च तत्प्रत्यक्षत्वस्य प्रामाणिकत्वान्नालक्ष्यत्वेन समाधानमुचितमिति भावः ॥ **प्रकरणेति** । तथा च लक्षणे ज्ञानपदं विवक्षितमिति भावः । लिङ्गकरणतापक्षमवलम्ब्य शङ्कते **तथाऽप्यक्षेति** । अयं रूपादिज्ञश्चक्षुरादिमत्त्वादित्यनुमान इत्यर्थः । चक्षुरादिमत्त्वज्ञानं यदाप्तवाक्यादिना तदेदमनुमानमिति नान्योन्याश्रयावकाशः ॥ **अक्षमात्रेति** । इदं च क्वचिल्लिङ्गस्यापि करणशरीरान्तर्भाव-मभिप्रेत्य, न तु सर्वत्र । अतीतादिलिङ्गज्ञानेनैवानुमितिजननादिति द्रष्टव्यम् ॥ **यथोक्तमिति** । सांख्यग्रन्थ इति शेषः । अस्य श्लोकस्योत्तरश्लोकगतेन तदुपलब्धिरित्यनेन संबन्धो द्रष्टव्यः । **अभिभवो** बलवत्सजातीयसंबन्धकृतसम्यगग्रहणम् । यथा सौरालोकेन प्रदीपस्य । **समानाभिघात**स्तु बलवत्सजाती-यसं न्धेनाग्रहणम् । यथा क्षीरेण तदन्तर्गतस्य नीरस्येति विवेको द्रष्टव्यः ।

**श्री० — व्याप्तेरिति** । प्रामाण्यस्यानुभवतत्साधनान्यतरत्वनिरूपितव्याप्तेर्मानाभावेनासिद्धेरि-त्यर्थः । उभयं क्रमेणोपपादयति **ईश्वरादीत्यादिना** । **द्वयोः** निर्दोषत्वाक्षोद्भवत्वयोः । विशेषणं विशेष्येण बहुलमिति विशेषणविशेष्ययोरेव परस्परं समासविधानात्प्रकृते चोभयोर्विशेषणत्वेन विशेषणयोः परस्परं समासोऽनुपपन्न इत्यर्थः ॥ **उक्तेति** । ईश्वरादिप्रत्यक्षे निर्दोषत्वे सत्यप्यक्षोद्भवत्वाभावादव्याप्तिः । अक्षजन्यक्रियादेरपि निर्दोषत्वे सत्यक्षोद्भवत्वेनातिव्याप्तिरित्यर्थः ॥ **ज्ञानस्येति** । तथा च निर्दोषाक्षो-द्भवं ज्ञानं प्रत्यक्षमिति लक्षणस्य विवक्षितत्वात्क्रियायाश्चाज्ञानत्वान्नातिव्याप्तिरित्यर्थः ॥ **अक्षलिङ्गक इति** । रूपादिज्ञानेन चक्षुरादिसत्त्वमनुमायानुमितेन चक्षुरादिना तत्सामग्र्यनुमितावतिव्याप्तिरित्यर्थः ॥ **अक्षज्ञानेति** । लिङ्गज्ञानं करणमिति पक्षे ज्ञानोद्भवत्वेनाक्षोद्भवत्वाभावात् । ननु ज्ञातं लिङ्गमेव करण-

मिति पक्षेऽक्षोद्भवत्वरूपस्यादतिव्याप्तिः स्यादेवेत्यतो मात्रेत्युक्तम् । तथा च निर्दोषाक्षमात्रोद्भवं ज्ञानं प्रत्यक्षमिति लक्षणे मात्रपदं विवक्षितम् । अक्षलिङ्गकानुमितौ व्याप्त्यादिज्ञानजन्यत्वस्यापि सत्त्वेनाक्षरूपलिङ्गमात्रजन्यत्वाभावेन नातिव्याप्तिरिति योज्यम् ।

च० - **लिलक्षयिषुरिति** । समभिव्याहृतद्वितीया आधेयत्वार्थिका । तद्विशेषवृत्तिलक्षणप्रणयनेच्छावानित्यर्थः ॥ **यथोक्तमिति** । ब्रह्मतर्क इति पूरणीयम ॥ **यथोक्तमिति** । साङ्ख्येनेत्यर्थः । **अभिभवादिति** । भेरीशब्दादिना वीणाशब्दादेरिव सौरालोकेन प्रदीपस्येव वा बलवत्सजातीयसंपर्कजतिरस्कारादित्यर्थः । **समानाभिघातात्** नीरस्य क्षीरेणेव सजातीयमेलनात् । हेतुविभक्त्यन्ताष्टकं तदीयकारिकोत्तरदलघटकानुपलब्धिपदेनान्वेतीत्यवसेयम् । **विशेषणादिति** । अक्षविशेषणादित्यर्थः ।

**सु० — अत्र ज्ञानग्रहणं सुखादिव्यावृत्त्यर्थमिति केचित् । तदसत् । विषयसाक्षात्कारस्यैव सुखादिहेतुत्वात् । इन्द्रियार्थसन्निकर्षः (तु) तदर्थमभ्यर्थ्यते ।**

**नन्वेवं सति सर्वार्थसाक्षात्कारवतः परमेश्वरस्य सुखाद्युत्पादप्रसङ्ग इति चेत् । लीलाविग्रहग्रहणे तस्येन्द्रियार्थसन्निकर्षवतः कुतो न तत्प्रसङ्गः । अथ न तावन्मात्रं सुखादिकारणम् । किन्नाम धर्मादिकमपि । अतस्तदभावान्न तस्य सुखाद्युत्पाद इति चेत् । तुल्यम् । अत एव न योगिष्वपि प्रसङ्गः । तथा चाहुः । 'देहे शीतोष्णादिसंबन्धाद्धि शीतोष्णाद्यनुभव आत्मनः ततश्च सुखदुःखे' इति । अत्र देहशब्देन तदाश्रितानीन्द्रियाण्युपलक्ष्यन्ते । तदयं लक्षणार्थः । निर्दोषार्थसन्निकृष्टनिर्दोषेन्द्रियोद्भवं ज्ञानं प्रत्यक्षमिति ।**

शे० — **अत्रेति** । प्रत्यक्षलक्षण इत्यर्थः ॥ **सुखादिव्युदासार्थमिति** । इन्द्रियार्थसन्निकर्षात् सुखदुःखे अपि भवतः; अस्तद्व्यावृत्त्यर्थं ज्ञानग्रहणमित्यर्थः ॥ **केचिदिति** । न्यायवार्तिककारा इत्यर्थः ॥ **विषयसाक्षात्कारस्यैवेति** । सुषुप्त्यादौ सत्यपि विषयेन्द्रियसन्निकर्षे वैषयिकसुखानुत्पादात् । असत्यपि तस्मिन्कामिन्यादिविषयभ्रमरूपसाक्षात्कारमात्रेण कामुकस्य सुखदर्शनात् । अनन्यथासिद्धान्वयव्यतिरेकाभ्यां सुखादिकं प्रति विषयसाक्षात्कार एव हेतुर्नार्थेन्द्रियसन्निकर्षो व्यभिचारात् । तथा च तत्रातिप्रसङ्गाभावान्न तद्व्यावर्तकत्वं ज्ञानग्रहणस्य संभवतीति भावः। नन्वन्वयव्यतिरेकव्यभिचारेणेन्द्रियसन्निकर्षस्य सुखादिमात्रं प्रत्यहेतुत्वेपि यत्रेन्द्रियसन्निकर्षे सति सुखोत्पत्तिस्तत्राव्यभिचारादिन्द्रियसन्निकर्षस्यैव सुखादिहेतुत्वसंभवात्तादृशसुखादिव्यवच्छेदकत्वं ज्ञानग्रहणस्य स्यादेवेत्यतो यत्रापीन्द्रियार्थसन्निकर्षोऽस्ति तत्रापि विषयसाक्षात्कारोऽस्त्येव । स एव च तत्र सुखदुःखादिहेतुः क्लृप्तसामर्थ्यात् । इन्द्रियसन्निकर्षस्य विषयसाक्षात्कारमात्रोपयोगित्वेनान्यथासिद्धत्वान्न सुखादिहेतुत्वमिति न तद्व्यावृत्त्यर्थत्वमपि ज्ञानग्रहणस्य

संभवतीत्याशयवानाह **इन्द्रियेति** । विषयसाक्षात्कारस्य हेतुतायां न्यायवाचस्पतिनोक्तमतिप्रसङ्गमाशङ्कते **नन्वेवमिति** । इन्द्रियार्थसन्निकर्षस्य तद्धेतुत्वे तु शरीरेन्द्रियरहितत्वादीश्वरस्य सुखादिहेतुभूतेन्द्रियार्थ-सन्निकर्षरहितत्वान्न तत्प्रसङ्ग इति भावः । न ब्रूमो वयं विषयसाक्षात्कारमात्रं सुखादिहेतुरिति किन्नाम धर्मादिसहकृत एव साक्षात्कारः । तथा चेश्वरस्य तदभावान्न सुखाद्युत्पाद्यप्रसङ्ग इत्यभिप्रेत्य धर्मादेरपि कारणकोटौ निवेशं परमुखेनैव वाचयितुं गूढाभिसन्धिः प्रतिबन्दीमाह **लीलेति** । तथा चेन्द्रियार्थसन्नि-कर्षस्यापि तद्धेतुत्वं न स्यादिति सुखादिप्रसक्तेरेवाभावाज्ज्ञानग्रहणमनर्थकमिति भावः । अविदिताशयः प्रतिबन्दीमोचनायातिप्रसङ्गपरिहारमाशङ्कते **अथेति** । सिद्धान्ती स्वाशयमुद्घाटयति **तुल्यमिति** । विषयसाक्षात्कारस्य सुखादिहेतुतायां तदुक्तमतिप्रसङ्गान्तरमप्युक्तातिदेशेन परिहरति **अत एवेति** । योगिनामप्रारब्धकर्मक्षयवत्त्वेन धर्माद्यभावात्तत्सहकृतविषयसाक्षात्काररूपतद्धेतुशून्यत्वादेवेत्यर्थः । विषयसाक्षात्कारस्यैव सुखादिहेतुत्वमिन्द्रियार्थसन्निकर्षस्तु सुखादिहेतुविषयसाक्षात्कारार्थ एवेत्यत्र भगव-त्पादसंमतिमाह **तथा चेति** । गीताभाष्ये मात्राः स्पर्शास्त्विति श्लोकव्याख्यावसर इति शेषः । नन्वनेन शीतोष्णादिविषयस्य देहसंबन्ध एव विषयसाक्षात्कारहेतुतयोच्यते न त्विन्द्रियार्थसन्निकर्षोऽतः कथमस्यो-क्तार्थे सम्मतित्वेनोपन्यास इत्यत आह **अत्रेति** । श्रुतसंगृहीतप्रकरणप्राप्तमर्थमेकीकृत्य दर्शयति **तदिति** ।

स० — **नन्वेवं सतीति चेदिति** । सन्निकर्षस्यैव तद्धेतुत्वाङ्गीकारात् ईश्वरसाक्षात्कारस्य नित्यत्वेन सन्निकर्षापेक्षाभावात् न सुख-दुःखाद्युत्पादसंभव इति भावः । **तस्येति** । ईश्वरस्येत्यर्थः । **अत एवेति** । धर्मादिसहकृतसाक्षात्काराभावादेवेत्यर्थः । ननु इन्द्रियार्थसन्निकर्षस्तु विषयसाक्षात्का-रार्थमभ्यर्थ्यत इत्ययुक्तम् । देहे शीतोष्णादिसंबन्धस्यैव तद्धेतुत्वस्य अस्मिन्वाक्ये उक्तत्वादित्यत आह **अत्र देहशब्देनेति** । तदाश्रितानीत्यनेन शक्यसंबन्धः प्रदर्शितः ।

प० तर्हि विषयेन्द्रियसंप्रयोगो नापेक्षितः स्यादित्यत आह **इन्द्रियार्थेति** । तन्मात्रं सुखा-दिहेतुरिति भ्रान्तः शङ्कते **नन्विति** ॥ **योगिष्विति** तेषां प्रक्षीणकर्मत्वात्प्रारब्धकर्मवत्त्वेऽपि तस्य नियतफलकत्वादिति भावः ॥ **आहुरिति** । द्वितीये गीताभाष्ये भगवत्पादाः । विषयेन्द्रियसंप्रयोगः साक्षात्कारे, स च सुखादौ हेतुरित्येतदाहुरित्यर्थः । उक्तार्थसंवादत्वायाह **अत्र देहेति** ।

या० — **अत एवेति** । योगिनामप्रारब्धकर्मक्षयवत्त्वेन धर्माद्यभावादेवेत्यर्थः । 'विषयसाक्षा-त्कारस्यैव सुखादिहेतुत्वम् । इन्द्रियार्थसन्निकर्षस्तु तदर्थमभ्यर्थ्यते' इत्यत्र भगवत्पादसम्मतिमाह **तथा चाहुरिति** । गीताभाष्य इति शेषः । नन्वत्र शीतोष्णादिविषयस्य देहसम्बन्ध एवानुभवकारणतयोच्यते नेन्द्रियसन्निकर्ष इत्यत आह **अत्र देहशब्देनेति** ।

**श्री०— ज्ञानग्रहणमि**ति । निर्दोषार्थसन्निकृष्टनिर्दोषेन्द्रियोद्भवं ज्ञानं प्रत्यक्षमिति हि लक्षणम् । अत्राक्षकार्यक्रियाव्युदासार्थं प्रकरणप्राप्तज्ञानपदग्रहणमित्युक्तम् । नरहरितीर्थास्तु सुखादेरपीन्द्रियार्थसन्निकर्षजन्यत्वेन तद्व्यावृत्त्यर्थं ज्ञानग्रहणमित्याहुरित्यर्थः ॥ **हेतुत्वादिति** । अक्षसन्निकर्षजन्यत्वाभावादित्यर्थः । **तदर्थं** विषयसाक्षात्कारार्थम् । तार्किकः शङ्कते **नन्विति** । **एवं** विषयसाक्षात्कारस्यैव सुखादिहेतुत्वे ॥ **लीलेति** । भवत्पक्षेऽपीति शेषः । नन्विन्द्रियाणां शरीरसंयुक्तत्वनियमादीश्वरस्याशरीरत्वात्कथमिन्द्रियार्थसन्निकर्ष उच्यत इत्यत आह **लीलेति** ॥ **तदिति** । सुखाद्युत्पादेत्यर्थः । **तावन्मात्रम्** इन्द्रियार्थसन्निकर्षमात्रम् ॥ **तुल्यमिति** । विषयसाक्षात्कारस्यैव सुखादिहेतुत्वपक्षेऽपि न तावन्मात्रस्य हेतुत्वं किन्नाम धर्मादेरपि । तदभावान्नेश्वरस्य सुखादिकमिति सममित्यर्थः । ननु विषयसाक्षात्कारस्य सुखादिहेतुत्वे योगिनामपि तद्भावात्सुखादिकं स्यादिति केनचिदुक्तम् । तदिन्द्रियार्थसन्निकर्षस्यैव तद्धेतुत्वमिति पक्षेऽपि सममित्याह **अत एवेति** । इन्द्रियार्थसन्निकर्षजन्यविषयसाक्षात्कारस्यैव सुखादिहेतुत्वमित्यत्र मात्रास्पर्शा इत्येतद्व्याख्यानपरं गीताभाष्यं संमतितयोदाहरति **तथा चेति** ॥ **शीतोष्णादीति** । तादृगर्थेत्यर्थः । **अनुभवः** शीतोष्णादिविषयसाक्षात्कार इत्यर्थः । **ततः** साक्षात्कारात् । नन्वत्र विषयसाक्षात्कारस्य देहार्थसन्निकर्षजन्यत्वमेव प्रतीयते न त्विन्द्रियार्थसन्निकर्षजन्यत्वमत आह **अत्रेति** । तेषां शरीरसंयुक्तत्वादिति भावः । उद्भवशब्द उत्पत्त्यभिव्यक्तिसाधारणः ।

**च०— न योगिष्विति** । तेषां प्रक्षीणकर्मत्वात् । प्रारब्धकर्मसत्त्वेऽपि नियतफलकत्वादिति भावः । विषयेन्द्रियसन्निकर्षाधीनसाक्षात्कार एव सुखादिहेतुर्न तु तादृशसन्निकर्ष इत्यत्र गीताभाष्यं प्रमाणयति **तथा चाहुरिति** ।

**सु०— यद्वा निर्दोषार्थेन्द्रियसन्निकर्षजं ज्ञानं प्रत्यक्षमित्येवार्थः । जन्यप्रत्यक्षविषयमेव (वा त)एतद्व्याख्यातम्(नम्) इति नोक्तदोषः । अनुगतलक्षणसिद्ध्यर्थं तु द्वितीयं पक्षं परिगृह्णीमः । निर्दोषं यथार्थमक्षोद्भवमिति । अक्षोद्भवशब्देन (च) साक्षात्कारो लक्ष्यत इति न कश्चिद्दोषः । साक्षात्कारत्वं च ज्ञानगत एव विशेषो न करणोपाधिकः । तदनेन केवलं प्रत्यक्षं लक्षितम् ।**

**शे०—** अस्मिन्पक्षे उद्भवशब्दस्योत्पत्त्यभिव्यक्त्यन्यतरार्थत्वकल्पनाक्लेशं मन्वान उद्भवशब्दस्योत्पत्त्यर्थत्वमेवाश्रित्य समाधानमाह **यद्वेति** । सन्निकर्षध्वंसेऽतिव्याप्तिपरिहारार्थं ज्ञानग्रहणमित्यवधेयम् । नन्वीश्वरादिप्रत्यक्षादावव्याप्तितादवस्थ्यमित्यतस्तस्यालक्ष्यत्वान्नाव्याप्तिरित्यभिप्रेत्य लक्ष्यतावच्छेदकमाह **जन्येति** ॥ **अनुगतेति** । जन्याजन्यप्रत्यक्षानुगतेत्यर्थः ॥ **द्वितीयमिति** । निर्दोषं च तदक्षोद्भवं चेति

द्वितीयमित्यर्थः । निर्दोषपदार्थकथनपूर्वकं परिगृहीतं द्वितीयं पक्षमेव दर्शयति **निर्दोषमिति** । नन्वेवं द्वयोरपि विशेषणत्वात्समासानुपपत्तिः । ईश्वरादिप्रत्यक्षस्य नित्यत्वेनाक्षोद्भवत्वाभावात्तत्राव्याप्तिरक्षकार्यक्रियादावतिव्याप्तिश्चेत्युक्तमित्यत आह **अक्षोद्भवशब्देनेति** । तथा चेश्वरादिप्रत्यक्षस्यापि यथार्थसाक्षात्कारत्वान्न तत्राव्याप्तिरक्षकार्यक्रियादेश्चासाक्षात्कारत्वान्नातिव्याप्तिः । निर्दोषत्वस्य साक्षात्कारविशेषणत्वेनोभयोरपि विशेषणत्वाभावाद्विशेषणविशेष्यभावापन्नयोरनयोः समाससम्भवान्न तदनुपपत्तिरपीति भावः । अत एवोक्तं **न कश्चिदिति** । ननु साक्षात्कारत्वस्याप्यक्षोद्भवत्वरूपत्वादीश्वरादिप्रत्यक्षाव्याप्तितादवस्थ्यमित्यत आह **साक्षात्कारत्वं चेति । विशेषो** जातिविशेष इत्यर्थः ॥ **नेति** । अक्षोद्भवत्वं साक्षात्कारत्वमित्येवमक्षरूपकरणोपाधिको नेत्यर्थः ।

स० — **यद्वेति** । अत्र सन्निकर्षध्वंसे अतिव्याप्तिवारणाय ज्ञानग्रहणम् । ननु पूर्वलक्षणे उद्भवशब्दस्य उत्पत्त्यभिव्यक्तिसाधारणत्वेन ईश्वरादिप्रत्यक्षे अव्याप्तिपरिहारेऽपि द्वितीयलक्षणे जन्यशब्दस्य उत्पत्तिमात्रार्थकत्वेन ईश्वरप्रत्यक्षे निर्दोषार्थेन्द्रियसन्निकर्षजत्वाभावेनाव्याप्तिरित्यत आह **जन्यप्रत्यक्षविषयमिति । तत्** द्वितीयलक्षणमित्यर्थः । ननु नित्यानित्यप्रत्यक्षसाधारणलक्षणाभाव एव अस्मिन्पक्षे दोष इत्यत आह **अनुगतलक्षणसिद्ध्यर्थमिति** ॥ **द्वितीयमिति** । निर्दोषं च तत् अक्षोद्भवं चेति द्वितीयमित्यर्थः । निर्दोषमित्यस्यैव व्याख्यानं **यथार्थमिति** । ननु निर्दोषत्वे सति अक्षोद्भवत्वं नानुगतम् । ईशप्रत्यक्षे अक्षोद्भवत्वाभावेनाव्याप्तेः । अक्षोद्भवक्रियायामतिव्याप्तेश्च । द्वयोरपि विशेषणत्वेन समासानुपपत्तेश्चेत्यत आह **अक्षोद्भवशब्देनेति** । तथा च ईशादिप्रत्यक्षे अक्षोद्भवत्वाभावेऽपि साक्षात्कारत्वरूपस्य तस्य सत्त्वान्नाव्याप्तिः । क्रियाया अक्षोद्भवत्वेऽपि साक्षात्कारत्वाभावेन नातिव्याप्तिः । निर्दोषत्वस्य साक्षात्कारविशेषणत्वेन उभयोरपि विशेषणत्वाभावेन विशेषणविशेष्ययोश्च समासविधानान्न समासानुपपत्तिरित्यर्थः । अत एव **न कश्चिद्दोष** इत्युक्तमिति भावः । अत्र अक्षोद्भवशब्दस्य अनित्यप्रत्यक्षमात्रसाधारणत्वात् विशेष्यवाचकपदेन सामान्यं प्रत्यक्षं लक्ष्यत इति भावः ।

न च लक्षणायाः पदधर्मत्वात् अक्षोद्भवमित्यस्य तु वाक्यत्वात्कथं लक्षणेति वाच्यम् । ऐकपद्यस्य ऐकस्वर्यस्य च समासं प्रति प्रयोजकत्वात्पदत्वस्यापि सत्त्वान्न कश्चिद्दोषः । ननु च साक्षात्कारत्वस्य अक्षोद्भवत्वरूपत्वाभावात् पुनरीश्वरादिज्ञाने अव्याप्तिदोषप्रसङ्ग इत्यत आह **साक्षात्कारत्वं चेति । न करणोपाधिकः** । अक्षोद्भवत्वं साक्षात्कारत्वम् इत्येव, अक्षरूपकरणोपाधिको नेत्यर्थः ।

प० — 'अदुष्टमिन्द्रियं त्वक्षमि'ति ब्रह्मतर्कानुरोधेन धर्मिप्राधान्यविवक्षया लक्षणनिष्कर्षं कृत्वा निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षमिति प्रमाणलक्षणोक्त्यनुरोधेन धर्मप्राधान्यविवक्षयाऽर्थपदं सन्निकर्षपदं

चाध्याहृत्य लक्षणनिष्कर्षमाह **यद्वेति** । यद्वा प्रागुद्भवशब्दस्योत्पत्तिव्यक्त्युभयार्थत्वं उपेत्य जन्याजन्य-प्रत्यक्षसाधारण्यमुक्तम् । इदानीमुत्पत्तिमात्रार्थत्वं धर्मप्राधान्यं चोपेत्याह **यद्वेति** । अत्र निर्दोषपदमर्थे-न्द्रिययोर्विशेषणं ध्येयम् । न तु व्यक्त्यर्थत्वमप्युद्भवशब्दस्योपेयमित्येवकारार्थः ॥ **नोक्तदोष इति** । ईशप्रत्यक्षादौ नाव्याप्तिदोष इत्यर्थः । एवमियता ग्रन्थेन निर्दोषैरक्षैरुद्भवो यस्येति पक्षं द्वेधोपपाद्य निर्दोषं च तदक्षोद्भवं चेति पक्षमुपपादयितुं तत्र गुणातिशयं वदन्नाह **अनुगतेति** । ईशानीशसर्वप्रत्यक्षानुगते-त्यर्थः । स पक्षः क इत्यतोऽनुवदति **निर्दोषमिति** । तस्यार्थो यथार्थमिति । नन्वस्मिन्नपि पक्षे समासानुपपत्त्यादिदोष उक्त इत्यत आह **अक्षोद्भवशब्देन चेति** । नन्विन्द्रियत्वेनेन्द्रियजन्यत्वादिरूपं चेत्साक्षात्कारत्वं तदा ईशप्रत्यक्षेऽव्याप्तिरेवेत्यत आह **साक्षात्कारत्वं चेति** ।

**या०**— आद्यपक्ष एवोद्भवशब्दस्योत्पत्त्यर्थमेवाङ्गीकृत्य समाधानमाह **यद्वेति** । नन्वत्रापीश्वर-प्रत्यक्षस्याक्षोद्भवत्वाभावेनाव्याप्तिः अक्षोद्भवक्रियायामतिव्याप्तिः द्वयोरपि विशेषणत्वेन समासानुपपत्तिश्चेति दोषा उक्ता एवेत्यत आह **अक्षोद्भवशब्देन चेति** । तथा चेश्वरप्रत्यक्षे साक्षात्कारत्वसत्त्वान्नाव्याप्तिः । अक्षक्रियायां तदभावान्नातिव्याप्तिः । साक्षात्कारस्य विशेष्यत्वान्न समासानुपपत्तिरपीति भावः । अत एवाह **न कश्चिद्दोष इति** । ननु साक्षात्कारत्वं नामाक्षोद्भवत्वमेव वाच्यमिति पुनरीश्वरप्रत्यक्षेऽव्याप्ति रित्यत आह **साक्षात्कारत्वं चेति** । **विशेषो** जातिरूपः ।

**श्री०**— अनुगतेत्यपेक्षया पूर्वं जन्याजन्येति शेषः । **द्वितीयं** निर्दोषं च तदक्षोद्भवं चेति द्वितीयं पक्षम् । निर्दोषेत्यस्य यथार्थमिति व्याख्यानम् । ननु निर्दोषत्वे सत्यक्षोद्भवत्वं नानुगतम् । ईशप्रत्यक्षेऽक्षोद्भवत्वाभावेनाव्याप्तेः, अक्षजन्यक्रियायामतिव्याप्तेः, द्वयोरपि विशेषणत्वेन समासा-नुपपत्तेश्चेत्यत आह **अक्षोद्भवशब्देनेति** । ततश्चेशप्रत्यक्षेऽपि साक्षात्कारत्वरूपाक्षोद्भवत्वस्य सत्त्वान्ना-व्याप्तिः । अक्षोद्भवत्वेऽपि क्रियायाः साक्षात्कारत्वाभावेन नातिव्याप्तिः । साक्षात्काररूपे विशेष्ये निर्दोषत्वस्य विशेषणत्वेनोभयोर्विशेषणत्वाभावात् विशेषणविशेष्ययोश्च समासविधानान्न समासानुपपत्ति-श्चेति ध्येयम् । अत एव न कश्चिद्दोष इत्युक्तमित्यवधेयम् ।

**सु०— अत्रैव यतस्तदिति पदद्वयाध्याहारेण यथार्थापरोक्षज्ञानसाधनमित्यनुप्रमाण-प्रत्यक्षलक्षणमपि व्याख्येयम् । तच्च विवक्षाभेदेन निर्दोषार्थेन्द्रियसन्निकर्षो वा निर्दोषार्थसन्नि-कृष्टमदुष्टमिन्द्रियं वेति । ननु 'अदुष्टमिन्द्रियं त्वक्षमि'ति वचनादक्षशब्द एवादुष्टतामाचष्टे । तत्किमर्थं निर्दोषेत्यक्षविशेषणम् । मैवम् । इन्द्रियं त्वक्षं तच्चादुष्टमिह विवक्षितमिति तद्व्याख्यानात् ।**

**शे०— व्याख्येयमिति ।** ततश्च न भाष्येऽनुप्रमाणप्रत्यक्षलक्षणानुक्त्या न्यूनतेति भावः । अपरोक्षज्ञानसाधनमित्यत्र साधनशब्देनाभिव्यञ्जकस्यापि सङ्ग्रहान्नेश्वरादिस्वरूपेन्द्रियेऽव्याप्तिरिति ध्येयम् । ननु च यस्मिन्सति साक्षात्कारो भवत्येव तदेव साक्षात्कारायोगव्यवच्छिन्नमिह साधनमभिमतम् । सतोरपि कर्तृकर्मणोरित्यादिमानलक्षणटीकानुसारात् । तथा च धर्मितदितिकर्तव्यतासमुदायस्यैव च तादृशत्वात्प्रत्यक्षत्वमिति, सर्वत्रोक्तसमुदायः प्रत्यक्षमित्येकाकारोक्त्या भवितव्यम् । तत्कथं प्रमाणलक्षणे 'निर्दोषेन्द्रियसन्निकर्षः प्रत्यक्षमि'ति, ब्रह्मतर्कादिषु च 'विषयान्प्रति स्थितं ह्यक्षं प्रत्यक्षमि'ति विचित्रोक्तिरित्यतः इन्द्रियतदितिकर्तव्यताभूतार्थसन्निकर्षोभयात्मके प्रत्यक्षरूपे करणे इन्द्रियस्य धर्मित्वेन तत्सन्निकर्षस्य चेतिकर्तव्यतात्वेन विवक्षितत्वादितिकर्तव्यताप्राधान्यविवक्षयेन्द्रियार्थसन्निकर्षः प्रत्यक्षमिति सन्निकर्षस्य करणधर्मिप्राधान्यविवक्षया च ब्रह्मतर्कादिषु सन्निकृष्टमिन्द्रियमितीन्द्रियस्य च प्रत्यक्षत्वोक्तिरुपपन्नेति भावेनाह **तच्च विवक्षाभेदेनेति ॥ तत्किमर्थमिति ।** यद्यपि निर्दोषं च तदक्षोद्भवं चेति व्याख्याने निर्दोषत्वस्याक्षविशेषणत्वं नास्तीति न तदानर्थक्यशङ्कावकाशः । तथाऽपि निर्दोषैरक्षैरुद्भवो यस्येत्याद्यपक्षमाश्रित्य शङ्केयमिति ध्येयम् । केचित्त्वक्षविशेषणमित्युपलक्षणम् । अक्षोद्भवविशेषणं चेत्यपि द्रष्टव्यमित्याश्रित्याक्षोद्भवशब्देनैव साक्षात्कारस्येव यथार्थसाक्षात्कारस्यैवोपलक्षणसम्भवादक्षोद्भवशब्देनैव यथार्थसाक्षात्कारलाभात्तदर्थकनिर्दोषपदानर्थक्यमिति भावेनेयमाशङ्केत्यभिप्राय इत्याहुः ।

**स०— विवक्षाभेदेनेति ।** करणधर्मिणः इन्द्रियस्य प्राधान्यविवक्षया द्वितीयलक्षणम् । करणसन्निकर्षस्य प्राधान्यविवक्षया प्रथमलक्षणमित्यन्वयः । **तत्किमर्थमिति ।** न च निर्दोषत्वे सति साक्षात्कारत्वमिति द्वितीयपक्षे निर्दोषत्वस्याक्षविशेषणत्वाभावान्न वैयर्थ्यमिति वाच्यम् । तत्रापि अक्षोद्भवशब्देनैव निर्दोषसाक्षात्कारस्यैव लक्षणसंभवात् किं निर्दोषग्रहणेनेति भावः ।

**प०— अत्रैवेति ।** यथार्थसाक्षात्कार इति विवक्षिते लक्षणवाक्यार्थ इत्यर्थः ॥ **यत इति ।** यतो व्यज्यते यत उत्पद्यते चेत्यर्थः । साधनपदेनापि व्यञ्जकमुत्पादकं च । व्यञ्जकत्वं च भूत्वाभावकत्वरूपो विशेषो भगवदिन्द्रिये ध्येयः ॥ **विवक्षेति ।** प्रागुक्तदिशा धर्मप्राधान्यधर्मिप्राधान्यविवक्षाभेदेनेत्यर्थः ॥ **इति वचनादिति ।** तत्त्वनिर्णयोक्तब्रह्मतर्कवचनादित्यर्थः ।

**या०— अपरोक्षज्ञानसाधनमित्यत्र** साधनशब्देनाभिव्यञ्जकमपि विवक्षितमिति नेश्वरादिस्वरूपेन्द्रियेऽव्याप्तिः ॥ **विवक्षाभेदेनेति ।** अवान्तरव्यापारप्राधान्यविवक्षायां सन्निकर्षः, करणधर्मिप्राधान्यविवक्षायां त्विन्द्रियमेवेति प्राधान्यविवक्षाभेदेनेत्यर्थः ।

**श्री०— यत इति ।** निर्दोषाक्षोद्भवं निर्दोषसाक्षात्कारो यत उत्पद्यते तदित्यर्थः ।

**सु० — नन्वेतल्लक्षणं प्रतिगतमक्षं प्रत्यक्षमित्येवं शब्दनिर्वचनादेव प्रतीयमानं लक्ष्या-त्प्रत्यक्षान्न भिद्यते । न चैकस्यैव लक्ष्यलक्षणभावः संभवति । ज्ञात(त्व)ाज्ञातत्वासंभवादिति चेन्न । अत्र प्रत्यक्षपदवाच्यतायाः साध्यत्वेन विवक्षितत्वादित्याशयेनोक्तम्** इति गीयत इति ।

**शे०** — मूले 'इति गीयत' इत्यस्य लक्षणस्य व्यवहारकारणत्ववर्णनमनर्थकमित्यतो लक्ष्यानति-रिक्तलक्षणस्य व्यवहारमात्रकारणत्वज्ञापनार्थत्वात्तस्य न तदिति भावेन तन्निवर्त्यां शङ्कामुत्थापयति **नन्वेतदिति** ॥ **प्रतिगतमिति** । निर्दोषान्विषयान्प्रति गतं तैः सन्निकृष्टमक्षं निर्दुष्टमिन्द्रियमित्यर्थः । समाससमर्थनप्रकारश्चोत्तरत्राकर एव स्पष्टः । एकस्य लक्ष्यलक्षणभावानुपपत्तिमेव प्रथयति **ज्ञातेति** । ज्ञातेन ह्यज्ञातं लक्षणीयम् । न च तदेव तदेव ज्ञातमज्ञातं चेति युक्तमिति भावः ।

**स०** — पूर्वोक्तलक्ष्यानतिरिक्तलक्षणस्य व्यवहारकारणत्वमजानानः लक्षणस्य लक्ष्यस्वरूपप्रतिपत्ति-कारणत्वं मन्वानः शङ्कते **नन्विति** ।

**प०** — 'विषयान्प्रति स्थितं ह्यक्षं प्रत्यक्षमि'ति तत्त्वनिर्णयोक्तं हृदि कृत्वाह **नन्वेनदित्यादिना** ॥ **प्रति गतमिति** । निर्दोषस्वस्वविषयान्प्रति गतं तैः सन्निकृष्टमित्यर्थः । एतेन 'कुगतिप्रादय' इति विहितप्रादिसमासोऽयं न 'त्वव्ययं विभक्ती'त्यादिनोक्तोऽक्षं प्रति प्रत्यक्षमित्यव्ययीभाव इति दर्शितम् । तथाच 'प्रत्यक्षः कस्यचिद्धर्म' इत्यादिनिर्देशोपपत्तिरिति भावः ॥ **ज्ञातत्वेति** । लक्षणस्य निर्धारितत्वं लक्ष्यस्य च स्वेतरसर्वविविक्तत्वेनानिर्धारितत्वमावश्यकम् । तच्च विरुद्धमिति भावः ।

**या०** — **ज्ञाताज्ञातत्वेति** । लक्षणे ज्ञातत्वं लक्ष्ये चेतरव्यावृत्तत्वादिनाऽज्ञातत्वं प्रसिद्धं, तदु-भयं च नैकस्मिन्युज्यत इति भावः ।

**श्री०** — **एतल्लक्षणम्** अर्थसन्निकृष्टत्वरूपम् ।

**सु०** — **ननु निर्दोषतेन्द्रियाणां कुतोऽवगन्तव्या । ज्ञानयाथार्थ्यादिति चेत् । तदपि किं करण(गतया)निर्दोषतया ज्ञातव्यं, किंवा विरुद्धप्रमाणाभावात् । नाद्यः । परस्पराश्रयता-पत्तेः । न द्वितीयः । असञ्जातविरोधिविभ्रमेऽप्यापत्तेः । मैवम् । ज्ञानयाथार्थ्यस्य साक्षि-सिद्धत्वाङ्गीकारात् । परीक्षापेक्षायां तु प्रबलविरोध्य(धा)भावः साचिव्यमाचरति । यथोक्तम् 'बलवत्प्रमाणतश्चैव ज्ञेया दोषा न चान्यथे'ति । असञ्जातविरोधी तु विभ्रम एवेति कुतः । देशकालपुरुषान्तरसंबन्धिविपरीतप्रमावशादिति चेत् । कथं तर्ह्यसञ्जातविरोधित्वम् । एवं तर्हि सर्वथा विपरीतप्रमाऽभावोऽङ्गीकृतः स्यात् । अद्धा । सोऽपि तैस्तैः परीक्षाविशेषैर्निश्ची-यते । निर्मूलं तु न शङ्क्यते । अन्यथा सर्वत्रानाश्वासेनाभिमतमपि न सिद्ध्येदिति ।**

शे० — अस्य लक्षणस्य श्रीहर्षोक्तं दुरवधारणत्वमपाकर्तुं तत्पक्षमुत्थापयति **नन्विति** ॥ **परस्परेति** । करणानां निर्दोषत्वनिश्चये तज्जन्यज्ञानयाथार्थ्यनिश्चयः, सति च तस्मिंस्तेन करणनिर्दोषता-निश्चय इति परस्पराश्रयापत्तेरित्यर्थः ।

**ज्ञानयाथार्थ्यस्येति** । तथा च करणनिर्दोषताया ज्ञानयाथार्थ्येन निश्चेयत्वेऽपि प्रामाण्यस्य स्वतस्त्वाज्ज्ञानग्राहकसाक्षिग्राह्यत्वेन ज्ञानयाथार्थ्यस्य करणनिर्दोषतया निश्चेयत्वाभावान्नान्योन्याश्रय इति भावः । नन्वेवं ज्ञानग्राहकत्वात्साक्षिणः शुक्तिरजतादिज्ञानप्रामाण्यग्राहकत्वापत्त्या तस्यापि प्रामाण्यप्रसङ्गः । यदि च, यत्र साक्षिवेद्यसुखादिज्ञाने नाप्रामाण्यप्रयोजककरणदोषबाधकशङ्काकलङ्कः तत एव च तन्निरास-कर्मजातीयविजातीयसंवादविसंवादभावाभावरूपपरीक्षापेक्षाऽपि तत्र साक्षिमात्रस्य प्रामाण्यग्राहकत्वेपि यत्र ज्ञानेऽप्रामाण्यप्रयोजककरणदोषबाधकशङ्काकलङ्कस्तत एव च तन्निरासकोक्तविधपरीक्षापेक्षाऽपि तत्र निर्दोषत्वनिश्चयबलवत्प्रमाणविरोधाभावान्यतरसाक्षिभ्यामेव प्रामाण्यग्रहणाभ्युपगमात् । यत्र बाह्यज्ञाने उक्ता ग्राहकसम्पत्तिस्तत्र प्रामाण्यग्रहणप्राप्तावपि शुक्तिरजतविज्ञानस्थले सत्यपि साक्षिणि निर्दोषत्वादि-निश्चयबलवत्प्रमाणविरोधाभावान्यतरस्याभावान्न तत्प्रामाण्यग्रहणमिति न तत्प्रामाण्यप्रसङ्ग इति मन्यसे तर्हि निर्दोषत्वनिश्चायकस्य ज्ञानयाथार्थ्यनिश्चयस्य निर्दोषत्वनिश्चयसापेक्षत्वादुक्तान्योन्याश्रयतादवस्थ्यम्, असञ्जातबाधभ्रमे प्रामाण्यापत्तिर्वेत्यत उक्तपरीक्षापेक्षास्थले न साक्षिसमकक्षतया निर्दोषत्वनिश्चय-बलवत्प्रमाणविरोधाभावान्यतरस्य याथार्थ्यनिश्चायकत्वं ब्रूमो येनान्योन्याश्रयत्वं स्यात्किन्तु तत्रापि साक्षिण एव प्रामाण्यग्राहकत्वमितरस्य त्वप्रामाण्यशङ्कानिरसनद्वारेण तत्रोपयोगित्वमेवेत्यतो न तावदन्योन्याश्रय इत्याशयवान्निर्दोषत्वनिश्चयोपलक्षणतया बलवत्प्रमाणविरोधाभावस्य प्रामाण्यग्राहकसाक्षिसहकारितामाह **परीक्षापेक्षायां त्विति** । नन्वेवं करणदोषबाधकप्रत्यययोरुभयोरप्यप्रामाण्यनिदानत्वेन तदुभयाभाव-सहकृतस्यैव साक्षिणो बाह्यज्ञाने प्रामाण्यग्राहकताया अङ्गीकृतत्वात् करणदोषाभावपरित्यागेन कुतो मुखतो बाधाभावस्यैव प्रामाण्यग्राहकसाक्षिणं प्रति सहकारित्वाश्रयणमित्यतो दोषस्य बाधैकोन्नेयत्वेन करणदोष-बाधयोर्मध्ये बाधस्यैव वैशेष्यादुभयोरविशेषासिद्धेर्युक्तं तत्परित्यागेन बाधाभावस्यैव तत्सहकारित्वेना-श्रयणमित्याशयवान्दोषस्य बाधैकोन्नेयत्वे ब्रह्मतर्कसम्मतिमाह **यथोक्तमिति** ॥ **बलवत्प्रमाणत इति** । बलवत्प्रमाणविरोधत इत्यर्थः ।

द्वितीयपक्षोक्तं दोषं परिहरति **असञ्जातेति** । तथा च याथार्थ्यरूपसाध्यस्यापि तत्र सत्त्वान्न व्यभिचार इति भावः ॥ **कथं तर्हीति** । तथा च विपरीतप्रमाणाभावरूपस्य हेतोरेव तत्रागमनान्न व्यभिचार इति भावः । गूढाभिसन्धिः शङ्कते **एवं तर्हीति** ॥ **सर्वथेति** । सर्वदेशकालपुरुषसम्बन्धी-त्यर्थः । अङ्गीकृत इत्यत्र हेतुतयेति शेषः । तथा च सर्वथा विपरीतप्रमाणाभावस्य दुरवधारणत्वान्न

कुत्रापि ज्ञाने याथार्थ्यनिश्चयः स्यादित्यभिसन्धिः । गूढाभिसन्धिरुक्तमेव पक्षमङ्गीकरोति **अद्धेति** । तर्हि तस्य दुरवधारणत्वान्न क्वापि प्रामाण्यनिश्चयः स्यादिति परस्य हार्दं दोषं परिहरति **सोऽपीति** ॥ **अभिमतमपीति** । ब्रह्माद्वैतादिकमपीत्यर्थः ॥

**स०** — ज्ञानयाथार्थ्यादेव इन्द्रियाणां निर्दोषत्वावगम एवाभ्युपगम्यते । निर्दोषतायाः याथार्थ्यापेक्षत्वेऽपि याथार्थ्यस्य निर्दोषताऽपेक्षत्वाभावादित्याह **ज्ञानयाथार्थ्यस्य साक्षिसिद्धत्वाङ्गीकारादिति** । ननु ज्ञानयाथार्थ्येन निर्दोषतानिश्चयोऽनुपपन्नः । बाह्यज्ञानप्रामाण्ये निर्दोषतानिश्चयस्यापेक्षितत्वेन इतरेतराश्रयापातात् । न च साक्षिणैव तन्निश्चयः । निर्दोषतानिश्चयसहकृतसाक्षिण एव तन्निश्चायकत्वेन केवलस्य तदभावात् । अत एव, न साक्षी ज्ञानं गृह्णन् प्रमाणमेव तदिति गृह्णाति । किं तर्हि, दोषो न चेत् प्रमाणं, सदोषमप्रमाणमिति व्यवस्थया । यदा त्वर्थित्वेन प्रामाण्यं निर्धारयिषितं तदा सजातीयविजातीयसंवादविसंवादभावाभावलक्षणपरीक्षया दोषाभावं निश्चित्य प्रामाण्यम् अवधारयति । दोषदर्शने तु अप्रामाण्यमेवेत्यादिना पूर्वं दोषाभावनिश्चयसहकृतस्यैव प्रामाण्यनिश्चायकत्वमभिहितम् । अन्यथा तद्विरोध इति चेन्न । निर्दोषतानिश्चयसहकृतस्यैव साक्षिणस्तन्निश्चायकत्वेऽपि परोद्भावितेतरेतराश्रयत्वस्य ज्ञानयाथार्थ्यस्य साक्षिसिद्धत्वमात्राङ्गीकारेण परिहारे किं सिद्धान्ताविष्कारेण इत्यत्रैव तात्पर्याददोषः । **यथोक्तमिति** । दोषाणां बलवत्प्रमाणज्ञेयत्वेवत्या अर्थात् दोषाभावस्य प्रबलप्रमाणविरोधाभावेनैव ज्ञेयत्वमित्युक्तं भवतीति युक्तं प्रकृते संमतित्वेन तद्वाक्योदाहरणमिति द्रष्टव्यम् । **एवं तर्हीति** । सर्वथा विपरीतप्रमाऽभावस्य च दुरवबोधत्वेन कुत्रापि ज्ञाने याथार्थ्यनिश्चयो न स्यादिति भावः । गूढाभिसन्धिः परिहरति **अद्धेति** । तदुक्तं दोषं परिहरति **सोऽपीति** ॥ **अभिमतमपीति** । घटादिकमित्यर्थः ।

**प०** — ज्ञातत्वेत्यादिवाक्येन ज्ञातत्वं लक्षणस्योक्तम् । अत्रोक्तलक्षणज्ञानं च करणनिर्दोषताज्ञानाधीनम् । तज्ज्ञानं च दुःशकमिति भावेनाशङ्क्य निराह **नन्वित्यादिना** ॥ **आपत्तेरिति** । व्यभिचारादित्यर्थः ॥ **साक्षिसिद्धत्वेति** । साक्षी च स्वप्रकाशः स्वप्रामाण्यग्राहक इति नानवस्थादोषोऽपीति भावः । एवं तर्हि विरोध्यभावः क्वापि नापेक्ष्यः स्यादित्यत आह **परीक्षाऽपेक्षायां त्विति** । यद्वा यत्र दोषशङ्कया याथार्थ्यग्रहः प्रतिबद्ध्यते तत्र निर्दोषताज्ञानाधीना याथार्थ्यधीः अतोऽन्योन्याश्रय इत्यत आह **परीक्षेति** । यत्र ज्ञाने दुष्टेन्द्रियजन्यत्वशङ्कया याथार्थ्यग्रहणं प्रतिबध्यते तत्र प्रतिबन्धकाभावनिश्चायकप्रमाणापेक्षारूपपरीक्षापेक्षायां विरोध्यभावः प्रतिबन्धकाभावनिश्चयेन सहायतां साक्षिणो याथार्थ्यग्रहणे आचरतीत्यर्थः । उक्तं हि 'बुद्धिदोषनिरासमात्रकारणत्वाद्युक्तीनामि'ति ॥ **यथोक्तमिति** । तत्त्वनिर्णये । दोषाणां प्रबलप्रमाणैकाधीननिश्चयत्वे तदभावोपि तदभावेन ज्ञेय इति सिध्यतीति भावः ।

प्रागुक्तं व्यभिचारं निराह असङ्गतेति ॥ अद्धेति । सत्यमित्यर्थः । 'अद्धा प्रत्यक्षसत्ययोरि'त्यभिधानात् । ननु तन्निश्चयो याथार्थ्यनिश्चयाधीनश्चेदन्योन्याश्रय एवेत्यत आह सोऽपीति ॥ परीक्षेति । तन्निश्चायकप्रमाणविशेषानुसन्धानैरित्यर्थः ॥ अभिमतमपीति । विश्वमिथ्यात्वाद्यपीत्यर्थः ।

या० — अस्य लक्षणस्य खण्डनकारेणोक्तं दुरवधारणत्वरूपं दोषमाशङ्क्य परिहरति ननु निर्दोषतेत्यादिना ॥ साक्षिसिद्धत्वादिति । तथाच नोक्तान्योन्याश्रय इति भावः । ननु यत्राभ्यासदशापन्नज्ञाने करणदोषशङ्काऽभावस्तत्रैवमस्त्वन्योन्याश्रयपरिहारः यत्र त्वनभ्यासदशापन्नज्ञाने करणदोषशङ्का तत्र याथार्थ्यं न केवलेन साक्षिणा धारयितुं शक्यं, किन्तु निर्दोषताध्यवसायसहकृतेनैव । निर्दोषताध्यवसायश्च याथार्थ्यनिश्चयाधीन इति तत्र पुनरन्योन्याश्रय इत्यत आह परीक्षापेक्षायां त्विति । करणदोषाभावनिश्चायकापेक्षायामित्यर्थः । साचिव्यमाचरति साक्षिणा निर्दोषताग्रहण इति शेषः । तथा च यत्र करणदोषताशङ्का तत्र साक्षी बाधाभावसहकृतः स्वयमेव करणदोषाभावमप्यवधारयति । न तु तदवधारणं याथार्थ्यनिश्चयाधीनम् । अतस्तत्रापि नान्योन्याश्रयशङ्केति भावः । यथोक्तम् 'दोषाभावे प्रमाणत्वं दोषाभावस्य साक्षिणा । निश्चितत्वं क्वचिच्चैवे'ति । अत्र यद्यपि प्रबलविरोधाभाव एव निर्दोषतामवधारयति न याथार्थ्यमिति वचनेऽप्यन्योन्याश्रयपरिहारो भवत्येव तथापि साक्षिणः साचिव्यमाचरतीति वचनं वस्तुस्थितिमभिप्रेत्येति ज्ञातव्यम् । याथार्थ्यग्रहणे साचिव्यमाचरतीति तु न व्याख्यानम् । तत्र बलवत्प्रमाणत इति वक्ष्यमाणवाक्योदाहरणस्यासङ्गतत्वात् । उक्तान्योन्याश्रयापरिहाराच्चेत्यवगन्तव्यम् । बलवत्प्रमाणविरोधाभावो निर्दोषताग्रहणे हेतुरित्यत्र ब्रह्मतर्कसम्मतिमाह यथोक्तमिति । बलवत्प्रमाणतः बलवत्प्रमाणविरोधतः । तथा च दोषाभावोऽपि बलवत्प्रमाणविरोधाभावेन ज्ञातव्य इत्याशयात्प्रकृतसङ्गतिः । प्रबलप्रमाणविरोधाभावस्य दोषाभावसाधकत्वे पूर्वपक्षिणोक्तमसञ्जातविरोधिभ्रमे व्यभिचारं परिहर्तुमाह असञ्जातेति ॥ कथं तर्हीति । तथाच हेतोरेवाभावान्न व्यभिचार इति भावः ॥ सर्वथेति । देशकालपुरुषान्तरसंबन्धीत्यर्थः । अङ्गीकृत इत्यत्र हेतुतयेति शेषः । तर्ह्यज्ञानासिद्धिरित्यत आह सोऽपीति ॥ अभिमतमपीति । खण्डनकाराभिमतं अद्वितीयं ब्रह्मापीत्यर्थः ।

श्री० — परस्परेति । निर्दोषकरणजन्यत्वेन ज्ञानयाथार्थ्यं ज्ञेयं तेन चेन्द्रियाणां निर्दोषताऽवगन्तव्येति परस्पराश्रयत्वं ज्ञेयम् ॥ आपत्तेरिति । विरुद्धप्रमाणाभावेन भ्रमजनकेन्द्रियाणामपि निर्दोषताऽध्यवसायापत्तेरित्यर्थः । विरुद्धप्रमाणाभावोपपादनायासञ्जातविरोधीत्युक्तम् ॥ ज्ञानेति । ज्ञानयाथार्थ्येनेन्द्रियनिर्दोषत्वाध्यवसायस्याङ्गीकारात्, निर्दोषकरणजन्यत्वेन ज्ञानयाथार्थ्याध्यवसायस्य

चानङ्गीकारान्नेतरेतराश्रयदोष इत्याह **ज्ञानेति** । ननु कथं साक्षिसिद्धत्वमङ्गीक्रियते । क्वचिद्विरुद्धप्रमाण-भावे तदध्यवसायायोगादित्यत आह **परीक्षेति** । साक्षिण इति शेषः । **प्रमाणतः** तद्विरोधतः ॥ **कथं तर्हीति** । तस्या एव विपरीतप्रमाया विरोधित्वादिति भावः ॥ **एवं तर्हीति** । यदि देशकाल-पुरुषान्तरसंबन्धिविपरीतप्रमाया एव विरोधित्वेन विरुद्धप्रमाणाभावाभावेन तत्र निर्दोषता नाध्यवसीयते तर्हीन्द्रियादौ, सर्वथा देशान्तरीयकालान्तरीयपुरुषान्तरीयविपरीतप्रमाया अभावेन ज्ञानस्य याथार्थ्यात्, तेन निर्दोषता अध्यवसीयत इत्युक्तं स्यादित्यर्थः । अत्रेष्टापत्तिमुत्तरमाह **अद्धेति** । नन्विन्द्रियादिषु निर्दोष-तानिश्चायके यथार्थज्ञाने सर्वथा विपरीतज्ञानाभावः कथं ज्ञेय इत्यत आह **सोऽपीति** । **तैः** अर्थक्रिया-कारित्वरूपैः । नन्वत्रापि विपरीतप्रमैव किन्न स्यादित्यत आह **निर्मूलं त्विति** ॥ **अन्यथेति** । यदि निर्मूलमप्याशङ्क्यत इत्यर्थः । 'एकत्र ज्ञानेऽनाश्वासे' इति शेषः । **अभिमतं** घटादिकम् ।

**च०**— असंजातविरोधीति बहुव्रीहिः । **साचिव्यं** सहकारित्वम् । **अद्धा** सत्यम् ।

**सु०— नन्विन्द्रियार्थसन्निकर्षस्य प्रत्यक्षत्वे गगननयनसन्निकर्षादपि ज्ञानमुत्पद्यताम् । मैवम् । अर्थशब्देन तत्तदिन्द्रियग्रहणयोग्यस्यैव विवक्षितत्वात् । गगनादौ च तद्योग्यता-भावस्य कार्याभावादेव सिद्धेः । एतेन चक्षुरादिना गन्धादिग्रहणप्रसङ्गोऽप्यपास्तः ।**

**शे०— अर्थशब्देनेति** । यद्यप्यर्थशब्देनेन्द्रियग्रहणयोग्यविवक्षयैवोक्तातिप्रसङ्गपरिहारात्तत्तदे-न्द्रियग्रहणयोग्यतापर्यन्तधावनमनर्थकं तथाऽप्युक्तातिप्रसङ्गस्य तावन्मात्रेण परिहारेऽप्यनुपदमेव वक्ष्य-माणातिप्रसङ्गान्तरनिरासार्थं तत्पर्यन्तधावनम् । अत एवैनेनेत्युक्तातिदेशेनैवोत्तरत्र तन्निरास इति ध्येयम् ॥ **एतेनेति** । अर्थशब्देन तत्तदिन्द्रियग्रहणयोग्यस्यैव विवक्षितत्वेनेत्यर्थः ।

**स०**— निर्दोषार्थेन्द्रियसन्निकर्षरूपद्वितीयलक्षणस्य अतिव्याप्तिं शङ्कते **नन्विति** । **अर्थशब्दे-नेति** । यद्यप्यत्र इन्द्रिययोग्यस्यैव विवक्षितत्वादित्येतावतैव उक्तशङ्कापरिहारात् तत्तदिन्द्रिययोग्यत्व-विवक्षणं व्यर्थम् । तथापि शङ्कान्तरनिरासार्थमेतत् । तच्चैतेनेत्यादिना वक्ष्यते इति ध्येयम् ॥ **एतेनेति** । तत्तन्द्रियग्रहणयोग्यस्यैव विवक्षितत्वेनेत्यर्थः ।

**श्री०— कार्येति** । अपरोक्षव्यवहारादिरूपेत्यर्थः ॥ **एतेनेति** । इन्द्रियार्थसन्निकर्षमात्रस्यैव प्रत्यक्षत्वे चक्षुष इन्द्रियत्वाद्गन्धस्याप्यर्थत्वात्तदुभयसन्निकर्षादपि ज्ञानमुत्पद्यतामित्येतदप्येतेनार्थशब्देन तदिन्द्रियग्रहणयोग्यस्यैव विवक्षितत्वेनापास्तमित्यर्थः ।

सु० — अथ मतम् । यद्याश्रिता योग्यता, किमन्तर्गडुना सन्निकर्षेण । तत्तदिन्द्रियविषयस्तेन तेनेन्द्रियेण गृह्यते । कथमन्यथा काचाभ्रपटलाद्यन्तरितोपलब्धिः स्यात् । सान्तरग्रहणं च प्राप्तिपक्षे न संभवति । प्राप्यकारिषु त्वगादिषु तदभावात् । किञ्च नयनं चेत्प्राप्यकारि तदा स्वसंयुक्तमात्रं गृह्णीयात् । कुठारादिषु तथा दर्शनात् । पृथुतरं च गृह्णाति । दिग्विशेषसन्देहश्चैवं सति न स्यात् । प्राप्त्या तन्निश्चयप्राप्तेः । सन्निकृष्टविप्रकृष्टयोः शाखाचन्द्रमसोर्युगपद्ग्रहणाच्च । न हि प्राप्यकारिण्येवं भवितुमर्हति । अपि च चक्षुः अप्राप्यार्थप्रकाशकम् अत्यासन्नाप्रकाशकत्वात् व्यतिरेकेण श्रोत्रादिवत् चक्षुर्गत्वा नार्थेन संबध्यते इन्द्रियत्वात् स्पर्शनादिवत् । न चार्थस्य आगमनं प्रत्यक्षविरोधात् । तथा चाप्राप्यप्रकाशकत्वसिद्धिरिति ।

शे० — मूले हिशब्दस्यानर्थक्यमाशङ्क्यानुपपत्त्यन्तरपरिहारार्थत्वान्न तदिति भावेन तत्परिहारकतया तं योजयितुमनुपपत्त्यन्तरमुत्थापयति **अथेति** । सन्निकर्षवादिनाऽप्युक्तातिप्रसङ्गनिरासाय योग्यताया अवश्याभ्युपेयत्वाल्लाघवेन तस्या एव प्रयोजकत्वोपपत्तेर्न सन्निकर्षस्यापेक्षेत्याशयः नन्वयोग्यताव्यतिरिक्तस्थलेऽन्वयव्यतिरेकाभ्यां योग्यतावत् सन्निकर्षस्यापि साक्षात्कारप्रयोजकत्वसिद्ध्या योग्यतासन्निकर्षयोरुभयोरप्यगृह्यमाणविशेषत्वात्कुतो योग्यतामुपादाय प्राप्तेरेव परित्याग इत्यतो योग्यतायाः साक्षात्काराव्यभिचारित्वात्सन्निकर्षस्य च तद्व्यभिचरितत्वादविशेषासिद्धेर्युक्तं योग्यतामुपादाय प्राप्तिनिरासकरणमित्याशयवानाह **कथमन्यथेति** । अभ्रपटलादीत्यादिपदेन स्फटिकादिसंग्रहः । काचादिना विघातिद्रव्येण प्राप्तिप्रतिबन्धान्न तत्र प्राप्तिरस्तीति प्राप्तिः साक्षात्काराव्यभिचारिणीति भावः । ननु काचादीनां प्राप्तिप्रतिबन्धकत्वाभावात्तत्रापि प्राप्तिरस्त्येवेति न व्यभिचार इत्यतो माऽस्तु तर्हि व्यभिचारेण चक्षुषोऽप्राप्यकारित्वसिद्धिः । चक्षुरप्राप्यकारि सान्तरग्राहकत्वादित्यनुमानात्तत्सिद्धिः स्यादेवेत्याशयवानाह **सान्तरेति** । विप्रकृष्टदेशावस्थितार्थग्रहणमित्यर्थः । ननु दृष्टान्ताभावेन व्याप्तिग्रहानुपपत्त्या व्याप्यत्वासिद्धोऽयं हेतुरित्यतोऽन्वयव्याप्तौ दृष्टान्ताभावेऽपि यत्प्राप्यकारि न तत्सान्तरार्थग्राहकमिति व्यतिरेकव्याप्तौ त्वगादेरेव दृष्टान्तत्वेन व्यतिरेकव्याप्तिग्रहसंभवान्न तत्प्रसङ्ग इत्याशयवानाह **प्राप्यकारिष्विति** । आदिपदेन रसनादिपरिग्रहः । नन्वसंबद्धार्थग्राहकताया एव साध्यत्वात्सन्दिग्धासिद्धोऽयं हेतुरित्यरुचेराह **किञ्चेति** । चक्षुरप्राप्यकारि संयुक्तमात्राग्राहकत्वादित्यनुमानमित्यभिप्रेत्याप्रयोजकताशङ्कानिरासकतया हेतूच्छित्तिं विपक्षे बाधकतया सूचयन्ननुग्राहकं तर्कमाह **नयनं चेदिति** ॥ **स्वसंयुक्तेति** । स्वयं यावत्परिमाणं तावत्परिमाणयुक्तमेव पटादिप्रदेशमित्यर्थः । अनुमानमूलभूतव्याप्तौ दृष्टान्ताभावाद्व्याप्त्यसिद्धिः तर्कमूलव्याप्तावपि दृष्टान्ताभावात्तदसिद्धिश्चेत्यतोऽन्वयव्याप्तौ तदभावेऽपि व्यतिरेकव्याप्तौ

कुठारादेरेव दृष्टान्तत्वादनुमानव्यतिरेकव्याप्तेरेव च तर्कमूलभूतव्याप्तित्वेन तत्रापि तस्यैव दृष्टान्तत्वान्नोभयत्रापि व्याप्त्यसिद्धिरित्याशयवानाह **कुठारादिष्विति** । तर्के इष्टापत्तिं परिहरन्नेवानुमाने स्वरूपासिद्धिं परिहरति **पृथुतरं चेति** । स्वतोऽधिकपरिमाणमित्यर्थः । पृथुतरग्रहणं स्वतोऽधिकपरिमाणद्रव्यग्राहिणा त्वगिन्द्रियेणानैकान्तिकमित्यरुचेराह **दिग्विशेषेति** । चक्षुषः सन्निकृष्टार्थग्राहकत्वे दिग्विशेषं प्रति गत्वा सन्निकृष्य चक्षुषस्तद्ग्राहकत्वं वाच्यम् । तथा च न तत्सन्देहावकाशः । गत्वा सन्निकृष्य तद्ग्राहकस्य तन्निश्चायकत्वनियमादिति भावः । नन्वागन्तुककारणान्तरवशादेव सन्देहो भविष्यति । अप्राप्तौ तु सर्वत्र सन्देहः स्यादित्यरुचेराह **सन्निकृष्टविप्रकृष्टयोरिति** । यदि चक्षुर्गत्वाऽर्थं गृह्णीयात्तदा निकटमाशु गृह्णीयात् दवीयस्तु चिरेण तद्धेतुसन्निकर्षस्यायुगपद्भावित्वात् । तथा च तथाविधयोः शाखाचन्द्रमसोरपि पौर्वापर्येणैव ग्रहणं स्यान्न तु युगपदिति युगपद्ग्रहणानुभवविरोध इत्याशयः ॥ **न हीति** । प्राप्यकारिणि त्वगादौ निकटदवीयसोर्युगपद्ग्रहणादर्शनादिति भावः ।

**स०— कथमन्यथेति सान्तरग्रहणमिति** । अन्तरं व्यवधानं, तेन सहितम् सान्तरं । व्यवहितग्रहणं न स्यादित्यर्थः । यद्वा । विविक्तत्वेन ग्रहणं न स्यादित्यर्थः । संदेहाभावमेवोपपादयति **प्राप्तेति** ।

**प०— सान्तरेति** । सव्यवधानस्य व्यवहितस्य वा ग्रहणमित्यर्थः । तथैवाग्रे विवरणात् । **पृथुतरं चेति** । पर्वतादिकम् । संयुक्तग्राहकपक्षे च संयोगस्य प्रदेशवृत्तित्वादेकदेशमेव गृह्णीयादिति भावः ॥ **दिग्विशेषेति** । अयं प्राच्यः प्रतीच्यो वेत्यादिसन्देहो न स्यादित्यर्थः । कुतो न स्यादित्यत आह **प्राप्त्येति** । ग्राह्यसंबन्धेनेत्यर्थः ॥ चक्षुषः प्राप्यग्राहित्वे बाधकान्युक्त्वाऽप्राप्यग्राहित्वे साधकमाह **अपि चेति** । परिशेषादप्राप्यग्राहित्वसिद्धिरिति भावेनाह **चक्षुर्गत्वेत्यादिना** ॥ **तथा चेति** । प्रसक्तयोर्निषेधे सतीत्यर्थः ।

**या०— कथमन्यथेति** । तत्र सन्निकर्षासंभवादिति भावः ॥ **सान्तरग्रहणमिति** । **अन्तरं** किञ्चिद्दूरस्थत्वम् । तेन सहितं सान्तरम् । चक्षुषा किञ्चिद्दूरस्थग्रहणं न स्यादित्यर्थः ॥ **स्वसंयुक्तमात्रमिति** । नयनं स्वयं यावत्परिमाणं तावत्परिमाणयुक्तमेव घटादिप्रदेशं स्वसंयुक्तं गृह्णीयान्न पृथुतरमित्यर्थः ॥ **दिग्विशेषेति** । सूर्योदयादेः प्रदेशविशेषस्थत्वसन्देहो न स्यादित्यर्थः । अतो दिग्विशेषाणां नयनागोचरत्वात्कथमिदमापादनमिति शङ्कानवकाशः । सूर्योदयादेस्तद्गोचरत्वात्प्रदेशविशेषस्य चोपनीतस्य भानसंभवादित्यवधेयम् ॥ छ ॥

श्री० — **अन्तर्गुडुना** इन्द्रियार्थयोर्मध्यस्थितेनेत्यर्थः । 'अंतर्गड्वान्तरालिकमि'त्यमरः ॥ **तत्त-दिन्द्रियेति** । तत्तदिन्द्रियग्रहणयोग्येत्यर्थः । गृह्यत इत्यनन्तरमस्त्विति शेषः । **अन्यथा** यदि सन्नि-कर्षापेत इत्यर्थः । काचादिभिरन्तरितस्य व्यवहितस्योपलब्धिः कथं स्यात् । व्यवधायककाचादेः सत्त्वेन सन्निकर्षाभावादिति भावः ॥ **सान्तरेति** । व्यवहितेत्यर्थः । **प्राप्तिपक्षे** सन्निकर्षपक्षे । **कारि** प्रकाश-कारि ॥ **भवितुमिति** । विप्रकृष्टग्रहणायोगादिति भावः ॥ **अपि चेति** । यदि चक्षुः प्राप्यप्रकाश-कारि स्यात्तर्ह्यत्यासन्नमपि समीपवर्ति पक्ष्मादिकमपि प्रकाशयेत् । सन्निकर्षस्य सत्त्वात् । न च प्रकाश-यति । तस्मान्न प्राप्यप्रकाशकारीत्यर्थः ॥ **सिद्धिरिति** । ततश्च प्राप्तिरूपः सन्निकर्षो नापेक्षित इत्यर्थः ।

च० — **चक्षुर्गत्वा नार्थेनेति** । चक्षुःपक्षकं स्वगमनाधीनार्थानुयोगिकसंयोगप्रतियोगित्वाभाव-साध्यकमनुमानमभिप्रैति ।

**सु० — अत्रोच्यते । विषयकरणयोर्योग्यतामात्रमुपादाय सन्निकर्षापाकरणं किं सर्वत्रोत नयन एवेति वक्तव्यम् । न प्रथमः । अप्राप्तैरेव कुठारादिभिः काष्ठादौ छिदाद्युदयप्रसङ्गात् । घ्राणरसनस्पर्शनैरप्राप्तैरेव गन्धाद्यवबोधोदयापत्तेश्च । तथा च योग्यतावदन्वयव्यतिरेकसिद्धा प्राप्तिरपि क्रियोत्पादोपयोगिनी । न द्वितीयः । विशेषकारणाभावात् । योग्यताया अन्वय-व्यतिरेकदर्शनात्प्राप्तेश्चानुपलम्भादिति चेन्न चक्षुषोऽपि करणत्वेन्द्रियत्वाभ्यां प्राप्त्युपलम्भात् ।**

**नन्वत्र किं गोलकं पक्षीक्रियते उत तदतिरिक्तं चक्षुः । आद्ये प्रमाणबाधः । द्वितीये त्वाश्रयासिद्धिरिति चेन्न । तत्रापि गोलकपक्षीकारे सिद्धसाधनम् । अन्यत्राश्रयासिद्धिरिति वक्तुं शक्यत्वात् । अथ विशेषं विहाय रूपदर्शनानुमितं करणमात्रं पक्षीक्रियत इति ब्रूषे । समं ममापि । अत एव गोलकातिरिक्तमपि तत्सेत्स्यति । सन्निकर्षश्च प्रत्यासत्तिमात्रं विव-क्षितम् ; न संयोगादिरिति न शब्दादिभिर्व्यभिचारः ।**

शे० — **अत्रोच्यत इति** । यद्यपि नयन एव सन्निकर्षापाकरणान्न ततः प्रथमपक्षप्रसक्तिस्तथा-ऽपि यद्याश्रिता योग्यतेत्याद्युपक्रमात्तत्प्रसक्तिरिति ध्येयम् । आद्येऽपि करणमात्रे प्राप्त्यभावोऽभिमतः किंवा ज्ञानकरण एवेति विकल्पं मनसि निधायाद्यं प्रत्याह **अप्राप्तैरेवेति** । द्वितीयं प्रत्याह **घ्राणेति** ॥ **तथा चेति** । ततश्च सन्निकर्षवादिनाऽतिप्रसङ्गपरिहाराय योग्यताया इव योग्यतावादिनाऽप्युक्ताति-प्रसङ्गपरिहाराय प्राप्तेरप्यावश्याभ्युपेयत्वात्कारणत्वग्राहकान्वयव्यतिरेकयोरप्युभयत्र तौल्येन योग्यता-प्राप्त्योरगृह्यमाणविशेषत्वाद्योग्यतैव कारणं न प्राप्तिरित्यर्धजरतीयाश्रयणमयुक्तमिति भावः । विशेष-

कारणमाशङ्कते **योग्यताया इति** ॥ **प्राप्तेश्चानुपलम्भादिति** । प्राप्तेरभावेन तदन्वयव्यतिरेकयोरनुपलब्धेरित्यर्थः । काचाभ्रपटलाद्यन्तरितोपलब्ध्या व्यभिचारादिति भावः । प्राप्तेरभावेनान्वयव्यतिरेकयोरसिद्धिं वदन्प्रष्टव्यः किं प्राप्त्यभावस्तत्साधकप्रमाणाभावात्किं वोक्तबाधकसद्भावादिति विकल्पं मनसि निधायाद्यं दूषयति **न चक्षुषोऽपीति** । तथा च चक्षुः प्राप्यार्थग्राहकं करणत्वादिन्द्रियत्वाच्च त्वगादिवदित्यनुमानद्वयस्य प्राप्तौ प्रमाणत्वान्न प्रमाणाभावेन चक्षुषः प्राप्त्यनुपलम्भो वक्तुं शक्यत इति भावः ॥ **बाध इति** । गोलकस्य विषयसन्निकर्षाभावस्य प्रत्यक्षादिप्रमाणैर्निश्चितत्वादित्यर्थः । **आश्रयासिद्धिरिति** । मानाभावेन गोलकातिरिक्तचक्षुष एवासिद्धेरित्यर्थः ॥ **तवापीति** । चक्षुरप्राप्यार्थप्रकाशकमिति त्वदीयप्रयोगेऽपीत्यर्थः ॥ **सिद्धेति** । गोलकस्य विषयाप्राप्तेर्मयाऽप्यभ्युपगमादिति भावः ॥ **अन्यत्रेति** । गोलकातिरिक्तचक्षुःपक्षीकार इत्यर्थः । मानाभावेन तदसिद्धेरिति भावः ॥ **विशेषं विहायेति** । गोलकत्वतदतिरिक्तत्वरूपविशेषं विहायेत्यर्थः ॥ **पक्षीक्रियत इति** । तत्पक्षीकारे सिद्धसाधनत्वाद्यप्रसक्तेरिति भावः ॥ **सममिति** । तत्पक्षीकारे बाधाद्यप्रसक्तेरिति भावः ॥ **अत एवेति** । गोलकस्यान्धसाधारणत्वेन रूपदर्शनानुमितकरणत्वानुपपत्तेरेवेत्यर्थः । तथा च गोलकातिरिक्तचक्षुःपक्षीकारेऽपि नाश्रयासिद्धिरिति भावः । ननु वाक्यज्ञानलिङ्गज्ञानादिषु सत्यपि करणत्वे सन्निकृष्टार्थग्राहकत्वाभावाद्व्यभिचारः संयोगसमवाययोरेव सन्निकर्षत्वाद्वाक्यज्ञानस्य वाक्यार्थेन लिङ्गादिज्ञानस्य लिङ्गादिना संयोगसमवाययोरसम्भवेन सन्निकर्षाभावादित्यतोऽतिप्रसङ्गभञ्जकं नियामकं प्रत्यासत्तिपदाभिधेयं सन्निकर्ष इत्युच्यते संयोगादेरपि सन्निकर्षत्वेन विवक्षायामेतदेव निमित्तम् । तथा च वाक्यज्ञानस्य वाक्यार्थेन संयोगसमवाययोरभावेऽपि संसर्गधर्मकपदार्थवाचिपदसमुदायात्मकवाक्यविषयत्वस्य लिङ्गादिज्ञानस्य च लिङ्गादिना संयोगादेरभावेऽपि तद्व्याप्यविषयत्वादेश्चातिप्रसङ्गभञ्जकस्य सन्निकर्षत्वसम्भवेन वाक्यज्ञानादेरपि सन्निकृष्टार्थग्राहकत्वान्न तत्र करणत्वहेतोर्व्यभिचार इत्याह **सन्निकर्षश्चेति** । शब्दादिभिरित्यत्र शब्दशब्दो वाक्यपरः तज्ज्ञानस्योपलक्षकः शब्दस्याकरणत्वादिति द्रष्टव्यम् ।

**स०** — यद्यपि नयन एव परेण सन्निकर्षनिराकरणान्न विकल्पावकाशः । तथापि 'यद्याश्रिता योग्यते'त्याद्युपक्रमवाक्यादत्र प्रथमपक्षलाभः । आद्येऽपि करणमात्र एव प्राप्त्यभावोऽभिप्रेतः किंवा ज्ञानकरणे, इति विकल्प्य आद्यं निराह **नेति** । द्वितीये त्वाह **घ्राणेति** ॥ **करणत्वेन्द्रियत्वाभ्यामिति** । अनेन चक्षुः सन्निकृष्टार्थग्राहकम् करणत्वात् इन्द्रियत्वाच्च इत्यनुमानमुक्तं भवति । अस्तु गोलकातिरिक्तं चक्षुः पक्षः । न चाश्रयासिद्धिः । रूपदर्शनानुमानेन तस्य गोलकातिरिक्तत्वसिद्धिरित्याह **अत एवेति** । ननु शब्दादिग्राहकश्रोत्रादौ करणत्वेन्द्रियत्वसद्भावेऽपि संयोगादिरूपप्रत्यासत्त्यभावात् व्यभिचार इत्यत आह **सन्निकर्षश्चेति** । यद्वा ननु अनुमानस्य शब्दस्य वा अनुमितिशब्दज्ञानकरण-

त्वेऽपि सन्निकृष्टार्थग्राहकत्वाभावात् तत्र व्यभिचार इत्यत आह **सन्निकर्षश्चेति** । तथा च करणत्वानुमानस्यैव व्यभिचारपरिहारार्थमयं ग्रंथ इति भावः । व्यभिचारपरिहारस्तु अनुमानादावपि व्याप्त्यादिरूपसन्निकर्षसद्भावात् साध्यस्यापि सत्त्वेनेति भावः ।

**प०** — अनुमानेन **चक्षुषः** प्राप्यकारित्वं सिसाधयिषुर्दृष्टान्तसिद्ध्यर्थं विकल्पमुखेन सिद्धान्तयति **अत्रोच्यत इत्यादिना** । विशेषकारणाभावोऽसिद्ध इत्याशङ्कते **योग्यताया इति** ॥ **अनुपलम्भादिति** । सान्तरग्रहणादिना प्राप्तेः प्रत्यक्षतो दर्शनादिति भावः । अनुमानाभ्यामस्त्युपलम्भ इत्याह **चक्षुषोऽपीति** । कुठारादिवत् घ्राणादिवदिति दृष्टान्तसंभवादिति भावः ॥ **प्रमाणेति** । प्रत्यक्षबाध इत्यर्थः । **तवापीति** । चक्षुरप्राप्यार्थप्रकाशकमित्यनुमानप्रयोक्तुरपीत्यर्थः । **अस्तु** वा गोलकातिरिक्तं चक्षुः पक्षः । **न चाश्रयासिद्धिः** । रूपदर्शनानुमानेन तस्य गोलकातिरिक्तत्वसिद्धेरित्याशयेनाह **अत एवेति** । त्वदनुमाने मदनुमाने च गोलकमादाय साध्यपर्यवसाने सिद्धसाधनबाधयोरापत्तेरेवेत्यर्थः । आगमानुमानयोः स्मृतिप्रत्यभिज्ञानालौकिकप्रत्यक्षजनकेन्द्रिययोश्च करणत्वेन्द्रियत्वहेतोरव्यभिचाराय सन्निकर्षशब्दार्थमाह **सन्निकर्षश्चेति** ॥ **शब्दादिभिरिति** । शब्दानुमानस्मृतिप्रत्यभिज्ञानालौकिकप्रत्यक्षजनकैरित्यर्थः । तत्र शक्तिव्याप्तिसंस्कारयोगजधर्मादिरूपप्रत्यासत्तेर्भावादिति भावः ।

---

**या०** — विशेषकारणं शङ्कते ॥ **योग्यताया इति** ॥ **अनुपलम्भादिति** । अप्रमाणिकत्वादित्यर्थः । अत एव तत्रानुमानद्वयं प्रमाणमस्तीत्याह **करणत्वेन्द्रियत्वाभ्यामिति** । चक्षुः स्वसन्निकृष्टार्थप्रकाशकं करणत्वादिन्द्रियत्वाच्च त्वगादिवदिति प्रयोगो द्रष्टव्यः ॥ **तत्रापीति** । चक्षुरप्राप्यार्थप्रकाशकमिति त्वदीयप्रयोगेऽपीत्यर्थः ॥ **अत एवेति** । रूपदर्शनलक्षणलिङ्गादेवेत्यर्थः । गोलकस्यान्धसाधारण्यात् रूपदर्शनेन गोलकातिरिक्तमेव चक्षुः सेत्स्यतीति भावः । सन्निकृष्टार्थप्रकाशकमिति साध्ये सन्निकर्षो यदि संयोगसमवायरूपः साक्षात्सम्बन्धो विवक्षितस्तदा शब्दानुमानोपमानादिकरणेषु करणत्वहेतोर्व्यभिचारः । तेषु स्वविषयैरुक्तसन्निकर्षासम्भवादत आह **सन्निकर्षश्चेति** । सन्निकर्षमात्रं च शब्दे तत्प्रतिपादकत्वरूपं लिङ्गज्ञाने तद्व्याप्यलिङ्गविषयकत्वमित्यादिरूपमस्त्येवेति न व्यभिचार इति भावः ।

**श्री०** — **सर्वत्र** करणमात्रे ॥ **योग्यताया इति** । प्राप्तिं वदतां पक्षेऽपीत्यर्थः । अनुपलम्भात् केनापि प्रमाणेनेति शेषः ॥ **चक्षुष इति** । तथा च चक्षुः प्राप्यप्रकाशकं करणत्वात्कुठारवदिन्द्रियत्वात्त्वगादिवदित्यर्थः ॥ **बाध इति** । गोलकस्य स्वस्थान एव सत्त्वेन प्राप्तेरभावाद्बाध इत्यर्थः ॥ **तवापीति** । चक्षुर्गत्वा नार्थेन संबध्यत इत्यनुमान इत्यर्थः । **अन्यत्र** तदतिरिक्तचक्षुःपक्षीकार

इत्यर्थः । अत एव अनुमितत्वादेवेत्यर्थः । तत् चक्षुः । गोलकस्वरूपत्वे अनुमितत्वमेव न स्यात् । तस्य प्रत्यक्षसिद्धत्वादिति भावः । ननु करणत्वेन प्राप्त्यनुमाने यदि प्राप्तिः संयोगरूपा तथा च संयोगेन प्राप्यप्रकाशकमित्यर्थः स्यात्तदा शब्दग्राहके श्रोत्रे व्यभिचारः । तत्परिहाराय यदि समवायरूपा तर्हि त्वगादौ व्यभिचारः स्यादत आह सन्निकर्षश्चेति । शब्दादिभिः शब्दग्राहकश्रोत्रादिभिः ।

**सु०— का चेयं योग्यता यन्मात्रादसन्निकृष्टमपि चक्षुः प्रकाशयेत् । यदि रूपविशेषादिरूपा तदाऽतीतानागतयोरपि तद्भावाच्चाक्षुषतापत्तिः । सन्निकर्षार्थं खलु वर्तमानताभ्यर्थनम् । सन्निकर्षस्यान्यथासिद्धौ प्रत्यभिज्ञायां तत्तांशस्य चक्षुषाऽवभासनात् स चेदनपेक्षितः, किं तदा वर्तमानतया । अथ वर्तमानताऽपि रूपादिवद्योग्यतान्तर्गता, तदा प्रत्यभिज्ञा न सिध्येत् । कुड्यादिव्यवहितप्रतीतिप्रसङ्गश्च । प्राप्तिप्रतिघातकं हि कुड्यादिव्यवधानमिति प्राप्त्यर्थं तदभावोऽन्वेषणीयः स्यात् । सा यदि नेष्यते तदा कुड्यादिकं कस्यापकुर्यात् । आवरणाभावोऽपि योग्यतेति चेत् । न । कुड्य(ा)परभागावस्थितेनाप्यग्रहणप्रसङ्गात् । अथ नयनविषययोर्मध्ये निबिड(ावयव)द्रव्याभावो विवक्षित इति चेत् । स्फटिकाद्यन्तरितानुपलब्धिप्रसङ्गात् । अस्वच्छद्रव्याभावो विवक्षित इति चेत् । तथाऽप्यव्यवहितदूरदर्शनापत्तिरेव । अथ क्षणभङ्गपरिणामावाश्रित्य तथाभूतस्योत्पादानुत्पादौ एव योग्यताऽयोग्यते मन्यसे, तदा सोऽर्थः कदाचित्सर्वैरुपलभ्येत कदाचिन्न केनापि । दृष्टनिबन्धनोऽपि तद्भेदोऽस्तीति चेन्न । प्रमितसन्निकर्षपरित्यागेनाप्रमितानेककल्पनस्यानुचितत्वात् ।**

शे० एवं सन्निकर्षकारणतायाः प्रमितत्वान्न तदङ्गीकारे गौरवमित्युपपादितम् । इदानीं योग्यतावादिन एव गौरवमप्रमितानेककल्पनादित्याशयवानाह का चेयमिति । रूपविशेषो महत्त्वसमानाधिकरणमुद्भूतरूपम् । आदिपदेन महत्त्वसमनाधिकरणोद्भूतरूपस्पर्शपरिग्रहः तेन महत्त्वसमानाधिकरणोद्भूतरूपस्पर्शरूपा योग्यतेत्युक्तं भवति । तद्भावान्महत्त्वसमानाधिकरणोद्भूतरूपस्पर्शरूपयोग्यतायाः सत्त्वादित्यर्थः । ननु विषयस्यापि लौकिकसाक्षात्कारकारणत्वादतीतादेरर्थस्य चासत्त्वात्कथं चाक्षुषत्वापादनमित्यतो भवेदेवं यदि विषयस्य कारणत्वं स्यात् । न चैतदस्ति । सन्निकर्षजनकत्वेन तस्यान्यथासिद्धत्वादित्याशयवानाह **सन्निकर्षार्थं हीति** । ननु च विषयस्य कारणत्वमेवास्तु किं सन्निकर्षस्यान्यथासिद्धिकल्पनयेत्यतः प्रत्यभिज्ञायां तत्तांशस्यावर्तमानस्य चाक्षुषसाक्षात्कारदर्शनेन व्यभिचारान्न विषयस्य साक्षात्कारकारणत्वमित्याशयवानाह **सन्निकर्षस्येति** । ननु च विषयस्येव तत्स-

न्निकर्षस्यापि तत्राभावात्त्वन्मतेऽपि कथं तस्य चाक्षुषत्वमित्यत उक्तं **सन्निकर्षस्येति** । संयोगादिरूपसन्निकर्षस्य विषयसत्त्वसापेक्षत्वेन विषयाभावे तदसम्भवेऽपि संस्कारस्य विषयसत्त्वं विनाऽपि सम्भवेनान्यथ सिद्धत्वात् । प्रत्यभिज्ञायां च तत्तांशेन संस्कारस्यैव सन्निकर्षत्वाङ्गीकारान्न मन्मते तत्साक्षात्कारानुपपत्तिरिति भावः । न च लौकिकसाक्षात्कारावच्छेदेन विषयस्य कारणत्वाभ्युपगमान्न व्यभिचार इति वाच्यम् । प्रत्यभिज्ञाया अपि षोढाप्रत्यासत्त्यन्यतमप्रत्यासत्तिजन्यत्वरूपलौकिकत्वात् । ज्ञानस्य निरंशत्वेन तत्तांशे लौकिकत्वं नेत्यस्यापि वक्तुमशक्यत्वात् । अस्त्वेवं सन्निकर्षजनकत्वेन विषयस्यान्यथासिद्धिस्तथाऽपि तादर्थ्येनैव तस्यापेक्षितत्वात्कथमतीतादेश्चाक्षुषत्वापादनमित्यतः सन्निकर्षकारणत्वपक्षे तज्जनकतया विषयसत्त्वस्यावश्यकत्वेऽपि योग्यतामुपादाय सन्निकर्षकारणत्वं निराकुर्वतस्तव मते तस्यानपेक्षितत्वेन तदर्थं विषयसत्त्वस्याप्यनपेक्षितत्वादुक्तातिप्रसङ्गतादवस्थ्यमेवेत्याशयेनाह **स चेदिति** ।

**अथेति** । तथा च वर्तमानताविशिष्टरूपविशेषादिरूपयोग्यताया एवाभावान्नातीतादेश्चाक्षुषत्वप्रसङ्ग इति भावः ॥ **न सिध्येदिति** । वर्तमानताविशिष्टरूपविशेषादिरूपयोग्यतायास्तत्राप्यभावादिति भावः ॥ **कुडयादीति** । विशिष्टयोग्यतायास्तत्रापि सत्त्वादिति भावः । ननु कुडयादिना व्यवधायकेन प्रतिबन्धनान्न तद्व्यवहितार्थप्रतीतिप्रसङ्ग इत्यतो व्यवधायकं न सत्त्यैव कार्यविरोधि । तथात्वे तस्मिन्सति सर्वथा कार्याभावप्रसङ्गात् । किन्तु प्राप्तिविघातकत्वेनैव । तथा च प्राप्तेः कारणत्ववादिपक्षे ज्ञानकारणीभूतप्राप्तिविघातकतया कुडयादेर्व्यवधायकस्य प्रतिबन्धकत्वोपपत्तावपि तदकारणत्ववादिमते योग्यताविघटकत्वाभावेन प्रतिबन्धकत्वानुपपत्तेर्व्यवहितप्रतीतिप्रसङ्गो दुर्वार एवेत्याह **प्राप्तिविघातकं हीति** ॥ **आवरणाभावोऽपीति** । तथा चावरणाभावघटितयोग्यताऽभावसम्पादकत्वात्तस्यापकारकत्वमिति न व्यवहितप्रतीतिप्रसङ्ग इति भावः ॥ **कुडयपरभागेति** । तत्रावरणाभावघटितयोग्यताया असत्त्वादिति भावः । न च कुड्यादेरकुड्यपरभागस्थितं प्रत्यावरणत्वं नाप्यावृतत्वमर्थस्येति युक्तस्तं प्रति प्रकाश इति वाच्यम् एकस्यैव कुडयादेरावरणत्वानावरणत्वयोरेकस्यैवार्थस्यावृतत्वानावृतत्वयोश्च विरुद्धत्वेनासम्भवात् । ननु यत्र क्वचित्कुडयादिसत्त्वे न प्रतिबन्धकं येनोक्तातिप्रसङ्गः; किन्तु ग्राह्यग्राहकयोरर्थनयनयोर्मध्ये देश एव । न चैवं कुडयादिव्यवहितपर्वताद्यग्रहप्रसङ्गः । ग्राह्याधिकपरिमाणवन्मध्यवर्तिनः कुडयादेः प्रतिबन्धकत्वादित्यभिप्रेत्य शङ्कते **अथेति** ॥ **स्फटिकादीति** । तत्रापि ग्राह्यग्राहकयोर्मध्ये निबिडावयवस्य स्फटिकादेर्द्रव्यस्यैव सत्त्वेन तदभावाभावादिति भावः ॥ **अस्वच्छेति** । तथा चास्वच्छत्वरूपविशेषणाभावाधत्तस्य निबिडावयवद्रव्याभावस्य सत्त्वात्स्फटिकाद्यान्तरितोपलब्धिः सम्भवतीति भावः । **अव्यवहितेति** । तत्र आवरणाभावघटितोक्तरूपयोग्यतासत्त्वादिति भावः ॥ तथाभूतस्येति । कार्यं प्रतिकुर्वद्रूपस्येत्यर्थः ॥ ननु यद्युक्तरूपस्योत्पाद एव योग्यता तर्हि तस्यार्थस्य सर्वदोपलब्धिप्रसङ्ग इत्यतः स्यादेवं

यदि पदार्थानां स्थिरत्वं स्यान्न चैवम् । क्षणभङ्गपरिणामपक्षाङ्गीकारेण प्रतिक्षणं पदार्थभेदेन कार्यं प्रतिकुर्वद्रूपत्वेनोत्पन्नस्य तत्तत्क्षणमात्रवृत्तित्वेन क्षणान्तरेऽसत्त्वेन सर्वदोपलब्धिप्रसङ्गानवकाशादित्याशयेनोक्तं **क्षणभङ्गपरिणामावाश्रित्येति** । तावता सर्वदोपलब्धिप्रसङ्गानवकाशेपि यदा कार्यं प्रतिकुर्वद्रूपस्योत्पादः तदा कस्यचिदुपलब्धिदशायां सर्वेषामप्युपलब्धिप्रसङ्गः । कस्यचिदनुपलब्धिदशायां तं प्रतिकुर्वद्रूपस्यानुत्पादावश्यम्भावात्सर्वेषामप्यनुपलम्भः स्यादित्याह **तदेति** । ननु पुरुषविशेषं प्रत्येव तथाभूतस्योत्पाद एव योग्यता, पुरुषविशेषं प्रति तथाभूतस्यानुत्पाद एव योग्यतेति दृष्टपुरुषनिबन्धनोऽपि योग्यताभेदोऽभ्युपगम्यते । ततश्चैकेनोपलभ्यतादशायां न सर्वैरुपलभ्यताप्रसङ्ग एकेनानुपलभ्यतादशायां न सर्वैरनुपलभ्यताप्रसङ्ग इति शङ्कते **द्रष्ट्रिति** ॥ **प्रमितेति** । करणत्वेन्द्रियत्वाभ्यां सन्निकर्षस्य साधितत्वादिति भावः । ततश्च तत्परित्यागे प्रमाणविरोधः स्यादिति भावः ॥ **अप्रमितेति** । तथा च तत्कल्पने कल्पनागौरवमिति भावः ।

स० — करणत्वेन्द्रियत्वयोरप्रयोजकत्वमाशङ्क्य तत्परिहारार्थं विकल्पयति **का चेयमिति** । सन्निकर्षार्थत्वं वर्तमानताऽभ्यर्थनस्य कुतः इत्यत आह **सन्निकर्षेति** । संस्कारेण सन्निकर्षस्य अन्यथासिद्धत्वात् संस्कारस्य तदतीतत्वेऽपि संभवात् न वर्तमानत्वं तत्रांशस्येति भावः । अस्तु सन्निकर्षार्थं वर्तमानत्वाभ्यर्थनम् इत्यर्थः । अस्त्वेवमन्यत्र ततः किं प्रकृत इत्यत आह **स चेति** । **अथेत्यादि** । अयं भावः । तथाभूतस्य इन्द्रियालम्बनस्य उत्पादो योग्यता । तथा, तथाभूतस्य इन्द्रियानालम्बनस्य उत्पाद एवायोग्यता । नन्वेवं सर्वदोपलब्धिप्रसङ्ग इत्यत उक्तम् **क्षणभङ्गपरिणामावाश्रित्येति** । ननु कञ्चित्प्रतीन्द्रियालम्बनस्योत्पादो योग्यता कञ्चित्प्रतीन्द्रियानालम्बनस्योत्पादो योग्यता अतो न सर्वेषां कदाचित् उपलब्धिः स्यात् इत्यत आह **द्रष्ट्रिति** ।

प० — **रूपविशेषेति** । महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वं वा तादृशस्पर्शवत्त्वं वेत्यर्थः । तयोरवर्तमानत्वान्नोक्तदोष इत्यत आह **सन्निकर्षार्थमिति** । ततश्च किमित्यत आह **सन्निकर्षस्येति** । जन्मनीति शेषः । वर्तमानताया इति योज्यम् । वर्तमानतायाः सन्निकर्षजन्मन्यन्यथासिद्धौ सन्निकर्षजननोपक्षीणत्वे सति किं वर्तमानतयेत्यन्वयः । यथाकथञ्चिदपेक्षिता खल्वित्यत आह **स चेदनपेक्षित इति** । सन्निकर्षस्यानपेक्षायां युक्तिमाह **प्रत्यभिज्ञायामित्यादि** । आवरणाभावोऽपीत्यस्य विषयसन्निधौ आवरणाभावो वा नयनविषयमध्ये तदभावो वा । आद्य आह **कुडय(डया)परभाग इति** । नयनकुडयमध्ये स्थितेत्यर्थः । द्वितीयं शङ्कते **अथेति** ॥ **अव्यवहितेति** । अस्वच्छनिबिडद्रव्याव्यवहितेत्यर्थः ॥

**क्षणभङ्गेति** । बौद्धरीत्या प्रतिक्षणं भङ्गः । साङ्ख्यरीत्या प्रतिक्षणं परिणामश्चेति पक्षौ उपेत्येत्यर्थः । **कदाचित्सर्वैरिति** । उत्पत्तिवेलायां सर्वैः । अनुत्पाददशायां न केनापीत्यर्थः ॥ **द्रष्टृीति** । येनोपलभ्यते तं प्रति योग्यता नान्यं प्रतीत्येवं द्रष्टृभेदेन योग्यताभेद इत्यर्थः । तथाच नोक्तदोष इति भावः ॥ **प्रमितेति** । करणत्वेन्द्रियत्वरूपप्रमाणावगतेत्यर्थः ।

**या०— यदि रूपविशेषादीति** । महत्त्वसमानाधिकरणोद्भूतरूपरूपावा, तादृशस्पर्शादिरूपा वेत्यर्थः । ननु विषयवर्तमानत्वस्यापि साक्षात्कारजनकत्वान्नोक्तदोष इत्यत आह **सन्निकर्षार्थमिति** । लौकिकसन्निकर्षार्थमित्यर्थः । ननु साक्षात्कारं प्रति वर्तमानत्वस्य जनकतैवास्तु किं सन्निकर्षोपक्षीणत्वकल्पनयेत्यत आह **सन्निकर्षस्येति** । तथा च तत्तांशस्यावर्तमानत्वेऽपि साक्षात्कारदर्शनाद्व्यभिचारेण न वर्तमानत्वस्य तज्जनकत्वं युक्तमिति भावः । ननु तत्र वर्तमानत्वाभावे सन्निकर्षस्याप्यभावात्कथं साक्षात्कारोत्पत्तिरित्यत उक्तम् **सन्निकर्षस्येति** । संस्काररूपसन्निकर्षस्य । **अन्यथा** वर्तमानत्वाभावेऽपि सिद्धावित्यर्थः । तथा चालौकिकेनैव सन्निकर्षेण तत्र साक्षात्कारजननम् । वर्तमानत्वं च लौकिकसन्निकर्षार्थमेवाभ्यर्थनीयमित्युक्तमिति भावः । न च लौकिकसाक्षात्कार एव विषयवर्तमानत्वस्य जनकत्वकल्पनान्नोक्तव्यभिचार इति वाच्यम् । प्रत्यभिज्ञाया लौकिकत्वात् । ज्ञानस्य निरंशत्वेन तत्तांशे अलौकिकत्वं तस्या इत्यपि वक्तुमशक्यत्वादित्याशयात् ।

---

**श्री०— तद्भावात्** । महत्त्वसमानाधिकरणोद्भूतरूपविशेषादिरूपयोग्यतायाः सत्तादशायां भावादिदानीं चाक्षुषतापत्तिरित्यर्थः । नन्वतीतानागतयोर्वर्तमानत्वाभावाच्चक्षुषश्च वर्तमानमात्रग्राहकत्वनियमान्न चाक्षुषताऽऽपत्तिरत आह **सन्निकर्षार्थमिति** । अन्यथासिद्धौ योग्यतयेति शेषः । प्रोच्यमानायामिति च शेषः । योग्यतामुपादाय सन्निकर्षापाकरणपक्ष इति यावत् । तथा च यथा तत्तांशस्तद्देशकालसंबन्धरूपोऽतीतोऽपि प्रत्यभिज्ञायां चक्षुषावभासते तद्वच्चाक्षुषतापत्तिरिति संबन्धः । **स** सन्निकर्षः । **अथेति** । ततश्चातीतादौ योग्यताया एवाभावान्न चाक्षुषत्वमित्यर्थः ॥ **तदेति** । वर्तमानत्वाभावात्तत्तांशस्येति भावः । ननु वर्तमानताघटितयोग्यतायाः सत्त्वेऽपि न व्यवहितप्रतीतिः कुड्यादिरूपव्यवधानस्यैव सत्त्वादिति चेत्तत्राह **प्राप्तीति** । **तदभावः** व्यवधानाभावः । **सा** प्राप्तिः ॥ **आवरणेति** । तत्र कुड्यादेरेवावरणस्य सत्त्वादिति भावः । प्रसङ्गात् तं प्रत्यपि वस्तुत आवरणभूतकुड्यादेरनपायादित्यर्थः । **अन्तरितं** व्यवहितम् । तथा च निबिडावयवं स्फटिकमेव तत्रास्तीति हृदयम् ॥ **अस्वच्छेति** । स्फटिकादेर्निबिडावयवत्वेऽपि स्वच्छत्वात्तदन्तरितोपलब्धिर्युक्तेत्यर्थः ॥ **तथाऽपीति** । अव्यवहितपक्ष्मादिदर्शनापत्तिः । तथा यत्र किञ्चिद्वस्तु दूरतस्तिष्ठति मध्ये किमपि व्यवधायकं नास्ति तत्र नयनविषययोर्मध्ये निबिडावयवद्रव्याभावोऽस्तीत्यर्थः । आश्रित्येत्यतःपूर्वं बौद्धसाङ्ख्यमते आश्रित्येति शेषः ॥ **तदेति** । यदि

तथाभूतस्य क्षणिकस्य परिणामिनो वा पदार्थस्योत्पाद एव योग्यता तर्हि योग्यत्वात् सर्वेषामप्युपलब्धिः स्यात् । यदि तथाविधस्यानुत्पाद एवायोग्यता तर्ह्ययोग्यत्वान्न केनाप्युपलभ्येत । तथाच कस्यचित्प्रतीतिः कस्यचिन्नेति व्यवस्था न युक्तेति हृदयम् । **तद्भेदः** योग्यताभेदः । तथा चोत्पन्नोऽपि तस्यैव द्रष्टुर्योग्यो नान्यस्येति न सर्वोपलब्धिरित्यर्थः ॥ **अनेकेति** ॥ द्रष्टृनिबन्धनभेदोपेतानेकयोग्यतेत्यर्थः ।

सु०— **किञ्चासन्निकृष्टप्रतीतौ च आसन्नसन्निकृष्टविप्रकृष्टयोर्वैशद्यावैशद्ये न स्याताम् । अस्माकं तु नयनरश्मयः सम्यगासन्नेन सन्निकृष्यन्ते विप्रकृष्टेन त्वसम्यक् प्रदीपरश्मय इवेति युक्ते प्रतीतेर्वैशद्यावैशद्ये । काचाद्यन्तरितोपलब्ध्या किमप्राप्यप्रकाशकत्वं कल्पयामः किंवा काचादीनां प्राप्तिप्रतिबन्धकत्वाभावम् । आद्यः प्रमाणविरुद्धोऽनेकातिप्रसङ्गपराहत इति द्वितीय एवाश्रयणीयः । तथात्वे काचादेर्व्यूहान्तरतापत्ति(त्ते)रिति चेत् । (न) जलानलव्यतिभेदेऽपि घटादेस्तदभावात् । तत्रापि सूक्ष्मतरतदभ्युपगमेऽत्रापि साऽस्तु । सान्तरग्रहणमप्यसन्निकृष्टस्य ग्रहणं चेदसिद्धम् । सान्तर इति ग्रहणं चेत्प्रदीपेऽनैकान्तिकम् ।**

**यथा खलु दीपो रश्मिभिरर्थसन्निकृष्टोऽपि स्वरूपापेक्षया सान्तर इति प्रतीयते तथा चक्षुरप्यधिष्ठानापेक्षयेति किमनुपपन्नम् । पृथुतरग्रहणमपि नयनरश्मीनामुन्मत्तककुसुमवत्पृथ्वग्रतयोपपत्स्यते । अप्राप्तौ त्वल्पस्यापि ग्रहणं न स्यात् । प्राप्तौ दिग्विशेषसन्देहो न स्यादिति चेत् (न) । अप्राप्तौ सर्वत्र सन्देहस्स्यात् । सन्देहादपि च निचयो महीयान् । तत्र सन्देह आगन्तुकं कारणान्तरं कल्पयिष्यति । युगपद्ग्रहणाभिमानस्तु तेजसः शीघ्रगामितानिबन्धनो भ्रम एव । प्राप्तेः प्रमाणसिद्धत्वात् ।**

शे०— आसन्नसन्निकृष्टविप्रकृष्टयोरित्येव पाठः । सन्निकृष्टपदं मध्येदीपिकान्यायेनोभयत्र सम्बध्यते । तथा चेन्द्रियसन्निकृष्टयोः समीपवर्तिदूरवर्तिनोरित्यर्थः ॥ **न स्यातामिति** । आसन्नसन्निकृष्टविप्रकृष्टयोर्योग्यतायां विशेषाभावादिति भावः । तवापि तर्ह्यासन्नसन्निकृष्टविप्रकृष्टयोरिन्द्रियसन्निकर्षाविशेषात्प्रतीतेर्वैशद्यावैशद्ये न स्यातामित्यत आह **अस्माकं त्विति** । तर्ह्यासन्नसन्निकृष्टविप्रकृष्टयोर्योग्यताया विचित्रत्वात्तदुपपत्तिरित्यत आसन्नसन्निकृष्टविप्रकृष्टयोरिन्द्रियसन्निकर्षस्य सम्यक्त्वासम्यक्त्वरूपविशेषाश्रयणमुचितम् । आसन्नसन्निकृष्टविप्रकृष्टयोः प्रदीपरश्मिसन्निकर्षस्य सम्यक्त्वासम्यक्त्वरूपविशेषसद्भावदर्शनेन सन्निकर्षवैचित्र्यस्य सम्भावितत्वात्, न तु रूपविशेषादिरूपयोग्यतायामासन्नसन्निकृष्टविप्रकृष्टयोर्वैचित्र्यम् । तथा क्वाप्यदृष्टत्वेन तत्कल्पनस्यासम्भावनापराहतत्वादित्याशयवतोक्तं **प्रदीपरश्मय इवेति** । उक्तबाधकसद्भावादिति द्वितीयं दूषयन्काचाभ्रपटलाद्यन्तरितोपलब्ध्यनुपपत्तिं तावत्परिहरति **काचादीति** ॥ **आद्य इति** । उक्तानुमानद्वयरूपप्रमाणविरुद्धः, अती-

तादेश्चाक्षुषत्वापत्तिः, कुड्यादिव्यवहितप्रतीतिप्रसङ्गोऽव्यवहितदूरदर्शनापत्तिश्चेत्येवंरूपानेकातिप्रसङ्गपराहत इत्यर्थः ॥ **द्वितीय इति** । काचादीनां प्राप्तिप्रतिबन्धकत्वाभाव इत्यर्थः । ननु काचादेः प्राप्तिप्रतिबन्धकत्वाभावे इन्द्रियरश्मयः काचादिकं भित्वाऽर्थेन सन्निकृष्यन्त इति वाच्यम् । न चैतत्सम्भवति । तथा सति काचादेः सच्छिद्रत्वापातादित्यभिप्रेत्य शङ्कते **तथात्व इति** । अत्र व्यूहशब्दः समूहपरः । 'समूहनिवहव्यूहसंदोहविसरव्रजाः' इत्यमरोक्तेः । अन्तरशब्दश्च छिद्रवचनः । 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयं विना बहिरवसरमध्येऽन्तरात्मनि च' इति वचनात् । व्यधिकरणश्च बहुव्रीहिः । व्यूहः समूहोऽन्तराणां छिद्राणां यस्मिन्नसौ व्यूहान्तरस्तस्य भावस्तत्ता तदापत्तिरित्यर्थः । बहुच्छिद्रत्वापत्तिरिति यावत् । व्यूहविशेषत्वापत्तिरित्यर्थः । अन्तरशब्दस्य विशेषवचनत्वात्सच्छिद्रत्वापत्तिरिति तु तात्पर्यमित्याहुः । व्यूहशब्दश्छिद्रपरः । ततश्च व्यूहश्छिद्रमन्तरे मध्ये यस्यासौ तथोक्तः, तत्त्वापत्तिरित्यर्थ इत्यन्ये । काचादिकं बहुच्छिद्रवत्, स्वव्यवहितार्थप्राप्त्यप्रतिबन्धकत्वात् । यद्यत्स्वव्यवहितार्थप्राप्त्यप्रतिबन्धकं तद्बहुच्छिद्रवद्यथा संमतमिति सामान्यव्याप्तिमूलकमभिप्रेतमनुमानं व्यभिचारेण दूषयति **जलानलेति** ॥ **व्यतिभेदः** संश्लेषः । **तदभावात्** बहुच्छिद्रवत्त्वाभावादित्यर्थः । घटाधोभागसंश्लिष्टाग्नेर्घटान्तर्गतजलश्लेषदर्शनेन घटादेः स्वव्यवहितस्वान्तर्गतजलेनाग्नेः प्राप्त्यप्रतिबन्धकत्वेऽपि बहुच्छिद्रवत्त्वाभावात्तत्र व्यभिचार इति भावः । यद्वा व्यतिभेदो विरुद्धक्रियासन्निपातः । स च घटान्तर्गतजलस्याधःप्रस्रवणम् । अधःस्थितस्याग्नेरूर्ध्वं गमनमित्येवंरूपो बोध्यः । तथा च घटादेः प्राप्तिप्रतिबन्धकत्वेऽन्तर्वर्तमानजलस्याधःप्रस्रवणानुपपत्त्याऽधःस्थिताग्नेरूर्ध्वगमनानुपपत्त्या च घटादेर्न प्राप्तिप्रतिबन्धकत्वमिति यद्यद्व्यवधायकं सत्प्राप्त्यप्रतिबन्धकं तद्बहुच्छिद्रवदिति व्याप्तेर्घटादौ व्यभिचार इत्यर्थः । ननु घटादेरपि बहुच्छिद्रवत्वान्न तत्र व्यभिचारः । न चानुपलम्भबाधः । तत्र छिद्राणां परमसूक्ष्मत्वेनायोग्यतयाऽनुपलम्भसंभवादित्याशङ्कते **तत्रापीति** । एवं तर्हि माऽस्तु व्यभिचारः । सिद्धसाधनत्वादेवानुमानाभासो भविष्यतीत्याशयवानाह **अत्रापीति** ॥ **सेति** । बहुच्छिद्रवत्त्वलक्षणा व्यूहान्तरतेत्यर्थः । परमसूक्ष्मत्वेनायोग्यतया तदनुपलम्भसंभवादिति भावः । सान्तरग्रहणमप्राप्यकारित्वे हेतुरुक्तस्तत्र सान्तरस्य वस्तुनो ग्रहणमिति सान्तरत्वं किं वस्तुविशेषणमभिमतं किंवा सान्तरमिति ग्रहणमिति ज्ञानविशेषणमिति विकल्पं मनसि निधायाद्यमाशङ्क्य दूषयति **सान्तरेति** । अन्तरं व्यवधानं तेन सहितं सान्तरं व्यवहितमित्यर्थः ॥ असन्निकृष्टमिति यावदित्याशयेनोक्तम् **असन्निकृष्टस्येति** ॥ **असिद्धमिति** । तस्यैव साध्यत्वेन साध्यहेत्वोरभेदापत्त्या साध्यावैशिष्ट्यादिति भावः । द्वितीयमाशङ्क्य दूषयति **सान्तरमितीति** । इन्द्रियस्यार्थसन्निकृष्टस्य तत्प्रकाशकत्वेऽर्थेन्द्रिययोः परस्परं व्यवधानाभावादर्थादिन्द्रियस्य व्यवहितत्वेन ज्ञानं न स्यात् । अस्ति चार्थादिन्द्रियं व्यवहितमिति सार्वजनीनः प्रत्ययः । ततो नेन्द्रि-

यस्य प्राप्यप्रकाशत्वम् । ततश्चायं प्रयोगः । चक्षुर्न घटादिप्राप्तिमत्तदपेक्षया व्यवहितमिति गृह्यमाणत्वादिति किल परस्याभिमतम् । न चैतद्युक्तम् । यद्यदपेक्षया सान्तरमिति गृह्यते न तत्तत्प्राप्तिमदित्यनुमानमूलभूतव्याप्तौ प्रदीपेऽनैकान्त्यात् । घटाद्यपेक्षया सान्तर इति गृह्यमाणस्यापि तस्य घटादिप्राप्तिमत्त्वादित्यर्थः ।

नन्वर्थसन्निकृष्टस्य प्रदीपस्य नार्थापेक्षया सान्तर इति ग्रहणं सम्भवतीति हेतोरेवागमनान्न तत्र व्यभिचार इत्यतः सन्निकृष्टत्वेऽपि सान्तरमिति ग्रहणं तत्रोपपादयन्नप्रयोजकत्वमप्याह **यथेति** ॥ **अधिष्ठानापेक्षयेति** । गोलकापेक्षयेत्यर्थः । पृथुतरग्रहणस्य स्वाधिकपरिमाणद्रव्यग्राहिणा त्वगिन्द्रियेणानैकान्त्ये सत्येव सन्निकृष्टार्थग्राहकत्वेऽपि पृथुतरग्रहणोपपत्तेरप्रयोजकत्वमित्याशयेनाह **पृथुतरेति** ॥ **अप्राप्तौ त्वल्पस्यापीति** । त्वगादिषु तथा दर्शनादिति भावः ॥ **प्राप्ताविति** । प्राप्यगृहीते सन्देहादर्शनादिति भावः । **अप्राप्ताविति** । अप्राप्यगृहीते निश्चयादर्शनादिति भावः । ननु च यथाऽप्राप्तिपक्षे बाधकं तथा प्राप्तिपक्षेऽपि बाधकमस्त्येवेति पक्षद्वयस्य साम्यात्कथं भवतोऽपि प्राप्तिपक्षनिश्चय इत्यत आह **सन्देहादपीति** ॥ **महीयानिति** । निष्कम्पप्रवृत्तिहेतुत्वात् । तथा च तदनुपपत्तिः संशयानुपपत्तेर्बलवतीति युक्तः प्राप्यकारित्वनिश्चय इति भावः । तर्हि कथं गत्वा गृहीतेऽर्थे सन्देह इत्यतोऽनभ्यस्तत्वादिरूपदोषान्तरात्स इत्याह **तत्रेति** । शाखाचन्द्रग्रहणहेतुसन्निकर्षस्यायुगपद्भावित्वान्निकटदूरवर्तिनोः शाखाचन्द्रमसोर्युगपद्ग्रहणमसिद्धमेवेति न युगपद्ग्रहणानुपपत्तिदोष इत्याशयवान्कथं तर्हि तद्ग्रहणयोर्यौगपद्याभिमान इत्यतो निमित्तोपदर्शनपूर्वकं भ्रमोऽयमित्याह **युगपदिति** । ननु किं युगपद्ग्रहणाभिमानस्य भ्रमत्वकल्पनया तदनुरोधेन शाखाचन्द्रमसोर्युगपद्ग्रहणमेव किन्न स्यादित्यत आह **प्राप्तेरिति** । युगपद्ग्रहणाभ्युपगमे युगपत्प्राप्तेरुक्तरीत्याऽसत्त्वात्प्राप्तेरकारणत्वं वाच्यम् । न च तद्युक्तम् । करणत्वेन्द्रियत्वाभ्यां चक्षुषः प्राप्यार्थकारितायाः प्रमितत्वेन तद्बाधप्रसङ्गादतो युगपद्ग्रहणानुपपत्तेर्युक्तं तदभिमानस्य भ्रमत्वकल्पनमिति भावः ।

स० — ननु काचादेः प्राप्तेः प्रतिबन्धकत्वाभावे इन्द्रियरश्मयः काचादिकं भित्वा अर्थेन सन्निकृष्यन्त इति वाच्यम् । तच्च न संभवति । तथात्वे काचादेः सच्छिद्रत्वापत्तेरित्यत आह **तथात्वे काचादेरिति** । व्यूहविशेषत्वापत्तिरित्यर्थः । अत्र व्यूहशब्देन समूहो गृह्यते । 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयं विना बहिरवसरमध्येऽन्तरात्मनि च' इति वचनात् अन्तरशब्दः छिद्रपरः । व्यधिकरणबहुव्रीहिश्च कर्तव्यः । तथा च व्यूहः समूहः अन्तराणां छिद्राणां यस्मिन् असौ व्यूहान्तरः । तस्य भावः तत्ता । बहुच्छिद्रत्वापत्तिरिति यावत् । तथा सति घटेऽपि जलस्य अधःप्रस्रवणस्य अग्नेरूर्ध्वगमनस्य दृष्टत्वेन तस्यापि सच्छिद्रत्वाऽपत्तिरित्यभिप्रायेण उत्तरमाह

**जलानलेति** । व्यतिभेदः विरुद्धक्रियासन्निपातः । जलस्य अधःप्रस्रवणाभ्यूर्ध्वगमनरूपविरुद्धक्रिया-सन्निपात इति यावत् । सूक्ष्मतरतदभ्युपगमे सूक्ष्मतरच्छिद्राभ्युपगमे । साऽस्तु व्यूहान्तरता अस्तु इत्यर्थः । सान्तरग्रहणं न स्यादिति दूषणं परिहरति **सान्तरग्रहणमपीति** । **असिद्धमिति** । सन्निकर्षस्य साधित-त्वादिति भावः । **सान्तर इति ग्रहणमिति**। विविक्तत्वेन ग्रहणमित्यर्थः । पृथुतरग्रहणं न स्यादिति दूषणं परिहरति **पृथुतरग्रहणमपीति** । **अप्राप्ताविति** । सर्वस्यापि ग्रहणमेव स्यात् । नाल्पस्यापि ग्रहणमित्यर्थः । **सन्देहःस्यादिति** । कचिन्निश्चयो जायते । सोऽपि न स्यादिति तात्पर्यार्थः । ननु पक्षद्वयेऽपि बाधकसद्भावात् साम्यमेव इत्यत्र आह **सन्देहादपीति** । नन्वेवं कथं निर्णय इत्यात्राह तत्र **सन्देह इति** । निश्चयहेतुसन्निकर्षातिरिक्तकारणमेव नास्तीति भावः ।

**प० — अस्माकमिति** । सन्निकर्षवादिनामित्यर्थः ॥ **प्रमाणेति** । करणत्वेन्द्रियत्वरूपप्रमाण-विरुद्धो योग्यताखण्डनप्रस्तावोक्तैः अतीतानागतयोश्चाक्षुषतापत्तिरित्याद्यतिप्रसङ्गैः पराहत इत्यर्थः ॥ **तथात्व इति** । प्राप्तिप्रतिबन्धकत्वाभावे काचादेः सूक्ष्माणां किञ्चिद्विरलपार्थिवावयवानां पुञ्जविशेषत्वं स्यात् । पार्थिवपदार्थानां किञ्चिद्विरलतया पुञ्जीभूतानां तत्परभागस्थपदार्थप्राप्त्यप्रतिबन्धकत्वस्य दर्शनात् । तथा चावयविद्रव्यरूपकार्यत्वभङ्ग इत्यर्थ इति भावः ॥ **जलानलेति** । यथा घटस्थजलस्य बहिस्स्रवणं घटस्थपदार्थपचनायाधस्तनाग्नेर्घटान्तःप्रवेशनं इत्येवं रूपेण बहिरन्तर्गमनरूपव्यतिषङ्गभेदे घटस्थजलस्याध-स्तनाग्निना तापेऽपोन्तःप्रविष्टव्यतिषङ्गरूपव्यतिभेदे वाऽवयवपुञ्जत्वाभावेनावयविरूपकार्यद्रव्यत्वस्यैव भावादित्यर्थः । सान्तरग्रहणं च प्राप्तिपक्षे न संभवतीति प्रागुक्तदोषमुद्धरति **सान्तरेति** ॥ **सान्तर इति ग्रहणमिति** । सव्यवधान इति ग्रहणं, दूरस्थ इति ग्रहणमिति यावत् । कुत एषा कल्पनेत्यतो अप्राप्तिपक्षे बाधकमाह **अप्राप्तौ त्विति** । कथं तर्हि प्राप्तिपक्षनिश्चय इत्यत आह **सन्देहादपीति** । काचित्कसन्देहानुरोधादप्राप्तिं कल्पयामो वाऽनेकत्र निश्चयानुरोधेन प्राप्तिं कल्पयामो वेति विशये निश्चय-स्यार्थसत्त्वावधारणात्मकत्वेन बहुस्थलीयत्वेन च महत्तमत्वात्तदनुरोधेनान्त्यपक्ष एवोपेयः सन्देहोपपादकं स्वयमेव निश्चयः कल्पयिष्यतीत्यर्थः ॥ **तेजस इति** । सौरालोकादेरित्यर्थः । नयनरश्मीनामपि तेज-स्त्वादिति भावः ॥ **प्रमाणसिद्धत्वादिति** । करणत्वेन्द्रियत्वरूपप्रागुक्तप्रमाणाभ्यां अप्राप्तौ उक्तबाध-कान्यथाऽनुपपत्त्या च सिद्धत्वादित्यर्थः ।

**या० — आद्यः प्रमाणविरुद्ध इत्यादि** । उक्तानुमानरूपप्रमाणविरुद्धः अतीतादेश्चाक्षुषता-पत्तिः, कुड्यादिव्यवहितप्रतीतिप्रसङ्गः, अव्यवहितदूरदर्शनापत्तिः इत्युक्तानेकातिप्रसङ्गपराहत इत्यर्थः । ननु काचादेः प्राप्तिप्रतिबन्धकाभावे विरलावयवसंयोगजपटादिवत् सच्छिद्रत्वं स्यादित्याशङ्कते **तथात्व**

**इति** । अत्र व्यूहशब्देन विरलावयवसंयोगजोऽवयवी पटादिरूपो विवक्षितः । ततश्च व्यूहवत्पटादिवदन्तरमवकाशश्छिद्रं यस्य स तथोक्तस्तद्भावो व्यूहान्तरता सच्छिद्रतेत्यर्थः । केचित्त्वत्र व्यूहशब्देन समूहो ग्राह्योऽन्तरशब्दश्छिद्रपरः । तथा च व्यूहः समूहोऽन्तराणां छिद्राणां यस्मिन्नसौ व्यूहान्तर इति व्यधिकरणो बहुव्रीहिस्तस्य भावस्तत्ता बहुच्छिद्रत्वापत्तिरिति यावदित्याहुः ॥ **जलानलेति** । **व्यतिभेदो** व्यामिश्रणं, संबन्ध इति यावत् । **तदभावाद्** व्यूहान्तरत्वाभावात् । चुल्याद्यवस्थिताग्निसंबन्धघटाद्यन्तर्गतजलेऽधःस्थितानलव्यतिभेदेऽपि न घटादेः सच्छिद्रत्वमित्यर्थः । **व्यतिभेदो** व्यत्यासो विरुद्धक्रियायोग इति यावत् । तथा च घटाद्यन्तर्गतस्य जलस्य बहिर्निस्सरणं बाह्यस्य चालनस्यान्तर्गमनम् । एवं च घटादेर्जलानलविरुद्धक्रियायोगोऽपीत्यर्थ इत्यप्याहुः ॥ **तदभ्युपगम इति** । अत्र तच्छब्देन छिद्रापरपर्यायस्यान्तरस्य तल्प्रत्ययवाच्यतया प्रकृतस्य परामर्शः । अतः सूक्ष्मतरेति विशेषणमुपपन्नमिति ध्येयम् । **सा** व्यूहान्तरता ॥ **सान्तरमितीति** । अत्रान्तरशब्दो व्यवधानपरः । तथा चान्तरेण व्यवधानेन सहितं सान्तरं व्यवहितमिति ग्रहणमित्यर्थः । एवं च चक्षुर्न घटादिप्राप्तिमद्घटाद्यपेक्षया व्यवहितमिति गृह्यमाणत्वादिति सान्तरमिति ग्रहणं प्राप्तिबन्धकं चेदित्याशयः ॥ **प्रदीप इति** । यद्यदपेक्षया सान्तरमिति गृह्यते तत्तद्व्याप्तिमन्न भवतीति सामान्यव्याप्तौ प्रदीपेऽनैकान्त्यम् । प्रदीपस्य घटाद्यपेक्षया सान्तर इति गृह्यमाणस्यापि घटादिप्राप्तिमत्त्वादित्यर्थः । एतेन सान्तरं दूरस्थमिति व्याख्यानमपि निरस्तं वेदितव्यम् । दूरस्थस्य ग्रहणं चेदसिद्धम् । नयनस्य विषयं प्रति गमनाङ्गीकारात् । दूरस्थमिति ग्रहणं चेत्प्रदीपेऽनैकान्त्यादिति । ननु सान्तरमिति गृह्यमाणे सन्निकृष्टत्वकल्पनं विरुद्धम् अतो न प्रदीपे व्यभिचारचोदनं युक्तं, नापि तेन पक्षे साध्याभावशङ्केत्यतो यथा न विरोधस्तथोपपादयति **यथा खल्विति** ॥ **सर्वत्र सन्देह इति** । क्वचिद्देशविशेषे सूर्योदयादिनिश्चयोऽपि जायते स न स्यादित्यर्थः ॥ **सन्देहादपीति** । ततश्च निश्चयपरिक्षयोऽतिशयेनानिष्ट इति भावः । ननु तर्हि तत्र सन्देहोपपत्तिः कथमित्यत आह **तत्र सन्देह इति** । **आगन्तुकम्** इतरसंशयेऽप्यक्लृप्तम् । **कारणान्तरम्** इति अनभ्यस्तदेशत्वादिरूपं दोषमित्यर्थः ॥ **तेजस इति** । नयनरश्मेरित्यर्थः ।

श्री० — **न स्यातामिति** । आपत्रेन सम्यक् सन्निकर्षो विप्रकृष्टेन वस्तुना नेति विवेको न युक्तः । सन्निकर्षाभावस्योभयत्रापि तुल्यत्वादित्यर्थः । ननु प्राप्यप्रकाशकारितापक्षेऽप्यासन्नविप्रकृष्टाभ्यां सन्निकर्षस्याविशिष्टत्वाद्वैशद्यावैशद्ये न स्यातामित्यत आह **अस्माकं त्विति** ॥ **अनेकेति** । 'अत्रोच्यते विषयकरणयोरि'त्युक्तानेकेत्यर्थः । **असिद्धं** सन्निकृष्टग्रहणस्योपपादनादिति भावः ॥ **सान्तर इतीति** । इदं सान्तरं अन्तरेण व्यवधानेन सहितमित्येवं सान्तरत्वेन ग्रहणमित्यर्थः । **अनैकान्तिकं** चक्षुरसन्निकृष्टप्रकाशकम् सान्तर इति गृह्यमाणत्वादित्यनुमान इत्यर्थः । एतदेवोपपादयति । रश्मिभिरित्यनेन

साध्याभावोपपादनम् । स्वरूपेत्यादिना हेतूपपादनम् । दीपः स्वरश्मिभिरेव सन्निकृष्यते । दीपस्वरूपं त्वपवरकादिस्थले तिष्ठत्यस्मदपेक्षया व्यवधाने दूरं तिष्ठतीत्येवं दीपः स्वरूपापेक्षया सान्तर इति सर्वैर्गृह्यत इत्यर्थः । **तथेति** । एवं चक्षुरपि स्वरश्मिभिरर्थसन्निकृष्टमपि चक्षुःस्वरूपं तु सान्तरमधिष्ठानभूतगोलकेन व्यवहितमिति गृह्यत एवेत्यर्थः । तथा चानुमानेऽप्रयोजकतेत्युक्तं भवति । यथा दीपस्वरूपं सान्तरमिति सर्वैः प्रत्यक्षतो गृह्यते दीपस्य प्रत्यक्षसिद्धत्वात् । न तथा चक्षुरपि स्वरूपापेक्षया सान्तरमिति गृहीतुं शक्यते अतीन्द्रियत्वादतोऽधिष्ठानापेक्षयेत्युक्तम् ॥ **पृथ्वग्रतयेति** । स्वयं यावत्परिमाणं घटादौ तत्परिमाणप्रदेशमेवादौ संबध्य पश्चात्सर्वमपि घटं व्याप्नोतीत्यर्थः । ननु प्राप्त्यप्राप्तिपक्षे समबाधके सति कथं निर्णय इत्यत आह **सन्देहादिति** । प्राप्तौ सन्देहो न स्यादिति दूषणोद्धारः कथमिति सुहृद्भावेन पृच्छन्तं प्रत्याह **तत्रेति** । प्राप्तौ सिद्धायामपीत्यर्थः । सन्देहो यः प्राप्तः स इत्यर्थः ।

**च०— व्यूहान्तरतापत्तिरिति** । प्राप्तिप्रतिबन्धकत्वाभावे काचादेः सूक्ष्मकिञ्चिद्विरलपार्थिवावयवपुञ्जविशेषत्वं प्रसज्येतेत्यर्थापयति । व्यूहवद्धटादिवदन्तरं छिद्रं यस्येति । बहुव्रीहिप्रकृतिकस्तल् सच्छिद्रतेत्यर्थः इत्यपि वर्णकान्तरम् । **व्यतिभेदेऽपि** व्यामिश्रणेपि ।

**सु०— अपर आह । नायनरश्मयः शाखाचन्द्रसंयुक्तैः सौररश्मिभिरेकीभूता युगपच्छाखाचन्द्रमसौ ग्राहयन्तीति । तदसत् । सर्वार्थग्रहणप्रसङ्गात् । अदृष्टात्तद्व्यवस्थेति चेत् । (न) बाह्यसाधनसाकल्येऽदृष्टवैकल्येन कार्यानुदयस्य क्वाप्यदर्शनात् । अदृष्टवैकल्ये हि बाह्यसामग्री विकला स्यात् । अन्यथा समनस्केन्द्रियसन्निकृष्टः स्फीतालोकमध्यमध्यासीनोऽपि घटः कदाचिन्नोपलभ्येत । अप्राप्यार्थप्रकाशकमिति चाप्रसिद्धविशेषणता । अत्यासन्नाप्रकाशकत्वं प्राप्यप्रकाशकेषु घ्राणादिष्वपि विद्यते । स्वगतगन्धादेरग्रहणात् । परस्यैव अत्यासन्नकाचाद्यग्रहणमयुक्तम् । योग्यताया अनपायात् ।**

**शे०—** शालिकानाथमतं दूषयितुमुपन्यस्यति **अपर आहेति** । नयनाद्बहिर्निर्गता इति शेषः । तथा च युगपच्छाखाचन्द्रप्राप्तिः सत्त्वाद्युगपद् ग्रहणं युक्तमिति भावः ॥ **सर्वेति** । युगपदिति शेषः । नयनाद्बहिर्गतानां नायनरश्मीनां शाखाचन्द्रसंयुक्तैः सौररश्मिभिरेकीभूतत्ववत्सर्वार्थसंयुक्तसौररश्मिभिरेकीभूतत्वाच्छाखाचन्द्रमसोरिव सर्वार्थानां युगपद्ग्रहणप्रसङ्ग इति भावः ॥ **अदृष्टादिति** । सर्वार्थसन्निकर्षसद्भावेऽपि शाखाचन्द्रमसोरेव ग्रहणमुपपद्यते । तद्धेतुभूतस्यादृष्टस्य सत्त्वान्न तु सर्वार्थग्रहणं तद्धेत्वदृष्टविरहात् । ततश्चादृष्टभावाभावाभ्यां वैषम्यान्न प्रतिबन्दीग्रह इति भावः । दृष्टसामग्रीविघटकत्वेनैवादृष्टवैकल्यस्य कार्याभावसम्पादकत्वेन, बाह्यसाधनसाकल्ये अदृष्टवैकल्यस्य कार्याभावासम्पादकत्वेन

प्रकृते दृष्टकारकसाकल्यसद्भावाद्युगपत्सर्वग्रहणप्रसङ्गो दुर्वार इत्याह बाह्येति । न च वन्ध्यापुंसंप्रयोगादौ सत्यपि बाह्यकारणसाकल्येऽदृष्टवैकल्यप्रयुक्तकार्याभावदर्शनात् न बाह्यसामग्रीवैकल्यसंपादकत्वनियमो युक्त इति वाच्यम् । तत्रापि नापुत्रस्य लोकोऽस्तीति श्रुत्याऽपुत्रस्य नरकोक्त्या तज्जनकदुरितस्यावश्यकत्वेन तत्प्रतिबन्धादेव कार्याभावोपपत्त्या तस्यादृष्टवैकल्यानिमित्तकत्वात् । नन्वदृष्टवैकल्यस्य किं बाह्यसाधनवैकल्यसंपादकत्वेनैव कार्यवैकल्यप्रयोजकत्वकल्पनया, सत्यपि बाह्यसाधनसाकल्येऽदृष्टवैकल्येनैव कार्यवैकल्याश्रयणे दोषाभावादित्यत आह अन्यथेति ॥ अप्रसिद्धेति । अर्थप्रकाशकस्य त्वगादेः प्राप्यैव तत्प्रकाशकत्वेनाप्राप्यप्रकाशकत्वस्य कुत्राप्यसत्त्वादिति भावः । प्रतिज्ञां दूषयित्वा हेतुमपि दूषयति अत्यासन्नेति । प्राप्यप्रकाशकेष्विति साध्याभावोपपादनम् । घ्राणादेरत्यासन्नाप्रकाशकत्वं कथमित्यतो हेतुमपि तत्रोपपादयति त्वगतेति । किञ्चात्यासन्नाप्रकाशकत्वमस्तु प्राप्यप्रकाशकत्वं चास्तु विपक्षे बाधकाभावादप्रयोजको हेतुः । न च प्राप्यप्रकाशकत्वेऽत्यासन्नस्याक्षिपक्ष्मादेरपि प्राप्त्यविशेषात्तत्प्रकाशापत्त्याऽत्यासन्नपक्ष्माद्यप्रकाशानुपपत्तेर्हेतूच्छित्तिरेव विपक्षे बाधिकेति नाप्रयोजकत्वमिति वाच्यम् । पक्ष्मादेरप्यस्याक्षिसन्निकृष्टत्वेऽप्यतिसामीप्यरूपस्य तत्रार्थदोषस्य विद्यमानत्वेन प्रकाशहेतुभूताया निर्दोषेणार्थेन प्राप्तेस्तत्राभावेनात्यासन्नपक्ष्माद्यप्रकाशस्य प्राप्यकारित्वेऽप्युपपत्त्या हेतूच्छित्तेरभावेनाप्रयोजकत्वानिस्तारादित्याशयवान्न केवलं प्राप्यकारित्वनयेऽत्यासन्नाप्रकाशकत्वोपपत्तिः किन्तु योग्यतावादिमत एवात्यासन्नाप्रकाशकत्वानुपपत्तिरित्यभ्युच्चयेनाह परस्यैवेति । काचो दोषविशेषः । तथा चात्यासन्नकाचादौ सत्यामपि योग्यतायां तद्ग्रहणेन योग्यताया अपि व्यभिचारात्पराभिप्रेतं चक्षुषो योग्यार्थग्राहकत्वमपि न स्यादिति भावः ।

स० — अप्रसिद्धविशेषणतेति । सर्वस्यापि प्रकाशकस्य प्राप्यैव तथात्वेन अप्राप्यप्रकाशकत्वमप्रसिद्धमित्यर्थः ।

प० — प्रागुक्तपरानुमानं निराह अप्राप्यार्थप्रकाशकमिति चेति । इन्द्रियमात्रे तेजोमात्रे वा क्वाप्यनुपलम्भेन साध्याप्रसिद्धेरिति भावः । पररीत्या चेदं दूषणं ध्येयम् । हेतोरनैकान्त्यं चाह अत्यासन्नेति ॥ परस्यैवेति । योग्यतैव ग्रहणनियामिकेति वादिन इत्यर्थः । योग्यताया इति । उद्भूतरूपवत्त्वादिरूपाया इत्यर्थः ।

या० — अप्रसिद्धविशेषणतेति । सर्वस्यापि प्रकाशकस्यालोकादेः प्राप्यैव प्रकाशकत्वादिति भावः । स्वव्याहतं चेदमित्याह परस्यैवेति । अत्र काचो दृग्दोषः । यथाऽत्यासन्नेऽक्षिपक्ष्मादौ प्राप्तिसत्त्वेऽपि न ग्रहणम् अतो व्यभिचारान्न प्राप्तेर्ग्रहणहेतुतेति त्वयोच्यते, एवमत्यासन्ने काचादा-

वुद्भूतरूपादिरूपयोग्यतासत्त्वेऽपि न ग्रहणमिति व्यभिचारान्न योग्यताऽपि ग्रहणहेतुरित्यस्माभिरपि वक्तुं शक्यमिति त्वदुक्तं दूषणं स्वव्याहतमिति भावः ।

श्री० — दिवाऽपि चन्द्रस्य प्रतीयमानत्वाच्चन्द्रसंयुक्तैः सौररश्मिभिरित्युक्तम् ॥ **सर्वार्थेति** । सर्वेषामप्यर्थानां सौररश्मिसंबद्धत्वान्नायनरश्मीनां च सौररश्म्येकीभूतत्वादित्याशयः ॥ **अदृष्टादिति** । यद्यपि नायना रश्मयः सर्वार्थसंबद्धसौररश्मिभिरेकीभूतास्तथाऽप्यदृष्टवशात्तद्रश्मिसंयुक्तशाखाचन्द्रज्ञानमेव भवति न सर्वार्थज्ञानमित्यर्थः ॥ **बाह्येति** । नायनरश्म्येकीभूतसौररश्मिसंबद्धत्वरूपसाधनेत्यर्थः ॥ **कार्येति** । सर्वार्थग्रहणरूपेत्यर्थः । **अन्यथेति** । सत्यप्यन्त्यतन्तुसंयोगे कदाचित्पटानुदयोऽपि स्यादित्यप्यतिप्रसङ्गो द्रष्टव्यः । **योग्यतायाः** उद्भूतरूपादिरूपायाः ।

**सु० — गत्वा नार्थेन सन्निकृष्यत इत्यत्र किं गतिप्रतिषेधः साध्यः, किंवा सन्निकर्षप्रतिषेधः, उतोभयप्रतिषेधः । नाद्यः कालातीतत्वादनैकान्त्याच्च । न द्वितीयः अनैकान्तिकत्वादेव । अत एव न तृतीयोऽपि ।**

**विशिष्टनिषेधोऽयमिति चेन्न सोऽपि विशेषणाभावेन वेत्यादिविकल्पदूषणानिस्तारात् ।**

**सन्निकर्षार्थं गतिमन्न भवतीति साध्यमिति चेन्न स्पर्शनादावनैकान्त्यात् । शीतजलसन्निकर्षार्थं त्वगिन्द्रियगतये हि शरीरपरिस्पन्दो भवति ।**

**अथायमभिप्रायोऽधिष्ठानाद्बहिर्न गच्छतीति । तदेन्द्रियत्वे समानेऽपि घ्राणादीनामतैजसानामनेवम्भावः । चक्षुषस्तु तैज(से,सस्येत्थम्भूत त्वा)तेत्यङ्गीकारे बाधकाभावादप्रयोजकत्वम् । चाक्षुषरश्मीनामुपलब्धिप्रसङ्ग इति चेन्न । अतीन्द्रियत्वोपपत्तेः । महत्तेजोजातीयमैन्द्रियकमुपलब्धमिति चेत् चाक्षुषमप्युपलब्धमिति वारित्थं तथा स्यात् । अदृष्टवशादनुद्भूतरूपं तदिति चेत् । इदमप्यनुद्भूतरूपस्पर्शं कुतो न कल्प्यते । कल्पिकायां प्राप्यकारितायां प्रमाणस्योक्तत्वात् ।**

**यदि च नयनं निर्गत्यार्थं गृहीयात्तदा उन्मील्यनिमीलनेऽपि अर्थप्रतिपत्तिः स्यात् । यदि (चाक्षुष)चाक्षमधिष्ठानातिरिक्तं स्यादधिष्ठानोपघातचिकित्से व्यर्थे स्यातामिति तु प्रदीपेन समानयोगक्षेमम् ।**

**अपि च । छायायामुपविष्टस्या(प्यातपालोकने,तपावलोकनेन नयनस्याशिशिरत्वमातपोपविष्टस्यापि शिशिरद्रव्यावलोकनेन शिशिरत्वं चैतमेवार्थं गमयतः । न ह्यप्राप्तावेतदुपपद्यते । तदेतदखिलमपि प्रमाणप्रसिद्धमिति किमत्र वक्तव्यमिति हिशब्देनाचष्टे ॥ छ ॥**

शे० — **कालातीतत्वादिति** । मूर्तद्रव्यमात्रस्य गतिमत्त्वनियमेन तथाविधत्वेन चक्षुषोऽपि गतिमत्त्वसिद्ध्या तदभावस्य प्रमाणबाधितत्वादिति भावः ॥ **अनैकान्त्याच्चेति** । स्पर्शनादाविति शेषः । तत्र सत्यपीन्द्रियत्वे, 'शीतलजलसन्निकर्षार्थं त्वगिन्द्रियगतये ही'ति वक्ष्यमाणरीत्या गतिमत्त्वसिद्धेरिति भावः ॥ **अनैकान्तिकत्वादेवेति** । त्वगादेः सत्यपीन्द्रियत्वे सन्निकृष्टार्थग्राहकताया एव सत्त्वात्सन्निकर्षाभावरूपसाध्यस्य तत्राभावादिति भावः । उभयप्रतिषेध इति किं प्रत्येकं तदुभयप्रतिषेधोऽभिमतः किंवा विशिष्टप्रतिषेध इति विकल्पं मनसि निधायाद्यं दूषयति **अत एवेति** । चक्षुषो मूर्तद्रव्यत्वेन गतिमत्त्वसिद्ध्या तदभावस्य बाधितत्वात् । त्वगादावुक्तरीत्या गतिसन्निकर्षयोरेव सत्त्वेन तदुभयप्रतिषेधरूपसाध्यस्य तत्राभावेन तत्रानैकान्त्याच्चेत्यर्थः ।

द्वितीयमाशङ्कते **विशिष्टेति** । उक्तरूपविशिष्टाभावः किं गतिरूपविशेषणाभावायत्तः उत सन्निकर्षरूपविशेष्याभावायत्त उत गतिसन्निकर्षरूपोभयाभावायत्तोऽभिमतः । आद्ये मूर्तद्रव्यत्वेन गतिमत्त्वस्यैव तत्र सत्त्वेन गतिरूपविशेषणाभावस्याभावेन विशेषणाभावायत्तस्य विशिष्टाभावरूपसाध्यस्य तत्रासत्त्वादनैकान्त्यम् । द्वितीयेऽपि त्वगादीनां प्राप्यकारिताया उभयसंमतत्वेन सन्निकर्षरूपविशेष्यस्य तत्र सत्त्वेन तदभावायत्तस्य विशिष्टाभावरूपस्य साध्यस्य तत्रासंभवेन तदभावसत्त्वादनैकान्त्यमेव । उभयायत्तत्वपक्षेऽप्युक्तरीत्योभयस्यापि सत्त्वेन तदभावायत्तस्य विशिष्टाभावरूपसाध्यस्य तत्राभावादनैकान्त्यमेवेति न विशिष्टनिषेधस्यापि साध्यत्वमित्याह **न सोऽपीति** ।

ननु गत्वा नार्थेन सन्निकृष्यत इति न गतिप्रतिषेधोऽभिमतो नापि सन्निकर्षप्रतिषेधो नाप्युभयप्रतिषेधः किन्तु सन्निकर्षानुकूलगतिप्रतिषेध एव । तथा च गतिसन्निकर्षयोस्तत्र सत्त्वेऽपि सन्निकर्षानुकूलगतिमत्त्वस्य तत्राभावेन साध्यस्यापि सत्त्वान्न व्यभिचार इत्याशङ्कते **सन्निकर्षार्थमिति** ॥ **अनैकान्त्यादिति** । स्पर्शनादेः सन्निकर्षार्थं गतिमत्त्वस्यैव सत्त्वादिति भावः । कथं तत्र सन्निकर्षार्थत्वं गतेरित्यतस्तदुपपादयति **शीतलेति** ।

**अथेति** । तथा च सन्निकर्षार्थं गतिमत्त्वेऽप्यधिष्ठानगत्यैव तदाश्रयतया गतिमत्त्वेऽप्यधिष्ठानाद्बहिर्गमनाभावान्न त्वगादौ व्यभिचार इति भावः । इन्द्रियत्वमस्तु बहिर्गमनं चास्तु विपक्षे बाधकाभावादप्रयोजकोऽयं हेतुः । न च घ्राणादीनामपि बहिर्गमनप्रसङ्ग एव बाधक इन्द्रियत्वाविशेषादिति वाच्यम् । इन्द्रियत्वाविशेषेऽपि तैजसत्वातैजसत्वाभ्यां वैलक्षण्येन साम्याभावेनाविशेषासिद्ध्या तदप्रसङ्गादित्याह **तदेति** । **अतैजसानामिति** । यद्यपि मनोव्यतिरिक्तेन्द्रियाणां तैजसाहङ्कारकार्यत्वेन तैजसत्वमेवेति सिद्धान्तः । तथाऽपि पररीत्या वा चक्षुषि तैजसाहङ्कारभागानां बहुत्ववदितरेन्द्रियेषु तदभावेन तैजसाहङ्कारभागानामल्पत्वात्तद्विवक्षया वाऽतैजसत्वोक्तिरिति ध्येयम् । यद्वा माऽस्तु तर्ह्यनैकान्त्यं सोपा-

धिकत्वेनाभासत्वं तु स्यादित्याह **तदेति** । अधिष्ठानाद्बहिर्गमनशून्यत्वरूपसाध्यवति त्वगादावतैजसत्वसद्भावेन साध्यव्यापकत्वादिन्द्रियत्वरूपसाधनवति चक्षुष्यतैजसत्वाभावेन साधनाव्यापकत्वादतैजसत्वमुपाधिरिति भावः । साधनाव्यापकतामुपदर्शयन्नेव प्रतिपक्षोन्नायकत्वरूपं दूषकताबीजमुपपादयति **चक्षुषस्त्वित्यादि** । अनुपलम्भबाधितं बहिर्गमनं नयनरश्मीनामित्याशयेन शङ्कते **चाक्षुषेति** । ततश्च नाप्रयोजकत्वं नाप्युपाध्युन्नीतः प्रतिपक्ष इति भावः । अयोग्यतयाऽनुपलम्भस्यान्यथासिद्धत्वान्न तद्बाधस्य बहिर्गमनाभावसाधकतेत्याह **अतीन्द्रियत्वेति** । महत्तेजोजातीयत्वेन चाक्षुषरश्मीनामैन्द्रियकत्वसिद्धेर्नायोग्यत्वेनानुपलम्भस्यान्यथासिद्धिरितिभावेन शङ्कते **महदिति** । महत्तेजोजातीयत्वमात्रं नैन्द्रियकतायां प्रयोजकं किन्तु विशेषणान्तरविशिष्टमेव । तथा च महत्तेजोजातीयत्वेन न चाक्षुषरश्मीनामैन्द्रियकत्वसिद्धिरित्याशयवान्कुतोऽविशिष्टस्यैव प्रयोजकत्वोपपत्तौ विशिष्टस्य प्रयोजकत्वकल्पनमित्यतो विशिष्टस्य प्रयोजकत्वं परमुखेनैव नेतुं प्रतिबन्दीं तावद्गृह्णाति । **चाक्षुषमपीति** । महत्तेजोजातीयमिति वर्तते । न महत्तेजोजातीयत्वमात्रं चाक्षुषतायां प्रयोजकं येनोक्तातिप्रसङ्गः स्यात्किन्तूद्भूतरूपवत्त्वविशिष्टमहत्तेजोजातीयत्वमेव । न च वारिस्थस्य तदस्तीति कथं वारिस्थतेजसश्चाक्षुषत्वापादनमिति शङ्कते **अदृष्टेति** । एवं तर्हि न महत्तेजोजातीयत्वमात्रमैन्द्रियकत्वे प्रयोजकं येन चाक्षुषरश्मीनामुपलम्भः प्रसज्येत । किन्तूद्भूतरूपस्पर्शवत्त्वविशिष्टं महत्तेजोजातीयत्वमेवेति न चाक्षुषरश्मीनामैन्द्रियकत्वप्रसङ्ग इत्याह **इदमपीति** । अदृष्टवशादित्यनुवर्तते । ननु वारिस्थस्याचाक्षुषतायाः सिद्धत्वात्कल्पकसद्भावेन चाक्षुषतायां विशिष्टस्य प्रयोजकत्वं कल्पयितुं शक्यते । प्रकृते त्विन्द्रियरश्मीनां बहिरनिर्गमनेनाप्यनुपलम्भसम्भवेन कुतो विशिष्टस्यैन्द्रियकत्वप्रयोजकत्वकल्पनावकाश इत्यतः प्राप्यकारितायाः सिद्धत्वेन बहिर्गमनसिद्धयोक्तरीत्याऽनुपलम्भस्यान्यथासिद्धेरसम्भवाद्विशिष्टस्यैवैन्द्रियकत्वप्रयोजकत्वकल्पनया तेषामनुपलम्भसमर्थनमेव न्याय्यमित्याशयेनाह **कल्पिकायामिति** ।

**अर्थप्रतिपत्तिः स्यादिति** । पूर्वं बहिर्निर्गतरश्मीनां सत्त्वादिति भावः ॥ **अधिष्ठानेति** । इन्द्रियनाशार्थतयाऽधिष्ठानोपघात इन्द्रियस्थैर्यार्थमधिष्ठानचिकित्सा च व्यर्थे स्यातामित्यर्थः ॥ **प्रदीपेन समानयोगक्षममिति** । दीपलापनान्तरं ततो बहिर्निस्सृतानां रश्मीनामर्थसन्निकृष्टत्वाद्दीपाच्छादनेऽप्यर्थप्रकाशः स्याद्दीपनाशार्थमधिष्ठानस्य वर्तिकादेर्नाशस्तस्य स्थैर्यार्थं चाधिष्ठानचिकित्सा व्यर्थे स्यातामिति परचोदना दीपेऽप्यविशिष्टा । अथ दीपरश्मीनां तैजसत्वेन शीघ्रगामितया प्रज्वलनानन्तरमाच्छादिते दीपे पुना रश्मयस्तस्मिन्नेव प्रविष्टा इति बहिर्दीपरश्मीनामभावान्नार्थप्रतीतिप्रसङ्गः । अधिष्ठानभूतवर्तिकोपघातादेर्दीपोपघातादिप्रयोजकतयाऽन्वयव्यतिरेकसिद्धत्वेन तादर्थ्यसंभवान्नाधिष्ठानोपघातचिकित्सयोर्वैयर्थ्यमिति मन्यसे तर्हि चाक्षुषरश्मीनामपि तैजसतया अतिशीघ्रगामित्वेनोन्मीलनानन्तरं बहिर्निस्सृतानां तेषां निमी-

लनदशायां चक्षुष्येव प्रविष्टत्वेन बहिर्नायनरश्मीनामेवाभावान्नार्थप्रतीतिप्रसङ्गः । अधिष्ठानीभूतगोलकोपघातादेरिन्द्रियनाशादिप्रयोजकतयाऽन्वयव्यतिरेकसिद्धत्वेन तादर्थ्यसंभवान्नाधिष्ठानोपघातचिकित्सयोर्वैयर्थ्यमिति प्रदीपेन समानयोगक्षेममित्यर्थः ।

**अशिशिरत्वम्** उष्णत्वं, **शिशिरत्वं** शीतलत्वम् ॥ **एतमेवेति** । बहिर्गत्वा आलोकादिना सन्निकृष्टत्वरूपमर्थमित्यर्थः । गमकत्वमेवोपपादयति **न हीति** । उष्णादिद्रव्यसंबन्धं विनोष्णत्वाद्यसंभवादुष्णत्वादिना तत्संबन्धसिद्धिरित्यर्थः ॥ छ ॥

**स० — कालातीतत्वादिति** । मूर्तद्रव्यमात्रस्य क्रियावत्त्वेन चक्षुरादेरपि गमनरूपगतिमत्त्वेन तत्प्रतिषेधे बाधापत्तेरित्यर्थः । **अनैकान्त्यादिति** । घ्राणादौ सत्यपीन्द्रियत्वे गमनरूपकर्मण एव सत्त्वेन गत्वा नार्थेन सन्निकृष्यते इत्युक्तगतिप्रतिषेधरूपसाध्याभावात् तत्र अनैकान्त्यं स्यादित्यर्थः । **अत एवेति** । अनैकान्तिकत्वादेवेत्यर्थः । **अतैजसानामिति** । यद्यपि मनोव्यतिरिक्तेन्द्रियाणां तैजसाहङ्कारकार्यत्वेन तैजसत्वेऽपि चक्षुषि तैजसाहङ्कारभागानां बहुत्वात् इतरेन्द्रियादिषु अल्पत्वेन अतैजसत्वोक्तिरिति भावः । **प्रदीपेनेति** । प्रदीपेऽपि एतद्बाधकस्य समानत्वात् । यदि दीपरश्मीनां तैजसत्वेन शीघ्रगामितया प्रज्वलनानन्तरमाच्छादिते दीपे पुना रश्मयस्तस्मिन्नेव दीपे प्रविशन्तीति नार्थप्रतीतिः, तर्हि प्रकृतेऽपि समानमिति भावः ।

---

**प० — कालातीतत्वादिति** । शरीरे गच्छति तत्रत्यसर्वेन्द्रियाणां तेनैव सह गतेः सर्वानुभवसिद्धत्वात् बाधितत्वानैकान्तिकत्वे ध्येये ॥ **अनैकान्तिकत्वादेवेति** । त्वगिन्द्रियादौ इति योज्यम् ॥ **इत्यादीति** । प्रागुक्तरीत्या पक्षत्रयतद्दूषणानां अनिवारणादित्यर्थः ॥ **अथेति** । इत्यभिप्राय इत्यन्वयः । तथाच न प्रागुक्तदोष इति भावः ॥ **अतैजसानामिति** । अल्पतेजोंशयुक्तानामित्यर्थः । तथाच तैजसानीन्द्रियाणीति स्मृत्यविरोधः । पररीत्या चेयमुक्तिः ॥ **उन्मील्य निमीलनेपीति** । बहिर्गतरश्मिसंबंधस्य तदापि सत्त्वादिति भावः ॥ **दीपेन समानेति** । दीपालोकप्रसरानन्तरमाच्छादिते दीपे यथा नार्थप्रकाशः दीपावरोधोपघातचिकित्से च यथा न व्यर्थे तथेति भावः ॥ **हिशब्देनेति** । निर्दोषाक्षोद्भवं ह्यत्रेति हिशब्देनेत्यर्थः ॥ **प्रत्यक्षसामान्यलक्षणम्** ।

**या० —** परस्यैवेत्येवकारेणास्माकमतिसामीप्यरूपार्थदोषस्य सत्त्वान्न निर्दोषार्थेन्द्रियसन्निकर्षस्तत्र अतो न व्यभिचार इति व्यभिचारपरिहारोऽस्तीति सूचयति **कालातीतत्वादिति** । चक्षुषो मूर्तद्रव्यत्वेन गतिमत्त्वस्य प्रमाणसिद्धत्वादिति भावः ॥ **अनैकान्त्याच्चेति** । त्वगिन्द्रियादाविति शेषः । देहस्य गमने त्वगिन्द्रियादेरपि गतिमत्त्वेन साध्याभावसत्त्वादिति भावः ॥ **विशिष्टनिषेध इति** । त्वगिन्द्रियादौ गतिसन्निकर्षयोर्विशकलितयोः सत्त्वेऽपि न गत्यवच्छिन्नेन तत्र सन्निकृष्टत्वमतो नानैकान्त्यमिति

भावः । अतैजसानामिति पररीत्या । सिद्धान्ते मनोव्यतिरिक्तानामिन्द्रियाणां तैजसाहङ्कारकार्यत्वेन तैजसत्वादिति ध्येयम । चक्षुषि तेजोभागानां बहुत्वं न तथा घ्राणादिष्वित्यभिप्रेत्येदमित्यप्याहुः । तथाच अतैजसत्वमुपाधिरिति भावः ॥ **अर्थप्रतिपत्तिः स्यादिति** । पूर्वं निर्गतरश्मीनां विद्यमानत्वादिति भावः ॥ **दीपेन समानेति** । दीपप्रभोदयानन्तरं दीपाच्छादनेऽपि तयाऽर्थप्रकाशः स्यात् तथा दीपोपघाताद्यर्थं तदधिष्ठानवर्तिकोपघातादिकं च व्यर्थं स्यादिति परिचोदनायां दीपप्रभाया दीपाश्रितत्वेन तदाच्छादनेनाच्छादितत्वादर्थाप्रकाशः । अधिष्ठानभूतवर्तिकोपघातादेः दीपोपघातादिप्रयोजकतयाऽन्वयव्यतिरेकसिद्धत्वान्न वैयर्थ्यमिति यत्तत्र समाधानं तत्प्रकृते समानमिति भावः । **अशिशिरत्वम्** । उष्णत्वम् ।

**श्री०— कालातीतत्वादिति** । चक्षुषोऽपि मूर्तत्वेन गतेः प्रामाणिकत्वादिति भावः **अनैकान्त्याच्चेति** । देहगमनेन त्वगिन्द्रियस्यापि गतिमत्त्वेन व्यभिचारादित्यर्थः ॥ **अनैकान्तिकत्वादेवेति** श्रोत्रेन्द्रिय इति शेषः । शब्दरूपार्थेन सन्निकर्षसद्भावादित्यर्थः । गतिप्रतिषेधे साध्ये न श्रोत्रेन्द्रिये व्यभिचारो वक्तुं शक्यः श्रोत्रस्याकाशात्मकत्वेन गतिमत्त्वाभावादित्यवधेयम् **अत एवेति** । उभयनिषेधे साध्ये एकैकस्योक्तरीत्या व्यभिचारः स्यादेवेत्यर्थः । ननु युगपन्निषेधद्वयं साध्यत्वेन नाभिप्रेतं किन्नाम गत्यवच्छिन्नसन्निकृष्टत्वरूपस्य विशिष्टस्य प्रतिषेध एक एव साध्य इति न विशकलितसाध्यद्वयपक्षोक्तदोष इत्याशङ्कते **विशिष्टेति** । अत्र विशिष्टस्यापि त्वगिन्द्रिये व्यभिचारः स्यादेवेति दूषणे सत्येव दूषणान्तरमाह **सोऽपीति** । विशिष्टस्यापि विशेषणविशेष्यतत्संबन्धात्मकत्वेन तदभावे किं गतिरूपविशेषणाभावेनैव पर्यवसानं, सन्निकृष्टत्वरूपविशेष्याभावेनैव वा, उभयाभावेन वेति विकल्प्य आद्ये त्वगिन्द्रिये व्यभिचारो, द्वितीये श्रोत्रेन्द्रिये व्यभिचारः, (तृतीये)उभयप्रतिषेधरूपसाध्यद्वये उक्त व्यभिचारद्वयमिति दूषणानिस्तार इत्यर्थः । साध्याभावमुपपादयति **शीतलेति** । अनेवम्भावः बहिर्निर्गमना भावः । **इत्थंभूतता** बहिर्निर्गतत्वम् । चाक्षुषरश्मीनामधिष्ठानाद्बहिर्निर्गमनाङ्गीकारे बाधकं शङ्कते **चाक्षुषेति** । चाक्षुषरश्मीनां बहिर्निर्गतत्वेन त्वगिन्द्रियसन्निकर्षसद्भावात्त्वचोपलब्धिः स्यादिति भावः ॥ **महत्तेजोजातीयमिति** । तथा च त्वगिन्द्रियेण रश्मीनामुपलब्धिः स्यात् । न चेष्टापत्तिः । चाक्षुषरश्मिषूष्णस्पर्शोपलम्भापत्तेरित्यर्थः । चाक्षुषमित्यत्र महत्तेजोजातीयमिति वर्तते ॥ **कुतो न कल्प्यत इति** । महत्त्वसमानाधिकरणोद्भूतस्पर्शवत्त्वस्यैव स्पार्शनप्रत्यक्षताप्रयोजकत्वान्न बहिर्निर्गतनायरश्मीनां त्वगिन्द्रियेणोपलब्धिरिति भावः । कल्पकप्रमाणाभावान्न कल्प्यत इति चेत्तत्राह **कल्पिकायामिति** । अनुद्भूतस्पर्शकल्पिकायामित्यर्थः । तथा चेदं चक्षुर्यदाऽर्थसंबन्धार्थं रश्मिद्वारा निर्गच्छति तदा तद्रश्मयस्तावत्त्वगिन्द्रियसंबद्धा भवन्त्येव । ततश्च तदीयोष्णस्पर्श उपलभ्येत । न चोपलभ्यते । तस्मा-

दन्यथाऽनुपपत्त्याऽनुद्भूतः स्पर्शः कल्प्यत इत्याशयः ॥ **अधिष्ठानोपघातचिकित्से व्यर्थे स्यातामिति**। तथा च तदन्यथाऽनुपपत्त्याऽधिष्ठानातिरिक्तस्य चक्षुषोऽभावात्तस्य च गतेर्विरुद्धत्वान्न सन्निकर्षोऽपेक्षित इत्याशयः। आतपोपवेशने आतपगमनेनैवेन्द्रियसन्निकर्षोपपत्तेर्नेन्द्रियस्य गतिः सिध्यतीत्यत उक्तं **छायायामुपविष्टस्येति**। **अशिशिरत्वम्** उष्णत्वम्। छायोपवेशने छायागमनेनैवेन्द्रियसन्निकर्षोपपत्तेर्नेन्द्रियस्य गतिः सिध्यतीत्यत **आतपोपविष्टस्येत्युक्तम्**। **शिशिरद्रव्यं** शीतलद्रव्यं कर्पूरादिकम्। **एतमेवार्थं** चक्षुषो रश्मिद्वारा बहिर्निर्गमनरूपमेवार्थम्। **एतत्** छायामुपविष्टस्येत्यादिनोक्तं प्रमेयम्।

**च०— हिशब्देनेति**। 'निर्दोषाक्षोद्भवं ह्यक्षमि'तिप्रतीकघटकहिशब्देनेत्यर्थः।

॥ इति प्रत्यक्षसामान्यलक्षणनिरूपणम् ॥

सु० — यदक्षविशेषणं निर्दोषत्वमुक्तं तद्व्यवच्छेद्यं दर्शयितुमक्षभेदं तावदाह प्राकृतमिति ।

अनु० — प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम् ।

प्रकृतिशब्देनाहङ्कारः पञ्चभूतानि चोच्यन्ते । सूक्ष्मरूपेण नित्यमप्यहङ्कारभूतांशैरुपचितत्वात्प्राकृतम् । शुद्धमित्यस्यैव विवरणं चैतन्यमिति । चेतिशब्दावध्याहार्यौ । तुशब्देन चैतन्यमेवेन्द्रियं तच्चाहङ्कारिकमेवेति वदतां साङ्ख्यादीनां, भौतिकमेवेति भाषमाणानां वैशेषिकादीनां, द्रव्येन्द्रियभा(व्ये)वेन्द्रियभेदाद्द्विविधमिति जल्पतां जैनानां च मतं व्यवच्छिनत्ति । मतमिति स्वोक्तार्थस्य प्रमितत्वमाह ।

शे० — ननु प्राकृतमित्यादिमूलमनर्थकम् । न च लक्षितस्य प्रत्यक्षस्य विभागपरं तदिति वाच्यम् । प्राकृतमित्यादेर्लक्षितप्रत्यक्षविभागपरत्वासम्भवात् । न च अक्षभेदकथनपरं तदिति वाच्यम् । प्रत्यक्षलक्षणकथनानन्तरं तद्विभागकथनस्यैव सङ्गतत्वेनाक्षमात्रविभागकथनस्य प्रकृतासङ्गतत्वादित्यत आह यदक्षविशेषणमिति । तद्व्यवच्छेद्यमित्युपलक्षणम् । तत्सङ्ग्राह्यं चेत्यपि द्रष्टव्यम् ॥ दर्शयितुमिति । निर्दोषमेव चैतन्यमित्यादिनेति शेषः । निर्दोषत्वसदोषत्वविभागस्याप्युत्तरत्र वक्ष्यमाणत्वात्तावच्छब्दः । नन्वत्र प्रकृतिशब्दस्तदर्थतया प्रसिद्धाव्यक्तपरो वा, 'अव्यक्ताद्याः पृथिव्यन्ताः सर्वाः प्रकृतयः स्मृताः' इतिप्रमाणसिद्धाव्यक्तादिपरो वा न सम्भवति । इन्द्रियाणां तैजसाहङ्कारपञ्चमहाभूतमात्रकार्यत्वेनाव्यक्तकार्यत्वस्य वाऽव्यक्तादिसर्वकार्यत्वस्य वाऽभावात्तत्कथं प्राकृतत्वमित्यत आह प्रकृतिशब्देनेति ॥ अहङ्कार इति । वैकारिकस्तैजसश्चेत्येवं द्विरूप इत्यर्थः । नन्विन्द्रियाणां 'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः' इति प्रमाणेनानादिनित्यत्वाभिधानाहङ्कारादिकार्यत्वमपि तेषां सम्भवति । तथा सत्युदाहृतप्रमाणविरोधापातादित्यतः स्यादेतदेवं यदि सर्वथा नित्यत्वं प्रमाणार्थः

स्यात् । न चैतदस्ति । तथा सति सौक्ष्म्येणेति विशेषणवैयर्थ्यापातात् । किन्तु सूक्ष्मरूपेणैव नित्यत्वं तदर्थः । तथा च सूक्ष्मरूपस्यानादिनित्यत्वेनाप्राकृतत्वेऽपि स्थूलरूपस्याहङ्काराद्यंशैरुपचितत्वेन युक्तं तत्कार्यत्वमित्याशयेनाह **सूक्ष्मरूपेणेति** । शुद्धमित्येतावतैव पूर्तेः किं चैतन्यग्रहणेनेत्यत आह **शुद्धमित्यस्यैवेति** । यत्प्राकृतं शुद्धचैतन्यमक्षं तद्द्विविधमिति योजनायां रूपान्तरेणैव द्वैविध्यप्रसक्तेः प्राकृतं शुद्धचैतन्य चेति चशब्दाध्याहारे च प्राकृतमक्षं द्विविधं शुद्धचैतन्यमक्षं च द्विविधमिति प्रत्येकं रूपान्तरेण द्वैविध्यप्रसक्तेः प्राकृतत्वशुद्धत्वयोर्विधात्वालाभात्तयोरेव विधात्वसिद्ध्यर्थमपेक्षितमध्याहरति **चेतिशब्दाविति** ॥ **आहङ्कारिकमेवेति वदतामिति** । 'अभिमानोऽहङ्कारस्तस्माद्विविधः प्रवर्तते सर्गः । एकादशश्च गणकस्तन्मात्रपञ्चकश्चैवे'ति तत्कारिकायामेवशब्देन भूतकारणताया निषेधात्केवलाहङ्कारिकत्वसिद्धेरिति भावः ॥ **भौतिकमेवेति भाषमाणानामिति** । 'जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं घ्राणम् । विजातीयावयवानभिभूतैर्जलावयवैरारब्धं रसनम् । अन्यावयवानभिभूतैस्तेजोऽवयवैरारब्धं चक्षुः । पृथिव्याद्यवयवानभिभूतैर्वाय्ववयवैरारब्धं त्वगिन्द्रियमि'ति प्रशस्तपादोक्तेरिति भावः । **द्रव्येन्द्रियेति** । द्रव्यग्राहकमिन्द्रियं द्रव्येन्द्रियम् । भावो गन्धादिस्तद्ग्राहकमिन्द्रियं भावेन्द्रियमित्यर्थः । तत्र चक्षुस्त्वङ्मनसां द्रव्यग्राहकत्वाद्द्रव्येन्द्रियत्वं घ्राणादीनां तु द्रव्यग्राहकत्वाभावात्तेषां भावेन्द्रियत्वमिति विवेकः । घ्राणादीनां पृथिव्यादिद्रव्यविकारत्वाद्द्रव्येन्द्रियत्वं मनसस्त्वतद्विकारत्वान्न द्रव्येन्द्रियत्वमिति मन एव भावेन्द्रियमित्यप्याहुः । मूले मतमित्यस्य वैयर्थ्यमाशङ्क्य कुतः केवलाहङ्कारिकत्वादिपरित्यागेनोक्तरूपेण द्वैविध्याश्रयणमित्यतः प्रामाणिकत्वाप्रामाणिकत्वाभ्यां विशेषाद्युक्तमप्रामाणिकपरित्यागेन प्रामाणिकद्वैविध्याश्रयणमित्यर्थप्रतिपादनार्थत्वान्न तदिति भावेनाह **मतमितीति** ॥ **स्वोक्तार्थस्येति** । प्राकृतत्वादिनाऽक्षद्वैविध्यादिरूपस्येत्यर्थः ।

स० — अव्यक्तादीनां प्रकृतिशब्दार्थत्वे तावत्कार्यस्याप्यभावात् कथं प्राकृतत्वम इत्यत आह **प्रकृतिशब्देनेति** । यद्वा प्रकृतिशब्दस्य अव्यक्तमात्रपरत्वे तत्कार्यत्वाभावात् 'अव्यक्ताद्याः पृथिव्यन्तास्सर्वाः प्रकृतयस्स्मृताः' इति प्रमाणानुसारेण पृथिव्यन्तानाम् अव्यक्तादीनां प्रकृतिशब्दार्थत्वे तावत्कार्यत्वस्यानुपपन्नत्वात् अत आह **प्रकृतिशब्देनेति** । ननु इन्द्रियाणां नित्यत्वात् कथं प्राकृतत्वमित्यत आह **सूक्ष्मरूपेणेति** ॥ **द्रव्येन्द्रियभावेन्द्रियभेदादिति** । द्रव्यशब्दो धर्मिपरः। भावशब्दो धर्मपरः । तथा च धर्मिग्राहकं धर्मग्राहकं चेत्येवमिन्द्रियं द्विविधमित्यर्थः । यद्वा घ्राणादीनां पृथिव्यादिद्रव्यविकारत्वात् तद्विकारभूतमिन्द्रियं द्रव्येन्द्रियं, भावेन्द्रियशब्देन च मनो ग्राह्यमित्यर्थः ।

प० — 'तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन् इति द्वितीयस्कन्धे तैजसाहङ्कारकार्यत्वस्य, 'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः । तेषां भूतैरुपचयः सृष्टिकाले विधीयते' इति भाष्यो-

क्तस्मृत्या भूतकार्यत्वस्य चेन्द्रियाणामवगतेः तदनुरोधेनाह **प्रकृतिशब्देनेति** । प्रकृतिकार्यत्वात्प्रकृति-शब्देनाहङ्कारादेर्ग्रहणमिति भावः ॥ **अहङ्कारभूतांशैः,** अहङ्कारस्य भूतानां चांशैरित्यर्थः ॥ **चेति-शब्दाविति** । शुद्धं चैतन्यं चेतीत्यन्वयः तयोरिति भावः ॥ **द्रव्येन्द्रियेति** । त्वक्चक्षुर्मनश्चेति त्रयं द्रव्येन्द्रियम् । भावशब्दितधर्मभूतगन्धरसशब्दादिग्राहकेन्द्रियं भावेन्द्रियं तद्भेदादित्यर्थः ।

**या०** — नन्विन्द्रियाणां त्वतैजसाहङ्कारपञ्चभूतकार्यत्वेन प्रकृतिकार्यत्वस्याभावात्कथं प्राकृतमिति निर्देश इत्यत आह **प्रकृतिशब्देनेति** । नन्विन्द्रियाणां सूक्ष्मरूपेण नित्यत्वात्कथमहङ्कारकार्यताऽपीत्यत आह **सूक्ष्मरूपेणेति** ॥ **द्रव्येन्द्रियभावेन्द्रियेति** । द्रव्यग्राहकमिन्द्रियं त्वक्चक्षुर्मनांसि । भावो गन्धर-सशब्दादिधर्मः । तद्ग्राहकाणि घ्राणरसनश्रोत्राणि भावेन्द्रियाण्येतेषां द्रव्यग्राहकत्वाभावाद्भावेन्द्रियत्वमिति ध्येयम् ॥

**श्री०** — इन्द्रियाणां साक्षात्प्रकृतिकार्यत्वरूपप्राकृतत्वाभावादाह **प्रकृतिशब्देनेति** । द्रव्ये-न्द्रियं नाम धर्मिधर्मोभयग्राहकमिन्द्रियं चक्षुस्त्वगिन्द्रियं चेति द्वयम् । धर्ममात्रग्राहकमिन्द्रियं भावेन्द्रियं, तच्च श्रोत्रादित्रयम् ।

**च०** — **द्रव्येन्द्रियेत्यादि** । द्रव्यग्राहकमिन्द्रियम् । गन्धरसशब्दादिधर्मग्राहकमिन्द्रियं भावेन्द्रियम् ।

---

सु० — तत्र जडचैतन्यभेदमनुपदमेवोपपादयिष्यति । जडस्य च नित्याहङ्कारिक-भौतिकत्वम् 'सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहङ्कृतेः । तेषां भूतैरुपचयः सृष्टि-काले विधीयते' इत्यादिस्मृतिसिद्धम् । न च केवलाहङ्कारिकत्वे भौतिकत्वे वा प्रमाणमस्ति । कपिलादीनामाप्तत्वासिद्धेः । घ्राणं पार्थिवं रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुङ्कुम-गन्धाभिव्यञ्जकघृतवत् । रसनमाप्यं रूपाव्यञ्जकत्वे सति रसव्यञ्जकत्वात् । लालावत् । चक्षुस्तैजसं स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्वात् प्रदीपवत् । स्पर्शनं वायवीयं शब्दा-व्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वात् व्यजनवातवदिति ।

शे० — कथमुक्तार्थस्य प्रामाणिकत्वमित्यतो जडचैतन्यभेदस्य तावत्तदुपपादयति **तत्रेति** ॥ **अनुपदमेवेति** । 'शुद्धमीशरमामुक्तेष्वन्यत्र प्राकृतैर्युतमि'त्यादिनेति शेषः । अस्त्वेवं जडचैतन्यभेदस्य प्रामाणिकत्वं तथाऽपि जडस्य कुतः प्राकृतपदोक्तनित्यत्वादिकमित्यत आह **जडस्य चेति** ॥ **नित्य-त्वेति** । त्वप्रत्ययस्य प्रत्येकं संबन्धः । तथा च नित्यत्वमाहङ्कारिकत्वं भौतिकत्वं चेत्यर्थः । इत्यादी-त्यादिपदेन नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः । तेषां भूतैरुपचयः सृष्टिकाले विधीयते'

इत्यादिस्मृतिपरिग्रहः । एवं स्वोक्तार्थस्य प्रामाणिकत्वं प्रतिपाद्य केवलाहङ्कारिकत्वादेरप्रामाणिकत्वमुपपपादयितुं प्रमाणाभावं प्रतिजानीते **न चेति** । इन्द्रियाणामाहङ्कारिकत्वभौतिकत्वयोः स्वेनाप्यभ्युपगमात्कथं तन्निरास इत्यत उक्तं **केवलेति** । भौतिकत्वेत्यत्रापि केवलत्वं बोध्यम् । कथं प्रमाणाभाव इत्यतस्तत्किं कपिलादिवाक्यमभिमतमुतान्यदिति विकल्पं मनसि निधायाद्यं प्रत्याह **कपिलादीनामिति ॥ आप्तत्वासिद्धेरिति** । 'न चाप्तिनिश्चयस्तत्र शक्यते व्यभिचारत' इत्युक्तरीत्येति शेषः । तथा च तद्वाक्यप्रामाण्यासिद्धेर्न तेन विप्रतिपन्नार्थसिद्धिरिति भावः । द्वितीयमाशङ्कते **घ्राणमित्यादिना** अत्र हेतुचतुष्टये मनस्यव्यभिचाराय सत्यन्तोपादानम् । अत्र यद्यपि परै रसाद्यव्यञ्जकत्वे सति रूपाद्यव्यञ्जकत्वे सति इति आदिपदप्रक्षेपेणैव सत्यन्तं निर्दिष्टमिति तथैवानुवादो युक्तस्तथाऽपि रसाव्यञ्जकत्वमात्रेणैव मनस्यव्यभिचारसिद्ध्या आदिपदवैयर्थ्यमाशङ्क्य रसाव्यञ्जकत्वेनेव रूपाव्यञ्जकत्वेनापि व्यभिचारवारणादन्यतमपरिग्रहेण हेत्वन्तरसूचनार्थत्वस्य तट्टीकाकृतोक्तत्वेनैकैकमात्राव्यञ्जकत्वस्यैव विशेषणत्वमिति भावेनैवमनुवाद इति द्रष्टव्यम् ।

स० — **अनुपदमेवेति** 'शुद्धमीशरमामुक्तेषु' इत्यनेनेत्यर्थः । **नित्येति** नित्यत्वाहङ्कारिकत्वभौतिकत्वमित्यर्थः । आहङ्कारिकत्वस्य भौतिकत्वस्य वा स्वेनाप्यङ्गीकारात् केवलेति विशेषणम् । ननु कपिलकणादिप्रणीतवाक्यानामेव सत्त्वात् कथं प्रमाणाभाव इत्यत आह **कपिलादीनामिति घ्राणं पार्थिवमिति** । अत्र गन्धव्यञ्जकत्वस्य मन आदौ साधारणत्वेन तत्र व्यभिचारापरिहारेऽपि रसाव्यञ्जकत्वरूपविशेषणमात्रेणैव तत्परिहारसंभवात् आदिपदप्रयोजनाभावात् परेण रसाद्यव्यञ्जकत्वे उक्तेऽपि रसाव्यञ्जकत्वे सति इत्युक्तम् । तत्तदिन्द्रियानन्तरोक्तेन्द्रियविशेषगुणाग्राहकत्वमेव वक्तुं युक्तमित्याशयवता घ्राणे रसाव्यञ्जकत्वे सतीति, रसने रूपाव्यञ्जकत्वे सतीति एवं विचित्रोक्तिः युक्तेति ध्येयम् ।

प० — कथं प्रमितेत्यत आह **तत्रेति ॥ अनुपदमिति** । शुद्धमित्यर्धेनेति भावः ॥ **नित्येति** । नित्यत्वमाहङ्कारिकत्वं भौतिकत्वं चेत्यर्थः । सूक्ष्मेत्येकं वाक्यम् । तेषामित्यादित्वपरम् । अहङ्कृतेः सकाशात्स्थूलानीत्यर्थः । कपिलकाणादाद्युक्तिरेव मानमित्यत आह **कपिलादीनामिति** । वैशेषिकोक्तानुमानान्येव मानं भौतिकत्व इत्यतस्तान्यनूद्य निराह **घ्राणमित्यादिना** । मनस्यव्यभिचाराय सर्वत्र सत्यन्तोक्तिः ॥ **लालावदिति** । दन्तान्तर्गतं जलं लाला तद्वदित्यर्थः ॥

या० — **अनुपदमेवेति** । 'शुद्धमीशरमामुक्तेष्वि'त्यत्रेत्यर्थः । **नित्येति** । त्वप्रत्ययस्य प्रत्येकं संबन्धः । तथा च नित्यत्वमाहङ्कारिकत्वं भौतिकत्वमित्यर्थ । आहङ्कारिकत्वभौतिकत्वयोः स्वमतेऽपि सत्त्वात् **केवलेति** । केवलभौतिकत्वे वैशेषिकोक्तमनुमानचतुष्टयं दूषयितुमनुवदति **घ्राणमित्यादिना** । अत्र हेतुचतुष्टयेऽपि मनसि व्यभिचारवारणाय सत्यन्तमिति ज्ञातव्यम् ।

श्री० — **अनुपदं** 'शुद्धमीशरमे'त्यादिना ॥ **नित्येत्यादि** । नित्यत्वादिकमित्यर्थः । सन्त्येवेत्य तेन नित्यत्वम् , उर्वरितेन हङ्कारिकत्वादिकमुक्तमिति ज्ञेयम् । कापिलाद्यागम एवाहङ्कारिकत्वादौ मानमित्य। आह **कपिलेति** । तार्किकः इन्द्रियाणां भौतिकतां साधयति **घ्राणमित्यादिना** । श्रोत्रस्याकाशात्मकत्वमुभयसिद्धमिति तन्न साधितम् भूताकाशमेवासन्मते श्रोत्रमिति ज्ञेयम् ।

च० — **अनुपदं** शुद्धमीशरमामुक्तेष्वित्यत्र । **निन्येत्यादि** । द्वन्द्वप्रकृतिकभावप्रत्ययस्य द्वन्द्वावयवत्रिकेण योगः । नित्यत्वमाहङ्कारिकत्वं भौतिकत्वं सिषाधयिषतां वैशेषिकाणामनुमानचतुष्टयीं दुदूषयिषुरनुवदति **घ्राणमित्यादिना** ।

**सु० — अत्र पार्थि(वादित्व)वत्वादिमात्रसाधने सिद्धसाधनत्वम् । तन्मात्रत्वसाधने दृष्टान्तानां साध्यवैकल्यम् । सर्वत्र पाञ्चभौतिकत्वाभ्युपगमात् । सर्वत्र चादृष्टेन व्यभिचार(:)ात् ।**

शे० — **पार्थिवत्वादिमात्रसाधन इति** । पार्थिवमाप्यमित्येतावन्मात्रसाधन इत्यर्थः ॥ **तन्मात्रत्वसाधन इति** । पार्थिवमेवाप्यमेवेत्येतत्साधन इत्यर्थः । प्रतिज्ञातं दोषद्वयमप्युपपादति **सर्वत्रेति** । तथा च सर्वत्र पाञ्चभौतिकत्वं वदता घ्राणस्य पार्थिवत्वाभ्युपगमात्तथा रसनादेरप्याप्यादित्वाभ्युपगमात्सिद्धसाधनम् । सर्वत्र पाञ्चभौतिकत्वं वदता घृतादेरपि पाञ्चभौतिकत्वाङ्गीकारेण पार्थिवत्वादिमात्रत्वा ङ्गीकारात् दृष्टान्ते साध्यवैकल्यमित्यर्थः । प्रतिज्ञां दूषयित्वा हेतुमपि दूषयति **सर्वत्र चेति** । सर्वेष्वप्यनुमानेष्वित्यर्थः । घ्राणव्यक्तिर्गन्धव्यञ्जिकैव रसनव्यक्ती रसव्यञ्जिकैवेत्यादिनियमवत्किञ्चिददृष्टं गन्धस्यैव व्यञ्जकं किञ्चिच्च रसस्यैवेति नियमेन गन्धाद्येकैकमात्रव्यञ्जकस्याप्यदृष्टस्य सिद्ध्या तत्र रसाद्यव्यञ्जकत्वे सति गन्धादिमात्रव्यञ्जकत्वेऽपि पार्थिवत्वादिमात्रस्य तन्मात्रत्वस्य चाभावाद्व्यभिचार इति गूढाभिसन्धेरिदं दूषणाभिधानम् ।

स० — **पार्थिवत्वादिमात्रसाधन इति** । पार्थिवमेव इत्येवं पार्थिवमात्रसाधन इत्यर्थः । **तन्मात्रत्वसाधने इति** । पार्थिवमेवेत्येवं पार्थिवत्वमात्रसाधने इत्यर्थः । **सर्वत्र चादृष्टेन व्यभिचार इति** । सर्वेष्वपि अनुमानेष्वित्यर्थः । घ्राणव्यक्तिः गन्धव्यञ्जिकैव, रसनव्यक्तिः रसव्यञ्जिकैव इत्येवं नियमवत् कदाचिददृष्टव्यक्तिविशेषे रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वेऽपि पार्थिवत्वाभावेन तत्र व्यभिचार इति गूढाभिसन्धेरेव इदं दूषणाभिधानम् ।

प० — **सिद्धसाधनत्वमिति** । प्रागुक्तस्मृत्येन्द्रियाणां पाञ्चभौतिकत्वोपगमादिति भावः ॥ **सर्वत्र पाञ्चभौतिकत्वेति** । 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशादि'त्यत्रोक्तदिशेति भावः ।

या०— **सर्वत्र चेति** । सर्वेष्वनुमानेषु ।

श्री०— सिद्धसाधनत्वं साध्यवैकल्यं च पश्चीकरणपक्षमङ्गीकृत्याह **सर्वत्रेति** ।

**सु०— तत् सर्वव्यञ्जकमिति चेत् । किं व्यक्तिपुरस्कारेणोच्यते उतोपाध्यवच्छेद-पुरस्कारेण । नाद्यः । यददृष्टमेकैकव्यञ्जकं तत्र व्यभिचारानिस्तारात् । तन्न निश्चितमिति चेत् । तथापि संदिग्धव्यभिचारिता । न द्वितीयः । इन्द्रियत्वावच्छेदेनासिद्धेः ।**

शे०— आशयमविद्वान् शङ्कते **तदिति** । तथा च सत्यन्तविशेषणाभावेन हेतोरेवागमनान्न व्यभिचार इति भावः । आशयमुद्घाटयितुं विकल्पयति **किं व्यक्तिपुरस्कारेणेति** । एकैकादृष्टव्यक्तिः सर्वव्यञ्जिकोत घ्राणादिवद्गन्धादिमात्रव्यञ्जकादृष्टव्यक्तिविशेषा अदृष्टत्वेनोपाधिना सर्वव्यञ्जिका इति विकल्पार्थः । आशयमुद्घाटयन्नाद्यं प्रत्याह **यददृष्टमिति** । गन्धमात्रव्यञ्जकं रसमात्रव्यञ्जकं वा यददृष्टं तत्रेत्यर्थः ॥ **तदिति** । अदृष्टव्यक्तौ गन्धाद्येकैकमात्रव्यञ्जकत्वमित्यर्थः ॥ **तथाऽपीति** । निश्चितसाध्याभाववति हेतुसन्देहादिति भावः ॥ **इन्द्रियत्वेति** । यद्यसर्वव्यञ्जकादृष्टानामप्येकधर्मावच्छिन्नत्वेनैक्यमापाद्य सर्वव्यञ्जकतामुपपाद्य हेत्वगमनान्न व्यभिचारस्तर्हि घ्राणादीनामपीन्द्रियत्वरूपैकधर्मावच्छिन्नत्वेनैक्यमापाद्य रसादिसर्वव्यञ्जकताया वक्तुं शक्यत्वात्सर्वेष्वनुमानेषु हेतुविशेषणानां पक्षेऽसिद्ध्या हेत्वसिद्धिः स्यादित्यर्थः । न चेन्द्रियत्वेनेन्द्रियस्य रसादिव्यञ्जकत्वेऽपि घ्राणादेस्तदभावान्नासिद्धिरिति वाच्यम् । तथा सत्यदृष्टत्वावच्छेदेनादृष्टस्य सर्वव्यञ्जकत्वेऽपि तत्तददृष्टस्य सर्वव्यञ्जकत्वाभावेन व्यभिचारतादवस्थ्यापातात् तत्परिहाराय चादृष्टत्वेन तत्तददृष्टस्यापि सर्वव्यञ्जकत्वाङ्गीकारे च तन्न्यायेन घ्राणादेरपीन्द्रियत्वावच्छेदेन रसादिव्यञ्जकत्वप्राप्त्याऽसिद्धितादवस्थ्यादिति भावः ।

स०— आशयमविद्वान् शङ्कते **तत्सर्वव्यञ्जकमिति** । आशयमुद्घाटयति । **व्यक्तिपुरस्कारेणेति** एकैकादृष्टव्यक्तिः सर्वव्यञ्जिकेति व्यक्तिपुरस्कारेण सर्वव्यञ्जकत्वमभिप्रेतम्, अदृष्टत्वरूपोपाध्यवच्छेदेन वेति विकल्पार्थः । घ्राणव्यक्तिः गन्धव्यञ्जिका । रसनव्यक्तिः रसव्यञ्जिका । इत्येवं व्यक्तिपुरस्कारेण वा गन्धव्यञ्जकत्वमभिप्रेतं किंवा इन्द्रियत्वरूपोपाध्यवच्छेदेन वेति विकल्पार्थ इत्यप्याहुः ॥ **यददृष्टमिति** । गन्धमात्रव्यञ्जकं वा रसमात्रव्यञ्जकं वा यददृष्टं तत्रेत्यर्थः ॥ **तन्नेति** । अदृष्टव्यक्तौ गन्धमात्रव्यञ्जकत्वादिकमित्यर्थः । **तथापीति** निश्चितसाध्याभाववति हेतुसंदेहादिति भावः । **इन्द्रियत्वावच्छेदेनासिद्धेरिति** । घ्राणादीनामपि इन्द्रित्वेन रूपेण सर्वव्यञ्जकत्वसत्त्वात् गन्धमात्रव्यञ्जकत्वादिहेतूनां पक्षे असिद्धेरित्यर्थः ।

प० — **किं व्यक्तीति** । तत्तदिन्द्रियसहकारिप्रतिनियतादृष्टव्यक्तिपुरस्कारेणेत्यर्थः ॥ **उपाधीति** । अदृष्टत्वधर्मावच्छेदेनेत्यर्थः ॥ **तदिति** । तादृशादृष्टमिति वा अदृष्टव्यक्त्यैकैकव्यञ्जकत्वं वा न निश्चितमित्यर्थः ॥ **इन्द्रियत्वेति** । क्रोडीकारकैकधर्ममुखेनाव्यभिचारोक्तौ तादृशधर्ममुखेन प्राक्प्रयुक्तहेतूनां विशेषणासिद्धिप्रयुक्तासिद्धिः स्यादित्यर्थः ।

या० — गन्धाद्येकैकमात्रव्यञ्जकादृष्टव्यक्तिविशेषे व्यभिचार इति गूढाभिसन्धेरुत्तरमाशयमविद्वान् शङ्कते **तत्सर्वव्यञ्जकमिति** । तथा च सत्यन्तविशेषणाभावेन हेतोरेवाभावान्न व्यभिचार इति भावः ॥ आशयमुद्घाटयितुं विकल्पयति **किं व्यक्तिपुरस्कारेणेति** । किमेकैवादृष्टव्यक्तिर्मनोवत्सर्वव्यञ्जिका उत घ्राणादिवद्गन्धादिमात्रव्यञ्जकादृष्टव्यक्तिविशेषा अदृष्टत्वेनोपाधिनैकीकृताः सर्वव्यञ्जका इति विकल्पार्थः ॥ **तन्न निश्चितमिति** । अदृष्टे एकैकव्यञ्जकत्वं न निश्चितमित्यर्थः । न तु तादृशादृष्टमेवानिश्चितमिति व्याख्यानम् । धर्मिण एवानिश्चये वक्ष्यमाणसन्दिग्धव्यभिचारासम्भवात् । असद्व्याख्याने तु साध्याभावनिश्चयवत्यदृष्टे हेतुसन्देहात्सन्दिग्धव्यभिचारोद्भावनं सङ्गच्छत इति ध्येयम् । **इन्द्रियत्वावच्छेदेनेति** । यदि असर्वव्यञ्जकादृष्टानामेकधर्मावच्छिन्नत्वेनैक्यमापाद्य सर्वव्यञ्जकतामुक्त्वा व्यभिचारः परिह्रियते, तर्हि घ्राणादीनामपीन्द्रियत्वरूपैकधर्मावच्छेदेनैक्यमापाद्य रसादिसर्वव्यञ्जकत्वस्य वक्तुं शक्यत्वेन सर्वहेतुविशेषणानामसिद्धिः स्यादित्यर्थः ।

---

श्री० — **तत्** अदृष्टम् तथा च तत्र सत्यन्तं नास्तीति भावः ॥ **सन्दिग्धेति** । निश्चितसाध्याभाववति हेतुसन्देहादित्यर्थः ।

सु० — **किञ्च पार्थिवादिपदैः पृथिवीत्वाद्यभिधाने तत्तत्सन्निकर्षैरनैकान्त्यम् । इन्द्रियत्वेन हेतुविशेषणे दृष्टान्तानां साधनवैकल्यम् । पृथिव्यादिकार्यतासाधने प्रागुक्तसिद्धसाधनतापरिहाराय मात्रपदप्रयोगे पृथिव्यादिरूपादिव्यञ्जकमन्निकर्षेषु व्यभिचारतादवस्थ्यम् ।**

शे० — **किञ्चेति** । पार्थिवमिति पृथिवीकार्यमुच्यते । तच्च पृथिवीत्वजातिमदपि दृष्टमिति तदनुसारेणाद्यः कल्पः । पृथिवीत्वजातिराहित्येऽपि तत्कार्यतामात्रेण पार्थिवं तत्तद्गुणादिकमपि दृष्टमिति तदनुसारेण द्वितीयकल्पप्रसक्तिरिति ध्येयम् । एवं कल्पद्वयं मनसि निधायाद्यमनुवदति **पार्थिवादिपदैरिति** । दूषयति **तत्तत्सन्निकर्षैरिति** । घ्राणादीनां गन्धादिभिर्ये सन्निकर्षास्तेषां, रसाद्यव्यञ्जकत्वे सति गन्धादिव्यञ्जकत्वेऽपि, पृथिवीत्वादिजातिमत्त्वाभावादिति भावः । इन्द्रियत्वविशिष्टस्यैव रसाद्यव्यञ्जकत्वे सति गन्धादिव्यञ्जकत्वस्य हेतुत्वाद्विशिष्टहेत्वगमनान्न तत्तत्सन्निकर्षेषु व्यभिचार इत्यतो माऽस्त्वस्मिन्पक्षे व्यभिचारः कुङ्कुमगन्धादिव्यञ्जकघृतादाविन्द्रियत्वविशिष्टहेत्वगमनाद्दृष्टान्ते साधन-

वैकल्यमवर्जनीयमित्याह **इन्द्रियत्वेनेति** । द्वितीयं दूषयति **पृथिव्यादिकार्यतासाधन इति ॥ प्रागुक्तेति** । घ्राणरसनादेः प्रत्येकं पञ्चभूतकार्यत्वादिना पृथिव्यादिकार्यताया अङ्गीकारात्तत्साधने सिद्धसाधनमित्यर्थः ॥ **मात्रपदेति** । तथा च सर्वस्य पाञ्चभौतिकत्ववादिना घ्राणरसनादेः पृथिवीकार्यत्वाप्कार्यत्वाङ्गीकारेऽपि तत्तन्मात्रकार्यत्वानभ्युपगमान्न सिद्धसाधनमिति भावः ॥ **पृथिव्यादीति** । अत्र पृथिव्यादीत्यादिपदेन जलतेजोवायूनां संग्रहः । रूपादीत्यादिपदेन च गन्धरसस्पर्शानां संग्रहः । रूपादीनां व्यञ्जका ये दीपादयस्तैः सह पृथिव्यादीनां ये सन्निकर्षास्तेष्वित्येवार्थः । न तु रूपादिव्यञ्जकीभूता ये सन्निकर्षास्तेष्विति । तथा सति पूर्ववत्सन्निकर्षेषु व्यभिचार इत्येव वक्तव्यतया पृथिव्यादिरूपादिव्यञ्जक सन्निकर्षेष्वित्युक्तेरस्वारस्यापातात् ।

ततश्चायमर्थः । घ्राणं पृथिवीमात्रकार्यं रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वादित्यनुमाने साध्ये मात्रपदप्रक्षेपेण सिद्धसाधनतापरिहारेऽपि कुङ्कुमगन्धव्यञ्जकघृतेन कुङ्कुमस्य यः सन्निकर्षस्तत्र व्यभिचारः स्यादेव । तस्य रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वेऽपि पृथिवीमात्रकार्यत्वाभावात्सर्वत्र पाञ्चभौतिकत्वस्य मयाऽभ्युपगतत्वेन कुङ्कुमगन्धव्यञ्जकघृतादेरपि पाञ्चभौतिकत्वेन पृथिवीमात्रत्वाभावेन तत्सन्निकर्षस्य पृथिवीमात्रकार्यत्वानुपपत्तेः । एवं रसनमाप्यं रूपाव्यञ्जकत्वे सति रसव्यञ्जकत्वादित्यनुमानेऽपि रसाश्रयद्रव्यस्य लालया सह सन्निकर्षे उक्तरीत्याऽम्मात्रकार्यत्वाभावाद्व्यभिचारः । चक्षुस्तैजसं स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्वादित्यत्रापि व्यञ्जकेन प्रदीपेन सह सन्निकर्षे तेजोमात्रकार्यत्वाभावाद्व्यभिचारः । त्वगिन्द्रियं वायवीयं शब्दाव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वादित्यत्र च व्यजनपवनेन सह विषयस्य सन्निकर्षे उक्तरीत्या वायुमात्रकार्यत्वाभावाद्व्यभिचार इत्यनुमानचतुष्टयमप्यनुपपन्नमेवेति । यद्यप्यत्र व्यञ्जकीभूते घृतादौ पृथिव्यादिमात्रकार्यत्वाभावात्साध्यवैकल्यमपि दृष्टान्ते वक्तुं शक्यं तथाऽपि प्रागुक्तरीत्या तस्य सुज्ञानत्वात्तदनुद्भाव्य व्यञ्जकैः सह सन्निकर्षेषु व्यभिचार एवोक्तः । तत्रापि पृथिव्यादिगन्धादिव्यञ्जकसन्निकर्षेष्विति वक्तव्ये यत्पृथिव्यादिरूपादिव्यञ्जकसन्निकर्षेष्विति वचनं तत् रूपव्यञ्जकप्रदीपेन सह विषयसन्निकर्षस्यावश्यकत्वं सार्वजनीनानुभवसिद्धमिति द्योतयितुमिति ध्येयम्। यद्वा रूपादिव्यञ्जका ये सन्निकर्षास्तेष्वित्येवार्थः । पृथिव्यादीति च रूपादिव्यञ्जकसन्निकर्षविशेषणम् । तथा च पृथिव्यादयः पृथिव्यादिरूपाः पृथिव्यादिकार्यभूता ये रूपादिव्यञ्जकसन्निकर्षा इति सिध्यति। तत्रोक्तसन्निकर्षाणां रूपादिव्यञ्जकसन्निकर्षेष्वित्यनेनोक्तहेतुमत्त्वलाभेऽपि पृथिव्यादिमात्रकार्यत्वरूपसाध्याभावोपपादनार्थं पृथिव्यादित्ववर्णनम् । अत एव क्वचित् 'पृथिव्यादिरूपव्यञ्जकसन्निकर्षेष्वि'ति व्यञ्जकसन्निकर्षाणां पृथिव्यादिरूपत्वसमर्पकः क्वाचित्कः पाठः सङ्गच्छते । ततश्च रूपरसगन्धस्पर्शव्यञ्जकसंयुक्तसमवायरूपसन्निकर्षाणां रूपादिजन्यतया पृथिव्यादिमात्रकार्यत्वाभावाद्व्यभिचारः । न चात्र मात्रशब्देनेतरभूतानामेव व्यवच्छेद्यत्व-

मन्यथा प्रागभावादृष्टादेः सर्वत्र जनकत्वेनाप्रसिद्ध्यापातात् । तथा च गन्धादेरव्यवच्छेद्यतयोक्तसन्निकर्षाणां गन्धादिजन्यत्वेऽपि पृथिव्यादीतरभूतजन्यत्वाभावेन पृथिव्यादिमात्रकार्यत्वमस्त्येवेति कथं तत्र व्यभिचार इति वाच्यम् । तथा सति घ्राणादीनां पृथिव्यादीतरभूतकार्यत्वाभावमात्रेणैव पृथिव्यादिमात्रकार्यत्वरूपप्रतिज्ञार्थोपपत्त्या केवलभौतिकत्वासिद्धिप्रसङ्गेन, न च केवलेत्यादिप्रक्रमविरोधापत्त्या तदविरोधार्थं पृथिव्यादीतरभावरूपासाधारणकारणमात्रस्यैव व्यवच्छेद्यतयाऽहङ्कारस्येव गन्धादेरपि व्यवच्छेद्यतयोक्तरीत्या व्यभिचारस्य वज्रलेपत्वादिति संक्षेपः । अथवा चक्षुस्तैजसमेवेत्यत्र पृथिव्यास्तद्रूपव्यञ्जकप्रदीपस्य च सन्निकर्षोऽवश्यमपेक्षितः । तत्र स्पर्शाव्यञ्जकत्वे सतीत्यादिहेतुमति पृथिवी-तेजः-कार्यतया तैजसमात्रत्वाभावात् । घ्राणं पार्थिवमेवेत्यत्र चर्मरूपपृथिव्याः तद्गन्धव्यञ्जकजलस्य च यः सन्निकर्षस्तत्र रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वेऽपि पृथिवीजलकार्यत्वेन पृथिवीमात्रकार्यत्वाभावात् । रसनमम्मात्रकार्यमित्यत्र च शाकादेस्तद्रसव्यञ्जकलवणादिना सन्निकर्षे उक्तहेतुमति पृथिवीमात्रकार्यत्वाल्लवणशाकादिसंयोगस्याम्मात्रकार्यत्वाभावात् । त्वगिन्द्रियं वायुमात्रकार्यमित्यत्र च पृथिवीगतस्पर्शव्यञ्जककर्पूरादेश्च सन्निकर्षे उक्तहेतुमत्यपि वायुमात्रकार्यत्वाभावाद्व्यभिचार इत्यर्थः । न चैवमस्य पक्षस्य 'अपि च' इति वक्ष्यमाणपक्षान्तर्भावप्रसङ्गः । तत्र तत्तत्सन्निकर्षनिरूपकलवणादावत्र पुनस्तत्सन्निकर्ष इति भेदादित्यभिप्रायः ।

---

स० — **किं चेति** पार्थिवमित्यनेन पृथिवीकार्यमुच्यते । तच्च पृथिवीत्वरूपजातिमदपि दृष्टमिति तदनुसारेण आद्यः कल्पः । पृथिवीत्वजातिराहित्येऽपि तत्कार्यमात्रेणापि पार्थिवं तद्गुणादि दृष्टम् । अतस्तदनुसारेण द्वितीय इति विकल्पाभिप्रायः । तत्राद्यं निराकरोति **तत्तत्सन्निकर्षैरिति ।** गन्धघ्राणसन्निकर्षे रसाव्यंजकत्वे सति गंन्धव्यञ्जकत्वे सत्यपि पृथिवीत्वजातिमत्त्वाभावादित्यर्थः । एवं सन्निकर्षान्तरेऽपि व्यभिचारो बोध्यः । न च द्रव्यत्वेन हेतुविशेषणात् न सन्निकर्षैः व्यभिचार इति वाच्यम् । तावतापि चर्मादिगन्धव्यञ्जकजलादौ व्यभिचारानिस्तारात् । द्वितीयं दूषयति **पृथिव्यादिकार्यतासाधन इति । पृथिव्यादिरूपादिव्यञ्जकसन्निकर्षेष्विति ।** रसनमाप्यमित्यत्र गुडनिष्ठरसव्यञ्जकसन्निकर्षे रूपाव्यञ्जकत्वे सति रसव्यञ्जकत्वेऽपि रसलक्षणगुणकार्यत्वस्यापि सत्त्वेन तन्मात्रकार्यत्वाभावेन तत्र व्यभिचारात्, गन्धघ्राणसन्निकर्षे गन्धव्यञ्जकत्वे सत्यपि पृथिवीमात्रकार्यत्वाभावात्. चक्षूरूपसन्निकर्षे सत्यपि रूपव्यञ्जकत्वे तेजोमात्रकार्यत्वाभावात्, स्पर्शव्यञ्जकसन्निकर्षे स्पर्शव्यञ्जकत्वे सत्यपि वायुमात्रकार्यत्वाभावात्, व्यभिचारः इत्यर्थः । वस्तुतस्तु पृथिव्यादिरूपादिव्यञ्जकैः सह ये सन्निकर्षास्तेषु इत्यर्थः । चक्षुस्तेजोमात्रकार्यमित्यत्र पृथिव्यास्तद्रूपव्यंजकप्रदीपेन सह सन्निकर्षे पृथिवीदीपकार्यत्वेन तैजसमात्रत्वाभावात् व्यमिचारः । तथा घ्राणं पृथिवीमात्रकार्यमित्यत्र चर्मणस्तद्गन्धव्यञ्जक-

जलेन सह सन्निकर्षे पृथिवीजलकार्यत्वेन पृथिवीमात्रकार्यत्वाभावात् व्यभिचारः । रसनं अम्मात्रकार्यमित्यत्र शाकादेस्तद्रसव्यञ्जकलवणादिना सन्निकर्षे पृथिवीमात्रकार्यत्वेन अम्मात्रकार्यत्वाभावात् व्यभिचारः । त्वगिन्द्रियं वायुमात्रकार्यमित्यत्र चन्दनादेः स्पर्शव्यञ्जककर्पूरादिना सह सन्निकर्षे पृथिवीमात्रकार्यत्वेन वायुमात्रकार्यत्वाभावात् व्यभिचारः । रूपादित्वेन ग्रहणं स्पष्टप्रतिभासत्वाभिप्रायेणेति द्रष्टव्यम् ।

प० — **पृथिवीत्वादीति** । घ्राणं पार्थिवमित्यादेः पृथिवीत्वादिजातिमदित्याद्यर्थाभिधान इत्यर्थः ॥ **पृथिव्यादीति** । पृथिवीजलतेजोवायुगतरूपरसगन्धस्पर्शादिव्यञ्जकसन्निकर्षेषु पृथिव्यादिकार्यत्ववत् इन्द्रियतत्क्रियादिकार्यत्वस्यापि सत्त्वेन पृथिव्यादिमात्रकार्यत्वरूपसाध्यस्याभावेपि हेतुसत्वा व्यभिचार इत्यर्थः । एतच्चोपलक्षणम् । अप्रसिद्धविशेषणता च ध्येया । कालादेरपि कार्यमात्रहेतुत्वात् । व्यभिचारप्रस्तावात्स एवोक्तः । पृथिव्यादिव्यञ्जकेत्येव वाच्ये रूपादीत्यप्युक्तिः हेतुसत्त्वलाभाय । तत्र पृथिव्यादिगंधादीति वाच्ये रूपादीत्युक्तिः प्रसिद्धचक्षुस्तैजसप्रयोगानुरोधनेत्याहुः ।

या० — **पृथिवीत्वाभिधान इति** । प्रत्ययस्य स्वार्थिकत्वमङ्गीकृत्य पृथिवीत्वादिजातिमत्त्वस्य साध्यत्वाभिधान इत्यर्थः ॥ **पृथिव्यादिरूपादीति** । अत्र आद्येनाऽऽदिपदेन जलतेजसी ग्राह्ये न वायुरपि ग्राह्यः । तदीयस्पर्शग्राहकत्वचोपि वायवीयत्वेन तत्संनिकर्षस्य वायुमात्रकार्यत्वेन तत्र व्यभिचारासंभवात् । द्वितीयेन पृथिवीगतरसस्पर्शयोः जलनिष्ठरूपस्पर्शयोस्तेजोनिष्ठस्पर्शस्य च ग्रहणम् । तथा च यद्यपि पृथिवीगन्धव्यञ्जकसंयुक्तसमवायरूपसन्निकर्षान्तर्गते घ्राणपृथिवीसंयोगे घ्राणस्यापि पृथिवीत्वेन पृथिवीमात्रकार्यत्वमस्त्येवेति न व्यभिचार एवमब्रसतेजोरूपवायुस्पर्शव्यञ्जकसन्निकर्षान्तर्गतेषु रसनाद्यबादिसंयोगेषु न व्यभिचारः । रसनचक्षुस्त्वचामपि क्रमेणाप्तेजोवायुरूपत्वेनाबादिमात्रकार्यत्वस्य तत्र सत्त्वात् । तथाऽपि पृथिवीरूपरसस्पर्शव्यञ्जकसन्निकर्षान्तर्गतेषु पृथिवीचक्षुरादिसंयोगेषु अब्रूपस्पर्शव्यञ्जकान्तर्गतयोः अप्चक्षुरादिसंयोगयोः तेजःस्पर्शान्तर्गते तेजस्त्वक्संयोगे च व्यभिचारतादवस्थ्यम् । चक्षुरादीनां पृथिवीत्वाद्यभावेन तत्संयोगानां पृथिव्यादिमात्रकार्यत्वाभावेन साध्याभावसत्त्वादिति भावः । केचित्तु गन्धरसादिव्यञ्जकसन्निकर्षेषु गन्धरसादेरपि घटकतया जनकत्वेन पृथिव्यादिमात्रकार्यत्वाभावाद्व्यभिचार इति भावमाहुः । तत्र गन्धादिव्यञ्जकसन्निकर्षेष्वित्येव वक्तव्यत्वेन पृथिव्यादिरूपादिव्यञ्जकसन्निकर्षेष्वित्युक्तेः प्रयोजनं चिन्त्यम् । मात्रशब्देनेतरभूतानामेव व्यवच्छेद्यत्वाच्च । अन्यथा प्रागभावस्यादृष्टादेश्च सर्वत्र जनकत्वेनाप्रसिद्धिरेव स्यादिति ।

श्री० — **प्रागुक्तेति** । सर्वत्र पाञ्चभौतिकत्वाभ्युपगमादिति भावः ॥ **पृथिव्यादिरूपादीति** । अयमर्थः । पृथिवीगतरूपज्ञानं संयुक्तसमवायसन्निकर्षेण चक्षुषा भवति । तथा च पृथिवीरूपव्यञ्जक-

संयुक्तसमवायसन्निकर्षान्तर्गते संयोगरूपे, चक्षुःपृथिवीसन्निकर्षे, रूपव्यञ्जकत्वसद्भावेऽपि पृथिवीमात्र-कार्यत्वं नास्ति । चक्षुःकार्यत्वस्यापि सत्त्वाद्व्यभिचारः । एवं चक्षुषा जलरूपव्यञ्जकसंयुक्तसमवायान्तर्गते चक्षुर्जलसन्निकर्षे व्यभिचारो द्रष्टव्यः । एवं रसनेन्द्रियेण गुडनिष्ठरसज्ञानं संयुक्तसमवायसन्निकर्षेण भवति । तदन्तर्गते रसनगुडसंयोगे रसव्यञ्जकत्वसद्भावेऽप्यम्मात्रकार्यत्वं नास्ति । गुडकार्यताया अपि सद्भावाद्व्यभिचार इत्यादि द्रष्टव्यम् ।

**सु०— अपि च । चर्मादिगन्धव्यञ्जकत्वं जलादेः, रसव्यञ्जकत्वं लवणादेः, रूप-व्यञ्जकत्वमञ्जनादेः, स्पर्शव्यञ्जकत्वं कर्पूरादेरप्यस्तीति व्यभिचार एव(इति) ।**

**शे०** — ननु गन्धादिव्यञ्जकद्रव्यत्वस्यैव हेतुत्वान्न सन्निकर्षेषु व्यभिचार इत्यतो भाऽस्तु तर्हि व्यभिचारो घ्राणादेर्द्रव्यत्वासिद्ध्याऽसिद्धिस्तु स्यादेव । न च गन्धाद्युपलब्धेः करणजन्यत्वानुमित्या तत्सिद्धिः । अदृष्टेनार्थान्तरतया तदनवकाशात् । न च द्रव्यकरणिकेति साध्यम् । तथाऽपि शरीरेण सिद्धसाधनत्वात् । अथासाधारणकरणकत्वं साध्यमतो नादृष्टेनार्थान्तरतेति वाच्यम् । मनोजन्यत्वेना-प्युपपत्त्याऽर्थान्तरात् । न च मनसः साधारण्येनासाधारणत्वाभावान्नार्थान्तरत्वमिति वाच्यम् । मनसः साधारण्येऽपि सुखसाक्षात्कारासाधारणकरणत्ववदिहाप्यसाधारणकारणत्वस्याविरुद्धत्वात् । न च शरीर-भिन्नत्वेन साध्यं विशेषणीयम् । तथा सति मनसा त्वचा वा सिद्धसाधनताप्रसङ्गात् । शरीरमात्र-कारणकक्रियायां व्यभिचाराच्च । तथा च न करणजन्यत्वानुमित्या द्रव्यत्वसिद्धिरित्यसिद्धिः स्यादेव । अस्तु वा कथञ्चिद्द्रव्यत्वसिद्धिस्तथाऽपि न परस्येष्टसिद्धिः । न चोक्तव्यभिचारपरिहारात्कथं नेष्टसिद्धि-रिति वाच्यम् । एकोदाहरणनिरासेऽपि वक्ष्यमाणरीत्याऽनेकस्य व्यभिचारोदाहरणस्य सत्त्वादित्या-शयवानाह **अपि चेति** । चर्मादीत्यादिपदेन नवशरावादिसंग्रहः ॥ **जलादेरिति** । न च रसव्यञ्जक-त्वाज्जलस्य तत्र रसाव्यञ्जकत्वे सतीति विशेषणाभावान्न व्यभिचार इति वाच्यम् । तथाऽपि गन्ध-व्यञ्जकरसाद्यव्यञ्जकजलव्यक्त्या व्यभिचारानिस्तारात् । यदत्रोक्तं वर्धमानकृता गन्धसाक्षात्कारासाधारण-कारणतावच्छेदकद्रव्यत्वव्याप्यव्याप्यजातिमत्त्वं हेतुः । जलस्य गन्धव्यञ्जकत्वं तु जलत्वेनैव न तु तद्व्याप्यजात्यन्तरेणेति द्रव्यत्वव्याप्यव्याप्यजातिमत्त्वविरहान्न व्यभिचारः । घ्राणे च द्रव्यत्वव्याप्य-पृथिवीत्वव्याप्यघ्राणत्वरूपगन्धसाक्षात्कारासाधारणकारणतावच्छेदकद्रव्यत्वव्याप्यव्याप्यजातेः सत्त्वान्ना-सिद्धिरपीति । तच्चिन्त्यम् । द्रव्यत्वव्याप्यव्याप्यपदवैयर्थ्यात् । न च जले व्यभिचारवारणाय तदिति वाच्यम् । शीतलशिलानिष्ठायोग्यजलसंबन्धेऽपि नवशरावगन्धानभिव्यक्त्या योग्यजलत्वोपाधेरेव तदवच्छे-दकतया जातिपदादेव तद्वारणात् । न च गन्धत्वमादाय गन्धे व्यभिचारणाय तदिति वाच्यम् ।

अतीन्द्रियगन्धानभिव्यक्तः । तत्रापि गन्धविशेषत्वोपाधेरेव अवच्छेदकतया जातिपदेनैव तद्वारणसिद्धेः । द्वितीयव्याप्यपदस्य तथाऽपि व्यर्थत्वाच्च । न च जातिपदं धर्मपरमतो जल एव व्यभिचारवारणाय तदिति वाच्यम् । योग्यजलत्वस्य द्रव्यत्वव्याप्यजलत्वव्याप्यतया तथाऽपि व्यभिचारानिस्तारादिति दिक् । **रसव्यञ्जकत्वमिति** । शाकादिरसव्यञ्जकत्वमित्यर्थः ॥ **स्पर्शेति** । कर्पूरादेः पृथिव्यादिशैत्यव्यञ्जकत्वमित्यर्थः ।

**प०** — ननु पृथिवीतरभूतादिकार्यत्वे सति पृथिवीकार्यत्वं पृथिवीमात्रकार्यत्वपदेन विवक्षितम्, अतो नोक्तदोष इत्यतोऽन्यत्र व्यभिचारमाह **अपि चेति** ।

**या०** — **जलादेरिति** । न च तत्र रसाव्यञ्जकत्वरूपविशेषणत्वाभावात्कथं व्यभिचार इति वाच्यम् । जलस्य रसव्यञ्जकसन्निकर्षान्तर्गततया रसव्यञ्जकत्वेऽपि जलत्वेन तदभावात् । जलत्वावच्छिन्नधर्मिताकस्यैव व्यभिचारोदाहरणतया विवक्षितत्वात् । एवं लवणादेरपि न लवणादित्वेन रूपादिव्यञ्जकतेति ध्येयम् । लवणादेः शाकादिरसव्यञ्जकत्वम् । कर्पूरादेश्चन्दनादिशैत्यव्यञ्जकत्वं ज्ञेयम् ।

**श्री०** — **चर्मादीति** । जलादेस्तद्गतगन्धव्यञ्जकत्वेऽपि तद्गतरसाद्यव्यञ्जकत्वमस्तीति सर्वत्र विशेषणभागो ज्ञेयः ।

**सु०** — **इन्द्रियद्वैविध्यस्य प्रमितत्वमुक्तम् । तत्कथमित्यत आह** शुद्धमिति ।

अनु० — शुद्धमीशरमामुक्तेष्वन्यत्र प्राकृतैर्युतम् ।

**प्राक् प्रसिद्धितारतम्यमपेक्ष्योद्देशेऽपि प्राधान्यतारतम्यापेक्षयोपपादनमिति द्रष्टव्यम् ।** अन्यत्र **संसारिषु । प्राकृतैरक्षैर्युतं शुद्धमस्तीत्यर्थः । अयमभिसन्धिः । उपपादयिष्यते हीशरमामुक्तानामक्षवत्ता । न च तदक्षं प्राकृतमिति युक्तम् । निर्गुणत्वादिश्रुतिस्मृतिविरोधात् । ततस्तच्छुद्धचैतन्यमेव भवितुमर्हति । संसारिषु चाक्षवत्ता सुप्रसिद्धा । न च तन्मुक्तावक्षप्रतिपादकप्रमाणबलायातं शुद्धमेवास्त्विति युक्तम् । संसारेऽपि सम्यग्ज्ञाननियमाद्यापत्तेः । अतस्तत्र प्राकृतं शुद्धं चेति द्विविधमप्यस्तीति स्वीकार्यम् । ततः सिद्धमुक्तरूपाक्षद्वैविध्यमिति । परैरीशलक्ष्म्योर्लीलाविग्रहग्रहण(।)मङ्गीकारिभिस्तदक्षस्य प्राकृतत्वमङ्गीक्रियते । तान्प्रति किं वादान्तरेणेति मुक्तग्रहणम् । स्वमते मुक्तानां लीलाविग्रहस्वीकारात् । किमन्यदाऽपीन्द्रियोपपादनायासेनेतीशरमेति ।**

शे० — **उक्तमिति** । पूर्ववाक्ये मतमित्यनेनेति शेषः । ननु प्राकृतशुद्धचैतन्ययोरुद्देशक्रमानुसारेणैवोपपादनमुचितं तत्कुतोऽत्रोद्देशोपपादनयोः क्रमव्यत्यास इत्यतः क्रमद्वयं निमित्तोपदर्शनेनोपपादयति **प्रागिति** । प्राकृतं शुद्धचैतन्यमित्यत्रेत्यर्थः । प्रसिद्धितारतम्यापेक्षया प्राधान्यतारतम्यस्याभ्यर्हितत्वादिति भावेनापीत्युक्तम् । नन्वीशादेरक्षवत्त्वस्यैवासिद्धेः सिद्धौ वा तस्य प्राकृतत्वेनाप्युपपत्तेर्न तदक्षस्य शुद्धत्वं, संसारिष्वपि तदसिद्धेः सिद्धौ वा मुक्तानामिव शुद्धेनैवोपपत्तेः कुतोऽक्षद्वैविध्यमित्यत आह **अयमभिसन्धिरिति** ॥ **उपपादयिष्यते हीति** । **विकरणत्वान्नेति चेत्तदुक्तमित्या**दिनाऽत्रैव पादे पाशुपताधिकरणे च 'न चैतदखिलं विष्णौ श्रुतिप्रामाण्यगौरवात् । मनोबुद्धय्ङ्गितां विष्णोर्लक्षयाम' इत्यादिना चेशस्य, चतुर्थस्य द्वितीये च 'न वर्तत' इत्यादिना च रमामुक्तानामक्षवत्तोपपादयिष्यत इत्यर्थः ॥ **सम्यगिति** । संसारिणामुत्तममध्यमाधमभेदभिन्नत्वात्त्रिविधानामपि प्रमातृस्वरूपभूतेन्द्रियमात्रवत्त्वे, उत्तमानां स्वरूपेन्द्रियस्य निर्दोषत्वनियमेन तज्जन्यज्ञानस्य सम्यक्त्वनियमस्य आदिपदेन च मध्यमजीवसम्बन्धिचैतन्यस्य निर्दोषत्वसदोषत्वोभयत्वेन तज्ज्ञाने सम्यगसम्यक्त्वस्य, अधमजीवसम्बन्धिचैतन्यस्य सदोषत्वनियमेन तज्ज्ञानेऽसम्यक्त्वनियमस्य चापत्तेरित्यर्थः । नन्वीशलक्ष्म्योरक्षवत्तामात्रेण मुक्तानामक्षवत्तामात्रेण वा शुद्धाक्षसिद्धिसम्भवात्किमुभयग्रहणेनेत्यतो मुक्तग्रहणप्रयोजनं तावदाह **परैरिति** । नन्वशरीरत्ववादित्वात्परमतेऽक्षवत्त्वमेव नास्ति । तत्कथं तस्य प्राकृतत्वाङ्गीकारोदाहरणमित्यतो लीलेत्यादि हेतुगर्भं विशेषणम् ॥ **किं वादान्तरेणेति** । इदानीमिति शेषः । उत्तरत्र प्राकृतदेहग्रहणनिरासेन तदक्षस्य प्राकृतत्वस्यापि निरस्तत्वात् ॥ **मुक्तग्रहणमिति** । मुक्तानां परैर्लीलाविग्रहग्रहणानङ्गीकारान्न तदक्षस्य प्राकृतत्वशङ्कावकाश इति भावः । तर्हि मुक्तग्रहणमेवास्तु किमीशलक्ष्मीग्रहणेनेत्यतस्तत्कृत्यमाह **स्वमत इति** ॥ **स्वीकारादिति** । 'स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् । स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदाचन' इत्यादिप्रमाणबलादिति शेषः ॥ **अन्यदेति** । लीलाविग्रहाभावदशायामित्यर्थः ॥ **इन्द्रियेति** । अत्रापीदानीमिति शेषः । स्वावसरे तस्यापि समर्थनात् ।

स० — **प्रागिति** । प्राकृतं शुद्धचैतन्यमित्यत्रेत्यर्थः । ननु ईशरमाग्रहणेनैव शुद्धचैतन्यस्य प्रमितत्वस्य साधयितुं शक्यत्वात् मुक्तग्रहणं व्यर्थमित्यत आह **परैरिति** । अयं भावः । यदि; ईशरमयोरक्षवत्ता प्रमाणसिद्धा, न च तदक्षं प्राकृतम् इति युक्तम् निर्गुणत्वादिश्रुतिस्मृतिविरोधात्, ततस्तच्छुद्धचैतन्यमेव भवितुमर्हतीति; परं प्रति साध्यते, तदा परो वदिष्यति । अस्तु ईशरमयोरक्षवत्त्वम् । तथापि तयोः लीलाविग्रहवत्त्वसत्त्वात् प्राकृतमेव किं न स्यात् एवं च शुद्धचैतन्यं नाङ्गीकर्तव्यमिति । तदैवं वक्तव्यम् । तयोः लीलाविग्रह एव नास्तीति ॥ तथात्वे वादान्तरं नाम निग्रहस्थानं स्यात् ।

मुक्तेषु लीलाविग्रहवत्त्वस्यानङ्गीकृतत्वेन तत्रैवं वक्तुमशक्यत्वात् सार्थकं मुक्तग्रहणमिति । ननु तथात्वे मुक्ते ईशरमाग्रहणं व्यर्थमित्यत्र आह **स्वमते त्विति** । मुक्तानां लीलाविग्रहवत्त्वसत्त्वात् प्राकृतमेव किं न स्यादिति विशिष्योक्ते तं प्रति लीलाविग्रहाभावदशायामपि इन्द्रियसत्त्वेन प्राकृतत्वं वक्तुं न शक्यते इत्युपपादने बह्वायासः स्यात् । ईशरमयोस्त्वेवं वक्तुमशक्यत्वेन तद्ग्रहणं सार्थकमिति भावः ।

**प०** — उद्देशोपपादनयोः व्युत्क्रमे बीजमाह **प्रागिति** । प्रसिद्धाप्रसिद्धयोः प्रसिद्धं पूर्वमिति प्रसिद्धतारतम्यानुरोधेनेत्यर्थः । 'आनन्दमय इत्यादिनाऽध्यायेने'त्यत्रानन्दमयनये अभिहितयतिभङ्ग-समाधानवदिहापि तत्सुज्ञानमिति पुनरिह नोक्तम् । कथमनेन प्रमितत्वोपपादनमित्यत आह **अयमभि-सन्धिरिति ॥ उपपादयिष्यत इति** । 'मनोबुद्ध्यङ्गितां विष्णोः' इत्यादिना पाशुपतनये । चतुर्थस्य द्वितीयपादे वाद्यन्तरोक्तमुक्तिस्वरूपखण्डनानन्तरं स्वाभिमतमुक्तिस्वभावोक्तिप्रस्तावे चेति भावः ॥ **निर्गु-णत्वादिश्रुतीति** । 'साक्षी चेता केवलो निर्गुणश्चे'ति । 'यो गुणैस्सर्वतो हीनः सर्वदोषविवर्जितः' इत्यादयो हरौ । रमायां तु 'कामादितरत्रे'त्यादौ भाष्योक्तनित्यमुक्तत्वश्रुत्यादयः । मुक्तेषु 'चिन्मात्रा-णीन्द्रियाण्याहुर्मुक्तानामि'त्यादयः । 'न वर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रमि'त्यादिस्मृतिस्तद्विरोध इत्यर्थः ॥ **अक्षप्रापकप्रमाणेति** । श्यामावदाताः शतपत्रलोचना' इत्यादिप्रमाणेत्यर्थः ॥ **उक्तेति** । 'प्राकृतं शुद्धचैतन्यमि'त्युक्ताक्षेत्यर्थः । ईशादित्रितयोक्तेः कृत्यमाह **परैरिति ॥ किं वादान्तरेणेति** । शुद्धमक्षं तयोरस्तीति प्रस्तुतवाचं विना लीलाविग्रहो नास्तीति समर्थनपरवादान्तरेण किमिति भावेन विप्रतिपन्नेशरमास्थलं त्यक्त्वा मुक्तरूपस्थलान्तरमुपात्तम् । तत्र परैर्लीलाविग्रहानङ्गीकारादिति भावः । तर्हि मुक्तेष्वित्युक्त्यैवालमित्यत आह **स्वमत इति** । 'भावं जैमिनिर्विकल्पाम्नानात्' इत्यत्र चतुर्थे वक्ष्यमाणदिशा कदाचिल्लीलाविग्रहस्वीकारेण तदेन्द्रियवत्त्वस्याविप्रतिपन्नत्वेऽपि तादृशदेहानुपादानदशाया-मपीन्द्रियमस्तीत्युपपादनायासेन किमित्यतः तदनुपपाद्य, कदाचिल्लीलाविग्रहवत्त्वं नेति सिद्धान्तिनाङ्गीकृते-शरमारूपस्थलान्तरं स्वमताभिप्रायेणोपात्तमित्यर्थः ।

**या०** — प्राकृतस्यैव प्रथममुद्दिष्टत्वात्तदुपपादनमेवादौ कार्यमित्याशङ्क्याह **प्राक् प्रसिद्धीति ॥ उपपादयिष्यत इति** । पाशुपताधिकरणे 'मनोबुद्ध्यङ्गतां विष्णोर्लक्षयामो य एव सः' इत्यादिनेशस्य, चतुर्थेऽध्याये रमामुक्तानां च 'श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभि.'। 'श्यामा-वदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः । सर्वे चतुर्बाहवः' इत्यादिनाऽक्षवत्ता उपपाद-यिष्यत इत्यर्थः ॥ **किमन्यदाऽपीति** । लीलाविग्रहस्वीकाराभावदशायामपीत्यर्थः ।

**श्री०** — **आयातमिति** । मुक्तौ विद्यमानस्यैवाभिव्यक्तेरागन्तुकधर्माभावादित्यर्थः ॥ **मुक्ता-**

**ग्रहणमिति** । कदाचिन्मुक्तानां प्राकृतेन्द्रियरहितत्वे किं नित्यमुक्तयोरित्यर्थो ज्ञेयः । उपलक्षणं चैतत् । ईशपदेन अतिसमर्थत्वसूचनात्, रमापदेन च सदा रमन्त इत्यर्थसूचनात् प्राकृतेन्द्रियवत्त्वं न युक्तिमत् । न हि लीलयापि राजा वह्नौ प्रविशति, अमेध्यं वा भक्षयति इति द्रष्टव्यम् ॥ **ईशरमेतीति** । मुक्तत्वाविशेषात् ईशवत् रमावच्च शुद्धेन्द्रियस्यापि सिद्धेरिति भावः ॥ इदमप्युपलक्षणम् । अनिष्टरूपसंसारान्मुक्तानाम् अनिष्टदायकस्वभावलीलाविग्रहस्य सदा ग्रहणायोगात् । कदाचिद्ग्रहणं तु ईशरमासाम्यनिवृत्त्यर्थम्, तत्प्रेरणया इत्यपि द्रष्टव्यम् ॥

च० — **उपपादयिष्यत इति** । पाशुपतनये 'मनोबुध्यङ्गतां विष्णोर्लक्षयामो य एव स' इत्यादिनेशस्य, तुरीयेऽध्याये रमायाः मुक्तानां च 'श्रीर्यत्र रूपिण्युरुगायपादयोः' 'श्यामावदाता' 'इत्यादिना अक्षवत्त्वोपपादयिष्यते इत्यर्थः । **अन्यदापि** लीलाविग्रहस्वीकाराभावदशायामपि ।

सु० — **किमतो यद्येवमक्षद्वैविध्यमित्यत आह** निर्दोषमेवेति ।

अनु० — निर्दोषमेव चैतन्यमन्यत्रोभयमिष्यते ॥

**तत्रोत्तमजीवसंबन्धिचैतन्यमक्षं निर्दोषमेवेत्यर्थः । अन्यत्रापि निर्दोषतासद्भावादेवेत्युक्तम् । अन्यत्र मध्यमजीवसंबन्धिचैतन्ये । सर्वत्र प्राकृते चाक्षे निर्दोषत्वं सदोषत्वं चोभयं कालादिभेदेनेष्यते । अधमसंबन्धिचैतन्ये तु सदोषत्वमेवेति शेषः । इष्यते प्रामाणिकैरिति । अनेनागमं कार्यलिङ्गकमनुमानं चात्रार्थे दर्शयति । यावदत्र सदोषमुक्तं तन्निर्दोषग्रहणव्यवच्छेद्यमिति भावः ।**

शे० — जीवमात्रसंबन्धिचैतन्यस्य निर्दोषत्वनियमकथनस्य प्रकृतासङ्गतत्वादक्षमिति पदाध्याहारेण तत्परिहारेऽपि जीवमात्रसंबन्धिचैतन्यरूपाक्षस्य निर्दोषताया बाधितत्वादुपेक्षितं पूरयन्वाक्यं योजयति **तत्रेति** ॥ **सद्भावादिति** । अन्यत्रोभयमिति निर्दोषत्वसदोषत्वप्रतिपादनादिति भावः । अन्यत्रोभयमित्यनेन मध्यमाधमजीवसंबन्धिचैतन्ये निर्दोषत्वं सदोषत्वं चोच्यत इति भ्रान्तिनिरासायाह **अन्यत्रेति** । प्राकृतेऽक्षे निर्दोषत्वसदोषत्वयोः पृथगनभिधानादुत्तमजीवसंबन्धिचैतन्यवन्निर्दोषमेवेति संग्राह्यमेव, अधमजीवसंबन्धिचैतन्यवत्सदोषमेवेति निर्दोषग्रहणव्यवच्छेद्यमेवेति भ्रान्तिनिरासायान्यत्रेत्येतत्तत्परतयाऽपि व्याचष्टे **सर्वत्रेति** । उत्तममध्यमाधमजीवसंबन्धिनीत्यर्थः । इदं च सर्वस्य प्राकृताक्षस्य निर्दोषत्वसदोषत्ववचनं प्रायिकमेव । संसारिचतुर्मुखप्राकृताक्षस्यापि निर्दोषत्वनियमात् द्वयमपि यथार्थमेवेत्यन्यत्रोक्तत्वादिति ध्येयम् । ननु कथमेकस्यैव मध्यमजीवसंबन्धिचैतन्यस्य सर्वस्य प्राकृतस्याक्षस्य चोभयरूपत्वं विरुद्धं स्यादित्यत आह **कालादिभेदेनेति** ॥ **सदोषत्वमेवेति** । **सदोषत्वमेवेति** ।

इदं च तदीयस्वरूपज्ञानस्य प्रकारांशेऽयथार्थत्वनियमेन तदंशे सदोषत्वमेवेत्यभिप्रायेणैवोक्तम् । न तु तदीयस्वरूपज्ञानस्य विषयस्वरूपेऽप्ययाथार्थ्येन तदंशेऽपि तदीयस्वरूपेन्द्रियस्य सदोषत्वाभिप्रायेण । तथा सति 'अधमानां स्वरूपेन्द्रियं विषयस्वरूपमात्रे यथार्थमेव प्रकारे त्वयथार्थमि'ति निरवकाशपद्धतिग्रन्थ-विरोधापातात् । न चैवमप्यधमानां स्वरूपज्ञानमयथार्थमेवेति पद्धत्या विरोधः स्यादिति वाच्यम् । तदीयस्वरूपेन्द्रियस्य विषयस्वरूपे याथार्थ्यनियमस्य पद्धतावेवोत्तरत्र वक्ष्यमाणतया तद्याथार्थ्यनियमस्य च तत्स्वरूपज्ञानस्य विषयस्वरूपे याथार्थ्यनियमं विनाऽयोगेन तदीयस्वरूपज्ञानायाथार्थ्यनियमोक्तेरपि प्रकारे अयथार्थनियम एव पर्यवसन्नतयोक्तार्थाविरोधित्वात् । अत एवाधमानां मुक्त्यनन्तरं स्वरूपदुःखानुभवस्या-यथार्थत्वान्मुक्तेरपुरुषार्थत्वभङ्गप्रसङ्गो याथार्थ्ये च सर्वार्थान्विपरीतांश्चेत्यादिप्रमाणविरोध इति निरस्तम् । सर्वार्थानित्यादेस्तदीयस्वरूपज्ञानस्य प्रकारेऽयाथार्थ्यनियमपरत्वेन मुक्त्यनन्तरभाविदुःखानुभवस्य तत्र भासमानस्वातन्त्र्यादिरूपप्रकारांशेऽयाथार्थ्येऽपि दुःखस्वरूपांशे यथार्थत्वेन अपुरुषार्थत्वाविरोधात् । केचित्तु दुःखस्य दुःखत्वेनैव ज्ञानान्न मुक्तेः अपुरुषार्थत्वम् । न चैवं दुःखे सुखमानिनोऽसुरा इत्यादि-विरोधः । दुःखस्य दुःखत्वेन ज्ञानानन्तरमिदमनुकूलमेवेति जायमानज्ञानान्तराभिप्रायेण तदुपपत्तेः । न चैवमपि सर्वार्थानित्यादिविरोधो दुःखत्वेन दुःखानुभवस्य यथार्थत्वादिति वाच्यम् । अवश्यं भास-मानस्वातन्त्र्यादिप्रकारांशेऽयथार्थत्वाभिप्रायेण तदुपपत्तेरित्याहुः । नन्वत्र वाक्ये इन्द्रियद्वैविध्यस्य प्रमि-

---

तत्वानुक्तेः कथमनेन तस्याप्रमितत्वशङ्कानिरास इत्यत इष्यत इत्येतदेव तत्सूचकमित्यतो भविष्यत्यनेन तच्छङ्कानिरास इति भावेनोक्तशङ्कापरिहारोपयोगितया तद्व्यावर्तनपूर्वकं तत्सूचितं प्रमाणं च दर्शयति **इष्यते प्रामाणिकैरित्यनेनेति** ॥ **आगममिति** । 'यदात्मको भगवान्' 'अक्षाणि च स्वरूपाणी'त्यादि श्रुतिस्मृतिरूपमित्यर्थः ॥ **कार्यलिङ्गकमिति** । संवादिविसंवादिप्रवृत्तिरूपकार्यलिङ्गकमित्यर्थः । नन्वक्षद्वै-विध्यतन्निर्दोषत्वसदोषत्वनिरूपणमनर्थकमित्यतः प्रागुक्तं निर्दोषपदव्यवच्छेद्यप्रदर्शनार्थत्वमेतदभिप्राय-तयाऽऽह **यावदिति** ॥ **अत्रेति** । चैतन्यप्राकृतरूपाक्ष इत्यर्थः । उपलक्षणं चैतत् । यावन्निर्दोषमुक्तं तत्सर्वं संग्राह्यमित्यपि द्रष्टव्यम् ।

स० - **अन्यत्र मध्यमजीवेति** प्राकृते सर्वत्र चेति संबन्धः । **अधमसंबन्धिचैतन्ये तु सदोषत्वमेवेति शेष इति** । व्यधिकरणप्रकारकज्ञानजनकमेवेत्यर्थः । न तु धर्म्यंशेऽपि तज्ज्ञानस्यायाथार्थ्या-भिप्रायेणेयमुक्तिः। न च तथा सति 'मुक्तियोग्यानां स्वरूपज्ञानं यथार्थमेव। संसारिणां मिश्रम्। अन्येषामय-थार्थमेवे'ति पद्धतिविरोध इति वाच्यम् । निष्प्रकारकज्ञानस्यैवाभावेन तदीयसर्वज्ञानानां सप्रकारकत्वेन तत्र व्यधिकरणप्रकारकज्ञानत्वस्य सर्वत्र विद्यमानत्वेन तदभिप्रायेण तद्ग्रन्थोपपत्तेः। 'सर्वार्थान्विपरीतांश्च इत्या-देरयमेवाभिप्रायः। न चैवं तमसोऽपुरुषार्थत्वभङ्गः । दुःखादीनां दुःखत्वेन तज्ज्ञानाभावात् । तथा तज्ज्ञा-

नस्यैव चापुरुषार्थतासंपादकत्वादिति वाच्यम् । पुष्पमालात्वेन ज्ञातस्यापि सर्पस्य दशनादिरूपस्वकार्यकारित्वेन सर्पत्वेन तज्ज्ञानस्यानपेक्षितत्वदर्शनेन तद्वदेव दुःखानुभवमात्रस्यैव नीचतासंपादकत्वोपपत्तौ तत्त्वेन तज्ज्ञानस्यानपेक्षितत्वादिति भावः । वस्तुतो दुःखादेः दुःखत्वादिना ज्ञानेऽपि अविद्यमानस्वातन्त्र्यादिविषयकत्वेनायाथार्थ्यम् । 'दुःखे तु सुखमानिनोऽसुराः' इत्यादेरपि दुःखस्य सुखत्वेन ज्ञानानन्तरं इदमनुकुलमित्येवंरूपज्ञानान्तराभिप्रायकत्वादविरोधः । तावताऽपि दुःखत्वेन दुःखज्ञानस्य न यथार्थत्वं स्वातन्त्र्यादिविषयकत्वादिति न 'सर्वार्थान्' इत्यादिविरोध इति द्रष्टव्यम् ।

प० — **कालादिभेदेनेति** । एकदाविरोधात्कालदेशभेदेनेष्यत इत्यर्थः । मध्यमानां मिश्रज्ञानत्वेन तदभिव्यंजकस्य तथात्वात्प्राकृतेन्द्रियाणां द्विविधज्ञानहेतुत्वादिति भावः ॥ **सदोषत्वमेवेति** । तेषां ज्ञानस्य धर्म्यंशे यथार्थत्वेपि तद्गतसत्यत्वपरतंत्रत्वादिषु धर्मेषु केवलं मिथ्याज्ञानत्वेन तद्व्यञ्जकेन्द्रियस्य सदोषत्वनियमादिति भावः ॥ **आगममिति** । सात्त्विकराजसतामसबुद्धिस्वरूपकीर्तनपरचरमाध्यायगीतादिवाक्यरूपमागमम् ॥ **कार्यलिङ्गकमिति** । तत्त्वज्ञानमिश्रज्ञानमिथ्याज्ञानरूपकार्यलिंगकमित्यर्थः ।

या० — **सदोषत्वमेवेति** । न चैवमधमानां मुक्त्यनन्तरं स्वरूपदुःखानुभवोऽप्ययथार्थः स्यात् । ततश्च तस्यापुरुषार्थताभङ्ग इति वाच्यम् । दुःखस्वरूपांशे यथार्थत्वेऽपि तस्येश्वराद्यधीनत्वादिप्रकारांशे अयथार्थत्वसम्भवात् । अत एवोक्तं पद्धतौ 'अधमानां स्वरूपेन्द्रियं स्वरूपमात्रे यथार्थमेव । प्रकारे त्वयथार्थमि'ति । एवमेव 'सर्वार्थान्विपरीतांश्चे'त्येतदपि प्रकारांशमादायैव नेयम् ॥ **कार्यलिङ्गकमिति** । संवादिविसंवादिप्रवृत्तिरूपकार्यलिङ्गकमित्यर्थः ।

श्री० — **अन्यत्रापीति** । मध्यमजीवसम्बन्धिचैतन्यस्योभयरूपत्वेन निर्दोषतासद्भावादित्यर्थः ॥ **सर्वत्रेति** । उत्तमजीवेषु शुद्धचैतन्यातिरिक्ते प्राकृतेऽक्षे मध्यमेष्वपि चैतन्ये प्राकृते चाक्षे इत्यर्थः ।

च० — **कालादिभेदेनेति** । एकदाविरोधात्कालदेशवस्तुभेदेनेत्यर्थः । **सदोषत्वमेवेति** । पद्धतावधमानां स्वरूपेन्द्रियं स्वरूपमात्रे यथार्थं प्रकारमात्रे त्वयथार्थमित्युक्त्या अधमानां दुःखस्वरूपांशे याथार्थ्येपि तद्गतपारतंत्र्यादिधर्मेषु अयाथार्थ्येन तदभिव्यञ्जकेन्द्रियस्य दोषित्वनियमादिति भावः । **कार्यलिङ्गकमिति** । तत्त्वज्ञानमिश्रज्ञानमिथ्याज्ञानरूपकार्यलिंगकं संवादिविसंवादिप्रवृत्तिरूपकार्यलिङ्गकं वेत्यर्थः ।

**सु० — ननु च संसारिषु प्रवृत्तिसिद्ध्यर्थमिन्द्रियमवश्यमङ्गीकरणीयम् । न च तच्छुद्धम् । उक्तानुपपत्तेः । तत अतः प्राकृतेनैव सर्वस्योपपत्तेः संसारिषु शुद्धेन्द्रियाभ्युपगमो निर्बीज एव । न च मुक्तौ शुद्धसद्भावात्प्रागपि तदङ्गीकरणीयम् । मुक्तिवच्छुद्धेन्द्रियस्यापि पश्चात्प्राप्त्युपपत्तेरित्यत आह सुखेति ।**

अनु० — सुखदुःखादिविषयं शुद्धं संसारगेष्वपि ।

**न केवलमीशरमामुक्तेषु (किन्तु) संसारगेष्वपि शुद्धमिन्द्रियमङ्गीकरणीयम् कुतः सुखदुःखादिविषयम् । अयमर्थः । अस्ति तावत्संसारिणां सुखदुःखेच्छादिविषये(यो)ऽपरोक्षावभासः । लिङ्गाद्यननुसन्धानेनैवाहं सुखीत्यादिस्पष्टावभासदर्शनात् । न चेन्द्रियविषयतामन्तरेणापरोक्षावभासित्वं सुखादीनां युक्तम् । धर्मादेरपि तत्प्रसङ्गात् । तस्मात्सुखदुःखादिविषयमिन्द्रियमङ्गीकर्तव्यम् । तदेव शुद्धमिति ।**

**टी०** — उत्तरवाक्यानर्थक्यमाशङ्क्य प्रागुक्तस्य संसारिणामक्षद्वैविध्यस्य समर्थनार्थत्वान्न तदिति भावेन तद्व्यावर्त्यशङ्कां दर्शयति **नन्विति** ।। **उक्तेति** । सम्यग्ज्ञाननियमाद्यापत्तिरूपानुपपत्तेरित्यर्थः । अपिशब्दसमुच्चेयं दर्शयति **नेति** । ननु सुखदुःखादिज्ञानस्य लिङ्गशब्दजन्यतया परोक्षत्वेनापरोक्षत्वस्यैवाभावाद्भावे वेन्द्रियाविषयत्वेऽप्यापरोक्ष्योपपत्तेर्न तस्येन्द्रियविषयत्वमिति न सुखादिविषयेन्द्रियतया संसारिषु शुद्धसिद्धिरित्यत आह **अयमर्थ इति** । लिङ्गादीत्यादिपदेनागमपरिग्रहः । अननुसंहितव्याप्तीनां जातिबधिराणां चाहं सुखीत्यादिप्रतिभासदर्शनान्न तस्य परोक्षत्वमिति युक्तं सुखादेरपरोक्षावभासत्वमिति भावः ।

---

**प०** — **उक्तानुपपत्तेरिति** । प्राकृतैर्युक्तमित्यत्र संसारेपि सम्यग्ज्ञाननियमापत्तेरित्युक्तानुपपत्तेरित्यर्थः । सुखदुःखादिविषयमिति हेतुगर्भं इंद्रियस्य शुद्धत्वसाधनमितिभावेनावतारयति **कुत इति** । अस्फुटत्वादाह **अयमर्थ इति** ।

**श्री०** — **उक्तानुपपत्तेरिति** । सम्यग्ज्ञाननियमाद्यापत्तेरित्यर्थः ।

**सु०** — **अस्तु सुखदुःखादिविषयमिन्द्रियं संसारिषु । तच्छुद्धमिति कुतः । प्राकृतेनापि तदपरोक्षावभासोपपत्तेरित्यत आह** निर्दोषत्वेति ।

निर्दोषत्वातिनियमात्तद्बलिष्ठतमं मतम् ॥

**तत्सुखादिविषयमिन्द्रियं तावद्बलिष्ठतमं सर्वथाऽ(प्य)बाध्यं मतं सर्वेषां संमतम् । न हि कदाचिदप्यसति सुखे अहं सुखीति प्रत्ययोऽस्ति । नापि सति नास्मि सुखीति । तथा हि सतीन्द्रियस्य बाध्यता स्यात् । बलिष्ठतमता चेन्द्रियस्य निर्दोषत्वादिनियमादेवोपपद्यते नान्यथा । सदोषाणां बाधदर्शन(नियम)ात् । निर्दोषत्वातिनियमश्च शुद्धस्यैव धर्मो न प्राकृतस्येति सुखादिविषयस्येन्द्रियस्य शुद्धतासिद्धिरिति । एतदुक्तं भवति । सुखादिकमिन्द्रिय-**

**विषयः अपरोक्षावभासित्वात् घटवत्। सुखादिविषयमिन्द्रियं शुद्धम् निर्दोषतानियमवत्त्वात् ईश्वरादीन्द्रियवत्। विमतं निर्दोषतानिय(तिम)मवत् सर्वथाऽप्यबाध्यत्वात् तद्वदेवेति। यद्यपि मुक्तानां शुद्धेन्द्रियवत्त्वेन संसारिणां तद्वत्ता शक्यसाधना तस्य तत्स्वरूपतावगमात्। स्वरूपस्य चानागन्तुकत्वात्। तथाऽपि साक्षिणो यत्प्रत्यक्षत्वमुक्तं तद्विभावयितुमयं प्रमाणान्तरोपन्यासः। सुखादिविषयं स्वरूपभूतं चैतन्येन्द्रियं हि साक्षीत्युच्यते; तदभिव्यक्तं ज्ञानं चेति।**

**शे०** — औत्सर्गिकस्य निर्दोषत्वनियमस्य प्राकृतेष्वपि सद्भावात्तद्वारणायातीत्युक्तम्। तेन सर्वथा निर्दोषत्वनियम एव विवक्षितो न त्वौत्सर्गिक इत्युक्तं भवति॥ **शुद्धस्यैवेति**। एतच्चोत्तमजीवसंबन्धिचैतन्यविवक्षयेति द्रष्टव्यम्। वाक्यद्वयसूचितान्यनुमानान्याह **एतदुक्तंभवतीति**॥ **प्रत्यक्षत्वमुक्तमिति**। 'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितमि'त्यादिनेति शेषः। कथमनेन तस्य विभावनमित्यतः प्रत्यक्षशब्दस्य करणफलसाधारणत्वात्करणफलांशौ दर्शयति **सुखेति**। ज्ञानं चेत्यतःपरं साक्षीत्युच्यत इत्यनुवर्तते। इतीत्यस्येति विभावयितुमिति पूर्वेण संबन्धः।

**स०— साक्षिणो यत्प्रत्यक्षत्वमुक्तमिति**। 'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम्'। इत्यनेन यत्प्रत्यक्षत्वमुक्तमित्यर्थः।

**प० — प्राकृतेनापीति**। तार्किकरीत्या मनसापीत्यर्थः॥ **शुद्धस्येति**। मिथ्याज्ञानस्वभावानामपि स्वरूपज्ञानं सुखदुःखादिगतसत्यत्वेशाधीनत्वादिप्रकारेष्वयथार्थं सदपि सुखत्वदुःखत्वादिना सुखदुःखादिविषये यथार्थमेवेति तदंशे तदभिव्यंजकं स्वरूपेन्द्रियं निर्दोषमेवेति त्रिविधजीवसाधारण्येन शुद्धस्यैवेत्युक्तम्। न च केषुचित्प्रकारेषु सदोषं चेति सर्वत्रापि तथात्वनियमः। धर्म्यंशे तद्गतेदंत्वाद्यंशेपि तथात्वापत्तेरिति। अनेन किं मानमुक्तमित्यत आह **एतदुक्तमिति**॥ **प्रत्यक्षत्वमुक्तमिति**। 'मिथ्यात्वमपि बंधस्य न प्रत्यक्षविरोधतः'इत्यादिना जिज्ञासानये 'कालो हि साक्षिप्रत्यक्षः'इत्यादिनाऽऽनुमानिकपादे चोक्तमित्यर्थः **अयमिति**। सुखदुःखादिविषयमित्यादिना कृतइत्यर्थः। ननु प्राक् चैतन्यरूपज्ञानाख्यसाक्षिणः प्रत्यक्षत्वमुक्तम्। स्वरूपेन्द्रियसाधनेन तत्कथं प्रकटितमित्यत आह **सुखादिति**। इति विभावयितुमिति पूर्वेणान्वयः। श्रोत्रं चक्षुरित्यादिगीतावाक्यं। अधिष्ठायेत्यस्य विषयानुपसेवते इति चतुर्थपादस्थक्रिययान्वयः। अयमिति यच्चाप्युत्क्रामतीश्वर इति पूर्वप्रकृतेश्वरः परामृश्यते।

**या०**— औत्सर्गिको निर्दोषत्वनियमः प्राकृतेन्द्रियेष्वप्यस्तीति तद्वारणायातीतिपदमिति द्रष्टव्यम्। एवं च सर्वथा नियमो विवक्षितो न सापवाद इति भावः। **शुद्धस्यैवेति**। इदं चोत्तमजीवसम्बन्धिचैतन्यविषयमिति ज्ञातव्यम्॥ **यत्प्रत्यक्षत्वमुक्तमिति**। 'साक्षिप्रत्यक्षसाधितम्' इति प्रथमाध्याय इत्यर्थः॥

श्री०— **तदभिव्यक्तमिति** । तदुभयं च प्रत्यक्षमेव निर्दोषत्वादिति भावः ।

च०— **शुद्धस्यैवेति** । उत्तमजीवसंबन्धिचैतन्यमभिप्रेत्येदम् ॥ **यत्प्रत्यक्षत्वमुक्त मिति** । साक्षिप्रत्यक्षसाधितमित्याद्याध्याय इत्यर्थः ।

सु०— **ननु प्राकृतशुद्धभेदात् द्विविधमिन्द्रियमित्यसत् । 'श्रोत्रं चक्षुःस्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायमि'ति पञ्चेन्द्रियमनोभेदेनेन्द्रियषाड्विध्यस्मरणविरोधादित्यत आह** पञ्चेति ।

अनु०— पञ्चेन्द्रियमनोभेदात्प्राकृतं षडविधं स्मृतम् ॥

**यत्पञ्चेन्द्रियमनोभेदादिन्द्रियं षड्विधमिति स्मृतं तत्प्राकृतं न तु सर्वमित्यतो न विरोधः । ज्ञानेन्द्रियाणामेवात्र(विवक्षित)उक्तत्वान्नैकादशत्वो(शो)क्तिविरोधः । बुद्धेरपि मनस्यन्तर्भावान्न सप्तत्वविरोधः । नन्वाकाशात्मकस्य श्रोत्रस्य कथं प्राकृतत्वम् । मैवम् । भूताकाशपरिणामत्वाभ्युपगमात् । अव्याकृताकाशात्मकत्वे सार्वत्रिकशब्दोपलब्धिप्रसङ्गः । कर्णशष्कुल्यवच्छेदाङ्गीकारेऽपि बधिराभावप्रसक्तिः । अदृष्टोपग्रहान्नेति चेन्न । तथा सत्याकाशस्यैव तत्तदवच्छिन्नस्यादृष्टोपगृहीतस्य घ्राणादिभावोपपत्तौ पार्थिवत्वाद्यभ्युपगमवैयर्थ्यात् । गन्धादिमत्त्वात्तत्सिद्धिरिति चेन्न, असिद्धेः; यदिन्द्रियं यं विशेषगुणं गृह्णाति तत् तद्वदिति व्याप्तेः सुखादिग्राहिणि मनसि, सांसिद्धिकद्रवत्वस्नेहग्राहिणि चक्षुषि, शीतोष्णस्पर्शग्राहिणि स्पर्शने च भग्नत्वात् । आगमात्पृथिव्यादिप्राकृतिकताऽवगम्यत इति चेन्न । तर्ह्यहङ्कारिकाकाशकार्यता श्रोत्रस्यापि तत एवाङ्गीकरणीया ।**

शे०— **ज्ञानेन्द्रियाणामेवेति** । ज्ञानकरणविशेषप्रत्यक्षनिरूपणप्रस्तावादिति भावः ॥ **एकादशत्वाद्युक्तीति** । इन्द्रियाणि दशैकं चेत्यादिरूपेत्यर्थः ॥ **विरोध इति** । प्राकृतेन्द्रियषाड्विध्यस्येति शेषः ॥ **मनसीति** । मनसो मनोबुद्ध्यादिरूपपञ्चवृत्तित्वादिति भावः ॥ **सप्तत्वविरोध इति** । 'सप्त प्राणाः प्रभवन्ति सप्तैव मारुता बाह्ये सप्तप्राणास्तथात्मनि', 'सप्त गतेर्विशेषितत्वाच्चे'ति सप्तत्वप्रतिपादकश्रुत्यादिविरोध इत्यर्थः । का कथन्तेत्यतोऽनादिनित्यत्वान्न श्रोत्रस्य प्राकृतत्वमित्यभिप्रेत्यानादिनित्यत्वे विप्रतिपन्नं प्रति तत्समर्थयितुमाकाशात्मकस्येत्युक्तम् । आकाशश्चानादिनित्यतया प्रमितोऽतस्तदात्मकं श्रोत्रमत एवानादिनित्यमेवेति भावः ॥ **भूतेति** । तथा चानादिनित्यत्वस्यान्यतरासिद्धिरिति भावः । नन्वव्याकृताकाशात्मकत्वोपपत्तौ भूताकाशपरिणामत्वाभ्युपगमो निर्निबन्धन इत्यतः किमव्याकृताकाश एव श्रोत्रमित्यभिमतं किंवा कर्णशष्कुल्यवच्छिन्नोऽव्याकृताकाशः किंवाऽदृष्टोपगृहीतः कर्ण-

शष्कुल्यवच्छिन्नोऽव्याकृताकाश इति विकल्पान्मनसि निधायाद्यं दूषयति **अव्याकृताकाशात्मकत्व इति** । अव्याकृताकाशस्यापरिच्छिन्नत्वेन तदात्मकस्य श्रोत्रस्य सकलशब्दसन्निकृष्टत्वादिति भावः । द्वितीयमनूद्य दूषयति **कर्णेति** । कर्णशष्कुल्यवच्छिन्नाव्याकृताकाशस्य बधिरेऽपि सत्त्वादिति भावः । तृतीयमाशङ्कते । **अदृष्टेति** । अदृष्टोपगृहीतस्यैव कर्णशष्कुल्यवच्छिन्नाव्याकृताकाशस्य श्रोत्रत्वात्तादृशस्य च बधिरेऽभावान्न तदभावप्रसङ्ग इति चेदित्यर्थः ॥ **तत्तदवच्छिन्नस्येति** । तत्तद्गोलकावच्छिन्नस्यैवेत्यर्थः । न तत्तद्गोलकावच्छिन्नाव्याकृताकाशस्यैव घ्राणादित्वं कल्पयितुं शक्यम् । घ्राणं पार्थिवं गन्धवत्त्वाद्रसनमाप्यं रसवत्त्वादिति गन्धादिमत्त्वेन घ्राणादीनां पार्थिवत्वादिसिद्धेरिति शङ्कते **गन्धादिमत्त्वादिति** । सन्दिग्धासिद्ध्या दूषयति **नेति** । घ्राणं गन्धवद्गन्धग्राहकेन्द्रियत्वाद्रसनं रसवद्रसग्राहकेन्द्रियत्वादित्याद्यनुमानैरेव गन्धवत्त्वादिनिश्चयान्न सन्दिग्धासिद्धिरित्यत आह **यदिन्द्रियमिति** । ननु विशेषगुणग्राहकबहिरिन्द्रियत्वस्य हेतुत्वान्न मनसि व्यभिचार इत्यत आह **सांसिद्धिकेति** । रूपादिषु पञ्चसु मध्ये गन्धग्राहकबहिरिन्द्रियत्वमेव हेतुरतो न चक्षुष्यपि व्यभिचार इत्यरुचेराह **शीतेति** ॥ **आगमादिति** । 'भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिस्तथाऽऽपस्तेजोवायुश्च रसरूपस्पर्शाविशेषात् घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियादिभूतेभ्यः पृथिव्यापस्तेजोवायुराकाशमि'त्यादिवैशेषिकाद्यागमादित्यर्थः । वक्तुराप्त्यनिश्चयेन तदागमानां प्रामाण्यासिद्धेर्न तेन घ्राणादेः पृथिव्यादिकार्यत्वसिद्धिरिति सत्येव दोषे, तस्य कपिलादीनामाप्तत्वासिद्धेरिति पूर्वोक्तरीत्या सुज्ञानत्वाद्वा, तत्प्रामाण्याभ्युपगतावपि श्रोत्रस्य भूतकार्यत्वसिद्धिरूपप्रमेयाविरोधाद्वाऽङ्गीकृत्यैव तत्प्रामाण्यं समाधत्ते **तर्हीति** ॥ **तत एवेति** । उदाहृतवैशेषिकागमादेवेत्यर्थः । यद्यप्यत्राकाशकार्यत्वमात्रमुदाहृतागमेन सिध्यति । न त्वाहङ्कारिककार्यत्वमपि । तथाऽप्याहङ्कारिकत्वमाकाशस्य मानान्तरसिद्धं नापह्नोतुं शक्यमित्याशयेन स्वरूपसङ्कीर्तनं तदिति द्रष्टव्यम् । यद्वा 'पृथ्वी घ्राणस्तु गन्धगः' 'अम्भो जिह्वारसग्रहः' 'तेजश्चक्षूरूपोपलम्भनं' 'वायुस्त्वक्स्पर्शसंग्रह' इत्यागमादित्यर्थः । अत्र पूर्वोत्तरग्रन्थानुरोधेन गन्धादितन्मात्रेभ्यः पृथिव्यादिद्वारा घ्राणाद्युत्पत्त्यवगत्या घ्राणादीनां पृथिव्यादिकार्यत्वावगमादिति भावः ॥ **आहङ्कारिकेति** । तामसाहङ्कारकार्यभूताकाशेत्यर्थः । **तत एव** 'तामसात्तु विकुर्वाणाद्भगवद्वीर्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगमि'त्यागमादेवेत्यर्थः । अत्रापि पूर्ववदेव श्रोत्रस्य नभोजन्यत्वसिद्धिर्द्रष्टव्या ।

स० — **बुद्धेरपीति** । अन्यथा 'सप्त गतेर्विशेषितत्वाच्च' इत्यत्र सप्तत्वप्रतिपादनेन तद्विरोधः । **असिद्धेरिति** । गन्धादिमत्त्वस्येति शेषः । किमत्र यदिन्द्रियं यं गुणं गृह्णाति, तदिन्द्रियं तद्वदिति व्याप्तिः किं वा बहिरिन्द्रियं यं गुणमित्यादि, अथवा रूपादिषु पञ्चसु मध्ये इत्यपि विशेषणमभिप्रेतमिति विकल्प्य क्रमेण दूषयति **सुखादिग्राहिणीति** ।

प० — **एकादशत्वेति** । 'इन्द्रियाणि दशैकं चे'ति त्रयोदशगीतादावुक्तैकादशत्वेत्यर्थः । एतेन द्वादशत्वविरोधोऽपि प्रत्युक्तः । क्वचिदेकादशत्वादीत्यपि पाठः । ननु तथापि 'सप्त प्राणाः प्रभवन्ति' 'सप्तगतेर्विशेषितत्वाच्चे'त्यादिश्रुतिसूत्राद्युक्तसप्तत्वविरोध इत्यत आह **बुद्ध्यपीति** ॥ **आकाशेति** । अव्याकृताकाशात्मकस्येत्यर्थः ॥ **भूताकाशेति** । 'तेषां भूतैरुपचयः सृष्टिकाले विधीयत' इत्यादेरिति भावः । **सार्वत्रिकेति** । अव्याकृताकाशस्य भिन्नांशशून्यतया तार्किकाभ्युपगताखण्डाकाशप्रायतया सर्वस्यैव श्रोत्रत्वापत्तेः सर्वदेशोत्पन्नशब्दोपलब्धिप्रसङ्ग इत्यर्थः ॥ **तत्तदिति** । चक्षुरादिगोलकावच्छिन्नस्येत्यर्थः ॥ **तदिति** । पार्थिवत्वादिसिद्धिरित्यर्थः ॥ **मनसीति** । 'महेश्वरेष्टौ मनसस्तथैवे'त्युक्त्या सामान्यगुणपञ्चकात्परत्वापरत्ववेगरूपविशेषगुणत्रयादन्यस्य तत्रानङ्गीकारादिति भावः ॥ **स्पर्शन इति** । तस्यानुष्णाशीतस्पर्शवत्त्वोपगमादिति भावः ॥ **आगमादिति** । 'रसमात्राद्विकुर्वाणादंभसो दैवचोदितात् । गन्धमात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गन्धगः' इत्यादिरूपात्तृतीयस्कन्धस्थसप्तविंशाध्यायगतवाक्यलक्षणादागमादित्यर्थः । अत्र तस्मात्पृथ्वीत्यस्य गन्धमात्रात्पृथिवी जातेत्यर्थः । घ्राणस्तु गन्धग इत्यस्य गन्धग्राहको घ्राणस्तु पृथ्व्या अभूदित्यध्याहारेणार्थं वर्णयन्ति । तथा 'वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत । समुत्थितं ततस्तेजश्चक्षूरूपोपलम्भनमि'त्यादिरूपेष्वपि वाक्येष्वर्थो ध्येयः ॥ **तत एवेति** । 'तामसात्तु विकुर्वाणाद्भगवद्वीर्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम्' इति तत्रत्यागमवाक्यादेवेत्यर्थः । अत्रापि शब्दग्राहकं श्रोत्रं नभसो भूताकाशाज्जातमिति पूर्ववदर्थस्य वर्णनीयत्वात् तामसभागस्य 'महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यचोदितात् । क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत । वैकारिकस्तैजसश्च तामसश्च' इति पूर्वत्राहङ्कारभेदत्वोक्तेरिति भावः ।

या० — **न सप्तत्वविरोध इति** सप्तगतेर्विशेषितत्वाच्चेति सूत्रभाष्यादिविरोधो नेत्यर्थः । **तत्तदवच्छिन्नस्येति** । तत्तद्गोलकावच्छिन्नस्येत्यर्थः ॥ **आगमादिति** । पृथ्वी घ्राणस्तु गन्धगः । अम्भो जिव्हारसग्रहः । तेजश्चक्षूरूपोपलम्भनम् । वायुस्त्वक् च स्पर्शस्य संग्रहः । इत्याद्यागमात् घ्राणादीनां पृथिव्याद्युपादानकताऽवगम्यत इत्यर्थः । अत्र पृथिवी अम्भ इत्यादिप्रथमानां पूर्वेणान्वयः । तथा च गन्धगो घ्राणः पृथिव्या जातः रसग्रहो जिव्हाऽम्भसो जात इत्यादिरस्यार्थो ज्ञातव्यः । अन्यथेन्द्रियाणां भौतिकत्वस्य प्रमाणान्तरसिद्धस्यालाभ इति ज्ञातव्यम् ॥ **आहङ्कारिकाकाशेति** । तामसाहङ्कारकार्यभूताकाशेत्यर्थः ॥ **तत एवेति** । 'तामसात्तु विकुर्वाणाद्भगवद्वीर्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगमि'त्यागमादेवेत्यर्थः ।

श्री० — **न तु सर्वमिति** । शुद्धमपीत्यर्थः । कर्मेन्द्रियसाहित्येनैकादशत्वात्कथं षड्विधत्वमित्यत आह **ज्ञानेति** । ज्ञानेन्द्रियाणामपि बुद्धिसाहित्येन सप्तत्वस्य सप्त गतेरिति सूत्रोक्तत्वात्तद्विरोधोऽत आह **बुद्धेरपीति** । ननु कर्णशष्कुल्यवच्छिन्नाव्याकृताकाशस्यैव श्रोत्रत्वान्नोक्तदोष इत्यत आह **कर्णेति** ॥ **बधिरेति** । तस्यापि कर्णशष्कुल्यवच्छिन्नाव्याकृताकाशसद्भावादित्यर्थः । नन्वदृष्टोपगृहीतकर्णशष्कुल्यवच्छिन्नाव्याकृताकाशस्यैव श्रोत्रत्वाद्बधिरे चैतादृशश्रोत्राभावान्नोक्तदोष इति यदि, तर्हि वयमपि वदामोऽव्याकृताकाशमेव घ्राणादि । न च सर्वत्र गन्धाद्युपलब्धिप्रसङ्गः । घ्राणादिगोलकावच्छिन्नाव्याकृताकाशस्यैव घ्राणादीन्द्रियत्वाभ्युपगमात् । न च घ्राणाद्यवच्छिन्नस्य तस्य सत्त्वेऽपि कस्यचित्पुरुषविशेषस्य गन्धाद्युपलब्धिर्नेति वाच्यम् । अदृष्टोपगृहीतस्यैव तस्य तत्त्वाभ्युपगमेनोक्तदोषाभावादित्यपि स्यादित्याह **अदृष्टेत्यादिना** ॥ **तत्सिद्धिरिति** । तेषां घ्राणादीनां पार्थिवत्वादिसिद्धिरित्यर्थः । गन्धादिमत्त्वं न सिद्धमित्याशङ्क्याह **यदिन्द्रियमित्यादि** । त्वगिन्द्रियमनुष्णशीतस्पर्शरूपं गुणं गृह्णाति तद्गुणवच्च भवत्येव । त्वगिन्द्रियस्य वायवीयत्वाद्वायोश्च तद्गुणवत्त्वादतो न व्यभिचार इत्यतः शीतोष्णेत्युक्तम् । **प्रकृतिकृता** उपादानकृता ॥ **तर्हीति** । तामसाहङ्कारकार्यभूताकाशकार्यतेत्यर्थः । **तत एव** आगमादेव ।

---

**सु० — ननु मनोऽनादिनित्यं कथं प्राकृतम् । मैवम् । प्रमाणाभावात् । स्पर्शरहितद्रव्यत्वादेः सत्त्वान्नेति चेत् (न) । तमस्यस्माकमनैकान्त्यात् । नित्यत्वादिमात्रसाधने सिद्धसाधनत्वात् । कूटस्थतासाधने त्वागमविरोधादिति ॥ छ ॥**

शे० — **प्रमाणाभावादिति** । परेणाप्यनङ्गीकारात्प्रत्यक्षस्य, तत्प्रतिबद्धलिङ्गाभावेनानुमानस्य, अनुपलम्भादागमस्य चासंभवादिति भावः । स्पर्शरहितद्रव्यत्वादिकमेव तदनादिनित्यत्वसाधकमस्तीति न लिङ्गाभाव इत्यत आह **स्पर्शेति** । द्रव्यत्वमात्रं घटादौ व्यभिचारीत्यतः स्पर्शरहितेत्युक्तम् । तन्मात्रं च स्पर्शादिसाधारणमित्यतो द्रव्यत्वादित्युक्तम् । ननु यत्किञ्चित्स्पर्शरहिते स्पर्शवति घट एव विशिष्टस्यापि सत्त्वात्तत्र व्यभिचार एव । न च स्पर्शरहितत्वं न यत्किञ्चित्स्पर्शरहितत्वं विवक्षितं किन्तु यावत्स्पर्शसंसर्गाभाववत्त्वमेव । तच्च न स्पर्शवति घटेऽस्तीति कथं तत्र व्यभिचार इति वाच्यम् । तथाऽप्युत्पत्त्यवच्छिन्ने घटे व्यभिचारापरिहारात् । तत्र स्ववृत्तिस्पर्शप्रागभावस्यान्येषां च सर्वेषामत्यन्ताभावस्य संभवेन यावत्स्पर्शसंसर्गाभाववत्त्वविशेषितद्रव्यत्वसत्त्वादिति चेन्न । स्पर्शसामान्याभावस्यैव तद्राहित्यशब्दार्थत्वाश्रयणेन तदनवकाशात् । प्रागभावप्रध्वंसयोः सामान्याभावत्वासंभवेन परिशिष्टस्यात्यन्ता-

भावस्यैव तत्त्वेन वाच्यतया समवायिन्युत्पत्त्यवच्छिन्नघटादौ च तदसंभवेन तत्रोक्तहेत्वगमनादित्याशयात् । अत एव चैतद्दोषपरिजिहीर्षया सर्वदेति हेतुविशेषणं शशधरोक्तं निरस्तम् । सामान्याभावविवक्षायां तदनवकाशात् । अत्रादिपदेन स्पर्शरहितक्रियावत्त्वस्य ज्ञानासमवायिसमवायित्वादेश्च परिग्रहः॥ **तमसीति** । स्पर्शरहितद्रव्यादेस्तत्र सत्त्वेऽप्यनादिनित्यत्वाभावादिति भावः । ननु च तमस आलोकाभावत्वेनाद्रव्यत्वात्तद्घटितहेतोस्तत्रागमनान्नाद्यहेतोर्व्यभिचारः । अद्रव्यत्वादेवाक्रियावत्त्वसिद्धेर्न द्वितीयहेतोरपीत्यतस्तमसो द्रव्यत्ववादिनो वैशेषिकादेर्मतेन तत्र व्यभिचाराभावेऽपि रूपित्वक्रियाश्रयत्वादिना तद्द्रव्यत्ववादिमते तत्र द्रव्यत्वादिघटितहेतुवृत्तेरन्यतरव्यभिचारो भविष्यत्येवेत्याशयेनोक्तम् **अस्माकमिति** । यद्यपि 'तमः सुघोरं गगनच्छदं महद्विदारयद् भूरितरेण रोचिषा । मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूम्' इति भागवते, 'ततः कदाचिद्दुःखेन रथमूहुस्तुरङ्गमाः । पङ्कभूतं हि तिमिरमश्वानां जायतेऽनघ । अथ पर्वतभूतं तत्तिमिरं समजायत । तदासाद्य हया राजन्निष्प्रयत्नास्ततः स्थिताः । ततश्चक्रेण गोविन्दः पाटयामास तत्तमः' इति हरिवंशे च तमसश्चक्रविदार्यत्वादिश्रवणान्न तमसो निःस्पर्शत्वमिति न स्वमतेनाप्यनैकान्त्यं संभवति । तथाऽपि तादृशतमोविशेषस्य स्पर्शवत्त्वेऽपि तदितरस्य स्पर्शवत्त्वे मानाभावाद्युक्त एव स्वरीत्या व्यभिचार गति ध्येयम् । ननु वस्तुनि विकल्पासंभवादन्यतरानैकान्त्यं न दोष इति चेन्न । तद्दूषणताया उपपादयिष्यमाणत्वात् । यद्वैतदस्वरसादेवाह **नित्यत्वादीति** । यथाकथञ्चिन्नित्यत्वादिसाधन इत्यर्थः ॥ **सिद्धेति** । सूक्ष्मरूपेण नित्यतायाः प्राकृतत्ववादिनाऽपि स्वीकृतत्वादिति भावः ॥ **कूटस्थतेति** । निर्विकारत्वसाधन इत्यर्थः ॥ **आगमेति** । 'वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत' इत्यागम इत्यर्थः ॥ छ ॥

स० — **स्पर्शरहितद्रव्यत्वादेरिति** । आदिशब्देन स्पर्शरहितत्वे सति क्रियावत्त्वरूपहेत्वन्तरपरामर्शः । न च सपक्षाप्रवेशादसाधारण्यम् । असाधारण्यस्य दोषत्वाभावपक्षे व्यतिरेकित्वोपपत्तेरिति । **तमसीति** । स्पर्शरहितद्रव्यत्वे सत्यपि अनादिनित्यत्वाभावात्, सादिविनाशित्वे सत्यपि स्पर्शरहितक्रियावत्त्वस्यैव सत्त्वाच्च तत्र व्यभिचारः ।

प० — **प्रमाणाभावादिति** । हैतुकेन हेतोरेव मानत्वेन वाच्यत्वात्तस्य चेहाभावादिति भावः । तेन नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठती'त्यविरोधः । **यद्वा** । कौटस्थ्यरूपेण मनोऽनादित्वं मन्वानस्योत्तरं **प्रमाणाभावादिति** । स्पर्शरहितद्रव्यत्वनिरवयवत्वादिरेव मानमित्याशंक्य निराह **स्पर्शेति** ॥ **तमसीति** । न्यायमते तस्यालोकाभावरूपत्वेपि सिद्धांते द्रव्यत्वादिति भावः ॥ **सिद्धसाधनत्वादिति** । सूक्ष्मरूपेणानादिनित्यत्वस्य 'तत्प्राक् श्रुतेश्चे'त्यत्र द्वितीयांत्यपादे वक्ष्यमाणत्वादिति भावः ॥ **आगमेति** । 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इत्यादिश्रुत्या । 'क्रियाशक्तिरहंकारस्त्रिविधस्सम-

पद्यत । वैकारिकस्तैजसश्च तामसश्च यतो भवः । मनसश्चेंद्रियाणां च भूतानां महतामपि' इत्यादि भागवताद्यागमविरोधादित्यर्थः ॥ प्रत्यक्षनिरूपणं ॥ छ ॥

**या०**— स्पर्शरहितद्रव्यत्वादेरित्यत्राऽऽदिपदेन परमाणुत्वनिरवयवद्रव्यत्वादेः संग्रहः ॥ **सिद्धसाधनत्वादिति** । सूक्ष्मरूपेण तथात्वाभ्युपगमादिति भावः । इदमुपलक्षणम् । निरवयवत्वमसिद्धमित्यपि द्रष्टव्यम् ॥ **कूटस्थतेति** । निर्विकारतासाधने 'वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायते'त्याद्यागमविरोधादित्यर्थः ॥ छ ॥

**श्री०**— **तमसीति** । स्पर्शरहितद्रव्यत्वे सत्यप्यनादिनित्यत्वाभावात्सादिनाशित्वे सत्यपि क्रियावत्त्वस्य सत्त्वाच्च तत्र व्यभिचार इत्यर्थः ॥ **सिद्धसाधनतेति** । सूक्ष्मरूपेण नित्यत्वाङ्गीकारादित्यर्थः । **कूटस्थता** सर्वथा विकाराभावेत्यर्थः ।

**च०** — **कूटस्थतेति** । 'कूटं खं विदलं व्योम सन्धिराकाश उच्यत' इति वचनादव्याकृताकाश(वत्)निर्विकारतासाधने 'वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत' इत्यागमविरोधादित्यर्थः ।

॥ इति प्रत्यक्षनिरूपणम् ॥

---

**सु०**— **क्रमप्राप्तं केवलमनुप्रमाणं च अनुमानं लक्षयति** अनुमेति ।

**अनु०**— अनुमा युक्तिरेवोक्ता

**अत्रानुमेति लक्ष्यम् । युक्तिरिति लक्षणम् । यदि च युक्तेरेव बहुशः प्रकृतत्वात्तत्स्वरूपजिज्ञासायामिदं प्रवृत्तम् । तदा विपरीतो लक्ष्यलक्षणभावः ।**

**नन्वनुमा युक्तिरिति पर्यायावेतौ । तथा हि । फलप्रामाण्यपक्षेऽनुमितिरनुमेति भावसाधनोऽनुमाशब्दो लिङ्गदर्शनसमुत्थं लैङ्गिकविषयमनुमितिनामकं यथार्थज्ञानमाह । तदेव योजनं युक्तिरिति युक्तिशब्दोऽपि । साधनप्रामाण्यपक्षेऽप्यनुमीयतेऽनयेति करणसाधनोऽनुमाशब्दो यमर्थमाचष्टे तमेव युज्यतेऽनयेति युक्तिशब्दोऽपि । तत्कथं लक्ष्यलक्षणभाव इत्यत उक्तम्** उक्तैवेति । **अत्रापि व्यवहार एव साध्यो न त्वनुमात्वं, युक्तित्वं वा । येनोक्तदोषः स्यादिति भावः ।**

**शे०**— अनुमाननिरूपणस्य प्रत्यक्षनिरूपणानन्तर्ये हेतुमाह **क्रमप्राप्तमिति** । प्रत्यक्षानन्तरमनुमानस्योद्देशात्तन्निरूपणानन्तर्यमनुमाननिरूपणस्येति भावः ॥ **केवलमनुप्रमाणं चेति** । अतो न मूले पृथक् तदुभयानिरूपणान्न्यूनत्वं शङ्कनीयमिति भावः । लोकप्रसिद्धिं ब्रह्मतर्कोक्तिं च मूलीकृत्या-

न्यत्रानुप्रमाणविभागत्वेनानुमानस्यैवाचार्यैरुक्तेस्तदनुरोधेनेहापि लक्ष्यलक्षणविभागमाह **अत्रेति** ॥ **लक्ष्यं** लक्ष्यनिर्देश इत्यर्थः । एवं **लक्षणं** लक्षणनिर्देश इत्यर्थः । पूर्वपक्षेऽरुचिं सूचयन्नेव पक्षान्तरमाह **यदि चेति** । युक्तेरेव स्वरूपजिज्ञासायां नियामकमुक्तं **बहुश इति** । 'प्रत्यक्षमुपजीव्यं स्यात्प्रायो युक्तिरपि क्वचित्' । 'व्याप्तिः प्रत्यक्षगा यस्या युक्तिगाऽऽगमगा तथा' । 'अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यतः' इत्यादिना प्रत्यक्षादिसमकक्षतयाऽनुप्रमाणविभागत्वेन युक्तेरेव प्रकृतत्वादित्यर्थः ॥ **विपरीत इति** । अनुमेति लक्षणं युक्तिरिति लक्ष्यमिति विपरीतो लक्ष्यलक्षणभाव इत्यर्थः । अनुमा युक्तिरित्येतावतैव पूर्वैरुक्तैवेत्यंशवैयर्थ्यमित्यतो लक्ष्यलक्षणभावोपपादनार्थत्वान्न तस्यानर्थक्यमिति भावेन तदुपपादकतया योजयितुं लक्ष्यलक्षणभावानुपपत्तिशङ्कामुत्थापयंस्तद्बीजभूतां तच्छब्दयोः पर्यायतां तावत्समर्थयितुं तां प्रतिजानीते **नन्विति** ॥ **साधनपक्ष इति** । करणप्रामाण्यपक्ष इत्यर्थः ॥ **तत्कथमिति** । ज्ञातत्वा-ज्ञातत्वायोगान्नैकस्यैव लक्ष्यलक्षणभावः संभवतीति भावः । प्रत्यक्षलक्षणेऽपि व्यवहारस्यैव साध्यत्वाद-त्रापीत्यपिशब्दः । अनुमा युक्तिरिति मूलस्याद्ययोजनामनुसृत्यानुमात्वमिति द्वितीययोजनामनुसृत्य युक्तित्वमित्युक्तमित्यवधेयम् ।

स०— ननु अनुमायुक्तिशब्दयोः पर्यायत्वात् कथं प्रकृते लक्ष्यलक्षणभाव इत्यत आह **अत्रानुमेति** ॥ न च 'याथार्थ्यमेव मानत्वम्' इत्यादिना पूर्वत्रापि यथार्थमानशब्दयोरेकप्रवृत्ति-निमित्तत्वेन पर्यायत्वात्तत्रापि मानत्वमिति लक्ष्यनिर्देशः याथार्थ्यमिति लक्षणोक्तिरिति कुतो नोक्तमिति वाच्यम् । शब्दद्वयेऽपि योगलब्धप्रवृत्तिनिमित्तप्रकारकबोधजनकत्वेऽपि रूढ्या यथार्थमानशब्दयोर्य-थार्थत्वप्रकारकबोधजनकत्वाभावेन पर्यायत्वाभावात् लक्ष्यलक्षणभावस्य प्रकरणाद्यनुसन्धानेन सुज्ञे-यत्वात्तत्रानुक्तिरिति भावः । युक्तेरेव बहुश इति । 'स्याच्चत्र युक्त एवार्थः' । 'युक्तिगाऽऽगमगा तथा' । 'यथार्था युक्तयः' 'अक्षयुक्तिवचांसि' इत्यादिनेति शेषः । **भावसाधन इति** । भावः साध्यते अनेनेति भावसाधनः । भावार्थः इत्यर्थः । एवं करणसाधन इत्यत्रापि द्रष्टव्यम् । **लैङ्गिकविषय-मिति** । साध्यविषयमित्यर्थः ।

प०— **क्रमप्राप्तमिति** । 'अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यत' इत्यत्र निर्दिष्टेष्वक्षानन्तरं प्राप्तमित्यर्थः ॥ **केवलमित्यादि** । अनुमितिरूपं तत्करणरूपं चेत्यर्थः । धर्मिणं प्राङ्निर्दिश्य पश्चा-द्धर्मा वाच्या इति भावेनोक्तं **इति लक्ष्यमिति** । **लक्षणमिति** । **बहुश इति** । 'युक्तोऽयुक्तश्च यद्यर्थ' इत्यादिना ग्रन्थेनेतियोज्यम् ॥ **विपरीत इति** । शब्दक्रमादर्थक्रमो बलीयानिति भावः । केवलानु-प्रमाणरूपानुमानलक्षणपरत्वं व्यञ्जयन्नुक्तेत्येतदवतारयति **नन्विति** ॥ **भावसाधन इति** । भावो धात्वर्थ एव साधनं निमित्तं प्रत्ययोत्पत्तौ यस्य शब्दस्य स भावसाधन इत्यर्थः । अनुपूर्वात् माङ्मान इत्यस्मात्

घञर्थे कविधानमिति भावार्थके कप्रत्यये आतो लोपे टाप्रत्यये रूपमिति भावः ॥ **योजनं युक्तिरिति** । युजिर्योग इति अस्मात् क्तिन्नबाधादिभ्य इति भावे क्तिन्प्रत्यय इति भावः ॥ **साधनेति** । अनुमिति-करणप्रामाण्यपक्षेपीत्यर्थः ॥ **युज्यतेऽनयेति** । स्त्रियां क्तिन् इति क्तिन्प्रत्ययः ॥ **युक्तिशब्दोपीति** । यथार्थज्ञानमाहेत्यन्वयः **अत्रापीति** । न केवलं प्रत्यक्षलक्षणे इत्यपेरर्थः ।

**या० — साधनपक्ष इति** । करणप्रामाण्यपक्ष इत्यर्थः ।

**श्री० — लैङ्गिकेति** । लिङ्ग एव लैङ्गिकमिति स्वार्थे प्रत्ययो द्रष्टव्यः ।

**च० — फलप्रामाण्येति** । अनुमानफलभूतानुमितेः प्रमात्वकल्प इत्यर्थः । तदानीं ल्युटो भावसाधनत्वात् **भावसाधन इति** । अनुपसृष्टान्माङ्मान इत्यस्माद्घञर्थे कविधानमिति भावार्थे कप्रत्यये आतो लोपे टापि च रूपं निष्पद्यत इति भावः । **साधनेति** । करणप्रामाण्यकल्पेऽपीत्यर्थः ।

**सु० — ननु युक्त्युपपत्तिशब्दावेकार्थौ तथा चान्यत्र निर्दोषोपपत्तिरनुमेत्यादौ यदि निर्दोषग्रहणस्य व्यावर्त्यमस्ति तदाऽत्रापि तत्कर्तव्यं स्यात् । अन्यथाऽतिव्याप्तिप्रसङ्गात् । न (नास्ति) चेन्न (तत्)कर्तव्यमिति । उच्यते । अस्ति खलु शब्दानां मुख्यामुख्यभेदेन द्वयी वृत्तिः । एवञ्चोपपत्तिशब्दादुपपत्ताविव तदाभासेऽपि प्रतिपत्तावुत्पन्नायां तद्व्यवच्छेदेन मुख्यार्थोपदर्शनार्थं तत्र निर्दोषग्रहणं कृतम् । अत्र पुनरन्तर्गतनिर्दोषत्वं मुख्यमेवार्थमुपादाय युक्तिरित्येवोक्तम् । समीचीनो हेतुरनैकान्तिको हेतुरिति यथेति । तदिदमप्युक्तं युक्तिरेवेति । न तु निर्दोषत्वविशेषिता । युक्तिशब्दमुख्यार्थविवक्षायां तदनपेक्षणादिति शेषः ।**

**अथवा नेदं पर्यायलक्षणम् । किन्नाम युज्यते संबध्यते इति युक्तिरनुमोक्तेति योज्यम् ।**

**नन्वेवं सति विरुद्धानध्यवसितव्यवच्छेदेऽप्यनैकान्तिकस्यानुमानत्वं स्यादित्यतो युक्तिरेवेत्युक्तम् । युज्यत एव न तु (वि)युज्यतेऽपीत्यर्थः । प्रमेयत्वादिकं ह्यनित्यत्वादिना युज्यते, न युज्यते च । न तु युज्यत एव । तदनेन साहित्यनियमवत् व्याप्यं, लिङ्गम्, अनुमानमिति चोच्यत इत्युक्तं भवति ।**

शे० — युक्तिरेवोक्तेत्यत्रत्यैवकारस्योक्त्यैवेति भिन्नक्रमतामाश्रित्य सार्थक्यं वर्णितम् । इदानीं यथास्थितसम्बन्धमङ्गीकृत्य तत्सार्थक्यं सुवचमिति भावेन तद्वक्तुमाशङ्कते **नन्विति** । अन्यत्रेत्यस्यैव विवरणं **निर्दोषोपपत्तिरनुमेत्यादाविति** । यद्वाऽन्यत्र मानलक्षणादावित्यर्थः । निर्दोषोपपत्तिरनुमेत्यादौ इत्यादिपदेन 'तर्कोऽदुष्ट' इत्यादेः संग्रहः ॥ **अत्रापीति** । 'अनुमा युक्तिरि'त्यनुव्याख्यायामपीत्यर्थः । तत् निर्दोषपदम् ॥ **अन्यथेति** । निर्दोषत्वेनाविशेषण इत्यर्थः ॥ **न कर्तव्यमिति** । निर्दोषोपपत्तिरनुमे-

त्यादिप्रमाणलक्षणादाविति वर्तते व्यभिचाराभावादिति भावः ॥ **निर्दोषग्रहणं कृतमिति** । उपलक्षणं चैतत् । अनुमानदोषनिरूपणाय पातनिकार्थतया स्वरूपसङ्कीर्तनं तत् । अत एव पद्धतौ 'निर्दोषोपपत्तिरनुमानमित्युक्तं के तत्रोपपत्तिदोषा' इत्युक्तम् । अत एव च तत्र निर्दोषपदकृत्यं नोक्तम् । अन्यथा तस्य व्यावर्तकत्वे प्रत्यक्षागमलक्षणगतनिर्दोषत्वग्रहणस्येवास्यापि कृत्यमुच्येतेत्यपि द्रष्टव्यम् ॥ **मुख्यमेवार्थमिति** । व्याप्तिसमुचितदेशादिसिद्धिमत्स्वरूपमित्यर्थः । स्यादेवं यदि मुख्यामुख्यभेदेन द्वयी वृत्तिः शब्दानां सिद्धा स्यात् । सैव तु कुतः सिद्धेत्यत **उभयत्र** प्रयोगप्रत्ययतौल्यादिति भावेनोभयत्र **तौ** दर्शयति **समीचीन इत्यादिना** । हेतुशब्दस्य मुख्यामुख्यहेतुविषयत्वं व्यवस्थापयितुं समीचीन इति अनैकान्तिक इति च तद्विशेषणमिति ध्येयम् । प्रतिज्ञातार्थे मूले हेत्वनुक्तेरपेक्षितं पूरयति **युक्तीति** ॥ **व्यवच्छेदेऽपीति** । आद्यस्य साध्याभावेनैव सम्बन्धाद्द्वितीयस्य साध्यतदभावसंबन्धशून्यत्वात् द्वयोरपि साध्यसम्बन्धाभावादिति भावः ॥ **अनेनेति** । युक्तिरेवेत्यनेनेत्यर्थः ॥ **साहित्यनियमवदिति** । अव्यभिचरितसम्बन्धवदित्यर्थः । नियतः सम्बन्धो व्याप्तिः नियमश्चाव्यभिचार इति वैशेषिकपरीक्षायां वक्ष्यमाणत्वादेतदेव चाभिप्रेत्य सम्बन्धविशेषो व्याप्तिरिति तृतीयस्य द्वितीये वक्ष्यति । न तु सामानाधिकरण्यनियमवदित्यर्थः । व्यधिकरणनदीपूरादावव्याप्त्यापातात् । धूमव्यभिचारिवन्ह्यादावतिव्याप्तिप्रसङ्गाच्च । अत्र व्याप्यं लिङ्गमित्युक्तिस्तु ग्रन्थान्तराविरोधायेति द्रष्टव्यम् ।

---

**सा०— तत्कर्तव्यमिति** निर्दोषग्रहणं कर्तव्यमित्यर्थः । **अन्यथेति** । निर्दोषदव्यावर्त्यं इति शेषः । **नास्ति चेदिति** । व्यावर्त्यमिति शेषः । **न कर्तव्यमिति** निर्दोषोपपत्तिरित्यादिस्थल इति शेषः । **विरुद्धानध्यवसितेति** । तत्र योगस्यैवाभावादिति भावः ।

**प०— अन्यत्रेति** । प्रमाणलक्षणे तर्कोऽदुष्टस्तथाऽनुमेति तत्त्वनिर्णये चेत्यर्थः ॥ **न (तत्) कर्तव्यमिति** । अन्यत्रेत्यनुषज्यते । अंतर्गतनिर्दोषत्वमिति बहुव्रीहिः । शब्दानाममुख्यार्थोपस्थापकत्वव्यवच्छेदाय विशेषणोक्तिं दृष्टांतेन व्यनक्ति **समीचीनो हेतुरिति** । यथेत्याकृष्यते । मुख्यार्थोपस्थापकत्वव्यवच्छेदाय विशेषणोक्तिं दृष्टांतेन व्यनक्ति **अनैकांतिको हेतुरिति यथेति** । समीचीनो हेतुरिति यथेत्येतावत एव प्रकृतोपयोगेपि शेषोक्तिः यथा मुख्यार्थधीव्यवच्छेदाय विशेषणोक्तिः तद्वदमुख्यार्थव्यवच्छेदाय विशेषणोक्तिः समीचीनो हेतुरित्यादाविव युज्यत इति वक्तुमिति ध्येयम् । यद्वा युक्तिशब्देन मुख्यार्थस्यैवादौ धीरित्येतद्विवरणायानैकांतिको हेतुरित्यस्योक्तिः । अन्यथा तत्र विशेषणोक्तिर्न स्यादिति भावः ॥ **इदमिति** । अनुमा युक्तिरिति पदद्वयं, पर्यायेण क्रमेणेति वा, पर्यायं सदिति वा, युक्तिरित्येतदनुमेत्यस्य, अनुमेत्येतद्युक्तिरित्यस्य, लक्षणं न भवति । किंतु कर्मव्युत्पत्त्या

युक्तिशब्दः संबध्यमानवाची । तथा च युक्तिः केनचित्साध्यत्वादिनाऽभिमतेन संबध्यमानं यत्तदनुमोच्यत इति योज्यमित्यर्थः ॥ **विरुद्धानध्यवसितेति** । तयोः सपक्षावृत्तित्वेन साध्यसंबंधाभावादिति भावः ॥ **अनैकांतिकस्येति** । साधारणानैकांतिकस्येत्यर्थः । असाधारण्यस्यानध्यवसितपदेनोक्तत्वात् किमनेनोक्तमित्यतः निर्दोषोपपत्तिरनुमेत्यत्र निर्दोषपदेन साहचर्यनियमवदनुमेति वा व्याप्यमनुमेति वा अभिप्रेतं मिथ्यात्वानुमानखंडने च लिङ्गं हेतुरिति लिंगपदं प्रयुक्तम् , 'तर्कोऽदुष्टस्तथानुमे'त्रानुमापदं प्रयुक्तं तथाचैतेषां भिन्नभिन्नार्थत्वाद्विरोध इति न शंक्यम् । किं त्वेकार्थत्वमेवोक्तं भवतीत्याह **तदनेनेति** । **साहित्यनियमवदिति** । व्याप्यमितीत्येवंरूपेणेतिशब्दस्य प्रत्येकं संबंधः । साहित्यं च यथासंभवं ध्येयम् ।

**या०— न तत्कर्तव्यमिति** । निर्दोषोपपत्तिरित्यत्रापीति शेषः । मुख्यार्थपराच्छब्दादाभासरूपामुख्यार्थप्रतिपत्तौ जातायां तद्व्यवच्छेदेन मुख्यार्थोपदेशनार्थं निर्दोषग्रहणमित्येतन्निदर्शयति **समीचीनो हेतुरिति** । ननु मुख्यार्थपराच्छब्दादाभासरूपामुख्यार्थप्रतिपत्तिः क्व दृष्टा येनात्रापि तत्प्राप्तौ तद्व्यवच्छेदाय यत्न इत्यत उक्तम् **नैकान्तिक इति** । यथाशब्दस्योभयत्रान्वयः ॥ **असाहित्यनियमवदिति** । अव्यभिचरितसम्बन्धवदित्यर्थः । न तु सामानाधिकरण्यनियमवदिति । व्यधिकरणनदीपूरादावव्याप्त्यापत्तेः । व्याप्यं लिङ्गमित्युक्तिस्तु ग्रन्थान्तरविरोधपरिहाराय ।

**श्री०— सम्बध्यत इति** । हेतुः साध्येनेत्यर्थः । **व्याप्यं** व्याप्तिमत् ।

**च०— विरुद्धानध्यवसितेति** । विरुद्धासाधारणानैकान्तिकयोः साध्यासामानाधिकरण्यनियमादिति भावः ।

**सु०— सौगतास्तु मन्यन्ते । तादात्म्यतदुत्पत्ती एवानुमानाङ्गभूतौ संबन्धाविति । वैशेषिकास्त्वस्येदं कार्यं कारणं संबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिकनिमित्तसंबन्धान्परिसञ्चक्षते । एवं 'मात्रानिमित्तसंयोगिविरोधिसहचारिभिः स्वस्वामिवध्यघाताद्यैः साङ्ख्यानां सप्तधाऽनुमे'ति साङ्ख्याः परिसङ्ख्यातवन्तः । तत्सर्वमपाकर्तुं वा युक्तिरेवेत्यवधारणम् । नियतसंबन्धवदेवानुमानं न संबन्धविशेषवदित्यर्थः । एतच्चोपपादयिष्यामः ।**

शे०— सम्बन्धविशेषव्यावृत्तिरप्येवकारफलमिति भावेन तत्परतया तं व्याख्यातुं सम्बन्धविशेषपक्षानुत्थापयति **सौगतास्त्वित्यादिना** । 'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमो दर्शनात् न तददर्शनादि'ति तदुक्तेरिति भावः । शिंशुपात्वेन वृक्षत्वानुमाने तादात्म्यं नियामकः सम्बन्धो, धूमाद्धूमध्वजानुमाने तदुत्पत्तिः ॥ **अस्येदमित्यादि** । यद्यपि 'अस्येदं कार्यं, कारणं संयोगि, विरोधि समवायि चेति लैङ्गिकमि'ति नवमाध्यायस्थवैशेषिकसूत्रे एकार्थसमवायीति न श्रुतं संयोगि समवायि चेत्येव श्रवणात्सम्बन्धीत्यपि न श्रुतमिति न यथाश्रुततत्सूत्रानुवादोऽयं तथाऽपि तृतीयाध्यायस्थे संयोगिसमवायि एकार्थसमवायि विरोधि चेति तत्सूत्रे एकार्थसमवायिनोऽपि श्रवणेन सूत्रद्वयोक्तार्थस्यैकीकरणेन संयोगिसमवायिनोश्च सम्बन्धित्वेनैक्यविवक्षया चायमनुवादः । अत्र कार्यं कारणमित्येक एव सम्बन्धो विवक्षितः । अस्येदं कार्यं कारणमित्येक एव सम्बन्ध इति निबन्धकृद्वचनात् । ततश्च लैङ्गिकनिमित्तसम्बन्धस्य चातुर्विध्यं तत्सिद्धान्त इत्युक्तं भवति । यश्च वैशेषिकैश्चतुष्प्रकारः सम्बन्ध उच्यते । अस्येदं कार्यं, कारणं, सम्बन्धि, एकार्थसमवायि, विरोधि, चेत्यादि न्यायवाचस्पतिवचनादस्येदं कार्यं कारणं संयोगिविरोधिसमवायि चेति लैङ्गिकमिति सूत्रे चतुर्धा सम्बन्धं नियमयन्तीति किरणावलीकारवचनाच्चेति द्रष्टव्यम् । अत्र कार्याद्धूमादेरग्न्याद्यनुमानम् । कारणाच्च भेरीदण्डसंयोगविशेषाच्छब्दानुमानम् । अन्त्यतन्तुसंयोगात्पटचरमकारणात्पटस्यानुमानम् । यथाविधिकारीर्याद्यनुष्ठानाद्वर्षानुमानम् । संयोगिनः शरीरस्य दर्शनात्त्वगिन्द्रियानुमानम् । वारिसंयुक्तसमवेतादुष्णस्पर्शाद्वारिस्थतेजोऽनुमानम् । एकार्थसमवायिना रसादिना रूपाद्यनुमानम् । स्फोटादेर्विरोधी मन्त्रपाठस्तथा चास्फोटादिना मन्त्रपाठस्यानुमानमिति विवेकः ॥ **मात्रानिमित्तेति** । श्लोके मात्राशब्दः स्वभावपरः । न्यायसूत्रवृत्तौ रामभद्रठक्कुरैस्तथा व्याख्यातत्वात् । निमित्तशब्दः कार्यकारणपरः । सहचारिशब्दस्त्वेकार्थसमवायिपरः । स्वस्वामीति सम्बन्धमात्रकीर्तनम् । विरोधीति सामान्यं वध्यघातकैरिति तद्विशेष इत्यपौनरुक्त्यम् । अत्र चन्द्रोदयेन समुद्रवृद्धेः कुमुदविकासस्य च, शरदि जलप्रसादेनागस्त्योदयस्य चानुमानं मात्राशब्दोक्तस्वभावनिबन्धनानुमानोदाहरणम् । न चात्रापि तदनन्तरभावित्वमात्रेण कारणत्वमाशङ्कनीयम् । अन्यथासिद्धत्वात् । स्वावयवानामुत्तरदेशप्राप्तिरूपायाः समुद्रवृद्धेः परस्परदलविभागरूपस्य च कुमुदविकासस्य पूर्वरूपनिवृत्तावुत्तररूपाद्युत्पादलक्षणस्य जलप्रसादस्य, तत्कालसन्निपातिस्वकारणाधीनकर्मनिबन्धनत्वात् । निमित्तानामुक्तान्येवोदाहरणानि । स्वस्वामीत्यस्य त्वविनाभूतेन स्वेन स्वामिनां, तादृशेन स्वामिना च भृत्यस्य स्वस्यानुमानमुदाहरणम् । वध्यघातकभावस्य तु विस्फूर्जतोऽहेर्दर्शनात् झाटाद्यन्तरितस्य नकुलस्यानुमानमुदाहरणं द्रष्टव्यम् ॥ **नियतसम्बन्धवदेवेति** ।

अव्यभिचरितसम्बन्धवदेवेत्यर्थः ॥ **न त्विति** । तस्याव्यापकत्वादिति भावः । ननु व्याश्रययोः सम्बन्धस्यैवानुपपत्त्याऽव्यभिचरितसम्बन्धस्य सुतरामसिद्धेः सम्बन्धसामान्यस्याप्यव्यापकत्वान्न तस्यापि प्रयोजकत्वमित्यतोऽविनाभावमात्रस्यैवाव्यभिचारितसम्बन्धरूपत्वात्तस्य च कृतकत्व नित्यत्वादावेकाश्रयतामन्तर्भाव्य भवनवद्धूमाग्न्यादौ भिन्नाश्रयत्वेऽपि तत्सम्भवान्नानुपपत्तिरिति न ह्याशैवात्र साधिकेत्येतद्व्याख्यानावसरे प्रपञ्चयिष्याम इत्याह **एतच्चेति** । यद्वा ननु तादात्म्यतदुत्पत्त्यादिरूपसम्बन्धविशेषवदेवानुमानं किन्न स्यादित्यतो भक्तिपादे 'रोहिण्युदय आसन्नः कृत्तिकाऽभ्युदिता यतः' इत्यादिना कृत्तिकोदयादे रोहिण्युदयासत्त्यादावनुमानत्वस्थित्या तत्र चाविनाभावरूपाव्यभिचारसम्बन्धस्य सत्त्वेऽपि तादात्म्यादिरूपपरपरिगणितसम्बन्धविशेषस्य तत्रासत्त्वेनाव्यापकत्वान्न तदित्याह **एतच्चेति** । यद्वा व्याप्यं चेदनुमानं तदा धूमः शब्दानित्यत्वेऽप्यनुमानं स्यात्तस्याप्यग्निना व्याप्तत्वादित्यत आह **एतच्चेति** । व्याप्यशब्दस्य सम्बन्धिशब्दत्वेन यो येन व्याप्तः स तस्मिन्ननुमानमित्यर्थसिद्धेर्नातिप्रसङ्ग इत्यनुपदमेवोपपादयिष्याम इत्यर्थः ।

स०— **अस्येदं कार्यमिति** । संबन्धि कारणमिति ॥ तत्संबन्धि इत्यर्थः । लौकिकनिमित्तमिति अत्र कार्यादिग्रहणमिति दर्शनार्थम् । तस्मात् व्यतिरेकदर्शनात् । यथा, आश्रावयन्नध्वर्युः होत्रासत्तेर्गमकः, चन्द्रोदयः समुद्रवृद्धेः, तथा कुमुदविकासस्य, सरोवराभ्युदयः अगस्त्योदयस्येत्येवमादि ऽस्येदमिति संबन्धित्वेन संगृहीतं भवति । वस्तुतस्तु अस्येदं कार्यमिति संबन्धिकारणमिति संबन्धि इत्यर्थः । लैङ्गिकनिमित्तसंबन्धमित्येव पाठः । लैङ्गिकमिति पाठेऽप्ययमेवार्थः । **मात्रेति** । अनेन एकदेश्येकदेशभावलक्षणसंबन्ध उक्तो भवति । निमित्तेन नैमित्तिकानुमानम् , संयोगिना संयोग्यन्तरानुमानम् , विरोधिना विरोध्यन्तरानुमानम् , येन सहचारि तेन सहचारिणा तस्यानुमानम् , स्वेन स्वाम्यनुमानम् , वध्येन घातुकानुमानम् । आद्यशब्देन विशेषणेन विशेष्यानुमानमित्यादि ग्राह्यम् ।

प०— **तादात्म्यतदुत्पत्ती इति** । तादात्म्यमभेदः तदुत्पत्तिः कार्यकारणभावः । आद्यं यथा । अयं वृक्षः चूतत्वादित्यादि । द्वितीयमग्रे व्यक्तीकरिष्यामः ॥ **अस्येदमिति** । अस्येदं कार्यं अस्येदं कारणं अस्येदं संबन्धि अस्येदमेकार्थसमवायि अस्येदं विरोधि चेति कार्यत्वकारणत्वादिरूपान् अनुमेयप्रयोजकसंबन्धानाहुरित्यर्थः । संबन्धिपदेन संयोगिसमवायिनोर्ग्रहः । तत्राद्यं धूमादग्नेरनुमानम् । विशिष्टमेघोन्नत्यादिना वृष्ट्यादेर्द्वितीयम् । शीतोष्णादिपदार्थसंयोगिना देहेन तत्र स्पर्शनेन्द्रियस्य तृतीयम् । ऊष्मणा तेजस्समवायिना तेजसश्चतुर्थम् । रसेन रूपस्य पञ्चमम् । वृष्ट्यजनने तद्विरोधिनो वायुमेघसंबन्धादेरिति षष्ठम् ॥ **मात्रेति** । तत्तद्वस्तुस्वभावः । पद्मविकासादिना सूर्योदयादेरनुमानम् ।

निमित्तं कार्यकारणभावः । सहचारिणो रूपरसादयः । निमित्तादिचत्वारि प्राक् प्रदर्शितानि ॥ **स्वस्वामीति** । स्वं वित्तभृत्यादि । तेन स्वामिनः । स्वामिना वा स्वस्यानुमानम् । अवस्थाविशेषयुक्तमार्जारेण तत्समीपेऽन्तर्हितमूषकानुमानमित्यादि द्रष्टव्यम् । तत्सर्वं वादित्रयोक्तं परिगणनत्रयमपीत्यर्थः ॥ **एतच्चोपपादयिष्याम इति** । 'व्याप्तिरेव तु सा स्मृते'त्युत्तरवाक्यव्याख्यावसरेऽविनाभावरूपव्याप्तेरेव प्रयोजकत्वेन परोक्तपञ्चरूपाणां अव्यापकत्वोक्तिसाम्येन परस्पराव्याप्त्याऽप्रयोजकत्वादित्युपपादयिष्याम इति भावः । अन्ये तु भक्तिपादे रोहिण्युदयादेर्लिङ्गलिङ्गिभावोक्त्योपपादयिष्यामः । तत्र तादात्म्यादेरभाव इत्याहुः । अपरे तु 'अर्थापत्त्युपमाऽभावा अनुमान्तर्गताः क्वचिदि'ति, 'प्रारम्भाद्याश्च युक्तयः । आगमार्थावसित्यर्था नियतव्याप्तयोऽखिला इति, 'परिशेषो मिथः सिद्धिचक्रकस्वाश्रयादय' इत्यादिना चार्थापत्त्यादेरुपक्रमादेरात्माश्रयादेश्चानुमानत्वोपपादनेनोपपादयिष्याम इत्यर्थः । तत्रोक्तपरिगणनस्याव्याप्त्यापत्तेरित्याहुः ।

**या० — अस्येदं कार्यमित्यादिः** । यद्यपि 'अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकमि'ति वैशेषिकसूत्रपाठः तथाऽपि संयोगि समवायि एकार्थसमवायि विरोधि चेति सूत्रान्तरे एकार्थसमवायिनोऽपि गृहीतत्वात्संयोगिसमवायिनोः सम्बन्धिशब्देनैव लाघवेन निर्देशः कार्य इति तत्सम्प्रदायमाश्रित्य सम्बन्धीत्यनुवादः कृत इति ज्ञातव्यम् । अत्र कार्यं कारणमिति प्रकारद्वयमिति प्राञ्चः । नवीनास्तु कार्यं कारणमित्येक एव सम्बन्धः प्रकारद्वयेनोक्तः । संयोगि समवायि चेति प्रकारद्वयं सम्बन्धिशब्देन विवक्षितम् । एवं पञ्चरूपतोपपत्तिरित्याहुः । कार्याद्धूमादेरग्न्याद्यनुमानं, कारणाद्भेरीदण्डसंयोगविशेषाद्बधिरस्य शब्दानुमानं, संयोगिनः शरीरस्य स्पर्शनात्वगिन्द्रियानुमानं, समवायिना जलौष्ण्येन तत्सम्बद्धतेजोऽनुमाम् , एकार्थसमवायिना रसादिना रूपाद्यनुमानम् , अभूतेन वर्षेण भूतस्य वाय्वभ्रसंयोगस्य विरोधिनोऽनुमानमित्याद्युदाहरणानि तच्छास्त्रोदितानि ज्ञातव्यानि ॥ **एवं मात्रानिमित्तेति** । अत्र मात्राशब्दः स्वभावपरस्तेन तन्निबन्धनमनुमानं ग्राह्यं । निमित्तशब्दः कार्यकारणपरः । सहचारिशब्दस्त्वेकार्थसमवायिपरः । स्वस्वामीत्यादि सम्बन्धकीर्तनम् । तेन तद्वदनुमानमिह ग्राह्यम् । समुद्रवृद्ध्या कुमुदप्रकाशेन च चन्द्रोदयस्यानुमानं स्वभावनिबन्धनानुमानोदाहरणम् । तत्र समानकालीनत्वेन न कार्यकारणभावः किन्तु स्वभावनिबन्धनमेवानुमानमिति तेषामाशयः । निमित्तादीनामुदाहरणान्युक्तानि । अविनाभूतेन केनचिदित्यादिना, स्वेन स्वामी, तादृशेन स्वामिना वा तादृशं भृत्यादि स्वमनुमीयते । वध्यघातकभावेन तु विस्फूर्जितोऽहिर्झाटान्तरितनकुले लिङ्गमिति ज्ञातव्यम् । कुत इत्यत आह **एतच्चेति** । भक्तिपाद इति शेषः । तत्र हि 'रोहिण्युदय

आसन्नः कृत्तिकाऽभ्युदिता यतः' इत्यत्र कृत्तिकोदयादिकं रोहिण्युदयासत्त्यादावनुमानमिति समर्थ्यते । न हि तत्राविनाभावरूपमव्यभिचरितसम्बन्धं विना तादात्म्यादिरूपो वा संयोगादिरूपो वा परपरिगणितः सम्बन्धविशेषः सम्भवति । ततश्चाव्यापकत्वात्परकीयं परिगणनमसमञ्जसमित्यपि तेन लभ्यत इत्य शयेनोपपादयिष्याम इत्युक्तमिति द्रष्टव्यम् । यद्वा न सम्बन्धविशेषवदित्यत्रोक्तरीत्याऽव्यापकत्वादिति हेतुर्द्रष्टव्यः । ननु व्याप्यं चेदनुमानं तदा धूमः शब्दानित्यत्वेऽप्यनुमानं स्यात् , व्याप्तो हि सोऽग्नि-नेत्यत आह **एतच्चेति** । व्याप्यमित्यस्य सम्बन्धिशब्दत्वादित्यादिनाऽनुपदमुपपादयिष्याम इत्यर्थः ।

**च० — तादात्म्यतदुत्पत्तीति** । तादात्म्यमभेदस्तदुत्पत्तिः कार्यकारणभावः । **अस्येदमिति** । षष्ठ्यन्तं कार्यमित्यादिप्रथमान्तपञ्चकेनान्वेति । संबन्धिपदेन संयोगिसमवायिनोः परिग्रहः । कार्यात् धूमादेर्वह्न्यनुमानम् । कारणाद्भेरीदण्डसंयोगविशेषाच्छब्दस्य । शीतोष्णादिसंयोगेन त्वगिन्द्रियस्य । जलौ-ष्ण्येन तत्संबद्धतेजसः । एकार्थसमवायिना रसादिना रूपादेः । वृष्ट्यजननेन तद्विरोधिवायुमेघसंबन्धादेः अनुमानमित्याद्युदाहरणानि निबन्धान्तरदिशा प्रपञ्चितान्यवसेयानि । **एतच्चोपपादयिष्याम इति** । भक्तिपादे 'रोहिण्युदय आसन्न' इत्यादिना कृत्तिकोदयादिकं रोहिण्युदयासत्त्यादावनुमानमिति समर्थ्यते । तत्र च न परपरिगणितः संबन्धविशेषोऽस्तीति तदीयं परिगणनमसमञ्जसमिति भावः ।

---

**सु० — केचिदाहुः । पक्षधर्मताऽप्यनुमानाङ्गमिति । तदप्यपाकुर्वन्नुक्तमेव विवृ-णोति** । व्याप्तिरेवेति ।

**अनु० —** व्याप्तिरेव तु सा स्मृता ॥

**विशेषेणाप्यत इति व्याप्तिः । यदव्यभिचरितसाहित्योपेतमेव लिङ्गं साऽनुमा । न पक्षधर्मताऽवश्यम्भा(वव्रतीत्य)विनीत्यर्थः । यद्वा व्याप्तिरिति भावसाधनः । तथात्वे व्याप्ति-रेव साऽनुमेति गौणो निर्देशः । व्याप्तिरेवानुमानाङ्गं न पक्षधर्मतेत्यर्थः । उपपादयिष्यते चैतन्नधिकरणस्यापि साधकतामुपपादयताचार्येणैव । एतेन 'ज्ञातसंबन्धनियमस्यैकदेशस्य दर्श-नत् । एकदेशान्तरे ज्ञानमनुमानमबाधितमि'त्यपि निरस्तम् । एकदेशतानियमस्याप्रयोजकत्वात् ।**

**शे० —** व्याप्तिशब्दस्य प्रसिद्धार्थत्वे सेत्यनेन सामानाधिकरण्यानुपपत्तिस्तस्यास्तदुपयोगित्वेऽपि तत्त्वाभावादित्यतो व्याप्तिशब्दमव्यभिचरितसम्बन्धवल्लिङ्गपरतया व्याचष्टे **विशेषेणेति** । **अत्र** पक्षे, प्रसिद्धार्थपरित्यागो भवतीत्यपरितोषात्पक्षान्तरमाह **यद्वेति** । 'क्तिन्नावादिभ्यश्चेति वक्तव्यमि'ति वचनान्न गुरोश्च हल इत्यकारेण 'स्त्रियां क्तिन्नि'ति क्तिन्निषेध इति भावः । ननु व्याप्तिशब्दस्य कर्मसाधनत्वे व्याप्तिः साऽनुमेति सामानाधिकरण्यमुपपद्यते । भावसाधनत्वे तु कथं तदित्यत आह **तथात्व इति** ॥

**व्याप्तिरेवेति** । 'दधित्रपुसम्प्रत्यक्षो ज्वर' इत्यादाविव तादर्थ्यात्ताच्छब्द्यमिति भावः ॥ **उपपादयिष्यत इति** । 'व्याप्यत्वे व्याश्रयत्वं तु कथमेव हि दूषणमि'त्यादिना भक्तिपाद इति शेषः । पक्षधर्मताया अनुमानाङ्गत्वनिरासस्यापि किं प्रयोजनमित्यतः शाबरोक्तानुमानलक्षणनिरास एव तत्प्रयोजनमिति भावेन तदनुवदति **एतेनेति** । यद्यपि 'अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिरि'त्यनुमानलक्षणभाष्ये अबाधितमिति न श्रुतं तथाऽपि 'असन्निकृष्टवाचा च द्वयमत्र जिहासितम् । ताद्रूप्येण परिच्छेदस्तद्विपर्ययतोऽपि च' इत्येतद्व्याख्यानरूपवार्तिके ताद्रूप्येणापरिच्छेदस्य तद्विपर्ययतोऽप्यपरिच्छेदस्य चासन्निकृष्टशब्दार्थतया व्याख्यानादेव युक्तं तदनुवादोऽयमबाधितमितीति द्रष्टव्यम् । ज्ञातः सम्बन्धनियमोऽविनाभावो येन स तथोक्तस्तस्य पुंस एकदेशस्य दर्शनाद्धूमादिरूपलिङ्गविशिष्टधर्म्येकदर्शनादेकदेशान्तरेऽग्न्यादिरूपलिङ्गविशिष्टधर्म्येकदेशान्तरेऽबाधितं ज्ञानमनुमानमित्यर्थः । एकस्यैव खलु पर्वतस्यैकदेशदर्शनेनैकदेशोऽनुमीयते यथाऽऽहुर्वार्तिककृतः । 'स एव चोभयात्माऽयं गम्यो गमक एव च । असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः' इति । यद्यपि 'प्रमाता ज्ञातसम्बन्ध एकदेश्यथ-वोच्यते । कर्मधारयपक्षे वा सम्बन्धिन्येकदेशता । द्वयं वा ज्ञातसम्बन्धमुपलब्धं परस्परम् । तस्यैक-देशशब्दाभ्यामुच्येते समुदायिनौ' इत्यादिना वार्तिककृद्भिर्बहुविधं भाष्यं योजितम् । तथाऽपि विस्तर-भयादेकैव रीतिरत्र दर्शितेत्यवधेयम् । एतेनेत्यतिदिष्टांशमेव विशदयति **एकदेशतेति** । एकधर्मितेत्यर्थः ।

---

स० — कर्मणि क्तिन् व्याख्यानेन व्याप्तिशब्दस्य गौणतां मनसि निधाय तत्स्वारस्याय पक्षान्तरमाह **यद्वेति** ॥ **उपपादयिष्यत इति** । 'आश्रयव्याश्रयासिद्धी' इत्यादिना तृतीयस्य द्वितीय इति शेषः । **ज्ञातसंबन्धनियमस्येति** । ज्ञातः संबन्धनियमः यस्य एकदेशस्य समानाधिकरणदेशान्तरे इत्यर्थः । **एकदेशतानियमस्येति** ॥ **सामानाधिकरण्यनियमस्येत्यर्थः** । यदनुमेयेनार्थेन संबद्धं देशविशेषे कालविशेषे सहचरितम्, अनुमेयधर्मान्विते च सर्वस्मिन्नेकदेशे वा प्रसिद्धम्, अनुमेयविपरीते च सर्वस्मिन् प्रमाणतोऽसदेव, तदप्रसिद्धार्थस्यानुमापकं लिङ्गं भवतीत्यर्थः ।

प० — व्याप्तिपदं कर्मणिव्युत्पन्नमित्युपेत्यार्थमाह **विशेषेणाप्यत इति** । साध्येन हि साधनं नियमेनाऽऽप्यत इति व्याप्तिपदं व्याप्यपरमिति फलितार्थमाह **अव्यभिचरितेति** । गौणतां व्यनक्ति **व्याप्तिरेवानुमानाङ्गमिति** ॥ **उपपादयिष्यत इति** । भक्तिपादे 'रोहिण्युदय आसन्नः कृत्तिकाभ्युदिता यत' इत्यादाविति भावः । **ज्ञातसंबन्धनियमस्येति** । पुरुषस्येति विशेष्यं बोध्यम् ॥ **एकदेशस्येति** । धूमाद्युपेतपर्वताद्येकदेशस्येत्यर्थः ॥ **एकदेशान्तर इति** । वह्न्यादिविशिष्टैकदेशान्तर इत्यर्थः । 'ज्ञातसंबन्धस्य पुंसो लिङ्गविशिष्टधर्म्येकदर्शनात् लिङ्गिविशिष्टधर्म्येकदेशे बुद्धिरनुमानमि'ति तर्कपादे शाबरभाष्याद्युक्तेः ॥ **एकदेशतानियमस्येति** । एकाधिकरणतानियमस्येत्यर्थः ।

या०— **उपपादयिष्यत इति** । भक्तिपाद इति शेषः । मीमांसकमतं दूषयति **एतेनेति** ॥ **ज्ञातसंबन्धेति** । ज्ञातः संबन्धनियमो येन पुरुषेण स तथोक्तस्तस्येत्यर्थः ॥ **एकदेशस्येति** । लिङ्गविशिष्टधर्म्येकदेशस्येत्यर्थः ॥ **एकदेशान्तर इति** । लिङ्गिविशिष्टधर्म्येकदेशान्तर इत्यर्थः । ततश्च लिङ्गलिङ्गिनोर्नियमेनैकधर्मिकत्वमावश्यकमिति भावः । 'ज्ञातसंबन्धस्य पुंसो लिङ्गविशिष्टधर्म्येकदेशदर्शनात् लिङ्गिविशिष्टधर्म्येकदेशे बुद्धिरनुमानमि'ति शबरवचनादेवमेवेदं व्याख्येयम् । एतेनेत्युक्तं विवृणोति **एकदेशतेति** । एकधर्मिकतानियमस्येत्यर्थः ।

**श्री०— भावसाधनो** न पूर्ववत्कर्मव्युत्पत्तिरित्याशयः ।

**च०— उपपादयिष्यत इति** । भक्तिपाद इति पूरणीयम् ।

**सु०— यदुक्तं पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वमिति पञ्चरूपोपपन्नमनुमानमिति । यथा(SSह ।) 'अनुमेयेन संबद्धं प्रसिद्धं च तदन्विते । तदभावे च नास्त्येव तल्लिङ्गमनुमापकमि'ति । अत्राबाधितविषयत्वमसत्प्रतिपक्षत्वं च चशब्दसंगृहीतमिति । तदसत् । केवलान्वयिनो विपक्षाद्व्यावृत्त्यभावेन केवलव्यतिरेकिणश्च सपक्षे सत्ताभावेनाव्यापकत्वात् । क्वचिच्चतूरूपोपपन्नत्वं क्वचित्पञ्चरूपोपपन्नत्वमिति चेत्(न) । एकप्रयोजकालाभात् । व्याप्तिपक्षधर्मतौपयिकत्वेनैषां ग्रहणम् । वस्तुतस्तु ते एवानुमानाङ्गमिति चेन्न । पक्षधर्मताया अप्यप्रयोजकत्वात् । तथा च व्याप्तिरेव प्रयोजिकेति वक्तव्यम् । किमनेन जल्पितेनेत्याह** व्याप्तिरेवेति ।

शे०— वैशेषिकोक्तलक्षणनिरासपरत्वेनापीदमेव मूलं योजयितुं तत्सम्मतं लक्षणमनुवदति **यदुक्तमिति** । कुतोऽस्य लक्षणस्य तत्सम्मततावगतिरित्यतस्तद्वाक्यादेवेत्याशयेन तदुदाहरति **यथेति** । अनुमेयेन सम्बद्धमनुमितिक्रियया व्याप्तुमिष्टतमेन साध्यधर्मविशिष्टेन धर्मिणा सम्बद्धं सर्वस्मिन्पक्षे सम्बद्धं पक्षधर्मतावदिति यावत् । एवं चतुर्विधाः परमाणवोऽनित्या गन्धवत्त्वादिति भागासिद्धं परिहृतम् **तदन्वितेति** । अनुमेयधर्मवति सपक्षे सर्वस्मिन्नेकदेशे वा प्रसिद्धं सपक्षे सदिति यावत् । तथा तदभावे तस्यानुमेयस्याभावो यस्मिन्नसौ तदभावः साध्याभाववान्विपक्षस्तत्र नास्त्येव सर्वथा व्यावृत्तं विपक्षाद्व्यावृत्तमिति यावत् । एवंविधं यल्लिङ्गं तदप्रसिद्धस्यार्थस्यानुमापकमिति काश्यपः कश्यपात्मजः कणादोऽब्रवीदिति । 'विपरीतमतो यत्स्यादेकेन द्वितयेन वा । विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीदि'त्युत्तरश्लोकस्थेनान्वयोऽवगन्तव्यः । नन्वत्र व्याख्यातप्रकारेण पक्षधर्मत्वसपक्षे सत्त्वविपक्षाद्व्यावृत्तिलक्षणरूपत्रयस्य 'अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते तदभावे च नास्त्येव' इत्यनेन लाभेऽप्यबाधि-

तविषयत्वासत्प्रतिपक्षत्वलक्षणरूपद्वयसमर्पकस्यांशस्यात्र श्लोकेऽभावेन तदलाभात्कथं पञ्चरूपात्मकस्यानुमानत्वे श्लोकस्य प्रमाणीकरणमित्यत आह **अत्रेति** ॥ **विपक्षाद्व्यावृत्त्यभावेनेति** । विपक्षस्यैवाभावान्न तस्य विपक्षाद्व्यावृत्तिरिति भावः ॥ **सपक्षे सत्त्वाभावेनेति** । केवलव्यतिरेकिणः सपक्षस्यैवाभावान्न सपक्षे सत्त्वमिति भावः ॥ **अव्यापकत्वादिति** । पञ्चरूपोपपन्नत्वस्य तत्राभावादिति भावः । ननु पञ्चरूपोपपन्नत्वं नानुमानसामान्यलक्षणं ब्रूमः । येन केवलान्वयिकेवलव्यतिरेकिणोस्तदभावादव्याप्तिः स्यात् किन्त्वन्वयव्यतिरेकिरूपानुमानस्यैवेदं लक्षणं केवलान्वयिकेवलव्यतिरेकिणोस्तु तत्र तत्र सम्भवच्चतूरूपोपपन्नत्वमेव । अत एवोदाहृतश्लोकोऽपि नानुमानसामान्यलक्षणपरः किन्तु 'अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्वित' इत्यन्वयिनो लक्षणम् । इदमेव च 'तदभावे च नास्त्येवे'ति सहितं व्यतिरेकिणः । समुदितं त्वन्वयव्यतिरेकिणो लक्षणमित्यंशभेदेन केवलान्वय्यादित्रितयलक्षणसमर्पकत्वेन किरणावलीकृता व्याख्यातस्तत्कथमव्याप्तिरिति शङ्कते **क्वचिदिति** । तथा सत्यननुगतत्वेन चतूरूपोपपन्नत्वादेरनुमानशब्दप्रवृत्तौ निमित्तत्वायोगादनुगतरूपाभावे विलक्षणेषु केवलान्वय्यादिष्वनुमानशब्दस्य प्रवृत्तिर्न स्यादिति परिहरति **एकेति** । व्याप्तिपक्षधर्मतोपेतत्वमेवानुमानसामान्यलक्षणं तच्च त्रिष्वस्तीति सामान्यलक्षणयोगादेव व्यवहारोपपत्तिः । न चैवमनुमानलक्षणकारिकायामनुमेयेन सम्बद्धमित्यादिना पक्षधर्मत्वादिरूपसमर्पणमनर्थकं स्यादिति वाच्यम् । अनुमानत्वप्रयोजकव्याप्तिपक्षधर्मत्वौपयिकत्वेन तदुपन्यासस्य सार्थक्यादिति भावेन शङ्कते **व्याप्तिपक्षधर्मतौपयिकत्वेनेति** । न च सपक्षे सत्त्वं विनाऽपि व्यतिरेकिणो व्याप्त्यादिमत्त्वे भूर्नित्या गन्धवत्त्वादित्यादेरसाधारणस्यापि तत्स्यादिति वाच्यम् । सपक्षहीनस्य विपक्षाद्व्यावृत्तिमात्रेण व्याप्त्यादेरविकलत्वात् ॥ **पक्षधर्मताया अपीति** । व्यधिकरणस्यापि नदीपूरस्य वृष्ट्यनुमापकत्वदर्शनादिति शेषः । तथा चानुमेयेन सम्बद्धमित्यस्यानुमानाङ्गसमर्पकत्वाभावात्कारिकायां तदंशस्य वैयर्थ्यमेवेति भावः ।

**प०— अनुमेयेन** सिसाधयिषिता साध्येन । **तदन्विते** अनुमेयेनान्विते सपक्ष इत्यर्थः ॥ **तदिति** । तस्यानुमेयस्यानुमेयनिष्ठासाधारणधर्माक्रान्तस्याभावो यस्मिन्निति व्युत्पत्त्या विपक्ष इत्यर्थः । शङ्कते **व्याप्तिपक्षधर्मतेति** ॥ **व्याप्तिरेवेतीति** । अत्रानुमानशब्दः तदङ्गपर इत्युक्तमेवेति भावः ।

**या०— अनुमेयेनेति** । पक्षीयसाध्येनेत्यर्थः । अनेन पक्षधर्मत्वमुपपादितमिति ज्ञातव्यम् ॥ **तदभाव इति** । तस्यानुमेयस्य साध्यतावच्छेदकावच्छिन्नस्येति यावत्, अभावो यत्र स तथोक्तः तस्मिन् विपक्ष इत्यर्थः ।

सु० — अविनाभावो व्याप्तिः । सा द्विविधा । अन्वयव्यतिरेकभेदात् । साध्येन साधनस्य व्याप्तिरन्वयः । साधनाभावेन साध्याभावस्य व्याप्तिर्व्यतिरेक इति केचिदाचक्षते । तद्द्वैविध्यं तुशब्देन व्यवच्छिनत्ति ।

तथा हि । योऽग्निमान्न भवति स धूमवान्न भवतीति व्यतिरेकव्याप्तिः किं धूमेनाग्निसाधने उपयुज्यते किंवाऽग्न्यभावेन धूमाभावसाधने । नाद्यः । यो धूमवानसावग्निमानित्यन्वयव्याप्त्यैव तत्सिद्धेः । अन्यथा केवलान्वयवतोऽसाधकत्वप्रसङ्गात् । किञ्चात्राभावयोर्व्याप्यव्यापकभावो, भावेन भावसाधनमिति सुभाषितम् । अन्यगतया व्याप्त्याऽन्यस्य साधकत्वेऽतिप्रसङ्गात् । यदभावयोर्व्याप्यव्यापकभावस्तयोरेव साध्यसाधनभाव इत्यभ्युपगमे नातिप्रसङ्ग इति चेन्न । तथाऽपि व्याप्यं लिङ्गमित्यस्याव्याप्तिप्रसक्तेः । यदभावो यदभावस्य व्यापकः स तस्य व्याप्य इति नियमाददोष इति चेत् (न) । तर्हि न व्यतिरेकव्याप्तिः प्रकृतसाध्यसिद्ध्युपयोगिनी, किन्नाम प्रकृतसाधनव्याप्तिसाधनोपयोगिनी । तत्र चान्वयिरूपतैव तस्याः । द्वितीयस्त्विष्यत एव । किन्नाम साऽप्यन्वयरूपैवेति न सर्वथा व्याप्तिद्वैविध्यं संभवतीति ।

---

शे० — ननु पक्षधर्मताया अप्रयोजकत्वे क्वचिद्धेतौ पक्षीयसाध्यसामानाधिकरण्याभावेऽपि व्याप्तिर्वाच्या । न च सा संभवति । व्याप्तेः सामानाधिकरण्यरूपत्वादित्यतो भवेदेवं कथञ्चिद्यदि सामानाधिकरण्यं व्याप्तिः स्यान्न चैवं किन्त्वन्यैवेत्याह **अविनाभाव इति** । ननु नञो भिन्नक्रमत्वेन साध्येन विना साधनस्याभावो वाऽविनाभावोऽभिमतो, यथाश्रुतक्रमत्वेन साध्येनाविना साध्यसाहित्येन साधनस्य भावो वा । नाद्यः । केवलान्वयिनि साध्याभावाप्रसिद्ध्याऽव्याप्त्यापातात् । साध्याभावे साधनाभावस्य व्यतिरेकव्याप्तित्वेन त्वन्मतेऽनुमानाङ्गत्वाच्च । नान्त्यः । साध्यसाहित्यस्य व्यभिचारिण्यपि सत्त्वात् । न च;अस्मिन्पक्षे साध्यसाहित्यनियमोऽभिप्रेतः । द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायात् । अन्यथा साध्यसाहित्यमित्येतावता पूर्तेस्तत्प्रयोगवैयर्थ्यम् । अतिशयश्च नियम एव । एतदेव चाभिप्रेत्याविनाभाव इत्यस्य साहचर्यनियम इति यावदिति तात्पर्यमुक्तं पद्धतौ । तत्कथं व्यभिचारिण्यतिप्रसङ्ग; इति वाच्यम् । तथा सति नियमस्य निरुच्यमानव्याप्तिरूपत्वेनात्माश्रयप्रसङ्गात् । न च नियमो नाम न व्याप्तिरभिमता । नियतः संबन्धो व्याप्तिर्नियमश्चाव्यभिचार इति वैशेषिकपरीक्षायां वक्ष्यमाणत्वात् । अतो नात्माश्रयत्वं नापि व्यभिचारिसाधारण्यमिति वाच्यम् । भिन्नदेशकालयोरधोदेशनदीपूरोर्ध्वदेशवृष्ट्योर्देशतः कालतो वाऽसाहित्येन तत्राव्याप्त्यापातादिति चेत् । अत्र ब्रूमः ।

यद्देशकालसंबद्धस्य यस्य यद्देशकालसंबद्धेन येन विनाऽनुपपत्तिस्तस्य तेन सा व्याप्तिः । अनुपपत्तिश्चाघटनं प्रमाणविरोध इति यावत् । उक्तं हि प्रमाणलक्षणटीकायामनुपपत्तिश्चासंभव इति । यत्तु विमतो गौर्गवयसदृशो गवयगतसादृश्यप्रतियोगित्वादिति प्रमाणलक्षणटीकायां हेतुसाध्ययोः सामानाधिकरण्यसंपादनं तत्परमतमाश्रित्य । अत एव तत्रैव प्रयोगसम्भवादित्युक्तम् । पद्धतौ चासौ गौरेतत्सदृशोऽस्य गवयस्य तद्गोसदृशत्वादिति वैयधिकरण्येनैव प्रयुक्तम् । अत एवोत्तरत्र 'रोहिण्युद आसन्नः कृत्तिकाभ्युदिता यतः' इति मौलव्यधिकरणप्रयोगे कालादिपक्षीकारेणैकाधिकरण्यमाशङ्क्यैवं प्रयोगविपरिणामे प्रमाणं नेत्येव वक्ष्यति । इयमेव च व्याप्तिः साध्येन विना साधनस्याभावोऽनुपपत्तिरिति भावेनाविनाभाव इत्युच्यते । इयं च धूमादिसर्वानुमानेष्वनुगतेति नाव्याप्तिः । ननु धूमस्य न तावद्वन्हिसामान्यं विनाऽनुपपत्तिः । तया पर्वतीयवन्ह्यसिद्धिप्रसङ्गात् । नापि पर्वतीयवन्हिं विना । पर्वतीयवन्ह्यसिद्धौ तेन विनाऽनुपपत्तेर्दुर्ज्ञानत्वात् । सिद्धौ च तस्या एवानुमितिरूपफलत्वेन तत्करणत्वायोगादिति चेन्न । तथा सति परपक्षे धूमस्य वन्हिसामानाधिकरण्यमपि न वन्हिसामान्येन । तेन पर्वतीयवन्ह्यसिद्धेः । पर्वतीय वन्हिनाचेत्तदसिद्धौ तत्सामानाधिकरण्यस्य दुर्ज्ञानत्वात् । सिद्धौ च तस्या एवानुमितिरूपफलत्वेन तत्करणत्वायोगादिति साम्यात् । यदि च धूमसामान्यस्य वन्हिसामानाधिकरण्यज्ञानं कारणं वस्तुगत्या पर्वतीयस्य वन्हेर्वन्हित्वेन ज्ञानं फलम् । वन्हेः पर्वतीयत्वसिद्धिस्तु पक्षधर्मताबलादिति मन्यसे तर्हि धूमसामान्यस्य वह्निसामान्येन विनाऽनुपपत्तिज्ञानं करणं वस्तुगत्या पर्वतीयस्य वह्नेर्वह्नित्वेन ज्ञानं फलं वह्नेः पर्वतीयत्वसिद्धिस्तु समुचितदेशसिद्धिबलादिति समः समाधिः । न चेयं व्यतिरेकव्याप्तिः । वृष्टिरूपसाध्याभाववत्यधोदेशे पूररूपसाधनाभावस्याभावेन व्यतिरेकव्याप्त्यभावेऽपि पूरे वृष्टिं विनाऽनुपपत्तिदर्शनात् । किञ्च वन्हिं विनाऽनुपपत्तिर्धूमगता व्यतिरेकव्याप्तिश्च वन्ह्यभावगतेति कथं तयोरभेदः । वन्ह्यभावस्य धूमाभावेन व्याप्तिरपि धूमाभावं विनाऽनुपपत्तिरेव । सा च वन्ह्यभावेन धूमाभावे साध्ये व्याप्यगतत्वादन्वयव्याप्तित्वेनैवाङ्गम् । धूमेन वह्नौ साध्ये तु धूमानिष्ठत्वान्न साक्षादङ्गम् । न च केवलान्वयिन्यव्याप्तिः । तत्र साध्याभावासत्त्वादेव साध्याभावे सति साधनस्य योपपत्तिस्तदभावरूपानुपपत्तेः सत्त्वात् । मन्मतेऽप्रामाणिकस्यापि निषेधप्रतियोगित्वात् । तथा च रसस्य समानदेशकालेन रूपेण विनेव पाकजरूपादेः समानदेशेन भिन्नकालेन पाकेन विनेव च कृत्तिकोदयस्याभिन्नकालभिन्नदेशया रोहिण्युदयासत्त्या विनाऽधोदेशनदीपूरस्य भिन्नदेशकालोर्ध्वदेशवृष्ट्याविनाऽनुपपत्तिरस्तीति सामानाधिकरण्य इव वैयधिकरण्येऽप्युक्तरूपा व्याप्तिर्युक्ता । प्रस्तुत नदीपूरादौ सामानाधिकरण्य एवोक्तरूपा व्याप्तिरयुक्ता । न ह्यूर्ध्वदेशगतो नदीपूर ऊर्ध्वदेशगतां वृष्टिं विनाऽनुपपन्न इति सङ्क्षेपः । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः ।

ननु व्याप्तिरेव सेत्येतावतैव पक्षधर्मताया अनङ्गत्वोपपादनपुरःसरमुक्तविवरणान्मूले तुशब्दस्यानर्थक्यमित्यतः परोक्तव्याप्तिद्वैविध्यनिरासार्थत्वान्न तदिति भावेन तद्द्वैविध्यपक्षनिरासपरतया तुशब्दं योजयितुं तं पक्षमनुवदति **सा द्विविधेत्यादिना** ॥ **अन्यथेति** । अन्वयव्याप्तिमात्रस्यागमकत्व इत्यर्थः ॥ **किञ्चेति** । अन्यगतया व्याप्त्याऽन्यस्यागमकत्वादिति भावः । ननु गमकत्वेऽन्वयव्यतिरेकव्याप्त्यनुगतं व्याप्तित्वमेव तन्त्रम् । न तु स्वनिष्ठव्याप्तित्वं गौरवात् । तच्चाभावगताया अपि व्याप्तेरस्त्येवेति युक्तमभावगतया अपि व्याप्त्या भावस्य गमकत्वमित्यतो न व्याप्तित्वमात्रं तन्त्रम् । तथात्वे धूमगतया वह्निव्याप्त्या कृतकत्वस्यानित्यत्वगमकत्वापातात् । ततश्च स्वनिष्ठव्याप्तित्वमेव तन्त्रमिति वक्तव्यत्वेन नाभावनिष्ठव्याप्त्या भावस्य गमकत्वनिर्वाह इत्याशयेनाह **अन्यगतयेति** । नन्वन्वयिनि स्वनिष्ठा व्याप्तिस्तन्त्रं व्यतिरेकिणि त्वभावगतैव । न चोक्तातिप्रसङ्गः । प्रतियोग्यनुयोगिभावस्य नियामकत्वेन तदप्रसङ्गादिति शङ्कते **यदभावयोरिति** ॥ **अव्याप्तीति** । व्यतिरेकिणीति शेषः ॥ **यदभाव इति** । तथा च व्यतिरेकव्याप्त्याऽन्वयव्याप्तेरनुमानेन व्यतिरेकिणि लिङ्गस्य व्याप्यत्वमस्त्येवेति नाव्याप्तिरिति भावः । अस्तु तर्हि तत्रैवोपयोग इत्यतो यत्रोपयोगो न तत्र सा व्यतिरेकव्याप्तिरित्याह **तत्र चेति** । वन्ह्यभावेन धूमाभावसाधने व्यतिरेकव्याप्तिरुपयुज्यत इति द्वितीयमभ्युपगमेन गूढाभिसन्धिः परिहरति **द्वितीय इति** । तर्हि व्याप्तिद्वैविध्यसिद्धेः कथं तन्निरास इत्याशयमजानानः शङ्कते **किन्नामेति** । अभिसन्धिमुद्घाटयति **साऽपीति** ।

स० — **अन्यथेति** । अन्वयव्याप्तिमात्रस्य साध्यसाधकत्वे इत्यर्थः । **सुभाषितमिति** । विपरीतलक्षणया दुर्भाषितमित्यर्थः **अतिप्रसङ्गादिति** । धूमनिष्ठव्याप्त्या घटादेरपि वन्हिसाधकत्वं स्यादिति भावः । **तथापीति** । अभावस्यैव व्याप्तत्वेन भावस्य व्याप्तत्वाभावादव्याप्तिरित्यर्थः । उपलक्षणं चैतत् । अभावे व्याप्तत्वस्य सत्त्वात् अतिव्याप्तिरपि द्रष्टव्या । ननु साध्याभावव्यापकाभावप्रतियोगित्वस्यैव व्याप्तत्वशब्दार्थत्वेन तस्य च भावे विद्यमानत्वेन नाव्याप्तिरिति शङ्कते **यदभाव इति** । **तत्राप्यन्वयरूपतैवेति** । अन्वयव्याप्तिसाधने तस्या व्यतिरेकव्यतिरेकव्याप्तेरन्वयरूपतैव । अयं हेतुः साध्यव्याप्यः । तदभावव्यापकाभावप्रतियोगित्वात् स तद्व्याप्यः, तथा धूमोऽग्निनेति व्याप्तिग्रहणस्थलसत्त्वादिति भावः ।

प० — का व्याप्तिरित्यत आह **अविनाभाव इति** । येन विना यस्यासत्वं तेन तस्य व्याप्तिरित्यर्थः । यद्देशकालसंबद्धस्य यस्य यद्देशकालसंबद्धेन येन विनाऽनुपपत्तिः असंभव इति यावत् तस्य तेन व्याप्तिरिति फलितार्थः । तथैव तर्कताण्डवोक्तेः । एवकारव्यावर्त्यमवतारिकायामुक्तं मत्वा तुशब्दव्यावर्त्यमाह **सा द्विविधेत्यादिना** । सुभाषितमित्युपहासः । कुत इत्यत आह **अन्यगतयेति** ।

धूमतगव्याप्त्या पाषाणादेरपि वह्निसाधकत्वप्रसङ्गादित्यर्थः । व्याप्यव्यापकभावापन्नौ प्रतियोग्यनुयोगिनौ तयोः साध्यसाधनभावः इत्युक्तौ न दोष इति शङ्कते **यदभावयोरिति** । व्यतिरेकसहचारेणान्वयव्याप्तिर्निश्चीयत इति भावेन शङ्कते **यदभाव इति** ॥ **द्वितीयस्त्विति** । अग्न्यभावेन धूमाभावसाधनोपयुक्तपक्षस्त्वित्यर्थः ।

**या०**— ननु पक्षधर्मताया अप्रयोजकत्वे क्वचिद्धेतौ पक्षीयसाध्यसामानाधिकरण्याभावोऽपि स्वीकार्यः । ततश्च कथं तत्र व्याप्तिरपि तस्याः सामानाधिकरण्यगर्भत्वादित्यत आह **अविनाभाव इति** । एतदुपपादनं च तर्कताण्डवे द्रष्टव्यम् । केषाञ्चित्पक्षं दूषयितुमनुवदति **सा द्विविधेत्यादिना** ॥ **यदभावयोरिति** । अनेन प्रतियोग्यनुयोगिभावो नियामक इत्युक्तं भवति ॥ **यदभाव इति** । तथा च व्यतिरेकव्याप्त्याऽन्वयव्याप्तिरनुमीयत इत्याशयः ।

**श्री०**— **व्याप्यं लिङ्गमिति** । सात्मकत्वाभावे व्याप्तिप्राप्त्या प्राणादिमत्त्वे तदभावादित्यर्थः ।

**सु०— एतेनानुमानस्य केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदेन त्रैविध्यमपि परास्तम् । व्यतिरेकव्याप्तेरनुमानानङ्गत्वात् । सद्भावमात्रेण व्युत्पादनस्यातिप्रसङ्गित्वात् । कथं तर्हि केवलव्यतिरेकिणो गमकत्वमिति चेत् । कोऽयं केवलव्यतिरेकी नाम । केवलो व्यतिरेक एव यस्यासाविति चेत् । तर्हि कथमत्यन्तासतोः साध्यसाधनता स्यात् । दृश्यते तावदिति चेन्न । यतस्तस्यान्यैव गतिः । प्राणादिमत्त्वस्य सात्मकत्वेन व्याप्तिर्जीवच्छरीर एव गृहीता । अतस्तत्रैव विप्रतिपत्तौ न सोपदर्शयितुं शक्याऽभूत् । व्याप्तिमात्रमेवानुमानाङ्गं न पुनः सपक्षे तदुपदर्शनमपीत्यतो व्यतिरेकयोर्व्याप्त्या तदुपपादनं क्रियते ।**

**अयमत्र प्रयोगक्रमः । जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् यत्प्राणादिमत्तत्सात्मकं प्राणादिमच्चेदं तस्मात्सात्मकमिति प्रयुक्ते धूमस्याग्निनेवास्य न व्याप्तिर्दृश्यते । तत्कथमित्याकाङ्क्षायां प्रयोगान्तरं प्रवर्तते । प्राणादिमत्त्वं सात्मकत्वेन व्याप्तम् तदभावव्यापकाभावत्वात् । यो यदभावव्यापकाभावः । स तद्व्याप्तो यथा धूमोऽग्निनेति । तदेतावति वक्तव्ये यदन्यथा प्रयुज्यते तद्विवेकिनां स्फुटप्रतीतिकतया संग्रहरुचितया वेति ।**

**शे०**—व्याप्तिद्वैविध्यनिरासार्थस्तुशब्द इत्युक्तं तत्र किं तन्निरासस्यापि प्रयोजनमित्यतः परोक्तानुमानत्रैविध्यनिरास एव तत्प्रयोजनं व्याप्तिद्वैविध्यप्रयुक्तत्वात्तत्त्रैविध्यस्य, तदभावेऽसम्भवादित्याह **एतेनेति** । एतेनेत्यतिदिष्टांशमेव दर्शयति **व्यतिरेकव्याप्तेरिति** । ननु यद्यनुमानत्रैविध्यं न स्यात्कथं तर्हि प्रमाणलक्षणटीकायां त्रिविधमनुमानमिति तत्त्रैविध्योक्तिः । न चासौ परमतानुवादः । तथा सति 'सर्वत्र

निर्दोषत्वानुवृत्तेर्न बाधितादौ प्रसङ्गः' । 'तत्पुनर्द्विविधं दृष्टं सामान्यतो दृष्टं चे'त्याद्युत्तरग्रन्थास्वारस्य-प्रसङ्गात् । न हि परमतलक्षणेषु स्वमूलोक्तसामान्यलक्षणगतनिर्दोषत्वानुवृत्त्याऽतिव्याप्तिपरिहारो युज्यते । न वा परोक्तविभागेन स्वकृतविभागस्य पुनर्विभागत्ववचनं सङ्गच्छते । यदि चात्र व्याप्ति-द्वैविध्यं तुशब्देन व्यवच्छिनत्तीति कण्ठत उक्तेस्तद्द्वैविध्यं नास्तीति मतं कथं तर्ह्यविनाभावो व्याप्तिः सा द्विविधाऽन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्चे'ति तद्द्वैविध्यं तत्रोक्तं सङ्गच्छते ? न चैतदपि परमतानुवादः । यदुक्तं निर्दोषं प्रमितं लिङ्गमनुमानमिति तदयुक्तमित्यादिना व्याप्तिरुपपत्तिमूलमिति मूलमवतार्य तद्व्याख्या-नावसरे युक्तं लक्षणमित्यन्ते ग्रन्थसन्दर्भे मध्यपतितव्याप्तिद्वैविध्योक्तेः परमतानुवादत्वस्य शङ्कितुमप्यशक्य-त्वात् । अत एव केचिदित्यादि क्वाचित्कपाठकल्पनमपास्तम् । तथा सत्यत्रैव तत्रापि तद्दूषण-प्रसङ्गात् । एवं वैधर्म्यदृष्टान्ततत्तद्विरोधवैधर्म्योदाहरणादीनि व्यतिरेक्यनुमानाद्यङ्गीकारज्ञापकानि बहूनि तत्र तत्र सन्तीति कथमत्र तन्निराकरणमिति चेत् । मैवम् । भावानवबोधात् । न ह्यत्र केवलव्यति-रेकिस्वरूपमेव निराक्रियते किन्नाम व्यतिरेकव्याप्त्या प्रकृतसाध्यगमकरूपमेव केवलव्यतिरेकि । अत एव तथैव दूषितम् । व्यतिरेकव्याप्त्यनुमेयान्वयव्याप्त्या गमकं तु केवलव्यतिरेकि प्रमाणलक्षणटीकाभि-प्रेतमत्राप्यनुमतमेव । अत एव कथं तर्हि केवलव्यतिरेकिणो गमकत्वमित्यादिना तथैव वक्ष्यति पद्ध-तावपि । कथं तर्हि केवलव्यतिरेकिणः संव्यवहार इत्यादिना तथैवोक्तम् । व्याप्तिद्वैविध्यं तुशब्देन व्यवच्छिनत्तीति साक्षादेवात्र पद्धतौ च निराकृतम् । तथा च साक्षादन्वये गमकरूपैव व्यतिरेक-व्याप्तिरत्र पद्धतौ च निराकृता । न त्वन्वयव्याप्त्यनुमापिकेति न कोऽपि विरोध इति सङ्क्षेपः ॥ **तद्-भावेति** । तदभावस्य व्यापकीभूतोऽभावो यस्य तत्तथोक्तं तस्य भावस्तत्त्वं तस्मादित्यर्थः । तथा च तदभावव्यापकाभावप्रतियोगित्वादिति हेतुर्द्रष्टव्यः । अत एव पद्धतौ तथैव निर्दिष्टमिति बोध्यम् । ननु साध्याभावव्यापकाभावप्रतियोगित्वेन साध्यव्याप्यत्वानुमानमपि व्यतिरेकिरूपमेव । अन्वयाप्रतीतेः । प्रतीतौ च तत एव साध्यव्याप्यत्वेन प्रथमोपस्थितात्प्रकृतसाध्यसिद्धौ जातायां सिद्धसाधनेन व्यति-रेकितयोक्तस्यानुमानान्तरस्यानवकाशाद्व्यतिरेकिरूपत्वे च तस्याप्युक्तक्रमेण साध्यव्याप्यत्वानुमित्या तद्वदेव व्यतिरेकव्याप्त्यनुमेयव्याप्तिकत्वरूपं व्यतिरेकित्वं वाच्यं तस्याप्येवमित्यनवस्था स्यादिति चेन्न । अपक्ष-धर्मे वा पक्षधर्मेऽपि तत्त्वेनाज्ञाते वा साध्यव्याप्यत्वव्याप्तिग्रहसम्भवेनोक्तविधसाध्यव्याप्यत्वेन प्रथमोप-स्थितधर्मेण जीवच्छरीरे सात्मकत्वाननुमित्या सिद्धसाधनत्वासम्भवेनोक्तरूपव्यतिरेकिप्रवृत्तेरनुकूलत्वात् । किञ्च सामान्यव्याप्तेर्धूमादावेव ग्रहसम्भवेन सिद्धसाधनशङ्का नावकाशं लभते । अत एव वक्ष्यति । यो यदभावव्यापकाभावः स तद्व्याप्तो यथा धूमोऽग्निनेति । पद्धतावपि यद्यदभावव्यापकाभावप्रतियोगि तत्तेन व्याप्तं यथा धूमवत्त्वमग्निमत्त्वेनेत्येवोक्तमित्यवधेयम् ॥ **अन्यथेति** । जीवच्छरीरं सात्मकं प्राणा-

दिमत्त्वाद्यत्सात्मकं न भवति तत्प्राणादिमन्न भवतीत्येवमित्यर्थः ॥ **विवेकिनामिति** । विवेकिनां प्रतिपाद्यानां विनाऽपि प्रयोगान्तरमेतावन्मात्रेणैव साध्यसाधनभावस्य स्फुटप्रतीतिकतया वा प्रतिपादकानां संग्रहरुचितया वेत्यर्थः ।

**स०— तदभावमात्रेणेति** । व्यतिरेकव्याप्तिसद्भावेऽपि अभावमात्रेण व्यतिरेक्यनुमानव्युत्पादनस्येत्यर्थः । **अतिप्रसंगित्वादिति** । प्रमेयत्वाभिधेयत्वादीनामप्युपादानं स्यादिति भावः । **तदभावव्यापकाभावत्वादिति** । तदभावस्य व्यापकः अभावः यस्य सः तदभावव्यापकाभावस्तत्त्वं तस्मादित्यर्थः । **यदन्यथा प्रयुज्यत इति** । जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् । यन्न सात्मकं न तत्प्राणादिमत् इत्यन्यथा प्रदर्शनमित्यर्थः । **संग्रहरूचितयेति** । संक्षेपरुचितयेत्यर्थः ।

**प०— एतेनेति** । व्याप्तिद्वैविध्यव्यवच्छेदकतुशब्देनेत्यर्थः । **अतिप्रसङ्गित्वादिति** । धूमनिष्ठार्द्रेन्धनप्रभवत्वकरीषजन्यत्वमशकनिवर्तकत्वादेरपि व्युत्पादनप्रसङ्गः स्यादिति भावः ॥ **अत्यन्तासतोरिति** । विभोर्गगनादेरपि न व्यतिरेकः । किन्तु सर्वत्र स्थितिरेव । तथैव वैशेषिकनये वक्ष्यमाणत्वादिति भावः ॥ **अयमत्र प्रयोगक्रम इति** । एतेन 'युक्तिगागमगा तथा' इत्यत्र युक्तिगां व्याप्तिं स्पष्टयिष्याम इत्युक्तमत्र स्पष्टीकृतं ध्येयम् ।

**या०— अतिप्रसङ्गित्वादिति** । धूमादौ मेघादिसादृश्यादेरपि सद्भावेन तस्यापि व्युत्पादनं कर्तव्यं स्यादित्यर्थः ।

**श्री०— अभावत्वात्** अभाववत्त्वात् । तत्प्रतियोगित्वादित्यर्थः ॥ **संग्रहेति** । अस्मदुक्तप्रकारेण विस्तरेण कथने न रुचिः अपि तु संग्रहेणैव कथन इत्यर्थः ।

**च०— तदभावव्यापकाभावत्वादिति** । बहुव्रीहिप्रकृतिको भावप्रत्ययः । सात्मकत्वाभावव्यापकीभूताभावप्रतियोगित्वादित्यर्थः । **य इति** । यदभावव्यापकाभावप्रतियोगी यः स तद्व्याप्त इत्यर्थः ।

**सु०— स्यादेतत्** । **व्याप्यं चेदनुमानं तदा धूमः शब्दानित्यत्वेऽप्यनुमानं स्यात्** । **व्याप्तो हि सोऽप्यग्निनेति** । **मैवम्** । **व्याप्यमित्यस्य संबन्धिशब्दत्वात्** । **तथा च यो येन व्याप्यः स तस्मिन्ननुमानमित्युक्तं स्यात्** । **न चैवमतिप्रसङ्गोऽस्ति** ।

**द्विविधा हि धर्मा भवन्ति** । **केचित्परस्परपरिहारेणैव वर्तमानाः** । **यथा कृतकत्वनित्यत्वे, स्वातन्त्र्यपारतन्त्र्ये चेत्येवमादयः** । **केचित्समाविष्टाः** । **तेऽपि त्रिविधाः** । **केचित्सङ्कीर्णाः** । **परस्परपरिहारेणैव वर्तमानयोरेकत्र समावेशः सङ्करः** । **यथा भूतत्वमूर्तत्वे, पुरुषत्वपाचकत्वे चेत्येवमादयः** । **केचित्परापरभावावस्थिताः** । **यथा सत्त्वद्रव्यत्वे, धूमवत्त्वा-**

ग्निमत्त्वे चेत्येवमादयः। केचित्तुल्यवृत्तयः। यथा कृतकत्वानित्यत्वे, गुरुत्वरसवत्त्वे चेत्य-(त्येवम)ादयः। तत्राद्यानां परस्परसंबन्ध एव नास्तीति नानुमानानुमेयभावः। विरुद्ध-समाख्यया तेऽभिधीयन्ते। द्वितीयानामपि सत्यपि संबन्धे परस्परव्यभिचारेण व्याप्यव्यापक-भावाभावान्नानुमानानुमेयता। किन्तु परस्परमनैकान्तिकतयाऽभिधीयन्ते। तृतीयेष्वपरेषां व्याप्यतयापरेषां व्यापकतयाऽस्त्यनुमानानुमेयत्वम्। परे त्वव्याप्यतया नापरेष्वनुमानता-मश्नुवते। किन्नामानैकान्तिका एव। चतुर्थास्तु परस्परं व्याप्यव्यापकभावादन्योन्यमनु-मानतामर्हन्तः प्रसिद्ध्यप्रसिद्धिभ्यां विशिष्यन्त इति सङ्क्षेपः ॥

शे०—ननु धर्मत्वसाम्येऽपि कुतः कयोश्चिदेव व्याप्तिः व्याप्तिरूपसम्बन्धस्योभयसाधारणत्वात्। कुतो वृतो धूमस्यैव व्याप्यत्वमग्नेश्च व्यापकत्वमित्यत आह **द्विविधा हीत्यादिना** ॥ **यथेति**। अयं च परारीत्यैव दृष्टान्तः। यत्कृतकं तदनित्यमिति व्याप्तेः परैरङ्गीकारात्। स्वमते नैवं व्याप्तिः। कृतकस्यापि पुराणादेर्नित्यत्वेनोक्तव्याप्तेस्तत्र व्यभिचारात्। अत एवात्रारुच्या स्वपरसम्प्रतिपन्नं दृष्टान्तान्तरमाह **स्वातन्त्र्येति**। आदिपदेन गोत्वाश्वत्वादिपरिग्रहः ॥ **तेऽपि त्रिविधा इति**। चतुष्टयी खलु धर्माणां गतिरिति पद्धतौ तच्चतुष्ट्वाभिधानं तु साक्षात्परम्पराविभाजकोपाधीनेकीकृत्य चतुष्ट्वादेवेति न तद्विरोध इति द्रष्टव्यम्। भूतत्वपरिहारेण मूर्तत्वस्य मनसि मूर्तत्वपरिहारेण च भूतत्वस्याकाशे सत्त्वस्य परैरङ्गी-कारेण तद्रीत्यैतद्दृष्टान्तोपपत्तावपि स्वरीत्या भूताकाशस्य मूर्तत्वेन भूतत्वस्य मूर्तत्वपरिहारेणावर्तमान-त्वात्। अमूर्तस्याव्याकृताकाशस्य च भूतत्वाभावेन भूतत्वमूर्तत्वयोः परस्परपरिहारेणावर्तमानत्वेनैत-द्दृष्टान्तासम्प्रतिपत्तेस्तादृशं दृष्टान्तमाह **पुरुषत्वेति**। तयोः पुरुषविशेषे समावेशेऽपि पाचकत्वस्य पुरुष-त्वपरिहारेण स्त्रीषु वृत्तेः पुरुषत्वस्यापि पाचकत्वपरिहारेणापचति पुरुषे वृत्तेर्दर्शनादिति भावः। सत्ता-जातेः परैरङ्गीकृतत्वेन तस्या द्रव्यत्वव्यापकत्वस्य तद्रीत्या सम्भवेऽपि स्वमते तदनङ्गीकारेण तस्याः स्वपररीत्या दृष्टान्तत्वानुपपत्तेस्तादृशदृष्टान्तमाह **धूमवत्त्वेति**। कृतकत्वानित्यत्वयोः सत्तानुप्रवेशाङ्गी-कारात्परमते तयोस्तुल्यवृत्तित्वेऽपि कृतकत्ववत्यपि पुराणादावुक्तरीत्याऽनित्यत्वाभावेन कृतकत्वानित्यत्वयो-स्तुल्यवृत्तित्वस्य स्वरीत्याऽसम्भवात्स्वपररीत्या दृष्टान्तमाह **गुरुत्वेति**। अत्रादिपदेन निषिद्धत्वपापसाध-नत्वादेः परिग्रहः ॥ **आद्यानामिति**। परस्परपरिहारेणैव वर्तमानकृतकत्वनित्यत्वादीनामित्यर्थः। **द्वितीयानामपीति**। सङ्कीर्णानां भूतत्वादीनामित्यर्थः ॥ **तृतीयेष्विति**। परापरभावावस्थितेषु सत्त्व-द्रव्यत्वादिष्वित्यर्थः ॥ **अपरेषामिति**। न्यूनवृत्तीनामित्यर्थः ॥ **परेषामिति**। अधिकवृत्तीनामित्यर्थः ॥ **चतुर्थास्त्विति**। तुल्यवृत्तयः कृतकत्वानित्यत्वादय इत्यर्थः। ननु कथं कृतकत्वनित्यत्वादीनां परस्पर-परिहारेणैव वृत्तिः। कथं च भूतत्वमूर्तत्वादीनां साङ्कर्यं कथं च धूमवत्त्वाग्निमत्त्वादीनां परापरभावेनाव-

स्थितिः कथं च कृतकत्वानित्यत्वादीनां तुल्यवृत्तित्वमित्यतः पद्धत्युक्तरीत्या तदुपपादनीयमित्याशयेनाह **इति सङ्क्षेप इति** । यद्वाऽनुमा युक्तिरेवोक्ता व्याप्तिरेव सेत्येतावतैवानुमानलक्षणस्य सङ्क्षेपेणोक्तिः उत्तरग्रन्थस्तु न लक्षणपर इति अनेन ध्वनयति ।

स० — यो येनाऽव्यभिचरितसंबन्धवान् सोऽनुमानमित्यस्य कुत्रातिव्याप्तिर्दीयते, तद्वति निष्कर्षं कर्तुं धर्माणां विभागमाह **द्विविधा हि धर्मा भवन्तीति ॥ यथा कृतकत्वनित्यत्वे इति** । अत्र यत्कृतकं, तदनित्यमिति व्याप्तेः परैरङ्गीकारेण कृतकत्वस्य नित्यत्वाभावेन व्याप्तिमत्त्वात् पररीत्या विरुद्धत्वाभिधानम् । स्वमते कृतकस्यापि पुराणादेः नित्यत्वाङ्गीकारेण यत्कृतकं तदनित्यमिति व्याप्तेस्तत्रैव भग्नत्वेन साध्याभावव्याप्यत्वाभावेन स्वरीत्या तस्य विरुद्धत्वासंभवादिति द्रष्टव्यम् । अत एव परमात्रसंप्रतिपन्नदृष्टान्तमुक्त्वा सर्वसंप्रतिपन्नं दृष्टान्तान्तरमाह **स्वातन्त्र्यपारतन्त्र्ये चेत्येवमादय इति ॥ यथा भूतत्वमूर्तत्व इति** । भूतत्वपरिहारेण मूर्तत्वस्य मनसि सत्त्वात् मूर्तत्वपरिहारेण भूतत्वस्य चाकाशे सत्त्वात् परस्परपरिहारतया वर्तमानत्वादित्यर्थः । एतच्च पररीत्योक्तम् । स्वमते भूताकाशस्यापि मूर्तत्वेन भूतत्वस्य मूर्तत्वपरिहारेणावर्तनात् अव्याकृताकाशस्य मूर्तत्वभावेऽपि भूतत्वस्याभावात् परस्परपरिहारेणावर्तमानत्वादिति ध्येयम् । अत एव परसंप्रतिपन्नदृष्टान्तमुक्त्वा स्वपरसाधारणमाह **पुरुषत्वपाचकत्वे चेत्यादीति । केचित् परापरभावावस्थिता इति** । व्यापकव्याप्यभावापन्नत्वेन विद्यमाना इत्यर्थः । **सत्त्वद्रव्यत्वे इति** । अत्र सत्ताजातेर्द्रव्यत्वव्यापकतायाः पराभ्युपगतत्वात् तदनुसरेणायं दृष्टान्तः । स्वमते तदनभ्युपगमेन तस्य दृष्टान्तान्तरमाह **धूमवत्त्वाग्निमत्त्वे चेत्यादीति** । उक्तरीत्या कृतकत्ववत्यप्यनित्यत्वाभावेन कृतकत्वानित्यत्वयोस्तुल्यवृत्तित्वस्य स्वरीत्या असंभवात् तादृशं दृष्टान्तान्तरमाह **गुरुत्वरसवत्त्वे चेति । विरुद्धममाख्ययेति** । तथा च यो येन संबन्धवानित्यनेन तद्व्याप्तिरिति भावः । **किं त्विति** । तथाचाव्यभिचारीत्यनेन तद्व्याप्तिरिति भावः । ननु चतुर्णां कृतकत्वानित्यत्वादीनां तुल्यवृत्तिधर्माणामनुमानत्वे तर्हि कस्य साध्यत्वं कस्य साधनत्वमित्यत आह **प्रसिद्ध्यप्रसिद्धिभ्यामितीति** । तथा च प्रसिद्धस्य साधनत्वमप्रसिद्धस्य साध्यत्वमिति भावः । **इति सङ्क्षेप इति** । 'अनुमा युक्तिरेवोक्ता व्याप्तिरेव तु सा स्मृता' इत्येतावतैव सङ्क्षेपेणानुमानलक्षणमुक्तम् । उत्तरग्रन्थस्तु न लक्षणकथनपर इति ध्वनितं भवति ।

प० — 'व्याप्तिरेव तु सेत्यस्य प्राथमिकार्थेऽनुपपत्तिमाशंक्य समाधत्ते **स्यादेतदित्यादिना** । व्याप्यशब्दः संबन्धिशब्द इत्युक्तम् । के पुनः संबन्धिनो धर्माः के च नेत्यत आह **द्विविधा हीति** ; यद्वा व्याप्यमिति साहित्यनियमवदिति नियतसंबन्धवदिति चार्थः प्रागुक्तः । तत्र संबन्धवत्पदस्य नियतेत्यत्र परस्परसंबन्धनैयत्यं वान्यत संबन्धनैयत्यं वेति विवक्षितद्विविधनैयत्यवाचिनियनपदस्य लक्ष्यं व्यावर्त्य व्यक्तीकर्तुं

माह **द्विविधा हीति** ॥ **कृतकत्वनित्यत्वे इति** । कृतकत्वं भावकार्यसाधारणमेवात्र विवक्षणीयम् । अतो न ध्वंसे समावेशः शङ्क्यः । अत एव स्वातन्त्र्येत्यादिधर्मान्तरोक्तिः । एते च संबन्धवत्पदव्यावर्त्याः ॥ **भूतत्वमूर्तत्वे इति** । भूतत्वं हित्वाऽऽकाशे वर्तते मूर्तत्वं । मूर्तत्वं च भूतत्वं विना मनसि वर्तते । द्वयमपि पृथिव्यादिचतुष्टये समाविष्टमिति भावः । एतच्च न्यायमतेन ज्ञेयम् । सिद्धान्ते आकाशस्यापि मूर्तत्वान्मनसोपि भूतांशोपचितत्वेन भूतत्वात् । अत एव पुरुषत्वेति धर्मान्तरोक्तिः । एते च द्विरूपनैयत्यवाचिनियतपदव्यवच्छेद्या इति भावः ॥ **परापरेति** । व्याप्यव्यापकभावेनावस्थिता इत्यर्थः । न्यायमतेनाह **यथा सत्त्वेति** । सत्ताजातिद्रव्यत्वजाती इत्यर्थः । स्वमतेनाह **धूमवत्त्वेति** । एते चान्योन्यसंबन्धनैयत्यवाचिनियतपदव्यवच्छेद्या अन्यतरसंबन्धनैयत्यवाचीत्यस्य लक्ष्यभूताः । उक्तधर्मेषु संबन्धवत्पदस्य नियतपदस्य च व्यवच्छेद्यान्व्यनक्ति **तत्राद्यानामित्यादिना** । नन्वेतावता विरुद्धानैकान्तिकयोर्निरासेऽपि बाधप्रतिपक्षरूपहेतुदोषनिरासो न प्राप्त एवेति चेन्न । तयोः प्रतिज्ञादोषत्वेनाहेतुदोषत्वात् । **ननु** तथाप्यसिद्धिरव्याप्तिरित्युक्तहेतुदोषद्वयमध्येऽव्याप्तिवारणेपि नासिद्धिव्यवच्छेदः । अतः समुचितदेशस्थत्वे सति व्याप्यमनुमेति वाच्यमित्याद्यभिप्रेत्याह **इति संक्षेप इति** ।

**या०**— ननु धर्माणां बहुविधत्वात् के अनुमानभूताः ये युक्तिशब्दार्थान्तर्गतनिर्दोषतया व्यवच्छेद्याः, के च व्याप्यव्यापकभावोपेता येऽत्र लक्ष्याः, व्याप्यव्यापकयोश्च कस्यानुमानत्वं कस्य चानुमेयत्वमिति जिज्ञासायामाह **द्विविधा हीत्यादिना** ॥ **तेऽपि त्रिविधा इति** । ततश्चैतेषां त्रिविधानामुक्तैः सह चतुर्विधत्वलाभाच्चतुष्टयी खलु धर्माणां गतिरिति पद्धतिविरोधो नेति द्रष्टव्यम् ॥ **अपरेषामिति** । न्यूनवृत्तीनामित्यर्थः ॥ **परेषामिति** । अधिकवृत्तीनामित्यर्थः । अत्र व्याप्यमनुमानं व्यापकमनुमेयमिति द्रष्टव्यम् । अत्र कृतकत्वनित्यत्वादीनां परस्परपरिहारेणैव वर्तमानत्वं भूतत्वमूर्तत्वादीनां साङ्कर्यं, धूमवत्त्वाग्निमत्त्वादीनां विषमव्याप्यत्वं, कृतकत्वानित्यत्वादीनां समव्याप्तत्वं च पद्धत्युक्तरीत्योपपादनीयमित्याशयेनाह **इति सङ्क्षेप इति** ।

**श्री०**— ननु धर्माणां बहुविधत्वात्के व्याप्यव्यापकभावोपेता धर्माः । न हि धूमानुमान इव सर्वत्र व्याप्यव्यापकभावः । कीदृशस्य व्याप्यत्वं व्यापकत्वं च तयोर्मध्ये च कस्यानुमानत्वमनुमेयत्वं चेति जिज्ञासायामाह **द्विविधा हीत्यादिना** । **सङ्कीर्णाः** सङ्करोपेताः । **अपरेषाम्** अपरसामान्यानां द्रव्यत्वादीनाम् । **परेषां** परसामान्यानां सत्तादीनाम् । एवं द्रव्यत्वपृथिवीत्वादावपि ज्ञेयम् । नन्वन्योन्यव्यापकभावे कृतकत्वस्यानुमापकत्वमनित्यत्वस्यानुमेयत्वं कुत इति चेन्न । यदा कृतकत्वं प्रसिद्धं तत्तदा लिङ्गं यदाऽप्रसिद्धं सन्दिग्धमिति यावत् अनित्यत्वं तदा तत्साध्यम् । एवं यद्यनित्यत्वं प्रसिद्धं कृतकत्वमप्रसिद्धं तदा विपरीतोऽप्यस्ति साध्यसाधनभाव इत्याह **प्रसिद्धीत्यादि** ।

च०— **परस्परपरिहारेणैव वर्तमानाः** परस्परासमानाधिकरणाः । **समाविष्टाः** समानाधिकरणाः । **परापरभावेति** । व्याप्यव्यापकभावेत्यर्थः । **तुल्यवृत्तयः** समनियताः ।

**सु०— नन्वेवमपि धूमेनाग्निज्ञानं सर्वेषां स्यादित्यत उक्तं स्मृतेति । प्रमितत्वस्योपलक्षणमेतत् । स्मृता व्याप्तिरेव प्रमितमेव व्याप्यमनुमा । न त्विन्द्रियवत्सत्तामात्रेण प्रमाकरणमित्यर्थः । ननु तथाऽपि नारिकेलद्वीपवासिनो धूमदर्शनादग्न्यनुमितिप्रसक्तिः । मैवम् । व्याप्यस्वरूपप्रमितिवद्व्याप्तिप्रमितेरप्यपेक्षितत्वात् । तथाऽपि गृही(तविस्मृ)तास्मृतव्याप्तेस्तदवस्थः प्रसङ्ग इत्यत उक्तं स्मृतेति । स्मृता व्याप्तिरेव साऽनुमोपयोगिनीत्यर्थः । तथा च व्याप्तिस्मरणसव्यपेक्षं व्याप्यज्ञानमनुमानमित्युक्तं भवति ।**

शे० — तर्हि लक्षणकारिकायां तदंशस्य लक्षणांशसमर्पकत्वाभावादानर्थक्यमित्यतस्तदितिकर्तव्यतासमर्पकत्वान्न तदिति भावेनेतिकर्तव्यतासमर्पकतया तमंशं योजयितुं तन्निवर्त्यामाशङ्कामुत्थापयति **नन्विति** । सर्वेषां बहिर्वर्तिनामिव गृहान्तर्वर्तिनां पुरुषाणामपीत्यर्थः । अज्ञातप्रत्यक्षस्यापि पुरुषस्य स्वरूपसत्प्रत्यक्षे साक्षात्कारजनकत्ववदज्ञातधूमस्यापि पुरुषस्य स्वरूपसत्पर्वतीयधूमे वन्हिज्ञानजनकत्वावश्यम्भावादिति भावः ॥ **व्याप्यमिति** । इदं च मूले व्याप्तिशब्दस्य कर्मसाधनत्वमाश्रित्य व्याख्यानमिति बोध्यम् ।

स० — ननु पूर्वं व्याप्तिस्मरणवतः आप्तवाक्यादिना लिङ्गज्ञानमात्रेणानुमितेर्जायमानत्वात् स्मृतैव व्याप्तिः कथमुपयोगिनीत्यत आह **प्रमितत्वस्योपलक्षणमिति** । व्याप्यज्ञानमनुमानमित्यत्र व्याप्तेरुपलक्षणत्वात्तज्ज्ञानं नोक्तमित्यभिप्रायेण शङ्कते— **ननु तथाऽपीति** । व्याप्तेरपि विशेषणत्वेन तज्ज्ञानस्याप्यावश्यकत्वान्नातिप्रसङ्ग इत्यभिप्रेत्योत्तरमाह **मैवमिति** । व्याप्तिप्रमितिरप्यपेक्षितेत्युक्ते यदा कदाचिदेव व्याप्तिप्रमितिरपेक्षिता, नाव्यवहितपूर्वक्षणे इत्यभिप्रेत्य शङ्कते **गृहीतास्मृतव्याप्तेरिति** । प्रमितिरप्यव्यवहितपूर्वक्षण एव विवक्षितेति नातिप्रसङ्ग इत्यभिप्रेत्य मूलं प्रवृत्तमित्यवतारयति **इत्यत उक्तमिति** ।

प०— विशेषेणाप्यत इति व्युत्पत्तिमुपेत्याह **प्रमितमेव व्याप्यमनुमेति** ॥ **तुशब्दार्थ एवेति** । स्मृता प्रमिता व्याप्तिरेव नियतसंबन्ध एवानुमानाङ्गमित्युपेत्याह **व्याप्यस्वरूपेत्यादि** ॥ **गृहीतास्मृतेति** । पीतप्रतिबद्धवत्सेत्यादिवत् । गृहीताऽस्मृता व्याप्तिर्यस्येति पूर्वकालैकेति समासः ॥ **स्मृतेतीति** । नेदानीं प्रमितिपरं स्मृतिपदमिति भावः । निष्कर्षमाह **तथा चेति** ।

श्री०— **सर्वेषां** गृहान्तर्वर्तिनाम् ।

सु०— लिङ्गपरामर्शोऽनुमानं परामर्शश्चानुसन्धानात्मकं तृतीयं ज्ञानमिति कश्चित् । तथा हि । महानसादौ धूमस्याग्निना व्याप्तिग्रहणसमये यज्ज्ञानं तत्प्रथमम् । गृहीतव्याप्तिकस्य पर्वतादौ यद्धूमज्ञानं तद्द्वितीयम् । ततः संबन्धिदर्शनसमुद्बुद्धसंस्कारकारण(क)स्य यो धूमवानसावग्निमानिति व्याप्तिस्मरणस्यानन्तरमयं चाग्निव्याप्तधूमवानिति प्रतिसन्धानात्मकं यद्धूमज्ञानं तत्तृतीयमनुमानमिति । ततेतदन्यो न मन्यते । व्याप्तिस्मरणं पक्षधर्मताज्ञानमित्येतावदेव ह्यनुमानसामर्थ्यम् । तत्राननुभूताया व्याप्तेः स्मर्तुमशक्यत्वात्प्रथमं ज्ञानमिष्यते । द्वितीय(ज्ञान)मपि पक्षधर्मताविषयत्वादङ्गीक्रियते । ततो व्याप्तिस्मृतौ सत्यां किमपरमवशिष्यते यदर्थं तृतीयं ज्ञानमेष्टव्यमिति । स स्थूलदृश्चेत्याद्यः । न खलु विशकलित(ते)व्याप्तिस्मृतिपक्षधर्मताज्ञाने भावयतोऽनुमितिः(तम्) । परस्परवार्तानभिज्ञयोः सहकारितानुपपत्तेः । किन्तु सङ्कलिते । न च तत्सङ्कलितत्वं विना तृतीयज्ञानादिति कथं तन्नेष्टव्यम् । आत्मा सङ्कलयतीति चेत् । सत्यम् । वृत्त्या ह्यसौ सङ्कलयेन्न तु स्वरूपेणैव । न चैवं तदेवास्त्विति वाच्यम् । पूर्वेण विना तदनुपपत्तेरिति ।

वयं तु ब्रूमः । यत्र लिङ्गदर्शनादेव व्याप्तिस्मृतिः अस्तु तत्रोक्तप्रकारः । यदा तु गृहीतव्याप्तेर्विनाऽपि लिङ्गदर्शनाद्वचनादिनैव व्याप्तिस्मृतिराविरस्ति तदा द्वितीयमेव लिङ्गदर्शनं प्रतिसन्धानात्मकमुदेष्यतीति नावश्यम्भाविनीयं प्रक्रिया । यथा खलु संस्कारसाहित्ये सतीन्द्रियसन्निकर्षादेव सोऽयमिति प्रत्यभिज्ञा जायते तथे(थाऽत्रापी)त्यङ्गीकारे न कश्चिद्विरोध इति ।

शे०— भाष्यकारीयं व्याप्तिस्मरणसापेक्षस्य व्याप्यज्ञानस्यानुमानत्ववर्णनं मतान्तरनिरासार्थमित्याशयेन न्यायमतमुत्थापयति **लिङ्गेति** । अयं चाग्निना व्याप्तधूमवानितीत्युपलक्षणम् । अयं धूमो वन्हिव्याप्य इतीत्यपि द्रष्टव्यम् ॥ **अन्यः** प्राभाकरः ॥ **अनुमानसामर्थ्यमिति** । अनुमितिजननाय पर्याप्तमित्यर्थः । उक्तरूपज्ञानद्वयस्यानुमितेश्चान्तरा विशिष्टज्ञाने मानाभावाज्ज्ञानद्वयस्य हि स्वरूपं पूर्वभावित्वं नियमश्च क्लृप्त एव । विशिष्टज्ञानवादिनाऽपि तद्धेतुत्वेन ज्ञानद्वयस्वीकारात् । अनन्यथासिद्धिमात्रमेव कल्प्यमिति लाघवम् । विशिष्टज्ञाने चतुष्टयमपि कल्प्यमिति गौरवमिति भावः । ननु ज्ञानद्वयादप्येकस्य विशिष्टज्ञानस्य कारणत्वं लघ्विति विपरीतमेव गौरवमित्यतो युगपदुपस्थिते हि वस्तुद्वये लाघवगौरवचिन्तावसरः । प्रकृते च विशिष्टज्ञानस्यैवासिद्धेर्न तदवसर इति ज्ञानद्वयस्य क्लृप्तत्वप्रदर्शनपूर्वकं तृतीयज्ञानस्याक्लृप्ततामुपपादयति **तत्रेत्यादिना** ॥ **प्रथमं ज्ञानमिति** । यो धूमवानसावग्निमानिति महानसादौ व्याप्त्यनुभवरूपं धूमज्ञानमित्यर्थः । **आद्यो** नैयायिकः ॥ **विशक-**

**लितेति** । व्याप्तिज्ञानं त्वन्मते सामान्यप्रत्यासत्तेरभावात्सन्निकृष्टधूमव्यक्तिमात्रविषयम् । पक्षधर्मताज्ञानं त्वगृहीतव्याप्तिकधूमविषयम् । एवञ्च कश्चिद्धूमोऽग्निव्याप्यः पर्वतश्च धूमवानिति ज्ञाने विशकलिते भिन्नविषये एकधर्मिनिष्ठत्वेन व्याप्तिपक्षधर्मत्वाविषयके इति यावत् । अनुमितिं **न भावयतो** नोत्पादयत इत्यर्थः ॥ **परस्परवार्तानभिज्ञयोरिति** । स्वस्वन्त्रस्वस्वविषयमात्रपर्यवसितयोरित्यर्थः । अन्यथा किञ्चित्प्रमेयं वन्हिव्याप्यं पर्वतश्च प्रमेयवानिति ज्ञानद्वयमप्यनुमितिहेतुः स्यात् । न च प्रमेयत्वं वन्हिव्याप्यत्वावच्छेदकत्वेन न गृहीतं धूमत्वं तु तदवच्छेदकत्वेन गृहीतमिति वैषम्यान्नोक्तातिप्रसङ्ग इति वाच्यम् । धूमत्वस्य व्याप्यतावच्छेदकत्वं हि व्याप्येन सह व्याप्तिः। अन्यस्य प्रकृतानुपयोगात्। न च व्याप्तिग्रहणकाले धूमस्याग्निनेव धूमत्वस्य धूमनिष्ठया वन्हिव्याप्त्या सह व्याप्तिर्गृहीता पक्षधर्मे व्याप्तिग्रहप्रस्तावोक्तरीत्या व्याप्तिग्राहकसामग्रीसत्त्वेन वन्हिना व्याप्तिग्रहसम्भवेऽपि व्याप्तिग्रहसामग्रीविरहेण व्याप्तिधूमत्वयोर्व्याप्तिग्रहस्यासम्भवदुक्तिकत्वादिति भावः ॥ **सङ्कलिते इति** । एकधर्मिनिष्ठत्वेन व्याप्तिपक्षधर्मत्वावगाहिनीत्यर्थः । **सङ्कलयतीति** । व्याप्तिपक्षधर्मत्वयोरेकधर्मिनिष्ठत्वं सम्पादयतीत्यर्थः ॥ **वृत्त्येति** । व्यापारेणेत्यर्थ इति निबन्धः । व्यापारश्च तृतीयलिङ्गपरामर्शरूप इति तद्वर्धमानः ॥ **न स्वरूपेणैवेति** । नोक्तज्ञानद्वयसमवायितामात्रेणेत्यर्थः । अतिप्रसङ्गादिति भावः ॥ **तदेवेति** । तृतीयज्ञानमेवेत्यर्थः ॥ **पूर्वेणेति** । तृतीयलिङ्गपरामर्शस्य विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वाद्व्याप्तिज्ञानपक्षधर्मताज्ञानयोरसत्त्वे तत्साध्यविशिष्टज्ञानानुपपत्तेरित्यर्थः ॥ **वचनादिनैवेति** । आप्तवचनादिनैवेत्यर्थः । अदृष्टादिहेत्वन्तरपरिग्रहायादिपदम् ॥ **प्रतिसन्धानात्मकमिति** । विशिष्टविषयकमित्यर्थः । अत्रैवानुरूपं दृष्टान्तमाह **यथेति** ।

स० — **अनुमानसामर्थ्यमिति** । स्वरूपसहकारिसमवधानातिरिक्तशक्तिर्नास्तीत्यादौ शक्तिशब्दस्य सहकारिसमवधानपरत्वदर्शनात् अत्रापि शक्तिपरसामर्थ्यशब्देन व्याप्तिस्मरणरूपसहकारिणः, पक्षधर्मतारूपस्य स्वरूपस्य ग्रहणमिति ध्येयम् ॥ **द्वितीयमपीति** । पक्षधर्मताज्ञानस्य लिङ्गज्ञानस्वरूपत्वेनावश्यमङ्गीकरणीयमिति भावः । **स स्थूलदृश्चेत्याद्य इति** । **सः** ज्ञानद्वयवादी, **आद्यः** ज्ञानत्रयवादीत्यर्थः । **भावयतोऽनुमितिमित्येव** पाठः । तत्र च अनुमितिं भावयतः जनयतः इति संबन्धः । अयमत्र समुदायार्थः । व्याप्तिज्ञानपक्षधर्मताज्ञानयोः विशकलितयोरनुमित्युत्पादकत्वे परस्परसहकारित्वानुपपत्त्या सङ्कलितयोरेव तत्त्वे वाच्ये ज्ञानयोर्वा विषययोर्वा स्वरूपेण मेलनासंभवादेकबुद्ध्युपारूढत्वेन विषयस्य वाच्यत्वात् न तृतीयज्ञानमावश्यकमिति । ननु प्रत्यक्षस्य वर्तमानविषयकत्वेन व्याप्तिमान् धूमोऽस्तीति व्याप्तिविषयकत्वं न चक्षुषः इत्यतः सहकारिसमवधाने करणानां शक्त्यन्तराविर्भावस्य दृष्टत्वात् प्रकृते च व्याप्तिस्मरणलक्षणसहकारिसत्त्वात् तद्विषयकत्वं चक्षुषो युक्तमित्यभिप्रेत्य तत्र निदर्शनमाह **यथा खल्विति** ।

**प०**—व्याप्यज्ञानं वह्निव्याप्योऽयमिति वा वह्निव्याप्यत्ववानयमित्येवंरूपं वा ज्ञानमित्येतदभिप्रायकत्वमस्य वयन्त्वित्यादिना विवरिष्यन् तार्किकोक्तं तावदाह **लिङ्गेति** ॥ **अनुसन्धानेति** । पूर्वविशेषणेन विना ज्ञातस्य प्रागवगतविशेषणयुक्तत्वेन पुनर्ज्ञानमनुसन्धानं तद्रूपमित्यर्थः ॥ **यज्ज्ञानमिति** । धूमस्येत्यनुषङ्गः ॥ **अन्य इति** । प्राभाकरो न मन्यत इत्यर्थः ॥ **स इति** । प्राभाकरः स्थूलबुद्धिरिति आद्यस्तार्किक आहेत्यर्थः ॥ **विशकलिते इति** । धूमो वह्निव्याप्योऽयं च धूमवानित्येवं रूपान्योन्यविषयाविषयके ज्ञाने भावयत उत्पादयतोनुसन्दधतो वा पुंसः अनुमितिर्न भवतीत्यर्थः । अनुमितिं इति पाठे भावयतो जनयतोऽनुमितिमित्यर्थः ॥ **परस्परवार्तेति** । अन्योन्यविषयाविषयकयोरित्यर्थः ॥ **सङ्कलिते** । अन्योन्यविषयविषयके । **सङ्कलयति** । व्याप्तिपक्षधर्मतयोरेकवस्तुनिष्ठतां संपादयतीत्यर्थः ॥ **वृत्त्या हीति** । ज्ञानेनेत्यर्थः ॥ **तदेव** तृतीयं ज्ञानमेव । किं पूर्वज्ञानद्वयेनेत्यर्थः ॥ **पूर्वेणेति** । व्याप्तिस्मृतिसहितेन पक्षीयलिङ्गदर्शनेन विनेत्यर्थः । तार्किकमुखेन प्राभाकरमतं निरस्य तन्मतप्रक्रियामपि काञ्चित्कोमुपेत्य सार्वत्रिकत्वनियमखण्डनेन निरस्यति **वयं त्वित्यादिना** ॥ **उक्त इति** । तार्किकोक्ततृतीयज्ञानप्रक्रियाप्रकारोऽस्त्वित्यर्थः ॥ **वचनेन** आप्तवचनेन । अदृष्टादिना हेत्वन्तरेणेत्यर्थः । **आविरस्ति** आविर्भवति । **प्रतिसन्धानात्मकं** वह्निव्याप्यधूमवानयमित्येवंरूपम् ।

**या०**— **विशकलिते इति** । व्याप्तिज्ञानं त्वन्मते सामान्यप्रत्यासत्तेरभावेन सन्निकृष्टधूमव्यक्तिमात्रविषयम् । पक्षधर्मताज्ञानं त्वगृहीतव्याप्तिकधूमविषयम् । एवं च कश्चिद्धूमो वन्हिव्याप्यः पर्वतश्च धूमवानिति ज्ञाने विशकलिते परस्परवार्तानभिज्ञे एकधर्मिनिष्ठत्वेन व्याप्तिपक्षधर्मत्वाविषयके इति यावत् । अनुमितिं न भावयतो न जनयत इत्यर्थः । अन्यथा धूमो वह्निव्याप्य आलोकवांश्चायमिति ज्ञानद्वयेनाप्यनुमित्यापत्तेरिति भावः । न च व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानमनुमितिजनकतया विवक्षितमतो नातिप्रसङ्ग इति वाच्यम् । धूमत्वे व्याप्यतावच्छेदकत्वं हि व्याप्यत्वेन सह व्याप्तिरेव । अन्यस्य प्रकृतानुपयोगात् । न हि व्याप्तिग्रहणकाले धूमस्याग्निनेव धूमत्वस्य धूमनिष्ठया वन्हिव्याप्त्या सह व्याप्तिर्गृहीता । येन व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानमनुमितिहेतुरिति स्यादित्याशयात् ॥ **सङ्कलिते इति** । **एकस्मिन्धर्मिणि** व्याप्तिपक्षधर्मत्वावगाहिनि इत्यर्थः ॥ **सङ्कलयतीति** । व्याप्तिपक्षधर्मत्वयोरेकधर्मिनिष्ठतां संपादयतीत्यर्थः ॥ **वृत्त्येति** । ज्ञानेन हीत्यर्थः । **तदेवेति** । तृतीयं ज्ञानमेवेत्यर्थः । पूर्वेणेत्येकवचनं जात्यभिप्रायम् । पूर्वाभ्यामित्यर्थः । वचनादिनैवेत्यत्रादिपदेनादृष्टचिन्तादेर्ग्रहणम् ।

**श्री०**— **वृत्त्या हीति** । ततश्च सैव तृतीयं ज्ञानमिति भावः । **तदेव** तृतीयज्ञानमेव । तथा च पूर्वज्ञानद्वयं व्यर्थमिति भावः । **पूर्वेण** ज्ञानद्वयेन ॥ **तदिति** । तृतीयज्ञानेत्यर्थः ।

आविर्भूतव्याप्तिस्मृतिरूपसहकारिसहितमेव द्वितीयं ज्ञानं प्रतिसन्धानात्मकं भविष्यति । सहकारिण एतादृशसामर्थ्यदर्शनादित्याह **यथा खल्वित्यादि** ।

**सु०— ननु व्याप्तिरेव केन प्रमाणेन ग्राह्या । यथायथं प्रत्यक्षानुमानागमैरित्युक्तम् । यथा चैतत्तथा वक्ष्यामः ॥**

**शे०** — ननु सहचारदर्शनस्य व्यभिचारिसाधारणत्वात्प्रत्यक्षस्य, व्याप्तिसापेक्षत्वेनानवस्थापत्त्या अनुमानस्य, आप्तेरनुमानेन निश्चितव्यत्वेनानवस्थापत्त्यैवाप्तवाक्यस्य च, व्याप्तिग्राहकत्वासंभवेन ग्राहकाभावाद्व्याप्तिग्रह एव न संभवतीति न तस्यानुमानाङ्गत्वमित्याशयेनाक्षिपति **नन्विति** । प्रत्यक्षानुमानागमानामेव व्याप्तिग्राहकतया तदभावासिद्धेर्युज्यते व्याप्तिग्रह इति युक्तं तस्यानुमानाङ्गत्वमित्याशयेन परिहरति **यथायथमिति** । प्रत्यक्षानुमानागमानामपि प्रत्येकं सार्वत्रिकव्याप्तिग्राहकत्वस्य बाधितत्वेनानुपपत्तावपि धूमादौ प्रत्यक्षस्य, व्यतिरेकिप्रयोगेऽनुमानस्य, ब्राह्मणो न हन्तव्य इत्यादावागमस्येत्येवं स्वस्वयोग्यविषये तद्ग्राहकत्वं नानुपपन्नमित्याशयेन यथायथमिति विशेषणम् । ननु साहचर्यदर्शनस्य व्यभिचारसाधारणत्वान्न प्रत्यक्षस्य धूमादौ व्याप्तिग्राहकत्वमन्यथाऽग्न्यादावपि धूमादिव्याप्तिग्राहकत्वापातात् । ननु व्यभिचारानुपलम्भे सति सहचारदर्शनं व्याप्त्यध्यवसायहेतुरित्यभिमतमतो नातिप्रसङ्ग इति चेत् । किं सकलदेशकालनिष्ठो व्यभिचारानुपलम्भः सहकारितया विवक्षितः किंवा तद्विशेषनिष्ठः । नाद्यः । अस्मदाद्यशक्यत्वात् । नान्त्यः । अतिप्रसङ्गात् । तत्कथं प्रत्यक्षेण व्याप्तिसिद्धिरित्यतो मीमांसासहकृतस्य प्रत्यक्षस्य धूमादावग्न्यादिसंबन्धं गृह्णतो व्यभिचाराभावावेदकत्वेन व्याप्तिसाधकत्वस्य यदैवाव्यतिरेकेऽस्य ह्यक्षजं वाऽऽगमो भवेत् । तन्निर्धारितयुक्तिर्वा व्याप्तिः सैवापरा न हीत्यनुव्याख्याव्याख्यानावसरे वक्ष्यमाणत्वान्नानुपपत्तिरित्याह **यथा चैतदिति** ।

**स०** — ननु 'व्याप्तिस्मरणसव्यपेक्ष' इत्याद्ययुक्तम् । व्याप्तिज्ञानस्यानुमानसाध्यत्वेन अनुमानाङ्गत्वानुपपत्तेः । अन्यथा अनवस्था स्यादिति शङ्कते **नन्विति ॥ इत्युक्तमिति** । 'व्याप्तिः प्रत्यक्षगा' इत्यादिनोक्तमित्यर्थः । **यथा चैतदिति** । यथायथं प्रत्यक्षादिवेद्यत्वमित्यर्थः ।

**प०** — **इत्युक्तमिति** । 'व्याप्तिः प्रत्यक्षगा यस्या युक्तिगागमगा तथा' इत्यत्रोक्तमित्यर्थः ॥ **वक्ष्याम इति** । 'प्रत्यक्षमागमो वापि भवेद्यत्र नियामक' इत्यादिव्याख्यावसरे वैशेषिकनये वक्ष्याम इत्यर्थः ।

**या०** — **इत्युक्तमिति** । 'व्याप्तिः प्रत्यक्षगा यस्या युक्तिगाऽऽगमगा तथा' इति पूर्वमुक्तमित्यर्थः । ननु सहचारदर्शनस्य व्यभिचारिसाधारण्यात्कथं प्रत्यक्षादिना व्याप्त्यध्यवसायः । न च

व्यभिचारानुपलम्भस्तत्सहकारीति वाच्यम् । किं सकलदेशकालनिष्ठानुपलम्भः किंवा तद्विशेषनिष्ठः । नाद्यः । अस्मदाद्यशक्यत्वात् । न द्वितीयः । अतिप्रसङ्गादित्यत आह **यथा चैतदिति** । समयपादे 'सहदर्शनमात्रेण न व्याप्तिरवसीयते । यदैवाव्यतिरेकेऽस्य ह्यक्षजं वाऽऽगमो भवेत् । तन्निर्धारित-युक्तिर्वा व्याप्तिः सैवापरा न हि' इति मूलव्याख्यावसरे वक्ष्याम इत्यर्थः ।,

च०— **वक्ष्याम इति** । 'प्रत्यक्षमागमो वापि भवेद्यत्र नियामक' इत्यादिना वैशेषिकनयेऽभिधास्याम इत्यर्थः ।

**सु०— द्विविधमनुमानं स्वार्थं परार्थं चेति । तत्र यत्परोपदेशानपे(क्ष्य)क्षं व्याप्तिस्मृतिमद्व्याप्यदर्शनं तत्स्वार्थम् । परोपदेशापेक्षं तु परार्थम् । ससामर्थ्यलिङ्गप्रतीति-जनकं वाक्यं परोपदेशः । तच्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनैः पञ्चभिरवयवैरुपेतमित्येके । तमिमं नियममरोचयमान आह** उक्तेति । **उक्ता व्याप्तिरेव साऽनुमा । व्याप्त्युक्तिरेव परोप-देश इति यावत् । एवशब्दो नियमनिराकरणपरो न पुनः पक्षान्तरनिवृत्त्यर्थः । पक्षान्तरस्य स्वयमेव वक्ष्यमाणत्वात्** ।

**ननु यो धूमवान्सोऽग्निमानिति व्याप्त्युक्तिः कथं प्रत्यायनाङ्गम् । वादिप्रतिवादिनो-रन्योन्यस्मिन्ननाश्वासादित्यत उक्तं स्मृतेति । तुशब्दश्चशब्दार्थो जिज्ञासितेति समुच्चिनोति । गृहीतव्याप्तेस्तदुक्तिः स्मरणहेतुरगृहीतव्याप्तेस्तु जिज्ञासाजनिकेत्युच्यते । न त्वागमतयोप-युज्यत इत्याशयः ।**

**शे०—** ननु प्रतिज्ञातार्थेत्याद्युत्तरवाक्यमनर्थकम् । न च व्याप्त्युक्तेरेव परोपदेशत्वोपपादनार्थं तदिति वाच्यम् । तस्य पूर्वत्राप्रतिज्ञाततयाऽनुपपादनीयत्वादित्यत 'उक्ता व्याप्तिरेव से'त्यनेनैव व्याप्त्युक्तिमात्रस्य परोपदेशत्वेनोक्ततया तदुपपादकत्वेनोत्तरग्रन्थस्यार्थवत्त्वमित्याशयेनोक्तेत्यादिना व्याप्त्यु-क्तिमात्रस्य परोपदेशत्वाभिधानस्यापि किं प्रयोजनमित्यतः पराभिमतस्य पञ्चावयववाक्यस्य परोपदेशत्व-नियमनिरासस्तत्प्रयोजनमिति भावेन पञ्चावयववाक्यस्य तन्नियामकप्रसक्तिं दर्शयितुं तत्प्रसञ्जकतयाऽनुमान-विभागमाह **द्विविधमनुमानमिति** । के ते द्वे विधे इत्यतस्ते दर्शयति **स्वार्थमिति** । परार्थानुमानस्य स्वार्थानुमानपूर्वकत्वेन तस्याभ्यर्हितत्वात्प्रथममुद्देश इति बोध्यम् ॥ **व्याप्तिस्मृतिमदिति** । अत्र व्याप्तिस्मृतीति व्याप्तिज्ञानस्योपलक्षणम् । मत्वर्थश्च संबन्धः साहित्यम् । व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गदर्शनमिति पद्धतावुक्तेरिति ध्येयम् ॥ **परोपदेशापेक्षमिति** । व्याप्तिस्मृतिमद्व्याप्यदर्शनमिति वर्तते । नन्वत्रोक्ताया व्याप्तेरनुमानत्वमित्युच्यते न तु व्याप्त्युक्तिमात्रस्य परोपदेशत्वमिति तत्कथमनेन पञ्चावयव-

वाक्यस्य परोपदेशत्वनियमनिरासिद्धिरित्यतस्तत्तात्पर्यमाह **व्याप्त्युक्तिरेवेति** । ननु व्याप्त्युक्तिवल्लिङ्गोक्त्यादेरपि ससामर्थ्यलिङ्गप्रतीतिजनकत्वेन परोपदेशत्वस्य स्थितत्वात्तन्निरासकैवकारविरोध इत्यतो नात्रैवकारो व्याप्त्युक्तिमात्रस्य परोपदेशत्वसूचकः किन्नाम पञ्चावयववाक्यमेव परोपदेश इति नियमनिराकरणपर एवेति नोक्तदोष इत्याह **एवशब्द इति** ॥ **पक्षान्तरेति** । लिङ्गोक्त्यादिरूपपक्षान्तरेत्यर्थः । कुतोऽत्र पक्षान्तरनिवृत्त्यर्थत्वाभाव इत्यत आह **पक्षान्तरस्येति** ॥ **वक्ष्यमाणत्वादिति** । 'लिङ्गोक्तावपि चैवं स्यादनुमावसितिर्ध्रुवे'त्यादिनेति शेषः ।

अस्मिन्पक्षे स्मृतावित्यंशवैयर्थ्यमित्यतो व्याप्त्युक्तेरुक्तविधलिङ्गबोधकत्वानुपपत्तिशङ्कापरिहारार्थं तदिति भावेन तथा तद्योजयितुं बोधकत्वानुपपत्तिशङ्कामुत्थापयति **नन्वित्यादिना** ॥ **अनाश्वासादिति** । आश्वासे च प्रतिज्ञामात्रादेव साध्यसिद्धेर्हेत्वाद्यभिधानानर्थक्यादिति भावः ।

**स०— पक्षान्तरस्येति** । 'लिङ्गोक्तावपि चैवं स्यादनुमावसितिर्ध्रुवा' इत्यादिना वक्ष्यमाणत्वादित्यर्थः । **प्रत्यायनाङ्गमिति** । विश्वासजनकमित्यर्थः । **जिज्ञासाजनिकेति** । वन्हिसद्भावे प्रमाणे पृष्टे, यो धूमवानसौ वन्हिमानिति वदति । तस्मात् किं प्रमाणमुक्तं भवतीति विचार्य अनुमानलक्षणं प्रमाणमुक्तम् । कथमस्य व्याप्त्यादिकमित्यादिप्रकारेण तस्य जिज्ञासा जायत इति भावः ।

**प०— व्याप्तिस्मृतिमदिति** । व्याप्तिस्मृतिसहितं लिंगदर्शनमित्यर्थः ॥ **सामर्थ्येति** । व्याप्तिः समुचितदेशवृत्तित्वं चेति द्वयं सामर्थ्यम् । उक्तेत्यस्योत्तरेणान्वय इत्युपेत्योक्ता व्याप्तिरेवेत्यस्य व्याप्त्युक्तिरेवेत्यर्थ उक्तः । अनुमेत्यस्य परोपदेश इति ॥ **वक्ष्यमाणत्वादिति** । 'लिंगोक्तावपि चैवं स्यादि'त्यत्रैवाग्रे वक्ष्यमाणत्वादित्यर्थः ।

**या०— व्याप्तिस्मृतिमद्व्याप्यदर्शनमिति** । व्याप्तिस्मृतिमतः पुरुषस्य व्याप्यदर्शनमित्यर्थः ॥ **पक्षान्तरस्येति** । 'लिङ्गोक्तावपि चैवं स्यादनुमावसितिर्ध्रुवा' इति पक्षान्तरस्यास्मिन्नेवाधिकरणे वक्ष्यमाणत्वादित्यर्थः ।

**श्री०— प्रत्यायनाङ्गं** प्रमितिजनकम् । एवमुत्तरत्रापि ।

**च०—वक्ष्यमाणत्वादिति** । 'लिङ्गोक्तावपि चैवं स्यादि'त्यादिना प्रकृतनय एवाभिधास्यमानत्वादित्यर्थः ।

**सु०— ननु च व्याप्त्युक्तिरेव परोपदेश इत्ययुक्तम् । प्रथमत एव व्याप्त्युक्तेरसङ्गतत्वादित्याशङ्कां परिहर'न्नुक्ता व्याप्तिरेव से'ति प्रतिज्ञातमुपपादयति** प्रतिज्ञातेति ।

**अनु०—** प्रतिज्ञातार्थसिद्ध्यर्थं व्याप्तिरेव यदोदिता ॥

अवशिष्टं किमत्रास्ति

प्रतिज्ञातार्थसिद्ध्यर्थमित्यसङ्गतेः परिहारः। तदेत्यध्याहार्यम्। किमाक्षेपे। अत्र वक्तव्ये। एतदुक्तं भवति। यो हि पर्वतमग्निमन्तं प्रतिपद्यमानः परेण निरग्निकं मन्यमानेन किं पर्वतस्याग्निमत्त्वे मानमित्यनुयुज्यते, स यदि यो धूमवानसावग्निमानिति व्याप्तिमात्रं (परं प्रति) स्वप्रतिपन्नार्थसिद्ध्यर्थं ब्रूयात्तदा का नामासङ्गतिः। परपृष्टप्रमाणस्योपन्यस्यमानत्वात्। किंवा (किञ्चा)परं वक्तव्यमवशिष्टं यदर्थं शब्दान्त(रमवशिष्टं)रं वक्तव्यं स्यात्। अतो व्याप्तिवचनमेव परोपदेश इति।

शे० — ननु प्रतिज्ञातेत्युत्तरवाक्यमुक्त्वा व्याप्तिरेवेति पूर्वोक्तार्थाप्रतिपादकत्वादनर्थकम्। न चेदं तत्प्रतिज्ञातार्थोपपादकत्वान्नानर्थकमिति वाच्यम्। तथाऽपि प्रतिज्ञातार्थसिद्ध्यर्थमित्यंशवैयर्थ्यात्तस्य पूर्वोक्तार्थोपपादकत्वाभावादित्यत इदं तत्प्रतिज्ञार्थोपपादकमेव। प्रतिज्ञातार्थसिद्ध्यर्थमित्यंशश्च प्रथमत एव व्याप्त्युक्तेरसङ्गतिशङ्कापरिहारार्थत्वान्नानर्थक इति भावेनासङ्गतिशङ्काप्रदर्शनपुरःसरं तत्परिहारकतया प्रतिज्ञातेत्याद्यंशं योजयन्प्रतिज्ञातार्थोपपादकतयोत्तरवाक्यं सङ्गमयति **नन्विति**॥ **अध्याहार्यमिति**। यदोदितेति यदाशब्दश्रवणादिति भावः॥ **आक्षेप इति**। उत्तराभावेन प्रश्नार्थत्वासंभवादिति भावः। नन्वेवमपि कथमसङ्गतिपरिहारः कथं च व्याप्तिवचनमात्रस्य परोपदेशत्वमित्यतस्तदुभयमुपपादयति **एतदुक्तं भवतीति**।

प० — यदेति श्रवणादाह **तदेतीति**। अत्रेत्यनन्तरं शेषमाह **अत्र वक्तव्यमिति**। वक्तव्ये इति पाठे तस्यैवार्थः। **अनुयुज्यते**। पृच्छ्यते।

च० — प्रतिपद्यमानः **अनुयुज्यते** पृच्छति।

सु० — स्यादेतत्। व्याप्तिपक्षधर्मतोपेततया लिङ्गानुसन्धानं खल्वनुमानम्। पक्षधर्मतामनङ्गं मन्यमानैरपि लिङ्गस्य सत्ता तावद(वश्यम)ङ्गीकरणीया। अन्यथा व्याप्त्यङ्गीकारव्याघातात्। सा च नाविवक्षितस्थाना। तथा सति यस्यकस्यचिद्धूमवत्त्वादिना सर्व(पर्वत)स्याप्यग्निमत्त्वादिप्रसङ्गात्। अतो व्याप्त्यनुसारेण नियतदेशधर्मताऽप्यङ्गीकरणीयैव। व्यधिकरणोऽपि हि कृत्तिकागत एवोदयो रोहिण्युदयासत्तिं गमयति। न तु यत्रतत्रत्यः। ततस्तावदनेन वक्तव्यं यावता व्याप्तिविवक्षितस्थलधर्मतोपेततया लिङ्गस्यानुसन्धानं स्यात् तदप्याकाङ्क्षाक्रमेणाभिधातव्यमिति स्थिते, निराश्रयस्य प्रमाणस्याभिधातुमशक्यत्वात् प्रमाणजिज्ञासोत्थापनाय विषयोपक्षेपरूपं पर्वतोऽग्निमानिति प्रतिज्ञावाक्यं वक्तव्यम्। ततः कस्मादिदं प्रमाणात्प्रतिपत्तव्यमित्याकाङ्क्षायां पराङ्गतापन्नलिङ्गस्वरूपमात्रप्रतिपादकं धूमवत्त्वादिति हेतुवचनम्।

ततोऽस्य सामर्थ्यजिज्ञासायां व्याप्तिप्रतिपादनाय यो धूमवानसावग्निमानित्युदाहरणवाक्यम् । पक्षादिविवक्षितस्थलधर्मताप्रतिपादनार्थं धूमवांश्चायमित्युपनयः । ततः सर्वस्य बुद्ध्यारोहायैकवाक्यतामापादयितुं तस्मादग्निमानेवेति निगमनम् । अत एव प्रतिज्ञाहेतुभ्यामुपनयनिगमनयोर्गतार्थतां मन्यमाना निरस्ता भवन्ति । तदेवमेतावति वक्तव्ये कथं व्याप्तिमात्रमुक्त्वा कृती स्यादिति ।

उच्यते । यत्तावत्प्रतिज्ञावश्यम्भावे कारणमुक्तं तदसत् । विवादेनैव विषयोपक्षेपस्य सिद्धतयाऽकांक्षोदयस्य समर्थितत्वात् । तथाऽप्याकांक्षितत्वाल्लिङ्गस्वरूपस्य तत्पक्षधर्मतायाश्च प्रतिपादनाय हेतूपनयौ वक्तव्याविति चेन्न । विकल्पानुपपत्तेः । तथा हि । किं येन धूमवत्त्वं पर्वतवृत्तितयाऽवगतं तं प्रति हेतूपनयौ वक्तव्यौ, उत विपरीतं प्रति ।

आद्यं दूषयति लिङ्गमिति ।

अनु०— लिङ्गं तत्र विजानतः ॥

तत्र विवक्षिते स्थले । अवशिष्टं किमस्तीति पूर्वेणान्वयः । लिङ्गस्वरूपतदीयपक्षधर्मताविज्ञापनाय हि हेतूपनयोपयोगः । तच्चेद्विज्ञानं परस्य स्वतस्सिद्धं तदा किं हेतूपनयाभ्यामिति भावः ।

---

द्वितीयमनूद्य दूषयति यदीति ।

यदि लिङ्गमसिद्धं स्यात्कुत एवास्य मानता ॥

तत्रेत्यनुवर्तते । असिद्धं परेणाप्रमितम् । तदाऽस्य लिङ्गस्य स्वरूपासिद्धस्य मानतैव कुतः । नास्तीति यावत् । दूरे वक्तव्यतेति एवशब्दार्थः ।

शे०— ननु 'लिङ्गं तत्र विजानत' इत्युत्तरमूलमनर्थकम् । न च लिङ्गस्य सिद्धत्वबोधनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च तदर्थयोर्हेतूपनययोरानर्थक्यसिद्धिस्तत्प्रयोजनमिति वाच्यम् । तयोरानर्थक्यवर्णनस्यापि प्रयोजनाभावात् । न च पञ्चावयववाक्यमेव परोपदेश इति पराभिमतपञ्चावयवनियमनिरासार्थं तदिति वाच्यम् । तन्नियमेऽपि क्षत्यभावेन तन्निरासस्याप्यनर्थकत्वादित्यतः प्रागुक्तस्य व्याप्त्युक्त्युक्तिमात्रस्य परोपदेशत्वोपपादनार्थं तदिति भावेन सहेतुकं नियमपक्षमुपपादयितुमुपक्षिपति **स्यादेतदिति ॥ अनुमानमिति** । तथा च व्याप्तिपक्षधर्मतोपेततया लिङ्गानुसन्धानं यावता स्यात्तावतोऽप्यवश्यवक्तव्यत्वात् । पञ्चावयववाक्येन च वक्ष्यमाणरीत्या तत्सिद्धेस्तन्नियमसिद्धिरित्याखण्डलार्थः । ननु व्यधिकरणयोरपि नदीपूरोर्ध्वदेशवृष्ट्योर्गम्यगमकभावदर्शनेन पक्षधर्मताया अनावश्यकत्वेन तत्समर्पकहेतूपनययोरानर्थक्यमेवेति कथं पञ्चावयववाक्यस्य परोपदेशत्वनियम इत्यत-

स्तन्मतेऽपि तदुपयोगं वक्तुमुपोद्घातमाह **पक्षधर्मतामिति** ॥ **अन्यथेति** । लिङ्गस्यासत्तायामित्यर्थः । व्याप्तेः रूपादिवद्धर्मिसत्तासापेक्षधर्मत्वेनासल्लिङ्गधर्मत्वानुपपत्तेरिति भावः । अस्त्वेवं लिङ्गस्य सत्त्वावश्यम्भावः किमेतावतेत्यत उपोद्घातफलमाह **सा चेति** । किमियं राज्ञामाज्ञेत्यतो विपक्षे दण्डमाह **तथा सतीति** ॥ **यस्य कस्यचिदिति** । पर्वतादेरित्यर्थः ॥ **सर्वस्यापीति** । पर्वतादितोऽन्यस्यापीत्यर्थः । कुत्र किं विवक्षितं यद्धर्मता लिङ्गस्यापेक्षितेत्युच्यत इत्यत उक्तं **व्याप्त्यनुसारेणेति** । व्याप्तिग्रहणप्रकारानुसारेणेत्यर्थः । अत एव पद्धतौ तथैव निर्देशः । व्याप्तिप्रकाराश्च कयोश्चित्समानकालदेशयोर्व्याप्तिः, कयोश्चित्समानदेशत्वेऽपि भिन्नकालयोः, कयोश्चित्समानकालत्वेऽपि भिन्नदेशयोः, कयोश्चिद्भिन्नदेशकालयोः, कस्यचित्कादाचित्कस्य समानदेशत्वेऽपि सार्वकालीनेन, कस्यचित्सार्वकालिकस्य समानदेशत्वेऽपि कादाचित्केन, कस्यचित्प्रदेशवर्तिनो व्याप्यवर्तिना, कस्यचिद्व्याप्यवर्तिनः प्रदेशवर्तिना, कयोश्चिदेकावयववर्तिनोरप्यवयवभेदेनेति पद्धत्युक्तरीत्या द्रष्टव्याः । तथा च धूमाग्न्योः समानदेशयोर्व्याप्तिग्रहान्न यस्यकस्यचिद्धूमवत्त्वादिना तदन्यस्यापि वन्हिमत्त्वप्रसङ्ग इति भावः ॥ **प्रमाणजिज्ञासेति** । कस्मादिदं प्रमाणात्प्रतिपत्तव्यमिति प्रमाणजिज्ञासोत्थापनायेत्यर्थः । तदेवाभिनयेन दर्शयति **पर्वतोऽग्निमानितीति** ॥ **यत्तावदिति** । इदं च हेतूपनयनिरासपरं मूलं प्रतिज्ञानिरासोपलक्षणमित्यभिप्रेत्येति द्रष्टव्यम् ॥ **विवादेनेति** । पर्वतादग्निमानयेति नियुक्तः कश्चिद्ब्रूते नाग्निमान्पर्वत इति । अन्यस्त्वग्निमानित्येवं विवादेनेत्यर्थः । न च समयबन्धादिना विप्रतिपत्तिर्व्यवहितेति वाच्यम् । समयबन्धानन्तरभाविना कुतोऽग्निमानिति प्रश्नेन पुनरपि साध्योपस्थितेरित्यत्र तात्पर्यात् ॥ **आकाङ्क्षेति** । कस्मात्प्रमाणादग्निमानिति प्रमाणाकाङ्क्षेत्यर्थः ॥ **समर्थितत्वादिति** । मानलक्षणादाविति शेषः । एवमुपलक्षितं दोषमभिधायेदानीं मूलोक्तं दोषं सङ्गमयितुं धूमवत्त्वस्य पर्वतवर्तितयाऽवगतत्वेन तदवगमार्थस्य हेत्वादेरानर्थक्यप्रसक्तावपि तद्वृत्तितयाऽनवगतत्वे तदप्रसङ्गान्न हेत्वादेर्वैयर्थ्यसमर्पकत्वमस्य वाक्यस्येत्यतो यदि लिङ्गमसिद्धं स्यादित्युत्तरग्रन्थानुरोधेन विकल्पद्वयं कृत्वाऽऽद्यपक्षनिरासपरत्वेन मूलं योजयितुं प्रसञ्जयति **तथाऽपीति** ॥ **विवक्षितस्थल इति** । तच्च पक्षादिरूपं बोध्यम् । साकाङ्क्षतया प्रसक्तां वाक्याभासतां निराकरोति **अवशिष्टमिति** ।

**स० — व्याप्त्यनुसारेणेति** । व्याप्तिग्रहप्रकारेणेत्यर्थः । ननु अस्मन्मते व्यधिकरणयोरेव व्याप्यव्यापकभावाङ्गीकारात् किमर्थं नियतदेशधर्मताङ्गीकार इत्यत आह **व्यधिकरणेऽपि हीति** ॥ **पराङ्गतापन्नेति** । पराङ्गतापन्नं प्रतिज्ञावाक्यार्थाङ्गतापन्नं यल्लिङ्गस्वरूपं तत्प्रतिपादकमित्यर्थः । **अत एवेति** । विवक्षितस्थलधर्मताप्रतिपादनसर्वस्व बुद्ध्यारोहलक्षणप्रयोजनस्य सत्त्वादेवेत्यर्थः ।

प० — **व्याप्त्यनुसारेणेति** । समानासमानदेशकालादिघटिततत्तद्वस्तुनिष्ठव्याप्त्यनुरोधेनेत्यर्थः ॥ **यावतेति** । यस्मादित्यर्थे निपातोयम् । व्याप्त्यादिविशिष्टस्थलधर्मतया चोपेततयेत्यर्थः ॥ **अत एवेति** । उक्तदिशा भिन्नार्थत्वादेवेत्यर्थः ॥ **कृतीति** । कृतकृत्य इत्यर्थः ॥ **समर्थितत्वादिति** । एतदुक्तं भवतीत्यादिपूर्वग्रन्थे ।

या० — **व्याप्त्यनुसारेणेति** । व्याप्तिप्रविष्टसंबन्धानुसारेणेत्यर्थः ।

श्री० — **अन्यथेति** ! लिङ्गस्वरूपस्यैवाभावे व्याप्तिरूपसंबन्धं प्रति संबन्धिन एवाभावादिति भावः । व्यधिकरणस्थलेऽपि नियतदेशतामुपपादयति **कृत्तिकेति** ॥ **पराङ्गतेति** । परबोधनाङ्गतेत्यर्थः पञ्चम्यन्तं तृतीयान्तं वेति यावत् । अन्यथा धूम इत्यस्यापि हेतुताप्राप्तिरिति ध्येयम् । **अत एव** पक्षादीत्युक्तप्रयोजनसद्भावादेव ।

च० — **कृती** कुशलः ।

सु० — **नन्वेवं सति व्याप्तिरपि न वक्तव्या । साऽपि यदि विदितव्याप्तिकं प्रत्युच्यते तदाऽभिधानवैयर्थ्यम् । विपरीतस्य तु व्याप्यत्वासिद्धा तत्प्रमाणमेव न भवति (इति) कुतो व्याप्त्यभिधानमिति तत्रापि वक्तुं शक्यत्वात् । तथा च वादिप्रतिवादिनोर्मौनमेवापतितमिति । मैवम् । उभयथाऽप्यदोषात् । व्याप्तिर्हि न स्वरूपेणोपयोगिनी । नापि ज्ञाततामात्रेण । अपि तर्हि स्मर्यमाणा । तथा च गृहीतव्याप्तिकं प्रति तस्मारकत्वेन,(तया) अगृहीतव्याप्तिकं प्रति तु (तदैव) तज्जिज्ञासाजनकतया व्याप्तिवचनमुपयुज्यत इत्युक्तमेव । एवं तर्हि हेतूपनयावपि नानुपयुक्तौ । न हि पक्षधर्मोपेतं लिङ्गं स्वरूपेणोपयुक्तम् । नापि विदितत्वमात्रेण ! किन्तु ज्ञातचरम् । स्मर्यमाणतया ज्ञायमानमपि न वृक्षादिसाधारण्येन । किन्तर्हि लिङ्गतया । तथा च विदितलिङ्गस्वरूपपक्षधर्मतं प्रति तत्स्मारकत्वेन लिङ्गतयाऽनुसन्धायकत्वेनेतरं प्रति तज्जिज्ञासाजनकत्वेन हेतूपनययोः सार्थक्यमेवेत्याशङ्क्याह** यदीति ।

अनु० — यदि स्मारकमात्रं स्यात्स्मर्तुर्नात्र प्रयोजनम् ॥

**स्मारकत्वमुक्तस्य सर्वस्योपलक्षणम् । मात्रग्रहणेन प्रत्यायकत्वं व्यावर्तयति । हेत्वादिकमिति शेषः । पक्षधर्मतो(र्मो)पेतस्य लिङ्गस्येति च । स्यादित्यतःपरं तन्न यत इत्यध्याहार्यम् । स्मर्तुरित्युपलक्षणम् ।** अत्र व्याप्तिवचने । **निमित्तसप्तमीयम् । हेत्वादाविति च ।**

शे० — ननु 'यदि स्मारकमात्रं स्यादि'त्युत्तरवाक्यमनर्थकम् । न च हेतूपनययोः स्मारकत्वादिमात्रेण सार्थक्यमाशङ्क्य तन्निरासार्थत्वान्नानर्थक्यमिति वाच्यम् । प्रापकाभावेन हेत्वादेः स्मारकत्वादिमात्रेण सार्थक्यशङ्काया एवानुदयात् । न च व्याप्तिवाक्यस्य स्मारकत्वादिमात्रेण सार्थक्यदर्शनमेव

तत्प्रापकमिति वाच्यम् । व्याप्तिवाक्यस्य व्याप्तिप्रत्यायकतयैव सार्थक्यसंभवेन स्मारकत्वादिमात्रेण तत्सार्थक्यस्यैवासिद्धया तस्य तत्प्रापकत्वायोगादित्यतो व्याप्तिवाक्यस्य हेतूपनययोरिवोक्तविकल्पानुपपत्त्या व्याप्तिप्रत्यायकत्वासंभवेन स्मारकत्वादिमात्रेण तत्सार्थक्यस्य व्याप्त्युक्तिमात्रं परोपदेश इति वदता सिद्धान्तिनाऽवश्यं वक्तव्यत्वात्तन्न्यायेन हेतूपनययोरपि तथा सार्थक्यशङ्कोपपत्तेर्न तन्निरासपरोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य विकल्पानुपपत्त्या व्याप्तिवाक्यस्य प्रत्यायकत्वानुपपत्तिप्रदर्शनेन स्मारकत्वादिमात्रेण तत्सार्थक्यस्य सिद्धान्तिनं प्रत्यवश्याभ्युपगमनीयत्वमुपपादयन्नेव तन्न्यायेन हेत्वादेः स्मारकत्वादिमात्रेण सार्थक्यशङ्कां चोत्थाप्य तत्परिहारतयोत्तरवाक्यं योजयितुं विकल्पानुपपत्त्या व्याप्तिवाक्यस्य प्रत्यायकत्वानुपपत्तिशङ्कां तावदुत्थापयति **नन्वित्यादिना** ॥ **उक्तमेवेति** । खण्डनोक्तलक्षणाभिधानप्रयोजनाक्षेपनिरासप्रस्ताव इति शेषः ।

स्मारकत्वोक्त्या विदितलिङ्गपक्षधर्मत्वं प्रति हेत्वादेर्वैयर्थ्यनिरासेऽप्यविदितलिङ्गपक्षधर्मत्वं प्रति तदसंभवात्तद्वैयर्थ्यं तदवस्थमेवेत्यतः स्मारकत्वोक्तेर्जिज्ञासाजनकत्वोपलक्षणत्वेन स्मारकत्वमात्रपरत्वाभावादविदितलिङ्गपक्षधर्मत्वं प्रति स्मारकत्वासंभवेऽपि तज्जिज्ञासाजनकत्वसंभवेन हेतूपनययोरर्थवत्त्वलाभान्नानुपपत्तिरित्याशयेनाह **स्मारकत्वमिति** । एवं तर्हि स्मारकमात्रमिति मात्रशब्दानुपपत्तिस्तेन स्मारकत्वातिरिक्तप्रकारमात्रनिषेधादित्यतोऽनभिमतप्रत्यायकत्वमात्रस्यैव तेन निरासेन जिज्ञासाजनकत्वादिरूपप्रकारस्यानिषेधान्न तदुपलक्षणायां मात्रशब्दानुपपत्तिरित्याशयेन तद्व्यवच्छेद्यमाह **मात्रग्रहणेनेति** । हेत्वादिकमिति पक्षधर्मतोपेतस्य लिङ्गस्येति च मूले श्रवणात्कथमस्माद्वाक्याद्धेत्वादेः पक्षधर्मतोपेतलिङ्गस्मारकत्वादिना सार्थक्यसिद्धिरित्यतोऽपेक्षितशेषपूरणेन तत्सिद्धिरिति भावेनापेक्षितं शेषं पूरयति **हेत्वादिकमिति** । इति चेत्यतःपरं शेष इति वर्तते । स्मर्तुर्नात्र प्रयोजनमित्यस्योक्ताक्षेपपरिहारकत्वज्ञापकाभावान्न तत्परिहारकत्वं संभवतीत्यतस्तत्सिद्ध्यर्थमपेक्षितमध्याहरति **स्यादित्यतःपरमिति** । स्मर्तुर्नात्र प्रयोजनमिति स्मर्तुः प्रयोजनाभावोक्त्या हेत्वादेर्लिङ्गपक्षधर्मत्वस्मारकत्वेन सार्थक्यशङ्कानिरासेऽपि तज्जिज्ञासाजनकत्वेन सार्थक्यशङ्काया अनिरासान्नोक्ताक्षेपपरिहारकत्वमस्य संभवतीत्यतः स्मर्तुरित्यस्य जिज्ञासित्रुपलक्षणत्वेन स्मर्तुर्जिज्ञासितुश्चात्र न प्रयोजनमित्यर्थलाभाज्जिज्ञासितुरपि प्रयोजनाभावप्रतिपादनाद्धेत्वादेस्तज्जिज्ञासाजनकत्वेनापि सार्थक्यशङ्कानिरासोपपत्तेर्युक्तमाक्षेपपरिहारकत्वमस्य वाक्यस्येत्याशयेनाह **स्मर्तुरितीति** । नन्वत्र 'अत्र स्मर्तुरि'त्यन्वये व्याप्तिवचनेनैव पक्षधर्मतोपेतलिङ्गस्मरणसिद्धिरूपहेत्वंशसमर्पणेऽपि हेत्वादिना न प्रयोजनमिति हेत्वादेर्नैरर्थक्यरूपसाध्यांशासमर्पणप्रसङ्गो दोषः । 'अत्र न प्रयोजनमि'त्यन्वये च हेत्वादिना न प्रयोजनमिति हेत्वादेर्नैरर्थक्यरूपसाध्यांशसमर्पणेऽपि व्याप्तिवचनेन पक्षधर्मतोपेतलिङ्गस्मरणसिद्धिरूपहेत्वंशासमर्पणप्रसङ्गो दोष इत्यतो'ऽत्र स्मर्तुरत्र प्रयोजनं ने'त्युभयत्रान्वयान्नानुपपत्तिरित्यभिप्रेत्यात्र

स्मर्तुरित्यन्वये उक्तहेत्वंशसमर्पणोपयोगितयाऽत्रेत्यस्यार्थमाह **अत्र व्याप्तिवचन इति** । तर्हि व्याप्तिवचनस्य स्मरणहेतुत्वादनेनेति तृतीयया भवितव्यमत्रेति सप्तमी तु कथमधिकरणत्वादेरभावादित्यत आह **निमित्तसप्तमीति** । तथा च व्याप्तिवचनेनेति सिध्यतीति भावः । अत्र न प्रयोजनमित्यन्वये उक्तसाध्यांशसमर्पणसिद्ध्यै तदुपयोगितयाऽत्रेत्यस्यार्थमाह **हेत्वादाविति चेति** । इयमपि निमित्तसप्तमीति चार्थः । तथा च हेत्वादिनेति सिध्यतीति हृदयम् । यद्यपि चर्मणि द्वीपिनं हन्तीत्यादौ हननक्रियायाश्चर्मार्थत्वेन चर्मण उद्देश्यतया फलरूपवैवक्षिकनिमित्तत्वस्य चर्मणो हन्तिकर्मणा द्वीपिना योगस्य च सत्त्वात्तत्र निमित्तात्कर्मयोग इत्यनेन सप्तम्युपपत्तावपीह पक्षधर्मतोपेतलिङ्गस्मरणस्य व्याप्तिवचनार्थताया वा हेत्वाद्यर्थताया वाऽभावेन व्याप्तिवचनस्य हेत्वादेश्चोद्देश्यतया फलरूपवैवक्षिकनिमित्तत्वस्य कर्मयोगस्य चासत्त्वेन 'निमित्तात्कर्मे'त्यनेन सप्तम्यप्राप्त्या तत्सप्तम्योर्निमित्तसप्तमीत्वोक्तिरियमयुक्तेत्याभाति । तथाऽप्यन्तर्धौ येनेत्यत्रान्तर्धेरुद्देश्यतायाः फलरूपवैवक्षिकनिमित्तत्वस्येच्छाकर्मणा दर्शनेन योगस्य चासत्त्वेऽप्यन्तर्धाविति सप्तम्या निमित्तसप्तमीत्वस्य न्यासकारेणोक्तत्वात्तन्मतमाश्रित्य तत्सप्तम्योर्निमित्तसप्तमीत्वोक्तिरियमित्यवधातव्यम् ।

स० — **सर्वस्येति** । जिज्ञासाजनकस्य सर्वस्येत्यर्थः । **पक्षधर्मतोपेतस्य लिङ्गस्य चेति** । इत्यपि शेष इत्यर्थः । **स्मर्तुरित्युपलक्षणमिति** । जिज्ञासोरित्यपि ग्राह्यमित्यर्थः । अत्रेत्यस्य व्याख्यानान्तरमाह **हेत्वादाविति चेति** । इयमपि निमित्तसप्तमीति द्रष्टव्यम् । हेत्वादिवचनाङ्गीकारप्रयोजनत्वेनाभिप्रेतस्य लिंगस्मृत्यादेर्वचनांगीकारप्रयोजकत्वमेव व्याप्त्यादिवचनेन तस्य अन्यथासिद्धत्वान्न हेत्वादिवचनाङ्गीकारप्रयोजनत्वमिति भावः ।

प० — **किन्तु ज्ञातचरमिति** । लिङ्गमित्यनुषज्यते ॥ **स्मर्यमाणतयेति** । उपयुज्यत इत्यन्वेति **लिङ्गतयेति** । पक्षधर्मतोपेततयेत्यर्थः । विदितलिङ्गस्वरूपपक्षधर्मतमिति बहुव्रीहिः । पुरुषं प्रतीत्यर्थः ॥ **लिङ्गतयानुसन्धायकत्वेनेति** । व्याप्तिपक्षधर्मतावत्त्वेन ज्ञानजनकत्वेन परामर्शजनकत्वेनेति यावत् ॥ **उक्तस्य सर्वस्येति** । न हि पक्षधर्मतोपेतमित्यादिनोक्तस्य सर्वस्येत्यर्थः । हेत्वादिकमित्यादिपदेनोपनयः ॥ **इति चेति** । शेष इत्यनुषंगः । अत्रेत्यनुवादः । व्याप्तिवचन इति व्याख्या । अत्रेत्यस्यार्थान्तरमाह **हेत्वादाविति चेति** ॥ **निमित्तसप्तमीति** ।

या० — **निमित्तसप्तमीति** । दण्डे सतीत्यादावित्यर्थः ॥ **हेत्वादाविति चेति** । अत्रेत्यस्यार्थ इत्यर्थः ।

**श्री०** — **ज्ञातचरं** पूर्वं ज्ञातम् । **ज्ञायमानम्** लिङ्गमित्यनुवर्तते ॥ **लिङ्गतयेति** । व्याप्तिस्मृत्यनन्तरं तदुपेतं तल्लिङ्गतया पक्षेऽनुसन्धीयत इत्यर्थः । **प्रत्यायकत्वम्** अनुभवजनकत्वम् ॥ **उपलक्षणमिति** । तथा च जिज्ञासितुरित्यपि ग्राह्यमित्यर्थः ।

**च०** — ननु व्याप्तिवचनस्य स्मृतिहेतुतया तादृशहेतुताप्रत्यापकया व्याप्तिवचनपरामर्शकमौल सर्वनामप्रकृतिकतृतीयया भवितव्यतया समभिव्याहृतपदार्थान्विताधिकरणत्वार्थकसप्तमीभवः कथं सङ्गच्छत इत्यत आह **निमित्तसप्तमीति** । तथा च निमित्तत्वार्थिका सप्तम्येवाश्रीयते नाधिकरणसप्तमीति व्याप्तिवचनेनेत्यर्थसिध्या न क्षतिरिति भावः ।

अत्र व्याकर्तारः यद्यपि चर्मणि द्वीपिनं हन्ति. दन्तयोर्हन्ति कुञ्जरम् इत्यादौ हननक्रियायाश्चर्माद्यर्थत्वेन चर्मादेरुद्देश्यतया फलत्वरूपवैवक्षिकनिमित्तत्वकस्य चर्मादेर्हन्तिकर्मीभूतकुञ्जरादिना योगस्य च सत्त्वेन निमित्तात्कर्मयोग इत्यनेन सप्तम्युपपत्तावपीह पक्षधर्मतोपेतलिङ्गस्मृतेर्व्याप्तिवचनार्थताया हेत्वाद्यर्थताया वा अभावेन व्याप्तिवचनस्य हेत्वादेश्चोद्देश्यतानियन्त्रितफलत्वरूपवैवक्षिकनिमित्तत्वस्य कर्मयोगस्य दर्शनेन योगस्य चाभावेनानिमित्तात्कर्मयोग इत्यनेन सप्तम्यप्राप्त्या कथं निमित्तसप्तमीत्वोक्तिरित्याशङ्कमानाः अन्तर्धौ येनेत्यत्रान्तर्धेरुद्देश्यतया फलत्वरूपवैवक्षिकनिमित्तत्वस्येच्छाकर्मणा दर्शनेन योगस्य चासत्त्वेऽपि अन्तर्धाविति सप्तम्या निमित्तसप्तमीत्वस्य न्यासकारेणाभिहिततया तद्दिशा प्रकृतेपि निमित्तसप्तमीत्वोक्तिरितिमन्तव्यमिति व्याचक्षते ।

किङ्ति चेतिसूत्रे शब्दकौस्तुभोक्तदिशा यस्य च भावेनेति योगानुशिष्टा प्रकृतसप्तमीक्रियान्तराश्रयणादौत्सर्गिकसत्ताक्षेपः । ततश्च व्याप्तिवचने सति प्रयोजनमिति संबन्धे कृते सिद्धसाध्यसमभिव्याहार न्यायेनोपलक्षणीभूतसत्ताश्रयस्य निमित्तत्वमुत्सर्गतः फलति । नन्विह विशिष्यनिमित्ततायां सप्तमीविधानमस्तीति फलिताभिप्रायिकेयमुक्तिरिति निरूढः पन्थाः । इदं प्रतीकमुपादाय दण्डे सतीत्यादाविवेत्यर्थ इत्यर्थापनतात्पर्यमप्युक्तदिशोपपादनीयम् ।

**सु०** — **ततश्च व्याप्तिवचनवद्धेत्वादिकमपि पक्षधर्मतो(र्मो)पेतस्य लिङ्गस्य स्मरणानुसन्धानजिज्ञासाजनकं स्यादिति यद्युच्यते तन्न । यतो व्याप्तिवचनेनैव तत्स्मरणादिमतस्तस्य हेत्वादिना प्रयोजनं नास्तीति योजना । एतदुक्तं भवति । यदि हि हेत्वादिकं वाक्यतया प्रत्यायकं स्यात्तदा सामर्थ्यचिन्तोपयुज्यते । यदा तु तत्स्मारकत्वादिनैवोपयुक्तं तदा संस्कारोद्बोधोपयुक्तं सादृश्यसंबन्धादिकं किमप्यन्वे(प्ये)ष्टव्यम् । तद्व्याप्तिवचनेऽपि समानम् । यो धूमवानसावग्निमानित्यभिहिते खल्वनुमानमुद्राविद् अत्र धूमवत्त्वं व्याप्यमित्यवबुध्यत एव । ततस्तदीयपक्षधर्मतादिस्मृत्यादिमानपि कथं न भवेदिति ।**

शे० — किं तदुक्तं सर्वं यदुपलक्षणत्वं स्मारकमित्यस्योच्यत इत्यतस्तत्स्वरूपप्रदर्शनपूर्वकमत्रसर्तुरत्र प्रयोजनं नेत्युक्तार्थयोर्हेतुसाध्यांशसमर्पकत्वं च दर्शयन्नेव श्रुताध्याहृतपदसम्बन्धप्रदर्शनेन वाक्यं योजयति **ततश्चेति** ॥ **व्याप्तिवचनवदिति** । यथा व्याप्तिवाक्यं गृहीतव्याप्तिकं प्रति तत्स्मारकमगृहीतव्याप्तिकं प्रति तज्जिज्ञासाजनकं तथेत्यर्थः ॥ **अनुसन्धानेति** । लिङ्गतयाऽनुसन्धानेत्यर्थः । ननु हेत्वादेस्तत्र सामर्थ्यसत्त्वात्पक्षधर्मत्वोपेतलिङ्गस्मारकत्वाद्युपपत्तावपि व्याप्तिवचनस्य तत्रासामर्थ्यात्कथं पक्षधर्मतोपेत-लिङ्गस्मारकत्वादिकमित्यतो हेत्वादेः प्रत्यायकत्वपक्षे प्रत्यायकत्वस्य सामर्थ्यसापेक्षत्वेन सामर्थ्य भावाभावाभ्यां हेत्वादिव्याप्तिवचनयोः प्रत्यायकत्वाप्रत्यायकत्वोपपत्त्या व्याप्तिवचनेन हेत्वा-देरन्यथासिद्ध्यसम्भवेऽपि स्मारकत्वपक्षे तस्य सादृश्याद्यपेक्षत्वात्सामर्थ्यानपेक्षत्वेन सादृश्यादेश्च हेत्वादा-विव व्याप्तिवचनेऽप्यविशिष्टत्वादुभयोरपि स्मारकत्वोपपत्तेर्व्याप्तिवचनेन तस्यान्यथासिद्धिवर्णनमुपपन्न-मेवेत्यभिप्रेत्य वाक्याभिप्रायमाह **एतदुक्तं भवतीति** । वाक्यतया आप्तवाक्यतयेत्यर्थः । **तदेति** । आगमतया प्रत्यायकतायाः शक्त्यपरपर्यायसामर्थ्यापेक्षत्वाद्व्याप्तिवचने च तदभावान्न व्याप्तिवचनस्य पक्षधर्मतोपेतलिङ्गप्रत्यायकत्वप्रसङ्ग इति भवेत् । न चैवमिति भावः ॥ **स्मारकत्वादिनैवेति** । परस्पर-स्मिन्ननाश्वासेन प्रत्यायकत्वायोगादिति भावः ॥ **सादृश्येति** । परोपदेशरूपहेत्वादाविति शेषः । तस्यैव संस्कारोद्बोधोपयोगितया क्लृप्तत्वादिति भावः । तर्हि तद्भावाभावाभ्यामेव हेत्वादिव्याप्तिवचनयोरपि पक्षधर्मतोपेतलिङ्गस्मारकत्वास्मारकत्वयोरुपपत्तेर्न व्याप्तिवचनेन हेत्वादेरन्यथासिद्धिसम्भव इत्यतः स्यादेवं यदि सामर्थ्यस्येव सादृश्यादेरपि तयोर्भावाभावौ स्यातां न चैतदस्तीत्याह **तदिति** ॥ **तदीयेति** । अनेन पक्षधर्मतायाः व्याप्तिवचनाप्रतिपाद्यत्वेऽपि तदवगतव्याप्यसम्बन्धित्वाद्व्याप्तिवचनेन तत्स्मृतिरुपपन्ने-त्युक्तं भवति । न चैवं ससामर्थ्यलिङ्गप्रतीतिजनकत्वाभावादुक्तपरोपदेशलक्षणस्यात्राव्याप्तिरिति वाच्यम् । अत्र जनकशब्दस्य प्रयोजकत्वमात्रपरत्वेन तदनवकाशात् । अन्यथा वाद्युक्तपञ्चावयववाक्यस्याप्युक्तविध-लिङ्गप्रतीतिजनकत्वाभावेनासङ्गतिप्रसङ्गादिति भावः । इयं च 'व्याप्तिपक्षधर्मतयोरन्यतरस्मिन्नुक्तेरन्यतरस्य स्मृतिर्भवती'त्युक्ति'र्दृश्यते खलु लोके पदैकदेशेन पदार्थस्मृतिरि'त्युक्तिवत्कथाबाह्यप्रयोगाभिप्राया वा वादकथाभिप्राया वैकोक्तिमात्रेण व्यंशस्मृतिमत्पुरुषविशेषाभिप्राया वा कैमुत्याभिप्राया वा न तु द्वयोरन्यतरदेवाभिधेयमित्यभिप्राया । अत एव तत्त्वनिर्णयटीकायां स्मरणं तु पदैकदेशादिनाऽपि दृष्टं किमुत प्रतिज्ञादिनेति कैमुत्यमेवोक्तमिति ध्येयम् ।

स० — **तदा सामर्थ्यचिन्तेति** । आप्तवाक्यतया हेतुवाक्यस्य हेतुबोधकत्वे अनेन बोधितो हेतुरेवेति निश्चयात् कथमस्य सामर्थ्यमिति सामर्थ्यचिन्ता स्यात् । न चैवम् । परस्परस्मिन् अनाश्वासेन तदसंभवादिति भावः । **संस्कारोद्बोधोपयुक्तं सादृश्यसंबन्धादिकमिति** । हेतुवाक्यादिना तदर्थज्ञाने

सति तस्य ज्ञानस्य पूर्वोत्पन्नस्वज्ञानसादृश्यमनुभूयते तदनन्तरं च पूर्वोत्पन्नलिङ्गादिज्ञानजन्यसंस्कारोद्बोधद्वारा तत्स्मरणादिकं भवतीति भावः ।

प०— ततश्चेत्यस्य इति योजनेत्यन्वयः ॥ **अनुसंधानेति** । परामर्शेत्यर्थः । अत्रेत्यस्य व्याप्तिवचनपरस्य निमित्तसप्तमीत्वे लब्धार्थोक्तिः **व्याप्तिवचनेनैवेति** । स्मर्तुरित्यस्यार्थः **तत्स्मरणवत इति** । हेत्वादिपरस्यात्रेत्यस्यार्थो **हेत्वादिनेति** । आदिपदेनोपनयग्रहः ॥ **तत्स्मारकत्वादिनैवेति** ॥ सामर्थ्यस्मारकत्वलिङ्गतानुसन्धायकत्वेनेत्यर्थः ॥ **सादृश्यसंबन्धादिकमिति** । यथा यमलादावन्यतरदृष्ट्या तत्सदृशान्यतरस्मृतिहेतुसंस्कारोद्बोधः, हस्तिहस्तिपयोरन्यतरदृष्ट्या तत्संबन्धेनान्यतरस्मृतिहेतुसंस्कारोद्बोधः, शब्दैकदेशोक्त्या समग्रशब्दार्थस्मृतिबीजोद्बोधः, तथेहापि सद्धेतुसादृश्यसंबन्धादिकमेव किंचिदेष्टव्यमित्यर्थः ।

या०— **अनुसन्धानेति** । लिङ्गतयाऽनुसन्धानेत्यर्थः ॥ **सादृश्यसम्बन्धादिकमिति** । परोपदेशरूपे हेत्वादाविति शेषः । तथा च प्रतिवादिनं प्रति प्रयुज्यमाने हेत्वादावाप्तप्रयुक्तहेत्वादिसादृश्यं तत्संस्कारोद्बोधाय स्वीकार्यं तत्संबन्धश्च तत्प्रतिपाद्यार्थस्य संस्कारोद्बोधाय स्वीकार्य इत्यर्थः । आदिपदेन तदप्रतिपाद्येऽपि तत्प्रतिपाद्येन सम्बन्धसंग्रहः ॥ **ततस्तदीयेति** । अनेन पक्षधर्मताया व्याप्तिवचनाप्रतिपाद्यत्वेऽपि तत्प्रतिपाद्यव्याप्यसम्बन्धित्वात्स्मृतिरुपपन्नेत्युक्तं भवति । एतदर्थमेव प्रागादिपदम् ।

---

न चैवं ससामर्थ्यलिङ्गप्रतीति जनकत्वाभावादुक्तपरोपदेशलक्षणस्यात्राव्याप्तिः । तत्र जनकशब्देन प्रयोजकत्वमात्रस्यावश्यं वाच्यत्वात् । अन्यथा वादिप्रयुक्तसमग्रवाक्यस्याप्युक्तप्रतीतिजनकत्वाभावेनासम्भवापत्तेः । श्री०— यत इत्यादिना निमित्तसप्तमीत्येतदुपपादितम् । (१)

**सु०— यद्वा परोपदेस्य पञ्चावयवतानियतिं वदन्प्रष्टव्यः । किमेतत्पञ्चावयवं वाक्यमागमतया व्याप्तिपक्षधर्मतो(र्मो)पेतस्य लिङ्गस्य प्रत्यायकम् । उत स्मारकादिमात्रम् ।**

**आद्ये तु स्यादे(वेदं)वं परव्युत्पादितरीत्या (वाक्यपरिमाणं) वाक्यं प्रमाणं कथञ्चित् । न चासौ युज्यते । वादिप्रतिवादिनोरितरेतरस्मिन्ननाश्वासात् । आश्वासे वा प्रतिज्ञामात्रेणार्थसिद्धौ हेत्वाद्यभिधानवैयर्थ्यात् ।**

**द्वितीये त्वाह यदीति ।**

**परोपदेशं वाक्यं यदि स्मरणादिमात्रकारणमङ्गीक्रियते तदाऽत्र व्याप्तिवचने सत्येव स्मर्तुर्व्याप्तिवचनादेव स्मरणाद्युत्पत्तेरिति यावत् ।**

**अत्र व्याप्तिवचनातिरिक्ते शब्दे प्रयोजनं नास्तीति नासाववश्यं वक्तव्यः । दृश्यते खलु लोके पदैकदेशादितोऽपि पदार्थस्मरणादिकम् । शास्त्रेऽपि च वाक्यैकदेशप्रयोगः । तत्र**

**वक्तुराप्तत्वावधारणादनुसरणं प्रतिवादिनि तु तन्नास्तीति चेन्मा भूत् । न ह्येतदागमतया प्रत्यायकमित्युक्तम् । अन्यथा सांव्यावहारिकः केवलव्यतिरेकिप्रयोगोऽपि नानुसरणीयः । वास्तवप्रयोगपरिमाणान्यथात्वस्योपपादितत्वात् । प्रतिवादिन्यप्यनुसरणे निग्रहस्थानोद्भावनं न स्यादिति चेत् । लौकिकशास्त्रीयसंव्यवहारातिक्रमे तदवकाशात् । अन्यथा प्रकरणाद्यापन्नस्यासङ्कीर्तनमपि निग्रहहेतुः स्यात् । किं प्रकरणाद्यापन्नतयाऽयं न वदत्युताप्रतिपन्नत्वादिनेति सन्देहस्य प्रकृतेऽपि तुल्यत्वादिति ।**

**शे०** — एवं हेतूपनययोर्वैयर्थ्यप्रतिपादकलिङ्ग तत्रेत्यादिपूर्वग्रन्थानुरोधेन तयोरेव स्मारकत्वादिना सार्थक्यशङ्कानिरासपरत्वेन यदीत्यादिवाक्यं व्याख्यातम् । सम्प्रति 'न पञ्चावयवोक्तौ चे'त्याद्युत्तरग्रन्थानुरोधेन पञ्चावयववाक्ये परोक्तस्य व्याप्तिपक्षधर्मतोपेतलिङ्गप्रत्यायकत्वस्य निरासार्थत्वमस्याभिप्रेत्यागमतया तत्प्रत्यायकत्वपक्षे तदयोगात्कथं तन्निरासकत्वमस्येत्यतोऽस्य स्पष्टदूषणतया तत्र दूषणानभिधानं भाष्यकाराणां नाचातुर्यापादकमित्याशयवान्प्रत्यायकत्वं विकल्प्याद्यं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतया मूलं योजयितुमाह **यद्वेति** । आप्तवाक्यतया बोधकत्वे प्रतिज्ञामात्रेणार्थसिद्धेर्हेत्वाद्यभिधानानर्थक्यमिति वक्ष्यमाणदोषमभिप्रेत्य कथञ्चिदित्युक्तम् । तर्ह्यागमतया प्रत्यायकत्वमित्याद्य एवास्त्वित्यत आह **न चेति** । कुतो नेत्यत आह **वादिप्रतिवादिनोरिति** ।

उक्तमेवार्थं कैमुत्यन्यायेनोपपादयति **दृश्यत इति** ॥ **पदैकदेशादित इति** । अत्रापिपदं कैमुत्यसूचनार्थं समग्रपदस्मरणद्वारेणेति शेषः । समग्रशब्दस्यैवार्थे गृहीतसङ्गतिकतया तत्स्मारकत्वेऽप्येकदेशस्यातथात्वेन पदार्थस्मारकत्वाभावात् । अवाक्यस्थपदाभिप्रायं चेदमतो न सिद्धान्तविरोधः । यद्वा परीत्येदमभिधानमिति न कश्चित्क्षुद्रोपद्रवः । आदिपदेनावान्तरवाक्यैकदेशस्य पदस्य परिग्रहः । ननु महावाक्यैकदेशस्यावान्तरवाक्यमात्रस्य प्रयोगादर्शनात्कथं तादृशस्य व्याप्तिवचनमात्रस्य तत्स्यादित्यत आह **शास्त्रे चेति** । 'तत्प्रामाण्यमाप्तप्रामाण्यात्' 'प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणमि'त्यादाविति शेषः ॥ **तत्रेति** । लोकशास्त्रयोरित्यर्थः ॥ **अनुसरणमिति** । पदैकदेशादितोऽपि पदार्थस्मरणादेरनुसरणमित्यर्थः ॥ **तदिति** । आप्तत्वावधारणमित्यर्थः । अन्यथा न्यूनादिनिग्रहोद्भावनानुपपत्तेरिति भावः ॥ **न हीति** । तथा च प्रतिवादिन्याप्त्यनवधारणेन तद्वाक्यस्याप्तवाक्यतयाऽनिश्चायकत्वेऽपि स्मारकत्वमुपपन्नमिति भावः । प्रतिवादिन्याप्त्यनवधारणमात्रेण तद्वाक्यस्य स्मारकत्वमपि नास्तीत्यङ्गीकुर्वाणं प्रति विपक्षे बाधकमाह **अन्यथेति** ॥ **सांव्यावहारिक इति** । जीवच्छरीरं सात्मकं प्राणादिमत्त्वाद्यन्न सात्मकं तन्न प्राणादिमद्यथा घटः । न च तथेदं तस्मान्न तथेति सांव्यावहारिकः । केवलव्यतिरेकिप्रयो-

गोऽपि स्मारको न स्मादित्यर्थः ॥ **उपपादितत्वादिति** । जीवच्छरीरं सात्मकं प्राणादिमत्त्वाद्यत्प्राणादिमत्तत्सात्मकं प्राणादिमच्चेदं तस्मात्सात्मकमित्युक्ते धूमस्याग्निनेवास्य न व्याप्तिर्दृश्यते तत्कथमित्याकाङ्क्षायां प्रयोगान्तरं प्रवर्तते । प्राणादिमत्त्वं सात्मकत्वेन व्याप्तं तदभावव्यापकाभावप्रतियोगित्वात् , यो यदभावव्यापकाभावप्रतियोगी स तद्व्याप्तो यथा धूमोऽग्निनेति । तदेतावति वक्तव्ये यदन्यथा प्रयुज्यते तद्विवेकिनां स्फुटप्रतीतिकतया संग्रहरुचितया वेति पूर्वग्रन्थेन वास्तवप्रयोगपरिमाणान्यथात्वस्योपपादितत्वेनाकाङ्क्षानुसारेण तथैव प्रयोक्तव्यत्वादित्यर्थः ।

**प्रतिवादिन्यपीति** । प्रतिवाद्युक्तवचनेऽपीत्यर्थः । आप्तवाक्यवदिति शेषः ॥ **अनुसरण इति** । पदैकदेशादितोऽपि पदार्थस्मरणादेरिति शेषः ॥ **निग्रहेति** । न्यूनादीत्यर्थः । प्रमापकत्वांशपरित्यागेन ज्ञापकत्वांशे लोकशास्त्रप्रहतरीत्यनुसारि वादिवाक्यमप्याप्तवाक्यवदनुसरणीयमेवेति परिहरति **लौकिकेति** ॥ **अन्यथेति** । लौकिकशास्त्रीयव्यवहारानतिक्रमेऽपि निग्रहस्थानत्व इत्यर्थः । ननु प्रतिवदिनि न्यूनवचनस्य किं प्रकरणाद्यापन्नतया न वदत्युताप्रतिपन्नत्वादिनेति सन्देहाधायकत्वान्निग्रहस्थानत्वेऽपि प्रकारणाद्यापन्नस्यासङ्कीर्तने तदभावात्कथं निग्रहस्थानत्वमित्यत आह **किं प्रकरणेति** ॥ **प्रकृतेऽपीति** । प्रकरणाद्यापन्नस्यासङ्कीर्तनेऽपीत्यर्थः । यद्वा ननु प्रकरणाद्यापन्नस्यावचने न न्यूनादेर्निग्रहस्थानत्वं संभवति । अप्रतिपत्त्यैवायं वदतीति निश्चयासंभवेनाप्रतिपत्तिलिङ्गत्वाभावादिति चेत्तर्हि तादृशे प्रतिवादिवचनेऽप्युक्तनिश्चयासंभवेन न्यूनादेस्तन्न स्यादिति समानम् । यदि च प्रतिवादिवचनेऽप्रतिपत्त्यैवायं वदतीति निश्चयासंभवेऽपि प्रकरणाद्यापन्नतया वाऽयं न वदति उताप्रतिपन्नत्वादिनेति सन्देहसंभवेन विप्रतिपत्तिलिङ्गत्वान्न्यूनादेर्निग्रहस्थानत्वमिति मन्यसे तर्हि प्रकरणाद्यापन्नस्यावचनेऽप्युक्तविधनिश्चयासंभवेऽप्युक्तविधसन्देहसंभवेन विप्रतिपत्तिलिङ्गत्वात्प्रकरणाद्यापन्नस्यावचनमपि निग्रहः स्यादिति तुल्यमित्याशयवानाह **किं प्रकरणादीति** ।

**स०** — आश्वासे वा प्रतिज्ञामात्रेणार्थसिद्धौ हेत्वाद्यभिधानवैयर्थ्यादिति वक्ष्यमाणदोषं मनसि निधाय कथञ्चिदित्युक्तम् । कथञ्चिदित्युक्तमेव व्यनक्ति **आश्वासे वेति** ।

**नामाविति** हेत्वादिरित्यर्थः । ननु व्याप्तिवचनस्य एकदेशत्वेन तस्य स्मारकत्वादिकं न संभवति । कुत्रापि एकदेशमात्रस्य स्मारकत्वादेरदृष्टत्वादित्यत आह **दृश्यते खल्विति** ॥ **पदैकदेशादित इति** । समग्रपदस्मरणद्वारेति शेषः । समग्रपदस्यैवार्थे शक्तेर्ज्ञातत्वेन तत्स्मारकत्वसंभवेऽपि एकदेशस्य तदसंबन्धित्वेनाज्ञातत्वात् पदार्थस्मारकत्वासंभवात् अवाक्यस्थपदत्वात् स्वपरसाधारणमेतदिति ज्ञेयम् । **अनुसरणमिति** । एकदेशादितोऽपि स्मरणादेरनुसरणमित्यर्थः । **तन्नास्तीति** । आप्तत्वावधारणं नास्तीत्यर्थः। **न हीति**। तथा च प्रतिवादिनि आप्त्यनवधारणेन तद्वाक्यस्यानिश्चायकत्वेऽपि स्मारकत्वमात्र-

मुपपद्यत इति भावः । **अन्यथेति** वक्तरि आप्त्यनवधारणेन प्रतिवादिवाक्यस्य स्मारकत्वाभावे इत्यर्थः । **सांव्यावहारिक इति** । जीवच्छरीरं सात्मकं, प्राणादिमत्त्वात् । यन्न सात्मकं, न तत्प्राणादिमत् यथा घटः । न च तथेदम् । तस्मान्न तथा इति सांव्यावहारिककेवलव्यतिरेकिप्रयोगोऽपि न स्मारकः स्यादित्यर्थः । **वास्तवेति** । जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् । यत्प्राणादिमत् तत् सात्मकम् प्राणादिमच्चेदम् इति प्रयुक्ते धूमस्याग्निनेवास्य न व्याप्तिर्दृश्यते । तत्कथमित्याकांक्षायां प्रयोगान्तरम् । प्राणादिमत्त्वं सात्मकत्वेन व्याप्तम्, तदभावव्यापकाभाववत्वात् । यो यदभावव्यापकाभावः । सः तद्व्याप्तः । यथा धूमोऽग्निनेति । तदेतावति वक्तव्ये यदन्यथा प्रयुज्यते तद्विवेकिनां स्फुटप्रतीतिकतया संग्रहरुचितया वेत्यादिना वास्तवप्रयोगपरिमाणान्यथात्वस्योपपादितत्वात् । आकाङ्क्षानुसारेण तथैव वक्तव्यतया सांव्यावहारिकप्रयोगो नानुसरणीयः स्यादित्यर्थः ॥ **अन्यथेति** । लौकिकशास्त्रीयसंव्यहारानतिक्रमस्थलेऽपि एकदेशोत्कीर्तनस्य निग्रहहेतुत्वाङ्गीकारे इत्यर्थः । मया त्वां प्रति प्रमाणमुच्यते इत्यनुक्त्वा प्रमाणमात्रोक्तौ तत्रापि न्यूनतोद्भावनं कर्तव्यं स्यादित्यर्थः । ननु अप्रतिपत्तिलिङ्गस्यैव निग्रहस्थानत्वेन यत्र यत्र न्यूनत्वादिकमुद्भावयति तत्र तत्र अयं किमेकदेशोत्कीर्तनेन समग्रमपि ज्ञास्यति इत्यभिप्रायेण न वदति, उत अप्रतिपन्नत्वादेवेति सन्देहसत्त्वेन तस्य निग्रहहेतुत्वेऽपि न (...) **प्रकरणाद्यापन्नतयेति** । **प्रकृतेऽपीति** । प्रकरणाद्यापन्नस्यासङ्कीर्तनेऽपीत्यर्थः ।

---

**प०**— हेतूपनयवैयर्थ्योक्तिपरतया व्याख्यातं पूर्वमिदानीं पंचावयवनियतिनिरासपरतया व्याचष्टे **यद्वेति** । स्मारकादिमात्रमित्यादिपदेनानुसंधानजिज्ञासयोर्ग्रहः । 'त्रिपंचावयवामेवे'त्यादिना अग्रे नियमपक्षस्य निरस्यत्वात् कथंचिदित्युक्तम् । निमित्तसप्तम्यंतं व्याप्तिवचनपरमत्रेतिपदमित्युपेत्याह **अत्र व्याप्तिवचने सत्येवेति** । अत्रेत्यस्यार्थांतरं **अत्र व्याप्तिवचनातिरिक्ते शब्द इति** । फलितमाह **नासावित्यादि** ॥ **पदैकदेशादितोपीति** । अपिपदात् किमुत व्याप्तिवचनेनेति सूचयति । **प्रयोग इति** । दृश्यत इत्यनुषङ्गः । प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम् । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां । ईक्षतेर्नाशब्दं' इत्यादौ महावाक्यैकदेशप्रयोगः, शास्त्रेपि दृश्यत इत्यर्थः । शङ्कते **तत्रेति** । **अनुसरणं** पदार्थस्मरणानुकूलसमग्रपदाद्यनुसंधानानुसरणमित्यर्थः ॥ **इत्युक्तमिति** । यद्वेत्यादिपूर्वग्रन्थे । तथा च लोके शास्त्रे च संव्यवहारसिद्धस्य प्रतिवादिवाक्येप्यनुसरणं कार्यमेवेति भावः ॥ **अन्यथेति** । पंचावयवरूपकलसमहावाक्यपरिमाणाभावमात्रेण प्रतिवादिवाक्ये सांव्यवहारिकस्याप्यननुसरण इत्यर्थः ॥ **उपपादितत्वादिति** । व्याप्तिरेव तु सा स्मृतेत्यस्य तृतीयव्याख्यानावतारिकायामिति भावः ।

नन्वेवं प्रतिवाद्युक्तवाक्ये न्यूनरूपनिग्रहस्थानोद्भावनायोगः । तथा च तस्य परिगणनमेवायुक्तमुद्भवान-स्थलाभावादित्याशङ्क्य निराह **प्रतिवादिन्यपीति**। ननु तत्त्वाप्रतिपत्तिलिङ्गस्यैव निग्रहस्थानत्वात्तत्त्वा(त्रा)-प्रतिपत्त्याऽयं न वक्तीत्यनिर्णयेन संदेहान्न न्यूनोद्भावनमित्यतः समः समाधिरित्याह **किमिति** । **अप्रति-पन्नत्वादिना** अज्ञानविपरीतज्ञानादिनेत्यर्थः ।

**या०— कथञ्चिदिति** । 'त्रिपञ्चावयवामेव युग्मावयविनामपि । नियमाद्योऽनुमां ब्रूयात्' इत्यादिना नियमपक्षाणां दूषयिष्यमाणत्वात्कथञ्चिदित्युक्तम् । यद्वा प्रतिज्ञामात्रेणार्थसिद्धौ हेत्वाद्य-भिधानमस्मिन्पक्षे व्यर्थमापद्यत इति दूषणं मनसि निधाय कथञ्चिदित्युक्तम् । कैमुत्यन्यायेनैतदुपपादयति **दृश्यते खल्विति** । अपिशब्दः कैमुत्यद्योतकः । आदिपदेनावान्तरवाक्यैकदेशस्य पदस्य ग्रहणम् । ननु महावाक्यैकदेशस्य व्याप्तिवचनादिरूपावान्तरवाक्यमात्रस्य प्रयोगो न सांव्यावहारिक इत्यत **आह शास्त्रे चेति** । 'तत्प्रामाण्यमाप्तप्रामाण्यात् । प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम् । गौर्न पदा स्प्रष्टव्या । यो ब्राह्मणायावगुरेत्तं शतेन यातयेत्' इत्यादौ तत्र तत्र शास्त्रे त्वदुक्तमहावाक्यैकदेशप्रयोगोऽपि दृश्यत इत्यर्थः ॥ **अनुसरणमिति** । एकदेशादितोऽपि स्मरणादेरनुसरणमित्यर्थः ॥ **न ह्येतदागमतयेति** । तथा च सांव्यावहारिके सर्वत्र प्रयोगेऽनुसरणं कार्यमिति भावः ॥ **अन्यथेति** । सांव्यावहारिके प्रतिवादिप्रयोगेऽनुसरणाभाव इत्यर्थः ॥ **उपपादितत्वादिति** । अयमत्र क्रम इत्यादिनोपपादितत्वा-दित्यर्थः ॥ **प्रतिवादिन्यपीति** । प्रतिवाद्युक्तवचनेऽपीत्यर्थः ॥ **निग्रहस्थानेति** । न्यूनाद्युद्भवनं न स्यादित्यर्थः । ननु प्रकरणाद्यापन्नस्यावचने न न्यूनं नाम निग्रहस्थानमुद्भावयितुं शक्यम् । अप्रतिपत्त्यै वायं वदतीति निश्चयासंभवादित्यत आह **किं प्रकरणाद्यापन्न इति** ॥ **प्रकृत इति** । सांव्यावहारिके त्वदुक्तमहावाक्यैकदेशप्रयोगेऽपीत्यर्थः ।

**श्री०— आश्वासे वेति** । वक्ष्यमाणदोषमभिप्रेत्य कथञ्चिदित्युक्तम् ॥ **शास्त्रेऽपीति** । 'तत्प्रामाण्यमाप्तप्रामाण्यात्'इत्यादावित्यर्थः । शङ्कते **तत्रेति** । लोके शास्त्रे च । **अनुसरणम्** एकदेशोक्तेरपि स्मारकत्वानुसरणमित्यर्थः । **एतत्** आप्तत्वावधारणम् । तथा च प्रतिवादिना व्याप्ति-वचनमात्रे कथिते महावाक्यभूतपञ्चावयववाक्यैकदेशेन कथं व्याप्तिस्मृत्यादिकं स्यादित्यर्थः । **एतत्** व्याप्तिवचनम् । **आगमतया** आप्तवचनतया । तर्ह्येवैकदेशप्रयोगेन कथं व्याप्तिप्रमितिः स्यादिति वाच्यं स्यान्न ह्येवमुच्यते किन्तु स्मारकमिति तच्च स्मरणमेकदेशेनापि युक्तमित्यर्थः ॥ **अन्यथेति** । वक्तर्याप्त्यनवधारणा-त्तद्वाक्यं स्मारकं न भवत्येवेति यद्युच्यत इत्यर्थः ॥ **सांव्यावहारिक इति** । तथाच जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् । यत्सात्मकं न भवति तत्प्राणादिमन्न भवति यथा लोष्टम् । न च तथेदं तस्मान्न तथेति सांव्यावहारिकः केवलव्यतिरेकिप्रयोगोऽपि नानुसरणीयः । अस्यापि वाक्यैकदेशत्वेन व्याप्त्यादिस्मारकत्वस्य

त्वया वक्तुमशक्यत्वादित्यर्थः । ननु पञ्चावयवोपेतस्यास्य वाक्यस्य कथमेकदेशत्वं येन स्मारकत्वं स्यादित्यत आह **वास्तवेति** । वास्तवो यः प्रयो..परिमाणोऽयमत्र प्रयोगक्रम इत्यादिना तदेतावति वक्तव्य इत्यन्तेन दर्शितस्तस्यान्यथात्वं विवेकिनां स्फुटप्रतीतिकतया संग्रहरचितया वेत्यादिनोपपादितम् । अतः पञ्चावयववदुक्तस्याप्यस्यैकदेशत्वान्न स्मारकत्वं युक्तमित्यर्थः । ननु प्रतिवादिप्रयुक्तस्यैकदेशस्य कथं स्मारकत्वम् । प्रतिवादिप्रयुक्तवाक्यस्यापि स्मारकत्वेन कार्यकारित्वाभ्युपगमे न्यूनतारूपनिग्रहस्थानोद्भावनं न स्यादित्याशङ्कते **प्रतिवादिन्यपीति** । तत्प्रयुक्तवाक्यैकदेशेऽपीत्यर्थः । **अनुसरणे** स्मारकत्वाद्यनुसरणे ॥ **तदवकाशादिति** । निग्रहस्थानोद्भावनावकाशादित्यर्थः । अयं च प्रकारो लौकिकशास्त्रीयसंव्यवहारसिद्ध इत्याशयः । 'व्याप्तिस्तु केवलाऽपि स्यात्प्रमाणम्' इति शास्त्रीयप्रयोगे ध्येयः ॥ **अन्यथेति** । लौकिकशास्त्रीयव्यवहारानुसारेण कथनेऽपि यदि निग्रहस्थानमुद्भाव्यत इत्यर्थः ॥ **स्यादिति** । तथा च लौकिकशास्त्रीयव्यवहारसिद्धत्वात्प्रकरणादिप्राप्तस्य यदसङ्कीर्तनं तस्य न निग्रहहेतुत्वमिति वाच्यम् । तदेतत् प्रकृतेऽपि तुल्यमित्यर्थः । ननु यत्कृतकं तदनित्यमित्यत्र भावत्वे सतीति विशेषणस्य प्रकरणप्राप्तस्याकथनेऽपि न न्यूनतोद्भावनीया । अज्ञानरूपाप्रतिपत्ति-विरुद्धार्थनिश्चयरूपविप्रतिपत्तिहेतोरेव निग्रहस्थानत्वात् । अत्र च प्रकरणाद्यापन्नतयेदं विशेषणं न वदत्युतानेन सर्वथाऽज्ञातत्वादिति सन्देहस्यैव जननात् । सन्देहकरस्य चानिग्रहस्थानत्वादिति चेत् । तर्हि सांव्यावहारिकमहावाक्यैकदेशभूतं व्याप्तिवचनमात्रमयं प्रयुङ्क्ते तत्र प्रकरणप्राप्तत्वादितरावयवं न वदत्युत सर्वथा अज्ञातत्वादिति सन्देहस्यैव जायमानत्वेनानिग्रहहेतुत्वादिति प्रकृते त्वदुक्तमहावाक्यैकदेशप्रयोगेऽपि साम्यात्तस्माद्युक्तमेकदेशस्यापि स्मारकत्वमित्याह **किमित्यादिना** ।

**च० — उपपादितत्वादिति** । अयमत्र क्रम इत्यादिनोपपादितत्वादित्यर्थः ।

**सु० — अपर आह । प्रमेयावधारणार्थं हि प्रमाणोपन्यासः । प्रमेयावधारणं च निर्विवादा तत्प्रतीतिः । न च सा प्रमाणस्वरूपमात्रोपदर्शने(न) भवति । किन्नाम तदाभासोद्धारेणापि । अन्यथा तत्प्रामाण्यस्यैवानवस्थानात् । तथा च प्रतिज्ञावाक्येन विषयमुपक्षिप्य तत्र हेतुना प्रमाणस्वरूपमुपदर्श्य तस्योदाहरणवाक्येन विरुद्धानध्यवसितानैकान्तिकत्वनिरासः क्रियते । उपनयेनासिद्धिरपास्यते । निगमनेनापि हेत्वनुवादेन तस्मादेव नान्यस्मादिति सिद्धसाधनताऽपक्षिप्यते । साध्यानुवादेन (तु)अग्निमानेव न तु निरग्निक इति बाधप्रतिपक्षप्रतिक्षेपः क्रियते । तदेवं विधूतविवादसाध्यप्रतिपत्तये पञ्चावयववाक्यमावश्यकमिति । तदयुक्तम् । एवं वदता हि(ऽपि) यावता विवादावसानं तावान्परोपदेश इत्युक्तं स्यात् । तथा च पञ्चावयवं वाक्यं**

**परोपदेश** इत्ययुक्तम् । **पञ्चावयवोक्तावपि विवादावसितेरभावात्** । **किन्त्वाकथापरिसमाप्तेः परोपदेश इति वक्तव्यमित्याशयवानाह** नेति ।

**अनु०**— न पञ्चावयवोक्तौ च विवादावसितिर्भवेत् ॥

विवादावसितिः **विवादावसानोपेता साध्यप्रतीतिः** ।

**शे०** — ननु च 'न पञ्चावयवोक्तौ चे'त्युत्तरवाक्यमनर्थकम् । न च पञ्चावयवप्रयोगेऽपि निर्विवादसाध्यप्रतीत्यभावप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च पञ्चावयववाक्यस्य परोपदेशत्वनिरास एव तत्प्रयोजनमिति वाच्यम् । व्याप्तिपक्षधर्मतोपेतलिङ्गानुसन्धायकत्वमात्रेण परोपदेशत्वोपपत्त्या निर्विवादसाध्यप्रतीत्यजनकत्वस्य परोपदेशत्वनिरासेऽसामर्थ्यादित्यतः ससामर्थ्यलिङ्गप्रतीतिजनकं वाक्यं परोपदेश इति पक्षे निर्विवादसाध्यप्रतीत्यजनकत्वेन पञ्चावयववाक्यस्य परोपदेशत्वनिरासासम्भवेऽपि, निर्विवादसाध्यप्रतीतिजनकं वाक्यं परोपदेश इति पक्षे उक्तविधप्रतीत्यजनकत्वेन पञ्चावयववाक्यस्य परोपदेशत्वनिरासोपपत्त्या तदर्थतयोक्तविधप्रत्ययजनकत्वव्युत्पादनस्यार्थवत्त्वेन तत्परस्योत्तरवाक्यस्य सार्थकत्वादित्यभिप्रेत्य तन्मतनिरासपरतयोत्तरवाक्यं योजयितुं तदुत्थापयति **अपर आहेति** ॥ **प्रमेयेति** । पक्षे साध्यावधारणार्थमित्यर्थः ॥ **प्रमाणेति** । लिङ्गरूपेत्यर्थः । ननु प्रमेयावधारणस्य लिङ्गरूपप्रमाणोपदर्शकेन हेतुनैव सिद्धिसम्भवात्किं तदर्थं पञ्चावयवनियम इत्यतो न प्रमेयनिश्चयमात्रमिह प्रमेयावधारणमभिमतं किन्नाम निर्विवादतत्प्रतीतिरेव । सा च न लिङ्गरूपप्रमाणोपदर्शनमात्रेण सिध्यतीत्यतस्तत्सिद्ध्यर्थं पञ्चावयवनियम इत्याशयेनाह **प्रमेयावधारणं चेति** । यदि प्रमाणोपदर्शनेऽपि न निर्विवादा तत्प्रतीतिर्भवति तर्हि तत्प्रतीतावुपायान्तराभावात्सा न स्यादेवेति परार्थानुमानकथैव लुप्येतेत्याशयेन पृच्छति **किन्नामेति** । निरस्तसमस्तदोषाशङ्कस्य लिङ्गस्यैव निर्विवादतत्प्रतीतावुपायत्वान्नानुपपत्तिरित्याशयेन परिहरति **तदाभासोद्धारेणापीति** । **अन्यथा** आभासानुद्धारे ॥ **उदाहरणवाक्येनेति** । तस्य व्याप्तिप्रतिपादकत्वादिति भावः ॥ **तस्मादेवेति** । सिद्धे सत्यारम्भस्य नियमार्थत्वादिति भावः ॥ **पञ्चावयवोक्तावपीति** । पञ्चावयवप्रयोगेणैव तदवसितौ च तावतैव कथामुद्रणापातादिति भावः ॥ **किन्त्विति** । कृत्स्नकथाया एव सकलशङ्कानिवर्तकत्वादिति भावः । निर्विवादसाध्यप्रतीतिजनकत्वस्यैव परेणाङ्गीकारात्तदनुरोधेन न पञ्चावयवोक्तौ चनिर्विवादसाध्यप्रतीतिर्भवेदित्येव वक्तव्यतया विवादावसित्यभावमात्रव्युत्पादनमसङ्गतमित्यत आह **विवादेति** ।

**स०— नान्यस्मादिति** । अन्यस्मात् प्रमाणात् तत्सिद्धिर्नास्तीत्युक्ते सिद्धसाधनतापरिहार इति भावः ।

प०— प्रकारान्तरेण पञ्चावयव्या उपयोगमाशङ्क्य तन्निरासकतया मूलमवतारयति **अपर आहेति ॥ विरुद्धेत्यादि** । साध्याभावमात्रसंबन्ध-साध्यतदभावोभयसंबन्धाभाव-साध्यतदभावोभय-संबन्धरूपाणां विरुद्धत्वादीनां त्रयाणां, साध्येनैव संबद्धो हेतुरित्यर्थपरोदाहरणेन निरासप्रतीतेरिति भावः । विधूतविवादेति प्रतिपत्तेर्विशेषणम् । मूले चशब्दोऽप्यर्थ इति भावेनोक्तं **पञ्चावयवोक्तावपीति ॥ आ कथापरिसमाप्तेरिति** । आ कडारादेका संज्ञेत्यादाविवासमासादिनाऽयं निर्देशः । तेनाऽऽकथा-परिसमाप्तीति स्यादिति नाशङ्क्यम् । उक्तं ह्याद्याध्यायान्त्यपादे मञ्जर्यां 'आङ्मर्यादाभिविध्योरिति समासस्य विकल्पितत्वादा कडारादिति निर्देशः । समासे सत्याकडारम् इति स्यादि'ति ।

या०— **विरुद्धानध्यवसितेति** । उदाहरणवाक्येन सामानाधिकरण्यनियमस्य दृष्टान्ते प्रदर्शितत्वादेतेषां निरासो लभ्यत इति द्रष्टव्यम् ॥

श्री०— हेत्वाभासपञ्चकव्युदासार्थत्वात्प्रतिज्ञादयः पञ्चावयवा अपेक्षिता इत्याह **अपर आहेति** । अन्यथा तेषामाभासोद्धारो यदि न कर्तव्य इत्यर्थः ॥ **तदिति** । तेषां प्रमाणानामित्यर्थः ॥ **अनध्यवसितेति** । सपक्षकथनेन तद्व्युदासः । अनध्यवसिते सर्वस्यापि पक्षत्वेन सपक्षाभावादित्यर्थ । एवमुत्तरत्रापि ज्ञेयम् ॥ **नान्यस्मादिति** । यद्यन्यस्माद्धेतोः साध्यसिद्धिर्जाता स्यात्तर्हि सिद्धसाधनता स्यादित्यर्थः ।

---

च०— विधूतविवादेति बहुव्रीहिः । प्रतिपत्तिविशेषणम् ।

सु०— **नन्वेतदयुक्तम्** । उदाहरणाद्यवयवत्रयेणाभासोद्धारस्य कृतत्वात् । **निरस्त-समस्ताभासप्रमाणोपन्यासेऽपि विवादानवसाने सर्व(दाऽ)थाऽपि तत्प्रसङ्गादित्यत आह दृष्टान्तेति**

अनु०— दृष्टान्तादिषु चैवं स्यात्साधनं पुनरेव तु ।

**दृष्टान्तपदेनोदाहरणार्थमुपलक्षयति । आदिपदेनोपनयनिगमनार्थग्रहणम् । विषयसप्तमीयम्** । एवं यथा प्र(तिज्ञा)तीतार्थे । साधनं **वक्तव्यमिति** शेषः । **स्यादेवेति संबन्धः । तु-शब्दो यस्मादित्यर्थे । अयमर्थः** । सत्यमुद्धृताभासात्प्रमाणात्प्रमेयावधारणं भवतीति । **किन्तु पञ्चभिरप्यवयवैस्तादृशप्रमाणप्रतीतिरेव न भवतीति ब्रूमः । आभासोद्धारपरोदाहरणाद्यर्थ-विप्रतिपत्तौ तत्साधनस्यापि वक्तव्यत्वात् । न च तत्र विप्रतिपत्तिर्न कर्तव्या । नापि वाङ्मात्रेण तन्निवृत्तिः । प्रतिज्ञार्थसमानयोगक्षेमत्वात् । न चोदाहरणादिष्वेव सर्वशङ्कोद्धारकारणमस्ति । अनुपलम्भात् । पञ्चावयवप्रयोग एव कथामुद्रणापातात् । अतः प्रमेयनिर्णयावधित्वेऽनुमान-प्रयोगस्य न पञ्चावयवत्वनियमो युज्यते । अपि तु कथापरिसमाप्त्यवधिकत्वमेवाङ्गीकार्यमिति ।**

**शे०—** ननु चोदाहरणाद्यवयवत्रयेणाभासोद्धारस्य सिद्धया निर्विवादसाध्यप्रतीतिरित्युक्तस्य तदवयवत्रयेणैव परेण शङ्कितत्वात्तदनुरोधेनोदाहरणादिषु चैवं स्यादिति वक्तव्यं, दृष्टान्तादिष्विति तु कथमुक्तमित्यत आह **दृष्टान्तपदेनेति** । अर्थद्वारेणैव वचने विवादो न स्वातन्त्र्येणेति भावेनोदाहरणमित्यनुक्त्वोदाहरणार्थमित्युक्तम् । **इति शेष इति** । एवमित्यत्र यथा प्रतिज्ञार्थ इति शेषः, साधनमित्यत्र वक्ष्यव्यमिति शेष इति भावः ॥ **स्यादेवेति सम्बन्ध इति** । व्यवहितत्वेऽपि योग्यत्वादेवशब्दस्य स्यादित्यनेन सम्बन्ध इति नानर्थक्यमिति भावः । ननु निरस्तसमस्ताभासप्रमाणोपन्यासेऽपि निर्विवादसाध्यप्रतीत्यनुदये सर्वथाऽपि तदनुदयप्रसङ्गस्तदुदये च पञ्चावयवप्रयोगेऽपि निरस्तसमस्ताभासप्रमाणप्रतिपत्त्या निर्विवादसाध्यप्रतीतेरवश्यम्भावान्न पञ्चावयवेत्यादिना तन्निषेधानुपपत्तिरित्युभयतः पाशारज्जुरियं भवतामापन्ना । यच्चोदाहरणाद्यर्थस्य साधनीयत्वप्रसञ्जनं तदसत् । निर्निबन्धनत्वात् । न च प्रतिज्ञार्थस्य साधनीयतादर्शनमेव तत्प्रसञ्जकमिति वाच्यम् । विप्रतिपत्तिभावाभावाभ्यां वैषम्येण तस्य साधनीयत्वेऽप्युदाहरणाद्यर्थस्यासाधनीयत्वोपपत्त्या तस्य तदप्रसञ्जकत्वात् । उभयत्र विप्रतिपत्तिभावेऽपि चोदाहरणाद्यर्थविषयिण्यास्तस्याः साधनमन्तरेणापि वाङ्मात्रेणैव निवृत्तिसंभवात्तेन तदनिवृत्तावपि वा विशेषदर्शनादेव तत्र तन्निवृत्तिसंभवान्न तदर्थस्य साधनापेक्षत्वमित्यत आह **अयमर्थ इति** ॥ **सत्यमिति** । तथा च निरस्तसमस्ताभासप्रमाणप्रतिपत्तेरेव प्रमेयावधारकत्वान्न सर्वथा तदनुदयप्रसङ्गदोष इत्याशयः । तर्हि पञ्चावयववाक्यप्रयोगेऽपि प्रमेयावधारणप्रसङ्गो निरस्तसमस्ताभासप्रमाणप्रतिपत्तेस्तत्राप्यविकलत्वादित्युक्तदोषतादवस्थ्यमित्याशयेन पृच्छति **किन्त्विति** । निरस्तसमस्ताभासप्रमाणप्रतिपत्तेः प्रमेयावधारकत्वपक्षे सत्यां तस्यां तदवधारणप्रसक्तावपि न पञ्चावयवप्रयोगे तदवधारणं प्रसज्यते । तत्रोक्तविधप्रमाणप्रतिपत्तेरेवाभावादित्याशयवान्परिहरति **पञ्चभिरिति** । ननु चोदाहरणाद्यवयवत्रयेणाभासोद्धारस्य कृतत्वात्कथं पञ्चभिरवयवैस्तादृशप्रतीत्यनुदय इत्यत आह **आभासोद्धारेति** । ननूदाहरणाद्यर्थे विप्रतिपत्तिरेव न भवति जाताऽपि वाङ्मात्रेणैव निवर्तत इति न तत्र साधनापेक्षेत्येव किन्न स्यादित्यतस्तथा सत्यविशेषेण प्रतिज्ञातार्थेऽपि विप्रतिपत्तिरेव न भवति जाताऽपि वाङ्मात्रेणैव निवर्तत इति न तत्र साधनापेक्षेति परेणापि वक्तुं शक्यत्वात्तत्साधनानर्थक्यं स्यादित्याशयवानाह **प्रतिज्ञार्थेति** । ननु चोदाहरणाद्यर्थविप्रतिपत्तावपि वाङ्मात्रेणैव तदनिवृत्तावपि तत्र विशेषदर्शनादेव तन्निवृत्तिसंभवान्न तत्साधनसापेक्षत्वमित्यतस्तर्हि प्रतिज्ञार्थेऽपि तत एव तन्निवृत्तिसंभवान्न तत्साधनापेक्षत्वं स्यादिति प्रतिबन्दीं सूचयन्नेव वस्तुस्थितिमाह **न चेत्यादिनाऽनुपलम्भादित्यन्तेन** । तदनुपलम्भे विप्रतिपद्यमानं प्रति बाधकमाह **पञ्चेति** । इतीत्यस्यायमित्यनेन संबन्धः । न पञ्चावयवत्वनियमो युज्यत इति तावन्मात्रस्य

सकलशङ्कानिवर्तकत्वाभावेन प्रमेयनिर्णयाभावादिति भावः ॥ **अपि त्विति** । कृत्स्नकथाया एव सकलशङ्कानिवर्तकत्वेन प्रमेयनिर्णायकत्वादिति भावः ।

स० — उदाहरणादित्रयेण आभासोद्धारस्य कृतत्वात् निर्विवादा साध्यप्रतीतिरुपपद्यत इति परेण पृष्टत्वात् तदनुसारेण उदाहरणादिषु चैवं स्यादिति वक्तव्यं, तत्कथं दृष्टान्तादिष्विति वचनम् । तत्राह **दृष्टान्तपदेनेति** । अर्थद्वारेणैव वचने विवादो न स्वातन्त्र्येणेति भावेनोदाहरणमित्यनुक्त्वा तदर्थमित्युक्तम् । **इति शेष इति** । एवमित्यत्र यथा प्रतिज्ञार्थे इति शेषः । साधनमित्यत्र च वक्तव्यमिति शेष इति भावः । **स्यादेवेतीति** । अध्याहृतेन वक्तव्यमित्यनेन स्यादित्यस्य स्यादित्यनेन च एवशब्दसंबन्धः इत्यर्थः ।

प० — उदाहरणादिष्विति वक्तव्यं कथं दृष्टान्तादिष्वित्युक्तिरित्यत आह **उदाहरणार्थमिति** । यो धूमवानसावग्निमान्यथा महानस इति वाक्यस्य योऽर्थः स सर्वोऽपि ग्राह्य इत्यर्थः । एवमित्यनुवादः, यथा प्रतिज्ञार्थे इति व्याख्या । साधनमित्यनुवादेन शेषमाह **वक्तव्यमिति शेष इति** । एवंपदप्रयोगतात्पर्यमाह **प्रतिज्ञार्थेति** ।

श्री० — **तादृशेति** । उद्धृताभासेत्यर्थः । उदाहरणवाक्यार्थे विप्रतिपत्तिर्न वक्तव्यैव । जातायामपि विप्रतिपत्तौ वाक्यमात्रेण तन्निवृत्तिर्भविष्यतीत्यत आह **न चेत्यादिना** । **अनुपलम्भात्** कारणस्येति शेषः । पञ्चावयवेत्यतः पूर्वं यद्युदाहरण एव सर्वशङ्कोद्धारस्तर्हीत्यर्थः । मुद्रणा समाप्तिः ।

सु० — सत्यं निःशेषतो विवादनिवृत्तिर्न पञ्चावयवप्रयोगेऽपि भवतीति । तथाऽप्यवान्तराकाङ्क्षानिवर्तकत्वेन पञ्चावयवमेवावान्तरवाक्यं परिसमाप्यत इत्यत आह लिङ्गेति ।

अनु० — लिङ्गोक्तावपि चैवं स्यादनुमावसितिर्ध्रुवा ॥

चो हेत्वर्थे । अनुमेति तत्संबन्धिवाक्यमुपलक्ष्यते । एवं सति किमत्र प्रमाणमित्यवान्तराकाङ्क्षानिवृत्तिहेतौ धूमवत्त्वमिति लिङ्गोक्तौ कृतायामपि अवान्तरवाक्यपर्यवसानमवश्यं भवतीति तन्मात्रमेव वाक्यमङ्गीकरणीयम् । न तु पञ्चावयवत्वनियतिरिति ।

यदुक्तं स्मरणादिमात्रहेतुत्वेन वाक्यस्योपयोगस्तच्च व्याप्तिवचनमात्रेण भवतीति व्याप्तिरेव वक्तव्येति तदयुक्तम् । तथा सति लिङ्गमात्रवचनस्यापि प्रयोक्तव्यत्वापातात् । संभवति हि तस्यापि व्याप्तिपक्षधर्मतास्मरणादिहेतुत्वमि(ते)त्युक्ताभिप्रायमजानानस्य चोद्यं वा परिहरति लिङ्गेति । यथा व्याप्त्युक्तावेवं लिङ्गोक्तावप्यनुमावसितिर्ध्रुवा स्यात् । इष्टापादनमेतदित्यर्थः । चशब्दः प्रतिज्ञाहेतुगर्भैवेत्याद्युक्तपक्षान्तरसमुच्चये । न चैवं सति व्याप्तिरेवेत्यवधारणानुपपत्तिः ।

**येन येन प्रकारेण व्याप्त्यादिस्मरणादिकं भवति । यश्च सांव्यावहारिकस्तं तमुपादाय नियम-निराकरणस्य तत्रेष्टत्वादित्यभिसन्धिः ।**

**एतेन प्रतिज्ञाहेतुभ्यामुपनयनिगमनयोर्गतार्थताऽपि समर्थिता वेदितव्येति ॥**

**शे०** — ननु लिङ्गोक्तिमात्रस्याप्यवान्तरशङ्कानिवर्तकत्वेनावान्तरवाक्यत्वप्रतिपादनमनर्थकमित्यतः पञ्चावयववाक्यस्य सकलशङ्कानिवर्तकत्वाभावेऽप्यवान्तरशङ्कानिवर्तकत्वेनावान्तरवाक्यत्वात्परोपदेशत्वं वदन्तं प्रति प्रतिबन्दीत्वेन लिङ्गोक्तिमात्रस्य परोपदेशत्वप्रतिपादनार्थत्वान्न तदिति भावेन पञ्चावयववाक्य-स्यावान्तरशङ्कानिवर्तकत्वेन परोपदेशत्वशङ्कानिवर्तकतया तद्योजयितुं तां शङ्कामुत्थापयति **सत्यमिति** । अपिशब्देनैव समुच्चयस्य सिद्धत्वाच्चशब्दानर्थक्यमाशङ्क्य हेत्वर्थत्वान्न तदित्याशयेन चशब्दार्थमाह **चो हेताविति** । लिङ्गोक्तिमात्रेणावान्तरवाक्यपरिसमाप्तेर्वक्तव्यत्वादनुमावसानोक्तिरयुक्तेत्यत आह **अनुमेतीति** । लक्षणामूलभूतशक्यसंबन्धाभावात्कथमनुमाशब्देन वाक्यलक्षणेत्यत उक्तं **तत्संबन्धीति ॥** **उक्ताभिप्रायमिति** । एवशब्दो नियमनिराकरणपरो न तु पक्षान्तरव्यावृत्त्यर्थः, पक्षान्तरस्य स्वयमेव वक्ष्यमाणत्वादित्युक्ताभिप्रायमित्यर्थः ।

**स०** — **उक्ताभिप्रायमजानानस्येति** । व्याप्त्युक्तिरेव परोपदेशः । एव शब्दो नियम-निराकरणपरः । न पुनः पक्षान्तरनिवृत्त्यर्थः । पक्षान्तरस्य स्वयमेव वक्ष्यमाणत्वादित्युक्ताभिप्रायमजा-नानस्येति भावः । **एतेनेति** । नियमस्य निराकरणेन । **प्रायेणेति** । सिद्धसाधनत्वादिव्यावृत्त्यर्थमिद-मुक्तम् ।

**प०** — शंकते **सत्यमिति ॥ अवांतरेति** । व्याप्त्यादिरूपसामर्थ्याद्याकांक्षानिवर्तकत्वेन वा विरुद्धत्वाद्याभासविविक्तत्वरूपाकांक्षानिवर्तकत्वेन वेत्यर्थः । सतीतिपदमध्याहृत्य विशिष्टमनुवदति **एवं सतीति** । अवांतराकाङ्क्षानिवर्तकत्वेनावांतरवाक्यं परिसमाप्यत इत्युच्यमाने सतीत्यर्थः । भवतीती-तिशब्दो हेत्वर्थः । तेन चो हेत्वर्थ इत्युक्तं विवृतं ध्येयम् ॥ **यदुक्तमिति** । यदि स्मारकमात्र-मित्यत्रेति भावः । आदिपदेन लिंगतानुसंधानजिज्ञासयोर्ग्रहः ॥ **उक्ताभिप्रायमजानानस्येति** । यदि स्मारकमात्रमित्यर्थस्य द्वितीयव्याख्यायामेतदुक्तं भवतीत्यादिग्रन्थे संस्कारोद्बोधोपयुक्तं सादृश्यसम्बन्धादिकं किमप्येष्टव्यम् । तद्व्याप्तिवचनेपि समानमित्यादिना यावता स्मृतिर्भवति तावदेव वाच्यमित्युक्ताभि-प्रायमजानानस्येत्यर्थः ॥ **प्रतिज्ञेति** । 'प्रतिज्ञा हेतुगर्भैव हेतुदृष्टान्तरूपिका । तथोपनयरूपा च परा निगमनात्मिके'ति तत्त्वनिर्णयाद्युक्तपक्षान्तरेत्यर्थः ॥ **इत्यभिसंधिरिति** । अत एव एवशब्दो नियम-निराकरणपर इति प्रागेवास्माभिर्व्याख्यातमिति भावः ॥ **इत्यनुमानलक्षणादिनिरूपणम्** ।

या०— **उक्ताभिप्रायमिति** । एवशब्दो नियमनिराकरणपरः । न पुनः पक्षान्तर-निवृत्यर्थः इत्युक्तमभिप्रायमित्यर्थः ॥ छ ॥

च०— **समर्थिता** वेदितव्येति । **इत्यनुमानलक्षणनिरूपणम्** ।

॥ इत्यनुमानलक्षणनिरूपणम् ॥

**सु०— निर्दोषतामन्तर्भाव्य युक्तिरनुमेत्युक्तम् । दोषपरिज्ञान एव तद्वियुक्ता युक्तिः सुज्ञानेत्यतो युक्तिदोषो निरूपणीयः । धूमादेरग्न्यादिप्रमितिजनकत्वेऽपि, यन्निमित्तं कश्चिदर्थोऽर्थान्तरज्ञानं न जनयति, संशयविपर्ययौ वा करोति, स युक्तिदोषः । स द्विविधः साक्षाद्वाचनिकश्च । तत्राद्यं विभागेनोद्दिशति** विरोध इति ।

**अनु०**— विरोधोऽसङ्गतिश्चैव साक्षाद्युक्तेस्तु दूषणम् ॥

**शे०**— ननु विरोधोऽसङ्गतिश्चेत्याद्युत्तरवाक्यमनर्थकम् । न च युक्तिदूषणनिरूपणार्थं तदिति वाच्यम् । युक्तिसामर्थ्यनिरूपणावसरे तन्निरूपणस्याप्यनर्थकत्वात् । न च दोषापरिज्ञाने तद्वियुक्ततया युक्तिज्ञानासंभवात्तज्ज्ञापनार्थं तदिति वाच्यम् । तावता यत्र निर्दोषोपपत्तिरनुमानमित्यादौ निर्दोषत्वेनोपपत्तेर्विशेषणं कृतम् तत्र दोषनिरूपणस्योक्तरीत्याऽऽवश्यकत्वप्राप्तावपीह युक्तिरनुमेत्येवोक्त्या निर्दोषत्वेनोपपत्तिविशेषणाभावेन दोषवियुक्ततया युक्तिज्ञानस्यानावश्यकत्वेन तज्ज्ञापनार्थतया दोषनिरूपणस्यावश्यकत्वानापत्तेरित्यतोऽत्रापि पक्षे उक्तविधयुक्तिज्ञानस्यावश्यकत्वे हेतुप्रदर्शनेन दोषनिरूपणस्यावश्यकतामुपपादयति **निर्दोषतामन्तर्भाव्येति** । नन्वेवं दोषनिरूपणस्यावश्यकत्वे दोषसामान्यलक्षणं तद्विभागमर्थदोषलक्षणं चाभिधायैवार्थदोषोऽभिधातव्यः । सामान्यलक्षणेनैक्यमापन्नस्य वस्तुन एव विभज्योद्देष्टव्यत्वेन दोषलक्षणादिभिर्विनाऽर्थदोषविभागकथनस्यानवसरग्रस्तत्वादित्यतोऽत्र स्पष्टत्वाल्लक्षणाद्यनभिधानेऽप्यर्थदोषविभागकथनं भाष्यकाराणां न दोषायेत्याशयवान्दोषलक्षणम्, अर्थवचनदोषभेदेन तद्विभागमर्थदोषलक्षणं च स्वयमुपदर्श्य तद्विभागकथनपरतयोत्तरवाक्यं योजयितुं दोषलक्षणं तावदाह **धूमादेरित्यादिना** । अत्र लिङ्गतयाऽभिमतस्य कस्यचिदर्थस्य लिङ्गितयाऽभिमतार्थान्तरप्रमितिजनकत्वस्य क्वचित्सत्त्व एव प्रतिबन्धककल्पनावसरो नान्यथेति भावेन धूमादेरग्न्यादिप्रमितिजनकत्वेऽपीत्युक्तम् ॥ **यन्निमित्तमिति** । यस्मिन्सतीत्यर्थः । कश्चिदर्थो लिङ्गतयाऽभिमतोऽर्थान्तरज्ञानं लिङ्गितयाऽभिमतार्थज्ञानं न जनयतीति । अनेन ज्ञानजननशक्तितिरोधायकत्वं दोषत्वमित्युक्तं भवति ॥ **संशयविपर्ययौ वा जनयतीति** । अनेन संशयविपर्ययजननशक्त्याविर्भावयितृत्वं दोषत्वमित्युक्तं भवति । यद्यपि ज्ञानजननशक्तितिरोधायकस्य न संशयविपर्ययजननशक्त्याविर्भावयितृत्वं संशयविपर्ययजननशक्त्याविर्भावकस्य ज्ञानजनशक्तितिरोधायकत्व-

मस्तीति ज्ञानजननशक्तितिरोधायकत्वादिरूपं दोषत्वं परस्पराननुगतम् । तथाऽपि प्रमाप्रतिबन्धकत्वं ज्ञानजनन शक्तितिरोधायकस्य संशयविपर्ययजननशक्त्याविर्भावकस्य चाविशिष्टमिति न परस्पराननुगमः । अयं भावः । लिङ्गाभिमतसाधनजननीयप्रमाप्रतिबन्धकत्वं युक्तिदोषत्वं, तच्च कस्यचिज्ज्ञानजननशक्तितिरोधायकत्वेन कस्यचित्संशयविपर्ययजननशक्त्याविर्भावयितृत्वेन पर्यवसन्नमिति न परस्परानुगमः । यादृच्छिकसंवादिलिङ्गाभिमतजननीयप्रमाप्रतिबन्धकत्वाभावाद्धेतुविरोधेऽव्याप्तिनिरासाय साधनग्रहणमिति ध्येयम् ॥ **स युक्तिदोष इति** । अत्र युक्तिदोषत्वमेव लक्ष्यतावच्छेदकं न तु दोषत्वमात्रम् । तथा सति शङ्खत्वादिलिङ्गकश्वैत्यप्रमाप्रतिबन्धकत्वाभावात्पित्तादेस्तत्राव्याप्तिप्रसक्तेः । अत एवात्र युक्तिपदम् । पद्धतौ च दोषपदं युक्तिदोषपरमेव । के तत्रोपपत्तिदोषा इत्युपक्रमात्करिष्यमाणदोषविभागस्य तत्रैव संभवाच्चेत्यवधेयम् । स्वार्थानुमानपरार्थानुमानदोषविवेकार्थं दोषविभागमाह **स द्विविध इति** । स्वार्थानुमानस्योक्तरीत्या परार्थानुमानादभ्यर्हितत्वेन दोषस्याप्यभ्यर्हितत्वात्साक्षादित्यनेन तस्यैव प्रथमं निर्देशः ॥ **आद्यं विभागेनोद्दिशतीति** । यद्यपि समानलक्षणेनैक्यमापन्नस्यैव वस्तुनो विभज्योद्देष्टव्यत्वात्साक्षादुपपत्तिदोषलक्षणाभिधानपूर्वक एव तद्विभागोद्देश उचितस्तथाऽप्युपपत्तेरेव साधनदूषणाक्षमत्वापादकः साक्षादुपपत्तिदोष इति लक्षणस्य स्पष्टत्वेन शिष्यैरेव तदूह्यतामित्याशयेन तल्लक्षणानभिधानमिति ध्येयम् ।

---

प० — निर्दोषयुक्तिरनुमेत्यनुक्तेर्विरोधादिदोषोक्तेरसंगतिनिरासायोक्तम् **निर्दोषतामंतर्भाव्येति** ॥ तथैव प्राग्व्याख्यानादिति भावः । दोषसामान्यलक्षणं तावदाह **धूमादेरिति** ॥ **जनकत्वेऽपि** जननशक्तिमत्त्वेऽपीत्यर्थः । धूमादेरिति प्रकृताप्रकृताभिप्रायेण । **कश्चिदर्थो** लिंगादिः । ज्ञानजननशक्तिमतः करणस्य ज्ञानरूपफलोपधानप्रतिबन्धकं वा सहजशक्तिं प्रतिबध्य विपरीतज्ञानजननशक्त्याधायकं वा यत् स दोष इत्यर्थः ।

या० — **यन्निमित्तमिति** । यस्मान्निमित्तादित्यर्थः । **कश्चिदर्थो** लिङ्गतयाऽभिमतः । **अर्थान्तरज्ञानं** लिङ्गितयाऽभिमतज्ञानम् । अनेन 'प्रमाप्रतिबन्धकत्वं दोषत्वं' तच्च द्वेधा ज्ञानाजनकत्वेन वा संशयविपर्ययजनकत्वेन वे'त्युक्तं भवति । ननु प्रमाप्रतिबन्धकत्वं तदा कल्पनीयं यदि कस्यचिदर्थस्यार्थान्तरप्रमाजनकत्वं स्यादित्यत उक्त **धूमादेरग्न्यादेरिति** ॥

च० — दोषसामान्यलक्षणं तावदभिधत्ते **धूमादेरिति** ॥ **यन्निमित्तमिति** । यस्मान्निमित्तादित्यर्थः । **कश्चिदर्थः** साधनाभिमतः । **अर्थान्तरज्ञानं** साध्याभिमतार्थज्ञानम् । तथा च साध्याभिमतगोचरं ज्ञेयम् ।

सु० — **प्रायेणानुमानदोषो(।) विरोध एवान्तर्भव(न)तीति प्राधान्यात्प्रथमं तदुद्देशः । एवेति परपरिसङ्ख्यातमाधिक्यं निराकरोति । दोषाणां सतामत्रैवान्तर्भावात् । अनन्तर्भूतानां च दोषत्वनिरासात् ।।** साक्षादिति । **वचनोपधानेन विना अर्थनिष्ठम् (उक्तं)(उक्त)युक्तेः सामर्थ्यम् । दूषणं त्विति तुशब्दसंबन्धः, साक्षात्त्विति वा । युक्तेर्युक्तित्वाभिमतस्यार्थस्य ।**

शे० — ननु साध्यसम्बन्धरहितरूपस्य व्याप्यत्वासिद्धस्योभयसम्बन्धाभावरूपाव्याप्तित्वेन, सोपाधिकस्य च तस्य दशाभेदेनाव्याप्तिप्रतिज्ञासमबलप्रमाणविरोधरूपत्वेन, विरुद्धस्य च साध्यसम्बन्धाभावे सति तदभावेनैव सम्बन्धरूपाव्याप्तित्वेन, अनैकान्तिकस्य च साध्यतदभावसम्बन्धरूपाव्याप्तित्वेन, अनध्यवसितस्यापि पक्ष एव वर्तमानत्वेन व्याप्तिग्रहणानुपपत्त्याऽव्याप्तित्वेन, कालातीतस्य प्रतिज्ञाप्रबलप्रमाणविरोधत्वेन, सत्प्रतिपक्षस्य च प्रतिज्ञासमबलप्रमाणविरोधत्वेन, व्याप्यत्वासिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टसत्प्रतिपक्षाणां विरोधान्तर्भावेऽपि, सिद्धसाधकरूपस्याश्रयासिद्धभेदस्य व्यर्थविशेषणासिद्ध्यादिरूपस्य पक्षधर्मत्वासिद्धभेदस्य च प्रतिज्ञार्थविरुद्धत्वादिरूपवक्ष्यमाणविरोधप्रकारत्रयानन्तर्भावान्न विरोधान्तर्भावोऽस्ति । न चानुमानदोषाणामत्रान्तर्भावोऽभिमतः सिद्धसाधकादेश्च तददोषत्वाद्विरोधानन्तर्भावो न दोषायेति वाच्यम् । 'सिद्धसाधकोऽसङ्गतः' 'सिद्धप्रश्नादिकं यत्तदाधिक्यान्तर्गतं भवेदि'त्यादौ सिद्धसाधनतायाः असङ्गतौ व्यर्थविशेषणत्वादेश्चाधिक्येऽन्तर्भावप्रतिपादनेन तद्दोषत्वस्य स्थितत्वात् । अन्यथा अन्तर्भा प्रतिपादनानर्थक्यात् । तत्कथमनुमानदोषाणां विरोध एवान्तर्भावो येन प्राधान्यं विरोधस्येत्यत आश्रयासिद्धपक्षधर्मत्वासिद्धप्रभेदानां सिद्धसाधकत्वादीनामसङ्गतत्वाधिक्यान्तर्भूततया विरोधेऽन्तर्भावाभावेऽपि तद्व्यतिरिक्तानां व्याप्यत्वासिद्धादीनामशेषानुमानदोषाणां विरोधेऽन्तर्भावात्तन्निबन्धनं प्राधान्यं विरोधस्याक्षतमेवेत्याशयवतोक्तं **प्रायेणेति** । मूले एवकारानर्थक्यमाशङ्क्य परपरिसङ्ख्यातानुमानदोषाधिक्यनिरासार्थत्वान्न तदिति भावेनाह **इहैवेतीति** । कथमवधारणमात्रेण परपरिगणितानामसिद्धत्वादीनां बहूनां दोषाणां निरास इत्यतोऽवधारणबललब्धमभिप्रायमाह **दोषाणां सतामिति** । विरोधासङ्गतिपदाभ्यामगृहीततया ततोऽन्यत्वशङ्काकलङ्कितानां व्याप्यत्वासिद्धादीनामत्रैव विरोधासङ्गत्योरेवान्तर्भावादित्यर्थः । अन्तर्भावप्रकारश्चोक्तरीत्या बोध्यः ॥ **अनन्तर्भूतानां चेति** । विरोधासङ्गत्यनन्तर्भूतानामाश्रयसाध्यव्यधिकरणासिद्धीनाम् 'आश्रयव्याश्रयासिद्धी साध्यासिद्धश्च दूषणम् । केषाञ्चिन्न च ते दोषा व्याप्तौ सत्यां कथञ्चने'त्यादिना भक्तिपादे दोषत्वनिरासादित्यर्थः । तथाऽपि साक्षात्पदमनर्थकमित्यतो वचनद्वारेण न्यूनाधिक्ययोरप्युपपत्तिदोषत्वान्न विरोधासङ्गत्योरुपपत्तिदोषत्वावधारणं संभवतीति शङ्कानिरासार्थं तदिति भावेनोक्तशङ्कानिरासोपयोगितया तद्व्याचष्टे **साक्षादिति** । यथास्थितान्वये आन-

र्थक्यप्रसङ्गाद्भिन्नक्रमतामाश्रित्य तदन्वयबललब्धमर्थविशेषमाह **उक्तमिति** । 'व्याप्तिरेव तु सा स्मृता, इत्यादिनेति शेषः । तथा च पूर्ववाक्यानामिवास्यापि सामर्थ्यप्रतिपादकत्वशङ्कानिरासस्तत्प्रयोजन-मित्युक्तं भवति । यदि युक्तिर्न तस्याः दूषणमस्ति, यदि च दूषणमस्ति, कथं तर्हि सा युक्तिस्ततो युक्तेर्दूषण-मिति विप्रतिषिद्धमेतदित्यतो व्याचष्टे **युक्तेरित्यादिना** ।

**स०** — **आधिक्यमिति** । दोषाणामिति शेषः । निराकरणप्रकारमेव दर्शयति **दोषाणां सतामिति** ।

**प०** — सिद्धसाधनत्वादेरसंगतावन्तर्भावस्य प्रतिज्ञार्थविरुद्धतेत्यादिव्याख्यावसरे वक्ष्यमाणत्वा-त्प्रायेणेत्युक्तम् ॥ **दोषाणां सतामिति** । सव्यभिचारादीनां ॥ **अनंतर्भूतानामिति** । आश्रयासिद्धि-व्यधिकरणासिद्ध्यादीनामित्यर्थः ॥ **उक्तेति** । 'व्याप्तिरेव तु सा स्मृते'त्यत्र या युक्तिर्व्याप्यरूपोक्ता तस्याः यद्व्याप्तिरूपं समुचितदेशवृत्तित्वरूपं सामर्थ्यं तद्दूषणं तु तद्विरोधिरूपं त्वित्यर्थः । उक्तं युक्तेः सामर्थ्यमिति पाठः । एतच्च दूषणं त्विति तुशब्दव्यावर्त्यकथनमिति ज्ञेयं । व्याघातनिरासायाह **युक्तेर्युक्तित्वाभिमतस्येति** ।

**या०** — **प्रायेणेति** । इदं च सिद्धसाधकत्वव्यर्थविशेषणत्वादिव्यावृत्त्यर्थम् । सिद्धसाध-कत्वस्यासङ्गतौ व्यर्थविशेषणत्वादेश्चाधिक्येऽन्तर्भावस्य वक्ष्यमाणत्वात् ॥ **अनन्तर्भूतानां चेति** । आश्रयसाध्यव्यधिकरणासिद्धीनामित्यर्थः ।

**श्री०** — अनुमानदोषभूतसिद्धसाधकताया विरोधान्तर्भावाभावात् **प्रायेणेत्युक्तम्** ॥ **अनुमान-दोषाः** असिद्ध्यादयः ॥ **परेति** । 'हेत्वाभासाः पञ्चधा त' इतीत्यर्थः । निर्दोषिताघटितयुक्तौ कथं दोषोक्तिर्व्याहतत्वादित्यत आह **युक्तेरिति** । 'अत्रापि गौणो निर्देशः' इत्यस्याप्येवमेव लापनिका । **सङ्गतिः** संबन्धः, असङ्गतिः असंबन्ध इति पर्यायाविति द्रष्टव्यम् ।

**च०** — **प्रायेणेति** । सिद्धसाधकत्वस्यासङ्गतौ व्यर्थविशेषणत्वादेश्चाधिक्येऽन्तर्भावस्याभिधास्य-मानतया तद्व्यवच्छेदायेदमुपात्तम् ॥ **अनन्तर्भूतानां चेति** । विरोधासङ्गत्यनन्तर्भूतानामाश्रयसाध्य-व्यधिकरणासिद्धीनां भक्तिपादे दोषत्वनिरासादित्यर्थः ।

**सु०** — **साधनाभिमतस्यार्थस्य साध्याभिमतेनार्थेन संभावितप्रतीतिकस्यापि साध्य-साधनभावस्य बाधलक्षणमयोग्यत्वं विरोध इति शिष्यैरेवोह्यतामित्याशयवानसङ्गतिं निरूपयति** प्रतिज्ञायामिति ।

**अनु०** — प्रतिज्ञायामसंबन्धो युक्तेरुक्ता ह्यसङ्गतिः ॥

प्रतिज्ञापदेन तदर्थो लक्ष्यते । विषयसप्तमीयम् । असंबन्धोऽत्राकाङ्क्षालक्षणसंबन्धविरहः । अत्रापि युक्तेरिति गौणो निर्देशः । असंबन्धोऽसङ्गतिरिति पर्यायावित्यतो व्यवहारसाध्यतासूचनायोक्तेत्युक्तम् । विरोधासङ्गतिस्वरूपस्य स्फुटत्वादन्यैरुपदर्शितत्वाच्च किमत्रोदाहरणोपदर्शनेनेति हिशब्देनाह ।

शे० — विरोधोऽसङ्गतिश्चेत्युद्देशक्रमानुसारेण विरोधासङ्गत्योरुभयोरपि क्रमेणैव निरूपणीयत्वाद्विरोधमनिरूप्य मूलेऽसङ्गतिमात्रनिरूपणमनुचितमित्याशङ्कां विरोधानिरूपणे निमित्तोक्त्या परिहरन्नुत्तरवाक्यानर्थक्यं परिहरति **साधनाभिमतस्येत्यादिना** । स यबन्धादिकथारूपसाधारणविरोधव्यावृत्त्यर्थं साध्यसाधनभावस्येत्युक्तम् । साधनाभिमतस्येत्यादि तु तन्निरूपककथनमात्रं न लक्षणान्तर्गतम् । विरोधिनोर्वास्तवसाधनत्वाद्यसम्भावादुभयत्राभिमतपदम् ॥ **सम्भावितप्रतीतिकस्यापीति** । साकाङ्क्षस्यापीत्यर्थः । एतद्विशेषणप्रयोजनं तु, नन्वेवं सति सिद्धसाधनताऽपि विरोध एव स्यादित्यादिनाऽऽशङ्कासमाधानाभ्यामनुपदमाकर एव स्पष्टम् । अत्र साध्यभावः साध्यत्वम् । साधनभावः साधनत्वम् । तत्र साध्यत्वस्य बाधो नाम साध्यप्रमितिजनकप्रमाणस्य प्रतिस्पर्धिसद्भावः । साधनत्वस्य बाधश्च लिङ्गराहित्याव्याप्तिरूपो द्रष्टव्यः । तत्राप्येकैकमात्रग्रहणे हेतुप्रतिज्ञाविरोधयोरव्याप्तिप्रसङ्गात्साध्यसाधनभावस्येत्युभयग्रहणं कृतम् । दृष्टान्तविरोधस्य चालक्ष्यतायाः उत्तरत्राकर एव स्पष्टत्वान्न तद्विरोधेऽव्याप्तिः । बाध इत्येव वक्तव्ये बाधलक्षणमयोग्यत्वमिति वचनं च यथा सङ्गतेराकाङ्क्षाविरहरूपतया न्यूनादेश्च सन्निध्यभावविशेषतया दोषत्वं तथा विरोधस्यापि योग्यताविरहरूपतया दोषत्वमिति ज्ञापयितुमिति मन्तव्यम् ।

नन्वाकाङ्क्षायाश्चेतनमात्रवृत्तित्वेनान्यत्रावृत्त्याऽत्र विवक्षिताकाङ्क्षालक्षणसम्बन्धाभावस्य पक्षवचनरूपप्रतिज्ञायां सर्वत्र सत्त्वेनानुमानमात्रे युक्तेरसङ्गतिप्रसङ्गेन दुष्टत्वापत्त्या युक्तितदाभासव्यवस्था न स्यादित्यतः पक्षवचनरूपप्रतिज्ञावाचकेन प्रतिज्ञापदेनात्र प्रतिज्ञार्थस्य लक्षणया ग्रहणात्प्रतिज्ञायामाकाङ्क्षालक्षणसम्बन्धाभावस्य सार्वत्रिकत्वेऽपि प्रतिज्ञार्थे तस्यासार्वत्रिकत्वाद्यत्र प्रतिज्ञार्थे आकाङ्क्षाविरहस्तत्रासङ्गतिप्रसक्त्या युक्तेर्दुष्टत्वेऽपि यत्र न तद्विरहस्तत्रासङ्गत्यप्रसक्त्या युक्तेरदुष्टत्वोपपत्तेर्युक्तैव युक्तितदाभासव्यवस्थेत्याशयवानाह **प्रतिज्ञापदेनेति** । लक्षणाबीजभूतशक्यसम्बन्धाभावात्कथं प्रतिज्ञापदेन तल्लक्ष्येत्यत उक्तं **तदर्थ इति** । भवेदेतदेवं यदि प्रतिज्ञार्थे क्वचिदाकाङ्क्षाविरहः । क्वचित्सद्भावश्च स्यात् । न चासावस्ति । आकाङ्क्षायाश्चेतनमात्रवृत्तित्वेन प्रतिज्ञायामिव तदर्थेऽपि सर्वत्राकाङ्क्षाविरहस्यैव सत्त्वात्कथमुक्तव्यवस्थेत्यतो भवेदेवं प्रतिज्ञार्थे आकाङ्क्षाविरहस्य सार्वत्रिकत्वम् । यद्यत्र प्रतिज्ञायामित्यधिकरणसप्तमी स्यान्न चैवं, विषयसप्तमीयम् । ततश्च प्रतिज्ञायामसंबन्ध इत्यनेन प्रतिज्ञार्थविषयकाकाङ्क्षाविरहोक्तावपि

प्रतिज्ञार्थस्याकाङ्क्षाविषयताविरहस्यैव पर्यवसन्नत्वात्प्रतिज्ञार्थस्य सर्वत्राकाङ्क्षाविरहवत्त्वेऽप्याकाङ्क्षाविषयत्व-विरहवत्त्वाभावात् यत्र प्रतिज्ञार्थे आकाङ्क्षाविषयत्वविरहस्तत्रानाकाङ्क्षितसाधनाय प्रयुक्तत्वेन युक्तेर-सङ्गतिप्राप्तावपि यत्र प्रतिज्ञार्थस्याकाङ्क्षाविषयत्वविरहो न तत्राकाङ्क्षितस्यार्थस्य साधनाय प्रयुक्तत्वाद्युक्तेस्त-दप्राप्त्योक्तरीत्योक्तव्यवस्थोपपन्नैवेत्याशयेनाह **विषयसप्तमीयमिति** । न चैवं प्रतिज्ञापदेन तदर्थलक्षणाश्रयण-मनर्थकम् । विषयसप्तम्याश्रयणेन लब्धस्याकाङ्क्षाविषयत्वराहित्यस्य प्रतिज्ञायां भावाभावाभ्यामप्युक्त-व्यवस्थाया उपपादयितुं शक्यत्वादिति वाच्यम् । प्रतिज्ञार्थस्यैव सर्वत्राकाङ्क्षाविषयत्वेन प्रतिज्ञाया आकाङ्क्षाविषयत्वस्य क्वाप्यभावेन तद्भावाभावाभ्यामुक्तव्यवस्थाया उपपादयितुमशक्यत्वेनतदर्थलक्षणा-श्रयणस्यावश्यकत्वादित्याशयात् । ननु भवेदेतत्सर्वं यद्याकाङ्क्षाविरहोत्राभिमतः स्यान्न चैतदस्ति । श्रुतस्य संबन्धमात्राभावस्य परिग्रहे बाधकाभावेन तत्परिग्रहस्य निर्निबन्धनत्वादित्यत आह **असंबन्धोऽत्रेति** । अन्यथा विरोधेऽतिव्याप्तिप्रसङ्गात्तत्रापि प्रतिज्ञार्थे युक्तेरसंबन्धस्याविशिष्टत्वादिति भावः ॥ **गौण इति** । युक्तित्वाभिमतपर इत्यर्थः । असङ्गतिदोषदुष्टस्य मुख्ययुक्तित्वासंभवादिति भावः । मूले युक्तेत्यंशस्य वैयर्थ्यमाशङ्क्य लक्ष्यलक्षणभावानुपपत्तिशङ्कापरिहारार्थत्वान्न तदिति भावेन तदनुपपत्तिशङ्का-मुत्थापयति **असंबन्ध इति** ॥ **पर्यायावितीति** । ततश्च न लक्ष्यलक्षणभावः । ज्ञातत्वाज्ञातत्वप्रसङ्गे-नाभेदे तदनुपपत्तिरिति भावः ॥ **अन्यैरिति** । तथा च तदुपदर्शितानि बाधाद्युदाहरणान्येव विरोधा-दीनामुदाहरणानीति भावः ।

स० — **साधनाभिमतस्येति** । अत्र साध्यसाधनभावस्य बाधलक्षणमयोग्यत्वमित्येव विरोध-लक्षणमभिमतम् । अस्यार्थः साध्यभावः साध्यत्वम् । तस्य बाधः प्रतिस्पर्धिप्रमाणसद्भावः । तल्लक्ष-णमयोग्यत्वम् । साधनत्वलक्षणस्य साधनभावस्य लिङ्गराहित्याव्याप्तिरूपबाधलक्षणमयोग्यत्वं च विरोध इति । अत्र प्रतिज्ञार्थविरुद्धत्वलिङ्गराहित्याव्याप्तीनां विरोधविभागत्वस्य वक्ष्यमाणत्वात्तत्साधारण्या-योपादानम् । तथा हि गन्धप्रागभावावच्छिन्नो घटो गन्धवानित्यत्र साधनत्वाभिमतस्य पृथिवीत्वस्य लिङ्गराहित्याव्याप्त्योरभावेन साधनत्वेऽपि गन्धवत्त्वस्य प्रतिस्पर्धिबाधरूपप्रमाणेऽपि सत्त्वाद्विरोधरूपत्वम् । शब्दो नित्यश्चाक्षुषत्वादित्यादौ साध्यत्वाभिमतस्य प्रतिस्पर्धिबाधादिरूपप्रमाणोपेतत्वाभावेन साध्यभावे सत्यपि लिङ्गराहित्यरूपसाधनभावबाधस्य सत्त्वात् युक्तं विरोधत्वम् । व्यभिचारिणि प्रमेयत्वादौ च साध्य-त्वाभिमतस्य प्रतिस्पर्धिप्रमाणशून्यत्वेन साध्यभावे सत्यपि साधनस्याव्याप्त्या साधनबाधरूपविरोधस्य सत्त्वात् । न च बाधे पक्षस्यैव विपक्षत्वेन तत्र वर्तमानस्य हेतोर्व्यभिचारित्वेनाव्याप्त्यवश्यम्भावात् कथं पृथिवीत्व-हेतोः साधनस्य सत्त्वेऽपि साध्यस्यैव प्रतिस्पर्धिप्रमाणे तत्स्वरूपबाधवर्णनमिति वाच्यम् । बाधात्पूर्वं स्थलान्तरे व्यभिचारस्यादर्शनमात्रेणैव तदुपपत्तेः । बाधप्रयुक्तपक्षीयव्यभिचाराभावस्यानभिप्रेतत्वात् ।

अत्र च साधनाभिमतस्येत्यादिसंभावितप्रतीतिकस्यापीत्यन्तं विशेषणं विरोधस्य दोषत्वोपपादककारण-पौष्कल्यसूचनार्थम् । अन्यथा साधनाभावादेव कार्याभावोपपत्तौ बाधस्य तत्कत्वानुपपत्त्या दोषत्वाभाव-प्रसंगात् । वस्तुतस्तु साध्यत्वसाधनत्वादेरसत्त्वेन विनाशरूपबाधाप्त्यसंभवात् । बाधो नाम पूर्वज्ञानप्रस-ञ्जितान्यथाकारस्य लोडनमिव इति वाच्यम् । तच्च साध्यत्वादेः प्रसञ्जितत्वाभावे न संभवतीति प्रसञ्जित-त्वमुपपादयितुं संभावितप्रतीतिकस्येति विशेषणं सार्थकमेवेति द्रष्टव्यम् । असंगतावतिव्याप्तिपरिहाराय साकाङ्क्षत्वे सतीत्यपि विशेषणीयमिति । वक्ष्यति चैतत्स्वयमेव ॥ युक्तिदोषस्यैव कथ्यमानत्वेन प्रतिज्ञाया-मित्येतदनुपपन्नमित्यत आह **प्रतिज्ञापदेनेति** ॥ **अत्रापीति** । युक्तित्वाभिमतपरो युक्तिशब्द इत्यर्थः ।

प० — असंभावितसाध्यसाधनभावे मेरुमन्दरादौ साध्यसाधनभावबाधलक्षणायोग्यत्वभावा-दतिव्याप्तिनिरासाय **संभावितेत्यादि** । अत एव योग्यताभावो विरोध इति पद्धत्याद्युक्तं विवृतं बोध्यम् ॥ **तदर्थ इति** । साध्यधर्मविशिष्टधर्मिरूपोर्थ इत्यर्थः ॥ **गौण इति** । युक्तित्वाभिमतपरोऽयं युक्तिशब्द इत्यर्थः ॥ **अन्यैरिति** । तार्किकैः प्रदर्शितासिद्ध्याद्युदाहरणानामस्माकम(?संगत्या)विरोधादिति भावः ।

या० — मूले विरोधसामान्यलक्षणानुक्तेर्न्यूनतां परिहर्तुमाह **साधनाभिमतस्येति** । अत्र समयबन्धादिसाधारणविरोधस्य व्यावृत्त्यै **साधनाभिमतस्येत्यादि** । विरोधिनो वास्तवसाधनत्वाद्यभावात् असम्भवपरिहारायाभिमतपदद्वयम् । अपार्थकसिद्धसाधकाद्यसङ्गतव्यावृत्त्यै **सम्भावितप्रतीतिकस्यापीति** । साकाङ्क्षस्यापीत्यर्थः । साध्यसाधनभावस्येत्युभयग्रहणम् एकैकमात्रग्रहणे क्रमेण हेतुप्रतिज्ञाविरोधयोरव्याप्ति-परिहारार्थम् । न चैवं दृष्टान्तविरोधेऽव्याप्तिः । अत्र तदलक्ष्यताऽभिप्रायस्याग्रे स्फुटत्वात् । बाध इत्येव वक्तव्ये बाधलक्षणमयोग्यत्वमिति वचनं यथाऽसङ्गतेराकाङ्क्षाविरहरूपतया दोषत्वं न्यूनतादेश्च सन्निध्यभाव-रूपतया तथा विरोधस्य तु योग्यताविरहरूपतयेति दर्शयितुमिति ज्ञातव्यम् । ननु सम्बन्धस्य विषयानपेक्ष-त्वात्कथं विषयसप्तम्युपपत्तिरित्यत आह **आकाङ्क्षालक्षणेति** । एवं च यथाश्रुतमूलोक्तलक्षणे प्रतिज्ञा-विरोधेऽतिव्याप्तिरिति शङ्काऽनवकाशः ॥ **गौण इति** । युक्तित्वाभिमतपरो युक्तिशब्द इत्यर्थः ॥ **अन्यै-रिति** परैरुपदर्शितानि बाधाद्युदाहरणान्येवास्माकं विरोधाद्युदाहरणानि भविष्यन्तीति भावः ॥

च० — मूलकाराः विरोधसामान्यलक्षणं नाभ्यधुरिति तन्नियन्त्रितन्यूनतां परिजिहीर्षति **साधनाभिमतस्येति** ।

**सु० — ननु कथं द्वे एवानुमानदूषणे परपरिगणितानामसिद्धत्वादीनां बहूनां सत्त्वा-दित्यतस्तेषामत्रान्तर्भावं विभावयितुं विरोधविभागमाह** विरोधोऽपीति ।

अनु० — विरोधोऽपि त्रिधैव स्यात्

**सामान्यविभागेन सह विशेषविभागस्य समुच्चये अपिशब्दः । असङ्गतिरप्यनेकविधेति वा त्रिधैव न त्वेकविधैव येनासिद्ध्यादीनामन्तर्भावो दुर्घटः स्यात् । यद्वा यावन्तोऽनुमानाभासाः परपरिगणितास्तावद्भेदतां नि(राकर्तु)वर्तयितुमेवशब्दः । सर्वेषामत्रैवान्तर्भावात् ।**

**त्रैविध्यं दर्शयति** प्रतिज्ञार्थेति ।

अनु० — प्रतिज्ञार्थविरुद्धता ॥

लिङ्गराहित्यमव्याप्तिः

**साध्यधर्मविशिष्टो धर्मी प्रतिज्ञार्थः । तस्य प्रतिस्पर्धिसद्भावो विरुद्धता । यत्रार्थे लिङ्गप्रमितिः साध्यसिद्ध्युपयोगिनी तत्र तदभावो लिङ्गराहित्यम् । व्याप्तेरभावोऽव्याप्तिः । इतिशब्दोऽध्याहार्यः ।**

**शे०** — ननु विरोधोऽपीत्युत्तरवाक्यमनर्थकम् । न च विरोधविभागकथनपरं तदिति वाच्यम् । प्रयोजनाभावेन तस्याकर्तव्यत्वात् । न चासिद्ध्यादीनां विरोधान्तर्भावज्ञापनार्थत्वान्न तदानर्थक्यमिति वाच्यम् । अन्तर्भावज्ञापनस्यापि निष्प्रयोजनत्वादित्यतो विरोधोऽसङ्गतिश्चेत्युक्तोपपत्तिदूषणद्वैविध्यनियमसिद्ध्यर्थत्वात्तदन्तर्भावव्युत्पादनस्यार्थवत्त्वादिति भावेन नियमानुपपत्तिशङ्कामुत्थापयति **नन्विति** । ननु च दोषत्रैविध्यस्य प्रागनुक्तत्वेन तत्समुच्चायकत्वानुपपत्तेस्तत्समुच्चयार्थकापिशब्दानर्थक्यमित्यतो नात्र त्रैविध्यसमुच्चयार्थोऽपिशब्दः किन्तु न केवलमुपपत्तिदोष एवावान्तरविभागवान्किन्तु विरोधोऽपीत्येकस्मिन्नवान्तरविभागवत्तामात्रे दोषविरोधयोः समुच्चयार्थ इत्यतो न वैयर्थ्यमित्याशयेनाह **सामान्येति** । त्रैविध्यसमुच्चायकस्य अपिशब्दस्यावान्तरविभागवत्त्वमात्रसमुच्चायकत्वेऽस्वारस्यमित्यपरितोषादाह **असङ्गतिरपीति** । प्रतिज्ञार्थलिङ्गव्याप्तिरूपविषयभूतसम्बन्धिभेदेन त्रिविधेत्यर्थः ॥ **अन्तर्भावादिति** । अनन्तर्भूतानां च दोषत्वनिरासादिति भावः ।

**साध्यधर्मेति** । यद्यप्यत्र साध्यशब्दो न सन्दिग्धपरः प्रमाणसम्प्लववादिना निश्चितेऽप्यर्थेऽनुमानप्रवृत्तेरङ्गीकारात् । नापि प्रज्ञापनीयपरः । स्वार्थानुमाने प्रयोज्यकर्तुरभावेन प्रज्ञापनाभावात् । नापि प्रमित्सितपरः । अनिष्टानुमानाभावप्रसङ्गात् । तथाऽपि लिङ्गजननीयप्रतीतिविषयपरतायां नानुपपत्तिः । एतच्च सपक्षव्युदासाय विशेषणम् । अग्निमात्रस्य सिद्धत्वेऽपि पर्वतसम्बन्धितया तस्यासिद्धेस्तेन रूपेण साध्यत्ववत्पर्वतमात्रस्य सिद्धत्वेऽप्यग्निसम्बन्धितता तस्यासिद्धेरग्निविशिष्टपर्वतस्यापि साध्यत्वात् तद्विशिष्टस्यान्यस्य पक्षत्वं स्यात्तन्निवृत्त्यर्थं धर्मग्रहणम् । धर्ममात्रस्य प्रागेव सिद्धत्वेन स्वरूपेण साध्यत्वानुपपत्तावपि धर्मिनिष्ठतया साध्यत्वं भविष्यतीति भावेन विशिष्ट-

ग्रहणम् । साध्यधर्मविशिष्टत्वं च साध्यधर्मसम्बन्धित्वं तच्चाश्रयतया धर्मिण इव व्याप्यतया साधनस्याप्यविशिष्टमिति तत्रातिव्याप्तिपरिहारायात्र धर्मिग्रहणं कृतम् । साध्यधर्मविशिष्टः पक्ष इत्यत्र धर्मिपदानुपादानं तु विशिष्टपदस्यैव धर्मधर्मिभावरूपसम्बन्धविशेषपरत्वविवक्षया साधनधर्मादावतिव्याप्तिपरिहारसिद्धेर्न तदर्थं पृथक् तदपेक्षेत्यभिप्रेत्यैवेति तट्टीकायामेव स्पष्टमिति न तद्विरोध इति द्रष्टव्यम् ॥ **प्रतिस्पर्धीति** । यद्यप्यत्र प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोध इति प्रमाणलक्षणानुसारेण प्रतिप्रमाणसद्भाव इति वक्तव्यम् । तथाऽपि तथोक्तौ स्ववाक्यविरोधस्याग्रहणप्रसंगात्तत्संग्रहाय प्रतिस्पर्धिसद्भाव इत्येवोक्तम् । प्रमाणलक्षणे तु प्रमाणविरोध एव प्रायेण सर्वहेत्वाभासानामन्तर्भावात्तस्यैव ग्रहणं कृतम । न तु स्ववाक्यविरोधस्येत्यवधातव्यम् ॥ **यत्रार्थ इति** । समुचितदेशादावित्यर्थः । स च क्वचित्पक्षः क्वचिदन्य एव । इयं च व्यवस्था व्याप्तिग्रहणप्रकारानुसारेणानुसन्धेया । लिङ्गमित्येव वक्तव्ये लिङ्गप्रमितिरिति वचनं तु तत्प्रमित्यसिद्धिसंग्रहायेति ध्येयम् । प्रतिज्ञार्थविरुद्धतेत्यादेः प्रतिज्ञातविरोधत्रैविध्योपदर्शकत्वलाभापेक्षिताध्याहारमाह **इतिशब्द इति** ।

**स०— साध्यधर्मविशिष्ट इति** । धर्मीत्यनुक्तौ साध्यधर्मविशिष्टस्य पदार्थान्तरत्वेन तत्र साध्यसाधनयोरभावेन बाधासिद्धी स्याताम् । अतः धर्मीत्यावश्यकम् । तदर्थस्तु विशेष्य इति ।

**प० — अनेकधेति** । ते च प्रकाराः पद्धत्यां प्रतिज्ञाहेतुदृष्टान्तसंबन्धभेदेनेति लक्षणटीकायां चेत्यादिग्रन्थेन व्यक्ता इति भावः ॥ **अन्तर्भावादिति** । स च पद्धतिलक्षणटीकयोर्व्यक्तः ॥ **प्रतिस्पर्धेति** । अभावावेदक इत्यर्थः ॥ **यत्रेति** । स्वोचितस्थले पक्षे तदन्यत्र चेत्यर्थः ॥ **व्याप्तेरिति** । प्रागुक्ताविनाभावरूपाया इत्यर्थः ॥ **अध्याहार्य इति** । अव्याप्तिरितीत्यध्याहार्यः । अन्यथा प्रत्येकं त्रैविध्यधीः स्यादिति भावः ।

**या० — अनेकविधेति** । प्रतिज्ञार्थलिङ्गव्याप्तिरूपविषयभेदेनासङ्गतिरप्यनेकविधेत्यर्थः । प्रतिप्रमाणसद्भाव इत्यनुक्त्वा प्रतिस्पर्धिसद्भाव इत्युक्तिः स्ववाक्यविरोधसंग्रहायेति ज्ञातव्यम् ॥ **यत्रार्थ इति** । पक्षेऽन्यत्र वा समुचितस्थल इत्यर्थः । लिङ्गमिति वक्तव्ये लिङ्गप्रमितिरिति वचनमज्ञानासिद्धिसंग्रहाय ।

**सु० साध्यसाधनभावसंबन्धयोग्यताविरहो हि साध्यसाधनाभिमतयोस्तद्भावासंभवे भवति । न च साधनस्य तद्भावेऽपि विरुद्धस्य साध्यता संभवति । निशितत्वेऽपि परशोराकाशस्य छेद्यताभावात् । नापि साध्यस्य तथात्वसंभवेऽप्यसमर्थस्य साधनतोपपद्यते । छेद्यत्वेऽपि काष्ठस्य कुण्ठकुठारस्य छेदन(क)त्वाभावात् । अतः प्रतिज्ञार्थविरुद्धतादीनां युक्तं विरोधित्वम् ।**

शे० — ननु प्रतिज्ञार्थविरुद्धतादेः कथं विरोधविभागत्वमित्यतस्त्रयाणामपि विरोधसामान्यलक्षणयोगित्वादिति भावेन त्रिष्वपि सामान्यलक्षणानुगममाह **साध्यसाधनेति** । तथा च प्रतिज्ञार्थविरुद्धस्थले साध्याभिमतस्य साध्यत्वासम्भवाल्लिङ्गराहित्याव्याप्तिस्थले च साधनाभिमतस्य साधनत्वासम्भवात्साध्यसाधनभावस्यायोग्यतायाः सत्त्वाद्युक्तं त्रयाणामपि विरोधत्वमिति भावः । ननु प्रतिज्ञाविरोधोदाहरणे, साधनस्य साधनभावासत्त्वे, लिङ्गराहित्याव्याप्त्योरन्यतरत्वमेव स्यात्ततो न प्रतिज्ञाविरोधः पृथग्वाच्यः । तत्सत्त्वे च तन्निरूपितसाध्यत्वस्यापि साध्ये सम्भवान्न प्रतिज्ञाविरोधप्रसक्तिः । एवं हेतुविरोधोदाहरणे साध्यस्य साध्यभावासत्त्वे, प्रतिज्ञाविरोधः स्यात्ततश्च न हेतुविरोधरूपलिङ्गराहित्याव्याप्त्योः पार्थक्यं, तत्सत्त्वे च तन्निरूपितसाधनत्वस्यापि साधने सम्भवान्न लिङ्गराहित्याव्याप्त्योः प्रसक्तिरित्यतः सत्यपि साधनस्य साधनत्वे, साध्यस्य साध्यभावाभावं तावत्सदृष्टान्तमुपपादयति **न चेति** । साध्यस्य सत्यपि साध्यत्वे साधनस्य तद्भावायोगमपि सदृष्टान्तमुपपादयति **नापीति** ॥ **छेदनत्वाभावादिति** छिदिक्रियाकरणत्वाभावादित्यर्थः ।

प० — प्रतिज्ञार्थविरोधादीनां प्रागुक्तविरोधलक्षणाक्रांतत्वेन विरोधत्वं व्यनक्ति **साध्येत्यादिना** । साध्यसाधनभावरूपसम्बन्धेत्यर्थः । **तद्भावेपि** साधनताभावेपि । **विरुद्धस्य** साध्यत्वान्वययोग्यताविरहस्येत्यर्थः । प्रतिज्ञार्थविरोधस्य विरोधत्वमुपपाद्यासिद्ध्यव्याप्त्योरपि विरोधत्वं व्यनक्ति **नापीति** । **असमर्थस्य** व्याप्तिसमुचितदेशस्थत्वरूपसामर्थ्यहीनस्येत्यर्थः । यद्वा प्रतिज्ञार्थविरोधहेतुविरोधयोरन्यतरेणान्यतरस्य संग्रहः किं न स्यात् किं पार्थक्येनेत्यतः पृथग्भावमुपपादयति **साध्येत्यादिना** । विवृतमेतत्तर्कताण्डवे बाधादेर्व्यभिचारासांकर्यवादे हेतुदोषत्वनिरासवादे च ॥ **प्रतिज्ञार्थविरुद्धतादीनामिति** । बहुवचनं तद्गुणसंविज्ञानबहुव्री(हिणोपा)हावुपात्तेन सह असिद्ध्यव्याप्त्योर्बहुत्वाद्वा असिद्ध्यव्याप्त्योरवांतरभेदबहुत्वाभिप्रायेण वेति ध्येयम् ।

या० — त्रिविधेऽपि विरोधे प्रागुक्तं विरोधसामान्यलक्षणमुपपादयति **साध्यसाधनेत्यादिना** । तथा चोक्तलक्षणं प्रतिज्ञाहेतुविरोधानुगतमिति भावः । ननु प्रतिज्ञाविरोधोदाहरणे साधनस्य साधनभावासत्त्वे लिङ्गराहित्याव्याप्त्यन्यतरत्वमेव स्यात्तथा च न प्रतिज्ञाविरोधः पृथग्वक्तव्यः । तत्सत्त्वे तन्निरूपितसाध्यत्वस्यापि साध्ये सम्भवात्प्रतिज्ञाविरोधोऽकिञ्चित्कर इत्यत आह **न च साधनस्येति** । ननु हेतुविरोधोदाहरणे साध्यस्य साध्यभावासत्त्वे प्रतिज्ञाविरोध एव स्यात्ततश्च न हेतुविरोधरूपलिङ्गराहित्याव्याप्त्योः पार्थक्यम् । तत्सत्त्वे च तन्निरूपितसाधनत्वस्यापि साधने सम्भवाल्लिङ्गराहित्याव्याप्त्योरकिञ्चित्करत्वमित्यत आह **नापि साध्यस्येति** ॥

श्री० — **तद्भावः** साध्यत्वं साधनत्वं चेत्यर्थः । एवमुत्तरत्र ।

सु० — अस्तु लिङ्गराहित्याव्याप्त्योर्युक्तिदोषत्वम् । प्रतिज्ञार्थविरुद्धता तु कथं तद्दोषः । साध्यसंबन्धित्वादिति चेन्न । साध्याभिमतस्य तद्भावासंभवे साधनाभिमतस्याविषयवृत्तित्वात् । नन्वेवं सति सिद्धसाधनताऽपि विरोध एव स्यात् । न हि सिद्धस्य साध्यता संभवति । न चास्त्विति वाच्यम् । उक्तप्रकारत्रयानन्तर्भावात् । सिद्धसाधकोऽसङ्गत इति स्ववचनविरोधाच्चेति । मैवम् । सति साकाङ्क्षत्वेऽन्वयायोग्यत्वं विरोधः । न च सिद्धसाधनस्य साकाङ्क्षता अस्तीति नासौ विरोधेऽन्तर्भवति ।

शे० — अस्त्विति । साधनरूपयुक्तिसम्बन्धित्वादिति भावः ॥ साध्येति । साध्यं च न युक्तिरिति भावः ॥ अविषयवृत्तित्वादिति । तथा च साधनस्याविषयवृत्तित्वसम्पादकतया हेतुदोषत्वात्प्रतिज्ञाविरोधस्य युक्तं हेतुदोषभूतासिद्ध्यादिसाहित्येन वचनमिति भावः । इदं च प्रतिज्ञाविरोधस्य हेतोरविषयवृत्तित्वसम्पादकत्वेन हेतुदोषत्वकथनं प्रतिज्ञाविरोधेनैव दूषिते विषये तत्र वर्तमानस्य हेतोरप्यविषयवृत्तित्वं नाम दोषोऽस्तीत्यभिप्रायेणैव, न तु प्रतिज्ञाविरोधो न विषयदोष इत्यभिप्रायेणेति न विषयदोषत्वसमर्थनपरोत्तरग्रन्थविरोधः, नापि प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोध इति प्रमाणलक्षणविरोध इत्यवधेयम् । यद्यपि 'अदृष्टे व्यभिचारे तु साधकं तदिति स्फुटम् । ज्ञायते साक्षिणैवाद्धा मानबाधे न तद्भवेदि'ति भक्तिपादीयानुव्याख्यानव्याख्यानरूपटीकानुरोधेन प्रतिज्ञाविरोधस्य हेतोर्व्यभिचारसम्पादकतया हेतुदोषत्वसिद्धेरविषयवृत्तित्वरूपाक्लृप्तदोषान्तरसम्पादकतया तद्दोषत्वव्युत्पादनमनर्थकमित्याभाति, तथाऽपि तदनुरोधेन व्याप्तिग्रहदशायां प्रतिज्ञादिविभागाभावेन विषयस्य बुद्ध्यावनारूढत्वादविषयवृत्तित्वासम्भवाद्व्याप्तिभङ्गस्यैव पुरःस्फूर्तिकत्वाच्च व्याप्तिभङ्गे हेतुत्वप्राप्तावपि परार्थप्रयोगोत्तरकालं व्याप्तिभङ्गोपपादनायोपजीव्येनाविषयवृत्तित्वेनानुमानस्य दुष्टत्वे, जन्यप्रतिपत्तिकव्याप्तिभङ्गानुसरणस्यान्याय्यत्वेन साधनस्याविषयवृत्तित्वनियमस्थित्याऽनुमितिसमये उपस्थितस्य प्रतिज्ञाविरोधस्य व्याप्तिभङ्गहेतुत्वेन दोषत्वस्य समर्थयितुमशक्यत्वादविषयवृत्तित्वसम्पादकत्वाश्रयणमित्यवधेयम् । ननु सिद्धसाधनेऽतिव्याप्तत्वेन साध्यसाधनभावसम्बन्धयोग्यताविरहस्य विरोधलक्षणत्वाभावान्नोक्तरीत्या तदाक्रान्तत्वेन प्रतिज्ञाविरोधादीनां विरोधत्वव्युत्पादनं घटत इत्यभिप्रेत्योक्तलक्षणस्य सिद्धसाधनेऽतिव्याप्तिमाशङ्कते नन्विति ॥ न हीति । तथा च प्रतिज्ञाविरोधस्थल इवेहापि साध्याभिमतस्य साध्यत्वासम्भवात्साध्यसाधनभावस्यायोग्यता प्राप्तैवेत्यर्थः । तस्यापि विरोधत्वेन लक्ष्यत्वान्न तत्र लक्षणवृत्तिरतिव्याप्त्यापादिकेत्याशङ्कते न चेति । विरोधत्वं वदतोऽस्य न तावद्विधान्तरत्वमभिमतम् । तथा सति चातुर्विध्यापत्त्या त्रैविध्योक्त्यनुपपत्तिप्रसङ्गात्किन्तूक्तप्रकारत्रयान्तर्भूतत्वमेव । तथाच यावद्विशेषबाधे सामान्यस्यापि बाधितत्वान्न तस्य विरोधत्वमित्याशयेन परिहरति उक्तेति । उक्तलक्षणाक्रान्तत्वेन विरोधत्वसिद्धेस्त्रैविध्योक्तिरेव, यथाकथञ्चिद्व्याख्येयेति वदन्तं प्रत्यनिष्टान्तरमाह सिद्धेति ।

सम्भावितप्रतीतिकस्येत्यनेनैव सिद्धसाधनव्यावृत्तेरविशिष्टलक्षणस्य तत्रातिव्याप्त्युद्भावनमसङ्गतमित्याशयवां-स्तदुपयोगितया सम्भावितप्रतीतिकत्वमर्थतोऽनुवदति **सतीति** । कथं साकाङ्क्षत्वे सतीत्यनेन तद्व्यावृत्ति-रित्यतोऽनाकाङ्क्षितसाधनाय प्रयुक्तत्वान्न साकाङ्क्षत्वं तस्येत्यतो युक्तैव तेन तद्व्यावृत्तिरित्याह **न चेति** ।

स० — **न चास्त्विति वाच्यमिति** । विरोध एवेति शेषः । **उक्तप्रकारत्रयेति** । प्रति-ज्ञाविरोधाव्याप्तिलिङ्गराहित्यलक्षणविरोधत्रयानन्तर्भावादित्यर्थः । **साकाङ्क्षत्व इति** । न च साध्य-साधनभावस्य प्रमाणबाधः विरोध इति विरोधलक्षणे साध्यसाधनभावस्य बाधो नाम प्रतिस्पर्धिप्रमाणसद्-भाव इत्यर्थत्वेन सिद्धसाधनलक्षणासंगतौ प्रतिस्पर्धिप्रमाणस्यैवाभावेन तावन्मात्रेणैव तन्निवृत्तौ साकाङ्क्षत्वे सतीति विशेषणं व्यर्थमिति वाच्यम् । साध्यत्वस्य बाधो नाम अभाव इत्येतदर्थत्वात् । साध्यत्वा-भावस्य च सिद्धसाधके विद्यमानत्वेन विशेषणस्य सार्थकत्वादिति भावः ।

प० — **अविषयवृत्तित्वादिति** । नन्वेवं प्रतिज्ञार्थविरोधस्य हेतुदोषत्वोक्तौ 'स्ववाक्येन विरो-धेपि नैव साधकतां व्रजेदि'त्यत्र 'बाधादेर्विषयदोषत्वमेव न हेतुदोषत्वमि'ति वक्ष्यमाणविरोधः, 'प्रमाण-विरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोध' इति प्रमाणलक्षणादिविरोध इति चेन्न । 'प्रतिज्ञार्थविरोधस्य हेतुदोष-त्वोक्तिर्बाधादिनैव दूषिते विषये प्रवर्तमानस्य हेतोरप्यविषयवृत्तित्वं नाम दोषोऽस्तीत्यभिप्रेत्यैव न तु बाधादिर्न विषयदोष इती'ति ग्रन्थेनैतदभिप्रायस्य निर्णीतत्वादिति ॥ **स्ववचनेति** । प्रमाणलक्षणवचन-विरोधादित्यर्थः ।

या० — **अविषयवृत्तित्वादिति** । नन्वेवं 'बाधादेर्विषयदोषत्वमेव न हेतुदोषत्वमि'त्यग्रे समर्थयिष्यमाणत्वात्तद्विरोधः, 'प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोध' इति प्रमाणलक्षणविरोधश्चेति चेत् । उच्यते । अनुमितिसमये उपस्थितस्य बाधादेरव्याप्त्यादिरूपहेतुदोषत्वं नेत्येव तद्ग्रन्थाशयः । न तु हेतोरविषयवृत्तितारूपदोषसम्पादकत्वमपि तस्य नेति, येन विरोधः स्यादिति ॥ **सति साकाङ्क्षत्व इति** । ततश्चानेन सम्भावितप्रतीतिकस्येत्येतदुक्तप्रयोजनमिति ज्ञातव्यम् ।

श्री० — साध्यसम्बन्धित्वात् प्रतिज्ञार्थविरुद्धताया इति शेषः ॥ **अविषयेति** । विषये स्वयोग्ये साध्ये, न वर्तत इत्यर्थः ॥ **साध्यतेति** । तथा चात्राप्यविषयवृत्तित्वसंभवेन विरोध एवास्त्वन्तर्भाव इत्यर्थः । **अस्त्विति** । विरोध एवास्त्वित्यर्थः । तदुपपादयति **प्रकारत्रयेति** । प्रतिज्ञार्थविरुद्ध-त्वादित्रयेऽनन्तर्भावादित्यर्थः ॥

**सु० — ननु चान्यत्र त्रिविधो विरोध इत्यादिना लिङ्गराहित्याव्याप्त्योरेकतामुपादाय साध्यस्य साधनस्य वाऽननुगमो दृष्टान्तविरोधस्तृतीयतया परिगृहीतः । अत्रापि साध्यसाधन-वैकल्यं दृष्टान्तस्येति वक्ष्यति । तत्कथमेतत् । न चात्रापि तदध्याहारेण तथैव व्याख्यानं**

युक्तम् । दृष्टान्तदोषस्यानुमानदोषताऽनुपपत्तेः । न हि दृष्टान्तोऽनुमानम् । तथाऽप्यनुमानाङ्गव्याप्तिदूषकतयाऽनुमानदोषत्वमस्तु । दृष्टान्तस्य साध्यवैकल्ये साधनस्य साध्यपरित्यागात् । साधनवैकल्ये तु व्याप्तेरनुपदर्शनादिति चेन्न । तथा सत्यव्याप्त्यैव संगृहीतत्वेन तृतीयत्वानुपपत्तेरिति । उच्यते ॥ स्वार्थानुमाने हि दृष्टव्याप्तिकस्य लिङ्गस्य विवक्षितस्थले सिद्धिमात्रेण साध्यप्रमितिरुत्पद्यत इति तत्परिपन्थिनां दोषत्वमभिप्रेत्य प्रतिज्ञार्थविरुद्धतालिङ्गराहित्याव्याप्तीनामत्र ग्रहणम् । परार्थानुमाने(प्य)त्वव्याप्त्यौपयिकस्यापि दृष्टान्तदोषस्य तदाश्रयतया प्रतीतत्वेन तथैवोद्भावनीयताज्ञापनाय तेन सह त्रिविधत्वमन्यत्रोक्तमिति न विरोधः ।

शे० — ननु तथाऽपि दृष्टान्तदोषस्यानुक्तेर्विरोधविभागस्य न्यूनत्वमित्यभिप्रेत्य दृष्टान्तविरोधस्यैव अवक्तव्यत्वाद्वक्तव्यत्वेऽपि वाऽव्याप्तिपदेनैव सङ्गृहीतत्वान्न पृथक् तदनुक्तिर्दोषायेत्यतस्तस्यावक्तव्यत्वसमनर्थनपूर्वकमव्याप्तिपदेन तत्सङ्ग्रहे बाधकोपदर्शनेन तेन तदसंग्रहं चोपपादयन्न्यूनताशङ्कामुत्थापयति **ननु चेति** । आदिपदेन 'प्रतिज्ञाहेतुदृष्टान्तभेदेन', 'साध्यस्य साधनस्य वाऽननुगमो दृष्टान्तविरोध' इति तदुत्तरग्रन्थसंग्रहः ॥ **अन्यत्रेति** । प्रमाणलक्षण इत्यर्थः ॥ **वक्ष्यत इति** । भक्तिपादे स्वप्नाधिकरण इति शेषः ॥ **तत्कथमिति** । मानलक्षणेनोत्तरग्रन्थेन च विरुद्धत्वान्नोक्तरूपेण त्रैविध्याभिधानं युक्तमिति भावः ॥ **तदध्याहारेणेति** । लिङ्गराहित्याव्याप्त्योश्चैकतया विवक्षितत्वान्न तदध्याहारेऽपि चातुर्विध्यप्रसक्तिरिति भावः । दृष्टान्तदोषस्यानुमानदोषत्वं किमव्याप्त्यादेरिव साक्षादभिमतं किंवा तद्दोषापादकतयेति विकल्पद्वयं मनसि निधायाद्यं प्रत्याह **न हीति** । द्वितीयमाशङ्कते **तथापीति** ॥ **दृष्टान्तस्य साध्यवैकल्य इति** । साध्यविकलस्य दृष्टान्तस्य विपक्षत्वेन तत्र वर्तमानस्य हेतोः, सत्यां सपक्षान्तरवृत्तौ साधारणत्वम् असत्यां च सपक्षान्तरवृत्तौ पक्षविपक्षयोरेव वर्तमानत्वाद्विरुद्धत्वमिति भावः ॥ **व्याप्तेरनुपदर्शनादिति** । ततश्चानुपदर्शितव्याप्तिकत्वाद्व्याप्यत्वासिद्धिरिति भावः ॥ **तृतीयत्वानुपपत्तेरिति** । तृतीयत्वेन परिगणनानुपपत्तेरित्यर्थः । तथा च द्वैविध्यप्रसक्त्या त्रैविध्योक्त्यनुपपत्तिरिति भावः ॥ **स्वार्थानुमाने हीति** । अत्र दृष्टव्याप्तिकस्येत्यनेन व्याप्तिपरिपन्थिनां तत्प्रमितिपरिपन्थिनां च विरुद्धादीनां संग्रहः । विवक्षितस्थलेऽसिद्धिमात्रेणेत्यनेन लिङ्गराहित्यस्य, साध्यप्रमितिरित्यनेन प्रतिज्ञार्थविरुद्धतायाः, संग्रहः । तथा च व्याप्तिग्रहणेन तत्प्रयोजकोपाध्यादेरिव साध्यवैकल्यादेरपि प्राप्तत्वान्न पृथक् तद्ग्रहणमत्र कृतमिति भावः ॥ **अन्यत्रोक्तमिति** । उपलक्षणमेतत् । साध्यसाधनवैकल्यं दृष्टान्तस्येत्युत्तरवचनमपि दृष्टान्ताश्रयतया प्रतिभासात्प्रतिभासानुसारेण चोद्भाव्यत्वादित्यभिप्रेत्येति न तद्विरोध इत्यपि द्रष्टव्यम् ।

स०— **लिङ्गराहित्याव्याप्त्योरेकतामुपादायेति** । नन्वत्र लिङ्गराहित्याव्याप्त्योः पृथग्विरोधत्वेन गणितत्वात् एतदनुसारेणान्यत्र विरोधः प्रतिज्ञाविरोधः, लिङ्गराहित्यम्, अव्याप्तिः, दृष्टान्तविरोधश्चेति चतुर्विधः; इति विभागः कुतो न कृत इत्यपि शङ्का कुतो न क्रियत इति तटस्थशङ्का अनेन निराकृतेति ध्वनितं भवति । **तृतीयत्वानुपपत्तेरिति** । तृतीयत्वेन अन्यत्र परिगणनानुपपत्तेरित्यर्थः । **स्वार्थानुमाने हीति** । अत्र 'दृष्टव्याप्तिकस्ये'त्यनेन व्याप्तिपरिपन्थिनां, तत्प्रमितिपरिपन्थिनां च विरुद्धादीनां च संग्रहः; विवक्षितस्थले सिद्धिमात्रेणेत्यनेन लिङ्गराहित्यस्य, 'प्रमितिरि'त्यनेन प्रतिज्ञार्थविरुद्धतायाः संग्रहः कृतो भवति । तथा च अव्याप्तिग्रहणेन तत्प्रयोज्यस्य उपाध्यादेरिव साध्यसाधनवैकल्ययोरपि व्याप्तिग्रहणेन प्राप्तत्वान्न पृथग्ग्रहणमत्र कृतमिति भावः । **अव्याप्त्यौपयिकस्यापीति** । अपिपदेन यद्यपि अव्याप्तिग्रहणेन तद्ग्रहणं संभवतीति सूचितम् ।

प०— **अन्यत्रेति** । प्रमाणलक्षण इत्यर्थः ॥ **वक्ष्यतीति** । भक्तिपादे । व्याप्तिदूषकतां व्यनक्ति **दृष्टांतस्येति** । दृष्टांतविरोधस्य पृथक्त्वेऽपीहानुक्त्यन्यत्रोक्ती स्वार्थपरार्थानुमानाभिप्राये इति भावेन समाधत्ते **उच्यत इति** ! **सिद्धिमात्रेण** प्रमितिमात्रेण । **तेन सहेति** । प्रतिज्ञाविरोधादिना सहेत्यर्थः ।

---

या०— **अन्यत्रेति** । प्रमाणलक्षण इत्यर्थः ।

श्री०— **तथैवेति** । लिङ्गराहित्याव्याप्त्योरेकतामुपादायात्राप्यनुव्याख्याने तृतीयतया दृष्टान्तविरोध एवोच्यतामित्यर्थः ॥ तामुपपादयति **दृष्टान्तस्येति** । **विवक्षितस्थले सिद्धिमात्रेणेति** । तथाच न तत्र दृष्टान्तापेक्षेति भावः ॥ **अव्याप्त्यौपयिकस्यापीति** । तथा चाव्याप्त्यैव सङ्गृहीतो यद्यपीत्यर्थः ।

**सु०- यद्वा साध्यसाधनोभयाश्रयहीनसाध्यसाधनोभयाव्यावृत्ताश्रयहीनानष्टौ दृष्टान्तदोषानेके भाषन्ते । तन्निरासाय दृष्टान्तदोषस्य पृथगुपादानम् । तथा हि उभयविकलस्तावन्न परिसंख्येयः । अन्यतरवैकल्येनैव (दृष्टान्त)दुष्टतासिद्धावाधिक्यप्रसङ्गात् । अन्यथैकैकविकलपरिसंख्यानानुपपत्तेः । कथं तर्ह्यन्वयव्यतिरेकीति चेत् । न कथञ्चिदित्युक्तमेव । साध्याद्यव्यावृत्तिस्तु दृष्टान्तस्य गुण एव न दोषः । सतो हि सता व्याप्तिं प्रदर्शयितुं दृष्टान्तोऽन्वेष्टव्यः । वैधर्म्यदृष्टान्तस्यायं दोष इति चेत्स एव किमर्थः । व्यतिरेकव्याप्तिबोधायेति चेन्न । तस्याः साक्षादनुपयोगात् । पारम्पर्येणोपयोगे तु साधर्म्यदृष्टान्त एवासाविति किं पृथगुपादानेन । उभयाव्यावृत्तश्चाधिक्यान्नि(क्यनि)रस्तः । आश्रयहीनस्त्वाश्रयासिद्धिसमानयोगक्षेम**

**इति द्वावेव दृष्टान्तदोषौ । असार्वत्रिकश्च दृष्टान्तदोषः । न हि सर्वत्र दृष्टान्त एव व्याप्तिरुप-दर्शनीयेत्यस्ति नियमः । आनुमानिकागमिकव्याप्तेस्तदनपेक्षणात् ।**

शे० - एवं दृष्टान्तदोषस्याव्याप्तिग्रहणेन गृहीतत्वादत्र पृथगनुपादानमङ्गीकृत्य अन्यत्र पृथगभिधानस्यैकं प्रयोजनमभिहितमिदानीमुक्तरीत्या पृथगनुपादनमत्रेत्यङ्गीकृत्यैवान्यत्र तदुक्तेः प्रयोजनान्तरमाह **यद्वेति** । तत्र साध्यवैकल्यं साधनवैकल्यमुभयवैकल्यमाश्रयहीनत्वमिति चत्वारः साधर्म्यदृष्टान्तदोषाः । साध्याव्या-वृत्तिः साधनाव्यावृत्तिरुभयाव्यावृत्तिराश्रयाहीनत्वमिति चत्वारो वैधर्म्यदृष्टान्तदोषा इति ज्ञेयम् । कथमनेन तन्मतनिरास इत्यत आह **तथा हीति अन्यतरवैकल्येनैवेति** । सम्भवमात्रेणैव पृथग्वचने चानैकान्तिक-कालातीतत्वमसिद्धकालातीतत्वमित्याद्यपि हेत्वाभासान्तरं स्यादिति भावः ॥ **अन्यथेति** । अन्यतरवैकल्येन दृष्टान्तस्य दुष्टत्वासिद्धावित्यर्थः । तथा चाष्टौ दृष्टान्तदोषा इति मतहानिरिति भावः । या तु साध्यस्य साधनस्य चाननुगमो दृष्टान्तविरोध इति प्रमाणलक्षणव्याख्यावसरे उभयोर्वेति ग्राह्यमित्युक्तिः सा, यथा मनोऽनित्यं मूर्तत्वात्परमाणुवत्कर्मवदित्यत्र क्रमेण साध्यवैकल्यं साधनवैकल्यं च दोषः तथा गगनवदि-त्यादावुभयवैकल्याख्यौ दोषौ स्त इत्यभिप्रेत्यैव, न तूभयवैकल्यदूषणस्य पृथग्दूषणत्वमित्यभिप्रेत्य । अन्यथा अन्यतरवैकल्येनेत्याद्येतद्ग्रन्थेनोभयवैकल्यं न पृथग्गणनीयमिति पद्धत्या च विरोधप्रसङ्गादित्यवधेयम् ॥

**कथं तर्हीति** आधिक्यप्रसक्त्योभयविकलस्य पृथगपरिसङ्ख्येयत्व इत्यर्थः । अन्वयव्यतिरेकव्याप्त्योरन्यत-रस्य अगमकत्वे एकैकव्याप्तिमतः परिसङ्ख्यानानुपपत्त्या तद्गमकत्वावश्यम्भावेनान्यतरव्याप्तिमात्रेणैव गमक-त्वसिद्धेरुभयोरपि गमकत्वे आधिक्यप्रसङ्गस्य तुल्यत्वादिति भावः ॥ **उक्तमेवेति** । 'व्याप्तिरेव तु सा स्मृते'त्यत्रत्यतुशब्दव्यावर्त्यतया 'एतेनानुमानस्य केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदेन त्रैविध्य-मपि परास्तमि'त्यादिनेति शेषः ॥ **तस्येति** । यो धूमवानसावग्निमानित्यन्वयव्याप्तिज्ञानेनैव धूमेन वह्निसिध्या योऽग्निमान्न भवति स धूमवान्न भवतीति व्यतिरेकव्याप्तिज्ञानस्य धूमेन वह्निसिद्धावनुपयोगादित्यर्थः । व्यतिरेकव्याप्तिज्ञानस्य साक्षात्प्रकृतसाध्यसिद्ध्यनुपयोगित्वेऽपि प्रकृतसाधनव्याप्तिसाधनोपयोगित्वेन पर-म्परयोपयोगादर्थवत्त्वमित्यत आह **पारम्पर्येणेति** ॥ **साधर्म्यदृष्टान्त एवासावितीति** । एतच्च 'तत्र चान्वयरूपतैव तस्याः' इत्यादिनाऽऽकर एव पूर्वं प्रपञ्चितमिति द्रष्टव्यम् ॥ **आधिक्यनिरस्त इति** । एकैकाव्यावृत्त्या दृष्टान्तदुष्टतासिद्धेरन्यथैकैकाव्यावृत्तपरिसङ्ख्यानानुपपत्तेरिति भावः । दृष्टान्तदोषत्व-ज्ञापनार्थं साध्यसाधनाननुगमयोरन्यत्र पृथगुपादानात्तयोरसार्वत्रिकत्वज्ञापनार्थमत्रानुपादानमित्यतोऽपि न परस्परविरोध इत्याशयेन पक्षान्तरमाह **असार्वत्रिकश्चेति** । तस्यासार्वत्रिकत्वं कुत इत्यत आह **न हीति** । ततश्च दृष्टान्तस्यासार्वत्रिकत्वात्तद्दोषस्याप्यसार्वत्रिकत्वमित्युक्तं भवति । केचित्तु हेतुदोषस्येव

न दृष्टान्तदोषस्य सार्वत्रिकत्वं दृष्टान्तस्यासार्वत्रिकत्वेन तद्दोषस्य सार्वत्रिकत्वायोगात् । तथा च हेतुदोषतया तद्ग्रहणे तस्यैव दृष्टान्तदोषस्यापि सार्वत्रिकत्वमिति विज्ञायेत तन्मा विज्ञायीति च पृथगुपादानमित्यसार्वत्रिकश्चेति वाक्यं योजयित्वाऽत्रानुक्तौ यद्वेत्यादिपक्षद्वयेऽप्यव्याप्तिग्रहणेन गृहीतत्वादिति पूर्वोक्तमेव निमित्तमनुसन्धेयमिति पक्षभेदमाहुः ।

स० — **पृथगुपादानमिति** । विरोधविभागत्वेन दृष्टान्तविरोधस्योक्तौ दृष्टान्तविरोधेऽपि विभागाकाङ्क्षा भवति । तस्यां च सत्यां प्रतिज्ञाविरोधादेरिव दृष्टान्तविरोधस्यापि विभागः कर्तव्यः । तेन च विभागांतरं निराकृतं भवतीत्यभिप्रायेण पृथक् तस्योपादानमिति भावः । ननु अन्यतरवैकल्यस्यादोषत्वे एकैकविकलपरिसंख्यानानुपपत्त्या अन्यतरवैकल्यस्य दोषत्वात् तेनैव दृष्टान्तदुष्टतासिद्धौ आधिक्यप्रसंगेोभयवैकल्यस्य पृथगसंख्येयत्वमुक्तम् । तदनुपपन्नम् । तथा सति अन्वयव्याप्तिमात्रस्य व्यतिरेकव्याप्तिमात्रस्य वाऽवगमकत्वे केवलान्वयिकेवलव्यतिरेकिपरिसंख्यानानुपपत्त्या, तावन्मात्रस्यापि गमकत्वे, तेनैव गमकत्वोपपत्तौ अन्वयव्यतिरेकिणोऽपि गमकत्वाभिधाने आधिक्यापत्त्या, अन्वयव्यतिरेक्यपि न स्यादिति शङ्कते **कथं तर्हीति** । स्यादेतदेवम्, यदि केवलान्वय्यादिभेदेन त्रैविध्यमङ्गीक्रियेत, न चैवम् । व्यतिरेक्यादेरप्रामाणिकत्वस्य पूर्वमभिहितत्वादित्याह **न कथञ्चिदिति** । 'व्याप्तिरेव तु सा स्मृता' इत्येतद्वाक्यस्थतुशब्दव्यवच्छेद्यकथनावसरे 'एतेन अनुमानस्य केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदेन त्रैविध्यमपि परास्तम् । व्यतिरेकव्याप्तेरनुमानानङ्गत्वात्' इत्यादिनोक्तमित्यर्थः । **आश्रयासिद्धिसमानयोगक्षेम इति** । तथा च भक्तिपादे आश्रयासिद्धेरदूषणत्वस्य वक्ष्यमाणत्वेन तन्न्यायेन एतस्यापि न दोषत्वमिति भावः । हेतुदोषस्येव न दृष्टान्तदोषस्य सार्वत्रिकत्वम् । दृष्टान्तस्यासार्वत्रिकत्वेन तद्दोषस्यापि तदनुपपत्तेः । तथा च हेतुदोषतया तद्ग्रहणे तस्यैव दृष्टान्तदोषस्यापि सार्वत्रिकत्वं विज्ञायेत । तन्मा विज्ञायीति पृथगुपादानं दृष्टान्तदोषस्यान्यत्र संगच्छत इत्याह **असार्वत्रिकश्चेति** । यद्वा अन्यत्र पृथगुपादानं अष्टदोषनिराकरणार्थमित्युक्तं, तर्हि अत्र पृथगनुपादानं कथमित्यतः असार्वत्रिकत्वज्ञापनार्थमित्याह **असार्वत्रिकश्चेति** । इति ज्ञापनार्थमत्र पृथगनुपादानमिति शेषः ।

प० — उक्तदिशा दृष्टन्तविरोधस्याव्याप्त्यैव संगृहीतत्वादत्रानुक्तिः । अन्यत्रोक्तिस्तु परमतनिरासाभिप्रायेणेति भावेनाह **यद्वेति** । हीनशब्दः साध्यहीनसाधनहीनउभयहीनाश्रयहीनेतिप्रत्येकमन्वेति । एवमग्रेऽव्यावृत्तशब्दोपि साध्याव्यावृत्तेत्यादिरूपेणान्वेति ॥ **अन्यथेति** । एकैकेन दुष्टत्वासिद्धावित्यर्थः ॥ **कथं तर्हीति** । आधिक्यप्रसङ्गेनोभयवैकल्यस्यासङ्ख्येयत्वे व्यतिरेकस्याप्याधिक्येना-

न्वयव्यतिरेक्यपि न स्यादित्यर्थः ॥ **उक्तमेवेति** । 'व्याप्तिरेव तु सा स्मृते'त्यत्रत्यतुशब्दव्याख्यावसरे उक्तमित्यर्थः । साधर्म्यदृष्टान्ताभिप्रायेण दूषयति **साध्यादीति** ॥ **पारम्पर्येणेति** । प्रागुक्तदिशाऽन्वयव्याप्तिसाधनद्वारेणेत्यर्थः ॥ **साधर्म्येति** । यदभावो यदभावव्यापकः, स तद्व्याप्यो, यथा धूमो वह्नेः इति साधर्म्यदृष्टान्त एवेत्यर्थः ॥ **समानेति** । भक्तिपादे वक्ष्यमाणदिशा आश्रयासिद्धेर्यथा न दोषत्वं तथाऽस्यापि न दोषत्वमिति भावः ॥ **द्वावेवेति** । यत्तु साध्यस्य साधनस्य वाऽननुगमो दृष्टान्तविरोध इति लक्षणटीकायामुभयोरिति ग्राह्यमिति वाक्यं तत्तभयवैकल्यस्थलेपि अन्यतरवैकल्येन दोषत्वमस्तीत्यभिप्रेत्येति तर्कताण्डव एव व्याख्यातम् । अत्रानुक्तौ बीजान्तरमाह **असार्वत्रिकश्चेति** । न केवलमव्याप्त्या संगृहीतत्वादत्रानुक्तिरपि तु असार्वत्रिकत्वाच्चानुक्तिरिति भावः ॥ **तदनपेक्षणादिति** । अनुमानादिनैवावगतव्याप्तिके, यत्र प्राणादिमत्त्वं तत्र सात्मकत्वमित्यत्र, यो ब्राह्मणस्स न हन्तव्य इत्यत्र च यथा अमुक इति दृष्टान्ताभावेन तदनपेक्षणादित्यर्थः ।

**या०** — ननूभयविकलो यद्याधिक्यप्रसङ्गान्न पृथक् परिसङ्ख्येयस्तर्ह्यन्वयव्यतिरेक्यपि न पृथग्गणनीयः । तत्राप्यन्यतरव्याप्तिमात्रेण गमकतोपपत्तावाधिक्यप्रसङ्गादित्याशयेन शङ्कते **कथं तर्हीति** ॥ **उक्तमेवेति** । 'व्याप्तिरेव तु सा स्मृता'इत्यत्रत्यतुशब्दव्यावर्त्यतया । 'एतेनानुमानस्य केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदेन त्रैविध्यमपि परास्तमि'त्युक्तमेवेत्यर्थः ॥ **पारम्पर्येणेति** । साध्यानुमित्युपयोग्यन्वयव्याप्त्यनुमापकहेतुशरीरगताभावयोर्व्याप्तिप्रदर्शकतयेत्यर्थः । प्राणादिमत्त्वं सात्मकत्वव्याप्यं तदभावव्यापकाभावप्रतियोगित्वादिति हेतुशरीरनिष्ठाभावयोर्व्याप्तिर्लोष्ठादिदृष्टान्ते प्रदर्श्यत इति हि प्रसिद्धम् । सा चाभावयोर्व्याप्तिः इदं प्राणादिमन्न भवति सात्मकत्वशून्यत्वादित्यनुमानेऽन्वयरूपैव भवतीति तत्र लोष्ठादिः साधर्म्यदृष्टान्त एवेत्यर्थः । अभावयोरन्वयव्याप्तिरेव प्रकृतान्वयव्याप्त्यनुमापकहेतुशरीरान्तर्गतेति भावः ॥ **तदनपेक्षणादिति** । तथा च तत्र दृष्टान्तासिद्धिर्न दोष इति भावः । सा तूभयोश्चेति ग्राह्यम् । तथा च साध्यस्य साधनस्योभयोर्वाऽननुगम इति साधर्म्यदृष्टान्तविरोधस्त्रिविधो वैधर्म्यदृष्टान्तविरोधोऽपि त्रिविध इति द्रष्टव्य इति प्रमाणलक्षणटीकोक्तिः सा पररीतिमाश्रित्येति तया न विरोधः ।

**श्री०** — उभयस्यापि सद्भावेऽन्यतरेणैवोपपत्तौ प्रोच्यमानायामन्वयव्यतिरेकिण्यप्यन्वयव्याप्त्यैव साध्यसिद्ध्युपपत्तौ व्यतिरेकव्याप्तिर्वक्तव्यैव न स्यात् । तथा च तस्यान्वयव्यतिरेकिता न स्यादित्याशङ्कते **कथं तर्हीति** ।

सु० — स्यादेतत् । प्रतिज्ञार्थविरुद्धतया हि कालातीतप्रकरणसमौ संगृहीतौ । लिङ्गराहित्यमित्यसिद्धिः । अव्याप्तिश्च त्रिविधा भवति । साधनस्य साध्येन संबन्धाभावः । सत्यपि संबन्धे तदभावेनापि संबन्धः, साध्याभावव्या(प्त)प्यता चेति । तदेतत्त्रयं क्रमेणानध्यवसितानैकान्तिकविरुद्धसंज्ञां लभते । तथा च परनिरूपितप्रस्तारस्य समसनमेवानेन कृतं स्यात् । न चानेन किमपि प्रयोजनम् । अन्यथा पुरुषमतिवैश्वरूप्येण प्रक्रियान्तरस्यापि सावकाशत्वात् । न च ब्रह्मतर्कादितर्कशास्त्रमनुसृन्येत्थं व्युत्पादनमिति वाच्यम् । प्रयोजनाभावेऽन्धपरम्परापत्तेरिति ।

उच्यते । अस्ति प्रक्रियान्तरकरणस्य प्रयोजनम् । तथा हि । प्रतिज्ञार्थविरुद्धतया हि स्ववाक्यविरोधस्यापि संग्रहं वक्ष्यति । न च कालातीतत्वादिना स लभ्यते । अपि च व्यवहारोऽपि प्रतिज्ञार्थविरुद्धतयोपपद्यते; न कालातीतत्वादिना, वैयर्थ्यप्रसङ्गात् । असाधकमिदं कालातीतत्वात् । सत्प्रतिपक्षत्वादित्यस्य प्रबलसमबलप्रमाणविरुद्धत्वादित्यर्थः । न चात्र विशेषणस्य किमपि प्रयोजनमस्ति । हीनबलस्य प्रमाणपदेनैव निरस्तत्वात् । प्रमाणतदाभासाविवेक एव हि प्रमाणशब्दप्रयोगो न स्वप्रामाण्यनिश्चये । अहीनबलतया वा विशेषणे संभवति तदवान्तरभेदोपादानं निरर्थकमेव । तथा चैकमेवेदं दूषणं स्यात् । लिङ्गराहित्यग्रहणेन चादूषणानामपि दूषणतया परपरिगणितानामाश्रयव्यधिकरणसाध्यान्यथासिद्धीनां निरासो लभ्यते अन्यथासिद्धेर्दूषणत्वेऽपि प्रकारान्तरस्य वक्ष्यमाणत्वात् ।

शे० — **असिद्धिरिति** । सङ्गृहीतेति योग्यतया विपरिणामेन सम्बध्यते ॥ **समसनमिति** । सङ्कोचनमित्यर्थः । **अन्धपरम्परेति** । यथा शुक्लं क्षीरमित्यन्धेनोक्ते केनेदमवगतमिति स पृष्टो यदाऽन्धान्तरं मूलं निर्दिशति सोऽप्यन्धान्तरं तदा नैतद्वचः शौक्ल्ये प्रमाणं भवति; तादृगेतदित्यर्थः । शुक्लं क्षीरमिति मूलभूतान्धवचनस्य प्रत्यक्षामूलकत्ववन्मूलभूतब्रह्मतर्के तथा व्युत्पादनस्यापि प्रयोजनाभावयुक्तिपराहतत्वादिति भावः ॥ **वक्ष्यतीति** । 'स्ववाक्येन विरोधेऽपि नैव साधकतां व्रजेदि'त्यादिनाऽनुपदमेवेति शेषः ॥ **न चेति** । तल्लक्षणानाक्रान्तत्वात्स्ववाक्यविरोधस्येति भावः । ननु कालातीतादेरपि स्ववाक्यविरोधानुगतलक्षणकरणाद्युक्तस्तेनापि तत्सङ्ग्रह इत्यत आह **अपि चेति** ॥ **व्यवहारोऽपीति** । असाधकत्वानुमानमपीत्यर्थः । असाधकमिदं प्रतिज्ञार्थविरुद्धत्वादित्यत्र व्यर्थविशेषणत्वाद्यप्रसङ्गादिति भावः ॥ **नेति** । अयमाशयः । यद्रूपेण हि ज्ञानमनुमितिप्रतिबन्धकं तद्रूपेणैव दोषः परं प्रत्युद्भाव्यः । यद्रूपेण चोद्भावनं तद्रूपेणासाधकता साधनीया । यद्रूपेणासाधकतासाधनं तद्रूपेणैवानुमानदोषो विभजनीयः । अन्यथाऽन्यः

शस्त्री अन्यो योद्धा अन्यो जयी अन्यस्तु श्लाघ्य इतिवद्वैरूप्यापातादिति भावः ॥ **न चेति** । असाधकमिदं प्रमाणं विरुद्धत्वादित्येतावन्मात्रस्यैव निर्दुष्टत्वादित्यर्थः । हीनबलप्रमाणविरुद्धस्य सत्यपि प्रमाणविरुद्धत्वे साधकत्वेन तत्र व्यभिचारपरिहार एवोक्तविशेषणकृत्यमित्यत आह **हीनबलस्येति** । तथा च प्रमाण-विरुद्धत्वरूपहेतोरेवागमनान्न तत्र व्यभिचार इति भावः । तत्रापि प्रमाणपदप्रयोगात्कथं प्रमाण-पदेन तन्निरास इत्यत आह **प्रमाणेति** । तथाऽप्यप्रामाण्यनिश्चयदशायां हीनबलस्य प्रमाणपदेना-निरसनात्तन्निरासो विशेषणकृत्यमित्यरुचेराह **अहीनेति** ॥ **अवान्तरेति** । प्रबलसमबलरूपावान्त-रेत्यर्थः । अवान्तरभेदानुपादानेप्यहीनबलप्रमाणविरुद्धत्वरूपहेत्वगमनादेव तत्र व्यभिचाराप्रसक्त्या व्यावर्त्याभावात् । व्यावर्त्याभावेऽपि विद्यमानतामात्रेण तदुपादाने च प्रबलचाक्षुषप्रत्यक्षविरुद्धत्वा-दित्याद्यपि प्रयुज्यते । न च परस्यात्यतिशक्तिज्ञापनार्थत्वान्न वैयर्थ्यमिति वाच्यम् । अशक्तिज्ञाप-नस्यैवोद्देश्यत्वाद्बाधाज्ञानमूलाशक्तौ प्रतिरोधाज्ञानमूलाशक्तितोऽतिशयाभावाच्चेति भावः । ननु बाध-प्रतिरोधयोरन्योन्यमसङ्करार्थमेव तदुपादानमस्त्वित्यतो दूषकताबीजक्येन सङ्करस्यैवोचितत्वान्नासाङ्कर्यार्थतया तदुपपत्तिरित्याशयेनाह **तथा चेति** ॥ **आश्रयव्यधिकरणसाध्यान्यथासिद्धीनामिति** । द्वन्द्वान्ते श्रूय-माणमसिद्धिपदं प्रत्येकमभिसम्बध्यते । ततश्चाश्रयासिद्धिव्यधिकरणासिद्धिसाध्यासिद्ध्यन्यथासिद्धीना-मिति पर्यवस्यति । अन्यथेत्यस्य च व्यर्थविशेषणत्वादिरूपप्रकारान्तरेणेत्यर्थः । व्यर्थविशेषणत्वव्यर्थ-विशेष्यत्वयोरुभयोरपि ग्रहणे गौरवादुभयसंग्रहार्थमन्यथेत्येवोक्तमिति ध्येयम् । ननु 'न च ते दोषा व्याप्तौ सत्यां कथञ्चने'ति वक्ष्यमाणरीत्या आश्रयव्याश्रयसाध्यासिद्धीनामदूषणत्वेऽप्यन्यथासिद्धेः, सिद्धा-न्तेऽपि दूषणत्वस्थितेस्तन्निरासलाभवर्णनमनुचितमित्यतोऽन्यथासिद्धेः 'विशेषणे । वैयर्थ्यमेकासिद्धौ चे'ति माणरीत्या दूषणत्वेऽप्यसिद्ध्यपेक्षयाऽऽधिक्यरूपप्रकारान्तरस्य वक्ष्यमाणत्वेनासिद्धित्वानभ्युपगमादनसिद्धि-रूपाणामसिद्धिरूपदूषणतया परिगणिताश्रयव्यभिकरणसाध्यान्यथासिद्धीनां लिङ्गराहित्यग्रहणेन निरासलाभ-वर्णनमुचितमित्याशयवानाह **अन्यथासिद्धेरिति** ।

स० — **समसनमिति** । सङ्क्षेप इत्यर्थः । **अन्यथेति** । प्रयोजनाभावेऽपि व्युत्पादन इत्यर्थः । **अन्धपरम्परेति** । 'शुक्लं क्षीरमित्यन्धेनोक्ते, केनेदमवगतमि'ति पृष्टो यदा अन्धान्तरं मूले निर्दि-शति, सोऽपि अन्धान्तरम्, तदा नैतद्वचनं शौक्ल्ये प्रमाणमिति सोऽयमन्धपरम्परान्याय इति भावः । **व्यवहारोऽपीति** । नेदं साध्यसाधकमित्यादिव्यवहार इत्यर्थः । **न चात्र विशेषणस्येति** । समत्व-प्रबलत्वलक्षणस्येत्यर्थः । ननु प्रमाणविरुद्धत्वादित्येवोक्ते हीनबलप्रमाणविरुद्धे साधके व्यभिचारात् विशेषणं सार्थकमित्यत आह **हीनबलस्येति** । ननु शब्दानां द्वयी गतिः, मुख्यार्थामुख्यार्थभेदेनेति

भवद्भिरेवोक्तत्वात् प्रमाणशब्दस्य अमुख्यार्थविवक्षया हीनबले प्रमाणशब्दप्रयोगसंभवात् तद्विरुद्धे व्यभिचारः स्यादेव । अन्यथा युक्तिशब्देनैव तदाभासव्यावृत्तिसिद्धेरन्यत्र निर्दोष(पद)ग्रहणं व्यर्थमापद्यत इत्यत आह **प्रमाणतदाभासेति** । तथा च हीनबलस्य अप्रामाण्यस्यैव निश्चितत्वेन न तत्र प्रमाण शब्दप्रयोगसंभव इति भावः । ननु तथात्वे अन्यत्र 'निर्दोषोपपत्तिरि'त्यत्र निर्दोष(पद)ग्रहणवैयर्थ्यापत्त्या यथा कथञ्चित् तदाभासेऽपि उपपत्तिशब्दप्रयोगाङ्गीकारवदत्रापि हीनबले प्रमाणशब्दोपपत्तिरित्यतः पक्षान्तरमाह **अहीनबलतयेति** । अस्तु वा हीनबलप्रमाणविरुद्धे व्यभिचारः । तथापीति शेषः । न च भवद्भिरपि एकस्य विशेषणस्याङ्गीकृतत्वेन तद्वन्मयाऽप्येकं विशेषणमुपादीयते इति को दोष इति वाच्यम् । अनुमानद्वयेऽपि अहीनबलवत्त्वे सतीत्येकेनैव विशेषणेन हीनबल(प्रमाण)विरुद्धे व्यभिचारपरिहारसंभवेन प्रबलेति समबलेति विशेषणद्वयं व्यर्थमिति भावः । न केवलं प्रतिज्ञार्थविरुद्धतया स्ववाक्यविरोधस्यापि संग्रह एव, किं तु, पृथक्परपरिगणितप्रबलसमबलप्रमाणविरोधयोरपि विशेषणविरोधेनैकत्वं कृतं भवतीत्याह **तथा चेति** । ननु अन्यथासिद्धेः परैः पृथक् दूषणत्वेन परिगणितत्वात् तन्निरासः कथमनेन कृतो भवतीत्यत आह **अन्यथासिद्धेरिति** ।

**प०** — युक्तिदोषाणां रीत्यंतरेण निरूपणस्य वैयर्थ्यमाशंक्य समाधत्ते **स्यादेतदित्यादिना न स्वीयव्यवहारविरोध इत्यन्तेन** ॥ **प्रस्तारस्य** विस्तरस्य ॥ **समसनं** संक्षेपः ॥ **वक्ष्यतीति** 'स्ववाक्येन विरोधेपी'त्युत्तरवाक्य इति भावः ॥ **व्यवहारोपीति** । परं प्रत्युद्भावनादिरूपव्यवहारोपीत्यर्थः । **विशेषणस्य** प्रबलेतिविशेषणस्य । हीनबलं व्यावर्त्यमित्यत आह **हीनेति** । ननु प्रतिपक्षहेत्वोरन्यतरस्याप्रमाणत्वेपि यथा प्रमाणपदव्यवहारः तथा हीनबलस्य वस्तुतोऽप्रमाणत्वेपि प्रमाणपदव्यवहारविषयत्वात् कथं तस्य प्रमाणपदेन निरास इत्यतो नास्त्येव तत्र प्रमाणपदव्यवहारो निश्चिताप्रामाण्यकत्वादिति भावेनाह **प्रमाणतदाभासेति** ॥ **निरास इति** । तन्निरासप्रकारश्च भक्तिपादे 'आश्रयव्याश्रयासिद्धी' इत्यादिना व्यक्तः ॥ **प्रकारांतरस्येति** । विशेषणवैयर्थ्यमित्यत्र विशेषणासिद्धितुल्यन्यायेन अव्याप्तौ वा आधिक्ये वान्तर्भावस्य वक्ष्यमाणत्वात् भक्तिपादे ।

**या०** — **समसनमेवेति** । सङ्कोचनमेवेत्यर्थः ॥ **अन्धपरम्परेति** । क्षीरं शुक्लमिति जात्यन्धेनोक्ते केनेदमुक्तमिति पृष्टः स यदाऽन्धान्तरमेव मूलं निर्दिशति सोऽप्यन्यमन्धं तदा तद्वचनं न क्षीरशौक्ल्ये प्रमाणमन्धपरम्परामूलत्वात् । सोऽयमन्धपरम्परान्यायस्तदापत्तेरित्यर्थः ॥ **वक्ष्यतीति** । 'स्ववाक्येन विरोधेऽपि नैव साधकतां व्रजेदि'त्यस्मिन्नेवाधिकरण इति शेषः **व्यवहारोऽपीति**। असाधकतासाधनमपीत्यर्थः ॥ **न कालातीतत्वादिनेति** । यद्रूपेणासाधकतासाधनं तद्रूपेणैवानुमानदोषो विभजनीयः । अन्यथाऽन्यो

जघ्यन्यस्तु श्लाघ्य इतिवद्वैरूप्यापातादिति भावः । ननु यथा समबले वस्तुतोऽप्रमाणेऽपि प्रमाणशब्द-प्रयोगः, एवं हीनबलेऽपि किन्न स्यादित्यत आह **प्रमाणतदाभासेति** । अभ्युपेत्याह **अहीनबलतया वेति** ॥ **तदवान्तरभेदेति** । प्रबलसमबलरूपाहीनबलावान्तरभेदोपादानमित्यर्थः । ननु बाधप्रतिरोध-योरन्योन्यमसङ्करार्थं तदुपादानमित्यत आह ॥ **तथा चेति** । दूषकताबीजैक्ये साङ्कर्यमुचितमेवेति भावः । न च परस्यात्यशक्तिज्ञापनार्थत्वान्न वैयर्थ्यमिति वाच्यम् । जल्पादावशक्तिज्ञापनस्यैवोद्देश्यत्वात् । शिष्टं तर्कताण्डवे द्रष्टव्यम् । आश्रयव्यधिकरणसाध्यान्यथाऽसिद्धीनामित्यत्रान्यथा प्रकारान्तरेण व्यर्थविशेषणत्वा-दिनाऽसिद्धीनामित्यर्थः । न तु सिद्धीनामिति छेदः । तथात्वे द्वन्द्वान्ते श्रूयमाणस्य सिद्धिपदस्य सर्वे-त्रान्वयस्य वक्तव्यत्वादसङ्गत्यापत्तेः । एवमन्यथासिद्धेरित्यत्रापि प्रकारान्तरेणासिद्धेरित्येवार्थः । **प्रकारा-न्तरस्येति** । व्यर्थविशेषणत्वादेरसिद्ध्यपेक्षया प्रकारान्तरस्याधिक्यरूपत्वस्य भक्तिपादे वक्ष्यमाणत्वा-दित्यर्थः । तथा च दूषणतया परिगणितानामित्यस्यासिद्धिरूपदूषणतया परिगणितानामित्यर्थो बोध्यः ।

**श्री० — प्रस्तारस्य** विस्तारस्य । **समसनं** सङ्कोचनम् । **वैश्वरूप्येण** विश्वरूपत्वेन, अनेक-रूपत्वेन, विचित्रत्वेनेत्यर्थः । **व्यवहारः** असाधकत्वव्यवहारः । **कालातीतत्वादिना** परगीत्या गणितेन । हीनबलप्रमाणे व्यभिचारवारणाय तद्विशेषणमिति चेत्तत्राह **हीनबलस्येति** । कथं तर्हि हीनबले प्रमा-णशब्दप्रयोग इत्यत आह **प्रमाणेति** । नन्वविवेकदशायां व्यभिचारः स्यादेवेत्यत आह **अहीनेति** । तथा च हीनबलप्रमाणव्यावृत्तिरिति भावः ॥ **तदवान्तरेति** । हीनबलव्यावृत्तेरहीनबलेति विशेषणेनैव सिद्धेः प्रमाणे किञ्चित्समबलं किञ्चित्प्रबलमित्यवान्तरभेदमङ्गीकृत्यासाधकतानुमाने तद्विशेषणदानं व्यर्थमिति भावः । **इदं** समबलप्रमाणप्रबलप्रमाणानुगतं प्रतिज्ञार्थविरुद्धम् । **निरासः** दूषणत्वनिरासः ॥ **लभ्यत इति** । अत्र सर्वत्र लिङ्गराहित्यं नास्ति । समुचितस्थले लिङ्गस्य सत्त्वादिति भावः ।

**च० — कालातीतप्रकरणसमाविति** । बाधप्रतिरोधावित्यर्थः । **संबन्धाभावः** साध्यनि-रूपितसामानाधिकरण्याभावः । **संबन्धः** तदभावनिरूपितसामानाधिकरण्यम् । **प्रस्तारस्य** विस्तरस्य । **समसनं** सङ्कोचः ॥ **वक्ष्यतीति** । 'स्ववाक्येन विरोधेपी'त्युत्तरप्रतीकेऽभिधास्यतीत्यर्थः । **व्यवहारोऽपि** असाधकतासाधनमपि । **विशेषणस्य** हेतुतावच्छेदकघटकस्य । **अन्यथासिद्धेः प्रकारा-तरस्य** व्यर्थविशेषणत्वादेरसिध्यपेक्षया प्रकारान्तरस्याधिक्यरूपस्य भक्तिपादेभिधास्यमानत्वात् ।

**सु० — अनध्यवसितत्वादिभेदोऽपि किं व्याप्त्यभावे संभवतीत्येतावता परिसङ्ख्येयो व्यवहारोपयोगित्वाद्वा । नाद्यः । व्यर्थव्युत्पादनस्यातिप्रसङ्गित्वात् । न द्वितीयः । वैयर्थ्य-**

प्रसक्तेः। नेदं साधकमनैकान्तिकत्वादित्यस्य हि सपक्षवृत्तित्वे सति विपक्षवृत्तित्वादित्यर्थः। न चात्र विशेषणव्यवच्छेद्यं किञ्चिदस्ति। एवं विरुद्धत्वादित्यस्य सपक्षावृत्तित्वे सति विपक्षवृत्तित्वादित्यर्थः। तथाच वैयर्थ्यमेव। साध्यविपर्ययव्याप्यत्वादित्यत्रापि संबन्धमात्रेण कृतार्थत्वे व्याप्तिग्रहणं व्यर्थमेव। एवमवान्तरभेदव्युत्पादनमपि निरस्तम्। शिष्यमतिवैशद्याय व्युत्पादनं त्वनुमतमेवेति न स्वीयव्यवहारविरोध इति। विरोधवदसङ्गतेरपि प्रभेदाः स्वयमेवोहनीयाः।

शे० — **अतिप्रसङ्गादिति**। व्याप्त्यभावेऽनन्तप्रकाराणां सम्भवेन तेषामपि परिसंङ्ख्येयत्वं स्यादित्यतिप्रसङ्गादित्यर्थः॥ **विशेषणेति**। सपक्षवृत्तित्वे सतीति विशेषणेत्यर्थः। न च विरुद्धव्यावृत्त्यर्थत्वं, न वैयर्थ्यमिति वाच्यम्। दूषकताबीजैक्येन तस्यापि संग्राह्यत्वेनाव्यावर्तनीयत्वादिति भावः। **तथाच वैयर्थ्यमेवेति**। विपक्षवृत्तित्वमात्रस्यैव निर्दुष्टतया सपक्षावृत्तित्वे सतीति विशेषणवैयर्थ्यमेवेत्यर्थः। न चानैकान्तिकव्यावृत्त्यर्थं तदिति वाच्यम्। दूषकताबीजैक्येन तस्यापि संग्राह्यतयाऽव्यावर्तनीयत्वादित्यत्र तात्पर्यात्। ननु सपक्षावृत्तित्वे सति विपक्षवृत्तित्वं न विरुद्धत्वं किन्तु साध्यविपर्ययव्याप्तत्वं; ततश्च न विशेषणवैयर्थ्यमित्यत आह **साध्येति**॥ **व्याप्तिग्रहणमिति**। व्याप्तेर्नियतसम्बन्धरूपतया साध्यविपर्ययव्याप्तत्वस्य साध्यविपर्ययेण सह नियतसम्बन्धवत्त्व एव पर्यवसन्नत्वात्तत्र च साध्यविपर्ययसम्बन्धवत्त्वमात्रेणासाधकतानुमानोपपत्तेर्नियमांशवैयर्थ्यमेवेत्यर्थः। उपलक्षणं चैतत्। एवमनध्यवसितत्वादित्यस्य सपक्षविपक्षावृत्तित्वादित्यर्थः। तत्र सपक्षावृत्तित्वमात्रेणैव पूर्णत्वाद्विपक्षावृत्तित्वादित्यस्य वैयर्थ्यमेवेत्यपि द्रष्टव्यम्॥ **एवमिति**। अविद्यमानसपक्षविपक्षः पक्षव्यापकः। अविद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिः। विद्यमानसपक्षविपक्षः पक्षव्यापकः। विद्यमानसपक्षविपक्षो विपक्षैकदेशवृत्तिः। अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापकः। विद्यमानविपक्षोऽविद्यमानसपक्षः पक्षैकदेशवृत्तिरित्यष्टधाऽनध्यवसितस्य। पक्षत्रयव्यापकः। पक्षसपक्षविपक्षैकदेशवृत्तिः। पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिः। पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिः। पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिः। पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापकः। पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापकः। सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिरित्यष्टधाऽनैकान्तिकस्य। सति सपक्षे पक्षविपक्षव्यापकः। सति सपक्षे पक्षव्यापको विपक्षैकदेशवृत्तिः। सति सपक्षे विपक्षैकदेशवृत्तिः। सति सपक्षे पक्षैकदेशवृत्तिर्विपक्षव्यापकः। असति सपक्षे पक्षविपक्षव्यापकः। असति सपक्षे पक्षव्यापको विपक्षैकदेशवृत्तिः। असतिसपक्षे पक्षैकदेशवृत्तिः। असति सपक्षे पक्षैकदेशवृत्तिर्विपक्षव्यापक इत्यष्टधा विरुद्धस्य च यदवान्तरभेदनिरूपणं तत्किं संभवमात्रेणोत व्यवहारोपयोगित्वात्। नाद्यः। व्यर्थ-

व्युत्पादनस्यातिप्रसंगित्वात् । नान्त्यः । असाधकतानुमाने विशेषणवैयर्थ्यप्रसक्तेरिति पूर्वोक्तरीत्या निरस्तमित्यर्थः । कथं तर्हि प्रबलप्रमाणसमबलप्रमाणविरोधभेदेन प्रमाणविरोधस्य पद्धत्यादौ स्वीयो द्वैविध्यव्यवहारः । द्वावपि प्रत्यक्षादिभेदेन त्रिविधाविति तत्त्रैविध्यव्यवहारः । कथं च मिथ्यात्वानुमानखण्डनादावसिद्ध्यादिक्रमेण हेत्वाभासव्यवहार इत्यतः शिष्यमतिवैशद्याय वस्तुस्थितिप्रदर्शनार्थमेवास्मदीयो ग्रन्थान्तरे तथा व्यवहारो न त्वसाधकताऽपि तथैव साधनीयेत्यभिप्रायेणेति नासाधकतानुमानानुपयोगप्रतिपादकस्यास्य ग्रन्थस्य तद्विरोध इत्याशयवानाह **शिष्यमतीति** । विरोधस्येवासङ्गतिप्रभेदानामपि सत्त्वात्तेषामनुक्तेर्न्यूनत्वमित्यतः स्पष्टत्वेन शिष्यैरेव ज्ञातुं शक्यत्वाद्विरोधविभागकथनेन तद्विभागस्यापि सूचितत्वाच्च तेषामनुक्तिर्न न्यूनत्वापादिकेत्याशयवानाह **विरोधवदिति** । प्रतिज्ञार्थासङ्गतिर्लिङ्गासङ्गतिर्व्याप्त्यसङ्गतिश्चेत्यसङ्गतिप्रभेदा इत्यर्थः ।

स० — **व्यवहारोपयोगित्वाद्वेति** । नेदं साधकमिति व्यवहारोपयोगित्वाद्वेत्यर्थः । **न चात्रेति** । विपक्षवृत्तित्वमात्रस्यैव हेतुत्वसंभवादिति भावः । **एवमवान्तरभेदव्युत्पादनमपीति** । विशेष्यासिद्धि-विशेषणासिद्धि-अज्ञानासिद्धीत्याद्यवान्तरभेदव्युत्पादनमपि निरस्तम् । व्यवहारे विशेषणव्यर्थत्वादेवेत्यर्थः । ननु तथात्वे भवदीयावान्तरव्युत्पादनमपि व्यर्थमित्यत आह **शिष्यमतीति** । **विरोधवदसंगतेरपीति** । प्रतिज्ञाऽसंगतिः, व्याप्त्यसंगतिः, लिङ्गासंगतिरित्यादिभेद इत्यर्थः ।

प० — **व्याप्त्यभाव इति** । अव्याप्तिरूपहेतुदोषे वैयर्थ्यमेव व्यनक्ति **नेदमित्यादिना** ॥ **एवमवान्तरभेदव्युत्पादनमपीति** । परोक्तहेत्वाभासावान्तरभेदाः प्रमाणलक्षणटीकायां व्यक्ताः ॥ **स्वीयेति** । यद्यपि स्वशब्दस्य द्वारादिषु पठितत्वात्स्वशब्दात्तस्येदमित्यण्प्रत्यये द्वारादीनां चेति वकारात्पूर्वमैजागमे सति सौवेति भाव्यम् । तथापि स्वस्मै हितमिति हिताद्यर्थे प्राक्क्रीताच्छ इति छप्रत्ययोऽयं ध्येयः । चतुर्थस्य द्वितीयपादे गर्हादिभ्यश्चेत्यत्र दुर्घटवृत्तौ तथैवोक्तेः ॥ **ऊहनीया इति** । सिद्धसाधनत्वादिरूपा प्रतिज्ञार्थासङ्गतिर्लिङ्गासङ्गतिरित्यादिरूपेणेति भावः ।

या० — **अतिप्रसङ्गित्वादिति** । वक्ष्यमाणरीत्याऽनध्यवसितादिप्रभेदानां बहूनां सत्त्वात्तेऽपि पृथक् हेत्वाभासतया परिसङ्ख्येया इत्यतिप्रसङ्गादित्यर्थः ॥ **व्याप्तिग्रहणमिति** । साध्यविपर्ययव्याप्तत्वादित्यस्य हि साध्यविपर्ययेण सह नियतसम्बन्धवत्त्वादित्यर्थः । तत्र नियमांशो व्यर्थ इत्यर्थः । **एवमवान्तरभेदेति** । अनध्यवसितभेदा अनेके व्युत्पादिताः । अविद्यमानसपक्षविपक्ष एकः । सपक्षव्यापकस्तदेकदेशवृत्तिरिति द्विविधः । विद्यमानसपक्षविपक्षोऽपरः । सोऽपि पूर्ववत् द्विविधः । अविद्यमानविपक्षो विद्यमानसपक्षस्तृतीयः । अयमपि पूर्ववद् द्विविधः । विद्यमानविपक्षोऽविद्यमानसपक्षश्चतुर्थः । अयमपि

पूर्ववद् द्विविधः । अनैकान्तिकभेदा अपि बहवो व्युत्पादिताः । पक्षत्रयव्यापक आद्यः । पक्षत्रयैकदेशवृत्तिर्द्वितीय । पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिस्तृतीयः । पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिश्चतुर्थः । सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिः पञ्चमः । पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापकः षष्ठः । पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापकः सप्तमः । सपक्षविपक्षैकदेशवृत्तिः पक्षव्यापकोऽष्टम इति । विरुद्धभेदा अपि सति सपक्षे चत्वारोऽसति सपक्षे चत्वार इत्यष्टौ व्युत्पादिताः । एवमेषामवान्तरभेदव्युत्पादनमसाधकतासाधनानुपयोगित्वान्निरस्तमित्यर्थः । नन्वेवं पद्धत्यादौ प्रमणविरोधोऽपि द्विविधः । प्रबलप्रमाणविरोधः समबलप्रमाणविरोधश्चेति स्वीयो द्वैविध्यव्यवहारो, द्वावपि प्रत्यक्षादिविरोधभेदेन त्रिविधाविति त्रैविध्यव्यवहारश्च कथमुपपद्यते कथं वा मिथ्यात्वानुमानखण्डनादावसिद्ध्यादिक्रमेण हेत्वाभासव्यवहार इत्यत आह **शिष्यमतीति** । शिष्यमतिवैशद्याय वस्तुस्थितिप्रदर्शनार्थमेव ग्रन्थान्तरेऽस्मदीयस्तथा व्यवहारो नासाधकताऽपि तथैव साध्येत्यभिप्रायेण, येन विरोधः स्यादिति भावः ॥ **असङ्गतेरपि प्रभेदा इति** । प्रतिज्ञार्थासङ्गतिर्लिङ्गासङ्गतिर्व्याप्त्यसङ्गतिरित्यूहनीया इत्यर्थः ॥

च० — **ऊहनीया इति** । सिद्धमाधनत्वादिरूपा प्रतिज्ञातार्थासङ्गतिर्लिङ्गासङ्गतिर्व्याप्त्यसङ्गतिरित्यूहनीया इत्यर्थः ।

---

सु० — एवं साक्षाद्युक्तिदोषमभिधाय वाचनिक(दोष)माह न्यूनेति ।

अनु० — न्यूनाधिक्ये तु वाचके ॥

न्यूनशब्दो भावप्रधानः । युक्तेर्दूषणमिति प्रकृतमनुवर्तते । अवश्यवक्तव्यापरिपूर्तिर्न्यूनत्वम् । कृतकार्यत्वमाधिक्यम् । वचनदोषात्तत्प्रतिप्रादिता युक्तिरपि दुष्टा स्यादित्येतयोर्वाचनिकत्वम् ।

नन्वयुक्तोऽयं विभागः । विरोधासङ्गत्योरपि वाचि(चनि)कत्वात् । न हि कृतकत्वं स्वयमेव दुष्टम् । अनित्यत्वसाधनेऽपि तथात्वापत्तेः । कृशानुशैत्यादौ तथेति चेत् । तत्किं कृतकत्वं कृशानुशैत्यं वा शब्दनित्यत्वं वा साधयितुं स्वयमेव प्रवृत्तम् । येन तत्र दुष्टं स्यात् । किन्नाम तत्साधनतया शब्देन प्रतिपादि(दर्शि)तम् । एवमसङ्गतावपि सिद्धमाधनतादिलक्षणायां वाच्यमित्याशङ्कानिरासार्थं तुशब्दः ॥ न्यूनाधिक्ये एव वाचनिके, न विरोधासङ्गती । स्वार्थानुमानेऽपि दर्शनादिति भावः । सन्तु तर्हि प्रतिपत्तृप्रतिपादकयोरेवैते दोषाः । यथा निशातम् असिम् आकाशे छिन्ने वा व्यापारयन्पुरुषो दोषवान्भवति, नासिः । एवं कृतकत्वादिकं कृशानुशैत्यादौ व्यापारयन्पुरुष एवापराधी स्यात् न तु कृतकत्वादिकमिति ।

मैवम् । कृतकत्वादेरदुष्टत्वे तद्व्यापारयतोऽप्यपराधानुपपत्तेः । अन्यथा शब्दानित्यत्वसाधने प्रयुञ्जानोऽप्यपराध्येत । ततः कृशानुशैत्यादेः साध्यतानर्हत्वं नित्यत्वादिसाधने कृतकत्वादेरसमर्थत्वमित्यादिरर्थशब्दगत एव दोषोऽङ्गीकरणीयः । न ह्युपाधिमन्तर्भाव्यभवन् दोषो न दोषो भवति । तथा सति बहुविप्लवापत्तेरिति ।

शे० — **अवश्येति** । अवश्यवक्तव्यस्यापरिपूर्तिरेकदेशमात्रवचनमित्यर्थः । ससामर्थ्यलिङ्गप्रतीतिजनकतयाऽवश्यवक्तव्यस्यैकदेशावचनविशिष्टं तदेकदेशवचनमिति यावत् । अधिकापेक्षयैकदेशवचनत्वात्सम्पूर्णप्रयोगेऽतिव्याप्तिवारणाय ससामर्थ्यलिङ्गप्रतीतिजनकतयाऽवश्यवक्तव्यस्येत्युक्तम् । संपूर्णप्रयोगे एकदेशवचनस्यापि भावादतिव्याप्तिरित्यत उक्तम् **एकदेशावचनविशिष्टमिति** । अनुक्तावतिव्याप्तिवारणायैकदेशवचनमित्युक्तमित्यवधेयम् ॥ **कृतकार्यत्वमिति** । न च नित्यत्वानित्यत्वविप्रतिपत्तौ वर्णात्मकः शब्दो नित्यो गुणश्चेत्यादावनित्यत्वप्रतिज्ञयैव कृतकार्येऽर्थान्तरेऽतिव्याप्तिरिति वाच्यम् । पद्धत्युक्तरीत्याऽऽकाङ्क्षितत्वस्यात्राप्यभिप्रेततयाऽऽकाङ्क्षितत्वविरहादेव तत्राप्रसङ्गात् । समीचीनप्रयोगेऽतिव्याप्तिवारणाय कृतकार्यत्वमित्युक्तम् । ननु परार्थानुमान एव दर्शनान्न्यूनत्वादेर्वचनदोषत्वेऽपि कथं युक्तिदोषत्वमित्यतो वचनद्वारेणार्थदोषत्वमित्याशयेन तदुपपादयति **वचनदोषादिति** ।

मूले तुशब्दानर्थक्यमाशङ्क्य विरोधासङ्गत्योर्वचनदोषत्वनिरासार्थत्वान्न तदिति भावेन विरोधासङ्गत्योरपि वचनदोषत्वशङ्कामुत्थापयति **नन्विति** ॥ **एवमिति** । सिद्धार्थसाधकत्वाभिमतं लिङ्गमपि न स्वयमेवासङ्गतमसिद्धार्थसाधनेऽपि तथात्वापत्तेः । सिद्धार्थसाधनाय प्रयोगे तथेति चेत् । किं तल्लिङ्गं स्वयमेव तमर्थं साधयितुं प्रवृत्तं येन तत्रासङ्गतं स्यात्किन्नाम तत्साधनतया शब्देन प्रतिपादितमिति वाच्यमित्यर्थः । कथमनेनोक्तशङ्कानिरास इत्यतोऽवधारणार्थत्वं तुशब्दस्याभिप्रेत्योक्तशङ्कानिरासपरतया योजयति **न्यूनाधिक्ये एवेति । स्वार्थानुमानेऽपि दर्शनादिति भाव इति** । ननु योग्यताविरहलक्षणप्रमाणविरोधस्य स्वार्थानुमाने दोषत्वसंभवेऽपि, स्वार्थानुमाने दोषत्वादर्शनादसङ्गतेः कथमर्थदोषत्वम् । न च सिद्धसाधकोऽसङ्गत इत्युक्तेः सिद्धसाधनतालक्षणासङ्गतिः स्वार्थानुमानेऽपि दोष इति वाच्यम् । स्वार्थानुमाने सिद्धसाधनतादोषत्वस्यापसिद्धान्तग्रस्तत्वादिति चेन्न । वर्णेषु नित्यत्वं जिज्ञासमानस्य केनचित्प्रमाणेनाकाशविभुत्वोपस्थितावाकाङ्क्षाविरहलक्षणासङ्गतेरेव वर्णनित्यत्वानुमितिविरहेणासङ्गतेः स्वार्थानुमानेऽपि दोषत्वदर्शनेनार्थदोषत्वोपपत्तेः । न च समुचितस्थले लिङ्गाप्रमितिरूपाव्याप्तिलक्षणहेतुविरोधादेव तत्र वर्णनित्यत्वानुमितिविरह इति वाच्यम् । सति साकाङ्क्षत्वेऽन्वयायोग्यताया एव विरोधत्वात् । न च वर्णनित्यत्वं जिज्ञासमानस्याकाशविभुत्वे आकाङ्क्षाऽस्तीति नात्र विरोधादनुमित्यभावः, किन्त्वाकाङ्क्षाविरहलक्षणासङ्गतेरेव

इत्यकामेनापि स्वीकरणीयत्वादिति भावः ॥ **आकाश इति** । इदं च विरोधस्य पुरुषदोषत्वनिदर्शनम् । छिन्न इति त्वसङ्गतेः पुरुषदोषत्वनिदर्शनमिति ज्ञेयम् ॥ **अर्थशब्दगत एवेति** । कृशानुशैत्यादेः साध्यतानर्हत्वं कृतकत्वादेरसामर्थ्यमर्थगत एव दोषो न पुरुषदोषः । आदिपदोपात्तं न्यूनत्वादिकं शब्दगत एव दोषो न पुरुषदोष इत्यर्थः ।

ननु विरोधासङ्गत्योरर्थदोषत्वात्तादृशार्थप्रतिपादकत्वेनैव वचने विरोधासङ्गत्योर्वक्तव्यत्वादर्थोपाधिकं विरोधादिकं कथं वचनदोषः स्यात् । तथा न्यूनादेर्वचनदोषत्वात्तादृशवचनप्रतिपादितत्वेनैवार्थे तयोर्वक्तव्यत्वाद्वचनोपाधिकं न्यूनाधिकं कथमर्थदोषः स्यात् । कश्चिदुपाधिमन्तर्भाव्य भवतो दोषत्वाभावादित्यत आह **न हीति** । अत्र न ह्युपाधिमन्तर्भाव्य भवन्दोषो न दोषो भवतीति प्रायिकः पाठः । क्वचित्तु न ह्युपाधिमन्तर्भाव्य भवन्न दोषो भवतीत्यपि पाठः । पूर्वोक्त एवार्थः । न ह्युपाधिमन्तर्भाव्य भवन्दोषो भवतीति पाठस्तु लेखकदोषपतितो मूलकोशेष्वदर्शनादिति द्रष्टव्यम् । एवं सति दुष्टकरणजन्यज्ञानस्य दुष्टत्वं न स्यात् । तत्रापि दुष्टकरणत्वरूपोपाधिनिबन्धनत्वाज्ज्ञानदुष्टत्वस्येत्याशयवानाह **तथा सतीति** । यद्वा नन्वेवं कृशानुशैत्यसाध्यकत्वोपाधिकमेव कृतकत्वं दुष्टमिति प्राप्तं न स्वतः; तथा च कथमयमुपपत्तिदोष इत्यत आह **न हीति** ॥ **बहुविप्लवेति** । दोषमात्रोच्छेदापत्तेरित्यर्थः । काचादेः स्वप्रमाप्रतिबन्धकत्वाभावाद्विषयविशेष एव तत्प्रतिबन्धकत्वेन तद्दोषताया अपि विषयविशेषोपाधिकत्वात्काचादेरपि दोषत्वं न स्यादिति भावः ।

**स०**— नन्वनयोरपि युक्तिदोषत्वमेव कुतो नास्तीत्यत आह **वचनदोषादिति** । **एवमसंगतावपीति** । सिद्धसाधनतास्थलेऽपि धूमादिकं न हि स्वयमेव दुष्टम् । असिद्धवह्निसाधनेऽपि तथात्वापत्तेः । सिद्धसाधने दुष्टमिति चेत् तर्हि किं सिद्धं वह्निं साधयितुं स्वयमेव प्रवृत्तम् । येन तत्र दुष्टं स्यात् किं नाम तत्साधनतया अनुसंहितम् । एवं सिद्धसाधनतालक्षणासंगतावपि वाच्यमित्यर्थः । आदिपदेन छलादिकं ग्राह्यम् । **स्वार्थानुमानेऽपीति** । तत्र शब्दप्रयोगाभावेन विरोधासंगत्योर्न वाचनिकत्वमिति भावः । ननु स्वार्थानुमाने शब्दप्रयोगाभावेन तद्दोषत्वानुपपत्तावपि तत्र प्रतिपत्तुर्विद्यमानत्वेन परार्थानुमाने च प्रतिपादकस्य विद्यमानत्वेन तद्दोषत्वमेवास्त्विति शङ्कते **सन्तु तर्हीति** । विरोधस्य पुरुषदोषत्वमुपपादयितुं दृष्टान्तमाह **यथा निशातमसिमिति** । सिद्धसाधनलक्षणासङ्गतेः पुरुषदोषत्वमुपपादयितुं दृष्टान्तमाह **छिन्न वेति** । इत्यादिवदर्थशब्दगत एवेत्येवमेव पाठः । तथा च यथा साध्यतानर्हत्वं साध्यदोष एव, यथा वा साधनतानर्हत्वं साधनदोष एव । एवं विरोधादिरपि अर्थशब्दगत एवाङ्गीकरणीयः । न च साध्यतानर्हत्वस्यैव विरोधत्वेन, साधनताऽनर्हत्वस्यैव लिङ्गराहित्या-

दिरूपविरोधत्वेन कथं दृष्टान्तदार्ष्टान्तिकभाव इति वाच्यम् । साध्यनिष्ठविरोधस्य प्रतिस्पर्धिप्रमाणसद्भावरूपत्वेन, साधननिष्ठविरोधस्य लिङ्गराहित्यादिरूपत्वेन साध्यतानर्हत्वस्य साधनतानर्हत्वस्य च ततो भिन्नत्वेन तदुपपत्तेः । ननु विरोधासङ्गत्योरर्थदोषत्वात् तादृशार्थप्रतिपादकत्वेनैव वचने विरोधासंगत्योर्वक्तव्यत्वादर्थोपाधिकं कथं दोषः । किञ्चिदुपाधिमन्तर्भाव्य भवतो दोषत्वाभावादित्यत आह **न हीति** । तथात्वे दुष्टकरणजन्यज्ञानत्वेन ज्ञानस्यापि अदुष्टत्वं स्यात् । तत्रापि हि दुष्टकरण(जन्य)त्वरूपोपाधिमन्तर्भाव्यैव तस्य दुष्टत्वं वाच्यम् । उपाधिमन्तर्भाव्य भवतश्च दोषत्वानभ्युपगमादित्याह, **तथा सतीति** ।

प० — कथमनयोर्वाचनिकयुक्तिदोषत्वमित्यत आह **वचनदोषादिति** । अवधारणार्थतुशब्दव्यावर्त्यं वक्तुं चोदयति **नन्वयुक्त इति** ॥ **स्वार्थानुमानेऽपीति** । तत्र वचनाभावादिति भावः । संवादानुक्त्योरिव पुरुषदोषत्वमेतेषामस्त्विति शंकते **सन्त्विति** ॥ **प्रतिपत्त्रिति** । श्रोतृवक्त्रोरिति वा बोध्यबोधकयोरिति वार्थः । प्रतिज्ञार्थविरोधस्योदाहरणं **निशातमसिमाकाश इति** । प्रतिज्ञार्थासंगतेस्तु **छिन्न वेति** । साध्यत्वाभिमतस्य साध्यत्वानर्हत्वरूपमुपाधिं गर्भीकुर्वतो विरोधादेः कथं दोषत्वमित्यत आह **न हीति** । पक्षत्रयवृत्तिः अनैकान्तिकः, पक्षमात्रवृत्तिः अनध्यवसितः इत्यादौ विपक्षवृत्तित्वसपक्षव्यावृत्तत्वाद्युपाधिमंतर्भाव्य भवतो व्यभिचारादेरप्यदोषतापत्तेरित्यर्थः ॥

या० — **अवश्येति** । यावता सांव्यावहारिकेण वचनेन विना प्रतिवादिनः ससामर्थ्यलिङ्गप्रतीतिर्न भवति तावतोऽनुपादानमित्यर्थः । सांव्यावहारिके हेतुगर्भप्रतिज्ञामात्रवचनादौ कदाचिद्वचनार्हस्य पञ्चावयवप्रयोगस्यानुपादानमस्तीत्यतिव्याप्तिवारणायावश्येति विशेषणम् । वादे न्यूनतादेर्वक्तव्यतया प्राप्तस्यावचनेऽतिव्याप्तिपरिहारायावश्येत्युक्तमित्यप्याहुः । छिन्न वेति सिद्धसाधकस्यासाधकत्वे निदर्शनम् ॥ **अर्थशब्दगत एवेति** । साक्षादर्थगतस्तद्द्वारा शब्दगत इत्यर्थः । ननु कृशानुशैत्यादिसाधकत्वरूपोपाध्यवच्छिन्नमेव कृतकत्वं दुष्टं न स्वतः अत एव कथमयं युक्तिदोष इत्यत आह **न हीति** ॥ **बहुविप्लवेति** । दोषमात्रोच्छेदापत्तिरित्यर्थः । काचादेरपि न सर्वत्र दोषत्वं तेन स्वप्रमाया अप्रतिबन्धकत्वात् । किन्तु क्वचिदेव विषयविशेषे । अत एव क्वचित्कचिद्दोष इति न्यायविदां प्रवादः । तथा च तस्यापि दोषता न स्यादिति भावः ।

श्री० — **कृतकार्यत्वम्** अन्येनेति शेषः ॥ **एवमितीति** । न हि महानसादौ वन्हिसाधनाय धूमः स्वयमेव प्रवृत्तो येन तत्र दुष्टः स्यात् । किन्नाम तत्साधनतया शब्देन प्रतिपादित इत्यर्थः ॥ **प्रतिपत्त्रिति** । तर्हि पुरुषदोषा एव सन्त्वित्यर्थः । प्रतिज्ञाविरोधहेतुविरोधभेदेन विरोधस्य द्विविधत्वात्प्रतिज्ञाविरोधस्य स्वत एवार्थदोषत्वमिति वक्तुं कृशानुशैत्यादेः साध्यतानर्हत्वमित्युक्तम् । हेतुविरोधस्य स्वतोऽर्थदोषत्वं वक्तुं नित्यत्वादिसाधने कृतकत्वादेरसामर्थ्यमित्युक्तमिति मन्तव्यम् ।

च० — **भावप्रधानः** । प्रकृत्युपस्थाप्यतावच्छेदकमुख्यविशेष्यकधीजनकः । **प्रतिपत्त्रिति** । श्रोतृवक्त्रोर्बोध्यबोधकयोर्वेत्यर्थः ।

सु० — **ननु कथमेत एवानुमानदोषाः । सोपाधिकत्वस्याप्यतिरिक्तस्य सत्त्वादित्यत-स्तत्स्वरूपानुवादेनोक्तान्तर्भावमाह** साध्येति ।

अनु० — साध्यव्यापकवैलोम्यमव्याप्तिस्साधनस्य च ।

**साधनस्य यत्साध्यव्यापकवैलोम्यं साऽव्याप्तिः । चशब्दात्सत्प्रतिपक्षता च । साध्य-स्याधर्मसाधनत्वादेर्व्यापको यो निषिद्धत्वादिधर्मः । यत्राधर्मसाधनत्वं तत्र निषिद्धत्वमिति नियमात् । तेन साधनस्य हिंसात्वादेर्वैलोम्यं साध्यापेक्षया वैपरीत्यमव्याप्तत्वमिति यावत् । यत्र हिंसात्वं तत्र निषिद्धत्वमिति नियमाभावात् । वैधहिंसायां सत्यपि हिंसात्वे निषिद्धत्वा-भावात् । तदनेन सोपाधिकत्वस्य स्वरूपमुक्तम् । साधयव्यापकत्वे सति साध्नाव्यापको हि धर्म उपाधिः, तद्वत्त्वंच साधनस्य साध्यव्यापकाव्याप्यत्वमेव । एतत्प्रागनुमानाद्व्याप्ति-ग्रहणवेलायामव्याप्तिरेव । साध्यव्यापकं परित्यजतः साध्यपरित्यागावश्यम्भावात् । न हि साध्यमपरित्यजन् तद्व्यापकं परित्यजतीति युज्यते । साध्यपरित्यागश्चाव्याप्तिरेव ।**

शे० ननु साध्यव्यापकेत्युत्तरवाक्यमनर्थकम् न चोपाधेरन्तर्भावकथनार्थं तदिति वाच्यम् । तत्कथनस्यापि प्रयोजनाभावात्सोपाधिकत्वमव्याप्तिरित्येतावतैव तदन्तर्भावसिद्धेरितरानर्थक्यापाताच्चेत्यतो-ऽनुमानदोषचातुर्विध्यावधारणसमर्थनार्थत्वेनान्तर्भावकथनस्यार्थवत्त्वात्साध्यव्यापकेत्यस्य च सोपाधिकत्व-स्वरूपानुवादतयाऽवैयर्थ्यादित्यभिप्रेत्यानुमानदोषचातुर्विध्यनियमानुपपत्तिशङ्कामुत्थापयति **नन्विति** । साध्यव्यापकवैलोम्यस्य साधनमात्रनिष्ठत्वेन चशब्दस्य साधनस्यासाधनस्य चेत्येवं यथास्थितसम्बन्धानुपप-त्तावप्यव्याप्तिश्चेति भिन्नक्रमतया तत्सम्बन्धो नानुपपन्न इत्यभिप्रेत्य 'स एवोपाधिदोषोऽपी'ति प्रमाणलक्षणा-नुसारेण चशब्दार्थमाह **चशब्दात्प्रतिपक्षता चेति** । साध्यव्यापकवैलोम्यमित्यादेः कथमुपाधिस्वरूपा-नुवादत्वं येनावैयर्थ्यं भवेदित्यतस्तत्स्वरूपोपदर्शकतया तद्व्याचष्टे **साध्यस्येत्यादिना** । ननूपाधेरव्याप्तौ प्रतिपक्षे चान्तर्भावो न वक्तुं शक्यः विरुद्धत्वादित्यतो दशाभेदेनोभयस्यापि सम्भवान्नानुपपत्तिरित्यभिप्रेत्य तदुभयं दशाभेदेनोपपादयन्मूले कण्ठोक्तामुपाधेरव्याप्तितां तावदुपपादयति **एतदिति** । अस्तु साध्यव्यापकं परित्यजतो हेतोः साध्यपरित्यागस्तथाऽपि कथमव्याप्तिरित्यत आह **साध्यपरित्यागश्चेति** ।

स० — **साऽव्याप्तिरिति** । अव्याप्त्युन्नायिकैवेत्यर्थः ।

प० — **तदनेनेति** । 'साध्यव्यापकवैलोम्यं साधनस्ये'त्यनेनेत्यर्थः । अव्याप्तिप्रतिपक्षत्वे दशा-भेदेन व्यवस्थिते इत्याह **एतत्प्रागिति** ।

सु० — अपरे तु निरुपाधिकः संबन्धो व्याप्तिः । सोपाधिकत्वे तु लक्षणाभावाद्व्याप्त्यभाव इत्याचक्षते । तदसत् । व्याप्तिज्ञानाधीनमुपाधिज्ञानं तदधीनं च निरुपाधिकत्वज्ञानं तदायत्तं व्याप्तिज्ञानमिति चक्रकप्रसङ्गेन तस्य व्याप्तिलक्षणत्वानुपपत्तेः । तत्किं सोपाधिकस्याप्यस्ति व्याप्तिः । नैवम् । व्याप्तत्वानुपाधिकत्वयोः समनियमेऽपि व्याप्तिबोधानङ्गतयोपाध्यभावस्य लक्षणत्वानुपपत्तेरुक्तत्वात् ।

शे० — **व्याप्तिज्ञानाधीनमिति** । व्याप्तिनिरूपकत्वरूपव्यापकत्वस्योपाधिशरीरप्रविष्टत्वादिति भावः ॥ **तदधीनं चेति** । प्रतियोगिज्ञानाधीनत्वादभावज्ञानस्येति भावः ॥ **तदायत्तं चेति** । लक्ष्यावधारणस्य लक्षणज्ञानाधीनत्वादिति भावः । यद्यप्यत्र साधननिष्ठव्याप्तेरुपाधिघटकव्याप्तेश्च भिन्नतया न चक्रकावकाशः तथाऽपि सर्वत्र एकैव व्याप्तिरित्यभिमानेनेदमुक्तमित्यवगन्तव्यम् ॥ वस्तुतस्तु चक्रकशब्देनानवस्थाया एव विवक्षितत्वात्तद्व्याप्तिभेदे चक्रकाप्रसरेऽप्यनवस्थाया दुर्वारत्वान्नानुपपत्तिरित्यवधेयम् ॥ **व्याप्तिबोधानङ्गतयेति** । उक्तरीत्या चक्रकप्रसङ्गादिति शेषः ।

स० — **व्याप्तिज्ञानाधीनमुपाधिज्ञानमिति** । उपाधिलक्षणे साध्यव्यापकत्वस्य विशेषणत्वेन तज्ज्ञानावश्यम्भावात् तज्ज्ञानस्य च व्याप्तिज्ञानाधीनत्वेन व्याप्तिज्ञानाधीनमुपाधिज्ञानमित्यर्थः । **तदधीनमिति** । उपाधिज्ञानाधीनमित्यर्थः अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादिति भावः । **तदायत्तमिति** । निरुपाधिकत्वज्ञानायत्तमित्यर्थः । निरुपाधिकत्वस्य निरुपाधिकः संबन्धो व्याप्तिरिति लक्षणे तस्य विशेषणत्वेन तज्ज्ञानाभावे व्याप्तिज्ञानमेव न संभवतीति भावः । व्याप्तत्वानुपाधित्वयोः समनियतत्वमङ्गीकृत्यैव निरुपाधिकत्वस्य व्याप्तिलक्षणत्वेन तज्ज्ञानाभावे व्याप्तिज्ञानासंभवेन तज्ज्ञानस्य चक्रकादिना असंभवात् । निरुपाधिकत्वस्य व्याप्तिविशेषणत्वमात्रं न संभवतीत्येवं दूषिते सोपाधिकस्यापि व्याप्तिरङ्गीकृता निरुपाधिकत्वस्य व्याप्तत्वानङ्गीकारादिति भ्रान्त्या शङ्कते **किमिति** । स्वाशयमुद्घाटयति **व्याप्तत्वानुपाधित्वयोरिति** ॥ **उपाध्यभावस्य लक्षणत्वानुपपत्तेरुक्तत्वादिति** । व्याप्तिज्ञानाधीनमुपाधिज्ञानमिति पूर्ववाक्येनेति शेषः । तत्प्रकारमेव दर्शयति **व्याप्तिबोधानङ्गतयेति** । लक्षणत्वे हि तज्ज्ञानमावश्यकम् । न च तत्संभवति । चक्रकप्रसङ्गात् । अतो व्याप्तिबोधानङ्गतया व्याप्तिबोधं प्रति अङ्गत्वेनानुपपत्त्या व्याप्तिलक्षणत्वं न संभवतीत्येवाभिप्रायः । न तु समनियतत्वमपीति भावः ।

प० — **व्याप्तिज्ञानाधीनमिति** । साध्यव्यापकत्वस्य व्याप्तिघटितत्वेन प्राग्दर्शितत्वादिति भावः ॥ **तदधीनमिति** । प्रतियोगिज्ञानाधीनत्वादभावज्ञानस्येति भावः ॥ **तदायत्तमिति** । लक्षणज्ञानाधीनत्वाल्लक्ष्यनिश्चयस्येति भावः ॥ **उक्तत्वादिति** । चक्रकप्रसंगेनोक्तत्वादित्यर्थः ।

या० — व्याप्तिज्ञानाधीनमिति । व्याप्तिनिरूपकत्वरूपव्यापकत्वस्योपाधिशरीरे प्रविष्टत्वा-दिति भावः ॥ तदधीनं चेति । प्रतियोगिज्ञानाधीनत्वात्तदभावज्ञानस्येति भावः ॥ तदायत्तमिति । लक्ष्यावधारणस्य लक्षणज्ञानाधीनत्वादिति भावः । इदं च सर्वत्रैकैव व्याप्तिरित्यभिमानेनोक्तम् । वस्तु-तस्तु साधननिष्ठव्याप्तेरुपाधिघटकव्याप्तेश्च भिन्नत्वान्न चक्रकापत्तिः, अनवस्थायां वा तात्पर्यमित्यवगन्तव्यम् । व्याप्तिबोधानङ्गतयेति । उक्तरीत्या चक्रकप्रसङ्गेनेति भावः ।

श्री० — व्याप्त्यभावः व्याप्यत्वासिद्धः । उपाध्यभावस्य निरुपाधिकत्वस्य ॥ लक्षणत्वेति । व्याप्तिलक्षणत्वेत्यर्थः । तथा च सोपाधिकस्यापि व्याप्तिरस्तीति नाभिप्राय इत्यर्थः ।

**सु० — नन्वेवं चेत्कथं साध्यसाधनव्यवहारः । आगामिसंभावनापेक्षयेति ब्रूमः । वस्तुतस्तु यो धर्मो यद्व्यापकाव्याप्तस्तस्य तेनाव्याप्तिरित्येव वक्तव्यम् । अनुमानप्रवृत्त्युत्तरकालं तु सत्प्रतिपक्षतैव । साधनस्य साध्यव्यापकपरित्यागो हि पक्षादन्यत्र वा स्यात्पक्षे वा । न तावदाद्यः । तथा सति स्फुटव्यभिचारपरित्यागेनोपाध्युद्भावनस्यानवसरत्वात् । द्वितीये तु साध्यव्यापकस्य पक्षाद्व्यावृत्तिः साध्यमपि व्यावर्तयतीति सत्प्रतिपक्षतैव ।**

**एतेनोपाध्यभावस्य प्रतिपक्षत्वे नोपाधेर्दूषणत्वम् । न हि यदभावो यत्र दूषणं सोऽपि तत्र दूषणमिति युक्तं विरोधादिति परास्तम् । पक्षव्यावृत्तिप्राधान्येनैवोपाधित्वात् । एतदर्थं च साध्यव्यापकस्य वैलोम्यं पक्षाद्व्यावृत्तिः साधनस्य सत्प्रतिपक्षतेति योजनीयम् । भाव-प्रधानस्यादोषत्वं त्विष्टमेव ।**

शे० — एवं चेदिति । अनुमानात्प्राग्व्याप्तिग्रहणवेलायामुपस्थितस्योपाधेरव्याप्त्युन्नायकत्वं चेदित्यर्थः ॥ साध्यसाधनव्यवहार इति । व्याप्तिग्रहणदशायां पक्षसाध्यसाधनप्रविभागाभावेन व्यापकव्याप्ययोः साध्यसाधनभावाभावेन साध्यव्यापकत्वादेरसंभवात्कथं साध्यव्यापकत्वादिगर्भोपाधित्व-व्यवहार इत्यर्थः ॥ आगामीति । अस्य सूत्रस्य शाटकं वयेत्यादिवद्भाव्यपेक्षया तद्व्यवहार इति भावः । अस्मिन्पक्षे साध्यसाधनव्यवहारस्य गौणत्वापत्तेराह वस्तुतस्त्विति । तथा चोपाधिलक्षणस्य साध्य-साधनघटितत्वाभावान्नोक्तदोषावसर इति भावः । एवं कण्ठोक्तामव्याप्तिरूपतामुपपाद्य चशब्दसूचितां प्रतिपक्षतामप्युपाधेरुपपादयति अनुमानेति ॥ स्फुटव्यभिचारेति । साध्यव्यापकोपाधिना सह साधनस्य व्यभिचारो यत्र प्रदर्शनीयस्तत्र साध्यव्यभिचारस्यापि सत्त्वेन तस्यैवोपदर्शयितुं शक्यत्वान्न तत्परित्यागेन साधनस्योपाधिव्यभिचारप्रदर्शनं युक्तमित्यर्थः । न च तत्रोपाध्यभावस्य निश्चितत्वेऽपि साध्याभावस्या-निश्चयान्न साध्यव्यभिचारप्रदर्शनं साधनस्य संभवतीति वाच्यम् । तद्व्यापकोपाधिव्यावृत्त्या साध्यव्या-

वृत्तेस्तत्रापि निश्चितत्वात् । अन्यथोपाधेः साध्यव्यापकत्वनिश्चयायोगात्साध्यवत्युपाध्यभावशङ्कया तत्प्रतिबन्धादिति भावः ।

**प्रतिपक्षत्व इति** । प्रतिपक्षत्वेन दूषणत्व इत्यर्थः । उपाधेः पक्षाद्व्यावृत्तिः प्रतिपक्षतया दोष इत्येवोपाधिदोषत्वं वादिनाऽभिमतम् । उपाधेः साधनाव्यापकत्वेन साधनवत्पक्षनिष्ठात्यन्ताभावप्रतियोगित्वनियमेन तस्या आवश्यकत्वान्न तूपाधिस्तद्व्यावृत्तिश्चेत्युभयमपि दूषणमिति येनोक्तरीत्या विरोधः शङ्क्येतेत्याशयेनाह **पक्षेति** ।। **एतदर्थं चेति** । उपाधिव्यावृत्तिरेव प्रतिपक्षतया दोष इत्येतदर्थमित्यर्थः । तर्ह्युपाधिव्यावृत्तेः प्रतिपक्षत्वेन दोषत्वेऽप्युपाधित्वेनोपाधेर्दूषणत्वाभावादुपाधिर्दूषणमित्यनर्थकः शास्त्रकाराणां व्यवहार इत्यतः स्वरूपेण तस्यादोषत्वस्येष्टत्वाच्छास्त्रकारव्यवहारस्य चोपाध्युन्नीतपक्षव्यावृत्तेः प्रतिपक्षतया दोषत्वाभिप्रायकत्वान्नानुपपत्तिरित्याशयेनाह **भावेति** ।

**स० — नन्वेवं चेदिति** । अनुमानात्प्राक् व्याप्तिग्रहणवेलायामुपस्थितस्योपाधेरव्याप्त्युन्नायकत्वं चेदित्यर्थः । व्याप्तिग्रहणदशायां पक्ष-साध्य-हेत्वादिप्रविभागाभावेनोपाधेः साध्यव्यापकत्वादेरसंभवात् कथं साध्यव्यापकत्वे सतीति विशेषणमिति भावः । आगामिसंभावनापेक्षया तदुपपत्तिरित्यर्थः । वास्तवसाध्यत्वादेरभावाभिप्रायेण संभावनेत्युक्तम् । व्याप्तिग्रहणानन्तरभाविपक्षादिप्रविभागदशायां साध्यत्वादिसंभवाभिप्रायेण साध्यव्यापकत्वे सतीति लक्षणे साध्य-साधनव्यवहारः संभवतीति भावः । **स्फुटव्यभिचारपरित्यागेनेति** । साध्यव्यापकोपाधिना सह साधनस्य यत्र व्यभिचारो दर्शनीयः, तत्र साध्यव्यभिचारस्यापि सद्भावेन तस्यैवोपदर्शयितुं शक्यत्वान्न तत्परित्यागेन साधनस्योपाधिव्यभिचारप्रदर्शनं युक्तमिति भावः । न चोपाध्यभावस्य तत्र निश्चितत्वेऽपि साध्याभावस्यानिश्चयात् न साध्यव्यभिचारप्रदर्शनं सम्भवतीति वाच्यम् । तद्व्यापकोपाधिव्यावृत्तौ साध्यव्यावृत्तेरप्यावश्यकत्वेन तन्निश्चयोपपत्तेः । अन्यथा उपाधेः साध्यव्यापकत्वस्यैवायोगात् साध्यवत्यपि उपाध्यभावशङ्कया तन्निश्चयासंभवादिति भावः । **पक्षेति** । तथा चोपाधेः पक्षात् व्यावृत्तिमुपजीव्यैवोपाधेर्दूषणत्वात् तद्व्यावृत्तेः दोषत्वान्न तस्य दूषणत्वमिति शङ्कानवकाशः । एतेनेत्यनेन परामृष्टमेव हेतुं दर्शयति **पक्षव्यावृत्तिप्राधान्येनेति** । उपाधित्वादित्येव पाठः । पक्षव्यावृत्तिमुखेनैवोपाधेः दोषत्वमिति यावत् विवक्षितमिति भावः । **एतदर्थं चेति** । अनुमानप्रवृत्त्युत्तरकाले तु सत्प्रतिपक्षतैवेत्येतदर्थं चेत्यर्थः । **भावप्रधानस्येति** । उपाधित्वलक्षणस्वरूपेणादोषत्वं त्विष्टमेवेत्यर्थः । तथा च उपाधिर्दूषणमित्यस्य उपाध्युन्नीतोपधिव्यावृत्तिरेव दूषणमिति भावः ।

प० — एतत्प्रागित्यादिना भवदुक्तरीत्या व्याप्तिग्रहप्रतिबन्धकत्वेनाव्याप्त्युन्नायकत्वं चेदुपाधेः तर्हि तदा साध्यसाधनभावाभावात् 'साध्यव्यापकवैलोम्यं साधनस्ये'त्युक्तिरयुक्तेति शङ्कते **नन्वेवञ्चेदिति** ।।

**आगामीति** । पश्चात्तनानुमानप्रयोगसंभावनापेक्षयैवेत्यर्थः । अवच्छिन्नसाध्यव्यापकोपाधेः एवं सत्यसंग्रहः स्यात् तदर्थमवच्छिन्नसाध्येत्युक्तौ शुद्धसाध्यव्यापकोपाध्यसंग्रह इत्यत उभयानुग्रहायाह **वस्तुतस्त्विति** । उपाधेरव्याप्तिदशामुक्त्वा प्रतिपक्षतादशामाह **अनुमानेति** । नोपाधेर्दूषणत्वमिति पदच्छेदः । एतेनेत्युक्तं व्यनक्ति **पक्षव्यावृत्तीति** । भावाभावयोर्द्वयोरप्यन्योन्यनिरपेक्षतया न दोषत्वम् । किन्तु पक्षनिष्ठस्वव्यावृत्तिमुखेनैवोपाधेर्दोषत्वम् । तथा च न कोपि विरोध इति भावः । **उपाधित्वात्** उपाधिदोषत्वादित्यर्थः । एवं तर्ह्यभावप्राधान्येनैवोपाधेः दोषत्वं, न तु स्वप्रधानस्येत्यतो नास्त्येवेत्याह **भावेति** । उपाधिस्वरूपपुरस्कारेणादोषत्वं त्विष्टमित्यर्थः ।

**या० — नन्वेवमिति** । अनुमानात्प्राग्व्याप्तिग्रहणवेलायामव्याप्तिरेवेति यदि तदा तस्यां दशायां व्याप्यव्यापकयोः साध्यसाधनाभावाभावेन तद्धर्मोपाधित्वव्यवहारः कथमित्यर्थः ॥ **पक्षवृत्तिप्राधान्येनेति** । साधनव्यापक एव खलूपाधिर्दोषः । साधनाव्यापकत्वं च साधनवत्पक्षनिष्ठव्यावृत्तिप्रतियोगित्वम् । एवं चोपाधिर्दोष इत्यस्य व्यावृत्तिप्राधान्यविवक्षयोपाधिप्रतियोगिका पक्षनिष्ठव्यावृत्तिरेव दोष इत्यर्थो विवक्षित इत्यर्थः । **उपाधित्वात्** उपाधितया दोषत्वात् । नन्वेवं प्रतियोगिप्राधान्यविवक्षया पक्षव्यावृत्तोऽयं धर्म इत्युद्भावित उपाधिर्न दोषः स्यादित्यतोऽत्रेष्टापत्तिमुत्तरमाह **भावप्राधनस्येति** । प्रतियोगिप्रधानस्येत्यर्थः ।

---

**श्री० — एवं चेदिति** । अनुमानात्प्राग्व्याप्तिग्रहणवेलायामव्याप्त्युन्नायकत्वपक्ष इत्यर्थः । **कथमिति** । तदानीं पक्षादिप्रविभागाभावादिति भावः ॥ **आगामीति** । बुद्धिस्थसाध्यादिनेत्यर्थः ॥ **इत्येवेति** । साध्यसाधनपदाघटिततयेत्यर्थः । तथा च नोक्तदोषभावः ॥ **यदभाव इति** । उपाध्यभावस्य पूर्वानुमाने सत्प्रतिपक्षतया दूषणत्वाङ्गीकारादित्यर्थः ।

**च० — पक्षव्यावृत्तिप्राधान्येनेति** । उपाधिर्दोष इत्यस्योपाधिप्रतियोगिका साधनवत्पक्षनिष्ठव्यावृत्तिरेव दोष इत्यर्थो विवक्षित इत्यर्थः । **भावप्रधानस्येति** । प्रतियोगिप्रधानस्येत्यर्थः ।

**सु० — ननु च प्रागनुमानादपि सत्प्रतिपक्षताऽनुमानोत्तरमव्याप्तिर्वा किन्न स्यात् । मैवम् । पक्षे हि साध्यस्योपसंहारे प्रतिपक्षावसरः । न च व्याप्तिग्रहणसमये पक्षादिप्रविभागोऽस्तीति कथं तदा प्रतिपक्षत्वं स्यात् । अनुमानोत्तरमव्याप्तिः कथमिति वक्तव्यम् । साध्यव्यापक उपाधिः पक्षाद्व्यावर्तमानः साध्यमपि व्यावर्तयति । तथा च साध्यरहिते तत्र वर्तमानं साधनं साध्यं व्यभिचरतीति चेन्न । तथा सति बाधितसत्प्रतिपक्षयोरपि व्यभिचारितापातात् । ओमिति चेन्न । निरसिष्यमाणत्वात् । बाधप्रतिपक्षाभ्यामेवानुमानदूषणसंभवे किं**

तदुपजीविना व्यभिचारेणेति चेत्, तर्हि व्यापकव्यावृत्त्या प्रतिपक्षेणैवानुमाने दूषिते किं तदुपजीविना व्यभिचारेणेति तुल्यम् ।

**शे०— व्यावर्तयतीति** । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वादिति भावः ॥ **निरसिष्यमाणत्वादिति** । 'स्ववाक्येन विरोधेऽपि नैव साधकतां व्रजेदि'त्युत्तरवाक्यव्याख्यानावसरे 'एतेनैतदपि निरस्तमि'त्यादिनेति शेषः ।

**स०— अनुमानोत्तरमपीति** । अनुमानोत्तरमव्याप्तिः किं न स्यादित्यत्र कथमिति वक्तव्यमित्यर्थः । **साध्यं व्यभिचरतीति** । तथा च व्यभिचारप्रदर्शनस्य विद्यमानत्वेन व्याप्तिनिश्चयो न संभवतीति अव्याप्तिरेव किं न स्यादिति भावः । **तथा सतीति** । बाधितस्थले प्रबलप्रमाणेन पक्षे साध्याभावस्यैव निश्चितत्वेन तत्र विद्यमानस्य हेतोः साध्यव्यभिचारनिश्चयेन व्याप्तिनिश्चयासंभवात् अव्याप्तिनिश्चयसंभवात् अव्याप्तेरेव दोषत्वं, (?) न तु सत्प्रतिपक्षस्येति भावः ।

**प०— निरसिष्यमाणत्वादिति** । 'स्ववाक्येन विरोधेपी'त्येतद्व्याख्यावसरे इति भावः । व्यक्तमेतत्तर्कताण्डवे ।

**या०— निरसिष्यमाणत्वादिति** । असिन्नवाधिकरण इति शेषः ।

---

**श्री०— बाधसत्प्रतिपक्षयोरपीति** । बाधितस्य पक्षे व्यभिचारः स्पष्ट एव । शब्दोऽनित्यः कृतकत्वादित्यत्र शब्दो नित्यः श्रावणत्वादिति नित्यत्वसाधने पक्षेऽनित्यत्वाभावप्राप्त्या सत्प्रतिपक्षस्यापि कृतकत्वस्य पक्षे व्यभिचारः प्राप्त एवेत्यर्थः ।

**च०— निरसिष्यमाणत्वादिति** । प्रकृतनय एव प्रत्याख्यास्यमानत्वादित्यर्थः ।

**सु०— किञ्च पक्षे व्यभिचारः किं निश्चित उत सन्दिग्धः । नाद्यः । विकल्पानुपपत्तेः । तथा हि । पक्षे साध्याभावो निश्चितो न वा । आद्ये किं प्रमाणान्तरेणोत साध्यव्यापकोपाधिव्यावृत्त्या । प्रथमे तत एवानुमानं दुष्टमिति किमुपाधिना । न द्वितीयः । परस्पराश्रयत्वप्रसङ्गात् । उपाधेः साध्यव्यापकत्वनिश्चये तद्व्यावृत्त्या साध्यव्यावृत्तिनिश्चयः सति च तस्मिन्नसाविति । नेति पक्षे साध्यव्यापकत्वानिश्चयात् उपाधेः, कथं तद्व्यावृत्त्या पक्षे साधनस्य निश्चितो व्यभिचारः स्यात् । पक्षे सन्दिग्धो व्यभिचारस्तु स्वत एव सिद्धो सोपाधिमुखनिरीक्षणापेक्षः । सर्वानुमानोच्छेदहेतुश्च । तस्मादनुमानोत्तरकालं सत्प्रतिपक्षतैवेत्युचितम् । एतदेवाभिप्रेत्य 'स एवोपाधिदोषोऽपी'त्यादिवचनम् ।**

शे०— **तत एवेति** । साध्याभावनिश्चायकप्रमाणान्तरविरोधादेवेत्यर्थः ॥ **नेति पक्ष इति** । पक्षे साध्याभावोऽनिश्चित इति पक्षे । साध्यवत्युपाधेरुपाध्यभाववति च साध्याभावस्य निश्चितत्वेन व्यभिचारज्ञानाभावादुपाधेः साध्यव्यापकत्वनिश्चयोपपत्तेर्व्यापकीभूतोपाध्यभावेन साध्याभावनिश्चयोपपत्त्या साध्यरहिते पक्षे साधनस्य वर्तमानतया साध्यव्यभिचारनिश्चयसंभवेऽपि पक्षे साध्याभावो न निश्चित इति पक्षे साध्यवत्युपाधेरुपाध्यभाववति च साध्याभावस्यानिश्चयेन व्यापकीभूतोपाध्यभाववत्तया निश्चिते पक्षे तद्व्याप्यभूतसाध्यसन्देहेन व्यभिचारज्ञानरूपप्रतिबन्धकवशादुपाधेः साध्यव्यापकत्वनिश्चयासंभवादव्यापकव्यावृत्त्याऽव्याप्यव्यावृत्तेश्चातिप्रसङ्गेन निश्चेतुमशक्यत्वेनोपाधिव्यावृत्त्या पक्षे साध्यव्यावृत्त्यसिद्ध्या पक्षस्य साध्यरहितत्वासिद्धेस्तत्र वर्तमानस्य साधनस्य न साध्यव्यभिचारनिश्चय इति भावः ॥ **पक्षे सन्दिग्धो व्यभिचार इति** । पक्षेऽपि सन्देहः किं स्वारसिकः फलतयाऽभिमतः किंवा संशयान्तरमिति विकल्प्य; न द्वितीयः उपाधिव्यावृत्त्याहितपक्षीयसाध्यसंशयमुपजीव्य प्रवृत्तव्यभिचारसंशयरूपसंशयान्तरस्योपाधिव्यावृत्त्याहितसाध्यसंशयरूपप्रतिपक्षोपजीव्यत्वात् उपजीव्यभूतप्रतिपक्षेणैव दुष्टत्वे तदाहितव्यभिचारसन्देहस्य निष्प्रयोजनत्वादिति द्वितीयपक्षदूषणं च मनसि निधायाद्यं प्रत्याचष्टे **पक्षे सन्दिग्धेति** । स्वत एव सिद्ध इत्यस्य विवरणं **नोपाधिमुखनिरीक्षणापेक्ष इति** । उपाधिं विनाऽपि तत्सिद्धेर्न तस्य तत्फलत्वमिति भावः ॥ **सर्वेति** । निश्चितहेतुमति साध्याभावसन्देहरूपव्यभिचारसंशयस्य सर्वत्रापि सत्त्वादिति भावः ॥ **तस्मादिति** । उक्तरीत्या केनापि प्रकारेणानुमानोत्तरकालमव्याप्त्युन्नायकत्वानुपपत्तेरित्यर्थः ॥ **प्रतिपक्षतैवेति** । न च दूष्यानुमानस्य तर्कानुग्रहे उपाधिर्न साध्यव्यापक उपाधेस्तदनुग्रहे त्वनुमानस्य बाध एवेति न कदाऽपि प्रतिपक्षावसर इति वाच्यम् । यदैकत्रापि नानुकूलतर्कावतारस्तदा प्रतिपक्षावतारस्याविकलत्वात् । अन्यथा प्रतिपक्षमात्रोच्छेदापत्तेरित्याशयात् । ननु नोपाधेर्व्याप्तिग्रहदशायामव्याप्त्युन्नायकत्वमङ्गीकर्तुं युक्तम् । 'स एवोपाधिदोषोऽपी'ति प्रमाणलक्षणे, 'उपाधिः प्रतिरूपं यत्साधनं तन्न चापरमि'त्युत्तरानुव्याख्याने चोपाधेरव्याप्त्युन्नायकत्वनिरासेन सत्प्रतिपक्षमात्रोन्नायकत्वप्रतिपादनेन तद्विरुद्धत्वादित्यत उदाहृतप्रमाणलक्षणादेर्विप्रतिपत्त्यनन्तरमव्याप्त्युन्नयनवारकत्वेन ततः पूर्वमपि तदुन्नयनवारकत्वपरत्वाभावान्न तद्विरोध इत्यभिप्रेत्याह **एतदेवाभिप्रेत्येति** ।

स०— **प्रथमे वेति** । **तत एव** साध्याभावनिश्चायकप्रमाणाभावादेवेत्यर्थः । **परस्पराश्रयत्वेति** । अयमाशयः । उपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चये सति, कथमुपाधेः साध्यव्यापकत्वाभावे उपाधिनिवृत्त्या साध्यनिवृत्तिः संभवतीति कृत्वा साध्यव्यापकत्वमिति साध्यव्यापकत्वनिश्चयः । सति च तस्मिन् उपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चय इत्यन्योन्याश्रय इति । न चानुकूलतर्कादिना

उपाधेः साध्यव्यापकत्वनिश्चयाभ्युपगमेन उपाधिव्यावृत्त्या साध्यव्यावृत्तेः तन्निश्चायकत्वस्यानभ्युपगतत्वात् कथमन्योन्याश्रय इति वाच्यम् । अनुकूलतर्कादिना तद्व्यापकत्वनिश्चये व्यापकानुपलब्धिबाधेन दुष्टत्वोपपत्तौ उपाध्युद्भावनवैयर्थ्यापातादित्यत्र तात्पर्यात् । **नेति पक्ष इति** । साध्याभावः पक्षे न निश्चितः इति पक्षे साध्यसत्त्वसंदेहेन उपाधेः साध्यव्यापकत्वनिश्चयो न संभवति । यदि पक्षे साध्यं स्यात् तदा उपाध्यभावेन संदिग्धव्यभिचार इत्यर्थः । **स्वत एव सिद्ध इति** । न च स्वारसिकपक्षीयव्यभिचारसंशयस्यादोषत्वेऽप्युपाध्यभावाहितः संशयः प्रतिबन्धक एवेति वाच्यम् । उपाध्यभावेन पक्षीयतत्संशयस्यैव सत्प्रतिपक्षत्वेनेष्टापादनात् । नेति पक्षेऽपि किं निश्चितो व्यभिचारः, किं संदिग्ध इति विकल्पं मनसि निधायाद्यं दूषयति **नेतीति** ॥ **पक्ष इति** । साध्याभावस्य पक्षेऽनिश्चये साध्यसत्त्वसंदेहेनोपाधेः साध्यव्यापकत्वनिश्चयस्यैवाभावात्संदिग्धव्यभिचारादिति भावः । द्वितीयेऽपि किं स्वारसिकसंशयः फलं, संशयान्तरं वा । नाद्य इत्याह **संदिग्धो व्यभिचारस्त्विति** । अन्त्यस्तु स्फुटत्वान्न दूषितः । तथा हि उपाधिव्यावृत्त्या हि तत्पक्षीयसाध्यसंशयमुपजीव्य प्रवृत्तव्यभिचारसंशयान्तरस्योपाधिव्यावृत्त्या हि साध्यसंशयरूपसत्प्रतिपक्षोपजीवित्वात्तेनैव दुष्टत्वे व्यभिचारसंदेहस्य निष्प्रयोजनत्वात् । **सर्वानुमानेति** । संदिग्धव्यभिचार इति शेषः ॥ **एतदेवेति** । अनुमानप्रविभागानन्तरमुपस्थितस्योपाधेः सत्प्रतिपक्षोन्नायकत्वमेवेर्थः ।

---

प० — **असाविति** । साध्यव्यापकत्वनिश्चय इत्यर्थः ॥ **स्वत एवेति** । साधकबाधकप्रमाणाभावेनानुमानात्प्रागेव साध्यसंदेहे सति संदिग्धसाध्यवति सतो हेतोः संदिग्धव्यभिचारित्वादिति भावः ॥ **सर्वानुमानेति** । पक्षे संदिग्धो व्यभिचार इत्यनुषङ्गः । न चोपाधिशङ्काऽऽहितस्य न तथात्वमिति चेन्न । स्वत एव सिद्धस्योपाध्याहितत्वायोगात् । उपाध्या(यत्तव्य)यातव्यभिचारसन्देहस्य तदधीनत्वेपि उपाध्या(यत्तसा)यातसाध्यसन्देहस्य व्यभिचारसन्देहं विनाऽयोगादिति भावः ॥ **स एवेति** । प्रमाणलक्षणवाक्यमित्यर्थः । 'प्रतिरूपं हि साधनं तन्न चापरमि'ति चतुर्थाध्यायाद्यपादीयानुव्याख्यानमादिपदार्थः ।

या० — **स्वत एव सिद्ध इति** । पक्षताघटकतया पूर्वमेव सिद्ध इत्यर्थः ॥ **सर्वानुमानेति** । निश्चितहेतुमति साध्याभावसन्देहरूपव्यभिचारसंशयस्य सर्वत्र सत्त्वादिति भावः । न च स्वरसवाहिनः तस्याप्रतिबन्धकत्वेऽप्युपाध्याहितस्यैव प्रतिबन्धकत्वमतो न सर्वानुमानोच्छेद इति वाच्यम् । उपाध्याहितत्वं ह्युपाध्यनुसन्धानजन्यत्वम् । न च पूर्वभाविनो जन्यत्वं संभवति । तदिदमुक्तं **स्वत एव सिद्धो नोपाधिमुखनिरीक्षणापक्ष इति** । न च पक्षताघटकादन्य एव तदाहितस्तादृशः संशय इति वाच्यम् ।

पक्षताघटकसंशयान्यतादृशज्ञानत्वेन प्रतिबन्धकत्वकल्पने मानाभावात् । न च तत्रानुमितिप्रतिबन्धरूपफलबलादेवं कल्प्यत इति वाच्यम् । सत्प्रतिपक्षतयाऽपि तदुपपत्तेरित्याशयात् । ननु साध्याभावसन्देहोऽपि प्रतिबन्धक एव तथाऽपि तर्कादिना तदपनयेऽनुमानप्रवृत्तिरिति नानुमानमात्रोच्छेद इति चेन्न । पक्षे साध्याभावसन्देहे तर्कमूलव्याप्तेरप्यनिश्चयात् ॥ **सत्प्रतिपक्षतैवेति** । न च दूष्यानुमानस्य तर्कानुग्रहे नोपाधेः साध्यव्यापकतोपाधेस्तदनुग्रहे तु अनुमानस्य बाध एवातः कथं सत्प्रतिपक्षताऽवसर इति वाच्यम् । उभयत्राप्यनुकूलतर्कानवतारदशायां सत्प्रतिपक्षतैवेत्याशयात् ॥ **एतदेवेति** । अनुमानोत्तरकालं सत्प्रतिपक्षतैवेत्येतदेवेत्यर्थः । आदिपदेन 'प्रतिरूपं हि साधनं तत्र चापरम्' इत्यनुव्याख्यानसंग्रहः । तथा च तद्विरोधो नेति भावः ।

श्री० — **पक्षे व्यभिचार इति** । बाधितसत्प्रतिपक्षयोरित्यर्थः । **तत एवेति** । साध्याभावनिश्चायकप्रमाणान्तरविरोधादेवेत्यर्थः ॥ **सति च तस्मिन्निति** । उपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चये सति साध्यव्यापकतानिश्चयः । तथा हि । उपाधिः साध्यव्यापकः स्वव्यावृत्त्या तद्व्यावर्तकत्वात् । यत्स्वव्यावृत्त्या यद्व्यावर्तयति तत्तस्य व्यापकम् । स्वव्यावृत्त्या गुणादौ पृथिवीत्वं व्यावर्तयतीति द्रव्यत्वं पृथिवीत्वस्य व्यापकमित्यर्थः ॥ **साध्यव्यापकत्वानिश्चयादिति** । पक्षे साध्याभावोऽस्ति वा न वेति संशयस्य साध्यसंशयरूपत्वेनोपाधेः पक्षे साध्यव्यापकत्वमपि सन्दिग्धमिति भावः । 'स एवोपाधिदोषोऽपि' इत्यत्रत्यैवकारार्थकथनं **सत्प्रतिपक्षतैवेति** ।

**सु० — अनुकूलतर्कादिना साध्यव्यापकत्वनिश्चये सति पक्षे निश्चितव्यभिचारितासिद्धिरिति चेन्न । निश्चितसाध्यव्यापकव्यावृत्तेर्बाधकत्वेन तत एवानुमाने दूषिते व्यभिचारवैयर्थ्यात् । तथाऽपि सोपाधिकत्वं सत्प्रतिपक्षत्वमिति गतः पक्ष इति चेन्न । प्रतिपक्षस्य यावज्जीवं तद्भावानङ्गीकारात् । सामर्थ्यानिर्धारणायामेव सत्प्रतिपक्षः, निर्धारिते तु सामर्थ्ये बाधको वा स्यात्, बाध्यो वेति को नाम नाभ्युपैति ।**

शे० — ननूपाधिव्यावृत्त्यैव पक्षे साध्याभावनिश्चयेन साध्यरहिते पक्षे वर्तमानस्य साधनस्य पक्षे निश्चितव्यभिचारत्वेनानुमानोत्तरमपि व्यभिचारोन्नायकत्वोपपत्तेः कथमनुमानोत्तरकालं प्रतिपक्षतैवेत्यवधारणम् । न चोपाधेः साध्यव्यापकत्वनिश्चये तद्व्यावृत्त्या साध्यव्यावृत्तिनिश्चयः सति च तस्मिन्नसाविति परस्पराश्रयत्वान्नोपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चय इत्युक्तमिति वाच्यम् । अनुकूलतर्कादिना साध्यव्यापकत्वनिश्चयाभ्युपगमेन साध्यव्यापकतानिश्चयस्योपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चयसाध्यत्वानभ्युपगमेन तदप्रसङ्गादित्याशयेन शङ्कते **अनुकूलेति** । तत्रापि प्रथमोपस्थितबाधस्यैव दूषणत्वेन तदुप-

जीविनो व्यभिचारस्यादूषणत्वाद्युक्तमवधारणमित्याशयेन परिहरति **नेति** । अन्यथा बाधितसत्प्रतिपक्षयोरपि व्यभिचारितापातात् । तत्र बाधसत्प्रतिपक्षाभ्यामेवानुमानदूषणसंभवे किं तदुपजीविना व्यभिचारेणेति यदि मन्यसे तर्ह्यत्रापि बाधेनैवानुमाने दूषिते किं तदुपजीविना व्यभिचारेणेति सममिति भावः ॥ **गतः पक्ष इति** । उपाधिव्यावृत्त्या निश्चितायाः साध्यव्यावृत्तेर्बाधत्वेन व्यापकव्यावृत्तेः प्रतिपक्षत्वाभावादिति भावः । न सोपाधिकत्वं सर्वत्र प्रतिपक्षतया दोषः किन्तु क्वचिद्बाधत्वेनापीति । ततश्च नेदमनिष्टमिति भावेन परिहरति **नेति** । कथमेकस्यैव प्रतिपक्षत्वं बाधकत्वं च विरुद्धमुपपद्यत इत्यतो दशाभेदेनोभयमुपपादयति **सामर्थ्येति** । दूष्यानुमानमुपाधिश्चेत्यनयोर्मध्ये यदैकत्राप्यनुकूलतर्कावतारस्तदेत्यर्थः ॥ **निर्धारिते त्विति** । अन्यतरस्येति शेषः । बाधक इत्यादेरयम्भावः । यस्य हि यदाऽनुकूलतर्कावतारः स तदा बाधकोऽन्यस्तु बाध्य इति । यद्वा प्रतिपक्षस्य सामर्थ्यावधारणे बाधत्वं स्वविरोधिनस्तदवधारणे तु बाध्यत्वमिति ज्ञेयम् ॥ **एष पक्ष इति** । समव्यापकत्वपक्ष इत्यर्थः ।

स० — **अनुकूलतर्कादिनेति** । उपाधेरिति शेषः । तथा च अनुकूलतर्कादिना उपाधेः साध्यव्यापकत्वे निश्चिते तद्व्यावृत्त्या साध्यव्यावृत्तिनिश्चयसंभवेन तत्र विद्यमानहेतोः साध्यव्यभिचारिता उपाधिना उन्नीयत इति व्यभिचारोन्नायकत्वमेवोपाधेरिति शङ्कार्थः । **तत एवेति** । उपाधेः साध्यव्यापकत्वनिश्चायकानुकूलतर्कादेरित्यर्थः । ननु तथात्वे येनानुकूलतर्कादिना उपाधेः साध्यव्यापकत्वनिश्चयः तेनैव साध्यव्यावृत्तेरपि निश्चितत्वेन तत एवानुमानस्य दुष्टत्वसंभवेन उपाधेः सत्प्रतिपक्षोन्नायकत्वं यदुक्तं, तदयुक्तमिति शङ्कते **तथापीति** । प्रमाणद्वयमध्ये स्वस्य सामर्थ्यावधारणे बाधकत्वं, स्वविरोधिनस्तदवधारणे तु बाध्यत्वमिति भावेन बाध्यो वेत्याद्युक्तम् ।

प० — **सामर्थ्येति** । व्याप्तिः समुचितदेशस्थत्वं च सामर्थ्यं ॥ **अनिर्धारणायामिति** । द्वयोर्हेत्वोरिति योज्यम् ॥ **निर्धारित इति** । अन्यतरस्येति भावः ।

या० — **निर्धारिते तु सामर्थ्य इति** । अन्यतरस्येति शेषः ।

श्री० — ननु पक्षे साध्याभावो निश्चित एव । तन्निश्चयस्तु साध्यव्यापकोपाधिव्यावृत्त्यैव । न चान्योन्याश्रयः । उपाधेः साध्यव्यापकत्वनिश्चये तद्व्यावृत्त्या साध्यव्यावृत्तिनिश्च इत्यंशः स्वीक्रियते । उपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चये सत्युपाधेर्व्यापकत्वनिश्चय इत्यंशो न स्वीक्रियते । प्रकारान्तरेणानुकूलतर्कादिना तन्निश्चयसम्भवादित्याशङ्कते **अनुकूलेति** । **निश्चये** उपाधेरिति शेषः । **पक्षे** उपाधिव्यावृत्तेरिति शेषः ।

सु० — अत्र सोपाधिकत्वमिति वक्तव्ये साध्यव्यापकवैलोम्यमिति वचनमुपाधिलक्षणस्यापि प्रदर्शनार्थम् । तदपि साध्यसमव्यापकत्वपक्षनिरासाय । नन्वेष पक्षष्टीकाकृताऽङ्गीकृतः । मैवम् । परमतानुवादत्वात् । अन्यथैकसाध्याविनाभाव इत्युदयनवचनोदाहरणवैयर्थ्यात् । दूषणं तु स्फुटत्वान्नोक्तम् । तथा हि । समपदं किं विषमव्याप्तिकव्यवच्छेदार्थमुत प्रयोजनान्तरार्थम् । नाद्यः । पार्थिवपरमाणुरूपादयो नित्याः परमाणुविशेषगुणत्वात् आप्यपरमाणुरूपादिवदित्यादौ पृथिवीविशेषगुणत्वाभावादेर्विषमव्याप्तिकस्याप्युपाधित्वेन तद्व्यवच्छेदस्यायुक्तत्वात् । प्रतिपक्षोन्नायकत्वसंभवेन दूषणत्वाच्च । विषमव्याप्तिकस्योपाधित्वे पक्षेतरत्वस्यापि तत्प्रसङ्ग इति चेत् । तत्किमुक्तविशेषणद्वयोपेतं न वा । नेति पक्षे तत एवानुपाधित्वम् । आद्ये तु तस्याप्युपाधित्वे को दोषः । पर्वतेतरत्वादेः सर्वत्र संभवेन नैवमिति चेन्न । अनुमानव्याप्त्यादिग्राहकप्रमाणप्राबल्ये सति साध्यव्यापकत्वभङ्गात् । तदभावे चानुमानभङ्गस्येष्टत्वात् । अन्यथा शब्दोऽभिधेयः प्रमेयत्वाद्घटवदित्यादावशब्दत्वादेः समव्याप्तिकपक्षेतरस्यानिरासप्रसङ्गात् । तदिदमिष्टमपि त्यजति अनिष्टमपि गृह्णातीति न विशेषणम् ।

शे० — **टीकाकृतेति** । सन्न्यायरत्नावलीकृतेत्यर्थः ॥ **अङ्गीकृत इति** । तथा च कथं तन्निरास इति वाक्यशेषः । टीकायां साध्यं व्यापकं यस्येति साध्यव्यापकः साध्यस्य व्यापक इति वेति विग्रहद्वयस्य प्रदर्शितत्वेन समव्यापकत्वस्य तदङ्गीकृतत्वसिद्धिरिति भावः । उदयनमतानुवादरूपत्वादुदाहृतग्रन्थस्य न तेनास्य टीकाकृदभिमतत्वसिद्धिरित्याह **परमतेति** । टीकाया वस्तुस्थितिप्रदर्शनपरत्वमेवास्तु किं परमतानुवादकल्पनयेत्यत आह **अन्यथेति** । परमतानुवादत्वाभाव इत्यर्थः । मिथः सम्बन्धशून्ययोः परस्परपरिहारेणान्यत्र कलञ्जभक्षणादौ यागीयहिंसायां च वर्तमानयोः हिंसात्वनिषिद्धत्वयोरुभयोरप्येकेन साध्येनाधर्मसाधनत्वेनाविनाभावे व्यर्थहिंसायां साहचर्ये सति तयोर्मध्ये यस्यात्ययो निवृत्ति साध्याभावेनाविनाभावी व्याप्तः स एवोपाधिः । एवञ्च कलञ्जभक्षणादौ सत्यामपि हिंसात्वनिवृत्तौ साध्यस्याधर्मसाधनत्वस्य निवृत्तिर्नास्तीति न तस्योपाधित्वम् । निषिद्धत्वाभावस्तु कदलीफलभक्षणादौ सर्वत्र साध्याभावेन व्याप्त इति तस्यैवोपाधित्वमिति सम्मतिग्रन्थार्थः । अत्र प्रथमपादेनोपाधेः साध्यं प्रति व्याप्यत्वमुक्तं द्वितीयपादेन तु साधनाव्यापकत्वमुत्तरार्धेन तु साध्यव्यापकत्वमिति विवेकः । ननु दूषणाभावेनानुवादस्य तादर्थ्यानुपपत्तेः सम्मत्यैवायमनुवाद इति तेनैतत्पक्षस्य टीकाकृताऽङ्गीकृतत्वसिद्धिरवर्जनीयेत्यत आह **दूषणं त्विति** । टीकाकृतेति शेषः । आद्येऽपि किं साधकाभावाद्विषमव्याप्तस्योपाधित्वं नेत्यभिमतं किंवा बाधकसद्भावात् । आद्येऽपि किं तत्रोपाधित्वेन शास्त्रे व्यवहारो नास्तीत्यभिमतं किंवा दूषकताबीजं नास्तीति विकल्पान्मनसि निधायाद्यं दूषयति **पार्थिव-**

**परमाणुरूपादय इति** ।। **पृथिवीविशेषगुणत्वाभावादेरिति** । अत्र पार्थिवपरमाणुगतैकत्वपरिमाणैक-पृथक्त्वेषु सत्यपि नित्यत्वे पृथिवीगुणत्वाभावाभावेन तत्र साध्याव्यापकतापरिहारायोपाधौ विशेषपदम् । आदिपदेन गन्धवद्विशेषगुणत्वाभावरूपोपाधिसंग्रहः ।। **विषमव्याप्तिकस्येति** । नित्यत्ववत्याप्यपरमाणुरूपादौ पृथिवीविशेषगुणत्वाभावस्य सत्त्वेनोक्तोपाधेः साध्यव्यापकत्वेऽपि पृथिवीविशेषगुणत्वाभाववति संयोगादौ नित्यत्वाभावेनोपाधेर्न साध्यव्याप्यत्वमिति नास्य समव्याप्तिरिति ध्येयम् ।। **उपाधित्वेनेति** । तत्त्वेन शास्त्रे व्यवहृतत्वेनेत्यर्थः । द्वितीयं प्रत्याह **प्रतिपक्षेति** । साध्यव्यापकत्वादिमात्रस्यैव प्रति-पक्षोन्नायकत्वे प्रयोजकत्वेन समव्याप्त्यभावेऽपि विषमव्याप्तस्य प्रतिपक्षोन्नायकत्वोपपत्तेरिति भावः । आद्यद्वितीयं शङ्कते **विषमेति** । इयं च गूढाभिसन्धेः शङ्केति ज्ञेयम् । आशयमजानान इव गूढाभिसन्धिरेवोत्तरमाह **तत्किमिति** । शङ्किता स्वाभिप्रायमुद्घाटयति **अनुमानेति** ।। **प्रमाणप्राबल्य इति** । अनुमानमूलव्याप्त्यादिग्राहकप्रमाणस्यानुकूलतर्कसनाथत्वेन प्राबल्ये सतीत्यर्थः ।। **साध्यव्यापकत्वभङ्गा-दिति** । पक्ष एवेति शेषः । तथा च पर्वतेतरत्वादेरुक्तविशेषणवत्त्वस्यैवाभावान्न विषमव्याप्तस्योपाधित्वे तस्योपाधित्वप्रसङ्ग इति भावः । यत्रानुमानेऽस्त्यनुकूलतर्कस्तत्र पर्वतेतरत्वादेः पक्ष एव साध्यव्यापकता-भङ्गेनोक्तविशेषणवत्त्वाभावादनुपाधित्वेन तदनुमानोच्छेदाप्रसक्तावपि यत्रानुमाने नानुकूलतर्कस्तत्रोक्तरीत्या साध्यव्यापकताभङ्गाप्रसक्त्योक्तविशेषणद्वयवत्त्वेन पर्वतेतरत्वादेरुपाधित्वं स्यादेवेत्यत आह **तदभावे चेति** ।। **अन्यथेति** । विषमव्याप्तस्योपाधित्वे तादृशपक्षेतरत्वस्याप्युपाधित्वप्रसङ्गेनानुमानमात्रोच्छेदप्रसक्तेर्न तस्योपाधित्वमित्यङ्गीकार इत्यर्थः । अशब्दत्वादेरिति आदिपदेन घटः पृथिवी घटत्वादित्यत्र घटगतगन्धवत्त्वरूपसमव्याप्तोपाधेः संग्रहः । यद्यप्यशब्दत्वादेः साध्यव्यापकतैव नास्त्यभिधेयत्ववति शब्देऽशब्दत्वाभावेन पक्ष एव व्यभिचारात् । तथाऽपि पक्षातिरिक्तसाध्यव्यापकत्वाभिप्रायेणेदम् । उपाधिलक्षणे साध्यव्यापकपदस्य पक्षातिरिक्तसाध्यव्यापकपरत्वादिति ध्येयम् ।। **इष्टमपीति** । सत्प्रतिपक्षोत्थापकत्वेन दूषकताबीजाक्रान्तत्वेनोपाधितयेष्टं विषमव्याप्तं न संगृह्णाति । तत्र नास्तीति यावत् । तथा च तत्राव्याप्तिरिति भावः ।। **अनिष्टमपीति** । दूषकताबीजानाक्रान्ततयोपाधितयाऽनिष्टमशब्दत्वादि-रूपसमव्याप्तमुपाधिं संगृह्णाति । तत्रास्तीति यावत् । तथा च तत्रातिव्याप्तिरिति भावः ।

स० — ननु परमतानुवाद इति कस्मात् ज्ञायते । स्वमतानुवाद एव किं न स्यात् विशेष-नियामकाभावादित्यत आह **अन्यथेति** । परमतानुवादत्वाभावे इत्यर्थः । मिथः संबन्धशून्ययोर्ययो-धर्मयोर्मध्ये एकस्य धर्मस्य साध्याविनाभावे सति यदत्ययः साध्याभावाविनाभावी स उपाधिः । अत्र प्रथमार्धेन साध्यव्याप्यत्वमुक्तम् । द्वितीयार्धेन साध्यव्यापकत्वमिति उदयनवचनार्थः । ननु अनुवादो हि द्वेधा । दूषणार्थं वा अङ्गीकारार्थं वा । नाद्यः संभवति । दूषणस्यानुदितत्वात् । तस्मादङ्गी-

कारार्थमेवेत्यत आह **दूषणस्येति** । तथा च दूषणानुक्तिरन्यथासिद्धेत्यर्थः । किं साधकाभावाद्विषम-व्याप्तस्यानुपाधित्वम्, किं वा बाधकसद्भावात् । आद्येऽपि किं तत्रोपाधित्वेन शास्त्रे व्यवहारो नास्ती-त्यभिप्रेतम्, सत्यपि वा तस्मिन् दूषकताबीजाभावाद्वेति विकल्पं मनसि निधायाद्यं दूषयति **विषम-व्याप्तिकस्याप्युपाधित्वेनेति** । **तत्त्वेन** शास्त्रे व्यवहारेणेत्यर्थः । पृथिवीविशेषगुणत्वाभावादेरित्यत्र आदिपदेन गन्धवद्विशेषगुणत्वरूपोपाधिसंग्रहः । द्वितीये त्वा० **प्रतिपक्षेति** । द्वितीयं शङ्कते **विषम-व्याप्तिकस्येति** । **प्रमाणप्राबल्य इति** । अनुमानग्राहकप्रमाणस्यानुकूलतर्कसनाथत्वेन प्राबल्ये सती-त्यर्थः । **अन्यथेति** । विषमव्याप्तत्वस्योपाधित्वे तादृशपक्षेतरस्याप्युपाधित्वापातात्तेनानुमानमात्रोच्छेद-भिया तस्यानुपाधित्वे इत्यर्थः । **अशब्दत्वादेः** इत्यत्र (आदिपदेन) घटः पृथिवी घटत्वादित्यत्र गन्धवत्त्वस्य समव्याप्तपक्षेतरपरिग्रहः । समपदस्य विषमोपाधिव्यावर्तकत्वादिष्टत्यागः स्पष्ट एव । सम-व्याप्ताशब्दत्वादिपक्षेतरस्याप्युपाधित्वापातेन तद्व्यावर्तकत्वाभावादनिष्टसंग्राहकत्वमिति भावः ।

प० — **टीकाकृतेति** । सन्न्यायरत्नावलीकृतेत्यर्थः ॥ **एकेति** । 'एकसाध्याऽविनाभावे मिथः संबन्धशून्ययोः । साध्याभावाविनाभावी स उपाधिर्यदत्ययः' इत्यत्राविनाभावशब्दः साहचर्यमात्रपरः । परस्परपरिहारेण सतोर्हिंसात्वनिषिद्धत्वयोः पापहेतुत्वरूपैकसाध्याविनाभावे सति तयोर्मध्ये यदभावः साध्याभावाविनाभावी व्याप्तः स एवोपाधिरित्यर्थः । कुतो न दूषितोऽयं पक्षः टीकाकृतेत्यत आह **दूषणं त्विति** । परिमाणादावव्यभिचारायोक्तं **विशेषेति** । शब्दादावव्यभिचाराय **परमाण्विति** ॥ **पृथिवीविशेषेति** । पृथिवीपरमा(अ)णुपरिमाणे साध्याव्यापकत्वनिरासाय **विशेषेति** । आप्य-रूपादौ तन्निरासाय **पृथिवीति** । घटपटसंयोगादौ सत्यप्युपाधौ साध्याभावान्न समव्याप्तिरिति भावः ॥ **उक्तविशेषणद्वयेति** । साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपविशेषणद्वयेत्यर्थः ॥ **साध्यव्यापकत्व-भङ्गादिति** । 'अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात्पक्षे नोपाधिसंभवः' इत्यु-क्तदिशा पक्षे साध्यनिश्चये तत्रोपाधेरभावादिति भावः ॥ **तदिदमिति** । समपदमिष्टमपि विषमव्याप्त-स्योपाधित्वं त्यजति । अनिष्टमप्यशब्दत्वादेरुपाधित्वं गृह्णातीत्यर्थः ।

**या० — टीकाकृताऽङ्गीकृत इति** । टीकायां साध्यं व्यापकं यस्येति साध्यव्यापकः, साध्यस्य व्यापक इति वेति विग्रहद्वयस्य प्रदर्शितत्वेनायं पक्षः टीकाकारेणाङ्गीकृत इति ज्ञायत इति भावः ॥ **परमतेति** । टीकायाः परमतानुवादपरं मूलमित्यभिप्रायकत्वादित्यर्थः । 'एकसाध्याविनाभावे मिथः संबन्धशून्ययोः । साध्याभावाविनाभावी स उपाधिर्यदत्ययः' इत्युदयनश्लोकस्यायमर्थः । मिथः संबन्ध-शून्ययोः परस्परपरिहारेण वर्तमानयोर्हिंसात्वनिषिद्धत्वयोरुभयोरप्येकेन साध्येनाधर्मसाधनत्वेनाविनाभावे साहचर्ये सति तयोर्मध्ये यस्यात्ययो निवृत्तिः साध्याभावेनाविनाभावी व्याप्तः स एवोपाधिः । एवं च

कलञ्जभक्षणादौ सत्यामपि हिंसात्वनिवृत्तौ साध्यस्याधर्मसाधनत्वस्य निवृत्तिर्नास्ति । निषिद्धत्वाभावस्तु सर्वत्र साध्याभावेन व्याप्त इति तस्यैवोपाधित्वे प्रयोजकत्वं नेतरस्येति । अत्र प्रथमपादेनोपाधेः साध्यं प्रति व्याप्यत्वमुक्तम् । द्वितीयपादेन साधनाव्यापकत्वम् । उत्तरार्धेन साध्यव्यापकत्वमिति विवेकः । ननु तर्हि मूले दूषणोक्त्या भाव्यमित्यत आह **दूषणं त्विति** । मूल इति शेषः । अत एव टीकायामपि तन्न प्रदर्शितमित्याशयः ॥ **पृथिवीविशेषगुणवत्त्वादेरिति** । अत्र पारिमाण्डल्ये साध्याव्यापकतापरिहाराय विशेषपदम् । अत्र पृथिवीनिष्ठसंयोगादौ व्यभिचारान्न समव्याप्तिरिति भावः ॥ **साध्यव्यापकत्वभङ्गादिति** । पक्ष एवेति शेषः ॥ **अशब्दत्वादेरिति** । इदं च पक्षातिरिक्ते साध्यव्यापकत्वं ग्राह्यमित्यभिप्रायेण । वस्तुतस्तु पक्ष एव व्यभिचारान्न साध्यव्यापकतेति ध्येयम् ॥ **इष्टमपीति** । अव्याप्त्यतिव्याप्तिसंपादकमित्यर्थः ।

श्री०— **विशेषणद्वयं** साध्यव्यापकत्वसाधनाव्यापकत्वरूपम् । **तत एव** लक्षणाभावादेव ॥ **अन्यथेति** । समव्याप्तस्याप्युपाधित्व इत्यर्थः । **इदं** समव्याप्तत्वम् । **इष्टं** पृथिवीविशेषगुणत्वाभावादेर्विषमव्याप्तस्योपाधित्वम् । **अनिष्टं** केवलान्वयिन्यपि अशब्दत्वादेरुपाधित्वम् ।

च०— **टीकाकृताऽङ्गीकृत इति** । सन्न्यायरत्नावलीकृदङ्गीकृत इत्यर्थः । 'एकसाध्याविनाभावे मिथः संबन्धशून्ययोः । साध्याभावाविनाभावी स उपाधिर्यदत्ययः' इति कारिकार्थस्तु अत्राविनाभावशब्दः साहचर्यमात्रपरः मिथः संबन्धशून्ययोः परस्परपरिहारेण वर्तमानयोर्हिंसात्वनिषिद्धत्वयोरुभयोरप्येकेन साध्येनाविनाभावे साहचर्ये सति तयोर्मध्ये यस्यात्ययोऽभावः साध्याभावाविनाभावी तद्व्याप्तः स एवोपाधिः, कलञ्जभक्षणादौ हिंसात्वाभाववति साध्यीभूताधर्मसाधनत्वस्यैव सत्त्वेन तदभावाभावेन हिंसात्वाभावो न साध्याभावेन व्याप्त इति हिंसात्वं नोपाधिः किं तु निषिद्धत्वाभावस्तादृश इति निषिद्धत्वस्यैवोपाधित्वमिति । अत्र प्रथमपादेनोपाधेः साध्यं प्रति व्याप्यत्वमुक्तं द्वितीयपादेन साधनाव्यापकत्वमुत्तरार्धेन साध्यव्यापकत्वमिति विवेक इति स्थितम् । **पृथिवीविशेषेति** । जलीयरूपादौ साध्यव्यापकता मा हि भूदिति पृथिवीपदम् । घटसंयोगादौ तद्व्यवच्छेदाय विशेषपदमुपात्तम् । **साध्यव्यापकत्वभङ्गादिति** । 'अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात्पक्षे नोपाधिसंभवः' इति वचनादिति भावः ।

सु०— यदप्युक्तम् । **'स्वसंबन्धेन यः स्वीयं धर्ममन्यत्र योजयेत् । स उपाधिर्यथा लोके जपादिः स्फटिकादिषु । इहाप्यव्याप्यहेत्वर्थव्याप्यत्वभ्रमहेतुता । उपाधेः स्यात्तदा तस्य समव्याप्तिर्यदा भवेदि'ति । तत्र वक्तव्यम् । किमनेनोक्तं भवति । किं**

**विषमव्याप्तिकस्य व्याप्यत्वाभावात्तत्संबन्धेन साधनाभिमते व्याप्यताभ्रमानुपपत्तेरदोषत्वेन तद्व्यवच्छेदाय समपदमिति, किंवाऽन्वर्थोपाधिशब्दसंपादनार्थमिति । नाद्यः । प्रतिपक्षोन्नायकत्वेन दूषणत्वसंभवे स्वगतव्याप्यत्वभ्रमासकताभावस्यादोषत्वात् । साध्यसाहचर्यदर्शनेनैव व्याप्यताभ्रमसंभवाच्च । न द्वितीयः । उपाधिशब्दसंबन्धस्य स्वकपोलकल्पितत्वात् । अत एव भगवानाचार्यवर्यः सोपाधिकत्वमित्यनभिधाय साध्यव्यापकवैलोम्यमित्याह । व्यवहारास्तु परकृतसङ्केतेनापि निर्वहणीयाः । यद्वा क्वचित्साध्यव्याप्यतासद्भावेनोपाधित्वेऽन्यत्रापि गौण्या वृत्त्या उपाधिव्यवहारोपपत्तिः । अत एव न द्वितीयोऽपि ।**

**शे०**—समव्याप्तस्यैवोपाधित्वमित्यत्र परोपन्यस्तं साधकं दूषयितुमनुवदति **यदपीति** ॥ उदाहरणमाह **यथेति** । स्वधर्मस्य रक्तत्वादेः स्फटिकादिषु सन्दर्शकत्वाज्जपाकुसुमादिः स्फटिकादिषु यथोपाधिरित्यर्थः । स्वसम्बन्धादन्यत्र स्वधर्मारोपकत्वमुपाधिशब्दप्रवृत्तिनिमित्तमिति भावः । तावताऽपि कथं समव्याप्तिनियमसिद्धिरित्यत आह **इहापीति** । वस्तुतोऽव्याप्यो यो हेत्वर्थो हिंसात्वादिः तत्र व्याप्यत्वभ्रमहेतुत्वान्यथाऽनुपपत्त्या समव्याप्तिसिद्धिरिति भावः । यद्यपि साध्यव्याप्यत्वमात्रेण व्याप्यत्वभ्रमहेतुत्वोपपत्तेर्न समव्याप्तिं विना तदनुपपत्तिस्तथाऽपि स्ववृत्तिधर्मोपसंक्रामकत्वानुरोधात्साध्यव्याप्यत्वं, सत्प्रतिपक्षोत्थापकत्वार्थं साध्यव्यापकत्वमित्यर्थात्समव्याप्त एवोपाधिरित्यत्र तात्पर्यमित्यवधेयम् । ननु विषमव्याप्तस्यापि धर्मोऽन्यत्र वन्ह्यादौ दोषवशादारोप्यत एवेति कथं न तस्य लक्ष्यता । न च व्याप्तिरूपधर्मोपसंक्रामकत्वं तत्पदप्रवृत्तिनिमित्तम् । दृष्टान्ते जपाकुसुमादौ तदभावेन तस्योक्तदृष्टान्ताननुगुणत्वादिति सत्येव दोषे दूषणान्तरं वक्तुं विकल्प्य पृच्छति **किमनेनोक्तं भवतीति** । स्वनिष्ठव्याप्यत्वभ्रमहेतुत्वं दूषकताप्रयोजकं तदभावान्न विषमव्याप्तस्योपाधित्वमित्यभिमतं किंवा तस्योपाधिपदप्रवृत्तिनिमित्तत्वात्तदभावेनोपाधित्वमिति विकल्पार्थः ॥ **साध्यसाहचर्येति** । साधनस्येति शेषः । तथा च व्याप्यत्वभ्रमरूपफलस्यान्यथासिद्धेर्न तत्रोपाधिरुद्भावनीयः स्यादिति भावः ॥ **स्वकपोलकल्पितत्वादिति** । साध्यव्यापकत्वादिमति धर्मविशेष इति शेषः । ततश्च निश्चितसाध्यकादौ सपक्षादिशब्दस्येव धर्मविशेषेऽभिधानाद्यभावेन रूढ्याद्यभावेऽपि पारिभाषिकत्वेनोपाधिशब्दस्यान्वर्थस्यैवाभावान्न तदन्वर्थत्वसम्पादनार्थता समपदस्य युज्यत इति भावः । उपाधिशब्दस्य धर्मविशेषे सङ्केतयितृपुरुषेच्छाधीनत्वेन यथारुचि कर्तव्यतया सोपाधिकत्वमिति परकृतसङ्केतवैलक्षण्येन साध्यव्यापकवैलोम्यमिति स्वेच्छया सङ्केतान्तरकरणसम्भवेन तथोक्तिरुपपत्तावप्यन्वर्थत्वपक्षे तस्य सोपाधिकत्वमित्येव स्वेनापि निर्देष्टव्यतया साध्यव्यापकवैलोम्यमिति विलक्षणनिर्देशानुपपत्तेर्नान्वर्थतोपाधिशब्दस्यास्तीति सिध्यतीति भावः । नन्वेवं

स्वेच्छापरिकल्पितसाध्यव्यापकवैलोम्यमिति सङ्केतानुसारेण तथैव तस्य व्यवहर्तव्यतया कथं भाष्यकारस्य 'स एवोपाधिदोषोऽपि', 'प्रमाणविरुद्धत्वमुपाधिः' 'अथाऽपि सशरीरत्वं चात्रोपाधिर्न वै भवेत्', 'अदुःखित्वेन चानुक्तिः कथं नोपाधितां व्रजेदि'ति परःप्रहस्तावधिकोऽन्यथाव्यवहार इत्यतो गौरवेण स्वसङ्केतनिबन्धनत्वस्याप्रयोजकत्वेन स्वपरसाधारणसङ्केतमात्रनिबन्धनत्वाद्व्यवहारस्य स्वसङ्केताभावेऽपि परसङ्केतसद्भावाद्युक्तो भाष्यकारस्य तदनुयायिनां च तथा व्यवहार इत्याशयेनाह **व्यवहारास्त्विति** । ननु साध्यव्याप्यत्वरूपस्वधर्मस्य साधने प्रतिबिम्बजनकत्वरूपावयवार्थाभावाद्विषमव्याप्तस्य पारिभाषिकोपाधित्वसम्भवेऽप्यवयवार्थवति समव्याप्ते कथं तस्य साङ्केतिकत्वमन्यथाऽतिप्रसङ्गादित्यत आह **यद्वेति** ॥ **क्वचिदिति** । समव्याप्त इत्यर्थः ॥ **अन्यत्रेति** । विषमव्याप्त इत्यर्थः ॥ **गौण्येति** । साध्यव्यापकत्वादिगुणयोगेनेत्यर्थः । समव्याप्तेऽवयवार्थसत्त्वादुपाधिपदं मुख्यं विषमव्याप्ते तु साध्यव्यापकत्वादिगुणयोगाद्गौणमेवोपाधिपदम् । विषमव्याप्तस्य दूषणत्व इव तत्रोपाधिपदस्य मुख्यतायामपि स्वस्याभिनिवेशाभावान्न तदङ्गीकारे काचित्क्षतिरिति भावः ॥ **अत एवेति** । उपाधिशब्दस्यान्वर्थतासम्पादनरूपप्रयोजनस्य निरस्तत्वादन्यस्य च प्रयोजनस्यानुपलम्भात्प्रयोजनान्तरार्थं समपदमिति प्राग्विकल्पितद्वितीयोऽपि नेत्यर्थः ।

स० — **अव्याप्यहेत्वर्थ इति** । अव्याप्यः योऽयं हेतुवाक्यार्थः, तस्य व्याप्यत्वभ्रमहेतुनेत्यर्थः । **किमनेनोक्तं भवतीति** । स्वनिष्ठधर्मासञ्जकत्वमुपाधित्वप्रयोजकमिति विषमव्याप्ते तदभावात् तद्व्याप्योपाधित्वं न संभवतीत्यभिप्रेतम , किं वा तस्योपाधिपदप्रवृत्तिनिमित्तत्वात्तदभावे कथमुपाधित्वमिति विकल्पार्थः ! **स्वकपोलेति** । सङ्केतितत्वादेवेत्यर्थः । **अत एवेति** । उपाधिशब्दसंबन्धस्य स्वकपोलकल्पितत्वादेवेत्यर्थः । नन्वेवं चेत् 'स एवोपाधिदोषोऽपि' इत्यादौ भवतां कथं तत्र तत्रोपाधिशब्दप्रयोगः । रूढ्याद्यभावादित्यत आह **व्यवहारास्त्विति । गौण्येति** । साध्यव्यापकत्वादिरूपगुणयोगेनेत्यर्थः । **अत एव न द्वितीयोऽपीति** । प्रयोजनान्तरार्थं समपदमिति द्वितीयोऽपि न । प्रयोजनान्तरस्य प्रवृत्तिनिमित्तादेर्दूषितत्वादेवेत्यर्थः ।

प० — **स्वीयमिति** । पूर्ववत्साधुत्वमस्य ध्येयम् ॥ **इहापीति** । शास्त्रीयोपाधिव्यवहारस्थलेऽपीत्यर्थः । यथेति श्रवणात्तथेति योज्यम् । साध्याव्याप्यो हेत्वर्थः हिंसात्वादिः तस्य व्याप्योऽयमिति व्याप्यत्वप्रकारकभ्रमहेतुता उपाधेस्तदा भवेद्यदा समव्याप्तिर्भवेदिति योजना ॥ **विषमव्याप्तिकस्येति** । अदोषत्वेनेत्यन्वयः । तत्र हेतुर्व्याप्यत्वेत्यादिः ॥ **अन्वर्थेति** । उप-समीपस्थे स्वनिष्ठव्याप्यत्वधर्ममादधातीत्यनुगतावयवार्थेत्यर्थः ॥ **अत एवेति** । उपाधिशब्दसंबन्धस्य साध्यव्यापकादौ तार्किकेण सङ्केतितत्वयौत्पत्तिकत्वाभावादेव अन्यथा व्यवहृतवानित्यर्थः । 'स एव उपाधिदोषोपी'त्यादिव्यवहारः कथं तर्हि

निमित्ताभावादित्यत आह **व्यवहारास्त्विति** । बहुवचनेन कालात्ययापदिष्टानध्यवसितप्रकरणसमादिव्यवहारग्रहः । क्वचिदन्वर्थत्वमुपेत्याप्याह **यद्वेति** ॥ **क्वचिदिति** । समव्याप्ते ॥ **गौण्येति** । प्रतिपक्षोन्नायकत्वेनानुमानदूष(कत्व)णत्वगुणयोगेन लब्धवृत्त्येत्यर्थः ॥ **अत एवेति** । प्रतिपक्षोन्नायकत्वसंभवेन दूषणत्वाच्चेत्यादिग्रन्थेनानुमानदूषणत्वसिद्ध्यर्थं वा पक्षेतरत्वस्योपाधित्वनिवृत्त्यर्थं वा अन्वर्थोपाधिशब्दसंपादनार्थं वेत्यादिप्रयोजनानां निरस्तत्वादेव प्रयोजनान्तरार्थमिति प्राग्विकल्पितद्वितीयपक्षोऽपि निरस्त इत्यर्थः ।

या० — **इहाप्यव्याप्येति** । वस्तुतः साध्याव्याप्यो यो हेतुवाक्यार्थो हिंसात्वादिस्तत्र साध्यव्याप्यत्वभ्रमहेतुतेत्यर्थः ॥ **समव्याप्तिरिति** । अत्र यद्यपि साध्यव्याप्यत्वं यदा भवेदित्येव वक्तव्यम् । अन्यथा स्वनिष्ठधर्मासञ्जकत्वरूपोपाधिपदप्रवृत्तिनिमित्तालाभात् । तथाऽपि सत्प्रतिपक्षाद्युन्नयनार्थं साध्यव्यापकत्वमप्यावश्यकमित्यभिप्रेत्य समव्याप्तिरित्युक्तमिति ध्येयम् । **उपाधिशब्दसम्बन्धस्येति** । स्वनिष्ठधर्मासञ्जक इति शेषः ॥ **अत एवेति** । समव्याप्तस्यैवोपाधिशब्दवाच्यत्वमित्यत्राभिधानाद्यभावेन तस्य स्वकपोलकल्पितत्वादेव साध्यव्यापकत्वमेवोक्तवान्न समव्याप्तिमित्यर्थः । नन्वेवं विषमव्याप्ते उपाधिशब्दप्रवृत्तिनिमित्तशब्दाभावे तत्रोपाधिशब्दव्यवहाराः कथं स्युरित्यत आह **व्यवहारास्त्विति** । बहुवचनं प्रामादिकत्वशङ्कानिरासाय । सङ्केतोऽपि न शब्दशक्तिप्राप्तार्थानुसारीति सूचयितुं परकृतेत्युक्तमिति ज्ञातव्यम् । तथा च न शास्त्रे लोकव्यवहारार्थमुपाधिव्युत्पादनं किन्त्वनुमानदूषणार्थमतो विषमव्याप्ते उपाधिशब्दः परीक्षकाणां पारिभाषिक एव निश्चितसाध्यकादौ सपक्षादिशब्दवदिति भावः ॥ **क्वचिदिति** । समव्याप्त इत्यर्थः ॥ **अन्यत्रापीति** । विषमव्याप्तेऽपीत्यर्थः ॥ **गौण्येति** । प्रतिपक्षाद्युन्नायकत्वरूपगुणयोगेनेत्यर्थः । तथा च विषमव्याप्तस्यापि दूषणत्व एव ममाभिनिवेशो न तु तत्रोपाधिशब्दमुख्यत्वेऽपीति भावः ॥ **अत एवेति** । अन्वर्थोपाधिशब्दसम्पादनरूपप्रयोजनस्य निरस्तत्वादन्यस्य च प्रयोजनस्यानुपलम्भात्प्रयोजनान्तरार्थं समपदमिति द्वितीयोऽपि नेत्यर्थः ।

श्री० — **तत्संबन्धेन** तादृशोपाधिसम्बन्धेन । स्वनिष्ठधर्मासञ्जकत्वमुपाधिपदप्रवृत्तिनिमित्तमित्यङ्गीकृत्य समव्याप्तिर्वाच्या । तत्र धर्मपदेन यत्किञ्चिद्धर्मो विवक्षितो व्याप्तिरूप एव वा । नाद्यः । विषमव्याप्तेऽप्यार्द्रेन्धनसंयोगादौ स्वनिष्ठगुणवत्त्वरूपधर्मस्य दोषवशाद्वन्ह्यादावासञ्जकत्वसम्भवात् । न द्वितीयः । दृष्टान्तीकृते जपाकुसुमादौ व्याप्तिरूपधर्मोपसंक्रामकत्वाभावात् । किञ्च नेदमुपाधिशब्दप्रवृत्तिनिमित्तम् लाभाद्युपाधिनोद्यमः कृत इत्यादिप्रयोगे लाभादावुपाधिशब्दव्यवहारेण तत्रोक्तनिमित्ताभावात् । तदिदमभिप्रेत्याह **स्वकपोलकल्पितत्वादिति** ।

च० — **व्यवहाराः** विषमव्याप्तिकादौ उपाध्यादिशब्दव्यवहाराः । **परकृतेति** । नैयायिककृतेत्यर्थः ।

**सु० — ननु च विषमव्याप्तिकस्य प्रतिपक्षोन्नायकत्वं न संभवति । क्वचित्पक्षेतरविपर्ययस्यासाधारणत्वादिति । मैवम् । असाधारणत्वस्य दूषणत्वासंमतेः । संमतौ वा तत्रोपाधित्वाभावस्य व्युत्पादनात् । यत्रोपाधिः पक्षैकदेशाद्व्यावर्तते तत्र कथं प्रतिपक्षः । भागासिद्धिप्रसङ्गात् । न चासौ नोपाधिः । पक्षैकदेशाद्व्यावृत्त्यापि साधनाव्यापकत्वसंभवात् । न चायं समव्याप्तिपक्षेऽस्ति दोषः । उपाधिमत्येकदेशे साध्यसद्भावनियमेन तं विहायैकदेशान्तरस्यैव पक्षीकरणौचित्यादिति । उच्यते । अस्माभिरप्युपाधिव्यावृत्तिमान्नैवैक नेकदेशः पक्षीक्रियते । एकदेशान्तरेऽपि यदि साध्यसंमतिस्तदा तस्यापक्षीकरणमेव । असंमतौ तु तत्र दोषान्तरमेव भविष्यतीति किमनुपपन्नम् ।**

**ननु शङ्कितोपाधौ कथं प्रतिपक्षः सन्दिग्धासिद्धिप्रसङ्गेनासमबलत्वादिति चेन्न । पाक्षिकसिद्ध्यादिना सत्प्रतिपक्षताफलस्य संशयस्यानिवारणात् । संशयानङ्गत्वमेवासमबलत्वमभिप्रेतम् ।**

---

**शे० —** विषमव्याप्तस्य प्रतिपक्षोन्नायकत्वेन दूषकताबीजाक्रान्तत्वेन दूषणत्वान्न तद्व्यवच्छेदार्थत्व समपदस्येत्युक्तमाक्षिपति **नन्विति** ॥ **क्वचिदिति** । बाधोन्नीतपक्षेतरोपाधिविपर्ययस्येत्यर्थः ॥ **दूषणत्वासम्मतेरिति** । अनित्यदोषत्वादसाधारणस्य बाधोन्नीतपक्षेतरोपाधिस्थले उपाधिव्यतिरेकरूपहेतोरनुकूलतर्कसनाथत्वेनोपाधिव्यतिरेकस्य साध्यव्यतिरेकेण व्याप्तिनिश्चयदशायां तस्यासाधारणादुत्तीर्णत्वान्न हेत्वाभासत्वमिति भावः । ननु तथाऽप्यसाधारणस्यानुकूलतर्कानवताग्दशायां तर्काभावादेव सन्दिग्धव्याप्तिकत्वेनासाधारणः सर्वसाध्यवद्व्यावृत्त्या साध्याभावव्याप्तो वा सर्वसाध्याभाववद्व्यावृत्त्या साध्यव्याप्तो वेति सन्देहेन वाऽव्याप्तावन्तर्भूतत्वादस्त्येव तस्याभासत्वमित्यत आह **सम्मतौ वेति** ॥ **तत्रेति** । अतेजस्त्वादावित्यर्थः ॥ **उपाधित्वाभावस्येति** । स्थापनानुमानव्याप्तिग्राहकप्रमाणप्राबल्ये सति साध्यव्यापकत्वभङ्गेनोपाधित्वाभावस्यैव व्युत्पादनादित्यर्थः । समव्याप्तस्यैवोपाधित्वमित्यत्र नियामकान्तरमाशङ्कते **यत्रेति** । क्षितिद्व्यणुकादिपक्षकेश्वरानुमाने पक्षैकदेशवर्तिनोऽणुत्वस्योपाधित्वं न स्यात् । तद्व्यतिरेकस्य भागासिद्धत्वेन तत्र प्रतिपक्षासम्भवादित्यर्थः ॥ **पक्षैकदेशादिति** । द्व्यणुकादिरूपादित्यर्थः । **साध्यसद्भावनियमेनेति** । उपाधेः साध्यव्याप्यत्वनियमादिति भावः ॥ **एकदेशान्तरस्येति** । द्व्यणुकादिरूपस्येत्यर्थः । तावताऽपीश्वरानुमानोद्देश्यधीविरोधित्वेन प्रतिपक्षत्वोपपत्तेरिति भावः ॥ **अपक्षीकरण-**

**मेवेति** । स्थापनानुमान इति शेषः । अन्यथा सिद्धसाधनतापातादिति भावः । **दोषान्तरमिति** । शरीरजन्यत्वादिरूपमुपाध्यन्तरमित्यर्थः ॥

**शङ्कितोपाधाविति** । स श्यामो मित्रातनयत्वादित्यत्र साधनाव्यापकतासन्देहेन सन्दिग्धे शाकपाकजत्वाद्युपाधावित्यर्थः । सन्दिग्धासिद्धिप्रसङ्गेनासमबलत्वादिति प्रायिकः पाठः । अत एव तर्कताण्डवे एतदनुवादावसरे तद्व्यतिरेकस्य सन्दिग्धत्वेनेत्येवोक्तम् । क्वचित्सन्दिग्धासिद्ध्यादिप्रसङ्गेनेत्यपि पाठः । तत्रादिपदेन व्याप्तिसन्देहपरिग्रहः । यत्र साध्यव्यापकतासन्देहेनोपाधिसन्देहस्तत्र तद्व्यतिरेकरूपप्रतिपक्षहेतौ साध्यव्यतिरेकेण सह व्याप्तिसन्देहावश्यम्भावादिति भावः । ननु सन्दिग्धासिद्ध्या दुर्बलस्यास्य व्यतिरेकानुमानस्य कथं प्रतिपक्षत्वमित्यत आह **संशयानङ्गत्वमेवेति** । निश्चितोपाधौ साध्यव्यावृत्तिप्रयोजकोपाधिव्यावृत्तिसत्त्वनिश्चयस्य फलतः संशयाधायकस्यापि स्थापनानुमानीयसाध्यनिश्चयप्रतिबन्धकत्ववत् तद्व्यावृत्तिप्रयोजकोपाधिव्यावृत्तिसन्देहस्यापि तत्प्रतिबन्धकत्वाद्युक्तं तत्र सन्दिग्धोपाधेर्दूषणत्वम् । न चैवं पक्षीयसाध्यसन्देहस्योपाधिं विनाऽनुमानाङ्गत्वेन स्वतःसिद्धत्वेनोपाध्युद्भावनानर्थक्यं स्यादिति वाच्यम् । पक्षीयव्यभिचारसन्देहस्याप्युपाधिं विना स्वतःसिद्धत्वेन व्यभिचारोन्नायकत्वपक्षेऽपि तद्वैयर्थ्यानिस्तारात् । यदि च तत्रोपाध्यायत्तो व्यभिचारसन्देहो नोपाध्युद्भावनं विनेति तत्सार्थक्यमिति मन्यसे तर्हि प्रतिपक्षोन्नायकत्वपक्षे उपाध्यायत्तसाध्यसन्देहस्योपाधिं विनाऽसिद्धेस्तादर्थ्येनोपाध्युद्भावनमिति सममिति भावः ।

स० — **क्वचिदिति** । विषमव्याप्तस्य नोपाधित्वं तद्विपर्ययस्य क्वचित् असाधारणत्वादित्यर्थः । तदेव दर्शयति **पक्षेतरेति** । तथा च विषमव्याप्तमात्रस्य विपर्ययेऽसाधारण्याभावेऽपि पक्षेतररूपतद्विशेषस्य विपर्यये असाधारणत्वान्नोपाधित्वमिति भावः । **असाधारणस्येति** । बाधोन्नीतपक्षेतरोपाधिस्थले उपाधिव्यतिरेकरूपहेतोः अनुकूलतर्कसनाथत्वेन उपाध्यभावस्य साध्याभावेन व्याप्तिनिश्चयेन संशयाधायकत्वासंभवेनासाधारण्यस्य दोषत्वासंमतेरित्यर्थः । **संमतौ वेति** । बाधानुन्नीतपक्षेतरस्थले उपाध्यभावस्य साध्याभावेन व्याप्त्यनिश्चयात् साध्याभावसंशयाधायकत्वसंभवेन व्यतिरेके असाधारण्यस्य दोषत्वसंमतावित्यर्थः । विपर्यये असाधारण्यस्य दोषत्वादेव तत्प्रतियोगिभूतस्योपाधिरूपत्वमेव नास्तीति व्युत्पाद्यत इत्यर्थः । समव्याप्तस्यैवोपाधित्वे नियामकान्तरमाशङ्कते **यत्रेति** । क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र शरीरजन्यत्वरूपोपाधिः । साध्यव्यापकत्ववत् तद्व्याप्यत्वस्यापि सत्त्वेन यत्रोपाधिरव्यावृत्तः तत्र साध्यस्याप्यव्यावृत्तत्वेन तत्र साध्यव्यतिरेकस्य साधयितुमशक्यत्वात् । यत्र साध्यव्यतिरेकः तत्रोपाधिव्यतिरेकसद्भावेन भागासिद्ध्यसंभवेऽपि विषमव्याप्तस्योपाधित्वपक्षे साध्यव्यतिरेकवति उपाधेः सत्त्वेन तद्व्यतिरेकस्य भागासिद्धत्वादित्यर्थः । **अस्माभिरपीति** । तावताऽपि ईश्वरानुमानोद्देश्य-

धीविरोधित्वेन प्रतिपक्षत्वोपपत्तिरिति भावः । **ननु शङ्कितेति** । सः श्यामः मित्रातनयत्वादित्यत्र शाकपाकजत्वादिरूपसन्दिग्धोपाधौ कथं प्रतिपक्ष इत्यर्थः । **संदिग्धासिद्धिप्रसङ्गेनेति** । उपाध्यभावस्येति शेषः । उपाध्यभावस्यानिश्चितत्वेऽपि यद्युपाध्यभावः स्यात् तदा साध्याभावोऽपि स्यादिति सत्प्रतिपक्षफलीभूतः संशयः स्यादेवेत्यर्थः । ननु संदिग्धासिद्ध्या दुर्बलस्यानुमानस्य कथं सत्प्रतिपक्षत्वमित्यत आह **संशयानङ्गत्वमिति** । न च पक्षे साध्यसंदेहोऽनुमानाङ्गत्वादुपाधिं विनाऽपि सिद्ध इति वाच्यम् । पक्षे व्यभिचारसन्देहस्यापि तं विना सिद्धत्वात् । उपाध्यायत्तो व्यभिचारसंदेहस्तं विना नेति चेत् तदायत्तसाध्यसंदेहोऽपि तं विना नेति समानत्वादिति भावः । वस्तुतस्तु निश्चितोपाधौ स्थापनानुमानीयसाध्यव्यावृत्तिप्रयोजकेऽपि व्यावृत्तिमत्त्वनिश्चयस्य स्थापनानुमानीयसाध्यनिश्चयप्रतिबन्धकत्ववत् तद्व्यावृत्तिप्रयोजकोपाधिव्यावृत्तिसंदेहस्यापि तन्निश्चयप्रतिबन्धकत्वात् संदिग्धोपाधेरपि दोषत्वं युक्तमेवेति द्रष्टव्यम् ।

प० — **क्वचिदिति** । (तेजःअनुष्णं)वह्निरनुष्णः पदार्थत्वादित्यादौ बाधोन्नीतपक्षेतरविपर्ययस्य वह्नित्वस्य, वह्निरुष्णो वह्नित्वात् इत्यस्य सति सपक्षे तेजोन्तरेऽ(तत्रा)सत्त्वेनासाधारणत्वादित्यर्थः ॥ **असंमतेरिति** । अनुकूलतर्कसनाथत्वादिति भावः । पर्वतेतरत्वाद्युपाधिविपर्ययाभिप्रायेणाह **संमतौ वेति** । नेति पक्षे तत एवानुपाधित्वमिति ग्रन्थेनानुमानव्याप्त्यादिग्राहकेत्यादिग्रन्थेन चोपाधित्वाभावव्युत्पादनादित्यर्थः ॥ **यत्रेति** । क्षितिद्व्यणुके सकर्तृके कार्यत्वादित्यत्रानणुत्वोपाधिरित्यर्थः ॥ **अपक्षीकरणमेवेति** । तस्यापि पक्षत्वे बाधापत्तेरिति भावः ॥ **दोषान्तरमिति** । शास्त्रयोनिसूत्रानुभाष्याद्युक्तदिशेति भावः । अष्टमो मित्रागर्भस्थः श्यामः मित्रातनयत्वात्प्राचीनपुत्रवदित्यत्र संदिग्धत्वमपि शाकपाकजत्वमुपाधिरिष्यते । स न स्यादिति बाधकमाशङ्कते **नन्विति** । असमबलस्य कथं प्रतिपक्षतेत्यत आह **संशयेति** । विवृतमेतदुपाधेः प्रतिपक्षोन्नायकत्वमुपाधेर्दूषकताबीजोक्तिवादे तर्कताण्डवे ।

या० — **क्वचित्पक्षेतरेति** । बाधोन्नीतपक्षेतरविपर्ययस्येत्यर्थः ॥ **दूषणत्वासम्मतेरिति** । एकत्रानुकूलतर्कावतारदशायामिति शेषः । नन्वनुकूलतर्कानवतारकालेऽसाधारण्यं दोष एवेत्यत आह **सम्मतौ वेति** ॥ **तत्रेति** । अतेजस्त्वादावित्यर्थः । उपाधिव्यतिरेकरूपहेतावनुकूलतर्काभावे पक्षे साध्याभावस्यानिश्चयेन बाधानुन्नीतपक्षेतरत्वमेव तस्यापीति नोपाधित्वमिति व्युत्पाद्यत इत्यर्थः । केचित्तु बाधानुन्नीतपक्षेतरस्थलेऽसाधारण्यस्य दोषत्वसम्मतावपीत्यर्थ इत्याहुः । समव्याप्तस्यौपाधित्वमित्यत्र नियामकान्तरं शङ्कते **यत्रेति** । क्षितिद्व्यणुकादिपक्षकेश्वराद्यनुमाने पक्षैकदेशवृत्त्यनणुत्वादेरुपाधित्वं कथमित्यर्थः ॥ **पक्षैकदेशादिति** । द्व्यणुकादिरूपादित्यर्थः ॥ **साध्यसद्भावनियमेनेति** । उपाधेः साध्यव्याप्यत्वादिति भावः ॥ **एकदेशान्तरस्येति** । द्व्यणुकादिरूपस्येत्यर्थः । तावताऽपीश्वरानुमानोद्देश्यधी-

विरोधित्वेन प्रतिपक्षोपपत्तेरिति भावः ॥ **अपक्षीकरणमेवेति** । सिद्धसाधनतापत्त्या स्थापनानुमानेऽपि तस्यापक्षीकरणमित्यर्थः ॥ **दोषान्तरमिति** । शरीरिजन्यत्वादिकमुपाध्यन्तरं भविष्यतीत्यर्थः ॥ **शङ्कितोपाधाविति** । साधनाव्यापकतादिसन्देहेन सन्दिग्धोपाधौ शाकपाकजत्वादावित्यर्थः । सन्दिग्धासिद्ध्यादीत्यत्रादिपदेन व्याप्तिसन्देहो ग्राह्यः । यत्र साध्यव्यापकतासन्देहेनोपाधिसन्देहस्तत्र तद्व्यतिरेकरूपहेतौ व्याप्तिनिश्चयासंभवात् । ननु सन्दिग्धासिद्ध्यादिनाऽसमबलस्य कथं सत्प्रतिपक्षत्वमित्यत आह **संशयानङ्गत्वमिति** । तथा च संशयाङ्गत्वमेव समबलत्वमिति भावः ॥

**श्री०— व्युत्पादनादिति** । स्वनिष्ठधर्मासञ्जकत्वमुपाधिशब्दप्रवृत्तिनिमित्तमिति पररीत्या अङ्गीकृत्य विषमव्याप्ते पक्षेतरत्वे समव्याप्त्यभावेनोपाधित्वाभावस्य व्युत्पादनादित्यर्थ इत्याहुः । वस्तुतस्तु पक्षे साध्याभावो निश्चितो न वेत्युक्तरीत्येत्यर्थः ॥ **अस्माभिरपीति** । विषमव्याप्तस्योपाधित्वं वदद्भिरपीत्यर्थः ॥ **एकदेश इति** । पृथिवीद्व्यणुकयोः कार्यत्वेन सकर्तृकत्वे साध्येऽनणुत्वरूपोपाधिप्राप्तौ तेन सत्प्रतिपक्षोन्नयने भागासिद्धिप्राप्तावुपाधिव्यावृत्तिमन्तं पृथिवीरूपैकदेशं विहाय द्व्यणुकमेव पक्षीकृत्य विकर्तृकत्वं साध्यत इत्यर्थः । **एकदेशान्तरे** पृथिव्याम् । साध्यसंमतिर्विकर्तृकत्वरूपं सत्प्रतिपक्षानुमानसाध्यं यदि परस्य संमतं तर्ह्यस्माकं सिद्धसाधनतापत्त्या तस्यापक्षीकरणम् । तत्र विकर्तृकत्वरूपसाध्यासंमतौ सकर्तृकत्वमेव चेत्साध्यते तर्हि शरीरिजन्यत्वमनणुत्वभिन्नमेवोपाधिर्भविष्यतीत्यर्थः । **शङ्कितोपाधौ** स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वरूपे ॥ **सन्दिग्धासिद्धीति** । सत्प्रतिपक्षानुमान इत्यर्थः ।

**च०— क्वचिदिति** । तेजो वह्निः अनुष्णः पदार्थत्वादित्यादौ पक्षेतरविपर्ययस्य वह्नित्वस्य वह्निरुष्णो वह्नित्वादित्यस्य सति सपक्षे तेजोन्तरे असत्वेनासाधारणत्वादित्यर्थः । **यत्रेति** । क्षितिद्व्यणुके सकर्तृके कार्यत्वादित्यत्रानणुत्वोपाधिरित्यर्थः । **अपक्षीकरणमेवेति** । तस्यापि पक्षतायां बाधप्रसङ्गादिति भावः । स्थापनानुमान इति शेषः । अन्यथासिद्धसाधनतापातादिति भावः इत्यपि स्थितम् । **दोषान्तरं** शरीरजन्यत्वादिरूपमुपाध्यन्तरम् । अष्टममित्रागर्भस्थपक्षकश्यामत्वसाध्यकमित्रातनयत्वहेतुकप्राचीनमित्रातनयस्तोमनिदर्शनकानुमाने साधनाव्यापकतासन्देहास्कन्दितऽपि शाकपाकजत्वमुपाधितयेष्यते, तस्य च प्रतिरोधोन्नायकत्वं दुरुपपादमित्याशङ्कते **शङ्कितोपाधाविति** । असमबलस्य कथं प्रतिरोधकतेत्यत आह **संशयेति** । तथा च प्रकृतेनासमबलेनेति भावः । एतदाशयस्तर्कताण्डवे व्यक्तः ।

**सु०— स्यादेतत्** । साध्यव्यापकत्वे सति साधनाव्यापकत्वं किमुपाधिसामान्यलक्षणं किंवा विशेषलक्षणम् । नाद्यः । समवायः समवेतः संबन्धत्वात्संयोगवदित्यत्र साधनावच्छि-

**न्नसाध्यव्यापककृतकत्वोपाध्यव्यापनात् । वायुः स्पार्शनोऽनुद्भूतरूपानधिकरणत्वे सत्युपलभ्यमानस्पर्शाधिकरणत्वाद्घटवदित्यत्र द्रव्यत्वावच्छिन्नसाध्यव्यापकचाक्षुषत्वोपाध्यव्याप्तेश्च । न च साधनावच्छिन्नसाध्यव्यापकस्य यत्किञ्चिदवच्छिन्नसाध्यव्यापकस्य च नोपाधित्वमिति वाच्यम् । तत्र तत्राचार्यैरङ्गीकृतत्वात् । व्यतिरेकोपाध्यव्यापकत्वाच्च । न द्वितीयः । सामान्यलक्षणान्तरस्य वक्तव्यतापातात् । न चान्वयव्यतिरेकिधर्मत्वं तदिति वाच्यम् । तस्यात्राय मुपाधिरिति व्यवहारकारणत्वाभावात् । तथात्वे च लक्षणवैयर्थ्यादिति ।**

शे० — जातौ साध्यव्यापकतापरिहारायोक्तं **साधनावच्छिन्नेति** । साधनेन सम्बन्धत्वेनावच्छिन्नस्य साध्यस्य व्यापके कृतकत्वोपाधावव्यापनादित्यर्थः । तत्र समवेतत्वस्यैव साध्यत्वेन सम्बन्धत्वावच्छिन्नस्य समवेतत्वस्यासाध्यत्वेनावच्छिन्नसाध्यव्यापकस्य कृतकत्वोपाधेः साध्यव्यापकत्वाभावादिति भावः ॥ **अनुद्भूतरूपानधिकरणत्वे सतीति** । तप्तवारिस्थे तेजसि व्यभिचारवारणाय सत्यन्तम् । तमसि परमाणौ वा व्यभिचारपरिहाराय विशेष्यम् । स्पर्शे साध्याव्यापकतानिरासायाह **द्रव्यत्वावच्छिन्नेति ।** पक्षधर्मेण द्रव्यत्वेनावच्छिन्नस्य साध्यस्य व्यापके चाक्षुषत्वोपाधावव्याप्तेरित्यर्थः । तत्र स्पार्शनत्वस्यैव साध्यत्वेन द्रव्यत्वावच्छिन्नस्पार्शनत्वस्यासाध्यत्वेन तद्व्यापकस्य चाक्षुषत्वोपाधेः साध्यव्यापकत्वाभावादिति भावः । न चात्र साध्यपदेन साधनाद्यवच्छिन्नसाध्यस्यैव विवक्षितत्वान्न कृतकत्वाद्युपाधावव्याप्तिरिति वाच्यम् । तथा सति विमतो धूमवान्वह्निमत्त्वादित्यादौ शुद्धसाध्यव्यापके आर्द्रेन्धनाद्युपाधौ, वैधी हिंसा अधर्मसाधनं हिंसात्वात् इत्यादौ शुद्धसाध्यव्यापके निषिद्धत्वाद्युपाधौ च साधनाद्यवच्छिन्नसाध्यव्यापकत्वाभावेनाव्याप्त्यापातादिति भावः । ननु साध्यपदेन शुद्धसाध्यस्यैव विवक्षणादार्द्रेन्धनाद्युपाधेश्च तद्भावान्न तत्राव्याप्तिः । साधनाद्यवच्छिन्नसाध्यव्यापककृतकत्वादेश्चोपाधित्वाभावेनालक्ष्यत्वान्न तत्राव्याप्तिरित्यभिप्रायेण शङ्कते **न चेति ॥ यत्किञ्चिदवच्छिन्नेति** । पक्षधर्मावच्छिन्नेत्यर्थः ॥ **तत्र तत्रेति** । 'अत एव चोपमा' इत्यधिकरणे, जीवब्रह्मणी परस्परमभिन्ने चेतनत्वादिति पूर्वपक्ष्यनुमाने चेतनत्वावच्छिन्नसाध्यव्यापकस्य परस्पर सुखदुःखाद्यनुसन्धानस्योपाधेः 'चेतनैक्येऽनुसन्धानं प्रमाणं नैव चापरमि'त्यादिनोक्तत्वेन साधनधर्मावच्छिन्नसाध्यव्यापकस्य, अत्रैवाधिकरणे, श्रुतिर्न सम्यगनुभवसाधनं शब्दत्वे सत्यबुद्धिपूर्वकत्वात् , श्रुतिः नागमोऽबुद्धिपूर्वकत्वादित्याद्यनुमाने अनुभवसाधनत्वावच्छिन्ने प्रथमसाध्ये, वाक्यत्वावच्छिन्ने द्वितीये च प्रमाणबाधितत्वस्योपाधेः 'विरुद्धं तु विरोधादेव बाधितमि'त्यादिनोक्तत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकस्य चोपाधित्वेन ग्रन्थकृदभिप्रेतत्वसिद्ध्या तयोरनुपाधित्ववर्णनस्य तद्ग्रन्थविरुद्धत्वेनायुक्तत्वादिति भावः । ननु तत्र तत्रोपाधित्वेनोक्त्या न तयोरुपाधित्वस्य ग्रन्थकृदभिप्रेतत्वं सिध्यति । परीत्याऽपि तदुद्भावनोपपत्तेरित्यत आह **व्यतिरेकोपाधीति** । पृथिवी इतरभिन्ना गुरुत्वादित्यत्र यत्रेतरभेदाभावस्तत्र गुरु-

त्वाभाव इति व्यतिरेकव्याप्तौ य उपाधिर्नीरसत्वरूपस्तदव्यापनादित्यर्थः । नीरसत्वस्य गुरुत्वाभाव-व्यापकत्वेनेतरभेदाभावाव्यापकत्वेन व्यापकत्वाभिमतव्यापकत्वे सति व्याप्यत्वाभिमताव्यापकत्वे सत्यपि साध्यव्यापकत्वे सति साधनाव्यापकत्वाभावादिति भावः ॥ **वक्तव्यत्वापातादिति** । विशेषलक्षणस्य सामान्यलक्षणपूर्वकत्वनियमादिति भावः ॥ **न चेति** । अत्र साध्यव्यापकत्वोपपादनायान्वयित्वोक्तिः साधनाव्यापकत्वोपपादनाय व्यतिरेकित्वोक्तिरिति ध्येयम् ॥ **तस्येति** । धूमवान्वह्नेरित्यत्रार्द्रेन्धनसंयोगः स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वमुपाधिरिति व्यवहारकारणत्वाभावादित्यर्थः । नन्वन्वय-व्यतिरेकिधर्मत्वमप्यत्रायमुपाधिरिति व्यवहारकारणमेवेति नोक्तदोष इत्यत आह **तथात्वे चेति** । अन्वयव्यतिरेकिधर्मत्वस्यैवात्रायमुपाधिरिति व्यवहारकारणत्वे चेत्यर्थः ॥ **लक्षणेति** । साध्यव्यापकत्वे सतीत्यादिविशेषलक्षणेत्यर्थः । केचित्त्वस्य लक्षणस्य तादृशव्यवहारकारणत्वाभावेऽपि न दोषः । न चोक्तव्यवहारस्य निर्निबन्धनत्वप्रसङ्ग एव दोष इति वाच्यम् । लक्षणान्तरेणैव तत्सम्भवादित्यत आह **तथात्वे चेति** । लक्षणान्तरस्यैव तादृशव्यवहारकारणत्वेऽन्वयव्यतिरेकिधर्मत्वरूपलक्षणवैयर्थ्यापाता-दित्यर्थ इत्याहुः । अन्ये तु माऽस्त्वस्य लक्षणस्य तादृशव्यवहारकारणत्वं किं तावतेत्यत आह **तथात्वे चेति** । अत्रायमुपाधिरिति व्यवहारातिरिक्तस्योपाधिरित्येवं सामान्यव्यवहारस्यैवाभावादन्वयव्यतिरेकि-धर्मत्वस्य तादर्थ्यानुपपत्तेरत्रायमुपाधिरित्येवंरूपतद्व्यवहारार्थत्वमिति वाच्यम् । न च तदुपपद्यते । अन्वयव्यतिरेकिधर्मत्वस्य धूमवत्त्वादौ सत्त्वेऽपि तादृशव्यवहाराभावात् । ततश्चोक्तरूपव्यवहारसाधनत्वेन साध्यव्यापकत्वे सतीत्यादिलक्षणान्तरस्यावश्यकत्वेन तेनैव तद्व्यवहारोपपत्तावन्वयव्यतिरेकिधर्मत्वरूप-लक्षणस्य व्यर्थत्वापातादित्याहुः ।

स० जातौ सत्यपि समवेतत्वे कृतकत्वाभावेन तत्र साध्याव्यापकत्वपरिहारायाह **साधनावच्छि-न्नेति** । **वायुरिति** तप्तवारिस्थतेजसि उपलभ्यमानस्पर्शाधिकरणत्वेऽपि स्पार्शनत्वाभावेन तत्र व्यभिचार-वारणाय सत्यन्तम् । असिद्धिपरिहाराय हेतुविशेष्यभागः । रूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधि-कारणत्वादित्येवोक्तौ तस्य पक्षमात्रवृत्तित्वेनासाधारण्यापत्तेस्तेनैवानुमानस्य दुष्टत्वेन सोपाधिकस्यैव असंकीर्णो दाहरणप्रदर्शनाय अनुद्भूतेति विशेषणम् । न चैवमपि व्यर्थविशेषणत्वापत्त्या असंकीर्णोदाहरणानुपपत्तिः । तस्य पृथक् विशेषणत्वाभावात् । वस्तुतस्तु अनुद्भूतरूपानधिकरणत्वस्य उद्भूतरूपानधिकरणत्वाभावत्वरूप-विशिष्टाभावत्वेन व्यर्थविशेषणत्वानवकाशादिति द्रष्टव्यम् । स्पर्शस्य स्पार्शनत्वेन तत्र साध्याव्यापकतापरि-हारायाह **द्रव्यत्वावच्छिन्नेति** । **यत्किञ्चिदिति** । पक्षधर्मावच्छिन्नेत्यर्थः । **व्यतिरेकोपाधीति** । कथ-कव्यवहारः प्रमाणादिसत्तास्वीकारपुरस्सरः साधनबाधनक्षमव्यवहारत्वात् भाट्टादिव्यवहारवत् इत्यनुमाने यत्र प्रमाणादिसत्तास्वीकारपूर्वकत्वाभावः तत्र(.?.) साधन-बाधनक्षमव्यवहारत्वाभावेन तदव्यापकत्वाच्च ।

साधनाभावव्यापकत्वे सति साध्याभावाव्यापकत्वेऽपि साध्यव्यापकत्वे सति साधनाव्यापकत्वाभावात्तत्र पर्वतो धूमवान् वन्हेरित्यत्र यत्र धूमाभावस्तत्र वह्न्यभाव इति व्यतिरेकव्याप्तौ ग्राह्यायां वन्हिसामग्रीविरहस्योपाधित्वात् वन्ह्यभावरूपसाधनाभावव्यापकत्वेन धूमाभावरूपसाध्याभावाव्याप्यकत्वेन चोक्तलक्षणाभावात् वह्निसामग्रीविरहलक्षणोपाधौ चाव्याप्तिः स्यादित्यर्थः । **न चान्वयव्यतिरेकिधर्मत्वमिति ।** अत्र साध्यव्यापकत्वोपपादनार्थमन्वयित्वोक्तिः । साधनाव्यापकत्वोपपादनाय तु व्यतिरेकित्वोक्तिरिति द्रष्टव्यम् । **तस्येति ।** धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगः, स श्यामः मित्रातनयत्वादित्यत्र शाकपाकजत्वमुपाधिरिति व्यवहारकारणत्वाभावादित्यर्थः । ननु तादृशव्यवहारकारणत्वमन्वयव्यतिरेकित्वरूपलक्षणस्य मास्तु । लक्षणान्तरेणैव तत्संभवेन अदोषात् इत्यत आह **तथात्वे चेति ।** लक्षणान्तरस्यैव तादृशव्यवहारकारणत्वे अन्वयव्यतिरेकिधर्मत्वरूपलक्षणवैयर्थ्यापातादित्यर्थः । यद्वा माऽस्तु अस्य लक्षणस्य तादृशव्यवहारकारणत्वम् । किं तावतेत्यत आह **तथात्वे चेति ।** अत्रायमुपाधिरित्येवंरूपव्यवहारातिरिक्तस्य उपाधिरुपाधिरित्येवंरूपसामान्यव्यवहारस्यैवाभावेन अन्वयव्यतिरेकिधर्मत्वस्य तादर्थ्यानुपपत्त्या अत्रायमुपाधिरित्येवंरूपव्यवहारार्थत्वमेवेति वाच्यम् । तथाच अन्वयव्यतिरेकिधर्मत्वमात्रस्य धूमवत्त्वादावसत्त्वेऽपि तादृशव्यवहाराभावेनोक्तरूपव्यवहारसाधनत्वेन साध्यव्यापकत्वे सतीत्यादिलक्षणान्तरस्यावश्यकत्वेन तेनैव व्यवहारोपपत्तौ अन्वयव्यतिरेकिधर्मत्वरूपलक्षणस्य व्यर्थत्वापातादित्यर्थः । यद्वा ननु अन्वयव्यतिरेकिधर्मत्वस्य अत्रायमुपाधिरिति व्यवहारकारणत्वमेव किं न स्यादित्यत आह **तथात्वे चेति ।** अन्वयव्यतिरेकिधर्मत्वस्यैवोक्तव्यवहारकारणत्वे साध्यव्यापकत्वे सतीत्यादिविशेषलक्षणवैयर्थ्यापत्तेरिति भावः ।

प० — घटत्वादिजातौ सत्यपि साध्ये कृतकत्वाभावेन शुद्धसाध्याव्यापकत्वादाह **साधनावच्छिन्नेति ।** परमाण्वादावव्यभिचाराय हेतावुपलभ्यमानेति स्पर्शविशेषणम् । तप्तवारिस्थवह्नावव्यभिचाराय सत्यन्तम् । तावन्मात्रस्य गगनादावव्यभिचाराय विशेष्यम् । स्पर्शे शुद्धसाध्याव्यापकत्वात्, द्रव्यत्वावच्छिन्नेत्युक्तम् ॥ **यत्किञ्चिदिति ।** पक्षधर्मावच्छिन्नेत्यर्थः ॥ **तत्र तत्रेति ।** भक्तिपादे अत एव चोपमेत्यत्र जीवब्रह्मणी अभिन्ने चेतनत्वादिति पूर्वपक्षिप्रयोगे सुखाद्यननुसंधानत्वोपाधेः घटत्वादावभेदरूपशुद्धसाध्याव्यापकत्वात् साधनावच्छिन्नसाध्यव्यापकस्योपाधित्वमुच्यते । 'चेतनैक्येऽनुसंधानं प्रमाणं नैव चापरम्'इत्यनुव्याख्याने, तथा 'सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः । दृश्यो ह्युपाधिभेदेन' इत्याद्युपाधिखण्डने च व्यवहारात् । तथाऽत्रैव 'न विलक्षणादि'त्यत्र पूर्वं 'श्रुतिर्न सम्यगनुभवसाधनम् । शब्दत्वे सत्यबुद्धिपूर्वकत्वादुन्मत्तवाक्यवत्, श्रुतिर्नागमोऽबुद्धिपूर्वकत्वात्, श्रुतिरप्रमाणं अनाप्तवाक्यत्वात्' इति प्रयोगत्रये । 'विरुद्धं तु विरोधादेव बाधित'मित्यनुव्याख्याने सम्यगनुभवसाधनत्वावच्छिन्नाद्य-

साध्यव्यापकत्वस्य वाक्यत्वावच्छिन्नद्वितीयसाध्यव्यापकस्य बोधकत्वावच्छिन्नतृतीयसाध्यव्यापकस्य प्रमाणबाधितत्वोपाधेः उक्त्या यत्किञ्चिद्धर्मावच्छिन्नसाध्यव्यापकस्योपाधेः व्यवहारादिति भावः ॥ **व्यतिरेकोपाधीति** । यस्य केवलं पक्षादन्यत्र व्यतिरेकः तादृशोपाध्यव्यापनादित्यर्थः । यथा जीवच्छरीरं सात्मकं शरीरत्वादित्यत्र प्राणादिमत्त्वमुपाधिरिष्यते तत्र । सात्मकत्वरूपसाध्यव्यापकत्वस्य पक्षे साधनाव्यापकत्वस्य चानुपलम्भादव्याप्तिरिति । यद्वा साधनव्यतिरेकव्यापकसाध्यव्यतिरेकाव्यापकः यः उपाधिस्तदव्यापकत्वादित्यर्थः । उक्तमेवोदाहरणम् । (उक्त एवोदाहरणे करादिहीनत्वोपाधिर्ज्ञेयः) साध्यव्यापकत्वसाधनाव्यापकत्वयोर्लाभायाह **अन्वयव्यतिरेकिधर्मत्वमिति** ॥ **तथात्वे** व्यवहाराकारणत्वे ॥ **लक्षणेति** । तस्य व्यवहारार्थत्वादिति भावः । अवच्छिन्नानवच्छिन्नसाध्यस्येत्यस्य व्यापकतावच्छेदकधर्ममात्रस्येत्यर्थस्तर्कताण्डवेऽभिहितः । तेन द्रव्यत्वा(द्य)वच्छिन्नस्यासाध्यत्वात्कथं साध्यपदेनाभिधानमिति न शङ्क्यम् ।

या० — **अनुद्भूतरूपानधिकरणत्वे सतीति** । इदं च तप्तवारिस्थतेजसि व्यभिचारवारणाय ॥ **द्रव्यत्वावच्छिन्नेति** । स्पर्शे व्यभिचारान्न शुद्धसाध्यव्यापकत्वमत्रेति भावः ॥ **यत्किञ्चिदवच्छिन्नेति** । पक्षधर्मावच्छिन्नेत्यर्थः ॥ **तत्र तत्राचार्यैरिति** । 'अत एव चोपमा'इत्यधिकरणे, जीवब्रह्मणी परस्परमभिन्ने चेतनत्वादिति पूर्वपक्ष्यभिप्रेतेऽनुमाने 'चेतनैक्येऽनुसन्धानं प्रमाणं नैव चापरम्'इत्यनेन चेतनत्वावच्छिन्नसाध्यव्यापकस्य परस्परं सुखाद्यनुसन्धानस्योपाधेरुक्तत्वेन साधनधर्मावच्छिन्नसाध्यव्यापकस्यास्मिन्नेवाधिकरणे श्रुतिर्न सम्यगनुभवसाधनं शब्दत्वे सत्यबुद्धिपूर्वकत्वात्, श्रुतिर्नागमोऽबुद्धिपूर्वकत्वादित्याद्यनुमाने 'विरुद्धं तु विरोधादेव बाधितम्'इत्यनेनानुभवसाधनत्वावच्छिन्ने प्रथमसाध्ये वाक्यत्वावच्छिन्ने द्वितीये च प्रमाणबाधितत्वोपाधेरुक्तत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकस्याप्युपाधित्वेनाङ्गीकृतत्वादित्यर्थः ॥ **व्यतिरेकोपाधीति** । पृथिवी इतरेभ्यो भिद्यते गुरुत्वादित्यत्र व्यतिरेके य उपाधिर्नीरसत्वरूपस्तदव्यापकत्वादित्यर्थः । नीरसत्वं हि गुरुत्वाभावरूपव्यापकत्वाभिमतव्यापकमितरभेदाभावरूपव्याप्यत्वाभिमताव्यापकमित्युपाधिर्भवति । न चात्र साध्यरूपेतरभेदव्यापकत्वमस्ति । अतोऽव्याप्तिरिति भावः ॥ ॥ **अन्वयव्यतिरेकिधर्मत्वमिति** । पक्षादन्यत्र यस्यान्वयः पक्षेतरत्र वा व्यतिरेकश्च तादृशधर्मत्वमित्यर्थः । अत्र साध्यव्यापकतोपपादनायान्वयेत्युक्तं साधनाव्यापकतोपपादनाय व्यतिरेकीति ॥ **लक्षणवैयर्थ्यादिति** । विशेषलक्षणवैयर्थ्यादित्यर्थः ॥

श्री० — **स्यादेतदिति** । समव्याप्तस्योपाधित्वाभावोऽस्त्वित्यर्थः ॥ **कृतकत्वोपाधीति** । समवेतत्ववति जलपरमाण्वादिगतरूपादौ सामान्ये च कृतकत्वाभावेन साध्याव्यापकत्वात्साधनावच्छिन्नेत्युक्तम् । अत्र शुद्धसाध्यव्यापकत्वाभावादव्याप्तिरित्याशयः ॥ **अनुद्भूतेति** । तप्तवारिस्थतेजसि व्यभिचारवारणाय

सत्यन्तं विशेषणम् । रूपमात्रशून्ये गुणादौ व्यभिचारवारणायोपलभ्यमानेत्यादिविशेष्यभागः । स्पर्शस्य स्पार्शनत्वेऽप्यचाक्षुषत्वेन तत्र साध्याव्यापकतापरिहाराय **द्रव्यत्वावच्छिन्नेति** ॥ **व्यतिरेकेति** । व्यतिरेकव्याप्तौ प्राप्तोऽयमुपाधिस्तत्र न साध्यव्यापकत्वादिकमस्ति । किन्नाम साधनाभावव्यापकत्वं साध्याभावाव्यापकत्वमेवास्तीत्यव्याप्तिरित्यर्थः ॥ **अन्वयव्यतिरेकीति** । साध्यतदभावव्याप्त्यन्यतरधर्मत्वमेव तत् । अन्वयव्यतिरेकव्याप्तिकानुमानोपाध्यनुगतं लक्षणमित्यर्थः । प्रमेयत्वादिवत्केवलान्वयिधर्मत्वे साधनवति पक्षेऽविद्यमानत्वरूपसाधनाव्यापकत्वकथनायोगात्केवलव्यतिरेकिधर्मत्वे च साध्यव्यापकत्वायोगादन्वयव्यतिरेकिधर्मत्वमित्युक्तमित्याशयः ॥ **तस्यात्रायमुपाधिरिति** । अन्वयव्यतिरेकिधर्मत्वरूपोपाधिसामान्यलक्षणस्यात्रायमुपाधिरिति विशेषव्यवहारकारणत्वाभावात् । न च साध्यव्यापकत्वादिरूपविशेषलक्षणेनैव विशेषव्यवहार इति वाच्यम् । तेनापि शुद्धसाध्यव्यापके व्यवहारोपपत्तावप्यवच्छिन्नसाध्यव्यापके व्यवहारायोगात्तदर्थं पुनरन्यस्य विशेषलक्षणान्तरस्य वक्तव्यत्वापातादित्याशयः ॥ **तथात्व इति** । सामान्यलक्षणस्यैव विशेषव्यवहारकारणत्वे शास्त्रे विशेषलक्षणकथनवैयर्थ्यादित्यर्थः ।

**च०— कृतकत्वेति** । जात्यादावनैकान्त्यादिति भावः । **अनुद्भूतेति** । तप्तवारिस्थतेजसि अनैकान्त्यव्युदासाय सतीत्यन्तं, रूपादौ तद्विधूननाय विशेष्यदलम् । परमाणौ तन्निरासाय स्पर्शे उपलभ्यमानत्वांशनिवेशनम् । **चाक्षुषत्वेति** । रूपादावनैकान्त्यादिति भावः । **तत्रतत्रेति** । अत एव चोपमेति नये जीवब्रह्मपक्षकपरस्पराभिन्नत्वसाध्यकचेतनत्वरूपपूर्ववाद्यभिमतानुमाने 'चेतनैक्येऽनुसन्धानं प्रमाणमि'त्यनेन चेतनत्वावच्छिन्नसाध्यव्यापकस्य परस्परं सुखाद्यनुसन्धानरूपोपाधेः, प्रकृत एव नये श्रुतिपक्षकसम्यगनुभवसाधनत्वाभावसाध्यकशब्दत्वविशेषिताबुद्धिपूर्वकतानुमाने तद्धर्मिकागमत्वाभावसाध्यकाबुद्धिपूर्वकत्वानुमाने 'अविरुद्धं तु विरोधादेव बाधितम्' इत्यनेनानुभवसाधनत्वावच्छिन्ने प्रथमसाध्ये वाक्यत्वावच्छिन्ने द्वितीये च प्रमाणबाधितत्वोपाधेरुक्तत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकस्याप्युपाधित्वेनाङ्गीकृतत्वादित्यर्थः॥ **व्यतिरेकोपाधीति** । पृथिवी इतरेभ्यो भिद्यते गुरुत्वादित्यत्र नीरसत्वलक्षणोपाध्यव्यापकत्वाच्चेत्यर्थः । नीरसत्वं हि व्यापकाभिमतो यः साधनाभावस्तद्व्यापकं व्याप्याभिमतो यः साध्याभावः तदव्यापकं च भवतीत्युपाधिः; तत्र च प्रकृतसाध्यव्यापकत्वं नास्तीति भावः । **अन्वयव्यतिरेकीति** । साध्यव्यापकत्वावगमायाद्यं साधनाव्यापकत्वावगमाय द्वितीये पक्षातिरिक्तेऽन्वयार्थकं पक्षे व्यतिरेकार्थकम् ।

**सु०— अत्र ब्रूमः । इदमेव सामान्यलक्षणम् । साध्यपदेनावच्छिन्नानवच्छिन्नसाध्यस्याभिधानात् । न च तत्र प्रतिपक्षासंभवः । यदवच्छिन्नसाध्ये य उपाधिस्तद्व्यावृत्तेस्तद्विशिष्टाभावे हेतुस्त्वोपपत्तेः । यथा समवायः संबन्धत्वे सति समवेतत्वेन हीनोऽकार्यत्वादाकाशवत् । वायुर्द्रव्यत्वे सति स्पार्शनत्वेन हीनोऽचाक्षुषत्वादाकाशवदिति ।**

**शे०** — नन्वत्र साध्यपदस्य शुद्धसाध्यपरत्वे साधनाद्यवच्छिन्नकृतकत्वाद्युपाधावव्याप्तिः । अवच्छिन्नसाध्यपरत्वे च शुद्धसाध्यव्यापके आर्द्रेन्धनसंयोगादावव्याप्तिरित्यतोऽत्र न साध्यपदमवच्छिन्नमात्रपरं नाप्यनवच्छिन्नमात्रपरं येनोक्तदोषः स्यात् । किन्नामावच्छिन्नानवच्छिन्नसाध्यपरमतो नाव्याप्तिरित्याशयेनाह **साध्यपदेनेति** । अयमाशयः । साध्यपदेन हि व्यापकतावच्छेदकधर्माधिकरणत्वमात्रं विवक्षितं न तु तदतिरिक्तधर्मानवच्छिन्नत्वमपि । एवञ्च यथा शुद्धसाध्यं धूमादिकं व्यापकतावच्छेदकधूमत्वादिधर्माधिकरणं तथा द्रव्यत्वसमानाधिकरणस्पार्शनत्वरूपमपि साध्यं व्यापकतावच्छेदकस्पार्शनत्वाधिकरणमेवेति न कुत्राप्यव्याप्तिः । न हि धवलत्वसमानाधिकरणं गोत्वमगोत्वं भवतीति । यद्वा साध्यव्यापकत्वे सतीत्यादेरयमर्थः । यो यद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकः स तत्रोपाधिरिति । एवाञ्चावच्छिन्नसाध्यव्यापके नाव्याप्तिशङ्का । नापि शुद्धसाध्यव्यापके आर्द्रेन्धनादौ । तस्यापि धूमत्वादिधर्मावच्छिन्नधूमरूपसाध्यव्यापकत्वात् । एवञ्च सर्वोऽप्युपाधिरवच्छिन्नसाध्यव्यापक एव । अत्रानवच्छिन्नपदं तु व्यापकतावच्छेदकधर्मान्यधर्मेणानवच्छिन्नत्वाभिप्रायं, न तु शुद्धसाध्याभिप्रायमित्यविरोधः । यद्वा साध्यपदस्थाने यत्पदप्रक्षेपेण यो यद्व्यापकत्वे सति यदव्यापकः स स्वाव्याप्ते तस्मिन्हेतावुपाधिरित्येव विवक्षितम् । एवञ्च द्रव्यत्वाच्छिन्नस्पार्शनत्वस्य दूष्यानुमाने साध्यत्वाभावेऽपि तत्र चाक्षुषत्वस्योपाधितासिद्धिः । अत्र साध्यपदं तु प्रायिकाभिप्रायम् । अत एव पूर्वं वस्तुतस्तु यो धर्मो यद्व्यापकाव्याप्यस्तस्य तेनाव्याप्तिरिति साध्यपदस्थाने यत्पदमेव प्रयुक्तम् । अत्र चाद्ये पक्षेऽवच्छिन्नसाध्यमपि साध्यमेव द्वितीये शुद्धसाध्यमप्यवच्छिन्नसाध्यमेव तृतीयेऽवच्छिन्नसाध्यस्यासाध्यत्वेऽपि चाक्षुषत्वस्य तत्रोपाधित्वमिति भेदो द्रष्टव्यः ॥ **न चेति** । अवच्छिन्नसाध्यव्यापकोपाधावित्यर्थः । उपाधेः शुद्धसाध्यव्यापकत्वाभावेन तद्व्यतिरेकेण शुद्धसाध्यव्यतिरेकसाधनासम्भवाद्विशिष्टसाध्यव्यतिरेकसाधने चार्थान्तरत्वादिति भावः ॥ **तद्विशिष्टाभाव इति** । न चैवमप्यर्थान्तरता । उपाधिः स्वव्यावृत्त्याऽवच्छिन्नं साध्यं व्यावर्तयन्नवच्छेदकव्यावृत्तेरसम्भवादवच्छेद्यशुद्धसाध्यव्यावृत्तौ पर्यवस्यन् भिक्षुपादप्रसरणन्यायेन शुद्धसाध्यसाधकानुमानेऽपि दोषो भवति यथा विशेषणासिद्धो विशिष्टहेत्वसिद्धौ पर्यवस्यन्हेतुदोषो भवति तथैवेत्याशयात् ॥

**स०** — **तद्विशिष्टाभावे हेतुत्वोपपत्तेरिति** । न च विशिष्टसाध्यव्यतिरेकस्य पृथक् साध्यत्वे चार्थान्तरत्वात् न विशिष्टाभावसाधनमुपपन्नमिति वाच्यम् । विशेषणवति विशिष्टव्यतिरेकस्य विशेष्यव्यतिरेक एव पर्यवसानेन शुद्धसाध्यव्यतिरेकसिद्ध्या अर्थान्तरत्वासंभवादिति भावः ।

**प०** — **तत्रेति** । अवच्छिन्नसाध्यव्यापकोपाधिस्थले उपाधिव्यतिरेकेण शुद्धसाध्यव्यतिरेकसाधनायोगः । तत्रोपाधेः शुद्धसाध्याव्यापकत्वादिति भावः ।

या० — **साध्यपदेनेति** । ननु द्रव्यत्वाद्यवच्छिन्ने साध्यताभावात्कथं तस्य साध्यपदेन संग्रहः । मैवम् । साध्यपदेन हि व्यापकतावच्छेदकधर्माधिकरणमात्रं विवक्षितम्, न तु तदतिरिक्तधर्मानवच्छिन्नत्वमपि । एवं यथा शुद्धसाध्यं धूमादिकं व्यापकतावच्छेदकधूमत्वादिधर्माधिकरणं तथा द्रव्यत्वादिसमानाधिकरणं स्पार्शनत्वादिरूपमपि साध्यं व्यापकतावच्छेदकस्पार्शनत्वाद्यधिकरणमेव । न हि धवलत्वसमानाधिकरणं गोत्वमगोत्वं भवति, अतो नाव्याप्तिशङ्केत्याशयात् ॥ **न च तत्रेति** । अवच्छिन्नसाध्यव्यापकोपाधावित्यर्थः। उपाधेः शुद्धसाध्यव्यापकत्वाभावेन तद्व्यतिरेकेण शुद्धसाध्यव्यतिरेकसाधनासम्भवात्। विशिष्टसाध्यव्यतिरेकसाधने चार्थान्तरत्वादित्याशय. ॥ **तद्विशिष्टाभाव इति** । न चैवमर्थान्तरता । उपाधिः स्वव्यावृत्त्या अवच्छिन्नसाध्यं व्यावर्तयन् अवच्छेदकव्यावृत्तेरसम्भवात् अवच्छेद्यशुद्धसाध्यव्यावृत्तौ पर्यवस्यन् भिक्षुकपादप्रसरणन्यायेन शुद्धसाध्यसाधकानुमानेऽपि दोषो भवति । यथा विशेषणासिद्धः विशिष्टहेत्वसिद्धौ पर्यवस्यन्हेतुदोषो भवति तथैवेत्याशयात् ।

च० — **संबन्धत्वे सति समवेतत्वेन हीनः** सामानाधिकरण्यप्रत्यासत्त्या संबन्धत्वविशिष्टसमवेतत्वाभाववान् । **द्रव्यत्वे सति स्पार्शनत्वेन हीनः** तादृशप्रत्यासत्त्या द्रव्यत्वविशिष्टस्पार्शनत्वाभाववान् ।

---

**सु० — न चात्र साध्यविशेषणवैयर्थ्यम् । शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादित्यादाविव व्यभिचारपरिहार्थत्वात् । क्वचित्साध्यावच्छेदकावच्छिन्नस्योपाध्यभावस्य हेतुत्वात् । यथा वायुः स्पार्शनो न भवति द्रव्यत्वे सत्यचाक्षुषत्वादिति । व्यतिरेकव्याप्तौ तूक्तमेवोत्तरम् । साध्यसाधनपदाभ्यां च प्रकृतयोरेव विवक्षितत्वान्न कश्चित्क्षुद्रोपद्रवः । यो यत्साध्यव्यापको यत्साधनाव्यापक इति वाऽस्यार्थ इति सर्वं सुस्थम् ।**

शे० — **न चात्रेति** । विशिष्टाभावसाधन इत्यर्थः । व्यभिचारवारकत्वं तु साध्यगतविशेषणानां नोपपद्यते । क्वाप्यदर्शनेन साध्ये व्यभिचारवारकविशेषणोपादानस्यासाम्प्रदायिकत्वादिति भावः ॥ **स्पर्शवदिति** । प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वस्य हेतोः कर्मजे स्थाणुश्येनसंयोगे सत्त्वेऽपि स्पर्शवद्गुणत्वेन तदभावाभावात्तत्र व्यभिचारपरिहाराय विशेषपदम् । आदिपदेन प्रत्यक्षस्पर्शाश्रयत्वं बहिरिन्द्रियप्रत्यक्षत्वव्यभिचारि, द्रव्यत्वाव्यभिचारित्वे सति द्रव्यबहिरिन्द्रियप्रत्यक्षत्वव्यापकव्यभिचारित्वादित्यादेः संग्रहः । तत्र सुखादौ व्यभिचारवारणाय बहिरिन्द्रियेति विशेषणोपादानादिति ध्येयम् ॥

**क्वचिदिति** । अयम्भावः । वायुः स्पार्शनोऽनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वादित्यादौ स्पार्शनत्वादिरूपशुद्धसाध्य एव द्रव्यत्वादिविशिष्टस्य चाक्षुषत्वाद्यभावस्याभाव उपाधिः । अयं च विशिष्टाभावरूपोपाधिः स्पार्शनत्वादिरूपसाध्यवति स्पर्शादौ चाक्षुषत्वाद्यभावरूपविशेष्यवति तदभावप्रयुक्तो न सम्भवतीति द्रव्यत्वरूपविशेषणस्याभावेन, घटादौ तु द्रव्यत्ववति तदभावप्रयुक्तविशिष्टाभावासम्भवेऽपि तस्य चाक्षुषत्वेन तत्र चाक्षुषत्वाभावरूपविशेष्याभावसद्भावात्तत्प्रयुक्तविशिष्टाभावोऽनुगत इति शुद्धसाध्यव्यापकः । उक्तसाधनवति वायौ द्रव्यत्वस्य चाक्षुषत्वाभावस्य च सत्त्वेन तदभावलक्षणोपाध्यभावेन साधनाव्यापकश्च । अत एव 'य उपाधिर्लगति साध्ये सम्बन्धविशेषणे । तद्विशेषणयुक्तैतदभावाभूस्तु केवल' इत्युक्तम् । शास्त्रे तु व्यतिरेकव्याप्त्यादिनाऽन्वयव्याप्त्यादिकमिवाच्छिन्नसाध्यव्यापकोपाधिना शुद्धसाध्यव्यापकोपाधिराक्षिप्यत इति न कश्चिद्दोषः । अत्र क्वचिदित्युक्तिस्त्वस्य प्रकारस्योक्तरीत्या वायुः स्पार्शन इत्यादौ सम्भवेऽपि वायुः स्पार्शनः स्पर्शत्वादित्यसिद्धिसङ्कीर्णे द्रव्यत्वावच्छिन्नसाध्यव्यापके चाक्षुषत्वोपाधावसम्भवेनासार्वत्रिकत्वाभिप्रायात्तत्र द्रव्यत्वावच्छिन्नचाक्षुषत्वाभावाभावरूपोपाधावुक्तरीत्या स्पार्शनत्वरूपसाध्यव्यापकत्वेऽपि स्पर्शत्वरूपसाधनाव्यापकत्वस्याभावात्साधनवति स्पर्शे द्रव्यत्वाभावेन द्रव्यत्वविशिष्टचाक्षुषत्वाभावस्याभावेनोपाधेः साधनव्यापकत्वात् । न चास्योपाधित्वाभावादसंग्राह्यतेति शङ्क्यम् । प्रतिपक्षोन्नायकत्वरूपदूषकताबीजाक्रान्तस्योपाधित्वस्यावश्यकत्वेन तदनुगतलक्षणस्य कर्तव्यत्वात् । लक्षणाभावेनोपाधित्वाभाववचनस्यासङ्गतत्वात् । तस्मादस्य प्रकारस्य क्वचित्सत्त्वेऽपि क्वचिदसत्त्वात् अवच्छिन्ने साध्ये य उपाधिस्तद्व्यावृत्तेस्तद्विशिष्टाभावे हेतुत्वमिति पूर्वप्रकारस्य, वायुः स्पार्शनः स्पर्शत्वादित्यत्रापि द्रव्यत्वावच्छिन्नस्पार्शनत्वरूपसाध्यवति चाक्षुषत्वसद्भावेन साध्यव्यापकत्वात्स्पर्शत्वरूपसाधनवति स्पर्शे चाक्षुषत्वस्याभावेन साधनाव्यापकत्वेनाचाक्षुषत्वेन द्रव्यत्वावच्छिन्नस्पार्शनत्वाभावसाधनसंभवेन, सार्वत्रिकत्वादिति ध्येयम् ।

यद्वा साध्ये यदवच्छेदकं तदवच्छिन्नस्योपाध्यभावस्य क्वचिद्धेतुत्वादित्यर्थः । साध्यावच्छेदकमुपाध्यभावे न सर्वत्र विशेषणं किन्तु क्वचिदेव । तथा हि । यत्र साध्यावच्छेदकावच्छिन्नोपाध्यभावाभावस्य स्थापनानुमानीयसाध्यव्यापकत्वं तत्रत्यसाधनाव्यापकत्वं च तत्रैवोपाध्यभावेन साध्याभावे साधनीये उपाध्यभावे साध्यावच्छेदकावच्छिन्नत्वं विशेषणं देयम् । यत्र तु तद्धर्मावच्छिन्नोपाध्यभावाभावस्य स्थापनानुमानीयसाध्यसाधनव्यापकत्वाव्यापकत्वाभावस्तत्रोपाध्यभावेन साध्याभावे साधनीये उपाध्यभावे तद्धर्मावच्छिन्नत्वं विशेषणं न देयम् । तत्र तद्धर्मावच्छिन्नोपाध्यभावाभावस्य साध्यव्यापकत्ववत् साधनव्यापकत्वस्यापि सत्त्वेन तद्धर्मावच्छिन्नोपाध्यभावेन साध्याभावस्येव साधनाभावस्यापि सिद्धत्वेन हेतोरविषयवृत्तित्वासंपादकत्वात् । तत्संपादकस्यैव

च प्रतिपक्षस्य दूषणत्वात् । तथा च वायुः स्पार्शनोऽनुद्भूतरूपानधिकरणत्वे सत्युपलभ्यमानस्पर्शाधिकरणत्वादित्यत्र द्रव्यत्वविशिष्टाचाक्षुषत्वाभावस्य स्पार्शनत्वरूपसाध्यव्यापकस्योक्तसाधनाव्यापकत्वस्य च सत्त्वेन वायुः स्पार्शनो न द्रव्यत्वे सत्यचाक्षुषत्वादिति प्रतिपक्षानुमाने पूर्वहेतोरविषयवृत्तित्वसंपादकत्वेन साध्याभावसाधनोपपात्तवपि वायुः स्पार्शनः स्प र्त्वादित्यादौ विशिष्टस्योपाधेः साध्यव्यापकत्वस्येव साधनव्यापकत्वस्यापि सत्त्वेन तदभावेन साध्याभावस्येव साधनाभावस्यापि सिद्ध्यापत्त्या तत्र हेतोरविषयवृत्तित्वासंभवेन तत्रोपाध्यभावे साध्यावच्छेदकावच्छिन्नत्वं न विवक्षणीयमिति नायं प्रकारः सार्वत्रिकः । प्राचीनस्तु सार्वत्रिक इति स एवात्र विवक्षित इति द्रष्टव्यम् ।

**व्यतिरेकेति** । व्यतिरेकव्याप्तिर्न साधानाङ्गमन्वयव्याप्तिसाधने चान्वयव्याप्तिरेव सेत्युत्तरमुक्तमेवेत्यर्थः । नन्वेवं धूमानुमानस्यापि सोपाधिकत्वं प्रसज्यते । यत्किञ्चित्साध्यव्यापकत्वेन यत्किञ्चित्साधनाव्यापकत्वेनार्द्रेन्धनसंयोगस्य तत्रोपाधित्वसम्भवादित्यतः साध्यसाधनपदाभ्यां तदनुमानीयसाध्यसाधनयोर्वन्हिधूमयोरेवाभिधानेनार्द्रेन्धनसंयोगस्य धूमवन्हिरूपसाध्यसाधनव्यापकत्वाव्यापकत्वसद्भावेऽपि वन्हिधूमरूपसाध्यसाधनव्यापकत्वाव्यापकत्वयोरभावेन न तत्र तस्योपाधित्वमित्याह **साध्यसाधनपदाभ्यामिति** । एवं तर्ह्यननुगमः स्यादित्यत आह **यो यत्साध्येति** । सर्वत्र नाम्नां बुद्धिस्थवाचकत्वेऽपि सार्वत्रिकव्यवहारौपयिकत्वस्यानुभवसिद्धत्वान्नाननुगम इत्यवधेयम् ।

**स० — न चेति** । साध्यगतविशेषणानां व्यभिचारावारकत्वादिति भावः । **स्पर्शवद्विशेषगुण इति** । विशेषगुणत्वाभावसाधने च संयोगे व्यभिचारः । तस्य प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वेऽपि स्पर्शवद्गुणत्वेन तदभावाभावादतो विशेषपदम् । तथा च स्पर्शवद्गुणत्वेऽपि स्पर्शवद्विशेषगुणत्वाभावसद्भावान्न व्यभिचार इति भावः । आदिपदेन वेदः सजातीयोच्चारणानपेक्षोच्चरितजातीयः वाक्यत्वादित्यत्र शब्दमूलकशब्दे व्यभिचारवारणाय साध्ये सजातीयेति विशेषणदानात्तत्संग्रहः । यथा प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे सति द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वान्महत्त्ववदित्यस्य(ापि) संग्रहः । तत्रापि साध्ये हेतौ च प्रत्यक्षपदं बहिरिन्द्रियप्रत्यक्षपरम् । अन्यथा सुखादौ व्यभिचारापत्तेः इति परैर्व्याख्यातत्वादिति द्रष्टव्यम् । **क्वचित्साध्यावच्छेदकावच्छिन्नस्येति** । अयं भावः । वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वादित्यादौ स्पार्शनत्वादिरूपशुद्धसाध्य एव द्रव्यत्वादिविशिष्टस्य चाक्षुषत्वाद्यभावस्याभाव उपाधिः । अयं च विशिष्टाभावरूप उपाधिः स्पार्शनत्वादिरूपसाध्यवति स्पर्शादौ चाक्षुषत्वाभावरूपविशेष्यवति तदभावप्रयुक्तो न संभवतीति द्रव्यत्वरूपविशेषणस्याभावेन; तत्प्रयुक्तविशिष्टाभावानुगत इति शुद्धसाध्यव्यापकः । वायौ तु (द्रव्यत्वरूपविशेषणस्य) चाक्षुषत्वाभावरूपविशेष्यवति तदभावप्रयुक्तो न संभवतीति द्रव्यत्वरूपविशेषणस्याभावेन, घटादौ तु

द्रव्यत्वसद्भावेन विशेषणाभावप्रयुक्तविशिष्टाभावासंभवेऽपि तस्य चाक्षुषत्वेन चाक्षुषत्वाभावरूपविशेषस्या-सत्त्वेन तदभावलक्षणोपाधेः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वरूपसाधनवति पक्षे अभावाद्भवति साधनाव्यापकः । अत एवोक्तम् 'य उपाधिर्लगति साध्ये संबन्धविशेषणे । तद्विशे-षणयुक्तैतदभावाभूस्तु केवले । साध्ये, उपाधिर्भवति । तद्विशेषणयुक्तैतदभावः इति । तस्य साध्यस्य यद्विशेषणं, तेन युक्तः स च एषः । एतच्छब्देनोपाधिरभिधीयते । तस्याभावः, तस्य भूः सत्ता अभूः अभाव इत्यर्थः । शास्त्रे तु व्यतिरेकव्याप्त्यादिना अन्वयव्याप्त्यादिकमिवावच्छिन्नसाध्यव्यापकोपाधि-नोक्तशुद्धसाध्यव्यापकोपाधिराक्षिप्यत इति न कश्चिद्दोषः ।

अत्र क्वचिदित्युक्तिस्तु अस्य प्रकारस्योक्तरीत्या वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वादित्यादौ संभवेऽपि वायुः स्पार्शनः स्पर्शत्वादित्यसिद्धिसङ्कीर्णे द्रव्यत्वाव-च्छिन्नसाध्यव्यापके चाक्षुषत्वोपाधौ असंभवेनासार्वत्रिकत्वाभिप्रायात्तत्र द्रव्यत्वावच्छिन्नचाक्षुषत्वाभावा-भावरूपोपाधौ उक्तरीत्या स्पार्शनत्वरूपसाध्यव्यापकत्वेऽपि स्पर्शत्वरूपसाधनाव्यापकत्वस्याभावात् । साधनवति स्पार्शनद्रव्यत्वाभावेन द्रव्यत्वविशिष्टचाक्षुषत्वाभावाभावेनोपाधेः साधनव्यापकत्वात् । न चास्य उपाधित्वाभावादसंग्रह इति वाच्यम् । प्रतिपक्षोन्नायकत्वरूपदूषकताबीजाक्रान्तस्योपाधित्वस्यावश्यकत्वेन तदनुगतलक्षणस्य कर्तव्यत्वेन लक्षणाभावेनोपाधित्वाभाववचनस्यासङ्गतत्वात् । तस्मादस्य प्रकारस्य क्वचित्सत्त्वेऽपि क्वचिदसत्त्वात्; यदवच्छिन्नसाध्ये उपाधिः तद्व्यावृत्तेः तद्विशिष्टाभावे हेतुत्वमिति पूर्वप्रका-रस्य च वायुः स्पार्शनः स्पर्शत्वादित्यत्रापि द्रव्यत्वावच्छिन्नस्पार्शनत्वरूपसाध्यवति चाक्षुषत्वसद्भावेन साध्यव्यापकत्वात् स्पर्शत्वरूपसाधनवति स्पर्शे चाक्षुषत्वस्याभावेन साधनाव्यापकत्वेन अचाक्षुषत्वेन द्रव्यत्वावच्छिन्नस्पार्शनत्वाभावरूपसाधनस्य संभवेनात्रापि सत्त्वेन सार्वत्रिकत्वादयमेव पक्षः टीकाकाराणा-मभिप्रेत इति भावः ।

सूक्ष्मदृष्टयस्त्वेवं व्याकुर्वते । साध्ये यदवच्छेदकं तदवच्छिन्नस्योपाध्यभावस्य क्वचिद्धेतुत्वादि-त्यर्थः । साध्यावच्छेदकमुपाध्यभावे न सर्वत्र विशेषणम् । किं तु क्वचिदेव । तथा हि यत्र साध्या-वच्छेदकावच्छिन्नोपाध्यभावाभावस्य स्थापनानुमानीयसाध्यव्यापकत्वं, तत्रत्यसाधनाव्यापकत्वं च, तत्रैव उपाध्यभावेन साध्याभावे साधनीये उपाध्यभावे साध्यावच्छेदकावच्छिन्नत्वविशेषणं देयम् । यत्र तु तद्धर्मावच्छिन्नोपाध्यभावाभावस्य स्थापनानुमानीयसाध्यसाधनव्यापकत्वाव्यापकत्वाभावः तत्रोपाध्यभावेन साध्याभावे साधनीये उपाध्यभावे तद्धर्मावच्छिन्नत्वं विशेषणं न देयम् । तत्र तद्धर्मावच्छिन्नोपाध्यभावा-भावस्य साध्यव्यापकत्ववत् साधनव्यापकत्वस्यापि सत्त्वेन तद्धर्मावच्छिन्नोपाध्यभावेनसाधनभावस्यापि व्यावर्तितत्वेन हेतोरविषयवृत्तित्वासंपादकत्वात् । तत्संपादकस्यैव प्रतिपक्षस्य दूषणत्वात् । तथा च

वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वादित्यत्र द्रव्यत्वविशिष्टचाक्षुषत्वाभावस्य स्पार्शनत्वरूपसाध्यव्यापकत्वस्य उक्तसाधनाव्यापकत्वस्य च सत्त्वेन; वायुः स्पार्शनो न द्रव्यत्वे सति अचाक्षुषत्वादिति प्रतिपक्षानुमाने पूर्वहेतोरविषयवृत्तित्वसंपादकत्वेन साध्याभावसाधनोपपत्तावपि स्पर्शत्वादित्यादौ विशिष्टोपाधेः साध्यव्यापकत्वस्येव साधनव्यापकत्वस्यापि सत्त्वेन तदभावेन साध्याभावस्येव साधनाभावस्यापि सिद्ध्यापत्त्या हेतोरविषयवृत्तित्वासंभवेन तत्रोपाध्यभावे साध्यावच्छेदकावच्छिन्नत्वं न विवक्षणीयमिति अस्य प्रकारस्य सार्वत्रिकत्वाभावः । यदवच्छिन्नसाध्य इति पूर्वोक्तप्रकारस्तु सार्वत्रिक इति ध्येयम् ।

**व्यतिरेकेति** । व्यतिरेकव्याप्तेः साधनेन साध्यसिद्धावनङ्गत्वात् तदन्वयव्याप्तिसाधने चान्वयव्याप्तित्वात् तत्र च साध्यव्यापकत्वादेः सत्त्वान्न व्यतिरेकोपाधावव्याप्त इत्यर्थः ।

प० — **इत्यादाविवेति** । अत्र प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वाज्ज्ञानादिवत् इत्यत्र कर्मजसंयोगे हेतोरव्यभिचाराय साध्ये यथा विशेषेति गुणविशेषणं तथेहाप्याद्यहेतौ जातावव्यभिचाराय द्वितीयहेतौ स्पर्शेऽव्यभिचाराय साध्यविशेषणमित्यर्थः । क्वचिदित्युक्तं व्यनक्ति **यथेति** । स्पर्शे व्यभिचारव्युदासाय हेतौ सत्यन्तम् । प्रपञ्चितमेतत्तर्कताण्डवे उपाधेर्दूषकताबीजोक्तिवादे । व्यतिरेकोपाध्यव्यापकत्वाच्चेत्युक्तं दोषं निराह **व्यतिरेकेति** । नास्त्येव सा अनुमित्यनुपयोगादित्युत्तरमुक्तमेत्यर्थः । तथा च (तदुपाधिर्दो) उपाध्यव्याप्तिर्न दोषायेति भावः । नन्वेवं धूमानुमानमप्यार्द्रेन्धनरूपोपाधिग्रस्तं स्यात् । उक्तोपाधेः प्रकृतसाध्यव्यापकत्वादेरभावेऽपि यत्किञ्चित्साध्यव्यापकत्वादिभावादित्यत आह **साध्यसाधनेति** ॥ **प्रकृतेति** । वह्निधूमादिरूपेत्यर्थः । अवच्छिन्नानवच्छिन्नासाध्यव्यापकसंग्रहायातिप्रसङ्गनिरासाय च पक्षान्तरमाह **यो यदिति** । यत्तच्छब्दयोस्सर्वनामत्वेन बुद्धिस्थवाचितया सार्वत्रिकव्यवहारहेतुत्वस्य जिज्ञासासूत्रे उपोद्घातग्रन्थे प्रतिपादना(च अव)दवच्छिन्नसाध्यस्यापि साध्यत्वादननुगमोऽव्याप्तिदोषश्च नेति सर्वं सुस्थमित्युक्तम् ।

या० — **शब्दो न स्पर्शवद्विशेषगुण इति** । अत्र प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वस्य हेतोः कर्मजे स्थाणुश्येनसंयोगे व्यभिचारवारणाय साध्ये विशेषपदं यथा, तथा प्रकृतेऽप्याद्यानुमाने सामान्यादौ द्वितीयानुमाने च स्पर्शे व्यभिचारवारणाय साध्ये विशेषणम् । एवं च विशिष्टाभावरूपसाध्यस्य तत्र सत्त्वान्न व्यभिचार इति भावः ॥ **क्वचित्साध्यावच्छेदकस्येति** । यत्पक्षधर्मादिरूपं विशेषणं साध्यव्यापकतासिद्ध्यर्थं विवक्षितं तदुपाध्यभावरूपे सत्प्रतिपक्षहेतावेव देयं न तु साध्ये । ततश्च शुद्धसाध्याभाव एवानुमातुं शक्य इति नार्थान्तरतेति भावः । यत्र साध्यावच्छेदकधर्मस्य न पक्षे सत्त्वं तत्रायं प्रकारो

न संभवति । विशेषणासिद्धिप्रसङ्गादित्याशयेन क्वचिदित्युक्तम् । यथा स्पर्शः स्पार्शनो धर्मत्वादित्यत्र साध्यावच्छेदकद्रव्यत्वावच्छिन्नचाक्षुषत्वाभावस्य विशेषणासिद्ध्या न स्पार्शनत्वाभावसाधकत्वम् । न चायं शुद्धसाध्यव्यापको नापि पक्षधर्मसाधनधर्मावच्छिन्नसाध्यव्यापकोऽतस्त्रिष्वनन्तर्भूतः कथमुपाधितया संग्राह्य इति वाच्यम् । उदासीनधर्मावच्छिन्नस्यापि तुरीयस्य तार्किकैरङ्गीकृतत्वात् । यथाऽऽह गङ्गेशः । स च धर्मः क्वचिन्महानसत्वादिरिति । घटरूपं प्रत्यक्षं प्रमेयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकमुद्भूत-रूपवत्त्वमुपाधिरित्याद्युदाहरणानि च तदीयैः प्रदर्शितानि । अत एव पूर्वं यत्किञ्चिदवच्छिन्नेत्युक्तम् । अत्र चोक्तप्रकारासंभवाद्विशिष्टाभाव एवोपाधिव्यतिरेकेण साध्य इति स एव प्रकारः सार्वत्रिकोऽनुसर्तव्य इत्याशयः । न चात्र विशेषणाभावमात्रसिद्ध्याऽर्थान्तरता । पक्षे स्पार्शनत्वादिसाध्ये सन्देहदशायां विशेष्याभावस्यापि विनिगमकाभावेन सिद्धिसंभवात् । तर्कताण्डवे तु केचित्तु स्पार्शनत्वादिरूपशुद्धसाध्य एव द्रव्यत्वादिविशिष्टस्य चाक्षुषत्वाभावस्याभाव उपाधिः । अयं च विशिष्टाभावरूप उपाधिः साध्य-वति स्पर्शादौ द्रव्यत्वस्य विशेषणस्याभावेन, घटादौ तु चाक्षुषत्वाभावरूपविशेष्यस्याभावेनानुगत इति शुद्धसाध्यव्यापकः । तदुक्तम् 'य उपाधिर्लिङ्गीति साध्ये वै यद्विशेषणे । तद्विशेषणयुक्तैतदभावा-भूस्तु केवले' इति । अत्र यद्विशेषणं यस्मिंस्तस्मिन्केवले साध्ये इत्यन्वयः । एतत्पदेनोपाधिपरामर्शः । अभूरभाव इत्यर्थो ज्ञेयः । शास्त्रे तु व्यतिरेकव्याप्त्यादिनाऽन्वयव्याप्त्यादिकमिवावच्छिन्नसाध्यव्यापकोपा-धिनोक्तः शुद्धव्यापकोपाधिराक्षिप्यत इति केषाञ्चित्पक्षमनूद्य अयं तु प्रकारो वायुः स्पार्शनः स्पर्शत्वादित्य-सिद्धिसङ्कीर्णे द्रव्यत्वावच्छिन्नसाध्यव्यापके चाक्षुषत्वोपाधौ न सम्भवतीत्यसार्वत्रिकः । तत्र द्रव्यत्वा-वच्छिन्नचाक्षुषत्वाभावाभावरूपोपाधावुक्तरीत्या स्पार्शनत्वरूपसाध्यव्यापकत्वेऽपि स्पर्शत्वरूपसाधनाव्याप-कत्वस्याभावात् । साधनवति स्पर्शे द्रव्यत्वाभावेन द्रव्यत्वविशिष्टचाक्षुषत्वाभावस्याभावेनो-पाधेः साधनव्यापकत्वात् । अत एव सुधायां क्वचित्पदं प्रयुक्तमिति क्वचिदित्यस्याशयवर्णनं कृतम् । तत्रासिद्धिसङ्कीर्णोपाधेः साधनव्यापकत्वेन पक्षे तदभावरूपहेतोरसिद्ध्या नैवं शुद्धसाध्या-भावानुमानं तत्र सम्भवतीत्यसार्वत्रिकोऽयं प्रकार इति सूचयितुं क्वचिदित्युक्तमित्यभिप्रायः ॥ **उक्त-मेवोत्तरमिति** । व्यतिरेकव्याप्तिरेव नास्तीत्युत्तरमुक्तमेवेत्यर्थः । नन्वेवं सदनुमानमात्रोच्छेदः । पर्वतो धूमवान्वह्नेरित्यत्र साध्यव्यापकस्य साधनाव्यापकस्य चार्द्रेन्धनादेर्धूमानुमानेऽपि सत्त्वादित्यत आह **साध्यसाधनपदाभ्यामिति प्रकृतयोरेवेति** । वह्न्यादिधूमादिरूपयोरेवेत्यर्थः । नन्वेवमननुगम इत्यस्वरसादाह **यो यत्साध्येति** । सर्वनाम्नां च बुद्धिस्थवाचकत्वेऽप्यनुगतव्यवहारहेतुत्वमनुभव-सिद्धमिति भावः । यत्साध्यव्यापक इत्युक्त्याऽवच्छिन्नसाध्यव्यापकमपि सङ्गृहीतमित्याशयेन सर्वं सुस्थ-मित्युक्तम् ॥

च० — **व्यभिचारेति** । जातौ स्पर्शादिगुणे चानैकान्त्यव्युदासकत्वादित्यर्थः । **क्वचित्साध्यावच्छेदकेति** । साध्यव्यापकतानिर्वाहकपक्षधर्मादिरूपविशेषणावच्छिन्नस्येत्यर्थः । तथा च शुद्धसाध्याभाव एवानुमातुं सुशक इति नार्थान्तरतेति भावः । दर्शितविशेषणस्य पक्षे समवधानस्थले साध्यापत्त्या नेयं भङ्गी समाश्रयणीयेति ध्वनयितुं क्वचित्पदोपादानम् । प्रपञ्चितं चैतत्तर्कताण्डवे । व्यतिरेकोपाधावित्यभिहितां क्षतिमपहस्तयते **व्यतिरेकेति** । अनुमित्यनुपयोगादित्युत्तरमभिहितमेवेति तत्रत्योपाधावव्याप्तिर्न क्षतिमावहतीति भावः । **प्रकृतयोरेवेति** । तेन साध्यान्तरसाधनान्तरव्यापकत्वाव्यापकत्वे समादाय धूमानुमानादावार्द्रेन्धनत्वादेर्नोपाधिताप्रसङ्ग इति भावः ।

**सु० — ननु च सोपाधिकत्वस्य सत्प्रतिपक्षत्वेऽपि तेनैवानुमानदोषाधिक्यमिति । मैवम् । प्रतिज्ञार्थविरुद्धतेत्यनेनैव प्रबलप्रमाणविरुद्धतालक्षणकालातीत(ता)वत्समबलप्रमाणविरुद्धतायाः सत्प्रतिपक्षताया अपि संगृहीतत्वात् । प्रतिस्पर्धिसद्भावमात्रं हि प्रतिज्ञार्थविरुद्धतेत्युक्तम् । एवं तर्हि दुर्बलेन विरोधोऽपि प्रतिज्ञार्थविरुद्धता स्यात्, उक्तलक्षणोपेतत्वादित्यत आह** दुर्बलेनेति ।

अनु० — दुर्बलेन विरोधेऽपि न प्रमाणमसाधकम् ॥

**अयमर्थः । प्रकरणादिवशाद्धि सामान्यशब्दा अपि विशेषे वर्तन्त इति प्रसिद्धम् । यथा विशिष्टसमये पुरुषमानयेत्युक्ते पुरुषविशेष एवानीयते न तु यः कोऽपि पुरुषः । प्रकृते चानुमानस्यासाधकत्वनिमित्तपरिसङ्ख्यानम् । न च दुर्बलेन विरोधेऽप्यनुमानमसाधकं भवति । प्रबलविरोधादिना तस्यैवाभासत्वात् । यथा विमतश्चक्षुष्मान्रूपापरोक्षज्ञानित्वादित्यत्र विमतोऽन्धः पुरुषत्वादिति । अतः सामान्यशब्दप्रसक्तोऽपि दुर्बलेन विरोधो (नानुमानासाधकतावच्छिन्नप्र) न प्रतिज्ञार्थविरुद्धता । किन्तु प्रबलसमबलप्रमाणविरुद्धतैव (इति) ।**

शे० — ननु दुर्बलेन विरोधेऽपीत्युत्तरवाक्यमनर्थकम् । न च दुर्बलप्रमाणविरोधस्य प्रतिज्ञार्थविरुद्धताऽभावप्रतिपादनार्थं तदिति वाच्यम् । तस्य प्रतिज्ञार्थविरुद्धतायाः प्रसञ्जकाभावेनाप्रसक्तत्वेन तदभावप्रतिपादनस्याप्यनर्थकत्वात् । न च समबलप्रमाणविरोधस्य प्रतिज्ञार्थविरुद्धतया सङ्गृहीतत्ववर्णनमेव सिद्धान्तिनस्तत्प्रसञ्जकमिति वाच्यम् । निमित्ताभावेन सिद्धान्तिना प्रतिज्ञार्थविरुद्धतया समबलप्रमाणविरोधस्य सङ्गृहीतत्ववर्णनस्याकर्तव्यतया तस्य तत्र प्रसञ्जकत्वासम्भवादित्यतोऽनुमानदोषाधिक्यशङ्कानिरासार्थतया सिद्धान्तिना समबलप्रमाणविरोधस्य प्रतिज्ञार्थविरुद्धतया सङ्गृहीतत्ववर्णनस्यावश्यं

कर्तव्यत्वाद्युक्तं तस्य तत्प्रसञ्जकत्वमित्याशयेन समबलप्रमाणविरोधस्य प्रतिज्ञार्थविरुद्धतया सङ्गृहीतत्वं सिद्धान्तिना वाचयितुं तद्व्यावर्त्यतयाऽनुमानदोषाधिक्यशङ्कामुत्थापयति **ननु चेति** ॥ **समबलप्रमाणविरुद्धताया इति** । समबलप्रमाणविरुद्धतालक्षणाया इत्यर्थः । ननु विरुद्धयोः कालातीतसत्प्रतिपक्षयोः कथं प्रतिज्ञार्थविरुद्धतया संग्रह इत्यतः प्रतिज्ञार्थस्य प्रतिस्पर्धिप्रबलप्रमाणसद्भावस्य प्रतिस्पर्धिसमबलप्रमाणसद्भावस्य प्रतिज्ञार्थविरुद्धतात्वे तस्योभयाननुगतत्वेन तयोभयसंग्रहाभावेऽपि प्रतिज्ञार्थस्य प्रतिस्पर्धिसद्भावमात्रस्य तत्त्वे तस्योभयानुगतत्वाद्युक्तः प्रतिज्ञार्थविरुद्धतयोभयोः संग्रह इत्याशयेनाह **प्रतिस्पर्धीति** । एवं दुर्बलेन प्रमाणेन विरोधस्य प्रतिज्ञार्थविरोधताप्रसञ्जकमुक्त्वा तदभावोपपादकतयोत्तरं वाक्यं योजयितुं तस्य प्रतिज्ञार्थविरुद्धताशङ्कामुत्थापयति **एवं तर्हीति** । नन्वत्र दुर्बलप्रमाणविरोधस्य प्रमाणासाधकत्वसम्पादकत्वाभावो वर्ण्यते न तु प्रतिज्ञार्थविरुद्धत्वाभावः । तत्कथमनेनोक्तशङ्कापरिहार इत्यतस्तस्य तादर्थ्यान्नानुपपत्तिरित्याशयेनाह **अयमर्थ इत्यादिना** ।

म० — **तेनैवेति** । सत्प्रतिपक्षत्वेनैवेत्यर्थः । सत्प्रतिपक्षस्य पूर्वोक्तप्रतिज्ञाविरोधाव्याप्तिलिङ्गराहित्यरूपानुमानदोषेष्वन्तर्भावासंभवेन दोषचातुर्विध्यं स्यादिति भावः । ननु प्रतिज्ञार्थविरुद्धतेत्यनेन कथं सत्प्रतिपक्षस्यापि संग्रह इत्यत आह **प्रतिस्पर्धिसद्भावमात्रमिति** ॥ **एवं तर्हीति** । प्रतिज्ञार्थविरुद्धतेत्यनेन सत्प्रतिपक्षस्यापि संग्रह इत्यर्थः । **उक्तलक्षणोपेतत्वादिति** । प्रतिस्पर्धिसद्भावमात्रमित्युक्तलक्षणोपेतत्वादित्यर्थः । **प्रकृत इति** । **परिसंख्यानम्** आरब्धमिति शेषः । यद्यपि हीनबले प्रमाणशब्दप्रयोग एव नास्ति । आभासानाभासाविवेक एव हि प्रमाणशब्दप्रयोगः, न त्वप्रामाण्ये निश्चित इति पूर्वोक्तरीत्या न शङ्कावकाशः । तथापि प्रमाणशब्दस्य सामान्यार्थकत्वमङ्गीकृत्येयं शङ्केति ध्येयम् ।

प० — **अनुमानदोषाधिक्यमिति** । तथा च विरोधोऽपि त्रिविधेवेत्युक्तिविरोधः ॥ **कालातीतवदिति** । तथा च तेनापि नाधिक्यमिति भावः ॥ **इत्युक्तमिति** । प्रतिज्ञार्थविरुद्धतेत्यनुव्याख्यानस्य तथा व्याख्यानादिति भावः ॥ **विशिष्टसमय इति** । दानातिथिपूजासमय इत्यर्थः ।

श्री० — **उक्तलक्षणेति** । प्रतिस्पर्धिसद्भावरूपोक्तलक्षणेत्यर्थः ।

सु० — नन्वेवमाधिक्यनिरासेऽपि नानुमानविरोधत्रैविध्यं संभवति । प्रतिज्ञाविरोधस्याव्याप्त्यैव गतत्वात् । विरोधेनैव साध्यविरहिणि पक्षे वर्तमानस्य हेतोरव्याप्तिर्भवति । न हि विरोधस्याव्याप्त्यसङ्कीर्णमुदाहरणमस्ति । यत्र तु विरोधसंभवस्तत्राव्याप्तेरेवान्यत्रावधृतसामर्थ्याया दूषणत्वात् । विरोधस्याव्याप्त्युत्थापनेन चरितार्थत्वादित्याशङ्कां भिक्षु(क)पादप्र सा-रणन्यायेन)सारणेन परिहरति स्ववाक्येनेति ।

अनु० — स्ववाक्येन विरोधेऽपि नैव साधकतां व्रजेत् ॥

प्रमाणमित्यनुवर्तते । न केवलं प्रमाणविरोधे, किन्तु स्ववाक्येन विरोधेऽपि प्रमाणं नैव साधकतां व्रजेत् । एवशब्देन परेषामपि सिद्धोऽयमर्थ इति दर्शयति । यथोक्तम् । अविरोधिग्रहणात्प्रत्यक्षानुमानागमस्वशास्त्रस्ववचनविरोधिनो निरस्ता इति (भवन्ति इति) ।

शे० — ननु 'स्ववाक्येन विरोधेऽपी'ति स्ववाक्यविरोधस्य प्रमाणासाधकत्वोपपादनमनर्थकम् । न च तस्य पृथग्दोषत्वसमर्थनार्थं तदिति वाच्यम् । तत्समर्थनस्याप्यनर्थकत्वात् । न चानुमानविरोधत्रैविध्यानुपपत्तिशङ्कापरिहारार्थं तदिति वाच्यम् । तस्याः प्रागेव परिहृततया पुनरपरिहर्तव्यत्वात् । न च दोषान्तरसद्भावनिमित्तकत्रैविध्यानुपपत्तिशङ्कायाः पूर्वं परिहारेऽपि विरोधद्वैविध्यनिबन्धनतत्त्रैविध्यानुपपत्तिशङ्काया अपरिहारात्तदर्थमेतदिति वाच्यम । अन्यतरेणान्यतरस्यागततया द्वैविध्यशङ्काया एवानुत्थानेन तत्प्रयुक्तत्रैविध्यानुपपत्तिशङ्काया दूरापास्तत्वादित्यतः प्रतिज्ञाविरोधस्याव्याप्त्या गतत्वात्तद्द्वैविध्यप्रयुक्ततत्त्रित्वानुपपत्तिशङ्का युक्तैवेत्याशयेन तामुत्थापयति नन्विति । प्रतिज्ञाविरोधस्याव्याप्त्या गतार्थतामेवोपपादयति विरोधेनेति । नन्वस्तु यत्र विरोधस्तत्राव्याप्तिरपि, तथाऽपि तस्या एव कुतो दोषत्वमित्यत आह न हीति । विरोधेन साध्याभावे निश्चिते तत्र स्तो हेतोरव्याप्त्यापत्त्या तदसङ्कीर्णं विरोधोदाहरणं नास्तीत्यर्थः । नन्वेवं विरोधासङ्कीर्णाव्याप्त्युदाहरणाभावात्तस्या एवादोषत्वं किन्न स्यादित्यत आह यत्र त्विति ॥ अन्यत्रेति । सर्वमभिधेयं प्रमेयत्वादित्यनुपसंहारिणि विरोधाभावादव्याप्तेरेव दोषत्वेन तत्र क्लृप्ततया तस्या एव सर्वत्र दोषत्वनिश्चयोपपत्तेरित्यर्थः । तर्हि विरोधोद्भावनानर्थक्यमित्यत आह विरोधस्य चेति । अन्यथासिद्धत्वान्न तस्य दोषत्वमिति भावः । नन्वेवं प्रबलसमबलप्रमाणविरोधस्याव्याप्त्याऽगतत्वव्युत्पादनमेव कर्तव्यम् । तस्यैवोक्तशङ्कानिवर्तकत्वात् । न तु स्ववाक्यविरोधस्यासाधकत्वसम्पादकत्ववर्णनम् । तेन तस्य दोषत्वप्राप्तावपि प्रमाणविरोधस्य तदप्राप्तेरित्यतस्तत्कालं तेन प्रबलप्रमाणविरोधादेस्तदसिद्धावपि प्रमाणविरोधवत्स्ववाक्यविरोधस्यापि प्रतिज्ञाविरोधप्रभेदत्वात्तद्रूपप्रतिज्ञाविरोधस्याव्याप्त्याऽगतत्वसिद्धेर्युक्त एव तेन तत्त्रैविध्यानुपपत्तिशङ्कापरिहार इत्याशयेनोक्तं भिक्षुपादप्रसारणेनेति । तन्न्यायेनेत्यर्थः । क्वचिद्भिक्षुपादप्रसरणन्यायेनेत्यपि पाठः । यथा हि भिक्षुणा वामनेन त्रिपदच्छलेन सर्वं जगद्व्याप्तम् ।

तथा स्ववाक्यविरोधाख्यपृथग्दूषणच्छलेन सर्वस्यापि प्रतिज्ञाविरोधस्य पृथग्दूषणत्वं साधयिष्यामीति भावः ।

ननु 'स्ववाक्येन विरोधेऽपि प्रमाणं न साधकतां व्रजेदि'त्येतावतैव पूर्तेरेवशब्दस्यानर्थक्यमित्यतः स्ववाक्यविरोधे प्रमाणं न साधकमित्यस्यार्थस्य परसिद्धत्वप्रदर्शनार्थत्वात्तस्य न वैयर्थ्यमित्याह **एवशब्देनेति** ॥ **यथोक्तमिति** । प्रशस्तपादभाष्य इति शेषः । तद्वाक्यं पठति **अविरोधीति** । अनुमेयोद्देशोऽविरोधी प्रतिज्ञेति प्रतिज्ञालक्षणेऽविरोधिग्रहणादित्यर्थः । अत्र प्रत्यक्षानुमानागमस्वशास्त्रस्ववचनविरोधिनो निरस्ता इत्येव पाठः । मूलकोशेषु प्रशस्तपादभाष्यादिषु च तद्दर्शनात् । प्रत्यक्षानुमानाभ्युपगतस्वशास्त्रेत्येवमाकारस्तु लेखकदोषनिमित्तक एव । स्वमूलकोशेषु परग्रन्थेषु च तददर्शनात् । तत्रानुष्णोऽग्निरिति प्रत्यक्षविरोधी । घनमम्बरमित्यनुमानविरोधी । ब्राह्मणेन सुरा पेयेत्यागमविरोधी । वैशेषिकस्य प्रागुत्पत्तेः सत्कार्यमिति वदतः स्वशास्त्रविरोधी । शब्दोऽप्रत्यायक इति स्ववचनविरोधी । त एते सर्वेऽविरोधिग्रहणेन निरस्ता इत्यर्थः ।

स० — प्रतिज्ञाविरोधस्य अव्याप्त्या गतार्थत्वमेवेत्युपपादयति **विरोधेनैवेति** । नन्वेतावता यत्र विरोधस्तत्राव्याप्तेरपि सत्त्वेन अव्याप्तेरेव दोषत्वानङ्गीकारे किं नियामकमित्यत आह **न हीति** । विरोधेन साध्याभावे पक्षे निश्चिते तत्र विद्यमानस्य हेतोरव्याप्त्यापत्त्या अव्याप्त्यसङ्कीर्णमुदाहरणं विरोधस्य नास्तीत्यर्थः । ननु यथा अव्याप्त्यसङ्कीर्णमुदाहरणं विरोधस्य नास्तीत्यव्याप्तेरेव दोषत्वं, न विरोधस्येत्युच्यते; तथा विरोधासङ्कीर्णाव्याप्तेरप्युदाहरणाभावेन विरोधस्यैव दोषत्वमङ्गीकृत्य अव्याप्तेर्नाङ्गीकर्तव्यमित्यत आह **यत्र त्विति** ॥ **अन्यत्रेति** । सर्वमभिधेयं प्रमेयत्वादित्यनुपसंहारिणि विरोधाभावेन अव्याप्तेरेव दोषत्वात् तद्वत् यत्र विरोधस्तत्राव्याप्तेरेव दोषत्वमस्तु अन्यत्र क्लृप्तत्वादिति भावः । नन्वेवं चेत् विरोधोद्भावनं व्यर्थं स्यादित्यत आह **विरोधस्येति** । तया अन्यथासिद्धत्वान्न तस्य दूषणत्वमिति भावः । **भिक्षुपादप्रसरणेनेति** । यथा भिक्षुः मार्गे श्रान्तः सन् समीचीनगृहे उषितुं तत्र गत्वा आदावेव शयनस्थलं चेद्याच्यते तदा कोपं कृत्वा न दास्यन्तीत्यभिप्रायेण पादपरिमितप्रदेशमात्रं याचयति । अनन्तरं पादप्रसारणं कृत्वा स्वकार्यं शयनलक्षणं संपादयति, एवमेव प्रतिज्ञाविरोधस्य पार्थक्योपपादनलक्षणं स्वकार्यं साधयितुमिच्छुरादौ तावत् स्ववाक्यविरोधस्य सार्थक्यमुपपादयतीत्यर्थः । **यथोक्तमिति** । प्रशस्तपादभाष्य इति शेषः । **अविरोधिग्रहणादिति** । 'अनुमेयोद्देशः अविरोधी प्रतिज्ञे'ति प्रतिज्ञालक्षणे अविरोधिग्रहणादित्यर्थः । अनुष्णोऽग्निरिति प्रत्यक्षविरोधी । घनमम्बरमित्यनुमानविरोधी । ब्राह्मणेन सुरा पेयेत्यागमविरोधी । वैशेषिकस्य प्रागुत्पत्तेः सत् कार्यमिति ब्रुवतः स्वशास्त्रविरोधी । शब्दः अप्रत्यायक इति स्ववचनविरोधी । ते सर्वे अविरोधिग्रहणेन निरस्ता इति भावः ।

प० — **अव्याप्तिर्भवतीति** । व्यभिचाररूपव्याप्त्यभावो भवतीत्यर्थः । विनिगमकाभावादयमप्यस्तु दोष इत्यत आह **यत्र तु विरोधसंभव इति** ॥ **भिक्षुपादेति** । यथा भिक्षुः पादप्रसारणावकाशे सति शनैश्शनैरन्तःप्रविशति । तथा स्ववाक्यविरोधार्थं पृथक् प्रतिज्ञाविरोधेऽवश्यं वाच्ये प्रमाणविरोधरूपोपि पृथगेव सेत्स्यतीति वक्तुमित्यर्थः । **यथोक्तमिति** । न्यायभाष्ये । अनुमेयोद्देशाविरोधी प्रतिज्ञेति प्रतिज्ञालक्षणेऽविरोधिग्रहणात् । वह्निरनुष्ण इति प्रत्यक्षविरोधी । आकाशं निबिडमित्यनुमानविरोधी । ब्राह्मणो हन्तव्य इत्यागमविरोधी । वैशेषिकस्य प्रागुत्पत्तेः सत्कार्यमिति ब्रुवतः स्वशास्त्रविरोधी । शब्दो नार्थबोधक इत्यादिः स्ववचनविरोधीत्येवं प्रतिज्ञाविरोधिनो निरस्ता इत्यर्थः ।

या० — **यथोक्तमिति** । प्रशस्तपादभाष्य इति शेषः ॥ **अविरोधिग्रहणादिति** । अनुमेयोद्देशोऽविरोधीप्रतिज्ञेति प्रतिज्ञालक्षणेऽविरोधिग्रहणादित्यर्थः । अनुष्णोऽग्निरिति प्रत्यक्षविरोधी । घनमम्बरमित्यनुमानविरोधी । ब्राह्मणेन सुरा पेयेत्यागमविरोधी । वैशेषिकस्य प्रागुत्पत्तेः सत्कार्यमिति ब्रुवतः स्वशास्त्रविरोधी । न शब्दोऽर्थप्रत्यायक इति स्ववचनविरोधी । इति प्रत्यक्षादिविरोधोदाहरणानि तत्रैवोक्तानि ज्ञातव्यानि ।

श्री० — **प्रतिज्ञाविरोधस्य** प्रमाणविरोधस्येत्यर्थः ॥ अत एव 'न केवलं प्रमाणविरोध' इति वक्ष्यति । **यथोक्तं** प्रशस्तपादभाष्य इति शेषः । **ग्रहणादिति** । अनुमानोपदेशाविरोधी प्रतिज्ञेति प्रतिज्ञालक्षण इति शेषः ।

च० — **यथोक्तमिति** । प्रशस्तपादभाष्य इति पूरणीयम् । **अविरोधीति** । अनुमेयोद्देशो अविरोधी प्रतिज्ञेति प्रतिज्ञालक्षणघटकतया अविरोधिपदोपादानाद्वह्निरनुष्ण इति प्रत्यक्षस्यावरं (?) धनुरित्यनुसित्यनुमानस्य, 'ब्राह्मणेन सुरा पेये'त्यागमस्य, वैशेषिकस्य प्रागुत्पत्तेः कार्यं सदिति स्वशास्त्रस्य, शब्दो नार्थप्रत्यायक इति स्ववचनस्य विरोधिनो निरस्ता इत्यर्थः ।

सु० — **एतदुक्तं भवति । प्रतिज्ञार्थविरोधो द्वेधा भवति । प्रमाणविरोधः स्ववाक्यविरोधश्चेति । तत्राद्यः प्रबलसमबलप्रमाणविरोधात्मा द्विविधो भवति । द्वितीयोऽप्यपसिद्धान्तजातिभेदेन द्वेधा । जातिश्च स्ववचनविरोधस्वन्यायविरोधस्वक्रियाविरोधभेदेन त्रेधा । तत्रास्तां तावत्प्रमाणविरोधः । स्ववाक्यविरोधग्रहणं तावत्पृथक्करणीयम् । तस्याप्यव्याप्त्युत्थापने व्यापारायोगात् । स्ववाक्यविरोधे हि किं साधनस्योभयाभिमत्या (पक्षे) व्यभिचारो भवेत्, किंवाऽन्यतराभिमत्या । नाद्यः । स्ववाक्यप्रामाण्यस्योभयासंमतेः । न द्वितीयः । तस्य स्वतःसिद्धत्वेन स्ववाक्यविरोधानपेक्षत्वात् । अदोषत्वाच । तस्मादविषयवृत्ति(ताहेतु)त्वेन प्रतिज्ञार्थविरुद्धता पृथगेव परिसङ्ख्यातव्येति ।**

**किञ्चायं न केवलं व्याप्त्यपेक्षप्रवृत्तेरनुमानस्यैव दोषः। किन्नाम तदनपेक्षस्य प्रत्यक्षादेरपि। तथा चान्यत्रोपलब्धसामर्थ्यस्यानुमानेऽपि स्वातन्त्र्यसिद्धिरित्याशयवता प्रस्तावादनुमानमिति वक्तव्ये प्रमाणमित्येवाधिकृतम्।**

**शे०** — ननु स्ववाक्यविरोधस्य प्रतिज्ञार्थविरुद्धतात्वमेव तावदसिद्धम्। सिद्धत्वेऽपि वा प्रमाणविरोधस्येवाव्याप्त्युन्नायकत्वेनैव दूषणत्वसम्भवान्न पृथग्दोषत्वमिति कथमनेनोक्तशङ्कापरिहार इत्यत आह **एतदुक्तं भवतीति ॥ जातिश्च स्ववचनविरोधस्वक्रियाविरोधस्वन्यायविरोधभेदेनेति।** ननु कथं स्वक्रियास्वन्यायविरोधयोः स्ववाक्यविरोधत्वं स्वक्रियास्वन्याययोः स्ववाक्यत्वाभावात्। न हि, गृहीतान्वयव्यतिरेकं हेतुं विना कार्योत्पत्तिः स्यादित्यत्र धूमार्थं वन्हेस्तृप्त्यर्थं भोजनस्य वोपादानं वा, कार्योत्पत्तेः कारणाधीनत्वसाधको युक्ताङ्गहीनत्वादियुक्तन्यायो वा स्ववाक्यम्। येन तद्विरोधस्य स्ववाक्यविरोधत्वं स्यात्। 'जनकस्यात्ययो जातिः स्वस्य वाऽन्यस्य वा भवेदि'ति ब्रह्मतर्केऽन्यच्चात्र स्वक्रिया स्वन्यायो वेति टीकायां च स्वक्रियास्वन्याययोः स्वशब्दविवक्षितस्ववाक्यान्यत्वोक्तिश्चेति चेन्न। स्ववचनलक्षणक्रियाया एव क्रियात्वेन स्ववचनाभिप्रेतन्यायस्यैव चात्र स्वन्यायत्वेनोक्ततया तद्विरोधयोः स्ववाक्यविरोधत्वसम्भवात्। अत एव पद्धतौ स्वक्रियाविरोध उदाहृतोऽहं मूक इतीति। लक्षणटीकायामपि मूकोऽहमितिवत्स्वक्रियारोध इत्युक्तम्। तद्वाक्यन्यायेन तद्वाक्यस्य विरोध इति स्वन्यायविरोधस्वरूपं चोक्तम्। तद्वाक्याभिप्रेततन्न्यायेनेत्यर्थः। तथा च मूकोऽहं, कार्यं कारणानपेक्षं, ज्ञेयं ज्ञानानपेक्षं, नाप्रत्यक्षं बोधकमित्यादीन्येव स्ववचनव्याहततया स्वक्रियाविरोधोदाहरणानि। धूमार्थं वन्ह्युपादानविरोधस्तु न स्वक्रियाविरोधः किन्त्वनिष्टप्रसङ्गात्मकस्तर्क एव। न च ब्रह्मतर्के तट्टीकायां च स्वक्रियास्वन्याययोः स्वान्यत्वोक्तिविरोधस्तत्र स्वपदेनैकवाक्यगतपदादेरेवाभिधानेन स्वक्रियास्वन्याययोस्तदन्यत्वोक्तिसंभवात्। अत एव तत्रोत्तरवाक्ये 'एवञ्च स्वव्याहतिर्जातिः। सा त्रिविधा। स्ववचनविरोधः स्वक्रियाविरोधः स्वन्यायविरोधश्चे'ति स्वक्रियास्वन्यायविरोधयोरपि स्वव्याहतित्वमुक्तम्। तत्र स्ववचनविरोध इत्यस्य विभज्यमानस्ववाक्यविरोधावान्तरविभागरूपैकवाक्यगतपदादिविरोधपरत्वेन स्वक्रियास्वन्यायविरोधयोरपि तद्भेदोक्तिरविरुद्धा। न च पूर्वाचार्यवचनस्य स्वयमङ्गीकृतत्वेनैक्येऽपि विरोधप्रतियोग्यनुयोगिनोर्भिन्नवक्तृकत्वेन व्यक्तिभेदाद्युज्यतेऽपसिद्धान्तस्य स्ववाक्यविरोधत्वम्। एकवाक्यव्याहतित्वेनाभ्युपगतजातेस्तु न तद्युज्यते। विरोधप्रतियोग्यनुयोगिभेदाभावादिति वाच्यम्। आद्यजातौ महावाक्यस्यैकत्वेऽपि विरोधप्रतियोग्यनुयोगिनोः पदयोरवान्तरवाक्ययोर्वा व्यक्तिभेदात्। द्वितीयजातौ प्रतियोग्यनुयोगिभावापन्नवाक्यस्यैकत्वेऽपि प्रतियोग्यनुयोगितावच्छेदकयोः क्रियात्ववाक्यत्वयोर्भेदात्। तृतीयजातौ च स्ववाक्याभिप्रेतयोन्याययोर्युक्ताङ्गहान्यादिमत्त्वेनैक्येऽपि प्रतियोग्यनुयोगितन्न्यायव्यक्तिभेदात्। न च

ज्ञानत्वतत्साधनत्वहीनायाः स्वक्रियायाः कथं ज्ञापकीभूतस्ववचनविरोधकत्वमिति वाच्यम् । वचनस्यैव स्वक्रियात्वेनोक्ततया तस्य ज्ञापकत्वानपायात् । न च मूकोऽहमिति वचनस्य मूकत्वादिमात्रज्ञापकतया कथं स्वविरोधकत्वमिति वाच्यम् । शब्दविधया मूकत्वमात्रज्ञापकत्वेऽपि स्ववचनस्यानुमानविधया मूकत्वाभावज्ञापकत्वात् । तथा चासाध्विदं त्वदीयमूकत्ववचनम् । यतः स्वक्रियात्वेन रूपेण मूकत्वाभावानुमापकतया स्वात्मानमपि व्याहन्ति । असाध्विदं त्वदीयं कार्यस्य कारणानपेक्षत्ववचनम् । यतः परप्रत्ययनार्थेयं तव वचनक्रियैव कार्यस्य कारणापेक्षत्वमनुमापयिष्यतीति स्वात्मानमपि व्याहन्ति । असाध्विदं मेयं मानानपेक्षं ज्ञेयत्वाच्छशशृङ्गवदिति त्वदीयं वचनम् । यतो मेयस्य ज्ञानानपेक्षत्वज्ञापनाय त्वदीयमानाभिधानक्रियैव मेयस्य मानापेक्षत्वमनुमापयतीति स्वात्मानमपि व्याहन्तीति । एवं नाप्रत्यक्षं प्रमाणमित्यादावपि द्रष्टव्यम् । एवञ्च शास्त्रे यत्र क्वचन स्ववचनातिरिक्तस्वक्रियाविरोध उच्यते तत्र यद्येवं तर्ह्येषा स्वक्रियाव्याहतेत्यनिष्टप्रसङ्गात्मकस्तर्कविरोध एव परोक्तेरभिप्रेतो न जातिरूपस्वक्रियाविरोधः । तस्य स्ववचनविरोधावान्तरविशेषरूपजातिविशेषत्वादिति सर्वं सुस्थमिति दिक् ।

**स्ववाक्यप्रामाण्यस्योभयासंमतेरिति** । माता मे वन्ध्या स्त्रीत्वादिति स्ववाक्यविरोधोदाहरणम् । तत्र मे मातेति स्ववाक्यस्योभयसिद्धप्रमाणभावत्वे तेन वन्ध्यात्वाभावस्य पक्षे सिद्धत्वात्तत्र वर्तमानस्य हेतोरुभयसंमत्या व्यभिचारप्राप्तावपि तद्वाक्यस्योभयसिद्धप्रामाण्याभावाद्यस्य तदभ्युपगमस्तद्रीत्या व्यभिचारप्रसक्तावपि यस्य तदनभ्युपगमस्तद्रीत्या व्यभिचाराप्रसक्तेर्नोभयसम्मत्या तत्र व्यभिचारो वक्तुं शक्यत इति भावः ॥ **अदोषत्वाच्चेति** । अन्यतररीत्या पक्षीयव्यभिचारस्यानुमानमात्रसाधारणत्वेनानुमानमात्रोच्छेदकत्वान्न तस्य दोषत्वमित्यर्थः ।

नानुमानमसाधकमिति वक्तव्ये किमिति न प्रमाणमिति सामान्येन निर्देश इत्यतः स्ववाक्यविरोधरूपप्रतिज्ञाविरोधस्य स्वातन्त्र्येण दूषणत्वे युक्त्यन्तरसूचनार्थत्वात्तस्य न वैयर्थ्यमित्याशयवांस्तत्सूचितं युक्त्यन्तरमुपदर्शयति **किञ्चेति** ॥ **स्वातन्त्र्येति** । अनुमितिग्राह्यविरुद्धविषयत्वेन परमुखनिरीक्षणनिरपेक्षतया प्रत्यक्षादाविवानुमानेऽपि साक्षादेवानुमितिरूपफलप्रतिबन्धकत्वसिद्धिरित्यर्थः ॥ **प्रस्तावादिति** । युक्तेर्दूषणमित्यादिना युक्तिशब्दवाच्यानुमानस्यैवोपक्रमादित्यर्थः ।

स० — **स्ववाक्यप्रामाण्यस्योभयासम्मतेरिति** । मे माता वन्ध्या स्त्रीत्वात् वन्ध्यावदित्यत्र स्ववाक्यविरोधस्य सत्त्वात्तत्र च स्ववाक्यस्योभयसिद्धप्रमाणत्वे मे मातेत्यनेन मातृत्वस्यैव सिद्धत्वात् मातृत्वाभावरूपसाध्याभावस्यासिद्धत्वेन तत्र वर्तमानस्य हेतोर्व्यभिचारित्वसंभवेऽपि तद्वाक्यस्यैव प्रामाण्यासम्मत्या उभयरीत्या व्यभिचारासंभवादिति भावः । **तस्य स्वत इति** । अयं भावः । यस्य वन्ध्यात्वे विप्रतिपत्तिः, तं प्रति खलु मे माता वन्ध्येति साधनीयम् । तत्र स्ववाक्यविरोधात्पूर्वमेव अन्यतररीत्या

प्रतिवादिरीत्येति यावत् । तेन पक्षे साध्याभावस्यैव निश्चितत्वेन हेतोश्च पक्षे निश्चितत्वेन व्यभिचारस्य स्वत एव सिद्धत्वेन किमन्तर्गतस्ववाक्यविरोधेनेति । **अदोषत्वाच्चेति** । यस्य वह्न्यादिविषये, विप्रतिपत्तिः तं प्रत्येव पर्वतो वह्निमानित्यादेः प्रयोक्तव्यत्वेन तेन च पक्षे व्यभिचारस्य च निश्चितत्वेन तादृशव्यभिचारस्य चानुमानमात्रे सत्त्वेन तस्य दोषत्वे अनुमानमात्रोच्छेद इति भावः । केचित् पक्षादन्यत्र अन्यतरानैकान्त्यस्य दूषणत्वेऽपि पक्षीयस्य तस्यादूषणत्वेन तस्यानुमानमात्रसाधारणत्वेनानुमानमात्रोच्छेदापत्त्या न तस्य दूषणत्वमिति भावः इत्याहुः । **व्याप्त्यपेक्षप्रवृत्तेरिति** । व्याप्तिमपेक्ष्य प्रवृत्तत्वादित्यर्थः । **प्रत्यक्षादेरपीति** । परमात्मदोषग्राह्यस्मदादिप्रत्यक्षस्य निर्दोषताप्रतिपादकाचार्यवचनविरोधो द्रष्टव्यः । **तथा चेति** । तत्र व्याप्त्यपेक्षाया अभावेन स्वातन्त्र्येणैव स्ववाक्यविरोधस्य दोषत्वात् । व्याप्तिमपेक्ष्य प्रवृत्तस्याप्यनुमानस्य स्ववाक्यविरोधः स्वत एव दूषणमस्तु । अन्यत्र क्लृप्तत्वादिति भावः ।

प० — कथमेतावता व्याप्त्यनन्तर्भाव इत्यत आह **एतदुक्तमिति** । अयोगादित्युक्तं व्यनक्ति **स्ववाक्यविरोधे हीति** । प्रतिज्ञार्थस्येति योज्यम् ॥ **व्यभिचार इति** । व्याप्त्यभाव इत्यर्थः ॥ **उभयासंमतेरिति** । पर्वतोऽग्निमाननग्निकश्चेति प्रतिज्ञावाक्यप्रामाण्यस्योभयवाद्यसंमतेः । तथा तत्र साध्याभाववति हेतुसत्त्वरूपो व्यभिचारो नोभयसंमत इत्यर्थः ॥ **स्वत इति** । प्रतिवादिनो वादिवाक्ये अनाश्वासेन तदुक्तानुमाने व्याप्त्यभावस्य प्रतिवादिनः सिद्धत्वेनेत्यर्थः ॥ **अदोषत्वाच्चेति** । अन्यतररीत्या पक्षे साध्याभावप्रयुक्तपक्षीयव्यभिचारस्यानुमानमात्रसाधारण्यादिति भावः ।

या० — **उभयाभिमत्येति** । मे माता वन्ध्या स्त्रीत्वादित्यत्र स्ववाक्यविरोधेन पक्षे साध्याभावस्तावत्सिद्धः । स किमुभयसंमत्योतान्यतरसंमत्येति प्रश्नाशयः ॥ **अदोषत्वादिति** । अन्यतररीत्या पक्षे साध्याभावेन व्यभिचारस्य सर्वानुमानसाधारण्यादिति भावः ।

श्री० — तदेवोपपादयति **स्ववाक्येति** । **तस्य** अन्यतररीत्या व्यभिचारस्य ॥ **अदोषत्वाच्चेति** । पक्षादन्यत्रान्यतरानैकान्त्यस्य दोषत्वेन पक्षेऽपि तस्य दोषत्वे तस्यानुमानमात्रसाधारणत्वेन तदुच्छेदकत्वापत्त्या न तस्य दोषत्वमिति भावः । **प्रवृत्तेः** प्रवृत्त्युपेतस्य । **दोषः** अव्याप्त्युन्नायकत्वेनेत्यर्थः । अन्यत्र प्रत्यक्षे । **स्वातन्त्र्यसिद्धिः** स्वातन्त्र्येण दोषत्वसिद्धिः ।

**सु० — एतेनैतदपि (परा)निरस्तम् । अस्तु स्ववाक्यविरोधस्य पृथग्दोषत्वमव्याप्त्युत्थापकत्वायोगात् । बाधप्रतिरोधरूपः प्रमाणविरोधस्तु न स्वतन्त्रदोषः । प्रमाणविरोधे हि हेतुरपक्षधर्मो वा स्यात् अनैकान्तिको वा ( स्यात् ) । जिज्ञासितधर्मणो धर्मिणः पक्षत्वात् ।**

प्रमाणावगतसाध्यविरुद्धधर्मवतश्चापक्षत्वेन तद्धर्मस्यापक्षधर्मत्वनियमात् । साध्यध(र्म)र्मिण्येव प्रमाणोपस्थापितसाध्यधर्मविरुद्धधर्मवति दर्शनेन व्यभिचारात् । न च सपक्षविपक्षावेवान्वय-व्यतिरेकगम्याविनाभावदर्शनविषयौ न पक्ष इति सांप्रतम् । यदि हि पक्षं विहाय बहिरेवा-विनाभावोऽवगम्यते तदा बहिर्व्याप्तिबलेन पक्षधर्मोऽपि हेतुर्न पक्षे साध्यं साधयेत् । असिद्धा हि तत्र तस्य साध्येन व्याप्तिः । तस्मादन्तर्बहिर्वा सर्वोपसंहारेणाविनाभावोऽवगन्तव्यः । एवञ्च सिद्धः पक्षे व्यभिचारः साधनधर्मस्य ।

शे० — यदुक्तं भिक्षुपादप्रसारणेनेति तदुपपादयति **एतेनेति** । प्रतिज्ञातमपक्षधर्मत्वमुपपादयति **जिज्ञासितेति** । सन्दिग्धधर्मणो धर्मिण इत्यर्थः ॥ **अपक्षत्वेनेति** । प्रमाणेन साध्याभाववत्तया निश्चिते साध्यसन्देहाभावान्न पक्षत्वमित्यर्थः । अनैकान्त्यमुपपादयति **साध्यधर्मिण्येवेति** । साध्यं प्रति धर्मि-त्वेनाभिमत एवेत्यर्थः ॥ **दर्शनेनेति** । साध्येन गृहीताविनाभावस्य लिङ्गस्येति शेषः । यद्यपि साध्य-धर्मिण्येव प्रमाणोपस्थापितसाध्यधर्मविरुद्धधर्मवति हेतुदर्शनमात्रोक्त्याऽपि व्यभिचारः सिध्यति । तथाऽपि व्यभिचारज्ञानस्य व्याप्तिग्रहप्रतिबन्धकत्वेन दूषणत्वात् । पक्षीयहेतोः पक्षीयसाध्येन च तदग्रहणे व्याप्ति-ग्रहप्रतिबन्धकत्वाभावान्नास्य व्यभिचारस्य प्रतिबन्धकत्वमिति शङ्कापरिहारार्थं साध्येन गृहीताविनाभाव-स्येति विशेषणोपादानम् । तथा च व्याप्तिग्राहकप्रमाणस्य पक्षतदितरसाधारण्येन साधने साध्याविना-भावग्राहकत्वात्पक्षीयसाधनस्यापि पक्षीयसाध्येन व्याप्तिसिद्ध्या पक्षे साध्याभावस्य प्रमाणेनावगतौ निश्चि-तसाध्याभाववति पक्षे वर्तमानस्य हेतोर्व्यभिचारादित्यर्थः । भवेदेवं यदि सपक्षविपक्षयोरिव पक्षस्या-प्यन्वयव्यतिरेकगम्याविनाभावदर्शनविषयत्वं स्यात् । न चैतदस्ति किन्तु सपक्षविपक्षयोरेव तत् । तथा च व्याप्तिग्राहकप्रमाणेन सपक्षादौ साधनस्य साध्यव्याप्तिग्रहेऽपि पक्षीयसाधनस्य पक्षीयसाध्येन व्याप्त्यग्रहात्प्रमाणोपस्थापितसाध्यविरुद्धधर्मवत्यपि पक्षे वर्तमानस्य हेतोर्न व्यभिचार इति कथं प्रमाण-विरोधे हेतोरनैकान्त्यसिद्धिरित्याशङ्कते **न चेति** ॥ **एवञ्चेति** । सपक्षविपक्षयोरिव पक्षस्याप्यन्वय-व्यतिरेकगम्याविनाभावदर्शनविषयत्वसिद्धावित्यर्थः । प्रमाणोपस्थापितसाध्याभाववति पक्षे हेतुवृत्तेरिति भावः ।

केचित्तु दर्शनेनेत्यत्र हेतोरिति शेषः ॥ **व्यभिचारादिति** । निश्चितसाध्याभाववति पक्षे हेतु-निश्चयादिति भावः । भिन्नविषयत्वान्न पक्षीयव्यभिचारदर्शनं व्याप्तिग्रहपरिपन्थीति भावेन शङ्कते **न चेति** ॥ **एवञ्चेति** । तथा च पक्षीयव्यभिचारज्ञानमपि समानविषयकत्वात्तत्परिपन्थ्येवेति ग्रन्थार्थ इत्याहुः ।

**स०**— हेतोरपक्षधर्मत्वमुपपादयति **जिज्ञासितधर्मण इति** । जिज्ञासितः धर्मो यस्येति विग्रहः । विशिष्टस्य पक्षत्वव्यवच्छेदार्थं धर्मिपदम् । **साध्यधर्मिण्येवेति** ।। **दर्शनेनेति** । अविनाभावस्येति शेषः । व्याप्तिग्राहकेण यो धूमवान् सोऽग्निमानित्युदाहरणवाक्येन यत्त्वतत्त्वरूपेण पर्वतस्यापि वह्निधूमवत्त्वविषयीकरणेन पर्वतीयधूमस्य तद्वह्निव्याप्तेरपि तेन विषयीकरणात् पक्षे साध्यधर्मबाधे तद्वति वर्तमानस्य हेतोस्तेन व्याप्तिः पूर्वगृहीता अनुपपन्ना स्यादित्यव्याप्त्युत्थापकत्वमिति भावः । ननु पक्षीयसाध्यसाधारण्येन व्याप्तिग्रहे भवेदव्याप्त्युन्नायकत्वम् । तदेव नास्ति । पक्षीयसाध्यातिरिक्तेनैव तेन व्याप्तेरुदाहरणवाक्येन ग्रहणात् पक्षे साध्यधर्मबाधेऽपि न व्याप्तिभङ्ग इत्याशङ्कां परिहरति **तस्मादिति** । वाशब्दः परस्परसमुच्चये । अन्तर्बहिर्वेत्येवंरूपेण सर्वोपसंहारेणेत्यर्थः ।

**प०** एतेनैतदपीत्यस्य अन्तर्भावादिति वक्ष्यमाणेत्यन्तपरामर्शकत्वं ध्येयम् । अपक्षधर्मतां तावद्व्यनक्ति **जिज्ञासितधर्मण इति** । 'धर्मादनिच् केवलादि'ति बहुव्रीहौ धर्मशब्दादनिच्प्रत्यये रूपम् । **प्रमाणावगतेति** । साध्यधर्मविरुद्धधर्मस्य विशेषणम् ॥ **तद्धर्मस्येति** । हेतोरित्यनुकर्षः । अनैकान्त्यं व्यनक्ति **साध्यधर्मण्येवेति** । प्राग्वदस्य साधुत्वं ध्येयम् । धर्मिणीति योज्यम् । क्वचित्साध्यधर्मिणीति पाठः । **दर्शनेनेति** । हेतोरित्यन्वेति । व्यभिचारो हि व्याप्तिविघटनेनानुमितिप्रतिबन्धको भवति । न च पक्षीयव्यभिचारस्तथा । तत्र व्याप्तिग्रहाभावादिति भावेन शङ्कते **न चेति** ।। **अन्वयव्यतिरेकेति** । हेतुसाध्ययोरिति योज्यम् । सपक्षेऽन्वयः । विपक्षे व्यतिरेको ध्येयः ॥ **एवं चेति** । पक्षीयहेतुसाध्यसाधारण्येनाविनाभावग्रहस्यावश्यकत्वे सतीत्यर्थः ॥ **सिद्ध इति** । व्याप्तिग्रहप्रतिबन्धसंभवादिति भावः ।

**या०**— अपक्षधर्मत्वमनैकान्त्यं च तत्र क्रमेणोपपादयति **जिज्ञासितेत्यादिना** । सन्दिग्धधर्मधर्मिण इत्यर्थः ॥ **अपक्षत्वेनेति** । विपरीतनिश्चये सन्देहासंभवादिति भावः ॥ **साध्यधर्मिण्येवेति** । साध्यधर्मित्वेनाभिमत एवेत्यर्थः । **दर्शनेनेति** । हेतोरिति शेषः ॥ **न पक्ष इतीति** । तथा च भिन्नविषयत्वात्पक्षे व्यभिचारदर्शनं न व्याप्तिग्रहविरोधीति भावः ॥ **एवं चेति** । तथा च तत्रत्यव्यभिचारज्ञानं समानविषयकमिति व्याप्तिग्रहविरोधीति भावः ।

**श्री०**— भिक्षुक्रपादन्यायो यदर्थमुक्तस्तदिदानीं पूर्वोक्तमेव विस्तरेणाशङ्कयाह **एतेनेति** । उभयं क्रमेणोपपादयति **जिज्ञासितधर्मण इति** । धर्मन्शब्दस्येयं षष्ठी । सन्दिग्धसाध्यधर्मवत इत्यर्थः ।

**च०**— **जिज्ञासितेति** । सन्दिग्धधर्मणो धर्मिण इत्यर्थः ।

सु० — ननु प्रतिरोधे कथम् । तत्रापि व्याप्तिग्राहकस्य प्रमाणस्य प्राबल्यात् । उभयत्रापि प्रमाणसद्भावे व्याप्यत्वासिद्धावन्तर्भावादिति । प्रमाणविरोधस्य प्रमाणान्तरेऽप्यविषयवृत्तिताहेतुत्वेनावगतस्वतन्त्रदूषणभावस्यानुमानेऽपि तथैवाङ्गीकर्तुमुचितत्वात् ।

अपि च किं व्याप्तिग्रहणसमयेऽव्याप्तेरुपस्थापकः प्रमाणविरोधः स्यात्, उतानुमानप्रवृत्त्युत्तरमपि । आद्यस्त्विष्यत एव । 'मानबाधे न तद्भवेदि'ति वक्ष्यमाणत्वात् । न द्वितीयः । उपजीव्यपरित्यागेनोपजीवकस्वीकारस्यायुक्तत्वात् । प्रमाणविरुद्धस्यापक्षधर्मत्वे सिद्धसाधनस्यापि तथात्वं स्यात् । समानन्यायत्वात् । ओमिति चेन्न । स्वार्थानुमानेऽपि सिद्धसाधनस्य दोषत्वापत्तेः । न हि पक्षधर्मताऽसिद्धिः परार्थ एवानुमाने दोषः । तस्मात् परानाकाङ्क्षितत्वादसङ्गत एव सिद्धसाधन इति ॥

शे० — ननु प्रतिरोधस्यानुकूलतर्कानवतारदशायां प्रवृत्तत्वेन पक्षे साध्याभावानिश्चयात् न तत्र वर्तमानस्य हेतोर्निश्चितो व्यभिचारः शक्यते वक्तुं तत्संशयस्तु स्वतःसिद्धत्वान्न प्रतिबन्धक इति न हेतोरनैकान्त्यं नाप्यपक्षधर्मत्वं पक्षे साध्यसन्देहेन सन्देहघटितपक्षताया अनपायादित्याशयेन शङ्कते **ननु प्रतिरोधे कथमिति** ॥ **तत्रापीति** । न प्रतिपक्षो यावज्जीवं प्रतिपक्ष एव किन्नामानुमानमूलभूतव्याप्तिग्राहकप्रमाणयोरन्यतरस्यापि यदा नानुकूलतर्कावतारस्तदैव । यदा तु व्याप्तिग्राहकप्रमाणयोरन्यतरस्य तदवतारस्तदा न स प्रतिपक्षः किन्तु बाध एवेति तदवतारदशायां पक्षे साध्याभावनिश्चयोपपत्तेः हेतोरनैकान्त्यादिकमप्रत्यूहमेवेति भावः । अस्त्वेवं यत्रान्यतरस्यानुकूलतर्कावतारस्तत्र; यत्र तु व्याप्तिग्राहकप्रमाणयोरुभयोरप्यनुकूलतर्कावतारस्तत्र कथमनैकान्त्यादिनिश्चयादीत्यत आह **उभयत्रेति** । परस्परप्रतिबन्धेन व्याप्त्यनिश्चयात् व्याप्तिप्रमित्यसिद्धावन्तर्भाव इत्यर्थः । यद्वा पक्षे साध्यस्योभयत्र सन्दिग्धत्वात्सन्दिग्धव्याप्यत्वासिद्धः । यद्यपि पक्षीयसाध्यसन्देहोऽप्रतिबन्धकस्तथाऽप्युपाध्याहितसन्देहवत् प्रमाणद्वयाहितसन्देहोऽपि फलबलेन प्रतिबन्धक एवेत्यर्थः । ततश्च सत्प्रतिपक्षः सर्वथा न हेत्वाभासान्तरमिति भावः । इतीत्यस्यैतदपीति पूर्वेण सबन्धः । एतेनेति परामृष्टं दर्शयति **प्रमाणविरोधस्येति** ॥ **प्रमाणान्तरेऽपीति** । प्रत्यक्षादावित्यर्थः । प्रत्यक्षादेर्व्याप्त्यनपेक्षप्रवृत्तितया तत्राव्याप्त्याद्युपस्थापकत्वायोगादिति भावः ॥ **तथैवेति** । अनुमितिग्राह्यविरुद्धविषयत्वेनानुमितिरूपफलप्रतिबन्धकतया स्वतन्त्रदूषणभावस्यैवेत्यर्थः ।

**वक्ष्यमाणत्वादिति** । स्वप्रमाधिकरण इति शेषः । **अयुक्तत्वादिति** । 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति युक्तिविरुद्धत्वादिति भावः ॥ **समानन्यायत्वादिति** । प्रमाणावगतसाध्यविरुद्धधर्मवत इव तदवगतसाध्यधर्मवतोऽप्यपक्षत्वेन तत्र वर्तमानत्वसाम्यादित्यर्थः ॥ **स्वार्थेति** ।

पक्षधर्मत्वासिद्धेः स्वार्थानुमानेऽपि दोषत्वादिति भावः ॥ **तस्मादिति** । परार्थानुमान एव तस्य दोषत्वादित्यर्थः । तथा च यथा परार्थानुमान एव दोषे सिद्धसाधने अपक्षधर्मत्वसत्त्वेऽपि न तथा दोषत्वं किन्त्वसङ्गत्याऽविषयवृत्तित्वसंपादकतयैव तथा प्रमाणविरोधे सत्यप्यपक्षधर्मत्वे न तथा दूषणत्वं किन्त्वविषयवृत्तितासंपादकत्वेनैव दूषणत्वमिति भावः ।

स०— **ननु प्रतिरोधे कथमिति** । न च बाधस्य निश्चिताव्याप्त्युन्नायकत्ववत् प्रतिपक्षस्य सन्दिग्धाव्याप्त्युन्नायकत्वस्य सिद्धत्वात् पुनः शङ्कानुपपत्तिरिति वाच्यम् । तस्यापि निश्चिताव्याप्त्युन्नायकत्वमेव वक्तु पुनःशङ्कनादिति भावः । किं प्रमाणद्वयमध्ये यस्य प्रमाणस्य व्याप्त्यादिग्राहकं प्रबलं, तत्र प्रतिरोधे कथमपक्षधर्मताद्युन्नायकत्वमिति, किं वा यत्र प्रमाणद्वये व्याप्त्यादिग्राहकं समबलं तादृशप्रतिरोधे कथमिति विकल्पं निधाय क्रमेणोत्तरमाह **तत्रापीति** । बाधकत्वे तत्रापि गतिरित्यर्थः । न चैवं प्रतिपक्षानुपपत्तिः । समबलयोरेव तथात्वादिति वाच्यम् । उभयोरपि प्रमाणत्वानुपपत्त्या तयोरेकं प्रमाणम्, अन्यदप्रमाणमिति निश्चयेऽपि इदं प्रमाणम्, इदमप्रमाणमिति निश्चयाभावेन सत्प्रतिपक्षोपपत्त्या तत्र च वस्तुनो यत्प्रमाणं तदेव व्याप्त्यादिमत् नान्यदिति मनसि व्याप्त्यभावज्ञानस्य जायमानत्वेन व्याप्त्यभावोपस्थापकत्वोपपत्तेरित्यर्थः । **उभयत्रापीति** । प्रमाणसद्भाव आभिमानिक एव । पक्षद्वयेऽपि व्याप्तिग्राहकप्रमाणसद्भावे परस्परविरुद्धस्य प्रमाणद्वयस्य व्याप्तिसाधकत्वासंभवेन व्याप्त्यसिद्ध्युपपत्तेरिति भावः । इतिशब्दस्य 'एतेनैतदपि निरस्तमि'ति पूर्वेण संबन्धः । **उपजीव्यपरित्यागेनेति** । उपजीव्यस्य प्रमाणविरोधस्य परित्यागेन तमुपजीव्य प्रवृत्ताया अव्याप्तेः स्वीकारोऽनुचित इत्यर्थः । प्रमाणविरोधस्यापक्षधर्मत्वोन्नायकत्वे दूषणान्तरमाह **प्रमाणविरुद्धस्येति** । **तथात्वम्** अपक्षधर्मत्वमिति भावः ।

प०— **कथमिति** । तत्र साध्याभावानिश्चयेन व्यभिचारनिश्चायायोगात् तत्संशयस्य प्रतिरोधेन विना स्वत एव सिद्ध्या व्याप्तिग्रहाप्रतिबन्धकत्वेनाव्याप्त्यन्तर्भावाभावात्तत्रान्तर्भावः कथमित्यर्थः । प्रतिरोध इति हेतौ प्राक्तनहेत्वपेक्षया व्याप्तिग्राहकं प्रमाणं प्रबलम् उत समबलम्; आद्ये बाधतुल्य एव, अन्त्ये व्याप्तिनिश्चयायोगात् अव्याप्तिरेवेति भावेनाव्याप्त्यादावन्तर्भावं व्यनक्ति **तत्रापीति** । एतेनेत्युक्तं व्यनक्ति **प्रमाणविरोधस्येति** । **प्रमाणान्तरेपि** प्रत्यक्षादावपीत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'अदृष्टे व्यभिचारे तु साधकं तदिति स्फुटम् । ज्ञायते साक्षिणैवाद्धा मानबाधे न तद्भवेत्' इति भक्तिपादे प्रमाणबाधे सति तन्न भवेदिति वक्ष्यमाणत्वादित्यर्थः । अपक्षधर्मदोषो वा स्यादित्युक्तदोषं निराह **प्रमाणविरुद्धस्यापक्षधर्मत्व इति** । पक्षधर्मताऽसिद्धिरित्यत्र पक्षधर्मताया असिद्धिरिति विभागः । तस्मात्परार्थ एव दोषत्वादित्यर्थः । तथाच यथा परार्थानुमान एव दोषे सिद्धसाधने अपक्षधर्मत्वसत्त्वेपि

न तथा दोषत्वं किन्त्वसङ्गत्याऽविषयवृत्तितासंपादकतयैव तथा प्रमाणविरोधेपीति भावः। तर्हि सोपि पृथक् दोषः प्राप्त इत्यत उक्तम् **असङ्गत एवेति** ।

**या०** — ननु प्रतिरोधे पक्षे विपरीतनिश्चयासंभवान्न व्यभिचारनिश्चयः, तत्संशयश्च स्वत एव सिद्धो न प्रतिबन्धक इत्युक्तमत एव तत्र पक्षत्वोपपत्त्या पक्षधर्मताया अपि न क्षतिरित्याशयेन शङ्कते **ननु प्रतिरोध इति** । न हि प्रतिपक्षो यावज्जीवं प्रतिपक्षः किन्तु सामर्थ्यानिर्धारणायामेव, निर्धारिते तु सामर्थ्ये तत्रापि विपरीतनिश्चयेन व्यभिचारनिश्चयादिकं संभवतीत्याशयेन समाधत्ते **तत्रापीति** । अनुकूलतर्कावतारेऽन्यतरस्येति शेषः । वस्तुत उभयोः प्राभाण्याभावादिति भावः । ननु सामर्थ्या-निर्धारणायां का गतिरित्यत आह **उभयत्रापीति** ॥ **प्रमाणेति** । उभयत्र व्याप्त्यादिग्राहकप्रमाणसद्भा-वाभिमान इत्यर्थः । परस्परं प्रतिबन्धेन व्याप्त्यनिश्चयाद्व्याप्त्यज्ञानासिद्ध्यन्तर्भावः । ततश्च सत्प्रतिपक्षः सर्वथा न हेत्वाभासान्तरमिति भावः । एतेनेत्युक्तं विवृणोति **प्रमाणविरोधस्येति** । **वक्ष्यमाणत्वात्** भक्तिपाद इति शेषः ॥ **स्वार्थानुमानेऽपीति** । तत्र पक्षधर्मत्वासिद्धेर्दोषत्वादिति भावः ॥ **तस्मादिति** । परार्थानुमान एव दोषत्वादित्यर्थः । तथा च यथा परार्थानुमान एव दोषे सिद्धसाधनेऽपक्षधर्मत्वसत्त्वेऽपि न तथा दोषत्वं किन्त्वसङ्गत्याऽविषयवृत्तितासंपादकतयैव, तथा प्रमाणविरोधेऽपीति भावः ॥

**श्री०** — **प्रमाणान्तरे** प्रत्यक्षे ॥ **उपजीव्येति** । प्रमाणविरोधरूपेत्यर्थः ॥ **उपजीवकेति** । अव्याप्तिरूपेत्यर्थः । **तथात्वम्** अपक्षधर्मत्वम् ॥ **समानेति** । पक्षो हि संश्रयः । तस्य, स च साध्यान्वितो यतोऽतः सन्दिग्धसाध्यत्वरूपतल्लक्षणशून्यत्वादित्यर्थः ॥ **ओमिति चेदिति** । अपक्षधर्मतासंपादकत्व-मेव सिद्धसाधनस्यास्त्वित्यर्थः ॥ **स्वार्थेति** । वस्तुगत्या सिद्धसाधनत्वं स्वार्थानुमाने न दोषः । तस्या-पक्षधर्मतासंपादकत्वे स्वार्थानुमानेऽप्यपक्षधर्मतासंपादकत्वापत्त्या दोषत्वापातादित्यर्थः । नन्वपक्षधर्मत्वं परार्थानुमान एव दोषः । स्वार्थानुमानेऽदोषत्वमिति चेत्तत्राह **न हि पक्षधर्मताऽसिद्धिरिति** । किन्तु स्वार्थानुमानेऽपीत्यर्थः । तथा च तदापादकस्य सिद्धसाधनस्यापि स्वार्थानुमाने दोषत्वापत्तिरिति भावः ।

**च०** — **वक्ष्यमाणत्वादिति** । 'अदृष्टे व्यभिचारे त्वि'त्यादिक'मानबाधे न तद्भवेदि'त्यन्तेन भक्तिपादेऽभिधास्यमानत्वादित्यर्थः ॥ **समानन्यायत्वादिति** । प्रमाणावगतसाध्यविरुद्धधर्मवत इव तदवगतसाध्यधर्मवतोऽप्यपक्षत्वेन तत्र वर्तमानत्वसाम्यादित्यर्थः । **स्वार्थेति** । पक्षधर्मत्वासिद्धेः स्वार्था-नुमानेऽपि दोषत्वादिति भावः । **तस्मादिति** । परार्थानुमान एव तस्य दोषत्वादित्यर्थः ॥

॥ इत्यनुमानदोषनिरूपणम् ॥

सु० — एवमनुमानदोषान्निरूप्य प्रसङ्गात्परनिरूपिताशेषनिग्रहस्थानानामपि विरोधादिष्वेवान्तर्भाव इत्याह संवादेति ।

अनु० — संवादानुक्तिसंयुक्ता एत एव तु निग्रहाः ।

निगृह्यते पराजीयते एभिरिति निग्रहाः निग्रहस्थानानि । ननु च प्रतिज्ञाहान्यादीनां वक्तृदोषाणां कथमर्थवचनदोषेषु विरोधासङ्गतिन्यूनाधिक्येष्वनुप्रवेश इत्यत उक्तं संवादानुक्तिसंयुक्ता इति । तथाऽप्यनुपपत्तिरेव । विरोधादिचतुष्टयस्यानुमानदोषत्वेनोक्तत्वात् । निग्रहस्थानानां च नियमेनानुमानाश्रयत्वाभावात् । न हि पुनरुक्तिरनुमान एव संभाविनी । प्रश्नादावप्युपपत्तेरित्यतोऽस्त्यत्र विशेष इति तुशब्देनाह । द्विविधं हि विरोधादिचतुष्टयम् । समयबन्धादिकथासर्वरूपसाधारणमसाधारणं च । तत्रानुमानस्यैव यदसाधारणं विरोधादि तत्रानुमानदोषाणां सर्वेषां प्रवेशोऽभिहितः । साधारणे तु सर्वनिग्रहस्थानानामिति न कश्चिद्विरोधः । निग्रहस्थानस्वरूपानुवादपूर्वकमन्तर्भावप्रकारश्च लेशतोऽन्यत्रास्माभिर्दर्शित इति ।

यद्वा कथाबाह्यादीनामेषां निग्रहस्थानताव्यवच्छेदार्थस्तुशब्दः ।

---

शे० परनिरूपिताशेषनिग्रहस्थानानां विरोधादिष्वन्तर्भावनिरूपणेऽसङ्गतिरित्यत उक्तम् **प्रसङ्गादिति** । अनुमानदोषाणां विरोधादिष्वन्तर्भावप्रतिपादनेनाशेषनिग्रहस्थानानामपि तत्रान्तर्भावस्मरणादिति भावः । नन्वत्रैते निग्रहस्थानानीत्यवचनान्नानेन निग्रहस्थानानां विरोधादिष्वन्तर्भावसिद्धिः । विरोधादीनां परेण परस्याहङ्कारखण्डनरूपत्वाभावेन अनिग्रहत्वात् तन्निग्रहत्वोक्त्ययुक्तिश्चेत्यतोऽत्र निग्रहपदस्य निग्रहस्थानपरत्वान्न दोषद्वयमपीत्यभिप्रेत्याहङ्कारखण्डनपरस्य निग्रहपदस्य कथं निग्रहस्थानपरत्वमित्यतो भावसाधनस्य निग्रहपदस्य पराजयपरत्वेऽपि करणसाधनस्य पराजयनिमित्तपरत्वमप्रत्यूहमित्याशयवान्करणसाधनतामाश्रित्य निग्रहपदं निग्रहस्थानपरतया व्याचष्टे **न निगृह्यत इत्यादिना** । एत एव तु निग्रहा इत्येतावतैव निग्रहस्थानानां विरोधादिष्वन्तर्भावनिरूपणसिद्धेः किं विशेषणेनेत्यतोऽन्तर्भावनिरूपणस्य तावता सिद्धावपि तत्र प्राप्तानुपपत्तिशङ्कापरिहारार्थत्वाद्विशेषणस्य न तद्वैयर्थ्यमित्यभिप्रेत्य तन्निवर्तकतया तद्विशेषणं योजयितुं निग्रहस्थानानां विरोधादिष्वन्तर्भावानुपपत्तिशङ्कामुत्थापयति **नन्विति** । आदिपदेन निरर्थकाविज्ञातार्थादीनां परिग्रहः । मूले तुशब्दस्यानर्थक्यमाशङ्क्य विरोधद्वैविध्यरूपविशेषोपदर्शनार्थत्वान्न तदित्यभिप्रेत्य किं तदुपदर्शनेनापीत्यतो निग्रहस्थानानां विरोधादिष्वन्तर्भावसिद्धिस्तत्प्रयोजनमित्यभिप्रेत्य तेषां विरोधादिष्वन्तर्भावानुपपत्तिशङ्कामुत्थापयति **तथाऽपीति** । अनुमानदोषेषु विरोधादिष्वनुमानदोषाणां निग्रहस्थानानामन्तर्भावः किन्न स्यादित्यत आह **निग्रहस्थानानामिति** । उक्तनियमाभावमेवोपपादयति **न हीति** ॥

अन्यत्रेति । पद्धतावित्यर्थः । कथास्वरूपप्रतिपादकोत्तरग्रन्थोपक्षेपाय तदुपयुक्तार्थप्रतिपादकतया तं व्याचष्टे ॥ यद्वेति । आदिपदेन कथायामपस्मारोन्मादादिदशापन्नादीनां परिग्रहः । न चैवं कथालक्षणटीकाविरोधः । तत्र 'एतेन कथाबाह्यानामनिग्रहस्थानत्वमिति परास्तम्' इत्यादिना कथाबाह्यानां निग्रहस्थानत्वस्वीकारात्, अत्र पुनस्तद्व्यवच्छेदादिति वाच्यम् । तत्र 'जल्पारम्भोत्तरकालीनं निग्रहस्थानमुक्तम्, ततः प्रागपि संभवादाह' इत्यादिना जल्पादिकथातः पूर्वं विद्यापरीक्षार्थे क्रियमाणवादकथायां प्राप्तदोषाणां पराजयहेतुत्वमुपपाद्य एतेन इत्युक्तत्वेन वर्तिष्यमाणजल्पादिकथाबाह्यानामेव निग्रहस्थानत्वनिरासेन तन्निग्रहस्थानत्वसम्मतावपि सर्वथा कथाबाह्यानामनिग्रहस्थानत्वानिरासेन तादृशानां निग्रहस्थानत्वासम्मत्या सर्वथा कथाबाह्यानामनिग्रहस्थानत्वपरैतद्ग्रन्थस्य तदविरुद्धत्वात् । केचित्त्वतद्गुणसंविज्ञानबहुव्रीह्याश्रयणेन कथायामपस्मारोन्मादादिदशापन्नानां निग्रहस्थानत्वव्यवच्छेदस्यैवेहाभिप्रेतत्वेन कथाबाह्यानामनिग्रहस्थानत्वस्यासम्मतत्वान्न तेषामपि निग्रहस्थानत्वपरोदाहृतकथालक्षणटीकाविरोध इत्याहुः ।

स० — यद्वेति । निग्रहस्थानतायाः व्यवच्छेदार्थ इति संबन्धः । न चैवं 'एतेन कथाबाह्यानामनिग्रहस्थानत्वमिति परास्तमि'ति कथालक्षणेन विरोधः, कथायामित्यनेन कथाबाह्यानां निग्रहस्थानत्वव्यावृत्तिरित्युक्तत्वादिति वाच्यम् । तस्य परमतानुवादत्वेनाविरोधकत्वादिति भावः । वस्तुतस्तु निग्रहस्थानताया व्यवच्छेदार्थ इत्येव संबन्धः। न चैवं कथालक्षणविरोधः । तत्र कथाबाह्यानामनिग्रहस्थानत्वमतस्य निराकृतत्वादिति वाच्यम् । तत्र जल्प-वितण्डोद्देशेन प्रवृत्तयोर्वादि-प्रतिवादिनोः विद्यापरीक्षार्थं दत्तायां वादकथायां प्राप्तनिग्रहस्थानानां विवक्षितकथापेक्षया बाह्यत्वात् न निग्रहहेतुत्वमिति यन्मतं, तस्य निराकृतत्वादत्र पुनः कथात्रयबाह्यानां व्यवच्छेदस्याभिप्रेतत्वेन विरोधावकाशाभाव इति भावः ।

प० — निग्रहस्थानानीति । स्थानशब्दोऽत्र निमित्तवचनः । पराजयनिमित्तानि दूषणानि । पराजयहेतुदोषाणां निग्रहस्थानानीत्यन्वर्थनाम ॥ समयबन्धादीति । समयबन्धप्रश्नप्रतिवचनपक्षपरिग्रहादीनि यानि कथायाः सर्वाणि रूपाणि तत्साधारणमित्यर्थः ॥ अन्यत्रेति । प्रमाणपद्धतौ लक्षणटीकायां चेत्यर्थः । कथाबाह्यादीनामित्यादिपदेन कथायामप्यपस्मारोन्माददशापन्नानामिति गृह्यते ॥ एषामिति । विरोधादीनामित्यर्थः । या तु कथालक्षणटीकायां 'एतेन कथाबाह्यानामनिग्रहस्थानत्वमिति निरस्तमि'ति ग्रन्थेन कथाबाह्यानामपि निग्रहस्थानत्वोक्तिः, साऽभ्युपगमवादादिना नेयेत्येके । तत्र प्रस्तुतजल्पवितंडारूपकथाबाह्याभिप्रायेत्यन्ये ।

या० — **कथाबाह्यादीनामिति** । आदिपदेन कथायामप्यस्मारादिदशापन्नानां संग्रहः । नन्वेवम् 'एतेन कथाबाह्यानामनिग्रहस्थानत्वमिति निरस्तम्' इति कथालक्षणटीकाविरोधः । मैवम् । तत्र वर्तिष्यमाणजल्पवितण्डारूपकथाबाह्यानामेवानिग्रहस्थानत्वं निरस्तं न तु सर्वथा कथाबाह्यानाम् । जल्पादिकथातः पूर्वं विद्यापरीक्षायै क्रियमाणायां वादकथायां प्राप्तदोषाणां पराजयहेतुत्वमुक्त्वैतेनेत्युक्तत्वात् । अत्र सर्वथा कथाबाह्यानामनिग्रहस्थानत्वमुच्यत इति अविरोधात् । केचित्तु निग्रहस्थानताया अव्यवच्छेदार्थमिति सुधावाक्यार्थः । ततश्च न कथालक्षणटीकाविरोधः । न चैवमपि पद्धतिविरोधः । तत्र कथाबाह्यानामनिग्रहस्थानत्वस्योक्तत्वादिति वाच्यम् । तस्य परमतानुवादरूपत्वादित्याहुः ॥

श्री० — उत्तरग्रन्थोपक्षेपाय प्रकारान्तरेण तुशब्दार्थमाह यद्वेति ॥

च० — **निग्रहस्थानानीति** । स्थानशब्दोऽत्र निमित्तवचनः । प्रत्ययस्य करणसाधनतामाश्रित्य व्याकुरुते **निगृह्यत इति** । **अन्यत्र** पद्धतौ लक्षणटीकायां च । **कथाबाह्यादीनामिति** । **अत्र** व्याकर्तारः नन्वेव'मेतेन कथाबाह्यानामनिग्रहस्थानत्वमिति निरस्तमि'ति कथालक्षणटीकाविरोध इत्याशङ्कमानाः वर्तिष्यमाणजल्पवितण्डारूपकथाबाह्यानामेवानिग्रहस्थानत्वं निरस्तम् न तु सर्वथा । कथाबाह्यानां जल्पादिकथातः पूर्वं विद्यापरीक्षायै क्रियमाणायां वादकथायामाप्तदोषाणां पराजयहेतुत्वमुक्त्वा 'एतेने'त्युक्तत्वात् । अत्र तु सर्वथाकथाबाह्यानामनिग्रहस्थानत्वमुच्यत इत्यविरोधादिति समादधति ॥ अवसितमित्यन्तोऽनुमाननिरूपणग्रन्थः ।

सु० — **ननु केयं कथा नामेत्यपेक्षायां तत्स्वरूपं निरूपयन्सामान्यलक्षणं विभागमुद्देशं** चाह वाद इति ।

अनु० — वादो जल्पो वितण्डेति कथास्तिस्रो विजानताम् ।

**अत्र कथेति लक्ष्यपदमावर्तनीयम् । विचारगोचरेत्युपस्कर्तव्यम् । विजानतामिति जातौ बहुवचनम् । तथा चानेकविद्व(त्कर्तृ)द्वक्तृकविचारगोचरा कथा वाक्यसन्दृब्धिः(दर्भः) कथेति सामान्यलक्षणसिद्धिः । ताश्च कथा वादादिभेदेन तिस्रः त्रिविधा इत्यर्थः । विजानतां मतेन तिस्र इति वा । तेन न्यूनाधिकसङ्ख्योक्तिस्तद्विरोधादयुक्तेत्युक्तं भवति ।**

शे० — **केयं कथेत्यपेक्षायामिति** । कथ वाक्यप्रबन्धे इति धातोः स्त्रियां भावे चिन्तिपूजिकथिकुम्बिचर्चश्चेति सूत्रेणाङ्प्रत्यये निष्पन्नकथाशब्दयौगिकार्थस्य वाक्यप्रबन्धत्वस्य भारतादिसा-

धारण्यात्तेषां च वादादिष्वनन्तर्भावाददतिरेके च तत्रैविध्यभङ्गप्रसङ्गादकथात्वेन तत्रातिव्यापनादन्यस्य चाप्रतिभासादिति भावः ॥ **सामान्यलक्षणमित्यादि** । यद्यपि 'वादो जल्पो वितण्डेति त्रिविधा विदुषां कथा' इति कथालक्षणकारिका विभागविशेषोद्देशमात्रपरतया तट्टीकायामवतारिता तथाऽप्याचार्यग्रन्थानां बह्वर्थत्वप्रकटनाय प्रकारान्तरेण व्याकरिष्यता सामान्यलक्षणविभागविशेषोद्देशपरतयाऽवतारितेति ध्येयम् । नन्वस्यां कारिकायां विशेषोद्देशविभागावेव प्रतीयेते न तु सामान्यलक्षणमपि, तत्कथं त्रितयपरतया तदवतार इत्यतोऽक्षादिशब्दार्थविभागोद्देशप्रसङ्गपरिहारायावच्छेदकैक्येनैक्यमापन्नस्यैव वस्तुतो विभज्योद्देष्टव्यत्वनियमात्सामान्यलक्षणं विना विभागविशेषोद्देशयोरनवसरेण तत्परत्वस्याप्यनुपपत्तिप्रसक्तेः कथंचिल्लक्षणसमर्पकत्वमप्यास्थेयमित्याशयेन तत्समर्पकत्वमुपपादयति **अत्रेति** ॥ **आवर्तनीयमिति** । आवर्तितं च कथापदं योगेन वाक्यप्रबन्धपरं, लक्ष्यपरं तु कथापदं रूढमिति शेषः । यद्यपि चात्र कथेत्येकवचनान्तं पदं न श्रुतं तथाऽपि योग्यतया वचनविपरिणामेन तल्लाभमभिप्रेत्य तथोक्तमित्यवधेयम् ॥ **विचारगोचरेत्युपस्कर्तव्यमिति** । पूर्वोत्तरपक्षबलाबलचिन्ता विचारस्तद्गोचरत्वं च यद्यपि विचारः गोचरो यस्येति बहुव्रीह्याश्रयणेन विचारविषयकत्वं न भवति । वाक्यसन्दर्भरूपकथाया वस्तुतत्त्वविषयकत्वेन ज्ञानरूपविचारविषकत्वाभावात् । नापि विचारस्य विषय इति षष्ठीसमासाश्रयणेन विचारं प्रति विषयत्वम् । वस्तुतत्त्वस्यैव विचारं प्रति विषयत्वेन वाक्यसन्दर्भस्य तं प्रत्यविषयत्वात् । तथाऽपि विचार्यत इति विचारः इति कर्मार्थव्युत्पन्नत्वाद्विचारशब्दस्य विचारविषयमात्रार्थत्वाद्विचारो गोचरो यस्येति बहुव्रीह्याश्रयणेऽपि विचारविषयगोचरताया एव वाक्यसन्दर्भे लाभान्नानुपपत्तिरिति ध्येयम् । केचित्तु विचारस्य गोचर एव गोचरो यस्येति मध्यमपदलोपीसमासाश्रयणाद्विचारगोचरगोचरत्वमेव विचारत्वमत्र विवक्षितमित्याहुः ॥ **जाताविति** । तथा च जल्पवितण्डयोर्द्विकर्तृक वादे च नाव्याप्तिरिति भावः । कथेत्यावृत्त्यादिना सिद्धं लक्षणं दर्शयति **तथा चेति** । कर्त्रर्थकषष्ठीजात्यर्थकबहुवचनलब्धार्थकथनम् **अनेकविद्वत्कर्तृक इति** । बहुकर्तृकवादस्यापि संग्रहाय द्विकर्तृक इत्यनुक्त्वाऽनेककर्तृक इत्येवोक्तम् । अनेककर्तृकत्वोक्त्यैककर्तृकेभ्यो मीमांसावाक्येभ्यो व्युदासः । कथामहावाक्यनिर्वाहकत्वरूपवैदुष्योक्त्या कलहकारादिभ्यो व्युदासः । विचारगोचरत्ववचनेन विदुषामेवान्योन्यं सुखव्यवहारेभ्यो व्युदास इति ज्ञेयम् । कथकभेदेन कथानामानन्त्यात्कथं तत्त्रित्वोक्तिरित्यत आह **त्रिविधा इति** । प्रकारत्रयोपेता इत्यर्थः । ततश्चानन्त्येऽपि कथानां तत्तल्लक्षणोपाधिक्रोडीकृतराशित्रयविवक्षयेयं त्रित्वोक्तिरिति भावः । एवमावृत्त्यादिना वचनात्कथासामान्यलक्षणलाभाय विदुषामित्यस्य कथापदेनान्वयमाश्रित्य कारिका व्याख्याता । अधुना विचारगोचरत्वविशेषणवल्लक्षणस्याप्यलक्षितस्य विभागविशेषोद्देशानुपपत्तेराक्षेपेणैव लाभसंभवाद्विदुषामित्यस्य त्रिविधेत्यनेनान्वये विभागविप्रतिपत्तिनिरासस्यापि संपत्तेरावृत्त्यादिक्लेशमनाश्रित्यैकवाक्यतया व्याचष्टे

**विजानतां मतेनेति** ॥ **न्यूनाधिकसङ्ख्योक्तेरिति** । एक एव कथामार्ग इति बाह्यानां, वादवितण्डे द्वे एवेति श्रीहर्षस्य, वादो जल्पो वादवितण्डा जल्पवितण्डा चेति चतस्रः कथा इति गौडनैयायिकानां च न्यूनाधिकसङ्ख्योक्तिरित्यर्थः ॥

**स० — उद्देशं चेति** । अत्र उद्देशशब्देन उद्देशशब्दार्थैकदेशनाम्नो ग्रहणम् । तथा च उद्देशं नाम आह वक्तीत्यर्थः । **अत्रेति** । कथा इति बहुवचनान्तस्य विभक्तिविपरिणामेनावृत्तिरिति भावः । ननु कथायां द्वयोरेव कर्तृत्वेन बहुवचनमनुपपन्नमित्यत आह **जाताविति** । जातौ वाच्यायां बहुवचनं साध्यमित्यर्थः । तथा च विद्वज्जातिकर्तृकेत्यर्थः । **तथा चेति** । न च कथामहावाक्य-निर्वाहकत्वस्यैव विद्वच्छब्दार्थत्वेन विद्वत्कर्तृकलौकिकविचारे विद्वत्त्वस्य प्रयोजकत्वाभावेन विद्वत्कर्तृ-केत्यनेनैव तद्व्युदाससिद्धौ विचारगोचरस्येत्यस्य वैयर्थ्यमिति वाच्यम् । विद्वत्त्वस्य विशेषणत्वे हि तस्यापि प्रयोजकत्वेन तत्र तस्य प्रयोजकत्वाभावेन व्यावृत्तिः । न चैवम् । किं नाम, तदुपलक्षण-मात्रम् । तथा च वस्तुतो ये कथामहावाक्यनिर्वाहकाः, तत्कर्तृकत्वस्य तत्कृतलौकिकविचारेऽपि सत्त्वेन तत्रातिव्याप्तिः स्यादेव । तथा च तन्निरासार्थं विचारगोचरेत्येतत्सार्थकमिति भावः । **तेन न्यूनेति** । एक एव कथामार्गः इति बाह्याः, वाद–वितण्डे द्वे एवेति हर्षः, वादो जल्पो वादवितण्डा जल्पवितण्डा चेति चतस्र इति गौडनैयायिका इत्यादिन्यूनाधिकसंख्योक्तिरित्यर्थः ।

---

**प० — कथेतिलक्ष्यपदमावर्तनीयमिति** । एकवचनान्तं कथापदं लक्ष्यार्थकतया कथेत्या-वर्तनीयमित्यर्थः । तत्रैकं यौगिकमपरं रूढम् । तत्र विजानतामिति कर्त्रर्थे षष्ठ्यन्तं यौगिकपदेनान्वि-तम् । तथा च द्विकर्तृककथायामव्याप्तिनिरासायाह **विजानतामिति जातौ बहुवचनमिति** । 'जात्या-ख्यायामेकस्मिन्बहुवचनमन्यतरस्यामि'ति एकत्वादिसंख्यावत्यपि बहुवचनविधानादिति भावः । विजानता-मित्यस्य प्रकृतिप्रत्यययोरर्थानुवादः **अनेकविद्वत्कर्तुकेति** । बहुकर्तृकवादस्यापि संग्रहायानेकेत्युक्तिः । अध्याहृतस्यानुवादो **विचारगोचरेति** । पूर्वोत्तरपक्षबलाबलविषयिकेत्यर्थः । कथेत्यनुवादः । वाक्यसंदर्भ इत्यर्थानुवादः। कथ वाक्यप्रबन्धे इत्यस्य 'चितिपूजिकथिकुंभिचर्च(र्व)श्च' इत्यङ्प्रत्यये कथेति निष्पत्तेरिति भावः । इष्टगोष्ठीरूपविद्वत्कर्तृकवाक्यसंदर्भव्युदासाय विचारगोचरेत्युक्तिः । एककर्तृकमननग्रन्थनिरासाय अनेकेत्युक्तिः । कर्तृभेदेन कथाभेदात्कथं त्रित्वोक्तिरित्यत आह **त्रिविधा इति** ॥ **इति वेति** । शेषषष्ठीय-मिति भावः ॥ **न्यूनाधिकेति** । बौद्धोक्तस्य एक एव कथामार्ग इत्यस्य, श्रीहर्षाद्युक्तस्य वादवितण्डे एव कथेत्यस्य, वादो जल्पो वादवितण्डा जल्पवितण्डा चेति गौडनैयायिकोक्तचातुर्विध्यस्य च निरासलाभाय विजानतां मतेनेत्युक्तमित्यर्थः । **तद्विरोधात्** विद्वन्मतविरोधादित्यर्थः । विस्तरः कथालक्षणटीकाया-मिति भावः ।

या० — **आवर्तनीयमिति** । आवर्तितं च कथापदं योगेन वाक्यप्रबन्धवाचि, लक्ष्यपरं तु कथापदं रूढमेवेति भावः । ननु कथकयोर्द्वित्वात्कथं बहुवचनमित्यत आह **जाताविति** । 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' इत्यनुशासनादिति भावः । तथा चात्र बहुवचनेन जात्यैक्यलाभेऽपि तदच्छिन्नव्यक्त्यनेकत्वं लक्षणया प्रतिपाद्यमिति द्रष्टव्यम् ॥ **अनेकविद्वद्वक्तृकेति** । अत्र द्विन्व-विवक्षायां बहुवक्तृकवादेऽव्याप्तिभयादनेकेत्युक्तम् । वक्तृकेति षष्ठ्यर्थसम्बन्धप्रदर्शनम् । विद्वत्त्वं कथामहावाक्यार्थनिर्वाहकत्वम् । पूर्वोत्तरपक्षबलाबलचिन्ता विचारः । अत्रानेकवक्तृकत्वोक्त्यैकवक्तृकेभ्यो मीमांसावाक्येभ्यो व्युदासः । विद्वत्त्वोक्त्या कलहादिभ्यः । कलहाकारित्वादेर्विद्वच्छब्दतया विवक्षितत्वात् । विचारगोचरत्ववचनेन विदुषामन्योन्यसुखव्यवहारेभ्यः । कथकभेदेन कथानन्त्यात्कथं त्रित्वमित्यत आह **त्रिविधा इति** । प्रकारत्रयोपेता इत्यर्थः । तथा च तत्तल्लक्षणोपाधिकोडीकृतराशिविवक्षया त्रित्वोपपत्तिरिति भावः ॥ **तेन न्यूनाधिकेति** । एक एव कथामार्ग इति बाह्यो(बौद्धो)क्तिः । वादवितण्डे द्वे एवेति श्रीहर्षोक्तिः । वादो जल्पो वादवितण्डा जल्पवितण्डा चेति चतस्र इति गौडनैयायिकोक्तिरिति न्यूनाधिकसङ्ख्योक्तिरित्यर्थः ।

सु० — **वादलक्षणमाह** स्वार्थमिति ।

**अनु० —** स्वार्थं परार्थमपि वा तत्त्वनिर्णयसाधिनी ॥
केवलं तु कथा वादः

**तत्त्वनिर्णयसाधनीत्यर्थाद्यर्थजल्पवितण्डाद्यन्यच्छेदः । तथाऽपि वितण्डाविशेषेऽतिव्याप्तिस्तदर्थं केवलमित्युक्तम् । साक्षादित्यर्थः । तुशब्देन तत्त्वनिर्णयसाधनादपि जल्पविशेषात् तदुद्देशेन प्रवृत्तत्ववैलक्षण्यं दर्शयति । यदा तु विदिततत्त्वौ वीतरागावविदिततत्त्वैः परैरभ्यर्थितौ कथां कुरुतस्तदा तत्राव्याप्तमेतल्लक्षणम् । न चासौ न वादः । अन्यत्रानन्तर्भावेन तिस्र इत्यस्य व्याघातादित्यत उक्तम्** स्वार्थं परार्थमपि वेति । **अपिशब्द उभयार्थतासमुच्चयार्थः ।**

शे० — **विशेष इति** । स्वयमध्यवसितार्थेन कारुणिकतया पाषण्डिप्रसञ्जितौ लोकस्य संशयविपर्ययौ पराकर्तुं तद्विजिगीषयाऽऽरभ्यमाणायां वितण्डायामित्यर्थः ॥ **केवलमित्युक्तमिति** । तस्याश्च ख्यात्यादिकं तत्त्वनिर्णयं चोद्दिश्य प्रवृत्तत्वात्तदुभयसाधनत्वेन तत्त्वनिर्णयमात्रसाधनत्वाभावान्न तत्रातिव्याप्तिरिति भावः । भवेत् या वितण्डा लोकस्य संशयविपर्ययनिरासं ख्यात्यादिकं चोद्दिश्य प्रवर्तते ततोऽनेन व्यावृत्तिः । या तु केवलं लोकस्य संशयाद्यपाकरणायैव प्रवर्तते कथं ततो व्यावृत्तिरित्यत

आह **साक्षादित्यर्थ इति** । ततश्च वितण्डायाः परपराभवद्वारैव तत्त्वनिर्णयहेतुत्वेन साक्षात्तदहेतुत्वान्न तत्रातिव्याप्तिरिति भावः ॥ केवलं त्विति तुशब्दानर्थक्यमाशङ्क्य तत्त्वनिर्णयोद्देशेन प्रवृत्ततया वादस्य जल्पविशेषवैलक्षण्योपदर्शनार्थत्वात्तस्य न तदिति भावेन किं तद्वैलक्षण्यप्रदर्शनस्यापि फलमित्यतो जल्पविशेषेऽतिव्याप्तिनिरास एव तथेत्यभिप्रेत्याह **तुशब्देनेति** ॥ **जल्पविशेषादिति** । यत्र हि ख्यात्याद्यर्थयमानौ विजिगीषू सद्भ्यामेव साधनदूषणाभ्यां स्वपरपक्षसाधनोपालम्भौ कुर्वाते तस्मादित्यर्थः । तथा च तस्य साक्षात्तत्त्वनिर्णयप्रसाधनत्वेऽपि तदुद्देशेनाप्रवृत्तत्वान्न तत्रातिव्याप्तिरिति भावः ॥ **तत्रेति** । तत्र द्वयोरपि तत्त्वज्ञानित्वेन तस्योद्देश्यत्वासंभवादिति भावः ॥ **स्वार्थं परार्थमपि वेतीति** । न केवलमियं वादकथा कथकगततत्त्वनिर्णयार्था विवक्षिता किन्नाम यदा गुरुशिष्यौ तदा स्वार्थं कथकार्थं शिष्याथ शिष्यस्य तत्त्वनिर्णयार्थेति यावत् । यदा तु विदिततत्त्वौ तदा परार्थं कृतप्रार्थनानां परेषां तत्त्वनिर्णयार्थेति यावत् । यदा सखिसब्रह्मचारिणस्तदोभयार्थं सर्वेषां तत्त्वनिर्णयार्थेति यावत् । अनवधारितस्वपरगतविशेषं तत्त्वनिर्णयमात्रमेव चात्रोद्देश्यतया विवक्षितमिति न तस्य विशेषावलम्बनेनाननुगमशङ्कावकाशः । अन्यथाऽतिप्रसङ्गादिति भावः ।

स० — तुशब्देन ज्ञायत इति भावः ।

---

प० — **वितण्डाविशेष इति** । लोकस्य पाषण्डप्रसञ्जितसंशयादिव्युदासाय दयालुविद्वत्कर्तृकवितण्डारूपकथाविशेष इत्यर्थः ॥ **साक्षादित्यर्थ इति** । तत्र तत्त्वनिर्णयमात्रोद्देशेपि पाषण्डिजनपराजयद्वारैव न साक्षादिति नातिव्याप्तिरिति भावः ॥ **जल्पविशेषादिति** । ख्यात्यादिकमर्थ(य)मानाभ्यामपि विजिगीषुभ्यां सत्साधनदूषणैरेव क्रियमाणात् जल्पविशेषादित्यर्थः । परार्थं वेत्यस्य कृत्यं व्यनक्ति **यदात्विति** ॥ **अव्याप्तमिति** । तत्र स्वार्थं कथकयोस्तत्त्वनिर्णयोद्देश्यकत्वाभावादिति भावः ॥ **उभयार्थतेति** । यदा त्वविदिततत्त्वावेव वीतरागौ परैरभ्यर्थितौ कथां कुरुतः, तदा कथकयोः परेषां च तत्त्वनिर्णयोद्देशेन कथाप्रवृत्तेः तत्र स्वपरोभयार्थतत्त्वनिर्णयोद्देशककथाविशेषेऽव्याप्तिनिरासार्थं अपिपदेनोभयार्थसमुच्चयः कृत इत्यर्थः ।

या० — **वितण्डाविशेष इति** । लोकस्य पाषण्डप्रसञ्जितसंशयविपर्ययापाकरणाय कारुणिकेनाध्यवसितार्थेन क्रियमाणायां वितण्डायामित्यर्थः । ननु साऽपि केवलं तत्त्वनिर्णयमुद्दिश्य भवत्येव । तत्र ख्यात्यादिकमानुषङ्गिकं नोद्देश्यमतः कथं तद्वारणमित्यत आह **साक्षादित्यर्थ इति** । न हि सा वितण्डा साक्षात्तत्त्वनिर्णयं करोति किन्तु परपराभवद्वारैवेति भावः ॥ **जल्पविशेषादिति** । ख्यात्या-

र्थयमानाभ्यां विजिगीषुभ्यां सत्साधनदूषणैरेव क्रियमाणाज्जल्पादित्यर्थः ॥ **तत्राव्याप्तमेवेति** । तत्र द्वयोरपि तत्त्वज्ञानितया तत्त्वोद्देश्यत्वाभावादिति भावः ॥ **स्वार्थमित्यादि** यदा गुरुशिष्ययोर्वादः तदा स्वार्थं कथकार्थं शिष्यार्थमिति यावत् । यदा तु विदिततत्त्वौ अविदिततत्त्वैः परैरभ्यर्थितौ वीतरागौ कथां कुरुतस्तदा परार्थं, यदा च सब्रह्मचारिणौ कथां कुरुतस्तदोभयार्थमिति द्रष्टव्यम् । सामान्यं चात्र विवक्षितमतो नाननुगमशङ्केति भावः ।

सु० — **जल्पलक्षणमाह** जल्प इति ।

जल्पोऽर्थादिव्यपेक्षया ॥

सतामेव कथा ज्ञेया

**आदिपदेन ख्यात्यादेर्ग्रहणम् । अर्थादिव्यपेक्षयेति वादव्यावृत्त्यर्थम् । आनुषङ्गिकार्थादिसाधनत्वं वादस्यापि संभवतीति व्यपेक्षाग्रहणम् । वितण्डाव्यावृत्त्यर्थं सतामेवेति । सतामित्येवोक्ते न वितण्डाव्यावृत्तिसिद्धिः । वितण्डायामप्येकस्य सत्त्वात् । बहुवचनस्य जात्यर्थत्वात् । तेन एवेत्युक्तम् ।**

---

शे० — **आदिपदेनेति** नन्वत्रार्थख्यातिपूजापरखिलीकरणानि समस्तानि, व्यस्तानि वोद्देश्यानि जल्पे विवक्ष्यन्ते । नाद्यः एकैकोद्देशेन प्रवृत्तावव्यापनात् । नान्त्यः परस्पराव्याप्तेरिति चेन्न । तत्त्वनिर्णयातिरिक्तफलोद्देशेन सतामेव कथा जल्प इति लक्षणार्थत्वात् । फलान्तरं चार्थादिकमेवेति तद्ग्रहणमिति द्रष्टव्यम् ॥ **वादव्यावृत्त्यर्थमिति** । वादस्य तत्त्वनिर्णयसाधनत्वेऽप्यर्थादिसाधनत्वाभावान्नातिव्याप्तिरिति भावः ॥ **वादस्येति** । वादविशेषस्येत्यर्थः । ननु सतामित्येतावताऽपि वितण्डाव्यावृत्तिसिद्धेः किमेवशब्देनेत्यत आह **सतामित्येवेति** । ननु बहुसत्कर्तृकत्वस्य सतामिति बहुवचनबलेन लब्धत्वाद्वितण्डायाश्चातादृशत्वात्कथं तेन न व्यावृत्तिरित्यतो भवेदेवं यदीदं बहुवचनमिति व्यक्तिबहुत्वविवक्षानिमित्तं बहुवचनं स्यात् । न चैवम् । किन्नाम जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्यामिति सूत्रविहितं जात्याख्यानिमित्तमेव । तथा च बहुसत्कतृकत्वालाभान्न सतामित्यनेन तद्व्यावृत्तिसिद्धिरित्याह **बहुवचनस्येति** । न चैवं लक्षणटीकायां सतामित्यनेन वितण्डाव्यावृत्तिवर्णनमयुक्तं स्यादिति वाच्यम् । एतदनुसारेण तत्रापि सतामेवेत्यर्थस्याभिप्रेतत्वेन तद्व्यावृत्तिवर्णनसम्भवात् । केचित्तु जात्यर्थत्वेऽपि सतामित्यस्य सतोरित्यर्थकत्वाद्वितण्डायाश्च सदसत्कथात्वेन सतोः कथात्वाभावात्तद्व्यावृत्तिरिति तदभिप्रायमाहुः ।

प० — एवं तर्हि सतामसतामिति बहुत्वोक्तिरयुक्तेत्यत आह **बहुवचनस्य जात्यर्थत्वादिति** । तथा चासतां सतामित्येतदसतः सतश्चेति व्याख्यातं भवति ।

या० — **आदिपदेन ख्यात्यादेरिति** । नन्वत्रार्थख्यातिपूजापरखिलीकरणानि फलानि समस्तानि प्रत्येकानि वोद्देश्यानि । नाद्यः । एकैकोद्देशेन प्रवृत्तावव्यापनात् । न द्वितीयः । परस्पराव्याप्तेः । मैवम् । तत्त्वनिर्णयातिरिक्तफलोद्देशेनेति विवक्षितत्वात् । तत्र फलमर्थादिकमेवेति दर्शयितुं तद्ग्रहणमिति द्रष्टव्यम् ॥

सु० — **वितण्डां लक्षयति** वितण्डेति ।

अनु० — वितण्डा त्वसतां सताम् ॥

अप्रकाश्य स्वसिद्धान्तमसतां पक्षदूषणम् ॥

**तुशब्दो वादजल्पव्यवच्छेदार्थः । कथेत्यनुवर्तते । कर्तृभेदेन कथाभेदेऽतिप्रसङ्ग इत्यतो लक्षणान्तरमाह** अप्रकाश्येति । **सद्भिः स्वसिद्धान्तमप्रकाश्यासाधयित्वाऽसतां पक्षस्य दूषणमेव क्रियते यस्या वितण्डेत्यर्थः । प्रतिवादिनः स्वपक्षसाधनेन विना परपक्षप्रतिक्षेपमात्रेण पर्यवस्यन्ती कथा वितण्डेत्युक्तं भवति । नन्वेतदेव किन्निमित्तं । प्राश्निकाद्यधीनमिति ब्रूमः । तेऽपि कुत एतादृशनियमं कुर्युरिति चेत् (न) । तत्त्वज्ञानायोग्यानसतः प्रति सद्भिः स्वसिद्धान्तसाधने तेषां तत्त्वज्ञानोत्पादप्रसङ्गात् । तस्य च निषिद्धत्वादित्याशयेनासतामित्युक्तम् । एतेन प्रथमलक्षणस्यापि समर्थनं वेदितव्यम् ।**

शे० — **तुशब्द इति** । असतां सतां सह या कथा सा वितण्डैव न वादो नापि जल्प इति वादजल्पव्यवच्छेदप्रतिपादनेन तत्रातिव्याप्तिशङ्कानिरासार्थ इति भावः ॥ **कर्तृभेदेनेति** । स्वरूपभेदकनिमित्तान्तराभावेऽपि केवलं कर्तृभेदमात्रेण कथाभेदे कर्तृपुरुषाणामानन्त्येन कथानन्त्यापत्तिरित्यर्थः ॥ **लक्षणान्तरमिति** । स्वरूपभेदकप्रवृत्तिप्रकारभेदरूपलक्षणमित्यर्थः । अत्रापि सदसतोर्लक्षणे पतितत्वात्कर्तृभेद एव कथाभेदकतयोच्यते न प्रवृत्तिप्रकारभेद इति कथमनेनोक्तशङ्कापरिहार इत्यत आह **प्रतिवादिन इति** । ततश्च प्रवृत्तिप्रकारभेदादेव कथाभेदो न कर्तृभेदादित्युक्तं भवति ॥ **स्वपक्षसाधनेन विनेति** । 'मूलपक्षग्रहापेता वितण्डा कविभिर्मते'ति ब्रह्मतर्कोक्तेरिति भावः । मूलपक्षः स्वपक्षस्तस्य ग्रहः साधनं तदपेतेत्यर्थः । ननु प्रतिवादिनः स्वपक्षसाधनहीनत्वं वितण्डायामसम्भवीदम-

साधकं व्यभिचारित्वादित्यादिदूषणस्याप्यनुमानत्वेन साधकत्वात् । यदि वर्णा अनित्यास्तर्हि नाशकत्वाभिमतसमवधानानन्तरं नोपलभ्येरन्निति तर्कस्याप्यनुमानतया साधनत्वात् । अथ कथाहेतुविप्रतिपत्तिविषयकोटिसाधकमेव साधनत्वेन विवक्षितम्, उदाहृतं चानुमानं न तादृशमिति न साधनम् । द्विविधं ह्यनुमानं स्वपक्षसाधनं परपक्षदूषणं चेति । द्वितीयमपि द्विविधम् । दुष्टिप्रमितिसाधनं तर्कश्चेति । अतः कथमसम्भव इति चेन्न । तथाऽपि वर्णानां नित्यविभुत्वादिति सत्प्रतिपक्षस्य बाधकप्रत्यभिंज्ञाऽऽगमयोश्च साधनत्वेन तद्दोषतादवस्थ्यात् । अत एव ब्रह्मतर्के 'अग्रहेणैव पक्षस्य तर्कागमबलेन तु । दूषयेदेव पाषण्डांस्तत्त्वविप्लावकान्सदा' इत्यागमोऽपि वैतण्डिकोपायत्वेन संगृहीत इति । मैवम् । भावानवबोधात् । न हि स्वपक्षसाधनेन विनेति साधनप्रयोग एव निषिध्यते किन्तु साधनत्वेन तत्प्रयोग एव । न च वैतण्डिकेन प्रतिपक्षादिकं साधनत्वेन प्रयुज्यते किन्तु साधनस्थापनादूषणतयैव । ततश्च यथा जल्पे विरुद्धत्वाद्युद्भावनेन परसाधने दूषितेऽपि स्वपक्षसाधनोपन्यासं विना न कथापरिसमाप्तिः तथा न वितण्डायामित्यभिप्रायात् । तदिदमुक्तं **स्वपक्षसाधनेन विनेति** । अन्यथा परपक्षप्रतिक्षेपमात्रेणैवेत्येतावतैव पूर्तावितस्य वैयर्थ्यापातात् । ब्रह्मतर्केऽपि दूषयेदेवेत्युक्तमिति ध्येयम् । ननु भवेदेवं प्रवृत्तिप्रकारभेदेन कथाभेदो यदि वितण्डायां प्रतिवादिनः स्वपक्षसाधनेन विना परपक्षप्रतिक्षेपमात्रेण कथापर्यवसानं सिद्धं स्यात् । न चैतदस्ति । नियामकाभावात् । अन्यथा जल्पेऽपि तत्प्रसङ्गादित्याशयेनाक्षिपति **नन्विति** । प्राश्निकादिभिस्तन्मात्रेण कथापर्यवसाननियमात् । तत्कृतसमयस्यैव नियामकत्वात् । तन्मात्रेण कथापर्यवसानोपपत्तिरित्याशयेन परिहरति **प्राश्निकादीति** ॥ **तेऽपि कुत इति** । जल्पे तथा नियमं कृत्वा वितण्डायामेव तथा समयकरणे नियामकाभावादिति भावः ॥ **प्रसङ्गादिति** । जल्पे चोभयोरपि सत्त्वेन तत्त्वज्ञानयोग्यतया स्वपक्षसाधनेऽपि वादिनस्तत्त्वज्ञानप्रसङ्गो नानिष्ट इति भावः । इष्टापत्तिं परिहरति **तस्य च निषिद्धत्वादिति** । 'मानस्तेनेभ्य' इत्यादिश्रुतेरिति भावः ॥ **एतेनेति** । वितण्डाया वादजल्पव्यावृत्तप्रवृत्तिप्रकारकथनेनेत्यर्थः । स्वरूपभेदकनिमित्तान्तराभावेऽपि केवलं कर्तृभेदेनैव कथाभेदोक्तावतिप्रसङ्गप्रसक्तावपि प्रकृते प्रवृत्तिप्रकारभेदस्यैव कथास्वरूपभेदकस्य सत्त्वात् । स्वरूपभेदकनिमित्तान्तराभावाभावेन केवलकर्तृभेदस्य कथाभेदकत्वानभ्युपगमान्नातिप्रसङ्ग इति पूर्वोक्तमपि लक्षणं युक्तमिति भावः ।

**स०** — ननु सत्त्वासत्त्वं वितण्डायां नियमेन विवक्षितम्, उत सदसतोः कर्तृत्वस्य दृष्टत्वमात्रेण विवक्षा । नाद्यः । नियमेन विवक्षायां नियामकाभावात् । न द्वितीयः श्यामगौरादीनामपि कर्तृत्वस्य दृष्टत्वेन तत्रापि तद्विवक्षया श्यामगौरकर्तृकः कश्चन जल्पः, देवदत्तयज्ञदत्तकर्तृकः कश्चनेत्य-

तिप्रसङ्गात् इत्यतः प्रथमपक्षमङ्गीकृत्य तत्र नियमेन सत्त्वासत्त्वयोः विवक्षायां नियामकं वक्तुं लक्षणान्तरमाहेत्यभिप्रेत्याह **कर्तृभेदेनेति** ॥ **एतेनेति** । सत्त्वासत्त्वयोर्नियमेन विवक्षितत्वेनेत्यर्थः ।

प० — **अतिप्रसङ्ग इति** । भेदकनिमित्तान्तरस्याभावे केवलं कर्तृभेदेन कथाभेदे आन्ध्रस्य द्राविडेनान्ध्रस्य कर्नाटकेन कथाया अपि भेदस्यादित्यतिप्रसङ्ग इत्यर्थः । **पर्यवस्यन्तीति** । कथेति योज्यम् । **निषिद्धत्वादिति** । अनाविष्कुर्वन्नन्वयादित्यादौ तथा वक्ष्यमाणत्वात् । 'मानस्तेनेभ्य' (ऋ·२-२३-१६) इत्यादिश्रुतेश्चेति भावः ॥ **एतेनेति** । अप्रकाश्येत्यादिकथनेन सदसत्कर्तृककथा वितण्डेतिलक्षणमतिप्रसङ्गशून्यत्वात्समर्थितमित्यर्थः । सदसत्कर्तृकेत्यनेनोक्तार्थस्यान्यतरपक्षस्थापनावत्कथात्वस्याभिमतत्वादिति भावः ।

या० — **अतिप्रसङ्ग इति** । भेदकस्य निमितान्तरस्याभावे केवलं कर्तृभेदेन कथाभेदे आर्यस्य द्राविडेन आन्ध्रस्य कार्नाटकेन कथा वितण्डेत्यपि स्यादित्यतिप्रसङ्ग इत्यर्थः । तत्रापि सदसतोः पतितत्वात्कर्तृभेद एव कथाभेदकतया प्रतीयत इति मन्दाशङ्कापरिहारायाह **प्रतिवादिन इति** । तथा च प्रवृत्तिप्रकारभेद एव कथाभेदक इति भावः । नन्वसतो वादित्वं सतः प्रतिवादित्वमित्येतदेव कथम् । प्रतिवादिनि सत्त्वमपि किमाभिमानिकमुत वास्तवम् । नाद्यः । वादिनोऽप्यभिमानतः सत्त्वात् । न द्वितीयः । तदनिश्चयात् । निश्चये वा न वितण्डा स्यात् । न हि निश्चितस्वासाधुभावः परसाधुतां निश्चित्य वितण्डायै घटितुमर्हतीत्याशयेन पृच्छति **नन्वेतदेवेति** । वादिप्रतिवादिव्यवस्थापनं सत्त्वासत्त्वव्यवस्थापनं च प्राश्निकसभापत्याद्यधीनम् । ते हि शास्त्रोदितलक्षणैः सत्त्वासत्त्वे विनिश्चेष्यन्ति । अत एव तेषां वैष्णवत्वनियमो वक्ष्यत इत्याशयेनोत्तरमाह **प्राश्निकादीति** ॥ **निषिद्धत्वादिति** । मानस्तेनेभ्य इत्यादाविति शेषः ॥ **एतेनेति** । वितण्डाया वादजल्पव्यावृत्तप्रवृत्तिप्रकारकथनेनेत्यर्थः । निमित्तान्तराभावे खलु केवलं कर्तृभेदेन कथाभेदेऽतिप्रसङ्गः उक्तः । न चात्र स्वरूपभेदे निमित्तान्तराभावः, प्रवृत्तिप्रकारस्यैवेतरभेदनिमित्तस्य सत्त्वात् । अनेन तु भेदकेन भिन्ने वितण्डास्वरूपे पूर्वोक्ताधिकारिभेदोऽपि वितण्डाभेदक इत्यङ्गीकारेऽतिप्रसङ्गाभावात् । तथा च गन्धवत्त्वज्ञानाधीनज्ञानं पृथिवीत्वमपि यथा पृथिव्या लक्षणमेतल्लक्षणज्ञानाधीनज्ञानं पूर्वोक्तमपि वितण्डाया लक्षणमिति समर्थनं वेदितव्यमिति भावः ।

सु० — नन्वसंभवीदं लक्षणम् । परपक्षदूषणं हि तत्प्रतिपादकप्रमाणदूषणेनैव भवेत् । न च स्वपक्षसाधनहीनायां वितण्डायां तत्संभवतीत्यत आह उक्त इति ।

अनु० — उक्ते तैः प्रथमं माने वक्तव्यं तस्य दूषणम् ॥

तैरसद्भिः प्रथमं स्वपक्षसाधनाय माने उक्ते सति सद्भिस्तस्य मानस्य दूषणं वक्तव्यम् । असतो वादिभूतस्य स्वपक्षसाधनं परपक्षनिराकरणं च करणीयम् । सतस्तु प्रतिवादिनः तत्प्रमाणदूषणेनैव चरितार्थत्वमित्युक्तं भवति ।

क्वचित्सतामेवेत्यादिमार्धश्लोको वादजल्पयोरित्यतःपरं पठितः । तत एतामेव सङ्गतिमाश्रित्य टीकाकृता तत्रैव व्याख्यातः ।

शे० — नन्विति । प्रतिवादिन इव वादिनोऽपि स्वपक्षसाधनं वितण्डायां नास्तीति भ्रान्त्या शङ्केयम् । अत एव 'उक्ते तैः प्रथमं माने' इति, 'असतो वादिभूतस्य स्वपक्षसाधनमि'ति मूलतट्टीकयोः स्वपक्षसाधनास्तित्ववर्णनमिति ध्येयम् ॥ असतो वादिभूतस्येति । ननु च वितण्डायां वादिनः कथं परपक्षदूषणम् । 'तत्त्वमेषु निगूहितमि'त्यन्यत्रोक्तेः, 'अप्रकाश्य स्वसिद्धान्तमसतां पक्षदूषणमि'त्यत्रापि पूर्वमुक्तेः, 'मूलपक्षग्रहापेता', 'अप्रकाश्य स्वपक्षो हि' 'अग्रहेणैव पक्षस्ये'ति ब्रह्मतर्कोक्तेश्च सता प्रतिवादिना सर्वथाऽप्रकाशितस्य तत्पक्षस्यासता वादिनाऽज्ञानात् । अथैतानि वाक्यानि प्रतिवादिना स्वपक्षसाधननिराकरणपराणि न तु पक्षास्वीकारपराणि । अप्रकाश्येत्यस्य स्वपक्षसाधनं विनेत्येव पूर्वं व्याख्यातत्वात्तत्त्वज्ञानायोग्यानसतः प्रति प्रतिवादिनः स्वसिद्धान्तसाधने तेषां तत्त्वज्ञानोत्पादप्रसङ्गादित्युक्तत्वाच्च । ब्रह्मतर्कवाक्यानामपि प्रतिवादिनः स्वपक्षसाधननिषेध एव तात्पर्यादिति चेन्न तथाऽपि वादिनः परपक्षदूषणं युज्यते । न हि ज्ञानमात्रेण परपक्षस्य दूषणं युज्यते । अपि तूपन्यासे सति साधनस्य दूषणम् । अन्यथा वादजल्पयोरप्यादावेव प्रतिवादिन इव वादिनोऽपि परपक्षदूषणप्रसङ्गात् । एवञ्च प्रतिवादिनः स्वपक्षसाधनाभावाद्वादिनः परपक्षसाधनदूषणानवकाश एवेति । मैवम् । अनेन वर्णानित्यत्वे साधिते त्वया तद्दूषणमेव कार्यम् , अनेन पुनस्तद्दूषणीयमिति प्राश्निकादिनियतस्य, त्वया वर्णानित्यत्वं साधनीयं, मया त्वद्दूषणमेव कार्यं, तत्पुनस्त्वया दूषणीयमिति प्रतिवादिपरिगृहीतस्य वादिनः स्थापनदूषणस्यैवात्र परपक्षपदेन विवक्षितत्वात् । अत एव दूषणस्यापि पक्षतया तत्परिग्रहसत्त्वादेव वैतण्डिकत्वं पक्षपरिग्रहसामान्यनिषेधायोगाद्ब्रह्मतर्के मूलपक्षग्रहापेतेत्युक्तम् । न च प्रतिवादिपक्षत्वेऽप्यस्य दूषणस्योद्धार एव कर्तव्यो वादिना न दूषणमिति वाच्यम् । दूषणदूषणस्यैव दूषणोद्धारत्वादिति सर्वं सुस्थम् ॥ सतस्तु प्रतिवादिन इति । ननु तत्त्वज्ञानयोग्यतालक्षणं सत्त्वं यदि कथका-

भिमानसिद्धं विवक्षितं तदा न वितण्डावकाशः द्वयोरपि स्वाभिमानतस्तत्त्वात् । अथ वास्तवं तथाऽपि न वितण्डावकाशः । तदनिश्चयात् । निश्चये वा न वितण्डा स्यात् । न हि निश्चितस्वासाधुभावः परसाधुतां निश्चित्य वितण्डायै घटितुमर्हतीति चेन्न । उक्तरूपवादिव्यवस्थायाः प्राश्निकविधेयत्वात् । तेषां च शास्त्रोदितलक्षणैः सत्त्वासत्त्वनिश्चयोपपत्तेः । अत एव प्राश्निकानां वैष्णवत्वनियमो वक्ष्यत इति भावः ।

ननु सतामेवेत्यादिसार्धश्लोकस्य जल्पोऽर्थादित्यपक्षेयेत्येतच्छेषतया व्याख्यानमयुक्तम् । टीकाकृतोभाभ्यां साधनं चेत्युत्तरानुव्याख्यानशेषतया व्याख्यातत्वेन तस्यैतच्छेषत्वाभावात् । अन्यथा टीकाकृताऽप्यत्रैव व्याख्येयतयोत्तरशेषतया तद्व्याख्यानस्यासङ्गतत्वापातात् । न चोत्तरत्र तत्पाठदर्शनमूलकं तद्व्याख्यानं जल्पोऽर्थादित्यपक्षयेत्यतः परं तत्पाठदर्शनमूलकं च स्वकीयव्याख्यानमित्यविरोध इति वाच्यम् । तथाऽप्युभयत्र पाठाविशेषे उत्तरशेषतया टीकाकारीयव्याख्यानोल्लङ्घनेन पूर्वशेषतया तद्व्याख्यानस्य निमित्तविशेषाभावेनायुक्तत्वादित्यत उत्तरत्र पाठस्य क्वाचित्कत्वात्पूर्वत्र पाठस्य च प्रायिकत्वाट्टीकाकारीयमुत्तरशेषतया व्याख्यानमुलङ्घ्य पूर्वशेषतया व्याख्यानस्य श्लिष्टत्वादित्याशयेनाह **क्वचिदिति** ॥ **एतामेवेति** । अस्मदुक्तामेव सङ्गतिमित्यर्थः ॥ **आश्रित्येति** । अभिप्रेत्येत्यर्थः । टीकाकारीयस्यान्यथासङ्गतिनिरूपणस्याप्यस्मदुक्तसङ्गत्यभिप्रायकत्वान्न व्याख्यानांशेऽपि तद्विरोध इति भावः ॥ **टीकाकृतेति** । सन्न्यायरत्नावलीकृतेत्यर्थः ।

**स०** — ननु स्वपक्षसाधनेन विना पर्यवस्यन्ती कथा वितण्डेत्युक्तत्वात् वादिनोऽपि स्वपक्षसाधनं नाभिमतमिति शङ्कते **नन्वसंभवीदमिति** ॥ **परपक्षनिराकरणमिति** । न चान्यस्य प्रतिवादिभूतस्य स्थाप्यपक्षस्यैवाभावेन कथं तन्निराकरणमिति वाच्यम् । स्वोक्तप्रमाणदूषणस्यैव परपक्षत्वेनाभिप्रेतत्वात् ।

**प०**— स्वपक्षसाधनेन विना पर्यवस्यन्ती कथा वितण्डेत्युक्तत्वाद्वादिनोऽपि स्वपक्षसाधनं नाभिप्रेतमिति शङ्कते **नन्विति** ॥ **इदं लक्षणमिति** । स्वपक्षसाधनेन विना परपक्षप्रतिक्षेपमात्रेण पर्यवस्यत्कथात्वमित्युक्तलक्षणमित्यर्थः ॥ **न च स्वपक्षसाधनहीनायामिति** । निराश्रयदूषणस्य कर्तुमशक्यत्वादिति भावः ॥ **परपक्षनिराकरणं चेति** । न च परस्य प्रतिवादिभूतस्य सतः स्थाप्यपक्षाभावात्कथं तन्निराकरणमिति वाच्यम् । स्वोक्तप्रमाणदूषणस्यैव परपक्षत्वेनाभिप्रेतत्वात् ॥ **एतामेव सङ्गतिमिति** । वितण्डां लक्षयतीत्यादिनोक्तामित्यर्थः । एतद्यथा स्पष्टं भवति तथा तत्रैव ग्रन्थकारैः व्याख्यास्यते । तथाच स्थलान्तरत्वेन व्याख्यानेऽप्यर्थैक्यान्न विरोध इति भावः ॥ **टीकाकृतेति** । सन्न्यायरत्नावलीकारेणेत्यर्थः ।

**या०**— **नन्वसम्भवीति** । परपक्षदूषणकर्तुः सतो वादित्वभ्रान्त्या शङ्केयम् ॥ **न च स्वपक्षेति** । प्रतिवादिन इति शेषः । तथा चासतः प्रतिवादिनः स्वपक्षसाधनं नास्तीत्युक्तम् । तथा सति सता वादिना किं दूषणीयं निराश्रयस्य दूषणस्य वक्तुमशक्यत्वादिति भावः ॥ **एतामेव सङ्गतिमिति** । अधुना वादजल्पौ वितण्डां च परस्परं विवेचयति उभाभ्यामित्यादिना । वादजल्पौ सतामेव परस्परं योग्यौ । तत्र वादिना स्वपक्षस्थापनं कर्तव्यं, प्रतिपक्षदूषणं च; प्रतिवादिनाऽपि स्वपक्षदूषणोद्धारणं, साधनं च, परपक्षदूषणं, च कर्तव्यम् । वादिनाऽपि स्वपक्षदूषणोद्धारणं कर्तव्यम् । नैतादृशी वितण्डा । तस्याः स्वपक्षसाधनरहितपरपक्षदूषणमात्ररूपत्वात् । एषा तु वैतण्डिका नाम सद्भिः सह अयोग्या । तत्र ह्यसद्भ्‌द्युक्तदूषणस्य सद्वादिभिः दूष्यमाणत्वादित्येवं सन्न्यायरत्नावल्यां टीकाकारेण एतामस्मदुक्तां सङ्गतिमभिप्रेत्य व्याख्यातः इत्यर्थः ।

**श्री०**— सज्जनस्य वादित्वभ्रान्त्या शङ्कते **नन्वसम्भवीति** ॥ **परपक्षेति** । प्रतिवादिभूतेनासज्जनेन क्रियमाणं परस्य वादिभूतस्य सज्जनस्य यः पक्षस्तद्दूषणं वादिपक्षसाधकप्रमाणदूषणेनैव स्यादित्यर्थः । **स्वपक्षेति** । वादिपक्षेत्यर्थः ॥ **तदिति** । स्वपक्षसाधकं प्रमाणमित्यर्थः । तथा चादौ वादिना स्वपक्षसाधकप्रमाणे कथिते तत् प्रतिवादिनाऽसज्जनेन दूष्यम् । न च तत्सम्भवति । 'तत्त्वमेषु निगूहितम्' इत्युक्तत्वेन सज्जनेन वादिना स्वपक्षसाधनाय प्रमाणस्यावक्तव्यत्वेनासतस्तन्निरासायोगादसम्भव इत्यर्थः । **करणीयं** कर्तव्यमित्यर्थः ।

**सु०**— **किञ्च गुरुशिष्यादयोऽसमानविद्या अपि वादेऽधिक्रियन्ते । तत्त्वनिर्णयार्थित्वात् । जल्पवितण्डयोस्तु संभावितसमानविद्ययोरेवाधिकारः । 'ययोरेव समं वित्तं ययोरेव समं श्रुतम् । तयोर्विवाहो वादश्च नोत्तमाधमयोः क्वचिदि'ति स्मरणात् । वादो जल्पवितण्डालक्षणो विवादः । अन्यथाऽत्यन्तापकृष्टोऽप्युत्कृष्टतमेन वैयात्यात् घटमानो यदि वा दैवात्तमभिभावयेत् तदा वृथाख्यातिं लभेत । तथा च प्राश्निकादीनामसुज्ञत्वं प्रत्यवायश्च स्यात् । अपूज्यः पूज्यते यत्रेति वचनात् । एवं च वादाज्जल्पवितण्डयोर्भेदः । नन्वेतदयुक्तम् । परबुद्धेरप्रत्यक्षत्वेन विद्यासाम्यवैषम्ययोर्ज्ञातुमशक्यत्वादिति चेन्न । जल्पवितण्डार्थिनोर्विद्यासाम्यादेः परीक्षया निश्चयोपपत्तेः । तदेतदाह विद्येति ।**

**अनु०**— विद्यापरीक्षापूर्वैव वितण्डा जल्प एव च ।

**विद्यापरीक्षा पूर्वा कारणभूता यस्याः सा तथोक्ता । विद्यापरीक्षया निश्चितसाम्ययो-**

**रेव वितण्डा दातव्या, न विषमविद्ययोः । जल्पश्चैवम् विद्यापरीक्षापूर्व एवेति व्याख्येयम् । द्वितीयैवशब्दो वादव्यावृत्त्यर्थः । समानविद्ययोरेवेत्ययं नियमो न वादेऽस्तीति ।**

**शे०** — भेदकान्तरोपपादानार्थत्वान्नोत्तरग्रन्थवैयर्थ्यमित्यभिप्रेत्य तदुपपादकतयोत्तरग्रन्थं योजयितुमुत्तरत्रोपपादनेन सूचितं वादवितण्डाजल्पयोर्भेदकान्तरमाह **स्मरणादिति** । याज्ञवल्क्यस्मृतेरित्यर्थः । नन्वत्र वाद एव समानविद्ययोरधिकारवचनात्कथं जल्पवितण्डयोः समानविद्याधिकारिकत्वप्रतिपादकतयोपन्यास इत्यतोऽत्र वादशब्दस्य गौण्या वृत्त्या जल्पवितण्डापरत्वान्नानुपपत्तिरित्याह **वाद इति** । तन्निमित्तगुणयोगाभावात्कथं गौणीत्यतो विवादत्वेन जल्पवितण्डयोर्वादसाम्यात्तदुपपत्तेरित्याशयेनोक्तं **विवाद इति** । **अपूज्य इति** । 'पूज्यपूजाव्यतिक्रमः । त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयमि'ति वा, 'पूज्याश्चैवावमानिताः । त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयमि'ति वा वाक्यशेषेणान्वयः । इत्यादीति पाठे आदिपदेनैवोक्तद्विविधवाक्यशेषपरिग्रहः । ननु तथाऽप्युत्तरत्र वितण्डाजल्पयोर्विद्यापरीक्षापूर्वत्वव्युत्पादनमनर्थकम् । न च परीक्षया समानविद्यत्वादिनिश्चयसम्भवोपपादनार्थं तदिति वाच्यम् । तस्योपायान्तरेणापि सम्भवेन तन्निश्चयाय विद्यापरीक्षाऽनपेक्षणादित्यतः शङ्कामुखेनोपायान्तरासम्भवप्रदर्शनपूर्वकं विद्यापरीक्षया तन्निश्चयोपपादकत्वेनोत्तरवाक्यं योजयति **नन्विति** ।

नन्वत्र वितण्डाजल्पयोरेव विद्यापरीक्षाकरणकत्वमुच्यते न तु विद्यासाम्यादेः, तत्कथमस्योक्तार्थसमर्पकतया उपन्यास इत्यतोऽभिप्रायमाह **विद्यापरीक्षेति** । जल्प एव चेत्यत्र चशब्दस्य जल्पशब्देन सम्बन्धं साकाङ्क्षतया विद्यापरीक्षापूर्वैवेत्यस्यानुवृत्तिं योग्यतया लिङ्गव्यत्ययं चाश्रित्योक्ततात्पर्यार्थातिदेशं च सूचयन्व्याचष्टे **जल्पश्चैवं विद्यापरीक्षापूर्व एवेति व्याख्येयमिति** । अत्रैवमिति पूर्वोक्ताभिप्रायातिदेशसूचनम् । विद्यापरीक्षया निश्चितसाम्ययोरेव जल्पो दातव्यो न विषमविद्ययोरित्यभिप्रायः । जल्पश्चैव विद्यापरीक्षापूर्व एवेति पाठे एवचशब्दयोर्भिन्नक्रमतयाऽन्वयं साकांक्षतया विद्यापरीक्षापूर्वैवेत्यस्यानुवृत्तियोग्यतया लिङ्गव्यत्ययं विद्यापरीक्षया निश्चितसमानविद्ययोरेव जल्पो दातव्यो, न विषमविद्ययोरित्युक्ताभिप्रायं च मनसि निधाय व्याचष्टे इत्यवतारो द्रष्टव्यः जल्पश्चेत्येतावता पूर्तेः जल्पश्चैवेत्येवशब्दवैयर्थ्यं वितण्डासमुच्चायकचशब्देन विरुद्धार्थत्वं चेत्याशङ्क्योक्तनियमस्य वादाद्भेदकत्वोपपादनार्थत्वान्नानर्थक्यम् । अनभिमतवादव्यावर्तकत्वेन वितण्डाव्यावर्तकत्वाभावात् न विरोधश्चेति भावेनाह **द्वितीयैवशब्द इति** ॥ **न वादेऽस्तीति** । तत्त्वनिर्णिनीषूणामसमानविद्यानामपि गुरुशिष्यादीनामधिकारदर्शनादिति भावः ।

**स०** — एवं भेदकलक्षणेन कथानां परस्परभेदमुक्त्वा प्रवृत्तिप्रकारभेदेनापि वादाज्जल्पवितण्डयोर्भेदं भाष्यकार उपपादयतीत्याह **किञ्चेति** । ननु गुरुशिष्यादयोऽसमानविद्या अपि वादे

अधिक्रियन्त इत्यनुपपन्नम् । 'तयोर्विवाहो वादश्च' इत्यनेन वादेऽपि समानविद्ययोरेव कर्तृत्वस्योक्तत्वादित्यत आह **वादो जल्प वितण्डालक्षण इति** ॥ **अपूज्य इति** । 'अपूज्यः पूज्यते यत्र पूज्यपूजाव्यतिक्रमः । त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयम्' इति वचनादित्यर्थः । तत्र यथा निग्रहोद्भावनमात्रेणेत्यर्थः ।

ननु वितण्डामुद्दिश्य प्रवृत्तयोः विद्यापरोक्षार्थं वादे दत्ते तत्र च प्रतिवादिनाऽपि स्वपक्षसाधने क्रियमाणे वादिनोऽसतः तत्त्वप्रकाशप्रसक्तेरेवाभावात् (...?...) ।

**प०**— न केवलमुक्तलक्षणैर्वादादिकथात्रयस्य भेदः । किं तर्हि समविद्यत्वनियमरहितकर्तृककथात्वं वादत्वं तन्नियमकर्तृककथात्वं जल्पत्वं वितण्डात्वं चेति वादाज्जल्पवितण्डयोर्भेदमुत्तरमूलवाक्याक्षिप्तं स्वयमाह **किञ्चेति** । गुरुशिष्यादयो असमविद्या अपि वादेऽधिक्रियन्त इत्युक्तमनुपपन्नम् । 'तयोर्विवाहो वादश्चे'त्यनेन वादेऽपि समानविद्ययोरेव कर्तृत्वस्योक्तत्वादित्यतो वादपदस्य वादकथार्थत्वभ्रमनिरासायार्थमाह **वाद इति** । नोत्तमाधमयोरिति कुत उक्तमित्यतस्तत्र युक्तिमाह **अन्यथेति** । प्रत्यवायं व्यनक्ति **अपूज्य इति** । 'अपूज्यः पूज्यते यत्र पूज्यो यत्रावमानितः । त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयम्' इति वचनादित्यर्थः ॥ **इति व्याख्येयमिति** । विपरिणम्य पुलिङ्गतया व्याख्येयमित्यर्थः ।

**या०**— उत्तरं मूलमुत्थापयितुं वादाज्जल्पवितण्डयोर्भेदकान्तरं तावदाह **किञ्चेति** ॥ **अपूज्य इति** । 'अपूज्यः पूज्यते यत्र पूज्यापूज्यव्यतिक्रमः । त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयम्'इति वचनादित्यर्थः ॥

**श्री०— असुज्ञत्वं सुज्ञत्वाभावः** ।

**सु० — ननु जल्पवितण्डार्थिनोर्विद्यासाम्यादिनिश्चयाय कर्तव्या परीक्षा किं कथया, उतान्यथा। नान्यथा। अन्योन्यसङ्घर्षणेन विना तदसिद्धेः। आद्येऽपि किं वादेन जल्पवितण्डाभ्यां वा। न प्रथमः ख्यात्यादिकामयोः स्पर्धावतोर्वादानुपपत्तेः। न द्वितीयः अनवस्थापातादिति चेन्न वादेन तावद्विद्यापरीक्षणस्येष्टत्वादित्याशयवान्वादस्य विद्यापरीक्षायां कार(तत्कार)णत्वमन्वयव्यतिरेकाभ्यां साधयितुमुपोद्घातं तावदाह** उच्चेति।

**अनु०** — उच्चनीचत्वनिर्णीतिर्यतो जयपराजयौ।

**यतो विद्ययोच्चत्वेन निर्णीतत्वमेव जयो नीचत्वेन निर्णीतत्वं च पराजय इत्यर्थः। इति विद्यापरीक्षणं वादेनेति वक्ष्यमाणेनान्वयः।**

**एवमुपयुक्तमभिधाय व्यतिरेकमाह** विनैवेति।

विनैव तत्त्वनिर्णीतिं न हि जल्पादिना क्वचित्॥
उच्चनीचत्वविज्ञानमिति विद्यापरीक्षणम्।

**निर्णीयतेऽनयेति निर्णीतिस्तत्त्वस्य निर्णीतिस्तत्त्वनिर्णीतिर्वाद इति यावत्। तत्त्वनिर्णीतिं विनोच्चनीचत्वविज्ञानं न हीत्येवोक्ते विना वादेनेति वक्ष्यमाणविरोधः स्यात्। अतो जल्पादिनेत्युक्तम्। इतिशब्दस्तस्मादित्यर्थे। विद्यापरीक्षणं वादेनेति वक्ष्यमाणमत्रापि संबध्यते। यद्यपि सत्साधनोपलम्भे जल्पेऽपि भवति वादिनोरुच्चनीचत्वविज्ञानम्। तथाऽपि तदुद्देशेनाप्रवृत्तेस्तादर्थ्यस्य प्रथममनिश्चयान्न तदर्थं जल्पो दातुं शक्यते।**

**शे०** — ननु तथाऽप्युच्चनीचत्वनिर्णीतिरित्युत्तरवाक्यमनर्थकम्। न च जयपराजयस्वरूपनिरूपणार्थत्वान्न तदिति वाच्यम्। तन्निरूपस्यासङ्गतत्वात्। न च वादस्य विद्यापरीक्षायां कारणत्वमन्वयव्यतिरेकाभ्यां साधयितुमुपयुक्तार्थाभिधायकत्वान्नासङ्गतिरिति वाच्यम्। तत्साधनस्याप्यनर्थकत्वात्। न च विद्यापरीक्षासम्भवसमर्थनार्थत्वात्तस्य नानर्थक्यमिति वाच्यम्। तत्समर्थनस्याप्यनर्थकत्वात्। न च तत्सम्भवाक्षेपसमाधानार्थत्वान्न तदानर्थक्यमिति वाच्यम्। निर्बीजत्वेन तदाक्षेपस्यैवानुत्थानेन तस्यासमाधेयत्वात्। न चोपायासम्भवस्यैव तत्र बीजत्वान्न निर्बीजत्वं तस्येति वाच्यम्। कथाभिन्नस्य वा कथारूपस्य वाऽनेकस्य तत्रोपायत्वसम्भवेनोपायाभावस्यासम्भवदुक्तिकत्वेनाक्षेपबीजत्वासम्भवादित्यत उपायासम्भवसमर्थनेन तदाक्षेपशङ्कामुपपादयति **नन्विति**॥ **तदसिद्धेरिति**। परीक्षारूपलिङ्गस्याप्रत्यक्षत्वेन कथामन्तेरणान्योन्यसङ्घर्षणेन विना निश्चेतुमशक्यत्वादित्यर्थः। **वादानुपपत्तेरिति**। तत्रासत्साधनप्रयोगस्यावर्जनीयत्वादिति भावः॥ **अनवस्थेति**। जल्पादिना परीक्षानिश्च-

याभ्युपगमे विद्यापरीक्षानिश्चयोपायस्यापि जल्पादेः सम्भावितसमानविद्याधिकारिकत्वात् तत्समानविद्यतानिश्चयस्य च जल्पादिसाध्यविद्यापरीक्षापूर्वकत्वादनवस्थेति भावः । ननूक्तरीत्योपायाभावात्कथं परीक्षासमर्थनमित्यतो विकल्पितेषु पक्षेषु वादेनेति पक्षं परिगृह्य समाधत्ते **वादेनेति** । तत्पक्षोक्तदोषस्तूत्तरत्र परिहरिष्यत इति भावः । विना वादेनेत्यादिनाऽन्यथेति पक्षस्याप्युत्तरत्र वक्ष्यमाणत्वात्तावदित्युक्तम् । एवं तर्हि वादेन विद्यापरीक्षणस्यैव वक्तव्यतया विनैवेत्याद्युत्तरग्रन्थानर्थक्यमित्यतो वादस्य कारणत्वोपपादकान्वयव्यतिरेकयोरुपदर्शनार्थत्वान्न तद्वैयर्थ्यमिति भावेनोक्तं **वादस्येति** । तथाऽप्युच्चनीचत्वनिर्णीतिरित्युत्तरवाक्यस्य वादस्य विद्यापरीक्षायां कारणत्वानभिधायकत्वाद्विनैवेत्यादेरिव कारणत्वोपपादकत्वाभावाद्वैयर्थ्यमेवेत्यतोऽन्वयव्यतिरेकाभ्यां कारणत्वसाधनोपयुक्तार्थप्रतिपादकत्वेन तदुपोद्घातरूपत्वान्न तस्यापि वैयर्थ्यमित्याशयेन तथैव तद्योजयति **उपोद्घातमिति** । साकाङ्क्षतया प्रसक्तवाक्याभासतां परिहरति **इतीति** । कथमस्योपोद्घातत्वमित्यत उपयुक्ताभिधायकत्वादिति भावेनोक्तम् **उपयुक्तमिति** । तर्हि वादेन विनोच्चनीचत्वनिर्णीत्यभावस्यैवाभिधेयत्वात्तत्त्वनिर्णीतिं विना तदसम्भववर्णनानुपपत्तिः । यस्य कस्यचिद्व्यतिरेकेण कार्यव्यतिरेकस्यापि विवक्षितकारणत्वानापादकत्वात्, अन्यथाऽतिप्रसङ्गादित्यतोऽत्र तत्त्वनिर्णीतिपदस्य वादपरत्वेन वादव्यतिरेकेणैव तदसम्भवप्रतिपादनान्नानुपपत्तिरित्यभिप्रायेण भवेदेवं यदि वादपरत्वं तत्त्वनिर्णीतिपदस्योपपद्येत, तदेव कथमित्यतो योगेन तत्परतामुपपादयति **निर्णीयतेऽनयेत्यादि** । **विरोध इति** । तत्र वादातिरिक्तस्याविगीतविद्वत्प्रसिद्ध्यादिरूपस्यापि विद्यापरीक्षणोपायस्योक्तेरिति भावः ॥ **तस्मादित्यर्थ इति** । यस्मादित्यर्थकहिशब्दश्रवणादिति भावः ।

प० — **उतान्यथेति** । विकल्पिता(तान्त्य)न्यपक्षं शङ्कित्वैव निराह **नान्यथेति** । तत्र हेतुः **अन्योन्य इति** ॥ **वादेन तावदिति** । अन्यथापि परीक्षेति पक्षं 'विना वादेने'त्यत्र वक्ष्याम इति तावच्छब्दः । तत्त्वनिर्णीतिपदोक्तवादं विनेत्यस्य जल्पादिनेति विवरणं किमर्थं कृतमित्यत आह **इति वक्ष्यमाणविरोध इति** । तत्र प्रसिद्ध्याप्युच्चत्वादिविज्ञानस्य वक्ष्यमाणत्वादिति भावः । विद्यापरीक्षणमित्यस्य केनेत्याकाङ्क्षायां उत्तरेणान्वितं वादेनेतिपदं पूर्वत्राप्यन्वेतीत्याह **वादेनेति वक्ष्यमाणमत्रापीति** ।

या० — **वक्ष्यमाणविरोध इति** । तत्र वादं विनाऽविगीतविद्वत्प्रसिद्ध्यादिनाऽपि विद्यापरीक्षणं कर्तुं शक्यमिति वक्ष्यमाणत्वादित्यर्थः ।

श्री०— **सत्साधनोपालम्भे** सत्साधनदूषणवति ॥ **जल्पेऽपीति** । वादकथां विना प्रथमत एव प्रवृत्ते जल्प इत्यर्थः ॥ **विज्ञानमिति** । तथा च न तदर्थं प्रथमं वादोदय इत्यर्थः ॥ **अप्रवृत्तेरिति** । जल्पे ख्यात्यादेरेवोद्देश्यत्वेनोच्चनीचत्वाख्यजयपराजययोरानुषङ्गिकत्वादुच्चनीचत्वोद्देशेनैव जल्पस्याप्रवृत्तिरित्यर्थः । **तादर्थ्यस्य** उच्चनीचत्वविज्ञानार्थं प्रवृत्तत्वस्य । **अनिश्चयात्** जल्पस्येति शेषः । प्रथममित्यस्य तदर्थमित्यनन्तरं सम्बन्धः । ननु यदाऽऽदौ सभ्यादिभिरुच्चनीचत्वादिनिश्चयाय जल्पः कार्य इत्युच्यते तदा तेन जल्पेनोच्चनीचतादिज्ञानं भविष्यतीति चेन्न । परवञ्चनादिसमर्थेनापकृष्टेनाप्युत्कृष्टस्य दैवादपजयसम्भवेन वास्तवोच्चतादिज्ञानं न भविष्यतीत्याशयः ।

**सु०— व्यतिरेकस्यान्यदीयाकारणत्वमात्रनिश्चयहेतुत्वाद्वादस्य कारणतामवधारयितुमन्वयं चाह** वादेनेति ।

**अनु०**— वादेन चोच्चनीचत्वविज्ञानं भवति स्फुटम् ।

**चशब्दोऽन्वयस्य व्यतिरेकेण समुच्चयार्थः । अन्वयव्यतिरेकाभ्यां समर्थितमर्थमुपसंहरति** इतीति ।

इति वादस्य पूर्वत्वं

---

इति तस्माद्वादस्य **पूर्वत्वम्** । **जल्पवितण्डार्थिनोर्विद्यासाम्यादिनिश्चयहेतुपरीक्षार्थं प्रथमानुष्ठेयत्वं सिद्धमित्यर्थः** ।

**एतदुक्तं भवति । समानविद्ययोरेव जल्पवितण्डे । समानविद्यता च परीक्षानिश्चेया । परीक्षा च वादकथया विधेया । न जल्पवितण्डाभ्याम् । जयेन हि विद्याधिक्यं निर्णेतव्यम् । पराजयेन च तन्न्यूनता । जयपराजयौ च प्रमाणतर्काभ्यां प्रकृतप्रमेयसाधनसामर्थ्यासामर्थ्यलक्षणौ उच्चनीचत्वनिर्णयविषयताशब्दवाच्यावेव प्रकृतोपयोगिनौ । तौ च वाद एव संभवतो न जल्पवितण्डयोः । तत्र यत्किञ्चिन्निग्रहोद्भावनमात्रेण जयपराजयव्यवस्थापनात् । अतो जल्पवितण्डार्थं जल्पवितण्डाभ्यर्थनाभावान्नानवस्थेति ।**

**जल्पवितण्डार्थिनोर्विद्यापरीक्षायां वादेन कृतायां किं कार्यम् ? समविद्यत्वसंभावनायां जल्पवितण्डे कर्तव्ये इत्युक्तमेव । विषमविद्यतावधारणायां किं विधेयमित्यपेक्षायामाह** तत्सिद्धाविति ।

तत्सिद्धौ व्यर्थताऽन्ययोः ।

तेन वादेनैव तस्य नीचोच्चभावस्य सिद्धौ सत्यामन्ययोर्जल्पवितण्डयोर्व्यर्थता । ततश्च अकर्तव्यतेत्यर्थः । परीक्षार्थेन वादेनैवोपरम इति ।

जल्पवितण्डार्थिनोर्विद्यापरीक्षार्थं वादकथा प्रथमं दातव्येत्युक्तस्यापवादमाह बहुविद्यत्वेति ।

बहुविद्यत्वसिद्धौ तु नैव वादोऽपि

प्राक् परीक्षातो लोकसंवादादिनाऽन्यतरस्य प्रतियोग्यपेक्षया बहुविद्यत्वसिद्धौ तु वादोऽपि नैव दातव्यः । किन्तु जल्पवितण्डे इति ।

कुत इत्यत आह कारणमिति ।

कारणम् ।

विद्यापरीक्षाया इति शेषः । वाद इत्यनुवर्तते । वादो हि विद्यापरीक्षाकारणमित्येष्टव्यो न तु व्यसनितया । तत्फलं त्वन्यत एव जातमिति किं परीक्षया किं तदङ्गेन वादेनेति ।

शे० — व्यतिरेकमात्रेण कारणत्वसिद्धेरन्वयोपदर्शनमनर्थकमित्यत उक्तम् **व्यतिरेकस्येति** । उच्चनीचत्वेत्यादिवाक्यैर्विशकलिततया प्रतिपादितं प्रमेयं बुद्ध्यारोहाय संगृह्य दर्शयति **एतदुक्तं भवतीति** । तत्र 'उच्चनीचत्वनिर्णीतिर्यतो जयपराजयौ' इत्युक्तस्योक्तामुपोद्घातताम्‌ुपपादयति **जयेन हीति** ॥ **प्रकृतेति** । न शारीरबलादितदभाववत्तया निर्णीतत्वशब्दवाच्यावित्यर्थः । 'न हि जल्पादिने'त्युक्तमुपपादयति **नेति** । 'तत्सिद्धौ व्यर्थता' इत्यनेन समानविद्यत्वावधारणायां विषमविद्यत्वावधारणायां च वादेन सिद्धायां जल्पादेर्वैयर्थ्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय तद्व्यावर्त्यशङ्काप्रदर्शनपूर्वकं विकल्पं मनसि निधाय वाक्यभेदमाश्रित्य व्याचष्टे **जल्पवितण्डार्थिनोरित्यादिना** । समानविद्यत्वसंभावनायामित्यनेन तत्सिद्धावित्येतावन्मात्रं विभिद्यापेक्षिताध्याहारेण योजितं भवति ॥ **उक्तमेवेति** । 'विद्यापरीक्षापूर्वैव वितण्डा जल्प एवचे'त्यनेनेति शेषः ॥ **तत्सिद्धावितीति** । अनेन व्यर्थताऽन्ययोरिति वाक्ये तत्सिद्धावित्यनुवर्तत इत्युक्तं भवति ॥ **तेनेति** । अनेन तत्सिद्धावित्यत्र तत्पदमावर्तते । तत्रैकं तृतीयान्तं, परं षष्ठ्यन्तमित्युक्तं भवति ॥ यद्वा ननु तत्सिद्धौ व्यर्थताऽन्ययोरित्युत्तरवाक्यमनर्थकम् । न च जल्पवितण्डार्थिनोर्विद्यापरीक्षायां वादेन सिद्धायां किं कार्यमित्याकाङ्क्षापूरकत्वान्न तदिति वाच्यम् । किं कार्यमित्याकाङ्क्षायाः समविद्यत्वसिद्धौ किं कार्यमित्यभिप्रायकत्वस्यापि संभवेन तत्राप्यनुत्तरत्वेन तत्पूरकत्वायोगादित्यतोऽत्र संभावितं विकल्पद्वयं मनसि निधायाद्यं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतया मूलं योजयति **जल्पवितण्डार्थिनोरित्यादिना** । अभिप्रायमाह **परीक्षार्थेनेति** । ननु वादेन विना बहुविद्यत्वसिद्धावुपायान्तरस्यैवाभावेनासति तस्मिन्बहुविद्यत्वसिद्धेरेवासंभवात् तत्सिद्धिमभिलषता तदर्थ-

तया वादस्य तत्र दातव्यतायाः स्वीकार्यत्वात्कथं तत्र तस्यादातव्यत्वाभिधानम्, इत्यतोऽविगीतविद्वत्प्रसिद्धेरपि तदुपायत्वेन वादमात्रस्य तत्रोपायत्वाभावान्नोक्तानुपपत्तिरिति भावेनापेक्षिताध्याहारेण तद्योजयति **प्रागिति** । वादोऽपीत्यपिशब्दार्थमाह **किन्त्विति** । तर्हि वादोऽपि नैवेत्येतावतैवोक्तापवादसिद्धेः कारणमित्यनर्थकमित्यतो हेतुसमर्पणार्थत्वान्न तदिति भावेन हेतुपरतया तद्योजयति **कुत इतीति** । कारणमित्येतावता नोक्तशङ्कापरिहार इत्यतोऽपेक्षितपूरणेन वाक्यं योजयति **विद्येति** । अस्तु तर्हि तत्रापि विद्यापरीक्षार्थमेव वादस्य दातव्यतेत्यत आह **तत्फलं त्विति** । विद्यापरीक्षाफलमित्यर्थः ॥ **अन्यत इति** । अविगीतविद्वत्प्रसिद्ध्यादित इत्यर्थः । यत्र परीक्षापेक्षा तत्र वादस्यावश्यकत्वेऽपि यत्र न परीक्षापेक्षा तत्र न वादस्यापेक्षेति कुत इत्यत उक्तम् **तदङ्गेनेति** ।

प० — **व्यतिरेकस्येति** । 'न हि जल्पादिना क्वचिदुच्चनीचत्वविज्ञानमि'त्युक्तव्यतिरेकस्य जल्पादेरुच्चत्वादिविज्ञानं प्रति नियतपूर्ववृत्तित्वरूपकारणतानिरासमात्रपरत्वमेव न तु कदाचित्तज्जनकत्वनिरासपरत्वमपीत्यर्थः । इतीत्यनुवादः, तस्मादिति व्याख्या । नन्वित्यादिना प्रकृतचोद्यस्य कः परिहारोऽनेनोक्त इत्यत आह **एतदुक्तमिति** । 'परीक्षा चे'त्यादिनोक्तं कुत इत्यत उपपादयति **जयेन हीत्यादिना** ।

---

या० — 'उच्चनीचत्वनिर्णीतिर्यतो जयपराजयौ'इत्युक्तस्योक्तामुपोद्घाततामुपपादयति **जयेन हीत्यादिना** ॥ **प्रकृतोपयोगिनाविति** । न शारीरबलतदभाववत्तया निर्णीतत्वशब्दवाच्यावित्यर्थः । न हि जल्पादिना क्वचिदित्युक्तमुपपादयति **न जल्पवितण्डयोरित्यादिना** ॥ **प्रतियोग्यपेक्षयेति** । प्रतिवाद्यपेक्षयेत्यर्थः ।

श्री० — **तत्र** जल्पवितण्डयोः । **वादे** तु नैवम् । यस्मिन्पक्षे निग्रहस्थानादि प्राप्नोति तं पक्षं विहाय पुनः कथा कार्या । तत्त्वनिर्णयावसानत्वाद्वादस्य । नैवं जल्पादौ । एकस्य जयादौ सति कथायाः समाप्यमानत्वात् । तथा च यदि विद्यापरीक्षार्थं जल्पो दीयते तदा वस्तुतोऽपकृष्टो दैवाद्वञ्चयित्वोत्कृष्टमभिभावयेत्तदा विपरीतोच्चतादिप्राप्त्या वादेनैव परीक्षा विधेयेत्यर्थः ॥ **अन्यतरस्येति** । वादिप्रतिवादिनोर्मध्य इत्यर्थः । **प्रतियोगी** प्रतिवादी । **तत्फलं** विद्यापरीक्षाफलमुच्चनीचत्वादिकम् । **अन्यतो** लोकप्रवादादितः ।

सु०— यदुक्तं स्पर्धावतोः ख्यात्यादिकामयोर्वादो न संभवति, तत्रासत्साधनोत्तरप्रयोगस्यावश्यमवर्जनीयत्वात्; ततश्च विद्यासाम्यवैषम्यनिर्णयानुपपत्तेरिति तत्राह सभेति।

अनु०— सभासभापप्राश्नीकपूर्वस्तु स्पर्धिनामपि ॥

वाद एव

प्रश्नशब्दात्करोतीत्यर्थे ईकक्प्रत्ययो वक्तव्यः। स्पर्धिनामिति जातौ बहुवचनम्। एवेत्यस्य युज्यत इत्यध्याहृतेनान्वयः। यतः सभादिपूर्वस्ततः स्पर्धिनामपि वादो युज्यत एवेति। तुशब्दो हेत्वर्थः। सभासभापतिप्राश्निकैर्नियतयोरसत्साधनादिप्रयोगवर्जनसंभवादिति भावः।

शे०— वादस्य सभासभापतिप्राश्निकपूर्वकत्वोपपादनपरोत्तरवाक्यमनर्थकमित्यतो वादेन विद्यापरीक्षणमिति पक्षोक्तदोषपरिहारार्थत्वान्न तदिति भावेन तत्परिहारकतयोत्तरग्रन्थं सङ्गमयितुं तत्पक्षोक्तदोषमुत्थापयति **यदुक्तमिति**। ननु मृदङ्गवादनं शिल्पं कौशलमस्येति मार्दङ्गीक इत्यादौ मृदङ्गवादनादावुपचरितवृत्तेर्मृदङ्गादिशब्दात् 'तदस्य शिल्पमि'त्यस्मिन्नर्थे 'शिल्पमि'ति सूत्रेण ठकि तस्येकादेशे आदिवृद्धौ च मार्दङ्गिक इत्यादिरूपसिद्धिवत्प्रश्नकरणं शिल्पमस्येति प्राश्नीक इत्यत्रापि प्रश्नकरणे उपचरितवृत्तेः प्रश्नशब्दात् शिल्पम्'इत्यनेन ठकि तस्येकादेशे आदिवृद्धौ यस्येति चे'त्यकारलोपे प्राश्निकेति भवितव्यम् तत्कथं भाष्ये प्राश्नीकेति दीर्घ इत्यतोऽभियुक्तप्रयोगसंरक्षणाय तत्र तत्र तद्धिता इति बहुवचनज्ञापितविचित्रतद्धितगत्याश्रयणेनापेक्षितप्रत्ययव्युत्पादनस्य कृतत्वादस्याप्यभियुक्तप्रयोगत्वेन विचित्रतद्धितगत्यैव प्रश्नकरणे उपचरितवृत्तेः प्रश्नशब्दात्तदस्य शिल्पमित्यर्थे ईकक्प्रत्ययेसति प्राश्नीकेति रूपनिष्पत्तिरविकलैवेति सत्येव समाधाने 'उभयोः प्रश्नकर्तृत्वात्प्राश्निका इति कीर्तिताः'इति ब्रह्मतर्कमनुसृत्य करोतीत्यर्थे विचित्रतद्धितगत्या ईकक्प्रत्ययमाश्रित्य समाधत्ते **प्रश्नशब्दादिति**। एषैव दिक् सर्वत्रेति ध्येयम्। वाद एवेत्येवशब्दस्य यथास्थितान्वये वैयर्थ्यं वाद इत्येतावन्मात्रस्य साकाङ्क्षत्वेन वाक्याभासप्रसङ्गश्चेत्यतो युज्यत इत्यध्याहारान्न साकाङ्क्षत्वमध्याहृतान्वितस्य एवशब्दस्य परपक्षप्रतिक्षेपसूचकत्वान्न वैयर्थ्यमपीत्याशयेनाध्याहृतान्वयमाह **एवेत्यस्येति**। सभासभापप्राश्निकपूर्वत्वमुक्तप्रतिज्ञायां हेतुरिति भावेन तथा व्याचष्टे **यत इति**। मूले यत इत्यादेरश्रवणात्कथं हेतुहेतुमद्भावेनान्वय इत्यतस्तुशब्दस्यैव तस्य तत्र हेतुत्वसमर्पकत्वान्नानुपपत्तिरित्याह **तुशब्द इति**। सभादिपूर्वकस्य हेतुत्वप्रतिपादक इत्यर्थः। तावताऽपि कथं वादपक्षोक्तदोषपरिहार इत्यतोऽभिप्रायमाह **सभेति**।

स०— ननु शाब्दिकस्तार्किक इतिवत् करोतीत्यर्थे इकक्प्रत्यये प्राश्निक इति भवितव्यम्। प्राश्नीक इति कथम्। न च 'इक्प्रत्यये तथोपपत्तिरिति वाच्यम्। तद्विधायकाभावादिति चेन्न।

'तद्धिता' इति बहुवचनज्ञापितविचित्रतद्धितगत्या प्रश्नशब्दात्करोतीत्यर्थे ईकक्प्रत्ययव्युत्पादनेन दोषाभावादिति भावेनाह **प्रश्नशब्दादिति** ।

**प०**— ननु प्रश्नशब्दात् ठक्प्रत्यये प्राश्निक इति भाव्यम् । कथं प्राश्नीक इत्युक्तिरत आह ॥ **ईकक्प्रत्ययो वक्तव्य इति** । महाकविप्रयोगादिति भावः ।

**या०**— ननु तार्किकेत्यादिवत्प्रश्नशब्दात्करोत्यर्थे इकप्रत्यये प्राश्निकेति वक्तव्यं प्राश्नीकेति कथमुक्तमित्यत आह **ईकक्प्रत्यय इति** । यद्यप्ययं प्रत्ययो न शास्त्रकारोदितस्तथाऽपि तद्धिता इति बहुवचनसामर्थ्यादयमपि प्रत्ययस्तदभिप्रेत एवेति ज्ञायते । तेन विचित्रा हि तद्धितगतिरिति सूचनादिति भावः ।

**श्री०—प्रश्नशब्दादिति** । तथा च प्रश्नशब्दात्तद्धिते ईकक्प्रत्यये क् इत्यस्य 'हलन्त्यमि'ति लोपे भसंज्ञकस्य श्नकारस्थाकारस्य लोपे कित्त्वात् 'किति चे'ति सूत्रेणादिवृद्धौ प्राश्नीकेति रूपम् । नन्वत्र प्रेत्यत्रत्यरेफस्य ऋवर्णरूपे सम्प्रसारणे सति पृश्नीकेति स्यादिति चेत्। सत्यम्। 'पृच्छतेः सम्प्रसारणाभावो वाच्यः' इति वार्तिकाददोष इत्यवधेयम् ॥ **सभादिपूर्व इति** । सभापतिप्राश्नीकपूर्वकस्तन्नियमित इत्यर्थः ॥ **नियतयोरिति** । सत्साधनदूषणप्रयोग एव कर्तव्य इति सभापतिप्राश्नीकनियतयोर्वादिप्रतिवादिनोरित्यर्थः ।

---

**सु०— यदुक्तं 'तत्सिद्धौ व्यर्थताऽन्ययोरि'ति तदयुक्तम् । वादेन तत्त्वनिर्णयसिद्धावपि अर्थाद्यसिद्धेः । तथा चाभिलषितं न सिद्धम्, सिद्धं चानभिलषितमिति तत्राह** उभयेति ।

**अनु०**—　　उभयार्थः स्यान्निर्णीतिजयकारकः ।

**वाद इत्यनुवर्तते । अस्यैव विवरणं निर्णीतीति । न केवलं निर्णीतिकारकः किन्तु जयकारकश्च । जयशब्देन तत्साध्यमर्थ्यादिकमुपलक्ष्यते । विद्यापरीक्षार्थे वादे जयिनोऽर्थादिकमपि सभापतिना संपादनीयमिति भावः ।**

**शे०**— मूले वादस्योभयार्थत्ववर्णनानर्थक्यमाशङ्क्य 'तत्सिद्धौ व्यर्थताऽन्ययोरि'त्युक्तस्य वैयर्थ्येन जल्पाद्यकर्तव्यत्वस्य वैयर्थ्योपपादनेन समर्थनार्थत्वान्न तदिति भावेन तदुपपादकतया तद्योजयितुं वैयर्थ्यानुपपत्तिशङ्कामुत्थापयति **यदुक्तमिति** ॥ **विवरणमिति** । ततश्च न तद्वैयर्थ्यमिति भावः । निर्णीतिकारकतया वादे सिद्धत्वान्न विधेयत्वमिति तद्विधानानुपपत्तिरित्यतोऽनुवादतया तमंशं योजयति **न केवलमिति** । तथाऽप्यभिलषितमर्थादिकं न सिद्धमिति शङ्काया न परिहार इत्यतो जयशब्दस्य लक्षणयाऽर्थादिपरत्वेन जयमात्रपरत्वाभावाद्युक्तोऽनेन तत्परिहार इत्याह **जयशब्देनेति** । लक्षणाबीज-

भूतशक्यसंबन्धमाह **तत्साध्येति** । ननु वादस्य तत्त्वनिर्णयसाधनत्वोपपत्तावपि कथमर्थादिपरत्वमित्यतः तदुक्तेरभिप्रायमाह **विद्यापरीक्षार्थ इति** ।

**सु०— एवं तर्हि न कदाऽपि** जल्पवितण्डाप्रवृत्तिः 'व्यर्थताऽन्ययोरि'ति **युक्तेः सम(ान)त्वात् । यथा हि विद्यावैषम्यनिर्णये** जितवतोऽर्थादिलाभः, **तथा तत्साम्ये द्वयोरपि अर्थादिलाभः संभवत्येव । न च फलान्तरमस्ति येन पुनर्जल्पवितण्डारम्भः स्यादित्यत आह** तत्त्वाप्रकाश एवेति ।

**अनु०—** तत्त्वाप्रकाश एवैको वितण्डाजल्पयोः फलम् ॥

**तत्त्वाप्रकाश इति परवञ्चनसामर्थ्यमुच्यते । तेन तत्साध्योऽर्थादिलाभो लक्ष्यते । इदमुक्तं भवति । यद्यपि विद्यासाम्यवैषम्ययोर्निर्णीतिजयौ स्यातां तथाऽपि तात्त्विककथाफलरूपावेव । पराच्छादनचातुर्यप्रयुक्तार्थादिलाभार्थं समानविद्ययोः पुनर्जल्पवितण्डाप्रवृत्तिरिति । न चैवं विषमविद्ययोरपि तत्प्रवृत्तिः, उपप्लवप्रसङ्गस्योक्तत्वादिति ।**

**यद्वा तत्त्वनिर्णयफलो** वादः **अर्थादिफले** जल्पवितण्डे, **इति फलभेदेन कथाभेद उक्तः । सोऽनुपपन्नः । तथा सत्यर्थादीनां भेदेन कथाऽऽनन्त्यप्रसङ्गादित्यत आह** तत्त्वेति । **यद्यपि अर्थादयोऽवान्तरभेदभिन्नास्तथाऽपि तत्त्वाप्रकाश एक एव वितण्डाजल्पयोः फलम् । तत्त्वनिर्णयेतरत्वरूपेणार्थादीनामेकत्वान्नोक्तदोषः । तदवान्तरभेदविवक्षा तु व्यर्थैवेति भावः ।**

**शे०—** विद्यापरीक्षापूर्वैवेत्यादिनोक्तस्य विद्यासाम्यनिर्णयजल्पादिकर्तव्यत्वस्य समर्थनार्थत्वान्नोत्तरग्रन्थवैयर्थ्यमित्यभिप्रेत्य प्रापकाभावेन तदाक्षेपस्यैवानुत्थानात्किं समर्थनेनेत्यत आक्षेपहेतुभूतयुक्त्युपन्यासेन तदुपपादयन्नेव तत्समर्थनपरतयोत्तरग्रन्थं योजयति **एवं तर्हीति** ॥ **कदाऽपीति** । समानविद्यत्वनिश्चयदशायामपीत्यर्थः । वैषम्यसिद्धावकर्तव्यता तु तवापि सम्मतेति भावः । विद्यासाम्यनिश्चयदशायां कुतो न तत्प्रवृत्तिरित्यतो विद्यावैषम्यनिश्चये जल्पादेरकर्तव्यत्वसाधकयुक्तिबलादेवेत्याह **व्यर्थतेति** । युक्तेः समतामेवोपपादयति **यथा हीति** ॥ **न चेति** । भावे च तदर्थमेव विषमविद्ययोरपि प्रवृत्तिप्रसक्तेर्व्यर्थताऽन्ययोरिति तदकर्तव्यत्वोक्तिरनुपपन्नेति भावः ॥ **न चेति** । यथा हि विद्यासाम्यनिर्णये तात्त्विककथाफलरूपनिर्णीतिजयसिद्धावपि पराच्छादनचातुर्यप्रयुक्तार्थादिलाभार्थं समानविद्ययोः पुनर्जल्पवितण्डारम्भ इष्यते । तथा वैषम्यनिर्णये जयिनस्तात्त्विककथाफलरूपनिर्णीतिजयसिद्धावपि पराच्छादनचातुर्यप्रयुक्तार्थादिलाभार्थं विषमविद्ययोरपि पुनर्जल्पवितण्डाप्रवृत्त्युपपत्तेस्तद-

कर्तव्यत्वोक्तिरयुक्तेति न च वाच्यमित्यर्थः ॥ **उपप्लवेति** । असुज्ञत्वप्रत्यवायरूपोपप्लवेत्यर्थः ॥ **उक्तत्वादिति** । अत्यन्तापकृष्टोऽप्युत्कृष्टतमेन वैयात्याद्घटमानो यदि दैवात्तमभिभावयेद्यदि वा वृथा ख्यातिं लभेत तदा प्राश्निकानामसुज्ञत्वं प्रत्यवायश्च स्यात् । अपूज्यः पूज्यते यत्रेति वचनादित्यादिनेति शेषः । इतीत्यस्येदमुक्तं भवतीति पूर्वेण सम्बन्धः । उक्तयोजनायां तत्त्वाप्रकाशपदस्य लक्षणप्रसङ्गादेक इत्यस्य चानर्थक्यात्तदुभयस्वारस्याय पक्षान्तरमाह **यद्वेति** ।

स० — **उपप्लवेति** । 'अपूज्यः पूज्यते यत्र' इत्यादिनोक्तत्वादित्यर्थः ।

प० — निर्णीतिजयावित्यत्र निर्णीतिपदस्योच्चत्वनीचत्वनिर्णीतिरित्यर्थः ॥ **उपप्लवेति** । प्राश्निकानामसुज्ञत्वं प्रत्यवायश्च स्यादित्युक्तत्वादित्यर्थः ।

या० — **उपप्लवेति** । प्राश्निकादीनामसुज्ञत्वं प्रत्यवायश्च स्यादित्युक्तत्वादित्यर्थः ।

श्री० — ननु यथा वादेन समविद्यत्वसिद्धौ तत्प्रयुक्तार्थादिलाभेऽपि परवञ्चनादिचातुर्यप्रयुक्तार्थादिलाभाय पुनर्जल्पवितण्डे देये इत्युच्यते तथा पूर्वं वादेन विषमविद्यात्वसिद्ध्या एकस्य बहुविद्यात्वप्रयुक्तार्थादिलाभेऽपि पुनः परवञ्चनादिचातुर्यप्रयुक्तार्थादिलाभार्थं पुनस्तेनापकृष्टेन जल्पादिना घटतामित्यत आह **न चैवमिति** ॥ **उक्तत्वादिति** । यद्यपकृष्टो वस्तुतो विद्ययाऽसमोऽपि परवञ्चनादिकरणे चतुरस्तर्हि तेन घटमान उत्कृष्टो दैवात्तेन पराजितः स्यात्तर्हि जितवतस्त्वपकृष्टस्य द्रव्यादि सभापत्यादिभिर्दापनीयमेव । ततश्च तत्पूजाकरणे 'अपूज्यः पूज्यते यत्र पूज्यो यत्र न पूज्यते । त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयमि'त्यनेन प्रत्यवायस्योक्तत्वान्न तयोः पुनर्जल्पादिरिति भावः ॥ **अर्थादीनां भेदेनेति** हिरण्यवस्त्रपश्वादीनां भेदेनेत्यर्थः ।

सु० — **एवं कथया विद्यापरीक्षणमिति पक्षः समर्थितः । इदानीमन्यथेति पक्षमपि समर्थयमान आह** विनेति ।

अनु० — विना वादेन विद्याया यदि शक्यं परीक्षणम् ॥
स्याज्जल्पादिरपि क्वापि

**अविगीतविद्वत्प्रसिद्ध्यादिनेति शेषः । क्वापीत्यस्य पूर्वार्धेनान्वयः । तदा समविद्ययोः प्रथममपि जल्पादिः कथाविशेषः कार्यः स्यादित्यर्थः । तर्हि विद्यापरीक्षणं वादेनैवेत्युक्तिविरोध इत्यत आह** वाद एवेति ।

वाद एवान्यथा भवेत् ॥

**वाद एव प्रथमं कर्तव्यो भवेदिति यदुक्तं तदन्यथा वादेन विना विद्यापरीक्षणस्य कर्तुमशक्यत्व एवातो न विरोध इति ।**

**अस्त्वेवमुपायान्तरविरहे कथयैव विद्यापरीक्षणम् । सा तु वाद इति कुतः । तत्त्वनिर्णयार्थिनोरधिकारित्वात्तत्फलत्वाच्चेति चेत् (न । एवं) । तर्हि विजिगीषावतोरधिकारित्वादर्थादिफलत्वात्सभाद्यङ्गोपेतत्वाज्जल्पोऽपि स्यादिति ।**

शे० — विना वादेनेत्युत्तरग्रन्थानर्थक्यमाशङ्क्य कथातोऽन्यथा विद्यापरीक्षणमिति द्वितीयपक्षमभ्युपगम्य तत्रोक्तदोषपरिहारार्थत्वान्न वैयर्थ्यमिति भावेन वृत्तानुवादपूर्वकं तथोत्तरग्रन्थं योजयति **एवमिति** । क्वापीत्यनेनाविगीतविद्वत्प्रसिद्ध्यादिना विद्यासाम्यसिद्धावपि जल्पादिरूपः कथाविशेषः क्वचित्कार्यः कश्चिन्नेत्युच्यते, तच्चानुपपन्नम् । उक्तरीत्या विद्यापरीक्षणसिद्धावपि जल्पादेरकर्तव्यतायां नियामकाभावात् । अन्यथा वादेन विद्यापरीक्षासिद्धावपि जल्पादिकथाविशेषस्य क्वाचित्कत्वापातादित्यतो न 'क्वापी'त्यस्योत्तरार्धेऽन्वयेन जल्पादिकथाविशेषस्य क्वाचित्कत्वाभिधायकत्वमभिमतं किन्नाम पूर्वार्धेऽन्वयेनाविगीतविद्वत्प्रसिद्ध्यादिना विद्यापरीक्षणं न सार्वत्रिकं किन्तु क्वाचित्कमेवेति तत्क्वाचित्कत्वाभिधायकत्वमेवेति नानुपपत्तिरिति भावेनाह **क्वापीत्यस्येति** । ननु वादेन विद्यापरीक्षणेऽपि जल्पादेः कार्यत्वाविशेषादविगीतविद्वत्प्रसिद्ध्यादिना तत्परीक्षणे जल्पादिः कार्यः स्यादिति विशिष्याभिधानमनुपपन्नमित्यतो नात्र जल्पादिकथाविशेषस्य कार्यत्वमात्रं प्रतिपाद्यते येनासाधारण्येनोक्तिवैयर्थ्यं स्यात्किन्नाम प्रथमपदाध्याहारेण प्रथमं कार्यत्वं तच्च वादेन विद्यापरीक्षणपक्षे जल्पादेर्नास्तीति विशिष्योक्तिर्युक्तेत्याशयेनाध्याहारेण योजयति **प्रथममपीत्यादिना** । अनेन न केवलं वादेन समानविद्यत्वसिद्धौ सत्यां वादोत्तरं जल्पादेः कार्यत्वं किन्त्वविगीतविद्वत्प्रसिद्ध्यादिना समविद्यत्वसिद्धौ सत्यां प्रथममपि जल्पादिः कार्य इत्यर्थसूचनात्समुच्चेतव्यानुपपत्तिप्रयुक्ततद्वैयर्थ्यशङ्का निरस्ता भवति ॥ **तर्हीति** । यद्यपि वादेनैव विद्यापरीक्षणमित्युक्तिरेव नास्तीति न तद्विरोधिशङ्कावकाशस्तथाऽप्यन्वयव्यतिरेकवर्णनेन सिद्धस्यार्थस्यायमनुवाद इति ध्येयम् । ननु जल्प इत्यपीत्युत्तरवाक्यमनर्थकम् । न च विद्यापरीक्षार्थकथाया वादत्वसमर्थनार्थं तदिति वाच्यम् । तत्रानुपपत्तेरभावेन तत्समर्थनस्यैवाकर्तव्यत्वात् । न च जल्पत्वप्रसङ्ग एव तत्र बाधक इति वाच्यम् । प्रसञ्जकाभावेन तदप्रसक्त्या तस्य बाधकत्वायोगादित्यतस्तत्प्रसङ्गनिवर्तकतयोत्तरवाक्यं योजयितुं प्रसञ्जकप्रदर्शनेन तत्प्रसङ्गशङ्कामुत्थापयति **अस्त्वेवमिति** ।

**प०** — जल्पादिरित्यस्य पुलिङ्गनिर्वाहायाह **कथाविशेष इति** । शङ्कते **अस्त्वेवमित्यादिना जल्पोऽपि स्यादितीत्यन्तेन** ।

**श्री०** — **विजिगीषावतोः** वस्तुगत्येति शेषः ।

सु० — किमत्र जल्पशब्दवाच्यतामात्रमापाद्यते, किंवा वादशब्दवाच्यताऽभावः, अथवा समाहाररूपं कथान्तरं यद्वा निमित्तद्वयसमावेशे वादशब्दस्यैव व्यवहारानुपपत्तिः । सर्वत्राप्युत्तरमाह जल्प इति ।

अनु० — जल्प इत्यपि नाम स्याद्वादस्यैतादृशस्य तु ॥

एतादृशस्य निमित्तद्वयोपेतस्यात्र जल्प इति नाम स्यादित्यभ्युपगमेनाद्यो निरस्तः । अपिशब्देन वादशब्दवाच्यतां प्रतिज्ञायै तादृशस्येत्यनेन हेतुरुक्तः । तेन द्वितीयोऽपि निराकृतः । न हि निमित्तसद्भावे वाचकाप्रवृत्तिरिति युक्तम् । जल्पशब्देऽपि साम्यात् । अतस्तुलायां प्रमाणप्रमेयशब्दवदुभयशब्दवाच्यत्वमिति । तृतीयोऽप्यनेनैव निराकृतः । अन्यथा तुलाऽपि प्रमाणादितो विधान्तरवती स्यात् । वादस्य जल्प इत्यपि नाम स्यादिति वादसंज्ञा तु मुख्या जल्पसंज्ञा त्वमुख्येति सूचितम् । तेन चतुर्थोऽपि निरस्तः । तत्र हेतुविशेषसद्भावं तुशब्देन द्योतयति ।

तथा हि यद्यपि कथकावादितो विजिगीषू तथाऽपि सभ्यादिभिर्विजिगीषां परिभाव्योत्पादिता तत्त्वनिर्णयार्थितैव कथोपयोगिनी । अर्थादिलाभश्चान्तरा प्राप्तो न त्वादित एवोद्दिष्ट इत्यमुख्य एव । अत एव पूर्वं उभयार्थः स्यादित्युक्ते साम्यप्रतीतिप्रसक्तौ निर्णीतिजयकारक इति तत्त्वनिर्णीतेः प्राधान्यप्रदर्शनार्थं विवरणं कृतम् । अन्यथा कथाफलद्वयस्यैवोभयशब्देन प्रतीतेर्विवरणं व्यर्थं स्यात् । अल्पाच्तरमिति लक्षणस्य व्यभिचारं कुर्वाणेनाप्येतदेव सूचितम् । अन्यथा जयनिर्णीतिकारक इत्यवक्ष्यत् । सभ्यादिसंवरणं च विजिगीषुतापरिभवार्थमिति वादताप्राधान्यमेवोपोद्बलयतीति ।

शे० — ननु जल्प इति नाम स्यादित्येतावतैव जल्पत्वप्रसङ्गस्येष्टापादनत्वोक्त्या तत्प्रसङ्गनिराससिद्धेरितरांशस्य वैयर्थ्यम् । न च वादत्वोपपादनार्थं तदिति वाच्यम् । जल्पत्वप्रसङ्गनिरासावसरे तस्याकर्तव्यत्वादित्यतो जल्पत्वं स्यादित्यस्य जल्पत्वापादन इव वादत्वं न स्यादित्यत्रापि तात्पर्यसम्भवान्न वादत्वोपपादनानर्थक्यमिति भावेन जल्पत्वं स्यादिति शङ्कावाक्यात्सम्भावितताया प्रसक्तसकलपक्षनिरासकतयोत्तरवाक्यं सङ्गमयितुं तन्निवर्त्यान् सम्भाविततया शङ्कावाक्यात्प्रसक्तान्विकल्पान्दर्शयति किमत्रेति ॥ समाहारेति । वादजल्पसमाहारेत्यर्थः ॥ निमित्तद्वयेति ॥ वादजल्पशब्दप्रवृत्तिनिमित्तद्वयेत्यर्थः । अत्रैतादृशस्येत्यस्य जल्पशब्दप्रवृत्तिनिमित्तोपेतत्वार्थकत्वे अपिशब्दसमुच्चितवादशब्दस्य वाच्यतायां हेत्वनुक्तिप्रसङ्गाद्वादशब्दप्रवृत्तिनिमित्तोपेतत्वार्थत्वे च जल्पशब्दप्रवृत्तिनिमित्तवत्त्वानु-

पादानेन तदापादनत्वासिद्धिप्रसङ्गान्नान्यतरमात्रार्थत्वं तस्य युक्तमित्याशयेनोभयपरतया तद्व्याचष्टे **एता दृशस्येति** । ननु कथमस्य पक्षचतुष्टयनिरासकत्वमित्यतोऽशभेदेनेत्यभिप्रेत्य तद्भेदेन तन्निरासप्रकारं दर्शयति **अत्रेति ॥ हेतुरिति** । वादशब्दप्रवृत्तिनिमित्तसद्भावरूप इत्यर्थः ॥ **तेनेति** । वादशब्द-वाच्यत्वं प्रतिज्ञाय तच्छब्दप्रवृत्तिनिमित्तसद्भावरूपहेतुकथनेनेत्यर्थः ॥ **निरस्त इति** । वादशब्दा-वाच्यत्वं न स्यादित्येवंरूपस्येति भावः । ननु वादशब्दप्रवृत्तिनिमित्तसद्भावेऽपि तच्छब्दवाच्यत्वं माऽस्तु विपक्षे बाधकाभावादित्यप्रयोजकत्वमाशङ्क्य तदुक्तन्यायेन जल्पशब्दप्रवृत्तिनिमित्तसद्भावस्यापि तच्छब्दावाच्यत्वेऽप्युपपत्त्याऽप्रयोजकत्वप्रसङ्गाज्जल्पशब्दवाच्यत्वसिद्धिरपि न स्यात् । तत्र निरुपाधिक-सहचारादेरेव विपक्षे बाधकत्वाभिप्राये च प्रकृतेऽपि तस्यैव बाधकत्वान्नाप्रयोजकत्वमित्याशयेनाह **न हीति ॥ अत इति** । प्रवृत्तिनिमित्तद्वयसद्भावादित्यर्थः । निमित्तद्वयसद्भावसमावेशेन संज्ञाद्वय-समावेशे न्यायसूत्रोक्तं दृष्टान्तमाह **तुलायां प्रमाणप्रमेयशब्दवदिति** । यदा हि तुलान्तरेण तत्प्रामाण्यं निश्चीयते तदा प्रमेयम् । यदा पुनः सुवर्णगुरुत्वं प्रमापयति तदा प्रमाणमिति निमित्तद्वय-समावेशाद्यथा तुलायाः प्रमाणप्रमेयशब्दवाच्यत्वमित्यर्थः । एतच्च 'प्रमेया च तुला प्रामाण्यवदि'ति न्यायसूत्रभाष्यादौ स्पष्टम् ॥ **तृतीयोऽपीति** । समाहाररूपकथान्तरमिति तृतीयोऽपीत्यर्थः ॥ **अनेनैवेति** । निमित्तद्वयसमावेशस्य तदुभयशब्दवाच्यत्वमात्रप्रापकतया चरितार्थत्ववर्णनेनेत्यर्थः ॥ **निरस्त इति** । अन्यथासिद्धनिमित्तद्वयसमावेशस्य कथान्तरानापादकत्वादिति भावः ॥ **अन्यथेति** । निमित्त-द्वयसमावेशस्य तदुभयशब्दवाच्यत्वमात्रप्रापकतया चरितार्थत्वमनभ्युपगम्य वादजल्पसमाहाररूप-कथान्तरापादकत्व इत्यर्थः ॥ **तुलाऽपीति** । तत्रापि निमित्तद्वयसमावेशस्य प्रमाणप्रमेयशब्दवाच्यत्व मात्रप्रापकतयाऽचरितार्थताया वक्तुं शक्यत्वान्निमित्तद्वयसमावेशेन तुला प्रमाणप्रमेयरूपविधान्तरं स्यादिति भावः । न चैवं योगरूढिसमाहारोऽपि विधान्तरं न स्यादिति वाच्यम् । तत्र परस्परसापेक्षतया विशिष्टार्थबोधनरूपप्रयोजनकत्वेन विधान्तरत्वेऽपि तुलायाः प्रमाणत्वप्रमेयत्वयोः परस्परनिरपेक्षत्वेन विलक्षणप्रयोजनद्वयसम्पादकतया विधान्तरत्वकल्पकाभावात् । अन्यथाऽसिद्धबाधसमाहारस्यापि दोषा-न्तरत्वं स्यादित्यवधेयम् । तथाऽन्यत्र चतुर्थपक्षनिरासकं न किमप्यस्तीति कथमनेन तन्निरास इत्यतो वादस्येत्येतदेव तन्निरासकमिति भावेन तद्योजनाप्रदर्शनपूर्वकं तत्सूचितमर्थमाह **वादस्येति ॥ सूचित-मिति** । अन्यथा जल्प इत्यपि नाम स्यादेतादृशस्येत्येतावता पूर्तेस्तद्वैयर्थ्यं स्यादिति भावः । मूले तुशब्दानर्थक्यमाशङ्क्य निमित्तद्वयसमावेशे कुतो वादसंज्ञाया मुख्यत्वमिति शङ्कानिरसाय तन्मुख्यत्वे अपेक्षितहेतुविशेषसद्भावद्योतनार्थत्वान्न तदिति भावेन तथा योजयति **तत्रेति** । अनेन मूले तुशब्दो विशेषार्थ इत्युक्तं भवति ।

तुशब्दद्योतितं विशेषसद्भावमेव दर्शयति **तथा हीति** । अर्थादिलाभस्यामुख्यतायां हेतुमाह **अत एवेति** । तस्यामुख्यत्वादेवेत्यर्थः ॥ **अन्यथेति** । न च न विवरणमात्रेण निर्णीतिः प्राधान्यज्ञापनमुपपद्यते । नियामकाभावात् । अन्यथा तत एव जयस्यापि तत्प्रसङ्गादिति वाच्यम् । प्राथम्येन तद्विवरणस्यात्राभिमतत्वेनानतिप्रसङ्गात् । ननु न प्रथमनिर्देशमात्रं प्राधान्यद्योतकमतिप्रसङ्गात् । किन्नाम द्वितीयतया निर्देष्टव्यस्यैव प्रथमं निर्देशः । न चात्र तथाऽस्तीति न प्रथमनिर्देशेन तत्त्वनिर्णयस्य प्राधान्यसिद्धिरित्यतो निमित्तान्तरमाह **अल्पाच्तरमिति लक्षणस्येति** ॥ **अन्यथेति** । पटुगुप्तावित्यत्र 'द्वन्द्वे घी'त्यस्य ईशकृष्णावित्यत्र चाजाद्यदन्तमित्यस्य सावकाशत्वादिन्द्राग्नी इत्यत्र तदुभयप्रसङ्गे विप्रतिषेधे परमिति न्यायेनाजाद्यदन्तेन्द्रशब्दस्य पूर्वनिपातेऽप्यजाद्यदन्तमित्यस्य पूर्वोक्ते अल्पाच्तरमित्यस्य प्लक्षन्यग्रोधावित्यत्र सावकाशत्वात् वागिन्द्रावित्यत्र तयुभयप्रसङ्गे विप्रतिषेधे परमिति न्यायेनाल्पाचतरस्य वाक्शब्दस्य पूर्वनिपातदर्शनेनाल्पाच्तरशास्त्रस्य तदुभयबाधकत्वस्थित्या निर्णीतिजयकारक इत्यत्राजाद्यदन्तमित्यस्याप्रसङ्गात् द्वन्द्वे घीत्यस्य प्रसङ्गेऽपि परत्वेनाल्पाच्तरमित्यस्य तद्बाधकत्वात् जयनिर्णीतिकारक इत्येवावक्ष्यदित्यर्थः । इदं चाल्पाच्तरमित्यस्य नित्यत्वमभिप्रेत्योक्तम् । वस्तुतो लक्षणहेत्वोः क्रियायाः समुद्राभ्राद्ध इत्यादिषु यथायथं व्यभिचारं कुर्वता सूत्रकृतैवैतत्प्रकरणस्यानित्यत्वज्ञापनादल्पाच्तरमित्यस्यानित्यताया एवाकरे स्थितत्वात् । अल्पाच्तरमित्यस्यानित्यत्वात् शकुनिसूत्रयोरिति साध्विति वदता टीकाकृताऽपि तदनित्यत्वस्यैवाङ्गीकृतत्वाच्चेति द्रष्टव्यम् । अत एवापरितोषान्निमित्तान्तरमाह **सभ्यादिसंवरणं चेति** । वादत्वे सभादिसंवरणानर्थक्यमाशङ्क्य विजिगीषुतापरिभवार्थं तदिति प्रतिपादकतया 'सभासभापप्राश्निकपूर्वस्तु स्पर्धिनामपी'त्यादिना ग्रन्थेनाचार्यास्तत्त्वनिर्णीतिः प्राधान्यमेवोपोद्बलयन्तीत्यर्थः । क्वचिद्वादताप्राधान्यमेवोपोद्बलयन्तीति पाठः। तत्र सभ्यादिसंवरणं वादतायाः प्राधान्यमेवोपोद्बलयतीति सम्बन्धः । कथं सभ्यादिसंवरणस्य तदुपोद्बलकत्वमित्यत उक्तं **विजिगीषुतापरिभवार्थमितीति** । इतिशब्दो हेतौ । विजिगीषुतापरिभवार्थत्वात्तस्येत्यर्थः । जल्पताया अपि प्राधान्ये विजिगीषुतापरिभवार्थं सभ्यादिसंवरणानर्थक्यं स्यादिति भावः ।

स० —**तुलाऽपीति** । प्रमाणप्रमेयरूपविधान्तरं स्यादित्यर्थः । न चैवं योगरूढिसमाहारोऽपि विधान्तरं न स्यादिति वाच्यम् । तत्र परस्परसापेक्षयोः योग-रूढ्योः विशिष्टार्थबोधकत्वेन विधान्तरत्वेऽपि तुलायाः प्रमाणत्वप्रमेयत्वयोः परस्परनिरपेक्षत्वेन तत्समाहाररूपविधान्तरस्यानङ्गीकर्तव्यत्वात् । अन्यथा असिद्धिबाधसमाहारस्यापि तथात्वापत्तिरिति भावः । **अन्यथेति** । न च विवरणेन न तत्त्वनिर्णीतेरेव प्राधान्यज्ञापनमुपपन्नम् जयस्यापि तथा संभावयितुं शक्यत्वादिति वाच्यम् । प्राथम्येन तद्वचनस्यात्राभिमतत्वेन तल्लाभसंभवादिति भावः । **सभ्यादिसंवरणं चेति** । सभ्यादि-

संवरणं च वादतायाः प्राधान्यमेवोपोद्बलयतीति संबन्धः । **कथं तस्य तदुपोद्बलकत्वमित्यत उक्तम् विजिगीषुतापरिभवार्थमिति** ।

प० — **हेतुरुक्त इति** । वादपदवाच्यत्वे निमित्तसत्त्वरूपहेतुरुक्त इत्यर्थः ॥ **अन्यथा तुलापीति** । प्रमाणप्रमेयसमाहाररूपपदार्थः स्यादित्यर्थः । योगरूढेर्विधांतरत्वप्रकारस्तु प्रागेवानुमानिकपादे तर्कतांडवे च व्यक्तः । अत एवैतत्प्रतिबन्द्या न तत्र विधांतराभावः शंक्यः ॥ **तेन चतुर्थोपीति** । वादसंज्ञाया मुख्यत्वकथनेन वादशब्दस्यैव व्यवहारानुपपत्तिरिति पक्षो निरस्त इत्यर्थः । मुख्यस्यैव व्यवहर्तव्यत्वादिति भावः ॥ **तत्रेति** । वादशब्दस्य मुख्यसंज्ञात्वे जल्पशब्दस्यामुख्यत्वे-चेत्यर्थः ।

या० — **अन्यथा तुलाऽपीति** । न चैवं योगरूढिसमाहारोऽपि विधान्तरं न स्यादिति वाच्यम् । तत्र परस्परसापेक्षतया विशिष्टार्थबोधनरूपैकप्रयोजनकत्वेन विधान्तरत्वेऽपि तुलायाः प्रमाणप्रमेयत्वयोः परस्परनिरपेक्षत्वेन विलक्षणप्रयोजनद्वयसम्पादकतया विधान्तरत्वकल्पकाभावात् । अन्यथा असिद्धिबाधसमाहारस्यापि तथात्वापत्तेरिति भावः । **तेन चतुर्थोऽपीति** । मुख्यस्यैव व्यवहर्तव्यत्वादिति भावः ॥ **तत्रेति** । वादसंज्ञाया मुख्यत्व इत्यर्थः ।

---

श्री० — **अन्यथा तुलापीति** । प्रमाणप्रमेयसंशयप्रयोजनेत्यादिरूपेण परिगणनापत्तेरित्यर्थः । यद्यप्यत्र प्रत्यक्षादेरपि प्रमाणत्वात्प्रमेयत्वाच्च तदुदाहरणं कर्तव्यं तथाऽप्येतादृशे वादे जल्पतासद्भावेऽपि तद्व्यवहाराभावस्य विवक्षितत्वेन तुलायां प्रमाणत्वसद्भावेऽपि तद्व्यवहाराभावेन तादृशस्यैवोदाहर्तव्यत्वात् । न हि प्रत्यक्षादि तादृशमित्याशयः । नन्वत्र योगरूढिवत्तत्त्वनिर्णयार्थित्वविजिगीषुत्वादिरूपनिमित्तद्वयोपेतं समाहाररूपं कथान्तरं किन्न स्यादिति चेन्न **वैषम्यादिति** । तत्र योगरूढयोः परस्परं सापेक्षताऽस्ति । न ह्यत्रैवमस्ति । अन्यथाऽसिद्धिबाधसमाहारोऽप्यपरो हेत्वाभासः स्यादित्युक्तम् ॥ **वादसंज्ञा मुख्येति** । वादस्य जल्प इत्यपि नाम स्यादिति वादस्यादितो निर्देशेनेत्यर्थः ॥ **एतेनेति** । वादसंज्ञाया एव मुख्यत्वेन मुख्यस्यैव व्यवहर्तव्यत्वादिति भावः ॥ **मुख्येति** । **बाह्यस्येति** वादस्यादितो निर्देशेनेत्यर्थः । **अत एव** तत्त्वनिर्णयस्य मुख्यफलत्वादेव । सभ्यादिसंवरणं च वादप्राधान्यमेवोपोद्बलयतीत्यन्वयः । किमर्थमित्यतस्तत्र हेतुः **विजिगीषुतापरिभवार्थमिति** । **वादता** तत्त्वनिर्णयार्थित्वरूपं वादशब्दप्रवृत्तिनिमित्तं, तत्प्राधान्यमित्यर्थः । सभ्यादयो विजिगीषुतां परिभाव्य यतस्तत्त्वनिर्णयार्थितामुत्पादयन्ति ततस्तदेव प्रधानमिति भावः ।

सु० — अपि चाधिकारिभेदादिकं बहिरङ्गतयैव कथाभेदकम् । अन्तरङ्गं तु प्रवृत्तिप्रकार एव । स च वादसंबन्ध्येवास्यां कथायामस्तीत्यतो वादत्वमेव मुख्यमित्याशयवानाह प्रतिज्ञेति ।

अनु० — प्रतिज्ञामात्रसाध्यत्वमपि स्याद्याज्ञवल्क्यवत् ॥

विद्यापरीक्षार्थायां कथायां क्वापि प्रमेये प्रतिज्ञामात्रेण प्रमाणोपन्यासरहितेन वचनेन साध्यत्वं प्रज्ञापनीयं स्यात् । कुत एतत् । कत्येव देवा याज्ञवल्क्येति शाकल्येन पृष्टे, (याज्ञवल्क्येन) त्रयस्त्रिंशदिति वचनमात्रेण प्रज्ञापनस्य कृतत्वात् । सा च विद्यापरीक्षार्था कथेत्युपक्रमपर्यालोचनया सिद्धम् । याज्ञवल्क्यशब्देन तत्कथोपलक्ष्यते । सप्तम्यर्थे वतिः । ततः किमित्यत आह संवाद इति ।

संवादे वादिनोः क्वापि

एवम्भावो हि वादिप्रतिवादिनोः संवादेऽन्योन्याप्तताऽऽश्वासे सत्येव स्यात् तदाश्वासो हि वाद एव संभवति न जल्पे । विजिगीषुणाऽपसिद्धान्तादिपरिहारेण सर्वथा प्रमाणप्रश्नस्य कर्तव्यत्वात् । तेनायं वाद एवेति (प्रति)ज्ञायत इति ।

नन्वेवं तर्हि न विद्यापरीक्षा संभवति । प्रमाणोपन्यासे हि तत्समर्थनोपालम्भाभ्यां सा स्यात् । न तु प्रश्नप्रतिज्ञाभ्युपगममात्रेणेत्यत आह विवाद इति ।

विवादे हेतुरिष्यते ॥

हेतुरिति प्रमाणमात्रोपलक्षणम् । प्रमाहेतुरिति वा । न ह्येकत्राप्तः सर्वत्राप्त एवेति नियमोऽस्तीति भावः । याज्ञवल्क्येनापि तत्र तत्र प्रमाणोपन्यासः कृत एवेति सकलमनाकुलम् ।

शे० — ननु प्रतिज्ञामात्रेत्याद्युत्तरग्रन्थानर्थक्यम् । न च वादसंबन्धिप्रवृत्तिप्रकारवत्तां विप्रतिपन्नकथाया उपदर्शयितुं तदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न च वादत्वस्य मुख्यतासिद्ध्यर्थं तदिति वाच्यम् । तत्त्वनिर्णिनीष्वधिकारिकत्वेन तत्त्वनिर्णयफलकत्वेन च तस्य सिद्धत्वेन तत्सिद्ध्यर्थत्वायोगात् । न च वादस्यैव मुख्यतासिद्ध्यर्थमेतदिति वाच्यम् । तस्यापि पूर्वोक्तहेतुनैव सिद्धत्वात् । न च प्रकारान्तरेण तदुपपादनार्थत्वादस्यार्थवत्त्वमिति वाच्यम् । भेदकत्वाविशेषे अस्यैव मुख्यभेदकत्वायोगादित्यतोऽसत्यस्मिन्नधिकारिभेदादेरतिप्रसङ्गित्वादिना भेदकत्वाभावेन तस्य बहिरङ्गत्वात्प्रवृत्तिप्रकारभेदस्य च स्वरूपभेदकत्वेनान्तरङ्गत्वादविशेषासिद्ध्या युक्तमस्य तत्साधकत्वमित्याशयवान् तत्परतयोत्तरग्रन्थं योजयति अपि चेति । अनेन मूलेऽपिशब्दः प्रकारान्तरसमुच्चयार्थ इत्युक्तं भवति ॥

**क्वापि प्रमेय इति** । इदं च योग्यतयोत्तरवाक्यस्थस्यापि क्वापीत्यस्य पूर्ववाक्य एवान्वय इत्यभिप्रेत्यानूद्य व्याख्यानमिति ध्येयम् ॥ **उपक्रमेति** । 'जनको ह वैदेहो बहुदक्षिणेन यज्ञेन ईजे । तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुः । तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतमः' इत्युपक्रमपर्यालोचनयेत्यर्थः । तर्हि याज्ञवल्क्यकथावदित्येव भाष्ये वक्तव्यम् । याज्ञवल्क्यवदिति तु कथमुक्तमित्यतोऽत्र याज्ञवल्क्यशब्देन कथाग्रहणान्नानुपपत्तिरिति भावेन रूढ्यादेरभावात्कथं तच्छब्देन तद्ग्रहणमित्यतो मुख्यवृत्त्या तस्य तत्परत्वाभावेऽपि लक्षणया तत्परत्वमुपपन्नमित्याह **याज्ञवल्क्यशब्देनेति** । लक्षणाबीजभूतशक्यसंबन्धमुपदर्शयति **तत्कथेति** । तथाऽपि विद्यापरीक्षार्थायां कथायामिति कथं सप्तमीलाभ इत्यतो दृष्टान्तबलादेवेति भावेन दृष्टान्ते सप्तम्यर्थविवक्षायां ज्ञापकमाह **सप्तम्यर्थ इति** । तत्र तस्येवेति स्मरणादिति भावः ॥ **ततः किमित्यत इति** । प्रमाणरहितवचनमात्रेण प्रमेयविशेषस्य प्रज्ञापनीयताया वादादन्यत्रापि संभवान्नानेन वादत्वस्यैव सिद्धिरिति भावः ॥ **एवम्भाव इति** । प्रतिज्ञामात्रसाध्यत्वमित्यर्थः । ननु कथायामेकस्य वादित्वादपरस्य च प्रतिवादित्वान्न तत्र वादिद्वयमस्तीति कथं वादिनोरिति द्विवचनमित्यतोऽत्र वदेते तौ वादिनाविति वादिशब्दस्य योगेन वादिप्रतिवादिपरत्वेन प्रसिद्धवादिपरत्वाभावान्नानुपपत्तिरित्यभिप्रेत्य व्याचष्टे **वादिप्रतिवादिनोरिति** ॥ **अपसिद्धान्तादिपरिहारेणेति** । क्लृप्तप्रश्नदोषभूतापसिद्धान्तादिदोषचतुष्टयपरिहारेण, प्रश्नदोषप्रसक्त्या यथा प्रश्नस्याभासत्वं न स्यात्तथा, प्रमाणप्रश्नोऽवश्यं कर्तव्य इत्यर्थः । तत्र हेतुमाह **विजिगीषुणेति** । अन्यथा प्रश्नदोषैः स्वस्यैव पराजयप्राप्त्याऽपेक्षितविजयालाभप्रसङ्गादिति भावः । केचित्तु नन्रूच्यमानदशाग्राह्यापसिद्धान्ताद्युद्भावनेन परोक्तखण्डनसंभवात्कथं विजिगीषोःप्रमाणप्रश्नकर्तव्यत्वावधारणमित्यतो यत्रोच्यमानग्राह्यमपसिद्धान्तादिकं लभ्यते । तत्र तस्यैवोद्भाव्यत्वमभिमतम् । न तु प्रमाणप्रश्नस्य कर्तव्यता । यत्र त्वपसिद्धान्तादेः परिहारो यथा भवति तथा वादिनोच्यते तत्र तत एवोच्यमानग्राह्यापसिद्धान्ताद्यप्रसक्त्या तदुद्भावनेन परखण्डनस्य कर्तुमशक्यत्वात्तत्र परोक्तखण्डनार्थं प्रमाणप्रश्नस्य कर्तव्यत्वमभिप्रेयत इत्यतो नानुपपत्तिरित्याशयेनोक्तमपसिद्धान्तादिपरिहारेणेतीत्याहुः ।

**एवं तर्हीति** । प्रमाणरहितवचनमात्रस्यापि प्रज्ञापकत्व इत्यर्थः । प्रमाणप्रश्ने सर्वत्र प्रमाणविशेषहेतुवचननियमः प्रतीयते । स चानुपपन्नः । यत्किञ्चित्प्रमाणोपन्यासेनापि प्रमाणप्रश्नपरिहारोपपत्त्या तन्नियमस्य निर्निबन्धनत्वादित्यतोऽत्र प्रमाणविशेषवाचकहेतुशब्दस्य लक्षणया प्रमाणसामान्यपरत्वात्तद्वक्तव्यतानियमपरत्वेन हेतुरूपप्रमाणविशेषवक्तव्यतानियमपरत्वाभावान्नानुपपत्तिरित्याह **हेतुरिति** । सामान्यविशेषभाव एव लक्षणाबीजभूतः शक्यसम्बन्ध इति भावः । अस्मिन्पक्षे हेतुशब्दस्य लाक्षणिकत्वं परिकल्पनीयं भवतीत्यपरितोषात्पक्षान्तरमाह **प्रमाहेतुरिति वेति** । तथा च मूले **हेतु-**

शब्दो न प्रमाणविशेषपरः किन्तु कारणपरः योग्यतया च प्रमायाः सम्बन्ध इत्युक्तं भवति । ननु विद्यापरीक्षार्थकथायां वादिप्रतिवादिनोरन्योन्यं क्वचिदाप्ततासमाश्वासेन तत एव सर्वत्राप्ततासमाश्वासान्न तत्र प्रमाणोपन्यासस्यावसर इत्यत आह **न हीति** । कथं तर्हि याज्ञवल्क्यकथायां प्रमाणरहितवचनमात्रेणैव विप्रतिपन्नप्रमेयसिद्धिरित्यतो यत्र विषये याज्ञवल्क्यस्याप्ततावधारणं तत्र तद्वचनमात्रेणार्थसिद्धावपि यत्र न तदवधारणं तत्र तद्वचनमात्रेण प्रमेयासिद्ध्या हेतूक्तेरङ्गीकारान्नोक्तनियमानुपपत्तिरित्याह **याज्ञवल्क्येनापीति** ॥ **तत्र तत्रेति** । 'अपानेन हि गन्धान्विजानाति । तं हीदं सर्वमाददाना यन्ति तस्मादादित्या इती'त्यादिनेति शेषः ॥ **सकलमिति** । क्वचिदाप्ततासमाश्वासात्तद्वचनमात्रेणार्थसिद्धावपि यत्र न तत्समाश्वासस्तत्र तत्प्रमाणोपन्यासतत्समर्थनोपालम्भस्वीकारेण प्रश्नप्रतिज्ञाभ्युपगममात्रानङ्गीकाराद्वादकथया विद्यापरीक्षणमित्येतत्सकलमित्यर्थः ।

**स० — एवंभाव इति** । प्रतिज्ञामात्रेणार्थज्ञापनप्रकार इत्यर्थः । **अपसिद्धान्तादिपरिहारेणेति** । विश्वमसदिति परेणोक्ते उच्यमानग्राह्यापसिद्धान्तादिदूषणालाभे किमत्र प्रमाणमिति प्रश्नः कार्यः । तल्लाभे तावतैव दुष्टत्वान्न प्रमाणप्रश्नः इति भावः । **सर्वथेति** । वादव्यावृत्त्यर्थः । तत्रापि विप्रतिपन्नप्रमेयविषये कर्तव्यत्वात्प्रश्नस्येति भावः । **हेतुरितीति** । न च पूर्वं (प्रमाण)विशेषपरस्य हेतुशब्दस्य सामान्ये लक्षणा, द्वितीयपक्षे सामान्यवाचकस्य विशेषे लक्षणेति उभयत्रापि लक्षणया अविशेषात् न पक्षयोर्भेद इति वाच्यम् । लक्षणाप्रकारभेदमात्रकथनार्थं पक्षद्वयोक्तिरित्यदोषः । **तत्र तत्रेति** । 'अपानेन हि गन्धान्विजानाती'त्यादिनेति शेषः ।

**प० — उत्तरवाक्यमवतारयति अपि चेति** । आदिपदेन फलभेदग्रहः ॥ **कत्येवेति** । बृहदारण्यके पञ्चमेऽध्याये नवमे शाकल्यब्राह्मणे शाकल्यप्रश्नस्य याज्ञवल्क्येनोत्तरे दत्ते कुत इति प्रमाणप्रश्नमकृत्वा ओमितिहोवाचेत्यङ्गीकारश्रवणादिति भावः ॥ **उपक्रमेति** । जनको ह वैदेह इति अध्यायादिभागे 'तस्य जनकस्य वैदेहस्य विजिज्ञासा बभूव कःस्विदेषां ब्राह्मणानामनूचानतम इति । स ह गवां सहस्रमवरुरोधे'त्यादिना स्वनि(कटमा)केतनमागतानामृषीणां मध्ये को वा अत्यन्तं ज्ञानीति निर्णेतुं गोसहस्रं स्थापयित्वा भवतां मध्ये यो ब्रह्मज्ञानितमः इमाः गाः स गृह्णात्विति जनकेनोक्ते याज्ञवल्क्येन च तद्गोसहस्रे नीते सति कुपितैरन्यैः कथमस्माकं मध्ये भवान् ब्रह्मनिष्ठ इत्युक्त्वाऽऽश्वलादिभिः कृतप्रश्ने धूत्तरितेषु याज्ञवल्क्यस्योच्चत्वनिर्णयात्सा कथा परीक्षार्थेति ज्ञायत इत्यर्थः ॥ **सप्तम्यर्थे वतिरिति** । याज्ञवल्क्यकथायामिवेत्यर्थः । 'तत्र तस्यैवे'त्यनेन वतिरिति भावः ॥ **एवंभाव इति** । प्रतिज्ञामात्रेण

साध्यस्य प्रज्ञापनीयत्वमित्यर्थः ॥ **अपसिद्धान्तादिपरिहारेणेति** । अपसिद्धान्तमानबाधमानाभावादि-दोषमादावनुक्त्वा प्रमाणप्रश्नस्य कर्तव्यत्वादित्यर्थः । अपसिद्धान्तादावादावेवोद्भाविते सति परेण पश्चा-त्प्रमाणोपन्यासे कृते स्वस्य पराजयस्यैव प्राप्तेरिति भावः । स्वस्यापसिद्धान्तादिपरिहारार्थमित्यर्थः । अस्य वाक्यस्य प्रमाणप्रश्नाकरणे तत्प्रमेयाङ्गीकारप्राप्त्या स्वस्यापसिद्धान्तसंवादादिदोषप्राप्तेरित्यप्याहुः ॥ **याज्ञवल्क्येनापि तत्र तत्रेति** । अत्रैव शाकल्यब्राह्मणे 'तेषु हीदं वसु सर्वं हितं तस्मात्तद्वसव' इत्यादि-रूपेण प्रमाणस्योक्तत्वादिति भावः ।

**या० — उपक्रमपर्यालोचनयेति** । 'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपा-ञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणा-नामनूचानतम इति । स ह गवां सहस्रमवरुरोध । दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः । तान्होवाच । ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति । ते ह ब्राह्मणा न दधृषुरथ याज्ञवल्क्यः स्वयमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सामश्रवा इति । ता होदाचकार । ते ह ब्राह्मणा-श्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रवीतेति । अथ ह जनकस्य वैदेहस्य होताऽऽश्वलो बभूव स हैनं पप्रच्छ । त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसीति । स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इति । तं ह तत एव प्रष्टुं दध्रे होताऽऽश्वल' इत्युपक्रमपर्यालोचनयेत्यर्थः ॥ **अपसिद्धान्तादिपरि-हारेणेति** । अपसिद्धान्तादिपरिहारेण निमित्तेनेत्यर्थः । तदर्थमिति यावत् । अन्यथा प्रमाणप्रश्नाभावे तत्पक्षाङ्गीकारप्राप्त्याऽपसिद्धान्तापत्तिरिति भावः । यद्वा ननूच्यमानदशाग्राह्यमपसिद्धान्तादिकमेव कस्मान्नोद्भाव्यते किं प्रमाणप्रश्नेनेत्यत उक्तमपसिद्धान्तादीति । अपसिद्धान्तादेः परिहारो यथा स्यात्तथा वादिनोक्तत्वेनेत्यर्थः । तथा च तदलाभेन प्रमाणप्रश्न एव कर्तव्य इति भावः । नन्वाप्तोक्ते कथं प्रमाणप्रश्न इत्यत आह **न ह्यत्रेति** । ननु तर्हि कथं याज्ञवल्क्येन सर्वत्र प्रतिज्ञामात्रमुक्तमित्यत आह **याज्ञवल्क्येनापीति** । तेषु हीदं वसु सर्वं हितमिति तस्माद्वसवः । यदाऽस्माच्छरीरान्मर्त्या उत्क्रामन्त्यथ रोदयन्ति । तद्यद्रोदयन्ति तस्माद्रुद्रा इति । ते हीदं सर्वमाददाना यन्ति तस्मादादित्या इत्यादिना तत्र तत्र प्रमेये प्रमाणोपन्यासोऽपि क्वचित्कृत एवेत्यर्थः ।

**श्री० — अस्यां** विद्यापरिक्षार्थायाम् ॥ **सप्तम्यर्थ इति** । तत्तत्कथायामिवेत्यर्थः ॥ **अभ्यु-पगममात्रेणेति** । प्रमाणोपन्यासस्तु नास्तीति भावः ।

सु०— प्रकृतानां सभ्यसभापतिप्राश्निकानां स्वरूपजिज्ञासायामाह सभेति ।

अनु०— सभा सभापतिश्चैव प्राश्निकाश्चैव वैष्णवाः ॥
रागद्वेषविहीनाश्च

(द्वौ) चशब्दौ सभा(भ्या)दीनामन्योन्यसमुच्चये। तृतीयो विशेषणसमुच्चये। एवशब्दौ तु वैष्णवा एव रागद्वेषविहीना एवेति संबध्येते। अन्यथा कथाऽनुपपत्तिसूचनं तत्प्रयोजनम्। स्युरिति वक्ष्यमाणमिहापि (मत्रापि) संबध्यते।

सभ्यानां प्राश्निकानां च विशेषणान्तरमाह स्युरिति।

स्युः सभ्याः सर्ववेदिनः ॥

प्राश्निकाश्च

सर्वशब्देन वादिप्रतिवादिदर्शनस्य कथोपयुक्तस्य व्याकरणादेश्च संग्रहः। पुनः सभ्य-प्राश्निकग्रहणं सभापतिव्यवच्छेदार्थम्। तत्सार्वज्ञस्य कथोपयोगाभावात्। सभ्याः प्राश्निकाश्च सर्ववेदिनः स्युरित्यन्वयः।

ननु प्राश्निकानां क्वोपयोगः। विवदमानयोर्गुणदोषावधारणादाविति ब्रूमः। एवं तर्हि तैरेवालं किं सभ्यैरित्यत आह एतदिति।

एतदज्ञाने सभ्याश्च

अनन्तरोक्तान्प्राश्निकान् एतच्छब्देन परामृशति। क्वचित्सूक्ष्मे प्रमेये एतेषां प्राश्निकानां

एषां च दूरगाः ॥

प्रमाणं निर्णयाय स्युः

कारणान्तराद्वाऽज्ञाने सति वादिनोर्गुणदोषनिर्णयाय सभ्याश्च प्रमाणं स्युरिति वक्ष्यमाणे-नान्वयः। प्रमाणाश्रयेषु प्रमाणत्वोपचारः।

यद्येवं प्राश्निकेष्वज्ञानशङ्कया सभ्यानां वरणम्, तदा तेष्वप्यज्ञानशङ्कयाऽन्येऽपि वर-णीयाः। अन्यथा निर्णयाभावेन कथावैयर्थ्यापत्तेः। तेष्वप्येवमित्यत आह एषां चेति।

एषां सभ्यानां चाज्ञाने सति दूरगा देशान्तरस्थाः। न चैवं सभ्यसंवरणमप्यनर्थकम्। ततःपरं प्रायेणाज्ञानशङ्कानुदयात्। लौकिकश्चायमर्थ इति।

दूरगान्निर्णायकत्वसंभवाय विशिनष्टि पक्षेति।

पक्षपातविवर्जिताः।

एकदेशोत्कीर्तनेन यथोक्तं सभ्यादिलक्षणमतिदिशति।

शे० — सभ्यादिस्वरूपनिरूपणार्थत्वान्नोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य तत्स्वरूपनिरूपणेऽसङ्गतिं परिहरति **प्रकृतानामिति** । 'सभासभापप्राश्नीकपूर्वस्त्वि'त्यादिनेति शेषः **विशेषणेति** । वैष्णवत्वरागद्वेषविहीनत्वरूपविशेषणद्वयेत्यर्थः । एवशब्दद्वयस्य यथास्थितस्य वैयर्थ्याद्विरुद्धार्थत्वाच्च भिन्नक्रमतया सम्बन्धं दर्शयति **एवशब्दौ त्विति** । तत्र किं तत्प्रयोजनमित्यत आह **अन्यथेति** । विष्णुभक्त्याद्यभाव इत्यर्थः ॥ **कथाऽनुपपत्तीति** । कथाविशेषव्यवस्थापनानुपपत्तिसूचनमित्यर्थः । उपलक्षणं चैतत् । पूर्वोत्तरवादावस्थापनानुपपत्तिसूचनमित्यपि द्रष्टव्यम् । अयमाशयः । प्राश्निकैर्हि कथकयोः सदसद्भावं विविच्य सतोर्जल्पः, सदसतोर्वितण्डा दातव्या । तत्राप्यसतः स्वपरपक्षसाधनदूषणलक्षणं वादित्वं सतस्तु परपक्षप्रतिक्षेपलक्षणं प्रतिवादित्वं व्यवस्थापनीयम् । असतो जये सत्युदासितव्यम् । सतो जये च सम्पूर्णसन्मानाय घटनीयम् । न चैते कथाविशेषव्यवस्थापनादयो गुणास्तेषां विष्णुभक्तिं विना सम्भवन्तीत्यतो वैष्णवत्वमावश्यकं । रागित्वेऽसन्तमपि पक्षं सन्तं वदेयुः, द्वेषित्वे सन्तमप्यसन्तं वदेयुरिति प्राश्निकादीनां तद्राहित्यस्य कथोपयोगित्वमिति । ननु वैष्णवा रागद्वेषविहीना इति न तावदनुवादः । विष्णुभक्तिरागादिराहित्ययोः प्रकारान्तरेणाप्राप्ततया तदयोगात् । नापि विधिः । विष्णुभक्त्यादेर्विधेयताज्ञापकशब्दाभावेन तस्याप्ययोगात् । न च स्युरिति शब्द एव तत्र ज्ञापक इति वाच्यम् । तस्याकाङ्क्षायोग्यतासन्निधिबलात्सर्ववेदिन इत्युत्तरेणान्विततया तन्मात्रविधेयतासमर्पकत्वात् । उक्तरीत्या रागद्वेषविहीना इत्यनेनान्वयाभ्युपगमे च तन्मात्रस्य विधेयत्वसमर्पकत्वात् 'मध्ये दीपिका'न्यायेनोभयत्रापि सम्बन्धे तदुभयविधेयत्वसमर्पकत्वेऽपि वैष्णवा इत्यनेन व्यवहितत्वात्तदन्वयानुपपत्त्या तद्विधेयत्वासमर्पकत्वादित्यतः सन्निधेरन्वयाप्रयोजकत्वादाकाङ्क्षायोग्यतयोरेव च तत्प्रयोजकत्वाद्व्यवहितेनापि वैष्णवा इत्यनेनाकाङ्क्षायोग्यताभ्यामन्वयसम्भवात्तद्विधेयत्वसमर्पकताऽप्यप्रत्यूहैवेत्याशयेनाह **स्युरितीति** । सर्ववेदिन इत्यत्र सर्वशब्दो नासङ्कुचितवृत्तिरसम्भवप्रसङ्गात् । नापि सङ्कुचितवृत्तिरवच्छेदकाभावेनातिप्रसङ्गापातादित्यतो द्वितीयपक्षमेवाभ्युपगम्य तत्रोक्तदोषपरिहारायावच्छेदकमाह **सर्वशब्देनेति** ॥ **वादिप्रतिवादीति** । तदज्ञत्वेऽपसिद्धान्तोद्भावने निर्णयो न स्यादिति भावः । व्याकरणादीत्यादिपदेनाभिधानादिसंग्रहः । अपशब्दप्रयोगे वादिनोश्च साधुत्वादिविप्रतिपत्तौ प्राश्निकादीनां तदनभिज्ञत्वेऽनिर्णयप्रसक्तेरिति भावः ।

नन्वत्र सभ्यानां सर्ववेदित्वं प्राश्निकत्वं चोच्यते, तत्कथं 'सभ्यानां प्राश्निकानां च विशेषणान्तरमाहे'ति मूलावतारः; इत्यतो नात्र यथाश्रुतैव वचनव्यक्तिः, किन्त्वन्यथैव इत्यतो युक्तस्तथावतार इत्यभिप्रेत्य तामाह **सभ्याः प्राश्निकाश्चेति** ॥ वाद इव जल्पवितण्डयोरपि वादिप्रतिवादिभ्यामेव कथाविशेषव्यवस्थापनादेः कर्तुं शक्यत्वान्न प्राश्निकानां तत्रोपयोग इत्यभिप्रायेणाक्षिपति **नन्विति** । वादे वादि-

प्रतिवादिनोर्वीतरागयोरुक्तकर्मकारित्वसम्भवेऽपि जल्पादौ वादिप्रतिवादिनोराग्रहगृहीतत्वेन स्वयमेवोक्त-कर्मकरणाशक्तेरुक्तकर्मकरणाय तेषामावश्यकतेत्यभिप्रेत्य समाधत्ते **विवदमानयोरिति** । आदिपदेन भग्नप्रतिबोधनादिसंग्रहः ॥ **तैरेवालमिति** । कथकगुणदोषाद्यवधारणस्य प्राश्निकैरेव सिद्धेस्तदतिरिक्तस्य च तत्कर्तव्यस्याभावादिति भावः । उभयोरपि प्रकृतत्वादेतच्छब्देनोभयपरामर्शभ्रान्तिं प्राश्निकपरामर्शे हेतुं वदन्नेव परिहरति **अनन्तरेति** ॥ **कारणान्तराद्वेति** । प्रमेयसूक्ष्मत्वरूपोक्तकारणापेक्षया कारणा-न्तरादित्यर्थः । पूर्वोक्तकारणापेक्षया वाशब्दः ॥ **निर्णयायेति** । कथकगुणदोषनिर्धारणाभावे कथावैयर्थ्यप्रसङ्गादिति भावः ॥ **प्रमाणत्वोपचार इति** । प्रमितितत्साधनयोरेव मुख्यप्रमाणत्वात्प्राश्नि-कानां च तदभावादिति भावः ॥ **तेष्वप्येवमिति** । तथा चानवस्थेति भावः । तर्हि दूरगानां वरणानर्थक्यमित्यतो यत्र सभ्येषु नाज्ञानशङ्का तत्र तद्वरणानभ्युपगमाद्यत्र च तेषु अज्ञानशङ्का तत्रैव गुणदोषावधारणाय तद्वरणोपपत्तेरिति भावेन प्रायेणेत्युक्तम् । तर्हि तेष्वप्येवमित्यनवस्थेत्यत आह **लौकिकश्चेति** ॥ **एकदेशोत्कीर्तनेनेति** । पक्षपातविवर्जितत्वस्य वैष्णवत्वरागद्वेषविवर्जितत्वादिरूपो-क्तलक्षणैकदेशभूतरागद्वेषराहित्यरूपत्वादिति भावः ॥ **लक्षणमिति** । वैष्णवत्वरागद्वेषविवर्जितत्वादि-रूपमित्यर्थः ।

**स०— सभेतीति** । सभाशब्देन समुदायो ग्राह्यः । **स्युरिति वक्ष्यमाणमिति** । ननु च स्युरित्यस्य पूर्ववाक्यान्वितत्वस्यैव संभवात् उत्तरवाक्यान्वितत्वमभ्युपगम्य ततोऽनुवृत्त्यस्वारस्यात् पूर्वस्यैवोत्तरत्रानुवृत्तेः स्वारस्येन इच्छयाऽपि तदुक्तेरयोगादिति चेन्न । पूर्ववाक्यस्य स्वरूपजिज्ञासायां (सया) प्रवृत्तत्वेन उत्तरवाक्यस्य च तत्र विशेषणान्तरप्रदर्शकत्वेन तत्रैव स्युरित्यस्यावश्यकत्वात् तदनु-सारेणेयमुक्तिरिति द्रष्टव्यम् । **सभ्यादिलक्षणमिति** । तच्च कथालक्षणे स्पष्टम् ।

**प०** — पूर्वत्रोत्तरत्र च मूलस्थसभाशब्दः सभ्यपर इति भावेनोक्तं **प्रकृतानां सभ्येत्यादि** ॥ **तृतीय इति** । विहीनाश्चेति चकार इत्यर्थः । **तत्प्रयोजनं** एवशब्दप्रयोजनम् ॥ **इहापीति** । वैष्णवाः रागद्वेषविहीनाश्चेत्युभयत्रापीत्यर्थः । सूक्ष्मप्रमेय इत्यत्र सूक्ष्मेतिहेतुगर्भम् । तेन कारणान्तरा-द्वेति वाशब्दोपपत्तिः भ्रमप्रमादानवधानादिकारणान्तराद्वेत्यर्थः । अधिकरणे प्रमाणपदे ल्युटोऽनुशासनं नेति कारणादाह **प्रमाणाश्रयेष्विति** ॥ **लौकिकश्चेति** । लौकिका हि वित्तक्षेत्रादौ विवादनिर्णये केनचिदुक्ते तत्रानाश्वासे पुनरन्यान्पृच्छंति तत्रापि तथात्वे पुनर्दूरस्थानिति प्रसिद्धमेवेत्यर्थः ॥ **एक-देशेति** । प्रागुक्तरागद्वेषराहित्यादिविशेषणमध्ये कस्मिंश्चिद्रागेणान्यत्र द्वेषेण च प्राप्तपक्षपातरूपैकदेशो-त्कीर्तनेन प्रागुक्तं सर्वविशेषणमतिदिशतीत्यर्थः ।

या॰— **सभ्यसभापतीति** । इदं च मूले सभापदं सभ्यपरमित्यभिप्रेत्येति ज्ञेयम् ॥ **वक्ष्यमाणमिति** । यद्यपि स्युरित्यस्य पूर्ववाक्यान्विततयाऽपि प्रतीयमानत्वात्तस्योत्तरवाक्यान्वितत्वमभ्युपगम्य ततोऽनुवृत्त्यपेक्षया पूर्ववाक्यान्वितत्वमभ्युपेत्योत्तरत्रानुवृत्तिरेव स्वरसेति, सैव वक्तव्या । तथाऽपि तस्योत्तरवाक्येन सहैकपादस्थत्वेन सन्निधिमाश्रित्योत्तरत्रान्वयमङ्गीकृत्य पूर्वत्राकर्षणं कृतमिति ध्येयम् ॥ **कारणान्तरादिति** । प्रमेयस्य सूक्ष्मतया दुर्ज्ञेयत्वमेकं कारणम् । कारणान्तरं च मनोऽनवधानादिकमिति ज्ञातव्यम ॥ **लौकिक इति** । लोके हि कस्मिंश्चिदर्थे सन्दिग्धे सुज्ञं पृच्छति । तत्र निर्णयाभावे सुज्ञतरम् । तत्राप्यनिर्णये सुज्ञतमम् । ततःपरं च न शङ्कोदय इति प्रसिद्धमित्यर्थः ॥ **एकदेशेति** । पक्षपातविवर्जिता इत्यनेन रागद्वेषवर्जितत्वरूपोक्तलक्षणैकदेशस्योत्कीर्तनादिति भावः ।

**सु॰— अप्रकाश्य स्वसिद्धान्तमिति वितण्डालक्षणमुक्तम् । तत्कथं वादजल्पाभ्यां व्यावर्तकमित्यत** आह उभाभ्यामिति ।

**अनु॰**— उभाभ्यां साधनं चैव दूषणं वादजल्पयोः ॥

**वादजल्पयोरुभाभ्यामेव स्वपक्षसाधनं परपक्षदूषणं कर्तव्यं, न तु प्रतिवादिनः परपक्षदूषणमात्रेण कृतार्थतेति ॥**

---

**सतामेवेति सार्धश्लोकस्यात्र सन्निवेशे तु, लक्षितौ** वादजल्पौ । **इदानीं तु वितण्डाया लक्षणद्वयं विवक्षुस्तावदुपयुक्तमाह** उभाभ्यामिति । **कथा** वादजल्पलक्षणा । **एतेन जल्पोऽर्थादिव्यपेक्षयेत्युक्तस्य वितण्डायामतिव्याप्तिरपि परिहृता । उभयसाधनवत्त्वेन सदेकाधिकारिकत्वेन वाऽर्थादिव्यपेक्षकथाया विशेषितत्वात् ॥ यदर्थं सतामेवेत्युक्तं तद्वितण्डालक्षणमाह** वितण्डा त्विति । **कथेत्यनुवर्तते ॥ उभाभ्यामिति यदर्थमुक्तं तल्लक्षणान्तरमाह** अप्रकाश्येति । **उक्ते तैरिति पूर्ववदिति ।**

**शे॰— न त्विति** । वितण्डायामिवेति शेषः । सतामेव कथेत्यस्यापि वितण्डालक्षणोपयुक्तार्थाभिधायकत्वसिद्ध्यर्थं कथाशब्दं व्याचष्टे **कथेति** ॥ **अतिव्याप्तिरपीति** । अनेन वितण्डाया लक्षणद्वयं विवक्षुस्तदुपयुक्तं वदजल्पलक्षणस्यातिव्याप्तिं प्रकारद्वयेन परिहरतीति वाक्यमवतरणीयमित्युक्तं भवति । परिहारप्रकारमेव विशदयति **उभयेति** ॥ **यदर्थमिति** । यद्वितण्डालक्षणार्थमित्यर्थः ॥ **पूर्ववदिति** । सतामेवेत्यादिसार्धश्लोकस्य पूर्वत्र सन्निवेशे यथा 'उक्ते तैरि'त्येतदवतारिकातात्पर्यनिरूपणाभ्यां व्याख्यातं तथैवात्रापि सन्निवेशेऽवतारिकातात्पर्यनिरूपणाभ्यां व्याख्येयमित्यर्थः ।

**स॰— पूर्ववदिति** । व्याख्येयमिति शेषः ।

प० — **एतेनेति** । उभाभ्यां साधनं चेति सतामेवेति व्यावर्तककथनेनेत्यर्थः । न केवलं लक्षणोक्त्युपोद्घातकथनमित्यर्थः । **यदर्थं** यल्लक्षणोक्त्यर्थम् । यदर्थ(यद्यावर्थ,)मुक्तमित्यपि प्राग्वत् ॥ **उक्ते तैरिति पूर्ववदिति** । 'उक्ते तैः प्रथमं माने' इत्यर्धस्य नन्वसंभवीदं लक्षणमित्यादिना यद्व्याख्यानं कृतं तदेव ध्येयमित्यर्थः ।

या० — **यदर्थमिति** । यद्वितण्डालक्षणार्थमित्यर्थः ।

सु० — **उभाभ्यां साधनमित्याद्युक्तम्** । तत्र साधनाय किं प्रमाणं **प्रयोक्तव्यम्** । **यत्र यदस्ति तत्र तदेव (किं) वक्तव्यम्** । **सत्यम्** । **प्रमाणसम्प्लवे तु कथम्** । **किं सर्वमेवोतैकमेव तत्रापि किमित्यपेक्षायामाह** सद्भिरिति ।

**अनु०** — सद्भिरागम एवैकः प्रयोज्योऽभीष्टसाधकः ॥

**एक एव, न तु संभवत्सर्वमाधिक्यप्रसङ्गात्** । **स चागम एवेति योज्यम्** । **यद्वैकशब्दो मुख्यार्थः** । **ईश्वरादिप्रमेये मुख्यो वेदादिरागम एव वक्तव्यः (तस्य स्वातन्त्र्येण साध्यसिद्ध्यङ्गत्वात्) नानुमानमिति** । **नन्ववैदिकस्य वेदाद्यागमोपादानेऽपसिद्धान्तः स्यादित्यत उक्तं** सद्भिरिति । **कुतो वेदादिप्रयोगनियम इत्यत आह** अभीष्टेति । **यत इति शेषः** । **अनुमानं खलु न स्वातन्त्र्येणेश्वरादिसाधनस्येष्टे** । **सर्वत्रोपाधिप्रतिपक्षयोः संभवात्** । **तदर्थमन्ततोऽप्यागमोऽनुसरणीयः** । **ततो वरं प्रथममेव (आगमो) वक्तव्यः** । **तस्य स्वातन्त्र्येण साध्यसिद्ध्यङ्गत्वात्** । **नन्ववैदिकं प्रति कथम्** । **आगमं प्रयुज्य तत्प्रामाण्यं साधनीयमिति** ।

शे० - **किं प्रमाणमिति** । किं प्रत्यक्षमनुमानमागमो वा । नाद्यः । केवलानुमानविषये केवलशब्दविषये वा तदनवकाशात् । न द्वितीयः । चक्षुराद्येकप्रमाणके केवलसाक्षिविषये केवलशब्दविषये वा तदनवकाशात् । नान्त्यः । केवलप्रत्यक्षविषये केवलानुमानविषये वा तदनवकाशादिति भावः । केवलानुमानशब्दविषये प्रत्यक्षस्य, चक्षुराद्येकप्रमाणकेऽनुमानस्य, केवलप्रत्यक्षानुमानविषये च शब्दस्यानवकाशेऽपि चक्षुराद्येकप्रमाणके चक्षुरादेरेव, केवलानुमानविषये चानुमानस्यैव, केवलशब्दविषये च शब्दस्यैव, प्रमाणतयोपन्यासे नानुपपत्तिरित्याशयेन परिहरति **यत्र यदस्ति तत्र तदेव वक्तव्यमिति** । क्वचित्तत्र तदेवेत्यतः परं किं वक्तव्यमिति पाठः । **तत्र** यत्र यदस्ति तत्र तदेवेत्यस्मिन्नर्थे, **वक्तव्यं किमस्ति** न किमपीति योजना द्रष्टव्या । शङ्कते **सत्यमिति** । तत्र सर्वस्यापि सत्त्वादिति भावः ॥ **तत्रापीति** । किमनुमानं वक्तव्यं किंवाऽऽगम इत्यर्थः ॥ न तावत्सर्वमेवेति पक्षः, आधिक्यप्रसङ्गात् । न द्वितीयः, तस्य स्वातन्त्र्येणार्थसाधकत्वाभावात् । नान्त्यः । अवैदिकं प्रति तदुपन्यासायोगादिति गूढाभिसन्धेरिमे विकल्पा

ज्ञेयाः । किं सर्वमिति प्राग्विकल्पितपक्षनिरासस्य मूलारूढतासिद्ध्यर्थमेवशब्दस्यैकशब्देनान्वयमभिप्रेत्य तत्प्रदर्शनपूर्वकं सयुक्तिकं तद्व्यावर्त्यादि दर्शयति **एक एवेत्यादिना** ॥ **तत्रापि किमिति** । किमनुमानमागमो वेत्यभिप्रायकपक्षयोरागमस्वीकारस्य मूलारूढतायै एवशब्दस्य यथाश्रुतसम्बन्धमभ्युपेत्यापि योजयति **स चेति** । एवमुभयत्रैवशब्दसम्बन्धकल्पनाक्लेशं मनसि निधाय तत्रापि किमिति विकल्पितपक्षद्वयान्यतरमात्रपक्षपरिग्रहपरतया कारिकां व्याचष्टे **यद्वेति** । तर्ह्यागम एवेत्येतावतैव तत्परिहारेणागमपक्षपरिग्रहसिद्धेरेकशब्दस्य वैयर्थ्यमित्यतो दुरागमपरिहारेणागमस्य वक्तव्यत्वे मुख्यत्वरूपहेतुसूचकत्वान्न तस्य वैयर्थ्यमित्याशयेनैकशब्दं मुख्यार्थतया व्याचष्टे **एकशब्द इति** । 'एके मुख्यान्यकेवलाः' इत्यमरोक्तेरिति भावः । मुख्यत्वं चात्र स्वातन्त्र्येणार्थसाधकत्वमित्याकर एवोत्तरत्र स्पष्टम् ॥ **कुतो वेदादिप्रयोगनियम इति** । क्षित्यादिकं सकर्तृकं कार्यत्वादित्याद्यनुमानस्यापीश्वरादिप्रमेयसाधनत्वसम्भवान्नोक्तनियमो युक्त इति भावः । अभीष्टसाधक इत्यस्योक्तप्रतिज्ञायां हेतुसमर्पकत्वलाभायापेक्षितं पूरयति **यत इति शेष इति** ॥ **साधनस्येष्ट इति** । 'अधीगर्थदयेशां कर्मणी'ति षष्ठीति भावः ॥ **सर्वत्रेति** । 'उपाधिप्रतिरोधौ तु क्व नामातीव दुर्वचावि'त्युक्तेरिति भावः ॥ **उपाधिप्रतिपक्षयोरिति** । शरीरिजन्यत्वोपाधेरसत्सम्मतकर्तृरहितत्वरूपविकर्तृकत्वसाधकहेतोश्चेत्यर्थः ॥ **तदर्थमिति** । अत्रार्थशब्द आवर्तनीयः । तत्राद्यो निवृत्तिवचनस्तथा चोपाधिप्रतिपक्षनिवृत्त्यर्थमित्यर्थः ॥

**ततो वरमिति** । लाघवादावश्यकत्वाच्चेत्यर्थः । अन्ततोऽनुसरणस्य गौरवापादकत्वेनायुक्तत्वादिति भावः । नन्वागमार्थनिर्णयस्योपपत्तिसाध्यत्वेनानुमानस्यापि तत्रान्ततोऽनुसरणात्कथमागमस्यैव वक्तव्यत्वमित्यतोऽनुमानादेरिव प्रमाणान्तरसंवादमपेक्ष्य नार्थगमकत्वमागमस्येत्येवात्राभिप्रेतं न त्वङ्गतया नान्तरीयकप्रयोगनिषेधोऽनुमानस्य नियमफलत्वेनाभिप्रेतोऽत एवान्यत्र प्रथममिति ग्रन्थकारीयोक्तिः सङ्गच्छत इत्याशयवानाह **तस्येति** । आगमपक्षे यं दोषमभिसन्धाय 'तत्रापि किमि'ति प्राग्विकल्पितं तं दोषमुद्धर्तुमुद्घाटयति **नन्विति** । यद्यपि वादजल्पयोः सन्मात्राधिकारिकत्वेन प्रतिवादिनोऽवैदिकत्वोक्तिरनुपपन्ना तथाऽप्यत्र नावैदिकत्वपदेन तत्त्वज्ञानायोग्यत्वं विवक्षितं येनोक्तानुपपत्तिः स्यात् । किन्तु तत्त्वज्ञानयोग्यत्वेऽप्यवैदिकपक्षपरिग्रहेण व्यवहारकर्तृत्वमेवेति नानुपपत्तिरिति ध्येयम् । मूले आगम एव वक्तव्य इत्यंशेन सूचितं तत्पक्षोक्तदोषपरिहारमाह **आगममिति** ।

स० — **अवैदिकं प्रतीति** । अवैदिकमतावलम्बिनं शिष्यं प्रतीत्यर्थः । तेन वितण्डायामवैदिकस्य वादित्वात् प्रतिवादित्वोक्तिरनुपपन्नेति शङ्कानवकाश इति भावः ।

प० — किं प्रमाणं प्रयोक्तव्यमित्यस्योत्तरं यत्र यदस्ति तत्र तदेव वक्तव्यमिति । क्वचित् किं वक्तव्यमिति किंशब्दोपि पठ्यते तदा तु वक्तव्यं किं न किमपीत्यर्थः । शङ्कते **सत्यमिति** ॥

नन्ववैदिकं प्रति कथमिति । अवैदिकमित्यस्यावैदिकपक्षमवलम्ब्य प्रत्यवतिष्ठमानं प्रतिभटं प्रतीत्यर्थः । वादे जल्पे च वादिप्रतिवादिनोर्द्वयोरपि साधुत्वात् वितण्डायां तु साधोः स्वपक्षसाधनाभावादिति ज्ञेयम् ।

य।० — किं वक्तव्यमिति । अत्र वक्तव्यं किमिति, न किमपीत्यर्थः । नन्ववैदिकं प्रतीति । नन्वयं प्रश्नः कां कथामभिप्रेत्य । न तावद्वादजल्पौ । तयोः सन्मात्राधिकारिकत्वेनावैदिकप्रसक्तेरेवाभावात् । नापि वितण्डाम् । तत्र सतः प्रतिवादित्वेन वादित्वाभावादिति चेत् । उच्यते । वादजल्पयोरेवायं प्रश्नः । न च तत्र प्रतिवादिनोऽपि सत्वात्कथमवैदिकत्वोक्तिः । तस्य स्वभावतः सज्जनत्वेऽप्यवैदिकमतावलम्बनेन प्रतिवादित्वादवैदिकत्वव्यपदेशोपपत्तेः ।

श्री० — तत्रापीति । यदि चैकं तत्रापीत्यर्थः ।

सु० — नन्वसद्भिः किं वक्तव्यम् । न तावत्प्रत्यक्षम् । अतीन्द्रिये तदयोगात् । न चागमः । स्वपरागमयोरन्योन्यं प्रामाण्यासंमतेः । नाप्यनुमानम् । प्रयोगपरिमाणासंमतेः । तथा हि । सौगतो यदि द्व्यवयवप्रयोगं कुर्यात्तदा नैयायिकेन न्यूनेन निगृह्येत । अनिग्रहे वा प्रतिवादी पर्यनुयोज्यमुपेक्षेत । पञ्चावयवप्रयोगे त्वधिकेन निगृह्येत । तथा स्वीकारे चापसिद्धान्तेन । तथा च नियतावयवादिव्यतिरेकेण वितण्डैव न स्यादित्यत आह स्वसिद्धान्तेति ।

अनु० — स्वसिद्धान्तानुसारेण ह्यसद्भिरनुमोच्यते ।

यथासिद्धान्तं वक्तव्यमिति प्राङ्नियमात्स्वसिद्धान्तनिर्णीतप्रयोगावयवपरिमाणापेक्षयैव न्यूनाद्यवतारादन्यथा( कथा)ऽनुपपत्तेरिति हिशब्दार्थः ।

सद्भिरागमो वक्तव्य इति न (इत्य)युक्तम् । वैदिकस्य प्रतिवादिनस्तद्दूषणेऽपसिद्धान्तात् । अदूषणे तु परपक्षादूषणेन कथाभावप्रसङ्गादित्यत आह प्रत्यक्षेति ।

प्रत्यक्षागमवैरूप्यमाश्रित्यान्यार्थतैव तु ॥
आगमे दर्शनीयाऽत्र दोषो लिङ्गविलोमता ॥

आगमे तु वादिना प्रयुक्ते प्रतिवादिना वैदिकेन तस्यान्यार्थतैव दर्शनीया । नानुमानस्येवाप्रामाण्यम् । येनापसिद्धान्तः स्यात् । तत एव कृतपरपक्षदूषणोऽपि भवेत् । अन्यार्थतां दर्शितवताऽऽगमस्य पराभिमितार्थात्प्रच्यावितत्वात् । न ह्यपेक्षितार्थासाधकत्वादन्यत्प्रमाणदूषणमस्तीति ।

**नन्वेवं सति कथं कथापर्यवसानम् । स्वस्वाभिमतार्थाग्रहपरित्याजनोपायाभावादित्यत उक्तं** प्रत्यक्षेत्यादि । **अत्र पराभिमतेऽर्थे प्रत्यक्षागमविरोधमाश्रित्य । न केवलमेतावत् । अत्रोपक्रमादिलिङ्गविलोमतादोषोऽपि दर्शनीयः । अत्रान्यतम(र)मात्रे तात्पर्यम् । अन्यथाऽऽधिक्यप्रसङ्गात् ।**

**शे०— नन्विति ।** वितण्डायां स्वपक्षसाधनाय प्रमाणमिति शेषः । तथा च वादिनः स्वपक्षसाधनोपायाभावान्न वितण्डावकाश इति भावः । ननु प्रत्यक्षागमानुमानानामेव तत्रोपायत्वान्न तदनवकाश इत्यतस्तदसम्भवं क्रमेण दर्शयति **न तावदित्यादिना ॥ स्वेति ।** असद्वाद्यागमस्य प्रतिवादिनं प्रति प्रतिवाद्यागमस्य चासद्वादिनं प्रति प्रामाण्यासम्मतेरित्यर्थः ॥ **नैयायिकेनेति ।** तन्मते पञ्चावयवप्रयोगस्यावश्यकर्तव्यतायाः स्थित्याऽवश्यवक्तव्यैकदेशवचनात् द्व्यवयवप्रयोगस्य न्यूनत्वादिति भावः ॥ **अनिग्रह इति ।** तेन न्यूनत्वानुद्भावन इत्यर्थः ॥ **पर्यनुयोज्यमुपेक्षेतेति ।** प्राश्निकैर्वादिनैव वेति शेषः । न्यायरीत्याऽवश्यमुद्भाव्यतया प्राप्तनिग्रहानुद्भावनादिति भावः । ननु सौगतेन द्व्यवयवप्रयोगे न्यूनादिप्रसङ्गेऽपि पञ्चावयवप्रयोगे तदनवकाशादनुमानमेव साधकमस्त्वित्यत आह **पञ्चेति ।** नैयायिकेनेति शेषः । सौगतमते द्व्यवयवप्रयोगस्यैवानुमितिरूपफलजननाय पर्याप्तत्वेन तद्रीत्याऽवयवान्तरप्रयोगस्य कृतकार्यप्रयोगत्वादिति भावः । ननु पञ्चावयवप्रयोगस्यैव तत्र पर्याप्तत्वाभ्युपगमान्नाधिक्यमित्यत आह **तथेति ॥ अपसिद्धान्तेति ।** द्व्यवयवप्रयोगस्यैव पर्याप्ततायास्तत्पूर्वाचार्यैरभ्युपगतत्वेन तदीयपञ्चावयवप्रयोगपर्याप्तत्वाभ्युपगमस्य तद्विरुद्धत्वादित्यर्थः ॥ **तथा चेति ।** उक्तरीत्या प्रत्यक्षागमानुमानानां साधकतयोपन्यसितुमशक्यत्वादुपायान्तरस्य चाभावाद्वादिनः स्वपक्षसाधनासम्भवेन न वितण्डावकाश इति सम्बन्धः । ननु चावयवनियमो नास्तीति समयं बद्ध्वा प्रवृत्तकथायां न्यूनाद्यनवकाशाद्वितण्डाप्रवृत्तिरप्रत्यूहैव । एवमवयवनियमपक्षेऽपि तस्योभयसम्मतत्वे नियमातिक्रमे न्यूनाद्यवतारेऽपि तदनतिक्रमे तदनवकाशान्न वितण्डाप्रवृत्तौ बाधकमिति न तदनुपपत्तिशङ्कावकाश इत्यतोऽवयवनियमो नास्तीति समयबन्धपूर्वककथाप्रवृत्तिपक्षे अवयवनियमेऽपि तस्योभयसम्मतत्वपक्षे तदनतिक्रमेण प्रवृत्तकथायां न्यूनाद्यनवकाशेऽपि तथा समयं बद्ध्वाऽप्रवृत्तकथायाम् अवयवनियमपक्षे तस्योभयासम्मत्यैव प्रवृत्तकथायां च न्यूनादेरवर्जनीयत्वान्न तत्र वितण्डा स्यादित्याशयेनोक्तम् **नियतावयवादिव्यतिरेकेणेति ।** क्वचिदनियतावयववादिव्यतिरेकेणेति पाठः । तत्रानियतावयववादिमते न्यूनाद्यनवताराद्वितण्डाप्रवृत्तिसम्भवेऽपि नियतावयवादिमते तदवतारध्रौव्यान्न तदवकाश इत्यर्थो द्रष्टव्यः ॥ **स्वसिद्धान्तेति ।** स्वस्य वादिनः प्रतिवादिनो वा सिद्धान्ते निर्णीतं तत्प्रयोगावयवपरिमाणं तदपेक्षयेत्यर्थः ॥ **अवयवपरिमाणापेक्षयेति ।** अवयवपरिमाणातिक्रमापेक्षयेत्यर्थः । तथा च स्वस्वसिद्धान्तसिद्धप्रयोग-

परिमाणातिक्रमेण परार्थानुमानप्रयोगे न्यूनाद्यवतारेऽपि तदनतिक्रमेण तत्प्रयोगे तदनवतारेणानुमानेनैव वादिनः स्वपक्षसाधनोपपत्तेर्न वितण्डाऽनवकाशप्रसङ्ग इति भावः ।

**दूषणेऽपसिद्धान्तादिति** । प्रतिवादिना स्वयं तत्प्रामाण्याङ्गीकारेण सर्वथा निर्विषयत्वरूपाप्रामाण्योपपादनरूपदूषणस्य तद्विरुद्धत्वादित्यर्थः । **अदूषणे चेति** । सर्वथा निर्विषयत्वरूपाप्रामाण्यानुपपादने चेत्यर्थः ॥ **परपक्षेति** । परपक्षसाधकप्रमाणदूषणस्यैव परपक्षनिराकरणत्वादिति भावः । नन्वेवं परपक्षानिराकरणत्वात्कथाऽभावप्रसङ्ग इत्यत आह **तत एवेति** । अन्यार्थतोपदर्शनमात्रादेवेत्यर्थः । ननु परोपन्यस्तप्रमाणादूषणे कथं परपक्षनिरास इत्यत आह **अन्यार्थतामिति** । अस्त्वागमस्य पराभिमतार्थात्प्रच्यावनं तथाऽपि तस्य सर्वथा निर्विषयत्वरूपाप्रामाण्यानुपपादनात्कथं तद्दूषणम् । तदुपपादने च कथं नापसिद्धान्त इत्यतो न प्रमाणदूषणं नाम सर्वथा निर्विषयत्वापादनमेवेति नियमः । आगमशब्दसंगृहीतानां श्रुत्यादीनामपौरुषेयत्वादिनाऽप्रामाण्यकारणदोषशून्यत्वेन तदयोगात् । किन्तु पराभिमतार्थात्प्रच्यावनमिति न परपक्षानिरासो नाप्यपसिद्धान्त इत्याह **न हीति** ॥ **स्वस्वाभिमतेति** । वाद्यागमस्य वादिप्रतिवाद्यभिमतार्थग्रहेत्यर्थः । त्वदागमस्य मदभिमत एवार्थो न त्वदभिमत इत्येवं वादिनि प्रदिवादिनि, न मदागमस्य त्वदभिमतोऽर्थः किन्तु मदभिमत एवेति वादिना वक्तुं शक्यत्वादिति भावः । अत्रेत्यस्य न केवलं दोषो लिङ्गविलोमतेत्यनेन संबन्धः । किन्तु प्रत्यक्षागमवैरूप्यमाश्रित्येत्यनेनापीत्यभिप्रेत्य तत्परामर्शविषयप्रदर्शनपूर्वकं तदेकवाक्यतया योजयति **अत्रेति** ॥ **अन्यतरमात्र इति** । प्रत्यक्षागमविरोधोपक्रमादिलिङ्गविलोमतारूपदोषद्वयान्यतरमात्र इत्यर्थः । प्रत्यक्षागमविरोधयोरन्यतरस्मिन्निति, उपक्रमोपसंहारादिविलोमतानामन्यतरस्मिन्निति वाऽर्थः । **अन्यथेति** । एतच्च जल्पाभिप्रायेण बोध्यम् ।

स० — **प्रतिवादीति** । प्रतिवादिनः पर्यनुयोज्योपेक्षणं स्यादित्यर्थः । **तथा चेति** । अनियतावयवादिव्यतिरेकेण वितण्डैव न स्यात् । अवयवनियमो नास्तीति समयबन्धश्चेत् क्रियते, तदा न्यूनाद्युद्भावनप्रसक्त्यभावेन वितण्डा तस्मिन्पक्षे स्यात् । अवयवनियमपक्षेऽपि यदि अवयवनियमः उभाभ्यामङ्गीकृतः, तदानीमपि नियमातिक्रम एव न्यूनाद्युद्भावनसंभवेन वितण्डा स्यात् । न चैवं प्रकृते इति भावः ।

प० — **नन्वसद्भिरिति** । वादजल्पपक्षे असत्पक्षमाश्रयद्भिरिति व्याख्येयम् । वितण्डापक्षे यथाश्रुतमेव ॥ **न चागम इति** । तत्तदाचार्यवाक्यमित्यर्थः । **न्यूनेन निगृह्येतेति** । न्यूनदोषेण पराजितं कुर्यात् । न्यूनाख्यनिग्रहस्थानं ब्रूयादित्यर्थः ॥ **पर्यनुयोज्यमुपेक्षेतेति** । पर्यनुयोज्योपेक्षणाख्यनिग्रहस्थानं ब्रूयादित्यर्थः ॥ **नियतावयवादीति** । स्वसिद्धान्तरीत्या यो नियतावयववादी तस्य

तादृशेनैव वितण्डेति स्यादित्यर्थः । 'यथासिद्धान्तं वक्तव्यमिती'तिशब्दो हेत्वर्थः । अत्रेत्यस्योत्तरेणाप्यन्वयः, लिङ्गपदं च तात्पर्यलिङ्गमात्रपरमिति भावेन योजयति **अत्रोपक्रमादीति** । अत्रेत्यस्यार्थः प्रागेवोक्तः । दर्शनीयेत्यस्य विपरिणामेनान्वय इत्युपेत्योक्तं **दर्शनीया इति** ।

**या० — नन्वसद्भिरिति** । वितण्डायामिति शेषः ।

**श्री० — व्यतिरेकेणेति** । अनियतावयववादिपक्षव्यतिरेकेण । तदनभ्युपगम्येति यावत् । नियतावयवाङ्गीकारे न्यूनतादिप्राप्त्योक्तरीत्या वितण्डैव न स्यादित्यर्थः । अनियतावयवपक्षश्च परेण नाङ्गीकृत इति वितण्डैव न स्यादिति भावः ॥ **परिमाणापेक्षयेति** । तत्र चेदन्यथात्वमित्यर्थः ॥ **अत्रान्यतमेति** । प्रत्यक्षविरोधोपक्रमादिलिङ्गविरोधयोर्मध्ये ।

**सु० — नन्वेतावताऽपि न कथासमाप्तिः । पराभिमतार्थानुपपत्तिमात्रेण स्वाभिमतार्थासिद्धेरित्यतः सत्यमित्याह** लिङ्गेति

**अनु० —** लिङ्गानुकूल्यं स्वार्थस्य श्रुत्यादीनामनुग्रहः ॥

**दर्शनीयपदमनुवर्तते । श्रुत्यादीनां वेदादीनां श्रुतिर्लिङ्गं समाख्या चेत्युक्तानां लिङ्गग्रहणेनैव गृहीतत्वात् । उपलक्षणं चैतत् । परार्थे प्रमाणानुकूल्यस्य स्वार्थे तत्प्रातिकूल्यस्य च निरासो दर्शनीय इत्यपि द्रष्टव्यम् । स्वसिद्धान्तप्रयोगपरिमाणानतिक्रमेण परार्थानुमानवाक्यप्रयोगः कर्तव्यः । तथात्वे च न न्यूनाद्यवतारः । तदतिक्रम एव तदवकाश इत्युक्तम् ।**

**शे० —** श्रुत्यादीनामित्यादिपदेन प्रत्यक्षादिपरिग्रहः । ननु श्रुत्यादीनामिति मौलपदस्य 'श्रुतिर्लिङ्गं समाख्या चे'त्युक्तश्रुत्यादिपरत्वमेव किन्न स्यात्किं वेदादिपरत्वकल्पनयेत्यतस्तेषां लिङ्गानुकूल्यमिति पूर्ववाक्ये लिङ्गशब्देन गृहीतत्वेन श्रुत्यादीनामित्यनेनापि तद्ग्रहे पदद्वयेनाप्येकार्थप्रतिपादनेन पौनरुक्त्यप्रसङ्गान्न तस्य तत्परत्वमित्याह **श्रुतिरिति** । नन्वेतावताऽपि न कथापरिसमाप्तिः पराभिमतार्थे लिङ्गविलोमतोपपादनेऽपि प्रमाणानुकूल्यानिरासेन तस्याजनासिद्धेस्तथा स्वार्थे लिङ्गानुकूल्योपपादनेऽपि प्रमाणप्रातिकूल्यानिरासेन तदसिद्धेश्चेत्यत आह **उपलक्षणं चैतदिति** । परार्थे विलोमतोपपादकं पूर्ववाक्यं तदानुकूल्याभावस्य स्वार्थे लिङ्गानुकूल्योपपादकमुत्तरवाक्यं तत्प्रातिकूल्याभावस्योपलक्षणं चेत्यर्थः । न केवलं विलोमतादिप्रतिपादकमिति चार्थः । उदयनोक्तवितण्डाप्रवृत्तिसमर्थनप्रकारनिरासार्थत्वान्नोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य तदनुवादपूर्वकं तन्निरासकतयोत्तरग्रन्थं योजयितुं पक्षद्वयसाङ्कर्यशङ्कानिरासाय ग्रन्थकृदभिहिततत्समर्थनप्रकारं निष्कृष्य तावद्दर्शयति **स्वस्वसिद्धान्तेत्यादिना** ।

**सु०— अपर आह । यथावस्तु प्रयोक्तव्यम् । न च वस्तुतत्त्व एव वादिनां विप्रतिपत्तेरवश्यं न्यूनाद्यवतारसंभवेनाप्रयोगप्राप्तिरिति वाच्यम् । (त) यस्य यत्र तात्त्विकत्वाभिमानस्तेन तत्प्रयोगानन्तरं परेण न्यूनादावुद्भाविते तथारूपतायाः साध(नीयत्वात्)नात् । न चैवमर्थान्तरापातः । हेतोरन्यतरासिद्ध्युद्भावने तत्सिद्धिव्युत्पादनवत्प्रकृतोपयोगसद्भावादिति । तदयुक्तम् । द्वित्रिपञ्चावयववादिपक्षाणां सर्वेषामपि तात्त्विकतायाः समर्थितत्वात् । स्वस्वनियमस्यैव तात्त्विकत्वमुपेत्य तदनतिक्रमेणैव प्रयोगाङ्गीकारे तु सर्वथा कथोच्छेदापत्तेः । तत्तात्त्विकतायां प्रतिवादिना विप्रतिपद्यमानेनावश्यं न्यूनादेरुद्भावनात् ।**

शे०— इदानीं परपक्षमुपन्यस्यति **अपर आहेति** ॥ **एवमिति** । अवयवसङ्ख्यातात्त्विकत्वसाधन इत्यर्थः ॥ **अर्थान्तरत्वेति** । तत्साधनस्य प्रकृतानुपयुक्तत्वादिति भावः । शब्दानित्यत्वसाधनस्य कृतकत्वस्य मीमांसकेनासिद्धावुद्भावितायां तन्निरासार्थतया कृतकत्वसाधनवदवयवसङ्ख्यातात्त्विकत्वसाधनस्य परोद्भावितन्यूनाख्यदोषपरिहारार्थत्वेन प्रकृतोपयोगान्नार्थान्तरत्वमित्याह **हेतोरिति** । अन्यथा हेतुसाधनेऽप्यर्थान्तरं स्यादिति भावेन दृष्टान्तोपादानमिति ध्येयम् । उत्तरमूलस्य प्रकृतेन साक्षात्सङ्गत्यभावान्मध्येऽपेक्षितपूरणेन सङ्गतिं दर्शयति **तदयुक्तमित्यादिना** ॥ **समर्थितत्वादिति** । 'सा प्रतिज्ञाहेतुदृष्टान्तरूपा हेतुगर्भा प्रतिज्ञा केवलाऽपी'त्यादिना मानलक्षणे 'यामाहुरनुमां केचिदि'त्यादिना तत्त्वनिर्णये च विस्तरत 'उक्ता व्याप्तिरेव तु सा स्मृता । लिङ्गोक्तावपि चैवं स्यादि'त्यादिनेह च सङ्क्षेपतः समर्थितत्वादित्यर्थः ॥ **कथोच्छेदेति** । वितण्डोच्छेदेत्यर्थः । तमेवोपपादयति **तत्तात्त्विकतायामिति** ।

स **अपर आहेति** । एवमस्माभिः समाधाने अभिहिते अपरः तच्छङ्कापरिहाराय समाधानं प्रकारान्तरेणाहेत्यर्थः । **तथारूपताया इति** । तात्त्विकरूपताया इत्यर्थः ।

प०— **समर्थितत्वादिति** । 'प्रतिज्ञातार्थसिद्ध्यर्थं व्याप्तिरेव यदोदिता । अवशिष्टं किमत्रास्ती'त्यादाविति भावः । कथोच्छेदे हेतुः **तत्तात्त्विकतायामिति** ।

श्री०— कुत इत्यत आह **तत्तात्त्विकतायामिति** । तत्तात्त्विकतायां विप्रतिपद्यमानेन प्रतिवादिनेत्यन्वयः ।

**सु०— ननूक्तमत्र स्वस्वावयवकल्पना परं प्रति समर्थनीयेति । दुरुक्तं तत् । तत्समर्थनस्याशक्यत्वादित्याह** त्रिपक्षेति ।

अनु० — त्रिपञ्चावयवामेव युग्मावयविनीमपि ॥
नियमाद्योऽनुमां ब्रूयात्तं ब्रूयाद्यदि तादृशी ॥
नानुमेति तदा केन साध्यावयवकल्पना ।

त्रयः प्रतिज्ञाहेतूदाहरणानि, उदाहरणोपनयनिगमनानि वा; पञ्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि वाऽवयवा यस्याः सा त्रिपञ्चावयवा । एवशब्देन पक्षद्वयनियममाह । युग्मौ द्वावुदाहरणोपनयावयवौ यस्याः सा युग्मावयविनी । नियमादिति सन्निहितेनैव संबध्यते । अनुमेति तादर्थ्यात्प्रयोग उच्यते । वैशेषिकादीनां तत्रैव व्यवहारात् । तं ब्रूयाद्यदि परोऽनियतवादीति शेषः । यद्वा यो मीमांसकस्तार्किकादिश्च त्रिपञ्चावयवामेवानुमां ब्रूयात् । तं प्रति यः सौगतो नियमाद्युग्मावयविनीं ब्रूयात् । स यदि तादृशी त्र्यवयवा पञ्चावयवा च नानुमेति ब्रूयादिति योज्यम् । एवं (वि)परिवर्तेनापि । तादृशी नानुमेत्यस्य प्रमाणाभावादिति शेषः ।

एतदुक्तं भवति । नैयायिकेन सौगतं प्रति पञ्चावयवप्रयोगे विहिते सौगतोऽधिकमिति निगृह्णीयात् । ततो नैयायिकेन पञ्चावयवप्रयोगस्यैव तात्त्विकत्वान्नैवमिति वक्तव्यम् । ततः सौगतो नेदं तत्त्वमप्रामाणिकत्वादिति वदेदेव । अथ नैयायिकेनाप्रामाणिकत्वमसिद्धमिति वदता कथमिति सौगते पृष्टवति (सति) केन प्रमाणेन स्वीया पञ्चावयवकल्पना साध्या । न तावत्प्रत्यक्षेण । पञ्चावयववाक्यस्य व्याप्तिपक्षधर्मतोपेतलिङ्गप्रतीतिजनकत्वमित्यस्यार्थस्य तदगोचरत्वात् । न हि कार्यकारणभावः क्वापि प्रत्यक्षस्य विषयः । न चागमेन । तदभावात् । 'पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषविदि'ति भारतादिवाक्यमस्तीति चेन्न 'सौक्ष्म्यं सङ्ख्याक्रमश्चैव निर्णयश्च प्रयोजनमि'त्यादिना तत्रैवान्यथा व्याख्यातत्वात् । नाप्युपमानाभावाभ्याम् । नियतविषयत्वात् । न चार्थापत्त्या । तदभावात् । अनुमानानतिरेकाच्चेति ।

शे० — एवं मध्येऽपेक्षितमभिधायाधुनोत्तरग्रन्थमुत्थापयति नन्विति । ननु त्रिपञ्चावयवत्वस्य प्रयोगगतत्वेनानुमानगतत्वाभावात्कथं त्रिपञ्चावयवामनुमामित्युक्तिरित्यतोऽत्रानुमापदेन लक्षणया प्रयोगस्यैव ग्रहणान्नानुपपत्तिरिति भावेन लक्षणाबीजशक्यसम्बन्धप्रदर्शनपूर्वकं तच्छब्दार्थमाह अनुमेतीति। तादर्थ्यात् अदनुमार्थत्वात् । तर्हि स्वायत्तन्यायविरोध इत्यतो रूढलक्षणात्वान्न प्रयोजनापेक्षेति भावेनाह वैशेषिकादीनामिति ॥ तत्रैवेति । अनुमार्थे परोपदेश एवानुमेति व्यवहारादित्यर्थः । शेषपूरणे अपरितोषादाह यद्वेति ॥ विपरिवर्तेनापीति । यः सौगतो नियमाद्युग्मावयविनीमनुमां ब्रूयात्तं प्रति यो मीमांसकस्तार्किकादिश्च त्रिपञ्चावयवामेवानुमां ब्रूयात् स यदि तादृशी युग्मावयविनी नानुमेति ब्रूयात्

इत्यपि योज्यमित्यर्थः । 'तादृशी नानुमेत्यस्ये'त्यत्र षष्ठ्यर्थः सम्बन्धोऽधिकरणत्वम् । तथा च तादृशी नानुमेत्यत्रेत्यर्थः ॥ **न हीति** । कारणतायाः शक्तिरूपत्वात्तस्याश्च नित्यातीन्द्रियत्वात्र तद्घटितकार्यकारणभावस्य प्रत्यक्षविषयतेति भावः । अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपकारणत्वस्यानन्यथासिद्धनियतपश्चाद्भावित्वरूपकार्यत्वस्य च नियतपदोक्तप्रत्यक्षायोग्यव्याप्तिघटितमूर्तिकत्वेनाप्रत्यक्षत्वमित्यर्थ इत्यप्याहुः । आगमोऽपि किं प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवं वाक्यं परोपदेश इति निरवकाशोऽभिमतसाधकतयाऽभिमतः किंवा सावकाश इति विकल्पद्वयं मनसि निधायानुपलब्धेर्नाद्य इत्याह **तदभावादिति** । द्वितीयमाशङ्कते **पञ्चावयवेति** ॥ **तत्रेति** । भारतादावेवेत्यर्थः ॥ **नियतेति** । उपमानस्य मीमांसकरीत्या सादृश्यमात्रगोचरत्वेन न्यायरीत्या वा वाच्यवाचकतामात्रगोचरत्वेनाभावस्य चाभावात्रप्रमेयकत्वेन ताभ्यां स्वविषयस्य सादृश्यादेः सिद्धिसम्भवेऽपि कार्यकारणभावस्य तदविषयत्वेन न ताभ्यां तत्सिद्धिरिति भावः ॥ **तदभावादिति** । अनुपपत्त्यभावादित्यर्थः । अनुपपत्तिसद्भावमुपेत्याह **अनुमानेति** । तस्य चोत्तरत्र दूषयिष्यमाणत्वादिति भावः । इतीत्यस्यैतदुक्तं भवतीति पूर्वेण सम्बन्धः ।

स० — **तादर्थ्यादिति** । अनुमार्थत्वात्प्रयोगस्येत्यर्थः । नेयमरूढलक्षणेत्याह **वैशेषिकेति** ॥ **तं ब्रूयाद्यदीति** । अनियतवादीति पदविभागः । **अनुमानानतिरेकाच्चेति** । अनुमानपक्षे यद्दूषणं तेनैव दुष्टं भविष्यतीति भावः ।

प० — **तत्रैव व्यवहारादिति** । लिङ्गपरामर्शाख्यानुमानार्थे परोपदेशरूपमहावाक्यप्रयोग एवानुमानशब्दव्यवहारादित्यर्थः । तं ब्रूयाद्यदीति मूलपदानुवादः । अनध्याहारेणैव योजयति **यद्वेति** ॥ **एवं विपरिवर्तेनापीति** । यः सौगतः नियमाद्युग्मावयविनीं ब्रूयात्तं प्रति यो मीमांसकः तार्किकादिः त्रिपञ्चावयवामेवानुमां ब्रूयात्स यदि तादृशी युग्मावविनी नानुमेति ब्रूयादित्यादिरूपेणापि योज्यमित्यर्थः ॥ **नियतविषयत्वादिति** । उपमानस्य मीमांसकमते सादृश्यविशिष्टविषयकत्वात् । न्यायमते वाच्यवाचकभावमात्रगोचरत्वात् । अभावप्रमाणस्य प्रमेयाभावमात्रप्रमापकत्वादित्यर्थः । इतिशब्दस्यैतदुक्तं भवतीति पूर्वेणान्वयः ।

या० — **तत्रैव व्यवहारादिति** । अनुमार्थे परोपदेश एवानुमेति व्यवहारादित्यर्थः ॥ **नियतविषयत्वादिति** । उपमानस्य मीमांसकमते सादृश्यमात्रविषयकत्वात् । न्यायमते च वाच्यतामात्रगोचरत्वात् । अभावमात्रप्रमेयकत्वाच्चाभावस्येति भावः ।

श्री० — **सन्निहितेन** युग्मावयविनीमित्यनेनैव । यद्यपि त्रिपञ्चावयवामित्यत्रापि नियमोऽपेक्षित एवेति न सन्निहितेनैव सम्बन्धस्तथाऽप्येवशब्देनैव तस्य लब्धत्वादित्थमुक्तम् । **तादर्थ्यात्** अनुमानार्थत्वात् । कुत इत्यत आह **वैशेषिकादीनामिति** । तत्रैव परार्थप्रयोग एव । **व्यवहारात्** अनुमाशब्दस्य ।

**सु० — मा भूत्प्रत्यक्षादिनाऽवयवकल्पनासिद्धिः । अनुमानेन तु भविष्यति । व्याप्तिपक्षधर्मतोपेलिङ्गप्रतीतेः पञ्चावयववाक्यश्रवणान्वयव्यतिरेकानुविधायित्वादिति चेत् । न तावदिदमनुमानं त्वचेतसि परिवर्तमानं परं प्रत्यायनाङ्गम् । किन्नाम प्रयुज्यमानम् । तत्र किं पञ्चावयवप्रयोगोऽस्य विधास्यते, अथ द्व्यवयवः ! नोभावपीत्याह** नियतेति ।

**अनु०** — नियतावयवासिद्धौ

**नियतावयवस्य पञ्चावयवस्य द्व्यवयवस्य च । यथासङ्ख्यं सौगतनैयायिकयोर्बोधौपयिकत्वासिद्धौ, नानुमानेनाप्यवयवकल्पनासिद्धिरिति शेषः ।**

**यद्वोत्तरवाक्ये नियतावयवासिद्धावित्यनुवादोऽयम् । ततो नियतावयवासिद्धेरिति सिध्यति । पञ्चावयवप्रयोगे परेणाधिक्योद्भावनात् । द्व्यवयवप्रयोगेऽन्यतरन्यूनत्वापसिद्धान्तयोरुद्भावनादित्यर्थः । ततः किमित्यत आह** व्याप्तीति ।

---

व्याप्तिमात्रेण साधनम् ॥

कर्तव्यमेव तेन स्यात्

**यत एवं नोपायान्तरं तेन कारणेन । तेन नैयायिकेन व्याप्तिमात्रेण यद्यस्यान्वयव्यतिरेकावनुविधत्ते तत्तत्कार्यमित्यादिव्याप्तिवचनमात्रेणैव । उपलक्षणमेतत् । 'लिङ्गोक्तावि'त्यादि प्राग्व्युत्पादितप्रकारेष्वन्यतमेनेत्यपि द्रष्टव्यम् ।** साधनं **पञ्चावयवनियमस्य, कर्तव्यं स्यात् । सौगतेनापि तदनुसरणीयम् । इतरथा तस्यापि प्रयोगानुपपत्तिप्रसङ्गादिति ।**

शे० — व्याप्तिपक्षधर्मतोपेतलिङ्गप्रतीतिः पञ्चावयववाक्यजन्या तच्छ्रवणान्वयव्यतिरेकानुविधायित्वादिति सामान्यव्याप्तिमूलकानुमानमेव तत्र मानं भवतीत्याशङ्कते **मा भूदिति** । विकल्पितपक्षद्वयनिरासकत्वलाभायापेक्षितपूरणेन योजयति **नियतावयवस्येत्यादिना ॥ यथासंख्यमिति** । पञ्चावयवस्य सौगतं प्रति, द्व्यवयवस्य नैयायिकं प्रतीत्येवं यथासंख्यमित्यर्थः । तेन पञ्चावयवस्य द्व्यवयवस्य च नैयायिकसौगतयोर्बोधौपयिकत्वसिद्धेः कथं तदसिद्ध्युक्तिरिति शङ्का निरस्ता भवति । असिद्धिपदं तद्विशेषपरमित्यभिप्रायेण बोधौपयिकत्वासिद्धावित्युक्तम् । अत्र पक्षे नानुमानेनावयवकल्पनासिद्धिरिति शेषपूरणं भवतीत्यपरितोषादाह **यद्वेति ॥ सिध्यतीति** । तेन विनोक्तरूपानुवादानुपपत्तेरिति भावः । उक्त-

रूपां नियतावयवासिद्धिमेवोपपादयति **पञ्चेत्यादिना** ॥ **परेणेति** । सौगतेनेत्यर्थः । रीत्येति शेषः । **अन्यतरेति** । सौगतेन द्व्यवयवप्रयोगस्यैव तात्त्विकत्वाभ्युपगमेन नैयायिकेन द्व्यवयवप्रयोगे कृते सौगत-रीत्या न्यूनत्वाप्रसक्तावप्यनुमानकर्त्रा नैयायिकेन पञ्चावयवप्रयोगस्यैव तात्त्विकत्वाङ्गीकारेण तदीयद्व्यवयव-प्रयोगे तद्रीत्या न्यूनत्वमेवेति भावेनान्यतरेत्युक्तम् । ननु नैयायिकेन द्व्यवयवस्य तात्त्विकत्वाभ्युपगमे कथं तद्रीत्या न्यूनत्वमित्यतो माऽस्त्वस्मिन्मते न्यूनत्वमपसिद्धान्तस्त्ववर्जनीय एवास्मिन्पक्ष इत्यभिप्रायेणापसिद्धा-न्तग्रहणमिति बोध्यम् ॥ **ततः किमितीति** । अनुमानेनावयवकल्पनाया असिद्धिसिद्धावपि किमित्यर्थः । मूले तेनेत्यनेन लब्धार्थप्रदर्शनं **यत इति** । न्यूनतापरिहाराय मूले तेनेत्यस्यावृत्तिमभिप्रेत्य तदनुवादपूर्वकं तदर्थमाह **नेति** । यत्पञ्चावयववाक्यश्रवणान्वयव्यतिरेकानुविधायि तत्पञ्चावयववाक्यश्रवणकार्यमिति प्रकृतानुमानाङ्गविशेषव्याप्तौ दृष्टान्ताभावाद्व्याप्तिपदं सामान्यव्याप्तिपरं तस्यापि परं प्रत्यप्रयुक्तस्य तत्प्रत्यायना-नङ्गत्वाद्व्याप्तिपदं तद्वचनपरमिति भावेनानूद्य व्याख्याति **व्याप्तिमात्रेणेत्यादिना** । ननु लिङ्गोक्त्या-दिनाऽपि तत्साधनसंभवाद्व्याप्तिमात्रेणेति मात्रशब्दानुपपत्तिरित्यतो 'नरं च नारायणमेव चादावि'त्यादाविव अनभिमतनियममात्रव्यावर्तकत्वेनानुभाविकलिङ्गोक्त्यादिपक्षान्तरानिरासकत्वान्न नानुपपत्तिरित्यभिप्रेत्य संग्रा-ह्यपक्षोपलक्षणतया व्याचष्टे **उपलक्षणं चैतदिति** ॥ **प्रागिति** । लिङ्गोक्तावपि चैवं स्यादनुमावसितिः ध्रुवा' इत्यादावित्यर्थः । सौगतेन तस्यानुसरणीयत्वे नियामकमाह **इतरथेति** । न्यूनापसिद्धान्तप्रसक्तेरिति भावः ।

**स० — तत इति** । अनुवादपूर्वकत्वादिति भावः । **अन्यतरन्यूनत्वापसिद्धान्तयोरिति** । बौद्धेन द्व्यवयवस्यैव तात्त्विकत्वस्वीकारेण तद्रीत्या न्यूनत्वासंभवेन, नैयायिकेन पञ्चावयवप्रयोगस्य तात्त्वि-कत्वमङ्गीकुर्वाणेन द्व्यवयवप्रयोगस्य तदनङ्गीकारात् तद्रीत्यैव न्यूनत्वमित्यभिप्रायेणान्यतरपदमिति ध्येयम् ।

**प० —** अनुमानेन त्वित्युक्तं व्यनक्ति **व्याप्तीत्यादिना** । उक्तरूपा प्रतीतिः पञ्चावयववाक्येन साध्या । तच्छ्रवणान्वयव्यतिरेकानुविधायित्वात्तस्याः । यदेवं तदेवं यथा घटो दण्डेनेत्युक्तं भवति । अनध्याहारेण योजयति **यद्वेति** । इति सिद्ध्यतीति पूर्ववाक्य इतियोज्यम् । नन्वेवं नोभावपीत्याहेत्यस्य नियतावयवासिद्धेरित्येतदुत्तरमिति वाच्यम् । तथा चानेन कथमुत्तरं जातमित्यत आह **पञ्चावय-वेति** ॥ **परेण** सौगतेनेत्यर्थः **अन्यतरेति** । मीमांसकनैयायिकयोरन्यतरेण सौगतप्रतिभटभूतेन न्यून-त्वोद्भावनात् । अनयोरन्यतरेण द्व्यवयवप्रयोगे कृते सति सौगतेनापसिद्धांतोद्भावनादित्यर्थः । यद्वा तार्किकसौगतयोर्वादिनोर्मध्ये तार्किकरीत्यैवात्र दोषद्वयोद्भावनादित्यर्थः । एतावंत एवानुमानस्यावयवा इत्यस्याधाप्यसिद्ध्या स्वेच्छयाऽवयवोपेतानुमानप्रयोगे परेण दोषोद्भावनान्नानुमानेनावयवकल्पनसिद्धिरिति भावः । ततः किमित्यत आह **व्याप्तीति** । अत्र यद्यपि नियतावयवासिद्धावित्यनुवादकांशो ग्राह्यः ।

तथापि प्राक् प्रतीकतया गृहीत्वा व्याख्यातत्वाद्विधेयभाग एवोपात्त इत्यदोषः ॥ **प्राग्व्युत्पादितेति** । 'व्याप्तिरेव यदोदिता । अवशिष्टं किमत्रास्ति लिंगं तत्र विजानतः' इत्यत्र सुधायां व्युत्पादितप्रकारेष्वित्यर्थः ।

**या० — अनुमानेन त्विति** । व्याप्तिपक्षधर्मतोपेतलिङ्गप्रतीतिः पञ्चावयवोपेतवाक्यसाध्या । तच्छ्रवणान्वयव्यतिरेकानुविधायित्वादिति सामान्यव्याप्तिमूलकानुमानेनेत्यर्थः ॥ **परेणाधिक्येति** । स्वरीत्येति शेषः ॥ **अन्यतरेति** । अनुमानकर्तुर्नैयायिकस्य रीत्या न्यूनता, न बौद्धरीत्या अतोऽन्यतरेत्युक्तम् । अपसिद्धान्तोऽपि तस्यैवेति द्रष्टव्यम् ।

**श्री० — त्र्यवयवप्रयोगे** नैयायिकेनेति शेषः । यद्यपि सौगतरीत्या न न्यूनता, तथाऽप्यन्यतरस्य तार्किकस्य रीत्या स्यादेवेत्यर्थः ।

**सु० — ततोऽपि किमित्यत आह** तस्मादिति ।

**अनु० —** तस्मात्सैवानुमा मता ॥

**यस्मात्प्रयोगेयत्तासाधनं वादिप्रतिवादिभ्यामन्यतरेण वा स्वमतपरित्यागेनान्यमताभ्युपगमे कृत एवोपपद्यते नान्यथा । तस्मात्सैवानुमा मता । व्याप्तिवचनादिकमेव परार्थप्रयोगत्वेन सर्वत्र मन्तव्यम् ।**

**इदमुक्तं भवति । यदा नैयायिको त्र्यवयवेन पञ्चावयवनियमं साधयति । तदा त्र्यवयवस्य तात्त्विकत्वं स्वयं मन्यते न वा । नेति पक्षे प्रतारकः स्यात् । आद्येऽन्यत्रापि कथं तत्तत्त्वं न स्यात् । एवं कथाभावप्रसङ्गभीरुः सौगतोऽपि पञ्चावयवेन त्र्यवयवस्यावश्यकतां प्रतिपद्यमानस्तत्त्वं मन्यते न वा । द्वितीये कथं ततः प्रतिपद्येत । आद्येऽन्यत्रापि कुतस्तन्न तत्त्वम् । अतोऽत्र सर्वसिद्धान्तप्रकाराणां तात्त्विकत्वाद्युक्तं स्वसिद्धान्तानुसारेणेति । अस्मादेव संकटाद्बिभ्यदुदयनो यथावस्तु वक्तव्यमित्युक्त्वा यथासिद्धान्तं वा वक्तव्यमिति समयं बद्ध्वा प्रवृत्तायां कथायां न न्यूनाद्यवतार इति पक्षान्तरमवादीदिति ॥ अवसितमनुमानम् ॥**

**शे० — ततोऽपीति** । व्याप्तिमात्रेण पञ्चावयवनियमादिसाधनकर्तव्यतासिद्धावपि किमित्यर्थः ॥ **अन्यतमाभ्युपगमे कृत एवेति** । व्याप्तिवचनलिङ्गोक्त्यादिप्राग्व्युत्पादितप्रकारेष्वन्यतमप्रकाराभ्युपगमे कृत एवेत्यर्थः ॥ **व्याप्तिवचनादिकमेवेति** । यावता व्याप्तिमलिङ्गबोधस्तावदेवेत्यर्थः । ननु त्र्यवयवादिप्रयोगस्यातात्त्विकत्वेऽपि तेनावयवनियमसाधनसंभवादवयवनियमसाधने तस्य तात्त्विकत्वेऽप्यन्यत्रातात्त्विक-

त्वसंभवान्नैतावन्मात्रेण द्व्यवयवादिसर्वपक्षाणां तात्त्विकत्वसिद्धिरित्यत आह **इदमुक्तं भवतीति** । यद्वा अस्त्वेवं यावता व्याप्तिमल्लिङ्गबोधस्तावत एव परोपदेशत्वं, तावताऽपि कथं सर्वसिद्धान्तप्रकाराणां तात्त्विकत्वं येन स्वनियमस्यैव तात्त्विकत्वमुपेत्य तदनतिक्रमेणैव प्रयोगाङ्गीकारे सर्वथा कथोच्छेदप्रसङ्गः स्यादित्यत आह **इदमुक्तमिति** । सम्मतश्चायमर्थ उदयनस्यापीत्याह **अस्मादेवेति** । वस्तुतस्त्वानुसारेण प्रयोक्तव्यमित्यस्मिन्पक्षेऽस्माभिरुपन्यस्तात्कथोच्छेदापत्तिरूपात्सङ्कटादित्यर्थः ॥ **न्यूनाद्यवतार इति** । स्वसिद्धान्तसिद्धप्रयोगपरिमाणातिक्रमेण प्रयोगे न्यूनाद्यवतार इत्यर्थः ॥ **पक्षान्तरमवादीदितीति** । अन्यथा पूर्वेणैव कथारम्भस्य समर्थितत्वात् तन्नावादीदिति भावः । अनुभूतिरित्यादेरनुमाननिरूपणपरपूर्वग्रन्थशेषत्वभ्रान्तिम् 'अनुमा युक्तिरेवोक्ता व्याप्तिरेव तु सा स्मृता । तस्मात्सैवानुमा मते'त्युपक्रमोपसंहारसूचिततन्निरूपणपर्यवसितत्वोक्त्या परिहरति **अवसितमिति** ।

स० — **प्रतारकस्स्यादिति** । द्व्यवयवस्य वास्तवत्वानङ्गीकारेण तेन पञ्चावयवनियमस्यानुमितिजनकत्वसाधनासंभवेन प्रकारान्तरस्य चाभावेन पञ्चावयवज्ञानस्यैव स्वस्यासंभवेन तस्य वास्तवत्वासिद्ध्या यथावस्तु वक्तव्यमित्यस्यानुपपत्तिरिति भावः । **आद्य इति** । स्वाभिमतार्थसाधनत्वेनाभिप्रेतं पञ्चावयवोपेतमपीत्यर्थः ।

प० — नमु व्याप्तिवचनादेवेति द्वितीयप्रयोगे अनुमानत्वेपि सर्वत्र कुत इत्यतो न्यायेन व्युत्पादयति **इदमुक्तं भवतीत्यादिना** ॥ **अवसितमनुमानमिति** । अनुमाननिरूपणं पर्यवसितमित्यर्थः ।

श्री० — **आद्येऽन्यत्रापीति** । यथा पञ्चावयवनियमसाधने द्व्यवयवयवस्य तात्त्विकतैवं प्रधानप्रमेयसाधनेऽपीत्यर्थः । एतद्रीत्यैवोत्तरवाक्यमपि याख्येयम् ॥

**मु० — निर्दोषं वाक्यमागमः । स द्विविधः । पौरुषेयोऽपौरुषेयश्च । तत्रापौरुषेयो वेदः । अन्यस्तु पौरुषेय इति सुप्रसिद्धत्वान्नोक्तम् ।**

शे० — सामान्यतो विशेषतश्च लक्षणविभागाभ्यां प्रमाणनिरूपणार्थं प्रवृत्तेऽस्मिन्प्रकरणे प्रत्यक्षानुमानयोरिवागमस्यापि लक्षणविभागाभ्यां निरूपणस्य कर्तव्यत्वात्तदनुक्त्या प्रसक्तां भाष्यकाराणामचातुरीं तन्निमित्तोक्त्या परिहरति **निर्दोषमिति** । यद्यप्यत्र वाक्यग्रहणमनपेक्षितं निष्प्रयोजनत्वादिदोषनिरासार्थमावश्यकेन निर्दोषत्वविशेषणेनैव निरभिधेयेऽनन्विते चातिव्याप्तिनिरासेन व्यावर्त्याभावात् । अत एव निर्दोषः शब्द आगम इति प्रमाणलक्षणे वाक्यग्रहणं न कृतम् । अत एव च पद्धतौ वाक्यान्तर्भावेन निर्दोषः शब्द आगम इत्युक्तम् । तथाऽपि 'आगमोऽदुष्टवाक्यं चे'ति शिष्याणां पदवाक्यादिस्वरूप-

ज्ञानार्थं वाक्यान्तर्भावेनोक्ततल्लक्षणानुसारेण वाक्यग्रहणमत्र कृतम् । न तु व्यावर्तकतयेति नानुपपत्तिः । अत एव पद्धतौ निर्दोषं वाक्यमागम इति वाक्यान्तर्भावेनागमलक्षणमुक्त्वा विभक्त्यन्ता वर्णाः पदम्, आकाङ्क्षायोग्यतासन्निधिमन्ति पदानि वाक्यमित्यादिना पदादीनां लक्षणमुक्तम् । अत एव च प्रमाणलक्षणटीकायां मूलस्थं शब्दपदं वाक्यपरमित्युक्तमिति ध्येयम् । 'आगमो द्विविधो ज्ञेयो नित्योऽनित्यस्तथैव चे'ति ब्रह्मतर्कानुसारेण तद्विभागमाह **स द्विविध इत्यादिना** । यद्यप्युदाहृतागमानुसारेण नित्योऽनित्य इत्येव वक्तव्यम् । तथाऽपीश्वरबुद्धिमपेक्ष्य वेदस्येव पुराणादेरपि नित्यत्वादस्मदादिबुद्ध्यपेक्षया पुराणादेरिव च वेदस्याप्यनित्यत्वेनोक्तरीत्या द्वैविध्यस्य बाधितत्वात् । ब्रह्मतर्कोक्तं नित्यत्वमनित्यत्वं च न यथाश्रुतं किन्त्वपौरुषेयत्वं पौरुषेयत्वं चेत्येवंरूपमित्यभिप्रायेणापौरुषेयत्वादिना विभागप्रदर्शनम् । यद्यप्यपौरुषेयः पौरुषेयश्चेति विभागमुक्त्वाऽपौरुषेयो वेदोऽन्यस्तु पौरुषेय इत्येव वक्तुमुचितम् । तथाऽपि अभावस्य भावनिरूप्यत्वात्पौरुषेयत्वादिना विभागमुक्त्वाऽर्थप्राधान्यानुसारेण प्रवृत्त'नित्योऽनित्य' इति ब्रह्मतर्कानुसारेण तत्रापौरुषेयो वेदोऽन्यस्तु पौरुषेय इत्यपौरुषेयादिक्रमेण शृङ्गिग्राहिकतया प्रदर्शनमित्यवधेयम् ॥ **नोक्तमिति** । ततश्च मूले न तदनुक्त्या न्यूनत्वमिति भावः ।

**स०** — **सुप्रसिद्धत्वादिति** । अस्मदभिमतप्रत्यक्षानुमानावान्तरविशेषाणां मतान्तरेऽप्रसिद्धत्वेन तयोः सुप्रसिद्धत्वाभावात्, 'निर्दोषवाक्यमागम' इति तार्किकमीमांसकादिभिरङ्गीकृतत्वेन पौरुषेयापौरुषेयविभागस्य च मीमांसकेनाप्यङ्गीकृतत्वात् सुप्रसिद्धिरिति भावः ।

**प०** — 'अक्षयुक्तिवचांसो'ति निर्दिष्टेषु 'निर्दोषाक्षोद्भवं ह्यत्र प्रत्यक्षम्', 'अनुमा युक्तिरेवोक्ता' इत्यादिना प्रत्यक्षानुमाने निरूपिते । वचःशब्दितागमनिरूपणबीजमागमस्वरूपं निरूपयन्नेवाह **निर्दोषमिति** । अत्र पदकृत्यं वाक्यस्वरूपनिरूपणं च पद्धत्यादौ तर्कताण्डवे च व्यक्तम् ।

**या०** — मूले न्यूनतां परिहर्तुमाह **निर्दोषं वाक्यमित्यादिना** ॥ **उक्तमिति** । स्पष्टतयेति शेषः । ततश्चैतावदत्रोपलक्षणया ग्राह्यमिति भावः । अत एव विशेषतः प्रमाणानि लक्षितानीति वक्ष्यमाणवाक्यमपि श्लिष्टम् । केचिदित्यादिना क्रियमाणचर्चाया मूलोक्तानुपपादकत्वादसङ्गतिरिति शङ्का च नेति ध्येयम् ।

**श्री०** — एवंलक्षणके मानत्रये इति वक्ष्यमाणत्वेनागमलक्षणस्य चात्राकथितत्वान्न्यूनतां परिहरति **निर्दोषमिति** ।

**च०** — **निर्दोषमिति** । 'निरादयः क्रान्ताद्यर्थे पञ्चम्ये'त्यनुशासनाद्दोषापादानकनिष्क्रान्तिविशेषितमित्यर्थः ।

सु० — केचिद्वाक्यं वाक्यार्थेऽनुमानमिति ब्रुवते । तदनुपपन्नम् । वाक्यवाक्यार्थयोर्देशतः कालतो वाऽन्वयव्यतिरेकाभावात् । अथेदं वाक्यं वाक्यार्थवत् वाक्यत्वादिति साध्यते । तत्र किं वाक्यार्थमात्रं साध्यते तद्विशेषो वा । नाद्यः । विशेषप्रमितेर्निर्निबन्धनत्वापत्तेः । द्वितीये स विशेषः प्रतीतो न वा । आद्ये वाक्यवैयर्थ्यम् । द्वितीयेऽप्रसिद्धविशेषणता । विशेषस्यान्यत्राभावादनैकान्त्यं च । मतुबर्थश्च किं प्रतिपाद्यप्रतिपादकभावः, संबन्धान्तरं वा । आद्ये साक्षाल्लिङ्गतया वा । न प्रथमः । अनुमानवैयर्थ्यात् । अपसिद्धान्ताच्च । द्वितीये तु नेदं वाक्यार्थानुमानं किन्तु सिद्धेऽर्थे वाक्यस्य लिङ्गतानुमानमेव । तत्र च दृष्टान्तोऽन्यतरसाध्यविकलः । न द्वितीयः । तदभावेन बाधात् ।

शे० — ननु तथाऽप्यागमस्य पृथक् प्रामाण्ये काणादादीनां विप्रतिपत्तेस्तत्समर्थनस्यावश्यकर्तव्यत्वाद्भाष्ये न्यूनत्वमेवेत्यतस्तस्याप्यतिसुप्रसिद्धत्वात्तदनुक्तिर्न दोषायेत्याशयवांस्तन्मतं दूषयितुमुत्थापयति **केचिदिति** । काणादाद्या इत्यर्थः । वाक्यं वाक्यार्थेऽनुमानमिति वदतः किं विशेष्यभूतं वाक्यमेवानुमानतयाऽभिमतं, किंवा विशेषणभूतं वाक्यत्वमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **वाक्यवाक्यार्थयोरिति** । यत्र वाक्यं तत्र वाक्यार्थो यत्र वाक्यार्थाभावस्तत्र वाक्याभाव इति दैशिकान्वयव्यतिरेकयोराकाशे, यदा वाक्यं तदा वाक्यार्थो यदा वाक्यार्थाभावस्तदा वाक्याभाव इति कालिकान्वयव्यतिरेकयोश्चातीताद्यर्थप्रतिपादकवाक्यकाले व्यभिचारेणाभावादित्यर्थः । द्वितीयं शङ्कते **वाक्यार्थमात्रमिति** । अविवक्षितविशेषं संसर्गमात्रमित्यर्थः ॥ **निर्निबन्धनत्वापत्तेरिति** । ततश्च कादाचित्कत्वानुपपत्तिरिति भावः । व्यतिरेकिवत्सामान्यप्रसिद्ध्या नाप्रसिद्धविशेषणतेत्यपरितोषादाह **विशेषस्येति** । यद्वाऽप्रसिद्धविशेषणत्वस्य स्वमते दोषत्वाभावादाह **विशेषस्येति** ॥ **अन्यत्रेति** । घटमानयेत्यादिवाक्ये, सत्यपि वाक्यत्वे, कालविशेषीयपुरुषविशेषकर्तृकगोविशेषकर्मकानयनरूपवाक्यार्थत्वाभावादिति भावः । वाक्यविशेषत्वस्यैव हेतुत्वान्न तत्र व्यभिचार इत्यपरितोषादाह **मतुबर्थश्चेति** ॥ **अनुमानेति** । वाक्यादेव साक्षाद्वाक्यार्थसिद्धेर्वाक्येन वाक्यार्थानुमानवैयर्थ्यादित्यर्थः । वाक्यं वाक्यार्थवदित्युद्देश्यप्रतीत्यर्थत्वान्नानुमानवैयर्थ्यमित्यपरितोषादाह **अपसिद्धान्तादिति** । वाक्यस्य लिङ्गतया वाक्यार्थप्रतिपादकत्वस्यैव त्वत्पूर्वाचार्यैरङ्गीकृतत्वेन साक्षात्प्रतिपादकत्ववर्णनस्य तद्विरुद्धत्वादिति भावः । अस्तु सिद्धे वाक्यार्थे वाक्यस्य लिङ्गत्वानुमानमेवैतदित्यत आह **तत्र चेति** । वाक्यान्तरे लिङ्गतया प्रतिपाद्यप्रतिपादकभावरूपसम्बन्धवदर्थकत्वस्य परं प्रत्यसम्मतेरिति भावः ॥ **तदभावेनेति** । सम्बन्धान्तरं भवत्किं तादात्म्यं स्यात्किंवा संयोगोऽथ समवायः । नाद्यः । वह्न्यादिशब्दोच्चारणे मुखदाहादि-

प्रसङ्गात् । वर्तमानस्य शब्दस्यातीतादिनाऽर्थेन तादात्म्येऽर्थस्य वर्तमानतायाः शब्दस्य वाऽतीतादित्वस्य च प्रसङ्गाच्च । न द्वितीयः । गुणत्वात् । न तृतीयः । आकाशगुणस्य शब्दस्यान्यत्र समवायायोगात् । ततश्च वाक्यस्य वाक्यार्थेन तादात्म्यादिरूपसम्बन्धस्याभावेन तद्वत्त्वसाधने बाध इति भावः ।

स० — वाक्यं वाक्यार्थेऽनुमानमि'त्यत्र किं विशेष्यभूतवाक्यमेवानुमानमित्यभिप्रेतम्, किं वा विशेणीभूतवाक्यत्वमिति विकल्प्याद्यं दूषयति **वाक्यवाक्यार्थयोरिति** । अत्र यत्र वाक्यं तत्र वाक्यार्थ इत्यन्वयः । यत्र वाक्यार्थाभावस्तत्र वाक्याभाव इति व्यतिरेकश्चेति दैशिकान्वयव्यतिरेकावनुपपन्नौ । वाक्यवत्याकाशे वाक्यार्थाभावेन, वाक्यार्थाभाववति तस्मिन्नेव वाक्यसत्त्वेन च व्यभिचारात् । नापि यदा वाक्यं तदा तदर्थः, यदा वाक्यार्थाभावः तदा वाक्याभाव इति कालिकान्वयव्यतिरेकौ । अतीतादिविषयवाक्यस्येदानीं सत्त्वेन व्यतिरेकव्यभिचारादिति भावः । द्वितीयं शङ्कते **अथेति**। **वाक्यवैयर्थ्यमिति** । न चैवमुपक्रमादिलिङ्गैस्तात्पर्यनिर्णयदशायामेव अर्थस्य सिद्धत्वात् वाक्यवैयर्थ्यमिति वाच्यम् । तत्र वाक्येन विना तदुपस्थितेरेवाभावेन तदुपस्थापकत्वेन वाक्यसार्थक्यात् । प्रकृते च कालविशेषीयस्वकर्तृकगोविशेषकर्मकानयनरूपवाक्यार्थस्य मानान्तरसिद्धत्वे वाक्यवैयर्थ्यमेवेति भावः । **आद्ये साक्षादिति** । अयमाशयः । वाक्यश्रवणानन्तरं वाक्यश्रोतुरेव लिङ्गानुसंधानेन वाक्यार्थप्रतीतिर्भवतीति हि त्वया तदनुवादः क्रियते, तदा त्वया वाक्यस्य वाक्यत्वेनार्थबोधकत्वानङ्गीकारेणापसिद्धान्तः । द्वितीये तस्य श्रोतुः वाक्यश्रवणानन्तरमेव वाक्यार्थबोधस्य जातत्वेन तस्य स्वार्थानुमानस्यैवासंभवेन तदीयवाक्यं दृष्टन्तीकृत्य मां प्रति वाक्यं लिङ्गत्वेनार्थप्रतिपादकमिति यदि त्वया साध्यते, तदा तस्मिन्वाक्ये मां प्रति साध्यस्यासिद्धत्वेन दृष्टान्तः अन्यतरसाध्यविकल इति ।

प० — **देशत इत्यादि** । वियदवन्यादिभिन्नदेशत्वात् अतीतानागतवाक्यवाक्यार्थयोर्भिन्नकालीनत्वादिति भावः ॥ **इति साध्यत इति** । संप्रतिपन्नवाक्यान्तरवदिति दृष्टान्त इति भावः ॥ **अन्यत्राभावादिति** । एतद्वाक्यप्रतिपाद्यार्थविशेषस्य वाक्यत्वरूपहेतुमति वाक्यान्तरे अभावादित्यर्थः ॥ **लिंगतानुमानमेवेति** । इदं वाक्यं लिंगतया वाक्यार्थप्रतिपत्तिजनकं वाक्यत्वाद्वाक्यान्तरवदिति प्राप्तत्वादिति भावः । अस्तु को दोष इत्यत आह **तत्र चेति** । प्रतिवादिनस्तत्र साध्यासम्मतेरिति भावः । सम्बन्धान्तरं वेति कल्पं निराह **न द्वितीय इति** ।

या० — **वाक्यवाक्यार्थयोरिति** । यत्र वाक्यं तत्र वाक्यार्थो, यत्र वाक्यार्थाभावस्तत्र वाक्याभाव इति दैशिकयोरन्वयव्यतिरेकव्याप्त्योराकाशे व्यभिचारेण; यदा वाक्यं तदा वाक्यार्थः यदा

वाक्यार्थाभावः तदा वाक्याभाव इति कालिकयोस्तयोरतीतादिप्रतिपादकवाक्यकाले व्यभिचारेणा-भावादित्यर्थः ॥ **तत्र दृष्टान्त इति** । वाक्यान्तरे लिङ्गतया प्रतिपाद्यप्रतिपादकभावसम्बन्धेनार्थवत्त्वा-सम्मतेरिति भावः ।

श्री० — **वाक्यवाक्यार्थयोरिति** । धूमो वन्हौ लिङ्गमितिवद्वाक्यस्यैव वाक्यार्थे लिङ्गत्वं वाक्यार्थनिरूपितव्याप्यत्वं प्राप्तं; तन्न सम्भवति । यत्र वाक्यं तत्र वाक्यार्थ इति न दैशिकान्वय-व्याप्तिः । शब्दरूपवाक्योपेते गगने व्यभिचारात् । एवं दैशिकव्यतिरेकव्याप्तेरप्यत्रैव व्यभिचारः । तथा यदा वाक्यं तदा वाक्यार्थ इति न कालिकोऽन्वयः । अतीतादिविषयवाक्ये व्यभिचारात् । तथा कालिकव्यतिरेकस्याप्यत्रैव व्यभिचारो बोध्यः । **इदं वाक्यं** गामानयेति वाक्यम् । **वाक्यार्थ-मात्रं** वाक्यार्थसामान्यमित्यर्थः । वाक्यार्थवत्त्वं नाम वाक्यार्थवतो भावो वाक्यार्थ एव भवतीत्यभि-प्रेत्येत्थमुक्तमिति द्रष्टव्यम् । **विशेषः** गोकर्मकानयनक्रियासंसर्गरूपः । उत्तरत्राप्येवमेव विशेषशब्दार्थो ध्येयः ॥ **वैयर्थ्यमिति** । वाक्यभिन्नमानान्तरसिद्धत्वादित्यर्थः । नदीतीरे फलानि सन्तीति वाक्ये व्यभिचारश्चेत्याह **अनैकान्त्यं चेति** । अनुमानविधयैव वाक्यस्य वाक्यार्थबोधकत्वं न साक्षादिति पक्षस्य परित्यागादपसिद्धान्त इत्याह **अपसिद्धान्ताच्चेति** । **सिद्धेऽर्थे** वाक्यार्थे प्रकारान्तरेण सिद्धेसतीत्यर्थः ॥ **तत्र चेति** । वाक्यं वाक्यार्थं लिङ्गत्वेन प्रतिपादयतीति साधने दृष्टान्तत्वेनाभिप्रेतनदीतीर इत्यादिवाक्ये साध्यस्यास्माकमसम्मतत्वात्साध्यवैकल्यमित्यर्थ. ॥ **तदिति** । संयोगसमवायरूपसम्बन्धान्तरेत्यर्थः ।

च० — **केचित्** शब्दस्य स्वातन्त्र्येण प्रामाण्यमनङ्गीकुर्वाणाः । **देशत इत्यादि** । अतीता-द्यर्थकवाक्यस्याकाशवर्तमानकालाश्रिततया तदर्थस्य तदवयवकालान्तराश्रितत्वादिति भावः । **वाक्यार्थ-मात्रम्** वाक्यप्रतिपाद्यत्वावच्छिन्नम् । **तद्विशेषः** घटकर्मकानयनत्वाद्यवच्छिन्नम् । **अन्यत्रा-भावादिति** । घटकर्मकानयनत्वाद्यवच्छिन्नस्य पटमानयेति वाक्येऽभावादिति भावः । **तत्र दृष्टान्त इति** । लिङ्गतया प्रतिपाद्यप्रतिपादकभावसंबन्धेनार्थवत्त्वस्य निदर्शनीकृतवाक्यान्तरे संप्रतिपत्त्यभावादिति भावः । संबन्धान्तरं वेति द्वितीयकल्पं प्रतिविधत्ते **न द्वितीय इति** ।

सु० — **अथैवं प्रयुज्यते, विवादाध्यासितानि पदानि स्वस्मारितार्थान्वयप्रमितिपूर्वकाणि आकाङ्क्षादिमत्पद(कदम्बक)त्वादिति । तदयुक्तम् । विनाप्यन्वयप्रमितिं दैवात्प्रयुक्तेष्वा-**काङ्क्षादिमत्सु पदेष्वनैकान्त्यात् । **आप्तप्रयुक्तत्वेन हेतुविशेषणे** साध्यार्थस्य हेत्वर्थे प्रवेशा-**पत्तेः । पुरुषविशेषप्रयुक्तत्वस्याध्यापकप्रयुक्तेषु** व्यभिचारात् । **मूलप्रमानुमानेऽपि वेदेषु अनुपपत्तेः । तदपौरुषेयत्वस्य** साधितत्वात् ।

**शे०** — उदयनोक्तमनुमानप्रकारमाशङ्कते **अथेति** । अत्र प्रतियोगिविशेषोपरक्तसंसर्गसिद्ध्यर्थमेतानीति पदविशेषणं द्रष्टव्यम् । तस्य च विशिष्यश्रूयमाणानीत्यर्थः ॥ **स्वस्मारितेति** । धूमोऽस्तीति वाक्ये वह्निसंसर्गज्ञानेनार्थान्तरतादिनिवृत्त्यै स्वस्मारितार्थेति । वृत्त्या पदस्मारितत्वं च तदर्थः । अन्यथा वह्नेरपि स्वहेतुधूमोपस्थापकधूमपदस्मारितत्वसंभवेनार्थान्तरतातादवस्थ्यात् । अन्वयज्ञानपूर्वकत्वमात्रसाधने अन्वयस्य वस्तुसत्त्वासिद्धेस्तत्सिद्ध्यर्थं प्रमितिग्रहणम् । हेतौ नदीकच्छसंसर्गपरतयोच्चारितेऽहो विमलं जलं नद्या इत्येकदेशे व्यभिचारवारणाय तात्पर्यगर्भाकाङ्क्षोपादानम् । न चेश्वरतात्पर्यमादाय तात्पर्यगर्भाकाङ्क्षोपपत्तिरिति वाच्यम् । अजनितान्वयबोधस्यैव व्यभिचारोदाहरणस्य वारणीयत्वात् । तत्र चेश्वरतात्पर्यकल्पनात् । आदिपदेन च योग्यतासत्तिपरिग्रहः । नदीतीरे पञ्चफलानि सन्त्यग्निना सिञ्चेदित्याद्ययोग्यवाक्ये व्यभिचारवारणाय योग्यतोपादानम् । योग्ये साकाङ्क्षेऽसन्निधानादजनितपदार्थस्मरणे व्यभिचारवारणाय आसत्तीत्युपादानम् । आसत्तेरव्यवधानेन पदार्थस्मृतिरूपत्वान्न तत्र व्यभिचार इति भावः । न च दृष्टान्ताभावः । परप्रयुक्तस्य गामानयेति पदकदम्बस्य पक्षतुल्यत्वादिति वाच्यम् । स्वप्रयुक्तस्य तस्य दृष्टान्तत्वाभ्युपगमात् । न चैवमर्थासिद्धिः । ज्ञानावच्छेदकतयैव तत्सिद्धेः । तस्य च संसृज्यमानोपहितस्यैवावच्छेदकत्वान्न विशेषाप्रतिलम्भप्रसङ्गोऽपीति भावः ॥ **दैशात्प्रयुक्तेष्विति** । शुकाद्युच्चारितेषु धूमोऽस्तीत्यादिपदेष्वित्यर्थः । तत्र विवक्षितसाध्याभावमुपपादयितुं विनाऽप्यन्वयप्रमितिमित्युक्तम् । विवक्षितहेतुमत्तामुपदर्शयति **आकाङ्क्षादिमत्स्विति** । न च तत्र शुकाद्यन्वयप्रमित्यभावेऽपीश्वरीयान्वयप्रमितिसंभवान्न व्यभिचार इति वाच्यम् । ईश्वरीयान्वयप्रतीतेर्व्यधिकरणतया तत्राकारणत्वात् । अन्यथा विसंवादिशुकादिवाक्यरचनाहेतुत्वेन तस्य भ्रमोऽपि कल्पनीयः स्यादिति नित्यप्रमावन्नित्यभ्रमस्यापि सिद्धिप्रसङ्गादिति भावः । आप्तप्रयुक्तत्वे सत्याकाङ्क्षादिमत्पदकदम्बकत्वस्यैव हेतुत्वान्न शुकादिवाक्ये व्यभिचार इत्यत आह **आप्तेति** । अत्राप्तप्रयुक्तत्वमात्रस्य तत्प्रयुक्तपदेऽपि सत्त्वात्तत्र व्यभिचारवारणाय विशेष्यग्रहणमिति ध्येयम् ॥ **हेत्वर्थ इति** । तथा च साध्यवद्धेतोरपि सन्दिग्धत्वेन सन्दिग्धासिद्धिः स्यादिति भावः । ननु शुकबालादीनामन्वयप्रमित्यभावेऽपि यद्विरचितपदावलीज्ञानेन पदप्रयोगस्तस्य मूलपुरुषस्य तदन्वयप्रमितिसत्त्वेन मूलपुरुषीयस्वस्मारितार्थसंसर्गप्रमितिपूर्वकत्वात्तस्यैव च साध्यत्वेन विवक्षितत्वान्न व्यभिचार इत्याशङ्क्याह **मूलेति** । एवं तर्हि माऽस्तु शुकादिवाक्ये व्यभिचारः तथाऽपि यस्य पुराणादेः स्वतन्त्रो वक्ताऽस्ति तत्र स्वतन्त्रवक्तुरुक्तरूपप्रमितिसत्त्वेनोक्तसाध्यस्य तत्र साधनसंभवेऽपि वेदस्यापौरुषेयत्वेन स्वतन्त्रवक्तृशून्यत्वेन तदीयोक्तरूपप्रमितिपूर्वकत्वस्य तत्रानुपपत्त्यांऽशे बाधः स्यादेवेत्याशयेनाह **वेद इति** । ननु भवेदेवं यदि वेदस्यापौरुषेयत्वं स्यात्तदेव कुत इत्यत आह **तदिति** ॥ **साधितत्वादिति** । 'अपि वेदानामङ्गीकार्या हि नित्यते'त्यादिना जिज्ञासाधिकरणे, 'नित्यत्वात्पुरुषोद्भवैरि'त्यादिना चैतदधिकरणे चेति शेषः ।

स० — **दैवात्प्रयुक्तेष्विति** । शुकादिवाक्येष्वित्यर्थः ।। **आप्तप्रयुक्तत्वेनेति** । आप्त-प्रयुक्तत्वमात्रस्य तत्प्रयुक्तपदेऽपि सत्त्वाद्विशेष्यभाग इति द्रष्टव्यम् । **साध्यार्थस्येति** । तथा च साध्य-वात् हेतोरपि हेतुविशेषणसन्देहेन संदिग्धत्वापत्त्या साध्याविशिष्टतापत्तेरिति भावः ।

प० — **दैवादिति** । घटवति घटाभावभ्रान्तिमता दैवाद्घटोऽत्रास्तीति प्रयुक्तेष्वित्यर्थः । वाक्या(र्था)र्थज्ञानिप्रयुक्तेष्विति वार्थः ।। **हेत्वर्थेति** । अन्वयप्रमितेर्विवक्षितार्थतत्त्वज्ञानरूपत्वात् । तथा च साध्याविशिष्टतेति भावः ।। **अध्यापकेति** । परवाक्याध्यापकेत्यर्थः ।। **मूलेति** । तादृ-शवाक्यं येनोक्तं तज्ज्ञानरूपमूलप्रमे(माणेत्य)त्यर्थः । तथाच तत्र न व्यभिचार इति भावः ।। **वेदे अनुपपत्तिरिति** । प्रमितिपूर्वकत्वस्य प्रमितिजन्यत्वरूपत्वादिति भावः ।। **साधितत्वादिति** । जिज्ञासाधिकरणे 'वेदानामङ्गीकार्या हि नित्यते'त्यादौ साधितत्वादित्यर्थः ।

या० — **दैवात्प्रयुक्तेष्विति** । वाक्यार्थज्ञानाभावेऽपि प्रयुक्तेषु शुकबालादिवाक्येष्वित्यर्थः ।। **हेत्वर्थ इति** । अन्वयप्रमितेर्विवक्षितार्थतत्त्वज्ञानरूपत्वादित्यर्थः । तथा च सन्दिग्धासिद्धिरिति भावः ।। **अध्यापकेति** । अन्यरचितवाक्याध्यापकेत्यर्थः । ननु न शुकादिवाक्येषु व्यभिचारः । शुकादयो ह्यन्यरचितं वाक्यमनुवदन्ति । एवं च तद्वाक्ये शुकादिप्रमामूलकत्वाभावेऽपि तद्वाक्यं यत्प्रणीतं तत्प्रमामूलकत्वं तत्राप्यस्त्येवातो न व्यभिचारस्तत्रेत्यत आह **मूलप्रमेति** ।। **साधितत्वादिति** । जिज्ञा-साधिकरणे एतदधिकरणे चेति शेषः ।

श्री० — **विवादेति** । पौरुषेयापौरुषेयागमस्थपदानीत्यर्थः । अनेनानुमानेन विवक्षितार्थ-संसर्गज्ञानवान्वक्ता सिध्यति तज्ज्ञानावच्छेदकत्वेन च संसर्गः सिध्यति । ततश्च संसर्गरूपो वाक्यार्थो-ऽनुमानेनैव गम्यत इति सिध्यति ।। **आप्तीति** । तथा च न शुकादिष्वाप्तिरिति ज्ञेयम् ।। **साध्यार्थ-स्येति** । तथा चान्वयप्रमितेर्विवक्षितार्थतत्त्वज्ञानरूपाप्तिरूपत्वेन साध्यवद्धेतावपि विशेषणस्य सन्दिग्ध-त्वात्साध्यावैशिष्ट्यमित्यर्थः । पुरुषेति शुकवाक्ये, विशेषेति बालवाक्ये च व्यभिचारपरिहारः । ननु तत्रापीश्वरज्ञानमादाय तत्पूर्वकताऽस्त्येवेति नानुपपत्तिरित्यत आह **तदिति** ।

च० — **विवादेति** । प्रकृतसाध्यतदभावकोटिकसंदेहास्कंदितानीत्यर्थः । **दैवादिति** । वाक्यार्थमजानानैः शुकबालादिभिरुच्चारितेष्वित्यर्थः । **हेत्वर्थेति** । समभिव्याहृतैकपदार्थप्रतियोगि-कतादृशापरपदार्थानुयोगिकसंसर्गप्रमितेर्विवक्षितार्थतत्त्वज्ञानरूपतया साध्याविशिष्टतापत्तेरिति भावः । **अध्यापकेति** । परकृतवाक्याध्यापकेष्वित्यर्थः । **मूलेति** । तादृशवाक्यप्रणेतृनिष्ठप्रमेत्यर्थः । **साधि-तत्वादिति** । जिज्ञासानये 'अङ्गीकार्या हि नित्यता'इत्यादिना समर्थितत्वादित्यर्थः ।

सु० — अपरे त्वपौरुषेयस्यागमत्वमुपगम्य पौरुषेयस्यानुमानत्वमभ्युपगच्छन्ति । तेषां तु स्फुटो वेदे व्यभिचारः । किञ्च पदानामन्विताभिधाने शक्तिः । पदान्येव च वाक्यम् । न च वैदिकपदेभ्योऽन्यान्येव लौकिकानि पदानि । वक्ता तु पदज्ञान एवोपयुज्यते । तत्कथं लोकवेदयोः प्रकारभेदः स्यात् । अपि च वेदानुकारेण पठ्यमानेषु लौकिकवाक्येषु कथम् । अन्वयप्रतीतिरुत्पद्यत एव । किन्नाम पुनः पौरुषेयत्वज्ञानादपनीयत इति । एवं तर्हि वाक्यादेव वाक्यार्थज्ञानम् । तत्प्रामाण्यनिश्चयाय तु वक्त्राद्यनुमरणमित्यायातमित्यास्ताम् ।

शे० — अस्तु तर्हि वेदस्यापौरुषेयत्वेन तत्र स्वतन्त्रवक्तृज्ञानानुमानस्य बाधितत्वेनागमतया प्रामाण्यं पौरुषेयस्य तु तत्संभवेनानुमानान्तर्भावसंभवान्नागमत्वमिति प्राभाकरमतमुत्थाप्य दूषयति **अपरे त्विति** ॥ **स्फुट इति** । शुकादिवाक्य इव वेदे व्यभिचारस्याकाङ्क्षादिमत्पदकदम्बकत्वरूपहेतुमत्तया स्वस्मारितार्थसंसर्गविषयस्वतन्त्रवक्तृप्रमितिपूर्वकत्वरूपसाध्याभाववत्तया च परस्य सम्मतत्वेन तद्वत्तया व्युत्पादनानपेक्षत्वं दर्शयितुं स्फुट इत्युक्तम् । किञ्च पौरुषेयापौरुषेयवाक्ययोरनतिभिन्नत्वेन मद्रीत्या उभयस्याप्यागमत्वस्यैव, काणादादिरीत्या अनुमानत्वस्यैव वा संभवेन अपौरुषेयस्य आगमत्वं, पौरुषेयस्य चानुमानत्वमभ्युपगच्छतोऽर्धजरतीयप्रसङ्ग इत्याशयवान्कथमनयोरनतिभिन्नत्वमित्यतः पौरुषेयवाक्यस्थानि पदानि किमन्विताभिधानशक्तिमन्ति न वा । तथा किं पदान्येव वाक्यमुत ततोऽन्यदिति विकल्पद्वयं मनसि निधायाद्यपक्षद्वयं दूषयति **किञ्च पदानामिति** । पौरुषेयवाक्यस्थपदानामन्विताभिधानशक्तिमत्त्वे तथा पदानामेव च वाक्यत्वेऽपौरुषेयवाक्यस्येव पौरुषेयवाक्यस्यापि संसर्गबोधकत्वेनागमत्वप्रसङ्ग इत्यर्थः । नान्त्यौ । तथा सति पदानामभेदेन वेदस्यापि संसर्गबोधकत्वानुपपत्तेरनागमत्वप्रसङ्गादित्यभिप्रेत्य भवेदेतदेवं यदि पदानामभेदो भवेत् । न चैतदस्ति । लोकवेदयोः सत्यपि वर्णाभेदे, केनचित्स्वरच्छान्दसवर्णागमलोपविकारविपर्ययाध्ययनाध्यापनादिधर्मभेदेन, जराराजपदयोरिव क्रमभेदेन, अथ शब्दानुशासनं, केषां शब्दानां लौकिकानां वैदिकानां चेत्यभियुक्तानां व्यपदेशभेदात्स्पष्टभेदस्वरूपयूपादिशब्दसाहचर्याच्च लोकवेदयोः पदानामन्यत्वस्य स्थितत्वात् । ततश्च वैदिकपदानामन्विताभिधानशक्तिमत्त्वेन संसर्गबोधकत्वं लौकिकानां च तद्रहितानां तदबोधकत्वं च भविष्यतीत्यतो यत्रार्थप्रतीत्यौपयिकधर्मभेदो यथा पूर्वपदप्रकृतिस्वरत्वे बहुव्रीह्यर्थत्वमन्तोदात्तत्वे स्वार्थवृत्तित्वं स्मृतितः । ब्राह्मणादिषु न्यूनातिरिक्तवशात् जराराजादिषु क्रमान्यत्वादर्थान्यत्वावसायः तत्र पदभेदोऽभ्युपगम्यत एव । नैवं लोकवेदयोरौपयिकधर्मभेदोऽस्ति । अनियतस्वराणां नियतस्वराणां चार्थान्यत्वस्य स्मृतितो लोकतो वाऽनवगमात् । देवासः त्मनेत्यादिषु च लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि तद्रूपस्यार्थान्तरानवगमात् । किञ्चिद्रूपभेदेऽपि लौकिकप्रत्यभिज्ञानात् । न च लोक-

वेदयोः पदानामन्यत्वमित्युक्तप्रसङ्गतादवस्थ्यमेवेत्याशयवानाह **न च वैदिकेभ्य इति** । ननु तथाऽपि स्वतन्त्रवक्तृभावाभावाभ्यां लोकवेदयोः पदान्यत्वं भविष्यतीत्यतः पुरुषस्य वाक्योत्पाद्यज्ञानेऽप्युपयोगाङ्गीकारेऽपौरुषेयवाक्ये वेदपुरुषाभावेन तस्य बोधकत्वाभावापत्त्या वाक्योत्पाद्यज्ञाने तस्यानुपयोगेनोच्चारणद्वारा पदज्ञानमात्रोपयोगिनः पुरुषस्य भावाभावयोः संसर्गबोधकत्वतद्बोधकत्वे प्रति न प्रयोजकतेति तद्भावाभावौ न पदभेदकावित्याशयवानाह **वक्ता त्विति** ॥ **प्रकारभेद इति** । संसर्गबोधकत्वतदनुमापकस्वरूप इत्यर्थः । अङ्गीकृत्य लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे पदभेदं, यत्र न न्यूनातिरेकस्तत्र तद्भेदस्य निर्निबन्धनत्वेनायोगात्तादृशलौकिकवैदिकपदानामनन्यत्वाद्वैदिकपदवल्लौकिकानामपि तेषां संसर्गबोधकत्वान्न तदनुमापकता इत्याह **अपि चेति** । तत्र संसर्गबोधकत्वेपि तस्य वास्तवत्वसिद्ध्यर्थं स्वतन्त्रवक्तृप्रतिमिपूर्वकत्वस्यावश्याश्रयणीयत्वादनुमानत्वोक्तिरिति भावेन शङ्कते **अन्वयेति** । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु प्रामाण्यस्य स्वतस्त्वेन तत्प्रामाण्यनिश्चयस्य वक्तृयथार्थज्ञानाप्रयोज्यत्वस्य प्रागुपपादितत्वान्न प्रामाण्यनिश्चयार्थताऽपि वक्त्राद्यनुसरणस्य संभवतीत्याशयेनास्तामित्युक्तम् । यद्यप्ययं विचारो यत्रागमस्योक्तरूपेण द्वैविध्यं कण्ठरवेणोक्तं तत्रैव सङ्गतस्तथाऽपि सुप्रसिद्धत्वादनुक्तेरपि उक्तिप्रतिरूपकत्वेन तत्कार्यकारित्वादत्र तद्विचारो नासङ्गत इत्यवधेयम् ।

स० — ननु पदमात्रं पक्षीकृत्य येनान्वयप्रमितिपूर्वकत्वं साध्यते, तत्र भवेदुक्तदोषः । मया तु पौरुषेयपदमात्रमेव पक्षीकृत्य उक्तसाध्यं साध्यते । एवं च नोक्तदोष इत्यत आह **अपरे त्विति** । तत्र किं पूर्वोक्त एव हेतुः, उत पौरुषेयत्वं हेतुविशेषणत्वेनाभिमतमिति विकल्पं मनसि निधायाद्यं प्रत्याह **स्फुटो वेदे इति** । द्वितीयं निराह **किञ्चेति** । ननु पदानामेव वाक्यत्वेऽपि पौरुषेयवाक्यस्य स्वतो न वाक्यार्थबोधकत्वं संभवति । संसर्गस्यैव वाक्यार्थत्वेन तत्र शक्तेरभावादित्यत आह **अन्विताभिधान इति** । ननु लौकिकवाक्यवैदिक(पद)योः कथं प्रकारभेदाभावः । वैदिकानां पदत्वात् लौकिकस्य च वाक्यत्वादित्यत आह **पदान्येव च वाक्यमिति** । ननु लौकिकवाक्ये वक्त्रपेक्षासद्भावेन वेदे तदभावेन प्रकारभेद इत्यत आह **वक्तेति**। **वेदानुकारेणेति** । वेदवत् स्वरादिना पठ्यमानेष्वित्यर्थः ।

प० — **न च वैदिकपदेभ्योन्यानीति** । पूर्वतन्त्रे लोकवेदाधिकरणे तथोक्तेरिति भावः ।

श्री० — **पौरुषेयस्येति** । तत्र मूलभूतवक्तृज्ञानानुमानसम्भवादिति भावः ॥ **किञ्चेति** । तथा च पौरुषेवाक्यवत्पृथक् प्रामाण्यं वाच्यमिति भावः । ननु लौकिकपदेष्वस्ति वक्ता न वैदिकपदेष्वतोऽस्ति विशेष इत्यत आह **वक्ता त्विति** । वेदानुकारेण तद्वत्स्वराद्युपेततया । कथं वेदापेक्षया भिन्नः प्रकार इत्यर्थः । स्वरादिना तत्साम्यादिति भावः । भेदमाशङ्कते **अन्वयेति** । **अपनीयत इति** । पश्चाद्वक्तृज्ञानानुमानं भवतीति भावः ।

च० — **न च वैदिकपदेभ्योऽन्यानीति** । पूर्वतन्त्रे लोकवेदाधिकरणे तथोक्तेरिति भावः ।

सु०— तदेवं सामान्यतो विशेषतश्च प्रमाणानि लक्षितानि । तत्र स्वीयसामान्यलक्षणसमर्थनेनार्थाद्वाद्यन्तरोक्तसामान्यलक्षणानि निरस्तान्येव । तथाऽपि स्मृतिविषये वक्तव्य(वि)शेषस्य विद्यमानत्वात्प्राभाकरलक्षणं विशेषतो निराकरोति अनुभूतिरिति ।

अनु०— अनुभूतिः प्रमाणं चेत्केन स्मृतिरपोद्यते ॥

'तदा वक्तव्यं स्मृतिः प्रमा न वा । आद्येऽपसिद्धान्तः' इति शेषः । द्वितीये त्वाह केनेति । यदि स्मृतिर्न प्रमा तदा स्मृतिः लक्षणेन व्यावर्तनीया । अन्यथाऽतिव्याप्तेः । (तत्केन) तत्कुतः स्मृतिरपोद्यते व्यावर्त्यते । स्मृतिव्यावर्तकं न किमपि । लक्षणेऽस्तीति यावत् ।

नन्वनुभूतिरित्युक्त एव स्मृतावप्रसङ्गः । स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिरित्यभिधानात् । न हि स्मृतिः स्मृतिव्यतिरिक्ता भवतीति । मैवम् । स्मृतेरपि स्मृत्यन्तरव्यतिरिक्तत्वसंभवेनाव्यवच्छेदकत्वात् । स्मृतित्वानधिकरणं ज्ञानमनुभूतिरिति चेत् । किमिदं स्मृतित्वम् । न तावज्जातिः । गुणेषु जातेरनङ्गीकृतत्वात् । संस्कारमात्रजन्यज्ञानत्वं तु न संभवति । अदृष्टादिजन्यत्वात् । असाधारणकारणविवक्षायामपि तथा । स्मृतेर्मानसत्वस्य वक्ष्यमाणत्वात् । एतेन नियमेन प्रत्युत्पन्नासाधारणकारणकप्रत्ययत्वमनुभूतित्वमित्यप्यवच्छेदकं द्रष्टव्यम् । स्मृतेरपि मानसप्रत्यक्षजन्यायास्तथात्वात् । संस्कारस्य कारणत्वेऽपि नासौ सत्तामात्रेण स्मृतिं जनयति किन्नामोद्बुद्ध एव । तथा च कथं न प्रत्युत्पन्नासाधारणकारणजन्यत्वम् । अन्यथेन्द्रियादिमा(यमा)त्रमुपादायानुभूतेरपि तन्निराकुर्यात् । किञ्च स्मृतिरपि काचित्प्रत्युत्पन्नसंस्कारजन्या संभवत्येव । न चात्रच्छेदकेन विना नियमो ज्ञातुं शक्यत इति ।

शे०— 'याथार्थ्यमेव प्रामाण्यमि'त्यादिना प्रमेयोपसंहारपूर्वकमुत्तरग्रन्थानर्थक्यं परिहरति **तदेवमिति** । यद्यप्यागमलक्षणमिह नोक्तं यदाह सुप्रसिद्धत्वान्नोक्तमिति ततश्च विशेषतः प्रमाणानि लक्षितानीत्युपसंहारो न युक्तस्तथाऽपि सुप्रसिद्धत्वादिति वदताऽनभिमततिनिमित्तानुक्ताया व्यावर्तितत्वेन अभिमतत्वसिद्धेस्तदभिप्रायेण वा लक्षितालक्षितसमुदाये छत्रिन्यायेन वा लक्षितानीत्युपसंहारोपपत्तिरिति ध्येयम् । 'अङ्गीकृतं चेत्प्रामाण्यं स्मृत्यादेः का विरुद्धते'त्यादिना स्मृतिविषये वक्तव्यस्योक्तत्वात्किमनेनेत्यत उक्तं **विशेषस्येति** । स्मृतावव्याप्त्या प्राभाकरलक्षणमपि दूषितमेवेत्यत उक्तं **विशेषत इति** । ननु 'केन स्मृतिरपोद्यते' इत्यनेन लक्षणे स्मृतिव्यावर्तकविशेषणाभावोपपादनेन तत्रातिव्याप्तिरित्युच्यते । तदनुपपन्नम् । स्मृतेः प्रमाणतया लक्ष्यत्वेन तद्व्यावर्तकपदाभावस्यादोषत्वादित्यतोऽत्र विकल्पद्वयं

बहिरेवाद्यपक्षदूषणं चाभिप्रेत्य द्वितीयपक्षनिरासमात्रपरत्वात्केनेत्यादिग्रन्थस्य नानुपपत्तिरित्यभिप्रेत्य विकल्पद्वयमाद्यपक्षदूषणं च बहिरेव दर्शयन्द्वितीयपक्षनिरासपरतयोत्तरवाक्यं योजयति **तदा वक्तव्यमित्यादिना ॥ अन्यथेति** । लक्षणस्य तदनुगतत्व इत्यर्थः ।

स्मृतिव्यतिरिक्तेत्यत्र स्मृतिशब्देन काचित्स्मृतिव्यक्तिरुच्यते स्मृतित्वावच्छिन्नं वेति विकल्पं मनसि निधायाद्यं दूषयति **मैवं स्मृतेरपीति** । द्वितीयमाशङ्कते **स्मृतित्वेति** । स्मृतित्वावच्छिन्नव्यतिरिक्तमित्यर्थः । तथा च स्मृतिज्ञानव्यक्तेः स्मृत्यन्तरव्यतिरिक्तत्वेऽपि तत्स्मृतित्वावच्छिन्नाव्यतिरिक्तत्वेन स्मृतित्वावच्छिन्नव्यतिरिक्तत्वाभावाद्युक्तमस्य स्मृतिव्यवच्छेदकत्वमिति भावः । यद्यप्यत्र स्मृतित्वावच्छिन्नव्यतिरिक्तज्ञानत्वमित्येववक्तुं शक्यं तथाऽपि स्मृतित्वावच्छिन्नव्यतिरिक्तत्वमपि स्मृतित्वानधिकरणस्यैवेति न स्मृतित्वाधिकरणस्मृतेः स्मृतित्वावच्छिन्नव्यतिरिक्तत्वमिति स्पष्टयितुमेवमुक्तमिति द्रष्टव्यम् । यद्यपि स्मृतिभेदवादिना स्मृतेःसजातीयव्यक्त्यन्तरापेक्षया व्यतिरिक्तत्वस्येव प्रतिव्यक्ति स्मृतित्वानि भिद्यन्त इति वादिना मया स्मृतेः स्मृतित्वान्तरानधिकरणत्वस्याप्यभ्युपगतत्वेन स्मृतित्वानधिकरणत्वमपि न तद्व्यवच्छेदकमित्येव वक्तुमुचितम् । तथाऽप्यङ्गीकृत्य स्मृतित्वस्यैकत्वं पराभिमानं खण्डयितुं तथोक्तमित्यवधेयम् । स्मृतित्वं किं जातिः किंवोपाधिरिति विकल्पद्वयं मनसि निधायाद्यं निषेधति **न तावदिति** । कुतो नेत्यतो नियतसंस्थानविशेषव्यङ्ग्यस्यैव गोत्वादेर्जातित्वदर्शनेन नियतसंस्थानविशेषव्यङ्ग्यत्वस्य जातित्वव्यापकत्वाद्गुणत्वरूपत्वादौ च नियतसंस्थानविशेषव्यङ्ग्यत्वरूपजातित्वव्यापकव्यावृत्त्या तद्व्याप्यजातित्वस्यापि व्यावृत्तिसिद्धेर्न गुणेषु गुणत्वरूपस्मृतित्वादिलक्षणजातिस्तैरङ्गीक्रियत इत्याशयेनाह **गुणेष्विति** । विस्तरस्तु अख्यातिवादीयवाक्यार्थचन्द्रिकायां द्रष्टव्यः । निर्वक्तुमशक्यत्वान्नोपाधिरिति द्वितीयोऽपीत्यभिप्रेत्यासंभवेन तत्पक्षं दूषयति **संस्कारमात्रेति** । प्रत्यभिज्ञायामतिव्याप्तिवारणायोक्तम् **मात्रेति** ॥ वेगादिमात्रप्रभवपतनादावनतिप्रसङ्गायोक्तम् **ज्ञानत्वमिति** । असंभवमेवोपपादयति **अदृष्टादीति** । संस्कारमात्रासाधारणकारणकज्ञानत्वं विवक्षितम् । तथा चादृष्टादिजन्यत्वेपि तस्य साधारणत्वान्न संस्कारमात्रजन्यत्वस्यासंभव इत्याशङ्क्याह **असाधारणेति ॥ तथेति** । असंभव एवेत्यर्थः । तमेवोपपादयति **स्मृतेरिति ॥ वक्ष्यमाणत्वादिति** । 'मानसं तद्धि विज्ञानं तच्च साक्षिप्रमाणकमि'त्यादिनेति शेषः । स्मृतिव्यावृत्तानुभूतित्वनिर्वचनान्तरमप्यतिदेशेन निराचष्टे **तेनेति** । प्रत्युत्पन्नमव्यवहितप्राक्कालोत्पत्तिकं यदसाधारणमिन्द्रियार्थसन्निकर्षादि तज्जन्यप्रत्ययत्वमनुभूतित्वमित्यर्थः । माससंवत्सरादिव्यवहितप्राक्कालोत्पन्नसंस्कारजन्यस्मृतिव्युदासाय **प्रत्युत्पन्नेति** । प्रत्युत्पन्नात्ममनःसंयोगादिरूपसाधारणकारणकस्मृतिव्युदासाय **असाधारणेति** । तादृशकारणकपटादिव्युदासाय **प्रत्ययेति** । कदाचिदनुभवानन्तरं भाविना संस्कारेण स्वाव्यवहितोत्तरक्षण एव जनितायां स्मृतावतिव्याप्तिपरिहाराय **नियमेनेत्युक्तम्** । संस्कारस्य स्मृत्यु-

त्पादनेऽविदूरप्राक्कालोत्पत्तिनियमाभावान्न तत्रातिव्याप्तिरिति भावः । **अव्यवच्छेदकम्** अव्यावर्तकम् । स्मृतिसाधारणमिति यावत् । एतेनेत्युक्तमेवोपपादयति **स्मृतेरपीति** । तथात्वात् प्रत्युत्पन्नासाधारणकारणकप्रत्ययत्वात् । स्मृतेः संस्कारासाधारणकारणकप्रत्ययत्वपक्षे तज्जनकसंस्कारस्य प्रत्युत्पन्नत्वेन प्रत्युत्पन्नासाधारणकारणकप्रत्ययत्वस्य तद्व्यवच्छेदकत्वलाभेऽपि मानसप्रत्यक्षजन्यत्वपक्षे प्रत्युत्पन्नासाधारणकारणकप्रत्ययत्वमनुभूत्यन्तरस्येव स्मृतेरप्यविशिष्टमिति न तेन तन्निरास इति भावः । वस्तुस्थितिमनुरुद्ध्यैव च मानसप्रत्यक्षजन्यतया स्मृतेरपि प्रत्युत्पन्नासाधारणकारणकप्रत्ययत्वं व्युत्पादितम् । इदानीं संस्कारमात्रजन्यज्ञानत्वपक्षेऽपि प्रत्युत्पन्नासाधारणकारणकप्रत्ययत्वं तस्या अविकलमित्याह **संस्कारेति** ॥ **सत्तामात्रेणेति** । अतिप्रसङ्गादिति भावः ॥ **उद्बुद्ध एवेति** । संस्कारस्योद्बोधो नाम सदृशदर्शनादिसहकारिलाभस्तस्य चाव्यवहितप्राक्कालोत्पत्तित्वमस्तीति प्रत्युत्पन्नत्वमवर्जनीयमिति भावः । नन्वेतावतोद्बोधस्य प्रत्युत्पन्नत्वप्राप्तावप्यसाधारणकारणस्य संस्कारस्य तदप्राप्तेर्न संस्कारासाधारणकारणकप्रत्ययरूपस्मृतेस्तत्प्राप्तिरित्यतस्तद्वैवनुभूतिजनकस्येन्द्रियादेरप्यप्रत्युत्पन्नत्वादिन्द्रियार्थसन्निकर्षस्य चोद्बोधतुल्यतया तत्प्रत्युत्पन्नत्वस्याप्रयोजकत्वादनुभूतेरपि तन्न स्यात् । यदि च करणस्येन्द्रियादेस्तदभावेऽपि सेतिकर्तव्यस्येन्द्रियस्य तद्भावान्नानुभूतेस्तत्प्रसङ्ग इति मन्यसे तर्हि सेतिकर्तव्यस्य संस्कारस्याप्युक्तरीत्या प्रत्युत्पन्नत्वात्तज्जन्यस्मृतेरपि उक्तरूपानुभूतित्वप्राप्तेरव्यवच्छेदकत्वमेवास्येत्याशयेनाह **अन्यथेति** ॥ **काचिदिति** । अनुभवानन्तरभाविना संस्कारेण स्वाव्यवहितोत्तरक्षण एव या स्मृतिरुत्पद्यते सेत्यर्थः । ननु तथाऽपि संस्कारस्य स्मृत्युत्पादनेऽविदूरप्राक्कालोत्पत्तिनियमाभावान्नियमपदेन तद्व्यावृत्तिः स्यादित्यत आह **न चेति** । तत्रश्च यो योऽनुभवः स सर्वोऽप्युक्तरूपकारणजन्य इति नियमो वाच्यः । न चासावनुभूतत्वरूपावच्छेदकाग्रहे शक्यो ग्रहीतुम् । अनुभवत्वं चेदानीमेव निरुच्यत इत्यन्योन्याश्रय इति भावः ।

**सं० — वक्ष्यमाणत्वादिति** । 'मानसं तद्धि विज्ञानम्' इत्यादिनेति शेषः । **स्मृतेरिति** । मानसप्रत्यक्षजन्याया इत्येतद् हेतुगर्भविशेषणम् । घटादिज्ञानस्य खलु प्रत्यक्षजन्यत्वेनैव प्रत्युत्पन्नासाधारणकारणप्रसूतप्रत्ययत्वमुच्यते । स्मृतेरपि प्रत्यक्षजन्यत्वेन तदस्तीति भावः । परमतमङ्गीकृत्यापि समाधानमाह **संस्कारस्येति** । **इन्द्रियादीति** । आदिपदेन इन्द्रियमनस्संयोगो ग्राह्यः । नियमेनेत्येतत् स्वरूपकथनमुत लक्षणान्तर्गतमिति विकल्प्याद्यं दूषयति **स्मृतिरपीति** । यत्रानुभवानन्तरमेव संस्कारोत्पत्तिः, तदव्यवहितोत्तरक्षण एव स्मृत्युत्पत्तिः तादृशीत्यर्थः । द्वितीयं दूषयति **न चावच्छेदकेनेति** । अवच्छेदकाज्ञाने एतदवच्छिन्ने इदं लक्षणमस्तीति ज्ञातुं न शक्यते । प्रकृते चावच्छेदकं नास्तीति भावः ।

प० — 'तदा' इत्यादिः 'चेत्'इत्यनन्तरं शेषो ध्येयः ॥ **अभिधानादिति** । प्राभाकरैरुक्तेरित्यर्थः ॥ **गुणेषु जातेरिति** । आकृतिव्यङ्ग्यत्वाज्जातेः, गुणेष्वाकृतेरभावेन तैर्जातेस्तत्रानङ्गीकारादित्यर्थः ॥ **न संभवतीति** । असंभवि स्मृतौ लक्षणमित्यर्थः ॥ **तथेति** । असंभवि लक्षणमित्यर्थः । तत्र हेतुः **स्मृतेरिति** । 'मानसं तद्धि विज्ञानमि'त्यनुपदमेवेति भावः ॥ **प्रत्युत्पन्नेति** । अव्यवहितपूर्वकालोत्पन्नमिन्द्रियार्थसन्निकर्षादिरूपम् असाधारणकारणं यस्य तादृशप्रत्ययत्वमित्यर्थः । कदाचित्संस्कारोत्पत्त्यव्यवहितक्षणोत्पन्नायां, चिरकालीनसंस्कारजायां, आत्ममनःसंयोगादिरूपसाधारणकारणजायां च स्मृतावनतिव्याप्तये क्रमान्नियमेनेति, प्रत्युत्पन्नेति, असाधारणकारणेति चोक्तम् । नियमेन प्रत्युत्पन्नतन्तुसंयोगाद्यसाधारणकारणकपटादौ अनतिव्याप्तये प्रत्ययेत्युक्तम् । **अव्यवच्छेदकमिति** । स्मृतेरित्यनुकर्षः । तत्र हेतुः **स्मृतेरपीति** । पररीत्यापि स्मृतौ एतल्लक्षणमस्तीत्याह **संस्कारस्येति** ॥ **उद्बुद्ध इति** । सदृशदर्शनादिना कार्योन्मुखीभूत इत्यर्थः ॥ **तन्निराकुर्यादिति** । नियमेनेत्यादिनोक्तानुभूतित्वं तच्छब्दार्थः । नन्वत एव नियमेनेत्युक्तमित्यत आह ॥ **न चेति** । दण्डादेर्घटत्वाद्यवच्छेदेनेव इहानुभूतिमात्रनिष्ठेनावच्छेदकेन नियमो ग्राह्यः । नचोक्तरूपानुभूतित्वातिरिक्तमवच्छेदकमस्ति । तेनैवावच्छेदकेन नियमग्रहणे चात्माश्रयापत्तेः । तथा चातिव्याप्तिं परिहरतोऽसंभव एवापन्न इति भावः ।

या० — **गुणेषु जातेरिति** । तन्मते जातेराकृतिव्यङ्ग्यत्वाद्गुणेषु तदभावादिति भावः ॥ **न सम्भवतीति** । तथा चासम्भव इति भावः ॥ **तथेति** । असम्भव इत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'मानसं तद्धि विज्ञानमि'त्यादिनेति शेषः ॥ **नियमेनेति** । प्रत्युत्पन्नमव्यवहितप्राक्कालोत्पन्नं यदसाधारणकारणमिन्द्रियार्थसन्निकर्षादि तज्जन्यप्रत्ययत्वमित्यर्थः । संवत्सरादिव्यवहितप्राक्कालोत्पन्नसंस्कारजन्यस्मृतिव्युदासाय **प्रत्युत्पन्नेति** । प्रत्युत्पन्नात्ममनःसंयोगादिरूपसाधारणकारणकस्मृतिव्युदासाय **असाधारणेति** । तादृशकारणकघटादिव्युदासाय **प्रत्ययेति** । कदाचिदनुभवानन्तरक्षणभाविना संस्कारेणाव्यवहितोत्तरक्षण एव जातायां स्मृतावतिव्याप्तिपरिहाराय **नियमेनेत्युक्तम्** । संस्कारस्तु न नियमेन तादृश इति नातिव्याप्तिः । **अव्यवच्छेदकम्** अव्यावर्तकम् । स्मृतिसाधारणमिति यावत् । तदुपपादयति **स्मृतेरपीति** । परमतेनापि स्मृतौ लक्षणमुपपादयितुमाह **संस्कारकारणकत्वेऽपीति** ॥ **उद्बुद्ध इति** । सदृशदर्शनादिसहकारिसमवहित इत्यर्थः ॥ **अन्यथेति** । अवान्तरव्यापारविशिष्टस्य प्रत्युत्पन्नत्वाविवक्षायामित्यर्थः **इन्द्रियादिमात्रमिति** । असन्निकृष्टेन्द्रियादिकमादायासम्भवः स्यादित्यर्थः ॥ **काचित्प्रत्युत्पन्नेति** । अनुभवानन्तरभाविना संस्कारेणोत्तरक्षण एव कदाचित्स्मृतिसंभवेन तत्रातिव्याप्तिरिति भावः । नन्वत एव नियमेनेत्युक्तम् । न हि या या स्मृतिः सा सर्वाऽ-

प्युक्तकारणजन्येति सम्भवत्यतो नातिव्याप्तिरित्यत आह **न चावच्छेदकेनेति** । एवं तर्हि प्रकृते यो योऽनुभवः स सर्वोऽप्युक्तकारणजन्य इति नियमो वक्तव्यः । न चायमनुभवत्वरूपावच्छेदकाग्रहे शक्यग्रहः । अनुभवत्वं चेदानीं निरुच्यत इत्यन्योन्याश्रय इति भावः ।

**श्री०— प्रमा** यथार्थज्ञानम् । प्रत्यभिज्ञाव्यावृत्त्यर्थं मात्रपदम् । मानसप्रत्यक्षजन्यताऽनङ्गीकारपक्षे त्वाह **संस्कारस्येति** । तथा च प्रत्युत्पन्नत्वाभावादिति भावः ॥ **तथा च कथमिति** । संस्कारोद्बोधस्यैव तादृशत्वादित्यर्थः ।

**च०— गुणेषु जातिरिति** । तन्मते जातेराकृतिव्यङ्ग्यतोपगत्या तद्व्यञ्जकाकृतेर्गुणेष्वभावेन तत्र तद्व्यङ्ग्यजातेरनुपगमादित्यर्थः । **वक्ष्यमाणत्वादिति** । 'मानसं तद्धि विज्ञानमि'त्यत्राभिधास्यमानत्वादित्यर्थः । **नियमेन प्रत्युत्पन्नेति** । स्वाव्यवहितपूर्वक्षणावच्छिन्नोत्पत्तिक यदसाधारणकारणमिन्द्रियसन्निकर्षादिरूपं तज्जन्यप्रत्ययत्वमित्यर्थः । संस्कारोत्पत्त्यव्यवहितोत्तरक्षणावच्छिन्नोत्पत्तिकस्मृतिव्यक्तौ चिरकालीनसंस्कारजायामात्ममनःसंयोगादिरूपसाधारणकारणजायां च तस्यामनतिप्रसङ्गाय कारणान्तोपादानम् । तादृशकपालादिसंयोगजन्यघटादिव्युदासाय प्रत्ययत्वांशोपादानम् । **अव्यवच्छेदकम्** अव्यावर्तकम् ।

**सु०— यद्वा अनुभूतिः प्रमाणं चेत्तदा स्मृतावव्याप्तिरिति** शेषः । **ननु स्मृतिः प्रमाणमेव न भवति । तत्कथं तत्राव्याप्तिदोष इत्यत आह** केनेति । **स्मृतिः केन निमित्तेनापोद्यते प्रमाणाद्बहिः क्रियते न केनापीत्यर्थः** । तथा हि । **किमयथार्थत्वात् । याथार्थ्येऽप्यननुभूतित्वाद्वाऽप्रामाण्ये बाधकाभावाद्वा प्रामाण्ये साधकाभावाद्बाधकसद्भावाद्वा । आद्यं दूषयति** केनेति । **स्मृतिः केन प्रबलेन प्रमाणेनापोद्यते बाध्यते । येन यथार्था न स्यात् । बाधकाभावान्नायथार्थत्वं वाच्यमिति ॥ द्वितीयं निराकरोति** केनेति । **किमनुभूतित्वं प्रमाणलक्षणमिति कृत्वाऽननुभूतित्वात्स्मृतिरप्रमाणमित्युच्यते किंवा घटादिदृष्टान्तावष्टम्भेन । आद्येऽन्योन्याश्रयत्वम् । तथा च केन स्मृतिरपोद्यते । द्वितीयेऽपि स्मृतिरेव केनापोद्यते । अस्मृतित्वेनानुभूतिः कुतो नापोद्यते विशेषाभावादिति ॥ तृतीयमपाकरोति** पूर्वेति ।

**अनु०—** पूर्वानुभूते किं मानमित्युक्ते स्यात्किमुत्तरम् ।

**यदि स्मृतिरप्रमाणं स्यात्तदा पूर्वानुभूते किं मानमिति प्रश्नो निरुत्तरः स्यात् । स्मृतिव्यतिरिक्तस्य तत्प्रमाणस्याभावात् । तथा च साक्ष्यादिलोकव्यवहारो लुप्येत ।**

स्मृतिरेव प्रमाणं किन्तु लिङ्गतयेति चेन्न । तथाऽनुभवाभावात् । अन्यथा साक्षात्कारेण कार्येण कर्मकारकतया घटा(द्य)नुमानमित्यपि स्यात् ॥ चतुर्थं प्रत्याह पूर्वेति । स्मृतिरित्येव हि वक्तव्यम् । वचनाच्चानुभवोऽनुमीयत इति लोकव्यवहार एवात्र प्रमाणमित्यर्थः ।

**शे०** — एवं प्राभाकरोक्तलक्षणस्य स्मृतावतिव्याप्तिव्युत्पादकतया केनेत्यादिग्रन्थयोजनाय स्मृतेः प्रमाणत्वप्रतिपादक'पूर्वानुभूते किं मानमि'त्याद्युत्तरग्रन्थासङ्गतिरित्यपरितोषादव्याप्त्युपपादकतया तं ग्रन्थं व्याख्यातुमव्याप्त्यभिधायकतया पूर्वग्रन्थमपेक्षितपूरणेन व्याचष्टे **यद्वेति** । तर्ह्यव्याप्त्यभिधानेन लक्षणस्य दुष्टत्वसिद्धेः किं केनेत्युत्तरवाक्येनेत्यतो न लक्षणाभावमात्रेणाव्याप्तिप्रतिपादनसिद्धिरति-प्रसङ्गात्, किन्तु लक्ष्यत्वोपपादनेनापि । ततः पूर्ववाक्येन लक्षणाभावप्रतिपादनेऽपि लक्ष्यत्वाप्रति-पादनात्तत्प्रतिपादनार्थं तस्यावश्यकत्वमित्यभिप्रेत्य लक्ष्यत्वोपपादकतया तद्योजयितुं तद्व्यावर्त्यतया तस्या अलक्ष्यत्वशङ्कामुत्थापयति **नन्विति** । मूले किंशब्द आक्षेपार्थ इति भावेनाह **न केनापीति** । स्मृतिरिति स्मृतेः प्रमाणाद्बहिष्कारे निमित्तमात्राभावं प्रतिज्ञाय पूर्वानुभूते किं मानमित्यादिनिमित्तविशेषाभावो-पपादनमयुक्तमित्यतोऽत्र केनेत्यनेनावृत्तेनावशिष्टपक्षनिराकरणान्न न्यूनत्वमित्यभिप्रेत्य केनेत्येत-न्निमित्तविशेषाभावोपपादकतया योजयितुं सम्भावितनिमित्तविशेषांस्तावद्विकल्पयति **तथा हीति** । आद्यपक्षनिरासस्य मूलरूढतासिद्धये तदुपयुक्तार्थपरतया तेनेत्यादि व्याचष्टे **स्मृतिरिति** ॥ **किंवा घटादिदृष्टान्तेति** । अननुभूतिरूपस्य घटादेरप्रमाणत्वदर्शनादननुभवरूपायाः स्मृतेरप्यप्रमाणत्वमु-च्यत इत्यर्थः । **अन्योन्याश्रयत्वमिति** । अनुभूतित्वस्य लक्षणत्वे सिद्धे तद्राहित्येन स्मृतेरप्रामाण्यसिद्धि-स्तत्सिद्धौ चात्राव्याप्त्यभावादनुभूतित्वस्य तल्लक्षणत्वसिद्धिरित्यन्योन्याश्रयत्वमित्यर्थः ॥ **तथा चेति** । अनुभूतित्वस्य लक्षणत्वासिद्धेस्तद्राहित्येन तदप्रामाण्यसाधनेऽप्रयोजकत्वप्रसङ्गान्न तेन तत्साधनं युज्यत इति भावः ॥ **अविशेषादिति** । अननुभूतिरूपस्य घटादेरप्रमाणत्ववदस्मृतिरूपस्य घटादेरप्यप्रमाणत्वदर्शनेन घटादिदृष्टान्तावष्टम्भस्य अननुभूतित्वेन स्मृतेरप्रमाणत्वसाधने, अस्मृतित्वेनानुभूतेरप्रमाणत्वसाधने वाऽवि-शिष्टत्वादित्यर्थः ।

**साक्ष्यादीति** । अत्रार्थे देवदत्तः साक्षीत्यादिव्यवहारो न स्यादित्यर्थः । देवदत्तस्यात्रार्थे स्मृतिरस्तीति हि तदर्थः । स्मृतेश्चाप्रामाण्ये तादृशव्यवहारविलोपप्रसङ्ग इति भावः । सत्यं, स्मृति-रेवानुभूते प्रमाणमिति; किन्नाम लिङ्गत्वेनैव । पटुतरो ह्यनुभवः संस्कारं जनयति । स च सदृश-दर्शनादिना समुद्बुद्धः स्मृतिमिति संस्कारजन्या स्मृतिः संस्कारे लिङ्गं, स च पूर्वानुभवे भविष्यतीत्यतो नानुभूतस्याप्रामाणिकत्वप्रसङ्ग इत्याशयेन शङ्कते **स्मृतिरेवेति** । अनुभववत्स्मृतेरप्यर्थनिश्चयत्वेन

साक्षादर्थ एव प्रामाण्यसंभवान्नानुभूतार्थे लिङ्गत्वेन प्रामाण्यमाश्रयितुं शक्यम् । तथाप्रामाण्यकल्पने स्मृतेः संस्कारे, संस्कारस्यानुभवे लिङ्गत्वम् , इत्यनेकस्याप्रामाणिकस्य कल्पनीयत्वेन कल्पना-गौरवप्रसङ्गादित्याशयेनाह **तथाऽनुभवेति** । साक्षादर्थ एव प्रामाण्यसंभवेऽपि लिङ्गत्वेन स्मृतेः प्रामा-ण्यकल्पने पृथक् प्रमाणतयाऽभ्युपगतस्य साक्षात्कारस्याप्यर्थे साक्षात्प्रामाण्यं न स्यात् । संस्कारादि-जन्यस्मृत्यादेः संस्कारादाविव कर्मकारकजन्यसाक्षात्कारस्य कर्मकारके घटादौ लिङ्गत्वसंभवात् । ततश्च-दृष्टहानिरित्याशयेनाह **अन्यथेति** । अकारणककार्योत्पत्तिरूपविपक्षबाधकसूचनाय **कार्येणेत्युक्तम्** । अप्रामाण्ये बाधकाभावनिरासकतया योजितमेव वाक्यं प्रामाण्ये साधकाभावनिरासकतयाऽपि योजयति । **चतुर्थं प्रत्याहेति** । ननु स्मृतिः प्रमाणमिति व्यवहारस्याननुभूतित्वात्कथं प्रामाण्यमित्यत आह **वचना-चेति** । तथा च स्मृतिप्रामाण्यानुभवाभावे तत्साध्यस्मृतिप्रामाण्यव्यवहारस्यानुपपत्तेस्तदन्यथाऽनुपपत्त्या तत्प्रामाण्यानुभवसिद्धेस्तादृशानुभूतिरेव तत्र मानमिति भावः । केचित्पूर्वानुभूते किं मानमिति पृष्टो यदा स्मृतिमेव मानत्वेन वदति । तद्वाक्यश्रोतुः कथमनुभूतार्थज्ञानमित्यतोऽस्त्यत्र विशेषः, यः स्मृतिं प्रमाणत्वेन वदति तस्य सा स्मृतिः साक्षादनुभववदेव पूर्वानुभूतार्थनिश्चयरूपा तद्वाक्यश्रोतुश्च लिङ्ग-त्वेनार्थनिश्चायिका अनुभवावच्छेदकत्वेन तदर्थस्याप्यनुभवानुमितिविषयत्वादित्याशय इत्याहुः ।

स० — **किमयथार्थत्वादिति** । न च प्राभाकरमते सर्वस्यापि ज्ञानस्य याथार्थ्यस्यैवाङ्गीकारात् अयाथार्थ्यस्याप्रसिद्धत्वेन कथं तं प्रति विकल्प इति वाच्यम् । स्मृतेरयाथार्थ्यं यावन्तोऽङ्गीकुर्वन्ति, तेषां सर्वेषामत्र प्रतिवादित्वाभिप्रायेण तान्प्रति तद्विकल्प इति भावः । **आद्येऽन्योन्याश्रयत्वमिति** । अनुभूतित्वस्य लक्षणत्वे सिद्धे तदभावेन स्मृतेरप्रामाण्यसिद्धिः । तत्सिद्धौ चालक्ष्यत्वेनातिव्याप्तिप्रसक्त्य-भावेन तस्य लक्षणत्वसिद्धिरित्यन्योन्याश्रयत्वमिति भावः । **यदि स्मृतिरप्रमाणमिति** । अयं भावः । कश्चन पुरुषः कञ्चन प्रतिवदति- 'मदीयं धनमस्य समीपे तिष्ठती'ति । तदा तद्वाक्यश्रवणानन्तरं तस्य वाक्यश्रोतुः तत्समीपस्थधनविषकपरोक्षानुभवो भवति । तेन च संस्कारः । एवं स्वयमेव यदा वक्ष्यति तदाऽपरोक्षानुभवः । तेन च संस्कारश्च । एवं च कालान्तरे व्यवहारार्थं येन येन तं प्रति मदीयं धनमस्तीति कथितं, स आगत्य मदीयं धनमस्य समीपे तिष्ठतीति राजसमीपे कथिते किमत्र प्रमाणमिति तस्मिन् पृष्टवति स एवं कथयति स्वेन यं प्रति पूर्वं कथितं, सोऽत्र साक्षीति । स च राज्ञा 'किमेतदीयं धनमस्य समीपे तिष्ठति न वेति पृष्टः स तु तिष्ठतीति वदति । कुत इति पुनश्च पृष्टे ममैवं स्मृतेर्जातत्वादिति वदति । यदि च सा स्मृतिः तस्य सर्तुः तत्समीपस्थधननिश्चयरूपा न स्यात् तदा पूर्वानुभूते धनमस्तीत्यत्र किं प्रमाणमिति साक्षिणं प्रति कृतः प्रश्नो निरुत्तरः स्यात् । तथा च

साक्षिव्यवहारो, यत्र स्वस्यैवापरोक्षानुभवजन्यसंस्कारेण स्मृतिर्भवति तदा त्वदनुभूते किं प्रमाणमिति प्रश्नानन्तरं, मम स्मृतिरेवेत्यादिव्यवहारश्च लुप्येतेति ॥ ननु स्मृतेः पूर्वानुभूते प्रामाण्येऽपि न स्वातन्त्र्येण, किं नाम पूर्वानुभूतमस्त्येव, तेनैवं स्मर्यमाणत्वादिति लिङ्गत्वेनैवेत्यभिप्रेत्य शङ्कते **स्मृतिरेव प्रमाणमिति** । स्मृतेः साक्षादेव पूर्वानुभूतनिश्चयरूपत्वस्यानुभवसिद्धत्वेनैव प्रामाण्यं स्यादविशेषादित्याह **अन्यथेति** । अनुमाने अप्रयोजकत्वशङ्कापरिहारार्थम्, अन्यथा अकारणकार्योत्पत्तिः स्यादिति बाधकतर्कसूचनार्थं साक्षात्कारेणेत्यादिकमुक्तमिति । **लोकव्यवहार इति** । पूर्वोक्तलोकव्यवहार इत्यर्थः । इयांस्तु विशेषः । यः स्मृतिरेव प्रमाणमिति वदति, तस्य सा स्मृतिः साक्षादनुभववदेव पूर्वानुभूतनिश्चयरुपा । तद्वाक्यश्रोतुश्च लिङ्गत्वेनार्थनिश्चायिकेत्यभिप्रेत्य **वचनाच्चेति** । अनुभवावच्छेदेनार्थोऽप्यनुमितिविषय इति भावः ।

केचित् "सत्यं स्मृतिरेवानुभूते प्रमाणम् । किं नाम लिङ्गत्वेनैव । पटुतरो ह्यनुभवः संस्कारं जनयति । स च सदृशदर्शनादिनोद्बुद्धः स्मृतिमिति संस्कारजन्या स्मृतिः संस्कारे लिङ्गम् । स च पूर्वानुभवे भविष्यतीत्यतो नानुभूतस्याप्रामाणिकत्वप्रसङ्ग इत्याशङ्कते **स्मृतिरेवेति** । लिङ्गत्वेन प्रामाण्ये कल्पनागौरवमित्येतन्मनसि निधायाह **नेति** । 'साक्षादर्थ एव प्रामाण्यसंभवेऽपि स्मृतेः संस्कारो लिङ्गम्, तस्यानुभव इत्यस्याप्रामाणिकत्वेन तत्कल्पने कल्पनागौरवं स्यादिति भावः, दृष्टहानिश्च' इत्याचार्यवाक्यं मनसि निधाय दोषान्तरमाह **अन्यथेति** । ननु पूर्वानुभवे किं मानमिति पृष्टे यदा परेण स्मृतिरेवेत्युच्यते, तदा प्रष्टुः कथमनुभूतार्थज्ञानमित्यत आह **वचनाच्चेति**" इत्याहुः ।

**प०** — पूर्वं लक्षणे स्मृतिव्यावर्तकं किमपि नेत्येवंपरतया व्याख्यातम्; इदानीं अस्तु वा किञ्चिद्व्यावर्तकं तथापि स्मृतावव्यापकतया लक्षणोक्तिरयुक्तेत्येवंपरतया व्याचष्टे **यद्वेति** । **किंवा घटादीति** । यथा घटादिरनुभूतित्वशून्य इति प्रमाणं न भवति तथेत्यर्थः ॥ **अन्योन्याश्रयत्वमिति** । सिद्धेचास्य लक्षणत्वे तदभावात्स्मृतिरप्रमाणं, सिद्धे च तदप्रामाण्ये तत्रानतिव्याप्तेरस्य लक्षणत्वसिद्धिरित्येवंरूपेणेत्यर्थः ॥ **तथाच केनेति** । लक्षणेनेत्यर्थः । लक्षणत्वसिद्धेरिति भावः ॥ **केनेति** । केन हेतुनेत्यर्थः ॥ **साक्ष्यादीति** । निर्णीतवित्तक्षेत्रादिविषये कालान्तरे विप्रतिपत्तौ अस्मिन्नर्थेऽयं प्राक् साक्षी द्रष्टा अधुना तस्यार्थस्य स्मर्तेति भावेनायं साक्षीत्युच्यते । स्मृतेरप्रामाण्ये तादृशव्यवहारो न स्यादित्यर्थः । आदिपदेन लिखितभुक्तिव्यवहारग्रहः । ननु स्मृतेः पूर्वानुभूते प्रमाणत्वेपि न स्वातन्त्र्येण, किं नाम पूर्वमिदमनुभूतं स्मर्यमाणत्वादिति लिङ्गत्वेनैवेति भावेन शङ्कते **स्मृतिरेवेति** । **लिङ्गतयेति** । स्मर्यमाणत्वादिदं प्रागनुभूतमित्येवंरूपेणेत्यर्थः ॥ **तथाऽनुभवाभावादिति** । अनुमिनो-

मीत्यनुभवाभावादित्यर्थः । साक्षात्कारः कर्मकारकजन्यः । जन्यसविषयकक्रियात्वात् इत्येवं कार्यात्कारणानुमानमित्याशयेनोक्तम् । **कार्येणेति** ॥ **कर्मकारकतयेति** । क्रियां कुर्वद्धि कारकमिति च प्रसिद्धेः ॥ **स्मृतिरित्येवेति** । स्मृतिर्मानमित्येव वक्तव्यमित्यर्थः ॥ **वचनाच्चेति** । स्मृतिर्मानमित्युक्तवचनात् । स्मृतिप्रामाण्यानुभवोऽनुमीयत इति कृत्वा स्मृतिर्मानमिति लोकव्यवहार एव स्मृतिप्रामाण्ये प्रमाणमित्यर्थः ।

**या० — किंवा घटादीति** । अनुभूतित्वं न प्रमाणलक्षणं किन्तु प्रामाण्यव्यापकम् । व्यापकाभावेन च व्याप्याभावो घटादिदृष्टान्तेनानुमीयत इत्यर्थः । **साक्ष्यादीति** । अत्रार्थे देवदत्तः साक्ष्यस्तीत्यादिलोकव्यवहारो न स्यादित्यर्थः । देवदत्तस्यात्रार्थे स्मृतिरस्तीति हि तदर्थः । स्मृतेश्चाप्रामाण्ये तादृशलोकव्यवहारविलोपप्रसङ्ग इति भावः ॥ **लिङ्गतयेति** । इदं वस्तु पूर्वमनुभूतमिदानीं स्मर्यमाणत्वादिति स्मृतिर्लिङ्गतयैव पूर्वानुभूते मानं न स्मृतित्वेनेत्यर्थः । **तथाऽनुभवेति** । स्मृत्या पूर्वानुभूतमनुमिनोमीत्यनुव्यवसायाभावादिति भावः । एवमनुभवाभावेऽपि यदि लिङ्गतया स्मृतेरनुभूते प्रामाण्यमित्युच्यते तर्हि घटसाक्षात्कारोऽपि घटे लिङ्गतयैव प्रमाणं स्यात्ततश्च दृष्टहानिरित्याह **अन्यथेति** । विमतः कर्ता कर्मकारकसमवहितः तत्साध्यक्रियावत्त्वात् यः कर्मसाध्यक्रियावानसौ कर्मसमवहितो यथा संप्रतिपन्न इति सामान्यतः कर्मकारके सिद्धे प्रसक्तप्रतिषेधे घट एव कर्मकारकतया सिध्यतीति साक्षात्काररूपक्रियया घटानुमानमित्यपि स्यादित्यर्थः । व्यवहारस्याप्रमात्वादाह **वचनाच्चेति** ।

**श्री० — आद्य इति** । अनुभूतित्वस्य प्रमाणलक्षणत्वे सिद्धे तदभावात्स्मृतेर्व्यावर्त्यत्वसिद्धिः । तत्सिद्धौ च तद्व्यावर्तनाय लक्षणकरणमित्यन्योन्याश्रय इत्यर्थः ॥ **विशेषेति** । स्मृतिरप्रमाणमननुभूतित्वाद्घटवदित्यनुमानेन स्मृतिरेव व्यावर्तनीया । अनुभूतिरप्रमाणमस्मृतित्वाद्घटादिवदित्यनेनानुभूतिर्न व्यावर्तनीयेत्यत्र विशेषहेत्वाभावादित्यर्थः । **स्मृतिरेव प्रमाणं** पूर्वानुभव इति शेषः । तर्हि सिद्धं नः समीहितमत आह **किन्त्विति** । अयमनुभववान्स्मृतिमत्त्वादिति लिङ्गत्वेनेत्यर्थः । **वक्तव्यम्** उत्तरमिति शेषः ।

**सु० — ननु यदि स्मृतिः प्रमा स्यात्तदा तत्करणस्य संस्कारस्यानुप्रमाणत्वं प्रसज्येत । तथा चानुप्रमाणत्रित्वं भज्येत । न हि संस्कारः प्रत्यक्षादिष्वन्तर्भवति । अनिन्द्रियसन्निकर्षत्वादज्ञातकरणत्वाच्चेति पक्षमपाकरोति** मानममिति ।

**अनु० —** मानसं तद्धि विज्ञानं

**हि यस्मात्तत्स्मरणं मानसं मनःप्रत्यक्षजं न संस्कारकरणकं ततो नोक्तदोष इति शेषः । असाक्षात्काररूपत्वान्न प्रत्यक्षफलत्वमित्यत उक्तं विज्ञानमिति ।** साक्षात्कार इत्यर्थः । **स्मर-**

**णस्य मानसत्वं साक्षात्कारत्वं च कुत इत्यत आह** तच्चेति ।

तच्च साक्षिप्रमाणकम् ।

**तदिति मानसत्वम् । चशब्दात्साक्षात्कारत्वं च । यद्वा द्वयमपि तच्छब्देन परामृश्यते । प्रकृतानुसन्धानार्थश्चशब्दः ।**

शे० — ननु स्मृतिकरणस्यानुप्रमाणत्वमिष्टमेवेति तदापादनमिष्टापादनमित्यतः किं तस्य स्वातन्त्र्येण प्रामाण्यमिष्टं किं वा प्रत्यक्षाद्यन्तर्भूततयेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **तथा चेति ।** स्वातन्त्र्येणानुप्रमाणत्व इत्यर्थः । अनेन सह चातुर्विध्यापत्तेरिति भावः । द्वितीयं दूषयति **न हीति ।** कुतो न तत्रान्तर्भाव इत्यतः प्रत्यक्षान्तर्भावाभावे हेतुमाह **अनिन्द्रियेति ।** अनुमानागमयोरन्तर्भावाभावे तमाह **अज्ञातेति । उक्तदोष इति ।** अनुप्रमाणत्रित्वभङ्ग इत्यर्थः । मनसः प्रत्यक्षान्तर्भूतत्वात्स्मृतिकरणेन सह चातुर्विध्याप्रसङ्गादिति भावः । मानसं तद्धीत्येतावतैवोक्तदोषपरिहारात् किं विज्ञानमित्यनेनेत्यतः शङ्कान्तरनिवृत्त्यर्थत्वान्न तदितिमात्रेण तत्प्रदर्शनपूर्वकं तन्निवर्तकतया व्याचष्टे **आसाक्षात्कारेति ।** स्मृतेरिति शेषः ॥ **नेति ।** प्रत्यक्षस्य साक्षात्कारमात्रफलकत्वादिति भावः ॥ तच्छब्दचशब्दयोः परामर्शविषयप्रदर्शनेन शब्दद्वयसार्थक्यमाह **तदितीति ।** प्रकृतत्वाविशेषान्मानसत्वस्येव साक्षात्कारत्वस्यापि प्रकृतपरामर्शिना तच्छब्देनैव परामर्शसंभवात् । मानसत्वमात्रपरामर्शोऽनुपपन्न इति पूर्वत्रापरितोषात्पक्षान्तरमाह **यद्वेति ।** तर्हि चशब्दानर्थक्यमित्यत आह **प्रकृतेति ।** अनेन चशब्दस्तुशब्दार्थ इत्युक्तं भवति ॥

स० — **प्रकृतेति ।** तुशब्दार्थ इत्यर्थः । स च प्रकृतमानसत्वसाक्षात्कारत्वयोरुद्देश्यत्वद्योतनार्थ इति भावः ।

प० — प्रामाण्ये बाधकसद्भावादिति पञ्चमपक्षं विवृण्वन्नेवावतारयति **नन्वित्यादिना ॥ इति पञ्चममिति ।** इत्येवं बाधकसद्भावरू(पञ्चरम)पपञ्चमकल्पमित्यर्थः । मनःप्रत्यक्षजं मनोरूपसन्निकृष्टेन्द्रियजन्यमित्यर्थः ॥ **प्रकृतेति ।** चशब्दे सति द्वयोः प्रकृतत्वमनुसन्धीयते तथैव व्युत्पत्तेः । अतोऽर्थवान् चशब्द इति भावः ।

या० — प्रत्यक्षानन्तर्भावे हेतुः **अनिन्द्रियत्वादिति ।** अनुमानाद्यनन्तर्भावे हेतुः **अज्ञातेति ॥ प्रकृतेति ।** तथा च चशब्दस्तुशब्दार्थ इति भावः ।

श्री० — बाधकसद्भावादिति पञ्चमपक्षं विवृणोति **ननु यदीति ।** अनिन्द्रियेति प्रत्यक्षाद्व्यावृत्तिः ॥ अज्ञातेति ज्ञातकरणानुमानागमानन्तर्भावहेतुः ।

सु० — नन्विन्द्रियाणां प्राप्यकारित्वनियमादतीतेन च मनसः प्राप्तेरयोगात्कथं स्मृतेर्मानसप्रत्यक्षजत्वमित्यत आह अतीतेति ।

अनु० — अतीतानागतं यद्वद्योगिभिर्दृश्यतेऽञ्जसा ॥
एवं पूर्वानुभूतं च मनसैवावगम्यते ॥

सन्ति तावद्योगिनोऽणिमादिसिद्धिसंपन्ना अतीतानागतदर्शिनः श्रुतिस्मृतीतिहासपुराणप्रसिद्धाः । श्रुत्यादेः सिद्धार्थे प्रामाण्यस्य साधितत्वात् । कर्मविधिसमानयोगक्षेमत्वाच्च योगविधीनाम् । न च तज्ज्ञानमसाक्षात्कारः । श्रुत्यादिना साक्षात्कारत्वप्रतीतेः । तथा हि श्रुतिः 'अवश्यमप्यये मायया विश्वकर्मण्यदो जगन्निहितं शुभ्रचक्षुरि'ति । पुराणं च 'नारायणप्रसादेने'त्यादि । इतिहासोऽपि 'दिव्यं ददामि ते चक्षुरि'त्यादि । तदिदमुक्तमञ्जसेति । साक्षादित्यर्थः । एवञ्च यथा योगिनामिन्द्रियेणैवातीतानागतार्थसाक्षात्कारस्तथाऽतीतमपि मनसा स्मर्यत इति को दोषः ।

नन्विन्द्रियस्यार्थप्राप्तिर्नाम न संयोगः समवायो वेति नियमः । किन्तु प्रत्यासत्तिमात्रम् । अस्ति च तद्योगीन्द्रियाणाम् । तत्तदुपदर्शकयोगजधर्मसहकृतत्वलक्षणमिति चेत् । एवं तर्हि मनसोऽपि पूर्वानुभवजनितसंस्कारसाचिव्यलक्षणाऽस्त्यतीतार्थेन प्रत्यासत्तिरित्याशयवतोक्तं पूर्वानुभूतं चेति ।

एतदुक्तं भवति । यदि प्राप्तिः संयोगादिलक्षणा विवक्षिता तदा तदभावोऽनैकान्तिकः । प्रत्यासत्तिमात्रविवक्षायां त्वसिद्धिरिति । दृष्टान्तकथनं तु प्रत्यासत्तिमात्रस्य साक्षात्कारहेतुतां संभावयितुम् ; कार्यदर्शनवशाच्चेयं कल्पनाऽतो नातिप्रसङ्ग इति दर्शयितुं च । एतेन मानसं चेत्स्मरणं स्यान्न संस्कारजं तदाऽननुभूतेष्वु(व्यु)त्पद्येतेति परास्तम् । संस्कारस्य सन्निकर्षस्थानीयतयाऽङ्गीकृतत्वात् ।

शे० — **नियमादिति** । अन्यथाऽसन्निकृष्टत्वाविशेषात्सर्वग्राहकत्वप्रसङ्गादित्यर्थः । **अयोगादिति** । प्राप्तेस्तादात्म्यसंयोगसमवायरूपत्वेन सन्मात्रधर्मतया, अतीतस्य च तदाऽसत्वेन तेन सह तादात्म्यादिरूपप्राप्त्ययोगादित्यर्थः । ननु साधकप्रमाणाभावेन योगिनामेवासिद्धेः तेषामतीतादिसाक्षात्कारस्य च सुतरामसिद्धेर्न तदिन्द्रियेऽसन्निकृष्टत्वहेतोर्व्यभिचारसमर्पकत्वमस्य वाक्यस्येत्यत आह **सन्ति तावदिति** । योगिनामतीतादिसाक्षात्कारसमर्थनस्याप्युत्तरत्र करिष्यमाणत्वात्तावदित्युक्तम् । ननु प्राभाकररीत्या कृत्स्नस्यापि वेदस्य कार्यपरत्वान्न सिद्धरूपोक्तविशेषणविशिष्टयोगिसिद्धिः श्रुत्यादिना इत्यत आह **श्रुत्यादेरिति** । 'कार्यता च न काचित्स्यादि'त्यादिना जिज्ञासाऽधिकरण इति

शेषः । अस्तु, वा कार्यपरत्वं श्रुत्यादेः, तथापि यथा कर्मविधिशेषतया परेण यूपाहवनीयादिसिद्धिरभ्युपगम्यते तेन विना कर्मविधेरेवानिष्पत्तेः, तथा योगविधिशेषतया कर्तृभूतयोगिसिद्धिरपि अभ्युपगन्तव्यैव । तेन विना योगविधेरेवानिष्पत्तेः । ततश्च कार्यपरादप्याम्नायात्तत्सिद्धिरुपपन्नैवेत्याह **कर्मेति** । मूले अञ्जसेत्यस्य वैयर्थ्यमाशङ्क्य तज्ज्ञानस्य साक्षात्कारत्वसमर्थनार्थत्वान्न तदित्याशयवान् तद्यावर्त्यशङ्कामुत्थापयति **न चेति** । तथाच तस्येन्द्रियजन्यत्वान्नासन्निकृष्टत्वहेतोस्तदिन्द्रिये व्यभिचार इति भावः । श्रुत्यादीत्यादिपदेन पुराणादिपरिग्रहः । योगिनामतीताद्यर्थज्ञानस्य साक्षात्कारत्वावेदकं श्रुत्यादिकमेवोदाहरति **तथा हीति** ।। **शुभ्रचक्षुः** शुद्धचक्षुः । प्रसादेनेत्यादीत्यादिपदेन 'समिद्धज्ञानचक्षुषा, अत्यन्तदुःखसलीनान् निःशेषसुखवर्जितान् । नित्यमेव तथाभूतान् विमिश्रांश्च गणान् बहून् । निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः । अपश्यत् त्रिविधान् ब्रह्मा साक्षादेव चतुर्मुख' इति तद्वाक्यशेषपरिग्रहः । योगिज्ञानस्य साक्षात्कारत्वरूपत्वसमर्पकत्वमञ्जसेत्यस्य दर्शयितुं तदनुरूपतया तदर्थमाह **साक्षादित्यर्थ इति** । वाक्यं योजयति **एवं चेति** । एवं योजनायां पूर्वानुभूतं चेत्येतद्विशेषणनैरपेक्ष्येणैव योगीन्द्रिये परानुमानस्य व्यभिचारसमर्थनात्तद्विशेषणवैयर्थ्यम् । न च मनसोऽतीतेन संस्काररूपसन्निकर्षव्युत्पादनार्थं तदिति वाच्यम् । तद्व्युत्पादनस्याप्यनर्थकत्वात् । न चासन्निकृष्टत्वहेतोरसिद्धिप्रतिपादनार्थं तदिति वाच्यम् । तस्याप्यनर्थकत्वात् । न च मनो नातीतार्थग्राहि तदसन्निकृष्टत्वादिति पूर्वपक्ष्यभिमतानुमानस्याभासत्वसिद्धिस्तत्प्रयोजनमिति वाच्यम् । योगीन्द्रिये व्यभिचारेणैव तत्सिद्ध्या तदर्थमसिद्धिप्रतिपादनानपेक्षणात् । न च प्राप्तिप्रतिपादनेन योगीन्द्रिये परेण व्यभिचारस्य परिहृतत्वान्न तेन तदाभासत्वसिद्धिरित्यर्थवदसिद्धिप्रतिपादनमिति वाच्यम् । योगीन्द्रियाणामतीतादिना संयोगादेरेवासंभवेनार्थप्राप्तिप्रतिपादनस्य परेण कर्तुमशक्यत्वादित्यतोऽतिप्रसङ्गभञ्जकं नियामकं प्रत्यासत्तिपदाभिधेयं सन्निकर्ष इत्युच्यते । संयोगसमवाययोरपि सन्निकर्षत्वेन विवक्षायामेतदेव निमित्तमिति तादृशनियामकसद्भावेन योगीन्द्रियाणामप्यर्थेन सन्निकर्षसंभवात् युक्तैव व्यभिचारपरिहारशङ्केत्याशयेन तां शङ्कामुत्थापयति **नन्विति** ।

एवं तर्हि माऽस्तु व्यभिचारेण परानुमानस्याभासत्वसिद्धिरसिद्ध्या तु भविष्यतीत्याशयेनासिद्ध्यभिप्रायकतया पूर्वानुभूतपदं योजयति **एवं तर्हीति** । संयोगादिविवक्षायामसिद्धेः प्रत्यासत्तिमात्रविवक्षायां व्यभिचारस्य चाप्रसङ्गात् मूले सूचितं दूषणद्वयं नाव्यवस्थितं किन्तु व्यवस्थितमेवेत्यभिप्रेत्य व्यवस्थिततया दूषणद्वयं योजयितुमाह **एतदुक्तं भवतीति** । तर्हि प्रत्यासत्तिमात्रविवक्षयाऽसिद्धिव्युत्पादनमात्रेणापि परानुमानस्याभासत्वसिद्धेरतीतानागतं यद्योगिभिर्दृश्यत इति किमर्थं दृष्टान्ताभिधानमित्यत आह **दृष्टान्तकथनं त्विति** । दर्शयितुं चेति दृष्टान्तकथनमिति संबन्धः । एतेनेति परामृष्टमेव दर्शयति **संस्कारस्येति** ।

**स०**— ननु योगिनामभावेन कथं तत्साक्षात्कारदृष्टान्तस्य प्रकृते उपपादनमित्यत आह **सन्ति तावदिति** । ननु सर्ववेदानां कार्यपरत्वेन तत्रैव प्रामाण्यस्याङ्गीकृतत्वेन योगिनां च सिद्धत्वेन कार्यरूपत्वाभावात्कथं तत्र वेदस्य प्रामाण्यमित्यत आह **श्रुत्यादेरिति** । अस्तु वा कार्यपरत्वम् । तथाऽपि नानुपपत्तिः । यथा त्वया स्रुक्स्रुवादिबोधकवाक्यानां कर्मविधिशेषत्वेन तत्र प्रामाण्यमङ्गीक्रियते, एवं 'योगी युञ्जीत सततम्' इत्यादियोगविधिशेषत्वेन योगिस्वरूपबोधकवाक्यानां तत्र प्रामाण्याङ्गीकारे न कोऽपि दोष इत्याह **कर्मविधिसमानेति** अन्यथा स्रुक्स्रुवादिस्वरूपसिद्धिरपि न स्यादिति भावः **नारायणेति** । 'नारायणप्रसादेन समिद्धज्ञानचक्षुषः । अपश्यत्त्रिविधान्ब्रह्मा साक्षादेव चतुर्मुखः' इत्यादिवचनमित्यर्थः । **तदभावोऽनैकान्तिक इति** । स्मृतिः न प्रत्यक्षजन्या प्राप्तिपूर्वकत्वाभावा-दित्यनुमाने यदि प्राप्तिशब्देन संयोगः समवायो वा विवक्षितः, तदा तदभावस्य योगिसाक्षात्कारे सत्त्वेऽपि प्रत्यक्षजन्यत्वस्यैव विद्यमानत्वेन अनैकान्त्यमित्यर्थः । ननु संयोगादिविवक्षायां तदभावस्या-नैकान्त्यप्रदर्शनार्थमतीतानागतेत्यादिदृष्टान्तकथनस्योपयुक्तत्वेऽपि प्रत्यासत्तिविवक्षायामसिद्धिकथने न तस्योपयोग इत्यत आह **प्रत्यासत्तिमात्रस्येति** । यां काञ्चन प्रत्यासत्तिमुपादाय स्मृतेः साक्षात्कारत्वं वक्तुं न शक्यते । संयोगादिजन्यज्ञानस्यैव साक्षात्कारत्वस्य दृष्टत्वेन प्रत्यासत्तिमात्रजन्यत्वस्यासंभावित-त्वात् । अन्यथा अनुमित्यादेरपि यां काञ्चन प्रत्यासत्तिमादाय साक्षात्कारत्वं कल्पनीयमित्यादिकं निर-स्तमिति भावः ।

**प०**— योगिन इत्यनुवादः । अणिमादिसिद्धिसंपन्ना इति व्याख्यानम् ॥ **श्रुतीति** । उप-निषदादौ कण्वभृगुप्रभृतयः प्रसिद्धाः तथा मन्वादिस्मृतिषु, 'योगिनो यं प्रपश्यन्ति', 'पश्यन्ति ज्ञान-चक्षुष' इति इतिहासे, 'कविर्हरिरन्तरिक्षःप्रबुद्ध'इत्यादिना भागवते, प्रसिद्धा इत्यर्थः ॥ **साधि-तत्वादिति** । जिज्ञासाऽधिकरणे 'कार्यता चे'त्यादिग्रन्थ इति भावः ॥ **कर्मविधीति** । यथा यजेते-त्यादिविधिबलात् कर्मिण उपेयन्ते । तथा 'योगी युञ्जीत सततम्', 'उपविश्यासने युंज्यादि'त्यादियोग-विधिबलाद्योगिनोऽप्युपेया इति भावः ॥ **अप्यय इति** । प्रलय इत्यर्थः । **विश्वकर्मणि** भगवति । **शुभ्रचक्षुः** निर्मलचक्षुष्को, 'नारायणप्रसादेन समृद्धज्ञानचक्षुषः' इत्यादिपाद्मवाक्यम् , वैराग्यपादे 'न तृतीये तथोपलब्धेरि'त्यधिकरणे भाष्योक्तम् । 'दिव्यमि'ति गीतावाक्यम् ॥ नन्विन्द्रियाणां प्राप्य-कारित्वनियमादित्यादिना कृतचोद्यस्यातीतेत्यादिग्रन्थेन किमुक्तमित्यत आह (**एतदु**)**इदमुक्तमिति** ॥ **अनैकांतिक इति** । योगिप्रत्यक्ष इति योज्यं । तर्हि यद्वदिति किमर्थमुक्तमित्यत आह **दृष्टान्तेति** । नन्वेवं मन इव चक्षुराद्यपि प्रत्यासत्तिमात्रेण व्यवहितमपि भासयेदित्यत आह **कार्यदर्शनवशाच्चेति** ।

या०— **कर्मविधीति** । तथा च यथा कार्यान्विते शक्तिरिति पक्षे कर्मविधिशेषतयाऽपि कर्तृकरणादिसिद्धिरन्यथा कर्मविधेरेवानिष्पत्तेः तथा योगविधिशेषतयाऽपि कर्तृभूतयोगिसिद्धिरुपपद्यत इति भावः । **शुभ्रचक्षुः** शुद्धचक्षुः । **नारायणप्रसादेनेति** । 'नारायणप्रसादेन समिद्धज्ञानचक्षुषा । अत्यन्तदुःखसंलीनान्निःशेषसुखवर्जितान् । नित्यमेव तथाभूतान्विमिश्रांश्च गणान्बहून् । निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः । अपश्यत्त्रिविधान्ब्रह्मा साक्षादेव चमुर्मुखः' इति पद्मपुराणवाक्यम् । ननु मनो न पूर्वानुभूतस्मृतिकरणं तेनासन्निकृष्टत्वादिति पूर्वोक्तेऽनुमाने किं दूषणमुक्तमित्यत आह **इदमुक्तं भवतीति** ॥ **अनैकान्तिक इति** । योगीन्द्रिय इति शेषः ।

श्री०— ननु श्रुत्यादेः कार्यपरत्वात्कथं सिद्धार्थे योगिस्वरूपे प्रामाण्यमत आह **श्रुत्यादेरिति** । किञ्च कर्मादिकर्तव्यताप्रतिपादकत्वेन कार्यपरेणापि कर्मविधिना तच्छेषभूतस्रुवादिसिद्धिर्यथा तद्वद्योगविधिनैव तच्छेषभूताः कर्तारो योगिनः सिध्यन्तीत्याह **कर्मेति** । इत्यादीत्यनेन 'पश्यामि देवान्'इत्यस्य ग्रहणम् । **इतिहासो** भारतम् ॥ **यदि प्राप्तिरित्यादि** । मनः स्मृतिरूपज्ञानजनकं न भवति । अर्थेनासन्निकृष्टत्वात्, यद्येनार्थेनासन्निकृष्टं तत्तदर्थज्ञानाजनकं, यथा गन्धासन्निकृष्टं चक्षुस्तज्ज्ञानाजनकम् इत्यनुमाने सन्निकर्षो यदि संयोगोऽभिमतस्तर्हि तेन सम्बन्धेनासन्निकृष्टे श्रोत्रे शब्दज्ञानजनकत्वदर्शनादनैकान्तिकता । यदि च समवायस्तर्हि तेनासन्निकृष्टत्वं घटादिज्ञानजनके चक्षुरादौ व्यभिचारीत्यर्थः । यदि च तत्परिहाराय यया कयाऽपि प्रत्यासत्त्याऽर्थेनासन्निकृष्टत्वादिति हेतुः क्रियते तर्ह्यसिद्धिः । मनसोऽपि स्मृतिजनने संस्काररूपसन्निकर्षस्य सत्त्वादित्यर्थः । ननु संस्काररूपप्रत्यासत्तेः साक्षात्कारहेतुत्वमत्रोच्यते । न हि दृष्टान्तेन संस्काररूपप्रत्यासत्तेः साक्षात्कारहेतुत्वं लब्धं किन्तु योगजधर्मस्यैवेत्यसङ्गतिरिति चेत् । सत्यम् । न हि संस्काररूपप्रत्यासत्तेः साक्षात्कारहेतुत्वेऽयं दृष्टान्त इत्युच्यते किन्नाम संस्कारस्य साक्षात्कारजनकता न सम्भवति तादृशसंयोगसमवायरूपसाक्षात्प्रत्यासत्तिभिन्नत्वादित्युक्ते संयोगसमवायातिरिक्तप्रत्यासत्तेरपि संस्कारस्य साक्षात्कारहेतुत्वं सम्भवति । ननु कथमेतत् । संयोगाद्यतिरिक्तप्रत्यासत्तेः । साक्षात्कारजनकत्वस्यासम्भावितत्वादित्युक्ते नेदमसम्भावितं यतो योगजधर्मस्य संयोगाद्यतिरिक्तप्रत्यासत्तिमात्रस्यापि साक्षात्कारजनकत्वं दृष्टं तद्वत्संस्काररूपप्रत्यासत्तेरपीति वक्तुं दृष्टान्तः कथ्यतेऽतो नासङ्गतिरित्याह **दृष्टान्तेति** । ननु यदि प्रत्यासत्तिमात्रस्यापि साक्षात्कारहेतुत्वं कल्प्यते तर्हि सामान्यलक्षणप्रत्यासत्त्याऽस्मदादीनामपि सर्वसाक्षात्कारः स्यादित्यतिप्रसङ्ग इत्यत आह **कार्येति** । योगिनां सर्वसाक्षात्कारस्तथा मनसा स्मृतिरूपश्च साक्षात्कार इत्युभयमपि कार्यं तावद्दृष्टम् । तत्प्रत्यासत्तिं विना नोपपद्यत इति तदन्यथाऽनुपपत्त्या योगजधर्मसंस्कारयोः प्रत्यासत्तिमात्रयोरपि साक्षात्कारहेतुत्वं कल्प्यते । न हि तथाऽस्मदादीनां सर्वसाक्षात्कारः प्रमितो येन तदन्यथाऽनुपपत्त्या सामान्यलक्षणप्रत्यासत्तेरपि तद्धेतुत्वं

कल्प्येत । तथा च कार्ये सति निमित्तानुसरणं, न तु निमित्तमस्तीति कार्यमित्येवं दर्शयितुं च दृष्टान्तकथनमित्यर्थः ॥

च० — **कर्मविधीति** । कार्यान्विते पदानां शक्तिमुपगच्छतां मते यजेतेतिकर्मविधिशेषतया कर्तृकरणादिसिद्धिर्वयुञ्जीतेत्यादियोगविधिशेषतया कर्तृभूतयोगिसिद्ध्युपपत्तेरिति भावः । **अप्यये** प्रलये । **विश्वकर्मणि** पूर्णव्यापारे परमात्मनि । **शुभ्रचक्षुः** शुद्धचक्षुः ।

**सु० — यत्स्मृतेर्मानसत्वं साक्षिसिद्धमित्युक्तं तदभिनयेन दर्शयति** विज्ञातमिति ।

**अनु०** — विज्ञातं मनसा पूर्वं मयैतत्कृतमित्यपि ॥
साक्षादनुभवात्सिद्धं

**एतन्मया पूर्वं कृतमित्येतन्मया मनसा विज्ञातं स्मृतमपीति स्मरणस्य मानसत्वं साक्षादनुभवात्साक्ष्यनुभवेन सिद्धमिति ।**

**यदुक्तं परैः पूर्वानुभवावच्छिन्नार्थगोचरा स्मृतिस्तद्याथार्थ्यादिकमनुविदधाना न स्वयं यथार्थेति; तदसत्, अनुभववच्छुद्धार्थविषयत्वस्यापि साक्षिसिद्धत्वादिति दर्शयितुं मयैतत्कृतमित्यपीत्युक्तम् ।**

**ननु मनसोऽप्रत्यक्षत्वात्कथं स्मरणस्य मानसता साक्षिप्रत्यक्षगम्येति चेन्न । तस्य साक्षिवेद्यताया वक्ष्यमाणत्वात् । तथाऽपि कार्यकारणभावो न प्रत्यक्ष इति चेदन्वयव्यतिरेकसचिवस्य साक्षिणस्तत्र प्रामाण्याभ्युपगमात् । ज्ञानं नित्यानुमेयमिति चेन्न । ज्ञातताया निराकरिष्यमाणत्वात् । स्वप्रकाशमिति चेन्न । अनात्मत्वात्, घटवत् । मानसवेद्यता तु निरसिष्यत इत्याशयवानाह** कथमेवेति ।

कथमेव ह्यपोद्यते ।

शे० — **अभिनयेन** आकारप्रदर्शनेन । विज्ञातमित्यनूद्य स्मृतमिति व्याख्यानम् । न केवलं मया पूर्वं कृतं किन्नाम पूर्वं कृतमिति स्मृतमपीत्यपेरर्थः । साक्ष्याकारप्रदर्शनावसरे इदं मया पूर्वं कृतमिति स्मृत्याकारप्रदर्शनमनर्थकमित्यतस्तत्सार्थक्यं वक्तुमाह **यदुक्तमिति** ॥ **अनुभववदिति** । यथाहि घटाद्यनुभवस्यानुभवानवच्छिन्नार्थगोचरतायाः साक्षिसिद्धत्वान्नानुभवावच्छिन्नार्थगोचरतेति तत एव याथार्थ्यम् एवं स्मृतेरप्यनवच्छिन्नार्थगोचरतायाः साक्षिसिद्धत्वान्नानुभवावच्छिन्नार्थगोचरतेति स्वत एव याथार्थ्यम्, अन्यथाऽनुभवस्यापि तन्न स्यादिति प्रतिबन्दीसूचनायानुभववदिति दृष्टान्तोपादानमिति ध्येयम् ।

**मनसोऽप्रत्यक्षत्वादिति** । अरूपिद्रव्यत्वेन चक्षुरादिना तदवगमासम्भवाच्चक्षुराद्यव्यापारेऽप्युपलब्धेश्च न तस्य प्रत्यक्षत्वमिति भावः ॥ **वक्ष्यमाणत्वादिति** । साङ्ख्यपरीक्षायां 'मनो म इति भेदतः । मनसोऽपि गृहीतत्वात्' इत्यनुव्याख्यव्याख्यावसर इति शेषः ॥ **तत्पक्ष इति** । अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपकारणत्वस्यानन्यथासिद्धनियतपश्चाद्भावित्वरूपकार्यत्वस्य च नियतपदोक्तप्रत्यक्षायोग्यव्याप्तिघटितमूर्तिकत्वादिति भाव इति केचित् । वस्तुतो नित्यातीन्द्रियरूपत्वात्कारणत्वस्य तद्घटितकार्यकारणभावस्याप्यतीन्द्रियत्वान्न प्रत्यक्षत्वमिति द्रष्टव्यम् ॥ **सचित्रस्येति** । सहकारिसामर्थ्येन करणानां शक्त्यन्तराविर्भावात्कार्यकारणभावग्राहकत्वं साक्षिणो युक्तमिति भावः ॥ **भट्टमतमाश्रित्य** शङ्कते **ज्ञानमिति** । ज्ञाततयेति शेषः । तथा च स्मरणस्यैवाप्रत्यक्षत्वात्तन्मानसत्वस्य प्रत्यक्षत्वं दूरनिरस्तमिति भावः ॥ **निराकरिष्यमाणत्वादिति** । 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचित्' इत्यादिना स्वप्नाधिकरण इति शेषः । तथा च ज्ञाततायाः अप्रामाणिकत्वेन तया तदसिद्धेर्लिङ्गान्तरस्य चाभावात्तदसिद्धिरेव स्यादिति न तस्य नित्यानुमेयत्वमिति भावः । प्राभाकरमतमाशङ्कते **स्वेति** ॥ **अनात्मत्वादिति** । जडत्वादित्यर्थः । नन्वप्रयोजकत्वं; आत्मवदनात्मनोऽपि तत्सम्भवात् । अन्यथा आत्मत्वादेव न तस्य स्वप्रकाशत्वमित्यपि स्यादिति चेन्न । स्वप्रकाशत्वं हि स्वकर्मकप्रकाशरूपत्वं वाच्यं प्रकारान्तरासम्भवात् । न चैतदनात्मनोऽनित्यज्ञानस्य सम्भवति स्वप्रकाशत्ववादिना प्राभाकरेण ज्ञानांशे

लौकिकसाक्षात्कारत्वाङ्गीकारेण जन्यलौकिकसाक्षात्कारस्य विषयजन्यत्वनियमेन स्वस्यैव स्वविषयत्वरूपस्वप्रकाशत्वे स्वस्यैव स्वात्मानं प्रत्यन्तर्भावितपूर्वापरभावरूपजन्यजनकभावापत्त्या व्याघातापत्तेरेव विपक्षे बाधकत्वात् । अत एव सर्वगतत्वाधिकरणे स्वकर्मकप्रकाशत्वं स्वप्रकाशत्वमिति लक्षणस्य, 'प्राभाकरपक्षे क्रिया हि कर्मकारकजन्येष्यते' इत्यादिनैवमेव दूषणमभिहितं पुरस्तात् । न्यायामृते चात्मरूपज्ञानस्येश्वरज्ञानवन्नित्यत्वेन जन्यसाक्षात्कारत्वाभावेन स्वपक्ष एतद्दूषणपरिहारोऽभिहित इति द्रष्टव्यम् । ननु च यत्प्रमेयं तदभिधेयमिति व्याप्तिज्ञानस्याभिधेयत्वरूपेण स्वविषयत्वादनात्मत्वहेतुस्तत्र व्यभिचरितः । यदि च ज्ञानत्वेन रूपेण स्वस्य विषयत्वं विवक्षितं तदा वृत्तिज्ञानमनित्यमिति व्याप्तिज्ञानस्य ज्ञानत्वेनैव स्वविषयतया तत्र व्यभिचारः । यदि चैतज्ज्ञानत्वेन स्वविषयत्वं विवक्ष्यते तदाऽप्येतत्कालीनशाब्दज्ञानवांस्त्वमिति शाब्दज्ञानस्यैतज्ज्ञानत्वेनापि तद्विषयत्वात्तत्र व्यभिचार एव । किञ्च वृत्तिर्न ज्ञानमनात्मत्वाद्घटवदित्याभाससाम्यं ज्ञानं स्वप्रकाशं ज्ञानत्वात्सम्मतवदिति सत्प्रतिपक्षता च । तत्कथमनात्मत्वेनास्वप्रकाशत्वानुमानमिति चेत् । अत्र ब्रूमः । येनाकारेण स्वस्य प्रकाशत्वं तेनाकारेण विषयत्वस्य विवक्षितत्वेन तदभावस्यैव साध्यतया व्यभिचाराप्रसक्तेः । तथा हि । यत्प्रमेयं तदभिधेयमिति व्याप्तिज्ञानत्वेन प्रकाशत्वात् । न च तेनाकारेण विषयत्वं किन्त्वभिधेयत्वेनेति तादृशस्वप्रकाशत्वा-

भावस्तत्राप्यविकलः । वृत्तिज्ञानमनित्यमिति व्याप्तिज्ञानस्यापि ज्ञानत्वेन विषयतायामपि व्याप्तिज्ञानत्वेनाविषयत्वात् । एतत्कालीनेत्यादिशाब्दज्ञानस्यापि शाब्दज्ञानविषयकत्वेन प्रकाशत्वात्तेन रूपेण च न विषयत्वं किन्तु शाब्दज्ञानत्वेनैवेति न क्वापि व्यभिचार. । यच्च वृत्तिर्न ज्ञानमित्युक्तं तत्र यदि ज्ञानत्वं नाम प्रकाशरूपत्वं तर्हि तदभावसाधने बाधो । यद्यतिरिक्तं किञ्चित्तदा तदभावसाधने सिद्धसाधनम् । आत्मत्वस्योपाधित्वात् नान्त्यदोषोऽपीति दिक् । तर्ह्यस्तु तार्किकरीत्या ज्ञानस्य मानसत्वमित्यत आह **मानसेति ॥ निरसिष्यत इति** । 'मयैतज्ज्ञातमिति तु साक्षिगं ज्ञानगोचरम् । ज्ञानमि'ति भक्तिपादीयानुव्याख्याने, न तावत्पूर्वभाविनो ज्ञानस्य ज्ञानं विषयस्तथा सति ज्ञास्यामीत्येव स्यान्न तु जानामीति । नाप्यागामिनः ; तथात्वे ह्यज्ञासिषमित्येव स्यात् । न च सहभावि ज्ञानान्तरमस्ति । अतो न ज्ञानं प्रत्यक्षवेद्यमिति मीमांसामुखेन 'मानसे दर्शने दोषाः स्युर्न वै साक्षिदर्शने । सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनमि'त्यादिना ज्ञानपादे ज्ञानस्य मनोवृत्तिरूपमानसप्रत्यक्षविषयत्वे घटादाविव कस्यचित्कदाचित्तत्र संशयः स्यात् । न हीदं ज्ञानं न वेति संशयोऽस्ति । अतो ज्ञानं न मानसवेद्यमिति मानसवेद्यता निरसिष्यत इत्यर्थः ।

स० --- **अभिनयेनेति** । प्रकारप्रदर्शनेनेत्यर्थः । **एतन्मयेति** । विज्ञातमित्यनूद्य स्मृतमिति व्याख्यानम् । न केवलं मया कृतं पूर्वम् । किं नाम मया पूर्वं कृतमिति स्मृतमपि इत्यपेरर्थः । **अनुविद्धाना** । अनुभवयाथार्थ्येन संबद्धेत्यर्थः । **वक्ष्यमाणत्वादिति** । तृतीयस्य चतुर्थे इति शेषः । **अन्वयव्यतिरेकसचिवस्येति** । सति मनसि स्मरणम् । तदभावे स्मरणाभावः इत्यन्वयव्यतिरेकसचिवस्येत्यर्थः । ननु ज्ञानस्य ज्ञाततालिङ्गकानुमानेन नित्यानुमेयत्वात् स्मरणस्यापि ज्ञानत्वेन नित्यानुमेयत्वात् कथं मानसत्वमित्यत आह **नेति ॥ अनात्मत्वादिति** । जडत्वादित्यर्थः । न न्वप्रयोजकत्वम् । आत्मवदनात्मनोऽपि तत्संभवात् । अन्यथा आत्मवदेव न तस्य स्वप्रकाशत्वमित्यपि स्यादिति वाच्यम् । स्वप्रकाशत्वं हि स्वकर्मकप्रकाशरूपत्वं वक्तव्यम् अन्यस्यासंभवात् । न चैतदात्मनोऽनित्यज्ञानस्य संभवति । प्रकाशस्य क्रियात्वेन जन्यवर्तमानविषयकक्रियायाः स्वापेक्षया पूर्वभाविकर्मकारकजन्यत्वस्य नियतत्वेन ज्ञानस्यानित्यत्वेन स्वापेक्षया स्वस्यैव पूर्वभावित्वपश्चाद्भावित्वयोरसंभवात् । आत्मनश्च नित्यत्वेन तत्संभवादिति । अत एवोक्तं टीकाकारैः 'स्वकर्मकप्रकाशत्वं स्वप्रकाशत्वमिति चेत् तर्हि वृश्चिकभिया पलायमानस्य आशीविषमुखे निपात । यत्स्वलक्षणमात्राधीनविरोधं कर्तृ-कर्मभावं परिहर्तुं सर्वलोकावसितविरोधं क्रिया-कर्मभावमभ्युपैति । क्रिया हि कर्मकारकजन्येष्यते । न च जन्यजनकयोरेकतोचिता । अन्तर्भावितपूर्वापरभावत्वात्तस्य । न च तदेव स्वात्मानं प्रति पूर्वमपरं चेति युज्यते । अपरे तु 'मामहं जानामी'ति प्रत्यक्षेणात्मनः स्वविषयप्रकाशत्वरूपस्य स्वप्रकाशत्वस्य सिद्धत्वेऽपि जडे तत्साधकाभावात् ।

न च जडस्यापि दीपस्य स्वप्रकाशत्वात्कथं स्वप्रकाशत्वाभावानुमानमिति वाच्यम्। विवक्षितस्वप्रकाशत्वस्य तत्राभावात्। नहि दीपस्य स्वविषयत्वमस्तीति भाव इत्याहुः। अत्रैके चोदयन्ति। यत्प्रमेयं तदभिधेयमिति व्याप्तिज्ञानस्य अभिधेयत्वप्रमेयत्वरूपेण स्वविषयत्वस्यापि विद्यमानत्वेन अनात्मत्वहेतोस्तत्र व्यभिचारः। यदि ज्ञानत्वेन रूपेण स्वस्य विषयत्वं विवक्षितं, तदा वृत्तिज्ञानमनित्यमिति व्याप्तिज्ञानस्य ज्ञानत्वेनैव विषयत्वस्य सत्त्वेन तत्र व्यभिचारः। यदि एतज्ज्ञानत्वेन विषयत्वं तदा एतत्कालीनशाब्दज्ञानवानयमिति शाब्दज्ञानस्य एतज्ज्ञानत्वेनापि विषयत्वात्तत्र व्यभिचारः। किञ्च वृत्तिर्न ज्ञानम्। अनात्मत्वात् घटवत् इत्याभाससमानयोगक्षेमत्वम्। ज्ञानं स्वप्रकाशं ज्ञानत्वादिति सत्प्रतिपक्षश्च। तस्मात् अनात्मत्वेन स्वप्रकाशत्वाभावसाधनमनुपपन्नमिति। तदयुक्तम्। येनाकारेण स्वस्य प्रकाशत्वम्, तेनैवाकारेण विषयत्वस्य विवक्षितत्वेन तदभावस्यैव साध्यत्वेन व्यभिचारप्रसक्त्यभावात्। तथा हि यत्प्रमेयं तदभिधेयम इतिव्याप्तिज्ञानस्य ज्ञानत्वेन प्रकाशत्वात् तेनाकारेण न विषयत्वम्। किं तु अभिधेयत्वेनैवेति तादृशस्वप्रकाशत्वाभावस्य तत्रापि सत्त्वेन साध्यस्यापि विद्यमानत्वेन व्यभिचाराभावात्। वृत्तिज्ञानमनित्यमिति व्याप्तिज्ञानस्यापि ज्ञानत्वेन विषयत्वेऽपि व्याप्तिज्ञानत्वेन विषयत्वाभावात्। एवम् एतत्कालीनेत्यादिशाब्दज्ञानस्यापि शाब्दज्ञानविषयकत्वेन प्रकाशत्वात् तेन रूपेण न विषयत्वम्। किं तु शाब्दज्ञानत्वेनैवेति न तत्रापि व्यभिचारः। यच्चोक्तं वृत्तिः न ज्ञानमित्यादि तत्र प्रष्टव्यम्।

किमिदं ज्ञानत्वं नाम। प्रकाशरूपत्वं वा अतिरिक्तं किञ्चिद्वा। नाद्यः। प्रकाशरूपत्वस्य प्रमाणसिद्धत्वेन तदभावसाधने बाधापत्तेः। न चरमः। अतिरिक्तस्याप्रसिद्धत्वेन तदभावसाधने सिद्धसाधनत्वादयुक्तमेतत्। यच्च ज्ञानं स्वप्रकाशं ज्ञानत्वादित्यादि, तदपि न। आत्मत्वस्योपाधेरित्यास्ताम्।

प० — **अभिनयेति**। आकारप्रदर्शनेनेत्यर्थः। विज्ञातमित्यनुवादः, स्मृतमिति व्याख्या॥ **पूर्वानुभवावच्छिन्नेति**: पूर्वानुभवविशेषणकेत्यर्थः॥ **साक्षिसिद्धत्वादिति**। मयैतत्कृतमिति मनसा स्मृतिसाक्ष्यनुभवे अनुभवस्यानवच्छेदकत्वेन कृतेरेवावच्छेदकत्वेन प्रतीत्याऽनुभवानवच्छिन्नार्थविषयकत्वस्यैव स्मृतौ साक्षिसिद्धत्वादिति दर्शयितुमित्यर्थः॥ **मानसतेति**। मनोरूपेन्द्रियजन्यप्रत्यक्षतेत्यर्थः॥ **वक्ष्यमाणत्वादिति**। समयपादे। 'मनो म इति भेदतः। मनसोऽपि गृहीतत्वादि'ति निरीश्वरसाङ्ख्याधिकरणे वक्ष्यमाणत्वादित्यर्थः॥ **तथापीति**। मनसः साक्षिवेद्यत्वेऽपि तयोः कार्यकारणभावो न प्रत्यक्ष इत्यर्थः॥ **नित्यानुमेयमिति**। तथा च स्मृतौ मानसता न साक्षिवेद्येति भावः। भट्टमतेन हि अयं ज्ञानविषयो ज्ञातताधारत्वादिति ज्ञाततारूपलिङ्गेन ज्ञानमनुमेयम्। तदेवासिद्धमिति भावेनाह **ज्ञाततायाः इति**। 'न च प्रमाणतोन्या स्यात्प्रमितिर्नाम कुत्रचिदि'ति भक्तिपादीयाऽऽद्याधिकरणे ग्रन्था-

न्त्यभागे निराकरिष्यमाणत्वादित्यर्थः । प्राभाकरमतं शङ्कते **स्वप्रकाशमिति** । **अनात्मत्वादिति** । जडत्वादित्यर्थः । न हि जडरूपज्ञानस्य स्ववृत्तित्वं युक्तम् । घटादेरपि तथात्वापत्तेः । तेजसस्तु-धर्मिग्राहकमानसिद्धमित्यर्थः । ननु न्यायरीत्या मनोवेद्यताऽस्तु ज्ञानस्य, न साक्षिवेद्यतेत्यत आह **मान-सेति** । 'इच्छा ज्ञानं सुखं दुःखं भयाभयकृपादयः । साक्षिसिद्धा न कश्चिद्धि तत्र संशयवान् क्वचित्' इत्यादिना ज्ञानपादे निरसिष्यत इति भावः ।

**या०—अभिनयेनेति** । आकारप्रदर्शनेनेत्यर्थः । एतदित्यनूद्य पूर्वं कृतमित्येतदिति व्याख्यतम् ॥ विज्ञातम् इत्यनूद्य स्मृतम् इति व्याख्यातम् ॥ ननु साक्ष्याकारे प्रदर्शनीये 'इदं पूर्वं मया कृतम्' इति स्मृत्याकारप्रदर्शनं किमर्थम् इत्यतः तत्सार्थक्यं वक्तुमाह **यदुक्तमिति** । **साक्षिसिद्धत्वादिति** । 'इदं पूर्वं मया कृतम्' इति स्मृतिमानहम् इति साक्षिसिद्धत्वादित्यर्थः ॥ **मयैतत्कृतमपीत्युक्तमिति** । तथा च यस्मान्मयैतत्कृतमिति मनसा विज्ञातं तथा स्मृतं च तस्मान्मयैतत्कृतप्येवं स्मृतोऽर्थ स सत्योऽपीति हेतुहेतु-मद्भावेन योज्यमिति भावः ॥ **वक्ष्यमाणत्वादिति** । 'मनो म इति भेदतः । मनसोऽपि गृहीतत्वादि'त्यनु-व्याख्याव्याख्यावसरे समयपादे वक्ष्यमाणत्वादित्यर्थः ॥ **कार्यकारणेति** । मनःस्मरणयोरिति शेषः ॥ **ज्ञानं नित्यानुमेयमिति** । ज्ञाततयेति शेषः । तथा च स्मरणमेव न प्रत्यक्षसिद्धं दूरे तस्य मानसत्व-मिति भावः ॥ **निराकरिष्यमाणत्वादिति** । 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचिदि'त्यनेन भक्तिपाद इति शेषः ॥ **अनात्मत्वादिति** । आत्मत्वशून्यत्वादित्यर्थः । न चात्राप्रयोजकता । एता-वन्तं कालं सुखमस्वाप्समित्युत्तरकालीनपरामर्शबलेनात्मन एव स्वप्रकाशतया सिद्धत्वेनात्मत्वस्य स्वप्रकाश-त्वव्यापकत्वात् । व्यापकाभावेन च व्याप्याभावसाधनात् । न च प्रदीपे व्यभिचारः । तत्र व्यापा-रानुबन्धिनः स्वविषयकत्वस्य सत्त्वेऽपि साध्यतया विवक्षितस्य साक्षात्स्वविषयकत्वाभावस्यापि सत्त्वात् ॥ **निरसिष्यत इति** । 'मानसे दर्शने दोषाः स्युर्न वै साक्षिदर्शने । सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षि-दर्शनम् । इच्छा ज्ञानं सुखं दुःखं भयाभयकृपादयः । साक्षिसिद्धा न कश्चिद्धि तत्र संशयवान्क्वचित्' इति ज्ञानपादे ज्ञानस्य मनोवृत्तिरूपमानसप्रत्यक्षविषयत्वे घटादाविव कदाचित्कस्यचित्तत्र संशयः स्यान्न हीदं ज्ञानं न वेति कस्यचित्संशयोऽतो न ज्ञानं मानसवेद्यमिति निरसिष्यत इत्यर्थः । यद्वा 'मयैतज्ज्ञात-मिति तु साक्षिगं ज्ञानगोचरम् । ज्ञानमेवे'ति भक्तिपादीयानुव्याख्याव्याख्यावसरे । न तावत्पूर्वभाविनो ज्ञानस्य ज्ञानं विषयः । तथा सति ज्ञास्यामीत्येव स्यान्न तु जानामीति । नाप्यागामिनः । तथात्वे ह्यज्ञासिषमित्येव स्यात् । न च सहभाविज्ञानान्तरमस्त्यतो ज्ञानं न प्रत्यक्षवेद्यमिति मीमांसकमुखेन निरसिष्यत इत्यर्थः ।

श्री० — **अनुभवावच्छिन्नेति** । अनुभवविशिष्टेत्यर्थः । अत एव मया विज्ञातमित्यत्र ज्ञानमर्थावच्छेदकतया दृश्यत इत्यर्थः ॥ **तदिति** । अनुभवेत्यर्थः । ततश्च परसापेक्षत्वादयाथार्थ्यमिति भावः ॥ **अनुभववदिति** । यथाऽनुभवः शुद्धं ज्ञानानवच्छिन्नमर्थं विषयीकरोति । न हि 'अयं घट' इत्यनुभवेऽर्थावच्छेदकतया ज्ञानं भासते । तद्वत्स्मृतिरपि ज्ञानानवच्छिन्नं शुद्धमेवार्थं विषयीकरोतीत्यनुभववदुक्तं याथार्थ्यमित्यभिप्रेत्योक्तं **मयैतत्कृतमिति** । यथेत्यर्थो मयैतत्पूर्वं कृतमिति स्मरणेऽनुभवानवच्छिन्नार्थविषयत्वं हि प्रतीयत इत्यर्थः ॥ **नन्विति** । स्मरणं मनोजन्यमिति साक्षिणा प्रतीतिर्न सम्भवति । मनसोऽप्रत्यक्षत्वात् । साक्ष्यविषयत्वादित्यर्थः ॥ **तस्येति** । मनस इत्यर्थः । **तथाऽपीति** स्मरणमनसोः साक्षिवेद्यत्वेऽपीत्यर्थः । स्मरणमनसोरिति शेषः । तथा च कार्यकारणभावस्य साक्षिप्रत्यक्षाविषयत्वात्स्मरणं मनोजन्यमित्यत्र जन्यत्वांशज्ञानं न साक्षिणेत्यर्थः । **तत्र** कार्यकारणभावग्रहणे । ज्ञानस्य नित्यानुमेयत्वात्स्मृतिरूपज्ञानस्य कथं साक्षिप्रत्यक्षवेद्यत्वमित्यभिप्रेत्य शङ्कते **ज्ञानमिति** ॥ **नेति** । अनुमापकलिङ्गाभावादिति शेषः । अयं ज्ञानवान्ज्ञाततावत्त्वादिति ज्ञाततैव ज्ञानानुमाने लिङ्गमत आह **ज्ञाततायः इति** ॥ **स्वप्रकाशमिति** । ज्ञानमिति वर्तते । ततश्च साक्षिवेद्यं न भवत्येवेति भावः ॥ **नेति** । ज्ञानं स्वप्रकाशं नेत्यर्थः ॥ **मानसेति** । ज्ञानस्येति शेषः । कथमेवेति मूलस्य मनसः साक्षिवेद्यत्वं तथा मनःस्मरणयोः कार्यकारणभावस्य चान्वयव्यतिरेकसचिवसाक्षिवेद्यत्वं कथमेवोपपद्यत इत्यर्थः ।

च० — **वक्ष्यमाणत्वादिति** । 'मनो म इति भेदतः मनसोपि गृहीतत्वादि'ति मौलप्रतीकव्याख्यावसरेऽभिधास्यमानत्वादित्यर्थः । ज्ञानस्यातीन्द्रियतया ज्ञातताल्लिङ्गकानुमानवेद्यतामुपगच्छतां भट्टानां दिशा शङ्कते **ज्ञानं नित्यानुमेयमिति** । तथा च स्मरणमेव न प्रत्यक्षसिद्धं तस्य मानसत्वं दूरापास्तमिति भावः । **निराकरिष्यमाणत्वादिति** । 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम' इत्यादिना भक्तिपादे प्रत्याख्यास्यमानत्वादित्यर्थः । ज्ञानस्य मितिमातृमेयरूपत्रिपुटीगोचरतामुपेयुषां गुरूणां दिशा शङ्कते **स्वप्रकाशत्वमिति** । **मानसवेद्यतेति** । मुरारिमिश्रदिशा न्यायनयदिशा च मनःकरणकलौकिकविषयतेत्यर्थः । **निरसिष्यत इति** । 'मानसे दर्शने दोषाः' इत्यादिक'तत्र संशयवान् क्वचिदि'त्यन्तेन ज्ञानपादे प्रत्याख्यास्यत इत्यर्थः ।

सु० याथार्थ्यमेवेत्यादिनोक्तस्य प्रकृतोपयोगमाह एवमिति ।

अनु०— एवं लक्षणके मानत्रये ब्रह्मादिवस्तुषु ॥

प्रमाणं वेद एवैक्त:

यस्मान्मानत्रयमेवंलक्षणकं तस्माद्ब्रह्मादिवस्तुषु वेद एव प्रमाणं न युक्त्यादेस्तत्रावकाशः। इन्द्रियं हि रूपादिमत्येव द्रव्ये प्रवर्तते । न च ब्रह्मादिकं तथा । अनुमानं च व्याप्तिसापेक्षम् । न च वेदनिरपेक्षस्य तस्य ब्रह्मादौ सञ्चारोऽस्ति । उपाधिप्रतिपक्षयोस्तु सर्वत्र संभवेन व्याप्त्यनिश्चयात् । वेदानुसरणे तु साध्याव्यापकत्वबाधितविषयत्वयोरावश्यकत्वात् । पौरुषेयागमस्तु परतन्त्र एवेति ।

ततः किमित्यत आह तत्प्रामाण्यं चेति ।

तत्प्रामाण्यं च साधितम् ॥ २-१-२ ॥

य(त)स्माद्वेदविषये न युक्तेरवकाशस्ततो विरोधोऽपि स एवोक्त इत्युपपन्नम् ।

तथा च वेदस्य प्रमाणविरोधाभावात्तत्प्रामाण्यं च साधितम् । यदुक्तं प्राक् 'तस्माद्वेदप्रामाण्यमिष्यत' इति तत्सिद्धमित्यर्थः ॥ १ १-२ ॥

टी०— रूपादिमत्येवेति । प्राकृतभौतिकरूपादिमत्येवेत्यर्थः । ब्रह्मादिकं च न प्राकृतभौतिकरूपादिमदिति न तत्रेन्द्रियप्रवृत्तिरुपपद्यत इत्यर्थः ॥ व्याप्तिसापेक्षमिति । उपलक्षणं चैतत् । धर्म्यादिसापेक्षमित्यपि द्रष्टव्यम् । धर्म्यादिसापेक्षत्वं च तत्प्रमितिसापेक्षत्वमेव । तथा च धर्म्यादिभूतस्य ब्रह्मादेर्वेदादृतेऽसिद्ध्या वेदानपेक्षायामाश्रयासिद्ध्यादिप्रसङ्गात् । तदपेक्षायां च विरोधिनो धर्म्यादिग्राहकविरोधान्न वैदिकेऽर्थेऽनुमानस्यावकाश इति भावः । नन्वनुमानस्य ब्रह्मादावसञ्चारे मीमांसारम्भानुपपत्तिर्मीमांसाया युक्त्यनुसन्धानात्मकत्वादित्यतो न वयं सर्वथाऽनुमानस्य ब्रह्मादौ सञ्चाराभावं ब्रूमः । किन्नाम तदनपेक्षस्यैव । तत्सापेक्षस्य तु सञ्चारोऽभिमत एवेति न मीमांसारम्भानुपपत्तिरित्यभिप्रेत्याह न च वेदनिरपेक्षस्येति । तदनपेक्षस्य ब्रह्मादावसञ्चारे निमित्तमाह उपाधीति । तर्हि वेदसापेक्षस्यापि कथं तत्र सञ्चारः । उपाधिप्रतिरोधयोः सर्वत्र संभवेन व्याप्त्यनिश्चयादिति युक्तेः साम्यादित्यत आह वेदानुसरणे त्विति । आगमबलेन साधनस्य साध्यव्याप्यत्वे गृहीते साध्यव्याप्यहेत्वव्यापकत्वेन पक्ष एव साध्याव्यापकत्वस्य, वेदानुगृहीतत्वेन अनुमानस्य प्राबल्यात् तद्विरुद्धानुमानस्य च वेदानुगृहीतानुमानेन बाधितविषयत्वप्राप्त्याऽसमानबलत्वस्य प्राप्त्योपाधिप्रतिपक्षनिराकरणं सुलभमिति भावः ॥ परतन्त्र इति । अप्रामाण्यशङ्कानिरासाय मूलभूतप्रमाणसापेक्ष एवेत्यर्थः ॥ ततः किमितीति । वैदिकेऽर्थे युक्तेरनवकाशत्वसिद्धौ किं सिद्धमित्यर्थः। वैदिकेऽर्थे युक्त्यनवकाशसिद्धेर्वेदप्रा-

माण्यसिद्धिर्न प्रयोजनं तत्कथमयमुपसंहार इत्यतोऽयं परमसाध्योपसंहारः अवान्तरसाध्यसाधनभावस्तूक्तरीत्याऽनुसन्धेय इति भावेन तत्प्रदर्शनपूर्वकमुपसंहारवाक्यं व्याचष्टे **यस्मादित्यादिना** ॥ २-१-२ ॥

स०— **परतन्त्र एवेति** । अप्रामाण्यशङ्कानिरसने मूलभूतप्रमाणसहकारापेक्षत्वात्परतन्त्र इति भावः ॥ २-१-२ ॥

प०— **रूपादिमत्येव द्रव्य इति** । महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्य वा तादृशोद्भूतस्पर्शवत्त्वस्य वा चर्मचक्षुरादिप्रत्यक्षगोचरतायां तन्त्रत्वाद्भगवत्यप्राकृतरूपादिमति तत्प्रयोजकप्राकृतरूपादेरभावादिति भावः ॥ **वेदानुसरणे त्विति** । अनुमानस्येत्यनुकर्षः । साध्येत्यादेरुपाधिप्रतिपक्षयोरित्यनेन यथाक्रममन्वयः । प्रपञ्चितमेतच्छास्त्रयोनिसूत्र इति भावः ॥ **परतन्त्र एवेति** । मूलप्रमाणसापेक्षत्वादिति भावः ॥ **प्रागिति**। एतदधिकरणाऽऽदिभागे । साधितमित्यस्यार्थः **सिद्धमिति** ॥ २-१-२ ॥

या०— **रूपादिमत्येवेति** । प्राकृतरूपादिमत्येवेत्यर्थः ॥ **परतन्त्र एवेति** । अप्रामाण्यशङ्कानिरासायापौरुषेयागमसापेक्ष इत्यर्थः ॥ २-१-२ ॥

श्री०— **ब्रह्मादिकम्** परब्रह्मादिकं ॥ **तथेति** । घटादौ प्रत्यक्षताप्रयोजकत्वेन क्लृप्तप्राकृतरूपवदित्यर्थः । **वेदानुसरणे**ऽनुमानस्य मूलतयेति शेषः ॥ **साध्येति** । अनुकूलेन सनाथे सति साधने पक्ष एवोपाधेः साध्यव्यापकताभङ्गादित्यर्थः ॥ **बाधितेति** । वेदविरोधेन सत्प्रतिपक्षस्य बाधितविषयत्वमित्यर्थः ॥ **परतन्त्रेति** । अप्रामाण्यशङ्कानिरसनद्वारा प्रामाण्यनिश्चयायापौरुषेयागमरूपमूलप्रमाणापेक्षत्वेन पराधीनप्रामाण्यकत्वान्न सोऽनुसरणीयः अनुमानमूलतयेत्यर्थः ॥ २-१-२ ॥

च०— **रूपादिमत्येव** प्राकृतोद्भूतरूपादिमत्येव ॥

**॥ इति न विलक्षणत्वाधिकरणम् ॥**

* * *

सु० — ॥ ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ ॥ **युक्त्यन्तरविरोधं वेदस्य परिहर्तुमिदमारभ्यते । स्यादेतत् । युक्तिविरोधाः किं प्रत्येकं परिहरणीयाः' उतोपलक्षणया । नाद्यः निरसनीययुक्त्याभासानन्त्येन शास्त्रापर्यवसानप्रसङ्गात् । सूत्रत्वव्याघाताच्च । द्वितीये त्वनारम्भ एवास्याधिकरणस्य । निरन्तरातीताधिकरणेनैवोपलक्षणया सकलयुक्तिविरोधानां परिहृतत्वादिति । मैवम् । अभ्यधिकाशङ्कासद्भावेन तदुपपत्तेरित्याशयवान्पूर्वपक्षं तावदाह** तथाऽपीति ।

**अनु० — ॥ ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** ॐ ॥

तथाऽपि मृज्जलादीनां बुद्धिवागादिवाचकः ॥
दृष्टव्याप्तिविरुद्धत्वात्तत्र मानं कथं भवेत् ॥

**यद्यपि फलव्यभिचारादिविरोधो वेदस्य परिहृतस्तथाऽपीत्यर्थः । मृज्जलादीनामित्यादिपदेन तेजःप्रभृतीनां ग्रहणम् । बुद्धिर्ज्ञानं, वाग्वक्तृत्वम् । आदिग्रहणेन श्रोतृत्वादिकम् । वेद इत्यनुवर्तते । दृष्टा प्रमिता व्याप्तिर्यस्या युक्तेः सा तथोक्ता । व्याप्तिग्रहणं पक्षधर्मताया अप्युपलक्षणम् । क्वचित्तत्क्रियमानभ्युपगमात्स्वशब्देनासङ्कीर्तनम् । तया विरुद्धत्वात् ।** तत्र मृज्जलादीनां **बुद्धिवागादौ । कथमित्याक्षेपे । प्रतिपाद्यान्तरं तु नास्त्यप्रतीतेरिति शेषः ।**

शे० ॥ ॐ **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** ॐ ॥ ननु तथाऽपीत्युत्तरभाष्यमनर्थकम् । न चैतदभ्यधिकाशङ्काप्रदर्शनपरमिति वाच्यम् । तस्याप्यनर्थकत्वात् । न चाधिकरणारम्भसमर्थनार्थत्वान्न तदिति वाच्यम् । प्रागपरिहृतयुक्तिविरोधपरिहारकतयाऽगतार्थत्वेनाधिकरणारम्भस्य सुस्थतया तदारम्भसमर्थनस्याभ्यधिकाशङ्कानिरपेक्षत्वादित्यतो गतार्थताशङ्कामुत्थाप्याधिकाशङ्काप्रदर्शनपरतया भाष्यं योजयितुं तस्या विषयोपस्थितिसापेक्षत्वात्तदर्थं विषयं तावदाह **युक्त्यन्तरेति** । विषयमुक्त्वा गतार्थताशङ्कामाह **स्यादेतदिति** । प्रत्येकं युक्तिविरोधानां परिहरणीयत्वात्कथं गतार्थतेत्यतोऽस्मिन्पक्षे गतार्थताशङ्काऽनुदयेऽप्यस्य पक्षस्य सिद्धान्त्यनभिमतत्वात्तदभिमते चोपलक्षणया युक्तिविरोधानां परिहरणीयत्वे तच्छङ्कोदयान्नानुपपत्तिरित्यभिप्रेत्य कुतोऽस्य पक्षस्य सिद्धान्त्यनभिमतत्वमित्यतः संभावितविकल्पप्रदर्शनपूर्वकं तस्य अनभिमतत्वमुपपाद्य द्वितीयपक्षे गतार्थताशङ्कामुत्थापयति **युक्तिविरोधा इति** ॥ **सूत्रत्वव्याघाताच्चेति** । सूत्राणां विश्वतोमुखत्वानुरोधेन विषयविशेषमुपलक्षणतयोपादाय समानविषये न्यायसञ्चारकत्वनियमात्प्रत्येकं युक्तिविरोधपरिहारकत्वे च समानविषये न्यायसञ्चारकत्वाभावप्राप्त्या सूत्रत्वव्याघातादित्यर्थः ॥ **अभ्यधिकाशङ्केति** । पूर्वोक्तन्यायविषयत्वाच्छ्रादिका शङ्काऽभ्यधिकाशङ्केत्यर्थः ॥ **तदुपपत्तेरिति** । अधि-

काशङ्कया तन्न्यायविषयत्वाभावे परेण शङ्कितेऽधिकाशङ्कानिराकरणेन पुनस्तन्न्यायविषयत्वप्रदर्शनार्थत्वादधिकरणान्तरारम्भस्य न तदनुदयप्रसङ्ग इति भावः । मूले तथाऽपीत्युक्त्या लब्धमर्थं दर्शयति **यद्यपीति** । **तेजःप्रभृतीनामिति** । प्रभृतिग्रहणं ग्रावादिपरिग्रहार्थम् । श्रोतृत्वादिकमित्यादिपदेन कामकलहादिपरिग्रहः ॥ **अनुवर्तत इति** । 'प्रमाणं वेद एवैकः' इति पूर्ववाक्यादिति शेषः । ननु दृष्टव्याप्तिविरोधपरिहारकत्वेन युक्तिविरोधपरिहारकत्वाभावादस्याधिकरणस्य न पादेऽन्तर्भावः स्यादित्यतो बहुव्रीह्याश्रयणेन दृष्टव्याप्तिपदस्य युक्तिपरत्वान्नानुपपत्तिरितिभावेन बहुव्रीहिसमासमाह **दृष्टेत्यादिना** । दर्शनस्य भ्रमत्वे दृष्टव्याप्तित्वेन विरोधकयुक्तेः प्रामाण्यसमर्पणायोगाद्दर्शनपदं प्रमाणपरमभिप्रेत्य तद्व्याख्याति **प्रमितेति** । ननु च प्रमितव्याप्तिकत्वमात्रस्य प्रामाण्यप्रयोजकत्वेऽतिप्रसङ्गाद्विरोधकयुक्तेस्तत्समर्पणाय प्रमितव्याप्तिकस्येव प्रमितपक्षधर्मताकत्वस्यापि भाष्यकृताऽवश्यं वक्तव्यत्वात्तदनुक्तिर्दोष इत्यतोऽत्र व्याप्तिग्रहणस्य पक्षधर्मत्वोपलक्षणत्वेन दृष्टव्याप्तिपदेनैव प्रमितव्याप्तिपक्षधर्मताकत्वस्य सिद्धत्वान्नानुपपत्तिरित्याशयेनाह **व्याप्तिग्रहणमिति** । तथाऽपि व्याप्तिपक्षधर्मतयोरुभयोरपि तत्प्रामाण्यौपयिकत्वाविशेषाद्व्याप्तेः स्ववाचकशब्देन पक्षधर्मतायाश्च लक्षकशब्देन सङ्कीर्तनमयुक्तमेवेत्यतोऽत्रोभयोरपि स्वशब्देन सङ्कीर्तनेऽनुमितिमात्रे उभयनियमप्रतीतिप्रसङ्गात्तन्निरासार्थत्वेन तस्य युक्तत्वादिति भावेनाह **क्वचिदिति** । क्वचिदित्यतःपरं व्यभिचारेणेति शेषः ॥ **तयेति** । प्रमितव्याप्तिपक्षधर्मताकयुक्त्येत्यर्थः ॥ **तत्र मृज्जलादीनां बुद्धिवागादाविति** । तत्रेत्यनेन मृदादिपरामर्शे तस्य युक्त्यविरुद्धत्वेन युक्तिविरुद्धार्थाभिधायकत्वहेतोरपक्षधर्मत्वप्रसङ्गात्तत्रेत्यनेन बुद्ध्या विवेकेन बुद्धिवागादेरेव परामर्श इति भावः ॥ **आक्षेप इति** । प्रतिवचनाभावेन प्रश्नार्थत्वानुपपत्तेरिति भावः । तर्ह्यविरुद्धमर्थान्तरमादाय वाक्यप्रामाण्योपपत्ते कथं तदप्रामाण्येन पूर्वपक्ष इत्यतो यत्र विरुद्धार्थादर्थान्तरसद्भावस्तत्र विरुद्धार्थपरित्यागेनाविरुद्धार्थप्रामाण्यसंभवेऽपीह तत्साधकाभावादर्थान्तरस्यैवासत्त्वेन तत्र प्रामाण्यायोगाद्युक्तः सर्वथाऽप्रामाण्येन पूर्वपक्ष इत्यभिप्रेत्यापेक्षितं पूरयति **प्रतिपाद्यान्तरं त्विति** ।

स० — **सूत्रात्वव्याघाताच्चेति** । 'सूचकं सूत्र'मिति अनेकार्थसूचकत्वव्याघातादित्यर्थः । यद्वा 'विश्वतोमुखम्, इति सर्वशाखानिर्णायकत्वव्याघातादित्यर्थः । श्रोतृत्वादिकमित्यत्रादिपदेन कलहादेर्ग्रहणम् । 'मृज्जल दीनां, बुद्धिवागादिवाचक' इत्यत्र क्रमो न विवक्षितः । मृदः बुद्धिप्रतिपादकवाक्याभावात्. किं तु आदिपदगृहीततेजसा बुद्धेरन्वयः । 'तेज ऐक्षत' इत्यादिश्रवणात् । टीकाकाराणां तथैवानुवादस्तु मूलानुसारेणेति ज्ञातव्यम् ॥ **व्याप्तिग्रहणमिति** । न च पक्षधर्मताया सर्वत्रानावश्यकत्वात् समुचितदेशसिद्धेरेवोपलक्षणं वक्तव्यम् । तस्याः सर्वत्रावश्यकत्वादिति वाच्यम् । **प्रकृते** पक्षधर्मताया आवश्यकत्वेन तदभिप्रायेणेयमुक्तिरिति भावः । ननु मृज्जलादीनां बुद्धिवागाद्यसंभवेन

'मृदब्रवीदि'त्यादिवाक्यानां प्रामाण्यसंभवेऽपि अर्थान्तरे प्रामाण्यं भविष्यतीत्यत आह **प्रतिपाद्या-न्तरमिति** ।

प० ॐ **अभिमानिव्यपदेशस्तु** । शङ्कोत्थापनायाह **युक्त्यन्तरेति** ॥ **सूत्रत्वेति** । अनन्यलभ्यार्थकत्वरूपसारवत्त्वलक्षणवक्तव्यव्याघात इत्यर्थः । उपलक्षणतया सर्वयुक्तिविरोधनिरासलाभे प्रातिस्विकतन्निरासाय सूत्रान्तरकरणायोगादिति भावः । यद्वा विश्वतोमुखत्वव्याघात इत्यर्थः । अनेकशाखानिर्णायकत्वस्येवाऽनेकविरोधनिरासकत्वस्यापि विश्वतोमुखत्वशब्दार्थत्वात् ॥ **फलव्यभिचारा-दीति** । आप्तोक्तत्वगुणाभावविरोध आदिपदार्थः ॥ **ज्ञानमिति** । ईक्षणशब्दितमित्यर्थः ॥ **श्रोतृत्वा-दिकमिति** । विवादकामसंवादादिरादिपदार्थः । वाचक इत्यत्राकाङ्क्षां पूरयति **इत्यनुवर्तत इति** ।

या० — ॐ **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** ॐ ॥ **श्रोतृत्वादिकमिति** । आदिपदेन कामकलहादिग्रहणम् । क्वचिदित्यनन्तरं व्यभिचारेणेति शेषः ।

श्री० ॐ **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** ॐ ॥ श्रोतृत्वादिकमित्यत्रादि-पदेन कलहेच्छयोर्ग्रहणम् । तत्र प्रतीतार्थे मानं मा भवतु अर्थान्तरे भविष्यतीति सिद्धान्ति-भिरुक्ते पूर्वपक्षो निर्दलःस्यादतोऽर्थान्तरस्याप्याक्षेपस्तस्याभिप्रेत इत्याह **प्रतिपाद्यान्तरं त्विति** ।

---

सु० — एतदुक्तं भवति । 'मृदब्रवीत्, आपोऽब्रुवन्, तत्तेज ऐक्षत, ता आप ऐक्षन्त, शृणोत ग्रावाणो, विदुषोऽनुप्राणाः, अहं श्रेयसि व्यूदिरे, आपो वा अकामयन्ते'त्यादिवेदस्ता-वन्न प्रमाणम्, युक्तिविरुद्धार्थाभिधायित्वात्, नीलं नभ इतिवत् । मृज्जलादीनां बुद्धिवागा-दिमत्त्वं खल्वस्यार्थः । स च, विमता मृन्न वक्त्री मृत्त्वात्संप्रतिपन्नमृद्वदित्यादियुक्तिविरुद्धः । तथा च वेदवाक्यान्तरेऽप्यप्रामाण्यमनुमास्यते ।

ननु 'न विलक्षणत्वादि'त्यनेनैव न्यायेनायमपि विरोधः परिहरणीयः । मैवम् । (तन्)न्यायसञ्चाराविषयत्वात् । तत्र हि यथोक्तानुष्ठानेऽपि फलव्यभिचारश्चेद्धेतुः तदाऽऽपातत-स्तावत्सन्दिग्धविशेषणासिद्धिः । कर्त्रादिवैगुण्यस्यापि संभवात् । नित्यत्वेन वेदप्रामाण्यस्य स्थितौ तु विशेषणासिद्धिनिश्चय एव । फलव्यभिचारमात्रस्य हेतुत्वे तु अनैकान्तिकत्वमित्येवं व्याप्तिपक्षधर्मताविरहव्युत्पादनेन युक्तिविरोधः परिहृतः । न चास्या युक्तेर्व्याप्त्याद्यङ्गवैकल्यं शक्यव्युत्पादनम् । व्याप्त्यादेः प्रमाणदृष्टत्वात् । न खलु मृत्त्वादिकमवक्तृत्वादिना न संबद्धम् । प्रसिद्धमृदादौ तथोपलम्भात् । न च तत्रापि बुद्ध्यादिसद्भावः, कदाऽपि तत्का-र्यस्यादर्शनात् । नापि संबद्धमपि व्यभिचीर्णम् । व्यभिचारानुपलम्भात् । न चानुपलम्भ-

**मानव्यभिचारमपि सोपाधिकम्, उपाधेरनिरूपणात् । बुद्ध्यादिमत्त्वे च मृदादीनां शरीरेन्द्रियवत्ताऽपि स्यात् । अकरणकक्रियाऽदर्शनात् । न च तद्युक्तमिन्द्रियादीनामपि वक्तृत्वादिवददर्शनात् । ततोऽनुकूलतर्कसनाथेनोपाधिव्यभिचारानुपलम्भसहकृतेन सहभागग्राहकेण प्रमाणेन सिद्धा मृत्त्वादीनामवक्तृत्वादिना व्याप्तिः । न च मृदादिषु मृदादित्वं(मृत्त्वादिकं) नास्तीति युक्तम् । व्याघातात् । मृदब्रवीदित्यादिप्रयोगायोगाच्च । ततः पक्षधर्मताऽपि सिद्धैवेति ।**

शे० — अत्र मूले मृज्जलादीनां बुद्धिवागादिवाचकवेदस्वरूपस्य विशिष्याप्रदर्शनम्, वेदार्थस्य युक्तिविरुद्धत्वेन वेदाप्रामाण्यसाधने वैयधिकरण्यप्रसङ्गश्च, विरोधिन्या युक्तेर्विशिष्यानुपन्यासः, तावता जगत्कारणत्वाभिधायकस्य यतो वेत्यादेर्युक्तिविरुद्धार्थानभिधायकत्वेनाप्रामाण्याप्राप्त्या जगत्कारणत्वाक्षेपानुपपत्तिश्च, युक्तिविरुद्धत्वेनैव वेदाप्रामाण्यसाधनसंभवान्मूले प्रमितव्याप्तिकत्वाभिधानवैयर्थ्यं चेति न मूलोक्तं द्वेधाऽप्रामाण्यसाधनं संभवतीत्यतस्तादृशवेदस्वरूपोपदर्शनेन, साध्यसाधनयोः सामानाधिकरण्योपदर्शनेन विरोधियुक्तिस्वरूपोपदर्शनेन च मूलोक्तं वेदाप्रामाण्यसाधनं तावदुपपादयति **एतदुक्तं भवतीति** । अग्रे यतो वेत्यादिवाक्यस्याप्यप्रामाण्यप्रतिपादनात्तावच्छब्दः । कोऽसौ वेदार्थो यस्य युक्तिविरुद्धत्वमुच्यत इत्यत आह **मृज्जलादीनामिति** । जगत्कारणत्वाक्षेपानुपपत्तिं परिहरति **तथा चेति** । मृदब्रवीदित्यादिवाक्यानामप्रामाण्यसिद्धाविवित्यर्थः । **वेदवाक्यान्तरेऽपि** जगत्कारणत्वाभिधायक'यतो वे'त्यादिवेदवाक्यान्तरेऽपि । **अनुमास्यते** वेदत्वेनेति शेष । पूर्वन्यायाविषयत्वोपदर्शकत्वाद्गतार्थताशङ्कानिरासार्थत्वेन प्रमितव्याप्तिकत्वाद्युपन्यासस्यार्थवत्त्वान्न तद्वैयर्थ्यमित्याशयवांस्तथा योजयितुं गतार्थताशङ्कामुत्थापयति **नन्विति** । सूत्राणां विश्वतोमुखत्वात्समानविषये न्यायसञ्चारकत्वेन विशेषमात्रनिष्ठत्वाभावादिति भावः । कथं प्रमितव्याप्तिकत्वाद्यभिधानेन गतार्थताशङ्कानिरास इत्यतस्तेन तन्न्यायसञ्चाराविषयत्वसिद्धेरित्याह **मैवमिति** । कस्तदधिकरणन्यायः कथं चास्य तत्सञ्चाराविषयत्वमित्यतस्तन्न्यायं तावदुपदर्शयति **तत्र हीति ॥ आपातत इति** । वेदप्रामाण्यानिश्चयदशायामित्यर्थः ॥ **विशेषणेति** । यथोक्तानुष्ठानेऽपीत्येतद्विशेषणेत्यर्थः । तामेवोपपादयति ॥ **कर्त्रादीति** । ननु फलव्यभिचारित्वादित्येव हेतुर्न तु यथोक्तानुष्ठानेऽपीति विशेषणविशिष्टः, तत्कथं सन्दिग्धविशेषणासिद्ध्यादीत्यतस्तस्य विशेषणतायामुक्तो दोषोऽविशेषणत्वे तु दोषान्तरं भविष्यतीत्याह **फलव्यभिचारमात्रस्येति ॥ अनैकान्तिकत्वमिति** । भोजनं तृप्तिसाधनमित्याप्तवाक्य इति शेषः । इदानीं तन्न्यायाविषयत्वमस्योपपादयति **न चेति ॥ व्याप्त्यादीति** । आदिपदेन पक्षधर्मतापरिग्रहः । कथमेतदनुमानाङ्गभूतव्याप्त्यादेः प्रमाणदृष्टत्वमित्यतो व्याप्तेस्तावदुपपादयितुं मृत्त्वादेरवक्तृत्वादिव्याप्तेरेवासत्त्वात्कथं तस्याः प्रमाणदृष्टत्वमिति वदन्तं

प्रति किमत्र साधनस्य साध्येन सहभावस्यैवाभावाद्व्याप्त्यभावोऽभिमतः किंवा व्यभिचारादिति विकल्पं मनसि निधायाद्यं दूषयति **नेति** ॥ **तथेति** । सहभाववत्तयेत्यर्थः । सहभावोपलब्धावप्यसहभावे च धूमादावपि तत्प्रसक्तेरिति भावः ॥ **तत्रापीति** । प्रसिद्धमृदादावपीत्यर्थः । द्वितीयं प्रतिषेधति **नापीति** । किमत्र पक्षादन्यत्र स्पष्टदृष्टो व्यभिचारो व्याप्त्यभावोपपादकतयाऽभिमतः किंवोन्नीतः पक्षीयव्यभिचार इति विकल्पद्वयं मनसि निधायाद्यमनुपलब्ध्या दूषयति **व्यभिचारेति** । उन्नीतः पक्षीयो व्यभिचार इति पक्षेऽपि किमुपाधिनोन्नीतत्वमभिमतं, अप्रयोजकत्वशङ्कया वा इति विकल्पद्वयं मनसि निधायोपाध्यभावान्नाद्य इत्याह **न चेति** । कुतोऽत्रोपाध्यभाव इत्यत ऐन्द्रियकस्यानुपलम्भबाधितत्वादतीन्द्रियत्वे च प्रमाणान्तरवेद्यत्वप्रसङ्गात्सर्वथाऽप्रामाणिकस्य च शङ्कितुमप्यशक्यत्वान्नात्रोपाधिरस्तीत्युपाध्यभावनिश्चयो युज्यत इत्याशयेनाह **उपाधेरिति** । अस्तु तर्ह्यप्रयोजकत्वशङ्कया पक्षे व्यभिचारोन्नयनमिति द्वितीय इत्यतोऽत्रानुकूलतर्कसद्भावेनाप्रयोजकत्वशङ्कानुदयान्न तस्य व्यभिचारोन्नायकत्वं संभवतीत्याशयेनानुकूलतर्कमाह **बुद्ध्यादिमत्त्वे चेति** । पक्षीकृतमृदादेरिति शेषः । शरीरेन्द्रियादिरहितत्वेऽपि बुद्ध्यादिमत्त्वोपपत्तिरप्रयोजकमेवादित्यतोऽकरणकक्रियोत्पत्तिप्रसङ्गस्यैव विपक्षे बाधकत्वान्नाप्रयोजकत्वमित्याशयेनाह **अकरणकेति** । इष्टापादनत्वं परिहरति **न चेति** ॥ **इन्द्रियादीनामिति** । कदाऽपि तत्कार्यस्यादर्शनादिन्द्रियादेर्वक्तृत्वादिवदप्रामाणिकत्वान्न तदापादनस्येष्टापादनत्वमिति भावः । नन्वस्तु मृत्त्वादेरवक्तृत्वादिना व्याप्तिः। तस्यास्तु केन प्रमाणेन सिद्धिरित्यतः सहभावग्राहकप्रत्यक्षादेवेति वदन् तर्हि सहभावग्राहकप्रत्यक्षस्य वन्ह्यादावपि भावात्तेन वन्ह्यादेरपि धूमादिना व्याप्तिसिद्धिप्रसङ्ग इत्यतः सहकार्यन्तरविशिष्टसहभावग्राहकप्रत्यक्षस्यैव व्याप्तिसाधकत्वाङ्गीकारेण केवलस्य तस्य तदसाधकत्वात्तद्भावाभावाभ्यां विशेषान्नातिप्रसङ्ग इत्याशयवान्व्याप्तिग्राहकप्रत्यक्षस्य सहकार्यन्तराणि दर्शयन्व्याप्तेः प्रत्यक्षसिद्धत्ववर्णनमुपसंहरति **ततोनुकूलतर्कसनाथेनेत्यादिना** । अत्रानुकूलतर्कोपाध्यभावनिश्चययोर्व्याप्तिग्राहकप्रत्यक्षसहकारित्वमित्यभिप्रायेण तदुभयोपादानमिति नाभिप्रायः । तर्कं विनाऽपि भूयोदर्शनव्यभिचारादर्शनसहकृतप्रत्यक्षमात्रेण व्याप्तिग्रहेण तयोर्व्यभिचरितत्वात् । तर्कस्य व्याप्तिज्ञानसापेक्षत्वेनोपाध्यभावनिश्चयस्य च व्याप्तिज्ञानसापेक्षतर्कसापेक्षत्वेनानुकूलतर्कोपाध्यभावनिश्चययोस्तत्सहकारितायामनवस्थापत्तेश्च । किं तर्हि यत्राप्रयोजकत्वशङ्का सोपाधिकत्वशङ्का वा तत्रानुकूलतर्क उपाध्यभावनिश्चयश्चापेक्षित इत्यभिप्रेत्यैव तदुभयोपादानम् । एवमेव 'व्याप्तिग्राहिणः प्रत्यक्षस्य भूयोदर्शनव्यभिचारादर्शनोपाध्यभावनिश्चयाः सहकारिण' इति पद्धतावुपाध्यभावनिश्चयोक्तेरप्युक्त एवाभिप्रायो बोध्यः । अत एव पद्धतावेव तर्कस्य क्वाचित्कत्वोक्तिरित्यवधेयम् । व्याप्त्यादेरित्यादिशब्दोक्तपक्षधर्मताया अपि प्रमितत्वमुपपादयति **न चेति** ॥ **व्याघातादिति** । मृदादिष्वित्युक्त्या तत्र मृदादित्वसत्त्वलाभेन तन्निषेधस्य तद्व्याहतत्वादिति भावः ॥

**प्रयोगेति** । मृत्त्वादिविशिष्टस्यैव मृदादिपदार्थतया मृदादिपदात्तस्यैव प्राप्तेरिति भावः । इतीत्यस्येत्ये- तदुक्तं भवतीति व्यवहितेन सम्बन्धः ।

स० — **वेदवाक्यान्तरेऽपीति** । 'यतो वा इमानि भूतानि जायन्ते' इति वेदवाक्यान्तरेऽपीत्यर्थः । ननु 'न विलक्षणत्वादि'त्यधिकरणे अयं न्यायः । ईश्वरो न सर्वज्ञः पुरुषत्वात् इत्यादियुक्तिविरोधेन वेदाप्रामाण्ये शङ्किते वेदस्य नित्यत्वेनाप्रामाण्यकारणदोषशून्यत्वेन प्रामाण्यस्य निश्चितत्वात् तद्विरोधेन युक्तेरेवाप्रामाण्यमिति । एवं च तेनैव न्यायेन एतद्युक्तिविरोधपरिहारस्यापि संभवेनेदमधिकरणं व्यर्थमिति गूढाभिसन्धिः शङ्कते **ननु न विलक्षणत्वेति** । ईश्वरो न सर्वज्ञः इत्यादियुक्तेः प्रत्यक्षप्रमितव्याप्त्याद्यभावेन तत्र वेदविरोधेनाप्रामाण्यसंभव इति न्यायवैषम्यमिति गूढाभिसंधिरेवोत्तरमाह **मैवमिति** । शङ्कापरिहर्ता स्वाभिसंधिमुद्घाटयति **तत्र हीति** ॥ **आपातत इति** । वेदप्रामाण्यस्थितावित्यर्थः । **अनैकान्तिकत्वमिति** । प्रमाणत्वेनाङ्गीकृतफलव्यभिचारिशिवादिवाक्य इति शेषः । **बुद्ध्यादिमत्त्वे चेति** । पक्षीकृतमृदादेरिति शेषः । 'ततोऽनुकूलतर्कसनाथेनोपाधिव्यभिचारानुपलम्भसहकृतेन सहभावग्राहकेण प्रमाणेन सिद्धा मृत्त्वादीनामवक्तृत्वादिने'त्यत्र चोपाध्यभावनिश्चयोक्तिः सोपाधिकशङ्कास्थलाभिप्राया । न तु सार्वत्रिकाभिप्राया । अन्यथा उपाध्यभावनिश्चयस्य व्याप्तिसापेक्षतर्काधीनत्वेनानवस्थापातात् । पद्धतावेव तर्कस्य क्वाचित्कत्वोक्तेश्चेति द्रष्टव्यम् । अत्र व्याप्तिग्राहिणः प्रत्यक्षस्य भूयोदर्शनव्यभिचारादर्शनोपाध्यभावनिश्चयाः सहकारिण इति पद्धतौ ।

प० — अभ्यधिकाशङ्काप्रकारं दर्शयितुमाह **एतदुक्तमिति** । मृदादिशब्दैरादिकालीनपृथिव्यादिग्रहः । **प्राणा** इन्द्रियाणि । अहं श्रेष्ठ इत्यर्थे विवादमकुर्वन्नित्यर्थः । इत्यादिवेदा इत्याऽऽदिपदेन 'ओषधयः संवदन्ते, यं पृथिवी न वेद (ऋ. १०-९७ २२) इत्यादिग्रहः । सर्वोप्यमानमिति पश्चाद्वक्ष्याम इति तावच्छब्दः ॥ **इतिवदिति** । नभो (न नीलरू)नीरूपं विभुत्वादित्यादियुक्तिविरुद्धं नीलं नभ इति प्रत्यक्षं यथेत्यर्थः । हेतोरसिद्धिं निगह **मृदिति** । इत्यादीति आदिपादेनाप्तेजस्त्वादिग्रहः । जडत्वात् घटवदिति च गृह्यते । तावता न विष्णुकारणत्वादिव्याघात इत्यत आह **तथा चेति** । एकदेशस्याप्रामाण्ये सति यतो वा इत्यादिवाक्यान्तरेपि 'तत्सामान्यादितरेषु तथात्वमि'ति जैमिनिन्यायेनाप्रामाण्यं वेदवाक्यत्वहेतुतद्दृष्टान्तेनाऽनुमास्यत इत्यर्थः । दृष्टव्यापीत्येतदभिप्रायं विवृण्वन्नभ्यधिकाशङ्काप्रकारं व्यनक्ति **मैवमित्यादिना सिद्धैवेत्यन्तेन** ॥ तन्न्यायसंचाराविषयत्वमेव व्यनक्ति **तत्र हीत्यादिना** । पूर्वाधिकरण इत्यर्थः । परिहृत इत्यन्वयः ॥ **हेतुरिति** । वेदाद्यप्रामाण्य इति योज्यम् ॥ **आपातत इति** । प्रामाण्यानिश्चयदशायामित्यर्थः ॥ **नित्यत्वेनेति** । स्वतन्त्रपुरुषा-

प्रणीतत्वेनापवादकदोषाभावेन ज्ञानजननशक्तित एव प्रमाजनकत्वरूपप्रामाण्यस्थिताविल्यर्थः ॥ **विशेष-णेति** । यथोक्तानुष्ठान इत्युक्तविशेषणेत्यर्थः ॥ **अनैकान्तिकत्वमितीति** । फलहेतुतया निर्णीते विगुणतयाऽनुष्ठितलौकिकक्रियादाविति, भावः । एवं पूर्वतनयुक्तेः सावकाशत्वमुक्त्वा अत्रत्यविरोधियुक्तेः निरवकाशत्वेन दृढत्वमाह **न चास्या इत्यादिना** । एतेन पूर्वत्र सावकाशयुक्तिविरोधो निरस्तः, अत्र तु निरवकाशदृढयुक्तिविरोधो निरस्यत इति पूर्वानन्तर्यसङ्गतिरप्युक्ता ध्येया । **व्याप्त्यादेः** व्याप्ति-पक्षधर्मतयोः । विपक्षे बाधकमनुकूलतर्कं च व्याप्तिनिर्णायकमाह **बुद्ध्यादिमत्त्वे चेति** । पक्षीकृतमृदा-देरिति शेषः । एवं व्याप्तिमुपपाद्य मूलमुपलक्षणमित्युक्तत्वात् पक्षधर्मतामपि व्यनक्ति **न च मृदादि-ष्विति ॥ व्याघातादिति** । मृदादिष्वित्यस्य मृत्त्वादिमत्स्वित्यर्थत्वादिति भावः ।

**या० — वेदवाक्यान्तर इति** । 'यतो वा इमानि भूतानी'त्यादिवेदवाक्यान्तर इत्यर्थः । वेदत्वेनेति शेषः । **आपातत इति** । वेदप्रामाण्यानिश्चयदशायामित्यर्थः ॥ **अनैकान्तिकत्वमिति** । भोजनं तृप्तिसाधनमित्याद्याप्तवाक्य इति शेषः । अननुष्ठानदशायां भोजनादेः फलव्यभिचारित्वादिति भावः । अनुकूलतर्कमप्याह **बुद्ध्यादिमत्त्वे चेति** । इदं च प्रकृते युक्तिदाढर्योपपादनायैवोक्तं न तु तर्कोऽपि सर्वत्र व्याप्तिग्राहक इत्यभिप्रेत्य येनानवस्था स्यादिति ध्येयम् ।

**श्री० - तथा चेति** । एतद्दृष्टान्तेन वेदत्वहेतुना यतो वेत्यादिकारणत्वप्रतिपादकवाक्यान्तरेऽपीत्यर्थः । **तत्र** अधिकरणे । **हेतुः** वेदस्याप्रामाण्य इति शेषः ॥ **आपातत इति** । वेदप्रामाण्यानिश्चयदशायामित्यर्थः। तथा च यदि वेदः प्रमाणं तदा प्रमाणभूतवेदोक्तसाधनानुष्ठाने सति फलं स्यादेव अन्यथा प्रामाण्यायोगात् क्वचित्फलं न भवति। तेन ज्ञायते, यथोक्तसाधनानुष्ठानरूपं विशेषणमेव वेदोक्तस्याधिकारस्येत्युक्तरीत्या कर्त्रा-दिवैगुण्यस्यापि संभवेन नास्तीति; यदि चाप्रमाणं तर्ह्युक्तरीत्या यथोक्तानुष्ठानरूपविशेषणाभावस्योपपादयि-तुमशक्यत्वेन यथोक्तानुष्ठानस्यैव संभवेन वेदप्रामाण्यास्थितिदशायां संदिग्धविशेषणासिद्धिरित्यर्थः । **अनै-कान्तिकत्वं** चरकशास्त्र इत्यर्थः । **अनुपलभ्यमानव्यभिचारम्** अनुपलभ्यमानस्वाभाविकव्यभिचारोपेत-मप्युपाधिप्रयुक्तव्यभिचारोपेतमित्यर्थः ॥ **बुद्ध्यादीति** । पक्षीकृतमृदादीनामित्यर्थः ॥ **शरीरेन्द्रियेति** । बुद्ध्यादिकारणीभूतेत्यर्थः । कुत इत्यत आह **अकरणिकेति** । **तत्** शरीरेन्द्रियादिमत्त्वम् ॥ **सहभावेति** । प्रसिद्धमृदादावित्यर्थः । **मृदादिषु** पक्षीभूतेषु । तथा चासिद्धिरिति भावः ।

च० — ॐ **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** ॐ ॥ **वाक्यान्तरे** 'यतो वा इमानी'त्यादिवाक्यान्तरे । **अवक्तृत्वादिना न संबद्धमिति** । अवक्तृत्वनिरूपितसाहचर्यविशेषितं नेत्यर्थः । **तथोपलम्भात्** । मृत्त्वस्य तादृशसाध्यनिरूपितसाहचर्यविशेषिततयोपलम्भात् । **वक्तृत्वा-**

**दिवदिति** । षष्ठ्यन्ताद्वतिः, उपमेये षष्ठीदर्शनात् । **अनुकूलतर्केति** । वक्तृत्वापादककेन्द्रियवत्त्वापाद्यकतर्कसचिवसाहचर्यग्राहकप्रमाणप्रत्यायिता मृत्त्वादिनिष्ठा वक्तृत्वाद्यभावनिरूपिता व्याप्तिरित्यर्थः ।

**सु० — ननु च नित्यतया वेदस्य प्रामाण्ये व्यवस्थिते तद्विरुद्धाया युक्तेरेवाप्रामाण्यमुचितमिति । मैवम् । व्याप्तिपक्षधर्मतोपेताया युक्तेरपि निरवकाशत्वात् । ततश्च सत्प्रतिपक्षतया निश्चायकत्वाभावेनाप्रामाण्यं वेदस्य ।**

**ननु प्रसिद्धमृदादिपक्षीकारे सिद्धसाधनता । पक्षसपक्षभेदाभावश्च । सपक्षान्तरस्वीकारे तत्र मृत्त्वाद्यभावः । जडत्वस्य हेतूकरणे त्वसिद्धिः स्यात् । तस्मादादिकालीनं मृदादिकं पक्षयितव्यम् । न च तत् प्रत्यक्षादिसिद्धमिति वेद एवोपजीव्यः । तथा च धर्मिग्राहकप्रमाणविरोधादप्रामाण्यं युक्तेरिति चेन्न । व्याप्त्यादिमत्यास्तदसंभवात् । आदिकालीनमृदादिस्वरूपपरवाक्यान्तरेण परिदृश्यमानकार्यलिङ्गेन वा धर्मिग्रहोपपत्तेः ।**

**एतेन वैदिकेऽर्थे युक्तेरवकाशाभावान्न तद्विरोधकत्वमित्यपास्तम् ।**

**तदेवं मृदब्रवीदित्यादिवेदवाक्यानां युक्तिविरुद्धत्वेनाप्रामाण्ये वेदत्वात् 'यतो वा इमानि (भूतानि)' इत्यादिवाक्यानामप्यप्रामाण्यान्न वेदसमन्वयेन ब्रह्मणो जगत्कारणत्वसिद्धिरिति ।**

---

**शे० —** पूर्वं न्यायसञ्चाराविषयत्वप्रदर्शनेन गतार्थताशङ्कानिरासार्थं दृष्टव्याप्तीति व्याप्त्यादेः प्रमितत्ववर्णनमित्युक्तम् । इदानीं तु युक्तेर्निरवकाशत्वोपपादनद्वारा वेदसमानबलत्वोपदर्शनार्थं तदित्यभिप्रेत्य किं तत्प्रदर्शनेनापीत्यतो युक्तेर्वेदाबाध्यत्वसिद्धिस्तत्प्रयोजनमित्याशयवांस्तद्बाध्यत्वशङ्कामुत्थापयति **नन्विति** । युक्तिविरोधेन वेदस्यैवाप्रामाण्यं किन्न स्यादित्यत उक्तम् **नित्यतयेति** । पूर्वाधिकरणन्यायेनेति शेषः । उभयोरपि प्रामाण्यं किन्न स्यादित्यतस्तथा सति वस्तुनो द्वैरूप्यापत्तिरिति भावेन तद्विरुद्धाया इत्युक्तम् । समबलत्वान्न युक्तेरागमबाध्यतेत्याशयेन परिहरति **मैवमिति** । कथं तर्हि युक्तिविरोधेन वेदाप्रामाण्यपूर्वपक्षस्तवापीत्यत आह **ततश्चेति** । तच्च तवानिष्टं मम तु निश्चायकत्वाभावेन युक्त्यप्रामाण्यमिष्टमेवेति भावः ।

ननूपजीव्यवेदविरुद्धत्वेन युक्तेरेवाप्रामाण्यनिश्चयात्कथं युक्तिविरोधेन तदप्रामाण्यमिति पूर्वपक्ष इत्याशङ्कानिरासार्थं वा मूले युक्तिमूलभूतव्याप्त्यादेर्दृष्टव्याप्तीति प्रमितत्ववर्णनमित्याशयवान्प्रत्यक्षेणैव मृदादिस्वरूपसिद्धेर्न वेदस्य धर्मिग्राहकतया तत्रोपजीव्यत्वमिति न तद्विरोधशङ्कावकाश इत्यतोऽत्र प्रसिद्धमृदादिपदपक्षीकारे वेदस्य धर्मिग्राहकतयोपजीव्यत्वाप्राप्तावप्यादिकालीनमृदादेः पक्षत्वे तस्योपजीव्यत्वमवर्जनीयमेवेत्यभिप्रेत्य कुतोऽत्र प्रसिद्धमृदादेर्न पक्षत्वं येन वेदस्योपजीव्यतेत्यतस्तत्र बाधकोपदर्शनपूर्वकम्

आदिकालीनमृदादेस्तत्प्रदर्शनेन वेदस्योपजीव्यतामुपपादयन्नेव तद्विरोधशङ्कामुत्थापयति **नन्विति** ॥ **सिद्धसाधनतेति** । प्रसिद्धस्य मृदादेः सिद्धान्तेऽपि वक्तृत्वाद्यभावादिति भावः । ननु प्रसिद्धमृदादेः वक्तृत्वे विप्रतिपन्नं प्रति तत्साधनान्न सिद्धसाधनतेत्यतः किमत्र पक्षे प्रसिद्धमृदादिकमेव सपक्षतयाऽभिमतं किंवा सपक्षान्तरमिति विकल्पं मनसि निधायाद्यं दूषयति **पक्षेति** । तथा च व्याप्यत्वासिद्धिरिति भावः । द्वितीयेऽपि किं मृत्त्वादिकमेव हेतुतयाऽभिमतं किंवा जडत्वमिति विकल्पं मनसि निधायाद्यं दूषयति **सपक्षान्तरेति** । ततश्चासाधारण्यमिति भावः । द्वितीयं दूषयति **जडत्वस्येति** । प्रसिद्ध-मृदादेर्वक्तृत्वमङ्गीकुर्वता तत्र जडत्वानङ्गीकारादसिद्धिरित्यर्थः । न च मृत्त्वेनतत्साधनसंभवान्नासिद्धिरिति वाच्यम् । प्रसिद्धमृन्मात्रस्य पक्षत्वेन मृत्त्वजडत्वयोर्व्याप्तिग्रहणस्थलाभावेन व्याप्यत्वासिद्धिप्रसङ्गात् । न च व्यतिरेकव्याप्तिसंभवः । जडत्ववत्यबादौ मृत्त्वाप्रवेशेनासाधारण्यापातात् । न चात्र यदीदं जडं न स्यात्तर्हि मृन्न स्यादित्यनुकूलतर्कसद्भावान्नासाधारण्यं दोष इति वाच्यम् । अनुकूलतर्केऽप्यप्रयोजकत्व-शङ्कनात् । न चैवं टीकायामपि कथं तस्य हेतुत्वेनाभिधानं सङ्गच्छते । अन्यतरासिद्धेरविशेषादिति वाच्यम् । तत्रादिकालीनमृन्मात्रस्य पक्षत्वेन प्रसिद्धमृदि मृत्त्वजडत्वयोर्व्याप्तिग्रहणसंभवेन मृत्त्वेन जड-त्वसाधनस्योपपन्नतया जडत्वस्य हेतूकरणे उक्तदोषाप्रसरात् । न चात्रेव तत्रापि मृत्त्वादिना अवक्तृत्वा-देरेवानुमानसंभवे तेन जडत्वं प्रसाध्य जडत्वेनावक्तृत्वाद्यनुमाने वृथा परम्पराश्रयणं दोष इति वाच्यम् । वक्तृत्वादिना जडत्वस्येव मृत्त्वादेर्विरोधाप्रतीतेरवक्तृत्वादिना मृत्त्वादेर्व्याप्तेरस्फुटतया तदाश्रयणस्यार्थ-वत्त्वात् । अत एव चात्र व्याप्त्युपपादनं कृतम् । एवञ्च, तत्र टीकायां स्फुटव्याप्तिकस्यास्फुटपक्षधर्मता-कस्य जडत्वस्य, अत्र च स्फुटपक्षधर्मताकस्यास्फुटव्याप्तिकस्य मृत्त्वादेरेव हेतूकरणं व्याप्तिपक्षधर्मतयोर-न्यतरस्योपपादनीयताया उभयत्राविशिष्टत्वात् इति न किञ्चिदनुपपन्नम् । केचित्तु सन्दिग्धसाध्यवत एव पक्षत्वेन प्रसिद्धमृदादौ च वक्तृत्वाभावरूपसाध्यस्य सिद्धतया सन्दिग्धत्वाभावात्प्रसिद्धमृदादेः सन्दिग्ध-साध्यवत्त्वाभावेनापक्षत्वात् तद्धर्मभूतजडत्वस्य पक्षधर्मत्वाभावात्पक्षधर्मत्वासिद्धिः स्यादित्यर्थ इत्याहुः ॥ **आदिकालीनमिति** । प्रसिद्धमृदादेरेव पक्षत्वे तेषां वचनक्रियाद्यभावस्य प्रत्यक्षत्वेन प्रत्यक्षविरोधस्यैवात्र प्रथमं स्फुरणेन युक्तिविरोधस्यास्फुरणादस्य पादासङ्गतिप्रसक्तावप्यादिकालीनमृदादौ वक्तृत्वाद्यभावस्य अस्म-दाद्यप्रत्यक्षत्वेन तत्र प्रत्यक्षविरोधाप्रसक्त्या युक्तिविरोधस्यैवानुसरणीयत्वान्न पादासङ्गतिरित्यप्यनेन सूचि-तम् । अस्तु तर्ह्यादिकालीनमृदादिकं पक्षीकृत्य तस्य मृत्त्वादिना वक्तृत्वाद्यभावानुमानमित्यतस्तस्यासिद्धत्वं आश्रयासिद्धिप्रसङ्गादादिकालीनस्य तस्यास्मदाद्ययोग्यत्वेन प्रत्यक्षेण, लिङ्गाभावादनुमानेन च तदसिद्धेर्मृद-ब्रवीदित्यादिवेदादेव तत्सिद्धिर्वाच्येति सिद्धं वेदस्य धर्मिग्राहकतयोक्तयुक्तिं प्रत्युपजीव्यत्वमिति तद्विरोधा-द्युक्तेरप्रामाण्यमित्याह **न चेति** ॥ **प्रत्यक्षादीति** । अस्मदादिप्रत्यक्षादीत्यर्थः ॥ **धर्मिग्राहकप्रमाणेति** ।

अत्र प्रमाणपदं श्रुतिपरम् । ननु धर्मिग्राहकप्रमाणबाधात्पक्षस्यैव विपक्षत्वेन तत्र वर्तमानस्य हेतोर्व्यभिचारित्वात्पक्षधर्मत्वभ्रौव्यात्कथं व्याप्त्यादिमत्त्वमित्याशङ्कयोक्तयुक्तिं प्रति यस्य स्वरूपमात्रपरस्योपजीव्यत्वं न तद्विरोधोऽस्ति युक्तेः । यद्विरोधोऽस्ति युक्तेस्तस्य मृदब्रवीदित्यादेर्नोपजीव्यत्वमिति न धर्मिग्राहकश्रुतिविरोध इति न व्याप्त्यादिभङ्ग इत्याशयेनाह **आदिकालीनेति** ॥ **स्वरूपपरेति** । स्वरूपमात्रपरेत्यर्थः । नन्वनुपलम्भात्स्वरूपमात्रपरं वाक्यमेव नास्ति । तथा चोपजीव्यविरोधो दुर्वार इत्यतो भवेदेतदेवं यदि वेदो धर्मिग्राहकः स्यात् । न चैवं किं तर्हीदानीन्तनमृदादिकारणत्वेनादिकालीनमृदाद्यनुमानसंभवेन तस्यानुमानसिद्धत्वात्तदेव धर्मिग्राहकमित्याशयेनाह **परिदृश्यमानेति** । एतच्च लिङ्गासिद्धिपरिहारायोक्तम् ।

**एतेनेति** । आदिकालीनमृदादिस्वरूपमात्रपरवाक्यान्तरेण वा परिदृश्यमानकार्यलिङ्गेन वा धर्मिग्रहोपपादनेन प्रकृतयुक्तेर्धर्मिग्राहकप्रमाणविरोधाभावनिरूपणेनेत्यर्थः ॥ **अवकाशाभावादिति** । धर्मिग्राहिप्रमाणविरोधादिति भावः । यत्र हि वैदिकेऽर्थे युक्तेर्धर्मिग्राहकप्रमाणविरोधस्तत्र तदवकाशाभावेऽपि प्रकृतयुक्तेरादिकालीनमृदादिस्वरूपमात्रपरवाक्यान्तरोपजीवनेन प्रवृत्ततया तद्विरोधाभावेन वैदिकेऽर्थे युक्तेः प्रवेशोपपत्तेस्तस्या मृदब्रवीदित्यादिवेदविरोधित्वमवर्जनीयमिति । वैदिकेऽर्थे युक्तेरनवकाशेऽप्यादिकालीनमृदादेरानुमानिकत्वाद्वैदिकत्वस्यैवाभावेन तत्रोक्तयुक्तेरवकाशसम्भवात्तस्यास्तद्विरोधकत्वमिति च निरासप्रकारो द्रष्टव्यः ।

अस्त्वेवं दृष्टव्याप्त्यादिमद्युक्तिविरुद्धत्वेन मृदब्रवीदित्यादेरप्रामाण्यप्राप्तिः । तथाऽपि न तद्विरोधपरिहारकत्वमस्य सम्भवति । तथा सति सर्ववैशिष्ट्ये विरोधकयुक्तिनिरासकत्वाभावेनास्याधिकरणस्यैतत्पादान्तर्भावाभावप्रसङ्गादित्यतस्तमुपपादयन्नेव पूर्वपक्षमुपसंहरति **तदेवमिति** ।

स०— शङ्काकर्ता स्वाभिसन्धिमुद्घाटयति **ननु च नित्ययेति** ॥ **निश्चायकत्वाभावेनेति** । सत्प्रतिपक्षतया सन्देहस्यैव प्राप्तत्वेनार्थनिश्चायकत्वासंभवेनार्थसत्त्वनिश्चयरूपप्रामाण्यं वेदस्य न संभवतीति भावः ।

**सपक्षान्तरेति** । स्तम्भादिलक्षणसपक्षान्तरस्वीकार इत्यर्थः ॥ **जडत्वस्य हेतूकरण इति** । न च मृत्त्वेन जडत्वसाधनसंभावनासिद्धिरिति वाच्यम् । प्रसिद्धमृन्मात्रस्य पक्षीकृतत्वेन मृत्त्वजडत्वयोः व्याप्तिग्रहणस्थलाभावेन व्याप्यत्वासिद्धेः । न च व्यतिरेकव्याप्तिसंभवः । जडत्ववत्यपि अबादौ सपक्षे गुणत्वलक्षणहेतोरप्रवेशेनासाधारण्यात् । न चानुकूलतर्करहितस्थल एव तस्य दोषत्वेन प्रकृते च यदि विमतं जडं न स्यात्तर्हि मृत्त्वं न स्यादित्यनुकूलतर्कसद्भावेनासाधारण्यं न दोष इति वाच्यम् । अनुकूलतर्के-

ऽप्यापादकस्याप्रयोजकत्वात्। न चैवं सति तत्त्वप्रकाशिकायां जडत्वस्य हेतूकरणमनुपपन्नमिति वाच्यम्। तत्रादिकालीनमृन्मात्रस्य पक्षीकृतत्वेन प्रसिद्धमृदि मृत्त्वजडत्वयोर्व्याप्तिनिश्चयोपपत्त्या मृत्त्वेन जडत्व-साधनसंभवेनातिप्रसक्त्यभावादुपपन्नं तस्य हेतूकरणमिति सिद्धान्तरहस्यम्।

केचित् प्रसिद्धमृदादौ वक्तृत्वादिकमङ्गीकुर्वतां तत्र जडत्वस्यानङ्गीकारेण हेतोरन्यतरासिद्ध्यापत्ते-रित्यर्थ इत्याहुः।

अपरे तु **असिद्धेः** पक्षधर्मत्वासिद्धेरित्यर्थः। तथाच संदिग्धसाध्यवत एव पक्षत्वेन प्रकृते च प्रसिद्धमृदादौ वक्तृत्वाभावरूपसाध्यस्य सिद्धत्वेन संदिग्धत्वाभावेन संदिग्धसाध्यत्वाभावे प्रसिद्धमृदादेः पक्षत्वाभावे तद्धर्मभूतजडत्वस्य पक्षधर्मत्वाभावात् पक्षधर्मत्वासिद्धिरिति भाव इत्याहुः। न चैवं प्रसिद्ध-त्वाभावात् मृत्त्वादिनैव तत्रावक्तृत्वाद्यनुमीयतामिति वाच्यम्। वक्तृत्वादिना जडत्वस्येव मृत्त्वादेः विरोधाप्रतीतेरववतृत्वादिना मृत्त्वादेः व्याप्तेरस्फुटत्वात्। अत एव टीकायां स्फुटव्याप्तिकमस्फुटपक्ष-धर्मताकं हेतूकृतम्। अत्र स्फुटपक्षधर्मताकमस्फुटव्याप्तिकं मृत्त्वादिकं हेतूकृतम्। अत एवात्र व्याप्त्युपपादनमपि सङ्गच्छत इत्यविरोध इति द्रष्टव्यमित्यप्याहुः।

ननु व्याहत्यादिमत्त्वेन युक्तेः प्राबल्येऽपि उपजीव्यत्वेन वेदस्यापि प्राबल्यात्तद्विरोधेन युक्तेरेव अप्रामाण्यमुपपन्नमित्यत आह **आदिकालीनेति**। आदिकालीनमृदादिस्वरूपमात्रप्रतिपादक-

'यदग्नेराप:'इत्यादिवाक्यान्तरेणेत्यर्थः। तथा च तस्योपजीव्यत्वेऽपि स्वरूपमात्रप्रतिपादकत्वेन न तद्विरोध इति भावः। ननु तस्य वाक्यस्य मृदादिस्वरूपमात्रप्रतिपादकत्वेन साक्षाद्विरोधासंभवेऽपि यद्वक्तृत्वादिनैव मृदादिस्वरूपप्रतिपादकागमवाक्यं, तस्याप्युपजीव्यत्वेन तज्जातीयत्वात् मृदादिस्वरूपमात्रबोधकवाक्यस्य तेन युक्तेर्विरोधो दुर्वार एवेत्यतः पक्षान्तरमाह **परिदृश्यमानेति**। विमतं मृदादिकार्यं सोपादानकं कार्यत्वात्संमतवदित्यनुमानेन मृदादिकार्योपादानसिद्धौ तदुपादानं परिशेषेणादिकालीनमृत्त्वेनैव सिद्ध्यति इति भावः। यद्वा वाक्यान्तरेण मृदादिस्वरूपमात्रप्रतिपादकाबादिवाक्येनेत्यर्थः॥ केचित् इदानीन्तनेन मृदादिकारणत्वेनादिकालीनमृदाद्यनुमानादित्यर्थ इत्याहुः।

**एतेनेति**। मृदादिलक्षणधर्म्यादेरादिकालीनमृदादिस्वरूपमात्रपरवाक्यान्तरेण वा परिदृश्यमान-कार्यलिङ्गेन वा सिद्धेनेत्यर्थः। अनुमानं हि धर्म्यादिप्रमितिमपेक्षते। न च वेदैकसमधिगम्यं धर्म्यादिकं वेदादृते सिद्ध्यतीति तदनपेक्षायामाश्रयासिद्ध्यादिकम्। अपेक्षायां तु विरोधिनो धर्म्यादिग्राहकविरोध इत्येवं वैदिकेऽर्थे अनुमानस्यानवकाशोऽभिधित्सितः। यदा तु धर्म्यादि मृदादिलक्षणं प्रकारान्तरेण सिद्धम्, तदा तत्पक्षकावक्तृत्वसाधकयुक्तेरवकाशसंभवेन युक्तं तस्या विरोधकत्वमिति भावः।

**प०** — कथं मानं भवेदिति मूलोक्तेः शङ्कोत्तराभ्यां तात्पर्यं व्यनक्ति **ननु चेत्यादिना** । ननु मृदब्रवीदित्यादेः प्रत्यक्षविरोध एव न युक्तिविरोधोऽतोऽत्र पादे निवेशो न युक्त इति चोद्यं शङ्काव्याजेन निरस्यन्पूर्वपक्षशङ्कानुदयमाशंक्य समाधत्ते **ननु प्रसिद्धमृदित्यादिना** ॥ **सपक्षांतरेति** । मृदाद्यन्येत्यर्थः ॥ **असिद्धिरिति** । बुद्धिवागादिकं वेदवाक्यादङ्गीकुर्वाणेनाज्ञातृत्वावक्तृत्वादिरूपजड-त्वस्यांगीकर्तुमशक्यत्वादिति भावः । टीकायां जडत्वस्य हेतूकरणे तु आदिकालीनमृदादिपक्षीका-रपक्ष एव । तत्र च मृत्त्वादिना जडत्वमनुमेयमिति तात्पर्यमुक्तं चन्द्रिकायाम् ॥ **वेद एवेति** । मृदब्रवीदित्यादिरित्यर्थः **वाक्यांतरेणेति** । 'अद्भ्यः पृथिवी'त्यादिरूपेणेत्यर्थः असिन्नपि पक्षे धर्मिग्राहकजातीयबाधोऽस्तीत्यत आह **परिदृश्यमानेति** । इदानींतनमृदादिरूपकार्यं सजातीय-कारणजन्यं कार्यत्वादित्यनुमानेनादिकालीनमृदादिसिद्धेरित्यर्थः ॥ **एतेनेति** 'मृदब्रवीत्' इत्यादि-विषयादिकालीनमृदादेरानुमानिकत्वकथनेनेत्यर्थः । मृदादेरवैदिकार्थत्वादिति भावः । यद्वा वेदादन्य-स्यैवोपजीव्यत्वकथनेनेत्यर्थः । उपजीव्यवेदार्थ एव युक्तेरविरोधकत्वादिति भावः ।

**या०** — **जडत्वस्येति** । मृदादेर्वक्तृत्वमङ्गीकुर्वता सिद्धान्तिना तत्र जडत्वस्यानङ्गीकारेणान्य-तरासिद्धिरित्यर्थः । न चैवं तत्त्वप्रकाशिकायां जडत्वस्य हेतुत्वोक्तिविरोधः । तत्र मृत्त्वादिना जडत्वं साधनीयम् । अतो नासिद्धिरित्याशयात् । न चात्रेव तत्रापि मृत्त्वादिकमेव हेतुतया कुतो नोक्तमिति वाच्यम् । वक्तृत्वादिना जडत्वस्येव मृत्त्वादेर्विरोधाप्रतीतेः अवक्तृत्वादिना मृत्त्वादेः व्याप्तेरस्फुटत्वात् । अत एवात्र व्याप्त्युपपादनं कृतम् । एवं च तत्र व्याप्तेः स्फुटत्वेऽपि पक्षधर्मताया उपपाद्यत्वम् अत्र तु पक्षधर्मतायाः स्फुटत्वेऽपि व्याप्तेरुपपाद्यत्वमन्यतरस्योपपादनमुभयत्र सममेवेत्याशयेन तत्रात्र च पूर्व-पक्षहेत्वोर्वैलक्षण्योक्तिरिति ध्येयम् ॥ **तस्मादादिकालीनमिति** । एतेन मृदादीनां वचनादिकर्तृत्वे प्रत्यक्षविरोध एव प्रथमं स्फुरति, न युक्तिविरोधोऽतः कथं पादसङ्गतिरिति शङ्काऽपि निरस्ता भवति आदिकालीनमृदादौ वक्तृत्वाद्यभावस्यास्मदाद्यप्रत्यक्षत्वेन तत्र युक्तेरेवाश्रयणीयत्वात् ॥ **वेद एवेति** । मृदब्रवीदित्यादिरूपो वेद एवेत्यर्थः । ननु धर्मिग्राहकप्रमाणबाधे पक्ष एव व्यभिचारात्कथं व्याप्त्या-दिकमित्यत आह **आदिकालीनमृदादिस्वरूपेति** । 'अग्नेरापोऽद्भ्यः पृथिवी'त्यादि वाक्यान्तरेणेत्यर्थः । अत्र च पृथिव्यादिस्वरूपमेव प्रतिपाद्यते न वक्तृत्वादिकमतो न धर्मिग्राहकविरोध इति भाव ॥ **परि-दृश्यमानेति** । अत्र विवादाध्यासितः, प्रदेशः परिदृश्यमानपृथिव्यादिकार्योपादानवान् तत्कार्यपृथिव्या दिमत्त्वात् यो यत्कार्यवान्स तदुपादानवान् यथा सम्प्रतिपन्न इति प्रयोगो द्रष्टव्यः । अत्र च साध्य-साधनवत्त्वं संयोगेनैव विवक्षितम् । अतो न समवायमादाय व्यभिचारादिशङ्कावकाश इति ध्येयम् ॥

एतेनेति । प्रकृतयुक्तेर्धर्मिग्राहकवेदविरोधाभावेनेत्यर्थः । यत्र वैदिकेऽर्थे युक्तेर्धर्मिग्राहकविरोधस्तत्रैव युक्त्यवकाशाभावस्य पूर्वमुक्तत्वादिति भावः ।

श्री० — **वेदस्य** मृदब्रवीदित्यादेः । **युक्तेः** मृन्न वक्त्रीत्याद्यायाः ॥ **भेदाभावश्चेति** । प्रसिद्धमृद एव पक्षत्वात्तस्या एव च सपक्षत्वादित्यर्थः । तर्हि वक्तृत्वादिशून्यं पाषाणादिकं सपक्षोऽस्त्वित्यत आह **सपक्षान्तरेति** । ततश्च साधनवैकल्यमिति भावः ॥ **एतेनेति** । व्याप्त्याद्युपेतत्वेन दृढयुक्तेर्वेदोक्तबाधने उक्तरीत्या प्रवृत्तिसम्भवादित्यर्थः । **वैदिकेऽर्थे** वैदिकार्थबाधने ।

सु० — **सिद्धान्तमाह** तत इति ।

**अनु०** — ततस्तन्नामकः कश्चित्पुमानन्यो भवेदिति ॥
युक्त्यागमाविरोधेन प्राप्तमत्राभिधीयते ॥

**वेदस्य युक्तेश्च निरवकाशत्वं तत इति परामृशति । तन्नामको मृदादिनामकः कश्चिदिति अस्मदाद्यतीन्द्रियत्वमभिप्रैति । पुमांश्चेतनोऽन्योऽस्मदादिविलक्षणोऽन्तर्धानादिशक्तिमान्भवेत् । अस्यां श्रुतौ वक्तृत्वादिना प्रतिपाद्यत इति शेषः । इतिशब्दस्य प्राप्तमित्यनेनान्वयः । प्राप्तं प्रमितम् । युक्त्यागमविरोधेनेत्यर्थापत्तिं सूचयति ।**

**ततश्चायमर्थः । न मृदब्रवीदित्यादिवाक्यानां युक्तिविरोधेनाप्रामाण्यं वक्तव्यम् । अत्र मृदादिशब्दस्य चेतनविषयत्वात् । तथा च तत्पक्षीकारे हेतोरसिद्धेः । शब्दमात्रेण हेतुत्वे अतिप्रसङ्गात् । अचेतनमृदादिपक्षीकारे च प्रकृताविरोधात् ।**

**ननु कथं चेतनेषु मृदादिशब्द(प्र)वृत्तिः । अभिधानशक्त्येति ब्रूमः । मृदाद्यभिमानित्वात् । पृथिव्यादिषु तदभिमतत्वेन मृदादिशब्दप्रवृत्तिः । नन्वेतेऽभिमानिनः किमभिमतार्थव्यापिनस्तदेकदेशवृत्तयो वा । आद्ये(ऽपि) सदेहा विदेहा वा । आद्ये तदुपलम्भप्रसङ्गः । द्वितीये तेषामिन्द्रियाभावेन वक्तृत्वाद्यनुपपत्तौ पुनर्युक्तिविरोधतादवस्थ्यम् । तृतीये तद्वैयर्थ्यम् तदनधिष्ठितप्रदेशवत् प्रदेशान्तरप्रवृत्तिसंभवादिति । मैवम् । व्यापकानां सदेहानामपि पिशाचादिवदन्तर्धानशक्तियोगाददृश्यत्वोपपत्तेः ।**

शे० — ततः इत्यादेः सिद्धान्तग्रन्थत्वज्ञापकाभावादाह **सिद्धान्तमाहेति** । मूले तत इत्याद्यनेकशब्दग्रहणानर्थक्यमाशङ्क्य पूर्वोक्ताक्षेपपरिहारार्थं तदिति भावेन प्रकृतोपयोगितया तत इत्यादि

व्याचष्टे **वेदस्येत्यादिना** । कथमेतेषां विशेषणानां प्रकृताक्षेपपरिहारकतेत्यत आकाङ्क्षाक्रमेण तं दर्शयितुं प्रतिजानीते **ततश्चेति** । मूले चेतनस्य मृदादिनामकत्वस्य प्रकृतोपयोगं तावद्दर्शयति **न मृदब्रवीदित्यादीति** । चेतनविषयत्वेऽपि कुतो न युक्तिविरोध इत्यतः किमत्र विरोधित्वेनोक्तयुक्तिश्चेतनपक्षिकेत्यभिमतं किंवाऽचेतनपक्षिकेति विकल्पं मनसि निधायाद्यं दूषयति **तथा चेति** । चेतनेषु जडत्वावान्तरजातिरूपमृत्त्वादेरभावाच्चेतनमात्रनिष्ठस्य दृष्टान्तेऽभावादिति भावः । ननु न मृत्त्वादिकं जातिविशेषरूपं दृष्टान्तमात्रानुगतं न वा चेतनमात्रानुगतं यत्किञ्चिद्धेतुतया विवक्षितं, येनोक्तदोषो भवेत् । किन्नाम मृदादिशब्दवाच्यत्वरूपमेव । तच्च पक्षे दृष्टान्ते चाविशिष्टमिति नासिद्धिसाधनवैकल्ये इत्यत आह **शब्दमात्रेणेति** । शब्दसाम्यमात्रेणैकसाध्यसाधकत्वे इत्यर्थः ॥ **अतिप्रसङ्गादिति** वागादीनामपि गोत्वेन शृङ्गित्वसाधनप्रसङ्गादित्यर्थः । अस्तु तर्ह्यचेतनपक्षिकेति द्वितीयः । तत्रासिद्ध्याद्यभावादित्यतस्तर्ह्युदाहृतयुक्तेरचेतनमृदादीनामवक्तृत्वादिप्रतिपादकत्वाच्छ्रुतेश्च चेतनस्य मृदादेर्वक्तृत्वादिप्रतिपादकत्वाच्छ्रुतियुक्त्योर्भिन्नविषयकत्वेन परस्परवार्तानभिज्ञतया नोदाहृतयुक्तेः प्रकृतवेदप्रामाण्यविरोधकत्वमित्याशयेन तं दूषयति **अचेतनेति** । अचेतनपक्षत्वे प्रसिद्धमृदादेः सिद्धान्ते वक्तृत्वाद्यनङ्गीकारात्सिद्धसाधनमित्याहाचेतनेतीत्यप्याहुः ।

---

मूले तन्नामकत्वोपपादकानुक्तिदोष इत्यतोऽभिमानीति सौत्राभिमानिपदसूचितयुक्त्यैव तदुपपादनेनोपपादकयुक्त्यन्तरानपेक्षत्वान्न तदनुक्तिदोष इत्यभिप्रेत्य तत्सूचितयुक्त्या तदुपपादयितुं तन्नामकत्वानुपपत्तिशङ्कामुत्थापयति **नन्विति** । मृदादिशब्दानां रूढशब्दत्वात्प्रवृत्तिनिमित्तापेक्षत्वेन रूढ्या मृदादिरूपप्रवृत्तिनिमित्तवदचेतनप्रतिपादकतया तन्नामकत्वसंभवेऽपि चेतनेषु मृदादिरूपप्रवृत्तिनिमित्ताभावेन तदपेक्षप्रवृत्तीनां मृदादिशब्दानां रूढ्या तत्प्रतिपादकत्वानुपपत्तेर्न तन्नामत्वमुपपद्यत इत्याशयः । तद्वत्त्वस्येव तदधीनताया अपि शब्दप्रवृत्तिनिमित्तत्वस्य 'स्वातन्त्र्यं तद्वत्त्वं चे'त्यादिना पूर्वत्र व्यवस्थापितत्वात् । मृदादिशब्दप्रवृत्तिनिमित्तस्य मृदादेश्चेतनगतत्वाभावेऽप्यचेतनगतमृत्त्वादेश्चेतनाधीनत्वेन स्वातन्त्र्यरूपशब्दप्रवृत्तिनिमित्तस्य चेतनेष्वपि सत्त्वेन तदपेक्षप्रवृत्तिकानामपि मृदादिशब्दानां रूढ्या चेतनप्रतिपादकत्वोपपत्तेस्तन्नामत्वं युक्तमित्याशयेनोत्तरमाह **अभिधानेति** । भवेदेवं यदि प्रसिद्धमृदादिगतमृत्त्वादेश्चेतनाधीनत्वं स्यात् । तदेव कुत इत्यतस्तेषां मृदाद्यभिमानित्वेन मृदादिगतमृत्त्वादेस्तान्प्रति यथेष्टविनियोगार्हत्वेन स्वतया चेतनानां तत्र स्वातन्त्र्योपपत्तेरित्याशयवानाह **मृदादीति** । तर्हि प्रसिद्धमृदादिप्रतिपादकत्वाभावात्तत्र प्रयोगानुपपत्तिरित्यतो मृदादिशब्दवाच्यदेवतासंबन्धनिमित्तकरूढ्यादिनाऽमुख्यतया जडप्रतिपादकत्वस्याङ्गीकारात् जडेष्वपि युक्तैव मृदादिशब्दप्रवृत्तिरित्यभिप्रेत्याह **पृथिव्यादिष्विति** ।

ननु तथाऽपि भाष्ये कश्चिदन्य इत्यंशवैयर्थ्यम् । न चाभिमानिदेवतानामस्मदाद्यतीन्द्रियत्वान्तर्धानशक्तिमत्त्वप्रतिपादकत्वात्तस्य न तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न चाभिमानिदेवतोपलम्भप्रसङ्गपरिहारार्थत्वात्तस्य न तदिति वाच्यम् । अभिमानिदेवतानां विग्रहरहितत्वैकदेशवृत्तित्वयोरपि सम्भवेन तदुपलम्भप्रसङ्गस्यानवकाशादित्यतस्तत्पक्षे तदुपलम्भप्रसङ्गस्यानवकाशेऽपि तस्य सिद्धान्त्यनभिमतत्वात्तदभिमतव्यापित्वसदेहत्वपक्षे तत्प्रसङ्गो दुर्वार एवेत्यभिप्रेत्य पक्षान्तरे दूषणोपदर्शनपूर्वकं विग्रहवत्त्वव्यापित्वपक्षे तदुपलम्भप्रसङ्गमुत्थाप्य तत्परिहारकतया तमंशं योजयितुमत्र सम्भावितविकल्पानुपदर्शयति **नन्विति** ॥ **किमभिमतेति** । अभिमन्यमानेत्यर्थः । तेषां विदेहानामभिमानिनाम् ॥ **इन्द्रियाभावेनेति** । इन्द्रियाणां देहाश्रितत्वेन देहाभावे तद्योगादिति भावः ॥ **वक्तृत्वाद्यनुपपत्ताविति** । अन्यथाऽकरणकक्रियोत्पादप्रसङ्गादिति भावः ॥ **तृतीय इति** । द्वितीयत्वेऽप्यस्य पक्षस्योक्तरीत्या द्वेधा विकल्पितप्रथमापेक्षया तृतीयत्वमित्यभिप्रेत्य तृतीयत्वमिति ज्ञेयम् ॥ **प्रदेशान्तरेति** । तदधिष्ठितप्रदेशान्तरेत्यर्थः । आद्येऽप्याद्यमङ्गीकृत्य कश्चिदन्य इति भाष्यखण्डाभिप्रेतयुक्त्या तत्पक्षदोषं परिहरति **मैवमिति** ।

स० — धराया मृदभिमानित्वेन पुंस्त्वं न युक्तमित्यत आह **पुमांश्चेतन इति** । **विरोधेनार्थापत्तिमिति** । श्रुतियुक्तिविरोधान्यथानुपपत्तिरित्यर्थः । एतदर्थानङ्गीकारे विरोधशान्तिरेव न भवतीति भावः । **शब्दमात्रेणेति** । शब्दवाच्यत्वमात्रेणेत्यर्थः । **अतिप्रसंगादिति** । गोशब्दवाच्यत्वमात्रेण वागादीनामपि शृङ्गित्वानुमानप्रसंगादित्यर्थः । **प्रकृताविरोधादिति** । अचेतनमृदादेरवक्तृत्वेऽपि मृदब्रवीदित्यादेस्तद्वक्तृत्वप्रतिपादकत्वाभावेन युक्त्यविरोधेन वेदप्रामाण्ये अविरोधादिति भावः । ननु जडवाचकत्वेन प्रसिद्धस्य मृदादिशब्दस्य कथं चेतने अभिधानशक्तिः इत्यत्राह **मृदाद्यभिमानित्वादिति** । **पृथिव्यादिष्विति** । मृदादिशब्दवाच्यदेवतासंबन्धनिमित्तकरूढियोगाभ्यां जडे मृदादिशब्दप्रवृत्तिरिति भावः । एतच्च 'समाकर्षात्' इत्यत्र तत्त्वप्रकाशिकायां स्पष्टम् ।

प० — **वेदस्येति** । पूर्वाधिकरणे सम्यगुपपादितप्रमाणभावतया प्राप्तं पूर्वश्लोके तथापीत्यनेन सूचितं वेदस्य निरवकाशत्वमिति भावः ॥ **युक्तेश्चेति** । दृष्टव्याप्तीत्यनेन प्रागुक्तयुक्तेर्निरवकाशत्वमिति भावः ॥ धरादेव्याः स्त्रीत्वादाह **पुमांश्चेतन इति** ॥ **अर्थापत्तिमिति** । तदुभयाविरोधान्यथानुपपत्तिं सूचयतीत्यर्थः । मृत्त्वादित्यत्र मृत्स्वरूपजडगतधर्मः कश्चिदभिमतोऽथ मृत्पदवाच्यत्वं न द्वयमपीति क्रमेण निराह **तथाचेत्यादिना** ॥ **अतिप्रसङ्गादिति** । पृथिव्यादेरपि गोपदवाच्यत्वेन सास्नादिमत्त्वप्रसङ्गादित्यर्थः ॥ **प्रकृतेति** । मृदब्रवीदित्यादौ चेतनस्यैवोक्त्यङ्गीकारेण तद्वाक्यार्थाविरोधादित्यर्थः ।

यदि मृत्त्वादिकं चेतनेष्वसिद्धं तर्हि तन्नामक इत्ययुक्तं प्रवृत्तिनिमित्ताभावात् । अमुख्यवृत्त्या चेत् मुख्यन्यायविरोध इति शङ्कते **नन्विति । अभिधानशक्त्या** मुख्यया वृत्त्येत्यर्थः । मृद्गतमृत्त्वरूपधर्मस्य चेतने अभावेपि जडगतमृत्त्वरूपधर्मं प्रति स्वातन्त्र्यरूपनिमित्तमस्तीति भावेनाह **मृदाद्यभिमानित्वादिति** । पराधीननियन्तृत्वरूपाभिमानवत्त्वादित्यर्थः । विवरिष्यते चैतदग्रे । तर्हि जडेषु प्रयोगो न स्यादित्यतस्ततो न्यूनवृत्त्येत्याह **पृथिव्यादिष्विति । तदभिमतत्वेन** तच्छब्दवाच्यचेतनसंबन्धेनेत्यर्थः । 'शरीररूपकविन्यस्तगृहीतेरि'त्यत्रोक्तदिशेति भावः । तत्राव्यक्तादिशब्दवाच्येश्वरसंबन्धादन्यत्र शब्द प्रयोग इत्युक्तेः । कश्चिदन्य इति पदद्वयतात्पर्यं शङ्कोत्तराभ्यां व्यनक्ति **नन्वेत इत्यादिना** ।

**या० — असिद्धेरिति** । चेतनेषु जडत्वावान्तरजातिरूपमृत्त्वादेरसिद्धेरित्यर्थः । ननु मृत्त्वादिकं न जातिविशेषरूपं हेतुतया विवक्षितम् । किन्तु मृदादिशब्दवाच्यतारूपं तच्च चेतनेप्यस्त्येवेति नासिद्धिरित्यत आह **शब्दमात्रेणेति** । गोशब्दवाच्यत्वात्पृथिव्या अपि गोत्वच्छृङ्गसाधनं स्यादित्यतिप्रसङ्गादित्यर्थः ॥ **प्रकृताविरोधादिति** प्रकृतवाक्यानां चेतनपरत्वेन भिन्नविषयकत्वादिति भावः । तन्नामक इत्येतदुपपादयितुं शङ्कते **ननु कथमिति** । कया वृत्त्येत्यर्थः । अभिधानवृत्तिरेव कुत इत्यत आह **मृदाद्यभिमानित्वादिति** । तथा च तदधीनत्वादिति न्यायोऽत्र साधक इति भावः । इदं च सौत्राभिमानिपदसूचितमिति ध्येयम् । नन्वेवं प्रसिद्धिविरोध इत्यत आह **पृथिव्यादिष्विति । तदभिमतत्वेने**त्यस्य तच्छब्दवाच्यदेवतासम्बन्धनिमित्तकरूढ्यादिनेत्यर्थः । तथा च समाकर्षादिति न्यायोऽत्र साधक इति भावः । कश्चिदन्य इति पदद्वयार्थस्य प्रकृतोपयोगं वक्तुमाह **नन्वेत इति** । इदं तु सौत्रविशेषपदलभ्यार्थप्रदर्शनमिति द्रष्टव्यम् ।

**श्री० —** ननु यद्यप्यापोऽब्रुवन्नित्यादौ तदभिमानिनां वरुणादीनां पुरुषत्वात्पुमान्प्रतिपाद्यो भवेदिति तत्र सम्भवति, यत्र मृदब्रवीदित्यादौ तदभिमानिनी स्त्री प्रतिपाद्या भवति, तत्र पुमानित्यस्यासम्भवादतः कथमेतत् ; आह **पुमांश्चेतन इति** । ननु जडवाचकत्वेन प्रसिद्धस्य मृदादिशब्दस्य कथं चेतनेऽर्थाभिधानसामर्थ्यरूपा शक्तिरित्यतस्तदुपपादयति **मृदादीति** ॥ मृदाद्यभिमानित्वाद्देवतासु मृदादिशब्दप्रवृत्तिरित्यर्थः । जडे तामुपपादयति **पृथिव्यादिष्विति** । जडेषु त्वित्यर्थः । मृदादिशब्दवाच्यदेवताभिमन्यमानत्वेन जडेषु पृथिव्यादिषु मृदादिशब्दप्रवृत्तिरित्यर्थः ॥ **इन्द्रियेति** । इन्द्रियाणां शरीरसम्बन्धित्वाच्छरीराभावे वागादीन्द्रियमपि नेत्यर्थः । तद्वैयर्थ्यं तेषामेकदेशेऽप्यवस्थानस्य वैयर्थ्यमित्यर्थः । ननु न तद्वैयर्थ्यं तदेकदेशप्रवृत्त्यर्थं सार्थक्यादित्यत आह **तदिति** ।

सु०—नन्वेवं सति कल्पनागौरवमापद्येत। केषाञ्चिच्चेतनानां मृदाद्यभिमानित्वं ततस्तच्छब्दानां तेषु वृत्तिर्व्यापकत्वं सदेहत्वमन्तर्धानशक्तिस्तत्परता च श्रुतेरित्यनेकस्य कल्प्यमानत्वात्। मैवम्। अर्थापत्तितः सर्वस्यास्य सिद्धत्वात्। श्रुतिर्हि मृदादीनां वक्तृत्वादिकं प्रतिपादयति, युक्तिश्च तदभावम्। न (च) वास्तवो विरोधः संभवति। वस्तुविकल्पापत्तेः। न चायं विरोधो विनैतत्कल्पनया शाम्यति। जडस्वीकारे युक्तिविरोधात्। अनभिमानिस्वीकारे च पृथक् शब्दशक्तौ प्रमाणाभावात्। अव्यापकत्वाद्यङ्गीकारे चोक्तानुपपत्तेः। न च श्रुतियुक्त्योरन्यतराप्रामाण्येनाप्युपपद्यत एतदिति वाच्यम्। उक्तरीत्या द्वयोरपि निरवकाशत्वात्। न हि परेणापि विद्वेषेणैवागमाप्रामाण्यमभिधातुं युक्तम्। किन्नामोपपत्तिमाश्रित्यैव। तथा च कथं वेदप्रामाण्येऽपि न दीयते दृष्टिः। तदेवं युक्त्यागमविरोधेनास्यार्थस्य प्राप्तत्वान्न किञ्चित्कल्पनागौरवमिति।

नन्वेतदुत्सूत्रितं कथमुच्यत इत्यत आह अत्रेति।

इत्युक्तमेतत्सर्वम् अत्र 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामिति' सूत्रेऽभिधीयत इत्यर्थः। यद्वाऽत्राभिधीयत इति सिद्धान्तोपक्रमवाक्यम्। तस्यैवं प्राप्ते सूत्रकृता समाधानमभिधीयत इत्यर्थः। एवं सूत्रमवतार्य तत इत्यादिना व्याख्यातमिति।

---

शे०— युक्त्यागमविरोधेन प्राप्तमित्यर्थापत्त्योक्तस्य प्रमेयस्य प्रमितत्ववर्णनानर्थक्यमाशङ्क्य कल्पनागौरवदोषपरिहारार्थत्वान्न तदिति भावेन तद्व्यावर्त्यतया तद्दोषशङ्कामुत्थापयति **नन्वेवमिति**। कल्पनागौरवमेवोपपादयति **केषाञ्चिदित्यादिना**॥ **वस्तुविकल्पापत्तेरिति**। वस्तुनो मृदादेः वक्तृत्वतदभावरूपविरुद्धाकारद्वयापत्तेरित्यर्थः॥ **एतत्कल्पनयेति**। सर्वस्यास्य कल्पनयेत्यर्थः। अव्यापकत्वादीत्यादिपदेन विदेहत्वपरिग्रहः॥ **उक्तानुपपत्तेरिति**। अव्यापकत्वपक्षे तदनधिष्ठितप्रदेशवत्प्रदेशान्तरस्यापि प्रवृत्तिसंभवात्तद्वैयर्थ्यम्। विग्रहरहितत्वे चेन्द्रियरहितत्वेन वक्तृत्वाद्यनुपपत्तौ पुनर्युक्तिविरोधतादवस्थ्यमित्युक्तदोषापत्तेरित्यर्थः। तथाऽपि भाष्ये तत इत्यंशवैयर्थ्यमित्यतो युक्त्यागमरूपप्रमाणद्वयस्यानवकाशत्वद्योतनार्थत्वान्न तद्वैयर्थ्यमिति भावेन किं तन्निरवकाशत्वद्योतनस्यापि प्रयोजनमित्यतोऽर्थापत्तेरन्यथोपपन्नत्वेनाभासत्वशङ्कापरिहारस्तत्प्रयोजनमित्यभिप्रेत्यान्यथोपपत्तिशङ्कामुत्थापयति **न चेति**। **उपपद्यते** विरोधस्यावास्तवत्वमिति शेषः॥ **उक्तरीत्येति**। प्रमितव्याप्तिपक्षधर्मताकत्वेन युक्तेर्निरवकाशत्वं, विलक्षणत्वाधिकरणसिद्धान्तोक्तरीत्या वेदस्यापि तदित्यर्थः॥ **न दीयते दृष्टिरिति**। वेदप्रामाण्येऽप्यतीताधिकरणे दृढतरोपपत्तेर्दर्शितत्वादित्यर्थः।

तथाऽप्यत्राभिधीयत इति भाष्यखण्डवैयर्थ्यमित्यत उक्तस्यार्थस्य सूत्रारूढत्वप्रदर्शनार्थं तदिति भावेन किं सूत्रारूढत्ववर्णनेनापीत्यतो भाष्यस्योत्सूत्रत्वशङ्कानिरासस्तत्प्रयोजनमित्याशयवानुत्सूत्रत्वशङ्का-मुत्थापयति **नन्वेतदिति** । इतिशब्दस्य न केवलं प्राप्तमित्यनेन संबन्धः किन्नामात्राभिधीयत इत्यनेना-पीत्यभिप्रेत्योक्तसर्वपरतया तं व्याचष्टे **इतीति** । इतिशब्दस्यात्रेत्यनेनाप्यन्वयकल्पनायामपरितोषात्पक्षान्तर-माह **यद्वेति** । सिद्धान्ताभिधानप्रतिज्ञारूपतया स्पष्टप्रतिभासस्यात्रेत्यादिग्रन्थस्योक्तार्थस्य सूत्रारूढत्वकथन-परत्वाश्रयणं क्लिष्टमित्याशयेन वाऽऽह **यद्वेति** ॥ **तस्येति** । सिद्धान्तोपक्रमवाक्यस्येत्यर्थः । अस्य चेत्यर्थ इति वक्ष्यमाणेन संबन्धः । अत्रेत्यस्य व्याख्यानमेवं प्राप्त इति । क्वचिदत्रैवं प्राप्त इत्यपि पाठः । तत्रात्रेत्यनुवादेनैवं प्राप्त इति व्याख्यानमित्यवधेयम् ।

**प०**— युक्त्यागमविरोधेनेतिपदतात्पर्यं शङ्कोत्तराभ्यां व्यनक्ति **नन्वेवमित्यादिना** ॥ **अनभिमानस्वीकार इति** । पृथिव्याद्यभिमानहीनस्य कस्यचिच्चेतनमात्रस्य मृदब्रवीदित्यादौ प्रति-पाद्यत्वेन स्वीकारे सति । **पृथक्** मृत्त्वादिधर्मवत्त्वतत्स्वातन्त्र्यरूपनिमित्तद्वयव्यतिरेकेणेत्यर्थः ॥ **उक्तेति** । तदनधिष्ठितेत्यादिनोक्तेत्यर्थः ॥ **उक्तरीत्येति** । पूर्वपक्षदशायां ननु नित्यतयेत्यादिनोक्त(धर्मवत्त्वस्वातन्त्र्य-रूपनिमित्त)रीत्येत्यर्थः ॥ **उपपत्तिमिति** । मृत्त्वादियुक्तिमित्यर्थः ॥ **वेदप्रामाण्येपीति** । तस्यापि नित्यनिर्दोषत्वाद्युपपत्त्योपपादितत्वात्पूर्वनय इति भावः । इति पदस्य प्राप्तमित्यनन्तरमन्वय इति प्रागुक्तत्वात्तदनूद्य तस्यार्थमाह **इत्युक्तमेतत्सर्वमिति** । प्राप्तमित्येतदनन्तरमयं शेषो वा । अत्रेति भाष्यपदानुवादः । तस्य व्याख्या **इतिसूत्र इति** । एतच्च सूत्रभाष्ये व्यक्तमिति भावः । अत्रेत्यादिकं तत इत्यतः प्रागप(क्रष्टव्य,कर्ष्टव्यमिति भावेन योजनान्तरमाह **यद्वेति** । तस्येत्यस्य इत्यर्थ इत्यने-नान्वयः । अत्रेत्यस्यार्थ **एवं प्राप्त इति** ।

**या०**— युक्त्यागमविरोधेनेत्यस्य सार्थक्यं वक्तुमाह **नन्वेवं सतीति** ॥ **उक्तरीत्येति** । एतदधिकरणपूर्वपक्षयुक्तरीत्या युक्तेर्निरवकाशत्वं, न विलक्षणाधिकरणोक्तसिद्धान्तरीत्या वेदस्यापीत्यर्थः ॥ **न दीयते दृष्टिरिति** । वेदप्रामाण्येऽप्यतीताधिकरणे दृढोपपत्तेर्दर्शितत्वादिति भावः ।

**श्री०**— **वस्तुन इति** । एकस्यैव मृदाख्यवस्तुनो वक्तृत्वमवक्तृत्वं च स्यादिति भावः । **पृथक्** यथाऽस्मन्मते तदभिमानित्वाच्चेषु तच्छब्दः प्रवर्तत इत्युच्यते, तथा न, किं तु स्वातन्त्र्येणेत्यर्थः । अन-भिमानिष्विति शेषः ॥ **शब्देति** । मृदादिशब्देत्यर्थः ॥ **उक्तेति** । वैयर्थ्यरूपेत्यर्थः ॥

सु०— यदुक्तं तन्नामक इति मृदादिशब्दवाच्यत्वं देवतायास्तदनुपपन्नम् । अयोगादनुपयोगाच्च । मृदादिशब्दाः खल्वचेतनेष्वेव रूढाः । न देवतायाम् । लक्षणाश्रयणेनापि श्रुतियुक्तिविरोधशान्तिर्भविष्यति । नापि वचनवृत्तिं सूत्रकृदाहेत्यत आह बालरूढिमिति ।

अनु०— बालरूढिं विनैवापि विद्वद्रूढिसमाश्रयात् ।
तत्तन्नामान एवैते तत्तद्रूस्त्वभिमानिनः ॥
सन्ति

एते पृथिवीवरुणादयस्तत्तन्नामान एव सन्ति । तानि तानि मृदादीनि नामानि वाचकानि येषां ते तथोक्ताः । न तु तानि लक्षकाणीत्येवशब्दार्थः । सन्ति भवन्ति । अयोगपरिहाराय उक्तम् बालेति । अविद्वद्रूढ्यभावेऽपि विद्वद्रूढिसद्भावात् । मृदादिशब्दास्तावद्देवताविषया इत्यर्थापत्तिसिद्धम् । मुख्यासंभव एव च जघन्यवृत्तिराश्रयणीया । न चात्र बाधकमस्तीति वैदिकप्रयोगादेव बाधकाभावसहिताद्विद्वद्रूढिरवगम्यते । यच्चोक्तं वचनवृत्त्यङ्गीकारः प्रकृतानुपयोगीति तत्परिहारायोक्तं तत्तन्मृदादिवस्त्वभिमानिन इति ।

अयमर्थः । मृदादिशब्दानां चेतनविषयतामात्रेण प्रकृतविरोधशान्तावपि वस्तुस्थितिं विजिज्ञापयिषता सूत्रकारेण व्यपदेशस्त्विति तुशब्देन मुख्यवृत्तिः सूचिता । तत्रोपपत्तिज्ञापनायाभिमानीति चोक्तम् ।' अन्यथा चेतनव्यपदेश इत्यवक्ष्यत । अभिमानी खल्वभिमतस्य सत्तादेः प्रयोजकः । ततश्च तदधीनत्वादिति न्यायेन स एव (तन्)मुख्यार्थ इति । तदेतत् अस्माभिः सूत्रं व्याकुर्वद्भिरभिहितमिति ।

नन्वत्र तन्नामक इत्येकवचनं प्रक्रम्य तत्तन्नामान इति बहुवचनप्रयोगे किन्निमित्तम् । तथा भाष्येऽपि 'अभिमानिदेवता तत्र व्यपदिश्यते । तासां चे'त्यादि । उच्यते । अ(त्रा)भिमानिव्यपदेश इत्यभिमानिशब्दो ह्येकवचनान्तः समस्तः । व्यपदेशशब्दस्यैकवचनान्तत्वात् । न हि बहूनामेको व्यपदेश इति संभवति । उत्तरसूत्रे चैकवचनमेव । अतो यथासूत्रं प्रथमं व्याख्यातम् । अथेदानीं प्र(म)ाणसंवादिघटनाय जाताविदमेकवचनमित्याशयवता बहुवचनं प्रयुक्तमिति ।

शे०— ननु तन्नामक इति मृदादिनामकताया उक्तत्वात्तत्प्रतिपादकोत्तरवाक्यानर्थक्यम।शङ्क्य पूर्वोक्ततन्नामकत्वाक्षेपसमाधानार्थत्वान्न तदिति भावेन तदाक्षेपसमाधानपरतयोत्तरवाक्यं योजयितुं तदाक्षेपशङ्कामुत्थापयति यदुक्तमिति । अयोगमुपपादयति मृदादीति । तत्रैव प्रयोगप्रत्ययप्राचुर्यादिति

भावः ॥ **न देवतायामिति** । रूढा इत्यनुवर्तते । देवतासु मृदादिशब्दानां प्रयोगप्रत्ययप्राचुर्याभावादिति भावः । अनुपयोगमप्युपपादयति **लक्षणेति** । श्रुतियुक्तिविरोधशान्तिहेतुभूतस्य श्रुतेश्चेतनविषयत्वस्य मृदादिशब्दानां देवतासु वचनवृत्त्येव तत्र लक्षणयाऽप्युपपत्तेरिति भावः । ननु सूत्रकृता वचनवृत्तेरुक्तत्वात्तद्व्याकुर्वतो न भाष्यकारस्य वचनवृत्त्युक्त्यनुपपत्तिरित्यतो भवेदेवं कथञ्चिद्यदि सूत्रकृता वचनवृत्तिरुक्ता स्यात् । न चैतदस्ति । अभिमानिव्यपदेश इत्येवोक्तत्वेन तज्ज्ञापकपदाश्रवणादित्याह **नापीति** । तथा च सूत्रार्थकथनरूपत्वाभावादभाष्यत्वमस्येति भावः । **एवार्थ इति** । एवशब्दार्थ इत्यर्थः ॥ **अयोगेति** । पूर्वपक्षिशङ्कितायोगेत्यर्थः । विद्वद्रूढिसमाश्रयादित्युत्तरत्र श्रवणाद्बालपदमविद्वत्परमित्यभिप्रेत्याह **अविद्वद्रूढ्यभावेऽपीति** । नन्वत्र भाष्ये आचक्षत इत्यादिविद्वद्रूढिसाधकप्रमाणानुवत्या चेतनेषु मृदादिशब्दानां विद्वद्रूढ्यसिद्धेस्तद्भावनिरूपणं भाष्यकारीयमयुक्तमित्यतो नाचक्षत इत्याद्युक्तिरेव तत्साधिका किन्तु बाधकाभावसहकृतो वैदिकप्रयोगस्तस्य च प्रकृते सद्भावात्तेन विद्वद्रूढिसिद्धिः स्यादेवेत्याह **मृदादिशब्दास्त्वित्यादिना** । **सिद्धमिति** । अन्यथा प्रकृतविरोधशान्त्यसम्भवात्ततश्च वैदिकप्रयोगसिद्धिरिति हृदयम् ॥ **मुख्यासम्भव एवेति** । मुख्यवृत्त्यसम्भव एवेत्यर्थः । गङ्गायां घोष इत्यादौ तथा दर्शनादन्यथा गङ्गायां मत्स्य इत्यादावप्यमुख्यवृत्त्याश्रयणप्रसङ्गादिति भावः । अस्तु तर्ह्यत्र गङ्गायां घोष इत्यादाविव बाधकवशादेव जघन्यवृत्त्याश्रयणमित्यतो वैधर्म्येण परिहरति **न चात्रेति** । श्रुतियुक्तिविरोधिशान्तिरूपेत्यर्थः ।

---

सूत्रकृत एवमभिप्रायकत्वमेव विपक्षे बाधकोपदर्शनेन स्पष्टयति **अन्यथेति** । **अवश्यदिति** । आवश्यकत्वाल्लाघवाच्चेति भावः । देवतासु मृदादिशब्दानां मुख्यवृत्तिज्ञापकोपपत्तिज्ञापकत्वमभिमानिपदस्योक्तम् । तत्राभिमानिपदज्ञापिता काऽसावुपपत्तिरित्यतः स्वातन्त्र्यरूपेत्याह **अभिमानी खल्विति** ॥ **अभिमतेति** । अभिमन्यमानेत्यर्थः । अस्तु स्वातन्त्र्यं तथाऽपि कथं तच्छब्दानां तत्र मुख्यत्वमित्यत आह **ततश्चेति** ।

**अत्रेति** । अनुव्याख्यान इत्यर्थः । उपक्रमानुसारेणोत्तरत्राप्येकवचनस्यैवोत्तरानुसारेण पूर्वत्र वा बहुवचनस्यैव प्रयोक्तुं शक्यत्वेन प्रथमत एकवचनप्रयोगस्योत्तरत्र बहुवचनप्रयोगस्य प्रयोजनविशेषसापेक्षत्वेन तदभावेऽसम्भवादिति भावः । नन्वेतद्वैचित्र्यस्य यादृच्छिकत्वेन प्रयोजनानपेक्षत्वान्न तदभावो दोषायेत्यतो भाष्येऽप्येवमेव वैचित्र्याश्रयणेन यादृच्छिकत्वकल्पनानवकाशादित्याशयेनाह **तथा भाष्येति** । व्यपदिश्यत इत्येकवचनं प्रक्रम्य इति शेषः । तासां चेत्यादिपदेन बहुवचनप्रयोगे किन्निमित्तमित्यस्य परिग्रहः । **एकवचनान्त इति** । अभिमानिनो व्यपदेश इत्येकवचनान्त इत्यर्थः । नन्वभिमानिनां व्यपदेश इति बहुवचनान्तः समस्त एवाभिमानिशब्दः किन्न स्यादित्यत एकवचनान्तविग्रहस्य ग्राह्यतायां

नियामकमाह **व्यपदेशशब्दस्येति** । तथा च तेन व्यपदेशस्यैकत्वसिद्धेरेकवचनान्तविग्रह एवाश्रयणीय इत्यर्थः । व्यपदेशैकत्वेऽपि बहुवचनान्त एव विग्रहोऽस्त्वित्यत आह **न हीति** ॥ **एकवचनमेवेति** । दृश्यत इत्येकवचनमेवेत्यर्थः ॥ **व्याख्यातमिति** । तन्नामको मृदाद्यभिमानिदेवतेति अत्र च व्याख्यातमित्यर्थः । **प्रमाणसंवादादिघटनायेति** । 'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजस' इत्यादिप्रमाणसंवादस्यादिपदात् 'आपः, ओषधयः, ग्रावाणः, प्राणाः,'इत्यादौ श्रुतबहुत्वस्य च घटनायेत्यर्थः। प्राणसंवादादीति क्वचित्पाठः तत्र 'प्राणा अहं श्रेयसि व्यूदिरे' इत्युक्तप्राणसंवादस्यादिपदात् प्राणा इत्युक्तबहुत्वस्य घटनायेत्यर्थो बोध्यः **जाताविति** । जातिरूपैकार्थविवक्षायां द्व्येकयोरिति सूत्रविहितमेकवचनमित्यर्थः । समुदायापेक्षमिदमेकवचनमिति टीकायाः प्रकारान्तरत्वान्न तद्विरोध इति ज्ञेयम् । केचित्तूदाहृतटीकानुरोधेनात्र जातिपदं समुदायपरमित्याहुः ॥ **इदमिति** । अभिमानिनो दृश्यत इति च पूर्वोत्तरसूत्रगतमित्यर्थः । **बहुवचनमिति** । तत्तन्नामानस्तासां चेति बहुवचनमित्यर्थः ॥ **प्रयुक्तमिति** । अनुव्याख्यानभाष्ययोरिति शेषः ।

स० — **अनुपयोगाच्चेति** । प्रकृते इति शेषः । प्रकृतानुपयोगमुपपादयति **लक्षणेति** । **अयोगेति** । मृदादिशब्दाः खल्वचेतनेष्वेव रूढा न देवतार्था इति पूर्वपक्ष्युक्तायोगपरिहारमित्यर्थः । **स एव तन्मुख्यार्थ इतीति** । इत्युपपत्तिज्ञापनायेति पूर्वेण सम्बन्धः । **बहूनामिति** । बहूनामभिमानिनामेकमभिमानिवाचकं नाम न संभवति । बहूनामेकत्राभिमानाभावादिति भावः ।

प० — अयोगानुपयोगौ क्रमाद्व्यनक्ति **मृदादीति, लक्षणेति च** । **विद्वद्रूढिसद्भावादिति** । अज्ञप्राज्ञभेदेन रूढाववान्तरभेदस्य समाकर्षनये समर्थनादिति भावः ॥ **न चात्र बाधकमिति** । न चान्यायानेकार्थत्वमेव बाधकमिति शङ्क्यम् । अजा(क्षादि)दिशब्देष्विव तुल्यवृत्त्याऽनेकार्थत्वस्यैवान्याय्यत्वं अत्र च न्यूनाधिकवृत्त्यङ्गीकाराददोष इति भावः । **विजिज्ञापयिषता** ज्ञापयितुमिच्छावता ॥ **तुशब्देन मुख्यवृत्तिः सूचितेति** । तुशब्दो ह्यवधारणार्थः सन् योग्यतया अभिमानिपदेनान्वेति । अभिमानिन एव व्यपदेशः अभिमानिव्यपदेश इति । न च 'मृदब्रवीत्तत्तेज ऐक्षत ता आप ऐक्षन्त' इत्यादौ मृत्तेजःप्रभृतिशब्दैरभिमानिन एवोक्तिः संभवति । तथात्वे अभिमानिन एवोपादानापत्तेः । तथाच तेजःप्रभृतिवाक्यशेषे तेजोबन्नानां त्रिवृतं त्रिवृतमेकैकामकरोदिति तेजःप्रभृत्यचेतनानां त्रिवृत्करणाद्यनुपपत्तेः । निगमनिघण्टुव्याकरणादौ जडवाचित्वप्रसिद्ध्यनुपपत्तेश्च । तस्मान्मृदादिशब्दैः मृदाद्यचेतनानामपि व्यपदेशो नापलापार्हः । ब्रूते च परमाप्ततमः सूत्रकारोऽभिमानिन एव व्यपदेश इति सोपपत्तिकम् । तदुभयबलादभिमानिनि मुख्यवृत्तिः; अभिमन्यमाने तु न तथा मुख्यवृत्तिरिति ज्ञायते ।

तथाच परममुख्यवृत्त्या अभिमानिन एव मृदादिशब्दैर्व्यपदेशो नान्यस्येत्युक्ते लोकसिद्धमुख्यवृत्त्यान्यस्य-वाच्यत्वेऽप्यवधारणार्थं तुशब्द उपपन्नः । तत्तेज ऐक्षतेत्यादौ शरीररूपकविन्यस्तगृहीतेरित्यत्रोक्तरीत्या तेजःप्रभृतिजडेषु विन्यस्तस्यैवाभिमानिनस्तेजःप्रभृतिशब्दैर्ग्रहणं न केवलस्येति त्रिवृत्करणाद्युपपत्तिश्च कर्मदेवतादेर्वेदार्थत्वेऽपि तदेव सर्वशास्त्रयोनीति समन्वयसूत्रे तुशब्देन परममुख्यवृत्तिर्यथा सूच्यते तथेति भावः ॥ **तत्रोपपत्तीति** । मुख्यत्वे स्वातन्त्र्यरूपनिमित्तसत्त्वरूपोपपत्तीत्यर्थः । तां व्यनक्ति **अभिमानीति** । पराधीननियन्ता ह्यत्राभिमानिशब्दार्थः । तथा च तावताभिमानिपदेन यथेष्ट-विनियोक्तृत्वरूपस्वातन्त्र्यसूचनेऽपि तस्य शब्दप्रवृत्तौ निमित्तत्वं कुत इत्यत आह **ततश्चेति** । 'स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् । स्वातन्त्र्यं तत्र मुख्यं स्यात्कुतो राज्ञि जयोऽन्यथा' इत्युक्तदिशा-तदधीनसूत्रे स्वातन्त्र्यस्य शब्दवृत्तिहेतुत्वस्य समर्थनात् । अव्यक्तादेरीशाधीनत्वादव्यक्तादिशब्दजात-मीशे अर्थवदितिवन्मृदादेरभिमान्यधीनत्वान्मृदादिशब्दजातं अभिमानिन्यर्थवदिति संभवेनेति न्याये-नेत्युक्तम् ॥ **उत्तरसूत्र इति** । दृश्यतेचेति सूत्रे इत्यर्थः ॥ **प्राणसंवादादीति** । 'प्राणा अहं श्रेयसि व्यूदिरे' इति प्राणपदेनेन्द्रियाभिमानिनामनेकेषां ग्रहणे तत्कर्तृकविवादादिर्घटत इति बहुवचनं प्रयुक्त-मित्यर्थः ॥ **इदमिति** । सौत्रमित्यर्थः ।

---

**या०** — अयोगमुपपाद्यानुपयोगमुपपादयति **लक्षणेति** ॥ **प्रमाणसंवादादीति** । 'पृथिव्याद्यभि-मानिन्यो देवताः प्रथितौजसः' इत्यादिप्रमाणसंवादघटनायेत्यर्थः । आदिपदेन यदभिमानिबहुत्वं 'ता आप ओषधयः प्राणाः' इत्यादौ श्रुतं तद्घटनायेति ग्राह्यम् । प्राणसंवादादिघटनायेति पाठे तु 'प्राणा अहं श्रेयसि व्यूदिरे' इति वाक्योदिता बहूनां प्राणानां संवादाः । आदिपदेन ता आप इत्यादि-वाक्योक्तं बहुत्वं तद्घटनायेत्यर्थः ॥

**श्री०** — **अयोगादिति** । अघटनादित्यर्थः । योगे वा प्रकृतेऽनुपयोग एवेत्यर्थः । अयोग-मुपपादयति **मृदादीति** । अनुपयोगमुपपादयति **लक्षणेति** ॥ मृदादिशब्दानां देवतास्विति शेषः । तथा च न वृत्त्यङ्गीकारो व्यर्थ इत्यर्थः । **अत्र** मृदादिशब्दानां देवतासु मुख्यवृत्त्यङ्गीकारे ॥ **विषयता-मात्रेणापीति** । मुख्यवृत्तिं विना लक्षणयापीत्यर्थः ॥ **एकवचनान्त इति** । अभिमानिनो व्यपदेश इति षष्ठ्येकवचनान्त इत्यर्थः । नन्वभिमानिनां व्यपदेश इति बहुवचनान्तस्यैवाभिमानिशब्दस्य समासः किन्न स्यादित्यत आह **व्यपदेशेति** । ननु व्यपदेशशब्दस्यैकवचनान्तत्वेऽपि कुतोऽभिमानिशब्दे बहु-वचनं न प्रयोक्तव्यमत आह **न हीति** ॥

**च०** — **जिज्ञापयिषता** । ज्ञापनाविषयकेच्छावता ।

**सु०— अभिमानिनां प्रादेशिकत्वविदेहत्वयोर्वैयर्थ्यवक्तृत्वाद्यनुपपत्ती । व्याप्तानां सदेहत्वेऽनुपलम्भबाध इत्येतत्परिहाराय** विशेषानुगतिभ्यामिति **सूत्रखण्डं कश्चिदन्य इति तात्पर्यतो व्याख्यातम् । तत्प्रपञ्चय**ति तेषामिति ।

अनु०— तेषां विशेषेण शक्तिरन्येभ्य उच्यते ॥

**विशेषेणातिशयेन । अन्येभ्योऽस्मदादिभ्यः । व्याप्तिश्चोच्यत इति संबन्धः । देहवत्त्वस्याप्युपलक्षणमेतत् । यद्यप्येतत्सर्वमर्थापत्त्यैव लब्धम् । अन्यथा विरोधशान्तेरेवापर्यवसानात् । तथाऽप्युच्यत इति पृथिव्याद्यभिमानिन्य इत्यागममप्यत्र संवा(दयति)दिनं दर्शयति । यद्यप्यत्राकाङ्क्षानुसारेण व्याप्तिमादावुक्त्वा शक्तिविशेषोऽनन्तरमभिधातव्यः । तथाऽप्यल्पाच्तरस्य पूर्वनिपातमनुसृत्य प्रवृत्तं सूत्रमनुगच्छता क्रमो भग्नः ।**

शे०— पूर्वेण गतार्थतामुत्तरग्रन्थस्य परिहरति **अभिमानिनामिति** ॥ **व्याख्यातमिति** । एकदेश इति शेषः ॥ **तत्प्रपञ्चयतीति** । प्रपञ्चकत्वं चास्य प्रागव्याख्यातानुगतिपदार्थभूतव्याप्त्युक्त्या द्रष्टव्यम् । ननु शक्तिस्तिष्ठति व्याप्तिश्च तिष्ठतीत्येतावतैव तस्य प्रपञ्चनसिद्धेरुच्यत इत्यस्य वैयर्थ्यम् । न चोक्तार्थस्य प्रामाणिकत्वप्रतिपादनार्थमेतदिति वाच्यम् । अर्थापत्त्यैव तस्य सिद्धत्वादित्याक्षिपति **यद्यपीति** ॥ **आगममप्यत्रेति** । तथा च प्रमाणसिद्धस्याप्यर्थस्य दाढर्यार्थं प्रमाणसंवादोपदर्शकमिदमिति भावः । ननु भाष्यकारीयं विशेषोक्त्यनन्तरं व्याप्त्यभिधानमसङ्गतम् । अभिमतार्थव्याप्त्युक्त्यनन्तरमेव सदेहानां तेषामनुपलम्भानुपपत्तिशङ्कोदयेनाकाङ्क्षानुसारेण व्याप्त्युक्त्यनन्तरमेव विशेषाभिधानस्य श्लिष्टत्वात् । न च विशेषानुगतिभ्यामिति सूत्रानुसारेण भाष्याकरीयमाकाङ्क्षाक्रमभङ्गेनोक्तविधमभिधानमुपपन्नमिति वाच्यम् । सूत्रेऽप्युक्ताकाङ्क्षाक्रमानुरोधेनानुगतिविशेषाभ्यामित्येव वक्तव्यतया तत्राप्युक्तक्रमभङ्गेनोक्तौ निमित्ताभावेन तदनुरोधेनापि भाष्यकारीयाभिधानस्य समञ्जसीकरणायोगादित्याशयेन शङ्कते **यद्यपीति** । आकाङ्क्षाक्रमभङ्गेन विशेषस्यादौ निर्देशे निमित्तविशेषसद्भावेन सूत्रकारीयविशेषानुगतिभ्यामिति निर्देशस्योपपन्नत्वात्तदनुरोधेनाकाङ्क्षाक्रमभङ्गेन विशेषस्य प्रथममभिधानं भाष्यकारीयमुपपन्नतरमित्याशयेन परिहरति **तथाऽपीति** । यद्यपि 'समुद्राभ्राद्घ' इत्यादौ व्यभिचारदर्शनेनाल्पाच्तरस्य पूर्वनिपातविधायकं शास्त्रमनित्यमित्याकरे स्थितं तथाऽपि तन्नित्यत्वमभ्युपगम्येदं समाधानमिति द्रष्टव्यम् ।

स०— ननु उक्तस्यार्थस्य सर्वस्यार्थापत्त्यैव सिद्धत्वात् 'विशेषानुगतिभ्याम्' इति सूत्रखण्डो व्यर्थ इत्यभिप्रेत्य शङ्कते **यद्यपीति** ॥ **आकाङ्क्षेति** । व्याप्तेः प्रथमत आकाङ्क्षितत्वादिति भावः ।

**प०— प्रादेशिकत्वेति ।** एकदेशवृत्तित्वेत्यर्थः ॥ **वैयर्थ्येति ।** तदनधिष्ठितेत्यादिना प्रागुक्तदिशेति भावः ॥ **इत्यागममप्यत्र संवादयतीति ।** एतेन विशेषानुगतिशब्दो विशेषानुगतिबोधकागमपरः । यथा 'अस्यैव चोपपत्तेरूष्मे'त्यत्रोष्मशब्दः । अन्यथाऽभिमानिनां प्रादेशिकत्वेत्यादिनोक्तचोद्यनिरासकशक्त्यादिमत्त्वस्यार्थापत्त्यैव सिद्धया पुनस्तदुक्तिपरस्यास्य पौनरुक्त्यापत्तेरित्युक्तं भवति ॥ **आकांक्षेति ।** अभिमानिनां प्रादेशिकत्वेत्यादिनोक्ताकाङ्क्षानुसारेणेत्यर्थः ॥ **आदावुक्त्वेति ।** अनुव्याख्यान इति योज्यम् ॥ **पूर्वनिपातमिति ।** अल्पाच्तरं पूर्वमिति पाणिन्युक्तं पूर्वमुच्चारणीयत्वमित्यर्थः ।

**या०— आकाङ्क्षानुसारेणेति ।** अभिमन्यमानव्याप्त्युक्त्यनन्तरमेव सदेहानां तेषामनुपलम्भः कथमित्याकाङ्क्षोदयादिति भावः ।

**श्री०— एतत्सर्वमिति ।** देहवत्त्वं व्याप्तिः शक्तिश्चेत्येतत्सर्वमित्यर्थः ॥ **अर्थापत्त्येति ।** श्रुतिर्हीत्याद्युक्तार्थापत्त्येत्यर्थः । **अन्यथा** उक्तसर्वस्याकल्पने । **अत्र** अनुव्याख्याने ॥ **आकाङ्क्षेति ।** नन्वेते किमभिमतार्थव्यापिनो न वा । आद्ये सदेहा विदेहा वेत्युक्ताकाङ्क्षानुसारेणेत्यर्थः ॥ **शक्तिविशेष इति ।** व्याप्तिपक्षे सदेहत्वमङ्गीकृत्य तत्र प्राप्तानुपलम्भबाधपरिहारायेत्यर्थः । **अल्पाच्तरस्य** विशेषपदस्य ।

---

**सु०— ननु च पृथिव्याद्यभिमानिन्य इति वाक्यं कथमुपादेयम्** 'आत्मनि चैवं विचित्राश्च हि', उत्क्रान्तिगत्यागतीनामि'**त्याद्यागामिसूत्रेणाचिन्त्यशक्तेः सर्वगतत्वस्य च विरुद्धत्वादित्यत आह** उक्तानुसारेणेति ।

**अनु०—** व्याप्तिश्चोक्तानुसारेण

**आत्मनि चैवमित्याद्युक्तानुसारेण शक्तिर्व्याप्तिश्चोच्यत इत्यन्वयः । स्यादयं विरोधो यदि शक्तिर्व्याप्तिश्च निरवधिकाऽत्रोच्यते । न चैवम् । प्रमाणान्तरानुसारेणान्तर्धानादिशक्तेरभिमतार्थव्याप्तेश्च प्रतिपाद्यताङ्गीकारादिति ।**

**शे०—** उक्तानुसारेणेति भाष्यखण्डस्यानर्थक्यमाशङ्क्योच्यत इत्युपदर्शितागमसंवादानुपपत्तिशङ्कापरिहारार्थत्वान्न तदिति भावेन तदनुपपत्तिशङ्कामुत्थापयति **नन्विति ॥ विरुद्धत्वादिति ।** अभिमानिदेवतास्विति शेषः । 'आत्मनि चैवं विचित्राश्च ही'त्यत्राचिन्त्यशक्तेर्भगवन्मात्रनिष्ठत्वस्य 'उत्क्रान्तिगत्यागतीनाम्' इति जीवाणुत्वस्य च समर्थनेनात्रोच्यमानस्य देवतानामचिन्त्यशक्त्यादिमत्त्वस्य तद्विरुद्धत्वादित्यर्थः ।

प०— **आत्मनि चैवमिति** । परमात्मन्येवाघटितघटकाचिन्त्यविचित्रशक्तयः सन्ति न जीव इति अत्रैव पादे श्रुतेस्त्वितिनये वक्ष्यते । वियत्पादे चोत्क्रान्तीतिनये क्रियावत्त्वेन जीवानामणुत्वं वक्ष्यते । अत्र वाक्ये देवतारूपजीवानामचिन्त्यसामर्थ्यं व्याप्तत्वं चोच्यते । अतो विरोधात्कथमुपादेय-मित्यर्थः ।

या० — **विरुद्धत्वादिति** । अभिमानिदेवतास्विति शेषः । 'आत्मनि चैवमि'त्यागामिसूत्रेणा-चिन्त्यशक्तेर्भगवत्येवाभिधानेन'उत्क्रान्तिगत्यागतीनामि'ति सूत्रेण च जीवानामव्यापकत्वस्य वक्ष्यमाणत्वेन पृथिव्याद्यभिमानिन्य इत्यत्रोच्यमानं देवतानामचिन्त्यशक्त्यादिकं विरुद्धमित्यर्थः ॥

श्री०— **उच्यते** भगवता इति शेषः । यद्वा **उक्तानुकूल्येन** तदविरोधेनेति यावत् ।

सु०— **एवमस्मदाद्यपेक्षयाऽभिमानिनामनुपलम्भमङ्गीकृत्य तद्बाधः परिहृतः । इदा-नीमसिद्धश्चासावित्याह** दृश्यन्ते चेति ।।

**अनु०—** दृश्यन्ते चाधिकारिभिः ।

**अधिकारिभिरन्तर्हितार्थदर्शनसमर्थैर्योगिभिः । एतच्च (भाष्योदा)उदाहृतस्मृतिसिद्धम् । एतेन** 'दृश्यते चे'ति सूत्रं **व्याख्यातं भवति** ।

शे०— कश्चिदन्य इत्यदृश्यत्वाभिधानात् दृश्यन्त इति तद्विरुद्धा कथं दृश्यत्वोक्तिर्भाष्यकाराणा-मित्यत आह **एवमिति** । तथा चास्मदाद्यपेक्षयोपलम्भोक्तौ पूर्वोत्तरविरोधप्रसक्तावपि योगिनः प्रत्युप-लम्भोक्तौ नैतत्प्रसक्तिरिति भावः । **अनुपलम्भमङ्गीकृत्येति** । देवताद्यपेक्षयोपलम्भोक्तावपि न विरोधः, पूर्वस्याङ्गीकारवादस्य च वस्तुतत्त्वकथनरूपत्वादिति सूचितम् ॥ **उदाहृतेति** । पृथिव्याद्यभिमानिन्य इत्युदाहृतेत्यर्थः । तत्र 'दृश्यन्ते मुनिभिश्च ताः' इत्युक्तेरिति भावः । दृश्यन्त इत्यादिभाष्यस्योत्सूत्रत्वं परिहरति **एतेनेति** ।

स०— **एतच्चेति** । 'पृथिव्याद्यभिमानिन्यः' इत्युदाहृतस्मृतिसिद्धमित्यर्थः । उक्तार्थस्योत्सूत्रित-त्वशङ्कानिरासायाह **एतेनेति** ।

प०— **असाविति** । अनुपलंभ इत्यर्थः ॥ **उदाहृतेति** । पृथिव्याद्यभिमानिन्य इति स्मृतीत्यर्थः । एषा च समग्रा भाष्ये व्यक्ता ॥ **इति सूत्रमिति** । एकवचनं जाताविति प्रागेवोक्त-मिति भावः ।

श्री०— **असौ** अनुपलम्भः ॥ **स्मृतिसिद्धमिति** । तत्र 'दृश्यन्ते मुनिभिश्च ताः' इत्युक्तेरिति भावः ।

**सु०** – ये तु मीमांसकंमन्या विग्रहवतीं देवतां न सहन्ते तेऽप्यनेनैव निरस्ता भवन्ति। अर्थापत्त्या प्रत्यक्षेण च तत्सिद्धेः। समर्थितं चागमानां सिद्धार्थे प्रामाण्यम्। अनुपलम्भः अनेकत्र युगपत्सन्निधानं च शक्तिविशेषादुपपद्यते पिशाचादिवत्। न च पिशाचादयोऽपि न सन्ति। मन्त्रौषधादिनाऽस्मदादिभिरप्युपलभ्यमानत्वात्। अर्थक्रियया संवादेन च प्रामाण्योपपत्तेः। वक्ष्यति च सूत्रकारो 'देवादिवदि'त्युक्त्वा तत्रापि विप्रतिपन्नं प्रति 'अपि लोक' इति।

किञ्चेन्द्राग्निवरुणादिपदं कस्यचिद्वाचकं पदत्वात् गोपदवत्। न चाचेतनमात्रे तत्प्रयोगोऽस्ति। न च चेतनो मुक्तः प्रलीनो वा तद्वाच्यः। जगद्व्यापारसम्बन्धिन्यपि प्रयोगात्। न चासौ विग्रहविधुरः संभवतीत्यलम्।

**शे०**— **येत्विति**। चतुर्थ्यन्तशब्दस्यैव देवतात्वात्तस्य च जडत्वान्न विग्रहवत्त्वं देवताया इत्याशयः॥ **अर्थापत्त्येति**। युक्त्यागमविरोधसूचितार्थापत्त्येत्यर्थः॥ **प्रत्यक्षेणेति**। दृश्यते चेत्युत्तरसूत्रोक्तप्रत्यक्षेणेत्यर्थः॥ **तत्सिद्धेरिति** विग्रहविशिष्टचेतनरूपदेवतासिद्धेरित्यर्थः। ऐन्द्रादियागशेषार्थवादतन्मन्त्रेषु विग्रहविशिष्टस्यैवेन्द्रादेस्तत्तद्यागादिना प्रीतेरुक्तत्वेन विग्रहविशिष्टचेतनस्यैव देवतात्वसिद्धेश्च, न चतुर्थ्यन्तशब्दस्य देवतात्वं युक्तमित्यभिप्रेत्य, कार्यपरत्वादागमस्य न सिद्धेऽर्थे प्रामाण्यमिति न मन्त्रार्थवादादिना तत्सिद्धिरिति शङ्कामुक्तस्मारणेन परिहरति **समर्थितं चेति**। 'कार्यता च न काचित्स्यादि'त्यादिनेति शेषः। न च मन्त्रार्थवादादेरनुष्ठेयप्रकाशनस्तुत्यादिपरत्वात्कथं तत्र प्रामाण्यमिति वाच्यम्। विरोधाभावेऽपि स्वार्थपरत्वाभावेऽतिप्रसङ्गेन विशिष्टदेवतापरत्वस्य न्याय्यत्वात्। न च देवादयो न शरीरिणो मातापितृरहितत्वाद्घटवदित्यनुमानं तत्र बाधकमिति बाधकाभावोऽसिद्ध इति वाच्यम्। तस्य यूकादावनैकान्तिकत्वेनाभासतयाऽबाधकत्वादिति भावः। ननु विग्रहवत्त्वे कथमनुपलम्भः। किञ्चैवं सति ऋत्विगादिवत्सन्निधानेन कर्माङ्गत्वं स्यात्। न च तद्युज्यते। बहुषु श्राद्धेष्वेकस्य ब्राह्मणस्याङ्गभावादर्शनेन बहुषु यागेषु युगपदेकस्येन्द्रादेः सन्निधानायोगादित्यतोऽन्तर्धानशक्तियोगेनानुपलम्भस्य शक्तिविशेषेण युगपदनेकत्र ऋत्विगादिवत्सन्निधानेनाङ्गभावस्य चोपपत्तेर्न दोषद्वयमपीत्याशयवानाह **अनुपलम्भ इति**। 'दुर्घटा शक्तिरपि हि पिशाचानां हि दृश्यते। देवानां किमु किम्वेवं परमस्य हरेः प्रभोरि'ति ब्रह्मतर्कोक्तेरिति भावः॥ **शक्तिविशेषादिति**। यद्यप्यत्र यथैकं ब्राह्मणमुद्दिश्य युगपन्नमस्कारः क्रियते बहुभिः तथा स्वस्थानस्थितामेकां देवतामुद्दिश्य बहुभिर्यजमानैर्नानादेशावस्थितैः स्वं स्वं हविस्त्यज्यते तस्याश्च तत्रासन्निहिताया अपि स्वस्थानस्थिताया एव युगपद्विप्रकृष्टानेकार्थोपलम्भसामर्थ्येनानेकयजमानदत्तहविरादिस्वीकारसम्भवान्नानेकयागेषु ऋत्विगादिवत्सन्नि-

धानापेक्षेत्येव वक्तुं युक्तमिति नानेकत्र युगपत्सन्निधानोपपादनाय शक्तिविशेषाश्रयणमुचितम् । तथापींन्द्र आगच्छ, हरिव आगच्छेत्यादिनाऽऽह्वानेन सन्निधानसिद्धया स्वस्थाने स्थिताया एव देवताया अनेकयजमानदत्तहविरादिस्वीकर्तृत्वकल्पनाऽयोगात् युगपत्सन्निधानमङ्गीकृत्य तदुपपादकतया शक्तिविशेषाश्रयणमित्यवधेयम् ॥ **पिशाचादिवदिति** । 'दैत्यरक्षःपिशाचकाः' इत्युक्तपिशाचानामत्र ग्रहणात्तेषां चांशतो व्याप्तेः सत्त्वादनेकत्र युगपत्सन्निधानोपपत्तिरिति ध्येयम् । ननु मन्त्रौषधादिना तदुपलम्भस्य भ्रमत्वात्कथं तेन तत्सिद्धिरित्यत आह **अर्थक्रियेति** ॥ **वक्ष्यति चेति** । 'देवादिवदपि लोके' इत्यत्रेति शेषः ॥

**जगद्व्यापारसंबन्धिन्यपीति** । जगद्व्यापारकर्तर्यपीत्यर्थः ॥ **असाविति** । जगद्व्यापारकर्तेत्यर्थः । कर्तृत्वस्य शरीरित्वव्याप्यत्वेन तन्निवृत्तौ निवृत्त्यवश्यम्भावादिति भावः । नन्वशरीरस्यापि जगद्व्यापारकर्तृत्वे बाधकाभावाद्व्याप्तिविधुरोऽयं प्रसङ्गः । कारकप्रयोक्तृत्वं हि कर्तृत्वं, न तु शरीरित्वमित्यत आह **अलमिति** । कारकप्रयोक्तृत्वरूपत्वेऽपि कर्तृत्वस्य प्रयत्नाविनाभूतत्वात्, प्रयत्नस्य चेच्छाऽविनाभूतत्वात्, इच्छायाश्च ज्ञानाविनाभूतत्वात्, देहिनामेव जाग्रतां ज्ञानदर्शनेन, अदेहिनां च सुप्तप्रलीनानामदर्शनेन, ज्ञानस्य च देहाविनाभूतत्वेन, उत्तरोत्तरव्यापकनिवृत्तौ तत्तद्व्याप्यनिवृत्त्यवश्यम्भावेनाशरीरस्य कर्तृत्वानुपपत्तेरिति तदर्थः ।

---

स० — **मीमांसकम्मन्या इति** । आत्मानमिति शेषः । नन्वागमस्य सिद्धार्थे प्रामाण्याभावात् विग्रहवद्देवतानां सिद्धत्वेन 'पृथिव्याद्यभिमानिन्यः' इत्याद्यागमानां कथं पूर्वतन्त्रे प्रमाणत्वेनोदाहरणमित्यत आह **समर्थितं चेति** । यद्वा ननु अर्थापत्त्या प्रत्यक्षेण च तत्सिद्धेरित्यनुपपन्नम् । 'मृदब्रवीत्' इत्याद्यागमानां सिद्धमृत्स्वरूपे प्रामाण्याभावात् श्रुतियुक्त्योर्विरोधप्रतीत्यसंभवेन न तदन्यथानुपपत्त्या देवतासिद्धिः । एवं योगिनां सिद्धत्वेन तद्बोधकागमानां तत्र प्रामाण्याभावेन तत्सिद्धेरेवासंभवात् न तत्प्रत्यक्षेण देवतासिद्धिरित्यत आह **समर्थितं चेति** । ननु तथाऽपि बाधकस्य विद्यमानत्वात्कथमागमानां तत्र प्रामाण्यमित्यत आह **अनुपलम्भ इति** । **पिशाचादिवदिति** । अत्र 'दैत्यरक्षःपिशाचकाः' इत्युक्तपिशाचानां ग्रहणात् तेषां चांशतो व्याप्तेः सत्त्वात् अनेकत्र युगपत्सन्निधानोपपत्तिरिति ध्येयम् ॥ ननु अस्मदाद्युपलब्धेर्भ्रमत्वं किं न स्यादित्यत आह **अर्थक्रियया संवादेनेति** । **किं चेति** । इन्द्रादिपदं कस्यचिद्वाचकमिति वाच्यसामान्यसिद्धौ तन्मात्रप्रयोगाभावेन मुक्तादिवाचकत्वाभावे सिद्धे अतिरिक्तं यद्वाच्यं तदेव संसारि सिद्ध्यति । जगद्व्यापारवत्त्वेन विग्रहवत्त्वं सिद्ध्यतीति भावः ।

प० — **अर्थापत्त्येति** । 'युक्त्यागमविरोधेने'त्युक्तार्थापत्त्या, 'दृश्यन्ते चाधिकारिभिरि'त्युक्तप्रत्यक्षेण चेत्यर्थः । 'पृथिव्याद्यभिमानिन्य' इति स्मृत्या च सिद्धमिति भावेनाह **समर्थितं चेति** । **अनेकत्रेति** । यज्ञादिशालास्वित्यर्थः ॥ **अर्थक्रियया संवादेन चेति** । मन्त्राणामौषधादिबोधकवाक्यानां चेत्यर्थः । यद्वा उपलम्भो भ्रमोऽस्त्वित्यत आह **अर्थक्रिययेति** ॥ **अपि लोक इतीति** । लोकेपि पिशाचादयोन्तर्धानशक्त्या नोपलभ्यन्ते किम्वीश्वर इति वक्ष्यत इत्यर्थः । अचेतनमात्र इत्युक्त्या अग्न्यादिपदमचेतनस्यापि वाचकमित्युक्तं भवति ॥ **प्रलीन इति** । लीनदेहो लयवर्तिजीव इत्यर्थः ॥ **जगद्व्यापारेति** । 'इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री' (ऋ. १-३२-१) । 'अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि' (ऋ १-१-४) । 'उरुं हि राजा वरुणश्चकार सूर्याय पन्थाम्' (ऋ. १-२४-८) इत्यादाविति भावः ॥ **इत्यलमिति** । अयं भावः । 'मत्सि सोम वरुणं मत्सि मित्रम्' इत्यादौ सोमं प्रति वरुणादीन्मादयस्वेत्युच्यते । न च जडस्य विग्रहादिहीनचेतनस्य वा सोमपानकृतमदः संभवति । किञ्च 'तेषां पाहि श्रुधी हवम्' (ऋ. ९-९०-५) इति पानस्तोत्रश्रवणादिकं श्रूयते । न च विग्रहेन्द्रियादिहीनस्य तद्युक्तमित्याद्यूह्यमिति ।

या० — **अर्थापत्त्येति** । प्रथमसूत्रोक्तार्थापत्त्या, द्वितीयसूत्रोक्तप्रत्यक्षेण चेत्यर्थः ॥ **समर्थितं चेति** । तथा चागमेभ्योऽपि तत्सिद्धिरिति भावः । ननु देवानां विग्रहवत्त्वेऽनुपलम्भायोगः बहुषु यागेष्वेकस्येन्द्रादेर्हविरादिभोक्तृत्वेन युगपत्सन्निधानायोगश्चेत्यत आह **अनुपलम्भ इति** ॥ **वक्ष्यति चेति** । 'देवादिवदपि लोक' इति सूत्रे इति शेषः ॥ **लोक इतीति** । तत्र लोकपदं पिशाचादिपरमिति भावः ॥ **न चासाविति** । जगद्व्यापारकर्तेत्यर्थः । किञ्च यथा बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युगपन्नमस्क्रियते तद्वद्दिह्योद्दिश्य परित्यागात्मकत्वाद्यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत्परित्यक्ष्यन्तीति नानेकयागेषु ऋत्विगादिवत्तेषां सन्निधानमावश्यकमसन्निधानेऽपि तेषां सर्वज्ञत्वेन स्वस्वस्थानस्थितानामेवानेकयजमानदत्तहविरादिस्वीकारसम्भवादित्याशयवानाह **इत्यलमिति** ।

श्री० — **प्रत्यक्षेण** मुनीनामिति शेषः । विग्रहवत्त्वेऽनुपलम्भबाधादिः स्यादित्यत आह **अनुपलम्भ इत्यादि** ॥ **पिशाचादिवदिति** । अत्र 'दैत्यरक्षःपिशाचकाः' इत्युक्तपदस्थपिशाचानां ग्रहणात्तेषां चांशतो व्याप्तेः सत्त्वादनेकत्र युगपत्सन्निधानोपपत्तिरिति ध्येयम् । नन्वसदादेः पिशाचाद्युपलम्भोऽप्रमाणं किन्न स्यादित्यत आह **अर्थक्रिययेति** । पिशाचाद्युचितार्थक्रियायाः प्रत्यक्षसिद्धत्वेन तत्संवादिनोऽप्युपलम्भस्य युक्तं प्रामाण्यमिति भावः ॥ **तदिति** । तेषामिन्द्रादिपदानां प्रयोग इत्यर्थः । **सम्बन्धिनि** तद्वति, तत्कर्तरीति यावत् ।

सु०— ननु तथाऽपि मृदब्रवीदित्यादिवेदस्याबोधकत्वलक्षणमप्रामाण्यं दुर्निवारम् । तथा हि । यद्यपि वाक्यतापन्नानि पदानि वाक्यार्थं पदार्थानामन्योन्यसंसर्गविशेषरूपमपूर्वमेवावगमयन्ति, तथाऽपि पदार्थैर्वाच्यवाचकभावरूपसंबन्धप्रतिपत्तिलक्षणां व्युत्पत्तिमपेक्षन्ते अन्वयव्यतिरेकाभ्यां तथाऽवधारणात् । न च मृदादिशब्दानां पृथिव्यादिषु देवतासु व्युत्पत्तिस्संभवति । संबन्ध(ज्ञान)स्य संबन्धिज्ञानसापेक्षत्वात् । प्रतिसंबन्धिरूपायाश्च देवतायाः प्रत्यक्षेण दुरधिगमत्वात् । लिङ्गाभावेनानुमानायोगात् । न च शब्दतस्तदवगमः । सत्यां व्युत्पत्तौ शब्दतो देवतावगमः, सति च तस्मिन्व्युत्पत्तिरिति परस्पराश्रयत्वात् । न च शब्दविशेषस्यागृहीतसङ्गतिकस्यैव बोधकत्वम् । अदृष्टकल्पनाप्रसङ्गात् । यद्यपि दृश्यते चेत्युक्तम् । तथाऽप्यस्मदादीनां व्युत्पत्त्यनुपपत्तिरेव । देवतादर्शनं तु (च) योगिनां वेदार्थज्ञानोत्तरभावनाजन्यमङ्गीक्रियत इति न व्युत्पत्तिहेतुः । लक्षणाऽपि वाच्यार्थदर्शनं विनाऽनुपपन्नैवेत्यत आह शास्त्रोक्तेति ।

अनु०— शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः ॥

चशब्दोऽप्यर्थः । एवशब्दः सामर्थ्याच्छास्त्रशब्देन संबन्धनीयः । शास्त्रैकसमधिगम्यवस्तुन इति । प्रत्यक्षाद्यगम्याया अपि देवताया इति यावत् । वस्तुनो व्युत्पत्तिरिति मृदादिशब्दस्य तत्सम्बन्धिवाचकत्वप्रतिपत्तिरित्यर्थः । युज्यत इति शेषः । अनेन च एवशब्दस्य संबन्धः । शास्त्रलिङ्गतस्तज्ज्ञानसंभवादिति शेषः ।

शे०— ननु शास्त्रोक्तवस्तुनश्चेत्युत्तरवाक्यमनर्थकम् । न च व्युत्पत्त्युपपादनपरत्वान्नानर्थक्यम् । तस्याप्यनर्थकत्वात् । न चाप्रामाण्यपरिहारार्थं तदिति वाच्यम् । विग्रहादिमच्चेतनत्वोपपादनमात्रेणैव युक्त्यविरोधसिद्ध्या तद्विरोधनिबन्धनाप्रामाण्यपरिहारस्य सिद्धत्वेन तदर्थतया व्युत्पत्त्युपपादनस्यानपेक्षितत्वादित्यतोऽबोधकत्वविपरीतबोधकत्वरूपेणाप्रामाण्यस्य द्वैविध्याद्विशिष्टचेतनविषयत्वोपपादनेन विपरीतबोधकत्वरूपाप्रामाण्यपरिहारसिद्धावप्यबोधकत्वरूपाप्रामाण्यपरिहारासिद्ध्या तत्सिद्ध्यर्थं तदुपयोगिव्युत्पादनस्यावश्यकत्वान्न तत्परोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य तथा तद्योजयितुमबोधकत्वेनाप्रामाण्यशङ्कामुत्थापयति **नन्वित्यादिना** । मृदब्रवीदित्यादेर्वेदस्य कुतो न स्वार्थबोधकतेत्यतस्तदुपायाभावादित्यभिप्रेत्य 'अतोऽन्विताऽभिधायित्वमि'त्याद्युक्तरीत्या वाक्यतापन्नपदानामेव वाक्यार्थबोधकत्वस्थितेः, तेषां च प्रकृतेऽपि सत्त्वात्कथं तदुपायाभाव इत्यतो व्युत्पत्तिसापेक्षतादृशपदानामेव स्वार्थबोधकत्वेन वाक्यतापन्नपदमात्रस्यैव तद्बोधकत्वाभावान्न तन्मात्रेण तदित्याह **यद्यपीत्यादिना** । वाक्यतापन्नपद-

मात्रस्यैव तद्बोधकत्वोपपत्तेर्न व्युत्पत्तिविशिष्टानां तेषां तत्कल्पना युक्ता । तथा च कथं तदुपायाभा- इत्यतो व्युत्पत्तौ सत्यामेवोक्तरूपपदैर्वाक्यार्थ बोधात् असत्यां च तस्यां तदबोधादन्वयव्यतिरेकाभ्यां व्युत्पत्ति- विशिष्टपदानामेव तद्बोधकत्वस्थित्या पदमात्रस्य तद्बोधकत्वाभावाद्युक्त एव तदुपायाभाव इत्याशयेनाह **अन्वयेति** ।

अस्तु तर्हि व्युत्पत्तिविशिष्टैरेव तैः प्रकृतेऽप्यर्थबोध इत्यतोऽत्र व्युत्पत्त्यसंभवेन तद्विशिष्टपदाना- मेवात्राभावान्न तैरप्यत्र तद्बोध इत्याशयेनाह **न चेति** । कुतोऽत्रैव व्युत्पत्त्यसंभव इत्यतः ससम्बन्धिक- पदार्थज्ञाने संबन्धितावच्छेदकप्रकारकसंबन्धिज्ञानस्य कारणत्वेन तत्सत्त्वे तदधीनव्युत्पत्तेर्वाक्यान्तरे संभवेऽपि प्रकृते संबन्धितावच्छेदकप्रकारकसंबन्धिज्ञानविरहान्न संबन्धिज्ञानरूपव्युत्पत्तिः संभवतीत्याह **संबन्धज्ञानस्येति** । क्वचित्संबन्धस्येति पाठः । तत्र संबन्धिपदं तज्ज्ञानपरम् । ननु संबन्धिरूपशब्दस्य श्रोत्रेण ज्ञातत्वेन कथं तद्विरह इत्यतो न यत्किञ्चित्संबन्धिज्ञानमात्रं ससम्बन्धिकपदार्थज्ञाने कारणम् । तथा सति वनस्पतिप्रत्यक्षमात्रेण वायुवनस्पतिसंयोगस्यापि प्रत्यक्षत्वप्रसङ्गात् । किन्तु यावत्संबन्धिज्ञानमेव । तथा च शब्दज्ञानेऽपि प्रतिसंबन्धिदेवताया अज्ञानेन संबन्धिद्वयज्ञानविरहान्न तत्संबन्धज्ञानरूपव्युत्पत्तिः संभवतीत्यभिप्रेत्य कुतः प्रतिसंबन्धिदेवताया अत्रानवगतिरित्यतस्तत्कारणाभावादिति भावेन तदवगतिकारणं किमत्र प्रत्यक्षमभिमतं किंवाऽनुमानमथ मृदब्रवीदित्यादिरागम इति विकल्पान्मनसि निधायाद्यं दूषयति **प्रतिसंबन्धिरूपायाश्चेति** । द्वितीयं दूषयति **लिङ्गेति** । तृतीयमनूद्य निषेधति **न चेति** । मृदब्र- वीदित्यादिशब्दः किं वचनवृत्त्या देवतोपस्थापक इत्यभिमतं किंवा लक्षणयेति विकल्पं मनसि निधायाद्यं दूषयति **सत्यामिति** । न च व्युत्पत्तिहेतुभूतदेवतावगतिर्न तच्छब्दजन्याऽभ्युपगम्यते किन्नाम शब्दा- न्तरसाध्येति कथमन्योन्याश्रय इति वाच्यम् । शब्दान्तरस्य लक्षणया तदवगमकत्वे वक्ष्यमाणतत्पक्षो- क्तदोषप्रसङ्गात् । वचनवृत्त्या तदवगमकत्वे तच्छब्दसङ्गतिग्रहोपयोगितया देवताऽवगतेरवश्यं वाच्यत्वा- त्तस्या वाचकशब्दान्तरायत्तत्वेऽनवस्थाप्रसक्त्या तच्छब्दायत्तत्वेऽन्योन्याश्रयप्रसक्त्या मृदादिशब्दतुल्ययोग- क्षेमतया तदवगतायां मृदादिशब्दसङ्गतिग्रहस्य दूरनिरस्तत्वादिति भावः ॥ **दृश्यते चेति** । द्वितीयसूत्रे प्रत्यक्षकथनान्नानुपपत्तिरित्यतस्तत्र योगिनः प्रति देवतानां प्रत्यक्षत्वाभिधानेन देवताविषयकयोगिप्रत्यक्षस्य योगिनः प्रति तच्छब्दसङ्गतिग्रहमात्रोपयोगित्वेऽप्यन्यनिष्ठसंबन्धिज्ञानस्य अन्यनिष्ठसंबन्धज्ञानोपयोगिता- यामतिप्रसङ्गेन योगिनिष्ठदेवताप्रत्यक्षस्य नास्मदादीन्प्रति सङ्गतिग्रहोपयोगित्वमित्यस्मदादीन्प्रति तदसिद्धेर- प्रामाण्यं दुर्वारमित्याशयेनाह **यद्यपीति** । एवं सत्यस्मदादीन्प्रत्यबोधकत्वप्राप्तावपि योगिनः प्रति तदप्राप्तेर्नाबोधकत्वेनाप्रामाण्यशङ्कायाः सदलत्वमित्यतो योगिनिष्ठदेवताप्रत्यक्षस्य योगिनः प्रति सङ्गति-

ग्रहोपयोगित्वमङ्गीकृत्यैवासदादीन्प्रति तदनुपयोगो वर्णितः, वस्तुतस्तु न तान्प्रत्यपि तस्य सङ्गतिग्रहोपयोगित्वं संभवति। वेदार्थज्ञानात्पूर्वभावित्वे तस्य तदुपयोगित्वोपपत्तावपि वेदार्थज्ञानोत्तरभाविनस्तस्य तद्धेतुभूतव्युत्पत्त्युपयोगस्यान्योन्याश्रयेणानुपपत्तेर्वेदार्थज्ञानात्प्रागसदादितुल्यत्वान्न तान्प्रत्यपि बोधकत्वमित्यप्रामाण्येन पूर्वपक्षो युक्त इत्याशयेनाह **देवतादर्शनं चेति** ॥ लक्षणयेति द्वितीयं दूषयति **लक्षणाऽपि हीति** ॥ **वाच्यार्थदर्शनं विनेति**। वाच्यार्थसंबन्धितया लक्ष्यार्थदर्शनं विनेत्यर्थः। उपलक्षणं चैतत्। स्वरूपतो लक्ष्यार्थदर्शनं विनेत्यपि द्रष्टव्यम्। अनवगतस्य कूर्मरोमादेः, अन्यसंबन्धितयाऽवगतस्य तीरादेर्गङ्गापदलक्ष्यत्वादर्शनेन, स्वरूपतो गङ्गादिसंबन्धितया चावगतस्य तीरादेरेव च तद्दर्शनेन च लक्ष्यभूतार्थान्तरस्य स्वरूपेण वाच्यार्थसंबन्धितया चावगतेर्लक्षणाहेतुत्वावधारणेन मृदादिशब्दानां लक्षणया देवताबोधकत्वं वदता प्रकारद्वयेनापि देवतावगतेर्वक्तव्यत्वात्तस्याश्च देवतानामसदाद्यतीन्द्रियत्वेन प्रत्यक्षेण, लिङ्गाभावेनानुमानतः, सत्यां व्युत्पत्तावित्युक्तरीत्याऽन्योन्याश्रयेण च वाचकमृदादिशब्देन, तादृशशब्दान्तरेण वाऽसम्भवाल्लक्षकशब्दान्तरायत्तत्वे च तच्छब्दलक्षणाया अप्युक्तरूपलक्ष्यावगतिसाध्यत्वेन तदर्थकशब्दान्तराश्रयणे चानवस्थाप्रसङ्गेनावगतौ लक्षणा लक्षणायां चावगतिरित्यन्योन्याश्रयेण मृदादिशब्देनाप्यसम्भवेनोक्तरूपलक्ष्यावगतिलक्षणलक्षणाहेत्वभावान्न लक्षणाऽपि सम्भवतीति भावः।

समुच्चयाभावात्तदर्थकचशब्दस्य मूले आनर्थक्यमित्याशङ्क्य व्युत्पत्त्यसम्भवहेतुभूतदेवतावगत्यसम्भवोपपादकतयोक्तस्य प्रत्यक्षाद्यगम्यत्वस्याप्रयोजकत्वसूचनार्थत्वान्न तदिति भावेन तदुपयोगितया चशब्दार्थमाह **चशब्दोऽप्यर्थ इति**। शास्त्रोक्तवस्तुनश्चेत्येतावता पूर्तेर्मूले एवशब्दवैयर्थ्यं शास्त्रोक्तवस्तुनोऽपि प्रत्यक्षादिनाऽवगतिसम्भवेन तस्य व्युत्पत्त्यसम्भवहेतुदेवतावगत्यसम्भवोपपादकत्वाभावात्तदुक्तिवैयर्थ्यं चेत्यतोऽत्र शास्त्रशब्देन एवशब्दसम्बन्धेनास्य शास्त्रैकसमधिगम्यत्वसमर्पकत्वलाभात् व्युत्पत्त्यसम्भवहेतूपपादकत्वमुपपन्नमित्याशयेनाह **एवशब्द इति**। उक्तशब्देन समस्तेन शास्त्रशब्देन कथमेवशब्दस्य सम्बन्ध इत्यतो योग्यत्वाद्बुद्ध्या विवेकेन शास्त्रशब्देन सम्बन्धो युज्यत इति भावेनोक्तं **सामर्थ्यादिति**। सम्बन्धमेव दर्शयन्स्तत्तात्पर्यमाह **शास्त्रैकेति**। नन्वगृहीतसङ्गतितया मृदब्रवीदित्यादेरबोधकत्वशङ्कानिरासाय शब्दानां सङ्गतिग्रहरूपव्युत्पत्तिसम्भवो वर्णनीयो न तु वस्तुनो व्युत्पत्तिरिति वस्तुनस्तत्सम्भववर्णनमित्यतः प्रकृतोपयोगितयाऽनूद्य व्याचष्टे **वस्तुन इति**। व्युत्पत्तिरित्यस्य साकाङ्क्षत्वेन प्रसक्तवाक्याभासत्वशङ्कानिवृत्त्यर्थमपेक्षितं पूरयति **युज्यत इतीति** ॥ **अनेन चेति**। युज्यत इत्यनेन चेत्यर्थः। अतोऽपि न तद्वैयर्थ्यमिति भावः। मूले शास्त्रलिङ्गत इत्यस्य वैयर्थ्यमाशङ्क्य सङ्गतिग्रहे उपायाभावात्कथं तत्सम्भव इत्यत उक्तरूपव्युत्पत्तावर्थापत्तिरूपोपायप्रदर्शनार्थत्वान्न तदिति भावेनापेक्षितं सम्पूर्य यथावद्व्याचष्टे **शास्त्रेति** ॥

स०— **प्रत्यक्षेणेति** । अतीन्द्रियत्वादिति भावः । देवताज्ञानाभावे तत्र शक्तिग्रहासंभवेन तादृशमपरोक्षज्ञानं न व्युत्पत्तिग्रहोपयुक्तमित्यभिप्रेत्याह **देवतादर्शनं चेति** । ननु मृदादिशब्दानां व्युत्पत्त्यनुपपत्त्या शक्त्या तद्बोधकत्वाभावेऽपि लक्षणयैव तद्बोधकत्वोपपत्तेर्नाबोधकत्वमित्यत आह **लक्षणाऽपीति** । मृदादिशब्दलक्ष्यार्थभूतानां देवतानां शब्दवाच्यत्वाभावे तत्र लक्षणाऽपि न स्यात् । लक्षणायां लक्ष्यार्थोपस्थितेरावश्यकत्वात् । प्रकृते च लक्ष्यभूतदेवतानां मानान्तरेणानुपस्थितानां वचनवृत्त्यैव तदुपस्थितेर्वाच्यत्वात् वचनवृत्तेश्चोक्तरीत्या अनुपपन्नत्वात् तदुपस्थितिरेव नास्तीति न तत्र लक्षणेति भावः । एतच्च 'न चाऽन्यथा । लक्ष्यत्वं क्वाऽपि दृष्टं हि' इत्येतद्व्याख्यावसरे टीकाकारैरुपपादितम् तत एवावगन्तव्यम् । **वाच्यार्थदर्शनं विना** वाच्यार्थसम्बन्धित्वेन लक्ष्यस्योपस्थितिं विनेत्यर्थः । **सामर्थ्यादिति** । सापेक्षत्वादित्यर्थः । अर्थं कथयन् संबन्धप्रकारमेव दर्शयति **शास्त्रैकेति** ॥ शास्त्रेण मुख्यतया ज्ञेयम् अन्येन त्वमुख्यत इति प्रतीतिं वारयितुमाह **प्रत्यक्षादेति** । **अनेन चैवेति** । न केवलं शास्त्रशब्देन एवशब्दस्य सम्बन्धः । अपि तर्हि युज्यत इति शेषेणापीत्यर्थः ।

प०— **वाक्यतापन्नानीति** । आकाङ्क्षायोग्यतासन्निधिमत्तामापन्नानीत्यर्थः । योगिनामपि देवताप्रत्यक्षं नेन्द्रादिपदव्युत्पत्तिहेतुरित्याह **देवतादर्शनं चेति** ॥ **न तद्व्युत्पत्तिहेतुरिति** । योगिनामपीत्यनुकर्षः ॥ **सामर्थ्यादिति** । अन्वययोग्यताबलादित्यर्थः । **व्युत्पत्तिः** वाचकत्वप्रतीतिः । तत्रोपसर्जनीभूतेन वाचकत्वेन वस्तुपदोक्तस्यान्वय इत्याह **वस्तुनो व्युत्पत्तिरितीति** ॥ **अनेन चेति** । युज्यत एवेति एवशब्दसंबन्ध इत्यर्थः ।

या०— **न व्युत्पत्तिहेतुरिति** । तेषामपीति शेषः । ननु मृदादिशब्दानां व्युत्पत्त्यनुपपत्त्या शक्त्या तद्बोधकत्वाभावेऽपि लक्षणया तद्बोधकत्वमस्त्वित्यत आह **लक्षणाऽपीति** । अत्र यद्यपि लक्ष्यार्थज्ञानं विनेत्येव वक्तव्यं तथाऽपि वाच्यार्थज्ञानं विनेत्यनेनेदं ज्ञापयति मृदादिशब्दलक्ष्यतयाऽभिमतदेवतायां पूर्वं प्रमाणान्तरासम्भवात्पदान्तरमेव तज्ज्ञापकं वाच्यम् । तदपि न लक्षकमनवस्थापत्तेः । अतस्तत्तद्वाचकमेव वाच्यं, तत्पदवाच्यदेवताया अपि पूर्वमज्ञाने व्युत्पत्त्यनुपपत्त्या तेन वाचकेन तज्ज्ञानासम्भवे प्रकृतमृदादिशब्दलक्ष्यार्थानुपस्थितौ मृदादिशब्दलक्षणाऽप्यनुपपन्नैवेति ॥ **सामर्थ्यादिति** । यद्यपि शास्त्रशब्दस्य उक्तशब्देन समस्तस्य नैवकारेण सम्बन्धः सम्भवति, तथाऽपि बुद्ध्या विविक्तेन तेन एवशब्दः सम्बध्यतेऽर्थाबाधरूपयोग्यतापरपर्यायसामर्थ्यादित्याशयः ।

श्री०— **वाक्यतापन्नानि** इतरान्वितानि ॥ **अवगमयन्तीति** । ततश्च नाबोधकत्वरूपाप्रामाण्यमिति भावः ॥ **प्रत्यक्षेणेति** । अतीन्द्रियत्वादित्यर्थः ॥ **इत्युक्तमिति** । तथा च सम्बन्धि-

ज्ञानस्य प्राप्तत्वाद्युपत्तिः सम्भवतीत्यर्थः ॥ **तथाऽपीति** । एवं च योगिनां सम्बन्धिज्ञानसत्त्वेन तेषां व्युत्पत्त्युपपत्तावपि नास्मदादीनां सम्बन्धिभूतदेवताज्ञानशून्यानां सा सम्भवतीत्यर्थः । **अङ्गीकृत्योक्त** । तेषां योगिनां योगित्वावस्थायां सम्बन्धिज्ञानसत्त्वेन व्युत्पत्तिसम्भवेऽपि न योगित्वावस्थातः पूर्वं युक्तं तदानीं तेषामप्यस्मत्कल्पत्वादतस्तेषां योगिनामुत्तरभावि देवताज्ञानं पूर्वं न व्युत्पत्तिहेतुरित्याह **देवते-त्यादि** । ननु मृदादिशब्दानां व्युत्पत्त्यनुपपत्त्या शक्त्या तद्बोधकत्वाभावेऽपि लक्षणयैव तद्बोधकत्वोपपत्तेर्नाबोधकत्वरूपाप्रामाण्यमित्यत आह **लक्षणाऽपीति** । मृदादिशब्दार्थभूतानां तत्तद्देव-तानां शब्दवाच्यताभावे वाच्यार्थदर्शनं ज्ञानं विना लक्षणाऽपि न स्यात् । लक्षणायां लक्ष्यार्थोपस्थि-तेरवाश्यकत्वात्प्रकृते च लक्ष्यभूतदेवतानां प्रमाणान्तरानुपस्थितानां वचनवृत्त्यैव शब्दादुपस्थितेर्वाच्यत्वात् वचनवृत्तश्चोक्तरीत्याऽनुपपन्नत्वात्तदुपस्थितिर्नेति न लक्षणेत्यर्थः ॥ **अनेन चेति** । न केवलं शास्त्रपदेन किन्त्वध्याहृतेन युज्यत इत्यनेनापीत्यर्थः । शास्त्रोक्तपदेन समस्तस्यापि वस्तुन इत्यस्य बुद्ध्या विविक्तस्य व्याख्यानम् **मृदादिशब्दस्येति** ।

च० — **संबन्धिज्ञानसापेक्षत्वादिति** । संबन्धप्रतियोग्यनुयोगिज्ञानसापेक्षत्वादित्यर्थः । **अगृ-हीतसङ्गतिकस्य** अगृहीतशक्तिकस्य ॥

---

**सु०** — यद्वा शास्त्रोक्तवस्तुनोऽपि शास्त्रलिङ्गतोऽधिगतिसंभवात्तत्र शब्दस्य व्युत्पत्ति-र्युज्यत इति योजना । देवताया इति वक्तव्ये शास्त्रोक्तवस्तुनश्चेति वचनं शङ्कानुवादरूपम् । शास्त्रमेव लिङ्गं शास्त्रलिङ्गम् । मृदब्रवीदित्यादिशास्त्रादेवोपपत्तिविरोधसहितान्मृदादिशब्द-वाच्यतयैव देवतास्वरूपमवगम्यत इति ।

यद्वा शास्त्रं तैस्तैः प्रणीतं तत्सद्भावे लिङ्गम् । न हि वेदादन्यद्वाक्यं वक्तारमन्तरेणो-पपद्यते । ततश्च वचनलिङ्गानुमिते वक्तरि वृद्धैरन्यान्प्रति मृदादिशब्दाः शक्यव्युत्पादनाः ।

यद्वा शास्त्रं शासनम् । वर्षणाद्युपलक्षणमेतत् । न हि वर्षणादिक्रिया विकर्तृका संभवति । तथा च तयाऽनुमिते कर्तरि शक्य(त)न्त एव वृद्धैः श(ब्दो)ब्दा व्युत्पादयितुम् ।

अथवा शास्त्रोक्तं लिङ्गमव्यभिचरितो धर्मः शास्त्रलिङ्गम् । पाशहस्तत्वसहस्राक्षत्वादि-शास्त्रोक्ततत्तद्देवतालक्षणान्युपादाय व्युत्पादनं शक्यमेव । यथा खलु लोके यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णी, दीर्घग्रीवादिमान्पशुरुष्ट्र इति लक्षणान्युपादाय मुद्गपर्णीत्या-(र्ण्या)दिशब्दा व्युत्पाद्यन्ते; तथा यः पाशहस्तत्वादिमान्सोऽबादिशब्दार्थ इति व्युत्पादनं

**सुवचन(कर)मेव । पाशादिशब्दास्तु लोकत एव गृहीतसङ्गतयः । समासस्य वाक्यत्वेन व्युत्पत्त्यनपेक्षत्वमिति न कश्चिद्विरोधः ।**

**न केवलं मृदादिशब्दानामयं व्युत्पत्तिप्रकारः । किन्नामातीन्द्रिये धर्मादावपि । ततश्चैवं वेदप्रामाण्यमाक्षिपतोऽतीन्द्रियार्थव्यवहारमात्रविलयप्रसङ्ग इति सूचयितुं शास्त्रोक्तवस्तुनश्चेति सामान्येनोक्तम् ।**

**शे०** — वस्तुनो व्युत्पत्तिरिति अव्यवहितान्वये व्युत्पत्तिशब्दस्योक्तरीत्याऽर्थकल्पनायामस्वारस्यमित्यपरितोषात्तत्स्वारस्याय व्यवहितान्वयमाश्रित्यापेक्षिताध्याहारेण योजयति **यद्वेति** । ननु देवतार्थवस्तुपदेनैव पूर्तेः शास्त्रोक्तेति विशेषणवैयर्थ्यमित्यतस्तत्प्रयोजनमाह **देवताया इतीति** । आद्ययोजनायां शास्त्रलिङ्गतः शब्दसङ्गतिसंग्रहः सम्भवतीत्युक्तम् । तत्र किं शास्त्रं, कथं च तेन सङ्गतिग्रहः, अयमस्य वाचक इति तत्रानुक्तेरित्यत आगमतय' तस्य वाचकत्वागमकत्वेऽप्युपपत्तिविरोधसहितस्य तद्गमकत्वान्नानुपपत्तिरित्याशयेन तमुपपादयति **शास्त्रमेवेति** । इदं च युक्त्यागमविरोधेनेत्यनेन सूचितार्थापत्तिव्युत्पादनावसरे प्रपञ्चितमनुसन्धेयम् । द्वितीययोजनायां शास्त्रलिङ्गतो देवतावगममुपपादयति **यद्वेति** । **वृद्धैः** प्रयोजकवृद्धैः । शास्त्रशब्दस्य रूढमर्थमाश्रित्य तद्रूपलिङ्गेन देवतावगतिर्दर्शिता । इदानीं यौगिकमर्थमाश्रित्यापि तेन लिङ्गेन देवतावगतिमुपपादयति **यद्वेति** । एवं शास्त्रं च तल्लिङ्गं चेति शास्त्रलिङ्गशब्दे कर्मधारयमाश्रित्य शास्त्रलिङ्गतो देवतावगतिः समर्थिता । इदानीं शास्त्रोक्तमिति मध्यमपदलोपीसमासमाश्रित्य शास्त्रोक्तलिङ्गैस्तदवगतिं दर्शयति **अथवेति** ॥ **लक्षणान्युपादायेति** । अनेन शास्त्रलिङ्गत इति ल्यब्लोपनिमित्ता पञ्चमीत्युक्तं भवति । कृषीवलप्रयत्नमनपेक्ष्यैवारण्योत्पन्नप्रसिद्धमुद्गमाषसदृशौ सूक्ष्ममुद्गमाषौ मुद्गपर्णीमाषपर्णीशब्दवाच्याविति भावः ॥ **व्युत्पत्त्यनपेक्षत्वमिति** । अन्यथाऽधिगतार्थत्वप्रसक्तेरनन्तपुरुषप्रयुक्तस्वस्वाभिप्रेतार्थप्रतिपादकतत्तत्पदावापोद्वापप्रयुक्तानन्तवाक्यानां तत्तदर्थानां च पदादिवदनुगतत्वाभावेनोपस्थित्यसम्भवेन वाक्यस्य स्वार्थे शक्तिग्रहस्याशक्यत्वाच्चेति भावः ॥ **कश्चिदिति** । विपरीतबोधकत्वाबोधकत्वरूपः कोऽपीत्यर्थः ।

शास्त्रोक्तवस्तुनश्चेत्यत्र शास्त्रोक्तेति विशेषणस्य प्रयोजनमुक्त्वा वस्तुन इति सामान्येन देवतासमर्पकविशेष्यस्य प्रयोजनमाह **न केवलमिति** ॥ **सामान्येनोक्तमिति** । अन्यथा शास्त्रोक्तदेवताया इत्येवावक्ष्यदिति भावः ।

**स०** — 'वस्तुनो व्युत्पत्ति'मित्यस्य मृदादिशब्दस्य तत्संबन्धिवाचकत्वप्रतिपत्तिरित्येतद्व्याख्यानं न स्वरसमित्यभिप्रेत्य शास्त्रोक्तवस्तुनः इत्यस्य अधिगतिसंभवादिति शेषेण सम्बन्ध इति पक्षान्तरमाह **यद्वेति** ॥ **शङ्कानुवादरूपमिति** । ननु तथाऽपि इत्यारभ्य लक्षणाऽपि इत्यन्तेन या शङ्का पूर्वं प्रदर्शिता

तदनुवादरूपमित्यर्थः । **उपपत्तिविरोधसहितादिति** । मृन्न वक्त्री मृत्त्वात् इत्याद्युपपत्तिविरोध-सहितादित्यर्थः । **तत्सद्भावे लिङ्गमिति** । देवतासद्भावे लिङ्गमित्यर्थः । **वृद्धैरिति** । प्रयोजकवृद्धै-रित्यर्थः । ननु देवतास्वरूपज्ञानाभावे पाशहस्तत्वादिमानित्यस्यापि वाक्यस्य शक्तिग्रहासंभवेन पुनरन्यो-न्याश्रय इत्यत आह **समासस्य वाक्यत्वेनेति** ।

**प०** — अर्थमग्रे विवक्षुराकांक्षाशान्तये अन्वयमात्रं दर्शयति **शास्त्रलिंगत इत्यादि ॥ शंकानु-वादेति** । प्रत्यक्षेण दुरधिगमत्वादिना यत्पूर्वपक्षिणा शास्त्रैकसमधिगम्यत्वं देवताया उक्तं तदनुवाद इत्यर्थः । मुद्गपर्णी माषपर्णीति धान्यविशेषनाम । ननु यः पाशहस्तः स वरुण इत्यादौ पाशहस्तादि-समुदायशब्दस्य व्युत्पत्त्यभावे कथं तेन तदर्थावबोध इत्यत आह **समासस्येति ॥ वाक्यत्वेनेति** । अवयवभूतपदगतशक्त्यै(वा)कार्थबोधकत्वेन पृथक् समुदायव्युत्पत्तिर्नापेक्षितेत्यर्थः । शास्त्रोक्तदेवताया इत्यनुक्त्वा वस्तुन इति सामान्योक्तिकृत्यं व्यनक्ति **न केवलमित्यादिना ॥ धर्मादावपीति** । चोद-नालक्षणोऽर्थो धर्म इत्यत्र यश्चोदनाप्रमाणकोऽर्थरूपः स धर्मः, अन्यः श्येनादिरधर्म इति जैमिन्या-चार्यैस्तथैवोक्तम् । तत्र 'त्रिवृत्पञ्चदशः सप्तदश एकविंशः, एतानि वाव ज्योतींषि य एतस्य स्तोम' इत्यादिवाक्यबलात् ज्योतिषां स्तोमो यस्मिन्स ज्योतिष्टोम इत्यादिप्रकारेण तत्र व्युत्पत्तिरिति भावः ॥ **आक्षिपत इति** । बौद्धादेः ।

**या०** — **शङ्कानुवादेति** । शास्त्रोक्तं पदप्रयोजनप्रदर्शनमिदम् । वस्तुपदप्रयोजनप्रदर्शनं त्वग्रे भविष्यतीति ज्ञेयम् ॥ **मुद्गपर्णीति** । कृषीवलप्रयत्नेन नोत्पन्नः, किन्त्वरण्ये स्वत एवोत्पन्न-सूक्ष्ममुद्गः मुद्गपर्णीत्युच्यते । एवं माषपर्णीशब्दोऽप्यरण्योत्पन्नधान्यविशेषवाचक इत्याहुः ॥ **समास-स्येति** । पाशहस्तादिसमासस्येत्यर्थः ॥ २-१-३ ॥

**श्री०** — **यद्वेति** । तथा च पूर्वयोजनायां शास्त्रोक्तवस्तुनो देवतायां व्युत्पत्तिः शब्दस्य तद्देवतावाचकत्वप्रतिपत्तिरिति व्याख्यातम् । इदानीं तु पूर्ववच्छास्त्रोक्तवस्तुन इत्यस्य न व्युत्पत्तिरित्यने-नान्वयः । किन्तु शास्त्रलिङ्गत इत्यनेनैव ॥ **तत्र शब्दस्येति** । पदद्वयस्य शेष इति योजनामात्रे भेदः, अर्थस्त्वेक एवेति ध्येयम् । योजनाद्वये वाक्यार्थमाह **शास्त्रमेवेति ॥ शास्त्रादेवेति** । तथा च सति च तस्मिन्व्युत्पत्तिरित्यंशो नाङ्गीकृत इति नोक्तदोष इत्यर्थः । ननु पाशहस्तेति वाक्यस्य चेतरत्र व्युत्पत्तिर्न गृहीतेति न तद्बोधनमित्यतो वाक्यस्यापूर्वार्थप्रत्यायकत्वेन न व्युत्पत्त्यपक्षेत्याह **समासस्येति** ।

सु० — एवं तर्हि कुटिलिकेयं व्युत्पत्तिर्दुर्बला । साक्षात्कृते तु मृदादावेव प्रबला । ततश्च देवतानां मुख्यप्रतिपाद्यत्वमित्ययुक्तम् । किन्तु मृदादीनामेव । व्युत्पत्त्यनुसारित्वात्प्रतिपादनस्येत्यत आह व्युत्पत्तिरिति ।

अनु० — व्युत्पत्तिः सा बलवती मूर्खव्युत्पत्तितो हि यत् ।

सेति । या विदितशब्दशक्तिभिर्वृद्धैः शास्त्रलिङ्गतः संपादिता । मूर्खैरविदितशक्तिभिर्व्युत्पादिता व्युत्पत्तिर्मूर्खव्युत्पत्तिः । हिशब्दो हेतुसूचकः । न हि व्युत्पत्तिविषयस्य परोक्षत्वमपरोक्षत्वं च व्युत्पत्तेर्दौर्बल्ये प्राबल्ये च कारणम् । अपि तर्हि व्युत्पादकस्य (शब्द)-शक्तितत्त्वज्ञत्वम् । तदनुसारेण व्युत्पादनं प्राबल्ये, अन्यत्तु दौर्बल्ये । अन्यथैरण्डे साक्षात्कृते चन्दनशब्दस्य व्युत्पत्तिः प्रबला । लिङ्गतोऽपि ज्ञापिते चन्दने दुर्बलेति स्यात् । अस्ति चेदं कारणं प्रकृते । इतीयमेव प्रबला नेतरेति । यत् यस्मादे(वं )वैतत् तस्मात्तन्नामान एवैत इति पूर्वेण संबन्धः ।

शे० — व्युत्पत्तिरित्युत्तरवाक्यानर्थक्यमाशङ्क्य शास्त्रोक्तलिङ्गान्युपादाय देवतासु जाताया मृदादिशब्दव्युत्पत्तेर्दुर्बलत्वशङ्कानिरासार्थत्वान्न तदिति भावेन दुर्बलत्वेऽप्यविरोधात्किं तन्निरासेनेत्यतस्तत्प्रयोजनं दर्शयंस्तच्छङ्कामुत्थापयति एवं तर्हीति । शास्त्रलिङ्गान्युपादाय मृदादिशब्दानां यदि देवतासु व्युत्पत्तिस्तर्हीत्यर्थः कुटिलिकेति । देवतासाक्षात्कारमूलकत्वाभावादित्यर्थः ।। मृदादीनामेवेति । प्रसिद्धमृदादीनामेव मुख्यप्रतिपाद्यत्वमित्यर्थः । ततश्च युक्तिविरोधादप्रामाण्यमपरिहार्यमिति भावः । मूले सेत्यस्य वैयर्थ्यमाशङ्क्य मृदादिशब्दानां देवतासु व्युत्पत्तेः प्राबल्येऽपेक्षितहेतुसमर्पणार्थत्वान्न तदिति भावेन तदुपयोगितया तद्याचष्टे सेतीत्यादिना । मूले मूर्खत्वविशेषणानर्थक्यमाशङ्क्य व्युत्पत्तेर्दौर्बल्यहेतुसमर्पणार्थं तदिति भावेन विषयान्तरे मूर्खत्वस्य तद्व्युत्पादितव्युत्पत्तेर्दुर्बलत्वोपपादकत्वाभावात्तदुपयोगितया मूर्खपदं व्याख्याति मूर्खैरिति । सेत्युक्तार्थस्य व्युत्पत्तेः प्राबल्ये हेतुसूचकत्वात् हिशब्दस्य वैयर्थ्यमित्यभिप्रेत्याह हिशब्द इति । हेतुसूचको हेतुत्वसूचक इत्यर्थः । पूर्वपक्षिशङ्कितप्राबल्यदौर्बल्यहेतुनिषेधपूर्वकं सेत्याद्युक्तस्य विहितशक्तिभिर्व्युत्पादितत्वादेस्तत्प्रा ल्यादौ हेतुत्वमाह न हीति । ननु न प्रतिज्ञामात्रं साधकमन्यथा विपरीतप्रतिज्ञया विपर्ययस्यापि सिद्धिप्रसङ्गादित्यतो विनिगमकमाह अन्यथेति । यदिति यच्छब्दस्य तच्छब्दसापेक्षत्वात्साकाङ्क्षतया वाक्याभासतां परिहरति यद्यस्मादित्यादि ।

स० — हेतुमेव दर्शयति न हि व्युत्पत्तिविषयस्येत्यादिना । तथा च व्युत्पादकस्य शक्तितत्त्वज्ञत्वं तदनुसारेण व्युत्पादनं च हेतुरिति सूचितमिति भावः । उक्तहेतोः पक्षधर्मत्वमुपपादयति

**अस्ति चेदं कारणमिति ।** पृथिव्याद्यभिमानिदेवतासु या व्युत्पत्तिरस्ति तस्याः प्राबल्ये यत्कारणं व्युत्पादकस्य शक्तितत्त्वज्ञत्वं, तदनुसारेण व्युत्पादनलक्षणं तत्प्रकृतेऽस्तीत्यर्थः ॥ २-१-३ ॥

प०— मूर्खैरित्यनुवादः । अविदितशक्तिभिरिति व्याख्या । वस्तुतः शब्दस्य यत्र मुख्यवृत्तिस्तदनभिज्ञैरित्यर्थः ॥ **इदमिति** । शक्तितत्त्वज्ञानानुसारेण शक्तिव्युत्पादनरूपं कारणमित्यर्थः । देवतादौ शक्तिव्युत्पादकस्य सूत्रकारादेः शक्तितत्त्वाभिज्ञत्वादिति भावः । **इतिशब्दस्य, इति** हिशब्दसूचितहेतोरिति हेत्वर्थत्वं ध्येयम् ।

श्री०— तदेव दर्शयति **न हीति** । **विषयस्य** धर्मिणः । **लिङ्गतो** गन्धादिरूपात् ।

सु०— **नन्वेतदयुक्तम् । यद्युक्तिविरोधेन वेदस्य स्वार्थात्प्रच्यावनम् । तस्य सकलप्रमाणापेक्षया च प्राबल्यात् । यत्कचित्स्वार्थात्प्रच्यावनं तदुपजीव्यविरोध एव । न चात्र** तथेत्यत आह दृढेति ।

अनु०— दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृशः ॥ २-१-३ ॥

**विरोधे वेदस्येति शेषः । अयं भावः । श्रुतेरर्थप्रच्यावनस्यायुक्ततां वदतः कोऽभिसन्धिः । किं विरुद्धयोरेवाप्रामाण्यमुतागमविरुद्धाया युक्तेरप्रामाण्यम् । नाद्यः । वस्तुविकल्पप्रसङ्गात् । न द्वितीयः । व्याप्तिपक्षधर्मतोपेतायास्तदयोगात् । कथं तर्ह्युपजीव्यविरोधे त्वित्याद्युक्तमिति चेत् । उपलक्षणत्वेनेति ब्रूमः । उपजीव्यं खलु नोपजीव्यमित्येव बाधकम् । किन्तु प्रबलत्वेन । तद्यदि युक्त्यन्तरस्यापि स्यात्तदा कुतो न बाधकतेति । यद्वाऽधिकरणोपाधिमनेनाह । न केवलमत्रोदाहरणे । किन्तु सर्वत्रापि वेदवाक्ये प्रमितव्याप्तिपक्षधर्मतावद्युक्तिविरोधे सतीदृश एवान्यार्थस्वीकारेण विरोधपरिहारो न्यायः प्रकारो द्रष्टव्य इति ॥ २-१-३ ॥**

शे०— दृढयुक्तीत्युत्तरवाक्ये युक्तेर्व्याप्तिपक्षधर्मताविशिष्टस्वरूपदृढत्वप्रतिपादनानर्थक्यमाशङ्क्य प्रकृतयुक्तिविरोधस्य आगमार्थप्रच्यावनहेतुत्वोपपादनार्थत्वान्न तदिति भावेन युक्तिविरोधमात्रस्यैव तत्प्रच्यावकत्वहेतुत्वसम्भवात्किं तदुपदर्शनेनेत्यतो युक्तिविरोधमात्रस्य तत्प्रच्यावकत्वासामर्थ्यं दर्शयितुं शङ्कते **नन्विति** ॥ युक्तेः श्रुतितो दुर्बलत्वात्तद्बाधेन प्रसिद्धस्यैव मृदादेर्वक्तृत्वादिकमेव श्रुत्यर्थोऽस्तु किमर्थान्तरकल्पनयेति भावेनाह **तस्येति** ॥ **प्राबल्यादिति** । प्राबल्यमागमस्यैवेत्याद्युक्तेरिति भावः । **कथं** तर्हि 'तत्त्वमसि, प्राणा वा अणवो, जनितोत विष्णोरि'त्यादिवेदस्य प्रत्यक्षानुमानविरोधेन स्वार्थप्रच्यावनं, तत्रापि वेदविरोधेन ततो दुर्बलप्रत्यक्षानुमानयोरेवाप्रामाण्यस्य वक्तुं शक्यत्वादित्यतस्तत्र प्रत्यक्षानुमानयोरागमं प्रत्युपजीव्यत्वेनागमापेक्षया प्रबलत्वेन तद्विरोधात्तदुपपत्तिरित्याह **यत्क्वचिदिति** ॥

**उपजीव्यविरोध एवेति** । 'उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पने'ति पूर्वमुक्तेरिति भावः । तर्ह्यत्राप्युपजीव्ययुक्तिविरोधादेव वेदस्यान्यार्थकल्पनेति किन्न स्यादित्यतो भवेदेवं यदि युक्तेरत्रोपजीव्यत्वं स्यान्न चैवम् । आदिकालीनमृदादेः श्रुत्येकगम्यत्वेन युक्तेर्धर्मिग्राहकत्वाभावात् । न चेदानीन्तनमृदादिकारणत्वेनादिकालीनमृदाद्यनुमानसम्भवेन युक्तेरपि धर्मिग्राहितयोपजीव्यत्वान्न श्रुत्येकसमधिगम्यत्वमिति वाच्यम् । गोमयतण्डुलकणादिविजातीयजन्यानामपि वृश्चिकत्वताण्डूलीयकत्वादिजातिमत्त्वदर्शनेन तत्र व्यभिचारेणोक्तानुमानानवकाशात् । तथा च प्रकृतयुक्तेरनुपजीव्यत्वान्न स्वार्थप्रच्यावकत्वमित्याशयेनाह **न चात्रेति** । ननु चैवं युक्तेर्दृढतयाऽऽगमाबाध्यत्वेऽप्युभयोरपि प्रामाण्योपपत्तेर्नागमार्थप्रच्यावकत्वमनुपजीव्यत्वात्अन्यथा 'उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पाने'तिप्रगुक्तिविरोधादित्यत आह **अयमिति** ॥ **व्याप्तिपक्षधर्मतोपेतताया इति** । व्याप्तिपक्षधर्मतोपेततया निरवकाशाया इत्यर्थः ॥ **तर्हीति** । निरवकाशयुक्तिविरोधस्याप्यागमार्थप्रच्यावकत्व इत्यर्थः । ननु च सूत्राणां विश्वतोमुखत्वेन विशेषमात्रनिष्ठत्वानुपपत्त्या समाने विषये न्यायसञ्चारकत्वादवच्छेदकोपाध्यनुक्तौ चेदमस्योदाहरणमिदं नेति सूत्रोक्तन्यायसञ्चारविषयत्वतदविषयत्वविवेकासम्भवात्तदुपपत्तये निर्णीतव्यावच्छेदकोपाधेरवश्यवक्तव्यत्वात्तदनुक्त्या भाष्ये प्रसक्तन्यूनतापरिहारायावच्छेदकोपाध्यभिधायकतयाऽप्येतदेव योजयति **यद्वेति** । युक्तेर्दृढत्वं न श्रुत्यप्रामाण्यं विनाऽनुपपन्नत्वम् । सिद्धान्तदशायामिहाप्यभावात् पूर्वपक्षदशायां तु पूर्वत्रापि भावात् किन्तु व्याप्तिपक्षधर्मतावत्त्वमेवेत्यभिप्रेत्याह **प्रमितेति** । अत्र च व्याप्तिपक्षधर्मतावत्त्वं सिद्धान्तदशायामपि श्रुतिप्रतीतार्थाभावेनैव सह हेतोर्विवक्षितम् । न त्वभिप्रेतार्थाभावेनापि तत् । विवक्षितं च दृढत्वं प्रकृतयुक्तेरेव जडस्य कर्मज्ञानेन्द्रियादिहीनस्य वक्तृत्वकामयितृत्वादेरनुपपन्नत्वेन जडस्य मृदादेर्वक्तृत्वादिरूपप्रतीतार्थात्यागे जडत्वादेरनुपपद्यमानत्वात् । न तु पूर्वत्रापि । कारीर्यादेर्वृष्ट्यादिहेतुत्वरूपप्रतीतार्थात्यागेऽपि विसंवादादेर्वैगुण्यादिनोपपन्नत्वादिति द्रष्टव्यम् ॥ २-१-३ ॥

प०— **प्राबल्यादिति** । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इत्युक्तेरिति भावः ॥ **यत्कचिदिति** । 'सर्वं विलाप्यान्तस्तमसि विलीन' इत्यादावित्यर्थः ॥ **इत्याद्युक्तमिति** । पूर्वाधिकरणे 'उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पने'त्याद्युक्तमित्यर्थः ॥ **इत्येव बाधकमिति** । अन्यथा 'इदं रूप्यम्' ॥ इति भ्रमः 'नेदं रूप्यम्' इति बाधबोधस्य बाधकः स्यादिति भावः ॥ **अनेनेति** । दृढयुक्तिविरोधेत्वित्यनेनेत्यर्थः **सर्वत्रापीति** । तथाच पूर्वाध्याये प्रत्यधिकरणं पूर्वपक्ष्युक्तयुक्त्यपेक्षया सिद्धान्तीययुक्तीनां व्याप्त्यादिमत्त्वेन दृढत्वादापाततः पूर्वपक्षदिशा प्रतीतार्थप्रच्यावनमेतदधिकरणन्यायेनेत्युक्तं भवति । न्याय इत्यस्यार्थः प्रकार इति ॥ २ । १ । ३ ॥

श्री० — **तस्य** वेदस्य । तथा उपजीव्यविरोध इत्यर्थः । **तत्** प्राबल्यम् ॥ **कथं तर्हीति** । 'उपजीव्यविरोधे तु नास्याम्तन्मानता भवेदि'ति पूर्वमुपजीव्यागमविरोध एव श्रुतेः प्रतीतार्थप्रच्यावनस्योक्तत्वात् युक्तिविरोधेन तदुक्तौ पूर्वोक्तविरोधः स्यादित्यर्थः ॥ **उपलक्षणत्वेनेति** । दृढयुक्तिविरोधे प्राप्तेऽपि वेदस्य प्रतीतार्थप्रच्यावनं कार्यमित्यपि द्रष्टव्यमित्यर्थः । तदुपपादयति **उपजीव्यं खल्विति** । **तत्** प्राबल्यम् ॥ **युक्त्यन्तरस्येति** । अनुपजीव्यस्यापीत्यर्थः ॥ **परिहारो न्याय इति** । परिहाररूपो न्यायः प्रकार इत्यर्थः ॥ २-१-३ ॥

सु० — ॥ ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥ **ननु च(।)नारम्भणीयमेवेदमधिकरणम् 'न विलक्षणत्वादि'त्यनेनैव वेदस्य सकलयुक्तिविरोधानां परिहृतत्वात्, दृढयुक्तिविरोधपरिहारस्य चाभिमान्यधिकरणन्यायसिद्धत्वात्; इत्यतो गतार्थतां परिहरन्नधिकरणस्योपाधिम(प्य)ाह** अल्पवाक्येति ।

**अनु० — ॥ ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥**

अल्पवाक्ययुता युक्तिर्बहुलैव विरोधिनी ॥
यत्र तत्र कथं वस्तुनिर्णयः स्यादितीरिते ॥
विरोधियुक्तिबाहुल्यादिति न्यायो विनिश्चितः ॥

यत्र यदा **वेदस्य वाक्ययुता युक्तिर्विरोधिनी स्यात्**, तत्र तदा, **वस्तुनिर्णयः कथं स्यात् इति पूर्वपक्षिणेरिते सति तद्विरोधियुक्तीनां बाहुल्यात् प्राबल्यात् वस्तुनिर्णयो भवेदिति सिद्धान्तः । इत्येषोऽत्राधिकरणे न्यायो विनिश्चितः ।**

शे० — ॐ **असदिति चेन्न प्रतिषेधमात्रत्वात्** ॥ ॐ ॥ नन्वल्पवाक्ययुतेत्युत्तरभाष्यमनर्थकम् । न च पूर्वाधिकरणीयपूर्वपक्षसिद्धान्तन्यायापेक्षयैतदधिकरणीयपूर्वपक्षसिद्धान्तन्याययोर्भेदोपदर्शनार्थं तदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न च गतार्थताशङ्कानिरासस्तत्प्रयोजनमिति वाच्यम् । निरसिष्यमाणविरोधस्य प्रागपरिहृतत्वेन गतार्थताशङ्काया एवानुदयेन तन्निरासार्थत्वानुपपत्तेरित्यतो गतार्थताशङ्कोत्थापनपूर्वकं तन्निरासार्थं न्यायवैषम्योपदर्शनपरतयोत्तरभाष्यं योजयितुं तच्छङ्कां तावदुत्थापयति **नन्विति** ॥ **उपाधिमप्याहेति** । अन्यथाऽस्येदमेवोदाहरणमिदं नेति विवेकानुपपत्तेरिति भावः । साकाङ्क्षतया वाक्याभासत्वशङ्कापरिहारार्थमपेक्षिताध्याहारप्रदर्शनपूर्वकं न्यायवैषम्योपदर्शकतया भाष्यं व्याचष्टे **यत्रेत्यादिना** । बाहुल्यादित्यस्यैव व्याख्यानं **प्राबल्यादिति** ।

प० **असदिति चेत्** । अधिकरणोपाध्युक्तौ बीजमाह **ननु चेत्यादीना** ॥ **परिहारस्य चेति** । प्रतीतार्थप्रच्यावनेनाविरुद्धार्थान्तरकल्पनरूपस्येत्यर्थः । अल्पपदस्य कृत्यं अग्रे विवक्षुः वाक्ययुतेत्येवानूदितवान् । बाहुल्यादित्यनुवादः, प्राबल्यादिति व्याख्या । वस्तुनिर्णयपदस्यावृत्तिं, भवेदित्यस्यानुवृत्तिं च मत्वाह **वस्तुनिर्णयो भवेदितीति** ॥ अत्रेति शेषः । तस्यार्थः अधिकरण इति ।

या० — ॐ **असदिति चेन्न प्रतिषेधमात्रत्वात्** ॐ ॥ बाहुल्यादित्यनूद्य प्राबल्यादिति व्याख्यानम् ।

सु० — **एतदुक्तं भवति । पूर्वाधिकरणे प्रत्यक्षादिगृहीतव्याप्त्यादिमत्त्वेन दृढया युक्त्या विरुद्धत्वाद्वेदैकदेशस्याप्रामाण्ये सति तद्दृष्टान्तेन ब्रह्मणो जगत्कारणत्वाभिधायकस्यापि वेदस्य वेदत्वादप्रामाण्ये तदसिद्धिरिति पूर्वः पक्षः । सिद्धान्तस्तु युक्तिवद्वेदस्याप्यपौरुषेयत्वेन दृढत्वात् वास्तवविरोधस्यानुपपत्तेः अविरुद्धार्थकल्पनोपपत्तेः नाप्रामाण्यमिति ।**

**इह पुनर्वेदवाक्यान्तरसंवादेन सुदृढया युक्त्या विरुद्धत्वाद्ब्रह्मणो जगत्कारणत्वाभिधात्रीणां श्रुतीनामेव तत्र प्रामाण्यानुपपत्तौ प्रथमाध्यायोक्तवस्तुनिर्णयो न भवेदिति पूर्वः पक्षः । सिद्धान्तस्तु । पूर्वपक्षिणोत्प्रेक्षिताभ्यः श्रुतिसहितयुक्तिभ्योऽपि प्रबलानां तद्विरोधियुक्तीनां सद्भावात्तद्विरुद्धानां पूर्वपक्षश्रुतियुक्तीनामप्रामाण्यादुपपन्नतरः प्रागुक्तोऽर्थ इति ।**

**अतः पूर्वोत्तरपक्षन्याययोरगतत्वेन युक्तोऽधिकरणारम्भ इति । एतच्चानुपदमेवोदाहरणेन प्रपञ्चयिष्यामः ।**

शे० — नन्वेतदधिकरणीयपूर्वपक्षसिद्धान्तन्यायोपदर्शनमात्रेण न न्यायभेदसिद्धिः भेदस्य ससम्बन्धिकपदार्थत्वेनाधिकरणद्वयसम्बन्धिपूर्वपक्षसिद्धान्तन्यायरूपसम्बन्धिद्वयनिरूपणाधीननिरूपणत्वात् इत्यततः तदुभयोपदर्शनेन न्यायभेदमुपपादयति **एतदुक्तं भवतीति** ॥ **एतच्चेतीति** । ब्रह्मणो जगत्कारणत्वाभिधायकश्रुतीनां वेदवाक्यसंवादात्सुदृढया युक्त्याऽविरुद्धत्वादिकमित्यर्थः ॥ **प्रपञ्चयिष्याम इति** । 'अयमस्यार्थ' इत्यादिनेति शेषः ।

स० — **तदसिद्धिरिति** । जगत्कारणत्वासिद्धिरित्यर्थः । **प्रागुक्त इति** । जगत्कारणत्वादिलक्षणे इत्यर्थः ।

प० — तावता कथमगतार्थतेत्यत आह **एतदुक्तं भवतीति** । **तदसिद्धिः** जगत्कारणत्वासिद्धिः ॥ **सुदृढयेति** । ननु (यद्यपि) प्राचीनयुक्तिर्व्याप्त्यादिमत्त्वात् दृढा । इयं तु तद्धीनत्वाददृढा ।

अन्यत्रानुपक्षीणत्वे सतीतिवक्ष्यमाणयुक्तेर्व्याप्त्यादिमत्त्वेपि अविरोधित्वात् । विरोधिन्योस्तु भावत्वयुक्तिपरिशेषरूपयुक्त्योः क्रमाद्व्याप्तिपक्षधर्मतयोरभावादिति चेत्सत्यमेतत् तथापि वेदवाक्यासंवादसंवादाभ्यां पूर्वोत्तराधिकरणयुक्त्योः दृढत्वादृढत्वे ध्येये । श्रुतिसंवादेनात्रत्ययुक्तीनां व्याप्त्यादिमत्त्वमावश्यकमिति तात्पर्यात् । एतेन सोपानारोहणन्यायेन युक्तिदृढयुक्तिसुदृढयुक्तिविरोधानां क्रमा'न्नविलक्षणत्वादि'त्याद्यधिकरणत्रयेण निरासादस्य संगतिरपि सूचिता ॥ **श्रुतिसहितयुक्तिभ्य इति** । विश्वप्रागभावस्य कारणत्वमात्रसाधिका युक्तिरेका । वियदादेर्लये अभावसाधिका भावत्वयुक्तिरन्या । विश्वप्रागभावस्य कर्तृत्वसाधिका परिशेषयुक्तिरपरेति युक्तिभ्य इत्युक्तम् । दूरे वक्ष्यमाणाकर्तृकत्वजीवकर्तृकत्वसाधकयुक्तयो ग्राह्याः । संवादिश्रुतिरग्रे व्यक्ता ॥ **तद्विरोधियुक्तीनामिति** । निषेधैकस्वरूपत्वकार्यत्वविनाशत्वादियुक्तीनामित्यर्थः ॥ **अप्रामाण्यादिति** श्रुतेः प्रतीतार्थे युक्तेः सर्वथा इति ध्येयम् । अत एवैतन्न्यायेन पत्यादिशब्देभ्य इत्यत्र ब्राह्मणादिश्रुतिब्रह्मलिंगान्यथानुपपत्तिरूपयुक्त्या 'स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्वस्य रजसो ब्रह्मेशानो नाम तमस' इति वेदवाक्यान्तरसंवादिन्या विरिंचब्रह्माभेदरूपप्रतीतार्थप्रच्यावनेनार्थान्तरकल्पनं ततोपि प्रबलसिद्धान्तीययुक्त्यागमबलात् कृतं ध्येयम् ।

**सु० — नन्वेवं सति श्रुतीनां श्रुतियुक्तिविरोधपरिहारोऽस्याधिकरणस्यार्थ इत्युक्तं भवति । सोऽयं चतुर्थपादार्थ एवेति तत्रैवास्याधिकरणस्योपनिबन्धनमुचितम् । नात्रेत्यतोऽस्य ततोऽपि वैलक्षण्यं दर्शयितुमुक्तमल्पेति, बहुलेति च । अत्राल्पत्वमुपसर्जनत्वम्, बहुलत्वं (च) प्रधानत्वमिति ज्ञातव्यम् । एवशब्दस्तु 'न गुणप्रधानभावव्यत्यासश्चतुर्थपाद इवे'त्यर्थे ।**

शे० — ननु वाक्ययुतयुक्तिविरुद्धत्वोक्त्यैव न्यायभेदोपदर्शनेन गतार्थशङ्कानिरासससिद्धेर्भाष्ये श्रुतियुक्त्योरल्पत्वबहुलत्वरूपविशेषणोक्तिर्व्यर्थेत्यतस्तन्मात्रेण न्यायभेदोपदर्शनेन विशेषणोपादानस्य गतार्थताशङ्कानिरासार्थत्वासम्भवेऽपि वाक्ययुतयुक्तिविरोधनिरासकतया प्राप्तचतुर्थपादान्तर्भावशङ्कानिरासकत्वान्न तस्यानर्थक्यमिति भावेन तच्छङ्कानिरासकतया तद्योजयितुं चतुर्थपादान्तर्भावशङ्कामुत्थापयति **नन्वेवं सतीति** । नन्वल्पत्वबहुत्वयोश्चतुर्थपादीयविरोधिश्रुतियुक्तिसाधारणत्वात्कथं चतुर्थपादान्तर्भावशङ्कानिरासकत्वमपीति वैयर्थ्यमेवेत्यतोऽत्राल्पत्वबहुलत्वयोः 'स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः' इत्युत्तरानुव्याख्यानानुरोधेन गुणत्वप्रधानत्वरूपत्वेन यथाश्रुतार्थत्वाभावादुक्तरूपयोश्च तयोश्चतुर्थपादीयश्रुतियुक्तिसाधारणत्वाभावादुपपन्नं तत्रान्तर्भावशङ्कानिरासकत्वमिति न वैयर्थ्यमित्यभिप्रेत्य प्रकृतोपयोगितयोत्तरानुव्याख्यानानुरोधेनाल्पत्वबहुत्वे व्याख्याति **अत्राल्पत्वमित्यादिना** । मूले एवशब्दस्य वैयर्थ्यपरिहाराय प्रकृतोपयोगि-

तया तदर्थमाह **एवशब्दस्त्विति** । चतुर्थपादे युक्तेरुपसर्जनत्वं श्रुतेश्च प्रधानत्वमिति यथा श्रुतियुक्त्योर्गुणप्रधानभावो न तथेह श्रुतियुक्त्योः येन तत्रान्तर्भावः स्यादित्यर्थप्रदर्शनाय मूले एवकार इति भावः ।

**प०** — 'स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः' इत्यादेरुत्तरपादोपक्रमे वक्ष्यमाणदिशा अर्थमाह **अत्राल्पत्वमिति** ।

**या०** — **उपसर्जनत्वमिति** । श्रुतिगुणयुक्तय इति वक्ष्यमाणत्वादिति भावः ।

**सु०** — **ननु श्रुतियुक्तिभ्यां पूर्वपक्षिते कथं प्रबलयुक्तिमात्राश्रयेण सिद्धान्तः । कथञ्चित्प्रतिपक्षतामात्रसंभवादित्यत उक्तं विवृण्वन्नाह** युक्तेस्त्विति ।

**अनु०** — युक्तेस्तु युक्तिबाहुल्यमागमादागमस्य च ॥
कथं न निर्णयं कुर्यादिति

**पूर्वपक्षयुक्त्यपेक्षया विरोधियुक्तेर्बाहुल्यम् । तथा पूर्वपक्षागमापेक्षया विरोध्यागमस्य च बाहुल्यं कथं निर्णयं न कुर्यात् । पूर्वपक्ष्युत्प्रेक्षितयुक्त्यागमाभ्यां प्रबलौ विरोधियुक्त्यागमौ तद्बाधया वस्तुव्यवस्थां कुरुत इत्यर्थः । कुर्यादिति प्रत्येकं संबन्धः । न केवलं सिद्धान्ते प्रबलयुक्तिमात्रं, किन्नाम प्रबलागमोऽप्यस्तीति भावः । इति अतः, अधिकरणारम्भः संभवतीति शेषः । अधिकरणोपाधिव्युत्पादनसमाप्तिद्योतको वा इतिशब्दः ।**

**शे०** — न्यायभेदोपपादनेनाधिकरणारम्भस्य पूर्वेणैव सिद्धेरुत्तरवाक्यस्यानर्थक्यमित्यत उक्तार्थविवरणार्थत्वान्न तदिति भावेन किं तेनापीत्यतस्तत्र प्रसक्तानुपपत्तिपरिहारार्थं तदित्याशयवांस्तत्रानुपपत्तिशङ्कामुत्थापयति **नन्विति ॥ प्रबलयुक्तीति** । प्रबलयुक्तेः पूर्वपक्षेऽपि सत्त्वादिति भावः । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु पूर्वपक्षयुक्तेः सिद्धान्तयुक्तिवत् श्रुतिसंवादेन च प्राबल्यादुभयथा प्रबलयुक्तिविरुद्धसिद्धान्तयुक्तेरप्रामाण्यस्यैव प्राप्तत्वान्न सत्प्रतिपक्षत्वमपीति भावेन कथञ्चिदित्युक्तम् । अभ्यस्तयुक्त्यागमशब्दानामेकार्थत्वभ्रान्तिनिरासाय प्रकृताक्षेपपरिहारोपयोगितयाऽर्थभेदं वदन्वाक्यं योजयति **पूर्वपक्षेति** । बाहुल्यमित्यस्यानुकर्षणार्थश्चकार इत्यभिप्रेत्य तमनूद्य व्याचष्टे **च बाहुल्यमिति** । ननु युक्त्यागमयोरेव निर्णयकारित्वात्तद्बाहुल्यस्य च निर्णयकारित्वाभावात्कथं मूले निर्णयकारित्वोक्तिरित्यतो निर्णयकारित्वाभावेऽपि तत्प्रयोजकत्वात्प्रयोजकप्राधान्यविवक्षया तदुपपत्तिरित्यभिप्रेत्य वाक्यार्थमाह **पूर्वपक्ष्युत्प्रेक्षितेति** । युक्त्यागमयोरुभयोरपि निर्णयकारित्वात्कथमेकवचनान्तं कुर्यादिति क्रियासम्बन्ध इत्यतः पूर्वपक्ष्युत्प्रेक्षितयुक्त्यपेक्षया प्रबला युक्तिः कथं न निर्णयं कुर्यात्तदुत्प्रेक्षितागमापेक्षया प्रबल आगमः कथं न निर्णयं कुर्यादिति प्रत्येकं सम्बन्धाश्रयणान्नानुपपत्तिरित्याह **कुर्यादिति प्रत्येकं सम्बन्ध इति** । नन्वस्तु पूर्वपक्ष्युत्प्रेक्षितयुक्त्यागमाभ्यां प्रबलयुक्त्यागमयोस्तद्बाधया वस्तुव्यवस्थापकत्वमिति वस्तुस्थितिः । तावताऽपि यत्र पूर्वपक्ष्युत्प्रेक्षितयुक्त्यागमाभ्यां प्रबलौ युक्त्यागमौ सिद्धान्तसाधकौ स्तः, तत्र

ताभ्यां तद्बाधया वस्तुव्यवस्थापनसम्भवप्राप्तावपि प्रकृते प्रबलयुक्तिमात्रस्य सिद्धान्तसाधकत्वेन युक्त्यागमयोस्तदभावान्न प्रबलयुक्तिमात्रेण युक्त्यागमबाधया वस्तुव्यवस्थापनं कर्तुं शक्यम्; पूर्वोक्तरीत्या कथञ्चित्प्रतिपक्षमात्रस्यैव प्राप्तेरित्यतोऽभिप्रायमाह **न केवलमिति**। मूले इतिशब्दस्यानर्थक्यमाशङ्क्यापेक्षितशेषपूरणेन सङ्गतिमाह **इतीति**। अत इत्यादिशेषपूरणेऽपरितोषात्पक्षान्तरमाह **अधिकरणेति**।

**स०**— सिद्धान्तश्रुतेः स्वभावप्रयुक्तप्राबल्यसत्त्वेऽपि पूर्वपक्षश्रुतियुक्त्योर्बहुत्वप्रयुक्तप्राबल्यस्याधिकस्याऽपि सत्त्वाद्बाध एव संभवतीत्यभिप्रायेण कथञ्चिदित्युक्तम्।

**प०**— बाहुल्यमिति पदद्वयस्यापि प्राबल्यमित्यर्थः। इतिशब्दो हेताविति भावेनाह **इत्यत इति**।

**श्री०**— श्रुतियुक्तिभ्यां पूर्वपक्षिते प्रबलयुक्तिमात्रस्यागमासहकृतस्य सत्प्रतिपक्षताऽपि नास्तीत्यभिप्रेत्य **कथञ्चिदित्युक्तम्**।

**सु०**— **तदिदमुदाहरणनिष्ठं व्युत्पादयितुं पूर्वपक्षमनुवदति सूत्रकारः** असदिति चेदिति। **अयमस्यार्थः। न ब्रह्मणो जगत्कर्तृत्वं युक्तम्। प्रमाणाभावात्। 'सदेव सोम्येदमग्र आसीत्तत्तेजोऽसृजते'त्यादिश्रुतिरस्तीति चेन्न। तस्या युक्तिविरुद्धत्वेन भवदभिमतार्थे प्रामाण्याभावात्। तथा हि। महाप्रलये तावदुत्पत्स्यमानकार्यप्रागभावोऽवश्यमङ्गीकरणीयः। अन्यथा सर्गादौ कार्योत्पादायोगात्। न चास्यान्यत्र चरितार्थतोपलभ्यते। ततश्च स एव सकलकार्यकारणं भविष्यति।**

**अयमत्र प्रयोगः। महाप्रलयवर्ती कार्यप्रागभावो महदादिकार्यकारणं भवितुमर्हति, अन्यत्रानुपक्षीणत्वे सति नियमेन तत्पूर्वभावित्वात्; योऽन्यत्रानुपक्षीणत्वे सति नियमेन य(तः)त्पूर्वभावी, स तस्य कारणम्, यथा कुविन्दः पटस्येति॥ महदादिकं वा प्रागभावकार्यम् अनन्यथासिद्धनियतपश्चाद्भावित्वात्, यत् यदनन्यथासिद्धनियतपश्चाद्भावि तत् तत्कार्यम्। यथा पटः कुविन्दस्येति।**

**नन्वत्र जगत्प्रागभावस्य जगत्कारणत्वमात्रं वा साध्यम्, अन्ययोगव्यवच्छेदेन वा। आद्येऽर्थान्तरता, प्रागभावस्य कारणत्वेऽपि ब्रह्मकारणतासंभवात्। द्वितीये व्याप्त्यभावः। न हि 'यो यदपेक्षया पूर्वभावी, स एव तत्कारणं, नान्यः' इति नियमोऽस्ति। ततः प्रागभावस्य जगत्कारणत्वेऽपि तत्समानन्यायानामीश्वरादीनामपि तत्कारणत्वमङ्गीकार्यमिति। मैवम्। स्यादेतदेवम् यदीश्वरादीनां प्रलये सत्त्वमेव स्यात्। न चैतदस्ति। सिद्धान्तिना कारणत्वेनाशास्यमानमीश्वरादिकं प्रलयेऽसद्भवितुमर्हति भावत्वान्महदादिकार्यवदिति युक्तिवि(रुद्धत्वात्)-**

रोधः । एवञ्च(श्चेदी ईश्वरादीनां प्रलयेऽसत्त्वसिद्धौ प्रागभावस्य कारणत्वमात्रसाधनेऽपि तस्यैव कारणत्वमिति सिध्यति । ननु च यत्कार्यं तत्सकर्तृकमिति नियमान्महदादिकर्तृत्वेनेश्वरोऽवश्यमङ्गीकरणीयः । न । प्रलये तत्सत्ता(त्वा)ऽभावस्य प्रमितत्वेन प्रागभावस्यैव जगत्कर्तृत्वोपपत्तेः । न चैतदनुमानजातमुदाहृतश्रुतिविरुद्धत्वेनाप्रमाणमिति साम्प्रतम् । 'असदेवेदमग्र आसीत् । तदसदेव सन्मनोऽकुरुत । असतः सदजायते'त्यादिश्रुतिसंवादित्वेन श्रुतिमात्रतः प्राबल्यात् । प्रबलयुक्तिविरुद्धायाश्च श्रुतेः स्वार्थपरित्यागस्यातीताधिकरणे स्थितत्वात् । प्रागभावस्यापि स्वरूपसत्त्वादिना सदेवेत्यादिप्रयोगविषयत्वोपपत्तेः ।

ननु 'एतेन सर्वे' इत्यसदादिशब्दानां ब्रह्मार्थत्वमुक्तम् । तत्किं शब्दानामन्यत्र शक्तिरेव नास्ति, किं वा श्रुतेस्तत्र तात्पर्याभावः । नाद्यः, समाकर्षाङ्गीकारात् । न द्वितीयः, युक्त्युपेतायास्तत्र तात्पर्योपपत्तेः । तथाऽपि प्रागभावस्यैव कारणत्वं कर्तृत्वं च न क्वाप्युपलब्धमिति चेन्न । अलौकिकार्थस्य यथागमं ग्राह्यत्वात् । सन्ततोत्पत्तिप्रसङ्गस्तु ब्रह्मवादिनोऽपि समानः । इच्छादिकारणानां कादाचित्कत्वेन तत्समाधानं ममापि समानम् । अत एव श्रुतिराह 'तन्मनोऽकुरुते'ति । तत् तस्मात्, तत्तत्प्रागभावस्यैव तत्तत्कर्तृत्वादुक्तमयुक्तमिति । तदिदमुक्तम् असदिति । अभावः श्रुत्या जगत्कर्तृत्वेनोच्यते । अनुमीयते च तथा । तस्मात्स एव जगत्कर्तेति । अत्रासच्छब्दो भावसाधनः श्रुत्यनुगमार्थमभावे प्रयुक्तः ।

शे० — नन्वसत्कारणं न हीत्याद्युत्तरभाष्यमनर्थकम् । न चैतत् 'न' इति सिद्धान्तांशव्याख्यानरूपत्वान्नानर्थक्यमिति वाच्यम् । असत्कार्यमित्युत्तरानुव्याख्यानानुसारेणासदिति सौत्रखण्डस्य भावत्वेनेश्वराद्यसत्त्वस्थित्या प्रागभावकर्तृताया श्रुत्यनुमानप्रमेयत्वप्रतिषेधार्थकस्यास्य 'न'इति सिद्धान्तांशव्याख्यानत्वायोगादित्यतो न केवल'मसदि'ति चेदिति सौत्रखण्डस्येश्वराद्यसत्त्वसाधकत्वं किन्नाम प्रागभावकर्तृत्वसाधकत्वमपीति नास्य तद्व्याख्यानत्वानुपपत्तिरिति भावेन सूत्रखण्डं द्वेधा योजयितुं तत्प्रसञ्जयति **तदिदमित्यादिना** । सर्वत्रैशिष्ट्ये विष्णोर्युक्तिविरोधनिरासकत्वादस्याधिकरणस्यैतदध्यायान्तर्भावमुपपादयितुं तथा पूर्वपक्षमारचयति **अयमर्थ इत्यादिना** । काऽसौ विरोधिनी युक्तिरित्यतस्तामुपदर्शयितुं करिष्यमाणानुमाने आश्रयासिद्धिहेतुविशेषणासिद्धी तावत्परिहरति **महाप्रलय इत्यादिना** ॥ **कार्योत्पादायोगादिति** । प्रागसतः सत्तासम्बन्धस्यैवोत्पादशब्दार्थत्वादिति भावः । करिष्यमाणानुमाने हेतुविशेषणासिद्धिं परिहरति **न चास्येति** । अस्तु उत्पत्स्यमानकार्यप्रागभावस्य महाप्रलयेऽवस्थानमन्यत्र अचरितार्थत्वं च, किमेतावतेत्यतः पटं प्रति कुविन्दस्येवानन्यथासिद्धनियतपूर्वक्षणवृत्तित्वादुत्पत्स्यमान-

कार्यप्रागभावस्योत्पत्स्यमानसकलकारणत्वप्राप्तिरित्याह **ततश्चेति** । महदादिप्रागभावस्य पक्षत्वात्तदन्यस्य चोक्तसाधनोपपन्नस्य महदादिकारणस्यासिद्ध्या दृष्टान्ताभावेन विशेषव्याप्त्यसम्भवात्सामान्यव्याप्तिमाह य इति ॥ **नियमोऽस्तीति** । कुविन्दादौ व्यभिचारादिति भावः ॥ **तत्समानन्यायानामिति** । प्रागभाववदनन्यथासिद्धनियतपूर्ववर्तिनामित्यर्थः ।

**प्रागभावस्यैव जगत्कर्तृत्वोपपत्तेरिति** । ईश्वरतत्कर्तृत्वकल्पनापेक्षया क्लृप्तस्य प्रागभावस्य कर्तृत्वमात्रकल्पनस्यैव लघुत्वादिति भावः ॥ **उदाहृतेति** । सदेव सोम्येदमग्र आसीदित्यादिरूपेत्यर्थः । श्रुतियुक्त्योः श्रुतेः स्वभावप्राबल्यादिति भावः । **साम्प्रतं** युक्तमित्यर्थः । ततश्च न तद्विरोधेन सदेव सोम्येत्यादिश्रुतेरस्मदभिमतार्थे प्रामाण्याभाव इति भावः ॥ **संवादित्वेनेति** । उक्तानुमानजातस्येति शेषः । ततश्च युक्तिविरोधमात्रस्य श्रुतेः स्वार्थान्प्रच्यावनासमर्थत्वेऽपि प्रबलयुक्तिविरोधस्य तत्समर्थत्वान्न सदेवेत्यादेर्भवदभिमतार्थे प्रामाण्यमिति भावः । युक्तिविरोध इव प्रबलयुक्तिविरोधोऽपि न तत्र समर्थ इति वदन्तं प्रति तथा सति व्याप्तिपक्षधर्मतोपेततया प्रबलयुक्तिविरोधेन मृदब्रवीदित्यादिवचनानां प्रतीतार्थे प्रामाण्याभावो न स्यादित्यभिप्रेत्य तत्रेष्टापत्तिं परिहरति **प्रबलेति** । अतीताधिकरणेऽभिमानिव्यपदेश-स्त्वित्यधिकरण इत्यर्थः । ननु मृदब्रवीदित्यादिवचनानां प्रबलयुक्तिविरोधेन प्रतीतार्थत्यागो युक्तः । मृदाद्यभिमानिदेवतारूपाबाधितार्थान्तरमादायार्थत्वोपपत्त्या प्रामाण्याव्याहतेः । इह तु सदेवेत्यादेः प्रतीतार्थत्यागे न प्रामाण्यसम्भवः । अबाधितस्यार्थान्तरस्याभावादित्यतोऽत्रापि प्रागभावरूपार्थान्तर-मादायार्थवत्त्वान्नाप्रामाण्यप्रसङ्ग इत्यभिप्रेत्य सदेवेत्यादेः प्रागभावे सावकाशतामुपपादयति **प्रागभाव-स्यापीति** ।

**ब्रह्मार्थत्वमुक्तमिति** । ततश्च सदेवेत्येतत्समानार्थस्य असदेवेत्यादेर्न युक्तिसंवादकत्वेन तत्प्राब-ल्यापादकतेत्यर्थः ॥ **तथाऽपीति** । घटप्रागभावस्य घटं प्रति कारणतायाः कर्तृत्वस्य च लोकेऽदर्शनात् महादादिकार्यप्रागभावस्य महदादिकारणत्वं तत्कर्तृत्वं चायुक्तमित्यर्थः । लोकेऽशरीरस्य कर्तृत्वादर्शनेऽपि यथाऽऽगमबलादीश्वरस्याशरीरस्यैव कर्तृत्वं, यथा वा लोके उपादानस्य कर्तृत्वादर्शनेऽपि परमते आगम-बलादुपादानस्यैव कर्तृत्वं तथेहापि प्रागभावान्तरे कर्तृत्वादर्शनेऽप्यागमबलान्महदादिप्रागभावस्य महदादि-कर्तृत्वं नानुपपन्नमित्याशयेनाह **अलौकिकार्थस्येति** । ननु चैवं यदोत्पत्तिरिष्यते ततः पूर्वमपि महदा-देरुत्पत्तिः स्यात्तदाऽपि प्रागभावस्य सत्त्वादन्यस्य चापेक्षणीयस्याभावादित्यतः तर्हि त्वत्पक्षेऽपि प्रलये उत्पादकस्य ब्रह्मणः सद्भावादन्यस्य चापेक्षणीयस्याभावादुत्पत्तिप्रसङ्गस्तुल्य इत्याह **सन्ततेति** । ननु न ब्रह्ममात्रं कर्तृ किन्तु ज्ञानेच्छादिरूपकादाचित्ककारणान्तरसचिवमेव । तथा चापेक्षणीयस्य कारणान्तरस्य

सद्भावासद्भावाभ्यामुपपन्नावुत्पत्तेः कालविशेषभावाभावौ. इत्यतः तर्हि मत्पक्षेऽपि तत्सहितस्यैव प्रागभावस्य कर्तृत्वात्तद्भावाभावकृतौ उत्पत्तेः कालविशेषभावाभावावित्याह **इच्छादीति ॥ तदिति ।** सन्ततोत्पत्तिप्रसङ्गेत्यर्थः । ननु ब्रह्मणश्चेतनत्वेन तस्य ज्ञानेच्छाद्युपपत्त्या तद्विशिष्टस्य तस्य कर्तृत्वोपपत्त्या तत्कादाचित्कत्वेन मत्पक्षे उक्तप्रसङ्गपरिहारोपपत्तावप्यचेतनत्वाद्विश्वप्रागभावस्य ज्ञानेच्छाद्यनुपपत्त्या न तद्विशिष्टस्य तस्य कर्तृत्वमिति नेच्छादिकादाचित्कत्वेनोक्तप्रसङ्गपरिहारस्त्वत्पक्ष इत्यतः शब्दगम्यस्यार्थस्य यथाशब्दमङ्गीकर्तव्यत्वेन चेतनत्वादेस्तद्भावाभावाप्रयोजकत्वात्प्रकृते च 'तदसदेव सन्मनोऽकुरुते'ति श्रुतावसच्छब्दार्थस्य विश्वप्रागभावस्य मनःशब्देन वा कर्त्रर्थकलकारेण वा ज्ञानेच्छाद्युक्तेर्युक्त एव तत्कादाचित्कत्वेन सन्ततोत्पत्तिप्रसङ्गपरिहारो मत्पक्ष इत्याशयवानाह **अत एवेति ।** उपन्यस्तपूर्वपक्षस्योत्सूत्रत्वशङ्कानिरासाय सूत्रारूढतामुपपादयति **तदिदमिति ।**

**अभाव इति ।** प्रागभाव इत्यर्थः । नन्वसच्छब्दस्य शून्ये रूढस्य कथं प्रागभावपरत्वमित्यतो योगेन तद्दर्शयति **अत्रेति ॥ भावसाधन इति ।** भवनं सत्, न सत् असदिति भावसाधनान्त इत्यर्थः । यद्यपि शतृप्रत्ययः कर्तर्येव विहितो न तु भाव इति भावसाधनत्वं नाश्रयितुं युक्तम् । तथाऽपि कर्तरि विहितोऽपि, छन्दसि भावेऽपि भवतीत्यभिप्रेत्य भावसाधनत्ववचनमिति ध्येयम् । ननु लाघवादावश्यकत्वाच्चाभाव इत्येव हि वक्तव्यं किमसच्छब्देनेत्यतः सूत्रस्य श्रुत्यनुसारित्वादसदेवेत्यादिश्रुत्यनुगतिसूचनार्थमसच्छब्दप्रयोग इत्याह **श्रुतीति ।**

---

स० — **अन्यथेति ।** महाप्रलय उत्पत्स्यमानकार्यप्रागभावं यो नङ्गीकारोति स प्रष्टव्यः; किं ध्वस्तस्योत्पत्तिः, किं वा उत्पन्नस्य । नोभयम् उत्पादासंभवात् । तस्मात् प्रागभावप्रतियोगिन इति वक्तव्यम् । तथा च प्रागभावानङ्गीकारे सर्गादौ कार्योत्पादो न संभवतीत्यर्थः । उक्तेरेव कारणत्वेनाभिप्रेतत्वान्न साध्यवैशिष्ट्यमिति ध्येयम् । **अनन्यथासिद्धनियतपश्चाद्भावित्वादिति ।** अन्यथासिद्धात् अन्यः नियतः पश्चाद्भावो यस्येति विग्रहः ।

बाहुल्यादित्यस्य व्याख्यानं **प्राबल्यात् इति ।** ननु अतीताधिकरणे अर्थान्तरसंभवेन स्वार्थपरित्यागस्य कर्तुं शक्यत्वेऽपि 'सदेव सौम्य' इत्यादिश्रुतेःअर्थान्तराप्रतीत्या तस्य कर्तुमशक्यत्वेन प्रबलत्वात् तद्विरोधेन प्रागभावकर्तृत्वप्रतिपादकयुक्तिजातस्यैवाप्रामाण्यमित्यत आह **प्रागभावस्यापीति ।**

ननु 'असतः सदजायत' इत्यादिश्रुतेः, 'एतेन सर्वे व्याख्याता व्याख्याता' इत्यनेन असदादिशब्दानां ब्रह्मपरत्वस्य समर्थितत्वेन, ब्रह्मपरत्वेन तत्संज्ञादित्वाभावेन प्रागभावकर्तृत्वादिप्रतिपादकयुक्तिजातस्य दुर्बलत्वात्, युक्तेः 'सदेव' इत्यादिश्रुतिविरुद्धत्वाच्चस्यैवाप्रामाण्यमित्यभिप्रेत्य शङ्कते **नन्वेतेनेति ।**

परिहर्तुं पृच्छति **तत्किमिति** ॥ **युक्तीसहिताया(युक्त्युपेताया) इति** । अयं भावः । श्रुतिद्वयस्य परस्परं विरोधे प्राप्ते तयोरन्यबाधकत्वे सामर्थ्यासंभवेन स्वयं लब्धावकाशा युक्तिः अन्यतरागमस्यार्थ-निश्चयं संपाद्य(दयित्वा) तत्सहकारं च स्वयं संपाद्य प्रबला सती अन्यतरागमं बाधत इति । **तत्प्राग-भाव इति** । यथा ब्रह्मणः एकत्वेऽपि तत्तदिच्छानुसारेण तत्तत्कर्तृत्वम्, एवं प्रागभावस्यापि तत्तदिच्छा-नुसारेण तत्तत्कर्तृत्वमित्येवाभिप्रेतम् । न तु तत्तत्प्रागभावानामनन्तानां कर्तृत्वमिति ध्येयम् । **असच्छब्द इति** । भवनं सत् । न सत् असदिति भावसाधनान्त इत्यर्थः । ननु 'अभाव इति चेत्' इत्यनुक्त्वा सूत्रकारेण असदिति असच्छब्दप्रयोगे किं निमित्तमित्यत आह **श्रुत्यनुगमार्थमिति** ॥ **उपपत्तीति** । उपपत्तिविरुद्धो वेदार्थो न संभवति इत्येकवाक्यतया योज्यम् ।

**प०— युक्तिविरुद्धत्वेनेति** । प्रलये सर्वासत्त्वसाधकभावत्वयुक्तिसहितया प्रागभावस्य कारणत्वसाधकयुक्त्या, तथा कार्यस्य सकर्तृकत्वनियमात् प्रलये भावमात्रस्य अभावेन तत्कर्तृत्वायोगे परिशेषादभावस्यैव कर्तृत्वमिति परिशेषरूपयुक्त्या च विरुद्धत्वेनेत्यर्थः । प्रलये तत्सत्ताभावस्येत्यादिनाऽग्रे परिशेषेण कर्तृत्वं सिसाधयिषुरादौ कारणत्वमात्रं तावत्साधयितुं वक्ष्यमाणहेतोर्विशेष्यासिद्धिं तावन्निराह **महाप्रलय इत्यादिना** । सूत्रेऽसच्छब्दः छांदसभावार्थः सन् शत्रन्त अभावपर इति भावेनाह **उत्पत्स्य-मानकार्यप्रागभाव इति** । सूत्रानुसारेण प्रयुक्तमेकवचनं समुदायाभिप्रायम् । तत्तत्कार्यप्रागभावाः इत्यर्थः । तेषामनेकत्वेपि प्रमितत्वादप्रमितेश्वरादपि लाघवमिति भावः । नष्टकार्यप्रागभावमादायान्यो-न्याभावादिकभावादिकमादाय च बाधवारणायोत्पत्स्यमानकार्येति, प्रागिति च विशेषणद्वयम् । **अवश्यं** नियमेनेत्यर्थः । एतेनाश्रयासिद्धिरपि निरस्ता । विशेषणासिद्धिं निराह **न चास्येति** ।

**महदादिकार्यकारणमिति** । महदादिकार्यजननशक्त्युपेतमित्यर्थः । एवं च साध्यावैशिष्ट्य-शंकानवकाश इति ध्येयम् ।

**तत्समानन्यायानामिति** । अन्यत्रानुपक्षीणनियतकार्यपूर्वभाववतामित्यर्थः ॥ **स्यादेतदिति** । **एतत्** ईश्वरादिकारणत्वन् । एवं प्रागभावसमानन्यायतया स्यात् तदेत्यर्थः । सूत्रेऽसच्छब्दः कर्त्रर्थकशत्रंतः सन् अभावप्रतियोगिपर इति भावेन प्रयोगान्तरसूचकत्वेन वृत्त्यन्तरमुपेत्य प्रयोगमाह **सिद्धान्तिनेत्या-दिना** । सिध्यसिद्धिभ्यामीश्वरपक्षकासत्त्वसाधनायोगात्सिद्धान्तिनेत्यादिविशेषणम् । तावता नन्व त्रेत्यादिना कृतचोद्यस्य कः परिहार इत्यतो भावत्वयुक्तिसहिता सती प्राचीनयुक्तिरेव सिद्धान्तविरोधिनी विवक्षितार्थसाधिकेत्याह **एवं चेति** ॥ **तस्यैव कारणत्वमिति** । कर्तृत्वोपादानत्वादिना सर्वेणापि रूपेणेति भावः । सर्वेण रूपेण तस्यैव कारणत्वमित्येतच्छंकोत्तराभ्यां व्यनक्ति **ननु चेति** । परिहरति **नेति** ।

**तत्सत्त्वे चेति** । ईश्वरादिसत्ताभावस्येत्यर्थः । एतच्चोपलक्षणम् । यत्कार्यं तत्सोपादानकमिति नियमात् । महदाद्युपादानत्वेन प्रधानमवश्यमंगीकरणीयमिति चेत् न, प्रलये अभावत्वयुक्त्या तत्सत्ताभावस्य प्रमितत्वेन मायावाद्यङ्गीकृतब्रह्मण इव कर्तृभूतप्रागभावस्यैवोपादानत्वोपपत्तेरित्यपि ध्येयम् । ईश्वरकर्तृत्वविरोधित्वात् कर्तृत्वांश एवोपपादितो नोपादानत्वांशः स तूपलक्षणयोपात्त इति ध्येयम् ॥ **उदाहृतेति** । सदेव सोम्येत्यादिश्रुतीत्यर्थः । 'असदेवेदमग्रे'ति प्रागभावस्य नियतपूर्ववृत्तित्वयुक्तिसंवादिनी । 'तदसदेवे'तिश्रुतिः प्रागभावस्य कर्तृत्वसाधकपरिशेषयुक्तिसंवादिनी । तृतीया तु कार्यस्य प्रागभावमात्रजन्यत्वसंवादिनी । न च श्रुतावसच्छब्दस्तुच्छपर इति वाच्यम् । आसीदित्यादिसत्त्वोक्त्यादिविरोधादिति भावः ॥ **स्वार्थपरित्यागस्यातीताधिकरणे स्थितत्वादिति** । एतेन पूर्वसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेरापवादिकी सङ्गतिरित्यपि सूचितम् ॥ **स्वरूपसत्त्वादिनेति** । कार्योन्मुखत्वादिना मनोऽकुरुतेत्यादियोगः आदिपदार्थः ।

**एतेन सर्व इतीति** । 'एतेन सर्वे व्याख्याता' इति पूर्वाध्यान्तिमाधिकरणे 'नैव सादयितुं शक्यः' इत्यादियोगेन असत्पदवाच्यतुच्छस्येश्वराधीनतया तदधीनत्वन्यायेन च ब्रह्मार्थत्वमुक्तम् । तथा च कथं तेनान्यप्रातिरूप्यत इति भावः । अन्यत्रापि वृत्त्यङ्गीकारादिति भाष्यदिशा समाधत्ते **तन्निःमिति** । **अन्यत्रेति** । भावव्युत्पत्त्यादिनाऽभावादावित्यर्थः । एतेन सर्व इत्यत्रासत्पदस्य तुच्छपरत्वमुपेत्य विचारप्रवृत्तावपि इह भावव्युत्पत्त्यादिना योगेनाऽभावार्थत्वोपगमेन विचारकरणमविरुद्धमिति ज्ञेयम् । **तत्रेति** । अभावादौ ॥ **समाकर्षेति** । भगवदर्थकानामपि शब्दानामन्यत्र न्यूनवृत्त्या वाचकत्वेन व्यवहारस्य समाकर्षादित्यधिकरणे स्वीकारादित्यर्थः ॥ **युक्त्युपेताया इति** । नचैवं स्वार्थपरत्वाय श्रुतिर्युक्तिमपेक्षते, युक्तिः स्वप्रामाण्याय श्रुतिसंवादापेक्षेत्यन्योन्याश्रय इति शङ्क्यम् । युक्तेः सदेवेत्यादिश्रुत्यर्थबाध एव श्रुतिसंवादापेक्षा न तु प्रागभावकारणत्वादिसाधन इति तत्र परानपेक्षत्वात् ॥ **कारणत्वं कर्तृत्वं चेति** । कारणत्वमुपादानत्वं ध्येयम् ॥ **ब्रह्मवादिनोपीति** । ब्रह्मैवोपादानं कर्तृ चेति वदतोपि कर्त्रुपादानसत्त्वादजस्रकार्योत्पत्तिप्रसङ्ग इत्यर्थः ॥ **ममापि समानमिति** । अभाव(स्यापिका)स्य कादाचि(त्ककार्योन्मुखत्वादिरूपेच्छा)त्केच्छादिमत्त्वोपगमादिति भावः ॥ **उक्तमिति** । ब्रह्मणो विश्वकर्तृत्वमित्यर्थः । सर्वं सूत्रारूढतया दर्शयति **तदिदमुक्तमिति** । असदिति सूत्रखण्डेनेति योज्यम् । **अत्रेति** । सूत्रे, सूत्रस्यास्मिन्नर्थ इति वा ॥ **असच्छब्द इति** । नञुपपदसच्छब्द इत्यर्थः । अस् भुवीत्यसाद्भावे छान्दसशतृप्रत्यये श्नसोरल्लोपे नञ्समासे असदिति रूपम् । कर्तृसाधनेऽप्येवमेव प्रक्रिया । प्रतिपत्तिलाघवायाभाव इत्येव कुतो नोक्तं सूत्र इत्यत आह **श्रुतीति** । असदेवेदमग्र आसीदित्यादिश्रुतीत्यर्थः । एतेन श्रुतावपि भावसाधन इति सूचितम् ।

**या० — उत्पत्स्यमानप्रागभाव इति** । न च अत्रासच्छब्देन प्रागभावग्रहणे भाष्यन्यायविवरणतत्त्वप्रकाशिकाविरोधः, तत्रासच्छब्दस्य शून्यपरत्वप्रतीतेरिति वाच्यम् । तत्रत्यासच्छब्दानामपि प्रागभावपरत्वमेवेति चन्द्रिकाकारैरुक्तत्वात् । वस्तुतस्तु भाष्यानुव्याख्यानयोरनेकार्थत्वात् न तट्टीकयोर्विरोध इति भावबोधकारैर्निपुणतरं समर्थितं तदेवानुसन्धेयम् ॥ **कारणं भवितुमर्हतीति** । अत्र शक्तिरूपं कारणत्वं वा तत्पदवाच्यं वा साध्यतया विवक्षितमतो न साध्याविशिष्टतेति ध्येयम् ॥ **तत्समानन्यायानामिति** । अनन्यथासिद्धनियतपूर्ववर्तिनामित्यर्थः ॥ **सन्ततोत्पत्तीति** । प्रागभावस्य सत्त्वेन प्रलयेऽपि कार्योत्पत्तिप्रसङ्ग इत्यर्थः ॥ **अत्रासच्छब्द इति** । असच्छब्दान्तर्गतः सच्छब्द इत्यर्थः । एवमग्रेऽपि । **भावसाधन इति** । भवनं सदिति भावसाधन इत्यर्थः । शतृप्रत्ययस्य भावार्थत्वं छान्दसमिति भावः । ननु किमेवमस्वरसासच्छब्देन, अभाव इत्येव कस्मान्नोक्तमित्यत आह **श्रुत्यनुगमेति** । सूत्रे श्रुत्यनुसारीति भावः ॥

**श्री० —** वक्ष्यमाणानुमाने आश्रयासिद्धिं परिहरति **महाप्रलय इति** । विशेषणासिद्धिं परिहरति **न चेति** ॥ **नियमोऽस्तीति** । तथा सति दण्डो घटापेक्षया पूर्वभावीति स एव कारणमिति स्यात् । तथा च चक्रादेरकारणता स्यादिति भावः ॥ **उक्तमिति** । ततश्चासदेवेति श्रुतिर्न प्रागभावस्य कारणताप्रापिकेत्यर्थः । **युक्त्युपेताया इति** । उपपत्तेस्तात्पर्यलिङ्गत्वादिति भावः । **भावसाधन इत्यादि** । ननुपपक्षात्सदॢ विशरणेत्यादिधातोर्भावे कर्तरि वा क्विपि तस्य लोपे च सदिति रूपम् । पश्चान्न सत् असदिति भवति ॥

**च० — ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ** ॥ **अत्रासच्छब्द इति** । असच्छब्दशरीरे प्रविष्टः सच्छब्द इत्यर्थः । **भावसाधन इति** । शतृप्रत्ययस्य धात्वर्थानुवादकत्वं छान्दसमिति भावः ।

**सु० — अपराऽपि वृत्तिः । भावत्वहेतुना कार्यवदीश्वरादिकमपि प्रलयेऽसदनुमीयत इति । अत्रासच्छब्दः कर्तृसाधनः । इह प्रथमां वृत्तिमभिप्रेत्य नेति सिद्धान्तांशं व्याचष्टे (व्याख्याति) असदिति ।**

**अनु० —** असत्कारणं न हि ॥
श्रुत्यर्थो भवति

**अभाव इत्यर्थः । कारणमिति तद्विशेषः कर्तोच्यते । हीत्यनेनेदमाह । उपपत्तिविरुद्धस्तावन्न वेदार्थः संभवति, तदविरुद्धेऽर्थे संभवतीत्युक्तम् । प्रकृतश्चोपपत्तिविरुद्धः । तथा च**

**वक्ष्याम इति । श्रुत्यर्थो न भवतीत्युपलक्षणम् । अनुमानप्रमेयमपीदं न भवत्युपपत्तिविरुद्धत्वा-दित्यपि द्रष्टव्यम् ।**

**शे॰ — अपराऽपि वृत्तिरिति ।** अपरव्याख्यानमित्यर्थः ॥ **कर्तृसाधन इति ।** अस्तीति सत्, न सत् असदिति अर्तृसाधनान्त इत्यर्थः । **प्रथमां वृत्तिमिति ।** प्रथमं व्याख्यानमित्यर्थः ॥ **अभाव इत्यर्थ इति ।** अत्राभाव इति तद्विशेषः प्रागभावो विवक्षितः । अत्र सर्वत्रासच्छब्देन प्रागभावः कारण-शब्देन च कर्तोच्यत इति टीकाग्रन्थानुसारेण भाष्यस्थासच्छब्दकारणशब्दयोः प्रागभावकर्तृत्वार्थकत्व-सिद्ध्या भाष्यस्याप्यत्रैव प्रागभावकर्तृत्वनिरासकत्वेन शून्यकारणत्वनिरासकत्वाभावेन भाष्यानुव्याख्यानयोः ऐकार्थ्यात् 'निषेधैकस्वरूपस्य न कर्तृते'त्यनुव्याख्यानस्य 'नासतः कारणत्वमिति भाष्येण न विरोधः । श्रुतिप्राप्तमेवासन्मतमत्र निराक्रियत इति भाष्यकारवचनाच्चैतदेवावसीयते यदत्रासच्छब्दः प्रागभावपरो न शून्यपर इति । प्रागभावस्य नियतप्राक्सत्त्वस्यासीदिति सत्त्वोक्तेश्चोपपत्त्या कर्तृताया असद्वा इदमग्र आसीदित्यादिश्रुतिप्राप्तत्वेन प्रागभावकर्तृत्वनिषेधकत्वे श्रुतिप्राप्तासन्मतनिषेधकत्वोपपत्तावप्यसतो नियत-प्राक्सत्त्वरूपकारणत्वस्यासीदिति सत्त्वोक्तेश्चायोगेन तत्कारणतायां उदाहृतश्रुतिप्राप्तत्वाभावेन शून्य-कारणतानिषेधकत्वे श्रुतिप्राप्तासन्मतनिषेधकतोक्त्ययोगात् । किञ्चास्य भाष्यस्य श्रुतिप्राप्तासन्मत-निषेधकत्वमात्राभिप्रायेऽस्याधिकरणस्य तृतीये प्रवेशप्रसङ्गात्, श्रुतियुक्त्युभयप्राप्तासन्मतनिषेधकत्वाभि-प्रायेऽपि तृतीयेऽप्यन्तर्भावप्रसङ्गाद्युक्त्युपसर्जनश्रुतिप्राप्तासन्मतनिषेधकत्वाभिप्राये चतुर्थे प्रवेशप्रसङ्गात् । श्रुत्युपसर्जनयुक्तिप्राप्तासन्मतनिषेधकत्वाभिप्रायकत्वस्याकामेनाप्यङ्गीकार्यत्वात्प्रागभावकर्तृताया उक्तरीत्या श्रुतिप्राप्तेः, पूर्वपक्षयुक्तरीत्या युक्तिप्राप्तेश्च, श्रुत्युपसर्जनयुक्तिप्राप्तत्वेन तन्निरासकत्वे एतदधिकरणीयोपाध्या-कलितत्वप्राप्तावपि, शून्यस्य कारणतायाः श्रुत्या उक्तरीत्याऽप्राप्तेः, तत्प्रापकयुक्तेष्टीकादावनुक्त्या तद-प्राप्तेश्च, तन्निषेधकत्वेऽस्याधिकरणस्य तस्याः श्रुत्युपसर्जनयुक्तिप्राप्तत्वरूपोपाध्यनाकलितत्वप्रसङ्गेनाधि-करणोपाधिकथनरूपैतद्ग्रन्थविरोधापत्त्या तदविरोधायापि भाष्यस्थासच्छब्दस्य प्रागभावपरताया आवश्यक-त्वात् । न चैवम् 'समयस्योपरि निषेधादि'ति भाष्यविरोधः, तदनुरोधेन तस्य शून्यकारणतानिषेधमात्र-परत्वप्रतीतेरिति वाच्यम् । किं श्रुत्युपसर्जनयुक्तिप्राप्तप्रागभावकर्तृत्वनिषेधकत्वाश्रयणेन, समयप्राप्ता-सन्मतस्यैवायं निषेधः किन्न स्यादित्याशङ्कायां तथा सति प्रागभावकर्तृताप्रापकसमयस्याभावेन समय-प्राप्तासन्मतनिषेधकत्वेऽस्य समयप्राप्तप्रागभावकर्तृत्वनिषेधकत्वायोगेन शून्यसमयप्राप्तासन्मतनिषेधक-त्वस्यैव वाच्यतया तत्परसमयपादीयाधिकरणेन पौनरुक्त्यापत्त्या तत्प्राप्तसमयनिषेधकत्वायोगेन श्रुत्युप-सर्जनयुक्तिप्राप्तप्रागभावकर्तृतानिषेधपरत्वमेवेत्यभिप्रायकत्वादुदाहृतभाष्यस्य तदप्रसङ्गात् । न चैवम् न

हि शशविषाणादीनां किञ्चित्प्रति कारणत्वं सम्भवतीत्यादिटीकाविरोध इति वाच्यम् । सकलदेशस्थ-चिरन्तनमूलकोशेषु न हि घटप्रागभावस्य घटं प्रति कर्तृत्वं सम्भवतीत्यादेरेव पाठस्य दर्शनेन तस्य क्वचिदाधुनिकपुस्तकेषु लेखकदोषपतितत्वस्यैवाश्रयणीयत्वात् । ततश्च श्रुतिसूत्रस्थासच्छब्दस्य प्रागभाव-मात्रपरत्वान्न भाष्यानुव्याख्यानयोरविरोधाय तन्नानार्थत्ववर्णनमुपपन्नम् । किञ्चेह नानार्थत्वाश्रयणेन भाष्यानुव्याख्यानयोरविरोधवर्णनं किं तयोरेकार्थत्वानुपपत्त्या कल्प्यते किंवा मानान्तरवशात् । नाद्यः भाष्यानुव्याख्यानयोश्चोक्तरीत्यैकार्थत्वस्योपपादितत्वेन तदभावात् । नान्त्यः तस्यादर्शनात् । अपि च भाष्यस्य शून्यकारणतानिषेधकत्वे, 'तन्मनोऽकुरुतेत्यादेरसतो मनसो जनिः । निवारिता तु पूर्वत्र ह्यकस्मादिति तद्विना' इत्यनुव्याख्याने 'पूर्वमभावस्य जगत्कर्तृत्वं निराकृतम् । इदानीं तु शून्य-स्ये'ति तट्टीकायां चाकस्मादिति श्रुतेः शून्यकारणत्वपरत्वेन प्रतीतेः एतेनेति सूत्रस्याकस्मादिति श्रुति-प्राप्तासन्मतनिराकरणपरत्वनिश्चयात्पूर्वत्रापि श्रुतिप्राप्तशून्यकारणतानिषेधपरत्वाश्रयणे **कथं न पौनरुक्त्यम्** । न चाकस्मादिति श्रुतिर्नानार्थेति न भाष्यानुव्याख्यानयोर्विरोध इति वाच्यम् । एकार्थत्वसम्भवे तन्ना-नार्थत्वाश्रयणस्याश्लिष्टत्वात् । अन्यथा सर्वत्र तन्नानार्थत्वाश्रयणेनाविरोधस्य व्युत्पादयितुं शक्यत्वान्न कुत्रापि तद्विरोधशङ्कावकाशः स्यादित्यलम् ।

कारणशब्देन कारणविशेषकर्तृलक्षणायां बीजभूतं सम्बन्धमाह **तद्विशेष इति** ॥ **इत्युक्त-मिति** । जिज्ञासाधिकरणे 'तथा सति मीमांसावैयर्थ्यादित्यादिने'ति शेषः । यद्वाऽभिमान्यधिकरणे 'दृढयुक्तिविरोधे त्वि'त्येतद्व्याख्यानावसर इति शेषः ॥ **वक्ष्याम इति** । 'बुद्धिपूर्वप्रवृत्तिर्हि'त्यादिनेति शेषः । ननु श्रुत्यनुमानावष्टम्भेन प्रागभावकर्तृतायाः पूर्वपक्षितत्वात्तदनुसारेण प्रागभावकर्तृत्वस्य श्रुत्यर्थत्वा-भाववदनुमेयत्वाभावस्यापि नेति सिद्धान्तांशार्थतया अवश्यं व्याख्येयत्वाच्छ्रुत्यर्थत्वाभावमात्रवर्णनमा-चार्यीयमयुक्तमित्यतस्तदुपलक्षणत्वेन व्याचष्टे **श्रुत्यर्थ इति** ।

**स०— अपरेति** । वर्णकांतरमित्यर्थः । **कर्तृसाधन इति** । भवतीति सत्, न सत् असदिति कर्तृसाधनान्त इत्यर्थः ।

**प०— अपरापि वृत्तिः** अन्योप्यर्थः सूत्रखंडस्येत्यर्थः । तामाह **भावत्वेति** ॥ **अस-दिति** । अविद्यमानमित्यर्थः । एतद्रूप्यंतरसूचनार्थं चासच्छब्दःप्रयुक्तः सूत्र इति भावः ॥ **अत्रेति** । अस्मिन्नर्थे ॥ **कर्तृसाधन इति** । नास्तीत्यसदित्येवंरूपेणेत्यर्थः । **तद्विशेषः कर्तोच्यत इति** । प्रकृतो-पयोगात्कर्तेत्येवोक्तम् । 'उपादानमुच्यत इत्यपि ग्राह्यम् ॥ **इत्युक्तमिति** । 'दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृशः' इति पूर्वाधिकरणे उक्तमित्यर्थः ॥ **प्रकृतश्चेति** । अभावकर्तृत्वादिरूपपूर्वपक्ष्युक्तश्रुत्यर्थ-श्चेत्यर्थः । **वक्ष्याम इति** । 'निषेधैकस्वरूपस्य न कर्तृते'त्यादिनेति भावः ।

**या० — अपराऽपि वृत्तिरिति** । अपरमपि व्याख्यानमित्यर्थः ॥ **इत्युक्तमिति** । पूर्वाधिकरण इति शेषः ॥ **वक्ष्याम इति** । अस्मिन्नेवाधिकरण इति शेषः ।

**श्री० — कर्तोच्यत इति** । अन्यथा कारणत्वमात्रस्य सिद्धान्तिभिरप्यङ्गीकारान्न हीत्युक्ते बाधः स्यादिति भावः ॥ **प्रकृतश्चेति** । अभावस्य कर्तृत्वरूपोऽर्थः ।

**च० — अपराऽपि वृत्तिरिति** । अपराऽपि व्याख्येत्यर्थः ।

**सु० — किञ्च संभावित एव श्रुत्यर्थो वक्तव्योऽनुमातव्यश्च । न चैवं प्रकृतः । क्वाप्य-भावस्य कर्तृत्वानुपलम्भादित्याह** क्वापीति ।

**अनु० —** **क्वापि**

**असत्कारणं न ह्युपलब्धमित्यनुवर्तते ।**

**शे० —** 'असत्कारणं न हि श्रुत्यर्थो भवती'त्येतावतैव प्रागभावकर्तृताया उपपत्तिविरुद्धत्वेन हेतुना श्रुत्यनुमानप्रमेयत्वाभावप्रतिपादनाद्भाष्ये क्वापीत्यंशवैयर्थ्यमित्यत उक्तप्रतिज्ञायां हिशब्दसमर्पितो-पपत्तिविरुद्धत्वहेत्वपेक्षयाऽसम्भावितत्वरूपहेत्वन्तरसूचकत्वान्न तद्वैयर्थ्यमिति भावेन हेत्वन्तरपरतया तमंशं योजयति **किञ्चेति** ॥ **अनुमातव्यश्चेति** । 'सम्भावितः प्रतिज्ञाया अर्थः साध्येत हेतुने'त्युक्तेरिति भावः । क्वापीत्येतावन्मात्रेण कथं प्रागभावकर्तृताया असंभावितत्वलाभ इत्यत उक्तानुवृत्त्या तं दर्शयति **असदिति** । प्रकृतोपयोगितया हीत्यनूद्योपलब्धमिति व्याख्यानम् ।

**स० — उपलब्धमित्यनुवर्तत इति** । 'उपपत्त्यविरुद्धेऽर्थे न हि' इत्येतावत् पूर्ववाक्यादनुवर्तते तत्रोपलब्धमिति शेषः पूरणीयः इति विवेकः ।

**प० — संभावित इति** । 'संभावितः प्रतिज्ञायाः अर्थः साध्येत हेतुने'त्यादेरिति भावः ॥ **इत्यनुवर्तत इति** । असत्कारणपदयोरर्थौ प्रागुक्ताविति भावः ।

**सु० — चतुर्थपादादस्याधिकरणस्य वैलक्षण्यं दर्शयितुमल्पेत्याद्युक्तम् । तदविशदम् । वैलक्षण्यज्ञानस्योभयस्वरूपज्ञानाधीनत्वात् । अतश्चतुर्थपादार्थं दर्शयति** श्रुतीति ।

**अनु० —** श्रुतिप्रायोपपत्तिभिः ॥

अविरोधश्चतुर्थे तु पादे सम्यक् समर्थ्यते ॥

**श्रुतीनां प्रायो बाहुल्यम् । तत्सहिताभिरुपपत्तिभिः । श्रुतिप्रधानकोपपत्तिभिरिति यावत् । अविरोधो विरोधाभावः । श्रुतीनामिति शेषः ।**

यद्वा श्रुतिप्रायशब्देन श्रुतिकल्पत्वमुच्यते । श्रुतिगृहीताभिरुपपत्तिभिरित्यर्थः । अत्र तु स्वतन्त्राभिरिति स्फुटमेव । अथवाऽत्रोक्तार्थस्यैव तत्र प्रपञ्चनान्न दोषः । यथा प्रथमपादार्थप्रपञ्चनात् द्वितीयपादस्य इत्याशयेनोक्तं सम्यगिति । यद्वा क्वापीति अत्र संबध्यते । तेन क्वाप्यध्यात्मलक्षणे विषये, अत्र त्वन्यत्रेति भेदः सूचितो भवति । यद्यप्येतत्प्रागेव वक्तव्यम् तथाऽप्यसत्कार्यमित्यादेर्वक्ष्यमाणस्य, सूत्रस्य व्याख्यानान्तरत्वद्योतनाय व्यवधानेनोक्तम् । अन्यथा पूर्वमेव व्याख्यानम्, इदं तु तदुपपादनायोपयोगीति विज्ञायेत ।

शे० — श्रुतिप्रायोपपत्तिभिरिति भाष्यमनर्थकम् । न च श्रुतियुक्तिविरोधपरिहारकस्यास्य तादृशे चतुर्थपाद एव कर्तव्यताशङ्कापरिहाराय ततो वैलक्षण्योपदर्शनमेतदिति वाच्यम् । 'अल्पवाक्ययुता युक्तिर्बहुलैव विरोधिनी'त्येतदधिकरणोपाधिकथनपरे वाक्ये वाक्ययुक्तिविशेषणाभ्यामल्पत्वबहुत्वाभ्यामेव तद्वैलक्षण्योपदर्शनादित्यतस्तद्विशदीकरणार्थत्वान्न वैयर्थ्यमित्यभिप्रेत्य विशदीकरणे निमित्तोपदर्शनपूर्वकं तत्परतयोत्तरवाक्यं योजयति **चतुर्थपादादिति** ॥ **वैलक्षण्यज्ञानस्येति** । तत्र चैतदधिकरणपूर्वपक्षसिद्धान्तन्यायोपदर्शनेऽपि चतुर्थपादीयपूर्वपक्षसिद्धान्तन्यायानुपदर्शनात्तदुभयस्वरूपज्ञानाभावान्न तदधीनवैलक्षण्यज्ञानं सम्भवतीति भावः । नन्वस्मिन्नप्यधिकरणे बहुलश्रुतिसहितोपपत्तिभिः श्रुतीनां विरोधनिरासात्कथमयं चतुर्थपादार्थ इत्यतोऽत्र श्रुतिप्रायोपपत्तिभिरित्यस्य श्रुतिप्रधानकोपपत्तिभिरित्यर्थकत्वेन बहुलश्रुतिसहितोपपत्तिभिरित्येतावत्तात्पर्यकत्वाभावाद्बहुलश्रुतिसहितोपपत्तिभिः श्रुतीनां विरोधनिरासकस्याप्यस्य श्रुत्युपसर्जनयुक्तिविरोधनिरासकत्वेन श्रुतिप्रधानोपपत्तिभिस्तदनिरासकत्वान्न तन्निरासार्थकचतुर्थपादे प्रवेशोऽस्येतिभावेनाह **श्रुतिप्रधानकेति** । अविरोधो विरोधाभाव इत्येतत्पादोपक्रम एव प्रपञ्चितम् । 'युक्तिसहितश्रुतिविरोधं श्रुतीनामि'ति भाष्यं 'श्रुत्यर्थः श्रुतियुक्तिभ्यामि'ति चतुर्थपादीयानुव्याख्यानं च मनसि निधायापेक्षितं शेषं पूरयति **श्रुतीनामिति शेष इति** ।

नन्वेवमधिकरणस्य चतुर्थपादप्रवेशपरिहारेऽपि तृतीयचतुर्थपादयोः साङ्कर्यादेव चतुर्थपादीयाधिकरणेष्विव तृतीयपादीयेष्वपि तेषु प्रायेण श्रुतिप्रधानोपपत्तिभिः श्रुतीनां विरोधनिरासादित्यत आह **यद्वेति** ॥ **श्रुतिगृहीताभिरिति** । श्रुतिगृहीतत्वं च श्रुतिसिद्धव्याप्त्यादिमत्त्वं द्रष्टव्यम् । एतच्च 'श्रुत्यर्थः श्रुतियुक्तिभ्यामि'त्युत्तरानुव्याख्यानव्याख्यानावसरे आकर एव स्पष्टम् ॥ **अत्र तु स्वतन्त्राभिरिति** । श्रुत्यपरिगृहीताभिरित्यर्थः । उपलक्षणं चैतत् । तृतीयपादेपीत्यपि द्रष्टव्यम् । श्रुतिप्रायोपपत्तिभिरविरोधश्चतुर्थपादे समर्थ्यत इत्येतावता चतुर्थपादार्थप्रदर्शनेनास्य ततो वैलक्षण्यसूचनेन तत्साङ्कर्यशङ्कानिरासिद्धेर्भाष्ये सम्यगित्यस्य वैयर्थ्यमित्यतश्चतुर्थपादस्यैतदधिकरणार्थप्रपञ्चकत्वसूचनेनागतार्थ-

त्वोपपादनार्थत्वान्न तद्वैयर्थ्यमित्यभिप्रेत्याह **अथवेति** । एतदधिकरणार्थप्रपञ्चकत्वेन चतुर्थस्योक्तमवैयर्थ्यं दृष्टान्तेनोपपादयति **यथा प्रथमपादार्थप्रपञ्चनादिति** ॥ 'इतरेषां चानुपलब्धेरि'ति प्रथमपादोक्तहेतुत्रय-प्रपञ्चनरूपत्वादित्यर्थः । प्रथमपादस्याधिकरणोक्तोऽप्यर्थः प्रथमपादार्थ एव । अन्यथा पादार्था-प्रतिपादकत्वा'दितरेषां चानुपलब्धेरि'त्यस्य पादान्तर्भावाभावप्रसङ्गात् । अयमेव च 'पूर्वपादेनास्य प्रपञ्च्य-प्रपञ्चभावलक्षणा सङ्गतिरि'ति समयपादीयोक्तेः, 'प्राधान्याद्युक्तिविरोधपरिहारस्य प्राथम्ये तत्प्रपञ्चात्मकत्वेन समयविरोधपरिहारस्य तदानन्तर्यं, इति तृतीयपादीयटीकोक्तेश्चाभिप्रायोऽनुसन्धेयः । प्रथमपादार्थप्रपञ्चना-दित्यनेन प्रथमपादीयोक्ताधिकरणप्रपञ्चकताया एव विवक्षितत्वान्नानुपपत्तिरित्यप्याहुः । 'अध्यात्म-प्रवणो भूत्वा तस्य सन्निहितत्वतः' इत्युत्तरानुव्याख्यानानुसारेणाध्यात्मविषये युक्तिसहितश्रुतिभिः श्रुतीनां विरोधपरिहारस्य चतुर्थपादार्थत्वस्थित्या युक्तिसहितश्रुतिभिः श्रुतीनां विरोधपरिहारमात्रस्य तदर्थत्वा-भावाच्च नास्याधिकरणस्य तेन साङ्कर्यमित्यभिप्रेत्य तत्सम्बन्धप्रदर्शनपूर्वकमुक्तार्थोपदर्शकत्वोपयोगितय तद्व्याचष्टे **यद्वेति** ॥ **अन्यत्रेति** । अध्यात्मेतरविषये विष्णौ जगत्कारणत्वविषय इत्यर्थः । उपलक्षणं चैतत् । तृतीयेऽध्यात्मेतरविषय इति तस्यापि चतुर्थाद्भेद इत्यपि द्रष्टव्यम् । चतुर्थपादाधिकरणस्य वैलक्षण्यमुपदर्शयितुं चतुर्थपादार्थोपदर्शकत्वेऽस्य ग्रन्थस्य चतुर्थपादाद्वैलक्षण्योपदर्शकादल्पवाक्ययुतेत्यादि-ग्रन्थात् आनन्तर्यमेव स्यान्न तु तेन व्यवधानमित्यत एकार्थोपदर्शकत्वेऽपि ग्रन्थद्वयस्य व्यवधानं प्रयोजन-सद्भावाद्युक्तमित्यभिप्रेत्य तदाह **यद्यपीत्यादिना** ।

**स०— श्रुतिकल्पत्वमिति** । श्रुत्युपात्तत्वमित्यर्थः । **प्रथमपादार्थप्रपञ्चनादिति** । 'इतरेषां चानुपलब्धेः' इति सामान्यतो निराकरणं समयानां कृतम् । विशेषतो निराकरोत्यस्मिन्पादे' इत्युक्तत्वा-दिति भावः । **प्रागेवेति** । 'अल्पवाक्ययुता' इत्यादिना अधिकरणोपाधिकथनसमय एवेत्यर्थः ।

**प०—** अत्रापि प्रायश्शब्दो बाहुल्यवाची सन्प्राधान्यार्थ इत्याह **प्रायो बाहुल्यमित्यादिना** । **प्रथमपादा(माधिकरणा)र्थप्रपञ्चनेति** । स्मृत्यधिकरणे ह्यश्रौतस्मृतीनां सर्वासामप्रामाण्ये सङ्क्षेपेणोक्ते सति तत्प्रपञ्चनं समयपादे द्वादशभिरपि नयैः क्रियते । इतरेषां चानुपलब्धेरिति सामान्यतो निराकरणं समयानां कृतमित्यादिभाष्योक्तेः । तथाऽत्रापीति भावः ॥ **अध्यात्मेति** । उपासनापादे 'अध्यात्म-प्रवणो भूत्वा तस्य सन्निहितत्वतः' इति अनुभाष्योक्तेरिति भावः ॥ **प्रागेवेति** । 'इति न्यायो विनिश्चितः' इत्यनन्तरं '**कथं** न निर्णयं कुर्यादि'त्यनन्तरं वे'त्यर्थः ।

**या०— प्रथमपादार्थप्रपञ्चनादिति** । 'इतरेषां चानुपलब्धेरिति सामान्यतो निराकरणं सम-यानां कृतम् । विशेषतो निराकरोत्यस्मिन्पादे'इति भाष्येऽभिहितत्वादिति भावः। यद्यपि प्रथमपादीयैतत्सूत्रा-

र्थप्रपञ्चनरूपत्वमेव द्वितीयपादस्यात्राभिहितं न समस्तप्रथमपादार्थप्रपञ्चनरूपत्वं तथाऽप्युक्तार्थविरुद्धानां सर्वयुक्तीनामाभासत्वस्य प्रथमपाद एवोक्तत्वेन विरोधिसमयानुसंहितयुक्तीनामप्याभासत्वस्य तत्रैव सिद्धत्वा- द्व्यर्थोऽयं पाद इत्याशङ्कायामुपलक्षणया यत्सर्वविरोधियुक्तीनामाभासत्वं प्रथमपादे सङ्क्षेपेणाभिहितं तदत्र तत्तत्प्रमेयेषु परोत्प्रेक्षितयुक्तीनामाभासत्वव्युत्पादनेन प्रपञ्च्यत इत्यभिप्रेतत्वेन प्रथमपादार्थप्रपञ्चनरूपत्वम- प्यस्त्येवेति ध्येयम् ।

**श्री०— प्राबल्यं** प्राधान्यम् ॥ **प्रागेवेति** । 'इति न्यायो विनिश्चित' इत्यनन्तरमेव 'श्रुतिप्राये'त्यादिवाच्यमित्यर्थः । पूर्वम् 'असत्कारणं न हि श्रुत्यर्थो भवति क्वापी'त्येतदेवेत्यर्थः । **व्या- ख्यानम्** असदिति चेदित्यंशस्य । **इदम्** असत्कार्यमित्यादिकम् । व्याख्यानान्तरत्वद्योतककिञ्चित्यादि- शब्दाभावादिति भावः । व्यवधाने तु व्याख्यानान्तरत्वं विज्ञास्यत इति हृदयम् ।

**सु०— अथ द्वितीयां वृत्तिमभिप्रेत्य 'असदिति चेन्न'त्येतावत्सूत्रं व्याचष्टे** असदिति ।

**अनु०—** असत्कार्यं यथा दृष्टं वस्तुत्वात्कारणं तथा ॥

इति चेन्न

**कार्यं महदादिकम् । यथा प्रलयेऽसत् प्रमितं तथा वस्तुत्वाद्भावत्वात्कारणं कारणत्वेन सिद्धान्तिनाऽङ्गीकृतमीश्वरादिकमपि मिति) प्रलयेऽसद्भवितुमर्हतीत्यर्थः ।**

**कुतो नेति चेत् । न तावदस्मादेवानुमानादभावस्य विश्वकर्तृत्वसिद्धिः, किन्त्वनेन प्रलयावस्थायामीश्वराद्यभावसिद्धौ कार्यस्य सकर्तृकत्वनियमे स्थिते प्रागभावस्य नियतपूर्वभावि- त्वेन विश्वकारणत्वं सिध्यत् कर्तृतयैव सेत्स्यतीति वक्तव्यम् । तदिदं प्रत्यनुमानपराहतमित्या- शयवान् प्रतिषेधमात्रत्वादिति सौत्रं हेतुं व्याकुर्वन्** साध्यमध्याहरति निषेधेति ।

निषेधैकस्वरूपस्य न कर्तृता ॥

**निषेधैकस्वरूपस्येति हेतुगर्भविशेषणम् । अयमत्र प्रयोगः । विप्रतिपन्नोऽभावो न कर्ता प्रतिषेधमात्रत्वात् निषेधैकस्वरूपत्वात् संप्रतिपन्नघटाभाववदिति । कर्तृत्वमात्रस्या- भावे विश्वकर्तृत्वं दूरोत्सारितम् । न च दृष्टान्तः साध्यविकलः । अन्वयव्यतिरेकाभ्यां कुला- लादेः कर्तृत्वनिश्चये तु अभावस्य तत्कल्पकाभावात् ।**

**शे०—** वस्तुत्वस्य प्रागभावे व्यभिचारित्वादाह **भावत्वादिति** ॥ ननु प्रतिषेधमात्रत्वादिति प्रागभावस्य निषेधैकस्वरूपत्वकथनमनर्थकम् । न च प्रागभावस्य कर्तृत्वाभावसाधनार्थं तदिति वाच्यम् । तस्याप्यनर्थकत्वात् । न च पूर्वपक्ष्युक्तप्रागभावकर्तृत्वसाधकानुमानस्य सत्प्रतिपक्षत्वेनाभासत्व-

व्युत्पादनार्थं तदिति वाच्यम् । तदनुमानविरुद्धार्थासाधकत्वेनास्य तत्र प्रतिपक्षत्वायोगादित्यतः असत्कार्यमितीश्वरादेरसत्त्वसाधकतयोपन्यस्तानुमानेऽस्य प्रतिपक्षत्वासम्भवेऽपि तदुपजीवनेन प्रवृत्तैतच्छङ्काग्रन्थाभिप्रेतप्रागभावकर्तृत्वसाधकानुमानविरुद्धार्थसाधकत्वेन तत्र प्रतिपक्षत्वोपपत्तेर्नानुपपत्तिरित्यभिप्रेत्य, शङ्काग्रन्थस्यापि यथाश्रुतैतदनुमानमात्राभिप्रायकत्वसम्भवेनानुमानान्तराभिप्रायकत्वाभावान्न तत्रापि प्रतिपक्षसमर्पकत्वम् इत्यतो यथाश्रुतार्थाभिप्रायकत्वे बाधकप्रदर्शनपूर्वकमनुमानान्तराभिप्रायकत्वमुपपाद्य तत्र प्रतिपक्षसमर्पकतया प्रतिषेधमात्रत्वादित्येतद्योजयितुमाह **कुतो नेति चेदित्यादिना ॥ हेतुगर्भमिति ।** हेत्वर्थगर्भमित्यर्थः । ततश्च निषेधैकस्वरूपत्वादिति सिध्यतीति भावः । भाष्ये पक्षदृष्टान्तयोरनभिधानान्न्यूनत्वमित्यतः स्पष्टत्वात्तदनुक्तिर्न दोषायेत्यभिप्रेत्य पक्षदृष्टान्तोपदर्शनपूर्वकं प्रतिपक्षप्रयोगं दर्शयति **अयमिति ।**

**स०—द्वितीयां वृत्तिमिति ।** 'भावत्वादीश्वरादिकमसत्' इति द्वितीयव्याख्यानमित्यर्थः । प्रागभावे व्यभिचारनिरासायाह **भावत्वमिति ।**

**प०— असत्प्रमितमिति ।** अविद्यमानं प्रमितमित्यर्थः । एवमग्रेऽप्यसत्पदार्थो ध्येयः । लयवर्तिकार्यप्रागभावे व्यभिचारनिरासाय वस्तुत्वादित्येतत् भावत्वादिति व्याख्यातम् ॥ **ईश्वरादिकमिति ।** ईश्वरप्रधानादृष्टादिकमित्यर्थः ॥ **कर्तृतयैवेति ।** उपादानत्वादिना चेत्यपि ध्येयम् ॥ **सेत्स्यतीति ।** परिशेषादिति भावः ॥ **विप्रतिपन्नोऽभाव इति ।** तत्तत्कार्यप्रागभावः तस्य तस्य कर्ता नेति साध्यार्थः । यद्वा सांख्यमते प्रधानमिव, मायिमते ब्रह्मेव, प्रागभावोपि लाघवादेक एव विश्वकर्तोपादानं चेति परेण वाच्यमिति भावेनैवं पक्षनिर्देशः । अत एव 'कर्तृत्वमात्रस्याभावे विश्वकर्तृत्वमि'त्याद्युत्तरवाक्यं सङ्गच्छते । अन्यथा तत्तत्प्रागभावस्य तत्तत्कर्तृत्वस्यैव प्राप्त्या अप्राप्तविश्वकर्तृत्वनिरासानुपपत्तेः । श्रुतिसूत्रयोरेकवचनप्रयोगाच्च । वक्ष्यति च 'अनेकत्वादेः परेणापि त्याज्यत्वादिति । यत्तु 'तस्मात् तत्तत्प्रागभावस्यैव तत्तत्कर्तृत्वादि'ति पूर्वग्रन्थे निगमनं तत्तु भिक्षुपादप्रसरणन्यायमुपेत्येत्यविरोधः । उपादानं च नेत्यपि ध्येयम् ।

**या०—** प्रागभावे व्यभिचारपरिहारायाह **भावत्वादिति ॥ विप्रतिपन्नोऽभाव इति ।** अत्रोत्तरत्र च सर्वत्राभावपदानि प्रागभावपराणीति ज्ञातव्यम् ।

**श्री०—** वस्तुत्वमात्रस्य तन्मते प्रागभावे व्यभिचारित्वात् भावत्वादिति व्याख्यातम् ।

**सु०— नन्वस्तु निषेधैकस्वरूपत्वं, कर्तृत्वं च; को विरोधः । तथा च घटाद्यभावस्याकर्तृत्वेऽपि प्रलयकालीनोऽभावः कर्ता भविष्यतीत्यतः कर्तृत्वनिषेधैकस्वरूपत्वयोर्विरोधं स्फोरयितुं कर्तृत्वस्वरूपमाह** बुद्धीति ।

अनु० — बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितम् ॥

प्रवृत्तिः इच्छाप्रयत्नादिका। निश्चितं सर्वैरपि परीक्षकैः। वृक्षेण स्थीयत इत्यादौ कर्तृत्वं पारिभाषिकं न तु स्वाभाविकमिति हि सर्वेऽपि प्रतिपन्नाः।

अत्र बुद्धिपूर्वप्रवृत्तिरित्येतद्बुद्ध्या विविच्य व्याख्येयम्। तथा हि। स्यात्कर्तृनिषेधैकस्वरूपत्वयोरविरोधः, यदि तृतीयादिविषयत्वमेव कर्तृत्वं स्यात्। न चैतदस्ति। अपि तर्हि इच्छाप्रयत्नादिरूपा प्रवृत्तिरेव। सर्वैरपि परीक्षकैस्तस्या एव कर्तृत्वेन निश्चितत्वात्। प्रकरणाच्चैतदेव निश्चितम्। अत्रैव हि विप्रतिपत्तिर्नान्यत्र। सा चेयं प्रवृत्तिर्बुद्धिपूर्वा बुद्धिव्याप्ता। कार्यायाः प्रवृत्तेर्बुद्धिकारणकत्वात्। अकार्यायाश्च बुद्धिव्यभिचाराद्यदर्शनात्। न च कर्तृत्वापरपर्यायायाः प्रवृत्तेर्व्यापिका बुद्धिरभावे संभवति। ततो व्याप्यं कर्तृत्वमपि न संभवत्येवेति कथं कर्तृत्वनिषेधैकस्वरूपत्वयोर्न विरोध इति।

अत्र कर्तृत्वानुवादेन बुद्धिपूर्वप्रवृत्तिरिति व्याख्यानान्निश्चितमिति नपुंसकोपपत्तिः। भावे वा क्तप्रत्यय इति।

शे० — ननु भाष्ये बुद्धिपूर्वेति कर्तृत्वनिरूपणमनर्थकम्। न च निषेधैकस्वरूपत्वकर्तृत्वयोर्विरोधप्रदर्शनार्थं तदिति वाच्यम्। तस्याप्यनर्थकत्वादित्यतोऽप्रयोजकत्वशङ्कापरिहारार्थं तदिति भावेन तच्छङ्कापरिहारकतयोत्तरवाक्यं योजयितुमप्रयोजकत्वशङ्कामुत्थापयति नन्वित्यादिना। प्रवृत्तिशब्दस्य प्रयत्नमात्रार्थत्वप्रतीतिनिरासायाह इच्छाप्रयत्नादिकेति। प्रयत्नानन्तरभाव्यात्मपरिस्पन्दसंग्रहायादिपदम्। अत एव चिकीर्षाव्यतिरेकेण कृतिमात्रजन्ये, मत्तो भूतमिदं न मया कृतमिति व्यवहारः, अकामकृते मुख्यकर्तृत्वाभावात्प्रायश्चित्तभेदश्चोपपद्यते। अन्यथा कर्तृत्वविशेषात्कामकृते सम्पूर्णप्रायश्चित्तमन्यत्र तदर्धमिति नियमो न स्यादित्यवधेयम्। नन्विच्छादियोगित्वरूपकर्तृत्वस्य चेतनमात्रनिष्ठत्वेनाचेतनसाधारणत्वाभावदननुगम इत्यतोऽचेतनस्य कर्तृताया एवाभावान्न तदननुगमो दोषायेत्यभिप्रेत्य, तथा सत्यचेतने कर्तरि विहितत्वात्तृतीयादेः, 'वृक्षस्तिष्ठति, वृक्षेण स्थीयते' इत्यादिव्यवहारो न स्यादित्यतोऽचेतनस्येच्छादियोगित्वरूपमुख्यकर्तृत्वाभावेऽपि तृतीयादिप्रयोजकपारिभाषिकवैयाकरणाभिमतकारकान्तरानपेक्षत्वरूपामुख्यकर्तृतायाः सत्त्वादुक्तविधकर्तृत्वव्यवहारो गौण एवेत्यभिप्रेत्य तद्गौणतायां न्यायवाचस्पत्युदयनादिसम्मतिमाह वृक्षेणेति। आदिपदेन वृक्षस्तिष्ठतीत्यादेः संग्रहः। यद्यपि वृक्षस्य अचैतन्यपक्षेऽपि तत्र मुख्यकर्तृत्वाभावात्तद्व्यवहारस्य गौणत्वप्राप्तावपि चैतन्यपक्षे मुख्यमेव कर्तृत्वं सम्भवतीति तद्व्यवहारस्यामुख्यत्ववर्णनमनुचितम्। तथाऽप्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा घटस्तिष्ठति घटेन स्थीयत इत्यादेरेवौप-

चारिकव्यवहारत्वेनाभिमतत्वान्नानुपपत्तिः अत एव न्यायवाचस्पतिना घटस्तिष्ठतीत्यौपचारिकः प्रयोग इत्येवोक्तमित्यवधेयम् । वस्तुतो वृक्षस्य स्वस्थित्यनुकूलेच्छाप्रयत्नसद्भावे मानाभावान्न मुख्यकर्तृत्वमिति यथाश्रुत एवायं ग्रन्थः साधुः । बुद्धिपूर्वप्रवृत्तिरित्युक्त्या प्रसक्तां विशिष्टस्य कर्तृत्वरूपतां परिहरति **अत्रेति** । ननु कथमस्मिन्पक्षे वाक्यभेदेन योजनेत्यत उक्तं **बुद्ध्या विविच्येति, बुद्धिपूर्वा प्रवृत्तिरिति** च । बुद्ध्या वाक्यभेदं सम्पाद्येत्यर्थः ॥ **तृतीयादिविषयत्वमिति** । वैयाकरणाभिमतं पारिभाषिकं तृतीयादिप्रयोजकं कारकान्तरानपेक्षत्वमेवेत्यर्थः । मूले निश्चितमिति पदं प्रवृत्तिरेव कर्तृत्वमिति प्रतिज्ञार्थे हेतुसमर्पकमित्यभिप्रेत्य तथा योजयति **प्रकरणाच्चेति** । व्युत्पादनीयत्वाच्चेत्यर्थः ॥ **एतदेवेति** । प्रवृत्तिरेव कर्तृत्वमित्येतदेवेत्यर्थः । कुतोऽस्यैव व्युत्पाद्यत्वेन प्रकृतत्वं तृतीयादिविषयत्वस्यापि तत्सम्भवादित्यत आह **अत्रैव हीति** । चिकीर्षाकृतिमत्त्वरूप एव कर्तृत्वे विप्रतिपत्तिर्न तु तृतीयादिविषयत्वरूपे तस्मिन्नित्यर्थः । ब्रह्मशब्दोक्तगुणपूर्तिसम्भावकत्वेनास्यैव जन्मादिसूत्रोक्तत्वादिति भावः । तर्ह्येतावतैव कर्तृत्वनिर्वचनेन कर्तृत्वनिषेधैकस्वरूपत्वयोर्विरोधस्फोरणात् बुद्धिपूर्वेत्यस्य वैयर्थ्यमित्यत उक्तरूपकर्तृत्वस्यापि तन्मनोऽकुरुतेति श्रुतिबलेन प्रागभावे परेणाङ्गीकारान्न कर्तृत्वनिषेधैकस्वरूपत्वयोर्विरोधसिद्धिरित्यप्रयोजकत्वमेवेत्यतः कर्तृतायास्तद्व्यापकव्यावृत्त्या पक्षे व्यावृत्तिप्रतिपादनार्थत्वान्न तदिति भावेन तदन्वयप्रदर्शनपूर्वकं प्रकृतोपयोगितया तद्याचष्टे **सा चेयमिति** । कुतः प्रवृत्तेर्बुद्धिर्व्याप्तिर्येन तद्व्यावृत्त्या तद्व्यावृत्तिर्भवेदित्यत आह **कार्यीया इति** । तथा चाकारणकार्योत्पत्तिप्रसङ्गरूपविपक्षबाधकतर्कसहकृतसाहचर्यग्राहिप्रत्यक्षादेव तत्सिद्धिरिति भावः । व्यभिचाराद्यदर्शनादिति आदिपदेनोपाधिपरिग्रहः ॥ **अभावे सम्भवतीति** । तस्याचेतनप्रभेदत्वादिति भावः । ननु या बुद्धिपूर्वप्रवृत्तिरिति बुद्धिपूर्वप्रवृत्त्यनुवादेन तस्याः कर्तृत्वरूपताविधानादुद्देश्यप्रवृत्तिलिङ्गानुरोधेन बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितेति वक्तव्यम् । तत्कथं निश्चितमिति नपुंसकप्रयोग इत्यतो भवेदेवं यद्यत्रोक्तरीत्या प्रवृत्त्यनुवादेन कर्तृत्वविधिः स्यात् । न चैवम् । किं तर्हि यत्कर्तृत्वं तद्बुद्धिपूर्वप्रवृत्तिरिति कर्तृत्वानुवादेन तद्व्याख्यानादुद्देश्यकर्तृत्वलिङ्गानुरोधेन निश्चितमिति नपुंसकत्वमुपपन्नमित्याह **अत्रेति** । यथाश्रुतोद्देश्यविधेयभावव्यत्यासेन योजनाया मितिशब्दस्य भिन्नक्रमत्वाश्रयणादपरितुष्यन्नाह **भावे वेति** । 'नपुंसके भावे क्तः' इति स्मरणादिति भावः । तथा च 'इति निश्चितमि'त्यस्य इति निश्चय इत्यर्थकत्वान्न विशेष्यनिघ्नत्वप्रसङ्ग इति द्रष्टव्यम् ।

स० — **वृक्षेण स्थीयत इत्यादाविति** । न चात्र घटः तिष्ठति इत्यादिकमेवोदाहर्तुं योग्यमिति तत्परिहारेण वृक्षेण स्थीयत इत्यस्योदाहरणे किं निमित्तमिति वाच्यम् । तत्र प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति स्मरणात् प्रातिपदिक एव प्रथमेति वक्तुं शक्यत्वेन परेणोदाहर्तुम्

अशक्यत्वात् वृक्षेणेत्यत्र तत्करणत्वाभावेन तत्र तृतीयाया अयोगात् कर्तर्येव तृतीयाया वाच्यत्वात् कर्तृत्वसिद्धिरित्यभिप्रायेणैतदुपपत्तेः । अत्र वृक्षशब्दो जडपर इति ध्येयम् । **भावे वेति** । 'नपुंसके भावे क्तः' इति स्मरणादिति भावः ।

प० — **इच्छाप्रयत्नादिकेति** । कार्यानुकूलेच्छाप्रयत्नौ । शरीरेन्द्रियादिरादिपदार्थः । नन्वेवं वृक्षेणेत्यादौ कर्तृकरणयोस्तृतीयेति कर्तरि विहिततृतीययाऽवगतकर्तृत्वायोग इत्यत आह **वृक्षेणेति** । तिष्ठतेरकर्मकत्वेन लः कर्मणि च भावे चाकर्मकेभ्य इति भावलकारे भावार्थकाऽऽख्याततत्क्रियापदयोगे कर्तरि प्राप्तेयं तृतीयेति ज्ञेयम् ॥ **पारिभाषिकमिति** । स्वतन्त्रः कर्तेति पाणिन्युक्तेः स्थितिरूपक्रियां प्रति स्वातन्त्र्यरूपं कर्तृत्वं पाणिनिपरिभाषितमेवेति न सर्वसंप्रतिपत्तिरिति भावः ॥ **विविच्येति** । पूर्ववादिनापीच्छादेरङ्गीकारात्तदभावस्य बुद्ध्यभावेनैव साध्यत्वात् प्रवृत्तिर्हि बुद्धिपूर्वेत्येव बुद्ध्यैव विवेकं कृत्वा व्याख्येयमित्यर्थः ॥ **तृतीयादीति** । आदिपदेन कर्तृकर्मणोः कृतीत्यादिना कर्तरि विहितषष्ठ्यादिग्रहः ॥ **प्रकरणादिति** । जन्मादिसूत्रोक्तकर्तृत्वस्यैव पूर्वोत्तराधिकरणयोर्विचारस्यैव प्रवृत्तेरिति भावेन प्रकरणादित्युक्तं व्यनक्ति **अत्रैव हीति** । यद्वा विवादविषयत्वाच्चैतदेव कर्तृत्वमुपादेयं नान्यदिति भावेनाह **अत्रैव हीति** । ततश्च किं, तादृशकर्तृत्वस्य मयापि स्वीकारादित्यत आह **सा चेति** । **बुद्धिपूर्वकत्वं** क्वचिद्बुद्धिकारणकत्वं क्वचिद्बुद्ध्यविनाभूतत्वम् । यद्वा बुद्धिकारणकत्वेनापि बुद्ध्यविनाभूतत्वमेव विवक्षितमिति भावेन बुद्ध्यविनाभूतत्वरूपबुद्धिपूर्वकत्वं व्यनक्ति **कार्याया इत्यादिना** ॥ **व्यापिका बुद्धिरभावे (न च) संभवतीति** । एतच्च 'बुद्धिराहित्यमेव तदि'त्यत्रोपपादयिष्याम इति भावः ॥ **इति व्याख्यानादिति** । कर्तृत्वं बुद्धिपूर्वप्रवृत्तिरिति निश्चितमिति योजनेति भावः ॥ **भावे वेति** । 'नपुंसके भावे क्त' इति प्रत्यये कर्तृत्वमिति निश्चय इत्यर्थलाभात् न दोष इति भावः ।

या० — इच्छाप्रयत्नादिकेष्वित्यत्रादिपदेन शरीरपरिस्पन्दस्य ग्रहणम् । नन्वेवं वृक्षेण स्थीयत इत्यादौ वृक्षादेः कर्तृता न स्यात्तत्र ज्ञानाद्यभावादित्यत आह **वृक्षेणेति** । स्वतन्त्रः कर्तेत्यनेन क्रियास्वातन्त्र्यमेव कर्तृत्वमिति वैयाकरणैः परिभाषायाः कृतत्वादिति भावः ॥ **तृतीयादिविषयत्वमेवेति** । तृतीयादिविषयश्च क्रियायां यः स्वतन्त्रः स एवेति भावः । अत्रादिपदेन तिङादियुक्तप्रथमा कृद्युक्तषष्ठी च ग्राह्या । ननु 'तन्मनोऽकुरुते'ति श्रुतिबलादिच्छादिरूपप्रवृत्तिरपि प्रागभावे मयाऽङ्गीक्रियत एवेत्यत आह **सा चेयमिति** ॥ **भावे वेति** । 'नपुंसके भावे क्तः' इति स्मरणादित्यर्थः । तथा च इति निश्चय इत्यर्थलाभान्न विशेष्यनिघ्नत्वमस्येति भावः ।

श्री० — अनुमानेऽप्रयोजकतामाशङ्कते **नन्वस्त्विति** । ननु भवदुक्तं कर्तृत्वं वृक्षेणेत्यादौ नेत्यव्याप्तिरत आह **वृक्षेणेति** ॥ **स्यादिति** । तथा च प्रागभावेन स्थीयत इति प्रयोगात्तस्याप्येतादृशं कर्तृत्वं भवेदिति भावः । **एतदेव** प्रवृत्तिरेव कर्तृत्वमित्येतदेवेत्यर्थः । **अत्र** एतादृशकर्तृत्वे । **नान्यत्र** तृतीयाप्रयोगादिविषयत्वरूपे कर्तृत्वे । तादृशस्य प्रागभावेन स्थीयत इत्यत्रापि सत्त्वादित्यर्थः । बुद्ध्या विविच्येत्युक्तं दर्शयति **सा चेयमिति** । प्रवृत्तिर्जन्याजन्यभेदात् द्विविधा । तत्राद्ये आह **कार्याया इति** । अस्मदादिप्रवृत्तेरित्यर्थः ॥ **अकार्याया इति** । तथा चेश्वरादिप्रवृत्तेरजन्यत्वेन बुद्धिकारणकत्वाभावेऽपि तद्व्यभिचारो न, बुद्धिसामानाधिकरण्यं तु तिष्ठत्येवेत्यर्थः ॥ **नपुंसकतोपपत्तिरिति** । सामान्ये नपुसंकमिति वचनादिति भावः । अन्यथा 'प्रवृत्तिकर्तृत्वमिति निश्चिते'इति स्यादिति ध्येयम् ॥ **भावे वेति** । समाधानान्तरम् । तथा च प्रवृत्तिः कर्तृत्वमिति निश्चितं निश्चय इत्यर्थः । अस्मिन्पक्षेऽपि नपुंसकप्रयोगः । कुत इति चेत् । 'नपुंसके भावे क्त' इति स्मरणात् । नपुंसकत्वे विवक्षिते भावे क्तप्रत्ययो भवतीति सूत्रार्थः ।

**सु० – ननु मा भूदप्रयोजकत्वं हेतोः । तथाऽपि वैयर्थ्यमपरिहार्यम् । अभावपर्यायो हि प्रतिषेधशब्दः, कर्तृत्वं च कार्योत्पत्त्यनुकूलेच्छादियोग** इत्युक्तम् । **न च प्रतिषेधत्वं कर्तरि वर्तते, येनाकर्तृत्वं व्यभिचरेत् । तन्निरासार्थं च विशेषणं सार्थकं स्यात् । अतः प्रतिषेधत्वादित्येतावताऽकर्तृत्वव्यभिचाराभावात्सूत्रे मात्रग्रहणं व्याख्यानेऽप्येकग्रहणं व्यर्थमित्यत आह** प्रतिषेधेति ।

**अनु०** — प्रतिषेधात्मकत्वं तु भावस्य

**भावस्यापि कुलालादेः कर्तुः प्रतिषेधात्मकत्वं विद्यते । अतः प्रतिषेधत्वादित्यु(त्येवो)क्ते कुलालादौ, अकर्तृत्वेन हेतोः, व्यभिचारः स्यात् । तत्परिहारार्थं मात्रग्रहणम् । तद्व्याख्याने (च) एकग्रहणं च सार्थकमिति ।**

**शे०** – ननु 'प्रतिषेधात्मकत्वं चे'त्युत्तरवाक्यमनर्थकम् । न च कुलालादेः प्रतिषेधत्वोपपादनार्थं तदिति वाच्यम् । तस्याप्यनर्थकत्वात् । न च प्रतिपक्षानुमानस्याभासत्वशङ्कापरिहारार्थं तदिति वाच्यम् । कर्तृत्वनिषेधैकस्वरूपत्वयोर्विरोधस्फोरणेन तत्प्रापकाप्रयोजकताशङ्कायाः परिहृतत्वेन तदाभासत्वस्य प्रागेव परिहृतत्वात् । प्रतिषेधत्वोपपादनस्य तत्रानुपयोगाच्च । न च प्रकारान्तरेण प्राप्ताभासत्वशङ्कानिरासार्थं तदिति वाच्यम् । प्रापकाभावेन तदनुदयादित्यतो विशेषणवैयर्थ्यस्यैव तत्प्रापकत्वेन तत्प्रयुक्ततदाभासत्वशङ्कायां, व्यभिचारवारकत्वेन विशेषणस्यार्थवत्तया, विशेषणवैयर्थ्यस्यैवाभावान्न

तत्प्रयुक्ताया अपि तदाभासत्वशङ्काया अवकाश इत्यभिप्रेत्य तद्वारकतया तत्सार्थक्यं वक्तुमविशेषितस्य हेतोर्विपक्षावृत्तित्वे व्यभिचारस्यैवाप्रसक्त्या विशेषणस्य तद्वारकत्वायोगात् व्यभिचारप्रसक्त्युपपादनाय विपक्षेऽविशेषितस्य हेतोर्वृत्तिप्रतिपादनार्थं तदिति भावेन रीत्यन्तरेण तदाभासत्वशङ्कामुत्थापयति **ननु मा भूदिति**। नन्वविशेषितस्य हेतोर्विपक्षवृत्तित्वोपपादकत्वे कुलालादेः कर्तुरेव प्रतिषेधात्मकताया एव व्यभिचारोपपादकत्वेन तदुपदर्शनाय कुलालादेरित्येव वक्तव्यतया भावस्येति वचनासङ्गतिरित्यतोऽत्र सामान्यशब्दत्वाद्भावशब्दस्य तद्विशेषकुलालादिकर्त्रुपलक्षणत्वान्नासङ्गतिरिति भावेनानूद्य भावशब्दं व्याचष्टे **भावस्येति**। साकाङ्क्षतया वाक्याभासत्वशङ्कापरिहारायापेक्षितक्रियामध्याहरति **विद्यत इति** ॥ **मात्रग्रहणमिति**। सूत्र इति शेषः। क्वचित्सूत्रे मात्रग्रहणमित्यपि पाठः। तद्व्याख्याने एकग्रहणं चेत्येव पाठः। व्याख्याने चैकग्रहणमिति पूर्वग्रन्थानुसारात्। तद्व्याख्यानमेकग्रहणं चेति पाठे सौत्र-मात्रपदव्याख्यानमेकग्रहणं व्याख्याने सार्थकमिति व्याख्यानपदाध्याहारेण योज्यम्।

श्री०— **अकर्तृत्वेन** तद्रूपसाध्येन।

सु०— **ननु कुलालादेर्भावस्य कथं प्रतिषेधात्मकत्वमित्यत आह** अभावेति।

अनु०— अभावधर्मतः।

**अभावोऽत्रान्योन्याभावो विवक्षितः। स धर्मोऽस्येत्यभावधर्मा। तस्य भावस्तत्त्वम्। तत इति भावप्रधानो निर्देशः। अस्ति खलु कुलालादेर्भावस्य भेदापरपर्याय(:)प्रतिषेधात्मकः अन्योन्याभावो धर्म इति।**

शे०— कुलालस्य प्रतिषेधात्मकत्वोपपादनेन व्यभिचारोपपादनसिद्धेरभावधर्मत्वप्रतिपादनमनर्थ-कमित्यतः प्रतिषेधात्मकत्वोपपादनार्थं तदिति भावेन किं तदुपपादनेनेत्यतस्तदनुपपत्तिशङ्कामुत्थापयति **नन्विति**। अभावशब्दस्य चतुर्विधाभावपरत्वभ्रान्तिं निवारयति **अभावोऽत्रेति**। संसर्गाभाववत्त्वस्य धर्मत्वेऽपि संसर्गाभावस्यादृश्यत्वाधिकरणन्यायेन धर्मत्वाभावेन चतुर्विधस्याभावस्य धर्मपदोक्तधर्मत्वान्वया-संभवादिति भावः ॥ **भावप्रधान इति**। अभावधर्मत्वत इति भावप्रधान इत्यर्थः। **हेतोरसिद्धिं** परिहरति **अस्तीति**।

प०— धर्मिणैक्यलाभायाह **अभावोत्रान्योन्याभाव इति**। तस्यैवाभेदो धर्मिणा नान्यस्येति अदृश्यत्वनये व्युत्पादनात्। अभावधर्मेत्यनिच्।

या०— **अन्योन्याभाव इति**। संसर्गाभावेषु वक्ष्यमाणधर्म्यैक्यस्यासंभवादिति भावः।

**सु०— नन्विदमसङ्गतम् । यः कर्ता धर्मी कुलालादिः न तस्य प्रतिषेधात्मकत्वम्, यश्च प्रतिषेधात्मकोऽन्योन्याभावो न तस्य कर्तृत्वमित्यत आह** धर्मेति ।

**अनु०—** धर्मधर्म्यैक्यतश्चैव

**धर्मधर्मिणोः कुलालान्योन्याभावयोरेकत्वतः । चशब्दो हेतुसमुच्चये । अभावधर्मतो धर्मधर्म्यैक्यतश्च प्रतिषेधात्मकत्वं भावस्यास्तीत्यन्वयः । एवशब्दो भेदव्युदासार्थः । अन्योन्याभावो हि धर्मिणाऽत्यन्ताभिन्नोऽभ्युपेयते । न त्वयावद्द्रव्यभावी धर्म इव भिन्नाभिन्नः ।**

**शे०—** ननु धर्मधर्म्यैक्यतश्चेति भाष्यमनर्थकम् । न च कुलालान्योन्याभावयोरैक्यप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वादित्यतोऽभावधर्मकत्वोक्तेरभावरूपे धर्मे हेतुवृत्त्युपपादकत्वेऽपि विपक्षभूते कर्तरि कुलालादौ तदनापादकत्वेन तदुपपादकतया अभावधर्मत्वोक्तेरसङ्गतिशङ्कापरिहारार्थत्वान्न तदिति भावेन तां शङ्कामुत्थापयति **नन्विति ॥ हेतुसमुच्चय इति ।** अत्र समुच्चयशब्द इतरेतरयोगपरः । वक्ष्यमाणप्रकारेणाभावधर्मकत्वधर्मधर्म्यैक्ययोः परस्परसापेक्षयोरेव हेतुवृत्त्युपपादकत्वेन निरपेक्षयोस्तदभावात् । परस्परनिरपेक्षयोरेकक्रियासंबन्धस्थल एव च समुच्चयनियमस्याकरे स्थितत्वादित्यवधेयम् । धर्मधर्म्यैक्यत इत्येतावता धर्मधर्मिणोः कुलालान्योन्याभावयोरैक्योक्त्या कुलालादेः प्रतिषेधात्मताया उपपादितत्वात् एवशब्दवैयर्थ्यम् इत्यतः कुलालान्योन्याभावयोर्भिन्नाभिन्नत्वे, अन्योन्याभावाभेदेन कुलालस्य प्रतिषेधात्मकत्वप्राप्त्या व्यभिचारप्राप्तिवत्तद्भेदेन तदनात्मकत्वप्राप्त्या तत्परिहारस्यापि प्रसङ्गेन, भेदाभेदस्य व्यभिचारानुपपादकत्वेन भेदनिरासद्वारा तदुपपादकात्यन्ताभेदलाभाय एवशब्द इत्याह **एवशब्द इति ।** नन्वन्योन्याभावस्य धर्मिणाऽत्यन्ताभेदाभावे कथमेवशब्देन तत्र भेद व्युदाससमर्पणमित्यतस्तस्य तत्र सम्भवमाह **अन्योन्याभावो हीति ।** ननु संयोगादिवत् भेदाभेदयोरपि सम्भवे किमिति सिद्धान्तेऽत्यन्ताभेदाभ्युपगमोऽपीत्यतः, सत्यपि तस्मिन्नसत्त्वात् इति वक्ष्यमाणभेदसाधकाक्रान्ततया संयोगादौ भेदाभेदयोः सद्भावेप्यन्योन्याभावे भेदसाधकस्य खण्डितत्वस्याभावाद्भेदाभावेन भेदाभेदयोस्तत्रासम्भवादित्याह **न त्विति ।**

**स०— न त्विति ।** भिन्नाभिन्नत्वे प्रतिषेधात्मकत्वेन तत्र व्यभिचारप्राप्तिवत् तदनात्मकत्वेन हेत्वभावेन व्यभिचारपरिहारस्यापि कर्तुं शक्यत्वादत्यन्ताभेद आवश्यकः इति भावः ।

**या०— न त्विति ।** भिन्नाभिन्नत्वे प्रतिषेधात्मपदेन तदत्यन्ताभेदविवक्षयैव व्यभिचारस्य परिहर्तुं शक्यत्वेन मात्रपदोपादानं व्यर्थमेव स्यादिति भावः ।

**श्री०— यः कर्तेति ।** हेतोरेवाभावान्न कुलालादौ व्यभिचार इत्यर्थः ॥ **यश्चेति ।** साध्यस्यापि सत्त्वान्नान्योन्याभावेपि व्यभिचार इत्यर्थः ॥ **हेतुसमुच्चय इति ।** प्रतिषेधात्मकत्वरूप-हेतुसमुच्चय इत्यर्थः ।

**सु०— अस्त्वेवं प्रतिषेधत्वस्य कुलालादौ व्यभिचारस्तथाऽपि कथं मात्रग्रहणस्य सार्थक्यम् । न ह्यविशिष्टव्यभिचार एव विशेषणं प्रयोजयति । तथात्वे विशेषणनियमानुपपत्तेः । किन्नाम विशेषणस्य व्यभिचारनिरासौपयिकत्वे सति । तदत्र कथमित्यत आह** न त्विति ।

**अनु०—** न तु तन्मात्रता भवेत् ।

**कुलालादेः कर्तुर्भावस्य प्रतिषेधत्वेऽपि(धात्मकत्वेऽपि) तन्मात्रता प्रतिषेधमात्रता न भवेत् । अतोऽस्ति मात्रग्रहणस्य व्यभिचारपरिहारौपयिकत्वम् । तुशब्दोऽवधारणे सन्दिग्धव्यभिचारपरिहारार्थः ।**

**शे०—** ननु तथाऽपि 'न तु तन्मात्रता भवेदि'त्युत्तरभाष्यमनर्थकम् । न च कुलालादेः प्रतिषेधमात्रताऽभावप्रतिपादनार्थं तदिति वाच्यम् । तस्याप्यानर्थक्यात् । न च मात्रशब्दस्य व्यभिचारवारकत्वप्रदर्शनार्थं तदिति वाच्यम् । तत्प्रदर्शनस्याप्यनर्थकत्वात् । न च सार्थक्यवर्णनेन तस्य विशेषणत्वसिद्धिरेव तत्प्रयोजनमिति वाच्यम् । अविशेषितस्य व्यभिचारोपपादनेनैव विशेषणसार्थक्यसिद्ध्या विशेषणतायास्तदनपेक्षितत्वात् । न चाविशेषितस्य व्यभिचारवद्विशेषणस्य व्यभिचारपरिहारकतौपयिकत्वस्यापि तदुपयोगित्वान्न तदिति वाच्यम् । अविशेषिते व्यभिचारमात्रस्यैव तत्सार्थक्यनिमित्तत्वे बाधकाभावेन विशेषणे व्यभिचारपरिहारकत्वस्यापि तन्निमित्तत्वकल्पनायां कल्पनागौरवप्रसङ्गादित्यतोऽविशेषितव्यभिचारमात्रस्य तत्सार्थक्योपपादकत्वे बाधकदर्शनेनोभयोरपि विशेषणसार्थक्योपपादकत्वं व्युत्पाद्य पूर्वग्रन्थेनाविशेषितस्य व्यभिचारसमर्थनेऽपि विशेषणस्य व्यभिचारपरिहारकत्वासिद्ध्या सार्थक्यासिद्धेस्तत्सिद्ध्यर्थमवश्यवक्तव्यव्यभिचारपरिहारकतोपदर्शकत्वेनोत्तरवाक्यं योजयति **अस्त्वेवमिति ।**

**स०— न ह्यविशिष्टव्यभिचार एवेति ॥ अविशिष्टस्य** हेतोः विशेषणादाने इति यावत् । **व्यभिचार एव** व्यभिचारे प्राप्ते एव । **विशेषणं प्रयोजयति ।** विशेषणं सार्थकमिति न हि । तथात्वे अविशिष्टस्य हेतोर्व्यभिचारे प्राप्ते यस्मिन् विशेषणे दत्ते व्यभिचारपरिहारो भवति नियमेन हेतौ तस्यैवोपादानं न स्यात् । किं तु यत्किञ्चिद्विशेषणोपादानं स्यादिति भावः ।

**या०—** भावस्येति हेतुगर्भविशेषणम् ।

श्री० — **विशेषणम्** यादृशतादृशम्। **तथात्व इति**। अविशिष्टस्य केवलस्य हेतोर्व्यभिचारो विशेषणस्य व्यभिचारपरिहारोपयुक्तत्वं चेत्युभयं विशेषणदाने प्रयोजकम्। तत्राविशिष्टव्यभिचार एव यदि यादृशतादृशमपि विशेषणं प्रयोजयेदित्यर्थः ॥ **नियमेति**। शब्दो गुणोऽसदादिबाह्यैकेन्द्रियग्राह्यत्वादित्यत्रसामान्ये व्यभिचारपरिहाराय सामान्यवत्त्वे सतीति विशेषणदाननियमो न स्यात्। किन्तु प्रमेयत्वे सतीत्यादिविशेषणमपि देयं स्यादित्यर्थः। **सतीति**। तथा च तादृशमेव विशेषणं देयमित्यर्थः। तत् व्यभिचारनिरासौपयिकत्वम्।

सु० — **नन्वेवमेकं सन्धित्सतोऽ(न्यत्)परं प्रच्यवते। यतो व्यर्थविशेषणतापरिहारे स्वरूपासिद्धिरापन्ना। तथा हि। पक्षीकृते अभावे प्रमेयत्वादिधर्माः सन्ति न वा। नेति पक्षेऽप्रमिताश्रयत्वादिकं हेतोः। आद्ये न तावत्तेऽप्यभावाः; विधिप्रत्ययविषयत्वात्, प्रतियोग्यनिरूप्यत्वाच्च। षट्पदार्थातिरिक्तत्वमभावत्वमिति चेन्न। स्वेच्छापरिकल्पनाया अनुपादेयत्वात्। अन्यथा पञ्चैव भावास्तदतिरिक्तोऽभाव इति कल्पनायां समवायादेरपि भावत्वं न स्यात्। ते च नाभावाद्धर्मिणो भिन्नाः। अन्योन्याभावसमानन्यायत्वात्। तथा च यथा कुलालादेर्विपक्षस्य विधिनिषेधात्मकत्वेन प्रतिषेधमात्रत्वाभावस्तथा पक्षीकृताभावस्यापि (धर्मद्वारा विधिरूपस्य) प्रतिषेधमात्रत्वाभावात्स्वरूपासिद्धो हेतुः स्यात्। दृष्टान्तश्च साधनविकलः। घटाभावस्यापि धर्मद्वारा विधिरूपस्य प्रतिषेधमात्रत्वाभावादित्यत आह** अभावस्य चेति।

अनु० — अभावस्य च भावोऽपि धर्मोऽथापि

**प्रथमापिशब्दात्पूर्वं यदीत्यध्याहार्यम्। यद्यप्यभावस्य पक्षीकृतस्य दृष्टान्तीकृतस्य च भावः प्रमेयत्वादिधर्मोऽस्ति। चशब्दाद्धर्मिणा अभिन्नश्च। भावस्याभावधर्म इवेति वा। अथाऽपि न स्वरूपासिद्ध्यादिदोष इति शेषः।**

शे० — विशेषणसार्थक्यवर्णनेन तद्वैयर्थ्यप्रयुक्ततदाभासताशङ्कायाः परिहारात्किमुत्तरेणेत्यतः स्वरूपासिद्ध्यादिपरिहारार्थत्वान्नोत्तरवाक्यवैयर्थ्यमिति भावेन प्रतिपक्षानुमाने स्वरूपासिद्ध्यादिशङ्कामुत्थापयति **नन्विति**। ननु विश्वप्रागभावे कथं प्रतिषेधमात्रत्वस्यासिद्धिरित्यतस्तां प्रतिपादयितुं प्रतिजानीते **तथा हीति**। प्रमेयत्वादिलक्षणभावरूपधर्मात्मकत्वेन भावत्वान्न प्रतिषेधमात्रत्वं प्रागभावस्येति वक्तुं, तस्य प्रमेयत्वादिधर्माणामेवाभावे, भावेऽपि तेषामप्यभावत्वे, भावत्वेऽपि वा प्रागभावाद्भिन्नत्वे उक्तरूपतद्धर्मात्मकत्वानापत्त्या तदनवकाशात्तत्तदुपपादनपूर्वकं तद्व्युत्पादयन् प्रथमतः प्रमेयत्वादिधर्मवत्त्वं तदभावे

दोषोक्त्या दर्शयितुं विकल्पयति **पक्षीकृत इति** । सन्तीत्याद्यपक्षेऽपि किं ते भावाः, उत अभावा इति विकल्पद्वयं मनसि निधायाद्ये द्वितीयमनूद्य दूषयति **आद्य इति** । कुतस्तेषां नाभावत्वमित्यतो विधिप्रत्ययविषयत्वेन भावलक्षणाक्रान्ततया भावत्वस्यैव निश्चितत्वात् । अन्यथाऽभावस्यापि तद्विषयतायां तत्रातिव्याप्तत्वेन तस्य भावलक्षणत्वायोगादिति भावेनाह **विधीति** । न केवलं भावलक्षणाक्रान्ततयैव तेषां भावत्वसिद्धिः, किन्नामाभावलक्षणानाक्रान्तत्वात् ; अन्यथा प्रमेयत्वादावभावलक्षणावृत्त्या अव्याप्तिप्राप्त्या तस्याभावलक्षणत्वं न स्यादित्याशयेनाह **प्रतियोग्यनिरूप्यत्वाच्चेति** । ननु न प्रतियोगिनिरूप्यत्वमभावलक्षणम् । प्रतियोगित्वस्याभावनिरूपकत्वरूपतया परस्पराश्रयत्वप्रसङ्गात् । किन्त्वन्यदेव । तथा च प्रतियोग्यनिरूप्यत्वेऽपि तेषां विवक्षिताभावलक्षणवत्तयाऽभावत्वं भविष्यतीत्यभिप्रेत्य शङ्कते **षट्पदार्थातिरिक्तत्वमिति** । उपलक्षणं चैतत् । द्रव्यादिषड्-लक्षणान्यतमराहित्यमित्यपि द्रष्टव्यम् ॥ **स्वेच्छेति** । लोकप्रतीतिमवधूयेति शेषः ॥ **अन्यथेति** । उपलक्षणं चैतत् । द्रव्यादिपञ्चलक्षणोपपन्ना एव भावास्तद्रहितोऽभाव इत्यपि स्यादित्यपि द्रष्टव्यम् । भावा इत्याद्यपक्षेऽपि किं प्रमेयत्वादयो धर्मिणः प्रागभावाद्भिन्ना उताभिन्ना इति विकल्पद्वयं मनसि निधायाद्यं दूषयति **ते चेति** । कुतो नेत्यतोऽन्योन्याभावस्येव यावद्द्रव्यभावितया धर्मिणाऽत्यन्ताभिन्नत्वस्यैव सिद्धत्वादित्याह **अन्योन्येति** । अस्तु तर्हि धर्मिणोऽभिन्ना इति द्वितीय इत्यत आह **तथा चेति** । न केवलमस्मिन्पक्षे हेतोः स्वरूपासिद्धिरित्येव, किन्तु दृष्टान्तस्य साधनविकलत्वाद्व्याप्यत्वासिद्धिश्चेत्याह **दृष्टान्तश्चेति** । तदुपपादयति **घटाभावस्यापीति** । **धर्मद्वारा** प्रमेयत्वादिभावरूपधर्मभेदेनेत्यर्थः । उक्तस्य सर्वस्याप्यर्थस्य मूलारूढतासिद्ध्यर्थमपेक्षिताध्याहारेण योजयति **प्रथमेति** ॥ **अभिन्नश्चेति** । अत्यन्ताभिन्नश्चेत्यर्थः ॥ **इवेति वेति** । तथा च चशब्द इवार्थ इति भावः । अथाऽर्पीत्यस्य साकाङ्क्षत्वपरिहारायापेक्षितं शेषं पूरयति **नेति** ।

स० — **अप्रमिताश्रयत्वादिकमिति** । पक्षप्रमित्यभावेन तद्घटितपक्षत्वासंभवे हेतोः पक्षधर्मत्वाभावः आदिपदेन ग्राह्यः । **विधिप्रत्ययविषयत्वादिति** । अपरप्रतिक्षेपधर्मितया प्रथमाक्षसन्निकर्षजन्यप्रतीतिविषयत्वादित्यर्थः । **षट्पदार्थातिरिक्तत्वमिति** । औपाधिकधर्माणां पदार्थस्वरूपत्वमेवेति मतानुसारेण विकल्पः । तेन 'सामान्यं द्विविधम् । जातिरूपमुपाधिरूपं चे'त्युक्तत्वेन प्रमेयत्वादीनां सामान्यरूपत्वेन षट्पदार्थान्तर्गतत्वात् कथं तदतिरिक्तत्वमिति शङ्कानवकाशः । सन्त्वन्योन्याभावेऽपि प्रमेयत्वादयो भावधर्माः, ततः किमित्यत आह **ते चेति** ॥ **अभावात्** । अन्योन्याभावादित्यर्थः ।

**प०— अप्रमिताश्रयत्वादिकमिति** । आश्रयासिद्धत्वस्वरूपासिद्धत्वादिकं भवेदित्यर्थः ॥ अभावत्वमपि अभावरूपमेवेति शङ्कते **षट्पदार्थेति** । सन्तु नाम भावरूपा धर्मा अभावे । तावता कथं स्वरूपासिद्धिरित्यत आह **ते चेति** ॥ **अन्योन्याभावसमानेति** । यथाऽन्योन्याभावो यावद्द्रव्यभावित्वात् धर्मिणाऽत्यन्तमभिन्नस्तथा एतेपि यावद्द्रव्यभावित्वादभिन्ना इत्यर्थः । निपातानामनेकार्थत्वात् इवार्थोऽयं चशब्द इत्याह **भावस्याभावधर्म इवेति वेति** ।

**या०— अन्योन्याभावेति** । अन्योन्याभाववद्धर्मत्वादित्यर्थः ॥ **इवेति वेति** । तथा च चशब्द इवार्थ इति भावः ।

**श्री०— इति वेति** । चशब्दार्थ इति शेषः । तथा च भावस्य कुलालादेर्यथाऽन्योन्याभावरूपोऽभावाख्यो धर्मो भवति । स च धर्मिणोऽभिन्नश्च भवति । तथाऽभावस्य च भावो धर्म इत्युपमार्थकश्चशब्द इत्यर्थः ॥

**सु०— कथमित्यत** आह हि धर्मिण इति ।

**अनु०—** हि धर्मिणः ॥

---

ताद्दक्त्वं मात्रतेहोक्ता

**हिशब्दो हेतौ । ताद्दक्त्वं प्रतिषेधात्मकत्वम् । मात्रता प्रतिषेधमात्रता । इह सूत्रे । एतदुक्तं भवति । स्यादयं स्वरूपासिद्ध्यादिदोषो यद्यत्र प्रतिषेधमात्रशब्देन केवलप्रतिषेधत्वं विवक्षितं स्यात् । न चैवम् । किन्तु धर्मद्वारमन्तरेण धर्मिण एव प्रतिषेधत्वम् । तच्च पक्षदृष्टान्तयोरस्त्येव । तयोर्धर्मद्वारेण विधित्वेऽपि धर्मिणोः प्रतिषेधत्वस्योभयसिद्धत्वात् । व्यावृत्तं च विपक्षात्कुलालादेः । तस्य धर्मतो निषेधत्वेऽपि धर्मि(णो विधित्वा)णोऽनिषेधत्वादिति । ननु कथमेतल्लभ्यते । उच्यते । मात्रशब्दो हि साकल्ये वर्तते । न च तत् क्वापि संभवति । प्रतिषेधेऽपि विधिसद्भावस्य परेणैवोक्तत्वात् । ततः प्रतिषेधमात्रशब्दो विधेरप्राधान्यं लक्षयति, अन्नमात्रं भुक्तमिति यथा । धर्मधर्मिणोश्च; अप्राधान्यं धर्मस्य, प्राधान्यं धर्मिणः । तेन धर्मिणः प्रतिषेधत्वं प्रतिषेधमात्रत्वमिति सिध्यति ।**

**शे०—** उक्ताशङ्कापरिहारोपयोगितया भाष्यस्थपदानि व्याचष्टे **हिशब्द इत्यादिना** । नन्वेवं धर्मिणः कुलालादेरेवान्योन्याभावरूपप्रतिषेधधर्माभिन्नत्वेन प्रतिषेधतया धर्मिणः प्रतिषेधात्मकरूप-

प्रतिषेधमात्रत्वस्य न विपक्षाद्व्यावृत्तिरिति व्यभिचारतादवस्थ्यमित्यत आह **एतदुक्तं भवतीति** ॥ **कथमिति** । उक्तस्यार्थस्य मुख्यवृत्त्याऽलाभाल्लक्षणायाश्च निर्निबन्धनत्वादिति भावः । लक्षणयैव तल्लाभ इति दर्शयितुं तस्या मुख्यार्थाद्यनुपपत्त्यादिसापेक्षत्वेन तदभावेऽसम्भवात् । तत्सद्भावं वक्तुं मुख्यार्थं तावदाह **मात्रशब्दो हीति** ॥ **न च तत्क्वापीति** । सकलस्य प्रतिषेधत्वं क्वापि पक्षे दृष्टान्ते च न सम्भवतीत्यर्थः । तत्र हेतुमाह **प्रतिषेधेऽपीति** । ततो मुख्यार्थो न सम्भवतीति भावः । **विधेरिति** । प्रतिषेधापेक्षयेति शेषः । रूढलक्षणात्वान्न प्रयोजनापेक्षेत्याशयेनाह **अन्नमात्रं भुक्तमिति यथेति** । अत्र मात्रशब्दः साकल्यार्थः । न च भुक्तसकलस्यान्नत्वमिति सम्भवति । व्यञ्जनादेरवर्जनीयत्वात् । अतस्तत्राप्यन्नमात्रशब्दो लक्षणयाऽन्नस्य प्राधान्यं व्यञ्जनादेश्चाप्राधान्यं लक्षयतीत्येवाश्रयणीयमित्यर्थः । तथाऽपि प्रकृते किमायातमित्यत आह **धर्मधर्मिणोश्चेति** । निर्धारणे षष्ठी चेयम् ।

**स०**— सर्वात्मना प्रतिषेधासंभवमेवोपपादयति **प्रतिषेधेऽपीति** ॥ **तत इति** । विधेरपि प्रतिषेधवाचकेन प्रतिषेधमात्रशब्देन विधेरप्राधान्यं लक्ष्यत इति भावः । **अन्नमात्रमिति** । यथा साकल्येनान्नभोजनासंभवेन शाकादीनामपि प्रतिषेधवाचकेनान्नमात्रशब्देन शाकादीनामप्राधान्यं लक्ष्यते तथेत्यर्थः । नन्वस्तु विधेरप्राधान्यं प्रतिषेधधर्ममात्रशब्देन । तथापि प्रतिषेधधर्म्यैकत्वमित्येषोऽर्थः कथं लब्ध इत्यत आह **धर्मधर्मिणोश्चेति** । मध्ये इति शेषः । **यथेति** । यथा धर्मधर्मिणोर्मध्ये धर्मस्याप्राधान्यं, धर्मिणश्च प्राधान्यम्; एवं प्रकृतेऽपि प्रतिषेधस्य प्राधान्योक्तौ तस्य धर्मित्वं, विधेः अप्राधान्योक्तौ तस्य धर्मत्वं चोक्तं भवतीति प्रतिषेधमात्रत्वमित्यस्य प्रतिषेधधर्मित्वमित्यर्थ इति भावः ।

**प०**— **उभयसिद्धत्वादिति** । पूर्वपक्षिसिद्धान्त्युभयसिद्धत्वादित्यर्थः ॥ **कथमेतदिति** । धर्मिण एव निषेधरूपत्वमित्येतदित्यर्थः । **साकल्य इति** । धर्मात्मना धर्मितया च सकलाकारेण निषेधरूपत्वादित्यर्थे वर्तत इत्यर्थः ॥ **क्वापीति** । पक्षे दृष्टान्ते चेत्यर्थः । तद्व्यनक्ति **प्रतिषेधेपि विधिसद्भावस्येति** । धर्मद्वारा विधिरूपत्वस्येत्यर्थः ॥ **इति यथेति** । तत्रान्नस्य प्राधान्यं सूपादेरप्राधान्यं यथा तथेत्यर्थः ।

**या०**— **न च तत्क्वापीति** । तत्सकलस्य प्रतिषेधात्मकत्वं क्वापि पक्षे दृष्टान्ते च न सम्भवति । ततश्च मुख्यार्थो बाधित इति भावः ॥ **विधेरप्राधान्यमिति** । प्रतिषेधापेक्षयेति

शेषः । इदमुपलक्षणम् । प्रतिषेधस्य प्राधान्यं चेत्यपि ग्राह्यम् ॥ **अन्नमात्रमिति** । अत्रापि मात्रशब्दः साकल्यार्थः । न च सकलान्तर्गतस्य भक्ष्यादेरन्नत्वं सम्भवति; अतो मुख्यार्थासम्भवादन्नमात्रशब्दो लक्षणयाऽन्नस्य प्राधान्यं, भक्ष्यादेस्तदपेक्षयाऽप्राधान्यं च प्रतिपादयतीत्यर्थः । इयं च लक्षणा रूढा । अतो नात्र प्रयोजनापेक्षेति दर्शयितुमिदमुक्तमिति ध्येयम् । तथाऽपि प्रकृते किमायातमित्यत आह **धर्मधर्मिणोश्चेति** । मध्य इति शेषः । यदा मात्रपदार्थभूतं सकलं धर्मधर्मिरूपं तदाऽप्राधान्यं धर्म एव, प्राधान्यं च धर्मिण्येव पर्यवस्यतीत्यर्थः ।

श्री० — **साकल्य इति** । तथा च सकलमपि प्रतिषेधरूपमित्यर्थः ॥

**सु० — इच्छाप्रयत्नादिरूपायाः प्रवृत्तेः कर्तृतापरनामिकायाः व्यापिका बुद्धिः अभावाद्व्यावृत्ता तामपि व्यावर्तयतीत्युक्तम् । तत्राभावाद्बुद्धिव्यावृत्तिरेव कुत इत्यत आह** बुद्धीति ।

**अनु० —** बुद्धिराहित्यमेव तत् ॥

**तत्तस्मात्प्रतिषेधमात्रत्वादेव बुद्धिराहित्यमभावस्य घटाभाववत्सिद्ध्यतीत्यर्थः । द्विविधं हि प्रमेयम् स्वतन्त्रं परतन्त्रं च । परतन्त्रमपि द्विविधम् भावोऽभावश्च । भावोऽपि द्वेधा चेतनोऽचेतनश्च । एवञ्च यदा भावस्यापि कस्यचिन्न चैतन्यं, का वार्ता तदाऽभावे चैतन्यस्य । कश्चिदभावो बुद्धिमान् किन्न स्यादिति चेन्न । निरुपाधिकसंबन्धमनादृत्य निर्निमित्तायाः शङ्काया अतिप्रसङ्गित्वात् । 'तन्मनोऽकुरुते'ति श्रुतेरिति चेन्न । अन्यथासिद्धत्वात् । अथ प्रतिषेधमात्रत्वमपि पक्षे नाभ्युपेयात् । तदाऽसदिति ब्रह्मेति च संज्ञाभेदमात्रम् । अनेकत्वादेः परेणापि त्याज्यत्वात् । अनेकस्वातन्त्र्ये कार्योदयायोगात् ।**

**नन्विदं तत्रैव वक्तव्यम् । सत्यम् । प्रतिषेध(त्व)मात्रत्वे विदिते ततो बुद्धिराहित्यप्रतीतेः सौलभ्यादिहोक्तम् । टीकाकारास्तु प्रमेयत्वादिभावधर्माङ्गीकारे बुद्धिरपि तथा किन्न स्यादिति शङ्कावकाशादिहोक्तमित्याहुः ।**

शे० — ननु बुद्धिराहित्यमेव तदित्युत्तरवाक्यमनर्थकम् । न च प्रागभावस्य प्रतिषेधमात्रत्वेन बुद्धिराहित्यसाधनं न तु अभेदप्रतिपादनमिति नानर्थक्यमिति वाच्यम् । तत्साधनस्यापि प्रकृतासङ्गतत्वेन आनर्थक्यापरिहारादित्यतोऽस्याव्यवहितेन सङ्गत्यभावेऽपि बुद्धिपूर्वेति तत्पूर्ववाक्यसूचितस्य बुद्धिराहित्येन प्रागभावे कर्तृत्वाभावसाधनस्य बुद्धिराहित्यासिद्ध्या तदनुपपन्नत्वशङ्कापरिहारकत्वेन तत्सङ्गतत्वान्नानर्थ-

क्यमित्यभिप्रेत्य तत्सङ्गततयोत्तरवाक्यं योजयितुमुक्तानुवादपूर्वकं प्रागभावस्य कर्तृत्वाभावसाधने हेतुभूतबुद्धिराहित्यासिद्धिशङ्कामुत्थापयति **इच्छेत्यादिना** । कथमनेनोक्तशङ्कापरिहार इत्यतो मूले तदित्यस्य तस्मादित्यर्थत्वमेवशब्दस्य तत्सम्बन्धं चाश्रित्य तत्परामृष्टहेतुप्रदर्शनपूर्वकं प्रकृतोपयोगितयाऽपेक्षिताध्याहारेण व्याचष्टे **तत्तस्मादित्यादिना** ॥ **चैतन्यमिति** । बुद्धिरित्यर्थः । अप्रयोजकत्वमाशङ्कते **कश्चिदिति** । द्रव्यत्वसंयोगित्वादाविव निरुपाधिकसंम्बन्धभङ्गस्यैव विपक्षे बाधकस्य सत्त्वान्नाप्रयोजकतेत्यभिप्रेत्य तस्य बाधकत्वानङ्गीकारे बाधकमाह **निरुपाधिकेति** । योग्यस्योपाधेरनुपलम्भबाधितत्वात् अयोग्यस्य च शङ्कितुमशक्यत्वादनयोरनौपाधिकसम्बन्धसिद्धिरिति ज्ञेयम् ॥ **निर्निमित्ताया इति** । व्यभिचारचिह्नदर्शनरूपनिमित्तशून्याया इत्यर्थः ॥ **अतिप्रसङ्गित्वादिति** । किञ्चिद्द्रव्यमसंयोगि किन्न स्यादिति निर्निमित्तव्यभिचारशङ्काया द्रव्यत्वेन संयोगसाधनेऽपि तुल्यत्वात् । तेनापि तदसिद्धिः स्यादित्यतिप्रसङ्गित्वादित्यर्थः ॥ **तन्मन इति** । तथा चाभावस्यापि बुद्धिमत्तायाः श्रुतिसिद्धत्वान्नेयं व्यभिचारशङ्का निर्निमित्तेति नातिप्रसङ्ग इति भावः । श्रुतेर्भगवत्परत्वान्न प्रागभावस्य बुद्धिमत्त्वसिद्धिः श्रुत्या, इत्युक्तदोषतादवस्थ्यमेवेति परिहरति **अन्यथेति** ॥ **संज्ञाभेदमात्रमिति** । नार्थे कश्चिद्विशेष इति शेषः । ततो नास्मन्मतप्रतिपक्षताऽस्य पक्षस्येति भावः । ननु न संज्ञाभेदमात्रं, ब्रह्मवादिना तदेकत्वाभ्युपगमात् , मया च तत्तत्कार्यप्रागभावानामनेकत्वाभ्युपगमेन प्रमेयेऽपि वैलक्षण्यादित्यत आह **अनेकत्वादेरिति** । अत्रादिपदेनाचेतनप्रभेदत्वपरिग्रहः । त्याज्यत्वे हेतुमाह **अनेकेति** । स्वतन्त्राणामनेकेषामेकप्रकारज्ञानचिकीर्षाकृतिसद्भावस्य प्रमाणाभावपराहतत्वेन कस्यचिदुत्पत्त्यनुकूलकृत्यादावप्यन्यस्य तत्प्रतिकूलकृत्यादिमत्त्वेन कार्योत्पत्त्यनुकूलकृत्या तदुत्पत्तेरिव तत्प्रतिकूलकृत्या तदनुत्पत्तेरपि प्राप्त्याऽनेकस्वातन्त्र्ये कार्योदयायोगादित्यर्थः ।

ननु कर्तृत्वाभावसाधकबुद्धिराहित्यस्य सिद्धिप्रतिपादकतया बुद्धिपूर्वप्रवृत्तिर्हीत्येतद्वाक्ये सङ्गतस्य अस्य वाक्यस्य तद्वाक्यानन्तर्यस्यैव युक्तत्वान्न व्यवधानं सम्भवतीति शङ्कते **नन्विति** ।

**स०— अन्यथासिद्धत्वादिति** । 'तन्मनोऽकुरुत' इत्यस्यार्थान्तरपरत्वादित्यर्थः । ननु कथं संज्ञाभेदमात्रमित्युच्यते । त्वया ब्रह्मण एकत्वाङ्गीकारात् । मया तु तत्तत्प्रागभावानामनन्तानामङ्गीकृतत्वात् भेदोपपत्तिरित्यत आह **अनेकत्वादेरिति** । आदिशब्देन नित्यत्वसंग्रहः । **तत्रैवेति** । 'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितम्' इत्यत्रैवेत्यर्थः ।

**प०— एवं** हेतोर्व्यभिचारं स्वरूपासिद्धिं च निरस्य यदप्रयोजकत्वनिरासाय बुद्धिराहित्यमुक्तं तद्विशदयति **इदानीमिच्छाप्रयत्नादिति** ॥ **निरुपाधिकसंबन्धमिति** । निषेधैकस्वरूपत्वस्य बुद्धिराहि-

त्यस्य चेति योज्यम् । **अतिप्रसङ्गित्वादिति** । धूमोऽस्तु वह्निर्मास्त्विति शङ्काप्रसङ्गेन सदनुमानमात्र-भङ्गप्रसङ्गादित्यर्थः । निर्निमित्तत्वमसिद्धमिति शङ्कते **तन्मनोऽकुरुतेति** ॥ **श्रुतेरिति** । शङ्केति योज्यम् ॥ **अन्यथासिद्धत्वादिति** । कार्योन्मुखत्वपरतयोपपन्नत्वादीश्वरविषयतयोपपन्नत्वादिति वार्थः । ननु प्रागभावानामनेकत्वात्कार्यैकनाश्यत्वात्कथं संज्ञामात्रभेद इत्यत आह **अनेकत्वादेरिति** । कुत इत्यत आह **अनेकेति** । यद्यपि तत्तत्प्रागभावस्य तत्तत्कार्यं प्रति कर्तृत्वोक्तौ तत्तत्कार्यं प्रति तस्य तस्य स्वातन्त्र्यप्राप्तेरेकत्र कार्येऽनेकस्वातन्त्र्याप्राप्त्या न कार्योदयप्रतिबन्धापत्तिः । तथापि 'विप्रतिपन्नोऽभावः' इत्यत्रास्मदुक्तं तात्पर्यं ध्येयम् ॥ **इदमिति** । 'बुद्धिराहित्यमेव तदि'त्येतत् 'कर्तृत्वमिति निश्चितमि'त्ये-तदनन्तरं वक्तव्यमित्यर्थः ।

या० — **चैतन्यमिति** । बुद्धिरित्यर्थः । **निरुपाधिकेति** । अनेनान्यथा निरुपाधिकः साध्यसम्बन्धो भज्येतेत्यनुकूलतर्क उक्तो भवतीति ध्येयम् ॥ **अतिप्रसङ्गित्वादिति** । किञ्चिद्द्रव्य-मगुणमपि किन्न स्यादिति शङ्कायां द्रव्यत्वमपि गुणवत्त्वव्याप्यं न स्यादित्यतिप्रासङ्गिकत्वादित्यर्थः ॥ **अन्यथासिद्धत्वादिति** । भगवत्परतयोपपन्नत्वादिति भावः । ननु तत्तत्कार्यप्रागभावादीनामनेकत्वात्कथं तेषां ब्रह्मरूपतेत्यत आह **अनेकत्वादेरिति** ॥ **तत्रैवेति** । 'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चित-मि'त्यत्रैवेत्यर्थः ॥

श्री० — **कस्यचिदिति** । भावस्य भावप्रभेदभूतस्यापि कस्यचिदचेतनस्येत्यर्थः । **चैतन्य-मिति** । चिती संज्ञाने । तथा च चेतयते जानातीति चेतनस्तस्य भावश्चैतन्यं ज्ञानापरपर्याया बुद्धि-रित्यर्थः । **अभावे** चैतन्यस्याभावे । **ज्ञानसद्भावस्य का वार्ता** अभावे ज्ञानं दूरतरमिति यावदित्यर्थः ॥ **कश्चिदिति** । प्रलयकालवर्तीत्यर्थः ॥ **अन्यथासिद्धत्वादिति** । भगवत्परत्वादिति भावः ॥ **संज्ञाभेद-मात्रमिति** । अर्थस्त्वेक एवेत्यर्थः । ननु कथमर्थस्यैक्यं तत्तत्प्रागभावानामस्माभिरनेकेषामभ्युपग-मात् । न ह्यनेकं ब्रह्म, एकमेवेति श्रुतिविरोधादित्यत आह **अनेकत्वादेरिति** । **इदं** 'बुद्धिराहित्यमेव तदि'ति वाक्यम् ॥ **तत्रैवेति** । निश्चितमित्यनन्तरमित्यर्थः । **मात्रत्वे** तत्स्वरूपत्वे । **ततो** निषेधमात्र-स्वहेतोः सकाशात् । **तथा** प्रमेयत्वादिवदभावधर्मभूतेत्यर्थः । तथा च, नन्वभावेऽपि बुद्धिः किन्न स्यात्प्र-मेयत्वादिवदिति शङ्कानिरासार्थैवेदमनुव्याख्यानमिति तावन्निश्चितम् । तत्र यदीदं 'निश्चितमि'त्येतदनन्तरं स्यात् तर्ह्येषा शङ्का न स्वारस्येनोत्पत्तुमवकाशं ल(भेत)भते । इह 'अभावस्य चे'त्याद्यनन्तरं निवेशितुं प्रमेयत्वादिभावधर्माङ्गीकारे बुद्धिरपि किन्न स्यादिति शङ्काया उत्पत्तुमवकाशादिहोक्तमित्याहुरित्यर्थः ।

सु० — भावस्याभावो धर्मः, अभावस्य च भावोऽपि धर्म इत्यनुपपन्नम् (भावस्याभावधर्मता, अभावस्य च भावधर्मतेत्यनुपपन्नम् ।) भावाभावयोरभावभावधर्मित्वे प्रमाणाभावात् । संबन्धाभावाच्च । संबद्धयोरेव हि शौक्ल्यपटयोर्धर्मधर्मिभावो दृष्टो नासंबद्धयोर्मेरुमन्दरयोः । न च भावाभावयोः संबन्धोऽस्ति । संयोगसमवाययोर्भावनियतत्वात् । विरुद्धस्वभावत्वाच्च । यावविरुद्धस्वभावौ गुणगुणिनौ तावेव हि धर्मधर्मिणावुपलब्धौ । न विरुद्धस्वभावावश्वमहिषौ । विरुद्धस्वभावौ च भावाभावौ । विधिनिषेधरूपत्वात् । अभेदाच्च । न हि घटः स्वयं स्वस्यैव धर्मो भवति । उक्तं च धर्मधर्म्यैक्यमित्यत आह विशेष्यतैवेति ।

अनु० — विशेष्यतैव धर्मित्वं

विशेषणतैव च धर्मत्वमित्यपि द्रष्टव्यम् । यो हि येन विशिष्यते व्यवच्छिद्यते स तस्य धर्मी । धर्मश्चापरः । प्रकारान्तरस्य निर्वक्तुमशक्यत्वात् । प्रतीयते च विशेष्यविशेषणभावो भावाभावयोः । अन्यथा घटः पटो न भवतीत्यभावः प्रमेय इति च व्यवहारानुपपत्तेः । तत्कथं भावाभावयोर्न धर्मधर्मिभावः । पटशौक्ल्ययोश्च न संबन्धप्रयुक्तो धर्मिधर्मभावः । नापि मेरुमन्दरयोस्तदभावः संबन्धाभावप्रयुक्तः । किन्तु स्वभावादेव विशेष्यविशेषणत्वतदभावरूपः । संबद्धयोरपि घटपटयोस्तदभाववत् , भूतलघटाभावयोस्तद्भावाच्च ।

---

शे० — ननु विशेष्यतैवेत्युत्तरवाक्यमनर्थकम् । न च धर्मधर्मिभावस्य विशेषणविशेष्यभावरूपताप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च भावाभावयोर्धर्मधर्मिभावोपपादनार्थं तदिति वाच्यम् । तस्यानुक्तत्वेन,उक्तत्वेऽपि वा तत्रानुपपत्त्यभावेनानुपपादनीयत्वादित्यतस्तस्योक्तत्वप्रदर्शनपूर्वकं तत्रानुपपत्तिं प्रदर्श्य तन्निरासकतयोत्तरमूलं योजयितुं भावाभावयोर्धर्मधर्मिभावोपदर्शकं मूलानुवादपूर्वकं तत्रानुपपत्तिमुद्भावयति ॥ **भावस्याभावो धर्म इत्यादिना** । कुतो न भावाभावयोरभावभावधर्मकत्वमित्यतः प्रमाणाधीनत्वात्प्रमेयसिद्धेः, प्रकृते च तदभावात्; अन्यथा यस्य कस्यचिद्यत्किञ्चिद्धर्मकत्वप्रसक्तेरिति भावेनाह **भावाभावयोरिति** । न केवलं साधकप्रमाणाभावमात्रं किन्त्वनुमानबाधश्चेत्यभिप्रेत्य धर्मधर्मिभावाभावसाधकहेतूनाह **सम्बन्धाभावाच्चेत्यादिना** । भावाभावौ न धर्मधर्मिणौ सम्बन्धशून्यत्वादित्यनुमानमनेनोक्तं भवति । नन्वसम्बन्धेऽपि धर्मधर्मिभावः किन्न स्यादित्यप्रयोजकत्वमित्यतोऽन्वयव्यतिरेकाभ्यां संबन्धस्य धर्मधर्मिभावप्रयोजकत्वावधारणेन संबन्धस्य धर्मधर्मिभावव्यापकत्वसिद्ध्या व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वाद्धर्मधर्मिभावव्यापकसम्बन्धनिवृत्त्या तद्व्याप्यधर्मधर्मिभावाभावसाधनमुपपन्नमित्यभिप्रेत्य सम्बन्धस्य तत्प्रयोजकत्वावधारकान्वयव्यतिरेकौ दर्शयति

**सम्बद्धयोरित्यादि** । अस्तु सम्बन्धस्य तद्व्यापकत्वं तथाऽपि भावाभावयोः सम्बन्धवत्त्वान्न व्यापकव्यावृत्तिरिति कथमसिद्धेनासम्बन्धेन तदभावानुमानमित्यत आह **न चेति** । कुतो न सम्बन्ध इत्यतः संयोगसमवायौ हि सम्बन्धौ । न च तौ तयोः स्त इति भावेन तदसम्भवे युक्तिमाह **संयोगेति** । संयोगस्य युतसिद्धद्रव्यमात्रनिष्ठत्वात्समवायस्यापि गुणगुण्यादिरूपायुतसिद्धमात्रनिष्ठत्वेन भावमात्रनिष्ठत्वादित्यर्थः । विरुद्धस्वभावत्वेऽपि धर्मधर्मिभावः किन्न स्यादित्यतोऽन्वयव्यतिरेकाभ्यामविरुद्धस्वभावत्वस्य धर्मधर्मिभावप्रयोजकत्वावधारणेन तद्व्यापकत्वसिद्ध्या व्यापकनिवृत्त्या व्याप्यनिवृत्त्यवश्यम्भावान्न तदवकाश इति भावेनाविरुद्धस्वभावत्वस्य तत्प्रयोजकत्वावधारकावन्वयव्यतिरेकौ दर्शयति **यावित्यादिना** । भावाभावयोरप्यविरुद्धस्वभावत्वान्न व्यापकव्यावृत्तिरस्तीति कथं तया तद्व्याप्याभावसाधनमित्यतो विरुद्धत्वोपपादनेन व्यापकव्यावृत्त्यसिद्धिं परिहरति **विरुद्धस्वभावौ चेति** । अभेदेऽपि धर्मधर्मिभावः किन्न स्यादित्यतो भेदस्यान्वयव्यतिरेकाभ्यां तत्प्रयोजकत्वावधारणेन तद्व्यापकत्वनिर्णयाद्व्यापकनिवृत्त्या व्याप्याभावसाधनमुपपन्नमिति भावेन भेदस्य प्रयोजकत्वमन्वयव्यतिरेकाभ्यामुपपादयति **न हीति** । अनेन व्यतिरेको दर्शितः, भिन्नयोरेव धर्मधर्मिभावदृष्टेरिति अन्वयोपलक्षणं चैतत् । असिद्धिं परिहरति **उक्तं चेति** । नन्वत्र विशेष्यतैव धर्मित्वमित्युच्यते । तत्कथमस्य धर्मधर्मिभावस्य विशेषणविशेष्यभावरूपताप्रतिपादकत्वमित्यतोऽस्य विशेषणतैव धर्मत्वमित्येतदुपलक्षणत्वात्तदुपपत्तिरित्यभिप्रेत्योपलक्ष्यं दर्शयति **विशेषणतैवेति** । अस्त्वेवं धर्मधर्मिभावस्य विशेषणविशेष्यभावरूपत्वं तथाऽपि न प्रकृतसिद्धिः । उक्तरूपधर्मधर्मिभावस्य प्रमाणाभावेन भावाभावयोरसंभवादित्यत आह **प्रदीयते चेति** । भावाभावयोर्विशेषणविशेष्यभावप्रतीत्यभावे बाधकमाह **अन्यथेति** । व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यतया कारणीभूतप्रतीत्यभावे तत्कार्यव्यवहारायोगात् अन्यथाऽकारणकार्योत्पत्तिप्रसक्तेरिति भावः ॥ **तत्कथमिति**। साधकप्रमाणसत्त्वादित्यर्थः । पटशौक्ल्ययोः सत्यपि संबन्धे विशेषणविशेष्यभावस्य स्वभावप्रयुक्तत्वेन संबन्धप्रयुक्तत्वाभावान्मेरुमन्दरयोश्च सत्यप्यसंबन्धे धर्मधर्मिभावाभावस्य स्वभावप्रयुक्तत्वेनासंबन्धप्रयुक्तत्वाभावेन संबन्धस्य धर्मधर्मिभावेनान्वयव्यतिरेकसद्भावेऽपि तत्प्रयोजकत्वानवधारणात्संबन्धस्य तद्व्यापकत्वासिद्ध्या भावाभावयोः संबन्धाभावेन धर्मधर्मिभावाभावानुमानम् अव्यापकव्यावृत्त्याऽव्याप्यव्यावृत्तिसाधनत्वादनुपपन्नमित्याशयेनाह **पटशौक्ल्ययोश्चेति** । अङ्गीकृत्य च संबन्धस्य धर्मधर्मिभावेनान्वयव्यतिरेकौ स्वभावप्रयुक्तत्वाद्धर्मधर्मिभावतदभावयोः संबन्धतदभावाप्रयुक्तत्वान्न संबन्धस्य तद्व्यापकत्वमिति न तद्व्यावृत्त्या तद्व्यावृत्तिसाधनावकाश इत्युक्तम् । वस्तुतस्तु संबन्धस्य धर्मधर्मिभावेनान्वयव्यतिरेकावेव न स्त इति तस्य तद्व्यापकत्वासिद्धेर्न तदभावेन तदभावस्य साधनमुपपद्यत इत्यभिप्रेत्य सति संबन्धे धर्मधर्मिभावस्तदभावे तदभाव इत्यन्वयव्यतिरेकौ व्यभिचारेण दूषयति **संबद्धयोरपीत्यादिना** ।

स० — भावाभावयोरभावभावधर्मित्वे प्रमाणमुक्त्वा परोक्तं बाधकं परिहरति **पटशौक्ल्ययोरिति** ।

प० — चतुर्भिर्हेतुभिर्धर्मधर्मिभावानुपपत्तिशङ्काया निरासकतयोत्तरवाक्यमवतारयति **भावस्येत्यादिना** । **धर्मश्चापर इति** । व्यवच्छेदको धर्म इत्यर्थः । प्रमाणाभावरूपाद्यहेतुं निराह **प्रतीयते चेति** । **पटो न भवतीति** । पटान्योन्याभाववानित्यर्थः । **प्रमेयः** प्रमेयत्ववान् । संबन्धाभावरूपो द्वितीयो हेतुरप्रयोजक इत्याह **पटशौक्ल्ययोश्चेति** ॥ **विशेष्यविशेषणत्वेति** । पटशौक्ल्ययोर्विशेष्यत्वविशेषणत्वरूपो धर्मिधर्मभावः मेरुमन्दरयोस्तदभावरूपो धर्मिधर्मभावाभाव इत्यर्थः । संबन्धाद्यप्रयुक्तत्वे हेतुव्यभिचारमाह **संबद्धयोरिति** । संयोगसमवायरूपसंबन्धद्वयहीनयोरपि धर्मधर्मिभावोऽस्तीत्याह **भूतलघटाभावयोरिति** ।

या० — **प्रतीयते चेति** । अनेन प्रमाणाभावोऽसिद्ध इत्युक्तं भवति । संबन्धस्य यदन्वयव्यतिरेकाभ्यां धर्मधर्मिभावप्रयोजकत्वमुक्तं तदप्रयोजकत्वेन दूषयित्वाऽन्वयव्यतिरेकव्यभिचाराभ्यामपि दूषयति **संबन्धयोरपीत्यादिना** ।

श्री० — **धर्मित्वे** धर्मवत्त्वे । **अभेदाच्चेति** । भावाभावयोरिति वर्तते । तथा च यत्र भेदोऽस्ति तत्रैव धर्मधर्मिभाव इति भावः । कुत इत्यत आह **न हीति** । ननु भावाभावयोर्भेदो नोच्यते अतो धर्मधर्मिभावोऽयुक्त इति चेत्तत्राह **उक्तं चेति** । भूतलघटाभावयोरसम्बद्धयोरिति शेषः ।

**सु० — एवमेव विरोधिस्वभावाभेदावपि परा(निर)स्तौ । सगुणनिर्गुणत्वेन नित्यानित्यत्वेन वा विरुद्धस्वभावयोरपि गुणगुणिनोर्धर्म्यादित्वस्य दर्शनात् । अदर्शनाच्च पटत्वशौक्ल्ययोः । दृश्यते चाभेदेऽपि तद्भावः । अस्तित्वाभिधेयत्वादीनां धर्माणां परैर्धर्म्यभेदस्याङ्गीकृतत्वात् । भिन्नानामपि तद्भावो नोपलभ्यते । तदेवमसंबद्धयोरपि विलक्षणस्वभावयोरपि भावाभावयोरभेदेऽपि विशेषशक्त्या विशेष्यविशेषणतालक्षणो धर्मिधर्मभावो युक्त एवेति ।**

शे० — गुणगुणिनोः सत्यप्यविरुद्धस्वभावत्वे धर्मधर्मिभावस्य स्वभावप्रयुक्तत्वेनाविरुद्धस्वभावप्रयुक्तत्वाभावात्, अश्वमहिषयोश्च सत्यपि विरुद्धस्वभावत्वे धर्मधर्मिभावाभावस्य स्वभावप्रयुक्तत्वेन विरुद्ध-

स्वभावाप्रयुक्तत्वात्, अविरुद्धस्वभावत्वस्य धर्मधर्मिभावेनान्वयव्यतिरेकसद्भावेऽपि तत्प्रयोजकत्वाभावेनाविरुद्धस्वभावत्वस्य तद्व्यापकत्वासिद्धेः न तद्व्यावृत्त्या धर्मधर्मिभावाभावसाधनमुपपद्यते । तथा भिन्नयोर्धर्मधर्मिस्थले सत्यपि भिन्नत्वे धर्मधर्मिभावस्य स्वभावप्रयुक्तत्वेन भेदप्रयुक्तत्वाभावात् । घटस्य स्वेन भेदाभावेऽपि धर्मधर्मिभावाभावस्य स्वभावप्रयुक्तत्वेनाभेदप्रयुक्तत्वाभावात् भेदस्य धर्मधर्मिभावाभावेनान्वयव्यतिरेकसद्भावेऽपि तस्य धर्मधर्मिभावप्रयोजकत्वाभावेन तद्व्यापकत्वानवधारणात् न तद्व्यावृत्त्याऽपि धर्मधर्मिभावाभावसाधनमवकाशं लभत इत्युक्तन्यायेनोत्तरमपि हेतुद्वयं दूषणीयमित्याह **एवमेवेति** । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु, यावविरुद्धस्वभावौ तौ धर्मधर्मिभाववन्तौ, यौ विरुद्धस्वभावौ तौ न धर्मधर्मिभाववन्ताविति, यौ भिन्नौ तौ धर्मधर्मिभाववन्तौ यावभिन्नौ न तौ धर्मधर्मिभाववन्ताविति चाविरुद्धस्वभावत्वभेदयोर्धर्मधर्मिभावप्रयोजकत्वावधारकान्वयव्यतिरेकयोर्व्यभिचारेणाभावान्न ताभ्यां तयोस्तत्प्रयोजकत्वमिति न तद्व्यावृत्त्या तदभावसाधनमुपपन्नमित्यभिप्रेत्य ययोर्विरुद्धस्वभाववत्त्वं न तयोर्धर्मधर्मिभाव इति व्यतिरेकं व्यभिचारेण दूषयति **सगुणेति** । यावविरुद्धस्वभावौ तयोर्धर्मधर्मिभाव इत्यन्वयेऽपि व्यभिचारमाह **अदर्शनाच्चेति** । अविरुद्धस्वभावत्वेऽपि पटत्वशौक्ल्ययोर्धर्मधर्मिभावस्यादर्शनादित्यर्थः । यावभिन्नौ न तयोर्धर्मधर्मिभाव इति व्यतिरेकव्यभिचारमाह **दृश्यते चेति** । अन्यथा घटोऽस्त्यभिधेयः प्रमेयश्चेत्यादिव्यवहारानुपपत्तेरिति भावः । ननु चास्तित्वादीनां धर्मिणो घटादेर्भिन्नत्वात्कथमभेदेऽपि धर्मधर्मिभावे निदर्शनमिदमित्यतः पदार्थानियमवादिनो नैयायिकस्य मतेऽस्तित्वादेर्धर्मिणो भिन्नत्वेऽपि षट्पदार्थनियमवादिनो वैशेषिकस्य मते तस्य तदभिन्नत्वात्तदुदाहरणत्वमक्षतमित्यभिप्रेत्याह **अस्तित्वेति** ॥ **अङ्गीकृतत्वादिति** । 'भावस्य रूपमेव ह्यवस्थाभेदेनास्तित्वं ज्ञेयत्वं चोच्यते' इति तदुक्तेरिति भावः । ययोर्भेदस्तयोर्धर्मधर्मिभाव इत्यन्वये व्यभिचारमाह **भिन्नानामपीति** । घटपटादीनां सत्यपि भेदे धर्मधर्मिभावो नोपलभ्यत इत्यर्थः । नन्वभेदे कथं विशेषणविशेष्यभाव इत्यतः किमयं प्रमाणप्रश्नः किंवा स्वभावप्रश्न इति विकल्पं, विशेषणविशेष्यभावप्रतीतिरेव तत्र प्रमाणमित्याद्यपक्षदूषणं च मनसि निधाय 'भावाभावस्वरूपास्तु विशेषा एव वस्तुनः' इत्यदृश्यत्वाधिकरणीयानुव्याख्यानानुसारेण संभावकं वदन्प्रकृताक्षेपपरिहारमुपसंहरति **तदेवमिति** ।

प॰— तृतीयचतुर्थहेतू अप्यप्रयोजकत्वेन निरस्याविति प्रतिज्ञापूर्वमप्रयोजकत्वं व्यनक्ति **एवमेवेति** ॥ **नित्येति** । गगनं नित्यं, शब्दोऽनित्यः, आत्मा नित्यः, ज्ञानादिरनित्य इति भावः ॥ **पटत्वशौक्ल्ययोरिति** । तयोर्गुणत्वेन एकाधिकरणत्वेन चाविरुद्धस्वभावत्वादिति भावः ॥ **भिन्नानामपीति** । मेरुमन्दरादीनामित्यर्थः । अत्रेत्यनुवादः । एवं सत्यपीति व्याख्या । अत्रेत्यस्यार्थानुवादः **तथापीति** । तस्य व्याख्या यद्यपीत्यादिपूर्ववाक्यम् । सर्वेषां भावाभावतया द्विरूपत्वेपीत्यर्थः ।

श्री० — **गुणगुणिनोरिति** । पाकजरूपपार्थिवपरमाण्वोः पटत्वशौक्ल्ययोरविरुद्धस्वभावयोरपीति शेषः ॥ **भिन्नानाम्** घटपटादीनाम् ॥ **विलक्षणेति** । विरुद्धेत्यर्थः ।

**सु० यद्येवं भावाभावयोरभावभावधर्मित्वं धर्मधर्मिणोश्चाभेदः स्यात् , तदा भावस्याप्यभावत्वेनाभावस्य च भावत्वेन, घटादीनां भावत्वमेव प्राक्प्रध्वंसात्यन्ताभावानामभावत्वमेवेति नियमो निर्निबन्धनः स्यात् । न चैवमस्त्विति वाच्यम् । सकललोकसिद्धस्य तथाभावानर्हत्वात्** इत्यत आह प्रथमेति ।

अनु० — प्रथमप्रतिपत्तिषु ॥
निषेधविधिरूपत्वं भावाभावत्वमत्र हि ॥

**रूपशब्दो धर्मिवचनः । भावाभावत्वमिति यथायोगं संबन्धः । अत्रैवं सत्यपि । हिशब्दः प्रसिद्धौ । अयमर्थः । किं भावाभावनिबन्धनं प्रमेयरूपमन्विष्यते प्रमाणं वा । आद्यस्योत्तरार्धमुत्तरम् । यद्यपि भावाभावात्मका घटादयः प्रागभावादयश्च । तथाऽप्यत्र पदार्थसार्थे यः पिण्डो विधिधर्मिको घटादिः स भावो, यस्तु निषेधधर्मिकः प्रागभावादिः सोऽभाव इति व्यवस्थोपपद्यते । अभेदेऽपि धर्मधर्मिभावो विशेषशक्त्या सङ्गच्छत इत्युक्तमेव । द्वितीयस्य उत्तरं प्रथमप्रतिपत्तिष्विति ।**

**यः प्रथमं विधितया परप्रतिक्षेपरूपतां विना प्रतीयते स घटादिर्भावः । यस्तु निषेधतया परप्रतिक्षेपेण प्रतीयते प्रागभावादिः सोऽभाव इत्युत्तरार्धेनैकवाक्यतया योज्यम् ।**

शे० —ननु भावाभावयोर्विधिनिषेधरूपत्वस्य पूर्वेणैव सिद्धत्वादुत्तरवाक्ये तदभिधानमनर्थकम् । न च भावाभावयोर्विधिनिषेधधर्मिकत्वप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च घटादिर्भाव एव प्रागभावादिरभाव एवेति व्यवस्थोपपादनार्थं तदिति वाच्यम् । अव्यवस्थाप्रापकत्वाभावेन तदप्रसक्त्या तदुपपादनस्याप्यनर्थकत्वादित्यतः प्रापकप्रदर्शनेनाव्यवस्थाप्रसङ्गशङ्कामुत्थाप्य तत्परिहारकतया भावाभावयोर्विधिनिषेधधर्मिकत्वोपपादकतयोत्तरवाक्यं योजयितुं शङ्कामुत्थापयति **यद्येवमिति** ॥ **भावस्याप्यभावत्वेनेति** । घटादेर्भावस्यान्योन्याभावरूपधर्मात्मकत्वेनाभावत्वं स्यादित्यर्थः ॥ **अभावस्य भावत्वेनेति** । प्रागभावादेरभावस्य प्रमेयत्वादिरूपधर्मात्मकत्वेन भावत्वं स्यादित्यर्थः । उभयत्रेष्टापत्तिं परिहरति **घटादीनामिति** । तत्रापीष्टापत्तिमाशङ्क्य निषेधति **न चेति** ॥ **तथा भावेति** । निर्निबन्धनत्वेत्यर्थः । यथाक्रमं संबन्धभ्रमं वारयति **यथायोग्यमिति** । मूलेऽत्रेत्यप्रयोजकत्वसूचनार्थमिति भावेन तथा व्याचष्टे **अत्रेति** । तर्हि भावाभावयोर्विधिनिषेधधर्मिकत्वकथनमात्रेणोक्तव्यवस्थाया

उपपादितत्वात्प्रथमप्रतिपत्तिष्विति भाष्यखण्डवैयर्थ्यमित्यतस्तत्सङ्गमयितुं संभावितं विकल्पद्वयं प्रदर्श्य तत्परिहारकतया ग्रन्थं योजयति **अयमर्थ इति** ॥ **पदार्थसार्थ इति** । भावाभावात्मकपदार्थसमूह इत्यर्थः । ननु भावाभावात्मकत्वे धर्मधर्मिभावस्यैवायोगेन विधिनिषेधधर्मिकत्वस्यैवायोगात् न घटतत्प्राग-भावादेर्भावाभावत्वव्यवस्थेत्यतो भावाभावयोर्घटतदन्योन्याभावयोः प्रागभावप्रमेयत्वयोर्वा सविशेषा-भेदेन निर्विशेषाभेदानङ्गीकाराद्विशेषस्य च भेदप्रतिनिधित्वेन तच्छक्त्या धर्मधर्मिभावसंभवान्ना-नुपपत्तिरित्याह **अभेदेऽपीति** ॥ **उक्तमेवेति** । तदेवमित्यव्यवहितपूर्वग्रन्थेनेति शेषः ।

ननु प्रथमप्रतिपत्तिमात्रस्य भावाभावनिबन्धनप्रमाणत्वाभावात्प्रथमं विधिनिषेधरूपत्वेन प्रतीतेरेव तत्प्रमाणत्वात् न प्रथमप्रतिपत्तिष्वित्यस्य द्वितीयप्रश्नोत्तरत्वमित्यतस्तदुपपत्तये उत्तरार्धैकवाक्यतामाश्रित्य 'तथाऽपि प्रथमं बुद्धेर्यो निषेधस्य गोचरः । सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमं परः' इत्युत्तरानु-व्याख्यानानुसारेण योजयति **य इत्यादिना** ।

ननु च के इमे विधिनिषेधतया प्रतीती । किमस्ति नास्तीति व्यवहारौपयिके, अस्तिनास्तिपदार्थ-विषयके वा, अस्तित्वनास्तित्वप्रकारके वा । नाद्यः । अव्याप्तेः । ज्ञानस्य व्यवहारजनकत्वनियमाभावेन विवक्षितस्यास्तीत्यादिप्रतीतिविषयत्वस्याभावात् । उत्पन्नस्यापि ज्ञानस्य व्यवजिहीर्षाभावेन व्यवहाराजन-कत्वात् । न द्वितीयः । भावाभावलक्षणयोरतिव्याप्त्यसंभवप्रसङ्गात् । अभावस्यास्तिपदार्थत्वात् । अन्यथा कथं पश्चादपि घटाभावोऽस्तीति प्रतीतिः। तृतीयेऽपि के इमे अस्तित्वनास्तित्वे भावाभावत्वे सत्त्वनिषेधत्वे वा । आद्येऽन्योन्याश्रयः । द्वितीयेऽनुगतसत्तानङ्गीकारेण सत्त्वनिषेधरूपत्वे उभे अपि प्रत्येकं भावे अभावे च विद्येते इति सिद्धान्तः । एवञ्च ते किं स्वरूपप्रतीतावेव प्रतीयेते उत न । आद्ये स्वरूपसत्त्वस्य भाव इवाभावेऽपि प्रत्येतव्यत्वात्, निषेधत्वस्य चाभाव इव भावेऽपि प्रत्येतव्यत्वात् अतिव्याप्तिः । द्वितीये त्वव्याप्तिः तत्कथमेतदित्यतो विधित्वनिषेधत्वे निरूपयति **परप्रतिक्षेपकतां विनेति परप्रतिक्षेपेण चेति** । ननु तथाऽपि प्रतीतौ किं प्रथमं यो विधितया निषेधतयेत्येवं प्रथमग्रहणं कालविशेषणमभिप्रेतं किंवा प्रथमा या प्रतीतिरिति प्रतीतिविशेषणम् । नाद्यः । बुद्धेर्विरम्यव्यापारा-योगात् । द्वितीयेऽपि किमेतज्जन्मनि या स्वविषयिका प्रतीतिः सा विवक्षिता किं वैकसामग्रीजन्यासु स्वविषयिकासु प्रतीतिषु या स्वविषयिका प्रथमप्रतीतिः सा । नाद्यः । गिरिदरीवर्तिनो गजाभावस्य ज्ञानात्पूर्वमेव जातायां यत्प्रमेयं तदस्तीत्यस्यां सामान्याकारेण प्रमेयमात्रविषयिकायां वन्यगजाभावस्य प्रथमं परप्रतिक्षेपकतां विनैव प्रतीतेर्भावाभावलक्षणयोरतिव्याप्त्यव्याप्तिप्रसङ्गात् । न द्वितीयः । एक-सामग्र्याऽनेकज्ञानजनकत्वायोगात् । सामग्रीभेदाभावे कार्यभेदस्याकस्मिकत्वप्रसङ्गादिति चेन्न । यदा यदा स्वयं ज्ञायते तदा तदा स्वविषयं ज्ञानद्वयमस्ति । आपातजं विमर्शजं चेति । तत्रापातजा या

संवित्तस्या एवेह प्रथमप्रतीतित्वेनाभिप्रेतत्वात् । अत एव तत्त्वसंख्यानटीकायामापातजा या संवित् इत्येवोक्तम् ।

स० — ननु निषेधविधिरूपत्वस्य भावाभावयोरपि विद्यमानत्वेन पुनस्साङ्कर्यं तदवस्थमित्यत आह **रूपशब्द इति ॥ अत्र पदार्थसार्थ इति ।** भावाभावात्मकपदार्थसमूह इत्यर्थः । **विधिधर्मिक इति ।** अत्रायं भावः । घटादीनां प्रागभावादीनां च भावाभावात्मकत्वाविशेषेऽपि घटादयो भावा एव, प्रागभावादयस्त्वभावा एवेत्येवं नियमो युज्यत एव । यत्र प्रतिक्षेपाप्रतिक्षेपसमुदाये अप्रतिक्षेपस्य धर्मित्वं स भावः । यत्र तु तत्समुदाये प्रतिक्षेपस्य धर्मित्वं सोऽभाव इति विवक्षणेन घटस्योभयात्मकत्वेऽपि अभावत्वस्यासंभवादिति । विधितयेत्यस्य व्याख्या परप्रतिक्षेपरूपतां विनेति ।

प० — अत्रेत्यस्यावृत्तिं मत्वाऽनूद्यते **अत्रेति** । तस्य व्याख्या पदार्थसार्थ इति । **सार्थः** समूहः । **विधिधर्मिकः** धर्मित एव विधिरूपो न धर्मद्वारेणेत्यर्थः । एवमग्रेऽपि । धर्मधर्म्यभेदे कथं धर्मोक्तिरित आह **अभेदेपीति** ।

या० — **पदार्थसार्थ इति** । पदार्थसमूह इत्यर्थः ।

श्री० — **सकललोकसिद्धस्य** नियमस्य । **तथाभावो** निर्निबन्धनत्वम् । **प्रमेयरूपम्** । तथा च भावाभावस्वरूपभूतं लक्षणं किमित्यर्थः । एवं सत्यपीत्युक्तं दर्शयति **यद्यपीति** । **विधिधर्मिको** विधिं प्रति धर्मित्वोपेत इत्यर्थः । विधिप्रत्यये धर्मित्वेन प्रतीयत इति यावत् । एवमुत्तरत्रापि । **अभिप्रेत्य** विवक्षित्वा ।

**सु० — घटो हि प्रथमं विधित्वेन धर्मिरूपेण प्रतीतोऽनन्तरं पटो न भवतीति पट-निषेधात्मतया प्रतीयते । प्रागभावादिरपि प्रथमं निषेधत्वेन धर्मिस्वरूपेणावगतोऽनन्तरं प्रमेय इति विधितया प्रतीयत इति सकलप्रतिपत्तृसिद्धमिति बहुवचनहिशब्दाभ्यां द्योतयति । विषयिविषययोराधाराधेयभावमभिप्रेत्य सप्तमीप्रयोगः । कारकेषु गौणमुख्यत्वविवक्षाभावस्य स्थितत्वादिति ।**

शे० — ननूक्तरूपे अपि विधिनिषेधत्वे प्रत्येकं भावे अभावेऽपि च विद्येते इति सिद्धान्तः । ततश्च ते अपि स्वरूपप्रतीतावेव यदि प्रतीयेते तदोक्तरूपविधित्वस्य भाव इवाभावेऽपि प्रत्येतव्यत्वादुक्त॰

रूपनिषेधत्वस्याप्यभाव इव भावेऽपि प्रत्येतव्यत्वादतिव्याप्तिः, यदि च स्वरूपप्रतीतौ न प्रतीयेते तदा त्वव्याप्तिः 'भाव एवोक्तरूपं विधित्वमेव प्रथमं प्रतीयते । अभाव एव चोक्तरूपं निषेधत्वमेव प्रथमं प्रतीयते' इत्यत्र नियामकाभावादित्यतो भावाभावयोरभावभावधर्मवत्तया प्रतिक्षेपात्मकत्वेऽपि धर्मिरूपेणाप्रतिक्षेपात्मकत्वादापातजायां संविदि भावघटादावप्रतिक्षेपरूपधर्मिभानसामग्र्या, अभावे च प्रागभावादौ प्रतिक्षेपरूपधर्मिभानसामग्र्याश्च सद्भावेऽपि; तदा प्रतिक्षेपाप्रतिक्षेपरूपधर्मभानसामग्रीविरहेणोक्तरूपविधिनिषेधयोरेवभाननियमोपपत्तेर्नाव्याप्तिरित्याशयवानापातजायां संविदि रूपान्तरप्रतीतिसामग्रीविरहएव, द्वितीयादिप्रतीतौ तत्समावेशश्च कुत इत्यतः कार्यमेव तत्र प्रमाणमित्यभिप्रेत्य भावविषयमभावविषयं च प्रतीतिद्वयं क्रमेणोदाहरन्कार्यमेव दर्शयति **घटो हीत्यादिना** । न च भावलक्षणे घटाभावोऽस्तीति वाक्यात्प्रथममस्तीत्युपलभ्यमानेऽभावेऽतिव्याप्तिरिति वाच्यम् । तत्रापि घटाभाव, इत्यवान्तरवाक्यार्थभूतप्रतिषेधाकारप्रतीत्युत्तरकालमेव तदस्तित्वप्रतीतिः । अत एव घटाभावो नास्तीति वाक्यात्प्रथममेव घटस्य नास्तित्वाकारेण प्रतीतेः अभावलक्षणस्य तत्रातिव्याप्तिरिति परास्तम् ।

नन्वेवमप्यभावलक्षणस्य भावेऽतिव्याप्तिरेव । तथा हि । भेदो हि धर्मिस्वरूपमेव । स च धर्मिग्रहणे गृह्यत एव । यद्वक्ष्यति 'स्वरूपं वस्तुनो भेदो यत्र तस्य ग्रहेऽग्रहः' इति । न च प्रथमप्रतीतौ सप्रतियोगिकप्रतिषेधाकारेण प्रतीयमानत्वं विवक्षितम् । तथा च घटप्रतीतौ स्वरूपाकारेण भेदस्य प्रतीतावप्युक्तरूपेणाप्रतीतेर्नातिव्याप्तिरिति वाच्यम् । प्रथममेव सर्वविलक्षणत्वेन वस्तुप्रतीतेरङ्गीकृतत्वात् । 'प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यते' इत्यन्यत्रोक्तेः । तथा च कथं नातिव्याप्तिरिति चेदुच्यते । विशेषतः प्रतिषेधाकारत्वेन प्रतीयमानताया एवाभावलक्षणत्वेन विवक्षितत्वात् । तथा च स्वरूपेण प्रथमं भेदप्रतीतावपि विशेषरूपेण प्रतीत्यभावान्नातिव्याप्तिः । अत एवानन्तरप्रतीतिरिह टीकायां 'पटो न भवती'ति अन्यत्र च 'न शुक्ल' इति विशेषाकारेणैवोदाहृता । वक्ष्यते चैतत् 'को विरोधः स्वरूपेण गृहीतो भेद एव तु । अस्यामुष्मादिति पुनर्विशेषेणैव गृह्यते' इतीत्यलम् ॥ ननु प्रथमप्रतिपत्तिष्विति नाधिकरणसप्तमी । विधिनिषेधरूपत्वविषयिण्याः प्रतिपत्तेस्तदनाधारत्वेनानधिकरणत्वात्, नाप्यन्या प्रकृतानुपयोगात्तदसम्भवाच्चेत्यतोऽधिकरणसप्तम्येवेयमित्यभिप्रेत्य कथं प्रतिपत्तेर्विधिनिषेधरूपत्वानाधारभूतायास्तदधिकरणत्वमित्यतो मुख्यस्याधारत्वस्याभावेऽपि बुद्धिपरिकल्पितगौणाधारतायाः सत्त्वेनाधिकरणत्वोपपत्तेर्न सप्तम्यनुपपत्तिरित्याशयेनाह **विषयिविषययोरिति** ।

ननु प्रतिपत्तेर्विषयं प्रति गौणाधारतायामपि नाधिकरणत्वं तन्निबन्धनाया मुख्याधारताया अभावादित्यतो भवेदेवं कथञ्चिद्यदि मुख्याधारताया एव तन्निमित्तत्वमिति स्यात् । न चैतदस्ति । कारकेषु

गौणमुख्यविवक्षासद्भावस्य वैयाकरणसम्मत्या गौणमुख्यसाधारणस्यैवापादानादेः अपादानाधिकारकत्वेन गौणमुख्यसाधारणस्यैव तस्यापादानादिसंज्ञानिबन्धनत्ववदिहापि गौणमुख्यसाधारणाधारमात्रस्यैवाधिकरणतया गौणमुख्यसाधारणाधारमात्रस्यैवाधिकरणसंज्ञानिबन्धनत्वेन मुख्याधारतायास्तदभावात्तत्श्च तदभावेऽपि बुद्धिप्रकल्पितगौणाधारतामात्रेणाप्यधिकरणसंज्ञानिर्वाहोपपत्तेर्न सप्तम्यनुपपत्तिरित्याशयेनाह कारकेष्विति । न चात्र ज्ञापकाभावः । साधकतमं करणमित्यत्र तमप्श्रुतेरेव तज्ज्ञापकत्वात् ।

ननु साधकं करणमित्येवोच्यमाने कारकग्रामसाध्यायामेकस्यां क्रियायां सर्वस्यापि कारकस्य यथायथं स्वस्वव्यापारनिर्वर्तनद्वारा साधकत्वात्सर्वस्यापि कारककलापस्य करणसंज्ञा स्यात् । न च संज्ञान्तरारम्भवैयर्थ्यप्रसङ्गान्न सर्वस्यापि तत्प्रसङ्ग इति वाच्यम् । तत्तत्संज्ञारम्भसामर्थ्यादेकसंज्ञाधिकाराच्च करणसंज्ञायाः संज्ञान्तराणां च विकल्पप्रसङ्गेन तदनवकाशात् । न चासत्यपि तमब्ग्रहणे करणकारकसंज्ञयोरविशेषात्संज्ञाद्वयप्रणयनप्रामाण्यादेव न सर्वत्र करणसंज्ञाप्रसङ्ग इति वाच्यम् । एवमपि संज्ञाद्वयविधानसामर्थ्यात्करणसंज्ञा कञ्चिदेव विषयं परिहरतीत्येतावल्लभ्यते । न त्वनिष्टविषयपरिहारेणेष्टविषये तस्याः प्रवृत्तिर्लभ्यत इति संज्ञाद्वयस्य विकल्पप्रसङ्गनिवृत्त्यर्थं तमप्ग्रहणमिति न तद्विवक्षितार्थज्ञापकमिति चेन्मैवम् । असत्यपि तमप्ग्रहणे विकल्पाप्रसक्त्या तन्निवृत्तेस्तमप्प्रयोजनत्वायोगात् । तथा हि । पूर्वास्तावदपादानादिसंज्ञाः 'येन नाप्राप्त'न्यायेन करणसंज्ञायां प्राप्तायामारभ्यमाणाः करणसंज्ञाबाधिकाः । यास्तु पराः ता अपि परत्वेन निरवकाशत्वेन च तस्या बाधिका एवेति किं तमपुपादानेनेति ।

केचित्तु धनुषा विध्यतीत्यत्र करणसंज्ञैव यथा स्यादित्येतदर्थमत्र तमप्ग्रहणम् । तथा हि । शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकत्वमित्युक्तोभयप्रसङ्गे निरवकाशत्वात् अपादानसंज्ञैव स्यात्करणसंज्ञाया अपायादन्यत्र दात्रेण छिनत्तीत्यादौ सावकाशत्वात् । तमब्ग्रहणे तूभयोरपि भिन्नविषयलाभात् । धनुषा विद्ध्यतीत्यत्रोभयत्र प्रसङ्गे परत्वात्करणसंज्ञा सिध्यति । तस्मात्प्रकर्षलाभार्थं तमप्ग्रहणम् । ततः करणसंज्ञासिद्धिरिति ॥ तदिदमप्यप्रयोजनम् । कन्यादानस्य दृष्टादृष्टफलत्वेनानभिरूपाय कन्यादानप्रसङ्गाभावात् अभिरूपाय कन्या देया इत्युक्तेऽपि, विनाऽपि प्रकर्षम् अभिरूपतमाय, इत्यवगतिवत्, इहापि कारकाधिकारात् अकारके संज्ञाप्रसङ्गाभावात्साधकं करणमित्युक्तेपि अन्तरेण तमप्प्रत्ययं साधकतममित्यवगतिसंभवात् । तस्माज्ज्ञानार्थैव तमप्श्रुतिः । एतच्च ज्ञापयति । इह कारकप्रकरणे प्रकर्षप्रत्ययमन्तरेण सामर्थ्यगम्यः प्रकर्षो नाश्रीयते । तेन साङ्काश्येभ्यः पाटलिपुत्रका अभिरूपतरा इत्यत्रापादानसंज्ञा सिद्धा भवति । यत्र हि संप्राप्य निवृत्तिः स एवापायो मुख्यः । ततश्च

ग्रामादागच्छतीत्यत्रैव मुख्यापायसंभवादपादानसंज्ञा स्यात् । बुद्धिकल्पितापाये न स्यात् । तथाऽधिकरणाऽसं यत्र सर्वैरवयवैः सहावयवी व्याप्तस्तत्रैव मुख्याधारत्वसंभवात्स्यात्तिलेषु तैलं, दधिनि सर्पिरिति । इह तु न स्यात् । गङ्गायां गावः कूपे गर्गकुलमिति । अत्र गोभिर्गङ्गाया व्याप्त्यभावादस्मात्तु ज्ञापकाद्बुद्धिपरिकल्पितापायाश्रया सामीप्याद्याश्रयणेन प्रकल्पिताधारभावनिबन्धना च संज्ञा भवतीति । तथा च प्रकृतेऽपि बुद्धिप्रकल्पिताधारभावनिबन्धनाधिकरणसंज्ञोपपत्तेर्युक्तः प्रथमप्रतिपत्तिष्विति सप्तमीप्रयोग इति सकलमनाकुलम् ।

स० — **विवक्षाभावस्येति** । विवक्षया सद्भावस्याङ्गीकृतत्वादित्यर्थः ।

प० — **बहुवचनेति** । प्रथमप्रतिपत्तिष्विति बहुवचनेत्यर्थः । प्रतिपत्तिष्विति सप्तम्युपपत्तिमाह **विषयेति** । ननु आधारोऽधिकरणमिति सूत्रे आधारश्चतुर्धा औपश्लेषिकः, सामीपिको, विषयो, व्याप्तिश्चेत्युक्तेः विषयस्याधारत्वं मुख्यमित्यत आह **कारकेष्विति** । कर्तृकर्मादिषु षट्सु कारकेष्वित्यर्थः । **स्थितत्वादिति** । साधकतमं करणमित्यत्र कैयटे यस्य यदाऽतिशयविवक्षा तदा तस्य कारकत्वम् । स्थाल्यां पच्यत इत्यादिना कारकेषु गौणमुख्यत्वविवक्षायाः सत्वस्योक्तिरिति ज्ञेयम् । तथाच इहमुख्या अधाराधेयभाव इति भावः ॥

या० — ननु विषय एवाधारविशेषतया परिगणितः शास्त्रे न विषयी । अतः कथं प्रतिपत्तिषु इति सप्तमीप्रयोग इत्यत आह **विषयिविषययोरिति** । यद्यपि शास्त्रे विषयिण आधारत्वं न कथितं तथाऽप्यत्र विषयिण आधारत्वं विषयस्य चाधेयत्वं विवक्षितमतः सप्तमीप्रयोग इति भावः । नन्वेवं प्रतिपत्तीनां विषयं प्रति वस्तुत आधारत्वाभावे कथं तद्विवक्षामात्रेण विभक्तिप्रयोग इत्यत आह **कारकेष्विति** । साधकतमं करणमित्यत्र तमब्ग्रहणेनान्यत्र गौणमुख्यत्वविवक्षासद्भावस्य ज्ञापनाद्गङ्गायां घोष इत्यादाविवामुख्यमप्याधारत्वमभिप्रेत्य सप्तमीप्रयोगोपपत्तिरिति भावः ॥

श्री० — कथं विवक्षामात्रेण कारकप्रयोग इत्यत आह **कारकेष्विति** । यथा हि प्रमाश्रयेषु करणत्वं विवक्षित्वा दूरगाः सभ्याः प्रमाणं, विप्राः प्रमाणमिति प्रयोगः, प्रत्यक्षं प्रमाणमिति मुख्यप्रयोगस्तथाऽत्रापीति विषयिणोऽप्याधारत्वं विवक्षित्वा प्रतिपत्तिष्विति सप्तमीप्रयोगः कृत इत्यदोषः । **विवक्षाभावस्य** । विवक्षासद्भावपूर्वकव्यवहारस्य ।

सु० — एवं पूर्वपक्ष्युत्प्रेक्षितप्रमाणसमुदायलब्धस्यार्थस्य प्रमाणविरोधो दर्शितः । इदादीमसत्कार्यं यथा दृष्टमित्यनुमानं विशेषतो निराचिकीर्षुस्तत्प्रस्तावनाय अमूत्रयत्सूत्रकारः ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसमिति ॥ असमञ्जसमेतद्विश्वस्याभावकर्तृकत्वमतम् । कुतः । अभावस्य (एव) जगत्कर्तृत्वाङ्गीकारेऽपीतौ प्रलये तद्वत्प्रसङ्गात् अभाववत्त्वप्रसङ्गात् । ईश्वरादेः सर्वस्या(प्य)भावाभ्युपगमप्रसङ्गादिति यावत् । न हीश्वरादौ सति तत्परित्यागेनाभावस्य जगत्कर्तृत्वमवधारयितुं शक्यमिति । ननु नेदमनिष्टमीश्वरादिकं प्रलयेऽसद्भवितुमर्हति भावत्वात् घटवदित्यनुमानेनेश्वरादेः सर्वस्य प्रलयेऽभावाभ्युपगमादित्यत्रोक्तं सूत्रकृता 'न तु दृष्टान्तभावादि'ति । नैव प्रलये सर्वस्यासत्त्वमङ्गीकर्तुमुचितम् । कस्मात् दृष्टान्तभावात् । दृष्टान्त इति तत्रावधारितव्याप्तिमूलमनुमानमुच्यते । दृष्टान्तमात्रस्य साधनबाधनानङ्गत्वात् । तथा च प्रलये परमेश्वरादिसद्भाव(स्य) साधकानुमानसंभवादित्यर्थः ।

शे० — ॐ **अपीतौ तद्वत्प्रसङ्गादसमञ्जसमिति** ॐ ॥ सर्वनाशेष्वित्युत्तरवाक्यानर्थक्यमाशङ्क्य 'न तु दृष्टान्तभावादि'ति सूत्रोक्तेश्वरादिसद्भावसाधकानुमानप्रकारदर्शनार्थत्वान्न तदित्यभिप्रेत्य तत्प्रदर्शकतया तद्योजयितुं पूर्वसूत्रेणैवानुमानविरोधेन पूर्वपक्षस्य निरस्तत्वादनुमानविरोधेन तन्निरासकसूत्रेण न प्रयोजनमित्यतस्ततः प्रमेयभेदव्युत्पादनेन सूत्रस्यार्थवत्तां दर्शयितुं प्रथमसूत्रप्रमेयं तावद्दर्शयति **एवमिति** ॥ **प्रमाणसमुदायेति** । भावत्वेनेश्वरादीनां प्रलयेऽभावसिद्धौ कार्यत्वस्य सकर्तृकत्वेन नियमे स्थिते प्रागभावस्य नियतपूर्ववृत्तित्वेन कारणत्वं सिध्यत्कर्तृत्वमादायैव सिध्यतीत्येवं प्रागभावकर्तृत्वस्य प्रमाणसमुदायलब्धत्वादित्यर्थः । एवं पूर्वसूत्रतात्पर्यमुक्त्वा न तु दृष्टान्तेति सूत्रतात्पर्यमाह **इदानीमिति** ॥ **अनुमानमिति** । 'असत्कार्यं यथा दृष्टं वस्तुत्वात्कारणं तथे'त्येवंरूपमित्यर्थः ॥ **निराचिकीर्षुरिति** । अनुमानविरोधेनेति शेषः । तथा च प्रमाणसमुदायलब्धार्थस्यानुमानविरोधाभिधायकपूर्वसूत्रेण अनुमानविरोधेनासत्कार्यमित्येतदनुमाननिरासकैतत्सूत्रस्य न गतार्थतेति भावः । ननु प्रमाणसमुदायलब्धार्थस्य अनुमानविरोधे समुदायान्तर्गतैतदनुमाननिरासोऽपि सिद्ध एवेति पुनर्निरासवैयर्थ्यमित्यत उक्तं **विशेषत इति** । नन्वेवं 'न तु दृष्टान्तभावादि'त्यनेनैव विशेषतोऽनुमाननिराससिद्धेः 'अपीतौ'इति सूत्रवैयर्थ्यमेवेत्यत अप्रसक्तस्यानुमानस्य निषेधायोगात्तत्प्रसञ्जकतया तत्पीठिकारचनरूपत्वान्न तस्यापि वैयर्थ्यमित्याह **तत्प्रस्तावनायेति** । तत्प्रसञ्जकतया तत्पीठिकारचनरूपतामुपदर्शयितुमपेक्षितपूरणेन प्रकृतोपयोगितया व्याचष्टे **असमञ्जसमित्यादिना** । तदित्यसच्छब्दोक्ताभावपरामर्शः । वदिति मतुप्प्रत्ययो न तु परमत इव वति-

रित्यभिप्रेत्य तत्प्रसङ्गादिति सूत्राक्षराणि योजयति **अभाववत्त्वप्रसङ्गादिति** । तदपि सावधारणमित्यभिप्रेत्याह **ईश्वरादेरिति** । अप्रयोजकतां परिहरति **न हीति** । नन्वत्र दृष्टान्तसद्भावमात्रस्यैवोक्तत्वेनेश्वरादिसद्भावसाधकानुमानानुक्तेः कथमीश्वरादेरसत्त्वसाधकानुमाननिरासकत्वमस्येत्यतो दृष्टांतपदेनानुमानस्यैव ग्रहणान्नानुपपत्तिरित्यभिप्रेत्य कथमन्यवाचकेनान्यग्रहणमित्यतो लक्षणयेत्याशयवान् लक्षणाबीजभूतशक्यसंबन्धं दर्शयति **तत्रावधारितेति** । मुख्यार्थानुपपत्तिं दर्शयति **दृष्टान्तमात्रस्येति** । एवं सूत्रद्वयस्य सार्थक्यमुपपाद्य सूत्रोक्तानुमानप्रकारप्रदर्शनार्थत्वान्नोत्तरभाष्यवैयर्थ्यमित्यभिप्रेत्य तथा भाष्यं योजयति **किं तदित्यादिना** ।

**स० — प्रमाणसमुदायलब्धस्येति** । महाप्रलयवर्तिकार्यप्रागभावो महदादिकार्यकारणं भवितुमर्हति अन्यत्रानुपक्षीणत्वे सति नियतपूर्ववृत्तित्वात्; इत्यनेन, प्रागभावस्य कारणत्वमात्रसिद्धावपि ईश्वरादिकं प्रलये असद्भवितुमर्हति भावत्वान्महदादिवदित्यनुमानेन, ईश्वरादीनां प्रलये असत्त्वसिद्धौ कार्यस्य सकर्तृकत्वनियमे स्थिते प्रागभावस्य नियतपूर्ववृत्तित्वेन कारणत्वं सिध्यत् कर्तृत्वमेव सिध्यतीत्येवं प्रमाणसमुदायलब्धस्येत्युक्तमिति भावः ।

**प० — प्रमाणसमुदायेति** । अनन्यथासिद्धनियतपूर्वभावित्वतादृशपश्चाद्भावित्व-भावत्वकार्यत्व-सकर्तृकत्वनियम-परिशेषरूपप्रमाणसमुदायेत्यर्थः ॥ **प्रमाणेति** । निषेधैकस्वरूपत्वरूपप्रतिपक्षरूपप्रमाणेत्यर्थः ॥ **इत्यनुमानमिति** । ईश्वराद्यसत्त्वसाधकं भावत्वानुमानं बाधितविषयत्वादिरूपविशेषदोषेण 'न तु दृष्टान्ताभावादि'त्यादिसूत्रद्वयेन निराचिकीर्षुः प्रस्तावनाय दोषोक्तिप्रसञ्जनाय ईश्वराद्यभावानङ्गीकारप्रसङ्गं सूत्रे न्यबध्नादित्यर्थः । भाष्यटीकयोस्तु भावत्वहेतोस्तर्कपराहत्युक्तिपरतयैतत्सूत्रं व्याख्यातम् । तुशब्द एवार्थ इत्युपेत्याह **नैव प्रलय इति** ।

**या० — प्रमाणसमुदायेति** । भावत्वेनेश्वरादीनां प्रलयेऽभावसिद्धौ, कार्यत्वस्य सकर्तृकत्वेन नियमे स्थिते, प्रागभावस्य नियतपूर्ववर्तित्वेन कारणत्वं सिद्ध्यत्कर्तृत्वमादायैव सिध्यतीत्येवं प्रागभावकर्तृत्वस्य प्रमाणसमुदायेन लब्धत्वादित्यर्थः ॥ **प्रस्तावनायेति** । भूमिकारचनायेत्यर्थः ॥ ॐ **अपीतौ तद्वत्प्रसङ्गादसमञ्जसमिति** ॥

**श्री० — समुदायेति** । महाप्रलयवर्ती प्रागभाव इत्यादिनोक्तमेकं, तथा महदादिकं प्रागभावकार्यमित्यपरम्, श्वरादिकं प्रलयेऽसद्भवितुमर्हतीत्यन्यत् । एवं प्रमाणत्रितयेत्यर्थः । **लब्धार्थस्य** प्रागभावस्य कर्तृत्वरूपार्थस्य ॥ ॐ **अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्** ॐ ॥

सु० — **किं तदनुमानमित्यत आह भाष्यकारः** सर्वनाशेष्वपीति ।

अनु० — ॥ ॐ **अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्** ॐ ॥

सर्वनाशेष्वपि सदा शिष्टत्वाद्यस्य कस्य नुः ॥
नाशोऽयं विमतोऽपि स्यान्नाशत्वात्कर्तृशेषवान् ॥

**अपिरभिव्याप्तौ । सर्वशब्दो वर्तमानमात्रविवक्षयाऽपि स्यादित्यतः सदेत्युक्तम् । तदिदं व्यभिचारपरिहारायाभिहितम् । नुः पुरुषस्य । अयमित्यस्यैव विवरणं विमत इति । अत्र पूर्वार्धेन व्याप्तिरुक्ता । उत्तरार्धेन प्रतिज्ञाहेतू ।**

**एतदुक्तं भवति । महाप्रलयलक्षणो नाशः पुरुषशेषवान्भवितुमर्हति नाशत्वात् संप्रतिपन्न(संमत)नाशवदिति । अत्र पुरुषावशेषमात्रं साध्यम् । न तु नाशकर्तुः पुरुषस्यावशिष्टता । अत एवोक्तं यस्य कस्येति । नाशस्य कर्तुरकर्तुर्वेत्यर्थः । तथाऽपि कर्तृशेषवानिति वदतेदमभिप्रेतम् । प्रलये पुरुषसद्भावमात्रसाधने सति भग्नं तावत्परस्यानुमानम् । यदपि परस्याभावकर्तृकत्वं जगतोऽभिमतम् । तदप्यत एवापास्तम् । अवशिष्टस्य पुरुष(विशेष)स्यैव विश्वकर्तृत्वसंभवेऽभावस्य तत्कल्पनाऽनवकाशात् । दृष्टानुसारिणी हि कल्पना । न हि लोके प्रागुत्पत्तेः कुलालाभावयोः सतोरभावो घटस्य कर्ता दृष्टः । किन्नाम कुलाल एवेति ।**

**शे०** —सर्वनाशेष्वपीत्यपिशब्दस्य समुच्चायकत्वायोगात् सर्वकर्माण्यपि सदा कुर्वाणः' इति गीतातात्पर्यनिर्णये एकमपि कर्म तदनादरेण न कार्यमित्यादिनाऽऽचार्यैरभिव्याप्त्यर्थतया तस्य व्याख्यानात्सर्वेऽप्यानेया इत्यादिलोकव्यवहारसिद्धत्वाच्च सर्वपदसङ्कोचप्रतीतिं निवारयितुमभिव्याप्त्यर्थतया तं व्याख्याति **अपिरभिव्याप्ताविति ॥ वर्तमानमात्रविवक्षयाऽपीति ।** यद्यपि दैशिककालिकतत्सङ्कोचनिरासोऽभिव्याप्त्यर्थकापिपदेनैव सिध्यति, तथाऽपि कालिकतत्सङ्कोचनिरासकसदापदसमभिव्याहारात्, दैशिककालिकसङ्कोचनिरासकाभिव्याप्त्यर्थकस्याप्यपिशब्दस्य दैशिकव्याप्त्यर्थत्वमेवात्रार्थोऽभिमत इति न सदापदस्य वैयर्थ्यमित्यवधेयम् । किं दैशिककालिकाभिव्याप्तिप्रदर्शकापिशब्दसदाशब्दाभ्यामित्यत आह **तदिदमिति ॥ व्यभिचारेति ।** देशान्तरीयकालान्तरीयविनाशयोरिति शेषः । नाशत्वहेतोर्देशान्तरीयनाशे व्यभिचारवारणाय अपीति । अतीतानागतरूपकालान्तरीयनाशे व्यभिचारवारणाय च सदेत्युक्तमित्यर्थः ॥ **नुः पुरुषस्येति ।** अत्र सर्वत्र पुरुषपदं चेतनमात्रपरमिति ज्ञेयम् ॥ **विवरणमिति ।** तथा च नान्यतरवैयर्थ्यमिति भावः । एकार्थतया पूर्वोत्तरार्धयोः पौनरुक्त्यं परिहरति **अत्रेति ।**

ननु सुन्दोपसुन्दन्यायेन यत्राशेषकर्तृनाशस्तत्र सत्यपि नाशत्वे कर्तृशेषत्वाभावेन व्यभिचारान्नायं प्रतिपक्षो युक्त इत्यत आह **एतदुक्तं भवतीति** । भवेदेवं व्यभिचारित्वेन प्रतिपक्षानुपपत्तिर्यदि प्रतिपक्षानुमाने कर्तृशेषः साध्यतयाऽभिमतः स्यान्न चैतदस्ति । महाप्रलयलक्षणो नाशः पुरुषशेषवान्नाशत्वात् संप्रतिपन्नवदिति प्रतिपक्षप्रयोगस्याभिमतत्वेन नाशकर्त्रैकर्तृसाधारणपुरुषावशेषस्यैव साध्यतयाऽभिमतत्वेन कर्तृशेषस्य तदभावादित्येकवाक्यतयेदं योज्यम् । नाशकर्त्रैकर्तृसाधारणपुरुषावशेषस्य साध्यतया प्रतिपक्षप्रयोगविवक्षायां भाष्यकारीयं ज्ञापकमाह **अत एवोक्तमिति** । कथमस्य प्रकृते उपयोग इत्यत उक्तार्थज्ञापकतासिद्ध्यर्थं प्रकृतोपयोगितयोदाहृतभाष्यपदद्वयस्यार्थमाह **नाशस्येति** । तर्हि पुरुषावशेषवानित्येव भाष्यकारेणापि वक्तव्यतया कथं कर्तृशेषवानिति तदीया साध्योक्तिरित्यतस्तस्याः प्रयोजनान्तरार्थत्वेन प्रतिपक्षार्थत्वाभावान्नानुपपत्तिरित्यभिप्रेत्य प्रतिपक्षार्थत्वाभावोपपादनपूर्वकं तस्याः प्रयोजनान्तरमाह **तथाऽपीति** ॥ **अभावस्य तत्कल्पनानवकाशादिति** । अभावस्य कर्तृत्वकल्पनायाः प्रलये वस्त्वन्तरानवशेषमात्रनिबन्धनत्वेन वस्त्वन्तरावशेषे निर्निबन्धनत्वेनानवकाशत्वादित्यर्थः । तत्कल्पनायां दृष्टाननुसारित्वं च दोष इत्याह **दृष्टानुसारिणी चेति** । दृष्टानुसारितामेव दर्शयति **न हीति** । इतीत्यस्यैतदुक्तं भवतीत्यनेन संबन्धः ।

**स०— अपिरभिव्याप्ताविति** । सर्वनाशेष्वित्यत्र सर्वशब्देन नाशानामनेकत्वसिद्धावपि नाशमात्रे पुरुषशेषस्वरूपसाध्यस्याभिव्याप्तिप्रदर्शनार्थमपिपदमिति भावः । **व्यभिचारपरिहारायेति** । अतीतानागतनाशयोः सत्यपि नाशत्वे पुरुषशेषवत्त्वाभावात् व्यभिचारः स्यात् । तत्परिहाराय सदेत्युक्तमित्यर्थः । **पौनरुक्त्यपरिहारायाह अत्रेति** । पुरुषशेषवानित्यत्र पुरुषशब्दः चेतनपरो द्रष्टव्यः । ननु सुन्दोपसुन्दन्यायेन यत्रोभयनाशस्तत्र सत्यपि नाशत्वे नाशकर्तृशेषवत्त्वाभावेन व्यभिचारः स्यादित्यत आह **अत्र पुरुषावशेषमात्रमिति** ।

**प०— अपिरभिव्याप्ताविति** । सर्वशब्दश्चासंकुचितवृत्तित्वपर इत्यर्थः । तर्हि सदेति व्यर्थमित्यतः आह **सर्वशब्द इति** । कृत्स्नवर्तमानेत्यर्थः ॥ **भग्नं ताव(त्परस्यानु)दनुमानमिति** । भावत्वेन सर्वासत्वसाधनस्य बाधादिति भावः ॥ **अत एवेति** । पुरुषसद्भावमात्रसाधनादेवेत्यर्थः । तद्व्यनक्ति **अवशिष्टस्येति** ।

**या०— अपिरभिव्याप्ताविति** । सर्वशब्दस्यासङ्कुचितार्थत्वप्रकटनाय दैशिकाभिव्याप्त्यर्थकोऽपिशब्द इत्याशयः । अतः सर्वशब्देन पौनरुक्त्यमिति शङ्काऽनवकाशः ॥ **तदिदमिति** । तद्दैशिका-

भिव्याप्त्यर्थकं सर्वादिपदमिदं सदेति पदं च क्रमेण देशान्तरेऽतीतादिकालरूपकालान्तरे च व्यभिचार- परिहारायाभिहितमित्यर्थः । पौनरुक्त्यपरिहारायाह **अत्रेति** । ननु सुन्दोपसुन्दन्यायेन यत्र सर्वनाशः कर्तृनाशस्तत्र व्यभिचार इत्यत आह **अत्र पुरुषेति** ।

श्री० — **अपिरंभिव्याप्ताविति** । तथा च सर्वशब्दस्यासङ्कुचितवृत्तित्वव्यञ्जनं प्रयोजनमिति ज्ञेयम् ॥

**सु० — अभिप्रायमजानानः कर्तृशेषवानित्युक्त्या विभ्रान्तश्चोदयति 'यत्र सुन्दोपसुन्द- न्यायेनाशेषा अपि पुरुषा नष्टास्तत्र नाशत्वहेतोरनैकान्तिकता' इति; तत्राह न चेति ।**

**अनु०** — न चाशेषनृनाशस्तु दृष्टो दृश्योऽस्ति वा क्वचित् ।

**चशब्दोऽवधारणे । अशेषनृनाशस्तु नैव क्वचिद्दृष्ट इत्यतीतनिषेधो, दृश्यो वा नैवेत्य- नागतस्य, नैवास्ति वा दृश्यमान इति वर्तमानस्य । इदमुक्तं भवति । अनैकान्तिकत्वं हि प्रमिते विपक्षे हेतुवृत्तौ सत्यां(हेतुवृत्त्या) वक्तव्यम् । नाप्रमिते । तथा सत्यनुमानमात्रोच्छेदप्रस- ङ्गात् । न चाशेषपुरुषनाशः कालत्रयेऽपि प्रमितः, येन नाशत्वस्य तत्र व्यभिचारः स्यात् । प्रमित- त्वाङ्गीकारे च प्रमातुरेवोर्वरितत्वेन व्याघातश्च स्यात् । न च नाशकर्तुः पुरुषस्यावशिष्टता साध्यत्वेनेष्टा । येन सुन्दोपसुन्दादिनाशः प्रत्युदाह्रियेत । किन्तु पुरुष(वि)शेषवत्त्वमात्रमिति ।**

**शे०** — ननु 'न चाशेषनृनाश' इत्युत्तरवाक्यमनर्थकम् । न चाशेषनृनाशस्याप्रमितत्वप्रतिपाद- नार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च व्यभिचाराभावोपपादनार्थं तदिति वाच्यम् । प्रापकाभावेन व्यभिचारशङ्काया एवानुदये तदभावोपपादनस्य व्यर्थत्वात् । न च सुन्दोपसुन्दन्याय एव तत्प्रापक इति वाच्यम् । तस्य कर्त्रनवशेषनाशप्रापकतया कर्त्रवशेषसाध्यताया व्यभिचारप्रापकत्वेऽपि पुरुषानवशेषनाशाप्रापकत्वेन कर्त्रकर्तृसाधारणपुरुषावशेषसाध्यतापक्षे तदप्रापकत्वेन प्रकृते च तन्मात्रावशे- षस्यैव साध्यत्वेन कर्त्रवशेषस्यासाध्यतया सुन्दोपसुन्दन्यायेनापि व्यभिचारशङ्कानुदयादित्यतस्तच्छङ्कोत्थापन- पूर्वकं तन्निरासाय विपक्षस्याप्रमितत्वोपपादकतयोत्तरवाक्यं सङ्गमयितुं तच्छङ्कामुपपादयति **अभिप्रायमिति** । अत्र पुरुषावशेषमात्रं साध्यं न तु नाशकर्तुः पुरुषस्यावशिष्टत्वमित्युक्ताभिप्रायमित्यर्थः ॥ **भ्रान्त इति** ।

नाशकर्तुः पुरुषस्यावशेषः साध्य इति भ्रान्त इत्यर्थः ॥ **सुन्दोपसुन्दन्यायेनेति** । सुन्दोपसुन्दावादिदैत्यौ नर्मदातीरे मोक्षार्थं तपश्चक्रतुः । तयोस्तपोविघातार्थं विधात्रा काचित्तिलोत्तमाख्या वराङ्गना प्रेषिता । तां दृष्ट्वा मोहितौ ममेयं ममेयमिति परस्परं निजघ्नतुरिति सुन्दोपसुन्दन्यायेनेत्यर्थः ॥ **अवधारण इति** । समुच्चेयाभावेन समुच्चायकत्वासम्भवाद्विपक्षस्य सर्वथाऽप्रमितत्वस्य प्रकारान्तरेणालाभाच्चेति भावः । एकेनैव पूर्तौ किं त्रिविधोक्त्येत्यत आह ॥ **अशेषेत्यादिना** । नन्वशेषनृनाशस्यादृष्टत्वाद्युक्तिमात्रेण कथमनैकान्तिकत्वपरिहारः । न चानेन विपक्षस्याप्रमितत्वसमर्थनद्वारा प्रमिते विपक्षे हेतुवृत्त्यभावसूचनादिति वाच्यम् । प्रमिताप्रमितसाधारण्येन विपक्षे हेतुवृत्तेरेव व्यभिचारत्वेनाप्रमितत्वेऽपि विपक्षस्य तदपरिहारादित्यत आह **इदमुक्तं भवतीति** ॥ **प्रमित इति** । प्रामाणिक इत्यर्थः । नन्वशेषपुरुषनाशः कालत्रयेऽपि न प्रमितः प्रमित इत्यनुभवकलहो निरवधिकः, इत्यतो विशेषनियामकमाह **प्रमितत्वाङ्गीकारे चेति** । ननु माऽस्त्वशेषपुरुषनाशस्य प्रमितत्वं व्याघातात् । तथा व्याघाताभावेन सुन्दोपसुन्दन्यायेनाशेषकर्तृनाशस्य प्रमितत्वोपपत्तेस्तत्र हेतोर्वृत्त्या व्यभिचारो दुर्वार एवेत्यतोऽत्र पुरुषावशेषमात्रस्यैव साध्यत्वेन कर्त्रवशेषस्य तदभावान्नाशेषकर्तृनाशस्य विपक्षत्वमिति न तद्वृत्तावपि हेतोर्व्यभिचार इत्याह **न चेति** ॥ **प्रत्युदाह्रियेतेति** । विपक्षतयोदाह्रियेतेत्यर्थः । इतीत्यस्येदमुक्तं भवतीति पूर्वेण सम्बन्धः ।

स० — **अभिप्रायमिति** । अत्र पुरुषावशेषमात्रं साध्यत्वेनाभिप्रेतमित्यभिप्रायमित्यर्थः । **सुन्दोपसुन्दन्यायेनेति** । सुन्दोपसुन्दौ आदिदैत्यौ नर्मदातीरे तपश्चेरतुः । तयोस्तपोविघातार्थं विधात्रा वराङ्गना काचित्तिलोत्तमाह्वया प्रस्थापिता । तां दृष्ट्वा कामसंतप्तौ ममैवेयं ममैवेयमिति परस्परं (नियुध्य) नेशतुः । सोऽयं सुन्दोपसुन्दन्याय इति भावः । ननु सुन्दोपसुन्दन्यायेनाशेषनृनाशस्याप्रमितत्वेन तत्र व्यभिचारासंभवेऽपि सुन्दोपसुन्दनाश एव व्यभिचारो भविष्यतीत्यत आह **न च नाशकर्तुः पुरुषस्येति** ।

प० — **विभ्रान्त इति** । नाशः कर्तृशेषवानिति विभ्रान्तिमानित्यर्थः । **सुन्दोपसुन्देति** । सुन्द उपसुन्दश्चेति द्वौ पुरुषौ तिलोत्तमाख्यकामिन्यर्थे परस्परनाशं प्राप्ताविति सुप्रसिद्धं पुराणेषु ॥ **प्रत्युदाह्रियेतेति** । अस्मदुक्तप्रमेयाभावात्तयोदाह्रियेतेत्यर्थः । इतिशब्दस्येदमुक्तं भवतीति पूर्वेणान्वयः ।

या० — **अभिप्रायमिति** । अत्र पुरुषावशेषमात्रं साध्यमित्यभिप्रायमित्यर्थः ॥ **सुन्दोपसुन्देति** । सुन्दोपसुन्दनामानौ द्वौ दैत्यौ ब्रह्मवरतोऽन्यैरवध्यौ दृप्तौ चेरतुः । तयोर्वधार्थं ब्रह्मणा

तिलोत्तमाख्याऽप्सराः प्रेषिता । तां दृष्ट्वा कामसन्तप्तौ ममैवेयं ममैवेयं स्यादिति परस्परं सन्नियुध्य विनष्टौ । सोऽयं सुन्दोपसुन्दन्यायः ॥ **प्रत्युदाह्रियेतेति** । व्यभिचारस्थलतयोदाह्रियेतेत्यर्थः ॥

**श्री०—** **प्रत्युदाह्रियेतेति** । व्यभिचारस्थलत्वेनोदाह्रियेतेत्यर्थः ॥ **किन्त्विति** । तथा च तत्रापि सुन्दोपसुन्दयोर्नाशकर्त्रोरभावेऽपि तद्द्रष्टा यः कश्चित्पुरुष उर्वरित एवास्तीत्यर्थः ॥

**सु०— अनेन प्रलयकालः पुरुषवान्कालत्वादिदानीन्तनकालवदित्यप्यनुमानं सूचितम् । न च तदा कालाभावादाश्रयासिद्धिः । तथा सति तदेत्येव वक्तुमशक्यत्वात् । परकीयानुमाने च प्रलयविशेषणानुपपत्तेः ।**

**शे०—** 'नाशोऽयं विमतोऽपि स्यान्नाशत्वात्कर्तृशेषवानि'ति प्रतिपक्षानुमाने विपक्षस्याप्रमितत्वसमर्थनद्वारा व्यभिचारपरिहारकत्वेन, तदेकवाक्यतया 'न चाशेषनृनाश' इति व्याख्यातम् इदानीमसत्कार्यमिति ईश्वरादीनां प्रलयकालेऽभावसाधकानुमानस्य प्रतिपक्षान्तरप्रतिपादकतयाऽपीदमेव वाक्यं योजयति **अनेनेति** ॥ **इत्यप्यनुमानमिति** । इत्यनुमानमपीत्यर्थः । केचित्तु महाप्रलयलक्षणो नाशः पुरुषशेषवान्नाशत्वात्संप्रतिपन्नवदित्यनुमानसमुच्चयार्थमपिपदमिति मन्वाना यथास्थित एवापिशब्द इत्याहुः । आश्रयासिद्धतयाऽऽभासत्वेनासमानबलत्वान्नास्यासत्कार्यमिति प्रलये ईश्वराभावसाधकानुमाने प्रतिपक्षत्वमित्याशङ्कते **न च तदेति** ॥ **तदेत्येव वक्तुमशक्यत्वादिति** । 'सर्वैकान्यकिंयत्तदः काले दा'इति स्मरणेन तस्य कालाभिधायकत्वादित्यर्थः । तथा च तदेत्यनेन कालसत्ताया लब्धत्वात्तदा कालो नास्तीति तदभाववचनं स्वव्याहतमिति भावः ॥ एवं स्वव्याघातेनासिद्धिशङ्कानुदयेनानाभासत्वाद्युक्तः प्रतिपक्ष इत्युक्तम्। इदानीं तु अस्तु तदा कालाभावः। न चोक्तदोषः। आश्रयासिद्ध्याऽऽभासत्ववदीश्वरादिकं प्रलयेऽसद्भवितुमर्हतीति परकीयानुमानस्याप्रसिद्धविशेषणत्वेनाभासतया तुल्यबलत्वानपायेन सत्प्रतिपक्षत्वाविघातत्वादित्याशयेनाह **परकीयानुमाने चेति** ॥ **प्रलयविशेषणानुपपत्तेरिति** । सकलकार्यविनाशविशिष्टकालस्यैव प्रलयत्वात् तथा च कालाभावे प्रलयस्याप्यसिद्ध्याऽप्रसिद्धविशेषणत्वं परकीयानुमानस्येति भावः ।

**स०— इत्यप्यनुमानमिति** । महाप्रलयलक्षणे काले नाशः पुरुषशेषवान् नाशत्वात्संप्रतिपन्नवदित्यनुमानसमुच्चयार्थमपिपदमित्यर्थः ।

प०— **परकीयानुमाने चेति** । ईश्वरादिकं प्रलयेऽसत् भावत्वादित्यनुमान इत्यर्थः ॥

या०— **इत्यप्यनुमानमिति** । अनेन 'चे'ति मूलं प्रकारान्तरेण योजितमिति ज्ञातव्यम् ॥

श्री०— **परकीयेति** । ईश्वरादिकं प्रलयेऽसद्भवितुमर्हतीत्यनुमान इत्यर्थः । **प्रलयेति** । तल्लक्षणेत्यर्थः ।

**सु०— यद्यप्यत्र 'कालोऽङ्गीक्रियते न वा । आद्ये तत्रैव भावत्वहेतोर्व्यभिचारः । द्वितीये प्रलयविशेषणानुपपत्तिः । सकलकार्यविनाशविशिष्टकालस्य प्रलयत्वात् । अथ कार्यविनाश एव प्रलयस्तथापीश्वराभावस्य तेन संबन्धाभावादीश्वरादिकं प्रलयेऽसदिति प्रतिज्ञार्थानुपपत्तिः । देशादिद्वारा संबन्धाभ्युपगमे तत्रैव भावत्वस्य व्यभिचारः । प्रलयविशेषणपरित्यागे चेश्वरादेः सर्वदाऽप्यभावः प्रतिज्ञातः स्यात् । तथा च स्फुटो दोषः' इति वक्तुं शक्यते; तथाऽपि तच्छिष्यैरेवोह्यतामिति न सूत्रभाष्यकाराभ्यामभिहितम् । सूचितं चापीताविति सूत्रकृता । 'लये मानं च किं भवेदि'ति भाष्यकृताऽपि ।**

शे०— संभावितपुरस्फूर्तिकव्यभिचाराप्रसिद्धविशेषणत्वरूपदूषणानभिधानेन प्रसक्तां सूत्रभाष्यकारयोरचातुरीं तद्दोषद्वयोपपादनपूर्वकं तदनुक्तौ निमित्तोक्त्या परिहरति **यद्यपीत्यादिना** ॥ **तत्रैवेति** । काल एवेत्यर्थः ॥ **अनुपपत्तिरिति** । तथा चाप्रसिद्धविशेषणतेति भावः । तामेवोपपादयति **सर्वेति** ॥ **अथेति** । तथा च कालानङ्गीकारेऽपि कार्यविनाशरूपप्रलयस्य प्रसिद्धेर्नाप्रसिद्धविशेषणतेति भावः ॥ **संबन्धाभावादिति** । संयोगसमवाययोरसंभवादिति भावः । न कालाभावेऽपीश्वराद्यभावस्य कार्यनाशेन संबन्धाभावः' समानदेशत्वस्य समानकालत्वस्य वा संबन्धस्य संभवादित्यत आह **देशादिद्वारेति** ॥ **तत्रैवेति** । देशादावेवेत्यर्थः । प्रलय इति विशेषणपरित्यागान्न प्रतिज्ञातार्थानुपपत्तिरित्यत आह **प्रलयेति** ॥ **स्फुटो दोष इति** । महदादेः कार्यस्य प्रलयकालेऽसत्त्वस्य प्रतिवादिसंमतत्वेऽपि सर्वथाऽसत्त्वस्यासम्मतेर्दृष्टान्तस्य साध्यवैकल्यं स्यादित्यर्थः ॥ **सूचितं चेति** । प्रलये सर्वासत्त्वं स्यादिति वदता अपीतौ तद्वत्प्रसङ्गादित्यनेन कालस्यापि तदाऽसत्त्वमङ्गीकर्तव्यम् । अन्यथा तत्रैव भावत्वस्य व्यभिचारप्रसङ्गात् । तथा चाप्रसिद्धविशेषणत्वमिति सूचितमित्यर्थः ॥ **भाष्यकृतेति** । लयस्याप्रामाणिकत्वाभिधानमुखेन तत्कालाभावापादनस्यापि लाभेनाप्रसिद्धविशेषणतेति सूचितमिति पूर्वेण संबन्धः ।

स० — **तत्रैवेति** । देशादावित्यर्थः । **स्फुट इति** । घटादौ स्फुटो व्यभिचार इत्यर्थः ।

प० — **यद्यपीति** । तथापीति दूरस्थेनास्यान्वयः ॥ **देशादिद्वारेति** । एकस्मिन्देशे प्रलयं-सत्त्वमपि नेत्यर्थः । सत्त्वेन वा कस्मिंश्चिद्भावन्तरे सत्त्वेन वा संबंधाभ्युपगमे देशादावेव व्यभिचार इत्यर्थः ॥ **स्फुटो दोष इति** । बाधो दृष्टांते कार्ये साध्यहीनता चेति स्फुटो दोष इत्यर्थः ॥ **भाष्यकृतेति** । अनु-भाष्यकृतेत्यर्थः ॥ **सूचितमिति** । भावत्वेन सर्वासत्त्वसाधने अपीतौ व्यभिचारात् तदभावे च विशेषणासिद्धिरिति प्रतीतेरिति भावः । **अनुमानं** नाशत्वादित्यनुमानं, कालत्वादित्यनुमानं चेत्यर्थः ।

या० — **देशादिद्वारेति** । आदिपदेनान्यत्तत्कालीनं भावभूतं प्रागभावत्वादिकं ग्राह्यम् । तथा च तत्र कार्यनाशेश्वराद्यभावयोः सामानाधिकरण्यसंबन्धाभ्युपगम इत्यर्थः ॥ **तत्रैवेति** । देशादावे-वेत्यर्थः । **स्फुटो दोष इति** । बाधो दृष्टान्ते साध्यवैकल्यं चेति दोषः स्फुट इत्यर्थः ॥ **सूचितमिति** । अपीतावित्यत्र प्रलये सर्वस्यापि भावस्याभावाभ्युपगमप्रसङ्गेऽभिहिते तत्र कालाभावस्याप्यापादनलाभेन 'लये मानं चे'त्यत्र प्रलयस्याप्रामाणिकत्वेनाभावापादने तत्कालाभावापादनस्यापि लाभेन चाप्रसिद्ध-विशेषणतायाः सूचितत्वादित्यर्थः ॥

श्री० — **यद्यप्यत्रेति** । दोषो वक्तुं शक्यत इत्यन्वयः । तत्रैव काल एव । असत्त्वा-भावादिति भावः । ननु कुतोऽनुपपत्तिः । न हि प्रलयः कालघटित इत्यत आह **सकलेति** ॥ **अथेति** । तथा च प्रलयस्य कालघटितत्वाभावेन न विशेषणानुपपत्तिरित्यर्थः । **तेन** सर्वविनाशरूपप्रलयेन ॥ **देशादीति** । तथा च सर्वनाशेनेश्वराद्यभावस्य सर्वनाशाधिकरणदेश एवेश्वराद्यभावाधिकरण इति देशादिद्वारकः संबन्धोऽस्तीत्यर्थः । **तत्रैव** देशादावेव ।

**सु० — तदिदं जीवेश्वरसाधारणमनुमानमुक्तम् । इदानीं प्रलये जीवसद्भावसाधकमनु-मानमाह** धर्मेति ।

अनु० — धर्माधर्माश्रयत्वेन स्वीकार्योऽपि नरो लये ॥

**न केवलमुक्तानुमानेन । किन्नाम धर्माधर्माश्रयत्वेनापीति संबन्धः । नरो जीवात्मा । अयमत्र प्रयोगः । प्रलयकालवर्ती धर्मः साश्रयः धर्मत्वादिदानीन्तनधर्मवत् । एवमधर्म-**

**मपि पक्षीकृत्य प्रयोक्तव्यम् । न च धर्माधर्माश्रयो जीवात्मनोऽन्यः संभवति । एवञ्च प्रलये जीवात्मसद्भावाद्भावमात्रासत्त्वसाधनमनुपपन्नमिति यद्वेश्वरसद्भावसाधनमिदम् । आश्रयशब्दस्याधिष्ठातृपरत्वात् । तत्रैवं प्रयोगः । प्रलयकालवर्तिनौ धर्माधर्मौ केनचिदधिष्ठितौ । कारणत्वे सत्यचेतनत्वात् । वाश्यादिवदिति । न चातीन्द्रिययोर्धर्माधर्मयोरधिष्ठातृत्वमीश्वरादन्यस्योपपद्यते । अतो धर्माधर्माधिष्ठातृत्वेनापि नरः परमपुरुषो लये स्वीकार्य इति ।**

**शे०** — प्रलये जीवसद्भावसाधकानुमानप्रदर्शनार्थत्वान्नोत्तरग्रन्थवैयर्थ्यमित्यभिप्रेत्य प्रलये तत्सद्भावसाधकानुमानस्य पूर्वग्रन्थेनाप्युक्तेः किमनेनेत्यतोऽगतार्थतासिद्ध्यर्थं पूर्वोत्तरग्रन्थयोरर्थभेदमाह **तदिदमिति** । महाप्रलयलक्षणो नाशः पुरुषशेषवान्नाशत्वात्सम्मतवत्, प्रलयकालः पुरुषवान्कालत्वादित्येतदित्यर्थः । **अपीति सम्बन्ध इति** । व्यवहितत्वेऽपि योग्यत्वादित्यर्थः । अतो न तस्य वैयर्थ्यमिति भावः । नन्वत्र पुरुषमात्रसद्भावसाधनं प्रतीयते न तु जीवसद्भावसाधनमिति नोक्तरूपेणापि पूर्वोत्तरग्रन्थयोः प्रमेयभेदसिद्धिरित्यतः पुण्यपापाश्रयत्वसमर्पकधर्माधर्माश्रयत्वेनेति पदसमभिव्याहारेण जीवेश्वरसाधारणस्यापि नरशब्दस्य जीवमात्रपरत्वस्थितेर्नानुपपत्तिरित्यभिप्रेत्य तदनूद्य व्याचष्टे **नरो जीवात्मेति** । धर्माधर्मान्यतराश्रयत्वेऽपि जीवसद्भावसिद्धेः किमुभयोपादानेनेत्यतः प्रयोगद्वयसूचनार्थं तदित्यभिप्रेत्य प्रयोगद्वयं दर्शयति **अयमत्र प्रयोग इत्यादिना** । नन्वनेन प्रलयकालवर्तिनोर्धर्माधर्मयोराश्रयः प्रलयेऽस्तीत्येव सिद्धं न तु जीव इति तत्कथमनेन जीवसिद्धिरित्यत आह **न चेति** ॥ **अनुपपन्नमिति** । अंशबाधादिति भावः । जीवे भावत्वहेतोर्व्यभिचारित्वादिति भाव इत्यप्याहुः । नरशब्दस्येश्वरपरत्वमाश्रित्याप्याह **यद्वेति** । नन्वीश्वरस्य पुण्यपापाश्रयत्वाभावेन तत्समर्पकधर्माधर्माश्रयत्वेनेति पदविरोध इत्यत आह **आश्रयशब्दस्येति** । साक्षात्कर्तृपरत्वादित्यर्थः । यद्वा कार्यविशेषजननाय धर्माधर्मप्रेरकपरत्वादित्यर्थः । अस्मिन्पक्षे धर्मत्वाधर्मत्वयोरेव हेतुत्वायोगाद्योग्यतया हेतुविशेषं वक्तुं प्रयोगप्रकारं दर्शयति **तत्रेति** ॥ **धर्माधर्माविति** । अत्रापि धर्मः केनचिदधिष्ठितः कारणत्वे सत्यचेतनत्वादिति, अधर्मः केनचिदधिष्ठित उक्तहेतोरेवेति प्रयोगद्वयमभिप्रेतमिति न पक्षकोटावन्यतरवैयर्थ्यमिति ध्येयम् ॥ **केनचिदधिष्ठिताविति** । केनचित्साक्षात्कृतावित्यर्थः ॥ **कारणत्वे सतीति** । परमते प्रागभावत्वे, न्यायमते पारिमाण्डल्ये, स्वमते चापरिणतप्रकृतिभागे व्यभिचारनिरासाय उक्तं **कारणत्वे सतीति** । स्वरीत्येश्वरे, परीत्या जीवे व्यभिचारवारणायाचेतनत्वादित्युक्तमित्यवगन्तव्यम् । वाश्यादिवदित्येवपाठः । दारुविदारकादिवदित्यर्थः । 'वाश्या दारुविदारणे' इत्यभिधानात् । यद्वा वाशीशब्दः कुठारपरः । ततश्च कुठारवदित्यर्थः । 'वाशीमेको बिभर्ति हस्त आयसी'मिति श्रुतेः । वात्स्या-

दिवदिति तु लेखकदोषपतितौ, मूलकोशेष्वदर्शनात् । नन्वनेन धर्माधर्मयोरधिष्ठातृपुरुषमात्रसिद्धावपि नेश्वरसिद्धिरन्यस्यापि तदधिष्ठातृकत्वसम्भवादित्यत आह **न चेति** । उक्तमर्थं मूलारूढं करोति **अत इति** ।

स०— कारणत्वमात्रं कुलालस्यापीति तत्र व्यभिचारपरिहारायाचेतनत्वादित्युक्तम् । **वाश्यादिवदिति** । वाशीशब्देन कुठारो ग्राह्यः । 'वाशीमेको बिभर्ति हस्त आयसीम्' इति श्रुतौ (ऋ· ८-२९-३) अयोमये आयुधे प्रयुक्तत्वादित्यर्थः । ('वाशीमेको बिभर्ति हस्त ओहितं तेन वृत्राणि जिघ्नति ! । वासीमन्तर्देवेषु निविः' )

प०— **न च धर्माधर्माश्रयो जीवात्मनोऽन्य इति** । स्वस्वामिभावरूपसंबन्धेन जीवस्यैवाश्रयत्वादिति भावः ॥ **अधिष्ठातृपरत्वादिति** । कार्योन्मुखकर्ता अधिष्ठाता ज्ञेयः । यथेष्टविनियोगकर्ता वाऽधिष्ठाता, नियन्ता वा इत्यर्थः । ध्वंसात्यन्ताभावादावव्यभिचाराय कारणत्वे सतीति हेतुविशेषणम् ॥ **वा(श्या)त्स्यादिवदिति** । तक्षण आयुधं वाशी, तक्ष्णा नियता यथा तथेत्यर्थः । आदिपदेन कुलिशादिग्रहः ।

---

या०— **तदिदमिति** । तत् विमतो नाशः पुरुषशेषवानित्यनुमानम् । **इदं** प्रलयकालः पुरुषवानित्यनुमानमित्यर्थः । **अधिष्ठातृपरत्वादिति** । कार्यविशेषजननाय यो यत्प्रेरयति स तदधिष्ठातेत्युच्यते । एवं च केनचिदधिष्ठिताविल्यस्य केनचित्कार्यविशेषजननाय प्रेरिताविल्यर्थो बोध्यः । **कारणत्व इति** । अत्र परमते प्रागभावत्वे न्यायमते पारिमाण्डिल्येऽस्मन्मते प्रकृतेरनन्तत्वेनाकारणीभूतप्रकृतिभागे व्यभिचारवारणाय कारणत्वे सतीति विशेषणम् । ईश्वरे व्यभिचारवारणाय विशेष्यमिति ज्ञातव्यम् ॥ **वाश्यादिवदिति** । दारुविदारकवदित्यर्थः । वाश्या दारुविदारण इत्यभिधानात् ॥

श्री०— **अधिष्ठितौ** कार्योत्पादाय केनचित्प्रेर्यौ । **वाश्या** कुठारः । बालचीत्यपभ्रष्टभाषा ॥ **कार्यं** सुखादिकारणं भोजनादि ।

सु०— ननु प्रलये भावमात्रस्यासत्त्वमभ्युपगच्छतो मम तदा धर्माधर्मावपि न स्त एवेत्याश्रयासिद्धिरिति । इदमिह वक्तव्यम् । किं धर्माधर्मसंज्ञितमदृष्टमस्ति कार्यमात्रस्य कारणं च भवतीत्यभ्युपगम्य प्रलये तदभावोऽभिधीयते, उत सदपि तदकारणमित्यभ्युपेत्य, अथ तदेव नास्तीत्यङ्गीकृत्य । आद्यं दूषयति अनादित्वमिति ।

अनु०— अनादित्वं विनाऽदृष्टं कथं स्यात्कारणं क्वचित् ॥

अनादित्वमिवानादित्वं प्रलये सत्त्वमित्यर्थः । क्वचिदिति सृष्टिकाले । यद्यदृष्टं प्रलये न स्यात्तदाऽऽदिकालीनस्य कार्यस्य कारणं न स्यात् । असतः कारणत्वायोगात् । तथा च सर्वोत्पत्तिमतां निमित्तमित्यभ्युपगमो भग्न इत्यर्थः ।

स्यादेतत् । अधुनातनकार्यमदृष्टकारणकं न त्वादिकालीनमिति ममाभ्युपगमः । तत्किमदृष्टस्य प्रलये सद्भावेनेत्यत आह अनादित्वमिति । अनादित्वं विना तत एवादिकालीनकार्यकारणत्वं च विनाऽदृष्टं क्वचिदधुनातनेऽपि कार्ये कारणं कथं स्यात् । न कथञ्चित् । अधुनातनं कार्यम् अदृष्टकारणकं न, कार्यत्वादादिकालीनकार्यवदित्यनुमानसंभवात्। न चेदिदमिव तदप्यदृष्टकार्यमेवाङ्गीकार्यमिति ।

यद्वा मा भूदादिकालीनस्य कार्यस्यादृष्टं कारणम् । तथाऽपि प्रलये तद्भावोऽङ्गीकरणीयः । कुतः । अनादित्वं प्रलये सत्त्वं, विनाऽदृष्टं क्वचिदिदानीन्तनेऽपि कार्ये कारणं कथं स्यात् । अन्तराल एवादृष्टोत्पत्त्ययोगादिति योज्यम् ।

शे०— 'अनादित्वं विने'त्युत्तरमूलानर्थक्यमाशङ्क्य प्रलये धर्माधर्मरूपादृष्टसद्भावप्रतिपादनार्थत्वान्न तदित्यभिप्रेत्य किं तद्भावप्रतिपादनस्य प्रयोजनमित्यत आश्रयासिद्धिशङ्कानिरासस्तत्प्रयोजनमित्याशयवानाश्रयासिद्धिशङ्काबीजं दर्शयंस्तामुत्थापयति नन्विति । ननु प्रलये धर्माधर्मौ न स्त इति वदतोऽदृष्टमेव नास्तीति संप्रतिपन्नं सदपि वा न सर्वकारणमिति न त्वदृष्टस्य सत्त्वं. सर्वकार्यकारणत्वं च । तथा च तं प्रत्यदृष्टस्य प्रलये सत्त्वाभावादादिकालीनकार्यकारणत्वाभावप्रतिपादकोत्तरग्रन्थानुपपत्तिः । न च प्रलये धर्माधर्मौ न स्त इति वदतो, यद्यप्यदृष्टमस्ति सर्वकारणं च भवति तथाऽपि प्रलये नास्तीत्येवाभिमतं न तु तदेव नास्ति सदपि वा कारणं नेतीति नोत्तरग्रन्थासङ्गतिरिति वाच्यम् । तथा सति 'लये मानं च किं भवेदि'त्युत्तरग्रन्थासामञ्जस्यप्रसङ्गादित्यतोऽत्र विकल्पमुखेन प्रवृत्तेर्न कस्याप्यनुपपत्तिरित्यभिप्रेत्य संभावितविकल्पप्रदर्शनपूर्वकमाद्यपक्षनिरासकतयोत्तरवाक्यं योजयति इदमिहेति । नन्वनादित्वाभावेन नादृष्टस्यादिकालीनकार्यकारणत्वाभाव आपादयितुं शक्यः । तथा सति स्वमतेऽपि

अदृष्टस्यानादित्वाभावेन आदिकालीनकार्यकारणत्वाभावप्रसङ्गात्प्रलये तत्सत्त्वमात्रस्यैव तत्कारणताप्रयोजकत्वेन तदनादित्वस्य तत्राप्रयोजकत्वाच्चेत्यतोऽत्रानादित्वशब्देन प्रलयकाले सत्त्वस्य विवक्षितत्वात्स्वमते अदृष्टस्य प्रलये सत्त्वेनादिकालीनकार्यकारणत्वोपपत्तावपि परपक्षे प्रलये तस्य तदाऽसत्त्वान्न तस्य तत्कारणत्वमित्याशयेन कथमनादित्वशब्दस्य प्रलयकाले सत्त्वसमर्पकत्वमित्यतो गौण्या तत्समर्पकतां दर्शयति **अनादित्वमिवेति** । इदानीन्तनकार्यसृष्टेस्तत्पूर्वमदृष्टसत्तामात्रापेक्षत्वेन प्रलयकाले सत्त्वानपेक्षत्वान्न तदभावेन तदभावापादनं संभवतीत्यतः क्वचित्पदं सृष्टिकालपरतया व्याचष्टे **क्वचिदितीति** । सिद्धं प्रसङ्गमाह **यदीति** । अप्रयोजकतां परिहरति **असत इति** । पूर्वमसत इत्यर्थः । नियतपूर्ववृत्तित्वरूपत्वाच्च-व्याप्तत्वाद्वा कारणत्वस्येति भावः । अदृष्टस्यादिकालीनकार्यकारणत्वाभावादिष्टापादनमेतदित्यतः किमसंकुचितसर्वोत्पत्तिमन्निमित्तत्वमदृष्टस्याभ्युपगम्येदमाशङ्क्यते किंवा संकुचितकार्यकारणत्वमभ्युपगम्येति विकल्पद्वयं मनसि निधायाद्यपक्षमाश्रित्येष्टापत्तिं परिहरति **तथा चेति** ।

द्वितीयपक्षमाश्रित्येष्टापत्तिमाशङ्कते **स्यादेतदिति** ॥ **तत्किमदृष्टस्येति** । अधुनातनकार्यस्य तत्पूर्वक्षणेऽदृष्टसद्भावमात्रेणोपपन्नतया प्रलये तस्य सत्त्वानपेक्षत्वादिति भावः । एतत्पक्षनिरासोपयोगितया वाक्यं व्याचष्टे **अनादित्वं विनेत्यादिना** । दृष्टान्तमात्रस्यासाधकत्वाद्धेतोश्चानुक्तत्वान्न कथञ्चिदित्ययुक्तमित्यतोऽभिप्रायमाह **अधुनातनेति** । तथा चाधुनातनकार्यकारणमदृष्टमित्यभ्युपगमभङ्ग इति भावः । अप्रयोजकत्वं परिहरति **न चेदिति** । अधुनातनकार्यं **नादृष्टकारणकं न चेत्** दृष्टकारणकं चेदित्यर्थः । अनेन आदिकालीनं कार्यमदृष्टकारणकं कार्यत्वादधुनातनकार्यवदित्यनुमानं सूचितं भवति । तथा च तन्निर्वाहाय प्रलयकाले सत्त्वस्यावश्याभ्युपगमनीयत्वसिद्धेर्नाश्रयासिद्धिरिति भावः ।

एवमधुनातनकार्यस्य प्रलयेऽदृष्टसत्त्वानपेक्षत्वेऽप्यादिकालीनकार्यकारणत्वाभावे तद्दृष्टान्तेनादृष्टस्याधुनातनकार्यकारणत्वाभावप्रसङ्गेनाधुनातनकार्यकारणमित्यभ्युपगमभङ्गापत्त्या तदुपपत्त्यर्थमेवादिकालीनकार्यकारणत्वस्याभ्युपगमनीयत्वात्तस्य च प्रलयेऽदृष्टस्य सत्तां विनाऽनुपपत्तेः प्रलये तत्सत्त्वसिद्धिरित्यादिकालीनकार्यकारणत्वसमर्थनद्वाराऽधुनातनकार्यकारणत्वस्याप्यदृष्टस्य प्रलयेऽदृष्टसत्त्वसाधकत्वोपपादकत्वाभिप्रायेण वाक्यं योजितम् । इदानीं त्वधुनातनकार्यकारणत्वस्याप्यदृष्टस्य प्रलये सत्त्वं विनाऽनुपपत्तेः साक्षादेव तेन तत्सिद्धिरित्यभिप्रायेणापेक्षिताध्याहारेण वाक्यं योजयति **यद्वेति** ।

**स० — उत सदपीति** । इदानीमदृष्टस्य सत्त्वेऽपि प्रलये तस्याभावान्न तस्य कारणत्वमिति विकल्पाभिप्रायः ।

**प॰**— द्वितीयतृतीयपक्षौ 'अदृष्टं कारणं नो चेदि'त्यादिना निरसिष्यन् ततः प्राक् आद्यपक्षनिरास इति भावेनाह **आद्यं दूषयतीत्यादिना** ॥ **अनादित्वं विनेति** । प्रलये सत्त्वं विनेत्यर्थः ॥ **तत एवेति** । प्रलये सत्त्वाभावादेवेत्यर्थः । तर्कं चाह **न चेदिति** । नादृष्टकारणकं न चेदित्यर्थः ॥ **तदपीति** । सृष्टिकालीनमित्यर्थः ॥

**श्री॰**— अदृष्टं कारणमेव न भवतीति वा नास्तीति वा कुतो निश्चेयमित्यतः प्रमाणेनानुपलम्भादित्याह **उभयस्येति** । अदृष्टकारणत्वस्यादृष्टस्य चेत्यर्थः । अदृष्टमेव नो चेत्सदपि तत्कारणं नो चेदिति योजनामभिप्रेत्याह **यदि प्रत्यक्षेणेति** । **अनुपलभ्यमानः** प्रत्यक्षेणेति शेषः ॥

**सु॰—नन्वदृष्टस्य सर्वोत्पत्तिमन्निमित्तत्वेऽपि न प्रलये सद्भावोऽभ्युपगन्तव्यः । आदिकाल एवोत्पन्नस्यापि महदादिकारणत्वोपपत्तेरिति । इदमत्र** वक्तव्यम् । **तदादिकाले जनिमददृष्टं ततः पूर्वादृष्टादुत्पद्यते न वेति । आद्यमुपादत्ते** पूर्वेति ।

**अनु॰**— पूर्वादृष्टात्परादृष्टं यदि नैवोत्तरं कुतः ॥

**जायत इति शेषः । परिहरति** नैवेति । **एवं तर्हि तदुत्तरमादिकाले जनिमददृष्टं नैवास्माभिः पक्षीक्रियते । किन्तु तत्कारणं प्रलयकालीनं पूर्वादृष्टमेवेति कुत आश्रयासिद्धिरिति ।**

**द्वितीयमुपादत्ते** पूर्वेति । **नैवोत्पद्यत इति शेषः । दूषयति** उत्तरमिति । **तर्हि तदुत्तरमादिकालीनमदृष्टं कुतो जायते । न कुतश्चित् । सर्वोत्पत्तिमन्निमित्तस्यादृष्टस्याभावादादिकालीनादृष्टोत्पत्तिरेव न स्यादित्यर्थः ।**

**न ब्रूमो वयं सर्वं कार्यमदृष्टजन्यमिति । किं तर्ह्यादिकाले जनिमतो महदादिकारणाददृष्टादन्यदेवातो नोक्तदोष इत्याशङ्कामुत्थाप्य दूषयति** पूर्वेति । **यदि परादृष्टं सृष्ट्युपक्रमे जनिमत्पूर्वादृष्टान्नैवोत्पद्यते । अपि त्वदृष्टनिरपेक्षमेव । तर्ह्युत्तरमहदादिकार्यमपि कुतोऽदृष्टादुत्पद्यत इत्यङ्गीकरणीयम् । अदृष्टवत्तस्याप्यदृष्टनिरपेक्षत्वसंभवात् । अन्यथा कार्यत्वाददृष्टस्याप्यदृष्टापेक्षाऽङ्गीकार्येति ।**

**शे॰**— ननु तथाऽपि पूर्वादृष्टात्परादृष्टमित्याद्युत्तरभाष्यमनर्थकम् । न च महदादिकारणादृष्टस्य पूर्वादृष्टादुत्पत्तिनिरासार्थं तदिति वाच्यम् । तन्निरासस्याप्यनर्थकत्वादित्यतः प्राग्व्युत्पादितमहदादिकार्यकारणत्वेन प्रलयेऽदृष्टसत्त्वस्य समर्थनेनाश्रयासिद्धिपरिहारार्थत्वादित्यभिप्रेत्य तदनुपपत्तिशङ्का-

मुत्थापयति **नन्विति ॥ सर्वेति** । महदादीत्यर्थः । नन्वेवं परिहारग्रन्थासङ्गतिः । अदृष्टमनपेक्ष्यै-वोत्पन्नस्यादृष्टस्य महदादिकारणताया अपि परेणाभिप्रेतुं शक्यत्वेन पूर्वादृष्टमपेक्ष्यैव महदादिजनका-दृष्टोत्पत्तिनियमाभावेन महदादिजनकादृष्टजनकप्रलयकालीनादृष्टपक्षीकारेणाश्रयासिद्धिपरिहारायोगादित्य-तोऽत्रादिकाल एवोत्पन्नस्य महदादिकारणत्वं वदतोऽदृष्टनैरपेक्ष्येणैव महदादिजनकोत्पत्त्यभिप्रायकत्ववत्-त्पूर्वादृष्टापेक्षोत्पत्त्यभिप्रायकत्वस्यापि संभावितत्वेन निरसनीयत्वान्नानुपपत्तिरित्यभिप्रेत्य संभावितविकल्प-प्रदर्शनपूर्वकमाद्यपक्षकक्षीकारतन्निरासपरतया तद्व्याख्यातुं विकल्पयति **इदमत्रेति** । नन्वत्र महदादि-जनकादृष्टस्य पूर्वादृष्टादुत्पत्तेरनुक्तत्वान्नोपात्तभाष्यखण्डस्याद्यपक्षपरिग्रहत्वमित्यतोऽपेक्षितशेषपूरणेन तदुप-पादयति **जायत इतीति** । नन्वनेन कथमाद्यपक्षपरिहार इत्यतस्तदुपयोगितया तदपेक्षितपूरणेन तद्यो-जयति **एवं तर्हीति ॥ नैवास्माभिरिति** । तदाश्रयत्वाधिष्ठातृत्वयोः प्रलये जीवेश्वरसत्त्वानापादकत्वा-दिति भावः ॥ **पूर्वादृष्टमेवेति** । तदाश्रयत्वाधिष्ठातृत्वाभ्यां प्रलये जीवेश्वरसद्भावसिद्धेरिति भावः ॥ **कुत आश्रयेति** । महदादिजनकस्यादिकालोत्पन्नस्यादृष्टस्य प्रलयवर्त्यदृष्टकार्यत्ववादिना प्रलयेऽदृष्टसत्त्व-स्याभ्युपगतत्वात्तदभावाभ्युपगमनिबन्धनाश्रयासिद्धेरनवकाशत्वादिति भावः ।

नन्वेवं विकल्पमुखेन योजनायां द्वितीयपक्षनिरासकोत्तरग्रन्थानुपलम्भात्तन्निरासप्रसङ्गो दोष इत्यतो वाक्यभेदविवक्षावशेनास्यैव भाष्यस्य तत्परिग्रहनिरासपरत्वान्नानुपपत्तिरित्यभिप्रेत्य तत्परिग्रहनिरा-सपरतयाऽपि योजयति **द्वितीयमुपादत्त इत्यादिना** । नैवेत्यन्तस्य भाष्यस्य द्वितीयपक्षपरिग्रहरूपता-सिद्ध्यर्थमपेक्षितं पूरयति **नैवोत्पद्यत इति शेष इति** । नैवेत्यतःपरमुत्पद्यत इति शेष इत्यर्थः । शङ्का-ग्रन्थे यदीत्युक्त्यनुरोधादाह **तर्हीति** । कुत इत्यस्योत्तरत्रोत्तराभावेन प्रश्नार्थत्वासंभवादाक्षेपार्थत्वमङ्गीकृत्य तदुपपादयति **न कुतश्चिदित्यादिना ॥ न ब्रूम इति** । येन सर्वोत्पत्तिमन्निमित्तस्यादृष्टस्याभावादादि-कालीनादृष्टोत्पत्त्यनुपपत्तिरिति भावः ॥ **अदृष्टवदिति** । महदादिकं नादृष्टकारणकं कार्यत्वान्महदादि-जनकादिकालीनादृष्टवदित्यनुमानसंभवादिति भावः ॥ **अन्यथेति** । महदादिजनकमादिकालीनमदृष्टम् अदृष्टकारणकं कार्यत्वान्महदादिवदित्यनुमानादिति भावः ।

प० — **उपादत्ते** । दूषयितुमनुवदतीत्यर्थः । यदीत्यनन्तरं दोषमाह **जायत इति शेष इति** । 'एवं तर्हि तदि'ति पदत्रयं परिष्कारार्थमुपात्तम् ॥ **नैवास्माभिः पक्षीक्रियत इति** । यद्यपि तत्पक्षीकारे-णाधिष्ठातृसाधनेपि नाश्रयासिद्धिरीश्वरसिद्धिश्च सेत्स्यति । तथापि प्रलयकालीनमीश्वरसत्वं न सिध्यतीति नैवास्माभिः पक्षीक्रियत इत्युक्तम् । 'तर्हि तदि'ति परिष्कारार्थमनुवादः । उत्तरमित्यस्यार्थ आदिकाली-

नमदृष्टमिति ॥ **नोक्तदोष इति** । आदिकालीनादृष्टोत्पत्त्यभावरूपदोषो नेत्यर्थः । परादृष्टमित्यनुवादः । सृष्ट्युपक्रमे जनिमदिति व्याख्या । कुत अंगीकरणीयमित्यन्वयः ॥ **अदृष्टस्यापीति** । आदिकालीनादृष्टस्यापीत्यर्थः ।

या० — **नैवास्माभिरिति** । येन प्रलये ईश्वरसिद्ध्यलाभेनासङ्गतिः स्यादिति भावः ॥

**सु० — अस्तु तर्ह्यदृष्टं कारणमेव न भवतीति द्वितीयः पक्षः, अदृष्टमेव नास्तीति तृतीयो वा; उभयस्याप्यनुपलम्भात् । तथा चाश्रयासिद्धिरपरिहार्येत्याशङ्क्याह** अदृष्टमिति ।

**अनु०** — अदृष्टं कारणं नो चेल्लये मानं च किं भवेत् ॥

**यदि प्रत्यक्षेणानुपलम्भाददृष्टं न स्यात् । सदपि वा कारणं न स्यात् । तदा लये च किं मानं भवेत् । प्रलयोऽप्यप्रामाणिकत्वान्न स्यात् । न ह्यसावपि प्रत्यक्षेणोपलभ्यते । तथा चेश्वरादिकं प्रलयेऽसङ्गवितुमर्हतीत्यप्रसिद्धविशेषणः पक्षः परस्यापि स्यात् ।**

**शे०** — **अदृष्टं कारणं नो** चेदित्युत्तरवाक्यस्य द्वितीयपक्षमात्रनिरासपरत्वे तृतीयपक्षस्य मूलादनिरासप्रसक्त्या पक्षद्वयनिरासपरत्वेन योजयितुं द्वितीयतृतीयपक्षावाशङ्कते **अस्तु तर्हीति** ॥ **उभयस्यापीति** । अदृष्टस्य तत्कारणत्वस्य चेत्युभयस्येत्यर्थः ॥ **अनुपलम्भादिति** । प्रत्यक्षेणेति शेषः । पक्षद्वयनिरासपरतया भाष्यं योजयति **यदीत्यादिना** । मानं चेत्यत्र चशब्दस्य वैयर्थ्येन संबन्धायोगाद्भिन्नक्रमतया तमाह **लये चेति** । इष्टापत्तिं परिहरति **तथा चेति** ॥ **अप्रसिद्धविशेषण इति** । अप्रसिद्धविशेषणविशेषण इत्यर्थः । तथा चानुमानद्वयस्याप्याभासतया समत्वात्सत्प्रतिपक्षत्वमप्रत्यूहमिति भावः ।

**स०** — **उभयस्यापीति** । अदृष्टस्य तत्कारणत्वस्य चेत्यर्थः ।

**प०** — **उभयस्यापीति** । अदृष्टकारणत्वस्यादृष्टस्य चेत्यर्थः ॥ **आश्रयासिद्धिरपरिहार्येति** । अंत्यपक्षाभिप्रायेणैतदुक्तिः । द्वितीयपक्षे हेतौ कारणत्वे सतीति विशेषणासिद्धिर्ज्ञेया । यद्वा द्वितीयपक्षेपि कारणीभूतादृष्टस्यैव पक्षत्वादयं दोषः पक्षद्वयाभिप्रायेणैवेति ध्येयम् ।

**या०** — **उभयस्येति** । अदृष्टस्य तत्कारणत्वस्य चेत्यर्थः ।

**श्री०** — अदृष्टं कारणमेव न भवतीति वा नास्तीति वा कुतो निश्चयमित्यतः प्रमाणेनानुपलम्भादित्याह ॥ **उभयस्येति** । अदृष्टकारणत्वस्यादृष्टस्य चेत्यर्थः । अदृष्टमेव नो चेत्सदपि तत्कारणं नो चेदिति योजनामभिप्रेत्याह ॥ **यदि प्रत्यक्षेणेति** । **अनुपलभ्यमानः** प्रत्यक्षेणेति शेषः ।

सु० — अथ मतम्। कालविप्रकर्षादनुपलभ(म्य)मानोऽपि प्रलयोऽनुमानसिद्धत्वादङ्गी-करणीयः। तथा हि। विश्वसन्तानोऽयं दृश्यसन्तानशून्यैः समवायि(न्तानि)भिरारब्धः सन्तान-त्वात् आरणेयसन्तानवत्। वर्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयसन्तानान्तराः नित्यत्वे सति तदारम्भकत्वात् प्रदीपपरमाणुवत्। सर्वे सन्तानाः कदाचित्सहोच्छिद्यन्ते सन्तानत्वात् प्रदीपसन्तानवत्। सर्व एव परमाणवः कदाचित्समग्रोपादेयप्रबन्धशून्याः आरम्भकत्वात् नष्टपवनारम्भकपरमाणुवत्। भूगोलकसन्तानः कदाचित्साकल्येनोच्छिद्यते सन्तानत्वात् दीप-सन्तानवत्। इयं क्रिया स्वान्यावयविकालीनत्वानधिकरणकिञ्चित्कालीनक्रियाऽन्या क्रियात्वा-दन्यक्रियावदिति।

एवं तर्हि धर्माधर्मावपि स्वरूपतो विप्रकृष्टत्वादनुपलभ्यमानावपि देवदत्तशरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तभोगहेतुत्वात् देवदत्तप्रयत्नजन्यस्रगादिवदित्या-द्यनुमानेन विचित्रकार्यान्यथाऽनुपपत्त्या; 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'यो ब्राह्मणा-यावगुरेत्तं शतेन यातया(ये)त्' इत्यादिश्रुतसाध्यसाधनभावान्यथाऽनुपपत्त्या वा सिद्धत्वादभ्युप-गन्तव्याविति समं समाधानम्।

शे० — ननु माऽस्तु प्रत्यक्षं लये मानं कुसुमाञ्जलिलीलावतीकारादिभिराशङ्कितमनुमानजातं तत्र मानं भविष्यतीत्याशङ्कते **अथेति**। नन्वनुपलम्भबाधितमनुमानजातं न तत्साधनायालमित्यतो नानुपलम्भ-मात्रमसत्त्वसाधकमतिप्रसङ्गात्। किन्तु योग्यानुपलम्भ एव। ततश्च प्रलयस्य कालान्तरभावितयेदा-नीमसत्त्वेनायोग्यत्वान्न तदनुपलम्भेन तदभावसिद्धिरिति नोक्तदोष इत्याशयेनाह **कालेति**॥ **अङ्गीकर-णीय इति**। तथा च नाप्रसिद्धविशेषणतेति भावः॥ **विश्वसन्तानोऽयमिति**। कार्यकारणोभयवर्ति-धर्मवत्त्वं सन्तानत्वं, तच्च द्व्यणुकाद्यन्त्यावयविपर्यन्तमविशिष्टमिति लीलावतीवर्धमानः। सन्तनोतीति सन्तान इति कार्यमात्रमुच्यत इति तर्कचन्द्रिकाकारः। दृश्यशून्यत्वं परमाणोः सदैवेति न प्रलयसिद्धि-रित्यतः सन्तानेति विशेषणम्। दृश्यसन्तानशून्याश्च समवायिनः प्रलयकालीना एवेति तत्सिद्धिरिति भावः॥ **आरणेयेति**। अरण्युत्पन्नवह्निसन्तानवदित्यर्थः। तत्र दृश्यसन्तानशून्यः समवाय्यरण्यन्तर्गतो वह्निरेवेति ज्ञेयम्॥ **वर्तमानेति**। ब्रह्माण्डस्याऽऽगमसिद्धत्वान्नाश्रयासिद्धिरिति ध्येयम्॥ **पूर्वमिति**। अत्रैकत्र युगपन्मूर्तद्वयावस्थानासंभवेन पूर्वोत्पन्नकार्ये सत्यन्यस्य ब्रह्माण्डस्यारम्भासंभवात्तल्लयो लभ्यत इति प्रलयसिद्धिरिति भावः। अत्र तदारम्भकत्वमात्रं पूर्वमनुत्पादितपटैस्तन्तुभिरनैकान्तिकं स्यादित्यत उक्तं **नित्यत्वे सतीति**। नित्यत्वमात्रं च व्योमादिभिरनैकान्तिकमिति तदारम्भकत्वादित्युक्तम्। प्रदीपपर-

माणूनां तैजसद्रव्यत्वेन संसर्गिद्रव्यतयाऽऽरब्धतेजोजातीयत्वसिद्धौ दृष्टान्तत्वम् । न चाप्रयोजकत्वम् । निरुपाधिकत्वभङ्गप्रसङ्गस्य विपक्षबाधकत्वात् । नत्वागमो विपक्षबाधकः । तस्य कार्यद्रव्यानाधारकाला-बोधकत्वादिति भावः ॥ **सर्व एव परमाणव इति ।** अत्र स्पर्शवन्त इत्यपि पक्षे विशेषणं देयम् । अन्यथा मनस्यस्पर्शवत्यंशतो बाधापत्तेः । उपादेयपदस्य स्वोपादेयद्रव्यपरत्वात् । अन्यथा बाधापत्तेः । गुणादिसत्त्वादन्योपादेयशून्यत्वाभावाच्च । शून्यपदस्य कादाचित्काभावपरत्वात् । अत एवारम्भकत्वादि-त्येव हेतुः । अन्यथा मेयत्वादित्येव क्रियेत । आरम्भकत्वं च द्रव्यसमवायिकारणत्वमेव विवक्षितम् । अन्यथोक्तसाध्याभाववति मनःप्रभृतौ व्यभिचारप्रसङ्गादिति ध्येयम् । नन्वेककालीनसमग्रोपादेयप्रबन्ध-शून्यत्वं वा साध्यत्वेनाभिमतं, समग्रोपादेयप्रबन्धशून्यत्वमेव वा । नाद्यः । अप्रसिद्धविशेषणत्वात् । नान्त्यः क्रमेण साध्यसिद्धौ सिद्धसाधनात् । पवनपरमाणूनामपि पक्षत्वेनांशे सिद्धसाधनं च । अपक्षत्वे च तेषामेव कार्यद्रव्यत्वेन प्रलयासिद्धेः । तत्कथमेतदिति चेदुच्यते । अत्रैककालीना इत्यपि विशेषण-मेककालावच्छेदेन परमाणुमात्रे समग्रोपादेयप्रबन्धशून्यत्वलाभाय विवक्षितम् । ततश्चैककालीना इति विशेषणात्पक्षधर्मताबलादेककालीनत्वसिद्धौ साध्यस्य सिद्ध्या युक्ता प्रलयसिद्धिः । न च एकस्य द्वय-मितिवत् पक्षविशेषणतयैककालीनत्वसाध्ययोः पक्षेऽन्वयबोध एवास्त्विति वाच्यम् । प्रमाणमहिम्ना बाधकं विनैकविशेषणावच्छेदेनापरविशेषणान्वयबोधनियमेन पक्षतावच्छेदकावच्छिन्ने साध्यस्य सिद्धेरनुमानेनाकल-ङ्कत्वात् । न चांशतः सिद्धसाधनम् । पक्षधर्मताबललभ्योद्देश्यप्रतीत्यसिद्ध्या तदप्रसङ्गात् । न च पक्षै-कदेशत्वे दृष्टान्ताभावः । साध्यवत्तया निश्चितस्यैव तथात्वात्पक्षान्यत्वस्य वैयर्थ्यात् । तथाऽपि न तस्य पक्षत्वं साध्यसन्देहसिसाधयिषयोरभावादिति चेन्न । येन रूपेण साध्यं निश्चितं तेन रूपेण तयोरभावेऽपि सामान्येन रूपेण तयोः संभवेन तत्त्वोपपत्तेरिति दिक् ॥ **नष्टपवनेति ।** नष्टा ये पवनास्तदारम्भकपर-माणुवदित्यर्थः । न च तेजोवद्वायोरपि संसर्गिद्रव्यतया तेनापि द्रव्यान्तरजनने दृष्टान्तस्य साध्यवैकल्य-मिति वाच्यम् । पूर्वद्रव्यनाशकालीनस्य परमाणोः साध्यवत्तानिश्चयात् ॥ **इयं क्रियेति ।** अत्र वर्त-मानक्रियायाः पक्षत्वमतीतानागतक्रिययोश्च दृष्टान्तत्वम् । साध्ये च स्वपदं वर्तमानक्रियामात्रपरम् । स्वान्यद्यदवयविकालीनं, तस्य भावः स्वान्यावयविकालीनत्वम् । तदनधिकरणभूता यत्किञ्चित्कालीनक्रिया तदन्यत्वमिति साध्यार्थः । अत्र पक्षीभूतवर्तमानक्रियाया अपि किञ्चित्कालीनक्रियात्वात्तदन्यत्वसाधने बाधवारणायावयविकालीनत्वानधिकरणेति किञ्चित्कालीनक्रियाविशेषणम् । परमते क्रियामात्रस्यावयवि-कालीनत्वेनावयविकालीनत्वानधिकरणक्रियाया अप्रसिद्धेरप्रसिद्धिवारणाय स्वान्यत्वेनावयविकालीनक्रियां विशिनष्टि । एवञ्च नाप्रसिद्धिः । स्वान्यत्वरूपविशेषणाभावप्रयुक्तस्वान्यावयविकालीनत्वरूपविशिष्टा-भाववत्पक्षीभूतवर्तमानक्रियान्यत्वस्यातीतादिक्रियायां सत्त्वेन दृष्टान्ते साध्यस्य सत्त्वात् । स्वान्यत्वरूप-

विशेषणाभावप्रयुक्तस्वान्यावयविकालीनरूपविशिष्टाभावस्य वर्तमानक्रियामात्रनिष्ठत्वेन तदन्यत्वरूपसाध्यस्य च तत्र बाधितत्वेन हेतोः पक्षधर्मताबलादवयविकालीनत्वरूपविशेष्याभावप्रयुक्तविशिष्टाभाववत्किञ्चित्कालीनक्रियामादायैव तदन्यत्वस्य पक्षे सिद्धिरिति प्रलयसिद्धिरिति ध्येयम् ।

**देवदत्तशरीरादिकमिति** । अत्र देवदत्तपदमन्यदीयशरीरे अंशतो बाधवारणाय । आद्यत्वेन चात्र शरीरं विशेषणीयम् । अन्यथा देवदत्ततरुणशरीरादौ देवदत्तप्रयत्नजन्यत्वेन सिद्धसाधनत्वप्रसङ्गात् । ईश्वरज्ञानमादायार्थान्तरं परिहर्तुं साध्ये देवदत्तपदम् । देवदत्तपरिमाणादिनाऽर्थान्तरवारणाय विशेषपदम् । न च बाधादेव नार्थान्तरमिति वाच्यम् । बाधस्फोरणायैव तदुपादानात् । वस्तुतस्तूद्देश्यसिद्ध्यर्थमेवात्र तदुपादानम् । न चैवमपि जन्मान्तरीयज्ञानजन्यसंस्कारेणार्थान्तरमिति वाच्यम् । संस्कारान्यत्वेनापि विशेषगुणस्य विशेषणात् । संस्काराजन्यत्वस्य पक्षविशेषणत्वेनाभिप्रेतत्वात् न संस्कारेणार्थान्तरमित्यपि केचित् । हेतौ च मनआदौ व्यभिचारं वारयितुं सत्यन्तम् । यज्ञदत्तशरीरादौ व्यभिचारवारणाय देवदत्तेत्याद्युत्तरभागः । देवदत्तभोगसाधनद्रव्यत्वं च तदर्थोऽभिमतः । अन्यथाऽऽत्ममनःसंयोगादौ व्यभिचारप्रसङ्गात् । न चैवमपि यज्ञदत्तनिर्मितस्रगादेर्देवदत्तभोगहेतुद्रव्यतया तत्र व्यभिचार इति वाच्यम् । तस्य पक्षत्वेन तदप्रसङ्गात् । देवदत्तनिर्मितेत्युपलक्षणम् । तद्भोगहेतुश्चेत्यपि द्रष्टव्यम् । तदेवमुक्तानुमानेन शरीरादिजनकतयाऽऽत्मविशेषगुणसिद्धौ प्रयत्नादिरूपस्य तस्यैतज्जन्मस्थस्याभावात् । जन्मान्तरस्य च नष्टस्य द्वारं विना हेतुत्वानिर्वाहात् । अदृष्टस्यैव तद्द्वारतया कल्पनीयत्वेनावश्यकत्वात् । अदृष्टमेव धर्माधर्मसंज्ञितम् तज्जनकमेष्टव्यमित्यपूर्वसिद्धिरित्यवधेयम् ॥ **विचित्रकार्येति** । अस्ति चेह खलु जीवानामन्योन्यं सुरासुरनरतिर्यगादिरूपवैचित्र्यम् । न चेदं निर्निमित्तं सम्भवति । न चादृष्टवैचित्र्यव्यतिरेकेण निमित्तान्तरमत्र सम्भवतीत्यदृष्टवैचित्र्यमेव तदुपपादकतया द्रष्टव्यम् । न चादृष्टवैचित्र्यमपि निर्निमित्तमिति शङ्क्यम् । तत्पूर्वादृष्टवैचित्र्यादेव तदुपपत्तेः । तदपि तत्पूर्वादृष्टवैचित्र्यादेवेत्यनादिरियं परम्परेत्यदोषः । ज्योतिष्टोमेनेत्यादित्रिक्षणावस्थायिनि यागादौ श्रुतं कालान्तरभाविस्वर्गसाधनत्वं धर्मं विनाऽनुपपन्नम् । एवं त्रिक्षणावस्थायिनि ब्रह्मावगुरणे कालान्तरभावियातनाकारणत्वं श्रुतं अधर्मं विनाऽनुपपन्नमिति धर्माधर्मौ ताभ्यां कल्प्येते इत्यर्थः । अयं भावः । यजेतेत्युक्ते शब्दभावनाभाव्यत्वेन पुंप्रवृत्तिलक्षणार्थभावनाप्रतीतेः । तस्याश्च भाव्यकरणेतिकर्तव्यतारूपांशत्रयसापेक्षत्वात्समानपदोपात्तस्यापि यागस्य स्वयं क्लेशरूपत्वेन भाव्यत्वेनान्वयासंभवात् । भिन्नपदोपात्तस्यापि स्वर्गस्य भाव्यत्वेन यागस्य च करणत्वेन प्रयाजादेरितिकर्तव्यतात्वेन सम्बन्धस्य वक्तव्यत्वात्क्षणभङ्गुरस्य यागस्य च कालान्तरभाविफलसाधनत्वानुपपत्तेः श्रुतसाध्यसाधनभावोपपत्त्यर्थं परमतेऽपूर्वकल्पनम् । ग्रन्थकृन्मते त्विष्टसाधनत्वमात्रस्यैव विध्यर्थत्वात् लिङा स्वप्रकृति-

यज्यर्थयागस्य स्वर्गरूपेष्टसाधनत्वमुच्यते । तच्च शक्त्याख्यमतीन्द्रियं धर्मान्तरमेव । तच्च क्वचिदन्वय-व्यतिरेकाभ्यामुन्नीयते क्वचिच्छब्देन । तदाश्रयस्य च शक्तस्य कार्ये कादाचित्कत्वनियामकत्वं न व्यवहितस्य । कार्यसातत्यप्रसक्तेरित्यव्यवधानमावश्यकम् । तच्चाव्यवधानं ध्वस्तस्य यागस्य न साक्षात्सम्भवतीति व्यापारद्वारेणाव्यवधानं वक्तव्यमिति द्वारान्तरानिरूपणात् द्वारीभूतापूर्वसिद्धिरिति मन्तव्यम् ।

स० — कालस्य साक्षिसिद्धत्वेनैन्द्रियकत्वोपपादनेन स्वरूपतो विप्रकृष्टत्वानुपपत्तेः 'काल-विप्रकर्षात्' इत्युक्तम् । दृश्यसन्तानशून्यावस्थैव प्रलयकाल इति प्रथमस्योपयोगः । पूर्वमुत्पादितो योऽयं सन्तानः तत्सजातीयसन्तानान्तरं येषामिति विग्रहः । पूर्वमुत्पादितसन्ताननाशे एव प्रलय इति भावः नित्यत्वविशेषणं मृत्पिण्डादौ व्यभिचारपरिहारार्थम् । **इयं क्रियेति** । अत्र वर्तमानक्रियायाः पक्षत्वम् ! अतीतानागतक्रियायाश्च दृष्टान्तत्वम् । स्वशब्देन वर्तमानक्रिया, स्वान्यत् यदवयविकालीनं तस्य भावः स्वान्यावयविकालीनत्वम् । तदनधिकरणभूता या यत्किञ्चित्कालीना क्रिया तदन्यत्वमिति साध्यम् । अत्र स्वान्यत्वरूपविशेषणाभावप्रयुक्तस्य अन्यावयविकालीनत्वरूपविशिष्टाभावस्य वर्तमान-क्रियामात्रनिष्ठत्वेन तदन्यत्वरूपसाध्यस्य च तत्र बाधितत्वेन हेतोः पक्षधर्मताबलात् अवयविकालीनत्व-रूपविशेष्याभावप्रयुक्तविशिष्टाभाववत् किञ्चित्कालीनक्रियामादायैव तदन्यत्वरूपसाध्यस्य पक्षे सिद्धिरिति प्रलयसिद्धिरिति ।

प० — **विश्वसन्तानोऽयमिति** । **सन्तानः** परंपरा । इदानीं हि घटपटादिकार्यजातं प्रवा-हेण बहुकालीनं वर्तते । स च सन्तानः तद्धीनैरारम्भकसमवायिकारणपरमाणुभिरारब्ध इति साधने विश्वसन्तानात्पूर्वं प्रलयः सिध्यतीति भावः ॥ **आरणेयेति** । अरणिजन्यवह्निसन्तानवदित्यर्थः । स चारण्यन्तर्गतवन्ह्यवयवैः सन्तानहीनैरुत्पन्न इति भावः । पूर्वतनब्रह्माण्डपरमाणुषूक्तसाध्यस्य बाधाद्वर्त-मानेति ब्रह्माण्डविशेषणम् ॥ **पूर्वमुत्पादितसजातीयेति** । पूर्वमुत्पादितसन्तानसजातीयसन्तानान्तरा इत्यर्थः । सिद्धसाधनत्वनिरासाय सन्तानवन्त इत्यनुक्त्वा सन्तानान्तरा इति प्रतिज्ञाविशेषणोक्तिः । सन्तानभेदे सिद्धे एकत्र सन्तानद्वयायोगात् पूर्वतनस्य नाशावगतेर्लयसिद्धिरिति भावः । अनित्ये तन्त्वादौ अव्यभिचाराय नित्यत्वे सतीत्युक्तिः ॥ **सर्वे सन्ताना इति** । सर्वकार्यप्रवाहा इत्यर्थः । प्रदीपो हि प्रतिक्षणं परिमाणभेदाद्भिद्यते तत्सन्ततिः कदाचिदुच्छिद्यते यथा तथेत्यर्थः । नष्टेति पवन-विशेषणम् ॥ **इयं क्रियेति** । घटादिक्रिया काचिद्बुद्धिस्था संग्राह्या । अन्यक्रियावदिति पटादि-क्रियादृष्टान्तः । साध्ये स्वपदं पक्षभूतक्रियापरम् । न तु समभिव्याहृतपरम् । **स्वान्यत्** पक्षीभूतघटादि क्रियातोऽन्यत् यदवयविकालीनं अवयविकाले वर्तमानं तत्स्वानधिकरणभूता किञ्चित्कालीना या क्रिया

तदन्येत्यर्थः। उक्तविशेषणविशिष्टा क्रिया पक्षीभूतघटादिक्रिया भवति तदन्यत्वेन दृष्टान्ते साध्यानुगमः। पक्षे च स्वस्य स्वान्यत्वस्य बाधात्तादृशपरमाणुक्रियारूपक्रियान्तरान्यत्वमादायैव साध्यपर्यवसानं कार्यम्। तथा चावयविकालीनत्वरहितकिञ्चित्कालीनक्रियासिद्धौ सर्वावयवविनाशयुक्तः कालः कश्चन सिध्यति। स एव प्रलय इति भावः। इति शब्दस्य इत्यनुमानसिद्धत्वादिति पूर्वेणान्वयः॥ **स्वरूपतो विप्रकृष्टत्वादिति**। इन्द्रियायोग्यत्वादित्यर्थः। शरीरादिकमित्यादिपदेनेन्द्रियगृहारामादिग्रहः। अंशतो बाधभागासिद्ध्योर्निरासाय पक्षे देवदत्तेत्युक्तिः। साध्ये ईश्वरगुणजन्यत्वेन सिद्धसाधनतानिरासाय। विशेषपदमुद्देश्यार्थः। स च विशेषगुणो धर्मादिरेवेति भावः। कालाकाशादावव्यभिचाराय हेतौ सत्यन्तम्। चैत्रदेहादावव्यभिचाराय विशेष्यम्। **विचित्रकार्येति**। कार्ये वैचित्र्यस्यादृष्टवैचित्र्यहेतुकत्वादिति भावः॥ **ज्योतिष्टोमेनेति**। ज्योतिष्टोमनामको यागः स्वर्गसाधनमिति वाक्यार्थः। तृतीया लिङुक्तसाधनत्वानुवादिनी। **अवगुरेत्** वधोद्यमं कुर्यात्। शतेन यातयात् शतयातनाख्यनरके पतेदिति ब्राह्मणावगोरणं नरकसाधनमिति वाक्यार्थः॥ **श्रुतेति**। आशुविनाशिनो यागावगोरणादेः कालान्तरभाविफलहेतुत्वं फलपर्यन्तस्थायिधर्माधर्मौ विना न युक्तमिति तौ कल्पयतीत्यर्थः॥

**या०**— अवयवानामावापोद्धारेण विश्वसन्तानस्याधुना नाशे सति पुनरारब्धत्वादर्थान्तरमित्यत उक्तम् **दृश्यसन्तानशून्यैरिति**। दृश्यसन्तानशून्याश्च सन्तानिनः प्रलयकालीना एवेति भावः॥ **आरणेयेति**। अरण्युत्पन्नवह्निसन्तानवदित्यर्थः। तत्र दृश्यवह्निसन्तानशून्यः सन्तानी अण्यन्तर्गतो वह्निरिति भावः॥ **पूर्वमुत्पादितेति**। अत्रैकदैकत्र मूर्तद्रव्यावस्थानासंभवेन पूर्वोत्पन्नकार्ये सति अस्य ब्रह्माण्डान्तरस्यारम्भासंभवात्तल्लयो लभ्यत इति द्रष्टव्यम्॥ **नित्यत्वे सतीति**। एकस्यैव पटादेस्तन्त्वादिना जननात्तत्र व्यभिचारवारणाय सत्यन्तं विशेषणम्। पारिमाण्डल्ये परममहत्परिमाणादौ च व्यभिचारवारणाय विशेष्यमिति ज्ञातव्यम्॥ **सर्व एवेति**। पार्थिवाः पाथसीयास्तैजसा वायवीयाश्चेत्यर्थः। एवं हि कार्यद्रव्यमात्रस्य लयो लभ्यते। सर्वपदानुपादाने तु परमाणुविशेषेषु तत्कार्यविशेषशून्यतामादाय साध्यपर्यवसानसंभवादर्थान्तरता स्यादिति द्रष्टव्यम्। अत्र स्पर्शवन्त इत्यपि पूरणीयम्। अन्यथा मनस्यंशतो बाधापत्तेः। उपादेयपदस्य स्वोपादेयद्रव्यपरत्वात्। अन्यथा बाधापत्तेः। अवान्तरप्रलये गुणादेः सत्त्वात्। अन्योपादेयवत्त्वाभावेन सिद्धसाधनतापाताच्च। शून्यपदस्यात्यन्ताभावार्थकत्वे बाधवारणाय साध्ये कदाचिदित्युक्तम्। तेन कादाचित्काभाववत्त्वं साध्यमिति लभ्यते। अत एवारम्भकत्वादिति हेतुरुक्तः, अन्यथा प्रमेयत्वाद्येव हेतुतयोच्येतेति ध्येयम्। आरम्भकत्वं च द्रव्यसमवायिकारणत्वमेव विवक्षितम्। अन्यथा मनस्युक्तसाध्याभावेन व्यभिचारापत्तेरित्यवधेयम्॥ **नष्टपवनेति**। नष्टा ये

पवनात्तदारम्भकपरमाणुवदित्यर्थः ॥ **इयं क्रियेति** । वर्तमानक्रियेत्यर्थः । साध्ये स्वशब्देन पक्षीभूत-वर्तमानक्रियैव ग्राह्या । एवं च स्वान्ययदवयविकालीनं तत्त्वानधिकरणा या किञ्चित्कालीनक्रिया तद-न्यत्वं साध्यमित्यर्थः ॥ **अन्यक्रियावदिति** । अतीतानागतक्रियावदित्यर्थः । अत्र पक्षीभूतवर्तमान-क्रियायाऽपि किञ्चित्कालीनक्रियात्वेन तत्र तदन्यत्वसाधने बाधः, अतोऽवयविकालीनत्वानधिकरणेति किञ्चि-त्कालीनक्रियाविशेषणम् । एवं चावयविकालीनत्वानधिकरणा या किञ्चित्कालीनक्रिया सा प्रलयकालीना परमाणुक्रियैव । न त्वन्या । तस्याः सर्वस्या अप्यवयविकालीनत्वात् । तदन्यत्वं च पक्षे पर्यवस्यतीति न बाधः । तावत्येवोक्तेऽप्रसिद्धिः । अवयविकालीनत्वानधिकरणप्रलयकालीनक्रियाया इदानीमसिद्ध्या दृष्टान्ते तामादाय साध्यस्य ज्ञातुमशक्यत्वात् । अतः स्वान्येत्यवयविकालीनविशेषणम् । तथा च स्वान्ययदवयविकालीनं तत्त्वानधिकरणा किञ्चित्कालीना क्रिया पक्षीभूतैव, तस्यामवयविकालीनत्वविशेष्य-सत्त्वेपि स्वान्यत्वरूपविशेषणाभावेन विशिष्टाभावसत्त्वात् । तदन्यत्वं च दृष्टान्तीभूतातीतादिक्रियास्वस्तीति नाप्रसिद्धिः । पक्षे च न तथा साध्यपर्यवसानं बाधात् । किन्त्ववयविकालीनत्वरूपविशेष्याभावप्रयुक्त-विशिष्टाभावेन प्रलयकालीनक्रियामादायैवेति प्रलयसिद्धिरिति ज्ञातव्यम् ।

**देवदत्तेति** । इदं चान्यदीयशरीरेंऽशतो बाधवारणाय, साध्ये चेश्वरज्ञानादिना सिद्धसाधनवार-णाय । विशेषपदमुद्देश्यसिद्ध्यर्थम् । हेतौ च कालादौ व्यभिचारवारणाय कार्यपदम् । यज्ञदत्तशरीरे व्यभिचारं वारयितुं देवदत्तपदम् । यज्ञदत्तनिर्मितस्रगादौ देवदत्तभोगहेतुभूते पक्षसमत्वान्न व्यभिचार इति द्रष्टव्यम् । अत्र यः शरीरादिजनक आत्मविशेषगुणः स एव धर्मोऽधर्मश्च । प्रयत्नादीनामेत-ज्जन्मीयानामेतच्छरीराद्यजनकत्वाज्जन्मान्तरीयाणां तु न द्वारं विना हेतुता संभवतीत्यदृष्टसिद्धिरिति भावः ॥ **विचित्रेति** । सुखदुःखादिरूपविचित्रकार्येत्यर्थः ॥ **श्रुतसाध्यसाधनेति** । त्रिक्षणावस्थायिनि यागे श्रुतं कालान्तरभाविस्वर्गसाधनत्वं धर्मं विनाऽनुपपन्नम्, एवं त्रिक्षणावस्थायिनि ब्राह्मणावगुरणे काला-न्तरभावियातनाकारणत्वं श्रुतमधर्मं विनाऽनुपपन्नमिति धर्माधर्मौ ताभ्यां कल्प्येते इत्यर्थः ।

**सु० — अथ मन्यसे । नानुमानादिना धर्मादिसिद्धिः । तस्याभासत्वात् । तथा हि । देवदेत्तशरीरादेर्देवदत्तविशेषगुणजन्यत्वं किं साक्षात्साध्यमुत परम्परया । नाद्यः । धर्माधर्म-योरप्यारम्भकप्रेरणादिरूपेणैवोपयोगाङ्गीकारात् । देवदत्तशरीरं न साक्षाद्देवदत्तविशेषगुणजन्यं शरीरत्वाद्यज्ञदत्तशरीरवदिति सत्प्रतिपक्षत्वाच्च । द्वितीये तु जन्मान्तरीयप्रयत्नाराधितदेवताद्वारे-णोपपत्तेरर्थान्तरता । देवदत्तविशेषगुणजन्यतया विनाऽपि आकाशादेरिवेश्वरेच्छया देवदत्तस्य भोगहेतुता संभवतीत्यप्रयोजकता च । कार्यवैचित्र्यं च दृष्टकारणवैचित्र्यादेवोपपद्यते । आदि-**

कालीनं च तत्तत्प्रागभाव एव वैचित्र्याङ्गीकारेण । स्वर्गयागादेः साध्यसाधनभावश्रवणं त्वसिद्धमेव योग्यताविरहात् । अन्यथाख्यातिमाश्रित्याभ्युपगमेऽप्यन्यथासिद्धम् । यागाद्याराधितावज्ञातदेवताद्वारेण स्वर्गाद्युपपत्तेरिति ।

एवं तर्हि प्रलयसाधकानुमानानाम(प्य)ाभासत्वान्न तैस्तात्सिद्धिरिति तुल्यमुत्तरम् । तथा हि । विमतः कालोऽवयवियुक्तः कालत्वादिदानीन्तनकालवत् । विमतो ब्राह्मणो ब्राह्मणपूर्वको ब्राह्मणत्वात्संमतवदित्यादिना सत्प्रतिपक्षं तावदुक्तानुमानजातम् ॥ ननु प्रलयकालपक्षीकृतावाश्रयासिद्धिः । अन्यथा सिद्धसाधनम् । एवमाद्यब्राह्मणपक्षीकारेऽन्यथा च दोष इति चेन्न । पर्वतोऽग्निमानित्यादावप्यग्निमदनग्निमत्पक्षदूषणसंभवेन सर्वानुमानोच्छेदप्रसङ्गात् ॥ नन्वग्निमत्त्वादिव्यतिरेकेणाप्यस्ति पर्वतादेः स्वरूपं, शक्यं च विशेषान्तरेणावधारयितुम् । तत्कथं दोषावकाश इति चेत् । तत्किमवयविसंबन्धासंबन्धौ विहाय कालविशेषस्य स्वरूपमेव नास्ति, ब्राह्मणव्यक्तेर्वाऽऽद्यत्वानाद्यत्वे विहाय । अवधारणं च कालादेर्हिरण्यगर्भापवर्गोत्तर(र्गानन्तर)भावित्वादिना भविष्यति ।

शे० — **अङ्गीकारादिति** । तथा च बाध इति भावः ॥ **प्रयत्नेति** । यागादिप्रयत्नेत्यर्थः ॥ **देवताद्वारेणेति** । देवताप्रीतिद्वारेणेत्यर्थः । न चैवमेतत्कल्पे कृतयागात्कल्पान्तरे फलं न स्यात् । एतत्कल्पीययागादिजन्यायाः एतत्कल्पीयेन्द्रादिप्रीतेः कल्पान्तरेऽनुपयोगात् । उपयुक्तायाश्च कल्पान्तरीयेन्द्रादिप्रीतेरेतत्कल्पकृतयागाद्यजन्यत्वादिति वाच्यम् । एतत्कल्पीयकर्मभिराराधितस्येन्द्राद्यन्तर्यामिणः परमेश्वरस्यैव कल्पान्तरे फलप्रदत्वाभ्युपगमादित्याहुः । **आकाशादेरिवेति** । देशादेरिवेत्यर्थः । देशकालादेः सर्वोत्पत्तिमन्निमित्तकारणत्वेन भोगहेतुत्वस्यापि सत्त्वाद्देवदत्तविशेषगुणजन्यतया देवदत्तभोगहेतुतायामाकाशादेर्देवदत्तविशेषगुणजन्यत्वविरहेण देवदत्तभोगहेतुत्वानापत्तेस्तन्निर्वाहाय देवदत्तभोगहेतुताया निमित्तान्तरप्रयुक्तत्वस्यानुसरणीयत्वात् । आकाशादेरिव विशेषगुणाजन्यस्यापि देवदत्तशरीरादेस्तद्भोगहेतुत्वोपपत्तेरिति भावः ॥ **दृष्टेति** । स्वर्गस्थाः सुराः, भूमिष्ठा नराः, इत्यादिस्थानवैचित्र्यरूपदृष्टकारणवैचित्र्यादेव सुरासुरादिवैचित्र्योपपत्तेरन्यथाऽनुपपत्त्यभावान्नापूर्वकल्पना युक्तेति भावः ॥ **साध्यसाधनभावेति** । यागादेः स्वर्गादिसाधनत्वं शब्दो न बोधयतीत्यर्थः । ननु चान्वयबोधानुकूलाकाङ्क्षादिरूपवत्तया प्रतिसन्धीयमानस्य ज्योतिष्टोमादिवाक्यस्य नान्वयाबोधकत्वं युक्तमन्यथा तादृशस्य गामानयेत्यादिवाक्यस्यापि तन्न स्यादित्यतो नाकाङ्क्षाऽऽसत्ती एव तत्र हेतू अतिप्रसङ्गात्, किन्नामार्थाबाधरूपा योग्यताऽपि तत्र हेतुः । तथा चान्वयबोधाङ्गभूतसकलरूपसम्पत्त्या गामानयेत्यादेरन्वयबोधकत्वेऽपि क्षणिकक्रियायाः कालान्तर-

भाविफलसाधनत्वस्य बाधितत्वेन तद्बाधरूपयोग्यतायाः प्रकृतेऽभावात् न आकाङ्क्षासत्तिमात्रेण तस्यान्वयबोधकत्वं 'अग्निना सिंचेदि'त्यादेर्बाधितस्यापि तत्प्रसङ्गादित्याशयेनाह **योग्यताविरहादिति ।** तथा साध्यसाधनभावस्यैवाश्रवणान्न तदन्यथाऽनुपपत्त्याऽर्थान्तरकल्पना, आक्षेपकप्रमित्यभावेनार्थापत्तिसामग्रीविरहादिति बोध्यम् । ननु केयं योग्यता यद्विरहादन्वयाबोधकत्वमुच्यते । न तावत्सजातीयेऽन्वयदर्शनम् । कथञ्चित्साजात्यस्यायोग्यसाधारणत्वात् । व्यवहितपुष्टिजनकेन घृतपानेन सह क्रियात्वेन साजात्यस्य यागेऽपि सत्त्वाच्च । पदार्थतावच्छेदकधर्मेण वा तात्पर्यविषयीभूतान्वयप्रतियोगितावच्छेदकधर्मेण वा साजात्यविवक्षायां पयसा सिञ्चतीत्यनाप्तवाक्येऽतिव्याप्तिः । 'अद्य जातः पयः पिबति' इत्याप्तवाक्येऽव्याप्तिश्च । नाप्यन्वयविरोधिरूपविरहो योग्यता । अनाप्तवाक्येऽपि तत्प्रसङ्गात् । साधनत्वसामान्यान्वयं प्रति क्षणिकत्वस्याविरोधित्वाच्च । नाप्यन्वयप्रयोजकरूपवत्ता योग्यता । अनाप्तवाक्येऽतिव्याप्तत्वात् । फलसामान्यान्वयं प्रति प्रयोजकस्य क्रियात्वस्य, फलविशेषसाधनत्वान्वयं प्रति प्रयोजकस्य यागत्वस्य, यागे सत्त्वाच्च । तस्माद्बाधकप्रमाणाभाव एव योग्यतेति वाच्यम् । सा च प्रकृतेऽप्यस्ति । तथा हि । न लिङा साक्षात्फलसाधकत्वं यागस्योच्यते येन तस्य बाधिततयोक्तरूपयोग्यता न स्यात् । नापि परम्परया साधनत्वं बोध्यते येन परम्पराघटकद्वारस्य पूर्वमनुपस्थित्या परम्परया साधनं याग इति ज्ञानानुपपत्तिः स्यात् । किन्तु यदकरणे काम्यासिद्धिस्तत्स्वरूपं साक्षात्परम्परासाधनतासाधारणं साधनत्वं सामान्यमेव बोध्यते स्वर्गसाधनं याग इति । तच्च ज्ञानं साक्षात्परम्परोदासीनम् । वस्तुगत्या परम्परासाधनविषयमुत्पद्यमानं नायोग्यतया परिभावयितुं शक्यम् । न च साक्षात्परम्पराविशेषद्वयव्यतिरिक्तसामान्यमेव नास्तीति कथं तन्निरूपणं लिङा क्रियतामिति वाच्यम् । काम्याभावव्याप्याभावप्रतियोगित्वरूपस्य तस्यावश्यकत्वात् । अन्यथाऽननुगमात् । कस्य च साक्षात्परम्परया वा विशेषणं क्रियेत । न च लिङ्बोध्यस्य तादृशसाधनत्वस्य साक्षात्साधनत्वरूपैकविशेषबाधेन बाधो वक्तुं युक्तः अतिप्रसङ्गात् । किन्तु यावद्विशेषबाधेनैव । न चात्र स सम्भवति । परम्परासाधनत्वेऽबाधात् । तथा च लिङ्बोध्यसाधनत्वस्य बाधितांशं विहाय परम्परासाधनत्वरूपाबाधितांशमादाय विश्रान्तिसम्भवात् न बाध्यत्वमिति न योग्यताविरहः । तथा च न योग्यताविरहप्रयुक्तमन्वयाबोधकत्वं ज्योतिष्टोमादिवाक्यस्याङ्गीकर्तुं शक्यमिति कथं साध्यसाधनभावाश्रवणम् । अस्तु वा या काचिद्योग्यता, प्रकृते तद्विरहोऽपि, किं तावता । न हि योग्यता स्वरूपसती अन्वयबोधहेतुः । तथा सत्ययोग्ये योग्यताभ्रमेण शाब्दभ्रमाभावप्रसङ्गात् । किन्तु संशयादिसाधारणं ज्ञानमात्रमेव तस्याः प्रयोजकम् । ततश्च योग्यताविरहेण तत्प्रमाऽसम्भवेऽपि तद्भ्रमसम्भवाद्भ्रमरूपं योग्यताज्ञानमादायान्वयबोधसम्भवात् । कथं साध्यसाधनभावा-

श्रवणमित्याशङ्क्योक्तरीत्या योग्यताभ्रमाश्रयणेनान्यथाख्यातिरूपसाध्यसाधनभावश्रवणेऽपि न तन्मात्रेणापूर्वसिद्धिः परस्याभिमता किन्तु श्रुतसाध्यसाधनभावान्यथाऽनुपपत्त्यैव । न च सा प्रकृतेऽस्ति । श्रुतसाध्यसाधनभावस्यान्यथासिद्धत्वादित्याह **अन्यथाख्यातिमाश्रित्येति** । **अभ्युपगमे** अन्यथाख्यातिरूपान्वयबोधाभ्युपगम इत्यर्थः । अन्यथासिद्धत्वमेव दर्शयति **यागादीति** । आदिपदेनावगुरणादिपरिग्रहः । स्वर्गादीत्यादिपदेन यातनापरिग्रहः । ननु देवताप्रीत्यादेर्न यागादिव्यापारत्वकल्पनमुचितम् । तथा सत्येतत्कल्पेऽनुष्ठितस्य यागादेः कल्पान्तरे फलजनकत्वाभावापातात् । एतत्कल्पीययागादिजन्यस्यैतत्कल्पीयेन्द्रादिप्रीत्यादेः कल्पान्तरेऽनुपयोगात् । उपयुक्तस्य कल्पान्तरीयेन्द्रादिप्रीत्यादेश्चैतत्कल्पीययागाद्यजन्यत्वात्कथमन्यथासिद्धिरिति चेन्न । एतत्कल्पीयकर्मादिभिराराधितस्यावज्ञातस्य चेन्द्राद्यन्तर्यामिणः परमेश्वरस्यैव कल्पान्तरे तत्र फलदत्वाभ्युपगमाद्युक्तमन्यथासिद्धत्वमित्यवधेयम् ।

**इत्यादिनेत्या**दिपदेन विमतः क्षत्रियः क्षत्रियपूर्वकः क्षत्रियत्वात्संमतवदित्यादेः परिग्रहः । किञ्च प्रथमप्रयोग इत्यादिना विशिष्याप्यनुमानदूषणादुत्तरत्र **तावदित्युक्तम्** ।

**ननु प्रलयकालेति** । अवयव्यसम्बन्धिकालपक्षीकृतावाश्रयासिद्धिस्तत्सम्बन्धिकालपक्षीकृतौ च सिद्धसाधनमित्यर्थः ॥ **एवमाद्येति** । विमतो ब्राह्मण इत्यत्रापि सर्गाद्यकालीनब्राह्मणपक्षीकारे प्रलयाभाववादिमते सर्गादिकालीनब्राह्मणासिद्ध्याऽऽश्रयासिद्धिः । अन्यथा सिद्धसाधनत्वमित्यर्थः ॥ **दूषणसम्भवेनेति** । अग्निमत्पर्वतपक्षीकारे सिद्धसाधनत्वमनग्निमत्पर्वतपक्षीकारे च बाध आश्रयासिद्धिश्चेति दूषणसम्भवेनेत्यर्थः ।

वैषम्यान्न प्रतिबन्दीग्रह इत्याशङ्कते **नन्विति** ॥ **विशेषणान्तरेणेति** । पर्वतत्वादिधर्मान्तरेणेत्यर्थः । आद्यत्वानाद्यत्वे विहायेत्यत्र स्वरूपमेव नास्तीत्यनुवर्तते । नन्वस्त्वग्निमत्त्वानग्निमत्त्वादिव्यतिरेकेण पर्वतादिस्वरूपवदवयविसम्बन्धासंबन्धौ विहाय कालस्वरूपमाद्यत्वानाद्यत्वे विहायापि ब्राह्मणस्वरूपं च । न चैवं तत्पक्षीकारेणावयवियुक्तत्वादिसाधनसम्भवात्प्रतिपक्षसिद्धिरिति वाच्यम् । तत्र पर्वतत्वादेरिवात्र पक्षतावधारकधर्मान्तराभावेन तदयोगादित्यत आह **अवधारणं चेति** । पक्षताया इति शेषः ॥ **उत्तरभावित्वादिनेति** । । उत्तरभाविकालत्वादिनेत्यर्थः । आदिपदेन हिरण्यगर्भसृष्टिकालीनब्राह्मणत्वेन द्वितीयानुमानेऽपि पक्षतावधारणमित्यस्य संग्रहः ।

स०— **आकाशादेः** इत्यत्र आकाशशब्देन श्रोत्रं ग्राह्यम् । **आदिकालीनं चेति** । कार्यवैचित्र्यमिति शेषः । यागादेरित्यादिपदेनावगुरणपरिग्रहः । आराधिता चासाववज्ञाता च देवता इति विग्रहः । तत्र च यागेनाराधिता आदिपदगृहीतावगुरणेनावज्ञाता । स्वर्गादीत्यादिपदेन यातना-

परिग्रहः ॥ **एवमिति** । एवं विमतो ब्राह्मणो ब्राह्मणपूर्वक इत्यनुमानेऽपि दोषो द्रष्टव्यः । तदेव दर्शयति **आद्येति** । किमाद्यब्राह्मणः पक्षीक्रियते अनाद्यब्राह्मणो वा । नाद्यः आश्रयासिद्धेः । द्वितीये सिद्धसाधनमिति दोष इत्यर्थः ॥ **विशेषणान्तरेणेति** । एतत्पर्वतत्वादित्यन्यप्रकारेणेत्यर्थः । **ब्राह्मणव्यक्तेर्वा आद्यत्वानानाद्यत्वे विहाय** इत्यत्र स्वरूपमेव नास्तीत्यनुवर्तते ।

प० — **आरंभकप्रेरणादीति** । अदृष्टवादिभिरपि दृष्टसामग्रीद्वारैवोपयोगाङ्गीकारादित्यर्थः ॥ **यज्ञदत्तशरीरवदिति** । तस्य देवदत्तगुणाजन्यत्वात् अत्रोक्तसाध्यानुगम इति भावः ॥ **देवताद्वारेणेति** । देवताप्रसादद्वारेणेत्यर्थः । अ(दृष्टा)र्थापत्तिं निराह **कार्यवैचित्र्यमिति** । आदिकालीनकार्यवैचित्र्यं कथमित्यत आह **आदिकालीनं चेति** । कार्यवैचित्र्यमित्यनुषङ्गः ॥ **अङ्गीकारेणेति** । उपपद्यत इत्यनुषङ्गः ॥ **योग्यताविरहादिति** । क्षयिष्णुयागादेः भाविफलहेतुत्वस्य बाधादिति भावः । **अन्यथाख्यातिमिति** । योग्यताभ्रममाश्रित्य साध्यसाधनभावप्रतीत्यभ्युपगमेपीत्यर्थः । श्रुतिप्रामाण्याद्योग्यताभ्रमेण प्रतीतमपि साध्यसाधनत्वं नादृष्टेन निर्वाह्यं किन्त्वन्यथेत्याह **अन्यथासिद्धमिति** । तद्व्यनक्ति **यागादीति** । आदिपदेनावगोरणादिग्रहः ॥ **आराधितावज्ञातेति** । आराधिता च सा अवज्ञाता चेति विग्रहः । यागेनाराधिता आदिपदगृहीतावगोरणेन अवज्ञातेति यथाक्रममन्वयः । देवताप्रीतिकोपद्वारेणेत्यर्थः ॥ **स्वर्गाद्युपपत्तेरिति** । स्वर्गनरकादेरुपपत्तेरित्यर्थः ॥ **विमतो ब्राह्मण इति** । सर्गाद्यकालीन इत्यर्थः ॥ **एवमिति** । आश्रयासिद्धिरित्यर्थः ॥ **अन्यथा दोष इति** । इदानीन्तनपक्षीकारे सिद्धसाधनतेत्यर्थः ॥ **दूषणेति** । आश्रयासिद्ध्यादिरूपदूषणसंभवेनेत्यर्थः ॥ **विशेषणेति** । एष पर्वत इति पर्वतस्वरूपेणेत्यर्थः ॥ **आद्यत्वानाद्यत्वे विहायेति** । स्वरूपमेव नास्ति किमित्यनुषङ्गः । अस्ति स्वरूपमवधारणं त्वशक्यमिति चेत्तत्राह **अवधारणं चेति** ॥ **हिरण्यगर्भापवर्गोत्तरभावित्वादिनेति** । आदिपदेन चतुर्मुखब्रह्मस्वग्रहः ।

या० — **आकाशादेरिवेति** । देशकालयोः सर्वोत्पत्तिमन्निमित्तत्वाद्भोगहेतुत्वमप्यस्तीति भावः ॥ **योग्यतेति** । ज्योतिष्टोमेनेत्यादिवाक्यात्र यागादेः साक्षात्स्वर्गादिसाधनत्वं प्रतीयते तस्य प्रमाणबाधितत्वेन योग्यताविरहादित्यर्थः । ननु बाधानवतारकाले योग्यताभ्रमात्साध्यसाधनभावप्रतीतिः संभवत्येव तदनन्तरं च बाधोदये वेदप्रामाण्यदार्ढ्यात्साक्षात्साधनत्वबाधेऽपि परंपरया तदेष्टव्यं परंपराघटकं चादृष्टमेवेत्यदृष्टसिद्धिरित्यत आह **अन्यथाख्यातिमिति** । योग्यताभ्रममाश्रित्य साध्यसाधनभावप्रतीत्यभ्युपगमेऽपीत्यर्थः ॥ **यागादीति** । आदिपदेनावगुरणसंग्रहः । तथा च यागेनाराधितदेवताप्रसादेन स्वर्गस्यावगुरणेनावज्ञातदेवताकोपेन यातनायाश्चोपपत्तिरित्यर्थः ॥ **ननु प्रलयकालेति** ।

अवयव्यसंबन्धिकालपक्षीकृतौ आश्रयासिद्धिः, तत्संबन्धिकालपक्षीकृतौ सिद्धसाधनमित्यर्थः ॥ **एवमाद्येति** । विमतो ब्राह्मण इत्यत्रापि सर्गाद्यकालीनब्राह्मणपक्षीकारे प्रलयाभाववादिमते आद्यकालीनब्राह्मणासिद्ध्या आश्रयासिद्धिरन्यथा सिद्धसाधनतादोष इत्यर्थः ॥ **दूषणसंभवेनेति** । सिद्धसाधनत्वबाधलक्षणदूषणसंभवेनेत्यर्थः ॥ **विशेषणान्तरेणेति** । पर्वतत्वादिधर्मान्तरेणेत्यर्थः । ननु तत्र पर्वतत्वादिवदत्र पक्षतावधारणाङ्गमवच्छेदकं किमित्यत आह **अवधारणं चेति** । पक्षताया इति शेषः । उत्तरभावित्वादिनेत्यत्रोत्तरभाविकालत्वादिनेत्यर्थः । आदिपदेन हिरण्यगर्भसृष्टिकालीनब्राह्मणत्वेन वा हिरण्यगर्भरूपब्राह्मणत्वेन वा द्वितीयानुमाने पक्षतावधारणमिति ग्राह्यम् ।

**श्री० — आरम्भकेति** । देहारम्भकावयवकार्योन्मुखत्वप्रेरणयेत्यर्थः । देवदत्तविशेषगुणजन्यताभावे तद्भोगहेतुत्वमेव न स्यादित्यत उक्तम **आकाशादेरिवेति** । संभवति शरीरादेः आदिकालीनकार्यवैचित्र्यान्यथाऽनुपपत्त्या धर्मादिसिद्धिरिति चेत्तत्राह **आदिकालीनं चेति** । यागादीत्यत्रादिपदेनाव(गु)गोरणम् । द्वितीयादिपदेन यातनाग्रहणम् ॥ **प्रतिपक्षमिति** । प्रलयासिद्ध्येत्यर्थः ॥ **अन्यथेति** । वर्तमानकालपक्षीकार इत्यर्थः ॥ **दोष इति** । आद्यब्रह्मणः पक्षीकारे आश्रयासिद्धिः अनाद्यब्रह्मणः पक्षीकारे सिद्धसाधनमित्यर्थः ॥ **दूषणसंभवेनेति** । अग्निमन्तं पर्वतं पक्षीकृत्य अग्निमत्त्वसाधने सिद्धसाधनता अन्यथा बाध इत्यर्थः । **विशेषणान्तरेण** पर्वतत्वादिरूपेण । विहायेत्यनन्तरं स्वरूपमेव नास्तीत्यनुवर्तते ।

**सु० — किञ्च प्रथमप्रयोगे विश्वशब्देन किं ब्रह्माण्डमभिप्रेयते सकलकार्याणि वा । नाद्यः । अश्रायासिद्धेः । प्रलयमनभ्युपगच्छता ब्रह्माण्डस्यानङ्गीकृतत्वात् । ब्रह्माण्डाभावेऽपि कार्यान्तरावस्थितिसंभवेन प्रलयासिद्धेश्च । कपिकपोलान्तर्गतौदुम्बरोदरवर्तिमशकशरीरादिवत्कार्यान्तरावस्थानमसंभावितमिति चेन्न । कुण्डबदरवदुपपत्तेः । कालाग्निरुद्रादिप्रक्रियाया असिद्धत्वात् । द्वितीयेऽपि न प्रलयसिद्धिः । यथा हीदानीन्तनानां दहनपवनसन्तानानां क्रमेणास्तमयेऽपि न प्रलयस्तथा तरुगिरिशरीरादिसन्तानानामपि क्रमारम्भसिद्धावप्यवयविशून्यसमयासिद्धेः । अथैकदैवेति विशेषणमुपादीयेत तदा क्रमारब्धदहनपवनादिसन्तानैर्व्यभिचारः स्यात् । एकदारम्भकहेतुसाकल्ये सतीति हेतुविशेषणे विशेषणासिद्धिः । द्व्यणुकादिक्रमेणारम्भस्वीकारेण बाधादिप्रसङ्गश्च ।**

**एतेन द्वितीयानुमानमपि निरस्तम् । ब्रह्माण्डानभ्युपगमात् । अभ्युपगमेऽप्यवयवानामावापोद्धाराभ्यामेवोत्पादविनाशयोरुपपत्तेः । कार्यान्तरावस्थानोपपत्तेश्च ॥ तृतीयेऽप्यप-**

**सिद्धान्तः । क्रमेणोच्छेदस्याभ्युपगम(तत्व)ात् ॥ चतुर्थेऽपि पटादिभ्यः पूर्वविनष्टैस्तन्त्वादिभिर्व्यभिचारः । परमाणुत्वेन हेतुविशेषणेऽपि द्व्यणुकाद्यवस्थानसंभवेन दृष्टान्तस्य सन्दिग्धसाध्यता ॥ पञ्चमेऽपि किं भूगोलका एव सन्तानशब्देनोच्यन्ते तदतिरिक्तो वा कश्चित् । आद्ये सिद्धसाधनम् । अवयवानामावापोद्वाराभ्यां सन्ततोत्पत्तिविनाशसिद्धेः । द्वितीये त्वाश्रयासिद्धिः । षष्ठं त्वाभाससमानयोगक्षेमत्वादुपेक्षणीयमिति ।**

**शे०**— ननु च यथा ज्वलनं विनाऽप्यरण्ये ज्वलनोत्पत्तिर्यथा वा वृश्चिकतन्दूलकणादिविजातीयजन्यमानानामपि वृश्चिकतान्दूलीयकत्वादिजातिस्तथाऽब्राह्मणजातस्यापि सर्गादिकालीनब्राह्मणस्य विशिष्टादृष्टोपगृहीतपरमाणुजन्यत्वेन ब्राह्मणत्वोपपत्तेर्ब्राह्मणत्वादेर्ब्राह्मणपूर्वकत्वादिव्याप्यत्वविरहान्न तेन तत्साधनमुपपन्नमित्यरुचेराह **किञ्चेति** । **बद्धाऽस्तु** वेदाहृतानुमानानामाश्रयासिद्ध्यादिप्रसङ्गः । किमेतावताऽभ्यर्थ्यते । न चासमानबलत्वान्न प्रलयसाधकानुमानसत्प्रतिपक्षतेति वाच्यम् । प्रलयसाधकानुमानानामपि तदाक्रान्ततया तुल्यबलत्वानपायादित्याशयेनाह **किञ्चेति** ॥ **आश्रयासिद्धेरिति** । न चागमसिद्धत्वाद्ब्रह्माण्डस्य नाश्रयासिद्धिरिति वाच्यम् । तस्य सिद्धार्थकतया मुख्यार्थपरत्वाभावात् । अन्यथा प्रलयस्यापि तत एव सिद्धेरनुमानवैयर्थ्यापातादिति भावः ॥ **कार्यान्तरेति** । गिरिसागरादिरूपकार्यान्तरेत्यर्थः । ब्रह्माण्डनाशे कार्यान्तरस्यापि नाशो भवतीत्यत्र नियामकाभावादिति भावः । ननु च कार्यान्तरावस्थानं न तावदहेतुकं वक्तुं शक्यम् ॥ नित्यस्थितिप्रसङ्गात् । नापि नित्यहेतुकम् । तथा सति कादाचित्कत्वाभावप्रसङ्गात् । तदेवं प्रसक्तप्रकारद्वयनिषेधेन परिशिष्यमाणस्यानित्यहेतुनिबन्धनत्वस्यैव वाच्यत्वात्कथं कार्यान्तराविच्छेदः । यत्कार्यं यन्निबन्धनस्थितिकं तदपगमे तस्य निवृत्तिध्रौव्यात् । तदयं प्रयोगः । ब्रह्माण्डान्तरवर्ति गिरिसागरादिकं विनाशवद्भवितुमर्हति महद्द्रव्यान्तरेण विहन्यमानाधारवत्वात् । महादहनदह्यमानाश्रयवत्वात् । महादहनक्षुभितसमुद्रविलीयमानाधारवत्त्वादित्यनुमानं मनसि निधाय दृष्टान्तमाह **कपिकपोलेति** । कपीत्यतःपूर्वं कुपितेति शेषः । उपलक्षणं चैतत् । दावदहनदह्यमानदारूदरविघूर्णितघुणसङ्घातवत् प्रलयपवनोल्लासलीलावडवानलानुपातिपोतगतसांयात्रिकसार्थवच्चेत्यपि द्रष्टव्यम् । क्वचिच्छरीरादिवदिति पाठः । तत्रादिपदेनोक्तदृष्टान्तद्वयपरिग्रहः ॥ **कुण्डेति** । कुण्डनाशेऽपि तदन्तर्गतबदराणामवस्थानवत् ब्रह्माण्डनाशेऽपि तदन्तर्गतकार्यावस्थानोपपत्तेरित्यर्थः । तथा तत्रैव व्यभिचारान्नानुमानेन कार्यान्तरविच्छेदसिद्धिरिति भावः । ननु कालाग्निरुद्रादित्यादिभिर्ब्रह्माण्डान्तर्वर्तिकार्यजातस्य विनाशे सति पश्चादण्डमप्यग्न्यादिना नश्यतीति पौराणिकी प्रलयप्रक्रिया । तत्कथं ब्रह्माण्डनाशे कार्यान्तरावस्थानशङ्कावकाश इत्यत आह **कालाग्नीति** ॥ **असिद्धत्वादिति** । त्वन्मत इति शेषः । सत्यमेवं पौराणिकी प्रलयप्रक्रिया । न चेयं

परस्य सम्मता। तेन प्रकारान्तरेणैव तदभ्युपगमात्। तथा च तद्रीत्या ब्रह्माण्डनाशे कार्यान्तरावस्थानशङ्कोपपन्नैवेति भावः। यद्वा कालाग्निरुद्रादित्यादिसकलभुवनपतेर्महेश्वरस्य सञ्जिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतादृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छाऽऽत्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागास्तेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशस्तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन्विनष्टे सति पूर्वस्य पूर्वस्य विनाशस्ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्त इति हि प्रशस्तपादोक्ता प्रलयप्रक्रिया। अत्र च पृथिव्यात्मकस्य ब्रह्माण्डस्य नाशस्तदितरसर्वनाशानन्तरमेव प्रतीयते। एवञ्च कथं ब्रह्माण्डनाशे कार्यान्तरावस्थानशङ्कोदय इत्यत आह **कालाग्नीति**। प्रमाणाभावादिति भावः। अथवा ननु यथा वातपित्तश्लेष्माणां च प्रकोपप्रशमक्रमानियमेऽप्येकदा त्रिदोषसन्निपाते देहसंहारः। यथा वा ग्रहाणां गमनानियमेऽपि कदाचित्सर्वमण्डलोपरागस्तथा प्रकृते कालानलपवनमहार्णवानां सन्निपाते युगपत्सर्वकार्यनाशः स्यादित्यत आह **कालाग्नीति** ॥ **असिद्धत्वादिति**। प्रमाणाभावादिति भावः। न चात्र पुराणादिरूपः शब्द एव प्रमाणमिति वाच्यम्। तथा सति तत एव प्रलयसिद्धेरनुमानवैयर्थ्यापातादित्यत्र तात्पर्यात्।

कार्यमात्रपक्षीकरणेऽपि दहनादिसन्तानवत्क्रमेणारम्भः साध्यते युगपद्वेति विकल्पद्वयं मनसि निधायाद्यमर्थान्तरत्वेन दूषयति **यथा हीति**। क्रमारम्भसिद्धावपीत्यतः परम् एकदा तदसिद्धयेति शेषः। अवयविशून्यसमयसिद्धेरित्यस्य न प्रलयसिद्धिरिति पूर्वेणान्वयः। उपलक्षणं चैतत्। कार्योत्पत्तेः प्राक्कार्यशून्यैरारम्भे साध्ये सिद्धसाधनं कार्यानधिकरणैरारम्भसाधने तु बाध इत्यपि द्रष्टव्यम्। द्वितीयमाशङ्क्य दूषयति **अथैकदैवेति** ॥ **विशेषणमुपादीयेतेति**। साध्यस्येत्यर्थः ॥ **क्रमारब्धेति**। एककार्योत्पादकालस्य तदितरसर्वकार्योत्पादककालेन व्याप्त्यसिद्धेरिति भावः ॥ **विशेषणासिद्धेरिति**। हेतुविशेषणासिद्धया विशिष्टस्य स्वरूपासिद्धत्वादित्यर्थः ॥ **स्वीकारेणेति**। सकलकार्याणां युगपदनुत्पत्तेरिति भावः ॥ किञ्चैकदेति किं यदैककार्यस्य हेतुसाकल्यं तदैव तदन्येषामपि, किंवा क्रमेण। आद्ये प्रागुक्त एव दोषः। अन्त्ये क्रमिकहेतुसाकल्यस्य क्रमिककार्योत्पादकव्याप्तत्वात् युगपद्यदुत्पादे साध्ये व्याघात इत्याशयेन बाधादीत्यादिपदप्रयोगः।

एतेनेत्यनेन परामृष्टं दूषणजातमेव दर्शयति **ब्रह्माण्डेति**। तथा चाश्रयासिद्धिरिति भावः। नन्वागमादेव तत्सिद्धेर्नाश्रयासिद्धिरित्यतस्तर्हि तत एव प्रलयसिद्धेरनुमानवैयर्थ्यमिति सत्येव दोषे आगमेन तत्सिद्धिमभ्युपेत्य दूषणान्तरमाह **अभ्युपगमेऽपीति**। तत्तदवयवोपगमापगमाभ्यां क्रमेण नाशोत्पादेऽपि प्रकृतसाध्योपपत्त्या ब्रह्माण्डनाशासिद्धया प्रलयासिद्धेरर्थान्तरत्वमित्यर्थः। ब्रह्माण्डनाशमङ्गीकृत्याप्यर्थान्तरमाह **कार्यान्तरेति**। ब्रह्माण्डनाशे तदन्तर्गतस्य नाश एवेत्यत्र नियामकविशेषानु-

पलम्भाच्छङ्कितस्य प्रथमानुमानदूषणावसरे आशङ्क्य दूषितत्वादिति भावः ॥ **अभ्युपगतत्वादिति** । महाभूतानामप्यनेनैव न्यायेनोत्तरस्मिन्नुत्तरस्मिन्सति पूर्वस्य पूर्वस्य विनाश इति तदुक्तेरिति भावः ॥ **पटादिभ्य इति** । पटारम्भकत्वेऽपि नष्टानां तन्तूनां पटध्वंसाद्यनधिकरणत्वेन तत्र साध्याभावादिति भावः ॥ **द्व्यणुकाद्यवस्थानेति** । प्रत्यक्षानुपलम्भबाधिततया त्र्यणुकावस्थानानुपपत्तावपि द्व्यणुकावस्थानेपि तस्यातीन्द्रियत्वेन प्रत्यक्षत्वानापत्तेर्नानुपलम्भबाध इत्यर्थः ॥ **सन्दिग्धेति** । तथा च पक्षसमत्वान्न तेषां दृष्टान्तत्वमिति भावः ॥ **आभासेति** । अयं घटः स्वान्यावयविकालीनत्वानधिकरणकिञ्चित्कालीनघटान्यो घटत्वाद्घटान्तरवदित्याभाससमानयोगक्षेममित्यर्थः । स्वान्यत्वरूपविशेषणाभावप्रयुक्तस्वान्यावयविकालीनत्वरूपविशिष्टाभाववत्पक्षीभूतघटान्यत्वस्य घटान्तरे सत्त्वाद्दृष्टान्तता । उक्तरीत्या विशेषणाभावप्रयुक्तविशिष्टाभावस्य पक्षीभूतघटमात्रनिष्ठत्वेन तदन्यत्वरूपसाध्यस्य च तत्र बाधितत्वेन हेतोः पक्षधर्मताबलादवयविकालीनत्वरूपविशेष्याभावप्रयुक्तविशिष्टाभाववत्किञ्चित्कालीनघटमादायैव तदन्यत्वरूपसाध्यस्य पक्षे सिद्धिरित्यनवयविकालीनक्रियासिद्धिवत्तत्कालीनघटसिद्धिरपि स्यादिति भावः ।

स० — **कुण्डेति** । कुण्डाश्रितस्यापि बदरस्य तन्नाशेऽप्यनाशवत् ब्रह्माण्डनाशेऽपि तदाश्रितकार्यान्तरस्यानाशोपपत्तिरित्यर्थः । **कालाग्निरिति** । रुद्रमुखात् कालाग्निरुत्पद्यते । तेन ब्रह्माण्डान्तर्वर्तिकार्यनाशे ब्रह्माण्डनाशो भवतीति प्रक्रियाया इत्यर्थः । **क्रमारम्भेति** । गिरिसन्ताननाशस्य सलिलसन्ताननाशासमानकालत्वात् । न चैवं सर्वसन्ताननाशासिद्धिः । क्षितिसन्ताननाशस्य गिरिसन्ताननाशसमानकालीनत्वं, गिरिसन्तानविनाशस्य क्षितिसन्तानसमानकालत्वमित्येवं सर्वसन्ताननाशोपपत्तेरितिभावः । **दहनपवनादिसन्तानैरिति** । सत्येव दहनसन्ताने दहनान्तरोत्पत्तेरित्यर्थः । बाधादीत्यादिपदेन साधनवैकल्यपरिग्रहः । **द्व्यणुकादीति** । त्र्यणुकावस्थाने तत्प्रत्यक्षाद्यापत्त्या तस्यासंभवेऽपि द्व्यणुकावस्थानेऽपि तस्यातीन्द्रियत्वेन प्रत्यक्षाद्यनापत्तेरिति भावः । **षष्ठं त्वाभासेति** । इयं क्रिया, स्वान्यप्रागभावकालीनत्वानधिकरणकिञ्चित्कालीनक्रियाऽन्या, क्रियात्वात् अन्यक्रियावत्; इत्यपि साधयितुं शक्यत्वेन अनेन सर्वप्रागभावविनाशकाले काचन क्रिया वर्तते इति सिद्धे प्रागभावः क्वेति त्वदभिमतहानिः स्यादिति भावः ।

प० — **कार्यान्तरावस्थितीति** । द्व्यणुसंतानशून्यैरित्यस्य दृश्यब्रह्माण्डशून्यैरित्यर्थ उक्तः स्यात् । तथाच ब्रह्माण्डहानेऽपि तदन्तर्गताविनष्टकार्यान्तरवद्भिरारब्ध इत्यर्थ संभवेन प्रलयासिद्धिः सर्वकार्यविनाशकालस्य प्रलयकालत्वादिति भावः ॥ **कुण्डबदरवदिति** । कुण्डनाशेपि तदन्तस्थबदरफलाव-

स्थितिर्यथा तथेत्यर्थः । ननु कालाग्निना रुद्रेण द्वादशादित्यैः युगपदुदयवद्भिः शेषान्तर्गतसङ्कर्षणज्वालया भागवताद्युक्तदिशा ब्रह्माण्डे गर्भीकृतपदार्थैः सह भस्मसाज्जायमाने सति कथं कार्यान्तरावस्थितिरित्यत आह **कालाग्नीति** । प्रलयविवादिनो मीमांसकस्यासिद्धत्वादित्यर्थः ॥ **क्रमारम्भेति** । प्रथमं तरुसन्तानं पश्चाद्गिरिसन्तानजन्म ततः शरीरजन्मेत्येवं क्रमारम्भेत्यर्थः ॥ **इतिविशेषणमिति** । एकदा दृश्यसन्तानशून्यैरारब्ध इत्युक्तौ न दोषः । क्रमारम्भपक्षे क्रमेण सन्तानशून्यत्वस्यैव लाभादिति भावः ॥ **क्रमारब्धेति** । दहनारम्भानन्तरं पवनारम्भ इत्येवंरूपेणेत्यर्थः ॥ **इति हेतुविशेषण इति** । एकदारम्भकहेतुसाकल्यविशिष्टसन्तानत्वादिति हेतुविशेषणे इति भावः । द्व्यणुकादिक्रमेणारम्भस्वीकारेणेत्येतत्पूर्वत्रोत्तरत्र चासिद्धिबाधोपपादनायान्वेतीति ज्ञेयम् । साध्ये एकदेति विशेषणदाने बाधो ध्येयः । आदिपदेन दृष्टान्ते साध्यसाधनहीनता ग्राह्या ॥ **आवापोद्धाराभ्यामिति** । एकस्यावयवस्यावापे प्रक्षेपे उत्पत्तिः । उद्धारेऽपगमे च विनाश इत्यङ्गीकारेण साध्यपर्यवसानोपपत्त्या प्रलयासिद्धिरिति भावः ॥ **कार्यान्तरेति** । ब्रह्माण्डनाशेऽपि पूर्वोक्तरीत्या तदन्तर्गतकार्यान्तरावस्थानोपपत्तेरित्यर्थः । यत्र समवायिकारणतन्तुनाशात्पटनाशः तत्रसत्यप्यारम्भकत्वे साध्यं नेति भावेनाह **पटादिभ्य इति** । सत्स्वेव समवायादिषूपादेयत्वतच्छून्यत्वादिव्यवहारो न तु तदभावे; शून्यपदेन ध्वंसस्य विवक्षितत्वादिति भावः ॥ **सन्ततोत्पत्तिविनाशेति** । तथैव तार्किकैरभ्युपगमादिति भावः ॥ **आभाससमानेति** । अयं पटः एतत्पटान्यावयविकालीनत्वरहितकिञ्चित्कालीनपटान्यः पटत्वात्पटान्तरवदित्यादेरपि वक्तुं शक्यत्वादिति भावः ।

या० — **कुण्डेति** । कुण्डनाशेऽपि तदन्तर्गतबदरावस्थानवद्ब्रह्माण्डनाशेऽपि तदन्तर्गतकार्यावस्थानोपपत्तेरित्यर्थः । ननु कालाग्निरुद्रादित्यादिसकलभुवनपतेर्महेश्वरस्य सञ्जिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतादृष्टानां वृत्तिनिरोधे सति माहेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागास्तेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः । तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन्सति पूर्वस्य पूर्वस्य विनाशः । ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्त इति हि प्रलयप्रक्रिया । अत्र हि पृथिव्यात्मकस्य ब्रह्माण्डस्य नाश इतरभूतनाशानन्तरमेव प्रतीयते । एवं च कथं ब्रह्माण्डनाशे कार्यान्तरावस्थानशङ्कोदय इत्यत आह **कालाग्निरुद्रादीति** । अत्र प्रमाणाभावादिति भावः । यद्वा कालाग्निरुद्रादिभिर्ब्रह्माण्डान्तर्वर्तिकार्यजातविनाशे सति पश्चाद्दण्डमग्न्यादिना नश्यतीति हि पौराणिकी प्रलयप्रक्रिया । तथा च कथं ब्रह्माण्डनाशे कार्यान्तरावस्थानशङ्केत्यत आह **कालाग्नीति** । असिद्धत्वात्त्वन्मत इति शेषः । सत्यमेवं पौराणिकी प्रक्रियेति ; सा तु

त्वया नाङ्गीकृता किन्तु प्रागुक्तैवेति भावः ॥ **क्रमारम्भेति** । शरीरारंभसमयात्पूर्वं गिरिसन्तानावस्थितिस्तत्पूर्वं तरुसन्तानावस्थितिरित्येवं सकलकार्याणां क्रमेणारम्भ एव सिद्धः स्यादित्यर्थः । बाधादीत्यत्र आदिपदेन दृष्टान्तस्य साध्यसाधनवैकल्यसंग्रहः ॥ **क्रमेणोच्छेदस्येति** । महाभूतानामप्यनेनैव क्रमेण उत्तरस्मिन्नुत्तरस्मिन्सति पूर्वस्य पूर्वस्य विनाश इति प्रशस्तपादभाष्य उक्तत्वादिति भावः ॥ **पटादिभ्य इति** । नष्टानां तन्तूनां पटध्वंसाद्यनधिकरणत्वेन तत्र साध्याभावाद्धेतोर्व्यभिचार इत्यर्थः ॥ **आभाससमानेति** । पक्षादौ क्रियापदस्थाने घटपदप्रक्षेपेणापि प्रयोगे प्रलयकालीनघटसिद्धिरप्येवं स्यात्तत्तश्च तत्र यः प्रतीकारः स प्रकृतेऽपि तुल्य इति भावः । केचित्त्वियं क्रिया स्वान्यप्रागभावकालीनत्वानधिकरणकिञ्चित्कालीनक्रियाऽन्येत्यपि साधयितुं शक्यत्वेन प्रलये प्रागभावस्याप्यभावसिद्ध्यापत्त्या त्वदभिमतहानिः स्यादित्यर्थ इत्याहुः ।

**श्री०— कार्यान्तरेति** । ब्रह्माण्डान्तर्गतकार्यान्तरेत्यर्थः ॥ **कुण्डेति** । कुण्डनाशेऽपि तदन्तर्गतबदरावस्थानदर्शनादित्यर्थः ॥ **द्वितीयेऽपीति** । विश्वशब्देन सकलकार्यग्रहणेऽपीत्यर्थः ॥ **एकदैवेति** । एकदैवारब्ध इति साध्ये विशेषणदानात्तत्पूर्वमवयविशून्यसमयरूपप्रलयकालसिद्धिरिति भावः ॥ **हेतुविशेषण इति** । तथा च क्रमारब्धदहनपवनादिसन्ताने हेतोरेवाभावान्न व्यभिचार इति भावः । एकदैवेति साध्ये विशेषणदाने व्यभिचाररूपं दूषणमुक्त्वा बाधादिरूपं दूषणान्तरमाह **द्व्यणुकादीति** । बाधादीत्यत्रादिपदेन साध्यवैकल्यग्रहणम् । अरण्युत्पन्नाग्निसन्तानेषु क्रमारम्भस्यैव सत्त्वेन एकदैवारब्धत्वाभावादिति भावः ॥ **अवयवानामिति** । पीलुपाकप्रक्रियापक्षे ब्रह्माण्डावयवानां प्रबलवायुवन्ह्याद्युपघातेनोद्धारे सन्तानिनां परमाणूनां दृश्यसन्तानशून्यत्वं प्राप्तम् । पुनर्द्व्यणुकादिप्रक्रमेणावयवानामागमे ब्रह्माण्डस्यारब्धत्वं प्राप्तम् । एवमुत्पादविनाशयोरुपपत्त्या ब्रह्माण्डपरमाणूनां पूर्वमुत्पादितसजातीयसन्तानान्तरवत्त्वस्येदानीं वर्तमानकालेऽपि सत्त्वेऽर्थान्तरत्वप्राप्त्या प्रलयासिद्धिरिति भावः । किञ्चानेनानुमानेन पूर्वमुत्पादितब्रह्माण्डनाशसिद्धावपि सर्वकार्यविनाशरूपः प्रलयो न सिध्यति । ब्रह्माण्डनाशेऽपि कुण्डबदरवत्तदन्तर्गतकार्यावस्थानसम्भवादित्याह **कार्यान्तरेति** । ब्रह्माण्डातिरिक्तेत्यर्थः ॥ **पूर्वविनष्टैरिति** । समवायिकारणनाशस्थल इत्यर्थः । तथा च तादृशेषु तन्तुष्वारम्भकत्वे सत्यपि समग्रोपादेयसम्बन्धध्वंसाधिकरणत्वरूपं समग्रोपादेयप्रतिबन्धशून्यत्वरूपं साध्यं नास्ति । ध्वंसस्य प्रतियोगिसमवायिदेशवृत्तित्वेन प्रतियोगिभूतपटसमवायिदेशानां तन्तूनां नष्टत्वेनोपादेयध्वंसानधिकरणत्वाद्व्यभिचार इति भावः ॥ **सम्भवेनेति** । पवनानां स्थूलकार्याणां नष्टत्वेऽपि पवनद्व्यणुकावस्थानसम्भवेन तदारम्भकपरमाणूनां समग्रोपादेयप्रतिबन्धशून्यत्वं सन्दिग्धमिति न दृष्टान्तत्वं युक्तम् । निश्चितसाध्यवत

एव दृष्टान्तत्वादित्यर्थः । अत एव सम्भवेनेत्युक्तम् ॥ **भूगोलका एवेति** । भूप्रभेदभूता मृद्गिरितरुप्रभृतयः समुदायिन एवेत्यर्थः ॥ **कश्चिदिति** । समुदाय्यतिरिक्तः कश्चित्समुदाय इत्यर्थः ॥ **अवयवानामिति** । पीलुपाकप्रक्रियापक्षे प्रबलवायूपघातादिना भूगोलकानामवयवापगमादीनां साकल्येनोच्छेदस्य सततं सर्वदा इदानीमपि सत्त्वेन सिद्धसाध्यतया न प्रलयसिद्धिरिति भावः ॥ **आश्रयासिद्धिरिति** । समुदाय्यतिरिक्तसमुदायाभावादिति भावः ।

**सु०— अथ मा भूदनुमानैः प्रलयसिद्धिः, तथाऽप्यागमैर्भविष्यति, तेषां सिद्धार्थेऽपि प्रामाण्यस्य साधितत्वात्; ततो नाप्रसिद्धविशेषणतेति ब्रूषे; तर्ह्यस्माकमपि धर्मादिसिद्धिरागमाद्भविष्यतीति कथमाश्रयासिद्धिरिति । एवं प्रलये जीवेश्वरसद्भावं साधयता धर्मादिसत्त्वमपि साधितमिति न प्रलये भावमात्रासत्त्वसाधनं युक्तम् । एवम् आदिकार्यं पक्षीकृत्य सोपादानत्वसाधने प्रकृत्यादिसिद्धिरपि द्रष्टव्येति ।**

**शे०**— नन्वागमानां सिद्धार्थत्वेन स्वार्थे प्रामाण्याभावात्कथं तैः प्रलयसिद्धिरित्यत आह **तेषामिति** ॥ **साधितत्वादिति** । कार्यतावाद इति शेषः ॥ **नाप्रसिद्धविशेषणतेति** । ईश्वरादिकं प्रलयेऽपद्भवितुमर्हति भावत्वादितीश्वराद्यसत्त्वसाधकानुमानस्येति शेषः । **आगमादिति** । 'पुण्येन पुण्यं लोकं नयति पापेन पापमि'त्यादेरित्यर्थः ॥ **कथमाश्रयेति** । धर्माधर्माश्रयत्वतदधिष्ठातृत्वादिना जीवेश्वरसाधकस्य धर्माधर्माश्रयत्वेनेत्यादिमूलोक्तप्रतिपक्षानुमानस्येति शेषः ।

**प०— आगमैरिति** । श्रुत्यादिरूपैरित्यर्थः । 'अपश्यमप्यये' 'यमप्येतिभुवनं साम्पराये' 'यत्प्रयन्ति' इत्यादिश्रुतयः । 'दुर्गा वाप्यवरा ततः । सर्वसंहारकारित्वादि'त्यादिदशमतात्पर्याद्युक्तस्मृतयः । 'स्रष्टा पाता च संहर्ते'त्यादिपुराणवाक्यानि । 'अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे । रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके, इत्यादीतिहासवाक्यानि च ध्येयानि ॥ **साधितत्वादिति** । कार्यता चेत्यादाविति भावः ॥ **आगमादिति** । यजेतेत्यादिश्रुत्यादिरूपादित्यर्थः ।

**सु०— प्रथमसूत्रेऽभावस्य कर्तृत्वनिरासायानुमानमुक्तम् । इदानीमितोऽपि नाभावकर्तृकं जगत्, चेतनकर्तृकत्वे 'दृष्टान्तभावादि'ति सूत्रस्य वृत्त्यन्तरमभिप्रेत्य चेतनकर्तृकत्वे अनुमानमाह** उत्पत्तीति ।

अनु० — उत्पत्तिनाशकारी च बुद्धिमान्दृश्यते क्वचित् ॥
तद्दृष्टान्तेन सर्वत्र कर्ता किन्नानुमीयते ॥

**बुद्धिमानुत्पत्तिनाशकारीति बुद्धिपूर्वं तत्कर्तेत्यर्थः । क्वचित्पटादौ । सर्वत्र विप्रतिपन्ने कार्ये । महदादिकार्य इत्येवोक्तेऽङ्कुरादौ व्यभिचारः शङ्क्येत, तदर्थं तस्यापि पक्षनिक्षेपार्थं सर्वत्रेत्युक्तम् । कर्ता बुद्धिमानिति शेषः । अन्यथाऽभावकर्तृत्ववादिनं प्रति सिद्धसाधनता प्रसङ्गात् । किमाक्षेपे । अननुमाने न किमपि कारणम् । दृष्टान्ताभावेन प्रतिपक्षासंभवादित्यर्थः ।**

**एतेन 'स्वपक्षदोषाच्चे'ति सूत्रमपि व्याख्यातं भवति । अयमत्र प्रयोगक्रमः । विमतं कार्यं चेतनोत्पाद्यं कार्यत्वाद्घटवत् । चेतनविनाश्यं च तत एव तद्वदेव । विमतोत्पत्तिश्चेतनकर्तृका उत्पत्तित्वात्पटोत्पत्तिवत् । विमतो विनाशश्चेतनकर्तृको विनाशत्वात्सम्मतवदिति । अत्र विनाशस्य चेतनकर्तृकत्वसाधनं प्रासङ्गिकम् । यद्वा केचित्कारणस्य बीजादेः प्रध्वंसेनाङ्कुरादेः जन्मदर्शनात्तन्त्वादिनाशेन पटादिनाशदर्शनाच्च प्रध्वंसाभावस्यैव जगज्जन्मविनाशकर्तृत्वमास्थिताः । यथोक्तम् । नानुपमृद्य प्रादुर्भावादिति । तन्मतं वाऽत्रासदित्यादिसूत्रैर्निराकृतमिति ज्ञापनार्थम् । दृष्टान्ताभावस्तु स्वयमूहनीयः ।**

**शे०** — ननूत्पत्तीत्युत्तरभाष्यमनर्थकम् । न चैतत् 'न तु दृष्टान्तभावादि'त्येतत्सूत्रोक्तानुमानप्रदर्शनार्थत्वान्नानर्थक्यमिति वाच्यम् । एतत्सूत्रोक्तानुमानस्य सर्वनाशेष्वपीत्यादिपूर्वभाष्येणैव प्रदर्शितत्वेन तादर्थ्यायोगादित्यतः पूर्वं प्रलये परमेश्वरादिसद्भावसाधकानुमानभावान्नैव प्रलये सर्वासत्त्वमङ्गीकर्तुं शक्यमिति योजनामभिप्रेत्य तदनुमानं 'सर्वनाशेष्वपी'त्यादिना भाष्ये प्रदर्शितमिदानीं तु योजनान्तरम् **अभिप्रेत्य** सूत्रसूचितानुमानप्रदर्शनं क्रियत इति नानर्थक्यमित्यभिप्रेत्य योजनान्तरप्रदर्शनपूर्वकं सूत्रसूचितानुमानप्रदर्शकतयोत्तरवाक्यं योजयितुम् 'असदिति चेन्न प्रतिषेधमात्रत्वात्' इति प्रथमसूत्र एव आभावो न कर्ता निषेधैकस्वरूपत्वादित्यभावकर्तृत्वनिरासायानुमानस्योक्तत्वात्किमनेनेत्यतस्तन्निरासाय युक्त्यन्तरोपदर्शनार्थत्वान्नानुपपत्तिरित्याह **प्रथमसूत्र इति ॥ व्याख्यातं भवतीति । स्वपक्षे** प्रागभावकर्तृत्वरूपस्वपक्षे अप्रामाणिकत्वाख्यदोषाच्चेति व्याख्यातं भवतीत्यर्थः । प्रागभावकर्तृत्वे प्रमाणान्तरस्य सर्वथाऽप्यभावेनानुमानमेव तथेति वाच्यम् । तदपि विश्वप्रागभाव इत्येवंरूपं प्रागुक्तप्रकारेण दूषितमिति नोपपद्यते । अतो विश्वं प्रागभावकर्तृकं कार्यत्वादित्येव वाच्यम् । तच्च दृष्टान्ताभावान्न सम्भवतीत्यप्रामाणिकत्वं प्रागभावकर्तृत्वपक्षस्येति भावः । यद्वा प्रागभावकर्तृत्वपक्षे दृष्टान्ताभावाख्यदोषाच्चेति

व्याख्यातं भवतीत्यर्थः । चेतनस्योत्पत्तिकर्तृत्वसाधनमात्रेणैव प्रागभावकर्तृत्वपक्षनिराससिद्धेर्विनाशस्य चेतनकर्तृत्वसाधनं भाष्येऽसङ्गतमित्यत आह **अत्रेति** । प्रासङ्गिकत्वमसहमानः पक्षान्तरमाह **यद्वेति** । प्रध्वंसाभावस्यैव जगज्जन्मविनाशकर्तृत्वमपि केषाञ्चित्सम्प्रतिपन्नमित्यत्रैव न्यायसूत्रसम्मतिमाह **यथेति** । चतुर्थाध्याय इति शेषः । तत्सूत्रं पठति **नेति** । अत्र 'नानुपमृद्य प्रादुर्भावादि'त्यस्याभावाद्भावोत्पत्ति-रिति पूर्वेण सम्बन्धः । अभावाद्भावस्य कार्यस्योत्पत्तिः । कुतः । न बीजमनुपमृद्याङ्कुरस्य प्रादुर्भावो यत इत्यर्थः ।

अयमाशयः । न किलाविनष्टे कारणे कार्यमुत्पद्यते । बीजनाशोत्तरकालमङ्कुरस्य प्रादुर्भावदर्श-नात् । यदि च विनाशोऽङ्कुरकारणं नाभविष्यत् । अविनष्टेऽपि बीजेऽङ्कुरोऽभविष्यत् । न चैवमस्ति । तस्माद्बीजविनाशाभावेऽङ्कुरानुत्पतेः सति च तस्मिंस्तदुत्पत्तेरन्वयव्यतिरेकसध्रीचीनप्रत्यक्षेण बीजविनाश एवांकुरकारणमिति निश्चीयते । ततश्च तद्दृष्टान्तेन सर्वत्रापि तदनुमानमिति । यद्यप्यत्रान्वयव्यतिरेक-बलात्कारणविनाशस्य कार्योत्पत्तिकर्तृत्वमेव प्राप्तं न तु कार्यनाशकर्तृत्वमपीति न परेषां प्रध्वंसस्यैव जगदुत्पत्तिविनाशकर्तृत्वाङ्गीकारे सम्मतितयाऽस्योदाहरणं युक्तम् । तथाऽपि ध्वंसस्य कार्योत्पत्तिकर्तृ-त्वमात्रस्वीकारे परेषां सम्मतितयाऽस्योपन्यासो न तु विनाशकर्तृत्वेऽपीति नानुपपत्तिरित्याहुः । वस्तु-तस्त्वन्वयव्यतिरेकसहचारदर्शनसहकृतप्रत्यक्षमवलम्ब्य कारणनाशस्य कार्योत्पत्तिकर्तृत्वं वदतोऽभावस्यो-त्पत्तिकर्तृतायामिव नाशकर्तृतायामपि तत्कल्पकान्वयव्यतिरेकसहचारदर्शनसहकृतप्रत्यक्षस्याविशेषेण कार्यो-त्पत्तिमात्रकर्तृत्वसूत्रणास्वारस्यात्तत्स्वारस्याय नानुपमृद्य प्रादुर्भावादित्यत्र प्रादुर्भावपदस्य विना-शोपलक्षणत्वस्याश्रयणीयत्वेन फलतः सूत्रस्य जगदुत्पत्तिविनाशकर्तृत्वाङ्गीकारसमर्पकत्वमस्तीत्यभिप्रेत्यैवैत-त्सूत्रोदाहरणम् । अत एव भाष्यवार्तिकादौ तन्त्वादिनाशेन पटादिनाशस्यानुदाहरणेऽपि स्वयं तदुदाहरणं तत्राप्येतदुदाहर्तव्यमित्यभिप्रेत्य पूर्वं कृतमित्यवधेयम् । अत्र टीकायां मूलकोशेषु भाष्यवार्तिकादिषु च प्रादुर्भावादितीत्येव सर्वत्र पाठदर्शनात्, क्वाचित्कः 'नानुपमृद्य प्रादुर्भावादी'ति पाठो व्याख्यातृमति-दोषपरिकल्पित एवेति ध्येयम् । ज्ञापनार्थमित्यत्र विनाशस्य चेतनकर्तृकत्वसाधनमित्यनुषङ्गः । नन्वन्वय-व्यतिरेकसहचारनिश्चयसध्रीचीनप्रत्यक्षेण ध्वंसस्योत्पत्तिविनाशकर्तृतायाः सिद्धत्वात्कथमनेन तन्निरास इत्यत आह **दृष्टान्ताभावस्त्विति** । अविनष्टस्यैव बीजादेरंकुरात्मना परिणतत्वान्न बीजध्वंसांकुरोत्पाद-योरन्वयव्यतिरेकौ स्तः । न चांकुरस्याविनष्टबीजोपादानत्वे कुण्डले सुवर्णस्येवांकुरेऽपि बीजत्वानुगतिः स्यादिति वाच्यम् । परिणामस्यानेकप्रकारत्वस्य प्रागुपपादितत्वेन यत्र धर्मिणस्तादवस्थ्येऽपि धर्मस्यैव अन्यथाभावः तत्रैवोपादानगतधर्मस्योपादेयेऽनुगतता । ततश्च कटकाद्याकारस्य सुवर्णस्य कुण्डलत्वा-द्यापत्तौ कुण्डलत्वाद्यापन्नेऽपि सुवर्णव्यवहारदर्शनाद्धर्मिणस्तादवस्थ्यसिद्धयोपादेये उपादानधर्मस्यानुगतिः

युक्ता । इह च क्षीरस्य दधिभाववद्बीजस्यांकुरभावो धर्मिस्वरूपस्यैव परिणामरूपो विशेषिपरिवर्त एव । तथा च क्षीरस्य दधिभावापत्तौ क्षीरव्यवहारानुपलम्भाद्धर्मिभूतक्षीरस्यैवातञ्चनादिवशाद्दधिभावेन धर्मिणोऽतादवस्थ्यादुपादेये यथा क्षीरत्वाननुगतिस्तथा धर्मिभूतस्य बीजस्यैवांकुरभावाद्धर्मिणोऽतादवस्थ्यान्नांकुरे बीजत्वानुगतिः प्रसज्यत इति । एवं तन्त्वादिनाशातिरिक्तपटादिनाशासंप्रतिपत्त्या कारणनाशस्य कार्यनाशान्वयव्यतिरेकयोस्तत्राप्यसंप्रतिपत्तेर्नान्वयव्यतिरेकसहचारनिश्चयसहकृतप्रत्यक्षेण ध्वंसस्य कार्योत्पत्तिविनाशकर्तृत्वसिद्धिरित्येवं दृष्टान्ताभावः स्वयमूहनीय इत्यर्थः ।

स० — **एतेनेति** । दृष्टान्ताभावेन प्रतिपक्षाद्यभावात् अननुमाने न किमपि कारणमित्याक्षेपेणेत्यर्थः । **यथोक्तमिति** । कारणमनुपमृद्य न कार्यप्रादुर्भावः । किं तु कारणनाशेनैव कार्यप्रादुर्भावः । आदिपदेन विनाशपरिग्रहः । **दृष्टान्ताभावस्त्विति** । बीजादेः प्रध्वंसेनाङ्कुरादेर्जननदर्शनाच्चेत्युक्तदृष्टान्ताभावस्त्वित्यर्थः ।

प० — **अनुमानमुक्तमिति** । प्रतिषेधमात्रत्वरूपमित्यर्थः ॥ **सूत्रस्येति** । न तु दृष्टान्तभावादिति सूत्रस्येत्यर्थः ॥ **एतेनेति** । अननुमाने किमपि कारणं नेत्याद्यर्थककिंपदप्रयोगेणेत्यर्थः ॥ स्वपक्षे सर्वास्स्वपक्षे तत्साधकदृष्टान्ताभावदोषाच्चेति व्याख्यातमित्यर्थः ॥ **विमतमिति** । आदिकालीनमित्यर्थः । एवमग्रेपि ॥ **प्रासङ्गिकमिति** । एतत्प्रयोगस्य प्रलयप्राक्कालीनचेतनसत्त्वसाधकत्वेन लयकालेतदसाधकत्वात् । उत्पत्तेश्चेतनकर्तृकत्वसाधनप्रसङ्गात् विनाशस्य तथात्वं साधितमित्यर्थः ॥ **नानुपमृद्येति** । कारणमविनाश्य कार्यस्योत्पत्तिविनाशौ न स्त इत्यर्थः । ननु प्रध्वंसकर्तृत्वपक्षेपि तन्निरासकाः 'प्रतिषेधमात्रत्वात्' 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसं' 'न तु दृष्टान्तभावादि'तिसूत्रत्रयोक्तहेतवो मूलोक्तदिशा व्याख्याता इति ज्ञायते । 'स्वपक्षदोषाच्चे'ति सूत्रोक्तहेतुव्याख्यानं न ज्ञायत इत्यत आह **दृष्टान्ताभावस्त्विति** । अविनष्टस्यैव बीजादेरंकुरादिजननादव्यतिषिक्ततन्तुनाशेन पटनाशस्य त्वन्मतेऽप्यभावात् । व्यतिषिक्ततन्तुनाशान्यपटनाशस्यैवाभावादित्यूहनीय इति भावः ।

या० — **नानुपमृद्येति** । कारणमनुपमृद्य न कार्यप्रादुर्भाव उत्पत्तिरिति यावत् । किन्तु कारणं विनाश्यैव कार्यमुत्पद्यते । आदिपदेन विनाशपरिग्रहः ॥ **स्वयमूहनीय इति** । अविनष्टस्यैव बीजादेरंकुराद्यात्मना परिणतत्वान्नाद्यो दृष्टान्तोऽस्माकं सम्मतः । नापि द्वितीयः । तन्तुनाशातिरिक्तपटनाशाभावादिति भावः । न चांकुरस्याविनष्टबीजोपादानकत्वे घटे मृत्त्वमिवांकुरे बीजत्वप्रसङ्ग इति

वाच्यम् । यत्र धर्मिणस्तादवस्थ्ये धर्मस्यैवान्यथाभावस्तत्रैवोपादानगतो धर्म उपादेये भवति । यथा घटे मृत्त्वम् । यत्र तु धर्मिण एवान्यथाभावो न तत्रोपादानधर्म उपादेये भवति । क्षीरस्य दध्यात्मना परिणामे क्षीरव्यवहारानुपलम्भात् । बीजादेश्च धर्मिण एवांकुराद्यात्मना परिणतत्वान्नांकुरादौ बीजत्वादिप्राप्तिरिति ।

श्री० — **यथोक्तमिति** । कारणस्वरूपमनुपमृद्य कार्यस्य प्रादुर्भावः । आदिपदेन नाशो वा नेत्यर्थः ॥ **दृष्टान्ताभावस्त्विति** । बीजादेः प्रध्वंसेनांकुरादेर्जननदर्शनात् । तन्त्वादिनाशेन पटनाशदर्शनाच्चेत्युक्तदृष्टान्ताभावस्त्वित्यर्थः । तन्त्वादिनाशातिरिक्तपटादिनाशाभावादिति भावः ।

**सु० — नन्विदमनुमानेनेश्वरस्य जगत्कर्तृत्वसाधनं सूत्रकारस्य उक्तविरुद्धम् । शास्त्रयोनित्वादितीश्वरेऽनुमानप्रामाण्यस्य स्वयमेव निराकृतत्वादित्यत आह** आगमेति ।

**अनु० —** आगमानुगृहीता तु मानम्

**अनुमेति वक्ष्यमाणमत्रापि संबध्यते । न सर्वथाऽपीश्वरेऽनुमानस्य प्रामाण्यं सूत्रकृता निराकृतम् । किन्नामागमाननुगृहीतस्य । आगमानुगृहीता त्वनुमा ईश्वरे मानमेवाभिमता । अन्यथा वेदवाक्यार्थे युक्त्यनुसन्धानरूपजिज्ञासां नारभेतेति ।**

**किमतो यद्येवमित्यत आह** एषेति ।

एषाऽनुमाऽपि तु ॥

**आगमानुगृहीतेत्यनुवर्तते । मानमिति च । एषा संप्रत्युपन्यस्ताऽप्यनुमा 'यतो वा इमानि भूतानी'त्यागमानुगृहीता । ततो भवतीश्वरे मानमिति न कश्चिद्विरोध इति ।**

शे० — नन्वागमानुगृहीतेत्युत्तरवाक्यमनर्थकम् । न चागमानुगृहीतस्यानुमानस्यातीन्द्रियार्थे प्रामाण्यप्रतिपादनार्थं तदिति वाच्यम् । तद्व्युत्पादनस्याप्यनर्थकत्वादित्यतोऽनुमानेनेश्वरस्य जगत्कर्तृतासाधनस्योक्तविरुद्धत्वशङ्कापरिहारार्थत्वात्तस्य न तदिति भावेनोक्तविरुद्धताशङ्कानिवर्तकतयोत्तरवाक्यं योजयितुं कथमस्योक्तविरुद्धत्वमित्यतस्तदुपपादनपूर्वकं तां शङ्कामुत्थापयति **नन्विति** । नन्वत्र शास्त्रयोनिसूत्रे न सर्वथाऽनुमानस्येश्वरेऽप्रामाण्यमुक्तं किन्त्वागमाननुगृहीतस्यैव । आगमानुगृहीतस्य तु प्रामाण्यमेवेत्युक्ताभिप्रायमात्रकथनपरतयैतद्वाक्ययोजनाया'मेषाऽपि त्वि'त्यंशवैयर्थ्यम् । ईश्वरस्य जगत्कर्तृत्वसाधकानुमाया आगमानुगृहीतत्वात्प्रामाण्यमिति प्रकृतपरतया योजनायां च 'अपि त्वि'त्यंशवैयर्थ्यम् । पक्षद्वयेऽपि

अनुमानेनेश्वरस्य जगत्कर्तृत्वसाधनस्योक्तविरुद्धत्वशङ्कापरिहारानुपपत्तिश्च । शास्त्रयोनिसूत्रे आगमाननुगृहीताया अनुमाया एवेश्वरेऽप्रामाण्यप्रतिपादनेनागमानुगृहीतायास्तत्र प्रामाण्यस्येष्टत्वेन सर्वथाऽनुमाया अप्रामाण्यानुक्तेः प्रकृतानुमायाश्चागमानुगृहीतत्वेनेश्वरे प्रामाण्यसंभवान्नोक्तविरोधोऽनुमानेन जगत्कर्तृत्वसाधनस्य इत्येतावदर्थप्रतिपादकत्वे ह्यस्य वाक्यस्य तदनुपपत्तिपरिहारकत्वं स्यात् । न चैतद्योजनाद्वयेऽपि लभ्यते । आद्ययोजनायामागमानुगृहीताया अनुमाया ईश्वरे प्रामाण्यस्य शास्त्रयोनिसूत्राभिप्रेतत्वस्य वाक्येन समर्पणेऽपि जगत्कर्तृत्वसाधकानुमानस्यागमानुगृहीततया मानताया वाक्येनासमर्पणात् द्वितीययोजनायां च जगत्कर्तृत्वसाधकानुमानस्यागमानुगृहीततया प्रामाण्यमित्यंशस्य वाक्याल्लाभेऽपि तादृशानुमाया ईश्वरे प्रामाण्यमित्यंशस्य शास्त्रयोनिसूत्राभिप्रेतताया अनेन वाक्येनासमर्पणादित्यतो नेदमुक्ताभिप्रायकथनमात्रपरं नापि प्रकृतानुमानस्यागमानुगृहीततया प्रामाण्यसमर्थनमात्रपरं किन्तूभयपरमिति युक्तमुक्तविरोधशङ्कापरिहारकत्वमित्याशयवान्कथमेकस्य वाक्यस्योभयपरत्वमित्यतोऽत्र 'आगमानुगृहीता तु मानमि'त्येकं वाक्यं 'एषाऽनुमापि त्वि'त्यपरं वाक्यम् तत्राद्यमुक्ताभिप्रायकथनपरं द्वितीयं च जगत्कर्तृत्वसाधकानुमानस्यागमानुगृहीततया प्रामाण्यप्रतिपादनपरमिति वाक्यभेदेनोभयपरत्वोपपत्तिरित्यभिप्रेत्य आद्यवाक्यमुक्तार्थाभिप्रायकथनपरतयाऽपेक्षितपूरणेन योजयति **अनुमेत्यादिना** । ननु किमभिप्रायान्तरकल्पनया शास्त्रयोनिसूत्रेऽनुमाया ईश्वरे सर्वथाऽप्रामाण्यमेवोक्तमित्येव किन्न स्यादित्यत आह **अन्यथेति** । न हि सूत्रकारो व्याहतभाषीति भावः । द्वितीयमपि वाक्यमपेक्षितपूरणेन विवक्षितार्थोपपादकतया योजयितुमनाकाङ्क्षिताभिधानेनावाक्यताशङ्कां तावत्परिहर्तुमाकाङ्क्षामुत्थापयति **किमत इत्यादिना** ।

**प०**— एषेत्यादि तु वाक्यान्तरं मत्वाह **इति वक्ष्यमाणमिति** । तुशब्दसूचितपक्षान्तरनिरासं व्यनक्ति **न सर्वथापीति** । अनुगृहीतत्वं तत्संवादित्वं तदुपनिबद्धत्वं तद्गृहीतव्याप्त्यादिमत्त्वं च ध्येयम् । कुत एवं कल्पनेत्यतो ज्ञापकमाह **अन्यथेति** ॥ **युक्तीति** । ताश्चागमोपनिबद्धाः काश्चित्तत्संवादिन्य इति भावः ॥ **संप्रत्युपन्यस्तापीति** । उत्पत्तिविनाशकारीत्युक्तेरित्यर्थः । तत्र यत्प्रयन्तीत्यपि श्रुतौ श्रवणादिति भावः ॥

सु० — एवमनुमानेनाभावकर्तृकत्वं विश्वस्याशङ्क्यानुमानेनैवेश्वरकर्तृकत्वं समर्थितम् । तदेतन्मतान्तरेणाक्षिप्य समादधत्सूत्रम् ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ इति ॥ तत्राक्षेपस्यायमर्थः । नायमनुमानावष्टम्भेन पूर्वपक्षः सिद्धान्तो वा युज्यते । यतः प्रमाणाभासेन पूर्वपक्षः प्रमाणेन च सिद्धान्तो भवति । न चानुमानं नाम प्रमाणमस्ति । ( कुतः । ) अन्यथाऽप्यनुमेयम् । असत्प्रतिपक्षत्वं ह्यनुमानप्रामाण्यवादिभिरनुमानाङ्गमङ्गीकरणीयम् । प्रतिरुद्धस्य करणस्य क्वापि क्रियानिष्पादकत्वादर्शनात् । अनुमानप्रतिपन्नं चान्यथाऽप्यनुमेयम् अनुमातुं शक्यम् । कस्मात् । तर्काप्रतिष्ठानात् । 'एवमेवानुमातव्यम्, न पुनरन्यथा' इति तर्कस्य व्यवस्थाऽभावात् । तथा चोक्तम् । 'उपाधिप्रतिपक्षौ तु क्व नामातीव दुर्वचा'विति ।

नन्विदं व्यधिकरणं,तर्कस्याप्रतिष्ठितत्वादन्यथाऽनुमेयमिति । मैवम् । एतदनेन ज्ञापयति सूत्रकारः 'न तर्कोऽनुमानाद्भिद्यते' इति । अथवा तर्कस्यानुमानस्याप्रतिष्ठानादप्रमाणत्वान्नानुमानेन पूर्वोत्तरपक्षौ युक्तौ । कथमप्रमाणत्वम् । यतोऽन्यथाऽनुमेयमिति योजना ।

तत्र समाधानसूत्रं सङ्गमयितुमुत्सूत्रमेव भाष्यकारस्तावदुत्तरमाह आगमेति ।

अनु० — ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ॥

आगमानुग्रहाभावे न तर्कः स्यात्प्रतिष्ठितः ॥

आगमग्रहणं प्रमाणमात्रोपलक्षणम् । अत एवोत्तरार्धेऽक्षजमपि संगृहीतम् । प्रमाणानुग्रहप्रमाणमूलत्वशब्दाभ्यां प्रतिष्ठितप्रामाण्यप्रमाणान्तरावधृतपक्षलिङ्गव्याप्तिमत्त्वं तत्संवादित्वं चोच्यते ।

शे० — ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ॥ नन्वागमानुग्रहाभाव इत्याद्युत्तरभाष्यमनर्थकम् । न चेदं तर्काप्रतिष्ठानादिति सौत्रसमाधानांशविवरणरूपत्वान्नानर्थक्यमिति वाच्यम् । सौत्रपूर्वपक्षांशस्य परित्यागेन तत्स्थसिद्धान्तांशस्यैव विवरणे निमित्ताभावादित्यतः सौत्रपूर्वपक्षविवरणं स्पष्टत्वाच्छिष्यैरेवोह्यतामिति भावेन तत्परित्यागेन सिद्धान्तांशमात्रविवरणं भाष्यकाराणां नानुपपन्नमित्याशयेन स्वयं सङ्गतिप्रदर्शनपूर्वकं सूत्रमुपन्यस्य पूर्वपक्षांशं विवृणोति **एवमित्यादिना** ॥ **कस्मादिति** । सर्वत्र सत्प्रतिपक्षितत्वमात्रं साध्यं, तर्कस्याव्यवस्थितत्वं च हेतुरिति द्रष्टव्यम् ॥ **नन्विति** । तर्काप्रतिष्ठानत्वानुमानप्रतिपन्नान्यथाऽनुमेयत्वयोर्व्यधिकरणत्वादित्यर्थः । अनुमानाव्यवस्थिततताया एवानुमानप्रतिपन्नान्यथाऽनुमेयत्वोपपादकत्वादिति भावः ॥ **कथमिति** । अत्र च पक्षेऽनुमानस्याप्रमाण्यं साध्यं सत्प्रतिपक्षत्वं च हेतुरिति ।

नन्वेवमपि सौत्रसमाधानांशस्यान्यथाऽस्य प्रतिष्ठा चेति भाष्यशेषेणैव विवृतत्वादागमानुग्रहाभाव इत्यादिभाष्यानर्थक्यमेवेत्यतः समाधानांशं सौत्रं सङ्गमयितुं तदुपयुक्तार्थाभिधायितया तच्छेषत्वान्नानर्थक्यमित्याशयेनोक्तरीत्या तद्योजयति **तत्रेति** । अन्यथेत्यादिना सूत्रारूढस्याप्युत्तरत्र वक्ष्यमाणत्वात्तावदित्युक्तम् । नन्वागमानुगृहीतस्येव प्रत्यक्षानुगृहीतस्यापि तस्याक्षजागममूलस्येत्युत्तरत्र प्रतिष्ठितत्वाभिधानात् अत्र वाक्ये नागमस्यैव विशिष्य ग्रहणं युक्तमित्यतोऽत्रागमग्रहणस्य प्रमाणमात्रोपलक्षणत्वेन प्रत्यक्षसंग्राहकत्वेन तद्व्यवच्छेदकत्वाभावेन प्रत्यक्षागमाननुगृहीतस्यैवाप्रतिष्ठितत्वस्यात्राभिधानान्नानुपपत्तिरित्याह **आगमेति** । मूले आगमग्रहणस्य प्रमाणमात्रोपलक्षणत्वे मूलकारीयं ज्ञापकमाह **अत एवेति** । आगमग्रहणस्य प्रमाणमात्रोपलक्षणत्वेनाभिप्रेतत्वादेवेत्यर्थः । अन्यथा तन्न स्यादिति भावः ॥ **प्रतिष्ठितेति** । निश्चितप्रामाण्येत्यर्थः ।

**स० — कस्मादिति** । अस्मिन्पक्षे सर्वत्र प्रतिपक्षसद्भावः साध्यः। तर्कस्य अव्यवस्थितत्वं हेतुः। **नन्विदमिति** । तर्काप्रतिष्ठानत्वान्यथानुमेयत्वयोर्व्यधिकरणत्वादित्यर्थः । **अथवेति** । अस्मिन्पक्षे अनुमानस्य अप्रामाण्यं साध्यम् । सत्प्रतिपक्षत्वं हेतुरिति ध्येयम् । **पूर्वैव गतिरिति** । प्रमाणमूलेनान्यस्य बाधः इत्यादिपूर्वैव गतिरित्यर्थः ।

---

**प० — मतान्तरेणेति** । तर्काप्रामाण्यवादिमतेनेत्यर्थः । **तथा चोक्तमिति** । पूर्वपादीयानुव्याख्याने ॥ **इदं व्यधिकरणमिति** । अनुमानाप्रतिष्ठानादिति वा । अन्यथा तर्क्यमिति वा विन्यसितव्यमिति भावः । पूर्वमनुमानाप्रामाण्ये अन्यथेत्यादिर्हेतुः । तत्र हेतुस्तर्केत्यादिरिति व्याख्यातं । इदानीं साध्यान्तरे तर्केत्यादिहेतुः । तत्र हेतुरन्यथेत्यादिरित्याह **अथवेति** । **सूत्रं** सूत्रांशम् । प्रतिष्ठितप्रामाण्येति बहुव्रीहिः ।

**श्री० — ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ॥** **अस्तीति** । येनानुमानरूपप्रमाणेन सिद्धान्तः स्यादित्यर्थः । **व्यधिकरणमिति** । इदमन्यथाऽनुमेयमनुमानस्याव्यवस्थितत्वादिति वक्तव्यत्वेन तर्कस्येत्येतद्व्यधिकरणमिति भावः । पूर्वयोजनायां तर्काप्रतिष्ठानमन्यथाऽनुमेयत्वरूपे साध्ये हेतुः । इदानीं तु तर्कस्याप्रामाण्यरूपाप्रतिष्ठितत्वे प्रत्यनुमानपराहतत्वरूपमन्यथानुमेयत्वं हेतुरिति भेदः । अत एवोपलक्षणज्ञापनायैवेत्यर्थः ॥ **प्रतिष्ठितेति** । प्रतिष्ठितप्रामाण्यकं यत्प्रमाणं तदवधृतेरित्यर्थः ।

**सु० — तत्राद्ययोजनायामस्यायमर्थः । यदुक्तमनुमानस्याव्यवस्थितत्वेन सर्वत्र प्रत्यनुमानसंभव इति तदनुपपन्नम् । यतः प्रमाणानुग्रहाभावे तर्को न प्रतिष्ठितः स्यात् । किन्तु प्रमाणमूलस्यैवास्य प्रतिष्ठितिः स्यात् । एतदुक्तं भवति । प्रत्यनुमानं भवत्किं प्रमाणानुग्रहरहितं स्यात्, उत तन्मूलम् । आद्यं तु कथं स्वयमदृढभूमिकं परं प्रतिरुन्ध्यात् । न हि भवति तरक्षोः प्रतिपक्षो हरिणशावः । किन्त्वाद्येनैव प्रमाणमूलेन बाध्यते । द्वितीयं तु स्यादेव प्रमाणम् । आद्यं चापबाधेत । उभयथाऽपि न सर्वानुमानाप्रामाण्यम् । यदा तूभयोः अपि प्रमाणमूलत्वसन्देहः तदाऽस्तु प्रतिरोधः । किन्तु नैवं सर्वत्र । अवधारणायां तु पूर्वैव गतिरिति ।**

शे० — **न प्रतिष्ठित इति** । न प्रमाणं स्यादित्यर्थः । अत्र मूलगततर्कशब्देन प्रतिपक्षानुमानमाद्ये, द्वितीये स्थापनानुमानं च विवक्षितमिति ध्येयम् । अस्तु प्रमाणमूलस्यैवास्य प्रतिष्ठितत्वं तथाऽपि कुतो न प्रतिपक्षानुमानसंभव इत्यत आह **एतदुक्तं भवतीति ॥ किन्त्वाद्येनैवेत्यादि** । अनेन द्वितीयार्धगतेन अस्येत्यनेनाद्ये स्थापनानुमानं, द्वितीये प्रतिपक्षानुमानं परामृश्यत इत्युक्तं भवति । ननु प्रमाणमूलेनाद्येन द्वितीयस्य वा, प्रमाणमूलेन द्वितीयेनाद्यस्य वा, बाधाभ्युपगमे तदनुमानाप्रामाण्यप्राप्तेः परस्येष्टसिद्धिरित्यतः सर्वानुमानाप्रामाण्यप्राप्तावेव परस्येष्टसिद्धिर्न तु यत्किञ्चिदनुमानाप्रामाण्यप्राप्तौ, ततश्चाद्यपक्षे आद्यस्यैव द्वितीयपक्षे च द्वितीयस्यानुमानस्यैवाप्रामाण्यप्राप्त्या पक्षद्वयेऽपि सर्वानुमानाप्रामाण्याप्राप्तेर्नेष्टसिद्धिरित्याह **उभयथाऽपीति** । यत्किञ्चिदनुमानाप्रामाण्यवर्णनं च प्रकृतानुपयुक्तं सिद्धान्तिन इष्टं चेति न दूषणमिति भावः । ननु यत्रानुमानद्वये एकं प्रमाणमूलतया निश्चितम् । तत्राद्यस्य द्वितीयस्य वा प्रमाणत्वादुभयोरप्रामाण्याप्राप्तावपि यत्र नैकमपि प्रमाणमूलतया निश्चितं तत्रैकेनापरस्य बाधायोगात्परस्परप्रतिरोधकत्वं भविष्यतीत्यत इष्टापत्त्या समाधत्ते **यदा त्विति** । तर्हि तत्रानुमानद्वयमप्यप्रमाणं स्यादिति मदिष्टसिद्धिरिति शङ्कते **किन्त्विति** । यत्रानुमानद्वयस्य प्रमाणमूलत्वसन्देहस्तत्र प्रतिरुद्धत्वेनानुमानद्वयाप्रामाण्यप्राप्तावपि यत्रान्यतरस्य प्रमाणमूलत्वनिश्चयस्तत्र परस्परप्रतिरोधकत्वानुपपत्त्या तदप्राप्तेः सर्वानुमानाप्रामाण्यानिश्चयान्न परस्येष्टसिद्धिरित्याशयेनाह **नैवं सर्वत्रेति** । अङ्गीकृत्य च स्थलविशेषे उभयाप्रामाण्यमिदं समाधानम् । वस्तुतस्तु वस्तुनो निःस्वभावत्वानुपपत्त्याऽन्यतरस्य प्रमाणमूलत्वस्यावश्यम्भावात्तात्कालिकसन्देहेऽप्यन्यतरस्य परीक्षया प्रमाणमूलत्वावधारणसंभवात्प्रमाणमूलेनेतरबाधसंभवान्नोभयोरप्रामाण्यं तत्रापीत्याह **अवधारणायामिति ॥ पूर्वैवेति** । प्रमाणमूलेनातथाभूतस्य बाध इत्युक्तैवेत्यर्थः ।

प०— **अस्येति** । सिद्धान्तसूत्रांशस्येत्यर्थः । किंत्वित्यध्याहृत्योत्तरार्धं योजयति **किन्तु प्रमाणमूलस्येति** । अक्षजागममूलस्येत्यस्यार्थोऽयम् ॥ **प्रतिष्ठितिरिति** । प्रामाण्यमित्यर्थः । ननूभयोरपि मानमूलत्वानिर्णये स्यादेव सर्वानुमानाप्रामाण्यमित्यत आह **यदा त्विति** ॥ **किन्त्विति** । येन सर्वानुमानाप्रामाण्यमिति वाक्यशेषः ॥ **अवधारणायां त्विति** । अन्यतरस्य प्रमाणमूलत्वनिर्णये तु तेन प्रमाणभूतेनान्यतरस्य बाध इति न सर्वानुमानाप्रामाण्यमिति पूर्वोक्तैव गतिरित्यर्थः ।

या०— ॐ **तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः** ॐ ॥ अनुमानं नाम प्रमाणमेव नास्ति प्रतिपक्षानुमानसद्भावेनाप्रतिपक्षत्वरूपाङ्गविकलत्वात् इदित्याद्ययोजनालब्धमर्थमनूद्य दूषयति । **यदुक्तमित्यादिना** ॥ **न प्रतिष्ठित इति** । न लब्धात्मेत्यर्थः । अत्र मूलगततर्कशब्देन प्रतिपक्षानुमानमाद्ये, द्वितीये स्थापनानुमानं च विवक्षितमिति ध्येयम् ॥ **किन्त्वाद्येनैवेत्यादि** । अनेन द्वितीयार्धगतेनास्येत्यनेनाद्ये स्थापनानुमानं, द्वितीये प्रतिपक्षानुमानं परामृश्यत इत्युक्तं भवति ॥ **न सर्वथाऽनुमानाप्रामाण्यमिति** । न सर्वथाऽनुमानरूपप्रमाणाभावप्राप्तिरित्यर्थः । ननु तदैव सर्वथाऽनुमानाभावः प्राप्त इत्याशङ्कते **किन्त्विति** । उत्तरमाह **नैवं सर्वत्रेति** । अत्र हेतुमाह **अवधारणायामिति** । प्रमाणमूलतयाऽवधृतस्यैव दुर्बलबाधकतया प्रामाण्यसिद्धौ, न सर्वथाऽनुमानाभाव इति पूर्वोक्तैव गतिर्यत इत्यर्थः ।

श्री०— **द्वितीयं** तन्मूलकम् । **उभयथा** प्रत्यनुमानप्रमाणानुग्रहराहित्ये तन्मूलत्वे वेत्यर्थः ॥ **न सर्वेति** । आद्यं त्विति पूर्वोक्तरीत्येत्यर्थः । **एवम्** उभयोरपि प्रमाणमूलत्वम् ॥ **अवधारणायामिति** । एकस्य प्रमाणमूलत्वावधारणायामित्यर्थः ।

सु०— **द्वितीययोजनायां तु प्रष्टव्यम् । किं प्रमाणानुग्रहरहितमनुमानं प्रत्यनुमानपराहतत्वादप्रमाणम् , उत तन्मूलम् । आद्ये संप्रतिपत्तिमुत्तरमाह** आगमेति । **(तथापि) नैवं सर्वत्रेति भावः । प्रतिष्ठितः प्रमाणभूतः । द्वितीये त्वाह** अक्षजेति ।

**अनु०**— अक्षजागममूलस्य स्यादेवास्य प्रतिष्ठितिः ॥

**प्रतिष्ठितिः प्रामाण्यम् । तेनैव प्रतिप्रयोगस्य बाधितत्वात् । उभयोर्वास्तवप्रमाणमूलत्वासंभवादिति भावः ।**

**यस्त्वेतां व्यवस्थामनभ्युपगम्य सर्वत्रापि प्रतिपक्षस्यास्त्यवकाश इति सर्वमनुमानमप्रमाण-मिति च मन्यते तस्य सूत्रारूढमुत्तरमाह** अन्यथेति ।

अन्यथाऽस्याप्रतिष्ठा च स्ववाचा व्याहतैव हि ॥

**एतेनैवमुपपादितेऽपि यो नैवं मन्यते तस्य स्ववचनव्याघातादनिर्मोक्षप्रसङ्ग इति सूत्रयोजना सूचिता । तथा हि । सर्वमनुमानमप्रमाणं प्रतिपक्षप्रतिहतत्वादिति त्वदीयमनुमानं प्रतिपक्ष-पराहतं चाप्रमाणं च भवति न वा । आद्ये नानेन सर्वस्याप्रामाण्यसिद्धिः । द्वितीये त्वत्रैव बाधादीति ।** अन्यथा **उक्तव्यवस्थां विहाय, अस्य सर्वस्याप्यनुमानस्य** अप्रतिष्ठा **अप्रमाणता, स्ववाचैव** व्याहता हीति ।

**शे०— द्वितीययोजनायामिति** । प्रत्यनुमानपराहतत्वान्नानुमानं प्रमाणमिति नानुमानेन पूर्वोत्तरपक्षौ युक्तावित्यादिना प्रदर्शितयोजनायामित्यर्थः । ननु प्रमाणानुग्रहरहितस्यानुमानस्य प्रत्यनु-मानपराहतत्वेनाप्रामाण्ये परस्येष्टसिद्धेः कथं तत्संप्रतिपत्तिरित्यतस्तादृशस्याप्रामाण्यप्राप्तावपि प्रमाणा-नुग्रहवतोऽनुमानस्य प्रबलतया, तद्बाधितत्वेन द्वितीयस्य तत्प्रतिरोधकत्वायोगेन तदप्रामाण्याप्राप्त्या न सर्वानुमानाप्रामाण्यसिद्धिरिति न परस्येष्टसिद्धिः, तथा च युक्ता संप्रतिपत्तिरित्याशयेनाह **तथाऽपीति** । ननु च यत्रोभयोरप्यक्षजागममूलत्वं तत्र प्रतिप्रयोगस्य पूर्वेण बाधानुपपत्तेरुभयाप्रामाण्यमावश्यक-मित्यतोऽस्त्वत्रोभयाप्रामाण्यं तथाऽपि नैवं सर्वत्रेति नपरस्येष्टसिद्धिरिति सत्येव समाधाने वास्तवं समा-धानमाह **उभयोरिति** । ततो यद्वस्तुतः प्रमाणमूलं तेनेतरबाधोपपत्तेर्नोभयाप्रामाण्यप्रसङ्ग इति भावः । **अवकाश इति** । मन्यते इत्युत्तरेण संबन्धः । स्ववचनव्याघातोपदर्शनपूर्वकं भाष्यं योजयति **तथा हीत्या-दिना** । बाधादीत्यादिपदेन स्वरूपासिद्धिपरिग्रहः ।

**स०— अत्रैव बाधादीति** । त्वदीयानुमाने प्रामाण्यस्यैव निश्चितत्वेन सर्वमप्यनुमानं पक्षी-कृत्य अप्रामाण्यसाधने अंशतो बाधः । आदिपदेन सत्प्रतिपक्षत्वलक्षणहेतोर्भागासिद्धिरित्यर्थः । **स्ववाचै-वेति** । स्वानुमानेनैव बाधसिद्धिलक्षणव्याहतिरित्यर्थः ।

प०— अनिर्मोक्ष इत्यत्र कस्मादित्यपेक्षायामाह **स्ववचनव्याघातादिति** । इयं च सूत्र-शेषोक्तिः स्वव्याहतिरूपदोषः स्यादिति फलितार्थः । भाष्यटीकयोस्तु अनध्याहारेणानिर्मोक्षप्रसङ्गो मोक्षाभावप्रसङ्ग इत्यर्थः उक्तः । एवं सूत्रतात्पर्यं विवृत्य मूलवाक्यं योजयति **अन्यथेति** । तस्यार्थः उक्ते-त्यादि ॥

**या॰** — अनुमानं न प्रमाणं प्रत्यनुमानपराहतत्वादिति द्वितीययोजनालब्धमर्थमनूद्य दूषयितुं विकल्पयति **किमिदमित्यादिना** । अत्र मूलतर्कशब्देनास्येत्यनेन च स्थापनानुमानमेव विवक्षितम् । मूलस्य साधारण्यादेवं योजनाद्वयम् । आद्ययोजनायां स्थापनानुमानस्वरूपमेव परेण नाङ्गीकृतमिति तद्विहाय तदङ्गीकृते प्रतिपक्षानुमान एव प्रमाणानुग्रहसदसद्भावं विकल्प्य दूषणमुक्तमिति मन्तव्यम् ॥

**श्री॰** — **तथाऽपीति** । ततश्चागमानुग्रहाभावे किल तर्कोऽप्रतिष्ठितः । एवम् आगमानुग्रहाभावस्तु सर्वत्र नेत्यर्थः । तथा च प्रकृतास्मदीयानुमानस्यागमानुग्रहोऽस्तीति युक्तं प्रामाण्यमिति हृदयम् । **तेनैव** अक्षजादिमूलकेनैव । यदा तूभयोरपि प्रमाणमूलत्वसम्भवस्तदा कथमत आह **उभयोरिति** । तथात्वे वस्तुनो द्वैरूप्यापत्तेरिति भावः ॥ **आद्य इति** । साधकस्याप्रमाणत्वादित्यर्थः ॥ **अत्रैवेति** । सर्वान्तर्गते तस्मिन्नेवानुमान इत्यर्थः ॥

**सु॰** — **अपरे तु 'न विलक्षणत्वादि'त्यादीनि सूत्राणि ब्रह्मणो जगदुपादानत्वाक्षेपसमाधानार्थतया व्याचक्षते । तत्प्रकृत्यधिकरण एव निराकृतम् ।**

**शे॰** — आगमानुग्रहाभाव इति सार्धश्लोकस्य सौत्रसमाधानांशविवरणपरतया योजनायां, तर्काप्रतिष्ठानादित्येतत्सूत्रीयव्याख्याननिरासपरतया स्पष्टप्रतिभासस्य तत्परत्वत्यागः, क्लेशेन कथञ्चित्सौत्रसमाधानांशविवरणपरत्वं च, आगमानुग्रहाभाव इत्याद्यकारिकाया उत्सूत्रार्थविवरणपरत्वेनाभाष्यत्वापत्तेश्चेत्याद्यपरितोषात्तत्सूत्रीयापव्याख्यानिरासपरत्वमेवाश्रित्य तद्ध्यधिकरणार्थस्याप्यसंप्रतिपन्नस्य निरस्यत्वात्तमनिरस्यैवाधिकरणैकदेशार्थनिराकरणं भाष्यकाराणामनुचितमित्यतोऽधिकरणार्थस्य प्रागेव निरस्तत्वात्किं पुनरिह तन्निरासेनेत्याशयेन तमनिरस्यैवाधिकरणैकदेशार्थस्यापि तर्काप्रतिष्ठितत्वस्यैव निरासो युक्त इत्यभिप्रेत्य कोऽसावधिकरणार्थः कुत्र च तन्निरास इत्याशङ्कापरिहाराय तदुभयं दर्शयन्नेव प्रागनिराकृतैतदधिकरणैकदेशार्थभूततया परोत्प्रेक्षिततर्काप्रतिष्ठितत्वनिरासपरतयोत्तरभाष्यं योजयति **अपरे त्वित्यादिना सार्धश्लोकेनेत्यन्तेन** ।

इत्यादीनीत्यतःपरमनिर्मोक्षप्रसङ्ग इत्यन्तान्यष्टाविति शेषः । दृश्यते चेत्यस्य सूत्रस्य परमतेऽसत्त्वेन न विलक्षणत्वादित्यादिसूत्राष्टकस्यैवैकाधिकरणत्वस्य परैरुररीकृतत्वादिति द्रष्टव्यम् । **जगदुपादानत्वाक्षेपसमाधानार्थतयेति** । प्रथमद्वितीयपञ्चमसूत्राणि ब्रह्मणो जगदुपादानत्वाक्षेपार्थानि तृतीयचतुर्थषष्ठसप्तमाष्टमानि तत्समाधानानीत्येवं जगदुपादानत्वाक्षेपसमाधानार्थतयेत्यर्थः । तथा हि ।—

प्रकृतिश्चेत्यादिना ब्रह्म जगदुपादानमित्युक्तम् । तदाक्षेपार्थं 'न विलक्षणत्वादि'ति सूत्रम्(ब्र. सू... ) । न ब्रह्म जगदुपादानम् । कुतः। अस्य जगतः स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वादिना ब्रह्मविलक्षणत्वात् । न चाप्रयोजकत्वम् । रुचकादीनां मृद्विकारत्वस्य शरावादीनां च सुवर्णविकारत्वस्यादर्शनेन समानरूपयोरेव प्रकृतिविकृतिभावस्थित्या विलक्षणयोर्ब्रह्मजगतोस्तदयोगात् । न च ब्रह्मजगतोरपि वैलक्षण्यासिद्धेर्युक्तः प्रकृतिविकृतिभाव इति वाच्यम् । विज्ञानं चाविज्ञानं चेत्यादिशब्दादेव तत्सिद्धेरिति प्रथमसूत्रार्थः ॥ ननु मृदब्रवीदापोऽब्रुवन्नित्यादिश्रुत्या जगतोऽपि चेतनरूपत्वसिद्धेर्वैलक्षण्यमसिद्धमिति युक्तः प्रकृतिविकृतिभाव इत्यत्रोत्तरं पठति **अभिमानीति** (ब्र. सू. २-१-६) । अत्र सूत्रे तुशब्दः शङ्कामपनुदति । न मृदब्रवीदित्येवञ्जातीयकया श्रुत्या मृदादीनां चेतनत्वमाशङ्कनीयम् । यतोऽभिमानिव्यपदेश एषः । मृदाद्यभिमानिन्यश्चेतना देवता वदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते न मृदादिमात्रम् । कस्मात्, विशेषात् । 'एता ह वै देवता अहं श्रेयसे विवदमानाः' इति कौषीतकीब्राह्मणे प्राणसंवादे करणमात्राशङ्कानिवृत्तयेऽधिष्ठातृचेतनपरिग्रहाय देवताशब्देन विशेषणात् । अनुगताश्च सर्वत्राभिमानिन्यश्चेतना देवता मन्त्रार्थवादे इतिहासपुराणादिभ्योऽवगम्यन्ते । अग्निर्वाग्भूत्वा मुखं प्राविशदित्येवमादिकया श्रुत्या करणेष्वनुग्राहकदेवतानुगतिदर्शनाच्च । तस्माद्विलक्षणमेवेदं ब्रह्मणो जगत् । विलक्षणत्वाच्च न ब्रह्मप्रकृतिकमित्याक्षिप्ते सिद्धान्तयति **दृश्यते त्विति** (ब्र. सू. २-१-३-७) । तुशब्दः पक्षं व्यावर्तयति। यदुक्तं विलक्षणत्वाज्जगन्न ब्रह्मप्रकृतिकमिति न तद्युक्तम् । वैलक्षण्येऽपि गोमयवृश्चिकादेः प्रकृतिविकृतिभावदर्शनेन समानरूपयोरेव तद्भावनियमास्थित्या विलक्षणयोरपि ब्रह्मजगतोः प्रकृतिविकृतिभावो युक्त इत्यर्थः ॥ उक्तमर्थमाक्षिप्य समाधत्ते **असदिति चेदिति** (ब्र. सू. २-१-४-८)॥ ननु तर्हि चेतनरूपं जगत्प्रागुत्पत्तेरसत्प्रसज्येत तदा चेतनमात्रावस्थानात्। अनिष्टं चैतत्सत्कार्यवादिनस्तवेति चेन्न। कार्यस्य कारणाभिन्नतया कारणरूपेण सत्त्वसंभवात् । सत्कार्यवादप्रतिषेधस्य प्रतिषेधमात्रत्वात् । सत्कार्यवादप्रतिषेधासमर्थत्वादित्यर्थः ॥ पुनरुक्तमाक्षिपति **अपीताविति** (ब्र सू. २-१-४-९) । एवं तर्हि स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वाशुद्ध्यादिधर्मकं कार्यं प्रलये कारणाविभागमापद्यमानं कारणमात्मीयेन धर्मेण दूषयेदिति अपीतौ कारणस्यापि ब्रह्मणः कार्यस्येवाशुद्ध्यादिप्रसङ्गात्सर्वज्ञं ब्रह्म जगतः कारणमित्यसमञ्जसमित्यर्थः ॥ समाधत्ते **न तु दृष्टान्तभावादिति**(ब्र. सू. २-१-४-१०) नैवास्मदीये दर्शने किञ्चिदसामञ्जस्यमस्ति । यत्तावदभिहितं कारणभावं गच्छत्कार्यं कारणमात्मीयेन धर्मेण दूषयेदिति । तददूषणम् । कस्मात् दृष्टान्तभावात् । सन्ति हि दृष्टान्ता यथा कारणमपि गच्छत्कार्यं कारणमात्मीयेन धर्मेण न दूषयति । तद्यथा शरावादयो मृत्प्रकृतिका विकाराः प्रलीनाः सन्तो न प्रकृतिमात्मीयेन संसृजन्ति । रुचकादयश्च सुवर्णविकारा अपीतौ न सुवर्णमात्मीयेन धर्मेण संसृजन्ति । पृथिवीविकारश्चतुर्विधो भूतग्रामो न पृथिवीमपीतावात्मीयेन धर्मेण संसृजति । यथा

च मायास्वप्नादयः प्रलीना न मायादिस्वप्नद्रष्ट्रादीन्स्वधर्मेण संसृजन्ति । ततश्च कारणस्य कार्यदोषासंसर्गे मृदाद्यनेकदृष्टान्तभावान्न कार्यधर्मेण ब्रह्मणोऽप्यशुद्ध्यादिप्रसङ्ग इत्यर्थः ॥ दूषणान्तरमाह **स्वपक्षदोषाच्चेति** (ब्र. सू. २-१-४-११) । न विलक्षणत्वादुपादानतेत्यादयो ये दोषा ब्रह्मणो जगदुपादानतायामभिहितास्ते सांख्यमतेऽपि समाना एव शब्दादिहीनात्प्रधानाच्छब्दादिमतो जगत उत्पत्त्यभ्युपगमात् । अत एव विलक्षणकार्योत्पत्त्यभ्युपगमात्समानः प्रागुत्पत्तेरसत्कार्यप्रसङ्गः । तथाऽपीतौ कार्यस्य कारणाविभागाभ्युपगमात् तद्वत्त्वप्रसङ्गोऽपि समानः । ततश्च स्वपरसाधारणत्वान्नैतेऽस्मत्पक्षे चोदयितव्या इत्यदोषा एवैत इति नैतैर्ब्रह्मणो जगदुपादानत्वनिरास इति भावः दूषणान्तरमाह **तर्केति** (ब्र. सू. २-१-४-१२) न तर्केण ब्रह्मणः श्रौतकारणत्वापह्नवो युक्तः । तर्काणामप्रतिष्ठितत्वादित्यर्थः । शङ्कते **अन्यथेति** (ब्र. सू. २-१-४-१२) । अन्यथा तर्कस्याप्रतिष्ठा यथा न भवति तथा सूक्ष्मबुद्धिभिरनुमेयमिति चेदित्यर्थः । परिहरति **एवमपीति** (ब्र. सू. २-१-४-१२) । एवमपि विषयान्तरे तर्कस्य प्रतिष्ठितत्वेऽप्यतिगम्भीरशब्दैकसमधिगम्ये जगत्कारणे तर्कस्याप्रतिष्ठितत्वदोषादनिर्मोक्षप्रसङ्ग इत्यर्थ इति जगदुपादानत्वाक्षेपसमाधानार्थतया व्याख्यानप्रकारोऽनुसन्धेयः । न केवलं जगदुपादानत्वाक्षेपसमाधानार्थतयेत्येतद्वस्तुस्थितिकथनमात्रपरं किन्तु 'न विलक्षणत्वादित्यादि'सूत्राणां पूर्वपक्षसूत्रत्वसूचनव्याजेन परकीयव्याख्याने पूर्वपक्षसूत्रत्वानुपपत्तिरूपदोषसूचनार्थं च । तथा हि । अस्मदीत्याऽभिमानिव्यपदेशस्त्वित्यादिरवश्यवक्तव्यश्रुतिसंवादियुक्त्यविरोधोक्त्या सिद्धान्तसूत्रत्वेन प्रत्येकमधिकरणत्वे संभवति, आद्यद्वितीयपञ्चमसूत्राणां पूर्वपक्षसूत्रत्वेन, तृतीयादीनां च सिद्धान्तसूत्रत्वेनानभिप्रेतस्य ब्रह्मजगतोर्विकारविकारिभावस्योक्त्या एकाधिकरणत्वकल्पनाऽनुपपत्तिः । यदि च तुशब्दप्रयुक्तत्वात् 'दृश्यते तु'तिसूत्रस्य तत्पूर्वसूत्रयोः पूर्वपक्षत्वं त'र्ह्यभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्', 'असंभवस्तु सतोऽनुपपत्तेरि'त्यादौ तुशब्दश्रवणात्तत्पूर्वसूत्राणां पूर्वपक्षत्वं स्यात् । यद्यपि पूर्वमीमांसादौ पूर्वपक्षसूत्राणि सन्ति तथाऽपि तत्राद्याध्यायाद्यपाद एव पूर्वपक्षसूत्रसद्भावात्, इह च त्वन्मते प्रथमाध्याये तदभावेनान्यत्रापि सूत्रकृतः पूर्वपक्षत्वसूचकजैमिन्यादिग्रहणाभावे व्याकरणकल्पसूत्रादाविव पूर्वपक्षसूत्राकरणशैलीनिश्चयान्न 'न विलक्षणत्वा'दित्यादिसूत्राणां पूर्वपक्षसूत्रत्वकल्पनमुचितमिति ।

**प्रकृत्यधिकरण एव निरस्तमिति** । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यत' इत्यादिनेति शेषः । यद्यप्यत्र सूत्राक्षरानानुगुण्यव्युत्पादनेन परव्याख्यानस्यासाधुत्वं व्युत्पादयितुं शक्यते । तथाऽपि प्रमेयनिराकरणेनैव तदाक्षेपसमाधानाभ्यां तत्प्रतिपादकतया परव्याख्यानस्यासाधुत्वे सिद्धे नाक्षरानुगुण्यानानुगुण्यचिन्ताऽप्यावश्यकी । तदावश्यकतायामपि वा शिष्यैरेव तदूह्यतामित्याशयवता न विशिष्य तद्व्युत्पादितम् । एतदभिप्रेत्य विशिष्यैतद्व्युत्पादनं चन्द्रिकायां कृतमित्यवधेयम् ।

प०— **तदिति** । ब्रह्मणो जगदुपादानत्वमित्यर्थः । सर्वत्र दूषणं तु चन्द्रिकायां व्यक्तम् ।

या०—**अपरे त्विति** । 'न विलक्षणत्वादि'त्यादि 'एवमप्यनिर्मोक्षप्रसङ्गः' इत्यन्तं सूत्राष्टकमेकमधिकरणम् । 'न विलक्षणत्वादि'त्यनन्तरं 'दृश्यते त्वि'ति सूत्रं नास्त्येव । अस्य जगतः स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वादिना ब्रह्मविलक्षणत्वान्न ब्रह्मोपादानकत्वं, तथात्वं च वैलक्षण्यं 'विज्ञानं चाविज्ञानं चे'त्यादिशब्दादिति आद्यसूत्रेणोक्त्वा, 'न च मृदब्रवीदित्यादिश्रुत्या जगदपि चेतनरूपमेवेति वैलक्षण्यमसिद्धमिति वाच्यम् तत्राभिमानिदेवताव्यपदेशादि'ति द्वितीयसूत्रेणोक्तम् । तथा चैते पूर्वपक्षसूत्रे ॥ एवं प्राप्ते वैलक्षण्येऽपि गोमयवृश्चिकादेः कार्यकारणभावो दृश्यत इति तृतीयसूत्रेण सिद्धान्तयित्वा, 'ननु तर्ह्यचेतनरूपजगत् प्रागुत्पत्तेरसत्प्रसज्येत तदा चेतनब्रह्ममात्रावस्थानात् । तच्चानिष्टं सत्कार्यवादिनस्तवेति चेन्न । कार्यस्य कारणाभिन्नतया कारणरूपेण सत्त्वसम्भवात् । सत्कार्यवादप्रतिषेधस्य प्रतिषेधमात्रत्वात् । सत्कार्यवादप्रतिषेधासमर्थत्वादि'ति चतुर्थसूत्रेणोक्त्वा, 'ननु तर्हि प्रलये कार्यं कारणाविभागमापद्यमानं कारणमात्मीयेन धर्मेण दूषयेदिति कार्यवद्ब्रह्मणोऽप्यशुद्ध्यादिप्रसङ्गादसमञ्जसमिदमिति पञ्चमेन पूर्वपक्षयित्वा, 'नैवं शरावमायास्वप्नादिषु प्रलीनेषु तद्धर्माणां मृन्मायाविस्वप्नद्रष्ट्रादिष्वदर्शनेन कारणस्य कार्यदोषासंसर्गे दृष्टान्तसद्भावादिति षष्ठेन सिद्धान्तयित्वा, किञ्च न विलक्षणत्वादनुपादानतेत्यादयो दोषाः साङ्ख्यमतेऽपि समाः शब्दादिहीनं प्रधानं शब्दादिमज्जगदुपादानमिति साङ्ख्यैः स्वीकारात्'इति सप्तमेनोक्त्वा, 'किञ्च न तर्केण ब्रह्मणः श्रौतकारणत्वापह्नवो युक्तः तर्काणामप्रतिष्ठितत्वात् । नन्वन्यथा तर्कस्याप्रतिष्ठा यथा न भवति तथा सूक्ष्मबुद्धिभिरनुमेयमिति चेदेवमपि विषयान्तरे तर्कस्य प्रतिष्ठितत्वेऽप्यतिगम्भीरे शब्दैकगम्ये जगत्कारणे तर्कस्याप्रतिष्ठितत्वदोषादनिर्मोक्षः' इत्यष्टमेन उक्तमिति व्याचक्षत इत्यर्थः ॥

**सु०— यच्चात्र सूत्रे तर्काप्रतिष्ठानादिति वाक्यं भित्त्वा सिद्धान्ततयैव वर्णयन्ति, तद्वा अनेन सार्धेन श्लोकेन निराचष्टे । तथा हि तर्कस्याप्रतिष्ठां वदन्वक्तव्यः । किं प्रमाणानुग्रहरहितस्योत तन्मूलस्य ।**

**आद्ये गूढाभिसन्धिरुत्तरमाह** आगमेति । **अयमाशयः । सत्यमेतत् । तथाऽपि न सांख्यः स्वतर्कस्यागमाद्यनुग्रहाभावं मन्यते । स्वमतेनेदमुच्यते चेत्पौनरुक्त्यम् । शास्त्रयोनित्वात्, ईक्षतेर्नाशब्दम् , आनुमानिकमित्यादिनाऽस्यार्थस्योक्तत्वादिति ।**

**द्वितीयं दूषयति** अक्षजेति । **न हि ज्ञानकरणस्य प्रमाणगृहीतव्याप्त्यादिमत्त्वेनाप्रामाण्यकारणव्यभिचारादिशङ्काकलङ्कविकलस्य प्रामाण्यं नास्तीति युक्तमिति भावः । विपक्षे बाधकं**

चाह अन्यथेति । **अन्यथोक्तानभ्युपगमेनास्य प्रमाणमूलस्याप्यनुमानस्याप्रतिष्ठा स्ववाचा व्याहतैव सूत्रकृतः स्यात् । स्वयमेव हि युक्त्यनुसन्धानरूपां ब्रह्ममीमांसामारभ्य प्रमाणमूलस्यापि तर्कस्याप्रामाण्यमभिदधानः सूत्रकारो न व्याहतभाषी कथं स्यात् । यदपि वृत्तिकारैरुक्तम् 'एकेन तार्किकेणोत्प्रेक्षितं तर्कमपरो दूषयति, तेनोत्प्रेक्षितमप्यपरः, इत्यतः पुरुषमतिवैश्वरूप्यजन्मा तर्कः स्यादप्रतिष्ठितः' इति । तच्चायुक्तम् । यतोऽस्यापि तर्कस्य प्रामाण्येऽप्रामाण्ये वा अस्याप्रतिष्ठा च स्व(वाचा)व्याहतैवेति नायं वाक्यभेदो युक्त इत्युक्त एव सूत्रार्थः ।**

**शे०— अत्र सूत्र इति ।** 'तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः' इत्येतस्मिन्सूत्र इत्यर्थः ॥ **वाक्यं भित्त्वेति** । तर्काप्रतिष्ठानादित्येकं वाक्यम् , अन्यथाऽप्यनुमेयमित्यादि अपरम्; इति द्वे एते वाक्ये इत्यर्थः ॥ **सिद्धान्ततयैवेति** । तत्प्रकारश्च प्रागुक्त एवानुसन्धेयः । इदं च वचनं न करिष्यमाणदूषणार्थं परोक्तानुवादमात्रपरं किन्तु परव्याख्यानेऽनुपपत्त्यन्तरसूचकमपि । तथा हि । चशब्दाभावेन सिद्धान्ते हेत्वन्तरायोग्यस्य त्वयाऽप्यन्यथाऽनुमेयमित्यनेनैकसूत्रत्वेन स्वीकृतस्य च तर्काप्रतिष्ठानादित्यस्यास्मदीयरीत्या अन्यथा स्वपक्षदोषाच्चेति सूत्रोक्ताद्वैपरीत्येनानुमेयं तर्काप्रतिष्ठानादित्येकवाक्यतया श्रुतसाधनान्वयेन शङ्काशेषत्वे सम्भवति, श्रौतस्य विलक्षणयोरपि कार्यकारणभावस्य न हानिस्तर्कस्याप्रतिष्ठानादित्येवमध्याहृतसाध्यान्वयेन वाक्यं भित्त्वा न सिद्धान्तशेषत्वोक्तिर्युक्ता । अनिर्मोक्षं प्रति प्रतियोगिनो दोषादित्यस्योत्तरवाक्ये त्वद्योजनायामनुषञ्जनीयत्वाच्च । दोषादनिर्मोक्ष इत्येतावता पूर्तेरनिर्मोक्षप्रसङ्ग इत्यत्र प्रसङ्गपदवैयर्थ्याच्चेति न वाक्यभेदो युक्त इति । अभिसन्धिमेवोद्घटयति **अयमाशय इति ॥ सत्यमेतदिति** । आगमानुग्रहरहितस्तर्को न प्रतिष्ठित इत्येतत्सत्यमित्यर्थः । नन्वेवं साङ्ख्योत्प्रेक्षितस्य ब्रह्मणोऽनुपादानत्वसाधकवैलक्षण्याख्यतर्कस्य प्रधानस्य जगदुपादानतासाधकतर्कस्य चागमाद्यननुगृहीतत्वेनाप्रतिष्ठितत्वप्राप्त्या न ब्रह्मणो जगदुपादानत्वासिद्धिर्नापि प्रधानस्य तत्सिद्धिरिति मदिष्टसिद्धिरित्यतो भवेदेवं कथञ्चिद्यदि तर्कद्वयस्याप्यागमाद्यननुगृहीतता स्यात् । न च साऽस्ति । तत्किं तर्कद्वयस्याप्यागमाद्यननुगृहीतत्वं साङ्ख्यरीत्याऽसिद्धमित्युच्यते स्वरीत्या वेति विकल्पद्वयं मनसि निधाय ब्रह्मणो जगदुपादानत्वनिषेधकोक्ततर्कस्य, प्रधानस्य तदुपपादकतर्कस्य च निर्विकारमित्यादिश्रुत्यनुगृहीतत्वाभ्युपगमान्न तस्याप्रतिष्ठितत्वप्राप्तिरित्याशयेनाह **तथाऽपीति** । द्वितीयमुत्थाप्य दूषयति **स्वमतेनेति** । पौनरुक्त्यमेव व्युत्पादयति **शास्त्रयोनित्वादित्यादिना** । शास्त्रयोनित्वादित्यत्र जगत्कारणस्याऽऽनुमानिकत्वमाशङ्क्य शास्त्रैकसमधिगम्यत्वस्य अथवा शास्त्रं योनिः प्रमाणमित्यादिना वर्णकान्तरेणोक्तत्वाद्ब्रह्मणो जगदुपादानत्वस्य शास्त्रसमधिगम्यत्वस्य सिद्धेस्तदाक्षेपकतर्कस्यागमाननुगृहीतत्वेनाप्रतिष्ठितत्वस्य तत्रैव सिद्धेस्तथा प्रधानाशाब्दत्वस्य ईक्षतेर्नाशब्दमित्यत्र तद्विवरणात्मके आनुमानिकपादे

च त्वयोपपादितत्वेन तत्कारणताया अनागमिकत्वस्य सिद्धत्वेन तत्कारणतासाधनतर्कस्यागमाननुगृहीततया-ऽप्रतिष्ठितत्वसिद्धेस्तदुभयोपपादकत्वे तर्काप्रतिष्ठानादित्यस्य शास्त्रयोनित्वादित्यादिना पौनरुक्त्यमित्यर्थः । नन्वत्र प्रमाणमूलस्य तर्कस्य प्रामाण्यमुच्यते न त्वप्रामाण्यनिरास इति कथमस्य द्वितीयपक्षस्य दूषणत्वं प्रतिष्ठितिपदेनाप्रामाण्यनिरासविवक्षया; तथात्वे च हेत्वनुक्तिरेव । हेत्वर्थगर्भतया द्वितीयपक्षानुवाद-परस्याक्षजागममूलस्येत्यस्यैतद्धेतुत्वाश्रयणेपि अप्रयोजकत्वमित्यतोऽभिप्रायमाह **न हीति** । अन्यथाऽति-प्रसङ्ग इति भावः ॥ **विपक्षे बाधकं चाहेति** । अक्षजागममूलस्यापि तर्कस्याप्रामाण्ये बाधकान्तर-माहेत्यर्थः । स्ववाचा व्याहतिमेवोपपादयति **स्वयमेव हीति** । उपलक्षणं चैतत् । तर्काप्रतिष्ठितत्व-साधकतर्कस्याप्यप्रतिष्ठितत्वेन तर्काप्रतिष्ठानासिद्धेः 'मन्तव्यः सोऽन्वेष्टव्यो यस्तर्केणानुसन्धत्ते' इत्यादिश्रुति-स्मृतिविरोधाच्चेत्यपि द्रष्टव्यम् ॥ **पुरुषमतिवैश्वरूप्यजन्मेति** । पुरुषमतीनां वैश्वरूप्यं विचित्रत्वं तज्जन्मा विचित्रपुरुषमतिजन्मेति यावत् ॥ **यतोऽस्यापि तर्कस्येति** । तर्कस्याप्रतिष्ठितत्वसाधको यः पुरुषमति-वैश्वरूप्यजन्मा तर्कोऽप्रतिष्ठितः इत्येवंरूपस्तर्कस्तस्यापीत्यर्थः । यस्तर्कस्याप्रतिष्ठितत्वसाधकस्तर्कः स प्रतिष्ठितो न वा । प्रथमे कुतः सर्वतर्काप्रतिष्ठितत्वं तदुपपादकतर्कस्यैव तदभावात् । द्वितीये कुतः सर्वतर्काप्रतिष्ठितत्वं तत्प्रसाधकतर्कस्यैवाप्रतिष्ठितत्वादित्यर्थः ।

---

स०— पुरुषमतिवैश्वरूप्यं नाम तन्मतेरनेकप्रकारत्वम् ।

प०— **सिद्धान्ततयेति** । साङ्ख्योत्प्रेक्षितैः विलक्षणत्वादितर्कैः ब्रह्मजगतोरुपादानोपादेयभाव-खण्डनमयुक्तं तर्काणामप्रतिष्ठानादिति वर्णयन्तीत्यर्थः । गूढाभिसन्धिरित्युक्तमाशयं व्यनक्ति **अयमाशय इति** ॥ **स्वमतेनेति** । मायिमतेनेत्यर्थः ॥ **अस्यार्थस्येति** । मायावादिमते शास्त्रयोन्यादिषु सूत्रेषु प्रधानकारणत्वं नागमवेद्यं किन्तु ब्रह्मकारणत्वमेवेत्युक्त्या साङ्ख्यतर्काणामागमासंवादस्योक्तत्वात् पौनरुक्त्य-मित्यर्थः ॥ **वैरूप्यजन्मेति** । वैरूप्येण जन्म यस्येति बहुव्रीहिः । पुरुषमतिवैचित्र्यादुत्पन्न इत्यर्थः ॥

या०— **वाक्यं भित्त्वेति** । तर्काप्रतिष्ठानादन्यथाऽनुमेयमित्येकवाक्यतया श्रुतसाध्यान्वयेन शङ्काशेषत्वे संभवति श्रौतस्य विलक्षणयोरपि कार्यकारणभावस्य न हानिस्तर्कस्याप्रतिष्ठितत्वादित्येवमध्या-हृतसाध्यान्वयेन वाक्यं भित्त्वा सिद्धान्तशेषतयैव वर्णयन्तीत्यर्थः । गूढमभिसन्धिं प्रकटयति **अयमा-शय इति** ॥ **शास्त्रयोनित्वादित्यादि** । शास्त्रयोनिसूत्रेऽनुमानेनान्यस्यैव जगत्कारणत्वमिति प्राप्ते जगत्कारणस्य शास्त्रैकसमधिगम्यत्वेन न तदननुगृहीतानुमानस्य तत्र प्रतिष्ठितत्वमिति, अथवेति वर्णकान्तरे-

णोक्तत्वात् । ईक्षतेरित्यत्र च 'अशब्दं हि तत्' इत्यनेन तद्विवरणपरेणानुमानिकमित्यादिना च साङ्ख्यानुमानसिद्धं प्रधानं क्वापि श्रुतिवाक्ये प्रतिपाद्यं नेति समर्थनेन तदीयानुमानस्यागमानुग्रहाभावलाभेनाप्रतिष्ठितत्वस्योक्तत्वादित्यर्थः । **वैश्वरूप्यं** विविधप्रकारत्वम् ।

श्री० — **यच्चेति** । अन्यथाऽनुमेयमिति पूर्वपक्षे प्राप्ते तर्काप्रतिष्ठानादित्यनेन सिद्धान्तः क्रियत इत्यर्थः । गूढाभिसन्धिमाह **अयमिति स्वमतेनेति** । सिद्धान्तिभिः स्वमतेनेत्यर्थः ॥ **अस्यार्थस्येति** । साङ्ख्योक्तानुमानस्यागमानुग्रहाभावेनाप्रतिष्ठितत्वस्योक्तत्वादित्यर्थः । **अप्रतिष्ठा** अप्रमाणता । तथा च पुरुषमतिवैश्वरूप्यजन्यत्वात्सर्वतर्कोऽप्रमाणमित्यस्य तर्कस्य यदि प्रामाण्यं तर्हि सर्वस्तर्कोऽप्रमाणमिति प्रतिज्ञारूपस्ववचनव्याहतिः अस्यैव प्रमाणत्वात् । यदि चाप्रामाण्यं तर्हि सर्वतर्काप्रामाण्यसाधकाभावात्सर्वतर्कोऽप्रमाणमिति व्याहतमिति भावः ।

**सु० — अत्र सूत्रम् ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याता इति ॥ तत्केचिद्व्याचक्षते । एतेन 'न विलक्षणत्वादि'त्यादिना प्रकृतेन शिष्टैः केनचिदंशेन परिगृहीतस्य प्रधानकारणवादस्य निराकरणेन शिष्टैर्मनुव्यासप्रभृतिभिः केनचिदप्यंशेनापरिगृहीता येऽण्वादिकारणवादास्तेऽपि** व्याख्याता द्रष्टव्या इति । तदिदं दूषयति न चेति ।

अनु० — ॐ **एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः** ॐ ॥

न च शिष्टागृहीतत्वं निरीशादीशवादिनः ॥

**आस्तां तावदभ्यधिकाशङ्काप्रकारः, परिहारातिदेशप्रकारश्च । यत्तावदुक्तम् 'सांख्यादपि वैशेषिकादेरतिशयेन शिष्टागृहीतत्वं' तदति(तीव )विरुद्धम् । सांख्यस्य निरीश्वरत्वात् । वैशेषिकादेस्तु सेश्वरत्वात् । वैपरीत्यस्यैवोचितत्वात् । इह हि ब्रह्मणो जगत्कारणत्वे विप्रतिपत्तयो निरस्यन्ते । तत्र सांख्यो ब्रह्मैव नाभ्युपैति । कुतस्तदीयं जगत्कारणत्वमित्यतिशयेन वेदान्तवादविरोधित्वाच्छिष्टापरिगृहीतः । वैशेषिकादिस्तु, ब्रह्म तस्य जगन्निमित्तत्वं चाङ्गीकृत्योपादानतामात्रं नाङ्गीकुरुत इतीषद्विरोधित्वात् ईषच्छिष्टापरिगृहीत इति युक्तम् । सत्कार्यवादित्वादिकं तु प्रकृतासङ्गतमेव । अन्यथा यागीयहिंसानिषेधादिना विपरिवर्तः स्यात् । अथ वेदसंवादबाहुल्याबाहुल्यप्रयुक्तमिदम् । मैवम् ( तन्न । तत्त्वानां ) प्रतिपाद्यानामपरिसंख्यातत्वादिति ।**

**किं तर्ह्यस्य सूत्रस्याभिधेयमित्यत आह** अत इति ।

अतोऽवशिष्टजीवादिकर्तृताऽत्र निषिध्यते ॥

**अर्थान्तरस्य निराकृतत्वादित्यर्थः । अपव्याख्याननिराकरणस्य स्वव्याख्यानदार्ढ्यार्थत्वान्नासङ्गतमिति सूचयितुमत इत्युक्तम् । अवशिष्टा निराकृताया अभावकर्तृतायाः, जीवादिकर्तृता, जगत इति शेषः । अनेन निराकृतादवशिष्टा वेदापरिगृहीता जीवप्रधानासत्कालस्वभावादिवादा निराकृता इति व्याख्यातं भवति । तत्र शिष्टा इत्येवोक्ते ब्रह्मकारणवादोऽपि प्राप्नोति । तदर्थमपरिग्रहा इत्युक्तम् । तन्मात्रे तूक्ते अभावकर्तृत्ववादोऽपि गृह्येत । तथा च पुनरुक्तिरतिदेशानुपपत्तिश्च स्यात् । अतः शिष्टा इत्युक्तम् । अभ्यधिकाशङ्कासद्भावसूचनेन सूत्रारम्भोपपादनार्थं च शिष्टाः शिष्टतया प्रतीताः, न तु तत एव निराकृततयेति ।**

**शे०** — न चेत्याद्युत्तरभाष्यानर्थक्यम् आशङ्क्योत्तरसूत्रापव्याख्याननिरासार्थत्वान्न तदिति भावेन तत्सूत्रमुपन्यस्य तदपव्याख्यानप्रकारप्रदर्शनपूर्वकं दूषकतयोत्तरभाष्यं योजयति **अत्र सूत्रमित्यादिना ॥ केनचिदंशेन** कार्यकारणयोरनन्यत्वादिनेति यावत् । अण्वादीत्यादिपदेन स्वभाववादपरिग्रहः ॥ **व्याख्याता इति** । निराकृता इत्यर्थः ।

**आस्तां तावदभ्यधिकाशङ्काप्रकार इति** । न च ब्रह्मणो जगदुपादानत्वं युक्तम् । पटादिभ्यो न्यूनपरिमाणानामेव तन्त्वादीनां पटाद्युपादानत्वदर्शनेन कार्यादल्पपरिमाणस्योपादानत्वनियमस्थित्या अत्यन्ताल्पपरिमाणादुपादेयाज्जगतः परममहतश्चिदात्मन एव उपादानत्वायोगात् । तस्माद्यत्रेदमल्पतारतम्यं विश्राम्यति, यतो न क्षोदीयः संभवति, तत् जगतो मूलकारणं परमाणुः । क्षोदीयोन्तरानन्त्ये सावयवत्वेन मेरुसर्षपयोस्तुल्यपरिमाणत्वप्रसङ्गोऽनन्तावयवत्वादुभयोः । तस्मात्परममहतो ब्रह्मण उपादानादभिन्नमुपादेयं जगत्कार्यमभिदधती श्रुतिः प्रतिष्ठितप्रामाण्यतर्कविरोधात्सहस्रसंवत्सरसत्रगतसंवत्सरश्रुतिवज्जघन्यवृत्त्यैव कथञ्चिद्व्याख्येया । न तु तदनुरोधेन ब्रह्मणो जगदुपादानत्वसिद्धिरिति भामतीरीत्या गतार्थताशङ्कानिरासायाभ्यधिकाशङ्काप्रकार आस्तामित्यर्थः ॥ **परिहारप्रकारातिदेशश्चेति** । परमगम्भीरस्य जगत्कारणस्य तर्कानवगाह्यत्वं, तर्कस्य चाप्रतिष्ठितत्वमन्यथाऽनुमानेऽप्यनिर्मोक्ष, आगमविरोधश्चेत्येवंरूपं निराकरणकारणमत्रापि तुल्यमिति परिहारातिदेशप्रकारश्चास्तामित्यर्थः । आस्तामित्यरुचिमत्र सूचयति । तद्बीजं तु एवम् । अधिकाशङ्कासद्भावेनास्य पूर्वाधिकरणेनागतार्थत्वप्राप्तावपि 'एतेन सर्वे व्याख्याताः' इत्यनेन गतार्थत्वमवर्जनीयमेव, त्वया तत्राप्यस्यैवार्थस्योक्तत्वादिति ॥ **वैपरीत्यस्यैवेति** । वैशेषिकादेरीषच्छि-

ष्टापरिगृहीतत्वं साङ्ख्यस्यातिशयेन शिष्टापरिगृहीतत्वमिति वैपरीत्यस्यैवेत्यर्थः । तदेवोपपादयति **इह हीत्यादिना** ।

ननु साङ्ख्यस्य सत्कार्यवादित्वाद्वैशेषिकादेस्त्वसत्कार्यवादित्वान्न वैपरीत्यमुचितमित्यतो ब्रह्मणो जगत्कारणत्वे विप्रतिपत्तिनिरासावसरे ब्रह्मतदीयकारणत्वाभ्युपगमतदनभ्युपगमप्रयुक्तवैषम्यस्य 'ईषच्छिष्टापरिगृहीतत्व-अतिशयेन शिष्टापरिगृहीतत्व' अद्योतकत्वेपि सत्कार्यवादित्वासत्कार्यवादित्वप्रयुक्तवैषम्यस्योक्तविभागागमकत्वेन प्रकृतासंङ्गतत्वान्नोद्भावितवैपरीत्यनिरासकत्वमित्याह **सत्कार्येति** । अवान्तरप्रमेयाभ्युपगमानभ्युपगमप्रयुक्तवैषम्यस्याप्युक्तविभागप्रयोजकत्वे बाधकमाह **अन्यथेति** ।। **यागीयहिंसानिषेधादिनेति** । साङ्ख्येन यागीहिंसाया निषिद्धत्वाभ्युपगमात्स एव चातिशयेन शिष्टापरिगृहीतः । वैशेषिकादिना तु यागीहिंसाया धर्मसाधनत्वस्वीकारात्स ईषच्छिष्टापरिगृहीत इति विपरिवर्तो वैपरीत्यं स्यादित्यर्थः । साङ्ख्यस्य यागीयहिंसानिषेधाभ्युपगमस्तु तद्ग्रन्थादवगम्यते । तथा हि तद्ग्रन्थः 'दृष्टवदानुश्राविकः स ह्यविशुद्धिक्षयातिशययुक्तः' इति । व्याख्यातं चैतत्तत्त्वकौमुद्याम् 'गुरुपाठादनुश्रूयत एव न तु केनचित्क्रियत इति अनुश्रवो वेदस्तत्र भव आनुश्राविको वेदज्ञातः इति यावत् । आनुश्राविकोऽपि कर्मकलापः दृष्टवदेव दृष्टेन तुल्यं वर्तत इति दृष्टवत् । ऐकान्तिकात्यन्तिकदुःखप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात् । न चैवं विवेकज्ञानस्याप्यात्मा ज्ञातव्यः प्रकृतितो विवेक्तव्य इत्यनुश्रवणेनानुश्राविकत्वात् आत्यन्तिकदुःखनिवृत्तिसाधनत्वं न स्यादिति वाच्यम् । आनुश्राविक इति सामान्याभिधानस्य कर्मकलापाभिप्रायकत्वेनाविरोधात् । नन्वानुश्राविकत्वाविशेषात्कथमेकस्यात्यन्तिकदुःखप्रतीकारानुपायत्वमपरस्य च तदिति वैषम्यनियामकाभावेनोभयोरप्येकप्रकारत्वस्यैवावश्यकत्वादित्यत उक्तं 'स ह्यविशुद्धिक्षयातिशययुक्तः' इति । तत्राविशुद्धियुक्तत्वं सोमयागादेः पशुबीजादिवधसाधनत्वात् । तस्य च 'न हिंस्यात्सर्वभूतानी'ति निषिद्धत्वादवसीयते । न च 'न हिंस्यात्सर्वभूतानि' इति निषेधस्य सामान्यशास्त्रत्वेन दुर्बलत्वादग्नीषोमीयं पशुमालभेतेति यागविधेश्च विशेषशास्त्रत्वेन प्रबलत्वात् । प्रबलशास्त्रानुसारेण निषेधशास्त्रस्याविहितहिंसानिषेधकत्व एव पर्यवसानात्पश्वादिवधसाधनस्यापि सोमयागादेरनिषिद्धत्वात् कथमविशुद्धत्वमिति वाच्यम् । विरोध एव हि बलीयसा दुर्बलं बाध्यते । न चानयोः शास्त्रयोर्विरोधोऽस्ति भिन्नविषयत्वात् । तथा हि । न हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते । न तु हिंसाया अक्रत्वर्थत्वमपि । अग्नीषोमीयादिवाक्येन च हिंसायाः क्रत्वर्थत्वम् । न चानर्थहेतुत्वक्रतूपकारत्वयोः कश्चिद्विरोधः । सा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीति । ततश्च भिन्नविषयत्वेनाविरुद्धतया विशेषशास्त्रेण सामान्यशास्त्रस्य बाधायोगाद्युक्त एव 'न हिंस्यादि'ति यागीय-

हिंसाया अपि निषेध इति निषिद्धत्वात्सोमयागादिकर्मणामविशुद्धत्वमेवेति युक्तमुक्तं यागीयहिंसा-निषेधादिनेति दिक् ।

**प्रतिपाद्यानामिति** । साङ्ख्यशास्त्रे वैशेषिकशास्त्रे च प्रतिपाद्यानामित्यर्थः ॥ **अपरिसङ्ख्यातत्वादिति** । निरवधिकत्वादित्यर्थः । प्रतिपाद्यानामर्थानामेतावत्त्वमेवेति निश्चये हि वैशेषिकापेक्षया साङ्ख्यशास्त्रे वेदसंवादबाहुल्यं तदपेक्षया च वैशेषिकशास्त्रे तदल्पत्वमिति वेदसंवादबाहुल्यनिश्चयो भवेत् । ततश्च तदधीन उक्तविभागोऽपि सिध्येत् । प्रतिपाद्येयत्तानिश्चय एव चाशक्यः प्रतिपाद्यानामनन्तत्वादित्याशयः । इतिशब्दो व्याख्याननिरासंसमाप्त्यर्थः ।

'सूत्रारम्भोपपादनार्थं चे'त्यतःपरं 'शिष्टाः' इत्युक्तमनुवर्तते । कथमनेनाधिकाशङ्कासूचनमित्यतः तदुपयोगितया तद्व्याचष्टे **शिष्टाः शिष्टतया प्रतीता इत्यादिना** ।

**स०**— ननु साङ्ख्येन सत एव कार्यस्योत्पादाङ्गीकारात् वैशेषिकेण तदनङ्गीकारात् कथं तस्य शिष्टापरिगृहीतत्वाभाव इत्यत आह **सत्कार्यवादित्वादिकमिति** । **अन्यथेति** । साङ्ख्येन यागीयहिंसानिषेधादेरङ्गीकृतत्वात्, वैशेषिकेण तदनङ्गीकारात् साङ्ख्यस्यैव शिष्टापरिगृहीतत्वं वैशेषिकस्यैव शिष्टपरिगृहीतत्वं स्यादित्यर्थः ।

---

**प०**— **अत्रेति** । अधिकरणे चरमं सूत्रमित्यर्थः । अधिकाशङ्काप्रकारादेरदूषणादनुमतत्वभ्रान्तिं निराह **आस्तामिति** । तावच्छब्देन तयोरप्यनुपपन्नत्वं सूचयति । तच्च व्यक्तं चन्द्रिकायाम् । ननु सत्कार्यवादस्य महदादितत्त्वगणादेश्च शिष्टसंमतस्य वैशेषिकादिभिरनङ्गीकाराच्छिष्टापरिगृहीतत्वमित्यतः तदप्रयोजकं, विप्रतिपन्नप्रधानप्रमेयविषये सांख्यस्येव वैशेषिकादेरतिविरोधाभावादिति भावेन वैपरीत्यौचित्यं व्यनक्ति **इह हीति** ॥ **प्रकृतेति** । विप्रतिपन्नप्रमेयासङ्गतमित्यर्थः ॥ **यागीयेति** । सांख्येन यागीयहिंसाया निषेधाद्वैशेषिकादिना तदनिषेधाद्विपरीतत्वमेव शिष्टापरिगृहीतत्वस्य स्यादित्यर्थः ॥ **अतिदेशानुपपत्तिरिति** । अभेदे तदयोगादिति भावः ।

**या०**— ॐ **एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः** ॐ ॥ **आस्तां तावदभ्यधिकाशङ्काप्रकार इत्यादि** । श्रुत्यवष्टम्भेन जगदभिन्नं ब्रह्म उपादानमिति पूर्वमभिहितं, तदयुक्तम् । कार्यकारणयोरभेदस्य बाधितत्वात् । अभेदे कारणरूपवत्कार्यत्वानुपपत्तेः, करोत्यर्थानुपपत्तेश्च । अभूतभवनं हि तदर्थः । न चास्य कारणात्मत्वे किञ्चिदभूतमस्ति । यदर्थमयं पुरुषो यतेत । अभिव्यक्त्यर्थमिति

चेन्न । तस्या अपि कारणात्मत्वेन सत्त्वात् । असत्त्वे वाऽभिव्यङ्ग्यस्यापि तद्वत्प्रसङ्गेन कारणात्मत्व-व्याघातात् । भेदाभेदयोश्च परस्परविरोधेनैकत्र सहासंभवात् । तस्मात्कार्यात् कारणमेकान्तत एव भिन्नम् । न च भेदे गवाश्ववत्कार्यकारणभावानुपपत्तिरिति साम्प्रतम् । अन्यत्वाविशेषेऽपि समवाय-भेदस्यैवोपादानोपादेयभावनियामकत्वात् । यस्याभूत्वाभवतः समवायस्तदुपादेयम् । यत्र च समवायः तदुपादानम् । उपादानत्वं च कारणस्य कार्यादल्पपरिमाणस्य दृष्टम् । यथा तन्त्वादीनां पटादिभ्यो न्यूनपरिमाणत्वम् । चिदात्मनस्तु परममहत उपादानान्नात्यन्ताल्पपरिमाणमुपादेयं भवितुमर्हति । तस्मा-द्यत्रेदमल्पतारतम्यं विश्राम्यति यतो न क्षोदीयः संभवति तज्जगतो मूलकारणं परमाणुः । क्षोदीयोऽन्त-रानन्त्ये तु मेरुसर्षपयोस्तुल्यपरिमाणत्वप्रसङ्गोऽनन्त वयवत्वादुभयोः । तस्मात्परममहतो ब्रह्मण उपादाना-दभिन्नमुपादेयं जगत्कार्यमभिदधती श्रुतिः प्रतिष्ठितप्रामाण्यतर्कविरोधात्सहस्रसंवत्सरसत्रगतसंवत्सरश्रुति-वत्कथञ्चिज्जघन्यवृत्त्या व्याख्येयेत्यभ्यधिकाशङ्काप्रकारः । तुल्यमत्रापि परमगम्भीरस्य जगत्कारणस्य तर्का-नवगाह्यत्वं तर्कस्य चाप्रतिष्ठितत्वमन्यथाऽनुमानेऽप्यनिर्मोक्ष आगमविरोधश्चेत्येवंजातीयकं निराकरणकारण-मिति परिहारातिदेशप्रकारश्चेत्यर्थः । आस्तामित्यनेनारुचिः सूचिता । तद्बीजं त्वेवमभ्यधिकाशङ्का-सद्भावेन पूर्वाधिकरणेनागतार्थत्वेऽपि 'एतेन सर्वे व्याख्याताः' इत्यनेन गतार्थत्वमस्यापरिहार्यमिति ध्येयम् । ननु शिष्टसंमतं सत्कार्यवादित्वादिकं सांख्येन स्वीकृतं न वैशेषिकैरतः सांख्य एवातिशयेन शिष्टसंमत इत्यत आह **सत्कार्यवादित्वादिकमिति** । आदिपदेन पुरुषे कर्तृत्वाभावादिकस्य परिग्रहः । तस्यापि वेदान्तिसंमतत्वात् ॥ **यागीयहिंसेति** । सांख्येन यागीयहिंसाया अपि निषिद्धत्वं स्वीकृतमिति सांख्यो-ऽतिशयेन शिष्टापरिगृहीतः; वैशेषिकादिस्तु यागीयहिंसाया धर्मसाधनत्वमङ्गीकरोतीतीषच्छिष्टापरिगृहीत इति विपरिवर्तो वैपरीत्यं स्यादित्यर्थः । आदिपदेनाप्रामाण्यस्वतस्त्वादिकं सांख्येन स्वीकृतं, वैशेषिकादि-भिस्तु तत्परतस्त्वम्; अतोऽपि विपरिवर्त इति ग्राह्यम् ॥ **प्रतिपाद्यानामिति** । वेदप्रतिपाद्यानां भगवदादि-तत्त्वानां सांख्यशास्त्रे परिसंख्यानाभावात् सांख्यशास्त्रप्रतिपाद्यानां स्वतन्त्राणां प्रधानादितत्त्वानां वा वेदे परिसंख्यानाभावात् । तथाच न सांख्योक्तस्य वेदसंवादः कुतस्तद्बाहुल्यं, ततश्चात्रापि विपरिवर्तः स्यादित्यर्थः ।

**श्री०**—ॐ **एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः** ॐ ॥ **केनचिदंशेनेति** । उपादा-नत्वेनेत्यर्थः । सांख्येन सत्कार्यवादस्वीकाराच्छिष्टपरिगृहीतः, वैशेषिकेण तदनङ्गीकारात् स शिष्टापरिगृ-हीत इति युक्तमिति चेत्तत्राह **सत्कार्येति** ॥ **प्रकृतेति** । ब्रह्मणो जगत्कारणत्वे विप्रतिपत्तिनिरासो हि प्रकृत इत्यर्थः ॥ **अन्यथेति** । यदि प्रकृतासङ्गतमपि वैषम्यं स्वीकृत्य शिष्टापरिगृहीतत्वादिकं व्युत्पाद्यत

इत्यर्थः । तर्हि सर्वशिष्टपरिगृहीतयागीयहिंसाकर्तव्यताया वैशेषिकेण स्वीकारात् स शिष्टपरिगृहीतः, सांख्येन च तदकर्तव्यतास्वीकारात्स शिष्टापरिगृहीत इति विपरिवर्तो वैपरीत्यं स्यादित्यर्थः । **इदं** शिष्टापरिगृहीतत्वादिकम् ॥ **ब्रह्मकारणतावादोऽपीति** । तस्यापि निराकृताभावकर्तृकताया अवशिष्टत्वादित्यर्थः । उपपादनार्थं च शिष्टा इत्युक्तमिति वर्तते । तदेवोपपादयति **शिष्टतयेति** ॥ **न त्विति** । **शिष्टतया** निराकृताया असत्कारणतायाः सकाशादवशिष्टतया । **प्रतीता** वस्तुगत्या वक्ष्यमाणरीत्या युक्तिविरुद्धत्वेन निराकृता एव परन्तु तत एव न्यायेन निराकृतत्वेन न प्रतीयन्तेऽतः शिष्टत्वेन प्रतीता इत्यर्थः । न तु तत एवेत्यनेनाधिकाशङ्काऽस्तीति सूचितम् । जीवकारणकत्वे घटः, अचेतनकारणकत्वे क्षीरकारणकं दधि, निष्कारणकत्वे कण्टकतैक्ष्ण्यं दृष्टान्त इत्यर्थः ।

**सु० — ननु जीवादीत्यादिग्रहणेनासत्कर्तृकत्वं गृहीतम् । तदसत् । तस्य 'असदिति चेत्' इत्यादिना निरस्तत्वेन पौनरुक्त्यादिप्रसङ्गादित्यत आह** तन्मन इति ।

**अनु० —** तन्मनोऽकुरुतेत्यादेः सतो मनसो जनिः ॥
निवारिता तु पूर्वत्र ह्यकस्मादिति तद्विना ॥
असतो विश्वजननमाशङ्क्यात्र निषिध्यते ॥

इत्यादेः **प्रमाणात्** । आशङ्कितेति शेषः । **आदिपदेनोक्तयुक्तिर्गृह्यते** । असतः **अभावस्य** । मनस इति । **ज्ञानेच्छाप्रयत्नेभ्यः** जनिः । **जगत इति शेषः । पूर्वत्र त्विति संबन्धः । तच्च प्रतिषेधमात्रत्वादित्यादिना स्फुटमवगम्यत इति हिशब्दः । अकस्माद्धीदमाविरासीदित्यादिश्रुत्या । तत् मनो,** विना । असतः **शून्यात्** ।

**एतदुक्तं भवति । पूर्वमभावस्य जगत्कारणत्वं निराकृतमिदानीं तु शून्यस्य । किञ्च पूर्वं कर्तृत्वेनाधुना कर्तृतां विनैवेति न पौनरुक्त्यादीति । यद्वा भाष्यदिशा निष्कारणैवात्र जगज्जनिराशङ्कितेति न पौनरुक्त्यादिकम् । अत्र शङ्काप्रापकप्रमाणोपन्यासस्तु अस्यैव प्रमेयभेदस्योपपादनार्थम् ।**

**एतेनाभ्यधिका शङ्काऽपि सूचिता । तथा हि । मा भूदभावकर्तृकं जगत्, तथापि जीवादिभ्यो जनिमद्भविष्यति । 'जीवाद्भवन्ति भूतानि', 'प्रधानादिदमुत्पन्नम्', 'अकस्माद्धीदमाविरासीदि'त्यादिश्रुत्यनुगृहीतेभ्यो घटदधिकण्टकतैक्ष्ण्यादिदृष्टान्तेभ्यः । न हि जीवादीनां प्रतिषेधमात्रत्वमस्ति, येनोक्तयुक्तिविरोधः स्यात् । असत्त्वाचेतनत्वादेरुपलक्षणमेतदिति चेत् ॥ किमत्रासदादेः कारणत्वमात्रं नेत्युच्यते, किंवा कर्तृत्वम् । नाद्यः । उक्तदृष्टान्तेषु व्यभि-**

**चारात् । न द्वितीयः । कर्तृत्वस्यास्माभिरनङ्गीकृतत्वादिति । अत एवात्र सर्वत्र कर्तृशब्दः कारणत्वमात्रपरो द्रष्टव्यः ।**

शे० — ननु तन्मनोऽकुरुतेत्युत्तरभाष्यमनर्थकम् । न चासदिति चेदित्यादिसूत्राणामेतेनेत्यस्य च प्रमेयभेदोपदर्शनार्थमेतदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न च पुनरुक्त्यादिशङ्कापरिहारस्तत्प्रयोजनमिति वाच्यम् । जीवादिकर्तृतानिरासपरस्यैतेनेत्यस्यासत्कर्तृतानिरासपरैः 'असदिति चेत्' इत्यादिसूत्रैर्भिन्नविषयतया तच्छङ्काया एवानुदयादित्यतः समानविषयतोपदर्शनेन पौनरुक्त्यादिशङ्कामुत्थाप्य तन्निवर्तकतयोत्तरभाष्यं योजयति **ननु जीवादीत्यादिना ॥ पौनरुक्त्यादीति** । न च तत्रासत्कर्तृतामात्रनिरासादत्र च तदनिराकृतजीवादिकर्तृताया अपि निरासान्न तेन पौनरुक्त्यमिति वाच्यम् । तथापि अंशे पौनरुक्त्यापरिहारात् । अधिकविषयतयाऽस्य तेनागतार्थत्वेऽप्येतदपेक्षयाऽल्पविषयकस्य तस्यानेन गतार्थताशङ्काया अवर्जनीयत्वाच्चेति भावः । आदिपदेनातिदेशानुपपत्तिपरिग्रहः ॥ **उक्तयुक्तिरिति** । प्रागभावस्य कर्तृत्वसाधकतया पूर्वपक्ष्युक्तयुक्तिरित्यर्थः । पूर्वत्राभावस्य जगत्कर्तृतानिरास इत्यर्थस्य मूलारूढतासिद्ध्यर्थमसच्छब्दमभावपरतया व्याख्याति **असतोऽभावस्येति** । ननु ज्ञानपूर्वकेच्छाप्रयत्नादिरूपप्रवृत्तेरेव कर्तृत्वादुदाहृतश्रुतौ चासतो ज्ञानेच्छाप्रयत्नप्रतिपादनाभावात्कथमस्याः श्रुतेरसतो जगत्कर्तृत्वे प्रमाणतयोदाहरणमित्यतोऽस्यां श्रुतौ मनःपरिणामस्य ज्ञानादेरेव लक्षणया मनःशब्देन ग्रहणान्न तदनुक्तिरिति भावेन मनस इत्यस्यार्थमाह **मनस इति ज्ञानेच्छाप्रयत्नेभ्य इति** । विश्वजननमित्युत्तरग्रन्थानुरोधेनापेक्षितं पूरयति **जगत इतीति** । 'निवारिता त्वि'त्यत्र तुशब्दस्य निष्प्रयोजनत्वादालोच्य भिन्नक्रमतया तं योजयति **पूर्वत्र त्विति संबन्ध इति** । ननु भाष्ये हिशब्दोऽनर्थक इत्यतः सौत्रासच्छब्दस्य शून्ये स्वारस्यात्तदनुरोधेन पूर्वत्र शून्यस्य जगत्कारणत्वनिरासस्यापि संभवात्पूर्वत्राभावस्य जगत्कारणतानिरासः कुतः, इत्यतोऽसच्छब्दस्य योगेनाभावपरतयोपपादितत्वेन शून्याभावसाधारणत्वात् । प्रतिषेधमात्रहेतोश्च शून्ये कथमप्यवृत्त्याऽभावमात्रनिष्ठत्वेन निरवकाशत्वात्तदनुरोधेन पूर्वत्राभावस्य जगत्कर्तृताया एव निरासोऽवगम्यत इत्युक्तार्थस्य स्फुटावगतिसूचनार्थत्वान्न तदिति भावेनाह **प्रतिषेधमात्रत्वादित्यनेन इति** ।

ननु पूर्वत्राभावस्योत्तरत्र च शून्यस्य जगत्कारणताया निरस्तत्वकथनमात्रेण पौनरुक्त्यादिपरिहारसंभवात्तदर्थं पूर्वत्राभावस्य जगत्कर्तृतोत्तरत्र च शून्यस्य जगत्कारणता निरस्यत इत्येतावत्प्रमेयभेदवर्णनं भाष्यकारीयमनर्थकमित्यतस्तावन्मात्रकथनेन पौनरुक्त्यादिपरिहारासिद्धेरेतावत्प्रमेयभेदकथनमिति न भाष्याभिप्रायः किन्तु तावन्मात्रेण तत्सिद्धावपि प्रकारान्तरेणापि तत्परिहार इत्यभिप्रेत्य भाष्येऽधिकाशङ्काकीर्तन-

मित्यभिप्रेत्य प्रकारद्वयेन पौनरुक्त्यपरिहारकतया भाष्याभिप्रायमाह **एतदुक्तं भवतीति** । नन्वेतेनेत्यस्य शून्यस्य जगत्कारणतानिरासपरत्वाश्रयणेन पौनरुक्त्यपरिहारो न युक्तः । अकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयोऽपीति भाष्ये कारणनैरपेक्ष्येणैव जगदुत्पत्तिरित्येतच्छङ्कानिरासपरतयाऽधिकरणारम्भस्य समर्थितत्वेन शून्यकारणतानिरासपरत्वस्य भाष्यविरुद्धत्वादित्याशङ्क्य भाष्योक्तप्रकारापेक्षयाऽसतो विश्वजननमित्यत्रोक्तप्रकारस्य वर्णकान्तरत्वान्न विरोध इति परिहारे सत्येव निरवकाशभाष्यानुसारेणानुव्याख्यानस्यापि भाष्योक्तप्रकारसमर्पकतयाऽधिकरणारम्भसमर्पकत्वसंभवे किं प्रकारान्तरत्वाश्रयणेनेत्याशयवान्भाष्यैकार्थताश्रयणेनापि पौनरुक्त्यादिपरिहारमाह **यद्वेति** । ततश्च मूलेऽकस्मादिति श्रुतिमनुसृत्य, तद्विना, कारणं विनैव असतो विश्वस्य जननमाशङ्क्येत्यपि योजना सूचिता भवति । ननु च प्रमेयभेदकथनमात्रेण पौनरुक्त्यादिपरिहारसिद्धेस्तन्मनोऽकुरुतेत्यादेरित्यकस्मादिति च प्रमाणोदाहरणं भाष्येऽनर्थकमित्यत आह **अत्रेति** । प्रमेयभेदकथनमात्रेणैव पौनरुक्त्यादिपरिहारसिद्धेर्न प्रमेयभेदोपपादनस्यापि प्रयोजनं किञ्चिदिति पूर्वत्रापरितोषात् आह **अभ्यधिकाशङ्काऽपीति** । अभ्यधिकाशङ्कासूचनार्थं प्रमाणोदाहरणं कृतमित्यर्थः ॥ **दृष्टान्तेभ्य इति** । **तत्रावधृतव्याप्तिकेभ्यो** विप्रतिपन्नं जीवकर्तृकं कार्यत्वाद्घटवत्, विप्रतिपन्नमचेतनकर्तृकं कार्यत्वात् दधिवत्, विमतमसत्कारणकं निष्कारणकं वा कार्यत्वात्कण्टकतैक्ष्ण्यादिवत्, इत्यनुमानेभ्य इत्यर्थः । प्रतिषेधमात्रत्वानुमानप्रतिरुद्धत्वान्नोक्तानुमानेभ्यो जीवादीनां कर्तृत्वसिद्धिरिति गतार्थतामाशङ्क्य किमत्र प्रतिषेधमात्रत्वं श्रौतं जीवादीनामकर्तृतासाधकतयाऽभिमतं, किंवा तदुपलक्षितमसर्वज्ञत्वाचेतनत्वादिकमिति विकल्पद्वयं मनसि निधायाद्यमसिद्ध्या दूषयति **न हीति** । द्वितीयमाशङ्कते **असत्त्वाचेतनत्वादेरिति** । आदिपदेनासर्वज्ञत्वपरिग्रहः ॥ **उक्तदृष्टान्तेष्विति** । घटादिदृष्टान्तेष्वित्यर्थः । तत्र सत्यप्यसर्वज्ञत्वादावकारणताया अभावादित्यर्थः । न च चेतनत्वे सतीति विशेषणान्न घटे व्यभिचार इति वाच्यम् । तथाऽपि कुलाले तदपरिहारात् ॥ **अनङ्गीकृतत्वादिति** । तथा च सिद्धसाधनत्वेनाभासत्वान्न सत्प्रतिपक्षत्वमिति भावः । नन्वत्र जीवादीनां विश्वकारणतामात्रपरत्वे पूर्वपक्षस्य 'अतोऽवशिष्टजीवादिकर्तृता' इत्यनुव्याख्याने, 'अकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयोऽपी'ति भाष्ये च जीवादिकारणतेति कारणताशब्दस्यैव प्रयोक्तव्यत्वात्कर्तृशब्दप्रयोगो न युक्तः स्यादित्यत आह **अत एवेति** । कारणत्वमात्रस्यैव पूर्वपक्षत्वेन जीवादीनां कर्तृत्वस्य पूर्वपक्षत्वाभावादेवेत्यर्थः ॥ **अत्र सर्वत्रेति** । अत्रैतत्सूत्रव्याख्याने सर्वत्र भाष्येऽनुव्याख्याने चेत्येवं सर्वत्रेत्यर्थः ।

स० — **असत्त्वाचेतनत्वादेरिति** । आदिपदेनासार्वज्ञ्यपरिग्रहः । **उक्तदृष्टान्तेति** । जीवादेर्जनिमत्त्वे प्रयुक्तेषु घटदधिकण्टकतैक्ष्ण्यरूपोक्तदृष्टान्तहेतु-कुलालक्षीरासत्सु असार्वज्ञ्याचेतनत्वासत्त्वेषु

सत्स्वपि घटादिकारणत्वस्यैव तत्र सत्त्वेन भवदनुमाने व्यभिचारादिति भावः ॥ **अत्र सर्वत्रेति** । अनुव्याख्याने भाष्ये चेत्यर्थः ।

प०— **पौनरुक्त्यादीति** । आदिपदेन अतिदेशायोगग्रहः । **उक्तयुक्तिरिति** । अभाव-कर्तृत्वपक्षे या युक्तिरुक्ता सेत्यर्थः । अत्र तदित्यनुवादः मनो विनेति व्याख्या । ज्ञानेच्छाप्रयत्नान्विनेति यावत् । अपौनरुक्त्याय प्रमेयभेदमात्रे वक्तव्ये प्रमा(णभेदोक्ति,णोक्तिर्व्यर्थेत्यत आह **अत्र शङ्का-प्रापकेति** । दृष्टान्तेभ्य इत्यस्य भविष्यतीति पूर्वसाध्येनान्वयः ॥ **उक्तेति** । आद्यसूत्रोक्तेत्यर्थः ॥ **अनङ्गीकृतत्वादिति** । तथाचोपलक्षणमाद्यसूत्रे न युक्तमिति भावः ।

या०— **पौनरुक्त्यादिप्रसङ्गादिति** । आदिपदेनातिदेशानुपपत्तिपरिग्रहः ॥ **तच्चेति** । निवारणमित्यर्थः ॥ **भाष्यदिशेति** । तत्राकर्तृकेत्युक्त्वा निष्कारणैव जनिराशङ्कितेत्यर्थः । नन्वेवं प्रमेयभेदेनैव पौनरुक्त्यादिपरिहारे संभवति उभयत्र शङ्काप्रापकप्रमाणभेदोपन्यासो व्यर्थ इत्यत आह **अत्र शङ्केति** । अस्मिंस्तु पक्षे 'असतो विश्वजननमि'ति मूलेऽसच्छब्दोऽभावपरः कारणस्येति शेष इति ज्ञात-व्यम् ॥ **घटेत्यादि** । जीवादुत्पन्नत्वे घटो दृष्टान्तः, अचेतनादुत्पन्नत्वे दधि, अकस्मादुत्पन्नत्वे कण्टक-तैक्ष्ण्यादीति ज्ञातव्यम् ॥ **असत्त्वाचेतनत्वादेरिति** । आदिपदेनासार्वज्ञ्यपरिग्रहः ॥ **उक्तदृष्टान्तेष्विति** । उक्तदृष्टान्ता येभ्यस्तथोक्ता इति बहुव्रीहिः । ततश्चोक्तदृष्टान्तजनकेष्वित्यर्थः । तथा च घटजनककुलाले असार्वज्ञ्यस्य, दधिजनकक्षीरेऽचेतनत्वस्य, कण्टकशौक्ल्यादिजनके संप्रतिपन्नकारणाभावेऽसत्त्वस्य व्यभिचार इति भावः ॥ **कर्तृत्वस्येति** । बुद्ध्यादिमत्त्वरूपमुख्यकर्तृत्वस्येत्यर्थः ॥ **अत एवात्र सर्वत्रेति** । अत्र एतत्सूत्रव्याख्याने सर्वत्र भाष्येऽनुव्याख्याने चेत्यर्थः । भाष्येऽकर्तृकत्वाचेतनकर्तृत्वजीवकर्तृत्वादयोऽपी-त्युक्तत्वेनानुव्याख्याने च 'अतोऽवशिष्टजीवादिकर्तृताऽत्र निषिध्यते' इति कर्तृशब्दस्य प्रयोगादिति भावः । एवमव्याख्याने एतत्सूत्रव्याख्यानपरानुव्याख्यानेऽन्यत्र कर्तृशब्दाश्रवणात्सर्वत्रेत्यस्य न स्वारस्य-मिति ध्येयम् ॥

श्री०— इदं न पूर्वोक्तयुक्तिनिराकृतमिति युक्ताऽभ्यधिकाशङ्केत्याह **न हीत्यादिना** । ननु पूर्वं प्रतिषेधमात्रत्वादित्येतावन्मात्रं यदि हेतुत्वेन विवक्षितं स्यात्तर्ह्येव जीवादिनिराकरणस्य तेन हेतुना असंभवादभ्यधिकाशङ्का स्यात् । न चैवम् । प्रतिषेधमात्रत्वपदेनासत्त्वाचेतनत्वास्वतन्त्रत्वादिहेतूनामुपलक्षण-करणात् । असज्जीवप्रधानानां कारणतानिषेधस्यैतैर्हेतुभिः कृतत्वेन नास्त्यभ्यधिकाशङ्केत्याशङ्कते अस-

**त्वेति** । अभ्यधिकाशङ्काकर्ता, पुनरभ्यधिकाशङ्का युक्ता उपलक्षितैः पूर्वहेतुभिस्तन्निराकरणायोगादित्युपपादयति **किमत्रेति** ॥ **उक्तेति** । प्रधानादिकं कारणं न अचेतनत्वादिहेतुभ्य इत्यत्र घटादावेव व्यभिचारादित्यर्थः । घटादेरपि रूपनवनीतदुःखादिकारणत्वादिति भावः ॥ **कर्तृत्वस्येति** । जीवादिः कर्ता नेति साधने जीवादिभ्यो जनिमद्भविष्यतीति जीवादेः सामान्यतः कारणत्वमात्रं वदद्भिरभ्यधिकाशङ्काकर्तृभिरस्माभिर्जीवादेः कर्तृताया अनङ्गीकारात्सिद्धसाधनं स्यात् । तस्मात्कारणतामात्रनिषेध एव कार्यः, तत्र च व्यभिचारः प्राप्नोति । तस्मात्पूर्वं प्रतिषेधमात्रत्वहेतुनाऽसत्त्वादिहेतूनुपलक्ष्याभ्यधिकाशङ्काभावो न वक्तव्य इति युक्तैवाभ्यधिकाशङ्केत्यर्थः । अत एव अभ्यधिकाशङ्काकर्त्रा मया जीवादेः कारणतामात्रस्यैवाङ्गीकारेण कर्तृताया अनङ्गीकारादित्यर्थः । **सर्वत्रेति** । भाष्येऽनुव्याख्याने चेत्यर्थः । अनेन 'जीवादिकर्तृताऽत्रे'ति कर्तृशब्दस्यैकत्रैव सत्त्वात्सर्वत्रेति कथमुक्तमिति शङ्कानवकाशः । केचित्तु जीवे प्रधानेऽपति चेत्येवं सर्वत्र जीवादौ श्रुतः कर्तृशब्द इत्यर्थ इत्याहुः ।

**सु०— नन्वत्र जीवादेर्विश्वकारणत्वमात्रं शङ्क्यते, तस्यैव वा । आद्ये न सिद्धान्तविरोधः । जीवस्य ह्यदृष्टाधारतया निमित्तत्वं प्रधानस्य चोपादानत्वमङ्गीकृतमेव । न द्वितीयः प्रापकाभावात् । कार्यस्य सकर्तृकत्वनियमदर्शनाचेत्यत आह** प्रापकमिति ।

---

**अनु०** — प्रापकं वाक्यमात्रं तु

**द्वितीय एवाशङ्क्यते । तस्य च प्रापकं 'न जीवात्कारणं परं', 'न ह्यन्यत्कारणं मतमि'त्यादिवाक्यम् । न च लोकविरोधः । वाक्यमात्रसिद्धेऽर्थे तत्प्रतिपन्नमेव गृह्यते न तु लोकोऽनुगम्यत इति पूर्वपक्षी मन्यत इति ।**

**ननु च प्रधानकारणत्वादिमतानि द्वितीयपादे निराकरिष्यन्ते । तेषामत्रापि निराकरणे पुनरुक्तिदोषः स्यादित्यतो** वाऽऽह प्रापकमिति । **अत्र शङ्काप्रापकं वाक्यमात्रं न तु समय इत्यर्थः । इदमुक्तं भवति । अत्र श्रुत्यनुगृहीताभिर्युक्तिभिः प्राप्तं प्रधानादिकारणत्वं निराक्रियते । उत्तरं(त्र) तु** सांख्यादिसमयप्राप्तम् । **अतोऽपि नोक्तदोष इति ।**

**नन्वेवं तर्ह्येतेनेत्यतिदेशः कथम् । उक्तपरिहारस्य पूर्वपक्षिणा परिहृतत्वादित्यत आह** परिहार इति ।

परिहारोऽविशेषितः ॥

**यद्यपि प्रतिषेधमात्रत्वं प्रधानादिष्वसिद्धम् । अचेतनत्वादिकं च कारणत्वमात्रवादे अनैकान्तिकम् । तथाऽपि पूर्वपक्षाणां युक्तिविरुद्धत्वं** यत्प्रतिषेधमात्रत्वात् दृष्टान्तभावादिति

**सामान्यतः सूचितम्, यच्च स्वपक्षदोषाच्चेत्यप्रामाणिकत्वं, स परिहारोऽत्राप्यविशेषितः समानः; इत्यतिदेशो युज्यत इत्यर्थः ।**

शे० — ननु प्रापकमित्युत्तरभाष्यमनर्थकम् । न च जीवादीनामेव कारणत्वमित्येतत्पक्षप्रापकप्रमाणोपदर्शनार्थं तदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न च जीवादीनामेव कारणत्वमिति पूर्वपक्षस्य प्रापकाभावादनुपपत्तिरिति शङ्कानिरास एव तत्प्रयोजनमिति वाच्यम् । जीवादीनां कारणत्वमित्येतावन्मात्रस्याप्यत्र पूर्वपक्षत्वसम्भवेन जीवादीनामेव कारणत्वमित्येतावत्पर्यन्तपूर्वपक्षस्यैवानाश्रयणीयत्वे प्रापकाभावप्रयुक्ततदनुपपत्तिशङ्काया दूरापास्तत्वादित्यतोऽत्र जीवादीनां कारणत्वमित्येतावन्मात्रस्य पूर्वपक्षत्वायोगेन जीवादीनामेव कारणत्वमित्येव पूर्वपक्षस्य कर्तव्यतया प्रापकाभावप्रयुक्ततदनुपपत्तिशङ्कोपपत्तेस्तन्निरासाय तत्प्रापकप्रमाणोपदर्शनपरोत्तरवाक्यस्य नानर्थक्यमित्यभिप्रेत्य रीत्यन्तरेण कथं पूर्वपक्षायोग इत्यतस्तं वक्तुं सम्भावितप्रकारवत्तया पूर्वपक्षं विकल्पयति **नन्विति** ॥ **कार्यस्येति** । तथा च जीवादीनामेव कारणत्वे लोकविरोध इति भावः । इत्यादीत्यादिपदेनान्यकारणनिषेधकस्याकस्मादिति वाक्यशेषस्य परिग्रहः ॥ **न च लोकेति** । लोके कार्यस्य सकर्तृकत्वनियमदर्शनादिति भावः ॥ **न तु लोक इति** । अन्यथाऽतिप्रसङ्गादिति भावः ।

मूले प्रापकं वाक्यमित्येतद्वाक्यं न केवलं तत्प्रापकप्रमाणोपदर्शनेन पूर्वपक्षानुपपत्तिशङ्कापरिहारमात्रपरं किन्नाम समयपादीयप्रधानादिकारणत्वनिराकरणार्थाधिकरणैर्गतार्थताशङ्कापरिहारपरं चेत्यतोऽपि नानर्थकमिति भावेन गतार्थताशङ्कानिरासकतयाऽपि योजयितुं तामुत्थापयति **नन्विति** । इत्यतो वेत्यत्र वाशब्दः समुच्चये । नन्वेवमस्य सूत्रस्य श्रुतीनां श्रुतिविरोधपरिहारकत्वापत्त्या तृतीयपादे निवेशः स्यात् । श्रुतीनां युक्तिविरोधपरिहारकेऽस्मिन्पादे कथमन्तर्भाव इत्यतोऽभिप्रायमाह **इदमुक्तं भवतीति** ॥ **श्रुत्यनुगृहीताभिर्युक्तिभिरिति** । तथा च युक्तिविरोधपरिहारकत्वाद्युक्तोऽस्यैतत्पादान्तर्भावः । युक्त्युपसर्जनश्रुतिविरोधपरिहारकत्वे तृतीये प्रवेशप्रसक्तावपि श्रुत्युपसर्जनयुक्तिविरोधपरिहारकत्वे न तत्प्रवेशप्रसङ्गोऽपीति भावः । इतीत्यस्य इदमुक्तं भवतीत्यनेन सम्बन्धः ।

मूले 'परिहारोऽविशेषित' इति परिहारस्याविशेषितत्ववर्णनानर्थक्यमाशङ्क्यैतेनेत्यतिदेशसमर्थनार्थत्वान्न तदितिभावेनातिदेशानुपपत्तिशङ्कामुत्थापयति **नन्वेवं तर्हीति** ॥ **उक्तपरिहारस्येति** । सूत्रे श्रौतस्य प्रतिषेधमात्रत्वस्योपलक्षितस्यासर्वज्ञत्वाचेतनत्वादिरूपस्य चेत्यर्थः ॥ **परिहृतत्वादिति** । असिद्धिव्यभिचाराभ्यामिति शेषः ।

स० — **न च लोकेति** । दण्डादीनामपि कारणत्वेन सिद्धत्वादिति भावः ।

प॰— **प्रापकाभावादिति** । उक्तदृष्टान्तानां तन्मात्रकारणत्वाप्रापकत्वात् । प्रत्युत कर्तृरूप-कारणान्तरप्रापकं चास्तीत्याह **कार्यस्येति** ॥ **द्वितीय इति** । तस्यैव कारणत्वमिति पक्ष एवेत्यर्थः ॥ **लोकेति** । लोके हि कार्यस्य सकर्तृकत्वनियमदृष्ट्या दृष्टिविरोध इत्यर्थः ॥ **द्वितीयपाद इति** । रचने-त्यादौ प्रधानकारणत्वमतस्य अभ्युपगमेपीत्यादावकारणत्वमतस्य अन्यथानुमितौ चेत्यत्र जीवकारणत्वमतस्य असत इत्यत्र शून्यकारणत्वमतस्य निरासादिति भावः । एवं हि तृतीयपादे निवेशापात इत्यत आह **इदमुक्तमिति** ॥ **युक्तिभिरिति** । दृष्टान्तेभ्य इति प्रागुक्तयुक्तिभिरित्यर्थः ॥ **उक्तेति** । निषेधमात्र-स्वरूपपरिहारस्येत्यर्थः ।

या॰— **इत्यादिवाक्यमिति** । आदिपदेन 'अकस्माद्धीदमाविरासीदि'त्येवंजातीयके क्वचित् 'न ह्यन्यत्कारणं पश्यामि'त्येवंजातीयकं वाक्यं यत्सम्भावितं तस्य परिग्रहः । ननु तर्ह्यस्य तृतीयपादेऽन्तर्भाव-प्रसङ्ग इत्यत आह **एतदुक्तं भवतीति** । तथा च श्रुत्युपसर्जनयुक्तिविरोधत्वरूपैतदधिकरणोपाध्युपहित-त्वादत्रैवैतेषां पक्षाणां निराकरणमिति भावः ॥

श्री॰— अचेतनस्यैव कारणत्वं शङ्क्यते इति पक्षे एव दूषणान्तरमाह **कार्यस्येति** । तथा च कर्तृतया जीवस्यापि कारणत्वेऽङ्गीकार्येऽचेतनस्यैव कारणत्वशङ्का न युक्तेत्यर्थः ॥ **लोकेति** । कार्यस्य सकर्तृकत्वनियमाच्चेत्युक्तेत्यर्थः । **उक्तपरिहारस्य** प्रतिषेधमात्रत्वादित्यस्य ॥ **परिहृतत्वादिति** । न हि जीवादीनामित्यादिनेत्यर्थः । **अचेतनत्वादिकं** प्रतिषेधमात्रत्वादित्यनेनोपलक्षितमित्यर्थः । **वादे** कारकमात्रं निषेध्यमित्यस्मिन्पक्षे ।

सु॰— **ननु कथं जगतो जीवकर्तृत्वादिवादस्य युक्तिविरुद्धत्वमित्यत आह** क्वचिदिति ।

**अनु॰**— क्वचिज्जीवाकृतं दृष्ट्वाऽचेतनादेव चाकृतम् ।
तद्वदेवानुमाऽन्यत्र वस्तुत्वात्क्रियते श्रुतेः ॥ २-१-४ ॥

क्वचित् **देशादौ** । यद्वा क्वचित् **जीवादौ** । **अकृतमिति च भावप्रधानो निर्देशः । कारण-त्वमात्रमत्र पूर्वपक्षो न कर्तृत्वमित्यतोऽचेतनादिति पञ्चमीप्रयोगः । अचेतनादकृतं च दृष्ट्वा । एवशब्देन दृष्टान्तानामसन्दिग्धसाध्यतामाह** । अनुमा **अनुमितिः** । **अन्यथा वस्तुत्वस्यैवानु-मानत्वात्पञ्चमी न स्यात्** । जीवाकृतत्वादेरिति शेषः । अन्यत्र **महदादौ** ।

अत्रैते प्रयोगाः । **महदादिकार्यं न जीवकृतं वस्तुत्वाज्जीववत् , विमतं न प्रधानकार्यं वस्तुत्वात्प्रधानवत् , विमतं नासत्कार्यं वस्तुत्वाद्घटवदिति । यद्यपि जीवस्य निमित्तत्वेन प्रधानस्योपादानत्वेन जगत्कारणत्वमङ्गीकृतमेव तथाऽपि स्वातन्त्र्याभावाभिप्रायेणेदं वचनमिति न विरोधः ।**

**शे०—** देशादावित्यादिपदेन कालपरिग्रहः । ननु देशादेरपि जीवाद्यकृतत्वं ममासम्प्रतिपन्नमिति न तस्य दृष्टान्ततयोपादाने युज्यत इत्यरुचेराह **यद्वेति** । आदिपदेन प्रधानादेः परिग्रहः । ननु कर्तृकरणयोस्तृतीयेति कर्तृकरणयोस्तद्विधानादचेतनेनाकृतमिति तृतीयया भवितव्यम् । अचेतनादिति पञ्चमी तु कथमित्यत आह **कारणत्वमात्रमिति** । तद्वदनुमा क्रियत इत्येतावता पूर्तेर्मूले एवशब्दवैयर्थ्यमित्यतस्तत्प्रयोजनमाह **एवशब्देनेति** । अनुमाशब्दस्य करणसाधनत्वभ्रान्तिं निवारयति **अनुमाऽनुमितिरिति** । भावसाधन एवायमनुमाशब्द इत्यर्थः । करणसाधनत्वे बाधकमाह **अन्यथेति** । तथा सति वस्तुत्वमनुमेत्येव वक्तव्यत्वादित्यर्थः। अत्र टीकायामनुमानमित्यनन्तरमन्यथा वस्तुत्वस्यैवानुमानत्वात्पञ्चमी न स्यादित्येव मूलकोशे पाठः । अचेतनादिति पञ्चमीप्रयोग इत्यनन्तरं तत्पाठस्तु लेखकदोषपतितो मूलकोशेष्वदर्शनादनन्वितत्वाच्चेत्यवधेयम् । सिद्धान्तविरोधमाशङ्कय परिहरति **यद्यपीति ॥ विरोध इति** । सिद्धान्तविरोध इत्यर्थः ।

**स०— क्वचिज्जीवादौ** । इत्यत्रादिपदेन प्रधानादिपरिग्रहः । ननु जीवादीनां कर्तृत्वस्यैवात्र पूर्वपक्षाभिमतत्वात् अचेतनस्यापि क्षीरादेः दध्यादिकर्तृत्वेन कर्तृकरणयोस्तृतीयया भाव्यम् , अचेतनादिति तु कथमित्यत आह **कारणत्वमात्रमत्रेति** । **अन्यथेति** । अनुमा इत्यस्य अनुमितिरिति व्याख्यानाकृतावित्यर्थः ।

**प०— पञ्चमीप्रयोग इति** । कर्तृत्वपक्षे कर्तृकरणयोस्तृतीयेति तृतीया स्यादिति भावः । **अन्यथेति** । कर्तृत्वपूर्वपक्ष इत्यर्थः । अचेतनादित्येतदचेतनत्वादित्यनुमानपरत्वपञ्चम्युपपत्तिरस्तीत्यत उक्तम् **वस्तुत्वस्यैवेति** । किन्तु तृतीया स्यादिति वाक्यशेषः ॥ **नासत्कार्यमिति** । शून्यकार्यमकारणकार्यं वा नेत्यर्थः ॥ **निमित्तत्वेनेति** । जीवस्यादृष्टाधारतयेत्यादिना प्रागुक्तदिशेति भावः ।

**या०— क्वचिद्देशादाविति** । अव्याकृताकाशादौ नित्य इत्यर्थः । जीवादावित्यत्रादिपदेन प्रधानादिपरिग्रहः ॥ **पञ्चमीप्रयोग इति** । हेतौ पञ्चमीविधानात् । कर्तृत्वे तु तृतीयया भाव्यमिति भावः ॥ **अन्यथेति** । अनुमाशब्देन करणव्युत्पत्त्याऽनुमानपरिग्रह इत्यर्थः ।

**श्री०— अनुमानत्वात्** अनुमितिकरणत्वात् ।

सु०— नन्वेवं सत्यतिप्रसङ्गः स्यात् । विमतमीश्वरकृतं न भवति वस्तुत्वादीश्वरवत् इत्यपि प्रयोक्तुं शक्यत्वादित्यत आह श्रुतेरिति । 'स इदं सर्वमसृजते'त्यादिश्रुतेर्महदादेरीश्वर-कृतत्वावधारणादतिप्रसङ्गानुमानस्य बाधितत्वेनाप्रामाण्यमिति । समं तर्हीदं भवदनुमानेषु । जीवाद्भवन्ति भूतानीत्यादिश्रुतेरित्यत आह श्रुतेरिति । भावप्रधानो निर्देशः । जीवादिशब्दानां ब्रह्मश्रुतित्वाद्ब्रह्मनामत्वान्न श्रुतिविरोध इत्यर्थः । तत्कुत इत्यत आह श्रुतेरिति । 'नामानि सर्वाणि यमाविशन्ती'त्यादिश्रुतेः । शेषं भाष्ये ।

ननु जीवादिकारण(क)त्वेऽपि घटादिदृष्टान्तावष्टम्भेनानुमानसंभवात्कथमप्रामाणिकत्व-मित्यत आह श्रुतेरिति । 'नान्योऽतोऽस्ति कर्ते'त्यादिश्रुतेर्बाधितविषयत्वात् दृष्टान्तानां साध्य-वैकल्याच्च नानुमानानां प्रामाण्यम् ।

एतेनास्मदनुमानेऽकार्यत्वमुपाधिरित्यपि निरस्तः(म्) । (स्वातन्त्र्येण), जीवाद्यकृतेऽपि घटादावकार्यत्वाभावात् । प्रतिपक्षे बाधादिदोषानुषङ्गाच्चेति सर्वं सुस्थम् ॥ २-१-४ ॥

शे०— मूले श्रुतेरित्यंशस्य वैयर्थ्यमाशङ्क्यातिप्रसङ्गानुमानस्य श्रुतिबाधितत्वेनाप्रामाण्यप्रतिपाद-नार्थत्वान्न तदिति भावेन तथा योजयितुमतिप्रसङ्गशङ्कामुत्थापयति नन्वेवं सतीति । नन्वसदादि-शब्दानां ब्रह्मवाचकत्वेऽप्यमुख्यवृत्त्याऽन्यवाचकत्वमभ्युपगतमेवेति तद्विरोधः स्यादेवेत्यत आह शेष-मिति । यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते । यत्र विरोधस्तत्र ब्रह्मैवोच्यत इत्य-ङ्गीकारात्प्रकृते चान्यवाचकत्वे विरोधान्नान्यवाचकत्वमित्यविरोध इत्येतत्सूत्रीयभाष्ये व्यक्तमित्यर्थः । यद्यप्यत्र 'घञजपाः पुंसी'ति वचनाच्छेषशब्दो नित्यपुल्लिङ्ग इति शेष इत्येव वक्तव्यं न तु शेषमिति । तथाऽपि तस्य प्रायिकत्वेन नियतत्वाभावान्नानुपपत्तिः । वस्तुतस्तु भावे घञन्तस्यैव नित्यपुल्लिङ्गत्वं कर्मादौ घञन्तस्य तु नानालिङ्गत्वाच्छेषमिति नपुंसकोपपत्तिः । अत एव दुर्घटवृत्तिकृताऽप्येवमेव समाहितमिति ध्येयम् ॥ बाधितविषयत्वादिति । नान्योऽतोऽस्ति कर्तेत्यादिश्रुत्या महदादेरन्यकृतत्वाभावावधारणादिति भावः ॥ दृष्टान्तानामिति । घटादीनामपि जीवादिमात्रकृतत्वस्यासिद्धेरिति भावः । महदादिकार्यं न जीवादिकृतं वस्तुत्वाज्जीवादिवदित्यनुमाने जीवादिकृतत्वाभाववति जीवादावकार्यत्वसद्भावेन साध्य-व्यापकत्वाद्वस्तुत्वरूपसाधनवति पक्षेऽकार्यत्वविरहेण साधनाव्यापकत्वाच्चाकार्यत्वमुपाधिः । उपाधेः प्रतिपक्षोन्नायकतया, विप्रतिपन्नं जीवादिकृतं कार्यत्वाद्घटवदिति सत्प्रतिपक्षश्चेति सिद्धान्तीयानुमानस्या-प्रामाण्यमिति न तेनापि जीवादिकृतत्वाभावसिद्धिरित्यप्यनेन निरस्तमित्याह एतेनेति ॥ जीवाद्यकृते-

**ऽपीति** । स्वातन्त्र्येण जीवाद्यकृतेऽपीत्यर्थः । ततश्च साध्याव्यापकत्वान्नाकार्यत्वमुपाधिरिति भावः । बाधादीत्यादिपदेन दृष्टान्ते साध्यवैकल्यपरिग्रहः ॥ २-१-४ ॥

**स०— शेषं भाष्य इति** । 'यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते । यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियमः' इत्यादिना शेषं भाष्ये स्पष्टमित्यर्थः ॥ २-१-४ ॥

**प०— शङ्कते समं तर्हीति** । ननु जीवादिशब्दानां कथं ब्रह्मश्रुतित्वं प्रवृत्तिनिमित्तादेरभावादित्यत आह **शेषं भाष्य इति** । शिष्यत इति शेषं शिष्टमित्यर्थः । आनुमानिकाधिकरणाद्युक्तदिशा प्राणधारकत्वानासाद्यत्वादिप्रवृत्तिनिमित्तभावात् 'जीवो विनयिता साक्षी'त्यादिप्रयोगाच्चेत्यादि ध्येयमित्यर्थः । यद्वा नन्वासां ब्रह्मश्रुतित्वे कथं प्रापकं वाक्यमात्रमित्युक्तमित्यत आह **शेषं भाष्य इति** । मुख्यतो ब्रह्मवाचित्वेपि अमुख्यवृत्त्याऽन्यवाचित्वेन पूर्वपक्षोदयस्योक्तत्वात्तत्रेति भावः ॥ **जीवाद्यकृतेपीति** । स्वातन्त्र्येणेति भावः ॥ २ । १ । ४ ॥

**या०—** ननु श्रुतीनां ब्रह्मवाचकत्वेऽप्यमुख्यया वृत्त्याऽसदादिवाचकत्वमप्यभ्युपगम्यत एव अतस्तद्विरोधः स्यादित्यत आह **शेषं भाष्य इति** । 'यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदमुख्यतयोच्यते । यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति हि नियमः ।' प्रकृते चासदादिशब्दानां ब्रह्ममात्रवाचकत्वे विरोधाभावान्नासदाद्यमुख्यवाच्यस्वीकार इति भाष्येऽवगन्तव्यमित्यर्थः ॥ २-१-४ ॥

**श्री०— असदिति** । महदादिकार्यं न जीवकृतं वस्तुत्वाज्जीववदित्याद्यनुमान इत्यर्थः । एतेनेत्युक्तं विशदयति **जीवादीति** । स्वातन्त्र्येणेति शेषः । तथा च साध्याव्यापकतेति भावः ॥ **प्रतिपक्षे चेति** । महदादिकार्यं जीवकृतं कार्यत्वादित्यकार्यत्वरूपोपाध्यभावेन कृते सत्प्रतिपक्षानुमान इत्यर्थः ॥ **बाधादीति** । स्वातन्त्र्यविवक्षयेति ध्येयम् ॥ २-१-४ ॥

**॥ इति असदधिकरणम् ॥**

## ॥ अथ भोक्त्रधिकरणम् ॥

सू० — ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥ अतीताधिकरणे ब्रह्मणो जगज्जन्मादिकारणत्वे श्रुतिसंवादित्वेन प्रबलया युक्त्या विरोधः परिहृतः । इदानीं तु श्रुतिसिद्ध-(लिङ्ग)त्वेन प्रबलया युक्त्या विरोधः परिह्रियते ।

तथा हि । न ब्रह्मणो जगत्कारणत्वं वास्तवं संभवति । असर्वकारणेन मुक्ते(क्तजीवे)-नात्यन्ताभिन्नत्वात् । न हि यो येनात्यन्ताभिन्नः स तद्विरुद्धस्वभावो वस्तुत इति क्वचिदुपलब्धम् । न च मुक्तस्यासर्वकारणत्वमसिद्धम्, (सर्वकारणत्वस्य) संसारेऽनुपलम्भात् । संसारे प्रतीयमानस्य कस्यचिदाकारस्यैवापगमो हि मोक्षो न तु अपूर्वाकारोत्पादः, अनित्यत्वप्रसङ्गात् । न चानन्दादेरिव विद्यमानस्यैवाविद्यया तिरोहितत्वात्सर्वकारणत्वस्यानुपलम्भ इति वाच्यम् । प्रमाणाभावात् । आनन्दादेः परमप्रेमास्पदत्वादिना ईषदुपलब्धेश्च । न च ब्रह्मणो जगत्कारणत्वश्रवणात्सर्वथाऽनुपलभ्यमानमपि जगत्कारणत्वं संसारे कल्प्यमिति युक्तम् । श्रुतेः काल्पनिकजगत्कारणत्वानुवादित्वेनापि सावकाशत्वात् । न च तथाभूतमेव लक्षणमस्त्विति वाच्यम् । अनङ्गीकारात् । काल्पनिकस्य जगत्कारणत्वस्य प्रधानादिष्वपि संभवेनातिप्रसङ्गाच्च । स्यादेतत् । मुक्तस्य ब्रह्मणैक्यमेवासिद्धमिति । मैवम् । 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ती'त्यादिश्रुतिसिद्धत्वादिति । तदिदमुक्तं सूत्रकृता भोक्तुर्जीवस्य मोक्षे ब्रह्मत्वापत्तिश्रवणात्तयोरविभागो भेदाभावः । ततश्च न ब्रह्मणो जगत्कारणत्वं वास्तवं युक्तमिति ॥ एवं प्राप्ते सिद्धान्तितम् । भवेदेतदखिलं यदि मुक्तस्य ब्रह्मणाऽभेद एव प्रामाणिकः स्यात् । न चैतदस्ति । श्रौतस्त्वेकीभावप्रयोगः स्याल्लोकवत् । यथा लोके-उदके उदकस्यैकीभावव्यवहारः स्थानैक्यनिबन्धनः । यथा वा प्राग्विभिन्ना ब्राह्मणाः सांप्रतमेकीभूता इति मत्यैक्यनिबन्धनः । तथा प्राग्विभिन्नस्थाना भिन्नमतयश्च जीवा मुक्तौ ब्रह्मणा एकीभवन्ति । एकस्थाना एकमतयश्च भवन्तीत्युपपद्यते । तस्मादसिद्धेनासिद्धसाधनमेतदिति ।

तदेतदयुक्तम् । मुख्यार्थे बाधकाभावात् । विना बाधकेन जघन्यवृत्त्याश्रयणे चातिप्रसङ्गात् । इत्यतो मुख्यार्थे बाधकयुक्तिव्युत्पादनपरत्वेनापि स्याल्लोकवदिति सूत्रखण्डं व्याचष्टे नान्यदिति ।

अनु० — ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥
नान्यदन्यत्वमापन्नं क्वचिद्दृष्टं कथञ्चन ॥
अतो जीवस्य न ब्रह्मभावः स्याद्धि कदाचन ॥

**शे०** — ॥ ॐ **भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्** ॐ ॥ ननु 'नान्यदन्यत्वमापन्नमि'त्युत्तरभाष्यमनर्थकमित्यत उत्तरसूत्रीयसिद्धान्तखण्डव्याख्यानार्थत्वान्न तदनर्थकमित्यभिप्रेत्य भवेदेतदेवं यद्युत्तरसूत्रमेवारम्भणीयं स्यात् । न चैतदस्ति । पूर्वेण गतार्थतया तस्यैवाकर्तव्यत्वादित्यतोऽधिकरणद्वयोपाधिभेदोपदर्शनेन गतार्थताशङ्कां तावत्परिहरति **अतीताधिकरण इत्यादिना** । श्रुतिगुणयुक्तय इत्यनुव्याख्यानोक्तं श्रुत्युपसर्जनत्वं युक्तीनां द्विविधं श्रुतिसंवादित्वं श्रुतिसिद्धत्वं चेत्यभिप्रेत्योक्तं **श्रुतिसंवादित्वेनेति श्रुतिसिद्धत्वेनेति च** । न च पूर्वत्र श्रुतिसंवादितया प्रबलयुक्तिविरोधपरिहारात्तन्न्यायेनैव श्रुतिसिद्धतया प्रबलयुक्तिविरोधपरिहारसिद्धेर्गतार्थत्वमवर्जनीयमिति वाच्यम् । तत्रासदादिशब्दानां पूर्वसिद्धान्तरीत्या ब्रह्मपरतायामपि मुख्यार्थत्वेनासत्कारणत्वे पूर्वपक्ष्युक्तश्रुतिसंवादाभावात् तत्प्रयुक्तप्राबल्यस्याप्यभावसिद्धावपि अत्रैकीभवन्तीत्यादीनामत्रत्यसिद्धान्तरीत्या स्थानैक्यादिपरत्वे मुख्यार्थहानेः ऐक्ये श्रुतिसिद्धत्वस्यानपायेन तत्प्रयुक्तप्राबल्यसम्भवेन श्रुतिसिद्धत्वेन प्रबलयुक्तिविरोधशङ्काया अवर्जनीयत्वात् । यद्यपि च भावत्वादिका पूर्वाधिकरणयुक्तिरपि श्रुतिसिद्धैवेति तादृशयुक्तिविरोधे परिहृते नैतच्छङ्कोदयोऽपि । तथाऽपि तस्य प्रलयेऽसत्त्वरूपं साध्यं विनाऽप्युपपत्तेरत्रत्याया जीवाभिन्नत्वादिरूपयुक्तेस्तु असर्वकर्तृत्वरूपं साध्यं विनाऽनुपपत्तेरस्त्येवोक्तविधया शङ्कोदय इति हृदयम् ।

ननु 'नान्यदन्यत्वमापन्नमि'त्यादेः 'स्याल्लोकवदि'ति सूत्रखण्डव्याख्यानता नोपपद्यते । तस्य भाष्यादावन्यथाव्याख्यातत्वात् । न चेदं प्रकारान्तरेण तद्व्याख्यानमिति वाच्यम् । तस्याप्यनर्थकत्वात् । न च भाष्यकारीयव्याख्यानोपपादनार्थत्वान्न तदिति वाच्यम् । तद्व्याख्यानेऽनुपपत्त्यप्रसक्त्या तस्योपपादनानपेक्षत्वादित्यतो भाष्योक्तरीत्या सूत्रयोजनाप्रकारप्रदर्शनपूर्वकं तत्रानुपपत्तिं प्रदर्श्य तत्परिहारकतया योजनान्तरस्यावश्यकतां दर्शयितुं भाष्यदिशाऽधिकरणशरीरं तावद्दर्शयति **तथा हीत्यादिना** । उपन्यस्तानुमाने विशेषव्याप्तौ दृष्टान्ताभावेन तदसम्भवेऽपि सामान्यव्याप्तिरविकलेत्यभिप्रेत्य व्यभिचारनिरासोपदर्शनव्याजेन तां सूचयति **न हीति** । संसारिण इव मुक्तस्य सर्वकारणत्वे प्रत्यक्षादिविरोधाभावेन सर्वकर्तृत्वमेवेत्यसर्वकारणेनेति विशेषणासिद्धिरित्याशङ्कते **न चेति** । मुक्तस्य सर्वकारणत्वं वदन्प्रष्टव्यः । किं तस्य मुक्तेः पूर्वमपि सर्वकारणत्वं सदिति किंवा ततः पूर्वमसतोऽपि तस्य मुक्तिवज्ज्ञानेन तस्मिन्नुत्पत्तिरिति । आद्येऽपि किमात्मस्वरूपवदतिरोहितं किंवाऽऽनन्दादिवत्तिरोहितमिति विकल्पान्मनसि निधा-

यानुपलम्भतर्कबाधान्नाद्य इत्याह **संसार इति** । दृष्टान्तासिद्ध्या द्वितीयं दूषयति **संसार इति** । आद्य-द्वितीयमाशङ्कते **न चेति** । नानुपलम्भमात्रमसत्त्वव्यवस्थापकं तथा सत्यनुपलम्भसाम्येन संसारावस्थाया-मानन्दादेरप्यसत्त्वप्रसङ्गात् । किन्तु योग्यानुपलम्भ एव । न चासाविहास्ति । आनन्दादेरिव सर्व-कारणत्वस्यापि अविद्यया आवृतत्वेन सतोऽप्ययोग्यतया अनुपलम्भोपपत्त्या अनुपलम्भस्यान्यथासिद्धत्वादिति भावः । नानन्दादिदृष्टान्तेन सर्वकारणत्वस्याविद्ययाऽऽवृतत्वं कल्पयितुं शक्यम् । तथा सति शश-विषाणादेरप्यावृतत्वेनानुपलम्भप्रसङ्गात् । किन्तु प्रमाणेन वस्तुसिद्धौ सत्याम् । तथा च 'नित्या-नन्दज्ञानबला इत्यादिप्रमाणानुसारेणानन्दादेः स्वरूपात्मतया सत्त्वसिद्धेर्युज्यतेऽविद्ययाऽऽवृतत्वेनानुप-लम्भान्यथासिद्धिवर्णनम् । न च तद्वत्प्रकृते सर्वकारणत्वस्य जीवे सत्त्वसाधकं प्रमाणमिहास्ति । येन तस्याप्यविद्ययाऽऽवृतत्वकल्पनयानुपलम्भस्यान्यथासिद्धिवर्णनमवकाशं लभेतेत्याह **प्रमाणाभावादिति** । किञ्च न वयमनुपलम्भमात्रेण सर्वकारणत्वं निराकुर्मो जीवस्य, किन्नाम सर्वथाऽप्यनुपलम्भेन । न चानन्दादेः सर्वथाऽप्यनुपलम्भोऽस्ति । तत्कथं तद्वदविद्ययाऽऽवृतत्वकल्पनमित्याशयेनाह **आनन्दादे-रिति** । ननु जीवाभिन्नस्य ब्रह्मणो जगत्कारणत्वप्रतिपादकश्रुतिरेव जीवस्य सर्वकारणत्वे प्रमाणमिति प्रमाणबलाज्जगत्कारणत्वस्यापि सत्त्वसिद्धेर्युज्यते संसारे तस्याविद्ययाऽऽवृतत्वकल्पनमित्याशङ्कते **न चेति** । भवेदियं ब्रह्मणो जगत्कारणत्वाभिधायिनी श्रुतिस्तदभिन्नजीवस्य सर्वकारणत्वेऽपि प्रमाणं, यदि सा तस्या-कल्पितजगत्कारणत्वाभिधायिनी स्यात् । न चैतदस्ति । तस्याः काल्पनिककारणत्वानुवादकत्वेन तदभावात् । तत्कथं सा जीवस्य सर्वकारणतायां प्रमाणं स्यादित्याह **श्रुतेरिति** । ननु श्रुतेः काल्प-निकजगत्कारणत्वानुवादकत्वेन श्रुत्यवष्टम्भेन माऽस्तु जीवस्य जगत्कारणत्वप्राप्तिः । तथाऽपि न लक्षणाक्षेपो युक्तः । श्रुतिप्रतिपादितकाल्पनिकजगत्कारणत्वस्य ब्रह्मलक्षणत्वाङ्गीकारादुक्तरीत्याऽसर्व-कारणेन मुक्तेनात्यन्ताभिन्नस्य ब्रह्मणो वास्तवजगत्कारणत्वासम्भवेऽपि लक्षणीभूतकाल्पनिकजगत्कारण-त्वसम्भवादित्याशङ्कते **न चेति** ॥ **अनङ्गीकारादिति** । भवेदेवं लक्षणाक्षेपानुपपत्तिर्यदि काल्पनिकं जगत्कारणत्वं ब्रह्मलक्षणतया सिद्धान्तिनाऽङ्गीकृतं स्यात् । न चैतदस्ति । तस्य सजातीयविजातीय-समस्तवस्तुव्यावृत्ततया ब्रह्मस्वरूपानवधारकत्वेनोक्तरूपलक्षणप्रयोजनशून्यत्वेन लक्षणत्वानभ्युपगमात् । किन्त्वकल्पितमेव तत्तथाऽभिमतं तच्चोक्तविधया न सम्भवतीति युक्तो लक्षणाक्षेप इति भावः । अति-व्याप्तत्वादपि न काल्पनिकस्य जगत्कारणत्वस्य लक्षणत्वं सम्भवति किन्त्वकल्पितस्यैवेत्यत आक्षेपोपपत्ति-रित्याह **काल्पनिकस्येति** । प्रदर्शितपूर्वपक्षस्योत्सूत्रतापरिहाराय सूत्रारूढतां दर्शयति **तदिदमिति** । **न ब्रह्मणो जगत्कारणत्वं वास्तवं युक्तमितीति** । यद्यप्यत्र जीवब्रह्मणोरभेदस्य, ब्रह्मणः प्रत्यक्षसिद्धा-सर्वकर्तृजीवसालक्षण्येनेव, जीवस्य श्रुतिसिद्धसर्वकर्तृब्रह्मसालक्षण्येनापि निर्वाहादतिव्याप्त्या लक्षणाक्षेपः

कर्तुं शक्यः । अत एव जगत्कारणत्वादि ईश्वरैकनिष्ठं न भवतीत्यादिना टीकायामतिव्याप्त्या लक्षणाक्षेपो दर्शितः । तथाऽपि प्रत्यक्षस्य प्राबल्याद्ब्रह्मणः प्रत्यक्षसिद्धासर्वकर्तृजीवसालक्षण्यमेव वक्तव्यमित्यभिप्रेत्यासम्भव एवात्र निर्धारित इत्यवधेयम् । 'एकीभूता इती'त्यतःपरमेकीभावव्यवहार इत्यनुवर्तते ।

स० — **श्रुतिसिद्धलिङ्गत्वेनेति** । मुक्तावेकीभावरूपलिङ्गस्य 'परेऽव्यये'इतिश्रुतिसिद्धत्वादिति भावः । ननु संसारेऽनुपलम्भेऽपि मुक्तौ सर्वकारणत्वं किं न स्यादिति चेन्न । संसारे अनुपलम्भे किमविद्यमानमेव सर्वकारणत्वं मुक्तावुत्पद्यते, उत विद्यमानमेव आनन्दादिवत् संसारे अनभिव्यक्तं मुक्तावभिव्यज्यते । नाद्य इत्याह **संसार इति** । **ईषदुपलब्धेश्चेति** । न च यत्किञ्चित्कारणत्वस्य संसारे उपलभ्यमानत्वात् कथमीषदुपलब्ध्यभाव इति वाच्यम् । तथाऽपि आनन्दस्येषदुपलब्धिवत् सर्वकारणत्वस्य कदापि ईषदुपलब्ध्यभावादिति भावः । ननु प्रमाणाभावादानन्दादेरिव विद्यमानस्य तिरोहितत्वात् सर्वकारणत्वानुपलम्भ इति वक्तुं न शक्यत इत्युक्तम् ; तदयुक्तम् , 'यतो वा इमानि भूतानि जायन्ते' इत्यादिप्रमाणसत्त्वादिति शङ्कते **न चेति** ।

प० — ॐ **भोक्त्रापत्तेः ...**॥ पूर्वेण संगत्यगतार्थत्वे सूचयन् अधिकरणोपाधिमाह **अतीतेति** ॥ **श्रुतिसिद्धेति** । बहुश्रुतिसिद्धलिंगत्वेनेत्यर्थः । तथैव चन्द्रिकोक्तेः, इत्यादिश्रुतीतिवक्ष्यमाणत्वाच्च । एतेन पूर्वत्र श्रुतेः सिद्धान्त्यभिमतार्थस्वीकारो युक्तो मुख्यार्थहानेः । इह तु न सिद्धान्त्यभिमतस्थानैक्याद्यर्थाङ्गीकारो युक्तः मुख्यार्थहानेः । अतो युक्तेः प्राबल्यमिति प्रत्युदाहरणसंगतिः सूचिता । **विरोधप्रकारं** तावद्व्यनक्ति **न ब्रह्मण** इत्यादिना **एवं प्राप्त** इत्यन्तेन । भेदाभेदनिरासायोक्तमत्यन्ताभिन्नत्वादिति । भेदाभेदनिरासस्तु 'अत एव चोपमासूर्यकादिवदि'त्यत्र करिष्यत इति भावः । नीरूपेपि गगने कल्पितनैल्यमिव कल्पितः संभवतीत्यतो वस्तुत इत्युक्तम् । हेतौ विशेषणासिद्धिं निराह **न च मुक्तस्येत्यादिना** ॥ **अनित्यत्वेति** । मोक्षस्येत्यनुषङ्गः । तर्ह्यानन्दज्ञानादिरपि जीवस्य स्वभावो न स्यात् संसारेऽनुपलंभादित्यत आह **आनदादेरिति** । प्रमाणाभावादित्यसिद्धमिति शङ्कते **न च ब्रह्मण इति** ॥ **संसार इति** । संसारदशायामित्यर्थः ॥ **अनङ्गीकारादिति** । सिद्धान्तिनेति भावः । हेतोर्विशेषणासिद्धिं निरस्य विशेष्यासिद्धिं शङ्कापूर्वं निराह **स्यादेतदिति** । श्रुतौ सर्व इति बहुवचनोपपत्त्यर्थं कर्माणीत्यंशस्याप्यनुवादः । मुक्तिपरत्वद्योतनाय वा । मुक्तावेव कर्मणां निवृत्तेः । **विज्ञानमय आत्मा** जीवः ॥ **सिद्धान्तितमिति** । सूत्रकृतेत्यनुषङ्गः । सप्तम्यन्ताद्वतिरयमिति भावेनाह **यथा लोक इति** ॥ **विभिन्नस्थाना इति** । प्राप्यरूपविशेषापेक्षयैवमुक्तिः ।

एकमतयः एकार्थविषयकमतय इत्यर्थः । इतिशब्दस्य इतिसिद्धान्तितमिति पूर्वेणान्वयः ॥ **जघन्य-वृत्त्येति** । आद्ये लक्षणा, अन्ये लक्षितलक्षणेति भावः ।

या० — ॐ **भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्** ॐ ॥॥ **श्रुतिसिद्धलिङ्गत्वेनेति** । अनेन 'श्रुतिगुणयुक्तय' इत्यनुव्याख्यानोक्तं श्रुत्युपसर्जनकत्वं युक्तीनां द्विविधम्, श्रुतिसंवादित्वं श्रुतिसिद्धलिङ्गत्वं चेत्युक्तं भवतीति ज्ञातव्यम् । अत्र मुक्तेनैकीभूतत्वलिङ्गं 'परेऽव्यये सर्व एकीभवन्ती'तिश्रुतिसिद्धमिति भावः ।

श्री० — ॐ **भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्** ॐ ॥ ॥ **ब्रह्मण इति** । मुक्तेन निश्चितैक्योपेतस्येति शेषः ॥ **श्रवणादिति** । यतो वेत्यादिश्रुतावित्यर्थः ॥ **कल्प्यमिति** । कल्प्यं मुक्तस्य संसारे कल्प्य मित्यर्थः । तथा चासर्वकारणेनेति विशेषणासिद्धिरिति भावः ॥ **श्रुतेरिति** । तथा च ब्रह्मणो जगत्कारणत्वश्रवणमेवासिद्धं श्रुतेस्तत्र तात्पर्याभावादिति भावः । **तथाभूतं** काल्पनिकमेव जगज्जन्मादिकरणत्वम् । काल्पनिकस्येत्यतः पूर्वमङ्गीकारे चेति शेषः ॥ **तस्मादिति** । लोके सिद्धेन धूमादिहेतुनाऽसिद्धं वह्न्यादि साध्यते । प्रकृते च मुक्तेनैक्यरूपो हेतुरसिद्धोऽनिश्चितस्तेन कथमसिद्धस्यानिश्चितस्य जगत्कारणत्वादिलक्षणस्यावास्तवत्वस्य साधनं युज्यत इति भावः ॥ **मुख्यार्थ इति** । एकीभवन्तीति श्रुतेरैक्यरूपमुख्यार्थे प्रोच्यमान इत्यर्थः ॥ **जघन्येति** । स्थानैक्यादि तु अमुख्यार्थ इति भावः ।

**सु० — अत्र मुख्यमेवार्थमङ्गीकुर्वाणः प्रष्टव्यः । किं प्रागभिन्नस्यैव जीवस्य मुक्तौ ब्रह्मणैक्यमनेनोच्यते, उत भिन्नस्य, अथ(वा) भिन्नाभिन्नस्य । नाद्यः, अभूततद्भावार्थस्यैकीभवन्तीति च्विप्रत्ययस्यैव अनुपपत्तेः । अत एव न तृतीयः । ऐक्यस्य प्राक् सिद्धत्वात् । भेदनिवृत्त्यर्थत्वे तु गौणार्थत्वापत्तेः । द्वितीयनिराकरणेन निरस्तत्वात्(च) । द्वितीये त्विदमुपतिष्ठते, नान्यदिति । हिशब्दो हेतौ । यतो लोके अन्यत् वस्तु, अन्यत्वं वस्त्वन्तरेणाभेदमापन्नम्, क्वचित्काले, कथञ्चनोपायेन, न दृष्टम् । अतस्तद्दृष्टान्तेन जीवस्यापि कदाचन मुक्तावपि ब्रह्मभावो ब्रह्मत्वं न स्यात् ।**

**अयमत्र प्रयोगः । जीवो न कालान्तरेऽपि ब्रह्मणैक्यमापत्स्यते । प्राक् ततोऽत्यन्तभिन्नत्वात् । यः कदाचिद्यतोऽत्यन्तं भिद्यते नासौ कदाचित्तदैक्यमापद्यते । यथा घटः पटेनेति ॥ अथवा जीवब्रह्मणोः भेदः, सतोर्भेदिनोर्न निवृत्तिमान्, भेदत्वात्स्तम्भकुम्भादिभेद-**

**वदिति । आगमबाधितमेतदिति चेन्न । आगमानां मुख्यार्थतासंभवेऽनुमानबाधकत्वं, बाधिते चानुमाने तेषां मुख्यार्थतेति परस्पराश्रयत्वप्रसङ्गात् । सत्प्रतिपक्षत्वाच्च । तथा हि श्रुतिः । यथोदकमित्यादिका । प्रल्हादोऽपि 'परमात्मात्मनोर्योगः परमार्थ इतीष्यते(ताम्) । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः' इति ।**

**शे०**— ननु प्राग्भिन्नस्य जीवस्य मुक्तौ ब्रह्मणैक्यमेकीभवन्तीत्यनेनोच्यत इति नोच्यते । किन्नाम प्रागभिन्नस्य भिन्नाभिन्नस्य वा जीवस्य मुक्तौ ब्रह्मणैक्यमनेनोच्यत इति । तावन्मात्रेणाप्येकीभवन्तीत्यादेर्मुख्यार्थतानिर्वाहात्; तत्कथं नान्यदित्यादिमूलस्यैकीभवन्तीत्यादेर्मुख्यार्थतायां बाधकयुक्तिव्युत्पादनपरत्वेन प्रवृत्तिवर्णनम्, प्राग्भिन्नस्य पश्चादैक्यमिति पक्षे बाधकयुक्तिव्युत्पादनपरत्वेऽप्यस्य प्रागभिन्नस्येति भिन्नाभिन्नस्य वेति पक्षे बाधकयुक्तिव्युत्पादनपरत्वाभावात्; इत्यत प्राग्भिन्नस्य जीवस्य मुक्तौ ब्रह्मणैक्यमनेनोच्यत इति पक्षमाश्रित्य मुख्यार्थत्ववादिनं प्रति बाधकयुक्तिव्युत्पादनपरत्वमेवात्रास्याभिमतं न तु पक्षान्तरमाश्रित्यापि तद्वादिनं प्रत्यस्य तदभिमतम्; किन्तु तत्रान्यदेव बाधकमिति नानुपपत्तिरित्यभिप्रेत्यात्र संभावितविकल्पप्रदर्शनपूर्वकं पक्षान्तरं बहिरेव प्रदूष्य, प्राग्भिन्नस्य जीवस्य मुक्तावैक्यमनेनोच्यत इत्येतत्पक्षनिरासकतयोत्तरवाक्यं योजयितुमत्र संभावितविकल्पानाह **अत्रेत्यादिना ॥ अनुपपत्तेरिति ।** अभेदस्य प्रागपि सत्त्वेनाभूततद्भावाभावादिति भावः ॥ **गौणेति ।** भेदनिवृत्तिरेवाभूततद्भावरूपवाच्यार्थगुण इति भावः ॥ **निरस्तत्वाच्चेति ।** यद्यपि द्वितीयपक्षो नाद्यापि निराकृत इति निरस्तत्वोक्तिर्न श्लिष्टा, तथाऽपि द्वितीयपक्षनिरासकन्यायेनैतत्पक्षनिराससिद्धेर्न पृथगत्र तद्दूषणव्युत्पादनमित्यत्र तात्पर्यमित्यवधेयम् । **द्वितीये त्विति ।** ननु 'न ह्यन्यस्यानन्यत्वं युज्यते' इति भाष्ये पूर्वभिन्नस्य पश्चादभिन्नत्वाभावः पूर्वपक्षयुक्तित्वेनोक्तः, 'नान्यदन्यत्वमापन्नं क्वचिद्दृष्टं कथञ्चने'त्यत्र तु सिद्धान्तयुक्तित्वेन । तत्कथमस्य न भाष्यविरोध इति चेत् । अत्र ब्रूमः । अत्र त्रयः पूर्वपक्षाः संभवन्ति । तथा हि । एकीभवन्तीति ब्रह्मणस्तावन्मुक्ताभेदः श्रूयते । न च तावता ब्रह्मणोऽसर्वकर्तृत्वं सिध्यति । संसारिण इव मुक्तस्य सर्वकर्तृत्वे प्रत्यक्षादिविरोधाभावेन पूर्वमसतोऽपि जीवे सर्वकर्तृत्वस्य मुक्तेरिव ज्ञानेनोदयसंभवेन च मुक्ताभिन्नस्यापि ब्रह्मणः कथञ्चित्कारणत्वसंभवात् । जगद्व्यापारवर्जमित्यत्र तु अत्रत्यसिद्धान्तन्यायेन भेदे सिद्धेऽपि मुक्तस्य सत्यकामत्वात्सर्वकर्तृत्वमिति शङ्कानिरासान्नात्रत्यपूर्वपक्षदशायां तत्रत्यसिद्धान्तेन मुक्तस्यासर्वकर्तृत्वसिद्धिः तस्मादसर्वकर्तृत्वेन प्रत्यक्षसिद्धसंसार्यभेदाद्ब्रह्मणोऽपि तथात्वमिति वक्तुं मुक्तावप्यभेदेन संसारेऽप्यभेदः साधनीयः । एकीभवन्तीत्यभूततद्भावार्थकच्विप्रत्ययस्तु न ह्यन्यस्येति भाष्योक्तयुक्तिविरोधाद्भेदभ्रमनिवृत्तेरभूततद्भावाभिप्राय इत्येकः पूर्वपक्षः । एतं पक्षमाश्रित्य मुक्तावभेदेन पूर्वम-

भेदं वक्तु न हीत्यादिपूर्वपक्षभाष्यं प्रवृत्तम् । द्वितीयस्तु च्विप्रत्ययस्वारस्यात्पूर्वं भेदो मुक्तौ त्वभेदः । न ह्यन्यस्येति युक्तिस्तु च्विप्रत्ययरूपश्रुतिबाधितेति । एतत्पक्षदूषणाय पूर्वं सिद्धेन भेदेन पश्चादपि भेदं साधयितुं नान्यदन्यत्वमित्यादिसिद्धान्तानुव्याख्यानं प्रवृत्तमिति न भाष्यानुव्याख्यानयोस्तट्टीकयोर्वा विरोधः । तृतीयस्तु पूर्वं भेदाभेदौ, मुक्तौ तु केवलाभेदः । एवञ्च च्विप्रत्ययो युक्तः । पूर्वं केवलाभेदाभावात् । 'न ह्यन्यस्ये'त्यादियुक्तिविरोधश्च न । पूर्वमप्यभेदस्य सत्त्वात् । एतं वा पक्षमाश्रित्य भाष्यानुव्याख्याने प्रवृत्ते । तत्र भाष्ये च्विप्रत्ययेन पूर्वं भेदस्य सिद्धत्वात्पूर्वपक्षानुपयुक्तत्वाच्चाभेद एव साधितः । अनुव्याख्यानेऽपि पूर्वं भिन्नाभिन्नस्य पश्चात्केवलाभेदो नास्तीति भावेन नान्यदन्यत्वमित्युक्तमिति न कश्चिद्विरोधः । पक्षभेदेन भाष्यानुभाष्ययोर्विरोधपरिहारसूचनायाप्यत्र टीकायां विकल्पत्रयप्रदर्शनमिति द्रष्टव्यम् । विस्तरस्तु चन्द्रिकायां द्रष्टव्यः । मूले 'अतो जीवस्ये'त्युक्तेस्तदनुसारेण हेत्वर्थतया हिशब्दं व्याचष्टे **हिशब्दो हेताविति** । नन्वनन्यस्यान्यत्वापत्तेरन्यस्यानन्यत्वापत्तेर्वाऽयोगेन अन्यस्यैवान्यत्वापत्तेर्वाच्यत्वात्कथं नान्यदन्यत्वमापन्नमिति निषेधः । कथञ्चानेन प्राग्भिन्नस्योत्तरत्राभेदाभावसिद्धिरित्यतः प्रकृतोपयोगितयाऽन्यत्वपदं व्याचष्टे **अन्यत्वमिति** । संसारे भिन्नस्य जीवस्य मुक्तावभेदवादिनं प्रति मुक्तावभेदाभावस्यैव युक्तिसिद्धताया वक्तव्यत्वात् । कदाचिदप्यभेदाभावकथनमसङ्गतमित्यतः प्रकृतोपयोगितया कदाचनेतिपदं व्याचष्टे **कदाचन मुक्ताविति** ।

यथास्थितमूलवाक्यस्य बाधकयुक्तिसूचकत्वमेव न त्वेवमभिमतप्रयोगप्रकारत्वमपि येनानुपपत्तिः शङ्क्येतेत्यभिप्रेत्यानुमानप्रयोगमाह **उभयत्रेति** । न केवलं 'नान्यदन्यत्वमि'ति मूलवाक्यं प्राग्भिन्नजीवस्य मुक्तौ ब्रह्मणैक्यमेकीभवतीत्यनेनोच्यते, इति द्वितीयपक्षे बाधकयुक्तिसमर्पकं, किन्नाम प्राग्भिन्नाभिन्नजीवस्य मुक्तौ ब्रह्मणैक्यमुच्यत इति तृतीयपक्षेऽपि बाधकयुक्तिसमर्पकमित्यभिप्रेत्य सूचितमनुमानप्रयोगप्रकारं दर्शयति **अथवेत्यादिना** । ऐक्यस्य प्रागपि सिद्धत्वेनाभूततद्भावार्थस्यैकीभवन्तीति च्विप्रत्ययस्यानुपपत्त्याऽभूतभेदनिवृत्तेरेव तदर्थत्वाभ्युपगमात्तदभाव एवात्र साधित इति द्रष्टव्यम् । ननु चागमानाममुख्यार्थत्वसिद्धावनुमानबाधकत्वसिद्धिः । अबाधिते चानुमाने तद्बाधितत्वेन तेषाममुख्यार्थत्वसिद्धिरिति तवाप्यन्योन्याश्रय इत्यरुचेराह **सत्प्रतिपक्षत्वाच्चेति** । भेदप्रतिपादकश्रुतिस्मृतिप्रतिरुद्धत्वाच्चेत्यर्थः । ततश्च भेदप्रतिपादकानुमानानामागमसचिवतया प्राबल्यान्नान्योन्याश्रय इति भावः । विरोधश्रुतिमेवोदाहरति **तथा हि श्रुतिरिति** । यथोदकमिति श्रुतिप्रतीकोपादानम् । ततश्च 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतमे'ति संपूर्णश्रुतिपरिग्रहः । अत्र विजानतो मुनेर्विजानतां मुनीनामात्मा स्वामी चतुर्मुखोऽपि तादृगेव भवति । न तु स एव भवतीति मुक्तौ जीवब्रह्मभेदः स्पष्टं प्रतीयते ।

आदिपदेन 'निरञ्जनः परमं साम्यमुपैति', 'परात्परं पुरुषमुपैति दिव्यमि'त्यादिश्रुत्यन्तरपरिग्रहः । विष्णुपुराणस्थं मुक्तपरमात्मनोर्भेदसाधकमभेददूषकं च प्रल्हादवाक्यमपि पठति **प्रल्हादोऽपीत्यादिना** । **योगः** सायुज्यम् । एतत्पूर्वमाशङ्कितं मुक्तस्य परमात्मनैक्यं तु मिथ्येति प्रतिज्ञा । कुत इत्यतो मुक्तेः प्राक् ततो भिन्नत्वादिति हेतुमभिप्रेत्य तस्य सामान्यव्याप्तिमुपपादयति **अन्यदिति** । अत्र द्रव्यपदं स्वरूपकथनार्थं न तु हेत्वन्तर्गतमिति न वैयर्थ्यशङ्कावकाश इति ध्येयम् । यद्वा सत्प्रतिपक्षत्वादित्यस्य 'निरञ्जनः परमं साम्यमुपैती'त्यादिभेदप्रतिपादकश्रुत्यादिविरुद्धत्वादित्यर्थः । न केवलं बाधकवशादेतदभेदश्रुतेरुपचरितार्थत्वं किन्तु श्रुतिस्मृतिवशाच्चेत्यभिप्रेत्य तदुदाहरति **तथा हीत्यादिना** । अत्र च पक्षे मिथ्येति गौणमिति योज्यम् ।

**स० — द्वितीयनिराकरणेनेति** । उत भिन्नस्येति द्वितीयविकल्पनिराकरणावसरे, जीवब्रह्मणोर्भेदः, सतोर्भेदिनोर्न निवृत्तिमान्, भेदत्वात् स्तम्भकुम्भादिभेदवदिति यदनुमानं तेन निरस्तत्वाच्चेत्यर्थः । पूर्वं भेदनिवृत्त्यभावे मुक्तावपि भेदनिवृत्तिर्बाधितेति भावः । **आगमेति** । 'परेऽव्यये'इत्यागमबाधितमित्यर्थः । तर्हि तवाप्यन्योन्याश्रय इत्यत आह **सत्प्रतिपक्षत्वाच्चेति** । **अन्यत्** द्रव्यं भेदोपेतं द्रव्यं, यतः, तद्द्रव्यतां तदैक्यं, नैति, तस्मात्, एतत् ऐक्यं, मिथ्येत्यर्थः ।

---

**प० — अभूतेति** । अभूततद्भावे 'कृभ्वस्तियोगे संपद्यकर्तरि च्विरि'ति सूत्रेण पाणिनिना प्रागनेकतामाप्ता इदानीमेकतां संपन्ना इत्याद्यर्थे च्विप्रत्ययोक्तेरिह प्रागप्यैक्ये एकीभवन्तीति च्विप्रत्ययान्तैकशब्दप्रयोगो न युक्त इत्यर्थः । **गौणार्थत्वापत्तेरिति** । मुख्यार्थस्याभूततद्भावरूपस्य त्यागापत्तेरित्यर्थः ॥ **द्वितीयेति** । उत भिन्नस्येति पक्षनिराकरणेन वक्ष्यमाणेनेत्यर्थः । प्रागभिन्नस्य पश्चादभेदः क्वाप्यदृष्ट इति यावत् । प्रागभिन्नाभिन्नस्य पश्चादत्यन्ताभेदोपि क्वापि न दृष्ट इति व्याख्यानसंभवादिति भावः ॥ **यथोदकमिति** । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम इति भेदे दृष्टान्तपूर्वं जीवब्रह्मभेदोक्तेरिति भावः । परमात्मेति विष्णुपुराणवाक्यम् । एतत् पूर्वप्रकृतं जीवब्रह्मैक्यं मिथ्या कुतः यतोन्यद्द्रव्यं तद्द्रव्यतां नैतीति योजना ।

**या० — गौणार्थत्वापत्तेरिति** । अभूततद्भावरूपवाच्यार्थगुणो भेदनिवृत्तिरेवेति भावः ॥ **निरस्तत्वाच्चेति** । यद्यपि द्वितीयपक्षोऽद्यापि न निराकृतस्तथाऽप्यतिदेशसौकर्यायैवात्र तन्निराकरणम् वस्तुतस्तु द्वितीयपक्षनिराकरणानन्तरमेव तृतीयपक्षनिराकरणमित्यभिप्रायेणैवमुक्तमिति ध्येयम् ॥ **द्वितीये**

**त्विति** । अनेन न ह्यन्यस्यान्यत्वं युज्यत इति भाष्ये पूर्वं भिन्नस्य पश्चादभिन्नत्वाभावः पूर्वपक्षयुक्तित्वेनोक्तः अत्र कथं सिद्धान्तयुक्तित्वेनोच्यत इति शङ्का निरस्तेति ज्ञातव्यम् । प्रागभिन्नस्यैव जीवस्य मुक्तौ ब्रह्मणैक्यमितीमंपूर्वपक्षमाश्रित्य मुक्ताभावभेदेन पूर्वमभेदं साधयितुं न हीत्यादिपूर्वपक्षभाष्यं प्रवृत्तम् । च्विप्रत्ययस्तु भेदभ्रमनिवृत्तेरभूततद्भावाभिप्राय इति तत्पूर्वपक्षाशयः । पूर्वं भेदो मुक्तावभेदश्च्विप्रत्ययस्वारस्यात् । न ह्यन्यस्येति युक्तिस्तु च्विप्रत्ययरूपश्रुतिबाधितेति पूर्वपक्षनिरासाय पूर्वं सिद्धेन भेदेन पश्चादपि भेदं साधयितुं नान्यदन्यत्वमात्रमित्यादिसिद्धान्तानुव्याख्यानं प्रवृत्तमतो न कोऽपिविरोध इत्याशयात् । तदिदमाह **द्वितीये त्विदमुपतिष्ठत इति** । तर्हि तवाप्यन्योन्याश्रय इत्यस्वरसादाह **सत्प्रतिपक्षेति** ॥ **यथोदकमिति** । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतमे'ति श्रुतिः । विजानतां मुनीनामात्मा स्वामी चतुर्मुखोऽपि तादृगेव भवति न तु स एवेति मुक्तौ भेदमाहेत्यर्थः ॥ **परमात्मात्मनोरिति** । विष्णुपुराणप्रल्हादवाक्यमिदम् । **योगः** सायुज्यम् । **एतत्** पूर्वमाशङ्कितम् । मिथ्येति प्रतिज्ञा । पूर्वं ततोऽतिभिन्नत्वादित्यभिप्रेतस्वहेतोर्व्याप्तिमुपपादयति **अन्यद्द्रव्यं हीति** । अत्र द्रव्यपदं तु स्वरूपकथनार्थं न तु हेत्वादिशरीरान्तर्गतम् ।

श्री० — अत एवेत्युक्तं विशदयति **ऐक्यस्येति** । **प्राक्** संसारे । तथा च च्विप्रत्ययानुपपत्तिरेवेत्यर्थः । ननु प्रागभिन्नाभिन्न एव जीवस्तस्य मुक्तौ त्वभेदो भवतीत्येकीभवन्तीति श्रुत्यर्थतया नोच्यते येन च्विप्रत्ययानुपपत्तिः किन्नाम भेदो निवर्तत इत्यर्थ इत्युच्यते । भेदनिवृत्तिश्च प्रागविद्यमानैव भवतीति च्विप्रत्ययोपपत्तिरित्याशङ्कयाह **भेदेति** ॥ **गौणेति** । न ह्येकीभवन्तीत्यस्य भेदनिवृत्तिर्मुख्योऽर्थ इत्यर्थः ॥ **द्वितीयेति** । प्राग्भिन्नाभिन्नस्यैव मुक्तावैक्यं भवतीति पक्षस्योत्तरत्र क्रियमाणेन द्वितीयपक्षनिरासेन निरस्तत्वादित्यर्थः । यथाकथञ्चित्पूर्वं भेदस्याङ्गीकारेण पश्चादभेदोऽयुक्त इति हृदयम् । भेदो न निवृत्तिमानित्युक्ते बाधः । यदा भेदिनोर्निवृत्तिस्तदा भेदस्यापि भविष्यत्येव निवृत्तिरत उक्तं **भेदिनोः सतोरिति** । तथा चात्र भेदिनौ ब्रह्मजीवौ सर्वदा स्त इति तद्भेदोऽपि सर्वदाऽस्तीति लभ्यत इत्यर्थः ॥ **आगमेति** । ऐक्यागमेत्यर्थः । **एतत्** अनुमानम् । **मुख्यार्थेति** । ऐक्यरूपेत्यर्थः ॥ **मुख्यार्थतेति** । तद्बाधाभावादिति भावः । ऐक्यागमानां भेदागमैः सत्प्रतिपक्षितत्वाच्च न मुख्यार्थत्वमित्याह **सत्प्रतिपक्षितत्वाच्चेति** । कोऽसौ भेदागम इत्यत आह **तथा हीति** । प्रह्लादोऽपीत्याहेति शेषः । **आत्मा** जीवो, **योगः** संबन्धः; स च सायुज्यः ऐक्यरूपो विवक्षितः प्रकृत इति ध्येयम् । इतीत्यस्यावृत्तिः । तदित्यस्य पञ्चम्यन्तस्य बुद्ध्या विविक्तस्यान्यपदेनापि संबन्धः । तच्च तत् द्रव्यं च तद्द्रव्यं, तस्य भावस्तद्द्रव्यता, ताम् । परमात्मात्मनोर्योग ऐक्यं परमार्थ इत्येतन्मिथ्येतीष्यताम् । कुत इति चेत् यतः तस्मादन्यद्द्रव्यं तद्द्रव्यतां तद्द्रव्याभेदं नैति प्राप्नोतीति व्याप्तेरिति श्लोकार्थः ।

सु० — अथ मतम् । नायमस्ति युक्तिविरोधः । प्रागप्यभिन्न एव ब्रह्मणा जीव इत्यङ्गीकारात् । न च च्विप्रत्ययानुपपत्तिः । प्रतीत्यपेक्षया तदुपपत्तेः । प्राग्विभिन्नतया दृष्टोऽयं जीवो ब्रह्मणः । अथेदानीं मुक्तावभिन्नतया दृश्यते, इत्यत एकीभवन्तीत्युच्यत इति ॥ अत्रेदं वक्तव्यम् । किं प्राक्तनी जीवब्रह्मणोर्भेददृष्टिर्भ्रान्तिरुत प्रमेति । नाद्यः बाधकाभावात् । श्रुतयस्त्वद्याप्यव्यवस्थितार्था न बाधकतामश्नुवते । द्वितीये त्वाह क्वचिदिति ।

अनु० — क्वचिद्भिन्नतया दृष्टं तदभिन्नतया कथम् ॥
दृश्येन्नो दृष्टपूर्वं हि तादृशं न च दृश्यते ॥

क्वचित्काले यद्वस्तु यतो भिन्नतया प्रमितं तत् कालान्तरेऽपि कथं तदभिन्नतया प्रती-(मी)येत; न कथञ्चिदित्यर्थः । कुत इत्यत आह नो दृष्टपूर्वं हीति । तादृशं प्राग्भिन्नतया प्रमितं कालान्तरेऽभिन्नतया प्रमीयमाणम् ।

अयमिह प्रयोगः । जीवो न कदाचिद्ब्रह्माभिन्नतया प्रमाविषयः । ततोऽत्यन्तभिन्नतया प्रमितत्वात् । यदेवं तदेवं यथा घटः पटाद्भिन्नतयेति । यस्तु क्वचिदपि भेदप्रमां न मन्यते, तं प्रत्यारोपितभेदमेकं वस्तु व्यतिरेकोदाहरणं वाच्यम् । एवञ्च प्रतीतिमुपादायापि न च्वि-प्रत्ययोपपत्तिः । एतदर्थत्वेनापि स्याल्लोकवदिति योज्यम् । तदेवं ग्रावप्लवनादिश्रुतिवत् उपपत्तिविरुद्धत्वेन श्रुतेर्मुख्यार्थासंभवादमुख्यार्थ एव स्वीकरणीये परकीयहेतोरसिद्धत्वान्न ब्रह्मणो जगत्कारणत्वे युक्तिविरोध इति सिद्धम् ॥

श्री० — ननु च क्वचिद्भिन्नतयेत्युत्तरभाष्यमनर्थकम् । न च प्राग्भिन्नतया दृष्टस्य तदभिन्नतया दृष्टत्वशङ्कानिरासार्थं तदिति वाच्यम् । तच्छङ्काया अनवसरप्रस्तत्वेन तन्निरासकतद्वाक्यवैयर्थ्या-निस्तारात् । न च च्विप्रत्ययानुपपत्तिदोषपरिहारार्थत्वादस्त्येवोक्तशङ्कावकाश इति वाच्यम् । प्राग्भिन्नस्य मुक्तौ ब्रह्मणैक्यमुच्यत इति निषेध्यपक्षे ऐक्यमादायैव च्विप्रत्ययोपपत्त्या तद्दृष्टिपर्यन्तधावनानर्थक्या-दित्यतोऽस्मिन्पक्षे ऐक्यमादाय तन्निर्वाहात्तत्प्रतीतिपर्यन्तधावनस्यानर्थकत्वेऽपि नान्यदितिवाक्योक्त-बाधकयुक्तिभिरेतत्पक्षपरित्यागेन प्राग्भिन्नस्यैव जीवस्य मुक्तौ ब्रह्मणैक्यमुच्यत इति प्रथमपक्षमेवाङ्गीकृत्य तत्रोक्तच्विप्रत्ययानुपपत्तिरूपदोषपरिहाराय प्रतीतिपर्यन्तधावनस्यार्थवत्त्वेन तच्छङ्कावकाशान्न तन्निरास-कोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्योक्तशङ्कानिवर्तकतयोत्तरवाक्यं योजयितुमभेदपक्षपरिग्रहपूर्वकं तत्रोक्तदोष-माशङ्क्य प्रतीत्यपेक्षया तत्परिहारशङ्कामुत्थापयति अथ मतमित्यादिना । ननु सत्यरजतस्थले नेदं

रजतमिति भिन्नतया भ्रान्तिदृष्टस्यापि पुरोवर्तिनस्तदभाववत्तया दृश्यमानत्वमस्त्येवेति कथं 'क्वचिद्भिन्नतया दृष्टमि'ति तदयोगवर्णनमित्यतो नानेन भेददृष्टेर्भ्रान्तित्वपक्षे तदभेददर्शनस्यायोगो व्युत्पाद्यते, किन्नाम तस्य प्रमात्वपक्षे, ततो नानुपपत्तिरित्यभिप्रेत्यात्र सम्भावितविकल्पप्रदर्शनपूर्वकमाद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षनिरासपरतयोत्तरवाक्यं योजयितुमाह **अत्रेदं वक्तव्यमित्यादिना** । ननु चाभेदबोधकाग-मानामेव बाधकत्वात्तदभावोऽसिद्ध इत्यतोऽभेदागमानां मुख्यार्थत्वसिद्धौ तेषां भेददृष्टिबाधकत्वं, बाधि-तायां भेददृष्टौ तेषां मुख्यार्थत्वमिति परस्पराश्रयप्रसङ्गान्न तेषां बाधकतेत्याशयेनाह **श्रुतयस्त्विति** । द्वितीयपक्षनिरासं मूलारूढं कर्तुमपेक्षितपदाध्याहारं दर्शयन्नेव क्वचिदित्यादि व्याचष्टे **क्वचित्काल इत्यादि** । मूले कथमित्यस्योत्तराभावेन प्रश्नार्थत्वायोगादाक्षेपार्थत्वमित्याशयेन तत्तात्पर्यमाह **नेति** । क्वचिदित्यादेरुत्सूत्रार्थप्रतिपादकत्वादभाष्यत्वमित्यतः स्याल्लोकवदित्येतत्सूत्रखण्डार्थत्वान्न तदित्याह **एत-दिति** ॥ **उपपत्तिविरुद्धत्वेनेति** ।' नान्यदन्यत्वमापन्नं', 'क्वचिद्भिन्नतये'त्यादिवाक्यद्वयसूचितोपपत्ति-विरुद्धत्वेनेत्यर्थः ॥ **श्रुतेरिति** । एकीभवन्तीत्यद्वैतश्रुतेरित्यर्थः ॥ **अमुख्यार्थ एवेति** । स्थानैक्य-मत्यैक्यरूपे इत्यर्थः ॥ **परकीयहेतोरिति** । मुक्तेनात्यन्ताभिन्नत्वरूपस्येत्यर्थः ॥ **जगत्कारणत्व इति** । वास्तवजगत्कारणत्व इत्यर्थः ।

स॰— **एतदर्थत्वेनापीति** । प्रतीतिमुपादाय च्विप्रत्ययोपपत्तिनिराकरणपरत्वेनापीति भावः । योजनाप्रकारस्तु, **लोकवत् स्यात्** लोके हि यत् यतोऽत्यन्तभिन्नतया प्रमीयते तत् तदभिन्नतया कदाऽपि प्रमाविषयो न भवति । तस्मात् लोकविरुद्धमिति ।

प॰— ऐक्यश्रुतयो बाधिका इत्यत आह **श्रुतयस्त्विति** ॥ **आरोपितभेदमेकं वस्त्विति** । अंगुल्यवष्टब्धनेत्रेण भिन्नतया प्रतीयमानं चन्द्रबिम्बादिकमित्यर्थः । चन्द्रादावेकस्मिन्वस्तुनि चन्द्रादि-भेदाभावेन तत्र हेतुसाध्यव्यतिरेकभावादिति भावः ॥ **एतदर्थत्वेनापीति** । यथा लोके घटः पटा-द्भिन्नतया प्रमितो न पटेनाभेदवान्, तथा जीवोपि न ब्रह्माभेदवानित्येवं योज्यमित्यर्थः ॥ **परकीयहेतो-रिति** । असर्वकर्तृमुक्तजीवाभिन्नत्वहेतोरित्यर्थः ।

श्री॰— **यस्त्विति** । तथा चान्वयव्याप्तिर्न गृहीतुं शक्यते । हेतूपेतस्थलाभावादित्यर्थः ॥ **तं प्रतीति** । तथा चारोपितभेदोपेते एकस्मिन्घटे वस्तुगत्याऽभेदप्रकारकप्रमाविषयत्वमस्ति । **आरो-पितभेदत्वादेव** भिन्नतया प्रमितत्वाभावोऽप्यस्तीत्यर्थः ॥ **एवञ्चेति** । अभेदप्रमारूपप्रतीत्यभावोपपादने-

नेत्यर्थः ॥ **एतदिति** । 'नो दृष्टपूर्वं ही'त्येतदर्थप्रतिपादनपरत्वेनापीत्यर्थः ॥ **परकीयेति** । मुक्तेनाभिन्नत्वादित्यस्य ॥

**सु०**— केचिदिदं सूत्रमन्यथा व्याचक्षते । पूर्वं किल चेतनाचेतनात्मकस्य प्रपञ्चस्य ब्रह्मोपादनत्वेन ब्रह्मानन्यत्वमुक्तम् । तदाक्षिप्य समाधातुमिदं सूत्रम् । तथा हि । यदि चेतनाचेतनात्मकस्य जगतो ब्रह्मानन्यत्वं स्यात्तदा चेतनो भोक्ता भोग्याश्चाचेतना विषया इत्ययं विभागो न स्यात् । कुतः । भोग्यस्यापि भोक्तृत्वापत्तेः । भोक्तुरपि भोग्यत्वापत्तेः । भवितव्यं चानेन विभागेन । प्रत्यक्षादिसिद्धत्वादिति चेत् । स्याल्लोकवत् । यथा लोके समुद्रात्मनामपि फेनतरङ्गादीनां नेतरेतरभावापत्त्या विभागभङ्गः, यथा वा महाकाशात्मनामपि घटमठाद्याकाशानां, तथा प्रकृतेऽपि स्यादिति ॥ तदिदं दूषयति भोक्तृत्वेति ।

> **अनु०**— भोक्तृत्वापत्तित इति यन्मतं तत्कुतो हरिः ॥
> भोक्त्रापत्तेरिति प्राह ॥ २-१-५ ॥

यत् यदि भोक्त्रापत्तेरित्यत्र भोक्तृत्वापत्तेरिति व्याख्यानं सूत्रकारस्यापि(भि) मतं स्यात् तत् तर्हि कुतो हरिः सूत्रकृत् भोक्त्रापत्तेरिति (प्र)आह । भोक्तृत्वापत्तेरित्येव ब्रूयात् । न चैवमब्रवीत् । ततो नायमभिप्रायः सूत्रकारस्येति ।

यद्यप्यत्र परेषामस्माकं चाध्याहारसाम्यम् । तथाऽपि भावप्रत्ययाभावः परस्याधिकः ।

**शे०**—'भोक्तृत्वापत्तितः' इत्यादौ तत्सूत्रव्याख्यानत्वाभावादानर्थक्यमित्यतस्तदभावेऽप्येतत्सूत्रीयापव्याख्याननिरासार्थत्वान्न तदितिभावेन तन्निरासकतयोत्तरवाक्यं योजयितुं तदनुवदति **केचिदित्यादिना** ॥ **पूर्वमिति** । प्रकृतिश्चेत्यादाविति शेषः । नन्वापादकानुक्तेरविभागापादनमयुक्तम् । न च भोक्त्रापत्तिरेव तदापादिकेति वाच्यम् । भोक्तृभोग्ययोरैक्यस्य परेणानुक्ततया तस्यासिद्धत्वेन तदयोगादित्यतो जगतो ब्रह्मोपादनकत्वेन प्राप्तं ब्रह्मानन्यत्वमेव तदापादकमित्याशयेनापादकप्रदर्शनपूर्वकमविभागापादनमुपपादयति **यदीति** । तर्ह्येतावतैव जगदुपादानत्वाक्षेपसिद्धेर्भोक्त्रापत्तेरिति पूर्वपक्षांशवैयर्थ्यमित्याशङ्क्य ब्रह्मानन्यत्वेऽपि विभागोऽस्त्वित्यप्रयोजकताशङ्कापरिहारार्थत्वान्न तदिति भावेनोक्तरीत्या तं योजयितुमप्रयोजकत्वशङ्कामुत्थापयति **कुत इति** । न वयं जगतो ब्रह्मानन्यत्वेन साक्षादविभागमापादयामो येनाप्रयोजकत्वं शङ्क्येत किन्तु चेतनाचेतनात्मकप्रपञ्चस्य ब्रह्मानन्यत्वेनेतरेतरभावापत्तिमापाद्य तथा विभागाभावमापादयाम इति नाप्रयोजकत्वमित्याशयेनेतरेतरभावापत्तिसमर्पक-

तया भोक्त्रापत्तेरित्येतद्योजयति **भोग्यस्यापीत्यादिना** । अविभागापादने इष्टापत्तिं परिहरति **भवितव्यं चेति** । उक्तविभागस्य द्वैतग्राहिप्रत्यक्षादिप्रमाणसिद्धत्वेन तदभावस्य प्रमाणबाधितत्वान्नेष्टापत्तिरित्यर्थः । न चाद्वैतबोधकश्रुत्या बाधितत्वेन द्वैतग्राहिप्रत्यक्षस्याप्रामाण्यान्न द्वैताभावस्य प्रमाणबाधितत्वमिति वाच्यम् । श्रुतेरुपचरितार्थत्वेन सावकाशतया निरवकाशप्रत्यक्षस्यैव प्राबल्यादित्यत्र तात्पर्यात् । सूत्रे स्याच्छब्दो न केवल'मविभागः स्यादि'ति पूर्वेणान्वेति, किन्तु 'स्याल्लोकवदि'त्युत्तरेणापीति भावेन तथैवोपादत्ते **स्यादित्यादिना** ॥ **लोकवदिति** । सप्तम्यन्ताद्वतिरित्यभिप्रेत्य व्याख्याति **यथेति** । समुद्रशब्द उदकपरः । आदिपदेन वीचीबुद्बुदादीनां परिग्रहः । ननु फेनादीनां समुद्रकार्यत्वाद्युक्तस्तदभेदो, भोक्ता तु न ब्रह्मविकारः । 'तत्सृष्ट्वा तदेवानुप्राविशदि'ति स्रष्टुरविकृतस्यैव कार्यानुप्रवेशवचनादित्यतः कार्यमनुप्रविष्टस्याप्यस्त्येवोपाधिनिमित्तो विभागः । अनुप्रविष्टाकाशस्य घटपटाद्युपाधिनिमित्तविभागदर्शनादित्यभिप्रेत्योक्तशङ्कामनुगुणदृष्टान्तान्तरोक्त्या परिहरति **यथा वेति** । ननु भोक्तुर्भोग्यत्वापत्तेर्भोग्यस्य भोक्तृत्वापत्तेरिति परकीययोजनायां भोग्यत्वापत्तेरित्यादेरिव स्वपक्षे ब्रह्मत्वस्येत्यस्याध्याहारेणाध्याहारस्योभयत्र समानतयोभयसमाधेयत्वेन कथं परं प्रति तत्पर्यनुयोग इति शङ्कते **यद्यपीति** । भोक्तुर्भोग्यत्वापत्तेरिति परकीययोजनाया भोक्तुर्ब्रह्मत्वापत्तेरिति स्वकीययोजनायाश्चैकपदाध्याहारेण साम्येऽपि भोग्यस्य भोक्तृत्वापत्तेरिति परकीययोजनाया भोक्तुर्ब्रह्मत्वापत्तेरिति स्वकीययोजनायाश्च न साम्यम् । भोग्यस्येति पदाध्याहारस्य भोक्तृशब्दे भावप्रधानतायाश्चाश्रयणेनानेकाध्याहारात् । स्वमते तु ब्रह्मत्वस्येत्यध्याहारेणाल्पाध्याहारात् । न चाल्पाध्याहारेणोपपत्तावनेकाध्याहाराश्रयणं युक्तमिति युक्त एव पर्यनुयोग इत्याह **तथाऽपीति** ।

**स०— अध्याहारसाम्यमिति** । स्वमतेऽपि 'भोक्त्रापत्तेः' इत्यत्र भोक्तुर्जीवस्य ब्रह्मत्वस्यापत्तेः श्रवणात् तयोरविभाग इति व्याख्यातत्वात् ब्रह्मत्वस्येत्यध्याहारादिति भावः । **तथापीति** । परमते भोग्यस्येत्यस्यावश्याध्याहार्यत्वात् भोक्तुरित्यत्र त्वप्रत्ययस्यापि अध्याहारात् अध्याहारद्वयम् । स्वमते तु ब्रह्मत्वस्येत्येकस्यैवाध्याहार इति भावः ।

**प०— केचिदिति** । ब्रह्मपरिणामवादिनः । यदित्यनुवादः, यदीति व्याख्या । तर्हीत्यपि तथा ध्येयम् ॥ **अध्याहारेति** । मायिमते भोक्तुर्भोग्यत्वापत्तेः भोग्यस्य च भोक्तृत्वापत्तेरिति व्याख्यातत्वात्; भोग्यस्येत्यस्य परमते, स्वमते च मोक्षे ब्रह्मत्वेत्यस्याध्याहारादिति भावः ।

**या०— अध्याहारसाम्यमिति** । भोक्तुः शारीरस्य भोग्यत्वापत्तेर्भोग्यस्य च शब्दादेर्भोक्तृत्वापत्तेस्तयोरविभागः स्यादिति परेण व्याख्यातत्वात् । अस्माभिरपि भोक्तुर्जीवस्य मोक्षे ब्रह्मत्वापत्तिश्रवणादिति व्याख्यातत्वादिति भावः ॥

श्री० — **भोक्तृत्वापत्तेरिति** । भोक्त्रभिन्नब्रह्मात्मकत्वाद्भोग्यस्येत्यर्थः । यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तेरिति ध्येयम् ॥ **भोग्यत्वेति** । भोग्याभिन्नब्रह्मात्मकत्वाद्भोक्तुरित्यर्थः, उक्तव्याप्तेरिति ध्येयम् ॥ **सिद्धत्वादिति** । तस्माज्जगतो ब्रह्मानन्यत्वं नास्तीति शेषः ॥ **इतरेतरेति** । फेनस्य तरङ्गतापत्त्या, तरङ्गस्य फेनतापत्त्येत्यर्थः । **विभागो** भेदः ॥ **तथाऽपीति** । परमते भोग्यस्येत्यस्याव- श्याध्याहार्यत्वाद्भोक्तुरित्यत्र त्वप्रत्ययस्याप्यध्याहारादध्याहारद्वयं, स्वमते तु ब्रह्मत्वस्येत्येकस्यैवाध्याहार इति भेदः ।

च० — ॐ **भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्** ॐ ॥ **भावप्रत्ययाभाव इति** । प्रकृति- जन्यबोधे प्रकारीभूय भासमानो धर्मो भावः । तदवबोधकप्रत्ययाभाव इत्यर्थः ।

**सु० — ये तु व्याचक्षते 'चिदचिद्वस्तुशरीरत्वे ब्रह्मणो जीववत्सुखदुःखादिभोक्तृत्वा- पत्तेर्जीवब्रह्मस्वभावविभागो न स्यादिति चेन्न । यथा कान्तारे निपतितस्य(ापि) नृपस्य न दंश- मशकाद्युपद्रवस्तथाऽत्रापि स्यादि'ति । तेषामप्ययं शब्ददोषः समानः ।**

**ननु भावप्रधाना निर्देशास्तत्र तत्र बहुलमुपलभ्यन्ते । तत्कथमयं दोषोऽभिधीयते । अयमभिसन्धिर्भाष्यकारस्य । प्रतिपाद्ये व्यवस्थिते तद्बलाच्छाब्दी गौणता कथञ्चिदनुसर्तव्या । न चास्य सूत्रस्येदं प्रतिपाद्यं व्यवस्थितम् । जगदुपादानत्वस्य प्रागनुक्तत्वेनानुक्तोपालम्भ- प्रसङ्गात् । जगच्छरीरत्वस्यान्तर्याम्यधिकरणे प्रसक्तत्वेऽपि सम्भोगप्राप्तिरित्यनेनैव परिहृत- त्वात् । तत्र जीवशरीरगतत्वेन प्रस(क्तं )क्तभोक्तृत्वमपास्तम् । अत्र तु जगच्छरीरत्वेनेति चेन्न । पूर्वोत्तरपक्षयोर्न्यायाविशेषे सूत्रारम्भानुपपत्तेः । अतो निर्निमित्तः शाब्ददोषोऽपि नानु सरणार्ह इति ॥ यद्वैतदर्थप्रतिपादनाय कथं चेत्याद्युत्तरवाक्यमत्रापि संयोज्य व्याख्येयमित्युक्त एव सूत्रार्थ इति ॥ २–१–५ ॥**

शे० — रामानुजीयसूत्रव्याख्यानदूषणपरतयाऽपि भाष्यं योजयितुं तदनुवदति **ये त्विति** ॥ **अयं शब्ददोष इति** । भोक्तृशब्दे भावप्रधानत्वाश्रयणत्वरूप इत्यर्थः । अस्मद्रीत्या भोक्तुर्जीवस्य ब्रह्मत्वापत्तेरित्यल्पाध्याहारेणोपपत्तौ ब्रह्मणश्चिदचिद्वस्तुशरीरत्वादित्यापादकाध्याहारस्यापाद्येऽपि दुःखादि- पदाध्याहारस्य, भोक्तृशब्दे भावप्रधानतायाश्चाश्रयणमनुचितमिति भावः ॥ **तत्र तत्रेति** । 'मुक्तोपसृ- प्यव्यपदेशात्', 'द्व्येकयोर्द्विवचनैकवचने' इत्यादावित्यर्थः ॥ **प्रागनुक्तत्वेनेति** । प्रकृत्यधिकरणस्य ब्रह्मणो

जगदुपादानपरत्वस्य तत्रैव निरस्तत्वादिति भावः । ननु मायावादिमतेऽनुक्तोपालम्भप्रसक्तावपि रामानुजपक्षेऽन्तर्याम्यधिकरणे चिदचिद्वस्तुशरीरित्वस्य प्रसक्तत्वेन तदाक्षेपकत्वे नानुक्तोपलम्भप्रसङ्ग इत्यत आह **जगच्छरीरत्वस्येति** ॥ **जीवशरीरगतत्वेन प्रसक्तमिति** । शरीरान्तरावस्थानमात्रप्रसक्तभोक्तृत्वाशङ्कायास्तत्र निरासः, इह तु शरीरस्वामित्वप्रयुक्तायास्तस्या, इति भेद इत्यर्थः ॥ **न्यायाविशेष इति** । त्वया तत्र, 'न हि शरीरान्तर्वर्तित्वमेव सुखदुःखहेतुरपि तु पुण्यपापरूपकर्मवशत्वम्, तच्चापहतपाप्मनः परमात्मनो न संभवति' इत्युक्तत्वात् । अत्र च, न हि जीवस्य शरीरधातुवैषम्यनिमित्तसुखदुःखभोक्तृत्वम् शरीरत्वकृतम् अपि तु पुण्यपापरूपकर्मकृतम् । अपहतपाप्मनश्च परमात्मनः स्थूलसूक्ष्मरूपकृत्स्नजगच्छरीरित्वेऽपि कर्मबन्धगन्धो नास्तीत्युक्तत्वान्न्यायाविशेष इति भावः ॥ **एतदर्थप्रतिपादनायेति** । जगदुपादानताया एतदधिकरणप्रतिपाद्यत्वाव्यवस्थितिप्रतिपादनायेत्यर्थः ॥ **इत्युक्त एवेति** । अनेनापव्याख्याननिराकरणं स्वव्याख्यानदृढीकरणार्थत्वान्नासङ्गतमिति स्मारयति ॥ २-१-५ ॥

**स० — तत्र तत्रेति** । 'मुक्तोपसृप्यव्यपदेशात्' इत्यादावित्यर्थः । **यद्वेति** । जगतः, तदनन्यता ब्रह्मोपादानता, कथं, न कथमपीत्यर्थः । कुतः । 'अविकारित्वे जगतः' इति अत्रापि संबध्यते । अविकारित्वे ब्रह्मोपादानत्वाभावे, उक्तन्यायेन 'न च प्रकृतिशब्देने'त्यादिपूर्वोक्तन्यायेन, साधिते इत्यर्थः। तस्माज्जगदुपादानत्वस्य प्रागनुक्तत्वेन तदाक्षेपसमाधानमनुपपन्नमिति । एवं जगतः तदनन्यता तच्छरीरिता कथम् । न कथमपि । कुतः । 'अविकारित्वे ब्रह्मणः' इति शेषः । भोक्तृत्वादिविकाराभावे संभोगप्राप्तिरित्यादिपूर्वोक्तन्यायेन साधिते । तस्मात् तदाक्षेपसमाधानपरत्वे पुनरुक्तिः स्यादिति योज्यमिति भावः ।

**प० — ये त्विति** । रामानुजीया इत्यर्थः ॥ **तत्र तत्रेति** । 'मुक्तोपसृप्यव्यपदेशात् । अपीतौ तद्वत्प्रसंगादि'त्यादावित्यर्थः ॥ **अनुक्तत्वेनेति** । प्रकृत्यधिकरणादेरन्यार्थत्ववर्णनादिति भावः ॥ **अनुक्तोपालम्भप्रसंगादिति** । भोक्त्रापत्तेरित्यादि वदतः तत्पूर्वपक्षिण इति योज्यम् । 'ये त्वि'त्युक्तमतान्तरेपि दोषमाह **जगच्छरीरत्वस्येति** ॥ **एतदर्थप्रतिपादनायेति** । अनुक्तोपालम्भप्रसंगोपपादनायेत्यर्थः ॥ २ । १ । ५ ॥

**या० — ये त्विति** । रामानुजीया इत्यर्थः ॥ **तत्र तत्रेति** । मुक्तोपसृप्यव्यपदेशादित्याद्यसच्छास्त्रे द्व्येकयोरित्यादिपरशास्त्रे, चेत्यर्थः । रामानुजं प्रत्याह **जगच्छरीरत्वस्येति** ॥ **यद्वैतदर्थेति** । मायावादिनोक्तस्यैतदधिकरणप्रतिपाद्यस्याव्यवस्थितत्वप्रतिपादनायेत्यर्थः ॥ २-१-५ ॥

श्री० — **उपद्रव इति** । राज्ञ ऐश्वर्येण भृत्यादिभिस्तदुपद्रवपरिहारात् । एवं ब्रह्मणोऽप्यैश्वर्येण सुखाद्यभोक्तृत्वं युक्तमित्यर्थः । तत्र तत्र 'मुक्तोपसृप्यव्यपदेशादि'त्यादौ शाब्दी गौणता भावप्रधानाध्याहारादिरूपा ॥ **प्रसक्तत्वेऽपीति** । यस्य पृथिवी शरीरं, यस्यात्मा शरीरमित्यादिना पृथिव्याद्यचेतनचेतनात्मकजगच्छरीरस्योक्तत्वादित्यर्थः । जगच्छरीरत्वेन प्रसक्तं भोक्तृत्वमपास्यत इत्यर्थः ॥ **न्यायविशेष इति** । उभयोरपि शरीरस्थत्वं पूर्वपक्षन्यायः । ऐश्वर्येण परिहारः सिद्धान्तन्यायः ॥ **एतदर्थेति** । न चास्य सूत्रस्येदं प्रतिपाद्यं व्यवस्थितमित्युक्त'सूत्रप्रतिपाद्यस्य प्रमेयस्याव्यवस्थितत्वरूपा'र्थप्रतिपादनायेत्यर्थः ॥ **व्याख्येयमिति** । तथा च जगतोऽविकारत्वे उक्तन्यायेन साधिते सति, कथं च तदनन्यता जगत एतत्सूत्रप्रतिपाद्या स्यात् । तथा च प्रतिपाद्यस्याव्यवस्थितत्वाद्भावप्रधानतादिरूपा शाब्दी गौणता नानुसरणीयेत्येतावानर्थः इदानीं मूलोपर्येवागत इति ध्येयम् ॥ २-१-५ ॥

॥ इति भोक्त्रधिकरणम् ॥

## ॥ अथ आरम्भणाधिकरणम् ॥

सु० — ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ प्राक् प्रमाणमूलत्वतत्संवादित्वाभ्यां प्रबलया युक्त्या उक्ते(क्ता)र्थे विरोधो निर(स्तः)कृतः । बाहुल्यलक्षणबलवद्युक्तिविरोधपरिहाराय इदमधिकरणमारभ्यते ।

तदिदं ब्रह्मपरिणामवादी व्याचष्टे "अनन्तराधिकरणे भोग्यवर्गस्य परिणामतःसिद्धप्रातिस्विकरूपभेदानपह्नवेन लोकसिद्ध(द्धं)कारणाभेदमङ्गीकृत्य साङ्ख्यसिद्धान्तेन शास्त्रतो भोक्तृवर्गस्य स्वाभाविकरूपब्रह्माविभागे भोग्यस्यापि ब्रह्मैक्यवद्भोक्तृत्वापत्तिमाशङ्क्य अनैकान्तिकत्वेन निरासो (वि)ऽभिहितः । संप्रति वैशेषिकादिमतेन स्वरूपकार्यव्यपदेशादिभेदेन कार्यस्य कारणात्म(क)त्वासिद्ध्या प्रपञ्चस्य ब्रह्माद्वैतम् आक्षिप्य समाधीयते ॥ तथाहि । तदनन्यत्वं तेन ब्रह्मणा अनन्यत्वं, कार्यस्य । कुतः ? आरम्भणशब्दादिभ्यः 'यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं स्यात् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिशब्दात् । 'आदि'ग्रहणात् 'ऐतदात्म्यमिदं सर्वम्', 'यदयमात्मा', 'सर्वं खल्विदं ब्रह्म' इत्यादितादात्म्यवेदकश्रुतिपरिग्रहः" इति ।

विवर्तवादी तु व्याख्याति "अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागम्, 'स्याल्लोकवत्' इति परिहारोऽभिहितः । न त्वयं विभागः पारमार्थिकोऽस्ति । यस्मात् तदनन्यत्वं कारणाद्ब्रह्मणः कार्यस्याकाशादेः परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः, अवगम्यते । कुतः ? आरम्भणशब्दादिभ्यः" इति ।

शे० — ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ ननु अनारम्भणीयमेवेदमधिकरणम्, 'न विलक्षणत्वात्' इत्यनेन वेदस्य सकलयुक्तिविरोधानां परिहृतत्वात् । न च प्रबलयुक्तिविरोधपरिहारार्थमेतदिति वाच्यम्; युक्तेः प्रबलत्वस्य प्रत्यक्षादिप्रमाणावधृतव्याप्तित्वरूपत्वे अभिमान्यधिकरणेन, श्रुतिरूपप्रमाणसंवादित्वरूपत्वे च असदधिकरणेन, श्रुतिरूपप्रमाणसिद्धत्वरूपत्वे च भोक्त्रापत्तेरित्यनेन गतार्थत्वापातात्; इत्यतः न उक्तप्रकारत्रयेण युक्तेः प्राबल्यम् अत्राभिमतम्, किन्नाम बाहुल्येनैव, इति न पूर्वेण गतार्थता; इत्याशयवान् पूर्वोत्तराधिकरणीयविलक्षणोपाधीनाह 'प्राक्'इत्यादिना ॥ अत्र प्रमाणमूलत्वम् प्रत्यक्षावधृतव्याप्तिकत्वम्, श्रुतिसिद्धत्वं च अभिमतम् । तत्संवादित्वं च श्रुतिसंवादित्वम्; इत्यवधेयम् ।

'तदनन्यत्वम्'इत्येतत्सूत्रव्याख्यानत्वाभावात् 'कथं च'इत्युत्तरभाष्यानर्थक्यम् इत्याशङ्क्य, तदभावेऽपि एतत्सूत्रीयापव्याख्याननिराकरणार्थत्वात् न तत्; इति भावेन अपव्याख्याननिराकरणपरतया उत्तरं भाष्यं योजयितुं तदनुवदति 'तदिदम्'इत्यादिना ॥ **अनन्तराधिकरण इति** । अत्र अनन्तराधिकरणे भोग्यवर्गस्य भोक्तृत्वापत्तिमाशङ्क्य अनैकान्तिकत्वेन निरासोऽभिहितः इति संबन्धः ॥ ननु भोग्यवर्गस्य भोक्तृत्वापत्तिशङ्काया नावकाशः, निर्बीजत्वात्; इत्यतो भोग्यवर्गस्य कारणीभूतब्रह्माभेद एव तत्र बीजम् इत्याशयेनोक्तम् **भोग्यवर्गस्य कारणभेदमङ्गीकृत्येति** ॥ ननु भोग्यवर्गस्य ब्रह्मरूपकारणाभिन्नत्वेन ब्रह्मत्वापत्तिशङ्कैव स्यात्, भोक्तृत्वापत्तिशङ्का तु कथम्? इत्यत उक्तम् **ब्रह्मैक्यवदिति** । ब्रह्मैक्यवान् यो भोक्ता, तत्त्वापत्तिमित्यर्थः । तथाच भोक्तुर्ब्रह्माभिन्नत्वात्, ब्रह्माभिन्नस्य भोग्यस्य भोक्तृत्वापत्तिशङ्का युक्तेति भावः ॥ भवेदेवं भोग्यस्य भोक्तृत्वशङ्का यदि भोक्तुः ब्रह्माभिन्नत्वमुपपद्येत । न चैवम्, प्रकारप्रमाणयोरभावात्; इत्यत उक्तम् **शास्त्रतः** 'तत्त्वमसि'-आदिशास्त्रतः **भोक्तृवर्गस्य यत् स्वाभाविकं रूपं तस्य ब्रह्माविभागे** सिद्धे सतीति ॥ ब्रह्मपरिणामवादिमते कार्यस्य कारणाभेदेऽपि कारणस्य कार्याद्भेदः, इति भेदाभेदयोर्व्यवस्थितत्वेन; भोक्तृभोग्ययोर्ब्रह्मणा अभेदेऽपि ब्रह्मणस्तद्भेदेन, भोग्यस्य ब्रह्मणाऽभेदेऽपि भोक्त्रभिन्नब्रह्माभेदस्य भोग्येऽभावेन, कथं भोक्तृत्वापत्तिशङ्का? इत्यत उक्तं **साङ्ख्यसिद्धान्तेन कारणाभेदमङ्गीकृत्येति** । ततश्च साङ्ख्येन कार्यकारणयोः परस्परमत्यन्ताभेदाभ्युपगमात् युक्तमेव तद्रीत्या भोक्तृत्वापादनम् इति भावः । अनैकान्तिकत्वोपपादनायोक्तं 'परिणामतःसिद्धप्रातिस्विकरूपभेदानपह्नवेन लोकसिद्धं कारणाभेदं साङ्ख्यसिद्धान्तेनाङ्गीकृत्य' इति । परिणामतः सिद्धो यः प्रातिस्विकरूपभेदः, तदनपह्नवेन, लोके फेनतरङ्गादौ सिद्धं समुद्ररूपकारणाभेदं, प्रकृतेऽपि साङ्ख्यसिद्धान्तेन अङ्गीकृत्येत्यर्थः । समुद्ररूपैककारणाभिन्नानामपि फेनतरङ्गादीनां परस्परं भेदस्य लोके दृष्टत्वात्, प्रकृतेऽपि ब्रह्मरूपैककारणाभिन्नयोरपि भोक्तृभोग्ययोः परस्परं भेद इति भावः । न च एकेन कारणेन अत्यन्ताभिन्नानामपि कार्याणां कथं साङ्ख्यरीत्या परस्परं भेदः येन व्यभिचारचोदना सङ्गता स्यात्, इति वाच्यम्, कारणेनात्यन्ताभिन्नानामपि कार्याणां परस्परम् आ-लयं भेदस्य तन्मतेऽपि स्थितत्वात् । यद्वक्ष्यति साङ्ख्यपरीक्षायां 'परस्परं विभेदश्च कार्याणामालयं भवेत्' इति ॥ **स्वरूपेति** । स्वरूपभेदात्, कार्यभेदात्, व्यपदेशभेदात्, इति प्रत्येकं भेदशब्दसम्बन्धः । 'आदि'पदेन आकारसङ्ख्याभेदादेः परिग्रहः । तन्तुत्वपटत्वादिरूपस्वरूपभेदात्; जलाहरणादिरूपकार्यभेदात्; 'तन्तुः,पटः'इति व्यपदेशभेदात् । आदिपरिगृहीतात् पिण्डाकारं कारणम्, पृथुबुध्नोदराकारं च कार्यम् इत्याकारभेदात्; बहवस्तन्तवः, एकः पटः इति सङ्ख्याभेदात् इत्यर्थः । 'तदनन्यत्वम्' इति प्रतिज्ञाम् अनूद्य व्याचष्टे **तदनन्यत्वमिति** ॥ उक्तप्रतिज्ञायां

हेतुं पृच्छति **कुत इति** ॥ बुभुत्सितहेतुविषयं सूत्रभागमवतारयति **आरम्भणेति** । तत्र भेदनिषेधकमारम्भणशब्दं व्याकरोति **यथेति** ।

पूर्वाधिकरणेऽपि भेदग्राहिमानाविरोधोपपादनात् गतार्थत्वम् इत्याशङ्कानिरासायोक्तम् **अभ्युपगम्येति** ॥ अङ्गीकृत्य हि भेदग्राहिप्रमाणस्य प्रामाण्यं, भेदाभेदयो रूपभेदेन विरोधः अनन्तराधिकरणे समाहितः; सम्प्रति स्वीकृतं प्रामाण्यं तत्त्वावेदकत्वात् प्रच्याव्य व्यावहारिकत्वे व्यवस्थाप्यते । तथा च विषयभेदात् अपौनरुक्त्यमिति भावः ॥ विभागस्य वस्तुतोऽसत्त्वे हेतुत्वेन 'तदनन्यत्वम्' इति सूत्रावयवं विभजते **यस्मादिति** ॥ ननु कार्यप्रपञ्चस्य भेदाभेदाभ्यामनिर्वाच्यतामिच्छन् कारणात्परमार्थतोऽनन्यत्वं व्याचक्षाणः स्वोक्तिविरोधं कथं नाधिगच्छति ? तत्राह **व्यतिरेकेणेति** । यस्मादेवमवगम्यते तस्मात् परमार्थतो विभागो नास्तीति तद्ग्राहि मानं व्यावहारिकमानत्वात् तात्त्विकमानस्य समन्वयस्याविरोधीत्यर्थः॥ कार्यस्य कारणातिरेकेणाभावे हेतुं पृच्छति **कुत इति** ॥ बुभुत्सितहेतुविषयं सूत्रमवतारयति **आरम्भणेति** ।

**स० — लोकसिद्धं कारणाभेदमिति** । ननु कारणाभेदाङ्गीकारे परस्परं कार्यभेदः कथम् । दृश्यते च कार्यभेदः । तस्मात्कारणाभेदाङ्गीकारोऽयुक्त इत्यत उक्तं **परिणामत इति** । कार्यभेदस्याप्यङ्गीकृतत्वान्नानुपपत्तिरिति भावः । भोग्यस्य कारणाभेदमिति संबन्धः । **शास्त्रतः** वेदत इत्यर्थः । भोग्यस्यापि भोक्तृत्वापत्तिमाशङ्क्येत्यत्र दृष्टान्तः **ब्रह्मैक्यवदिति** । यथा भोग्यस्य ब्रह्मणैक्यमङ्गीक्रियते, तद्वत् भोक्तृत्वमङ्गीकरणीयम् । ननु ब्रह्मैक्याङ्गीकारेऽपि भोक्तृत्वं कुतः इत्यत उक्तं **शास्त्रत इति** । भोक्तृवर्गस्य स्वाभाविकरूपब्रह्माविभागे सिद्धे, इति शेषः । शास्त्रेण भोक्तृवर्गस्य यत् स्वाभाविकं रूपं तस्य ब्रह्माविभागस्य ब्रह्मणैक्यस्य सिद्धत्वात्, भोग्यस्य तदैक्याङ्गीकारे ब्रह्मणो भोक्तृवर्गस्य चाभिन्नत्वात्, ऐक्यवत् भोक्तृत्वमप्यङ्गीकरणीयमिति भावः ।

केचित् (?) मायिमतेन कार्यस्य कारणाभेदेऽपि कारणस्य कार्यात् भेद इत्येवं व्यवस्थितभेदाभेदसद्भावेन भोक्तृभोग्ययोः ब्रह्मणाऽभेदेऽपि ब्रह्मणस्तद्भेदेन भोग्यस्य ब्रह्मणाऽभेदेऽपि भोक्त्रभिन्नब्रह्मणाऽभेदस्य भोग्ये अभावेन भोक्तृत्वापादनानुपपत्तेः, सांख्येन च परस्परमत्यन्ताभेदाभ्युपगमात् तन्मतेन तदापादनोपपत्तेः **सांख्यसिद्धान्तेन** इत्युक्तम् । **शास्त्रतः** श्रुतितः । अनैकान्तिकत्वेनेत्यत्र 'भोग्यवर्गस्य परिणामतः सिद्धप्रातिस्विकरूपभेदानपन्हवेन लोकसिद्धं कारणाभेदमङ्गीकृत्ये'त्यस्योपपादकत्वं द्रष्टव्यम् ।

**प० — तदनन्यत्वम्** ॥ **प्रमाणमूलेति** । प्रमाणसिद्धेति भोक्त्रधिकरणार्थः तत्संवादित्वेति तु असदिति चेदित्यधिकरणार्थः । 'स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः' इत्यनुव्याख्यानानुरोधेनाह

**बाहुल्यलक्षणेति** ॥ **अनन्तरेति** । अव्यवहितपूर्वाधिकरण इत्यर्थः । भोग्यवर्गस्येत्यस्य लोकसिद्धकारणाभेदमङ्गीकृत्येत्यन्वयः । मृद्घटादेरभेदस्य लोकसिद्धत्वाल्लोकसिद्धेत्युक्तम् । साङ्ख्यसिद्धान्तेनेत्यस्याशङ्क्येत्यन्वयः । **शास्त्रतः** तत्त्वमसीत्यादिशास्त्रेण । ब्रह्मैक्यवदिति मतुप् न वतिः । भोग्यस्य कारणीभूतब्रह्माभेदे तदभिन्नभोक्तृत्वापत्तेरावश्यकत्वादिति भावः ॥ **अनैकान्तिकत्वेनेति** । फेनतरङ्गयोरेककारणसमुद्राभेदेपि परस्परमाङ्कर्यापत्तेरभावादिति भावः ॥ **वैशेषिकादिमतेनेति** । दूषणसौकर्यानूदितं **स्वरूपेति** । कार्यकारणस्वरूपभेदेन, शीतनिवारणाद्यर्थक्रियारूपकार्यभेदेन, एते तंतवोऽयं पट इत्यादिव्यवहारभेदेन, परिमाणादिभेदेन चेत्यर्थः ॥ **इत्यादिशब्दादिति** । वाचारम्भणवाक्ये विकारो घटादिरारम्भणमुपादानमित्यभेदोक्तेरिति भावः । व्याख्यातीत्यनन्तरं अनन्तराधिकरण इत्यनुषज्जते ॥ **स्याल्लोकवदिति** । फेनतरङ्गयोरिवेत्यर्थः ॥

या० — ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ ॥ **भोग्यवर्गस्येत्यादि** । अत्र भोग्यवर्गस्य कारणाभेदमङ्गीकृत्य इत्येतत् भोग्यस्यापि भोक्तृत्वापत्तिमाशङ्क्येत्यस्योपपादकम् । भोग्यस्य ब्रह्मरूपकारणाभिन्नत्वेऽपि भोक्तृत्वापत्तिः कुत इत्यत उक्तं **ब्रह्मैक्यवदिति** । ब्रह्मैक्यवान्यो भोक्ता तत्त्वापत्तिमित्यर्थः । तथा च भोक्तुर्ब्रह्माभिन्नत्वात्तदभिन्नस्य भोग्यस्यापि भोक्तृत्वापत्तिरनिवार्येति भावः । ननु भोक्तुरुपाध्यवच्छिन्नस्य ब्रह्मैक्यवत्त्वमेव कथमित्यत उक्तं भोक्तृवर्गस्य यत्स्वाभाविकं रूपं तस्य ब्रह्माविभाग इति । अत्र किं प्रमाणमित्याकाङ्क्षायामुक्तम् **शास्त्रत इति** । तत्त्वमसीत्यादिशास्त्रत इत्यर्थः । ब्रह्मपरिणामवादिमते कार्यस्य कारणाभेदेऽपि कारणस्य कार्याद्भेद इति भेदाभेदयोर्व्यवस्थितत्वेन भोक्तृभोग्ययोः ब्रह्मणा अभेदेऽपि ब्रह्मणस्तद्भेदेन भोग्यस्य ब्रह्माभेदेऽपि भोक्त्रभिन्नब्रह्माभेदस्य भोग्ये अभावेन भोक्तृत्वापादनानुपपत्तिरित्यत उक्तं **साङ्ख्यसिद्धान्तेन कारणाभेदमङ्गीकृत्येति** । साङ्ख्येन च कार्यकारणयोः परस्परमत्यन्ताभेदाभ्युपगमात् तन्मतेनोक्तमापादनमुपपन्नमिति भावः । अत्र 'भोग्यवर्गस्य साङ्ख्यसिद्धान्तेन कारणाभेदमङ्गीकृत्य' इत्येतावन्मात्रमुक्तरीत्या भोग्यस्य भोक्तृत्वापत्त्युपपादकं, 'परिमाणतः सिद्धो यः प्रातिस्विकस्वरूपभेदस्तदनपह्नवेन लोके फेनतरङ्गादौ सिद्धं कारणाभेदं प्रकृतेऽपि सांख्यसिद्धान्तेनाङ्गीकृत्ये'त्येतत्सर्वमनैकान्तिकत्वेन निरासो विहित इत्यस्योपपादकम् । समुद्ररूपैककारणाभिन्नानामपि फेनतरङ्गादीनां परस्परं भेदस्य लोके सिद्धत्वात्प्रकृतेऽपि ब्रह्मरूपैककारणाभिन्नानामपि भोक्तृभोग्यादीनां परस्परं भेदोपपत्तिरित्युपपादनस्य तेन लाभात् । नन्वेकेन कारणेनात्यन्ताभिन्नानां कार्याणां कथं परस्परं भेदः सम्भवति येन व्यभिचारचोदना सङ्गता स्यादिति, चेत् । सत्यम् । तथात्वेऽपि साङ्ख्यैः कार्याणां परस्परं भेदोऽपि स्वीकृतः । यद्वक्ष्यति । 'परस्परविभेदश्च

कार्याणामालयं भवेदि'ति । अतः 'प्रातिस्विकरूपभेदानपह्नवेन कारणाभेदं साङ्ख्यसिद्धान्तेनाङ्गीकृत्ये'त्ये-तद्व्यभिचारोपपादकमिति ज्ञातव्यम् । नन्वचेतनस्य कथं चेतनानन्यत्वमित्यत आह **व्यतिरेकेणाभाव इति** ।

श्री० — ॐ **तदनन्यत्वमारम्भणशब्दादिभ्यः** ॐ ॥ **शास्त्रत इति** । एकीभवन्तीति शास्त्रादित्यर्थः । ननु यद्यदभिन्नाभिन्नमित्यादिव्याप्तिश्च न संभवति । कार्यस्य कारणाभेदेऽपि कारणस्य कार्याद्भेदाद्भोक्तृब्रह्माभेदेऽपि ब्रह्मणो भोक्त्रभिन्नत्वाभावाद्भोक्त्रभिन्नब्रह्माभिन्नत्वाद्भोग्यस्येति न वक्तुं शक्यतेऽत उक्तं **सिद्धेत्यादि** । कारणस्य कार्येणाभेदम् ।

च० — ॐ **तदनन्यत्वमारम्भणशब्दादिभ्यः** ॐ ॥ **परिणामवादीति** । ब्रह्मणो जगदाकारेण परिणामवादीत्यर्थः । **विवर्तवादीति** । ब्रह्मणो विश्वभ्रमाधिष्ठानत्ववादीत्यर्थः ॥

सु० — तत्राद्यं व्याख्यानं तावन्निराकरोति कथं चेति ।

अनु० — ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥

कथं च तदनन्यता ॥

**कथमित्याक्षेपे । चशब्दः पूर्वसूत्रापव्याख्यानाक्षेपेणास्य समुच्चयार्थः । जगत इति वक्ष्यमाणमत्रापि संबध्यते । 'अत्र प्रतिपाद्या स्यादि'ति शेषः ।**

**अयमाशयः । यो हि ब्रह्मोपादानतां जगतोऽभ्युपगम्यापि तदन्यतां मन्यते सोऽत्र पूर्वपक्षीकरणीयः । न च वैशेषिकादिस्तथेति प्राप्त्यभावान्न तदनन्यत्वोक्तेरवसरोऽस्ति । ब्रह्मोपादानतामनङ्गीकुर्वाणं प्रति तु सैव समर्थनीया । न तु तदनन्यता । तदधीनसिद्धित्वादस्याः । अथ ब्रह्मोपादानताप्यत्र समर्थ्यत इति चेत् । न । तथा सति प्रकृत्यधिकरणवैयर्थ्यापत्तेः । प्रकृत्यधिकरणन्यायेनो(यो)पपादि(तं )तद्ब्रह्मोपादानता(त्व)मभ्युपेत्यापि तदन्यतां मन्यमानोऽत्र पूर्वपक्षीति चेत् । न । किमिदं ब्रह्मोपादानत्वं ब्रह्मसमवायित्वं वा, ब्रह्मपरिणामत्वं वा; यत्परेणाङ्गीकारितम् । नाद्यः (कल्पः) तस्यानन्यत्वविरोधात् । समवायस्य निराकरिष्यमाणत्वाच्च । द्वितीये प्रयत्नवैयर्थ्यमेव । न हि कोऽपि परिणामवादमङ्गीकृत्य कार्यकारणयोरत्यन्तभेदमङ्गीकुरुते, यं प्रतीदमारभ्येत इति ।**

शे० — **आक्षेप इति** । न कथमपीत्याक्षेप इत्यर्थः । उत्तरत्र परिहाराभावेन प्रश्नार्थत्वायोगादिति भावः ॥ **चशब्द इति** । अनेन तदनन्यता चेति चशब्दसम्बन्धः सूचितो भवति ।

ब्रह्मणो ब्रह्मानन्यतायां सिद्धान्तेऽपि सत्त्वेन तदाक्षेपायोगादाह जगत इतीति ।। कार्यस्य कारणानन्यतायाः सूत्राप्रतिपाद्यतया भाष्येऽनुक्तत्वात्तदाभायापेक्षितशेषं पूरयति अत्रेति । 'कथञ्च तदनन्यत्व'मिति सूत्रे आक्षेपार्थककथंशब्देन न कथञ्चिदिति केनापि प्रकारेण तदनन्यतायाः सूत्राप्रतिपाद्यत्वमुपदर्शितं तत्कथमित्यतस्तदर्थमन्यपूर्वपक्षासम्भवनिमित्तं तावदाह अयमाशय इति । ननु वैशेषिकरीत्या स्वरूपकार्यव्यपदेशादिभेदेन कार्यस्य कारणानन्यत्वासिद्ध्या जगतो ब्रह्मानन्यत्वाक्षेपस्य प्रदर्शितत्वात्कथमत्र पूर्वपक्षासम्भव इत्यतो भवेदेवं यद्यत्र वैशेषिकादिः पूर्वपक्षितेोपपद्येत । न च सोपपद्यत इत्याह यो हीति । तं प्रत्येवानन्यत्वप्रतिपादनस्य श्लिष्टत्वादिति भावः । ननु एवं मयाऽप्यत्र यो ब्रह्मोपादानत्वमङ्गीकृत्यापि तदनन्यत्वं न मन्यते तमेव पूर्वपक्षीकरणात् न पूर्वपक्षासंभवः इत्यतो भवेदेतदेवं यदि तव पूर्वपक्षित्वेनाभिमतो वैशेषिकादिर्जगतो ब्रह्मोपादानत्वमङ्गीकृत्य । तदनन्यत्वं न मन्येत इति स्यात् । न चैतदस्ति । वैशेषिकादिभिर्जगतो ब्रह्मानन्यताया इव ब्रह्मोपादानताया अप्यनभ्युपगमेन तेषामुक्तरूपत्वाभावादित्याह न चेति । मास्तु वैशेषिकादेस्तथात्वं किं तावता प्रकृते समायातमित्यत आह इतीति । इतिशब्दो हेतौ । वैशेषिकादेस्तथात्वेन तद्रीत्या जगतो ब्रह्मोपादानकत्वमभ्युपगम्य ब्रह्मानन्यत्वशङ्कारूपपूर्वपक्षानुदयात्तं प्रत्यनन्यत्वप्रतिपादनमनवसरप्रस्तमिति भावः । अनवसरमेवोपपादयति अन्येति ।। सैवेति प्रथममिति शेषः ।। न त्विति । प्रथममिति शेषः । तत्र हेतुमाह तदिति तदनन्यताया तदुपादानत्वैकप्रमाणकत्वात्तदसिद्धौ न सा समर्थयितुं शक्यत इत्यर्थः । ननु ब्रह्मोपादानतामनङ्गीकुर्वाणं प्रति तस्या अन्यत्र साधनादत्रोक्तन्यायोपपादितब्रह्मोपादानतामङ्गीकृत्य तदन्यतां मन्यमान एवात्र पूर्वपक्षयमिमतः । तं प्रति चास्त्येवोक्तरीत्या जगतो ब्रह्मानन्यत्वप्राप्तिरिति न तदनन्यत्वप्रतिपादनस्य सूत्रेऽनवसरप्रस्तत्वमित्याशयेन शङ्कते अथेति ।। न तथा सतीति । तदधिकरणव्युत्पाद्यप्रमेयस्यानेनैव सिद्धेरिति भावः । न त्वत्र न वैशेषिकादिः पूर्वपक्षी येनोक्तदोषः किन्तु जगतो ब्रह्मोपादानतामभ्युपगम्यापि तदन्यतां मन्यमान एव । तत्कथमनन्यत्वप्रतिपादनस्यानवसरप्रस्तत्वमित्याशङ्कते प्रकृत्यधिकरण इति ।। अङ्गीकारितमिति । प्रकृत्यधिकरण इति शेषः ।। विरोधादिति । समवायस्यान्यत्वेनैव सहवृत्तेः सर्वत्र दर्शनेनानन्यत्वेन विरोधादित्यर्थः । अङ्गीकृत्य च समवायं विरोधोद्भावनमिदम् । वस्तुतस्तु स एवासिद्धः । 'समवायाभ्युपगमाच्चे'त्यादिना वैशेषिकपरीक्षायां तस्य निराकरिष्यमाणत्वादित्याह समवायस्येति ।। प्रयत्नवैयर्थ्यमिति । अधिकरणानारम्भप्रसङ्ग इत्यर्थः । एतदेव विशदयति न हीति । आरम्भेतेतीत्यत्रत्येतिशब्दस्य 'अयमाशय' इति पूर्वेण सम्बन्धः ।

**स०— परेणेति** । मायावादिनेत्यर्थः ।

**प० —** तर्हि वैशेषिकादिकं प्रति कीदृशोक्तेरवसर इत्यत आह **ब्रह्मोपादानतामिति** ॥ **अङ्गीकारितमिति** । प्रकृत्यधिकरणन्यायेनेति योज्यम् ।

**या० —** अवसराभावमेवोपपादयति **ब्रह्मोपादानतामिति** ॥ **अङ्गीकारितमिति** । प्रकृत्यधिकरण इति शेषः ॥

**श्री० — सा** ब्रह्मोपादानता । **आक्षेपेण** निराकरणेन ॥ **तदिति** । ब्रह्मोपादानत्वे सिद्धे उपादानोपादेययोरनन्यत्वं स्वयमेव भविष्यतीत्यस्या अनन्यताया उपादानत्वाधीनसिद्धिकत्वात्सैव समर्थनीयेत्यर्थः ॥ **मन्यमान इति** । वैशेषिकातिरिक्त इत्यर्थः ॥ **अथेति** । न केवलं तदनन्यतेत्यपिशब्दार्थः । **परेण** तार्किकेण, त्वयेति शेषः ॥ **तस्येति** । ब्रह्मसमवायित्वं जगतोऽङ्गीकृत्य प्रवृत्तं प्रति कथं त्वया अनन्यत्वं साध्यते, तदनन्यत्वतत्समवायित्वयोर्विरोधादित्यर्थः ॥ **निराकरिष्यमाणत्वाच्चेति** । तथा च ब्रह्मसमवायिकारणकत्वरूपं ब्रह्मोपादानकत्वं कथं परेणाङ्गीतकृमिति भावः ॥ **प्रयत्नेति** । अनन्यत्वसाधनप्रयत्नेत्यर्थः । तदुपपादयति **न हीति** ।

**सु० — यद्वा कथं च तदनन्यता जगतो वक्तुं शक्यते । अनन्यत्वं हि भेदाभावः । अत्यन्ताभेद इति यावत् । भेदाभेदौ च परेणाङ्गीकृतौ । अतस्तादात्म्यमिति वक्तव्यं स्यात् । नैष दोषः; यावता कार्यस्य कारणेनाभेद एव, कारणस्य तु कार्याद्भेद एव, इत्येवं भेदाभेदावङ्गीकृताविति चेन्न । यदि ब्रह्म जगतोऽन्यदेव तदा कथं च तदनन्यत्वं(ता) जगतः स्यात् । न हि यद्यतोऽत्यन्तभिन्नं तत्तेनात्यन्ताभिन्नमिति संभवति, अतिप्रसङ्गादिति ।**

**शे० —** एवं प्राप्त्यभावान्न 'तदनन्यत्वमि'ति सूत्रं जगतो ब्रह्मानन्यत्वप्रतिपादकमित्यर्थपरतया कथञ्चेति भाष्यं योजितम् । इदानीं त्वङ्गीकारविरोधादित्यभिप्रेत्य तमुपपादयति **अनन्यत्वं हीति** । परोत्प्रेक्षितविरोधपरिहाराभासदूषणपरतयाऽप्येतदेव भाष्यं योजयितुमाशङ्कते **नेति** । भाष्यस्योक्तविरोधपरिहाराभासदूषकतासिद्ध्यर्थमपेक्षितपूरणेन भाष्यं योजयति **यदीत्यादिना** ।

**प० —** तदनन्यत्वमित्युक्तिर्भेदाभेदाङ्गीकारपक्षे युक्तेति शङ्कते **नैष दोष इति** । तादात्म्यमित्युक्तो दोषो नेत्यर्थः ॥ **अतिप्रसङ्गादिति** । घटपटादेरपि तथात्वापत्तेरिति भावः ।

**श्री० — परेणेति** । सिद्धान्तकर्त्रा भास्करेण त्वयेत्यर्थः । तथा च कार्यस्य कारणेन भेदाभेदयोरङ्गीकृतत्वादभेमनङ्गीकुर्वन्तं पूर्वपक्षिणं प्रति तादात्म्यमात्रं साधनीयमत्यन्ताभेदसाधनं तु स्वसिद्धान्तविरुद्धमित्यर्थः । द्वितीये प्रयत्नवैयर्थ्यमित्युक्तदोषं परिहरति **नैष दोष इति** ॥ **अभेद एवेति** ।

अत्यन्ताभेद एवेत्यर्थः । तथा च न विरोध इति भावः ॥ **अतिप्रसङ्गादिति** । गजादत्यन्तभिन्नस्यापि गर्दभस्य गजादत्यन्ताभेदः स्यादित्यर्थः ।

**सु०— अथवा कथं च तदनन्यता प्रतिज्ञातुं युक्ता । प्रमाणाभावादिति शेषः । ननु चारम्भणशब्दादिभ्य इत्युक्तत्वात्कथं प्रमाणाभाव इति चेत् । अत्र वक्तव्यम् । आरम्भणशब्दस्तावत्किं साक्षाज्जगतो ब्रह्मानन्यत्वमाचक्षीत, उत विकारस्य विकार्यनन्यत्वम् । आद्ये कथं च तदनन्यता जगतोस्यार्थः स्यात् । यथा सोम्येति मृत्पिण्डादेः प्रकृतत्वादित्युत्तरम् । द्वितीये भवतु नाम विकारस्य विकार्यनन्यत्वम्, जगतस्तु कथं तदनन्यतेति ।**

शे० — आरम्भणशब्दादिभ्य इत्येतत्सूत्रखण्डसूचिततया पराभिमतारम्भणशब्दरूपप्रमाणनिरासकतयाऽप्येतदेव भाष्यं योजयितुं प्रथमं तावज्जगतो ब्रह्मानन्यत्वप्रतिज्ञायाः प्रमाणाभावेनायुक्तत्वसमर्पकतया तद्व्याचष्टे **अथवेति** । नन्वारम्भणशब्दरूपप्रमाणनिरासकत्वं न भाष्यस्य प्रतीयते तत्कथं तेन तन्निरास इत्यतोऽत्र संभावितविकल्पद्वयप्रदर्शनपूर्वकं प्रथमपक्षनिरासपरतया भाष्यं व्यापारयति **अत्रेति** ॥ **आद्ये इति** । प्रकृतघटादिविषयत्वादारम्भणशब्दस्य जगद्विषयत्वाभावान्न तेन जगतो ब्रह्मानन्यत्वसिद्धिरिति भावः । अपेक्षिताध्याहारेण द्वितीयपक्षनिरासपरतया तदेव भाष्यं व्यापारयति **द्वितीय इति** ।

प० — **विकार्यनन्यत्वमिति** । विकारिणोपादानेनानन्यत्वमित्यर्थः ।

श्री० — **अस्य** आरम्भणशब्दस्य ॥ **प्रकृतत्वादिति** । तथा च मृन्मयादेव मृत्पिण्डाद्यनन्यत्वमस्यार्थो न तु महदादिसर्वजगतो ब्रह्मानन्यत्वमित्यर्थः ।

**सु० — (ननु) विकारस्य विकार्यनन्यत्वे तेनोक्तेपि जगतो ब्रह्मानन्यत्वं सिद्ध्यत्येव । तस्यापि तद्विकारत्वादित्यत आह** जगतस्त्विति ।

**अनु०** — जगतस्त्वविका(रि)रत्व उक्तन्यायेन साधिते ॥

**अविकारत्वे ब्रह्मविकारत्वाभावे ।** उक्तन्यायेन **'न च प्रकृती'त्यादिनेति शेषः । साधिते सति कथं च तदनन्यतेत्यन्वयः ॥ यद्वा जगत इति पूर्वेणैव संबध्यते । अविकारत्वे ब्रह्मण इति शेषः । न विद्यते विकारो यस्येत्यविकारम् । तस्य भावस्तत्त्वं, तस्मिन् ।**

शे० — उक्तरीत्या 'कथं च तदनन्यता जगतः' इति भाष्येणैव प्रमाणनिराससिद्धेर्जगतो ब्रह्मणो वाऽविकारत्ववर्णनपरमुत्तरभाष्यमनर्थकमित्याशङ्क्य विकारस्य विकार्यनन्यत्वप्रतिपादकारम्भणशब्दस्य साक्षाज्जगतो ब्रह्मानन्यत्वगमकत्वासम्भवेऽप्यर्थतस्तद्गमकत्वं भविष्यतीति शङ्कापरिहारार्थत्वान्न तदिति भावेन अर्थत आरम्भणशब्देन जगतो ब्रह्मानन्यत्वसिद्धिशङ्कामुत्थापयति **विकारस्येति** । विकार-

त्वाभावमात्रस्याविकारत्वशब्दार्थत्वेऽपि योग्यतादिवशाद्ब्रह्मणः सम्बन्ध इति भावेन अविकारत्वमित्येत-द्ब्रह्मविकारत्वाभाव इति व्याख्यातम् । 'न च प्रकृतीत्यादिने'त्यत्रादिशब्देन 'ब्रह्मोपादानमुच्यते' इति वाक्यशेषपरिग्रहः ॥ **साधिते सतीति** । सतिसप्तमीयमित्यर्थः । साकाङ्क्षत्वेन वाक्याभासत्व-शङ्कापरिहाराय कथं च तदनन्यतेति पूर्वेण सम्बन्धमाह **कथं चेति** । एवं 'जगतस्त्वविकारत्वे' इति कारिकाखण्डे जगत इत्यस्याविकारत्व इत्यनेनापि सम्बन्धमङ्गीकृत्य जगतो ब्रह्मविकारत्वाभावाद्विकारस्य विकार्यनन्यत्वप्रतिपादकारम्भणशब्देन नार्थतोऽपि जगतो ब्रह्मानन्यत्वसिद्धिरित्युक्तम् । इदानीं त्वारम्भण-शब्देनार्थतो जगतो ब्रह्मानन्यत्वसिद्धिशङ्कायां जगतो ब्रह्मविकारत्वाभावसाधनेनेव ब्रह्मणो विकारित्वाभाव-साधनेनापि परिहारान्न जगत इत्यस्याविकारत्व इत्यनेन सम्बन्धः । किन्तु कथं च तदनन्यता जगत इति पूर्वेणैव सम्बन्ध इति पक्षान्तरमाह **यद्वेति** । मूले ब्रह्मण इत्यनुक्तेर्न ब्रह्मणो विकारित्वाभावप्रतिपादकत्व-मस्य भाष्यस्येति कथमनेन तन्निरास इत्यतोऽपेक्षितमर्थं शेषपूरणेनाह **ब्रह्मण इति शेष इति** । ननु जगतो ब्रह्मविकारत्वाभावेनेव ब्रह्मणो विकारित्वाभावसाधनेनैतच्छङ्कानिरासेऽपि ब्रह्मणोऽविकार-त्वसाधनेन न तच्छङ्कानिरासः । अविकारत्वेऽपि ब्रह्मणो जगत्प्रति विकारित्वमात्रेण जगतो ब्रह्मा-नन्यत्वसिद्धेरवर्जनीयत्वादित्यतोऽत्राविकारपदस्याविकारिपरत्वाद्विकारित्वाभावस्यैवाविकारत्व इत्यनेन वर्णनाद्युक्त एवोक्तशङ्कानिरास इति भावेनाविकारत्व इत्यस्य कथमविकारित्वमर्थ इत्यतस्तद्व्युत्पाद्य दर्शयति **न विद्यत इत्यादिना** । \

प० — **न च प्रकृतीति** । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्यादिना पूर्वपादोक्तन्या-येनेत्यर्थः ॥ **इत्यन्वय इति** । विकारत्वाधीनत्वादनन्यताया इति भावः ॥

श्री० — शङ्कते **विकारस्येति** ॥ **तस्यापीति** । जगतोऽपि ब्रह्मविकारत्वादित्यर्थः । एक-विज्ञानेन सर्वविज्ञानं जगतो ब्रह्मविकारत्वादावेव पर्यवस्यतीति भावः ॥ **न च प्रकृतीत्यादिनेति** । 'न च प्रकृतिशब्देन ब्रह्मोपादानमिष्यते । अविकारः सदा शुद्धो नित्य आत्मा परो हरिरि'ति प्रथमाध्यायचतुर्थपाद उक्तन्यायेनेत्यर्थः । **अस्य** आरम्भणशब्दस्य ।

सु० – नन्वत्रारम्भणश(ब्दश)ब्देन 'उत तमादेशमप्राक्ष्य(क्षः)' इत्याद्या श्रुतिरुपलक्ष्यते, तत्तात्पर्यपर्यालोचनायां च जगतो ब्रह्मविकारत्वं तदनन्यत्वं चावगम्यते इति चेन्न । महावा-क्यावान्तरवाक्योपक्रमत्वप्रधानवाचित्वाद्यभावेनास्य श्रुत्युपलक्षणयोपादाने निमित्ताभावात् । अभ्युपेत्याप्युपलक्षणत्वमाह अविकारत्व इति । विकारत्वादन्यस्मिन्सादृश्यादौ श्रुत्यर्थतयोक्तन्या-येन साधिते सति श्रुतितात्पर्यपर्यालोचनया च कथं तदनन्यता सिद्ध्येदिति ।

शे० — ननु 'अविकारत्वे उक्तन्यायेन साधिते' इत्युत्तरभाष्ये सादृश्यादेः श्रुत्यर्थतया साधितत्वमुच्यते, तदनर्थकम् । न च जगतो ब्रह्मानन्यत्वे पराभिप्रेतप्रमाणस्यार्थान्तरपरत्वेन तदनन्यत्वाद्यर्थकत्वाभावप्रतिपादनद्वारा जगतस्तदनन्यताया अप्रामाणिकत्वसिद्ध्यर्थं तदिति वाच्यम् । तत्र प्रमाणतया पराभिमतस्यारम्भणशब्दस्य साक्षादर्थतो वा तदनन्यत्वाद्यगमकत्वस्य 'कथं च तदनन्यता । जगतः' इति पूर्वभाष्येणैव व्युत्पादितत्वेन तन्मात्रेणैव तदनन्यताया अप्रामाणिकत्वस्य सिद्धत्वात् । न च तेनारम्भणशब्दमात्रस्य तत्राप्रामाण्यसिद्धावपि तत्संगृहीताया 'उत तमादेशमप्राक्ष्य' इत्यनेनैकविज्ञानेन सर्वविज्ञानश्रुतेस्तदसिद्ध्या तत्सिद्ध्यर्थमेतदिति वाच्यम् । आरम्भणशब्दस्य तत्राशक्तत्वेन तेन तत्संग्रहस्यैव परेण वक्तुमशक्यत्वाज्जगतो ब्रह्मविकारस्य ब्रह्मानन्यत्वस्य च तत्राप्रतिभासेन तत्संग्रहस्य व्यर्थत्वाच्चेत्यतस्तेन तत्परिग्रहप्रकारप्रदर्शनपूर्वकं तस्यास्तत्र प्रामाण्यं च व्युत्पाद्य तत्सावकाशत्वव्युत्पादकतयोत्तरभाष्यं योजयितुमारम्भणशब्देन तत्परिग्रहशङ्कामुत्थापयति **नन्विति** ॥ **तत्तात्पर्यपर्यालोचनयेति** । एकविज्ञानेन सर्वविज्ञानान्यथाऽनुपपत्त्येत्यर्थः । लोकेऽन्यज्ञानेनान्यज्ञानस्यादर्शनादिति भावः । भवेदेवं श्रुतितात्पर्यपर्यालोचनया जगतो ब्रह्मानन्यत्वसाधनत्वं यदि सौत्रारम्भणशब्दस्य परोक्त श्रुत्युपलक्षणतयोपादानमुपपद्येत । न तदुपपद्यत इत्याह **महावाक्येति** । श्रुत्युपलक्षणयोपादानं हि तन्निमित्ते सति स्यात् । तन्निमित्तं च महावाक्योपक्रमत्वम्, अवान्तरवाक्योपक्रमत्वं वा, प्रधानवाचित्वं वा, आदिपरिगृहीतमन्यद्वा किञ्चिदेतेष्वन्यतमस्य सत्त्व एव श्रुत्युपलक्षणयोपादानदर्शनात् । न चैतेषु यत्किञ्चिदप्यारम्भणशब्दे परस्यापि सम्मतम् । तत्कथं तस्य श्रुत्युपलक्षणया तस्योपादानं स्यात् । स्वमते तु प्रधानवाचित्वादारम्भणशब्दस्य श्रुत्युपलक्षणयोपादानमुपपन्नमिति भावः । नन्वेवं निमित्ताभावेन सौत्रारम्भणशब्दस्य 'उत तमादेशमप्राक्ष्य' इति श्रुत्युपलक्षणत्वायोगादेकविज्ञानेन सर्वविज्ञानश्रुतेर्न तेन प्राप्तिरित्यप्राप्तश्रुतेरर्थान्तरवर्णनेनानन्यत्वेऽप्रामाण्यव्युत्पादनपरेत्तरभाष्यानर्थक्यमित्यत आह **अभ्युपेत्येति** । उपलक्षणत्वेपि नेष्टसिद्धिः परस्येत्याशयेनोपलक्षणत्वाभ्युपगमो भाष्यकाराणामिति भावः । ननु चैकविज्ञानेन सर्वविज्ञानश्रुतेः सादृश्याद्यर्थताया उक्तन्यायसिद्धत्वेऽप्यविकारार्थत्वस्य पूर्वमसाधितत्वात्तत्साधितत्वकथनमनुपपन्नमित्यतोऽत्राविकारत्वपदेन सादृश्यादेरेव ग्रहणान्नानुपपत्तिरित्यभिप्रेत्याविकारत्वपदेन तल्लाभं दर्शयति **विकारत्वादन्यस्मिन्नित्यादिना** । आदिपदेन प्राधान्यादेः परिग्रहः ॥ **उक्तन्यायेनेति** । 'प्राधान्यात्तत्परिज्ञानात्' इत्यादिनेति शेषः । यद्यपि तत्र प्राधान्यार्थत्वमेवोक्तं न तु सादृश्यार्थत्वमपीत्युक्तन्यायेनेति न श्लिष्टम् । तथाऽपि सादृश्यादेकविज्ञानेन सर्वविज्ञानमाचार्येणान्यत्र व्युत्पादितमत्रानुसन्धेयमिति स्वकीयतात्पर्यनिरूपणमनुरुध्य सादृश्यादावित्युक्तमिति ज्ञेयम् । वस्तुतस्तु सादृश्यादावित्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा प्राधान्यस्यैवोक्तेर्नानुपपत्तिरिति द्रष्टव्यम् । उक्तशङ्कापरिहारस्य मूलारूढता-

शब्देन तदाक्षेपो लभ्यते । तत्रोक्तनिमित्तत्रयमध्ये किमस्तीति चेत् । प्रधानवाचित्वमिति वदामः । नन्वत्र यदि शाब्दं प्राधान्यं विवक्षितं तर्हि किंस्विदासीदधिष्ठानमिति श्रौतनिर्देशानुसारेणाधिष्ठानशब्दस्यैव प्राधान्यादधिष्ठानशब्दादिभ्य इत्यधिष्ठानशब्दं प्रयुज्येत, नैवाक्षेप उपलक्षणीय इति चेत् । सत्यम् । तथाऽप्यार्थिकं प्राधान्यमस्ति । तथा हि । आरम्भणशब्दस्तावदुत्पादकवाची । उत्पादकं च साधकतमं तच्च करणं चाधिष्ठानाद्यपेक्षया प्रधानमतः प्रधानवाचित्वात्किंस्विदासीदधिष्ठानमिति वाक्योपक्रमप्रतीतत्वरूपशाब्दप्राधान्यापेक्षयाऽऽर्थिकप्राधान्यस्य बलवत्त्वाद्युक्त आरम्भणशब्दस्यैव प्रयोगस्तस्यैवोपलक्षकत्वं युक्तमित्यर्थः । एतच्चोत्तरत्र स्पष्टम् ॥

**सु० — यदप्युक्तमादिपदगृहीतादैतदात्म्यमिदं सर्वमित्यादिवाक्यात्तदनन्यत्वसिद्धिरिति तदप्यसत् । आदिपदेन वाक्यान्तरग्रहणस्यानुपपत्तेः । तथा सत्येतेषामपि शब्दत्वेनारम्भणादिशब्देभ्य इति प्रयोगप्रसङ्गात् ।**

**अस्तु वा कथञ्चिदादिपदोपात्तता(त्वं) तेषां वाक्यानाम् । तथाऽपि नैतेभ्यस्तदनन्यता सिध्यति । उपपत्तिविरुद्धत्वादित्याशयेन पृच्छति** कथं चेति । **या सूत्रकृता प्रतिज्ञाता श्रुतिभिश्च प्रतिपादिता सा जगतस्तदनन्यता कथं किंप्रकारा । 'किं पिकः कोकिल' इतिवदेकत्वलक्षणा किंवा मृद्धट इतिवद्विकार(रि)विकारि(र)त्वलक्षणेति प्रश्नार्थः ।**

**आद्यमाक्षिपति ।** कथं चेति । **एकत्वलक्षणा जगतस्तदनन्यता तु कथं सूत्रकृता प्रतिज्ञायेत । कथं च श्रुतिभिः प्रतिपाद्येत न कथञ्चिदित्यर्थः । अत्र हेतुमाह** अविकारत्व इति । **ब्रह्मणोऽविकारत्व उक्तन्यायेन साधिते सति जगतस्तु विकारात्मकत्वे प्रत्यक्षादिप्रमिते सति विरुद्धधर्माधिकरणत्वादिति भावः । द्वितीयमाक्षिपति** कथं चेति । **विकारिविकारत्वरूप इति शेषः । आक्षेपे युक्तिमाह** जगतस्त्विति । **व्याख्यानं पूर्ववत् ।**

**शे०** — आरम्भणशब्दादिभ्य इत्यादिशब्दोपात्तवाक्यानां भाष्ये तदनन्यत्वासाधकताया अनुपपादितत्वेन प्राप्तन्यूनताशङ्कापरिहारायादिशब्दोपात्तप्रमाणनिरासपरतयाऽपि 'कथं च तदनन्यते'त्येतदेव भाष्यं योजयितुमादिपदोपात्तवाक्यैस्तदनन्यत्वसिद्धिमनुवदति **यदपीति** । भाष्ये आदिपदेन वाक्यान्तरग्रहणस्य अनिरस्तत्वेन प्रसक्तां वाक्यान्तरस्यादिपदोपात्ततायां भाष्यकारानुमतताशङ्कां स्वयं तदनुपपत्तिव्युत्पादनेन परिहरति **तदप्यसदित्यादिना** । कुतो न वाक्यान्तरस्य ग्रहणमित्यतस्तद्ग्रहणे बाधकमाह **तथा सतीति ॥ एतेषामपीति** । आदिशब्दोपात्तानामिदं सर्वमित्यादीनामित्यर्थः । **इति प्रयोगः स्यात्** । न त्वारम्भणशब्दादिभ्य इति प्रयोगः । तथा सति शब्देतरविजातीयप्रमाणानामेवादिशब्देन

लाभापत्त्या वाक्यान्तरस्यादिपदोपात्तता न सिध्येदिति भावः । तर्हि भाष्यकृताऽप्यादिपदेन वाक्यान्तर-ग्रहणानुपपत्तिरेव वक्तव्या, किं तत्परित्यागेनोपपत्तिविरोधव्युत्पादनप्रयासेनेत्यत आदिपदोपात्ततायामपि वाक्यान्तराणां न परस्येष्टसिद्धिरित्यभिप्रेत्यादिशब्देन वाक्यान्तराणां ग्रहणासम्भवमनुपपाद्योपपत्तिविरोधेन तत्प्रामाण्यनिराकरणं भाष्यकारीयमुपपन्नमित्याशयेनाङ्गीकारवादरूपतया भाष्यमवतारयति **अस्तु वेत्यादिना** । कथमनन्यत्वे वाक्यानामुपपत्तिविरोध इत्यतस्तं दर्शयितुं सम्भावितविकल्पद्वयप्रदर्शनपरतया तावद्भाष्यं व्याचष्टे **येत्यादिना** । भाष्ये, विकल्पितपक्षद्वयाक्षेपादर्शनान्न्यूनतामाशङ्क्यैतदेव भाष्यं तदाक्षेपतया योजयति **आद्यमाक्षिपतीति** । प्रथमपक्षाक्षेपस्य मूलारूढतासिद्ध्यर्थं तत्परतया भाष्यं व्याचष्टे **एकत्वलक्षणेति** । तर्ह्यनेनैव भाष्येण प्रथमपक्षाक्षेपसिद्धेरुत्तरभाष्यानर्थक्यमित्यतस्तदाक्षेपमात्र-सिद्धावप्याक्षेपकयुक्तेरनुपन्यस्ततया तदुपन्यासार्थत्वान्नोत्तरभाष्यानर्थक्यमित्यभिप्रेत्याक्षेपे हेतुसमर्पकतयो-त्तरभाष्यं योजयति **अत्रेति** । ब्रह्मणोऽविकारत्वमात्रं ब्रह्मजगतोर्नैकत्वाभावसाधकमित्यत उपल-क्षणतया मूलं व्याचष्टे **जगतस्तु विकारात्मकत्वे प्रत्यक्षादिप्रमिते सतीति** । तावताऽप्याक्षेपहेतुः कः सिद्ध इत्यत आह **विरुद्धेति** । भाष्यस्य द्वितीयपक्षाक्षेपत्वसिद्ध्यर्थं शेषपूरणेन दर्शयति **विकारीति** ॥ **व्याख्यानमिति** । जगतोऽविकारत्वे ब्रह्मविकारत्वाभावे, 'न च प्रकृती'त्याद्युक्तन्यायेन साधिते सति विकारिविकारभावलक्षणा च तदनन्यता कथमिति पूर्वेणान्वय इति व्याख्यानं पूर्ववदित्यर्थः ।

प० — **व्याख्यानं पूर्ववदिति** । जगतो ब्रह्मविकारत्वाभावे 'न च प्रकृतिशब्देने'त्यादिनोक्त-न्यायेन साधिते सति विकारिविकारत्वरूपा तदनन्यता कथम् । न कथमपीत्येवमित्यर्थः ॥

श्री० — **अनुपपत्तेरिति** । यथा 'वशिष्ठाद्याः समागताः' इत्युक्ते तत्सजातीया ऋषय एवादि-पदेन गृह्यन्ते । तद्वदत्राप्यादिपदेनारम्भणशब्दसजातीयः कश्चिच्छब्द एव ग्राह्यो न वाक्यमित्यर्थः ॥ **तथा सतीति** । उपपत्तौ वेत्यर्थः । **एतेषामपि** वाक्यानामपि ॥ **पूर्ववदिति** । "अविकारत्वे ब्रह्म-विकारत्वाभावे । 'न च प्रकृती'त्युक्तन्यायेने"ति शेषः । इति पूर्ववदित्यर्थः ।

**सु० — नन्वेवमुपपत्तिविरुद्धाऽपि जगतो ब्रह्मानन्यताऽङ्गीकरणीया । अन्यथैतदा-त्म्यमिदं सर्वमित्यादिश्रुतीनामप्रामाण्यप्रसङ्गादित्यत आह कथं चेति । अविकारित्वेऽपि, विकारत्वादन्यस्मिंस्तदधीनत्वादौ श्रुत्यर्थे 'स्वातन्त्र्ये च विशिष्टत्व' इत्युक्तन्यायेन साधिते सति कथं तदनन्यताऽङ्गीकर्तुमुचिता । सावकाशश्रुतिप्रतीतोऽप्यर्थो निरवकाशोपपत्तिविरोधात्त्याज्य एव । यथोक्तमभिमान्यधिकरण इति भावः ॥**

शे० — विषयान्तरोपदर्शनेन श्रुतिप्रामाण्यसमर्थनपरतयाऽपि भाष्यं योजयितुं श्रुत्यप्रामाण्यशङ्कामुत्थापयति **नन्विति** ॥ **अन्यथेति** । उपपत्तिविरोधेन श्रुतेस्तदनन्यार्थकत्वाभाव इत्यर्थः । **अप्रामाण्येति** । न च तद्युक्तमपौरुषेयत्वेन निर्दोषायास्तदयोगादिति भावः । तावता कथमुक्तशङ्कापरिहार इत्यतोऽभिप्रायमाह **सावकाशेति** । नन्वेतदयुक्तम् । यद्युक्तिविरोधेन श्रुतेः स्वार्थात्प्रच्यावनं तस्याः सकलप्रमाणापेक्षया प्राबल्यात् । यत्किञ्चित्स्वार्थात्प्रच्यावनं तदुपजीव्यविरोध एव । न चात्र तथेत्याशङ्क्याह **यथेति** । अयं भावः । श्रुतेरर्थप्रच्यावनस्यायुक्ततां वदतः कोऽभिसन्धिः । किं विरुद्धयोरेव प्रामाण्यमुत वेदविरुद्धाया युक्तेरप्रामाण्यमिति । नाद्यः । वस्तुनि विकल्पप्रसङ्गात् । नान्त्यः । व्याप्तिपक्षधर्मतोपेतायास्तदयोगात् । कथं त'र्ह्युपजीव्यविरोधे त्वि'त्युक्तमिति चेदुपलक्षणत्वेनेति ब्रूमः । उपजीव्यं खलु नोपजीव्यमित्येव बाधकं किन्तु प्रबलत्वेन । तद्यदि युक्त्यन्तरस्यापि स्यात्तदा कुतो न बाधकतेत्यभिमान्यधिकरणे 'दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृशः' इति कारिकाखण्डेन भाष्यकृतोक्तमित्यर्थः ।

प० — **इत्युक्तन्यायेनेति** । जिज्ञासासूत्रानुव्याख्यानोक्तन्यायेनेत्यर्थः ॥ **निरवकाशोपपत्तीति** । विरुद्धधर्माधिकरणत्वादिरूपोपपत्तिविरोधादित्यर्थः ॥ **यथोक्तमिति** । तत्र मृत्त्वजडत्वादियुक्तिविरोधेन मृदब्रवीदित्यादेः प्रतीतार्थप्रच्यावनस्य कृतत्वादिति भावः ।

श्री० — **यथोक्तमिति** । 'दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृशः' इत्युक्तत्वादिति ध्येयम् ।

सु० — **अपरमपि** व्याख्यानं दूषयति कथं चेति । (इति) **प्राहेत्यनुवर्तते । यद्यत्र कार्यमात्रप्रपञ्चस्यानृतत्वं सूत्रकृतोऽभिमतं स्यात् । तदाऽनृतत्वमित्येव ब्रूयात् । तदनन्यत्वमिति कथं प्राह । न हि ब्रह्मानन्यत्वशब्दोऽनृतत्ववाची । तथा सति ब्रह्मणोऽप्यनृतत्वप्रसङ्गात् ।**

**ननु च तदनन्यत्वं तद्व्यतिरेकेणाभाव इति व्याख्यातम् । सत्यम् । न तथाऽप्यनृतत्वलाभः । तद्व्यतिरेकेण नास्तीत्युक्ते तदात्मनाऽस्तीति लभ्यते । न पुनः सर्वथाऽप्यनृतत्वम् । अन्यथा ब्रह्मातिरेकेणासतो जीवचैतन्यस्यापि सर्वथाऽनृतत्वं स्यात् । प्रसिद्धं चैतत् । यद्विशिष्ट(विषयः)प्रतिषेधो विशेषणमुपसंक्रामतीति ।**

**सत्यम् । तथाऽपि ब्रह्मविवर्तताज्ञापनायैवमुक्तमिति चेत् (न) । तथा सति तत्रारोपित(त्व)मिति वक्तव्यत्वात् । न हि शुक्तिकाशकले कलधौतमारोपितमिति वक्तव्ये ततोनन्यदिति प्रयुञ्ज(ज्य)ते ।**

**अथ ब्रह्मसत्तयैवेदं सत्, नापरा सत्ताऽस्यास्तीति ज्ञापनमेतस्य प्रयोजनमिति चेत्। तर्हि परमार्थसदेवेदमित्यायातमिति कथमनृतत्वम्।**

**अथ येयं प्रपञ्चे सत्ताऽवभासते साऽधिष्ठानब्रह्मगतैवारोपितेत्यनेन ज्ञाप्यत इति चेत्। तत्किमन्यथाख्यातिवादिवदनिर्वचनीयख्यातिवादिनोऽप्यारोपिताकारस्यान्यत्र पारमार्थ्यमावश्यकम्। तथात्वे चाकाशत्वादिकमपि ब्रह्मणि पारमार्थिकमङ्गीकार्यं(रणीयं) स्यात्। रजतत्वादिकं च शुक्तिकायामिति।**

**शे०— अपरमिति।** विवर्तवादिव्याख्या मित्यर्थः। परव्याख्यानस्य सूत्राक्षराननुगुणतां दर्शयितुं योग्यं पूरयति **इतीति**। 'भोक्त्रापत्तेरिति प्राहे'ति पूर्ववाक्यादिति शेषः। सूत्राक्षराननुगुणतामभिनयेन दर्शयति **यद्यत्रेति**। नन्वनृतशब्दस्येव तदनन्यत्वशब्दस्याप्यनृतत्ववाचकत्वादनृतत्वमित्येव ब्रूयादित्यापादनं निर्बीजमित्यतो भवेदेवं यदि तदनन्यत्वशब्दस्यानृतत्ववाचकत्वं स्यान्न च तदस्तीत्याह **न हीति**। अभिधानाद्यभावादिति भावः। न केवलं साधकाभावो बाधकं चास्तीत्याह **तथा सतीति**। ब्रह्मण्यपि ब्रह्मानन्यत्वशब्दप्रयोगादिति भावः॥ **तदात्मनाऽस्तीति लभ्यत इति**। ब्रह्मव्यतिरेकेणासत्त्वव्यवहारालम्बनस्य जीवचैतन्यस्यानन्दादेश्च तदात्मना सत्त्वदर्शनादिति भावः। तदात्मना सत्त्वलाभमनभ्युपगम्य तद्व्यतिरेकेण नास्तीत्युक्त्या सर्वथाऽप्यनृतत्वलाभाभ्युपगमे बाधकमाह **अन्यथेति**। जीवचैतन्यस्येत्युपलक्षणम्। आनन्दादेश्चेत्यपि द्रष्टव्यम्। तद्व्यतिरेकेण नास्तित्वव्यवहारालम्बनत्वाविशेषादिति भावः। न केवलं विशिष्टनिषेधस्य विशेषणमात्रविषयत्वं दर्शनादिबलमात्रसिद्धं किन्तु न्यायसिद्धं चेत्याह **प्रसिद्धं चैतदिति**। यद्यपि 'सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः' इत्येवात्र न्यायः पठितो न तूक्तरूपस्तथाऽप्यर्थत एकदेशस्य प्रकृतोपयोगाभिप्रायेणायं पाठ इति ध्येयम्। **विशेषणमुपसंक्रामत इतीति**। विशेष्यमात्रोपस्थितेर्निषेधानुपयोगादितराव्यावृत्तया तत्स्वरूपोपस्थितेश्च स्वत एवेतरव्यावृत्तविशेषणोपस्थितिं विनाऽयोगेन निष्कृष्टविशेष्योपस्थित्यपेक्षया विशेषणोपस्थितेः पूर्वभावित्वेन विशेषणस्य प्राप्तत्वादित्यर्थः। यस्तु क्वचिद्विशिष्टस्यापि निषेधान्वयो दृश्यते 'नैव शून्यगृहे स्वपेदि'ति, स त्वगतिकतया। यथा चैतत्तथोपपादितं जिज्ञासासूत्रे ग्रन्थकारेण विवृतं च वाक्यार्थचन्द्रिकाकृतेति ध्येयम्। नन्वनृतत्वमित्येव वक्तव्यत्वेपि तथाऽनुक्त्वा प्रयोजनविशेषसिद्ध्यर्थं तदनन्यत्वमिति वचनं सङ्गच्छत एवेत्यतः किमन्यत्र ब्रह्मण्यारोपितत्वज्ञानं तदनन्यत्वोक्तेः प्रयोजनमभिमतम्। किंवा ब्रह्मसत्तयैवेदं सत्तावन्नापराऽस्य सत्ताऽस्तीति ज्ञापनम्। अथवा येयं प्रपञ्चे सत्ताऽवभासते साऽधिष्ठानब्रह्मगतारोपितेति ज्ञापनमिति विकल्पत्रयं मनसि निधायाद्यपक्षमाशङ्कते **सत्यमिति**। तथा सति वक्तव्यानुक्त्यवक्तव्योक्तिप्रसङ्ग इत्याशयेन वक्तव्यानुक्तिमुपपादयति

**तथा सतीति** । तत्रारोपितत्वमिति वचनस्यैव ब्रह्मविवर्तताज्ञापकत्वेन तेन विना तदसिद्धेरिति भावः । अवक्तव्योक्तिप्रसङ्गमप्युपपादयति **न हीति** । अन्यथा रजतस्य शुक्तिविवर्तताज्ञापनाय ततोऽनन्यत्वप्रयोगप्रसक्तेरिति भावः । द्वितीयं पक्षमुत्थापयति **अथेति** ॥ **तर्हीति** । अन्यथा ब्रह्मसत्तयैव सत्तावतो जीवचैतन्यस्यानन्दादेर्वा तदभावप्रसक्त्याऽनृतत्वप्रसङ्गादिति भावः । तृतीयमाशङ्कते **अथेति** । तथा सत्यन्यथाख्यातिवादित्वापत्त्याऽनिर्वचनीयख्यातिवादित्वभङ्गप्रसङ्ग इत्याह **तत्किमिति** । आरोपिताकारस्यान्यत्र पारमार्थिकत्वस्यान्यथाख्यातिवादिपक्षत्वादिति भावः । नन्वयं न तेषामेव पक्षः किन्तु ममापीति नारोपिताकारस्यान्यत्र पारमार्थ्यनियममात्रेणान्यथाख्यातिवादित्वप्रसङ्ग इत्यत आह **तथात्वे चेति** । किमत्र यद्यत्प्रपञ्चेऽवभासते तत्सर्वं तदारोपाधिष्ठाने ब्रह्मणि पारमार्थिकमिति विशेषनियमो विवक्षितः किंवाऽऽरोपितनिष्ठतया यद्यद्भाति तत्तदारोपाधिष्ठाने पारमार्थिकमिति सामान्यनियम इति विकल्पद्वयमभिप्रेत्याद्यं दूषयति **आकाशत्वादिकमपीति** ॥ द्वितीयमपि प्रत्याह **रजतत्वादिकं चेति** ।

**प०** — **अपरमपीति** । विवर्तवादिकृतं सूत्रव्याख्यानमित्यर्थः । आपादकमध्याहृत्य योजयति **यद्यत्रेति** ॥ **प्रसिद्धं चैतदिति** । 'न जीर्णमलवद्वासाः स्नातकः स्यादि'त्यादाविति भावः । शङ्कते **सत्यमिति** ॥ **कलधौतमिति** । रजतमित्यर्थः ।

**श्री०** — **ब्रह्मणोऽपीति** । ब्रह्मणोऽपि ब्रह्मानन्यत्वेन ब्रह्मण्यपि ब्रह्मानन्यत्वशब्दः प्रवर्तते । न हि स्वयं स्वस्मादन्यद्भवति । ततश्च ब्रह्मणोऽपि ब्रह्मानन्यत्वशब्दवाच्यत्वेनानृतत्वं स्यादिति ध्येयम् ॥ **प्रसिद्धं चैतदिति** । कार्यप्रपञ्चो ब्रह्मव्यतिरेकेण नास्ति निषेधस्य ब्रह्मव्यतिरेकेण तस्य सत्त्वं नास्तीत्यर्थः । अयं विशिष्टनिषेधः । तत्र सत्त्वस्य प्रपञ्चे प्रमितत्वेन निषेधायोगात्सत्त्ववति प्रपञ्चे ब्रह्मव्यतिरिक्तत्वरूपं विशेषणमेव निषिध्यत इति वक्तव्यम् । तथा च तदात्मना नास्तीति लभ्यत इति भावः । शङ्कते **सत्यमिति** । अनृतत्वमित्येव वक्तव्यमिति यदुक्तं तत्सत्यमित्यर्थः । तर्हि तदनन्यत्वमिति किमर्थमुक्तमित्यत आह **तथाऽपीति** । तथा च तदनन्यत्वमित्युक्ते प्रपञ्चस्य तेनानन्यत्वं तद्व्यतिरेकेणासत्त्वं तत्रारोपितत्वरूपं ब्रह्मविवर्तत्वं ज्ञाप्यते । अनृतमित्युक्तौ नेदं ज्ञापितं भवतीति भावः ॥ **तर्हीति** । ब्रह्मसत्तैवात्र यदि तिष्ठतीत्यर्थः ॥ **तथात्वे चेति** । आकाशादेर्ब्रह्मण्यारोपितत्वात् रजतस्य शुक्तावारोपितत्वात् । आरोपिते प्रतीयमानस्याधिष्ठानगतत्वाङ्गीकारादाकाशादौ प्रतीयमानमाकाशत्वादिकं रजते प्रतीयमानं रजतत्वादिकं चाधिष्ठानभूतब्रह्मशुक्तिकागतमेव प्रतीयत इत्यङ्गीकार्यं स्यादित्यर्थः ॥

सु० — यद्वा स्याल्लोकवदिति भोक्तृभोग्यप्रपञ्चस्य सत्यतामभिधायेदानीं कथं च तदनन्येतेति तद्विरुद्धमनृतत्वं प्राहेति योजना ननु सूत्रकारः परमार्थाभिप्रायेण तदनन्यत्व-मित्याह । व्यवहाराभिप्रायेण तु स्याल्लोकवदिति । तत्कुतो विरोध इति चेन्न । प्रतारक-त्वप्रसङ्गात् । अन्यथा प्रत्याचक्षीत । अप्रत्याख्यायैव कार्यप्रपञ्चं, परिणामप्रक्रियामाश्रयति; सगुणेषूपासनेषूपयोक्ष्यत इ(ती)ति चेत् । किं सगुणोपासनविषयप्रयोजने प्रकृतविषयप्रयोजना-नुकूले, उत तद्विरुद्धे, अथोदासीने । नाद्यः भेदविषयत्वात् , सांसारिकफलत्वाच्च । भेदवासना हि सुदृढा तामेवोपोद्बलयेत् । अत एव न तृतीयोऽपि । न द्वितीयः अना-प्तत्वापरिहारादिति ।

शे० — एवमप्रत्याख्यानस्य सूत्राक्षरानानुगुण्यव्युत्पादकतया 'कथं च तदनन्यते'ति भाष्यं योजितम् । इदानीं तु परोत्प्रेक्षितविरोधपरिहाराभासं दूषयितुं तच्छङ्कोत्थापनाय तथा व्याख्याने सूत्रकारस्य पूर्वोत्तरविरोधव्युत्पादकतयाऽपेक्षिताध्याहारेण तद्योजयति **यद्वेति** । अत्राभ्युपगम्य चेम-मित्यादिना सङ्करोक्तं विरोधपरिहाराभासप्रकारं शङ्कते **नन्विति** । तथा सति भोक्त्रापत्तेरित्यंशे सूत्र-कारस्य यथाभूतार्थोपदेष्टृत्वाभावादनाप्तत्वं स्यादित्याह **प्रतारकत्वप्रसङ्गादिति** । उपलक्षणं चैतत् । भोक्त्रापत्तेरिति प्रमाणस्य सूत्रस्यानृतविषयत्वेऽप्रामाण्यं स्यादित्यपि द्रष्टव्यम् । ननु च प्रत्यक्षादिप्राप्त-प्रपञ्चसत्यताया अत्रानूद्यमानत्वेन तत्सत्यतायामतात्पर्यान्नाप्रामाण्यापत्तिस्तात्पर्यविषयीभूतार्थबाध्यताया एव तत्र प्रयोजकत्वात्तस्याश्च प्रकृतेऽभावादित्यतः; स्यादेवं कथञ्चिद्यदि प्रत्यक्षादिप्राप्तप्रपञ्चसत्यताऽनुवा-दितोपपद्येत । न चेयमुपपद्यते अनुवादस्य निष्फलत्वात् । तथा हि । किमयं निषेधार्थानुवादो विधानार्थो वेति विकल्पं मनसि निधायोत्तरत्रानिषेधान्न निषेधार्थोऽनुवाद इत्याशयेनाद्यं प्रत्याह **अन्य-थेति** । सूत्रस्य भोक्तृभोग्यलक्षणप्रपञ्चसत्यतायां तात्पर्ये हि प्रतारकत्वमापादितम् । तत्परिहाराय तात्पर्यं परित्यज्य निषेधायानुवादत्वाश्रयणे सूत्रकार उत्तरत्र तत्सत्यतां प्रत्याचक्षीत । न च तदस्तीत्यर्थः । द्वितीयमाशङ्कते **अप्रत्याख्यायैवेत्यारभ्य उपयोक्ष्यत इत्यन्तेन** । कार्यप्रपञ्चमप्रत्याख्याय तत्सत्य-तामप्रतिषिध्यैव तत्परिणामप्रक्रियामेवाश्रयति सूत्रकारः । तस्याः सगुणोपासनोपयोगित्वात् । तस्याश्च मोक्षार्थनिर्गुणोपासनार्थत्वादित्यर्थः । भवेदेवं यदि सगुणोपासननिर्गुणोपासनयोः साध्यसाधनभाव एव स्यात् । न चासावुपपद्यत इत्यभिप्रेत्य तत्र सम्भावितविकल्पप्रदर्शनपूर्वकं तन्निरासेन साध्यसाधन-भावासम्भवमेव दर्शयति **किमित्यादिना ॥ प्रकृतेति** । अथातो ब्रह्मजिज्ञासेति प्रतिज्ञा निर्गुणोपासन-विषयप्रयोजनेत्यर्थः । सगुणोपासनविषयप्रयोजनयोः कथं प्रकृतोपासनविषयप्रयोजनाननुकूलत्वमित्यत-

स्तत्स्फोरणाय सगुणोपासनविषयप्रयोजने दर्शयति **भेदविषयत्वादित्यादिना** । तयोरननुकूलतां दर्शयति **भेदवासना हीति** ॥ **अत एवेति** । सगुणोपासनविषयप्रयोजनयोः प्रकृतविषयप्रयोजनप्रतिकूलत्वादेवेत्यर्थः ॥ **अनाप्तत्वेति** । प्रतिकूलतया तदसाधनस्यैव तत्साधनत्ववर्णनादिति भावः ।

**स० — परिणामप्रक्रियामिति** । कार्यभेदमित्यर्थः । **प्रकृतेति** । प्रकृतं यत् ब्रह्ममीमांसाशास्त्रम् , तद्विषयप्रयोजनानुकूले इत्यर्थः । **अत एवेति** । भेदविषयत्वेन विरुद्धत्वादेवेत्यर्थः ।

**प० — सत्यतामभिधायेति** । फेनतरङ्गदृष्टान्तेन भोक्तृभोग्ययोरसाङ्कर्योक्तौ सत्यत्वाभिधानस्य प्राप्तत्वादिति भावः ॥ **अन्यथेति** । प्रागुक्तसत्यत्वस्यानभिप्रेतत्व इत्यर्थः । शंकते **अप्रत्याख्यायैवेति** ॥ **प्रकृतेति** । शुद्धब्रह्मरूपविषयतज्ज्ञानप्रयोजनेत्यर्थः ॥ **उपोद्बलयेदिति** । कार्यप्रपंचपरिणामप्रक्रियेति वा सगुणोपासनमिति वाऽनुषंगः ॥ **अत एवेति** । भेदवासनोपोद्बलकत्वादेवौदासीन्यपक्षो न युक्त इत्यर्थः ।

**श्री० — अन्यथेति** । यद्यप्रतारक इत्यर्थः । **उपयोक्ष्यत इति** । जगज्जन्मादिकर्तृत्वेन सगुणोपास्तौ कार्यप्रपञ्च उपयुक्तः । अन्यथा तत्कर्तृकत्वेनोपास्तेरयोगात् ॥ **प्रकृतविषयेति** । तदनन्यत्वेति जगदारोपाधिष्ठानत्वेन प्रोच्यमाननिर्गुणब्रह्मरूपविषयतदैक्यापत्तिरूपप्रयोजनेत्यर्थः । तां भेदवासनाम् । अत एव भेदविषयकत्वेन विरुद्धत्वादुदासीनत्वं नास्त्येवेत्यर्थः ॥ **अनाप्तत्वेति** । प्रकृतविषयप्रयोजनविरुद्धविषयप्रयोजनोपयुक्तं कार्यप्रपञ्चं 'स्याल्लोकवदि'ति प्रतिपाद्य तन्निराकरणमकुर्वन्कथमनाप्तो न स्यादिति भावः ॥

**सु० — अथवाऽऽस्तां तावदियं ग्रन्थार्जवचिन्ता । कथं च तदनन्यताऽनृतत्वलक्षणा जगतो युक्ता स्यात् । न कथञ्चिदिति योज्यम् । अत्र हेतुमाह** जगत इति । **अविकारित्वे ब्रह्मविवर्तत्वाभावे । यच्चाविकृतमित्याद्युक्तन्यायेन ॥ एवं प्रमाणाभावपरत्वेनापि पूर्ववद्व्याख्येयमिति ।**

**शे०** — अत्र पक्षद्वये हेतुसमर्पक'जगतः' इत्युत्तरभाष्यानर्थक्यं भवतीत्यतस्तदनुरोधेन तदुपयुक्तार्थपरतया पूर्वभाष्यं योजयति **अथवेति** । ननूक्तप्रतिज्ञायां जगतो ब्रह्मविवर्तत्वाभावस्य साधितत्वं हेतुतयोपवर्णनीयं भाष्यकारेण तस्यैवोक्तप्रतिज्ञोपपादकत्वात् । न तु ब्रह्मविकारत्वाभावस्य साधितत्वम् । तत्कथमेतदित्यतोऽत्राविकारत्वपदस्याविवर्तत्वपरत्वान्नानुपपत्तिरित्यभिप्रेत्य तद्व्याख्याति **ब्रह्मविवर्तत्वाभाव इति** । तर्ह्युक्तन्यायेनेत्यस्यानुपपत्तिः । न च प्रकृतीति पूर्वोक्तन्यायेनाविकारत्वप्राप्तावप्यविवर्तत्वाप्राप्तेरित्यतः प्रकृतोपयोगिन्यायसमर्पकतया तद्व्याचष्टे **यच्चाविकृतमित्याद्युक्तन्यायेनेति** ।

अस्मिन्नपि पक्षे आरम्भणशब्दादिभ्य इति सूत्रावयवार्थतया पराभिप्रेतप्रमाणनिरासेन भाष्ये प्रसक्तन्यूनतापरिहाराय तत्परतयाऽप्येतदेव भाष्यं योज्यमित्याह **एवं प्रमाणाभावपरत्वेनापीति** । इयमत्र प्रमाणाभावपरत्वेन भाष्ययोजना । "कथं च जगतस्तदनन्यतानृतत्वलक्षणा प्रतिज्ञातुं युक्ता । तत्र प्रमाणाभावादिति शेषः । नन्वारम्भणशब्दादिभ्य इत्युक्तत्वात्कथं प्रमाणाभाव इति चेत् । अत्र वक्तव्यम् । किमारम्भणशब्दः साक्षाज्जगतोऽनृतत्वमाचक्षीतोत विकारस्यानृतत्वम् । आद्ये कथं च तदनन्यताऽनृतत्वलक्षणा जगतोऽस्यार्थः स्यात्, यथा सोम्येति मृत्पिण्डादेः प्रकृतत्वादित्युत्तरम् । द्वितीये तु भवतु विकारस्यानृतत्वं जगतस्तु कथमनृततेति । विकारस्यानृतत्वे उक्ते जगतोऽपि ब्रह्मविकारत्वादनृतत्वं सिद्ध्यत्येव तस्यापि तद्विकारत्वादित्यत **उक्तं जगत इति** । अविकारत्वे ब्रह्मविकारत्वाभावे उक्तन्यायेन 'न च प्रकृती'त्यादिनेति शेषः । साधिते सति कथं तदनन्यतेति सम्बन्धः । नन्वारम्भणशब्देन 'उत तमादेशमप्राक्ष्यः' इत्याद्या श्रुतिरुपलक्ष्यते । तत्तात्पर्यपर्यालोचनया जगतो ब्रह्मविकारत्वमनृतत्वं चावगम्यत इति चेन्न । महावाक्यावान्तरवाक्योपक्रमत्वप्रधानवाक्यित्वाद्यभावेनास्य श्रुत्युपलक्षणयोपादाने निमित्ताभावात् । अभ्युपेत्याप्युपलक्षणत्वमाह **अविकारत्व इति** । विकारत्वादन्यस्मिन्साद्दश्यादौ श्रुत्यर्थतयोक्तन्यायेन साधिते सति श्रुतितात्पर्यपर्यालोचनया च कथमनृतता सिध्येत् । यदप्युक्तम् आदिपदगृहीतात् ऐतदात्म्यमिदं सर्वम् इत्यादिवाक्यादनृतत्वसिद्धिरिति । तन्न । आदिपदेन वाक्यान्तरग्रहणानुपपत्तेः । तथा सत्यारम्भणादिशब्देभ्य इति प्रयोगप्रसङ्गात्" इति ।

स०— **एवं प्रमाणाभावपरत्वेनाऽपिति** । 'कथं च तदनन्यता जगतः अनृतत्वलक्षणा प्रतिज्ञातुं युक्ता । प्रमाणाभावादिति शेषः ।' इत्यादिपूर्वोक्तपरिणामवादिनिराकरणपरयोजनावत् अत्रापि तेन क्रमेण योजनीयमित्यर्थः ।

प०— **इत्याद्युक्तन्यायेनेति** । पूर्वपादीयानुव्याख्यानोक्तन्यायेनेत्यर्थः ॥ **एवं प्रमाणाभावपरत्वेनापीति** । तथाहि कथं च तदनन्यता' ब्रह्मविवर्तता जगतो न कथमपि प्रमाणाभावात् । नन्वारम्भणशब्दादिभ्य इत्युक्तत्वात्कथं प्रमाणाभाव इति चेत्तत्किमारम्भणशब्दःसाक्षाज्जगतोऽनृतत्वमाचष्टे अथवा विकारस्य । आद्ये कथं ब्रह्मविवर्तता जगत इति तस्यार्थः, मृत्पिण्डादेः प्रकृतत्वात् । द्वितीये कथं जगतो ब्रह्मविवर्तता प्रमाणवती । ननु च विकारमात्रस्यानृतत्वे जगतो ब्रह्मविकारत्वादनृतत्वं भविष्यतीति चेत् (न) । 'यच्चाविकृतमेवैकमि'त्यादिनोक्तन्यायेन जगतो ब्रह्मविकारत्वाभावे साधिते सति कथं ब्रह्मविवर्तता जगत इत्यादिरूपेण व्याख्येयमित्यर्थः ।

**या०— एवं प्रमाणाभावपरत्वेनापीति** । कथं च तदनन्यता अनृतत्वलक्षणा प्रतिज्ञातुं युक्ता प्रमाणाभावादिति शेषः । नन्वारम्भणशब्दादिभ्य इत्युक्तत्वात्कथं प्रमाणाभाव इति । अत्र वक्तव्यम् । आरम्भणशब्दः किं साक्षाज्जगतोऽनृतत्वमाचक्षीतोत मृदादिविकारस्यैव मिथ्यात्वम् । नाद्यः । यथा सोम्येति मृत्पिण्डादेरेव प्रकृतत्वात् । द्वितीये तु भवतु विकारस्यानृतत्वं जगतस्तु कथम् । न च जगतोऽपि ब्रह्मविकारत्वादनृतत्वसिद्धिः, यच्चाविकृतमेवैकमित्याद्युक्तन्यायेन निराकृतत्वात् । न चारम्भणशब्देन 'उत तमादेशमि'त्यादिश्रुतिरुपलक्ष्यत इति वाच्यम् । महावाक्योपक्रमत्वादिनिमित्ताभावात् । तदुपलक्षणायामपि विकारत्वादन्यस्मिन्सादृश्यादौ श्रुत्यर्थतयोक्तन्यायेन साधिते सति कथं तस्मादप्यनृतता सिध्येदिति प्रमाणाभावपरत्वेन पूर्ववद्व्याख्येयमित्यर्थः ।

**श्री०— ग्रन्थेति** । तदनन्यत्वमिति सौत्रपदेत्यर्थः । **आर्जवेति** । अनृतत्वमित्येव वक्तव्यत्वात्तदनन्यत्वमिति न वदेदित्येवंरूपार्जवेत्यर्थः ।

**सु०— एवं तर्हि कोऽस्यार्थ इत्यत आह** स्वतन्त्रेति ।

**अनु०—** स्वतन्त्रकारणान्यत्वं तेन ह्यत्र निषिध्यते ॥

**यत एवं जगतो ब्रह्मानन्यत्वमनेकविधमपि नात्र प्रतिपाद्यं; तेनेत्यर्थः । अनेनापव्याख्याननिराकरणं स्वव्याख्यानदृढीकरणार्थत्वान्नासङ्गतमिति स्मारयति । कर्त्रनधीनसत्ताशक्त्यादिमत्कारणान्तरसव्यपेक्षा खलु घटादिसृष्टिर्दृष्टा । ततो; महदादिसृष्टिरपि कर्तृव्यतिरिक्तस्वतन्त्रकारणस(ा)व्यपेक्षा सृष्टित्वाद्घटसृष्टिवत्, महदादिकं वा कर्तृव्यतिरिक्तस्वतन्त्रकारणायत्तो(सापेक्षो त्पत्तिकं कार्यत्वाद्घटवत्, प्रकृत्यादिकं वा स्वतन्त्रं कारणत्वान्मृदादिवत्, ईश्वरो वा स्वतन्त्रकारणसव्य(णान्तरसा)पेक्षः कर्तृत्वात्कुलाल(ादि)वदिति युक्तिविरुद्धत्वाज्जन्मादिसूत्रेऽभिप्रेतं यत्परस्यैव ब्रह्मणः स्वातन्त्र्यं तन्नोपपद्यते । न च श्रुतिविरोधः । श्रुतीनां ब्रह्मणो जगत्कारणत्वमात्रपरत्वात् । स्वतन्त्रकारणान्तरनिरासे श्रुतेरभावात् । भावेऽप्यपौरुषेयतया श्रुतिप्राबल्यवद्बाहुल्येन युक्तिप्राबल्यस्यापि संभवात्, सत्प्रतिपक्षतया श्रु(त्य)त्याऽभिप्रेतावधारणानुपपत्तेरित्येवं प्राप्तम् ॥ स्वतन्त्रकारणान्यत्वं ब्रह्मणोऽन्यस्य स्वतन्त्रकारणत्वमिति यावत् । अत्र अधिकरणे । तदनन्यत्वमित्यनेन निषिध्यते । महदादिसृष्टौ यत्स्वतन्त्रकारणं तस्य तदनन्यत्वमिति ।**

**यद्यत्र स्वतन्त्रकारणाभाव इत्येव ब्रूयात्, तदा ब्रह्मणोऽपि स्वातन्त्र्यं प्रतिषिद्धं स्यात् । तदनन्यत्वं स्वतन्त्रकारणस्येत्युक्ते हि स्वतन्त्रकारणं तदेव नान्यदिति लभ्यते । तदुपपादनाय**

**यत् 'आरम्भणशब्दादिभ्यः' इति स्वपक्षे प्रमाणमुक्तम्, यश्च 'भावे चोपलब्धेरि'ति विपक्षे प्रमाणाभावस्तदुभयं हिशब्देन सूचयति ।**

**शे०** — ननु स्वतन्त्रकारणान्यत्वमित्याद्युत्तरभाष्यमनर्थकम् । न च सूत्रार्थकथनरूपत्वान्न तदिति वाच्यम् । दोषव्युत्पादनेनापव्याख्याननिरासमात्रेण चारितार्थ्येन तत्कथनस्याप्यनर्थकत्वादित्यतः, नोक्तरीत्या अपव्याख्याननिरासो युक्तः । तथा सत्यर्थान्तराभावेन सूत्रस्य निरर्थकत्वेनाप्रामाण्यप्रसङ्गात् । परमाप्ततया भगवत्प्रणीतसूत्रस्य च तदयोगात् । किन्तु व्याख्यानद्वयमध्ये यत्किञ्चिदेकमङ्गीकृत्य तत्रोक्तदोषा एवाभासतां नेतव्या इत्याशङ्कायां; भवेदेवं यद्यबाधितमर्थान्तरं न स्यान्न चैवम्, अतो न दोषा अन्यथयितव्याः, इत्याशयेनार्थान्तरकथनस्यार्थवत्त्वादित्यभिप्रेत्य तथोत्तरवाक्यं योजयितुं शङ्कामुत्थापयति **एवं तर्हीति** । मूले तेनेत्यस्य वैयर्थ्यमाशङ्क्य स्वतन्त्रकारणत्वमत्र निषिध्यत इति प्रतिज्ञार्थेऽपेक्षितहेतुसमर्पकत्वात् न तदितिभावेन हेतुसमर्पकतया तदर्थमाह **यतइत्यादिना** ॥ **अनेकविधमिति** । तदात्मत्वानृतत्वरूपमित्यर्थः । ननु न स्वतन्त्र कारणान्यत्वस्यात्र निषेधो युक्तः । प्रापकाभावेन तस्याप्राप्तत्वात् । प्राप्तस्य च निषेद्धव्यत्वात् । न च युक्त्या तत्प्राप्तिः । प्रापकयुक्तेरनुपन्यासेन तदभावात् । भावेऽपि वा तस्याः श्रुतिबाधितत्वेनोक्तार्थागमकत्वादित्यत उक्तार्थप्रापकयुक्तीनां स्पष्टत्वेन शिष्यैरेवोत्प्रेक्षितुं शक्यत्वेन तदनुपन्यासो भाष्ये दोषं नावहतीत्यभिप्रेत्य युक्तिप्रापकयुक्तिस्वरूपप्रदर्शनपूर्वकं तासां श्रुत्यबाधितत्वमुपपाद्य स्वतन्त्रकारणान्यत्वस्य प्राप्तिं तावदुपदर्शयति **कर्त्रनधीनेत्यादिना** । तत्र घटसृष्टावपि कर्तृव्यतिरिक्तकारणस्य स्वातन्त्र्यासिद्ध्या कर्तृव्यतिरिक्तस्वतन्त्रकारणसापेक्षत्वरूपसाध्यासिद्धेर्दृष्टान्तासिद्धिरित्यतः स्वातन्त्र्यस्वरूपनिरूपणपूर्वकं करिष्यमाणप्रयोगे दृष्टान्तसिद्धिमुपदर्शयति **कर्त्रिति** । शक्त्यादिमदित्यादिपदेन प्रवृत्तिपरिग्रहः ॥ **ततो महदादिसृष्टिरपीत्यादि** । नन्वेतेषामनुमानानां कर्त्रन्यस्वतन्त्रकारणसद्भावाख्यैकविषयत्वेन प्रमेयभेदाभावान्न बहुत्वं संभवति । न च पक्षादिभेदेन प्रयोगभेदमाश्रित्य बहुत्वं विवक्षितमिति वाच्यम् । तथा सत्यतिप्रसङ्गापत्तेः । अतीताद्यधिकरणेऽपि, मृन्न वक्त्री जडत्वात् । वक्तृत्वाभावो वा मृन्निष्ठश्चेतनासाधारणधर्माभावात् । वक्तृत्वं वा मृन्निष्ठाभावप्रतियोगि चेतनासाधारणधर्मत्वादित्येवं प्रयोगभेदेन युक्तिबाहुल्यस्याभिमान्यधिकरणेऽपि वक्तुं शक्यत्वेन तद्विरोधपरिहारकाभिमान्यधिकरणेन गतार्थत्वापातात् । तत्कथं बहुत्वमिति चेत् । उच्यते । अत्र विमता सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रकारणसापेक्षेत्येकस्मिन्नपि प्रयोगे, विमता सृष्टिः कर्त्रनधीनसत्ताकाधिष्ठानसापेक्षा तदनधीनशक्तिकाधिष्ठानसापेक्षा तदनधीनसत्ताककरणसापेक्षा तदनधीनशक्तिककरणसापेक्षा सृष्टित्वादिति प्रयोगेऽनेकप्रयोगा अभिप्रेताः । तथा महदादिकं कर्तृव्यतिरिक्तस्वतन्त्रकारणायत्तोत्पत्तिकमित्याद्यनुमानत्रयेऽप्युक्तरीत्यैकैकस्मिन्नपि प्रत्येकं चत्वारश्चत्वारः प्रयोगा

अभिप्रेताः । अत एवानुमानप्रयोगदर्शनात्पूर्वमुक्तसर्वार्थसाधारण्येन कर्त्रनधीनसत्ताकशक्त्यादिमत्कारणान्तरसव्यपेक्षा खलु घटादिसृष्टिर्दृष्टा इत्यनेन ग्रन्थेन दृष्टान्ते साध्यसमर्थनं कृतम् । अत्र चाद्यानुमाने कर्त्रनधीनसत्ताकाधिष्ठानं प्रमेयं, द्वितीये कर्त्रनधीनशक्तिकाधिष्ठानं, तृतीये कर्त्रनधीनसत्ताकं करणं, चतुर्थे तदनधीनशक्तिकं करणमित्यस्त्येव प्रमेयभेदः । एवमेव विमता स्थितिः उक्तरूपाधिष्ठानसापेक्षा उक्तरूपकरणसापेक्षा स्थितित्वात् । विमतो विनाश उक्तरूपाभिष्ठानसापेक्ष उक्तरूपकरणसापेक्षो विनाशत्वादित्यपि साधनमत्राभिमतम् । तत्कथं न प्रमेयभेद इति सर्वमनवद्यम् । किमत्र यतो वेत्यादिब्रह्मकारणत्वप्रतिपादकश्रुत्या विरोधोऽभिमतः किंवा ईश्वरव्यतिरिक्तस्वतन्त्रकारणनिरासकश्रुत्येति विकल्पं मनसि निधायाद्यं दूषयति **श्रुतीनामिति** । द्वितीयं प्रत्याह **स्वतन्त्रेति** । ननु च 'नान्योऽतोऽस्ति द्रष्टे'त्यादिश्रुतिसद्भावात्कथं तदभाव इत्यत आह **भावेऽपीति** ॥ **बाहुल्येनेति** । बहुत्वेनेत्यर्थः । बहुत्वं च प्रागुपपादितरीत्या द्रष्टव्यम् ॥ मूले स्वतन्त्रकारणस्यान्यत्वं निषिध्यत इति भवति । तच्चायुक्तम् । स्वतन्त्रकारणस्य ब्रह्मणो जीवजडात्मकप्रपञ्चान्यत्वस्य सिद्धान्तिनाऽप्यङ्गीकृतत्वात् । तस्यैवं प्राप्तत्वाभावाच्चेत्यतोऽभिप्रायमाह **ब्रह्मणोऽन्यस्येति** । उक्तार्थसमर्पकतयाऽध्याहारेण सूत्रं योजयति **महदादीति** । ननु 'स्वतन्त्रकारणान्यत्वं तेनात्र निषिध्यते' इत्येतावतैवोक्तरीत्या तदनन्यत्वमिति सूत्रांशव्याख्यानासिद्धेः हिशब्दवैयर्थ्यम्; इत्यतस्तदनन्यत्वमिति प्रतिज्ञांशव्याख्यानसिद्धावप्यारम्भणशब्दादिभ्य इत्यादिनोक्तस्वपक्षसाधकप्रमाणादिसूचकत्वात्तस्य न तदिति भावेन तत्प्रयोजनमाह **तदिति** ॥ **स्वपक्ष इति** । कर्तृव्यतिरिक्तस्वतन्त्रकारणाभावरूप इत्यर्थः ॥ **विपक्ष इति** । कर्तृव्यतिरिक्तस्वतन्त्रकारणभावरूप इत्यर्थः । 'स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येते'ति भाष्योक्तेरिति भावः ।

**प०— अस्येति** । सूत्रस्येत्यर्थः । 'अतो यथार्थबन्धस्य विना विष्णुप्रसादतः' इत्यादौ प्राग्बहुधास्यार्थस्योक्तत्वात्स्मारयतीत्युक्तम् । स्वतन्त्रसाधनशब्दार्थं विवृण्वन् विरोधयुक्तिबाहुल्यप्रकारं दर्शयति **कर्त्रनधीनेत्यादिना** ॥ **स्वतन्त्रकारणेति** । ईश्वरानधीनसत्ताशक्त्यादिमत्कारणेत्यर्थः । सौत्रप्रतिज्ञांशव्यावृत्त्यर्थं कर्तृव्यतिरिक्तेत्युक्तम् । सृष्टिशब्दः कार्यविषयककर्तृव्यापारवाची । उत्पत्तिशब्दः कार्यगतधर्मवाची । अतो न प्रयोगयोः पौनरुक्त्यमिति । 'इति युक्तिविरुद्धत्वा'दित्यत्रेतिशब्दः प्रकारार्थः । कारणान्तरेत्यत्र तत्तत्पदोद्धारेणाधिष्ठानपदप्रक्षेपेण तथाऽग्रेऽपि कारणादिपदस्थाने अधिष्ठानपदप्रक्षेपेणापि कारणस्येवाधिष्ठानादेरपि स्वातन्त्र्ययुक्तिविरुद्धत्वात्, तथा सृष्ट्यादिपदस्थाने स्थितिसंहृत्यादिपदप्रक्षेपेणापि प्रमेयभेदेन बहुयुक्तिविरुद्धत्वादित्यर्थो ध्येयः । तेन प्रयोगभेदमात्रेण (युक्तिबा)-प्रयोगबाहुल्यं, अधिकरणान्तरेऽपि सुशकमित्यतिप्रसङ्ग इति निरस्तमित्युक्तं चन्द्रिकायाम् ॥ **न च**

**श्रुतीति** । 'यतो वा इमा नि भूतानि', सदेव सोम्येदमग्र' इत्यादिश्रुतिविरोध इत्यर्थः । सौत्रहेत्वंश-व्यावर्त्यमाह **स्वतन्त्रकारणान्तरनिरास इति** । सौत्रादिपदव्यावर्त्यमाह **भावेति** । मूलं योजयति **स्वतन्त्रकारणान्यत्वमिति** । तेनेत्यस्यार्थान्तरं **तदनन्यत्वमित्यनेनेति** । कथमित्यतः सूत्रप्रतिज्ञांशं योजयति **महदादीति** ॥ **तदुभयमिति** । एतच्चानुपदमाकर एव सूत्रद्वयार्थव्यक्तीकरणेनाग्रे व्यक्तम् ।

**या०** — 'नान्योऽतोऽस्ति कर्ते'त्यादिश्रुतिसद्भावात्कथं श्रुतेरभाव इत्यत आह **भावेऽपीति** । **विपक्षे प्रमाणाभाव इति** । 'स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येते'ति सूत्रव्याख्यानादिति भावः ॥

**श्री०** — वक्ष्यमाणानुमाने दृष्टान्ते साध्यवैकल्यपरिहारायाह **कर्त्रनधीनेति** । न हि कारणान्तरस्य दण्डादेः सत्ता घटादिजनकत्वरूपा शक्तिर्वा कुलालायत्ता दृष्टेत्यर्थः ॥ **श्रुतीति** । ब्रह्मणः स्वातन्त्र्येण जगत्कारणत्वप्रतिपादक'यतो वे'त्यादिश्रुतिविरोध इत्यर्थः ॥ **श्रुत्यभिप्रेतेति** । 'यतो वे'त्यादिश्रुतेरभिप्रेतं यत्परब्रह्मण एव स्वातन्त्र्येण जगत्कारणत्वमित्येवंरूपमवधारणमितरव्यवच्छेदस्तस्या-नुपपत्तेरित्यर्थः ॥ **इत्येवमिति** । सामान्येनेत्यर्थः ।

सु० — **नन्वारम्भणाद्याक्षेपशब्दादिभ्य इति वक्तव्यम् । सत्यम् । लक्षितलक्षणयैष एवार्थः प्रतिपाद्यत इत्यदोषः । तथाऽपि 'किंस्विदासीदधिष्ठानमि'ति (ऋ. सं. १०.८१-२) श्रौतनिर्देशानुसारेणाधिष्ठानस्योपादानमुचितमिति चेन्न । शाब्दादप्यर्थप्राधान्यस्य बलवत्त्वात् । साधकतमं करणमिति वचन(स्मरण)ात् । ननु च स्वतन्त्रकारणस्य ब्रह्मानन्यत्वं प्रतिज्ञाय कारणान्तराभावे प्रमाणोपन्यासोऽसङ्गतः । मैवम् । अस्त्यत्राभिप्रायः । वक्ष्यते (हि) च ब्रह्मातिरिक्तप्रकृत्यादिकारणसद्भावः । आरम्भणशब्दादिभ्यस्तदभावोऽवगम्यते । ततोर्था-त्स्वतन्त्रकारणा(न्तरा)भाव एव सिद्ध्यतीति । ननु च युक्तीरुपलभमानोऽपि सूत्रकारः कथं स्वतन्त्रकारणान्तरभावे च प्रमाणैरुपलब्धेः प्रसङ्ग इति वदन्प्रमाणाभावमाह । एवं मन्यते । शुष्काभ्यो बहुयुक्तिभ्योऽपि श्रुत्यनुगृहीतानां बह्वीनां युक्तीनां प्राबल्यात्तद्विरुद्धानां पूर्वपक्ष-युक्तीनामप्रामाण्यमिति ।**

शे० — नन्वारम्भणाद्याक्षेपशब्दस्यैव कर्तृव्यतिरिक्तस्वतन्त्रकारणाभावसाधकत्वात्तदनन्यत्वमिति प्रतिज्ञातार्थसिद्ध्यर्थं सूत्रकृताऽऽरम्भणाद्याक्षेपशब्दादिभ्य इत्येव वक्तव्यं, न तु **'आरम्भणशब्दादिभ्यः'** इति; आरम्भणशब्दमात्रस्य विवक्षितार्थासाधकत्वात्; तथा च वक्तव्यानुक्तिरवक्तव्योक्तिश्च प्रसज्यत इत्यभिप्रेत्य शङ्कते **नन्विति** ॥ **लक्षितलक्षणयेति** । सूत्रे आरम्भणशब्देन स्वार्थसहचार्यधिष्ठानादिकं लक्ष्यते । तथा चारम्भणादिशब्दादिति सिध्यति । न चैतावतैव विवक्षितार्थः सिध्यति । आरम्भणा-

दिप्रतिपादकवाक्यस्य कर्तृव्यतिरिक्तस्वतन्त्रसाधनाभावाप्रतिपादकत्वादत आरम्भणशब्देनैवारम्भणाद्याक्षेपो लक्ष्यते । ततश्चारम्भणशब्देनैव लक्षितलक्षणयाऽऽरम्भणाद्याक्षेपे लब्धे आरम्भणशब्दादित्यस्यारम्भणाद्याक्षेपप्रतिपादकवाक्यादित्यर्थपर्यवसानान्न वक्तव्यानुक्तिरवक्तव्योक्तिश्च प्रसज्यत इत्यर्थः । वाच्यार्थानुपपत्त्यैकस्मिन्नर्थे लक्षिते सति तस्याप्यनुपपत्त्या पुनस्तेनैव शब्देनार्थान्तरमपि यत्र लक्ष्यते सा लक्षितलक्षणा । वाच्यार्थानुपपत्तिमात्रमूला तु लक्षणेत्येवं लक्षणा-लक्षितलक्षणयोर्विवेको द्रष्टव्यः । ननु श्रुतावधिष्ठानस्यारम्भणापेक्षया प्रथमं निर्देशेन प्राधान्यादधिष्ठानशब्दादिभ्य इति तस्यैव ग्रहणमुचितं न त्वप्रधानस्यारम्भणस्य । प्रधानमधिष्ठानं विहायाप्रधानस्यारम्भणस्योपादाने निमित्ताभावात् । तथा च वक्तव्यानुक्तिरवक्तव्योक्तिश्च सूत्रेऽवर्जनीये इत्याशङ्कते **तथापीति**॥ अधिष्ठानस्यारम्भणापेक्षया प्राधान्यं शाब्दम्, आरम्भणस्य चापेक्षया प्राधान्यमार्थं, शाब्दाच्च प्राधान्यादार्थस्य प्राधान्यस्य बलवत्त्वात्तद्विवक्षया सूत्रे आरम्भणशब्दस्यैवोपादानमुपपन्नमिति न वक्तव्यानुक्त्यादिप्रसङ्ग इत्याशयेन परिहरति **शाब्दादिति** । भवेदेतदेवं यद्यारम्भणस्याधिष्ठानापेक्षया प्राधान्यमेव स्यात्तदेव तु कुत इत्यत आरम्भणशब्दार्थस्य करणस्य क्रियासाधकेष्वतिशयितत्वस्य पाणिनिस्मृतिसिद्धत्वादित्याह **साधकतममिति** ॥ **असङ्गत इति** । तेन स्वतन्त्रकारणाभावस्यासिद्धेरित्यर्थः । आरम्भणशब्दादेरागमतयोक्तार्थसाधकत्वाभावेऽप्यर्थापत्तितया तद्बोधकत्वसत्त्वाद्युक्तस्तस्य प्रमाणतयोपन्यास इति भावेनार्थापत्तिस्वरूपं दर्शयति **मैवमिति**। इतिशब्दस्यास्त्यत्राभिप्राय इति पूर्वेण संबन्धः ॥ **बह्वीनामिति** । आरम्भणशब्दादिभ्य इत्यत्रादिपदेन 'युक्तेः', 'पटवच्च', 'यथा प्राणादिः' इति सूत्रैश्चोपात्तानामपरतन्त्रत्वस्वतन्त्रत्वसाधनसत्ताप्रदत्वादिरूपयुक्तीनामित्यर्थः ।

स० — **लक्षितलक्षणयेति** । करणवाचकेन आरम्भणशब्देन साधनं लक्ष्यते । तेन च तदाक्षेपशब्दो लक्ष्यत इति भावः ।

प० — **लक्षितलक्षणयेति** । प्रधानभूतोपादानवाचकारंभणशब्देन साधकजातं लक्षयित्वा तेन तदाक्षेपलक्षणेति लक्षितार्थद्वारकलक्षणयेत्यर्थः । अधिष्ठानापेक्षयोपादानं प्रधानमिति भावेन समाधत्ते **शाब्दादिति** । कार्योत्पत्तावुपादानं कारणमिति भावेन पाणिनीयसूत्रं संवादयति **साधकतममिति** ॥ **वक्ष्यते हीति** । सत्वाच्चेति सूत्रे ॥ **स्वतन्त्रकारणान्तराभाव एवेति** । 'धर्मान्तरेण वाक्यशेषादि'ति वक्ष्यमाणन्यायात्तत्र वाक्यशेषादित्यस्य मानान्तरोपलक्षणत्वादित्यर्थः । द्वितीयसूत्रेऽप्यनुपपत्तिमाशङ्क्य समाधत्ते **ननु च युक्तीरिति** । महदादिसृष्टिरपीत्यादिनोक्ताः युक्तीरित्यर्थः ॥ **युक्तीनामिति** । अपरतन्त्रत्वात् स्वतन्त्रत्वात् साधनसत्तादिप्रदत्वाच्च स्वव्यतिरिक्तस्वतन्त्रसाधनमनपेक्ष्य महदादिसृष्टिं करोतीश्वरो व्यतिरेकेण कुलालवदिति सौत्रादिपदोक्तयुक्तीनामित्यर्थः ।

**या०— लक्षितलक्षणयेति ।** आरम्भणशब्देनाधिष्ठानादिसाधनजातमुपलक्ष्यते । तेन च तदाक्षेपो लक्ष्यत इति लक्षितलक्षणयेत्यर्थः । लक्षितस्याप्यर्थस्यानुपपत्त्या यत्र लक्षणा सा लक्षितलक्षणा । वाच्यार्थानुपपत्त्यैव कल्प्यमाना तु लक्षणैवेति विवेको द्रष्टव्यः । उपादानमुचितमित्यनन्तरं न तु करण-पर्यायस्यारंभणशब्दस्येति शेषः ॥ **बह्वीनां युक्तीनामिति ।** आरम्भणशब्दादिभ्य इत्यत्रादिपदेन युक्तेः, पटवच्च, यथा प्राणादिः, इति सूत्रैश्चोक्तानां युक्तीनामित्यर्थः । ताश्च तत्त्वप्रकाशिकायां चन्द्रिकायां च प्रदर्शितास्तत्रैव द्रष्टव्याः ।

**श्री०— शब्दात्** प्राधान्यादित्यर्थः ॥ बलवत्त्वोपपादनं **साधकतममिति ।** आरभ्यतेऽनेनेत्यारम्भणमित्यारम्भणशब्दस्य प्रधानरूपकरणवाचित्वात् । अधिकरणकारकस्य च करणापेक्षयाऽप्राधान्यादिति भावः । **युक्तीः** स्वतन्त्रकारणसद्भावसाधिकाः सत्प्रतिपक्षभूता उक्तयुक्तीरित्यर्थः ॥ **आहेति ।** तथा च तर्के इष्टापत्तिरिति भावः । **स्वतन्त्रकारणस्य** अबादेः ।

**सु०— स्यादेतत् । अब्धः सम्भूत इत्यादिवचनात्कथं ब्रह्मातिरिक्तस्य स्वतन्त्रकारणस्यानुपलब्धिः । न चात्र न स्वातन्त्र्यं श्रूयत इति वाच्यम् । पारतन्त्र्यानुक्तौ स्वातन्त्र्यस्य लोकानुरोधादेव सिद्धेरिति । एतत्परिहाराय सूत्रम् ॐ सत्त्वाच्चावरस्येति ॥ तस्या(यम)र्थः । स्यादयं दोषो यदि वयं ब्रह्मातिरिक्तं कारणमेव नास्तीति वदामः । न चैवम् । अवरस्य तदधीनस्य प्रकृत्यादेः कारणस्य सत्त्वादिति । तदिदं परिहाराय न पर्याप्तम् । यावता पूर्वपक्षिणा पारन्त्र्यानुक्तौ स्वातन्त्र्यमेव सेत्स्यतीत्युक्तम् । अन्यथा पूर्वपक्षस्य निर्दलत्वापत्तेः; इत्यतः प्रकृत्यादेः कारणजातस्येश्वराधीनसत्ताकत्वे प्रमाणं दर्शयन्सूत्रं व्याचष्टे** द्रव्यमिति ।

**अनु०— ॥ ॐ सत्त्वाच्चावरस्य ॐ ॥**

**॥ ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ॥**

'द्रव्यं कर्म च कालश्च स्वभावश्चेतना धृतिः ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ॥'
इति श्रुतेस्तद्वशस्य भावो

चेतनाः जीवाः । धृतिः **चित्प्रकृतिः, 'धारकत्वात्' इति श्रुतेः । प्रकृत्यादेस्तद्वशस्य भावः अङ्गीक्रियते । अतोऽब्धः संभूत इत्यत्रापि स्वातन्त्र्यासिद्धेर्नानुपलब्धिरयुक्तेत्यर्थः । यद्यपि आरंभणशब्दादेरब्धः संभूत इति श्रुतेश्च परस्परविरोधादर्थापत्त्यैवैषोऽर्थो लभ्यते । तथाऽपि मन्दापेक्षया स्पष्टश्रुत्युदाहरणम् ।**

**शे०**— ॥ ॐ **सत्त्वाच्चावरस्य** ॐ ॥ ननु द्रव्यं कर्म चेत्याद्युत्तरभाष्यमनर्थकम् । न चैतत्सत्त्वाच्चावरस्येत्येतत्सूत्रव्याख्यानार्थमिति वाच्यम् । तद्वशस्य भाव इति भाष्यखण्डेनैव तद्व्याख्यानसिद्ध्या शेषवैयर्थ्यानिस्तारात् । न चेश्वरव्यतिरिक्तप्रकृत्यादिसाधनानामीश्वराधीनत्वप्रदर्शनपरत्वान्न शेषवैयर्थ्यमिति वाच्यम् । तत्प्रदर्शनस्यापि निष्फलत्वात् । न च भावे चोपलब्धेरिति पूर्वसूत्रे केश्वरव्यतिरिक्तस्वतन्त्रसाधनानां प्रमाणेनानुपलब्धिसमर्थनार्थत्वान्न तन्निष्फलमिति वाच्यम् । ईश्वरव्यतिरिक्तस्वतन्त्रसाधनोपलम्भकप्रमाणाभावेन तच्छङ्काया एवानुदयेन तदनुपलम्भसमर्थनस्यापि निष्प्रयोजकत्वात् । न च 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' इत्येतदेव वाक्यं तच्छङ्काप्रापकमिति वाच्यम् । तत्र स्वातन्त्र्यस्याश्रवणेन तेन तत्प्राप्तेरयोगात् । कथञ्चित्तेन प्राप्तावपि 'सत्त्वाच्चावरस्य' इति सूत्रेणैव तच्छङ्कापरिहारात्प्रमाणदर्शनपरभाष्यानर्थक्यानिस्तारादित्यतस्तत्प्रयोजनदर्शनपूर्वकमीश्वरव्यतिरिक्तसाधनानां प्रमाणेन स्वातन्त्र्योपलम्भशङ्कामुपपाद्य तत्परिहारकतया सूत्रमेवावतार्य तेन तस्यापरिहृतत्वं चोपपाद्य तच्छङ्कानिरासायेश्वरव्यतिरिक्तसाधनानामीश्वराधीनतायां प्रमाणोपदर्शकतयोत्तरभाष्यं योजयितुं तच्छङ्कामुत्थापयति **स्यादेतदिति** । ननु पारतन्त्र्यानुक्तौ स्वातन्त्र्यमेव सेत्स्यतीत्येतावत्पर्यन्तमत्र पूर्वपक्ष एव न क्रियते, तत्कथं सूत्रस्य परिहाराय न पर्याप्तत्वमित्यत आह **अन्यथेति** । 'अद्भ्यः संभूत' इति वाक्येनेश्वरव्यतिरिक्तस्वतन्त्रसाधनालाभेन ब्रह्मातिरिक्तस्वतन्त्रकारणानुपलब्धेरप्रत्यूहत्वेन तदाक्षेपायोगादिति भावः । अत्र चेतनाशब्दस्य मनोवृत्तिविशेषचेतनापरतायां 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च' इत्यादिवाक्यान्तरविरोधप्रसङ्गात् तदनुरोधेन चेतनाशब्दो जीवपर इत्याह **चेतना जीवा इति** । धृतिशब्दस्य कथं चित्प्रकृतिपरत्वमित्यतो योगेन तदित्याशयेन यौगिकमर्थमाह **धारकत्वादिति** । सर्वाधारत्वादित्यर्थः । 'आकाश एव तदोतं च प्रोतं चेती'ति श्रुतेरिति भावः । अत्र द्रष्टव्यादिपदार्थस्तु जिज्ञासाधिकरणोक्तरीत्या प्रतिपत्तव्यः । तावता कथमुक्तशङ्कापरिहार इत्यतस्तं दर्शयति **इति श्रुतेरित्यादिना** ॥ **एषोऽर्थ इति** । द्रव्यं कर्म चेत्येतत्प्रमाणोदाहरणसाध्योऽर्थ इत्यर्थः । तथा च भाष्यकारीयं तदुदाहरणमनर्थकमिति भावः ।

**प०**— **लोकानुरोधादिति** । चैत्रो गच्छति भुङ्क्ते शेते इत्यादौ यथा स्वातन्त्र्यधीः तथेत्यर्थः । **अन्यथेति** । उक्तरीत्या स्वातन्त्र्योक्तिपर्यन्तं पूर्वपक्ष्यभिप्रायवर्णन इत्यर्थः ॥ **ईश्वराधीनसत्ताकत्व इति** तथाचाद्भ्य इत्यादिश्रुतौ साधनानां पारतन्त्र्यानुक्तावपि श्रुत्यन्तरे तदुक्तेः परतन्त्रसाधन एव तात्पर्यं साधनश्रुतीनामिति भावेन व्याचष्ट इत्यर्थः ॥ **एषोऽर्थ इति** । प्रकृत्यादेरित्यादिनोक्तोऽर्थ इत्यर्थः ।

**श्री०**— ॐ **सत्त्वाच्चावरस्य** ॐ ॥ **एषोऽर्थ इति** । तद्वशस्य भाव इत्ययमर्थ इत्यर्थः ।

सु० — यद्वा स्वतन्त्रकारणान्यत्वं निषिध्यत इत्यनेन परतन्त्रकारणान्तरसद्भावः सूचितः । अन्यथा कारणान्यत्वमित्येव स्या(ब्रूया)त् । (स) परतन्त्रकारणसद्भावः कुत इत्यत इत्यत आह द्रव्यमिति । भावो गम्यत इति शेषः । अत्र तद्वशत्वं विधेयम् । कारणसद्भावस्य परेणाप्यङ्गीकृतत्वात् ।

शे० — अस्मिन्पक्षे भाष्यकारीयप्रमाणोपन्यासस्य मन्दविषयत्वं कल्पनीयं भवति इत्यपरितोषात्सत्वाच्चावरस्येत्येतत्सूत्रशेषत्वं परित्यज्य तदनन्यत्वमित्याद्यसूत्रशेषत्वमेवाङ्गीकृत्य कथमस्य तेन सङ्गतिरित्यतस्तदपेक्षितार्थप्रतिपादकतां दर्शयति यद्वेति । ज्ञापकश्चायमर्थो न कारक इत्याशयेन योग्यं शेषं पूरयति भावोऽवगम्यत इति शेष इति ॥ अत्र तद्वशत्वमेव विधेयमिति तस्यैव जिज्ञासितत्वादिति भावः । भावोऽपि विधेयः किन्न स्यादित्यतस्तस्याजिज्ञासितत्वान्नैवमित्यभिप्रेत्य तस्याजिज्ञासिततायां हेतुमाह कारणेति ।

स० — अत्र तद्वशत्वमिति । तद्वशस्य भावः इत्यत्रेत्यर्थः ।

श्री० — कारणसद्भावमात्रमेव विधेयं किन्न स्यादित्यत आह कारणेति ।

सु० — ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ इति सूत्रम् । तत्र आक्षेपस्यायमर्थः । 'नासदासीन्नोसदासीत्तदानीमि'ति महाप्रलये मूर्तामूर्तादेरशेषस्यासत्त्वव्यपदेशात्कारणोपलब्धिपरिचोदना, तस्येश्वरवशस्याङ्गीकारेण समाधानं च नोपपद्यते । न चायं पक्षः 'असदिति चेत्' इत्यादिनैव निराकृतः । तत्रेश्वरस्याप्यनङ्गीकारात् । इह पुनरीश्वरमङ्गीकृत्य कारणान्तरनिराकरणात् । न च 'अद्भ्यः संभूतः' इत्यादिविरोधः । अत्र महाप्रलये कारणान्तरसद्भावस्याश्रवणात् । ईश्वरातिरिक्तकर्तृकासु सृष्टिष्वबादिकारणसद्भावपरत्वाच्च । एवञ्चारम्भणशब्दादयोऽपि समञ्जसा भवन्तीति ॥ (अत्र) नेति सिद्धान्तांशं व्याचष्टे द्रव्यमिति । न महाप्रलये कारणान्तरस्याभावो वाच्यः । किन्तु तद्वशस्य भाव एव । तस्य तद्वशत्वं कुत इति चेत् । द्रव्यमिति श्रुतेरिति ।

शे० — ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ॥ अस्मिन्पक्षे 'न पर इत्यत'इत्युत्तरखण्डस्य पूर्वेण सह सङ्गत्यलाभाद्वैयर्थ्यमित्यतस्तत्परित्यागेन द्रव्यमित्यादेरसद्व्यपदेशादित्येतत्सूत्रस्य'न'-इतिसिद्धान्तखण्डव्याख्यानत्वेन तच्छेषत्वान्न वैयर्थ्यमित्यभिप्रेत्य तच्छेषतया योजनां दर्शयितुं स्पष्टतया शिष्यैरेव व्याख्यातुं शक्य इति भावेन भाष्यकृताऽव्याख्यातमेतत्सूत्रीयपूर्वपक्षखण्डं सूत्रमुपन्यस्य स्वयं व्याचष्टे

**असदित्यादिना** ॥ **विरोध इति** । अत्र कारणान्तरश्रवणादिति भावः । न कारणान्तरसद्भावश्रवणस्य नासदासीदिति तदसत्त्वव्यपदेशविरोधित्वं कालभेदेनोपपन्नतत्सत्त्वासत्त्वविषयत्वेन श्रवणद्वयस्य भिन्नविषयत्वात् । किन्तु यत्कालावच्छेदेन नासदासीदिति कारणान्तरस्यासत्त्वं वर्णितं तत्कालावच्छेदेन कारणान्तरसत्त्वाभिधानस्यैव । न चाद्भ्यः संभूत इति कारणान्तरबोधकवाक्यं महाप्रलये तत्सद्भावमवगमयति येन विरोधः स्यादित्याशयेन परिहरति **अत्रेति** । नासदासीदितीश्वरकर्तृकसृष्टौ कारणान्तरासद्भावपरम् । तस्य चेश्वरकर्तृकसृष्टावेव कारणान्तरसद्भावश्रवणेन विरोधो वाच्यः । न चाद्भ्यः संभूत इतीश्वरकर्तृकसृष्टौ कारणान्तरसद्भावपरं, येन तद्विरोधः स्यात्किन्तु, तदतिरिक्तकर्तृकासु सृष्टिष्ववादिकारणान्तरसद्भावपरं तत्कथं विरोध इत्याह **ईश्वरेति** ॥ **एवञ्चेति** । प्रकारद्वयेन वाक्यद्वयस्य भिन्नविषयतायां सिद्धायामित्यर्थः ॥ **समञ्जसं भवतीति** । तेषां स्वारस्येन सर्वथा कारणान्तराभावावगमकत्वादीश्वरकर्तृकसृष्टौ च तद्बोधितस्य सर्वथा कारणान्तराभावस्य च सत्त्वात्सामञ्जस्यमन्यथा त्वीश्वरकर्तृकसृष्टावपि स्वतन्त्रकारणान्तरनिषेधकत्वादसामञ्जस्यं तेषामिति भावः । इतिशब्दस्य इत्ययमर्थ इति संबन्धः । द्रव्यमित्यादेर्भाष्यस्य न साक्षात् 'न'इतिसिद्धान्तांशव्याख्यानत्वं संभवतीत्यत आकाङ्क्षाक्रमेणापेक्षितपूरणपूर्वकं तद्योजयति **नेत्यादिना** ।

प० — 'मूर्तं सदिति संप्रोक्तममूर्तमसदुच्यते' इत्यादिवाक्यानुरोधेनार्थमाह **मूर्तामूर्तेति** । पृथिव्यादित्रयं मूर्तं, अमूर्तं च वायुरन्तरिक्षं च ॥ **एवञ्चेति** । साधनमात्रस्यासत्त्वेऽङ्गीकृते सति स्वातन्त्र्यापेक्षार्थपर्यन्तत्वकल्पनाक्लेशेन विना स्वरूपमात्राक्षेपपरतया स्वरसा भवन्तीत्यर्थः ।

श्री० — ॐ **असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यविशेषात्** ॐ ॥ **समाधानं** सत्त्वाच्चावरस्येत्यनेनोच्यमानम् । **अत्र** 'अद्भ्यः संभूतः पृथिव्यै रसाच्चे'ति वाक्ये ॥ **एवञ्चेति** । प्रलये कारणान्तरस्येश्वरातिरिक्तस्याभावेनारम्भणाद्याक्षेपो युक्त इत्यर्थः ।

**सु० — ननु 'नासदासीदि'ति सर्वस्यासत्त्वव्यपदेशात्कथं नेत्यत उक्तं 'धर्मान्तरेण' इति । तद्व्याचष्टे** तद्वशस्येति । **सावधारणं चेदम् । तद्वशस्यैव भावः प्रलये, न स्वतन्त्रस्य । ततः स्वातन्त्र्यलक्षणधर्मविशेषाभिप्रायेणासत्त्वव्यपदेशो युज्यते । उपलक्षणमेतत् । यथोक्तं भाष्ये । यत्खलु परतन्त्रमव्यक्तं कार्यानभिमुखं तदसदिति व्यपदिश्यते ।**

**शे० —** एवं सूत्रे नेति प्रतिषिद्धप्रकारप्रतियोग्याकाङ्क्षितप्रकारविशेषसमर्पकतया 'तद्वशस्य भावः' इति भाष्यं योजितम् । इदानीं तु भाष्ये धर्मान्तरेणेति सूत्रखण्डस्य पृथग्व्याख्यानप्रयुक्तन्यूनतापरि-

हाराय तद्व्याख्यानतयाऽप्येतदेव व्यापारयितुं सूत्रे धर्मान्तरेणेत्येतन्निरासनीयशङ्कामुत्थापयति **नन्वित्यादिना** । तद्वशस्येत्यादेर्धर्मान्तरेणेत्येतद्व्याख्यानत्वस्फोरणायापेक्षितं पूरयति **साधारणं चेदमिति** । तदेवाभिनयेन दर्शयति **तद्वशस्यैवेति** ॥ **स्वातन्त्र्यलक्षणधर्मविशेषाभिप्रायेणेति** । स्वातन्त्र्यलक्षणधर्मावच्छिन्नकरणाभावस्य 'सविशेषणे ही'ति न्यायेन प्रथमप्राप्तस्वातन्त्र्यरूपविशेषणमात्रविषयत्वमभिप्रेत्येदमुक्तमिति ध्येयम् ॥ **उपलक्षणमेतदिति** । तद्वशस्यैव भाव इत्येतदव्यक्तकार्यानभिमुखस्यैव च भाव इत्यस्योपलक्षणम् । ततश्च व्यक्तत्वकार्याभिमुखत्वरूपधर्मविशेषाभिप्रायेणासत्त्वव्यपदेशो युज्यत इत्यपि द्रष्टव्यम् । नन्वत्र तद्वशस्यैव भाव इत्येतत् यथाश्रुतमेवास्तु किमुपलक्षणत्वाश्रयणेनेत्यतो भाष्यानुसारादित्यभिप्रेत्योक्तस्य सर्वस्य भाष्यारूढतां दर्शयति **यथोक्तं भाष्य इति** । 'अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण हि तदुच्यते' इति तद्भावयादिति भावः । इदं च भाष्यं विशिष्टनिषेधे सति योऽर्थ उपलक्ष्यते तत्प्रदर्शनपरमेव न तु निषेध्यतावच्छेदकधर्मप्रदर्शनपरमित्यविरोध इत्यवधेयम् । ननु च तद्वशस्यैव भाव इत्यस्यैवोपलक्षणत्वे स्वायत्तन्यायविरोध इत्यतः स्वतन्त्रप्रयोग एव तथा । न चायं स्वतन्त्रप्रयोग इति भावेन अस्वतन्त्रप्रयोगतां दर्शयति **यत्खल्विति** ।

प० — **यथोक्तं भाष्य इति** । 'अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण हि तदुच्यते' इति धर्मान्तरमप्युक्तमिति अव्यक्तत्वादिधर्मान्तरमपि निषेध्यतयाऽत्र ग्राह्यमित्यर्थः ।

**श्री०** — 'अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण तदुच्यते' इत्युक्तं भाष्ये । तदुपपादयति **यत्खल्विति** । अव्यक्तमित्यस्य विवरणं **कार्यानभिमुखमिति** ।

**सु० - कुतः श्रुतेः मुख्यार्थपरित्यागेनामुख्यार्थोऽङ्गीक्रियते । 'तम आसीत्' इत्यादिवाक्यशेषात् । न च तमो ब्रह्म, 'आनीदवातम्' इति तस्य पृथगवस्थानोक्तेः । न चानन्तप्रकाशस्य तमस्त्वमुपपद्यते । किन्तु प्रकृतेरेव; आच्छादकत्वादेरिति ।**

**शे०** — सौत्रवाक्यशेषादित्यस्य वैयर्थ्यमाशङ्क्य नासदासीदिति निषेधस्य स्वरूपविषयकत्वोपपत्तेर्न स्वातन्त्र्यादिधर्मान्तरविषयकत्वमित्याशङ्कापरिहाराय स्वरूपनिषेधे बाधकोपदर्शनपरत्वान्न तदिति भावेनोक्तशङ्कानिवर्तकतया सूत्रखण्डं योजयति **कुत इति** । वाक्यशेषस्थतमःशब्दस्य ब्रह्मपरतयाऽस्य वाक्यस्य ब्रह्मण प्रलयेऽवस्थानप्रतिपादकतया सावकाशत्वेन प्रकृत्यादिसत्त्वाप्रतिपादकत्वान्न नासदासीदिति स्वरूपेण प्रकृत्यादिनिषेधस्य वाक्यशेषस्य बाधकतेति भावेन शङ्कते **न चेति** । नापीत्यर्थः । अनन्तप्रकाशस्येति हेतुगर्भविशेषणम् ।

यद्वा ननु 'न पर' इत्युत्तरवाक्यमनर्थकम् । न चेदं वाक्यशेषादित्येतत्सूत्रखण्डव्याख्यानरूपत्वान्नानर्थक्यमिति वाच्यम् । तम आसीदिति वाक्यशेषादिति भाष्यानुरोधेन वाक्यशेषादित्यस्यान्यार्थत्वेनैतदर्थत्वस्य तद्विरुद्धत्वेन सूत्रखण्डव्याख्यानरूपत्वायोगादित्यतः इति तस्मिन्व्याख्याने प्रकारान्तरेणेदमनुभाष्यकाराणां तद्व्याख्यानमिति तत्परोत्तरभाष्यानर्थक्यमित्यभिप्रेत्य भाष्यदिशा सूत्रखण्डं व्याख्याय तत्र प्रसक्तानुपपत्तिमाशङ्क्य तत्परिहारेण तदुपपादकतयाऽस्य संभवदुक्तिकतां चोपपाद्यात्रापि प्रसक्तानुपपत्तिशङ्काप्रदर्शनपूर्वकं तत्परिहाराय प्रकारान्तरेण सूत्रखण्डव्याख्यानपरतयोत्तरभाष्यं सङ्गमयितुं भवेदेतदेवं यदि वाक्यशेषादिति सूत्रखण्डस्यैव प्रयोजनं किञ्चिद्भवेत् । न चैवम् । पूर्वखण्डेनैवोक्ताक्षेपसमाधानादित्यतः प्रकृत्यादिस्वरूपनिषेधस्य मुख्यनिषेधत्वात्सार्वज्ञादिधर्मनिषेधस्य चामुख्यत्वान्मुख्यामुख्ययोश्च मुख्ये संप्रत्यय इति न्यायेन मुख्यस्यैव ग्राह्यत्वान्नासदासीदिति निषेधस्य प्रकृत्यादिस्वरूपनिषेधरूपमुख्यार्थपरित्यागेन सार्वज्ञादिधर्मनिषेधरूपामुख्यार्थपरत्वाश्रयणं धर्मान्तरेणेति पूर्वोक्तं तन्न्यायविरोधादयुक्तमिति शङ्कायामसति बाधके मुख्यार्थपरित्यागेनामुख्यार्थपरत्वाश्रयणस्य न्यायविरुद्धत्वेऽपि प्रकृते प्रकृत्यादिस्वरूपनिषेधार्थत्वे प्रलये तत्सत्त्वप्रतिपादकवाक्यशेषरूपबाधकस्य सद्भावाद्युज्यते मुख्यार्थपरित्यागेनामुख्यार्थाश्रयणमिति पूर्वोक्तधर्मनिषेधपरत्वसमर्पणार्थत्वान्न सूत्रखण्डवैयर्थ्यमपीत्याशयवांस्तद्व्यावर्त्यतया मुख्यामुख्यन्यायविरोधशङ्कां तावदुत्थापयति **कुत इति** । कुतो बाधकादित्यर्थः । बाधकाभावान्नामुख्यार्थाश्रयणमन्यथाऽतिप्रसङ्गादिति भावः । भवेद्वाक्यशेषस्य स्वरूपनिषेधबाधकत्वम् । यदि वाक्यशेषस्थतमश्शब्दस्य प्रकृत्यादिपरत्वं स्यात् । न चैतदस्ति । तस्य ब्रह्मपरत्वादिति बाधकमावकाशतामाशङ्क्य निषेधति **न चेति** ॥ **पृथगिति** । तथा च तेन पौनरुक्त्यप्रसङ्गान्न तमःशब्दस्य ब्रह्मपरत्वमाश्रित्य तस्य प्रलयेऽवस्थानपरमेतद्वाक्यमङ्गीकर्तुमुचितमिति भावः । प्रवृत्तिनिमित्तविरहाच्च न तमश्शब्दस्य ब्रह्मपरतेत्याह **न चेति** । नापीत्यर्थः । यद्यप्यन्यगततमस्त्वस्य भगवदधीनत्वात्स्वातन्त्र्यं निमित्तमादाय तमश्शब्दप्रवृत्तिनिमित्तं व्युत्पादयितुं शक्यते तथाऽपि प्रवृत्तिनिमित्तस्य तद्गतत्वमेव शब्दप्रवृत्तिनिमित्तमिति मतमाश्रित्येदमुक्तमिति ध्येयम् ॥ अनन्तप्रकाशस्येति हेतुगर्भविशेषणम् । अनन्तप्रकाशत्वादित्यर्थः ।

प० — सूत्रांशमवतारयति **कुत इति** ॥ **आनीदवातमिति** । वातप्रेरणं विना आनीत् अचेष्टत । अन चेष्टायामिति धातोरित्यर्थः ॥ **आच्छादकत्वादेरिति** । ग्लानिकरत्वज्ञानप्रतिबन्धकत्वादिः आदिपदार्थः ।

श्री० — तर्हि तमः शब्दवाच्यं किमिति पृच्छति **किन्त्विति** । उत्तरमाह **प्रकृतेरेवेति** । तमस्त्वमिति वर्तते । केन निमित्तेनेत्यत आह **आच्छादकत्वादेरिति** । तमःप्रकृत्योरुभयोरप्याच्छादकत्वसाम्यादिति भावः ।

**सु० — ननु च प्रलयेऽवस्थितं चेत्प्रकृत्यादि तस्य स्वातन्त्र्यादिधर्माभावः कुतः, येनैवं व्याख्यायत इति चेत् । वाक्योपक्रमतच्छेषयोर्विरोधादर्थापत्त्यैवेति ब्रूमः । श्रूयते च स्पष्ट-मित्याशयवान्वाक्यशेषादित्येतत्प्रकारान्तरेण** व्याचष्टे न पर इति ।

**अनु० —** न पर इत्यतः ॥

**'तस्माद्धान्यन्न परः किञ्च नास' इत्यतो वाक्यशेषात्प्रकृत्यादीनां प्रलये स्वातन्त्र्या-द्यभावोऽवगम्यत इत्यर्थः । इह हि तस्माद्ब्रह्मणोऽन्यत्प्रकृत्यादिकं परः परं स्वातन्त्र्यादि-धर्मोपेतं नासेति तत्सद्भावाभ्युपगमेन परत्वं निषिध्यते । अन्यथा परशब्दवैयर्थ्यादिति ।**

**शे०** — एवं तम आसीदिति वाक्यशेषादिति भाष्यकारीयसूत्रखण्डव्याख्यानस्य सम्भवदुक्ति-कतामुपपाद्य प्रकारान्तरेण तद्व्याख्यानतया 'न पर इत्यतः' इत्यनुभाष्यं सङ्गमयितुं तन्निरसनीयतया भाष्योक्तेऽर्थेऽनुपपत्तिमाशङ्कते **ननु चेति** । अत्र स्वातन्त्र्यादिधर्माभावः कुतः, न कुतोऽपि सम्भवति । स किं स्वातन्त्र्यादिसाधकाभावाद्भवेत्किंवा तत्र बाधकसद्भावात् । नाद्यः । प्रलयावस्थितत्वस्यैव तत्साध-कस्य सत्त्वात् । नान्त्यः । स्वातन्त्र्याद्यभावसाधकप्रमाणाभावादिति योजना । अयमर्थः । न प्रकृत्यादेः प्रलयेऽवस्थितत्वं वक्तुं युक्तम् । तथा सति प्रलयेऽवस्थितत्वेन ब्रह्मवत्स्वातन्त्र्यप्राप्तौ नासदासीदिति श्रौतनिषेधस्य त्वदभिमतसार्वज्ञादिधर्मविषयत्वभङ्गप्रसङ्गादतो निषेधस्य सार्वज्ञादिधर्मविषयकत्वसिद्ध्यर्थं प्रलये प्रकृत्यादेरवस्थानाभावस्यैव त्वयाऽपि वाच्यत्वेन वाक्यशेषस्य प्रलये प्रकृत्यादिसत्त्वपरत्वाभावे नास-दासीदिति निषेधस्य प्रकृत्यादिस्वरूपमात्रविषयत्वे बाधकत्वासम्भवादसति बाधके एव मुख्यार्थपरित्यागे-नामुख्यार्थस्वीकारस्यान्याय्यत्वान्न प्रकृत्यादिस्वरूपनिषेधरूपमुख्यार्थपरित्यागेन स्वातन्त्र्यादिधर्मनिषेधरूपा-मुख्यार्थस्वीकारो युक्त इति । यद्यपि 'द्रव्यं कर्म च कालश्चे'ति स्वातन्त्र्याभावसाधकश्रुतेः पूर्वमुदाहृतत्वा-न्नैतच्छङ्कावकाशः तथाऽप्यन्तरङ्गज्ञापकबुभुत्सयेयं शङ्केति ध्येयम् । प्रकृत्यादेः स्वातन्त्र्याद्यभावसिद्ध्यर्थं भाष्ये वाक्यशेषादिति सूत्रखण्डार्थतया स्वातन्त्र्याभावप्रतिपादकश्रुत्युदाहरणेन प्रसक्तां स्वातन्त्र्याद्यभावस्या-नन्यलभ्यत्वभ्रान्तिमन्यलभ्यत्वोपदर्शनेन परिहरति **वाक्येति** । अर्थापत्तेरप्यनुमानत्वान्न स्वातन्त्र्यानुमान-बाधकतेत्याशङ्क्य अर्थापत्तेः श्रौतत्वाद्युक्तं तद्बाधकत्वमिति भावेन वाक्येत्याद्युक्तम् । तर्ह्यर्थापत्त्यैव स्वातन्त्र्यादिसिद्धेर्भाष्यकारीयं 'न पर' इति प्रकृत्यादेः स्वातन्त्र्याभावप्रतिपादकश्रुतिपरतया सूत्रखण्डव्या-ख्यानमनर्थकमित्यतस्तत्तात्पर्यमाह **श्रूयते चेति** । 'न पर' इत्युपन्यस्तप्रमाणैकदेशस्य प्रलये प्रकृत्या-दीनां स्वातन्त्र्याभावाप्रतिपादकत्वेन तत्पूर्वोत्तरभागोपलक्षणत्वं 'न पर इत्यतः' इत्यत्र भाष्ये विशेष्यानुपादानेनास्य भाष्यस्य वाक्यशेषादिति सूत्रेणान्वयं, ज्ञापकश्चायमर्थो न कारक इति

न्यायेनावगम्यत इत्यस्य लाभं च मनसि निधायापेक्षिताध्याहारेण भाष्यं व्याचष्ट **तस्मादित्यादिना** । ननु तस्मादितिवाक्ये प्रकृत्यादिकं न स्वतन्त्रमित्यश्रवणात्कथमस्य स्वातन्त्र्यभावावगमकत्वमित्यतो मन्त्रेण तल्लाभं दर्शयितुं मन्त्रार्थमाह **इह हीति** । नन्वथाऽपि ब्रह्मणोऽन्यन्नासेति प्रकृत्यादेः स्वरूपनिषेधस्यैव सम्भवान्न तत्सद्भावाभ्युपगमेन स्वातन्त्र्यनिषेधकत्वमस्येत्यतः स्वरूपनिषेधकत्वे बाधकमाह **अन्यथेति** । ब्रह्मणोऽन्यन्नासेत्येतावतैव स्वरूपनिषेधसिद्धेरिति भावः ।

प० — **इति ब्रूम इति** । एतेन भाष्योक्तार्थस्पष्टीकरणं कृतं ध्येयम् ॥ **प्रकारांतरेणेति** । न केवलं वाक्यशेषोक्ततमःप्रभृतिसाधनसत्वोक्त्यन्यथानुपपत्त्या किन्तु स्वातन्त्र्यनिषेधकवाक्यशेषादित्यर्थतयाऽपीत्यर्थः । पर इत्येतत्सकारान्तनपुंसकमिति भावेनाह **परः परमिति** ।

या० — **स्वातन्त्र्यादिधर्माभावः कुत इति** । न च 'द्रव्यं कर्म च कालश्चे'ति प्रमाणस्य पूर्वमुक्तत्वात्कथमियमाशङ्केति वाच्यम् । कुतः अन्तरङ्गज्ञापनादिति प्रश्नाशयात् ॥

श्री० — 'नासदासीदि'ति वाक्योपक्रमः, 'तम आसीदि'ति वाक्यशेषः ॥ **अन्यथेति** । यदि स्वरूपमात्रनिषेध इत्यर्थः ।

**सु० — स्यादेतत् । कारणान्तरसद्भावमभ्युपगम्य तस्येश्वराधीनतां वदता सिद्धान्तिनेदं वक्तव्यम् । किमीश्वरः प्रकृत्यादिभिर्विनाऽपि कदाचित्सृष्ट्यादिकं करोत्युत तैरेवेति नियमः । आद्ये तेषां कथं कारणत्वमनियतत्वात् । अन्यथा रासभस्यापि घ(प)टकारणतापत्तेः । द्वितीये तु कथं तत्परित्यागेन कदाऽप्यकुर्वाणस्येश्वरस्य स्वातन्त्र्यम् । कथं च नियमेनापेक्षणीयानां तेषां पारतन्त्र्यम् । एवं प्रकृत्यैव महान्तं महतैवाहङ्कारमित्यादिनियमं कदाचिदपहाय सृजति उतानेन नियमेनैव । आद्ये त्वनियतत्वेनाकारणत्वप्रसङ्गः । द्वितीये पुनरीश्वरादेः स्वातन्त्र्याद्यनुपपत्तिः । तथा प्रकृत्यादिकमुपादानीकृत्य कालादिकं निमित्तीकृत्य सृजतीति नियमे व्यत्यासे चोक्तदोषानुषङ्गः । अतो युक्तिबाधितत्वादस्यार्थस्य कारणान्तरनिरपेक्ष एव भगवान्सृष्ट्यादिकं करोतीत्येव न्यायः । एवञ्च निरर्गलमैश्वर्यमस्य समर्थितं स्यात् । न च प्रमाणबाधः । अद्भ्यः संभूतः पृथिव्यै रसाच्चेत्यादेरनीश्वरकर्तृकावान्तरसृष्टिविषयत्वस्योक्तत्वात् । तम आसीदित्यादौ तमःप्रभृतीनां प्रलये सत्त्वश्रवणेऽपीश्वरकर्तृकायां सृष्टौ कारणत्वाश्रवणादित्याशङ्कापनोदनार्थं सूत्रम् ॥** ॐ युक्तेः शब्दान्तराच्च ॐ **इति । अस्यायमर्थः । नोक्तयुक्तिविरोधेन भगवतः कारणान्तरविधुरत्वमुररीकर्तव्यम् । कारणान्तरसद्भावाभ्युपगमेऽपि प्रकृत्यादेः कारणत्वस्येश्वरादिस्वातन्त्र्यादिकस्य च युक्तेः । न चैवं तर्हि विनिगमने कारणाभाव इति**

**वाच्यम् । अद्भ्यः संभूतो हिरण्यगर्भ इत्यादिशब्दान्तरात् । पूर्वोदाहृतशब्दविलक्षणशब्दः शब्दान्तरम् । तेनेदमुक्तं भवति । यद्यपि प्रागुदाहृताः शब्दाः कथञ्चिदन्यथा नेतुं शक्यन्ते । तथाऽप्ययं न तथा । अत्रेश्वरकर्तृकायामेव सृष्टौ कारणान्तरसद्भावश्रवणात् । न हि हिरण्यगर्भसृष्टिरनीश्वरकर्तृका । तस्यैव प्रथमजत्वादिति ।**

**शे०** — ननु शक्तोऽपीत्युत्तरभाष्यमनर्थकम् । न च युक्तेरित्युक्तकारणत्वादिघटनाप्रकारप्रदर्शनार्थमेतदिति वाच्यम् । प्रकृत्यादिकारणत्वादेरघटनाप्रापकाभावेन तद्घटनाया युक्तेरित्यनेनावक्तव्यत्वादित्यतस्तत्सूत्रावतारिकारूपपूर्वपक्षरीत्या तदघटनायाः प्रसक्तत्वेन तन्निरासके युक्तेरित्यादिसूत्रे युक्तेरित्यनेन प्रकृत्यादेः कारणत्वादिघटनाया अवश्यवक्तव्यत्वात्तदुक्तकारणत्वादिघटनाप्रकारप्रदर्शकत्वमुत्तरभाष्यस्य नानुपपन्नमित्यभिप्रेत्य तत्प्रकारप्रदर्शकतयोत्तरभाष्यं योजयितुं प्रकृत्यादिकारणत्वादेर्युक्तिविरोधेनाघटनाशङ्कां तावदुत्थापयति **स्यादेतदिति ॥ अन्यथेति ।** अनियतत्वेऽपि प्रकृत्यादीनां कारणत्व इत्यर्थः । अनियतत्वाविशेषादिति भावः ॥ **द्वितीये त्विति ।** प्रकृत्यादिपरित्यागेन कदाऽप्यकुर्वाणस्येश्वरस्य स्वातन्त्र्यं नियमेनापेक्षणीयानामपि प्रकृत्यादीनां पारतन्त्र्यमेवेत्यत्र नियामकाभावादित्यर्थः । **अकारणत्वप्रसङ्ग इति ।** प्रकृत्यादेरिति शेषः । अन्यथा रासभस्यापि तदापत्तेरिति भावः । ईश्वरादेरित्यादिपदेन प्रकृत्यादेः परिग्रहः । स्वातन्त्र्यादेरित्यादिपदेन पारतन्त्र्यादिपरिग्रहः । तत्परित्यागेन कदाऽप्यकुर्वाणस्येश्वरस्य स्वातन्त्र्ये, नियमेनापेक्षणीयानां च प्रकृत्यादीनां च पारतन्त्र्ये, नियामकाभावादिति भावः ॥ **उक्तेति ।** नियमे स्वातन्त्र्यादिकं व्यत्यासे तेषामनुपादानत्वादिकमित्युक्तदोषानुषङ्ग इत्यर्थः ।

ॐ **युक्तेः शब्दान्तराच्च** ॐ ॥ किमत्र 'अद्भ्यः संभूतः पृथिव्यै रसाच्चे'त्यादिप्रमाणबाधः शङ्क्यते किंवा 'तम आसीदि'त्यादिप्रमाणबाध इति विकल्प्याद्यं प्रत्याह **अद्भ्य इति ।** द्वितीयं प्रत्याह **तम आसीदित्यादाविति ॥ प्रकृत्यादेः कारणस्येति ।** प्रकृत्यादिभिर्विना कदाचित्सृष्ट्यादिकं करोतीति तेषामनियतत्वपक्षे तेषामनियतत्वेनाकारणत्वप्रसक्तावपि प्रकृत्यादिभिरेव करोतीत्यभ्युपगमान्नियतत्वेन तेषां कारणत्वोपपत्तेरित्यर्थः । तर्ह्येतत्पक्षोक्तदोषप्रसङ्ग इत्यत उक्तमीश्वरादिस्वातन्त्र्यादिकस्य चेति । अत्राद्येनादिपदेन प्रकृत्यादिपरिग्रहो द्वितीयेन तत्पारतन्त्र्यपरिग्रहः । ननु युक्तेरित्यनेन प्रकृत्यादिकारणत्वादेर्युक्तताप्रतिपादनमात्रेण कारणान्तरसद्भावाभ्युपगमे शङ्किते सकलयुक्तिविरोधपरिहाराच्छब्दान्तराच्चेति सूत्रखण्डवैयर्थ्यमित्याशङ्क्य कारणान्तरनिरपेक्षत्वपक्षपरित्यागेन तत्सापेक्षत्वपक्षस्वीकारे नियामकोपदर्शनार्थत्वान्नानर्थक्यमित्यभिप्रेत्य तत्पक्षपरित्यागेन सापेक्षत्वस्वीकारे नियामकाभावशङ्कामुत्थापयति **न चेति ।** न कारणान्तरनिरपेक्ष एव भगवान्सृष्ट्यादिकं करोतीति पक्षपरित्यागेन तत्सापेक्ष एव करोतीति पक्षस्वीकारो युक्तः । कारणान्तरसापेक्षत्वपक्ष इव तन्निरपेक्षत्वपक्षेऽपि निरर्गलै-

श्वर्यसमर्थनप्राप्त्या स्वातन्त्र्यस्य युक्ततया अविशिष्टत्वेन निरपेक्षत्वपक्षपरित्यागेन सापेक्षत्वपक्षस्वीकारे नियामकविशेषाभावात् । न च निरपेक्षत्वपक्षस्य प्रमाणबाधितत्वात्तत्परित्यागेन सापेक्षत्वपक्षस्वीकारो युक्त इति वाच्यम् । अद्भ्यः संभूतः पृथिव्यै रसाच्चेत्यादेरनीश्वरकर्तृकावान्तरसृष्टिविषयत्वेन, तम आसीदित्यादौ च तमःप्रभृतीनां प्रलये सत्त्वश्रवणेऽपीश्वरकर्तृकसृष्टौ कारणत्वाश्रवणेनाबाधकतया तदसिद्धेरिति च न वाच्यमित्यर्थः । कुतो न वाच्यमित्यतो हेतुतया सूत्रशेषं तावद्व्यापारयति **अद्भ्य इति** । शब्दाच्चेत्येतावति वक्तव्ये किमिति शब्दान्तराच्चेत्यन्तरपदोपादानमित्यतो वैलक्षण्यज्ञापनायेत्यभिप्रेत्य तदर्शतया शब्दान्तरशब्दं व्याचष्टे **पूर्वोदाहृतेति** । वैलक्षण्यज्ञापनमपि किमर्थमित्यतस्तत्प्रयोजनमाह **तेनेति** । तत्र हेतुमाह **अत्रेति** । नन्वत्र हिरण्यगर्भसृष्टौ कारणान्तरसद्भाव उच्यते न त्वीश्वरकर्तृकसृष्टौ तत्सद्भावः । तथा च नेश्वरकर्तृकसृष्टौ कारणान्तरसद्भावश्रवणमेतदपीत्यत आह **न हीति** । इतिशब्दस्येतीदमुक्तं भवतीति पूर्वेण संबन्धः । 'अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टावि'त्यत्राद्भ्यः संभूत इत्यद्भ्यः संभूतः पृथिव्यै रसाच्चेत्यनुवाकस्य प्रतीकग्रहणम् । ततश्च 'अद्भ्यः संभूतः पृथिव्यै रसाच्चे'त्यनुवाको 'हिरण्यगर्भः समवर्तताग्रे' इत्याद्याः 'प्रजापते न त्वदेतान्यन्यो विश्वे'त्यन्ता अष्टावृचश्चोक्तार्थे प्रमाणमित्यर्थ इति केचित् । अद्भ्यः संभूत इति विशेषणस्य विशेष्यं हिरण्यगर्भ इति पूरयन्वेदपुरुषोऽद्भ्यः संभूत इत्यष्टौ वाक्यानि प्रमाणत्वेन संमतितयाऽऽहेत्यर्थ इति केचित् । हिरण्यगर्भः संभूतस्तथाऽष्टौ लोकपालाश्च जाता इति तत्त्वप्रदीपकाराः ।

प०— युक्तेरित्यादिसूत्रमवतारयति **स्यादेतदित्यादिना** ॥ **उक्तदोषानुषङ्ग इति** । अनियमेत्यनुपादानत्वं नियमे त्वस्वातन्त्र्यमिति दोषानुषङ्ग इत्यर्थः । **एवं तर्हि विनिगमन इति** । कारणान्तरसद्भावपक्षे प्रकृत्यादेः कारणत्वस्येश्वरादिस्वातन्त्र्यादिकस्य युक्ततैवेत्येवमर्थद्वयनिर्णय इत्यर्थः । कारणान्तरसत्त्वाभ्युपगम-कारणत्वादिघटनरूपोक्तार्थद्वयस्यापि शब्दान्तराच्चेतिसूत्रशेषेणैव कारणोक्तिः । तत्कथमित्यतः कारणान्तरसद्भावाभ्युपगमपक्षे कारणसत्त्वं तावद्व्याख्योक्तार्थव्यक्तीकरणेनाह **अद्भ्य इति** । कारणत्वादेरित्यादिपदेनेश्वरस्वातन्त्र्यकारणान्तरास्वातन्त्र्ययोर्ग्रहः ॥

या०— **उक्तदोषानुषङ्ग इति** । नियमेऽस्वातन्त्र्यं, अनियमेऽनुपादानत्वादिकमित्युक्तदोषानुषङ्ग इत्यर्थः ।

श्री०— ईश्वरादेरित्यत्रादिपदेन प्रकृत्यादि, द्वितीयाऽऽदिपदेन पारतन्त्र्यम् । इत्यादेः प्रमाणस्य । **युक्तेः** घटनात् संभवादिति यावत् ॥ ॐ **युक्तेः शब्दान्तराच्च** ॐ ॥ **विनिगमन इति** । उभयोरपि प्रलये सत्त्वात्प्रकृतेः स्वातन्त्र्यमीश्वरस्य पारतन्त्र्यं किं न स्यादित्यर्थः । **प्रागुदाहृता इति** । तम

आसीदित्यादयः || अन्यथेति तम आसीदित्यादौ तमःप्रभृतीनां सत्त्वश्रवणेऽपीशकर्तृकायां सृष्टौ कारणत्वाश्रवणादित्युक्तरीत्येत्यर्थः || तस्यैवेति । 'अहमस्मि प्रथमजा ऋतस्ये'ति श्रुतेरित्यर्थः ।

**सु० — अत्र युक्तेरिति या स्वपक्षे कारणत्वादेर्घटनोक्ता सा कथमित्यपेक्षायामाह** शक्तोऽपीति ।

**अनु० — || ॐ युक्तेः शब्दान्तराच्च ॐ ||**

शक्तोऽपि ह्यन्यथा कर्तुं स्वेच्छ नियमतो हरिः ||
कारणैर्नियतैरेव करोतीदं जगत्सदा ||

**अन्यथा, कारणैर्विना, कर्तुं शक्तोऽपि हरिः कारणान्तराण्युपादायैव करिष्यामीति स्वेच्छानियमतः कारणैरेवेदं जगत्सदा सृजति । एवमन्यथा, प्रकृत्याऽहङ्कारमहङ्कारेण महान्तमिति एवम् तथा प्रकृतिं निमित्तीकृत्य कालादिकं चोपादानीकृत्य कर्तुं शक्तोऽप्येतेनैवेदमेतदुपादानीकृत्यैवेदं स्रक्ष्यामीति स्वेच्छानियमतो नियतैः कलप्तैरेव, तथा नियतैः स्वनियतसत्ताशक्त्यादिमद्भिरेव कारणैरिदं जगत्सदा करोतीति योजना ।**

**शे० —** प्रकृत्यादिभिर्विनेत्याद्याक्षेपपरिहारस्य मूलारूढत्वसिद्ध्यर्थं तदनुकूलतया भाष्यपदानि योजयति **अन्यथा कारणैर्विनैवेति** । प्रकृत्यैव महान्तं महतैवाहङ्कारमित्याद्याक्षेपपरिहारकतयाऽपि मूलयोजनां सूचयितुं तदुपयोगितयाऽप्यन्यथेत्येतद्व्याचष्टे **एवमन्यथेति** । अनेन प्रकृत्याऽहङ्कारमहङ्कारेण महान्तं कर्तुं शक्तोऽपि हरिः प्रकृत्यैव महान्तं महतैवाहङ्कारं स्रक्ष्यामीति स्वेच्छानियमतः प्रकृत्यैव महान्तं महतैवाहङ्कारं सदा सृजतीति योजना सूचिता भवति । तथा प्रकृतिमुपादानीकृत्य कालादिकं निमित्तीकृत्येत्याद्याक्षेपपरिहारकतयाऽप्येतदेव योजयति **एवं तथेति** । ईश्वराद्याक्षेपपरिहारोपयोगितयाऽपि नियतपदं व्याचष्टे **तथेति** ।

**प० — इत्यपेक्षायामाहेति** । शब्दान्तराच्चेति सूत्रांशस्य विवक्षितार्थप्रतिपादकशब्दविशेषादित्यर्थान्तरमभिप्रेत्य तादृशशब्दविशेषं श्रुतिरूपं शक्तोऽपि भगवानित्यादिनाऽग्रे विवक्षुः श्रुत्यभिप्रेतमर्थं स्वयमाहेत्यर्थः । पूर्वप्रकृतचोद्यत्रयनिवर्तकतया श्लोकं व्याचष्टे **अन्यथेत्यादिना** ।

**या० — ॐ युक्तेः शब्दान्तराच्च ॐ || ईश्वरादिस्वातन्त्र्यादिकस्येति** । अत्राद्येनादिपदेन प्रकृत्यादिसंग्रहो द्वितीयेन तत्पारतन्त्र्यसंग्रहः । पूर्वं कथं च नियमेनापेक्षणीयानां तेषां पारतन्त्र्यमित्याक्षिप्तत्वात् || **न चैवं तर्हि विनिगमन इति** ! कारणान्तरविधुर एव भगवान्सृष्ट्यादिकं करोतीति पक्षं विहाय प्रकृत्यादिकारणसद्भावमभ्युपेत्येश्वरस्यैव स्वातन्त्र्यमुपपादनीयमित्यत्र नियामकं प्रमाणं नास्तीति न वाच्यमित्यर्थः ।

**सु०**— इदमुक्तं भवति । यदुक्तमीश्वरस्य कारणोपादानादिनियमोऽस्ति न वेति । तत्रास्तीति ब्रूमः । तथा च प्रकृत्यादीनां कारणत्वं युक्तम् । स च नियमो न कुलालादेरिव तान्यपहाय व्यत्यस्य वा अकरणे शक्त्यभावनिबन्धनः । येन तस्य स्वातन्त्र्यम् तेषां च पारतन्त्र्यं न स्यात् । किन्नाम स्वेच्छायत्त एव । ततः स्वातन्त्र्यादिकमपियुक्तम् । न च तानि स्वाधीनसत्ताशक्त्यादिमन्ति, येनैश्वर्यं निरर्गलं न स्यात् । किन्तु भगवत्येव तदीयं सत्तादिकमायतते । ततस्तत्साचिव्यमतिशयेनैश्वर्यस्य द्योतकमेव । यथोक्तम् 'साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते । तदा साधनसंपत्तिरैश्वर्यद्योतिका भवेत्' इति ।

ननु शक्तस्यापीश्वरस्य तन्नियमानुसरणेच्छा कुत इति चेत् । किं कारणं पृच्छस्युत ज्ञापकम् । आद्ये स्वभावोऽयमिति ब्रूमः (वदामः) । द्वितीये तु श्रुतिप्रसिद्धेरिति । तदिद-मुक्तं हिशब्देन । श्रुतिं चोदाहरिष्यति ।

अनेन शब्दान्तराच्चेति सूत्रं प्रकारान्तरेण व्याख्यातं ज्ञातव्यम् । शब्दान्तरं च शब्द-विशेषो, विवक्षितार्थप्रतिपादकः शब्द इति यावत् । 'पटवच्च', 'यथा प्राणादिः' इति सूत्रे, भाष्य एव व्यक्ते ।

**श्री०**— कथमनेन प्रकृत्यादेः कारणत्वस्येश्वरादिस्वातन्त्र्यस्य च समर्थनमित्यतो विकल्पित-पक्षेषु तत्तत्पक्षपरिग्रहेण तत्रोक्तदोषपरिहाराय कारिकास्थतत्पदतात्पर्यार्थं सूचयितुमाह **इदमुक्तं भवती-त्यादिना** । भाष्ये हिशब्दानर्थक्यमाशङ्क्य तन्नियमानुसारेणेच्छाज्ञापकप्रमाणोपसंग्रहार्थत्वान्न तदित्य-भिप्रेत्य तन्नियमानुसारेणेच्छानुपपत्तिशङ्कामुत्थापयति **नन्विति** । ननु नायमिच्छाज्ञापकप्रश्नः किन्तु कारकप्रश्नस्तत्कथमनेन तन्निरास इत्यतोऽत्र संभावितविकल्पप्रदर्शनपूर्वकमाद्यं बहिरेव प्रदूष्य द्वितीय-पक्षदूषणपरतया हिशब्दं योजयति **किमित्यादिना** । काऽसौ श्रुतिर्यत्प्रसिद्धिर्हिशब्देनोच्यत इत्यत आह **श्रुतिं चेति** । 'शक्तोऽपि भगवान्विष्णुरकर्तुं कर्तुमन्यथा । स्वभिन्नं कारणाभिन्नभिन्नं विश्वं करोत्यजः' इति श्रुतिमत्रैवाधिकरणे उत्तरत्रोदाहरिष्यतीत्यर्थः ।

**अनेनेति** । उदाहरिष्यमाणश्रुतिप्रसिद्धिद्योतकहिशब्देनेत्यर्थः ॥ **भाष्ये एव व्यक्त इति** । ततश्च न तद्व्याख्यानप्रयुक्ता अनुभाष्ये न्यूनतेति भावः ।

**प०**— वाक्यं योजयित्वा तात्पर्यमाह **इदमुक्तमिति** ॥ **भगवत्येव आयतत इति** । भगवद-धीनमित्यर्थः । श्रीमद्भाष्योदाहृतं वचनं संपादयति **साधनानामिति** । श्रुतिप्रसिद्धेरित्युक्तं, सा केत्यत आह **श्रुतिं चेति** ॥ **अनेनेति** । हिशब्दसूचितश्रुत्युदाहरणेनेत्यर्थः ।

**या०— उदाहरिष्यतीति ।** अत्रैवाधिकरणेऽग्रे 'शक्तोऽपि भगवान्विष्णुरकर्तुं कर्तुमन्यथा' इत्यादिश्रुतिमुदाहरिष्यतीत्यर्थः ॥

**श्री०— तानि** प्रकृत्यादीनि । स्वशब्देन प्रकृत्यादिकमेव । तथा च स्वतन्त्राणीत्यर्थः । **येन** प्रकृत्यादीनां स्वातन्त्र्येणाङ्गीकृतेन । **न स्यात्** भगवत इति शेषः । **कारणम्** इच्छाया जनकम् । **ज्ञापकम्** एवमिच्छा भवतीत्यत्र किं प्रमाणमित्यर्थः ॥ **वदाम इति** । ततश्च कारणप्रश्नो विरुद्ध इति भावः ॥ **श्रुतिं चेति** । 'शक्तोऽपि भगवान्विष्णुरि'ति श्रुतिमित्यर्थः । **व्यक्ते** स्पष्टार्थे ।

**सु०— अन्ये पुनरन्यथैतानि सूत्राणि वर्णयन्ति । तथा हि ।**

भावे चोपलब्धेः । **मृदादेः कारणस्य भाव एव घटादेः कार्यस्योपलब्धेश्चानन्यत्वं कारणात्कार्यस्य । न हि यद्यतो भिन्नं तत्तद्भाव एवोपलभ्यते । न ह्यश्वो गोतोऽन्यो गोभाव एवोपलभ्यते । किञ्च, भावे तिलादौ कारणे, तैलाद्युपलभ्यते । कार्ये च भावे कुण्डलादौ सुवर्णादिकम् । अतश्च तदभेदसिद्धिः ।**

सत्वाच्चावरस्य । **अवरकालीनस्य कार्यस्य प्रागुत्पत्तेः 'सदेव सोम्येदमग्र आसी'दिति सत्त्वावधारणाच्चानन्यत्वं कारणात्कार्यस्य ।**

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् । **'असदेवेदमग्र आसीत्', 'असद्वा इदमग्र आसी'दिति प्रागुत्पत्तेः कार्यस्यासत्त्वव्यपदेशान्नेति चेन्न । भवेदेतद्यदि कार्यस्वरूपाभिप्रायेणायं व्यपदेशः स्यात्किन्तु व्यक्तत्वलक्षणधर्मान्तराभिप्रायेण । कुतः । वाक्यशेषात् । असदेवेदमग्र आसीत् इत्यसच्छब्देनोपक्रमे निर्दिष्टं पुनस्तत्सदासीदिति वाक्यशेषे निर्दिशति । असद्वेत्यत्रापि 'तदात्मानं स्वयमकुरुते'ति । तेन ज्ञायते नासत्कार्यं धर्मान्तरेणैवासत्त्वव्यपदेश इति ।**

युक्तेः शब्दान्तराच्च । **युक्तेश्च कार्यस्य प्रागुत्पत्तेः सत्त्वं कारणादनन्यत्वं च गम्यते । शब्दान्तराच्च । युक्तिस्तावदसदकरणादित्यादिका साङ्ख्योक्ता । वृत्तिविकल्पानुपपत्त्यादिका च सौगतोक्ता । शब्दान्तरं चासद्व्यपदेशादन्यः 'सदेव सोम्येदमग्र आसी'दित्यादिसद्व्यपदेशः ।**

पटवच्च । **संवेष्टितप्रसारितपटन्यायेनेदं कारणात्कार्यस्यानन्यत्वं प्रागुत्पत्तेः सत्त्वं च प्रतिपत्तव्यम् ।**

यथा प्राणादिः । **प्राणायामेन निरुद्धा प्राणापानादयो यथा तथा चेति ।**

**शे०**— 'नित्यभेदो निमित्तेन ह्युपादानेन तु द्वयम्' इत्युत्तरभाष्ये कार्यस्य निमित्तकारणेन भेद एव नाभेदः । उपादेयस्य चोपादानेन भेदाभेदावेव नाभेद इति प्रतिपादनानर्थक्यमाशङ्क्य 'भावे

चोपलब्धेः' इत्यादिसूत्रीयापव्याख्यानप्रत्याख्यानार्थत्वान्न तदिति भावेन तन्निराकरणपरतयोत्तरभाष्यं योजयितुं भावे चेत्यादिसूत्राणामपव्याख्यानमनुवदति **अन्ये पुनरित्यादिना** ।

कार्यस्य कारणानन्यत्वेऽनुमानप्रमाणमाह **भावे चोपलब्धेरिति** । कार्यं कारणादभिन्नं, तद्भाव उपलब्धेरित्यापातसिद्धसूत्रार्थे दोषं दृष्ट्वा व्याख्याति **मृदादेः कारणस्य भाव एवेत्यादिना** । मृदादेरित्यादिपदेन तन्त्वादिपरिग्रहः । घटादेरित्यादिपदेन च पटादिपरिग्रहः । भावे चेति चशब्दो भिन्नक्रम इत्यभिप्रेत्योक्तमुपलब्धेश्चेति । नन्वन्तरेणैव कार्यस्य कारणानन्यत्वं तद्भावे भावस्तदुपलब्धावुपलब्धिश्च भविष्यति । सत्यपि घटाभावे पटाभावस्य घटोपलम्भे पटोपलम्भस्य च दर्शनात् । ततश्चाप्रयोजकत्वान्नोक्तहेतुना कार्यस्य तदनन्यत्वसाधनं संभवतीत्याशङ्क्यानन्यत्वमन्तरेणापि तत्तद्भावोपलम्भसंभवेऽपि नियततद्भावोपलम्भानुपपत्त्या हेतूच्छित्तिरेव विपक्षे बाधिकेति नाप्रयोजकत्वमित्याशयेनाह **न हीति** । अन्यस्य भावोपलम्भयोरन्यस्य भावोपलम्भावनियतावित्यत्र दृष्टान्तमाह **न हीति** । न च गवाश्वयोरकार्यकारणत्वात्तद्भावोपलम्भानियमेऽपि कार्यकारणयोरनन्यत्वमन्तरेणैव कार्यकारणभावमात्रेण तद्भावोपलब्धिनियमोऽपि स्यादिति वाच्यम् । कुलालघटयोः सत्यपि निमित्तनैमित्तिकभावे तद्भावोपलम्भानियतेरेव दर्शनेन कार्यकारणभावमात्रेण तद्भावोपलम्भनियमानुपपत्त्याऽनन्यत्वमन्तरेण नियमघटितहेतुसमर्थनायोगादिति भावः । परस्परस्वभावानुगतिदर्शनादपि तयोरभेद इति सूत्रस्यार्थान्तरमाश्रित्याह **किञ्चेति** । परिणामिवादिमतेनापि सूत्रार्थमाह **किञ्चेति** ।

कार्यस्य कारणानन्यत्वे श्रुतार्थापत्तिमपि प्रमाणमाह **सत्त्वाच्चेति** । परिणामिवादिमतेनापि सूत्रार्थमाह । **अवरकालीनस्य** पश्चाद्भाविनः कार्यस्येति यावत् । न प्रागुत्पत्तेः सत्त्वं कारणस्यैवात्र श्रूयते न कार्यस्येति कथमेतस्य तत्र प्रमाणीकरणमिति वाच्यम् । अग्रे सृष्टेः पूर्वमिदं यदिदानीं स्थूलं कार्यं दृश्यते तत्सदेवासीदितीदंशब्दगृहीतस्य कार्यस्य कारणेन सता सामानाधिकरण्येन निर्देशात्तदन्यथाऽनुपपत्त्या तत्तादात्म्यावगमेन वस्तुभेदो नास्तीत्याशयात् । प्रागुत्पत्तेः सत्त्वं कारणात्मना कार्यस्येत्युक्तमर्थमाक्षिप्य समाधत्ते **असदिति** । तत्र चोद्यं विभजते **असदेवेत्यादिना** । इदंशब्दगृहीतस्य कार्यस्य असता सामानाधिकरण्यदर्शनात् । तदन्यथाऽनुपपत्त्याऽसत्त्वसिद्धिरिति भावः । परिहारभागमवतारयति **नेति** । नञर्थमाह **भवेदेतदिति** । तर्हि केनाभिप्रायेणायमसद्व्यपदेश इत्याशङ्क्य धर्मान्तरेणेति व्याचष्टे **किन्त्विति** । तत्र प्रश्नपूर्वकं गमकं कथयति **कुत इत्यादिना** । सूत्रावयवं व्याख्याति **असदेवेदमिति** । यथा 'अक्ताः शर्करा उपदधाती'त्यत्र केनेति तैलघृतादौ सन्देहे 'तेजो वै घृत'मिति वाक्यशेषाद्घृतेनेति निश्चीयते तथा 'असदेवेदमि'त्यत्राप्यसच्छब्देन तुच्छमुच्यते, किंवा सदेवानभिव्यक्तनामरूपमिति संदेहे तत्सदासीदिति वाक्यशेषात्तुच्छव्यावृत्तं सदेवानभिव्यक्तनामरूपमसच्छब्दमिति निश्चीयते ।

तस्य तच्छब्देन परामृष्टस्य सच्छब्देन निर्देशादित्यर्थः । 'असद्वा इदमग्र आसीदि'त्यत्र तत्सदासीदिति वाक्यशेषाभावात्कुतो निश्चय इत्याशङ्क्याह **असद्वा इति** । वाक्यशेषस्य सत्कार्यविषयत्वे फलितमाह **तेनेति** ।

कासौ कार्यस्य प्रागुत्पत्तेः सत्त्वं कारणादनन्यत्वं च साधयन्ती युक्तिरित्यतः सांख्योक्तां तामाह **युक्तिस्तावदिति ॥ असदकरणादित्यादिकेति** । असदकरणादित्यादिकेत्यर्थः । सा चेत्थम् । कार्यं तावत्कारणव्यापारात्प्रागपि सदित्यङ्गीकार्यम् । असदकरणात् । असच्चेत्करणव्यापारात्पूर्वं कार्यं नास्य सत्त्वं शक्यं कर्तुम् । न हि नीलं शिल्पिसहस्रेण पीतं कर्तुं शक्यमिति । आदिपदेन कार्येण संबद्धं कारणं कार्यस्य जनकमसंबद्धं वा । आद्ये त्वसता संबन्धानुपपत्तेः सत्त्वमङ्गीकार्यम् । नान्त्यः । असंबद्धत्वाविशेषेण सर्वस्मात्सर्वसंभवापत्तेरित्यादियुक्तिपरिग्रहः ॥ **सांख्योक्तेति** । 'असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्' इति तद्वचनादिति भावः ॥ **वृत्तिविकल्पानुपपत्त्यादिका चेति** । अवयवी अवयवेषु किं प्रत्येकं कार्त्स्न्येन वर्तते किं वैकदेशेन । आद्ये-अनेकत्वप्रसङ्गः । नान्त्यः । तस्यावयवान्विहायैकदेशाभावात् । भावे वाऽत्रापि वृत्तिविकल्पप्रसङ्गात् । तथा चानवस्थेत्येवं वृत्तिविकल्पानुपपत्तिरित्यर्थः । आदिपदेन केषुचित्तन्तुषु चलत्सु तद्गतोऽवयवी चलति न वा । नेति पक्षेयुतसिद्धिप्रसङ्गः । आद्ये निश्चलावयवाश्रितो न चलतीति चलाचलत्वलक्षणो विरुद्धधर्माध्यासः स्यादित्यस्य परिग्रहः । सांख्याद्युक्तयुक्त्युपजीवनात्स्वातन्त्र्येण युक्तेरिति सूत्रखण्डोक्तयुक्त्युत्प्रेक्षामात्रेऽप्यसमर्थस्य परस्य न तद्भाष्यकर्तृत्वमिति सूचयितुं सांख्योक्तेति चोक्तम् । ननु युक्तेरिव शब्दादपि कार्यस्य प्रागुत्पत्तेः सत्त्वमनन्यत्वं च सिध्यतीति वक्तव्ये कथमन्तरपदमन्तराले प्रयुज्यत इत्यतः शब्दान्तरं विभजते **शब्दान्तरं चेति** ।

**संवेष्टितप्रसारितपटन्यायेनेति** । यथा हि संवेष्टितपटो न व्यक्तं गृह्यते किमयं पटः किंवाऽन्यद्द्रव्यमिति । स एव प्रसारितो यत्संवेष्टितं द्रव्यं स पट एवेति प्रसारणेनाभिव्यक्तो गृह्यते । तथा च संवेष्टनसमये पट इति गृह्यमाणोऽपि न विशिष्टायामविस्तारो गृह्यते । स एव च प्रसारणसमये विशिष्टायामविस्तारो गृह्यते न संवेष्टितरूपादन्योऽयं भिन्नः पट इति । एवं तन्त्वादिकारणावस्थं पटादिकार्यमस्पष्टं सत्तुरीवेमकुविन्दादिकारकव्यापाराभिव्यक्तं स्पष्टं गृह्यत इति । संवेष्टितप्रसारितपटन्यायेनेत्यर्थः ।

प्राणायामेनेत्यादेरयमर्थः । प्राणायामेन निरुद्धाः प्राणापानादयः प्राणप्रभेदाः कारणमात्ररूपेण वर्तमाना जीवनमात्रं कार्यं निर्वर्तयन्ति नाकुञ्चनप्रसारणादिकं कार्यान्तरमपि । त एव च प्राणप्रभेदाः पुनः प्रवृत्ता जीवनादधिकमाकुञ्चनप्रसारणादिकं कार्यान्तरमपि निर्वर्तयन्ति । न च प्राणप्रभेदानां प्रभेदवतः प्राणादन्यत्वं समीरणस्वभावाविशेषात् । एवं कार्यस्य कारणादनन्यत्वमिति ।

स० — **असदकरणादित्यादिकेति** । 'असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्' इति युक्तिरित्यर्थः । एतच्च सांख्यपरीक्षायां स्पष्टयति । अवयवी किमवयवेषु प्रत्येकं कात्स्न्र्येन वर्तते एकदेशेन वा । आद्ये अनेकत्वप्रसंगः । नान्त्यः । तस्यावयवान्विहायैकदेशाभावात् । भावे वा तत्रापि वृत्तिविकल्पप्रसंगादित्येवंरूपयुक्तिरित्यर्थः ।

प० — आद्यसूत्रापव्याख्यानस्य प्राङ्निरासादवशिष्टसूत्रापव्याख्यानमनुवदति **भावे चेत्यादिना अत्र सूत्रेति पर्यन्तेन** । भावपदस्य कारणं कार्यं चार्थमुपेत्य व्याख्यानान्तरं किंचेति । भाव इत्यनुवादः ॥ **सुवर्णादिकमिति** । उपलभ्यत इत्यन्वयः ॥ **अवरकालीनस्येति** । पश्चाद्भाविनः अग्रे उत्पत्तेः प्राक् इदं कार्यजातं सदेवासीदिति सत्त्वावधारणादित्यर्थः ॥ **न चेदिति** । कार्यं प्राक् सन्नेति-चेदित्यर्थः ॥ **अकुरुतेतीति** । निर्दिशतीत्यनुषङ्गः ॥ **असदकरणादित्यादिकेति** । 'असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यमि'ति साङ्ख्योक्तेत्यर्थः । असतः कृतिविषयत्वाभावात्प्रागपि कार्यं सदेवेत्यन्वयः । समग्रश्लोकार्थः सांख्यनये सुधायां व्यक्तः । वैभाषिकनये वक्ष्यमाणां युक्तिमाह **वृत्तिविकल्पेति** । स्थितिविषयविकल्पेषु सर्वकल्पानामनुपपन्नत्वादि-केत्यर्थः । कार्यकारणयोर्भेदेन कार्यं कारणाश्रितं चेत्किं कार्यं कारणेषु तन्त्वादिकेष्वेकदेशेन वृत्तिमदुत कात्स्न्र्येन । आद्ये कारणीभूतावयवा(न्यैक)नामेकदेशाभावात् । अन्त्ये तु एकैकतन्तुषु कार्त्स्न्येनावस्थाने कार्यस्यानेकत्वप्रसङ्गः । एकतन्तुचलने सति चलनं तन्त्वन्तरस्याचलनादचलत्वमिति विरुद्धधर्मवत्त्व-मित्यादियुक्तिरिति भावः ॥ **संवेष्टितेति** । यथा संवेष्टनदशायामव्यक्तः पटः प्रसारितो व्यक्तः तथा प्रागुत्पत्तेरव्यक्ततया सदेव कार्यं कर्तृव्यापारेण पश्चाद्व्यज्यत इति कारणादनन्यत्वं कार्यस्येत्यर्थः । एतेन प्राणादिदृष्टान्तोपि व्याख्यातः ।

या० — **अनेनेति** । उक्तश्रुतिद्योतकेन हिशब्देनेत्यर्थः । उदाहृतशब्दविलक्षणः शब्दः शब्दान्तरमिति व्याख्यानमत्र न सङ्गतमत आह **शब्दान्तरं शब्दविशेष इति** । नन्वेवं व्याख्यानेऽपि कथं सङ्गतिरित्यत आह **विवक्षितार्थेति** ॥ **अवरकालीनस्येति** । नीचकालीनस्येत्यर्थः । पश्चा-द्भाविन इति यावत् ॥ **सत्त्वावधारणाच्चेति** । अग्रे इदं सदेवासीदितीदंशब्दगृहीतस्य कार्यस्य कारणेन सत्तासामानाधिकरण्येन निर्देशादिति भावः ॥ **असत्त्वव्यपदेशादिति** । इदंशब्दगृहीतस्य कार्यस्यासता सामानाधिकरण्येन व्यपदेशादिति भावः ॥ **उपक्रमे निर्दिष्टमिति** । उपक्रमे निर्दिष्टं यत्तदेव पुन-स्तच्छब्देन परामृश्य सदिति निर्दिशति 'तत्सदासी'दिति वाक्यमित्यर्थः ॥ **तदात्मानं स्वयमकुरुतेति** । निर्दिशतीत्यन्वयः । तथा चैवं वाक्यशेषे विशेषणान्नात्यन्तासत्त्वमुपक्रमे निर्दिष्टस्येत्यर्थः ॥ **साङ्ख्यो-**

**क्तेति** । यथाऽऽह साङ्ख्यः 'असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यमि'ति । असदकरणादित्यस्यायमर्थः । कार्यं तावत्करणव्यापारात्प्रागपि सदित्यङ्गीकार्यम् । असदकरणात् । असच्चेत्कारणव्यापारात्पूर्वं कार्यं नास्य सत्त्वं कर्तुं शक्यम् । न हि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं शक्यमिति । शिष्टं साङ्ख्यपरीक्षायां स्पष्टम् ॥ **सौगतोक्तेति** । यथाहुः सौगताः । अवयवी किमवयवेषु प्रत्येकं कार्त्स्न्येन वर्तते किं वैकदेशेन । आद्येऽनेकत्वप्रसङ्गः । न द्वितीयः । तस्यावयवान्विहायैकदेशाभावात् । भावे वा तत्रापि वृत्तिविकल्पप्रसङ्गात् । किञ्च केषुचित्तन्तुषु चलत्सु तद्गतोऽवयवी चलति न वा । नेति पक्षे युतसिद्धिप्रसङ्गः । आद्ये निश्चलावयवाश्रितो न चलतीति चलाचलत्वलक्षणो विरुद्धधर्माध्यासोऽतो न कारणातिरिक्तोऽवयवी नामास्तीति । अत्र साङ्ख्योक्ता सौगतोक्तेति वचनं यद्यपि न परभाष्येऽस्ति तथाऽप्यत्र तदुक्ता युक्तिः साङ्ख्यादिभिरुक्तैव न नूतना तथा चैवं व्याख्याने सूत्रकारस्यासुज्ञत्वप्रसङ्ग इति सूचनाय स्वेनोक्तमिति ज्ञातव्यम् ॥ **संवेष्टितेत्यादि** । यथा संवेष्टितः पटो न व्यक्तं गृह्यते किमयं पटः किंवाऽन्यद्द्रव्यमिति स एव प्रसारितो यत्संवेष्टितं द्रव्यं स पट एवेति प्रसारणेनाभिव्यक्तो गृह्यते । एवं तन्त्वादिकारणावस्थं पटादिकार्यमस्पष्टं सतुरीवेमकुविन्दादिकारकव्यापाराभिव्यक्तं स्पष्टं गृह्यत इत्यर्थः ॥ **प्राणापानादयो यथेत्यादि** । यथा लोके प्राणापानादिषु प्राणप्रभेदेषु प्राणायामेन निरुद्धेषु कारणमात्ररूपेण वर्तमानेषु जीवनमात्रं कार्यं निर्वर्त्यते । नाकुञ्चनप्रसारणादिकं कार्यान्तरं तेष्वेव प्राणप्रभेदेषु पुनः प्रवृत्तेषु जीवनादधिकमाकुञ्चनप्रसारणादिकमपि कार्यान्तरं निर्वर्त्यते । न च प्राणप्रभेदानां प्रभेदवतः प्राणादन्यत्वम्, समीरणस्वभावाविशेषात् । तथा कारणादनन्यत्वं कार्यस्येत्यर्थः ।

श्री० — कारणे तिलादौ **भावे** सति इत्यर्थः । कुण्डलादौ कार्ये **भावे** सति तत्र कार्ये सुवर्णादिकं कारणं दृश्यत इत्यर्थः ॥ **तदिति** । तस्य कार्यस्य तेन कारणेनेत्यर्थः ॥ **यथा तथेति** । तथा च ते यथा सन्त्येव विरोधापगमने व्यज्यन्ते तथा कार्यमपीत्यर्थः ।

**सु० — अत्र सूत्राक्षराणामार्जवानार्जवादिचिन्ता शिष्यैरेव क्रियतामित्याशयवान् यदुक्तं कारणात्कार्यस्यानन्यत्वं तत्तावन्निराकरिष्यन् किमनेन प्रबन्धेन निमित्तकारणानन्यत्वं कार्यस्योपपादितम्, उतोपादानकारणानन्यत्वमिति विकल्पं चेतसि निधायाद्यं निराकरोति** नित्यभेद इति ।

**अनु०** — नित्यभेदो निमित्तेन हि

**नित्यशब्दो नियमार्थः । भेद एवेति । कार्यस्येति शेषः । हीति सर्वप्रमाणप्रसिद्धिं सूचयति । तथा च सर्वमिदं बाधितविषयमिति ।**

**न द्वितीयः, प्रकृतानुपयोगात् ।**

शे० — ननु 'नित्यभेदो निमित्तेन ह्युपादानेन तु द्वयम्' इत्युत्तरभाष्ये 'भावे च' इत्यादिसूत्राणामार्जवानार्जवादिचिन्ता न क्रियत इति कथमस्यापव्याख्याननिरासकत्वम् । न च सूत्राक्षराणामार्जवानार्जवादिचिन्ताकरणस्य तस्य दूषणत्वेऽपि न तदेव तद्दूषणं किन्नाम प्रमेयनिराकरणमपि । तथा च नित्यभेद इत्युत्तरभाष्यस्य सूत्राक्षराणामार्जवानार्जवादिचिन्ताकरणरूपत्वाभावेऽपि कार्यस्य कारणानन्यत्वरूपतत्प्रमेयनिरासकत्वाद्युक्तमस्य तत्प्रत्याख्यानत्वमिति वाच्यम् ॥ प्रमेयनिराकरणापेक्षयाऽऽर्जवानार्जवादिचिन्ताकरणस्यान्तरङ्गतया सति संभवे तत्परित्यागेन प्रमेयमात्रनिराकरणायोगात् । उपादेयस्योपादानादनन्यताया एव भावे चेत्यादिसूत्रप्रमेयतया परस्याभिमतत्वेन कार्यस्य निमित्तकारणादन्यतायास्तदभिमतत्वे न 'उपादानेन तु द्वयमि'त्येतावतैवाभिमतप्रमेयनिराससिद्ध्या कार्यस्य निमित्तकारणेनात्यन्ताभेदाभावोपपादकस्य नित्यभेदो निमित्तेन हि' इति भाष्यखण्डस्यानर्थक्यानिस्ताराच्चेत्यतोऽन्तरङ्गत्वेऽप्यार्जवानार्जवादिचिन्तायाः स्पष्टत्वेन शिष्यैरेव कर्तुं शक्यत्वान्न स्वयं तत्करणमुचितमित्याशयवतो भाष्यकारस्य तत्परित्यागेन प्रमेयमात्रनिराकरणं न दोषायेत्यभिप्रेत्य भाष्यकारीयमार्जवानार्जवादिचिन्ताऽकरणं तावदुपपादयति **अत्रेति** । स्पष्टत्वादिति शेषः । कार्यस्योपादानानन्यतायाः सूत्रप्रमेयतया परस्याभिमतत्वेऽपि कार्यस्य कारणानन्यत्वमिति परोक्तेः सामान्यत्वेन तदुक्त्या प्रसक्तस्य कार्ये उपादानानन्यत्वस्य 'उपादानेन तु द्वयम्' इत्यनेन निराससिद्धावपि तदुक्त्यैव प्रसक्तस्य निमित्ताभेदस्य तेनानिरस्ततया तन्निरासार्थत्वान्न नित्यभेद इत्युत्तरभाष्यखण्डवैयर्थ्यमपीत्यभिप्रेत्य प्रसक्तपक्षद्वयनिरासकतया भाष्यखण्डं योजयितुं संभावितविकल्पप्रदर्शनपूर्वकं तदनुक्त्याऽपि प्रसक्तां भाष्ये न्यूनतां परिहरति **यदुक्तमित्यादिना** । भेदस्य नित्यताकथनस्य प्रकृतानुपयोगात्प्रकृतोपयुक्तमर्थमाह **नित्यशब्द इति** । तदेव दर्शयति **भेद एवेतीति** । प्रतिबन्ध्यनुक्तेराह **कार्यस्येति शेष इति** । भाष्ये हिशब्दस्यानर्थक्यमाशङ्क्य कार्यस्य निमित्तेनात्यन्तभेदप्रतिपादकप्रमाणसिद्धिसूचनार्थत्वान्न तदित्याह **हीति सर्वेति** । उक्तार्थस्य सर्वप्रमाणप्रसिद्धत्वसूचनेनापि किमित्यत आह **तथा चेति** ॥ **सर्वमिदमिति** । कार्यस्य कारणानन्यत्वसाधकतयोपन्यस्तं युक्तिजातमित्यर्थः । अत्र पक्षे प्रकृतानुपयोगरूपस्पष्टदोषानुक्तिर्भाष्यकाराणामयुक्ता इत्यत उक्तप्रायत्वात्पृथक्तदनुक्तिर्न दोषायेत्यभिप्रेत्य स्वयं प्रकृतानुपयोगमाह **प्रकृतेति** ।

**प०** — **आर्जवानार्जवेति** । यथाक्रमं स्वपरपक्षयोरिति भावः ॥ **शिष्यैरिति** । सा च चिता चन्द्रिकाकारैः कृता ध्येया । अत्राप्यग्रे अनवस्थेतिवाक्यव्याख्यानान्तरं करिष्यते । **प्रबन्धेनेति** । तदनन्यत्वमित्यादिसूत्रसन्दर्भेणेत्यर्थः ।

**या०** — **आर्जवानार्जवादिचिन्तेति** । अस्मन्मते आर्जवं परमते त्वनार्जवमिति चिन्तेत्यर्थः । आदिपदेन प्रकृतानुगुण्यागतार्थत्वादिपरिग्रहः ॥ **उक्तप्रायमिति** । प्रकृत्यधिकरण इति शेषः ।

**सु०** — **वियदादिप्रपञ्चस्य ब्रह्मानन्यत्वमुपपादयितुं खल्वस्योपन्यासः । तद्यदि नाम उपादानानन्यत्वं कार्यस्य तदा किमायातं प्रकृते । न हि ब्रह्म प्रपञ्चोपादानमित्येतदुक्तप्रायमिति मन्वानो दूषणान्तरमाह** उपादानेनेति ।

**अनु०** — उपादानेन तु द्वयम् ॥

**हीत्यनुवर्त्यते । उपादानेन कार्यस्य द्वयं भेदाभेदौ प्रमितौ । ततोऽस्मिन्नपि पक्षे बाधितविषयत्वमिति ।**

**शे०** — कथमुपादानानन्यत्वं कार्यस्येत्युपपादनस्य प्रकृतानुपयोग इत्यतो यदर्थसाधकतयाऽस्योपन्यासस्तत्साधनाक्षमत्वादित्यभिप्रेत्य साध्यमर्थं तावद्दर्शयति **वियदादीति** ॥ **ब्रह्मानन्यत्वमिति** । पूर्वसूत्रे तस्यैव प्रतिज्ञातत्वादिति भावः ॥ **अस्येति** । उपादानानन्यत्वं कार्यस्येत्यस्येत्यर्थः । तथाऽपि कथमेतस्य तदनुपयोग इत्यतस्तद्दर्शयति **तद्यदीति** ॥ **किमायातं प्रकृत इति** । अनेनोपादानोपादेयभावस्थले कार्यस्योपादानानन्यत्वप्राप्तावपि प्रपञ्चस्य ब्रह्मानन्यत्वाप्राप्तेरिति भावः । ननु चोपादानोपादेयभावस्थले कार्यस्योपादानानन्यत्वप्राप्तौ प्रपञ्चस्यापि ब्रह्मानन्यत्वप्राप्तिरवर्जनीयैव । ब्रह्मणोऽपि प्रपञ्चोपादानत्वेन ब्रह्मजगतोरपि तद्भावादित्यतो भवेदेतदेवं यदि ब्रह्मणः प्रपञ्चोपादानत्वं स्यात । न चैतदस्ति । साधकाभावादिना प्रकृत्यधिकरणे निरस्तत्वादित्याशयेनाह **न हीति** ॥ **उक्तप्रायमिति** । तथा च प्रकृतानुपयोग इति कण्ठरवेणानभिधानेऽपि तदुपपादकस्य प्रपञ्चं प्रति ब्रह्मण उपादानत्वाभावस्य कथनेनार्थतः प्रकृतानुपयोगसिद्धेर्न पृथगत्र साक्षात्तदभिधानं कृतमिति भावः । तर्हि प्रकृतानुपयोगयुक्तिमात्रेण द्वितीयपक्षदोषसिद्धेः 'उपादानेन तु द्वयम्' इति तन्निरासपरोत्तरवाक्यानर्थक्यमित्यतो दूषणान्तरोपदर्शनार्थत्वान्न तदिति भावेन तत्परतयोत्तरग्रन्थं योजयति **दूषणान्तरमिति** । बाधितविषयत्वाख्यमित्यर्थः ॥ **हीत्यनुवर्तत इति** । अन्यथाऽत्र भाष्ये कार्यस्योपादानेन भेदाभेदयोः प्रमितत्वानुक्त्या कार्यस्योपादानानन्यत्वसाधकयुक्तिजातस्य दूषणानुक्तिप्रसङ्गेनास्य भाष्यस्य तत्पक्षदूषणत्वं न स्यादिति भावः ॥ **प्रमिताविति** । अनेन हिशब्दः प्रमाणसिद्धिसूचकः इत्युक्तं भवति । कार्यस्योपादानेन भेदाभेदयोः प्रमितत्वोक्तेः प्रयोजनमाह **तत इति** ।

**स०** — **उक्तप्रायमिति** । प्रकृत्यधिकरणे इति शेषः ।

**प०**— ननु प्रपञ्चस्योपादानादनन्यत्वोक्तौ ब्रह्मानन्यत्वमेव सेत्स्यति ब्रह्मण एवोपादानत्वादित्यत आह **नहि ब्रह्म प्रपञ्चोपादानमिति** । प्रकृतिनये निराकृतत्वादिति भावः ॥ **इत्येतदिति** । न द्वितीय इत्यादिनोक्तं द्वितीयपक्षदूषणमित्यर्थः ॥ **उक्तप्रायमिति** । प्रकृत्यधिकरण इति भावः ॥ **दूषणान्तरमिति** । प्रकृतानुपयुक्तत्वापेक्षया बाधितविषयत्वरूपाधिकदोषं चेत्यर्थः । **हीत्यनुवर्तत इति** । स च प्रमाणप्रसिद्धिद्योतक इत्युक्तमेवेति भावेनाह **प्रमिताविति** ।

**सु०— कथं कार्यं कारणेन भिन्नाभिन्नं प्रमितमित्यत आह** असदिति ।

**अनु०** — असद्यत्कार्यरूपेण कारणात्मतयाऽस्ति हि ॥

**यत् घटादिकं मृदादिकारणात्मतया प्रागुत्पत्तेरस्तीति प्रमितं परेणाङ्गीकृतं च तदेव पृथुबुध्नोदराकारादिना कार्यरूपेण प्रागुत्पत्तेरसत् हि यस्मात्तस्मादुपादानेन भिन्नाभिन्नमिति निश्चीयते ।**

**एतदुक्तं भवति । परो हि घटादेः कार्यस्य प्रागुत्पत्तेः सत्त्वमभ्युपगच्छति । तत्किं पृथगेवोत मृदादिकारणात्मतयेति वक्तव्यम् । नाद्यः । अनभ्युपगमात् । अनुपलब्धेश्च । द्वितीये तु कार्यस्योपादानाभेदस्तावदङ्गीकृतः । न चात्यन्ताभेदः । घटादेः कार्याकारेण प्रागुत्पत्तेरसत्त्वात् । यदा हि घटादिकं मृदादिनाऽत्यन्ताभिन्नं स्यात् । तदा प्रागुत्पत्तेर्घटादिरूपेण सत्स्यात् । मृदादेस्तदा सत्त्वात् । न चैवम् । तेन जानीमो घटादिकं मृदादिना भिन्नाभिन्नमिति । अत्यन्तासत्कार्यवादिनं प्रति भेदाभेदसमर्थनं विरोधपरिहारश्चोत्तरत्र विधास्यत इति ।**

**शे०** —विकल्पितपक्षद्वयदूषणेनापव्याख्याननिरासस्य 'नित्यभेदो निमित्तेन ह्युपादानेन तु द्वयम्' इत्येतावता भाष्येणैव सिद्धेरुत्तरस्यानर्थक्यमाशङ्क्य कार्यस्योपादानेन भेदाभेदयोः प्रमितत्वस्य 'ह्युपादानेन तु द्वयम्' इत्यनेनोक्तस्य समर्थनार्थत्वान्न तदिति भावेन तत्समर्थनपरतया भाष्यं योजयितुं शङ्कामुत्थापयति **कथमिति** । यद्घटादिकं प्रागुत्पत्तेः कार्यरूपेणासत्तदेव मृदादिकारणात्मना प्रागुत्पत्तेरस्तीति यथाश्रुतक्रमेण योजनायामसिद्धस्यानुवादः सिद्धस्य विधानं भवतीत्यतो व्यत्यासेन वाक्यं योजयति **यदित्यादिना** । बुद्ध्यारोहाय यत्कारणात्मना कार्यरूपेणेति विशेषनिष्ठतया व्याख्याति **घटादिकमित्यादिना** ॥ **प्रागुत्पत्तेरिति** । योग्यतयोभयत्राध्याहारेण व्याख्यानं **प्रमितमिति** । अनेन मूले हिशब्दः कार्यस्य कारणात्मना सत्तायाः प्रमाणसिद्धत्वसूचनार्थ इत्युक्तं भवति । मूले यदिति यच्छब्दश्रवणात्तदिति लभ्यत इत्याशयेनोक्तं **तदेवेति** । मूले हिशब्दस्य न यथाश्रुत एव सम्बन्धः । तथा सति कार्याकारेणासत्त्वस्योपादानेन कार्यस्य भिन्नाभिन्नत्वे हेतुत्वसमर्पकाभावेन तस्याहेतुत्वप्रसङ्गात् । किन्त्वसदित्यनेनापीत्यभिप्रेत्य हिशब्दप्रदर्शनपूर्वकं हेत्वर्थतया तं व्याचष्टे **असिद्धिर्यस्मादिति** । यस्मादित्यनुरोधादाह

**तस्मादिति ।** मूले साधनानुक्त्या साकाङ्क्षत्वेन प्रसक्तवाक्याभासताशङ्कापनुत्तये पूर्वेण सम्बन्धमाह **उपादानेनेति ।** ननु कार्यस्य प्रागुत्पत्तेः सत्त्ववादिना परेण, कार्यरूपेणैव सत्त्वस्य वक्तुं शक्यत्वात्कारणात्मतया सतीति हेतुविशेषणासिद्धिः । तथा कार्याकारेणासत्त्वादिति हेतुविशेष्यासिद्धिरपि । तथा कार्यस्य कारणेनात्यन्ताभेदेऽपि कारणात्मना प्रागुत्पत्तेः सत्त्वे सति कार्यरूपेण सत्त्वोपपत्तेरप्रयोजकत्वं च । सत्कार्यवादिनं प्रत्युक्तहेतुना कार्यस्योपादानेन भेदाभेदसाधनसम्भवेऽप्यत्यन्तासत्कार्यवादिनं वैशेषिकादिकं प्रति भेदाभेदसाधनानुपपत्तिश्च तेन प्रागुत्पत्तेः कार्यस्य सत्त्वस्यैवानङ्गीकारेण कारणात्मना सत्त्वस्यासिद्धत्वाद्भिदाभेदयोः परस्परपरिहारेणैव वृत्तिदर्शनेनैकत्र तदुभयस्य विरुद्धतया साधनायोगाच्चेत्यतो अभिप्रायमाह **एतदुक्तं भवतीति ।** 'कारणात्मतयाऽस्ति हि' इत्यत्र कारणात्मतया सत्त्वस्य प्रमितत्वाङ्गीकृतत्वसूचकहिशब्दोक्तयुक्त्या कार्याकारेण सत्त्वपक्षं दूषयति **अनभ्युपगमादिति ।** अभ्युपगमे त्वाह **अनुपलब्धिश्चेति ।** ततश्च न विशेष्यासिद्धिरिति भावः ॥ **अङ्गीकृत इति ।** ततश्च न विशेषणासिद्धिरिति भावः । हेतूच्छित्तिरेव विपक्षे बाधिकेति नाप्रयोजकत्वमित्यभिप्रेत्याप्रयोजकशङ्कोत्थापनपूर्वकं तामुपपादयति **न चेत्यादिना ।** मृदादिनाऽत्यन्ताभिन्नत्वेऽपि घटादेः कुतः प्रागुत्पत्तेर्घटरूपेण सत्त्वप्रसङ्गः । तदा मृदाद्यभावेन तत्परिहारसंभवादित्यत उक्तम् **मृदादेरिति ।** इष्टापत्तिमाशङ्क्यानुपलम्भबाधान्नैवमित्याह **न चैवमिति ।** किमेतावताऽपीत्यतो विशेषणविशेष्यासिद्ध्यप्रयोजकत्वशङ्कानामनवकाशात्, कार्यमुपादानेन भिन्नाभिन्नं प्रागुत्पत्तेः कारणात्मतया सत्त्वे सति कार्याकारेणासत्त्वाद्व्यतिरेकेण कारणवदिति सूचितानुमानेन भेदाभेदसिद्धिः सम्पन्नेत्युपसंहरति **तेनेति ॥ उत्तरत्रेति ।** वैशेषिकपरीक्षायां 'भेदो नाशे भवेत्तथा' इत्यादिनोपादानोपादेययोर्भेदाभेदसमर्थनं विधास्यत इत्यर्थः । तथोत्तरत्र विशेषमेव संश्रित्य 'विशेषो बलवान्यतः' इत्यादिनोपादानोपादेययोर्भेदाभेदयोर्विरोधपरिहारश्च विधास्यत इत्यर्थः । इतीत्यस्येत्येतदुक्तं भवतीति पूर्वेण संबन्धः ।

**स० — उपादानेन भिन्नाभिन्नमिति निश्चीयत इति ।** अत्रायं सिद्धान्तनिष्कर्षः । कार्यस्य उपादानेन भेदाभेदौ कार्यसत्त्वदशायामेव । नष्टे भेदाभेदचिन्ताऽयोगात् । उपादाननिरूपितभेदाभेदौ कार्ये । तन्निरूपितभेदाभेदौ उपादाने । न तु एक एव भेदोऽभेदो वा उभयनिष्ठः । कार्ये नष्टेऽपि तन्निरूपितभेदाभेदौ उपादानस्वरूपभूतौ तिष्ठत एव । धर्मिसत्त्वस्यानावश्यकत्वादिति ।

( न च विशेषबलेन इच्छाया एवाभावः कुतो नोच्यते इति वाच्यम् । इच्छायाः स्वेन निर्विशेषाभेदस्य सत्त्वेन तत्र वक्तुमशक्यत्वात् । व्यक्तेश्चेच्छया सविशेषाभेदसत्त्वात् तदभावादिति वक्तुं शक्यत इति भावः । तस्मिन्सत्यप्यसत्त्वादित्यत्र असत्त्वं नाम प्रागभावप्रतियोगित्वं, ध्वंसप्रति-

योगित्वं विवक्षितम् । एवं च इच्छाव्यक्तौ न व्यभिचारः । तत्र विवक्षितासत्त्वस्याभावात् ( न च ) व्यक्त्यभावादित्यस्य कोऽर्थ इति वाच्यम् । इच्छात्वरूपेण सत्त्वेऽपि व्यक्तिरूपेणासत्त्वस्य विशेषबलेनाभिप्रेतत्वात् )

ननु सत्कार्यवादिनं प्रति सत्त्वं पृथगेव उत मृदादिकारणतयेत्यादिविकल्पेन भेदाभेदसमर्थनसंभवेऽपि अत्यन्तासत्कार्यवादिनं प्रति कथं तत्समर्थनं संगच्छते । तं प्रति उक्तविकल्पस्य कर्तुमशक्यत्वात् । एकत्रैव विरुद्धभेदाभेदसमर्थने विरोधश्च स्यादित्यत आह **अत्यन्तेति** । **उत्तरत्र विधास्यत इति** । वैशेषिकपरीक्षायामिति शेषः ।

प० — यदिति, श्रवणादाह **तदेवेति** ॥ **अत्यन्तासदिति** । असतः सत्तासम्बन्धो जनिरिति, वक्तारं तार्किकं प्रतीत्यर्थः ॥ **भेदाभेदेति** । उपादानोपादेययोरिति भावः ॥ **विरोधेति** । भेदाभेदयोरिति योज्यम् । उत्तरत्र वैशेषिकनये समवायनिरासप्रस्तावे । इतिशब्दस्यैतदुक्तं भवतीति पूर्वेणान्वयः ।

या० — **विरोधपरिहार इति** । भेदाभेदयोरङ्गीकार इति शेषः ॥ **उत्तरत्रेति** । वैशेषिकपरीक्षायामित्यर्थः ।

श्री० — **पृथगेवेति** । कारणाद्भिन्नतयेत्यर्थः । **अनभ्युपगमात्** पृथक् सत्त्वस्येति शेषः ॥ **अनुपलब्धेश्चेति** । पृथक् सत्त्वस्येति शेषः ।

सु० — **यच्च कार्यस्य प्रागुत्पत्तेः सत्त्वमुक्तं तदपि नोपपन्नमित्याह** असदिति ।

**यत् घटादिकं प्रागुत्पत्तेरस्तीत्यावयोः सम्मतम् । तदेव तदाऽसच्च यस्मात्तस्मात्सदसदेवेति सत्कार्यवादोऽनुपपन्न एव । तस्यैव तदैव तत्रैव सत्त्वमसत्त्वं च विरुद्धमिति चेन्न । रूपभेदेन अविरोधात् इत्याशयेनोक्तं कारणात्मतया कार्यरूपेणेति । नन्वेवं सति किञ्चित्सदेव किञ्चित् असदेव सदसत्तु न किमपि स्यात् । न स्यात् । तयोरपि रूपयोरत्यन्तभेदाभावादिति ।**

शे० — उक्तयोजनायां कार्यस्य कारणानन्यत्वरूपप्रमेयैकदेशस्य भाष्ये निरासेऽपि सत्कार्यवादरूपप्रमेयैकदेशस्यानिरस्ततयाऽधिकरणप्रमेयस्य प्रागुत्पत्तेः कार्यस्य सत्त्वं कारणानन्यत्वं चेत्यस्य निरासो न सिध्यतीत्यतस्तत्सिद्ध्यर्थमसद्यदिति भाष्यमेव तन्निरासपरतयाऽपि योजयति **यच्चेति** । अत्र पूर्वयोजना न सङ्गतेत्यर्थतः सत्कार्यवादनिरासोपयोगितया भाष्यं योजयति **यद्घटादिकमिति** । एवं प्रयोजनायां कार्यरूपेण कारणात्मतयेति विशेषणनैरपेक्ष्येणैव सत्कार्यवादनिराससिद्धेस्तद्वैयर्थ्यमित्यतो

विरोधशङ्कापरिहारार्थत्वान्न तदिति भावेन विरोधशङ्कानिवर्तकतया तद्योजयितुं तच्छङ्कामुत्थापयति **तस्यैवेति** । अत्र तस्यैवेति प्रतियोगिभेदनिराकरणम् । तदैवेति कालभेदनिराकरणं तत्रैवेत्याश्रयभेद-निराकरणम् । **अयमर्थः** । भेदो हि विरोधशान्तिहेतुः । तथा हि । क्वचित्प्रतियोगिभेदः । यथा गवयो गोघटाभ्यां सदृशो विसदृशश्चेति । क्वचित्कालभेदो यथा मथुरायामेव देवदत्तस्य भावाभावौ । क्वचिदाश्रयभेदो यथा मथुरायां देवदत्तस्य भावः स्रुघ्ने तदभावः । न चात्र विरोधशान्तिहेतुभूतः क्वचिदपि भेदोऽस्ति । तत्कथं न विरोध इति । न देशकाल-प्रतियोगिभेदमात्रं विरोधशान्तिहेतुः । एकस्यैव घटस्यैकत्रैकदैव घटत्वेन रूपेण सद्भावस्य पटत्वेन रूपेणासद्भावस्य च दर्शनेन देशादिभेदस्यैव रूपभेदस्यापि विरोधशान्तिहेतुत्वेन क्लृप्तत्वात्तदिहापि प्रति-योग्यादिभेदाभावेऽपि रूपभेदेन भावाभावयोरुपपत्तेरित्याशयेनाह **रूपेति** । कार्यकारणाकारयोरत्यन्तभेदं मत्वानश्शङ्कते **नन्विति** । भवेदेतदेवं यदि तयो रूपयोरत्यन्तभेदः स्यान्न चैवमित्याह **न स्यादिति** ।

**स० — तस्मात्सदसदेवेति** । अस्मन्मते कार्यस्य सत्त्वं नाम येन कारणेन स्वयमभिन्नं तस्य कारणस्यैव सत्त्वं, न तु कार्यस्य पृथक् सत्त्वमस्तीति ध्येयम् ।

**प० —** चशब्दाध्याहारेणार्थमाह **असच्चेति** । हेत्वर्थो यस्मादिति ॥ **किञ्चिदिति** । कारण-मित्यर्थः । पुनः किञ्चिदित्यस्य कार्यमित्यर्थः । निराह **न स्यादिति** । अनवस्था स्यादित्यनूदितस्यार्थ इति सर्वजनसंमता व्यवस्था न स्यादिति ।

**श्री० — सत्त्वमुक्तम्** अत्यन्तसत्त्वमुक्तम् । **किञ्चित्** कारणरूपम् । **किञ्चित्** कार्यरूपम् । **किमपीति** । एकं वस्त्वित्यर्थः ॥ **अत्यन्तेति** । तथा च कार्यात्मकत्वकारणात्मकत्वरूपयो रूपिणः सकाशादभेदस्यापि सत्त्वेनैकमेव वस्तु सदसदात्मकमित्यर्थः ।

**सु० — स्यादेतदुक्तम् यद्यसत्त्वं प्रागुत्पत्तेः कार्यस्य स्यात्तदेव कुतः । तथा चात्यन्ताभिन्नं कार्यमुपादानेनेत्यतो विपक्षे बाधकप्रदर्शनेन कार्यस्य प्रागुत्पत्तेरसत्त्वमुपादानाद्भेदं चोपपादयति** अनवस्थेति ।

**अनु० —** अनवस्थाऽन्यथा हि स्यात्सर्वत्रोत्पत्तिनाशयोः ॥

**अन्यथा कार्यस्य प्रागुत्पत्तेरात्यन्तिके सत्त्वे कारणेनात्यन्ताभेदे चाङ्गीकृते सर्वत्रोत्पत्तिनाशयोरनवस्था अव्यवस्था स्यात् । यथा हि । पटस्तन्त्वात्मकः प्रागपि सन्नेव । तथा**

**तन्तवोऽपि स्वकारणात्मकाः सन्त एवेत्यनेन क्रमेण सर्वस्य मूलकारणात्मकत्वेनात्यन्तिकं सत्त्वं स्यात् । न च मूलकारणमुत्पद्यते विनश्यति चेति पटादीनामप्युत्पत्तिविनाशौ न स्याताम् । तथा च पटादय उत्पत्तिविनाशवन्त आत्मादयस्तद्रहिता इति लोकवेदप्रसिद्धोत्पत्तिनाशव्यवस्था न स्यादिति । उपलक्षणं चैतत् । पटादीनामुत्पत्तिविनाशाभावे तत्कारकव्यापारवैफल्यं स्यादित्यपि द्रष्टव्यम् ।**

शे० — नन्वनवस्थाऽन्यथा हीत्युत्तरभाष्यमनर्थकम् । न चात्यन्तिकसत्त्वे कारणेनात्यन्ताभेदे चोत्पत्तिनाशयोरव्यवस्थाप्रसङ्गोपदर्शनार्थमेतदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न च प्रागुत्पत्तेः कार्यस्यासत्त्वोपपादनार्थत्वान्न तदुपदर्शनानर्थक्यमिति वाच्यम् । प्रागुत्पत्तेः कार्यस्यात्यन्तासत्त्वेऽपि बाधकाभावेनासत्त्वोपपादनस्यापि निष्फलत्वादित्यतः कार्यस्य कारणात्प्रागसत्त्वेन कार्यस्योपादानेन भिन्नाभिन्नत्वसाधनस्य प्रागुक्तस्य समर्थनार्थत्वान्न तद्वैयर्थ्यमित्यभिप्रेत्य हेत्वसिद्धिव्युत्पादनपूर्वकं भिन्नाभिन्नत्वसाधनानुपपत्तिशङ्कामुत्थापयति **स्यादेतदिति** । उक्तं कार्यस्योपादानेन भिन्नाभिन्नत्वम् । **तदेव कुत इति** । सत्त्वे बाधकाभावादिति भावः । यद्यपि पृथगेव कार्यस्य सत्त्वमनुपलब्धिबाधितम्, इति पूर्वमेव सत्त्वे बाधकस्योक्तेर्न पुनरेतच्छङ्कावकाशः । तथाऽपि बाधकान्तरं वक्तुमियं शङ्केति ध्येयम् । नन्वत्रात्यन्तिकसत्त्वादिवाचिपदाश्रवणात्कथमात्यन्तिकसत्तास्वीकारे कार्यस्य बाधकोपदर्शनत्वमित्यतोऽत्रान्यथेतिपदमेव तत्परम् । तस्योक्तार्थविपरीताभ्युपगमे व्युत्पन्नत्वात् । प्रागुत्पत्तेः कारणाकारेण सत्त्वे सति कार्याकारेणासत्त्वादेरेव पूर्वत्रोक्तत्वेनात्यन्तसत्त्वादिस्वीकारस्यैवोक्तार्थविपरीताभ्युपगमरूपत्वादिति भावेनान्यथेति पदं विपक्षोपदर्शकतया व्याचष्टे **अन्यथेति** । तथाऽपि व्यवस्थाभावरूपाऽऽपाद्यार्थवाचकाभावेन तत्समर्पणासंभवान्नास्य बाधकोपदर्शनपरत्वमित्यतोऽनवस्थापदमेव तत्समर्पकं बाधितत्वेन प्रसिद्धानवस्थापरतायाः प्रकृतेऽयोगादिति भावेन तत्परतया तद्व्याचष्टे **अनवस्थेति** । नन्वात्यन्तिकसत्तास्वीकारे कारणेनात्यन्ताभेदाङ्गीकारेऽपि चोत्पत्तिनाशव्यवस्थोपपत्तेरप्रयोजकत्वमित्यतो नात्रात्यन्तिकसत्तादिस्वीकारेण साक्षादव्यवस्थामापादयामः किन्तु पटादीनामुत्पत्तिनाशाभावापादनद्वारा ततो नाप्रयोजकत्वमित्यभिप्रेत्य कथमात्यन्तिकसत्तादिस्वीकारे तेषामुत्पत्तिनाशाभावप्रसङ्ग इत्यतस्तमुपपादयति **यथा हीति** । एवमुत्पत्तिनाशाभावापादनमुपपाद्य तेनाव्यवस्थापादनमव्यवस्थाप्रकारदर्शनेन दर्शयति **तथा चेति** । नास्त्येव तादृशी व्यवस्थेति तदभावापादनं नानिष्टमित्याशङ्क्य भाष्ये हिशब्देनोक्तव्यवस्थायाः प्रामाणिकत्वदर्शनेन तदभावस्य प्रामाणिकहानरूपत्वेनानिष्टत्वसूचनात्तदापादनमनिष्टमेवेत्यभिप्रेत्य हिशब्दाभिप्रायमाह **लोकवेदप्रसिद्धेति** । मूले, पटादीनामुत्पत्तिविनाशाभावे तद्व्यवस्थाऽभावापादनं

तस्यापि संभवमात्राभिप्रायेण न तु दोषान्तराभावात् इत्यभिप्रेत्यान्तरङ्गदोषोपलक्षणपरतया भाष्यं व्याचष्टे **उपलक्षणं चैतदिति** ।

**श्री०— आत्यन्तिकसत्त्वे** कार्यात्मनाऽपि सत्त्वे ॥ **तथा चेति** । उत्पत्तेः प्रागसत्त्वाभावे सतीत्यर्थः ॥ **आत्यन्तिकेति** । कार्यात्मनाऽपीत्यर्थः ।

**सु०— यद्वोत्पत्तिनाशशब्दाभ्यां सत्त्वमसत्त्वं चोपलक्ष्यते । ततश्चायमर्थः । यदि पटस्तन्त्वात्मकः प्रागुत्पत्तेरपि सन्नेव तदा(तदा)ऽप्युपलभ्येत तन्तुवत् । यदि चानुपलभ्यमानोऽपि सन्नभ्युपेयते, तदा सर्वत्रोत्पत्तिनाशयोस्सदसत्त्वयोरनवस्था स्यात् । उपलभ्यमानं घटादिकमस्त्यनुपलभ्यमानं खरविषाणादिकं नास्तीति सर्वजनसंमता व्यवस्था न स्यात् ।**

**शे०—** भाष्यस्थोत्पत्तिनाशशब्दस्वारस्यानुरोधेनात्यन्तिकसत्तास्वीकारे उक्तविधोत्पत्तिनाशव्यवस्थानुपपत्तिरूपबाधकप्रदर्शनपरतया वाक्यं योजितम् । अधुनाऽऽत्यन्तिकसत्तास्वीकारे संभावितव्यवस्थान्तरानुपपत्तीनां बाधकतया भाष्ये संगृहीतत्वलाभायोत्पत्तिनाशशब्दयोरमुख्यार्थत्वमाश्रित्य योजनां दिदर्शयिषुरादौ तावत्सदसत्त्वव्यवस्थानुपपत्तिरूपबाधकान्तरसंग्रहाय तस्या भाष्यारूढतासिद्ध्यर्थमुत्पत्तिविनाशशब्दौ तदुपलक्षकतया व्याचष्टे **यद्वेति** । कथमात्यन्तिकसत्तास्वीकारे सदसत्त्वव्यवस्थानुपपत्तिरित्यतोऽपेक्षितप्रतिज्ञादिपूरणेन सदसत्त्वव्यवस्थाऽनुपपत्त्युपपादकतया वाक्ययोजनामाह **ततश्चेति** । तत्रापेक्षितप्रतिज्ञापूरणं यदि पट इत्यादितन्तुवदित्यन्तम् । अन्यथेत्यस्य व्याख्यानं यदि चानुपलभ्यमानोऽपि सन्नभ्युपेयत इति । अनवस्थापदोक्ताव्यवस्थाप्रकारोपदर्शनमुपलभ्यमानमित्यादि । भाष्ये **हिशब्दः** सर्वजनसंमतत्वसूचनेनोक्तव्यवस्थाभावस्यानिष्टत्वसमर्थनार्थ इति भावेन तदभिप्रायमाह **सर्वेति** ।

**श्री०— तदा** उत्पत्तेः प्राक् ॥ **न स्यादिति** । अनुपलभ्यमानस्यापि खरविषाणस्य सत्त्वप्रसङ्गादिति भावः ।

**सु०— अथवोत्पत्तिविनाशशब्दाभ्यां तदुपपादनस्योपलक्षणम् । तथा चैवं योजना आस्तां तावदन्यत् । सत्कार्यवादे सर्वत्र शिष्यं प्रतिवादिनं वा प्रति उत्पत्तिनाशयोर्नासदुत्पद्यते न सद्विनश्यतीत्येवंरूपोपपादनस्याप्यनवस्थाऽवस्थानाभावः स्यात् । तथा हि । इदमुपपादनं किमर्थमिति वाच्यम् । शिष्यादेर्विद्योत्पत्तयेऽविद्यानाशाय वादे जल्पादौ तु ख्यात्याद्युत्पादायेति चेत् । तद्विद्यादिकं सच्चेन्नोत्पाद्यम्, सत्त्वादात्मवत् । असच्चेन्नोत्पादयितुं शक्यम्, अन्यथा सत्कार्यवादभङ्गप्रसङ्गात् । एवमविद्या सती चेन्न विनाश्या । अन्यथाऽपसिद्धान्तापत्तेः । असती चेत् (नितरां) न तराम् । नित्यनिवृत्तत्वात् । ततः सर्वथा प्रतिपादनासंभव एवेति ।**

**शे०** — उत्पत्तिविनाशोपपादनानवस्थारूपतद्बाधकसंग्रहाय तस्य भाष्यारूढतासिद्ध्यर्थमुत्पत्तिनाशोपपादनोपलक्षणतयाऽपि तौ व्याचष्टे **अथवेति** । आत्यन्तिकसत्त्वास्वीकारे कथमुत्पत्तिनाशोपपादनानवस्थेत्यतस्तदुपपादकतया भाष्यं योजयति **तथा चैवमिति** । तत्रान्यथेत्यस्यार्थः सत्कार्यवाद इति । कार्यस्यात्यन्तिकसत्तास्वीकार इति च तदर्थः । 'सर्वत्र' इत्यनुवादेन 'शिष्यं प्रतिवादिनं वा प्रति' इति व्याख्यानम् । 'उत्पत्तिविनाशयोः' इत्यस्यार्थः **उपपादनस्येति** । उपपादनप्रकारप्रदर्शनम् **न सदित्यादि** । शिष्यादेरित्यादिपदेन सखिसब्रह्मचारिणां संग्रहः । जल्पादावित्यादिपदेन वितण्डापरिग्रहः । ख्यात्यादीत्यादिपदेन परखिलीकरणादेः परिग्रहः ॥ **आत्मवदिति** । सतोऽपि विद्यादेरुत्पत्तौ सन्नात्माऽप्युत्पद्येतेति भावः । असतोप्युत्पादयितुं शक्यत्वे बाधकमाह **अन्यथेति** ॥ **अन्यथेति** । सतोऽपि विनाशे इत्यर्थः । न सद्विनश्यतीति तत्सिद्धान्तादिति भावः । **न तरां** नैवेत्यर्थः । विनाश्येत्यनुवर्तते । तत्र हेतुमाह **नित्येति** । अन्यथा नरविषाणस्यापि विनाशप्रसङ्गादिति भावः ।

**स०** — **नितरामिति** । नैवेति शेषः ।

**प०** — **आस्तां तावदन्यदिति** । तिष्ठतु तावदुक्तं बाधकान्तरोपदर्शनम् । शिष्यादिबोधनमेवायुक्तं यदर्थमयं प्रयासस्तवेत्यर्थः ॥ **सर्वत्रेति** । त्वदभिमतसर्वप्रमेयविषय इत्यर्थः । तथाच कस्यापि प्रमेयस्य शिष्यादिकं प्रति प्रतिपादनं न स्यादिति यावत् । अवस्थानाभावः स्यादित्यस्य विवरणं सर्वथा प्रतिपादनासंभव एवेति ।

---

**श्री०** — **अन्यथेति** । असतोऽप्युत्पादयितुं शक्यत्वे ॥ **न विनाश्येति** । सत आत्मनो विनाशादित्यर्थः । **अन्यथा** सतोऽपि विनाशे । **नितरां** न विनाश्येति वर्तते ।

**सु०** — **यदि वोत्पत्तिनाशयोरिति विरुद्धधर्मोपलक्षणम् । तथा हि । यदि कार्यमुपादानात्मकमेव सदेव च प्रागुत्पत्तेः स्यात् । तदोत्पत्तिविनाशादिधर्माणामनवस्था स्यात् । तन्तवः प्रागेव सन्तो नेदानीमुत्पद्यन्ते । पटस्तूत्पद्यते । तन्तुष्वविनष्टेष्वेव पटो विनश्यति । तन्तवो बहवः पटस्त्वेकः । एवमाकाराभिधानबुद्धिकार्यभेदोऽपि द्रष्टव्यः । सैषा व्यवस्था न स्यादिति ।**

**शे०** — विरुद्धधर्मानुपपत्तिरूपविपक्षे बाधकस्यापि भाष्यारूढतासिद्ध्यर्थं तदुपलक्षणतयाऽप्युत्पत्तिनाशशब्दौ व्याचष्टे **यदि वेति** । कथं सत्कार्यवादे विरुद्धधर्माव्यवस्थेत्यतस्तदुपपादकतयाऽपि वाक्ययोजनां सूचयति **तथा हीति** । तत्रान्यार्थेत्यस्यार्थप्रदर्शनं यदीत्यादिना स्यादित्यन्तेन । उत्पत्तिनाशयोरित्यस्यार्थं उत्पत्तिनाशादिधर्माणामिति । अनवस्था स्यादिति व्यवस्था न स्यादित्युक्तं तत्कथ-

मेतदित्यतो धर्मव्यवस्थाप्रदर्शनपूर्वकं तदनुपपत्तिमाह **तन्तव इति** ॥ **एवमाकारेति** । पिण्डाकारं कारणं, पृथुबुध्नोदराकारं कार्यमित्याकारभेदः । तन्तुः पट इत्यभिधानभेदः अयं तन्तुरयं पट इति बुद्धिभेदः । तन्तुकार्यं पटः, पटकार्यं हिमनिवारणमिति कार्यभेदः; इति द्रष्टव्यम् ॥ **सेति** । अत्यन्ताभेदादिति भावः ।

स० — **एवमिति** । तन्तुपटयोराकारभेदात्, तन्तुपटावित्यभिधानभेदात्, एकत्र तन्तुरिति अपरत्र पट इति बुद्धिभेदात्, हिमनिवारकत्वतदभावादिरूपकार्यभेदाच्च तयोर्भेद इत्यर्थः ।

प० — **एवमाकारेति** । अनुत्पन्नत्वोत्पन्नत्वनष्टत्वानष्टत्वबहुत्वैकत्वरूपविरुद्धधर्मभेद इव तन्तवः सूक्ष्मदीर्घाकाराः पटस्त्वातानवितानाकारः एते तन्तवः अयं पट इत्यभिधानभेदः तन्तुत्वपटत्वप्रकारकरूपबुद्धिभेदः शीतानिवर्तकत्वतन्निवर्तकत्वादिकार्यभेदोपि ध्येय इत्यर्थः ।

या० — **एवमाकारेति** । तन्तुपटयोराकारभेदस्तन्तुपट इत्यभिधानभेदोऽयं तन्तुरयं पट इति बुद्धिभेदस्तन्तुषु पटजनकत्वं पटे हिमनिवारकत्वमिति कार्यभेद इत्यर्थः ।

श्री० — **तन्तुष्वविनष्टेष्वेवेति** । असमवायिकारणेन कार्यनाशस्थल इत्यर्थः । पट आतानाद्यात्मकः तन्तुस्तु नैवमित्याकारभेदः । अयं पट इति पटो व्यवह्रियते, तन्तुस्त्वन्यथेत्यभिधानभेदः । पटबुद्धिः पटविषयिणी तन्तुबुद्धिस्तन्तुविषयिणीति बुद्धिभेदः । पटः शीतमपनुदति तन्तुस्तु नेति कार्यभेदो द्रष्टव्यः ।

**सु० — नन्वेतत्सकलमपि पटवच्च, यथा प्राणादिरिति व्यक्त्यव्यक्त्यवष्टम्भेन परिहृतम् । तथा हि । व्यक्त्यपेक्षयोत्पत्तिः पटादीनामव्यक्त्यपेक्षया च विनाशो युज्यते । व्यक्त्यव्यक्त्यर्थमेव च कारकाण्युपयुज्यन्ते । व्यक्त्यव्यक्तिभ्यामेवोपलब्ध्यनुपलब्धी भवतः । अत एव प्रतिपादनं सङ्गच्छते । व्यक्ताव्यक्तरूपेणैव विरुद्धधर्मा व्यवतिष्ठन्ते । यथा हि संवेष्टितः पटो न स्फुटं पट इति प्रतीयते । न प्राव्रियते न शीतमपनुदति । न बहुदेशव्यापी भवति । प्रसारितस्तु स्फुटप्रतीत्यादिमान् । न चैतावता भेदः । नापि प्रसारितः प्रागसन् । यथा च प्राणायामेन निरुद्धः शारीरो वायुर्जीवनमात्रं करोति नोत्क्षेपणादि । निरोधापगमे त्वासादितव्यक्तिस्तदपि करोति । न तावन्मात्रेण भिद्यते । प्रागसन्वा । तथैवैतदपि व्यक्त्यव्यक्तिभ्यां समञ्जसमिति ।**

**अत्र ब्रूमः । केयं पटस्य प्रागुत्पत्तेरूर्ध्वं च विनाशादव्यक्तिर्मध्ये च व्यक्तिः । अनुपलब्धिरव्यक्तिरुपलब्धिर्व्यक्तिरिति चेत्तत्राह** अनवस्थेति ।

यद्युपलब्ध्यनुपलब्धी एवोत्पत्तिविनाशौ । तदा सर्वत्रोत्पत्तिनाशयोरनवस्था स्यात् । यद्यदोपलब्धं तत्तदैवोत्पन्नम् अनुपलब्धं च विनष्टमिति स्यादिति यावत् । किञ्च प्रागुत्पत्तेस्सत्त्वे पटस्य कस्मान्नोपलब्धिः कथं चोर्ध्वमुपलब्धिरिति प्रश्नस्य उपलब्ध्यनुपलब्धि(अनुपलब्ध्युपलब्धि)भ्यामेवेति परिहारं वदन्देवानांप्रियः श्लाघनीयप्रज्ञः स्यात् । अपि च प्रागूर्ध्वं च तन्तूपलब्धौ कथं तन्मात्रस्य सतः पटस्यानुपलब्धिः । अन्यथा तन्तूनामपि सा स्यात् ।

**शे०**— भाष्ये 'पटवच्च', 'यथा प्राणादिः' इति सूत्रार्थतया परोत्प्रेक्षितव्यवस्थोपपादकयुक्त्याभासानिरासप्रयुक्तन्यूनतापरिहारायेदमेव भाष्यं तन्निरासपरतया योजयितुं व्यवस्थोपपादकयुक्तिप्रदर्शनपूर्वकं व्यवस्थोपपत्तिमाशङ्कते **नन्विति ॥ व्यक्त्यपेक्षयेति** । तथा च सत्कार्यवादेऽपि पटादीनामुत्पत्तिविनाशयोरुक्तविधयोः सत्त्वात्पटादय उत्पत्तिविनाशवन्त आत्मादयस्तद्रहिता इति लोकवेदसिद्धोत्पत्तिविनाशव्यवस्थोपपत्तेर्न तदनुपपत्तिर्बाधिकेति भावः ॥ **व्यक्त्यव्यक्त्यर्थमेवेति** । तथा च व्यक्त्यव्यक्तिरूपोत्पत्तिनाशयोः सत्त्वान्न तत्कारकवैफल्यप्रसङ्गोऽपीति भावः ॥ **व्यक्त्यव्यक्तिभ्यामेवेति** । तथा च न सत्त्वासत्त्वानुपपत्तिरपीति भावः । उपपादनानुपपत्तिं परिहरति **अत एवेति** । व्यक्त्यव्यक्त्यर्थत्वादेवेत्यर्थः । यदि वेत्युक्तबाधकमपि परिहरति **व्यक्त्यव्यक्तिरूपेणैवेति** ।

व्यक्त्यव्यक्त्योरेव दुर्निरूपत्वान्न व्यक्त्यव्यक्त्यवष्टम्भेनोक्तव्यवस्थानिर्वाह इत्यभिप्रेत्य तत्स्वरूपं विकल्पयति **केयमिति** । किमत्राव्यक्तिव्यक्ती अनुपलब्ध्युपलब्धिरूपा(वा)त्मधर्मावभिमते किंवा तदतिरिक्तावेव पटधर्माविति किंशब्दार्थः । आद्यपक्षनिरासपरतया मूलं योजयितुं तमुत्थापयति **अनुपलब्धिरिति** । अन्यथेत्यस्यार्थो **यदीत्यादि** । अव्यवस्थाप्रकारदर्शनं **यद्यदेति** । ननु यद्यदोपलब्धं तस्य तदोत्पन्नत्वं नानिष्टमुपलब्धिरेवोत्पत्तिरिति वदतोपलब्धत्वरूपोत्पन्नत्वस्याङ्गीकृतत्वात् । एवमनुपलब्धिरेव विनाश इत्यङ्गीकारेणानुपलब्धत्वरूपविनष्टत्वस्याप्यभ्युपगतत्वात् । अनुपलब्धस्य तद्रूपमनुपलब्धत्वं च नानिष्टमिति कथं तदापादनमित्यरुचेराह **किञ्चेति** । **देवानांप्रियः** पशुः । कस्मादुपलब्ध्यनुपलब्धी इत्युपलब्ध्यनुपलब्धिनियामकप्रश्नोत्तरतया नियम्यभूतोपलब्ध्यनुपलब्धी एव नियामकतया वदतोऽलौकिकं बुद्धिवैशद्यमित्याशयेन श्लाघनीयप्रज्ञ इति परिहासः । असत्त्वाच्चानुपलब्धेर्न नियामकतया तदुपन्यासो युक्त इत्याह **अपि चेति** । **तन्मात्रस्य सतः** न तन्तुमात्रस्य सत इति हेतुगर्भविशेषणम् । **अन्यथेति** । तन्तुमात्रस्य सतोऽपि पटस्यानुपलब्धावित्यर्थः । अविशेषादिति भावः ।

**स०**— **यद्यदोपलब्धमिति** । ननु च कुलालव्यापारानन्तरं जायमानप्रतीतेरेवोपलब्धिशब्देन विवक्षणात् विनाशव्यापारानन्तरानुपलब्धेरेव च नाशत्वेनाभिप्रेतत्वात् नोक्तदोष इति चेत्, उत्पत्तिविनाशशब्दयोरुपलब्ध्यनुपलब्ध्यर्थकत्वेन सङ्केतापत्त्या प्रमेयाविरोधादिति भावः ।

**प०— एतत्सकलमपीति** । प्रागुक्तबाधकचतुष्टयमपीत्यर्थः । **कथमित्यादिप्रश्नस्योत्तरमाशङ्कते अनुपलब्धिरव्यक्तिरित्यादि** ॥ **देवानांप्रिय इति** । अनभिज्ञत्यर्थः । देवानांप्रियो मूर्ख इत्यलुक्समासः । श्लाघनीयेत्यपहासः । कुतो नोपलभ्यत इत्यादिप्रश्नस्यानुपलभ्यमानत्वात् नोपलभ्यत इत्याद्युक्तावात्माश्रयापत्तेरिति भावः ॥ **प्रागूर्ध्वं चेति** । पटोत्पत्तेरित्यनुषङ्गः ॥

**श्री०— अत एव** विद्यमान(?विद्य)देर्व्यक्त्याद्यर्थम् । **तदपि** उत्क्षेपणाद्यपि ॥ **उत्पत्तिविनाशाविति** । व्यक्त्यव्यक्ती इत्यर्थः ॥ **परिहारं वदन्निति** । पटस्योत्पत्तेः प्राक् सत्त्वे कस्मान्नोपलब्धिः । **उपलब्धिः** व्यक्तिः । **सा कुतो न** अव्यक्तिः कुत इति यावदिति प्रश्नस्यानुपलब्धेरिति परिहारो न सङ्गच्छते । अनुपलब्धिर्नामाव्यक्तिः । तथा चाव्यक्तेरव्यक्तिरित्युक्तं स्यात् । कथञ्चोत्पत्तेरूर्ध्वमनन्तरमुपलब्धिर्व्यक्तिरिति प्रश्नस्योपलब्धेरिति परिहारो न सङ्गच्छते । उपलब्धिर्नाम व्यक्तिः । तथा च व्यक्तेर्व्यक्तिरित्युक्तं स्यात् । तथा चैवं परिहारं वदन्देवानांप्रियो मूर्खः स्यादित्यर्थः । **देवानांप्रिय** इति च मूर्ख इति वचनादिति ध्येयम् ॥ **अन्यथेति** । केवलं तन्तुमात्रस्यापि पटस्यानुपलब्धौ । **सा** अनुपलब्धिः ।

**सु०— अथ पटधर्मावेव व्यक्त्यव्यक्ती । तदा तावपि तन्तूनां विद्येते न वा । न चेन्न कार्यकारणयोरत्यन्ताभेदः । विद्येते चेत्तत्राह** अनवस्थेति । **उत्पत्तिनाशव्यवहारहेतू व्यक्त्यव्यक्ती यदि तन्तुष्वपि विद्येते तदा सर्वत्रोत्पत्तिनाशयोरनवस्था स्यात् । तन्तवो नोत्पन्ना न नष्टाः । किन्तु पट एवेत्युत्पत्तिविनाशव्यवस्था न स्यादिति ।**

**शे०—** ननु व्यक्त्यव्यक्ती नोपलब्ध्यनुपलब्धिरूपावात्मधर्मौ किन्नाम पटधर्माविति नोपलब्ध्यनुपलब्धिस्वपक्षोक्तदोष इत्यभिप्रेत्य द्वितीयं शङ्कते **अथेति** । ननु चोत्पत्तिनाशव्यवहारहेतुव्यक्त्यव्यक्त्योः पट इव तन्तुष्वपि सत्त्वात्तन्तवो नोत्पन्ना न नष्टाः; किन्तु पट एवेत्युत्पत्तिनाशव्यवस्थाभावापादनं मूलकारीयमनुपपन्नम् । पटधर्मीभूतव्यक्त्यव्यक्त्योस्तन्तुषु सत्त्वे तदापादनसम्भवेऽपि तयोः पटमात्रवृत्तित्वेन तन्तुष्वभावं वदन्तं प्रति व्यक्त्यव्यक्त्यभावेनैवोक्तव्यवस्थोपपत्तेरित्यतोऽत्र सम्भावितविकल्पद्वयं प्रदर्श्य द्वितीयं बहिरेव प्रदूष्याद्यपक्षनिरासपरत्वादस्य ग्रन्थस्य न तदापादनानुपपत्तिरित्यभिप्रेत्य तत्पक्षनिरासकतया भाष्यं योजयितुं विकल्पमाह **तदेति** ॥ **न चेदिति** । तन्तुपटयोरत्यन्ताभेदे पटे तत्सत्त्वेन तन्तुष्वपि तदापत्त्या तन्तुषु तदभावेन पटेऽपि तदभावस्यैव प्राप्त्या पटे तत्सद्भावस्य तन्तुषु तदभावस्य चायोगादिति भावः । अन्यथेत्यस्यार्थः **उत्पत्तीति** । अनवस्थाप्रकारदर्शनं तन्तव इत्यादि ।

स० — **अथेति** । तथा च न तन्तूनामनुपलब्धिप्रसंग इति भावः ।

प० — **पटधर्मावेवेति** । न तूपलब्ध्यनुपलब्धी । येन (अपिच)यद्युपलब्धीत्यादिना प्रागुक्त-दोषः स्यादित्येवकारार्थः ॥

या० — **अथ पटधर्मावेवेति** । नतूपलब्ध्यनुपलब्धिरूपे येनोक्तदोषः स्यादित्यर्थः ॥

श्री० — **तौ** पटधर्मभूतावपि व्यक्त्यव्यक्ती इत्यर्थः ।

सु० — **किञ्चेयमभिव्यक्तिरुत्पत्त्यादिव्यवहारकारणतयोपादीयते । सा किं चक्र-चीवरादिभिः प्रागसत्येवोत्पद्यते मुद्गराभिघातादिना च नश्यति, उत प्रागपि सत्येवाविना-शिनी च । एवमव्यक्तिरपि किं प्रागसती मुद्गराभिघातादिनोत्पद्यते । किंवा प्रागपि सती । उभयत्राद्यौ दूषयति** अनवस्थेति । **व्यक्त्यव्यक्त्योरुत्पत्तिनाशवत्त्वे सर्वत्रोत्पत्तिनाशयोरनवस्था व्यवस्थाभावः स्यात् । न किञ्चिदसदुत्पद्यते न किञ्चित्सद्विनश्यतीति सिद्धान्तविरोधः(हानिः) स्यादित्यर्थः । द्वितीयौ दूषयति** अनवस्थेति । **व्यक्त्यव्यक्त्योः सदा सत्त्वे सर्वत्रोत्पत्तिनाशयोरन-वस्थाऽव्यवस्थितिः स्यात् । तथा हि । एतावन्तं कालमनुत्पन्नो घट इदानीमुत्पन्न इति तावन्न स्यात् । उत्पत्तिव्यवहारहेतोरभिव्यक्तेः प्रागपि सत्त्वात् । तथा मुद्गराभिघाताद्युत्तरकालमपि घटसत्त्वव्यवहारः स्यात् । तद्धेतोरभिव्यक्तेरविनष्टत्वात् । तथेदानीमेव नष्टो घट इत्यपि न स्यात् । विनाशव्यवहारकारणानभिव्यक्तेः प्रागपि सत्त्वादिति । कारकव्यापारवैफल्यताद-वस्थ्यं स्फुटमेव ।**

शे० — उक्तरीत्या भाष्ययोजनास्वनवस्थाशब्दस्य प्रसिद्धार्थपरित्यागेनास्वारस्यं भवतीत्यतस्त-त्स्वारस्येनापि वाक्यं योजयितुं तत्प्रसञ्जकीभूतार्थान्तरपरतया तावद्वाक्ययोजनां दिदर्शयिषुर्विकल्पमाह **किञ्चेति ॥ अविनाशिनी चेति** । मुद्गरप्रहारादिना न नश्यति चेत्यर्थः ॥ **उभयत्रेति** । उक्तपक्षद्वय इत्यर्थः ॥ **आद्याविति** । उत्पत्त्यादिव्यवहारकारणमभिव्यक्तिः प्रागसत्येव चक्रचीवरादिभिरुत्पद्यते मुद्गरप्रहारादिना च नश्यतीति, अव्यक्तिः प्रागसती मुद्गरप्रहारादिनोत्पद्यत इति चाद्यावित्यर्थः । अन्य-थेत्यस्यार्थमाह **व्यक्त्यव्यक्त्योरुत्पत्तिनाशवत्त्व इति** । अत्रासत्योरिति शेषः ॥ **सिद्धान्तविरोध इति** । असत्योरेव व्यक्त्यव्यक्त्योरुत्पत्तेरुत्पन्नत्वेन सत्यव्यक्तेश्च विनाशाभ्युपगमादिति भावः ॥ **द्वितीयाविति** । अभिव्यक्तिः प्रागपि सत्येव न नश्यति चेति, अव्यक्तिः प्रागपि सतीति चेति द्वितीयावित्यर्थः । तत्कथमित्यतोऽभिव्यक्तिः प्रागपि सत्येवेत्यंशं दूषयति **एतावन्तमिति** । अविना-

शिनी चेत्यंशमपि दूषयति **तथा मुद्गरेति** । अव्यक्तिः प्रागपि सतीति पक्षमपि दूषयति **तथेदानीमेवेति** । इतीत्यस्यैवाऽव्यवस्थितिः स्यादिति पूर्वेण सम्बन्धः ॥ **कारकव्यापारवैफल्यतादवस्थ्यमिति** । व्यक्त्यव्यक्त्योरुत्पत्तिविनाशशून्यत्वादिति भावः ।

**प०— उभयत्रेति** । व्यक्त्यव्यक्त्योरित्यर्थः ॥ **आद्याविति** । व्यक्तिरसत्येवोत्पद्यते नश्यति चेति पक्षं असत्येवाव्यक्तिरुत्पद्यत इति पक्षं चेत्यर्थः ॥ **द्वितीयाविति** । सत्वपक्षावित्यर्थः । उभयत्रेत्यनुषङ्गः ॥

**श्री०— उभयत्राद्याविति** । अभिव्यक्तिश्चक्रचीवरादिभिः प्रागसत्येवोत्पद्यते उत्पत्त्यनन्तरं सत्त्ववती सती मुद्गराभिघातेन नश्यतीति व्यक्तिपक्षे कृतमाद्यं विकल्पम् । तथाऽव्यक्तिरपि प्रागसत्येव मुद्गराभिघातादिनोत्पद्यत इत्येवमव्यक्तिपक्षे कृतमाद्यविकल्पं च दूषयतीत्यर्थः ॥ **स्यादिति** । असत एवोत्पत्त्यङ्गीकारात्सत एव नाशाङ्गीकारादित्यर्थः । **तद्धेतोः** सत्त्वव्यवहारहेतोः ॥ **कारकेति** । व्यक्त्यव्यक्त्योः सदसत्त्व इति शेषः । चक्रादिमुद्गरादिरूपकारकेत्यर्थः ॥

**सु०— अथैतद्दोषपरिहाराय व्यक्त्यव्यक्त्योरपि व्यक्त्यव्यक्ती स्वीक्रियेते, तदा तयोरप्युक्तविकल्पदोषानुषङ्गः स्यात् । अथ तत्रापि व्यक्त्यव्यक्त्यन्तराङ्गीकारस्तदाऽनवस्था स्यादित्याह** अनवस्थेति । **उत्पत्तिनाशयोरिति विषयसप्तमी । सन्त्वनन्ता व्यक्तयोऽव्यक्तयश्च । मूलक्षयाभावान्नानवस्था दोष इत्यत आह** अनवस्थेति । **अन्यथाऽनवच्छिन्नव्यक्त्यव्यक्तिपरम्पराङ्गीकारे सर्वत्र घटादावुत्पत्तिनाशयोरनवस्थाऽनवक्लृप्तिः स्यात् । उत्तरोत्तरव्यक्त्यव्यक्तिसिद्धौ हि पूर्वपूर्वव्यक्त्यव्यक्तीनामुत्पत्तिनाशव्यवहारनिदानत्वम् । ततः प्रयोजनपरिक्षयहेतुत्वादनवस्था दूषणमेव ।**

**शे०—** व्यक्त्यव्यक्त्योरुत्पत्त्याद्यभावेऽपि व्यक्त्यव्यक्तिमत्त्वात्तदर्थमेव कारणतयोपयोगान्न **कारकव्यापारवैफल्यमित्याशङ्कते अथेति** ॥ **उक्तविकल्पेति** । येयं व्यक्त्यव्यक्त्योरभिव्यक्तिरुत्पत्त्यादिव्यवहारकारणतयोपादीयते सा प्रागसत्येव कारकचक्रेणोत्पद्यते विनश्यति चोत प्रागपि सत्येव न नश्यति च, एवमव्यक्तिरपि प्रागसती कारकचक्रेणोत्पद्यते प्रागपि सतीति । नाद्यौ । व्यक्त्यव्यक्तिसम्बन्धिव्यक्त्यव्यक्त्योरसत्योरेवोत्पत्तिविनाशित्वे न किञ्चिदसदुत्पद्यते न किञ्चित्सद्विनश्यतीति सिद्धान्तविरोधात् । नान्त्यौ । कारकव्यापारवैफल्यादित्युक्तरीत्या विकल्पदोषयोरनुषक्तिः स्यादित्यर्थः । व्यक्त्यव्यक्तिसम्बन्धिव्यक्त्यव्यक्त्योरपि व्यक्त्यव्यक्तिस्वीकारेण तदर्थत्वान्न कारकचक्रवैयर्थ्यमित्याशङ्कते **अथेति** ॥

**विषयसप्तमीति** । अनेनोत्पत्तिविनाशविषय इत्यर्थः सूचितो भवति ॥ **मूलक्षयाभावादिति** ।
'मूलक्षयकरीं प्राहुरनवस्थां हि दूषणम्' इति तत्कारिण्या एव दूषणत्वोक्तेरिति भावः । मूलक्षय इति
कोऽर्थः । किं कल्पकाभावः किंवा प्रयोजनपरिक्षयः । नाद्यः । घटसम्बन्ध्युत्पत्तिनाशयोर्व्यक्त्यव्यक्ति-
रूपत्वस्य प्रामाणिकत्वे हि तदुपपत्त्यर्थं व्यक्त्यव्यक्तिसम्बन्ध्युत्पत्तिनाशयोरपि व्यक्त्यव्यक्तिरूपत्वं परम्परा-
कल्पनं स्यात् । न चैतदस्ति । घटसम्बन्ध्युत्पत्तिनाशयोर्व्यक्त्यव्यक्तिरूपत्वस्याप्रामाणिकत्वेन कल्पकाभावस्य
स्पष्टत्वादिति मनसि निधाय द्वितीयं दूषयति **उत्तरेति** । अत्र व्यक्त्यव्यक्तिसम्बन्धिव्यक्त्यव्यक्त्योः कल्प्य-
मानत्वात्ततश्चोत्तरोत्तरकल्प्यमानव्यक्त्यव्यक्तिपरम्पराया अप्रामाणिकत्वेनासिद्धौ व्यवहारहेतुतया कल्प्यमान-
योर्घटसम्बन्धिव्यक्त्यव्यक्त्योरप्यसिद्धिरिति घटव्यक्त्यव्यक्तिसिद्धिरूपप्रयोजनपरिक्षयोऽप्यस्त्येवेत्यर्थः ।

स० — **अथेति** । **एतद्दोषपरिहाराय** कारकव्यापारवैफल्यपरिहाराय । व्यक्तेरपि व्यक्त्यर्थं
कारकापेक्षा, नाशव्यवहारार्थं च अव्यक्तिः । एवम् अव्यक्तिव्यक्त्यर्थं कारकापेक्षेति भावः । **तयोरपीति** ।
कारकादिवैकल्यपरिहारार्थं व्यक्त्यव्यक्त्योरेवाङ्गीकृतव्यक्त्यव्यक्ती प्रागसती उत सती । आद्ये अपसि-
द्धान्तः । द्वितीये पुनः कारकवैकल्यमेव । **उत्तरोत्तरेति** । अयं भावः । घटो नष्टः उत्पद्यते इति व्यवहा-
रकारणत्वं घटाव्यक्तिव्यक्त्योः व्यक्त्यव्यक्तिनिष्ठाव्यक्तिव्यक्त्योः कदा सिद्ध्यति । व्यक्तिर्नष्टा उत्पद्यते चेति
व्यवहारार्थं व्यक्त्यव्यक्त्योरपि व्यक्त्यन्तरस्य सिद्धौ । अन्यथा व्यक्तिर्नष्टा उत्पद्यते चेति व्यवहारनिदानस्य
व्यक्त्यव्यक्तिनिष्ठव्यक्त्यन्तरस्याभावेन घटो नष्टः उत्पद्यते चेति व्यवहारनिदानत्वमपि घटनिष्ठव्यक्त्य-
व्यक्त्योरपि न सिद्ध्यति व्यभिचारात् । व्यक्त्यव्यक्त्यन्तरसिद्धिश्च कदा । घटो नष्ट इत्यादिव्यवहारनिदा-
नत्वे घटनिष्ठाव्यक्तिव्यक्त्योः प्रमाणेन सिद्धे । न चात्र प्रमाणमिति मूलक्षय इति । **प्रयोजनपरिक्षयहेतु-
त्वादिति** । अत्र प्रयोजनशब्देन मूलं ग्राह्यम् । तथा च मूलक्षयहेतुत्वादित्यर्थः । मूलस्यैवाप्रामाणिक-
त्वात् तन्निर्वाहार्थं किमित्यप्रामाणिकानि कल्प्यन्ते । तस्मात् मूलमेव परित्याज्यमिति मूलक्षयहेतुत्वात्
अनवस्था दूषणमेवेति भावः ॥ केचित् अत्र घटव्यक्त्यव्यक्ती उत्तरे । व्यक्तिव्यक्त्यव्यक्ती पूर्वे ।
तथा च घटव्यक्त्यव्यक्त्योरेव उत्पत्तिनाशत्वसिद्धौ कार्यस्य सिद्धत्वेन कल्प्यमानव्यक्तिव्यक्त्यव्यक्त्यादे-
रपि सिद्धत्वेन मूलक्षयाभावो वाच्यः । न चैवम् । घटव्यक्त्यव्यक्त्योरेव उत्पत्तिनाशत्वासिद्ध्या
कार्यस्यैवासिद्धत्वादिति भावः ।

प० — **स्वीक्रियेते इति** । उत्पत्तिविनाशव्यवहारहेतुतयेति योज्यम् ॥ **उक्तविकल्पदोषेति** ।
या व्यक्त्यव्यक्त्योरुत्पत्तिव्यवहारहेतुतया कारकव्यापारवैफल्यनिरासाय च व्यक्तिरङ्गीकृता सापि किं प्राग-
सत्येवोत्पद्यते मुद्गरप्रहारादिना नश्यति च उत प्रागपि सत्येव अविनाशिनी च । एवं व्यक्तेः विनाश-

व्यवहारहेतुतया अङ्गीकृता व्यक्तिरपि प्रागसती मुद्गराभिघातादिनोत्पद्यते किं वा प्रागपि सतीति विकल्पस्य व्यक्त्यव्यक्त्योरुत्पत्तिविनाशवत्त्व इत्यादिनोक्तदोषस्य चानुषक्तिः स्यादित्यर्थः॥ **अथ तत्रापीति।** व्यक्त्यव्यक्तिनिष्ठव्यक्त्यव्यक्त्योरपीत्यर्थः ॥ **अनवक्लृप्तिरिति** । असिद्धिरित्यर्थः ॥

**या॰— पूर्वपूर्वव्यक्त्यव्यक्तीनामिति ।** अत्र घटव्यक्त्यव्यक्ती पूर्वे, व्यक्त्यव्यक्त्योर्व्यक्त्यव्यक्ती उत्तरे, तन्निर्वाहायोत्तरोत्तरं कल्प्यमानत्वात् । तथा चोत्तरोत्तरं कल्प्यमानपरम्पराया अप्रामाणिकत्वे व्यवहारहेतुतया कल्प्यमानयोः पूर्वव्यक्त्यव्यक्त्योरसिद्धिरिति मूलक्षय इति भावः ।

**श्री॰— एतद्दोषेति ।** इदानीमुत्पन्न इति न स्यात् । प्रहाराद्युत्तरं घटसत्त्वस्य व्यवहारः स्यात् । इदानीं नष्ट इति न स्यात् ॥ वैफल्यं चेत्युक्तदोषेत्यर्थः ॥ **व्यक्त्यव्यक्त्योरिति** । तथा च घटोत्पत्तिव्यवहारहेतुभूतव्यक्तेरपि व्यक्त्यङ्गीकारेणेदानीमुत्पन्न इति संभवति । व्यक्तिव्यक्त्यर्थमेव चक्रादिकारकसाफल्यम् । तथोत्पत्तिव्यवहारहेतुभूतव्यक्तेरप्यव्यक्तिस्वीकारेण प्रहाराद्युत्तरमपि घटसत्त्वव्यवहारो न भवति । व्यक्तेरव्यक्त्यर्थमेव मुद्गरादिकारकसाफल्यम् । तथाऽव्यक्तेरपि व्यक्तिस्वीकारेणेदानीं नष्ट इति संभवति । पूर्वं विद्यमानाया अप्यव्यक्तेस्तदा व्यक्तत्वात् । यदा त्वव्यक्तेरप्यव्यक्तिस्तदा नष्ट इति न व्यवहार इत्यर्थः । न तु व्यक्तेर्व्यक्तिरव्यक्तेरव्यक्तिरित्यर्थः । तथा सत्यव्यक्तेः केवलाव्यक्तिस्व कारवैयर्थ्यात् । अतो व्यक्तेरपि व्यक्त्यव्यक्ती अव्यक्तेरपि व्यक्त्यव्यक्ती इत्युक्तरीत्या व्याख्येयम् ॥ **तयोरिति** । घटोत्पत्त्यादिव्यवहारहेतुभूतव्यक्त्यव्यक्तिनिष्ठव्यक्त्यव्यक्त्योरपीत्यर्थः ॥ **तत्रापीति ।** व्यक्त्यव्यक्तिनिष्ठव्यक्त्यव्यक्त्योरपीत्यर्थः ॥ **अङ्गीकार इति** । तत्रैव कालपर्यवसानादित्यर्थः ॥ **सिद्धौ हीति** । तत्सिद्धावेव च कालपर्यवसानादिति भावः ॥ **प्रयोजनेति** । घटादावुत्पत्तिविनाशरूपेत्यर्थः ।

**सु॰ — नन्विदं भवतामपि समानम् । प्रागसतः सत्तासमवायो हि जनिरिष्यते । सत्तासमवायौ च सदा सन्ताविति प्राग्विनाशोत्तरमपि जनिः स्यात् । विनाशश्च न स्यादित्यत आह** अनवस्थेति **। इयं सर्वत्रोत्पत्तिविनाशयोरनवस्थाऽव्यवस्थितिः अन्यथा समवायस्य जनित्वाङ्गीकृतावेव हि स्यात् । नास्मन्मते । प्रकारान्तरेण जनेर्वक्ष्यमाणत्वादिति ।**

**ननु जनिः किं प्राक् सती उत कारकव्यापारजन्या । आद्ये प्रागुक्त एव दोषः । द्वितीये जनेर्जनिरपि तथेत्यनवस्था । एवं विनाशोपीत्यत** आह अनवस्थेति **। सर्वत्रोत्पत्तिनाशयोरियमुक्तानवस्था । अन्यथा घटजनेरन्या जनेर्जनिरित्यङ्गीकार एव स्यात् । न त्वेवमङ्गीक्रियते । अपि तर्हि घटजन्मैव जन्मनो जन्मेति । यथाऽऽहुः 'यथा जनेर्जनिर्नान्या तथा वस्तुजनिर्जनिः' इति । घटो जायते घटजन्म जायत इत्यनयोरेकार्थतैव हि लौकिकपरीक्षक-**

**सम्मता । न च व्यक्त्यव्यक्त्योरप्येवमङ्गीकर्तुमुचितम् । जन्मविनाशावुपलब्ध्यनुपलब्धी वा विहाय व्यक्त्यव्यक्त्योरेवाप्रामाणिकत्वादिति ।**

**शे०** — एवं परपक्षेऽव्यवस्थोपपादकतया वाक्ययोजनामभिधाय स्वपक्षे प्रसक्ताव्यवस्थाशङ्का-परिहारकतयाऽपि तद्योजयितुमव्यवस्थाशङ्कामुत्थापयति **नन्विति** ॥ **प्रागिति** । उत्पत्तेरिति शेषः । स्वपक्षे व्यवस्थाभावोपपादकतासिद्ध्यर्थं तदनुगुणतया व्याचष्टे **इयमिति** ॥ **प्रकारान्तरेणेति** । मृदादीनां घटाद्याकारेण परिणाम एव जनिर्न त्वसतः सत्तासम्बन्ध इत्यस्मत्पक्षे 'विशेषस्य सर्वत्राङ्गीकृतत्वतः । नास्ति दोषः' इत्यादिना वैशेषिकपरीक्षायां प्रकारान्तरेण जनेर्वक्ष्यमाणत्वादित्यर्थः ॥ **प्रागुक्त एवेति** । कारकव्यापारवैयर्थ्यरूप एवेत्यर्थः ॥ **एवमिति** । नाशः किं प्राक् सन्नुत कारकव्यापारजन्यः । आद्ये कारकव्यापारवैयर्थ्यम् । द्वितीये नाशजनिरपि किं प्राक् सत्युत कारकव्यापारजन्या । आद्ये प्रागुक्त एव दोषः । द्वितीये नाशजनेर्जनिरपि तथेत्यनवस्थेत्यर्थः । यथा घटजनिरेव जनेर्जनिरिति नानवस्थेति त्वयोच्यते । तथा च घटव्यक्त्यव्यक्ती एव व्यक्त्यव्यक्त्योर्व्यक्त्यव्यक्ती न तु व्यक्त्यव्यक्त्यपेक्षया व्यक्त्यव्यक्तिसम्बन्धिन्यौ व्यक्त्यव्यक्ती अन्ये इति मयाऽपि वक्तुं शक्यत्वान्न मत्पक्षेऽप्यनवस्थेति भावेनाशङ्क्य निषेधति **न चेति** ॥ **जन्मेति** । तत्र च दोषस्योक्तत्वादिति भावः ।

**स०** — **प्रकारान्तरेण जनेर्वक्ष्यमाणत्वादिति** ॥ **प्रागुक्त एवेति** । कारकवैयर्थ्यलक्षण इत्यर्थः ॥ **एवं विनाशेऽपीति** । नाशः किं प्राक् सन्, उत कारकव्यापारजन्यः । नाद्यः । कारक-वैयर्थ्यापत्तेः । द्वितीये नाशजनेर्जनिरपि तथेत्यनवस्थेति भावः ॥ **न च व्यक्त्यव्यक्त्योरिति** । घटव्यक्त्यतिरिक्तयोर्व्यक्त्यव्यक्त्योरनङ्गीकारादिति भावः ।

**प०** — **नास्मन्मत इति** । 'एवमेवासतः सत्तासमवायो जनिर्मता । तत्रापि ह्युक्तदोषाणां नैव किञ्चिन्निवारकम्' इति दूषणादिति भावः ॥ **वक्ष्यमाणत्वादिति** । 'महदाद्याश्च जायन्ते पराधीनविशेषतः' । इत्यादिना वियत्पादीयाद्याधिकरणे पराधीनविशेषावाप्तिरूपजनेर्वक्ष्यमाणत्वादित्यर्थः ॥ **प्रागुक्त एव दोष इति** । 'एतावन्तं कालं प्रागनुत्पन्नो घट इदानीमुत्पन्न इति तावन्न स्यादि'त्यादिनोक्त-दोष इत्यर्थः ॥ **एवं विनाशेपीति** । यदि विनाशः प्रागपि सन् तदा 'घट इदानीमेव नष्ट इति न स्यादि'त्यादिनोक्तदोषः । यद्यसन् तर्हि तज्जनिपरंपरयोक्तदोष इति ध्येयमित्यर्थः ॥ **यथाहुरिति** । आद्याध्याये बृहदारण्यके भाष्ये ।

**या०** — **प्रकारान्तरेणेति** । मृदादीनां घटाद्याकारेण परिणाम एव जनिरिति वैशेषिकपरी-क्षायां वक्ष्यमाणत्वादित्यर्थः ॥ **प्रागुक्त एव दोष इति** । कारकव्यापारवैयर्थ्यरूपो दोष इत्यर्थः ॥

**एवं नाशोऽपीति** । विनाशोऽपि किं कारकव्यापारात्प्राक् सन्नेवोताविद्यमान एव तेन जायते । आद्ये कारकव्यापारवैयर्थ्यम् । द्वितीये नाशजनेर्जनिरपि तथेत्यनवस्थेति नाशोऽपि विकल्प्य दूषणीय इत्यर्थः । नाशेऽपीति पाठे नाशविषये जनिर्विकल्प्य दूषणीयेत्यर्थः ॥

श्री० — **प्राक्** उत्पत्तेः । **अङ्गीकृताविति** । वार्तिकमत इति भावः ॥ **विनाशश्चेति** । सत्तासमवाययोः सदा सत्त्वेन तदवगमासम्भवात् । तस्यैव च विनाशत्वादिति भावः ॥ **जन्येति** । जनिमतीत्यर्थः ॥ **प्रागुक्तेति** । इदानीं घटो जनिमानिति न स्यात् । कारकव्यापारवैफल्यं चेत्यर्थः ॥ **तथेति** । जनिमतीत्यर्थः । ननु तर्ह्यनेनैव न्यायेन घटजन्मादेरेव व्यक्त्यव्यक्तिजन्मादित्वाद्व्यक्त्यव्यक्त्योरपि व्यक्त्यव्यक्त्यन्तरानङ्गीकारान्नानवस्थेत्यत आह **न चेति** ॥ **जन्मविनाशाविति** । तथा च घटजन्मन एव व्यक्तित्वाद्घटजन्मैव व्यक्तेरपि जन्मेति न सम्भवति । घटजन्मातिरिक्तव्यक्तेरेवाप्रामाणिकत्वात् । जनी प्रादुर्भाव इति धातोर्जनेरेव व्यक्तित्वात् । तथोपलब्ध्यनुपलब्धी च विहाय व्यक्त्यव्यक्ती न स्तः । तथा चोपलब्ध्यादेरेव व्यक्त्यादित्वे घटजन्मैवोपलब्धेर्जन्मेति न सम्भवति । न हि घटो जायते घटोपलब्धिर्जायते इत्यनयोरेकार्थत्वं भातीत्यर्थः ।

**मु० — ननु यद्यसदुत्पद्येत सच्च विनश्येत तदा सर्वत्रोत्पत्तिनाशयोरनवस्थैव स्यात् । एवं सति हि (खर)शशविषाणमप्युत्पद्येत । आत्मा च नश्येदित्यत आह** अनवस्थेति । **अन्यथा कारणशक्त्यनादरणे हीयमुत्पत्तिविनाशयोरनवस्था स्यात् । न चैवं किन्तु यस्योत्पत्तिकारणमस्ति तदसदप्युत्पद्यते । यस्य च विनाशकारणं विद्यते तत्सदपि निरुध्यते । न च खरविषाणजन्मन्यात्मविनाशे वा कारणमस्तीति तयोर्जननविनाशाभावः । कारणस्वभावाननुगमे तु सत्कार्यवादिनोऽप्यतिप्रसङ्ग एवेति ।**

**अथवा स्यादियमनवस्था यद्यत्यन्तासदेवोत्पद्यते सन्मात्रं विनश्यतीति ब्रूमः । सदसदेवोत्पद्यत इति चोक्तं विनाशकारणवदेव च विनश्यतीति ।**

शे० — अव्यवस्थामेवोपदर्शयति **एवमिति** । सत्कार्यवादे कारणस्वभावानभ्युपगमे आत्मादीनामप्युत्पत्त्यापत्त्या तत्स्वभावाभ्युपगम आवश्यक इत्याह **कारणेति** ।

ननु कारणसामग्रीसद्भावेऽपि बाधादेवासत्त्वमिति स्वप्नाधिकरणे वक्ष्यमाणत्वात्कथमत्र कारणाभावेन तदसत्त्ववर्णनम् । तथा सति तद्ग्रन्थविरोधापातादित्यत आह **अथवेति** ॥ **सन्मात्रमिति** । विनाशकारणशून्यमपि स्यादित्यर्थः । विनाशकारणवदेवेत्यतःपरं सदिति शेषः ।

स० — सत्कार्यवादपक्षे कारणस्वभावानभ्युपगमे आत्मादीनामप्युत्पत्त्यापत्त्या तत्स्वभावाभ्युपगम आवश्यक इत्याह **कारणस्वभावेति** । ननु स्वप्नाधिकरणे सामग्रीसद्भावमङ्गीकृत्य बाधेनासत्त्वमुच्यत इत्युक्तत्वात् कारणाभावेन तदसत्त्ववर्णने तद्ग्रन्थविरोध इत्यत्राह **अथवेति** ।

प० — **अतिप्रसङ्ग एवेति** । आत्मवद्घटादेरपि सत्त्वाज्जनिर्न स्यादिति वा घटादेरिव आत्मनोपि जनिः स्यादिति वा अतिप्रसङ्ग इत्यर्थः ॥ **अत्यन्तासदेवेति** । केनाप्याकारेण सत्त्वरहितमित्यर्थः ॥ **सन्मात्रमिति** । केनचिद्रूपेणासत्त्वशून्यमित्यर्थः ।

या० — **अतिप्रसङ्ग एवेति** । आत्मनोऽपि पूर्वं सत्त्वाविशेषाद्घटादिवदुत्पन्नत्वव्यवहारास्पदत्वं स्यादित्यतिप्रसङ्ग इत्यर्थः । **सन्मात्रमिति** । विनाशकारणशून्यं सदित्यर्थः । विनाशकारणवदेवेत्यत्र सदिति शेषः ।

श्री० — **एवं हि सति** असत उत्पत्तौ सतश्च नाशे । अननुगमे अननुसरणे ॥ **अतिप्रसङ्ग एवेति** । पूर्वं सत एवोत्पत्तावात्मनोऽप्युत्पत्तिः स्यादित्यर्थः ॥ **सन्मात्रमिति** । विनाशकारणशून्यमपीत्यर्थः ॥ **सदसदेवोत्पद्यत इति** । खरविषाणादेश्च कारणात्मना सत्त्वाभावान्नोत्पत्तिरिति भावः ॥ **विनाशेति** । आत्मनश्च तदभावान्न विनाश इति भावः ॥

सु० — **यच्चोक्तं** भावे चोपलब्धेरिति **सूत्रार्थत्वेन, तद्व्याप्यव्यापकभावेनैवोपपन्नं नात्यन्ताभेदसाधकम् । अथ कारणोपरक्तबुद्धिः सामानाधिकरण्यबुद्धिर्वाऽत्राभिमतेति मतम् । साऽपि अभेदमात्रेण चरितार्था नात्यन्ताभेदसाधनायालम् । किञ्चैतद्युक्तेश्चेत्यनेनैव शक्यसंग्रहं न पुनरभिधातव्यम् । अथानेन प्रत्यक्षमुपन्यस्यते तदपि नात्यन्ताभेदसाधकम् । अत एव** भावाच्चोपलब्धेरिति **सूत्रविपरिणामोऽपि निरस्तः ।** सत्त्वाच्चावरस्येति **युक्तिश्चेद्युक्तेश्चेत्येतेनैव गतार्थता । श्रुतिश्चेच्छब्दान्तराच्चेत्यनेन । असद्व्यपदेशादिति तु परिचोदनैवासङ्गता । परमार्थतो ब्रह्मकारणतापरत्वेनापाततस्तु शून्यस्याभावस्य वा कारणभावप्रतिपादकताप्रतिभासेन कार्यासत्त्वस्य श्रुतावप्रतीतेः । युक्तेरित्युक्तयुक्तिं तूत्तरत्रापाकरिष्यामः । शब्दान्तरं त्वाचार्येणैवान्यत्रान्यथैव व्याख्यातम् । पटे प्राणादौ च नात्यन्तानुपसञ्जातविशेषत्वमित्यनुदाहरणमेवेत्यलं प्रपञ्चेन ॥**

शे० — एवं भाष्योक्तरीत्या प्रमेयनिरासेनापव्याख्यानं निराकृतम् । इदानीं स्पष्टत्वाच्छिष्यैरेव क्रियतामिति भावेन भाष्यकारोऽपेक्षितसूत्राक्षरार्जवानार्जवादिव्युत्पादनेनापि तदपाकरोति **यच्चोक्तमित्यादिना ॥ व्याप्यव्यापकभावेनैवेति** । अन्यत्वेऽप्युपादानोपादेययोरुपादेयस्योपादानव्याप्यतयोपादानभाव एवोपलम्भो युक्तः । अग्निधूमयोरन्यत्वेऽपि व्याप्यव्यापकभावमात्रेणाग्निभाव एव धूमोपलम्भदर्शनात् ।

अन्यथा तद्भाव एवोपलब्ध्या धूमस्याग्न्यभेदप्रसङ्ग इति भावः। नन्वत्र कारणस्य भाव एव कार्यस्योपलभ्यमानत्वं यथाश्रुतमेव कार्यकारणयोरत्यन्ताभेदसाधकतया न विवक्षितं किन्तु कारणस्वभावानुरक्ततया कार्यस्योपलभ्यमानत्वं कारणसमानाधिकरणतयोपलभ्यमानत्वं वा तथा विवक्षितम्। अस्ति च कारणस्वभावानुरक्ततया तत्समानाधिकरणतया च कार्यस्य प्रतीतिर्मृद्घट इत्येवमाकारेति नासिद्धिः। नाप्यसावग्निधूमयोरस्ति। अग्निर्धूम इत्यप्रतिभासादिति न व्याप्यव्यापकभावमात्रेणोक्तहेत्वोरन्यथासिद्धिरिति युक्तं ताभ्यां कार्यस्य कारणानन्यत्वसाधनमित्याशङ्कते **अथेति**। कार्यकारणयोरत्यन्ताभेदाभावेऽप्यभेदस्य सत्त्वात्तन्मात्रेणैव कारणस्वभावानुरक्ततया तत्समानाधिकरणतया वा मृद्घट इति प्रतिभासोपपत्त्याऽत्यन्ताभेदरूपसाध्यं विनाऽप्युक्तद्विविधप्रतिभासोपपत्तेरन्यथासिद्धिरत्राप्यविकलैवेति नानन्यत्वसाधनसम्भव इत्याशयेन परिहरति **साऽपीति**॥ **शक्यसंग्रहमिति**। असदकारणादिवत्तद्भाव एवोपलभ्यमानत्वतत्स्वभावानुरक्ततयोपलभ्यमानत्वतत्समानाधिकरणतयोपलभ्यमानत्वानामपि युक्तित्वादिति भावः॥ **अथेति**। ततश्च कार्यकारणयोरनन्यत्वे प्रत्यक्षरूपप्रमाणोपदर्शकत्वादस्या न युक्तिरूपप्रमाणोपदर्शकेन युक्तेरित्यनेन शक्यसंग्रहत्वमिति न पुनरुक्तिरिति भावः। दूषयति **तदपीति**। कार्यकारणयोरभेदमात्रेणोक्तविधप्रत्यक्षस्य चरितार्थत्वादिति भावः। भावे चोपलब्धेरित्यस्य भावाच्चोपलब्धेरिति विपरिणाममाश्रित्य आतानवितानवन्तस्तन्तव एव पट इति प्रत्यक्षोपलब्धेर्भावाच्च कार्यस्य कारणानन्यत्वमिति कार्यकारणयोरनन्यत्वे प्रत्यक्षरूपप्रमाणान्तरसद्भावप्रदर्शनार्थत्वेन युक्तिसमर्पकत्वाभावान्न युक्तेरित्यनेन शक्यसंग्रहत्वमिति यदुक्तं सङ्करेण तदप्यतिदेशेन दूषयति **अत एवेति**। उक्तप्रत्यक्षस्यापि कार्यकारणयोरभेदमात्रावगाहित्वेनात्यन्ताभेदानवगाहिततया तेन तदसिद्धेरेवेत्यर्थः। उपलक्षणं चैतत्। उपलब्धेरित्यस्य पञ्चम्यन्तत्वेऽपि विवक्षितसिद्धेर्भावादित्यस्य वैयर्थ्याच्चेत्यपि द्रष्टव्यम्।

शब्दान्तराच्चेत्यनेनेत्यतःपरं गतार्थतेत्यनुवर्तते॥ **ब्रह्मकारणतापरत्वेनेति**। तदसदेव सन्मनोऽकुरुतेति वाक्यशेषादिति भावः। **कार्यासत्त्वस्येति**। उदाहृतश्रुतौ तत्प्रत्यायकाभावादिति भावः। न च कार्यकारणयोरनन्यत्वाङ्गीकारेण कार्यासत्त्वशङ्केति वाच्यम्। कार्यसत्त्वस्याप्यनन्यत्वसिद्ध्यर्थत्वेनानन्यत्वाङ्गीकारेणासत्त्वशङ्कायोगादित्याशयात्॥ **युक्तिमिति**। सांख्योक्तामसदकरणादियुक्तिं बौद्धोक्तां वृत्तिविकल्पानुपपत्त्यादियुक्तिमित्यर्थः॥ **उत्तरत्रेति**। समयपादे सांख्यपरीक्षायां बौद्धपरीक्षायां चेत्यर्थः। **शब्दान्तरं त्विति**। सदेव सोम्येदमग्र आसीदिति शब्दान्तरमित्यर्थः। **अन्यत्र** छान्दोग्यभाष्ये। **अन्यथा** ब्रह्मपरत्वेन **अनुदाहरणमेवेति**। तत्रावस्थान्तरवत्त्वरूपविशिष्टोपस्थ्यङ्गीकारेणात्यन्ताभेदस्यास्माकमसंमतत्वादिति भावः। ननु भावे चोपलब्धेरित्यत्र सूत्रे यद्यपि कारणस्य भाव एव प्रतीयते कार्यस्य नोपलब्धिस्तथाऽपि भावोपलब्धिशब्दावत्र न भावोपलब्धिमात्रपरौ किन्तु भावशब्दः कारणस्य

सत्त्वोपलम्भरूपोभयपरः । उपलब्धिशब्दोऽपि कार्यस्य सत्त्वासत्त्वोपलम्भरूपोभयपरः । ततश्च कार्यं, कारणानतिरिक्तं, कारणसत्त्व एव सत्त्वे सति तदुपलब्धावेवोपलभ्यमानत्वात् कारणस्वरूपवत् इत्यनुमानमेवात्र कार्यकारणयोरनन्यत्वसाधकतया विवक्षितम् । न तु कार्यं कारणानतिरिक्तम् तद्भाव एवोपलभ्यमानत्वादिति । ततश्च न व्याप्यव्यापकभावमात्रेणान्यथोपपत्तिरूपं वर्णयितुं शक्यते । अत्र च तदुपलब्धावेवोपलभ्यमानत्वादित्येव हेतूकारे प्रभोपलब्धावेवोपलभ्यमानेन रूपेण व्यभिचारः स्यात् । तस्य प्रभाया अनतिरेकाभावात् । तन्निवृत्त्यर्थं भावे भावादिति विशेषणम् । ततश्च रूपस्य प्रभाया भाव एव भावाभावान्न व्यभिचारः । यदि चात्र कारणस्य सत्त्व एव सत्त्वादित्येव हेतुः क्रियेत । तर्हि वह्निसत्त्व एव सता विशिष्टधूमेन व्यभिचारः । तन्निवृत्त्यर्थं तदुपलब्धावेवोपलभ्यमानत्वादित्युक्तम् । ततश्च विशिष्टधूमस्य वह्निसत्त्व एव सत्त्वेऽपि तदुपलब्धावेवोपलब्धिरिति नियमाभावान्न व्यभिचार इति भामत्युक्तानुमानदूषणसंग्रहायाह **इत्यलमिति** । अयमाशयः । एवं योजनायामपि भावोपलब्धिशब्दयोः आवृत्तिः । विभक्तिविपरिणामः । कार्यस्य कारणस्येति पदद्वयाध्याहारः । कारणसत्त्व एव सत्त्वरूपस्य हेतुविशेषणस्य त्वदभिमतानृतत्वरूपानन्यत्वविरोधश्च । शब्दैकसमधिगम्यनिर्विशेषचिन्मात्ररूपस्य शुद्धस्य सर्वज्ञत्वादिविशिष्टस्य सगुणस्य च ब्रह्मणोऽनुपलब्धावेव प्रपञ्चोपलम्भेनोक्तहेत्वसिद्ध्या तेन प्रस्तुतब्रह्मप्रपञ्चानन्यत्वस्यासिद्धिश्चेति । न केवलं भामत्युक्त्याऽनुमाननिरासकन्यायसंग्रहायेदं किन्नाम सत्त्वाच्चावरस्येत्यत्र सत्त्वस्य त्वदभिप्रेतानृतत्वविरोधः । उत्पत्तेः प्रागेत्यस्याध्याहारश्च । तत्तेजोऽसृजतेति वाक्यशेषेण सदेवेत्यस्य कारणपरत्वेन कार्यकारणाभेदस्य चाद्याप्यसिद्धेस्तेन कार्यसत्त्वासिद्धेश्च । युक्तेः शब्दान्तराच्चेत्यत्र शब्दान्तराच्चेत्यस्य सत्त्वाच्चावरस्येत्यनेन गतार्थत्वं पटवच्चेत्यादिसूत्रद्वये संवेष्टितप्रसारितपटप्राणादिदृष्टान्तौ न विवर्तवादिनोऽनुगुणौ । जगतो ब्रह्मणीव प्रसारणादेः पटादावध्यस्तत्वात् । मन्मत इव प्रमेयविशेषाभावेन दृष्टान्तद्वयस्य वैयर्थ्यं चेत्यादिसंभावितदोषान्तरसूचनायापीत्यलमित्युक्तमित्यवधेयम् ।

**स०— अत एव** अत्यन्ताभेदासाधकत्वादेवेत्यर्थः । **उत्तरत्रेति** । असदकरणादित्यादियुक्तिं सांख्यपरीक्षायां वृत्तिविकल्पानुपपत्तिरूपयुक्तिं तु बौद्धाधिकरणे अपाकरिष्याम इत्यर्थः । **शब्दान्तरं त्विति** । 'सदेव सौम्येदमग्र आसीत्' इति सत्त्वप्रतिपादकं शब्दान्तरं तु छान्दोग्यभाष्ये अन्यथा व्याख्यातमित्यर्थः ॥ २-१-६ ॥

**प०—** सूत्राक्षराणां आर्जवानार्जवचिन्ता शिष्यैरेव क्रियतामित्युक्तम् । तत्राद्यसूत्राक्षरार्जवचिन्ता पूर्वमेव कृता । द्वितीयादिसूत्राक्षरार्जवं दर्शयति **यच्चोक्तमिति** । मृदादेः कारणस्य भाव एव घटादेः कार्यस्योपलब्धेश्चानन्यत्वं कारणात्कार्यस्येति यदुक्तं तन्न । आलोके सत्येव रूपोपलब्धिरन्यथा तु नेत्यादौ यथा तथाऽविनाभावेनैवोपपन्नमित्यर्थः । यदत्रोक्तं भामत्यां तच्चन्द्रिकायां निरस्तं ध्येयम् । ननु मृद्धट इति

कारणानुविद्धत्वेन सामानाधिकरण्येन वा प्रतीयमानत्वादनन्यत्वं कार्यकारणयोरित्येवं सूत्रतात्पर्यमित्याशङ्क्य निराह **अथेति** ॥ **इत्यनेनैव शक्यसंग्रहमिति** । असदकरणादित्यादिसांख्यसौगतोक्तयुक्तेरनन्यत्वं कार्यकारणयोरितिवत् मृद्घट इति कारणानुविद्धत्वादिना प्रतीयमानत्वरूपयुक्तेरनन्यत्वं तयोरपि सुवचमिति 'भावे' इति सूत्रं नारभ्यम् । अन्यथा पुनरभिधाने पुनरुक्तिदोषः स्यादिति भावः । ननु भावाच्चोपलब्धेरिति पाठान्तरमाश्रित्याऽऽतानवितानवन्तस्तन्तव एव पट इति प्रत्यक्षोपलब्धेर्भावाच्चानन्यत्वं कार्यकारणयोरित्युक्तत्वान्न युक्तिरित्यनेन गतार्थत्वमित्याशङ्क्य निराह **अथानेनेति** । भेदाभेदेनाप्युपपन्नमिति भावः ॥ **अत एवेति** । अत्यन्ताभेदासाधकत्वादेवेत्यर्थः ॥ **सत्वाच्चेति** । अव स्थावरकालीनस्य कार्यस्य प्रागुत्पत्तेः सदेव सोम्येत्यादिसत्त्वावधारणाच्च नन्यत्वं कार्यकारणयोरित्यत्र सत्त्वावधारणरूपयुक्तिरभिमता उत सत्त्वश्रवणादिति श्रुतिः; इति द्वयमपि क्रमेण निराह **युक्तिश्चेदिति** । इत्यनेनेति गतार्थेत्यनुषङ्गः । शब्दान्तरादित्यस्य सदेव सोम्येति शब्दान्तरादितिव्याख्यानादिति भावः ॥ **ब्रह्मकारणतेति** । 'असदेव' 'सन्मनोऽकुरुते'त्यादिवाक्यशेषादिति भावः । वाक्यशेषस्यासच्छब्दस्य सन्मनोऽकुरुतेत्यादेरयोगेन तुच्छार्थत्वासंभवेपि शून्याभावान्यतरार्थत्वसंभवादाह **शून्यस्येति** । **कारणभावः** कारणत्वम् । पञ्चमसूत्रार्थं च निराह **युक्तेरित्युक्तेति** ॥ **उत्तरत्रेति** । सांख्यनये असदकरणादिति युक्तिं सौगतोक्तयुक्तिं वैभाषिकनये निराकरिष्याम इत्यर्थः । **अन्यत्रेति** । षष्ठछान्दोग्यभाष्यादौ सदेव सोम्येति श्रुतेर्विष्णुपरतया व्याख्यानात् तस्याः वियदादिकार्यसत्त्वपरत्वाभावादिति भावः । दार्ष्टान्तिकवैषम्येण दृष्टान्तोक्तिपरसूत्रद्वयार्थं निराह **पटे प्राणादौ चेति** । प्रकृते जगतोऽत्यन्तोपसञ्जातविशेषवत्त्वं तत्र तु संकोचविकासमात्रमिति वैषम्यादनुदाहरणमित्यर्थः ॥ विशेषेण प्रपञ्चनं चन्द्रिकायां ध्येयम् ।

**या०** — यदुक्तं सूत्राक्षराणामार्जवानार्जवादिचिन्ता शिष्यैरेव क्रियतामिति तामिदानीं दर्शयति **यच्चोक्तमित्यादिना** ॥ **तद्व्याप्यव्यापकेति** । अन्यत्वेऽपि धूमभावनियमेनाग्नेरुपलब्धेरिति भावः ॥ **कारणोपरक्तेति** । मृद्घट इति कारणानुविद्धत्वेन कार्यबुद्धिरित्यर्थः । इयमेव सामानाधिकरण्यबुद्धिः ॥ **शक्यसंग्रहमिति** । न हि यद्यतो भिन्नं तत्तद्भाव एवोपलभ्यते, यद्यदनुविद्धतया प्रतीयते तत्तदभिन्नं, यौ च सामानाधिकरण्यप्रतीतिविषयौ तावभिन्नौ इत्येतेषामपि युक्तित्वादिति भावः । तथा चोक्तप्रत्यक्षलाभायोपलब्धेर्भावाच्चेति सूत्रेऽन्वय इति भावः । किञ्च भावे तिलादावित्यादिपरिणामवादिनो व्याख्यानमवलम्ब्य शङ्कते **अथानेनेति** । सङ्करेण तु सूत्रविपरिणामेन प्रत्यक्षोपन्यासो व्याख्यातः । तन्तुसंस्थाने पटे तन्तुव्यतिरेकेण पटो नैवोपलभ्यत इति । तदप्यतिदेशेन दूषयति **अत एवेति** । अत्यन्ताभेदसाधकत्वा-

भावादेवेत्यर्थः ॥ **सूत्रविपरिणाम इति** । उपलब्धेः प्रत्यक्षरूपाया भावात्सद्भावादिति विपरिणतसूत्रार्थः ॥ **उत्तरत्रेति** ; समयपाद इत्यर्थः ॥ **अन्यत्रेति** । सच्छब्दस्य ब्रह्मपरत्वमेव न जायमानकार्यपरतेति छान्दोग्यभाष्यादौ व्याख्यातमित्यर्थः ॥ **पटे प्राणादौ चेति** । तत्राप्यवस्थान्तरवस्त्वरूपो विशेषो जायत एवेति नात्यन्ताभेदाद्युदाहरणं पटादीत्यर्थः । किञ्च भावे चेत्यत्र विभक्तिविपरिणामः कारणस्य कार्यस्येति पदद्वयाध्याहारश्च । सत्त्वाच्चेत्यत्र सत्त्वादित्यस्य त्वदभिप्रेतानृतत्वविरोधित्वमुपपत्तेः प्रागेवेत्यस्याध्याहार्यत्वं च युक्तेरित्यत्र परोक्तयुक्त्युपजीवनं शब्दान्तरादित्यस्य सत्त्वाच्चेत्यनेन गतार्थत्वं पटप्राणदृष्टान्तौ तु विवर्तवादिनोऽननुगुणौ जगतो ब्रह्मणीव प्रसारणादेः पटादावनध्यस्तत्वात् मन्मत इव प्रमेयविशेषाभावेन दृष्टान्तद्वयवैयर्थ्यं चेत्याद्यभिप्रेत्याह **इत्यलं प्रपञ्चेनेति** । ईश्वरप्रेरिता इत्यस्य विवरणं धारकप्रयत्नेनेति ॥ २-१-६ ॥

**श्री०— व्याप्त्येति** । मृदादेः कारणस्य भाव एव कार्यस्योपलब्धिरित्युक्ते वह्निसद्भाव एव धूम उपलभ्यते । अन्यथा तु नेत्यत्रेव व्याप्यव्यापकभावेनैवोपपन्नमित्यर्थः ॥ **अथेत्यादि** । यदा घटो ज्ञायते तदा मृदादिकारणोपरक्ततयैव ज्ञायते । न हि घटं विहाय पटवन्मृदं विहाय घटः प्रतीयते । ततश्च कार्यं घटादि मृदादिकारणादत्यन्ताभिन्नं तदुपरक्तबुद्धिविषयत्वात्सामानाधिकरण्येन च ज्ञायमानत्वात्, अभेदबुद्धिविषयत्वादिति यावत्, यथा घटः, इत्यनुमानद्वयमत्र सूत्रेऽभेदसाधकत्वेनाभिमतमित्यर्थः । अनेन 'भावे च'इति सूत्रे 'उपलब्धेरि'ति प्रत्यक्षस्योक्तत्वादित्यर्थः । तथा च 'युक्तेश्चे'त्यनेन संग्रहो न शक्य इत्यर्थः । तदपि प्रत्यक्षं कथञ्चिदभेदसाधकत्वेऽपि नात्यन्ताभेदसाधकमित्यर्थः । **अत एव** प्रत्यक्षस्यात्यन्ताभेदासाधकत्वादेव ॥ **परमार्थ इति** । वास्तवार्थविचार इत्यर्थः । **श्रुतौ** 'असदेवेदमग्र आसीदि'त्यादौ । **अनुपसञ्जातविशेषत्वम्** उभयोरपि दृष्टान्तयोरत्यन्तमनुपसञ्जातोऽविद्यमानो विशेषो भेदो यत्र सोऽनुपसञ्जातविशेषोऽत्यन्ताभेद इति यावत्, तत्त्वं तद्वत्त्वं नास्तीत्यर्थः । अवस्थान्तरत्वरूपविशेषस्य तत्रापि जायमानत्वेन कार्यकारणयोर्नात्यन्ताभेदोदाहरणत्वमनयोरिति भावः ।

**सु०— यदुक्तं शक्तोऽपि हीति यच्च नित्यभेद इति तदुभयं श्रुत्याऽपि साधयति** शक्तोऽपीति ।

**अनु०—** शक्तोऽपि भगवान्विष्णुरकर्तुं कर्तुमन्यथा ॥
स्वभिन्नं कारणाभिन्न(न्नं )भिन्नं विश्वं करोत्यजः ॥
इति श्रुतेरवसित उक्तोऽर्थोऽयमशेषतः ॥ २-१-६ ॥

अकर्तुं शक्तोऽपि करोति । अन्यथा विना कारणैस्तद्व्यत्यासेन च कर्तुं शक्तोऽपि नियतैः कारणैः करोतीच्छयेति योज्यम् । स्वस्मान्निमित्तकारणाद्भिन्नम् । उपादानकारणेनाभिन्नं भिन्नं च । संसारिणो हि विष्टिगृहीता इवेश्वरप्रेरिता अनिष्टमपि धारकप्रयत्नेनाकृत्वा न स्थातुमीशते । न च भगवांस्तथेत्यकर्तुं शक्तोऽपीत्युक्तम् । अशेषतः प्रागिदानीं चोक्तो न तु सन्निहित एवेत्यर्थः ॥ २-१-६ ॥

शे० — शक्तोऽपीत्यादिभाष्यकारीयश्रुत्युपन्यासस्यानर्थक्यमाशङ्कयोक्तार्थसमर्थनार्थत्वान्न तदित्यभिप्रेत्योक्तार्थप्रदर्शनपूर्वकं तत्समर्थनपरतयोत्तरभाष्यं योजयति **यदुक्तमित्यादिना** । 'शक्तोऽपि ह्यन्यथाकर्तुं स्वेच्छानियमतो हरिः । कारणैर्नियतैरेव करोतीदं जगत्सदा' इत्यादिनोक्तस्य सर्वस्याप्यर्थस्य प्रमाणारूढतासिद्ध्यर्थं तदुपयोगितया श्रुतिं योजयति **अकर्तुमित्यादिना** । नन्वन्यथा विना कारणैस्तद्व्यत्यासेन च कर्तुं शक्तोऽपि भगवान्नियतैः कारणैरेव करोतीत्येतावतैवोक्तस्याशेषार्थस्य प्रामाणिकत्वसिद्ध्योक्तसर्वाक्षेपसमाधानात् 'अकर्तुं शक्तोऽपि करोति' इत्यंशवैयर्थ्यमित्यतस्तत्तात्पर्यकथनपूर्वकं प्रयोजनमाह **संसारिणा हीति** ॥ **धारकप्रयत्नेनेति** । स्वप्रयत्नेनेत्यर्थः । भाष्येऽशेषत इत्यस्य वैयर्थ्यमाशङ्क्य तत्प्रयोजनप्रदर्शनपूर्वकं तत्तात्पर्यमाह **अशेषत इत्यादिना** ॥ २-१-६ ॥

प० — व्यवहितानामन्वयं दर्शयति **अकर्तुं शक्तोपि करोतीति** । अन्यथेत्यनुवादः । विना कारणैरिति तद्व्यत्यासेन कारणव्यत्यासेन चेति व्याख्या । शक्तोऽपि हीति प्रागुक्तार्थे संवादित्वलाभाय शेषोक्त्या योजनामाह **नियतैः कारणैः करोतीच्छयेति योज्यमिति** । अकर्तुं श(क्तेः)क्तिः को महिमेत्यत आह **संसारिणो हीति** ॥ **विष्टिगृहीता इति** । वेतनमदत्त्वैव बलाद्राजभटैः कर्म कर्तुं गृहीता इत्यर्थः । **धारक(ण)प्रयत्नेनेति** । अकरणानुकूलदार्ढ्यसंपादकप्रयत्नेन अकृत्वेत्यर्थः । धारकेति पाठे स्वस्य स्तब्धतापादकप्रयत्नेनाकृत्वेत्यर्थः ॥ अशेषत इत्यनुवादः, प्रागिदानीं चेति व्याख्या । शक्तोऽपीति प्रागुक्तेर्थे नित्यभेद इतीदानीमुक्तेर्थे इत्यर्थः । नान्यदन्यत्वमापन्नं इति प्रागुक्तेर्थे इति वा । असदित्याद्यनेकाधिकरण इति वार्थः ॥ २-१-६ ॥

श्री० — **अनिष्टमपि** अकृत्वेत्यर्थः ॥ २-१-६ ॥

॥ इति आरम्भणाधिकरणम् ॥

## ॥ अथ इतरव्यपदेशाधिकरणम् ॥

सु० — ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ अस्मिन्नधिकरणे जीवकर्तृत्वपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियत इति भाष्यम् । अत्र वक्तव्यम् । किमत्र जीवस्य सर्वथा कर्तृत्वं निराक्रियते । उतेश्वराधीनं तदङ्गीकृत्य स्वातन्त्र्यमात्रम् । नाद्यः । तथा सति कर्ता शास्त्रार्थवत्त्वादित्यादिवक्ष्यमाणविरोधापत्तेः । स्वतःकर्तृत्वानुपपत्तिरित्यादिविशेषणवैयर्थ्यप्रसङ्गाच्च । न द्वितीयः । हिताकरणादिदोषप्रसक्तिरित्यादिसूत्राणां स्वातन्त्र्यनिराकरणपरत्वेन शक्ययोजनत्वेऽपि कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेत्यस्य सूत्रस्याशक्यव्याख्यानत्वात् । इदं हि सूत्रं सर्वथा कर्तृत्वं निराकुर्वदुपलभ्यते ।

तथा हि । कर्तृत्वं कृत्स्नैकदेशाभ्यां व्याप्तम् । तत्र कृत्स्नप्रसक्तावनुभवविरोधः । एकदेशाङ्गीकारे च 'अथ यः स जीवः स नित्यो निरवयवः' इत्यनंशत्वश्रुतिव्याकोपः स्यात् । न हि सामर्थ्यापरपर्यायं प्रयत्नादिरूपं कर्तृत्वमस्माकं जीवाद्भिन्नम् । येन तस्य विचित्रत्वेऽपि जीवस्य निरंशत्वं न व्याहन्येत । ततो व्यापकनिवृत्त्या व्याप्यं कर्तृत्वमपि निवर्तत इति खल्वस्य(त्र) तात्पर्यं प्रतीयते । प्रसङ्गस्य विपर्यये पर्यवसानावश्यम्भावात् ॥ अथ जीवकर्तृत्वस्येश्वराधीनतानङ्गीकार एवैतौ प्रसङ्गावुक्तौ न कर्तृत्वमात्रे । तथा चेश्वराधीनत्वमेव विपर्ययपर्यवसानलभ्यं भविष्यतीति चेन्न । स्यादप्येवं यदि जीवकर्तृत्वस्येश्वराधीनत्वाङ्गीकारेणेमौ प्रसङ्गौ शक्यसमाधानौ स्याताम् । न चैवं पराधीनेनापि खल्वनेन कृत्स्नेन वा कर्तव्यमेकदेशेन वा । तृतीयप्रकाराभावात् । भावे वा तेनैवापराधीनत्वेऽपि कर्तृत्वोपपत्तेः । अतो विपर्ययापर्यवसानान्नैवं व्याख्यानं युक्तमिति कर्तृत्वाभाव एव तात्पर्यम् । तथा च वक्ष्यमाणविरोधः ॥ अथ वस्तुतो नास्त्येव जीवस्य कर्तृत्वम्, आभिमानिकं तु तदित्यविरोधः । मैवम् । विहारोपदेशादित्यादिना वास्तवस्यैव तस्य साधयिष्यमाणत्वात् ।

अतो दुर्घटमेतदधिकरणमित्यतो द्वितीयपक्षमङ्गीकृत्य प्रसङ्गौ जीवकर्तृत्वस्येश्वराधीनतानङ्गीकारविषयौ व्याकरिष्यन्नादौ तावदीश्वराधीनताङ्गीकारे प्रसङ्गनिवृत्तिप्रकारमागमवाक्योदाहरणेन दर्शयति अनंशस्यापीति ।

अनु० — ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥

अनंशस्यापि जीवस्य किञ्चित्सामर्थ्ययोजनाम् ॥

कार्येषु यः करोत्यद्धा नमस्तस्मै स्वयम्भुवे ॥

**किञ्चित्सामर्थ्ययोजनां कार्यानुरूपसामर्थ्यप्रयोगम् । स्वयम्भुवे स्वतन्त्राय । इति वचनादवसितोऽयमभिप्रेतः अर्थ इत्यनुवर्तते ॥ तत्श्चैतदुक्तं भवति । यदि जीवः परमेश्वराधीनतया कर्ताङ्गीक्रियते । तदोपपद्यते एव तस्य कर्तृत्वम् । प्रसङ्गयोः समाधातुं शक्यत्वात् । अनंशत्वस्याभ्युपगमेन हि न निरवयवत्वशब्दकोपः । अनंशस्यापि परमेश्वराचिन्त्यशक्तिवशेन कार्यानुरूपसामर्थ्यप्रयोगसंभवान्न कृत्स्नप्रसक्तिरिति । एतच्चानुपदं स्फुटीभविष्यति ।**

**शे० — ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥** ननु समयप्राप्तस्य जीवकर्तृत्वस्य समयपादे 'अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्' इत्यत्र निराकरिष्यमाणत्वात् । श्रुतिसंवादियुक्तिप्राप्तस्य च 'एतेन शिष्टा' इत्यत्र निषिद्धत्वादनर्थकमेतदिति गतार्थताशङ्कापरिहारेणाधिकरणारम्भस्याधिकरणान्तर इवेहाप्यवश्यं समर्थनीयत्वात्तदसमर्थनं दोषायेत्यतो भाष्य एव तस्य समर्थितत्वान्न तदसमर्थनमात्रं दोषायेत्यभिप्रेत्य गतार्थताशङ्कानिरासकं भाष्यमेवोदाहरति **अस्मिन्नधिकरण इति ।** ननु 'अनंशस्यापी'त्याद्युत्तरभाष्यमनर्थकम् । न चागमोदाहरणार्थं तदिति वाच्यम् । तस्याप्यानर्थक्यात् । न चेश्वराधीनत्वाङ्गीकारे कर्तृत्वस्य प्रसङ्गनिवृत्तिप्रकारोपदर्शनार्थत्वान्न तदिति वाच्यम् । कर्तृत्वस्येश्वराधीनत्वाङ्गीकारे प्रसङ्गनिवृत्तिप्रकारोपदर्शनस्याप्यनर्थकत्वात् । न च जीवकर्तृत्वस्येश्वरानधीनत्वे 'कृत्स्नप्रसक्तिरि'ति सूत्रोक्तप्रसङ्गस्य श्लिष्टत्वसिद्ध्यर्थत्वान्न तदुपदर्शनस्यानर्थक्यमिति वाच्यम् । जीवस्य कर्तृत्वमात्रेऽपि सूत्रोक्तस्य प्रसङ्गस्य श्लिष्टत्वेन तत्परित्यागेनेश्वराधीनत्वे कर्तृत्वस्य सूत्रोक्तप्रसङ्गव्युत्पादने निमित्ताभावादित्याशङ्क्यैतदधिकरणदुर्घटत्वशङ्कानिरासार्थत्वात्तत्पर्यन्तधावनोपपत्तेरित्यभिप्रेत्य, स्यादेतदेवं यद्यधिकरणस्य दुर्घटत्वमेव भवेत् । तदेव कथमित्यतस्तद्दर्शयितुं तावद्विकल्पयति **अत्र वक्तव्यमिति ॥ तथा सतीति ।** आदिपदेन 'विहारोपदेशादि'ति सूत्रपरिग्रहः । तत्र कर्तृत्वस्य तत्सत्यत्वस्य च समर्थयिष्यमाणत्वादिति भावः ॥ **विशेषणवैयर्थ्येति ।** 'अश्मादिवच्च तदनुपपत्तिरि'त्येतत्सूत्रभाष्य इति शेषः । तत्रादिपदेनाश्मादिवदस्वतन्त्रत्वादित्युक्तास्वातन्त्र्यपरिग्रहः । कर्तृत्वमात्रनिरासकत्वेऽकर्तृत्वादित्यवक्ष्यदिति भावः । अस्तु तर्हि स्वातन्त्र्यं निराक्रियते इति द्वितीयः, तत्रोक्तदोषाप्रसरादित्यत आह **नेति ॥ शक्ययोजनत्वेऽपीति ।** यदि जीवः स्वतन्त्रकर्तेत्युच्यते, तर्हि हिताकरणमहितकरणं च न स्यात् । न हि स्वतन्त्रः प्रेक्षावान्स्वहितं न करोति स्वाहितं च करोतीति संभवति । तथा च सकलस्यापि जनस्य (निज)निर्दुःखपूर्णानन्दत्वप्रसक्तिरित्यतो न स्वतन्त्रकर्तेत्यादिरूपेण शक्ययोजनत्वेऽपीत्यर्थः । **अशक्यव्याख्यानत्वादिति ।** स्वातन्त्र्यनिराकरणपरत्वेनेति शेषः । तत्कथमित्यतः सर्वथाकर्तृत्वनिरासकत्वप्रतीतेरित्याह **इदं हीति ।**

नन्वत्र सूत्रे सर्वथा न कर्तेत्यश्रवणात्कथमस्मात्तथा प्रतीतिरित्यतः साक्षात्तथाऽप्रतिभासेऽप्यर्थत-स्तथा प्रतिभासान्नानुपपत्तिरित्यभिप्रेत्य तथा प्रतिभासमुपदर्शयति **तथा हीति** । कर्तृत्वमित्यादेरयमर्थः । जीवः किं स्वकार्येषु सर्वसामर्थ्येन प्रवर्तते उतांशेनेति । नाद्यः । तथा सत्येकेनांगुलिमात्रेण तृणादा-नादावपि पूर्णशक्त्या प्रवृत्त्यापत्तेरित्यभिप्रेत्य तत्रेष्टापत्तिं परिहरति **तत्रेति** । नान्त्यः अंशाभावादित्य-भिप्रेत्य सांशत्वे बाधकमाह **एकदेशेति** । ननु च जीवस्य निरंशत्वेऽपि सामर्थ्यस्य सांशत्वात्सामर्थ्यां-शेन प्रवृत्तिर्नानुपपन्ना । न च निरंशजीवाभिन्नसामर्थ्यस्य कथं सांशत्वमपीति वाच्यम् । तस्य जीव-भिन्नत्वेन तत्संभवादित्यतो येषां पक्षे सामर्थ्यं जीवाद्भिन्नं तेषां पक्षे जीवस्य निरंशत्वेऽपि सामर्थ्यस्य सांशत्वोपपत्त्यैकदेशेन प्रवृत्तावुक्तश्रुतिविरोधाभावेऽप्यस्माकं मते तस्य निरंशजीवाभिन्नत्वेन सांशत्वानुप-पत्त्योक्तदोषतादवस्थ्यमेवेत्याह **न हीति** ॥ **व्यापकव्यावृत्त्येति** । कृत्स्नैकदेशरूपव्यापकव्यावृत्त्येत्यर्थः ॥ **अवश्यम्भावादिति** । विपर्ययपर्यवसानहीनस्य प्रसङ्गाभासत्वादिति भावः ।

**उक्ताविति** । स्वतन्त्रकर्तृत्वं कृत्स्नैकदेशाभ्यां व्याप्तम् । तत्र कृत्स्नप्रसक्तावनुभवविरोधः । एक-देशाङ्गीकारे चानंशत्वश्रुतिविरोध इति जीवकर्तृत्वस्येश्वराधीनत्वानङ्गीकारे प्रसङ्गावुक्तावित्यर्थः ॥ **न कर्तृत्वमात्र इति** । येनोक्तरीत्या विपर्ययपर्यवसाने कर्तृत्वनिवृत्त्या सूत्रस्य सर्वथा कर्तृत्वमात्रनिरासकत्वं प्रसज्येतेति भावः । ईश्वराधीनत्वानङ्गीकारे प्रसङ्गोक्तावपि किं सिध्यतीत्यत आह **तथा चेति** । तथाच स्वातन्त्र्यं निराक्रियत इति द्वितीये नैतत्सूत्रानुपपत्तिरिति भावः । अस्तूक्तरीत्या कृत्स्नप्रसक्तिसूत्रस्य सर्वथाकर्तृत्वाभाव एव तात्पर्यं किं तावताऽपीत्यतस्तथा सति 'कर्ता शास्त्रार्थवत्त्वादि'ति वक्ष्यमाणविरोधः' स्यादित्याह **तथा चेति** ॥ **अथेति** । युक्तिविरुद्धस्याविचारितरमणीयतया वास्तवत्वायोगादिति भावः । तर्हि कर्ता शास्त्रार्थवत्त्वादिति वक्ष्यमाणविरोधः स्यादित्यत आविद्यककर्तृत्वपरत्वात्तस्य न विरोधकत्व-मित्याह **आभिमानिकं त्विति** । अत्र तदित्यतःपरं कर्ता शास्त्रार्थवत्त्वादित्यत्रोच्यत इति शेषः ॥ **वास्तवस्यैवेति** । विगलिताखिलकल्पने कैवल्येऽप्युपदिष्टस्य विहारादिकर्तृत्वस्य काल्पनिकत्वायोगात् । अन्यथाऽऽत्मनोऽपि तत्प्रसङ्गादिति भावः । आदिपदेन 'उपादानात्' इति सूत्रपरिग्रहः ।

**द्वितीयपक्षम्** स्वातन्त्र्यमात्रं निराक्रियत इति द्वितीयपक्षम् । **व्याकरिष्यन्निति** । 'यदि-भागेन कार्येषु' इत्यादिनेति शेषः ॥ **प्रसङ्गनिवृत्तिप्रकारमिति** । तेन विनेश्वरानधीनत्वे कर्तृत्वस्य प्रसङ्गयोर्विपर्ययापर्यवसानादिति भावः ।

ननु तृणादानादौ किञ्चित्सामर्थ्ययोजनसंभवेऽपि महाशिलोद्धरणादौ सम्पूर्णसामर्थ्ययोजनस्याप्य-वश्यम्भावाद्भाष्ये किञ्चिदिति कथमुक्तमित्यतः सर्वसंग्राहकतया तत्तात्पर्यमाह **कार्यानुरूपेति** । नन्वन-

शस्य जीवस्य किञ्चित्सामर्थ्ययोजनाकरणमसदादिष्वदृष्टं कथं तस्यापीत्यत उक्तस्य मूले स्वयम्भुव इत्यस्य प्रकृतोपयोगितयाऽर्थमाह **स्वतन्त्रायेति** । जीवकर्तृत्वस्येश्वराधीनत्वाङ्गीकारे प्रसङ्गनिवृत्तिप्रकारस्यागमसिद्धत्वलाभाय भाष्येऽपेक्षितमनुवृत्त्या पूरयति **इति वचनादित्यादि** । श्रुतिपदं वचनमात्रपरमित्यभिप्रेत्य वचनादित्युक्तम् । कथमेतावताऽपि कर्तृत्वस्येश्वराधीनत्वे प्रसङ्गद्वयनिवृत्तिसिद्धिरित्यतो विशेषणतात्पर्योक्त्या तत्सिद्धिं दर्शयति **ततश्चेति** । ननु 'व्यतिरेको गन्धवत्' इत्यत्र जीवानां सांशत्वस्य वक्ष्यमाणत्वादनंशस्यापीत्यनंशत्ववचनस्य तद्विरोध इत्यत आह **एतच्चेति** ॥ **अनुपदमिति** । 'अंशिनो हि पटाद्या ये' इत्यत्रेत्यर्थः ।

**म० — तथा च वक्ष्यमाणेति** । 'कर्ता शास्त्रार्थवत्वात्' इत्यादिवक्ष्यमाणविरोध एवेत्यर्थः । **अनुपदमिति** । 'अंशिनो हि पटाद्या ये भिन्नैरेव परस्परम् ।' इत्यादिनेति शेषः ।

प० — ॐ **इतरव्यपदेशात्** । 'स्वयं कृतापि तद्वश एवे'त्याद्युक्तेर्भाष्यविवरणपरमेतदनुभाष्यमिति व्याकरिष्यन् भाष्यवाक्यं पठित्वा तद्विवरणबीजानुपपत्तिं दर्शयति **अस्मिन्नित्यादिना** ॥ **इत्यादिविशेषणेति** । भाष्योक्तस्वत इति विशेषणेत्यर्थः । आदिपदेन जीवे दृश्यमानोपि कार्योपसंहारोऽस्वातन्त्र्यात्परकृत एवेति भाष्यवाक्योक्तविशेषणग्रहः ॥ **शक्यऽयोजनत्वेपीति** । भाष्य(उक्त)दिशेति भावः ॥ **कृत्स्नप्रसक्ताविति** । तृणोद्धरणादौ कार्य इति योज्यम् । प्रयत्नादिरूपमित्यत्रादिपदेन जीवे दृश्यमानेच्छाबुद्ध्योर्ग्रहः ॥ **व्यापकेति** । कृत्स्नप्रसक्त्येकदेशरूपव्यापकेत्यर्थः ॥ **अत्रेति** । कृत्स्नेति सूत्रे । नन्वत्र सूत्रे आपाद्यमात्रोक्तिः कथं कर्तृत्वनिवृत्तिरित्यन्ततात्पर्योक्तिरित्यत आह **प्रसंगस्येति** ॥ **विपर्ययापर्यवसानादिति** । विपर्यये पर्यवसन्नस्य पराधीनकर्तृत्वस्यापि कृत्स्नप्रसक्त्यादियुक्तिबाधितत्वादिति भावः ॥ **नैवमिति** । अथ जीवेत्यादिनोक्तव्याख्यानमित्यर्थः ॥ **वक्ष्यमाणेति** । 'कर्ता शास्त्रार्थवत्त्वादि'ति वक्ष्यमाणेत्यर्थः ॥ **वास्तवस्यैवेति** । विहारकर्तृत्वस्य मुक्तिगतस्य तत्रोक्तेरिति भावः ॥ **प्रसंगनिवृत्तीति** । कृत्स्नप्रसक्त्यादियुक्तिबाधरूपानिष्टापादाननिवृत्तीत्यर्थः ॥ **प्रसंगयोरिति** । कृत्स्नप्रसक्तिर्निरवयवत्वश्रुतिव्याकोपरूपयोरित्यर्थः ॥ **अनुपदमिति** । 'नैवमेव हि चेतनाः' इत्यादौ । तथाच 'व्यतिरेको गन्धवदि'त्यत्र वक्ष्यमाणसांशत्वविरोधो न शङ्क्य इति भावः ।

या० — ॐ **इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः** ॐ ॥ **स्वतः कर्तृत्वेति** । इदम् 'अश्मादिवच्च तदनुपपत्तिरि'ति सूत्रभाष्यम् । तत्र स्वत इति विशेषणवैयर्थ्यप्रसङ्गादित्यर्थः । आदिपदेनाश्मादिवदस्वतन्त्रत्वमित्युक्तास्वातन्त्र्यपरिग्रहः । अन्यथाऽकर्तृत्वमिति वक्तव्यत्वात् ॥ **सामर्थ्यापरपर्यायमिति** । अत्रागमविसंवादपरिहाराय सामर्थ्यापरपर्यायमित्युक्तम् । जीवकर्तृत्वनिराकरणस्यैतदधि-

करणप्रतिपाद्यतया भाष्य उक्तत्वात् । तद्विसंवादपरिहाराय कर्तृत्वमित्युक्तम् । अनुव्याख्यानुसारेणा-प्रयत्नादिरूपमित्युक्तम् । प्रयत्नपूर्वककार्योत्पादनस्यैव कर्तृत्वरूपत्वात् यद्यपि 'इच्छापूर्वं क्रियादानं कर्तृत्व-मि'ति श्रुतिरस्ति तथाऽप्यनिष्टार्थेऽपि जीवस्य कर्तृत्वदर्शनात् । तत्संग्रहाय प्रयत्नादिरूपमित्युक्तम् ॥ **वक्ष्यमाणेति** । कर्ता शास्त्रार्थवत्त्वादित्यत्र वक्ष्यमाणेत्यर्थः ॥ **वास्तवस्यैवेति** । मुक्तेरुपदिष्टस्यावास्तव-त्वानुपपत्तेरिति भावः । ननु 'व्यतिरेको गन्धवदि'त्यत्र जीवानां सांशत्वस्य वक्ष्यमाणत्वात्कथमनंश-स्यापीत्युक्तमित्यत आह **एतच्चानुपदमिति** । 'अंशिनो हि पटाद्या ये' इत्यत्रेत्यर्थः ॥

**श्री०** तत् कर्तृत्वम् ॥ **विशेषणेति** । स्वत इत्युक्तस्वातन्त्र्यरूपेत्यर्थः ॥ **अनुभवविरोध इति** । तृणोद्धारात्कृत्स्नसामर्थ्यप्रयोगस्यानुभवविरुद्धत्वादिति भावः । **तस्य** उक्तरूपकर्तृत्वस्य ॥ **परेति** । पराधीनकर्तृत्वोपेतेनाप्यनेन जीवेनेत्यर्थः । **तेनैव** कर्तृत्वघटकेन तृतीयप्रकारेणैव ॥ **वक्ष्यमाणेति** । 'कर्ता शास्त्रार्थवत्त्वादि'ति वक्ष्यमाणेत्यर्थः । **आभिमानिकम्** आविद्यकम् । **अवास्तवं** मिथ्याभूत-मित्यर्थः ॥ **वास्तवस्येति** । न हि निवृत्ताविद्यायां मुक्तौ विद्यमानमवास्तवं भवतीति भावः ॥ **द्वितीयपक्षमिति** । ईश्वराधीनं कर्तृत्वमङ्गीकृत्य स्वातन्त्र्यमात्रं निराक्रियत इति द्वितीयपक्षमित्यर्थः ॥ जीवेऽचिन्त्यशक्त्यभावमुपपादयितुमाह **न हीति** ॥

**सु०** — **एवमुपोद्घातप्रक्रियया विपर्ययपर्यवसानोपपत्तिमुक्त्वेदानीं विवक्षितार्थे सूत्रं योजयति** यदीति ।

**अनु०** — यदि भागेन कार्येषु जीवशक्तिं न योजयेत् ॥
हरिस्तदा हि सर्वत्र कृत्स्नयत्नोऽशिताऽपि वा ॥

**भागेन कार्यानुगुणांशेन । अत्र यदीश्वराधीनतया कर्ता न स्यादिति वक्तव्ये यदि भागेनेत्यादिवचनं प्रसङ्गस्फुटीकरणार्थम् । ईश्वराधीनत्वप्रकारप्रपञ्चनार्थं च । सर्वत्र तृणादा-नादावपि कृत्स्नयत्नोऽशितापि वा प्रसज्येत । तथा चानुभवश्रुतिविरोधः । तस्मात्परमेश्वराधीन एव जीवः कर्तेति शेषः । न चोपाधिकृतांशकल्पनया कर्तृत्वस्याविद्यकत्वेन (वो)चोपपत्तिः । अनंशस्यापीत्यादिप्रमाणसिद्धोपपन्नोपपादकपरित्यागेनाप्रामाणिकानुपपन्नस्वीकारस्यायुक्तत्वात् ।**

**शे०** — ननु जीवकर्तृत्वस्येश्वरानधीनत्वे प्रसङ्गावादावुक्त्वा तद्विपर्ययापर्यवसानशङ्कायां विपर्ययपर्य-वसानोपपत्तिं वक्तुमागमोदाहरणं कर्तव्यं तत्कथमादावेव तदुपपत्तिकथनमित्यत उक्तम् **उपोद्घातप्रक्रिय-येति** ॥ **विवक्षितार्थे** जीवकर्तृत्वस्येश्वराधीनत्वे । भागेन कार्यानुगुणांशेनेत्येतत्किञ्चित्सामर्थ्ययोजनं कार्या-नुगुणसामर्थ्यप्रयोगमितिवद्याख्येयम् । **प्रसङ्गस्फुटीकरणार्थमिति** । यदि जीवः स्वतः कर्ता स्यात् तदा

कृत्स्नप्रयत्नः अंशिता वा प्रसज्यत इत्युक्ते स्वतः कर्तृत्वेऽपि कुतः कृत्स्नप्रयत्नांशिते इत्याशङ्कया प्रतिबन्धेन निमित्तनैमित्तिकभावस्यास्फुटत्वात्प्रसङ्गस्यास्फुटत्वम् । यदि भागेन कार्येषु जीवशक्तिं न योजयेद्धरिस्तदा हि सर्वत्रकृत्स्नप्रयत्नोंऽशिता वा स्यादित्युक्ते तु निमित्तनैमित्तिकभावस्य स्फुटत्वेन तच्छङ्काविरहात्प्रसङ्गस्य स्फुटत्वमिति तदर्थं यदि भागेनेत्याद्येवोक्तमित्यर्थः ॥ **ईश्वराधीनत्वप्रकारेति** । यदि जीवः ईश्वराधीनतया कर्ता न स्यादित्युक्ते जीवकर्तृत्वस्येश्वराधीनत्वमात्रप्राप्तावपि कथं जीवकर्तृत्वस्येश्वराधीनत्वमिति कथमाकाङ्क्षापूरकतत्प्रकारविशेषानुक्तेः 'यदि भागेन कार्येषु जीवशक्तिं न योजयेत्' इत्युक्ते तु जीवनिष्ठकर्तृतायां कार्यानु(रूप)गुणांशरूपप्रकारस्य कथमाकाङ्क्षापूरकस्य समर्पणलाभाच्च तत्समर्पणार्थं यदि भागेनेत्याद्येवोक्तमित्यर्थः । महाभारशिलोद्धरणादौ कृत्स्नप्रयत्न इष्ट एवेत्यतः सर्वत्रेत्यस्य तात्पर्यमाह **तृणादानादावपीति** । अस्तु कृत्स्नप्रयत्नत्वादीत्यत आह **तथा चेति** । कृत्स्नप्रयत्नेऽनुभवविरोधः । अंशितायां श्रुतिविरोध इत्यर्थः । प्रसङ्गप्रदर्शनरूपे भाष्ये विपर्ययपर्यवसानानुक्त्या प्रसक्तां न्यूनतां शेषोक्त्या परिहरति **तस्मादिति** । ननु जीवस्य स्वतः कर्तृत्वेऽपि नोक्तदोषावकाशस्तस्योपाधिकृतांशवत्त्वेन कृत्स्नप्रसक्त्ययोगात् । स्वाभाविकांशाभावेन श्रुतिविरोधाभावात् । यद्वा जीवे कर्तृत्वमाविद्यकमस्तु । न च युक्तिविरोधः । तस्याविद्यात्मकत्वसाधकत्वेन तद्बाधकत्वादिति शङ्कते **न चेति** ॥ **उपपादकपरित्यागेनेति** । भगवदधीनत्वरूपोपपादकपरित्यागेनेत्यर्थः ॥ **अप्रामाणिकेति** । जीवस्योपाधिकृतांशवत्तायां जीवकर्तृत्वस्याविद्यकतायां च प्रमाणाभावेन तयोरप्रामाणिकत्वादिति भावः ॥ किं जीवः समस्तोऽप्युपहितस्तदंशो वा । नाद्यः तर्ह्युपाधिकृतांशो न स्यात् । सर्वस्योपाधिग्रस्तत्वात् । नाप्यंश उपहित इति युक्तम् । उपाधिसम्बन्धार्थं स्वाभाविकद्वित्वापेक्षत्वात् । तथा च श्रुतिविरोधः । तस्याप्यौपाधिकत्वे त्वनवस्थेत्युपाधिकृतांशत्वस्य; आविद्यकत्वेऽपि कर्तृत्वस्य जीवस्वरूपत्वेन मोक्षेऽप्यनुवृत्तेस्तत्राविद्या(ऽ)प्रसक्त्या मुक्तत्वव्याघातेनाविद्यकत्वस्य च अनुपपन्नत्वादिति भावः ।

**प० — पर्यवसानोपपत्तिं** पर्यवसानस्योपपन्नत्वम् । **सर्वत्रे**त्यनुवादः, **तृणादानादावपीति** व्याख्यानम् ॥ **अंशितापि वेति** । एकदेशेन प्रवृत्तौ इति योज्यम् ॥ **अनुभवश्रुतीति** । अनुभवश्रुतिभ्यां यथाक्रमं विरोध इत्यर्थः ।

**सु० — ननु जीवशक्त्यैवेदं घटताम् । नैवम् । तस्याघटितघटकाचिन्त्यशक्त्यभावात् । भावे वा हिताकरणादिदोषप्रसक्तिः । न ह्यत्राधिकरणे पूर्वपक्षिणा महदादिसकलकार्यकर्तृत्वं जीवस्याशङ्कितम् । किन्तु घटादिकर्तृत्वम् । तत्तावदनुभवसिद्धत्वात्कुलालादीनां**

**न त्यक्तुं शक्यम् । तत्रेश्वरस्यापि कर्तृत्वाङ्गीकारे कल्पनागौरवं स्यादित्यतो नेश्वरस्य सर्वकर्तृत्वमिति । तथा च कथमचिन्त्यशक्तिप्रसक्तिः ।**

**शे०** — ननु तथाऽपि जीवस्य स्वतःकर्तृत्वे नोक्तदोषानुषङ्गः । अनंशत्वाभ्युपगमेन निरवयवत्वशब्दव्याकोपाप्रसङ्गात् । अनंशस्यापि जीवस्य स्वाचिन्त्यशक्तिवशेन कार्यानुरूपसामर्थ्यप्रयोगसम्भवेन कृत्स्नप्रसक्तेरप्यभावात् । तथा च किं जीवकर्तृत्वस्य परमेश्वराधीनत्वाङ्गीकारेणेति भावेन शङ्कते **ननु चेति** । परमेश्वरस्याघटितघटनाचिन्त्यशक्तिसद्भावेन तया कार्यानुरूपसामर्थ्यप्रयोगसम्भवाद्यद्यपि न कृत्स्नप्रसक्तिरापद्यते । तथाऽपि जीवस्य तादृशाचिन्त्यशक्तेरभावेन तया कार्यानुरूपसामर्थ्यप्रयोगासम्भवात्कृत्स्नप्रसक्तिरवर्जनीयैवेति स्वतःकर्तृत्वानुपपत्तेर्जीवकर्तृत्वस्येश्वराधीनत्वमवश्यं वाच्यमित्याशयेन परिहरति **नैवमित्यादिना** । बाधकसद्भावात्साधकाभावाच्चेति भावः । तत्कथमित्यतो बाधकसद्भावं तावदाह **भावे वेति** ॥ **हितेति** । स्वतन्त्रस्य प्रेक्षावतः स्वहिताकरणस्वाहितकरणयोरनुपपत्तेरित्यर्थः । ततश्च निर्दुःखपूर्णानन्दप्रसङ्ग एवेत्युक्तं भवति । ननु महदादिसर्वप्रपञ्चकारणताया एवाचिन्त्यशक्तिसाधकत्वात्कथं साधकाभाव इत्यतो भवेदेवं कथञ्चिद्यदि महदादिसर्वप्रपञ्चकारणत्वं जीवस्य स्यात् । न चैतदस्ति । वास्तवस्य तस्यासिद्धेस्तथापूर्वपक्षासम्मत्या नाभिमानिकमर्पीत्याह **न हीति** । यद्वा ननु यदि जीवस्याचिन्त्यशक्तिरेव नास्ति । कथं तर्ह्यत्र महदादिसर्वप्रपञ्चकारणं जीव इति पूर्वपक्षोऽचिन्त्यशक्तिहीनस्य सर्वकारणत्वायोगात् । तथा चाचिन्त्यशक्तिरवर्जनीयेति नानुपपत्तिरित्यतो भवेत्पूर्वपक्षानुपपत्त्याऽचिन्त्यशक्तिसिद्धिर्यदि तादृशः पूर्वपक्ष एवात्राभिमतो भवेत् । न चैवमस्तीत्याह **न हीति** ।

नन्वेवं भाष्यटीकाविरोधः । तत्र दृश्यमानकार्याणां स्वतन्त्रजीवकर्तृत्वे सर्वस्यापि जगतस्तथात्वं सिध्यतीत्यादिना महदादिसमस्तकर्तृत्वेन पूर्वपक्षकरणादिति चेत् । उच्यते । अत्राधिकरणे घटादेर्जीवैककर्तृकत्वे तद्दृष्टान्तेन महदाद्यपि जीवैककर्तृकमित्येकः पूर्वपक्षः । द्वितीयस्तु महदादीशकर्तृकं घटादिस्तु जीवैककर्तृक इति । अत्र च पक्षद्वये ईश्वरपरित्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवमिति न्यायविवरणं मूलम् । सर्वथेश्वरत्यागेन महदादिकार्ये जीवस्यैव कर्तृत्वाङ्गीकार इति योजनयाऽऽद्यपक्षप्रापकत्ववद्घटादिकार्ये ईश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकार इति योजनया द्वितीयपक्षप्रापकत्वेन तस्य पक्षद्वयसाधारणत्वात् । तत्राद्यपक्षमाश्रित्य न्यायविवरणतात्पर्यं तथा हीत्यादिना टीकायामुक्तम् । तथा हि । ईश्वरोऽयोग्यश्चेत्कदापि प्रत्यक्षो न स्यात् । योग्यश्चेत्तदा सर्वत्र सत्त्वादिहेदानीमुपलभ्येत । न चाभिमानिदेवतासाम्यम् । ईश्वरस्य व्यक्तस्वभावत्वाङ्गीकारात् । तस्मादप्रामाणिक एवेश्वरः । तस्य घटादौ महदादौ च कर्तृत्वमप्रामाणिकं कल्प्यम् । जीवस्तु प्रामाणिकः । तस्य घटादौ कर्तृत्वं च क्लृप्तं

महदादावप्यदृष्टद्वारा कर्तृत्वं क्लृप्तम् । युक्तं च महदाद्युपादानापरोक्षज्ञप्तिरहितस्यापि जीवस्य महदादिकर्तृत्वम् । शब्दोपादानभूताकाशगोचरापरोक्षज्ञप्तिचिकीर्षाकृतिशून्यस्यापि चैत्रस्य चैत्रः शब्दं करोतीत्यादौ तत्कर्तृकत्वदर्शनादिति । अत्र तु द्वितीयपक्षमाश्रित्य कुलालादीनां तावद्घटादिकर्तृत्वमनुभवसिद्धम् । तत्रेश्वरस्यापि कर्तृत्वे गौरवमिति तात्पर्यमुक्तम् । यद्यप्यत्र न ह्यत्राधिकरणे पूर्वपक्षिणा महदादिसकलकार्यकर्तृत्वं जीवस्य शङ्कितमित्यनेन ग्रन्थेनात्राधिकरणे द्वितीयपक्ष एवाभिप्रेतो न त्वाद्य इत्युक्तम् । तदप्याद्ये एव जीवस्य महदादिकर्तृत्वपक्षेऽनुभवविरोधो न तु द्वितीये किन्तु तदानुकूल्यमेवेत्याद्येऽपरितोषमात्रमभिप्रेत्य । जीवस्य महदादिकर्तृत्वे तस्यैवाचिन्त्यशक्तिः स्यात् । तथा च यथा जीवस्य कर्तृत्वमीशतन्त्रमिति सिद्धान्ते ईशाचिन्त्यबलान्न कृत्स्नप्रसक्त्यादिदोषः । तथा तत्स्वतन्त्रमिति पूर्वपक्षेऽपि जीवाचिन्त्यबलादेव न कृत्स्नप्रसक्त्यादिदोष इत्याद्यपक्षे कृत्स्नप्रसक्त्यादेरप्राप्तेर्द्वितीय एवेष्ट इत्यभिप्रेत्य वोक्तम् । अत एव टीकायामप्याद्येऽपरितोषाद्यद्वेत्यादिनाऽधिकरणान्ते द्वितीय उक्तः । नत्वेतद्ग्रन्थानुरोधेनाद्यस्य सर्वथाऽप्यत्रानभिमतत्वमिति कल्प्यम् । तथा सति देवादीत्युत्तरसूत्रे ईश्वरस्यादृश्यत्वोक्त्ययोगादित्यविरोध इति ।

केचित्तु श्रुतिप्रसमप्याद्यमनुभवविरोधेन दूषयित्वा तदविरुद्धं द्वितीयं परिशिष्य तत्र कृत्स्नप्रसक्त्याद्युक्तिः । तथा च कृत्स्नेति सूत्रे आद्यो न दूष्यः किन्तु द्वितीय एवेति वाऽदृष्टद्वारा महदादिकर्तृत्वेऽपि नाचिन्त्यशक्तिरनुभवविरोधात् । तथा च कृत्स्नेति सूत्रे आद्योऽपि दूष्य इति वा नहीत्यादेरभिप्रायः । न त्वाद्यस्य सर्वथाऽप्यत्रानभिमतत्वम् । तथा सति 'अधिकं त्वि'ति सूत्रे ईशस्य कर्तृत्वमात्रे यः श्रमादिदोषस्तदुद्धारायोगादित्यविरोध इत्याहुः । भावबोधे तु देवादिवदपि लोके इति सूत्रनिवर्तनीयतयाऽप्रामाणिकेश्वराङ्गीकारे कल्पनागौरवप्रसङ्गेनेश्वरस्यैवाभावान्महदादिकार्येऽपि जीव एव कर्तेति पूर्वपक्ष्यभिप्रायेण भाष्यटीकायाः प्रवृत्तिः । अत्र च अस्तु वा ईश्वरः प्रामाणिकस्तथाऽपि न तस्य जन्मादिसूत्रोक्तं सकलजगत्कर्तृत्वं किन्तु महदादिकर्तृत्वमेव न तु घटादिकर्तृत्वमपि । उभयोरपि तदङ्गीकारे गौरवप्रसङ्गादित्यभ्युपगमवादेन प्रवृत्तेर्न विरोधशङ्केत्युक्तम् ॥ **तथा चेति** । प्रसञ्जकस्य महदादिकर्तृत्वस्य पूर्वपक्षिणं प्रत्यनभिमतत्वादिति भावः ।

प० — **हिताकरणादिदोषप्रसक्तिरिति** ॥ हिताकरणाहितकरणयोर्दोषत्वमयुक्तत्वं प्रसज्येतेत्यर्थः । न ह्यचिन्त्यशक्तिमतो हिताकरणादिकं युज्यत इति भावः । ननु महदादिसकलकार्यकर्तृत्वं जीवस्य पूर्वपक्षयतः पूर्ववादिनो मते कथं जीवस्याचिन्त्यशक्त्यभावः इत्यत आह **न हीति** ॥ **किन्त्विति** । इत्याशङ्कितमित्यन्वयः ॥ **तथाचेति** । सर्वकर्तृत्वे सतीत्यर्थः । न चैवं 'देवादिवदपि

लोके' इति सूत्रविरोधः । तत्रेश्वराभावसूचनेन सर्वत्र जीवकर्तृत्वपूर्वपक्षस्य सूचनात् । टीकायां स्पष्टं सर्वत्र जीवकर्तृत्वेन पूर्वपक्षकरणेन तद्विरोधश्चेति वाच्यम् । न हीत्यादिग्रन्थस्य चन्द्रिकायां महदादिकार्यकर्तृत्वाङ्गीकारे अनुभवविरोध इत्येतत्पक्षे अपरितोषमात्रं, न तु सर्वथा महदादौ जीवकर्तृत्वपक्षो नाभिप्रेत इति तात्पर्योक्तिः ।

**या०** — ननु जीवस्य महदादिकर्तृत्वादचिन्त्यशक्तित्वमित्यत आह **न ह्यत्राधिकरण इति** । न चैवं दृश्यमानकार्याणां स्वतन्त्रजीवकर्तृत्वे समस्तजगतोऽपि तथात्वं सिध्यतीति तत्त्वप्रकाशिकाविरोधः । घटादिकार्याणां जीवकर्तृकत्वदर्शनात्तद्दृष्टान्तेन महदादेरप्यदृष्टद्वारा जीवकर्तृकत्वमेव नेश्वरकर्तृकत्वं तस्याप्रामाणिकत्वस्य कल्पने कल्पनागौरवप्रसङ्गादित्यभिप्रायेण तत्त्वप्रकाशिकायाः प्रवृत्तत्वेऽपि सुधाया अस्तु वेश्वरः प्रामाणिकस्तथाऽपि न तस्य सकलकारणत्वं किन्तु महदादिकार्यकर्तृत्वमेव न तु घटादिकर्तृत्वमपि उभयोरपि तदङ्गीकारे गौरवप्रसङ्गादित्यभ्युपगमवादेन प्र(कृत)वृत्तत्वेनाविरोधात् । तथा चात्र-पूर्वपक्षिणेत्यस्य तुष्यत्विति न्यायेनेश्वरमभ्युपगम्य पूर्वपक्षं कुर्वतेत्यर्थो बोध्यः ।

**श्री०** — **आशङ्कितमिति** । येन जीवस्याचिन्त्यशक्त्यङ्गीकारः स्यादिति भावः ॥ **तथा चेति** । कुलालादेर्घटादिकर्तृत्वे काऽचिन्त्यशक्त्यपेक्षेति भावः ।

---

**सु०** — **ननु च** व्यतिरेको गन्धवदिति **जीवानामनेकरूपतां सूत्रकार एव वक्ष्यति** । उत्क्रान्तिगत्यागतीनामित्यणुत्वं च । **न चाणोर्युगपदनेकरूपत्वं विना सांशतयोपपद्यत इति सांशताऽपि तत एव सिद्धा । तत्कथमत्र निरवयवत्वशब्दकोपो वेत्यवादीदिति गूढाभिसन्धेराशङ्कामविदिताभिप्राय इव परिहरति** अंशिनो हीत्यादिना **सार्धेन श्लोकद्वयेन** ।

**अनु०** — अंशिनो हि पटाद्या ये भिन्नैरेव परस्परम् ॥
अंशैरंशिन उच्यन्ते नैवमेव हि चेतनाः ॥
अतोऽनंशिन इत्येव श्रुतिरेतेषु वर्तते ॥
अप्यनेकस्वरूपेषु विशेषादेव केवलम् ॥
बहुस्वरूपताख्या तु तेष्वस्त्येव हि सांशता ॥

**तत्र बहुस्वरूपताख्येत्यनेन** वक्ष्यमाणमभ्युपैति । **बह्वित्यनेकत्वोपलक्षणम्** । **बहुस्वरूपतया ख्यायत** इति **बहुस्वरूपताख्या** । **तुशब्दः** श्रुतिनिषेध्याया **वैशिष्ट्यद्योतकः** । **तेषु चेतनेषु** । **हिशब्दः** प्रमाणप्रसिद्धिं द्योतयति । **अत एवास्त्येवेत्यवधारणम्** ।

ततश्चायमर्थः । अत एव वक्ष्यमाणानेकस्वरूपताऽणुत्वं च तदन्यथानुपपत्तिसिद्धा सांशता च । प्रामाणिकस्य त्यक्तुमशक्यत्वादिति । तर्हि कथमत्र तद्विरुद्धमुक्तमित्यत उक्तम् अंशिन इत्यादि । आद्यो हिशब्दः प्रमाणप्रसिद्धौ द्वितीयो यस्मादित्यर्थे । ये पटाद्या अंशिनः प्रसिद्धास्ते परस्परं भिन्नैरेवांशैरंशिना च वक्ष्यमाणप्रकारेण भिन्नाभिन्नैरेव न त्वत्यन्ताभिन्नैः तन्त्वादिभिरंशैरंशिन उच्यन्ते । चेतनास्त्वेवमेव पटादिवदुक्तरूपैरंशैरंशिनो न भवन्ति । किन्तु परस्परमंशिना चात्यन्ताभिन्नैः । यस्मादेवमतः प्रसिद्धांशिवैधर्म्यादेवानेकस्वरूपेषु तत एव सांशेष्वप्येतेषु चेतनेष्वनंशिन इति श्रुतिर्वर्तते । न तु सर्वथांऽशराहित्याभिप्रायेण । अतो न विरोध इति ।

ननु यदि भेदो नास्ति कथं तर्ह्यनेकत्वं तस्य भेदव्याप्तत्वात् । कथं चांशित्वम् । मत्वर्थस्य भेदेन विनाऽनुपपत्तेरित्यत उक्तं विशेषादेवेति । भेदाभावेऽपि केवलं तत्प्रतिनिधेर्विशेषादेवानेकस्वरूपेष्विति योजना । यद्वा 'अप्यनेकस्वरूपेषु' इत्यनेनैव वक्ष्यमाणमङ्गीकृत्यांशिन इत्यादिना विरोधः परिहृतः । तत्र भेदाभावे कथमनेकत्वमंशित्वं चेत्याशङ्कां विशेषादेवेत्यादिपादत्रयेण परिहरति । केवलमेव भेदेन विनैव तेषु बहुस्वरूपता तया ख्याप्यमाना सांशता चास्ति । कथम् । विशेषादेवेति । कुत एतत्कल्प्यते । श्रुतिद्वयविरोधादेवेति हिशब्देनाह । अत्र जीवस्येति प्रकृतेऽपि यच्चेतना इति सामान्येनोक्तम् । तेन चेतनमात्रेऽप्ययं न्याय इति सूचयति । अथवा यद्यंशिनो जीवास्तर्हि पटादिवदेव स्युरित्यस्याचेतनत्वमुपाधिमनेन द्योतयति ।

शे० — नन्वंशिनो हीत्युत्तरभाष्यमनर्थकम् । न चैतत् 'व्यतिरेको गन्धवत्' इति वक्ष्यमाणाभ्यनुज्ञापकमिति वाच्यम् । तस्याप्यनर्थकत्वात् । न च निरवयवत्वशब्दकोपोक्तेर्वक्ष्यमाणविरोधशङ्कानिरासार्थमिति वाच्यम् । प्रापकाभावेन तच्छङ्काया एवानुत्थानात् । कथञ्चिदुत्थानेऽपि बहुरूपेत्यादिनैव वक्ष्यमाणाभ्युपगमसिद्ध्या 'अंशिनो ही'त्यादिभाष्यवैयर्थ्यानिस्तारादित्यतो वक्ष्यमाणविरोधपरिहारायानंशित्वश्रुतिप्रदर्शनार्थत्वान्नानुपपत्तिरित्यभिप्रेत्योक्तरूपेण वाक्यं योजयितुं विरोधशङ्कां तावदुत्थापयति **नन्विति । गूढाभिसन्धेरिति** । सांशत्वे जीवस्य किं जीवकर्तृत्वस्येश्वराधीनत्वकल्पनया तदभावेऽपि स्वतो बहुत्वसद्भावेनैकदेशतः क्रियोपपत्तौ कृत्स्नप्रसक्तेरभावात् । विभिन्नांशाभावेन निरवयवत्वशब्दकोपस्यापि परिहारादतिरिक्तस्य चेश्वरकृत्यस्याभावादिति पूर्वपक्षिणोऽभिप्रायोऽत्र गूढः । एतस्याप्युद्घाटने 'अंशिनो हि' इत्यादिमूलस्यानुत्थानमेव स्यात् । अतो गूढत्वाश्रयणमिति भावः ॥ **वक्ष्यमाणमिति** । 'व्यतिरेको गन्धवत्' इति वक्ष्यमाणमित्यर्थः । अनेकस्वरूपेष्विति मूलानुरोधेनाह **बह्वित्यनेकत्वोपलक्षणमिति** ।

भाष्ये तुशब्दानर्थक्यमाशङ्क्यानंशत्वप्रतिपादकश्रुत्यविरोधाय नेकस्वरूपतास्याया: सांशताया 'अथ यः स जीव:' इति श्रुतिनिषेध्यसांशतापेक्षया वैशिष्ट्यद्योतनार्थत्वान्न तदिति भावेन तुशब्दार्थमाह **तुशब्द इति** । **अत एव** प्रमाणप्रसिद्धत्वादेव ।

**यस्मादित्यर्थ इति** । अत इत्युत्तरत्र श्रवणादिति भाव: । ननु 'अंशिनोंऽशैरभेदोऽयमंशेन तु भिदाभिदे'त्यत्र पटादीनामंशिनामेकैकेनांशेन भेदाभेदयो: सर्वैरंशैश्चाभेदस्य व्यवस्थितत्वात्कथमत्र सर्वेषां तन्तूनां पटेन भेदाभिधानमित्यतो व्यतिषङ्गविशेषविशिष्टै: सर्वतन्तुभि: पटस्यात्यन्ताभेदेऽप्यविवक्षित-व्यतिषङ्गै: सर्वतन्तुभिरपि परस्परभेदाभेदावेवेति तत्रैव वक्ष्यमाणत्वात्तेन रूपेण भिन्नाभिन्नत्वमत्रानुसन्धेय-मित्याशयेनोक्तं **वक्ष्यमाणप्रकारेणेति** ।

भाष्ये विशेषादेवेति विशेषोपन्यासस्यानर्थक्यमाशङ्क्यानेकत्वाद्युपपादकत्वान्न तदिति भावेनाने-कत्वाद्यनुपपत्तिशङ्कापरिहारकतया तद्योजयितुं तदनुपपत्तिशङ्कामुत्थापयति **नन्विति** ॥ **तस्येति** । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वादिति भाव: । मत्वर्थस्य संबन्धस्य भेदव्याप्तत्वात्संबन्धस्येति भाव: । उक्तयोजनायामनेकस्वरूपेष्वित्यस्यानुवृत्तिर्भवतीत्यपरितोषात्पक्षान्तरमारचयति **यद्वेति** । अस्त्ये-वेत्येवशब्दस्य केवलमित्यनेन संबन्धमाश्रित्य प्रकृतोपयोगितया तदर्थमाह **केवलेत्यादि** ॥ **श्रुतिद्वयेति** । सांशत्वनिरवयवत्वप्रतिपादकश्रुतिद्वयेत्यर्थ: ॥ **चेतनमात्रेऽपीति** । न केवलं जीव एवायं न्याय: किन्तु परमात्मन्यपीति सूचयितुं चेतना इति सामान्येनोक्तमित्यर्थ: । परमात्मन्यप्ययं न्याय इति सूचनस्यापि न प्रकृतोपयोगोऽस्तीत्यपरितोषादाह **अथवेति** ॥ **पटादिवदेवेति** । यथा पटादय: परस्परं भिन्नैरंशिना च भिन्नाभिन्नैरंशैरंशिन:, तथा जीवा अपि परस्परं भिन्नैरंशिना च भिन्नाभिन्नैरंशैरेवांशिन: स्युरित्यर्थ: । ततश्च प्रसिद्धांशवैधर्म्याभावादनंशत्वश्रुतिविरोध इति भाव: ॥ **अचेतनत्वमुपाधिमिति** । उक्तरूपैरंशै: अंशिषु पटादिष्वचेतनत्वसद्भावेन साध्यव्यापकत्वादंशित्वरूपसाधनवत्सु चेतनेषु चाचेतनत्वाभावेन साधनाव्यापकत्वाच्चेत्यर्थ: ॥ **अनेनेति** । चेतना इत्यनेनेत्यर्थ: ।

**स० — गूढाभिसन्धेरिति** । सांशत्वे किं जीवकर्तृत्वस्येश्वराधीनत्वकल्पनया । स्वतो बहुरूप-त्वसद्भावेन एकदेशत: क्रियोपपत्तौ कृत्स्नप्रसक्तेरभावात् । विभिन्नांशाभावेन निरवयवत्वशब्दव्याकोप-स्यापि परिहारात् । एतदतिरिक्तस्य चेश्वरकृत्यस्यादर्शनादित्यभिप्रायसद्भावेन गूढाभिसन्धिरित्युक्तम् । **वक्ष्यमाणमभ्युपैतीति** । 'व्यतिरेको गन्धवत्' इत्यादिवक्ष्यमाणं बहुरूपतेत्यनेनाभिप्रैतीत्यर्थ: । **अनेकस्वरूपेषु** इत्येतदनुसारेणाह **अनेकत्वोपलक्षणमिति** । **अत एवेति** । प्रमाणप्रसिद्धत्वा-देवेत्यर्थ: । **यद्वेति** । पूर्वं बहुस्वरूपतास्येत्यनेन 'व्यतिरेको गन्धवत्' इत्यादिवक्ष्यमाणमभ्युपैती-त्युक्तम् । इदानीं तु अनेकस्वरूपेष्वित्यनेनैव व्यतिरेको गन्धवदित्यादिवक्ष्यमाणमभ्युपैतीत्युच्यत इति

भावः । **श्रुतिद्वयविरोधादिति** । सांशत्वनिरंशत्वप्रतिपादकश्रुतिद्वयविरोधान्निमित्तादित्यर्थः । **चेतनमात्रेति** । न केवलं जीव एवायं न्यायः किन्तु परमात्मन्यपीति द्योतयितुमित्यर्थः ।

प० — **वक्ष्यतीति** । तृतीयपादे वक्ष्यतीत्यर्थः ॥ **गूढाभिसन्धेरिति** । वक्ष्यमाणबहुरूपत्वाणुत्वोभयान्यथानुपपत्तिसिद्धसांशत्वभिन्नांशत्वराहित्याभ्यां कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपरूपदोषद्वयपरिहारसंभवेन स्वत एव जीवस्य कर्तृत्वसंभवे व्यर्थमीश्वराधीनत्वकल्पनमित्यभिप्रायो गूढ इति ज्ञातव्यम् ॥ **अविदिताभिप्राय इवेति** । (अ)विदिताभिप्रायत्वे बहुत्वेनाविनाभावादित्यादिकमेवोच्येत सार्धश्लोकद्वयं न वक्तव्यं स्यादिति भावः । **वक्ष्यमाणमिति** । अणुत्वं बहुत्वं तल्लभ्यसांशत्वं चेत्यर्थः । द्विरूपस्यापि परिग्रहायाह **बह्वित्यनेकत्वोपलक्षणमिति** । अत एवानेकस्वरूपेष्वित्युक्तिर्मूल इति भावः । ख्यायत इति कर्मणि बहुस्वरूपत्वोक्त्यन्यथानुपपत्त्या ज्ञायमानेत्यर्थः । सांशताविशेषणमेतत् ॥ **श्रुतीति** । 'अथ यः स जीवः स नित्यो निरवयव, इति श्रुतिनिषेध्यायाः सांशतायाः परस्परमंशिना च भिन्नांशत्वरूपवैशिष्ट्यद्योतक इत्यर्थः । बहुस्वरूपतेत्युपलक्षणमिति भावेनोक्तम् **अणुत्वं चेति** । ख्यापदार्थमाह **तदन्यथेति** । अत्रानुक्तमंशिनाभिन्नाभिन्नैरित्येतत्कुत उच्यत इत्यत आह **वक्ष्यमाणप्रकारेणेति** । 'अंशिनोऽंशैरभेदोऽयमंशेन तु भिदाभिदा । सर्वप्रत्यक्षविषयः कथमेव ह्यपोह्यते' इति वैशेषिकनये समवायनिरासप्रस्तावे वक्ष्यमाणप्रकारेणेत्यर्थः । हस्तवितस्त्याद्यंशैरत्यन्ताभेदादाह **तन्त्वादिभिरिति** ॥ **अनंशिन इति श्रुतिरिति** ॥ पूर्वोक्तनिरवयवत्वश्रुतिरित्यर्थः ॥ **श्रुतिद्वयेति** । 'अथ यः जीवः स नित्यो निरवयव' इति । एवं 'अंशिनो जीवादंशा पृथक् गच्छन्ती'ति निरंशत्वसांशत्वबोधकश्रुतिद्वयविरोधादेवेत्यर्थः । **चेतनमात्रेपीति** । तेनेश्वरश्रीतत्वयोरप्ययं न्यायो ज्ञेय इत्युक्तं भवति ॥ **पटादिवदेवेति** ॥ उत्पादविनाशादिमन्तः स्युरित्यर्थः ॥ **अनेनेति** । चेतना इति कथनेनेत्यर्थः ।

या० — **गूढाभिसन्धेराशङ्कामिति** । सांशत्वे किं जीवकर्तृत्वस्येश्वराधीनत्वकल्पनया तदभावेऽपि स्वतो बहुत्वसद्भावेनैकदेशतः क्रियोपपत्तौ कृत्स्नप्रसक्तेरभावात् । विभिन्नांशाभावेन निरवयवत्वशब्दकोपस्यापि परिहारात् । एतदतिरिक्तस्य चेश्वरकृत्यस्यादर्शनादिति पूर्वपक्षिणोऽभिप्रायोऽत्र गूढ इति द्रष्टव्यम् । एतस्याभिप्रायस्यात्रैवोद्घाटने तु'अंशिनो ही' त्यादिमूलस्यानुत्थानमेव स्यात् । अत एवमवतारिकेति ध्येयम् ॥ **वक्ष्यमाणमिति** । व्यतिरेको गन्धवदित्यादिना वक्ष्यमाणमित्यर्थः । अनेकस्वरूपेष्विति मूलानुसारेण व्याख्याति **अनेकत्वोपलक्षणमिति** ॥ **ख्यायत इति** । ज्ञायत इत्यर्थः । तथा चाणोर्युगपदनेकरूपतया ज्ञायमानेत्युक्तं भवति ॥ **श्रुतिनिषेध्याया इति** । भिन्नांशताया इत्यर्थः ॥ **वक्ष्यमाणप्रकारेणेति** । समयपाद इति शेषः । **श्रुतिद्वयविरोधादिति** । सांशत्वनिरंशत्वप्रतिपादक-

श्रुतिद्वयविरोधादेवेत्यर्थः ॥ **चेतनमात्रेऽपीति** । परमात्मन्यप्ययं न्यायोऽस्तीति सूचयितुमित्यर्थः ॥ **अनेनेति** । चेतनग्रहणेनेत्यर्थः ॥

**श्री०— तत एवेति** । अणुत्वानेकत्वयोः प्रतिपादनस्य सांशतां विनाऽनुपपन्नत्वादेवेत्यर्थः । स्वतो बहुरूपत्वसद्भावे कृत्स्नप्रसक्त्यादेरभावात्किमीश्वराधीनत्वकल्पनयेत्यभिप्रायो गूढः ॥ **वक्ष्यमाणम्** व्यतिरेक इति सूत्रेण वक्ष्यमाणमनेकरूपत्वम् । 'अप्यनेकस्वरूपेषु' इत्येतदनुसारेणाह **बह्विति** । मूले बहुस्वरूपताख्या तन्नामिकेति बहुस्वरूपत्वसांशत्वयोरैक्याप्रतीतेराह **ख्यायत इति** । ज्ञायत इत्यर्थः । तथा च बहुस्वरूपतया ज्ञायमानेत्यर्थः ॥ **श्रुतीति** । निरवयव इति श्रुत्या निषिद्धं यद्भिन्नांशोपेतत्वरूपं सावयवत्वं तन्नाङ्गीक्रियते । बहुस्वरूपताख्या सांशता त्वस्त्येवेति तदपेक्षया वैलक्षण्यद्योतनार्थ इत्यर्थः । **अत एव** प्रमाणप्रसिद्धत्वादेव ॥ **कथमत्रेति** । अत्र **निरवयवत्वशब्दव्याकोपो वेति** सूत्रे वक्ष्यमाणानेकरूपत्वविरुद्धं निरवयवत्वं कथमुक्तमित्यर्थः ॥ **प्रसिद्धेति** । तत्त्वादीत्यर्थः ॥ **वैधर्म्यादिति** । भिन्नांशराहित्यमेव तद्वैधर्म्यम् । **तत एव** अनेकरूपत्वादेव । **तस्य** अनेकत्वस्य ॥ **यद्वेति** । पूर्वं बहुरूपताख्येत्यनेन व्यतिरेक इति वक्ष्यमाणमङ्गीकरोतीत्युक्तम्, इदानीमन्यथेति भेदः । **इत्यादिना** भिन्नांशराहित्यकथनेन । **विरोधो** निरवयवत्वशब्दविरोधः । **एतत्** सांशत्वं भिन्नांशराहित्यं चेत्यर्थः ॥ **श्रुतिद्वयेति** । सांशत्वनिरंशत्वप्रतिपादकश्रुतिद्वयेत्यर्थः ॥ **चेतना इति** । तथा च जीवस्येत्येकवचनं समुदायापेक्षमित्युक्तं भवति ॥ **मात्र इति** । अयं न्यायो विशेषेणानेकरूपत्वोपपादनरूपो न जीवमात्रे, किन्तु परमात्मन्यपीत्यभिप्रायेणेत्यर्थः । समस्तानामपि चेतनानामभिन्नांशवत्त्वं वर्तत एव । तथाऽपि हरेर्देवानां योगिनां चाभिन्नानामप्यंशानामतिरेकोऽस्ति । बहिर्निर्गमोऽस्तीति यावत् । नैवं मानुषाणामिति विशेषो द्रष्टव्यः । स्युः भिन्नांशोपेता इति शेषः । तथा च जीवा भिन्नांशोपेताः सांशत्वात्पटवदित्यनुमानस्येत्यर्थः ।

**च०— ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ मत्वर्थस्येति** । मतुबर्थसमानार्थक'इनि'प्रत्ययार्थस्येत्यर्थः ।

**सु०— नन्वेवं तर्हि किं जीवकर्तृत्वस्येश्वराधीनत्वकल्पनया । तदभावेऽपि स्वतो बहुरूपत्वसद्भावेनैकदेशतः क्रियोपपत्तौ कृत्स्नप्रसक्तेरभावात् । विभिन्नांशाभावेन निरवयवत्वशब्दकोपस्यापि परिहारात् । एतदतिरिक्तस्य चेश्वरकृत्यस्यादर्शनादिति पूर्वपक्षिणा स्वाभिसन्धावुद्घाटिते सत्याह** बहुत्वेनेति ।

अनु० — बहुत्वेनाविनाभावाद्भिन्नता नियमाद्भवेत् ॥
यदि नैवं नियमकृद्भगवान्पुरुषोत्तमः ॥ २-१-७ ॥

यदि भगवान्पुरुषोत्तम एवं न नियमकृद्बहुत्वेऽपि भेदो जीवेषु मा भूदिति व्यवस्थायाः कर्ता न स्यात् । तदा बहुत्वेन हेतुना जीवेष्वपि भिन्नता भवेत् । बहुत्वसङ्ख्याया भिन्नत्वेनाविनाभावलक्षणान्नियमात् । यथोक्तम् 'तदनुविधानात्पृथक्त्वमि'ति ।

एतदुक्तं भवति । परमेश्वरानपेक्षस्य जीवस्य कर्तृत्वाङ्गीकारे न सर्वथोक्तप्रसङ्गद्वयपरिहारः । तथा हि । कृत्स्नप्रसक्तिस्तावत्कथं परिहरणीया । बहुत्वसद्भावेनेति चेत् । तर्हि बहुत्वस्य लोके भेदाविनाभूतत्वेन जीवस्य बहुत्वे भिन्नत्वमप्यापद्येत । तथा च दुरात्मा निरवयवत्वशब्दकोपो दुष्परिहरः । अथ तत्परिहारार्थं भेदो नेष्यते । तदा व्यापकनिवृत्त्या व्याप्यनिवृत्तेरावश्यकत्वाद्बहुत्वसङ्ख्याऽपि त्याज्या स्यात् । तथा च पुनः सैव कृत्या कृत्स्नप्रसक्तिरास्कन्देत । अथ जडेष्वेव यत्र बहुत्वं तत्र भेद इति नियमो न चेतनेष्विति चेत् । कुत एतत् । तथा दर्शनादिति चेन्न । यतः कारकप्रश्नोऽयं न प्रमाणप्रश्नः । स्वभावोऽयं पदार्थानामिति चेन्न । अनीश्वरवादपादप्रसारिकापातात् । किञ्च विरुद्धश्च स्वभावश्चेति कथम् । न हि स्वयमेव स्वेन सद्वितीय इति युक्तम् । प्रमितत्वान्न विरोध इति तु प्रत्युक्तम् । चैतन्यसामर्थ्यादिदं घटत इति चेत् । धूमवानपि कश्चिन्निरग्निको घटताम् । अथ विशेषशक्त्येदमुपपद्यत इति चेत् । घटेऽप्युपपद्यताम् । न हि तत्र विशेषो नास्ति । विशेषवैचित्र्यान्नेति चेत् । तदेव कुतः । तस्माद्भगवानेव स्वरूपस्वभावविशेषाणां नियामकश्चैतन्यमवच्छेदकं विधाय विशेषं निमित्तीकृत्य विरुद्धे अप्यभेदबहुत्वे समाविश्याभेदेन निरवयवत्वशब्दकोपमपास्य बहुत्वेन कृत्स्नप्रसक्तिं न्यक्कृत्य कार्यानुरूपं सामर्थ्यविशेषं (नि)योजयञ्जीवेन कारयतीत्यङ्गीकर्तव्यमिति ।

नन्वेतत्सर्वं जीवसामर्थ्यादिनाऽशक्यसम्पादनं कथं भगवानपि सम्पादयेदित्यत आह तस्य त्विति ।

अनु० — तस्य त्वशेषशक्तित्वाद्युज्यते सर्वमेव हि ।
तदेवमस्य सूत्रस्यैवं तात्पर्यव्याख्याने न कश्चिद्विरोध इति स्थितम् ॥ २-१-७ ॥

शे० — ननु 'बहुत्वेनाविनाभावादि'त्यादिनेश्वराधीनत्वे जीवकर्तृत्वस्य बहुत्वेन भेदापादनं क्रियते तदनर्थकम् । न च कृत्स्नप्रसक्त्याद्युपपादनार्थं तदिति वाच्यम् । तस्य पूर्वमेव व्युत्पादिततया पुनस्तद्व्युत्पादनानर्थक्यादित्यतः पूर्वपक्ष्यभिसन्धिनिराकरणार्थत्वान्न तदिति भावेन तन्निरासपरतयोत्तर-

भाष्यं योजयितुं पूर्वपक्षिणोऽभिसन्धिमुद्घाटयति नन्विति ॥ एवं तर्हीति । सांशत्वाज्जीवस्य यदि न वक्ष्यमाणविशेषस्तर्हीत्यर्थः । अविनाभावान्नियमादित्यनयोरन्यतरेण मूले विवक्षितसिद्धे-रन्यतरवैयर्थ्यमित्यतो योजयति अविनाभावेति । बहुत्वसङ्ख्याभेदाविनाभावसिद्धावेतद्भवेत्स एव कुत इत्यतस्तत्र वैशेषिकसूत्रं प्रमाणयति यथोक्तमिति । यद्यपि च तदनुविधानादेकपृथक्त्वमिति द्वितीयाध्यायस्याद्ये आह्निके पठितम् । तथाऽप्याकाशादिप्रकरणे सर्वत्र तदनुविधानात्पृथक्त्वमित्येव प्रशस्तपादाचार्यैः पठितत्वात्तथैवोदाहृतम् । अत्र सूत्रे भेदापरपर्यायस्य पृथक्त्वस्यैव पृथक्त्वपदेन ग्रहणान्नियमेन पृथक्त्वं तदनेकत्वमनुविधत्त इत्यनेकवाद्भेदसिद्धिरित्यर्थपर्यवसानाद्बहुत्वादिसङ्ख्याया भेदाविनाभूतत्वसिद्धिरिति ध्येयम् ।

ननु परमेश्वरानपेक्षस्य जीवस्य कर्तृत्वाङ्गीकारे बहुत्वेन भिन्नत्वमात्रमापाद्यते न कृत्स्नप्रसक्त्यादिकमिति कथमस्योक्तदोषोपपादकत्वम् । न च भिन्नत्वापादनमुखेन निरवयवत्वशब्दव्याकोपसूचनात्तत्सिद्धिरिति वाच्यम् । तावताऽपि कृत्स्नप्रसक्त्यप्राप्त्योक्तप्रसङ्गद्वयोपपादकत्वायोगादित्यतस्तदुपपादयति एतदुक्तं भवतीति ॥ अथेति । ततश्च बहुत्वसद्भावान्न कृत्स्नप्रसक्तिर्भेदाभावाच्च न निरवयवत्वशब्दव्याकोपोऽपीति भावः । उक्तरूपनियमस्यान्यकृतत्वानुपपत्त्याऽवश्यमीश्वरकर्तृकत्वस्याङ्गीकर्तव्यतया तन्नियमकर्तृत्वेनैवेश्वराधीनत्वप्राप्तेर्न तदनपेक्षस्य जीवस्य कर्तृत्वमित्यभिप्रेत्योत्तरमाह कुत एतदिति । एतदपि कुतोऽन्यस्मात्, न कुतोऽपि, किन्त्वीश्वरादेवेत्यर्थः । अभिप्रायमजानानः शङ्कते तथेति । अचेतनेष्वेव बहुत्वभेदयोर्दर्शनाच्चेतने चादर्शनादुक्तनियमसिद्धिरित्यर्थः । भवेदेतदेवं यदि कुत एतदिति नियमज्ञापकप्रमाणप्रश्नः स्यात् । न चैवम् । किन्नामोक्तरूपनियमकारकवस्तुप्रश्नः । तत्र च दर्शनोपन्यासस्य न सङ्गतिरिति परिहरति न यत इति । ननूक्तनियमस्य पदार्थस्वभावत्वात्स्वभावस्य चान्याधीनत्वे स्वभावत्वहानेरनन्याधीनत्वान्न तत्कारकप्रश्नः सङ्गत इति शङ्कते स्वभाव इति । तथा सत्यपसिद्धान्त इत्याशयेन परिहरति अनीश्वरेति । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तूक्तनियमस्य विरुद्धत्वात्स्वभावत्वमेव न सम्भवतीत्याह किञ्चेति । विरुद्धत्वमेवोपपादयति न हीति ॥ सद्वितीय इति । अनेक इत्यर्थः ॥ प्रत्युक्तमिति । यतः कारकप्रश्नोऽयं न प्रमाणप्रश्न इति प्रत्युक्तमित्यर्थः । ततश्च विरुद्धस्यापि स्वभावत्वकारकतया तत्रेश्वराधीनत्वस्यावश्याभ्युपेयत्वान्न तदनपेक्षस्य जीवस्य कर्तृत्वमिति भावः । अस्तूक्तविधनियमस्य कारकापेक्षत्वं तथाऽपि नेश्वराधीनत्वसिद्धिः । अन्यस्याप्युक्तनियमकारकत्वसम्भवादित्यतस्तदनुपपत्तिं दर्शयितुं तत्किं चैतन्यसामर्थ्यमभिमतं विशेषशक्तिर्वा विशेषशक्तिवैचित्र्यं वेति विकल्पान्मनसि निधायाद्यं शङ्कते चैतन्येति । दूषयति धूमवानिति । पर्वतसामर्थ्यादिति शेषः । अविशेषादिति भावः । द्वितीयमुत्थाप्य दूषयति अथेति । तृतीयमाशङ्कते विशेषेति ॥ तदेव कुत इति । तथा

च तद्वैचित्र्यकारकतयाऽपीश्वरस्याभ्युपगमनीयत्वान्न तदनपेक्षस्य कर्तृत्वमुपपद्यतेति भावः । ननु च विशेषाचिन्त्यशक्त्योरन्यतरमात्रेणैव निर्वाहोपपत्तेरन्यतरवैयर्थ्यमित्याशङ्कामुभयकार्योपदर्शनेन परिहरन्नुक्त-नियमस्यान्यप्रयुक्तत्वनिरासेन लब्धमर्थं दर्शयन्नुपसंहरति **तस्मादिति** ॥ **अस्य सूत्रस्येति** । कृत्स्नप्रसक्ती-त्य दिसूत्रस्येत्यर्थः ॥ **एवं तात्पर्येति** । यदि भागेनेति वाक्योक्ततात्पर्येत्यर्थः ॥ **न कश्चिदिति** । 'कर्ता शास्त्रार्थवत्त्वादि'ति वक्ष्यमाणविरोधो वा 'व्यतिरेको गन्धवदि'त्यादिना विरोधो वेत्येवं न कोऽपि विरोध इत्यर्थः ॥

स० — **प्रत्युक्तमिति** । यतः कारकप्रश्नोऽयम् न प्रमाणप्रश्न इत्यादिना प्रत्युक्तमित्यर्थः ॥

प० — 'एवं नियमकृदि'त्यनुवादः बहुत्वेपीत्यादि व्याख्या ॥ **यथोक्तमिति** । तार्किकैः तदनुविधानाद्बहुत्वसंख्याविधानात्पृथक्त्वं भेद इत्यर्थः ॥ **भिन्नत्वमपीति** । अंशानामंशिना परस्परं च भिन्नत्वमप्यापद्येतेत्यर्थः । **दुरात्मा** दुष्टस्वरूपः ॥ **कृत्येति** । अभिचाररूपेत्यर्थः । चेतनपदप्रयोग-सूचितं समाधिमाशङ्कते **अथ जडेष्विति** ॥ **यतः कारकप्रश्नोऽयमिति** । कुत एतदिति प्रश्नः कुतो ज्ञापकादिति भावेन न भवति येन तथा दर्शनादिति समाधिः सङ्गतः स्यात् । किन्तु कुतः कारणात् किंकृतमेतज्जडयोरेतद्वैषम्यमिति भावेन प्रश्नः । तस्य तूत्तरं एतस्मान्निमित्तादिति वाच्यमित्यर्थः । तत्तत्स्व-भाव एव एतद्वैषम्यकारक इति स्वभाववादमाशङ्क्य निराह **स्वभावोयमिति** ॥ **प्रसारिकेति** । ग्रहणे-त्यर्थः । पादप्रक्षेप इति वाऽर्थः ॥ **सद्वितीय इति** । अनेकरूप इत्यर्थः । **प्रत्युक्तमिति** । यतः कारक-प्रश्नोऽयं न प्रमाणप्रश्न इत्यनेनेति भावः ॥ **इदमिति** । स्वेनैवानेकरूपत्वं सद्वितीयत्वं घटत इत्यर्थः । क्लृप्ताविनाभावानादरेण प्रयोजकान्तरशङ्कायां अतिप्रसङ्गमाह **धूमवानपीति** ॥ **इदमिति** । स्वेनैव सद्वितीयत्वमित्यर्थः । नहि तत्र विशेषो नास्तीति काकुः । अस्त्येव खलु तत्रापि विशेष इत्यर्थः ॥ **नेतीति** । घटेप्युपपद्यतामित्येतन्नेत्यर्थः ॥ **तदेवेति** । विशेषवैचित्र्यमेव कुतः कारणादित्यर्थः ॥ **अङ्गीकर्तव्यमितीति** । इतिशब्दस्यैतदुक्तं भवतीति पूर्वेणान्वयः । अशक्यसंपादनमिति विभागः । निक्षिप्तत्वादुपसंहरति **तदेवमिति** ॥ २–१–७ ॥

या० — **अविनाभावलक्षणादिति** । तथा च मूले न पुनरुक्तिरिति भावः ॥ **सद्वितीय इति** । अनेक इत्यर्थः ॥ **प्रत्युक्तमिति** । यतः कारकप्रश्नोऽयं न प्रमाणप्रश्न इति प्रत्युक्तमित्यर्थः ॥ **विशेषं निमित्तीकृत्येति** । एतेन विशेषाचिन्त्यशक्त्योरुभयोरङ्गीकारो न युक्तोऽन्यतरमात्रेण निर्वाहो-पपत्तेरिति शङ्काऽपि परास्ता वेदितव्या । शक्तोऽपि भगवान्नियतैरेव कारणैरिदं स्वेच्छया करोतीत्युक्त-त्वादिति भावः ॥ २–१–७ ॥

**श्री० — तदभावेऽपि** ईश्वराधीनत्वाभावेऽपि । **स्वतः** ईश्वरनैरपेक्ष्येण ॥ **एतदतिरिक्तस्येति** । कृत्स्नप्रसक्तिपरिहारनिरवयवत्वशब्दव्याकोपपरिहारद्वयातिरिक्तस्येत्यर्थः । तथा चैतदुभयपरिहारस्तु स्वत इति मदुक्तरीत्याऽन्यथासिद्ध इति किमीश्वरकृत्यमिति भावः ॥ **आहेति** । त्वदुक्तरीत्या द्वयोः परिहारेऽपि त्वदङ्गीकृतबहुरूपत्वेन प्राप्तभिन्नत्वरूपानर्थपरिहारायापीश्वरोऽङ्गीकार्य इत्यस्तीश्वरकृत्यमित्याहेत्यर्थः । बहुत्वेनेत्यस्य विपरिणामेन सङ्ख्याया इत्युक्तम् ॥ **तदिति** । बहुत्वस्यानुविधानात् पृथक्त्वव्याप्तत्वादित्यर्थः । **पृथक्त्वं** भेदः ॥ **प्रसङ्गद्वयेति** । कृत्स्नप्रसक्तिनिरवयवत्वशब्दव्याकोपद्वयरूपेत्यर्थः ॥ **बहुत्वेति** । बहुरूपत्वेत्यर्थः ॥ **व्यापकेति** । व्यापकीभूतभेदेत्यर्थः ॥ **व्याप्येति** । बहुत्वेत्यर्थः ॥ **कारकेति** । चेतनेषु बहुत्वेऽपि भेदो नेत्येतत्कुतः कारणादिति नियमकारकप्रश्नेदर्शनादिति प्रमाणोपन्यासोऽसङ्गत इत्यर्थः । अयं जडेष्वेव बहुत्वेऽपि भेदः स्वभावः । चेतनेषु बहुत्वेऽपि भेदाभाव एव स्वभाव इति जडानां चेतनानां च पदार्थानां स्वभावः कारकप्रश्नोत्तरमित्यर्थः । अनीश्वरवादे पादप्रसारिकेत्यर्थः ॥ **किञ्चेति** ॥ बहुत्वं भेदाभावश्चेति विरुद्धं तच्चेतने कथं स्वभाव इत्यर्थः ॥ **युक्तमिति** । चेतनेषु भेदाभावेऽपि बहुत्वमस्तीत्युक्ते स्वयमेव स्वेन सद्वितीय इति प्राप्तं तच्च न युक्तमित्यर्थः ॥ **प्रमितत्वादिति** । चेतनेषु भेदाभावेऽपि बहुत्वस्येति शेषः । **प्रत्युक्तम्** चेतनेषु भेदाभावे बहुत्वं केन कारणेनेति कारकप्रश्ने प्रमितत्वादिति प्रमाणोपन्यासोऽसङ्गतो, यतः कारकप्रश्नोऽयमिति निराकृतमित्यर्थः । इदं भेदाभावेऽपि चेतनेषु बहुत्वम् । ननु तत्र विशेषाभावात्कथं घटे भेदाभावेऽपि चेतनेष्विव बहुत्वमुपपद्यतामित्युच्यत इत्यत आह **न हीति** । 'सोऽस्ति वस्तुष्वशेषतः' इत्युक्तत्वादिति भावः । ननु यद्यपि घटादावप्यस्ति विशेषस्तथाऽपि चेतननिष्ठविशेषस्यैव भेदाभावेऽपि बहुत्वोपपादकत्वसामर्थ्यं न घटनिष्ठविशेषस्येति विशेषस्य विचित्रस्वभावत्वाद्घटे भेदाभावेऽपि न बहुत्वमुपपन्नमित्याशयेन शङ्कते **विशेषेति** । तदेव चेतनघटरूपजडनिष्ठविशेषयोर्वैचित्र्यमेवेत्यर्थः ॥ **अवच्छेदकमिति** । अन्यथा घटादावपि जडेऽभेदबहुत्वयोः समावेशं कुतो न घटयेदिति शङ्कापरिहाराय चैतन्यं घटादिव्यावृत्त्यर्थमवच्छेदकं करोति, चेतनेष्वेवेत्थं करोतीति यावदित्यर्थः ॥ २-१-७ ॥

॥ इति इतरव्यपदेशाधिकरणम् ॥

## ॥ अथ शब्दमूलत्वाधिकरणम् ॥

सु० — ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ नन्वीश्वरस्यापि कर्तृत्वं न युज्यते । जीववत्कृस्नप्रसक्तेः । न हि ब्रह्माण्डपिपीलिका(ण्ड)निर्माणे समं सामर्थ्यं प्रयुञ्जानः प्रेक्षावान्भवति । गत्यन्तराभावान्न दोष इति चेन्न । ईश्वरत्वव्याघातात् । अथैतत्परिहारार्थमेकदेशेन प्रवृत्तिरङ्गीक्रियते तदा 'नेह नानेत्यादि' निरवयवत्वशब्दकोपः स्यात् ॥ शरीरेन्द्रियादिविकलत्वाच्च न कर्तृत्वम् । न हि कश्चिच्छरीरादिविकलः कर्तोपलब्धः । भूम्याद्याधारविधुरत्वाच्च । एवं दौर्घट्येऽपि यदि कर्तृत्वमीश्वरस्य स्यात्तदा जीवस्यापि किन्न स्यात् । विशेषादर्शनात् । एवञ्च सर्वकर्तृत्वं दूरनिरस्तमित्ययं पूर्वपक्षोऽत्राधिकरणे निरस्यते । तस्य तात्पर्यमाह तस्य त्विति ।

अनु० — ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥

('तस्य त्वशेषशक्तित्वाद्युज्यते सर्वमेव च ॥' इति २०७९ पृष्ठे द्रष्टव्यम् ।)

तुशब्दो जीवाद्विशेषं द्योतयति । चशब्दो हेतुसमुच्चये । ईश्वरस्यालौकिकत्वश्रुतेरागमैकगम्यत्वेन युक्तिविरोधानवकाशात् 'विचित्रशक्तिः पुरुषः', 'सर्वैर्युक्ता शक्तिभिर्देवता सा' इत्यादिश्रुतिभिर्विचित्राशेषशक्तित्वावगमाच्च । सर्वे भिन्नांशरहितस्यापि कार्येषु कृत्स्नप्रसक्त्यभावः, स्वरूपांशबाहुल्येऽपि भेदाभावः, अंशतः कार्यकरणेऽपि निरवयवत्वशब्दकोपाभावः, देहादिरहितस्यापि कर्तृत्वनिर्वाह इत्यादि, युज्यत इति ।

ननु दुर्घटमपि जीवकर्तृत्वमीश्वरशक्त्या घटत इत्यतीताधिकरणेऽभिहितम् । तथा च कथमत्र पूर्वपक्षावकाशः । यो हि परत्र प्रमितं घटयितुमीष्टे सः स्वस्मिन्न ईष्टे इत्यसंभावितम् । उच्यते । नैषोर्थः सूत्रकृताऽतीताधिकरणेऽभिहितः । किन्त्वागामिनमर्थं मनसि निधाय जीवकर्तृत्ववादनिरास एव विहितः । भाष्यकारेण तु शिष्यहितैषिणा वक्ष्यमाणमप्यर्थमाकृष्य पूर्वोत्तरविरोधः परिहृत इति ।

शे० — ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ श्रुतेस्त्वित्यधिकरणस्य मूलेऽव्याख्यातत्वात्स्वव्याख्यानदृढीकरणार्थपरव्याख्याननिराकरणपरोत्तरभाष्यानर्थक्यमाशङ्क्य पूर्वाधिकरणशेषतया योजितस्य 'तस्य त्वि'त्यादिभाष्यस्यैवैतदधिकरणव्याख्यानरूपत्वान्न भाष्ये स्वव्याख्यानदृढीकरणार्थपरव्याख्याननिराकरणपरोत्तरभाष्यानर्थक्यमित्यभिप्रेत्यैतदधिकरणतात्पर्यकथनरूपतया भाष्यं योजयितुमेतदधिकरण-

पूर्वपक्षमनुवदति **नन्विति** । कृत्स्नप्रसक्तावनुभवविरोधस्य पूर्वत्रैवात्रायोगात्तत्प्रयुक्तदोषान्तरमाह **न हीति** ॥ **न दोष इति** । समसामर्थ्यप्रयोगो नाप्रेक्षावत्त्वप्रसङ्गरूपदोषहेतुरित्यर्थः । नन्वेकदेशेन प्रवृत्तावपि 'नेह नाने'त्यादिश्रुतिविरोधः । एकदेशस्य भेदानङ्गीकारादित्यतो 'विकरणत्वादि'त्यादिना बाधकतया शङ्कितं 'सम्बन्धानुपपत्तेरि'त्यादिनाऽन्यत्रोपपादितं हेत्वन्तरमाह **शरीरेति** । 'अधिष्ठानानुपपत्तेश्चे'ति सूत्रोक्तं हेतुमाह **भूम्यादीति** । यद्यप्यारम्भणाधिकरणे स्वाधीनसत्ताशक्त्यादिमदुपादानादिकमस्तीति समर्थितं तथाऽपि स्वाधीनसत्ताशक्त्यादिमति स्वयं कथं तिष्ठेदित्याशयेनेदमुक्तमिति ध्येयम् । ननु चैतेषां जीवपक्ष एव दोषत्वं नेश्वरपक्षेऽपीति न तस्य कर्तृत्वानुपपत्तिरित्यत आह **विशेषेति** । ईश्वरे तदस्पर्शे निमित्तस्य जीवादतिशयस्यादर्शनादित्यर्थः । ततश्च विशेषमन्तरेणापि दोषासंस्पर्शे किं जीवेनापराद्धमिति भावः । भाष्ये तुशब्दस्यानर्थक्यमाशङ्क्येश्वरे दोषास्पर्शे निमित्तभूतस्य जीवापेक्षयाऽतिशयस्य तदभावशङ्कापरिहाराय द्योतनार्थत्वान्नानर्थक्यमित्यभिप्रायेण तदर्थमाह **तुशब्द इति** । अनेन तुशब्दो विशेषार्थ इत्युक्तं भवति । 'श्रुतेस्तु शब्दमूलत्वादि'ति सूत्रे श्रुतेरित्यनेन श्रुतिमूलत्वादित्यनेन चोक्तहेतुभ्यां सह 'आत्मनि' इति, 'सर्वोपेता' इति सूत्रद्वयकथितयुक्तेः समुच्चये भाष्ये एवशब्द इत्याह **चशब्द इति** । अनेनाशेषशक्तित्वाच्चेति भिन्नक्रमतया चशब्दसम्बन्ध उक्तो भवति । समुच्चयहेतुरूपं दर्शयन्प्रकृताशेषाक्षेपसमाधानपरतया वाक्यं योजयति **ईश्वरस्येत्यादिना** । देहादीत्यादिपदेनेन्द्रियादिपरिग्रहः । इत्यादीत्यादिपदेन भूम्याधाररहितस्यापि कर्तृत्वनिर्वाहपरिग्रहः ।

'तस्य त्वशेषशक्तित्वादि'ति भाष्यानुरोधादशेषशक्तित्वयुक्तिः पूर्वाधिकरणोक्तैवेति मत्वाऽधिकरणारम्भमाक्षिपति **नन्विति** । उक्तयुक्तेः पूर्वाधिकरणे सूत्रकारेणानुक्तेर्न गतार्थत्वमित्याह **उच्यत इति** । कथं तर्हि पूर्वाधिकरणसिद्धान्तनिर्वाह इति शङ्कते **किन्त्विति** । परिहरति **आगामिनमिति** । कथं तर्हि भाष्येऽशेषशक्तित्वोपन्यास इत्यत आह **भाष्यकारेण त्विति** ॥ **पूर्वोत्तरविरोध इति** । कृत्स्नप्रसक्तिरिति पूर्वस्य कर्ता शास्त्रार्थवत्त्वादित्याद्युत्तरेण विरोध इत्यर्थः ।

स० — **ईश्वरत्वव्याघातादिति** । अल्पसामर्थ्यं प्रयोक्तुं सामर्थ्याभावे ईश्वरत्वमनुपपन्नमित्यर्थः । **वक्ष्यमाणमिति** । 'श्रुतेस्तु शब्दमूलत्वात्' इत्यत्र वक्ष्यमाणमित्यर्थः । **पूर्वोत्तरविरोध इति** । 'इतरव्यपदेशात्' इति पूर्वस्य, 'कर्ता शास्त्रार्थवत्त्वात्' इत्युत्तरस्य च विरोधः परिहृत इत्यर्थः ।

प० — ॐ **श्रुतेस्तु शब्दमूलत्वात्** ॐ ॥ 'तस्य त्वि'त्यादिना तात्पर्योक्तेः कः प्रसङ्ग इत्यतो व्यावर्त्यमाह **नन्वित्यादिना** । आद्यसूत्रव्यावर्त्यमाह **जीववत्कृत्स्नप्रसक्तेरिति** । एतेन पूर्वसिद्धान्त-

न्यायेन प्राप्तः पूर्वपक्षोऽत्रापोद्यते इत्यापवादिकी सङ्गतिरपि सूचिता । अस्तु को दोष इत्यत आह **न हीति** ॥ **एकदेशेनेति** । पिपीलिकाण्डनिर्माणादाविति योज्यम् । विकरणत्वान्नेति चेदिति सौत्र-शङ्काभागं व्यनक्ति **शरीरेति** । 'आत्मनि चैवं विचित्राश्च हि' तिसूत्रव्यावर्त्यमाह **एवं दौर्घट्येपीति** ॥ **हेतुसमुच्चय इति** । 'आत्मनि चैव' मितिसूत्रोक्तविचित्राशेषशक्तित्वादिहेतुना सह श्रुतेस्त्विति सूत्रोक्ता-लौकिकत्वश्रवणागमैकगम्यत्वहेतोर्मूलानुक्तयोः समुच्चये वर्तत इत्यर्थः । तदेव व्यञ्जयन् श्रुतेरिति सौत्र हेत्वर्थमाह **ईश्वरस्यालौकिकत्वश्रुतेरिति** । योऽसौ विरुद्धोऽविरुद्ध इत्यादिभाष्योक्तश्रुतावलौकिकत्व-श्रवणादित्यर्थः । 'शब्दमूलत्वादि'ति सूत्रांशतात्पर्यार्थमाह **आगमैकेति** ॥ **युक्तिविरोधेति** । एतेन 'शास्त्रयोनित्वादि'त्यत्र युक्तेरलौकिकार्थे साधकता नेत्युक्तमिह तु विरोधकत्वं नेत्युच्यत इत्यगतार्थता च सूचिता । 'आत्मनि चैवं विचित्राश्च हि', 'सर्वोपेता च तद्दर्शनादि'ति सूत्रद्वयोक्तं मूलोपात्तहेतुं सप्र-माणकमाह **विचित्रेति** । इत्यादिश्रुतिभिर्भाष्योक्ताभिरिति योज्यम् । सर्वमिति अनुवादः भिन्नेत्या-रभ्य इत्यादीत्यन्तं व्याख्या ॥ **वक्ष्यमाणमिति** । श्रुतेस्त्विवत्यत्र नये वक्ष्यमाणमित्यर्थः ॥ **पूर्वोत्तरेति** । कृत्स्नप्रसक्त्यादिनोक्तकर्तृत्वाक्षेपस्य 'कर्ता शास्त्रार्थवत्त्वा'दिति वक्ष्यमाणकर्तृत्वस्य च विरोधः अचिन्त्य-शक्तिकेश्वराधीनकर्तृत्वतात्पर्यकत्वं कर्तृत्वाक्षेपस्येति वर्णनेन परिहृत इत्यर्थः ।

**या० — ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ** ॥ तुशब्दसूचितं श्रुतेस्त्वित्यस्य व्याख्यानं दर्शयति **अलौकिकत्वश्रुतेरिति** । शब्दमूलत्वादित्यस्य व्याख्यानं दर्शयति **आगमैकगम्यत्वेनेति** । इदमपि तुशब्देनैव सूचितमिति ज्ञातव्यम् । 'आत्मनि चैवं विचित्राश्च हि,' 'सर्वोपेता च तद्दर्शनादि'ति सूत्रद्वयतात्पर्यप्रदर्शकतयाऽशेषशक्तित्वादित्येतद्व्याचष्टे **विचित्रशक्तिरित्यादिना** ॥ **वक्ष्यमाणमिति** । आत्मनि चैवमित्यादिना वक्ष्यमाणमित्यर्थः ॥ **पूर्वोत्तरविरोध इति** । कृत्स्नप्रसक्तिरिति पूर्वस्य, कर्ता शास्त्रार्थवत्त्वादित्युत्तरस्य च विरोधः परिहृत इत्यर्थः ॥

**श्री० — ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ** ॥ **हेतुसमुच्चय इति** । 'आत्मनि चैवम्', 'सर्वोपेता चे'ति सूत्रद्वयलब्धहेतुप्रदर्शनमशेषशक्तित्वादित्यनेन कृतम् । श्रुतेस्तु शब्दमूलत्वादिति सूत्रोक्तयोर-लौकिकत्वश्रुतिशब्दमूलकत्वेन युक्तिविरोधानवकाशरूपहेत्वोः समुच्चये चशब्द इत्यर्थः ॥ **कर्तृत्ववा-देति** । स्वातन्त्र्येण कर्तृत्ववादेत्यर्थः ॥ **वक्ष्यमाणमिति** । 'आत्मनि चैवमि'त्यादिनेति शेषः ॥ **पूर्वोत्तरेति** । 'इतरव्यपदेशादि'ति पूर्वस्य 'कर्ता शास्त्रार्थवत्त्वादि'त्युत्तरस्य च विरोधः परिहृत इत्यर्थः ॥

**सु०—** परिणामवादिनो विवर्तवादिनश्च ब्रह्मणो जगदुपादानत्वं कृत्स्नप्रसक्तिरित्यनेनाक्षिप्य श्रुतेस्त्वित्यादिना समाधीयत इति व्याचक्षते । तथा हि । न ब्रह्म जगदुपादानम् । यतस्तथात्वे कृत्स्नस्यापि ब्रह्मणः कार्याकारताप्रसक्तिः स्यात् । स्थितौ च ब्रह्माभावे तद्दर्शनोपदेशानर्थक्यादि स्यात् । अथैतद्दोषपरिजिहीर्षया ब्रह्म एकदेशेन परिणमते एकदेशेन चावतिष्ठत इत्युच्यते तदा 'निष्कलं शान्तमि'त्यादिनिरवयवत्वशब्दकोपः स्यादिति । अत्रोच्यते । नायं दोषः । 'तदात्मानं स्वयमकुरुते'त्यादिश्रुतेर्ब्रह्मणो जगदुपादानत्वस्य कृत्स्नपरिणामाभावस्य चावगमात् । शब्दमूलत्वेन युक्तिविरोधानवकाशाच्च । अपि च सर्वशक्त्युपेता च परदेवता श्रूयते । 'सर्वकर्मा सर्वकामः' इत्यादि । ततो निरवयवस्यापि ब्रह्मणः कृत्स्नप्रसक्त्यभावेनैव जगदुपादानत्वमुपपन्नमित्यादि । तदेतद्व्याख्यानमनुपपन्नम् । एवं सति एषां सूत्राणामेतदध्यायान्तर्भावलक्षणसङ्गत्यभावप्रसङ्गात् । तत्कथमित्यत आह विरोध इति ।

**अनु०—** विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते ॥
नारायणस्य तदध्याये

तुशब्दोऽवधारणे । परब्रह्मणो नारायणस्य सर्वस्माच्चेतनादचेतनाच्च वैशिष्ट्ये वैलक्षण्ये परमोत्कृष्टत्वेऽत्यन्तव्यावृत्तत्वे च यो युक्त्यादिविरोधः स एवात्र द्वितीयेऽध्याये निरस्यते । सकलजगदुपादानत्वेन सर्वात्मकत्वं तु न सर्ववैशिष्ट्यम् । नापि तदुपयुक्तम् । प्रत्युत विरुद्धमेव । तत्कथं तत्र विरोधपरिहारोऽत्रान्तर्भावमासादयेत् । ननु जगदुपादानत्वादेव सर्ववैशिष्ट्यं ब्रह्मणः । न हि जगज्जगदुपादानमिति चेत् । तत्किमुपादानोपादेययोर्भेदं मन्यसे । तथा च तदनन्यत्वमित्युक्तविरोधः । जगत् ब्रह्मणो न भिद्यते ब्रह्म तु जगतो भिद्यत इति चेत् । न । उक्तोत्तरत्वात् ।

**शे०—** 'विरोधः सर्ववैशिष्ट्ये' इत्याद्युत्तरभाष्यानर्थक्यमाशङ्क्य कृत्स्नप्रसक्तिरित्याद्ये तदधिकरणीयापव्याख्याननिरासार्थत्वान्न तदिति भावेन तन्निरासकतया तद्योजयितुं तदनुवदति **परिणामवादिन इत्यादिना** । यदि क्षीरमिव दध्यात्मना ब्रह्म जगदाकारेण परिणमेत्तदा साकल्येन वैकदेशेन वा परिणमेदिति विकल्पं मनसि निधायाद्यं दूषयति **यतस्तथात्व इति** । अस्तु कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः किं तावतेत्याह **स्थितौ चेति** । कृत्स्नस्यापि ब्रह्मणः कार्याकारताप्रसक्तौ स्थितायामित्यर्थः । ततश्च ब्रह्माभावः स्यादित्याशयः । अस्त्वेवं ब्रह्माभावस्ततोऽपि किमित्याह **ब्रह्माभाव इति** । 'आत्मा वा अरे द्रष्टव्यः' इति तद्द्रष्टव्यतोपदेशानर्थक्यं स्यादित्यर्थः । कार्यस्यायत्नदृष्टत्वात्तद्व्यतिरिक्तस्य च ब्रह्मणो भावादिति भावः । आदिपदेन ब्रह्मणः साकल्येन कार्यात्मना

जन्माभ्युपगमे 'न जायते न म्रियत' इत्यजत्वादिप्रतिपादकश्रुतिस्मृतिव्याकोपपरिग्रहः । अस्तु तर्हि द्वितीयस्तत्रोक्तदोषाप्रसरादिति शङ्कते अथेति । इत्यादीत्यादिपदेन 'निरवद्यं निरञ्जनं', 'दिव्यो ह्यमूर्त-इत्यादिवाक्यपरिग्रहः । 'तदात्मानं स्वयमकुरुते'त्यादिश्रुतेरित्यत्रादिपदेन 'सेयं देवतैक्षत हन्ताहमि' मास्तिस्रो देवता' इत्यादिश्रुतिपरिग्रहः ॥ कृत्स्नपरिणामाभावस्य चेति । तदिति कर्तृतया निर्दिष्टस्या-परिणतभागस्यापि श्रवणादिति भावः । ननु विरोध इत्युत्तरभाष्ये परकीयसूत्रव्याख्याननिरासो न प्रतीयत इति न तत्परतया भाष्ययोजनमुचितमित्यतो न सूत्रार्थनिराकरणमेव तन्निराकरणम् अपि त्वसङ्गति-निरूपणमपि । तथा चासङ्गतिनिरूपणपरस्यास्य युक्तं तन्निरासकत्वमिति भावेनासङ्गत्युपपादकतया तद्यो-जयितुमध्यायासङ्गतिं तावदुद्भावयति एवं सतीति । उपादानोपादेययोरभेदेन जगदुपादानस्य ब्रह्मणो जगदुपादानत्वे तदुपादेयस्य जगतोऽपि जगदुपादानत्वावश्यम्भावान्न जगदुपादानत्वं सर्ववैशिष्ट्ये हेतुः अन्यथोपादानोपादेययोर्भेदप्रसक्तेरित्याशयेन परिहरति तत्किमिति । इष्टापत्तिं निरस्यति तथा चेति । जगतो ब्रह्माभेदेन जगन्निष्ठविशेषणस्य ब्रह्मणि प्रसक्तावपि ब्रह्मणो जगद्भिन्नत्वेन ब्रह्मनिष्ठस्य जगदुपादान-त्वस्य जगत्यप्राप्तेर्युक्तं तस्य वैशिष्ट्योपपादकत्वमिति शङ्कते जगदिति ॥ उक्तोत्तरत्वादिति । ब्रह्मणो जगदन्यत्वे जगतोऽपि न तदनन्यत्वं स्यात् । न हि यद्यतोऽत्यन्तभिन्नं तत्तेनात्यन्ताभिन्नमिति संभवत्य-तिप्रसङ्गादिति 'कथं च तदनन्यत्वे'त्येतद्व्याख्यानावसरे उक्तोत्तरत्वादित्यर्थः ।

---

स० — स्थितौ चेति ॥ स्थितिकाले इत्यर्थः । कृत्स्नपरिणामाभावस्येति । 'तदात्मानं स्वयमकुरुत' इति वाक्ये तदिति कर्तृत्वेनोक्तस्य 'आत्मानमि'ति कर्मत्वाभिधानात् कृत्स्नस्य कर्तृत्वे तस्यैव कर्मत्वस्यैवाङ्गीकार्यत्वात् तस्य कर्तृकर्मविरोधापत्त्या असंभवेन एकदेशस्य कर्तृत्वम्, एकदेशस्य कर्मत्व-मित्यवश्यं कल्पनीयत्वादस्य वाक्यस्य कृत्स्नपरिणामाभावप्रतिपादकत्वं द्रष्टव्यम् ॥ उक्तोत्तरत्वादिति । 'कथं च तदनन्यता' इत्येतद्व्याख्यानावसरे यदि ब्रह्म जगतोऽन्यदेव तदा च कथं च तदनन्यत्वं जगतः स्यात् । न हि यत् यतोऽत्यन्तभिन्नं तत् तेनात्यन्ताभिन्नमिति संभवति अतिप्रसङ्गात् इत्यादिनोक्तो-त्तरत्वादित्यर्थः ।

प० — परमते कृत्स्नप्रसक्तिरिति पूर्वपक्षसूत्रं श्रुतेस्त्वित्यादीनि त्रीणि सिद्धान्तसूत्राणि सर्वो-पेता चेति सूत्रद्वयमधिकरणान्तरं तत्र सूत्रचतुष्टयतात्पर्यार्थमनुवदति परिणामेत्यादिना । पूर्वपक्षसूत्रा-र्थमनुवदति न ब्रह्मेति । तद्दर्शनोपदेशेति । 'आत्मा वा अरे द्रष्टव्यः' इति ब्रह्मदर्शनार्थं श्रवणाद्युप-देशस्य 'सत्यं ज्ञानमि'त्यादिब्रह्मस्वरूपोपदेशस्य च वैयर्थ्यादित्यर्थः । आदिपदेन ब्रह्मभावापत्तिरूप-मोक्षाभावादिग्रहः ॥ अत्रोच्यत इति । एवं पूर्वपक्षे सिद्धान्त उच्यत इत्यर्थः । पररीत्या सूत्रार्थ-

व्यक्तीकरणेन तदीयसिद्धान्तमनुवदति **नायं दोष इत्यादिना** । श्रुतेस्त्विति सूत्रार्थमनूद्य सर्वोपेतेत्येतदर्थमनुवदति **अपि चेति** । ब्रह्ममन्त्रे नारायणस्य का प्रसक्तिरित्यत आह **परब्रह्मण इति** । 'स एव ब्रह्मशब्दार्थो नारायणपदोदित' इति प्रागेवोक्तेरिति भावः । 'पञ्चमी भयेने'त्यत्र योगविभागात्समास इति भावेन सर्ववैशिष्ट्य इत्यस्यार्थमाह **सर्वस्मादिति** ॥ **वैलक्षण्य इति** । जगज्जनकत्वादिविशिष्टलक्षणवत्त्वे । यद्वा लोकानन्तर्गतत्वेनालौकिकत्व इत्यर्थः । अत्यन्तव्यावृत्तत्वे च अत्यन्तभिन्नत्वे चेत्यर्थः । भेदाभेदव्यावृत्त्यर्थमत्यन्तपदम् । तुशब्दार्थः स एवेति ॥ **विरुद्धमेवेति** । सर्वाभेदे सर्वस्माद्वैशिष्ट्यमित्यस्यायोगादिति भावः । उक्तविरोधपरिहारमाशङ्कते **ननु जगदिति** ॥ **उक्तोत्तरत्वादिति** । भोक्त्रापत्तेरिति नये 'नान्यदन्यत्वमापन्नं कचिद्दृष्टं कथञ्चने'त्येतद्व्याख्यावसरे, 'यः कदाचित् यतोत्यन्तं भिद्यते नासौ कदाचित्तदैक्यमापद्यते, यथा घटः पटेने'त्युक्तत्वादिति भावः ।

**या० — कृत्स्नपरिणामाभावस्य चेति** । तदिति कर्तृतया निर्दिष्टस्यापरिणतभागस्यापि श्रवणादिति भावः ॥ **उक्तोत्तरत्वादिति** । न हि यद्यतोऽत्यन्तभिन्नं तत्तेनात्यन्ताभिन्नमिति सम्भवत्यतिप्रसङ्गात् इत्युक्तोत्तरत्वादित्यर्थः ॥

**श्री० — कृत्स्नपरिणामाभावस्येति** । तदात्मानमित्यत्र निमित्तोपादानत्वस्य प्रतिपादनेन यदा तदिति निमित्तत्वं कथ्यते तदैकदेशेनावस्थितमिति प्राप्त्या कृत्स्नपरिणामाभावो गम्यत इत्यर्थः ॥ **प्रत्युतेति** । उच्चनीचवस्त्वाकारेण परिणमनवतः सर्वोत्तमत्वानुपपत्तेरित्यर्थः । जगत्यविद्यमानधर्मवत्त्वमेव सर्ववैशिष्ट्यम् । जगदुपादानत्वं तु न जगत्यस्ति । अभेदाद्ब्रह्मणि तु सम्भवति । अतस्तेन धर्मेण युक्तं सर्ववैशिष्ट्यमिति शङ्कते **नन्विति** ॥ **तत्किमिति** । जगदुपादानत्वं जगति न सम्भवति । अभेदाद्ब्रह्मणि तु सम्भवतीत्युक्तेर्जगदपेक्षया भेदोऽस्तीति लभ्यत इति ध्येयम् । ओमिति चेत्तत्राह **तथा चेति** ।

**सु० —** प्राग्ब्रह्मोपादानत्वस्यानुक्तत्वात्कृत्स्नप्रसक्त्यादिपरिचोदनैवानवकाशा । परिणामप्रतिपादकश्रुतेरभावेन, गगनादिप्रपञ्चात्मकस्य तदसंभवि शब्दमूलत्वसर्वशक्तित्वाद्यसंभवेन च समाधानमप्ययुक्तम् । विवर्तवादे तु सर्वथाऽपि नैषा शङ्काऽवकाशमश्नुते । शुक्त्यादिकमिव रजताद्यारोपस्य ब्रह्माविद्यकप्रपञ्चारोपस्याधिष्ठानमिति स्पष्टमारम्भणाधिकरणेऽभिहितम् । तत्र कथं कृत्स्नैकदेशविचारः । उक्तानवधानाच्छङ्केति चेत् । तर्ह्युक्तं स्मरेति वक्तव्यम् । स्पष्टं चारोपितत्वं प्रपञ्चस्य ब्रह्मण्युपपादनीयम् । श्रुतेस्त्वित्यादेस्तु का सङ्गतिः ।

**शे०** — ननु पूर्वपक्षसिद्धान्तानुपपत्तिव्युत्पादनेनाप्यपव्याख्यानस्य निराकर्तुं शक्यत्वात्किमित्यसङ्गतिमात्रव्युत्पादनेन तन्निराकरणं भाष्यकाराणामित्यतस्तदनुपपत्तिप्रदर्शनपूर्वकं तदनुक्तौ निमित्तं वदन्नेव भाष्यकृदुद्भावितासङ्गत्युक्तिं समर्थयते **प्रागित्यादिना** । यद्वा तत्किमसङ्गतिरेव दोषो व्याख्यानं तु परोक्तमदुष्टमेवेत्यत आह **प्रागिति** । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्यादिना प्रकृत्यधिकरणस्य ब्रह्मोपादानत्वानभिधायकत्वस्य तदधिकरणव्याख्यानावसरे उपपादितत्वादिति भावः ॥ **परिणामप्रतिपादकश्रुतेरभावेनेति** । 'सच्च त्यच्चाभवदिति न स्य विश्वत्वमुच्यते' इत्यादिना ब्रह्मणो जगदुपादानत्वे प्रमाणतया पराभिमतश्रुतीनां तत्परत्वाभावव्युत्पादनान्न परिणामप्रतिपादिका श्रुतिरस्तीति भावः ॥ **असंभवेन चेति** । अन्यथोपादानोपादेययोर्भेदप्रसक्त्या तदनन्यत्वमित्युक्तविरोधापत्तेरिति भावः । अनवकाशमेवोपपादयति **शुक्त्यादिकमेवेति** । उक्तानवधानादित्युपलक्षणम् । पूर्वोक्तक्षीरादिदृष्टान्तात्परिणामित्वभ्रमाच्चेत्यपि द्रष्टव्यम् ॥ **का सङ्गतिरिति** । सिद्धान्ते विवर्तविवक्षायां द्वितीयसूत्रे शब्दगम्यत्वतर्कागम्यत्वेन वाच्ये तयोर्भ्रान्त्यधिष्ठानतायामनुपयुक्तत्वादिति भावः ॥

**मु०** — परोक्तव्याख्यानमदूष्यै(दूषयित्वै)व असङ्गतिमात्रस्यैव भाष्यकारेणाभिहितत्वात्सूत्रव्याख्यानम् दुष्टमित्यतः स्पष्टत्वात् शिष्यैरेवोह्यमिति भावेन तदनुक्त्वैवासङ्गतिमात्रमुक्तमिति भावेन स्वयं तद्दूषयति **प्रागिति** । सर्वतो वैलक्षण्यप्रदर्शनेन सर्वोत्कृष्टत्वं सर्वस्मात् व्यावृत्तत्वं च प्रतिपादितमित्युक्तम्, तत्क्रमेणोपपादयति सजातीयेत्याद्युत्तरप्रबन्धेन 'तत्तु समन्वयादित्यादिना' 'एतेन सर्वे व्याख्याता व्याख्याता' इत्यन्तेनेत्यर्थः । सामान्यतः समन्वयसूत्रे विशेषतः 'आनन्दमयोऽभ्यासात्', 'अन्तस्तद्धर्मोपदेशात् इत्यादावित्यर्थः । **तदसंभवीति** । गगनादिप्रपञ्चे असंभवीत्यर्थः ।

**प०** — **अनुक्तत्वादिति** । प्रकृत्याद्यधिकरणानामप्यन्यथा व्याख्यानादिति भावः । **श्रुतेरभावेनेति** । 'तदात्मानं स्वयमकुरुते'त्यस्य 'आत्मकृतेरि'त्यत्रान्यथैव व्याख्यानादिति भावः ॥ शङ्काऽनवकाशमेव व्यनक्ति **शुक्त्यादिकमिवेति** ॥ **आरंभणेति** । तदनन्यत्वमारम्भणेत्यत्र ।

**श्री०** — श्रुतिशब्दमूलत्वविचित्रशक्तिभ्यो हेतुभ्यः समाधानं त्वन्मते न युक्तमित्याह **परिणामेति** । श्रुतेरभावेन समाधानमयुक्तमित्यन्वयः ॥ **श्रुतेरभावेनेति** । तदात्मानमिति श्रुतेरन्यार्थत्वादिति भावः ॥ **तदसम्भवीति** । गगनादिप्रपञ्चेऽसम्भावितेत्यर्थः ॥ **उक्तेति** । तदनन्यत्वमित्यत्रोक्तार्थविस्मरणाच्छङ्केत्यर्थः ॥ **तत्रेति** । आरोपाधिष्ठान इत्यर्थः ।

सु० — कश्चित्परिहारादर्शनसंभ्रान्तचित्त आह । अविद्यासंवलितं खलु ब्रह्म जगदुपादानम् । तत्राविद्योपादानत्वस्यायमाक्षेपः परिहारश्चेति । तदतीव मन्दम् । न ह्यविद्याया उपादानत्वमपि वास्तवम् । तस्याविचारितरमणीयतयैव शङ्काऽविषयत्वात् । किञ्च कृत्स्नप्रसक्तिः सावयवत्वं चाविद्यायां किं करिष्यति । समाधानं तु सर्वथाऽप्यसङ्गतमेव । एतेन विकरणत्वादित्याक्षेपपरिहारावप्यसङ्गतौ वेदितव्यौ । न हि भ्रमाधिष्ठानता शरीरादिकमपेक्षते । ईश्वरविषयं तदिति चेन्न । तस्य विकरणत्वाभावेनाक्षेपानुदयादित्यादिकं स्वयमेव शिष्यैरवगन्तव्यमित्यसङ्गतिरेवाचार्येणोक्ता ।

शे० — किं करिष्यतीति । कार्त्स्न्येन परिणामे कृत्स्नस्य ब्रह्मणः कार्याकारतापत्तौ ब्रह्माभावेन तद्द्रष्टव्यत्वोपदेशानर्थक्यादिवदेकदेशेन परिणामे सावयवत्वापत्त्या निरवयवत्वश्रुतिव्याकोपवच्चाविद्यायाः कार्त्स्न्येन परिणामे कृत्स्नाविद्यायाः कार्याकारताप्रसक्तावप्येकदेशेन परिणामे च सावयवत्वप्रसक्तावपि पूर्ववत्तत्प्रयुक्तदोषान्तराप्रसरात्स्वरूपेणैव च कृत्स्नप्रसक्तिसावयवत्वयोरदोषत्वादिति भावः ॥ समाधानं त्विति । ब्रह्मणः शब्दगम्यत्वतर्कागम्यत्वोक्तेस्तदुपादानत्वाक्षेपपरिहारकत्वेऽप्यविद्योपादानत्वाक्षेपपरिहारार्थत्वाभावात्तद्वर्णनं सर्वथाऽप्यसङ्गतमिति भावः । एतेनेत्युक्तमेव दर्शयति न हीति । येन शरीरेन्द्रियादिराहित्येन भ्रमाधिष्ठानत्वमाक्षिप्येतेति भावः । उपलक्षणं चैतत् । शक्तिविशेषेण तत्समाधानानुपपत्तेश्चेत्यपि द्रष्टव्यम् । ननु विकरणत्वादित्याक्षेपपरिहारौ न शुद्धब्रह्मविषयौ भ्रमो येन ब्रह्माधिष्ठानत्वस्य विकरणत्वेनाक्षेपः शक्तिविशेषेण च समाधानमयुक्तं भवेत्किन्नाम विशिष्टब्रह्मविषयावेवेति नासङ्गतिरिति शङ्कते ईश्वरेति ॥ तस्य विकरणत्वाभावेनेति । अचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमिति विकरणत्वबोधकप्रमाणानां शुद्धविषयत्वेन विशिष्टाविषयत्वात्तैस्तस्य विकरणत्वासिद्धेरिति भावः । नन्वेवं भाष्यकारेणाप्युक्तमार्गेणैवापव्याख्याननिरासो विधेयस्तत्किमित्यसङ्गतिव्युत्पादनेन तन्निरासो विहित इत्यत आह इत्यादिकमिति । स्पष्टत्वादिति शेषः । अस्पष्टतया स्वयमेव शिष्यैरवगन्तुमशक्यत्वादध्यासङ्गतिरेव भाष्यकृतोक्तेति भावः ।

प० — शङ्काऽविषयत्वादिति । शङ्काया अविषयत्वादित्यर्थः ॥ किं करिष्यतीति । कृत्स्नप्रसक्तौ तद्दर्शनोपदेशाभावेन तदानर्थक्यभयाभावात् । निरवयवत्वश्रुतेरभावेन तद्व्याकोपस्याप्यभावादिति भावः ॥ सर्वथाप्यसङ्गतमेवेति । शब्दमूलत्वादे'रौपनिषदः पुरुष' इत्यादिश्रुत्या ब्रह्मणीवाविद्यायामभावादिति भावः । विवर्तवादिमते सूत्रान्तरार्थं च निराह एतेनेति । तदेव व्यनक्ति न हीति ॥ तदितीति । विकरणत्वादिति सूत्रं मायाशबलविशिष्टब्रह्मस्वरूपेश्वरविषयं न भ्रमाधिष्ठानोदासीनब्रह्म-

विषयं येनाक्षेपपरिहारावसङ्गतावितिं भावः ॥ **विकरणत्वाभावेनेति** । ऐच्छिकमायामयविग्रहत्वादिति भावः ॥ **इत्यादिकमिति** । विशेषप्रपञ्चनं चन्द्रिकायाम् ।

**या०— ईश्वरविषयं तदिति** । शबलब्रह्मविषयमित्यर्थः ।

**श्री०— परिहारेति** । असङ्गतिपरिहारादर्शनादित्यर्थः ॥ **अयमाक्षेप इति** । अविद्या किं कार्त्स्न्येन परिणमते एकदेशेन वा । आद्ये स्थितिकालेऽविद्याभावः स्यात् । द्वितीये तस्या अखण्डत्वेन एकदेशाभाव इत्यविद्योपादानत्वविषयोऽयमाक्षेप इत्यर्थः ॥ **समाधानमिति** । श्रुतेस्त्विति सूत्रोक्तमित्यर्थः ॥ **असङ्गतमेवेति** । न ह्यविद्यायाः शब्दमूलकत्वमस्तीति भावः । केचित्तु श्रुतेस्त्वित्यादिना क्रियमाणोऽविद्यायां दूषणपरिहारोऽसङ्गतः स्यात् । 'दुर्घटत्वमविद्याया भूषणं न तु दूषणम् । कथञ्चिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेदि'त्युक्तत्वादिति भाव इत्याहुः ॥ **न हीति** । निर्गुणस्य शुद्धब्रह्मण इति शेषः ॥ **ईश्वरविषयं तदिति** । विकरणत्वाद्विशिष्टस्य न भ्रमाधिष्ठानत्वं युक्तमित्याक्षिप्य तदुक्तमिति सकरणत्वेन परिहारोऽभिहितः इत्येवं तद्विकरणत्वादित्याक्षेपादिकमीश्वरविषयं विशिष्टब्रह्मविषयं न शुद्धब्रह्मविषयम् । येनाक्षेपपरिहारयोरसङ्गतिः स्यादित्यर्थः ॥ **तस्येति** । शबलस्य शरीरेन्द्रियादिमत्त्वेनाक्षेपस्यैवानुदयादित्यर्थः ॥ **इत्यादिकमिति** । विशिष्टस्य भ्रमाधिष्ठानत्वस्यैवाभावात् । भ्रमाधिष्ठानत्वस्य शरीरेन्द्रियाद्यनपेक्षत्वाच्च । तदुक्तमिति परिहारोऽप्यनुपपन्न इति भावः ।

---

**सु०— स्यादेवमसङ्गतिर्यदि ब्रह्मणः सर्ववैशिष्ट्ये विरोधपरिहारोऽध्यायार्थः स्यात्तदेव कुत इत्यत आह** तदन्य इति ।

**अनु०—** तदन्ये तत्र तत्रगाः ॥

**तस्मात्सर्ववैशिष्ट्यविषयादन्ये विरोधास्तत्र तत्रैवाधिकरणेषु गताः परिहृताः । एतदुक्तं भवति । अविरोधलक्षणो द्वितीयोऽध्याय इति तावत्संमतम् । न चानुक्तेऽर्थे विरोधपरिहारः सङ्गत इति प्रथमाध्यायार्थेऽविरोधो द्वितीयस्यार्थः । प्रथमे चादिसूत्रेण शास्त्रीयविषयप्रयोजनप्रदर्शनमुखेन ब्रह्मजिज्ञासायाः कर्तव्यत्वमुक्तम् । तच्चतुरध्यायीपरिसमाप्यं नैकत्र पर्यवस्यति । ततः, किं तद्ब्रह्म । किं जीवोऽथ जडमिति स्वरूपजिज्ञासायां शृङ्गग्राहिकया प्रदर्शयितुमशक्यत्वात् । द्वितीयसूत्रे सर्वतो वैलक्षण्यप्रदर्शनेन सर्वोत्कृष्टं सर्वस्माद्व्यावृत्तं चेति प्रतिपादितम् । सजातीयविजातीयासंभावितधर्मस्य लक्षणत्वात् । सकलेतरव्यावृत्तेश्च तत्प्रयोजनत्वात् । तृतीयसूत्रे शास्त्रं तत्र प्रमाणमभिधाय तस्योत्तरप्रबन्धेन सामान्यतो विशेषतश्च**

**सकलजीवजडव्यावृत्तवस्तुविषयता समर्थिता । एवञ्च द्वये विरोधाः परिहरणीया भवन्ति । द्वितीयसूत्रसिद्धसर्ववैशिष्ट्यविषयाः शास्त्रसमन्वयविषयाश्च । तत्र द्वितीया विकारशब्दादित्यादिना तत्र तत्रैवाधिकरणे परिहृता इति परिशेषात्सर्ववैशिष्ट्यविषयविरोधपरिहार एव द्वितीयार्थ इति ज्ञायत इति ।**

**शे०** — ननु 'तदन्ये तत्र तत्रगाः' इत्युत्तरभाष्यमनर्थकम् । न च तत्समन्वयविषयविरोधानामन्यत्र परिहृतत्वोपपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च प्रसक्तप्रतिषेधप्रदर्शनेन परिशेषतः सर्ववैशिष्ट्यविरोधपरिहारस्य द्वितीयाध्यायार्थत्वोपवर्णनार्थत्वान्न तदिति वाच्यम् । सर्ववैशिष्ट्यविरोधपरिहारस्य द्वितीयाध्यायार्थत्वोपवर्णनस्य प्रकृतानुपयोगादित्याशङ्क्य प्रागुक्ताध्यायासङ्गतिरूपापव्याख्यानदोषोपपादनार्थत्वान्न तद्वर्णनस्य प्रकृतानुपयोग इत्यभिप्रेत्यासङ्गत्यनुपपत्तिशङ्कापरिहारकतया तद्योजयितुं तदसिद्धयाऽसङ्गत्यनुपपत्तिशङ्कामुत्थापयति **स्यादेवमिति** । भाष्यस्थतच्छब्दस्य यत्किञ्चिदर्थपरत्वे परिशेषतः सर्ववैशिष्ट्यविरोधपरिहारस्य द्वितीयाध्यायार्थत्वासिद्धया तत्सिद्ध्यर्थं पूर्वप्रकृतसर्ववैशिष्ट्यविरोधपरत्वमेवेति भावेनाह **तस्मादिति** । ननु भवेदेवं परिशेषतः सर्ववैशिष्ट्यविरोधपरिहारस्य द्वितीयाध्यायार्थत्वसिद्धिः । यदि सर्ववैशिष्ट्यविरोधसमन्वयविरोधयोरेव परिहर्तव्यतया प्रसक्तत्वम् । तत्रापि समन्वयविरोधस्यान्यत्र परिहृतत्वं च सिद्धं स्यात् । न चैतदस्ति । प्रतिपाद्यान्तरसम्भावनया विरोधपरिहारकत्वस्य तत्परिहारकत्वसिद्धावप्युक्तेऽर्थे एव तत्परिहारकत्वस्य, तत्सिद्धावपि समन्वयविरोधस्यान्यत्र परिहृतत्वस्य चासिद्धया तदयोगात् इत्यतोऽध्यायस्याविरोधोपपादकत्वम्, उक्तार्थे तत्प्रतिपादकत्वं, सर्ववैशिष्ट्यादेरुक्तत्वं, विरोधद्वयस्यैव परिहर्तव्यत्वं, तत्रापि समन्वयविरोधस्यान्यत्र परिहृतत्वं चोपदर्शयन्परिशेषेण सर्ववैशिष्ट्यविरोधपरिहारस्य द्वितीयाध्यायार्थतामुपपादयति **एतदुक्तं भवतीत्यादिना** । अविगानेन प्रसिद्धेरेव विरोधपरिहारस्य द्वितीयाध्यायार्थत्वे प्रमाणमिति भावेन सर्वसम्मतमित्युक्तम् ॥ **शृङ्गेति** । शृङ्गे कर्णे वा गृहीत्वेयं गौरितिवदतीत् अतीन्द्रियत्वाद्ब्रह्मण इदं ब्रह्मेति तत्स्वरूपोपदर्शनस्याशक्यत्वादित्यर्थः । लक्षणाभिधानमात्रेण कथं सर्वोत्कृष्टत्वस्य सर्वसाद्व्यावृत्तत्वस्य च सिद्धिरित्यत एकस्य प्रतिपाद्यतयैकस्य च फलतयेति भावेन सर्वोत्कर्षसिद्धिं तावद्दर्शयति **सजातीयेति** । सर्वव्यावृत्तिसिद्धिं दर्शयति **सकलेतरेति** ॥ **प्रमाणमभिधायेति** । अनिर्धारितस्य लक्षणस्य स्वरूपावधारणासमर्थत्वादिति भावः ॥ **उत्तरप्रबन्धेनेति** । तत्त्वित्यादिनेत्यर्थः । तत्त्विति सामान्यतः, आनन्दमय इत्यादिविशेषतः ॥ **द्वये विरोधा इति** । द्वाववयवौ येषामिति वर्गद्वयापेक्षयाऽन्यपदार्थस्य समुदायस्यैकत्वेऽप्युद्भूतावयवभेदत्वावयवबहुत्वानुगतं बहुवचनम् । अत्र सङ्ख्याया अवयवे तयबिति

द्विशब्दात्तयप्प्रत्यये तस्य द्वित्रिभ्यां तयबित्यनेनायजादेशे द्विशब्देकारस्य यस्येति चेत्यनेन लोपे सति निष्पन्नद्वयशब्दाज्जसि प्रथमचरमतयाऽल्पार्धेति तयब्निबन्धनसर्वनामताविकल्पानुसारेण जसः शीति तस्य शीभावेन गुणे च सति द्वये द्वया इति बहुवचननिष्पत्तिरिति ज्ञेयम् ॥ **तत्र तत्रैवेति** । आनन्दमयोऽभ्यासादित्यादावेवेत्यर्थः ।

प० — **चतुरध्यायीति** द्विगोरिति ङीप् ॥ **शृङ्गग्राहिकयेति** । धात्वर्थे ण्वुलवक्तव्य इति ण्वुलि अत उपधाया इत्युपधावृद्धौ प्रत्ययस्थादितीत्वे अकादेशे शब्दस्वाभाव्यात् स्त्रीलिङ्गत्वं शृङ्गग्रहणेनेत्यर्थः ॥ **वैलक्षण्येति** । सर्वतोव्यावृत्तासाधारणधर्मोपदर्शनेनेत्यर्थः ॥ **तस्येति** । शास्त्रस्येत्यर्थः ॥ **सामान्यत इति** । तत्तु समन्वयादित्यनेन सामान्यतः आनन्दमय इत्यादिना विशेषतश्चेत्यर्थः । द्वय इति बहुवचनान्तं विरोधविशेषणम् । द्विरूपा इत्यर्थः । तदेव व्यनक्ति **द्वितीयेति** ।

श्री० — सर्वोत्कृष्टं ब्रह्म द्वितीयसूत्रे प्रतिपादितमित्येतदुपपादयति **सजातीयेति** । सर्वस्माद्व्यावृत्तं प्रतिपादितमित्येतदुपपादयति **सकलेति** । उक्तप्रबन्धेन तत्तु समन्वयादिनाऽध्यायसमाप्तिपर्यन्तम् । समन्वयसूत्रे सामान्यतः । 'आनन्दमय' इत्यादिना विशेषतः ॥ **द्वय इति** । सर्ववैशिष्ट्यसमन्वयरूपप्रमेयद्वये तद्विषय इति यावदित्यर्थः ।

**सु० — ननु च श्रुतीनां परस्परविरोधोऽपि द्वितीयेऽध्याये न वियदश्रुतेरित्यादिना परिहृतः । तत्कथमुच्यते ब्रह्मणः सर्ववैशिष्ट्ये विरोधो द्वितीये निरस्यत इति तत्राह सृष्टीति ।**

**अनु०** — सृष्टिसंहारवाक्यानां जीवरूपाभिधायिनाम् ।
अप्यन्योन्याविरोधस्तु द्वितीयाध्यायगोचरः ॥

**जीवरूपाभिधायिनां वाक्यानाम् । उपलक्षणमेतत् । प्राणादिविषयाणां चेत्यपि द्रष्टव्यम् । सृष्ट्यादिविशेषणमुपपत्तिसूचनार्थम् । तुशब्दो विशेषार्थः । यो द्वितीयाध्यायगोचरो वाक्यानामन्योन्याविरोधः सोऽपि पारमेश्वरसर्ववैशिष्ट्यविरोधपरिहार एव । किन्तु प्रथमद्वितीयपादयोः साक्षात्तृतीयचतुर्थयोस्तु व्यवधानेनेति विशेषः । तथा हि । श्रुतीनां परस्परविरोधपरिहारः किं तत्प्रामाण्यनिर्णयमात्रफलः किंवा प्रमेयनिर्णयफलः । नाद्यः । मीमांसाया न्यायशास्त्रत्वापत्तेः । किञ्चैवं सति वियदादिसृष्ट्यादिविषयवाक्यविरोधपरिहार एव कस्मात्क्रियते । उदितहोमादिवाक्यानामपि न्यायदर्शन इवोपादानोपपत्तेः । आकाशवाय्वादिक्रमश्चात्र नात्यन्तमुपपद्यते । द्वितीयेऽपि किं सृष्ट्यादिकमेव प्रमेयमुत तदङ्गभूतमन्यत् । नाद्यः । तस्य स्वरूपतोऽप्रयोजनत्वात् । प्रथमाप्रतिपाद्यत्वाच्च । अन्यथा पुन-**

उदितहोमादिवाक्यविरोधपरिहारोऽपि कार्यः स्यात् । सृष्ट्यादिविषयनिष्कर्षोऽपि निर्हेतुकः । अतो द्वितीय एव परिशिष्यते । न चान्यदस्ति सृष्ट्यादिप्रमेयस्याङ्गि प्रथमोक्तं द्वितीयसूत्राभिहिताद्ब्रह्मणः सर्ववैशिष्ट्यात् । अतो युक्तमुक्तम् । तदेवं परोक्तसूत्रार्थस्य द्वितीयाध्यायान्तर्भावलक्षणसङ्गत्यभावाद्विरोधाच्चोक्त एव सूत्रार्थ इति सिद्धम् ।

**शे०** — ननु सृष्टिसंहारवाक्यानामिति श्रुतीनां परस्परविरोधपरिहारस्य द्वितीयाध्यायार्थत्ववर्णनमनर्थकमित्यतः सर्ववैशिष्ट्यविरोधपरिहारस्य प्रागुक्तद्वितीयाध्यायार्थत्वसमर्थनार्थत्वान्न तदिति भावेन तदुपपादकनयं तद्योजयितुं सर्ववैशिष्ट्यविरोधपरिहारस्य द्वितीयाध्यायार्थत्वानुपपत्तिशङ्कामुत्थापयति **ननु चेति** । सृष्टिसंहाराभ्यां समस्तस्यापि वाक्यपदस्य योग्यत्वाद्बुद्ध्या विवेकेन जीवरूपाभिधायिनामित्यत्रापि विशेष्यतया सम्बन्ध इत्यभिप्रेत्याह **जीवरूपाभिधायिनां वाक्यानामिति** । 'तथा प्राणा' इत्यादेरपि संग्रहार्थमाह **उपलक्षणं चैतदिति** ॥ **उपपत्तीति** । वाक्यविरोधपरिहारस्य प्रामाण्यमात्रनिर्णयफलकत्वाभावे प्रमेयनिर्णयफलकत्वे सृष्ट्यादेरेव प्रधानप्रमेयत्वाभावे वेति शेषः । भाष्ये तुशब्दानर्थक्यमाशङ्क्य तृतीयचतुर्थपादप्रतिपाद्यवाक्यद्वयाविरोधस्यात्रोक्तसर्ववैशिष्ट्यविरोधपरिहारकत्वोपपादकविशेषसूचनार्थत्वान्नानर्थक्यमिति भावेन तदर्थकथनपूर्वकं तत्सूचितविशेषं च दर्शयति **तुशब्द इत्यादिना** । ननु तृतीयचतुर्थयोर्वाक्यद्वयविरोधपरिहारकत्वमेवास्तु किं व्यवधानेन सर्ववैशिष्ट्यविरोधपरिहारकत्वकल्पनयेत्यतोऽन्यथाऽऽनर्थक्यप्रसक्तेरिति भावेन तदुपपादयति **तथा हीति** ॥ **न्यायशास्त्रत्वेति** । प्रमाणशास्त्रत्वेत्यर्थः । ततश्च प्रमेयशास्त्रत्वभङ्ग इति भावः ॥ **उपपत्तेरिति** । वाक्यप्रामाण्यफलकत्वस्योभयत्र साम्येनैकमात्रस्वीकारस्य निर्हेतुकत्वादिति भावः ॥ **स्वरूपत इति** । ततश्च न स्वरूपेण जिज्ञास्यतेति भावः ॥ **प्रथमेति** । प्रथमाध्यायेत्यर्थः । ततश्चोक्तेऽर्थे विरोधपरिहारकत्वाभावादसङ्गतिः स्यादिति भावः ॥ **अन्यथेति** । स्वरूपतोऽप्रयोजनस्य प्रथमाध्यायाप्रतिपाद्यस्यापि सृष्ट्यादेरेव प्रधानप्रमेयत्वे इत्यर्थः । तत्राप्युदितहोमादेरेव स्वप्रधानप्रमेयत्वोपपत्त्या प्रमेयनिर्णयफलकत्वाविशेषादिति भावः । अस्तु सृष्ट्याद्यङ्गिभूतमन्यत् । तत्तु सर्ववैशिष्ट्यमिति कस्मादवसीयत इत्यतस्तदन्यस्य कस्यचित्सृष्ट्याद्युपयोगित्वेनोक्ताङ्गत्वादन्यस्य च प्रथमोक्तत्वादिगुणविशिष्टस्याभावात्सर्ववैशिष्ट्यमेव तदित्याह **युक्तमुक्तमिति** । तृतीयचतुर्थयोर्व्यवधानेन सर्ववैशिष्ट्यविरोधपरिहारकत्वं यदुक्तं तद्युक्तमित्यर्थः ।

**स०** — **उपपत्तिसूचनार्थमिति** । हरेः सर्ववैशिष्ट्ये इति शेषः । आकाशादेरुत्पत्त्यादिमत्त्वे तत्कारणत्वसंभवेन सर्ववैशिष्ट्यसंभवादिति भावः । विशेषार्थत्वमेवोपपादयति **य इति** ॥ **न्यायेति** ॥ न्यायशास्त्रं ब्रह्मतर्कः । **आकाशेति** । श्रुतीनां परस्परविरोधपरिहारो यदि प्रामाण्यमात्रफलकः, तदा 'न वियदश्रुतेः' इत्यादिना क्रमेण आकाशवाक्यादिवाक्यानामेव विरोधपरिहारोऽनुपपन्न इति भावः ।

**प्रथमेति** । प्रथमाध्याये अप्रतिपादितत्वाच्चेत्यर्थः । **सृष्ट्यादीति** । उदितहोमादिवाक्यविरोधपरिहारमकृत्वा सृष्ट्यादिविषयवाक्यनिष्कर्ष एव कर्तव्य इति नियामकं नास्तीत्यर्थः ।

**प०**— वाक्यानामिति पदस्य बुद्धिविभागेनोत्तरत्राप्यन्वय इति भावेनाह **वाक्यानामिति** ॥ **उपपत्तीति** । सा किञ्चैवमित्यादिनाऽग्रे व्यक्ता ॥ **विशेषार्थ इति** । सोऽपि किन्तु प्रथमद्वितीयपादयोरित्यादिनाऽग्रे विवरिष्यते । वाक्यं योजयति **य इति** । अविरोधपदं विरोधपरिहारपरमिति भावेनाह **सोपीति** ॥ **व्यवधानेनेति** । वाक्यानामन्योन्यविरोधनिरासद्वारेत्यर्थः । सोऽपीत्यादिनोक्तं व्यनक्ति **तथा हीत्यादिना** ॥ **उदितहोमेति** । 'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाच्च जुह्वति येऽग्निहोत्रम् । दिवा कीर्त्यमदिवा कीर्तयन्तं' इति । 'यथाऽतिथये प्रद्रुतायान्नं हरेयुः तादृक् तद्यदुदिते जुहोति' इति परस्परनिन्दयोदितानुदितहोमवाक्ययोर्विरोधस्य प्रतीतेस्तन्निरासाय तादृशवाक्यानामपि अत्रोपादानं स्यादित्यर्थः । एवं सतीत्यापादकानुकर्षः । आकाशेति, न वियदिति, एतेन मातरिश्वेति, तेजोऽत इति, आप इति, पृथिव्यधिकाररूपेति यः क्रमः सः प्रामाण्यनिर्णयमात्रफलत्वेऽनुपयुक्तः स्यात् । प्रमेयनिर्णयफलत्वे तु अस्ति भाष्याद्युक्तदिशा भगवतः स्वातन्त्र्यादिनिर्णयार्थत्वादस्त्युपयोग इति भावः । **तदङ्गिभूतमिति** । सृष्ट्यादिप्रमेयमङ्गं कृत्वा यत्प्रधानतया वर्तते प्रमेयं तदित्यर्थः ॥ **स्वरूपतोऽप्रयोजनत्वादिति** । सृष्टिलयादिस्वरूपमात्रनिर्णयस्य मुक्त्यनुपायत्वादिति भावः ॥ **प्रथमेति** । सृष्टिलयादिरूपप्रमेयमात्रस्य प्रथमाध्यायाप्रतिपाद्यत्वाच्चेत्यर्थः । प्रथमाध्यायप्रतिपादितप्रमेयनिर्णयस्यैव द्वितीयेऽध्याये विरोधनिरासेन कार्यत्वादिति भावः ॥ **अन्यथेति** । प्रथमाध्यायानुक्ते प्रमेयविरोधनिरासे सतीत्यर्थः ॥ **द्वितीय एवेति** । तदङ्गिभूतमन्यदस्तीति पक्ष इत्यर्थः । अस्त्वेवं तावता तत्सर्ववैशिष्ट्यमिति कुत इत्यत आह **न चेति** । प्रथमाध्यायोक्तमङ्गि सर्ववैशिष्ट्यादन्यन्न चास्ति किन्तु तदेवेत्यर्थः ॥ **विरोधाच्चेति** । सर्वोपादानत्वेन सर्वात्मकत्वरूपार्थस्य पूर्वाध्यायोक्तसर्ववैशिष्ट्यविरोधादिति वा प्रकृत्याद्यधिकरणेषु पराभिप्रेतविवर्तवादविरोधादिति वा कृत्स्नप्रसक्त्यादिसूत्रोक्तोपादानादिविरोधादिति वार्थः । विवर्तवादे कृत्स्नप्रसक्त्यादिचोदनानवकाशस्योक्तत्वात् ॥

**या०**— **न्यायदर्शन इवेति** । ब्रह्मतर्कशास्त्र इवेत्यर्थः ॥ **प्रथमेति** । प्रथमाध्यायाप्रतिपाद्यत्वाच्चेत्यर्थः ।

**श्री०**— **जीवरूपेति** । जीवस्वरूपेत्यर्थः ॥ **प्राणादीति** । 'तथा प्राणाः' इत्यादिचतुर्थपादीयानामित्यर्थः । किन्त्वित्यनेन विशेषार्थमित्युक्तं प्रदर्शितम् । सृष्ट्यादिग्रहणमुपपत्तिसूचनार्थमित्युक्तं प्रदर्शयति **तथा हीत्यादिना** ॥ **तदिति** । श्रुतीत्यर्थः ॥ **न्यायेति** । ब्रह्मतर्केत्यर्थः । **एवं सति** श्रुतिप्रामाण्यनिर्णयमात्रफलकत्वेन न्यायशास्त्रत्वस्येष्टत्वे ॥ **न्यायदर्शन इवेति** । यथा ब्रह्मतर्कशास्त्रे उदि-

तद्धोमादिवाक्यस्य विरोधपरिहारेण तत्प्रामाण्यं समर्थितमेवमत्रापि स्यादित्यर्थः ॥ **अत्यन्तमिति** । यदि प्रमेयनिर्णयः फलं तर्ह्येव 'न वियत्', 'एतेन मातरिश्वा', 'तेजोऽत', 'आपः', 'पृथिवी'त्यादिक्रमेणोपादानं युज्यते तथोत्पन्नत्वादिति युक्तम् । अत्र श्रुतिप्रामाण्यमात्रनिर्णयफलकपक्षे ऽत्यामेऽपि कुतो न निर्णीतमिति भावः । आकाशाद्वायुरिति श्रौतक्रममपेक्ष्यैवं क्रमेण विरोधः परिहृत इति चेत् । सत्यम् । अत एवात्यन्तेत्युक्तम् । **तदङ्गि** तस्य सृष्ट्यादिप्रमेयस्याङ्गि प्रधानभूतमित्यर्थः । **तस्य** सृष्ट्यादिप्रमेयस्य । **प्रथमेति** । अध्यायेत्यर्थः । यतोऽत्र प्रथमाध्यायोक्तार्थ एव विरोधः परिह्रियते । न हि केवलं सृष्ट्यादि तत्प्रतिपाद्यम् । किन्तु तत्कारणत्वमेवेत्यर्थः ॥ **अन्यथेति** । प्रथमाप्रतिपादितेऽपि प्रमेये यदि विरोधः परिह्रियत इत्यर्थः । **निष्कर्षो** निष्कृष्य सृष्ट्यादिविषयवाक्योपादानमित्यर्थः । प्रथमाध्यायोक्तसृष्ट्यादिप्रमेयस्याङ्गि द्वितीयसूत्राभिहिताद्ब्रह्मणो वैशिष्ट्यादन्यत्र चास्तीत्यन्वयः ॥ **विरोधाच्चेति** । सकलजगदुपादानत्वेन सर्वात्मकत्वं तु न सर्ववैशिष्ट्यम् । नापि तदुपयुक्तम् । प्रत्युत विरुद्धमेवेत्युक्तरीत्या विरोधाच्चेत्यर्थः ।

**सु० — अत्रेश्वरस्य शरीरेन्द्रियादिकरणरहितत्वात्कर्तृत्वं नोपपद्यते इत्याक्षेपसमाधानार्थं सूत्रम् ॥ ॐ** विकरणत्वान्नेति चेत्तदुक्तम् **ॐ इति ॥ एतदनारम्भणीयम् । पुनरुक्तत्वात् । श्रुतेस्तु** शब्दमूलत्वात्, आत्मनि चैवं विचित्राश्च हि, सर्वोपेता च तद्दर्शनादिति **सूत्रैरेवालौकिकत्वशब्दैकसमधिगम्यत्वविचित्रानन्तशक्तित्वादियुक्तिभिः सर्वस्यापि दौर्घट्यस्य परिहृतत्वात् । यो हि साक्षात्कारकाधिष्ठानस्य नेष्टे स शरीरव्यवधानमपेक्षते । यस्य चागन्तुकं ज्ञानं स तदर्थमिन्द्रियाणि । यश्च गुरुशरीरो नावस्थातुं शक्नोति स क्षित्यादिकमाधारम् । भगवांस्तु सर्वशक्तिः सर्वज्ञः किमर्थमपेक्षतेति । न च काचिदभ्यधिका शङ्काऽस्ति येन पुनरारम्भः स्यादित्यत आह** मानेति ।

**अनु० — ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ॥**

मानमेयविशेषेण पुनरुक्तिर्न जायते ॥ २-१-८ ॥

**यथा** अत एव प्राण **इत्यादौ मानैक्येऽपि मेयविशेषेण न पुनरुक्तिदोषस्तथाऽत्र मेयैक्येपि मानविशेषेण न पुनरुक्तिदोषः । एतदुक्तं भवति । किमुक्तार्थोक्तिमात्रं दोषः । किं वोक्तानतिरिक्तोक्तिः । नाद्यः । उक्तपरिहारातिदेशोक्तेरपि दोषत्वानुषङ्गात् । द्वितीयस्तु प्रकृते न सिद्धः । प्रमेयैक्येऽपि प्रमाणभेदस्य सत्त्वात् । इह हि चिदानन्दाद्यात्मकदिव्यमङ्गलविग्रहवतो महापुरुषस्य प्राकृतशरीराद्यभावेऽपि सकलकार्यकर्तृत्वमपाणिपाद इत्यादिश्रुतिमाश्रित्योक्तमिति । यद्वा मानमेययोर्विशेषेणेति योज्यम् । तथा चायमर्थः । पूर्वसूत्रैः सामान्य-**

**विषयप्रमाणान्याश्रित्य सामान्यत एव सर्वानुपपत्तिपरिहारो विहितः । इह तु विशेषविषयेणैव प्रमाणेन विशेषानुपपत्तिपरिहारः क्रियत इति कथं पुनरुक्तिदोषावकाश इति । तथाऽप्याक्षेपो नोपपद्यत इति चेन्न । विशेषजिज्ञासयोपपत्तेरिति ॥ २-१-८ ॥**

**शे० — ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ** ॥ 'मानमेयविशेषेणे'त्यादेरपव्याख्याननिरासपरत्वभ्रमनिवारणायापव्याख्याननिराकरणमुपसंहरति **तदेवमिति** । तर्हि 'तस्य त्वि'त्यादिनैवाधिकरणतात्पर्यकथनात् विरोध इत्यादिनैवापव्याख्याननिरासिद्धेः किं मानमेयेत्युत्तरग्रन्थेनेत्यतो विकरणत्वादिति सूत्रारम्भसमर्थनार्थं तदितिभावेन प्रागनुक्ताभिधायकस्य तस्य पूर्वेण गतार्थताप्रसक्तेरेवाभावात्किं तदारम्भसमर्थनेनापीत्यतस्तत्सूत्रप्रतिपाद्यप्रदर्शनपूर्वकं सूत्रमुपन्यस्य श्रुतेस्त्वित्यादिसूत्रैर्गतार्थतां दर्शयति **अत्रेत्यादिना** । नन्वत्र मानविशेषसद्भावेऽपि मेयैक्येन तद्विशेषाभावात्कथं मानमेयविशेषमाश्रित्य **पौनरुक्त्यपरिहार** इत्यतो न प्रकृते मानमेयविशेषेण पौनरुक्त्यपरिहारोऽभिमतः किन्तु क्वचिन्मेयविशेषेणेव प्रकृते प्रमाणविशेषेण तत्परिहार इति नानुपपत्तिरिति भावेनोक्तार्थसमर्पणायापेक्षितयथातथेत्याद्यध्याहारेण वाक्यं योजयति **यथेत्यादिना** ॥ **मानैक्येऽपीति** । भूतादिषु मुख्यया वृत्त्या प्रवृत्तानामप्याकाशादिशब्दानां महायोगविद्रूढिभ्यामीश्वरवाचित्वसमर्थनात्पूर्वपक्षसिद्धान्तप्रापकप्रमाणैक्यमित्यर्थः ॥ **प्रमेयविशेषेणेति** । अघटितमपि सर्वं भगवदचिन्त्यशक्त्या घटत इत्यस्यैव पूर्वोत्तरसूत्रप्रतिपाद्यतया तद्रूपप्रमेयैक्येऽपीत्यर्थः । नन्वस्तु मानविशेषस्तथाऽप्युक्तार्थोक्तिमात्रमस्त्येवेति पौनरुक्त्यमवर्जनीयमेवेत्यतस्तस्यादोषत्वादुक्तमात्रोक्तेरेव दोषत्वात्प्रकृते च तदभावान्न पौनरुक्त्यमित्यभिप्रेत्य कुतो नोक्तार्थोक्तिमात्रस्य दोषत्वं कथं चात्रोक्तमात्रोक्त्यभाव इत्यतस्तदुभयं दर्शयितुं विकल्पयति **एतदुक्तं भवतीति** । प्रमाणभेदमेव दर्शयति **इह हीति** । अत्र पक्षे यथातथेत्यध्याहारो भवतीत्यपरितोषात्पक्षान्तरमाह **यद्वेति** । कथमेतावता पूर्वोत्तरवैलक्षण्यं येनापौनरुक्त्यमित्यत आह **तथा चेति** ॥ **विशेषविषयेणैवेति** । शरीरेन्द्रियादिरूपविशेषविषयेणैवेत्यर्थः ॥ **तथाऽप्याक्षेप इति** । सर्वस्यापि दौर्घट्यस्य सामान्यतः परिहृतत्वादिति भावः ॥ **विशेषजिज्ञासयेति** । विशेषप्रमाणजिज्ञासयेत्यर्थः । इतीत्यस्य इत्ययमर्थ इति पूर्वेण सम्बन्धः ॥ २-१-८ ॥

**स० — मेयविशेषेणेति** । 'अत एव प्राणः' इत्यत्र अन्वयव्यतिरेकसिद्धप्राणादिहेतुत्वविशिष्टप्राणादिशब्दानां समन्वयः । 'प्राणस्तथाऽनुगमात्' इत्यत्र प्राणादिशब्दानामिति प्रमेयभेद इत्यर्थः । **प्रमेयैक्ये** करणाद्यभावेऽपि कर्तृत्वमित्येवं साध्यैक्येऽपीत्यर्थः । **तथाऽपीति** । करणादिरहितस्य कर्तृत्वं नोपपद्यत इति आक्षेपो न संभवति । करणादिरहितस्यापि कर्तृत्वप्रतिपादकप्रमाणस्याभिहितत्वादिति भावः ॥ **विशेषेति** । पादादिरहितस्य कथं कर्तृत्वम् तादृशप्रमाणाभावादिति विशेषजिज्ञासयेत्यर्थः ॥ २-१-८ ॥

**प०— विकरणत्वान्नेति चेत् ॥ अत्रेति ।** श्रुतेस्त्वित्यधिकरण इत्यर्थः ॥ **सूत्रमिति ।** चरमसूत्रम् । परिहृतत्वमेव व्यनक्ति **यो हीति ।** इन्द्रियाणां त्यादावपेक्षित इत्यनुषङ्गः । मेयविशेषणे-क्तेरिहानुपयोगेपि दृष्टान्तोक्त्यर्थतयोपयोगमाह **यथेति ।** इत्यादावित्यादिपदेन "ज्योतिश्चरण भिधानात् छन्दोभिधानादि'त्यादेर्ग्रहः । मानैक्येपि तद्धर्मोपदेशात्तल्लिङ्गादिति पूर्वनयद्वये निरवकाशलिङ्गरूपमानेन निर्णयः । तथाऽत एव प्राण इत्यादावपि निरवकाशलिङ्गेनैव निर्णयः कृत इति निरवकाशलिङ्गत्वेन निर्णायकमानैक्येपि पूर्वत्राधिदैवाधिभूतगतशब्दप्रवृत्तिनिमित्तमीश्वरगतमन्यगतं च तदधीन-मित्युक्त्या तच्छब्दानां भगवति शक्तितात्पर्यरूपप्रमेयैरुपपादितम् । अत एवेत्यादौ तु जीवनहेतुत्वादिरूपमध्यात्मादिगतशब्द-प्रवृत्तिनिमित्तमीश्वरगतम् अन्यगतं च तदधीनं चेत्युक्त्या तच्छब्दानां भगवति शक्तितात्पर्ये स्त इत्युच्यत इति **प्रमेयविशेषेण** न पुनरुक्तिरित्यर्थः ॥ **मेयैक्येपीति ।** तच्च प्रकटितं प्राक् यो हीत्यादिना किमर्थम-पेक्षत इत्यन्तेन ॥ **मानविशेषेणेति ।** स चापाणिपाद इत्यादिनाऽग्रे व्यक्तः ॥ **यथेति** दृष्टान्तोक्तितात्पर्यं उक्तं परिहारेत्यादि । सत्वादित्युक्तं व्यनक्ति **इह हीति ।** मेयेत्यस्य प्रकृतोपयुक्ततयैव योजयति **यद्वेति ॥ विशेषविषयेणेति ।** देहेन्द्रियादिविशेषविषयेण मानेन देहादिहीनस्य न कर्तृत्वमिति एवं-रूपविशेषानुपपत्तेः परिहारः क्रियत इत्यर्थः ॥ **तथापीति ।** अपुनरुक्त्यापि सर्वानुपपत्तेः परिहारात् विकरणत्वादिति चेत् इत्याक्षेपो न युक्त इत्यर्थः ॥ **विशेषजिज्ञासयेति ।** मानविशेषमेयविशेषबुभु-त्सयोपपत्तेरित्यर्थः ॥ २-१-८ ॥

**या०— ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ॥ ॥ मेयैक्येऽपीति ।** अघटितमपि सर्वं भगवति विचित्रशक्त्या घटत इति मेयैक्येऽपीत्यर्थः । **विशेषविषयेणैवेति ।** शरीरेन्द्रियादिरूपविशेष-विषयेणैवेत्यर्थः ॥ **तथाऽप्याक्षेप इति ।** सर्वस्यापि दौर्घट्यस्य परिहृतत्वादिति भावः ॥ २-१-८ ॥

**श्री०— ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ॥ कारकाधिष्ठानस्य** दण्डचक्रादिकारक-प्रेरणस्य । **आगन्तुकम्** उत्पत्तिमत् ॥ **अपेक्षतेति** शरीरव्यवधानं वेन्द्रियाणि वा क्षित्याधारं वेत्यर्थः । **उक्तानतिरिक्तोक्तिः** उक्तापेक्षयाऽधिकोक्त्यभावः । **प्रमेयैक्ये** अघटितमपि भगवतः कर्तृत्वं विचित्र-शक्त्या घटत इत्येवंरूपे । प्रमाणभेदस्येत्युक्तं प्रमाणभेदं दर्शयति **इह हीत्यादिना ॥ सामान्येत्यादि ।** भगवतः कर्तृत्वं न युक्तं कृत्स्नप्रसक्त्यादेरिति सामान्यतोऽनुपपत्तौ चोदितायां सर्वशक्तित्वाद्युक्तमित्यतीत-सूत्रैः सामान्यतः प्रतिपादितम् । इह तु करणाभावान्न कर्तृत्वमिति विशेषानुपपत्तौ सत्यां करणाभावेऽपि कर्तृत्वं युक्तमिति विशेषविषयकप्रमाणोदाहरणेन परिहारः क्रियत इति प्रमेये प्रमाणे च विशेषोऽस्ती-त्यर्थः ॥ **तथाऽपीति ।** सर्वस्यापि दौर्घट्यस्य परिहृतत्वादिति भावः ॥ २-१-८ ॥

॥ इति शब्दमूलत्वाधिकरणम् ॥

## ।। अथ नप्रयोजनाधिकरणम् ।।

सु० — ॐ न प्रयोजनवत्त्वात् ॐ ।। ॐ लोकवत्तु लीलाकैवल्यम् ॐ ।। यत्प्रयोजनार्थं सृष्ट्यादिस्तदूनत्वादपूर्णतेत्याक्षेपपरिहारायेदमधिकरणमारभ्यते । तदेतदनुपपन्नमिव आभाति । तथा हि । यद्यत्र कर्तृत्वेन प्रयोजनवत्त्वं प्रसाध्यापूर्णत्वसाधनं पूर्वपक्षिणो विवक्षितं स्यात्तदा प्रथमसूत्रमयुक्तं स्यात् । अपूर्णतासाधकं प्रति प्रयोजनवत्त्वहेतोरसिद्धत्वात् । अथ कर्ता चेत्प्रयोजनवान्स्यात् तथा चापूर्णः स्यादित्यापादनं विवक्षितम् । तदा व्यर्थमेवेदं सूत्रम् । न चापूर्णस्ततो न प्रयोजनवानिति परेणैवाङ्गीकृतत्वात् । अन्यथा विपर्ययापर्यवसानात् । लोकवत्तु लीलाकैवल्यमिति द्वितीयसूत्रं तु पक्षद्वयेऽप्ययुक्तम् । साधनापादनदूषणस्यानुद्भावनादिति । मैवम् । ईश्वरस्य सृष्ट्यादिना प्रयोजनमस्ति न वा । आद्येऽपूर्णत्वं प्रसज्येत । द्वितीये तु कर्तृत्वानुपपत्तिः तस्य प्रयोजनव्याप्तत्वादित्युभयथाऽपीश्वरस्य जगत्सृष्ट्यादिकर्तृत्वानुपपत्तिरित्यत्र पूर्वपक्षिणो विवक्षितम् । तत्र प्रथमसूत्रेण प्रयोजनाभावपक्षं सयुक्तिकमुपादत्ते । तत्रोक्तदोषपरिहारार्थं द्वितीयं सूत्रम् । यद्वा कर्तृत्वेन प्रयोजनस्य तेन चापूर्णत्वस्य इदं साधनं विवक्षितमुतापादनमिति सिद्धान्ती विकल्प्याद्यमाद्येन निराचष्टे । न कर्तृत्वेन प्रयोजनवत्त्वं साध्यम् । कृतकृत्यत्वेन प्रयोजनाभावस्यैव निश्चितत्वात् । न चासिद्धो हेतुः । अथैष एव परम आनन्दो निरनिष्टो निरवद्य इति श्रुतेः । प्रयोजनवत्त्वेनापूर्णतानुमानं तु गर्भस्रावेणैव ग(लि)तमिति । आद्यस्य दूषणान्तरं वदन्द्वितीयं द्वितीयेन निराकरोतीति ।

शे० — ।। ॐ न प्रयोजनवत्त्वात् ॐ ।। ॐ लोकवत्तु लीलाकैवल्यम् ॐ ।। ननु सर्वविरोधानां परिहृतत्वादनर्थकमेतत् । न चाभ्यधिकाशङ्कानिरासार्थमेतदिति वाच्यम् । तथा सत्यधिकरणान्तर इव गतार्थताशङ्कानिरासायाभ्यधिकाशङ्काप्रदर्शनप्रसङ्गादित्यतो भाष्य एव तत्प्रदर्शनादत्राप्रदर्शनमित्यभिप्रेत्य भाष्योक्तप्रकारेणैतदधिकरणनिरसनीयपूर्वपक्षं दर्शयति **यत्प्रयोजनार्थमिति** । ननु सदा प्रवृत्तिरित्युत्तरभाष्यमनर्थकम् । न च लोकवत्तु लीलाकैवल्यमिति सूत्रस्य साधनापादनपक्षयोर्बाधाद्युद्भावकत्वोपदर्शनपरत्वान्न तदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वादित्यतः साधनापादनदूषणस्यानुद्भावकतया प्राप्तद्वितीयसूत्रायुक्तत्वशङ्कानिरासार्थत्वान्न तदिति भावेन तच्छङ्कापरिहारकतां तद्योजयितुं साधनापादनपरत्वानुपपत्त्या भाष्योक्तपूर्वपक्षानुपपत्तिशङ्कामुत्थापयति **तदेतदनुपपन्नमिवा-**

**भातीत्यादिना** । किमत्र कर्तृत्वादिना प्रयोजनवत्त्वादिसाधनं विवक्षितमुतापादनमिति विकल्पं मनसि निधायाद्यमनूद्य दूषयति **यद्यत्रेत्यादिना** ॥ **प्रयोजनवत्त्वहेतोरसिद्धत्वादिति** । कृतकृत्यत्वान्न प्रयोजनाय सृष्टिरिति भाष्यानुसारेण तस्य कृतकृत्यत्वरूपत्वादिति भावः । द्वितीयमुत्थाप्य दूषयति **अथेति** ॥ **इदं सूत्रमिति** । आद्यं सूत्रमित्यर्थः ॥ **परेणैवेति** । पूर्वपक्षिणैवेत्यर्थः । पूर्वपक्षिणस्तदङ्गीकारमेव विपक्षे बाधकोपदर्शनेन दर्शयति **अन्यथेति** ॥ **पक्षद्वयेऽपीति** । साधनापादनरूपपक्षद्वयेऽपीत्यर्थः । एवं साधनापादनपरत्वानुपपत्त्या भाष्योक्तं पूर्वपक्षमाक्षिप्य प्रकारान्तरेण तदाशयवर्णनेन सूत्रारम्भमुपपाद्य तत्परिहारकतया सूत्रद्वयं योजयति **मेवमिति** ॥ **तत्रोक्तदोषेति** । प्रयोजनाभावे कर्तृत्वानुपपत्तिस्तस्य प्रयोजनव्याप्तत्वादिति द्वितीयपक्षोक्तदोषेत्यर्थः । अस्मत्पक्ष उत्तरभाष्यनैरपेक्ष्येणैव सूत्रद्वयेन पूर्वपक्षनिवृत्तेस्तद्दानर्थक्यमित्यतस्तत्सङ्गमयितुं तदुपयुक्तार्थोपदर्शकतयाऽपि सूत्रद्वयं योजयति **यद्वेति** ॥ **निश्चयादिति** । तथा च बाधितविषयत्वमिति भावः ॥ **असिद्धो हेतुरिति** । अपूर्णत्वसाधकं प्रतीति शेषः । तथा च न तेन प्रयोजनाभावसाधनमुपपद्यत इति न बाधितविषयतेति भावः ॥ **गर्भस्रावेणैवेति** । अपूर्णत्वसाधकस्य प्रयोजनवत्त्वहेतोरेवासिद्धत्वादिति भावः । इतीत्यस्येत्याद्यमाद्येन निराचष्ट इति पूर्वेणान्वयः ॥ **आद्यस्येति** । साधनपक्षस्येत्यर्थः । द्वितीयमापादनपक्षं द्वितीयेन सूत्रेणेति शेषः । निराकरोतीत्यत्रत्यस्येतिशब्दस्येति यद्वेति पूर्वेण सम्बन्धः ।

**स०** — ॐ **नप्रयोजनवत्त्वात्** । **प्रयोजनवत्त्वहेतोरसिद्धत्वादिति** । सिद्धान्त्यभिप्रेतकृतकृत्यत्वरूपस्य प्रयोजनवत्त्वस्यापूर्णत्वसाधकं प्रत्यसिद्धत्वादित्यर्थः । **तत्रोक्तदोषेति** । प्रयोजनाभावे कर्तृत्वानुपपत्तिः । तस्य प्रयोजनव्याप्तत्वादित्युक्तदोषेत्यर्थः । **गर्भस्रावेणैवेति** । अपूर्णत्वसाधकस्य प्रयोजनवत्त्वहेतोरेवासिद्धत्वादिति भावः । द्वितीयसूत्रं पक्षद्वयेऽप्ययुक्तम् इत्युक्तं दूषयति **आद्यस्येति** । **आद्यस्य** साधनपक्षस्येत्यर्थः । **द्वितीयम्**आपादनपक्षम् । **द्वितीयेन** द्वितीयसूत्रेण ।

**प०** —ॐ **न प्रयोजनवत्त्वात्** ॐ॥ स्वयं कृतापि तद्व्याख्या क्रियते स्पष्टतार्थतः इति स्वप्रतिज्ञामनुरुध्य 'सदा प्रवृत्तिरि'त्यादिना भाष्योक्तस्य विवरणं क्रियत इति भावेन विवरणहेतुबीजभूतां भाष्योक्तेरनुपपत्तिं भाष्यवाक्यमेवाधिकरणार्थोक्तिव्याजेन पठित्वा दर्शयति **यत्प्रयोजनार्थमित्यादिना मेवमित्येतत्पर्यन्तेन** ॥ **प्रयोजनवत्त्वहेतोरित्यादि** । तस्य सृष्ट्यादिना प्राप्तव्यप्रयोजनस्य प्रागेवाप्तत्वादित्यर्थस्य भाष्येऽभिधानादिति भावः । न प्रयोजनवत्त्वादित्यत्र न समानैकपद्यमाश्रित्य सृष्ट्यादिलभ्यं यत्प्रयोजनं तादृशप्रयोजनवत्त्वाभावादिति भाष्याभिमतार्थान्तरेऽप्यनुपपत्तिं पक्षभेदेन दर्शयति **अथेत्यादिना** ॥ **साधनेति** । साधनापादनयोर्दूषणस्येत्यर्थः । सूत्रद्वयतात्पर्यं तावन्मूलकाराभिमतं द्वेधा

स्वयमाह **ईश्वरस्येत्यादिना निराकरोतीत्यन्तेन** । सृष्ट्यादिनेश्वरस्य प्रयोजनं नास्ति प्रागेव सृष्ट्यादिलभ्यप्रयोजनवत्त्वात् आप्तकामत्वादिति यावदितिसूत्रार्थं हृदि कृत्वाह **प्रयोजनाभावपक्षं सयुक्तिकमुपादत्त इति ॥ तत्रोक्तदोषेति** । प्रयोजनाभावपक्षोक्तकर्तृत्वानुपपत्तिरूपदोषपरिहारार्थमित्यर्थः । स च परिहारोऽग्रे मूलव्याख्यावसरे व्यक्तः ॥ **आद्येनेति** । सूत्रेणेत्यनुषङ्गः । निराचष्ट इत्येतत्सूत्रार्थोक्त्या व्यनक्ति **न कर्तृत्वेनेति** । प्रयोजनवत्त्वादित्यस्यार्थः **कृतकृत्यत्वेनेति** । तात्पर्यार्थः **प्रयोजनेत्यादि** । यद्वा सूत्रे नेत्येतद्व्यस्तं समस्तं चेत्युपेत्य व्यस्तस्यार्थो न कर्तृत्वेनेत्यादि । समस्तस्यार्थः प्रयोजनाभावस्य निश्चयादिति । तत्र हेतुः कृतकृत्यत्वेनेति । तथाच बाधितमनुमानमिति भावः । अपूर्णतासाधननिरासः सूत्रे न प्राप्त इत्यत आह **प्रयोजनवत्त्वेनेति** । हेतोरेवासिद्धेरिति भावः ॥ **आद्यस्येति** । आद्यस्य कर्तृत्वेन प्रयोजनसाधनपक्षस्य प्रागुक्तबाधरूपदोषादनैकान्तिकत्वरूपदूषणान्तरं वदन्नित्यर्थः । द्वितीयमापादनपक्षं द्वितीयेन सूत्रेण निराकरोति । स प्रकारोऽग्रे व्यक्तः ।

**या० — ॐ न प्रयोजनवत्त्वात् ॐ ॥ प्रयोजनवत्त्वहेतोरिति** । सूत्रे प्रयोजनवत्त्वादित्यस्य हि कृतकृत्यत्वादित्यर्थो विवक्षितः सिद्धान्तिनमतस्यासिद्धत्वादित्यर्थः । अत्र सूत्रगतमेव प्रयोजनवत्पदं कृतकृत्यपरम् । प्रयोजनवत्त्वं प्रसाध्येत्यादिसुधागतं यत्तत्प्रसिद्धार्थकमेवेति द्रष्टव्यम् ॥ **गर्भस्रावेणेवेति** । हेतोरसिद्धत्वादिति भावः ॥

---

**श्री० — ॐ न प्रयोजनवत्त्वात् ॐ ॥ जिज्ञासयेति** । यद्यपि सर्वं दौर्घट्यं परिहृतमित्याक्षेपो न युक्तस्तथाऽपि करणाभावे कथं कर्तृत्वं तज्ज्ञातव्यमिति विशेषप्रमाणजिज्ञासया विकरणत्वान्नेत्याक्षेपो युक्त इत्यर्थः ॥ **कर्तृत्वेनेति** । सृष्ट्यादिप्रवृत्तिरूपकर्तृत्वेनेत्यर्थः । **साधनं** तेन हेतुनेति शेषः ॥ **परेणैवेति** । आपादयित्रा पूर्वपक्षिणेत्यर्थः । एतत्सूत्रे यत्प्रतिपाद्यते प्रयोजनवत्त्वात्पूर्णत्वात्प्रयोजनं नेति तत्पूर्वपक्षिणाप्यङ्गीकृतमेवेति तं प्रति सूत्रेण प्रतिपादनं व्यर्थम् । एवं परेण नाङ्गीकृतमिति चेत्तत्राह **अन्यथेति** । विपर्ययपर्यवसानानुपपत्तिप्रसङ्गादित्यर्थः । कुत इत्यत आह **साधनेति** । साधनानुमानपक्षे दूषणानुमानपक्षे चेत्यर्थः ॥ **उक्तदोषेति** । प्रयोजनाभावे कर्तृत्वानुपपत्तिः । तस्य कर्तृत्वस्य प्रयोजनव्याप्तत्वादित्युक्तदोषेत्यर्थः । **आद्यं** पक्षम् । **आद्येन** सूत्रेण । भगवान्प्रयोजनवान्कर्तृत्वादिति साधने बाध इत्याह **कृतकृत्यत्वेनेति** । आप्तकामत्वेनेत्यर्थः । निश्चितत्वात् । तथा च बाध इति भावः ॥ **गर्भेति** । ईश्वरोऽपूर्णः प्रयोजनवत्त्वादित्यत्र प्रयोजनवत्त्वहेतोरसिद्धत्वादेवेत्यर्थः । **आद्यस्य** साधनपक्षस्य । **दूषणान्तरम्** बाधं, तदतिरिक्तमनैकान्तिकत्वरूपं च । **द्वितीय** आपादनमिति द्वितीयं पक्षम् । **द्वितीयेन** सूत्रेण ।

**सु०** — **ननूक्तमत्र लोकवदिति सूत्रेण साधनस्यापादनस्य वा न किञ्चिद्दूषणमुद्भाव्यत इति । मैवम् । बाधादेरुद्भावनादित्याशयवान्द्वितीयसूत्रस्य तात्पर्यमाह** सदेति ।

**अनु०** — ॐ न प्रयोजनवत्त्वात् ॐ ॥ ॐ लोकवत्तु लीलाकैवल्यम् ॐ ॥

सदा प्रवृत्तिरीशस्य स्वभावादेव केवलम् ॥

**यथा लोके ज्वलनपवनादीनां तथेशस्यापि सदा सृष्ट्यादौ केवलं प्रयोजनेन विना स्वभावादेव प्रवृत्तिः प्रमितेति शेषः । तदनेनेश्वरस्य प्रवृत्त्या प्रयोजनमाधनमनैकान्तिकं बाधितविषयं च । प्रसङ्गस्तु व्याप्तिविकलो विपर्ययापर्यवमायी चेत्युक्तं भवति । अथ मन्येत । चेतनप्रवृत्तिः न प्रयोजनेन विना दृष्टा । अतो नानैकान्त्यादीति । तदपि नास्ति । मत्तस्य सुखोद्रेकादेव नृत्तगानादिप्रवृत्तिदर्शनात् ।**

**शे०** — एवं भाष्योक्ताक्षेपपरिहारकतया सूत्रद्वययोजनामभिधाय द्वितीयसूत्रोक्तसाधनापादनदूषणोपदर्शनपरतयोत्तरमूलं योजयितुं तत्पक्षदूषणानुक्त्योत्तरसूत्रायुक्तताशङ्कामनुवदति **नन्विति** । बाधादेरित्यादिपदेनानैकान्तिकत्वादिपरिग्रहः ॥ **अनैकान्तिकमिति** । ज्वलनपवनादिप्रवृत्ताविति शेषः । प्रयोजनानुद्देशेऽप्यग्न्यादेरूर्ध्वज्वलनादौ प्रवृत्तिदर्शनादिति भावः । सृष्ट्यादौ स्वभावादेवेश्वरप्रवृत्तेः प्रमितत्वात्प्रयोजनोद्देशसाधनं बाधितविषयमित्याह **बाधितेति** ॥ **व्याप्तिविकल इति** । ज्वलनपवनादिप्रवृत्तौ व्यभिचारादेवेति भावः ॥ **विपर्ययापर्यवसायीति** । प्रवृत्तेः प्रमितत्वेन विपर्ययपर्यवसाने बाधादिति भावः ॥ **अत मन्येतेति** । इयं च चेतनप्रवृत्तिरतः प्रयोजनोद्देशवतीति साधनमापादनं वा क्रियते न तूक्तरीत्येत्यर्थः । किं तावताऽपत्यत आह **अत इति** । अग्न्यादेरूर्ध्वज्वलनादौ प्रवृत्तेश्चेतनप्रवृत्तित्वाभावादिति भावः । आदिपदेन व्याप्तिविकलत्वपरिग्रहः । न तु बाधितविषयत्वस्यापि । तस्यात्राप्यविशिष्टत्वादिति ध्येयम् । माऽस्त्वग्न्यादेरूर्ध्वज्वलनादौ व्यभिचारः । उदाहरणस्यानादरणीयत्वादन्यत्र तु स्यादेवेति न साधनमापादनं वा संभवतीत्याशयेनाह **मत्तस्येति** । तदीयनृत्तगानादिप्रवृत्तेश्चेतनप्रवृत्तित्वस्यापि सत्त्वादिति भावः ।

**स०** — **बाधादेरिति** । आदिपदेनानैकान्तिकत्वादिपरिग्रहः ।

**प०** — **ज्वलनेति** । अग्निवायुप्रभृतीनामूर्ध्वगमनतिर्यग्गमनादिप्रवृत्तिः स्वभावादित्यर्थः ॥ **प्रमितेति** । 'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इतिवक्ष्यमाणश्रुतेरिति भावः ॥ **अनैकान्तिकमिति** । ज्वलनादिप्रवृत्ताविति भावः । **बाधितविषयं चेति** । प्रमितेत्युक्तत्वादिति भावः ॥ **प्रसङ्गस्त्विति** । कर्ता चेत्प्रयोजनवान्स्यान्न चैव अतो न कर्तेति प्रसङ्ग इत्यर्थः ॥ **व्याप्तीति** । ज्वल-

नादिकृतौ व्याप्तिभङ्गः, ईश्वरकृतेः प्रमितत्वेन बाधापत्त्या विपर्ययपर्यवसायी चेत्यर्थः । 'नृत्तगानादिका सुखादि'त्यानन्दमयनयानुव्याख्यानं हृदि कृत्वाह **मत्तस्येति** ।

**या० — अनैकान्तिकमिति** । ज्वलनपवनादिप्रवृत्तावित्यर्थः । अत्रैव व्यभिचारमभिप्रेत्य व्याप्तिविकल इत्युक्तम् ॥ **विपर्ययापर्यवसायीति** । प्रयोजनाभावेऽपि कर्तृत्वस्य प्रमितत्वादिति भावः ।

**श्री० —** तदेवोपपादयितुं शङ्कते **ननूक्तमत्रेति** । अनेन साधनानुमाने दूषणद्वयमुक्तं भवतीत्याह **तदनेनेति** । अनैकान्तिकं ज्वलनादिप्रवृत्तौ । स्वभावादेवेत्युक्त्या बाधितत्वमुक्तमिति ध्येयम् ॥ **व्याप्तीति** । यदि प्रवृत्तिमान्स्यात्तदा प्रयोजनवान्स्यादित्यत्र ज्वलनादिप्रवृत्तावेव व्यभिचाराद्व्याप्त्यभावः । न भवति प्रयोजनवांस्तस्मान्न कर्तेति विपर्ययपर्यवसानं च ज्वलनादिप्रवृत्तावेव व्यभिचारान्न सम्भवतीत्यर्थः ॥ **नात इति** । अतो नानैकान्त्यादीत्यन्वयः । तथा चेश्वरः प्रयोजनवांश्चेतनत्वे सति प्रवृत्तिमत्त्वादिति हेतौ विशेषणं विवक्षितम् । ततश्च न ज्वलनाद्यचेतनप्रवृत्तौ व्यभिचार इत्यर्थः ॥ **दर्शनादिति** । तथा च तत्प्रवृत्तौ विशिष्टस्यापि हेतोर्व्यभिचार इत्यर्थः ॥

**सु० — ननु च प्रेक्षावत्प्रवृत्तिर्न प्रयोजनोद्देशेन विनोपलब्धा इयं च प्रेक्षावत्प्रवृत्तिः । अतः प्रयोजनोद्देशवती स्यादिति साध्यमापाद्यं चेत्यत आह अङ्गेति ।**

**अनु० —** अङ्गचेष्टा यथा पुंसः काश्चिदुद्देशवर्जिताः ॥

**काश्चिद्व्याख्यानादावंगुलिचालनादिकाः । उद्देशवर्जिताः प्रयोजनोद्देशवर्जिताः । तथा ईशस्यापि प्रवृत्तिरिति पूर्वेणान्वयः । तथाऽप्यनैकान्त्याद्यनिस्तार इति भावः ।**

**शे०** नन्वङ्गचेष्टा इत्याद्युत्तरभाष्यमनर्थकम् । न च विशिष्टहेतोरनैकान्त्योपदर्शनार्थं तदिति वाच्यम् । मत्तप्रवृत्तौ विशिष्टव्यभिचारस्यापि स्पष्टत्वेन व्याख्यानादावङ्गुलिचालनादिप्रवृत्तिपर्यन्तधावनानर्थक्यादित्यतो मत्तप्रवृत्तौ व्यभिचारपरिहारार्थं परोत्प्रेक्षितहेत्वन्तरस्यापि व्यभिचारव्युत्पादनार्थत्वान्न तत्पर्यन्तधावनानर्थक्यमित्याशयेन मत्तप्रवृत्तावव्यभिचारोपपादकहेत्वन्तराशङ्कामुत्थापयति **नन्विति** ॥ **साध्यमापाद्यं वेति** । मत्तप्रवृत्तेः प्रेक्षावत्प्रवृत्तित्वाभावेन तत्रानैकान्त्याद्यप्रसङ्गादिति भावः । साकाङ्क्षतया वाक्याभासत्वपरिहारायाह **तथेत्यादि** । तथाऽपि साधनापादनयोः किं दूषणमनेनोक्तमित्यतोऽभिप्रायमाह **तथाऽपीति** । प्रेक्षावत्प्रवृत्तित्वस्य हेतुत्वाश्रयणेनोक्तसाधनादिपक्षेऽपीत्यर्थः ॥ **अनैकान्त्यादीति** । व्याख्यानादावङ्गुलिचालनादिप्रवृत्तेः प्रेक्षावत्प्रवृत्तित्वेऽपि प्रयोजनोद्देशरहितत्वादिति भावः । अत्राप्यादिपदेन व्याप्तिवैकल्यमात्रपरिग्रहः ।

प० — मत्तो न प्रेक्षावानिति भावेन शङ्कते **ननु चेति** ॥ **तथापीति** । प्रेक्षावत्प्रवृत्तित्वेन प्रयोजनसाधकहेतोर्विशेषणेऽप्यङ्गचेष्टादिप्रवृत्तावनैकान्त्यबाधयोः प्रसङ्गपक्षे च व्याप्तिवैकल्यविपर्ययापर्यवसानयोरनिस्तार इत्यर्थः ।

श्री० — **प्रेक्षावदिति** । मत्तश्च न प्रेक्षावानिति न तत्प्रवृत्तौ व्यभिचार इति भावः । प्रयोजनोद्देशवर्जिता इत्यत्र वस्तुगत्या स्वप्रयोजनमेवात्र नेति द्रष्टव्यम् । शिष्यबोधनादिरूपपरप्रयोजनोद्देशस्त्वस्त्येवेति ध्येयम् ।

**सु० — यदुक्तमीश्वरस्य प्रवृत्तिः प्रयोजनेन विना स्वभावादेव प्रमितेति । तत्प्रमाणमिदानीमाह** देवस्येति ।

**अनु०** — देवस्यैष स्वभावोऽयमित्याह श्रुतिरञ्जसा ॥

**'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहे'ति श्रुतिरञ्जसा स्फुटमुक्तमर्थमाह । देवस्यायं सृष्ट्यादिविषय** एषः इच्छा । **तत्पूर्विका प्रवृत्तिरिति यावत् । स्वभाव एव । न प्रयोजनाय । कुतः आप्तकामस्य प्रयोजनस्पृहाऽसंभवादित्यर्थः ।**

शे० — भाष्यकारीयस्य श्रुत्युदाहरणस्यानर्थक्यमाशङ्क्य भाष्ये पूर्वोक्तस्य स्वभावादेवेश्वरप्रवृत्तेः प्रमितत्वस्य तादृशप्रमाणाभावेनासिद्धिशङ्कानिरासार्थत्वान्न तदिति भावेनोक्तार्थप्रदर्शनपूर्वकं तत्समर्पकप्रमाणोपदर्शनपरतयोत्तरभाष्यं योजयति **यदुक्तमिति** ।

प० — श्रुत्यर्थमाह **देवस्येति** । एष इत्यनुवादः । इच्छेति व्याख्या । इषु इच्छायामित्यस्माद्भावे घञि पुगन्तलघूपधस्य चेति गुणे रूपम् । अन्यथाऽयमेष इति पुनरुक्तिः स्यादिति भावः ।

श्री० — **तत्प्रमाणमिति** । स्वभावादेव प्रवृत्तिः प्रमितेति शेष इत्युक्तत्वात्तेन यत्प्रमाणमुक्तं तदाहेत्यर्थः ॥ **एष इच्छेति** । इषु इच्छायामिति धातोरित्यर्थः । अच्प्रत्यये गुणे च एषेति रूपम् । अत्रेच्छायाः स्वभावत्वलाभेन प्रवृत्तेस्तदलाभादसङ्गतिरत आह **एतत्पूर्वकेति** ॥

**सु० — केचिदिदं सूत्रमन्यथा व्याचक्षते । यथा लोके सप्तद्वीपां मेदिनीमधितिष्ठतः संपूर्णशौर्यवीर्यपराक्रमस्यापि महाराजस्य केवललीलैकप्रयोजनाः कन्दुकाद्यारम्भा दृश्यन्ते । तथैव परस्यापि ब्रह्मणः स्वसङ्कल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादेर्लीलैव प्रयोजनमिति तदेतन्निराकरोति** क्रीडामिति ।

**अनु०** — क्रीडां प्रयोजनं कृत्वा सृष्टिः श्रुतिविरोधिनी ॥

**'भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे' इति क्रीडाप्रयोजनां भगवतः सृष्ट्यादि-प्रवृत्तिं वदतः पूर्वपक्षीकृत्य देवस्यैष स्वभावोऽयमिति सयुक्तिकं प्रयोजनलेशाभावः श्रुत्या सिद्धान्तितः । अतः श्रुतिविरुद्धत्वादपव्याख्यानमेवैतत् ।**

**शे०** — ननु जगत्सृष्टेः क्रीडाप्रयोजनकत्वस्य श्रुतिविरुद्धत्ववर्णनमनर्थकमिति तदुत्तरोत्तरभाष्यानर्थक्यमाशङ्क्य लोकवदित्येतत्सूत्रीयापव्याख्याननिरासार्थत्वान्न तदिति भावेन तन्निरासकतया तद्योजयितुमेतत्सूत्रीयापव्याख्यानमनुवदति **केचिदिति** । रामानुजा इत्यर्थः ।

**प०** — **केचिदिति** । मायावादिनो रामानुजीयाश्चेत्यर्थः ॥ **सयुक्तिकमिति** । 'आप्तकामस्य का स्पृहे'ति युक्तेरुक्तेरिति भावः ।

**श्री०** — **वदतो** वादिन इति द्वितीयाबहुवचनम् ।

**सु०** — **सूत्राक्षराऽननुगुणं चैतद्व्याख्यानमित्याह इतीति ।**

अनु० — इति केवललीलैव निर्णीता प्रभुणा स्वयम् ॥

**यत एवं 'क्रीडां प्रयोजनं कृत्वा सृष्टिः श्रुतिविरोधिनी' इति तस्मात् श्रुत्यनुसारिणा प्रभुणा स्वयं साक्षात्स्पष्टं केवललीलैव सृष्ट्यादिप्रवृत्तिर्निर्णीता लीलाकैवल्यमिति । न तु लीलार्थेति ततोऽप्ययुक्तमिदं व्याख्यानमिति । यद्वा पूर्ववाक्योक्तो हेतुः, अयं साध्यनिर्देशः । यस्माल्लीलां प्रयोजनं कृत्वा सृष्टिः श्रुतिविरोधिनी तस्मादेतत्सूत्रे केवललीलैव सूत्रकृता निर्णीता व्याख्याता न पुनर्लीलार्थेति ।**

**शे०** — 'क्रीडां प्रयोजनं कृत्वा सृष्टिः श्रुतिविरोधिनी'त्येतावतैव परव्याख्यानस्य श्रुतिविरुद्धत्ववर्णनेनापव्याख्यानत्वसिद्धेः किमिति केवलेत्युत्तरार्धेनेत्यतोऽपव्याख्यानस्य सूत्राक्षराननुगुणत्वरूपदूषणान्तरोपदर्शनार्थत्वान्नानर्थक्यमिति भावेन तथा योजयति **सूत्रेति** । भाष्ये इतिशब्दस्य वैयर्थ्यमाशङ्क्य पूर्वार्धोक्तार्थस्योत्तरार्धार्थे हेतुसमर्पकत्वान्न तदिति भावेन पूर्वोक्तार्थानुवादपूर्वकं तस्य हेतुत्वसमर्पकतया तं व्याचष्टे **यत इत्यादिना** । इति केवललीलैवेत्यस्य सूत्राक्षराननुगुणत्वरूपदोषान्तरसमर्पकत्वेन योजनायां पूर्वार्धानुवृत्तिर्भवतीत्यपरितोषादेकवाक्यतामङ्गीकृत्य पक्षान्तरमाह **यद्वेति** । हेतुसाध्यनिर्देशपरतया योजनप्रकारमाह **यस्मादिति** । उत्तरार्धे तस्मादित्यर्थकेतिशब्दश्रवणादाह **यस्मादिति** ।

**प०** — इतिर्हेताविन्युपेत्याह **इति तस्मादिति** । यद्वेत्यादिनोक्तं व्यनक्ति **यस्मादिति** ॥ **कृत्वा सृष्टिरिति** । प्रवर्तत इति वाक्यशेषः । तेन क्त्वाप्रत्ययोपपत्तिः ।

**श्री०** — **यद्वेति** । पूर्वं क्रीडां प्रयोजनं कृत्वेत्यर्थो भिन्नवाक्यं कृत्वा योजितम् ।

सु० — किञ्च कर्तृत्वेन प्रयोजनवत्तां साधयन्नापादयन्वा प्रष्टव्यः । किं प्रयोजनं स्वसंबन्धि विवक्षितम्, उत परसंबन्धि, अथ साधारणम् । आद्ये साधनेऽनैकान्त्यम् । आपादने व्याप्त्यभावः । विपर्ययपर्यवसाने व्यभिचार एव । दृश्यन्ते हि कृपालवः स्वप्रयोजनमनुद्दिश्य परप्रयोजनार्थमेव प्रवर्तमानाः । न चादृष्टार्थमिति वाच्यम् । पशूनां पशुप्रायाणां चापत्यपालनादौ प्रवृत्तिदर्शनात् । न च प्रयोजनोद्देशिता कृपालुता चेति संभवति । द्वितीयेऽप्यनैकान्त्यादिकमेव । स्वप्रयोजनार्थं प्रवृत्तेर्बहुलमुपलम्भात् । भगवतोऽपि स्वप्रयोजनाभावेपि परप्रयोजनोद्देशिताङ्गीकारेण क्रमेण सिद्धसाधनेष्टापादनासिद्धत्वप्रसङ्ग(ङ्गा)श्च । अत एव न तृतीयोऽपि । अत एव (येन) केनचित्कर्तृत्व(त्वे )विशेषणं, प्रवृत्तिस्वभावत्वे सदा प्रवर्तेतेत्यतिप्रसञ्जनं च प्रत्युक्तम् ।

स्यादेतदेवम् । यदीश्वरप्रवृत्तौ परप्रयोजनोद्देशः स्यान्न चासावङ्गीकर्तुमुचितः । का स्पृहा न काऽपीति श्रुत्या नेति सूत्रकारेण च सर्वथा प्रयोजनोद्देशस्य निवारितत्वादित्यत आह आत्मेति ।

अनु० — आत्मप्रयोजनार्थाय स्पृहां श्रुतिरवारयत् ॥

श्रुतिरिति सूत्रकृतोऽप्युपलक्षणम् । परप्रयोजनार्थतां त्वङ्गीकुरुत एवेति शेषः ॥

---

शे० — ननु 'आत्मप्रयोजनार्थाय स्पृहां श्रुतिरवारयदि' त्युत्तरभाष्यमनर्थकम् । न च भगवतः स्पृहाभावप्रतिपादकश्रुतिसूत्रयोः स्वसम्बन्धिप्रयोजनाभावमात्रत्वप्रतिपादनार्थं तदिति वाच्यम् । तत्कथनस्य प्रकृतानुपयोगात् । न च भगवत्प्रवृत्तेः स्वसम्बन्धिप्रयोजनोद्देशाभावेऽपि परसम्बन्धिप्रयोजनोद्देशसद्भावप्रतिपादनार्थं तदिति वाच्यम् । तत्सद्भावप्रतिपादनस्याप्यनर्थकत्वात् । न च साधनापादनपक्षयोः परसम्बन्धिप्रयोजनसद्भावेन सिद्धसाधनत्वादिप्रतिपादनार्थं तदिति वाच्यम् । परसम्बन्धिप्रयोजनसाधनापादनपक्षयोः सिद्धसाधनत्वादिप्रसक्तावपि स्वसम्बन्धिप्रयोजनोद्देशसाधनापादनपक्षयोस्तदप्रसङ्गादित्यतोऽत्र तं पक्षं प्रकारान्तरेण प्रदूष्य परसम्बन्धिप्रयोजनोद्देशसाधनापादनपक्षौ सिद्धसाधनत्वादिना निरस्य तदुपपादनार्थं स्पृहाभावप्रतिपादकश्रुतिसूत्रगतिकथनेन परसम्बन्धिप्रयोजनोद्देशसद्भावप्रतिपादनपरत्वान्नोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य सिद्धसाधनत्वोपपादकपरसम्बन्धिप्रयोजनोद्देशसद्भावप्रतिपादकतयोत्तरवाक्यं सङ्गमयितुं साधनापादनपक्षयोः सम्भावितनया प्रसक्तान्विकल्पांस्तावद्दर्शयति **किञ्चेति** । साधनेऽनैकान्त्यमापादने व्याप्त्यभावो विपर्ययपर्यवसाने व्यभिचार इत्युक्तदोषत्रयमप्युपपादियति **दृश्यन्ते हीति** ॥ **कृपालव इति** । यद्यपि स्पृहिगृहीत्यादिना कृपेरालुच्प्रत्ययो न विहितस्तथाऽपि व्याकरणान्तरादव-

गन्तव्यः । कलशवाची वाऽऽलुशब्दः कृपापूर्णाः कलशा इत्यर्थः । उपलक्षणं चैतत् । 'स्पृह्यादेर्लुशमविभायालुच्करणम् अन्यत्रापि यथा स्यात् तेन कृपालुरिति सिध्येत्' इति व्याकरणवचनादपि न तत्सम्भव इत्यपि द्रष्टव्यम् ।

ननु लुश्विधौ न स्पृहयालुरिति रूपं सिध्यति । आलुज्विधौ तु 'अयामन्ताल्वाय्ये'ति णेरयादेशे तत्सिद्धिरिति चेन्न । स्पृहेर्लुशि तस्य शित्वेन तिङ्शित्सार्वधातुकमिति सार्वधातुकतया कर्तरि शबिति शपि सार्वधातुकार्धधातुकयोरिति गुणे अयादेशे अतो दीर्घो यञीति दीर्घतायां सत्यां स्पृहयालुरिति तत्सिद्धिसम्भवात् । ततश्च सत्यप्येवं लुश्विधावपि विवक्षितसिद्धावालुच्करणमन्यत्रापि यथा स्यादित्यस्यार्थस्य ज्ञापकम् । तद्बलाच्च कृपेरालुचि कृपालुशब्दनिष्पत्तिरित्यालुज्विधिनैवास्यार्थस्य ज्ञापितत्वाददोषः । अत एव कौमुद्यां 'हरे कृपालो नः पाही'त्युक्तम् ॥ ननु च लुश्विधौ न विवक्षितरूपसिद्धिः । लुशो लकारस्येत्संज्ञाप्रसङ्गात् । स्पृहयालुरिति दीर्घत्वानुपपत्तिश्च । तिङीत्यनुवृत्त्या तिङि परत एवातो दीर्घो यञीति दीर्घत्वविधानात् । श्रद्धालुश्च न सिध्येत् । श्रत्पूर्वाद्धाधातोर्लुशि शपि तस्य जुहोत्यादित्वात् श्लौ सति श्लाविति द्विर्भावे ह्रस्व इति ह्रस्वत्वे चर्त्वे श्नाभ्यस्तयोरात इत्यालोपे श्रद्दधलुरिति प्रसङ्गात् । अतो लुश्विधौ स्पृहयालुरिति रूपासिद्ध्या तत्सिद्ध्यर्थत्वादालुच्करणस्य नान्यथाऽनुपपत्त्याऽन्यत्राप्यालुच्प्रत्ययविधायकत्वसिद्धिरिति चेत् । मैवम् । लुश्विधावपि यादित्वादित्संज्ञाभाव उपपद्यते । यकारश्चात्रलुसनिर्दिष्टः क्रियते । प्रयोजनाभावाद्वा इत्संज्ञाभावः । न ह्यत्र लित्स्वरप्रत्ययस्वरयोर्विशेषोऽस्ति । उभयत्र 'एकादेश उदात्तेनोदात्त' इत्युदात्तत्वस्य भावात् । नापि स्पृहयालुरिति दीर्घानुपपत्तिः । 'अतो दीर्घो यञी'त्यत्र 'तुरुस्तुशम्यमः सार्वधातुके' इत्यतः सार्वधातुकग्रहणस्यैवानुवृत्त्या तिङ्ग्रहणाननुवृत्तेः । नाप्यन्त्यः । अनेकार्थत्वाद्धातूनाम् । अत्रविषये दधात्यर्थे वर्तमानस्य धेटो भविष्यति । न च शिदाश्रयेऽशितीत्यात्वप्रतिषेधात्तदनुपपत्तिः ( पा सू. ६-१-४५ आदेच उपदेशेऽशिति । सि. कौ. सू क. २३७० ) । एवं तर्हि श्रद्धा आश्रद्धेत्याकारप्रश्लेषादात्वं भविष्यति । अथवा धातोरेव संज्ञापूर्वको विधिरनित्य इति द्विर्वचनं न प्रवर्तिष्यते । ततश्च लुश्विधिनैवोपपत्तावपि ज्ञापनार्थमेवालुच्करणम् । एतज्ज्ञापयत्याचार्यः । यत्रालुचैव रूपसिद्धिस्ततोऽप्ययं भवतीति कृपेरप्यालुच्प्रत्यय इत्यन्यत्र विस्तरः । ततश्च कृपालुप्रवृत्तौ सत्यपि प्रवृत्तित्वे स्वसम्बन्धिप्रयोजनवत्त्वाभावादनैकान्त्यं साधने । आपादने च तत्रैव प्रवृत्तित्वरूपापादकवति स्वसम्बन्धिप्रयोजनवत्त्वरूपापाद्यविरहादापादकस्यापाद्येन व्याप्त्यभावः । न भवति च स्वसम्बन्धिप्रयोजनवान् । तस्मान्न प्रवृत्तिमानिति विपर्ययपर्यवसाने कृपालुप्रवृत्तावेव व्यभिचारश्चेति पूर्वोक्तदोषत्रयमुपपादितं भवति ।

**न चेति** । तथा च कृपालुप्रवृत्तौ साध्यस्यापि सत्त्वान्न व्यभिचार इति भावः । माऽस्तु तर्हि कृपालुप्रवृत्तौ व्यभिचारः पश्वादीनामपत्यपालनादिप्रवृत्तौ तु व्यभिचारः स्यादेवेत्याशयेन परिहरति

**पशूनामिति** । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु कृपालुप्रवृत्तेरदृष्टार्थताया एवायोगात्तत्र व्यभिचारो दुर्वार एवेत्यभिप्रेत्य तत्रादृष्टार्थत्वाभावमुपपादयति **न चेति** । निरुपाधिकपरदुःखप्रहाणेच्छाया एव कृपालुत्वादिति भावः । अस्तु तर्हि परसम्बन्धिप्रयोजनमेवात्र प्रयोजनमिति द्वितीयपक्ष इत्यत आह **द्वितीयेऽपीति** ॥ **अनैकान्त्यादिकमिति** । साधनेऽनैकान्त्यमापादने व्याप्त्यभावो विपर्ययपर्यवसाने व्यभिचारश्चेत्यर्थः । त्रितयमप्युपपादयति **स्वप्रयोजनार्थेति** । स्वप्रयोजनार्थप्रवृत्तौ सत्यपि प्रवृत्तित्वे परसम्बन्धिप्रयोजनोद्देशाभावात्साधनेऽनैकान्त्यमापादने च तत्रैव सत्यपि प्रवृत्तित्वरूपे आपादके परसंबन्धिप्रयोजनवत्त्वरूपापाद्यविरहाद्व्याप्त्यभावः । न भवति च परसम्बन्धिप्रयोजनवांस्तस्मान्न प्रवृत्तिमानिति विपर्ययपर्यवसाने स्वप्रयोजनार्थप्रवृत्तौ व्यभिचार इति भावः ॥ **क्रमेणेति** । साधने सिद्धसाधनताभावात्प्रवृत्तेः परसम्बन्धिप्रयोजनोद्देशवत्त्वाभ्युपगमात् । आपादने च तत एवेष्टापत्तिः । विपर्ययपर्यवसाने चासिद्धत्वमिति क्रमेण सिद्धसाधनत्वादिप्रसङ्ग इत्यर्थः ॥ **अत एवेति** । सिद्धसाधनत्वादिप्रसङ्गादेवेत्यर्थः । परसम्बन्धिप्रयोजनवत्त्वस्य भगवत्प्रवृत्तावप्यस्माकं सम्मतत्वात्तदादाय स्वपरसाधारणप्रयोजनवत्त्वस्य सिद्धत्वात्साधने सिद्धसाधनम् । तत एवापादने इष्टापत्तिः । विपर्ययपर्यवसानेऽसिद्धत्वं चेति भावः ॥ **अत एवेति** । चिकीर्षापूर्वकत्वेन प्रवृत्तिविशेषणेन मत्तप्रवृत्तौ व्याख्यानादावदृष्टेष्टादौ चानैकान्त्यपरिहारेऽपि भगवत्प्रवृत्तेः परप्रयोजनोद्देशिताङ्गीकारेण क्रमेण सिद्धसाधनेष्टापादनासिद्धत्वानामपरिहारादेव केनचित्कर्तृत्वविशेषणम् । भगवत्प्रवृत्तेस्तत्स्वभावत्वेऽपि परप्रयोजनोद्देशवत्त्वात्प्रयोजनानुसारेणैव प्रवृत्त्या कादाचित्कपरप्रयोजनानुरोधेन कादाचित्कत्वोपपत्त्या सर्वदा प्रवृत्त्यापादनं चायुक्तमित्यर्थः । एवं सिद्धसाधनत्वादीनां परसम्बन्धिप्रयोजनवत्त्वसाधनापादनपक्षौ प्रदूष्य स्पृहाभावप्रतिपादकश्रुतिसूत्रगतिकथनमुखेन परसम्बन्धिप्रयोजनवत्त्वोपपादकतयोत्तरं वाक्यं योजयितुमीश्वरप्रवृत्तेः परप्रयोजनोद्देशिताङ्गीकारे श्रुतिसूत्रविरोधशङ्कामुत्थापयति **स्यादेतदेवमिति** । न प्रयोजनवत्त्वेनेत्यत आह **यदीति** । जगद्गुरुरित्युक्तग्रन्थे ज्ञापकविशेषकथनेन सौत्रप्रयोजननिषेधस्य स्वसम्बन्धिप्रयोजनविषयत्वसमर्थनात्तदनुरोधेनाह **श्रुतिरितीति** । ईश्वरप्रवृत्तेः परप्रयोजनोद्देशसद्भावानुक्तेः कथमनेनोक्तशङ्कापरिहार इत्यतोऽपेक्षितशेषमाह **परेति** ।

स० — **आद्ये साधने इति** । ज्वलनपवनादावनैकान्त्यमित्यर्थः । **आपादने व्याप्त्यभाव इति** । यद्यपि आपादने अनैकान्त्यमिति वक्तुं शक्यम् । तथापि विशिष्टतर्कस्यैवापादनशब्दार्थत्वात् तत्र चाङ्गवैकल्यमेव स्पष्टं वक्तव्यमित्यभिप्रेत्यैवमुक्तम् । ज्वलनपवनादौ व्यभिचारात् व्याप्त्यभाव इत्यर्थः । विपर्ययपर्यवसाने परार्थं प्रवर्तमानेषु कृपालुषु व्यभिचार इत्यर्थः । तमेवोपपादयति **दृश्यन्ते हीति** ॥ **क्रमेणेति** । साधने सिद्धसाधनता । परप्रयोजनार्थत्वस्याभ्युपगतत्वात् । आपादने चेष्टापादनम् । ततः

एव विपर्ययपर्यवसाने असिद्धत्वम् । न भवति च परसंबन्धिप्रयोजनवान् । तस्मान्न करोति विपर्यय-पर्यवसाने भगवति परप्रयोजनोद्देशिताया मानसिद्धत्वादसिद्धत्वमिति भावः । **अत एवेति** । सिद्ध-साधनत्वप्रसङ्गादेवेत्यर्थः । ननु प्रेक्षापूर्वकत्वं हेतुविशेषणम् । तथा च न कुत्रापि व्यभिचार इत्यत आह **अत एवेति** । अत्राप्यनुमाने परसबन्धिप्रयोजनवत्त्वसाधने सिद्धसाधनम् । स्वसंबन्धितत्साधने श्रुत्या-दिबाधः । तर्के च विपर्ययपर्यवसाने बाध इति भावः । प्रवृत्तिस्वभावत्वे सदा प्रवर्तेत इत्यापादने दयालुषु प्रवृत्तिस्वभावत्वेऽपि सर्वदा प्रवृत्त्यभावेन व्यभिचारादेवेत्यर्थः ।

प० — अंगचेष्टा इत्यस्य दयापूर्वं प्रवृत्तय इत्यर्थं उद्देशेत्यस्य प्रयोजनोद्देशवर्जिता इत्यर्थं चोपेत्य व्याख्यानान्तरमारभते **किंचेति ॥ साधारणमिति** । उभयसम्बन्धीत्यर्थः ॥ **आद्य इति** स्वसम्बन्धीति पक्ष इत्यर्थः । अनैकान्त्यादिदोषत्रयं व्यनक्ति **दृश्यन्ते हीति** । कृपालव इत्यस्य साधुत्वमुक्तं जिज्ञासानये 'यथा दृष्ट्या प्रमत्तः सन्नि'त्यत्र ॥ **द्वितीयेपीति** । परसम्बन्धीति पक्ष इत्यर्थः । कुत्रेत्यत आह **स्वप्रयोजनार्थमिति** । एतेन काश्चिदङ्गचेष्टा आत्मकार्यमात्रार्थं प्रवर्तमानानां प्रवृत्तयः । उद्देशवर्जिताः परप्रयोजनोद्देशहीना इति मूलार्थः सूचितः । 'मूर्त्यै निजश्रिनजनस्य हि मृज्यमृष्टावीक्षा बभूवे'त्युक्त्य-नुरोधेनेशस्य सदा प्रवृत्तिः स्वीयानां प्रयोजनभावादेवेति मूलार्थमुपेत्याह **भगवतोपीति ॥ क्रमेणेति** । साधनपक्षे परप्रयोजनस्योपगमेन सिद्धसाधनत्वं आपादने चेष्टापादने विपर्यये चापाद्यप्रयोजनस्याभाव-रूपहेतोरसिद्धिरित्यर्थः ॥ **अत एवेति** । स्वपरान्यतरमात्रप्रयोजनोद्देशात्सुदयालुमूर्खयोः प्रवृत्तिष्व-नैकान्त्यादिदोषादेव तृतीयोपि नेत्यर्थः । यदा साधारणमित्यस्य स्वपरेतिविशेषमविवक्षित्वा प्रयोजनव-त्त्वमात्रमित्यर्थः । तदा परप्रयोजनवत्त्वोपगमेन सिद्धसाधनादिदोषादेवेत्यर्थः ॥ **अत एवेति** । सविशेष-णत्वेऽपि व्यभिचारादिप्रदर्शनादेव । ज्वलनादावव्यभिचाराय चेतनत्वे सतीत्युक्तौ नृत्तगानादिकर्तरि व्यभिचारात् । प्रेक्षावत्त्वे सतीत्युक्तावप्यङ्गुलिचालनादिकर्तरि व्याख्यात्रादौ व्यभिचारात् । दयालुत्वे सतीति विशेषणेपि स्वप्रयोजनोद्देशहीनलौकिकेषु दयया प्रवर्तमानेषु व्यभिचारादेव तथा स्वपरेति-विशेषाविवक्षया प्रयोजनवत्त्वमात्रसाधने सिद्धसाधनाद्युक्तदोषादेव चेतनत्वादिना केनचित्कर्तृत्वविशेषणं निरस्तम् । ज्वलनादौ व्यभिचारादेव सर्वदा प्रवर्तत इत्यपि निरस्तमित्यर्थः ।

या० — उत्तरानुव्याख्यानमुत्थापयितुमाह **किञ्चेति** । साधनेऽनैकान्त्यं विपर्ययपर्यवसाने च व्यभिचारं च उपपादयति **दृश्यन्ते हीत्यादिना ॥ कृपा चेति** । निरुपाधिपरदुःखप्रहाणेच्छाया एव कृपात्वादिति भावः ॥ **क्रमेण सिद्धसाधनेति** । साधने सिद्धसाधनता । परसम्बन्धिप्रयोजनस्याङ्गीकृतत्वात् । अत एवापादने इष्टापत्तिः । विपर्ययपर्यवसानेऽसिद्धत्वप्रसङ्गश्चेत्यर्थः ॥ **येन केनचिदिति** । अङ्गचेष्टादौ व्यभिचारवारणाय चिकीर्षापूर्वकत्वादिना प्रवृत्तिरूपकर्तृत्वविशेषणं प्रत्युक्तमित्यर्थः । भगवतः

स्वप्रयोजनाभावेऽपि परप्रयोजनोद्देशिताऽङ्गीकारेण विशेषणे दत्तेऽपि क्रमेण सिद्धसाधनेष्टापादनादि-प्रसङ्गात् । भगवत्प्रवृत्तेः स्वभावत्वेऽपि प्रयोजनानुसारेण क्रमात्सुप्त्यादिकर्तृत्वस्याङ्गीकृतत्वेन सदा प्रवृत्त्यापादनस्याप्यसम्भवादिति भावः । यथाऽऽहुः 'स्वभावभूताऽपीशस्य क्रमात्सृष्ट्यादिकर्तृता । चूता-दीनां वसन्तादौ पुष्पितत्वादिकं यथा । देवस्यैष स्वभावोऽयमिति हि श्रुतिरब्रवीदि'ति ।

**श्री०** — अनैकान्त्यव्याप्त्यभावादेः स्थलमाह **दृश्यन्ते हीति ॥ न चेति** । तथा च तेष्व-प्यदृष्टरूपस्वप्रयोजनसत्वान्न व्यभिचार इति भावः ॥ **पशूनामिति** । अदृष्टानुसन्धानशून्यानाम् । कृपा-मात्रेणेति शेषः । तथा च पश्वादिषु व्यभिचार इत्यर्थः । ननु च तत्रापि स्वप्रयोजनोद्देशिताऽस्त्ये-वेत्यत आह **न चेति ॥ कृपालुता चेति** । निरुपाधिकपरदुःखप्रहाणेच्छा कृपा, तद्वानित्यर्थः । **अङ्गीकुरुतः** श्रुतिसूत्रकारौ ।

**सु०** — **कुत एतदवगम्यत इत्यत आह नेति** ।

**अनु०** — न प्रयोजनवत्त्वेनेत्यत आह जगद्गुरुः ॥

**यतः परप्रयोजनमङ्गीकृत्यात्मप्रयोजनार्थतामेव नेति न्यवारयत् । अत एव हि प्रयो-जनवत्त्वादिति तत्र हेतुमाह । अन्यथा नैतं ब्रूयात् ।**

**एतदुक्तं भवति । यदि नेति सौत्रीप्रतिज्ञा स्वपरप्रयोजनविषया स्यात् तदा प्रयोजन-वत्त्वादिति हेतुरनैकान्तिकः स्यात् । स्वयं व्यापारसाध्यप्रयोजनवतोऽपि परप्रयोजनोद्देशेन व्यापारदर्शनात् । स्वप्रयोजनमात्रविषयत्वे तु नायं दोषः । योऽवाप्तसमस्तप्रयोजनः स स्वार्थं न तदुद्दिशतीति व्याप्तेरनवद्यत्वात् । अतः प्रयोजनवत्त्वादिति हेतुं ब्रुवाणः सूत्रकृदात्मप्रयोजनोद्देश-मेव नेति निवारितवान् । न परप्रयोजनोद्देशमपि । तथात्वे तद्व्याप्तमेव कमपि हेतुं ब्रूयात् । स्वप्रयोजननिषेधं कुर्वाणो विशेषनिषेधस्य शेषाभ्यनुज्ञाज्ञापकत्वात्परप्रयोजनस्पृहामभ्युपैतीति (मनुजानातीत्यपि) ज्ञायत इति । उपलक्षणमेतत् । श्रुतिरप्याप्तकामस्येति हेतुगर्भविशेषणं प्रयुञ्जानाऽऽत्मप्रयोजनस्पृहामेवाक्षिपति परप्रयोजनस्पृहामभ्युपैतीति ज्ञायत इत्यपि द्रष्टव्यम् ॥**

**शे०** — ननु स्वस्वसम्बन्धिप्रयोजनविषयत्वाच्छ्रौतादिनिषेधस्य भगवत्प्रवृत्तेः परसम्बन्धिप्रयोज-नोद्देशसिद्ध्या प्रागभिप्रेतसिद्धसाधनत्वादिसमर्थनात्किमुत्तरेणेत्यत उक्तनिषेधस्य स्वसम्बन्धिप्रयोजन-विषयतायां ज्ञापकविशेषाभिधानार्थत्वात्तस्य नानर्थक्यमिति भावेन तत्कथनरूपतयोत्तरवाक्यं सङ्गमयितुं तदभावप्रयुक्तस्वसम्बन्धिप्रयोजनमात्रविषयत्वानुपपत्तिशङ्कामुत्थापयति **कुत एतदिति** । ननु चात्र 'न प्रयोजनवत्त्वेनेत्यत आह जगद्गुरुरि'त्येवोच्यते न तु प्रयोजननिषेधस्य स्वसम्बन्धिप्रयोजनमात्रविषय-तायां किञ्चिन्नियामकमर्पीति कथमनेनोक्तशङ्कापरिहार इत्यतोऽपेक्षिताध्याहारेण ज्ञापकविशेषसमर्पकतया

भाष्यं व्याचष्टे **यत इत्यादिना** ॥ **अन्यथेति** । नेति सौत्रनिषेधस्य स्वपरसम्बन्धिप्रयोजननिवारकत्व इत्यर्थः । ननु नेति सौत्रप्रयोजननिषेधस्य स्वसंबन्धिप्रयोजनविषयतायामिव स्वपरसाधारणप्रयोजनविषयतायामपि हेतुत्वादेवोक्तत्वोपपत्तेः कथमनेन निषेधस्य स्वसंबन्धिप्रयोजनमात्रविषयत्वसिद्धिः, कथञ्चित्तत्सिद्धावपि कथं भगवत्प्रवृत्तेः परप्रयोजनोद्देशसिद्धिरित्यतः प्रयोजनमात्रनिवारकत्वहेतुत्वासंभवप्रदर्शनपूर्वकं स्वसंबन्धिप्रयोजनमात्रविषयतायां तत्संभवकथनेनावक्तव्यत्ववक्तव्यत्वे व्युत्पादयन्नेव परसंबन्धिप्रयोजनाभ्युपगमसिद्धिमुपदर्शयति **एतदुक्तं भवतीत्यादिना** । अनैकान्तिकत्वमेव दर्शयति **स्वयमिति** । ज्ञायत इतीत्यत्रत्यस्येतिशब्दस्येत्येतदुक्तं भवतीति पूर्वेण संबन्धः । नन्वनेन वाक्येन नेति सौत्रनिषेधस्योक्तरीत्या स्वप्रयोजनमात्रविषयत्वसिद्ध्या सूत्रकृतः परप्रयोजनोद्देशाङ्गीकारसिद्धावपि श्रौतनिषेधस्य तदसिद्ध्या श्रुतौ तदङ्गीकारासिद्धेः कथमनेन वाक्येनोक्तशङ्कानिरास इत्यतो न प्रयोजनवत्त्वेनेत्यादिभाष्यमुपलक्षणतया व्याचष्टे **उपलक्षणमेतदिति** । यद्यप्यत्र मूले आत्मप्रयोजनार्थायेति पूर्ववाक्यानुरोधेन श्रौतनिषेधस्य स्वसंबन्धिप्रयोजनमात्रविषयत्वं ज्ञापकोक्त्या मुखतो वक्तुमुचितम् । तथाऽपि पूर्ववाक्यस्थश्रुतिशब्दस्य सूत्रकृदुपलक्षणत्वज्ञापनार्थं सौत्रनिषेधस्य तद्विषयत्वं मुखत उपपादितम् । अन्यथा निराकाङ्क्षतया श्रुतिशब्दस्य तदुपलक्षणत्वासंभवादिति ध्येयम् ।

---

**प०** — एवं हेतूक्तावप्युक्तप्रमेयसिद्धिः कथमित्यत आह **एतदुक्तमिति** ॥ **इति हेतुरनैकान्तिक इति** । प्रयोजनवत्त्वादित्यस्य ह्यासप्रयोजनवत्त्वादित्यर्थः । तथाचेश्वरः न प्रयोजनोद्देशेन व्याप्रियत आप्तप्रयोजनवत्त्वात् यो यद्व्यापारसाध्यप्रयोजनमाप्तवान् स तद्व्यापारसाध्यप्रयोजनोद्देशेन न व्याप्रियत इत्युक्तौ व्यभिचारी हेतुः स्यादित्यर्थः । कुत्रेत्यत आह **स्वयमिति** । आत्मन इत्यर्थः । व्यापारसाध्यप्रयोजनं स्वस्याप्तवतोऽपीत्यर्थः ॥ **इति हेतुमिति** । आप्तप्रयोजनत्वादित्यर्थकं हेतुमित्यर्थः ॥ **तद्व्याप्तं कमपीति** । स्वभाववत्त्वादिकमित्यर्थः । तावता परार्थमिति कथं ज्ञायत इत्यत आह **स्वप्रयोजनेति** । उत्तरवाक्यसङ्गत्यर्थमाह **उपलक्षणमिति** ।

**या०** — न प्रयोजनवत्त्वेनेत्युत्तरमूलोत्थापनायाह **सूत्रकृतोऽपीति** ॥ **तद्व्याप्तमेव कमपीति** । प्रयोजनोद्देशसामान्याभावव्याप्तमानन्दोद्रेकादिकमेव कमपि हेतुं कुर्यादित्यर्थः ।

**श्री०** — **स्वयं व्यापारेति** । स्वयं स्वीयव्यापारसाध्यं प्रयोजनं पूर्वमेव लब्धवत इत्यर्थः । कृतकृत्यस्यापीति यावत् । अथवा स्वयं स्वस्येत्यर्थः । **स्वप्रयोजनमात्रविषयत्वे** नेति सौत्रप्रतिज्ञायाः स्वप्रयोजननिषेधमात्रविषयकत्व इत्यर्थः ॥ **तद्व्याप्तमिति** । स्वपरप्रयोजनोभयनिषेधव्याप्तं हेतुं ब्रूयान्न स्वप्रयोजनमात्रनिषेधकमित्यर्थः ।

सु० — इह हि बुद्धिरेवेश्वरस्याव्याहता क्रियाशक्तिः, तयैव सर्वस्योपपत्तौ किमिच्छा-प्रयत्नकल्पनया । यद्वा प्रयत्नः कर्तृत्वम् । तस्यैवाख्यातार्थतया निर्णीतत्वात् । स च द्वेधा बुद्धिमपेक्षते । उत्पत्त्यर्थं विषयनियमार्थं च । तत्रेश्वरप्रयत्नो यद्यपि नित्यत्वान्नोत्पत्तावपेक्षते बुद्धिम् । तथाऽपि विषयनियमार्थं तामपेक्षत एव । न हि निर्विषय एवासौ । व्यर्थत्व-प्रसङ्गात् । न च स्वभावत एवार्थप्रवणः । बुद्धित्वप्रसङ्गात् । बुद्धिरेव हि स्वभावतोऽर्थ-प्रवणा । अतो ज्ञानप्रयत्नाभ्यामेव सर्वनिर्वाहान्नेश्वरस्येच्छाऽस्ति । न चेच्छया प्रयत्नस्य विषय-नियमः । तस्या अपि स्वतो विषयप्रवणताभावात् । तदर्थं बुद्ध्यङ्गीकारे तयैव प्रयत्नस्य विषयनियमोपपत्तेः किमन्तर्गडुनेच्छयेति मन्वा(न्यमा)नाः केचित्, 'का स्पृहे'ति श्रुतिर्नेश्वरस्य प्रयोजनेच्छामात्रनिषेधपरा, किन्त्विच्छालक्षणं गुणमेव निषेधतीति व्याचक्षते । तन्निरा-करोति इच्छामात्रमिति ।

अनु० — इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ॥
इति प्रशंसया

का स्पृहेति श्रुत्या नेश्वरस्येच्छामात्रं निषि(षे)ध्यते । कुतः । इच्छावत्त्वस्य प्रमाणतः सिद्धत्वात् । तथाहि । 'विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः । स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता । कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः' इति परिणामवादं विवर्तवादं कालादिनिमित्तवादं चान्यमतत्वेनोक्त्वेच्छामात्रमिति श्रुत्या स्वमतमुच्यते । ये सृष्टिविषये विशिष्टनिश्चयवन्तस्ते, प्रभोरिच्छामात्राधीना सृष्टिर्न ब्रह्मपरिणामो न च तद्विवर्तो नापि कालादिनिमित्तेति मन्यन्त इति । अनया प्रभोरिच्छामात्रायत्ततां सृष्टेर्मन्यमानानां विनिश्चिता इति प्रशंसया तस्येच्छावत्त्वमवगम्यते । यदीश्वरस्येच्छा न स्यात् तदा तदायत्ततां सृष्टेर्मन्यमाना विपर्यस्ताः स्युः । विशिष्टनिश्चयवन्त इत्येषा प्रशंसाऽनुपपन्ना स्यात् । न च प्रशंसात्वादेवार्थासिद्धिः । पूर्वोत्तरपक्षावधारणप्रसङ्गे प्रशंसाया अपि याथार्थ्यावश्यम्भावात् । अन्यथा परिणामादिवादा अपि प्रशंस्येरन् ।

शे० — ननु चोत्तरग्रन्थे भगवत इच्छावत्त्वसमर्थनं क्रियते तदनर्थकम् । प्रकृतानुपयोगात् । न च का स्पृहेति श्रुतेरिच्छारूपभगवद्गुणनिषेधार्थत्वपक्षनिराकरणार्थत्वान्न तदिति वाच्यम् । तदनिरा-सेऽप्यक्षत्या तन्निराकरणस्याप्यानर्थक्यात् । कर्तृत्वान्यथाऽनुपपत्त्या भगवत इच्छावत्त्वस्येश्वरवादिभिरङ्गी-करणीयत्वेनासम्भवदुक्तिकतया तत्पक्षानुत्थानाच्चेत्यतः स्वाभिमतस्वसम्बन्धिप्रयोजनेच्छामात्रनिषेधकत्व-

सिद्धयर्थत्वान्नानर्थक्यम् । कर्तृत्वस्येच्छामन्तरेणाप्युपपत्त्या का स्पृहेति श्रुतेरिच्छालक्षणगुणनिषेधकत्वपक्षस्य नासम्भवदुक्तिकत्वमपीत्यभिप्रेत्य तत्पक्षनिरासकतयोत्तरग्रन्थं सङ्गमयितुमिच्छामन्तरेण कर्तृत्वोपपत्तिप्रतिपादनपुरःसरं का स्पृहेति श्रुतेरिच्छालक्षणगुणनिषेधकत्वपक्षमुत्थापयति **इह हीति** ॥ **अव्याहतेति** । अप्रतिबद्धेत्यर्थः । यदि हि केनचिद्बुद्धिर्व्याहन्यते तन्निवृत्त्यर्थमिच्छादिकमुपयुज्यत इति व्याहतबुद्धीनां तदपेक्षायामप्यव्याहतबुद्धेरीश्वरस्य न तदपेक्षेति भावः । क्रियाशक्तिः क्रियानुकूला शक्तिर्यस्याः सा तथोक्तेत्यर्थः ॥ **तस्यैवेति** । 'भावनैव हि यत्नात्मा सर्वत्राख्यातगोचरः' इति वचनादिति भावः । अत एव रथो गच्छतीत्यादावाख्यातो गौण एवेति भावः ॥ **तस्या अपीति** । स्वभावतो विषयप्रवणत्वे च बुद्धित्वप्रसङ्गादिति भावः । नन्विच्छाया बुद्धिवत्स्वतो विषयप्रवणत्वाभावेऽपि बुद्ध्युपाधिकं विषयत्वप्रवणत्वमस्त्येवेति विषयप्रवणत्वोपपत्तेर्युज्यत एवेच्छयाऽपि जडप्रयत्नस्य विषयनियमः । विषयप्रवणतामात्रस्यैव विषयनियामकतायां प्रयोजकत्वेन स्वतो विषयप्रवणत्वस्य गौरवेणाप्रयोजकत्वादित्यत आह **तदर्थं चेति** ॥ **तयैवेति** । लाघवादावश्यकत्वाच्चेति भावः । का स्पृहेति श्रुतेरिच्छालक्षणगुणनिषेधकत्वाभावस्य भाष्यारूढत्वसिद्ध्यर्थमपेक्षिताध्याहारेण निषेधकत्वाभावप्रतिपादनादिच्छामात्रमित्यादिना तस्य प्रामाणिकत्ववर्णनमनर्थकमित्याशङ्क्य नेच्छामात्रं निषिध्यत इति प्रतिज्ञायां हेतुभूतस्येच्छाप्रामाणिकत्वस्योपदर्शनार्थत्वान्नानर्थक्यमित्यभिप्रेत्य हेतोरुपदर्शकतया तद्योजयितुमुक्तप्रतिज्ञायां हेत्वाकाङ्क्षोत्थापनपूर्वकं तद्धेतुं दर्शयति **कुत इत्यादिना** ॥ **परिणामवादमिति** । विचित्रभवनरूपपरिणामस्य श्रुतौ विभूतिपदेनोक्तत्वादिति भावः ॥ **विवर्तवादमिति** । श्रुतौ जगत्सृष्टेः स्वप्नमायासरूपत्वाभिधानेन ब्रह्मविवर्तत्वाभिधानादिति भावः । कालादीत्यादिपदेन रुद्रादिपरिग्रहः ॥ **अन्यमतेनोक्तत्वमिति** । भाष्यवाक्येऽन्य इति द्वितीयवाक्येऽन्यैरिति श्रवणादिति भावः । नन्वत्रेच्छामात्रं सृष्टिरित्येतावदुच्यते न पुनः प्रागनुक्रान्तपक्षोपमर्देन कश्चित्स्वपक्ष इति कथमस्य स्वपक्षाभिधायकत्वमित्यतस्तत्प्रदर्शनपरतया व्याचष्टे **य इत्यादिना** । प्रशंसयेश्वरस्येच्छावत्त्वावगमः कथमित्यतस्तदन्यथाऽनुपपत्तेरित्यभिप्रेत्य तां दर्शयति **यदीति** ॥ **न चेति** । प्रशंसायामधिकोक्तेरपि दर्शनादन्यथा तस्यापि सिद्धिप्रसङ्गादिति भावः । यद्वा ननु 'कामस्तदग्रेः' इत्याद्युदाहरिष्यमाणवाक्यानामिच्छामात्रमित्यस्यापि श्रुतित्वा'दिति श्रुत्येत्येव वक्तव्यं 'तथा प्रशंसये'त्युक्तौ किं निमित्तं कुतश्च श्रुतिभ्यः पृथक्करणमित्यत एतच्छ्रुत्युक्तान्यथाऽनुपपत्त्येच्छासिद्ध्याऽस्याः श्रुतितया तदर्थागमकत्वात्प्रशंसाग्रहणं पृथक्करणं च सार्थकमित्यभिप्रेत्यान्यथाऽनुपपत्त्या तदवगतिमुपपादयति **यदीत्यादिना** ॥ **प्रशंसात्वादिति** । अयथार्थत्वादित्यर्थः । प्रशंसायामधिकोक्तेरपि दर्शनादिति भावः ॥ **याथार्थ्येति** । तथा च प्रशंसामात्रस्य याथार्थ्याभावेऽप्युक्तरूपप्रशंसाया याथार्थ्यान्नार्थासिद्धिरिति भावः ॥ **अन्यथेति** । अयथार्थत्वाविशेषादिति भावः ।

**स०— तस्यैवेति** । रथो गच्छतीत्यादौ आख्यातो गौण इति भावः । **तस्या अपीति** । अन्यथा इच्छाया अपि बुद्धित्वप्रसंगादिति भावः ।

**प०**— उत्तरवाक्यमवतारयितुं श्रुतेरन्याख्यानं पराभिप्रेतं युक्तिपूर्वकमनुवदति **इह हीति** । ईश्वरस्येच्छाविषये । केचिदिति मन्वाना इति व्याचक्षत इत्यन्वयः । इच्छाकृत्योर्द्वयोरपलापप्रकारं तावदाह **बुद्धिरेवेति** ॥ **क्रियाशक्तिरिति** । अव्याहता निर्माणशक्तिरित्यर्थः । बहुत्वं हिर्वा । इच्छामात्रापलापिनो मतमाह **यद्वेति** ॥ **तस्यैवेति** । प्रयत्नरूपकर्तृत्वस्यैव 'लः कर्मणि च भावे चाकर्मकेभ्य' इत्यत्र चकारेण कर्तरि विहितलकारादेशस्य तिङ्रूपाख्यातस्यार्थत्वेन निर्णीतत्वात् 'भावनैव प्रयत्ना (त्मा)(ख्या) सर्वत्राख्यातगोचर' इत्युक्तेश्चेति भावः ॥ **विषयनियमार्थमिति** । यद्विषया बुद्धिः तद्विषयः प्रयत्न इति विषयनियमार्थमित्यर्थः । कुत एवं, घटादिवन्निर्विषयत्वेन वा स्वत एव विषयप्रावण्याद्वोपपत्तिरस्त्वित्यतो निराह **न हीति** ॥ **व्यर्थत्वेति** । प्रयत्नो हि यद्विषयः तस्योत्पत्त्याद्यर्थमभ्युपगम्यते स चेन्निर्विषयस्तदा तेन साध्यांशाभावाद्व्यर्थ एवायमापद्यत इति भावः । तर्हि इच्छैवोपेयतां किं बुध्येत्यत आह **न चेति** ॥ **तन्निराकरोतीति** । तद्व्याख्यानं निराकरोतीत्यर्थः । शेषोक्त्या चरम पादं व्याचष्टे **का स्पृहेति** । तत्र हेतुत्वेन प्राक्तनपञ्चपादीं व्याचष्टे **कुत इत्यादिना** । **प्रसवं** जगज्जननम् । **विभूतिं** ब्रह्मणो वियदादिरूपेण विविधभवनं मन्यन्त इत्यर्थः ॥ **स्वप्नेति** । स्वाप्नपदार्थगतजाग्रत्स्थौल्यबाह्योपादानकत्वादिकं यथा कल्पितं, तथा वा मायाविनिर्मितं गन्धर्वनगरादिकं मायापदगृहीतं यथा मिथ्या तथेश्वरसृष्टं जगदपि मिथ्येति कल्प्यत इत्यर्थः । **विवर्तवादम्** आरोपवादम् ॥ **कालादिति** । एतेन कालादित्युपलक्षणमिति सूचितम् । विनिश्चिता इति कर्तरि निष्ठान्तं वा भावार्थनिष्ठार्थत्वेपि अर्शआद्यच् प्रत्ययान्तं वा । सृष्टाविति च विषयसप्तमीत्युपेत्यार्थमाह **य इति** । राजा राष्ट्रमितिवदभेदोपचार इत्युपेत्याह **इच्छामात्राधीन इति** । इतिपदस्य स्वमतमुच्यत इत्यनेनान्वयः । शङ्कते **प्रशंसात्वादेवेति** । पूर्वतन्त्रे अर्थवादानां स्वार्थे तात्पर्यस्यानङ्गीकारादिति भावः । समाधिमाह **पूर्वोत्तरपक्षेति** । विभूतिप्रसवादिपक्षः पूर्वोक्तः साधुर्वा चरमोक्त इच्छामात्राधीनत्वपक्षः साधुर्वेति चिन्तायां पूर्वोत्तररूपपक्षचतुष्टयमध्ये अयं समीचीन इति निर्धारणप्रसंगे प्राप्तप्रशंसाया अपीत्यर्थः ॥ **अन्यथेति** । प्रशंसायाः स्वार्थपरत्वाभाव इति वा प्रशंसया चरमपक्षस्याभिमतत्वाभाव इति वार्थः ।

**या०— अव्याहतेति** । अप्रतिबद्धेत्यर्थः । यदि हि बुद्धिः केनचिद्व्याहता स्यात्तदा परं तन्निवृत्तय इच्छादेरुपयोगो, न चेयं तथेति भावः ॥ **क्रियाशक्तिरिति** । क्रियानुकूला शक्तिर्यस्याः सा क्रियाशक्तिरित्यर्थः ॥ **तस्यैवेति** । 'भावनैव प्रयत्नात्मा सर्वत्राख्यातगोचर' इति वचनादिति भावः ।

एवं च रथो गच्छतीत्यादावाख्यातो गौण एवेति ध्येयम् । **तस्या अपीति** । स्वतो विषयप्रवणतायां च तस्या अपि बुद्धित्वप्रसङ्ग इति भावः ॥ **परिणामवादमिति** । विविधभवनरूपयोगेन विभूतिशब्देन परिणाम उच्यत इति भावः । 'कालात्प्रसूतिं भूतानामि'त्यत्र कालशब्दः कर्मादेरुपलक्षक इत्याशयेनादिपदम् ।

**श्री० — शङ्कते इह हीत्यादि** । ईश्वरेच्छाप्रयत्नौ नाङ्गीकार्यौ । ननु तर्हि सिसृक्षायत्नयोरभावे जगत्सर्जनादिक्रिया न स्यादिति चेन्न । बुद्ध्यैवोपपत्तेः । ननु जगत्सर्जनादिक्रियायाः क्रियाशक्तिकार्यत्वाद्बुद्धौ च क्रियाशक्तेरभावात्कथं तया सर्वस्य जगत्सर्जनादेरुपपत्तिरत उक्तमीश्वरस्याव्याहता कुत्राप्यप्रतिबद्धा बुद्धिरेव क्रियाशक्तिः क्रियाशक्तिमतीति । **तयैव** क्रियाशक्त्युपेतया बुद्ध्यैव । **तस्यैव** यत्नस्यैव ॥ **आख्यातेति** । 'भावनैव प्रयत्नात्मा सर्वत्राख्यातगोचरः' इति वचनात् । रथो गच्छतीत्यादौ तु गौण इति भावः । **स च** प्रयत्नः ॥ **नियमार्थमिति** । यत्किंचिद्विषयको यत्नो न भवति किन्तु यद्विषयं ज्ञानं तत्रैवेति विषयनियमार्थमित्यर्थः । **असौ** प्रयत्नः । **प्रवणो** अर्थविषयको यत्न इति वर्तते । **प्रसङ्गात्** यत्नस्येति शेषः ॥ **नियम इति** । न ज्ञानेनेति शेषः । तया चेच्छाऽङ्गीकार्येति शेषः । **तस्या अपि** इच्छाया अपि । अन्यथेच्छाया अपि बुद्धित्वप्रसङ्ग इति भावः । **तदर्थम्** इच्छाया विषयनियमार्थम् । 'तद्धेतोरि'ति न्यायादिति भावः ॥ **केचित्** रामानुजाः । **अनया** श्रुत्या । **न चेति** । अर्थवादानां स्वार्थेऽप्रामाण्यादिति भावः ॥ **प्रसङ्ग इति** । नात्र स्तुतिमात्रं प्रसक्तं येनार्थासिद्धिरिति भावः ॥ **अन्यथेति** । यद्यर्थतथात्वाभावेऽपि प्रशंसा क्रियते तर्ह्ययथार्थाः परिणामादिवादा अपि कुतो न प्रशस्यन्ते । तान् अप्रशस्यैतत्प्रशंसनेन ज्ञायते एतत्प्रशंसायाः स्वार्थे तात्पर्यमिति ।

अनु० — कामश्रुतिभ्यश्चैव

**सु० — न केवलं श्रुतार्थानुपपत्त्या । अपि तर्हि 'कामस्तदग्रे समवर्तताधि', 'सोऽकामयते'त्यादिभ्यो भगवतः कामप्रतिपादकश्रुतिभ्यश्चेच्छाऽवगम्यते । एवशब्दः श्रुतीनामर्थापत्तितः प्राबल्यसूचकः । इच्छाकामशब्दयोर्ज्ञानप्रयत्नोपलक्षणत्वस्य संभवान्नार्थापत्तिश्रुतिभ्यामिच्छासिद्धिरिति चेन्न । मुख्ये बाधकाभावात् ।**

**शे० —** भाष्ये उक्तसमुच्चयार्थः कामश्रुतिभ्यश्चेति चशब्द इत्यभिप्रेत्य तत्प्रदर्शनपूर्वकं कामश्रुतेर्विशिष्यानुदाहरणात्काः कामश्रुतय इत्याशङ्कां च परिहरन्ज्ञापकहेत्वनुगुणतयाऽपेक्षितं पूरयति **नेति** । ननु कामश्रुतिभ्य एवेत्येवशब्देन कामश्रुतीतरप्रमाणनिरासोक्तेः कथं तत्समुच्चयार्थतया चशब्दव्याख्यानमित्यतोऽर्थान्तरपरत्वेनैवशब्दस्य तद्व्यावर्तकत्वाभावान्न तद्विरोध इति भावेनैवशब्दस्य तदविरुद्धमर्थान्तर-

माह **एवेति** । भाष्यकारीययुक्त्युपन्यासस्यानर्थक्यमाशङ्क्यार्थापत्तिश्रुत्योः सावकाशत्वेनेच्छासाधनत्वासम्भवेन । तत्साधनार्थत्वान्न तदिति भावेन तयोः सावकाशत्वशङ्कां तावदुत्थापयति **इच्छेति** । सावकाशत्वशङ्कां स्वयं प्रकारान्तरेण परिहरति **मुख्य इति** ।

**प०** — कामश्रुतिभ्यश्चेत्येतद्व्याचष्टे **न केवलमिति** ।

**श्री०** — कामश्रुतिभ्य इत्येतद्विवृणोति **न केवलमित्यादिना** ॥ **श्रौतान्यथाऽनुपपत्त्येति** । श्रुत्युक्तप्रशंसाऽन्यथाऽनुपपत्त्येत्यर्थः । **अर्थापत्तितः** पूर्वोक्तप्रशंसारूपार्थापत्तितः । **मुख्ये** इच्छारूपार्थे ॥

**अनु०** — युक्तितः ॥

**सु०** – **मा वा सेत्सीदिच्छाऽर्थापत्तिश्रुतिभ्यां, युक्तितस्तावत्सेत्स्यति । तथा हि । ईश्वर इच्छावान् आत्मत्वात् यज्ञदत्तवत् । न च मुक्तादौ व्यभिचारः । तत्रापि तस्याः साधयिष्यमाणत्वात् । ज्ञानवत्त्वात्, प्रयत्नवत्त्वात्, कर्तृत्वाद्वा । ईश्वरज्ञानं वेच्छासमानाश्रयं ज्ञानत्वादस्मदादिज्ञानवत् । एवं तत्प्रयत्नमपि पक्षीकृत्य प्रयोक्तव्यम् । यद्वा क्षित्यादिकमिच्छावज्जन्यं कार्यत्वाद्घटवत् । नन्वेवं दुःखादिकमपि साधयितुं शक्यमिति चेत्त्किमतिप्रसङ्गभीरुणा क्षित्यादेर्बुद्धिमत्कारणकत्वानुमानमपि त्यक्ष्यते । दुःखादिसाधने बाधोऽस्ति न बुद्धिसाधन इति चेत् । समं प्रकृतेऽपि ।**

**शे०** — तर्ह्यर्थापत्तिश्रुतिभ्यामेवेश्वरस्येच्छावत्त्वसिद्धेर्भाष्यकारीययुक्त्युपन्यासानर्थक्यमित्यतोऽस्य तत्सावकाशत्वाभ्युपगमेन प्रवृत्तत्वान्नानुपपत्तिरिति भावेन तथा भाष्यं योजयति **मा वेति** । मुक्तादावित्यादिपदेन सुप्तमुग्धयोः परिग्रहः ॥ **साधयिष्यमाणत्वादिति** । 'कामस्य यत्राप्ताः कामाः' इत्यादिना 'अव्यक्तिरेव कामानां न नाशो मोहसुप्तयोरि'त्यादिना तृतीयस्य चतुर्थ इति शेषः ॥ **साधयितुं शक्यमिति** । क्षित्यादिकं दुःखादिमज्जन्यं कार्यत्वाद्घटवदित्यपि प्रयोगसम्भवादिति भावः ॥ **अतिप्रसङ्गभीरुणेति** । क्षित्यादेरिच्छादिमज्जन्यत्व इव बुद्धिमज्जन्यत्वेऽपि क्षित्यादिकं दुःखवज्जन्यं कार्यत्वादिति त्वदुक्तातिप्रसङ्गस्य तुल्यत्वेनातिप्रसङ्गपरिहाराय तत्साधनत्यागे बुद्ध्यादिमज्जन्यत्वसाधनस्यापि परित्यागप्रसङ्गादिति भावः । ननु दुःखादिमज्जन्यत्वसाधने बाधेऽपि बुद्धिमज्जन्यत्वसाधने तदभावेन बाधाबाधकृतवैषम्यान्न कार्यत्वेन बुद्धिमज्जन्यत्वसाधने दुःखादिमज्जन्यत्वसाधनस्यापि प्रसङ्ग इति शङ्के । **दुःखादीति** । तर्हि दुःखादिमज्जन्यत्वसाधने बाधेऽपीच्छावज्जन्यत्वसाधने तदभावेन बाधाबाधकृतवैषम्यादेवेच्छादिमज्जन्यत्वसाधने न दुःखादिमज्जन्यत्वस्यापि साधनप्रसङ्ग इति सममेवेत्याह **सममिति** ।

**स०** — **साधयिष्यमाणत्वादिति** । तृतीयस्य चतुर्थे इति शेषः ।

**प०** — अभ्युपेत्याह **मा वा सैत्सीदिति** । नैव सिध्यत्वित्युच्छेत्यर्थः ॥ **साधयिष्यमाणत्वा-दिति** । 'कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि । इति यल्लक्षणं मुक्तेः श्रुतिराह बलीयसी'त्यादिना तृतीयाध्यायान्त्यपादे । तथा 'अव्यक्तिरेव कामानां न नाशो मोहसुप्तयोरि'ति मूर्छितसुप्तयोऽपि तत्रैव पादे साधयिष्यमाणत्वादित्यर्थः ।

**या०** — **मुक्तादाविति** । आदिपदेन सुप्तमुग्धयोर्ग्रहणम् ॥ **साधयिष्यमाणत्वादिति** । 'कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि । इति यल्लक्षणं मुक्तेः श्रुतिराह बलीयसी'त्यादिना मुक्तेऽपि 'अव्यक्तिरेव कामानां न नाशो मोहसुप्तयोरि'त्यादिना सुप्तादावपि तस्य साधयिष्यमाणत्वादित्यर्थः ।

**श्री०** — युक्तित इत्येतद्विवृणोति **मा चेति** । **मा सैत्सीत्** सिद्धा मा भवत्वित्यर्थः । **ईश्वर** इच्छावानित्यत्र हेत्वन्तरमाह **ज्ञानवत्त्वादित्यादिना** ॥ **प्रयत्नमपीति** । ईश्वरप्रयत्न इच्छासमानाश्रयः प्रयत्नत्वादस्मदादिप्रयत्नवदिति । **एवम्** एतादृशानुमानेन यदीच्छा साध्यते तर्हि ॥ **शक्यमिति** । क्षित्यादिकं दुःखवज्जन्यं कार्यत्वाद्घटवदित्यनुमानेनेत्यर्थः ॥ **त्यक्ष्यत इति** । तत्रापि क्षित्यादिकं बुद्धिम-ज्जन्यं कार्यत्वादित्यनुमानमपि क्षित्यादिकं दुःखादिमज्जन्यमित्यपि साधयितुं शक्यत्वेनातिप्रसङ्गित्वात्त्याज्यं स्यादित्यर्थः ।

---

अनु० — महातात्पर्ययुक्तेश्च

**सु०** — **नन्वीश्वरस्य इच्छाभावे बाधकाभावादप्रयोजकत्वमनुमानानामिति । नैवम् ।** महातात्पर्ययुक्तेश्च । **यदीश्वरस्य इच्छा न स्यात् तदा तस्मिन्सर्ववेदानां (वेदान्तानां) महातात्पर्यं न स्यादिति बाधकसद्भावात् । इच्छा निष्प्रयोजनेति चेत् । स्यादेवं यदि प्रयोजनमनुरुध्य कल्प्यते । अन्यतः सिद्धेऽर्थे किं प्रयोजनगवेषणया ।**

**श्रे०** — मूले महातात्पर्ययुक्त्युपन्यासस्यानर्थक्यमाशङ्क्येच्छावत्त्वसाधकानुमानेष्वप्रयोजकता-शङ्कापरिहाराय विपक्षे बाधकोपन्यासार्थत्वात्तदिति भावेन तच्छङ्कानिवर्तकतयोत्तरमूलं योजयितुम-प्रयोजकत्वशङ्कामुत्थापयति **नन्विति** ॥ **निष्प्रयोजनेति चेदिति** । बुद्धिप्रयत्नाभ्यामेवोक्तरीत्या कर्तृ-त्वनिर्वाहादिति भावः ।

**प०** — **यदीति** । अयं च तर्कोऽग्रे व्याप्त्याद्युपपादनेन विवरिष्यते । बुद्ध्यैव सर्वकार्यसिद्धा-विच्छाङ्गीकारो व्यर्थ इति शङ्कते **इच्छेति** । प्रमेयाङ्गीकारो न प्रयोजनानुरोधेन किन्तु प्रमाणबलेन । तच्चात्र इच्छावत्त्वे प्रागुक्तमिति भावः । **अन्यतः** प्रमाणतः ।

श्री० — समर्थमिति । दुःखादिसाधने बाधोऽस्ति नेच्छाया साधन इत्यर्थः । **निष्प्रयोजना** अतो नाङ्गीकार्येत्यर्थः । **कल्प्यते** इच्छेति शेषः । तर्ह्येव निष्प्रयोजनत्वादिच्छा नाङ्गीकार्या स्यादित्यर्थः ॥ **अन्यत इति** । उक्तार्थापत्तिकामश्रुतियुक्तिषु तात्पर्यस्य इच्छारूपेऽर्थे सिद्धे सति ।

**अनु० —** नेच्छामात्रं निषिध्यते ॥

**सु० — किञ्चैवं सति बुद्धिरपि नाङ्गीकरणीया । स्वरूपसामर्थ्येनैवेश्वरस्य कर्तृत्वोपपत्तेः ॥ लोकवैरूप्यमिति चेत् । तत्किमुदासीनस्य क्वादृष्टः कर्तृत्वमुपलब्धं लोके, येनानिच्छतोऽपि तदीश्वरस्याङ्गीक्रियते । प्रयत्नवत एव वा कर्तृत्वं भविष्यति । तस्य विषयनियमार्थं बुद्धिरेष्टव्येति चेन्न । बुद्धिवत्स्वतो विषयप्रवणतोपपत्तेः । तथात्वे बुद्धितो भेदो न स्यादिति चेन्न बुद्धित्वादिनैव तदुपपत्तेः । अन्यथा परोपाधिकविषयप्रवणत्वयोरिच्छाप्रयत्नयोरपि भेदो न स्यात् ॥ विषयनियमार्थमिति च कोऽर्थः । किं विषयविशेषसंबद्धतयोत्पाद(न)ार्थम्, उतोत्पन्नस्य स्थितस्यैव वा तत्संबन्धार्थम्, अथ तज्ज्ञानार्थम् । नाद्यः । अनादित्वात् । सादित्वेऽपि क(ा)रणसापेक्ष(त)या बुद्धेरपि परतो विषयप्रवणतापत्तेः । न द्वितीयः । पौर्वापर्याभावात् । न हि प्रयत्नः उत्पद्य स्थित्वा वा पश्चाद्विषयेण संबध्यते । न तृतीयः । स्वरूपग्राहकप्रमाणेनैव तद्ग्रहणात् । बुद्धेरपि परापेक्षाप्रसङ्गाच्चेति ।**

श्री० — लोके बुद्धिमत एव कर्तृत्वदर्शनात्तद्रहितस्य कर्तृत्वं लोकविरुद्धमिति शङ्कते **लोकेति** ॥ तर्हीच्छावत एव लोके कर्तृत्वदर्शनात्तद्रहितस्य कर्तृत्वेऽपि लोकवैरूप्यमित्याह **तत्किमिति** ॥ **उदासीनस्येति** । इच्छारहितस्येत्यर्थः ॥ **प्रयत्नवत एवेति** । तस्यैवास्याताऽर्थत्वेन निर्णीतत्वादिति भावः । एवञ्च न बुद्ध्याऽपि प्रयोजनमिति हृदयम् ॥ **तथात्व इति** । स्वतो विषयप्रवणत्व इत्यर्थः । बुद्धेरेव स्वभावतोऽर्थप्रवणत्वादिति भावः । न स्वतोऽर्थप्रवणत्वेऽपि प्रयत्नस्य बुद्ध्यभेदः प्रसज्यते । बुद्धित्वप्रयत्नत्वरूपजातिभेदेनैव तद्भेदोपपत्तेरिति परिहरति **न बुद्धित्वादिनेति** । उक्तजातिभेदस्यैव तत्प्रयोजकत्वं परेणाप्यङ्गीकारयितुं विपक्षे बाधकमाह **अन्यथेति** ॥ **परेति** । परोपाधिकं विषयप्रवणत्वं ययोरिति बहुव्रीहिः । स्वभावतो विषयप्रवणत्वरहितयोरित्यर्थः । स्वभावतो विषयप्रवणत्वे प्रयत्नस्य तत्स्वभावकबुद्ध्यभेदप्रसक्त्या तदनभ्युपगमे परोपाधिकविषयप्रवणत्वे तत्स्वभावकेच्छाऽभेदप्रसक्त्या परोपाधिकविषयप्रवणत्वस्याप्यनभ्युपगन्तव्यत्वापत्त्या तदङ्गीकुर्वता परोपाधिकविषयप्रवणत्वेऽपीच्छात्वप्रयत्नत्वरूप-

जातिभेदेनैव तद्भेदस्य वाच्यतया तेनैव न्यायेन स्वतः प्रवणत्वेऽपि तस्य बुद्धित्वप्रयत्नत्वरूपजातिभेदादेव तद्भेदोपपत्तेर्न जातिभेदस्तत्राप्रयोजक इत्याखण्डलार्थः ।

**तज्ज्ञानार्थमिति** । विषयविशेषसम्बद्धतया प्रयत्नज्ञानार्थमित्यर्थः ॥ **अनादित्वादिति** । तथा च विषयविशेषसम्बद्धतया तदुत्पादस्यैवाभावान्न तदर्थता बुद्धेरिति भावः । ननु च प्रयत्नस्यानादित्वाभावेन विषयविशेषसम्बद्धतया तदुत्पादार्थत्वं बुद्धेर्भविष्यतीत्याशङ्क्य सादित्वेन प्रयत्नस्य विषयविशेषसम्बद्धतयोत्पादार्थं बुद्धिसापेक्षत्वात्तन्मात्रेण परतो विषयप्रवणत्वे तथा सत्यविशेषेण बुद्धेरपि सादित्वप्रसक्त्या स्वोत्पादककरणसापेक्षत्वात्परतो विषयप्रवणत्वं स्यादिति स्वतो विषयप्रवणत्वं भज्येतेत्याह **सादित्वेऽपीति** ॥ **पौर्वापर्याभावादिति** । प्रयत्नविषयसम्बन्धयोरिति शेषः । एतदेवोपपादयति **न हीति** । तथा सति विरम्यव्यापारप्रसक्तेरिति भावः ॥ **स्वरूपेति** । प्रयत्नस्वरूपग्राहकप्रमाणेनैव विषयसम्बद्धतया प्रयत्नज्ञानस्यापि सम्भवान्न तदर्थमपि बुद्धेरपेक्षेत्यर्थः । ननु प्रयत्नग्राहकप्रमाणस्य प्रयत्नेन संयुक्तसमवायरूपप्रत्यासत्तेः सत्त्वात्तद्ग्राहकत्वेऽपि तद्विषयेण प्रत्यासन्नत्वेन तद्ग्राहकत्वासम्भवाद्विषयसम्बद्धतया तज्ज्ञानार्थं बुद्धिरपेक्षितैवेति कथं न परतो विषयप्रवणत्वं प्रयत्नस्येत्यतस्तथा सति बुद्धिग्राहकप्रमाणस्यापि बुद्ध्या सह संयुक्तसमवायेन प्रत्यासन्नतया तद्ग्राहकत्वेऽपि तद्विषयेणाप्रत्यासन्नतया तद्ग्राहकत्वाभावेन विषयसम्बद्धतया बुद्धिज्ञानार्थं परापेक्षायाः सत्त्वेन प्रयत्नवद्बुद्धेरपि परतो विषयप्रवणत्वं स्यादित्याशयेनाह **बुद्धेरपीति** । न च ज्ञानस्वरूपग्राहकप्रमाणस्य विषयेण व्यवसायरूपप्रत्यासत्तेः सत्त्वात्तद्ग्राहकत्वमप्यस्त्येव । तथा च विषयसम्बद्धतया ज्ञानग्रहणस्यापि ज्ञानस्वरूपग्राहकेणैव सम्भवान्न तज्ज्ञानार्थमन्यापेक्षेति कथं तद्बुद्धेः परतो विषयप्रवणत्वप्रसञ्जनमिति वाच्यम् । तथा सति प्रयत्नस्वरूपग्राहकप्रमाणस्यापि प्रयत्नविषयेण सह प्रयत्नरूपप्रत्यासत्तेः सत्त्वेन विषयग्राहकतया विषयसम्बद्धतया प्रयत्नग्रहणस्यापि तेनैव सम्भवान्न तदर्थमन्यापेक्षेति प्रयत्नस्यापि परतो विषयप्रवणत्वाभावापातात् । न च ज्ञानस्य प्रत्यासत्तित्वात्तत्स्वरूपग्राहकस्य तद्ग्राहकत्वमुपपन्नं प्रयत्नस्य तु न प्रत्यासत्तित्वम् । तथा सति दशमप्रत्यासत्तिप्रसङ्गेन तन्नवत्वनियमव्याकोपप्रसङ्गात् । अतो न प्रयत्नग्राहकस्यापि तद्विषयग्राहकत्वमिति वाच्यम् । ज्ञानं प्रत्यासत्तिरिति मते ज्ञानपदेन सविषयकस्यैवोक्त्या प्रयत्नस्य प्रत्यासत्तित्वेऽपि तदाधिक्याप्रसङ्गात् । न चोपनायकतावच्छेदकं ज्ञानत्वमेव जातित्वेन लघुत्वात् । न तु सविषयकत्वमुपाधितया गुरुत्वात् ततश्च कथं प्रयत्नस्योपनायकत्वमिति वाच्यम् । भिन्नविषयज्ञानसाधारण्येन ज्ञानत्वमात्रस्योपनायकतावच्छेदकत्वानुपपत्त्या स्वविषयज्ञानत्वमेव तथा वाच्यम् । तत्र च स्वविषयकत्वमेव तथाऽस्तु लाघवात् । तच्च प्रयत्नेऽपीति कथं न

तस्योपनायकत्वम् । न च स्वविषयकत्वं नोपनायकतावच्छेदकम् । व्यापारानुबन्धिनीं विषयतामादाया-त्मादावतिप्रसङ्गादिति स्वविषयज्ञानत्वमेव तथा वाच्यम् । तच्च न प्रयत्नस्येति शङ्क्यम् । स्वविषयक-ज्ञानत्वमेव नोपनायकतावच्छेदकम् । पक्षज्ञानादीनामप्युपनायकतापत्तेः । व्यापारानुबन्धिनीं विषयता-मादाय पक्षज्ञानस्यापि वन्हिविषयत्वात् । तस्माद्व्यापारानुबन्धिविषयकज्ञानत्वं तथा वाच्यम् । तथा च ज्ञानत्वं गुरुभूतमेवेति प्रयत्नस्याप्युपनायकत्वोपपत्तिः । ननु भवतु स्वविषयत्वमेवोपनायकतावच्छेदकम् । तथाऽपि न प्रयत्नस्योपनायकता सम्भवति । तस्य स्वविषयत्वाभावात् । प्रकाशस्य सतस्तदीयमात्र-निबन्धनस्वभावविशेष एव तद्विषयत्वमित्यात्मतत्त्वविवेकपर्यालोचनया तथैव लाभात् । अन्यथा प्रकाशस्य सत इत्यस्य वैयर्थ्यापत्तेरिति चेन्न । प्रयत्नस्यापि सविषयकत्वव्यवहारेण तत्सिद्धेः । न च सविषयकज्ञानजन्यत्वेनैव सविषयकत्वव्यवहार इति वाच्यम् । वैपरीत्यापत्तेः । न चोपेक्षा-ज्ञानानुरोधान्न वैपरीत्यमिति वाच्यम् । ईश्वरप्रयत्नानुरोधात् प्रयत्नस्यापि स्वाभाविकमेव सविषयत्वमिति तुल्यत्वात् । यदि चेश्वरेच्छायाः सविषयत्वं नास्त्येवेति मन्यसे तदोपेक्षाज्ञानेऽपि तन्नास्त्येवेति तुल्यमिति सङ्क्षेपः ।

स० — **बुद्धित्वादिनेति** । आदिपदेन प्रयत्नत्वपरिग्रहः । तथा च बुद्धिप्रयत्नयोः स्वतो विषयप्रवणत्वेऽपि बुद्धित्वप्रयत्नत्वरूपजातिभेदेन भेद इति भावः । **अन्यथेति** । परोपाधिकं विषय-प्रवणत्वं ययोरिति संबन्धः ।

प० — **उदासीनस्येति** । अनिच्छत इत्यर्थः । निष्फलत्वेनेच्छानिरासे बुद्धिप्रयत्नौ द्वावपि न स्यातामिति आपादितम् । अधुना प्रयत्नमुपेत्य बुद्धिं निराह **प्रयत्नवत एवेति** । परोपाधिकेति बहुव्रीहिः । बुद्ध्यधीनविषयप्रवणत्वयोरित्यर्थः । **तज्ज्ञानार्थमिति** । विषयविशेषालिङ्गितत्वेन ज्ञाना-र्थम् ॥ **बुद्धेरपीति** । इच्छाप्रयत्नतुल्यन्यायत्वादिति भावः ।

या० — **उदासीनस्येति** । इच्छाशून्यस्येत्यर्थः । बुद्धित्वादिनेत्यत्रादिपदेन प्रयत्नत्वसंग्रहः । **पौर्वापर्याभावादिति** । प्रयत्नविषयसंबन्धयोरित्यर्थः । **तज्ज्ञानार्थमिति** । विषयविशेषसंबद्धतया प्रयत्नज्ञानार्थं बुद्धिर्विषयप्रत्यासत्तितयाऽङ्गीकार्येति भावः ॥ **स्वरूपग्राहकेति** । प्रयत्नस्यैव तत्प्रत्या-सत्तिता भविष्यतीति भावः । न च ज्ञानस्यैव प्रत्यासत्तित्वं न प्रयत्नस्येति वाच्यम् । ज्ञानस्य हि न ज्ञानत्वेन प्रत्यासत्तिता निर्विकल्पकेऽतिप्रसङ्गात् । किन्तु विशिष्टविषयकज्ञानत्वेनेति वाच्यम् । तत्र लाघवाद्विशिष्टविषयकत्वमेव प्रत्यासत्तितावच्छेदकमस्तु । एवं च प्रयत्नादेरप्युपनायकत्वोपपत्तिरित्या-शयात् ॥ **बुद्धेरपीति** । अन्यथेति शेषः । सविषयकस्यापि प्रयत्नस्याप्रत्यासत्तित्वेन विषयसंबद्धतया

तज्ज्ञानार्थं बुद्ध्यपेक्षायां बुद्धेरप्यप्रत्यसत्तित्वप्रसङ्गेन विषयसंबद्धत्वेन ज्ञानायान्यस्योपनायकस्यापेक्षाप्रसङ्गादित्यर्थः ।

**श्री०— एवं सति** इच्छानङ्गीकारे । कर्तृत्वान्यथाऽनुपपत्त्या बुद्धिरङ्गीकार्येति चेत्तत्राह **स्वरूपेति** ॥ **लोकेति** । बुद्धिशून्यस्य केवलं स्वरूपसामर्थ्यमात्रवतः कर्तृत्वं नोपलब्धमित्यर्थः । **उदासीनस्य** इच्छाशून्यस्य । **अनिच्छतः** इच्छाशून्यस्यापीति यावत् । **तत्** कर्तृत्वं भविष्यति । तथा च बुद्धिर्माऽस्त्वित्यर्थः । शङ्कते **तस्येति** । प्रयत्नस्येत्यर्थः । **उपपत्तेः** प्रयत्नस्य । **तथात्वे** । स्वतो विषयप्रवणत्वे ॥ **न स्यादिति** । स्वतो विषयप्रवणत्वस्यैव बुद्धित्वादिति भावः । स्वतो विषयप्रवणत्वेन ज्ञानप्रयत्नयोः साम्येऽपि बुद्धित्वप्रयत्नत्वरूपजातिभेदेनैव भेदोपपत्तेरित्याह **बुद्धिस्त्विति** । **अन्यथा** एवं बुद्धित्वादिना भेदाकल्पने ॥ **परेति** । ज्ञानेत्यर्थः । **न स्यात्** तथा च परोपाधिकविषयप्रवणत्वेन साम्येऽपीच्छात्वप्रयत्नत्वरूपजातिभेदेनैव भेदो वाच्यस्तत्सम प्रकृतेऽपीति । **नियमार्थं** बुद्धिरङ्गीकार्येति शेषः ॥ **तदिति** । विषयेत्यर्थः ॥ **तदिति** । विषयसंबद्धत्वेन ज्ञानार्थमित्यर्थः । **अनादित्वात्** ईश्वरप्रयत्नस्येति शेषः ॥ **सादित्वेऽपीति** । यदीश्वरप्रयत्नस्यापि सादित्वमङ्गीकृत्य तस्य सादिनः कारणसापेक्षत्वनियमात्, विषयसंबद्धत्वेनोत्पादाय कारणीभूता बुद्धिरवश्यमङ्गीकार्येति यदुच्यते तर्हीश्वरगुणत्वाविशेषाद्बुद्धेरपि सादित्वं स्यात् । तथा च सादिभूतायास्तस्या बुद्धेः कारणसापेक्षत्वाद्विषयसंबद्धत्वेनोत्पादाय सन्निकर्षादि किञ्चित्कारणमङ्गीकार्यं स्यात्ततश्च प्रयत्नवद्बुद्धेरपि परतो विषयप्रवणता स्यादित्यर्थः ॥ **स्वरूपेति** । तथा च प्रयत्नो येन प्रमाणेन साक्षिणा गृह्यते तेन विषयसंबद्धत्वेनैव ग्रहणात् । तथा च तस्य विषयसंबद्धत्वेन ज्ञानपूर्वविषयनियमार्थं बुद्धिर्नाङ्गीकार्येत्यर्थः । प्रयत्नस्य विषयसंबद्धतया ज्ञानार्थं बुद्ध्यङ्गीकारे बुद्धेरपि विषयसंबद्धत्वेन ज्ञानाय परापेक्षा स्यात् । तत्र स्वरूपग्राहकप्रमाणेन साक्षिणा तद्ग्रहणाङ्गीकारे प्रयत्नेऽपि तुल्यमित्याशयेनाह **परेति** ।

**सु०— महातात्पर्ययुक्तेश्चेति यदुक्तं तदसत् । यदीश्वरो नेच्छावान्स्यात्तदा श्रुतिमहातात्पर्यविषयो न स्यादित्यत्र व्याप्त्यभावात् । इच्छारहितस्यापि धर्मादेस्तत्तच्छास्त्रमहातात्पर्यविषयत्वदर्शनात् । आपाद्यस्यानिष्टत्वाभावाच्चेत्यत उक्तं विवृणोति** मोक्षार्था इति ।

**अनु०—** मोक्षार्थाः श्रुतयो यस्मात्स च तस्य प्रसादतः ।
उन्निनीषतिवाक्याच्च लोकद(ष्ट्य)ष्टानुसारतः ॥
इच्छानिमित्तको यस्मात्तदभावे कुतः श्रुतिः ।
महातात्पर्यरहिता प्रमाणत्वं गमिष्यति ॥

यस्मात्कारणात्सर्वा अपि श्रुतयो मोक्षार्थाः मोक्षप्रयोजनास्तस्मात्तदभावे परमेश्वरस्येच्छाऽभावे तत एव मोक्षार्थताऽभावे श्रुतिस्तत्र महातात्पर्यरहिता स्यात्। तथा च कथं प्रमाणत्वं गमिष्यतीति योजना। मोक्षार्थत्वे किमीश्वरस्येच्छयेत्यत उक्तम् स चेति। स च मोक्षस्तस्य ईश्वरस्य प्रसादतो यस्मात्तस्मात्तदभाव इति संबन्धः। तथाऽपीश्वरस्य प्रसादेन भाव्यं किमिच्छयेत्यतः प्रसादत इत्येतद्व्याख्यातम् इच्छानिमित्तक इति। ईश्वरज्ञानादेव मोक्षसिद्धेः किं तत्प्रसादेनेत्यत उक्तम् लोकेति। विमतो बन्धमोक्षः प्रभुप्रसादसाध्यो मोक्षत्वात् शृङ्खलामोक्षवत् इत्यादिलोकदृष्टव्याप्त्युपेतानुमानानुसारतः इत्यर्थः। न केवलमनुमानात्किन्त्वागमादपीत्युक्तम् उन्निनीषतीति। 'एष ह्येव साधुकर्म कारयति तं, यमेभ्यो लोकेभ्य उन्निनीषते' इति वाक्याच्च। अत्र कर्मेत्युपलक्षणम्। उन्निनीषते ऊर्ध्वं नेतुमिच्छति। यद्वा प्रसादशब्देनेच्छोच्यते इत्यत्र इदं वाक्यं (वाक्यमेतत्) ज्ञापकम्। लोकदृष्टा(ष्ट्य)नुसारत इत्येतदप्यस्यैव अर्थस्य ज्ञापकमुक्तम्। श्रुतय इत्युपक्रम्य श्रुतिरित्येकवचनं कैमुत्यार्थम्। एकमपि वाक्यं न तत्र महातात्पर्यवत्स्यात्। किमुत सर्वाः श्रुतय इति।

शे०—मोक्षार्था इत्युत्तरग्रन्थानर्थक्यमाशङ्क्य प्रागुक्तमहातात्पर्ययुक्तिरूप-विपक्षेबाधकतर्कविवरणरूपत्वान्नानर्थक्यमित्यभिप्रेत्य तत्तर्कविवरणरूपतयोत्तरवाक्यं सङ्गमयितुं तदनुपपत्तिशङ्कामुत्थापयति **महातात्पर्ययुक्तेश्चेति** ॥ **यदुक्तमिति** ॥ **व्याप्त्यभावादिति**। विपक्षे बाधकाभावेनाप्रयोजकत्वान्न विशेषव्याप्तिरित्यर्थः। अस्तु तर्हि सामान्यव्याप्तिरित्यत आह **इच्छेति**। अर्थशब्दस्य विषयापरपर्यायस्य बाधितत्वेन ग्रहणायोगात् प्रयोजनपरतया तं व्याचष्टे **मोक्षप्रयोजना इति** ॥ उन्निनीषतिशब्दोक्तस्य मोक्षहेतुप्रसादस्य कर्मसाध्यत्वानुपपत्तेर्वक्ष्यमाणसम्बन्धानुपपत्तेश्चाह **अत्रेति** ॥ **उपलक्षणमिति**। ईश्वरज्ञानस्येति शेषः। यद्यप्यत्र मूले श्रुतिप्रतीकग्रहणाय 'उन्निनीषत इति वाक्याच्चे'त्येवं वक्तव्यं तथाऽपि क्रियाफलस्यात्मगामितानिरासायोन्निनीषतीति परगामित्वसूचनेनार्थतस्तदनुवादः कृत इति ध्येयम् ॥ **यद्वेति**। इच्छानिमित्तक इत्यनेन प्रसादत इत्येतदिच्छयेति व्याख्यातम्। तत्र ज्ञापकमाह **लोकदृष्ट्यनुसारत इति**। उन्निनीषतिवाक्याच्चेति मूलयोजनामनेन सूचयति **अस्यैवार्थस्येति** ॥ प्रसादशब्देनेच्छोच्यत इत्यस्यैवार्थस्येत्यर्थः। प्रसन्नोऽस्मीति प्रतीतौ परोपचिकीर्षाया एवात्र प्रतीतेरिति भावः। उपक्रमोपसंहारयोरुभयत्रापि बहुवचनस्यैकवचनस्य वा प्रयोक्तव्यत्वाद्वैचित्र्यानुपपत्तिप्रयुक्तं भाष्यकाराणामचातुर्यं प्रयोजनोक्त्या परिहरति **श्रुतय इत्युपक्रम्येति**। कैमुत्यमेव व्यनक्ति **एकमपीति**।

स०— **व्याप्त्यभावादिति**। विपक्षे बाधकशून्यत्वेनाप्रयोजकत्वेन विशेषव्याप्त्यभावादित्यर्थः। माऽस्तु विशेषव्याप्तिः। सामान्यव्याप्तिरेव किं न स्यादित्यत आह **इच्छेति**। **उपलक्षण**-

**मिति** । श्रवणादेरिति शेषः । उन्निनीषतीत्यनुव्याख्याने 'इकृशिपौ धातुर्निर्देशे' इति समाधानम् । **उन्निनीषते इति** । 'नीङ् प्रापणे' इत्यस्य ङित्वादात्मनेपदित्वम् । सन्नन्तत्वेऽपि 'पूर्ववत्सन' इत्युक्तत्वादात्मनेपदमेव युक्तमित्यर्थः । **अस्यैवार्थस्येति** । प्रसादशब्देनेच्छोच्यते इत्यस्यार्थस्येत्यर्थः । प्रसन्नोऽस्मीति प्रतीतौ परोपचिकीर्षाया एव प्रतीतेरिति भावः ।

प० — **तत्तच्छास्त्रेति** । धर्ममीमांसातात्पर्यविषयत्वं धर्मस्य, सांख्यशास्त्र–तात्पर्यविषयत्वं योगस्य व्याकरणतात्पर्यविषयत्वं शब्दस्येत्येवं दर्शनादित्यर्थः । बहुवचनलब्धार्थोक्तिः **सर्वा अपीति** । तदभाव इत्यत्र तत्पदं व्यस्तं समस्तं चेत्युपेत्य वा यत्तदोर्नित्यसंबन्धाद्वाह **तस्मादिति** । तदभाव इत्यस्यार्थद्वयमाह **परमेत्यादि** ॥ **कर्मेत्युपलक्षणमिति** । प्रबोधयतीति ज्ञानस्योपलक्षणमित्यर्थः । कर्मणो मुक्तिहेतुप्रसादाहेतुत्वादिति भावः । लक्षणादोषं मन्वान आह **यद्वेति** ।

या० — **कर्मेत्युपलक्षणमिति** । ईश्वरज्ञानस्योपलक्षणमित्यर्थः । अन्यथोन्निनीषतिशब्दोक्तस्य मोक्षहेतुप्रसादस्य कर्मसाध्यत्वानुपपत्तिर्वक्ष्यमाणसम्बन्धानुपपत्तिश्चेति भावः । यद्यपि मूले श्रुतिप्रतीकग्रहणाय उन्निनीषत इति वाक्याचेति वक्तव्यम् । तथाऽपीकृश्तिपौ धातुनिर्देश' इति वचनाद्धातुनिर्देशमात्रमेतन्न पदग्रहणमिति मन्तव्यम् ।

श्री० — **तत्तदिति** । धर्मशास्त्रादीत्यर्थः । कर्मणो मोक्षाहेतुत्वात् 'यमूर्ध्वं नेतुमिच्छति तेन कर्म कारयती'ति कथमुच्यतेऽत आह **अत्रेति** । ज्ञानस्येति शेषः । तथा च तेन ज्ञानं सम्पादयतीत्यर्थः । यद्वेत्यनन्तरं तथाऽपीश्वरप्रसादेनैव भाव्यं किमिच्छयेत्याशङ्कानिरासायेति वाक्यशेषः ॥ **ज्ञापकमिति** । तथा सतीत्यादिवक्ष्यमाणरीत्येत्याशयः ॥ **अस्यैवेति** । ईश्वरप्रसादशब्देनेच्छोच्यत इत्यस्यैव । प्रसन्नोऽस्मीति प्रतीतौ परोपचिकीर्षाया एव प्रतीतेरित्यादिनेदं विवृतं भविष्यति । एकमपि वाक्यमित्यतः पूर्वमिच्छाऽभावे इति शेषः ।

सु० — एतदुक्तं भवति । शास्त्रं हि साध्यसाधनभाववद्विषयप्रयोजनवत्तया व्याप्तम् । तत्र श्रुतीनां मोक्ष एव प्रयोजनम् । 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत' इति वचनात् । मोक्षादन्यत्रात्यन्तिकदुःखप्रहाणायोगात् । स्वर्गादिप्रयोजनं भवदप्यवान्तरमेव न प्रधानम् । विषयस्तु परमेश्वर एव । 'सर्वे वेदा यत्पदमामनन्ती'त्यादिवचनात् । धर्मादिकं त्ववान्तरप्रतिपाद्यम् । अभिप्रेतप्रयोजनसाधनं च विषयतामश्नुते । न च धर्मादिकं मोक्षसाधनम् । 'पुण्यचितो लोकः क्षीयत' इति श्रुतेः । अतो भगवत्येव मोक्षसाधनत्वात्सर्वश्रुतीनां महातात्पर्यम् । न चाव्यापृतात्साधनात्फलसिद्धिः । व्यापारश्च प्रसाद एव । न तु श्रुतिजनितं

तज्ज्ञानं साक्षात्कारो वा । 'यस्य प्रसादादि'त्यादिवाक्यादुक्तानुमानाच्च । ज्ञानं तु प्रसाद-साधनमिति न संबन्धानुपपत्तिः । प्रसादो नामेच्छाविशेषः । तथा सति 'उन्निनीषते', 'तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठिताव्वि'त्यादिश्रुतिभिः 'यस्य प्रसादादि'ति श्रुतेरैका र्थ्यलाभात् । प्रसन्नोऽस्मीति प्रतीतौ परोपचिकीर्षाया एव स्फुरणात् । तथा च यदीश्वरो नेच्छावांस्तदा न प्रसीदेद्घटवत् । सामान्याभावे विशेषाभावनियमात् । प्रसादरहितश्च न मोक्षसाधनं स्यात् । यद्यत्र विवक्षितावान्तरव्यापाररहितं न तत्तत्र साधनमिति व्याप्तेः । मोक्षं प्रत्यसाधनं च न मोक्षशास्त्रमहातात्पर्यविषयः स्यात् । तथा च मोक्षप्रयोजनता श्रुतीनां हीयेत । न च विषयान्तरं प्रयोजनान्तरं चास्तीति विषयप्रयोजनशून्यत्वादप्रामाण्यमेवापद्येत । न च तदपौरुषेयतयाऽनाशङ्कितदोषस्य वाक्यस्योपपद्यते । अतोऽवश्यमुक्तेन क्रमेणेच्छावत्त्वं भगवतोऽङ्गीकरणीयमिति ।

शे०—ननु'तदभावे कुतः श्रुतिः। महातात्पर्यरहिता प्रमाणत्वं गमिष्यती'त्यनेन महातात्पर्ययुक्ति-रूप-विपक्षेबाधकतर्कविवरणं क्रियत इत्युक्तम् । तदयुक्तम् । मोक्षसाधनत्ववर्णनस्यानर्थकत्वात् । न चाविषयत्वोपपादनार्थं तदिति वाच्यम् । विषयतायां मोक्षसाधनताया अप्रयोजकत्वेन तदभावस्य तदनापादकत्वात् । तत्प्रयोजनसाधनत्वस्य तद्विषयत्वप्रयोजनकत्वेऽपि वा तत्प्रयोजनासाधनत्वस्यैव तदविषयतोपपादकत्वेन तस्यैवापादकतया वर्णनीयत्वेन मोक्षासाधनत्वस्य तदनुपपत्तिरेव । न च मोक्षस्यैव श्रुत्यादिप्रयोजनत्वाद्युक्ता तदसाधनत्वस्यापादनतयोक्तिरिति वाच्यम् । प्रमाणाभावेन सर्गादिरूपप्रयोजना-न्तरबलेन श्रुत्यादेर्मोक्षप्रयोजनकत्वासिद्धेः । अस्तु वा कथञ्चित्तत्प्रयोजनत्वम् । तथाऽपि शास्त्रविषय-स्यैव मोक्षसाधनत्वावश्यम्भावादविषयस्य भगवतस्तदनवश्यम्भावाद्भगवतस्तदसाधनत्ववर्णनासङ्गतिरेव । न च भगवत एव श्रुतिविषयत्वाभिप्रायेण तद्वर्णनमिति नासङ्गतिरिति वाच्यम् । प्रमाणाभावेन विषयान्तर-सद्भावेन च भगवतस्तद्विषयत्वायोगात् । अस्तु वा भगवत एव विषयत्वमपि । तथाऽपि तस्य मोक्षसाध-नत्वासिद्धेर्न तेन श्रुतितात्पर्यविषयत्वापादनं सम्भवति । न चात एव तदापादकतया तदभाव इतीच्छावत्वा-भाव वर्णनमिति वाच्यं । मोक्षसाधनतायामिच्छाया उपयोगाभावेन तदभावेन तदापादनायोगात् । न च प्रसादरूपभगवद्व्यापारसम्पादकतयाऽस्त्येवेच्छावत्त्वस्यापि मोक्षसाधनत्वे उपयोग इति वाच्यम् । अव्यापृतस्यापि भगवतः साधनत्वसम्भवेन तद्व्यापारस्यैवानपेक्षितत्वात् । व्यापृतस्यैव भगवतः साधन-त्वावश्यम्भावेऽपि श्रुतिजनितविज्ञानस्यैव वा भगवत्साक्षात्कारस्यैव वा भगवद्व्यापारत्वसम्भवेन प्रसादस्यैव व्यापारत्वमित्यस्य निर्निबन्धनत्वाच्च । प्रसादस्य व्यापारत्वे शास्त्रस्य प्रयोजनसम्बन्धाभावापातेनानुपादेय-त्वप्रसङ्गाच्च । कथञ्चित्सम्बन्धोपपादनेन प्रसादस्यैव व्यापारत्वाश्रयणेऽपि नेच्छासिद्धिः । इच्छा-

रहितस्यापि भगवत उक्तयुक्तिसिद्धप्रसादरूपव्यापारमात्रेणैव मोक्षसाधनत्वनिर्वाहात् । न चेच्छारूपत्वा-त्प्रसादस्य तत्सिद्धाविच्छावत्त्वमेव सिध्यतीति वाच्यम् । नियामकाभावेन प्रसादस्य तद्रूपत्वासम्भवात् । भावेऽपि वेच्छारहितत्वेन प्रसादराहित्यापादनानुपपत्तिरेव । प्रयोज्यप्रयोजकभावाप्रतीतेः । कथञ्चिदुपप-त्तावपि भगवति महातात्पर्यरहितत्वेन प्रसादराहित्यापादनार्थं श्रुत्यप्रामाण्यापादनं निर्बीजमेव । विषया-न्तरं प्रयोजनान्तरं वाऽऽदाय प्रामाण्यसम्भवात् । आपाद्यस्याप्रामाण्यस्येष्टत्वादिष्टापत्तिश्चेति कथमस्योक्ति तर्कविवरणरूपत्वमित्यत उक्तसर्वाक्षेपपरिहारेण विवरणरूपतामुपपादयितुमाह **एतदुक्तं भवतीति** ।

तत्र तावन्मोक्षसाधनत्वेन महातात्पर्यविषयत्वापादनमुपपादयितुं विषयप्रयोजनयोः साध्यसाधन-भावनियमं तावत्सूचयति **शास्त्रं हीति** । साध्यसाधनभाववती ये विषयप्रयोजने तद्वत्तयेत्यर्थः । यस्य शास्त्रस्य यत्प्रयोजनं तद्यज्ज्ञानाद्भवति स तस्य विषय इति नियमः । अन्यथा विषयप्रयोजनयोः संबन्धो न स्यात् । तथा च तत्र प्रेक्षावतां प्रवृत्तिर्न भवेदिति । श्रुतेर्मोक्षप्रयोजनकत्वाक्षेपं परिहरति **तत्रेति** । श्रुतिर्हि महाशास्त्रं 'वेद शास्त्रात्परं नास्तीति' वचनात् । तस्य च महापुरुषार्थेनैव प्रयोजनेन भवितुं युक्तम् । मोक्षश्च महापुरुषार्थः । 'धर्मार्थकामाः सर्वेऽपि न नित्या मोक्ष एव हि । मुख्यस्तस्मादि'ति श्रुतेः । अतः स एव तस्य प्रयोजनमिति भावः । न केवलं मोक्षस्य श्रुतिप्रयोजनत्वमुक्तरीत्या संभावितं किन्तु श्रुतमपीत्याह **तेषामिति** । नन्वेतच्छ्रुत्यनुरोधेन दुःखनिवृत्त्यर्थत्वप्राप्तावपि न मोक्षार्थत्वसिद्धिरिति नैतच्छ्रुत्युपन्यासः सङ्गतः इत्यत आह **मोक्षादन्यत्रेति** । श्रुतौ यद्यप्यात्यन्तिकत्वं न श्रुतं तथाऽपि प्रशब्दप्रयोगलब्धस्यार्थ-स्यानुवादोऽयमिति द्रष्टव्यम् । भगवतो विषयत्वाक्षेपं परिहरति **विषयश्चेति** । तर्हि धर्मादिसाधकमा-नान्तराभावात्तदसिद्धिप्रसङ्ग इत्यत ईश्वरस्यैव महातात्पर्यविषयत्वेऽपि धर्मादेरवान्तरतात्पर्यविषयत्वमस्त्येवेति न तदसिद्धिप्रसङ्ग इत्याह **धर्मादिकमिति** । 'अवान्तरं तत्परत्वं तदन्यदि'ति श्रुतेरिति भावः । ईश्वरस्य श्रुत्यवष्टम्भेन श्रुतिविषयतामुपपाद्य युक्त्याऽप्युपपादयति **अभिप्रेतेति** ॥ **मोक्षसाधनत्वादिति** । 'बन्धको भवपाशेन भवपाशाच्च मोचकः । कैवल्यदः परंब्रह्म विष्णुरेव न संशयः' इति श्रुतेरिति भावः । अव्यापृतस्यैव साधनतोपपत्तेः किं व्यापारेणेत्याक्षेपं परिहरति **न चेति** । अयमर्थः । साधनं द्विविधं सिद्धमसिद्धं च । तत्रासिद्धमुत्पाद्यं फलकामेन, यथा यागादि । सिद्धं तु सव्यापारीकरणीयम्, यथा कुठा-रादि । सिद्धं च साधनं भगवानिति व्यापृतादेव तस्मात्फलसिद्धिर्नाव्यापृतादिति न केवलस्य फलसाधनत्व-मिति । व्यापारान्तरेण प्रसादस्यान्यथासिद्धिं परिहरति **व्यापारश्चेत्यादिना** । कुतः श्रुतिजनित-भगवज्ज्ञानाद्यवधीरणेन प्रसादस्यैव व्यापारत्वाग्रह इत्यत आह **तस्येति** ॥ **उक्तानुमानाच्चेति** । विमतो बन्धमोक्षः प्रभुप्रसादसाध्यो मोक्षत्वाच्छृङ्खलामोक्षवदित्युक्तानुमानाच्चेत्यर्थः । नन्वेवं सति विषयप्रयोज-नयोः संबन्धानुपपत्तिः प्रसज्यते । यस्य हि शास्त्रस्य यत्प्रयोजनं तद्यज्ज्ञानाद्भवति स एव तस्य विषय

इत्यादिना शास्त्रप्रयोजनयोर्ज्ञानद्वारकसंबन्धसिद्धेः । प्रकृते च प्रसादस्य शास्त्रप्रयोजनसाधनत्वेन भगवतो मोक्षसाधनज्ञानविषयत्वालाभादित्यत आह **ज्ञानं त्विति** । यद्वा ननु ज्ञानस्याव्यापारत्वे तमेवमिति वाक्योक्तमोक्षज्ञानस्य मोक्षसंबन्धो न स्यात् । प्रसादस्यैव व्यापारत्वाभ्युपगमादित्यत आह **ज्ञानं त्विति** । **संबन्धानुपपत्तिः** ज्ञानस्य मोक्षसाधनत्वानुपपत्तिरित्यर्थः ॥ **प्रसादो नामेति** । तत्स्वरूपकथनेनेच्छामात्रस्यानादितया नित्यसिद्धत्वेऽपीच्छाविशेषस्यानभिव्यक्त्यादिसूचनेन ज्ञानप्रसादयोः साध्यसाधनभाव उपपादित इत्यवधेयम् । प्रसादस्येच्छारूपत्वे नियामकाक्षेपं परिहरति **तथा सतीति** । एवमर्थापत्तिः प्रमाणत्वेनोक्ता । प्रसादस्येच्छारूपत्वे प्रत्यक्षमप्याह **प्रसन्नोऽस्मीति** । इच्छारहितत्वेन प्रसादराहित्यापादनस्य निर्बीजत्वेनानुत्थानं परिहरति **तथा चेति** । बीजमाह **सामान्याभाव इति** । एवं तदभावे तदभाव इति आवृत्त्याद्याश्रयणेन इच्छारहितत्वेन प्रसादरहितत्वापादनं मूलाभिप्रेतं समर्थितम् । इदानीं तदभावे प्रसादरहितत्वे तदभावो मोक्षसाधनं न स्यादित्यावृत्त्याद्याश्रयणेन मूलाभिप्रेतमापादनं तन्मूलभूतव्याप्तौ दृष्टान्ताभावादयुक्तमित्याशङ्क्य दृष्टान्ताभावेन विशेषव्याप्तेरसम्भवेऽपि सामान्यव्याप्तेरविकलत्वान्न तन्मूलकापादनानुपपत्तिरित्यभिप्रेत्यापादनप्रकारप्रदर्शनपूर्वकं सामान्यव्याप्तिमुपपादयति **प्रसादरहितश्चेति** । तदभावे मोक्षसाधनत्वाभावे श्रुतिर्महातात्पर्यरहिता स्यादित्यापादितां श्रुतितात्पर्यविषयत्वानुपपत्तिमापाद्य स्वरूपवर्णनपूर्वकमनुवदति **मोक्षं प्रत्यसाधनं चेति** । अत्रापि यत् यं प्रत्यसाधनं तत् तत्फलकशास्त्रमहातात्पर्याविषय इति सामान्यव्याप्तिरनुसन्धेया । ननु मोक्षप्रयोजनकशास्त्रमहातात्पर्यविषयत्वाभावो नानिष्ट इति कथं तदापादनमित्यतः प्रमितस्य श्रुतीनां मोक्षप्रयोजनकत्वस्य हानिरूपानिष्टान्तरप्रसञ्जकत्वादनिष्टत्वमित्यभिप्रेत्य 'मोक्षार्थाः श्रुतयः' इति पूर्ववाक्यसूचितमनेन प्रसञ्जनीयमाह **तथा चेति** । ननु श्रुतीनां मोक्षप्रयोजनकत्वहानिरपि नानिष्टेत्यतः श्रुत्यप्रामाण्यप्रसङ्गरूपानिष्टान्तरप्रसञ्जकत्वादनिष्टत्वं तस्या इत्याशयेन 'तदभावे कथं प्रमाणत्वं गमिष्यती'ति भाष्यखण्डसूचितमनया प्रसञ्जनीयमापाद्यं दर्शयितुं, विषयप्रयोजनविशेषाभावेऽपि विषयान्तरस्य प्रयोजनान्तरस्य च सम्भवे निर्विषयत्वाद्यप्रसङ्गान्नाप्रामाण्यप्रसङ्ग इत्यतो न केवलं तदभाव इत्यनेनेश्वरविषयकत्वमोक्षप्रयोजनकत्वाभावमात्रपरिग्रहः । किन्नाम विषयान्तरप्रयोजनान्तरयोरप्यभावपरिग्रहः । तथा च सर्वथा निर्विषयत्वनिष्प्रयोजनत्वसिद्ध्या युक्तमप्रामाण्यापादनमित्याशयवांस्तदभाव इत्येतत्सूचितविषयप्रयोजनान्तराभावमनुवदन्नप्रामाण्यप्रसञ्जनमाह **न चेति** । ननु वेदस्याप्रामाण्यमस्त्येवेति नेदमप्यनिष्टमित्यत आह **न चेति** । कुतो नेत्यत उक्तम् **अपौरुषेयतयाऽनाशङ्कितदोषस्येति** । हेतुगर्भविशेषणम् । अप्रामाण्यस्य दोषजन्यत्वाद्वाक्ये च स्वाभाविकदोषाणामभावेन पुरुषदोषनिबन्धनानामेव तेषामवश्याश्रयणीयत्वात् । यत्र स्वतन्त्रो वक्ता पुरुषस्तिष्ठति तत्र तद्दोषनिबन्धनानां दोषाणां सम्भवेऽपि वेदस्यापौरुषेयत्वेन तत्र

पुरुषदोषनिबन्धनदोषाभावात्कारणाभावे च कार्यस्य शङ्कितुमशक्यत्वादप्रामाण्याभावनिश्चयान्नाप्रामाण्यं तस्य युक्तमङ्गीकर्तुमिति भावः ।

स० — **शास्त्रमिति** ॥ साध्यसाधनभाववती ये विषयप्रयोजने तद्वत्तयेत्यर्थः । **उक्तानुमानादिति** । विमतो बन्धमोक्षः प्रभुप्रसादसाध्यः, मोक्षत्वात् शृङ्खलामोक्षवत् इत्यनुमानादित्यर्थः । ननु ज्ञानस्याव्यापारत्वे तमेवमित्यादिवाक्योक्तो ज्ञानस्य मोक्षसंबन्धो न स्यात् । प्रसादस्यैव व्यापारत्वाभ्युपगमादित्यत आह **ज्ञानमिति** ॥ **न संबन्धानुपपत्तिः** मोक्षसंबन्धानुपपत्तिरित्यर्थः ।

प० — **साध्यसाधनेति** । यथायोग्यमन्वयो न यथाक्रमं । साधनसाध्यभाववती ये विषयप्रयोजने तद्वत्तयेत्यर्थः । तद्वत्त्वं च प्रयोजनसाधनं यो विषयस्तस्य सव्यापारीकारि(त्वेनेति)त्वमिति ज्ञेयम् । श्रुतौ मोक्षायेत्यश्रवणादाह **मोक्षादन्यत्रेति** ॥ **विषयस्त्विति** । श्रुतीनामित्यनुषङ्गः ॥ **अव्यापृतादिति** । व्यापाररहितादित्यर्थः ॥ **उक्तेति** । विमतो बन्धमोक्ष इत्युक्तानुमानाच्चेत्यर्थः । एवं तर्हि श्रुतिरूपशास्त्रस्य साध्यं मोक्षरूपफलं प्रति साधनभावापन्नविषयेण सह कथं संबन्धः । तदनुत्पादकत्वात्प्रसादस्य । दृष्टहान्यदृष्टकल्पनापत्त्या श्रुत्यजन्यत्वेन सव्यापारीकारित्वस्याप्यभावादित्यतोऽस्ति ज्ञाप्यज्ञापकरूपसंबन्ध इति भावेनाह **ज्ञानं त्विति** । श्रुतिजनितं विषयज्ञानं त्वित्यर्थः । तावता इच्छावत्त्वे किमायातमित्यत आह **प्रसादो नामेति** ॥ **उन्निनीषत इति** । 'यमेभ्यो लोकेभ्य उन्निनीषत' इति प्रागुक्तश्रुतेः प्रतीकग्रहणम् । 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इत्यत्र भाष्योक्तस्मृतिमाह **तदिच्छयेति** । आपाद्यापादकयोर्व्याप्तिं व्यनक्ति ॥ **सामान्याभाव इति** । अङ्गीकरणीयमितीतिशब्दस्यैतदुक्तमिति पूर्वेणान्वयः ।

श्री० — **साध्येत्यादि** । साध्यसाधनभाववती ये विषयप्रयोजने तद्वत्तयेत्यर्थः । अत्र यथायोग्यं सम्बन्धो न यथाक्रमम् । अवान्तरप्रतिपाद्यत्वं विवृणोति **अभिप्रेतेति** ॥ **मोक्षेति** । अभिप्रेतप्रयोजनरूपेत्यर्थः । येन तत्साधनत्वेन धर्मादेर्मुख्यविषयता स्यादित्यर्थः । भगवत्येव महातात्पर्यमिति सम्बन्धः । मोक्षसाधनत्वाद्भगवत इति शेषः । **चितः** प्राप्तः ॥ **अव्यापृतादिति** । व्यापारशून्येश्वररूपसाधनादित्यर्थः ॥ **व्यापारश्चेति** । मोक्षसाधनभूतस्य भगवतो मोक्षजनकत्वे इति शेषः । **ज्ञानं** परोक्षम् । **उक्तेति** । विमतो बन्धमोक्षः प्रभुप्रसादसाध्यः मोक्षत्वात् शृङ्खलामोक्षवदित्यनुमानादित्यर्थः । ननु ज्ञानस्य मोक्षसाधनत्वाभावे तद्वैयर्थ्यमेव स्यादित्यत आह **ज्ञानं त्विति** । परम्परया मोक्षे उपयोगोऽस्तीत्याशयः । मुखप्रसन्नतादिरूपप्रसादस्य ज्ञानासाध्यत्वादाह **प्रसादो नामेति** । प्रसादशब्देनेच्छोच्यत इत्यत्रापीदमेव ज्ञापकमित्युक्तं विवृणोति **तथा सतीति** । प्रसादस्येच्छाविषयत्वे सतीत्यर्थः । लोकदृष्ट्यनुसारत इत्येतदप्यस्यैवार्थस्य ज्ञापकमित्युक्तं विवृणोति **प्रसन्नोऽस्मीति** ॥ **न प्रसीदेदिति** ।

परोपचिकीर्षावान्न स्यादित्यर्थः । अप्रयोजकतां परिहरति **सामान्येति** । इच्छासामान्यस्याभावे परोपचिकीर्षारूपप्रसादाख्येच्छाविशेषोऽपि न स्यादित्यर्थः । **यत्** कुठारादि । **यत्र** छिदादौ ॥ **विवक्षितेति** । कुठारदारुसंयोगादिरूपेत्यर्थः ।

**सु० — ननु विषयाभावे स्यादप्रामाण्यम् । फलाभावे तु कथमप्रामाण्यापादनम् । न हि फलवत्त्वं प्रामाण्यम् । किन्तु याथार्थ्यमेवेत्युक्तम् । नापि प्रामाण्यस्य व्यापकम् । तृणादिदर्शनस्य प्रयोजनाभावेऽपि प्रामाण्याभ्युपगमादित्यत आह** याथार्थ्यमेवेति ।

**अनु०** — याथार्थ्यमेव मानत्वमपि वाक्यं प्रयोजकम् ॥

मानत्वमेति

**यद्यपि याथार्थ्यमेव मानत्वं न फलवत्त्वम् । नापि तेन व्याप्तम् । तथाऽपि वाक्यं प्रयोजकमेव मानत्वमेतीति युक्तमापादनम् । एतदुक्तं भवति । प्रामाण्यमात्रस्य प्रयोजनवत्त्वेन व्याप्त्यभावेऽपि तद्विशेषस्य वाक्यप्रामाण्यस्यास्त्येव । पदानामिष्टसाधन एव गृहीतसङ्गतिकत्वात् । पदसङ्गतिग्रहणसव्यपेक्षस्यैव वाक्यस्य बोधकत्वात । फलस्य विषयविशेषे वाक्यप्रामाण्यनिर्णयहेतुत्वाच्च । अतो व्यापकाभावे व्याप्यवाक्यप्रामाण्याभावापादनमुपपन्नमेवेति ।**

**शे०** — ननु याथार्थ्यमेवेत्युत्तरभाष्यमनर्थकम् । न च फलवत्त्वस्य वाक्यप्रामाण्यव्यापकतोपदर्शनार्थं तदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न च व्यापकाभावेन व्याप्यस्य प्रामाण्यस्याभावव्युत्पादनार्थत्वान्न तदिति वाच्यम् । व्यापकाभावेन व्याप्याभावसाधनस्य प्रकृतोपयोगादर्शनादित्यतः प्रागुक्तस्य निष्प्रयोजनत्वेन वेदाप्रामाण्यस्य समर्थनार्थत्वान्नानुपपत्तिरित्यभिप्रेत्य तदनुपपत्तिशङ्कापरिहारकतयोत्तरग्रन्थं योजयितुं निष्प्रयोजनत्वेनाप्रामाण्यापादनानुपपत्तिशङ्कामुत्थापयति **नन्विति** ॥ **पदानामिति** । एतच्च प्राथमिकबालव्युत्पत्तिहेतुजिज्ञासोत्थापकतयेष्टसाधनत्वस्य तत्रोपयोगाभिप्रायेणोक्तं **पदसङ्गतिग्रहणसव्यपेक्षस्यैवेति** । अन्वयव्यतिरेकाभ्यां तथाऽवगमादिति भावः ॥ **फलस्येति** । तात्पर्यलिङ्गत्वात्तस्येति भावः ।

**स०** — आकाङ्क्षाजिज्ञासयोरभावे शक्तिग्रहस्यैवासंभवात् तयोश्च इष्टत्वेष्टसाधनत्वज्ञानाभावे असंभवेन शक्तिग्रहणसव्यपेक्षस्य तज्ज्ञानस्यावश्यकत्वाभिप्रायेण इष्टसाधन एव इत्युक्तम् । न तु इष्टसाधनत्वस्य शक्यतावच्छेदकत्वाभिप्रायेण । तथात्वे घटादिपदश्रवणानन्तरम् इष्टसाधनत्वप्रकारकबोधापत्तेः । शक्यतावच्छेदकप्रकारकबोधस्यावश्यकत्वात् । तस्मात् योग्येतरान्वितत्वमेव शक्यतावच्छेदकमिति ध्येयम् । **इष्टसाधन एवेति** । न चैवमुदासीनेऽनिष्टसाधने वा संगतिग्रहाभावात् उदासीनाद्यर्थप्रतिपाद-

केवलवाक्यस्यार्थबोधकत्वमेव न स्यादिति वाच्यम् । शास्त्रस्य प्रकृतत्वेन तस्य प्रवर्तकत्वात् तदभिप्रायेणैव तदभिधानाददोषः ।

**प०— अस्त्येवेति ।** प्रयोजनवत्त्वेन व्याप्तिरित्यनुषङ्गः ॥ **पदानामिष्टसाधन एवेति ।** 'इष्टे व्युत्पत्तिरिष्यते । अप्ययुपास्तव भातेत्यादावेवापातोऽपि चे'त्यादिव्याख्यावसरे जिज्ञासानय एव समर्थनादिति भावः ॥ **फलस्येति ।** प्रयोजनवदर्थप्रतिपादकत्वरूपफलस्येत्यर्थः । 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलं । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय'इत्युक्तेरभेदपरतया प्रतीतवाक्यानामभेदरूपविषयप्रमापकत्वं वा भगवद्गुणोत्कर्षप्रमापकत्वं वेति विचारे 'घातयन्ति हि राजानो राजाहमिति वदन्तं, ददति च सर्वमभिप्रेतं गुणोत्कर्षं वदत' इति सफलगुणोत्कर्षरूपविषयप्रमापकत्वस्य तद्गुणसारत्वादित्यत्र निर्णयात् । 'असंभवस्तु सतो अनुपपत्तेरि'त्यत्रासतः सदजायतेत्यादिवाक्यस्य निष्फलभगवदुत्पत्तिरूपार्थपरित्यागेन सफलवायूत्पादकत्वरूपार्थ-प्रमापकत्वस्य निर्णयादिति भावः ।

**या०— पदानामिष्टसाधन एवेति ।** प्रवर्तकवाक्यस्थपदानामित्यर्थः । प्रकृतं च श्रुतिवाक्यं प्रवर्तकमेवेति भावः । तेनेष्टासाधनानिष्टबोधकपदानामुदासीनानिष्टार्थेषु सङ्गतिग्रहाभावेऽबोधकत्वप्रसङ्ग इति शङ्काऽनवकाश इति ध्येयम् ॥ **फलस्य विषयविशेष इति ।** फलस्य तात्पर्यलिङ्गत्वादिति भावः ।

**श्री०—** प्रयोजनशून्यत्वादप्रामाण्यमेवापद्यत इत्यापादनं कुतो न कर्तुं शक्यत इत्यत आह **नहीति ।** अस्त्येव प्रयोजनवत्त्वेन व्याप्तिरिति शेषः ॥ **व्यापकेति ।** प्रयोजनवत्त्वेत्यर्थः । व्याप्यभूतं यद्वाक्यप्रामाण्यम् । अत्र सर्वत्राप्यप्रामाण्यशब्दोऽनुपादेयत्वपरो मन्तव्यः ।

**सु०— ननु च महातात्पर्यगोचरस्य विषयस्य परमप्रयोजनस्य चाभावेऽप्यवान्तरविषयेण धर्मादिनाऽप्रधानप्रयोजनेन च स्वर्गादिना विषयप्रयोजनवती श्रुतिः प्रमाणं भविष्यति इत्यत आह** तत्रापीति ।

**अनु०—** तत्रापि यत्संपूर्णप्रयोजनम् ॥ २-४२-९ ॥

**वाक्येऽपि निर्धारणे सप्तमी । प्रयोजनवत्त्वेऽपीति वा । यत् वाक्यं** संपूर्णप्रयोजनं **महाप्रयोजनम् । उपलक्षणं चैतत् । प्रधानविषयं चेत्यपि द्रष्टव्यम् । यदिति श्रवणात्तदिति लभ्यते । संपूर्णप्रयोजनमिति चावर्तनीयम् । मानत्वमेतीत्यनुवर्तनीयम् । तथा चायमर्थः । नावान्तरविषयप्रयोजनाभ्यां वाक्यस्य प्रामाण्यं संभवति । किन्नाम यद्वाक्यं यन्म(हा)हत्प्रयोजनमुद्दिश्य यं प्रधानं विषयं प्रतिपादयितुं प्रवृत्तं तत्ताभ्यां(एव) प्रयोजनविषयाभ्यामुपेतं प्रामाण्यमश्नुते । तदभावेऽवान्तरप्रयोजनादेरप्यसिद्धेः । सिद्धौ वा तस्यैव प्राधान्यप्राप्तेः ।**

वेदवाक्यं च मोक्षोद्देशेन परमेश्वरे महातात्पर्योपेतमित्युक्तम् । तत्तयोरेव विषयप्रयोजनयोरुपपत्तौ प्रमाणं स्यान्नान्यथेति ॥ २-१-९ ॥

शे० — तत्रापीत्युत्तरभाष्यानर्थक्यमाशङ्क्य महाप्रयोजनस्य प्रधानविषयस्य च वाक्यस्य महाप्रयोजनसाधनविषयोपेतत्वेनैव प्रामाण्यमित्यर्थप्रतिपादनार्थत्वान्न तदिति भावेन किं तदर्थप्रतिपादनेनापीत्यतोऽवान्तरप्रयोजनाप्रधानविषयाभ्यामेव प्रामाण्यसम्भवान्न मोक्षार्थत्वाभावेऽपि शास्त्राप्रामाण्यमित्याशङ्कापरिहारार्थं तदिति भावेनोक्तशङ्कानिवर्तकतया मूलं योजयितुमवान्तरप्रयोजनादिना तत्प्रामाण्यशङ्कामुत्थापयति **ननु चेति** । सम्पूर्णप्रयोजनकवाक्यं प्रति वाक्यस्याधिकरणत्वाभावेन वाक्येऽपीति सप्तम्यनुपपत्तिमाशङ्क्य नेयमधिकरणसप्तमी किन्तु वाक्यानां मध्ये यत्सम्पूर्णप्रयोजनकं वाक्यमिति गोषु कृष्णा गौः सम्पन्नक्षीरेत्यादिवन्निर्धारणसप्तमीति नानुपपत्तिरित्याह **निर्धारण इति** । अवान्तरविषयप्रयोजनाभ्यां वाक्यस्य प्रामाण्यशङ्कायां महाप्रयोजनविषयाभ्यामुपेतमेव वाक्यं प्रमाणमिति वक्तव्यम् । महाप्रयोजनस्येव महाविषयस्यापि तत्प्रामाण्यनिर्वाहकस्य पूर्वं समर्थितत्वात्कथं महाप्रयोजनमित्येकदेशोक्तिरित्यत एकदेशप्रयोगेऽपि विशिष्टस्य ज्ञातुं शक्यत्वाद्भाष्ये एकदेशोक्तिर्न तु तन्मात्रस्य प्रामाण्यनिर्वाहकत्वाभिप्रायेणेति नानुपपत्तिरिति भावेन भाष्यमुपलक्षणतया व्याचष्टे **उपलक्षणं चैतदिति** ॥ **लभ्यत इति** । यत्तदोर्नित्यसम्बन्धादिति भावः । वक्ष्यमाणं वेदवाक्यं च मोक्षोद्देशेन परमेश्वरे तात्पर्योपेतमित्युपनयस्यापि भाष्यारूढतामाह **सम्पूर्णप्रयोजनमिति चावर्तनीयमिति** । अत्रापि पूर्ववदुपलक्षणत्वमनुसन्धेयम् ॥ **अनुवर्तनीयमिति** । पूर्ववाक्यादिति शेषः । अन्यथा साकाङ्क्षया वाक्याभासत्वप्रसक्तेरिति भावः । कथमेतावतोक्ताक्षेपपरिहार इत्यतः श्रुतोपलक्षितलभ्यावर्तितानुवर्तितपदानां सम्बन्धं प्रदर्शयन्नुक्ताक्षेपपरिहारमाह **ततश्चेति** । इतीत्यस्यायमर्थ इति पूर्वेणान्वयः ॥ २-१-९ ॥

स० — **निर्धारणे** । गुणक्रियाजातिभिरेकदेशस्य पृथक्करणं निर्धारणम् । **ताभ्यामेव विषयाप्रयोजनाभ्यामुपेतम्** इत्यनेन संपूर्णप्रयोजनम् इत्यस्यानुवृत्तिरुपपादिता भवति । **तदभाव इति** । यागादेः स्वर्गरूपमहाप्रयोजनसाधनत्वसिद्धावेव अपूर्वरूपावान्तरप्रयोजनसिद्धिः । प्रकृते मोक्षरूपमहाप्रयोजनसाधनत्वस्यैवासिद्ध्या स्वर्गादेरवान्तरप्रयोजनस्याप्यसिद्धेरित्यर्थः ।

प० — पूर्वं वाक्यमिति प्रकृतत्वात्तत्रापीत्यस्य वाक्येपीत्येकवचनं युक्तम् । वाक्येष्वित्यर्थः । यतश्च निर्धारणमिति सूत्रे निर्धार्यमाणवस्त्वपेक्षया अवधिभूते सप्तमी षष्ठी वा भवति । गवां गोषु वा कृष्णा गौः बहुक्षीरेत्यादौ निर्धारणविधौ बहुवचनदर्शनादत एव प्रयोजनवत्त्वेपीति वेत्यर्थान्तरोक्तिः । इति चावर्तनीयमित्येतत् यत्तच्छब्दार्थाभ्यां अन्वयाय उपलक्षकस्यावृत्त्युक्त्याऽनुपलक्ष्यस्य प्रधानविषयं चेत्यस्याप्यावृत्तिरुक्तप्रायेति भावेन योजनामाह **यद्वाक्यमिति** । मानत्वमेतीत्यनुवृत्तस्यार्थः **प्रामाण्यमश्नुत इति** ।

**या०— सम्पूर्णप्रयोजनमिति चावर्तनीयमिति ।** तेन वक्ष्यमाणोपनयलाभ इति भावः । ॥ २-१-९ ॥

**श्री०— इति वेति ।** वाक्यस्य प्रयोजनवत्त्वे सत्यपीत्यर्थः ॥ **ताभ्यामेवेति ।** तथा च यद्वाक्यं यत्सम्पूर्णप्रयोजनं महत्प्रयोजनमुद्दिश्य प्रवृत्तं तत्सम्पूर्णप्रयोजनमेव वाक्यं मानत्वमेत्यत्युपादेयं भवतीत्यावृत्तिः सूचिता । **तदभावे** महाप्रयोजनादेरभावे ॥ **अवान्तरेति ।** कस्मिंश्चिन्महाप्रयोजने सति तदपेक्षया किञ्चिदवान्तरप्रयोजनं स्यात् । महाप्रयोजनस्यैवाभावे तन्निरूपितावान्तरत्वमेव न युक्तमित्यर्थः ॥ **सिद्धौ वेति ।** महाप्रयोजनाभावेऽप्यवान्तरप्रयोजनस्य सिद्धावित्यर्थः । **तस्यैव** अवान्तरत्वेनोच्यमानस्यैव । तथा चावान्तरत्वादिकमाभिमानिकं साङ्केतिकमेव, वस्तुतस्तदेव महद्भविष्यतीत्यर्थः । **तयोः** परमेश्वरमोक्षयोः ॥ २-१-९ ॥

## ॥ इति नप्रयोजनाधिकरणम् ॥

## ॥ अथ वैषम्यनैर्घृण्याधिकरणम् ॥

सु० — ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ प्राणिनां विविधान्देहेन्द्रिय(ादि)विषयांस्तत्फलं च सुखदुःखलक्षणमुत्पादयन्नीश्वरः किं तदीयं धर्माधर्मरूपं कर्मापेक्षते न वा। आद्ये तस्य स्वातन्त्र्यप्रच्युतिः। द्वितीये निर्निमित्तं कांश्चित्सुखयन्विषमः स्यात्। कांश्चिद्दुःखयन्निर्घृणः स्यात्। इत्युभयथा न तस्य सर्वकर्तृत्वमित्येष(व) पूर्वपक्षोऽत्राधिकरणे निराक्रियते। तत्र तावदाद्येन सूत्रेण कर्मादिसापेक्षस्य कर्तृत्वमभ्युपेत्य वैषम्यनैर्घृण्ये परिहृते। अपेक्षणीयं कर्मादि ईश्वरायत्तं न वा। नेति पक्षे सर्वकारणत्वहानिः। आद्ये निर्निमित्तं विषमाणां कर्मणां कारयितुर्वैषम्यनैर्घृण्ये स्यातामित्याक्षिप्य कर्मादीनामनादिता(त्वा)भ्युपगमेन समाधानमुक्तं 'न कर्माविभागादितिचेन्नानादित्वादि'ति सूत्रेण। एवं तर्हि कर्मादिसापेक्षस्य स्वातन्त्र्यं न स्यादित्याशङ्क्योक्तमुपपद्यते चेति। कर्माद्यपेक्षस्यापि तस्य स्वातन्त्र्यमुपपद्यते। कर्मादिसत्तादेरपि तदधीनत्वस्यारम्भणाधिकरणे समर्थितत्वात्। न हि स्वाधीनसत्तादिकमपेक्षमाणस्य स्वातन्त्र्यप्रच्युतिर्युक्तेति। एवं (च) तर्हि तदपेक्षा नामानपेक्षैव। तथा च पुनर्वैषम्याद्यापत्तिरित्याशङ्क्योक्तम् उपलभ्यते चेति। उपलभ्यते ही(चे)श्वरस्येदृशं वैषम्यं निर्घृणत्वं च प्रमाणैः। अतो नेदमनिष्टमिति।

तदिदमयुक्तम्। वैषम्यनैर्घृण्ये हि वस्तुतो दूषणे न वा। आद्ये कथमन्ततोऽप्यङ्गीक्रियेते। द्वितीये प्रथममेवाङ्गीकार्ये। किं सापेक्षतापक्षं कक्षीकृत्य तत्र दूषणपरिहारक्लेशेन। तथा च वक्रबन्ध(क)रीतिरित्यतोऽभिप्रायमाह वैषम्यमिति।

अनु० — ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥

वैषम्यं चैव नैर्घृण्यं वेदाप्रामाण्यकारणम्।
नाङ्गीकार्यमतोऽन्यत्तु न वैषम्यादिनामकम् ॥ २-१-१० ॥

द्विविधं खल्विदं वैषम्यं निर्घृणत्वं च। एकं (ध)कर्माद्यनपेक्षताप्रयुक्तम्। अपरं तु सापेक्षत्वेऽपि कर्मादिसत्तादेरपीश्वराधीनत्वप्रयुक्तम्। तत्राद्यं वेदाप्रामाण्यकारणत्वेन दूषणत्वात् नेश्वरस्याङ्गीकर्तुमुचितम्। वेदो हि धर्मं सुखसाधनमधर्मं च दुःखसाधनमाह। तत्र यदीश्वरो धर्माधर्मावनपेक्ष्य विषमो निर्घृणश्च स्यात् तदा वेदोदितं धर्माधर्मयोः सुखदुःखसाधनत्वमसत्स्यात्। तथा च तस्य कथं प्रामाण्यं स्यात्। अतः सूत्रकारेण कर्मादिसापेक्षतापक्षमुररीकृत्य तत्परिहृतम्। अतोऽन्यत्तु द्वितीयं वैषम्यं नैर्घृण्यं च न वैषम्यादिनामकं दूषणरूपं न भवतीति

**यावत् । तथा हि वैषम्यादिकं तावन्न स्वरूपेण दोषः किन्तु दोषहेतुतया । न चेदं वेदाप्रामाण्यकारणम् । कर्मादिसापेक्षत्वाङ्गीकारात् । नापि जीवानामिवेश्वरस्य प्रत्यवायहेतुः । तदभावात् । अतोऽदूषणत्वादङ्गीकृतं सूत्रकृतेति न कश्चिद्दोषः । तथा च भाष्यम् । 'न च पुनर्वैषम्याद्यापातेन दोष' इति ॥ २-१-१० ॥**

**शे० — ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ** ॥ ननूक्तभाष्यस्य गतार्थतानिरासायैतदधिकरणव्यावर्त्यपूर्वपक्षदर्शनेनाधिकरणारम्भसमर्थनार्थत्वाभावात्, सूत्रव्याख्यानरूपत्वस्य वा अपव्याख्याननिरासपरत्वस्य वा आभावाच्च वैयर्थ्यमित्याशङ्क्य तदभावेऽप्यधिकरणशरीरे प्रसक्तानुपपत्तिपरिहारार्थत्वान्नानर्थक्यमिति भावेनाधिकरणशरीरे प्रसक्तानुपपत्तिपरिहारकतया तद्योजयितुं भाष्यानुसारेणैतद्व्यावर्त्यपूर्वपक्षप्रदर्शनपूर्वकमधिकरणस्वरूपं दर्शयति **प्राणिनामिति** ॥ **उभयथेति** । आद्येऽस्वातन्त्र्याद्द्वितीये च वैषम्यादिदोषित्वादिति भावः । **आरम्भणाधिकरण इति** । 'द्रव्यं कर्म च कालश्च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया । इति श्रुतेरि'त्यादिनेति शेषः । अस्तु कर्मादीनां सत्त्वस्यापि भगवदधीनत्वम् । तथाऽपि तत्सापेक्षस्य भगवतो न स्वातन्त्र्यं, स्वतन्त्रश्च सापेक्षश्चेत्यस्य विप्रतिषिद्धत्वात्; इत्यतो भवेदेवं स्वातन्त्र्यप्रच्युतिर्यदि तदपेक्षा तेन विना करणे कुलालादेरिव शक्त्यभावनिबन्धना स्यात् । न चैवम् । किन्नाम स्वेच्छाधीनैवेति न स्वातन्त्र्यहानिरित्याह **न हीति** ॥ **प्रमाणैरिति** । 'स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशिताऽपी'त्यादिप्रमाणैरित्यर्थः ।

एवमधिकरणशरीरं प्रदर्श्य तत्रानुपपत्तिमुद्भावयति **तदिदमयुक्तमिति** ॥ **आद्य इति** । दुष्टापादानस्य पराजयहेतुत्वादिति भावः ॥ **बकबन्धरीतिरिति** । बकबन्धसमानन्याय इत्यर्थः । बकग्रहणे क उपाय इति केनचित्पृष्टे खरतरदिनकरसंपर्कद्रुततन्मस्तकनिहितनवनीतबिन्दुभिर्नयनयोः पूर्णतायां तद्ग्रहणं सुकरमिति कश्चित्प्रतिपादयति । न च तदुपपद्यते । बकग्रहणमन्तरेण तन्मस्तकनवनीतप्रतिक्षेपानुपपत्तेस्तस्मिन्गृहीते तु पुनस्तन्मस्तके नवनीतप्रक्षेपोऽपि मुधैवेति न्यायाभिप्रायः । **भाष्यस्य** वेदाप्रामाण्यकारणत्वमुपपादयति **वेदो हीति** । वैषम्यं नैर्घृण्यं च वैषम्यादिनामकं नेति विप्रतिषिद्धमित्यतो नात्र वैषम्यादेर्वैषम्यादिनामकत्वं नेति यथाश्रुतेऽर्थे तात्पर्यं येन विप्रतिषेधः स्यात्किन्तु दूषणं न भवतीत्यत्रैवेति नानुपपत्तिरित्याह **दूषणरूपं न भवतीति यावदिति** ॥ **न स्वरूपेणेति** । अतिप्रसङ्गादिति भावः । तर्हि कथं तयोर्दोषत्वमिति पृच्छति **किन्त्विति** । उत्तरमाह **दोषहेतुतयेति** । दोषान्तरोन्नायकतयेत्यर्थः । अस्तु तर्हि प्रकृतेऽपि दोषान्तरोन्नायकतयैव दोषत्वमित्यतस्तदभावान्नेत्यभिप्रेत्यैतदुन्नेयदोषः किं वेदाप्रामाण्यरूपोऽभिमत उत प्रत्यवायापरपर्याय इतिविकल्पौ हृदि निधायाद्यम-

नूद्य प्रतिषेधति **न चेति** । धर्माधर्मादिः सुखदुःखहेतुत्वप्रतिपादकवेदाप्रामाण्यं न चेत्यर्थः । न च 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिशास्त्रस्याप्रामाण्यप्रसङ्गेऽपि 'समोऽहं सर्वभूतेष्वि'त्यादिशास्त्राप्रामाण्यापरिहारात्तदापादकतया दोषत्वं स्यादेवेति वाच्यम् । अनादिसिद्धयोग्यताद्यनुसारित्वस्यैव तत्र समशब्दार्थत्वादित्याशयात् । द्वितीयमनूद्य दूषयति **नापीति** ॥ **तदभावादिति** । ईश्वरस्य विधिनिषेधातीतत्वादिति भावः । वैषम्यादेः स्वरूपेण न दोषत्वं किन्तु दोषान्तरोन्नायकतयैवेत्युक्तम् । तत्र भाष्यं प्रमाणयति **तथा चेति** । भाष्यमप्युक्ताभिप्रायमेव । स्वरूपेण दोषतायां 'न च पुनर्वैषम्याद्यापात' इत्येवावक्ष्यदिति भावः । यद्वा ननु मूले 'अतोऽन्यत्तु न वैषम्यादिनामकमि'ति वैषम्यादिशब्दवाच्यमेव तन्न भवतीत्युक्तम् । एवञ्च दूषणं न भवतीति व्याख्यानं निर्बीजमित्यतो भाष्ये दोषत्वमाशङ्क्य परिहारादत्रापि तथैव व्याख्यानं युक्तमित्याह **तथा चेति** ॥ २-१-१० ॥

प०— ॐ **वैषम्यनैर्घृण्ये न सापेक्षत्वात्** । 'स्वयं कृतापि तद्व्याख्या क्रियते स्पष्टतार्थत' इति प्रतिज्ञामनुरुध्योपलभ्यते चेति चरमसूत्रखण्डस्य तात्पर्यस्पष्टीकरणे काऽनुपपत्तिरित्यतः तां वक्तुमधिकरणतात्पर्योक्तिपूर्वं सूत्रतात्पर्यार्थमाह **प्राणिनामित्यादिना** ॥ **उभयथापीति** । आद्ये स्वातन्त्र्याभावात् द्वितीये दोषित्वादिति भावः ॥ इत्येव **पूर्वपक्ष इति** । एतेन पूर्वोक्तप्रयोजनरूपफलविषये युक्तिविरोधोऽत्रनिरस्यत इति पूर्वसङ्गतिः । पादान्तर्भावश्चोक्तो भवति । कर्मादीत्यादिपदेन तदीयप्रयत्नसंस्कारादिग्रहः । **प्रमाणैरिति** । 'एष ह्येव साधु कर्म कारयति' 'स कारयेत्पुण्यमथापि पापम्' इत्यादिप्रमाणैरित्यर्थः । वेदाप्रामाण्यकारणत्वेनेत्युक्तं व्यनक्ति **वेदो हीति** । अन्यस्त्वित्यनुवादः द्वितीयमिति व्याख्या ॥ **तदभावादिति** । विधिनिषेधातीतत्वादीश्वरस्येति भावः । एवं तर्हीत्यादिना स्वोक्तार्थं भाष्यारूढमिति दर्शयति **तथाच भाष्यमिति** । यद्वा दूषणरूपं न भवतीति यावदिति स्वोक्तार्थसंवादायाह **तथाच भाष्यमिति** । यद्वा एतदनुभाष्यं भाष्यस्थैतद्वाक्यविवरणमिति दर्शयति **तथाच भाष्यमिति** । यद्वा । वैषम्यादि न स्वयं दोषः किंतु दोषहेतुरित्युक्तार्थे संवादायाह **तथाचेति** ॥ २ । १ । १० ॥

या०— ॐ **वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति** ॐ ॥ **उभयथाऽपीति** । आद्येऽस्वातन्त्र्यान्न सर्वकर्तृत्वं, द्वितीये दोषित्वप्राप्त्येति भावः । **आरम्भणाधिकरण इति** । तत्र 'द्रव्यं कर्म च कालश्चे'ति प्रमाणस्योदाहृतत्वादिति भावः ॥ **प्रमाणैरिति** । 'स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशिताऽपी'त्यादिप्रमाणैरित्यर्थः । आद्यस्य वेदाप्रामाण्यकारणत्वमुपपादयति **वेदो हीति** । दोषोऽपि किं वेदाप्रामाण्यरूप उत प्रत्यवायापरपर्याय इति विकल्पं मनसि निधायाद्यं दूषयति **न च वेदाप्रामाण्येति** । द्वितीयं दूषयति **नापि जीवानामिवेति** ।

ननु मूले 'अतोऽन्यत्तु न वैषम्यादिनामकमि'ति वैषम्यादिशब्दवाच्यमेव तन्न भवतीत्युक्तम् । एवं च दूषणं न भवतीति यावदिति व्याख्याने किं बीजमित्यत आह **तथा च भाष्यमिति** । भाष्ये दोषत्वमेवाशङ्क्य परिहृतमतोऽत्रापि तथैव व्याख्यातमिति भावः ॥ २-१-१० ॥

**श्री०— ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ उभयथेति** । कर्मापेक्षायामनपेक्षायां चेत्यर्थः ॥ **न सर्वकर्तृत्वमिति** । अस्मदादिवद्दोषित्वादिति भावः । **सत्तादिकम्** सत्तोपेतम् । **तदपेक्षेति** । तस्य स्वाधीनसत्तोपेतवस्तुनोऽपेक्षेत्यर्थः । **प्रथमे** आदौ प्राप्ते वैषम्यनैर्घृण्ये ॥ **सापेक्षतापक्षमिति** । कर्मापेक्षते न वेत्यत्र कर्मसापेक्षत्वपक्षमित्यर्थः ॥ **न स्वरूपेणेति** । स्वरूपेण दोषत्वेऽन्ततोऽप्यङ्गीकार्यत्वं न स्यादिति भावः ॥ **न चेदमिति** । **इदम्** अतोऽन्यद्द्वितीयं वैषम्यं वेदाप्रामाण्यकारणं न भवति । येन वेदाप्रामाण्यरूपदोषोन्नायकतया दूषणं स्यादिति भावः । कुतो नेत्यत आह **कर्मादीति** । ननु द्वितीयवैषम्यादेर्वेदाप्रामाण्यहेतुत्वेनादोषत्वेऽपि जीवादौ यथा वैषम्यादेः प्रत्यवायहेतुत्वेन दोषत्वं दृष्टं तथेश्वरेऽपि प्रत्यवायहेतुत्वेन दोषत्वं किन्न स्यादित्याशङ्क्य निषेधति **नापीति** ॥ **तदिति** । 'निरनिष्टो निरवद्य' इति श्रुतेरीश्वरस्य प्रत्यवायाभावादित्यर्थः । ननु कर्मसापेक्षत्वेऽपि कर्मादिसत्तादेरपीश्वराधीनत्वप्रयुक्तं द्वितीयवैषम्यं वैषम्यनामकमेव न भवतीति 'अतोऽन्यस्त्वि'ति मूले प्रतीयते । एवञ्च दूषणं न भवतीति यावदिति कथं व्याख्यायते । ज्ञापकाभावादित्यत आह **तथा च भाष्यमिति** । अत्र दोषशब्दोपरि भारो द्रष्टव्यः । **पुनर्वैषम्याद्यापातेन दोषः** तदङ्गीकार इति यावत्; वेदाप्रामाण्यरूपो, जीवादाविव प्रत्यवायरूपो वा न इति भाष्यार्थः ॥ २-१-१० ॥

## ॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥

## ॥ अथ सर्वधर्मोपपत्त्यधिकरणम् ॥

सु० — ॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ सर्वे चेतना अपूर्णगुणा दोषिणश्च दृष्टास्तद्दृष्टान्तेन चेतनत्वादीश्वरस्यापि समासव्यासाभ्यामपरिपूर्णगुणत्वं दोषित्वं च स्यादिति पूर्वपक्षोऽत्राधिकरणे निरस्यते । तदिदमस्पष्टं भाष्ये । चशब्दसमुच्चितायाः श्रुतेरेवोदाहृतत्वात् । युक्तेरव्युत्पादनात् । ततः स्पष्टं व्याचष्टे यदधीना इति ।

अनु० — ॐ सर्वधर्मोपपत्तेश्च ॐ ॥

यदधीना गुणाश्चैव दोषा अपि हि सर्वशः ॥
गुणास्तस्य कथं न स्युः स्युर्दोषाश्च कथं पुनः ॥

चापिशब्दावन्योन्यसमुच्चये । एवशब्दस्य यदधीना एवेत्यन्वयः । हिशब्दः सर्वस्य भगवदधीनतायां श्रुत्यादिप्रसिद्धिं द्योतयति । कथमित्याक्षेपे । द्वेधा हि वस्तु न प्राप्यते । तत्र स्वातन्त्र्याभावाद्वा प्रेप्साऽभावाद्वा । द्वेधा च न हीयते । स्वातन्त्र्याभावाद्वा जिहासाऽभावाद्वा । अस्ति तावदीश्वरस्य सर्वत्र स्वातन्त्र्यम् । अस्ति च मया सर्वदाऽऽनन्दादिगुणवता दुःखादिदोषवर्जितेन भाव्यमितीच्छा; प्रेक्षावत्त्वात् । अतः कथं तस्यानन्दादिगुणपूर्णत्वं दुःखादिसर्वदोषदूरत्वं न भवति ।

अत्रैते प्रयोगाः । ईश्वरः सकलगुणपूर्णः सर्वदोषदूरश्च, स्वतन्त्रत्वात् । व्यतिरेकेण यज्ञदत्तवत् । ईश्वरो विप्रतिपन्नगुणवान्, तत्र प्रेप्सावत्त्वे सति स्वतन्त्रत्वात् । यो यत्र प्रेप्सावत्त्वे सति स्वतन्त्रः स तद्वान् यथा सम्प्रतिपन्नः । ईश्वरो न विमतदोषवान्, तज्जिहासुत्वे सति स्वतन्त्रत्वात् । यो यत्र जिहासावत्त्वे सति स्वतन्त्रः स तदभाववान् । यथा सम्मत इति ।

टी० — ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ समासव्यासाभ्यामिति । ईश्वरो न सर्वगुणपूर्ण इतीश्वरो दोषीति च संक्षेपः । ईश्वरो न ज्ञानवान्न सुखवानितीश्वरो दुःखवांश्चिन्तावानित्यादिविस्तरश्चेत्येवं संक्षेपविस्तराभ्यामित्यर्थः । अत एव सिद्धान्ते ईश्वरः सकलगुणपूर्णः सर्वदोषविदूरश्चेति सामान्यतः, ईश्वरो विप्रतिपन्नगुणः ईश्वरो न विप्रतिपन्नदोषवानिति विस्तरतश्च गुणसाधनदोषनिराकरणे वक्ष्यतीति द्रष्टव्यम् ॥ अन्योन्यसमुच्चय इति । तथा च नान्यतरवैयर्थ्यमिति भावः । तर्हीतरव्यावृत्त्यर्थकैवशब्दविरोध इत्यतस्तस्य भिन्नक्रमत्वान्न तद्विरोध इत्याह एवशब्दस्येति ॥ आक्षेप इति । उत्तरत्र परिहाराभावेन प्रश्नार्थत्वायोगादिति भावः । आद्यहेतौ, यो यत्र स्वतन्त्रः स तद्वानित्येवोक्ते दोषे स्वतन्त्रस्य तद्वत्त्वाभावाद्व्यभिचारः स्यादित्यतः सत्यन्तं विशेषणम् । द्वितीयहेतावपि, गुणेषु स्वतन्त्रस्य

तदभाववत्त्वाभावेन व्यभिचारः स्यादित्यतः सत्यन्तं विशेषणम् । जीवे व्यभिचारवारणायोभयत्र विशेष्यभागः । उभयत्र विशेषव्याप्तौ दृष्टान्ताभावेन तदसम्भवात्सामान्यव्याप्तिप्रदर्शनमिति मन्तव्यम् ।

**स०— ॐ सर्वधर्मोपपत्तेश्च ॐ । समासव्यासाभ्यामिति ।** यदा दोषाणामाधिक्यं तदा गुणानामल्पत्वम् । यदा गुणानामाधिक्यं तदा दोषाणामल्पत्वमित्येवं संक्षेपविस्तराभ्यामित्यर्थः । तथा लोके दर्शनादिति भावः ॥ २–१–११ ॥

इति श्रीमद्विद्याधीशतीर्थपूज्यपादप्रशिष्येण श्रीविद्यानिधितीर्थपूज्यपादशिष्येण
श्रीसत्यव्रततीर्थमुनिना विरचितायां श्रीमन्न्यायसुधाटिप्पणिकायां
द्वितीयाध्यायस्य प्रथमः पादः ॥ २–१ ॥

**प०— ॐ सर्वधर्मोपपत्तेश्च ॐ ।** पूर्वसङ्गत्यन्तर्भावसङ्गत्योः द्योतनायाधिकरणार्थमाह **सर्व इति । समासव्यासाभ्यां** सङ्क्षेपविस्तराभ्यामित्यर्थः । ईश्वरो न सर्वगुणश्चेतनत्वाच्चैत्रवत् । ईश्वरो न सर्वदोषदूरः चेतनत्वाच्चैत्रवत् इति सङ्कोचतः । ईश्वरो न विमतसंपूर्णज्ञानवान्, न पूर्णानन्दवान्, न सर्वशक्तिमान् । ईशो न विमतनिश्शेषदुःखहीनो न निश्शेषश्रमहीनः चेतनत्वादित्यादिरूपेण विस्तरतः प्रयोक्तव्यमित्यर्थ ॥ **युक्तेरिति ।** उपपत्तिपदोक्तयुक्तेरित्यर्थः । वक्ष्यमाणप्रयोगानुकूलव्याप्तिं व्यनक्ति **द्वेधा हीति ॥ तत्रेति ।** वस्तुप्राप्तौ **स्वातन्त्र्याभावात्** शक्त्यभावादित्यर्थः ॥ **प्रेप्सेति ।** प्राप्तीच्छाभावादित्यर्थः ॥ **न हीयत इति ।** न त्यक्तो भवतीत्यर्थः । **जिहासाऽभावात्** त्यागेच्छाऽभावादित्यर्थः ॥ **अस्ति च सर्वत्र स्वातन्त्र्यमिति ।** आरंभणाधिकरणे 'आत्मनि चैवं विचित्राश्च ही'त्यादौ समर्थनादिति भावः । समासेन पूर्वपक्षे अभिहितप्रयोगस्य प्रतिप्रयोगमाह **ईश्वरस्सकलगुणपरिपूर्ण इति ।** व्यासेन पूर्वपक्षोक्तप्रयोगस्य प्रतिप्रयोगमाह **ईश्वरो विप्रतिपन्नगुणवानिति ।** संपूर्णज्ञानवान् तादृशसुखवानित्यादिरादिपदार्थः । एवमग्रेतनप्रयोगेऽपि दुःखरूपदोषवान् श्रमरूपदोषवानित्येवं ध्येयम् ।

**या०— ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ युक्तेरिति ।** उपपत्तिपदेनोक्ताया इति शेषः ॥ **समासव्यासाभ्यामिति ।** सङ्कोचविस्तराभ्यामित्यर्थः । तथा चेश्वरो न सर्वगुणपूर्ण इतीश्वरो दोषीति च सङ्क्षेपतः, ईश्वरो न ज्ञानवान्सुखवानीश्वरो दुःखवांश्चिन्तावानित्यादिविस्तरतश्च साधनीयमित्याशयः । अत एव सिद्धान्ते ईश्वरः सकलगुणपूर्णः सर्वदोषविदूरश्चेति सङ्क्षेपेणेश्वरो विप्रतिपन्नगुणवानीश्वरो न विमतदोषवानिति विस्तरतश्च निराकरणमुपपद्यत इति ध्येयम् । यो यत्र स्वतन्त्रः स तद्वानित्येवोक्ते दुःखादौ स्वतन्त्रस्य तद्वत्त्वाभावेन व्यभिचारः स्यादतः सत्यन्तं विशे-

षणम् । एवं द्वितीयहेतावपि सुखादौ स्वतन्त्रस्य तदभावाभावेन व्यभिचारवारणाय सत्यन्तमित्यवगन्तव्यम् ।

श्री० — ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ ॥ **आक्षेप इति** । गुणाः कथं न स्युः स्युरेव । दोषाः कथं पुनः स्युः न स्युरेवेत्याक्षेप इत्यर्थः । **प्रेप्सा** अपेक्षा । **न हीयते** विद्यमानं हातुं न शक्यमित्यर्थः । **जिहासा** हातुमिच्छा ॥

**च० — ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ प्रेप्सावत्त्वे सतीति** । प्रोपसृष्टादाप्नोतेःसन्नन्तादाकारप्रत्यये निष्पन्नः प्रेप्साशब्द इति प्रकृष्टाप्तिविषयकेच्छावत्त्वे सतीत्यर्थः ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणश्रीमत्सत्यप्रियतीर्थपूज्यपादतनूज-सर्वतन्त्रस्वतन्त्र-
गालवपुरीश्रीनिवासार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां चषकनाम्न्यां
समासतः कतिपयसुधाफक्किकाव्याख्यायां द्वितीयाध्यायस्य प्रथमः पादः ॥

अनु० — सर्वधर्मोपपत्तेस्तद्वाक्यैरपि हि तादृशैः ।
निर्दोषाशेषगुणको निर्णीतो भगवान्हरिः ॥ ११ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
द्वितीयाध्यायस्य प्रथमः पादः ॥

**सु० — तत्** एवमुक्तप्रकारेण सर्वेषां धर्माणां गुणानां दोषाभावानां च संबन्धिन्यास्तत्प्रतिपादिकाया उपपत्तेः **तादृशैः** सर्वगुणपूर्त्यादेरुपपादकैः । **हि**शब्दस्तेषां 'गुणाः श्रुताः' इत्यादीनां प्रसिद्धतां सूचयति ।

तदनेन स्वपक्षे प्रमाणमभिदधतैव परकीययुक्तीनां कालात्ययापदिष्टत्वं स्वातन्त्र्याभावोपाधिदुष्टत्वं चोक्तं भवतीति ॥ २-१-११ ॥

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ।
कृतायां टीकायां विषमपदवाक्यार्थविवृतौ द्वितीयाध्यायस्य प्रथमचरणः पर्यवसितः ॥

इति श्रीमन्न्यायसुधायां द्वितीयाध्यायस्य प्रथमचरणः समाप्तः ॥ २-१ ॥

**शे०** — सूत्रभाष्ययोः षष्ठीसमासो विवक्षित इत्यभिप्रेत्य तथा विग्रहं दर्शयन्सर्वधर्मोपपत्तेरित्यादिभाष्यं योजयति **तदेवमित्यादिना** । सर्वधर्मोपपत्तेरित्यतः परस्य तदित्यस्यानुवादेन तेनेत्यर्थमभिप्रेत्यैवमुक्तप्रकारेणेति तात्पर्यार्थकथनम् । धर्माणामिति षष्ठी सम्बन्धमात्र इत्यभिप्रेत्योक्तं **सम्बन्धिन्या इति** । तस्यैव सम्बन्धस्य विशेषप्रदर्शनं **तत्प्रतिपादिकाया इति** । तादृशैरिति वाक्यविशेषणस्य वैयर्थ्यमाशङ्क्य प्रकृतोपयुक्तमर्थमाह **तादृशैरित्यादि स्वातन्त्र्याभावेति** । न च चेतनत्वेनापरिपूर्णगुणत्वादेरिव स्वातन्त्र्याभावरूपोपाधेरपि पक्षे साधनसौलभ्येन साधनव्यापकत्वान्नायमुपाधिरिति वाच्यम् । अस्या अपि युक्तेः स्वातन्त्र्यबोधकश्रुतियुक्तिविरुद्धत्वेन कालात्ययापदिष्टत्वेन पक्षे साधनासम्भवादित्यत्र तात्पर्यात् ॥ २-१-११ ॥

सर्वाभीष्टप्रदं रामं सर्वानिष्टनिवारकम् ॥ जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ १ ॥

विद्वन्मत्तेभकुम्भाद्रिविपाटनविचक्षणः ॥ विद्याधीशनृसिंहो मे गुरुर्नित्यं भवेन्मुदे ॥ २ ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥ अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥३॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यपादानां
निजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां
श्रीमन्न्यायसुधाविषमपदवाक्यविवृतौ
शेषवाक्यार्थचन्द्रिकायां
द्वितीयाध्यायस्य प्रथमः पादः ॥ २-१ ॥

---

**प०** — मूलवाक्यशेषं योजयति **तदेवमिति** । षष्ठीतत्पुरुषे सति षष्ठ्यर्थमाह **संबंधिन्या इति** । तेषामित्यस्य विवरणम् **गुणः श्रुता इत्यादीनामिति** । भाष्योक्तानामित्यर्थः ॥ **परकीय युक्तीनामिति** । पूर्वपक्षोक्तयुक्तीनामित्यर्थः ॥ २-१-११ ॥ छ ॥

॥ इति श्रीमन्न्यायसुधापरिमळे सुधीन्द्रपादपूजकराघवेन्द्रयतिकृते
द्वितीयाध्यायस्य प्रथमः पादः ॥ २-१ ॥

**या०** — सूत्रे षष्ठीसमासो विवक्षित इत्यभिप्रेत्य विग्रहं दर्शयति **सर्वेषामित्यादिना** । सम्बन्धित्वमेव दर्शयति **तत्प्रतिपादिकाया इति** ॥ २-१-११ ॥

॥ इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्येण यदुपतिना कृतायां सुधाटिप्पण्यां
द्वितीयाध्यायस्य प्रथमः पादः ॥ २-१ ॥

**श्री०—** तदेवमित्यनेन तद्वाक्यैरित्यत्रत्यस्तच्छब्द उपसंहारपर इत्यभिप्रेत्य तदित्यनूद्य एवं प्रकारेणोक्तप्रकारेणेति व्याख्यायत इति शेषम् । **तत्प्रतिपादिकायाः** तत्साधिकायाः । तादृशैर्वाक्यैश्चे-त्यर्थः । **तेषां** वाक्यानाम् । **अभिदधता** 'सर्वधर्मोपपत्तेश्चे'ति सूत्रेणोपपत्तिरूपं चशब्देनागमरूपं च प्रमाणं वदता सूत्रकारेणेत्यर्थः ॥ **परकीययुक्तीनामिति** । ईश्वरोऽपूर्णगुणश्चेतनत्वा ज्जीववत् । दोषी च तेनैव तद्वदेवेत्यादिपूर्वपक्षयुक्तीनामित्यर्थः ॥ **स्वातन्त्र्येति** । स्वातन्त्र्याभावरूपो य उपाधिस्तेन च दुष्टत्वमुक्तं भवतीत्यर्थ इत्यशेषमतिमङ्गलम् ॥ २-१-११ ॥

॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते
टीकाऽगृहीतसुधावाक्यार्थविवरणे द्वितीयाध्यायस्य प्रथमः पादः ॥ २-१ ॥

**॥ इति द्वितीयाध्यायस्य प्रथमः पादः ॥**

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## ॥ अथ रचनानुपपत्त्यधिकरणम् ॥

**सु०— सकलजगज्जन्मादिकारणे सकलगुणपरिपूर्णे समस्तावद्यगन्धविधुरे परे ब्रह्मणि विष्णौ समस्तश्रुतिसमन्वयो यः प्रथमाध्यायेऽभिहितः, तस्य सांख्यादिसमयविरोधेनान्यथात्वश(ङ्कायां तन्निराकरणार्थमयं)ङ्कां निवारयितुं द्वितीयपाद आरभ्यते ।**

**शे०— ॐ ॥**

श्रीमन्न्यायसुधाम्भोधिविक्रीडनविशारदान् । श्रीमद्विद्याधीशमुनीन्वन्दे विद्यागुरून्मम ॥ १ ॥
यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् । अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥ २ ॥

ननु 'स्मृतियुक्ती'त्यादिभाष्यमनर्थकम् । न चैतद्गतार्थताशङ्कापरिहारेण पादारम्भसमर्थनार्थमिति वाच्यम्, प्रागनिरस्तसांख्यादिसमयनिरासकस्यास्य पादस्य पूर्वेण गतार्थताशङ्काया एवानुदयात् । कथञ्चिदुदयेऽपि वा परोक्तरीत्यैव पादारम्भसमर्थनसंभवेन तत्परित्यागेन प्रकारान्तरेण तदारम्भसमर्थनानर्थक्याच्च; इत्यतः, तद्रीतेरसामञ्जस्याद्युक्तं तत्परित्यागेन प्रकारान्तरेण पादारम्भसमर्थनमित्यभिप्रेत्य गतार्थताशङ्कां प्रदर्श्य, तन्निरासकतया परोत्प्रेक्षितसमर्थनप्रकारं चोपन्यस्य, तदसामञ्जस्यप्रतिपादनपूर्वकं पादारम्भसमर्थनपरतयोत्तरभाष्यं योजयितुं गतार्थताशङ्काप्रसञ्जनायास्य पादस्यैकवाक्यतादिसिद्धये चैतदध्यायसङ्गतिं सूचयन्नेव एतत्पादार्थं तावदाह **सकलेति** । अत्र सकलेत्यादिना निवारयितुमित्यन्तेनास्य पादस्यैतदध्यायान्तर्भावलक्षणसङ्गतिसूचनम् । परोक्तं प्रकृत्यधिकरणे ब्रह्मणो जगदुपादानत्वम् अविकारित्वादयुक्तम् । सूत्रे जन्मादीत्यादिनिर्देशासङ्गतिप्रसङ्गात् विवर्ताधिष्ठानमप्ययुक्तमेव इत्यभिप्रेत्योक्तं **सकलजगज्जन्मादिकारण इति** । तन्निमित्तकारण इत्यर्थः । द्युभ्वादीत्यादितृतीयपादे परोक्तस्य निर्गुणे समन्वयस्याश्रद्धेयत्वं सूचयितुं **सकलगुणपरिपूर्ण** इत्युक्तम् । सार्वज्ञसर्वैश्वर्याद्यनन्तगुणपरिपूर्ण इत्यर्थः । प्रथमाध्यायस्थाद्यपादद्वये परोक्तस्य मायाशबले ब्रह्मणि समन्वयस्याश्रद्धेयतासूचनायोक्तं **समस्तावद्येति** । अविद्याद्यवद्येत्यर्थः । पूर्वाध्याये परे ब्रह्मणि समन्वयोक्तेः कथमुच्यते विष्णौ समन्वयोऽभिहित इति इत्यतः 'स विष्णुराह हि । तं ब्रह्मेत्याचक्षते' इत्यव्यवहितपूर्वसूत्रद्वये ब्रह्मशब्दार्थतया विष्णोरेव प्रस्तुतत्वाद्विष्णुरेव आद्यसूत्रस्थब्रह्मशब्दार्थ इति नानुपपत्तिरिति भावेनोक्तं **परे ब्रह्मणीति** । विष्णोरपरब्रह्मत्वमिति परमतनिरासायोक्तं **विष्णाविति** । प्रधानस्याशाब्दत्वं चतुर्थपादार्थ इत्येतदश्रद्धेयमिति भावेनाह **समस्तश्रुतीति** । स्वरवर्णपदवाक्यमहावाक्यरूपसमस्तश्रुतीत्यर्थः ।

स०— पादप्रतिपाद्यं दर्शयति **जगज्जन्मादिकारण इति** । जन्माधिकरणे जगज्जन्मादिकारणत्वं (मुखतः) मुख्यतो लक्षणमुक्तम् । अत आदौ तत् गृहीतम् । सकलगुणपूर्णत्व-समस्तावद्यगन्धविधुरत्वयोः आर्थिकत्वेऽपि, आनन्दमयादिशब्दानां समन्वये प्रतिपादिते सकलगुणपूर्णत्वं मुख्यतः सिध्यतीति अनन्तरं ग्रहणम् । तत्तद्गुणपूर्णत्वे सिद्धे तद्विरोधिदोषराहित्यमर्थात्सिध्यतीति अन्ततो ग्रहणमिति बोध्यम् । **तन्निराकरणार्थमिति** । ननु प्रथमपादे युक्तिविरोधः परिहृतः, अस्मिन्पादे समयविरोधः परिह्रियते, तृतीयपादे श्रुतिविरोधः, चतुर्थपादे न्यायोपेतश्रुतिविरोधः; इति अविरोधस्यैवाध्यायार्थत्वात , 'नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम्' इति दोषराहित्यस्य द्वितीयाध्यायार्थत्ववर्णनमनुपपन्नमिति चेत् ; अत्रैवं संप्रदायविदः- प्रथमाध्याये समन्वये प्रतिपादिते तत्र ये विरोधाः प्राप्ताः, तत्परिहारः **'विकारशब्दात्'** इत्यादिना तत्र तत्रैव कृतः । इतः परं समन्वयेन सिद्धं यत्सर्ववैशिष्ट्यं तत्र विरोधपरिहारार्थं द्वितीयाध्यायः प्रवृत्तः । तथा च सर्ववैशिष्ट्यं द्वेधा सर्वगुणपूर्णत्वेन, सकलदोषराहित्येन । सर्वगुणपूर्णत्वलक्षणं समस्तदोषराहित्यलक्षणं सर्ववैशिष्ट्यं निष्कृष्य द्वितीयाध्यायार्थत्वेन विवक्षित्वा तत्र प्राप्तविरोधपरिहारे द्वितीयाध्यायेनाभिहिते सर्वदोषराहित्यलक्षणं सर्ववैशिष्ट्यं सिध्यतीति तस्य तदर्थत्ववर्णनं सङ्गच्छत इति काऽनुपपत्तिरिति ।

प०—श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ मूलमवतारयितुं शङ्कोत्थापनाय वा अत्राध्यायेऽन्तर्भावद्योतनाय वा, परमतानां दुष्टत्वोक्तिरत्र पादे व्यर्थेत्यतो वा पादप्रतिपाद्यमाह **जगज्जन्मादीति** । एतच्च लक्षणसूत्रोक्तं विशेषणम् । जगज्जन्मादिकारणत्वेनोपपादितं यौगिकब्रह्मपदोक्तं विशेषणमाह **सकलेति** । एतच्च वैशेषिकादिमतविरोधाय वा समस्तश्रुतिसमन्वयघटनाय वोक्तम् । स्वातन्त्र्यसार्वज्ञ्यपूर्णानन्दादिगुणपूर्णत्वोक्त्या अर्थाल्लब्धपारतन्त्र्याल्पज्ञ नादिदोषराहित्यरूपं विशेषणमाह **समस्तेति** । एतद्विशेषणद्वयोपपादकत्वेन जगत्कारण(त्व)विशेषणं प्रागुक्तम् । शैवादिमतविरोधाय ब्रह्मणीत्येतद्विष्णाविति व्याख्यातम् । उक्तविशेषणत्रयस्य विष्णावसंभवनिरासाय सौत्रब्रह्मपदप्रयोगो **ब्रह्मणीति ॥ समन्वयः** । शक्तितात्पर्यावधारणम् । **तन्निराकरणार्थमिति** । अन्यथात्वशङ्कानिराकरणार्थमिति वा तन्मूलभूतसमन्वयविरोधनिराकरणार्थं वेत्यर्थः ।

या०— हरिः ॐ ॥ पादप्रतिपाद्याज्ञाने पादारम्भसमर्थनं मूले क्रियमाणमनुपपन्नमत एतत्पादप्रतिपाद्यं दर्शयति **जगज्जन्मादिकारण इत्यादिना** । वैशेषिकादिसमयविरोधस्य जगज्जन्मादिकारणत्वांशेऽभावादाह **सकलगुणेति ॥ अवद्यगन्धविधुर इति** । 'निरनिष्टो निरवद्य' इत्यादिश्रुतिसमन्वयस्यापि पूर्वमभिहितत्वादिति भावः । एतच्च पाशुपताधिकरणे श्रुत्यादिभिरप्राकृतविग्रहाद्यङ्गीकारेणान्यथात्वशङ्का

निरस्योपपादयिष्यत इति ज्ञातव्यम् । यद्वक्ष्यति 'न चैतदखिलं विष्णौ श्रुतिप्रामाण्यगौरवादि'त्यादि । मायाशबलव्यावृत्तये **पर इति** । पाशुपताद्यभिमतशिवादिरूपपरब्रह्मव्यावृत्तये **विष्णाविति** ।

**श्री०** — ॥ हरिः ॐ ॥ ॥ **तदिति** । साङ्ख्यादिसमयविरोधेत्यर्थः ।

**च०** — श्रीनिवासार्यहृत्पद्मनिरो हयकन्धरः । सुनन्दतात्सेवया मे भक्त्यलंकृतयाऽनया ॥१॥

प्रकृतपादस्यैकवाक्यतायाः पूर्वोत्तरपादभेदस्य च सिद्धये प्रकृताध्यायसङ्गतिं ध्वनयन्नेतत्पादप्रतिपाद्यं दर्शयति **सकलेति** । ब्रह्मणो निर्विकारत्वात्सौत्रजन्मादीतिनिर्देशासङ्गतेश्च प्रकृतिनयेऽन्याभिहिता परिणामितारूपा विवर्ताधिष्ठानतारूपा चोपादानता न सङ्गच्छत इति स्फोरणाय निमित्तकारणार्थकाद्यसप्तम्यन्तमुपात्तम् । आद्याध्यायतृतीयपादेऽन्याभिहितो निर्गुणाधिष्ठानकश्रुतिसमन्वयोऽवधीरणीय इति ध्वनयितुं वैशेषिकादिसमयविरोधं निखिलश्रुतिसमन्वयं वा संघटयितुं तादृशं द्वितीयम् । तादृशाध्यायीयाद्यपादद्वये परव्युत्पादितनिर्गुणाधिकरणकश्रुतिसमन्वयोवधीरणीय इति द्योतयितुं तादृशं तृतीयम् । निरनिष्टो निरवद्य इति श्रुतिसमन्वयस्यापि प्रागभिहितत्वात् । विष्णोरपरब्रह्मताङ्गीकर्तृमतं व्यवच्छेत्तुं तादृशं तुरीयम् । दर्शितविशेषणत्रितयासंभवशङ्कामपहस्तयितुं तादृक् पञ्चमम् । पाशुपताद्यभिमतशिवादिव्युदासाय तादृक् षष्ठमिति स्थितम् ।

---

**सु०** ननु अनारम्भणीय एवायं पादः । तथा हि सांख्यादिमतानि किं स्मृतित्वेनोक्तार्थमन्यथयन्तीति शङ्क्यते, किंवा युक्त्युपेततया, अथवा श्रुत्युपेततया, यद्वा प्रत्यक्षोपेततया ॥ नाद्यः, प्रतिस्मृतिपराहतत्वेनाप्तनिश्चायकाभावेन च तेषामपरमृतित्वस्य प्रथमपादे समर्थितत्वात्॥ अत एव न चतुर्थः ॥ न द्वितीयः, उक्तार्थविरुद्धानां सकलयुक्तीनामाभासत्वस्य तत्रैव व्युत्पादितत्वात् । प्रबलयुक्तिविरोधोऽत्र निरस्यत इति चेन्न। प्राबल्यं हि युक्तीनां श्रुत्यादिप्रमाणमूलत्वेन, तत्संवादित्वेन (वा,) बहुत्वेन वा स्यात् । सर्वथाऽपि नाधिकाशङ्कावकाशः । श्रुत्यादिसंवादिनीनां तन्मूलानां बह्वीनां च युक्तीनां तत्रैव निराकृतत्वात् । काश्चिदेव तत्र निरस्ता न समस्ता इति चेन्न । सूत्राणामुपलक्षणार्थत्वात् । अन्यथा युक्त्याभासानामनन्तत्वेन अपर्यवसानं स्यात् । पादभेदश्चैवं सति न स्यात् ॥ न तृतीयः, समस्तश्रुतीनां ब्रह्मणि समन्वयस्योक्तत्वात् ॥

अत्र कश्चिदाह । स्वपक्षसाधनपरपक्षप्रतिक्षेपाभ्यामेव निर्णयो भवति । तत्र प्रथमाध्याये स्वपक्षे प्रमाणमुक्तम् । तस्य युक्तिविरोधो द्वितीयस्य आद्यपादेन निरस्तः । एवं स्वपक्षस्थापने जाते परपक्षप्रतिक्षेपार्थमयं पाद आरभ्यत इति ॥ तदयुक्तम् । परपक्षप्रतिक्षेपो हि तदीय-

साधननिरासादन्यो नास्ति । साधनानि च स्मृत्यादीन्येव । निरस्तानि च समस्तानि तानि प्रथमपाद इति किमस्य कृत्यम् । किञ्चैवं सति विरोधपरिहारोऽध्यायार्थो न स्यादिति ।

अपर आह । उक्तार्थे स्मृतिन्यायविरोधो नास्तीति स्थापितेऽप्यस्ति ब्रह्मणि समन्वयाभावशङ्का । कथम् । यद्यप्यनुमानं ब्रह्मणो जगत्कारणत्वमपबाधितुं नालम्, तथाऽपि कारणान्तरं जगतोऽवगमयितुमलम् । ततश्च वस्तुविकल्पानुपपत्तेरन्यतरपरिग्रहे हेत्वभावात् ब्रह्मैव जगत्कारणमिति न निश्चेतुं शक्यते, प्रत्युत सर्वज्ञप्रणेतृकत्वेनानुमानस्योपबृंहितत्वात् प्रधानाद्येव जगत्कारणं न ब्रह्मेति बुद्धिः स्यात् । अतो न केवलं ब्रह्मणो जगत्कारणत्वमपबाधितुमनुमानं नोत्सहते । किन्तु कारणान्तरमप्यवगमयितुं नालमिति प्रदर्शनार्थं द्वितीयः पाद आरभ्यत इति ॥ एतदप्ययुक्तम् । तथा हि । किमनेनोक्तं स्यात् । यदि; प्राक् स्वाभिमतार्थे युक्तिविरोधपरिहारेण स्वपक्षस्थापना विहिता, इदानीं परपक्षप्रतिक्षेपो विधीयत इति । तदोक्तमेवोत्तरम् ॥ अथ; युक्तिविरोधपरिहार एव पादद्वयार्थः, किन्तु स्वपक्षविरोधियुक्तिनिराकरणं प्रथमे, द्वितीये तु परपक्षसाधकयुक्तिनिराकरणमिति; तन्न । न्यायसाम्येन तासामपि शक्यनिराकरणत्वात् (सार्वज्ञं) सर्वज्ञत्वं च प्रणेतॄणां प्रागेव निरस्तम् ।

अतो नायं पाद आरम्भणीय इत्यत आह स्मृतीति ।

अनु० — स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः ॥
एवं चतुर्विधा नैव विरुध्यन्तेऽन्वयं प्रति ॥
इति प्रथमपादेन निर्णीतेऽप्यभियोगतः ॥
दर्शनानां प्रवृत्तत्वान्मन्द आशङ्कते पुनः ॥

श्रुतयो गुणा उपसर्जना(नि) यासां तास्तथोक्ताः । चतुर्विधा विरोधिप्रतीतयः । अन्वयं प्रति न विरुध्यन्ते इति श्रुतिसमन्वयसिद्धमर्थं नान्यथयितुं शक्नुवन्तीत्यर्थः । अभियोग आग्रहः । दृश्यते प्रमेयमेभिरिति दर्शनानि सांख्यादिशास्त्राणि । एतदुक्तं भवति । यद्यपि परमतसाधकानामस्मन्मतबाधकानां च स्मृत्यादीनामाभासत्वव्युत्पादनेन स्वपरपक्षसाधनोपालम्भौ कृतावेवेति परमार्थः । तथाऽप्युक्तेऽर्थे पुनः पुरुषस्य आशङ्का भवत्येव, किमेतदेवमन्यथा वेति । कस्मात् । अभियोगतो (दर्शनानां) मतानां प्रवृत्तत्वात् तदुपलम्भादिति ।

शे० -- एवं पादप्रतिपाद्यमभिधाय, इदानीं गतार्थताशङ्कामुत्थापयति नन्विति ॥ स्मृतित्वेनेति । अलौकिकार्थविषयासवाक्यरूपस्मृतित्वेनेत्यर्थः ॥ प्रतिस्मृतीति । पञ्चरात्रादिस्मृतीत्यर्थः ॥

**आप्तिनिश्चायकाभावेन चेति** । 'इतरेषां चानुलब्धेः' 'एतेन योगः प्रत्युक्तः' इति सूत्रद्वयोक्तत्वेनेति शेषः ॥ **प्रथमपाद इति** । स्मृत्यधिकरण इति शेषः ॥ **अत एवेति** । 'आप्तिः प्रत्यक्षतो दृष्टे'त्यादिना प्रत्यक्षोपेततया प्रबलत्वेन शङ्कितानामपि साङ्ख्यादिस्मृतीनां 'हरिपूर्वकाः । किन्त्वशेषविदः-इत्यादिना नितरां सर्वज्ञविष्ण्वादिप्रत्यक्षमूलकपञ्चरात्रादिस्मृतिविरुद्धत्वेनाप्तिनिश्चायकाभावेन चापस्मृतित्वस्य प्रथमपादे समर्थितत्वादेवेत्यर्थः ॥ **तत्रैवेति** । प्रथमपाद एवेत्यर्थः । 'न विलक्षणत्वात्'इत्यादिनेति शेषः । तथा च न परमतानां युक्त्युपेतत्वमिति भावः ॥ **श्रुत्यादिप्रमाणमूलत्वेनेति** । आदिशब्देन प्रत्यक्षपरिग्रहः । क्वचित्प्रमाणमूलत्वेनेति पाठः । तत्र प्रमाणशब्दः श्रुत्यादिपरो द्रष्टव्यः । तत्र युक्तीनां श्रुतिमूलत्वं श्रुतिरूपप्रमाणसिद्धत्वं; प्रत्यक्षप्रमाणमूलत्वं च तदवधृतव्याप्त्यादिमत्त्वमिति द्रष्टव्यम् । **तत्संवादित्वेनेति** । श्रुत्यादिप्रमाणसंवादित्वेनेत्यर्थः ॥ **बहुत्वेनेति** । बहुत्वं चात्रानेकप्रकारं विवक्षितमिति युक्तोऽनेनानेकसंग्रहः ॥ **श्रुत्यादिसंवादिनीनामिति** । श्रुतिसंवादिनीनां श्रुत्यनुभवसंवादिनीनां चेत्यर्थः ॥ **तन्मूलानामिति** । श्रुत्यादिमूलानामित्यर्थः ॥ **तत्रैवेति** । असदधिकरणे श्रुतिसंवादिनीनाम् 'इतरव्यपदेशादि'त्यत्र श्रुत्यनुभवसंवादिनीनां 'भोक्त्रापत्तेरि'त्यत्र श्रुतिमूलानाम् 'अभिमानी'त्यत्र प्रत्यक्षमूलानां, तदनन्यत्वम् इत्यादौ बह्वीनां च युक्तीनां निरस्तत्वात्प्रबलयुक्तिविरोधपरिहारोऽपि पूर्वपाद एव सिद्ध इत्यर्थः ॥ **पादेति** । युक्तिविरोधपरिहारकत्वे पादद्वयस्यापि युक्तिपादत्वप्रसङ्गादिति भावः ॥ **समन्वयस्येति** । तथा च न परमतानां श्रुत्युपेतत्वमपीति भावः ॥ **स्वपक्षस्थापने जात इति** । स्वपक्षसाधकबाधकभावाभावरूपेण द्विविधत्वात् स्वपक्षसाधनस्य; आद्ये स्वपक्षसाधकप्रमाणोपन्यासेन, द्वितीयस्याद्ये च युक्तिविरोधनिरासाद्बाधकपरिहारेण च स्वपक्षस्थापनसिद्धिरिति भावः ॥ **परपक्षप्रतिक्षेपार्थमिति** । परपक्षे बाधकसाधकप्रमाणभावाभावव्युत्पादनार्थमित्यर्थः ॥ **साधननिरासादन्य इति** । उपलक्षणं चैतत् । तत्पक्षबाधकप्रमाणकथनादन्य इत्यपि द्रष्टव्यम् । अस्तु तर्हि तदीयसाधननिरासार्थमेवैतत्पादारम्भ इत्यतो न तावत्साधननिरासार्थत्वमस्य युज्यत इत्याह **साधनानि चेति** । नापि परपक्षे बाधकप्रमाणभावव्युत्पादनार्थमप्येतत्पादप्रवृत्तिः । **आद्य**-पादेऽपि **'इतरेषां चानुपलब्धेः', 'एतेन योगः प्रत्युक्तः' 'स्वपक्षदोषाच्च', 'एतेन शिष्टा अपरिग्रहा अपि व्याख्याता' इत्यादौ** बाधकप्रमाणव्युत्पादनेन परपक्षाणां दुष्टत्वोक्तेस्तत्रापि सम्मतत्वेन तस्यापि तत्रैव सिद्धत्वेनास्य तादर्थ्यायोगात् ॥ यदि चाद्ये तेषां दुष्टत्वोक्तिः स्वपक्षस्य तैर्विरोधनिरासार्थैवेति न तेन तत्सिद्धिरिति मन्यसे हन्त तर्हीहापि दुष्टत्वोक्तिः स्वपक्षस्य तैर्विरोधनिरासार्थैवेति नानेनापि तत्सिद्धिः । अन्यथोक्तेऽर्थे विरोधपरिहारार्थत्वाभावेनास्य पादस्य द्वितीयाध्यायान्तर्भावो न स्यादित्याशयेनाह **किञ्चेति** । यद्वा 'निरस्तानि च समस्तानि तानि प्रथमपाद' इत्युपलक्षणम् । बाधकप्रमाणान्यपि 'एतेन योगः

प्रत्युक्तः' इत्यादौ प्रथमपाद एवोपन्यस्तानीत्यपि द्रष्टव्यम्। उभयत्रापि दूषणान्तरमाह **किञ्चैवं सतीति**। तदीयसाधननिरासकत्वे तत्पक्षबाधकप्रमाणकथनपरत्वे चास्य पादस्येत्यर्थः। उक्तार्थे विरोधपरिहारार्थत्वाभावादिति भावः॥ **उक्तमेवेति**। 'परपक्षनिरासो हि तदीयसाधननिरासादन्यो नास्तीत्यादिने'ति शेषः। **प्रागेवेति**। 'न चाप्तिनिश्चयस्तत्र शक्यत' इत्यादिना पूर्वपाद एवेत्यर्थः।

**उपसर्जनभूता इति**। अत्रोपसर्जनत्वं न तन्मूलत्वमात्रेण। तथा सत्येतदधिकरणासंग्रहप्रसंगात्। नापि संवादकत्वेनैव। तथा सति भोक्त्रापत्तेरित्याद्यधिकरणासंग्रहप्रसङ्गात्। किन्त्वेतयोरन्यतररूपेणैवेति नानुपपत्तिरिति द्रष्टव्यम्। स्मृतियुक्तीति मूले युक्तिशब्दस्य दृढादृढयुक्तिपरतायाः, श्रुतिगुणत्वस्य च तन्मूलत्वतत्संवादित्वरूपतायाः बहुत्वस्य चानेकप्रकारताया अभिमतत्वाद्युक्तं विरोधिप्रतीतीनां चतुर्विधत्वमिति द्रष्टव्यम्। अत्रायं विवेकः। आद्येऽधिकरणे स्मृत्या, द्वितीये युक्त्या, तृतीये दृढयुक्त्या, चतुर्थे श्रुतिसंवादियुक्त्या. पञ्चमे बहुश्रुतिसिद्धयुक्त्या, षष्ठे बह्वीभिर्युक्तिभिः, सप्तमे बहुप्रमाणसंवादियुक्त्या, अष्टमे व्याघातपर्यवसायित्वेन बहुतमयुक्त्या, नवमे प्रयोजनोद्देशेऽनुद्देशे च दोष इति बहुमुखदृढयुक्त्या, दशमे कर्मादिसापेक्षत्वेऽनपेक्षत्वे च दोष इति बहुमुखदृढयुक्त्या, एकादशे निर्दोषत्वे सति गुणपूर्णत्वरूपमहाप्रमेयविरोधित्वेन बहुतमयुक्त्या विरोधनिरास इत्यन्यत्र विस्तरः। मूले विशेष्यानुक्तेर्योग्यं विशेष्यमध्याहरति **विरोधिप्रतीतय इति**। विरोधिन्यः प्रतीतयो याभिरिति विरोधिप्रतीतयः, विप्रतिपत्तय इत्यर्थः। विरोधिप्रतीतयो न विरुध्यन्त इति विप्रतिषिद्धमेतदित्यतः स्वकार्याकारितया तथोक्तिरित्यभिप्रेत्य तदभिप्रायमाह **अन्वयं प्रतीत्यादिना**। दुराग्रहगृहीतत्वादित्युत्तरग्रन्थानुरोधादाह **अभियोग आग्रह इति**। 'अनादिकालतो वृत्ताः समयाः', 'वर्तन्ते समयाः सदे'त्युत्तरग्रन्थानुरोधादत्र दर्शनशब्दः शास्त्रपरः न ज्ञानपर इति भावेन तस्य शास्त्रपरतां व्युत्पादयति **दृश्यत इति**। आशङ्कत इत्युक्तसंशयप्रकारदर्शनपूर्वमभियोगतो दर्शनानां प्रवृत्तत्वस्य तत्रोक्तहेतुत्वं चोपपादयन्नाह **एतदुक्तं भवतीति**। 'उपलम्भादिती'त्यत्रत्यस्येतिशब्दस्य पूर्वेणैतच्छब्देन सम्बन्धः।

स० — **अत एवेति**। प्रत्यक्षस्य भ्रमत्वादेवेत्यर्थः। यद्वा 'आप्तैः प्रत्यक्षतो दृष्टा' इत्युक्तरीत्या प्रत्यक्षोपेततया प्रबलत्वेन शङ्कितानामप्यप्रामाण्यस्य प्रथमपादे समर्थितत्वादेवेत्यर्थः॥ **तत्रैवेति**। श्रुतिसंवादिनीनाम् असदधिकरणे, तन्मूलानां 'भोक्त्रापत्तेः' इत्यत्र, 'तदनन्यत्वम्' इत्यत्र बह्वीनां निराकृतत्वादित्यर्थः। **वस्तुविकल्पेति**। ब्रह्मणो जगत्कारणत्वप्रतिपादकं ब्रह्मातिरिक्तसर्वजगत्कारणत्वं प्रतिपादयति। अन्यस्य तत्प्रतिपादकं तु तथैवेति एकस्यैव कारणत्वं तदभावश्चेति वस्तुविकल्पानुपपत्तेरित्यर्थः। **सर्वज्ञप्रणेतृकत्वेनेति**। समयानामिति शेषः। तत्रोक्तस्यानुमानस्योपहितत्वादिति योजना। **तदोक्तमुत्तरमेवेति**। परपक्षप्रतिक्षेपो हि तदीयसाधननिरासादन्यो नास्ति। साधनानि च

स्मृत्यादीनि । एतानि च प्रथमपाद एव निरस्तानीति किमस्य कृत्यम् ॥ किंचैवं विरोधपरिहारोऽध्यायार्थो न स्यादित्युक्तमेवोत्तरमित्यर्थः । न्यायसाम्येनेति । परपक्षसाधकयुक्तयोऽपि प्रमाणसंवादित्वेन वा, तन्मूलत्वेन वा, बहुत्वेन वा बलवत्यः स्युः । तन्निराकरणं च स्वपक्षबाधकयुक्तिनिराकरणं येन न्यायेन कृतं तेनैव कर्तुं शक्यत्वादित्यर्थः । प्रागेवेति । 'न चाप्तिनिश्चयस्तत्र शक्यते व्यभिचारतः' इत्यादिना निरस्तमिति भावः ।

विशेष्यानुक्तेराह चतुर्विधा विरोधिप्रतीतय इति । विरोधिभ्यः प्रतीतयो याभिरिति विरोधिप्रतीतयः विप्रतिपत्तय इत्यर्थः ।

प० — मूलोक्ताभ्यधिकाशङ्कोपपत्तये पूर्वेण गतार्थतया पादारम्भमाक्षिपति नन्वित्यादिना । 'स्मृतियुक्तिश्रुतिगुणे'तिमूलक्रमानुरोधेन विकल्पयति किं स्मृतित्वेनेत्यादिना । 'अवशिष्टस्यान्त' इतिन्यायेनाह यद्वा प्रत्यक्षेति । अन्यस्मृत्यनवकाशेति सिद्धान्तसूत्रांशार्थोक्तिः प्रतिस्मृतीति । इतरेषां चेति सूत्रतात्पर्यार्थः अपस्मृतीत्यादि ॥ अत एवेति । विष्णुप्रत्यक्षमूलप्रतिस्मृतिपराहतत्वादेवेत्यर्थः । उक्तेति । प्रथमाध्यायोक्तेत्यर्थः ॥ तत्रैवेति । आद्यपादे'न विलक्षणत्व', 'अभिमानिव्यपदेशस्त्वि'त्यधिकरणद्वय इत्यर्थः । श्रुतिगुणेत्येतद्व्यावर्त्य(प्रदर्शन)पूर्वं विवृणोति प्रबलेति ॥ श्रुतिगुणेत्यत्र श्रुतिपदमुपलक्षणं प्रत्यक्षस्येत्याशयेनोक्तं श्रुत्यादीति । गुणपदं मूलपरं संवादिपरं चेति भावेन मूलत्वेन तत्संवादित्वेन वेत्युक्तम् । बहुयुक्तय इत्येतद्व्यावर्त्यं बहुत्वेनेति ॥ श्रुत्यादिसंवादिनीनामिति । ? । तत्रैवेति । 'इतरव्यपदेशादि'त्यत्र श्रुत्यनुभवसंवादियुक्तेः 'असदिति चेदि'त्यत्र श्रुतिसंवादियुक्तेः, 'भोक्त्रापत्तेरि'त्यत्र श्रुतिमूलयुक्तेः 'तदनन्यत्वमि'त्यादौ बहुयुक्तीनां निरासादिति भावः ।

परोक्तं गतार्थतापरिहारमनूद्य निराह कश्चिदाहेत्यादिना ॥ स्मृत्यादीति । स्मृतितत्सहभूतयुक्तिश्रुतिप्रत्यक्षाणीत्यर्थः ।

उक्तमेवोत्तरमिति । 'परपक्षप्रतिक्षेपो ही'त्यादिनोक्तमेवेत्यर्थः । प्रत्युतेत्यादिनोक्तं मतं निराह सार्वज्ञ्यं(सर्वज्ञत्वं)चेति ॥ प्रागेवेति । 'इतरेषां चानुपलब्धेरि'त्यत्र 'न चाप्तिनिश्चयस्तत्र शक्यते व्यभिचारत' इत्यादिना पूर्वपाद एवेत्यर्थः ।

उपसर्जना(नीति) इति । उपसर्जनत्वं च मूलतया संवादितया चेति ज्ञेयम् । एवं चतुर्विधा इत्यत्रापेक्षितविशेष्यं पूरयति विरोधिप्रतीतय इति । किमनेनोक्तशङ्कानिरासः कृत इत्यत आह एतदुक्तमिति । 'परमार्थ' इत्यन्तेन 'अप्य'न्तमूलतात्पर्यानुवादः । 'अभियोगत' इत्यादेस्तात्पर्यमुक्तेऽर्थे पुनरि'त्यादि ।

**या०**— मूलमुत्थापयितुमाह **नन्विति** ॥ **अत एवेति** । 'आप्तैः प्रत्यक्षतो दृष्टे'त्यादिना प्रत्यक्षोपेततया प्रबलत्वेनाशङ्कितानामपि सांख्यादिस्मृतीनां 'हरिपूर्विकाः । किन्त्वशेषविदः' इत्यादिना नितरां सर्वज्ञविष्ण्वादिप्रत्यक्षमूलकपञ्चरात्रादिस्मृतिविरुद्धत्वेनाप्रामाण्यस्य प्रथमपादे समर्थितत्वादेवेत्यर्थः ॥ **तत्रैवेति** । प्रथमपाद एवेत्यर्थः । 'असदिति चेदि'त्यत्र श्रुतिसंवादिनीनां, 'भोक्त्रापत्तेरि'त्यत्र तन्मूलानां''तदनन्यत्वमि'त्यत्र बह्वीनां युक्तीनां, निराकृतत्वादिति भावः ॥ **समन्वयस्येति** । तथा च न परमतानां श्रुत्युपेततेति भावः ।

**प्रागेवेति** । 'न चाप्तिनिश्चयस्तत्र शक्यते व्यभिचारत' इत्यत्रेत्यर्थः ॥ **उपसर्जनभूता इति** अत्र श्रुतीनां संवादकतया मूलतया वोपसर्जनत्वं विवक्षितम् । मूले 'स्मृतियुक्ती'त्यत्र युक्तिशब्देन दृढयुक्तिरेवाभिमान्यधिकरणे निरस्ता ग्राह्या । एवं चोक्तानुवादत्वसिद्धिरिति ज्ञातव्यम् । 'विरोधिप्रतीतयः' इति (तत्)योग्यस्य विशेष्यस्याध्याहारः ।

**श्री०**- **अन्यथेति** । सूत्राणामुपलक्षणत्वाभावे । **स्यात्** शास्त्रस्य । **एवं सति** युक्त्युपेततयोक्तमर्थमन्यथयन्तीति युक्तिविरोधो यदि निराक्रियत इत्यर्थः ॥ **एवं सतीति** । परपक्षप्रतिक्षेपमात्रस्यैवात्र साक्षात्प्रतिपाद्यत्वेनाद्यपाद इव साक्षाद्युक्तिविरोधनिरासाप्रतिपादनादित्यर्थः । लोके **कर्तुरेकस्यैव** दर्शनादित्याशयः । **न्यायो** युक्तिः । **वस्तुविकल्पेति** । **वस्तुनो** जगतः ईश्वरतदितरकर्तृकत्वरूपविरुद्धधर्मद्वयापत्तेरित्यर्थः । **उक्तमेवेति** । परपक्षप्रतिक्षेपो ह्रीत्यादिनेति शेषः । **तासामपि** स्वपक्षविरोधियुक्तिनिराकरणन्याया‌नां प्रमाणबाधादीनां परपक्षसाधकयुक्तिष्वपि साम्येन निराकर्तुं शक्यत्वादित्यर्थ. । स्मृतियुक्ती'त्यत्र युक्तिशब्दो दृढयुक्तिपरो मन्तव्यः । 'चतुर्विधाः' इत्यस्य विशेष्यस्यानुक्तेराह **विरोधीति** । प्रवृत्तानां स्वरूपसतां दर्शनानां कथमेतच्छङ्काजनकत्वमत आह **तदिति** । **तेषां** दर्शनानाम् ।

**च०**— **अन्यथयन्ति** । अन्यथा कुर्वन्ति । **अत एव** वैष्णवप्रत्यक्षमूलकप्रतिस्मृतिपराहतत्वादेव । **तत्रैव** आद्यपाद एव । **व्युत्पादितत्वात्** । 'नविलक्षणत्वात्', 'अभिमानी'तिनयद्वये निरूपितत्वात् । **तत्रैव** । प्रथमपाद एव । **निराकृतत्वात्** । 'असदि'तिनये श्रुतिसंवादिनीनाम्, 'भोक्त्रे'त्यत्र श्रुतिमूलानाम् , 'अभिमानी'त्यत्र प्रत्यक्षमूलानां 'तदनन्यत्वमि'त्यादौ बह्वीनां व्युदस्तत्वात् । **एवं सति** युक्तिविरोधनिरासकत्वे । **वस्तुविकल्पानुपपत्तेः** वस्तुनि विरुद्धधर्मद्वयसमावेशानुपपत्तेः । **उपसर्जनभूताः** उपसर्जनत्वं प्राप्ताः । उपसर्जनत्वं च मूलत्वसंवादकत्वान्यतररूपेण विवक्षितम् । **विरोधिमतय इति** । योग्यविशेष्योपस्कारः । **दर्शनानीति** । करणसाधनल्युडन्तोयमिति भावः ।

सु० — ननु च श्रुतयस्तावदपौरुषेयतयाऽनाशङ्कितदोषाः बहुल(प्रबल)युक्तिभिश्चानुसंहितार्था निरस्तसमस्तप्रतिपक्षाश्च । तत्कथं तत्समन्वयसिद्धेऽर्थेऽभियोगप्रवृत्तदर्शनोपलम्भमात्रेणान्यथात्वशङ्का स्यात् । अतिप्रसङ्गात् । नन्वत एवोक्तं मन्द इति । मैवम् । प्राप्तिमनालोच्य शङ्कमानस्याविचिकित्सितशङ्कस्य शास्त्रेऽनधिकारादित्यतोऽभियोगतो दर्शनानां प्रवृत्तत्वादित्युक्तशङ्काकारणं विवृणोति अनादीति ।

अनु० — अनादिकालतो वृत्ताः समया हि प्रवाहतः ॥
न चोच्छेदोऽस्ति कस्यापि समयस्येति

कपिलकणादादीनां प्रणेतॄणां स्मरणात्कथमनादित्वमित्यत उक्तं प्रवाहत इति । कपिलादयो हि पूर्वैः प्रणीतान्येव शास्त्राणि कालबलादुत्सन्नानि स्व(तपः)प्रभावादिनाऽवगम्य प्रबन्धान्तररचनया प्रवर्तयन्ति । एवं पूर्वेऽपि पूर्वतरैरित्येवं प्रवाहतोऽनादित्वाददोषः । तथैव च स्मरणानीति । इति हेतोराशङ्कित इति पूर्वेण संबन्धः ।

इदमुक्तं भवति । करणदोषबाधकप्रत्ययवशादेव ह्यप्रामाण्यं कल्पनीयम् । अन्यथा अतिप्रसङ्गात् । तत्र यथा श्रुतीनामनादित्वात्करणदोषाभावः, तथा समयानामपि । स्वरूपानादित्वं प्रवाहानादित्वमिति तु वैषम्यमात्रम् । पुरुषदोषसञ्चाराभावस्योभयत्रापि साम्यात् । यथा चानुच्छेदेनानुवृत्तेः श्रुतीनां बाधकाभावः, एवं समयानामपि । यदि करणदोषबाधकप्रत्ययोपेताः स्युः तदोन्मत्तवाक्यवदिदंप्रथमाः समुच्छेदवन्तश्च स्युः । न चैवम् । अतः कथमप्रामाण्यमश्नुवते । यथा च श्रुतयो बलवद्युक्त्यनुसंहितार्था एवं समया अपि । न च तासामाभासत्वमुक्तमिति वाच्यम् । सर्वेषां तदनुवर्तिनामस्माभिरनवगतत्वेन तत्परिहारसंभावनात् । एवमेवाप्रतिपक्षत्वं श्रुतीनामिव समयानां संभावितम् । कथमन्यथा सूत्रकृदेकधुरीणाः शौद्धोदनिप्रभृतयोऽभियोगतस्तान्प्रवर्तयेयुः, कथं च प्रेक्षावन्तोऽनेकेऽभियोगेनैवोपाददीरन् । तदेवं श्रुतितुल्य(समान)योगक्षेमतां समयानां मन्यमानस्य स्यादेवोक्तार्थे सन्देह इति ।

शे० — ननु चोक्तेऽर्थेऽन्यथात्वशङ्कोपपादनेन पादारम्भस्य 'अभियोगतः । दर्शनानां प्रवृत्तत्वान्मन्द आशङ्कते पुनरि'त्येतावतैव सिद्धेः 'अनादिकालतो वृत्ताः समयाः' इत्यादिसमयानामनादिकालानुवृत्तत्वादिवर्णनपरम् उत्तरवाक्यमनर्थकम् । न च समयानां श्रुतितुल्यत्वोपपादनेनाप्रामाण्यपरिहारार्थं तदिति वाच्यम् । तद्व्युत्पादनस्यापि प्रकृते उपयोगादर्शनादित्यतो 'दर्शनानां प्रवृत्तत्वादित्यु'क्तशङ्काकारणविवरणार्थत्वान्न तस्यानर्थक्यमिति भावेन तद्विवरणपरतया तद्योजयितुमभियोगतः प्रवृत्तदर्शनोपलम्भस्य श्रुत्याऽतुल्यबलत्वेन तदुक्तेऽर्थेऽन्यथात्वशङ्काकारणत्वानुपपत्तिशङ्कामुत्थापयति नन्विति ॥

**अचिकित्सितेति** । अत्र भावे क्तः । न विद्यते चिकित्सितं, चिकित्सा परिहारः, यस्याः सा अचिकित्सिता । तथाविधा शङ्का यस्य स तथोक्तस्तस्येत्यर्थः । परिहारशून्यशङ्कस्येति यावत् । ननु समयानामनादित्वकथनमात्रेणाभियोगप्रवृत्तदर्शनोपलम्भस्य उक्तसंशयकारणत्वनिर्वाहान्न तत्प्रवाहस्यानादित्ववर्णनस्य प्रकृते कश्चिदुपयोग इति तत्पर'प्रवाहत' इति भाष्यखण्डवैयर्थ्यम् । न चैतत्पूर्वोक्तस्य समयानादित्वस्य प्रवाहानादित्वव्यवस्थापनपरमिति वाच्यम् । स्वरूपानादित्वपरित्यागेन प्रवाहानादित्वे तद्व्यवस्थापने निमित्ताभावादित्याशङ्क्य कर्तृमत्तया स्मर्यमाणानां समयानां स्वरूपानादित्वस्य बाधितत्वाद्युक्तं समयानादित्वस्य प्रवाहानादित्वे पर्यवसानमित्यभिप्रेत्य स्वरूपानादित्वासंभवमुपदर्शयति **कपिलेति** । **कथमिति** । अन्यथा कर्तृमत्तया प्रसिद्धलौकिकवाक्यस्याप्यनादित्वं स्यादविशेषादिति भावः ॥ **अदोष इति** । स्वरूपानादित्वानङ्गीकारान्न कर्तृस्मरणानुपपत्तिरिति भावः । ननु भवेदेतदेवं यदि कपिलादयः पूर्वैः प्रणीतान्येव शास्त्राणि कालबलादुत्सन्नानि तपःप्रभावादिनाऽवगम्य प्रबन्धान्तररचनया प्रवर्तयन्ति इत्येतत्सिद्धं स्यात् । तदेव कुत इत्यतः 'शौद्धोदनिप्रभृतयः संप्रदायप्रवर्तका' इति स्मृतिषु संप्रदायप्रवर्तकत्वोक्त्या पूर्वं सतामेव शास्त्राणां कालबलादुत्सन्नानां तपःप्रभावादिनाऽवगम्य प्रबन्धान्तररचनया प्रवर्तकत्वस्योक्तत्वेन तासां स्मृतीनामेवोक्तार्थनियामकतया तद्बलादुक्तार्थसिद्धिरित्याशयेनाह **तथैवेति** । स्मरणानीत्यतःपरं सन्तीति शेषः । साकाङ्क्षत्वप्रयुक्तां वाक्याभासतां परिहरति **इतीति** ।

ननु 'अनादिकालतो वृत्ताः' इत्यनेन वाक्येन कथमुक्ताक्षेपपरिहारः । समयानां श्रुतितुल्यताया अनुक्तत्वात् । न चानादिकालतो वृत्तत्वादिना समयानामप्रामाण्याभावप्रतिपादनेन श्रुतितौल्यस्य व्युत्पादितत्वात्तत्परिहार इति वाच्यम् । अनादिकालतोऽनुवृत्तत्वानुच्छिन्नत्वयोरप्रामाण्याभावेन प्रयोज्यप्रयोजकभावाप्रतीत्या ताभ्यां तत्साधनायोगात् । योगे वाऽन्यतरेणाप्यप्रामाण्याभावस्यैकैकमात्रेणासिद्ध्या कथञ्चिदुभयोपपादनस्यावश्यकतायाम् अनादिकालतोऽनुवृत्तत्वादिना तदप्रामाण्याभावसिद्धावपि न समयानां श्रुतितुल्यत्वसिद्धिः । प्रमाणतयोभयोः साम्यप्राप्तावपि युक्तिभिरनुसंहितार्थत्वभावाभावाभ्यां निरस्तसमस्तसत्प्रतिपक्षत्वभावाभावाभ्यां साम्ये हेत्वनुक्त्या तस्येहाप्रतिपादितत्वात् । तथा च समयानां श्रुतितुल्यत्वासमर्थनान्न समयोपलम्भस्य श्रुत्युक्तेऽर्थे अन्यथात्वशङ्काधायकत्वसिद्धिरित्यतो नात्रानादिकालतोऽनुवृत्तत्वादेः साक्षादप्रामाण्याभावसाधकत्वमभिप्रेतं येनाप्रयोजकत्वं स्यात् । किन्नामाप्रामाण्यप्रयोजकदोष-बाधकप्रत्ययाभाव-प्रतिपादनमुखेनैवेति नाप्रयोजकत्वम् । तत्राप्यनादित्वस्य अप्रामाण्योत्पादकदोषाभावप्रतिपादनद्वारा, अनुच्छिन्नत्वस्य चाप्रामाण्यज्ञापकबाधकाभावप्रतिपादनद्वारैवेति नान्यतरवैयर्थ्यमपि । अभियोगतो दर्शनानां प्रवृत्तत्वान्यथाऽनुपपत्त्यैव युक्तिभिरनुसंहितार्थत्वनिरस्तसमस्तसत्प्रतिपक्षत्वयोः सिद्ध्याऽभियोगतो दर्शनानां प्रवृत्तत्ववर्णनपरपूर्ववाक्येनैवास्यार्थस्याप्यर्थतः सिद्धत्वान्न तदनु-

क्तिरपीत्यनेनैव वाक्येन समयानां श्रुतितुल्यत्वसमर्थनाद्युक्तं समयोपलम्भस्य श्रुत्युक्तार्थेऽन्यथात्वशङ्काकारणत्वमिति न कश्चिद्दोष इत्यभिप्रेत्यानादिकालतोऽनुवृत्तत्वादिनाऽप्रामाण्याभावसाधनं तावदुपपादयति **इदमुक्तं भवतीत्यादिना** ॥ **अन्यथेति** । करणानामुत्पत्तौ प्रामाण्यस्वतस्त्वापवादकस्य दोषस्य, ज्ञप्तौ स्वतस्त्वापवादकबाधकस्याभावेऽप्यप्रामाण्य इत्यर्थः । **अतिप्रसङ्गात्** श्रुतीनां तदुभयरहितानामप्यप्रामाण्यप्रसङ्गादित्यतिप्रसङ्गात् । अस्तु तर्हि दोषबाधकप्रत्ययवशादेव समयानामप्रामाण्यमित्यतो भवेदेवं यदि दोषादिकं भवेत् । न चैवम् । अनादित्वादिना तदभावसिद्धिरित्यभिप्रेत्यानादित्वेन दोषाभावसाधनं तावदुपपादयति **तत्रेति** । ननु न श्रुतिप्रतिबन्द्या समयानां निर्दोषता उपपादयितुं शक्या, श्रुतेः स्वरूपानादित्वेन समयानां च तदभावेन वैषम्यात् इत्यतः पुरुषदोषसञ्चारापादकस्य पौरुषेयत्वस्यैव निर्दोषविरोधित्वेन, समयानां च पौरुषेयत्वेऽपि प्रवाहतोऽनादित्वेन पुरुषदोषसञ्चाराभावेन अस्य पौरुषेयत्वस्य तदनापादकतया पुरुषदोषसञ्चारापादकपौरुषेयत्वाभावस्य उभयत्राप्यविशिष्टत्वाद्युक्तः प्रतिबन्दीग्रह इत्याह **स्वरूपेति** । अनुच्छिन्नत्वेन बाधकाभावसाधनमप्युपपादयति **यथा चेति** । एवं समयानां प्रमाणत्वेन श्रुतितुल्यतामुपपाद्य पूर्ववाक्योक्त'ाभियोगतः प्रवृत्तत्व'ान्यथाऽनुपपत्त्या बलवद्युक्त्यनुसंहितार्थत्वसिद्धिमुपपाद्य तेनापि रूपेण श्रुतितुल्यतां समयानां दर्शयितुमाह **यथा चेति** । समयेष्वपि स्वोक्तार्थे संवादकतया युक्तीनामपि कथनादिति भावः ॥ **तासामिति** । बलवद्युक्तीनामित्यर्थः ॥ **तदनुवर्तिनामिति** । तत्सिद्धान्तानुवर्तिनां विदुषामित्यर्थः । एतच्चावैषम्यम् ,अभियोगत दर्शनानां प्रवृत्तत्वादित्यनेनैव सूचितमिति न पृथगुक्तमित्यभिप्रेत्याह **कथमिति** ॥ **एक(धू)धुरीणा इति** । एका चासौ धूश्चेति 'पूर्वकालैके'त्यादिना समासः । 'ऋक्पूरब्धूरि'त्यकारः समासान्तः । तत्र धूःशब्दस्य स्त्रीलिङ्गत्वात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरि'ति वचनात्स्त्रियां टापि द्वितीयासमर्थात्तद्वहतीत्यर्थे 'एकधुराल्लुक्चेति' खप्रत्ययस्य, विकल्पेन तल्लुकश्च विधानात्खप्रत्यये, तल्लुगभावपक्षे चैकधुरीणा इति सिध्यतीति ज्ञेयम् । एकधुरां वहन्तीत्येकधुरीणा इति विग्रहो द्रष्टव्यः ।

**स० — अचिकित्सितत्वम्** । अत्र शङ्काया अपरिहार्यत्वं द्रष्टव्यम् । **स्मरणादिति** । तेषां तत्प्रणेतृत्वप्रतिपादकस्मृतेरित्यर्थः ॥ **अदोष इति** । स्मृतिविरोधलक्षणदोषो नास्तीत्यर्थः । ननु अपूर्वप्रबन्धनिर्मातृत्वमेव प्रतिपादयन्तीनां स्मृतीनां सत्त्वात् कथं तद्विरोधाभाव इत्यत आह **तथैव च स्मरणानीति** । इममेवार्थं प्रतिपादयन्तीति शेषः । **सर्वेषां तदनुवर्तिनाम्** समयानुवर्तिनां पुरुषाणाम्, **अनवगतत्वेन** ज्ञातुमशक्यत्वेन, आभासपरिहारः तैः कर्तुं शक्यत इति संभावनादित्यर्थः । **एवमेवेति** । 'सर्वेषां तदनुवर्तिनामनवगतत्वादि'त्युक्तप्रकारेणैवेत्यर्थः । सूत्रकृता सह एकां धुरं वहन्तीत्येकधुरीणा इत्यर्थः ।

प० — **अतिप्रसङ्गादिति** । प्रमाणनिर्णीतार्थमात्रेऽप्येवं संभवादित्यर्थः । तथा च निःशङ्का-प्रवृत्तिः क्वापि न स्यादिति भावः । **प्राप्तिं** शङ्काबीजमित्यर्थः ॥ **स्मरणानीति** । कपिलकणादादि-प्रणेतॄणां स्मरणान्यप्येवमेव सन्तीति वा, नेयानीति वार्थः । एतावता किमाशङ्काबीजमुक्तमित्यत आह **इदमुक्तमिति** ॥ **अतिप्रसङ्गादिति** । प्रमाणमात्रो(त्सादन)च्छेदप्रसङ्गादित्यर्थः ॥ **समयानामपीति** । अनादित्वात् करणदोषाभाव इत्यन्वयः । तर्कैर्दृढतरैरित्यग्रे अभिधानात्तद्व्यावर्त्यं स्वयमाह **यथा च श्रुतय इति** । तासां युक्तीनां आभासत्वं पूर्वपाद इत्यर्थः ॥ **तदनुवर्तिनामिति** । तत्तन्मतानुवर्तिनां पुंसा-मित्यर्थः ॥ **परिहारेति** । उक्तस्य परोक्तयुक्तीनामाभासत्वदोषस्य परिहारसंभावनादित्यर्थः । प्रतिपक्ष-त्वादिकं समयानां कथं ज्ञेयमित्यत आह **कथमन्यथेति** ॥ **सूत्रकृदेकधुरीणा इति** । सूत्रकृतामेकधुरां मुख्यभारं वहन्तीति वा, सूत्रकृतां मध्ये श्रेष्ठा इति वा, सूत्रकृतश्च ते एकधुरीणाश्च इति वार्थः । 'एकधुराल्लुक्चेति' ख(शू)प्रत्यये तस्य ईनादेशे अन्त्यलोपे (रेफोत्तरस्य आकारस्य लोपे) णत्वे च रूपम् । **शौद्धोदनिप्रभृतयः**जिनादय इत्यर्थः । सन्देह इतीतीतिशब्दस्य इदमुक्तमिति पूर्वेणान्वयः ॥

या० — अचिकित्सितेत्यत्र भावे क्तः । तथा च न विद्यते चिकित्सितं, चिकित्सा परिहारो यस्याः साऽचिकित्सिता, तथाविधा शङ्का यस्य स तथोक्तस्तस्येत्यर्थः । परिहारशून्यशङ्कस्येति यावत् ॥ **स्मरणादिति** । स्मृतिसूक्तवादित्यर्थः । **तथैव** उक्तरीत्या सम्प्रदायप्रवर्तकतयैव । 'स्मरणानी'त्यनन्तरं योज्यानीति शेषः । प्रकारान्तरेण बाधाभावादिकमुपपादयति **यथा च श्रुतय इत्यादिना** ॥

**तासामिति** । बलवद्युक्तीनामित्यर्थः ॥ **तदनुवर्तिनामिति** तत्सिद्धान्तानुसारिणां विदुषामि-त्यर्थः । इदं च बाधाभावाद्युपपादनमभियोगतो दर्शनानां प्रवृत्तत्वादित्यनेन सूचितमित्याशयेनाह **कथ-मन्यथेति** ॥ **एकधुरीणा इति** । एकधुरां वहन्तीत्येकधुरीणास्तत्समा इति यावत् 'एकधुराल्लुक् चे'ति विकल्पेन खप्रत्ययविधानादिदं साध्विति मन्तव्यम् ।

श्री० — **अतिप्रसङ्गादिति** । सिद्धेऽप्यर्थे यद्यन्यथात्वशङ्केति शेषः । स्फीतालोकमध्यवर्ति-न्यपि घटे सन्देहः स्यादित्यर्थः ॥ **अत एव** । सिद्धेऽप्यर्थेऽन्यथात्वशङ्काकरणादेवेत्यर्थः । अचिकित्सितत्वं नाम शङ्काया अपरिहार्यत्व(रूप)५ । **पूर्वतनैः** प्रणीतान्येवेत्यादिसम्बन्धः ॥ **साम्यादिति** । वेदे पुरुषा-भावादेव, इतरत्र तु सत्यपि पुरुषे तत्र दोषाभावादेव, तत्सद्भागभाव इति साम्यम् । **तासां** समयानु-ग्राहकयुक्तीनाम् ।

च० **अनुसंहितार्थाः** अधिगतार्थाः । **अचिकित्सितशङ्कस्येति** । नपुंसके भावे क्तान्तस्य नञा बहुव्रीहिगर्भो बहुव्रीहिः शङ्कांतस्यावसेयः । दुःसमाधेयशङ्कस्येत्यर्थः । **तदनुवर्तिनां** तत्सिद्धान्त-

मनुरुन्धानानाम् । एकधुरीणा इति । सूत्रकृतैकधुरां मुख्यभारं वहन्तीत्यादिरर्थ इति स्थितम् । 'एक-धुराल्लुक्चे'ति वैकल्पिकखप्रत्ययविधानात्साध्विति मन्तव्यम् । शौद्धोदनिः जिनः ।

सु०— नन्वेवं सति परस्परविरुद्धानामनेकेषां प्रामाण्यं तावन्न संभवति, वस्तुविकल्पापत्तेः । तथा चावश्याश्रयणीये कस्यचिदेव प्रामाण्ये अनादिकालतोऽनुवृत्तत्वादेः अन्येष्वन्यथासिद्धौ सर्वथा कल्पनीयायाम् 'इतरेषां चानुपलब्धेरि'त्युक्तदिशा सांख्यादिसमयानाम् अप्रामाण्यं कल्पयितुं शक्यत एव; तत्कथं श्रुतिसमन्वयसिद्धेऽर्थे पुनः शङ्केति । उच्यते । यो हि'इतरेषां चानुपलब्धेरि'ति सङ्क्षेपेणोदितं न्यायं पर(परि)कल्पितेषु प्रमेयविशेषेषूत्प्रेक्षितुं क्षमते, तं प्रत्येवमेतत् । यस्त्वेवं न क्षमः स यावदयं स॰पो न प्रपञ्च्यते तावदन्यपरित्यागेनैकग्रहणस्यानीशानः शङ्कैव । न चैवं शास्त्रे नाधिक्रियेत । संग्रहप्रपञ्चोच्छेदप्रसङ्गात् । तदिदमुक्तं मन्द आशङ्कत इति । किमतो यद्येवमित्यत आह अत इति ।

अनु०— 　　　　अतो विभुः ॥

भ्रान्तिमूलत्वमेतेषां पृथग्दर्शयति स्फुटम् ॥

भ्रान्तिपदं विप्रलम्भस्याप्युपलक्षणम् । पृथक् विस्तरेण । स्फुटम् सुबोधम् । तत्तत्समयोक्तार्थानामप्रामाणिकत्वं प्रमाणविरुद्धत्वं (च) प्राक् सङ्क्षेपेणास्फुटं चोक्तं, अत्र विस्तरेण स्फुटं दर्शयंस्तेषां भ्रान्त्यादिमूलत्वं ज्ञापयतीत्यर्थः । एतेन पूर्वपादेनास्य पादस्य प्रपञ्च्यप्रपञ्चकभावलक्षणा सङ्गतिः, प्रपञ्चने प्रयोजनं चोक्तं भवति । तदिदमुक्तमितरेषामित्यादि भाष्येण ।

श्रे०— नन्वेवं श्रुत्युक्तेऽर्थेऽन्यथात्वशङ्काया न्यायप्राप्तत्वात्कथं भाष्ये 'मन्द आशङ्कते' इति मन्दाशङ्कात्ववर्णनम् इत्यतस्तदुपपादयितुमुक्तशङ्कानुपपत्तिमाशङ्कामुखेन दर्शयति नन्वेवमित्यादिना । अन्येषु विरोधिसमयान्तरेषु ॥ उक्तन्यायमिति । अप्रामाणिकत्वप्रमाणविरुद्धत्वरूपमित्यर्थः ॥ न चैवमिति । प्राप्तिमनालोच्य शङ्कमानस्याचिकित्सितशङ्कत्वादिति भावः ॥ संग्रहप्रपञ्चोच्छेदेति । तस्य मन्दमात्राधिकारिकत्वात्तस्य चोक्तरीत्याऽनधिकारादिति भावः ॥ तदिदमिति । तथा च मन्दपदं सार्थकमिति भावः । बौद्धसमयस्य न भ्रान्तिमूलकत्वं दर्शयितुं शक्यम् । तत्कर्तुर्बुद्धस्य भगवदवतारतया भ्रान्त्ययोगादित्यत आह भ्रान्तिपदमिति । तावताऽपि कथमनारम्भणीयत्वशङ्कापरिहार इत्यत आह तत्तदिति ॥ प्रागिति । पूर्वपाद इत्यर्थः ॥ एतेनेति । अस्य पादस्य प्रथमपादार्थत्वप्रपञ्चकत्वकथनेनेत्यर्थः । यद्यपि 'इतरेषां चानुपलब्धेरि'ति प्रथमपादस्याधिकरणार्थप्रपञ्चकत्वमेवास्य पादस्य,

तथाऽपि प्रथमपादस्थाधिकरणार्थोऽपि प्रथमपादार्थ एव । अन्यथा तदर्थाप्रतिपादकत्वात् 'इतरेषां चानुपलब्धेरि'त्यस्य पादान्तर्भावाभावप्रसङ्गात् । एतदेव चाभिप्रेत्यासदधिकरणे 'प्रथमपादार्थप्रपञ्चना-दृद्वितीयस्ये'त्युक्तम् । उत्तरत्र च 'प्राधान्याद्युक्तिविरोध(परिहार)स्य प्राथम्ये तत्प्रपञ्चात्मकत्वेन समय-विरोधपरिहारस्य तदानन्तर्ये' इति वक्ष्यतीति द्रष्टव्यम् ॥ **प्रयोजनं चेति** । समयान्तरपरित्यागेनैत-च्छास्त्रग्रहणरूपनिःशङ्कप्रवृत्तिलक्षणमित्यर्थः । ननु स्फुटमित्युक्त्यनुरोधेन तत्तत्समयोक्तार्थानां प्राग-प्रामाणिकत्वादिकमस्फुटमुक्तम् अत्र तु स्फुटमित्यर्थलाभेऽपि, पृथगित्यनेन प्राक् सङ्क्षेपेणोक्तम् अत्र तु विस्तरेणेति कथमर्थलाभः तस्य तत्रासामर्थ्यादित्यतः "इतरेषां चानुपलब्धेरि'ति सामान्यतो निराकरणं समयानां कृतम् । विशेषतो निराकरोत्यस्मिन्पादे" इति भाष्ये स्पष्टमस्य प्रकारस्योक्तेः तदनुरोधेन पृथगित्यस्यैतदर्थत्वसिद्धेर्नानुपपत्तिरिति सूचयन्नेवात्रत्यः सर्वोऽप्युपपादनप्रकारो भाष्येऽप्यनुसन्धेय इत्याह **तदिदमुक्तमिति** ।

स० — **अन्येष्विति** विरोधिसमयान्तरेष्वित्यर्थः । **तं प्रतीति** । एतच्छङ्काभाव इत्येतदित्यर्थः । **भ्रान्तिपदमिति** । बौद्धसमयस्य भ्रान्तिमूलत्वं न दर्शयितुं शक्यम् । तत्कर्तुर्बुद्धस्य नारायणावतारत्वेन, तस्य भ्रान्तिरहितत्वेन, तन्मूलत्वासंभवादिति भावः । **प्रपञ्चने प्रयोजनं चेति** । मन्दाशङ्कानिवृत्तिरू-पमित्यर्थः ।

प० — **अनेकेषामिति** । समयानामित्यर्थः ॥ **कस्यचिदेवेति** । समयस्येत्यर्थः ॥ **न्याय-मिति** । तदुक्तफलविसंवादिरूपन्यायमित्यर्थः । **अनीशानः** असमर्थः ।

बौद्धादिमतसाधारण्यायाह **भ्रान्तिपदमिति** ॥ **एतेनेति** । 'अतो विभुः । भ्रान्तिमूलत्वमेतेषां' इत्यादिवाक्येनेत्यर्थः ॥ **पूर्वपादेनेति** । विरोधिभूताशेषस्मृतियुक्तीनां संक्षेपेण पूर्वपादेन निरस्तानामप्यत्र प्रपञ्चनेन निरासादिति भावः ॥ **प्रयोजनं चेति** । अल्पमतीनामपि इतरप्रहाणेन पूर्वाध्यायोक्तार्थस्यैव बुद्धौ सुदृढमवस्थानरूपप्रयोजनं चेत्यर्थः ।

या० — **उदितन्यायमिति** । अप्रामाणिकत्वरूपं प्रमाणविरुद्धत्वरूपं चेत्यर्थः । बौद्धसमयस्य न भ्रान्तिमूलत्वं दर्शयितुं शक्यम् । तत्कर्तरि भगवदवतारे बुद्धे भ्रान्तेरभावादत आह **भ्रान्तिपदमिति** ॥ **पूर्वपादेनेति** । पूर्वपादीयेनेतरेषामिति सूत्रेणेत्यर्थः ॥ **प्रपञ्चनप्रयोजनमिति** । मन्दाशङ्कानिवृत्तिरूप-मित्यर्थ इति केचित् । वस्तुतस्तु मन्दस्याधिकारिणोऽस्मिन् शास्त्रे निश्शङ्कप्रवृत्तिरूपमित्यर्थः । उक्तं हि तत्त्वप्रकाशिकायाम् । 'न ह्यनादिकालानुवृत्तानां प्रतीतिसुन्दराणां तेषां सामान्यतो निराकरणेऽधिका-रिणो निश्शङ्का प्रवृत्तिर्भवतीति' । एवं च 'शङ्कैवे'ति सुधायां निष्कम्पप्रवृत्त्यर्थमिति शेषोऽवगन्तव्यः ।

**श्री०— अन्यथासिद्धौ** प्रवाहत इत्यर्थः ॥ **समन्वय''''शङ्केति** । समन्वयेऽन्यथात्वशङ्के-त्यर्थः । **एवं** शङ्कायाम् ॥ **नाधिक्रियेतेति** । प्रासमनालोच्येत्युक्तरीत्येति शेषः । **मन्दः** अन्यपरि-त्यागेनैकग्रहणस्यानीशान इत्यर्थः । ननु बौद्धसमयस्य न भ्रान्तिमूलत्वं दर्शयितुं शक्यम्, तत्कर्तुर्बुद्धस्य नारायणावतारत्वेन भ्रान्तिरहिततया तस्य तन्मूलकत्वासम्भवादित्यत आह **भ्रान्तिपदमिति** ।

**च०**— भगवदवतारबुद्धकर्तृकबौद्धसमयसंग्रहायाह **भ्रान्तिपदमिति** ॥ **पूर्वपादेनेति** । पूर्व-पादनिरूपितैतत्पादाधिकरणिका सङ्गतिरित्यर्थः ।

**सु०— नन्वेतदशक्यं तैः स्वप्रमेयाणां दृढतर्कागमसाधितत्वात् परकीयतर्कादेर्निरस्त-त्वादित्यत आह** तर्कैरिति ।

**अनु०**— तर्कैर्दृढतमैरेव वाक्यैरा(श्वा)गमवादिनाम् ॥

**तर्कशब्दः सोपस्क(ा)रानुमानार्थः** । दृढतमैः **परकीयतर्कबाधकैः तदबाध्यैः** (च), वाक्यैश्च **दृढतरै(मै)रिति संबध्यते । पूर्वेण संबन्धः (अन्वयः) । वेदादिवाक्यानां प्रामाण्यमनभ्युपगच्छन्तं प्रति कथं तदुपन्यास इत्यत उक्तम्** आगमवादिनामिति । **आगमस्य वेदादेः प्रामाण्यमभ्युप-गच्छतां पुंसां समयानामिति संबन्धः । यद्वा स्वागमप्रामाण्यवादिनामित्यर्थः । ततश्च स्वाग-मप्रामाण्याभ्युपगमन्यायेन वेदादेरपि प्रामाण्यं तैरङ्गीकार्यमिति(रयित्वेति) (येति) भावः । अथवाऽऽगमस्य वेदादेः प्रामाण्यवादिनां शिष्याणां व्यपेक्षयेति शेषः । तथा च बौद्धाधि-करणान्तेन न विरोधः । यद्यप्येतदनुपदमेव प्रदर्शयिष्यते, तथाऽपि श्रोतृमनःसमाधानार्थ-मुक्तमिति ।**

**शे०**—ननु 'तर्कैर्दृढतमैरि'त्यादिना दृढतमतर्कागमाभ्यामस्य पादस्य समयभ्रान्त्यादिमूलकत्वदर्शकत्व-मुच्यते, तदनर्थकमित्याशङ्क्य प्रागुक्तस्य भ्रान्त्यादिमूलकत्वदर्शकत्वस्याशक्यत्वशङ्कानिरासार्थं तदिति भावेन तच्छङ्कानिवर्तकतया तद्योजयितुं तदशक्यत्वशङ्कामुत्थापयति **नन्वेतदिति** ॥ **संबध्यत इति** । 'मध्ये-दीपिका'न्यायेनेति भावः । **पूर्वेणेति** । भ्रान्त्यादिमूलत्वं दर्शयतीति पूर्वेणेत्यर्थः । समयानामागम-प्रामाण्यवादिपुरुषसंबन्धित्ववर्णनानर्थक्यमाशङ्क्य प्रमाणतयाऽऽगमोपन्यासस्य युक्तत्वोपपादनार्थत्वात् न तत्परोत्तरविशेषणवैयर्थ्यमित्यभिप्रेत्य सयुक्तिकागमोपन्यासानुपपत्तिशङ्कामुत्थापयति **वेदादेरिति** । ननु आग-मस्य वेदादेः प्रामाण्यमभ्युपगच्छतां पुंसां समयानामिति व्याख्यानमनुपपन्नम् । तथात्वे बौद्धाधिकरणीय-'सर्वथाऽनुपपत्तेश्च' इत्येतत्सूत्रव्याख्यानरूप'सर्वश्रुतिविरोधतः' इत्युत्तरग्रन्थविरोधापातात् । तत्र वेदा-प्रामाण्यवादिनं बौद्धं प्रत्यपि श्रुत्यादिविरोधस्योक्तेः, इत्यतोऽत्रोक्तद्वितीयतृतीयपक्षयोस्तत्राप्यभिमतत्व न

तेन विरोध इत्याह **तथा चेति** ॥ **एतदिति** । शिष्याणां व्यपक्षयेत्येतदित्यर्थः ॥ **अनुपदमेवेति** । 'तथाऽपि शुद्धबुद्धीनामीशानुग्रहयोगिनामि'त्यादावित्यर्थः ।

**स० — तर्कशब्द इति** । अनुमानार्थ इत्येवोक्ते आभासानुमानस्यापि प्रसक्तिः स्यात् । अतः **सोपस्कारे**त्युक्तम् । व्याप्त्याद्युपस्कारसहितेत्यर्थः । अत एव **दृढतर्कै**रित्युपपन्नम् । **पूर्वेणेति** । भ्रान्तिमूलत्वमित्यनेनेत्यर्थः ।

ननु आगमस्य वेदादेः प्रामाण्यमभ्युपगच्छतां पुंसां समयानामिति प्रथमं व्याख्यानमनुपपन्नम् । तथात्वे बौद्धाधिकरणान्तस्थ'सर्वथाऽनुपपत्तेश्चे'त्येतद्व्याख्यानरूप**सर्वश्रुतिविरोधतेत्य**नेन विरोधापत्तेः । तत्र वेदाप्रामाण्यवादिनं प्रत्यपि श्रुत्यादिविरोधस्योच्यमानत्वात् । तत्राह **तथा चेति** । **आगमवादिनाम्** इत्यस्य स्वस्वागमप्रामाण्यवादिनां शिष्याणां व्यपेक्षयेति वेति व्याख्यानस्याभिप्रेतत्वान्न तेन विरोधः । अस्यार्थद्वयस्य बौद्धाधिकरणान्तेऽप्यभिप्रेतत्वादिति भावः ।

**प० — परकीयेति** । स्वस्वमतविरोधिवाद्यन्तरोक्ततर्काणामित्यर्थः । तथा च सिद्धान्तीयतर्काणामपि निरासप्राप्तिरिति भावः ॥ **सोपस्करेति** । व्याप्तिसमुचितदेशवृत्तित्वानुकूलतर्कादिपरिकरोपेतेत्यर्थः । ननु 'आगमवादिनामि'त्यस्य वेदादिप्रामाण्यवादिनां पुंसां संबन्धिसमयानां सुदृढतर्कागमैः भ्रान्त्यादिमूलत्वं दर्शयतीति व्याख्याने 'विप्रतिषेधाच्चासमञ्जसमि'ति सांख्यनयान्तिमसूत्रेण 'अपरिग्रहाच्चात्यन्तमनपेक्षे'ति वैशेषिकनयान्तिमसूत्रेण 'विप्रतिषेधाच्चे'ति शक्तिनयान्तिमसूत्रेण चाविरोधेऽपि 'सर्वथाऽनुपपत्तेश्चे'ति बौद्धनयान्तिमसूत्रेण विरोधः । तस्यापि सूत्रस्य 'सर्वश्रुतिस्मृतिविरुद्धत्वाच्च नैते पक्षाः ग्राह्याः' इति बौद्धान्प्रति तत्सूत्रे तन्मतविरोधिश्रुत्याद्युक्तेरित्यतो वेदादिवाक्यानामित्यादिना कृतचोद्यस्य 'सर्वथे'ति सूत्र एवोदयात्तन्निवृत्त्यर्थं व्याख्यानान्तरमाह **यद्वा स्वागमेति** । सर्वसाधारण्येन समाध्यन्तरमाह **अथवेति** । चरमव्याख्यानद्वयस्य फलमाह **तथा चेति** ॥ **एतदिति** । तर्कैरित्यादिनोक्तमित्यर्थः ॥ **अनुपदमिति** । 'चेतनेच्छानुसारेण' इत्यादिनाऽग्रेतनग्रन्थ एवेत्यर्थः ।

**या० —** नन्वाद्यव्याख्यानेऽस्वरसादर्शनात्किमर्थं यद्वेत्यादिव्याख्यानद्वयमित्यत आह **तथाच बौद्धेति** । बौद्धाधिकरणान्ते सर्वथाऽनुपपत्तेश्चेति सूत्रे बौद्धान्प्रत्यपि श्रुत्यादिविरोधस्योक्तत्वेनाद्यव्याख्याने तद्विरोधो नात्रेत्यर्थः । आद्यव्याख्यानं त्वनुभवयुक्तिविरोधमात्रेणैतत्सूत्रतात्पर्यम् इत्यभिप्रेत्येति द्रष्टव्यम् ॥ **यद्यप्येतदिति** । शिष्याणां व्यपेक्षयेत्येतदित्यर्थः ॥ **अनुपदमेवेति** । 'तथाऽपि शुद्धबुद्धीनामि'ति श्लोक इत्यर्थः ।

**श्री० — सोपस्कारेति** । अनुकूलतर्कलक्षणो य उपस्कारस्तदुपेतानुमानोपलक्षणार्थ इत्यर्थः । सोपस्कारेति लक्षणाबीजसंबंधप्रदर्शनायोक्तम् ।

च० — **सोपस्कारेति** । साध्याहारेत्यर्थः । 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु' इति सुटस्तत्र विधानात् । **तथा च बौद्धेति** । श्रुत्यादिविरोधस्यापि तत्राभिहिततया तद्विरोधः पूर्वव्याख्यायामेव नैतद्व्याख्यायामिति भावः ।

सु० — **ननु चानाद्यनन्तकालेऽनुच्छेदेन प्रवर्तमानानां समयानां न भ्रान्त्यादिमूलत्व-मुचितम् । न हि तथाविधस्योन्मत्तवाक्यादेरनाद्यनन्तकालेऽनुवृत्तिरस्ति । तदयं प्रयोगः । सांख्यादिसमयाः; प्रमाणभूता, न भ्रान्त्यादि(न्ति)मूला वा; सर्वदाऽनुवर्तमानत्वात्, महाजन-परिगृहीतत्वात् (वा), वेदवदिति । तथाच वक्ष्यमाणस्य तर्कादेर्बाधितविषयत्वमिति । मैवम् । किमत्र सर्वेषामपि समयानां प्रामाण्यादिकं साध्यमुतैकस्य । नाद्यः । परस्परविरुद्धानां प्रामाण्यादिसाधने वस्तुविकल्पापत्त्या बाधितविषयत्वात्, परस्परप्रतिक्षेपरूपत्वेन सत्प्रतिपक्ष-त्वाच्च । न द्वितीयः । पक्षीकृतादन्यस्य प्रामाण्याद्यभ्युपगमे प्रागुक्तदोषानुषङ्गात् । अनभ्यु-पगमे तत्रैव व्यभिचारात् । वेदप्रामाण्याद्यभ्युपगमे प्रतिज्ञातार्थानुपपत्तिः । अनभ्युपगमे च दृष्टान्तदोषः । भवेदेवम् । भ्रान्त्यादिमूलत्वे समाने सत्युन्मत्तवाक्येऽविद्यमाना अनाद्यनन्त कालानुवृत्तिरेतेषामेव तर्हि किन्निमित्तेति सुहृद्भावेन पृच्छन्तं प्रत्याह** दौर्लभ्यादिति ।

**अनु०** — दौर्लभ्याच्छुद्धबुद्धीनां बाहुल्यादल्पवेदिनाम् ॥

तामसत्वाच्च लोकस्य मिथ्याज्ञानप्रसक्तितः ॥

**समयप्रवर्तकानां पुंसां दुराग्रहगृहीतत्वाद्वर्तन्ते समयाः सदा । नैवमुन्मत्तवाक्ये विद्यते । नन्वाग्रहेऽपि किं कारणमित्यत उक्तं** विद्वेषादिति ।

विद्वेषात्परमे तत्त्वे तत्त्ववेदिषु चानिशम् ॥

**तर्हि द्वेषोत्पत्त्यनन्तरं प्रवर्तताम् । कथं सदा इत्यत उक्तम्** अनिशमिति ॥ **ननु पुरुषार्थ-कामाः कथं (वि)द्वेषनिमित्तादाग्रहादन्यायं प्रवर्तयन्तीत्यत उक्तम्** अनादीति ।

अनादिवासनायोगादसुराणां बहुत्वतः ॥

दुराग्रहगृहीतत्वाद्वर्तन्ते समयाः सदा ॥

**वासनावशात्तेभ्यस्तदेव रोचयत इति भावः ॥ नन्वनादिवासनाऽपि बलवत्प्रयत्नेन कुतो न निवर्तत इत्यत उक्तम्** असुराणामिति । **विपरीतप्रयत्नादिप्रेरकाणां बुद्ध्याद्यभिमानिनामिति शेषः ।**

शे० — 'दौर्लभ्यादि'त्यादिकं भाष्यकारीयं समयानां भ्रान्त्यादिमूलत्वेऽप्यनादिकालानुवृत्तत्व-वचनम्, अनादिकालानुवृत्तत्वेन समयानां भ्रान्त्यादिमूलत्वाभावसिद्धेर्न समयानां तन्मूलत्वमुपदर्शयितुं

शक्यमिति 'अनादिकालतो वृत्ताः' इत्यादिना प्रागुपदर्शिताक्षेपसमाधानार्थम्, इति भ्रान्तिनिरासाय परिहारं स्वयं प्रकारान्तरेण वक्तुं तन्मूलत्वानुपपत्तिशङ्कामुत्थापयति **नन्विति** ॥ **वक्ष्यमाणस्येति** । 'तर्कैर्दृढतमैरि'त्यादिना वक्ष्यमाणस्येत्यर्थः । एवमाक्षेपमुपदर्श्य स्वयं तं परिहरति **मैवमिति** । प्रामाण्यादिकमित्यादिपदेन भ्रान्त्यादिमूलकत्वाभावपरिग्रहः ॥ **प्रागुक्तेति** । वस्तुविकल्पानुपपत्त्या बाधितविषयत्वलक्षणेत्यर्थः ॥ **अनभ्युपगम इति** । प्रामाण्याद्यनभ्युपगम इत्यर्थः ॥ **तत्रैवेति** । पक्षीकृतादन्यस्मिन्समय एवेत्यर्थः ॥ **व्यभिचारादिति** । सत्यप्यनादिकालानुवृत्तत्वादौ प्रामाण्यादेरभावादिति भावः । दोषान्तरमप्याह **वेदेति** ॥ **प्रतिज्ञातार्थानुपपत्तिरिति** । वस्तुविकल्पानुपपत्त्या बाधितविषयत्वादिति भावः ॥ **दृष्टान्तदोष इति** । दृष्टान्तीकृते वेदे प्रामाण्यादिरूपसाध्याभावात्साध्यवैकल्यमिति भावः । तदाक्षेपस्योपर्येव परिहारात् किं 'दौर्लभ्यादि'ति भाष्येणेत्यतस्तद्योजयति **भवेदेवमिति** । उक्तरीत्याऽनुमानं दुष्टं भवेदित्यर्थः । तत्तत्समयिभिरपि स्वस्वसमयातिरिक्तसमयानां भ्रान्त्यादिमूलत्वस्यानादिकालानुवृत्तत्वादेश्च स्वीकृतत्वेन स्वं स्वं प्रत्यपि तत्कारणनियोगप्रसक्त्या प्रतिवादिभावेनोक्तप्रश्नायोगादाह **सुहृद्भावेनेति** । ननूक्तवाक्येऽविद्यमानानादिकालानुवृत्तता समयानामेव किन्निमित्तेनेति निमित्तप्रश्नस्य 'दौर्लभ्यादि'ति कथमुत्तरमित्यतः; प्रतीकोपादानमात्रमेवैतत्, उत्तरं त्वन्यदेवेति नानुपपत्तिरित्यभिप्रेत्य व्यवहितत्वाद्योग्योत्तरप्रदर्शनपूर्वकमाकाङ्क्षाक्रमेणोत्तरविशेषणजातं योजयति **समयेति** ॥ **कथं सदेतीति** । कादाचित्कदोषाधीनस्याग्रहस्य सर्वदाऽसत्त्वादिति भावः ।

स० — **वक्ष्यमाणेति** । 'तर्कैर्दृढतमैः' इत्यनेन वक्ष्यमाणस्य तर्कादेरित्यर्थः । **परस्परेति** । समयाः, न सर्वे प्रमाणम्, परस्परप्रतिपक्षरूपत्वात्; इति सत्प्रतिपक्ष इत्यर्थः । **प्रागुक्तेति** । वस्तुनि विकल्पापत्त्या बाधितविषयत्वलक्षणदोषानुषङ्गादित्यर्थः । **प्रतिज्ञार्थानुपपत्तिरिति** । वेदविरुद्धत्वेन बाधितविषयत्वादित्यर्थः । **दृष्टान्तदोष इति** । वेदप्रामाण्यानभ्युपगमे वेदरूपदृष्टान्ते प्रामाण्यरूपसाध्यवैकल्यमित्यर्थः । **भवेदेवमिति** । उक्तरीत्या अनुमानं दुष्टं भवत्वित्यर्थः ।

प० — वक्ष्यमाणप्रयोगे अनुकूलव्याप्तिं व्यनक्ति **ननु चानाद्यनन्तेति** । अन्यथा हेतूच्छित्तिरिति भावेन साध्यहेतुव्यतिरेकयोः व्याप्तिं व्यनक्ति **तथाविधस्येति** । भ्रान्त्यादिमूलस्येत्यर्थः ॥ **तदयमिति** । तस्माद्व्याप्त्यादेर्भावादित्यर्थः ॥ **वक्ष्यमाणेति** । 'रचनानुपपत्तेः' 'प्रवृत्तेश्चे'त्यादौ वक्ष्यमाणेत्यर्थः । 'प्रामाण्यादिकमि'त्यादिपदेनाभ्रान्तिमूलत्वग्रहः ॥ **बाधितेति** । प्रमाणभूतसमयेन समयान्तरस्य विषयस्यापहारेण तत्प्रामाण्यं तेन बाधितमिति भावः ॥ **प्रतिक्षेपरूपत्वेनेति** । हेतुनेति योज्यम् । सर्वसमयाः न प्रमाणं भ्रान्तिमूला वा, परस्परनिषेधरूपत्वात्, अन्योन्यनिषेधकघटोऽस्ति घटो नास्तीत्यादिरूपवाक्यवदिति सत्प्रतिपक्षत्वाच्चेत्यर्थः ॥ **प्रागुक्तेति** । बाधितविषयत्वदोषेत्यर्थः ॥ **व्यभिचारा-**

दिति । 'सर्वदानुवर्तमानत्वादि'ति हेतोरिति योऽयम् । दोषान्तरं चाह वेदेति । प्रतिज्ञातार्थानु-पपत्तिरिति । परेण पक्षीकृतसमयस्य तद्विरुद्धार्थकप्रमाणभूतवेदेन बाधादिति भावः ॥ दृष्टान्तदोष इति । साध्यहीनतेत्यर्थः । चरमवाक्यं तावद्योजयति समयप्रवर्तकानामिति । आकांक्षाक्रमेण पदानि योजयति नन्वाग्रहेपीति ।

या० — परस्परप्रतिक्षेपरूपत्वेनेति । परस्परप्रतिक्षेपरूपत्वेन हेतुनोक्तानुमानस्य सत्प्रति-पक्षितत्वाच्चेत्यर्थः । दूषणान्तरमाह वेदप्रामाण्यादीति ॥ प्रतिज्ञातार्थानुपपत्तिरिति । वस्तुविकल्पा-पत्त्या बाधितविषयत्वादित्यर्थः ।

श्री० — तथाविधस्य भ्रान्ति (आदि) मूलकस्य ॥ प्रागुक्तेति । वस्तुविकल्पापत्त्या बाधित-विषयत्वादित्युक्तबाधरूपेत्यर्थः ॥ दृष्टान्तेति । वेदप्रामाण्यानभ्युपगमे वेदरूपे दृष्टान्ते प्रामाण्यरूप-साध्यवैकल्यरूपेत्यर्थः ॥ भवेदेवमिति । उक्तरीत्याऽनुमानं दुष्टं भवेदित्यर्थः ॥ तेभ्य इति । 'रुच्यर्थानां प्रीयमाण' इति रुच्यर्थधातुयोगे चतुर्थीविधानादिति भावः ।

सु० — ननु साधूनां विदुषां निवारणात्कुतो न निवर्तन्त इत्यत उक्तं दौर्लभ्यादिति । अल्पवेदिनां भ्रमाधिष्ठानस्वरूपमात्रविदां समयप्रवर्तकानाम् । तर्हि राजादिर्लोको निवारयिष्यति इत्यत उक्तं तामसत्वादिति । तत एव कुपण्डितनिमित्तमिथ्याज्ञानप्रसक्तितश्च । न चैतानि कारणानि स्वरूपतोऽप्यनादौ वेदे संभवन्तीति ।

यद्यप्येतत्पादान्ते वक्तव्यम्; तथाऽप्यत्र प्रसङ्गा(दा)गतं बुद्धिसमाधानायोक्तमिति ।

शे० — साधूनां विदुषामिति । कर्तरि षष्ठ्यौ । साधुविद्वत्कर्तृकनिवारणादित्यर्थः । स्वरूपमात्रविदामित्यत्र बुद्ध्यतिरिक्तानामिति शेषः । मात्रशब्देन प्रकारव्यावृत्तिः । तामसत्वाच्चेति चशब्दो भिन्नक्रम इत्यभिप्रेत्याह तत एवेति । तर्हि समयानामिव वेदस्याप्रामाण्येऽपि अनादिकालानु-वृत्तत्वादेरुपपत्तेः कथं तेन तस्याप्रामाण्यविरहसिद्धिरित्यत आह नचेति ॥ एतदिति । समयानामुन्मत्त-वाक्याद्वैषम्ये कारणमित्यर्थः । साङ्ख्यादिसमयानां भ्रान्त्यादिमूलत्वप्रदर्शनानन्तरमेव, एवं भ्रान्त्यादिमूलत्वे समाने उन्मत्तवाक्येऽविद्यमानानादिकालानुवृत्तता तेषां किन्निमितेति शङ्कावकाशेन, ततः प्राक् तदनव-सरादिति भावः ।

स० — साधूनामिति । तत्कर्तृकनिवारणादित्यर्थः । भ्रमाधिष्ठानस्वरूपमात्रविदामिति । अत्र बुद्ध्यतिरिक्ताः समयप्रवर्तका द्रष्टव्याः । मात्रशब्देन प्रकारव्यावृत्तिः । ननु समस्तेन पादेन, दृढ-तमतर्कैः, आगमैश्च भ्रान्तिमूलत्वे प्रदर्शिते अनन्तरं 'कथं भ्रान्तिमूलत्वे मूलवाक्ये अत्र च समानेऽपि तत्रा-विद्यमानानादिकालतोऽनुवृत्तिरत्र'इति शङ्काया उदयात् पादान्त एव तदुपपादनावसरो नात्र; इत्यभिप्रेत्य

शङ्कते **यद्यपीति** । ननु एतादृशानां समयानां कथं निराकरणं सङ्गच्छत इति शंकानिरासार्थं भ्रान्तिमूलत्वात् तन्निराकरणं सङ्गच्छत इत्यवश्यं वक्तव्यत्वेन; तत्र च कथं तर्हि अनादिकालतोऽनुवृत्तिरिति स्मृतस्य तस्य परिहारः सङ्गच्छत इत्यभिप्रेत्याह **तथाऽपीति** ।

**प०— साधूनामिति** । साधुभिः विद्वद्भिः निवार्यमाणत्वादित्यर्थः ॥ **स्वरूपमात्रेति** । मात्रपदेन तन्निष्ठासाधारणधर्मवेदित्वं निवार्यते । वेदादिवदित्युक्तवेदसाम्यं निराह **न चैतानीति** । ननु समयानां भ्रान्त्यादिमूलत्वव्युत्पादनानन्तरमेव 'कथं तर्ह्युन्मत्तवाक्येऽविद्यमानं सर्वदा वर्तमानत्वादिकं समयानामि'ति शङ्कोदयात्तन्निवर्तनपरं दौर्लभ्यादिकं पादान्त एव वाच्यमित्याशङ्क्य निराह **यद्यप्येतदित्यादिना** ॥ **प्रसङ्गेति** । 'भ्रान्तिमूलत्वमेतेषामि'त्युक्तिप्रसङ्गेत्यर्थः ॥

**या०— साधूनां विदुषामिति** कर्तरि षष्ठी ॥ **यद्यप्येतदिति** । समयानामुन्मत्तवाक्याद्वैषम्ये कारणमित्यर्थः । सर्वेषां समयानां भ्रान्तिमूलत्वप्रदर्शनानन्तरमेव ह्येवं भ्रान्त्यादिमूलत्वे समानेऽपि उन्मत्तवाक्येऽविद्यमानानन्तकालानुवृत्तिरितरेषां किन्निमित्तेति शङ्कावकाशो नेदानीमेवेति भावः ।

**श्री०— विदुषां निवारणात्** तत्कर्तृकनिवारणात् । मात्रशब्देन प्रकारव्यावृत्तिः ।

**च०— साधूनां विदुषामिति** । 'कर्तृकर्मणोः कृती'ति स्मृतेस्तादृशल्युट्समभिव्याहारनिबन्धना विद्वत्पदप्रकृतिका षष्ठी निरूपकताप्रत्यासत्त्योत्तरपदार्थान्वयिकर्तृत्वार्थिका । साधुपदोत्तरा तु साधुत्वार्था मतान्तरदिशाभेदार्थिका तत्समानलिङ्गवचनविशेषणवाचकपदोत्तरविभक्तित्वात् । साध्वभिन्नविद्वन्निष्ठकर्तृत्वनिरूपकनिवारणादिति समुदितार्थः ।

**सु०— यद्येवं तर्ह्येतेषां सुदृढनिरूढानां समयानां सर्वथोत्सादनस्याशक्यत्वाद्व्यर्थेयं निराकृतिरित्यत आह** तथाऽपीति ।

**अनु०—** तथापि शुद्धबुद्धीनामीशानुग्रहयोगिनाम् ॥
सुयुक्तयस्तमो हन्युरागमानुगताः सदा ॥
इति विद्यापतिः सम्यक् समयानां निराकृतिम् ॥
चकार

**यद्यपि कुसुमया न सर्वथा समुच्छेद्याः** तथाऽपि । तमः **अज्ञानम्** । **सुयुक्तित्वस्य विवरणं** सदाऽऽगमानुगता इति । **प्रमाणगृहीतव्याप्त्यादियुक्ताः तत्संवादयुक्ताश्च** । इति इत्येवमर्थम् ॥ **एतदुक्तं भवति । न सांख्यादिसमयसमुच्छेदार्थोऽयं प्रयत्नः, येनोक्तदोषः स्यात् । किन्नाम केषाञ्चित्पुंसां तैस्तैः समयैराहिता(न)ज्ञानसंशयविपर्ययान् आगमसहिताभिर्युक्तिभिः तत्त्वज्ञानमुत्पाद्य अपनेतुमिति** ।

नन्वेतदप्ययुक्तम् अतिनिरूढनिबिडवासनानुबद्धमनाद्यज्ञानम् इदानीमेवोत्पन्नेन तत्त्वज्ञानेनापनीयत इति । किन्तु तत्त्वज्ञानं परिभूय स्ववासनावशात्पुनरुद्भवति । प्रवर्तयति च स्वोचितं कार्यमित्यत उक्तं शुद्धबुद्धीनामिति । यथार्थज्ञानस्वभावानां मोक्षयोग्यानाम् ॥ अयं भावः । वक्ष्यते हि केचन चेतना मोक्षयोग्याः केचन नेति । तत्र नायोग्यानामज्ञानमपनेतुमयमारम्भः, किन्तु योग्यानामेव । ते च विशुद्धविज्ञानस्वभावाः । तथा च प्रमाणैरिदानीमेवोत्पन्नमपीदं मनोवृत्तिरूपं तत्त्वज्ञानमन्तरङ्गभूतेन विशुद्धस्वरूपज्ञानेनोद्दीपितं सत् बहिरङ्गमनाद्यपि सवासनमज्ञानं समूलघातं हन्ति । स्वभावस्य सर्वतोऽपि बलवत्त्वात् । न चैवं प्रमाणवैयर्थ्यम् । स्वभावस्य बाह्यप्रयत्नसचिवस्यैव कार्यकारित्वात् । यथोक्तम् 'विना यत्नं न हठो नापि कर्मे'ति ।

किञ्च सर्वतोऽपि बलीयानीश्वरानुग्रह इति तावत्सुप्रसिद्धम् । अस्ति चासौ मोक्षयोग्येषु (जीवेषु) अनादित इति वक्ष्यते । तथा च तत्सचिवमिदं वृत्तिज्ञानमज्ञानमतिनिरूढनिबिडवासनानुबद्धमनाद्यपि समूलकाषं कषत्येव । अतो न व्यर्थेयं समयानां निराक्रियेति भावेनोक्तम् ईशानुग्रहयोगिनामिति । न चैवं तत एवाविद्यानिवृत्तिर्भविष्यति किं तत्त्वज्ञानेनेति वाच्यम् । ईश्वरानुग्रहस्य पुरुषप्रयत्नानुसारेणैव फलजननस्वाभाव्यात् । तथा चोक्तम् 'फलप्रदो वासुदेवः अखिलस्ये'ति । अखिलस्य योग्यताकर्मप्रयत्नसाकल्यस्य न पुनरेकैकस्येत्यर्थः ।

शे० — ननु समयनिराकरणस्य 'तथाऽपी'त्युत्तरग्रन्थे सप्रयोजनत्वनिरूपणमनर्थकमित्याशङ्क्य निष्प्रयोजनत्वेन तदकर्तव्यताशङ्कानिरासार्थत्वात्तस्य न तदिति भावेन तच्छङ्कानिरासकतयोत्तरवाक्यं योजयितुं तन्निष्प्रयोजनत्वशङ्कामुत्थापयति **यद्येवमिति** । सर्वथा समयोत्सादो हि तन्निरासप्रयोजनम् । प्रयोजनान्तरानिरूपणात् । स च तेषां सुदृढनिरूढतयाऽशक्य इति न प्रयोजनं संभवतीत्यतो व्यर्था समयनिराकृतिरित्यर्थः ॥ **तमोऽज्ञानमिति** । सम्यग्ज्ञानप्रतिरूपत्वस्योभयत्र साम्याद्गौण्या वृत्त्या तमःशब्दोऽज्ञानपर इति भावः ॥ **विवरणमिति** । अतो न व्यर्थत्वं तस्येति भावः । अचेतनतया युक्तीनामागमानुगमनायोगात्प्रकारान्तरेण तन्निर्वक्ति **प्रमाणेति** । अज्ञाननिरासस्य समयनिरासप्रयोजनताया मूलारूढतासिद्ध्यर्थमितिशब्दं तथा व्याचष्टे **इतीत्येवमर्थमिति** । ननु सांख्यादिसमयोच्छेदस्याशक्यत्वेन तदुच्छेदस्य प्रयोजनत्वानुपपत्तिशङ्काया अपरिहारात्कथमनेन समयनिराकरणवैयर्थ्यशङ्कापरिहार इत्यतः, समयनिराकरणस्य प्रयोजनान्तरार्थत्वेन समयोच्छेदार्थत्वासंमतेर्नानुपपत्तिरित्याह **एतदिति** । 'अपनेतुमिती'त्यत्रत्यस्येतिशब्दस्यैतच्छब्देन संबन्धः ।

ननु कुसमयाहिताज्ञानादिनिरासकत्वमात्रवर्णनेव समयनिराकरणस्य प्रयोजनवत्त्वसिद्ध्या तद्वैयर्थ्यशङ्कापरिहारसिद्धेः पुरुषाणां शुद्धबुद्धीनामिति यथार्थज्ञानस्वभावत्वादिवर्णनमनर्थकम् । न च मनोवृत्तिरूपतत्त्वज्ञानस्य स्वरूपज्ञानेनोपोद्बलितत्वप्रतिपादनार्थं तदिति वाच्यम्, तदुपोद्बलितत्ववर्णनस्य प्रकृतोपयोगादर्शनात्; इत्यतः सदागमानुगृहीतयुक्तिजन्यमनोवृत्तिरूपतत्त्वज्ञानस्य प्रागुक्तकुसमयाऽऽहिताज्ञाननिवर्तकत्वसंभवोपपादनार्थत्वात् नानर्थक्यमिति भावेन तन्निवर्तकत्वासंभवनिवर्तकतया शुद्धबुद्धीनामिति विशेषणं योजयितु तन्निवर्तकत्वासंभवशङ्कामुत्थापयति **नन्विति** । एतदित्युक्तं प्रपञ्चयति **अतिनिरूढेति** निवर्त्यनिवर्तकभावप्रयोजकप्राबल्यादेरभावान्न तत्त्वज्ञानस्याज्ञाननिवर्तकतेति दर्शयितुमतिनिरूढत्वादिनाऽज्ञानस्य प्राबल्यम्, इदानीन्तनत्वविशेषणेन च तत्त्वज्ञानस्य दौर्बल्यं निरूपितम् । न केवलं तत्त्वज्ञानस्याज्ञानापेक्षया प्राबल्याभावेनैव तत्त्वज्ञानस्य परिभव इत्याह **किन्त्विति । परिभूय** स्वप्रयोजनाक्षमीकृत्य । यथार्थस्वरूपज्ञानेन वृत्तिरूपज्ञानस्योपोद्बलिततया मूलारूढतालाभाय शुद्धबुद्धीनामित्येतत्तत्परतया व्याचष्टे **यथार्थज्ञानेति** । यथार्थज्ञानस्वभावत्वस्यासंभावनां परिहरति **मोक्षयोग्यानामिति** ॥ **वक्ष्यते हीति** । तृतीयस्य चतुर्थे 'विभागः शतवदि'त्यत्रेति शेषः । **अयमारंभ इति** । येनोक्तदोषः स्यादिति शेषः । तेषामयथार्थज्ञानस्वभावतया तदीयमनोवृत्तिरूपतत्त्वज्ञानस्य स्वरूपभूतयथार्थज्ञानोपोद्बलितत्वासंभवेन स्वरूपभूतानाद्यज्ञाननिवर्तकत्वासंभवादिति भावः । कथमनाद्यज्ञानस्येदानीमेवोत्पन्नेन तत्त्वज्ञानेन निवृत्तिरित्यतः अनादिभूतस्यापि तस्य बहिरङ्गत्वान्निवृत्तिः । इदानीमुत्पन्नत्वेऽपि तत्त्वज्ञानस्यान्तरङ्गभूतस्वरूपज्ञानोपोद्बलितत्वान्निवर्तकत्वमिति दर्शयितुं बहिरङ्गभूतमिति, अन्तरङ्गभूतेनेति च विशेषणम् ॥ **समूलघातं हन्तीति** । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इत्यनेन समूलशब्दे कर्मण्युपपदे हन्तेर्णमुल्प्रत्ययः । हो हन्तेर्ञ्णिन्नेष्वि'ति हकारस्य घकारः । 'हनस्तोऽचिण्णलोरि'ति णकारस्य तकारः । 'अत उपधायाः' इत्युपधावृद्धिः । 'कषादिषु यथाविध्यनुप्रयोगः' इति यस्माण्णमुल् तस्यैवानुप्रयोगश्चेति ज्ञेयम् । ततश्च समूलघातं हन्तीत्यस्य मूलेन सह हन्तीत्यर्थः ॥ **एवमिति** । स्वभावस्य सर्वतो बलवत्त्वत इत्यर्थः ॥ **प्रमाणवैयर्थ्यमिति** । मनोवृत्तिरूपतत्त्वज्ञानस्याज्ञाननिवर्तकत्वकल्पनवैयर्थ्यं स्वरूपज्ञानेनैवानाद्यज्ञाननिवृत्तिसंभवादिति भावः । उक्तार्थे आचार्यसंमतिमाह **यथोक्तमिति** । महाभारततात्पर्यनिर्णय इति शेषः । तद्वाक्यं पठति **विनेति** । स्वभावापरपर्यायो हठो बाह्यप्रयत्नं विना न स्वकार्यकारी, कर्मापि तेन विना न स्वकार्यकारीत्यर्थः ।

'तथाऽपि शुद्धबुद्धीनामि'त्यनेनैव मनोवृत्तिरूपज्ञानस्य स्वरूपभूतयथार्थज्ञानोपोद्बलितत्वकथनात् अनाद्यज्ञाननिवर्तकत्वसमर्थनेन समयनिराकरणस्य साफल्यसिद्धेः 'ईशानुग्रहयोगिनामि'त्यंशवैयर्थ्यमित्यतो मनोवृत्तिरूपज्ञानस्यानाद्यज्ञाननिवर्तकत्वे ईश्वरानुग्रहमपिवत्स्वरूपहेत्वन्तराभिधायकत्वान्न तदिति भावेन

हेत्वन्तरपरतया तद्योजयितुमाह **किञ्चेति ॥ वक्ष्यत इति** । 'विशेषानुग्रहं चे'त्यत्रेति शेषः ॥ **समूलकाषं कषतीति** । समूलं कषतीत्यर्थः । 'निर्मूलसमूलयोः कष' इति समूलशब्दे कर्मण्युपपदे कषतेर्णमुल् प्रत्ययः । 'अत उपधायाः' इत्युपधावृद्धिः । 'कषादिषु यथा विध्यनुप्रयोगः' इति यस्माण्णमुल् तस्यैवानुप्रयोगश्चेति द्रष्टव्यम् ॥ **तत एवेति** । ईश्वरानुग्रहादेवेत्यर्थः । अत्राप्याचार्यसंमतिमाह **तथा चोक्तमिति** । तात्पर्यनिर्णय एवेति शेषः । तद्वाक्यं पठति **फलप्रद इति** ।

ननु सर्वस्यापि फलप्रदो वासुदेव इत्यर्थप्रतिपादकस्य 'फलप्रदो वासुदेवोऽखिलस्ये'त्यस्य प्रयत्नसापेक्षस्य हरिप्रसादस्य फलसाधनत्वमिति प्रकृतार्थाप्रतिपादकत्वात् नास्योदाहरणमत्र सङ्गतम् , इत्यतोऽस्माद्वाक्यात्पूर्ववाक्ये योग्यताकर्मप्रयत्नानामेव प्रकृतत्वादखिलस्येत्यनेन तस्यैव परामर्शे हरिप्रसादसहकृतयोग्यतादेरेव फलसाधनत्वप्रतिपादकत्वात् प्रकृतोपयोग इति भावेन, तथा सति प्रत्येकमेव योग्यतादेः फलसाधनत्वं वाच्यम् । तच्च न प्रत्येकं, फलव्यभिचारात् । दण्डादेस्तु प्रत्येकं स्वरूपयोग्यतारूपमेव कारणत्वं, न तु फलोपधानमिति न व्यभिचारः । प्रकृते च फलप्रद इति फलोपधानकारणत्वमेवाभिमतमिति योग्यतादेः प्रत्येकं फलजनकतया भवेदेव व्यभिचार इति, न विवक्षितार्थप्रतिपादकत्वमस्य, इत्यतः अत्राखिलस्येति भावप्रधानो निर्देशः । भावोऽपि न यः कश्चिदभिमतः, किन्नाम प्रकृतयोग्यतादिसमुदाय एव । समुदायस्य च समुदाय्यभिन्नत्वान्न समुदायहेतुत्वेऽपि योग्यतादेरहेतुत्वप्राप्तिः । ततश्च योग्यतादिसमुदायस्यैव हेतुत्वलाभान्नानुपपत्तिरिति भावेन व्याख्याति **अखिलस्येति ॥ न पुनरिति** । न चात्रेश्वरानुग्रहानुपादानात्, केवलेश्वरानुग्रहस्य साधनत्वालाभात् असङ्गतमेतदिति वाच्यम् । योग्यताग्रहणेन तन्नियतेश्वरानुग्रहस्याप्यत्राभिमतत्वात् । तथा चैकैकस्येत्यस्य योग्यतामात्रस्य, तन्नियतेश्वरानुग्रहमात्रस्य, कर्ममात्रस्य, प्रयत्नमात्रस्य चेत्यर्थपर्यवसानाददोषः । ईश्वरानुग्रहस्य योग्यतानियतत्वं च 'अस्ति चासौ मोक्षयोग्येषु जीवेष्वनादित' इति पूर्वग्रन्थसिद्धमित्यवधेयम् ।

**स० — न चैवमिति** । स्वभावस्य सर्वतो बलवत्त्वेन तेनैवाज्ञाननिवृत्त्युपपत्तौ मनोवृत्तिरूपतत्त्वज्ञानमेव न कल्पनीयमिति न वाच्यमित्यर्थः । **उक्तं** महातात्पर्यनिर्णये । **हठो** योग्यता । **न पुनरिति** । अनेन योग्यताकर्मणोः प्रयत्नोत्पत्तावेवोपयोगात् प्रयत्नस्यैव फलदत्वं निरस्तं भवतीत्यर्थः ।

**प० — वक्ष्यत इति** । 'अनिष्टादिकारिणामपि च श्रुतमि'त्यधिकरणे 'संयमने त्वनुभूयेतरेषामारोहावरोहावि'त्यादौ वैराग्यपादे मुक्त्ययोग्यानामप्युक्तेः । ज्ञानपादे च 'अप्रार्वत्रिकी'तिनये 'मुक्तिहेतुज्ञाने केषाञ्चिदेवाधिकारः न सर्वेषामि'त्युक्त्या केचिन्मुक्तियोग्याः केचिन्नेति लाभात् । तथा तत्रैव 'सर्वथापि तु त एवोभयलिङ्गात्' 'न चाधिकारिकमपि पतनानुमानात्तदयोगादि'त्यधिकरणयोश्च मुक्तियोग्यतद-

योग्यानां च व्यक्तत्वाच्च । एतदधिकरणद्वयार्थव्याख्यानपरे(ण) 'अनादियोग्यतां चैव कलिवाणीश्वरावधिमि'त्यादिना 'अदृष्टाच्चद्विशेषोयमनादित्वं कुतो न तदि'त्यन्तग्रन्थेन योग्यताभेदस्य प्रपञ्चनाच्चेति भावः ॥ **समूलघात हन्तीति** । 'समूलाकृतजीवेषु हन्कृञ्ग्रह इति णमुल् । 'अत उपधायाः' इति, वृद्धिः । 'हो हन्तेरि'ति कुत्वम् । 'हनस्त चे'ति नकारस्य तकारः । 'कषादिषु यथाविध्यनुप्रयोगः' यस्माद्धातोर्णमुल्कृतः स एवानुप्रयोज्य इति समूलघातं हन्तीत्युक्तम् । समूलं हन्तीत्यर्थः ॥ **यथोक्तमिति** । भारततात्पर्यनिर्णये द्वाविंशेऽध्याये । हठो योग्यता । हठः कर्म च द्रव्यं यत्नं विना न कार्यक्षममित्यर्थः ॥ **इति वक्ष्यत इति** । 'सर्वथापि तु त एवे'ति ज्ञानपादीयाधिकरणे विशेषानुग्रहं चेति गुणसूत्रे वक्ष्यत इत्यर्थः । 'शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यम्' इत्यादिनाऽनुव्याख्याने चेति भावः ॥ **समूलकाषमिति** । समूलघातमितिवदयं ज्ञेयः । कषतेः 'निमूलसमूलयोः कषः' इति णमुल् । समूलं कषतीत्यर्थः ॥ **तथाचोक्तमिति** । भारततात्पर्ये । सर्वजनस्येति भ्रान्तिनिरासाय व्याचष्टे **अखिलस्येति** ।

**या० — वक्ष्यत इति** । 'विभागः शतवदि'त्यत्रेति शेषः ॥ **यथोक्तमिति** । महाभारततात्पर्यनिर्णय इति शेषः । स्वभावापरपर्यायो हठो बाह्यप्रयत्नं विना न स्वकार्यकारी । कर्मापि न तं विना स्वकार्यं करोतीत्यर्थः ॥ **इति वक्ष्यत इति** । विशेषानुग्रहं चेत्यत्रेति शेषः ॥ **एकैकस्येति** । न चात्रेश्वरानुग्रहानुपादानादसङ्गतमिदं सम्मतिकथनमिति वाच्यम् । योग्यताग्रहणेन तन्नियतेश्वरानुग्रहस्यात्राभिप्रेतत्वात् । तथा चैकस्येत्यस्य योग्यतामात्रस्य, तन्नियतेश्वरानुग्रहमात्रस्य, कर्ममात्रस्य, प्रयत्नमात्रस्य वेत्यर्थो विवक्षितः । अतो नासङ्गतिरिति द्रष्टव्यम् । ईश्वरानुग्रहस्य योग्यतानियतत्वं च 'अस्ति चासौ मोक्षयोग्येषु जीवेष्वनादितः' इति पूर्ववाक्ये स्पष्टम् ।

**श्री० — न चैवमिति** । स्वभावस्य सर्वतो बलवत्त्वे तेनैवाज्ञाननिवृत्त्युपपत्तौ मनोवृत्तिरूपतत्त्वज्ञानाख्यप्रमाणवैयर्थ्यं न चेत्यर्थः । 'स्वभावाख्या योग्यता या हठाख्या' । मूलस्य काषः कषणं नाशनं यथा स्यात्तथा कषति नाशयतीत्यर्थः । **तत एव** ईश्वरानुग्रहादेव ।

**च० — वक्ष्यते हीति** । 'विभागःशतवदि'त्यत्रेति पूरणीयम् । **समूलघातमिति** । 'समूलाकृतजीवेषु हन्कृञ्ग्रह' इति समूलपदोपपदाद्धातोर्णमुल्विधाना'त्कषादिषु यथाविध्यनुप्रयोगः' पूर्वस्मिन्निति स एवानुप्रयोज्य इति युक्तो विन्यासः समूलं हन्तीत्यर्थः । **यथोक्तमिति** । महाभारततात्पर्यनिर्णय इति पूरणीयम् । निसर्गापरपर्यायः हठः बाह्यप्रयत्नमन्तरेण न स्वकार्यकारी कर्मापि न तादृशमिति भावः । **इति वक्ष्यत इति** । विशेषानुग्रहं चेत्यत्राभिधास्यत इत्यर्थः । **समूलकापं कषतीति** । 'निमूलसमूलयोः कष' इति समूलपदोपपदात्कर्षेर्णमुल्विधानात्पूर्ववत्साधुतावसेया । समूलं कषतीत्यर्थः ।

सु० — यद्येवं साधूनां कुसमयाहितमज्ञानमपनेतुं भगवान्समयानां निराकृतिं चकार, तदेयं ब्रह्मादिभिरनादर्तव्या स्यात् । तेषु कुसुमयैरज्ञानस्यानाहितत्वेन प्रयोजनाभावात् । तथा च 'एवंविधानि सूत्राणि कृत्वे'त्यागमविरोध इत्यत आह निजेति ।

अनु० — 　　निजभक्तानां बुद्धिशाणत्वसिद्धये ॥

कुसमयैरनाहिताज्ञानानां ब्रह्मादीनां बुद्धिं प्रति युक्तीनां शाणत्वसिद्धये युक्तिशाणेन ज्ञानासेः अतिनैशित्यसिद्ध्यर्थमिति यावत् । पूर्वेणैव संबन्धः । कुसमया(हिता)ज्ञाननिरसनप्रयोजनाभावेऽपि ज्ञानवैशद्यप्रयोजनस्य विद्यमानत्वात्तैरिदमादरणीयमिति भावः ।

शे० - ननु 'निजभक्तानामि'ति भाष्यखण्डो व्यर्थः । न च समयनिराकरणप्रदर्शनपरः स इति वाच्यम् । 'तथाऽपी'त्यादिनैव कुसमयाहिताज्ञाननिवर्तकतया समयनिराकरणस्यार्थत्वप्रतिपादनात् । न च प्रयोजनान्तरप्रदर्शनमेतदिति वाच्यम् तस्यानर्थक्यात् इत्यतः समयनिरासस्य ब्रह्मादीन्प्रत्युपादेयतासमर्थनार्थत्वात् न प्रयोजनान्तरकथनवैयर्थ्यम् इत्यभिप्रेत्य तत्परतया तत्र योजयितुमाद्यप्रयोजनानुरोधेन तदनुपादेयताशङ्कामुत्थापयति यद्येवमिति । इष्टापत्तिं निरस्यति तथा चेति ॥ अतिशयितनैशित्येति । अत्रातिशयिततafलाभिप्रायात्केवलं विरिञ्चस्य धर्मकारणमित्यादिना न विरोधः । अत एवोक्तं 'विरिञ्चस्य तु संशयाभावात्केवलं धर्मकारणं भवति । महतोऽपि धर्मस्य कारणं परमेश्वरादध्ययनमि'ति । प्रायिकत्वाभिप्रायकत्वाद्वा न विरोधः । अत एव 'विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो भवेदि'ति प्रायिकत्वमेव स्पष्टमुक्तम् 'यत आहुर्ब्रह्मणस्तु प्रायो नाप्रतिभासितमिति' च । एवञ्च क्रमेण वर्धमानमित्यनुकूलितं भवतीति ज्ञातव्यम् । वैशद्यप्रयोजनस्येत्यस्याप्ययमेवार्थः ।

स० — अतिनैशित्येति । अत्रातिशयितफलाभिप्रायात् 'केवलं विरिञ्चस्य धर्मकारणम्' ( सुपर्णादेर्विरिञ्चस्य केवलं धर्मकारणम् । इति ऋग्भाष्यम् १-१-१ ) इत्यादिना न विरोधः । 'वैशद्यप्रयोजनस्य' इत्यस्याप्ययमेवाभिप्रायः ।

प० — इत्यागमेति । भाष्योक्तागमोऽयम् । तद्वाक्यशेषे 'ब्रह्मरुद्रादिदेवेषु ज्ञानं संस्थाप्ये'त्युक्तेरिति भावः ।

या० — अतिशयितनैशित्येति । 'केवलं विरिञ्चस्य धर्मकारणमि'त्यादेः प्रायिकत्वाभिप्रायकत्वान्न तद्विरोधोऽत्रेति ज्ञातव्यम् । अत एव गीतातात्पर्ये 'विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो भवेदि'ति प्रायिकत्वं स्पष्टमुक्तम् । एवं च 'क्रमेण वर्धमानमि'त्यादिकमप्यनुकूलितं भवतीति ज्ञातव्यम् । केचित्तु नैशित्योक्तिरतिशयितफलाभिप्राया अतः 'केवलं विरिञ्चस्य धर्मकारणमि'त्यादिना न विरोध इत्याहुः ।

सु० — ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ तदेवं समर्थितः पादारंभः । तत्राद्याधिकरणे निरीश्वरसांख्यमतं निराक्रियते । न च तत्स्वरूपाज्ञाने दूषणं सुबोधं भवति इत्यतः तन्मतस्थितिं तावद्दर्शयति चेतनेति ।

अनु० — ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥

चेतनाचेतनं तत्त्वद्वयमेव निरीश्वराः ॥

आहुः

चेतनमचेतनं चेति द्वन्द्वैकवद्भावः । आहुः सांख्या इति शेषः । ननु च विधान्तरासंभवात्प्रामाणिकैस्तत्त्वद्वयमेव वक्तव्यम्; तत्किं तेषां वैषम्यमुच्यत इत्यत उक्तं निरीश्वरा इति । ईश्वरमनभ्युपगम्य जीवजडात्मकं तत्त्वद्वयमेवाहुरित्यर्थः ।

शे० — ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ भाष्यकारीयपरमतानुवादप्रयोजनोक्त्या तद्वैयर्थ्यं परिहर्तुं सङ्गतिं सूचयन्नेव वृत्तानुवादपूर्वकं वर्तिष्यमाणमर्थं दर्शयति तदेवमित्यादिना ॥ सुबोधं भवतीति । सामयिकानेकपदार्थाश्रितन्यायाभाससन्दब्धे मते बुद्धिस्थे सत्येव तद्दूषणज्ञानसंभवादिति भावः ॥ एकवद्भाव इति । ततश्च नैकवचनानुपपत्तिरिति भावः ॥ विधान्तरासंभवादिति । ऐकविध्यबाहुविध्ययोः प्रत्यक्षादिबाधिततयाऽसंभवादित्यर्थः ॥ तत्त्वद्वयमेव वक्तव्यमिति । अन्यथा 'द्विविधं तत्त्वमिष्यत' इति सिद्धान्तेऽपि तदुक्तिर्न स्यादिति भावः ॥

प० — ॐ रचनानुपपत्तेश्च ॥ द्वन्द्वैकवद्भाव इति । सर्वो द्वन्द्वो विभाषयैकद्भवतीत्युक्तेरिति भावः ।

या० — ॐ रचनाऽनुपपत्तेश्च नानुमानम् ॐ ॥

च० — ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ द्वन्द्वेति । सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीति कात्यायनवचनादिति भावः ॥ विधान्तरेति । प्रकारान्तरेत्यर्थः ।

सु० — ननु सांख्या मन्यन्ते । सङ्क्षेपतस्तत्त्वस्य चतस्रो विधाः । कश्चिदर्थः प्रकृतिरेव । कश्चिदर्थो विकृतिरेव । कश्चित्प्रकृतिविकृतिः । कश्चिदनुभयः ॥ तत्र सत्त्वरजस्तमसां साम्यावस्था प्रधानं प्रकृतिरेव । सा हि विश्वस्य कार्यस्य मूलम् । न त्वस्या मूलान्तरमस्ति । महदहङ्कारतन्मात्राः सप्त प्रकृतिविकृतयः । प्रकृतयो विकृतयश्चेति । तथा हि । महत्तत्त्वमहङ्कारस्य प्रकृतिः विकृतिश्च मूलप्रकृतेः । एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणां च प्रकृतिः विकृतिश्च महतः । एवं पञ्च तन्मात्राणि (तत्त्वानि) भूतानामाकाशादीनां प्रकृतयो, विकृतयश्च

अहङ्कारस्येति । पञ्च भूतान्येकादशेन्द्रियाणीति षोडशको गणो विकृतिरेव । यद्यपि पृथिव्यादीनामपि गोघटवृक्षादयो विकाराः, एवं तद्विकारभेदाः पयोबीजादयः, तेषां दध्यंकुरादयः । तथाऽपि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरम् । स्थूलतेन्द्रियग्राह्यतासाम्यात । तत्त्वोपादानत्वं च प्रकृतित्वमिह विवक्षितमिति । पुरुषस्त्वनुभयो न प्रकृतिर्नापि विकृतिः । तदेवं विस्तरतः पञ्चविंशति तत्त्वानि । यथोक्तम् । 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः' इति । तत्कथमुच्यते तत्त्वद्वयमेवाहुरिति; आह तदिति ।

अनु०—　　तत्पञ्चपञ्चत्वविभागस्थमचेतनम् ||

चेतनं

पञ्च च ते पञ्चतश्च (पञ्चपञ्चतः) तेषां भावः पञ्चपञ्चत्वम् । स चासौ विभागश्च । तेनोपलक्षितं तिष्ठतीति पञ्चपञ्चत्वविभागस्थम् । तत् चेतनमचेतनं च तत्त्वद्वयमेव; सङ्क्षेपतः चतुर्विधम्, विस्तरतः पञ्चविंशतिप्रभेदमाहुरित्यतो न विरोधः ।

ननु चेतनमचेतनं चासङ्ख्यातं प्रत्यक्षादिप्रमाणैरुपलभमानाः कथमेवमाहुरित्यत आह तदिति ।

---

तदसङ्ख्यातं

तदित्युभयपरामर्शः । उपाधिक्रोडीकारेण पञ्चविंशतिप्रभेदं वदन्तोऽप्यवान्तरभेदेन तत्त्वद्वयमसङ्ख्यातमाहुरित्यर्थः ।

शे०—प्रकृतिरेवेति । प्रकरोतीति व्युत्पत्त्या प्रकृतिशब्दोऽत्रोपादानपरः, विक्रियत इति व्युत्पत्त्या विकृतिशब्दश्च कार्यपरः, इति द्रष्टव्यम् । तत्र का पुनः प्रकृतिरेवेत्यत आह सत्त्वेति ॥ साम्यावस्थेति । गुणप्रधानभावपरित्यागेन त्रयाणामपि प्रधानभावेनावस्थितिरित्यर्थः । 'कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदायाच्च' इत्यस्यां कारिकायां समुदायाच्चेत्यंशेन सृष्टिकाले सत्त्वादीनां समुदितानामेव महदादिभेदेन प्रवृत्तेरभिधानात् । गुणानां समुदायस्य च गुणप्रधानभावमन्तरेणायोगात् । गुणप्रधानभावस्य च तद्वैषम्यं विनाऽयोगात् । वैषम्यस्य चोपमर्द्योपमर्दकभावादृतेऽसंभवात् तद्भावस्य च 'अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्चे'ति कारिकायामन्योन्याभिभववृत्तयश्चेत्यंशेन सत्त्वादीनां त्रयाणां मध्येऽर्थवशादुद्भूतेन सत्त्वेन रजस्तमसी अभिभूय, रजसा च सत्त्वतमसी अभिभूय, तमसा च सत्त्वरजसी अभिभूय, स्वस्वव्यापारजननेन सिद्धत्वात्, सत्त्वादावुद्भूतं बलीयः प्रधानम्, अभिभूतं च तदनुगुणतया स्थितमङ्गमित्येवं गुणप्रधानभावेनैव सर्गकाले स्थितिः । प्रलये तु नैवं

गुणप्रधानभावेनावस्थानं, किन्तु प्रधानतयैवेति भावेन साम्यावस्थेत्युक्तम् । अत एव प्रधानमिति संज्ञाऽपि तदेवेत्याशयेनोक्तं **प्रधानमिति** । कस्मादियं प्रकृतिरेवेत्यत आह **सा हीति** । अनेन मूलं चासौ प्रकृतिश्चेति मूलप्रकृतिरिति विग्रहः, प्रधानस्य केवलप्रकृतित्वमुपपादयितुं च मूलपदमित्युदाहरिष्यमाणकारिकांशयोजना सूचिता भवति ॥ **न त्वस्या इति** । मूलान्तराभ्युपगमेऽनवस्थाप्रसङ्गात् । न चानवस्थायां प्रमाणमस्तीति भावः । कतमाः पुनः प्रकृतिविकृतयः कियन्त्यश्चेत्यपेक्षायामाह **महदहङ्कारेत्यादि** । ननु प्रकृतिविकृतित्वं विरुद्धं कथं महदादेरुच्यत इत्यतो व्यवस्थया विरोधं परिहरन्प्रकृतित्वमुपपादयति **तथा हीति** । अथ का विकृतिः कियती चेत्यत आह **पञ्चेत्यादि** ॥ **षोडशक इति** । षोडशसंख्यापरिमितो गणः षोडशक इत्यर्थः । षोडशकस्त्विति तुशब्दोऽवधारणार्थः । स च भिन्नक्रम इत्यभिप्रेत्याह **विकृतिरेवेति** । न प्रकृतिरपीत्यर्थः ॥ **यद्यपीति** । तथा च प्रकृतिविकृतित्वान्न केवलं विकृतित्वमस्येति भावः ॥ **स्थूलतेति** । प्रधानमहदादिभ्यो महदहङ्कारादीनां स्थूलतातारतम्यस्येन्द्रियग्राह्यतातारतम्यस्य च सत्त्वात्तेभ्यस्तेषां तत्त्वान्तरत्वेऽपि पृथिव्यादीनां गोघटादीनां च स्थूलतेन्द्रियग्राह्यतयोः साम्येन तत्त्वान्तरत्वसाधकत्वस्य स्थूलतातारतम्यस्य इन्द्रियग्राह्यतातारतम्यस्य चाभावेन तदपेक्षया तत्त्वान्तरत्वाभावान्न तदुपादानतया पृथिव्यादीनां प्रकृतित्वप्राप्तिरिति भावः । माघस्तु गोघटादीनां पृथिव्यादिभ्यः तत्त्वान्तरत्वं तथाऽपि गोघटाद्युपादानत्वमात्रेण पृथिव्यादीनां प्रकृतित्वं किन्न स्यादित्यत आह **तत्त्वोपादानत्वमिति** । तत्त्वान्तरोपादानत्वमित्यर्थः । कः पुनरनुभयः किञ्च तस्यानुभयत्वमित्यत आह **पुरुषस्त्विति** । ननु संक्षेपतस्तत्त्वस्य चातुर्विध्यं विस्तरतः पञ्चविंशतिप्रभेदत्वं सांख्या मन्यन्त इत्येतत्कुतो विज्ञायत इत्यतस्तद्वाक्यादेवेति भावेन तत्पठति **यथोक्तमिति** ॥ **पञ्चत इति** । अत्र टीकायां पञ्च च ते पञ्चतश्चेति पाठः । मूलपुस्तकेषु तथैव दर्शनात् । पञ्चपरिमाणमेषां वर्गाणामित्यस्मिन्विषये वर्गेऽभिधेये तप्रत्ययविधानेन पञ्चदित्येव, 'पञ्चद्दशतौ वर्गे वे'त्यनेन निपातितत्वात् । पञ्चतोऽत्र पञ्चद्वर्गाः । तेषां पञ्चत्वसंख्यावैशिष्ट्ये पञ्चविंशतिसंख्यालाभेन स्वरसाचेति द्रष्टव्यम् । पञ्च च ते पञ्च चेति तु काचित्कः पाठः । तत्राद्यः पञ्चशब्दो द्वितीयपञ्चशब्दबोधितेषु पञ्चत्वसंख्याविशिष्टेषु समुदितेष्वानीयमानोऽपौनरुक्त्याय प्रत्येकमेवान्वेतीति पञ्चविंशतितासंख्यालाभ इत्यवधेयम् ॥ **स चासाविति** । पञ्चपञ्चत्वमिति यस्स चासौ विभागश्चेति विधेयविभागविशेषणत्वात्स इति पुलिङ्गमिति ध्येयम् ।

पञ्चविंशतिप्रभेदत्ववर्णनेनैवोक्तविरोधपरिहारात्, तदसङ्ख्यातत्वकथनमनर्थकमित्याशङ्क्य, प्रत्यक्षादिप्रमाणविरोधपरिहारार्थं तदित्यभिप्रेत्य, तद्विरोधशङ्कोत्तरतया तद्योजयितुं पञ्चविंशतिप्रभेदोक्त्यसंभवशङ्कामुत्थापयति **नन्विति** ॥ **उभयेति** चेतनाचेतनरूपोभयेत्यर्थः ।

स० — **मूलान्तरमस्तीति** । अन्यथा अनवस्थानात् । न चानवस्थायां प्रमाणमस्तीति भावः । ननु षोडशकस्य गणस्य विकृतित्वमेवानुपपन्नम् । तस्यापि गोघटादिस्वकार्यं प्रति प्रकृतित्वस्यापि सत्त्वात् । तथा च सोऽपि गणः प्रकृतिविकृतिश्चेति पृथक् विभागोऽनुपपन्न इत्यभिप्रेत्य शङ्कते **यद्यपीति** । तथापि तत्त्वान्तरं प्रत्युपादानत्वस्य प्रकृतिशब्दार्थत्वेन विवक्षितत्वात् प्रकृतित्वं नास्तीत्यभिप्रेत्य समाधत्ते **तथापीति** । गवादयः साक्षाद्विकारभूताः बीजादयः परम्परया तद्विकारभूताः पृथिव्यादिभ्यः तत्त्वान्तरं न भवन्तीत्यर्थः । कुतः पृथिव्यादेः सकाशात् तेषां तत्त्वान्तरत्वं नास्तीत्यत आह **स्थूलतेति** । स्थूलत्वेन्द्रियग्राह्यत्वाभ्यां साम्यात् । अत्र स्थूलत्वम् ऐन्द्रियकत्वोपयुक्तं विवक्षितम् । तथा चेत्थमनुमानं फलितम् । गवादयः क्षीरादयो वा न पृथिव्यादिभ्यः तत्त्वान्तरम् । तदुपादेयत्वे सति इन्द्रियग्राह्यताप्रयोजकस्थौल्यतौल्यवत्त्वात् । व्यतिरेकेणाहङ्कारवदिति । **यथोक्तमिति** । तदर्थस्तु मूलप्रकृतिरविकृतिरेव । महदाद्याः सप्त प्रकृतिविकृतयः । षोडशकश्च गणः विकारः विकृतिरेव । पुरुषः न प्रकृतिः न विकृतिरिति । **पञ्च च ते पञ्च चेति** । द्वितीयपञ्चशब्दः प्रथमपञ्चशब्देन बोधितेषु पञ्चत्वसंख्याविशिष्टेषु समुदितेषु अन्वीयमानः पौनरुक्त्यान्यथानुपपत्त्या प्रत्येकमन्वेतीति पञ्चविंशतिलाभ इति रहस्यम् । अत एव क्वचित्पुस्तके 'पञ्च च ते पञ्चतश्च' इति पाठः । तत्र च न काप्यनुपपत्तिरिति । **स चासाविति** । पञ्चपञ्चत्वमिति यत् स चासौ विभागश्चेति विधेयविशेषणत्वान्न लिङ्गव्यत्यासदोषः ।

---

**नन्विति** । एवमुक्तप्रकारेण तत्त्वस्य पञ्चविंशतित्वे प्रत्यक्षादिप्रमाणसिद्धे असंख्यातत्वं कथं वदन्तीति शङ्काभिप्रायः । **उभयपरामर्श इति** । चेतनाचेनोभयपरामर्श इत्यर्थः । अपि (इति) यद्यपि उपाधिक्रोडीकारेण प्रकृतित्वविकृतित्वप्रकृतिविकृतित्वानुभयत्वलक्षणोपाधीन् क्रोडीकृत्य सम्मेलीकृत्य पञ्चविंशतिभेदं वदन्ति । तथापि अवान्तरभेदेन चेतनाचेतनयोः परस्परं भेदेन असंख्यातत्वमप्याहुः । तत्त्वद्वयस्य प्रत्यक्षादिप्रमाणसिद्धमसंख्यातत्वमप्यङ्गीकुर्वन्तीति भावः ।

प० — उत्तरवाक्यमवतारयितुमाह **ननु सांख्या इति** ॥ **चतस्र इति** । वक्ष्यमाणसंमतिश्लोके चातुर्विध्यस्योपलम्भादिति भावः ॥ **प्रकृतिरेवेति** । तत्त्वान्तरं प्रति परिणामिकारणमेवेत्यर्थः । श्लोकस्थाविकृतिशब्दार्थोक्तिरेवेति ॥ **विकृतिरेवेति** । न कस्यापि तत्त्वस्योपादानमित्येवकारार्थः । प्रकृत्यादिरूपानर्थान्दर्शयति **तत्र सत्त्वेति** ॥ **साम्यावस्थेति** । अन्योन्यमिश्रणेन विना स्वरूपेणावस्थानम् । तादृगवस्थापन्नानां तेषां नामान्तरमाह **प्रधानमिति** । मूलप्रकृतिरिति श्लोकस्थमूलपदार्थस्य ससंबन्धिकत्वादाह **सा हीति** । 'महदाद्याः प्रकृतिविकृतयः सप्ते'तिश्लोकस्थं व्यनक्ति **महदिति** ॥ **तन्मात्रा इति** । शब्दस्पर्शरूपरसगन्धाः ॥ **आकाशादीनामिति** । आकाशवाय्वग्न्यप्पृथिवीनां यथा-

क्रमं शब्दादयः प्रकृतयः अहंकारस्य विकृतयश्चेत्यर्थः । षोडशकश्च विकार इतिश्लोकस्यार्थमाह **पञ्च-भूतानीति** । वाक्पाणिपादपायूपस्थश्रोत्रत्वक्चक्षूरसनघ्राणमनांस्येकादशेंद्रियाणीति षोडशकः षोडश-संख्योपेतः गण इति शेषोक्तिः । प्रत्ययार्थोऽयं । 'पञ्चदशतौ वर्गे वा' इत्यत्र वाशब्दाद्वर्गार्थे कन्प्रत्य-यस्याप्युक्तदेशपदेन तदन्तस्यापि गृहीतत्वादिति केचिदाहुः । षोडशकस्त्वित्यत्र तुः एवार्थ इति भावेनोक्तं **विकृतिरेवेति** । विकृतिरेवेत्येतदयुक्तमित्याशङ्क्य, तुशब्दसूचितसमाधिमाह **यद्यपीत्या-दिना** ॥ **स्थूलतेति** । पृथिव्यादेर्यथा स्थूलत्वं इन्द्रियग्राह्यत्वं च तथा तेषामपि तदस्तीति गोघटादयः पृथिव्येव दध्यादयश्च पयआदय (पयोदध्यादय) एवेत्यर्थः । चरमपादार्थमाह **पुरुषस्त्विति** । **पञ्च च ते पञ्चतश्चेति** । विशेषणं विशेष्येण बहुलमिति समासः । स चेत्यस्य पञ्चपञ्चत्वपरामर्शित्वेऽपि विधेयलिङ्गापेक्षया पुन्निर्देशः ॥ **उपलक्षितं** । उपलक्षणतया व्यावर्तितं ज्ञापितमिति वार्थः । तदित्ये-तच्चेतनमचेतनमित्यनयोर्विशेषणमिति भावेनानुवदति **तच्चेतनमचेतनं चेति** ।

**या०— ॐ रचनाऽनुपपत्तेश्च नानुमानम् ॐ** ॥ **प्रकृतिरेवेति** । अत्र प्रकरोतीति व्युत्पत्त्या प्रकृतिशब्द उपादानपरः । विकृतिशब्दश्च विक्रियत इति व्युत्पत्त्या कार्यपर इति ज्ञातव्यम् ॥ **साम्यावस्थेति** । गुणप्रधानभावपरित्यागेन त्रयाणामपि प्रधानभावेनैवावस्थितिरित्यर्थः । इयं हि तेषां प्रक्रिया । सृष्टिकाले हि सत्त्वादीनां मध्ये यदुद्भूतं बलीयस्तदङ्गि । अभिभूतं च तदनुगुणतया स्थितमङ्गम् । एवं हि तेषां गुणप्रधानभावे सति महदादौ कार्ये प्रवृत्तिर्भवति । इदमेव च गुण-वैषम्यं नाम । प्रलये तु नोक्तरीत्या तेषां गुणप्रधानभावेनावस्थानं किन्तु प्रधानतयैवातस्तेषामियं साम्यावस्थेति गीयते । अत एव प्रधानमिति संज्ञाऽपि तदैवेति । उदाहरिष्यमाणकारिकायां मूल-प्रकृतिरित्यत्र मूलपदं प्रधानस्य केवलप्रकृतित्वोपपादकमित्याशयेन प्रधानस्य केवलप्रकृतित्वमुपपादयति **सा हि विश्वस्येत्यादिना** ॥ **मूलान्तरमस्तीति** । अनवस्थाप्रसङ्गादिति भावः ॥ **षोडशको गण इति** । षोडशसंख्यापरिमितो गणः षोडशकः । विकृतिरेवेत्यनेन कारिकायां तुशब्दोऽवधारणार्थः । स च भिन्नक्रम इति सूचितमिति ज्ञातव्यम् ॥ **स्थूलतेति** । प्रधानमहदहङ्कारादीनां हि स्थूलतातारत-म्यमिन्द्रियग्राह्यतातारतम्यं चास्ति । अतस्तेषां तत्त्वान्तरत्वम् । नैवं गोघटादीनाम् । तेषां पृथिव्यादि-भ्यस्तत्त्वान्तरत्वसाधकयोः स्थूलतेन्द्रियग्राह्यतातारतम्ययोरभावादित्यर्थः । **पञ्च च ते पञ्चतश्चेति** । पञ्च-संख्याकाः पञ्चवर्गा इत्यर्थः । पञ्चदशतौ वर्गे वेत्युक्तत्वात् ।

**श्री०— ॐ रचनानुपपत्तेश्च नानुमानम् ॐ** ॥ **विवक्षितमिति** । पृथिव्यादीनां च भूतानां तदभावान्न प्रकृतित्वं किन्तु विकृतित्वमेवेति भावः । विभागस्थत्वं कथमत आह **तेनेति** । **उप-लक्षितं** युक्तम् ।

**च०— प्रकृतिः** तत्वान्तरं प्रत्युपादानकारणम् । **विकृतिः** कार्यप्रत्ययस्य कर्मसाधनत्वात् । **षोडशक इति** । षोडशसंख्योपेतः तत्संख्यापरिमितो वा इत्यर्थापयन्ति ।

**सु०— चेतनानामचेतनानां च प्रत्येकममङ्घ्यातत्वसाम्येऽपि नोभयोर्भिन्नत्वेन साम्यम् । किं तर्हीत्यत आह** भिन्नमिति ।

**अनु० —** भिन्नमन्यद्भिदोज्झितम् ॥

**चेतनमिति शेषः । चेतनं परस्परतो भिन्नमाहुः । यथोक्तम् । 'जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैवे'ति ॥** अन्यत् **चेतनात्; अचेतनं भिदोज्झितमाहुः ।**

**शे०— यथोक्तमिति** । अयमर्थः । पुरुषबहुत्वं सिद्धं । कस्मात् जन्ममरणकरणानां प्रतिनियमादिति निकायनिविष्टाभिरपूर्वाभिर्देहेन्द्रियबुद्धिवेदनाभिः प्रतिपुरुषस्याभिसंबन्धो जन्म, न तु पुरुषस्य परिणामस्तस्यापरिणामित्वात् । तेषामेव च देहादीनामुपात्तानां त्यागो मरणं, न त्वात्मनो विनाशः । तस्य कूटस्थनित्यत्वात् । करणानि तु बुद्ध्यादीनि त्रयोदश । तेषां जन्ममरणकरणानां प्रतिनियमो व्यवस्था । सा खल्वियं सर्वशरीरेष्वेकस्मिन्पुरुषे नोपपद्यते । तदा खल्वेकस्मिञ्जायमाने सर्व एव जायेरन् म्रियमाणे च म्रियेरन् । अन्धादौ चैकस्मिन्सर्व एवान्धादयो, विचित्ते चैकस्मिन्सर्व एव विचित्ताः स्युरित्यव्यवस्थाप्रसङ्गात् । प्रतिक्षेत्रं पुरुषभेदे च भवति व्यवस्थेति । न चैकस्यापि पुरुषस्य देहोपधानभेदाद्व्यवस्थेति युक्तम् । पाणिस्तनाद्युपधानभेदेनापि जन्ममरणादिव्यवस्थाप्रसङ्गात् । न हि पाणौ वृक्णे, जाते वा स्तनादौ महत्यवयवे, युवतिर्जाता मृता वा भवतीति । इतश्च प्रतिक्षेत्रं पुरुषभेद इत्युच्यते **अयुगपत्प्रवृत्तेश्चेति** । प्रवृत्तिश्च प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्तिनी तथाऽपि पुरुष **उपचर्यते** । तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत । ततश्च सर्वाण्यपि शरीराणि युगपच्चालयेत् । नानात्वे तु नायं दोषः । इतश्च पुरुषभेद इत्याह **त्रैगुण्यविपर्ययाच्चैवेति** । एवकारो भिन्नक्रमः । सिद्धमित्यस्यानन्तरं द्रष्टव्यः । त्रयो गुणास्त्रैगुण्यं तस्य **विपर्ययोऽन्यथाभावः** । केचित्खलु सत्त्वनिकायाः सत्त्वबहुला यथोर्ध्वरेतसः । केचिद्रजोबहुला यथा मनुष्याः । केचित्तमोबहुला यथा तिर्यग्योनयः । सोऽयमीदृशस्त्रैगुण्यविपर्ययोऽन्यथाभावः । तेषु सत्त्वादिनिकायेषु न भवेद्यद्येकः पुरुषः स्याद्भेदे त्वयं न दोष इति ।

**स०— जननमरणकरणानाम्** इत्यस्यायमर्थः । पुरुषबहुत्वं सिद्धम् । कस्मात् । **जननमरणकरणानां प्रतिनियमादिति** । निकायनिविष्टाभिरपूर्वाभिर्देहेन्द्रियबुद्धिवेदनाभिः प्रतिपुरुषस्या-

भिसंबन्धो जन्म न तु पुरुषपरिणामः । तस्यापरिणामित्वात् । तेषामेव च देहादीनामुपात्तानां त्यागो मरणम् । न त्वात्मनो विनाशः । तस्य कूटस्थनित्यत्वात् । करणानि तु बुद्ध्यादीनि त्रयोदश । तेषां जन्ममरणकरणानां प्रतिनियमो व्यवस्था । सा खल्वियं सर्वशरीरेष्वेकस्मिन् पुरुषे नोपपद्यते । तदा खलु एकस्मिन् जायमाने सर्व एव जायेरन् । म्रियमाणे च म्रियेरन्, अन्धादौ चैकस्मिन् सर्व एवान्धादयो, विचित्ते चैकस्मिन् सर्व एव विचित्ताः स्युरित्यव्यवस्थाप्रसंगात् । प्रतिक्षेत्रं तु पुरुषभेदे च भवति व्यवस्थेति । न चैकस्यापि पुरुषस्य देहोपधानभेदात् व्यवस्थेति युक्तम् । पाणिस्तनाद्युपधानभेदेनापि जन्ममरणादिव्यवस्थाप्रसङ्गात् । न हि पाणौ वृक्णे जाते वा स्तनादौ महत्यवयवे युवतिर्जाता वा मृता वा भवतीति ।

इतश्च प्रतिक्षेत्रं पुरुषभेद इत्युच्यते **अयुगपत्प्रवृत्तेश्चेति** । प्रवृत्तिश्च प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्तिनी तथाऽपि पुरुष उपचर्यते । तथा च तस्मिन्नेकत्र शरीरे प्रयतमाने स एव सर्वशरीरेषु एक इति सर्वत्र प्रयतेत । ततश्च सर्वाण्यपि शरीराणि युगपच्चालयेत् । नानात्वे तु नायं दोषः ।। इतश्च पुरुषभेद इत्याह **त्रैगुण्यविपर्ययाच्चैवेति** । एवकारो भिन्नक्रमः । सिद्धमित्यस्यानन्तरं द्रष्टव्यः । सिद्धमेव नासिद्धम् । त्रयो गुणाः त्रैगुण्यम्, तस्य विपर्ययः अन्यथाभावः । केचित्खलु सत्त्वनिकायाः सत्त्वबहुला यथोर्ध्वरेतसः । केचिद्रजोबहुलाः यथा मनुष्याः केचित्तमोबहुला यथा तिर्यग्योनयः । सोऽयमीदृशः त्रैगुण्यविपर्ययः अन्यथाभावः तेषु सत्त्वादिनिकायेषु न भवेत् यदि एकः पुरुषः स्यात् । भेदे त्वयं न दोषः । इति ।

**प०** — **भिन्नत्वेनेति** । स्वान्तर्गतभेदवत्त्वेनेत्यर्थः ।। **जननमरणेति** । देहेंद्रियादियोगत्यागरूपजन्ममरणयोः चक्षुरादिकरणानां च प्रतिनियमात् प्रत्येकं व्यवस्थितत्वात्पुरुषबहुत्वं सिद्धमेवेति साध्येनान्वयः । पुरुषैक्ये हि एकस्मिन्जाते मृते अंधादौ च सति सर्वेपि तथा स्युरिति भावः ।। **अयुगपत्प्रवृत्तेश्च** । सर्वपुरुषाणां युगपत्प्रवृत्त्यसंभवाच्चेत्यर्थः । पुरुषैक्ये ह्येकत्र शरीरे पुरुषप्रयत्नेन चेष्टायां सर्वदेहेष्वपि चेष्टा स्यादेवेति भावः ।। **त्रैगुण्येति** । सत्त्वादित्रिगुणा एव त्रैगुण्यं तस्यविपर्ययाद्व्यत्यासाच्च । केचित्सत्त्वप्रधानाः महात्मानः, केचिद्रजःप्रधाना मनुष्याः, केचित्तमोगुणकाः पश्वादयः । पुरुषैक्ये तु तन्न स्यात् । अतश्च पुरुषबाहुल्यमित्यर्थः ।

**या०** — जन्ममरणकरणानामिति कारिकायाश्चायमर्थः । पुरुषबहुत्वं सिद्धं कस्माज्जन्ममरणकरणानां प्रतिनियमात् । निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियाहङ्कारबुद्धिवेदनाभिः पुरुषस्याभिसंबन्धो जन्म, न तु पुरुषस्य परिणामः । तस्यापरिणामित्वात् । तेषामेव च देहादीनामुपात्तानां परित्यागो मरणम् । न त्वात्मनो

विनाशस्तस्य कूटस्थनित्यत्वात् । करणानि बुद्ध्यादीनि त्रयोदश तेषां जन्ममरणकरणानां प्रतिनियमो व्यवस्था । सा खल्वियं सर्वशरीरेष्वेकस्मिन्पुरुषे नोपपद्यते । तदा खल्वेकस्मिन् जायमाने सर्वे जायेरन् म्रियमाणे च म्रियेरन् । अन्धादौ चैकस्मिन्सर्व एवान्धादयो, विचित्ते त्वेकस्मिन्सर्व एव विचित्ताः स्युरित्यव्यवस्था । प्रतिक्षेत्रं तु पुरुषभेदे भवति व्यवस्थेति । न चैकस्यापि पुरुषस्य देहोपधानभेदात् व्यवस्थेति युक्तम् । पाणिस्तनाद्युपधानभेदेनापि जन्ममरणादिव्यवस्थाप्रसङ्गात् । न हि पाणौ वृक्ण जाते वा स्तनादौ च महत्यवयवे युवतिर्जाता वा मृता वा भवति । इतश्च प्रतिक्षेत्रं पुरुषभेद इत्याह **अयुगपत्प्रवृत्तेश्चेति** । प्रवृत्तिः प्रयत्नलक्षणा यद्यप्यन्तःकरणवर्तिनी तथाऽपि पुरुषे उपचर्यते । तथा तस्मिन्नेकत्र शरीरे प्रयतमाने स एव सर्वशरीरेष्वेक इति सर्वत्र प्रयतेत । ततश्च सर्वाण्येव शरीराणि युगपच्चलेयुः । नानात्वे तु नायं दोष इति । इतश्च पुरुषभेद इत्याह **त्रैगुण्यविपर्ययाच्चेति** । एवकारो भिन्नक्रमः । सिद्धमित्यस्यानन्तरं द्रष्टव्यः । सिद्धमेव नासिद्धम् । त्रयो गुणास्त्रैगुण्यं तस्य विपर्ययः अन्यथात्वम् । केचित्खलु सत्त्वनिकायाः सत्त्वबहुला यथोर्ध्वरेतसः । केचिद्रजोबहुला यथा मनुष्याः । केचित्तमोबहुला यथा तिर्यग्योनयः । सोऽयमीदृशस्त्रैगुण्यविपर्ययोऽन्यथाभावस्तेषु सत्त्वादिनिकायेषु न भवेद्यद्येकः पुरुषः स्यात् । भेदे त्वयमदोष इति ।

**श्री० — भिन्नत्वेनेति** । चेतनाचेतनयोः स्वस्वावान्तरप्रभेदैः परस्परं भिन्नत्वेनेत्यर्थः ।

---

**च० — यथोक्तमिति** । देहेन्द्रियादियोगत्यागरूपजन्ममृत्योश्चक्षुरादिकरणानां च प्रतिनियमात् प्रत्येकं व्यवस्थितत्वात् पुरुषबहुत्वं सिद्धमिति योजना । पुरुषैक्ये सति एकस्मिन् जातेऽन्धादौ च सति सर्वेऽपि तथा प्रसज्येरन्निति भावः । तत्रैव हेत्वन्तरबोधकं द्वितीयहेतुविभक्त्यन्तं सर्वपुरुषाणां युगपत्प्रवृत्त्यभावार्थकम् । एकत्र शरीरे प्रयत्नेन चेष्टायां सर्वत्रापि तस्मिन् तदापत्त्या नाप्रयोजकताशङ्कावकाशः । तृतीयमपि तादृगेव । स्वार्थे ष्यञ् । सत्त्वादिगुणत्रिकव्यत्ययाच्च तद्धेतुत्वमुपेयमन्यथा केचित्सत्त्वप्रधानाः महात्मानः केचिद्रजःप्रधानाः मानुषास्तमःप्रधानाः पश्वादयः तद्भेदो न स्यादित्यर्थः ॥

**सु० — नन्वीश्वरानभ्युपगमे कस्यापि प्रवृत्त्यनुपपत्तेः, सर्गाद्यसंभवादीश्वराख्यं तृतीयं तत्त्वमङ्गीकरणीयम् । तत्कथं नाङ्गीकुर्वन्तीत्यत** आह अचेतनस्येति ।

अनु० — अचेतनस्य कर्तृत्वं स्वातन्त्र्येण निगद्यते ।

निगद्यते साङ्ख्यैरिति शेषः । तथा हि । चेतनः सङ्घातपरार्थत्वादिहेतुसिद्धः । अचेतनं च व्यक्तं प्रत्यक्षादिसिद्धम् अव्यक्तं च कारणकार्यविभागादिहेतुसिद्धम् । न चैत-

मनन्यथासिद्धमीश्वरे प्रमाणमस्ति । अचेतनस्यैव प्रधानस्य कर्तृत्वेन सर्गाद्युपपत्तेरदृष्टेश्वर-कल्पनानुपपत्तेरिति मन्यन्त इति ।

**नन्वचेतनं चेतनानधिष्ठितं क्वापि न प्रवृत्तिमदुपलब्धम् । ततः प्रधानस्याधिष्ठात्रेश्वरेण भाव्यमित्यत उक्तं** स्वातन्त्र्येणेति । **चेतनाधिष्ठानेन विनेत्यर्थः । त(य)थोक्तम् । 'वत्स-विवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषस्य विमोक्षनिमित्तं तथा प्रवृत्तिः प्रधान-स्ये'ति ।**

**शे०** — अचेतनस्य स्वातन्त्र्याङ्गीकारानुवादवैयर्थ्यमाशङ्क्य तदीयेश्वरानभ्युपगमोपपादनार्थत्वान्न तदिति भावेन तदुपपादकतयोत्तरवाक्यं योजयितुं तदीयेश्वरानभ्युपगमानुपपत्तिशङ्कामुत्थापयति **नन्विति ।** कथमनेनेश्वरस्यानभ्युपगमनीयत्वसिद्धिरित्यतोऽभिप्रायमाह **तथा हीति ॥ सङ्घातेति ।** 'सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् । पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्चे'ति संग्रहश्लोकोक्ततत्साधकहेतूनामादिपदेन परामर्शः । अयमर्थः । पुरुषोऽस्ति अव्यक्तादिव्यतिरिक्तः । कुतः । सङ्घातपरार्थत्वात् । अव्यक्त-महदहङ्कारप्रभृतयः परार्थाः संघातत्वात् , शयनासनाऽभ्यङ्गवत् । न चासिद्धो हेतुः । अव्यक्तादीनां सर्वेषां सुखदुःखमोहात्मकतया संघातत्वसिद्धेः । स्यादेतत् । शयनासनादयः संघाताः, संघातशरीराद्यर्था दृष्टा न त्वात्मानं प्रति परार्थाः । तस्मात्संघातान्तरमेव परं गमयेयुः । न त्वसंहितमात्मानमित्यत उक्तं त्रिगुणा-दिविपर्ययादिति । अयमाशयः । संघातान्तरार्थत्वे तस्यापि संहतत्वात् संहतान्तरार्थेन भाव्यम् । एवं तेन तेनापीति न व्यवस्था स्यात् । न च व्यवस्थायां सत्यामव्यवस्था युक्ता गौरवप्रसङ्गात् । न च प्रमाणव-त्त्वेन कल्पनागौरवमपि सह्यम् । संहतत्वस्य पारार्थ्यमात्रेणान्वयात् दृष्टान्तदृष्टसर्वधर्मानुरोधेन त्वनुमान-मिच्छतः सर्वानुमानोच्छेदप्रसङ्गात् । तस्मादनवस्थाभिया अस्यासंहतत्वेनैव व्याप्यत्वमिच्छता, अत्रिगुणत्वं विवेकित्वमविषयत्वमसामान्यत्वं चेतनत्वमप्रसविधर्मत्वं चाभ्युपेयम् । त्रिगुणत्वादयो धर्माः संहतत्वेनैव व्याप्ताः । तत्संहतत्वमस्मिन्परे व्यावर्तमानं त्रैगुण्यादि व्यावर्तयति । तस्मादाचार्येण 'त्रिगुणादिविपर्यया-दि'ति वदताऽसंहतः परो विवक्षितः स चात्मेति सिद्धम् । इतश्च पुरुषोऽस्ति । अधिष्ठानात् । त्रिगुणा-त्मकानामधिष्ठीयमानत्वात् । यद्यत्सुखदुःखमोहात्मकं तत्सर्वं परेणाधिष्ठीयमानं दृष्टम् । यथा हि यन्त्रादि कुलालादिभिः । सुखदुःखमोहात्मकं चेदं बुद्ध्यादिः । तस्मादेतदपि परेणाधिष्ठातव्यम् । स च परस्त्रैगुण्यादन्य आत्मेति । इतश्चास्ति पुरुषो भोक्तृभावात् । भोक्तृभावेन भोग्येन सुखदुःखे उपलक्ष-यति । भोग्ये हि सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते । तेनानयोरनुकूलनीयेन प्रति-कूलनीयेन चान्येन भवितव्यम् । न चानुकूलनीयाः प्रतिकूलनीया बुद्ध्यादयस्तेषां सुखदुःखात्मकत्वेन स्वात्मनि वृत्तिविरोधात् । तस्माद्यः सुखदुःखात्मकत्वेनानुकूलनीयः प्रतिकूलनीयो वा स एवात्मेति ।

अन्ये त्वाहुः । भोग्या दृश्या बुद्ध्यादयः । न च द्रष्टारमन्तरेण दृश्यता युक्ता तेषाम् । तस्मादस्ति बुद्ध्याद्यतिरिक्तः स चात्मेति । भोक्तृभावाद्द्रष्टृभावाद्दृश्येन द्रष्टुरनुमानादिति यावत् दृश्यत्वं बुद्ध्यादीनाम् । सुखाद्यात्मतया पृथिव्यादिवदनुमितम् । इतश्चास्ति पुरुषः ॥ कैवल्यार्थं प्रवृत्तेश्चेति अत्यन्तदुःखशमनलक्षणं कैवल्यं च बुद्ध्यादीनां न संभवति । ते हि सुखदुःखात्मकाः कथं स्वभावाद्वियोजयितुं शक्याः । तदतिरिक्तस्य तु अतदात्मनस्तेनो वियोगः शक्यसंपादनः । तस्मात्कैवल्यार्थं प्रवृत्तेरागमानां महाधियां चास्ति बुद्ध्यादिव्यतिरिक्त इति सिद्धम् ।

कारणकार्यविभागादिहेतुसिद्धमित्यत्रादिपदेनाविभागादिहेतुपरिग्रहः । कार्यकारणविभागादिहेतूंश्चाग्रे ग्रन्थकृदेव दर्शयिष्यतीति ध्येयम् । प्रवृत्त्यनुपपत्त्या सर्गाद्यसम्भवस्यैवेश्वरसाधकत्वात्कथं तत्र प्रामाण्याभाव इत्यत उक्तम् अनन्यथासिद्धमिति । इदं त्वनन्यथासिद्धत्वान्न तत्र प्रमाणमित्यर्थः । अन्यथासिद्धत्वमेव दर्शयति अचेतनस्यैवेति ।

**यथोक्तमिति** । दृष्टमचेतनमपि प्रयोजनेन प्रवर्तमानं यथा वत्सविवृद्ध्यर्थं क्षीरमचेतनं प्रवर्तते । एवं प्रकृतिरचेतनाऽपि पुरुषविमोक्षाय प्रवर्त्स्यति । न च क्षीरप्रवृत्तेरीश्वराधिष्ठाननिबन्धनत्वेन साध्यत्वात्साधने व्यभिचार इति वाच्यम् । प्रेक्षावत्प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वात्ते च जगत्सर्गाद्व्यावर्तमाने प्रेक्षापूर्वप्रवृत्तित्वमपि व्यावर्तयतः । न ह्याप्तसकलप्रेप्सितस्य भगवतो जगत्सृजमानस्य किमप्यप्सितं सम्भवति । नापि कारुण्यादस्य सर्गे प्रवृत्तिः । प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानुपपत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्यम् । उत्तरकालं तु दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुस्तरमितरेतराश्रयत्वं कारुण्येन सृष्टिः सृष्ट्या कारुण्यमिति । अपि च करुणया चोदितः सुखिन एव जन्तून्सृजेत न विचित्रान् । कर्मवैचित्र्यात्तद्वैचित्र्यमिति चेत् । कृतमस्य प्रेक्षावतः कर्माधिष्ठानेन । तदनधिष्ठानमात्रादेव शरीरेन्द्रियविषयानुत्पत्तौ दुःखानुपपत्तेरतिसुकरत्वात् । प्रकृतेस्त्वचेतनाया न स्वानुग्रहो, न वा कारुण्यं प्रयोजनमिति नोक्तदोषप्रसङ्गः । पारार्थ्यमात्रं तु प्रयोजकमुपपद्यते । तस्मात्सुष्ठूक्तं वत्सविवृद्धिनिमित्तमिति ।

स० — **सङ्घातेति** । 'सङ्घातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् । पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥ इति तद्वाक्यादित्यर्थः । तस्य चायमर्थः । संघातपरार्थत्वात्, अव्यक्तमहदहङ्कारादयः परार्थाः, संघातत्वात्, शयनासनाभ्यङ्गवत् । सुख-दुःख-मोहात्मकतया अव्यक्तादयः सर्वे संघाताः । स्यादेतत् । शयनासनादयः संघातशरीराद्यर्थाः दृष्टाः । न त्वात्मानं प्रति परार्थाः । तस्मात् संघातान्तरमेव परं गमयेयुः । न त्व[संघात] संहितमात्मानमित्यत आह **त्रिगुणादिविपर्ययादिति** । अयमभिप्रायः। संघातान्तरार्थत्वे तस्यापि संघा-

तत्वात् तेनापि संघातान्तरार्थत्वेन भवितव्यमेवं तेनापीत्यनवस्था स्यात् । न च व्यवस्थायां सत्याम-व्यवस्था युक्ता । कल्पनागौरवप्रसङ्गात् । न च प्रमाणवत्वेन कल्पनागौरवमपीष्यत इति युक्तम् । दृष्टादृष्टसर्वधर्मानुरोधेन (दृष्टान्तदृष्टसाधर्म्यानुरोधेन)अनुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्गात् । तस्मादनवस्थाभियाऽस्य असंघातत्वमिच्छता अत्रिगुणत्वम्, अविषयत्वम्, विवेकित्वम्, असामान्यत्वम्, चेतनत्वम्, अप्रसविधर्मत्वं चाभ्युपेयम् । त्रिगुणत्वादयो धर्माः संहतत्वेन[ नैव ] व्याप्ताः । तत्संहतत्वं च अस्मिन्परे पुरुषे व्यावर्तमानं त्रैगुण्यादि व्यावर्तयति । ब्राह्मणत्वं यथा व्यावर्तमानं कर्मठत्वादि व्यावर्तयति । तस्मादाचार्येण त्रिगुणादिविपर्ययादिति वदता असंघातः पुरुषो विवक्षितः । स चात्मेति सिद्धम् । इतश्च पुरुषोऽस्ति । अधिष्ठानात् । त्रिगुणात्मकानामधिष्ठीयमानत्वात् । यत् यत् सुख-दुःख-मोहात्मकं तत्सर्वं परेणाधिष्ठीयमानं दृष्टम् । यथा हि यन्त्रादि कुलालादिभिः । सुख-दुःख मोहात्मकं चेदं बुद्ध्यादि । तस्मादेतदपि परेणाधिष्ठातव्यम् । स च परः त्रैगुण्यादिरहित आत्मेति । इतश्चास्ति पुरुषः— भोक्तृभावात् भोक्तृभावेन भोग्येन सुख-दुखे उपलक्षयति । भोग्ये हि सुखदुःखे अनुकूल-प्रतिकूलवेदनीये प्रत्यात्ममनुभूयते । तेनानयोरनुकूलनीयेन प्रतिकूलनीयेन चान्येन केनचिद्भवितव्यम् । न चानुकूलनीयाः प्रतिकूलनीयाः बुद्ध्यादयः । तेषां सुख-दुःखात्मकत्वेन स्वात्मनि वृत्तिविरोधात् । तस्मात् यः सुखदुःखात्मकत्वेन अनुकूलनीयः प्रतिकूलनीयो वा स एवात्मेति । अन्ये त्वाहुः । भोग्या दृश्या बुद्ध्यादयः । न च द्रष्टारमन्तरेण दृश्यता युक्ता तेषाम् । तस्मादस्ति द्रष्टा बुद्ध्याद्यतिरिक्तः, स चात्मेति । भोक्तृभावात् द्रष्टृभावात् दृश्येन द्रष्टुरनुमानादिति यावत् । दृश्यत्वं च बुद्ध्यादीनां सुखाद्यात्मकतया पृथिव्यादिवदनुमितम् । इतश्चास्ति पुरुष अधिष्ठानात् त्रिगुणानां अधिष्ठीयमानत्वाद्यद्यत् सुखदुःखाद्यात्मकं तत्सर्वं परेण अधिष्ठीयमानं दृष्टं । यथा हि यन्त्रं कुलालादिभिः । तस्मादेतदपि परेणाधिष्ठातव्यम् । स च परस्त्रैगुण्यादन्य आत्मा । इतश्चास्ति पुरुष इत्याह कैवल्यार्थं प्रवृत्तेश्चेति । अत्यन्तदुःखशमनलक्षणं (वै)कैवल्यं च बुद्ध्यादीनां न संभवति । ते हि सुखदुःखात्मकाः कथं स्वभावात् वियोजयितुं शक्याः । तदतिरिक्तस्य तु अतदात्मनस्ततो वियोगः शक्यसंपादनः । तस्मात् कैवल्यार्थं प्रवृत्तेः आगमानां महाधियां चास्ति बुद्ध्यादिव्यतिरिक्त इति सिद्धम् ।

प०— **इत्यत आहेति** । रचनेतिसूत्रव्यावर्त्यमाहेति योज्यम् ॥ **संघातपरार्थत्वादीति** । यथा शयनासनादिकं देहार्थमेवं महदहङ्कारादिसंघातरूपो देहादिरपि परार्थ एवेति संघातस्य यत्परार्थत्वमस्ति तेन हेतुना परः कश्चन सिद्धः । स एव चेतनः । तथा सुखदुःखादेरधिष्ठात्रा भाव्यम् । रथादिवद्योधिष्ठाता स चेतन इति । सुखदुःखादेरनुकूलवेदनीयत्वदृश्यत्वादिरादिपदार्थः । तेनानुकूलवेदि-[illegible]कार्यत्वात् दृश्यत्वस्य द्रष्टृविनाभावात्तेनद्रष्टुरपेयत्वात् ॥ **व्यक्तमिति** । योग्यरूपमचेतनमित्यर्थः ॥

**अव्यक्तं चेति** । अयोग्यरूपमचेतनमित्यर्थः ॥ **कारणकार्येति** । एतच्चाग्रे स्वयमेव विवरिष्यते ॥ **कर्तृत्वेनेति** । स्वतः परिणामादिरूपप्रवृत्तिमत्त्वेनेत्यर्थः ।

**या० — सङ्घातपरार्थत्वादीति** । अव्यक्तमहदहङ्कारादयः सुखदुःखमोहात्मकतया तावत्सर्वे सङ्घाताः । तथा चाव्यक्तमहदहङ्कारादयः परार्थाः सङ्घातत्वाच्छयनासनाभ्यङ्गवदित्यनुमानेन तेषां परार्थत्वे सिद्धे, यः परः सिध्यति स एव चेतन इत्यर्थः । स्यादेतत् । शयनासनादयः सङ्घातशरीराद्यर्था दृष्टा न त्वात्मानं प्रति परार्थाः । तद्वत्पक्षीकृता अपि सङ्घातान्तरमेव परं गमयेयुर्न त्वसङ्घातमात्मानमिति चेन्मैवम् । सङ्घातान्तरार्थत्वे हि तस्यापि सङ्घातत्वात्तेनापि सङ्घातान्तरार्थेन भवितव्यं तेनापीत्यनवस्थापत्तेः । तस्मादनवस्थाभियाऽयं परोऽसङ्घात एव सिध्यति । स एवात्मेति । आदिपदेन यद्यत्सुखदुःखमोहात्मकं तत्परेणाधिष्ठीयमानं दृष्टं यथा रथादि यन्त्रादिभिः । सुखदुःखमोहात्मकं चेदं बुद्ध्यादि तस्मादेतदपि परेणाधिष्ठातव्यम् । स च परस्त्रैगुण्यादन्य आत्मा । सुखदुःखे अनुकूलप्रतिकूलवेदनीये प्रत्यात्ममनुभूयेते । तेनानयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिद्भवितव्यम् । न चानुकूलनीयाः प्रतिकूलनीया वा बुद्ध्यादयस्तेषां सुखाद्यात्मकत्वेन स्वात्मनि वृत्तिविरोधात् । तस्माद्योऽसुखाद्यात्माऽनुकूलनीयः प्रतिकूलनीयो वा स एवात्मा । बुद्ध्यादयस्तावद्दृश्याः । न च द्रष्टारमन्तरेण तेषां दृश्यता युक्ता तस्मादस्ति द्रष्टा दृश्यबुद्ध्याद्यतिरिक्त आत्मेत्यादितदीयहेतूनां संग्रहः ॥ **कार्यकारणविभागादीति** । कार्यकारणविभागादिहेतूंश्चाग्रे स्वयमेव दर्शयिष्यति ।

---

**श्री० —** ननु सर्गादिकर्तृत्वान्यथाऽनुपपत्त्या ईश्वरसिद्धेः कथमनन्यथासिद्धेश्वरसाधकप्रमाणाभाव इत्यत आह **अचेतनस्यैवेति** । **अनधिष्ठितम्** अप्रेरितम् ।

**च० — संघातेति** । शयनासनादेर्देहार्थतेव महदहङ्कारादिसंघातरूपदेहस्यापि पारार्थ्येन हेतुना चेतनः सिद्धः ॥ **विभागादीति** । स्फुटीकरिष्यति चैतद्ग्रन्थकृदेव ।

**सु० — अन्यद्भिदोज्झितमित्युक्तम्** । तदसत् । **अचेतनानामपि चेतनवत्परस्परतो भेदस्य प्रत्यक्षादिसिद्धत्वादित्यत आह** परस्परेति ।

**अनु० —** परस्परविभेदश्च कार्याणामालयं भवेत् ॥

**आलयं प्रलयपर्यन्तम्, कार्याणां परस्परविभेदश्च भवेदिति निगद्यते तैः ।**

**एतदुक्तं भवति । कार्यं तावत्कारणव्यापारात्प्रागपि सत् । असदकरणात् । असच्चेत् कारणव्यापारात्पूर्वं कार्यं, नास्य सत्त्वं कर्तुं शक्यम् । न हि नीलं शिल्पिसहस्रेणापि पीतं शक्यं कर्तुम् ॥ किञ्च कार्येण संबद्धं कारणं कार्यस्य जनकम्, असंबद्धं वा । आद्ये त्वसता**

संबन्धानुपपत्तेः सत्त्वमङ्गीकार्यम् । न द्वितीयः असंबद्धत्वाविशेषेण सर्वस्मात्सर्वसंभवापत्तेः । असंबद्धत्वेऽपि कारणं तदेव करोति यत्र शक्तमतो नातिप्रसङ्ग इति चेत् । सा शक्तिः शक्यविषया वा स्यात्सर्वत्र वा । सर्वत्र चेत्सैवाव्यवस्था । आद्ये त्वसति शक्ये कथं तद्विषया स्यादिति सदेव कार्यम् । न च कारणादन्यत्कार्यं सदुपलभ्यत इति कार्यकारणयोरभेदोऽङ्गीकरणीयः । किञ्च न पटस्तन्तुभ्यो भिद्यते तन्तुधर्मत्वात्, यद्यतो भिद्यते तत्तस्य धर्मो न भवति, यथा गौरश्वस्य । उपादानोपादेयभावाच्च । ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावो, यथा घटपटयोः । संयोगाप्राप्त्यभावाच्च । अर्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः । अप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः । न चेह संयोगाप्राप्ती । तस्मान्नार्थान्तरत्वम् । गुरुत्वान्तरकार्यस्यावनतिभेदस्याग्रहणाच्च ।

एवञ्च कार्याणां परस्परं भेदेऽपि स्वस्वकारणैरभेदात्क्रमेण महाप्रलये मूलकारणभावं गतानामभेद एव; इत्यनेनाभिप्रायेणान्यद्भिदोज्झितमित्युक्तमिति । तच्चोक्तम् 'असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यमि'ति ।

**शे०**— उदाहरिष्यमाणकारिकागतसत्कार्यमिति प्रतिज्ञानुसारेण प्रतिजानीते **कार्यं तावदिति** । तत्रोदाहरिष्यमाणकारिकागतमसदकरणादिति हेतुमाह **असदकरणादिति** । कथमस्य हेतुत्वमित्यतो हेतुं विवृणोति **असच्चेदिति** । सदसत्त्वे घटस्य धर्मावित्यतो न दोष इति चेत् । तथाऽप्यसति धर्मिणि न तस्य धर्म इति सत्त्वं तदवस्थमेव । तथा च कथमसत्त्वम् । असम्बन्धेनातदात्मना वाऽसत्त्वे च कथमसन्घटः स्यात् । कारणव्यापारादूर्ध्वमिव प्रागपि ततः सदेव कार्यं । करणं चास्य सतोऽप्यभिव्यक्तिः यथा पीडनेन तिलेषु तैलस्य,अवघातेन च धान्येषु तण्डुलानां, दोहनेन च सौरभीषु पयसः । असतः करणे तु न किञ्चिन्निदर्शनमस्ति । न खल्वभिव्यज्यमानं वा उत्पद्यमानं वा क्वचिदसदृष्टमिति भावः । तद्वत् 'उपादानग्रहणादि'ति हेतुं विवृणोति **किञ्चेति** । अनेनोपादानानि कारणानि तेषां ग्रहणं कार्येणोपादानैः कार्यस्य सम्बन्धादिति यावदिति हेतुविवरणं सूचितं भवति ॥ **सर्वसम्भवेति** । अनेन सर्वसम्भवाभावादित्येतत्तात्पर्यतो विवृतं भवति । शक्तस्य शक्यकरणादिति हेतुं योजयितुं शङ्कते **असम्बद्धत्वेऽपीति** ॥ **सदेव कार्यमिति** । शक्तिभेद एव तादृशो यतः किञ्चिदेव कार्यं न सर्वमिति चेन्न । विकल्पासहत्वात् । तथा हि । शक्तिविशेषः किं कार्यसम्बद्धो वाऽसम्बद्धो वाऽभिमतः । सम्बद्धत्वे नासता सम्बन्ध इति सत्कार्यवादप्रसङ्गात् । असम्बद्धत्वे च सैवाव्यवस्थितिरित्यत्र तात्पर्यात् । नन्वचेतनानामपिचेतनवत्परस्परभेदस्य प्रत्यक्षादिसिद्धत्वादभेदः कथमिति शङ्कापरिहाराय तदभेद एव साधनीय ।

कार्यस्य कारणव्यापारात्पूर्वं सत्त्ववर्णनं प्रकृतानुपयुक्तं किमर्थमित्यतोऽभेदसाधनार्थमेव तदित्यभिप्रेत्य कार्यस्य प्राक् सत्त्वेऽपि कथमभेदसिद्धिरित्यतस्तत्प्रकारं दर्शयति **न चेति**। कार्यं कारणाभिन्नं ततः पृथगनुपलभ्यमानत्वादित्यनुमाने कार्यकारणयोरभेदाभावेऽपि कार्यस्यासत्त्वादेव पृथगनुपलब्धिसम्भवाद-प्रयोजकत्वमित्यतः तत्सत्त्वसाधनस्य प्रकृतोपयोग इति भावः। न च कारणभावादित्यस्याननुवादापत्ति-र्दोष इति वाच्यम्। तस्य ह्ययमर्थः। कार्यस्य कारणभावो न हि कारणाद्भिन्नं कार्यं कारणं च सदिति कथं तदभिन्नं कार्यमसद्भवेदिति। तथा च कार्यकारणयोरभेदेन कार्यस्य प्राक् सत्त्वं, तस्माच्च कार्यकारणयोरभेद, इत्यन्योन्याश्रयः स्यात्। अतो भेदसाधनार्थं कार्यस्य कारणव्यापारात्पूर्वमभेद-नैरपेक्ष्येण सत्त्वसाधकयुक्तिजातस्यैवात्रानुवाद इति तदननुवादस्यादोषत्वात्। सम्मतं चैतद्ग्रन्थ-कारस्यापि। अत एव सत्कार्यवादे प्रमाणाभावाच्चेत्यादिना सदकरणादिति कारिकोक्तसत्कार्यवाद-साधकयुक्तिनिराकरणावसरे कारणभावाच्चेति युक्त्यनिराकरणं सङ्गच्छते, तस्याः सत्त्वसाधकत्वा-भावात्। अन्यथा तदनिराकरणाद्ग्रन्थस्यासामञ्जस्यं स्यादित्यवधेयम्। केचित्तु कारणभावाच्चेत्यस्य कार्यस्य कारणात्मकत्वात् कारणस्य च पूर्वं सत्त्वात्,तदभिन्नमपि कार्यं सदेवेति व्याख्यानं मनसि निधाय, भवेदेतदेवं यदि कार्यस्य कारणाभेदः स्यात्। स एव तु कुत इत्यतः तत्र प्रत्यक्षं ताव-दाह न च कारणादन्यदितीत्याहुः। अनुमानान्तराण्याह **किञ्चेति**॥ **यथेति**। धर्मश्च पटस्तन्तूनां तस्मान्नार्थान्तरमिति भावः। उपादानोपादेयभावश्च तन्तुपटयोः तस्मान्नार्थान्तरत्वमिति भावः॥ **गुरुत्वान्तरेति**। यद्यस्माद्भिन्नं तस्मात्तस्य गुरुत्वान्तरकार्यं गृह्यते। यथा पुलिकस्य रुचिकस्य यो गुरुत्वान्तरकार्योऽवनतिविशेषः ततो द्विपुलिकस्य स्वस्तिकस्य गुरुत्वकार्योऽवनतिभेदोऽधिकः। न च तथा तन्तुगुरुत्वकार्यात्पटगुरुत्वकार्यमधिकं दृश्यते। तस्मादभिन्नस्तन्तुभ्यः पट इति भावः॥ **एवञ्चेति**। सत्कार्यवादे सिद्धे सतीत्यर्थः।

स० — ननु अचेतनानांचेतनवत्परस्परतो भेदस्य प्रत्यक्षादिसिद्धत्वादभेदः कथमिति शङ्कापरिहारार्थम भेद एवोपपादनीयः (न भेद उपपादनीयः)। कार्यस्य कारणात्पूर्वं सत्त्वसाधनं प्रकृतानुपयुक्तमित्यतः अभेदसाधनार्थमेव सत्त्वसाधनस्य कृतत्वादित्यभिप्रेत्य कार्यस्य कारणात्पूर्वं सत्त्वेऽपि कथमभेदसिद्धिरित्यतः तत्प्रकारं दर्शयति **न च कारणादन्यदिति**। कार्यं कारणाभिन्नम्, ततः पृथगनुपलभ्यमानत्वादित्ये-वोक्ते कार्यकारणयोरभेदाभावेऽपि कार्यस्यासत्त्वादेव पृथगनुपलब्ध्युपपत्तेरप्रयोजकत्वमित्यतः सत् इत्युक्तम्। एवं च तस्य सत्त्वसाधनं प्रकृतोपयुक्तमिति भावः।

ननु अभेदसाधनार्थं कार्यस्य कारणात्पूर्वं सत्वे साधकयुक्तिप्रतिपादको योऽयम् 'असदकरणात्-इति परकीयः श्लोकः तत्र यावत्यो युक्तय उपनिबद्धाः ताः सर्वा अपि अनुवदनीयाः। तत्र 'कारण'

भावाच्च' इत्येतद्युक्तिव्यतिरिक्ता एव असदकरणादित्यादियुक्तीरेवानूद्य तदनुवादः कुतो न कृत इति चेत् उच्यते । 'कारणभावादि'त्यस्य हि अयमर्थः । कार्यस्य कारणभाव इति । न च (नहि) कारणाद्भिन्नं कार्यं कारणं च सदिति कथं तदभिन्नं कार्यमसद्भवेदिति । एवं च कार्यकारणयोरभेदेन कार्यस्य सत्त्वं तया युक्त्या प्रसाधितम् । तदनुवादे तु तस्याभेदे सिद्धे सत्त्वसिद्धिः, तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयः स्यात् । अतोऽभेदसाधनार्थं कार्यस्य कारणात्पूर्वमभेदनैरपेक्ष्येणैव सत्त्वसाधकयुक्तिजातमेवानुवदनीयमिति तत्सापेक्षतद्युक्त्यतिरिक्तयुक्त्यनुवाद एव कृत इति नानुपपत्तिः ।

प्रकारान्तरेणाभेदसाधकपरोक्तयुक्तीरनुवदति **किञ्चेति** । अप्राप्तिर्नाम एकदेशसंबन्धित्वम्, संबन्धाभावो वा द्रष्टव्यः । **गुरुत्वेति** । यदि पटः तन्त्वतिरिक्तः स्यात् तदा पटोत्पत्तौ तन्तुनिष्ठगुरुत्वापेक्षया तत्र गुरुत्वान्तरमुत्पन्नमिति वक्तव्यम् । तथात्वे पूर्वं तन्तुत्वदशायां तन्निष्ठगुरुत्वेन तत्कार्यभूता यावती अवनतिरुपलभ्यते तदपेक्षया पटत्वदशायां तन्निष्ठगुरुत्वान्तरेण तत्कार्यावनतिविशेषस्य ग्रहणं स्यात् । न चैतदस्ति । तस्मादभेद इति ।

**प०** — संमतित्वेनोदाहरिष्यमाणश्लोके सत्कार्यमिति साध्यभागं व्यनक्ति **कार्यं तावदिति** । अत्रोपात्तहेतुपञ्चकं क्रमेण विवरिष्यन् आद्यं तावद्व्यनक्ति **असदकरणादिति** । कार्यं कारणव्यापारात्पूर्वमसच्चेदित्यर्थः । द्वितीयतृतीयहेतू क्रमात्कल्पद्वयनिरासकाविति भावेन विवृणोति **किञ्चेत्यादिना** ।

उपादानस्य कारणस्य कार्येण ममेदं कारणमिति ग्रहणात् संबद्धत्वादिति यावदित्यर्थमुपेत्यार्थमाह **आद्य इति** । शक्तस्येत्यादिनोक्तं घटयितुमाह **असंबद्धत्वेपीति** । द्वेधा विकल्प्यान्त्यं सर्वेति पूर्वहेतुना निरस्य आद्यकल्पेऽस्य हेतोर्घटनां व्यनक्ति **सा शक्तिरित्यादिना** ॥ **सैवेति** । सर्वस्मादित्युक्तेत्यर्थः । कारणभावात्कारणात्मकत्वादिति पंचमहेतोरसिद्धिं निरसितुं प्रत्यक्षं तावदाह **नच कारणादिति** । अनुमानैरपिकारणात्मकत्वं कार्यस्य साधयति **किंचेति** ॥ **नार्थांतरत्वमिति** । कार्यकारणयोरित्यनुषंगः । अभेदे हेत्वंतरमाह **गुरुत्वांतरेति** । तन्तुपटयोर्भेदे तन्तुषु यद्गुरुत्वं ततोऽन्यच्चषु गुरुत्वं पटे स्यात् । नचेष्टापत्तिः । पूर्वं पटोपादानतंतूनां तुलायां स्थापने यादृशमवनमनं तदुपादानकपटस्थापनेपि तादृगवनमनं न स्यात् । किंतु पुनरधिकावनतिः स्यात् । गुरुत्वद्वयसत्त्वात् । नचतथोपलभ्यते । अतो गुरुत्वान्तरकार्यस्यावनमनविशेषस्यादर्शनादनन्यत्वं कार्यकारणयोरित्यर्थः ॥ **एवं चेति** । कार्यस्य कारणाभेदे प्रामाणिके सतीति वा कार्यस्य कारणव्यापरात्प्रागपि सत्वे सतीति वार्थः ।

**या०** — उदाहरिष्यमाणकारिकागतमसदकरणादितिहेतुं व्याख्यायोपादानग्रहणादिति हेतुं विवृणोति **किञ्च कार्येणेति** । अनेनोपादानानि कारणानि तेषां ग्रहणं कार्येण । उपादानैः कार्यस्य

सम्बन्धादिति यावदिति तद्व्याख्यानं सूचयति **सर्वसम्भवापत्तेरिति** । अनेन सर्वसम्भवाभावादित्यस्य तात्पर्यमुक्तं भवति । शक्तस्य शक्यकरणादित्येतद्व्याख्यातुमाह **असम्बद्धत्वेऽपीति** । कारणभावाच्चेत्यस्य कार्यस्य कारणात्मकत्वात्कारणस्य च पूर्वं सत्त्वात्तदभिन्नमपि कार्यं तदा सदेवेति व्याख्यानं मनसि निधाय स्यादेतद्यदि कार्यस्य कारणाभेदः स्यात्स एव कुत इत्याशङ्कायां प्रत्यक्षं तावत्तत्राह **न च कारणादन्यदिति** । अनुमानान्यप्याह **किञ्चेत्यादिना** ॥ **गुरुत्वान्तरकार्यस्येति** । यद्यस्माद्भिन्नं तस्मात्तस्य गुरुत्वान्तरकार्यं गृह्यते । यथा पुलिकस्य रुचिकस्य यो गुरुत्वकार्योऽवनतिविशेषस्ततो द्विपुलिकस्य स्वस्तिकस्य गुरुत्वकार्योऽवनतिभेदोऽधिकः । न च तथा तन्तुगुरुत्वकार्यात्पटगुरुत्वस्य कार्यान्तरं दृश्यते । तस्मादभिन्नस्तन्तुभ्यः पट इत्यर्थः ॥ **एवं चेति** । उक्तरीत्या सत्कार्यवादस्य समर्थितत्वादित्यर्थः ।

श्री॰— **करोतीति** । जीवस्येति शेषः ।

च॰— उदाहरिष्यमाणकारिकायां प्रतिज्ञाभागं तावद्व्याकुरुते **कार्यं तावदिति** । तादृशसाध्यान्वितज्ञापकत्वरूपहेतुत्वावबोधकविभक्त्यन्तपञ्चकमानुपूर्व्या व्याचिख्यासुराद्यं तावद्विवृणोति **असदकरणादिति** । द्वितीयं व्यनक्ति **किञ्चेति** । तृतीयं व्याकुरुते **सर्वसंभवेति** । **तुरीयं** व्याख्याति **सा शक्तिरिति** । पञ्चमतात्पर्यं प्रकाशयति **न च कारणादिति** । तत्र हेत्वतराण्यभिधत्ते **किञ्चेति** ।

---

सु॰— **तेष्वपि मतभेदमाह** भोक्तृतामिति ।

अनु॰— भोक्तृतां चेतनस्याहुः केचित्तामपि नापरे ॥

**सर्वेऽपि साङ्ख्याः पुरुषस्य कर्तृत्वं नानुमन्यन्ते । क्रियावेशो हि कर्तृत्वम् । न चात्मनः परिस्पन्दलक्षणा क्रियोपपद्यते । सर्वगतत्वात् । नापि प्रयत्नलक्षणा । तस्याः अन्तःकरणवृत्तित्वात् । न च विक्रियालक्षणा । निर्विकारत्वात् । यथोक्तम् । 'तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य । कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्चेति' । तत्र केचिच्चेतनस्य भोक्तृतामाहुः । यथा भोक्तृभावादिति । अपरे तामपि नाहुः । यथा 'तस्मान्न बध्यते न मुच्यते नापि संसरति कश्चित् । बध्यते संसरति मुच्यते च नानाश्रया प्रकृतिरि'ति ।**

शे॰— **यथोक्तमिति** । अयमर्थः । चशब्दः पुरुषभेदेन धर्मान्तराणां समुच्चयार्थः । अत्र च विपर्यासादित्येवोक्ते त्रैगुण्यविपर्यासादित्यनन्तरोक्तं सम्बध्यते तन्निरासाय तस्मादित्युक्तम् । अनन्तरोक्तं हि सन्निधानादिदमो विषयो विप्रकृष्टं च तदो विषय इति विप्रकृष्टं त्रिगुणं तम्बध्यते । तस्मात्

त्रिगुणादेर्यो विपर्यासः पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वं अप्रसवधर्मित्वं च । तस्मात्तत्र चेतनत्वेनाविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते । चेतनो हि द्रष्टा भवति । नाचेतनः । साक्षी च दर्शितविषयो भवति । यस्मै हि प्रदर्श्यते विषयः स साक्षी । यथा हि लोकेऽर्थिप्रत्यर्थिनौ विवाद-विषयं साक्षिणे दर्शयतः । एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति चैतन्यादविषयत्वाच्च भवति साक्षी । अत एव द्रष्टाऽपि भवति अत्रैगुण्याच्चास्य कैवल्यम् । आत्यन्तिको हि दुःखत्रयाभावः कैवल्यं तस्य स्वाभाविकादेवात्रैगुण्यात्सुखदुःखमोहरहितत्वात्सिद्धम् । अत एवात्रैगुण्यान्माध्यस्थ्यम् । सुखी हि सुखं तुष्यन्दुःखी दुःखं द्विषन्न मध्यस्थो भवति तदुभयरहितस्तु मध्यस्थ उदासीन इति चोच्यते । विवेकित्वादप्रसवधर्मत्वाच्चाकर्तेति सिद्धमिति । **यथा भोक्तृत्वादितीति** । यद्यप्येतत्प्रागन्यथा व्याख्या-त्वान्न विवक्षितार्थसाधकं, तथाऽपि करिष्यमाणं व्याख्यानमभिप्रेत्य सम्मतितयाऽस्योपन्यास इति द्रष्टव्यम् ॥ **यथेति** । पुरुषश्चेदगुणोऽपरिणामी कथं तर्ह्यस्य मोक्षः । मुचेर्बन्धनविश्लेषार्थत्वात् । तस्मा-त्पुरुषमोक्षार्थमिति रिक्तं वच इत्याशङ्कानिरासायेदमुच्यते **तस्मादिति** । कस्तर्हीत्यत आह **बद्ध्यत इति** । अविद्वान्न कश्चित्पुरुषो बद्ध्यते न कश्चित्पुरुषः संसरति न कश्चित्पुरुषो मुच्यते प्रकृतिरेव नाना-पुरुषाश्रया प्रतिबद्ध्यते संसरति मुच्यते चेति बन्धमोक्षसंसाराः पुरुषे उपचर्यन्ते । यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्येते तदाश्रयेण भृत्यानां तद्रामित्वात्तत्फलस्य शोकलाभादेः स्वामिनि सम्बन्धात्, तथा भोगापवर्गयोः प्रकृतिगतयोरपि विवेकाग्रहात्पुरुषस्य सम्बन्ध उपपादित इति न दोषः ।

---

**स०— यथोक्तमिति** ॥ चशब्दः पुरुषबाहुल्ये(भेदे)न सह धर्मान्तराणि समुच्चिनोति । अत्र विपर्यासादित्येवोक्ते 'त्रैगुण्यविपर्ययात्' इत्यनन्तरोक्तं संबध्येत । अतः तन्निरासाय तस्मा-दित्युक्तम् । अनन्तरोक्तं हि सन्निधानात् इदमो विषयः, विप्रकृष्टं तदो विषय इति विप्रकृष्टं त्रिगुणं संबध्यते । तस्मात् त्रिगुणादेः यो विपर्यासः पुरुषस्य अत्रिगुणत्वं, विवेकित्वम्, अविषयत्वम्, असा-धारणत्वं, चेतनत्वम्, अप्रसविधर्मत्वं च, तस्मात् तत्र चेतनत्वेन अविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते । चेतनो हि द्रष्टा भवति । नाचेतनः । साक्षी च दर्शितविषयो भवति । यस्मै हि प्रदर्श्यन्ते विषयाः स साक्षी । एवं प्रकृतिरपि स्वरचितं विषयं पुरुषाय दर्शयतीति चैतन्यादविषयत्वाच्च भवति साक्षी । अत एव द्रष्टापि भवति । अत्रैगुण्याच्चास्य कैवल्यम् । आत्यन्तिको हि दुःखत्रयाभावः कैवल्यं तस्य च स्वाभाविकादेवात्रैगुण्यात् सुखदुःखमोहरहितत्वात्सिद्धम् । अत एवात्रैगुण्यान्माध्यस्थ्यम् । सुखी हि सुखं तुष्यन् दुःखी दुःखं द्विषन् न मध्यस्थो भवति । तदुभयरहितस्तु मध्यस्थ उदासीन इति चाख्यायते । विवेकित्वाच्चाप्रसवधर्मित्वाच्च अकर्तेति सिद्धम् । **भोक्तृभावादिति** सङ्घातपरार्थत्वादित्ये-

तच्छ्लोकव्याख्यानावसरे विवृतम् । **तस्मात् न बध्यते इति** । अगुणत्वात् अपरिणामित्वाच्चेत्यर्थः । कस्तर्हीत्यत आह **बध्यत इति** । अविद्वान् न कश्चित् पुरुषो बध्यते न संसरति न कश्चित्पुरुषो मुच्यते इति प्रकृतिरेव नानापुरुषाश्रया सती बध्यते संसरति प्रमुच्यते चेति बन्धमोक्षसंसाराः पुरुष उपचर्यन्ते इति । यथा जयापजयौ भृत्यगतावपि स्वामिनि उपचर्येते तदाश्रयाणां भृत्यानां तद्गामित्वात्तत्फलस्य । (तद्वत् पुरुषस्य) शोकलाभादेः स्वामित्वसंबन्धात् भोगापवर्गयोः प्रकृतिगतयोरपि विवेकाग्रहात् पुरुषस्य संबन्ध उपपादित इति (न दोषः) । पुष्कलं सर्वम् ।

प० — **तेष्वपीति** । सांख्येष्वपीत्यर्थः । क्रियेति किं परिस्पंद उच्यते उत प्रयत्नः अथ परिणामः न त्रयमपीति क्रमेण निराह **नचात्मन इत्यादिना ॥ तस्माच्चेति** । तदीयग्रन्थे पूर्वप्रकृतत्रिगुणमयत्वादिपरामर्शः । तस्माद्विपर्यासात् चेतनत्वादिकं तस्माच्चेतनत्वात्साक्षित्वं तत एव द्रष्टृत्वं च सिद्धं । त्रैगुण्यहीनत्वात्कैवल्यं । तत एवोदासीनत्वान्माध्यस्थ्यं मध्यस्थत्वं सिद्धं । तत एवाकर्तृभावश्च सिद्ध इत्यर्थः ॥ **नापि संसरतीति** । सुखदुःखभाङ्न भवतीत्यर्थः । **नानाश्रया** नानापुरुषसंबंधिनी ।

या० — तस्माच्च विपर्यासादिति कारिकाया अयमर्थः । चशब्दः पूर्वोक्तधर्मान्तरसमुच्चायकः । तस्मादित्यनेन च 'त्रिगुणमविवेकी'त्यादि परामृश्यते । तथा च तस्मात्त्रिगुणादेर्यो विपर्यासः पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मत्वं च । तत्र चेतनत्वेनाविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते । चेतनो हि द्रष्टा भवति नाचेतनः । साक्षी च दर्शितविषयो भवति । यस्मै दर्शितो विषयः स साक्षी । यथा हि लोकेऽर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः । एवं प्रकृतिरपि स्वरचितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी । स चाचेतनो विषयो वा शक्यो न विषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी । अत एव च द्रष्टा भवति । अत्रैगुण्याच्चास्य कैवल्यम् । आत्यन्तिको हि दुःखत्रयाभावः कैवल्यम् । तच्च तस्य स्वाभाविकादेवात्रैगुण्यात्सुखदुःखमोहरहितत्वात्सिद्धम् । अत एवात्रैगुण्यान्माध्यस्थ्यम् । सुखी हि सुखे तुष्यन्दुःखी हि दुःखं द्विषन्मध्यस्थो न भवति । तदुभयरहितस्तु मध्यस्थ इति चोदासीन इति चाख्यायते । विवेकित्वादप्रसवधर्मित्वाच्चाकर्तेति सिद्धमिति । तस्मान्न बध्यत इति कारिकायां तस्मादित्युपसंहारार्थम् । नानाश्रयेत्यस्य नानापुरुषाश्रया सतीत्यर्थः । अनेन बन्धमोक्षसंसाराः प्रकृतिगताः पुरुषे उपचर्यन्ते यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्येते । तदाश्रयेण भृत्यानां तद्भागित्वात् । तत्फलस्य च शोकलाभादेः स्वामिसम्बन्धत्वात् । भोगापवर्गयोश्च प्रकृतिगतयोरविवेकग्रहात्पुरुषसम्बन्ध इत्युक्तं भवति ।

**च०** — तद्वचनं सम्मतित्वेनोदाहरति **यथोक्तमिति** । तस्मादित्यत्र सर्वनाम्ना त्रिगुणमविवेकीत्यादि परामृश्यते । तद्विपर्यासाच्चेतनत्वादिरूपात्साक्षित्वं तत एव द्रष्टृत्वम् । त्रैगुण्यराहित्यात्कैवल्यं तत एवोदासीनत्वान्माध्यस्थ्यं तत एवाकर्तृभावश्च सिद्ध इत्यर्थः । **नापि संसरतीति** । सुखदुःखादिभोगवान्न भवतीत्यर्थः । **नानाश्रया** नानापुरुषसंबन्धिनी ।

**सु०** — **ननु कर्तृताभावे भोक्तृत्वमपि कथम् । तस्यापि क्रियावेशात्मकत्वादित्यत आह** स्वरूपेति ।

**अनु०** — स्वरूपचैतन्यबलात्स्वप्रकाशाच्च भोगिताम् ॥

**सुखदुःखाद्यनुभवितृत्वं हि भोक्तृत्वम् । तच्चात्मनः(1) क्रियावेशमन्तरेण स्वरूपचैतन्येनैवोपपद्यत इत्याहुः । कुतो भोक्तृत्वमाहुरित्यत उक्तं** स्वप्रकाशादिति । **सुखाद्यनुभवितृत्वस्य स्वप्रतीतिसिद्धत्वादित्यर्थः । यथाऽऽह । भोक्तृत्वयोग्यता च पुरुषस्य चैतन्यमिति । न चैवं कर्तृत्वमप्यङ्गीकर्तुमुचितम् । उपपत्तिबाधितत्वेन कर्तृत्वप्रतीतेरध्यासरूपत्वात् ।**

**शे०** — **क्रियावेशात्मकत्वादिति** । तस्य च परिस्पन्दनादिलक्षणस्य सर्वगतत्वादिनाऽऽत्मन्यसम्भवादिति भावः । स्वरूपचैतन्यबलादित्युक्तार्थे परस्य सम्मतिमाह **यथाऽऽहेति** । भोक्तृत्वयोग्यत्वं सुखदुःखाद्यनुभवितृत्वयोग्यत्वं पुरुषस्य चेतनत्वमित्यर्थः ॥ **उपपत्तिबाधितत्वेनेति** । क्रियावेशो हि कर्तृत्वमित्यादिपूर्वोक्तोपपत्तिबाधितत्वेनेत्यर्थः ।

**स०** — **यथाऽऽहेति** । टीकाकार इति शेषः । पुरुषस्य भोक्तृत्वयोग्यता या सा पुरुषस्य चैतन्यमेवेत्यर्थः । **उपपत्तिबाधितत्वेनेति** । 'क्रियावेशो हि कर्तृत्वम्' इत्यादिपूर्वोक्तोपपत्तिबाधितत्वेनेत्यर्थः ।

**प०** — प्रकाश्यत इति प्रकाशः स्वस्य प्रकाशः तस्मात्स्वप्रकाशात् । भावसाधनं चेदमित्युपेत्यर्थामाह **स्वप्रतीतिसिद्धत्वादिति** ॥ **उपपत्तीति** । क्रियावेशो हि इत्यादिना प्रागुक्तोपपत्तिबाधितत्वेनेत्यर्थः ।

**या०** — **स्वप्रतीतिसिद्धत्वादिति** । अनेन मूले प्रकाशशब्दः कर्मणि व्युत्पन्न इत्युक्तं भवति । भोक्तृत्वं स्वरूपचैतन्येनैवेत्यत्र सम्मतिमाह **यथाऽऽहेति** । नन्वेवं भोक्तृत्वस्य स्वाभाविकत्वापत्त्याऽपवर्गाभावप्रसङ्ग इत्यत उक्तं **योग्यतेति** । तथा च मोक्षे भोक्तृत्वयोग्यतासत्त्वेऽपि फलोपधानरूपस्य तस्याभावात्पुरुषार्थत्वोपपत्तिरिति भावः ॥

**च०** — मौलपञ्चम्यन्तप्रकाशपदस्य कर्मसाधनतां भावप्रधानतां चोपेत्य व्याचष्टे **स्वप्रतीतीति** ॥ **उपपत्तीति** । क्रियावेशहीनत्वादित्यर्थः ।

सु०-- नन्वेव तर्हि प्रतीतिसिद्धं भोक्तृत्वमपरे कथं नाभ्युपयन्तीत्यत आह प्रकृतेश्चेति ।

अनु०— प्रकृतेश्च स्वरूपस्य विवेकाग्रहमेव तु ॥
अभोगवादिनो भोगमाहु:

**भोगं भोगव्यवहारकारणम् । अयं तेषामाशयः । भोक्तृत्वं हि न पुरुषस्य स्वभावः । अपवर्गाभावप्रसङ्गात् । आगन्तुकं तु नोपपद्यते । अपरिणामित्वात् । अतः कर्तृत्वमिव भोक्तृत्वमप्यात्मनो न शक्यमङ्गीकर्तुम् । न च प्रतीतिविरोधः । प्रतीतेरभावात् । व्यवहार एव हि केवलं भोक्ताऽऽत्मेति । स च कर्तृत्वव्यवहारवत्प्रकृतिपुरुषविवेकाग्रहमात्रनिबन्धन इति ।**

शे०— **स च कर्तृत्वव्यवहारवदिति** । न चोपपत्तिबाधितत्वेन कर्तृत्वप्रतीतेरध्यासरूपत्वादित्यादिग्रन्थानुरोधेन, आरोपरूपकर्तृत्वप्रतीतेरभ्युगमस्य सिद्धत्वात्कर्तृत्वव्यवहारस्य विवेकाग्रहनिबन्धनत्वाभावात् कर्तृत्वव्यवहारवदिति कथं दृष्टान्तीकरणमिति वाच्यम् मतान्तराभिप्रायकत्वात् । तस्य ग्रन्थस्य तदनुरोधेनैतन्मते तदसिद्धेः । एतन्मते तु भोक्तृत्वप्रतीतिवत् कर्तृत्वप्रतीतिरपि नास्त्येवेति युक्तं दृष्टान्तीकरणमित्यवधेयम् ।

स०—**स च कर्तृत्वव्यवहारवदिति** । न च पूर्वं प्रतीतेरध्यासरूपत्वादित्यनेनारोपरूपप्रतीतेरङ्गीकृतत्वात् व्यवहारवदिति दृष्टान्तकथनमयुक्तमिति वाच्यम् । अभोगवादिना तस्य अनङ्गीकृतत्वात् । परं तु तद्विषयकव्यवहारस्य स्वमते सिद्धत्वाभिप्रायेण कर्तृत्वव्यवहारवदिति तेषामाशय इत्युक्तमिति न विरोधः ।

या०— **भोक्तात्मेतीति** । इदमुपलक्षणम् । अहं सुखी दुःखीत्यादिरपि व्यवहार एवेत्यपि द्रष्टव्यम् ।

सु०— **स्यादेतत् । येषां पुरुषो भोक्ता तेषां मोक्षाभावः स्यात् । प्रकृतिसंयोगनिमित्तो हि पुरुषस्य भोगस्तैरङ्गीक्रियते । 'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः' इति वचनात् । न च प्रकृतिपुरुषसंयोगः कदाप्यपैति येन पुरुषस्य मोक्षः स्यादित्यत आह** भेदग्रहादिति ।

अनु०—      भेदग्रहात्तयोः ॥
भोगिनां मुक्तिरुद्दिष्टा

तयोः **प्रकृतिपुरुषयो** भोगिनां **पुरुषस्य भोगमभ्युपगच्छतां मते । अयमभिसन्धिस्तेषाम् । प्रकृतिसंयोगो हि पुरुषस्य न केवलं भोगार्थः । किन्नामापवर्गार्थश्च । तत्र विवे-**

काग्रहसचिवो भोगाय भवति । विवेकग्रहे चापवर्गाय । करोतु नाम पौनःपुन्येन शब्दाद्युपभोगं प्रकृतिः । अनया विवेकख्यातिरकृतेति । कृतविवेकख्यातिस्तु न शब्दाद्युपभोजयति । अविवेकख्यातिनिबन्धनो हि तदुपभोगो, निबन्धनाभावे न भवितुमर्हतीति । तच्चोक्तम् 'दृष्टा मयेत्युपेक्षक एको, दृष्टाहमित्युपरमत्यन्या । सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य इति । तथा 'रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात् । पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिरि'ति । न च निवृत्ताऽपि पुनः प्रवर्त्स्यतीति शङ्कनीयम् । प्रयोजनाभावात् । उक्तं च 'प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति । या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य' इति । न च भेदग्रहसद्भावात्कैवल्याभावः । तस्यापि स्वेनैव निवृत्तेः ।

शे०— पुरुषस्येत्यस्यायमर्थः । प्रधानस्येति कर्मणि षष्ठी । प्रधानस्य सर्वकारणस्य पुरुषेण यद्दर्शनं तदर्थम् । तदनेन भोग्यता प्रधानस्य दर्शिता । ततश्च प्रधानं भोक्तारमन्तरेण न सम्भवतीति युक्ताऽस्य भोक्त्रपेक्षा । पुरुषस्यापेक्षां दर्शयति पुरुषस्य कैवल्यार्थं । तथा भोग्येन हि प्रधानेन सम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते । तच्च सत्त्वपुरुषान्यताख्याति-निबन्धनम् । न च सत्त्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थः पुरुषः प्रधानमपेक्षते । अनादित्वात्संयोगपरम्पराया भोगाय संयुक्तोऽपि पुनः कैवल्याय युज्यते इति युक्तम् । ननु भवत्वनयोस्संयोगो महदादिसर्गस्तु कुत इत्यत आह तत्कृतः सर्ग इति । संयोगो हि महदादिसर्गमन्तरेण न भोगाय कैवल्याय न पर्याप्त इति संयोग एव भोगापवर्गार्थं सर्गं करोतीत्यर्थं इति ॥ कदाऽप्यपैतीति । विभुत्वादिति भावः ॥ तच्चोक्तमिति । अयमर्थः । एकः पुरुषो मया प्रकृतिर्दृष्टा भिन्नतया ज्ञातेति मत्वोपेक्षको भवति । न शब्दाद्युपभुङ्क्त इत्यर्थः । अन्या प्रकृतिरहमनेन पुरुषेण स्वभिन्नतया दृष्टेति मत्वोपरमति शब्दादि नोपभोजयतीत्यर्थः । सति संयोगेऽपि तयोरित्यत्र तयोः संयोगे सत्यपीत्यन्वयः । सर्गस्य प्रयोजनं नास्तीत्यस्य भोगाय विवेकज्ञानाय वा सर्गोऽङ्गीकार्यः । विवेकख्यात्यनन्तरं च तयोः प्रयोजनयोरभावान्न सर्ग इत्यर्थः । तथा हि । कृतविवेकख्यातिरात्मा न शब्दाद्युपभोगं करोतीति तन्निबन्धनाविवेकख्यातेरपगमात् । नापि विवेकख्यातिं प्रकृतीम् ततो विविक्त आत्मा स्वार्थमभिमन्तुमर्हति । पुरुषार्थौ च भोगविवेकौ प्रकृत्यारम्भप्रयोजकावित्यपुरुषार्थौ सन्तौ न प्रकृतिं प्रयोजयतः । तदिदमुक्तं प्रयोजनं नास्ति सर्गस्येति । अत्र प्रयुज्यते सर्गे प्रकृतिरनेनेति प्रयोजनम् । तत्पुरुषार्थत्वेन नास्तीत्यर्थः । ननु भवतु पुरुषार्थः प्रकृतेः प्रवर्तको निवृत्तिस्तु कुतः प्रकृतेरित्यत उक्तं रङ्गस्येत्यादि । रङ्गस्येति स्थानेन स्थानिनः पारिषदानुपलक्षयति । आत्मानं शब्दाद्यात्मना पुरुषाद्भेदेन च प्रकाश्येत्यर्थः । ननु यथा नर्तकी नृत्यं पारिषदेभ्यो दर्शयित्वा निवृत्ताऽपि पुनस्तत्कुतूहलात्प्रवर्तते, तथा प्रकृतिरपि

पुरुषायात्मानं दर्शयित्वा निवृत्ताऽपि पुनः प्रवर्त्स्यतीत्याशङ्क्य निषेधति **न चेति** ॥ **प्रयोजनेति** । उक्तरीत्या प्रकृतिप्रवृत्तिप्रयोजकयोर्भोगविवेकज्ञानरूपप्रयोजनयोरभावादित्यर्थः । पुनरप्रवृत्तौ पुरुषदर्शनाद्य-सहत्वरूपं निमित्तान्तरमाह **उक्तं चेति** । सुकुमारताऽतिपेशलता । पुरुषदर्शनाद्यसहतेति यावत् । या दृष्टाऽस्मीत्यत्र विवेकेनेति शेषः । अयं भावः । असूर्यंपश्या हि कुलवधूर्यदि प्रमादात्परपुरुषेणेक्ष्यते तदा तथा यतते । यथैतां पुरुषान्तराणि न पुनः पश्यन्तीत्येवं प्रकृतिः कुलवधूतोऽप्यधिका दृष्टा विवेकेन न पुनः पुनर्द्रक्ष्यत इत्यर्थः ॥ **भेदग्रहसद्भावादिति** । भेदग्रहरूपान्तःकरणवृत्तिनाशका-भावादिति भावः ॥ **तस्यापि स्वेनैवेति** । कतकरजोन्यायेनेति भावः ।

स० — **पुरुषस्य दर्शनार्थमिति** । प्रधानस्येति कर्मणि षष्ठी । प्रधानस्य सर्वकारणस्य यद्द-र्शनं पुरुषेण तदर्थम् । तदनेन भोग्यता प्रधानस्य दर्शिता । ततश्च **भोग्यं** प्रधानं भोक्तारमन्तरेण न संभवतीति युक्ताऽस्य भोक्त्रपेक्षा । भोग्येन हि प्रधानेन संभिन्नः पुरुषः तद्गतं दुःखत्रयं स्वात्मनि अभिमन्यमानः कवल्यं प्रार्थयते । तच्च सत्त्वपुरुषान्यथाख्यातिनिबन्धनम् । न च सत्त्वपुरुषान्यथा-ख्यातिः प्रधानमन्तरेणेति कैवल्यार्थः पुरुषः प्रधानमपेक्षते । अनादित्वाच्च संयोगफलपरम्परया भोगाय संयुक्तोऽपि पुनः कैवल्याय युज्यत इति युक्तम् ।

ननु भवत्वनयोः संयोगः महदादिसर्गस्तु कुत इत्यत आह **संयोगो हीति** । संयोगो हि महदादिसर्गमन्तरेण न भोगाय कैवल्याय च पर्याप्त इति संयोग एव भोगापवर्गार्थः (सर्गं) करोती-त्यर्थः । **दृष्टेति** । करोतु नाम पौनःपुन्येन शब्दाद्युपभोगं प्रकृतिः । अनथा विवेकख्यतिरकृतेति कृतविवेकख्यातिस्तु न शब्दाद्युभोजयति । अविवेकख्यातिनिबन्धनो हि तदुपभोगो निबन्धनाभावे न भवितुमर्हति अंकुर इव बीजाभावे । प्राकृतान् हि सुखदुःखमोहात्मनः शब्दादींश्च अविवेकादेवात्मा मदर्थेयमिति मन्यते ॥ उत्पन्नविवेकः आत्मा न शब्दाद्युपभोगं करोति । पुरुषार्थौ च भोगविवेकौ प्रकृत्या-रम्भप्रयोजकावित्यपुरुषार्थौ सन्तौ न प्रकृतिं प्रयोजयत इति । तदिदमुक्तं **नास्ति प्रयोजनं सर्गस्येति** । अत्र प्रयुज्यते सर्गे प्रकृतिरनेनेति प्रयोजनम् । तच्च पुरुषार्थत्वेन नास्तीत्यर्थः । **रङ्गस्येत्यादि** । रङ्गस्येति स्थानेन स्थानिनः पारिषदानुपलक्षयति । आत्मानं शब्दाद्यात्मना पुरुषात् भेदेन च प्रकाश्ये-त्यर्थः । **प्रकृतेरिति** ॥ **सुकुमारता** अतिपेशलता । परपुरुषदर्शनासहिष्णुतेति यावत् । असूर्य-म्पश्या हि कुलवधूः यदि प्रमादात् विगलितसिचयाञ्चला चेदालोक्यते परपुरुषेण तदाऽसौ तथा प्रयतते यथैतां पुरुषान्तराणि न पुनः पश्यन्तीत्येवं प्रकृतिः कुलवधूतोऽप्यधिका दृष्टा विवेकेन न पुनर्द्रक्ष्यते इत्यर्थः ।

**प०** — **पुरुषस्यदर्शनार्थमिति ।** पुरुषकर्तृकप्रधानकर्मकदर्शनार्थम् । अत एव प्रकृतिपुरुषविवेके सति कैवल्यं भवतीति पुरुषस्य कैवल्यार्थमित्यर्थः ॥ **पंग्वन्धादिवदिति ।** अन्धपंगुवदित्यर्थः । अजाद्यदन्तमित्येतन्नाश्रितम् ॥ **कदाप्यपैतीति ।** विभुत्वादित्यर्थः ॥ **विवेकग्रहेचापवर्गायेति ।** भवतीति पूर्वेणान्वयः । तत्कथमित्यतो द्वयमपि व्यनक्ति **करोतु नामेति ॥ विवेकेति च । अनया** प्रकृत्या । अकृतेतीतिशब्दो हेत्वर्थः पूर्वेणान्वयः ॥ **कृतेति ।** अनयेत्यनुषङ्गः ॥ **दृष्टेति ।** स्वविविक्तत्वेन दृष्टेत्यर्थः । **उपेक्षकः** शब्दादेरभोक्ता ॥ **उपरमतीति ।** शब्दादिकं न भोजयति प्रकृतिरित्यर्थः ॥ **रङ्गस्येति ।** रङ्गस्थजनस्येत्यर्थः । **दर्शयित्वा** स्वकीयनर्तनमिति योज्यम् ॥ **तस्यापि स्वेनैवेति ।** कतकरजोन्यायेनेति भावः ।

**या०** — 'पुरुषस्य दर्शनार्थमि'ति कारिकाया अयमर्थः । प्रधानस्येति कर्मणि षष्ठी । प्रधानस्य सर्वकारणस्य दर्शनं यत्पुरुषेण तदर्थम् । तदनेन भोग्यता प्रधानस्य दर्शिता । ततश्च भोग्यं प्रधानं भोक्तारमन्तरेण न सम्भवतीति युक्ता तस्य भोक्त्रपेक्षा । पुरुषस्यापेक्षां दर्शयितुं पुरुषस्य कैवल्यार्थमिति । तथा भोग्येन हि प्रधानेन सम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते । तच्च सत्त्वपुरुषान्यथाख्यातिनिबन्धनम् । न च सत्त्वपुरुषान्यथाख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते । अनादित्वाच्च संयोगपरम्परया भोगाय संयुक्तोऽपि कैवल्याय पुनः संयुज्यत इति युक्तम् । ननु भवत्वेतयोः संयोगो महदादिसर्गस्तु कुतस्त्य इत्यत उक्तम् **तत्कृतः सर्ग इति ।** संयोगो हि महदादिसर्गमन्तरेण न भोगाय कैवल्याय च पर्याप्त इति संयोग एव भोगापवर्गार्थं सर्गं करोतीत्यर्थ इति । 'दृष्टा मयेत्युपेक्षक एक' इत्यस्यायमर्थः । एकः पुरुषो मया दृष्टा भिन्नतया ज्ञाता प्रकृतिरिति मत्वोपेक्षको भवति शब्दाद्युपभोगं न करोतीत्यर्थः । अन्या प्रकृतिरहम् अनेन पुरुषेण स्वभिन्नतया दृष्टेति मत्वोपरमति शब्दादि नोपभोजयतीत्यर्थः । तयोः संयोगे सत्यपीत्यन्वयः ॥ **सर्गस्य प्रयोजनं नास्तीति ।** भोगाय विवेकज्ञानाय वा सर्गोऽङ्गीकार्यः । विवेकख्यात्यनन्तरं च तयोः प्रयोजनयोरभावान्न सर्ग इत्यर्थः । तथा हि । कृतविवेकख्यातिरात्मा न शब्दाद्युपभोगं करोति । तन्निबन्धनाविवेकख्यातेरपगमात् । नापि विवेकख्यातिं प्राकृतीं ततो विविक्त आत्मा स्वार्थमभिमन्तुमर्हति । पुरुषार्थौ च भोगविवेकौ प्रकृत्यारम्भप्रयोजकावित्यपुरुषार्थौ सन्तौ न प्रकृतिं प्रयोजयतः तदिदमुक्तम् । **प्रयोजनं नास्ति सर्गस्य इति ।** अत्र प्रयुज्यते सर्गे प्रकृतिरनेनेति प्रयोजनं तत् पुरुषार्थत्वेन चास्तीत्यर्थ इति । रङ्गस्य दर्शयित्वेत्यस्य रङ्गस्येति स्थानेन स्थानिनः पारिषदान् लक्षयति । आत्मानं शब्दाद्यात्मना पुरुषाभेदेन प्रकाश्येत्यर्थो ज्ञातव्यः ॥ **पुनः प्रवर्त्स्यतीति ।** यथा नर्तकी नृत्यं पारिषदेभ्यो दर्शयित्वा निवृत्तापि पुनस्तत्कुतूहलात्प्रवर्तते तथेत्यर्थः ॥ **प्रयोजना-**

भावादिति । उक्तरीत्या प्रकृतिप्रवृत्तिप्रयोजकयोर्भोगविवेकज्ञानरूपप्रयोजनयोरभावादित्यर्थः । पुनरप्रवृत्तौ निमित्तान्तरं तदभिमतं दर्शयितुमाह **उक्तं चेति** ॥ **सुकुमारतरमिति** । पुरुषदर्शनासहिष्ण्वित्यर्थः । या दृष्टाऽसीत्यत्र विवेकेनेति शेषः । अयं भावः । असूर्यंपश्या हि कुलवधूर्या यदि प्रमादात्परपुरुषेणालोक्यते तदा तथा प्रयतते, कथं, यथा पुरुषान्तराणि न पुनः पश्यन्तीत्येव प्रकृतिः कुलवधूतोऽप्यधिका, दृष्टा विवेकेन, न पुनर्दृश्यत इति । **न च भेदग्रहेति** भेदग्रहरूपान्तःकरणवृत्तिनाशकस्यान्यस्याभावादित्यर्थः ।

**श्री०** — कुत इत्यत आह **अनयेति** । प्रकृत्येत्यर्थः ॥

**च०** — **पुरुषस्य दर्शनार्थं** । पुरुषकर्तृकप्रधानकर्मकदर्शनार्थम् । दृष्टेतिकारिकाया अयमर्थः । एकः पुमान् मया प्रकृतिर्दृष्टा भिन्नत्वेन ज्ञातेति मत्वोपेक्षको भवति शब्दाद्युपभोगं न करोति । अन्या प्रकृतिर्भिन्नेन पुंसा स्वभिन्नत्वेन दृष्टेति मत्वोपरमति **शब्दादि नोपभोजयतीति** । रङ्गस्य रङ्गस्थजनस्य दर्शयित्वा स्वकीयनर्तनमिति योज्यम् । **तस्यापि स्वेनैवेति** । कतकरजोन्यायेनेति भावः ।

**सु०** — **ननु च येषां मते पुरुषस्य भोग एव नास्ति तेषां कथं मोक्षः । बन्धाभावात् । तथा च योगानुशासनवैयर्थ्यमित्यत** आह स एवेति ।

**अनु०** — स एवाभोगवादिनाम् ॥

---

**स भेदग्रह एव मुक्तिरुद्दिष्टा । भेदाग्रहनिबन्धनो भ्रम एव हि बन्धः । स च भेदग्रहे सति निवर्तते सैव मुक्तिः । न त्वपराऽस्तीत्यतः स एवेत्युक्तम् । न पुनर्भेदग्रह एव मुक्तिः । तस्यापि निवर्तनीयत्वात् । नापि विवेकख्यातिमित्युक्तत्वादिति ॥**

**शे०** — ननु माऽस्तु तेषां पक्षे मोक्षोऽपीत्यत आह **तथा चेति** ॥ **भेदाग्रहनिबन्धनो भ्रम एव बन्ध इति** । ननु भोक्तृत्ववादिनो मते कर्तृत्वाध्यासस्य सत्त्वेऽपि अभोक्तृत्ववादिनो मते कर्तृत्वस्य भोक्तृत्वस्य वा प्रतीतेरेवाभावस्योक्तरीत्या सिद्धया तद्विषयकभ्रमस्याङ्गीकर्तुमशक्यत्वाद्द्रष्टृत्वादेश्च वास्तवत्वेन तद्विषयकस्यापि तस्यासम्भवात्कथमेतदिति चेत् । न एतन्मते स्वाधीनत्वविषयकभ्रमसद्भावेन तस्यैव भ्रमशब्देन ग्रहणात् । तथा व्यवहार एव भ्रमशब्देन विवक्षित इत्यप्याहुः ॥ **इत्यत इति** । अनेनाभिप्रायेणेत्यर्थः ॥ **निवर्तनीयत्वादिति** । अपुरुषार्थत्वादिति भावः । भेदग्रहस्यापुरुषार्थत्वे दृष्टा मयेत्येतत्कारिकाव्याख्यानरूपवाचस्पतिग्रन्थसम्मतिमाह **नापीति** । अत्र नापि विवेकख्यातिमित्युक्तत्वादित्येवमूलपाठः । 'प्राकृतीं ततो विविक्त आत्मा स्वार्थमभिमन्तुमर्हती'त्युत्तरेणान्वयाच्च विवक्षितसिद्धिरिति द्रष्टव्यम् ॥ छ ॥

**स०** — अत्र भ्रमशब्देन व्यवहारो ग्राह्यः । भ्रमस्य तेनानङ्गीकृतत्वात् ।

ननु भेदग्रहस्य मुक्तौ निवर्तनीयत्वात् स एव मुक्तिरित्यतस्तदभिप्रायमाह **भेदाग्रहनिबन्धन इति । न त्वपराऽस्तीत्यत इति । इत्यतः** इत्यभिप्रेत्येत्यर्थः । तस्यापि निवर्तनीयत्वे परकीय-संमतिमाह **नापि विवेकख्यातिमिति ।** नापि विवेकख्यातिमित्य(त्रात्मा)स्य स्वार्थमभिमन्तुमर्हतीत्य-नेन संबन्धः । **उक्तत्वात्** 'दृष्टा मये'ति श्लोक इति शेषः । यद्यपि परेण विवेकख्यातिप्रकृती इति उभयविषयकाभिमानराहित्यमुक्तम् । तथाऽपि प्रकृतत्वात् नापि विवेकख्यातिमित्येवानूदितम् ।

**प०** — **इत्युक्तत्वादिति ।** 'नापि विवेकख्यातिं प्राकृतीं ततो विविक्त आत्मा स्वार्थमभि-मन्तुमर्हति' इति साङ्ख्यैरुक्तत्वात्प्रकृतिसंबंधविवेकख्यातिरपि नेत्यर्थः ॥ **पूर्वपक्षोपन्यासः ॥**

**या०** — **निवर्तनीयत्वादिति ।** तस्य पुरुषार्थत्वाभावादिति भावः । भेदग्रहस्य पुरुषेणा-भ्यर्थनीयत्वाभाव एव कुत इत्यतस्तत्र साङ्ख्यसंमतिमाह **नापि विवेकेति ।** नापि विवेकख्यातिं प्राकृतीं ततो विविक्त आत्मा स्वार्थमभिमन्तुमर्हतीति साङ्ख्यैरुक्तत्वादित्यर्थः । सूत्रकृतेत्यस्यानन्तरं विल-म्बमसहमानेनेति शेषः ।

**श्री०** — **बन्धाभावादिति ।** तद्ध्वंसस्यैव मोक्षत्वादित्यर्थः ॥ **योगेति ।** बन्धनिवृत्तिसाध-नीभूतभक्त्यादियोगप्रतिपादकशास्त्रेत्यर्थः । **सैव** भ्रमनिवृत्तिरेव ॥ **इत्यत इति ।** भेदग्रहस्य भ्रम-निवृत्तौ निमित्तत्वेन निमित्तनिमित्तिनोरभेदोपचारमभिप्रेत्येत्यर्थः । एवकारव्यावर्त्यं दर्शयति **न पुनरिति ।** अस्य दोषस्योल्बणत्वमित्यन्वयः ।

**च०** — **नापीति ।** प्रकृतिसंबन्धिविवेकख्यातिरपि नेत्यर्थः ॥ इति पूर्ववादिमतोपन्यासः ॥

**सु०** — **एवमुपन्यस्तं मतमधुना निरसनीयम् । तत्र सूत्रकृता क्रममविवक्षित्वा 'रचना-नुपपत्तेश्च नानुमानमि'ति प्रथमं परपक्षोपालम्भं विधायानन्तरं 'प्रवृत्तेश्चेति' स्वपक्षसाधनं विहितम् । भाष्यकारस्तु साधकप्रमाणस्य तत्त्वप्रतिपत्त्यन्तरङ्गत्वेन तदुपन्यासस्य प्राथम्यं परपक्ष-निरासस्य तस्थैर्यहेतोर्बहिरङ्गत्वेन तदुपन्यासस्यानन्तर्यमिति क्रममपि ग्राहयिष्यन् व्यत्ययेन व्याचक्षाणः प्रवृत्तेश्चेति सूत्रस्य पातनिकार्थमाह** ईशस्येति ।

अनु० — ईशस्यासंग्रहादेव न युक्तौ तावुभावपि ॥

असंग्रहात् **अनभ्युपगमात् । एवेत्यस्य दोषस्योल्बणत्वं सूचयति ।** तावुभावपि **पुरुषस्य भोक्तृत्वाभोक्तृत्वपक्षौ ।**

**शे०**—नन्वीशस्यासंग्रहादेवेति वाक्यं न तावत्पूर्वग्रन्थशेषः। नापि उत्तरग्रन्थशेषः। सूत्रव्याख्यानरूपत्वाभावात्। न च साक्षात्सूत्रार्थकथनरूपत्वाभावेऽपि प्रवृत्तेश्चेत्येतत्सूत्रव्याख्यानाय पातनिकारूपत्वेन तद्व्याख्यानपरोत्तरग्रन्थशेषत्वं संभवतीति वाच्यम्। रचनानुपपत्तेश्चेति पूर्वसूत्रपरित्यागेन पूर्वं प्रवृत्तेश्चेति सूत्रव्याख्यानस्याप्यसङ्गततया तच्छेषत्वासंभवात्। न च साधकप्रमाणोपन्यासपरत्वात्प्रवृत्तेश्चेत्यस्य प्राथम्यं परपक्षनिरासोपन्यासार्थत्वाच्च रचनानुपपत्तेश्चेत्यस्यानन्तर्यमिति सूत्रद्वयस्य क्रमज्ञापनाय व्यत्यासेन व्याख्यानमिति वाच्यम्। वैपरीत्यस्यापि वक्तुं शक्यत्वेन स्वपक्षसाधकपरपक्षनिरासोपन्यासत्वेन पूर्वोत्तरभावनियमायोगात्। योगे वोक्तरीत्या सूत्रद्वयस्य सूत्रकृताऽपि सन्निवेशनीयत्वेन यथोक्तसूत्रकारीयसन्निवेशायोगप्रसङ्गादित्यतः पूर्वग्रन्थेन सङ्गतिं सूचयन्नेव प्रवृत्तेश्चेत्येतत्सूत्रव्याख्यानपरोत्तरग्रन्थशेषतया वाक्यं सङ्गमयितुं सूत्रकारीययथोक्तसूत्रद्वयसन्निवेशोपपादनपुरःसरं स्वपक्षसाधकोपन्यासपरतया प्रवृत्तेश्चेत्यस्य प्राथम्यं रचनानुपपत्तेरित्यस्य परपक्षनिरासोपन्यासपरतया तदानन्तर्यं च तत्र हेतूक्त्योपपादयति **एवमित्यादिना**॥ **पातनिकार्थमिति**। प्रसक्त्यर्थमित्यर्थः। उत्तरत्र प्रकारान्तरेणापि दूषणेनैवकारस्य तद्व्यावर्तकत्वायोगाद्वैयर्थ्यं विरुद्धार्थत्वं चेत्यत आह **एवेतीति**। ताविति न भोक्तृत्वाभोक्तृत्ववादिनोः परामर्शः। तयोः पूर्वत्र प्रकृतत्वेऽपि स्वतो युक्तत्वाभावेनायुक्तावित्यस्यासामञ्जस्यप्रसङ्गात्। अनुपपन्नपक्षस्वीकारेणायुक्तत्वोपपादने च लक्षणाप्रसङ्गादित्यभिप्रेत्य पूर्वप्रकृतपक्षयोरेव परामर्शोऽयमित्याह **तावुभावपीति**।

---

**स०**— **पातनिकार्थमिति**। प्रसक्त्यर्थमित्यर्थः।

**प०**— **ग्राहयिष्यन्** प्रतिबोधयिष्यन्नित्यर्थः। **पातनिकार्थमिति**। अवतारिकोदयार्थमित्यर्थः॥

**या०**— **पातनिकार्थमिति**। तत्सूत्रनिवर्त्याशङ्कोत्थापनार्थमादौ किञ्चिद्दूषणमाहेत्यर्थः।

**च०**— **पातनिकार्थं** तत्सूत्रव्युदसनीयशङ्कोत्थापनार्थम्।

**सु०**— **नन्वप्रामाणिकस्येश्वरस्यानभ्युपगमे कथमयुक्तत्वमित्यतः प्रवृत्तेश्चेति सूत्रार्थतयेश्वरे प्रमाणमाह** चेतनेति।

अनु०— चेतनेच्छानुसारेण यदा दृष्टः पटोद्भवः॥
एतादृशत्वमन्यस्य वस्तुत्वात्केन वार्यते॥

यदा **यस्मात्**। **तस्मादिति लभ्यते**। एतादृशत्वं **पटवच्चेतनेच्छानुसारेणोद्भूतत्वम्**। अन्यस्य **महदादेः**, वस्तुत्वात् **कार्यत्वादनुमीयमानमिति शेषः**। केन इत्याक्षेपे।

**अयमत्र प्रयोगः। महदादिकं चेतनेच्छाधीनोत्पत्तिकं कार्यत्वात्पटवदिति**। यद्वा **महदाद्युद्भवः चेतनेच्छाधीन उद्भवत्वात्पटोद्भववदिति प्रयोक्तव्यम्। प्रयोगद्वयसूचनाय**

**पटोद्भव दृष्टान्तमुक्त्वा वस्तुत्वादिति हेतुमाह । एवमुक्तावुपलक्षणत्वं हि उभयत्र ज्ञायेत । उपलक्षणं चैतत् । महदाद्युपादानं चेतनाधिष्ठितं उपादानत्वात्तन्तुवदित्याद्यपि द्रष्टव्यम् । न चान्यश्चेतनस्तथा भवितुमर्हतीति सर्वातिशयी पुरुष ईश्वर एव सिध्यतीति ।**

शे०— **कथमयुक्तत्वमिति** । तथा सति भवद्भिरप्यप्रामाणिकस्य नरविषाणादेरनभ्युपगमेन भवत्पक्षस्याप्ययुक्तत्वप्रसङ्गादिति भावः ॥ **प्रमाणमाहेति** । जाताविदमेकवचनम् । अनुमानरूपप्रमाणान्याहेत्यर्थः । यदाशब्दस्य कालार्थतायाः प्रकृतेऽयोगाद्धेत्वर्थतया तं व्याचष्टे **यदा यस्मादिति** । 'यदाशब्दस्तु हेत्वर्थे कालार्थे चापि भण्यत' इति वचनादिति भावः ॥ **लभ्यत इति** । यत्तदोर्नित्यसम्बन्धादिति भावः । एतादृशत्वमित्यत्रैतच्छब्दो न प्रकृतपटोद्भवपरामर्शकः। तथा सति वस्तुत्वादिति हेतुकथनस्याश्लिष्टत्वापातात् । किन्तूद्भूतपटपरामर्शक इति भावेनैतादृशत्वमित्येतद्व्याख्याति **एतादृशत्वमिति** । यस्यकस्यचिच्चेतनेच्छानुसारेणोद्भूतत्वसाधनस्य प्रकृतानुपयोगित्वेनान्यपदस्य तत्परत्वायोगात्प्रकृतोपयोगिगा तद्व्याचष्टे **अन्यस्येति** । अनादिप्रागभावादावव्यभिचारायाह **कार्यत्वादिति** । वस्तुत्वस्य ज्ञापकहेतुत्वेन कारकहेतुत्वाभावात्तदनुगुणं शेषं पूरयति **अनुमीयमानमिति शेष इति** ॥ **आक्षेप इति** । न केनापीत्याक्षेप इत्यर्थः । उत्तरत्र परिहाराभावेन प्रश्नार्थत्वायोगादिति भावः । नन्वत्रोद्भवदृष्टान्तानुसारेणोद्भवत्वस्यैव हेतुतया वा, कार्यत्वहेत्वनुरोधेन पटादेरेव दृष्टान्ततया वा वक्तव्यत्वात्तथाऽनुक्त्वोद्भवस्य दृष्टान्ततया कार्यत्वस्य च हेतुतयोक्तिर्भाष्यकारीयाव्यर्थेत्यतः तथोक्तावेकैकप्रयोगमात्रसूचकत्वप्राप्त्या प्रयोगद्वयप्रकारसूचकत्वालाभात्तल्लाभार्थतया तथोक्तेरर्थवत्त्वमित्यभिप्रेत्य प्रयोगद्वयप्रकारसूचकतया तथोक्तेरर्थवत्तामुपदर्शयितुं किं तत्प्रयोगद्वयमित्यतः तत्प्रकारमुपदर्शयति **अयमत्र प्रयोग इत्यादि**। एवं प्रयोगद्वयप्रकारं प्रदर्श्य तत्सूचकतया भाष्यकारीयविचित्रोक्तेरर्थवत्तामाह **प्रयोगद्वयेति** ।अन्यथा, उद्भवादित्येवावक्ष्यदिति भावः । उपलक्षणं चैतत् । वस्तुत्वादिति हेतुमुक्त्वा पटोद्भव इतिदृष्टान्तमाहेत्यपि द्रष्टव्यम् । कथं विचित्रोक्त्याऽपि प्रयोगद्वयसूचनसिद्धिरित्यत आह **एवमुक्ताविति** उद्भवस्य दृष्टान्ततया वस्तुत्वस्य च हेतुतयोक्तावित्यर्थः ॥ **उभयत्रेति** । दृष्टान्तहेतुवचनयोरित्यर्थः । पटोद्भव इति वचनेन स्वानुरूपस्योद्भवत्वहेतोः, कार्यत्वादिति हेतुवचनेन स्वानुरूपस्य दृष्टान्तस्योपलक्षणत्वं विज्ञायत इत्यर्थः । अन्यथा वाक्यार्थानुपपत्तिरिति भावः । यद्यपि वक्ष्यमाणरीत्या एकप्रकारोक्तावप्युपलक्षणतया व्याख्यानेनापि प्रयोगद्वयस्य सूचकत्वं सिद्ध्यत्येव । तथाऽपि विचित्रोक्तौ वाक्यार्थानुपपत्त्या उपलक्षणत्वावश्यम्भाववदेकप्रकारोक्तौ तदनुपपत्त्यभावेनोपलक्षणत्वानवश्यम्भावान्न नियमेन तत्सिद्धिरित्यभिप्रेत्य प्रयोगद्वयसूचनार्थत्वं विचित्रोक्तेराश्रितमित्यवधेयम् ॥ **इत्यपीति** । उपलक्षणं चैतत् । महदादिकर्ता चेतनः स्वतः प्रवृत्तिमत्त्वात् कुविन्दवदित्यपि द्रष्टव्यम् । इत्याद्यपीति

पाठे आदिशब्दस्यैवायमर्थः । नन्वेतैरनुमानैर्महदादेश्चेतनाधीनत्वमेव सिद्धम् । तच्च जीवाधीनतयाऽप्युपपद्यत इति नानेनेश्वरसिद्धिरित्यत आह **न चेति । तथेति ।** महदादिनियामक इत्यर्थः ।

**स०— एवमुक्ताविति ।** विचित्रत्वेनोक्तावित्यर्थः । उद्भवं दृष्टान्तमुक्त्वा उद्भवत्वस्यैव हेतूकर्तुं शक्यत्वेपि वस्तुत्वादिति यदा हेतूकृतं तेन ज्ञायते उद्भवपदेन हेतुं तादृशं पक्षं च लक्षयित्वा महदाद्युद्भव इत्यादिद्वितीयप्रयोगः, वस्तुत्वादित्यनेन घटलक्षणं वस्तु दृष्टान्तं लक्षयित्वा तादृशं पक्षं च लक्षयित्वा महदादिकमित्यादि प्रथमप्रयोगश्च ज्ञायत इति भावः । वस्तुत्वादित्यस्य ईश्वरे व्यभिचारात् कार्यत्वादिति व्याख्यातम् । **उपलक्षणं चैतदिति ।** परस्य लक्षणया लब्धं यदनुमानद्वयं तदुपलक्षणमित्यर्थः ।

**प०— सूत्रार्थतयेति ।** पटादावपि चेतनप्रवृत्तेर्दर्शनात् , महदादावपि चेतनप्रवृत्तेरनुमातुं शक्यत्वादिति सूत्रार्थतयेत्यर्थः । वस्तुत्वादित्यस्यार्थः **कार्यत्वादिति ।** वस्तुत्वमात्रस्य नित्ये पि)सत्त्वे-(पि)नात्र विवक्षितपरिणामरूपोद्भवत्वाभावेन व्यभिचारापत्तेरिति भावः ॥ **उभयत्रेति ।** हेतुदृष्टान्तयोरननुरूपयोरुक्तौ अनुरूपपक्षदृष्टान्तयोरुपलक्षणतया ग्रहणेन प्रयोगद्वयं ज्ञास्यन्ति । आप्तोक्तत्वस्य शिष्याणां निश्चयादिति भावेनैवमुक्तिरित्यर्थः । स्वातन्त्र्येण प्रकृतिकर्तृत्वस्य साक्षाद्विरोध्यनुमानं स्वयमाह **उपलक्षणञ्चैतदित्यादिना ॥ इत्याद्यपीति ।** महदादिकं प्रति स्वतन्त्रकारणं चेतनरूपं स्वतन्त्रत्वात् तादृशपटादिकारणवदित्यादिरादिपदार्थः । **ईश्वर एव सिध्यतीति ।** नन्वेवं शास्त्रयोनिसूत्रविरोधः । तत्रानुमानिकत्वनिरासेनेश्वरस्य शास्त्रैकगम्यतोक्तेः । अदृष्टद्वारा जीवानादायोक्तहेतूनामुपपत्तेश्चेति चेन्न । तत्र केवलानुमानगम्यत्वनिरासेपि श्रुत्युपेतानुमानगम्यत्वानिरासात् । श्रुतयश्चोत्तरत्र व्यक्ताः । हेतुवादस्य श्रुतौ अतीवादरमकुर्वाणं प्रत्यनुमानस्यैवादावुक्तिरिति तात्पर्यात् ।

**या०— कार्यत्वादिति ।** अन्यथा नित्ये व्यभिचार इति भावः ॥ **उभयत्रेति ।** हेतुदृष्टान्तवचनयोरित्यर्थः । हेतुवचनेन तदनुरूपो दृष्टान्त उपलक्ष्यते दृष्टान्तवचनेन च स्वानुकूलो हेतुरुपलक्ष्यतेऽन्यथा वाक्यासामञ्जस्यात् । तथा चोक्तप्रयोगद्वयसिद्धिरिति भावः ॥ **इत्याद्यपीति ।** अत्रादिपदेन महदादिकर्तृ चेतनरूपं भवितुमर्हति स्वतः प्रवृत्तिमत्त्वात्पटादिकर्तृवदिति प्रयोगो ग्राह्यः ।

**श्री०—** यद्यपि पटोद्भवेऽपि कार्यत्वाख्यं वस्तुत्वमस्तीति युक्तं दृष्टान्तत्वं तथा चैक एव प्रयोगो भविष्यति । तथाऽपि कार्यभूतपटादेरेव दृष्टान्तत्वसम्भवे पटोद्भवपर्यन्त कुतो धावनं कार्यमित्यकौशलपरिहाराय प्रयोगद्वयेत्युक्तम् । **एतत्** प्रयोगद्वयकथनम् ॥ **आधिष्ठितं** प्रेरितम् । तथाऽधिष्ठाता प्रेरक इत्यर्थः ।

च० - **कार्यत्वादिति** । तेन नित्ये नानैकान्त्यमिति भावः । उभयत्र हेतुनिदर्शनवचनयोः वाक्यासामञ्जस्यपरिजिहीर्षया हेतुवचनेन तदनुरूपो हेतुरुपलक्ष्यत इति भावः । **सर्वातिशयी** सर्वकर्मकातिक्रमकर्ता ।

**सु०— स्यादेतत् । महदादिकं न तावत्प्रत्यक्षसिद्धम् । अव्यक्तत्वात् । अतः सांख्याचार्यवचनात् तत्प्रयुक्तानुमानाद्वा तदवगमोऽभ्युपगन्तव्यः । तैश्चानेवंविधमेव तदुक्तमनुमितं चेति बाधः । अन्यथाऽऽश्रयासिद्धिरिति । मैवम् । वेदतस्तदवगमात् । उक्तं हीदम् 'अजामेकामि'त्यादिश्रुतिः प्रधानमपि प्रतिपादयतीति ।**

**ननु पुरुषश्चेतनो नान्तःकरणम् । इच्छा चान्तःकरणधर्मो न चेतनस्याविकारस्य । अतः अप्रसिद्धविशेषणता बाधो वा । पटादेरप्येवम्भावाभावाद्दृष्टान्तस्य साध्यवैकल्यं चेति चेन्न । आत्मन एवेच्छावत्त्वस्य वक्ष्यमाणत्वात् ।**

शे०— मूले केन वार्यत इत्यंशस्य वैयर्थ्यमाशङ्क्य प्रसक्तदोषाणां सुपरिहार्यतया नानुमानाप्रामाण्यापादनक्षमत्वमित्यर्थसूचकत्वान्न तदिति भावेन तत्सूचकतया तद्योजयितुं पक्षसाध्यहेतुषु प्रसक्तदोषान्क्रमेण परिजिहीर्षुः प्रथमं पक्षदोषमुद्धर्तुं तमाशङ्कते **स्यादेतदिति** । महदादिकं किं सिद्धं पक्षीक्रियते किंवाऽसिद्धम् । आद्येऽपि तत्सिद्धिः किं प्रत्यक्षात् किंवा साङ्ख्याचार्यवचनात् तत्प्रयुक्तानुमानाद्वेति विकल्पान्मनसि निधायाद्यं दूषयति **न तावदिति** । द्वितीयतृतीयावुत्थापयति **अत इति** । अन्यस्याभावादिति भावः । अस्त्वेवमेव तर्हीत्यतो धर्मिग्राहकविरोधान्नैवमित्याशयेन पक्षद्वयं दूषयति **तैश्चेति** ॥ **अनेवंविधमेवेति** । स्वातन्त्र्येणाचेतनाधीनोत्पत्तिकमेवेत्यर्थः ॥ **अनुमितं चेति** । अनुमानं च भेदानां परिमाणादित्यादिकमुत्तरत्राकर एव स्फुटम् । असिद्धमेव महदादिकं पक्षीक्रियत इति आद्यद्वितीये दोषमाह **अन्यथेति** ॥ **वेदत इति** । 'महतः परमव्यक्तमि'त्यादिवेदत इत्यर्थः । तथा च नाश्रयासिद्धिर्नापि धर्मिग्राहकप्रमाणबाधः । वेदेनेश्वराधीनतयैव तत्प्रतिपादनादिति भावः । ननु सर्वस्यापि वेदस्य भगवत्परत्वस्यैव त्वयाऽप्यभ्युपगमात्कथं वेदतो महदादिसिद्धिस्त्वत्पक्ष इत्यतः परममुख्यया वृत्त्या तस्य भगवत्परत्वेऽपि मुख्यया वृत्त्याऽन्यप्रतिपादकत्वस्याप्यङ्गीकारान्नानुपपत्तिरित्यभिप्रेत्योक्तार्थे सम्मतिमाह **उक्तं हीति** ॥ **अजामेकामिति** । आहेत्यादिनेति शेषः । प्रधानमित्युपलक्षणम् । महदाद्यपीत्यपि द्रष्टव्यम् । यद्यप्यत्र महद दिकं न तावत्प्रत्यक्षसिद्धमित्यादिपूर्वग्रन्थानुरोधेन महदादिस्वरूपसाधकं वाक्यमेवोदाहर्तव्यम् । न त्वजामेकामिति प्रधानप्रतिपादकं वाक्यमपि । तथाऽप्युपलक्षणं चैतदित्यादिना महदाद्युपादानं चेतनाधिष्ठितमिति मह-

दाद्युपादानपक्षकस्याप्यनुमानस्य प्रदर्शितत्वात्तत्र धर्मिग्राहकत्वाभिप्रायेणाजामेकामिति वाक्यमुदाहृतम् । आदिपदेन च महदादिकं चेतनाधीनोत्पत्तिकमित्याद्यनुमाने धर्मिग्राहकस्य 'महत' इत्यादेः परिग्रहः । यद्यपि चात्र चेतनेच्छानुसारेणेत्यादिमूलोपदर्शितप्रयोगधर्मिभूतमहदादिस्वरूपसाधकवाक्यस्य स्वशब्देन,- उपलक्षितानुमानधर्मिभूत प्रधानस्वरूपसाधकवाक्यस्य तु आदिशब्देनोपादानत्र कर्तुमुचितम् । तथाऽ'प्य- जामेकामिति प्राह श्रुतिरेतां यदा तदा' इत्यादिनाऽजामेकामिति वाक्यस्य परममुख्यया वृत्त्या भगवत्प- रत्वस्य, मुख्यया वृत्त्या प्रधानपरत्वस्य च स्पष्टं वर्णितत्वात्तस्य स्वशब्देनोपादानम् । महदादि प्रतिपादकस्य तु आजामेकामिति वाक्ये भाष्यकारैरुपवर्णितन्यायसञ्चारेण भगवत्परत्वस्य मह- दादिपरत्वस्य चानुसन्धेयत्वान्न तस्य स्वशब्देन ग्रहणं युक्तमित्यभिप्रेत्य आदिशब्देन, तदुपादानं कृत- मित्यवधेयम् । साध्यदोषमुद्धर्तुमाशङ्कते **ननु चेति** ॥ **अन्तःकरणधर्म इति** । तस्य परिणामित्वा- दिति भावः । कुतो नेच्छा चेतनस्य धर्म इत्यतस्तस्याविकृतत्वादित्यभिप्रेत्य हेतुगर्भविशेषणमाह **अविकारस्येति** ॥ **अप्रसिद्धविशेषणतेति** । चेतनस्यापरिणामित्वादिच्छाशून्यत्वेन चेतनेच्छाया एवा- प्रसिद्धत्वेन तद्घटितसाध्यस्य सुतरामप्रसिद्धत्वादिति भावः ॥ **बाधो वेति** । उक्तरीत्या चेतनस्य- इच्छाराहित्यस्य सिद्धत्वेन चेतनेच्छाधीनोत्पत्तिकत्वाभावस्यैव पक्षे सिद्धत्वादिति भावः ॥ **एवं भावा- भावादिति** । चेतनेच्छाधीनोत्पत्तिकत्वाभावादित्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'सेच्छं चेत्किमचेत- नम् । इच्छाम्याहमिति ह्येव निजानुभवरोधतः । अचेतनेच्छापगते'त्यादिनोत्तरत्रेति शेषः ।

स० — **उक्तं हीदमिति** । ननु महदादेरेव पक्षत्वात् तत्सिद्ध्यर्थं तत्प्रतिपादकप्रमाणस्यैवो- दाहर्तव्यत्वात् उपादानीभूतप्रकृतिमात्रप्रतिपादकश्रुत्युदाहरणमसङ्गतमिति चेन्न । तादृशश्रुत्युदाहरणे सर्वासामपि श्रुतीनां भगवत्परत्वात् कथं महदादिसिद्धिरिति परेणाशङ्कितेऽमुख्यतः तत्प्रतिपादकत्वस्यापि समर्थनीयत्वात्; तत्समर्थनं च प्रकृत्यधिकरणे 'अजामेकामिति प्राहे'त्यादिना आचार्येण कृतमिति तत्प्रकारेणान्यत्र 'महतः परमव्यक्तम्' इत्यादिश्रुतिष्वपि महदादिप्रतिपादकत्वप्रकारो द्रष्टव्य इत्यभिप्रेत्य तदुदाहरणमेव कृतमिति नानुपपत्तिः । अत एव 'अजामेकामित्यादिश्रुति'रित्यादिशब्दग्रहणेन प्रधानमपि इत्यत्रापि उपक्रमानुसारेण प्रधानादिकमिति द्रष्टव्यम् । **अप्रसिद्धविशेषणता बाधो वेति** । अप्रसिद्ध- विशेषणता च घटकधर्मत्वाभावनिश्चयेन तद्घटितसाध्यस्यापि बाधो वेति । यदा घटकधर्मस्य चेतनेच्छा- लक्षणस्याप्रसिसिद्ध्या तद्घटितसाध्यस्यापि असिद्धत्वविवक्षायाम् अप्रसिद्धविशेषणता । यदा च घटकधर्म- स्याभावनिश्चयेन तद्घटितसाध्यस्याप्यभावनिश्चयविवक्षा तदा बाध इति ज्ञेयम् । **एवम्भावाभावादिति** । चेतनेच्छाधीनोत्पत्तिकत्वाभावादित्यर्थः । आदिशब्देन पटाद्युद्भवो ग्राह्यः । तस्याप्युक्तसाध्याभावादि-

त्यर्थः । **वक्ष्यमाणत्वादिति** । 'इच्छाम्यहमिति ह्येव निजानुभवरोधतः' इत्यादिना वक्ष्यमाणत्वादित्यर्थः ।

**प०— तत्प्रयुक्तानुमानादिति** । कार्यकारणविभागादिति हेतुसिद्धमिति प्रागुक्तकार्यकारणविभागादिरूपानुमानादित्यर्थः ॥ **तदिति** । महदादिकम् । उक्तं अनुमितं च तैरित्यर्थः । ननु जगदुपादानश्रुतीनां परैरविद्यादिपरत्वेन व्याख्यानात् सिद्धान्ते च ब्रह्मपरत्वेन पूर्वत्रानुमानिकपादे अजामेकामित्यादिसर्वस्त्रीलिङ्गशब्दानां ब्रह्मनिष्ठतया प्रकृतिनये व्याख्यानात् कथं वेदतस्तत्सिद्धिरित्यत आह **उक्तं हीति** । 'अजामेकामिति प्राह श्रुतिरेतां यदा तदा । को दोष' इत्यादिना । अतो जगदुपादानं प्रधानं वक्ति सा श्रुतिरित्यनेनानुमानिकपादे उक्तमित्यर्थः । 'वेदत' इत्युपलक्षणं । 'पंचभिः पंचभिर्ब्रह्मे'त्यादिवचनान्महदादिसिद्धिरित्यपि ध्येयम् । 'यद्वा महतः परमव्यक्तमि'त्यादिश्रुत्या महदादिसिद्धिर्ध्येयेति भावः । **वक्ष्यमाणत्वादिति** । 'इच्छाम्यहमिति ह्येवे'त्यादिनाऽत्रैवाधिकरणे उत्तरत्रेति भावः ।

**या०—** ननु सर्वस्यापि वेदस्य भगवत्परत्वस्योक्तत्वात्कथं वेदतो महदाद्यवगम इत्यत आह **उक्तं हीति** । 'अजामेकामिति प्राहे'त्यत्रेति शेषः । तथा च तन्न्यायसाम्यात्कश्चिद्वेदो महदादिकमपि प्रतिपादयिष्यतीति भावः ॥ इदं च, 'अजामेकामि'श्रुतिः महदादितत्त्वमपि प्रतिपादयति, न प्रधानमात्रम्; इत्यभिप्रेत्योक्तम् । अतो नासङ्गतिरिति द्रष्टव्यम् । **वक्ष्यमाणत्वादिति** । 'सेच्छं चेत्किनचेतनम् । इच्छाम्यहमिति ह्येव निजानुभवरोधतः । अचेतनेच्छापगते'त्यत्रेति शेषः ॥

---

**श्री०— तैः** साङ्ख्याचार्यैः । **अनेवंविधं** चेतनेच्छाधीनोत्पत्तिकम् । **तदुक्तं** तेषु शास्त्रेषूक्तमित्यर्थः । **बाधो** धर्मिग्राहकेण । अन्यथा महदादेरसिद्धौ ॥ **ननु पुरुष इत्यादि** । तथा च महदादिकं चेतनेच्छाधीनोत्पत्तिकमिति साध्यकरणे चेतनेच्छाया अभावेनाप्रसिद्धविशेषणता स्यादिति भावः ॥ **अविकारस्येति** । 'इच्छादिमत्त्वे तत्कृतविकारापत्तेः । न चैवमिति हेतुगर्भम् ।

**च०— उक्तं हीति** । 'अजामेकामिति प्राहे'त्यादिक'प्रधानं वक्ति सा श्रुतिरि'त्यन्तेनानुमानिकपादेभिहितमित्यर्थः । **वक्ष्यामणात्वादिति** । 'इच्छाम्यहमिति ह्येवे'त्यादिना प्रकृतनय एवाभिधास्यमानत्वादित्यर्थः ।

**सु०— तथाऽप्युद्भवो नामोत्पत्तिरभिव्यक्तिर्वा । नाद्यः । प्रथमप्रयोगेऽप्रसिद्धविशेषणत्वात् । दृष्टान्तस्य साध्यविकलत्वाच्च । द्वितीये चाश्रयासिद्धेः । मया सत्कार्यवादस्य अभ्युपगतत्वात् । द्वितीयेऽप्येत एव दोषाः । त्वया व्यक्त्यनभ्युपगमादिति चेन्न । असत्कार्यवादस्य साधितत्वात् । सत्कार्यवादे प्रमाणाभावाच्च । असदकरणादित्यादिभिश्च किं**

कार्यस्य प्राक्करणव्यापारात्सत्त्वमात्रं साध्यम् उतात्यन्तसत्त्वम् । आद्ये सिद्धसाधनम् । सदसत्त्वाभ्युपगमात् । द्वितीये त्वसदकरणादितिवत्सदकरणादित्यपि समानम् । न हि सन्नात्मा केनचित्क्रियते ।

शे० — **प्रथमप्रयोग इति** । महदादिकं चेतनेच्छाधीनोत्पत्तिकं कार्यत्वादिति प्रथमप्रयोग इत्यर्थः ॥ **अप्रसिद्धेति** । सत्कार्यवादिना मयाऽसतः सत्तासम्बन्धरूपोत्पत्तेः क्वाप्यनङ्गीकारादिति भावः । द्वितीय इति प्रयोग इत्यनुवर्तते । महदाद्युद्भवपक्षकप्रयोगेऽपीत्यर्थः । आश्रयासिद्धिरित्यत्राश्रयशब्दः पक्षदृष्टान्तोभयपरः । ततश्च पक्षदृष्टान्तयोरसिद्धेरित्यर्थः । प्रतिज्ञातानप्रसिद्धविशेषणत्वादिदोषानुपपादयति **मयेति** । अत्यन्तमसत्कार्यवादाभ्युपगमेनासतः सत्तासम्बन्धरूपचेतनाधीनोत्पत्तिकत्वस्याप्रसिद्धेरप्रसिद्धविशेषणत्वम् । सत्कार्यवादमभ्युपगच्छता पटस्याप्युक्तरूपचेतनाधीनोत्पत्तेरनङ्गीकाराद्दृष्टान्तस्य साध्यविकलत्वम् । सत्कार्यवादाङ्गीकारेणोक्तरूपाया महदाद्युत्पत्तेः पटाद्युत्पत्तेर्वाऽसत्त्वात्पक्षदृष्टान्तयोरसिद्धिरिति भावः ॥ **द्वितीयेऽपीति** । अभिव्यक्तिरुद्भव इति द्वितीयपक्षेऽपीत्यर्थः ॥ **एत एवेति** । अप्रसिद्धविशेषणत्वसाध्यवैकल्याश्रयासिद्धिलक्षणा एवेत्यर्थः । तानेवोपपादयति **त्वयेति** ॥ **साधितत्वादिति** । 'असद्यत्कार्यरूपेण कारणात्मतयाऽस्ति हि । अनवस्थाऽन्यथा हि स्यात् सर्वत्रोत्पत्तिनाशयोः' इत्यादिना आरम्भणाधिकरण इति शेषः । असत्कार्यवादस्य साधितत्वादित्यनेनैव प्रागुद्भाविताशेषदोषपरिहारो यद्यपि सिद्ध एव तथाऽपि पराभिमतस्य कार्यकारणयोरत्यन्ताभेदस्य निरासार्थं प्राक् सत्कार्यवादसाधकत्वेन परोपन्यस्तहेतून्निराकर्तुं तत्प्रसक्त्यर्थमाह **सत्कार्येति** ॥ **सदकरणादित्यपि समानमिति** । अनेन कार्यं प्राक् सत्, असदकरणादिति परानुमाने कार्यं प्रागसत्सदकरणादिति सत्प्रतिपक्ष उक्तो भवति । व्याप्तिभावाभावाभ्यां वैषम्यान्न सत्प्रतिपक्षतेत्यतोऽस्यापि व्याप्तिमुपपादयति **न हीति** ।

स० — **प्रथमप्रयोग इति** । महदादिकं चेतनेच्छाधीनोत्पत्तिकं, कार्यत्वात्पटवदिति प्रथमप्रयोग इत्यर्थः । मया सत्कार्यवादस्याभ्युपगमेन चेतनेच्छाधीनोत्पत्तिकत्वस्याप्रसिद्धविशेषणत्वमिति भावः । **दृष्टान्तस्येति** । सत्कार्यवादमभ्युपगच्छता पटस्यापि चेतनेच्छाधीनोत्पत्तिकत्वस्यानभ्युपगमादिति भावः । **द्वितीय इति** । महदाद्युद्भवः चेतनेच्छाधीनः उद्भवत्वात् पटोद्भववदिति द्वितीयप्रयोग इत्यर्थः । **आश्रयासिद्धेः** पक्षासिद्धेः, दृष्टान्तासिद्धेश्चेत्यर्थः । सत्कार्यवादाङ्गीकारेण महदाद्युत्पत्तेः पटोत्पत्तेर्वा अनभ्युपगमादिति भावः । **द्वितीयेऽपीति** । अभिव्यक्तिरिति द्वितीयेऽपीत्यर्थः । **एत एव** अप्रसिद्धविशेषणत्वसाध्यवैकल्याश्रयासिद्धिलक्षणा एवेत्यर्थः । **असत्कार्यवादस्येति** । 'अनवस्थाऽन्यथा हि स्यात्सर्वत्रोत्पत्तिनाशयोः' इत्यादिना 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यत्र असत्का-

र्यवादस्य साधितत्वादित्यर्थः । युक्तिं तूत्तरत्र निराकरिष्याम इत्युक्तमारम्भणाधिकरणे तद्वक्तुमाह— **सत्कार्यवाद इति** ।

**प०— द्वितीये चेति** । प्रयोग इत्यनुषंगः । महदाद्युद्भवः चेतनेच्छाधीनः उद्भवत्वात्पटोद्भववदिति द्वितीयप्रयोग इत्यर्थः । **आश्रयासिद्धेः** पक्षासिद्धेर्दृष्टान्तासिद्धेश्चेत्यर्थः । अप्रसिद्धविशेषणत्वसाध्यवैकल्याश्रयासिद्धिषु सकृद्धेतुमाह **मयेति** । तथाचासतः सत्तायोगरूपजनिर्वा परिणामरूपापूर्वावस्थान्तरापत्तिर्वा क्वापि नास्तीत्येते दोषा इति भावः ॥ **द्वितीय इति** । व्यक्तिपक्षेपीत्यर्थः । **व्यक्तीति** । प्राक् सत एव कार्यस्य कुलालादिव्यापारेणाभिव्यक्तिरूपोद्भवानभ्युपगमादिति भावः ॥ **साधितत्वादिति** । 'असद्यत्कार्यरूपेण कारणात्मतयास्ति ही'त्यादिना तदनन्यत्वनय इति भावः । असदकरणादित्यादिप्रागुक्तहेतव एव प्रमाणमित्यत आह **असदकरणादित्यादिभिरिति** ॥ **सदसत्त्वाभ्युपगमादिति** । 'असद्यत्कार्यरूपेणे'त्यादिना अस्यार्थस्य साधितत्वादिति भावः ।

**या०— अप्रसिद्धेति** । सत्कार्यवादिना मयाऽसतः सत्तासम्बन्धरूपोत्पत्तेः क्वाप्यनङ्गीकारादिति भावः । द्वितीय इत्यत्र प्रयोग इति शेषः ॥ **साधितत्वादिति** । 'नित्यभेदो निमित्तेन ह्युपादानेन तु द्वयम् । असद्यत्कार्यरूपेण कारणात्मतयाऽस्ति हि । अनवस्थाऽन्यथा हि स्यात्सर्वत्रोत्पत्तिनाशयोरि'ति युक्तिपादे साधितत्वादित्यर्थः । युक्तिं तूत्तरत्र निराकरिष्याम इति यदुक्तमारम्भणाधिकरणे तद्वक्तुमाह **सत्कार्यवाद इति** ॥

**श्री०— उत्पत्तिरिति** । अभूत्वाभवनरूपेत्यर्थः । **द्वितीये** उद्भवपक्षकानुमाने । कुत इत्यत आह **मयेति** । मया सत्कार्यवादमभ्युपगम्य व्यक्तेरेवाङ्गीकृतत्वेनोत्पत्तेरनङ्गीकारादिति भावः । **द्वितीये** उद्भवशब्देनाभिव्यक्तिग्रहणे ॥ **त्वयेति** । सिद्धान्तिनेत्यर्थः । तथा चाश्रयासिद्धिरिति भावः । अत्रोत्पत्तिरेवोद्भवशब्देन विवक्षिता । असत्कार्यवादस्य त्वां प्रति साधितत्वेनोक्तदोषाभावादित्यभिप्रेत्याह **असदिति** ॥ **सदिति** । अत्यन्तसदित्यर्थः ।

**च०—** द्वितीय इत्यत्र प्रयोग इत्यनुषञ्जनीयम् । अप्रसिद्धविशेषणत्वसाध्यवैकल्याश्रयासिद्धिषु हेतुमभिधत्ते **मया सदिति** । सत्कार्यवादमुपेयुषा असतः सत्तासंबन्धरूपोत्पत्तेः क्वाप्यनङ्गीकारादिति भावः । **द्वितीयेऽपि** । अभिव्यक्तिरेवोद्भव इति कल्पेपि । **त्वया** । असत्कार्यवादिना ॥ **साधितत्वादिति** । 'नित्यभेदो निमित्तेन ह्युपादानेन तु द्वयम् । असद्यत्कार्यरूपेण कारणात्मतयास्ति हीत्यादिना युक्तिपादे तदनन्यत्वनये समर्थितत्वादिति भावः । यत् आरंभणनये 'युक्तिं तूत्तरत्र निराकरिष्याम' इति प्रत्यज्ञासीत्तत्सिषाधयिषति **सत्कार्यवाद इति** ।

सु० — नन्वसतः कथं कर्मत्वम् । सतः कथं कार्यत्वमित्यपि समानम् । अनेन घटो जायत इत्यपि प्रत्युक्तम् । तर्हि घटं करोतीत्यादेः कोऽर्थः । मृत्तिकां घटीकरोतीति । मृत्तिका घटीभवतीति । असदुत्पत्तौ खरविषाणमपि कुतो नोत्पद्यत इति चेत् । तदात्मकस्योपादनस्याभावादिति ब्रूमः । अन्यथा सत उत्पत्तावात्माऽपि कुतो नोत्पद्यत इति समानम् ॥

शे० — ननु घटं करोतीति द्वितीयया घटस्य कर्मत्वमुच्यत इति तावदविवादम् । कर्मत्वं च कारकविशेषत्वम् । तच्चासतो न सम्भवतीति प्रतिपक्षानुमाने पूर्ववादी प्रतिकूलतर्कमाशङ्कते नन्विति । घटं करोतीत्यत्रेति शेषः । एवञ्चासमानबलत्वान्न सत्प्रतिपक्ष इति भावः । असतो द्वितीयोक्तकर्मत्वानुपपत्तिवत् सतोऽपि घटं करोतीत्युक्तकार्यत्वानुपपत्तेः पूर्वानुमानस्यापि प्रतिकूलतर्कपराहतत्वेन साम्याद्युक्तः प्रतिपक्ष इत्याह सतः कथं कार्यत्वमिति । ननु तथाऽपि घटो जायत इति घटस्य जनिकर्तृत्वानुभावादसतः कर्तृत्वानुपपत्तेः सत्कार्यवादसिद्धिरित्यतस्तर्हि तत एव जायत इत्युक्तकार्यत्वानुपपत्त्या प्रागसत्त्वस्यापि सिद्धेः परस्यापीष्टसिद्धेरित्याशयेनाह अनेनेति । अस्त्वेवं प्रतिवादिमुखमुद्रणम् । वस्तुतत्वं किमित्यभिप्रेत्य सुहृद्भावेन पृच्छति तर्हीति । आदिपदेन घटो जायत इत्यस्य संग्रहः । घटं करोतीत्यस्य व्याख्या मृत्तिकां घटीकरोतीति । घटो जायत इत्यस्य तु मृत्तिका घटीभवतीति । नन्वनेन ग्रन्थेन घटो जायत इत्यादीनामर्थान्तराभ्युपगमेनोपपत्तिरित्युच्यते । 'तस्मात्प्रध्वस्तभेदादी'ति वाक्यव्याख्यावसरे घटो जायते घटं जनयतीत्यनुत्पन्नस्यापि कर्तृत्वं कर्मत्वं च, तस्मात्कार्यस्य कारणाभेदात्प्रागुत्पत्तेर्विनाशोत्तरं च सत्त्वादेव युज्यते । नाप्यत्यन्तासतः कारकत्वमित्यादिना ग्रन्थेन घटादीनां पूर्वं सत्त्वेन घटो जायत इत्यादेरुपपत्तिर्वक्ष्यते । पूर्वत्र तु असत्प्रतीतिव्युत्पादनावसरे कर्तृत्वादेर्बौद्धत्वानभ्युपगमे घटो जायत इत्यादि न स्यादिति चोक्तम् । तत्कथमेषां ग्रन्थानां परस्परं न विरोध इति चेत् । अत्र गुरवः । अत्यन्तसत्कार्यानभ्युपगमेऽपि कारणात्मना सत्वाभ्युपगमात् कारकव्यापारात्प्रागकार्यात्मकस्य कारणस्य कारकव्यापारेण कार्यरूपतापत्तेः सदसत्कार्यमते जनित्वान्मृत्तिका घटी भवतीत्यादिर्घटो जायत इत्यादेरर्थ इति न कर्तृत्वानुपपत्तिरिति एतद्ग्रन्थाशयः । तस्मात्प्रध्वस्तभेदादीति व्याख्याग्रन्थस्यात्यन्तिकसत्त्वस्योक्तरीत्याऽनेकानुपपत्तिग्रस्तत्वात्कार्यस्य कारणात्मनाऽपि सत्त्वानभ्युपगमे उक्तजनिपदार्थासंभवाद्घटो जायत इति कर्तृत्वाद्यनुपपत्तिरेव । न चासत्ख्यातिग्रन्थोक्तप्रकारेण बौद्धकर्तृत्वाद्यभ्युपगमेनोपपत्तौ कारणात्मना कार्यसत्त्वसाधकतया कर्तृत्वाद्युक्तिरयुक्तेति वाच्यम् । प्रतीतिसिद्धप्रध्वस्तभेदसत्त्वस्य प्रकारान्तरेणानुपपत्त्या तदर्थतया कारणात्मना सत्त्वस्य तत एव तादृशजनिपदार्थस्य चावश्याङ्गीकार्यत्वसिद्धेः कर्तृत्वादेरपि निर्वाह इत्याशयेनाभ्युच्चययुक्तिरया

कर्तृत्वादेरुपन्यासात् । अत एव तत्र भाष्ये स्वशब्देन भेदग्रहणम् । आदिपदेन च कर्तृत्वादे-रुपादानम् । न तु कर्तृत्वादेरन्यथानिर्वाहाभावाभिप्रायेण । अथवा भातीत्यादिभानादिक्रियाकर्तृत्वस्य बौद्धस्यासति व्यवहारवत् बौद्धस्य जनिकर्तृत्वस्य नात्यन्तासति व्यवहार इत्याशयेनास्यापि साधक-तयैवोपन्यास इत्याशयः । एवञ्च न वक्ष्यमाणग्रन्थेनैकवाक्यतायामनुपपत्तिः । अत एव 'सत्त्वमात्रे साध्ये सिद्धसाधनमि'त्येतद्ग्रन्थे नाप्यत्यन्तासतः कारकत्वमित्यत्यन्तपदमुत्तरग्रन्थे । नाप्यस्य पूर्वग्रन्थेन विरोधः । तत्र परं प्रति प्रतिबन्दीमुखेन च प्रवृत्त्या पराङ्गीकृतात्यन्तासत्कार्यवादस्या-नुपपन्नताया वक्ष्यमाणत्वात्सदसत्कार्यवादस्य च परेणानभ्युपगमात् अभावाश्रयादिवत्कर्तृत्वादेर्बौद्धत्वा-नङ्गीकारे तव घटो जायत इत्यादेरनुपपत्तिरेवेत्याशयात् । तस्मान्न पूर्वेणोत्तरेण च विरोध इति ।

प्रतिपक्षानुमाने बाधकान्तरमाशङ्कते **असदुत्पत्ताविति** । असतो घटादेरुत्पत्तावित्यर्थः । अविशेषादिति शेषः । ततश्चोक्तबाधकभावाभावाभ्यां वैषम्याद्नुमानयोर्न प्रतिपक्षत्वमिति भावः । असतो घटस्य तदात्मकोपादानसद्भावादुत्पत्तावपि खरविषाणस्य तद्विरहादनुत्पत्त्युपपत्तेः विशेषासिद्ध्या व्याप्तिविकल्पोऽयं प्रसङ्ग इत्याशयेनाह **तदात्मकस्येति** । अत्र वैषम्यमात्रे तात्पर्यं न तु यत्रोपादानमस्ति तत्रोत्पत्तिरिति व्याप्तावपि तात्पर्यमभिमतम् ! अतो न स्वप्नाधिकरणीयग्रन्थविरोध इत्यवधेयम् । अवश्यं चैतदेवं यदात्मकमुपादानमस्ति तदुत्पद्यते यदात्मकं तन्नास्ति तन्नोत्पद्यत इति । तच्च सद्वाऽसद्वेत्यन्य-देतत् । अन्यथा परस्याप्यगतेरित्यभिप्रेत्य स्थापनानुमाने बाधकान्तरमाह **अन्यथेति** । ततश्च समान-बलत्वमेवेति प्रतिपक्षोऽप्रत्यूह इति भावः ।

स०— ननु कार्यं कारणव्यापारात्पूर्वम् असत्, सदकरणात् इति साधयितुं न शक्यते । बाधकतर्कसद्भावात् । तथाहि । कार्यस्यासत्वे तस्य कृतिं प्रति क्रियाजन्यफलाश्रयत्वलक्षणं कर्मत्वं वक्त-व्यम् । न चासतः फलाश्रयत्वं संभवति । तस्मात् यदि कार्यमसत्स्यात् तर्हि क्रियाजन्यफलाश्रयत्व-लक्षणकर्मत्वोपेतं स्यात्, न भवति च तादृशम् । तस्मादसन्नेत्यभिप्रेत्य शङ्कते **नन्वसतः कथं कर्मत्व-मिति** ।

केचित् साक्षात्कर्तृव्यापारस्याव्यवधानेन विषयस्यैव कर्मत्वात् असतश्च तदसंभवेन कर्मत्वान्य-थानुपपत्त्या सत्त्वमभ्युपेयमित्यर्थ इत्याहुः । तर्हि कार्यं सत् असदकरणादिति त्वदीयानुमानेऽपि यदि कार्यं सत्स्यात् तर्हि कृतिविषयत्वलक्षणकार्यत्वोपेतं स्यात् । न च सिद्धस्य तस्य तादृशकार्यत्वं संभवति । अन्यथा आत्मनोऽपि तत्स्यादिति बाधकसद्भावान्न तेन कार्यस्य सत्त्वसिद्धिरित्यभिप्रेत्य समाधत्ते **सतः कथं कार्यत्वमिति** । सिद्धत्वेन कर्तृव्यापारविषयत्वाभावात् । अन्यथा आत्मनोऽपि तदापत्तेरिति भाव इत्याहुः ॥ तथाऽपि घटो जायत इत्यादौ कर्तृत्वप्रतीतेरसतश्च तदनुपपत्त्या सत्त्वसिद्धिरित्यत आह

**अनेनेति** । सिद्धस्याप्युत्पत्तिकर्तृत्वे आत्मनोऽप्युत्पत्तिकर्तृत्वापत्त्या सत्त्वेऽपि कथं कर्तृत्वमिति प्रतिबन्दीदानेनेत्यर्थः । तर्हि कार्यस्यासत्त्वे घटं करोतीत्यत्र कर्मत्वं, घटो जायते इत्यत्र कर्तृत्वं च कथमुपपादनीयमिति सुहृद्भावेन पृच्छति **तर्हीति** । आदिपदेन कर्तृत्वप्रतिपादकस्य घटो जायत इत्यस्य संग्रहः । घटं करोतीत्यस्य व्याख्या मृत्तिका घटं (घटी) करोतीति । घटो जायते इत्यस्यमृत्तिका घटीभवतीति । अयं भावः । घटस्य साक्षात्कर्तृव्यापारस्याव्यवधानेन विषयत्वरूपकर्मत्वाभावात् मृत्तिकाया एव तथात्वात् घटस्य चोद्देश्यफलसंबन्धितयैव कर्मत्वात् तादृशकर्मत्वस्यासत्त्वेऽप्युपपत्तिरिति न तेन सत्त्वसिद्धिरिति । यत्किञ्चिदुपादानस्य सर्वदा सत्वादनुपपत्तितादवस्थ्यमित्यतः **तदात्मकस्य** इत्युक्तम् ।

प० — **कर्मत्वमिति** । कर्तृप्रयत्नविषयत्वमित्यर्थः । एतेन कार्यत्वमप्युक्तार्थम् । यदपि घटो जायत इति प्रयोगः सत्कार्यवादे मानं जायत इति क्रियास्वातन्त्र्यरूपकर्तृत्वस्यासतोनुपपत्तेरित्युक्तं सांख्यग्रन्थे, तदतिदेशेन निराह **अनेनेति** । सतः कथं कार्यत्वमिति कथनेनेत्यर्थः ॥ **इत्यादेरिति** । घटो भवति घटो जायत इत्यादिरादिपदार्थः ॥ **घटीकरोतीति** । घटत्वेनाभूतं घटत्वेन करोतीत्यर्थः । घटत्वेन प्रागभूतोऽधुना घटत्वेन भवतीत्यर्थः । अघटो घटः संपद्यत इत्यर्थे(पि) अभूततद्भावे 'कृभ्वस्तियोगे संपद्यकर्तरि च्विरि'ति च्विप्रत्यये अस्य च्वावितीत्वे च्वेर्लोपे च घटीकरोतीत्यादिरूपनिष्पत्तिरिति ज्ञेयम् । यत्किञ्चिदुपादानस्य सर्वदा सत्त्वादुत्पत्तितादवस्थ्यमित्यत उक्तम् **तदात्मकस्येति** । स्वविषणात्मकतया परिणम्यमानस्येत्यर्थः ।

या० — **कथं कर्मत्वमिति** । साक्षात्कर्तृव्यापारविषयस्यैव कर्मत्वादसतश्च तदसम्भवादिति भावः ॥ **अनेन घट इति** । साङ्ख्येन हि स्वशास्त्रे 'सत्कार्यवादे घटो जायत इति प्रयोगान्यथाऽनुपपत्तिर्मानम् असतः क्रियास्वातन्त्र्यरूपकर्तृत्वस्यासम्भवादि'ति यदुक्तं तदप्यनेन पूर्वमत्यन्तासतः कथं कार्यत्वमित्युक्तदूषणेन निरस्तं ज्ञातव्यमित्यर्थः । सुहृद्भावेन पृच्छति **तर्हीति** । आदिपदेन घटो जायत इत्यस्य ग्रहणम् ।

श्री० — सदकरणादित्यनेनासत एव कार्यत्वमुक्तं तत्राशङ्कते **नन्विति** । कर्तृव्यापारं प्रति साक्षाद्विषयस्यैव कर्मत्वादसतश्च तदसम्भवेन कर्मत्वान्यथाऽनुपपत्त्या पूर्वं सत्त्वं वाच्यमित्यर्थः ॥ **कार्यत्वमिति** । सिद्धत्वेन कर्तृव्यापाराविषयत्वात् । अन्यथाऽऽत्मनोऽपि तत्स्यादिति भावः ॥ **तर्हीति** । यद्यसत उत्पत्तिरित्यर्थः । **इत्यादे** घटस्य विद्यमानस्य कर्मताया अयोगात्कर्मत्वप्रतिपादनद्वारा पूर्वं घटसत्ताबोधकस्य वाक्यस्येत्यर्थः ॥ **मृत्तिकामिति** । तथा च मृत्तिकाया एव पूर्वं सत्याः कर्मत्वाङ्गीकारेण घटस्य तदनङ्गीकारादित्यर्थः । **तत्** उपादानम् । द्वितीये त्वि'त्यनन्तरं निमित्तकारणमिति शेषः ।

---

१ पृ – ३१९९ पं. २ 'सदकरणादित्यपि समानम्' इति सुधायाम् ।

**च॰**— **असतः कथमिति** । प्राचीनदिशा क्रियाजन्यफलशालित्वरूपं, नव्यदिशा धात्वर्थतावच्छेदकफलशालित्वरूपक्रियाविषयत्वादिरूपं वा कर्मत्वं धर्मिसत्तासापेक्षं कर्तृव्यापारागोचरे सति दुरुपपादमिति भावः । असतः क्रियास्वातन्त्र्यरूपकर्तृत्वानुपपत्त्या घटो जायत इति प्रयोगानुरोध एव सत्कार्यवादे मानमिति यदन्यथा सांख्यस्तदपि प्रतिविधत्ते **अनेनेति** । सतः कथं कार्यत्वमिति कल्पनेन इत्यर्थः ॥ **घटीकरोतीति** । घटत्वेनाभूतं घटत्वेन करोति, घटत्वेन प्रागभूतः संप्रति घटत्वेन भवतीत्यर्थः । 'कृभ्वस्तियोगे संपद्यकर्तरि च्विरि'त्यत्र 'अभूततद्भाव इति वक्तव्यमि'ति कात्यायनवचनादिति भावः । **तदात्मकस्य** खरविषाणात्मकस्य ।

**सु॰— य(द)द्यपि कार्येण कारणं संबद्धं तदुपजनयति उतासंबद्धमेवेति पृष्टम् । तत्र कारणशब्देनोपादनं वा विवक्षितं निमित्तं वा । आद्ये जनयतीत्येव नेष्यते । किन्तु निमित्तकारणानि तत् कार्यतां नयन्ति । द्वितीये तु कार्याकारेणासंबद्धं कारणाकारेण संबद्धमित्युत्तरम् । अत एव नातिप्रसङ्गः । शक्तिश्च कारणानां सदसद्विषया । अन्यथा निर्विषयत्वापातात् । न हि सत् कर्तुं शक्यं भवति ।**

**शे॰**— एवमत्यन्तसत्त्वं साध्यमिति द्वितीयेऽसदकरणहेतुं निरस्योपादानग्रहणाद्यं हेतुमपि निराकर्तुमाह **यदपीति** ॥ **जनयतीत्येव नेष्यत इति** । मृत्तिकाया घटात्मना भवने शक्तिमत्त्वात् शक्तिरूपकारणत्वस्य तदनुमापकानन्यथासिद्धनियतपूर्ववृत्तित्वस्य च सत्त्वेऽपि अवस्थान्तरापत्तिरूपजनिं प्रति कर्मभूतत्वेन तत्सम्पादकत्वाभावान्न तद्रूपं जनकत्वमिति भावः । तर्हि जनिरेव न सिद्ध्येदिति पृच्छति **किन्त्विति** । उपादानस्याजनकत्वेऽपि निमित्तकारणानां तथात्वात्तत्सिद्धिरित्याह **निमित्तेति** ॥ **अत एवेति** । कार्याकारेणासंबद्धस्यापि कारणाकारेण संबद्धस्यैव तज्जनकत्वाङ्गीकारादेवेत्यर्थः ॥ **अति प्रसङ्ग इति** । असंबद्धत्वाविशेषेण सर्वस्मात्सर्वसंभवापत्तिरूप इत्यर्थः । किञ्चासंबद्धत्वेऽपि कारणं तदेव करोति यत्र शक्तमिति कथमतिप्रसङ्गः । ननु सा शक्तिः सर्वत्र चेत्सैवाव्यवस्था, शक्यविषया चेदसति शक्ये शक्यविषयत्वायोगात्सदेव कार्यं स्यादित्यतो यत्कार्याकारेणासत् कारणाकारेण च सत्तद्विषयत्वाश्रयणान्न कश्चिद्दोष इत्याशयेनाह **शक्तिश्चेति** । निर्विषयत्वमेवोपपादयति **न हीति** । अत्यन्तसदित्यर्थः ॥ उपलक्षणं चैतत् । नाप्यत्यन्तमसत्कर्तुं शक्यमित्यपि द्रष्टव्यम् । ततश्च परिशेषात्सदसद्विषयत्वसिद्धिरिति भावः ।

**स॰**—**आद्य इति** । अयं भावः । यद्यपि उपादाने निमित्ते च कारणत्वलक्षणा शक्तिः, तद्ज्ञापकमनन्यथासिद्धनियतपूर्ववृत्तित्वं च तिष्ठत्येव । तथाऽपि उपादानं जनकमिति नोच्यते । जनकत्वं नाम उपादानस्य कार्यत्वावस्थापादने निमित्तत्वम् । न च तदुपादनस्यास्ति । किं नाम स्वयमेव

कार्यत्वावस्थापन्नं भवतीति । **अत एवेति** । कार्येण सम्बद्धस्यापि तत्कारणाकारेण संबन्धाङ्गीकारान्नातिप्रसङ्ग इत्यर्थः । **अन्यथेति** । केवलसत्त्वविषयत्वाङ्गीकार इत्यर्थः । तदेवोपपादयति **न हीति** ।

**प०**— **इत्येव नेष्यत इति** । कर्तरि प्रयोगो नेष्ट इत्यर्थः ॥ **तदिति** । उपादानकारणमित्यर्थः ॥ **द्वितीये त्विति** । निमित्तकारणमिति पक्षे त्वित्यर्थः ॥ **अत एवेति** । कारणत्वरूपेण संबद्धं सदेव कार्यं जनयतीत्युक्तत्वादेव प्रागुक्तासंबन्धपक्षोक्तातिप्रसङ्गदोषो नेत्यर्थः । शक्तस्य शक्यकरणादिति प्रागुक्तं निराह **शक्तिश्चेति** । कारणात्मना यत्सत् कार्यात्मना चासत् तद्विषयेत्यर्थः । कुत एतदित्यतोऽसदविषयत्वस्य परेणैवोपगमात् । सदसद (सद)विषयत्वमेव व्यनक्ति **न हीति** ।

**या०**— **न हि सत् कर्तुमिति** । नहि सत्कर्तुमशक्यमित्यस्यानन्तरं नाप्यत्यन्तमसदिति शेषो द्रष्टव्यः ।

**श्री०**— **अत एव** कारणाकारेण संबन्धस्याङ्गीकारादेव । **अतिप्रसङ्गः** असंबन्धस्य जनकत्वे सर्वस्मात्सर्वसंभवरूपः । **अन्यथा** सदसद्विषयकत्वाभावे । **आपातात्** कारणानामिति वर्तते । कुत इत्यत आह **न हीति** ।

**च०**— नयतेर्द्विकर्मकतया तदिति व्यस्तं पदम् । उपादानकारणमित्यर्थः । **द्वितीये** निमित्तकारणमिति कल्पे ॥ **अत एव** । कारणरूपेणसंबद्धमेव कार्यं जनयतीत्यभिहितत्वादेव । **नातिप्रसङ्गः** असंबन्धकल्पोक्तक्षत्यभावः । **सदसद्विषया** कारणात्मना यत्सत्कार्यात्मनाचासत्तद्विषया । **अन्यथा** सदसद्विषयकत्वानुपगमे । विषयतानिरूपकत्वसामान्याभावलक्षणनिर्विषयत्वं असद्विषयकत्वाभावसद्विषयकत्वाभावकूटेन साधनीयम् । तत्र कूटघटकांशः स्वेनैवोरीकृत इत्यंशान्तरमेव पक्षे व्यनक्ति **न हीति** ।

**सु०**— **यच्च तन्तुपटयोरभेदानुमानं तत्राभेदमात्रसाधने सिद्धसाध(नम्)नत्वम् । भेदाभेदाङ्गीकारात् । अत्यन्ताभेदसाधने तन्तुधर्मत्वं तावदसिद्धम् । न हि स्वयमेव स्वस्य धर्मो भवति । न हि उपचारोऽनुमानप्रवृत्तेरङ्गम् । अतिप्रसङ्गात् । कथं च तन्तुधर्मत्वं पटस्य । तन्तुविशेषणत्वमिति चेन्न । पुरुषादिविशेषणे दण्डादौ व्यभिचारात् । तदाश्रितत्वमिति चेन्न । अभेदेनासिद्धिप्रसङ्गात् । कुण्डबदरादौ व्यभिचाराच्च । तदात्मकत्वमिति चेन्न । साध्याविशिष्टत्वापत्तेः । अभेदेन भेदाभावः साध्यत इति चेन्न । भेदाभावातिरिक्तस्याभेदस्य अनभ्युपगमात् । अभ्युपगमेऽपि बाधात् । एवमुपादानोपादेयभावोऽप्यसिद्ध एव । न हि स्वयमेवोपादानमुपादेयं चेति युक्तम् । करणत्वकर्मत्वयोर्भेदनियतत्वात् । संयोगाप्राप्त्यभावश्चात्यन्तभेदाभावादुपपत्स्यते । गुरुत्वान्तरकार्यादर्शनं चाभेदाङ्गीकारेण भविष्यति ।**

शे० — यद्यपि न च कारणादन्यादित्यादिनोक्तमनुमानमनिराकृत्य द्वितीयाद्यनुमानदूषणमयुक्तम् । तथाऽपि द्वितीयाद्यनुमानदूषणेन तस्यापि दूषितप्रायत्वात्स्पष्टदूषणत्वाद्वा तदनिराकृत्य विशेषानुमानान्येव निराचिकीर्षुः पटस्तन्तुभ्यो न भिद्यते तन्तुधर्मत्वादित्यनुमानं तावन्निराकरोति **यच्चेति** । केचित्तु यद्यपि तन्तुपटयोरभेदे प्रत्यक्षमपि प्रमाणमुक्तं तथाऽपि कथायां तदनुद्भाव्यत्वात्तन्मात्रेणापि तन्निरासिद्धेः किं पृथक् तन्निराकरणेनेत्यभिप्रेत्य तदनिराकृत्यैवानुमानमात्रनिराकरणमिदमित्याहुः । सिद्धसाधनत्वमेव विशदयति **भेदाभेदेति** । असिद्धिमेव प्रकटयति **न हीति** । अन्यथा तन्तोरपि तन्तुधर्मत्वं स्यादिति भावः । ननु यद्यपि पटस्य मुख्यं तन्तुधर्मत्वं नास्ति तथाऽप्युपचरितं तदस्त्येव । तदेव हेतुतयाऽभिमतमिति नासिद्धिरित्यत आह **न हीति** । तथा सति देवदत्तस्याप्युपचरितसिंहत्वेन पशुत्वानुमानं स्यादित्यतिप्रसङ्ग इत्याह **अतिप्रसङ्गादिति** । हेत्वनिरुक्त्याऽप्यनुमानं दूषयति **कथं चेति** । तन्तुधर्मत्वं किं तद्विशेषणत्वमभिमतं किंवा तदाश्रितत्वं, तदात्मकत्वं वेति विकल्पान्मनसि निधायाद्यमाशङ्कते **तन्त्विति** ॥ **व्यभिचारादिति** । यद्यतो भिद्यते इत्यादिपरोक्तव्यतिरेकव्याप्ताविति शेषः । द्वितीयमप्याशङ्कते **तदिति** । दूषयति **अभेदेनेति** ॥ **असिद्धिप्रसङ्गादिति** । त्वद्रीत्येति शेषः । वस्तुनि विकल्पासम्भवादन्यतरासिद्धिर्दोष एव नेति मन्यमानं प्रति दोषान्तरमाह **कुण्डेति** । सत्यपि बदराणां कुण्डाश्रितत्वे तद्भेदस्याभावेन तदत्यन्ताभेदस्य दूरापास्तत्वादिति भावः । ननु भेदाभावस्यैव साध्यत्वान्न साध्यावैशिष्ट्यमित्याशङ्कते **अभेदेनेति** ॥ **अनभ्युपगमादिति** । परेणेति शेषः । तथा च भेदाभावस्यैव साध्यत्ववत्साधनत्वस्यापि प्रसक्त्या साध्यावैशिष्ट्यप्रसङ्गात्सिद्धसाधनत्वं सन्दिग्धासिद्धिर्वेति भावः ॥ **अभ्युपगमेऽपीति** । तादात्म्यमेवाभेद इति स्वीकृत्येति शेषः ॥ **बाधादिति** । तन्तुपटयोर्भेदस्य 'ह्युपादानेन तु द्वयमि'त्यादिना साधितत्वादुत्तरत्र साधयिष्यमाणत्वाच्च तदभावसाधने बाध इत्यर्थः ॥ **एवमिति** । अत्यन्ताभेदवादिनस्तव मत इति शेषः ॥ **करणत्वकर्मत्वयोरिति** । उपादीयते वस्त्वनेनेति करणव्युत्पन्नेनोपादानशब्देन करणत्वस्योपादातुं योग्यमुपादेयमिति कर्मसाधनेन च तेन कर्मत्वस्य लब्धत्वात्करणत्वकर्मत्वयोरित्युक्तमिति ध्येयम् ॥ **भेदनियतत्वादिति** । अन्यथा लक्षणविरोधप्रसङ्गादिति भावः ॥ **उपपत्स्यत इति** । तथा चान्यथासिद्धत्वान्न तेनात्यन्ताभेदसाधनं संभवतीति भावः ॥ **गुरुत्वान्तरेति** । गुरुत्वान्तरकार्यावनत्यदर्शनमित्यर्थः ॥ **भविष्यतीति** । तथा चान्यथासिद्धत्वान्नैतदप्यत्यन्ताभेदसाधकमिति भावः ।

स० — **अत्यन्ताभेदसाधन इति** । कार्यकारणयोरत्यन्ताभेदमङ्गीकुर्वता तयोर्धर्म-धर्मिभावस्य विरुद्धत्वेनाङ्गीकर्तुमशक्यत्वादन्यतरासिद्धिः हेतोरित्यर्थः । **अतिप्रसङ्गादिति** । देवदत्तः पशुः सिंहत्वात् सिंहवदित्यपि स्यात् । न चासिद्धिः । उपचरितसिंहत्वसद्भावादिति भावः ॥ **अभ्युपगमेपीति** ।

अभेदातिरिक्तभेदाभावाभ्युपगमेऽपि भेदाभावसाधनं न संभवति । तत्र भेदस्यापि सिद्धत्वेन बाधादिति भावः ॥ **करणत्व-कर्मत्वयोरिति** । उपादीयते कार्यमनेनेति करणेव्युत्पन्नेन उपादानशब्देन करणत्वस्य, उपादातुं योग्यं उपादेयमिति कर्मणिव्युत्पन्नेनोपादेयशब्देन कर्मत्वस्य लाभात् करणत्वं कर्मत्वं चैकस्यैव विरुद्धम् । तयोर्भेदनियतत्वादिति भावः । **गुरुत्वान्तरकार्यादर्शनम्** गुरुत्वान्तरकार्यावनत्यदर्शनमित्यर्थः ।

**प०— यच्चेति** । न पटस्तन्तुभ्यो भिद्यते तन्तुधर्मत्वादिति प्रागुक्तानुमानमित्यर्थः । 'खाङ्गे शेते' इतिवदुपचारः किं न स्यादित्यत आह **न हीति** ॥ **अतिप्रसङ्गादिति** । चैत्रः केसरवान् सिंहत्वादित्यनुमानरूपातिप्रसङ्गादित्यर्थः । न च हेतोरसिद्धिः । उपचरितसिंहत्वसद्भावादिति भावः ॥ **अभेदेनेति** । तन्तुधर्मत्वादित्यस्य तन्त्वात्मकत्वादित्यर्थोक्तेः । तन्त्वभेदेन हेतुना तन्तुभेदाभावसाधनान्न साध्याविशिष्टमित्यर्थः ॥ **बाधादिति** । प्रत्यक्षादिना भेदस्याप्यवगमादिति भावः । उपादानोपादेयभावाच्चेति प्रागुक्तभेदसाधकहेत्वन्तरं निराह **एवमुपादानेति** ॥ **भेदनियतत्वादिति** । एतेन बाधादिति प्रागुक्तं स्फुटीकृतं ध्येयम् । संयोगप्राप्त्यभावाच्चेति हेत्वन्तरं निराह **संयोगेति** । प्रागुक्तहेत्वन्तरं च प्रत्याह **गुरुत्वेति** ॥

**या०— अभ्युपगमेऽपीति** । तादात्म्यमेवाभेद इति स्वीकृत्येति शेषः ॥ **बाधादिति** । तन्तुपटभेदस्य वक्ष्यमाणानुमानसिद्धत्वेन तदभावसाधने बाधादित्यर्थः ॥ **एवमुपादानोपादेय भाव इति** । अत्यन्ताभेदवादिनस्तव मत इति शेषः ॥ **करणत्वकर्मत्वयोरिति** । उपादीयते वस्त्वनेनेति करणे व्युत्पन्नेन उपादानशब्देन करणत्वस्य, उपादातुं योग्यमुपादेयमिति कर्मणि व्युत्पन्नेनोपादेयशब्देन कर्मत्वस्य लाभादिति भावः ॥

**श्री०—** यद्युपचारोऽनुमानप्रवृत्तेरङ्गं स्यात्तदा देवदत्तः क्रौर्यादिमान् सिंहत्वात्सिंहवदित्यप्यनुमानं स्यात् । न चासिद्धिः । औपचारिकसिंहत्वस्य सत्त्वात् । तस्मादौपचारिकं स्वस्यैव स्वधर्मत्वमङ्गीकृत्यासिद्धिं परिहृत्यानुमानं न कार्यमित्याह **अतिप्रसङ्गादिति** । **कथं** किंप्रकारं कीदृशम् । यद्विशेषणं तत्तेनाभिन्नमिति सामान्यव्याप्तौ व्यभिचारमाह **पुरुषादीति** ॥ **अनभ्युपगमादिति** । तथा च पुनः साध्याविशिष्टत्वमिति भावः ॥ **बाधादिति** । भेदस्यास्माभिरङ्गीकारादित्यर्थः ॥ **करणत्वेति** । उपादानस्य (कारणत्व)करणत्वमुपादेयस्य कर्मत्वं (कार्यत्वं) बोध्यम् ।

**च०— यच्चेति** । पटस्तंतुभ्यो न भिद्यते तन्तुधर्मत्वादित्यनुमानमित्यर्थः । **अतिप्रसङ्गात्** । चैत्रः पशुः सिंहत्वादित्यनुमानप्रसङ्गात् । **बाधादिति** । तन्तुपटभेदस्य प्रत्यक्षादिनाप्यवगमादिति भावः । **असिद्ध एवेति** । अत्यन्ताभेदोपगन्तृभवन्मत इत्युपस्कार्यम् ।

**सु० —** **एतेन कार्यत्वमभूत्वाभावित्वं चेदसिद्धमस्माकम् । अभिव्यक्तिधर्मकत्वं चेद्युष्माकमिति च निरस्तम् । तदिदमुक्तं** केन वार्यत इति ॥

**शे० — एतेनेति** ॥ उद्भवो नामोत्पत्तिरभिव्यक्तिर्वेति विकल्पदूषणनिराकरणप्रकारेणेत्यर्थः । असत्कार्यवादस्य साधितत्वेन सत्कार्यवादस्य दूषितत्वेन चाभूत्वाभावित्वरूपकार्यत्वस्य सिद्धतया तदसिद्ध्यप्रसक्तेरिति भावः । कृतस्य, चर्चस्योद्घाष्यत्वपरिहाराय मूलारूढतां दर्शयति **तदिदमिति** ।

**स० — एतेनेति** । उद्भवो नाम उत्पत्तिरभिव्यक्तिर्वेति पक्षविकल्पदूषणनिराकरणप्रकारेणेत्यर्थः । कार्यत्वं नाम अभूत्वाभावित्वमेव । न चास्माकमसिद्धमिति वाच्यम् । सत्कार्यवादस्य एतावता ग्रन्थकलापेन दूषितत्वादिति भावः ।

**प० — एतेनेति** उक्तदिशा सत्कार्यत्वादिहेतूनां अपाकरणेनेत्यर्थः ।

**या० — एतेनेति** । सत्कार्यवादस्य दूषितत्वेन, सदसत्कार्यवादस्य समर्थितत्वेन चाभूत्वाभावित्वरूपकार्यत्वस्यासिद्ध्यभावेनेत्यर्थः ।

---

**श्री० — अस्माकम्** अत्यन्तसत्कार्यवादिनां साङ्ख्यानामस्माकमसत एवोत्पत्तिरूपमभूत्वाभावित्वमसिद्धमित्यर्थः । **युष्माकं** सिद्धान्तिभिर्भवद्भिरसत्त्वस्याप्यङ्गीकारेणाभिव्यक्तिर्नाङ्गीकृतेत्यर्थः ॥

**च० — एतेन** उक्तदिशा सत्कार्यवादहेतुप्रत्याख्यानेन ।

**सु० — तदेवं पटाद्युत्पत्तौ चेतनस्य कुविन्दादेः प्रवृत्तेरुपलम्भात्तद्दृष्टान्तेन महदाद्युत्पत्तेरपि चेतनेच्छाधीनत्वमित्येवं स्वपक्षं प्रसाध्य परपक्षनिरासार्थं रचनानुपपत्तेश्च नानुमानमिति सूत्रं** व्याख्यातुं **पीठमारचयति** न चेति ।

**अनु० —** न च काचित्प्रमोक्तार्थे

**न केवलमस्मन्मते प्रमाणसद्भावः । किन्तु साङ्ख्योक्तार्थे प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वे किमपि प्रमाणं नास्ति । तथा हि । किमत्र प्रत्यक्षं प्रमाणं स्यादुत आगमोऽथवाऽनुमानं वा । नाद्यः । तद्ध्यस्मदादीनां वा योगिनां वा । न प्रथमः । अस्यार्थस्यातीन्द्रियत्वात् । न द्वितीयः । असिद्धेः । न हि एवं योगिनः पश्यन्तीत्यस्माकं प्रमाणमस्ति ।**

**शे०** — न चेत्याद्युत्तरभाष्ये प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वे प्रमाणाभववर्णनस्यानर्थक्यमाशङ्क्य रचनानुपपत्तेरित्येतत्सूत्रव्याख्यानार्थं पीठिकारचनरूपत्वान्न तदिति भावेन वृत्तवर्तिष्यमाणार्थप्रदर्शनपूर्वकं तत्परोत्तरवाक्यं योजयति **तदेवमित्यादिना** । अनेन सूत्रार्थतयेति प्रागुक्तं विवृतं भवति ॥ **व्याख्यातुमिति** । 'इदं नाचेतनवश'मित्यादिनेति शेषः । स्वपक्षे प्रमाणसद्भावसमुच्चयद्योतनार्थत्वान्न चशब्दस्यानर्थक्यमित्यभिप्रेत्य समुच्चयप्रदर्शनपूर्वकं परोक्तार्थे प्रमाणाभावोपदर्शनपरतया भाष्यं व्याचष्टे **न केवलमिति** । प्रमाणसामान्याभावं प्रतिज्ञाय प्रत्यक्षाभावमनुपपाद्य श्रुत्यनुमानरूपतद्विशेषाभावोपपादनमसङ्गतमित्यतस्तन्निरासस्य स्पष्टत्वेन शिष्यैरेव ज्ञातुं शक्यत्वान्न पृथक् तन्निरास इति भावेन स्वयं प्रत्यक्षाभावमुपपादयितु सम्भावितान्पक्षान्विकल्पयति **तथा हीत्यादिना** ॥ **अस्यार्थस्येति** । प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वमित्यस्यार्थस्येत्यर्थः ॥ **असिद्धेरिति** । अस्मान्प्रतीति शेषः । तथा च न तेनाप्यस्माकमुक्तार्थसिद्धिरिति भावः । कुतोऽस्माकं तदसिद्धिरपीत्यतस्तत्साधकप्रमाणाभावादित्याह ॥ **न हीति** । न तावदेवं योगिनः पश्यन्तीत्यत्रार्थे प्रत्यक्षं मानं सम्भवति । अस्यार्थस्यानीन्द्रियत्वेन तदनवकाशात् । नाप्यनुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । नाप्यागमः । वक्ष्यमाणरीत्या तदसम्भवादिति भावः ।

**स०** — ननु स्वपक्षसाधनत्वेन पूर्वोक्तानुमानजातं कथं 'प्रवृत्तेश्च' इति सूत्रारूढमित्यतः सूत्रारूढं कुर्वन्नुपसंहरति **तदेवमिति** ।

---

**प०** — ॐ रचनानुपपत्तेश्च ॐ । **व्याख्यातुमिति** । 'इदं नाचेतनवशमि'त्यादिना व्याख्यातुं श्लोकद्वयेन तदुपोद्घातमारचयतीत्यर्थः । चशब्दस्यार्थो **न केवलमित्यादि** । मूले निरासक्रमानुरोधादागमानुमानयोर्व्युत्क्रमेण निर्देश **उतागम इत्यादि** ।

**श्री०** — **'प्रवृत्तेश्च'ति** सूत्रार्थं वदन्नेवोत्तरवाक्यमवतारयति **तदेवमित्यादिना** । प्रधानं स्वातन्त्र्येण जगत्कारणमित्येवंरूपेणेत्यर्थः ।

**सु०** — **नाप्यागमः । स ह्यपौरुषेयः पौरुषेयो वा स्यात् । नाद्य इत्याह** श्रुतिरेवेति ।

**अनु०** — श्रुतिरेव प्रमा हि नः ॥

**श्रुति र्नोऽस्माकमेव मते प्रमा हि । सर्वाऽपि हि श्रुतिरीश्वरमेव स्वातन्त्र्येण सकलजगत्कारणं सर्वज्ञं सर्वशक्तिं प्रतिपादयति । प्रधानं च तदायत्तसत्ताप्रतीतिप्रवृत्तिमत्तदधिष्ठितं जगदुपादानमात्रमिति । तथा हि । 'यः सर्वज्ञः सर्ववित्' । 'यो योनिमधितिष्ठत्येक' इत्यादि । तथा च श्रुतिः परस्य प्रतिपक्षभूतैव ।**

शे० — 'ननु श्रुतिरेव प्रमा हि न' इति श्रुतिप्रामाण्यमुक्त्वा कथं तद्विरुद्धं वक्तुराप्तत्वासिद्ध्या तदप्रमाण्यवर्णनमित्यतो नैतद्द्वयं श्रुतिविषयं येनोक्तदोषः, किन्तु भिन्नविषयकमित्यभिप्रेत्य तथोत्तरवाक्यद्वयं योजयितुं सम्भावितविकल्पद्वयप्रदर्शनपूर्वकमाद्यपक्षनिरासपरतयाऽऽद्यवाक्यं योजयति **नापीति** । ननु श्रुतितुल्यतया 'अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यत' इत्यादिना प्रत्यक्षादेरपि प्रामाण्याभ्युपगमात्कथं 'श्रुतिरेव प्रमा हि न' इत्युक्तिरित्यतोऽत्रावधारणस्य भिन्नक्रमत्वेन यथास्थितसम्बन्धानाश्रयणान्नानुपपत्तिरित्यभिप्रेत्य भिन्नक्रमतया तद्योजयति **श्रुतिरिति** । कथं श्रुतेः स्वपक्षमात्रसाधकतेत्यत आह ॥ **सर्वाऽपि हीति** । तत्र सार्वज्ञ्यादिविशिष्टतयेश्वरप्रतिपादिकां श्रुतिमुदाहरति **तथा हि** ॥ **यः सर्वज्ञ इति** । प्रधानस्येश्वरायत्तत्वप्रतिपादिकां श्रुतिमुदाहरति **यो योनिमिति** ।

प० — एवकारो भिन्नक्रम इत्युपेत्याह **अस्माकमेवेति** ॥ **योनिं** । जगदुपादानभूतप्रकृतिमित्यर्थः । फलितमाह **तथा चेति** ।

**सु० — पौरुषेयोऽपि किं स्मृतीतिहासपुराणलक्षणः । उत साङ्ख्याचार्यप्रणीतः । नाद्यः । तस्याप्यस्मन्मतानुसारित्वात् । 'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः । क्षोभयामास भगवान्सृष्ट्यर्थं जगतो विभुः' इत्यादिवचनात् । न द्वितीयः । तत्प्राण्यस्यासंमतेः । आप्तोक्तत्वेन तत्प्रामाण्यसिद्धिरिति चेत्तत्राह** आप्तत्वमिति ।

**अनु० —** आप्तत्वमुक्तमार्गेण वक्तुर्नैवोपपद्यते ॥

**उक्तमार्गेण श्रुतिरेव प्रमा हि न इत्युक्तरीत्या श्रुतिविरुद्धभाषित्वादित्यर्थः । वक्तुः साङ्ख्यप्रणेतुः । यद्वा इतरेषां चानुपलब्धेरित्युक्तमार्गेण । साङ्ख्यशास्त्रेऽपि ह्याख्यायिकासु योग्यानुपलब्धिबाधिता बहवोऽर्थाः प्रतिपाद्यन्ते । अथवा 'ऽविप्रलम्भस्तज्ज्ञानमि'त्याद्युक्तमार्गेणाप्तत्वनिश्चायकप्रमाणाभावादित्यर्थः । 'कपिलो वासदेवाख्यस्तन्त्रं साङ्ख्यं जगाद ह । ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च । तथैवासुरये सर्ववेदार्थपरिबृंहितम् । सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह । साङ्ख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितमि'ति पुराणोक्तमार्गेणेति वा । 'ऋषिं प्रसूतं कपिलमि'त्यादिश्रुत्युदाहरणमप्यनेनैव निरस्तम् । एतेनैव 'आगमाद्योगिप्रत्यक्षावगम' इत्यपाकृतम् ।**

शे० — ननु स्मृतीतिहासादिरूपपौरुषेयागमस्य श्रुतिमूलतयेश्वरस्य सार्वज्ञ्यादिनाऽऽप्तिमूलतया च प्रामाण्याभ्युपगमादाप्तत्वमुक्तमार्गेणेत्युत्तरग्रन्थानुपपत्तिरित्यतो न स्मृत्यादिविषयं तत् किन्तु

सांख्यागमविषयमेवेति नानुपपत्तिरिति भावेन, तर्हि माऽस्तु साङ्ख्यागमः प्रमाणं स्मृत्यादिरूपः स्वागमः प्रमाणं भवेदेवेति न परोक्तार्थस्याप्रामाणिकत्वसिद्धिः इत्यतोऽत्र सम्भावितविकल्पद्वय-प्रदर्शनपूर्वकमाद्यपक्षस्य परेणावक्तव्यतां चोपपाद्य द्वितीयपक्षनिरासतयोत्तरमूले योजयितुं विकल्पद्वयं तावदाह **पौरुषेयोऽपीति** । स्वमतानुसारितामेव प्रमाणेनोपदर्शयति **प्रकृतिमिति** । उक्तमार्गेणेति भाष्ये सामान्योक्तिर्नानाप्रकारोपसंहारायेति भावेनानेकधा व्याख्याति ॥ **श्रुतिरेवेत्यादिना** । किमनेनोक्तं भवतीत्यत आह **श्रुतिविरुद्धेति** । असिद्धिं परिहरति **साङ्ख्यशास्त्रेऽपीति** । अथ वेति पक्षेऽभिप्रायमाह **आप्तत्वमिति** । ननु 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् । सुखादनन्तात्पालनाल्लयनाच्च यं वै देवं कपिलमुदाहरन्तीति' अन्यश्रुतिरेव साङ्ख्य-शास्त्रप्रणेतुराप्तत्वनिश्चायिकाऽस्तीति कथं तन्निश्चायकप्रमाणाभाव इत्यत उक्तमार्गेणेत्येतत्प्रकारान्तरेण योजयति **कपिल इत्यादिना** । किमेवं व्याख्यानस्य प्रयोजनमित्यत उक्तशङ्कानिरास एवेत्याह **ऋषिं प्रसूतं कपिलमित्यादिश्रुतिवचनमपीति** ॥ **अनेनैवेति** । उक्तमार्गेणेत्यस्य पुराणोक्तमार्गेणेति व्याख्यानेन इत्यर्थः । 'कपिलो वासुदेवाख्य' इत्युदाहृतपुराणवाक्यानुसारेण 'ऋषिं प्रसूतमि'त्युदाहृतश्रुतिवचनस्य भगवदवतारकपिलपरत्वेन त्वदभिमतसाङ्ख्यप्रणेतृकपिलपरत्वाभावान्न तेन तस्य सार्वज्ञ्यादिसिद्धिरिति भावः । **एतेनैवेति** । अपौरुषेयागमस्योक्तरीत्या परं प्रति प्रतिकूलत्वात्पौरुषेयस्यापि स्मृतीतिहासादेः अस्मन्मतानुसारित्वात्तदन्यस्य सांख्याचार्यप्रणीतागमस्य प्रामाण्यस्यैवासंमतेः न आगमावष्टंभेनापि प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वविषयकयोगिप्रत्यक्षसिद्धिरिति भावः ।

**स०** — **अनेनैव निरस्तमिति** । 'कपिलो वासुदेवाख्यः' इत्याद्यागमविरुद्धत्वेनेत्यर्थः ॥ 'ऋषिं प्रसूतं कपिलम्' इत्यादिश्रुतेरपि ईश्वरविषयत्वादिति भावः इत्याहुः ॥ **एतेनेति** । अपौरुषेयस्य अस्मन्मतानुसारित्वेन, पौरुषेयस्यापि स्मृतीतिहासपुराणलक्षणस्य अस्मन्मतानुसारित्वेन अन्यस्य चाप्रमाणत्वेनेत्यर्थः ।

**प०** — मूले श्रुतिरित्युपलक्षणं मत्वा श्रुतिरेवेत्यादिवाक्यस्य फलितार्थमाह **तस्याप्यस्मन्मतानुसारित्वादिति** ॥ **इत्युक्तमार्गेणेति** । इति पूर्वपादीयस्मृत्यधिकरणसूत्रेण । 'न चापि निश्चयस्तत्र शक्यते व्यभिचारत' इत्यनुव्याख्यानोक्तमार्गेणेत्यर्थः ॥ **इत्याद्युक्तमार्गेणेति** । जिज्ञासाधिकरणे वेदापौरुषेयत्वोक्तिप्रस्तावे अविप्रलंभस्तज्ज्ञानं तत्कृतत्वादयोऽपि च । कल्प्या गौरवदोषेण पुंवाक्यं ज्ञापकं न तत्' इत्युक्तमार्गेणेत्यर्थः । **तथैवासुरय इति** । आसुरिनाम्ने मुनय इत्यर्थः । सांख्यमासुरय इत्यत्रासुरिरयोग्यः कश्चिज्ज्ञेयः ॥ **इति पुराणेति** । प्रथमस्कन्धतृतीयाध्यायतात्पर्योक्तपद्मपुराणेति ज्ञेयम् ॥

**ऋषिमिति** । 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् । सुखादनन्तात्पालनाल्लापनाच्च यं वै देवं कपिलमुदाहरंतीति सांख्यकृतश्रुत्युदाहरणमपि पुराणोदाहरणेन भगवदवतारपरत्वेनोपपादनेन तदभिमतार्थपरत्वं निरस्तमित्यर्थः ॥ **एतेनैवेति** । वक्तुराप्तत्वनिश्चयायोगकथनेनेत्यर्थः ॥

**या० — ऋषिं प्रसूतमिति** । ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् । सुखादनन्तात्पालनाल्लापनाच्च यं वै देवं कपिलमुदाहरन्ती'त्यादिश्रुत्युदाहरणं स्वशास्त्रे क्रियमाणमित्यर्थः ॥ **अनेनैव निरस्तमिति** । उदाहृतपुराणबलेनैव श्रुतेर्भगवदवतारकपिलपरत्वस्यैव कल्पनादिति भावः ।

**श्री० — एतेनैवेति** । ननु प्रधानं स्वातन्त्र्येण जगत्कारणमित्यत्र योगिप्रत्यक्षं मानम् । न च न ह्येवं योगिनः पश्यन्तीत्यत्र प्रमाणमस्तीत्युक्तमिति वाच्यम् । आगमस्यैव प्रमाणस्य तत्र सत्त्वादिति येतदप्येतेनैव अपास्तम् । भृग्वादीनां योगिनां वासुदेवेन स्वोक्तसांख्यशास्त्रोपदेशस्यागमसिद्धत्वात्तच्छास्त्रोक्तप्रकारेण च ज्ञातव्यत्वात् । तत्र च प्रधानाद्यस्वातन्त्र्योक्तेः । प्रधानादिकमस्वातन्त्र्येणैव जगत्कारणमित्येव पश्यन्तीत्यागमाल्लब्धत्वेन नागमाद्योगिप्रत्यक्षावगम इत्यर्थः ।

**च० — तथैवासुरय इति** । आसुरिनाम्ना मुनय इत्यर्थः । साङ्ख्यमासुरय इत्यत्र तन्नाम्ना कश्चिदयोग्योऽधिगन्तव्यः । **इति पुराणेति** । प्रथमस्कन्धतृतीयाध्यायतात्पर्योदाहृतपद्मपुराणेत्यर्थः । **ऋषिमिति** । ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् । सुखादनन्तात्पालनाल्लापनाच्च यं वै देवं कपिलमुदाहरन्तीत्यादिश्रुत्युदाहरणं साङ्ख्यशास्त्रे क्रियमाणं पुराणोक्तदिशा भगवदवतारतात्पर्यकत्वोपपादनेन तदभिमतार्थतात्पर्यकत्वाभावव्युत्पादनेन प्रतिविहितमित्यर्थः ।

**सु० — न केवलमुक्तमार्गेणाप्तत्वानुपपत्तिः । किन्नामानुपपन्नभाषित्वादपीत्याह** अप्रामाण्येति ।

**अनु० —** अप्रामाण्यस्वतस्त्वस्य स्वीकारादपि

**अपिशब्देन प्रामाण्यस्वतस्त्वमपि समुच्चिनोति । ज्ञानानां प्रामाण्यमप्रामाण्यं च ज्ञानकारणमात्राधीनोत्पत्तिकमिति स्वीकरोति सांख्यः । तच्चानुपपन्नमित्यतोऽप्यसौ नाप्तः ।**

**शे० —** आप्तत्वमुक्तमार्गेणेत्यनेनैव सांख्याचार्यप्रणीतागमस्याप्रामाण्यव्युत्पादनात् किमप्रमाण्यस्वतस्त्वस्येत्युत्तरवाक्येनेत्यत आप्तत्वानुपपत्तौ हेत्वन्तरोपदर्शनार्थत्वान्न तदिति भावेन तत्स्वरूपप्रदर्शनपूर्वकं तत्परतयोत्तरवाक्यं योजयति **न केवलमिति** ॥ **अपिशब्देनेति** । अनेनाप्रामाण्यस्वतस्त्वस्य स्वीकारादपीत्यपिशब्दो न केवलमनुपपन्नभाषित्वरूपहेत्वन्तरसमुच्चयार्थः, किन्तु व्याहतभाषित्वोपपादकप्रामाण्यस्वतस्त्वस्वीकारस्यापि समुच्चयार्थ इत्युक्तं भवति ।

प० — अपिपदस्य षष्ठ्यन्तपूर्वपदेनान्वयमुपेत्याह **अपिशब्देनेति** । स्वतस्त्वशब्दार्थः ज्ञान-करणेत्यादि ।

**सु० — कथं प्रामाण्याप्रामाण्ययोः स्वतस्त्वमनुपपन्नमित्यत आह** मायिवदिति ।

**अनु० —** मायिवत् ॥

स्वोक्ताखिलनिषेधी स्यात्

**प्रामाण्याप्रामाण्ययोर्ज्ञानकारणमात्रजन्यत्वे सांख्यस्य वचनेनोत्पन्नं ज्ञानं प्रमाणमप्रमाणं चेत्युभयात्मकं वा स्यात् । परस्परविरोधेनोभयविकलं वा ज्ञानमात्रमुत्प(द्येत)द्यते । निःस्वभावस्य ज्ञानस्यानुपपत्त्या नोत्प(द्यते)द्येत वा । आद्ये सदसद्विलक्षणं विश्वं मन्यमानो मायावादी यथा स्वोक्तनिषेधी सद्विलक्षणमित्युक्त्या प्राप्तस्यासत्त्वस्य, स्वयमेव असद्विलक्षणमिति निषेधात् । असद्विलक्षणमित्युक्त्या च प्राप्तस्य सत्त्वस्य स्वयमेव सद्विलक्षणमिति निषेधात् । तथा साङ्ख्योऽपि स्वोक्ताखिलनिषेधी स्यात् । तद्वाक्यजनितज्ञानस्य याथार्थ्ये हि प्रकृतिर्जगत्कारणमित्यादिकोऽर्थो यो लब्धः, स एवार्थस्तस्यायाथार्थ्ये निषिद्धः स्यात् । अयाथार्थ्यस्य विषयविपर्यासानतिरेकात् । उभयस्वतस्त्वे वस्तुनो विरुद्धाकारद्वयालिङ्गितत्वं प्रसज्येतेति भावः । मायाशब्दस्य व्रीह्यादित्वान्मायीति साधु ।**

**शे० — सद्विलक्षणमित्युक्त्या प्राप्तस्येति** । 'भावस्य तु निषेधेऽपि नाभावस्य निषेधन'मिति न्यायादिति भावः ॥ **इत्युक्त्या च प्राप्तस्येति** । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इति न्यायादिति भावः । इष्टापत्तिमाशङ्क्य परिहरति **उभयस्वतस्त्व इति** । 'अस्मायामेधास्रजो विनिरि'ति मायाशब्दात् विनिप्रत्ययश्रवणात्सति तस्मिन्मायावीति भवितव्यम् । मायीति तु कथमित्यतो विनिप्रत्यये सति मायावीतिवत् व्रीह्यादित्वात् व्रीह्यादिभ्यश्चेति इनिप्रत्यये सति मायीत्यपि साध्वित्याह **मायाशब्दस्येति** । व्रीह्यादित्वं चास्य तद्गणपठितत्वादित्यवधेयम् ।

**प० —** ज्ञानानां द्विरूपत्वेन प्रामाण्याप्रामाण्यघटकयोरन्योन्यविरहरूपत्वाभावात्कथं 'स्वोक्ताखिलनिषेधी स्या'दित्युक्तिरित्यतोऽभिप्रायमाह **उभयस्वतस्त्व इति** । ननु मायाशब्दान्मत्वर्थे 'अस्मायामेधास्रजोविनिरि'ति विनिप्रत्यये मायावीति भाव्यम् । कथं मायिवदिति मायिपदप्रयोग इत्यत आह **मायाशब्दस्य व्रीह्यादित्वादिति** । व्रीह्यादिगणे पठितत्वा'द्व्रीह्यादिभ्यश्चे'तिसूत्रेण इनिप्रत्यये 'यस्ये'त्याकारलोपे मायीति साध्वित्यर्थः ।

**या०— नन्वेवं प्राप्तस्य प्रकृ**ते**र्जगत्कारणत्वतदभावरूपविरुद्धाकारद्वयालिङ्गितत्वस्यानिषेधात्कथ-**मखिलनिषेधी स्यादित्यतोऽभिप्रायमाह **उभयस्वतस्त्व इति** । ननु मायाशब्दस्यादन्तत्वाभावात् 'अत इनिठनावि'त्यस्याप्रवृत्त्या कथं मायीति रूपमित्यत आह **मायाशब्दस्येति** । **व्रीह्यादित्वात्** व्रीह्यादिगणे पठितत्वात् । तथा च व्रीह्यादिभ्यश्चेत्यनेनैवात्रेनिरिति भावः ।

**च०— उभयविकलम्** । प्रामाण्याप्रामाण्योभयविनिर्मुक्तम् । **उभयस्वतस्त्वे** । प्रामाण्याप्रामाण्योभयस्य दर्शितलक्षणौत्पत्तिकस्वतस्त्वोपगमे । **वस्तुनः** प्रधानस्य । **विरुद्धाकारद्वयालिङ्गितत्वम्** । जगत्कर्तृत्वतदभावविशेषितत्वम् । **व्रीह्यादित्वात्** । व्रीह्यादिभ्यश्चेतीनिप्रत्ययविधायकयोगोपात्तव्रीह्यादिगणपठितत्वात् । **साधुरिति** । तथा च मायाशब्दस्यानदन्ततया 'अत इनिठनावि'त्यनेनइनेरप्राप्तावपि दर्शितयोगान्तरेण तन्निर्वाहान्न क्षतिरिति भावः ।

**सु०— नन्वेवमपि याथार्थ्येन प्रकृतिर्जगत्कारणमित्यादिकोऽर्थस्तावत्सिध्यतीत्यत आह न चेति ।**

**अनु०—** न च किञ्चित्प्रसिध्यति ।

**न हि परस्परविरोधे किमपि सिध्यतीति भावः । तर्हि प्रामाण्यस्य का गतिरिति चेत् । अप्रामाण्येऽपि दीयतां दृष्टिः । द्वितीये दोषमाह** न चेति । **ज्ञानं हि यथावस्थितमयथावस्थितं वाऽर्थं विषयीकुर्यात् । तृतीयप्रकारानिरूपणात् । तथा च प्रामाण्याप्रामाण्यविकलं ज्ञानम् अयःशलाकावदविषयमेव स्यात् । एवञ्च न सांख्यवचनात्किञ्चित्प्रसिद्ध्यतीति । तृतीये तु जगदान्ध्यमेव स्यादित्याह** न चेति ।

**शे०— सिध्यतीति** । तेन विना ज्ञानयाथार्थ्यानिर्वाहादिति भावः ॥ **न हीति** । अन्यथा सदसद्विलक्षणत्ववादेऽपि यत्किञ्चिदेकसिद्धिप्रसक्तेरिति भावः ॥ **तर्हीति** । जगत्कारणत्वादिना विना याथार्थ्यानिर्वाहात्प्रकृतेर्जगत्कारणत्वाभावे तद्वाक्यजनितविज्ञानस्य याथार्थ्यमेव न स्यादिति भावः । जगत्कारणत्वाभावादिना विना अयाथार्थ्यानिर्वाहात्प्रकृतेर्जगत्कारणत्वे तद्वाक्यजनितज्ञानस्यायाथार्थ्यमपि न स्यादित्यपि सममित्याह **अप्रामाण्येऽपीति** । परस्परविरोधेनेति प्राग्विकल्पितद्वितीयतृतीयपक्षदूषणपरतयाऽप्येतदेव भाष्यमुपन्यस्य व्याख्यातुमाह **द्वितीय इत्यादिना** ।

**प०— अप्रामाण्येपीति** । प्रकृतिर्जगत्कारणमित्यादेरर्थस्य भावे अप्रामाण्यस्य का गतिरित्यपि दृष्टिर्दीयतामित्यर्थः । प्रामाण्याप्रामाण्यविकलं ज्ञानमात्रमिति पक्षनिरासकत्वेनापि तदेव वाक्यं योजयति **द्वितीय इति** ॥ **तृतीये त्विति** । ज्ञानमेव नोत्पद्यत इति पक्षे त्वित्यर्थः ।

या० — प्रकृतिकारणत्वस्यासिद्धौ तज्ज्ञाने प्रामाण्यं व्यर्थं स्यादित्याशयेन शङ्कते **तर्हीति** । तज्ज्ञानगतस्याप्रामाण्यस्यापि सार्थक्याथ तदभावोऽपि सिध्यत्वित्याशयेनाह **अप्रामाण्येऽपीति** ।

**मु० — स्यादेतत् यदा ज्ञानकरणं गुणोपेतं तदा तदीयायामप्रामाण्यजननशक्तौ गुणेन प्रतिबद्धायां प्रमाणज्ञानमेवोत्पद्यते । यदा तु दोषोपेतं तदा दोषेण प्रामाण्यजननशक्तौ प्रतिबद्धायां अप्रमाणज्ञानमेवोत्पद्यते । न हि किमपि करणं युगपदुभयोपेतमुभयविकलं वा संभवति । येनोक्तदोषः स्यादिति । उच्यते । किमर्थमित्थं कल्प्यते । ज्ञानस्योभयाकारत्वप्रसक्तेरिति चेत् । तत्प्रसक्तिरपि कुतो नाभ्युपगन्तव्या । विरोधभयादिति चेत् । करणेऽप्युभयशक्तिविरोधात्कुतो न बिभेषि ।**

शे० — **करणेऽपीति** । ज्ञानस्योभयाकारताया विरुद्धत्ववत्करणस्यापि विरुद्धाकारद्वयजननानुकूलशक्तिद्वयवत्ताया अपि विरुद्धत्वादिति भावः । अनेन किञ्चित्करणे विरुद्धं शक्तिद्वयं न सिध्यतीति मूलयोजना सूचिता भवति ।

या० — ज्ञानस्योभयाकारत्वं यथा विरुद्धं तथा करणे विरुद्धाकारद्वयजननानुकूलशक्तिद्वयसमावेशोऽपि विरुद्धोऽतो नाङ्गीकारार्हं इत्याह **करणेऽपीति** । अनेन किञ्चित्करणे विरुद्धं शक्तिद्वयं न सिध्यतीति मूलयोजनोक्तेति ज्ञातव्यम् ।

च० — **उभयोपेतं** गुणदोषोभयविशेषितम् । **उभयविकलं** तदुभयविनिर्मुक्तं ।

**मु० — यदपि विरुद्धकार्यद्वयजनकं करणं तत्सहकारिसाहित्याहितशक्तिकमेव । प्रकृते च तथाऽभ्युपगमे द्वयोरपि परतस्त्वापत्तिः ।**

**किञ्च वचने कौ गुणदोषौ । आप्तानाप्तत्वप्रणीतत्वे इति चेत् । तर्ह्युभयाभावाद्वेदवाक्येनोभयात्मकमनुभयात्मकं वा ज्ञानमुत्पद्येत । नोत्पद्येत वा । अनाप्ताप्रणीतत्वं गुण इति चेत् । तर्ह्याप्ताप्रणीतत्वं दोषोऽपि किन्न स्यादिति स एव प्रसङ्गः ।**

शे० — नन्वेवं दावदहनदग्धवेत्रबीजादौ विरुद्धकार्यद्वयजनकशक्तिद्वयसमावेशोऽपि न स्यात् इत्यतो न तत्रापि शक्तिद्वयं युगपदस्ति । किन्तु दाहादिलक्षणसहकारिसामर्थ्यात्पूर्वशक्तिनाशानन्तरमेव तत्र शक्त्यन्तरमिति नानुपपत्तिरित्याह **यदपीति** । तर्हि तद्वदेव प्रकृतेऽपि गुणदोषरूपसहकारिसाहित्याहितशक्तिकं कारणमेव विरुद्धकार्यद्वयजनकमित्यस्त्वित्यत आह **प्रकृते चेति** । तथा चोभयं स्वत इति सिद्धान्तभङ्ग इति भावः । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु गुणदोषयोरेव परपक्षे दुर्निरूपत्वान्न

तदाहितशक्तिकस्य कारणस्य विरुद्धकार्यद्वयजनकता स्वीकाराऽर्हेत्याशयेनाह **किञ्चेति** । प्रमाणमेवाप्रमाणमेव वा ज्ञानमुत्पद्यत इति नियमहेतोर्गुणस्य दोषस्य चाभावादिति भावः । प्रामाण्यहेतोर्गुणस्याभावेऽपि प्रामाण्ये अप्रमाण्यहेतोर्दोषस्याभावेऽप्यप्रामाण्यं स्यादिति वेदजन्यज्ञानमुभयात्मकम्, अप्रामाण्यहेतोरनाप्तप्रणीतत्वस्याभावेनाप्रामाण्याभावे च प्रामाण्यप्रयोजकस्याप्तप्रणीतत्वस्याभावेन प्रामाण्यमपि न स्यादित्यनुभयात्मकं वा ज्ञानमुत्पद्येतेत्यर्थः । **नोत्पद्येतवेति** । परस्परविरोधेनोभयात्मकज्ञानायोगान्निःस्वभावस्य च ज्ञानस्यानुत्पत्तेर्नोत्पद्येतेत्यर्थः ॥ **अनाप्तेति** । तथा च वेदवाक्येन प्रमाणज्ञानस्योत्पत्तिर्युक्तेति भावः ॥ **तर्हीति** । वेदे आप्ताप्रणीत्वरूपदोषस्य सत्त्वादप्रमाणज्ञानस्योत्पत्तिप्रसङ्ग इत्यर्थः । अस्त्वेवमित्यत आह **स एवेति** । अनाप्ताप्रणीतत्वरूपगुणस्येव आप्ताप्रणीतत्वरूपदोषस्यापि वेदे सत्त्वेन वेदजन्यज्ञानस्योभयात्मकं वा ज्ञानमुत्पद्येत नोत्पद्येत वेत्युक्त एव प्रसङ्ग इत्यर्थः ।

**स०**— ननु कारणे विरुद्धशक्तिद्वयस्याभावे एकस्मात्कारणात् कार्यद्वयं कुत्रापि न स्यादित्यत आह **प्रकृत इति** । सहकारिसाहित्याहितशक्तिकत्वाङ्गीकारे ज्ञानकरणातिरिक्तसहकारिसापेक्षत्वेन परतस्त्वापत्तिरित्यर्थः । **तर्हीति** । गुणाभावेऽपि वेदवाक्येन प्रमाणात्मकमेव ज्ञानमुत्पद्यते इत्युच्यते तर्हि दोषाभावेऽपि अप्रमाणात्मकमप्युत्पद्यते इत्यङ्गीकर्तव्यम् । विनिगमकाभावादिति भावः ।

**प०**— नन्वेवं वेत्रबीजस्य वेत्राङ्कुरजननशक्तिमत्त्वं कदलीकाण्डजननशक्तिमत्त्वं चोपलभ्यते । अभिज्ञाजनकचक्षुरादेः प्रत्यभिज्ञाजनकत्वं च दृश्यते । तथैकमेव चक्षुरादिकं प्रमां भ्रमं चोपजनयदुपलभ्यते । तथाच कथं करणेष्युभयशक्तिविरोधादित्युक्तिरित्यत आह **यदपीति** । विरुद्धकार्यजनकं यत्करणमस्ति तदपि सहजशक्त्यैककार्यं जनयत्सहकारिसामर्थ्यादाहितशक्तिकं विरुद्धकार्यान्तरं जनयति । नतु शक्तिद्वयमपि सहजमेवेत्यर्थः । प्रकृतेपि तथाऽस्त्वित्यत आह **प्रकृते चेति** । गुणाहितशक्तिकं चक्षुरादिकं प्रमां जनयति । दोषाहितशक्तिकं तु भ्रममित्यङ्गीकारे चेत्यर्थः । एका शक्तिः सहजा । अपरा त्वाहितेत्युक्तौतूभयं स्वत इत्युक्तिविरोध इति भावः ॥ **उभयात्मकमिति** । प्रमाणमप्रमाणमित्यर्थः ॥ **अनुभयेति** । परस्परविरोधाद्धेतोरिति भावः ॥ **नोत्पद्येत वेति** । ज्ञानमित्यनुषङ्गः । निःस्वभावस्योदयायोगादिति भावः ॥ **स एवेति** । प्रागुक्तत्रिविधकल्पदोषप्रसङ्ग इत्यर्थः ।

**या०**— नन्वेवं दावदहनदग्धवेत्रबीजादौ विरुद्धकार्यद्वयजनकशक्तिद्वयसमावेशो न स्यादित्यत आह **यदपीति** । तथा च तत्रापि न शक्तिद्वयं युगपदस्ति किन्तु दाहादिलक्षणसहकारिसामर्थ्यात्पूर्वशक्तिनाशानन्तरं शक्त्यन्तरमुत्पद्यत इति भावः । मूलं प्रकारान्तरेण योजयितुमाह **किञ्च वचन इति** । साङ्ख्यवचनस्यैव प्रस्तुतत्वाद्वचनग्रहणम् ॥ **वेदवाक्येनेति** । तथा च वेदवाक्येन किञ्चन न सिध्यतीति मूलं योजनीयमिति भावः ॥

श्री० — **तर्ह्युभयाभावादिति** । केवलं प्रामाण्य एव प्रयोजकस्याप्तोक्तत्वरूपगुणस्य अप्रामण्य एव प्रयोजकस्यानाप्तोक्तत्वरूपदोषस्य चेत्यर्थः ॥ **उभयात्मकमिति** । अयमर्थः । वेद-वाक्येनोत्पद्यमानं ज्ञानं प्रमाणमेव मा भवतु । तन्निमित्ताभावात् । तथाऽप्रमाणमेव मा भवतु । तन्निमित्तस्याप्यभावात् । उभयात्मकं प्रमाणाप्रमाणसमाहारात्मकं तु स्याद्बाधकाभावाद्योगरूढिरूपतृतीय-वृत्तिवदिति । यथा योगस्याभावे रूढेश्चाभावे योगरूढिरूपा समाहारवृत्तिरस्ति तथा निमित्तद्वयाभावेन प्रामाण्यस्य वाऽप्रामाण्यस्य वाऽभावे उभयात्मकत्वमसम्भावितमित्यस्वरसादाह **अनुभयात्मकं वेति** । परस्परविरोधेन प्रामाण्याप्रामाण्योभयविकलं अयःशलाकावन्निर्विषयं ज्ञानमात्रमुत्पद्येतेत्यर्थः ॥ **नोत्पद्येत वेति** । निःस्वभावस्य ज्ञानस्यानुत्पत्त्येति शेषः । अनाप्ताप्रणीतत्वं गुण इत्यङ्गीकृत्य वेदस्य सर्वथा अप्रणीतत्वेनोक्तगुणसत्त्वात्तज्जन्यं ज्ञानं प्रमाणमेवेति यद्युच्यते तर्ह्याप्ताप्रणीतत्वं दोष इत्यङ्गीकृत्य सर्वथा अप्रणीते वेदे उक्तदोषसत्त्वात्तत एव तज्जन्यं ज्ञानमप्रमाणमपि स्यादित्युक्त एवातिप्रसङ्ग इत्याह **अनाप्ते-त्यादिना** ।

च० — **उभयाभावादिति** । वेदस्यापौरुषेयत्वादिति भावः ।

सु० — **एतेन सांख्याचार्यवचनं स्वत एव प्रमाणं किमाप्तिनिश्चयेनेत्यपि निरस्तम् । अप्राण्यस्यापि स्वतस्त्वेनोक्तसकलदोषापत्तेः । अथ महाजनपरिग्रहात्तत्प्रामाण्यनिश्चय इति चेन्न । पूज्यार्थत्वेऽसिद्धेः । बह्वर्थत्वे सव्यभिचारत्वात्सन्दिग्धासिद्धेश्चेति ।**

शे० — **उक्तसकलेति** । उभयात्मकमनुभयात्मकं वा ज्ञानमुत्पद्यते नोत्पद्यते वेत्युक्तसकल-दोषा इत्यर्थः ॥ **तत्प्रामाण्येति** । सांख्याचार्यप्रणीतागमप्रामाण्येत्यर्थः । किमत्र महच्छब्देन पूज्य-ताऽभिमता, संख्याप्रकर्षो वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **पूज्यार्थत्वे इति** ॥ **असिद्धे-रिति** । सांख्यागमपरिगृहीतॄणां पूज्यत्वस्य परं प्रत्यसिद्धेरित्यर्थः । द्वितीयं दूषयति **बह्वर्थत्वे इति** । बौद्धागमादाविति शेषः । देशविशेषे तस्यापि बहुजनपरिगृहीतत्वादिति भावः । ननु बौद्धागमादि-व्यावृत्तस्य बहुतमजनपरिगृहीतत्वस्य हेतुतया विवक्षितत्वान्न बौद्धागमादौ व्यभिचार इत्यत आह **सन्दिग्धासिद्धेश्चेति** । जनानामियत्तापरिज्ञानस्याशक्यतया त्वदागमपरिगृहीतॄणां बौद्धागमपरिगृहीतजना-पेक्षया बहुतमत्वस्य निश्चेतुमशक्यत्वादित्यर्थः ।

प० — **उक्तसकलेति** । प्रागुक्तत्रिविधेत्यर्थः ॥ **सव्यभिचारत्वादिति** । बौद्धादिग्रन्थेष्वपि प्रामाण्यहीनेषु सत्त्वादिति भावः । ननु तदपेक्षयाऽपि बहुजनपरिगृहीतत्वं हेतुरस्त्वित्यत आह **संदिग्धेति** । ततोऽप्यधिकसंख्यावत्त्वस्यानिर्णयादिति भावः ।

या० — उक्तसकलेति । साङ्ख्यस्य वचनेनोत्पन्नं ज्ञानं प्रमाणमप्रमाणं वेत्युभयात्मकं वा स्यादित्यादिना त्रेधा विकल्पदोषा अभिहितास्ते सर्वेऽप्यत्र स्युरित्यर्थः । पूज्यार्थत्व इति । मह-पूजायामिति धातोरिति भावः । ननु बहुजनपरिगृहीतत्वस्य न बौद्धागमादौ व्यभिचारः, बौद्धागमादि-व्यावृत्तस्य बहुतमजनपरिगृहीतत्वस्य हेतुतया विवक्षितत्वादित्यत आह सन्दिग्धासिद्धेरिति । त्वदागम-परिग्रहीतॄणां बौद्धागमपरिग्रहीत्रपेक्षया बहुतमत्वं न निश्चेतुं शक्यमिति भावः ।

श्री० — एतेनेत्युक्तं विवृणोति अप्रामाण्यस्यापीति । असिद्धेः त्वदागमपरिगृहीतॄणां पूज्यत्वस्यास्माकमसिद्धेरित्यर्थः ॥.

च० — असिद्धेरिति । तत्परिगृहीतॄणां पूज्यत्वस्य प्रतिवादिभिरनुपगमादिति भावः । सव्यभिचारत्वादिति । प्रामाण्यविनिर्मुक्तबौद्धादिग्रन्थसाधारण्यादिति भावः । संदिग्धेति । बौद्धशास्त्रपरिगृहीत्रवधिकबहुत्वस्य सांख्यशास्त्रपरिगृहीत्रधिष्ठानकस्यानवधृतेरिति भावः ।

सु० — मा भूत्प्रकृतिकारणत्वे प्रपञ्चस्य प्रत्यक्षं प्रमाणम् । मा च भूदागमः । अनुमानं तु भविष्यति । यथोक्तम् । 'भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्ये'ति ।

अयमर्थः । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य मूलकारणमस्त्यव्यक्तम् । यथा कूर्मशरीरे सन्त्येवाङ्गानि ततो विभज्यन्ते । तस्मिन्नेवाव्यक्तीभवन्ति । एवं कारणान्मृत्पिण्डाद्धेमपिण्डाद्वा कार्याणि घटमुकुटादीनि विभज्यन्ते । सन्त्येव च पृथिव्यादीनि कारणात्तन्मात्रात् । सन्त्येव च तन्मात्राण्यहङ्कारारात् । सन्नेव चाहङ्कारो महतः । सदेव च महत्परमाव्यक्तादिति । सोऽयं कारणात्परमाव्यक्तात्पारम्पर्येण विश्वस्य कार्यस्य विभागः प्रतिसर्गे । मृत्पिण्डं हेमपिण्डं वा घटमुकुटादयो विशन्तोऽव्यक्तीभवन्तीति तत्कारणरूपमेवानभिव्यक्तघटमुकुटादिकार्यमपेक्ष्याव्यक्तं भवति । एवं पृथिव्यादयस्तन्मात्राणि विशन्तः स्वापेक्षया तन्मात्रमव्यक्तयन्ति । एवं तन्मात्राण्यहङ्कारं विशन्त्यहङ्कारमव्यक्तयन्ति । एवमहङ्कारो महान्तमाविशन्महान्तमव्यक्तयति । महान्प्रकृतिं स्वकारणं विशति । प्रकृतेस्तु न क्वचिन्निवेश इति सा सर्वकार्याणामव्यक्तमेव । सोऽयमविभागः प्रकृतौ वैश्वरूप्यस्य नानारूपस्य कार्यस्य । तस्मात्कारणे कार्यस्य सत एव विभागाविभागाभ्यामव्यक्तं कारणमस्तीति ।

इतश्च, शक्तितः प्रवृत्तेः । कारणशक्तितो हि कार्यं प्रवर्तते । अशक्तात्कारणात्कार्यस्यानुत्पत्तेः । शक्तिश्च कारणगता न कार्यस्याव्यक्तत्वादन्या । अस्तु तर्हि महत एव परमा-

**व्यक्तत्वमित्यत उक्तं भेदानां परिमाणादिति । महदादीनामव्यापकत्वादव्यक्तकारणकत्वं घटादिवदित्यर्थः ।** इतश्च, **समन्वयात् । सुखदुःखमोहसमन्वितानि हि कार्याणि । यानि च यद्रूपमनुगतानि तानि तत्स्वभावाव्यक्तकानि । यथा मृद्धेमरूपमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकाः । तस्मादस्ति सुखदुःखमोहात्मकानां सत्त्वरजस्तमसां साम्यावस्थाऽव्यक्तं भेदानामिति ।**

शे० — **मा च भूदिति** । मा भूच्चेति संबन्धः । किन्तदनुमानमित्यतस्तत्संग्रहरूपां कारिकां पठति **यथोक्तमिति ॥ कारणमस्त्यव्यक्तमिति** । अनेन 'कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदायाच्चे'त्युत्तरकारिकास्थस्य कारणमस्त्यव्यक्तमित्यस्य न केवलमुत्तरवाक्येऽन्वयः, किन्तु पूर्वकारिकायामपीति न साध्यानुक्तिदोष इत्युक्तं भवति । तत्र कारणकार्यविभागादिति हेतुमुपपादयितुं दृष्टान्तं तावदाह **यथा कूर्मेति** । तत इत्यतःपरं निस्सरन्तीति शेषः । **विभज्यन्त** इदं कूर्मशरीरमेतान्यस्याङ्गानीत्येवं प्रतीयन्ते सन्त्येवेत्यभिव्यक्त्युपपादनायोक्तम् । तस्मिन्नेवेत्यतःपरं पूर्वं निविशमानानीति शेषः । एवं दृष्टान्तमुक्त्वा विभागरूपहेतुमुपपादयति **एवमिति** । घटमुकुटादीनीत्यतःपरं सन्त्येवेति शेषः । कारणात्तन्मात्रादित्यादौ विभज्यन्त इति यथायोगं पूरणीयम् । विभज्यन्त इत्यत्र विभागशब्देनाभिव्यक्तिरभिप्रेता । तेन विभागस्य संयोगपूर्वकत्वेन संयोगस्याप्यङ्गीकर्तव्यत्वेन 'संयोगाप्राप्त्यभावाच्चे'ति संयोगाभावेन कार्यकारणयोरत्यन्ताभेदसाधनमनुपपन्नमिति चोद्यानवकाशः । पारम्पर्येणेत्युपलक्षणम् । साक्षादित्यपि द्रष्टव्यम् । महत्तत्त्वस्य परमाव्यक्तात्पारम्पर्येण विभागाभावात् । तत्रापि पारम्पर्यस्य बाहुल्याभिप्रायेण साक्षादुपादानम् । साक्षात्त्वस्य काचित्कत्वादुपलक्षणत्वेनोपादानममिति ध्येयम् । नन्वयं विभागः प्रलयकालेऽपि कस्मान्न भवतीत्यतः सर्गकालस्यापि विभागकारणत्वात्तदभावान्न प्रलये विभाग इत्याशयेनोक्तं **प्रतिसर्ग इति** । अविभागाख्यं हेतुमुपपादयति **मृत्पिण्डमित्यादिना** । प्रलयकालस्याप्यविभागकारणत्वान्न सृष्टिकालेऽपि तत्प्रसङ्गः । नन्वेवं कार्यस्य घटमुकुटादेरेवाव्यक्तता स्यान्न मृत्पिण्डादेरित्यत उक्तं **तत्कारणरूपमेवेति** । सत्यं प्रलये कार्यमेवाव्यक्तं भवतीति तथाऽपि तद्यत्राव्यक्तं तत्कारणस्वरूपमेवानभिव्यक्तकार्याभेदेनाव्यक्तमुच्यत इति मृत्पिण्डादेरप्यव्यक्तत्वमुपपद्यते । तदिदमुक्तं **कार्यमपेक्ष्येति** । एवं स्वापेक्षया तन्मात्राण्यव्यक्तयन्तीत्यादिकमपि स्वेषामव्यक्तत्वात्स्वाभिन्नं तन्मात्रादिकमव्यक्तयन्तीति व्याख्येयम् । सोऽयमविभागः प्रकृतावित्यत्र साक्षात्पारम्पर्येणेति शेषः । अविभागश्चोक्तरीत्याऽनभिव्यक्तिः । वैश्वरूप्यस्येति स्वार्थिकः ष्यञित्यभिप्रेत्याह **नानारूपस्येति** । हेतुद्वयं निगमयति **तस्मादिति** ।

**अव्यक्तत्वादन्येति** । सत्कार्यपक्षे कार्याव्यक्तताया अन्यस्यां शक्तौ प्रमाणाभावादयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमनागतावस्थं न सिकतास्विति भावः ॥ **महत एव परमाव्यक्तत्वमिति** । उक्तहेतूनां महत एवाव्यक्तत्वसाधकत्वसंभवान्न ततः परेणाव्यक्तेन किमपि कृत्यमिति भावः । भेदानामित्यस्यार्थो **महदादीनामिति** । परिमाणादित्यस्य परिमितत्वादित्यर्थमभिप्रेत्याह **अव्यापकत्वादिति** ॥ **घटादिवदिति** । अत्रायं प्रयोगः । विवादाध्यासिता भेदा अव्यक्तकारणवन्तः परिमितत्वाद्घटादिवत् । न च दृष्टान्तासङ्गतिः । घटादयो हि परिमिता मृदाद्यव्यक्तकारणा दृष्टाः । कार्यस्याव्यक्तावस्थाया एव सर्वत्र कारणत्वोक्तेः । यच्च महतः कारणं तत्परमाव्यक्तम् । परतराव्यक्तकल्पनायां प्रमाणाभावादिति भावः । भिन्नानां सरूपता समन्वय इत्यभिप्रेत्य सरूपतामुपदर्शयति **सुखेति** । सुखदुःखमोहस्वभावानीत्यर्थः । सुखदुःखमोहसमन्विततया बुद्ध्यादीनां प्रतिभासात् । न च सुखं घट इत्याद्यनुपलम्भान्न तदात्मत्वेन अनुगतिरिति वाच्यम् । घटविषया हि बुद्धिस्तमनुकूलं प्रतिकूलं वा गोचरयतीत्यनुवृत्त्युपपत्तेरिति भावः । इयमत्र परेषां रीतिः । प्रत्येकं भावास्त्रैगुण्यवन्तोऽनुभूयन्ते । यथा मैत्रदारेषु रूपयौवनकुलशीलसंपन्ना पद्मावती नाम काचन स्त्री स्वामिनं मैत्रं सुखीकरोति । तत्कस्य हेतोस्तं प्रति तस्याः सुखस्वरूपसमुद्भवात् । सैव स्त्री सपत्नीं दुःखीकरोति । तत्कस्य हेतोस्तां प्रति तस्या दुःखस्वरूपसमुद्भवात् । चैत्रस्य तु स्त्रैणस्य तामविन्दतो मोहो विषादः । कस्य हेतोस्तं प्रति तस्या विषादस्वरूपसमुद्भवात् । पद्मावत्या च सर्वे पदार्था व्याख्याता इति सिद्धं सर्वपदार्थानां सुखदुःखमोहात्मकत्वमिति । ननु चैतावता सुखदुःखाद्यात्मकवस्त्वारब्धत्वसिद्धिरित्याशङ्कामुपसंहारव्याजेन परिहरति **तस्मादिति** । **सुखदुःखमोहात्मकाना**मिति । यत्सुखहेतुः तत्सुखात्मकं सत्त्वं, यद्दुःखहेतुस्तद्दुःखात्मकं रजो, यन्मोहहेतुस्तन्मोहात्मकं तम इत्येवं सुखदुःखमोहात्मकानां सत्त्वरजस्तमसामित्यर्थः ॥ **साम्यावस्थेति** । गुणप्रधानभावं विहाय स्वरूपेणावस्थानमित्यर्थः ।

स० — **भेदानां परिमाणादिति** । 'असदकरणादि'त्यादिना कार्यस्य सत्त्वं सिद्धम् । पूर्वत्र विद्यमानमस्त्यव्यक्तमित्यनुवर्तते । 'भेदानां परिमाणादि'त्यनेन विद्यमानस्य भेदानामित्यस्य तन्त्रेण योजना । तथा च भेदानां महदादिकार्याणाम् अस्त्यव्यक्तम् । कुत इत्यतो हेतुमाह-'कारण कार्यविभागादविभागाद्वैश्वरूप्यस्य' इति । तत्र कारण-कार्यविभागदिति हेतुं सदृष्टान्तमुपपादयति **यथा कूर्मेत्यादिना** ॥ **मृत्पिण्डाद्वा कार्याणीति** । दृष्टान्ते विद्यमानस्य 'सन्त्येवे' त्यस्याप्यावृत्तिरिति ज्ञातव्यम् । तथा च सन्त्येव कार्याणीत्यर्थः । **विभज्यन्त इति** । अत्र विभागशब्देन अभिव्यक्तिरभिप्रेता । तेन विभागस्य संयोगपूर्वकत्वेन संयोगस्याप्यङ्गीकर्तव्यत्वेन संयोगप्राप्त्यभावाच्चेति, संयोगा-

भावेन कार्यकारणयोरत्यन्ताभेदसाधनमनुपपन्नमिति चोद्यानवकाशः । **पारम्पर्येणेति** । उपलक्षणमेतत् साक्षादित्यपि द्रष्टव्यम् । महतः परमव्यक्तात् परम्पर्येण विभागाभावात् । पारम्पर्यस्य स्वशब्देनोपादानं तु बहुत्वाभिप्रायेणेति बोध्यम् । प्रतिसर्गे इत्यस्य विश्वस्य कार्यस्य विभाग इति पूर्वेण संबन्धः । न नूत्तरत्र । **घटमुकुटादिकार्यमिति** । सर्वत्र कार्यमपेक्ष्यैव तत्कारणस्याव्यक्तत्वं ज्ञातव्यमित्यभिप्रेत्य कार्यमित्युक्तम् । क्वचित्पुस्तके घटमुकुटादिकमपेक्ष्येत्येव पाठः । तस्मिन्पक्षे यथास्थित एवार्थः । **वैश्वरूप्यस्येति** । विश्वरूपमेव वैश्वरूप्यमिति 'स्वार्थिकःष्यञ्' इत्युक्तं भवति । **शक्तिश्चेति** । न हि सत्कार्यपक्षे कार्यस्याव्यक्तताया अन्यस्यां शक्तावस्ति प्रमाणमिति भावः । **कार्याणीति** । बुद्ध्यादीनीत्यर्थः । परेण तथैव व्याख्यातत्वादिति द्रष्टव्यम् । **साम्यावस्थेति** । तल्लक्षणमव्यक्तमित्यर्थः ।

प० — इदमित्यादिमूलमवतारयितुमाह **मा भूदित्यादिना** । उत्तरार्धे तावद्विवृण्वन् साध्योक्त्याऽऽकांक्षां तावत्पूरयति **कारणकार्येति** । कारणकार्यविभागादिति हेतुं व्यनक्ति **यथेत्यादिना विभागइत्यन्तेन** ॥ **सन्त्येवेति** । विद्यमानान्येवेत्यर्थः । एवमग्रेपि ॥ **विभज्यन्त इति** । विभक्ततया दृश्यन्त इति भावः)त्यर्थः ॥ **तस्मिन्नेवेति** । यथेत्यनुषङ्गः । अयं च दृष्टान्तः प्रतिसर्ग इत्यादाव-विभागहेतूपपादनस्थले उपयोक्ष्यमाणोपीह प्रसंगादुक्तः ॥ **तन्मात्रादिति** । गन्धरसरूपादित इत्यर्थः । विभज्यन्त इत्यनुषङ्गोऽत्रोत्तरत्र च ध्येयः । वैश्वरूप्यस्येत्यस्यार्थो **विश्वस्य कार्यस्येति** । अविभागहेतुं च व्यनक्ति **प्रतिसर्ग इत्यादिना नानारूपस्य कार्यस्येत्यन्तेन** । यथा कूर्मशरीरे तदङ्गान्यव्यक्तीभवन्ति एवमित्येतावतो वाक्यस्यानुकर्षः । तन्मात्राणीति द्वितीया । **विशन्तोऽव्यक्तीभवन्तीत्यनुषङ्गोऽत्र** उत्तरत्र च ज्ञेयः । स्वापेक्षयेत्यस्य तन्मात्रादेर्व्यक्तत्वेपि पृथिव्यादेरव्यक्तत्वेन हेतुनाऽव्यक्तव्यवहार इत्यर्थो ध्येयः । वैश्वरूप्यस्येत्यनुवादः । नानेत्यादि व्याख्या । स्वार्थे ष्यञ् इति भावः ॥ **इतश्चेति** । अस्मादपि हेतोरिति भावः । तमाह **शक्तितः प्रवृत्तेरिति** । तद्व्याचष्टे **कारणेति** । परिमाणादित्यस्य परिमितत्वादित्यर्थमुपेत्याह **अव्यापकत्वादिति** । समन्वयादित्येतदवतार्य व्याचष्टे **इतश्चेति** । **समन्वितानि हि कार्याणीति** । सुखादिजनकानि वनितादिकार्यभूतवस्तूनीत्यर्थः । **यद्रूपमिति** । यज्जननस्वभावं प्राप्तानि तानि तज्जननस्वभावकाव्यक्तानीत्यर्थः । किंचिद्वनितादिवस्तु कस्यचित्स्वानुभवितुः पुंसः सुखहेतुर्भवति तं प्रति सत्त्वगुणस्योद्रेकात् । कस्यचित्सपत्नीप्रभृतेर्दुःखहेतुर्जायते तं प्रति रजोगुणस्योद्रेकात् । कस्यचित्तत्कामुकादेर्मोहहेतुस्तमोगुणस्योद्रेकात् । इत्येवंरूपेण सुखादिहेतुभूतसत्त्वरजस्तमोनुरूपाव्यक्तकानि कार्याणि सर्वाणीति भावेनाह **तस्मादस्तीत्यादिना** ॥ **साम्यावस्थेति** । अन्योन्यमिश्रणेन विना विद्यमानावस्थान्येव सत्त्वादीन्यव्यक्तं मूलकारणमित्यर्थः ।

**या०** — कारिकायां साध्यानुक्तेस्तत्पूरयति **मूलकारणमस्त्यव्यक्तमिति** । तत्र तावत्कार्यकारणविभागादिति हेतुमुपपादयति **यथा कूर्मशरीर इत्यादिना** । तस्मिन्नेवाव्यक्तीभवन्तीत्येतद्रक्ष्यमाणविभागरूपहेतौ दृष्टान्तकथनायेति ज्ञातव्यम् । अत्र विभागशब्देनाभिव्यक्तिरेव विवक्षिता । सन्त्येवेत्येतदभिव्यक्त्युपपादनाय । असत्त्वे उत्पत्तेरेव प्रसङ्गेनाभिव्यक्तेरसम्भवात् । नन्वयं विभागः प्रलयकाले कस्मान्न भवतीत्यत उक्तं **प्रतिसर्ग इति** । सर्गकाल इत्यर्थः । तथा च सर्गकालो विभागकारणमतो नोक्तदोष इति भावः । एवमविभागेऽपि प्रलयकालः कारणमिति द्रष्टव्यम् । अविभागाख्यं हेतुमुपपादयति **मृत्पिण्डमित्यादिना** । नन्वेवं कार्यस्य महदादेरेवाव्यक्ततापत्तिर्न प्रधानस्येत्यत आह **तत्कारणरूपमेवेति** । सत्यं प्रलये कार्यमेवाव्यक्तं भवतीति तथाऽपि तद्यत्राव्यक्तं तत्कारणस्वरूपमेवानभिव्यक्तकार्याभेदेनाव्यक्तमुच्यते । अतः प्रधानस्याव्यक्ततोपपद्यत इति भावः । तदिदमुक्तं **कार्यमपेक्ष्येति** । कार्यस्याव्यक्तत्वात्तदभिन्नं कारणमव्यक्तमित्यर्थः । स्वापेक्षया तन्मात्राण्यव्यक्तयन्तीत्यादिकमपि स्वेषामव्यक्तत्वात्स्वाभिन्नं तन्मात्रादिकमव्यक्तयन्तीति व्याख्येयम् । सोऽयमविभागः प्रकृतावित्यत्र साक्षात्पारम्पर्येणेति शेषः । अत्राविभागोऽनभिव्यक्तिः । हेतुद्वयं निगमयति **तस्मात्कारण इति** । कारण इति प्रकृताभिप्रायेणैवोक्तम् । कूर्मशरीरस्य स्वाङ्गाकारणत्वात् । ततश्च व्यक्त्यव्यक्ती हि पूर्वं कुत्रचित्सत एव पदार्थस्य कूर्माङ्गादौ दृष्टे नासतः, अतो महदादेरपि कार्यस्य व्यक्त्यव्यक्ती कुत्रचित्सत एव वक्तव्ये इति ताभ्यां सन्महदादिसकलकार्यगर्भमेकं वस्तु कूर्मशरीरस्थानीयं सिध्यति तदेवाव्यक्तमित्यर्थः ।

---

**अव्यक्तत्वादन्येति** । सत्कार्यपक्षे कार्यस्याव्यक्तताया अन्यस्यां शक्तौ मानाभावात् । अत एव सिकताभ्यस्तिलानां तैलोपादानानां भेद उपपद्यते । यदेष्वेव चैतदस्त्यनागतावस्थं न सिकतास्विति भावः ॥ **महत एव(परमा)व्यक्तत्वमिति** । उक्तहेतुभिर्महत एवाव्यक्तत्वं साध्यतां किं ततः परेणाव्यक्तेनेत्यर्थः । भेदानामित्यस्य व्याख्यानं **महदादीनामिति** । परिमाणादित्यस्य परिमितत्वादित्यर्थमभिप्रेत्याह **अव्यापकत्वादिति** ॥ **घटादिवदिति** । घटादेः कार्यस्याव्यक्तावस्थैव मृदादिकारणमित्याङ्गीकारान्न साध्यवैकल्यमिति भावः । एवं च महदादीनां कारणं सिध्यति तदेव व्यापकं प्रधानं परमाव्यक्तम् । परतराव्यक्तकल्पनायां च न मानमिति भावः ॥ **सुखदुःखमोहसमन्वितानीति** । सुखदुःखमोहस्वभावानीत्यर्थः । सुखादिहेतुतयाऽभिमतं वनितादिकं सुखादिस्वभावमेवेति तेषामाशयः । यथाऽऽहुः । 'प्रत्येकं भावास्त्रिगुण्यवन्तोऽनुभूयन्ते यथा मैत्रदारेषु पद्मावत्यां मैत्रस्य सुखं तत्कस्य हेतो । तं प्रति तस्याः सत्त्वगुणसमुद्भवात् । तत्सपत्नीनां च दुःखं तत्कस्य हेतोस्ताः प्रत्यस्या रजोगुणसमुद्भवात् । चैत्रस्य तु स्त्रैणस्य तामविन्दतो मोहो विषादः स कस्य हेतोः । तं प्रत्यस्यास्तमोगुणसमुद्भवात् । पद्मावत्या च सर्वे भावा व्याख्याता' इति । अत्र पद्मावत्याः सुखादिस्वभावत्वं

मैत्रादेस्तदनुभवोऽन्यथा न स्यादिति भावः ॥ **सुखदुःखमोहात्मकानामिति** । यत्सुखात्मकं तत्सत्त्वं यद्दुःखात्मकं तद्रजो यन्मोहात्मकं तत्तम इत्यर्थः ॥

श्री० — **तत्** अव्यक्तस्वरूपम् । **कार्यस्याव्यक्तत्वादिति** । अव्यक्तकार्यगर्भितत्वादन्या नेत्यर्थः ।

च० — **मा च भूदिति** । न माङ्योग इत्यडभावं ध्वनयितुं चोऽन्तरा कृतः । श्रुतानुपूर्व्याः सवर्णदीर्घभ्रान्तिव्युदासकत्वाभावात् । कारिकोत्तरदलं विवृण्वानस्तत्र साध्यबोधकपदसमभिव्याहारविरहेण तत्पूरयति **मूलेति** । आद्यहेतुविभक्त्यंतं तावद्व्याकुरुते **यथेत्यादिकविभागइत्यन्तेन** । सन्त्येवेत्यस्तेर्न रूपं किन्तु सदेः क्विबन्तात् क्लीबे प्रथमबहुवचनस्येति विद्यमानानीत्यर्थकम् । **विभज्यन्ते** । विविक्ततया दृश्यन्ते । **तस्मिन्नेवेति** । अनुषञ्जनीयेन थालन्तेनान्वेति । इदं चाभिधास्यमानाविभागरूपहेतौ निदर्शनप्रदर्शनायेति ज्ञेयम् । **तन्मात्रात्** गन्धरूपरसादितः । विभज्यन्त इत्यस्योत्तरत्रानुषङ्गोऽवसेयः । **विभाग** उत्पत्तिः । विभागे सर्गकालोऽविभागे प्रलयकालो हेतुरिति ध्येयम् । द्वितीयहेतुविभक्त्यंतं व्याख्याति । **मृत्पिण्ड इति** । शक्तितः प्रवृत्तेरिति व्याकरोति **कारणशक्तितो हीति** ।

सु० — **यद्यप्येतान्यनुमानान्यव्यक्तस्वरूपं साधयन्ति । तथाऽपि महदादिकारणतयैव तदेतैः सिध्यतीति । अत्र वक्तव्यम् । किमेतैरनुमानैर्जगदुपादानतामात्रेणाव्यक्तं सिध्यति, उत स्वातन्त्र्येणा(पीति)पि । आद्ये सिद्धसाधनम् । अस्माभिरपि विश्वोपादानस्य प्रधानस्याभ्युपगतत्वात् । 'शरीररूपकेति' ह्युक्तम् । द्वितीयं निराकर्तुं सूत्रम्** ॥ रचनानुपपत्तेश्च नानुमानमिति ॥ **तद्व्याचष्ट** इदमिति ।

अनु० — इदं नाचेतनवशं वस्तुत्वात्प्रतिपन्नवत् ॥
इत्येव प्रतिषिद्धस्य केन मूलानुमा भवेत् ॥

**महदादिकार्यमित्यर्थः** । अचेतनवशं स्वतन्त्राचेतनाधीनोत्पत्तिकम् । प्रतिपन्नवत् । **प्रधानवत्** । **आस्तां तावद्दूषणान्तरम् इति प्रत्यनुमानेनैव प्रतिषिद्धस्य प्रधानस्वातन्त्र्यस्य** मूलानुमा **साधिकानुमा** केन **सामर्थ्येन भवेत् प्रमाणमिति शेषः** । **मूलानुमेति** वाऽऽवर्तनीयम् । **किम् आक्षेपे** । **अकार्यत्वमत्रोपाधिरिति चेन्न** । **पटादौ** साध्याव्याप्तेः । **पटादेः कुविन्दाद्यधिष्ठिततन्त्वादिकार्यत्वस्यान्वयव्यतिरेकाभ्यामुपलम्भात्** ।

शे० — **यद्यपीति** । विभागमविभागादिनोक्तरीत्या कूर्मशरीरादिवत् अनभिव्यक्तकार्यावस्थैकवस्तुमात्रसिद्धिरिति भावः ॥ **तथाऽपीति** । कार्याणामव्यक्तावस्था कारणमेवेति सांख्यैरङ्गीकारादिति भावः । ननु च सिद्धसाधनत्वेनैव भेदानां परिमाणादिति शङ्कितानुमानस्य निरासप्रसिद्धेन सूत्रेण प्रयो-

जनमिति किं तद्व्याख्यानपरोत्तरभाष्येणेत्याशङ्क्य, कारणत्वमात्रेण प्रधानस्योक्तानुमानैः सिद्धिपक्षे तत्प्रसक्तावपि स्वतन्त्रकारणत्वेनोक्तानुमानैः तत्सिद्धिपक्षे तदप्रसङ्गात्तन्निरासकतया सूत्रस्यार्थवत्त्वात्. तद्व्याख्यानरूपोत्तरभाष्यं योजयितुं विकल्पप्रकारप्रदर्शनपूर्वकमाद्यं पक्षं बहिरेव दूषयति **अत्र वक्तव्यमिति** । कुतः सूत्रकारीयप्रधानाद्यभ्युपगमसिद्धिः इत्यतस्तद्वाक्यादेवेत्यभिप्रेत्य तदुपन्यस्यति **शरीररूपकेति ह्युक्तमिति** । व्याचष्ट **इति** । तात्पर्येत इति शेषः । अचेतनवशत्वस्य सिद्धान्तेऽप्यङ्गीकारात्तदभावसाधनेऽपसिद्धान्तो बाधश्चेत्यत आह **स्वतन्त्रेति** । इत्येवेत्येवशब्दस्य व्यर्थत्वविरुद्धार्थत्वे निराकर्तुं तत्तात्पर्यमाह **आस्तामिति** । अत्र पक्षे प्रमाणमिति शेषपूरणं भवतीत्यपरितोषादाह **मूलानुमेति वेति** ॥ **अकार्यत्वमिति** । उक्तसाध्यवति प्रधानेऽकार्यत्वसत्त्वेन साध्यव्यापकत्वात्साधनवति च महदादौ तदभावेन साधनाव्यापकत्वाच्चेति भावः । उक्तसाध्यवत्यपि पटादावकार्यत्वाभावान्न साध्यव्यापकतेत्यनुपाधित्वमित्याह **पटादाविति** । ननु च तत्रोक्तरूपसाध्यस्यैवासम्मतेर्न तदव्यापकत्वमित्यत आह **पटादेरिति** ॥ **अन्वयव्यतिरेकाभ्यामिति** । तत्सध्रीचीनप्रत्यक्षेणेत्यर्थः ।

प० — **कारणतयैवेति** । कार्याणामव्यक्तावस्था कारणमेवेत्यङ्गीकारादिति भावः । नन्वव्यक्तादिशब्दानामपि ब्रह्मणि समन्वयात् कथमेवमुक्तिरित्यत आह **शरीररूपकेति** । शरीरस्य रूपमिव भगवत्तन्त्रं रूपं यस्येति व्युत्पत्त्या शरीररूपके शरीरवद्विद्यमाने प्रधाने विन्यस्तस्य हरेरव्यक्तशब्देन गृहीतेरित्यानुमानिकपादे अव्यक्तपदेन प्रधानमपि तच्छब्दमुख्यार्थभगवत्संबन्धाद्गृह्यत इति ह्युक्तमित्यर्थः । एवकारतात्पर्यं व्यञ्जयन्नेवोत्तरार्धं व्याचष्ट **आस्तामिति** ॥ **इति वाऽऽवर्तनीयमिति** । तथाच **मूलानुमा** साधकानुमा । **केन** सामर्थ्येन **मूलानुमा** मूलभूतानुमा अव्यक्तानुमापिका स्यादिति तदर्थ इति भावः ॥ **अत्रेति** । महदादिकं, स्वतन्त्राचेतनाधीनोत्पत्तिकं न, वस्तुत्वात् प्रधानवदिति प्रयोग इत्यर्थः ।

या० — **यद्यप्येतानीति** । विभागाविभागाभ्यामुक्तदिशा कूर्मशरीरादिवदनभिव्यक्तकार्यावस्थमेकं वस्तु सिध्यतीत्येव न तु तत्कारणमपीति । शक्तितः प्रवृत्त्याऽपि कार्यस्याव्यक्तावस्थैव सिध्यति न त्वव्यक्तं कारणमिति । अव्यापकत्वेनाप्यव्यापकस्य कार्यस्यैकत्र प्रवेशेन कूर्माङ्गवत् अनभिव्यक्ततासंभवान्महदाद्यव्यापकवस्तुप्रवेशाधिकरणमेकं वस्तु सिध्यति न तु तत्कारणताऽपि । एवं समन्वयेनापि यानि यद्रूपानुगतानि तानि तत्स्वभावाव्यक्तकानीति व्याप्तिबलात्तत्स्वभावमव्यक्तमेव सिध्यति न तु तत्कारणताऽपीति भावः । **तथाऽपीति** । कार्याणामव्यक्तावस्था कारणमेवेति सांख्यैरङ्गीकारादिति भावः । ननु वैदिकानामव्यक्तादिशब्दानां भगवत्परत्वस्य साधितत्वात्कथमप्रामाणिकस्य प्रधानस्य विश्वोपादानत्वाभ्युपगम इत्यत आह **शरीररूपकेति** । सत्यं परमात्मन एवाव्यक्तादिशब्दा इति तथाऽपि तत्तन्त्रत्वेन

तच्छरीररूपत्वादितरस्याप्यव्यक्तादिशब्दा इति प्रथमाध्यायस्य चतुर्थपाद उक्तमतो नाप्रामाणिकं प्रधानमिति भावः ।

श्री० — **आवर्तनीयमिति** । तथा च **मूलानुमा** साधकानुमा । **कथं मूलानुमा** व्याप्तिपक्षधर्मतामूलकानुमा निर्दोषोपपत्तिरूपाऽनुमानरूपं प्रमाणमिति यावत् । **कथं** भवेदित्यर्थः । ननु पटादावपि स्वतन्त्राचेतनतन्त्वाद्यधीनोत्पत्तिकत्वेन साध्यमेव नास्तीति चेत्तत्राह **पटादिरिति** ॥ **अधिष्ठितेति** । प्रेरितेत्यर्थः ।

च० — **अकार्यत्वमेवेति** । स्वतन्त्राचेतनाधीनोत्पत्तिकत्वाभावसाधकानुमान इत्यर्थः ॥

सु० — **एवं प्रधानस्य रचनायाः स्वतन्त्रप्रवृत्तेरनुमानविरोधेनानुपपत्तेर्नानुमानं तत्र प्रमाणमिति सूत्राक्षरयोजनां मनसि निधाय सूत्रतात्पर्यमुक्तम् । इदानीं तामेव विवृण्वन्प्रतिपक्षान्तरमाह** स्वतन्त्रेति ।

**अनु०** — स्वतन्त्रवृत्ती रचना सा चैवाचेतने कुतः ॥

**चशब्दोऽनुमानान्तरसमुच्चये । कुत एवेत्यन्वयः । अयमत्र प्रयोगः । प्रधानं स्वतन्त्रप्रवृत्तिरहितम् अचेतनत्वात् । तन्त्वादिवदिति ।**

शे० — **अनुमानान्तरसमुच्चय इति** । प्रतिपक्षान्तरसमुच्चय इत्यर्थः ॥ **अन्वय इति** । ततो न व्यर्थत्वविरुद्धार्थत्वे इति भावः । 'इदं त्वचेतनवशमि'त्यस्यैव स्वतन्त्रवृत्ती रचनेत्यस्यैव यथाश्रुतस्य प्रतिपक्षत्वासंभवादाह **अयमत्रेति** ।

प० — **तामेवेति** । सूत्राक्षरयोजनामिति योज्यम् । रचनानुपपत्तिमेवेति वार्थः ॥ **इत्यन्वय इति** । एवशब्दस्येति योज्यम् ।

सु० — **नन्वचेतनत्वेऽपि प्रधानस्य स्वातन्त्र्येण प्रवृत्तिरस्तु को विरोधः । तथा च विपक्षे बाधकाभावादप्रयोजकोऽयं हेतुरित्यत आह** अचेतनत्वमिति ।

**अनु०** — अचेतनत्वं स्वातन्त्र्यमिति चात्मप्रमाहतम् ॥

**तावदेव ह्यनेनाशङ्कनीयं यस्मिन्नाशङ्क्यमाने स्ववचनस्वक्रियास्वन्यायप्रमाणान्तरविरोधो न प्रादुष्यात् । न हि कश्चिदेवं शङ्कते । मूकोऽपि वक्ता किन्न स्यात् । शब्दोऽप्रतिपादकः किन्न भवेत् । अनुमानत्वात् अनुमानमात्रमप्रमाणं कुतो न स्यात् । अग्निरनुष्णः कुतो न भवेदिति । न ह्येषा शङ्कापिशाची कदाचिच्छान्तिमुपगच्छति । तस्मादेवमाशङ्कमानो न**

**लौकिको नापि परीक्षक इत्युन्मत्तवदुपेक्षणीयः । प्रकृते चाचेतनत्वं स्वातन्त्र्यं चात्मप्रमाहतम् । स्वव्याहतं प्रमाणविरुद्धं च । तस्मादचेतनत्वेऽपि स्वतन्त्रप्रवृत्तिरस्तु प्रधानस्येति शङ्कैव नोत्पत्तुमर्हतीति किमत्र बाधकोपन्यासेनेति ।**

**शे०**— अचेतनत्वस्वातन्त्र्ययोः स्वव्याहतत्वादिवर्णनानर्थक्यमाशङ्क्याप्रयोजकताशङ्कापरिहारार्थत्वान्न तदिति भावेन तत्परतयोत्तरवाक्यं योजयितुं तच्छङ्कामुत्थापयति **नन्विति** । नन्वचेतनत्वमित्यादिमूलेन विपक्षे बाधकानुपन्यासात्कथमप्रयोजकताशङ्कापरिहार इत्यतस्तदभिप्रायमाह **तावदेव हीति** । ननु कुतोऽयं नियम इत्यत आह **न हीति** । **कश्चित्** प्रेक्षावानिति शेषः । एवं स्ववचनादिविरुद्धम् । स्ववचनस्वक्रियास्वन्यायप्रमाणान्तरविरोधाश्रयशङ्काः क्रमेणोदाहरति **मूकोऽपीत्यादिना** । यदर्थं स्वक्रियाविरुद्धादेरनाशङ्कनीयत्वं वर्णितं तदिदानीमाह **प्रकृते चेति** । **आत्मप्रमाहत**मित्यत्रात्महतं प्रमाहतं चेति संबन्धमाश्रित्य तदुभयस्वरूपं दर्शयति **स्वव्याहतमित्यादिना** । नोत्पत्तुमर्हतीत्यत्र प्रेक्षावत इति शेषः ।

**स०**— ननु परेणाचेतनत्वहेतोरप्रयोजकत्वशङ्कायां कृतायां हेतूच्छित्त्यादिलक्षणबाधकमेव वक्तव्यम् । 'अचेतनत्वं स्वातन्त्र्यमिति चात्मप्रमाहतम्' इति प्रकृतानुपयुक्तमित्यत आह **तावदेव हीति** ।

---

**प०** प्रकृते चेत्यादिना मूलं विवृण्वन्नुपोद्घातमाह **तावदेवेति** ॥ **अनेनेति** । शङ्काकृता इत्यर्थः । **न प्रादुष्ष्यात्** न प्रादुर्भवेदित्यर्थः । 'उपसर्गप्रादुर्भ्यामस्तिर्यच्पर' इत्यस्तेः षत्वम् । स्ववचनादिविरुद्धशङ्काचतुष्टयं क्रमेण व्यनक्ति **मूकोऽपीत्यादिना** । न भवेदितीतिशब्दस्येत्येवं न हि कश्चिच्छङ्कत इति पूर्वेणान्वयः । एवं कुतो न शङ्कनीयमित्यत आह **न ह्येषेति** । ततश्च किं प्रकृते अप्रयोजकोऽयं हेतुरित्यस्योत्तरमित्यत आह **प्रकृते चेति** ।

**या०**— स्ववचनस्वक्रियास्वन्यायप्रमाणान्तरविरोधास्पदाः शङ्काः क्रमेणोदाहरति **मूकोपीत्यादिना** ।

**श्री०**— स्ववचनविरोधादेरुदाहरणं दर्शयति **मूकोऽपीति** ॥ **शब्द इति** । शब्दोऽप्रतिपादक इति ब्रूते परबोधनायेममेव शब्दं प्रयुङ्क्त इति स्वक्रियाविरोधः । आत्मप्रमाहतमित्यत्रात्महतं प्रमाहतं चेति योजनामभिप्रेत्याह **स्वव्याहतमित्यादि** ।

**च०**— **प्रादुष्ष्यात्** प्रादुर्भवेत् । 'उपसर्गप्रादुर्भ्यामस्तिर्यच्पर' इति षत्वम् ।

**सु० — नन्वचेतनस्य स्वातन्त्र्यशङ्कायां कथं स्वव्याहतिः । न हि स्वातन्त्र्यं नाम चैतन्यम् । नाप्यचेतनत्वं नामास्वातन्त्र्यम् । कथं च प्रमाणविरोधः; इत्यतः स्वव्याघातं तावदुपपादयितुं स्वातन्त्र्यं व्याख्याति स्वेच्छेति ।**

अनु० — स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः ॥

**प्रवृत्ताविति शेषः । विदो विदुरित्यनेन सकलविद्वत्सम्मतमेतदित्याह । अत एव हि स्वातन्त्र्याभावाद्वृक्षस्तिष्ठतीत्यादिकर्तृत्वव्यवहारो गौण इति सर्वे प्रतिपन्नाः ।**

शे० — स्वेच्छानुसारितामिति स्वेच्छानुसारित्वस्य स्वातन्त्र्यरूपत्ववर्णनमिच्छाम्यहम्, इति प्रमाणविरोधोपदर्शनं चानर्थकमित्याशङ्क्य प्रतिज्ञातस्ववचनविरोधप्रमाणविरोधव्युत्पादनार्थत्वान्न तदिति भावेन स्ववचनविरोधानुपपत्तिनिरासपरतया तावदुत्तरवाक्यं योजयितुं तच्छङ्कामुत्थापयति **नन्विति** । स्वक्रियास्वन्यायविरोधयोरप्रसरादिति भावः । अस्तु तर्हि स्ववचनविरोधरूपैव स्वव्याहतिरित्याशङ्क्य सा किं स्वातन्त्र्यस्य चैतन्यरूपतयाऽभिमता, किंवाऽचेतनस्यास्वातन्त्र्यरूपतया वेति विकल्पं मनसि निधाय नाद्य इत्याह **न हीति** । किन्नाम कारकान्तरानपेक्षत्वमिति नानेन प्रकारेण स्ववचनविरोध इति भावः । द्वितीयं दूषयति **नापीति** । किन्नाम चैतन्यविरह एवेति नानेनापि प्रकारेण स इति भावः ॥ **तावदिति** । इच्छाम्यहमिति प्रमाणविरोधस्याप्युपपादनात्तावदित्युक्तम् ॥ **प्रवृत्ताविति शेष इति** । इच्छापूर्वककर्तृत्वापरपर्यायस्वातन्त्र्यरूपत्वादिति भावः । सकलविद्वत्संमतत्वे ज्ञापकमाह **अत एवेति** । प्रवृत्तौ स्वेच्छानुसारिताया एव स्वातन्त्र्यशब्दार्थत्वादेवेत्यर्थः । **स्वातन्त्र्याभावात्** प्रवृत्तौ स्वेच्छानुसारित्वाभावादित्यर्थः । वृक्षस्तिष्ठतीत्यादिपदेन वृक्षेण स्थीयत इत्यादेः परिग्रहः । **सर्वे** न्यायवाचस्पत्युदयनादयः । प्रवृत्तौ स्वेच्छानुसारित्वस्यैव स्वातन्त्र्यरूपत्वसंमतेरेव वृक्षस्तिष्ठतीत्यादिकर्तृत्वव्यवहारस्य वृक्षादीनां प्रवृत्तौ स्वेच्छानुसारित्वाभावेन मुख्यत्वासंभवात् तृतीयादिप्रयोजकपारिभाषिकवैयाकरणाभिमतकारकान्तरानपेक्षत्वरूपामुख्यकर्तृतायाः सत्त्वादुक्तविधकर्तृत्वव्यवहारस्य गौणतोक्तिस्तेषां सङ्गच्छते । अन्यथा तु कारकान्तरानपेक्षत्वरूपकर्तृताया वृक्षस्तिष्ठतीत्यादावपि सत्त्वात्तद्व्यवहारस्य गौणतोक्तिरयुक्ता स्यादिति द्रष्टव्यम् । यद्यपि वृक्षस्याचैतन्यपक्षे तत्र मुख्यकर्तृत्वाभावात्तद्व्यवहारस्य गौणत्वप्राप्तावपि चैतन्यपक्षे मुख्यमेव कर्तृत्वं संभवतीति तद्व्यवहारस्यामुख्यत्ववर्णनमनुचितम् । तथाऽप्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा घटस्तिष्ठति घटेन स्थीयत इत्यादेरौपचारिकव्यवहारत्वेनाभिमतत्वान्नानुपपत्तिः । अत एव न्यायवाचस्पतिना 'घटस्तिष्ठतीत्यौपचारिकः प्रयोग' इत्येवोक्तमित्यवधेयम् । वस्तुतश्चैतन्येऽपि वृक्षस्य स्वस्थित्यनुकूलेच्छाप्रयत्नसद्भावे मानाभावान्न मुख्यकर्तृत्वमिति यथाश्रुत एवायं ग्रन्थः साधुः ।

**स०— अत एवेति** । स्वेच्छानुसारित्वस्यैव स्वातन्त्र्यशब्दार्थत्वेन संमतत्वादेवेत्यर्थः । **वृक्ष इति** । धात्वर्थानुकूलव्यापारवत् कर्तृत्वस्याप्याख्यातार्थत्वात् । वृक्षस्तिष्ठतीत्यत्र धात्वर्थानुकूलव्यापार-रूपाख्यातार्थस्य मुख्यत्वेऽपि कर्तृत्वरूपतदर्थो न मुख्य इत्यर्थः ।

**प०— स्वव्याघातं तावदिति** । इच्छामीत्यादिना प्रमाणविरोधोपपादनात्तावच्छब्दः । **उपपादयितुमिति** । कुत इत्यादिना श्लोकेनेति भावः । नन्वेवं सति स्वतन्त्रः कर्तेति पाणिन्युक्तदिशा स्वातन्त्र्यरूपकर्तृत्वस्य वृक्षादावचेतनेऽभावात्, तत्र कर्तृवाचितिङ्प्रयोगो न स्यादित्यत आह **अत एव हीति** । तर्कताण्डवे त्वाख्यातवादे मण्याद्युक्ताख्यातकृत्यर्थत्वभङ्गे रथो गच्छतीत्यादिप्रयोगोपि मुख्य-(एवेत्यु)इत्युक्तिस्तु व्यापारवत्त्वं कर्तृत्वमित्युपेत्येत्यविरोधः ॥

**या०— गौण इतीति** । यत्तु तर्कताण्डवे वृक्षस्तिष्ठतीत्यादावपि कर्तृत्वव्यवहारो मुख्य एवेति समर्थितं, तत् धात्वर्थानुकूलव्यापारे प्राधान्यमेव स्वातन्त्र्यं न तु कृतावेवेति नियमः । तदेव च कर्तृत्वमित्यभिप्रेत्य अतो न विरोधः ।

**श्री०—अत एव** एवमेव स्वातन्त्र्यनिर्वचनस्य सर्वविद्वत्संमतत्वादेव । **स्वातन्त्र्येति** । निरुक्त्येत्यर्थः ॥ **कर्त्रिति** । स्वतन्त्रः कर्तेत्युक्तेरिति भावः । **गौणः** पारिभाषिकः ॥

---

**सु०— तथाऽपि कथं स्वव्याहतिः । न ह्यचेतनत्वं नामेच्छाविरहः । किन्नाम चैतन्यविरह इत्यत** आह कुत इति ।

**अनु०**— कुत इच्छाऽचेतनस्य

**अचेतनस्येच्छा कुतः कारणाज्जायते । न कुतश्चित् । ज्ञानमेव हीच्छाया जनकमित्यर्थः। तथाऽपि किमित्यत** आह सेच्छं चेदिति ।

सेच्छं चेत्किमचेतनम् ॥

**सेच्छं चेदङ्गीकृतं तदा तदचेतनं किं चेतनमेवेत्यर्थः** ।

एतदुक्तं भवति । अचेतनमपि प्रधानं स्वातन्त्र्येण प्रवृत्तिमदस्त्विति वदताऽचेतन-मिच्छावदस्त्वित्युक्तं स्यात् । स्वेच्छानुसारित्वस्य स्वातन्त्र्यशब्दार्थतया सर्वसंमतत्वात् । अचेतनस्येच्छावत्त्वमङ्गीकुर्वाणेन चेतनत्वमप्यङ्गीकर्तव्यं स्यात् । अन्वयव्यतिरेकाभ्यामिच्छायाः स्वसमानाश्रयचैतन्यकार्यत्वावधारणात् । कार्याङ्गीकारे कारणानङ्गीकारस्यानुचितत्वात् । अचेतनं चेतनमिति च स्फुटा व्याहतिरिति ।

शे० — **तथाऽपीति** । अचेतनस्य स्वातन्त्र्योक्त्या सेच्छत्वलाभेऽपीत्यर्थः ॥ **कथमिति** । अचेतनस्य चैतन्यालाभादिति भावः । ननु चैतन्यलाभेनैव स्वव्याहतिर्वक्तव्येति न निर्बन्धे कारणमस्ति । स्वातन्त्र्योक्त्या लब्धस्य सेच्छत्वस्य तद्विरहरूपाचैतन्यसमर्पकाचेतनपदेन तन्निरपेक्ष्येणैव स्वव्याहतिसंभवादित्यतो भवेदेतदेवं यद्यचेतनत्वमिच्छाविरह इति स्यान्न चैतदस्तीत्याह **न हीति** । तर्ह्यचेतनत्वं नाम किमिति पृच्छति **किन्नामेति** । परिहरति **चैतन्येति** । ननु तथाऽपि कथं स्वव्याहतिरित्यतः स्वेच्छानुसारितामेवेत्यादिवाक्यैरुक्तस्यार्थस्य स्वव्याहत्युपपादने उपयोगमाकाङ्क्षाक्रमेण दर्शयन्नेव तामुपपादयति **एतदुक्तं भवतीति** । समानाश्रयेत्युपलक्षणम् । समानविषयेत्यपि द्रष्टव्यम् । **अनुचितत्वादिति** । अन्यथाऽकारणकार्योत्पत्तिप्रसङ्गादिति भावः ।

सु० — **एतेनैतदपि निरस्तम् । अचेतनत्वं स्वातन्त्र्यं च यदि परस्परव्याहतं तर्ह्यचेतनत्वेन स्वतन्त्रप्रवृत्तिराहित्यसाधने साध्याविशिष्टतादोषः स्यादिति । न ह्यस्माभिरचेतनत्वस्वातन्त्र्ययोः वन्ध्या अपत्यवतीतिवत्साक्षाद्विरोधोऽभिहितः । किन्तु स्वातन्त्र्यबलेन चैतन्यं परेणाङ्गीकारयित्वा अनेनैव स्वातन्त्र्याङ्गीकारेऽचेतनत्वानुपपत्तिरिति बाधकं चोक्तं भवति ।**

---

शे० — स्वेच्छानुसारितामेवेत्यादिस्वव्याहत्युपपादनस्य न केवलमप्रयोजकताशङ्कानिरासः प्रयोजनं, किं तर्हि, प्रतिपक्षानुमाने दोषान्तरपरिहारोऽपीत्यभिप्रेत्य तत्परतया भाष्ययोजनां सूचयितुमाह **एतेनेति** । स्वेच्छानुसारितामेवेत्यादिस्वव्याहत्युपपादनपरभाष्येणेत्यर्थः । एतदित्युक्तमेव निर्दिशति **अचेतनत्वमिति** ॥ **साध्याविशिष्टतेति** । अचेतनत्वास्वातन्त्र्ययोरभेदादिति भावः ॥ **साक्षादिति** । परस्परविरहरूपत्वेनेत्यर्थः ॥ **अङ्गीकारयित्वेति** । यद्यप्यनङ्गमङ्गं सम्पद्यत इति कृयोगेऽभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विरित्यनेनाङ्गशब्दात् च्विप्रत्यये अस्य च्वावित्यङ्गशब्दस्य ईत्वे च सति निष्पन्नस्याङ्गीशब्दस्य ऊर्यादिच्विडाचश्चेति गतिसंज्ञस्य करोतेर्णिचि वृद्धौ रपरत्वे च निष्पन्नकारिशब्दस्य सनाद्यन्ता धातव इति धातुसंज्ञायां समानकर्तृकयोः पूर्वकाल इति तस्मात्क्त्वाप्रत्यये आर्धधातुकस्येड्वलादेरितीडागमे गुणायादेशयोश्च सतोर्निष्पन्नेन कारयित्वेति क्त्वान्तशब्देन कुगतिप्रादय इति सूत्रेण गतिसमासे सति समासेऽनञ्पूर्वे क्त्वो ल्यप् इत्यनञ्समासे क्त्वाप्रत्ययस्य ल्यबादेशविधानाल्ल्यपि णेरनिटीति णिलोपेऽङ्गीकार्येत्येव भाव्यम् । उभयथैव हि क्त्वो ल्यपुनिवृत्तिः । यदि नञ्समासोऽकृत्वेत्यादिवत् यदि वा समासाभावः कृत्वेत्यादिवत् । न चानयोरन्यतरस्य अस्त्यत्रावकाशः । अनञ्समासत्वात् कुगतिप्रादय इत्यनेन विहितसमासस्य नित्यतया गतिसमासेन समस्तत्वात् । न च कुगतिप्रादय

इत्यनेन विहितस्य समासस्य नित्यत्वे ज्ञापकाभावादसमाससंभवान्न ल्यब देशप्राप्तिरिति वाच्यम् । कुगतिप्रादय इत्यत्र नित्यं क्रीडाजीविकयोरित्यतो नित्यग्रहणानुवृत्त्या तस्य नित्यत्वसिद्ध्या समासाभावायोगात् । न च नित्यग्रहणानुवृत्तावपि यथा प्रादिसमासस्यानित्यत्वं तथा गतिसमासस्यापि तद्भविष्यतीति वाच्यम् । उपसर्गादसमासेऽपि णोपदेशस्येत्यत्र असमासग्रहणेन प्रादिसमासस्यानित्यताज्ञापनादनित्यत्वेऽपि गतिसमासस्यानित्यतायां ज्ञापकाभावेन तदसिद्ध्या समासाभावायोगात् । तथा च समासेऽनञ्पूर्वे क्त्वो ल्यबिति अनञ्समासे ल्यबादेशोऽवर्जनीय एव । ततश्चाङ्गीकारयित्वेति टीकाकारीयो व्यवहारोऽनुपपन्न इवाभाति । तथाऽप्यङ्गीकारपदमव्युत्पन्नमभिप्रेत्य तस्मादङ्गीकारं करोतीत्यङ्गीकारयतीत्यङ्गीकारयित्वेति 'तत्करोति तदाचष्ट' इति णिचि उक्तरीत्या क्त्वाप्रत्यये सति क्त्वान्तेन समासाभावेन समासेऽनञिति क्त्वो ल्यबप्राप्तेरङ्गीकारयित्वेति रूपसिद्धिरित्यभिप्रेत्यैवमुक्तमिति ध्येयम् । क्वचिदङ्गीकार्येत्यपि पाठः ।

स्वव्याहतत्वेनाप्रयोजकत्वशङ्कायां न विपक्षे बाधकोपन्यासापेक्षेत्युक्तम् । इदानीमङ्गीकृत्याप्रयोजकताशङ्कां तत्र बाधकोक्तिपरतयाऽपि मूलयोजनामभिप्रेत्याह **अनेनैवेति** । स्वेच्छानुसारितामेवेत्यादिभाष्येणैवेत्यर्थः ।

**स० – एतेनेति** । स्वातन्त्र्यशब्दस्य स्वेच्छानुसारित्वार्थकत्वेन व्याख्यानेनेत्यर्थः । यदि अचेतनत्वस्वातन्त्र्ययोः परस्परव्याहतिरुच्यते तर्हि स्वातन्त्र्यं नाम चेतनत्वमिति वा अचेतनत्वं नामास्वातन्त्र्यमिति वा वक्तव्यम् । तथा च साध्यवैशिष्ट्यमिति भावः ।

**अङ्गीकारयित्वेति** । ननु अनङ्गमङ्गं संपद्यत इति कृयोगे पूर्वस्मात् च्विप्रत्ययेन 'ऊर्यादिच्विडाचश्च'त्यनेन गतिसंज्ञायां 'कुगतिप्रादय' इत्यत्र नित्यं क्रीडाजीविकयोरित्यतो नित्यमित्यस्यानुवृत्तेः 'कुगतिप्रादय' इति समासे अनञ्पूर्वे 'क्त्वो ल्यबिति'ल्यबादेशे अङ्गीकार्येति भवितव्यम् । अङ्गीकारयित्वेति कथमिति चेन्न । अङ्गीकारं करोति अङ्गीकारयति । अङ्गीकारयतीत्यङ्गीकारयित्वेति व्याख्यानाददोषात् । वस्तुतस्तु 'अङ्गीकार्य' इत्येव पाठः । एवं च नानुपपत्तिरिति ध्येयम् । एवमचेतनमपि स्वातन्त्र्येण प्रवृत्तिमदस्त्विति शङ्कायाः स्ववचनविरुद्धत्वेनानुदयात् दूरे बाधकोपन्यास इत्यर्थपरत्वेन मूलं व्याख्याय अस्तु वा शङ्कोदयः, तथाऽपि अनेन मूलेन हेतूच्छित्तिलक्षणबाधकमपि सूचितमित्याह **अनेनैवेति** । स्वानुमाने परकीयाप्रयोजकत्वशङ्कायाः स्वव्याहतत्वव्युत्पादनेनेत्यर्थः । स्वेच्छानुसारित्वलक्षणस्वातन्त्र्याङ्गीकारे चेतनत्वस्यैवाङ्गीकार्यत्वेनाचेतनत्वानुपपत्तिरिति भावः ।

**प०— अङ्गीकारयित्वेति** । विरोधोऽभिहित इति पूर्वेणास्यान्वयः । तथैव प्रयुक्तेरिति रिति भावः । अङ्गीकारशब्दादनुमत्यर्थकात्, तत्करोति तदाचष्ट इति णिचि कृते णाविष्ठवद्भावात्प्रातिपदिकस्य टिलोपे सनाद्यंता धातव इति धातुसंज्ञायां क्त्वाप्रत्यये 'न क्त्वा सेडि'तिकित्त्वाभावाद्गुणे समासपदत्वाभावेन समासेऽनञ्पूर्वे क्त्वो ल्यबिति ल्यपोऽनवकाशात्साधुरेवायं ध्येयः ॥ **अनेनैवेति** । अचेतनत्वेपि प्रधानस्य स्वातन्त्र्येण प्रवृत्तिरस्त्विति शङ्कायां स्वव्याहत्युपपादकग्रन्थेनैव हेतूच्छित्तिरूपविपक्षबाधकं चोक्तमित्यर्थः । शङ्कोदयाङ्गीकारवादेन चेयं बाधकोक्तिर्ज्ञेया ॥

**या०** — परेणाङ्गीकार्येत्येव सांप्रदायिकः पाठो न त्वङ्गीकारयित्वेति । येन समासेऽनञ्पूर्वे क्त्वो ल्यबिति ल्यबादेशेऽङ्गीकार्येति भवितव्यं तत्कथमङ्गीकारयित्वेति शङ्काऽवकाशः । अप्रयोजकत्वशङ्कामभ्युपेत्य तत्र बाधकोक्तिपरतयाऽपि मूलयोजनामभिप्रेत्याह **अनेनैवेति** । स्वेच्छानुसारितामेवेत्यादिमूलेनेत्यर्थः ।

**श्री०** — **तर्हीति** । यदा परस्परविरहरूपत्वेन व्याहतत्वं तदाऽचेतनत्वं स्वेच्छाधीनप्रवृत्तिमत्त्वरूपस्वातन्त्र्यविरहरूपत्वमेवेत्यचेतनत्वेन स्वतन्त्रप्रवृत्तिराहित्यसाधने साध्याविशिष्टतेत्यर्थः ॥ **अभिहित इति** । येनोक्तदोषः स्यादितिशेषः । **अङ्गीकार्य** अङ्गीकारयित्वा विरोधोऽभिहित इत्यन्वयः । ततश्च परस्परविरहव्याप्यत्वाङ्गीकारान्नोक्तदोष इति हृदयम् । **अनेनैव मूलेनैव** ।

---

**सु०— एवमचेतनस्य स्वातन्त्र्याङ्गीकारे स्वव्याहतिमुपपाद्य प्रमाणविरोधमप्युपपादयति** इच्छामीति ।

**अनु०**— इच्छाम्यहमिति ह्येव निजानुभवरोधतः ॥
अचेतनेच्छापगता

**हिशब्देनास्यानुभवस्य विश्वजनप्रसिद्धत्वं सूचयति । एवशब्दस्यापगतैवेत्यन्वयः । निजानुभवः साक्ष्यनुभवः । अहमिच्छामीति तावदिच्छा आत्मसंबन्धिनी साक्षिणानुभूयते । न च सा द्विकर्तृका संभवति । क्वाप्येकस्य व्यापारस्य द्विकर्तृकत्वानुपलम्भात् । ततश्चाचेतनस्येच्छाङ्गीकृता( चैतद )चे(त्त)दनुभवविरोधादचेतनस्येच्छापगता नास्तीति यावत् । इच्छाभावे च स्वेच्छानुसारित्वलक्षणं स्वातन्त्र्यं दूरोत्सारितमिति भावः ।**

**शे०— सूचयतीति** । एतत्सूचनं च तस्यानपलपनीयत्वज्ञापनार्थमिति बोध्यम् ॥ **अनुभवविरोधादिति** । अहमिच्छामीत्यनुभवविरोधादित्यर्थः । यद्यप्यहमिच्छामीत्यनुभवस्येच्छाया आत्मसंबन्धितामात्रावगाहित्वेन तद्बलादिच्छाया आत्मसंबन्धित्वमात्रसिद्धावप्यचेतने तदभावाविषयकत्वान्न

बाधकत्वं संभवति । तथाऽप्येकस्य व्यापारस्य द्विकर्तृकत्वानुपलम्भमनाश्रित्याहमिच्छामीत्यनुभवस्याचेतनेच्छाभावग्राहकत्वमविरुद्धमित्यभिप्रेत्यैवं बाधकोक्तिरित्यवधेयम् ।

स० — **ततश्चेति** । अन्यकर्तृकत्वानुपलम्भसहकृतेन साक्ष्यनुभवेन आत्मसंनिधित्वस्यैव विषयीकृतत्वेन एतदनुभवविरोधादित्यर्थः ।

प० — **प्रमाणविरोधमिति** । चेतन एव इच्छावत्त्वगोचरसाक्षिरूपप्रमाणविरोधमित्यर्थः । **द्विकर्तृकेति** । आत्मान्तःकरणरूपचेतनाचेतनकर्तृकेत्यर्थः ॥

श्री० — **व्यापारस्य** इच्छाया अपि व्यापारविशेषत्वादिति भावः ।

च० — **द्विकर्तृका** । आत्मान्तःकरणसन्निधानात् । तत्सन्निधाननिमित्तभेदाग्रहणादिति यावत् ।

**सु० — ननु नैवमस्त्यनुभवः किन्त्वहमिच्छा(मीच्छा)मीति व्यवहारमात्रम् । तस्यापि निमित्तं भेदाग्रहः । आत्मा हि नित्यो निर्विकारश्चैतन्यमात्रवपुर्न तस्येच्छादिकर्तृत्वमागन्तुकं संभवति । किन्त्वन्तःकरणस्यैव प्रसवधर्मत्वात् । तयोश्चात्मान्तःकरणयोर्भेदाग्रहादितरेतरधर्मव्यवहारः प्रवर्तते । भेदाग्रहे च निमित्तं सन्निधानम् । यथोक्तम् । 'तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् । गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीन' इति । अतोऽनुभवबलाच्चेतनस्यैवेच्छावत्त्वं नाचेतनस्येत्ययुक्तमित्यत आह यदीति ।**

**अनु०** — यदि भेदाग्रहोऽत्र च ।
कथं स न घटस्य स्यात्

**यदि एवमनुभव एव नास्ति किन्तु व्यवहारमात्रम्, अत्र च व्यवहारे भेदाग्रह एव निमित्तमुच्यते, तदा स भेदाग्रहो घटस्य किं (कथं) न स्यात् । व्यवहारहेतुरिति शेषः । इदमुक्तं भवति । स्वप्रकाशानुभवापलापदोषस्तावत् । व्यवहारे च निमित्तं नास्ति । न च भेदाग्रहः । विशिष्टव्यवहारस्य तादृशज्ञानकार्यतानियमात् । अन्यथा घटपटावपीतरेतरभेदं न गृह्णीत इतीतरेतरधर्मसंसर्गव्यवहारः स्यादिति ।**

शे० — ननु 'यदि भेदाग्रह' इत्याद्युत्तरभाष्यमनर्थकम् । न च भेदाग्रहस्य व्यवहारकारणत्वनिराकरणार्थं तदिति वाच्यम् । भेदाग्रहस्य व्यवहारकारणतायाः परेणावक्तव्यतया तन्निराकरणस्याप्यनर्थकत्वात् इत्यतोऽनुभवविरोधपरिहारार्थं परेण तस्य वक्तव्यत्वात्तन्निराकरणपरोत्तरग्रन्थस्यानर्थक्यमित्यभिप्रेत्य तत्परतयोत्तरग्रन्थं योजयितुमनुभवविरोधानुपपत्तिशङ्कामुत्थापयति **नन्विति** । ननु व्यवहारस्य व्यवहर्तव्यज्ञानपूर्वकत्वात् कथमनुभवाभावे तथा व्यवहार, इत्यतो मुख्यव्यवहारस्य

तत्सापेक्षत्वेऽपि उपचरितव्यवहारस्य तदभावादस्य च उपचरितत्वान्न विशिष्टज्ञानसापेक्षत्वमित्याह **तस्यापीति** । नन्वात्मसंबन्धितयेच्छानुभवत्वमेवास्याभ्युपेत्य तन्मूलकत्वस्यैवोक्तव्यवहारे संभवा- दुपचरितत्वमाश्रित्य भेदाग्रहनिमित्तकत्ववर्णनमनर्थकमित्यत आत्मन इच्छासंबन्धित्वानुपपत्तेः तदनुभव- त्वायोगात्तदाश्रयणमित्यभिप्रेत्येच्छाया आत्मसंबन्धिताऽभावमुपपादयति **आत्मा हीति** । हीति नित्य- त्वादिकं श्रुतिप्रसिद्धमिति दर्शयति । तर्ह्यकर्तृकक्रियाप्रसङ्ग इत्यभिप्रेत्य पृच्छति **किन्त्विति** । उत्तर- माह **अन्तरिति** । तत्र हेतुमाह **प्रसवेति** । विकारित्वादित्यर्थः । यद्यन्तःकरणस्याचेतनस्यैवेच्छावत्त्वं कर्तृत्वं च कथं तर्हि चेतनोऽहं चिकीर्षन्करोमीति कृत्यादेः सामानाधिकरण्यव्यवहारः । चेतनस्या- कर्तृत्वात्कर्तुश्चाचेतनत्वादित्यतः प्रागुक्तं भेदाग्रहस्येतरेतरधर्मव्यवहारकारणत्वं तत्स्वरूपोपदर्शनेनाह **तयोश्चेति** । आत्मान्तःकरणयोः सन्निधानाद्भेदाग्रहः । ततश्चेतरेतरधर्मव्यवहार इत्यत्र तद्वाक्यं पठति **यथोक्तमिति** । यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे तस्माद्भेदाग्रहाल्लिङ्गं महदादिसूक्ष्मपर्यन्त- मचेतनं तदात्मकमन्तःकरणमिति यावत् । चेतनावदिव चैतन्यवदिव भवति व्यवह्रियते । तथा गुणस्य सत्त्वाद्यात्मकान्तःकरणस्यैव वस्तुतः कर्तृत्वेऽप्युदासीनः कर्तृत्वरहितश्चेतनः कर्तेव भवति । कर्तेति व्यवह्रियते । एवं भेदाग्रहादितरेतरधर्मव्यवहार एव भवति । न त्वियं प्रतीतिः । भेदाग्रहेऽपि बीजं दर्शयितुं तत्संयोगादित्युक्तम् । तयोरात्मान्तःकरणयोः संयोगः संनिधानं तस्मादिति । यद्यप्येत- त्कारिकाटीकायां 'भ्रान्तिरियमित्यर्थ' इत्युक्तत्वात्प्रतीतिमभ्युपेत्येतरेतरधर्माध्यास एव व्याख्यातः । तथाऽ- प्युक्तरीत्या व्याख्यानमप्यत्र सांख्यानामभिप्रेतमिति तदीयसंप्रदायानुसारेणास्या उक्तार्थे संमतित्वेनोदाहरण- मिति मन्तव्यम् । नन्वित्यादेः सर्वस्याप्याक्षेपस्य मूलारूढतासिद्ध्यर्थं मूलं तत्परतया योजयति **यद्येव- मित्यादिना** । विशिष्टव्यवहारस्येत्यत्र दण्डपुरुषाविति समूहालम्बनव्यवहारव्यावृत्त्यै विशिष्टेति विशेषणम् ।

स० — **तस्मादिति** । यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे, तस्माद्भ्रान्तिरिय- मित्यर्थः । लिङ्गं महदादिसूक्ष्मपर्यन्तम् अचेतनं **तत्संयोगात्** चेतनसंयोगात् चेतना अस्यास्तीति चेतना- वत् प्रकृतिसंयोगात् तदिव चेतनमिवेति यावत् । गुणकर्तृत्वे सत्त्वरजस्तमसामेव कर्तृत्वे विद्यमानेऽपि उदासीनः अयं जीवः **तत्संयोगात्** प्रकृतिसंयोगात् कर्तेव भवतीत्यर्थः ।

प० — **न तस्येच्छादिकर्तृत्वमिति** । नित्यत्वानुपपत्तिसिद्धनिर्विकारत्वविरोधादिति भावः ॥ **प्रसवेति** । परिणामिधर्मिकत्वात्तस्येति भावः । तस्मादिति श्लोकस्यायमर्थः । तस्मादात्मा हीत्यादिना प्रागुक्तयुक्त्या चैतन्यकर्तृत्वयोः क्रमादात्मान्तःकरणधर्मत्वात् । तत्संयोगात्तयोरात्मान्तःकरणयोः सन्नि- धानात्तत्सन्निधिनिमित्तभेदाग्रहादिति यावत् । लिङ्गमन्तःकरणम् । अचेतनं चेतनावदिव चैतन्योपेतमिति

व्यपदिश्यते । गुणकर्तृत्वे चान्तःकरणस्य कर्तृत्वे चोदासीनः कर्तृत्वहीनश्चेतनः कर्तेव करोतीति व्यवह्रियत इति । यदीत्यनुवादः । तस्यार्थः एवमित्यादि । अत्रेत्यनुवादः । व्यवहार इति व्याख्या । अस्फुटत्वाद्भावमाह **इदमुक्तमिति** । अनुभवापलापोऽनुभवगोचरानुभवविरुद्ध इति द्योतनाय स्वप्रकाशानुभवापलाप इति स्वप्रकाशत्वविशेषणम ॥ **विशिष्टव्यवहारस्येति** । इच्छामीतीच्छाविशेषणकात्मविशेष्यकव्यवहारस्येत्यर्थः ॥ **इतरेतरधर्मेति** घटःपटभेदं स्वस्य न गृह्णाति पटश्च स्वस्य घटभेदं न गृह्णातीति घटोपि अहम् आतानवितानात्मक इति व्यवहरतु । पटोऽप्यहं पृथुबुध्नोदराकार इति व्यवहरत्वित्यर्थः । मूले घटस्येति उपलक्षणमिति भावः ।

या० नित्यत्वोपपादनाय **निर्विकार इति** । एतदुपपादनाय **चैतन्यमात्रवपुरिति । आगन्तुकं सम्भवतीति** । नित्यत्वहानिप्रसङ्गादिति भावः । 'तस्मात्तत्संयोगादि'ति कारिकाया अयमर्थः । यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे तस्माद्भेदाग्रहाल्लिङ्गं महदादिसूक्ष्मपर्यन्तमचेतनं तदात्मकमन्तःकरणमिति यावत् चेतनावदिव चैतन्यवदिव भवति व्यवह्रियते । तथा गुणस्य सत्त्वाद्यात्मकस्यान्तःकरणस्य वस्तुतः कर्तृत्वेऽप्युदासीनः कर्तृतारहितश्चेतनः कर्तेव भवति व्यवह्रियते । एवं भेदाग्रहादितरेतरधर्मव्यवहार एव न तु प्रतीतिः । भेदाग्रहेऽपि बीजं दर्शयितुं तत्संयोगादित्युक्तम् । तयोरात्माऽन्तःकरणयोः संयोगः सन्निधानं तस्मादिति । यद्यप्येतत्कारिकाटीकायां भ्रान्तिरियमित्यर्थ इत्युक्तत्वात्प्रतीतिमभ्युपेत्येतरेतरधर्माध्यास एवात्र व्याख्यातः । तथाऽप्युक्तरीत्या व्याख्यानमप्यत्र साङ्ख्यानामभिप्रेतमिति तदीयसम्प्रदायानुसारेणास्या उक्तार्थे सम्मतित्वेनोदाहरणमिति मन्तव्यम् । विशिष्टव्यवहारस्येत्यत्र दण्डपुरुषाविति समूहालम्बनव्यवहारव्यावृत्त्यै विशिष्टेति विशेषणम् ॥

श्री०— **प्रसवो** विकारः । तद्धर्मवत्त्वादित्यर्थः । कुतो भेदाग्रहो व्यवहारे निमित्तं न चेत्यत आह **विशिष्ट इति** । इच्छावत्त्वविशिष्टो व्यवहारः ॥ **तादृशेति** । विशिष्टेत्यर्थः ॥ **अन्यथेति** । विशिष्टव्यवहारस्य तादृशज्ञानकार्यतामनङ्गीकृत्य भेदाग्रहमात्रकार्यतामङ्गीकृत्यानुभवापलापकरण इत्यर्थः ॥

च० लिङ्गमन्तःकरणमचेतनं चेतनावदिव चैतन्योपेतमिति व्यपदिश्यते तथा गुणस्य सत्त्वाद्यात्मकस्यान्तःकरणस्य वस्तुतः कर्तृत्वे **उदासीनः** कर्तृतारहितश्चेतनःकर्तेव व्यवह्रियते । एवं भेदाग्रहादितरेतरधर्मव्यवहार एव । न तु प्रतीतिरिति ॥ **विशिष्टव्यवहारस्य** किञ्चिद्विशेषितार्थप्रत्यायकाभिलपनादिरूपस्य । **तादृशेति** । विशिष्टार्थविषयकेत्यर्थः ।

सु०— ननु गृह्यमाणयोर्भेदाग्रहो व्यवहारहेतुर्न तु भेदाग्रहमात्रम् । न च घटपटौ स्वरूपं गृहीतस्तत्कथमतिप्रसङ्ग इति चेत् । किमयं विशिष्टो भेदाग्रहोऽन्तःकरणस्य, उतात्मनः । नाद्यः । तस्याचेतनत्वेन स्वरूपग्रहानुपपत्तेः ॥ उपपत्तौ वा स कथं विशिष्टो भेदाग्रहो घटस्य न स्यात् । तथा च व्यवहारोऽपि स्यात् । नन्वन्तःकरणेऽस्ति चैतन्यारोपो न घटे, अतो नातिप्रसङ्ग इति चेत् । किं तस्य निमित्तम् । सन्निधानमिति चेत् । तर्हि सर्वगतात्मसन्निधानं घटेऽप्यस्तीति कथं स न घटस्य स्यात् । ननु न संयोगमात्रं निमित्तम् । किन्तूपकार्योपकारकभावे सति । स चास्त्यात्मान्तःकरणयोः । पुरुषस्य दर्शनार्थमित्युक्तत्वात् इति चेत् । तर्हि घटोऽपि पुरुषस्योपकारक इति कथं स न घटस्य स्यात् ।

द्वितीये व्यवहारोऽपि किमात्मन उतान्तःकरणस्य । नाद्यः । तस्य निर्विकारस्य व्यवहारक्रियानुपपत्तेः । उपपत्तौ वा किमिच्छयाऽपराद्धम् । द्वितीयेऽन्यगतेन भेदाग्रहेणान्य(त्र)स्य व्यवहारश्चेत्कथं स न घटस्य स्यात् ।

शे०— ननु गृह्यमाणयोरिति । स्वस्वकर्तृकग्रहणविषययोरित्यर्थः ॥ स्वरूपग्रहेति । स्वविषयकग्रहणकर्तृत्वानुपपत्तेरित्यर्थः ॥ व्यवहारोऽपीति । इतरेतरधर्मसंसर्गव्यवहार इत्यर्थः ॥ चैतन्यारोप इति । तेनान्तःकरणं स्वज्ञातृ भविष्यति । ततश्च तत्प्रयुक्तविशिष्टभेदाग्रहनिमित्तकेतरेतरधर्मसंसर्गव्यवहारो युक्त इति भावः ॥ नातिप्रसङ्ग इति । कथं स विशिष्टो भेदाग्रह इत्यादिनोक्तोऽतिप्रसङ्ग इत्यर्थः । उक्तरीत्या वैषम्येणातिप्रसङ्गमूलभूतविशेषासिद्धेरिति भावः । न चैतन्यारोपभावाभावाभ्यामन्तःकरणघटयोरुक्तं वैलक्षण्यम् । चैतन्यारोपहेत्वनुक्त्या तदसिद्धेः । तथा हि । संयोगापरपर्यायं सन्निधानमात्रमेतदारोपहेतुतयाऽभिमतं किंवोपकार्योपकारकभावविशिष्टं तदिति विकल्पं मनसि निधाय निमित्तं पृच्छति किमिति । आद्यं शङ्कते । सन्निधानमिति चेदिति । तदुत्तरतया कथं स न घटस्य स्यादिति वाक्यमेव योजयति तर्हीति । द्वितीयपक्षमुत्थापयति नन्विति । आत्मान्तःकरणयोरुपकार्योपकारकताऽस्तीत्यत्र तद्वाक्यं प्रमाणयति पुरुषस्येति । एतत्पक्षदूषणपरतयाऽपि कथं स न घटस्य स्यादिति वाक्यं सोपस्कारं योजयति तर्हीति ।

द्वितीय इति । विशिष्टो भेदाग्रह आत्मन इति द्वितीयपक्ष इत्यर्थः ॥ किमपराद्धमिति । ततश्च निर्विकारतयेच्छाकर्तृत्वनिराकरणानुपपत्तिरिति भावः ॥ द्वितीय इति । अन्तःकरणस्य व्यवहार इति द्वितीय इत्यर्थः ॥ एतत्पक्षदूषणपरतयाऽपि कथमित्यादिमूलं सोपस्कारं प्रकारान्तरेण योजयति अन्यगतेनेति । अन्यगतेन भेदाग्रहेणान्यत्र व्यवहारश्चेदित्येतावानुपस्कारोऽन्यत्तु व्याख्यानमिति द्रष्टव्यम् ।

स० — **नन्विति** । स्वरूपग्रहणविशिष्टभेदाग्रहस्यैव व्यवहारहेतुत्वात् घटपटयोरितरेतरस्वरूपज्ञानाभावेन तद्विशिष्टभेदाग्रहाभावेन प्रयोजकाभावान्न व्यवहार इति भावः ।

प० — **ननुगृह्यमाणयोरिति** । स्वस्वरूपज्ञानवतोरन्योन्यभेदाग्रहोऽन्योन्यधर्मसंसर्गव्यवहारहेतुरित्यर्थः ॥ **विशिष्ट इति** । स्वरूपग्रहणसहितो भेदाग्रह इत्यर्थः । **व्यवहारोपीति** । परधर्मसंसर्गव्यवहार इत्यर्थः । घटस्येत्यनुषङ्गः ॥ **अन्तःकरणस्तीति** । तथा च तस्य संभवति प्रागुक्तविशेषणयुक्तभेदग्रह इति भावः ॥ **इत्युक्तत्वादिति** । 'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः' इति प्रागुक्तत्वात् । सत्त्वादिगुणात्मान्तःकरणस्य च प्रधानात्मकत्वादिति भावः ।

या० — **ननु गृह्यमाणयोरिति** । स्वस्वकर्तृकग्रहणविषययोरित्यर्थः ॥ **स्वरूपग्रहेति** । स्वविषयकग्रहणकर्तृत्वानुपपत्तेरित्यर्थः ॥ **अस्ति चैतन्यारोप इति** । तथा चान्तःकरणं स्वज्ञातृ भविष्यतीति भावः ।

श्री० — **गृह्यमाणयोरिति** । स्वेनेति शेषः ॥ **विशिष्ट इति** । स्वेन गृह्यमाणयोरिति विशेषणविशिष्टेत्यर्थः । एवमुत्तरत्रापि ॥ **तस्येति** । चैतन्यारोपस्येत्यर्थः । **सः** चैतन्यारोपः । तन्निमित्तो व्यवहारश्चेत्यर्थः ॥ **निमित्तमिति** । चैतन्यारोप इति शेषः । **सः** उपकार्योपकारकभावप्रयुक्तोऽपि चैतन्यारोपः । **द्वितीये** विशिष्टो भेदाग्रह आत्मन इति पक्षे । तज्जन्यो व्यवहार इत्यर्थः ॥ **अपराद्धमिति** । विकारप्राप्तिभियैव हीच्छा त्वया नाङ्गीकृतेति भावः ॥ **अन्येति** । आत्मेत्यर्थः । **अन्यत्र** अन्तःकरणे । **स** आत्मनिष्ठेन भेदाग्रहेणान्यत्र घटेऽप्यात्मधर्मभूतेच्छाव्यवहारः स्यादित्यर्थः ।

च० — **गृह्यमाणयोः** स्वस्वकर्तृकग्रहणविषययोः । **द्वितीये** आत्मनो विशिष्टो भेदाग्रह इति कल्पे ।

**सु० — किञ्च यदि भेदाग्रहादन्तःकरणधर्म एवेच्छाऽऽत्मनि व्यवह्रियत इत्यङ्गीक्रियते तदा घटस्याप्यात्मना भेदाग्रहात्पृथुबुध्नोदराकारोऽहमिति व्यवहारः कथं न स्यादिति गूढाभिसन्धेरुत्तरम् ।**

**यद्वाऽत्र चात्मान्तःकरणयोश्च स्फुटं प्रतिभासमानभेदयोरपीति हृदयम् । यदि भेदाग्रहः स्यात्तदा कथं स भेदाग्रहो घटस्यात्मनश्च न स्यादिति योजना ।**

**अथैवं वदन्प्रष्टव्यः । भेदाग्रहः किं भेदग्रहस्य विरोधी न वेति । नेति पक्षे कथं स घटस्यात्मना पटादिना वा न स्यादित्युत्तरम् ।**

शे० — उत्तरग्रन्थमुत्थापयितुं 'कथं स न घटस्य स्यादि'त्येतद्दूषणान्तरसमर्पकतयाऽपि योजयति किञ्चेति । नन्वात्मनो घटेन सह भेदग्रहसद्भावात्तस्यैव च भेदाग्रहविरोधित्वात्कथं तस्य पृथुबुध्नोदराकारोऽहमिति व्यवहारापादनमित्यत उक्तम् **गूढाभिसन्धेरिति** । तर्ह्यात्मनोऽपि मनसा भेदस्य गृहीतत्वात्तस्यैव च भेदाग्रहविरोधित्वात्स एवासिद्ध इति न तद्बलादुक्तव्यवहारनिर्वाह इति प्रतिबन्द्यभिप्रायो गूढ इति द्रष्टव्यम् ।

योजनान्तरमाह **यद्वेति** । अत्र चेत्यस्य व्याख्या **आत्मान्तःकरणयोश्चेति** । तस्यैव तात्पर्यमाह **स्फुटमिति** ॥ **इति हृदयमिति** । इति भाव इत्यर्थः । चशब्दः अप्यर्थ इत्यभिप्रेत्याह-**अपीति** ।

स० — **गूढाभिसन्धेरिति** । अत्र भेदाग्रहे स्वेनोक्ते परेण तद्विरुद्धभेदग्रहे सति भेदाग्रह एवानुपपन्न इत्युक्ते तर्हि मनसोऽपि भेदग्रहात् न भेदाग्रह इत्यभिप्रायादिति भावः । अत्र नेत्यस्य व्याख्या आत्मान्तःकरणयोश्चेति । तस्यैव तात्पर्यमाह **स्फुटमिति** । तर्हि अस्मिन् व्याख्याने आपादनप्रकारः कथमित्यत आह **यदि भेदाग्रह इति** । स्फुटं प्रतिभासमानभेदयोरपि आत्मान्तःकरणयोर्यदि भेदाग्रहः स्यादित्यर्थः ।

प० — प्रकारान्तरेण योजयति **किञ्चेति** । **गूढाभिसन्धेरिति** । अत्र यथा भेदग्रहसत्त्वाद्भेदाग्रहो नास्त्येवमात्ममनसोरपि भेदग्रहसत्त्वात्तद्विरोधिभेदाग्रहोऽसिद्ध इत्यभिप्रायो निगूढोऽत्र 'मनो मे' इत्यग्रे व्यक्तं भविष्यतीति भावः । अत्र चेति मूलानुवादः । आत्मेत्यादि व्याख्या । चोऽप्यर्थःसन्निरोधद्योतक इति भावेन तदभिप्रायमाह **स्फुटमिति** ।

या० — ननु घटस्यात्मना भेदग्रहाभावेऽप्यात्मनो घटेन भेदग्रहोऽस्त्येवा स चाभेदग्रहविरोधी । अतः **कथं तस्य** पृथुबुध्नोदराकारोऽहमिति व्यवहारापादनमित्यत उक्तं **गूढाभिसन्धेरिति** । तर्हि प्रकृतेऽप्यात्मनो मनसा भेदस्य गृहीतत्वाद्भेदाग्रहोऽसिद्ध इति वक्ष्याम इति प्रतिबन्द्यभिप्रायोऽत्र गूढ इति द्रष्टव्यम् । गूढाभिसन्धिरत्र चेति पदद्वयेन विवेकिभिर्ज्ञातुं शक्य इति दर्शयन्योजनान्तरमाह **यद्वेति** । **हृदयमित्यनन्तरमिदं** चाविवेकिनां गूढमिति शेषः । चशब्दोऽप्यर्थ इत्यभिप्रेत्याह **अपीति** । एतदुपर्युत्तरग्रन्थमुत्थापयितुमाह **अथवेति** । यद्यपि भेदग्रहः किं भेदाग्रहविरोधी न वेति विकल्प्य नेति पक्षेऽतिप्रसङ्ग इत्युक्त्वाऽऽद्यपक्षोत्तरत्वेनोत्तरग्रन्थो लापनीयः । अथवेत्यस्य तु नात्र कृत्यमस्ति तथाऽपि नेति पक्षेऽतिप्रसङ्गप्रदर्शनस्य कथं स न घटस्य स्यादित्यनेन लाभात्तन्मात्रस्यैव योजनान्तरमभिप्रेत्य, अथवेत्युक्तमिति ज्ञातव्यम् ।

**श्री०** — ननु नैवमस्त्यनुभव इति पूर्वशङ्काया एवोत्तरत्वेन मूलं प्रकारान्तरेण योजयति **किञ्चेति** । अस्मिन्पक्षे मूलं योजयति **यदि भेदाग्रहादिति** । अत्र चेत्यस्यान्वयं दर्शयन्मूलं योजयति **यदि भेदाग्रहः स्यादिति** । चशब्दोऽन्तःकरणसमुच्चयार्थे इत्यभिप्रेत्यात्माऽन्तःकरणयोश्चेत्युक्तम् । अत्र चेत्यत्र चशब्दोऽप्यर्थ इत्यभिप्रेत्य अत्र चेत्यनयोर्योजनान्तरमाह **स्फुटमिति** । स्फुटं प्रतिभासमानभेदयोरप्यात्माऽन्तःकरणयोरिति वर्तते । **घटस्यात्मनश्चेति** । स्फुटं(प्रतीय)प्रतिभासमानभेदवतो घटस्यात्मनश्चेत्यर्थः ॥ **एवं वदन्निति** । भेदाग्रहादन्यनिष्ठो धर्मोऽन्यत्र व्यवह्रियत इत्यङ्गीकुर्वाण इत्यर्थः । **स** भेदाग्रहः ॥ **घटस्यात्मना पटादिना वेति** । तथा च घटादिनिष्ठः पृथुबुध्नोदराकारादिधर्मोऽप्यात्मनि व्यवह्रियेतेत्यर्थः । न च घटभेदग्रहण एवास्तीति न तदग्रहनिमित्त उक्तव्यवहार इति वाच्यम् । स्यादिदं यद्ययं भेदग्रहो भेदाग्रहविरोधी स्यात् । न चैवम् । अविरोधित्वाङ्गीकारादिति भावः ।

**च०** — **गूढाभिसन्धेरिति** । घटकर्तृकस्य स्वानुयोगिकात्मप्रतियोगिकभेदग्रहस्याभावेप्यात्मकर्तृकस्वानुयोगिकघटप्रतियोगिकभेदग्रहस्याभेदग्रहविरोधिनः सत्वेन न पृथुबुध्नोदराकारोहमिति व्यवहार इतिवत्प्रकृतेपि मनःकर्तृकग्रहस्य भावेप्यात्मकर्तृकस्वानुयोगिकमनःप्रतियोगिकभेदग्रहस्य तदग्रहविरोधिनः सत्वेन तदग्रहोऽसिद्ध इति न तादृशव्यवहार इत्याशयोऽत्रनिगूढ इति ध्येयम् ।

**सु०** — **ननु भेदग्रहो भेदाग्रहविरोधी । स चास्ति घट इति कुतस्तत्र भेदाग्रहस्तत्प्रयुक्तो व्यवहारो वेति गूढाभिसन्धिमजानतो द्वितीयपक्षमाशङ्क्याह** मन इति ।

**अनु०** — मनो म इति भेदतः ॥

मनसोऽपि गृहीतत्वात्

**भेदत इति तृतीयार्थे तसिः । यदि भेदग्रहो भेदाग्रहविरोधीति भेदेन गृह्यमाणे घटे न भेदाग्रह इत्युच्यते, तदा मे मन इति मनसोऽपि भेदेन गृहीतत्वान्नात्मना भेदाग्रहः स्यात् । तथा च भेदाग्रहनिमित्तोऽहमिच्छामीति व्यवहार इत्यसत् । किन्त्वनुभवनिमित्त एव । अत एव नान्तःकरणधर्मस्यात्मन्यारोप इत्यपि युक्तम् । भेदग्रहसद्भावेन आरोपहेतोर्भेदाग्रहस्यायोगात् । न ह्यविदितभेदं संबन्धितया गृह्यते । आत्मन्यपि प्रसङ्गात् । केन पुनः प्रमाणेन मनो गृह्यते । साक्षिणेति वदामः । तथा हि । न तावच्चक्षुरादिना तदवगमः । अरूपिद्रव्यत्वात् । चक्षुराद्यव्यापारेऽप्युपलब्धेः । न चानुमानेन । लिङ्गाभावात् । नन्वस्ति युगपज्ज्ञानानु-**

त्पत्तिर्मनसो लिङ्गम् । तथा हि । बाह्येन्द्रियेषु स्वैः स्वैर्विषयैर्युगपत्सन्निकृष्टेष्वात्मनाऽधिष्ठितेष्वपि न युगपज्ज्ञानानि जायन्ते । तेन ज्ञायतेऽस्त्येतेभ्योऽन्यत्सहकारि । यत्संयोगक्रमवशाज्ज्ञानक्रमः प्रक्रमत इति ।

श्रे० — एवं तर्हि प्रकृतेऽपि भेदाग्रहोऽसिद्ध इत्युत्तरस्य स्पष्टत्वात्कथं शङ्केत्यत उक्तं **गूढाभिसन्धिमजानत इति** ॥ **द्वितीयमिति** । पूर्वस्याप्युत्तरापेक्षया द्वितीयत्वात् द्वितीयमित्युक्तम् । वस्तुतस्त्वाद्यमित्यर्थः ॥ **आहेति** । गूढप्रतिबन्द्यभिप्रायं स्पष्टयतीत्यर्थः । 'तस्मात्तत्संयोगादचेतनमि'ति कारकाटीकायां 'यद्भ्रान्तिरियमित्यर्थ' इत्यादिना कृतिचैतन्ययोः सामानाधिकरण्यानुभवमभ्युपेत्य तद्भ्रमत्वं वर्णितं तदपि दूषयति **अत एवेति** । ननु मे मन इत्यन्तःकरणमात्मसंबन्धितया गम्यते न तु भिन्नतयेति कथं 'मनो म इति भेदतः । मनसोऽपि गृहीतत्वादि'त्युच्यत इत्यत आह **न हीति** । अविदितभेदस्यापि मनसः संबन्धितया ग्रहे बाधकमाह **आत्मन्यपीति** । अन्यथेति शेषः । अविदित भेदस्यापि मनसः संबन्धितया ग्रहे आत्मनः सकाशादविदितभेदस्याप्यात्मनो ममाहमित्यात्मसंबन्धितया ग्रहः स्यादित्यर्थः । ननु नात्मभिन्नतया मनसा तावन्मनसो ग्रहणं संभवति । मनसोऽतीन्द्रियत्वान्मनोविषयत्वाभावेन तद्भेदग्राहकताया अनुभवविरुद्धत्वात् । अन्यस्य च प्रमाणस्याभावात् । तथा च मे मन इति भेदग्रहस्यैवाभावेनात्मान्तःकरणयोर्भेदाग्रहसंभवाद्युज्यत एव तन्निमित्तकोऽहमिच्छामीति व्यवहार इत्यभिप्रेत्य शङ्कते **केनेति** । केनेत्याक्षेपे न केनापीत्यर्थः । आत्मनो भिन्नत्वेनेति शेषः । पुनःशब्दो वाक्यालङ्कारे । साक्षिविषयत्वान्मनसो मे मन इत्यात्मभिन्नत्वेन तद्ग्रहणं साक्षिणा संभवतीति भावेन सिद्धान्तयति **साक्षिणेति वदाम इति** । भवेदेतदेवं यदि मनसः साक्षिविषयत्वं सिद्धं स्यात्तदेव कुत इत्यतः **प्रकारान्तरेण** तदसिद्धेः परिशेषेण साक्षिविषयत्वसिद्धिरित्यभिप्रेत्य प्रसक्तप्रमाणनिरासेन परिशेषमुपपादयितुं प्रतिजानीते **तथा हीति** । किं प्रत्यक्षेण मनसो ग्रहः किंवाऽनुमानेनाथवाऽऽगमेनेति **विकल्पान्मनसि** निधायाद्यं दूषयति **न तावदिति** । तत्र चक्षुर्मात्रेण तदनवगमे हेतुमाह **अरूपिद्रव्यत्वादिति** । द्रव्यत्वमात्रं घटे व्यभिचारीति पूर्वभागः । तावन्मात्रं च गुणादौ गतमिति चरमभागः । अरूपित्वं चात्र रूपात्यन्ताभाववत्त्वमेवाभिमतं न तु तत्प्रागभाववत्त्वं तत्प्रध्वंसवत्त्वं वा । तथा सति गुणादौ व्यभिचाराभावेन द्रव्यपदवैयर्थ्यापत्तेरिति द्रष्टव्यम् । एवं चक्षुषोऽसाधारणदोषेण तत्र प्रामाण्यं निराकृत्य तत्र दोषान्तरमपि सूचयंश्चक्षुरादिना तदनवगमे हेतुमाह **चक्षुरादीति** । चक्षुर्मात्रेण तदनवगमस्य पूर्वेण प्राप्तावपि चक्षुरादिना तस्य तेनाप्राप्तेस्तस्य न तत्र हेत्वन्तरत्वमिति चशब्दाभावः । द्वितीयं दूषयति **न चेति** । गौतमसूत्रोक्तं लिङ्गमाशङ्कते **नन्वस्तीति** । युगपज्ज्ञानानुत्पत्तेरन्यथासिद्धत्वादप्रयो-

जकत्वाच्च न मनोलिङ्गत्वमित्याशङ्क्य 'रूपादिग्रहणानि चक्षुरादिव्यतिरेकेणाधिष्ठापकान्तरापेक्षाण्ययुगपदुत्पत्तेः । तद्यथाऽनेकशिल्पिपर्यवदातस्य पुरुषस्यानेकं वाश्यादि युगपत्सन्निधानेनावस्थितमपि हस्ताद्यधिष्ठापकापेक्षं न युगपदनेकां क्रियां निर्वर्तयति । तथा चक्षुरादि न युगपदनेकं ज्ञानं करोति । तस्मादधिष्ठापकान्तरमपेक्षत' इति न्यायवार्तिकं मनसि निधाय सूत्रार्थमाह **तथा हीति** ॥ **युगपत्सन्निकृष्टेष्विति** । इदं च दीर्घशष्कुलीभक्षणदशायामिति बोध्यम् ।

**स०**— ननु मे मन इति मनसो भिन्नत्वेन न ग्रहणम् । येन भेदाग्रहविरोधिभेदग्रहसद्भावः । किं तु आत्मसंबन्धित्वेनैव ग्रहणमित्यत आह **न ह्यविदितभेदमिति** ॥ **आत्मन्यपीति** । संबन्धित्वेन ग्रहणस्येति शेषः । 'ननु मनो म इति भेदत' इत्यनेन मनसो भिन्नत्वेन गृहीतत्वात् न भेदाग्रह इत्युक्तं तदयुक्तम् । मनसो भिन्नत्वग्राहकतादृशप्रमाणस्यैवाभावादित्यभिप्रेत्य शङ्कते **केन पुनरिति** ॥ **अरूपिद्रव्यत्वादिति** । उपलक्षणमेतत् । निस्पर्शद्रव्यत्वादित्यपि द्रष्टव्यम् । **नन्वस्तीति** । ज्ञानानि दृष्टकारणातिरिक्तक्रमेण संयोगवत्कारणोपेतानि दृष्टकारणेषु सर्वेष्वपि सत्सु क्रमेणोत्पद्यमानत्वात् क्रमवत्क्रियाजन्य(वतः) वृक्षात्पततः फलस्य क्रमभाव्याकाशसंयोगवदित्यनुमानमुक्तं भवति । तत्र हेतुमुपन्यस्यति **तथा हीति** ।

**प०**— **गूढाभिसंधिमिति** । आत्ममनसोरप्येवमित्यभिप्रायमजानत इत्यर्थः ॥ **द्वितीयेति** । विरोधीति पक्षमित्यर्थः ॥ **तसिरिति** । 'प्रतियोगे पञ्चम्यास्तसिरि'ति सूत्रे 'आद्यादिभ्य उपसंख्यानमि'त्युक्तेराद्यादेश्चाकृतिगणत्वादिति भावः । ननु मनो मे इत्यनेन कथं भेदग्रहः प्राप्त इत्यत आह **नहीति** ॥ **आत्मन्यपीति** । ममाहमिति सम्बन्धितया ग्रहणप्रसङ्ग इत्यर्थः । आनुमानिकत्व(लक्षण) पक्षे मनो म इति भेदग्रहायोगं मन्वानः पृच्छति **केनेति** । कुतः साक्षिणेत्यतः परिशेषादिति भावेन तमाह **तथा हीत्यादिना** तस्मात्सिद्धं साक्षिग्राह्यत्वं मनस इत्यन्तेन । तार्किकमतमाशङ्कते **नन्वित्यादिना अत्रोच्यतइत्यन्तेन** । न्यायसूत्रं पठित्वा विवृणोति **युगपदित्यादिना** ॥ **बाह्येन्द्रियेष्विति** । शष्कुलीं भक्षयतः पुंस इति योज्यम् ।

**या०**— एवं तर्हि प्रकृतेऽपि भेदाग्रहोऽसिद्ध इत्युत्तरस्य स्पष्टत्वात्कथं शङ्केत्यत उक्तं **गूढाभिसन्धिमजानत इति** ॥ **द्वितीयमिति** । पूर्वस्याप्युत्तरापेक्षया द्वितीयत्वादाद्यमित्यर्थः । विकल्पितपक्षयोरेकस्य दूषणेऽवशिष्टमिति यावत् ॥ **आहेति** । निगूढं प्रतिबन्द्यभिप्रायं स्पष्टयतीत्यर्थः । 'तस्मात्तत्संयोगादचेतन'मिति कारिकाटीकायां यद्भ्रान्तिरियमित्यर्थः इत्युक्तं तदपि दूषयति **अत एवेति** । ननु मे मन इत्यन्तःकरणमात्मसम्बन्धितयैवानुभूयते न भिन्नतयेत्यत आह **न ह्यविदितेति** । अविदितभेदेऽपि सम्बन्धिताग्रहे स्वात्मन्यपि ममाहमिति सम्बन्धिताग्रहः स्यादिति बाधकमाह **आत्म-**

न्यपीति । अन्यथेति शेषः । मनसोऽपि गृहीतत्वादित्यत्र काप्यानुक्तेस्तटस्थः पृच्छति **केनेति** । पुनःशब्दो वाक्यालङ्कारे ॥ **साक्षिणेति** । तथ च मूले साक्षिणेति पूरणीयमिति भावः । तेन मूलोक्तं मनसो यत्साक्षिगृहीतत्वं तदुपपादनायैवेयं चर्चाऽतो नासङ्गतिशङ्केति ध्येयम् । गौतमसूत्रोक्तं लिङ्गमाशङ्कते **नन्वस्तीति** । युगपज्ज्ञानानुत्पत्तेर्ज्ञानधर्मत्वात्कथं मनोलिङ्गतेत्यपेक्षायां 'रूपादिग्रहणानि चक्षुरादिव्यतिरेकेणाधिष्ठापकान्तरापेक्षाण्ययुगपदुत्पत्तेः । तद्यथाऽनेकशिल्पिपर्यवदातस्य पुरुषस्यानेकं वा स्यादित्ययुगपत्सन्निधानेनावस्थितमपि हस्ताद्यधिष्ठापकापेक्षं न युगपदनेकां क्रियां निर्वर्तयति । तथा चक्षुरादि न युगपदनेकं ज्ञानं करोति । तस्मादधिष्ठापकान्तरमपेक्षत' इति न्यायवार्तिकं मनसि निधाय सूत्रार्थमुपपादयति **तथा हीति** ॥ **युगपत्सन्निकृष्टेष्विति** । इदं च दीर्घशष्कुलीभक्षणदशायां द्रष्टव्यम् ।

**श्री० — स चेति** । भेदग्रहः ॥ **घट इति** । घटविषयेऽस्तीत्यर्थः । **तत्र** आत्मनि । **व्यवहारः** पृथुबुध्नोदराकारोऽहमित्यादिः । इति द्वितीयं पक्षमित्यन्वयः ॥ **गूढाभिसन्धिमजानत इति** । एतच्छङ्कोत्तरत्वेन 'मनो म' इत्यनेन वक्ष्यमाणो गूढो यः सिद्धान्तिनोऽभिसन्धिः तमजानतः पूर्वपक्षिणः । **द्वितीयं पक्षं** तेन स्वीकृतं पक्षमिति यावत् । **घटे** विषये ॥ **न भेदाग्रह इति** । घटधर्मिक आत्मादिप्रतियोगिको यो भेदस्तद्ग्रह आत्मन्यस्तीति न तत्प्रयुक्तो व्यवहार इत्युच्यत इत्यर्थः ॥ **नात्मनेति** । मनोधर्मिक आत्मप्रतियोगिको यो भेदस्तद्ग्रह आत्मनि नास्तीत्यर्थः ॥ **आरोप इति** । पूर्वं स्फटिके लौहित्यमिवान्तःकरणगतमिच्छादि प्रतिफलितमित्यभिप्रायः । अत एवेत्युक्तं विशदयति **भेदग्रहेत्यादिना** । **एतेभ्य** आत्मनो बाह्येन्द्रियेभ्यश्च ।

**च० — प्रक्रमते** । सङ्गच्छते ।

**सु० —** अत्र कश्चिदाह । आत्मन एवैवंविधसामर्थ्यकल्पनोपपत्तावन्यथासिद्धमनुमानम् । मनसः प्रतीन्द्रियसंयोगव्यापारे क्रमवति करणान्तरशून्येऽनैकान्तिकं च । फलस्य च वृक्षात्पततः क्रमवर्तिन्याकाशसंयोगे कुठारादिव्यापारे च । इन्द्रियाणां प्रतिविषयसंयोगव्यापारे चेति । तदयुक्तम् । दृष्टानुसारिणी हि कल्पना । कर्ता ह्यनेककरणाधिष्ठानेन युगपन्नानाकार्याणि कुर्वाणो दृष्टः । तथा हि । युगपन्माणवको गच्छति पठति पन्थानमीक्षते वहति च कमण्डलुम् । तस्मान्नैष कर्तृधर्मो युक्तः कल्पयितुम् । किन्तु दृष्टत्वाद्द्रव्यान्तरमेवाव्यापकम् । अनैकान्त्यं तु नास्त्येव । तत्रापि क्रियाक्रमादेर्निमित्तस्य विद्यमानत्वादिति ।

**शे०— आत्मन एवैवंविधसामर्थ्येति** । एकः कर्ता एकदा एकामेव क्रियां कर्तुं समर्थो नानेकामिति कर्तुरेव ज्ञानक्रमप्रयोजकसामर्थ्यकल्पनेनायुगपदुत्पत्तिरूपहेतोरुपपत्ताविल्यर्थः ॥ **अनुमानमिति** । रूपादिग्रहणपक्षकं वार्तिकोक्तानुमानमित्यर्थः ॥ **मनसः प्रतीन्द्रियेति** । तत्तदिन्द्रियमनःसंयोगरूपे व्यापार इत्यर्थः ॥ **क्रमवतीति** तत्र हेतुसत्त्वोपपादनम् । **कारणान्तरशून्य** इति साध्याभावोपपादनम् । इदं च तर्कितमनःसंयोगमादाय द्रष्टव्यम् । तेन मनःसिद्धौ किमनैकान्त्येन तदसिद्धौ च कस्य संयोगे व्यभिचार इति शङ्कानवकाशः । यद्वा एतदस्वरसादाह **फलस्य चेति** । क्रमवर्तिनीत्यतःपरं कारणान्तरशून्ये चानैकान्त्यमिति वर्तते । कुठारादिव्यापारे चेत्यादौ क्रमवर्तिनि कारणान्तरशून्येऽनैकान्त्यमिति वर्तते ॥ अन्यथासिद्धिं निराकरोति **दृष्टेति** ॥ **अव्यापन्नमिति** ॥ क्रमिकसंयोगवतो द्रव्यस्य व्यापकत्वायोगादिति भावः ॥ **अनैकान्त्यं त्विति** । मनसः प्रतीन्द्रियसंयोगादाविति शेषः ॥ **क्रियाक्रमादेरिति** । आदिपदेन प्रयत्नादिक्रमो ग्राह्यः । तेन कुठारादिव्यापारे उद्यम्योद्यम्य निपतनादिरूपे क्रमप्रयोजकप्रयत्नक्रमसत्त्वान्न तत्र व्यभिचार इति बोध्यम् । न च तर्हि क्रमिकक्रियादावेवानैकान्त्यमिति वाच्यम् ॥ तत्राप्यदृष्टक्रमस्यैव निमित्तत्वेन तदसंभवात् । न च तर्हि क्रमिकादृष्टेष्वेव व्यभिचार इति वाच्यम् । तत्रापि पूर्वपूर्वादृष्टक्रमस्यैव निमित्तत्वात् । न चैवमनवस्था, सिद्धविषयत्वादित्याशयात् । केचित्तु क्रियायां वेगादेर्नियतस्य कारणत्वेन क्रमवत्कारणत्वस्यापि सद्भावेन साध्यस्यापि सत्त्वान्न व्यभिचार इत्याहुः । अन्ये तु संयोगसामान्यं प्रति क्रियासामान्यस्य साधारणकारणत्वेनोक्तसन्निकर्षेषु क्रियारूपसामान्यकारणसत्त्वे सति क्रमवत्त्वरूपहेतुसत्त्वात् कारणान्तरस्य चाभावात्तत्र व्यभिचारेऽप्याद्यक्रियायां गुरुत्वस्य द्वितीयादिक्रियायां च वेगादेरेव कारणत्वेन क्रियामात्रे एकस्य साधारणकारणस्याभावात्क्रियाक्रमे च क्रियासाधारणकारणत्वे सति क्रमवत्त्वहेतोरेवाभावान्न व्यभिचार इत्याहुः ॥

**स०— एवं विधसामर्थ्येति** । क्रमेणैव ज्ञानजनकत्वात्मकसामर्थ्येत्यर्थः । **प्रतीन्द्रियेति** । तत्तदिन्द्रियसंयोगेत्यर्थः । **इन्द्रियाणां प्रतिविषयेति** । आदौ घ्राण-गन्धसंयोगः । अनन्तरं तदाश्रयीभूतचन्दनखण्डचक्षुषोः संयोगः । अनन्तरं स्पर्शनेनेत्येवं क्रमेण जायमानसंयोगक्रम इत्यर्थः । **तदयुक्तमिति** । आद्यो वदतीति शेषः । **क्रियाक्रमादेरिति** । न चैवं तत्रैवानैकान्त्यमिति वाच्यम् । तत्राप्यदृष्टक्रमस्यैव नियामकत्वात् । न चानवस्था । प्रामाणिकत्वेन मूलक्षयाभावादित्यत्र तात्पर्यात् ।

**प०— कश्चिदाहेति** । दूषणमिति योज्यम् ॥ **एवंविधेति** । क्रमेण ज्ञानोत्पादरूपेत्यर्थः ॥ **अनुमानमिति** । रूपरसादिज्ञानानि चक्षुरादीन्द्रियात्माऽन्यक्रमिकसंयोगवत्सहकारिसापेक्षाणि । अयुग-

पदुत्पत्तिमत्त्वात् । संमतवदित्यनुमानमित्यर्थः । न केवलमप्रयोजकं व्यभिचारि चेत्याह **मनस इति** । चक्षुरादीन्द्रियैः सह क्रमेणोत्पद्यमाने मनःसंयोगेऽयुगपदुत्पद्यमानत्वरूपहेतुसत्त्वेन पूर्वोक्तसहकारिरूप-कारणान्तरशून्यतया साध्याभावेन व्यभिचार इत्यर्थः । मनस्सिद्ध्यसिद्धिभ्यां नानैकान्त्यमित्यतोऽन्यत्र तदाह **फलस्येति** । कुठारादिव्यापारे चेत्यादौ क्रमवर्तिनीति कारणान्तरशून्ये चेति अनैकान्तिकमिति चानुषङ्गः । तार्किको निराह **तदयुक्तमिति ॥ अव्यापकमिति** । तादृशस्यैव क्रमिकसंयोगजनन-संभवादिति भावः ॥ **क्रियाक्रमादेरिति** । प्रयत्नक्रमः आदिपदार्थः ।

**या० -- एवंविधसामर्थ्येति** । एकः कर्ताएकदा एकामेव क्रियां कर्तुं समर्थो नानेका-मिति कर्तुरेव ज्ञानक्रमप्रयोजकसामर्थ्यकल्पनेन अयुगपदुत्पत्तिरूपहेतोरुपपत्ताविर्यर्थः ॥ **अनुमानमिति** । रूपादिग्रहणपक्षकं वार्तिकोक्तमनुमानमित्यर्थः ॥ **मनसः प्रतीन्द्रियेति** । तत्तदिन्द्रियमनःसंयोगरूपे व्यापार इत्यर्थः । इदं च तर्कितं मनःसंयोगमादाय बोध्यम् । तेन मनःसिद्धौ किमनैकान्त्येन । तदसिद्धौ कस्य संयोगे व्यभिचार इति शङ्काऽनवकाशः ॥ **अव्यापकमिति** । क्रमिकसंयोगवतो द्रव्यस्य व्यापकत्वासम्भवादिति भावः । एतच्च मनसोऽणुत्वं धर्मिग्राहकमानसिद्धमिति स्वरूपकथनार्थमेवेति ज्ञातव्यम् ॥ **क्रियाक्रमादेरिति** । आदिपदेन प्रयत्नादिक्रमो ग्राह्यः । तेन कुठारादिव्यापारे उद्यम्यनिपतनादिरूपे क्रमप्रयोजकः प्रयत्नक्रमोऽस्त्यतो न तत्र व्यभिचार इति भावः । न च क्रमिक-क्रियादावेवानैकान्त्यम् । तत्र अदृष्टक्रमस्यैव निमित्तत्वात् । न च क्रमिकादृष्टेष्वेवानैकान्त्यं तत्रापि पूर्वादृष्टक्रमस्यैव निमित्तत्वात् । अनवस्था च प्रामाणिकीति द्रष्टव्यम् ॥

**श्री० — एवंविधेति** । स्वसंयोगक्रमेण कार्ये क्रमसंपादकत्वरूपं सामर्थ्यं कल्पयित्वा तत्संयोग-क्रमेणैव ज्ञाने क्रमकल्पनोपपत्तेरित्यर्थः ॥ **अनुमानमिति** । रूपरसादिप्रतीतिः क्रमिककारणान्तरसाध्या क्रमिककार्यत्वात् । व्यतिरेकेण व्योमादिवदिति । **अन्यथा** मनोविनाऽपि । क्रमवतीति हेतुसद्भावो-पपादनम् । साध्याभावमुपपादयति **कारणान्तरेति** । मनस एव तत्र कारणत्वेन तद्व्यतिरिक्तं कार-णान्तरं नास्तीति(अर्थः) भावः । एवमुत्तरत्रापि । फलकुठारेन्द्रियाणामेव करणत्वेन तत्रापि कारणान्तरं नास्तीति व्यभिचार इति ध्येयम् । आत्मन एव करणैः स्वसंयोगक्रमेण क्रमादेव ज्ञानादिकार्योत्पादक-त्वमस्त्वित्युक्तं दूषयति **कर्ता हीति** । कर्ता ह्यात्मा युगपत् पादवाक्चक्षुर्हस्तरूपकरणमधिष्ठाय गमनादि-रूपकार्यं युगपदेव करोति । तथाच चैकः कर्ता एकदा एकामेव क्रियां करोति नानेकामित्ययुक्त-मित्यर्थः । **एषः** स्वसंयोगक्रमेण क्रमात्कार्यजनकत्वरूपः ॥ **दृष्टत्वादिति** । तत्तदिन्द्रियाणां तत्तद्विषय-

संबन्धे आत्मसंबन्धे च सत्यपि मनःसंयोगक्रमेणैव ज्ञानक्रमस्य व्यासङ्गदशायां दृष्टत्वादित्यर्थः । **क्रियेति** । तथा चोक्तसंयोगस्य क्रियारूपा(स)समवायिकारणजन्यत्वात् । क्रियारूपकारणक्रमस्य तत्तत्संयोगक्रमे निमित्तस्य सत्त्वेन कारणान्तरशून्यत्वं नास्तीति साध्यस्यापि सत्त्वान्न व्यभिचार इत्यर्थः । न च क्रियाक्रमे एव मनआदिव्यतिरिक्तकारणान्तरशून्ये व्यभिचार इति वाच्यम् । तत्राप्यदृष्टरूपकारणान्तरक्रमेणैव क्रमस्य सत्त्वात् । तत्रापि पूर्वादृष्टक्रमस्य निमित्तत्वेनानादित्वाददोषः ।

च० — **एवंविधसामर्थ्येति** । क्रमेण ज्ञानोत्पादनरूपेत्यर्थः । **अनुमानमिति** । रूपरसादिज्ञानपक्षकात्मचक्षुरादीन्द्रियान्यक्रमिकसंयोगवत्सहकारिसापेक्षत्वसाध्यकायुगपदुत्पत्तिमत्त्वहेतुकानुमानमप्रयोजकमित्यर्थः । **मनसइति** । मनोनुयोगिकचक्षुरादीन्द्रियप्रतियोगिकसंयोगे दर्शितसाध्यविनिर्मुक्तेऽनैकान्त्यमित्यर्थः । **चेतीति** । अनैकान्तिकमित्यनुषजनीयं ।

सु० — **अत्रोच्यते । अस्ति तावदविवेकिनामपि मनःप्रतीतिः । मम मनोऽन्यत्र गतमित्यादिव्यवहारात् । न च ते युगपज्ज्ञानानुत्पत्तिं जानन्ति । प्रत्युत युगपदेव ज्ञानोत्पत्तिं मन्यन्ते । अन्यथा व्यासङ्गे क्रमदर्शनेनान्यत्रापि क्रमानुमानं परस्य व्यर्थं स्यात् । तस्माल्लिङ्गदर्शनात्प्रागेव भवदिदं मनोज्ञानं न तन्निमित्तकमिति । अस्तु तर्हि बुद्ध्यादीनामसमवायिकारणस्य संयोगस्याश्रयतया मनःसिद्धिः । मैवम् । प्रत्यक्षज्ञाने तावदिन्द्रियात्मसंयोगस्यैवासमवायिकारणत्वस्योपपत्तेः । अनुमित्यादौ लिङ्गज्ञानादेः । स्मृतौ भावनायाः, सुखादाविष्टार्थोपलब्ध्यादेरिति । नित्यविशेषगुणानां संयोगासमवायिकारणत्वनियमान्नैवमिति मिति चेन्न । विभाग (ज)शब्दजशब्दे व्यभिचारात् । अश्रावणत्वेन हेतुविशेषणान्नेति चेत् । यथा तर्हि विभागादिजशब्दे कारणान्तरदर्शनात्तन्निरासार्थं व्याप्तिग्रहणवेलायां प्रयत्यते तथा सुखादिनिरासाय प्रयतनीयम् । असमवायिकारणान्तरदर्शनस्य तुल्यत्वात् । निमित्तं तदिति चेन्न । असमवायिकारणलक्षणस्यातिव्याप्तिप्राप्तेरिति । न च सुखाद्युपलब्धिकरणत्वेन मनस्सिद्धिः । साक्षिसिद्धतयाऽन्यथासिद्धेः ।**

शे० — नन्वन्यनिष्ठप्रतीतेरन्यं प्रत्यप्रत्यक्षत्वात्कथं तत्सत्त्वानिश्चय इत्यतोऽप्रत्यक्षतया प्रत्यक्षेण तदसिद्धावपि विशिष्टव्यवहारस्य तज्ज्ञानकार्यतयाऽन्वयव्यतिरेकाभ्यामवधारिततया व्यवहाररूपकार्यलिङ्गकानुमानेन तत्सिद्धिर्युक्तैवेत्याशयेनाह **ममेति** । अस्त्वविवेकिनामपि मनःप्रतीतिः । साऽपि युग-

पज्ज्ञानानुपपत्तिरूपलिङ्गजन्यैव किन्न स्यादित्यतो भवेदेतद्यदि तेषामुक्तलिङ्गानुसंधानं स्यात् । न च तदस्तीत्याह **न चेति** । अविवेकित्वादेवेति भावः । न केवलं तेषामुक्तलिङ्गज्ञानाभावमात्रं किन्तर्हीत्यत आह **प्रत्युतेति** ॥ **युगपदेव ज्ञानोत्पत्तिमिति** । दीर्घशष्कुलीभक्षणादिदशायामिति शेषः ॥ **अन्यथेति** । अविवेकिनामपि दीर्घशष्कुलीभक्षणादिदशायां युगपज्ज्ञानोत्पत्तिभ्रमाभावे युगपज्ज्ञानानुत्पत्तिरूपलिङ्गानुसन्धाने चेत्यर्थः ॥ **अन्यत्रापीति** । दीर्घशष्कुलीभक्षणादावपीत्यर्थः ॥ **क्रमानुमानमिति** । विप्रतिपन्नानि ज्ञानानि क्रमभावीनि जन्यत्वात् व्यासङ्गदशापन्नानेकज्ञानवत् इत्यनुमानमित्यर्थः ॥ **व्यर्थं स्यादिति** । सन्दिग्धविपर्यस्तान्यतरं प्रत्येवानुमानस्यार्थवत्त्वादिति भावः ॥ **अस्तु तर्हीति** । जन्यं बुद्ध्यादिकमसमवायिकारणजन्यं भावकार्यत्वाद्धटवदित्यनुमानेन बुद्ध्यादेरसमवायिकारणजन्यत्व सिद्धौ, बुद्ध्याद्यसमवायिकारणं संयोगः, नित्यविशेषगुणासमवायिकारणत्वात्, भेर्याकाशसंयोगवदित्यनुमानमत्राभिप्रेतम् । यद्वा जन्या बुद्ध्यादयः संयोगासमवायिकारणकाः । कार्यत्वे सति नित्यविशेषगुणत्वाच्छब्दवदिति प्रयोगो द्रष्टव्यः । **स च संयोगः परिशेषान्मनःसंयोग एवेति** तदाश्रयतया मनःसिद्धिरिति भावः ।

बुद्ध्यादिकमित्यत्र बुद्धिशब्देन किं प्रत्यक्षज्ञानमभिमतं, किंवाऽनुमितिरूपं, शाब्दं, स्मृतिरूपं वेति विकल्पान्मनसि निधायाद्यं दूषयति **प्रत्यक्षेति** ॥ **उपपत्तेरिति** । तथा च न परिशेषेण तदाश्रयतया मनस्सिद्धिरिति भावः । द्वितीयतृतीयौ दूषयति **अनुमित्यादाविति** । लिङ्गज्ञानादेरित्यतःपरमसमवायिकारणत्वोपपत्तेरिति वर्तते । एवमुत्तरत्रापि द्रष्टव्यम् । ततश्चान्यथासिद्धत्वाद्बुद्ध्याद्यसमवायिकारणस्य संयोगत्वसाधनं बुद्ध्यादेर्वा संयोगासमवायिकारणकत्वसाधनमनुपपन्नमिति भावः । चतुर्थं दूषयति **स्मृताविति** । तथा चान्यथासिद्धत्वाद्बुद्ध्यसमवायिकारणादेः संयोगत्वादिसाधनमनुपपन्नमिति भावः । बुद्ध्यादिपदोक्तबुद्ध्यंशे अनुमानमन्यथासिद्ध्या प्रदूष्यादिपदोक्तसुखाद्यंशेऽप्यन्यथासिद्ध्या तद्दूषयति **सुखादाविति** । सर्वत्र तल्लक्षणाक्रान्तत्वादिति भावः । यन्नित्यविशेषगुणासमवायिकारणं स संयोग इति वा ये नित्यविशेषगुणास्ते संयोगासमवायिकारणका एवेति वा निरुपाधिकसहचारभङ्गस्यैव विपक्षे बाधकत्वान्नाप्रयोजकत्वमित्याशङ्कते **नित्यविशेषगुणानामिति** । अत्र कार्यत्वे सतीत्यपि हेतुविशेषणस्याभिमतत्वान्नेश्वरबुद्ध्यादौ व्यभिचारः । पार्थिवपरमाणुरूपादीनामपि तेजःसंयोगजन्यत्वान्न तत्रापि व्यभिचार इति ध्येयम् । शब्दासमवायिकारणभूते विभागादौ सत्यपि नित्यविशेषगुणासमवायिकारणत्वे संयोगत्वाभावाद्विभागादिजन्ये शब्दे च, सत्यपि कार्यत्वे सति नित्यविशेषगुणत्वे, संयोगासमवायिकारणकत्वाभावेन व्यभिचारान्नैतद्विपक्षे बाधकमित्याशयेनाह **विभागेति** । शब्दापेक्षया विभागस्य शब्दं प्रति

प्रथमकारणत्वेनाभ्यर्हितत्वात्पूर्वनिपातः । अन्यथा ऽल्पाच्तरशास्त्रप्रवृत्त्या शब्दविभागज इत्येवावक्ष्यदिति भावः । नित्यस्याश्रावणो यो विशेषगुणस्तदसमवायिकारणकत्वस्य वा कार्यत्वे सत्यश्रावणत्वे च सति नित्यविशेषगुणत्वस्य वा हेतुत्वेन विवक्षितत्वान्न विभागादौ विभागजशब्दादौ च व्यभिचार इति शङ्कते **अश्रावणत्वेनेति** । विभागादिजेत्यत्रादिपदेन शब्दपरिग्रहः ॥ **कारणान्तरेति** । विभाग-शब्दरूपासमवायिकारणान्तरेत्यर्थः । **प्रयत्नते** अश्रावणत्वेन हेतुर्विशेष्यत इत्यर्थः ॥ **तथेति** । बाह्यत्वेन हेतुर्विशेष्यतामित्यर्थः ॥ **असमवायिकारणान्तरेति** । आत्मनः संयोगातिरिक्तेष्टार्थोपलब्ध्यादिरूपा-समवायिकारणान्तरेत्यर्थः । तथा चोक्तानुमाने हेत्वसिद्धिरिति भावः । **तत्** इष्टार्थोपलब्ध्यादिकम् ॥ **अतिव्याप्तिप्राप्तेरिति** । समवायिकारणप्रत्यासन्नत्वादेस्तत्रापि सत्त्वादिति भावः । सुखाद्युपलब्धिः सकरणिका क्रियात्वाच्छिदिक्रियावत् इत्यनुमानमाशङ्क्य निषेधति **न चेति** । यद्वा सुखाद्युपलब्धिरि-न्द्रियकरणिका जन्यसाक्षात्कारत्वात् । जन्यरूपप्रतीतिवदित्यनुमानमत्राभिमतम् । न च श्रोत्रादिनाऽ-न्यथासिद्धिः । यदि हि बाह्यैः श्रोत्रादिभिः सुखादयो गृह्येरंस्तर्हि बधिरादिभिर्नोपलभ्येरन्निति बाधकसद्भावेन तदनवकाशादिति द्रष्टव्यम् ।

सु० — **अन्यथेति** । यदि अविवेकिनोऽपि युगपज्ज्ञानानुत्पत्तिं जानन्तीत्यर्थः । **क्रमानु-मानमिति** । विप्रतिपन्नज्ञानानि क्रमभावीनि ज्ञानत्वात् । व्यासंगज्ञानवदित्यनुमानमित्यर्थः ।

---

अन्यथा सिद्धसाधनत्वादिति भावः । परस्परं प्रतीत्यर्थः । **अस्तु तर्हीति** । बुद्ध्यादिकमसमवायि-कारणसहितं भावकार्यत्वात् घटादिवदिति । अनेनानुमानेनासमवायिकारणसामान्ये सिद्धे परिशेषात् तदसमवायिकारणं मनस्संयोगरूपमेवेति संयोगाश्रयतया मनस्सिद्धिरिति भावः । ननु सामान्येन सिद्धबुद्ध्याद्यसमवायिकारणं पक्षीकृत्य तत्तु संयोगरूपं भवितुमर्हति, नित्यस्य योऽयं विशेषगुणः बुद्ध्यादिर्हि तदसमवायिकारणत्वात् । अयं घट इति ज्ञानकारणेन्द्रियार्थसंयोगवदिति संयोगत्वसाधनान्न लिङ्गज्ञानादिकमादायार्थान्तरमिति शङ्कते **नित्यविशेषेति** । **विभागशब्दजशब्दे इति** । तत्कारणीभूते विभागे शब्दे च व्यभिचार इत्यर्थः । यद्वा बुद्ध्यादिकं संयोगासमवायि-कारणकम्, नित्यविशेषगुणत्वादिति साधनं परस्याभिप्रेतम् । तस्य च विभागशब्दजशब्दे स्फुटो व्यभिचारः । **अश्रावणत्वेनेति** । अश्रावणो योऽयं नित्यस्य विशेषगुणः तदसमवायिकारणत्वादिति हेतुः क्रियते इत्यर्थः । द्वितीयप्रकारे तु अश्रावणत्वे सति नित्यविशेषगुणत्वादित्यर्थः । **सुखादिनिरा-सायेति** । प्रबलप्रमाणेन सुखादिकं प्रति इष्टार्थोपलब्धेः असमवायिकारणत्वस्य निश्चितत्वेन यत्तु नित्यविशेषगुणासमवायिकारणं, तत्तु संयोगरूपमिति व्याप्तिग्रहवेलायां बाधापत्त्या सुखाद्यतिरिक्त-नित्यविशेषगुणासमवायिकारणमिति विशेषणं दातव्यम् । अन्यथाऽश्रावणत्वविशेषणमपि न दातव्यमिति

भावः । **न चेति** । सुखादयो यदि (श्रोत्रादीन्द्रियैः) गृह्येरन् (तर्हि) बधिरादिभिर्नोपलब्धाः स्युरिति भावः ।

**प०**— उक्तलिङ्गाप्रतिसन्धानेपि मनसः ज्ञायमानत्वात् नोक्तानुमानगम्यतेति समाधत्ते **अत्रोच्यत इत्यादिना ॥ अन्यथेति** । पामराणां युगपज्ज्ञानानुत्पत्तिज्ञान इत्यर्थः ॥ **अन्यत्रापीति** । सर्वेन्द्रियाणां स्वस्वविषयसन्निकर्षस्थले शष्कुलीभक्षणादावपीत्यर्थः ॥ **बुद्ध्यादीनामिति** । बुद्धिसुखदुःखेच्छादीनां आत्ममनःसंयोगकारणत्वादिति भावः । शङ्कते **नित्येति** । नित्यद्रव्यनिष्ठविशेषगुणानामित्यर्थः ॥ **नैवमिति** । लिङ्गज्ञानादेर्नासमवायिकारणत्वमित्यर्थः ॥ **विभागजशब्दजशब्द इति** । वंशादौ दलद्वयविभागजे शब्दजे च शब्द इत्यर्थः । तयोः क्रमाद्विभागशब्दासमवायिकारणकत्वेन संयोगासमवायिकरणत्वरूपसाध्याभावेपि बुद्ध्यादयः संयोगासमवायिकारणकाः नित्यनिष्ठविशेषगुणत्वात् भेरीताडनजन्यशब्दवदित्यभिमतहेतोः व्यभिचारादित्यर्थः । व्यभिचारज्ञानस्य व्याप्तिग्रहप्रतिबन्धकत्वादाह **व्याप्तीति** । यो यो नित्यजन्यविशेषगुणः सोऽसौ संयोगासमवायिकारणक इति व्याप्तिग्रहणदशायां विभागादिजन्यशब्दैः अव्यभिचारायाश्रावणत्वे सति नित्यजन्यविशेषगुण इति विशेषणदानाय यथा प्रयत्नः क्रियते तथा सुखादावव्यभिचारायानात्मीयत्वे सतीत्यादिरूपविशेषणदानायापि प्रयत्यतामित्यर्थः । कुत इत्यतोऽविशेषादित्याह **असमवायीति ॥ तदिति** । लिङ्गज्ञानादिकमित्यर्थः ॥ **लक्षणस्येति** । समवायिकारणप्रत्यासन्नत्वे सत्यवधृतसामर्थ्यरूपासमवायिकारणलक्षणस्येत्यर्थः ॥ **न च सुखादीति** । सुखाद्युपलब्धयः करणसाध्याः क्रियात्वात् छिदिक्रियावत् इति सामान्यतः करणसिद्धौ परिशेषात्सिद्ध्यतो मनस्त्वादित्यर्थः ।

**या०— युगपदेव ज्ञानोत्पत्तिमिति** । दीर्घशष्कुलीभक्षणादिदशायामित्यर्थः ॥ **अन्यथेति** । दीर्घशष्कुलीभक्षणादौ युगपज्ज्ञानोत्पत्तिभ्रमाभाव इत्यर्थः । **अन्यत्रापि** । दीर्घशष्कुलीभक्षणादावपि । **क्रमानुमानमिति** । विप्रतिपन्नानि ज्ञानानि क्रमभावीनि जन्यज्ञानत्वात् व्यासङ्गदशापन्नानेकज्ञानवदित्यनुमानमित्यर्थः ॥ **व्यर्थं स्यादिति** । सन्दिग्धविपर्यस्तान्यतरं प्रत्येवानुमानस्य सार्थक्यादिति भावः ॥ **अस्तु तर्हीति** ! बुद्ध्यादयः संयोगासमवायिकारणिका नित्यकार्यविशेषगुणत्वाच्छब्दादिवदिति प्रयोगोऽत्राभिप्रेतः ॥ **नित्यविशेषगुणानामिति** । पर्थिवपरमाणुरूपादीनामपि तेजःसंयोगासमवायिकारणकत्वादिति भावः । अत्र कार्येति विशेषणमपि द्रष्टव्यम् । अन्यथा जलादिपरमाणुरूपादिषु व्यभिचारप्रसङ्गात् । **तथा सुखादिनिरासायेति** । बाह्येत्यपि हेतौ विशेषणीयमित्यर्थः । तथा च बुद्ध्यादौ हेत्वसिद्ध्या साध्यासिद्धिरिति भावः ॥ **न च सुखा-**

ख्युपलब्धीति । सुखाद्युपलब्धिः सकरणिका क्रियात्वाच्छिदिक्रियावदित्यनुमानेन मनःसिद्धिरिति न वाच्यमित्यर्थः ।

**श्री०** — **अन्यथेति** । यद्यविवेकिनोऽपि लिङ्गभूतां युगपज्ज्ञानानुत्पत्तिं जानन्ति सर्वेऽप्यन्यत्रापि दीर्घशष्कुलीभक्षणादिस्थलेऽपि क्रमादेव ज्ञानान्युत्पद्यन्त इति जानन्तीति यावत् । तर्हि दीर्घशष्कुलीभक्षणादिस्थलेऽपि जायमानानि विप्रतिपन्नानि ज्ञानानि क्रमभावीनि ज्ञानत्वात् व्यासक्तस्थलीयज्ञानवदित्यनुमानं व्यर्थं स्यात्सिद्धसाधनतापत्तेरित्यर्थः । **भवतु** अविवेकिनामिति शेषः । बुद्धिर्द्विविधा । अनुभवः स्मृतिश्च । अनुभवोऽप्यपरोक्षपरोक्षभेदाद्द्विविधः । तत्र सर्वत्राप्यात्ममनस्संयोगस्य माऽस्त्वसमवायिकारणत्वमित्याह **मैवमिति** । अनुमित्यादावित्यत्रादिपदेन वाक्यार्थज्ञानं ग्राह्यम् । द्वितीयादिपदेन पदज्ञानम् । ततश्चेन्द्रियात्मसंयोगस्य लिङ्गज्ञानस्य भावनारूपसंस्कारस्येष्टार्थज्ञानस्य चापरोक्षपरोक्षज्ञानस्मृतिसुखादिसमवायिकारणीभूते आत्मनि प्रत्यासन्नत्वात्कारणत्वाच्च युक्तं असमवायिकारणत्वमित्यर्थः ॥ **नित्येति** । नित्यस्येत्यर्थः । यो गुणः स संयोगासमवायिकारणक इत्युक्ते विभागजविभागे हस्ततरुविभागात्कायतरुविभागे व्यभिचारः स्यादतो विशेषेत्युक्तम् । तावत्युक्ते घटगतरूपे, अतो नित्यस्येत्युक्तम् । समग्रस्यापि हेतोर्नित्यजलपरमाण्वादिगते नित्ये रूपादौ, अतो नित्यस्य कार्यविशेषगुणत्वादिति वक्तव्यम् । तथा च न कोऽपि दोषः ॥ **विभागेति** । विभागजशब्दे वंशपाटनानन्तरं जायमाने चटचटशब्दे शब्दजशब्दे चेति विवेकः ॥ **अश्रावणत्वेनेति** । अश्रावणत्वे सति यो नित्यस्य कार्यविशेषगुणः स संयोगासमवायिकारणक इत्युच्यत इत्यर्थः । विभागादीत्यत्रादिपदेन शब्दो ग्राह्यः । **प्रयत्यते** तद्व्यावर्तकाश्रावणत्वरूपं विशेषणं दत्वेत्यर्थः ॥ **प्रयतनीयमिति** । पक्षीभूतसुखादिव्यतिरिक्ते स्थलेऽयं नियम इति व्याप्तेः सङ्कोचः क्रियतामित्यर्थः । ननु विभागादिजशब्दनिरासाय यतनीयं तत्र विभागशब्दरूपासमवायिकारणान्तरस्य क्लृप्तत्वेनोक्तसाध्याभावेन व्यभिचारापत्तेः । न हि सुखादौ तादृशमसमवायिकारणं क्लृप्तम् । येनात्रापि तन्निरासाय यतनीयं स्यादित्यत आह **तुल्यत्वादिति** । सुखादावपीष्टार्थोपलब्ध्यादेरसमवायिकारणस्य क्लृप्तत्वादित्यर्थः । **तदिति** इष्टार्थदर्शनम् ॥ **प्राप्तेरिति** । इष्टार्थोपलब्ध्यादावेवेत्यर्थः ॥ **साक्षीति** । साक्षिरूपकरणेत्यर्थः । **सिद्धेः** सुखाद्युपलब्धेरिति शेषः ।

**च०** — **नित्यविशेषगुणानां** । नित्यद्रव्याश्रितविशेषगुणानां पार्थिवपरमाणुरूपादीनामपि तेजःसंयोगासमवायिकारणकत्वादिति भावः । **प्रयतनीयमिति** । हेतुशरीरे बाह्यत्वांशोपि निवेशनीय इत्यर्थः । असमवायिकारणान्तरस्य लिङ्गज्ञानादिरूपस्य । तत् लिङ्गज्ञानादिरूपम् । **साक्षिसिद्धतयेति** साक्षिरूपज्ञानविषयतया मनःकारणकज्ञानविषयत्वासिद्धेरिति भावः ।

सु० — **एवमनुमानान्तरमपि निरसनीयम् । न चागमो मनसि प्रमाणम् । जातिबधिराणामपि तत्प्रत्ययात् । तस्मात्सिद्धं साक्षिग्राह्यत्वं मनसः । तस्य च तेनैवात्मनो भिन्नतया ग्रहणाद्भेदाग्रहासंभवेनेच्छाम्यहमिति न भेदाग्रहनिबन्धनो व्यवहार इति ।**

शे० — ननु च स्मृत्यादयो बाह्येन्द्रियभिन्नकरणप्रयोज्या गन्धादिक्रियान्यक्रियात्वात् रथादिक्रियावत् । सुखादयो वा बाह्येन्द्रियभिन्नकरणप्रयोज्या गन्धादिभ्योऽन्यत्वे सति विषयत्वाद्रथादिवत् । तद्यथा रथादयो विषयाश्चक्षुरादिव्यतिरिक्तं करणं वाश्यादि प्रयोजयन्ति, विषयाश्च सुखादयस्तस्मात्तैरपि करणान्तरं प्रयोजयितव्यमिति वार्तिकोक्तमनुमानद्वयं वा, विवादाध्यासिताः स्मृत्यादय इन्द्रियजन्मान आत्मविशेषगुणत्वाद्गन्धादिप्रत्ययवदिति वाचस्पत्युक्तमनुमानं वा, स्मृतिः शरीरावच्छिन्नात्मसंयुक्तद्रव्यसाध्या कार्यत्वे सत्यात्मविशेषगुणत्वाद्रूपादिज्ञानवत् । अत्र संस्कारसाध्यत्वेन सिद्धसाधनतापरिहाराय द्रव्यपदम् । कालादिसाध्यत्वेन तत्परिहारायात्मपदम् । न च कालादेरप्यात्मसंयोगाद्दोषतादवस्थ्यम् । अजसंयोगनिराकरणेन तदनवकाशात् । शरीरसाध्यत्वेन सिद्धसाधनतावारणाय शरीरपदम् । संयोगादौ रूपादौ च व्यभिचारवारणाय हेतौ विशेषणद्वयमित्युदयनोक्तमनुमानं वा मनःसाधकं भविष्यतीत्यत आह **एवमनुमानान्तरमपीति** । साक्षिणाऽन्यथासिद्धेरुक्तलिङ्गाननुसन्धानेऽपि मनःप्रतीतेश्च सर्वत्राविशिष्टत्वादिति भावः । तृतीयमाशङ्क्य निराकरोति **न चेति** । एवं प्रसक्तप्रतिषेधमुपपाद्य परिशेषयति **तस्मादिति** । किमेतावताऽपि सिद्धमित्यतः केन पुनः प्रमाणेनेति शङ्कानिरासः सिद्ध इत्यभिप्रेत्य तत्प्रकारमुपदर्शयति **तस्य चेति** ।

स० — **एवमनुमानान्तरमपि** इत्यस्यार्थः स्मृतिः शरीरावच्छिन्नात्मसंयुक्तद्रव्यसाध्या कार्यत्वे सत्यात्मविशेषगुणत्वात् रूपादिज्ञानवत्, यद्द्रव्यं तन्मन इति अनुमानान्तरम् । एतादृशलिङ्गानुसन्धानाभावेऽपि मे मनोऽन्यत्र गतम् इति मनःप्रतीतेः । किञ्च साध्याभावेऽपि हेतुरस्तु विपक्षे बाधकाभावात् । न च स्मृत्यनुत्पत्तिर्बाधिका । भावनया तदुपपत्तेः । न च नित्यविशेषगुणानां संयोगासमवायिकारणत्वनियमः । विभागशब्दजशब्दे व्यभिचारात् । अश्रावणत्वेन हेतुविशेषणान्नेति चेत् तर्हि यथा विभागादिशब्दे कारणान्तरदर्शनात् तन्निरासार्थं व्याप्तिग्रहणवेलायां प्रयत्यते, तथा स्मृतावपि भावनालक्षणासमवायिकारणान्तरस्य दर्शनेन तन्निरासाय यतनीयम् । तस्य निमित्तत्वे असमवायिकारणलक्षणस्य अतिव्याप्तेरिति भावः । न च व्यासक्तस्य देवदत्तस्य घटसंयुक्तं त्वगिन्द्रियं घटसाक्षात्कारकारणकिञ्चिद्द्रव्यसंयोगशून्यम्, तदा घटसाक्षात्कारजनकत्वात् घटासंयुक्तत्वगिन्द्रियवदित्यनुमानेन तत्सिद्धिरिति

वाच्यम् । साधारणदूषणानिस्तारात् अप्रयोजकत्वाच्च । न च तथात्वे तदानीमपि घटसाक्षात्कारापत्तिः इति वाच्यम् । विषयान्तरविषयकज्ञानस्य प्रतिबन्धकत्वादेव तदा तदनुत्पत्तिसंभवादित्यलम् । केचित्तु श्रोत्रादिभिरन्यथासिद्धत्वात् स्मृतिरित्यनुमानं न युक्तमित्याहुः ।

प० — ननु सुखदुःखाद्यनुभवः इन्द्रियजन्यः प्रत्यक्षाश्रयत्वात् । चाक्षुषज्ञानवत् । अहमित्यनुभव इन्द्रियजन्यः प्रत्यक्षानुभवत्वादित्यादिना अस्तु मनस्सिद्धिरित्यत आह **एवमिति** । साक्षिसिद्धत्वयान्यथासिद्धेरित्युक्तप्रकारेणेत्यर्थः ॥ **तस्मादिति** । परिशेषादित्यर्थः ।

या० — नन्वथाऽपि स्मृत्यादयो बाह्येन्द्रियभिन्नकरणप्रयोज्याः गन्धादिक्रियान्यक्रियात्वात् रथादिक्रियावत् । सुखादयो वा बाह्येन्द्रियभिन्नकरणप्रयोज्याः गन्धादिभ्योऽन्यत्वे सति विषयत्वाद्रथादिवत् । तद्यथा रथादयोऽपि विषयाश्चक्षुरादिव्यतिरिक्तं करणं वाश्यादि प्रयोजयन्ति । विषयाश्च सुखादयस्तस्मात्तैरपि करणान्तरं प्रयोजयितव्यमिति वार्तिकोक्तमनुमानद्वयं वा, विवादाध्यासिताः स्मृत्यादय इन्द्रियजन्मान आत्मविशेषगुणत्वाद्गन्धादिप्रत्ययवदिति वाचस्पत्युक्तं वाऽनुमानं मनःसाधकं भविष्यतीत्यत आह **एवमनुमानान्तरमपीति** । उक्तलिङ्गज्ञानिनामविवेकिनामपि मनःप्रतीत्या साक्षिणाऽन्यथासिद्ध्या च निरसनीयमित्यर्थः । एवमेव वर्धमानादिनवीनोत्प्रेक्षितानुमानान्यपि निरसनीयानि । तद्ग्रहासम्भवो मे चैतन्यमितिवदित्यादेकमेव वाक्यं विवक्षितम् । तेन 'तेमयावेकवचनस्ये'त्यत्र पदात्परयोरित्यनुवृत्तेरभिप्रेतत्वात्प्रकृते च पदात्परत्वाभावेन मयादेशाप्राप्तेर्मे चैतन्यमित्ययुक्तमिति शङ्कानवकाशः ।

श्री० — **एवमिति** । स्मृतिः शरीरावच्छिन्नात्मसंयुक्तद्रव्यसाध्या कार्यत्वे सत्यात्मविशेषगुणत्वात् । रूपादिज्ञानवत् । अत्र साध्ये शरीरावच्छिन्नेत्युद्देश्यसिद्ध्यर्थं विशेषणम् । दृष्टान्ते चक्षुरादिद्रव्यमादाय साध्यपर्यवसानं पक्षे तु मन आदायेति द्रष्टव्यम् । गुणत्वादित्येवोक्ते आत्मगतैकत्वादिसङ्ख्यादौ शरीरावच्छिन्नात्मसंयुक्तद्रव्यभूतचक्षुरादीन्द्रियजन्ये व्यभिचारवारणाय विशेषेत्युक्तम् । तावत्युक्ते घटरूपादौ अतः आत्मेत्युक्तम् । तावत्युक्ते ईश्वररूपात्मविशेषगुणे नित्ये ज्ञानादौ, अतः कार्यत्वे सतीत्युक्तम् । अविवेकिनामपि मनःप्रतीतेरुक्तत्वान्न हि ते एतल्लिङ्गं जानन्तीत्युक्तरीत्या निरस्तमित्यर्थः ॥ **तदिति** । तस्य मनसः प्रत्ययादित्यर्थः ॥ **तस्य चेति** । मनस इत्यर्थः ॥ **तेनैवेति** । साक्षिणैवेत्यर्थः ।

सु०— ननु च 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे'ति श्रुतौ कामस्यान्तःकरणरूपत्वं तावत्प्रतीयते । न च श्रौतेनार्थेनान्यथा भवितुं युक्तम् । अतो बलवद्बाधकोपनिपातादिच्छाम्यहमिति भेदाग्रहनिमित्तं व्यवहारमात्रमेतदङ्गीकरणीयम् । न त्वात्मन इच्छासंबन्धानुभवः । न च मे मन इति भेदग्रहात्तदग्रहासंभवः । मे चैतन्यमितिवद्व्यवहारमात्रत्वात् । न चोक्तानुपपत्तिः । सत्त्वरजस्तमसामादिकार्यं हि बुद्धिरित्युच्यते । सा चांशत्रयवती । पुरुषोपरागो विषयोपरागो व्यापारावेशश्चेत्यंशाः । भवति ह्यहमिदं करोमीति । तत्राहमिति चेतनोपरागो दर्पणस्येव मुखोपरागो भेदाग्रहादताविकः । इदमिति विषयोपराग इन्द्रियप्रनाडिकया परिणतिभेदो दर्पणस्येव मलसंबन्धः पारमार्थिकः, तथोभयायत्तो व्यापारावेशः । एषैव दिगहमिच्छामीत्यत्रापीत्यत आह उभयेति ।

अनु० — उभयात्मकता यतः ॥

कामस्य तु मनः कामः

तुशब्दोऽवधारणे । तत इत्युपस्कर्तव्यम् । यतः कारणात्कामस्योभयात्मकताऽस्ति । आत्मधर्मता मनोधर्मता च । तत एव मनः काम इति श्रुतिरुपपद्यते । इदमुक्तं भवति । भवेदिदं भेदाग्रहकल्पनम् । यद्यात्मनः कामवत्त्वं पारमार्थिकं न स्यात् । न चैतदस्ति । बाधकाभावात् । द्विविधो हि कामोऽस्ति । एक आत्मधर्मोऽपरोऽन्तःकरणधर्मः । तत्रान्तःकरणधर्मं काममभिप्रेत्य श्रुतिः प्रवृत्ता, नात्मनः कामवत्त्वं बाधते । न हि देवदत्तो गोमानिति वाक्यं यज्ञदत्तस्य गोसंबन्धं बाधितुं शक्नोतीति ।

शे०— ननु च 'उभयात्मकता यत' इति कामद्वैविध्यनिरूपणपरमुत्तरवाक्यमनर्थकम् । न च 'कामः सङ्कल्प' इति श्रुतेरुपपत्तिप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वादित्यतः तद्विरोधेनात्मनः कामवत्ताया अपारमार्थिकत्वशङ्कानिराकरणार्थत्वात्तस्य न तदिति भावेन तच्छङ्कापरिहारकतयोत्तरवाक्यं योजयितुं श्रुतिविरोधेनात्मनः कामवत्ताया अपारमार्थिकत्वशङ्कामुत्थापयति ननु चेति । श्रौतेनेति हेतुगर्भविशेषणम् । अन्यथा श्रुतेरप्रामाण्यप्रसङ्गादित्यर्थः ॥ चैतन्यमितिवदिति । न च 'ते मयावेकवचनस्ये'ति पदात्परयोरपादादौ स्थितयोरेव युष्मदस्मदोस्तेमे इत्यादेशविधानात्प्रकृते च पदात्परत्वाभावेन मयादेशाप्राप्तेर्मे चैतन्यमिति कथं टीकाकारीयो व्यवहार इति वाच्यम् । तत्रत्यपूर्वोत्तरवाक्यसन्दष्टतया पदात्परत्वेऽप्येकदेशमात्रस्य प्रकृते उदाहरणेन तदुपपत्तेरित्याशयात् । वस्तुतो विभक्तिप्रतिरूपकमव्ययमेवैतदिति द्रष्टव्यम् । विरोधिनि भेदग्रहे सति भेदाग्रहस्यैवासंभवात्तन्निमित्तक-

व्यवहारानुपपत्तिरिति 'मनो म इति भेदत' इति वाक्योक्तामनुपपत्तिं भेदग्रहस्यैवाभावव्युत्पादनेन परिहृत्य आत्मान्तःकरणयोर्भेदाग्रहादन्योन्यधर्मसंसर्गव्यवहारः स्यादिति कथं स न घटस्य स्यादिति वाक्योक्तामनुपपत्तिं परिहरति **न चोक्तानुपपत्तिरिति** । नापि कथं स न घटस्य स्यादित्यनेनोक्तानुप-पत्तिरित्यर्थः । तत्कुत इत्यतो बुद्धेश्चैतन्योपरागरूपांशवत्त्वेन भेदाग्रहनिमित्तचैतन्योपरागरूपनिमित्तेन आत्मान्तःकरणयोरन्योन्यधर्मसंसर्गव्यवहारसंभवेऽपि घटे तदभावाद्घटात्मनोर्वा घटपटयोर्वाऽन्योन्यधर्म-संसर्गव्यवहाराभावसंभवादित्यभिप्रेत्य बुद्धेश्चैतन्योपरागरूपांशरूपत्वमुपपादयितुं बुद्धिस्वरूपं तावदाह **सत्त्वरजस्तमसामिति** । सा च कृत्यध्यवसायव्यापारवतीति शेषः । ननु कृत्यध्यवसायो न बुद्धेः व्यापारः । **कृतिविषयस्य** घटादेर्जडायां बुद्धौ प्रतिभासासंभवात् । न च कर्तव्येन घटादिना बुद्धेः संबन्धान्तरमस्ति । न चासंबद्धे करोमीत्यध्यवसायोऽतिप्रसङ्गादित्यत आह **सा चेति** । चेतनोपरागबलेन जडाया अपि बुद्धेरिन्द्रियप्रनाडिकया परिणतिभेद एव ज्ञानरूपः कर्तव्येन घटादिना संबन्ध इति नोक्तदोष इति भावः । तानेवांशान्विभजते **पुरुषोपराग इति** । कथमेतत्त्रयं बुद्धेर्धर्म इत्याशङ्क्य सम्मुग्धमुदाहरणं दर्शयति **भवति हीति** ।

कथमेतावताऽशत्रयसिद्धिरित्यतो निष्कृष्यांशान्दर्शयति **तत्रेति** । अयमर्थः । बुद्धिचेतनयो-र्भेदाग्रहादेकत्वाभिमानः पुरुषोपरागः ॥ नीलेन्द्रियसन्निकर्षान्नीलाकारज्ञानरूपपरिणतोत्पादः पारमार्थिको विषयोपरागः । उक्तेनोपरागद्वयेन कर्तव्यविषयस्य प्रतिभासात्तदधीनः करोमीत्यध्यवसायो व्यापारावेश इत्युच्यत इति । तत्र चेतनोपरागो नाम चेतनसंबन्धः । स च परिणामविशेषः । तत्कथं च चेतनो-ऽपरिणामी बुद्ध्या संबध्येतेत्यत उक्तं **दर्पणस्येति** । निःश्वासाभिहतस्येति शेषः । दर्पणप्राया बुद्धिः कथं दूरस्थेन विषयेणोपरज्येतेत्यत आह **इन्द्रियप्रनाडिकयेति** । यथा हि ग्रामाध्यक्षः कुटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छति विषयाध्यक्षश्च सर्वाध्यक्षाय स च भूपतये । तथा बाह्येन्द्रि-याण्यालोच्य विषयं मनसे समर्पयन्ति । अलोचनं च बाह्येन्द्रियव्यापार इत्येके । निर्वि-कल्पकं ज्ञानमित्यपरे । मनश्च सम्मुग्धदृष्टस्य विशेषणविशेष्यभावेन विवेचनात्मकविकल्प-रूपव्यापारसहितमहङ्काराय समर्पयति । अहं जानाम्यहं करोमीत्यादिरूपाभिमानलक्षण-व्यापारसहितोऽहङ्कारश्च कर्तव्यमेतन्मयेत्यादिलक्षणाध्यवसायरूपव्यापारवत्यां सर्वाध्यक्षायां बुद्धावित्येव-मिन्द्रियप्रनाडिकयेत्यर्थः । अत एव 'सान्तःकरणा बुद्धिः सर्वं विषयमवगाहत' इति कारिकायां विषया-ध्यवसायिन्या बुद्धेर्बाह्यानीन्द्रियाणि द्वाराणीत्युक्त्वा, न केवलं बाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिः अपि तु ये तेऽहङ्कारमनसी द्वारिणी ते अप्यपेक्ष्य बुद्धिरेव प्रधानमिति 'एते प्रदीपकल्पाः' इति कारिकायां मनोहङ्कारयोरपि द्वारत्वमुक्तमिति ध्येयम् ॥ **उभयायत्त इति** । अपारमार्थिक(त्वेन] चेतनोपराग पार-मार्थिकान्तःकरणपरिणतिभेदरूपविषयोपरागरूपोभयायत्त इत्यर्थः । यदाऽन्तःकरणपरिणामो वृत्तिरूपस्तदा

जानामीत्यभिमानो, यदा प्रयत्नरूपस्तदा करोमीत्यभिमान इत्यादि द्रष्टव्यम् । ततः किं प्रकृत इत्यत आह **एषैव दिगिति** । अयमेव प्रकार इत्यर्थः । इन्द्रियप्रणाडिकया विषयेच्छारूपेऽन्तःकरणपरिणामे सति अपारमार्थिकचेतनोपरागादहमिच्छामीत्यभिमानमात्रं भवति न त्वयमात्मन इच्छावत्त्वानुभव इति भावः । अभिमानोऽहङ्कारस्य कार्यविशेषः । अनुभवोऽन्तःकरणस्येति विवेकः । व्यवहारमात्रमिति पूर्वग्रन्थेऽपि व्यवहारपदेनाभिमानो विवक्षित इति न तेनास्य विरोध इति ध्येयम् । अत्रायं निष्कर्षः । अन्तःकरणविशेषरूपबुद्धेः सत्त्वरजस्तमसामादिकार्यत्वेन दर्पणवन्निर्मलत्वात्तत्र चेतनोपरागो न घटे । तस्यास्वच्छतया पुरुषोपरागासम्भवात् । नाप्यन्तःकरणस्येव घटस्येन्द्रियप्रनाडिकया विषयाकारपरिणतिभेदो येनोभयायत्तो व्यापारावेशस्तत्र स्यादिति नोक्तानुपपत्तिरिति ।

**उपस्कर्तव्यमिति** । 'उभयात्मकता बत' इति यच्छब्दश्रवणादिति भावः । श्रुतेरन्यथैवोपपत्तिलाभाय तुशब्दमवधारणार्थतया व्याचष्टे **तुशब्द इति** । अवधारणार्थस्य तुशब्दस्योपस्कृतेन तत इत्यनेन सम्बन्ध इत्यभिप्रेत्याह **तत एवेति** । साकाङ्क्षत्वेन प्रसक्तां वाक्याभासतामपेक्षितपूरणेन परिहरति इति **श्रुतिरुपपद्यत इति** । तावताऽपि कथमुक्तशङ्कापरिहार इत्यत आकाङ्क्षाक्रमेण परिहारप्रकारमाह **एतदिति** । इतीत्यस्यैतच्छब्देन सम्बन्धः ।

स० — **मे चैतन्यमितिवत् व्यवहारमात्रत्वादिति** । न च 'तेमयावेकवचनस्ये'ति पदात्परयोरपादादावेव ते मे इत्यादेशविधानात् प्रकृते च पदात्परत्वाभावेन मयादेशाप्राप्तेः मे चैतन्यमिति कथं टीकाकारैरुक्तमिति वाच्यम् । अस्यापि पदात्परत्वेऽपि एकदेशमात्रस्य प्रकृते उदाहरणेन तदुपपत्तेरिति भावः । **न चोक्तानुपपत्तिरिति** । इच्छाम्यहमित्यस्य भेदाग्रहनिमित्तव्यवहारमात्रत्वे मे मन इति भेदग्रहे तदग्रहोऽनुपपन्नः इत्युक्तानुपपत्तिः परिहृता । कुतः । मे मन इत्यस्य व्यवहारमात्रत्वेन भेदग्रहत्वाभावेन तस्य विरोधित्वाभावात् भेदाग्रहोपपत्त्या तन्निमित्तस्य इच्छाम्यहमित्यस्य व्यवहारमात्रत्वस्य संभवात् । तथापि भेदाग्रहनिमित्तो यदि इच्छाम्यहमिति व्यवहार एव तर्हि तादृशभेदाग्रहस्य घटादावपि सत्त्वादन्योन्यधर्मसंसर्गव्यवहारस्तत्रापि स्यादिति या अनुपपत्तिः सा नेत्यर्थः । केचित्तु—इच्छाम्यहमित्यस्य भेदाग्रहनिमित्तव्यवहारमात्रत्वे मे मन इति भेदग्रहात् तदग्रहोऽनुपपन्न इत्युक्तानुपुत्तिं परिहृत्य, विशिष्टभेदग्रहः अन्तःकरणस्येति पक्षे तस्याचेतनत्वेन स्वरूपग्रहानुपपत्तेः उपपत्तौ वा स कथं विशिष्टो भेदग्रहो घटस्य न स्यात् । तथा च व्यवहारोऽपि स्यादिति परोक्तातिप्रसङ्गरूपदूषणपरिहारार्थम् अन्तःकरणे चैतन्यारोपस्य सत्त्वात् मनस आत्मोपकारकत्ववत् घटस्यापि तदुपकारकत्वेन च तत्रापि चैतन्यारोपस्य सत्त्वात् तदधीनो व्यवहारोऽपि घटस्य स्यादिति या अनुपपत्तिः परेणोक्ता साऽपि न संभवतीत्याह न चोक्तानुपपत्तिरित्याहुः । मनसीव भेदाग्रहस्य घटेऽपि सत्त्वेऽपि

बुद्धेरंशत्रयवत्त्वेन तत्र चैतन्योपरागलक्षणो योऽयमंशः, स आत्मबुद्ध्योर्भेदाग्रहलक्षणनिमित्तेन अतात्त्विकः बुद्धावेव तस्याः स्वच्छत्वेन दर्पणे मुखोपरागवत्संभवति । न तु घटे । तत्र भेदाग्रहे सत्यपि घटस्यास्वच्छत्वेन भेदाग्रहनिमित्तस्य चैतन्योपरागस्याभावात् । तथा च मनसि भेदाग्रहनिमित्तचैतन्योपरागस्य सत्त्वात्तत्रैवान्योन्यधर्मसंसर्गव्यवहारः संभवति । न तु घटे । तत्र भेदाग्रहे सत्यपि घटस्यास्वच्छत्वेन चैतन्योपरागाभावादित्यभिप्रेत्य तदुपपादयति **सत्त्वेत्यादिना** । आदिकार्यमित्यनेन सूक्ष्मत्वात् स्वच्छत्वमित्युक्तं भवति । दर्पणस्येव इत्यनेन बुद्धेः स्वच्छत्वात् चैतन्योपरागः संभवति । न तु घटे । तस्यास्वच्छत्वादित्युक्तं भवति । नाप्युक्तानुपपत्तिरित्यर्थः । कुतो नेत्यतो बुद्धेः स्वच्छत्वेन तत्र चैतन्योपरागवत् अन्तःकरणस्यापि स्वच्छत्वेन तत्र चैतन्यारोपसंभवेऽपि घटस्यास्वच्छत्वेन तत्र चैतन्यारोपासंभवान्न घटस्य व्यवहारः, इति वक्तुं बुद्धौ चैतन्यारोपं तावदुपपादयति **सत्त्वरजस्तमसामिति** । आदिकार्यं बुद्धिरिति वदता बुद्धिशब्दो नेदानीन्तनप्रसिद्धबुद्धिपरः । किंतु बुद्धितत्त्वपरः इत्युक्तं भवति । तेन न प्रकृतासङ्गतिरिति भावः । इदमहं करोमीति बुद्धिव्यापारः । दर्पणस्येवेति वदता बुद्धौ चैतन्यारोपे स्वच्छत्वं निमित्तमुक्तं भवति । **इन्द्रियप्रणाडिकयेति** । बुद्धेरान्तरत्वेन बहिस्थेदमाकारेण साक्षात्परिणतेरसंभवेन इन्द्रियप्रणाडिकयेत्युक्तम् । अयमाशयः- यथा हि ग्रामाध्यक्षः कुटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छति । विषयाध्यक्षश्च सर्वाध्यक्षाय, स च भूपतये । तथा बाह्येन्द्रियाण्यालोच्य विषयं मनसे समर्पयन्ति मनश्च संकल्पाहङ्काराय । स संकल्पाहङ्कारश्च अभिमान्यसर्वाध्यक्षायै बुद्धये प्रयच्छति । इत्येवं इन्द्रियप्रणाडिकया इति । तदुक्तम् ऐते प्रदीपकल्पाः परस्परा गुणविशेषाः कृत्स्नं पुरुषार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति (इति) । **उभयेति** । चैतन्योपराग विषयोपरागप्रयुक्त इत्यर्थः । बुद्धौ चैतन्योपरागोपपादनस्य प्रयोजनमाह **एवं दिगिति** । इदमहमिच्छामीति अन्तःकरणव्यापारः । तस्यांशत्रयं पुरुषोपरागो विषयोपरागो व्यापारावेशश्चेति । तत्र अहमिति चेतनोपरागो दर्पणस्येव मुखोपरागो भेदाग्रहादतात्त्विकः । इदमिति विषयोपरागः बाह्येन्द्रियाणि स्वार्थमालोच्य मनसे समर्पयन्ति । मनश्च संकल्पाहङ्कारायेत्येवमिन्द्रियप्रणाडिकया परिणतिभेदो दर्पणस्येव मलसंबन्धः पारमार्थिकः । तथा उभयायत्तो व्यापारावेश इति । तथा चैतन्योपरागनिमित्तविशिष्टभेदाग्रहेण व्यवहारोपपत्तिरिति भावः इत्यप्याहुः ।

प० — **बलवद्बाधकेति** । श्रुतिरूपेत्यर्थः ॥ **मे चैतन्यमिति वदिति** । 'ते नानिष्टं कथं भवेदि'त्यत्र 'नञा निर्दिष्टमनित्यमि'त्युक्तदिशा 'वाक्यादौ ने'ति निषेधस्यानित्यत्वात् 'तेमयावेकवचनस्ये'ति सूत्रेण प्राप्तो मे इति प्रयोगः साधुर्ध्येयः ॥ **नचोक्तानुपपत्तिरिति** । 'कथं स न घटस्य स्यादि'त्युक्तानुपपत्तिर्भेदाग्रहनिमित्तव्यवहारपक्ष इत्यर्थः ॥ **आदिकार्य हीति** । आदिकार्यस्य महत्तत्व-

रूपत्वेऽपि तस्यैव बुद्धित्वात्तस्या एव च तन्मतेऽन्तःकरणत्वोपगमादिति भावः ॥ **व्यापारावेशश्चेति** । कृतिमत्त्वाद्यभिमान इत्यर्थः ॥ **भवति हीति** । इत्याकारो भवतीति योजना । **परिणतिभेदः** बुद्धेः परिणामविशेषः ॥ **इन्द्रियप्रनाडिकयेति** । इन्द्रियाणि विषयसन्निकृष्टानि तदाकारतयाऽऽदौ परिणमन्ते । पश्चात्तदनुसारितया मनः पश्चाद्बुद्धिरित्येवंरूपेण बुद्धेर्विषयाकारपरिणामभेद इत्यर्थः ॥ **उभयायत्त इति** । चेतनोपरागविषयोपरागोभयाधीन इत्यर्थः । ततः किं प्रकृत इत्यत आह **एषैवेति** । इदमिति योज्यम् । अहमिति चेतनोपरागः । इदमिति विषयोपरागः । तदुभयाधीन इच्छामीतीच्छावस्वरूपव्यापारावेश इत्यर्थः । तत्रेन्द्रियप्रणाड्या बुद्धेः कृत्यात्मना परिणामे करोमीति भवति । वृत्तिरूपेण परिणामे जानामीति इच्छादिरूपेण परिणामे त्विच्छामीत्यादिरूपेण भवतीत्येवं बोध्यम् ॥ **मनः काम इति श्रुतिरिति** । कामः सङ्कल्प इत्यारभ्य एतत्सर्वं मनएवेति श्रुतिरित्यर्थः । शक्नोतीतिशब्दस्यैतदुक्तं भवतीत्यन्वयः ।

या० — नन्विच्छाम्यहमित्येतद्भेदाग्रहनिमित्तं व्यवहारमात्रं न त्वनुभव इति यदुच्यते तदा कथं स न घटस्य स्यादित्यनेन याऽनुपपत्तिरुक्ता सा स्यादित्याशङ्क्य निषेधति **न चोक्ताऽनुपपत्तिरिति** ॥ **आदिकार्यं हीति** । अनेन बुद्धेः पुरुषप्रतिबिम्ब(नो)तोपाधितोपपादकस्वच्छतोक्तेति ज्ञातव्यम् । बुद्धिरन्तःकरणविशेष इति तन्मतमतो न प्रकृतासङ्गतिरिति ध्येयम् । न चैवं महत्तत्त्वस्यादिकार्यत्वप्रसिद्धिविरोधः । आद्यं कार्यं महत्तत्त्वं सैव बुद्धिरन्तःकरणं चेति तैरङ्गीकारात् ॥ **व्यापारावेश इति** । कर्तृत्वाद्यभिमान इत्यर्थः ॥ **इन्द्रियप्रणाडिकयेति** । यथा ग्रामाध्यक्षः कुटुम्बिभ्यः करमादाय विषयाध्यक्षाय प्रयच्छति । विषयाध्यक्षश्च सर्वाध्यक्षाय स च भूपतये तथा बाह्येन्द्रियाणि स्वार्थमालोच्य मनसे समर्पयन्ति । मनश्च सङ्कल्प्य अहङ्काराय, अहङ्कारश्च अभिमान्य सर्वाध्यक्षायां बुद्धौ एवं चादौ स्वार्थसन्निकृष्टानि बाह्येन्द्रियाणि तदाकारेण परिणमन्ते ततस्तदनुसारि मनआदिकमपि तथैव परिणमत इत्येवमिन्द्रियप्रणाडिकया बुद्धेर्विषयाकारपरिणतिभेदो द्रष्टव्यः ॥ **उभयायत्त इति** । अपारमार्थिकचेतनोपरागपारमार्थिकान्तःकरणपरिणतिभेदरूपोभयायत्त इत्यर्थः । यदाऽन्तकरणपरिणामो वृत्तिरूपः तदा जानामीत्यभिमानो यदा प्रयत्नरूपस्तदा करोमीत्यभिमान इत्यादि द्रष्टव्यम् । नन्वेतावता किं प्रकृत इत्यत आह **एषैव दिगिति** । इन्द्रियप्रणाडिकया विषयेच्छारूपेऽन्तःकरणपरिणामे सति अपारार्थिकचेतनोपरागात् अहमिच्छामीत्यभिमानमात्रं भवति न त्वात्मान इच्छावत्त्वानुभव इत्यर्थः । अभिमानोऽहङ्कारस्य कार्यविशेषोऽनुभवोऽन्तःकरणस्येति विवेकः । व्यवहारमात्रमिति पूर्वग्रन्थेऽपि व्यवहारपदेनाभिमानो विवक्षितोऽतो न तेन विरोध इति द्रष्टव्यम् । इदमत्राकूतम् । अन्तःकरणविशेषरूपाया बुद्धेः सत्त्वाद्यादिकार्यत्वेन दर्पणवन्निर्मलत्वात्तत्रैव चेतनोपरागो

भवति, न घटे, तस्यास्वच्छतया पुरुषप्रतिबिम्बनोपाधितायाः असम्भवात् । नाप्यन्तःकरणस्येव घटस्येन्द्रियप्रनाडिकया विषयाकारः परिणतिभेदः । येनोभयायत्तोऽहमिच्छामीतिव्यापारावेशस्तत्र स्यात् । अतो नोक्तानुपपत्तिरिति ।

श्री०—**उभयेति** । व्यापारावेशो नाम करोमीत्यनेन प्रतीयमानं कर्तृत्वं पुरुषोपरागविषयोपरागाधीनम् । तदुभयाभावे निराश्रयं निर्विषयं च कर्तृत्वं न सम्भवतीति कर्तृत्वं बुद्धावेव प्रतीयत इत्यर्थः । बुद्धौ कथितयोश्चैतन्योपरागव्यापारावेशयोः प्रयोजनमाह **एषैवेति** । अहमिदमिच्छामीत्यन्तःकरणव्यापारः । तत्राहमिति पुरुषोपरागः । इदमिति विषयोपरागः । इच्छामीति तूभयायत्तो व्यापारावेशः । तथा चान्तःकरणे चैतन्योपरागोऽस्ति, न घटेऽतस्तन्निमित्तकोक्तभेदाग्रहसद्भावात् आत्मनीच्छामीति व्यवहारमात्रं जायते नत्वनुभव इत्यर्थः । **श्रुतिः** 'कामः सङ्कल्प' इत्यादिका । तदेवेति मनोधर्मत्वप्रतिपादिका एतव्या । आत्मधर्मत्वमेव कुत इत्यर्थः ॥ **श्रुतिरिति** । 'स यदि पितृलोककामो भवति' इत्यादिका वक्ष्यमाणा श्रुतिः । कामस्यात्मधर्मत्वप्रतिपादिका द्रष्टव्या । अहमिच्छामीति तु कामस्यात्मधर्मत्वावगाह्यनुभवः ।

च०—**तदग्रहासंभव इत्यादिकं मे चैतन्यमितिवदिति** । तेन पदात्परत्वसत्त्वात् मे इत्यादेशोपपत्तिरिति स्थितम् । तत्रत्यपूर्वोत्तरवाक्यसंदृष्टतया पदात्परत्वेप्येकदेशमात्रस्य प्रकृते उदाहरणेन तदुपपत्तेः वस्तुतो विभक्तिप्रतिरूपकमव्ययमेवैतदित्यपिसमादधति । नञा निर्दिष्टमनित्यमिति 'न पादादावि'ति निषेधस्यानित्यत्वात्साधुरयं प्रयोग इत्यपि समादधते । **नचोक्तानुपपत्तिरिति** । कथमित्यादिनोक्तानैकान्त्यमित्यर्थः । **आदिकार्य हीति** । पुरुषप्रतिबिम्बनौपयिकोपाधितोपादिका स्वच्छताऽभिहितेतिज्ञातव्यम् । **आदिकार्यं** महत्तत्वादिरूपं । बुद्धिरन्तःकरणविशेष इति तन्मतमतः प्रकृतसङ्गतैवेयमुक्तिरिति मन्तव्यम् । **पुरुषोपरागः** विषयोल्लेखः । **व्यापारावेशः** कृतिमत्त्वाद्यभिमानः । **इन्द्रियप्रणाडिकयेति** । स्वस्वविषयसन्निकृष्टानीन्द्रियाणि तत्तदाकारतयाऽऽदौ परिणमन्ते ततस्तदनुरुन्धानं मनस्ततस्तदनुरुन्धाना बुद्धिरित्येवं दिशा बुद्धेर्विषयाकारपरिणामभेदोवसेयः । **उभयायत्तः** । चेतनोपरागविषयोपरागाधीनः । **दिगिति** । अहमिति चेतनोपरागः; इदमिति विषयोपरागः, तदुभयाधीन इच्छावत्स्वरूपव्यापारावेश इत्यर्थः ।

सु०— **स्यादेतदेवम्** । यदि कामद्वैविध्यं प्रमितं स्यात्, एतदेव कुत इति चेत् । श्रुत्यनुभवबलात्तावत् । प्रकारसहस्रानुसरणेऽप्यघटनायां खल्वनुभवापलापसाहसमभ्युपेयम् । प्रमाणान्तरं चाह प्रियेति ।

अनु० —　　प्रियाप्रियविभेदत ॥

द्वैविध्यं दृश्यते चास्य

प्रियमित्यात्यन्तिकेष्टमुच्यतेऽप्रियमिति च तात्कालिकेष्टम् । विषयेण विषयिण उपलक्षणम् । अस्य कामस्य । अयमर्थः । अस्ति तावदास्तिककामुकस्य पुरुषस्य स्रक्चन्दनवनितादौ इदं मे स्यादित्येकतः कामः । अन्यतस्त्वजेयमिति । न चैक एवायम् । विरुद्धरूपत्वात् । न च द्वावपि मनोधर्मौ, यौगपद्यात् । युगपत्सजातीयधर्मजननायोगात् । न च यौगपद्यं नास्ति । अनुभवसिद्धत्वात् । बाधकाभावाच्च । तत्र योऽप्रियविषयः सः अन्तःकरणधर्मः यस्तु प्रियविषयः स आत्मधर्म इति ।

यद्वा प्रियाप्रियशब्दाभ्यां मुक्तिसंसारावुच्येते । तत्संबन्धिविभेदेन कामद्वैविध्यं दृश्यत इति । अस्ति तावत्संसारे प्रचुरोऽयमन्तःकरणवृत्तिरूपः कामः । अस्ति चासौ मुक्तौ । 'स यदि पितृलोककामो भवती'त्यादिश्रुतेः । न चैक एवायम् । मुक्तावन्तःकरणविलयात् । तथा चासावात्मधर्मोऽभ्युपेयः । न चागन्तुकधर्मसंबन्धो मुक्ताविति प्रागपि कामद्वैविध्यं सिध्यतीति ।

शे० — प्रियाप्रियविभेदत इति कामद्वैविध्यस्य प्रमितत्ववर्णनानर्थक्यमाशङ्क्य पूर्वोक्तस्य श्रुतेः

---

सावकाशत्वेनात्मनः कामवत्तायास्तदविरुद्धत्वोपपादनार्थं तदिति भावेन तदप्रमितत्वेन श्रुतिविरोधशङ्कामुत्थापयति स्यादेतदेवमिति । 'द्वैविध्यं दृश्यते च' इति चशब्दसूचितं प्रमाणान्तरत्वमुपपादयितुं स्वयं प्रमाणान्तरमाह श्रुतीति । श्रुत्यनुभवान्यथाऽनुपपत्तिरेव तत्र प्रमाणमिति भावेन बलादित्युक्तम् । नन्वनुभवस्यैवाभावोक्तेः कथं श्रुत्यनुभवान्यथाऽनुपपत्त्या तद्द्वैविध्यसमर्थनमित्यत आह प्रकारेति । अन्यथाऽतिप्रसङ्गादिति भावः । ननु सुखत्वादिरूपस्य प्रियत्वादेः कामनिष्ठत्वाभावान्न प्रियाप्रियभेदेन तद्द्वैविध्यं सम्भावितम् । न च लक्षणया प्रियाप्रियविषयकपरत्वात्प्रियाप्रियशब्दयोः सुखादिपरत्वाभावान्नानुपपत्तिरिति वाच्यम् । प्रियविषयत्वस्य कामनिष्ठत्वेपि दुःखविषयत्वाभावेनानेनापि रूपेण तद्द्वैविध्यायोगादित्यतः अत्रेष्टस्यैवावान्तरभेदविवक्षया प्रियाप्रियत्वरूपत्वेन विवक्षितत्वेन सुखदुःखयोस्तत्त्वेनानभिमतत्वाद्विवक्षितप्रियाप्रियविषयकतायाश्च कामे सत्त्वान्नानुपपत्तिरित्यभिप्रेत्याभिमतप्रियाप्रियस्वरूपप्रदर्शनपूर्वकं लक्ष्यार्थपरतामाह प्रियमितीत्यादिना । विषयेण विषयिण इति लक्षणाबीजशक्यसम्बन्धकथनम् । ननु च नोक्तरूपप्रियाप्रियविषयकः कामोऽस्ति तादृशकामानुपलम्भात् । सत्त्वेऽपि वा तादृशकामस्यैकत्वान्न द्वैविध्यमिति कथं द्वैविध्याभिधानम् । द्वैविध्येऽपि वा द्वयोरपि मनोधर्मत्वसंभवान्नात्मनः कामवत्ता सिध्यति । न च यौगपद्यानुपपत्तिप्रसङ्गो बाधकः । मनोधर्मस्यापि यौगपद्ये बाधकाभावात् । साधका-

भावेन कामद्वययौगपद्यासिद्धेश्च । न च यौगपद्यानुभवस्तत्साधकः । युगपद्यत्र शतं छिन्नमित्यादिवत् यौगपद्यानुभवस्य भ्रमत्वेन तदसिद्धेः । तथा च नानेनात्मनः कामवत्ता सिद्ध्यतीत्यत आह **अयमर्थ इत्यादिना** । तत्राद्यदोषपरिहारः **अस्तीति** । एकतोऽन्यत इत्याद्यादित्वात्प्रथमासमर्थात्तसिः । द्वितीयं परिहरति **न चेति** । तृतीयं परिहरति **न च द्वावपीति** । अप्रयोजकत्वं परिहरति **युगपदिति** । एकेनेति शेषः । एकं कारणमेकदैकामेव क्रियां जनयति नापरामिति नियमादिति भावः । साधकाभावशङ्कां परिहरति **न चेति** । अनुभवस्य भ्रमतां परिहरति **बाधकेति** । अन्यथाऽतिप्रसङ्गादिति भावः ॥ **यस्त्विति** । स्रक्चन्दनादिविषयपरित्यागरूपात्यन्तिकेष्टविषय इत्यर्थः ।

इष्टस्यैवावान्तरभेदविवक्षया प्रियाप्रियशब्दार्थत्वे प्रियाप्रियशब्दयोरस्वारस्यमित्यपरितोषात्पक्षान्तरमाह **यद्वेति** । नन्वेवं मुक्तित्वसंसारत्वयोः कामेऽसत्त्वात्कथमनेन रूपेण कामद्वैविध्यमित्यतोऽत्र मुक्तिसंसारवाचकयोः प्रियाप्रियपदयोस्तत्संबन्धिकामोपलक्षणत्वाश्रयणान्मुक्तित्वादेस्तत्रासत्त्वेऽपि तत्संबन्धिकामत्वस्य तत्र सत्त्वान्नानुपपत्तिरित्याह **तत्संबन्धीति** ॥ **विभेदेनेति** । आद्यादित्वात्तसिरिति भावः । भवेदेतदेवं यदि मुक्तौ काम एव सिद्धः स्यात् । न चासावस्ति । प्रमाणाभावात् । सद्भावेऽपि वा मनोधर्मस्यैव कामस्य मुक्तौ संभवान्न तद्द्वैविध्यम् । आत्मधर्मत्वेऽपि मुक्तिवदागन्तुकस्यापि कामस्य मुक्तौ संभवेन संसारावस्थायां कामद्वयसिद्ध्या प्रकृतासिद्धिरेवेत्यतोऽभिप्रायमाह **अस्ति तावदित्यादिना** अनुभवसिद्धत्वादिति भावः ॥ **अन्तःकरणविलयादिति** । उपादाननिवृत्तावुपादेयनिवृत्तेरावश्यकत्वादिति भावः ॥ **आगन्तुकेति** । तथा सति मुक्तेरनित्यत्वप्रसङ्गादिति भावः । इतीत्यस्यायमर्थ इत्यनेनास्तीत्यतः प्राक् पूरणीयेनान्वयः ।

स० — **एकत इति** । मनस इत्यर्थः । **अन्यत इति** । आत्मन इत्यर्थः ।

प० — **श्रुत्यनुभवेति** । श्रुतिबलान्मनोधर्मता । इच्छामीत्यनुभवबलादात्मधर्मतेत्यर्थः । अनुभवोयं नेत्युक्तमित्यत आह **प्रकारेति** ॥ **प्रमाणांतरं चेति** । श्रुत्यनुभवप्रमाणापेक्षया प्रमाणान्तरं कामद्वैविध्यमित्यर्थः ॥ **विषयिण इति** । कामस्येत्यर्थः । आत्यन्तिकेष्टतात्कालिकेष्टरूपवस्तुविषयकेच्छाभेदत इत्यर्थः । यौगपद्यानुभवो भ्रम इत्यत आह **बाधकाभावाच्चेति** । **योऽप्रियविषय इति** । तात्कालिकेष्टस्रक्चन्दनादिविषय इत्यर्थः । मुक्तावितीतिशब्दो हेत्वर्थः ।

या० — **एकतः** कारणात् । युगपत्सजातीयेत्यतः पूर्वमेकेनेति शेषः । लिंगपरामर्शानन्तरं अनुमितिजननकाल एव लिङ्गसंस्कारस्यापि आत्मन्युपपत्तेः सजातीयेत्युक्तम् । **यस्तु प्रियविषय इति** । स्रक्चन्दनादिविषयपरित्यागरूपात्यन्तिकेष्टविषय इत्यर्थः ।

**श्री०** — ननु नायमनुभव इत्युक्तमिति चेत्तत्राह **प्रकारेति** ॥ **अभ्युपेयमिति** । प्रकृते च कामस्य द्वैविध्यमङ्गीकृत्यास्यानुभवत्वोपपादनं योग्यमित्यर्थः । आह द्वैविध्य इति शेषः । **विषयिणः** कामस्य । तथा च प्रियविषयक एकः कामः, अप्रियविषयक एकः काम इति विभेदत इत्यर्थः । एकतोऽन्यतः करणात् । यौगपद्येऽपि कुतो मनोधर्मत्वाभाव इत्यत आह **युगपदिति** । एकस्मिन्निति शेषः । यौगपद्यानुभवस्य भ्रा(न्त)न्तित्वं किं न स्यादित्यत आह **बाधकेति** ॥ **तदिति** । मुक्तिसंसाररूपसम्बन्धिनोर्भेदेनेत्यर्थः ॥ **कामेति** । तत्सम्बन्धेनेत्यर्थः । तत्रत्येति यावत् । नन्वस्तु **मुक्तौ** कामो, न संसारे । अत्रैव मया विप्रतिपत्तेः करणादित्यत आह **न चेति** न हीत्यर्थः ।

**सु०** — **श्रुतिबाधपरिहारस्य प्रयोजनमाह** तस्मादिति ।

**अनु०** — तस्माद्भेदाग्रहः कुतः ॥

**श्रुतिविरोधस्य परिहृतत्वाद्भेदाग्रहः कुतः प्रमाणात्कल्पनीयः । कुतश्चानुभवापलापेन व्यवहारस्य तन्निमित्तत्वम् । न कुतोऽपीत्यर्थः । अनेनाचेतनस्य प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वं साधयतामनुमानानामपि स्ववचनविरोधः प्रमाणविरोधश्चोक्तौ भवतः । दृष्टान्तश्च साध्यविकलः । अचेतनस्वातन्त्र्यस्य काप्यसंमतेरिति ।**

---

**श्री०** — हेतुहेतुमद्भावस्याप्रतीतेस्तत्स्फोरणाय तस्मादित्येतत्पराग्रष्टव्यं दर्शयन्परमसाध्याध्याहारेण वाक्यं योजयति **श्रुतीति** । उत्तरत्र परिहाराभावेन किमुशब्दस्य प्रश्नार्थत्वानुपपत्तेराक्षेपार्थतया तं योजयति **नेति** ॥ **अनेनेति** । 'स्वतन्त्रवृत्ती रचना सा चैवाचेतने कुत' इत्युक्तेः प्रधानं स्वतन्त्रप्रवृत्तिरहितम् । अचेतनत्वात्तन्त्वादिवदिति प्रतिपक्षानुमानेऽप्रयोजकत्वशङ्कायाः स्वव्याहतत्वप्रमाणविरुद्धत्वोपपादनपरेण **'अचेतनत्वं स्वातन्त्र्यमि'**त्यादिमूलग्रन्थेनेत्यर्थः ॥ **अनुमानानामिति** । भेदानां परिमाणादित्यादीनामित्यर्थः । ननु च कथं तत्र स्ववचनव्याघातादीत्यत उक्तम् **अचेतनस्य स्वातन्त्र्येण जगत्कारणं साधयतामिति** । सिद्धसाधनतापरिहाराय प्रतिज्ञायामचेतनत्वस्वातन्त्र्ययोरवश्यं विशेषणीयत्वादिति भावः ॥ **दृष्टान्तश्चेति** । तन्त्वादिदृष्टान्त इत्यर्थः । साध्यविकलत्वमेव दर्शयति **अचेतनस्येति** ।

**स०** — **अनेनेति** । 'इदं नाचेतनवशम्' इत्यादिना स्वोक्ते प्रधाने स्वतन्त्रप्रवृत्तिरहितम् अचेतनत्वात् तन्त्वादिवत् इत्यनुमाने अप्रयोजकत्वशङ्कायाः स्वव्याहतत्वप्रमाणविरुद्धत्वव्युत्पादनेनेत्यर्थः । मूलकारणं स्वतन्त्रं कार्यस्य यतो विभक्तत्वात् अविभक्तत्वाच्च, अपरिमितत्वात्, कार्यगता-

व्यक्तत्वलक्षणशक्तिमत्त्वात्, सर्वत्रानुस्यूतत्वादित्याद्यनुमानानामपीत्यर्थः । **दृष्टान्तश्चेति** । मृत्पिण्डादिलक्षणदृष्टान्तश्चेत्यर्थः ।

प० — **श्रुतिबाधेति** । मनःकामः इति मूलोपात्त'कामः संकल्प' इत्यादिका या श्रुतिस्तद्बाधपरिहारस्येत्यर्थः । उपलक्षणं मत्वाह **कुतश्चेति** ॥ **अनेनेति** । 'स्वतन्त्रवृत्ती रचना सा चैवाचेतने कुतः' इत्यत्रोक्तप्रतिपक्षानुमानस्याप्रयोजकत्वशङ्कानिरासार्थं प्रवृत्तेन 'अचेतनत्वं स्वातन्त्र्यमिति चात्मप्रमाहतमि'त्यादिग्रन्थेनेत्यर्थः ॥ **अनुमानानामिति** । भेदानां परिमाणादित्यादिना प्रागुक्तानुमानानां अचेतनत्वेच्छापूर्वप्रवृत्तिमत्त्वरूपस्वातन्त्र्ययोर्विरोधात् स्ववचनविरोधः । अहमिच्छामीति चेतनस्येच्छावत्त्वानुभवरूपप्रमाणविरोधश्चेत्यर्थः ॥ **दृष्टान्तश्चेति** । अनुमानानामित्यनुषङ्गः । तन्त्वादिरूपदृष्टान्त इत्यर्थः ।

या० — **अनेनाचेतनस्येति** । 'स्वतन्त्रवृत्ती रचना सा चैवाचेतने कुत' इत्यनेनोक्तसत्प्रतिपक्षानुमानेऽप्रयोजकतापरिहारपरेणापि 'अचेतनत्वं स्वातन्त्र्यमिति चात्मप्रमाहतमि'त्यादिमूलेनेत्यर्थः ॥ **अनुमानानामिति** । भेदानां परिणामादित्याद्यनुमानानामित्यर्थः । तेष्वनुमानेषु सिद्धसाधनतापरिहाराय प्रतिज्ञायामचेतनत्वस्वातन्त्र्यरूपविशेषणयोरावश्यकत्वे स्वव्याहतिः । अहमिच्छामीति साक्ष्यनुभवरूपप्रमाहतिश्चेति ज्ञातव्यम् ॥ **दृष्टान्तश्चेति** । तन्त्वादिदृष्टान्त इत्यर्थः । एतदनुमानसिद्धेति सर्वज्ञविशेषणम् ।

श्री० — **श्रुतिबाधेति** । आत्मनः इच्छावत्वाङ्गीकारे 'कामःसङ्कल्प' इत्युक्तश्रुतिबाधात्यर्थः । **अनुमानानां** भेदानां परिमाणादित्याद्यानाम् । **अनेनेति** । 'इच्छाम्यहमिति ह्येवे'ति मूलेनेत्यर्थः । ननु पयोऽम्ब्वादिदृष्टान्तेन महदादेरपि स्वतन्त्राचेतनाधीनोत्पत्तिकत्वमङ्गीकार्यमिति तु निराकरिष्याम इत्याह **दृष्टान्तश्चेति** । इतीत्यनन्तरं वक्ष्याम इति शेषः । दृष्टान्तश्च साध्यविकलोऽतो नोक्तार्थसाधक इति वक्ष्याम इत्यर्थः । तत्र हेतुः **अचेतनेति** ।

च० — **दृष्टान्तश्चेति** । तन्त्वादिरूपदृष्टान्त इत्यर्थः ।

**सु० — सूत्रार्थमुपसंहरन्नानुमानमित्येतत्प्रकारान्तरेण व्याचष्टे रचनेति ।**

**अनु०** — रचनानुपपत्तेस्तत्र सर्वज्ञानुमागतम् ॥
अचेतनं जगत्कर्तृ

**तत्तस्मात्** । **सर्वज्ञानुमागतमनुमानं प्रकृत्यादिकं, कस्यचित्प्रत्यक्षं, प्रमेयत्वादिति सर्वज्ञसाधकानुमयाऽवगतम्** । **एतदनुमानसिद्धसर्वज्ञवाक्यावगतमिति यावत्** ।

**यद्वाऽनुमानसिद्धप्रामाण्यकत्वेनानुमानप्रधानत्वेन च सर्वज्ञाभिमतस्य वाक्यमेव सर्वज्ञानुमोच्यते । व्याख्यानान्तरस्य चेदं प्रयोजनम् । यत्प्रागुक्तं न योगिप्रत्यक्षेण सांख्याचार्यवचनेन वाऽयमर्थः सिध्यतीति तदपि सूत्रसूचितमेवेति ज्ञापनम् । यदा तु सर्वज्ञाभिमतोत्प्रेक्षितया भेदानां परिमाणादित्यादिकयाऽनुमयाऽवगतमानुमानमिति योजना । तदा वैचि(त्र्य)त्रीप्रदर्शनं व्याख्यानान्तरप्रयोजनम् । जगत्कर्तृ स्वातन्त्र्येण जगत्कारणम् ॥**

**शे०** — 'स्वतन्त्रवृत्ती रचना सा चैवाचेतने कुतः' इत्युक्तत्वाद्रचनानुपपत्तेरित्येतदनर्थकमित्यत आह **सूत्रार्थमिति** । तर्हि न सर्वज्ञानुमागतमिति भाष्यखण्डवैयर्थ्यम् । तदितरमूलवाक्येनैव सूत्रार्थोपसंहारसिद्धेरित्यतस्तत्प्रयोजनमाह **अनुमानमित्येतदिति** । उपसंहारत्वस्य मूलारूढत्वसिद्ध्यर्थमाह **तत्तस्मादिति** ॥ **सर्वज्ञेति** । सर्वज्ञानुमागतत्वं सौत्रस्यानुमानमित्यस्यार्थ इत्यर्थः । किं तत्सर्वज्ञत्वसाधकमनुमानं यद्गतत्वं प्रधानस्य स्यादित्यतस्तत्प्रदर्शयंस्तद्गतत्वं व्याख्याति **प्रकृत्यादिकमिति** । ननु सर्वज्ञत्वसाधकानुमानेन सर्वज्ञत्वस्यावगतत्वसंभवेऽपि प्रधानस्य तदवगतत्वासंभवाद्विप्रतिषिद्धमेनदित्यतोऽभिप्रायमाह **एतदिति** । एददनुमानेन सिद्धो यः सर्वज्ञस्तद्वाक्यादवगतमिति संबन्धः । उक्तयोजनायां सर्वज्ञवाक्यस्य सर्वज्ञानुमापदेन साक्षादलाभ इत्यपरितोषात्तल्लाभायाह **यद्वेति** । ननु सर्वज्ञानुमाशब्दस्य तद्वाक्ये योगरूढ्यादेरभावात्कथं सर्वज्ञवाक्यवाचकत्वमित्यतो रूढ्यादेरभावेऽपि लक्षणया तत्परत्वमिति भावेन लक्षणाबीजशक्यसबन्धमाह **अनुमानसिद्धेति** । विमतं प्रमाणमाप्तवाक्यत्वात् इत्यनुमानसिद्धप्रामाण्यकत्वेनेत्यर्थः । प्रकारान्तरेणापि शक्यसंबन्धमुपदर्शयति **अनुमानेति** । साङ्ख्यवाक्ये हि स्वप्रतिपाद्येष्वर्थेषु प्राधान्येनानुमानानामेवोक्तत्वात्तस्यानुमानप्रधानत्वमित्यर्थ ॥ **तदपि सूत्रसूचितमेवेति।** अनुमानं नेति सूत्रखण्डेन जगत्कर्त्रनुमानसिद्धसर्वज्ञवाक्यावगतमचेतनं नेति क्रियमाणो विशिष्टः प्रतिषेधोऽनुमानसिद्धसर्वज्ञवाक्यावगतत्वरूपं विशेषणमुपसंक्रामति । स चोक्तविशेषणप्रतिषेधः सविशेषणप्रतिषेधतया सर्वज्ञस्यानुमानसिद्धत्वरूपं विशेषणमेवोपसंक्रामति । तथा च सर्वविषयकप्रत्यक्षवत्त्वरूपसार्वज्ञस्यानुमानसिद्धत्वप्रतिषेधलाभा'न्न योगिप्रत्यक्षेण, तस्यास्माकमसिद्धेरि'त्युक्तदूषणं सूत्रसूचितमेवेति सिद्धमिति भावः । न साङ्ख्याचार्यवचनेनायमर्थः सिध्यतीत्येतत्तु यद्वेत्युक्तसूत्रखण्डयोजनायां स्पष्टमेवावगम्यत इति ॥ **वैचित्रीप्रदर्शनमिति** । नानुमानमिति सूत्रखण्डस्य पूर्वयोजनायामनुमानमित्येतद्योजनायां चानुमानमिति पदच्छेदस्य विचित्रताप्रदर्शनमेव प्रयोजनं प्रमेयस्यैक्यादिति भावः । ननु परेण स्वातन्त्र्येण जगत्कारणताया एव पूर्वं शङ्कितत्वात् 'इदं नाचेतनवशमि'त्यादिना च तस्या एव निरस्तत्वात् स्वातन्त्र्येण जगत्कारणं नेत्येवोपसंहर्तव्यं जगत्कर्तृत्वस्य परेण पूर्वं प्रकृतेरनाशङ्कितत्वादनिरस्तत्वाच्च 'न जगत्कर्तृ' इत्युपसंहारोऽयुक्त इत्यतस्तत्प्रकृतोपयोगितया व्याचष्टे **स्वातन्त्र्येणेति** ।

**स० — यदा त्विति ।** अनुमानमिति पदच्छेदः, आनुमानमिति पदच्छेदश्चेति वैचित्रीदर्शनमित्यर्थः । सामान्यानुमानविशेषानुमानरूपवैचित्रीप्रदर्शनमित्यर्थः । इदं च न सर्वज्ञानुमागतमित्यनेन सूचितम् । परेण प्रधानस्य स्वातन्त्र्येण कारणत्वस्यैवोच्यमानत्वेन कर्तृत्वनिराकरणमसंगतमित्यत आह **जगत्कर्तृ स्वातन्त्र्येण जगत्कारणमिति ।**

**प० — प्रकारान्तरेणेति ।** अनुमानस्येदमानुमानम् अनुमानावगतं प्रकृत्यादिकमिति यावत् । अनुमानपदेन चानुमानसिद्धसार्वज्ञोपेतपुरुषप्रोक्तत्वाद्वाऽनुमानसिद्धप्रामाण्यकत्वेन वाऽनुमानप्रधानकत्वाद्वा सांख्याचार्यवाक्यं गृह्यते । तथाच सांख्याचार्यवाक्यावगतप्रकृत्यादिकमित्येवं प्रकारान्तरेणेत्यर्थः । प्रागुक्तानुमानसिद्धमित्यर्थापेक्षयाऽस्यार्थान्तरत्वात्प्रकारान्तरेणेत्युक्तम् ॥ **अनुमानसिद्धेति ।** प्रत्यक्षयोग्यफलसंवादिकिञ्चित्सांख्यवाक्यदृष्टान्तेन सांख्यवाक्यत्वहेतुना विप्रतिपन्नतदीयसर्ववाक्यप्रामाण्यस्य 'नानुमानमतच्छब्दादि'त्यत्र पूर्वपक्षटीकोक्तदिशाऽनुमीयमानत्वादनुमानसिद्धप्रमाणत्वेनेत्युक्तम् ॥ **अनुमानप्रधानत्वेन चेति ।** सांख्यस्य हैतुकत्वेन स्वाभिमतप्रमेयेषु प्राधान्येनानुमानानामेवोक्तेरिति भावः । टीकाकारीययोजनामनूद्य तत्प्रयोजनमाह **यदात्विति ॥ वैचित्रीति ।** अनुमानमिति आनुमानमित्येवंरूपेणेत्यर्थः । जगत्कर्त्रिति मूलानुवाद । कर्तृत्वस्येच्छाघटितत्वात् अचेतने तदभावाद्व्याचष्टे **स्वातन्त्र्येण जगत्कारणमिति ।** अन्याप्रयोज्यत्वेन जगत्कारणमित्यर्थः ।

---

**या० —** अस्यां योजनायां वाक्यस्य शब्दवृत्त्याऽलाभादाह **यद्वेति ।** विमतं प्रामाणमाप्तवाक्यत्वादित्याद्यनुमानसिद्धप्रामाण्यकत्वेनेत्यर्थः । अनेनानुमाशब्देन वाक्यलक्षणायां शक्यसम्बन्धो दर्शित इति ज्ञातव्यम् । प्रकारान्तरेणापि तं दर्शयति **अनुमानप्रधानत्वेनेति ।** साङ्ख्यवाक्ये हि स्वप्रतिपाद्येष्वर्थेषु अनुमानान्येव प्राधान्येन कथ्यन्तेऽतोऽनुमानप्रधानकत्वं तस्येति ज्ञातव्यम् ॥ **तदपि सूत्रसूचितमेवेति ।** अनुमानं नेति सूत्रखण्डेन जगत्कर्तृ, अनुमानसिद्धसर्वज्ञवाक्यावगतमचेतनं नेति क्रियमाणो विशिष्टप्रतिषेधोऽनुमानसिद्धसर्वज्ञवाक्यावगतत्वरूपं विशेषणमेव उपसंक्रामति । स च उक्तविशेषणप्रतिषेधः सविशेषणप्रतिषेधतया सर्वज्ञस्यानुमानसिद्धत्वरूपं विशेषणमेव उपसंक्रामति । तथा च सर्वविषयकप्रत्यक्षवत्त्वरूपसार्वज्ञस्यानुमानसिद्धत्वप्रतिषेधलाभात् 'न योगिप्रत्यक्षेण, तस्यास्माकमसिद्धेरि'त्युक्तदूषणं सूत्रसूचितं भवतीति ज्ञातव्यम् । न साङ्ख्याचार्यवचनेनायमर्थः सिध्यतीत्येतत्तु यद्वेत्युक्तसूत्रखण्डयोजनायां स्पष्टमेवावगम्यते ॥ **वैचित्रीप्रदर्शनमिति ।** नानुमानमिति सूत्रखण्डस्य पूर्वयोजनायामानुमानमितीदानीन्तनयोजनायां अनुमानमिति पदच्छेदस्य विचित्रताप्रदर्शनमेव प्रयोजनमुभयत्र प्रयोगस्यैक्यादिति भावः । कर्तृत्वस्य परेणासाधितत्वादनुक्तोपालम्भतेत्यत आह **स्वातन्त्र्येणेति ।**

श्री० — नन्विदानीमप्यनुमानावगतं प्रधानं कारणं नेति व्याख्यानस्य क्रियमाणत्वात्प्रकारान्तरेणेति कथमुक्तमत आह **एतदनुमानेति** । वाक्यावगतं वाक्यमेवानुमेति व्याख्यानद्वयमपि व्याख्यानान्तरशब्देन ग्राह्यम् ॥ **वैचित्रीति** । अन्यथा जगत्कारणे प्रधानेऽनुमानं प्रमाणं नेति योजनायाः 'केन मूलानुमा' इत्यनेन कृतत्वादिदानीमपि तथैव व्याख्यायमानत्वेन प्रयोजनाभावाद्व्याख्यानान्तरं व्यर्थमेव स्यात् । ननु भवन्मते कुलालादेरिव मयाऽप्यचेतनस्य प्रधानस्य पारतन्त्र्येण जगत्कारणत्वं नाङ्गीकृतमेवेत्यचेतनं जगत्कर्तृ नेत्युक्ते सिद्धसाधनता स्यादतो व्याचष्टे **स्वातन्त्र्येणेति** ।

**च० — वैचित्रीति** । षिद्गौरादिभ्यश्चेति ङीष् ।

**सु० — स्यादेतत्** । **परिमाणादिहेतुभिस्तावन्महदादिकार्याणां किमपि मूलकारणमस्तीत्यवगम्यते । तस्यापि कारणान्तरकल्पने प्रमाणाभावादनवस्थानाच्च । तस्य च स्वातन्त्र्यं कारकान्तराप्रयोज्यत्वमेव न तु स्वेच्छानुसारित्वम् । येनोक्तदोषः स्यात् । तच्च तत्प्रयोक्तुः कारकान्तरस्याप्रामाणिकत्वादेव सिद्धम् । न चाचेतनस्य तदसंभावितम् । अचेतनेष्वपि पयोऽम्बुप्रभृतिषु दर्शनात् । अचेतनमेव हि पयोऽन्यानधिष्ठितमपि वत्सविवृद्ध्यर्थं प्रवर्तते । दधिभावं चापद्यते । घनविनिर्मुक्तं चाम्बु जम्बीरनारिकेलादिष्वनेकविधं विकारं प्राप्नोति । नादेयं चापसर्पति । तृणं च गवा जग्धं क्षीरीभवति । अयश्चायस्कान्तमभिसर्पति । न च 'इदं नाचेतनवशमि'त्यादिप्रमाणविरोधः । तस्योक्तस्थानेष्वेवानैकान्त्यात् । न चेदं ब्रह्मवादिनां संमतम् । येन सिद्धसाधनं स्यादित्याशङ्कापरिहारार्थं सूत्रम्** ॥ ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ॥ **इति । तद्व्याचष्टे** पयोऽम्ब्वादि चेति ।

**अनु० —** ॐ **पयोऽम्बुवच्चेत्तत्रापि** ॐ ॥

पयोम्ब्वादि च नोपमा ॥

एतत्प्रशास्तिवचनाच्चेतनाचेतनस्य च ॥

**उपमा स्वार्थसंभावनायामस्मदीयहेतुव्यभिचारे चेति शेषः । यथाऽत्र साध्यं व्यभिचरति तथा पक्षेऽपि व्यभिचरतु हेतुरित्येवमर्थं हि व्यभिचारोद्भावनम् । तदत्र न युज्यते । चेतनाचेतनस्यैतत्प्रशास्तिवचनात् । पारमेश्वरप्रेरणाप्रतिपादकश्रुतेः । आद्यश्चशब्दो लौकिकानां स्वतन्त्रतया प्रतीयमानमपीत्यर्थे । द्वितीयस्तु न केवलमचेतनस्य । किन्तूभयस्यापीति ।**

**एतदुक्तं भवति । कारकान्तराप्रयोज्यत्वलक्षणमपि स्वातन्त्र्यं न प्रधानस्योपपद्यते । असंभावितत्वात् । उक्तानुमानविरुद्धत्वाच्च ।**

शे० — ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ॥ 'पयोऽम्ब्वादि च नोपमे'त्युत्तरभाष्यानर्थक्यमाशङ्क्य पयोऽम्बुवच्चेत्तत्रापीत्युत्तरसूत्रव्याख्यानरूपत्वान्न तदिति भावेन तत्सूत्रार्थकथनरूपतयोत्तरभाष्यं योजयितुं सूत्रमेव किमर्थमित्यतस्तद्व्यावर्त्यशङ्काप्रदर्शनेन सूत्रस्यार्थवत्तां तावदुपपादयति **स्यादेतदिति** । कथं तस्य मूलकारणत्वमित्यतस्तदुपपादयति **तस्यापीति** ॥ **उक्तेति** । स्वेच्छानुसारितामेवेत्यादिनोक्तेत्यर्थः । भवेदेवं कथञ्चिद्यदि प्रधानस्य कारकान्तराप्रयोज्यत्वमपि सिद्धं स्यात्तदेव कुत इत्यत आह **तच्चेति** ॥ **अप्रामाणिकत्वादिति** । तत्साधकनिरवकाशप्रमाणविरहादिति भावः ॥ **न चेति** । चेतनानधिष्ठितस्याचेतनस्य क्वापि स्वतः प्रवृत्त्यदर्शनादिति भावः । पयोऽम्ब्वादीत्युत्तरमूलस्थादिपदानुरोधादाह **प्रभृतिष्विति** । पयोम्बुवदिति सूत्रयोजनामभिप्रेत्य पयोदृष्टान्तं तावदुपपादयति **अचेतनमपीति** । अम्बुवदिति दृष्टान्तमप्युपपादयति **घनेति** । अचेतनमेव चेतनानधिष्ठितमपीत्यनुवर्तते ॥ **नादेयं चेति** । अत्रापि पूर्ववदनुवृत्तिर्द्रष्टव्या । अम्ब्विति चानुवर्तते । अवृद्धाभ्यो नदीमानुषीभ्य इति प्राप्तस्य छस्य बाधेन नदीशब्दाच्छैषिकेऽर्थे नद्यादिभ्यो ढगिति ढकि नादेयमिति रूपसिद्धिरिति ध्येयम् । प्रभृतिशब्दोक्तं दृष्टान्तमुपपादयति **तृणं चेत्यादिना** । अत्राप्यचेतनमेवेत्यादिकमनुवर्तते **प्रमाणेति** । प्रतिपक्षरूपेत्यर्थः ॥ **उक्तस्थानेष्विति** । पयआदिकार्येषु दध्यादिष्वित्यर्थः । तत्राचेतनवशत्वस्यैव सत्त्वादिति भावः । न चाचेतनेच्छाधीनोत्पत्तिकत्वाभावस्यैव पूर्वं साधितत्वाद्दध्यादिष्वप्युक्तसाध्यसत्त्वान्न तत्र व्यभिचार इति वाच्यम् । कारकान्तराप्रयोज्याधीनोत्पत्तिकं वदन्तं प्रति तत्साधने सिद्धसाधनतापत्त्या तदधीनोत्पत्तिकत्वाभावस्यैव साधनीयत्वेनोक्तदोषतादवस्थ्यापातात् । ननु पयोऽम्ब्वादेः स्वार्थसम्भावनायामुपमात्वेऽप्यसदनुमाने व्यभिचारस्थलत्वेन तत्रोपमात्वाभावात्कथं व्यभिचारे चोपमेत्युच्यत इत्यत आह **यथाऽत्रेति** । व्यभिचारोद्भावनमित्यतःपरं व्यभिचारे चोपमात्वं युक्तमिति शेषः ॥ **तदत्रेति** । उभयत्रोपमात्वमित्यर्थः ॥ **असम्भावितत्वादिति** । चेतनानधिष्ठितस्याचेतनस्य क्वापि स्वतः प्रवृत्त्यदर्शनादिति भावः । **उक्तानुमानेति** । 'इदं नाचेतनवशमि'त्युक्तानुमानेत्यर्थः ।

स० — **प्रमाणाभावात्** । इत्यस्य स्वातन्त्र्येण हेतुत्वम् अनवस्थाया दूषणत्वे चोपयुक्तत्वं द्रष्टव्यम् । **नादेयमिति** । नदीसम्बन्धीत्यर्थः । **न चेदमिति** । परिमाणादिहेतुभिः कारकान्तराप्रयोज्यमूलकारणसाधनमित्यर्थः । **नाचेतनवशमिति** । स्वातन्त्र्येण चेतनाधीनोत्पत्तिकत्वाभावसाधने तस्याङ्गीकृतत्वेन सिद्धसाधनापत्त्या स्वतन्त्राचेतनकारणकत्वाभावः साधनीयः । न च तद्युक्तम् । पयःकार्यवत्सविवर्धनदधि(भाव)घननिर्मुक्ताम्बुकार्यजंबीरनारिकेलादिनिष्ठोदकनादेयापसर्पण गवादिजग्धतृणकार्यक्षीरादौ व्यभिचारात् । तत्र वस्तुत्वे विद्यमानेऽपि स्वतन्त्राचेतनकारणकत्वस्यैव विद्यमानत्वेन तदभावाभावादित्यभिप्रेत्याह **तस्योक्तस्थानेष्विति** । केचित् **उक्तस्थानेषु** पयोऽम्ब्वादिष्वित्याहुः ।

ननु स्वार्थसंभावनायां पयोऽम्ब्वादेरुपमानत्वसंभवेऽपि व्यभिचारे उपमानत्वं नोपपद्यते । किं तु व्यभिचारस्थलमित्येव वक्तव्यमित्यतो व्यभिचारेऽपि तस्योपमानत्वं प्रतिपादयति **यथाऽत्रेति** । अतः तस्य व्यभिचारेऽपि उपमानत्वं युक्तमिति शेषः । पयोऽम्ब्वादि उभयत्रोपमानं कुतो नेत्यतः प्रतिज्ञाय तत्र मूलं हेतुत्वेन योजयति **तदत्र न युज्यते इत्यादिना** । रतिः इत्यत्र औणादिकतिप्रत्ययवत् 'एतत्प्रशास्तिवचनात्' इत्यत्रापि औणादिकतिप्रत्ययसंभवेन साधुत्वमिति द्रष्टव्यम् । **उक्तानुमान-विरुद्धत्वाच्चेति** । 'इदं नाचेतनवशम्' इत्यनुमानविरुद्धत्वादित्यर्थः ।

**प०** — पयोम्बुवच्चेत् तत्रापीति सूत्रभाष्यमादिपदार्थविवरणपूर्वमवतारयति **स्यादेतदित्यादि** ॥ **परिमाणादीति** । भेदानां परिमाणादिति पूर्वोदाहृतश्लोकस्थहेतुभिरित्यर्थः । कथं तस्य मूलकारणतेत्यत आह **तस्यापीति** । सूत्रे पयोम्बुनोरुक्तिरुपलक्षणमित्युपेत्य मूले 'पयोम्ब्वादी'त्युक्तम् । अतः पयोम्बु-प्रभृतिषु दर्शनादित्युक्त्वा तद्व्यनक्ति **अचेतनमेव हि पय इति** । क्षीरमित्यर्थः । **नादेयं** नदीसंबन्धिरूपं सत् प्रवहतीत्यर्थः । 'नद्यादिभ्योढगि'त्युक्तेः । **अयस्कान्तं** अयस्कान्ताख्यमणिम् ॥ **इत्यादिप्रमा-णेति** । मूलकारोक्तप्रमाणेत्यर्थः । **स्वार्थेति** । प्रधानं स्वतन्त्रकारणं इत्येवं रूपार्थेत्यर्थः ॥ **अस्मदीय-हेत्विति** । 'इदं नाचेतनवशं वस्तुत्वादि'त्यादिनोक्तहेत्वित्यर्थः । ननु व्यभिचारे च नोपमेत्ययुक्तम् । स्वार्थसंभावनायां साध्यसाधनवत्त्वयोक्तसाधर्म्यवत्त्वेनोपमापदस्वारस्यवत् व्यभिचारे पयोम्ब्वादि च न स्थलमित्येवं वाच्यत्वेनोपमापदस्वारस्यस्याभावादित्यतः तत्रापि तत्स्वारस्यं दर्शयन्व्याचष्टे **यथात्रेति** । पयोम्ब्वादावित्यर्थः ॥ **पक्षेपीति** ॥ 'इदं नाचेतनवशं वस्तुत्वादि'त्यादावित्यर्थः । एतत्प्रशास्ति-पदयोरर्थः **पारमेश्वरप्रेरणेति** ।

**या०** — मूलकारणत्वमुपपादयति **तस्यापीति** । **नादेयं** नद्यां जातम् । नद्यादिभ्यो ढगिति स्मरणात् । अम्ब्विति वर्तते ॥ ॐ **पयोऽम्बुवच्चेत्तत्रापि** ॐ ॥ व्यभिचारोद्भावने उपयोगं दर्शयति **यथाऽत्र साध्यमिति** ।

**श्री०** — **तस्य च** मूलकारणस्य । **तच्च** कारकान्तराप्रयोज्यत्वरूपं स्वातन्त्र्यम् । ॐ **पयोम्बु-वच्चेत्तत्रापि** ॐ ॥ **तत्** उक्तरूपं स्वातन्त्र्यम् । एकत्राम्लतयाऽपरत्र मधुरतयेत्यनेकविधम् ॥ **इदमिति** । एवं पयोम्ब्वादिषु दृष्टं प्रधानेऽपि साध्यमानं कारकान्तराप्रयोज्यत्वरूपं स्वातन्त्र्यमित्यर्थः । स्वार्थ-संभावनायामस्तूपमात्वं हेतुव्यभिचारे कथमुपमात्वमित्यतस्तद्विवृणोति **यथेति** । **उक्तेति** । इदं नाचेतनवशमित्युक्तेत्यर्थः ।

**च०** — घनपदं मेघार्थकम् । **नादेयं** नदीसंबन्धि । नद्यादिभ्यो ढगिति स्मृतेः । **जग्धं** भक्षितम् । **अयस्कान्तं** मणिविशेषम् ।

सु० — यदुक्तमत्र पयोम्ब्वादिवदिति । तदसत् । तत्रापीश्वरप्रेरणाया 'एतस्य वा अक्षरस्य' इत्यादिश्रुतिसिद्धत्वात् । अत एव प्रधानस्य परप्रयोज्यत्वे प्रमाणाभावोऽपि परास्त इति । सूत्रे पयोऽम्बुवदित्युक्तेऽपि नोदाहरणमादरणीयम् । स्थलान्तरे संभावना व्यभिचारश्च भविष्यत इत्याशङ्कापरिहारार्थस्य 'व्यतिरेकानवस्थितेश्चानपेक्षत्वात्' इति उत्तरसूत्रस्यापि व्याख्यानायादिपदप्रयोगः । यद्वा पयोऽम्बुग्रहणमुपलक्षणमित्यभिप्रेत्यादिपदं प्रयुक्तम् । उत्तरसूत्रं तु कैमुत्यार्थम् । चेतनप्रवृत्तेरपीश्वरव्यतिरेकेणानवस्थितेरचेतनप्रवृत्तेस्तदधीनत्वं किमु वाच्यमिति । तद्व्याख्यानाय चेतनाचेतनस्य चेत्युक्तम् ।

शे० — पयोऽम्बुनोरनुपमत्वोक्त्यैव पयोऽम्बुवदिति सूत्रव्याख्यानसिद्धेः पयोऽम्ब्वादीत्यादिपदानर्थक्यमित्याशङ्क्य तस्योत्तरसूत्रव्याख्यानार्थत्वान्न तदिति भावेनोत्तरसूत्रव्याख्यानपरतया तद्योजनां दर्शयितुं तत्सूत्रव्यावर्त्यशङ्काप्रदर्शनपूर्वकं तन्निरासकतया सूत्रमुपन्यस्य तद्व्याख्यानार्थतयाऽऽदिपदं योजयति **सूत्र इति** ॥ **स्थलान्तर इति** । गवा जग्धतृणादावित्यर्थः । एवमादिपदस्योत्तरसूत्रव्याख्यानतया योजनायां पयोऽम्ब्वादि च नोपमा एतत्प्रशास्तिवचनादचेतनस्येत्येतावतैव मूलग्रन्थेन सर्वत्राचेतने व्यभिचारनिराससिद्ध्या चेतनस्य तदधीनतावर्णनस्यानपेक्षितत्वाच्चेतनग्रहणस्यानर्थक्यं भवतीत्यादिपदस्योत्तरसूत्रव्याख्यानतायामपरितोषात्पूर्वसूत्रार्थतामेव तस्याप्युपपादयति **यद्वेति** । तर्ह्युत्तरसूत्रवैयर्थ्यमित्यतस्तत्प्रयोजनमाह **उत्तरेति** । कैमुत्यमेव दर्शयति **चेतनेति** । एवं सूत्रस्यार्थवत्तामुपदर्श्य तद्व्याख्यानरूपतयोदाहृतभाष्यखण्डसार्थक्यमाह **तद्व्याख्यानायेति** ।

स० — **अत एवेति** । 'एतस्य वाऽक्षरस्य' इत्यादिश्रुत्या प्रधानस्यापि प्रयोजकस्य परस्य ईश्वरस्य बोधितत्वादेवेत्यर्थः । अस्मिन्पक्षे चेतनग्रहणस्य वैयर्थ्यं हृदि निधाय पक्षान्तरमाह **पयोऽम्बुग्रहणमिति** ।

प० — पयोम्ब्वादीति मूलस्थादिपदं नोत्सूत्रमित्याह **सूत्र इति** ॥ **स्थलान्तर इति** । प्रागुक्ततृणायस्कान्तादिरूपस्थलान्तर इत्यर्थः । व्यतिरेकेत्यादिसूत्राणां अर्थस्तन्त्रदीपिकायां व्यक्तः । एवं चेत्तर्हि पयोम्ब्वादिवच्चेत्तत्रापीत्येवं सूत्रणीयं न पुनः योगान्तरं कार्यमित्याशयादाह **यद्वेति** ॥ **उत्तरेति** । व्यतिरेकेतिसूत्रन्त्वित्यर्थः ।

श्री० — **अत एव** परप्रयोज्यत्वस्योक्तश्रुतिसिद्धत्वादेव ॥ **संभावनेति** । अचेतनस्य स्वातन्त्र्येण प्रवृत्तिरूपस्वार्थसंभावनेत्यर्थः ।

सु० — **किञ्च परिमाणादिति हेतुस्तावदनैकान्तिकः । सत्त्वरजस्तमसां साम्यावस्था हि प्रकृतिरुच्यते । सत्त्वादयश्च परिमिता एव । यथोक्तम् । अब्ग्रीरनभोऽहङ्कृन्महत्तत्त्वगुणत्रयैः । क्रमाद्दशोत्तरैः'** [ आदि पु. वें. माहा. २-४६ ] **इति । न च प्रकृतिरव्यक्तान्तरवतीति कथं नानैकान्त्यम् । न च परिमितस्यापि मूलप्रकृतित्वे बाधकमस्ति । सार्वत्रिककार्यानुत्पत्तिरिति चेन्न । सर्वत्र कार्यसद्भावे प्रमाणाभावात् । भावेऽप्यनेकैस्तदुत्पत्त्युपपत्तेः । युक्तं च परिमितानामेव कारणत्वम् । तन्त्वादिषु दर्शनात् । अपरिमितस्य कृत्स्नैकदेशविकल्पानुपपत्तेश्च । । अस्माकं त्वीश्वरशक्त्यैवोपपद्यते ।**

**समन्वयादित्यप्यसत् । यत्कार्यं यदनुगतिमत्तत्तादृक्कारणोपेतमित्यस्या व्याप्तेरव्यक्ताद्व्यक्तजन्माङ्गीकारेणैव भग्नत्वात् । शक्तितः प्रवृत्तेश्चेत्येतदपि न विवक्षितार्थसाधकम् । अन्तर्भावितकार्यत्वमेव कारणस्य शक्तिरित्यस्य सिद्धौ हि तथा स्यात् । तच्च सत्कार्यवादनिर्वाह्यमिति । अत एव विभागाविभागावपि निरस्तौ । विभागाविभागयोरेव सत्कार्यवादसिद्ध्यधीनयोरसत्त्वात् । स्वप्रक्रियामात्रेणार्थसिद्धौ 'स्थूलकार्यस्य लोष्ठादेरि'त्यादिना तार्किकपरिकल्पिताभ्यां विभागाविभागाभ्यां परमाणुकारणत्वमपि स्यादित्यास्तां प्रपञ्चः ।**

---

**शे०** — एवं मूलोक्तसाधारणदोषैरनुमानानि प्रदूष्य, स्पष्टतया शिष्यैरेवोह्यतामिति भावेन भाष्येऽनभिहितासाधारणदोषैरपि तानि निराकुर्वाण आद्यं तावत्प्रत्याख्याति **किञ्चेति** । कुत्रानैकान्तिकमित्यतः सत्त्वरजस्तमःस्वेवेत्यभिप्रेत्य तेषु साध्याभावोपपादकं हेतुमुपोद्घातलक्षणसङ्गत्या पूर्वमाह **सत्त्वरजस्तमसां साम्यावस्थेति** । गुणप्रधानभावपरित्यागेन त्रयाणामपि प्रधानभावेनावस्थितिरित्यर्थः ॥ **प्रकृतिरिति** । मूलप्रकृतिरित्यर्थः । कथं सत्त्वादिषु व्यभिचार इत्यत उक्तहेतुसत्त्वेऽप्युक्तसाध्याभावादित्यभिप्रेत्य तत्र हेतुवृत्तिमुपपादयति **सत्त्वादयश्चेति** । किमत्र प्रमाणमित्यत आह **यथोक्तमिति** । तथाऽप्यव्यक्तान्तरवत्त्वरूपसाध्यस्यापि सत्त्वान्न व्यभिचार इत्यतस्तेषां मूलप्रकृतित्वान्नाव्यक्तान्तरवत्त्वं सम्भवतीत्यभिप्रेत्याह **न चेति । प्रकृतिः** मूलप्रकृतिरित्यर्थः । अव्यक्तान्तरवत्त्वे मूलप्रकृतित्वमेव न स्यादिति भावः । न च मूलप्रकृतित्वमेव सत्त्वादीनामसिद्धमिति वाच्यम् । गुणप्रधानभावपरित्यागेन प्रधानभावेनैवावस्थितानां सत्त्वादीनामेव मूलप्रकृतित्वेन तदसिद्धेरशक्यशङ्कत्वात् । एतदेवाभिसन्धायोपोद्घातलक्षणया सङ्गत्या मूलप्रकृतित्वं साम्यावस्थाया उपदर्शितमिति ध्येयम् ।

परोक्तानुमानेऽप्रयोजकत्वं चाह **न च परिमितस्यापीति** । विपक्षे बाधकसद्भावान्नाप्रयोजकत्वमिति भावेन तदाशङ्कते **सार्वत्रिकेति** । अनेकैरित्यतःपरं परिमितैरपीति शेषः॥ **अपरिमितस्य कृत्स्नै**

**कदेशविकल्पानुपपत्तेश्चेति** । अपरिमितं प्रधानं जगत्कारणमिति वदन्प्रष्टव्य. । तत्किं कार्त्स्न्येन महदाद्यात्मना परिणमते किं वैकदेशेनेति । नाद्यः । तथा सति कृत्स्नस्यापि प्रधानस्य कार्याकारता-प्रसक्त्या, स्थितौ प्रधानाभावेन, प्रकृतिपुरुषविवेकार्थोपदेशानर्थक्यापातात् । नान्त्यः । तथा सत्येक-देशाङ्गीकारेण अन्त्यावयवत्वप्राप्त्याऽनित्यत्वप्रसङ्गादित्यपरिमितस्य प्रधानस्य कृत्स्नैकदेशविकल्पाभ्यां कारण-तानुपपत्तेरित्यर्थः । यद्वा कृत्स्नस्य प्रधानस्य महादाद्यात्मना भवने महदादेरप्यपरिमितमूलकारणकत्वा-दपरिमितत्वं स्यात् । यद्यावत्परिमाणोपेतमूलकारणकं तत्तावत्परिमाणकं यथा पलपरिमाणसुवर्णकारणकं कटकं पलपरिमाणकं दृष्टम् । न च महदादेरपरिमितत्वं परेणाङ्गीकर्तुं शक्यम् । तथा सति भेदानां महदादीनां परिमाणात्परिमितत्वादित्युक्तहेतोरसिद्धिप्रसङ्गात् । नाप्येकदेशेन परिणामः। अपरिमितस्य द्रव्यस्य निरवयवत्वनियमेनैकदेशायोगादित्यर्थः । यद्वा शक्तितः प्रवृत्तेश्चेत्यस्य का णं हि शक्तं कार्याकारेण व्यक्तीभवति । तत्र कारणस्य शक्तिर्नामान्तर्भावितकार्यकत्वमेवेति व्याख्यातत्वेनैकदेशेन कारणत्वेऽन्त-र्भावितकार्यैकैकदेशत्वस्यैव प्राप्त्याऽन्तर्भावितकार्यकत्वाभावेन तत्राप्यसिद्धिप्रसङ्ग इति । तथा च परि-मितत्वेऽपि सत्त्वादेर्मूलप्रकृतित्वेनाव्यक्तान्तरवत्त्वाभावादनैकान्त्यमेवेति हृदयम् । यद्यप्युदाहृतप्रमाणोक्तं गुणत्रयं परिमितमपि न मूलप्रकृतिः किन्त्वादिकार्यमेवेति अव्यक्तान्तरवत्त्वरूपसाध्यसत्त्वादेव न स्वमते तत्र व्यभिचारः। तदन्यमूलप्रकृतेश्चाव्यक्तान्तरवत्त्वाभावेऽपि न स्वमते तस्याः परिमितत्वमिति हेतुविरहा-देव न तत्रापि व्यभिचारः । तथाऽपि महदादिकारणगुणत्रयातिरिक्तप्रकृत्यनङ्गीकारिणः परस्य मते गुणत्रयस्यैव मूलप्रकृतित्वेन तत्र चाव्यक्तान्तरवत्त्वाभावस्य परेणाभ्युपगतत्वात्तद्रीत्यैवैतद्व्यभिचारोद्भावन-मित्यवधेयम् । नन्वपरिमितस्य कृत्स्नैकदेशविकल्पानुपपत्त्या न कारणत्वानुपपत्तिर्वक्तुं शक्या । तथा सति सिद्धान्तेऽप्यपरिमिततया प्रकृतेः कृत्स्नैकदेशविकल्पानुपपत्त्याऽकारणत्वप्रसङ्गादित्यतः सिद्धान्ते निरवयवस्यापि प्रधानस्य परमेश्वराचिन्त्यशक्तिवशेन कार्यानुगुण्येनैव परिणामसंभवान्न कृत्स्नप्रसक्तिरित्या-शयेनाह **अस्माकं त्विति** ।

**तच्चेति** । अव्यक्तकार्यवत्त्वमेवेत्यर्थः ॥ **सत्कार्यवादेति** । अत्यन्तसत्कार्यवादश्चासिद्ध एव अन्यथाऽन्योन्याश्रयः स्यादिति भावः । अत एवेत्युक्तमेव विशदयति **विभागाविभागयोरिति** । व्यक्त्यव्यक्तिरूपयोरित्यर्थः ॥ **सत्कार्यवादसिद्ध्यधीनयोरिति** । तथा चान्योन्याश्रय एवेति भावः ॥ **स्थूलकार्यस्येति** । अत्रेत्यादिनेत्यादिपदेनावयवक्रियाविभागादिन्यायेन विभज्यमानस्याल्पाल्पतरतमादि-भावाद्यतो नाल्पीयस्तं परमाणुमाचक्ष्महे इत्यादितदुत्तरवाक्यपरिग्रहः । तथा च स्थूलकार्यस्य लोष्ठस्य विभज्यमानावयवस्यावयवविभागे क्रियमाणे य एतद्विभागावधिर्यदविभागप्रक्रमेण यत्संयोगप्रक्रमेण

कार्योत्पत्तिर्भवति स परमाणुमूलकारणमिति तार्किकपरिकल्पिताभ्यां विभागाविभागाभ्यां परमाणोरपि विश्वकारणत्वं सिद्ध्येदित्यर्थः ।

स० — **अपरिमितस्येति** । प्रधानस्येति शेषः । कात्स्न्र्येन कारणत्वे एकस्य कार्यस्योत्पत्तौ प्रधानस्याभावापत्तिः । एकदेशेन तत्त्वेऽप्यभिन्नस्यैकदेशानुपपत्तिरित्यर्थः । ननु भवतां पक्षेऽप्युपादानत्वस्याङ्गीकृतत्वेनायं विकल्पः स्यादेवेत्यत आह **अस्माकं त्विति** । अभिन्नस्य प्रधानस्य अभिन्नेनांशेन ईश्वरशक्त्या कारणत्वमुपपत्स्यत इति भावः । **अव्यक्तादिति** । यत्कार्यं यादृशधर्मोपेतं तत् तादृशधर्मोपेतकारणकमिति वक्तुं न शक्यते । कार्ये व्यक्तत्वलक्षणधर्मोपेतत्वस्य विद्यमानत्वेऽपि तादृग्धर्मोपेतकारणकत्वस्याभावेन व्यभिचार इति भावः । **अन्तर्भावितकार्यत्वमेवेति** । कार्यगताव्यक्तत्वमेवेत्यर्थः । **तच्चेति** । न च सत्कार्यवादे कार्यगताव्यक्तत्वातिरिक्तकारणशक्तौ प्रमाणमस्तीति हि वक्तव्यम् । न च तद्युज्यते । सत्कार्यवादस्य दूषितत्वादीत्यर्थः । ननु अस्मदीयप्रक्रियया तादृशविभागाविभागयोः सिद्धत्वेन युक्तं ताभ्यां मूलकारणसाधनमित्यत आह **स्वप्रक्रियामात्रेणेति** । स्वपरिकल्पितविभागाविभागविरुद्धौ यौ विभागाविभागौ, ताभ्यां परिकल्पितं परमाणुकारणत्वमप्यङ्गीकर्तव्यम् । अयं भावः । अविभागो नाम संयोगः । सृष्टिकाले ईश्वरक्रियया यत् द्वयोः परमाण्वोः संयोगः, तेन द्व्यणुकमुत्पद्यते । चतुर्णां (तत्त्रयाणां) संयोगे त्र्यणुकमित्यादिक्रमेण स्थूलकार्यमुत्पद्यते । एवं प्रलयकाले कार्यकारणविभागमारभ्य परमाणुपर्यन्तं विभागे कार्यस्य नाश इति परमाणोरेव कारणत्वमिति परेणोच्यते । तदप्यङ्गीकर्तव्यमिति ।

प० — मूलगतं चशब्दमनुक्तसमुच्चयार्थं च मत्वा सांख्यमतानुवादोदाहृतश्लोकस्थान् भेदानां परिमाणात्समन्वयादित्यादीन् हेतून् प्रकृतिकारणत्वसाधकानपि विशिष्य निराह **किञ्चेत्यादिना आस्तां प्रपञ्च इत्यन्तेन ॥ अनैकान्तिक इति** । सत्त्वरजस्तमोगुणेष्विति शेषः । कथमनैकान्तिकत्वमित्यतः साम्यावस्थापन्नसत्त्वरजस्तमोरूपप्रकृतौ परिमितत्वहेतौ सत्यपि त्वदभिमताव्यक्तकारणकत्वरूपसाध्याभावादिति भावेन तत्र साध्याभावहेतुसत्वे व्यनक्ति **सत्त्वेत्यादिना** । प्रकृतिरुच्यत इत्यनेन साध्याभाव उक्तः । तदुपपादनं च प्रकृतिरिति वाक्येऽग्रे व्यक्तम् ॥ **यथोक्तमिति** । तात्पर्यनिर्णये एकविंशेऽध्याये । अप्रयोजकश्च हेतुरिति भावेनाह **न च परिमितस्यापीति** ॥ **अनेकैरिति** । परिमितैरिति योज्यम् । **कृत्स्नैकदेशेति** । कात्स्न्र्येन परिणामे एककार्योत्पत्तौ कार्यान्तरमकारणकमापद्येत । अपरिमितपरिणामरूपकार्यस्याप्यपरिमितत्वं चापद्येत । एकदेशेन परिणामे तु निरंशत्वहानिरिति भावः । कथं तर्हि भवन्मतेप्यपरिमितायाः प्रकृतेः परिणाम इत्यत आह **अस्माकं त्विति** ॥ **अंतर्भावितेति** । अव्य-

त्ककार्यात्मत्वमित्यर्थः ॥ **सत्कार्यवादेति** । स च तदनन्यत्वाधिकरण एव दूषित इति भावः । किञ्चेत्यादिनोपक्रान्तदूषणसमाप्तौ इतिशब्दः । अत एवेत्युक्तहेतुमाह **असत्त्वादिति** । तत्र हेतुतयोक्तं **सत्कार्येत्यादि** ॥ **स्थूलकार्यस्येत्यादि** । द्रव्यकिरणावल्यां ह्युदयनेन परमाणुसिद्धौ विभागाविभाग-रूपौ हेतू उक्तौ । तथाहि । 'स्थूलकार्यस्य लोष्ठादेः अवयवक्रियाविभागन्यायेन विभज्यमानाल्पतरतमादिभावात् यतो नाल्पीयस्तं परमाणुमाचक्ष्महे' इति ग्रन्थेन विभागरूपो हेतुरुक्तः 'एष ह्ययवाव-यविप्रसङ्गो न तावन्निरवधिरेव । अनन्तावयवारब्धत्वाविशेषे मेरुसर्षपादीनां परिमाणभेदानुपपत्तेः । नचान्यस्तदवधिः संभवति । तस्मान्निरवयवावधिरवयवावयविप्रसङ्ग' इति ग्रन्थेन कार्यद्रव्यस्यावयवा-विभागरूपो हेतुरुक्तः तांभ्यामित्यर्थः ॥

**या०** — एवं परोक्तानुमानेषु साधारणान्मूलोक्तान्दोषानुपपाद्य मूलमुपलक्षणमित्यभिप्रेत्या-साधारणानपि दोषान्दर्शयति **किञ्चेत्यादिना** । सत्त्वादिषु साध्याभावमुपपादयितुं तेषां तावत्प्रकृतित्वं दर्शयति **सत्त्वरजस्तमसामिति** । एवं हेतुमागमेनोपपाद्य प्रकृतित्वेनैव हेतुना साध्याभावस्तत्र साधनीय इत्याशयेनाह **न च प्रकृतिरिति** । ननूदाहृतप्रमाणोक्तं गुणत्रयं परिमितत्वादेव न प्रकृतिः किन्त्व-व्यक्तान्तरवदेव अतो न व्यभिचार इत्यत आह **न च परिमितस्येति** । अनेकैरित्यनन्तरं परिमितैरिति शेषः ॥ **कृत्स्नैकदेशेति** । अपरिमितं प्रधानमादिकार्यजनने किं कार्त्स्न्येन प्रवर्तते उतैकदेशेन । आद्ये आदिकार्यस्याप्यपरिमितत्वापत्तिः । द्वितीयेऽपरिमितद्रव्यस्य निरवयवत्वनियमेनैकदेशासंभव इति कृत्स्नैकदेशविकल्पयोर्दूषणाभ्यामनुपपत्तिरित्यर्थः । तथा चोदाहृतप्रमाणोक्तं गुणत्रयं परिमितमपि मूल-प्रकृतिरित्येवाङ्गीकार्यम् । ततश्च तत्रानैकान्त्योद्भावनं युक्तमिति भावः । यद्यप्युदाहृतप्रमाणोक्तं गुणत्रयं स्वमते न मूलप्रकृतिः, किन्त्वादिकार्यमत एव तत्परिमितम् । मूलप्रकृतिरपरिमितैव । तथा च नोक्तानैकान्त्यं संभवति । तथाऽपि परमते महत एवादिकार्यत्वात्तदनन्तरमुक्तं गुणत्रयं परिमितमत उक्तरीत्या मूलप्रकृतिरित्येव वक्तव्यम् । अन्यथोक्तदोषापत्तेरिति । परं प्रति प्रौढि-वादेनैवेदमनैकान्त्योद्भावनमिति मन्तव्यम् । ननु भवन्मतेऽपि मूलप्रकृतेरपरिमितत्वं नोपपद्यते । कृत्स्नैकदेशविकल्पानुपपत्तेरित्यत आह **अस्माकं त्विति** । अपरिमितद्रव्यस्य विभिन्नावयवा-भावेन निरंशत्वेऽप्यभिन्नावयवसत्त्वेनैकदेशेन प्रवृत्तिरुपपद्यते । तस्यैकदेशस्यांश्यभिन्नत्वेन पुनःकार्त्स्न्य पक्षोक्तदोषापत्तिश्च अघटितघटकेश्वरशक्त्यैव परिहार्येति भावः ॥ **अन्तर्भावितेति** । अव्यक्तकार्यवत्त्व-मेवेत्यर्थः । **तच्च सत्कार्येति** । सत्कार्यवादश्च प्रागेव दूषित इत्याशयः ॥ **विभागाविभागयो-रिति** । व्यक्त्यव्यक्तिरूपयोरित्यर्थः ॥ **स्थूलकार्यस्य लोष्ठादेरित्यादिनेति** । 'स्थूलकार्यस्य

लोष्ठादेरवयवक्रियाविभागादिन्यायेन विभज्यमानस्याल्पतरतमादिभावाद्यतो नाल्पीयस्तं परमाणुमाचक्ष्महे। एष ह्यवयवावयविप्रसङ्गो न तावन्निरवधिरेव । अनन्तावयवारब्धत्वाविशेषेण मेरुसर्षपादीनां परिणामभेदानुपपत्तेः । न चान्यस्तदवधिः संभवति । तस्मान्निरवयवावधिरवयवावयविप्रसङ्ग इति विज्ञायत' इति किरणावलीग्रन्थेन प्रतिपादिताभ्यामित्यर्थः । अत्र हि स्थूलेत्यादिनाऽऽचक्ष्मह इत्यन्तेन विभागेन मूलकारणपरमाणुसिद्धिरुक्ता । एष ह्यवयवावयविप्रसङ्ग इत्यादिना चाविभागेन । अत्राविभागो नामावयवावयविनोः संबन्धः । कार्यद्रव्यस्य सावयवत्वमिति नियमात् । तदेवावयवावयविप्रसङ्गशब्देनात्राभिप्रेतम् । यथाऽऽहुरेतद्ग्रन्थसंप्रदायाभिज्ञाः । 'यत्कार्यद्रव्यं तत्सावयवं यच्च सावयवं तत्कार्यद्रव्यम् । तथा च यतोऽवयवात्कार्यत्वं निवर्तते तत्र सावयवत्वमपीति निरवयवपरमाणुसिद्धिरिति' ।

**श्री०** — महदादयोऽव्यक्तकारणका अव्यापकत्वादित्यनुमाने सत्त्वादिषु प्रकृतिसंज्ञिकेष्वनैकान्त्यं वक्तुं हेतुमुपपादयति **सत्त्वरज इत्यादिना** । ननु सत्त्वादेः परिमितत्वान्न मूलप्रकृतित्वं, ततश्च साध्यस्य सत्त्वान्न व्यभिचार इत्यत आह **नचेति** । बाधकमाशङ्कते **सार्वत्रिकेति** । सर्वकार्याणां मूलोपादानं प्रकृतिर्यदि परिमिता तर्हीति शेषः । ननु भवन्मतेऽप्यपरिमितायाः प्रकृतेः कारणत्वं कृत्स्नैकदेशविकल्पेनानुपपन्नमेवेत्यत आह **अस्माकं त्विति** । **उपपद्यते** अपरिमितद्रव्यभूताया अपि प्रकृतेः सावयवत्वमङ्गीकृत्य एकदेशेन परिणाम इत्यर्थः । **तथा** सकलकार्यगर्भितं प्रधानाख्यमव्यक्तसंज्ञकं मूलकारणं स्वतन्त्रं स्यादित्यर्थः ॥ **तच्चेति** अन्तर्भावितकार्यत्वमेव कारणस्य शक्तिरित्येतत्प्रमेयम् । ततश्च सिद्धेऽत्यन्तमसत्कार्यवादे उक्तप्रमेयसिद्धिस्तत्सिद्धौ च तत्सिद्धिरिति परस्पराश्रय इति हृदयम् । एवमुत्तरत्रापि ॥

**च०** — **यथोक्तमिति** । महाभारततात्पर्यनिर्णये एकविंशेऽध्याये उक्तमित्यर्थः ॥ **अन्तर्भावितेति** । अव्यक्तकार्यात्मत्वमित्यर्थः ।

**सु०** — **नन्विदं घट्टकुटीप्रभातमनुसरति । इच्छावत्त्वमात्मन एव न तु जडस्येत्यत्र हि प्रथममनुभवः प्रमाणीकृतः । तत्र च श्रुतिविरोधे चोदितेऽन्तःकरणधर्म आत्मधर्मश्चेति कामस्य द्वैविध्यान्न विरोध इत्युक्तम् । एवञ्चात्मन एवेच्छावत्त्वं न त्वचेतनस्येति त्यक्तमेवेत्याशङ्कां सिंहावलोकनन्यायेन परिहरति** द्वैविध्येऽपीति ।

**अनु०** — द्वैविध्येऽपि तु कामादेः कुतः स्वामित्वमात्मनः ॥
साक्षादनुभवारूढं शक्यतेऽपोदितुं क्वचित् ॥

कामादेर्द्वैविध्येऽपि साक्षादनुभवारूढमात्मनः कामादेः स्वामित्वं तु कुतः प्रमाणादपोदितुं शक्यते न कुतोऽपीति योजना । श्रुत्यपेक्षयाऽऽदिपदग्रहणम् । अपोदितुमिति संप्रसारणं छान्दसम् । अयमत्रोत्तरक्रमः । सत्यं कामो द्विविध आत्मधर्मो मनोवृत्तिश्चेति । तत्र मनोवृत्तिमपि कामं प्रत्यात्मन एव स्वामित्वं न मनसः । अहं कामय इति साक्ष्यनुभवसिद्धत्वात् । मनसस्तु कामं प्रत्युपादानत्वमेव । यथा हि । क्षेत्रोपादानकानामपि सस्यानां कृषीवल एव स्वामी न क्षेत्रं तथैव । न च वाच्यं मनस एव कामस्वामित्वमहं कामय इत्यनुभवस्तु भ्रान्तिर्व्यवहारमात्रं वेति । बाधकप्रमाणाभावात् । न च कौटस्थ्यं बाधकम् । अन्तःकरणस्यैव कामोपादानत्वेनाङ्गीकृतत्वात् । स्वामित्वमात्रेण च कौटस्थ्याविघातात् । अन्यथा कृपणधनस्येवात्मनो वैयर्थ्यापत्तेरिति । तदिदमुक्तं कचिदिति ।

शे० — नन्विच्छाम्यहमित्यनुभवानुरोधेनात्मन इच्छावत्त्वस्योक्तत्वात्पुनरनुभवानुरोधेनेच्छास्वामित्ववर्णनपरोत्तरवाक्यमनर्थकम् । न चेदं मनोवृत्तिरूपकामं प्रत्यात्मनः स्वामित्ववर्णनपरमिति नानर्थक्यमिति वाच्यम् । कामद्वैविध्यप्रतिपादनमात्रेण श्रुतिविरोधपरिहारस्य सिद्धत्वेन तं प्रत्यात्मनः स्वामित्ववर्णनस्याप्यनर्थकत्वादित्यतः कामद्वैविध्याश्रयणे आत्मन इव मनसोऽपीच्छावत्त्वप्राप्त्याऽऽत्मन एवेच्छावत्त्वं न त्वन्तःकरणस्येति स्वोक्तनियमभङ्गेन घट्टकुटीप्रभातवृत्तान्तसाम्यशङ्कानिरासार्थत्वान्न मनोवृत्तिरूपकामं प्रत्यात्मनः स्वामित्ववर्णनानर्थक्यमित्यभिप्रेत्योक्तशङ्कानिवारकतयोत्तरभाष्यं योजयितुं उक्तन्यायसाम्यशङ्कामुत्थापयति **नन्विदमिति** ॥ **घट्टकुटीति** । केचित्खलु वणिजः शुल्कमदित्सन्तः शुल्कग्राहिणो राजभृत्यान्वञ्चयित्वाऽन्येन पथा जिगमिषन्तो विस्मृतमार्गा रात्राविततस्ततः सञ्चरन्तो, यत्र घट्टे शुल्कग्राहिणां कुटी स्थिता, तत्रैव प्रभाते समागताः । सोऽयं घट्टकुटीप्रभातवृत्तान्तस्तमनुसरतीत्यर्थः । उक्तन्यायसाम्यमेवोपदर्शयति **इच्छावत्स्वामित्यादिना** । नन्वस्याः शङ्कायाः कामद्वैविध्यकथनरूपात् 'द्वैविध्यं दृश्यते चास्ये'त्यादिपूर्वग्रन्थादनन्तरमेवोत्थानेनैतन्निरासपरैतद्ग्रन्थस्यापि तत्रैव सन्निवेशनीयत्वाद्व्यवधानेनात्र सन्निवेशोऽसङ्गत इत्यत उक्तं **सिंहावलोकनन्यायेनेति** । नन्विच्छारूपकामस्यैवात्र प्रकृतत्वादादिपदं किमर्थमित्यत आह **श्रुत्यपेक्षमिति** । कामः सङ्कल्प इत्युदाहृतश्रुत्यपेक्षं कामादेरित्यादिपदमित्यर्थः । ननु 'वचिस्वपियजादीनां किती'त्यत्र किति परत एव वदतेः संप्रसारणमुक्तम् । उदितं उदितवानिति वृत्तौ तथैवोदाहृतं च । ततश्च प्रकृते तुमुन्प्रत्ययस्याकित्त्वात्तस्मिन्परतः संप्रसारणाप्राप्तेरपवदितुमित्येव वक्तव्यम् । अपोदितुमिति तु कथमित्यत आह **अपोदितुमितीति** । किति परतो विहितं संप्रसारणं छन्दस्तुल्यत्वादकित्युपपन्नमिति भावः । ननु कोऽसावनुभवो यत्सिद्धमात्मनोऽन्तःकरणवृत्ति-

रूपकामस्वामित्वमित्युच्यते । आत्मस्वामिकत्वे मनसो वैयर्थ्यप्रसङ्गाच्च । किञ्चानुभवसिद्धमपि तन्नाङ्गीकर्तुं शक्यम् । लोकेऽन्योपादानकस्यान्यस्वामिकत्वादर्शनेनान्तःकरणवृत्तिरूपकामस्य आत्मस्वामिकताया असंभावनाशङ्कापराहतत्वात् । अभिमतानुभवस्य भ्रान्तित्वेन तेन तदसिद्धेश्चेत्येताः शङ्काः क्रमेण परिहरन्नेवाकाङ्क्षाक्रमेणोक्ताक्षेपपरिहारकतया मूलं योजयति **अयमत्रेति** ॥ **अहमिति** । अनेनानुभवप्रकारप्रदर्शनेनाद्या शङ्का निरस्ता भवति ॥ **उपादानत्वमेवेति** । तथा च न तद्वैयर्थ्यप्रसङ्ग इति भावः । असंभावनापराहततां दृष्टान्तोक्त्या परिहरति **यथेति** । बाधकमपि किं कौटस्थ्यमेवाभिमतमन्यद्वा किञ्चित् । नान्त्यः तददर्शनादित्यभिप्रेत्याद्यमुत्थाप्य दूषयति **न चेति** । कौटस्थ्यविघातकमपि कामं प्रत्युपादानत्वविशिष्टस्वामित्वमभिमतं किंवा स्वामित्वमात्रमिति विकल्प्याद्यमनङ्गीकारेण दूषयति **अन्तःकरणस्यैवेति** । द्वितीयं प्रत्याह **स्वामित्वमात्रेणेति** ।

स० — **घट्टकुटीति** । केचित् वणिजः शुल्कमदित्सन्तः शुल्कग्रहणस्थले वञ्चयित्वा अन्येन पथा जिगमिषन्तो विस्मृतमार्गाः यत्र घट्टे शुल्कग्राहिणां कुटी स्थिता तत्रैव प्रभाते आगताः । सोऽयं घट्टकुटीप्रभातदृष्टान्तः ॥ **श्रुत्यपेक्षयेति** । 'कामस्संकल्प' इति श्रुत्यपेक्षया कामादेरित्यादिपदमित्यर्थः । ननु 'वचिस्वपियजादीनां किती'त्यत्र किति परत एव वदतेः संप्रसारणमुक्तम् । उदित उदितवानित्येव वृत्तौ उदाहृतत्वात् । प्रकृते तुमुन्प्रत्ययस्याकित्त्वात् तस्मिन् परतः संप्रसारणाप्राप्तेरपवदितुमित्येव वक्तव्यम् । अपोदितुमिति कथमित्यत आह **अपोदितुमिति** । किति परतो विहितं संप्रसारणं छन्दस्तुल्यत्वादकित्युपपन्नमिति भावः ।

प— **घट्टकुटीति** । यत्र पान्थैः किञ्चिच्छुल्कं दत्वा गन्तव्यं स्थानं तत् घट्टमुच्यते । तत्रत्यं शुल्कग्राहिणां राजभटानां सूक्ष्मगृहं कुटीत्युच्यते । घट्टकुटीं विहाय मार्गान्तरेण गन्तुं रात्रावुत्थितानां मार्गाज्ञानहेतुना घट्टकुट्यां प्रभातमुदयमनुसरतीत्यर्थः । कामस्यैकस्यैवात्र प्रकृतत्वात् कथं कामादेरित्युक्तिरित्यत आह **श्रुत्यपेक्षयेति** । कामः सङ्कल्प इति श्रुत्युक्तसङ्कल्पादिवृत्त्यन्तरापेक्षयेत्यर्थः । तथाच **कामादेः** कामसङ्कल्पादेरित्यर्थ उक्तो भवति । नन्वपपूर्वस्य वदतेः 'यजो वपो वहिश्चैव वेञ्व्येञौ श्वयतिस्तथा । वद्वसौ वयतिश्चैव स्मृता नव यजादय' इत्युक्तयजादिगणमध्यस्थत्वेपि 'वचिस्वपियजादीनां किती'तिसूत्रेण किति परत एव संप्रसारणोक्तेः तुमुन्प्रत्ययस्य चाकित्त्वात्कथं वकारस्य संप्रसारणम् । येन [वकारस्य]संप्रसारणेनोकारे संप्रसारणाच्चेत्यकारस्य पूर्वरूपत्वे आद्गुणे च सति अपोदितुमिति स्यादित्यत आह **छान्दसमिति** । बहुलं छन्दसीत्युक्तेरस्यापि छन्दस्तुल्यत्वादिति भावः । कुत इत्याक्षेपलब्धार्थमाह **बाधकप्रमाणाभावादिति** । तस्यासिद्धिनिरासाय संभावितमाशङ्क्य निराह **न च कौटस्थ्यमिति** । 'निर्विकारोऽक्षरः शुद्ध' इत्यादिनोक्तं निर्विकारत्वमित्यर्थः ॥ **तदिदमिति** । मनस

उपादानत्वमात्मनः स्वामित्वं स्वामित्वानुभवस्याभ्रान्तित्वम् अव्यवहारमात्रत्वमित्येतदित्यर्थः ॥ क्वचिदित्यस्य मनसः उपादानत्वादिविषय इत्यर्थकत्वादिति भावः ।

**या०— घट्टकुटीप्रभातमिति** । केचित्खलु वणिजः शुल्कमदित्सन्तः शुल्कग्राहिणो राजभृत्यान्वञ्चयित्वाऽन्येन पथा जिगमिषवो रात्रौ तं पन्थानमदृष्ट्वा इतस्ततः सञ्चरन्तो यत्र घट्टे शुल्कग्राहिणां कुटी रचिता तत्रैव प्रभाते समागताः, सोऽयं घट्टकुटीप्रभातन्यायः । नन्विच्छारूपकामस्यैवात्र प्रकृतत्वादादिपदं किमर्थमित्यपेक्षायामाह **श्रुत्यपेक्षयेति** । 'कामः सङ्कल्प' इत्यादिश्रुतौ कामादेरनेकस्योक्तत्वात्तदपेक्षयैवादिपदं प्रयुक्तं न प्रकृतापेक्षयेति भावः । नन्वपवदितुमित्येव वक्तव्यं तुमुनोऽकित्त्वेन वचिस्वपीत्यादिना संप्रसारणस्योकारस्यासंभवादित्यत आह **संप्रसारणं छान्दसमिति** । अकित्यपि संप्रसारणं छान्दसमित्यर्थः ॥ **तदिदमिति** । आत्मनः कौटस्थ्यं न बाधकमित्यादिकमित्यर्थः । अत्र क्वचिदित्यस्य केनचिदित्यर्थकत्वम् । तेनोक्तबाधकाभावलाभ इति द्रष्टव्यम् ॥

**श्री०— श्रुतीति** । 'कामः सङ्कल्प' इति श्रुतीत्यर्थः ॥ **त्यक्तमेवेति** । अचेतने इच्छाया अङ्गीकारात् । अन्यथा कामद्वैविध्यायोगादितिभावः ॥ **श्रुत्यपेक्षयेति** । तथा च कामस्य द्वैविध्येऽपि तथा 'कामः सङ्कल्प' इति मनोधर्मताप्रतिपादक'स यदि पितृलोककाम' इत्यात्मधर्मताप्रतिपादकश्रुत्योश्च द्वैविध्येऽपीत्यर्थः । नन्वपेत्युपसर्गपूर्वकात् वद व्यक्तायां वाचीतिधातोस्तुमुन्प्रत्यये आर्धधातुकस्येड्वलादेरिति इडागमे टकारलोपेऽपवदितुमिति स्यादपोदितुमिति कथमत आह **सम्प्रसारणेति** । ततश्च वकारस्योकाररूपे सम्प्रसारणे जाते तस्य च आद्गुण इत्योकाररूपे गुणे अपोदितुमिति भवतीति ध्येयम् ॥ ननु कथमत्र सम्प्रसारणम् । 'वचिस्वपियजादीनां किती'ति कितिपर एव वच्यादिभ्यो धातुभ्यः सम्प्रसारणविधानाद्वदतेश्च वच्यादिधात्वन्तर्गतत्वेऽपि तुमुन्प्रत्ययान्तत्वेन तुमुन्प्रत्ययस्य चाकित्त्वादत आह **छान्दसमिति** । अकित्यपि तुमुन्प्रत्यये परे यत्सम्प्रसारणं तच्छान्दसमित्यर्थः । **कौटस्थ्यम्** आत्मन इति शेषः । **बाधकम्** इच्छावत्त्वे ॥ **अन्तःकरणस्येति** । यद्यात्मा कामोपादानं स्यात्तर्ह्येव कौटस्थ्यं बाधकं स्यान्न चैवम् । कामं प्रति स्वामित्वमात्राङ्गीकारात् । स्वामित्वाङ्गीकारे तद्बाधकाभावः कुत इत्यत आह **स्वामित्वमात्रेणेति** ॥ **अन्यथेति** । यथेष्टविनियोक्तृत्वरूपस्वामित्वाभावे आत्मनो वैयर्थ्यापत्तेरिति । **आत्मन इति** कर्मणि षष्ठी । आत्मानं प्रति मनसो वैयर्थ्यापत्तेरित्यर्थः । यथा विद्यमानं धनमव्ययीकुर्वन्कृपणोऽस्वामी, तं प्रति तद्व्यर्थमिति यावत् । एवमात्मा स्वकीयमन्तःकरणं तत्तत्कार्येषु यथेष्टं न विनियुङ्क्ते चेत्तर्हि तं प्रति तद्व्यर्थमेव स्यादित्यर्थः ॥

**च०**— तुमुनोऽकित्वात्संप्रसारणं निर्बीजमित्याशङ्कायामाह **संप्रसारणमिति** । **कौटस्थ्यम्** । अव्याकृताकाशवन्निर्विकारत्वेनाऽवस्थितत्वम् । 'कूटं खं विदलं व्योम सन्निराकाश उच्यत' इति स्मृतेः ।

**सु०** — नन्वस्तु कामस्वामित्वमात्मन एव मा भूच्च मनसः । तथाऽपि पूर्वोत्तरविरोध-स्तदवस्थ एव । इच्छास्वामित्वाभावेऽपि यादृशतादृशस्येच्छावत्त्वस्य मनस्यङ्गीकृतत्वादित्यत आह इच्छेति ।

**अनु०** — इच्छास्वामित्वमेवोक्तमिच्छावत्त्वं न चापरम् ॥

अचेतनेच्छापगतेत्यादाविच्छास्वामित्वमेवेच्छावत्त्वमुक्तम् । न चापरमिच्छोपादानत्व-लक्षणम् । एतदुक्तं भवति । स्यादत्र पूर्वापरविरोधः । यदि यदेवेच्छावत्त्वं प्राङ्मनसो निषिद्धं तदेवात्र पुनरङ्गीक्रियेत । न चैतदस्ति । पूर्वं हीच्छास्वामित्वलक्षणमिच्छावत्त्वमात्मन एव न त्वचेतनस्येत्युक्तम् । तस्यैव कर्तृत्वोपयोगात् । श्रुत्यर्थतया त्विच्छोपादानत्वलक्षण-मिच्छावत्त्वमिदानीं मनसोऽभ्युपगम्यत इति कुतो विरोध इति ।

**श्री०** — नन्विच्छावत्त्वस्येच्छास्वामित्वरूपत्ववर्णनमुत्तरत्र क्रियते तदनर्थकम् । न च 'अचेतनेच्छापगते'त्यादावन्तःकरणे निषिद्धमिच्छावत्त्वमिच्छास्वामित्वलक्षणमिति ज्ञापनार्थत्वान्न तदिति वाच्यम् । तज्ज्ञापनस्यापि निष्प्रयोजनत्वादित्यतः कामद्वैविध्यवर्णनपर'स्योभयात्मकता यतः' इत्यस्य ग्रन्थ'स्याचेतनेच्छापगते'त्येतद्ग्रन्थेन विरोधपरिहारार्थत्वान्न तदिति भावेन विरोधशङ्का-परिहारकतया तद्योजयितुं तामुत्थापयति नन्विति ॥ यादृशतादृशस्येति । इच्छोपादान-त्वलक्षणस्येत्यर्थः । पूर्वं च तस्य निषिद्धत्वादिति भावः । ननु मनस इच्छावत्त्वस्ये-च्छोपादानरूपत्वेन इच्छास्वामित्वरूपत्वाभावात्कथ'मिच्छास्वामित्वमेवोक्तमिच्छावत्त्वं न चापरम्' इत्यवधारणमित्यतोऽपेक्षिताध्याहारेण वाक्यं योजयति अचेतनेति । नन्वचेतनेच्छापगतेत्यादाविच्छास्वा-मित्वमेवेच्छावत्त्वमुक्तं न त्विच्छोपादनत्वमिति कुतो निश्चेतुं शक्यते नियामकाभावात् । कथं चैतावताऽपि विरोधपरिहार इत्यतो नियामकं वदन्विरोधपरिहारप्रकारमाह इदमुक्तं भवतीति ॥ प्रा-गिति । अचेतनेच्छापगतेत्यादावित्यर्थः । अत्रेति । 'उभयात्मकता यतः' इत्यत्रेत्यर्थः ॥ तस्यै-वेति । इच्छास्वामित्वलक्षणस्येच्छावत्त्वस्यैवेत्यर्थः । य इच्छति स एव प्रवर्तत इति हि सर्वसम्म-तम् । न तु यदिच्छा भवति तत्प्रवर्तत इति नेच्छोपादानत्वं कर्तृत्वोपयोगि, किन्तु तत्स्वामित्वमिति भावः ॥ श्रुत्यर्थतयेति । 'कामः सङ्कल्प' इत्येतच्छ्रुत्यर्थतयेत्यर्थः ।

**प०** — श्रुत्यर्थतयेति । कामः सङ्कल्प इत्यादिश्रुत्यर्थतयेत्यर्थः ।

**श्री०** — अङ्गीकृतत्वादिति । तथा च न जडस्यान्तःकरणस्येच्छावत्त्वमिति तु युक्तमेवेत्यर्थः । तस्यैव इच्छास्वामित्वस्यैव । श्रुतीति । 'कामः सङ्कल्प' इतीत्यन्वयः ।

सु० — यद्वा कामस्य द्वैविध्येन मनसोऽपि कामवत्त्वात्कर्तृत्वमुपपत्स्यत इत्यत आह द्वैविध्येऽपीति । [ अनु. ३२७१ पृष्ठे द्रष्टव्यम् ] द्वयोः कामवत्त्वेऽपि कामस्वामित्वमात्मन एव न तु मनसः । निरपवादसाक्ष्यनुभवसिद्धत्वात् । मनसस्तु कामोपादानत्वमेवेति । ततः किमित्यत आह इच्छेति । [ अनु. ३२७५ पृष्ठे द्रष्टव्यम् ] इच्छास्वामित्वलक्षणमेवेच्छावत्त्वं प्राक् कर्तृत्वोपयुक्तमुक्तम् । न पुनरिच्छोपादानत्वलक्षणम् । यो हीच्छति स प्रयतते न तु यदिच्छा भवति तदिति । तस्मादिच्छास्वामित्वाच्चेतनस्यैव कर्तृत्वं नाचेतनस्य । तस्येच्छोपादानत्वेऽपीच्छास्वामित्वाभावादिति ।

शे० — एवमुभयात्मकता यत इति कामद्वैविध्यवर्णनस्याचेतनेच्छापगतेत्यादिपूर्वग्रन्थेन विरोधशङ्कानिवर्तकतया द्वैविध्येऽपीति भाष्यं व्याख्यातम । इदानीं द्वैविध्यवर्णनेन प्रसक्ताचेतनकर्तृकत्व-निरासाक्षेपपरिहारकतयाऽपि तद्व्याख्यातुं तदाक्षेपशङ्कामुत्थापयति यद्वेति ॥ साक्ष्यनुभवेति । अहं कामय इति साक्ष्यनुभवेत्यर्थः । ननूक्तानुभवस्य भ्रमत्वाद्व्यवहारमात्रत्वाद्वा न साधकत्वमित्यतो बाधकाभावान्न भ्रमत्वादीत्याशयेनोक्तं निरपवादेति । हेतुगर्भं चेदं विशेषणम् । न च कौटस्थ्यमेव बाधकमिति वाच्यम् । तद्विघातकस्येच्छोपादानत्वस्यानभ्युपगमात् । अभ्युपगतस्य च कामस्वामित्वस्य तदविघातकतायाः प्रागुपपादितत्वेन तदप्रसङ्गादिति भावः । उपयोगमेवोपपादयति यो हीति । अनुपयोगमप्युपपादयति नत्विति ॥

प० — अव्यवहितपूर्वग्रन्थसङ्गततयेदानीं योजयति यद्वा कामस्येति ।

श्री० — स्वामित्वं स्वामितया कर्तृत्वमित्यर्थः । साक्ष्यनुभवेति । कामये इत्येवंरूपेत्यर्थः । इच्छावत्त्वस्य कर्तृत्वोपयुक्ततामुपपादयति यो हीति । इच्छति इच्छावान्भवति । यतते । यत्नवत्त्वमेव कर्तृत्वमिति हृदयम् । न पुनरित्युक्तमुपपादयति नत्विति ॥ यदिति । यदिच्छाऽभिन्नं भवति तन्न प्रयतते, यत्नवत् कर्तृ न भवतीत्यर्थः । ततश्चान्तःकरणस्य तु इच्छोपादानत्वेनेच्छाऽभिन्नत्वाङ्गीकारान्न तद्वत्त्वेन कर्तृत्वमिति भावः ।

सु० — स्यादेतत् । स्वं नाम तद्भवति, यद्यथेष्टविनियोगयोग्यम् । यथा गवादि । स्वामी च स उच्यते यो यथेष्टविनियोक्ता । न चेच्छात्मनोरेतदस्ति । यस्मादास्तिककामुकस्य निषिद्धेच्छां नियच्छतोऽपि (इच्छा) साऽऽविर्भवति । प्रयतमानस्यापि विहितेच्छा नोदेति । तत्कथमिच्छास्वामित्वमात्मनः स्यादिति चेत् । किमिच्छाऽऽत्मनः सर्वथापि वशा न भवति

**इत्युच्यते । उत किञ्चिद्वशत्वमङ्गीक्रियते । नाद्यः । अनुभवविरोधात् । इच्छति देवदत्त इत्यादिव्यवहारविरहप्रसङ्गाच्च । द्वितीये तु सिद्धं स्वामित्वमित्याह** किञ्चिदिति ।

**अनु०**— किञ्चित्तद्वशगत्वेऽपि स्वामित्वं लोकवद्भवेत् ॥

**प्रबलविरोधिवशादत्यन्तवशत्वाभावेऽपीच्छायाः किञ्चिदात्मवशत्वमात्रेणापि तां प्रत्यात्मनः स्वामित्वं भवेदे(वत्ये)व । कथम् । यथाऽत्यन्तमवशायामपि गवि किञ्चिद्वशत्वमात्रेण देवदत्तस्वामित्वं लोके दृष्टं तथैव । अन्यथा तदपि न स्यादिति ।**

**शे०**— ननु किञ्चित्तद्वशगत्वेऽपीत्युत्तरभाष्यमनर्थकम् । न चेच्छायाः किञ्चिदात्माधीनत्वमात्रेणात्मवशत्वोपपादनार्थं तदिति वाच्यम् । आत्मन इच्छास्वामित्वेन मुख्यस्यैव तद्वशत्वस्य संभवेन किञ्चित्तद्वशत्वपर्यन्तधावनानर्थक्यादित्यतः पूर्वोक्तेच्छास्वामित्वासंभवशङ्कानिरासार्थत्वान्न तदिति भावेन तच्छङ्कानिरासकतयोत्तरभाष्यं योजयितुमात्मेच्छयोः स्वस्वामिभावानुपपत्तिशङ्कामुत्थापयति **स्यादेतदिति** । तत्कुत इत्यतस्तथा लोके दर्शनादित्याह **यथेति ॥ य इति** । तथा देवदत्तादौ दृष्टत्वादिति भावः । **एतत्** यथेष्टविनियोगयोग्यत्वं **यथेष्टविनियोक्तृत्वं** चेत्येतदित्यर्थः । उभयत्रापि क्रमेण हेतुमाह **यस्मादिति ॥ सेति** । निषिद्धेच्छेत्यर्थः ॥ **प्रयतमानस्यापीति** । विहितेच्छयामिति शेषः । नन्वात्मेच्छयोः स्वस्वामिभावानुपपत्तिशङ्कायाः सर्वथेच्छाया आत्मानधीनत्वे तात्पर्यं, न तु किञ्चित्तद्वशत्वाङ्गीकार इति कथमुत्तरग्रन्थसङ्गतिरित्यतो नेदं तत्पक्षदूषणं, किन्तु किञ्चित्तद्वशत्वाङ्गीकारपक्षदूषणमेवेति नोत्तरग्रन्थासङ्गतिरित्यभिप्रेत्य संभावितविकल्पद्वयं प्रदर्श्याद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतया मूलं योजयितुं तावद्विकल्पयति **किमित्यादिना** । अनुभवे विवदमानं प्रति दोषान्तरमप्याह **इच्छतीति ॥ अन्यथेति** । इच्छायाः किञ्चिदात्मवशत्वमात्रेण तां प्रत्यात्मनः स्वामित्वानभ्युपगम इत्यर्थः । **तदपि** गोस्वामित्वमपि । देवदत्तं प्रति गोरप्यत्यन्तवशत्वाभावादिति भावः ।

**प०**— इच्छास्वामित्वानुभवे विवदमानं प्रत्याह **इच्छति देवदत्त इत्यादीति** । इच्छतीत्यत्र स्वतन्त्रः कर्तेत्युक्तलकारव्यवहारस्य स्वामित्वव्यवहाररूपत्वादिति भावः । लोकवदित्येतत्प्रश्नपूर्वं व्यनक्ति **कथमित्यादिना ॥ अन्यथेति** । किञ्चिद्वशत्वमात्रेण स्वामित्वाभावे गोः स्वामित्वमपि न स्यादित्यर्थः ।

**श्री०**— **एतत्** विनियोज्यत्वं विनियोगयोग्यत्वं विनियोक्तृत्वं चेत्यर्थः ।

**सु०**-- **नन्वेवं सत्येकं सन्धि(दि)त्सतो(परं प्रच्य)न्यच्च्यवत इत्यापन्नम् । अचेतनस्य कर्तृत्वं निराकर्तुमात्मन एवेच्छास्वामित्वं न तु मनस इति समर्थितम् । तर्हीश्वरस्यापि कुला-**

लादिमनोवृत्तीच्छां प्रति स्वामित्वं नास्तीति घटादिकर्तृत्वं न स्यात् । तथा चेतरव्यपदेशादि-त्यधिकरणविरोध इत्यत आह सर्वात्मेति ।

अनु० — सर्वात्मतन्त्रकामादेः किमुतैव परेशितुः ॥

यदा जीवस्यापि कामादिस्वाम्यं तदा सर्वात्मना तन्त्रमधीनं कामादि यस्यासौ तथोक्तः । सर्वेषामात्मनां तन्त्रं साधनं यः कामस्तस्यादिः कारणं तस्य परेशितुः कामस्वामित्वं किमुतैव वक्तव्यम् । एतदुक्तं भवति । जीवेश्वरौ द्वावपि शरीरमधितिष्ठतः । तत्रेश्वरोऽन्तःकरणं स्पष्टं दृष्ट्वा तत्र ज्ञानेच्छाप्रयत्नरूपा वृत्तीः स्वेच्छाज्ञानप्रयत्नैरुत्पाद्य बाह्यकरणानि चाधिष्ठाय घटाद्यु-त्पादयति । जीवस्तु तद्दत्तस्वाम्योऽवतिष्ठते । यथोक्तं 'बुद्धिर्ज्ञानमि'त्यादि । तस्मादीश्वरस्यैव मुख्यं स्वाम्यं कर्तृत्वं च । जीवस्य त्वमुख्यमेवेति । तथा चोक्तम् 'स्वस्वामिभावो ध्रुव एष यत्र तर्ह्यच्युतेऽसाविति कृत्ययोग' इति ।

शे०—नन्विच्छायाः किञ्चिदात्मवशत्वमात्रेणात्मन इच्छ स्वामित्वसिद्ध्या प्रकृताक्षेपपरिहारादी-श्वरस्य सर्वात्मना कामादिनियामकत्ववर्णनमनर्थकमित्यतोऽस्येश्वरस्य घटादिकर्तृतासमर्थनार्थत्वान्न तदिति भावेन तदुपपादकतया तद्योजयितुं तस्य कर्तृत्वानुपपत्तिशङ्कामुत्थापयति नन्विति ॥ स्वामित्वं नास्तीति । कुलालादीनामेव तदीयमनोवृत्तीच्छां प्रति स्वामित्वेनेश्वरस्य कुलालादिमनोवृत्तीच्छां प्रति स्वामित्वाभावादित्यर्थः । कर्तृत्वं न स्यादित्युपलक्षणम् । कुलालादीनामेव कर्तृत्वं स्यादित्यपि द्रष्टव्यम् । उभयत्रापीष्टापत्तिं निरस्यति तथा चेति । तत्र घटादावपि जीवानां न मुख्यकर्तृत्वं किन्तु ईश्वरस्यैवेति समर्थितत्वादिति भावः । नन्वीश्वरस्य कुलालादिमनोवृत्तिरूपकामं प्रति कथं कैमुत्येन स्वामित्वसिद्धिः । तत्सूचकाभावात् इत्यत कुलालादिमनोवृत्तिकामं प्रति कुलालादीनां स्वामित्वस्यैव तत्सूचकत्वान्नानुपपत्तिरिति भावेनापेक्षितं कैमुत्यसूचकप्रदर्शनपूर्वकं कैमुत्यसमर्पकतया योजयति यदेति ॥ सर्वात्मनेति । सृज्यत्वादिसर्वप्रकारेणेत्यर्थः । सर्वप्रकारेण स्वामित्वमपीश्वरस्य न यत्किञ्चिन्मनोवृ-त्तीच्छां प्रत्येवेति मन्तव्यम् । किन्तु सर्वात्ममनोवृत्तिरूपकामं प्रत्यपीत्यर्थविशेषसमर्पकतयाऽपि तदेव योजयति सर्वेषामिति । साधनमित्यतःपूर्वं घटादिप्रवृत्ताविति शेषः । ननु कुलालादिशरीरेऽसत ईश्वरस्य कथं तदीयमनोवृत्तिरूपकामस्वामित्वं येन घटादीन्प्रति तस्य कर्तृत्वं स्यात् । तत्र सत्त्वेन तत्स्वामितयेश्वरस्य तत्कर्तृत्वेऽपि वा कथं तस्यैव घटादीन्प्रति मुख्यं कर्तृत्वमुभयोरपि कामस्वामितया स्वामित्वे विशेषाभावेन तत्प्रयुक्तकर्तृताया अप्येकरूपत्वस्यैव न्याय्यत्वात् । तथा च नेतरव्यपदेशादि-त्यधिकरणविरोधपरिहार इत्यत आह एतदुक्तं भवतीति । शरीरं कुलालादिशरीरमित्यर्थः । स्यादेवं यदीश्वरस्येच्छाज्ञानप्रयत्नैर्जीवशरीरे ज्ञानेच्छाप्रयत्नोत्पादकत्वं सिद्धं स्यात्तदेव कुत इत्यत आह यथोक्त-

**मिति** । आदिपदेनासम्मोह इत्यादिकस्य 'भवन्ति भावा भूतानां मत्त एव पृथग्विधा' इत्यन्तस्य वाक्यस्य संग्रहः । अत्रेच्छाप्रयत्नयोरुपलक्षणया बुद्ध्यादिग्रहणम् । अन्यथा भावा इति सर्वसंग्राहकपदास्वारस्यप्रसङ्गादतोऽस्य प्रकृतसङ्गतिरिति ध्येयम् । जीवस्यामुख्यकर्तृत्वमीश्वरस्यैव च मुख्यकर्तृत्वमित्यत्र भागवतसम्मतिमाह **तथा चोक्तमिति** । तद्वाक्यं पठति **स्वस्वामिभाव इति** । रहूगणं प्रति भरतवाक्यमिदम् । स्वस्वामिभावोऽच्युते हरावेव ध्रुवो मुख्योऽन्यत्र तु भृत्यतैव । नन्वेवं तर्हि देवेषु श्रुत्यादिप्रसिद्धः स्वस्वामिभावः कथमित्यत उक्तं **यत्रेति** । यत्र देवेष्वेषः श्रुत्याद्युदितः स्वस्वामिभावः तर्हि तत्रासावच्युते सत्येव, तत्प्रेरणयैवेति यावत् । यत्र यस्मादेवं तर्हि तस्मादेषः त्वदादौ मानुषे दृश्यमानः स्वस्वामिभावोऽध्रुवोऽमुख्यो व्यावहारिक इति तस्मादीश्वरादन्यत्र **कृत्ययोगः** कृतेः कर्तृत्वस्य अयोगो मुख्यतो घटना नेत्यर्थः । यथोक्तम् । 'स्वामित्वं तु हरेरेव मुख्यमन्यत्र भृत्यता । देवेषु तन्नियत्या च त्वदादौ व्यावहारिकमि'ति । यद्वा यत्र यद्येष स्वस्वामिभावो ध्रुवः सत्य इति त्वयोच्यते तर्ह्यसावच्युते हरावेव मुख्य इत्युच्यताम् । एष सर्वेश्वर इति श्रुतेः । न त्वयि तवास्मास्वेकत्व द्भृत्यत्वमेव मुख्यम् । तदप्युक्तं 'स्वामित्वं तु हरेरेव मुख्यमन्यत्र भृत्यते'ति । एष राजा दण्डनायेति वचनादच्युते मुख्यत्वं कथमत्राह **इतीति** । 'मम स्वामी हरिर्नित्यं सर्वस्य पतिरेव चे'ति स्मृतेः । सन्ध्योपासनादिवन्मम स्वामी हरिरितीतिकर्तव्यतालक्षणो योग उपासनं हरावेव विहितमिति यस्मात्तस्मादिति शेषः । ध्रुव इति विशेषणात् ध्रुवत्वस्यैव न्याय्यत्वाच्चेति ।

प० — **सं[दि]धित्सत इति** । सं[दा]धातुमिच्छत इत्यर्थः । **घटादिकर्तृत्वं न स्यादिति** । घटादिकृतीच्छास्वामित्वस्यैव घटादिकर्तृत्वोपयोगित्वात् तस्य च कुलालादिमात्रनिष्ठत्वप्राप्तेरिति भावः ॥ **इत्यधिकरणेति** । जन्माधिकरणोक्तमीशस्य सर्वकर्तृत्वं युक्तं उतायुक्तमितिविशये जीवस्य महदादावपि कर्तृत्वेऽनुभवविरोधेन तत्रेशस्य कर्तृत्वेऽपि न घटादौ । तत्र कुलालादेरेव कर्तृत्वेऽनुभवसिद्धे सति ईशस्यापि कर्तृत्वोपगमे गौरवान्न युक्तमिति प्राप्ते जीवस्यैव स्वतन्त्रकर्तृत्वे हिताकरणाहितकरणकृत्स्नप्रसक्त्यादिदोषप्राप्तेः अचिन्त्यशक्त्युपेतो भगवानेव घटादिकार्येष्वनन्याधीनकर्ता न जीवः इति युक्तं विष्णोः सर्वकर्तृत्वमिति प्रागुक्तत्वादिति भावः ॥ **सर्वात्मनेति** । अनन्यापेक्षयेत्यर्थः । प्रकृतत्वाज्जीवाधीनकार्यमात्रहेतुत्वपरतयाऽपि व्याचष्टे **सर्वेषामिति** । यद्वा कामादेर्जीवानुबन्धित्वप्रतीतेः योजनान्तरमाह **सर्वेषामिति** । **साधनमिति** । घटादिकार्यसाधनमित्यर्थः । अस्मिन्नर्थे संमतिमाह **यथोक्तमिति** । 'बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः । सुखं दुःखं भवो भावो भयं चाभयमेव च । अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः । भवन्ति भावा भूतानां मत्त एव पृथग्विधा' इति दशमगीतायां कामादिवृत्त्यादीनामपीशकारणकत्वमुक्त-

मित्यर्थः । इच्छाकृत्योरपि अत्रोपलक्षणादिति वा, भावा इत्यत्र ग्रहणादिति वाऽभिप्रायः ॥ **अमुख्य-मिति** । इच्छास्वामित्वं कर्तृत्वं चेत्यनुषङ्गः ॥ **तथा चोक्तमिति** । पञ्चमस्कन्धे दशमेऽध्याये रहूगणं प्रति ब्रह्मकुलोत्पन्नेन जडभरतेन ईशस्य मुख्यकर्तृत्वं जीवस्यामुख्यकर्तृत्वमुक्तमित्यर्थः । एषः स्वामिनः मे शासनं किमिति त्वं नानुवर्तस इति मां प्रति त्वयोक्तः स्वस्वामिभावः भृत्यस्वामिसंबंधः, ध्रुवः स्थिरः कदाऽप्यनिवर्त्यः अत एव मुख्योऽत्र यद्यभिमतः तर्ह्यसौ स्वामिभावः अच्युते हरौ वर्तते । मुख्य-स्वामित्वं हरौ, अन्यत्र त्वदादिजीवेषु भृत्यत्वमेवेत्यर्थः । येन त्वयि स्वामित्वभ्रमेण भर्तुर्ममाज्ञामति वर्तस इति मामब्रवीरिति भावः । उक्तं हि । 'स्वामित्वं तु हरावेव मुख्यमन्यत्र भृत्यते'ति । कुत एवं हरावेव मुख्यस्वामित्वमित्यतो मुक्तिहेतुध्यानविषयत्वादिति भावेनोक्तम् **इतिकृत्ययोग इति** । **इति कृत्यः** = इति कर्तव्यभूतः । साधनभूत इति यावत् । मोक्षेति योग्यतयान्वेति । योगः ध्यानम् । विषयविषयिणोरभेदोपचारेणायं निर्देशः । हेतुगर्भमिदम् । 'मम स्वामी हरिर्नित्यमि'त्येवं-रूपमुक्तिहेतूपासनाविषयत्वाद्धरौ स्वामिभावो मुख्यः, अन्यत्र भृत्यभाव एवेति तात्पर्यार्थः ।

या० — **तथा चेतरेति** । तत्र घटादावपि जीवानां न मुख्यकर्तृत्वं किन्त्वीश्वरस्यैवेति सम-र्थितत्वादिति भावः । **सर्वात्मनेति** । स्रष्टृत्वादिसर्वप्रकारेणेत्यर्थः । इदमपि नैकस्मिन् जीवे किन्तु सर्वेष्वपीत्यर्थपरतयाऽपि मूलं योजयति **सर्वेषामात्मनामिति** । साधनमित्यतः पूर्वं घटाद्युत्पत्ताविति शेषः । ईश्वरस्यैव सर्वात्मना ज्ञानादिस्रष्टृत्वमित्यत्र भगवद्गीतासंमतिमाह **यथोक्तमिति** । 'बुद्धिर्ज्ञानमि'-त्यादीत्यादिपदेन 'भवन्ति भावा भूतानां मत्त एव पृथग्विधा' इत्यन्तस्य ग्रहणम् । अत्रेच्छाप्रयत्नाव-प्युपलक्षणया विवक्षितौ । अन्यथा 'भावा' इति सर्वसंग्राहकपदास्वारस्यात् । अतः प्रकृतसङ्ग-तिरिति ध्येयम् । जीवस्य त्वमुख्यमेवेत्यत्र भागवतसम्मतिमाह **तथा चोक्तमिति** ॥ **स्वस्वामि-भाव इति** । रहूगणं प्रति भरतवाक्यमिदम् । 'स्वस्वामिभावोऽच्युते हरावेव ध्रुवो मुख्यः । अन्यत्र तु भृत्यतैव । नन्वेवं देवेषु श्रुत्यादिप्रसिद्धः स्वस्वामिभावः कथमित्यत उक्तं **यत्रेति** । यत्र देवेष्वेषः श्रुत्याद्युदितः स्वस्वामिभावस्तर्हि तत्र असौ अच्युते सत्येव तत्प्रेरणयैवेति यावत् । यस्मादेवं तर्हि तस्मा-देष त्वदादौ मानुषे दृश्यमानः स्वस्वामिभावोऽध्रुवोऽमुख्यो व्यावहारिक इति तस्मादीश्वरादन्यत्र कृत्य-योगः कृतेः कर्तृत्वस्यायोगो मुख्यतो घटना नेत्यर्थः । यथोक्तम् । 'स्वामित्वं तु हरेरेव मुख्यमन्यत्र भृत्यता । देवेषु तन्नियत्या च त्वदादौ व्यावहारिकमिति' ।

श्री० — **नास्तीति** । कुलालादेरेव तत्स्वामित्वादिति भावः ॥ **प्रयत्नैरिति** । निमित्तकारण-भूतैरित्यर्थः ॥ **यथोक्तमिति** । तत्र 'भवन्ति भावा भूतानां मत्त एव पृथग्विधा' इत्युक्तेरिति भावः ।

च० — **यथोक्तमिति** । गीतायामित्यर्थः ।

सु० — यदुक्तं निरपवादानुभवबलादात्मन एवेच्छास्वामित्वमिति । तदयुक्तम् । कामः सङ्कल्प इति मनसः कामस्वामित्वाभिधात्र्याऽपौरुषेयत्वेन बलवत्या वेदवाचैवापोदितत्वादित्यत आह न चेति ।

अनु० — न चानुभवगं कामस्वामित्वं वेदवागपि ।
शक्तापवदितुं

कामस्वामित्वमात्मन इति शेषः । कामाद्यनुवादेन खल्वियं वेदवाक् आत्मोपादानत्वं वैशेषिकादिमतप्राप्तं वारयितुं तेषां मनोरूपत्वमाचष्टे । कामादिस्वरूपं च साक्ष्यनुभवेनैव सिद्धमिति तस्योपजीव्यत्वम् । स च तानात्मस्वामिकानेव विषयीकरोति । न चोपजीवक-मुपजीव्यमपवदितुं शक्नोति । वेदस्योत्सर्गतो बलवत्त्वेऽप्युपजीव्यापेक्षया दौर्बल्यमेव । यथा आहुः । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम् । उपजीव्यविरोधे तु न प्रामाण्यममुष्य च' इति । अतो न श्रुतेरनुभवापवादकत्वं युक्तमिति ।

तर्हि श्रुतेः का गतिरित्यत आह तस्मादिति ।

तस्मात्सा तदन्याभिधायिनी ॥

उपजीव्यत्वेन बलवताऽनुभवेन बाधितत्वादित्यर्थः । तदन्याभिधायिनी स्वामित्वा-दन्यस्योपादानत्वस्याभिधायिनी ।

शे० — ननु 'न चानुभवगं कामस्वामित्वं वेदवागपि । शक्तापवदितुमि'त्यहं कामय इत्यात्मस्वामि-त्वानुभवस्य श्रुतिबाधितत्वाभाववर्णनमनर्थकमित्याशङ्क्य 'साक्षादनुभवरूढं शक्यतेऽपोदितुं क्वचिदि'ति पूर्वोक्तस्य निरपवादसाक्ष्यनुभवसिद्धत्वस्य श्रुतिबाधितत्वेनासिद्धिशङ्कापरिहारार्थत्वान्न तदिति भावेन तद-सिद्धिशङ्कापरिहारकतया तद्योजयितुमात्मनः कामस्वामित्वानुभवस्यापवादशङ्कामुत्थापयति यदुक्तमिति । श्रुतेरनुभवबाधकत्वोपयोगिनीं तद्विरुद्धविषयतामुपदर्शयितुमुक्तं मनसः कामस्वामित्वाभिधात्र्येति । एत-सत्वं मन एवेति श्रुतावधारणेन मनसः कारकान्तराप्रयोज्यत्वरूपस्वातन्त्र्योक्तिमभिप्रेत्येदमुक्तमिति ध्येयम् । विपरीत एव बाध्यबाधकभावः किन्न स्यादित्यतः श्रुतेरपौरुषेयतया निर्दोषत्वेन बलवत्त्वात्प्रत्यक्षस्य च पौरुषेयतया संभावितदोषत्वेन दुर्बलत्वान्नैवमिति भावेनोक्तम् अपौरुषेयत्वेन बलवत्येति । उक्ताक्षेपस्य मूलारूढतासिद्ध्यर्थमपेक्षितं पूरयति आत्मन इति शेष इति । कुतो न शक्तेत्यतः श्रुतेः कामादिस्व-रूपग्राहकानुभवोपजीवनेन प्रवृत्तत्वेनानुभवोपजीवकत्वान्न तद्बाधकत्वमित्यभिप्रेत्य कामादिस्वरूपस्यापि श्रुत्यैव सिद्धत्वेन तत्स्वरूपग्राहकप्रत्यक्षोपजीवकत्वमेवासिद्धमित्यतो भवेदेवं यदि श्रुतेः कामादिस्वरूप-

बोधकत्वमपि स्यात् । न चैवम् । तथा सति श्रुतेरुभयत्र व्यापारापत्त्या गौरवप्रसङ्गात् । किन्तु लाघवात्तेषां मनोरूपत्वाभिधायकत्वमेवेत्यभिप्रेत्य किं तदुक्त्याऽपीत्यतस्तदुक्तेः प्रयोजनं तावद्दर्शयति **कामाद्यनुवादेनेति ॥ वारयितुमिति** । मनसोऽचेतनतया तदुपादानत्वसंभवेऽप्यात्मनश्चेतनत्वेन ईश्वरवत् कामाद्युपादानत्वायोगादिति भावः । अस्तु श्रुतेः कामादिस्वरूपानुवादेन तेषां मनोरूपत्वाभिधायकत्वं किमेतावतेत्यत आह **कामादिस्वरूपं चेति ॥ साक्ष्यनुभवेनैवेति** । 'न कश्चिद्धि तत्र संशयवान्कचिदि'ति वक्ष्यमाणन्यायादिति भावः । अस्तु कामादिस्वरूपग्राहकस्यानुभवस्य श्रुतिं प्रत्युपजीव्यत्वं, तथाऽपि कुतो न श्रुतेस्तद्बाधकत्वमित्यत उपजीव्यविरुद्धत्वादित्यभिप्रेत्य तद्विरोधमुपपादयति **स चेति** । अस्त्वेवमुपजीव्योपजीवकभावो विरुद्धत्वं च । श्रुत्याऽनुभवबाधोऽस्त्वित्यत आह **न चेति** । तस्य तदपेक्षया दुर्बलत्वादिति भावः । न चागमस्य प्रत्यक्षापेक्षया प्राबल्यस्य 'प्राबल्यमागमस्यैव' इत्यादिना सिद्धत्वादनुभवबाधकत्वमस्त्वित्यत आह **वेदस्येति** । अयमर्थः । येन विना यस्यानुत्थानं तत्तस्योपजीव्यम् । यथा जीवादिस्वरूपग्राहकमभेदागमं प्रति । तथा चोपजीवकविरोधेनोपजीव्यस्याप्यप्रामाण्ये सत्युपजीव्यस्य विषयो न सिध्येत् । विषयाभावे चोदयाभावेनाबोधकत्वलक्षणमप्रामाण्यं प्राप्नोति । यद्धि स्वयं नोदेतुमलं नापि बोधयितुं कथं तदुपजीव्यमप्रमाणीकुर्यादित्यतोऽनपेक्षतया प्रबलस्योपजीव्यस्य विरोधेन सापेक्षतया दुर्बलस्योपजीवकस्य वेदस्यैवाप्रामाण्यमिति । जात्या प्रबलस्याप्युपजीव्यप्रत्यक्षापेक्षया दौर्बल्यमित्यत्र संमतिमाह **यथाऽऽहुरिति** । यद्यप्युपजीव्यविरोधे त्वित्येतदेव विवक्षितार्थसाधकं तथाऽपि तत्रत्यामुष्येति पदार्थप्रतिपत्त्यर्थं पूर्ववाक्योदाहरणमिति द्रष्टव्यम् ॥ **अत इति** । आगमस्यानुभवोपजीवकतया तदपेक्षया दुर्बलत्वादित्यर्थः ॥ **तर्हीति** । अपौरुषेयतयाऽनाशङ्कितदोषस्य वेदस्य सर्वथा निर्विषयत्वरूपाप्रामाण्यायोगादिति भावः ।

**प० — कामस्वामित्वाभिधात्र्येति** । कामःसङ्कल्प इत्यारभ्यैतत्सर्वं मन एवेति तादात्म्योक्तिरुपादानत्व इव राजा राष्ट्रमित्यादिवत्स्वस्वामिभावेनाप्युपपद्यते । तत्रोपादनत्वार्थकत्वे प्रयोजनाभावात्स्वस्वामिभाव एव श्रुत्यर्थ इति शङ्कितुरभिप्रायः ॥ **यथाहुरिति** । तत्वनिर्णयोक्तब्रह्मतर्कस्मृतिकर्तार इत्यर्थः । **जात्येति** । उत्सर्गेत इत्यर्थः । **तेषु त्रिषु** प्रागुक्तप्रत्यक्षानुमानागमेषु ॥ **अमुष्य इति** । जात्या प्रबलस्यागमस्येत्यर्थः ।

**या० — कामस्वामित्वाभिधात्र्येति** । एतत्सर्वं मन एवेति कामादेर्मनोरूपत्वं ह्यत्रोच्यते । न च तन्मुख्यं संभवति । अतो 'यदधीना यस्य सत्ता तत्तदित्येव भण्यत' इति वचनात्कामादेर्मनोऽधीनत्वेनैव मनोरूपत्वमत्रोच्यत इति वाच्यम् । ततश्चेयं श्रुतिर्मनसः कामादिस्वामित्वाभिधात्रीत्यर्थः ।

श्री० — **आत्मोपादानत्वम्** आत्मसमवायिकारणकत्वम् । **तस्य** साक्षिणः, 'कामः सङ्कल्प' इति वेदवाक्यस्य । **स च** साक्षी । **तान्** इच्छादीन् ।

च० — **यथाहुरिति** । तत्त्वनिर्णयोदाहृतब्रह्मतर्कस्मृतिप्रणेतार इत्यर्थः । **जात्या** उत्सर्गतः ॥

सु० — **न केवलमुपजीव्यबाधात् किन्तूपपत्तिविरोधाच्चेत्याह** मोक्षकाम इति ।

अनु० — मोक्षकामो भवेदन्यो यदि मुक्ताद्भविष्यतः ॥

**यदि कामोऽन्तःकरणकर्तृकः स्यात्तदा मोक्षकामोऽप्यन्तःकरणस्यैव स्यात् । मोक्षस्तु आत्मन इति च प्रसिद्धम् । तथा च यो मुक्तो भविष्यति तस्मादन्य एव मोक्षकाम इत्युक्तं स्यात् । कामस्यान्यगतत्वे साधनानुष्ठाताऽप्यन्य एवेत्यङ्गीकर्तव्यम् । फलकामनासाधनानुष्ठानयोरेकनिष्ठत्वदृष्टेः । तथा चाकृताभ्यागमकृतविप्रणाशप्रसङ्गः ।**

शे० — ननु मोक्षकाम इत्युत्तरभाष्यमनर्थकम् । न च कामः सङ्कल्प इति श्रुतेर्मनसः कामस्वामित्वाभिधायित्वाभावोपपादनार्थं तदिति वाच्यम् । उपजीव्यानुभवबाधितत्वेनैव तत्सिद्ध्या तस्य वैयर्थ्यादित्यतस्तत्राकृताभ्यागमकृतविप्रणाशप्रसङ्गरूपयुक्त्यन्तरसूचकत्वान्न वैयर्थ्यमित्यभिप्रेत्य तत्सूचकतयोत्तरग्रन्थं योजयति **न केवलमिति** । नन्वत्र वाक्ये भविष्यतो मुक्तादन्यस्यान्तःकरणस्य मोक्षकामपक्षे तस्यापि प्रयोजनं स्यात् । तच्च नास्त्यतो न तस्य मोक्षकाम इत्युच्यते । तदयुक्तम् । अन्तःकरणस्य कामाभ्युपगमेऽपि मोक्षकामस्यानभ्युपगमेन मोक्षस्याप्यात्मगतत्वासिद्ध्या च भविष्यतो मुक्तान्मोक्षकामो यद्यन्यः स्यादित्यापादकस्यासिद्धत्वात् । अस्तु वा कथञ्चित्तत्सिद्धिः । तथाऽपि साधनानुष्ठानस्य मनोगतत्वप्रापकाभावेनात्मगतत्वसंभवात् अकृताभ्यागमकृतविप्रणाशप्रसङ्गात् तद्द्युक्तेर्मूलादलाभ एवेति नोक्तयुक्त्यभिधायकत्वमस्य ग्रन्थस्येत्यतः तद्युक्तिसमर्पकतासिद्ध्यर्थमपेक्षिताध्याहारेणापादकसमर्पकतया तावद्वाक्यं योजयति **यदीत्यादिना** ॥ **मोक्षकामोऽपीति** । तस्यापि कामत्वादिति भावः । एवमन्तःकरणस्य मोक्षकाममुपपाद्य तस्य मुक्तादन्यत्वमुपपादयितुं मोक्षस्यात्मगततामुपपादयति **मोक्षस्त्विति** । मूले व्याप्योक्त्या तद्व्यापकस्य साधनानुष्ठातुरन्यत्वस्यापि सूचितत्वात्तत्सिद्धिरित्यभिप्रेत्य मनसः साधनानुष्ठातृतामुपपादयति **कामस्येति** । किमेतावता सिध्यतीत्यतो मूलग्रन्थस्यापेक्षितयुक्तिसमर्पकतेत्यभिप्रेत्य अभिप्रेतां युक्तिमुपन्यस्यति **तथा चेति** ।

प० — पूर्वार्धं योजयति **तथा च यो मुक्त इत्यादिना** । 'मोक्षकामो भवेदन्य' इत्युक्त्यैव साधनानुष्ठाताप्यन्य इति प्राप्तमेवेति भावेनाह **कामस्येति** ॥ **अन्येति** । मुक्तादिति योज्यम् ॥ **एकनिष्ठत्वदृष्टेरिति** । योऽहं कामये सोऽहं साधनमनुतिष्ठामीत्येकनिष्ठत्वानुभवादित्यर्थः ॥ **अकृतेति** । आत्मनः स्वेनाननुष्ठितस्य साधनस्य प्राप्तिः स्यात् । अन्यथा मोक्षभाक्त्वायोगात् । साधनाभावे साध्य-

प्राप्तेरसंभवात् । येनात्मा ऽन्येन साधनं कृतं तस्य विप्रणाशः स्यात् । तत्साध्यफलस्य तस्मिन्ननुष्ठातरि कदाप्यभावादित्यर्थः ।

**श्री०—** **बाधात्** सा तदन्याभिधायिनीत्यर्थः । **मोक्षकाम इति** । मोक्षकामनावानित्यर्थः । कुत इत्यत आह **फलेति** । ततोऽपि किमित्यत आह **तथा चेति** । मोक्षसाधनं किमप्यात्मना न संपादितं तथाऽप्यात्मनो भवति मोक्ष इत्यकृतस्यासंपादितसाधनस्य मोक्षस्यागम आत्मनः स्यात् । तथा अन्तःकरणेन कृतस्य मोक्षकामनया साधनानुष्ठानस्य विनाशः स्यात् । फलाभावेन व्यर्थतैव स्यादिति यावदिति भावः ।

**सु०— ननु नायं दोषः । पुरुषविमोक्षार्थं प्रकृतिप्रवृत्त्यभ्युपगमात् । दृश्यते हि परप्रयोजनार्थं जनानां प्रवृत्तिरिति । अत्रेदमुपतिष्ठते** मोक्षकामस्येति ।

**अनु०—** मोक्षकामस्य किं तेन

**उपलक्षणमेतत् । साधनानुष्ठातेत्यपि द्रष्टव्यम् । परप्रयोजनार्थं प्रवर्तमानाः खलु लोके दृष्टमदृष्टं वा किमपि प्रयोजनमनुसन्दधानाः प्रायेणोपलब्धाः । तथाऽत्रापि प्रकृतेः प्रयोजनेन भाव्यम् । न च तदस्तीत्यर्थः ।**

**शे०—** एवमापादकसमर्पकतया मूलं योजयित्वा तर्हि तावतैवोक्तयुक्तिविरोधसूचनसिद्धेः पुनस्तेन मनसः प्रयोजनापादनानर्थक्यमित्यतः शङ्कान्तरनिवर्तकत्वान्न तदितिभावेन शङ्कान्तरनिवर्तकतया तत्सार्थक्यमुपदर्शयितुं तां शङ्कामुत्थापयति **नन्विति** ॥ **अत्रेदमिति** । अत्रापीदमित्यर्थः । विशिष्टस्यापादकस्य मूले साक्षादनुक्तेस्तल्लाभायापेक्षितमुपलक्षणतया पूरयति **उपलक्षणमिति** । परप्रयोजनार्थकजनप्रवृत्तौ व्यभिचारान्न प्रयोजनापादनमुपपन्नमित्यतः तत्राप्यापाद्यस्य सत्त्वान्न व्यभिचार इत्यभिप्रेत्य व्याप्त्युपपादनपूर्वं मोक्षकामस्य किं तेनेत्यापाद्यप्रदर्शनपरं मूलं व्याचष्टे **परप्रयोजनार्थमित्यादिना** ॥ **प्रयोजनमिति** । स्वसंबन्धिप्रयोजनमित्यर्थः । ईश्वरे स्वप्रयोजनानुसन्धानाभावेऽपि प्रवृत्तेर्दर्शनादाह **प्रायेणेति** ॥ **न च तदस्तीति** । प्रमाणाभावादिति भावः ।

**प०—** त्रिपादीमेकवाक्यतया योजयितुं चोदयति **नन्विति** । दयालुव्यावृत्त्यर्थं **प्रायेणेति** । मोक्षकामस्य किं तेनेत्याक्षेपार्थककिंशब्दलब्धार्थमाह **न च तदस्तीत्यर्थ इति** ।

**या०—** एवं मूलाक्षिप्तोपपत्तिमभिधाय मूलमुत्थापयति **ननु नायमिति** । ईश्वरे स्वप्रयोजनानुसन्धानाभावेऽपि प्रवृत्तेर्दर्शनादाह **प्रायेणेति** ॥ **न च तदस्तीति** । प्रमाणाभावादिति भावः ।

**श्री०—** 'मोक्षकामस्य किं तेने'त्यस्याभिप्रायमाह **न च तदस्तीति** । मोक्षकामस्यान्तःकरणस्य तेन कामेन किं प्रयोजनं न किमपीति मूलार्थो द्रष्टव्यः ।

**सु०— स्यादेतत् । स्वप्रयोजनमननुसन्धायैव जीवमोक्षार्थं प्रकृतेः प्रवृत्तिः, यथा कृपालुत्वेन भवतामीश्वरस्येत्यत आह** स्वनाशार्थं चेति ।

**अनु०—** स्वनाशार्थं च को यतेत् ॥

**न केवलं परप्रयोजनार्था प्रकृतेः प्रवृत्तिर्युज्यते । प्रकृतिलयो हि मोक्षो नाम । न हि कोऽपि कृपालुरात्मनाशार्थं यतमानो दृष्ट इति । यद्यप्यत्रानाधेयातिशयस्य निष्क्रियस्योपकार्यत्वमपि कचिन्न दृष्टमित्येव वक्तव्यम् । तथाऽपि तच्छिष्यैरेवोह्यतामिति तदभ्युपगमेन दूषणान्तरमिदमुक्तम् ।**

**शे०—** ननु 'स्वनाशार्थं च को यतेदि'ति प्रकृतेः स्वनाशार्थं प्रवृत्त्यसंभववर्णनमनर्थकम् । न च प्रकृतिप्रवृत्तेः परप्रयोजनार्थत्वासंभवप्रदर्शनार्थं तदिति वाच्यम् । परप्रयोजनार्थं प्रवृत्तेः स्वसंबन्धियुक्तद्विविधप्रयोजनपूर्वकत्वनियतया तदभावादेव तदभावसिद्धया तदर्थमस्यानपेक्षितत्वादित्यतस्तस्य नियमस्य भगवत्प्रवृत्तौ व्यभिचारेण प्रायिकत्वावश्यम्भावेन सदभावेन प्रकृतेः परप्रयोजनार्थं प्रवृत्त्यभावस्यासिद्धया तत्सिद्ध्यर्थत्वात् नानुपपत्तिरित्यभिप्रेत्य उक्तनियमाभावशङ्कामुत्थापयति **स्यादेतदिति ॥ न केवलं परप्रयोजनार्थेति ।** स्वप्रयोजनाभावे सति परप्रयोजनार्थेत्यर्थः । ननु च कथं पुरुषमोक्षार्थप्रकृतिप्रवृत्तेः स्वनाशार्थत्वमित्यतस्तद्दर्शयति **प्रकृतिलयो हीति ।** ननु च कृपालुत्वेन परप्रयोजनार्थं प्रवृत्तिवत् तत एव स्वनाशार्थाऽपि प्रकृतेः प्रवृत्तिर्भविष्यतीत्याशङ्क्य परप्रयोजनार्थं प्रवृत्तेरन्यत्र दृष्टतया संभावितत्वेन शङ्कास्पदतायामपि स्वनाशार्थं प्रवृत्तेरदृष्टत्वेनासंभावितत्वान्न शङ्कास्पदत्वमपीति न तच्छङ्कानिरासोऽपि भाष्येऽभिहित इति भावः । अल्पप्रयत्ननिरसनीयशङ्कानिरासाय बहुप्रयत्नानुष्ठानेन प्रसक्तां भाष्यकाराणामचतुरीमाशङ्क्य परिहरति **यद्यपीति ।** अनाधेयातिशयत्वमेव कुत इत्यत उक्तं **निष्क्रियस्येति । पुरुषस्तादृश** इति भावः ॥ **तदभ्युपगमेनेति ।** उपकार्यत्वाभ्युपगमेनेत्यर्थः । **इदमुक्तमिति ।** परप्रयोजनार्थं प्रकृतेः प्रवृत्तिरिति परकीयशङ्काया निष्क्रियतया अनाधेयातिशयस्योपकार्यत्वानुपपत्तेर्न परप्रयोजनार्थं प्रकृतेः प्रवृत्तिरित्येतावतैव परिहारसम्भवान्मोक्षकाम इत्यादिकं यद्यपि व्यर्थमेव, तथापि स्पष्टत्वात्तच्छिष्यैरेवोह्यतामिति भावेन तदनुक्त्वा तादृशस्याप्युपकार्यत्वं चाभ्युपेत्य मोक्षकाम इत्यादिना दूषणान्तरमेवोक्तमित्यर्थः ।

**या०— केवलमिति ।** स्वप्रयोजनाभावेऽपीत्यर्थः ॥ **निष्क्रियस्येति ।** पुरुषस्तु तादृश इति भावः ॥ **तदभ्युपगमेनेति ।** उपकार्यत्वाभ्युपगमेनेत्यर्थः ।

श्री० — **अनाधेयेति** । आत्मन इति शेषः । तथा चान्तःकरणेनात्मनः करणीयोऽतिशयः पूर्वमप्राप्तः को वाऽस्तीति भावः ॥ **तदभ्युपगमेनेति** । उपकार्यत्वाभ्युपगमेनेत्यर्थः ।

सु० — **नन्विदमयुक्तम् । चेतनो हि स्वप्रयोजनमनुसन्दध्यात् । स्वनाशाच्च बिभ्यत् परावर्तेत । प्रकृतिस्त्वचेतना कथमेवं पर्यनुयोगमर्हतीति । एवं तर्हि कथमात्ममोक्षमप्यनुसन्धाय प्रवर्तेत । स्वभावोऽयं प्रधानस्येति चेत् । तर्हि कदाऽपि संसारोऽस्य न स्यात् । भोगार्था प्रवृत्तिः प्रकृतेः स्वभाव इति चेत् । तर्हि मोक्षाभावः । उभयस्वभावत्वे तूभयं न स्यात् । विरोधात् । अविरोधे वा युगपदुभयं स्यात् । व्यवस्थापकाभावात् । भोगेषूपभुक्तेषु मोक्षार्थेति चेन्न । भोगानामानन्त्येनापरिसमाप्तेरिति ।**

**अयं प्रसङ्गार्थः । यद्यात्मा न कामकर्ता स्यात्तदा मुमुक्षुरपि न स्यात् । ततश्च न तदर्थं प्रयतेत । तथा च न मुच्येत । परप्रवृत्तेः स्वप्रयोजनभावाभावयोरयुक्तत्वादिति ॥ बहुलमेतन्निदर्शनमिति स्मरणाद्यतेदिति परस्मैपदम् । तथा चाह 'चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदमि'ति ॥**

---

शै० — **तर्हीति** । स्वभावस्यानपायादिति भावः । ननु चोभयस्वभावत्वेनान्यतरमात्रस्वभावत्वाभावात्संसारमोक्षौ सम्भवत इत्यत आह **उभयस्वभावत्व इति** । तत्कुत इत्यतः किं तौ विरुद्धावुताविरुद्धाविति विकल्प्याद्यं दूषयति **विरोधादिति** । परस्परप्रतिबन्धादिति भावः । द्वितीयं दूषयति **अविरोधे वेति** ॥ **व्यवस्थापकेति** । अविरोधेऽप्येकदैकमेव भवति नापरम् । तत्राप्यादौ संसार एवानन्तरमेव मोक्ष इत्यत्र नियामकाभावादित्यर्थः । ननु भोगप्रदानपूर्वं मोक्षप्रदानप्रवृत्तेरेकस्वभावत्वमिति तादृशस्वभाव एव व्यवस्थापको भविष्यतीति न तदभावः । न च वैपरीत्यमपि शंक्यं, मोक्षस्य भोगनिवृत्तिरूपत्वेनादौ भोगस्यापेक्षिततया तदसम्भवादिति शङ्कते **भोगेष्विति** ।

नन्वनेनान्तःकरणस्य कामं प्रति स्वामित्वाभावमात्रं सिद्धं, न त्वात्मनस्तत्स्वामित्वमपीति कथमस्य प्रकृतोपयोग इत्यत आह **अयमिति** । प्रसङ्गपरमूलवाक्येनाक्षिप्तोऽर्थ इत्यर्थः । ननु पुरुषे मुमुक्षाप्रयत्नयोरभावापादनमिष्टमेव । तन्मोक्षार्थं प्रकृतेरेवेच्छाप्रयत्नरूपप्रवृत्तेरभ्युपगमादित्यत आह **परप्रवृत्तेरिति** । परस्य प्रधानस्य या प्रवृत्तिस्तस्या इत्यर्थः ॥ **स्वेति** । स्वप्रयोजनपूर्वकत्वतदपूर्वकत्वपक्षयोर्दोषाणामुक्तत्वादित्यर्थः । इतीत्यस्येत्ययं प्रसङ्गार्थ इति पूर्वेण सम्बन्धः । ननु च यततेरनुदात्त-

त्वेनात्मनेपदित्वात् यतेतेति आत्मनेपदेन भवितव्यम् । तत्कथं मूले यतेदिति परस्मैपदप्रयोग इत्यत आह **बहुलमेतदिति** । यद्यपीदमेतच्चुरादावदन्तधातुदर्शनं बहुलं वेदितव्यमतोऽनुक्ता अपि इह धातवो वेदितव्या इति **भुवादिष्वदन्तेषु** दशगणेषु धातूनां निदर्शनं बहुलं वेदितव्यं तेनात्रापठिता अपि सौत्रा लौकिका वैदिका वा धातवो ग्राह्या इति नवगणीपठितेभ्योऽपि क्वचित्स्वार्थे णिच् रामो राज्यमचीकरदिति यथेति चुरादिभ्य एव बहुलं णिजिति च परैर्व्याख्यातम् । तथाऽप्येतदात्मनेपदपरस्मैपदनिदर्शनं बहुलं ज्ञेयमित्येतद्वचनार्थं मनसि निधायास्यात्रोपन्यासः । एतच्छब्देन प्रकृतात्मनेपदनियमनस्यापि परामर्शसम्भवात् । ततश्च युक्तमेव नियतात्मनेपदस्याप्यस्यैतद्वचनबलेन परस्मैपदित्वमिति भावः । प्रकारान्तरेण समाधत्ते **तथा चाहेति** । चान्द्रादिव्याकरणान्तरे धातुमात्रस्योभयपदिताया उक्तत्वात्तदनुसारेण यतेदिति परस्मैपदप्रयोग उपपन्नतर इति भावः ।

स०— **व्यवस्थापकेति** । अविरोधेऽपि एकदैकमेव भवति नापरम् । तत्राप्यादौ संसार एव, अनन्तरमेव मोक्ष इत्यत्र नियामकाभावादित्यर्थः । ननु भोगप्रदानपूर्वं मोक्षप्रदानप्रवृत्तेरेव स्वभावत्वमिति तादृशस्वभाव एव व्यवस्थापको भविष्यतीति न तदभावः । न च वैपरीत्येन प्रवृत्तिः किं न स्यादिति वाच्यम् । मोक्षस्य भोगनिवृत्तिरूपत्वेनादौ भोगस्यावश्यकत्वात् । केचित्तु व्यवस्थापककथनार्थमिदं नोच्यते । किं तु विशिष्टस्वभाव एवेत्युपपादयितुमित्याहुः । ननु मोक्षार्थमात्मनः प्रवृत्त्यभावेऽपि प्रधानस्यैव

तदर्थं सा भविष्यतीत्यत आह **परप्रवृत्तेरिति** । परस्य प्रधानस्य प्रवृत्तेरित्यर्थः । किं स्वप्रयोजनमुद्दिश्य प्रवृत्तिः, उत परप्रयोजनमुद्दिश्य । आद्ये स्वप्रयोजनस्यानुपलम्भः । द्वितीये स्वप्रयोजनाभावे केवलं परप्रयोजनोद्देशेन प्रवृत्तेरदृष्टत्वादिति भावः । **बहुलमेतन्निदर्शनमिति** । पाणिनीयधातुपाठे धातुषु परस्मैपदात्मनेपदोभयपदादिकं विविच्य प्रदर्श्य अन्ते 'बहुलमेतन्निदर्शनमि'त्युक्तत्वात् तदनुसारेण आचार्यस्याप्यभियुक्ततरत्वात् तत्कृत'यतेदि'ति परस्मैपदप्रयोगसंभवात् न तस्यापशब्दत्वमिति भावः । **प्रकारान्तरेण समाधत्ते तथा चाहेति** । चान्द्रादिव्याकरणान्तरे धातुमात्रस्योभयपदित्वेन संमतत्वात्तदनुसारेण परस्मैपदप्रयोगसंभवात् न तस्य अपशब्दत्वमिति भावः ।

प०— **कदापि संसारोऽस्य न स्यादिति** । मोक्षार्थं प्रवृत्तिस्वभावस्य प्रधानस्य संसारापादकत्वायोगादिति भावः ॥ **उभयं न स्यादिति** । मोक्षः संसारश्चेत्युभयमित्यर्थः(विरोधादिति भावः)॥ **अविरोधे चेति** । उभयस्वभावस्येति योज्यम् । अस्फुटत्वादाह **अयं प्रसङ्गार्थ इति** ॥ **अयुक्तत्वादिति** । प्रयोजनभावपक्षे प्रमाणाभावरूपदोषस्याभावपक्षे च प्रवृत्त्ययोगरूपदोषस्योक्तत्वादित्यर्थः । ननु यती प्रयत्न इति धातोः 'अनुदात्तङित आत्मनेपदमि'त्यात्मनेपदे सति यतेतेति स्यात् । कथं यतेदिति

परस्मैपदमित्यत आह **बहुलमिति** । पाणिनिना हि स्वकृतधातुगणपाठे परस्मैपद्यात्मनेपद्युभयपदिनो धातूनुक्त्वा 'बहुलमेतन्निदर्शनं' धातुषु परस्मैपदित्वादिनिदर्शनं बहुलं ज्ञेयम् । अन्यपदित्वमप्युपलभ्यते प्रौढप्रयोगेष्वित्युक्तत्वादित्यर्थः । 'इन्द्रश्चन्द्रःकाशकृत्स्नापिशली: शाकटायन: । पाणिन्यमरजैनेन्द्रा एतेष्टावादिशाब्दिका' इत्युक्तव्याकरणान्तरकृतामपि संमतत्वादित्याह **चन्द्रादयस्त्विति** । धातुवृत्तौ तु चक्षिङ्व्यक्तायां वाचीत्यस्य धातोरनुदात्तत्वेनैवात्मनेपदसिद्धौ ङित्करणं व्यर्थं सत् एवमादिधातो: परस्मैपदित्वमप्यस्तीति ज्ञापयतीत्युक्तम् ।

**या०**— नन्वनेनान्तःकरणस्य कामकर्तृताप्रतिषेध एव सिध्यति न प्रकृतमात्मनस्तत्कर्तृत्वमत आह **अयं प्रसङ्गार्थ इति** । प्रसङ्गपरमूलवाक्येनाक्षिप्तोऽर्थ इत्यर्थः । ननु पुरुषे मुमुक्षाप्रयत्नयोरभावादापादनमिष्टमेव । तन्मोक्षार्थं प्रकृतेरेवेच्छाप्रयत्नरूपप्रवृत्तेरभ्युपगमादित्याशङ्कानिरासाय मोक्षकाम इति मूलं प्रवृत्तमित्याशयेन तत्तात्पर्यमाह **परप्रवृत्तेरिति** । प्रकृतिप्रवृत्तेरित्यर्थः ॥ **स्वप्रयोजनभावाभावयोरिति** । स्वप्रयोजनभावपक्षे प्रमाणाभावेन तदभावपक्षे स्वनाशार्थं यत्नादर्शनेनायुक्तत्वादित्यर्थः । यद्यप्येषात्मनः कामकर्तृत्वसाधकोपपत्तिरादावेव व्याख्यातुं शक्या तथाऽप्यन्तःकरणस्य कामकर्तृताप्रतिषेधकोपपत्तिरप्यनेन मूलेनोक्तरीत्याऽऽक्षिप्तेति दर्शयितुमित्थं व्याख्यातमिति ध्येयम् । ननु यततेरात्मनेपदित्वात् यतेदिति परस्मैपदप्रयोगः कथमुपपद्यत इत्यत आह **बहुलमेतदिति** । पाणिनीयधातुपाठे परस्मैपद्यात्मनेपद्युभयपदिनो धातून्प्रदर्श्य 'बहुलमेतन्निदर्शनमि'त्युक्तम् । तस्य चायमर्थः । एतन्निदर्शनं धातुषु परस्मैपदादिप्रदर्शनं बहुलं ज्ञातव्यम् । अन्यपदित्वेनोक्तधातोरन्यपदप्रयोगोऽप्यभियुक्तप्रयोगानुसारेण युज्यत इत्यर्थ इति । तथा च भगवतो भाष्यकारस्याभियुक्ततमत्वादेतद्वचनबलेन तदीयो यतेदिति प्रयोगो युक्त एवेत्यर्थः ॥ समाधानान्तरमाह **तथाचाहेति** । चन्द्रादिकृतव्याकरणान्तरे सर्वधातूनामुभयपदितया उक्तत्वादयं परस्मैपदिप्रयोगो युक्त एवेत्यर्थः ॥

**श्री०**— **एवं** स्वनाशार्थमित्यनेन क्रियमाणम् । **आत्मेति** । जीवेत्यर्थः । **अयं** आत्ममोक्षानुसन्धानेन प्रकृतिप्रयत्न इत्यर्थः ॥ **तर्हीति** । उक्तस्वभावोपेतप्रकृतेः सर्वदा सत्त्वादित्यर्थः ॥ **तर्हीति** । भोगार्थप्रवृत्तेः स्वभावत्वादिति भावः ॥ **विरोधादिति** । मोक्षार्थं भोगार्थं च प्रवृत्तिरिति परस्परविरुद्धोभयस्वभावकल्पने परस्परविरोधेनैकमपि कार्यं न स्यात् । तथा च भोगमोक्षावुभावपि न स्यातामित्यर्थः । **अविरोधे** उभयस्वभावयोः प्रकृताविति शेषः ॥ **व्यवस्थापकेति** । एतादृशकाले भोगार्था, एतादृशकाले मोक्षार्थेति व्यवस्थापकाभावेन युगपद्भोगमोक्षौ स्यातामित्यर्थः । व्यवस्थापकमाशङ्कते **भोगेष्विति** । **उपभुक्तेषु** तदुपभोगानन्तरमित्यर्थः । **तदर्थे** मोक्षार्थे । ननु

मुमुक्षुर्न स्यात्तथा च न प्रयतेतेत्यापादनमयुक्तम् । अन्तःकरणस्यैव जीवमोक्षार्थं मोक्षकामनायाः प्रयत्नस्य चाङ्गीकारेणेष्टापत्तेरिति चेत्तत्राह **परप्रवृत्तेरिति ।** परार्थं प्रवृत्तेरित्यर्थः । स्वप्रयोजनभावाभावयोः पक्षयोरुक्तदूषणाभ्यामिति शेषः । तथा हि । परार्थं प्रवृत्तिर्दृष्टमदृष्टं वा किञ्चित्स्वप्रयोजनमुद्दिश्य वा स्यात् । केवलं कृपालुत्वेन परप्रयोजनोद्देशेन वा । नाद्यः । अदर्शनात् । न द्वितीयः । स्वनाशार्थं च को यतेदित्युक्तत्वादित्येवं स्वप्रयोजनभावाभावपक्षयोरुक्ताभ्यां दूषणाभ्यां परार्थप्रवृत्तेरयुक्तत्वादित्यर्थः । ननु यती प्रयत्न इति धातोर्विधिलिङात्मनेपदत्वाद्भवेतेतिवत् यतेतेति स्यान्न यतेदिति परस्मैपदमिति तत्राह **बहुलमेतदिति ।** **एतत्** अयं धातुरात्मनेपदी अयं धातुः परस्मैपदीत्येवं प्रदर्शनं । **बहुलं** प्रायिकम् । अभियुक्तव्यवहारश्चेदन्यथाऽपि ज्ञेयमित्यर्थः ।

**च०**— ननु यततेरनुदात्तत्वेन आत्मनेपदित्वया यतेतेति न्यासेन भवितव्यतया कथमयं न्यासः संगच्छत इत्यत आह **बहुलमेतदिति** । यद्यप्येतच्चुरादावदन्तधातुदर्शनं बहुलं वेदितव्यमतोऽनुक्ता अपि वेदितव्या इति भुवादिषु अदन्तेषु दशगणेषु धातूनां निदर्शनं बहुलं वेदितव्यम् । तेनात्रापठिता अपि सौत्राः लौकिकाः वैदिका वा धातवो ग्राह्या इति नवगणीपठितेभ्योपि क्वचित्स्वार्थे णिच् । रामो राज्यमचीकरदिति यथेति । चुरादिभ्य एव बहुलं णिजिति पाणिनीयैर्व्याख्यातं तथाप्येतदात्मनेपदपरस्मैपदनिदर्शनं बहुलं ज्ञेयमित्येतद्वचनार्थं मनसि निधायात्रोपन्यासः । एतच्छब्देन प्रकृतात्मनेपदादिनियमस्यापि संभवाद्युक्तमेव नियमितात्मनेपदस्याप्यस्यैतद्वचनबलेन परस्मैपदमित्यर्थापयन्ति । चक्षिङ् व्यक्तायां वाचीति धातुसूत्रव्याख्यायामिकारोनुदात्तो थुजर्थः । विचक्षणः प्रमथन् । नुम् तु न । अन्तेदित इति व्याख्यानात् । ङकारस्तु अनुदात्तप्रयुक्तमात्मनेपदमनित्यमितिज्ञापनार्थः । तेन स्फायन्निर्मोकसन्धीत्यादि सिध्यतीति पाणिनीयैरभिहिता समाहितिरप्यवसेया । भंग्यन्तरेणापि समाधत्ते **तथा चाहेति ।**

**सु०— एवमनीश्वरसांख्यमतं साधारणदूषणैरपाकृत्य ये कर्तृत्वं प्रकृतेरेव भोक्तृत्वं त्वात्मन इति मन्यन्ते तन्मतं दूषयति** कर्तृत्वमिति ।

**अनु०**— कर्तृत्वं यस्य तस्यैव भोक्तृत्वमुपलभ्यते ॥

**यद्वैवमात्मनः कर्तृत्वमुपपाद्य भोक्तृत्वमप्यनेनैवोपपादयति । येन मयेदं कृतं स एवाहं तत्फलं भुञ्ज इति कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्यानुभवात्तयद्वैयधिकरण्याङ्गीकारेऽनुभवविरोध इत्यर्थः ।**

**भ्रान्तोऽयमनुभव इति चेन्न । बाधकाभावादित्याह** विभागे चेति ।

विभागे च तयोर्मानं नैव किञ्चित्क्वचिद्भवेत् ॥

तयोः कर्तृत्वभोक्तृत्वयोः । विभागे व्यधिकरणत्वे । अकृताभ्यागमकृतविनाशौ चैवं सति स्यातामिति ।

शै०— न केवलं कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्ये साधकाभावः, किन्तु बाधकसद्भावोऽप्यस्तीत्याह अकृतेति ।

प०— एवं सति स्यातामिति । कर्तृत्वभोक्तृत्वयोर्व्यधिकरणत्वे सति कर्तुः फलाभावात्कृतस्य पुण्यस्य विनाशः अकर्तुश्च फलप्राप्त्याऽकृतस्य पुण्यस्याभ्यागमः स्यादित्यर्थः ।

च०— भ्रान्तोयमिति । भ्रमरूप इत्यर्थः ।

सु०— यदुक्तमात्मनो मोक्षो न स्यदिति । तदिष्टापादनम् । प्रकृतेरेव मोक्षाभ्युपगमात् । न च बन्धमोक्षयोर्वैयधिकरण्यानुपपत्तिः । बन्धस्यापि प्रकृतिगतत्वादिति चेन्न । सकलश्रुतिस्मृतीहासपुराणानुभवैर्बन्धमोक्षयोरात्मगतत्वावगमेन तद्विरोधादित्याशयवानुपसंहरति सर्वेति ।

अनु०— सर्वमानविरोधैकदुर्दीक्षादीक्षितस्त्वयम् ॥
मायावाद्युपमां यायात्

सर्वमानविरोध एव या प्रधानदुर्दीक्षा दुष्टोऽनुष्ठानसङ्कल्पः । तया दीक्षितोऽयं तु सांख्यो मायावादिनामुपमात्वं प्राप्नुयात् । तेऽपि हि कर्तृत्वभोक्तृत्वादिसकलधर्मविकलमसत्कल्पं चैतन्यमात्रमङ्गीकृत्याविद्याया एवाचेतनायाः सर्वकारणत्वं बन्धमोक्षाधिकरणत्वं चाभ्युपगच्छन्ति । तदेतेषां सर्वप्रमाणविरुद्धार्थाङ्गीकारित्वे सांख्योऽयं दृष्टान्तभावमापद्यत इति ।

शै०— प्रकृतेरेव मोक्षाभ्युपगमादिति । 'यस्मान्न बद्ध्यते न मुच्यते नापि संसरति कश्चित् । बद्ध्यते मुच्यते संसरति च नानाश्रया प्रकृतिरि'ति तद्वचनादिति भावः । बन्धस्यात्मनिष्ठत्वं मन्यमानः शङ्कते न चेति ॥ बन्धस्यापीति । उदाहृतवचनादेवेति भावः ॥ सर्वमानविरोध एवेति । सर्वमानविरुद्धार्थाङ्गीकारलक्षणा या दुर्दीक्षा तया दीक्षित इत्यर्थः । यथा कश्चिद्रसादिधारणलक्षणदुर्दीक्षादीक्षितस्तथाऽयमपि सर्वप्रमाणविरुद्धार्थाङ्गीकारलक्षणदुर्दीक्षादीक्षित इति रूपकमेतदिति भावः । उपमाशब्दस्य सादृश्यविशिष्टार्थत्वेऽप्ययं सादृश्यविशिष्टं यायादित्यन्वयप्रसक्त्या प्रकृते तदयोगात् प्रवृत्तिनिमितभूतं सादृश्यमात्रमाश्रित्योक्तमुपपादयति अविद्याया एव सर्वकारणत्वमिति । यद्यपि

मायावच्छिन्नं ब्रह्म जगदुपादानमिति पक्षे, रज्ज्वोः सूत्रद्वयमिव मायाब्रह्मणी जगदुपादाने इति च पक्षे नाचेतनाश्रय एवाविद्यया जगत्कारणत्वमस्ति । तथाऽपि मायैव जगदुपादानं, ब्रह्म तु जगदुपादानमायाधिष्ठानमात्रमिति पक्षमवलम्ब्येदमुक्तम् । अयं च पक्षो, यत्र घोषः सा गङ्गेतिवज्जन्माद्यस्य यतस्तद् ब्रह्मेति लक्षणया प्रयोगः यतोऽस्य जन्मादि सा माया, तदाश्रयो ब्रह्मेत्येव निर्देष्टव्यमिति जन्मादिसूत्रव्याख्यानात्, 'अजामेकामि'त्यादिकारणवाक्यानां साङ्ख्याभिमतप्रधानपरत्वनिरासेनाविद्यापरताया एव प्रथमस्य चतुर्थे समर्थितत्वाच्च मुख्यतया स्पष्टमवगम्यत इति ध्येयम् ॥ **बन्धमोक्षाधिकरणत्वं चेति** । यद्यप्यविद्यानिवृत्तिरूपमोक्षस्यात्मस्वरूपत्वान्नाविद्याधिकरणत्वं मायावादिमतेऽस्तीत्यसदनुवादोऽयमित्याभाति तथाऽपि 'अविद्याकर्मपूर्वप्रज्ञासंस्कारचित्रभित्तिः अनादिरनिर्वाच्याऽविद्या' इति वदता पञ्चपादीकारेण भ्रान्तिकर्मसम्यगनुभवसंस्कारात्म्यानर्थरूपबन्धस्याविद्याश्रितत्वाभ्युपगमादुक्तबन्धनिवृत्तिरूपमोक्षस्याप्यविद्याश्रितत्वं तस्य सम्मतमेव । बन्धमोक्षयोः सामानाधिकरण्यनियमादित्याशयेनेदमभिधानम् । अत एव 'सुषुप्त्याद्यनुवृत्तस्याविद्यारूपस्य वाऽविद्यावच्छिन्नत्वरूपस्य वा तत्प्रतिबिम्बितत्वरूपस्य वा सुषुप्त्याद्यननुवृत्तस्य कर्तृत्वप्रमातृत्वादिरूपस्य वा संसारस्याज्ञाननिष्ठत्वाभावेऽपि ज्ञानक्रियासंस्काराणामज्ञानस्थत्वादि'त्यादिना बन्धस्याज्ञानाश्रितत्ववर्णनमन्यत्र कृतमित्यवधेयम् ।

स० — **सर्वमानेति** । रूपकमेतत् । सर्वप्रमाणविरोधाङ्गीकारलक्षणा या दुर्दीक्षा तया दीक्षित इत्यर्थः । यथा मायाभस्मादिधारणलक्षणदुर्दीक्षादीक्षितः तथा अयमपि सर्वप्रमाणविरोधाङ्गीकारलक्षणदुर्दीक्षादीक्षित इति भावः । उपमाशब्दस्य सदृशार्थकत्वेन मायावाद्येकदेशिभिः तदुभयाधिकरणत्वस्य अविद्याया एवाङ्गीकृतत्वेन तदनुवाद इति न विरोधः ।

प० -- 'तस्मान्न बध्यते न मुच्यते नापि संसरति कश्चित् । बध्यते संसरति मुच्यते च नानाश्रया प्रकृतिरि'ति तदीयवाक्यं हृदि कृत्वाह **प्रकृतेरेवमोक्षाभ्युपगमादित्यादि** ॥ **अनुभवः अहं** सुखी दुःखीत्यात्मगतत्वेनानुभवः । एकपदार्थः **प्रधानेति** । सुखदुःखादिरूपबन्धपरिणामत्वात् तद्विलयाधिकरणत्वाच्चाविद्याया इत्येवमुक्तम् ।

या० — **प्रकृतेरेव मोक्षाभ्युपगमादित्यादि** । यथाऽऽहुः । 'तस्मान्न बध्यते न मुच्यते नापि संसरति कश्चित् । बध्यते संसरति मुच्यते च नानाश्रया प्रकृति'रिति ॥ **बन्धमोक्षाधिकरणत्वं चेति** । बन्धवत्तद्ध्वंसस्याप्यविद्याकल्पितत्वेन तन्निष्ठत्वादविद्याया मोक्षाधिकरणत्वम् । बन्धध्वंसरूपमोक्षस्यानाविद्यकत्वे च द्वैतापत्तिः । ब्रह्मस्वरूपत्वे च श्रवणादिवैयर्थ्यमिति भावः ।

श्री० — **यदुक्तमिति** । तथा च न मुच्येतेत्यनेनेत्यर्थः । **तेऽपि** मायिनः । **असत्कल्पं** शून्यतुल्यम् । **अङ्गीकारित्वे** तद्विषये ।

**सु०— यत्पुरुषबहुत्वं सांख्येनाङ्गीकृतं तदपि मायावादिभिरभ्युपगतमेव । जननादिप्रकृतिधर्मैरेव हि तद्बहुत्वम् । न तु स्वरूपे कश्चिदस्ति परस्परतो विशेषः । मायावादिनोऽपि उपाधिनिबन्धनं भेदमङ्गीकुर्वन्त्येव । न च प्रपञ्चसत्यत्वं विशेषः । कारणमात्रत्वाभ्युपगमेन कार्यप्रपञ्चस्य सांख्येन निरस्तत्वादिति ।**

**शे०**— ननु पुरुषबहुत्वाङ्गीकारानङ्गीकाराभ्यां साङ्ख्यमायावादिनोर्वैलक्षण्यस्य सत्त्वान्नोपमानोपमेयभाव इत्यत आह **यत्पुरुषबहुत्वमिति ॥ अङ्गीकृतमिति ।** 'पुरुषबहुत्वं सिद्धमि'त्यादितदुक्तेरिति भावः ॥ **मायावादिभिरभ्युपगतमेवेति ।** यद्यप्येकजीववादिभिस्तैः पुरुषबहुत्वं नाङ्गीकृतं तथाऽपि बहुजीववादिभिर्मायावादिभिः पुरुषबहुत्वाङ्गीकाराभिप्रायेणाभ्युपगतत्वोक्तिरियमिति ज्ञातव्यम् । ननु साङ्ख्यमते पुरुषबहुत्वोपपादकस्य पुरुषभेदस्य सत्त्वात् पुरुषबहुत्वस्य तेनाङ्गीकर्तुं शक्यत्वेऽपि मायावादिमते पुरुषबहुत्वोपपादकस्य तद्भेदस्यासत्त्वादभ्युपगमे चापसिद्धान्तान्न मायावादिना पुरुषबहुत्वमङ्गीकर्तुं शक्यमित्यस्त्येव मतयोर्वैलक्षण्यमित्यतः किमत्र स्वाभाविकपुरुषभेदस्यैव तद्बहुत्वोपपादकत्वात्तस्य च मायावादिनाऽनङ्गीकृतत्वान्न पुरुषबहुत्वं तेनाङ्गीकर्तुं शक्यमित्यभिप्रायः । किंवा यादृशतादृशभेदस्यापि पुरुषबहुत्वोपपादकत्वेऽपि मायावादिना तस्यानङ्गीकृतत्वान्न पुरुषबहुत्वं तेनाङ्गीकर्तुं शक्यमिति विकल्पद्वयं मनसि निधाय, नाद्यो मायावादिमत इव साङ्ख्यमतेऽपि पुरुषभेदस्यौपाधिकत्वेनास्वाभाविकत्वात्पुरुषबहुत्वानुपपादकत्वापत्त्या तं प्रत्यपि पुरुषबहुत्वस्याङ्गीकर्तव्यतानुपपत्तेः तुल्यतयाऽविशेषतादवस्थ्यादिति भावेन साङ्ख्यादिमते पुरुषभेदस्यौपाधिकतामुपपादयति **जननादीति ।** न द्वितीयः । साङ्ख्यमत इव मायावादिमतेप्यौपाधिकस्य पुरुषभेदस्य सत्त्वात्तेनैव पुरुषबहुत्वनिर्वाहान्न तन्मतेऽपि पुरुषबहुत्वानुपपत्तिशङ्कावकाश इत्यभिप्रेत्याह **मायावादिनोऽपीति ।** 'बिम्बप्रतिबिम्बयोः प्रतिबिम्बानां च सत्यपि वास्तवाभेदे यथोपाधिनिबन्धनो भेदः, तथा जीवब्रह्मणोर्जीवानां च सत्यपि वास्तवाभेदे उपाधिनिबन्धनो भेदोऽस्त्येव । तथा च भेदसद्भावात्सर्वव्यवस्थोपपत्तिः । तस्य चौपाधिकत्वेन स्वाभाविकत्वाभावान्नापसिद्धान्तोऽपी'त्यादिग्रन्थादिति भावः ।

यद्वा ननु साङ्ख्यमायावादिनोः पुरुषभेदाङ्गीकारानङ्गीकाराभ्यां वैलक्षण्यादविशेषासिद्धेः कथमुपमानोपमेयभाव इत्याशङ्क्य भवेदेवं कथञ्चित् यद्युक्तरीत्योभयोर्वैलक्षण्यमेव भवेत् । न चैतदस्ति । साङ्ख्येनेव मायावादिनाऽपि पुरुषभेदाङ्गीकारादित्याह **यत्पुरुषबहुत्वमिति ।** ननु साङ्ख्यस्य भेदवादितया पुरुषभेदाभ्युपगमो युक्तः । मायावादिनस्तु अभेदवादित्वात् कथमपसिद्धान्तपराहतः भेदाभ्युपगमो युक्तः स्यादित्यतोऽभेदवादितया स्वाभाविकभेदाभ्युपगमस्यापसिद्धान्ततयाऽयोगेऽप्यौपाधिकभेदाभ्युपगमस्य तद्विरहान्नायोग इत्याशयेन'ह **मायावादिनोऽपीति ।**

नन्वेवमपसिद्धान्तपरिहारेऽपि न पूर्वशङ्किताविशेषसिद्धिपरिहारः सम्भवति । सांख्येनाङ्गीकृतस्य पुरुषभेदस्य स्वाभाविकतया मायावादिना चाभ्युपगतस्य तस्यौपाधिकतयोभयोरपि वैलक्षण्यापरिहारादित्यतः स्यादप्येवं कथञ्चिद्यदि सांख्येनाङ्गीकृतो भेदः स्वाभाविकः स्यात् । न चैतदस्ति । किन्त्वौपाधिक एवेत्युभयोरप्यस्त्येवाविशेष इति युक्त एवोपमानोपमेयभाव इत्याशयेन सांख्यमते तस्यौपाधिकतामुपपादयति **जननादीति** ।

यद्वा ननु मायावादिभिः पुरुषबहुत्वाङ्गीकारेऽपि स्वाभाविकस्य तस्यानभ्युपगमात् तदभ्युगन्तृसांख्याद्वैलक्षण्यमस्त्येवेति कथमुभयोरविशेष इत्यतो निर्विशेषतया सांख्येनाङ्गीकृतपुरुषस्वरूपे बहुत्वस्य जायमानम्रियमाणदेहादिव्यवस्थानिबन्धनत्वेनौपाधिकतया स्वाभाविकत्वविरहादवैलक्षण्यमेवेत्याशयेनाह **जननादीति** । ननु च सांख्यमते पुरुषबहुत्वव्यवस्थापकविशेषाभावेऽपि तैः पुरुषान्तरभेदस्य बहुत्वव्यवस्थापकस्याङ्गीकृतत्वात्तेनैव च तन्निर्वाहसम्भवात्कथमविशेष इत्यतः परस्परव्यावर्तकशून्ये पुरुषेऽङ्गीकृतो भेदो न स्वाभाविको वक्तुं शक्यते निर्निबन्धनत्वापातात् । किन्तूपाधिनिबन्धन एवेति पक्षद्वयस्याविशेषसिद्धिरेवेत्याह **मायावादिनोऽपीति** । तथाऽपि प्रपञ्चसत्यत्वासत्यत्वाभ्यां पक्षद्वयवैलक्षण्यादविशेषासिद्धिरित्याशङ्क्य निषेधति **न चेति** । किमत्र मूलकारणरूपप्रपञ्चसत्यत्वासत्यत्वाभ्यां पक्षद्वयवैलक्षण्यमभिमतं किंवा कार्यप्रपञ्चस्य । नाद्यः । सांख्येनेव मायावादिनाऽपि मूलकारणस्य ब्रह्मणः सत्यत्वाभ्युपगमेन तद्वैलक्षण्यासिद्धेरित्याशयेन द्वितीयं दूषयति **कारणेति** । तथा च कार्यप्रपञ्चसत्यतायाः पक्षद्वयेऽप्यभावान्न वैलक्षण्यं तयोरिति भावः ।

**स०— जननादिप्रकृतिधर्मैरिति** । अनेन औपाधिकधर्मैरेव तद्बहुत्वं न तु स्वभावधर्मैरित्युक्तं भवति ॥ २-२-१ ॥

**प०**— जीवनानात्वं सांख्यानां मते विशेष इत्यत आह **यत्पुरुषेति** ।

**या०**— ननु साङ्ख्येनात्मबहुत्वमङ्गीकृतं न मायिनेत्यतो वैषम्यमित्यत आह **यत्पुरुषबहुत्वमिति** । ननु मायावादिभिरभ्युपेतं पुरुषबहुत्वं न साङ्ख्यमत इव स्वाभाविकमित्यत आह **जननादीति** । तथा च साङ्ख्यमतेऽपि निर्विशेषतयाङ्गीकृते पुरुषस्वरूपे बहुत्वं जायमानम्रियमाणदेहादिव्यवस्थानिबन्धनमेव न स्वाभाविकमिति भावः । ननु साङ्ख्यैः पुरुषे बहुत्वव्यवस्थापकविशेषाभावेऽपि पुरुषान्तरभेद एव तद्व्यवस्थापकोऽङ्गीकृतो न मायिभिरित्यत आह **मायावादिन इति** । साङ्ख्यैरपि परस्परव्यावर्तकविशेषशून्ये पुरुषे यो भेदोऽङ्गीकृतः स न स्वाभाविको वक्तुं शक्यः । निर्निबन्धनत्वापत्तेः । किन्तूपाधिनिबन्धन एव वाच्य इति भावः ।

श्री० — **अङ्गीकृतम्** बहुजीववादाङ्गीकारादित्यर्थः ॥ **तदिति ।** तेषां जीवानां परस्परत एकस्य जीवस्यापरजीवापेक्षयैक्यमेवाङ्गीकृतप्रायमित्यर्थः । मायिनाऽप्येवमेवाङ्गीकृतमिति हृदयम् । ननु स्वरूपे विशेषाभावेऽपि जननाद्युपाधिभेदेन भेदोऽस्त्येवेत्यत आह **मायावादिन इति । विशेषो** मायिभ्यः साङ्ख्यस्य ।

**सु० — याऽपि सांख्यपरिकल्पिता सृष्टिप्रलयबन्धमोक्षतत्साधनप्रक्रिया साऽपि सर्वप्रमाणविरुद्धेत्युक्तं भवति ।**

शे० — मूले 'सर्वमानविरोधैके'त्यादिसामान्योक्तेर्वैयर्थ्यमाशङ्क्य सांख्यपरिकल्पितप्रक्रियान्तरस्य प्रमाणविरुद्धत्वसूचनेनाश्रद्धेयत्वसमर्थनार्थत्वान्न तदिति भावेनाह **याऽपीति ।** प्रकृत्यादिकारणेषु सत एव महदादिकार्यस्य ततो निस्सरतः आविर्भावलक्षणो विभाग एव च तन्मते सृष्टिर्न पुनरसत उत्पादः । तस्याः क्रमश्च प्रकृतेर्महान्महतोऽहङ्कार इत्यादिः । इदमुभयमपि सृष्टिप्रक्रियेति विवक्षितम् । एतच्च 'कारणकार्यविभागाद्वैश्वरूप्यस्ये'ति कारिकाव्याख्यावसरे 'प्रकृतेर्महान्महतोऽहङ्कारस्तस्माद्गणः षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानि' इत्येतत्कारिकाव्याख्यावसरे तत्त्वकौमुद्यां स्पष्टम् । प्रलयश्चात्र महदादेः कार्यस्य कारणे प्रकृत्यादौ तिरोभावलक्षणोऽविभाग एवाभिमतो न पुनः सतः कार्यस्य स्वरूपध्वंसः । एतदपि 'कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य' इति कारिकाव्याख्यावसरे स्वपरग्रन्थयोः स्पष्टम् । बन्धश्च प्राकृतिकवैकृतिकभेदाद्बहुविधः । तत्र प्रकृतावात्मज्ञानात् ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः । यः पुराणेषु प्रकृतिलयान्प्रत्युच्यते । 'पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तका' इति । वैकारिकबन्धस्तेषामेव ये विकारानेव भूतेन्द्रियाहङ्कारबुद्धीनुपासते यान्प्रति चेदमुच्यते, यथा 'मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः । बौद्धाः शतसहस्राणि तिष्ठन्ति विगतज्वराः । ते खल्वमी विदेहा ये तेषां वैकृतिको बन्ध' इत्यादि । एतदपि च 'विपर्ययादिष्यते बन्ध' इत्येतत्कारिकाखण्डव्याख्यावसरे तत्त्वकौमुद्यां स्पष्टम् । मोक्षश्च प्रकृतिनिवृत्तिः । आत्यन्तिकदुःखोपशमो वा । एतदपि 'ज्ञानेनापवर्ग' इत्येतत्कारिकाखण्डव्याख्यानावसरे 'कैवल्यार्थं प्रवृत्तेश्चे'त्येतत्कारिकाखण्डव्याख्यानावसरे च यथाक्रमं तत्त्वकौमुद्यां स्पष्टम् । प्रकृतिपुरुषयोरविवेकादि बन्धसाधनमेतच्च 'विपर्ययादिष्यते बन्धः । वैराग्यात्प्रकृतिलयात्संसारो भवति राजसाद्रागात्', 'रूपैः सप्तभिरेव बध्नात्यात्मानमात्मना प्रकृतिरि'त्याद्यनेककारिकाखण्डव्याख्यावसरे तत्रैव स्पष्टम् । मोक्षसाधनं च प्रकृतिपुरुषविवेकज्ञानम् । एतदपि 'ज्ञानेनापवर्गः । पुरुषार्थं विमोचयत्येकरूपेणे'त्यादिकारिकाखण्डव्याख्यावसरे तत्रैव स्पष्टम् । तत्र सदसत्कार्यवादस्य प्रामाणिकत्वसमर्थनेना-

विर्भावतिरोभावलक्षणविभागाविभागयोः सृष्टिप्रलयप्रक्रियायाश्च तद्विरुद्धतया प्रमाणविरुद्धत्वसिद्धिः । तृतीयचतुर्थोक्तरीत्या बन्धमोक्षतत्साधनप्रक्रियायाश्च तत्सिद्धिरित्यवधातव्यम् ।

**या०**— 'सर्वमानविरोधैकदुर्दीक्षादीक्षितस्त्वयमि'ति सामान्योक्त्या लब्धमर्थं दर्शयति **याऽपि साङ्ख्येति** ।

**सु०** — **न केवलं सांख्यस्य मायावादिसदृशत्वमस्माभिरेवोच्यते, किन्तु सूत्रकृताऽपि सूचितमित्याह** तदिति ।

**अनु०**— तत् चशब्दान्निराकृतः ॥ २-२-१ ॥

**तस्मान्मायावादिसदृशत्वादेव हि सांख्यो** भोक्रापत्तेरविभागश्चेत्स्याल्लोकवदिति **प्राक्** परा-**कृतेन मायावादिना** रचनानुपपत्तेश्च नानुमानमिति **चशब्देन समुच्चित्य निराकृतः** । यद्वा प्रमाण-**विरोधोऽपि नोत्सूत्रित इत्यनेनाह** । **तस्मात्सर्वमानविरोधित्वादेव** । **चशब्दात्सर्वमानविरोध-समुच्चयार्थं चशब्दं प्रक्षिप्येत्यर्थः** ॥ २-२-१ ॥

**शे०** —ननु तच्चेत्युत्तरभाष्यमनर्थकम् । न च सांख्यमायावादिनोः सादृश्यस्य सूत्रसूचितत्वोपदर्शनार्थं तदिति वाच्यम् । तदुपदर्शनस्याप्यप्रयोजनत्वादित्यतः 'सर्वमानविरोधेति' पूर्ववाक्योक्तस्य तत्सादृश्यस्य समर्थनार्थत्वान्नानुपपत्तिरित्यभिप्रेत्य तत्समर्थनपरतया तद्योजयति **न केवलमिति** । ननु 'तच्चशब्दान्निराकृत' इति मूलेन कथं तत्सादृश्यस्यात्र सूत्रकृत्सूचितत्वसिद्धिरित्यतोऽपेक्षिताध्याहारेणोक्तार्थसूचकतया भाष्यं योजयति **तस्मादिति** । तस्मादित्यस्यैव विवरणं **मायावादिसादृश्यादेवेति** ॥ **प्रमाणविरोधोऽपीति** । सर्वमानविरोधेत्यादिनोक्तः प्रमाणविरोधोऽपीत्यर्थः । ततश्च न तस्याभाष्यत्वमिति भावः । अनेन तच्चेत्यादिग्रन्थेनात्र पक्षे पूर्वोक्तरीत्या तस्मादित्यस्य व्याख्यानायोगादेतत्पक्षोपयोगितया तदर्थमाह **तस्मात्सर्वमानविरोधित्वादेवेति** ॥ **चशब्दादिति** । ल्यब्लोपनिमित्ता पञ्चमीत्याशयेनाह **चशब्दादित्यादिना** ॥ २-२-१ ॥

**प०** —चशब्दादित्यस्यार्थः **चशब्दं प्रक्षिप्येति** । ल्यब्लोपे पंचमीति भावः ॥ २-२-१ ॥

**या०**— ल्यब्लोपनिमित्ता पञ्चमीत्याशयेनाह **चशब्दं प्रक्षिप्येति** ॥ २-२-१ ॥

**श्री०**— प्रक्षिप्येत्यनन्तरं सांख्यो निराकृत इति वर्तते ॥ २-२-१ ॥

**॥ इति रचनानुपपत्त्यधिकरणम् ॥**

॥ अथ अन्यत्राभावाधिकरणम् ॥

सु०— ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ इदं सूत्रं केचिदित्थं व्याचक्षते। यथा तृणपल्लवादिकं गवादिनोपभुक्तं स्वयमेव क्षीरीभवति। एवं प्रधानं स्वयमेव महदादिरूपेण परिणमत इत्याशङ्का किलात्र निरस्यते। न तृणादिवत्स्वयमेव प्रधानस्य परिणामो वक्तव्यः। यतस्तृणादीनामपि स्वयमेव परिणामो नास्ति। कुतः। अन्यत्रानडुहोपभुक्ते तदभावादिति। अत्राशङ्कैव तावदनुपपन्ना। पयोऽम्बुवच्चेत्तत्रापीत्यनेनैव परिहृतत्वात्। प्रत्युदाहरणं च सूत्रप्रणयनायोगात्। परिहारोऽप्ययमनुपपन्नः। गवाद्युपभुक्तस्यैव क्षीरत्वं नान्यत्रेति हि वदता प्रकृतेः सहकारिसद्भावमात्रमुपपादितं स्यात्। न पुनरीश्वरापेक्षत्वम्। अतो नायं सूत्रार्थः। किन्तु पातञ्जलमतमत्राधिकरणे निराक्रियत इत्याशयवांस्तदुपन्यस्यति सांख्यस्त्विति।

अनु०— ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥

सांख्यस्तु सेश्वरो ब्रूते क्षेत्रानुग्रहशक्तिमान् ॥

अस्तीश्वरः स्वयंभातः क्लेशकर्मादिवर्जितः ॥

---

सांख्यमतस्य निरस्तत्वात्किं पुनरुपन्यासेनेत्यतोऽस्य मतस्य ततो विशेषं तुशब्देन सूचयति। तमेव विशेषं व्यनक्ति सेश्वर इति। सेश्वरश्चेन्न निराकार्यो विरोधाभावादित्यत उक्तं क्षेत्रेति। तुशब्दोऽवधारणार्थोऽत्राप्यन्वीयते। यद्यपि सेश्वर इत्यनेनैवेश्वरोऽस्तीति ब्रूत इति सिद्धम्। तथाऽपि तदनुवादेन विशेषणविधानमेवैतत्। य ईश्वरोऽस्ति स क्षेत्रानुग्रहशक्तिमानेवेति ब्रूत इति। क्षियन्त्यस्मिन्कार्याण्यव्यक्ततयेति क्षेत्रमुपादानं प्रकृतिः। तदनुग्रहशक्तिरेवेश्वरस्य तेनाभ्युपगम्यते। अतो निराकरणीय एवासाविति। सर्वशक्तित्वाभावे किं तस्येश्वरत्वमित्यत उक्तं स्वयंभात इति। स्वयमिन्द्रियाद्यनपेक्षमेव भातः। कर्तरि क्तः। ततश्च सर्वज्ञ इति लभ्यते॥ ईश्वरत्वोपपादकं विशेषणान्तरमाह क्लेशेति। क्लेशकर्मविपाकाशयवर्जित इत्यर्थः। तथा चाह पतञ्जलिः। 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर' इति। तथा 'निर्माणकायमधिष्ठाय संप्रदायप्रवर्तकोऽनुग्राहकश्चे'ति। तत्राविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः। अनात्मन्यात्मबुद्धिरविद्या। इदं मदीयमित्यभिमानोऽस्मिता। विषयेष्वासक्ती रागः। कोपो द्वेषः। भयमभिनिवेशः। एत एव पञ्च क्लेशास्तन्त्रान्तरे तमो मोहो महामोहाः

**तामिस्रोऽन्धतामिस्र इति व्यवह्रियन्ते । वार्षगण्यस्त्वेतानविद्येत्येवाह । कर्मेति विधिनिषेधावुच्येते । आशयशब्देन धर्माधर्मौ । विपाक इति तत्फलं सुखदुःखे तदुपायश्चेति । इतिशब्दस्य आगामिनः प्रतिवाक्यं संबन्धः ।**

शे० — ॐ **अन्यत्राभावाच्च न तृणादिवत्** ॐ ॥ ननु 'साङ्ख्यस्तु सेश्वर' इत्याद्युत्तरभाष्यमनर्थकम् । न च पातञ्जलमतोपन्यासपरं तदिति वाच्यम् । तस्याप्यनर्थकत्वात् । न च पातञ्जलमतनिरासस्य सूत्रार्थतां दर्शयितुं तदिति वाच्यम् । परोक्तसूत्रार्थसम्भवे तत्परित्यागेन पातञ्जलमतनिरासस्य सूत्रार्थत्वाश्रयणस्य निर्निबन्धनत्वादित्यतः परोक्तसूत्रार्थस्यानुपपन्नत्वाद्युक्तं तदनादरेण पातञ्जलमतनिरासस्य सूत्रार्थत्वाश्रयणमित्याशयेन तन्मतोपन्यासतयोत्तरभाष्यं सङ्गमयितुं परकीयं सूत्रार्थमनूद्य दूषयति **इदं सूत्रमित्यादिना** ॥ **स्वयमेवेति** । चेतनव्यापारमनपेक्ष्य स्वभावत एव क्षीराकारेण परिणमत इत्यर्थः ॥ **स्वयमेवेति** । स्वभावत एवेत्यर्थः । न तत्र चेतनापेक्षेत्याशयः । एवमेव ग्रेऽपि तात्पर्यं बोध्यम् ॥ **परिहृतत्वादिति** । तत्र यथा पयोऽम्बुनोश्चेतनानधिष्ठितयोः स्वभावत एव प्रवृत्तिरेवं प्रधानस्यापीति शङ्कार्थस्य त्वया वर्णितत्वेन यथा तृणादिकं स्वत एव क्षीरीभवति, एवं प्रधानमपि स्वभावत एव परिणंस्यतीत्येतत्सूत्रनिवर्तनीयशङ्काया अपि तच्छङ्कानिवर्तकेन 'पयोऽम्बुवच्चेत्तत्रापी'त्यनेनैव परिहृतत्वात्सूत्रान्तरानारम्भकत्वादित्यर्थः ॥ **प्रत्युदाहरणं चेति** । तथा सत्युदाहरणानामानन्त्येन शास्त्रापर्यवसानप्रसङ्गादिति भावः ॥ **इति वदतेति** । सूत्रकृतेति शेषः ॥ **प्रकृतेरिति** । गवाद्युपभुक्ततृणादिदृष्टान्तेनेति शेषः ॥ **न पुनरीश्वरेति** । न च बुद्धिपूर्वकारी तत्रापीश्वर एव सर्वज्ञः सम्भवतीति शङ्कानिराकरणस्यार्थः तथा चेश्वरापेक्षत्वसिद्धिः स्यादिति भामत्यामुक्तत्वात्कथमेतदिति वाच्यम् । ईश्वरापेक्षायाः सूत्रार्थतया लाभो नेत्याशयात् । तथा हि । अन्यत्रानडुहोपभुक्ते तदभावादिति वदता सूत्रकृता गवादिष्वेव सहकारिविशेषसद्भावमात्रमुक्तं, न पुनश्चेतनरूप एव सहकारीति । येनेश्वरकल्पना तत्र स्यात् । न च परिशेषात्तत्र तत्कल्पनाऽभिप्रेता । औदर्यवह्निविशेषरूपस्य वा अदृष्टादिविशेषरूपस्य वा सहकारिविशेषस्य सुवचत्वेन परिशेषस्यासम्भवादिति ।

मूले तुशब्दानर्थक्यमाशङ्क्य निरस्तसाङ्ख्यमतापेक्षया निरसिष्यमाणसाङ्ख्यमतस्य वैलक्षण्योपदर्शनार्थत्वान्न वैयर्थ्यमित्यभिप्रेत्य किं वैलक्षण्योपदर्शनेनापीत्यतः पुनरुपन्यासवैयर्थ्यशङ्कानिरासस्तत्प्रयोजनमिति भावेनोक्तशङ्कानिरासकतया तं योजयितुं तां शङ्कामुत्थापयति **साङ्ख्यमतस्येति** । तर्हि वैलक्षण्योपदर्शकतुशब्देनैवोक्तशङ्कानिरासान्मूले सेश्वरपदानर्थक्यमित्याशङ्क्य तुशब्दोपदर्शितविशेषव्यञ्जकत्वान्न वैयर्थ्यमिति भावेन तत्परतया योजयति **तमेवेति** । नन्वीश्वरस्य क्षेत्रानुग्रहशक्तिमत्त्वस्य सिद्धा-

न्तेऽप्यभिमतत्वात्कथमियं वैषम्योक्तिरित्यतो यथेयं वैषम्योक्तिः स्यात्तथा योजयति **तुशब्द इति** । मूले क्षेत्रानुग्रहशक्तिमानित्यादेरिवास्तीश्वर इत्यस्यापि विधायकताभ्रान्तिं सयुक्तिकं परिहरति **यद्यपीति** । तर्हि तद्वैयर्थ्यमित्यतोऽनुवादत्वान्न तदिति भावेनानुवादस्यापि किं प्रयोजनमित्यतस्तद्दर्शयति **तथाऽपीति** । तदनुवादेन विशेषणविधानप्रकारमेव दर्शयति **ईश्वरोऽस्तीत्यादिना** ॥ **इन्द्रियाद्यनपेक्षमेवेति** । अत्र तुशब्दोऽवधारणार्थोऽत्राप्यन्वीयत इत्युक्तं भवति ॥ **कर्तरि क्त इति** । 'मतिबुद्धिपूजार्थेभ्यश्चे'त्यत्र "कर्तरि च ऋषिदेवतयोरि'त्यतः कर्तरीत्यनुवृत्तेः भातीति भातः इति भातेः कर्तरि क्तप्रत्यये निष्पन्न-भातशब्देन भानकर्तृत्वलाभात् । भाशब्देन च ज्ञानस्य विवक्षितत्वात्सर्वज्ञत्वस्य लाभ इति भावः । ईश्वरस्य क्लेशकर्मादिवर्जितत्वं परस्य सम्मतमित्यत्र ज्ञापकमाह **तथा चेति** । सर्वज्ञत्वानुग्राहकत्वयोस्त-त्सम्मतत्वेऽपि तद्वाक्यं पठति **तथेति** । **निर्माणकायं** लीलाविग्रहमित्यर्थः । इतिशब्दस्याहेति पूर्वेण सम्बन्धः । तत्र के ते क्लेशाः कति चेत्यपेक्षायां प्राधान्यक्रमेण निर्दिशति **तत्रेत्यादिना** ।

निर्देशक्रमेण तेषां लक्षणान्याह **अनात्मनीत्यादिना** । अत्रानात्मशब्देन अव्यक्तमहदहङ्कार-पञ्चतन्मात्राख्यमष्टकं विवक्षितम् । ततश्चाष्टकविषयत्वादष्टविधत्वं तमोऽपरपर्यायाया अविद्यायाः 'भेदस्तम-सोऽष्टविध' इत्यादिनोक्तमुपसंगृहीतमिति द्रष्टव्यम् । **इदं मदीयमित्यभिमान इति** । अणिमाद्यष्टविधमैश्वर्यं मदीयमित्यभिमान इत्यर्थः । ततश्चाष्टविधैश्वर्यविषयत्वादष्टविध इत्यस्मिताऽपरपर्यायमोहस्य 'मोहस्य भेदोऽष्टविध' इति तन्त्रान्तरोक्ताष्टविधत्वमुपसंगृहीतं भवति । **विषयेष्विति** । शब्दादिषु विषयेष्वि-त्यर्थः । तेषां च दिव्यादिव्यभेदेन दशविधत्वात्तद्विषयत्वेन रागापरपर्यायमहामोहस्य दशविधत्वसिद्धेः 'दशविधो महामोह' इति तन्त्रान्तरोक्तदशविधत्वं संगृहीतं भवति । **कोपो द्वेष इति** । शब्दादयो दश विषया रञ्जनीयाः स्वरूपतः । ऐश्वर्यं त्वणिमादिकं न स्वरूपतो रञ्जनीयं किन्तु रञ्जनीयशब्दाद्युपायः ते च शब्दादय उपस्थिताः परेणापहन्यमानाः तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीया भवन्ति । शब्दादिभिर्दशभिः सहाणिमाद्यष्टकमष्टादशविधमिह कोपत्वेन विवक्षितम् । तद्विषयत्वाद्द्वेषापरपर्या-यतामिस्रस्य 'तामिस्रो द्वेषोऽष्टादशधे'ति तन्त्रान्तरोक्ताष्टादशविधत्वमुपसंगृहीतं भवति ॥ **भयमभिनि-वेश इति** । देवाः खल्वणिमादिकमष्टविधमैश्वर्यमासाद्य शब्दादीन्भुञ्जानाः, शब्दादयो भोगास्तदुपाया-श्चाणिमादयोऽस्माकमसुरादिभिर्नापह्रियन्तामिति बिभ्यति । तदिदं भयमष्टादशविधं तद्विषयत्वादभि-निवेशापरपर्यायान्धतामिस्रस्य 'भिनिवेशोऽन्धतामिस्रं तथा' इति तन्त्रान्तरोक्ताष्टादशविधत्वमुपसंगृहीतं भवति ॥ **एत एवेति** । अविद्यादयोऽभिनिवेशान्ताः क्लेशा एवेत्यर्थः । यथासंख्यमिति शेषः । एते च पञ्चविपर्ययविशेषा इति पूरणीयम् । यद्यप्यस्मितादयो विपर्ययप्रभवा न तु विपर्ययरूपाः तथाऽपि

यदविद्यया विपर्ययेण कार्यते वस्त्वस्मितादयस्तत्स्वभावाः सन्तस्तदभिनिविशन्त इति विपर्ययस्वभावत्वा-द्विपर्ययप्रभेदत्वोक्तिरिति ध्येयम् । एवमविद्यादीनामभिनिवेशान्तानां यथासंख्यं तमआदित्वमित्युक्तम् । अत्रैकदेशिमतमाह **वार्षगण्यास्त्विति** । **एतान्** तमआदीन् ॥ **अविद्यैवेति** । न त्वविद्याऽस्मिता-द्वेषाभिनिवेशानिति न पूर्वोक्तदोषावकाश इति भावः ।

**स०— ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ विशेषणविधानमेवैतदिति** । ईश्वरो-ऽस्तीत्येतदित्यर्थः । तदेव दर्शयति **य ईश्वर इति** ॥ **कर्तरि क्त इति** । 'मतिबुद्धिपूजार्थेभ्यश्चे'त्यत्र 'कर्तरि चर्षिदेवतयोरि'त्यतः कर्तरीत्यस्यानुवृत्त्या 'मतिबुद्धी'तिसूत्रेण कर्तरि क्त इत्यर्थः । भाति प्रकाशते इत्युक्त्या जानातीति लभ्यत इत्यर्थः । तस्यानुग्राहकत्वे संमतिमाह **तथेति** । **निर्माणकायं** लीलाविग्रहमित्यर्थः । अस्मितेति पदविभागः ।

**प०— ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ** ॥ अत्र पादे परकृतसूत्रव्याख्यानस्य भाष्य-कृता काप्यनिरासात्, तदप्यनुमतमिति मन्दानां भ्रमनिरासाय तदनूद्य स्वयं निरस्यन्नवतारयति **इदं सूत्रं केचिदित्यादिना** ॥ **अत्राशङ्कैवेति** । परकृतव्याख्याने सूत्रावतारिकारूपा शङ्कैव न युक्तेत्यर्थः । सूत्रार्थं च निराह **परिहारोपीति** ॥ **अत्रापीति** । क्षेत्रानुग्रहशक्तिमानेवेत्यन्वीयत इत्यर्थः । अस्ती-श्वर इत्यस्य पौनरुक्त्यमाशङ्क्यानुवादपरत्वेन सार्थक्यमाह **यद्यपीति** ॥ **क्षियंत्यस्मिन्निति** । क्षि निवा-सगत्योरितिधातोः । अधिकरणे औणादिके'त्र' प्रत्यये गुणे च रूपमिति भावः ॥ **कर्तरि क्त इति** । भातेरकर्मकत्वाद्गत्यर्थाकर्मकेत्यादिना क्तप्रत्यय इति भावः । निर्माणकायमित्यस्य तत्तन्निर्माणानु-कूललीलाविग्रहमित्यर्थः । **तन्त्रान्तरे** तदीयग्रन्थान्तरे । **वार्षगण्यस्त्विति** । सांख्यैकदेशी कश्चित् ॥ **आगामिन इति** । बीजावपनकर्तैवेतीत्यत्रस्थेतिशब्दस्य क्षेत्रानुग्रहशक्तिमानेवेति स्वयं भात इति क्लेश-कर्मादिवर्जित इत्यादिरूपेण संबध्य ब्रूत इत्यनेनान्वय इत्यर्थः ।

**या०— ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ स्वयमेवेति** । न चेतनव्यापारमपेक्षत इत्यर्थः । एवमग्रेऽपि । **पयोऽम्बुवदिति** । तत्र यथा पयोऽम्बुनोश्चेतनानधिष्ठितयोः स्वत एव प्रवृत्तिरेवं प्रधानस्यापीति शङ्कार्थ इत्युक्तत्वेनास्याः शङ्कायास्तेनैव परिहृतत्वादित्यर्थः ॥ **इति वदतेति** । सूत्रकृतेति शेषः ॥ **प्रकृतेरिति** । गवाद्युपभुक्ततृणादिदृष्टान्तेनेति भावः ॥ **न पुनरीश्वरेति** न च बुद्धिपूर्वकारी तत्रापीश्वर एव सर्वज्ञः सम्भवतीति शङ्कानिराकरणस्यार्थ इति भामत्यामुक्तत्वात्कथमेतदिति वाच्यम् । ईश्वरापेक्षायाः सूत्रार्थतया लाभो नेत्याशयात् । तथा हि अन्यत्रानडुहोपभुक्ते तदभावादिति वदता हि सूत्रकारेण गवादिष्वेव सहकारिविशेषसद्भावमात्रमुक्तं न पुनश्चेतनरूप एकसहकारीति, येनेश्वरकल्पना

तत्र स्यात् । न च परिशेषात्तत्र तत्कल्पनाऽभिप्रेता । औदर्यवन्हिरूपविशेषस्य वा, अदृष्टादिविशेष-रूपस्य वा, सहकारिविशेषस्य सम्भवेन परिशेषस्यासम्भवादिति **अत्रापीति** । सेश्वरः सांख्यस्त्वित्थं ब्रूते इत्यत्र अन्वयस्य सिद्धत्वादत्रापीत्युक्तम् । समुच्चयार्थस्यात्रायोगादवधारणार्थ इत्युक्तम् ।

**श्री० — ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ इति सिद्धमिति** । तथा चास्तीश्वर इत्येतद्व्यर्थमिति भावः । **क्षियन्तीति** । निवसन्तीत्यर्थः । क्षि निवासगत्योरिति धातुः ॥ **निर्माणकायं** जगन्निर्माणोपयुक्तं लीलाविग्रहम् । **एतान्** तमआदीन् । अत एव पञ्चपर्वाऽविद्येति प्रसिद्धिः ।

**च० — ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ** ॥ प्रकृतचरणेऽन्यदीयसौत्रापव्याख्यां भाष्यकृतः क्वापि न प्रत्याचख्युरिति तामपि तेऽनुमन्यन्त इति मन्दाः प्रतिपद्येरन्निति तामनूद्य दुदूषयिषुरवतारयतीदं सूत्रं **केचिदित्यादिना** । **अनडुहा** अनःकर्मकवहनक्रियाकर्त्रा बलीवर्देन । **पातञ्जलं** पतञ्जलिप्रवर्तितम् । **कर्तरि क्त इति** । गत्यर्थाकर्मकेति स्मृतेः कर्तृसाधनः क्तप्रत्यय इति भावः ।

**सु० — वेदवादविरोधं स्फुटीकर्तुमवधारणव्यावर्त्यमाह** क्षेत्रेति ।

**अनु०** — क्षेत्रशक्तिमती सैव प्रकृतिः

**या जगदुपादानं सा प्रकृतिरेवोपादानत्वशक्तिमतीति ब्रूते । न पुनर्वेदवादिन इव तामपि शक्तिमीश्वरायत्ताम् । व्यावर्त्यान्तरमाह** बीजेति ।

बीजशक्तिमान् ॥

जीवः, पर्जन्यवत्

**अत्राप्येवेति संबध्यते । शरीरेन्द्रियादिसंबन्धेनोत्पत्तौ या शक्तिः सा बीजशक्तिः । जीव एव तद्वानिति ब्रूते । न तु तदीयां बीजशक्तिं तत्त्व(वादिन)विद इव भगवदधीनाम् । यद्युपादानत्वोत्पत्तिशक्तिमत्त्वं प्रकृतिपुरुषयोरेव तदा किमीश्वरेणानुग्राहकेणेत्यत आह** पर्जन्यवदिति । **यथा हि पृथिव्याः कलमादिबीजानां चोपादानत्वबीजत्वशक्ती यद्यपि स्वायत्ते । तथाऽप्यंकुरोत्पत्तौ पर्जन्यस्यास्ति पृथिव्यनु(ग्रहकारक)ग्राहकत्वम् । तथा प्रकृतिपुरुषयोः स्वायत्तशक्तित्वेऽपीश्वरः प्रकृत्यनुग्रहशक्तिमानङ्गीकरणीयः ।**

**तर्हि किं पर्जन्यवदन्वयव्यतिरेकाभ्यामीश्वरस्य प्रकृत्यनुग्राहकत्वमवसेयं नेत्याह** दैवेति ।

दैवशक्तिमानीश्वरः स्मृतः ॥

देवशब्दोऽदृष्टस्वरूपत्वमाह । तेनान्वयव्यतिरेकाविषयत्वं लक्षयति । तत्किं निष्प्रमाणक एवेश्वरः प्रकृत्यनुग्राहकोऽङ्गीकरणीय इत्यत उक्तं स्मृत इति । 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरमि'त्यादाविति शेषः । स्मृत इत्युपलक्षणम् । श्रुत इत्यपि ग्राह्यम् ।

प्रकृतिपुरुषयोः स्वायत्तशक्तित्वं कुत इत्यत आह पृथिवीवदिति ।

पृथिवीवत्प्रधानं तत्

यथा पृथिव्याः स्वायत्तोपादानत्वशक्तिः तथा तत् तस्मादुपादानत्वात्प्रधानमपि स्वायत्तोपादानत्वशक्तिमदनुमेयमित्यर्थः । उपलक्षणं चैतत् । कलमादिबीजवद्बीजत्वाज्जीवोऽपि स्वायत्तबीजशक्तिमाननुमातव्य इत्यपि द्रष्टव्यम् ।

शे० — ननु क्षेत्रशक्तिमतीत्युत्तरभाष्यमनर्थकम् । न च प्रकृत्यादेरुपादानत्वादिशक्तिमत्ताप्रदर्शनार्थं तदिति वाच्यम् । तस्याप्यनर्थकत्वात् । न च क्षेत्रानुग्रहशक्तिमानेवेत्यवधारणव्यावर्त्यप्रदर्शनार्थं तदिति वाच्यम् । तत्प्रदर्शनस्यापि प्रयोजनानुपलम्भादित्यतः तत्प्रदर्शनपूर्वकमवधारणव्यावर्त्यप्रतिपादकतयोत्तरवाक्यं योजयति वेदवादेति ॥ व्यावर्त्यान्तरमाहेति । अत्रापि वेदवादे स्फुटीकर्तुमवधारणस्येति शेषः । क्षेत्रानुग्रहशक्तिमानित्यनुग्राह्यत्वोक्तेः पर्जन्यवदिति पुनरनुग्राहकत्ववर्णनमनर्थकमित्याशङ्क्योपादानत्वादिशक्तेः प्रकृत्यादिमात्रनिष्ठत्वेनेश्वरस्य प्रागुक्तप्रकृत्यनुग्राहकत्वासंभवशङ्काया दृष्टान्तोक्त्या तत्समर्थनेन निरासार्थत्वान्न तदिति भावेन तच्छङ्कानिवर्तकतया तद्योजयितुं तां शङ्कामुत्थापयति यदीति । शक्तेरदृष्टत्ववर्णनानर्थक्यमाशङ्क्येश्वरस्य प्रकृत्यनुग्राहकताया अन्वयव्यतिरेकसमधिगम्यत्वाभावसमर्थनार्थत्वान्न तदिति भावेन तत्तात्पर्यमाह तत्किमिति । तथाऽपि स्मृत इति तस्य स्मृतिसिद्धत्ववर्णनमनर्थकमित्यतः तस्य अप्रामाणिकत्वशङ्कानिरासार्थत्वान्न तदिति भावेन तच्छङ्कानिरासकतया तत्तात्पर्यमाह तत्किमिति ॥ श्रुत इत्यपि ग्राह्यमिति । 'यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्यां' इति श्रुत इत्यपि ग्राह्यमित्यर्थः ॥ तथाऽपि पृथिवीवदिति भाष्यखण्डवैयर्थ्यम् । न च पृथिवीदृष्टान्तेन स्वायत्तशक्तित्वोपपादनार्थमेतदिति वाच्यम् । तस्याप्यनर्थकत्वादित्यतः 'क्षेत्रशक्तिमती सैव प्रकृतिर्बीजशक्तिमानि'त्युक्तप्रकृतिपुरुषस्वायत्तशक्तित्वस्य प्रामाणिकत्वेनोपपादनार्थत्वान्न तदिति भावेन तदप्रामाणिकत्वशङ्कानिरासकतया तद्योजयितुं तां शङ्कामुत्थापयति प्रकृतिपुरुषयोरिति । तावता प्रकृतेरुपादानत्वशक्तेः स्वायत्तत्वसमर्थनेऽपि जीवस्य बीजशक्तेः स्वायत्तत्वस्य मूलेऽसमर्थनान्न, नोक्ताक्षेपपरिहारकत्वमस्य मूलस्येत्यतस्तत्सिद्ध्यर्थमपेक्षितं पूरयति उपलक्षणं चैतदिति ।

प० — अवधारणेति । क्षेत्रानुग्रहशक्तिमानित्यत्रावधारणार्थतयान्वितःतुशब्दव्यावर्त्यमित्यर्थः । मयाध्यक्षेणेति गीतावाक्यम् । श्रुत इत्यपीति । यो योनिमधितिष्ठतीत्यादाविति भावः ।

**या०—** **अवधारणव्यावर्त्यमाहेति** । क्षेत्रानुग्रहशक्तिमानेवेत्यवधारणव्यावर्त्यमाहेत्यर्थः । **अत्रापि** बीजभूतबीजावपनेऽपि ।

**सु०—** **ननु यथा लोके कलमादिबीजानां कश्चिदावपनकर्तास्ति । तथाऽत्रापि तत्स्थानीयेन केनापि भाव्यम् । न चासावन्योऽस्ति परमेश्वरात् । तत्कथं क्षेत्रानुग्रहशक्तिमानेवेश्वर इत्यत आह** जीव इति ।

**अनु०—** जीवः सन्निधिमात्रतः ॥

बीजावपनकर्तेति

**दृश्यते खल्वपत्यजीवो बीजभूतः । पितृजीवश्चावपनकर्तृस्थानीयः । तस्मात्किमीश्वरस्य तच्छक्तिकल्पनया । विषयोत्पत्तौ तु तदपेक्षैव नास्तीति भावः । नन्वेवं पितृजीवस्यापत्योत्पादकत्वाङ्गीकारेऽपसिद्धान्तः स्यात् । सांख्यैर्जीवस्य कर्तृत्वानभ्युपगमादित्यत उक्तं** सन्निधिमात्रत इति । **शरीरादिरूपा प्रकृतिरेवापत्यो(त्पत्ति)त्पादकर्त्री । तत्सन्निधिनिमित्ताद्विवेकाग्रहाज्जीवे तत्कर्तृत्वव्यवहार एवेति ब्रूत इति ।**

**शे०—** ननु 'जीवः सन्निधिमात्रतः । बीजावपनकर्ते'ति जीवस्य बीजावपनकर्तृत्वनिरूपणमनर्थकम् । न चेश्वरस्य तदभावोपपादनार्थमेतदिति वाच्यम् । ईश्वरस्य तदावपनकर्तृत्वाश्रयणे बाधकाभावेन तन्निवारणस्यापि निर्निबन्धत्वादित्यतः पूर्वोक्तस्य क्षेत्रानुग्रहशक्तिमत्त्वावधारणस्य समर्थनार्थत्वान्न तदिति भावेन तत्समर्थनपरतया तद्योजयितुं बीजावपनकर्तुरावश्यकत्वोपपादनपूर्वकं तदाक्षेपशङ्कामुत्थापयति **नन्विति** । ननु जीवस्य बीजभूतस्य कथं तदावपनकर्तृत्वमित्यतो बीजभूतस्य जीवस्यावपनकर्तृत्वासंभवेऽपि तदन्यस्य जीवस्य तत्कर्तृत्वाश्रयणान्नानुपपत्तिरित्यभिप्रेत्य तदुभयमुपपादयति **दृश्यते खल्विति** । नन्वावपनकर्तृत्वेनेश्वरस्यानपेक्षायामपि शरीरादिविषयोत्पादकत्वेन तदपेक्षाया आवश्यकत्वादवधारणानुपपत्तिरेवेत्यत आह **विषयोत्पत्ताविति** ॥ **तदपेक्षा ईश्वरापेक्षा** । बीजतदावपनकर्तृत्वाभ्यामेव तदुत्पत्त्युपपत्तेरिति भावः । ननु तथाऽपि जीवस्य शरीरादिरूपप्रकृत्या सन्निधिमात्रत इति सन्निधिव्युत्पादनमनर्थकम् । न च सन्निधिनिमित्तविवेकाग्रहोपदर्शनार्थमेतदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वादित्यतो जीवे कर्तृत्वव्यवहारे निमित्तोपदर्शनार्थत्वान्न तदिति भावेन मुख्यस्यैव कर्तृत्वव्यवहारस्य सम्भवे किमौपचारिकत्वाश्रयणेन येन निमित्तोपदर्शनार्थतया सन्निधिकथनमर्थवत्स्यादित्यतो मुख्यकर्तृत्वासम्भवप्रदर्शनपूर्वकं तदौपचारिकत्वसमर्थनपरतया तद्योजयति **नन्वेवमित्यादिना** ।

प० — किं जीवोत्पत्तौ आवपनकर्तापेक्षित इत्युच्यते अथ तद्भोग्यशब्दादिविषयोत्पत्तौ । आद्ये आह दृश्यते खल्विति । अन्त्य आह विषयेति । बीजशक्तिमत एव आवपनकर्तृसापेक्षत्वात् इति भावः ।

या० — नन्वस्त्वेवं बीजभूतापत्यजीवोत्पत्तौ पितृजीव आवपनकर्ता । शब्दादिविषयोत्पत्तौ तु ईश्वर एवावपनकर्ताऽङ्गीकार्यः । तथा चावधारणविरोध इत्यत आह विषयोत्पत्ताविति । तदपेक्षा आवपनकर्त्रपेक्षा । यद्बीजशक्तिमत्तदेवावपनकर्तृसापेक्षं । विषयास्तु न बीजशक्तिमन्तोऽतस्तत्र न तदपेक्षेति भावः । मूले कर्तेवेति प्रकृतिसन्निधानेनैव बीजावपनकर्तृत्वं न स्वत इत्यङ्गीकारात् इवेत्युक्तमिति भावः

सु० — एवमुपन्यस्तमतनिरासार्थं सूत्रमवतारयति अत्रेति ।

**अनु० —**　　　अत्र प्राह स्वयं प्रभुः ॥

**अत्रैतन्मतविषये दूषणं प्राहेत्यर्थः । स्वयं साक्षान्नोपचारेण । प्रभुरिति सूत्रकृतो दूषणसामर्थ्यमाचष्टे । सूत्रं व्याचष्टे** अन्यत्रेति ।

अन्यत्र काऽपि शक्तिर्न स्वातन्त्र्येण

अन्यत्र **प्रकृतौ पुरुषे । तथा पृथिव्यां कलमादिबीजे च ।** काऽपीति **क्षेत्रशक्तिर्बीज-शक्तिर्बीजावपनशक्तिश्चेत्यर्थः । कथं तर्ह्युपादानत्वादिकमित्यत उक्तं** स्वातन्त्र्येणेति । **कुतो नास्तीत्यत आह** ईशेति ।

ईश एव हि ॥

शक्तीस्ताः प्रेरयत्यजः

**यस्मादीश एव ताः प्रधानादिशक्तीः प्रेरयतीति श्रुत्यादिप्रसिद्धम् । तस्मादन्यत्र काऽपि शक्तिः स्वातन्त्र्येण नास्तीति । न च प्रधानादिवदीश्वरस्यापि प्रेरणाशक्तिः परायत्तेत्युक्तमज इति । क्रियाविशेषणमेतत् । तदनेन परकीयानुमानस्य बाधितविषयत्वं दृष्टान्तस्य च साध्यविकलत्वमुक्तं** भवति ।

शे० — अत्रेति परामृष्टव्यं दर्शयन्नेव विषयत्वे सप्तम्यर्थ इत्याशयेनाह **एतन्मतविषय इति ।** प्रकृत्यादाविति पृथिव्यादाविति वा वक्तव्ये तथाऽनुक्त्वान्यत्रेति सौत्री सामान्योक्तिः किमर्थेत्यतस्तथोक्तौ प्रतिज्ञामात्रदूषणस्य दृष्टान्तमात्रदूषणस्यैव च प्राप्त्योभयदूषणालाभात्तल्लाभाय सामान्योक्तिरित्यभिप्रेत्य पक्षदृष्टान्तसमर्पकतया तद्व्याचष्टे **अन्यत्र प्रकृतावित्यादि ।** अत्र प्रकृतौ पुरुष इति दार्ष्टान्तिकाभि-प्रायेण पृथिव्यां कलमादिबीजे चेति दृष्टान्ताभिप्रायेणोक्तमिति द्रष्टव्यम् । उपादानशक्तिरिति वा

बीजशक्तिरिति वाऽऽवपनशक्तिरिति वाऽनुक्त्वा क्वापीति सामान्योक्तिरपि उक्तसर्वशक्तिसंग्रहार्थेति भावेन तत्परतया तत्तात्पर्यमाह **क्वाऽपीति** । भिन्नलिङ्गवचनत्वेन शक्त्यादिविशेषणत्वानुपपत्तेरीश्वरनिष्ठप्रेरणाशक्तेरपराधीनत्वासिद्ध्या प्रकृतानुपयोगाच्चाह **क्रियाविशेषणमिति** । साधनं परित्यज्य धात्वर्थमात्रविशेषणमित्यर्थः । ततश्च क्रियाद्वारा प्राप्तस्त्रीलिङ्गत्वबाधेन 'क्रियाऽव्ययविशेषणानामि'त्यनेन क्लीबत्वादिविधानान्नानुपपत्तिरिति भावः ॥ **अनेनेति** । अन्यत्राभावादिति सूत्रखण्डेनेत्यर्थः ॥ **परकीयानुमानस्येति** । प्रधानं स्वायत्तोपादानत्वशक्तिमत् उपादानत्वात् । जीवः स्वायत्तबीजत्वशक्तिमान् बीजत्वादित्येवंरूपस्येत्यर्थः ॥ **दृष्टान्तस्य चेति** । पृथिवीकलमादिबीजरूपस्येत्यर्थः ।

**प० — परकीयानुमानस्येति** । प्रधानं स्वाधीनशक्तिमत् । उपादानत्वात् । पृथिवीवदिति अनुमानस्य श्रुत्यादिबाधितविषयत्वमित्यर्थः ।

**या० — परकीयानुमानस्येति** । प्रधानं स्वायत्तशक्तिमत्, उपादानत्वात् पृथिवीवदित्याद्यनुमानस्येत्यर्थः ।

**सु० — न केवलं प्रकृतिपुरुषयोः स्वातन्त्र्येण शक्त्यभावः परमेश्वरायत्तशक्तित्वं च । किं तर्हीत्यतश्चशब्दसमुच्चितमर्थमाह** तदधीनाश्चेति ।

**अनु० —** तदधीनाश्च सर्वदा ॥

सत्ता प्रधानपुरुषशक्तीनां च प्रतीतयः ॥

प्रवृत्तयश्च तास्सर्वाः

**आद्यश्चशब्दः शक्तिप्रेरकत्वस्य सत्तादिप्रदत्वेन सह समुच्चयार्थः । उत्तरावन्योन्यसमुच्चये । प्रधानपुरुषयोस्तदीयानां शक्तीनां च, सत्ता स्वरूपं, प्रतीतयश्च प्रमाविषयत्वं चेति यावत्; तास्ताः सर्वाः प्रवृत्तयश्च सर्वदा तदधीना इति योजना । केचिन्मन्यन्ते स्वरूपमेव वस्तुनः सत्त्वमिति, अपरे तु प्रमाणयोग्यत्वम्, अन्ये पुनरर्थक्रियाकारित्वम् । तदिदं त्रयमपि प्रकृत्यादीनां भगवदधीनमेवेति ।**

**शे० —** 'अन्यत्र क्वापि शक्तिर्ने'त्यादिनैव सूत्रव्याख्यानसिद्धेः 'तदधीनाश्च सर्वदे'त्युत्तरभाष्यमनर्थकमित्यतोऽन्यत्राभावाच्चेति सौत्रचशब्दसमुच्चितार्थप्रदर्शकत्वेन तद्व्याख्यानरूपत्वान्नानर्थक्यमिति भावेन तद्व्याख्यानपरतयोत्तरभाष्यं योजयति **न केवलमिति** । 'यत्प्रसादादिमे सन्ति' इत्युदाहरिष्यमाणप्रमाणस्य प्रकृत्यादिसत्तामात्रस्य भगवदधीनताप्रतिपादकत्वेऽपि सत्ताप्रतीतिप्रवृत्तीनां तदधीनत्वाप्रतिपादकत्वात्कथं तस्योक्तार्थे प्रमाणतयोपन्यास इति भाष्ये प्राप्तां प्रमाणतयोपन्यासस्यानौचित्यशङ्कां त्रिविधस्यापि सत्त्वरूपतोपपादनेन परिहर्तुं मतभेदेन तामुपपादयति **केचिदिति** ।

प० — सत्तेतिमूलपदमनूद्यार्थमाह **सत्ता स्वरूपमिति** ॥ **प्रवृत्तय इति** । तत्तदुचिता(र्थ) क्रिया इत्यर्थः । सत्ताशब्दितस्वरूपप्रतीतिप्रवृत्तीनां तिसृणामुक्तिः किमर्थेत्यत आह **केचिदित्यादिना** ।

या० — **प्रमाविषयत्वं** तद्विषयत्वयोग्यत्वम् ।

श्री० — **सर्वाः प्रवृत्तय इति** । अर्थक्रिया इत्यर्थः ।

सु० — नन्वेतदयुक्तम् । प्रधानादिसत्तादेर्नित्यत्वात् । नित्यस्य पराधीनताऽसंभवादित्यत आह नित्यमिति ।

अनु० — नित्यं नित्यात्मना यतः ॥
यथा नित्यतया नित्यं नित्यशक्त्या स्वयेश्वरः ॥
नियामयति नित्यं च

**यथाऽनित्यं घटादिकमनित्यतया नियम्यते, तथा नित्यमपि नित्यात्मना नित्यं च सर्वदैवेश्वरो नियामयति । यत एवं तस्मादुक्तमुपपन्नमिति योजना ।**

**एतदुक्तं भवति । यथा हि घटादयोऽनित्य(त्व)स्वभावा अपि नाकस्मादनित्या भवन्ति । तथात्वे चोत्पत्त्युत्तरक्षण एव विनाशप्रसङ्गात् । एवं नित्यस्यापि नित्यता यदि पराधीना तदा को दोषः । न चानित्यता पराधीनेति कदाचिद्घटादेर्नित्यता प्राप्ता । विनाशकारणोपनिपातध्रौव्यात् । तथा नित्यस्य नित्यतायाः पराधीनत्वेऽपि न जात्वनित्यताप्रसक्तिः । तन्नियमननियमादिति । तदिदमुक्तं** नित्यं चेति । **न चैतदलौकिकम् । नित्यकर्मभिर्दुरितप्रागभावानुवृत्तेः साध्यत्वेन वादिभिरभ्युपगतत्वात् । अनुवृत्तेर्नित्यतापादनानतिरेकात् । भवेदेतदे(वम्)स्वरसनित्यस्य । न स्वरसनित्यस्येति चेन्न । ईश्वरातिरिक्तस्य तद्भावासम्मतेः ॥ इयांस्तु विशेषः । किञ्चिदस्मदायत्तनित्यत्वम् । किञ्चिच्चेश्वरायत्तनित्यत्वमिति । तदप्यस्मासु कस्मान्नायतते तथाभूतं च कथमीश्वराधीनमित्यत उक्तं** नित्यशक्त्येति । **प्रधानादिशक्तेः प्रकृतत्वात् तद्ग्रहणमिदमिति मन्दाशङ्कां वारयितुं स्वयेत्युक्तम् ।**

शे० — नित्यमित्याद्युत्तरभाष्यानर्थक्यमाशंक्य नित्यस्य पराधीनत्वसम्भावनाप्रदर्शनार्थत्वान्न तदिति भावेन किं सम्भावनाप्रदर्शनेनापीत्यतः पूर्वोक्तस्य प्रकृत्यादिसत्तादेः भगवदधीनत्वस्यासम्भावनाशङ्कापरिहारार्थत्वादित्याशयवान् तदसम्भावनापरिहारकतया तद्योजयितुं तच्छङ्कामुत्थापयति **नन्विति** ॥

**असम्भवादिति** । अन्यथा नित्यत्वव्याघातादिति भावः । नित्यस्य नित्यात्मना भगवदधीनत्वस्य साध्यस्य यथाऽनित्यतयाऽनित्यमिति दृष्टान्तीकरणानुपपत्तिः तथेत्यनुक्तेः साकाङ्क्षत्वं; यत इत्यस्यानन्वितत्वसाकांक्षत्वे, नित्यमित्यस्य पुनरुक्तत्वं च भवतीत्यतो वाक्यं यथावद्योजयति **यथेत्यादिना** ॥ **नियामयतीति** । न च 'मितां ह्रस्व' इति ह्रस्वत्वविधानान्नियमयतीत्येव भवितव्यं नियामयतीति तु कथमिति वाच्यम् । केचिदत्र 'वा चित्तविराग' इत्यतो वेत्यनुवर्तयन्ति । सा च व्यवस्थितविभाषा । तेनान्यत्र संक्रामयेदित्यादि सिद्धं भवतीति वृत्तावुक्तत्वात्तद्विकल्पसिद्ध्या ह्रस्वत्वपक्षे नियमयतीत्यस्येव तदभावपक्षे नियामयतीत्यस्याप्युपपन्नत्वात् । अत एव 'भ्रामयन्सर्वभूतानि इति' 'भ्रामयितुमीश्वरस्ये'-त्यादिर्वा शास्त्रीयप्रयोगोऽप्युपपन्न इति ध्येयम् । नन्वनित्यस्वभावस्य घटादेरनित्यताया निर्निबन्धनत्वेन भगवदधीनत्वासिद्धेर्दृष्टान्तासिद्धिः । नित्यस्य नित्यताया अन्याधीनत्वे कदाचित्तस्यानित्यत्वापत्तिश्च । नित्यताया लोकेऽन्याधीनत्वादृष्ट्या तदभ्युपगमे लोकदर्शनविरोधश्चेत्यतो दृष्टान्तोपदर्शनपूर्वकं द्वाष्टन्तिक-मुपपादयति **एतदिति** । तत्र दृष्टान्तोपपादनं यथेति । द्वितीयं दोषं परिहरति **न चेति** । तृतीयं परिहरति **न चेति** । नित्यकर्मभिर्दुरितप्रागभावानुवृत्तिसम्पादनेऽपि तन्नित्यत्वासम्पादना-ल्लोकदर्शनविरोधस्तदवस्थ एवेत्यत आह **अनुवृत्तेरिति** ॥ **अस्वरसनित्यस्येति** । अन्याधीननित्यताकस्येत्यर्थः ॥ **तद्भावासम्मतेरिति** । स्वरसनित्यत्वासम्मतेरित्यर्थः । नन्वेवमन्यसम्पादितनित्यत्वाविशेषात्प्रागभावादिकमनित्यमेव प्रकृत्यादिकं नित्यमेवेति विभागो न स्यादित्यत आह **इयांस्त्विति** । अतः स व्यवहार उपपन्न इति शेषः ।

**स०**— यदनुग्रहतस्सन्तीत्यत्र सत्त्वं त्रिविधमपि विवक्षितमिति व्याख्यायते । तत्कथं त्रिविधस्यापि सत्त्वशब्दार्थत्वं रूढ्यादेरभावादित्यतः तत्तद्वादिप्रसिद्ध्या त्रिविधस्यापि सत्त्वशब्दार्थत्व-मुपपन्नमित्यभिप्रेत्याह **केचिदित्यादिना** । **नियामयतीति** । 'मितां ह्रस्व' इत्यत्र केचिदत्र 'वा चित्तविराग' इत्यतो 'वे'त्यनुवर्तते । सा च व्यवस्थितविभाषा । तेनान्यत्र 'संक्रामयती'त्यादिसिद्धं भवतीति वृत्तौ उक्तत्वान्नियामयतीति साधु ।

**न चैतदिति** । नित्यत्वस्य परायत्तत्वमित्यर्थः । **अस्वरसनित्यस्येति** अन्यसंपादितनित्य-त्वोपेतस्येत्यर्थः । **स्वरसेति** । स्वतस्सिद्धनित्यत्वोपेतस्येत्यर्थः ॥ **इयांस्तु विशेष इति** । अतः स व्यवहार उपपन्न इति शेषः ।

**प०**— मूले यथा नित्यतयेति दृष्टांतोक्तिः किमर्थेत्यतो नित्यस्येशाधीनत्वे कदाचिदनित्यं स्यादिति शङ्कानिरासायेति भावेनाह **एतदुक्तमिति** । को दोष इत्ययुक्तं अनित्यताप्राप्तेरेव दोषत्वा-

दित्यत आह **न चानित्यतेति** । कुतो न प्राप्तेत्यत आह **विनाशेति** ॥ **तन्नियमनेति** । भगवन्नियमननियमादिति वा नित्यत्वनियमननियमादिति वार्थः ॥ **नचैतदिति** । नित्यत्वान्याधीनत्वमित्यर्थः ॥ **अस्वरसनित्यस्येति** । पुरुषप्रयत्नाधीननित्यताकस्येत्यर्थः ॥ **तद्भावेति** । परानधीननित्यताकत्वस्येत्यर्थः ॥ **किंचिदिति** । दुरितप्रागभावादिनित्यत्वं ॥ **तदपीति** । ईश्वरायत्तवेदादिनित्यत्वमपीत्यर्थः । **नायतते** । नाधीनतया वर्तत इत्यर्थः ॥ **प्रकृतत्त्वादिति** । 'सत्ता प्रधानपुरुषशक्तीनामि'त्यनेनेति भावः ।

**या० — नियामयतीति** । मितां ह्रस्व इत्येतत्सूत्रव्याख्यानावसरे केचिदत्र वेत्यनुवर्तयन्ति सा च व्यवस्थितविभाषा । तेनान्यत्र संक्रामयति उपक्रामयतीत्येवमादि सिद्धं भवतीति वृत्तावुक्तत्वान्नियामयतीत्यस्य साधुत्वमिति ज्ञातव्यम् ॥ **तन्नियमेनेति** । नित्यतानियमेनेत्यर्थः । **एतदिति** । नित्यत्वस्य पराधीनत्वम् । **अस्वरसनित्यस्येति** । अन्याधीननित्यताकस्येत्यर्थः ।

**श्री० — प्रागभावानुवृत्तेरिति** । प्रागभावपरिपालनरूपाया इत्यर्थः । तथाऽपि नित्यतायाः कथं पराधीनत्वं प्राप्तमित्यत आह **अनुवृत्तेरिति** ॥ **अनतिरेकादिति** । तादृशानुवृत्तेरत्यन्ताभावपर्यवसन्नत्वेन नित्यत्वादिति भावः ॥ **अस्वरसनित्यस्येति** । अस्वाभाविकनित्यस्येत्यर्थः । दुरितप्रागभावपरिपालनरूपनित्यताया नित्यकर्माधीनत्वेन तन्नित्यताया अस्वरसत्वादिति भावः ॥ **किञ्चिदिति** । दुरितप्रागभावरूपं वस्तु ॥ **अस्मदिति** । अस्मत्कृतं नित्यकर्मेत्यर्थः । **नित्यत्वं** नित्यत्वोपेतम् । एवमुत्तरत्रापि नित्यत्वपदं व्याख्येयम् । **किञ्चित्** गगनादिकम् ॥ **तदपीति** । गगनादिनित्यत्वमप्यस्मदधीनं कुतो नेत्यर्थः । ईश्वराधीनतामप्यङ्गीकृत्याह **तथाभूतमिति** । नित्ये विद्यमानमपि । तत्रेश्वरकृत्याभावादित्यर्थः । प्रधाननिष्ठया शक्त्या ईश्वरो नियामयतीत्यस्याः शङ्काया व्यधिकरणत्वेनायोगान्मन्देत्युक्तम् ।

**सु० — यदुक्तं प्रधानादेरुपादानत्वादिशक्तिर्न स्वाधीना किन्त्वीश्वरप्रेरितैवेति । तत्कुत इत्यत आह** नेति ।

**अनु० —**　　न ऋते त्वदिति श्रुतेः ॥

**'न ऋते त्वत्क्रियते किञ्चनारे' इति श्रुतेः । प्रागुक्तं प्रतिपत्तव्यमिति शेषः । शक्तिरेव हि क्रियोच्यते ।**

**यत्प्रधानादिसत्तादेर्भगवदधीनत्वमुक्तं तस्य संभावनैवोक्ता । प्रमाणं तु तत्र किमित्यत आह** स्वभावेति ।

स्वभावजीवकर्माणि द्रव्यं कालः श्रुतिः क्रियाः ॥

यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ॥

इति श्रुतेर्न सत्ताद्या अपि नारायणं विना ॥

**कर्मशब्देन धर्माधर्मव्यक्तयो गृह्यन्ते** । क्रियाः **परिस्पन्दाः** । श्रुतिः **वेदः** । सन्तीति **त्रिविधमपि सत्त्वं विवक्षितम्** । सत्ताद्याः **प्रधानादेः** । नारायणं विना **तत्प्रेरणां विना** ।

**शे०** — ननु प्रधानादिशक्तेरीश्वराधीनत्वे कथं 'न ऋते' इति श्रुतेः प्रमाणतयोदाहरणं, क्रियाया भगवदधीनत्वस्य तया प्रतिपादनेऽपि शक्तेस्तदधीनत्वस्य तया अप्रतिपादनादित्यत आह **शक्तिरेवेति** । तत्तत्कार्यकरणशक्तिरेव तत्तत्कार्यक्रियेत्यर्थः ॥ **उक्तेति** । 'यथा नित्यतया नित्यमि'-त्यादिनेति शेषः ॥ **प्रमाणं तु किमिति** । संभावना तूत्कटैककोटिकसंशयरूपत्वान्न प्रमाणमिति भावः । कर्मक्रियाशब्दयोरपौनरुक्त्याय अर्थभेदमाह **कर्मशब्देनेति** । बहुवचनान्तानामेव पदानामत्र विग्रह इति भावेनाह **धर्माधर्मव्यक्तय इति** ॥ **त्रिविधं सत्त्वमिति** । स्वरूपप्रमाणयोग्यत्वार्थक्रिया-कारित्वरूपं त्रिविधं सत्त्वमित्यर्थः । सत्ताद्या इत्यादिशब्देन प्रतीतिप्रवृत्त्योः परिग्रहः । प्रधानादेरि-त्यादिपदेन पुरुषादिपरिग्रहः ।

**स०** — ननु प्रधानादिशक्तेः ईश्वराधीनत्वे 'न ऋते त्वत्क्रियते' इति वाक्योदाहरणम-युक्तम् । तस्य क्रियाया ईश्वराधीनत्वप्रतिपादकत्वेन शक्तेः ईश्वराधीनत्वाप्रतिपादकत्वेन प्रकृतासङ्गतत्वा-दित्यत आह **शक्तिरेवेति** । क्रिया इत्यनेन पौनरुक्त्यप्रतीतिवारणायाह **कर्मशब्देनेति** । ननु क्रिया इत्यस्य धर्माधर्मलक्षणकर्मार्थकत्वे खलु पौनरुक्त्यम् । तदेव न संभवति । क्रिया इत्यस्य बहुवचनान्तस्य धर्माधर्मोभयार्थकत्वासंभवेन तत्प्रतीतेरेवासंभवादित्यत उक्तम् **व्यक्तय इति** । एवं च क्रिया इत्युक्ते धर्माधर्मव्यक्त्यर्थकत्वप्रतीतिसंभवेन पौनरुक्त्यं स्यादेवेति भावः । **त्रिविधमपि सत्त्वम्,** स्वरूपं प्रमाण-योग्यत्वम्, अर्थक्रियाकारित्वं चेति त्रिविधं सत्त्वमित्यर्थः ।

**प०** — श्रुतौ क्रियाया एव श्रवणेन शक्तेरश्रवणादाह **शक्तिरेव हीति** । 'सविशेषोऽपि क्रियाशक्त्यात्मना स्थिर' इत्यादिलिङ्गपादोक्तेरिति भावः । यद्वा क्रियत इत्यत्र क्रियानुकूलशक्तिरेव विवक्षितेति भावः ॥ **सत्तादेरिति** । स्वरूपप्रतीतिप्रवृत्तीनामित्यर्थः ॥ **संभावनैवेति** । नित्यशक्त्या स्वयेत्यनेनेति भावः । अपौनरुक्त्याय कर्मक्रियाशब्दयोरर्थभेदमाह **कर्मशब्देनेति** । प्रवाहस्याधीनतो-क्त्यैव प्रवाहिणां कर्मस्वरूपाणां सा न प्राप्नोतीति व्यक्तय इत्युक्तम् ॥ सत्ताद्या इत्यग्रेऽभिधानादाह **सन्तीति त्रिविधमपीति** ।

**या०** — ननु श्रुतौ त्वदृते किञ्चन न क्रियत इत्युक्त्या क्रियाया एव भगवदधीनत्वं प्रतीयते न शक्तेरित्यत आह **शक्तिरेव हीति** । तत्तत्कार्यकरणशक्तिरेव तत्तत्कार्यक्रियोच्यत इत्यर्थः । तथा च क्रियत इत्यस्य कर्तुं शक्यत इत्यर्थो विवक्षितोऽतो न प्रकृतासङ्गतिरिति भावः ॥ **सम्भावनैवोक्तेति** । 'नित्यं नित्यात्मना यतः । नियामयति नित्यं चे'त्यत्रेति शेषः । कर्मक्रियाशब्दयोरपौनरुक्त्यायाह **कर्मशब्देनेत्यादि** । धर्माधर्मव्यक्तय इति वचनं कर्माणीति बहुवचनोपपत्त्यर्थमिति ज्ञातव्यम् ।

**श्री०** — ननु सर्वपदार्थनिष्ठशक्तेरीश्वराधीनत्वप्रतिपादनाय 'नर्ते' इति श्रुत्युदाहरणमसङ्गतम् । तत्र 'त्वदृते न क्रियत' इति सर्वपदार्थक्रियाया एवेश्वराधीनत्वमुच्यते न शक्तेरत आह **शक्तिरेव हीति** । **उच्यते** 'नर्ते' इति श्रुतौ । त्वदृते केनापि कर्म न क्रियते कर्तुं शक्तिर्नास्तीत्यर्थः । सन्ति सत्त्ववन्ति ॥ **सन्तीति** । सत्त्वोपेतानीत्यर्थः ।

**सु० — तस्मादन्यत्रोपादानत्वादिशक्तेरभावात्, तत्सत्तादेरपीश्वरायत्तत्वाच्च, न, तृणादीनामुत्पत्तौ पर्जन्यस्येव पृथिव्यनुग्राहकत्वं, ईश्वरस्य महदाद्युत्पत्तौ क्षेत्रानुग्राहकत्वमात्रम्, किन्तु सर्वस्वातन्त्र्यमेव; इति, यदन्यदभ्युपगतं पातञ्जलैर्वैदिकमतविरुद्धं, तत्सर्वं प्रथमाधिकरण एव निरस्तम् । किं पुनः प्रयत्नेनेत्याशयवान्पूर्वमतेन सहैतस्य हेयतामुपसंहरति** तदिति ।

तत्पतञ्जलिविन्ध्यादिमतं न पुरुषार्थदम् ॥ २–२–२ ॥

**विन्ध्योऽनीश्वरः सांख्यः । आदिपदेन तदेकदेशिनां पञ्चशिखेश्वरकृष्णादीनां ग्रहणम् । तदवान्तरमतयोरपि निरस्तत्वात् । यद्वा पतञ्जलिविन्ध्यावादी यस्य तत्तथोक्तम् । पतञ्जलिनाऽङ्गीकृतोऽपीश्वरो अनी(निरी)श्वरकल्प एव । अतः पूर्वस्यास्य च साम्याभिप्रायेण वा सहोपसंहार इति ॥ २–२–२ ॥**

**शे०** — **यदन्यदिति** । शरीरादिरूपा प्रकृतिरेवापत्योत्पत्तिकर्त्री तत्सन्निधिनिमित्ताद्विवेकाग्रहाज्जीवे कर्तृत्वव्यवहार इत्यादिकमित्यर्थः ॥ **प्रथमाधिकरण एवेति** । एतत्पादीयप्रथमाधिकरण इत्यर्थः ॥ **निरस्तमिति** । 'यदि भेदाग्रहोऽत्र चे'त्यादिनेति शेषः । **तदेकदेशिनां** निरीश्वरसांख्यैकदेशिनाम् । **पञ्चशिखः** आसुरिशिष्यः । **ईश्वरकृष्णः** कारिकासम्मतिकर्ता । आदिपदेन भिन्नकसंसारमोचकादीनां परिग्रहः । ननूक्तस्यैवोपसंहार उचितः, सांख्यैकदेशिमतहेयता च न पूर्वमुक्ता अतः कथमत्रोपसंहार इत्यत आह **तदवान्तरमतयोरिति** । चेतनस्य भोक्तृत्वतदभावरूपावान्तरमतयोरित्यर्थः ॥ **अनीश्वरकल्प एवेति** । चेतनरूपविशेष्यमात्रस्य पतञ्जलिनाऽभ्युपगमेऽपि तत्स्वातन्त्र्यानभ्युपगमात्फलतोऽनीश्वरवादान्तर्भाव एतन्मतस्येति भावः ॥ **वा सहोपसंहार इतीति** । अवश्यनि-

सर्नीयेतन्मतैकदेशप्रमेयजातस्य पूर्वाधिकरण एव निरस्तत्वेन तन्मतयोः साम्यं सहोपसंहारे निमित्तमिति पूर्वप्रकारः । निरीश्वरत्वेन तयोः साम्यं सहोपसंहारे निमित्तमित्यपरः प्रकार इति पक्षयोर्भेदः ॥ ॥ २-२-२ ॥

स० — **यदन्यदभ्युपगतमिति** । शरीरादिरूपा प्रकृतिः अपत्योत्पत्तिकर्त्री । तत्सन्निधिनिमित्तत्वात् विवेकाग्रहात् जीवे तत्कृतत्वव्यवहार एवेत्याद्यपि पातञ्जलैरुक्तमित्यर्थः । **प्रथमाधिकरण एवेति** । 'रचनानुपपत्तेश्च' इत्यत्रेत्यर्थः । **तदवान्तरमतयोरिति** । चेतनस्य भोक्तृत्वतदभावरूपावान्तरमतयोरित्यर्थः ॥ २-२-२ ॥

प० — तत्पतञ्जलीति मूलस्थतत्पदं प्रागुक्तस्यान्यत्राभावाच्चेति सूत्रखण्डार्थस्य संग्रहरूपमित्युपेत्य तच्छब्दार्थमाह **तस्मादिति** । तस्मादित्येतद्विवृणोति **अन्यत्रेत्यादिना** । (पृथिव्यादा)प्रधानादावित्यर्थः । सौत्रचशब्दार्थमाह **तत्सत्तादेरिति** । प्रधानस्वभावप्रतीतिप्रवृत्तीनामित्यर्थः । मतमित्येतत् 'न तृणादिवदि'तिसूत्रखण्डार्थोक्तिपरमिति भावेन तद्विवृणोति **न तृणेति** । तृणाद्युत्पत्तौ पृथिव्यनुग्राहकत्वं पर्जन्यस्य यथा, तथा क्षेत्रानुग्राहकत्वमात्रमीश्वरस्य नेत्यर्थः । फलितार्थमाह **सर्वस्वातन्त्र्यमेवेतीति** । उपसंहरतीत्यन्वयोऽत्रेतिशब्दस्य । ननु शरीरस्यैवापत्योत्पादनादिकर्तृत्वं जीवस्य तद्विवेकाग्रहनिमित्तमित्यादिपरोक्तस्य दूष्यांशस्य सत्वात् कथमुपसंहार इत्यत उक्तम् **यदन्यदिति** । पञ्चशिखेत्यादिनामकानामित्यर्थः ॥ **तदवान्तरेति** । पुरुषभोक्तृत्वाभोक्तृत्वमतयोरित्यर्थः । 'कर्तृत्वं यस्य तस्यैव भोक्तृत्वमुपलभ्यते' इति निरस्तत्वादित्यर्थः ॥ **आदी यस्येति** । कारणभूतौ प्रवर्तकाविति यावत् ॥ २-२-२ ॥

या० — **यदन्यदिति** । शरीरादिरूपा प्रकृतिरेवापत्योत्पादकर्त्री तत्सन्निधिनिमित्ताद्विवेकाग्रहाज्जीवे तत्कर्तृत्वव्यवहार एव इत्याद्यन्यदित्यर्थः । ननूक्तस्यैवोपसंहार उचितः । साङ्ख्यैकदेशिमतहेयता च न पूर्वमुक्ताऽतः कथमत्रोपसंहार इत्यत आह **तदवान्तरमतयोरिति** । चेतनस्य भोक्तृत्वतदभावरूपसांख्यावान्तरमतयोरित्यर्थः ॥ २-२-२ ॥

श्री० — तत्सत्तादेरपीति सौत्रचशब्दार्थकथनम् । **तदेकदेशिनां** विन्ध्यमतैकदेशिनाम् । **आदी** प्रवर्तकौ । **यस्य** मतस्य ॥ २-२-२ ॥

च० — **अनीश्वरकल्प एवेति** । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयर' इति योगादीषदूनोऽनीश्वर इत्यर्थः ।

॥ इति अन्यत्राभावाधिकरणम् ॥

## ॥ अथ अभ्युपगमाधिकरणम् ॥

**सु०** — ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ ॥ **केचिदिदं सूत्रमेवं व्याचक्षते । प्राक् प्रधानस्य प्रवृत्तिर्नोपपद्यत इत्युक्तम् । अथेदानीं प्रवृत्तेरभ्युपगमेऽपि तस्याः प्रयोजनाभावादिति । तदयुक्तम् । अभ्युपगमेऽपीत्येतावतो वैयर्थ्यात् । अर्थाभावाच्चेत्येतावतैव पूर्णत्वात् । किञ्च अर्थाभावेन किं साध्यम् । सांख्यमतस्यासामञ्जस्यं वा प्रकृतेः प्रवृत्त्यनुपपत्तिर्वा । नाद्यः । व्यधिकरणत्वात् । कथञ्चिदेकाधिकरणतापादनेऽपि स्वमतेनानैकान्त्यात् । न द्वितीयः । अभ्युपगम(वाद)विरोधात् । न ह्यभ्युपगमवादेऽपि यदेवाभ्युपगम्यते तदेव निराक्रियते । अनास्थां खलु तात्कालिकीमभ्युपगमेन द्योतयन्ति । यथाऽस्तु शब्दो नित्योऽनित्यो वा, अनुशासनं तावत्कर्तव्यमिति । तस्मान्नायं सूत्रार्थः ।**

**टी०** — ॐ **अभ्युपगमेऽप्यर्थाभावात्** ॐ ॥ ननु चार्वाकैरुच्यते मानमित्युत्तरग्रन्थे चार्वाकमतोपन्यासोऽनर्थकः । न च तन्मतनिरासस्य सूत्रार्थत्वज्ञापनार्थः स इति वाच्यम् । परोक्तरीत्या सांख्यमतनिरासस्यैव तदर्थत्वसम्भवे पूर्वोत्तरसांख्यमतसन्दष्टस्यास्य सूत्रस्य तत्परित्यागेन चार्वाकमतनिरा-

---

सार्थत्वकल्पनस्य निर्निबन्धनत्वादित्यतः तस्यानुपपन्नत्वाद्युक्तं तत्परित्यागेन चार्वाकमतनिरासस्य तदर्थत्वाश्रयणमित्यभिप्रेत्य, तन्मतोपन्यासपरतयोत्तरभाष्यं योजयितुं कथं सांख्यमतनिरासस्य तदर्थत्वायोग, इत्यतस्तं दर्शयितुं परकीयं सूत्रार्थं तावदनुवदति **केचिदिदमिति** ॥ **प्रवृत्तिरिति** । स्वाभाविकीति शेषः ॥ **प्रवृत्तेरिति** । स्वाभाविकप्रवृत्तेरित्यर्थः ॥ **प्रयोजनाभावादिति** । भोगापवर्गादिरूपप्रयोजनाभावादित्यर्थः ॥ **व्यधिकरणत्वादिति** । सांख्यमतमसमञ्जसं प्रकृतिप्रवृत्तेर्निष्प्रयोजनत्वादित्यस्य व्यधिकरणत्वादित्यर्थः । ननु साङ्ख्यमतमसमञ्जसं निष्प्रयोजनप्रवृत्तिमत्प्रकृतिप्रतिपादकत्वादिति विवक्षणान्न वैयधिकरण्यमित्यत आह **कथञ्चिदेकाधिकरणतेति** । सौत्रपदादेतावतोऽर्थस्यालाभमभिप्रेत्य कथञ्चिदित्युक्तम् ॥ **स्वमतेनेति** । स्वेन 'अभ्युपगमेपीत्यनेन, स्वन्मतेऽपि निष्प्रयोजनप्रवृत्तिमत्प्रकृतिप्रतिपादकता(सत्त्वे)भ्युपगमेऽप्यसामञ्जस्याभावादिति भावः ॥ **अभ्युपगमेति** । अभ्युपगमेऽपीति सूत्रांशेन प्रकृतिप्रवृत्त्यभ्युपगमविरोधादित्यर्थः । अभ्युपगमवाद एवायं नाभ्युपगम इत्यत आह **न ह्यभ्युपगमवादेऽपीति** । कुतो न निराक्रियत इत्यत आह **अनास्थामिति** । प्रेक्षावन्तो यत इति शेषः । यत्प्रमेयमभ्युपगतं तद्दूषणे तात्कालिकीमनास्थामप्रवृत्तिमित्यर्थः ॥ **नायं सूत्रार्थ इति** । यद्यपि प्रधानस्योक्तरीत्या प्रवृत्तिरेव न युक्ता तदभ्युपगमेऽपि स्वाभाविकत्वात् प्रवृत्तेः सहकार्यपेक्षा-

भाववत्प्रयोजनापेक्षाभावप्रसङ्गादिति सूत्रस्यार्थान्तरमपि परेण वर्णितमिति तदप्यनूद्य दूषणीयम् ॥ तथाऽपि पूर्वदूषणेनैव दूषितत्वान्न पृथगनूद्य दूषितम् । अत्राप्यभ्युपगमवादविरोधानिस्तारात् । तथा हि एवं हि परेणात्र तत्प्रसङ्गो वाच्यः । यदि प्रधानं स्वभावादेव प्रवृत्तिमत् न किञ्चिदन्यदपेक्षत इत्युच्येत ततो यथैव सहकारि किञ्चिन्नापेक्षते एवं प्रयोजनमपि किञ्चिन्नापेक्षिष्यते इत्यतः प्रधानं पुरुषस्यार्थं साधयितुं प्रवर्तत इति प्रतिज्ञा हीयेतेति । न चासौ युज्यते । प्रधानं स्वभावादेव प्रवर्तत इत्यंशमभ्युपगम्यैवास्य प्रसङ्गस्य प्रवृत्तत्वात्तत्कथं नाभ्युपगमविरोधः स्यात् । अर्थाभावादित्यनेनार्थापेक्षाभावप्रसङ्गस्य लक्षणीयत्वाच्चेति । चन्द्रिकायां तु पूर्वसूत्रार्थनिरासस्य टीकायामेव स्पष्टत्वात्तन्निरासमकृत्वा तत्र स्पष्टतोऽनिरस्तैतदर्थमात्रमनूद्य दूषितमिति द्रष्टव्यम् ।

स० — ॐ **अभ्युपगमेऽप्यर्थाभावात्** ॐ ॥ **तस्याः प्रयोजनाभावादिति** । इदमसमञ्जसमिति शेषः । **व्यधिकरणत्वादिति** । साङ्ख्यमतमसमञ्जसम् , प्रयोजनाभावादिति प्रयोक्तव्यम् । न च प्रयोजनाभावः साङ्ख्यमतनिष्ठ इति व्यधिकरणत्वमिति भावः ।

ननु प्रयोजनशून्यप्रधानप्रवृत्त्यभ्युपगमवत्त्वमेव हेतुत्वेनाभिप्रेतम् । न चाभ्युपगमस्यापि पुरुषनिष्ठत्वेन वैयधिकरण्यतादवस्थ्यमिति वाच्यम् । पुरुषद्वारा पक्षेऽपि संबन्धसद्भावात् । तादृशाभ्युपगमवत्पुरुषप्रणीतत्वमिति यावत् । तथा च न दोष इत्यत आह **कथञ्चिदिति** । तादृशाभ्युपगमवत्त्वस्यापि पुरुषद्वारा संबन्धसत्त्वेऽपि साक्षात्संबन्धाभावात् कथञ्चिदित्युक्तम् । **स्वमतेनेति** । मायावादिमतेन । निमित्ते तृतीया । अभ्युपगमेऽपीत्यनेन प्रयोजनशून्यप्रधानप्रवृत्त्यभ्युपगमेऽपि सामञ्जस्यस्यैवाङ्गीकृतत्वेनानैकान्त्यमिति भावः । 'कुतो न निराक्रियत' इत्यत आह **अनास्थामिति** । प्रेक्षावन्त इति शेषः । **अनास्थां** यत्प्रमेयमभ्युपगतं तद्दूषणे तात्कालिकीमनास्थाम् अप्रवृत्तिमित्यर्थः ।

प० — **अभ्युपगमेति** । परैः सांख्यापाकृतिपरत्वेन व्याख्यानेऽप्यन्यथा व्याख्याने किम्बीजमित्यतस्तदनूद्य निराह **केचिदित्यादिना** । अर्थाभावादिति हेतोरन्तिमसूत्रे वक्ष्यमाणासामञ्जस्यरूपसाध्येनान्वयः, अथ प्रवृत्तेश्चेत्यत्र त्वदुक्तप्रवृत्त्यनुपपत्तिरूपसाध्येनेति भावेन विकल्प्य निराह **किञ्चेति** ॥ **एकाधिकरणतेति** । प्रयोजनहीनप्रधानप्रवृत्त्युपपादकत्वात् तन्मतमयुक्तमित्येवंरूपेणेति भावः ॥ **स्वमतेनेति** । 'न प्रयोजनवत्त्वादि'ति प्रयोजनहीनेश्वरप्रवृत्त्युपपादकस्यापि स्वमतस्य सूत्रकृता सामञ्जस्याङ्गीकारादिति भावः ।

या० — ॐ **अभ्युपगमेऽप्यर्थाभावात्** ॐ ॥ **कथञ्चिदेकेति** । प्रयोजनशून्यप्रवृत्तिमत्प्रतिपाकत्वादित्येकाधिकरणतापादनेऽपीत्यर्थः । सौत्रपदादस्य हेतोरलाभमभिप्रेत्य कथञ्चिदित्युक्तम् ॥

**स्वमतेनेति** । अस्मन्मते प्रयोजनशून्यप्रवृत्तिमद्भगवत्प्रतिपादकतासत्त्वेऽपि सामञ्जस्यस्यैव सत्त्वादिति भावः ॥ **अभ्युपगमेति** । अभ्युपगमेऽपीति सूत्रांशेन प्रकृतिप्रवृत्त्यभ्युपगमविरोधादित्यर्थः । एतेन यदुक्तं भामत्यां स्वाभाविकत्वात्प्रधानप्रवृत्तेः सहकार्यन्तरापेक्षाभाववत्प्रयोजनापेक्षाभावप्रसङ्गादिति सूत्रार्थ इति, तदपि निरस्तं ज्ञातव्यम् । एवं हि परेण प्रसङ्गो वक्तव्यः । यदि प्रधानं स्वभावादेव प्रवृत्तिमत्तर्हि न किञ्चित्प्रयोजनमपेक्षेत ततश्च प्रधानं पुरुषस्यार्थं साधयितुं प्रवर्तत इतीयं प्रतिज्ञा हीयेतेति । न चासौ युज्यते । प्रधानं स्वभावादेव पुरुषस्यार्थं साधयितुं प्रवर्तत इत्यंशमभ्युपगम्यैवास्य प्रसङ्गस्योक्तत्वेनात्राप्यभ्युपगमविरोधात् । अर्थाभावादित्यनेनार्थापेक्षाभावप्रसङ्गस्य लक्षणीयत्वाच्चेति । अभ्युपगमवाद एवायं नाभ्युपगम इत्यत आह **न ह्यभ्युपगमवाद इति** ।

**श्री० — ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ** ॥ नन्वभ्युपगमवादत्वादेव तन्निराकरणं क्रियत इति चेत्तत्राह **न हीति** ।

**सु० — किन्नाम मा भूदचेतनस्य कर्तृत्वं, शरीरस्यैव चेतनावत्त्वेन कर्तृत्वोपपत्तेः । किमीश्वरादिनेत्यधिकाशङ्कया प्रत्यवतिष्ठमानस्य चार्वाकस्य मतमत्राधिकरणे निरस्यत इति भावेन तन्मतमुपन्यस्यति** चार्वाकैरिति ।

---

**अनु० — ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ** ॥

चार्वाकैरुच्यते मानमक्षजं नापरं क्वचित् ॥

**चार्वी बुद्धिस्तत्संबन्धादाचार्योऽपि चार्वी । तस्येमे छात्राश्चार्वाकाः । तैरक्षजं मानमुच्यते । नन्वेतदस्माकमपि सम्मतमित्यतः सावधारणमिदमुक्तमित्याशयेनोक्तं विवृणोति** नापरमिति । **अनुमानमागमश्च मानं नोच्यत इत्यर्थः । एतदप्यस्माकमनुमतमेव । प्रमेयविशेषे प्रत्यक्षस्यैव मानताऽभ्युपगमादित्यत आह** क्वचिदिति ।

**एतदुक्तं भवति । प्रमाणाधीना हि प्रमेयसिद्धिः । प्रमाणं च प्रत्यक्षमेव । नातोऽन्यदस्ति । न च प्रत्यक्षेणेश्वरं प्रतीमः । तस्मात्प्रमाणाभावान्नास्तीश्वर इति ।**

**ननु यदि प्रत्यक्षातिरिक्तं न प्रमाणं तदा धर्ममोक्षयोस्तत्साधनानां च प्रत्यक्षाविषयाणामसिद्धिः स्यादित्यत आह** देह इति ।

देह आत्मा पुमर्थश्च कामार्थाभ्यां विना न हि ॥

**ज्ञानवान्खल्वात्मा । ज्ञानं च देहधर्मः । यथोक्तम् 'पृथिव्यापस्तेजोवायुरिति तत्त्वानि । तत्समुदाये शरीरेन्द्रियविषयसंज्ञा । तेभ्यश्चैतन्यं मदशक्तिवद्विज्ञानमि'ति । तस्मा-**

देह एवात्मा । स च विनाशीत्यतः कालान्तरभाविनः पुंस एवाभावाद्धर्ममोक्षाख्यपुरुषार्थाभावो नानिष्टः । पुरुषार्थौ तु कामार्थावेव । पुरुषान्वयसंभवादिति । तत्रापि काम एव मुख्योऽर्थस्तु तत्साधनतयैव पुमर्थ इति ज्ञापयितुं कामस्यादौ सङ्कीर्तनम् । इति चोच्यत इति संबन्धः ।

शे०— **चेतनावत्त्वेनेति** । ज्ञानवत्त्वेनेत्यर्थः । शरीरस्यैवात्मत्वादिति भावः । **चार्वी बुद्धिरित्यादि** । अत्र बुद्धिवाचिनश्चारुशब्दात् वोतो गुणवचनादिति ङीष्प्रत्यये चार्वीति रूपसिद्धौ यष्टीः प्रवेशयेतिवदजहत्स्वलिङ्गादेव चार्वीशब्दात् बुद्धिमति लोकायतिकाचार्य(र्ये)पुरुषविशेषे लाक्षणिकात्तस्येम इत्यर्थे आकन्प्रत्यये तद्धिता इति बहुवचनसामर्थ्यलब्धतद्धितगतिवैचित्र्येणोत्पादिते यस्येति चेतीकारलोपे चार्वाकशब्दनिष्पत्तिरिति द्रष्टव्यम् ॥ **सम्मतमिति** । तथा च नेयं वैषम्योक्तिरिति भावः । **प्रमेयविशेष इति** । यत्र चक्षुराद्यतिरिक्तं प्रमापकं प्रमाणं न प्रवृत्तं तत्रेत्यर्थः । न तु तदतिरिक्तप्रमाणान्तरगोचर इत्यर्थः । तस्यासंभवादिति भावः । ननु प्रत्यक्षातिरिक्ताप्रामाण्यव्युत्पादनस्योक्तार्थविरोधित्वाभावान्न निरसनीयत्वमित्यतस्तद्दर्शयति **एतदुक्तं भवतीति** ॥ **प्रमाणाधीनेति** । 'मानाधीना मेयसिद्धिर्मानसिद्धिस्तु लक्षणात्' इति न्यायादिति भावः ॥ **न च प्रत्यक्षेणेति** । तस्यापाततस्तदभावावेदकत्वादिति भावः ।

ननु देह आत्मेति देहस्यात्मत्ववर्णनमनर्थकम् । न च देहविनाशेनात्मनो नाशवत्ताप्रतिपादनार्थमेतदिति वाच्यम् । तत्प्रतिपादनस्याप्युपयोगाप्रतिभासात् । न च कालान्तरे तदभावसिद्ध्यर्थमेतदिति वाच्यम् । तस्या अपि निष्प्रयोजनत्वात् । न च धर्ममोक्षाद्यभावसमर्थनं तत्प्रयोजनमिति वाच्यम् । तत्सद्भावेऽप्यनिष्टाभावेन तत्समर्थनस्याप्यनर्थकत्वादित्याशङ्क्य पूर्वोक्तस्यानुमानाद्यप्रामाण्यस्य समर्थनार्थत्वान्नानुपपत्तिरित्यभिप्रेत्य तत्समर्थनपरतया तद्योजयितुं तदनुपपत्तिशङ्कामुत्थापयति **ननु यदीति** । कुतो देहस्यात्मत्वमित्यतस्तल्लक्षणयोगित्वादिति भावेन, किं तल्लक्षणं कथं च तद्योगो येनात्मता देहस्य स्यादित्यतस्तदुभयमप्युपदर्शयति **ज्ञानवानित्यादिना** । ज्ञानं देहस्य धर्म इत्यत्र परस्य संमतिमाह **यथोक्तमिति** ॥ **तत्समुदाये** तत्सङ्घाते ॥ **तेभ्य इति** । शरीराद्याकारेण परिणतेभ्यः पृथिव्यादिभ्यो भूतेभ्यः । **चैतन्यं देहस्य** भवतीति शेषः । ननु न भूतानामेकैकस्य चैतन्यमुपलभ्यते घटादेरदर्शनात् । नापि मिलितानाम् । वह्नितप्तेऽयसि दमितवायुसमाध्माते सलिलकणाभ्युक्षिते भूतचतुष्टयमेलनेऽपि चैतन्यानुपलम्भात्, तत्कथं भूतसङ्घाते शरीरचैतन्यस्य विज्ञानमित्यत आह **मदशक्तिवदिति** । तस्येति शेषः । तथा च तस्य चैतन्यस्य भूतपरिणामे शरीरे विज्ञानं मदशक्तिवदुपपद्यते । यथा हि मदिरोपादानेषु किण्वादिष्वदृष्टाऽपि मदशक्तिर्मदिरायां विज्ञायते । तथा भूतेष्वदृष्टमपि चैतन्यं तत्कार्ये

शरीरे विज्ञायत इति भावः । यदि समस्तव्यस्तविकल्पेन देहस्य चैतन्यं निराक्रियेत तर्हि मदिरायां मदशक्तिरप्यपाक्रियेताविशेषादित्यतिप्रसङ्गसूचनाय मदशक्तिवदिति दृष्टान्तीकरणम् ॥ **पुरुषान्वयेति** । देहसंबन्धेत्यर्थः । देहस्यैव पुरुषत्वादिति भावः । मुख्यः पुमर्थ इति संबन्धः । **कामस्यादौ सङ्कीर्तनमिति** । अन्यथा 'अजाद्यदन्तमि'त्यनेनार्थशब्दस्यैव पूर्वनिपातप्राप्त्याऽर्थकामाभ्यामित्येव स्यात् । न च राजदन्तादिषु परमिति शास्त्रेणाजाद्यदन्तशास्त्रस्यापवादात्कामार्थाभ्यामित्यस्योपपत्तेर्नेदं ज्ञापकमिति वाच्यम् । तस्यापि शास्त्रस्य धर्मादिषूभयमिति वचनेनापवादात् । अर्थकामौ कामार्थावित्युभयथाऽपि प्रयोगस्य साधुतयाऽऽश्रयणीयत्वेऽपवादाभावे पुनरुत्सर्गस्य स्थितिरिति न्यायेन प्रथमप्राप्ताजाद्यदन्तशास्त्रस्याप्यानुगुण्यात्प्राथमिकप्रयोगस्यार्थकामाभ्यामित्यस्येव कर्तव्यत्वादिति भावः । अन्ये त्वर्थकामावित्यस्यासाधुत्वे हि नियमेन कामार्थावित्येव वक्तव्यतया कामस्यादौ सङ्कीर्तनस्यासाधुतादोषपरिहारार्थत्वेनान्यथासिद्धत्वादर्थापेक्षया कामस्य प्राधान्यद्योतकत्वासंभवेऽपि धर्मादिषूभयमिति वचनानुसारेणोभयथाऽपि प्रयोगस्य साधुतायां नियमेन कामस्यादौ सङ्कीर्तनस्यान्यथासिद्धत्वासंभवादर्थापेक्षया कामस्य प्राधान्यद्योतकत्वं तस्योपपन्नमित्याशय इत्याहुः ।

**स० — चार्वीत्यादि** । बुद्धिवाचिनः चारुशब्दात् 'वोतो गुणवचनात्' इति ङीप्प्रत्यये चार्वीति रूपसिद्धौ 'यष्टीः प्रवेशय' इत्यादिवत् अजहत्स्वार्थलिङ्गादेव चार्वीशब्दात् बुद्धिमति लोकायतिकाचार्यपुरुषविशेषे लाक्षणिकात् 'तस्येम' इत्यर्थे आकच्प्रत्यये 'तद्धिता' इति बहुवचनज्ञापिततद्धितगतिवैचित्र्येणोत्पादिते 'यस्येति चे'ति तद्धितपरत्वात् इकारलोपे चार्वाक इति रूपसिद्धिः । तथा चोक्तं 'सम्माननोत्सञ्जनाचार्यकरण' इति सूत्रव्याख्यायां काशिकावृत्तौ 'चारु नयते चार्वी लोकायते पदार्थान् इति चार्वी बुद्धिः । तत्संबन्धात् आचार्योऽपि चार्वी । स लोकायते शास्त्रे पदार्थान् नयते उपपत्तिभिः स्थाप्यमानाः सम्मानिताः पूजिता भवन्ती'ति । पदमञ्जर्यां च चारुशब्दात् 'वोतो गुणवचनादि'ति ङीपि यष्टीः प्रवेशयेति पुरुषेऽपि अजहत्स्वार्थलिङ्ग एव यष्टिशब्दो यथा, तथा चार्वीशब्दः' इति ।

ननु 'धर्मादिषु उभयमि'ति वार्तिकस्य सत्त्वेन उभयथा प्रयोगसंभवे किमेवमेव प्रयोगे नियामकमित्यत आह **तत्रापीति** । केचित् 'अजाद्यदन्तमि'त्यनेनार्थशब्दस्यैव पूर्वनिपातप्राप्त्या अर्थकामाभ्यामिति स्यात् । न च 'अजाद्यदन्तादिषु परम्' इत्यत्र 'धर्मादिषूभयमि'ति वार्तिककारेणोक्तत्वात् अर्थकामावितिवत् कामार्थावित्यस्याप्युपपन्नत्वेन, कामस्यादौ संकीर्तनं नोक्तार्थज्ञापकमिति वाच्यम् । सूत्रस्य स्वतः संप्राप्तत्वात् वार्तिकस्य प्रयोगान्तरदर्शनमूलकस्यास्वरसप्राप्तत्वात् तयोः स्वरसस्यैव

प्राबल्येन अजाद्यदन्तत्वस्यैव प्राप्त्या अर्थकामावित्येव वक्तव्ये कामस्यादौ संकीर्तनेनार्थस्य कामार्थत्वज्ञापनोपपत्तेरिति भावः इत्याहुः ।

**प०**— सांख्यनिरासपरपूर्वोत्तराधिकरणेषु मध्ये चार्वाकस्य कुतः प्रसक्तिरिति पृच्छति **किं नामेति** । अवान्तरसंगतिबलादिति भावेनाह **मा भूदिति** ॥ **चार्वीति** । समीचीनेत्यर्थः । वोतो गुणवचनादिति ङीष्प्रत्ययः ॥ **तत्संबन्धादिति** । लक्षणयाऽऽचार्यश्चार्वीशब्देन गृह्यत इत्यर्थः । आचार्यस्य बृहस्पतेश्चारुबुद्धिमत्त्वं चैवंरूपमतनिर्माणेन अयोग्यजनव्यामोहकचातुर्याद्ध्येयम् ॥ **तस्येम इति** । चार्वीशब्दात्तद्धिते आक(च्)प्रत्यये यस्येति ईकारलोपे चार्वाक इति सिद्धिः । आक(च्)इति तद्धितप्रत्ययश्च तद्धिता इति सूत्रे बहुवचननिर्देशज्ञापकात् 'विचित्रा हि तद्धितगतिरि'त्युक्तत्वाद्ध्येय इति भावः । संज्ञापूर्वकविधेरनित्यत्वात् वृद्धाच्छ इति छप्रत्ययो न कृतः ॥ **प्रमेयविशेष इति** । स्वात्मीयसुखदुःखादिविषये घटादिगतरेखोपरेखादिविषये चेति भावः ॥ **क्वचिदितीति** । कस्मिन्नपि वस्तुन्यक्षजादन्यन्मानं नेत्यर्थः । तर्हीश्वराद्यतीन्द्रियसिद्धिः कथमित्यतो, ब्रह्मणो जगत्कारणत्वाद्यविरोधादेतन्मतोपन्यासो व्यर्थ इत्यतो वाह **एतदुक्तमिति** ॥ **शरीरेति** । शरीरसंज्ञा इन्द्रियसंज्ञा विषयसंज्ञेत्यर्थः । तेभ्यो देहरूपेण परिणतेभ्यो भूतेभ्यश्चैतन्यं तस्य च विज्ञानं जायते मदिरायां मदशक्तिर्यथा जायते तथा जडपरिणामेपि देहे चैतन्यमिति योजना ॥ **पुरुषान्वयेति** । यस्य पुरुषेण सह भोग्यभोक्तृतया संबन्धः

स हि पुरुषार्थः । पुरुषश्चेह ज्ञानवान्देह एवेति तेन भोग्यतयान्वीयमानौ कामार्थावेवेति तावेव पुरुषार्थावित्यर्थः । **कामः** स्रक्चन्दनवनितादिः । **अर्थः** सुवर्णादिः । 'धर्मे चार्थे च कामे च मोक्षे च भरतर्षभे'ति भारतोक्तेः 'अजाद्यदन्तमि'ति सूत्रकृन्मतानुसाराद्वाऽर्थकामाविति कुतो नोक्तम् । धर्मादिषूभयमिति वार्तिकोक्त्याऽर्थकामाविति वक्तुं शक्यत्वेपि एवमुक्तेः किं कृत्यमित्यत आह **तत्रापीति** ।

**यां०**— **चेतनावत्त्वेनेति** । ज्ञानवत्त्वेनेत्यर्थः । शरीरस्यैवात्मत्वादिति भावः ॥ **चार्वी बुद्धिरिति** । चारुशब्दाद्वोतो गुणवचनादिति ङीषि चार्वीति रूपसिद्धिरिति द्रष्टव्यम् ॥ **तत्सम्बधादिन्ति** । तथा च यथा यष्टीः प्रवेशयेत्यादौ यष्टिशब्दोऽजहत्स्वार्थलिङ्ग एव तद्धरपुरुषलक्षकस्तथा चार्वीशब्दोऽप्यजहत्स्वार्थलिङ्ग एव तादृशबुद्धिमदाचार्यलक्षक इति भावः ॥ **तस्येम इति** । चार्वीशब्दात्तस्येम इत्यर्थेऽनुक्तप्रत्ययज्ञापकतद्धिता इति बहुवचनेन आकच्प्रत्यये टिलोपे चार्वाकेति रूपमिति द्रष्टव्यम् । चार्वीशब्दात्तस्येम इत्यर्थे विचित्रा हि तद्धितगतिरिति वचनादाकच्प्रत्यये यस्येति चेतीकारलोपे चार्वाकेति रूपमित्यप्याहुः ॥ **प्रमेयविशेष इति** । उत्पत्त्यनन्तरमेव विनष्टे विद्युदादावित्यर्थः ॥ **तेभ्यश्चैतन्यमिति** । शरीराद्याकारेण परिणतेभ्यो भूतेभ्य इत्यर्थः । ननु समस्तेषु व्यस्तेषु वा भूतेषु

न चैतन्यं दृष्टं तत्कथं तत्कार्ये शरीरे चैतन्यस्य विज्ञानमित्यत आह **मदशक्तिवदिति**। तस्येति शेषः। तथा च तस्य चैतन्यस्य भूतपरिणामे शरीरे विज्ञानं मदशक्तिवत्। यथा मदिरोपादानेष्वदृष्टाऽपि मदशक्तिर्मदिरायां विज्ञायते। एवं भूतेष्वदृष्टमपि चैतन्यं तत्कार्ये शरीरे विज्ञायत इत्यर्थः। अत एव 'तेभ्यश्चैतन्यं मदशक्तिवत्तस्य विज्ञानमि'ति शाङ्करभाष्ये पाठः॥ **पुरुषान्वयेति**। देहस्यैव पुरुषत्वादिति भावः॥ **कामस्यादाविति**। तथा च प्रमाणप्रमेयेत्यादाविव प्रथमोद्देशेन मुरुता ज्ञायत इति भावः। केचित्त्वन्यथाऽजाद्यदन्तमित्यनेनार्थशब्दस्यैव पूर्वनिपातप्रसङ्गेनार्थकामाभ्यामिति स्यादिति भावमाहुः। तच्चिन्त्यम्। धर्मादिषूभयमिति वार्तिकबलेनानियमश्चात्रेष्यत इति प्रत्युक्तत्वेनार्थकामाविति वत्कामार्थावित्यस्याप्युपपन्नत्वेन कामस्यादौ सङ्कीर्तनेन चोक्तार्थाज्ञापनात्। सूत्रस्य वार्तिकापेक्षया प्रबलत्वात्तदनुसारेणार्थशब्दस्यैव प्रथमप्रयोगप्राप्तिरिति तु न वैयाकरणानां संमतम्। तैरुत्तरोत्तरमुनिवचनप्रामाण्याभ्युपगमादिति।

**सु०** — **एतन्मतनिरासार्थं सूत्रं व्याख्यातुमुपोद्घातं तावदाह** यदेवमिति।

**अनु०** — यदेवं

**यद्येवमतीन्द्रियं वस्तु न स्यात्, तदा तदीयं शास्त्रं विषयप्रयोजनशून्यमापद्येतेति शेषः। तत्कथमिति चेत्। किमनेन शास्त्रेण तत्प्रणेता विषयं प्रतिपद्यते प्रयोजनं च लभते। उत विनेया नराः।**

**आद्यं दूषयति** दर्शनेनेति।

दर्शनेनास्य कोऽर्थः प्रत्यक्षगोचरः ॥

लब्धस्तेनैव हि

**किमाक्षेपे। अर्थो विषयः प्रयोजनं च। लब्ध उपलब्धः प्राप्तश्च। प्रत्यक्षगोचरो हीति तत्र हेतुः। ततश्चायमर्थः। न तावदनेन शास्त्रेण शास्त्रप्रणेत्राऽतीन्द्रियोऽर्थः उपलभ्यते। तदभावात्। नाप्यैन्द्रियकः। तस्य प्रत्यक्षगोचरत्वेन विषयत्वानुपपत्तेः। 'अप्राप्ते हि शास्त्रमर्थवत्'। किञ्च प्रत्यक्षेण तमर्थमुपलभ्य खल्वसौ शास्त्रं प्रणीतवान्। अन्यथा (तत्प्र)प्रणयनानुपपत्तेः। तथा च तं प्रति तमेवार्थमुपदर्शयत्कथं सविषयं स्यात्। एवं प्रयोजनमपि न तावदतीन्द्रियम्। तदभावात्। नाप्यैन्द्रियकम्। तस्य योग्यानुपल(ब्धि)म्भबाधितत्वात्॥ ननु हितोपदेष्टरि जनोऽनुरज्यते। 'जनानुरागप्रभवाश्च सम्पद' इति चेत्। कृतघ्नतानिमित्तप्रत्यवायानुसन्धाने सत्येवमेतत्। तत्तु परेण त्याजितमिति।**

द्वितीयं दूषयति नरैरिति ।

नरैः शास्त्रात्किं मोहनं विना ॥

लब्धमित्यनुवर्तते । अत्रापि पूर्ववदुत्तरम् । स्यादेतत् । धर्माद्यतीन्द्रियाभिमतार्थाभावः शास्त्रस्य विषयः । तस्य प्रत्यक्षत्वेऽपि वैदिकवासनानिमित्तशङ्काकलङ्कितत्वेन विषयत्वमुपपद्यते । प्रयोजनं च धर्माधर्मशङ्कोपरुद्धार्थकामोपभोगः । तत्कथं नरैः शास्त्रात्किं लब्धमित्युच्यते । मैवम् । विषयप्रतिपत्तौ हि प्रयोजनावाप्तिः । विषयं च किं शास्त्रमाप्तवाक्यतया प्रतिपादयेत् उतोपपत्तिव्युत्पादनेन । नाद्यः । आगमप्रामाण्याभ्युपगमप्रसङ्गात् । नास्ति अतीन्द्रियं किमपीत्येतावतैव पूर्णत्वे(नैव)न वाक्यविस्तरवैयर्थ्याच्च । न द्वितीयः । उपपत्तिप्रामाण्याभ्युपगमप्रसङ्गात् । शास्त्रं शङ्कामेव निवारयति । विषयप्रतिपत्तिस्तु प्रत्यक्षेणैवेति चेन्न । स्वयं वोपपत्तिव्युत्पादनेन वा कमप्यर्थमनुपदर्शयतः शङ्कानिवारणासामर्थ्यात् । शङ्का हि संशयो वा स्याद्विपर्ययो वा । द्वावपि विपरीतार्थगोचरबलवत्प्रत्ययनिरसनीयौ । नाज्ञामात्रेण । तर्कव्युत्पादनं शास्त्रेण क्रियत इति चेत् (न) । तस्यापि प्रमाणत्वात् । तदिदं 'दर्शनेने'ति प्रकृतानुवृत्तौ सत्यां 'शास्त्रात्किमि'ति वदता सूचितम् । अन्यथा नरैश्चेत्यवक्ष्यत् । मोहनं विनेत्युभयवाक्यशेषः परिहासः । शास्त्रप्रणेत्रा सुरगुरुणाऽयोग्यजनव्यामोहनं प्रयोजनं लब्धम् । अन्यैश्च मिथ्याज्ञानम् । नातोऽधिकमिति ।

---

शे० — व्याख्यातुमिति । स्वमतेनैव निष्फलमित्यादिनेति शेषः । विनेयाः शिष्याः ॥ आक्षेप इति । परिहाराभावेन प्रश्नार्थत्वासम्भवादिति भावः ॥ विषयः प्रयोजनं चेति । अर्यते ज्ञायत इति व्युत्पत्त्या विषयस्य, अर्थ्यते प्रार्थ्यत इति व्युत्पत्त्या प्रयोजनस्य च तेन लाभादिति भावः ॥ तदभावादिति । अतीन्द्रियार्थसाधकप्रमाणाभावादिति भावः । लोकोपकार एव शास्त्रप्रणेतुः प्रयोजनमित्यभिप्रेत्य तस्य प्रयोजनतामुपपादयति नन्विति ॥ कृतघ्नतानिमित्तेति । अनेन तावदस्माकं हितोपदेशेनोपकारः कृतः । अतः अस्माभिरप्ययं प्रत्युपकर्तव्यः अन्यथा कृतघ्नतानिमित्तप्रत्यवायः स्यादित्यनुसन्धाने सतीत्यर्थः ॥ अत्रापि पूर्ववदिति । न तावदनेन शास्त्रेण नरैरतीन्द्रियार्थ उपलभ्यते प्रमाणाभावेन तदभावात् । नाप्यैन्द्रियकः, तस्य प्रत्यक्षगोचरत्वेन विषयत्वानुपपत्तेः । प्रयोजनमपि, न तावदतीन्द्रियं प्रमाणाभावेन तदभावात् । नाप्यैन्द्रियकं तस्य योग्यानुपलम्भबाधितत्वादिति पूर्ववदुत्तरमित्यर्थः । ननु धर्माद्यभावस्य प्रत्यक्षगोचरत्वात्कथं विषयत्वमित्यतः प्रत्यक्षत्वेऽपि तस्य वेदादिवाक्यजनितधर्मादिसद्भावभ्रान्त्या कलङ्कितत्वाद्विषयत्वमुपपन्नमित्याह तस्येति ॥ प्रयोजनं चेति । नराणामिति शेषः । धर्मादिसद्भावभ्रान्त्या कामभोगादुपरुद्धानां धर्माद्यभावप्रतिपादनेन भ्रान्तौ निवृत्तायां यथेष्टकामोपभोग इत्यर्थः ॥ वैयर्थ्या-

चेति । आप्तोक्तौ हेत्वाद्याकाङ्क्षानुदयादुदये वाऽऽप्तत्वव्याघातादिति भावः । कृतस्य चर्चस्योद्धाष्यत्वं परिहरति तदिदमिति । कथमेतावतोऽर्थस्य शास्त्रशब्देन सूचनमित्यतस्तद्ग्रहणसामर्थ्यादिति भावेन तदुपपादयति अन्यथेति । परिहारप्रकारमेवोपदर्शयति शास्त्रप्रणेत्रेति ।

स० — उतेति । विषयं प्रतिपद्यते प्रयोजनं च लभते इत्यर्थः । विषयप्रयोजने शास्त्रसंबन्धिन एव दृष्टे । स च (शास्त्रसंबन्धी) द्विविधः । प्रणेता श्रोता चेति । तदभिप्रायेण विकल्पावकाशः । हितोपदेशेन जनानुराग एव प्रयोजनं भविष्यतीत्यभिप्रेत्य शङ्कते नन्विति । तस्य प्रयोजनत्वोपपादनाय 'जनानुरागप्रभवा' इत्यादि । निराकरोति कृतघ्नतेति ॥ परेणेति । धर्माधर्मौ न स्त इति बोधितत्वादिति भावः । पूर्ववदिति । न तावदनेन नरैः शास्त्रेणातीन्द्रियार्थ उपलभ्यते तदभावात् । नाप्यैन्द्रियकः । तस्य प्रत्यक्षगोचरत्वेन विषयत्वानुपपत्तेः । नापि प्रयोजनमतीन्द्रियम् । तदभावात् । नाप्यैन्द्रियकम् । तस्य योग्यानुपलम्भबाधितत्वादिति पूर्ववदुत्तरमित्यर्थः । शङ्का हीति । शङ्काशब्देन विपरीतज्ञानमुच्यते । तद्द्विविधमित्यभिप्रायेणैवमुक्तम् । तर्कव्युत्पादनमिति । प्रमाणानुग्राहकप्रमाणतर्कव्युत्पादनं क्रियत इत्यर्थः । तस्यापीति । प्रमाणत्वमङ्गीकरणीयम् । अन्यथा शङ्कानिवर्तकत्वमेव न स्यात् । तथा च अपसिद्धान्त इति भावः ॥ शास्त्रादिति । वक्तृश्रोतृप्रयोजनमुद्दिश्य प्रमाणान्तराप्राप्तमर्थं प्रतिपादयतां वाक्यानां समूहस्यैव शास्त्रशब्दार्थत्वेन वाक्यानां समूह इत्युक्त्या आप्तवाक्यतया, प्रतिपादयतामित्युक्त्या उपपत्तिव्याप्त्यादिनेत्यादि सूचितमिति भावः ।

प० — किमिति सामान्ये नपुंसकम् । 'शक्यं हि श्व(स्व)मांसादिनापि क्षुत्प्रतिहन्तुमि'ति महाभाष्यप्रयोगवदयं ध्येयः । विनेया नरा इति । शिष्यभूताः जनाः प्रतिपद्यन्ते लभन्ते चेति विपरिणामेनान्वयः ॥ किमाक्षेप इति । किंशब्दादेशः क इति शब्दः । लब्धपदस्यापि विषयप्रयोजनरूपार्थद्वयान्वयाय क्रमेणार्थद्वयमाह लब्ध इति । तेनेत्यस्यार्थः शास्त्रप्रणेत्रेति ॥ शास्त्रमर्थवदिति । सविषयं भवतीत्यर्थः । तेनैवेत्येवकारसार्थक्याय युक्त्यन्तरपरत्वेन व्याचष्ट किञ्चेति । योग्यानुपलम्भबाधितत्वमसिद्धमिति शङ्कते ननु हितेति ॥ अनुरज्यते अनुरागयुक्तो भवति ॥ कृतघ्नतेति । कृतोपकारस्यानुरागादिरूपप्रत्युपकाराकरणं कृतघ्नता तन्निमित्तो यः प्रत्यवायः पापं तदनुसन्धाने सति हितोपदेष्टरि अनुरज्यते जन इत्यादिकं त्वदुक्तं प्रयोजनं स्यात् न च तदस्ति । त्वयैव धर्माधर्मौ न स्त इत्युक्त्या तदनुसन्धानस्य त्याजितत्वादित्यर्थः ॥ अत्रापीति । द्वितीयपक्षेपि ॥ पूर्ववदुत्तरमिति । प्रणेतृपक्ष इव उत्तरं । शिष्यजनैर्नतावच्छास्त्रेणातीन्द्रियोऽर्थ उपलभ्यते । तदभावात् । नाप्यैन्द्रियकः प्रत्यक्षगोचरत्वेन विषयत्वानुपपत्तेः । अप्राप्ते हि शास्त्रमर्थवत् । नापि तैः प्रयोजनं लब्धम् । अतीन्द्रियस्याभावात् । ऐन्द्रियकस्य योग्यत्वे सत्यनुपलम्भबाधितत्वादिति ध्येयमित्यर्थः । अनुशासनार्थकशास्त्रपदप्रयोगसूचितां

युक्तिं वक्तुमाह **स्यादेतदित्यादिना** ॥ **तस्य प्रत्यक्षत्वेपीति** । प्रतियोग्यनुपलब्धिरेव अभाव-प्रत्यक्षत्वे हेतुरिति मन्वानस्या(यम)नुवादः ॥ **वैदिकेति** । यजेतेत्यादिवेदार्थानुसंधानजन्यसंस्कार-निमित्ता या धर्माद्यभावनास्तित्वशङ्का तद्विषयत्वेनेत्यर्थः ॥ **शङ्कामेवेति** । धर्माद्यस्तित्वशङ्कामेवेत्यर्थः ॥ **स्वयं वेति** । आप्त(त्म)वाक्यात्मना वेत्यर्थः । असामर्थ्यमेव व्यनक्ति **शङ्का हीति** ॥ **विपरीतेति** । शङ्काविषयविरोध्यर्थेत्यर्थः । प्रसङ्गरूपतर्कव्युत्पादनेनार्थमुपदर्शयच्छास्त्रं शङ्कां वारयिष्यतीति आशङ्कामनूद्य निराह **तर्केति** ॥ **प्रमाणत्वादिति** । तच्च व्युत्पादयिष्यति भक्तिपादे इति भावः ॥ **शास्त्रात्कि-मिति वदता सूचितमिति** । किं स्वयमेवार्थं शास्त्युत तर्कादिव्युत्पादनेनैवेत्यर्थस्य ध्वनितत्वादिति भावः ॥ **उभयवाक्यशेष इति** । **तेन कोऽर्थो** लब्धः । **नैरश्च कोऽर्थो** लब्ध इति **वाक्यद्वयशेषतां** व्यनक्ति **शास्त्रप्रणेत्रेति** ।

**या०— विनेयाः** शिष्याः ॥ **कृतघ्नतानिमित्तेति** । अनेन तावदस्माकं हितोपदेशेनोपकारः कृतः । अस्माभिश्चास्य प्रत्युपकारः कर्तव्यः । अन्यथाऽस्माकं कृतघ्नतानिमित्तप्रत्यवायः स्यादित्यनु-सन्धाने सतीत्यर्थः ॥ **वैदिकवासनेति** । धर्मादिसद्भावविषयकवासनेत्यर्थः ॥ **शास्त्रात्किमिति वदतेति** । शिष्यते यथावस्थितमेव प्रतिपाद्यते वस्त्वनेनेति व्युत्पत्त्या शास्त्रशब्देन प्रमाणत्वस्य सूचना-दिति भावः ।

**श्री०—** ननु शास्त्रप्रणेत्रा सम्पद्रूपं प्रयोजनं लब्धमित्याशङ्कते **नन्विति** ॥ **अत्रापि पूर्वव-दिति** । न तावदनेन शास्त्रेण विनेयेनातीन्द्रियार्थ उपलभ्यते तदभावात् । नाप्यैन्द्रियकः । तस्य प्रत्यक्षगोचरत्वेन शास्त्राविषयत्वात् । एवं प्रयोजनमपि न तावदतीन्द्रियं तदभावात् । नाप्यैन्द्रियकम् । अनुपलम्भबाधितत्वादित्युक्तरीत्योत्तरं वक्तव्यमित्यर्थः । **शङ्कां** वैदिकवासनानिमित्तधर्माधर्म(ादि)शङ्काम् ॥ **विषयेति** । धर्माद्यभावरूपेत्यर्थः । **स्वयं** आगमत्वेन । असामर्थ्यादित्यनन्तरमागमत्वादिनोपदर्शने चागमोपपत्त्योः प्रामाण्यापत्तिरिति वाक्यशेषः । **अन्यथा** एतत्सूचनाभावे ॥ **इत्यवक्ष्यदिति** । दर्शनेने-त्यनुवृत्तिसम्भवाच्छास्त्रादिति व्यर्थमित्यर्थः ।

**सु०— किमतो यद्येवमित्यत आह स्वेति** ।

**अनु०—** स्वपरार्थविहीनत्वात्

**निष्फलं शास्त्रमिति वक्ष्यमाणं सिंहावलोकनन्यायेनात्रानुवर्तते । तच्चोपलक्षणम् । निर्विषयं चेत्यपि द्रष्टव्यम् । विषयप्रयोजनवत्त्वं हि स्वपरविषयप्रयोजनवत्तया व्याप्तम् । तृतीयप्रकाराभावात् । सर्वप्रकारपरित्यागेन सामान्यानवस्थानात् । ततश्च व्यापिकायाः स्वपरविषयप्रयोजनवत्ताया अभावात्तद्व्याप्तं विषयप्रयोजनवत्त्वमपि नास्तीत्यर्थः ।**

अस्त्वेवं विषयप्रयोजनशून्यमस्मदीयं शास्त्रम् । ततः किमित्यतः सूत्रं व्याख्याति स्वमतेनैवेति ।

स्वमतेनैव निष्फलम् ॥
किमित्युन्मत्तवच्छास्त्रे वृथा प्रलपति स्वयम् ॥

यत एवं स्वमतेनैव निष्फलं निर्विषयं च न केवलं परोपपादनेन । तस्माद् वृथा विषयप्रयोजनशून्यम् । यस्माद्वादिना चार्वाकेण प्रतिवादिभिश्च तदितरैः सर्वैर्विषयप्रयोजन-शून्यतयाऽभ्युपगतम् तस्माद्विषयप्रयोजनशून्य(मेवे)त्यर्थः । यस्माद्वृथा तस्मात्तच्छास्त्रं किमिति स्वयं प्रेक्षावान्प्रलपति । प्रेक्षावता नारम्भणीयमिति यावत् । विषयप्रयोजनशून्यं चारभमाणो न लौकिको नापि परीक्षक इत्युन्मत्तवदुपेक्षणीयः स्यादिति । यद्वा निष्फलमिति प्रयोजनाभावाभिधानम् । वृथेति विषयाभाववचनम् । तथा चैवं सूत्रयोजना । न केवलं परोपपादनेन किन्तु स्वाभ्युपगमेऽप्यर्थाभावादनारम्भणीयं शास्त्रमिति शेष इति । अर्था-भावहेतोरसिद्धिपरिहारायाभ्युपगमेऽपीत्युक्तम् ।

---

शे० — ननु स्वपरार्थविहीनत्वेऽपि विषयप्रयोजनवत्त्वसम्भवादप्रयोजकमेतदित्यतो व्यापका-भावेन व्याप्याभावस्य साधनाद्वापादनाद्वाऽत्र व्याप्यव्यापकाभावानुपपत्तेरेव बाधकत्वान्न तदिति भावेन विषयप्रयोजनवत्त्वस्य स्वपरविषयप्रयोजनवत्त्वेन व्याप्यव्यापकभावमुपपादयति **विषयप्रयोजनवत्त्वं हीति । निर्विषयं चेति** । अनेन मूले निष्फलमित्येतन्निर्विषयत्वोपलक्षणमित्युक्तं भवति । **स्वमतेनैवे**त्येवकारोऽप्यर्थ इति भावेन तदर्थमाह **न केवलमिति** । यत एवमित्यादिनोक्तमेव विशदयति **यस्माद्वादिनेत्यादिना** । उक्तयोजनायां निष्फलमित्यस्य निर्विषयत्वनिष्प्रयोजनत्वोभयपरतायाः, वृथेत्यस्य च तदुभयपरतायां, निर्विषयत्वाद्यभ्युपगमेन साक्षादेवानारम्भणीयत्वसाधनसम्भवे मध्ये निर्विषयत्वाद्यापादनस्य च समाश्रयणीयत्वात्पक्षे भाष्यस्यास्वारस्यम् । उक्तप्रकारेणैव सूत्रयोजनाप्रसक्त्या तदस्वारस्यं च भवतीत्यतस्तदुभयस्वा-रस्यानुरोधेन प्रकारान्तरेण भाष्यं योजयति **यद्वेति** । तथाऽपि भाष्योक्तो हेतुहेतुमद्भावः कथमित्यतः सूत्र-योजनाप्रदर्शनेनैव तस्यापि सूचिततां मन्वानः सूत्रयोजनामेवाह **तथा चेति** ॥ **स्वाभ्युपगमेऽपीति** । स्वाभ्युपगमेनापीत्यर्थः ॥ **अनारम्भणीयं शास्त्रमिति शेष इति** । इति शेषो भाष्यकारैः सूत्रे पूरित **इत्यर्थः** । अर्थाभावमात्रेण शास्त्रानारम्भणीयतासिद्धेः सूत्रेऽभ्युपगमेऽपीत्यनर्थकमित्यतोऽर्था-भावहेतोरसिद्धिपरिहारार्थत्वान्न तदित्याह **अर्थेति** ।

**प०** — निष्फलमित्यस्य विशेष्याकाङ्क्षां पूरयति **निष्फलमिति** । स्वपरार्थविहीनत्वादित्यत्रार्थपदस्य विषयप्रयोजनरूपार्थद्वयमुपेत्य निष्फलं निर्विषयं च शास्त्रमित्यत्र हेतुं व्यनक्ति **विषयप्रयोजनवत्त्वं हीत्यादिना** ॥ **सर्वप्रकारेति** । स्वपरविषयप्रयोजनवत्त्वरूपप्रागुक्तप्रकारद्वयेत्यर्थः ॥ **सूत्रं व्याख्यातीति** । व्याख्याप्रकारश्चाग्रे व्यक्तः । यत्तच्छब्दाध्याहारेण मूलं योजयति **यत एवमिति** । एवकाराभिप्रायो **न केवलमिति** । स्वमतेनैव निष्फलमित्यस्य वृथेत्यस्य च हेतुहेतुमद्भावस्यास्फुटत्वाद्व्यनक्ति **यस्माद्वादिनेत्यादिना** । 'किमित्युन्मत्तवच्छास्त्रं वृथा प्रलपति स्वयमि'त्येतदपि यत्तच्छब्दप्रयोगेन योजयति ॥ **यस्माद्वृथेति** । निष्फलमित्येतन्निर्विषयमित्यस्य नोपलक्षकमिति भावेनाह **यद्वेति** । योजना तु प्राग्वदेवेति भावः ॥ **अर्थाभावादिति** । विषयप्रयोजनयोरभावादित्यर्थः ।

**या०** — एतदेव स्पष्टयति **यस्माद्वादिनेत्यादिना** ॥ **स्वाभ्युपगमेऽपीति** । स्वाभ्युपगमेनापीत्यर्थः ।

**श्री०** — **तच्चेति** । निष्फलपदम् । **अभ्युपगमेऽपि** अभ्युपगमेनापीति यावत् ॥ **इत्युक्तमिति** । स्वाभ्युपगमेनापीत्युक्त्या हेतोरङ्गीकृतत्वादित्यर्थः ।

**सु०** — **ननु च प्रमाणानुरोधि प्रयोजनम् । न पुनः प्रयोजनमनुरुध्याप्रामाणिकोऽप्यर्थोऽङ्गीकर्तुमुचितः । अतिप्रसङ्गात् । प्रमाणं च प्रत्यक्षमेव नान्यत् । न चैवं लोकव्यवहारोच्छेदः । संभावनयैव तदुपपत्तेः । संवादेन च प्रामाण्याभिमानात् । प्रत्यक्षेण च देह एवात्मोपलभ्यते । गौरोऽहं जानामीति । तथा च कालान्तरभाविप्रयोजनान्वयिनः पुरुषस्य अभावात्कथं धर्ममोक्षाख्यं प्रयोजनमतीन्द्रियश्च विषयोऽङ्गीकर्तुं शक्यत इत्यत आह** देहादिति ।

**अनु०** — देहादन्योऽनुभवत आत्मा भाति शरीरिणाम् ॥
मम देह इति व्यक्तं ममार्थ इतिवत्सदा ॥

अनुभवतः **पराभ्युपगतप्रामाण्येन प्रत्यक्षेणैव । मम देह इति ह्यहङ्कारास्पदात्मसंबन्धी देहः प्रतीयते । न चान्यताऽप्रतीतौ संबन्धप्रतीतिरुपपद्यते । यथा ममार्थ इति प्रतीतौ भेदप्रतीतिपूर्वक एव संबन्धावभास इति । नन्वेवं प्रतिभास एव नास्ति । अपि तर्हि घटस्य स्वरूपमितिवद्व्यवहारमात्रमिति चेन्न कल्पकाभावात् । विपरीतप्रती(मि)तौ खल्वेवं कल्प्यते । न चैवं प्रकृते । कस्यचित्कदाचिदपि देहोऽहमिति प्रमाभावात् । तदिदमुक्तं** शरीरिणां सदेति **। अत एव प्रतिभासोऽपि भ्रमोऽस्त्विवति निरस्तम् । अस्ति गौरोऽहमिति प्रमेति चेन्न । प्रतिपक्षतया बाधकत्वानुपपत्तेः ।**

शे० — **अतिप्रसङ्गादिति ।** देवदत्तपिपासानिवृत्त्यनुरोधेन मरावपि वारिसिद्धिप्रसङ्गादित्यर्थः ॥ नन्वस्ति तावद्धूमदर्शनानन्तरं वह्निव्यवहारः प्रत्यक्षसिद्धस्यापन्हवायोगात् । तथा चास्ति वह्निज्ञानम् । तच्चानुमितिरेवेत्यनुमानप्रामाण्यमावश्यकम् । तथा प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य तदर्थ-व्यवहारोऽपि । तथा चास्ति संसर्गज्ञानम् । तच्च शाब्दमेवेति शब्दप्रामाण्यमपीति कथं प्रत्यक्षादन्यन्न प्रमाणमित्याशयेन शङ्कते **न च लोकेति ॥ संभावनयेति ।** तथा च संभावनाया उत्कटैककोटिक-संशयरूपत्वेनाप्रमाणत्वान्न तत्करणप्रामाण्यमित्यर्थः । ननु वन्ह्यादिप्राप्त्यनन्तरं प्रमाणेनाहं प्रवृत्त इति व्यवहारोऽनुमानाद्यप्रामाण्ये न स्यादित्यत आह **संवादेन चेति ।** प्रवृत्तिसंवादेनेत्यर्थः । मणिप्रभा-गोचरमणिज्ञानस्याप्रामाण्येऽपि संवादेन प्रामाण्याभिमानवदत्रापि तत्संवादेनैव प्रामाण्याभिमानः न तु प्रामाण्यात्, अन्यथाऽतिप्रसङ्गादिति भावः ॥ **अनुभवत इति ।** आद्यादित्वात्तृतीयान्तात्तसिरिति भावेनाह **प्रत्यक्षेणैवेति ।** कथं तर्हि मम देह इति व्यवहार इति पृच्छति **अपि तर्हीति ॥ व्यवहार-मात्रमिति ।** औपचारिको व्यवहार इत्यर्थः । कल्पकसद्भावाद्घटस्य स्वरूपमित्यस्य व्यवहारमात्रत्वेऽपि प्रकृते तदभावान्न व्यवहारमात्रत्वमाश्रयितुं शक्यमिति समाधत्ते **न कल्पकाभावादिति ।** किं तत्कल्पकं यद्भावाभावाभ्यामौपचारिकत्वतदभावव्यवस्थोच्यत इत्यतस्तदाह **विपरीतेति ।** कथं प्रकृते तदभावो येनोक्तव्यवहारस्य व्यवहारमात्रत्वानुपपत्तिः स्यादित्यतः किमत्र देहोऽहमित्याकारा विपरीतप्रमितिरभि-मता, किंवा गौरोऽहमित्याकारेति विकल्पद्वयं मनसि निधायाद्यमसिद्ध्या दूषयति **कस्यचिदिति ॥ तदिदमुक्तं शरीरिणां सदेतीति ।** सदेत्यनेन कदाचिदित्यर्थस्य, शरीरिणामिति बहुवचनेन कस्य-चिदित्यर्थस्य, शरीरिणां शरीरसंबन्धिनामिति शरीरसंबन्धप्रतीतिसद्भावोपपादनेन देहोऽहमित्यभेद-प्रमाऽभावस्य च सूचितत्वादित्यर्थः ॥ **अत एवेति ।** देहोऽहमिति विपरीतप्रमाभावादेव मम देह इति प्रत्ययो भ्रान्तिरित्यपि प्रत्युक्तमित्यर्थः । द्वितीयं शङ्कते **अस्तीति ॥ सत्प्रतिपक्षतयेति ।** मम देह इति गौरोऽहमिति च प्रतीतिद्वयस्य प्रत्यक्षत्वाविशेषेण समानबलत्वाद्बाधकत्वोपयोगिन्या अधिक-बलताया गौरोऽहमित्यस्यां प्रमायामनिरूपणादिति भावः ।

स० — **न पुनः प्रयोजनमनुरुद्ध्येति ।** उपलक्षणमेतत् अतीन्द्रियं विषयं चेत्यपि द्रष्टव्यम् । धर्ममोक्षाख्यं प्रयोजनम् । **अप्रामाणिकः** कालान्तरभाविप्रयोजनान्वयिपुरुषलक्षण इत्यर्थः ।

**नचैवमिति ।** अनुमानं प्रमाणम्, आगमः प्रमाणमित्यादिलोकव्यवहारोच्छेद इति न चेत्यर्थः ।

**तदिदमुक्तमिति ।** शरीरिणां शरीरसंबन्धिज्ञानवतामित्यनेन अहङ्कारास्पदात्मसंबन्धिदेहः प्रतीयते इत्येतत्सूचितम् । शरीरिणामिति बहुवचनेन च कस्यचिदपि, सदेत्यनेन कदाचिदपीत्येतत्सूचितमिति भावः । **अत एवेति ।** देहोऽहमितिविपरीतप्रमाऽभावादेवेत्यर्थः ।

प० — **अतिप्रसंगादिति** । तृषार्तस्य चैत्रस्य मरुदेशे पानीयसिद्ध्युपगमप्रसंगादित्यर्थः ॥ **नचैवं लोकेति** । प्रत्यक्षादन्यस्याप्रामाण्ये घनगर्जितादिना वृष्ट्यादेः (व्यवहारः) शब्दप्रयोगानन्तरं प्रवृत्तिनिवृत्त्यादिव्यवहारो लोकसिद्धो न स्यादित्यर्थः ॥ **संवादेनेति** । अर्थदृष्टिरूपसंवादेनेत्यर्थः । नचान्यताप्रतीताविस्यत्र अन्यतायाः अप्रतीताविति पदच्छेदः ॥ **सम्बन्धेति** । षष्ठी शेष इति सूत्रे स्वस्वामिभावादिरूपसंम्बन्धे षष्ठ्याः विधानेन ममेति षष्ठ्या सम्बन्धप्रतीतिरिति भावः । प्रतिभासत्वेपि भ्रमत्वं किन्नेत्यत आह **अत एवेति** । विपरीतप्रमित्यभावादेवेत्यर्थः । विपरीतप्रमां शङ्कते **अस्ति-गौरोहमिति** ॥ **प्रतिपक्षतयेति** । मम देह इति प्रतिभासेनेति योज्यम् ।

या० — **अतिप्रसङ्गादिति** । देवदत्तपिपासानिवृत्त्यनुरोधेन मरावपि वारिसिद्धिप्रसङ्गादित्यर्थः ॥ **न चैवं लोकेति** । प्रत्यक्षस्यैव प्रामाण्ये धूमदर्शनानन्तरं वन्ह्यादिव्यवहारः, प्रयोजकवृद्धवाक्यश्रवणा-नन्तरं प्रयोज्यवृद्धस्य तदर्थव्यवहारश्च लोके न स्यादित्यर्थः ॥ **सम्भावनयेति** । सा च न प्रमाऽतस्त-त्करणं न प्रमाणमिति भावः ॥ **संवादेन चेति** । प्रवृत्तिसंवादेनेत्यर्थः । **बाधकत्वानुपपत्तिरिति** ॥ परस्परं समबलत्वेन अधिकबलत्वेन आधिकबलत्वाभावादिति भावः ।

श्री० — नन्वस्ति प्रतिभासस्तथाऽपि स भ्रम इति चेत्तत्राह **अत एवेति** । देहोऽहमिति बाधकप्रमाणाभावादेवेत्यर्थः ॥ **अस्तीति** । मम देह इति प्रतीतिर्बाधिका विपरीतप्रमेत्यर्थः ।

---

सु० — **किञ्च नायं देहात्मतावभासः । किन्तु देहधर्मस्यात्मधर्मतावभासः । न च व्यधिकरणयोर्विरोधोऽस्ति । तदभावे कथमसाविति चेत् । किमेतदनुमानमर्थापत्तिर्वा प्रश्न-मात्रं वा । न प्रथमद्वितीयौ । अपसिद्धान्तात् । स्फटिकजपाकुसुमयोरभेदाप्रतिभासेऽपि तद्धर्मस्य तत्र प्रतीतिदर्शनाच्च । तृतीये तु वक्ष्यते । अस्तु प्रतीतिः । प्रत्यक्षमिति तु कुतः । अबाधप्रतिभासस्य प्रत्यक्षादन्यस्य परेणानभ्युपगमात् । अभ्युपगमे वा प्रामाण्यापरिहारात् । अपरोक्षतयाऽनुभवाच्च । तदिदमुक्तं** व्यक्तमिति । **न च तदेवासिद्धम् । लिङ्गाद्यनुसन्धाना-भावेऽपि भावात् । अन्यथा देहप्रतिभासस्यापि तन्न स्यात् । एतदप्युक्तं** सदेति ।

**केचिदाहुः । देहात्मभेदज्ञानं समाधिपरिपाकवतामेवेति । तदसत् । आऽविपाल-गोपालं मम देह इति प्रतिभासस्यानपलपनीयत्वात् । अत एवाह** शरीरिणां अ(शरीरा)भिमा-**निनामिति** ।

शे० — अङ्गीकृत्यैव सत्प्रतिपक्षत्वं बाधकत्वं न संम्भवतीत्युक्तम् । वस्तुतस्तु सत्प्रतिपक्षत्वमपि न तस्य सम्भवतीत्याह **किञ्चेति** ॥ **व्यधिकरणयोरिति** । भिन्नविषयकयोरित्यर्थः । मम देह इत्यत्र धर्मिणोर्देहात्मनोर्भेदावभासाद्गौरोऽहमित्यत्र चात्मनि देहधर्मवत्त्व(स्य)प्रतिभासाच्चयोर्भिन्नविषयत्वमिति

भावः । ननु देहात्मनोरैक्यानवभासे देहधर्मस्यात्मनि प्रतिभासासम्भवाद्गौरोऽहमित्यस्यां प्रतीतौ देहात्मनोरभेदस्यापि भानसिद्धेरस्त्येव समानविषयत्वमिति कथं न विरोध इति शङ्कते **तदभाव इति** ॥ **किमेतदिति** । यत् यन्निष्ठधर्मवत्तयाऽवभासते तत्तदभिन्नमित्येतदित्यर्थः ॥ **अपसिद्धान्तादिति** । तथा सत्यनुमानार्थापत्तिप्रामाण्यप्रसक्तेरिति भावः । ननु च सम्भावनयैवायमपि व्यवहारः, संवादेन च प्रामाण्याभिमान इति नापसिद्धान्त इत्यरुचेराह **स्फटिकेति** ॥ **वक्ष्यत इति** । गौरोऽहमिति व्यवहारमात्रं, न तु देहधर्मस्यात्मधर्मतावभासः, ततो न तस्य देहात्मनोरैक्यावभासत्वं कल्प्यमित्युत्तर'मुपचारश्च कृष्णोऽहमिति कर्दमलेपन' इत्यादिना तृतीयस्य द्वितीये वक्ष्यत इत्यर्थः । मम देह इति प्रत्ययस्य व्यक्तत्ववर्णनानर्थक्यमाशङ्क्य, उक्तप्रत्ययस्य प्रामाण्योपपादकप्रत्यक्षत्वसमर्थनार्थत्वान्न तदिति भावेन तस्याप्रत्यक्षत्वशङ्कामुत्थापयति **अस्तु प्रतीतिरिति** । कल्पकाभावेन व्यवहारमात्रत्वानुपपत्तेर्मम देह इत्यस्तु प्रतीतिरित्यर्थः ॥ **कुत इति** । न कुतोऽपीत्यर्थः । तथा च प्रत्यक्षत्वासिद्धया तत्प्रामाण्यासिद्धेर्न तेन देहात्मभेदसिद्धिरिति भावः । परिहरति **अबाधेति** । अस्य चोक्तरीत्याऽबाधप्रतिभासत्वादिति भावः ॥ **अभ्युपगमे चेति** । अबाधप्रतिभासस्य प्रत्यक्षादन्यस्याप्यभ्युपगमादित्यर्थः ॥ **प्रामाण्यापरिहारादिति** । प्रामाण्यं विनाऽबाधप्रतिभासस्यासंभवादित्यर्थः । तथा च प्रत्यक्षातिरिक्तस्यापि प्रामाण्यापातात्प्रत्यक्षमेकमेव प्रमाणमिति सिद्धान्तभङ्गः परस्य । तेनैव च प्रमाणेन देहात्मभेदसिद्ध्युपपत्तेरिष्टसिद्धिश्चास्माकमिति भावः । अस्त्वेमङ्गीकारे परस्यापसिद्धान्तः, तथाऽपि त्वदभिमतस्य देहात्मभेदप्रत्यक्षत्वस्यासिद्धिरेवेति कथमिष्टसिद्धिरित्यत आह **अपरोक्षतयेति** । मूले सदापदस्य प्रकारान्तरेण सार्थक्यं तद्व्यावर्त्यशङ्काप्रदर्शनेन दर्शयति **न चेति** ॥ **तदेवेति** । अपरोक्षत्वरूपं व्यक्तत्वमित्यर्थः ॥ **तत्** अपरोक्षत्वम् । **सदेतीति** । सदेत्यनेन लिङ्गाद्यनुसन्धानाभावकालस्याप्युक्तत्वादिति भावः । शरीरिणामिति विशेषणस्य मतान्तरनिरासोऽपि प्रयोजनमिति भावेन तदुपन्यस्यति **केचिदिति** ॥ **आऽविपालगोपालमिति** । आ अविपलगोपालेभ्य इति आविपालगोपालमित्यभिविध्यर्थकस्याङः 'आङ्मर्यादाभिविध्योरि'त्यव्ययीभावसमास इति भावः ।

स० - **तदभावे कथमिति** । देहात्मनोरैक्याभावे देहधर्मस्यात्मधर्मतावभासः कथमित्यर्थः । **किमेतदिति** । यत् यन्निष्ठधर्मवत्तया अवभासते तत् तदभिन्नमित्येतदित्यर्थः । **अपसिद्धान्तादिति** । तयोः प्रामाण्यानभ्युपगमादित्यर्थः । **स्फटिकेति** । जपाकुसुमनिष्ठलौहित्यलक्षणधर्मवत्तया अवभासमानत्वेऽपि तदभिन्नत्वाभावादित्यर्थः । मम देह इत्यस्य व्यवहारमात्रत्वानुपपत्त्या प्रतीतित्वसिद्धावपि प्रत्यक्षत्वं कुत इत्यर्थः । **अभ्युपगमे वेति** । अबाधप्रतिभासस्य प्रत्यक्षादन्यस्याभ्युपगमे तस्य प्रामाण्यस्यावश्यकत्वादित्यर्थः । **न च तदेवेति** । अव्यक्तत्वमेवेत्यर्थः । **अन्यथेति** । देहात्मनोरैक्यप्रतिभासः

गौरोऽहमिति प्रतिभासः तस्येत्यर्थः । **एतदप्युक्तं सदेति** । सदा लिङ्गानुसन्धानाभावेऽपीत्यर्थः । प्रसङ्गात् तार्किकाणां समाधानप्रकारं निराकरोति **केचिदिति** ।

**प०** — तावता न देहा(न्यात्मत्व)दनन्यत्वसिद्धिरित्यनुशयादाह **विश्वेति ॥ देहात्मतेति** । देहस्यात्मतावभास इत्यर्थः । **देहधर्मस्येति** । गौररूपस्येत्यर्थः । तावता कथं न प्रतिपक्षतेत्यत आह **न च व्यधिकरणयोरिति** । भिन्नविषययोर्मम देह इति गौरोऽहमिति च प्रतिभासयोरित्यर्थः । मम देह इत्यस्य देहात्मरूपधर्मिभेदग्राहित्वात् । गौरोऽहमित्यस्य चान्यधर्मस्यान्यधर्मतावगाहित्वादिति भावः ॥ **तदभाव इति** । देहात्मरूपधर्मिणोरैक्यावभासाभावेऽन्यधर्मस्यान्यधर्मतावभासो वा कथमिति शङ्कार्थः ॥ **स्फटिकेति** । जपाकुसुमनिष्ठलौहित्यरूपधर्मवत्तया स्फटिकस्यावभासमानत्वेपि तदभिन्नत्वावभासाभावादित्यर्थः । **तृतीये वक्ष्यत इति** । 'उपचारश्च कृष्णोऽहमिति कर्दमलेपन' इत्यादिना तृतीयाध्याये भक्तिपादे वक्ष्यत इत्यर्थः । **अस्तु प्रतीतिरिति** । मम देह इत्यस्याः प्रतीतित्वेऽपि प्रत्यक्षप्रतीतित्वं कुत इत्यर्थः । **प्रामाण्यापरिहारादिति** । अबा(धादे)ध्यत्वादेवेति भावः । **तदेवेति** । अपरोक्षानुभवत्वमेवासिद्धमित्यर्थः ॥ **तन्न स्यादिति** । प्रत्यक्षत्वं न स्यादित्यर्थः ॥ **सदेतीति** । लिङ्गाद्यननुसन्धानदशायामपीति तस्यार्थ इति भावः ।

**या०** — **व्यधिकरणयोरिति** । भिन्नधर्मिकयोरित्यर्थः । मम देह इत्यत्र हि धर्मिणोर्देहात्मनोर्भेदः प्रतीयते । गौरोऽहमित्यत्र च तद्धर्मैक्यमतो भिन्नधर्मिकत्वमिति भावः । ननु गौरोऽहमित्यत्र धर्मिणोरैक्यमपि प्रतीयत इत्यवश्यमङ्गीकार्यं तदभावे धर्मैक्यावभासस्याप्यसम्भवादित्याशङ्कते **तदभाव इति** । देहस्यात्मतावभासाभाव इत्यर्थः ॥ **वक्ष्यत इति** । गौरोऽहमिति व्यवहारमात्रं न देहधर्मस्यात्मधर्मताभासो येन तदर्थं धर्म्यैक्यावभासापेक्षा स्यादित्युत्तरम् 'उपचारश्च कृष्णोऽहमिति कर्दमलेपन' इत्यादिना तृतीयाध्याये वक्ष्यत इत्यर्थः । व्यक्तमित्यस्याशयं वक्तुं शङ्कते **अस्तु प्रतीतिरिति** । मम देह इति प्रतीतिरेवास्तु न व्यवहारमात्रमित्यर्थः ॥ उत्तरमाह **अबाधेति** ॥ **प्रामाण्यापरिहारादिति** । अबाधितत्वादेवेति भावः ॥ **तदेवेति** । अपरोक्षत्वापरपर्यायं व्यक्तत्वमित्यर्थः ॥ **सदेतीति** । सदेत्यनेन लिङ्गाद्यनुसन्धानाभावकालस्याप्युक्तत्वादिति भावः ॥

**श्री०** — **अनुमानमिति** । आत्मदेहावभिन्नावेकधर्मवत्त्वेन प्रतीयमानत्वात् । यत्रैकधर्मत्वप्रतीतिस्तत्र धर्मिणोरैक्यमित्यनुमानमित्यर्थः । आत्मनि देहधर्मप्रतिभासान्यथाऽनुपपत्त्या देहात्मैक्यं स्वीकार्यमित्यर्थापत्तिः । **अनुभवाच्चेत्यनन्तरं** मम देह इत्यस्याः प्रतीतेः प्रत्यक्षरूपतासिद्धिरिति शेषः । **तदेव** । अपरोक्षतयाऽनुभूयमानत्वमेव । **अन्यथा** लिङ्गाद्यनुसन्धानाभावेऽपि जायमानायाः प्रतीतेर्यदि प्रत्यक्षरूपत्वं नेत्यर्थः । **केचित्** तार्किकाः । आ अविपालेति पदच्छेदः, अविपालगोपालमारभ्येत्यर्थः । **शरीराभिमानिनां** मूर्खाणामविपालादीनामपीत्यर्थः ॥

**सु०— नन्वस्त्वात्मा देहातिरिक्तस्तथाऽप्यर्थकामातिरिक्ते पुरुषार्थे तत्साधनादौ च किं मानम् । वेदादिरागमोऽनुमानं चेति वदामः । तस्य प्रामाण्यमेव कुत इति चेत् । तत्राह** प्रत्यक्षस्यैवेति ।

**अनु०**— प्रत्यक्षस्यैव मानत्वमिति केनावसीयते ॥

**यत्परेणाभ्युपगतमर्थादि तत्कुतः सिद्धमिति वक्तव्यम् । प्रत्यक्षेणेति चेत् । प्रत्यक्षस्य मानत्वमित्येव केनावसीयते । तथा च पुरुषार्थतत्साधनमात्रासिद्धौ जगदनीहमापद्येतेति । प्रत्यक्षज्ञानं तावत्प्रतीयते । प्रामाण्यं च ज्ञानग्राहकमात्रग्राह्यम् । अतः कथमुक्तो दोषः । प्रामाण्यपरतस्त्ववादेऽपि बाधकाभावादिना प्रत्यक्षप्रामाण्यसिद्धिरित्यत आह** यदीति ।

यदि तत्साधकं वेदप्रामाण्ये न कथं भवेत् ॥

**यदि प्रत्यक्षज्ञानप्रामाण्यस्य ज्ञानग्राहकं वा बाधकाभावादिकं वा साधकमुच्यते । तर्हि तदेव वेदप्रामाण्यविषये कथं साधकं न भवेत् । न हि वेदवाक्याज्ज्ञानं नोत्पद्यते । न च न प्रतीयते । अत्र वेदग्रहणमुपलक्षणम् । अत एवान्येति सामान्येन वक्ष्यति ।**

**शे०**— ननु 'प्रत्यक्षस्यैव मानत्वमि'ति प्रत्यक्षाप्रामाण्यव्युत्पादनमनर्थकम् । न चानुमानागमयोरप्रामाण्ये प्रत्यक्षस्याप्यप्रामाण्यं स्यादिति प्रतिबन्दीग्रहणरूपत्वेनास्यानुमानागमप्रामाण्यसमर्थनार्थत्वान्नानर्थक्यमिति वाच्यम् । 'देहादन्योऽनुभवत आत्मा भाति शरीरिणामि'त्यादिना प्रत्यक्षबलेनैव देहात्मभेदस्य समर्थनेनानुमानाद्यवष्टम्भेन तदसाधनान्निर्बीजतयाऽनुमानागमाप्रामाण्यशङ्काया एवानुत्थानेन प्रतिबन्दीग्रहणत्वायोगादित्यतो 'देह आत्मा पुमर्थश्च कामार्थाभ्यां विना न ही'ति परोक्तनिरासाय देहात्मभेदस्येव स्वर्गापवर्गयोरपीह साध्यतया प्रस्तुतत्वात्तयोश्च प्रत्यक्षेण साधयितुमशक्यत्वादनुमानागमाभ्यामेव साधनीयत्वेन तदप्रामाण्यशङ्कोदयेन, उक्तरीत्या प्रतिबन्दीग्रहणस्योपपन्नत्वाददोष इति भावेनानुमानाद्यप्रामाण्यशङ्कानिरासपरतयोत्तरभाष्यं योजयितुं स्वर्गापवर्गयोरप्रामाणिकत्वशङ्कामुत्थापयति **नन्विति** ॥ **किं मानमिति** । मोक्षो हि नाम परमानन्दावाप्तिविशिष्टात्यन्तिकी दुःखनिवृत्तिः । तत्र न तावत्प्रत्यक्षं प्रमाणं । परपुरुषवर्तिनोः परमानंददुःखाभावयोः परप्रत्यक्षस्य सामर्थ्याभावात् । स्वनिष्ठस्तु तदभाव एव प्रत्यक्षेणेक्ष्यते । नापि प्रत्यक्षादन्यत् । तत्प्रामाण्यस्यासिद्धेः । एवं तत्साधनादावपीति शङ्कितुर्गूढोऽभिसन्धिः । गूढाभिसन्धिरेवोत्तरमाह **वेदादिरागम इति** । 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेण भिनिष्पद्यते । तीर्णो हि तदा सर्वान् शोकान्हृदयस्य भवति' । 'आत्मेत्येव परं देवमुपास्य हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन' इत्यादिश्रुतिस्मृत्यादिरूप इत्यर्थः ॥ **अनुमानं चेति** ।

यागादिप्रवृत्तिः सफला प्रेक्षावत्प्रवृत्तित्वात्, कृष्यादिप्रवृत्तिवदिति स्वर्गे; अपवर्गे त्विहामुत्र फलभोगवैराग्यवतां योगिनां प्रवृत्तिः, सफला, प्रेक्षावत्प्रवृत्तित्वात्सम्मतवदित्यनुमानं चेत्यर्थः । यद्यपि प्राकृतानां प्रत्यक्षं न स्वर्गमोक्षादिकं गोचरयितुं क्षमते । तथाऽपि महत्तमपुरुषप्रत्यक्षेण मोक्षादिनिश्चयो युज्यत एवेति पराभ्युपगतप्रामाण्यं प्रत्यक्षमेवात्र साधकतया वक्तुं शक्यते । यद्वक्ष्यति 'घटते मुक्तिदृष्टिस्तु पुरुषेण महीयसा' इत्यादि । तथा च तत्परित्यागेन शब्दानुमानयोरुपन्यासो यद्यपि न युक्तः तथाऽपि तदीयप्रत्यक्षस्याप्यन्येषामसिद्ध्या तदवगमकतयापि तद्वाक्यादेरनुसरणीयत्वेन आवश्यकत्वात् लाघवाच्च प्रत्यक्षपरित्यागेनागमानुमाने एवोपन्यस्ते इति द्रष्टव्यम् । अर्थादीत्यादिपदेन कामस्यार्थकामसाधनस्य च परिग्रहः । अस्तु प्रत्यक्षस्यापि प्रामाण्यानिश्चयः किं तावताऽपीत्यत आह **तथा चेति** । **अनीहं** लौकिकालौकिकप्रवृत्तिशून्यं प्रवर्तकीभूतेष्टसाधनताज्ञानशून्यत्वादिति भावः । यदीत्युत्तरभाष्यानर्थक्यमाशङ्क्य वैषम्यशङ्कानिरासेनोक्तप्रतिबन्दीसमर्थनार्थत्वान्न तदिति भावेन तन्निरासपरतयोत्तरभाष्यं योजयितुं वैषम्यशङ्कामुत्थापयति **प्रत्यक्षज्ञानमिति** ॥ **अतः कथमिति** । प्रत्यक्षेणैवार्थकामयोस्तत्साधनानां च सिद्धिसम्भवान्नानीहत्वप्रसङ्ग इत्यर्थः । न्यायमतमाश्रित्यापि प्रामाण्यनिश्चयमुपपादयति **प्रामाण्येति** । आदिपदेन दोषाभावपरिग्रहः । स्वतस्त्वपक्षमनुरुध्याह **ज्ञानग्राहकमिति** । परतस्त्वपक्षमाश्रित्याह **बाधाभावादिकं चेति** । वेदप्रामाण्य इति विषयसप्तमीति भावेनाह **प्रामाण्यविषय इति** ॥ **ज्ञानमिति** । वाक्यार्थज्ञानमित्यर्थः । न हि सत्यां सामग्र्यां कार्यानुदयः । अन्यथाऽतिप्रसङ्गादिति भावः ॥ **न प्रतीयत इति** । प्रतीतिसामग्रीसत्त्वेन तदभावायोगादिति भावः ॥ **उपलक्षणमिति** । पौरुषेयागमानुमानयोरिति शेषः । वेदग्रहणस्य वेदमात्रपरत्वमेवास्तु किमितरोपलक्षणत्वाश्रयणेनेत्यत आह **अत एवेति** ॥ **वक्ष्यतीति** । 'न चान्यामानते'त्युत्तरवाक्य इति शेषः ।

स०— **अत्र वेदग्रहणमिति** । अनुमानस्येति शेषः ।

प०— मूलं सङ्गमयितुमाह **यत्परेणेति** ॥ **अर्थादीति** । अर्थकामौ । एवकारं भिन्नक्रमं मत्वा योजयति **इत्येवेति** ॥ **अनीहम्** प्रवृत्तिरूपचेष्टाहीनमित्यर्थः ॥ **बाधकाभावादिनेति** । संवाद आदिपदार्थः ॥ **उपलक्षणमिति** । अनुमानस्येति भावः ।

श्री०— **उक्तो दोष इति** । तथा च तेनैव पुरुषार्थादिसिद्धिसंभवाज्जगदनीहमापद्येत इत्युक्तदोषः कथं इत्यर्थः ।

**सु०— ननु ज्ञानग्राहकस्य प्रामाण्यग्राहकत्वमित्युत्सर्गः । अपवादे(न त्व)सत्यप्रामाण्यमपि गृह्यते । तत्कथं वेदादिप्रामाण्यसिद्धिः । परतस्त्वेऽपि बाधकाभावः कुत इति चेत् । सममेतत्प्रत्यक्षेऽपि । अनुपलम्भादपवादाद्यभावः प्रत्यक्षसिद्ध इति चेत् । तुल्यमेतद्वेदादाविस्याह न चेति ।**

अनु०— न चान्याऽमानता क्वापि प्रमाणेनावसीयते ॥

**प्रत्यक्षादन्ययोरनुमानागमयोरमानता । क्वापि विषये ।**

**शे०—** ननु न चान्यामानतेत्यपवादकस्यानुपलम्भबाधितत्ववर्णनमनर्थकम् । न चानुमानादेर्निरपवादत्वोपदर्शनाय तदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न चागमादिजनितविज्ञाने साक्षिणो अप्रामाण्यग्राहकत्वासंभवप्रतिपादनार्थं तदिति वाच्यम् । प्रामाण्यग्रहणस्वभावस्य साक्षिणः अप्रामाण्यग्राहकत्वप्रसक्तेरेवाभावेन तदसम्भवप्रदर्शनाय अपवादाभावप्रदर्शनस्यानर्थकत्वादित्यतः साक्षिणः प्रामाण्यग्राहकत्ववत् अप्रामाण्यग्राहकत्वस्यापि सत्त्वेन वेदादिजनितविज्ञाने तदग्राहकत्वप्रतिपादनाय अपवादाभावप्रतिपादनस्यार्थवत्त्वादित्यभिप्रेत्य, कथमेवं सति प्रामाण्यस्य स्वतस्त्वसिद्धान्तः कथं चाप्रामाण्यग्राहकत्वं तस्येत्यतः तत्स्वतस्त्वनिर्वाहप्रदर्शनपूर्वकमप्रामाण्यग्राहकत्वसम्भवशङ्कामुत्थापयति **नन्विति ॥ उत्सर्ग इति ।** न तु ज्ञानं गृह्णन्साक्षी प्रमाणतयैव तद्गृह्णातीति नियमः । तथा सति बौद्धादिवाक्यजनितज्ञानग्राहकस्य साक्षिणस्तत्प्रामाण्यग्राहकत्वप्रसङ्गात् । न चेष्टापत्तिः । तस्य वेदविरोधित्वात् । वेदविरोधिनः प्रामाण्ये च पुनर्वेदप्रामाण्यं न स्यात् । वस्तुनो द्वैरूप्यापत्तिश्चेति भावः । अस्तु ज्ञानग्राहकस्य प्रामाण्यग्राहकत्वमित्युत्सर्गः, किं तावता प्रकृत इत्यत आह **अपवादेन त्विति ।** प्रवृत्त्यसामर्थ्यादिरूपापवादसाहाय्येनेत्यर्थः । ज्ञानग्राहकेणेति विभक्तिविपरिणामेनानुवर्तते । अपवादग्राहकस्य साक्षिणोऽप्रामाण्यग्राहकत्वेऽपि प्रकृते तद्विरहान्न तद्ग्राहकत्वमित्यभिप्रेत्य कुतोऽत्रापवादाभाव इत्यतस्तन्नियामकोक्त्याऽपवादाभावं परमुखेनैव वाचयितुं गूढाभिसन्धिः प्रतिबन्दीमुपादत्ते **सममेतत्प्रत्यक्षेऽपीति ।** अभिसन्धिमजानतः प्रतिबन्दीमुद्धरति **अनुपलम्भादिति ।** सिद्धान्ती स्वाशयोद्घाटनरूपतयोत्तरभाष्यं सङ्गमयति **तुल्यमिति ।**

**प०—** न चेत्यादिमूलमवतारयति **नन्वित्यादिना ।**

**सु०— यद्वा प्रत्यक्षप्रामाण्यमभ्युपगच्छन्प्रष्टव्यः । किं त्वयाऽनुभूयमानस्यैकस्यैव प्रत्यक्षस्य मानत्वम् उत सर्वस्यापि प्रत्यक्षस्य । आद्ये दोषमाह** प्रत्यक्षस्यैवेति । **इतरेषामपि प्रत्यक्षाणां तत्तुल्यसामग्रीजन्यत्वे सत्येकस्यैव प्रत्यक्षस्य मानत्वमिति केनावसीयते । द्वितीये**

दोषमाह प्रत्यक्षस्यैवेति । **प्रत्यक्षस्य मानत्वमेव सर्वमपि प्रत्यक्षं प्रमाणमिति केनावसीयते । अनुभूयमानप्रत्यक्षादन्यस्य प्रत्यक्षस्य, तत्प्रामाण्यस्य वा चा वसायकं न किमपीत्यर्थः ।**

**परकीयवचनेन चेष्टया वा प्रत्यक्षमवगम्य प्रत्यक्षत्वेन तस्य प्रामाण्यमवगम्यत इत्यत** आह यदीति । **प्रत्यक्षस्य तत्प्रामाण्यस्य च साधकं वचनमनुमानं च यदि प्रमाणमिष्यते तर्हि वेदादिप्रामाण्ये कथं न भवेत् । अभ्युपगम इति शेषः ।**

**एवमनुमानागमाप्रामाण्यं प्रत्यपि विकल्पः । आद्यस्तु पूर्ववन्निरस्तः । अपसिद्धान्तश्च अधिकः । द्वितीयं दूषयति** न चेति । **अन्ययोः परपुरुषादिवर्तिनोरनुमानागमयोरमानता । पूर्ववदाश्रयाद्यसिद्धेः । तत्साधकाङ्गीकारे च व्याघातादिति भावः ।**

**शे० — सर्वस्यापीति ।** अननुभूयमानस्यापीत्यर्थः ॥ **एवमनुमानागमेति ।** किं त्वयाऽनुभूयमानयोरेवानुमानागमयोरप्रामाण्यमुच्यते किंवा सर्वेषामनुमानागमानामिति विकल्प इत्यर्थः ॥ **पूर्ववदिति ।** इतरेषामनुमानागमानां तत्तुल्यसामग्रीजन्यत्वे सति अनयोरेवानुमानागमयोरप्रामाण्यमिति केनावसीयत इति पूर्ववदित्यर्थः ॥ **अपसिद्धान्तश्चेति ।** त्वयाऽनुभूयमानानुमानागमयोरेवाप्रामाण्येऽपसिद्धान्तश्च सर्वानुमानागमाप्रामाण्यस्यैव त्वत्सिद्धान्तत्वादिति भावः ॥ **परपुरुषवर्तिनोरिति ।** अत्रादिपदेन पश्वादिग्रहणम् । तत्रापि प्रवृत्त्यन्यथाऽनुपपत्त्येष्टसाधनतानुमानस्याह्वानादिवाक्यजन्यज्ञानस्य च सत्त्वादिति ध्येयम् । **आश्रयासिद्धेरिति ।** परकीययोः करणफलरूपयोरनुमानागमयोरुभयोरपि ज्ञानरूपत्वेनाप्रत्यक्षत्वादिति भावः । आदिपदेन तदप्रामाण्यसाधकसंग्रहः । परकीयवचनेन चेष्टया वा तदीयमनुमानादिकमवगम्यानुमानादित्वेन तदप्रामाण्यावगमे को दोष इत्यत आह **तत्साधकेति ॥ व्याघातादिति ।** परकीयवचनचेष्टादिकमेव परकीयानुमानादिसाधकमनुमानत्वादिकमेव तदीयाप्रामाण्यसाधकमित्यङ्गीकारे चास्यैवानुमानादेः प्रमाणत्वात्सर्वमनुमानादिकमप्रमाणमिति प्रतिज्ञया व्याघातादित्यर्थः ।

**स० — अवसायकं न किमपीत्यर्थ इति ।** तथा चाश्रयासिद्धिरित्यर्थः । **एवमिति ।** किं त्वया अनुभूयमानस्यैवानुमानस्य आगमस्य वा अप्रामाण्यम्, उत सर्वस्याप्यनुमानादेरिति विकल्प इत्यर्थः । **पूर्ववन्निरस्त इति ।** इतरस्याप्यनुमानादेः त्वया अनुभूयमानानुमानादितुल्यसामग्रीजन्यत्वे सति एकस्यैवानुमानस्य आगमस्य वाऽमानत्वमिति केनावसीयते इति निरस्त इत्यर्थः । **अपसिद्धान्तश्चेति ।** सर्वानुमानागमयोरप्रामाण्यस्य त्वत्सिद्धान्तत्वात् तदनभ्युपगमे त्वया अनुभूयमानानुमानागमयोरेवाप्रामाण्याभ्युपगमे अपसिद्धान्त इत्यर्थः । न च प्रामाण्यविकल्पेऽपि आद्यविकल्पे प्रत्यक्षमात्रस्य प्रामाण्यस्याङ्गीकृतत्वेन त्वया अनुभूयमानप्रत्यक्षस्यैव प्रामाण्याङ्गीकारे अपसिद्धान्तः कुतो नोक्त इति

वाच्यम् । तथा सति साधके एव प्रत्यक्षस्य प्रामाण्यस्याङ्गीकृतत्वेन स्वेनानुभूयमानप्रत्यक्षे च स्वानुभवलक्षण-साधकस्य सत्त्वात् प्रामाण्यम्, अन्यत्र तदभावान्न प्रत्यक्षमात्रस्यप्रामाण्याङ्गीकार इत्यर्थः ।

**प०**— सार्धश्लोकं प्रकारान्तरेण योजयितुमाह **यद्वेति** । एवकारस्य यथान्यासान्व-यमुपेत्यैकवचनार्थमाह **एकस्यैव प्रत्यक्षस्येति** । एवकारं भिन्नक्रममुपेत्याह **मानत्वमेवेति** । तद्भाव-माह **सर्वमपीति** ॥ **एवमनुमानागमेति** । अनुमानादेरप्रामाण्यं वदन्प्रष्टव्यः । किं त्वदीययोरेवानु-मानागमयोरप्रामाण्यमुच्यते अथ सर्वेषामपीति विकल्प्य इत्यर्थः । **आद्यस्त्विति** । इतरेषामप्यनुमानाग-मानां तत्तुल्यसामग्रीजन्यत्वे सति त्वदीयस्यैवानुमानादेरमानत्वं केनावसीयते, न केनापीति निरस्त इत्यर्थः ॥ **पुरुषादीति** । पशुपक्ष्यादिरादिपदार्थः ॥ **आश्रयाद्यसिद्धेरिति** । परकीयानुमानागम-जन्यज्ञानयोरप्रत्यक्षत्वेन तज्ज्ञानोपायाभावादाश्रयहेत्वोरसिद्धेरिति भावः ॥ **तत्साधकेति** । परकीयवचनेन तच्चेष्टया च तदीयमनुमानादिकमवगम्यानुमानत्वादिना हेतुना तदप्रामाण्यमवगम्यत इत्यङ्गीकारे च व्याघातादित्यर्थः ।

**या०**— **एवमनुमानागमेति** । किं त्वयाऽनुभूयमानयोरेवानुमानागमयोरप्रामाण्यमुच्यते किंवा सर्वेषामनुमानागमनामिति विकल्पः कर्तव्य इत्यर्थः ॥ **पूर्ववदिति** । इतरेषामप्यनुमानागमानां तत्तुल्यसामग्रीजन्यत्वे सत्यनयोरेवानुमानगमयोरप्रामाण्यमिति केनावसीयत इति पूर्वन्यायेन निरस्तप्राय इत्यर्थः ॥ **परपुरुषादिवर्तिनोरिति** । अत्रादिपदेन पश्वादिग्रहणम् । तत्रापीष्टसाधनतानुमानस्याह्वानादि-वाक्यजन्यज्ञानस्य च सत्त्वादिति ध्येयम् ॥ **आश्रयाद्यसिद्धेरिति** । परकीययोः करणफलरूपयोरनुमाना-गमयोरुभयोरपि ज्ञानरूपत्वेनाप्रत्यक्षत्वादिति भावः । आदिपदेन तदप्रामाण्यसाधकसङ्ग्रहः ॥ **व्याघाता-दिति** । परकीयवचनं चेष्टादिकं वा तदीयानुमानादिसाधकमनुमानत्वादिकमेव तदीयाप्रामाण्यसाधक-मित्यङ्गीकारे चास्यैवानुमानादित्वात्सर्वमनुमानादिकमप्रमाणमिति प्रतिज्ञया व्याघातादित्यर्थः ॥ २ – २ – ३ ॥

**श्री०**— **अपसिद्धान्त इति** । अनुभूयमानाननुभूयमानसर्वानुमानागमाप्रामाण्यस्य त्वत्सिद्धान्त-त्वात्तत्त्यक्त्वाऽनुभूयमानयोरेव तयोरप्रामाण्यमन्येषां प्रामाण्यमिति स्वीकारेऽपसिद्धान्त इत्यर्थः ॥ **पूर्ववदाश्रयाद्यसिद्धेरित्यादि** । यदि सर्वानुमानागमाप्रामाण्यं तर्ह्यनुभूयमानानुमानागमव्यतिरिक्तानुमाना-गमाप्रामाणण्यस्यावसायकं न किञ्चिदस्तीत्याश्रयासिद्धिः । अथ तदनुमानागमाप्रामाण्यसाधकावनुमानागमौ यद्यङ्गीक्रियेते तर्हि साधकावनुमानगमौ प्रमाणे न वा । आद्ये सर्वानुमानागामाप्रामाण्यमिति व्याहतिः । अनयोरेव प्रमाणत्वात् । द्वितीये साधकाभावात्सर्वानुमानागमाप्रामाण्यमितिव्याहतमयुक्तमिति भावः ।

सु० — नन्वर्थसन्निकृष्टकरणजन्यत्वात्प्रत्यक्षं प्रमाणम् । अनुमानागमयोरतीतादिकमपि विषयीकुर्वतोस्तदभावात्कथं प्रामाण्यमिति । किं याथार्थ्यमेव प्रामाण्यं तन्नियामकश्च सन्निकर्षः अन्यथाऽतिप्रसङ्गादित्यभिप्रायः उत विषयसन्निकृष्टकरणजन्यत्वं प्रामाण्यमिति ।

आद्येऽपि किं यथाकथञ्चित्सन्निकर्षो नियामकः उत संयोग एव । आद्यं दूषयति न चेति । एवं तर्ह्यन्ययोरनुमानागमयोरमानता नास्ति । अविनाभावादिसन्निकर्षस्य तत्रापि सत्त्वादिति भावः । द्वितीये दोषमाह क्वापीति । क्वापि प्रमाणे चाक्षुषे श्रावणे च । नावसीयते नाभ्युपगम्यतेऽर्थसंयुक्तकरणजन्यता । परेण गोलका(द्य)तिरिक्तस्य चक्षुरादेरनभ्युपगमात् । तदात्मकस्य चार्थसंयोगाभावात् । ततः प्रत्यक्षस्यापि कस्यचित्प्रामाण्यं न स्यादिति ।

द्वितीयं दूषयति न चेति । याथार्थ्यादन्या अर्थसन्निकृष्टकरणजन्यतालक्षणा मानता न वक्तव्या । कुत इत्यत आह क्वापीति । पूर्ववच्चाक्षुषादावव्याप्तेरिति भावः । उपलक्षणं चैतत् । विपर्ययादावतिव्याप्तिश्चेत्यपि द्रष्टव्यम् ।

याथार्थ्ये सतीदं लक्षणमिति चेत् । तर्हि तदेवास्तु किं विशेष्येण । अनुमानादिव्यावृत्त्यर्थमिति चेन्न । तदप्रामाण्यस्याद्याप्यसिद्धेरित्याह न चेति ।

ननु वेदाद्यर्थस्यानुपलम्भबाधितत्वात्कथं तत्प्रामाण्यमिति चेन्न । वेदादिनैवोपलब्धेः । तदन्येन नोपलभ्यत इति चेत् । तत्किं प्रमाणान्तरसंवादित्वं प्रामाण्यम् । अद्धेति चेत्तत्राह न चेति । प्रमाणान्तरसंवादलक्षणा मानता नेत्यर्थः । कुतो नेत्यत आह क्वापीति । अनवस्थाप्रसङ्गात् क्वापि प्रमाणे नावसीयते यतः । यद्वा क्वापि स्वसुखादिज्ञाने प्रमा(ण)णे संवाद एव नावसीयते इति योज्यमित्यलम् ।

शे० — अविनाभावादीत्यादिपदेनागमस्य स्वार्थेन शक्तिरूपसन्निकर्षपरिग्रहः । तदात्मकस्य गोलकात्मकस्य । अर्थस्य देशान्तरे सत्त्वाद्गोलकस्य च देहदेशे सत्त्वान्नार्थसंयोगश्चक्षुरादेरिति भावः ।

याथार्थ्यादन्येति । अनेनान्या मानतेति द्वे एते पदे इत्युक्तं भवति ॥ पूर्ववदिति । परेण गोलकातिरिक्तस्य चक्षुरादेरनभ्युपगमादित्यादि पूर्ववदित्यर्थः ॥ विपर्ययादाविति । तत्रापि शुक्तिसन्निकृष्टकरणजन्यत्वस्य सत्त्वादिति भावः ॥ तदप्रामाण्यस्येति । अनेनान्यामानतेति समस्तं पदमित्युक्तं भवति ॥ अद्याप्यसिद्धेरिति । अनुमानादेरप्रामाण्यसिद्धौ व्यावर्तनीयत्वसिद्धिः, तत्सिद्धौ च व्यर्थविशेष्यत्वाभावेन विशिष्टलक्षणत्वसिद्ध्या तदभावादनुमानादेरप्रामाण्यसिद्धिरित्यन्योन्याश्रयापत्तेरिति भावः । किमत्र वेदाद्यर्थस्य सर्वथाऽनुपलम्भो विवक्षितः किंवा वेदाद्यन्येनेति विकल्पं मनसि निधाय

आद्यमसिद्ध्या निराचष्टे **न वेदादिनैवेति** । द्वितीयं कल्पमुत्थापयति **तदन्येनेति** । एतत्कल्पदूषणपरतया मूलं योजयितुं तत्पक्षपर्यवसानं परमुखेनैव वाचयितुं पृच्छति **तत्किमित्यादिना** । **तत्** तत्र प्रमाणे ॥ **प्रमाणान्तरसंवादलक्षणेति** । अनेन द्वे एते पदे इत्युक्तं भवति । अत्र पक्षेऽनवस्थाप्रसङ्गादिति हेतुः पूरणीयो भवतीत्यपरितोषादाह **यद्वेति** । यद्यप्यत्रापि स्वमात्रवेद्यत्वलक्षणो हेतुरपेक्षित एव तथाऽपि मूले कापीत्यनेनैव तत्सूचनान्न पूर्ववत्पूरणीयत्वं तस्येति पूर्वपक्षाद्विशेषः ॥ **स्वसुखादिज्ञान इति** । अयमर्थः । किं सर्वस्य वेदादेः संवादो नास्तीति मतं किंवा तदेकदेशस्येति वक्तव्यम् । नाद्यः । ऐश्वर्यादिसाधनतया योगादिकमुपदिशतो वेदभागस्य संवाददर्शनेन तदसिद्धेः । नान्त्यः । भागविशेषस्य संवादाभावेन कृत्स्नस्याप्यागमस्याप्रामाण्याभिधानेऽस्मै सुखादिविषयकस्य प्रत्यक्षस्य संवादाभावेन प्रत्यक्षमात्रस्याप्यप्रामाण्यपातात् । यदि च संवादरहितस्यैव वेदभागस्याप्रामाण्यमभिधीयते तदा त्वस्मत्सुखादिविषयकस्य प्रत्यक्षस्याप्रामाण्यं प्रसज्यत इति । यद्यप्यत्र योगिप्रत्यक्षसंवादोऽस्त्येव तथाऽपि तदितरप्रमाणापेक्षयेदमुक्तमिति ध्येयम् । ननु तथाऽपि न वेदस्य प्रामाण्यं वाक्यत्वादुन्मत्तवाक्यवत् । यद्वोन्मत्तवाक्यादनिश्चितविशेषत्वाद्बाधितत्वाद्वा तदप्रामाण्यमस्त्वित्यत आह **इत्यलमिति** । अयमर्थः । न वाक्यत्वमात्रेणोन्मत्तवाक्यवदागमस्याप्रामाण्यं वक्तुं युक्तम् । तथा सत्यक्षजत्वेन शुक्तिरजतादिविषयाक्षजवत् स्तम्भाद्यक्षजस्याप्यप्रामाण्यप्रसङ्गात् । यदि च सदोषत्वाच्छुक्तिरजतादिविषयस्य अक्षजस्याप्रामाण्येऽपि निर्दोषत्वात्स्तम्भादिविषयाक्षजस्य प्रामाण्यमेवेति मन्यसे, तर्ह्युन्मत्तवाक्यस्य सदोषत्वेनाप्रामाण्येऽपि वेदादेरपौरुषेयत्वादिना निर्दोषत्वान्नाप्रामाण्यमिति समम् । नाप्युन्मत्तवाक्यादनिश्चितविशेषत्वाद्बाधितत्वाद्वेति द्वितीयतृतीयौ । वैदिकस्यार्थस्याप्रत्यक्षसिद्धतया प्रत्यक्षस्य तत्र बाधकत्वायोगेन वेदादेर्बाधराहित्येनोन्मत्तवाक्याद्विशेषनिश्चयादिति ।

**स० — पूर्ववदिति** । परेण गोलकातिरिक्तस्येत्यादिपूर्ववदित्यर्थः ।

**प० —** 'न चान्ये'त्यर्धं प्रकारांतरेण योजयति **नन्वित्यादिना** ॥ **अन्यथेति** । सन्निकर्षाभावे निमीलितनेत्रस्यापि घटधीप्रसंगादित्यर्थः । नावसीयत इत्यत्र किमित्याकांक्षां शेषेण पूरयति **अर्थसंयुक्तकरणजन्यतेति** । विषयसन्निकृष्टकरणजन्यत्वमेव प्रामाण्यमिति पक्षनिरासकतयापि 'न चे'तिमूलं योजयति **यथार्थे सतीति** ॥ **बाधेति** । द्वितीयं दूषयति **न चेतीति** ।

**श्री० — अविनाभावेति** । तद्य सलिङ्गविषयकत्वं सन्निकर्ष इत्यर्थः । आदिपदेनार्थप्रतिपादनरूपाभिधैव वा शक्तिस्मृतिर्वाऽऽगमे सन्निकर्षः ॥ **चाक्षुषे श्रावणे चेति** । रसनघ्राणत्वचां गोलकानामेव साक्षादर्थसम्बन्धसद्भावादुभयोरेव ग्रहणमिति मन्तव्यम् । कुत इत्यत आह **गोलकेति** । अतीन्द्रियस्य चक्षुषोऽभावादिति भावः ॥ **तदिति** । गोलकात्मकस्य चक्षुषोऽर्थसन्निकर्षस्यादर्शनादित्यर्थः ॥ **पूर्व-**

**वदिति** । गोलकाद्यतिरिक्तस्येत्याद्युक्तरीत्या । **इदम्** अर्थसन्निकृष्टकरणजन्यत्वम् । तथा च याथार्थ्याभावान्न विपर्ययसंशययोरतिव्याप्तिरिति भाव: ॥ **अनुमानादीति** याथार्थ्योपेतेत्यर्थ: । विशेष्यभाग इति शेष: ॥ **अद्यापीति** । तथा च सिद्धेऽनुमानाद्यप्रामाण्ये तद्व्यावर्तनाय विशिष्टलक्षणकरणमस्य प्रमाणलक्षणत्वे सिद्धे एतदनाक्रान्ततयाऽप्रामाण्यसिद्धिरित्यन्योन्याश्रय इति ॥ **अनवस्थेति** । संवादकप्रमाणेऽपि प्रामाण्यं पुन: संवादान्तरेणैव ज्ञेयम् । तत्राप्येवमित्यनवस्थेत्यर्थ: ॥ २ - २ - ३ ॥

सु०— **सूत्रार्थमुपसंहरति** स्वमतेनेति ।

अनु०— स्वमतेनार्थरहित उपेक्ष्य: पक्ष ईदृश: ॥ २-२-३ ॥

**स्वसम्मत्यैव** अर्थरहितो **विषयप्रयोजनरहित:** । ईदृश: **ईश्वराद्यतीन्द्रियानभ्युपगमलक्षण:** ॥ २-२-३ ॥

**शे०**— 'स्वमतेनैव निष्फलमि'ति पूर्वग्रन्थं मनसि निधायाह **स्वसम्मत्यैवेति** । विषयप्रयोजनराहित्यस्य प्रागुपपादितत्वेनात्रार्थशब्दस्य अर्यत इति व्युत्पत्त्या विषयमात्रपरत्वस्य वाऽर्थ्यते प्रार्थ्यत इति व्युत्पत्त्या प्रयोजनमात्रपरत्वस्य चायोगादुभयपरत्वमित्यभिप्रेत्यार्थरहित इत्येतदनूद्य व्याख्याति **अर्थरहितो विषयप्रयोजनरहित इति** । ईश्वरादीत्यादिपदेन धर्माधर्मस्वर्गापवर्गादे: परिग्रह: । आदिपदसंग्राह्यतावच्छेदकधर्मकथनम् **अतीन्द्रियेति** ॥ २-२-३ ॥

**प०**— 'स्वमतेनैव निष्फलमि'त्यनेनापौनरुक्त्यायाह **सूत्रार्थमुपसंहरतीति** ॥ २-२-३ ॥

॥ इति अभ्युपगमाधिकरणम् ॥

## ॥ अथ पुरुषाश्मााधिकरणम् ॥

सु० — ॐ पुरुषाश्मवदिति चेत्तथापि ॐ ॥ अ(त्रानीश्व)त्र निरीश्वरसांख्यैकदेशिनां पुरुषोपसर्जनप्रकृतिकर्तृकत्ववादिनां मतमपाक्रियते । नन्वेवं तर्हि तदनन्तरमेवेदमारंभणीयम् । सत्यम् । तथाऽप्यभ्यधिकाशङ्कानुसारेणेयमुक्तिः । तथा हि । परमचेतनस्य भगवत एव सर्वकर्तृत्वं प्रागुक्तम् । तस्य केवलप्रकृतिकर्तृकत्ववादः साक्षाद्विरोधीति प्रथममपाकृतः । तत्र मा भूत्केवलस्याचेतनस्य प्रधानस्य जगत्कर्तृत्वम् । ईश्वरानुगृहीतस्य तु भविष्यतीत्याशङ्का द्वितीयाधिकरणे (निरस्ता) निराकृता । मा भूदचेतनस्य कर्तृत्वं किन्तु शरीरस्यैव चैतन्याश्रयस्य कर्तृत्वमस्त्वित्याशङ्क्य शरीरस्य चैतन्याश्रयताऽयोगात् पुनस्तदवस्थः कर्तृत्वायोग इति तृतीयेऽभिहितम् । इदानीं तु केवलस्याचेतनस्य कर्तृत्वायोगेऽपि चेतनसन्निधानेन तदुपपत्तेः किमीश्वरे(णेत्या)णेत्येषा शङ्का निराक्रियते ।

शे० — ॥ ॐ पुरुषाश्मवदिति चेत्तथाऽपि ॐ ॥ ननु सन्निधानादित्युत्तरभाष्यमनर्थकम् । न चेदं पुरुषाश्मवदिति सूत्रव्याख्यानमिति वाच्यम् । अधिकरणारम्भसमर्थनाय तत्प्रतिपाद्यस्य तदानन्तर्य-

क्रमनिमित्तस्य चावश्यकतया तदुभयमनभिधाय प्रथमत एव सूत्रव्याख्यानमात्रस्यासङ्गतत्वादित्यतः तत्प्रतिपाद्यस्य भाष्य एवोक्तेः क्रममिमित्तस्य च स्पष्टत्वेन शिष्यैरेवोहितुं शक्यत्वाद्युक्तं तदुभयमनभिधायैव भाष्यकारीयं सूत्रव्याख्यानकरणमित्यभिप्रेत्य भाष्यानुरोधेन स्वयं प्रतिपाद्यमर्थं तावद्दर्शयति **अत्रेति** । इदानीमानन्तर्यक्रमे निमित्तं वक्तुं तदनुपपत्तिशङ्कामुत्थापयति **नन्विति** । **एवं तर्हि** निरीश्वरसांख्यैकदेशमतनिराकरणे । **तदनन्तरमेव** निरीश्वरसाङ्ख्यमतनिराकरणानन्तरमेव । गुणभूतेश्वरानुगृहीतप्रधानकर्तृत्वापेक्षया निरीश्वरस्यास्य मतस्यातिविरोधित्वादिति भावः ॥ **साक्षाद्विरोधीति** । स्वतन्त्रचेतनरूपविशेष्यस्यैवानङ्गीकारेणात्यन्तविरोधित्वादित्यर्थः ॥ **ईश्वरानुगृहीतस्य तु भविष्यति इति** । अत्रैव पक्षे 'न ऋत' इत्यादिश्रुतेर्गुणभूतेश्वरविषयत्वसम्भवेन व्यतिरेकानवस्थितेरिति प्रथमाधिकरणोक्तदोषो नेत्याक्षेपेण पूर्वपक्षप्रवृत्तिसम्भवादिति भावः ॥ **अचेतनस्येति** । केवलस्येश्वरगुणकस्य चेति शेषः ॥ **शरीरस्यैवेति** । ईश्वरश्च न शरीरमिति भावः । उपलक्षणमेतत् । श्रुत्यनुमानाभ्यां केवलस्येश्वरगुणकस्य वा जडस्य न कर्तृत्वनिरासो युक्तः । तयोरप्रमाणत्वादिति पूर्वाक्षेपेण प्रवृत्तेश्चेत्यपि द्रष्टव्यम् । केवलस्याचेतनस्येत्युपलक्षणम् । ईश्वरगुणकस्य तस्य, चैतन्याश्रयस्य शरीरस्येत्यपि द्रष्टव्यम् । **चेतनसन्निधानेनेति** । जीवसन्निधानेनेत्यर्थः । तदधिष्ठितत्वेनेति यावत् । जीवसहितस्य प्रधानस्य

कर्तृत्वमपि जीवस्योपसर्जनत्वप्राधान्याभ्यां द्वेधा भवति । तत्र चेतनस्याचेतनं प्रत्युपसर्जनत्वरूपस्याऽऽद्यस्य द्वितीयापेक्षयाऽतिविरुद्धत्वादत्र निरास इति भावः ॥

प०— ॐ पुरुषाश्मवदिति चेत्तथापि ॐ । शङ्कोत्थापनाय पौनरुक्त्याय च प्रतिपाद्यमाह अ(त्र निरीश्व)त्रानीश्वरेति ॥ पुरुषेति ॥ जीवोपसर्जनेत्यर्थः ॥ तदनन्तरमिति । अन्यत्राभावाच्चेत्यतः प्रागित्यर्थः ॥ प्रागुक्तमिति । पूर्वाध्याये जन्माद्यस्येत्यत्रोक्तमित्यर्थः ॥ प्रथममिति । रचनेत्यत्रेत्यर्थः ॥ तृतीय इति । अधिकरण इत्यनुवृत्तिः ॥

च०— ॐ पुरुषाश्मवदिति चेत्तथापि ॐ ॥ प्रागुक्तमिति । जन्मादिनयेऽभिहितमित्यर्थः ॥

सु०— तन्मतरीतिः सूत्र एवोक्तेति तदेव व्याचष्टे सन्निधानादिति ॥

अनु०— ॐ पुरुषाश्मवदिति चेत्तथापि ॐ ॥

सन्निधानाच्चेतनस्य वर्तते यदचेतनम् ॥
तथाऽप्यबुद्धिपूर्वत्वादुक्तदोषः समो भवेत् ॥

यथा खल्वचेतनमेव शरीरं चेतनस्यात्मनः सन्निधानमात्रेण अश्मानयनादिकं करोति । एवमचेतनाऽपि प्रकृतिः पुरुषसन्निधानान्महदादिकार्यं करिष्यति । तथा च प्रयोगः । महदादिकं पुरुषोपसर्जनप्रकृतिकर्तृकम् कार्यत्वादश्मानयनादिवदिति । एवञ्च किमीश्वरेणेति शङ्कार्थः । यद्यप्येवमभ्यधिकमाशङ्कितं तथाऽपि रचनानुपपत्तेरित्युक्तदोषः समो भवेत् न परिहृतो भवेत् । कुतः । अबुद्धिपूर्वत्वात् । प्रकृतेरिति शेषः । बुद्धिः पूर्वा यस्य तत् बुद्धिपूर्वम् । ज्ञानेच्छाप्रयत्ना इत्यर्थः । न विद्यते बुद्धिपूर्वं यस्य तत्तथोक्तं तस्य भावस्तत्त्वम् । तस्मात् । एतदुक्तं भवति । ज्ञानेच्छाप्रयत्नवत्त्वं हि कर्तृत्वम् । न च पुरुषसन्निधाने(ऽपि)न प्रकृतेर्बुद्धिमत्त्वं संभवति । अचेतनत्वाङ्गीकारविरोधात् । न च बुद्ध्यभावे तत्कार्ययोरिच्छाप्रयत्नयोरपि संभवः । तथा चाचेतनस्य कर्तृत्वप्रतिज्ञा व्याहतैवेति । नन्वात्मोपसर्जनस्य शरीरस्याश्मानयनादिकर्तृत्वं निदर्शितम् । तत्कथ(मेतदि)मिति चेन्न । शरीरस्याप्युक्तरीत्या कर्तृत्वासम्मतेः ।

शे०— ननु तथाऽप्येतन्मतस्वरूपाज्ञाने दूषणस्य दुर्बोधत्वात् तत्सुबोधत्वाय तन्मतस्थितिरादौ दर्शनीया तत्कथं तामदर्शयित्वैव सूत्रमात्रव्याख्यानं भाष्यकाराणामित्यत आह तन्मतरीतिरिति ॥

**एवञ्चेति** । तथा च तस्य सर्वकारणत्वं दूरोत्सारितमिति भावः । अभ्युपगमेऽप्यर्था-भावादित्यव्यवहितोक्तदोषस्यात्राप्रसक्त्योग्यव्यवहितदोषपरतयोक्तदोषपदस्य तात्पर्यमाह **रचनेति** ॥ **बुद्धिः पूर्वा यस्येति** । अत्र यस्येति समुदायापेक्षमेकवचनम् । तथा च बुद्धिः पूर्वा यस्य बुद्धीच्छाप्रयत्नसमुदायस्येत्यर्थः सिध्यति । ततश्च 'ज्ञानेच्छाप्रयत्ना इत्यर्थः' इत्युत्तरग्रन्थोपपत्तिः । अन्यथा तदनुपपत्तेः । आत्मना चतुर्थो यस्येत्येकस्यापि वस्तुनो बुद्धिपरिकल्पितविभागस्य वृत्तिपदार्थत्वा-न्यपदार्थत्ववत् वृत्तिपदार्थभूताया अपि बुद्धेरन्यपदार्थत्वमविरुद्धमित्यवधेयम् । **ज्ञानेच्छाप्रयत्नवत्त्वं हीति** । ज्ञानेच्छाप्रयत्नवत्त्वमित्यर्थः । 'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वं' इति इच्छाप्रयत्नरूपप्रवृत्तेरेव कर्तृ-त्वरूपतायाः प्राक् समर्थनादिति ध्येयम् ॥ **शरीरस्यापीति** । अचेतनत्वेन शरीरस्य बुद्ध्यभावात्तदभावे च तत्कार्ययोरिच्छाप्रयत्नयोरप्यसंभवात् ज्ञानपूर्वकेच्छाप्रयत्नवत्त्वरूपकर्तृत्वस्यासम्मतेर्दृष्टान्तस्य साध्यविक-लतेति भावः ।

स० — ॐ **पुरुषाश्मवदिति चेत्तथाऽपि** ॐ । **बुद्धिः पूर्वा यस्येति** । यस्येति समुदा-यापेक्षमेकवचनम् । तथा च बुद्धीच्छाप्रयत्नसमुदायस्येत्यर्थः । तेन ज्ञानेच्छाप्रयत्ना इत्यर्थः इत्युपपन्नम् । 'आत्मना चतुर्थो यस्ये'त्येकस्यापि वस्तुनो बुद्धिपरिकल्पितविभागस्य वृत्तिपदार्थत्वान्य-त्वयोरविरोधात् प्रकृतेऽपि तद्वत् बुद्धिवृत्तिपदार्थभूताया अपि अन्यपदार्थत्वमुपपद्यत इति ध्येयम् । **ज्ञानेच्छाप्रयत्नवत्त्वं हीति** । ज्ञानपूर्वकेच्छाप्रयत्नवत्त्वमित्यर्थः ।

प० — यथैवं शब्दावध्याहृत्य पूर्वार्धे दृष्टान्तदार्ष्टान्तिकोभयपरत्वेनावृत्त्या योजयति **यथा खल्विति** । अपीत्यस्य यदीत्यत्राप्यन्वयमुपेत्य तदनूद्यार्थमाह **यद्यपीति** । उत्तरार्धे दृष्टान्तदूषणपर-तयाऽपि योजयति **शरीरस्यापीति** ॥ **उक्तरीत्येति** । ज्ञानेच्छाप्रयत्नवत्त्वं हीत्यादिनोक्तरीत्येत्यर्थः ।

**श्री०** — ॐ **पुरुषाश्मवदिति चेत्तथाऽपि** ॐ ॥ **यस्येति** । इच्छासहितप्रयत्नस्येत्यर्थः । फलितमाह **ज्ञानेच्छाप्रयत्ना इति** ।

**सु० — दूषणान्तरं च दृष्टान्ते दर्शयितुं सूत्रम्** ॥ ॐ **अङ्गित्वानुपपत्तेः** ॐ ॥ **इति** । **तद्व्याचष्टे** अङ्गित्वमिति ।

**अनु० — ॐ अङ्गित्वानुपपत्तेः ॐ ॥**

अङ्गित्वं पुरुषस्यैव सर्वैरेवानुभूयते ॥
तदङ्गत्वोक्तितश्चैव स्यात्सर्वस्यापलापकः ॥

चशब्दो दूषणान्तरसमुच्चयार्थः । एवशब्दो वक्ष्यमाणकैमुत्यस्फुटीकरणार्थः । अङ्गित्वं प्रधानत्वं शरीरं प्रतीति शेषः । तदङ्गत्वोक्तितः तस्योपसर्जनत्वाङ्गीकारात् । स्यात् सांख्य इति शेषः ।

नन्वेतत्प्रकृतविरुद्धम् । परमेश्वरस्य हि सर्वकर्तृत्वमुपपादयितुमयमारम्भः । तथा च अश्मानयनादिकार्ये जीवस्य प्राधान्योपपादनं कथं न प्रकरणविरुद्धमिति चेन्न । जीवगतस्य अमुख्यस्य कर्तृत्वस्य निरास एव यदा प्रमाणविरोधः तदा किमु वक्तव्यं सर्वकर्तुरीश्वरस्यापलाप इत्येतत्प्रदर्शनार्थैव सूत्रकृता जीवस्याङ्गित्वोपपादनादित्याशयवानाह किम्विति ।

किमु सर्वेश्वरस्यास्य ह्यपलापाद्यतोऽखिलम् ॥ २–२–४ ।

अस्य सर्वकर्तृत्वेन प्रतिपिपादयिषितस्य । उत्तरसूत्रे चास्याङ्गीकारवादत्वं स्फुटीभविष्यतीति हिशब्देन सूचयति ।

कथं जीवस्य प्राधान्यनिरासादप्यतिशयेनेश्वरनिरासः प्रमाणविरुद्ध इत्यत आह यत इति ।

यतः कारणादखिलं प्रमाणं योगिप्रत्यक्षानुमानागमात्मकं सर्वकर्तारमीश्वरं प्रतिपादयति तस्मादिति पूर्वेण संबन्धः ॥ २ २–४ ॥

शे० — ॐ अङ्गित्वानुपपत्तेः ॐ ॥ दूषणान्तरमिति । प्रमाणविरोधरूपमित्यर्थः ॥ दूषणसमुच्चयार्थ इति । उच्यमानस्य प्रमाणविरोधस्योक्तेन साध्यवैकल्येन सह समुच्चयार्थः इत्यर्थः । वक्ष्यमाणेति । किमु सर्वेश्वरस्येत्यादिनाऽनुपदमेव वक्ष्यमाणेत्यर्थः ।

अमुख्यस्य कर्तृत्वस्येति । कतिपयकार्यकर्तृत्वस्येत्यर्थः । कतिपयकार्यापेक्षया प्राधान्यस्येति यावत् । न तु भगवदपेक्षयाऽमुख्यकर्तृत्वस्येत्यर्थः । तस्य जीवे वास्तवत्वेन वक्ष्यमाणाङ्गीकारवादविरोधप्रसङ्गादित्यवधेयम् । नन्वीश्वरस्यैव कार्यमात्रं प्रति कारकान्तराप्रयोज्यत्वरूपं कर्तृत्वमिति सिद्धान्तः । तथा च न जीवस्य कतिपयकार्येऽप्युक्तरूपं कर्तृत्वमस्तीति कथं तदनङ्गीकारेऽनुभवविरोधाभिधानमित्यतो वस्तुगत्या जीवस्योक्तरूपकर्तृत्वाभावेऽप्यङ्गीकृत्य तत् तदनङ्गीकारेऽनुभवविरोधाभिधानमिति भावेनास्याङ्गीकारवादत्वे नियामकमाह उत्तरसूत्रे चेति । अस्य अङ्गित्वाभिधानस्य । उत्तरसूत्रे ईशशक्तिवियोगादित्यनेन ज्ञस्य जीवस्य कुत्रापि कार्ये स्वातन्त्र्येण शक्तिवियोगादिति जीवस्य स्वातन्त्र्याभावसमर्थनात्स्वातन्त्र्याभिधानस्य वास्तवत्वे तद्विरोधप्रसङ्गादङ्गीकारवादत्वमेवेति निश्चीयत इति भावः ॥ २–२–४ ॥

स० — ॐ अङ्गित्वानुपपत्तेः ॐ ॥ चशब्द इति । 'तदङ्गित्वोक्तितश्चैव' इत्यत्र चशब्द इत्यर्थः । अमुख्यस्य कर्तृत्वस्येति । उपचरितकर्तृत्वस्येत्यर्थः । ननु ' जीवस्य उपचरित-

कर्तृत्वानङ्गीकार एव यदा प्रमाणविरोधः, तदा किमु वक्तव्यं सर्वकर्तुरीश्वरस्यापलाप' इत्येतत्प्रदर्शनायैव सूत्रकृता जीवस्याङ्गित्वोपपादनमित्युक्तम् । कुत एव तत् । जीवस्य मुख्यकर्तृत्वमेवाङ्गीकृत्य तस्मादङ्गित्वोपपादनमिति किं न स्यात् । तदीयज्ञापकाभावादित्यत आह **उत्तरसूत्रेति** । उत्तरसूत्रे जीवस्य एकदेशेऽपि सामर्थ्याभावस्य स्पष्टं प्रतिपादितत्वेन मुख्यकर्तृत्वस्यानङ्गीकृतत्वात् । तेनैव ज्ञायते मुख्यकर्तृत्वमङ्गीकृत्यैव तत्र प्रमाणविरोधः । वस्तुतस्तु मुख्यकर्तृत्वमीश्वरस्यैवेति ॥ २-२-४ ॥

प० — **दूषणान्तरेति** । पूर्वसूत्रोक्तसाध्यवैकल्यरूपदृष्टान्तदोषेणाग्नित्वानुभवविरोधरूपदूषणान्तरेत्यर्थः । सूत्रे चोत्तरसूत्राच्चशब्दाकर्षो वा पूर्वसूत्रात् अपिपदानुवृत्तिर्वेति भावः ॥ **एव शब्द इति** । चशब्दात्पर इति भावः । तदङ्गत्वे क्ति इत्यनुवादः । तस्योपसर्जनस्येत्यादि व्याख्या ॥ **अमुख्यस्य कर्तृत्वस्येति** । शरीरादिक किञ्चित् प्रत्येव स्वातन्त्र्यरूपस्यैव कर्तृत्वस्येत्यर्थः । नन्वत्र जीवस्य शरीरादिकं प्रत्यङ्गित्वोपपादनं सूत्रकारस्य कैमुत्यद्योतनायाभ्युपगमवादेनैव, न तु वस्तुत इति कुतो ज्ञायत इत्यत आह **उत्तरसूत्रे चेति** । 'ज्ञशक्तिवियोगादि'त्यंशेन ज्ञस्य जीवस्य क्वापि शक्तिर्नेति, विप्रतिषेधाच्चे'ति सूत्रे जीवस्वातन्त्र्यस्य प्रत्यक्षादिविरुद्धत्वाद्धिताकरणादिविरुद्धत्वाच्चेति(वा) वक्ष्यमाणत्वात्तेनात्र सूत्रकारोक्तिरङ्गीकारवादेनेति ज्ञायते । अन्यथा तद्विरोधापत्तेरिति भावः ॥ **पूर्वेणेति** । किमु सर्वापलापकः स्यादिति संबन्ध इत्यर्थः ॥

---

या० — ॐ **पुरुषाश्मवदिति चेत्तथाऽपि** ॐ ॥ **अमुख्यस्य कर्तृत्वस्येति** । असर्वकर्तृत्वस्येत्यर्थः । कतिपयकार्यप्राधान्यस्येति यावत् । न तु भगवदपेक्षयाऽमुख्यकर्तृत्वस्येत्यर्थः । तस्य जीवे वास्तवत्वेन वक्ष्यमाणाङ्गीकारवादविरोधप्रसङ्गात् । नन्वेवमपीश्वरस्यैव सर्वकर्तृत्वं यत्प्रतिपिपादयिषितं तद्भग्नं जीवस्यापि कतिपयकार्ये स्वातन्त्र्येण कर्तृत्वरूपाङ्गित्वस्यात्रोक्तत्वादित्यत आह **उत्तरसूत्रे चेति** । अस्याङ्गित्ववचनस्योत्तरसूत्रे हि 'ज्ञशक्तिवियोगादि'त्यनेन ज्ञस्य जीवस्य कुत्रापि कार्ये स्वातन्त्र्येण शक्तिवियोगादिति जीवस्य प्राधान्याभावोऽभिधीयते । ततश्च तदविरोधायात्रोच्यमानमङ्गित्वमङ्गीकारवादेनैवेति स्फुटमवगम्यते । तदीश्वरस्यैव सर्वकर्तृत्वमुपपन्नमिति प्रसिद्ध्यर्थकेन हिशब्देन सूचयतीत्यर्थः ॥ २-२-४ ॥

॥ इति पुरुषाश्माधिकरणम् ॥

## ॥ अथ अन्यथानुमित्यधिकरणम् ॥

**सु०— ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ ॥ प्रकृत्युपसर्जनपुरुषकर्तृत्ववादिनां निरीश्वरसांख्यैकदेशिनां मतमत्र निराक्रियते । तथा हि अश्मानय(नग्र)नादिप्रवृत्तौ तावत्पुरुषस्य प्राधान्यं शरीरस्य चोपसर्जनत्वमनुभवसिद्धमित्युक्तम् । तथा च तद्दृष्टान्तेन महदादिकार्यमपि प्रकृत्युपसर्जनपुरुषकर्तृकमनुमीयते । पुरुषस्य च चेतनत्वेन न कर्तृत्वानुपपत्तिः । सुषुप्त्यादौ च कर्तृत्वानुपलम्भात्प्रकृतिरुपसर्जनभूताऽङ्गीकरणीया । एवञ्च किमीश्वरेणेति ।**

शे०— **ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ ॥** 'अङ्गित्वं यदी'त्युत्तरभाष्यस्यान्यथाऽनुमिताविस्यधिकरणव्याख्यानार्थत्वान्नानर्थक्यमित्यभिप्रेत्य तथाऽपि प्रतिपाद्यानुक्तिदोष इत्यतो भाष्य एव स्पष्टं तदुक्तेरत्रानुक्तिर्न दोषायेत्याशयवान्प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोतीति भाष्यं मनसि निधायैतदधिकरणप्रतिपाद्यमाह **प्रकृतीति** । ननु पूर्वन्यायेनैतदपि निराकृतमिति नार्थोऽधिकरणेनेत्यतः पूर्वोक्तस्याङ्गित्वानुपपत्तिदोषोद्धारेण पूर्वपक्षप्रवृत्तेर्न गतार्थत्वमिति भावेनाभ्यधिकाशङ्कया पूर्वपक्षमाह **तथा हीति ॥ चेतनत्वेन न कर्तृत्वानुपपत्तिरिति** । जीवस्य चेतनत्वेन बुद्धिमतस्तत्कार्यप्रयत्नरूपप्रवृत्तिसम्भवादिति भावः । ननु च पुरुषमात्रस्यैव कर्तृत्वोपपत्तौ किं प्रकृत्युपसर्जनस्य पुरुषस्य कर्तृत्वकल्पनयेत्यत आह **सुषुप्त्यादौ चेति** । आदिपदेन प्रलयादिपरिग्रहः ॥ **प्रकृतिरुपसर्जनभूतेति** । इन्द्रियादिरूपा प्रकृतिरुपसर्जनभूतेत्यर्थः । सुषुप्त्यादौ च सोपरतेति न कर्तृत्वापादिकेति भावः ।

**प०— ॐ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॐ** । अपौनरुक्त्याय संगतिसूचनाय चास्यार्थमाह **प्रकृतीति ॥ अनुमीयत इति** । महदादिकं जडोपसर्जनकपुरुषकर्तृकं कार्यत्वादश्मानयनादिवत् इत्यनुमीयत इत्यर्थः । न केवलं पूर्वत्रेव साध्यवैकल्यादिदृष्टांतदोषोऽत्र नेति; प्रतिज्ञाव्याहतिरूपदोषोऽपि नेत्याह **पुरुषस्य चेति** । हेतोरप्रयोजकत्वं निराह **सुषुप्त्यादाविति** । मोहादिरादिपदार्थः । तदानीं प्रकृतेरुदासीनत्वादिति भावः ॥ **कर्तृत्वेति** । ज्ञानेच्छाप्रयत्नरूपकर्तृत्वेत्यर्थः ।

**या०— ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ ॥ प्रकृतिरुपसर्जनेति ।** इन्द्रियरूपा प्रकृतिरुपसर्जनभूतेत्यर्थः । सुषुप्त्यादौ च सोपरतेति न कर्तृत्वापादिकेति भावः ।

सु० — अत्र वक्तव्यं किं पुरुषस्यैकाकिनः कुत्रापि स्वातन्त्र्यं नास्ति उत अस्तीति । आद्यं दूषयितुं सूत्रं व्याचष्टे अङ्गित्वमिति ।

अनु० — ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ ॥

अङ्गित्वं यदि तस्यैव स्वातन्त्र्यं चेन्न चाखिलम् ॥
तत्प्रेरणेऽप्यशक्तत्वात्स्वतन्त्रोऽन्यो ह्यपेक्षितः ॥

सु० यदि पुरुष(स्यैवाङ्गि)स्याङ्गित्वं प्राधान्यं कर्तृत्वमिति यावत् । प्रकृतेस्तूपसर्जनत्वमेवेति पूर्वमतादन्यथाऽनुमीयते । तत्रापि च पुरुषस्याखिलं स्वातन्त्र्यं नास्तीति पक्षो यद्यङ्गीक्रियते तदा स्वतन्त्रोऽन्यः परमेश्वरोऽङ्गीकरणीय एव स्यात् । कुतः । प्रकृतिप्रेरणे पुरुषस्याशक्तत्वात् । मा भूत्तावत्कार्यान्तरार्थमीश्वरापेक्षा । तथाऽपि प्रकृतिप्रेरणार्थमपेक्षणीय एवासावित्यपेरर्थः ।

एतदुक्तं भवति । न तावत्सत्तामात्रेण संयोगमात्रेण वा प्रधानस्य कर्तारं पुरुषं प्रत्युपसर्जनत्वम् । सुप्तिप्रलयादावपि प्रसङ्गात् । किन्तु करणत्वादिना । न च कर्त्राऽप्रयुज्यमानस्य करणत्वादिकं दृष्टम् । न च तदेव तत्प्रेरणे करणादि । स्ववृत्तिविरोधात् । तथा च प्रकृतिनिरपेक्षस्य पुरुषस्य क्वापि व्यापारासामर्थ्येऽवश्यमन्येन सहकारिणा भाव्यम् । न चासावप्येवंविध एव । तस्यापि सहकार्यन्तरापेक्षायामनवस्थाप्रसङ्गात् । अतः स्वतन्त्र एवासावङ्गीकरणीयः । स एव चेश्वर इति कथमसौ नाभ्युपगम्यत इति ।

शे० — ननु प्रकृत्युपसर्जनपुरुषकर्तृत्ववादिना पुरुषस्य स्वातन्त्र्याङ्गीकारात् 'तत्प्रेरणेऽप्यशक्तत्वादि'ति दूषणानुपपत्तिः । 'स्वातन्त्र्यं चेन्न चाखिलमि'त्यसदनुवादप्रसङ्गश्चेत्यतो नेदं स्वातन्त्र्यपक्षे दूषणं किन्त्वस्वातन्त्र्यपक्ष एवेति नानुपपत्तिरिति भावेनास्वातन्त्र्यपक्षदूषणपरतयोत्तरग्रन्थं योजयितुं सम्भावितं पक्षद्वयं तावद्विकल्पयति अत्र वक्तव्यमित्यादिना ॥ प्रसङ्गादिति । सत्तासंयोगयोस्तदाऽपि सत्त्वादिति भावः । कथं तर्हि प्रधानस्य पुरुषं प्रत्युपसर्जनत्वमिति पृच्छति किन्त्विति । उत्तरमाह करणत्वादिनेति । आदिपदेन कर्मत्वाधिकरणत्वयोः परिग्रहः । तत्रेन्द्रियरूपायाः प्रकृतेः करणत्वेन, विषयरूपायाश्च तस्याः कर्मत्वेन, शरीररूपायाश्च तस्या अधिकरणत्वेन, पुरुषं प्रत्युपसर्जनत्वमिति बोध्यम् । अस्त्वेवं करणत्वादिनैव प्रधानस्य पुरुषं प्रत्युपसर्जनत्वं किं तावताऽपीत्यत आह न चेति । ततश्च करणादित्वात्प्रधानस्य कर्तृप्रयोज्यत्वमवश्यं वाच्यमिति शेषः । कर्तुश्च पुरुषस्यैकाकिनः क्वाप्यसामर्थ्यात्प्रधानप्रेरणार्थमपि तस्य सहकारिकारणादिरूपं किञ्चिद्वाच्यम् । तच्च किं प्रधानमेव किंवाऽन्यश्चेतन इति विकल्पं मनसि निधायाद्यं दूषयति न च तदेवेति । तत्प्रेरणे प्रधानप्रेरणे ॥ स्ववृत्तीति ।

स्वापेक्षया स्वस्य पूर्ववृत्तित्वविरोधादित्यर्थः । आत्माश्रयप्रसङ्गादिति यावत । प्रधानप्रेरणे पुरुषस्य यदि प्रधानमेव करणादिरूपं तर्हि तस्यापि करणादित्वेन पुरुषप्रयोज्यत्वस्यावश्यकत्वात्प्रधानविषयक-प्रेरणापेक्षया प्रधानविषयकप्रेरणायाः पूर्ववृत्तित्वप्राप्तेरिति भावः । अन्यश्चेतन एव सहकारीति पक्षेऽपि स किमस्वतन्त्रः स्वतन्त्रो वेति विकल्पे मनसि निधायाद्यमनूद्य दूषयति **न चेति** । **एवंविधः** सह-कार्यन्तरसापेक्ष एवेत्यर्थः ।

स० — ॐ **अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्** ॐ ॥ **स्ववृत्तिविरोधादिति** । देवदत्तः कुठारेण काष्ठं छिनत्तीत्यादौ ऊर्ध्वाधोदेशसंयोगविभागलक्षणस्वव्यापारेण साक्षात्कर्मणि काष्ठादौ द्वैधीभावलक्षणफलाधायकस्यैव कुठारादेः कारणत्वस्यैव दर्शनात् अव्यवधानेन कर्मसमवेतफलाधायक-क्रियाश्रयत्वस्यैव कारणलक्षणत्वात् परसमवेतक्रियाजन्यफलाधारत्वस्यैव कर्मलक्षणत्वात् प्रकृतिकर्मकप्रेरणं प्रति प्रकृतेरेव कारणत्वे कार्यानुगुणप्रयत्नलक्षणस्वव्यापारजन्यकार्यानुगुणत्वावस्थाविशेषरूपफलस्य स्वस्मिन् वृत्तेर्विरोधात् लक्षणविरुद्धत्वात् प्रकृतिः न प्रेरणकरणं तत्कर्मत्वात् । यत् यत्कर्म तत् तत्करणं न यथा कुठारादीत्यनुमानविरुद्धत्वादित्यर्थः । यद्वा प्रकृतेः प्रेरणाकर्मत्वे तज्जन्यातिशयाधारत्वं स्यात् । तस्यैव कर्मलक्षणत्वत् । यदि च करणत्वं तर्हि कर्मनिष्ठातिशयाधायकव्यापारवत्त्वं स्यात् । न चेष्टापत्तिः । उक्तलक्षणविरोधात् । प्रकृतिः अतिशयाधायकव्यापारवती न, अतिशया-श्रयत्वात् संप्रतिपन्नवत् । प्रकृतिः अतिशयाश्रयो न, तदाधायकव्यापारवत्त्वात् संमतवदित्यनुमानेन स्वव्यापारजन्यातिशयस्य, स्वस्मिन् स्वनिष्ठफलाधायकव्यापारस्य च स्वस्मिन् वृत्तेर्विरुद्धत्वादित्यर्थः ।

प० — तस्यैवेति मूलपदस्यार्थः **पुरुषस्यैवेति** । अंगित्वमित्यनुवादः प्राधान्यमिति व्याख्या । तस्यैवेत्येवकारतात्पर्यं **प्रकृतेस्त्वित्यादि** । भाष्यार्थं सूत्रारूढं दर्शयति **इति पूर्वमतादिति** । द्वितीय-पादार्थमाह **तत्रापि चेत्यादिना** । चतुर्थपादं योजयति **तदेति** । तृतीयपादार्थः **प्रकृतिप्रेरण इत्यादि** ॥ **करणत्वादिनेति** । इन्द्रियतद्विषयात्मिकायाः प्रकृतेः, करणत्वकर्मत्वाधिष्ठानत्वादिना कारकरूपेण सहकारितयोपसर्जनत्वमित्यर्थः । अप्रयुज्यमानस्येति पदच्छेदः । नन्विद्रियादिरूपप्रकृति-प्रेरणे स्वतो शक्तस्यापि पुरुषस्य तदेव करणादितयोपादाय तत्प्रेरयतीत्यस्तु किं स्वतन्त्रेश्वरेणेत्याशङ्क्य निराह **न च तदेवेति** ॥ **स्ववृत्तीति** । एकस्यां प्रेरणक्रियायां तस्यैव करणत्वे कर्मत्वेऽङ्गीकृते सति स्वस्य स्व(पूर्व)वृत्तिर्विरुध्यते । प्रेरणेन हि करणत्वं । करणत्वेन च प्रेरणमिति प्रेरणे प्रेरणक्रियायाः अपेक्षितत्वादिति भावः ॥ **एवंविध एवेति** । स्वातन्त्र्यहीन एव(न)भवितुमर्हतीत्यर्थः । कुत इत्यत आह **तस्यापीति** ।

**या०— किन्तु करणत्वादिनेति** । इन्द्रियरूपायाः प्रकृतेः करणत्वं, विषयरूपायाः कर्मत्वं शरीरादिरूपाया अधिकरणत्वमित्यादि द्रष्टव्यम् । करणत्वादिकं दृष्टमित्यनन्तरमन्तःकरणादिरूपस्य प्रधानस्यापि कर्तृप्रयोज्यत्वमवश्यं वाच्यमिति शेषः । कर्तुश्च पुरुषस्यैकाकिनः काप्यसामर्थ्यात्प्रधान-प्रेरणार्थमपि तस्य सहकारिकारणादिरूपं किञ्चिद्वाच्यम् । तच्च न तावत्प्रधानमेवेत्याह **न च तदेवेति** ॥ **स्ववृत्तीति** । स्वापेक्षया स्वस्य पूर्ववृत्तित्वविरोधादित्यर्थः । आत्माश्रयत्वप्रसङ्गादिति यावत् । प्रधान-प्रेरणे पुरुषस्य यदि प्रधानमेव करणादिरूपं तर्हि तस्यापि करणादिरूपतया पुरुषप्रयोज्यत्वस्यावश्यकत्वे प्रधानविषयकप्रेरणापेक्षया प्रधानविषयकप्रेरणायाः पूर्ववर्तित्वं प्राप्तं, ततश्चात्माश्रय इति ॥ **एवंविध एवेति** । प्रकृतिसहकारिभूतान्योऽपि सहकार्यन्तरसापेक्ष एवेत्यर्थः ।

**श्री०— ॐ अङ्गित्वानुपपत्तेः ॐ** ॥ २–२–४ ॥ **ॐ अन्यथाऽनुमितौ च ज्ञशक्ति-वियोगात् ॐ** ॥ **अखिलं स्वातन्त्र्यं नास्तीति** । उपसर्जनीभूतप्रकृत्यपेक्षाऽङ्गीकारादित्यर्थः । कुतो न चेत्यत आह **तस्यापीति** ।

**सु०— द्वितीयं निषेधति** न चेति ।

**अनु०—** न च स्वातन्त्र्यमस्यैव

**तथा सति प्रकृत्यनपेक्षत्वप्रसङ्गेन (अस्य) स्वसिद्धान्तविरोधापत्तेरिति** भावः । **अनेन** विप्रतिषेधाच्चेति **सूत्रं व्याख्यातं भवति** । **सूत्रस्यार्थान्तरमाह** प्रत्यक्षादीति ।

प्रत्यक्षादिविरोधतः ॥

**प्रत्यक्षादिप्रमाणैर्हि पुरुषस्यास्वातन्त्र्यं सर्वदा उ(सर्वत्रो)पलभ्यते** । **प्रकारान्तरेण व्याचष्टे** हितेति ।

हिताक्रियादिदोषाच्च

**आदिपदेनाहितक्रियोपादीयते** । **एवं पञ्चमतानि निराकृत्योपसंहरति** भद्रमिति ।

भद्रं नानीश्वरं मतम् ॥

**पातञ्जलाभिमतस्येश्वरस्येश्वरलक्षणाभावात्तदप्यनीश्वरमेव मतमिति** ।

**नन्वन्यान्यपि भिन्नकसंसारमोचकादीन्यनीश्वराणि मतानि सन्ति तानि कुतो न निरा-क्रियन्ते** । **उक्तदोषैरेव निरस्तत्वात् अभ्यधिकाशङ्काऽभावाच्चेत्याह** संसारिण इति ।

संसारिणोऽन्यं सर्वेशं सर्वशक्तिमनौपमम् ॥

चेतनाचेतनस्यास्य सत्त्वादेस्तदधीनताम् ॥

नाङ्गीकुर्वन्ति ये तेषां सर्वेषां च समा इमे ॥

**संसारिपदमीश्वरातिरिक्तोपलक्षणम् । सर्वेशमिति विशेष्यपदम् । तेन न पौनरुक्त्यम् । उपमैवौपमम् । स्वार्थिकोऽण् । नास्त्यौपमं यस्यासावनौपमः । यद्वोपमाया अयमौपमः । सोपम इति यावत् । ततो नञ्समासः ।** अस्य **प्रपञ्चस्य । इमे कथिता दोषा इति शेषः । न केवलं सर्वेशं स्वरूपेणानङ्गीकुर्वतामिमे दोषाः । किन्तु तमङ्गीकृत्यापि जीवाद्यन्यत्वादि- विशेषणानि तस्यानङ्गीकुर्वतामपि । तथात्वे फलतस्तस्यानीश्वरत्वादिति ।**

**शे० — द्वितीयम्** एकाकिनः कुत्रापि स्वातन्त्र्यमस्तीति द्वितीयम् । **तथा सति** एका- किनः स्वातन्त्र्याभ्युपगमे । **प्रकृत्यनपेक्षत्वेति** । केवलस्यैव पुरुषस्य कर्तृत्वोपपत्तेरिति भावः । न च स्वातन्त्र्यमित्यादेरसूत्रत्वादभाष्यत्वं परिहरति **अनेनेति** । तर्हि स्वातन्त्र्यमित्युक्तरीत्यैव विप्रतिषेधा- च्चेति सूत्रव्याख्यानसिद्धेः प्रत्यक्षादिविरोधत इत्याद्युत्तरभाष्यमनर्थकमित्यतो विप्रतिषेधाच्चेति सूत्रस्यार्था- न्तरकथनपरत्वात्तस्य न तदित्याशयेन तत्परतयोत्तरभाष्यं योजयति **सूत्रस्येति** । अनीश्वरमतासामञ्ज- स्यस्य पूर्वमेवोक्तत्वात्किं पुनस्तदुक्त्येत्यतस्तदुपसंहाररूपत्वान्न पुनरुक्तिरिति भावेनोपसंहाररूपतयोत्तरभाष्यं योजयति **एवमिति** । ननु च पातञ्जलैरीश्वरस्याङ्गीकारात्कथं तन्मतस्यानीश्वरमतत्वमित्यत आह **पातञ्जलाभिमतस्येति ॥ ईश्वरलक्षणेति** । स्वातन्त्र्यादिरूपेश्वरलक्षणवत्त्वानभ्युपगमात्फलतोऽनीश्वर- वादान्तर्भावात्तन्मतमप्यनीश्वरमतमेवेति भावः ।

ननु च 'संसारिणोऽन्यमि'त्याद्युत्तरभाष्यमनर्थकम् । न चोक्तदोषाणां सर्वसाङ्ख्यमतसमानता- प्रतिपादनार्थमेतदिति वाच्यम् । रचनानुपपत्तेरित्यादिना चतुर्विधसाङ्ख्यमतानां विशिष्य विशिष्यैव निरस्तत्वेन पुनस्तेषूक्तदोषसाम्यप्रतिपादनस्यानर्थक्यात् । न चोक्तचतुर्विधसाङ्ख्यमतव्यतिरिक्तसाङ्ख्य- मतानामुक्तदोषसाम्यप्रतिपादनार्थत्वान्नानर्थक्यमिति वाच्यम् । निरस्तसाङ्ख्यमतव्यतिरिक्ततन्मतानामेवा- भावात् । भावे वा तेषामपि विशिष्यैवोपन्यस्य निरसनीयतया पृथगनिरासे निमित्ताभावाच्चेत्यतस्त- त्सद्भावप्रदर्शनपूर्वकं तेषां पृथगनिरसनीयतासमर्थनार्थत्वादुक्तदोषसाम्यनिरूपणस्य नानर्थक्यमित्याशयेन तत्परतयोत्तरभाष्यं योजयितुमतिरिक्तसाङ्ख्यमतसद्भावं शङ्कामुखेन दर्शयति **नन्विति** । ननु केवला- चेतनकर्तृत्वपक्षनिरासेन निरस्तस्यापि तदेकदेशिनिरीश्वरमतस्य यथा पुनर्निरासस्तथाऽत्राप्युक्तदोषनिरस्तस्य भिन्नकादिमतस्य पुनर्निरासो भविष्यतीत्यतो युक्तं केवलाचेतनकर्तृत्वपक्षनिरासेन निरस्तस्यापि तदेकदेशिम- तस्य पुनरत्र निराकरणं. सन्निधानाच्चेतनस्येत्याद्युक्तरीत्याऽभ्यधिकाशङ्कासद्भावान्न तु भिन्नकादिमतस्य तदभा- वादित्याह **अभ्यधिकेति** । ननु संसारिणोऽन्यमित्ययुक्तम् । अत्र संसारिपदस्य संसारिमात्रपरत्वे मुक्तप्रति-

यौगिकभेदालाभाल्लक्षणया मुक्तपरत्वे च संसार्यादिभेदालाभान्मुक्तोपलक्षणत्वे च संसारिमुक्तभेदलाभेऽपि जडभेदालाभात्त्रितयोपलक्षणत्वेऽपि त्रितयमात्रभेदलाभेऽपि लक्ष्मीभेदस्यालाभाच्चेतनाचेतनात्मकसर्वोपलक्षणत्वे चेश्वरभेदस्यापि लाभप्रसङ्गसम्भवादित्यत ईश्वरातिरिक्तमात्रोपलक्षणत्वादपेक्षितभेदलाभस्येश्वरभेदालाभस्य च सम्भवान्नानुपपत्तिरिति भावेन व्याख्याति **संसारिपदमिति**। **ईश्वरातिरिक्तोपलक्षणं** ईश्वरातिरिक्तसर्वोपलक्षणमित्यर्थः ॥ **विशेष्यपदमिति**। संज्ञापदमित्यर्थः ॥ **न पौनरुक्त्यमिति**॥ सर्वेशमित्यस्य 'चेतनाचेतनस्यास्य सत्त्वादेस्तदधीनतामि'त्यनेनेति शेषः। सर्वेशमित्यस्यापि विवक्षितावयवार्थत्वे उभयोरेकार्थत्वप्राप्त्या पौनरुक्त्यं स्यान्न चैवमिति भावः। ननु न विद्यते उपमा यस्येति विग्रहेऽनुपममिति भवितव्यमनौपममिति तु कथमित्यत आह **उपमैवेत्यादिना**। **स्वार्थिक इति** प्रज्ञादित्वादिति भावः। स्वार्थिकत्वेऽणो वैयर्थ्यमापद्यत इत्यपरितोषादाह **यद्वेति**। सर्वेषां चेति चशब्दद्योतितं समुच्चयं दर्शयति **न केवलमिति**।

स० — **तेन न पौनरुक्त्यमिति**। 'सर्वेशमि'त्यस्य 'चेतनाचेतनस्यास्य सत्तादेस्तदधीनतामि'त्यनेन न पौनरुक्त्यमित्यर्थः। वस्तुतस्तु 'सर्वशक्ति' इत्यनेन न पौनरुक्त्यमित्यर्थः। 'सर्वेशमि'त्यस्य विशेष्यपरत्वाभावे सर्वस्य ईष्टे असाविति सर्वविषयकशक्तिमत्त्वप्राप्तौ तेन न पौनरुक्त्यमिति भावः॥

प० — **द्वितीयमिति**। क्वचित्स्वातन्त्र्यमस्तीति पक्षमित्यर्थः। एवकारसूचितं दोषं स्वयमाह **तथा सतीति**॥ इति **सूत्रं व्याख्यातमिति**। स्वसिद्धान्तविरोधाच्चेत्येवं रूपेण व्याख्यातमित्यर्थः॥ **प्रत्यक्षादिप्रमाणैरिति**। तत्तदनुभवरूपप्रत्यक्षेणापूर्णत्वाल्पशक्तित्वाद्यनुमानैः 'अपूर्णोऽयं जीवसंघोऽस्वतन्त्र' इत्यादिश्रुत्यादिप्रमाणैरित्यर्थः॥ **प्रकारान्तरेणेति**। हिताकरणाहितकरणविरोधाच्चेत्येवंरूपेणेत्यर्थः। मुक्तानां जडस्य च संग्रहायाह **संसारिपदमिति**॥ **विशेष्यपदमिति**। रूढ्या विष्णुपरं न यौगिकत्वेन, **तेन** रूढत्वेन हेतुना चेतनाचेतनस्येत्यादिना न पौनरुक्त्यमित्यर्थः। सर्वेषां चेत्युक्तितात्पर्यमाह **न केवलमिति**॥ **तथात्व इति**। उक्तविशेषणहीनत्व इत्यर्थः।

या० — **ईश्वरातिरिक्तेति**। तेन मुक्तजडयोरपि संग्रह इति भावः॥ **विशेष्यपदमिति**। रूढमेवेदं पदमिति भावः॥ **तेन न पौनरुक्त्यमिति** 'चेतनाचेतनस्यास्य सत्त्वादेस्तदधीनतामि'त्यनेनैव सर्वेशत्वस्योक्तत्वात् पुनर्यौगिकेन सर्वेशपदेन तदुक्तौ पौनरुक्त्यमित्यर्थः॥

श्री० — **तथा सति** अस्यैव स्वातन्त्र्ये। **स्वसिद्धान्तेति**। उपसर्जनीभूतप्रकृत्यपेक्षाङ्गीकारादित्यर्थः॥ **विप्रतिषेधाच्चेति**। स्वसिद्धान्तविरोधादित्यर्थः॥ **अणिति**। अणित्वादादिभूतस्योकारस्यौकाररूपवृद्धौ औपममिति भवति॥ **नञ्समास इति**। न औपमोऽनौपम इति नञ्समास इत्यर्थः। **तथात्वे** जीवान्यत्वादिविशेषणानङ्गीकारे॥ **फलत इति**। जीवाभेदादिप्राप्त्येत्यर्थः॥ २-२-५॥

सु० – किमतो यद्येवमनीश्वरमतमसमञ्जसमित्यत आह तस्मादिति ।

अनु०— तस्माच्छ्रुतिप्रमाणेन युक्तिभिश्च परो हरिः ॥
अङ्गीकार्यतमो नित्यः सर्वैरपि सुनिश्चितम् ॥ २–२–५ ॥

न परपक्षनिरासमात्रेण स्वपक्षसिद्धिरित्यतः श्रुतिप्रमाणेनेत्याद्युक्तम् । पर उत्कृष्ट उक्तविशेषणोपपन्नः । नित्य इति सामर्थ्यादङ्गीकारस्य विशेषणम् । सर्वदेति यावत् । निश्चयस्य स्वपरपक्षसाधनोपालम्भातिरिक्तानपेक्षत्वात्प्रामाणिकनिश्चयस्य चासमीचीनत्वायोगात्सुनिश्चितमित्युक्तम् । प्रथमाध्यायव्युत्पादितेन स्वपक्षसाधनेनात्र व्युत्पादितेन परपक्षोपालम्भेन च यथालक्षितं ब्रह्म सिद्धमित्याशयः । नन्वेवं तर्हि उत्तराधिकरणानामनारम्भ एव । निराकरिष्यमाणै(रु र्?)प्युक्तविशेषणस्येश्वरस्यानभ्युपगतत्वादिति चेत् । सत्यम् । तथाऽपि तन्मतानामत्यन्तहेयताप्रदर्शनाय दूषणान्तराणि व्युत्पादयितुमुत्तरो ग्रन्थः ॥ २–२–५ ॥

शे०— तस्मादित्युत्तरभाष्यानर्थक्यमाशङ्क्य स्वपक्षसिद्धिरूपपरपक्षोपालम्भफलप्रदर्शनार्थत्वान्न तदिति भावेन तत्फलोपदर्शकतया तद्योजयितुं परपक्षोपालम्भफलाकाङ्क्षामुत्थापयति किमत इति । ननु तस्मात्परपक्षस्य निरस्तत्वात्परो हरिरङ्गीकार्यतम इत्येतावतैव परपक्षनिरासस्य स्वपक्षसिद्धिरूपफलोक्तेः 'श्रुतिप्रमाणेने'त्यादेरानर्थक्यमित्यतः स्वपक्षसाधकप्रमाणोपन्यासार्थत्वात्तस्य न तदिति भावेन स्वपक्षसाधकोपन्यासस्यावश्यकतामुपदर्शयति न परपक्षेति ॥ सामर्थ्यादिति । योग्यत्वादित्यर्थः । नित्यत्वस्याङ्गीकारविषयविशेषणताया वैयर्थ्यप्रसङ्गेनायोग्यत्वादिति भावः ॥ २–२–५ ॥

प०— श्रुतिप्रमाणेनेत्याद्युक्तमिति । पूर्वाध्यायोक्तश्रुतियुक्तिभिरित्यग्रे व्यक्तम् । पर इत्यस्यार्थान्तरं उक्तविशेषणोपपन्न इति । विलक्षणार्थत्वात्तस्येति भावः ॥ सामर्थ्यादिति । तद्विशेषणत्वयोग्यतावशादित्यर्थः । सुनिश्चितमिति क्रियाविशेषणम् । तत्र निश्चयस्य सुष्ठुत्वं व्यनक्ति निश्चयस्येति ॥ यथालक्षितमिति । जगज्जन्मादिकारणत्वादिलक्षणवत्तयोक्तमित्यर्थः ॥ २–२–५ ॥

या०— सामर्थ्यादिति । अर्थाबाधरूपयोग्यताबलादित्यर्थः । नित्यत्वस्याङ्गीकारविषयविशेषणत्वं वैयर्थ्यप्रसङ्गेन बाधितमिति भावः ॥ २–२–५ ॥

च०— ॐ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॐ ॥ सामर्थ्यादिति । तद्विशेषणत्वयोग्यत्वादित्यर्थः । अर्थाबाधरूपयोग्यताबलादित्यर्थः । नित्यत्वस्याङ्गीकारविषयविशेषणत्वं वैयर्थ्यप्रसङ्गेन बाधितमिति भाव इत्यप्याशयमाविर्भावयन्ति ॥ २–२–५ ॥

॥ इति अन्यथानुमित्यधिकरणम् ॥

## ॥ अथ वैशेषिकाधिकरणम् ॥

सु० — ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ॥ अत्र परमाण्वारंभवादिनां वैशेषिकादीनां मतमपाक्रियते । ननु वैशेषिकादयः परमेश्वरमङ्गीकुर्वन्त्येव । तत्कथं तन्निरासायाधिकरणारंभ इत्याशङ्क्य यद्यपीश्वरं स्वरूपेणाङ्गीकुर्वन्ति तथाऽपि तद्धर्मेषु सुखादिषु विप्रतिपद्यन्त एव । तथा सृष्टिप्रलयादिविधिं चान्यथा मन्यन्त इत्यतो युक्तस्तन्निरासायाधिकरणारम्भ इत्याशयवांस्तन्मतमुपन्यस्यति नित्येति ।

अनु० — ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ॥

नित्यज्ञानप्रयत्नेच्छं संख्याद्यैरपि पञ्चभिः ॥

युक्तमीशं वदन्तोऽन्ये

ईशं वदन्तोऽन्ये इत्याहुरिति वक्ष्यमाणेनान्वयः । नित्या ज्ञानप्रयत्नेच्छा यस्यासौ तथोक्तः । संख्याद्यैः संख्यापरिमाणपृथक्त्वसंयोगविभागैः । सावधारणं चैतत् । एवमष्टगुणकमेव वदन्त इति । नित्यद्रव्याश्रितान्येकत्वैकपृथक्त्वपरिमाणानि नित्यान्येव द्वित्वद्विपृथक्त्वादीनि संयोगविभागौ च सर्वत्रानित्या एवेति सिद्धत्वात्संख्यादौ विद्यमानोऽपि नित्यानित्यत्वविभागो नाभिहितः । ज्ञानादीनां तु जीवाश्रितानामनित्यत्वादत्र नित्यत्वसङ्कीर्तनम् ।

यद्यपि केचिदीश्वरं षड्गुणमाचक्षते । तथाऽपि न तत्परमं मतमित्यष्टगुणत्वमेवोपन्यस्तम् । एवमात्रेयस्य ज्ञानानित्यत्वमपि नोपन्यस्तम् ।

यद्वा नित्यत्वसङ्कीर्तनं गुणान्तराभावे युक्तित्वेन कृतम् । तथा हि । जीवात्मानो बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाभिर्नवभिर्विशेषगुणैर्युक्ताः । तत्र नित्ययथार्थज्ञानस्य मोहाभावात्तत्प्रभवस्य द्वेषस्याभावः । तदभावे तन्मूलयोर्धर्माधर्मयोरभावः । इच्छाया अपि मोहाभावेनारागरूपत्वान्न धर्मादिकारणत्वम् । धर्माद्यभावे च तत्कार्ययोः सुखदुःखयोरभाव एव । नित्यज्ञानत्वादेव स्मृत्यसंभवेन कल्पकाभावाद्भावनाया अप्यभाव इति ।

अथवा नित्यत्वेन ज्ञानादीनामखण्डत्वं सूचयति ।

शे० — ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ॥ अधिकरणप्रतिपाद्यानुक्त्या मूले न्यूनतामाशङ्क्य भाष्य एवोक्तत्वात्पृथक् तदनुक्तिर्न दोषायेत्यभिप्रेत्य परमाण्वारम्भवादमपाकरोतीति भाष्यं मनसि निधायैतदधिकरणप्रतिपाद्यमाह अत्रेति । ननु 'नित्यज्ञानप्रयत्नेच्छमि'ति वैशेषिकमतोप-

न्यासोऽनर्थकः । न च निराकर्तव्यताप्रयोजक-विप्रतिपत्तिविषयार्थ-प्रदर्शनेनानिराकर्तव्यताशङ्कानिरासार्थत्वान्न तदानर्थक्यमिति वाच्यम् । प्रसञ्जकाभावेनानिराकर्तव्यताशङ्काया एवानुत्थानात् तन्निरासार्थक-विप्रतिपत्तिविषयार्थ-प्रदर्शनस्याप्यनर्थकत्वादित्यतः प्रसञ्जकसद्भावेनानिराकर्तव्यताशङ्कायाः सुलभत्वात्तन्निरासाय विप्रतिपत्तिविषयार्थप्रदर्शनपरपरमतोपन्यासस्य नानर्थक्यमिति भावेन तत्परतयोत्तरग्रन्थं योजयितुं प्रसञ्जककथनपूर्वकमनिराकर्तव्यताशङ्कां तावदुत्थापयति **नन्विति** ॥ **सुखादिष्विति** । आदिपदेन रूपरसगन्धस्पर्शानां संग्रहः । सृष्टिप्रलयादिविधिमित्यत्रादिपदेनात्यन्तासत एव जनिरिति जनिविधेः सर्वस्य भावकार्यस्य कारणत्रितयजन्यत्वविधेश्च परिग्रहः ॥ **अन्यथेति** । 'प्रकृतेर्महान्महतोऽहङ्कारात्क्रमेणाकाशादीनि महाभूतानी'त्यादिश्रुत्यादिसिद्धप्रक्रियापेक्षयाऽन्यथेत्यर्थः । नित्यत्वस्य ज्ञानादिवत्पृथगीश्वरविशेषणत्वस्य सन्निधानाज्ज्ञानमात्रविशेषणत्वस्य च भ्रान्तिं निवारयति **नित्या इत्यादिना** । ज्ञानप्रयत्नेच्छासंङ्ख्यापरिमाणपृथक्त्वसंयोगविभागवत्ताया ईश्वरस्य वेदवादेऽपि सत्त्वान्नेदं वैषम्यकथनं युक्तमित्यत आह **सावधारणं चैतदिति** । तदेव स्पष्टयति **एवमिति** । ननु चेश्वरज्ञानादीनामिव ईश्वरैकत्वादीनामपि नित्यत्वात्तद्गतद्वित्वादीनां चानित्यत्वात्सङ्ख्यादिषु विद्यमानं नित्यत्वानित्यत्वविभागमनभिधाय ज्ञानादीनामेव नित्यत्वाभिधाने निर्निबन्धनमित्यतस्तदनभिधाने निमित्तं वदन्नेव ज्ञानादिषु नित्यत्वाभिधाने निमित्तमाह **नित्यद्रव्येति** । सिद्धत्वादीश्वरादन्यत्रापीति शेषः ॥ **सङ्ख्यादाविति** । ईश्वरगतसङ्ख्यादावित्यर्थः ॥ **अत्रेति** । ईश्वरगतज्ञानादिष्वित्यर्थः ।

अष्टगुणत्वस्येव षड्गुणत्वस्यापि वैशेषिकादिभिरभ्युपगमादष्टगुणत्वमात्रोपन्यासो निर्निबन्धन इत्यतस्तदनुपन्यासं समर्थयते **यद्यपीति** ॥ **षड्गुणमिति** । सङ्ख्यादयः पञ्च प्रयत्नश्चेत्येवं षड्गुणमित्यर्थः । प्रयत्नस्य नित्यत्वेनोत्पत्त्यर्थं ज्ञानाद्यनपेक्षणाज्ज्ञानवत्कृतेरपि स्वत एव विषयप्रवणत्वेन विषयप्रत्यासत्त्यर्थमपि तदनपेक्षणान्न ज्ञानेच्छाभ्यां कृत्यमिति भावः ॥ **एवमिति** । षड्गुणत्ववज्ज्ञानानित्यत्वस्यापि परमतत्वाभावादित्यर्थः ॥ **नित्यज्ञानत्वादेवेति** । स्मरणस्यानुभवनाशे सति तज्जन्यसंस्कारमात्रेणोत्पत्तेर्नित्यज्ञानस्य स्मृत्यसम्भव इति भावः ॥ **अखण्डत्वमिति** । निर्विशेषत्वमित्यर्थः । तथा च 'यद्यनन्तविशेषाश्च तज्ज्ञानादेर्निवारिता' 'इत्यादिनोत्तरत्र विप्रतिपन्नतया निरसनीयस्य वैशेषिकाद्यभ्युपगतनिर्विशेषत्वरूपतज्ज्ञानाद्यखण्डत्वस्योपन्यासार्थं भाष्ये नित्यग्रहणमिति भावः ॥ **नित्यत्वेनेति** । पूर्वं विद्यमानस्य ज्ञानस्य नाश एव ज्ञानान्तरं कल्प्यं न तु तदनाशे । अतो नित्यत्वमखण्डत्वसूचकमिति भावः ॥ **अखण्डत्वमिति** । निर्भेदत्वमित्यर्थः । एकत्वमिति यावत् । अनीश्वरात्मज्ञानादीनामिव नानेकत्वमिति ज्ञातव्यमित्यप्याहुः ।

**प०** — ॐ **महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां** ॐ ॥ **परमाण्वारम्भवादिनाम्** परमाणुसमवायिकारणकार्यवादिनां वैशेषिकनैयायिकानामित्यर्थः । एतच्च 'ईशं वदन्तोन्ये' इति मूलोक्त्युपयोग्यपि शङ्कोत्थापनाद्यर्थमुक्तम् । ननु नित्यज्ञानेति ज्ञानादिगतनित्यत्वोक्तिवत्संख्यादिगतनित्यत्वायुक्ति कुतोनेत्यत आह **नित्यद्रव्येति** ॥ **एकपृथक्त्वेति** । अयमस्मात्पृथगित्येवंरूपं एकपृथक्त्वमित्यर्थः । ईशघटौ पृथगिति द्वित्वसमानाधिकरणं द्विपृथक्त्वं, आदिपदेनेशघटपटाः पृथगिति त्रित्वसमानाधिकरणत्रिपृथक्त्वग्रहः ॥ **सर्वत्रेति** । नित्यद्रव्येऽनित्यद्रव्ये चेत्यर्थः । ईशादौ नित्येपि घटादिनिरूपितद्वित्वादेरनित्यत्वात् ॥ **नाभिहित इति** । किन्तु संख्याद्यैरित्येवोक्तमित्यर्थः । तर्हि ज्ञानादौ नित्यत्वोक्तिः कुत इत्यत आह **ज्ञानादीनांत्विति** ॥ **षड्गुणमिति** । ज्ञानेच्छे विना तदन्यषड्गुणमित्यर्थः ॥ **आत्रेयस्येति** । आत्रेयनामकेनाङ्गीकृतमीशज्ञानानित्यत्वमपि अमुख्यमतत्वान्नोपन्यस्तमित्यर्थः ॥ **यथार्थज्ञानेति** । दोषाजन्यत्वादिति भावः ॥ **ज्ञानादीनामखण्डत्वमिति** । तद्गुणसंविज्ञाने सति ज्ञानेच्छाप्रयत्नानां त्रित्वाज्ज्ञानादीनामिति बहुवचनोपपत्तिः । देशकालव्यवहितनानाविषयभेदेपि तत्तद्विषयकज्ञानादेर्जीवात्मज्ञानादेरिव भिन्नत्वाभावोऽखण्डत्वमित्यर्थः, यद्वा अस्मन्मते यथा ज्ञानेऽभूत्वाभावित्वादिविशेषः । इच्छायां सिसृक्षुत्वादिविशेषः, कृतौ शक्तिव्यक्त्यादिविशेषः, न तथा तन्मते विशेष इति निर्विशेषत्वमखण्डत्वमित्यर्थः ।

---

**या०** — ॐ **महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्** ॐ ॥ **सङ्ख्यादाविति** । ईश्वरगतसङ्ख्यादावित्यर्थः ॥ **षड्गुणमिति** । सङ्ख्यादिपञ्चकं प्रयत्नं चेश्वरस्याचक्षत इत्यर्थः । प्रयत्नस्य नित्यत्वेन तदुत्पत्त्यर्थं ज्ञानेच्छयोरनपेक्षणात् । ज्ञानवत्कृतेरपि स्वत एव विषयप्रत्यासत्तिसम्भवेन कृतेर्विषयप्रत्यासत्त्यर्थमपि तदनपेक्षणादिति तेषां भावः ॥ **नित्यत्वेनेति** । पूर्वं विद्यमानस्य ज्ञानस्य नाश एव ज्ञानान्तरं कल्पनीयं न तु तदनाशे । अतो नित्यत्वमखण्डत्वसूचकमिति ध्येयम् ॥ **अखण्डत्वमिति** । निर्भेदत्वमित्यर्थः । एकत्वमिति यावत् । अनीश्वरात्मज्ञानादीनामिव नानेकत्वमिति ज्ञातव्यम् ॥

**श्री०** — ॐ **महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्** ॐ ॥ **एतमात्रेयस्येति** । परममतत्वाभावादित्यर्थः । **तन्मूलयोः** द्वेषमूलयोः । धर्मे द्वेषेणाधर्मकरणादधर्मे द्वेषेण धर्मकरणाद्धर्माधर्मयोर्द्वेषमूलकत्वम् । नन्वथाऽपीच्छाया रागरूपायाः सत्त्वात्तन्मूलकौ धर्माधर्मौ स्यातामेवेत्यत आह **इच्छाया अपीति** । ईश्वरे विद्यमानाया अपीति शेषः ।

**च०** — ॐ **महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्** ॐ ॥ **परमाण्वारम्भेति** । परमाणोरारम्भो यस्येति व्यधिकरणबहुव्रीहिः । परमाणुसमवायिकारणकं कार्यमभिदधानानां वैशेषिकाणां नैयायिकानां

चेत्यर्थः । ज्ञानादितुल्यकक्ष्यापन्नसंख्यादीनां ज्ञानादिवन्नित्यत्वेभिधातव्ये तदनभिहितौ बीजं प्रकाशयति **नित्यद्रव्येति** । एकपृथक्त्वमेकव्यक्तिमात्राश्रितं पृथक्त्वम् । द्विपृथक्त्वं व्यक्तिद्वयाश्रितपृथक्त्वम् । **सर्वत्र** नित्येऽनित्ये च द्रव्ये वर्तमानाः । **संख्यादौ** ईश्वराश्रितसंख्यादौ । **षड्गुणं** ज्ञानेच्छाव्यतिरेकेण संख्यादिपञ्चकप्रयत्नरूपगुणषट्कविशेषितम् । **आत्रेयस्य** तन्नाम्नो वादिनोनुमतम् । **नित्ययथार्थज्ञानस्येति** बहुव्रीहिः । दोषाजन्यत्वादिति हृदयम् । ज्ञानादीनामिति तद्गुणसंविज्ञानः । ज्ञानेच्छाप्रयत्नानामित्यर्थः । **अखण्डत्वम्** स्ववृत्तितद्व्यक्तित्वव्याप्यस्वाश्रयवृत्तिज्ञानत्वादिकत्वमिति फलितम् ।

**सु० — एवमीश्वरविषयां विप्रतिपत्तिमुपन्यस्य सृष्टिविषयामुपन्यस्यति** तदिच्छेति ।

**अनु० —** तदिच्छादृष्टचोदिताः ॥

परमाणवश्चतुर्वर्गाः संयुज्यन्ते द्विशोऽखिलाः ॥

**महाप्रलये हि वक्ष्यमाणो नित्यवर्गोऽनित्याश्च धर्माधर्मसंस्कारादयोऽवतिष्ठन्ते । ततो ब्रह्मवर्षशतान्ते प्राणिनां भोगभूतये महेश्वरस्य सिसृक्षा सञ्जायते । तया च सर्वात्मगता धर्माधर्मलक्षणादृष्टादयो लब्धवृत्तयो भवन्ति । ततस्तदिच्छया सिसृक्षालक्षणेश्वरेच्छयाऽदृष्टैरदृष्टवदात्मसंयोगैश्चेति यावत् । चोदिताः प्रेरिताः । क्रियावन्त इति यावत् ।**

**प्राक् प्रविभक्ततयाऽवस्थिताः परमाणवश्चतुर्वर्गाः पार्थिवाः पाथसीयास्तैजसा वायवीयाश्च द्विशः संयुज्यन्ते । अत्र परमाणव इत्येवोक्ते मनसामपि ग्रहणं स्यात् । तेषां संयोगसद्भावेऽपि वक्ष्यमाणं द्रव्यारम्भकत्वं गगनवदस्पर्शवत्त्वादयुक्तम् । अतस्तद्व्यावृत्तये चतुर्वर्गा इत्युक्तम् । यद्वा सजातीयसंयोग एव द्रव्यारम्भको न त्वन्य इति अनेन सूचयति ॥**

अखिला इति । **द्विशः संयोगे नियमवचनम् । ये परमाणवो द्रव्यारम्भाय संयुज्यन्ते तेऽखिला द्विशो द्वौ द्वावेवेति ।**

**शे० — महाप्रलय इति** । अत्र महाप्रलयशब्देन ब्रह्मप्रलय एव विवक्षितः । न तु गन्धानाघ्रारसमयः । तथा सति 'अनित्याश्च धर्माधर्मे'ति वक्ष्यमाणविरोधप्रसङ्गादित्यवधेयम् ॥ **वक्ष्यमाणइति** । 'सामान्यान्त्यविशेषौ चे'त्यादिनेति शेषः । संस्कारादय इत्यादिपदेनानित्यानां पाकजरूपादिगुणानां काल वच्छेदोपाधितया वर्तनानानां महाभूतसंक्षोभप्रभववेगजानां सन्तन्यमानानां कर्मणां च परिग्रहः । अन्यथा कालावच्छेदानुपपत्तौ पुनः सर्गानुपपत्तेरिति बोध्यम् । ननु भगवान्पुनः किमर्थं सिसृक्षतीत्यत उक्तं **प्राणिनामिति** । प्राणसम्बन्धयोग्यानां संसारिणामिति यावत् । भोगश्च यद्यपि न स्वसमवेतसुखदुःखसाक्षात्कारः सम्भवति । प्रत्येकसमुदायविकल्पेन अननुगमादव्यापकत्वप्रसङ्गात् । योगिना

मतीतसुखदुःखसाक्षात्कारे चातिव्याप्तेश्च । तथाऽपि स्वसमानकालीन-स्वसमानाधिकरण-साक्षात्कारविषय-ताव्याप्यजातिमत्साक्षात्कारो वेश्वरविशेषगुणवृत्ति-गुणत्वव्याप्यजातिशून्यो द्वेषान्ययोग्यात्मविशेषगुणजन्यः साक्षात्कारो वा भोगोऽत्र विवक्षितः । तस्य भूतये निष्पत्तये । सिसृक्षेति । यद्यपि भगवत इच्छा, अस्त्वेवं इत्याकारा एकैव तथाऽप्युपाधिभेदात् सिसृक्षासञ्जिहीर्षादिशब्दैर्व्यपदिश्यते । उत्पत्तिरपि च तस्या उपाध्युत्पत्तिरेव नान्या । उपाधिश्च कालविशेषो दर्षगतादिशब्दवाच्यो बोद्धव्यः । सर्वेष्वात्मसु संसारिषु. गताः समवेताश्च ते धर्माधर्मलक्षणादृष्टाश्चेति विग्रहः । लब्धवृत्तयः प्रलये सर्वादृष्टानां वृत्तिलाभहेतोरन्यस्याभावाद्वृत्तिनिरोधः । सिसृक्षायां च सत्यां तयैव लब्धवृत्तयो भवन्तीत्यर्थः । वृत्ति-लाभश्च सहकारिसंपत्तिरेव । ततश्च सिसृक्षालक्षणसहकारिसंपत्तिमन्तो भवन्तीत्याशयः । अनेन तदि-च्छादृष्टेत्येतन्मूलं तदिच्छयाऽदृष्टाः तदिच्छादृष्टा इति योजितं भवति ।

अदृष्टवदात्मसंयोगैरिति । यद्यप्यात्मसंयोगस्य क्रियाहेतुत्वं नान्वयव्यतिरेकगम्यं परमाणु-संयोगैरेवाऽन्यथासिद्धत्वात् । तथाऽप्यदृष्टस्य तत्कारणत्वे तत्प्रत्यासत्तेरावश्यकत्वादात्मसंयोगघटितैव प्रत्यासत्तिरिति भावेनैवमुक्तम् । या मूर्तक्रिया यदीयव्यधिकरणगुणजन्या सा तत्समानाधिकरणगुणजन्या स्पर्शवद्वेगवदभिघातजक्रियावदिति व्याप्तिबलेनैव तत्सिद्धिरिति भावः ।

नन्वत्र क्रियापदं कार्यपरं कर्मपरं वा । नाद्यः । तथा सति घटरूपे व्यभिचारापातात् । घट-रूपलक्षणकार्यस्य घटरूपव्यधिकरणं यत्कपालरूपं तज्जन्यत्वेऽपि कपालघटसंयोगकारणकत्वाभावात् । न चात्र यद्व्यधिकरणगुणजन्यत्वं यद्व्यधिकरणगुणनिमित्तकारणकत्वं विवक्षितम् । कपालरूपस्य च घटरूपं प्रत्यसमवायिकारणत्वान्न निमित्तत्वमिति न तत्र व्यभिचार इति वाच्यम् । तथा सति गुणपदवैयर्थ्या-पातात् । तद्धि घटजन्ये पतने व्यभिचारवारणार्थम् । तस्य च पतनसमवायिकारणतया निमित्तपदेनैव तद्वारणसंभवात्किं तेन । न च घटजन्ये पतने व्यभिचाराप्रसङ्गेऽपि घटव्यधिकरणदण्डनिमित्तकारणके दण्डावयवकपालसंयोगाजन्ये घटे व्यभिचारवारकत्वात्तत्सार्थक्यमिति वाच्यम् । एवमपि व्यधिकरण-पदवैयर्थ्यप्रसङ्गात् । पतनं प्रति गुरुत्वस्यासमवायिकारणतया निमित्तत्वाविवक्षयैव तद्वारणसंभवात् । नापि क्रियापदं कर्मपरमित्यन्त्यः । यत्र मान्त्रिकाः शाखादिचालनं कुर्वन्ति तत्र शाखादिकर्मण्याकाश-गुणस्य व्यधिकरणस्य मन्त्रस्य कारणत्वेऽप्याकाशसंयोगस्य कारणत्वाभावेन व्यभिचारप्रसङ्गात् । किञ्चेश्वर-ज्ञानस्य कार्यमात्रकारणत्वेऽपीश्वरसंयोगस्याकारणत्वाद्व्यभिचारश्चेति चेत् ।

अत्र ब्रूमः । यत्कर्मादृष्टाद्वारकव्यधिकरणगुणजन्यं तत्तत्समानाधिकरणगुणजन्यमित्येव व्याप्तिश-रीरमभिमतम् । ततश्च कपालरूपगुणजन्ये घटरूपे न व्यभिचारः । तस्य कार्यत्वेऽपि कर्मत्वाभा-वात् । गुरुत्वजन्याऽऽद्यपतनक्रियायां वेगजन्यद्वितीयपतनक्रियायां च गुरुत्ववेगपतनसमानाधिकरण-

रूपाद्यजन्यत्वाद्व्यभिचारनिरासार्थं व्यधिकरणपदम् । गुरुत्ववेगौ च पतनसमानाधिकरणावेवेति न तत्र व्यभिचारः । स्वव्यधिकरणस्वाश्रयावयविघटादिजन्ये कपालघटवृत्तिद्वित्वाद्यजन्ये घटादिपतने व्यभिचारं वारयितुमुक्तं गुणेति । मन्त्रेश्वरज्ञानयोरपि न व्यभिचारः । मन्त्रस्याशुविनाशित्वेनादृष्टद्वारकत्वात् । ईश्वरज्ञानस्य चोत्पत्तिमन्मात्रहेतुत्वेन कर्मकारणीभूतादृष्टकारणत्वेनादृष्टद्वारकत्वात् ॥ इयांस्तु विशेषः । यत्, मन्त्रेणेदानीमेवादृष्टं जन्यते ईश्वरज्ञानेन तु पूर्वमपीति । न च तुलायामेकदिगवस्थिताधिकगुरुत्वजन्यापरदिगवस्थितोन्नमनक्रियायां व्यभिचार इति वाच्यम् । तत्राधिकगुरुत्वाश्रयद्रव्यसंयुक्तसंयोगस्योन्नमनहेतुत्वात् । पक्षादौ तस्यैव तद्धेतुत्वकल्पनात् । गुरुत्वे चोन्नमनहेतुत्वाकल्पनात् । यत्तु तस्य तत्कारणत्वाभ्युपगमेऽपि प्रत्यक्षत्वेन गुणविशेषणाद्व्यभिचार इति । तन्न । तथा सति व्यधिकरणपदवैयर्थ्यप्रसङ्गात् । गुरुत्वस्याप्यप्रत्यक्षत्वेन प्रत्यक्षविशेषणादेव गुरुत्वजन्याद्यपतनक्रियायामव्यभिचारात् । न च वेगादिजन्यक्रियायां व्यभिचारवारणार्थं तदिति वाच्यम् । तथा सत्येतद्व्याप्तिबलेनादृष्टवदात्मसंयोगस्य कारणत्वासिद्धिप्रसङ्गादिति दिक् ।

**प्राक् प्रलये** ॥ **अयुक्तमिति** । स्पर्शवदनन्त्यावयवित्वस्यैव सामान्यतो द्रव्यारम्भकत्वे प्रयोजकत्वादिति भावः ॥ **सजातीयसंयोग एवेति** । पार्थिवपरमाणुद्वयसंयोग एव वा आप्यपरमणुद्वयसंयोग एव वेत्यर्थः ॥ **न त्वन्य इति** । पार्थिवादिपरमाणोराप्यादिपरमाणुना संयोगो न द्रव्यारम्भक इत्यर्थः । अन्यथा पार्थिवाप्यपरमाणुकार्यस्यागन्धत्वास्नेहत्वयोरापातादिति भावः । **अनेन** चतुर्वर्गा इत्यनेन । द्विशः संयोगे नियमवचनमेवाभिनयेन दर्शयति **य इत्यादिना** ।

**प०— वक्ष्यमाण इति** । 'सामान्यान्त्यविशेषौ च समवायश्च तत्त्रयम् । नित्यमि'त्येतद्व्याख्यानावसरे वक्ष्यमाण इत्यर्थः ॥ **संस्कारादय इति** । आदिपदेन पाकजपार्थिवपरमाणुरूपादयो ग्राह्याः । ननु न्यायमते सर्वमुक्त्यङ्गीकारेण महाप्रलयानन्तरं सृष्टिरेव नेत्यतो विवक्षितमहाप्रलयशब्दार्थं व्यनक्ति **ब्रह्मवर्षशतान्त इति** । न तु गन्धानाधारकाल इति भावः ॥ **मनसामपीति** । तेषां तन्मतेऽणुत्वात् । मुक्तजीवमनसां भूयसां संसारिजीवदेहेभ्यो बहिरपि सत्वेन नोदनादिना क्रियावतां संयोगसंभवादिति भावः ॥ **सजातीयेति** । सजातीययोः संयोगः सजातीयसंयोग इत्यर्थः ।

**या०— महाप्रलय इति** । अत्र महाप्रलयशब्दो ब्रह्मप्रलयपर एव न गन्धानाधारपरः । तेनानित्याश्च धर्माधर्मेत्यादिवक्ष्यमाणविरोधो नेति ज्ञातव्यम् । संस्कारादय इत्यत्रादिपदेन पाकजाः पार्थिवपरमाणुरूपादयो ग्राह्याः ॥ **सिसृक्षेति** । यद्यपीश्वरेच्छा न जन्या तथाऽपि तस्याः सर्गासाधारणकारणसमयविशेषसम्बन्ध एव सिसृक्षात्वं, तज्जायत इत्यर्थः ॥

**श्री०-- पाथसीया इति** । पाथसं सलिलं जलमित्यमरः ॥ **चतुर्वर्गो इत्युक्तमिति** । तथा च चतुर्णां पार्थिवानां पाथसीयानां तैजसानां वायवीयानां च परमाणूनां वर्गो इत्यर्थः । ततश्च न मनसो ग्रहणप्रसक्तिरिति भावः ॥ **सजातीयेति** । पार्थिवानामेव परस्परं संयोग आप्यानामेव परस्परं संयोग इत्यादिरूपेण सजातीयसंयोग एवत्यर्थः ।

**च०-- वक्ष्यमाण इति** । 'सामान्यान्त्यविशेषौ च समवायश्च तत्त्रयमि'त्येतत्प्रतीकव्याख्यावसरेऽभिधास्यमान इत्यर्थः । **संस्कारादय इति** । आदिशब्दः पाकजपार्थिवपरमाणुरूपादिपरिग्राहकः । ननु न्यायमते सर्वमुक्त्यङ्गीकारेण महाप्रलयानन्तरं सृष्टिरेव नेत्यतोऽत्र विवक्षितमहाप्रलयशब्दार्थं व्यनक्ति, **ब्रह्मवर्षशतान्त इति** । न तु गन्धानाधारसमयः । तथा सति अनित्याश्च धर्माधर्मेति वक्ष्यमाणविरोधप्रसङ्गादिति भावः । **सिसृक्षेति** । मन्वन्तोपस्थाप्यपारमेश्वरेच्छायाः नित्यत्वेपि प्रत्ययबोध्यायां तस्यां प्रकृत्युपस्थाप्यसर्गाधारकालविशेषसंबन्धो जायत इत्यर्थः । **सजातीयेति** । तदेकतरसजातीयप्रतियोगिकस्तादृशापरानुयोगिकः संयोग इत्यर्थः ।

**सु०— ततः किमित्यत आह** परमाण्विति ।

**अनु०—** परमाणुद्वयेनैव द्व्यणुकं नाम जायते ॥
द्व्यणुकत्रयेण त्र्यणुकं तैश्चतुर्भिस्तदात्मकम् ॥
ततस्त्वनियमेनैव खण्डावयविनां भवः ॥
तत्रश्चानियमेनैव सर्वावयविसंभवः ॥

**परमाणुपुञ्जवादं परिणामवादमनियमवादं चैवशब्देन व्यावर्तयति । परमाणुद्वयेनैव, न तु निरन्तरतयोत्पन्नपरमाणुद्वयं, नापि परमाणुद्वयमेव संयुक्तमासादितपरिणामविशेषं, न च त्रयादिनेति । जायते इत्यसत्कार्यवादं सूचयति । जात्यपेक्षयैकवचनम् । ततश्च संयुक्तसजातीयपरमाणुद्वयैस्ततोऽत्यन्तभिन्नानि तत्समवेतानि प्रागसन्त्येव द्व्यणुकनामकानि द्रव्याण्युत्पद्यन्त इत्यर्थः । द्व्यणुकत्रयेण त्र्यणुकं जायते इत्यनुवर्तते । एवेति च । अत्रापि पूर्ववद्व्याख्यानम् । अणुत्वपरिमाणस्य परमाणौ द्व्यणुके च साम्याद्द्व्यणुकसंज्ञावत्त्र्यणुकसंज्ञाऽप्युपपद्यत एव । तैः सजातीयैः संयुक्तैश्चतुर्भिस्त्र्यणुकैः** तदात्मकं **चतुरणुकात्मकं द्रव्यं जायते । त्र्यणुकेष्वणुसंज्ञोपचारात् । केचित् द्व्यणुकैरेव चतुरणुकारम्भमभ्युपयन्ति । तन्मतानुसारेण तैर्द्व्यणुकैरिति व्याख्येयम् । द्व्यणुकानि त्रीणि (द्रव्यं) यत्कार्यमारभन्ते तत्त्र्यणुकम् । चतुर्भिरारब्धं चतुरणुकमिति । अत्र च संज्ञा मुख्यैव ।** ततः **त्र्यणुकेभ्यश्चतुरणुकेभ्यो वा । तुशब्दो विशेषार्थः ।**

तमेवाह । अनियमेनैवैतावद्भिरेवेति संख्यानियमं विनेत्यर्थः । द्रव्यसमवायिकारणानि कार्यद्रव्याणि खण्डावयविनः । त्र्यणुकादेरन्त्यावयविनश्च मध्ये नैकमेव खण्डावयवि किन्तु अनियमेनानेकान्यपि भवन्तीति सूचयितुं बहुवचनम् । ततः तैः खण्डावयविभिश्चानियमेनैव संख्यानियमं विनैव सर्वावयविनामन्त्यावयविनां शरीरेन्द्रियविषयाणां संभवः । तदनेन द्रव्योत्पत्तिरभिहिता । गुणानां कर्मणां च स्वाश्रयद्रव्येषूत्पादो द्रष्टव्यः ।

शे० — **निरन्तरतयोत्पन्नमिति** । मिलिततयोत्पन्नमित्यर्थः । विरलपरमाणुद्वयेनादृष्टादिसहकारिवशान्मिलितपरमाणुद्वयं जायते । तदेव द्व्यणुकलक्षणं कार्यं न त्वन्योऽवयवी नाम कश्चिदस्तीति परमाणुपुञ्जवादिभिरङ्गीकारादिति भावः । एवं परमाणुपुञ्जवादव्यावृत्तिप्रकारमुपदर्श्य परिणामवादप्रकारप्रकटीकरणपूर्वकं तद्व्यावृत्तिप्रकारमुपदर्शयति **नापीति**। अनियमवादव्यावृत्तिमुपदर्शयति **नेति** ॥ **असत्कार्यवादमिति** । अत्यन्तासत्कार्यवादमित्यर्थः । असत्कार्यवादस्य सदसत्कार्यवादिना स्वेनाभ्युपगमादिति भावः ॥ **जात्यपेक्षमिति** । जातिरूपार्थैक्यविवक्षानिमित्तकमित्यर्थः । **एवेति च** इत्यतः परमनुवर्तत इति शेषः ॥ **अत्रापीति** । परमाणुपुञ्जवादं परिमाणवादमनियमवादं च व्यावर्तयितुमवधारणमित्यादि पूर्वदित्यर्थः । नन्वणुत्वपरिमाणाधिकरणत्वेन परमाणूनामेवाणुत्वात्तदारब्धद्व्यणुकस्य द्वाभ्यामणुभ्यामारब्धं द्व्यणुकमिति यौगिकद्व्यणुकशब्दार्थोपपन्नत्वेन परमाणुद्वयकार्ये द्व्यणुकसंज्ञासम्भवेऽपि त्र्यणुकारम्भकद्व्यणुकानामणुत्वपरिमाणानधिकरणत्वेनानणुत्वात्तदारब्धत्र्यणुकस्य त्रिभिरणुभिरारब्धं त्र्यणुकमिति त्र्यणुकशब्दार्थवत्त्वाभावात्कथं तत्र त्र्यणुकसंज्ञेत्यतो, भवेदेतदेवं यदि परमाणोरेवाणुत्वपरिमाणाधिकरणत्वं न तु द्व्यणुकस्येति स्यात् । न चैतदस्तीत्याह **अणुत्वपरिमाणस्येति** । तथा च द्वावणू कारणभूतौ यस्य तद्द्व्यणुकमिति द्व्यणुकशब्दयौगिकार्थोपपन्नतया परमाणुद्वयकार्ये द्व्यणुकसंज्ञावत्त्रयोऽणवः कारणभूता यस्येत्येवं त्र्यणुकशब्दयौगिकार्थोपपन्नत्वात् द्व्यणुकत्रयारब्धकार्ये त्र्यणुकसंज्ञाऽप्युपपद्यत इत्यर्थः । ननु चाणुत्वस्य परमाणुद्व्यणुकयोरेव सत्त्वेन द्व्यणुकत्र्यणुकयोरणुत्वपरिमाणाधिकरणद्रव्यारब्धत्वाद्द्व्यणुकत्र्यणुकसंज्ञयोरुपपत्तावपि त्र्यणुकारब्धचतुरणुकस्याणुत्वाधिकरणद्रव्यारब्धत्वाभावात्कथंचतुरणुकमिति संज्ञा स्यात् । तदारम्भकत्र्यणुकेष्वणुत्वाभावादित्यत आह **त्र्यणुकेष्विति** । अण्वारब्धत्वादणुत्वोपचार इत्यर्थः । ततश्च तदारब्धकार्ये चतुरणुकसंज्ञोपपत्तिरिति शेषः । क्वचित् चतुरणुकेष्वणुसंज्ञोपचारादिति पाठः । तत्र चतुरणुकेषु चतुरणुकसंज्ञोपपद्यते । कथं । तदारम्भकेषु त्र्यणुकेष्वणुसंज्ञोपचारादिति योज्यम् । चतुर्भिरित्यतःपरं द्व्यणुकैरिति पूरणीयम् ॥ **अत्र चेति** । द्व्यणुकानामेव चतुरणुकारम्भकत्वपक्ष इत्यर्थः । चतुरणुकेष्विति संज्ञेत्यतः पूर्वं पूरणीयम् । त्र्यणुकानां चतुरणुकारम्भकत्वपक्षे तेषां अणुत्वाभावेन चतुरणुकारम्भकेष्वणुसंज्ञाया औपचारिकत्वात् । तदारब्धचतुरणुके चतुरणुकसंज्ञाया औपचारिकत्वप्राप्तावपि

द्व्यणुकानां तदारम्भकत्वपक्षे चतुरणुकारम्भकेषु द्व्यणुकेषूक्तरीत्याऽणुत्वपरिमाणसिद्धेरणुसंज्ञाया मुख्यत्वात्तदारब्धचतुरणुके चतुरणुकसंज्ञा मुख्यैवेति प्राचीनपक्षादस्य पक्षस्य भेद इति भावः ॥ **तत इति** । उत्तरग्रन्थे चतुरणुकस्य द्व्यणुकारब्धत्वपक्षमाश्रित्य तत इत्येतत्परामृष्टव्यमाह **ततस्त्र्यणुकेभ्य इति** । त्र्यणुकस्य चतुरणुकारम्भकत्वपक्षमाश्रित्य तत्परामृष्टव्यमाह **चतुरणुकेभ्यो वेति** ।

केचित्त्वत्र परमाणुद्वयेनैवेति द्व्यणुकोत्पत्तावधारणाद्द्व्यणुकत्रयेण त्र्यणुकमिति त्र्यणुकोत्पत्तावप्यत्रापि पूर्ववद्व्याख्यानमित्यवधारणस्य व्याख्यातत्वाच्चतुरणुके च तदभावात् 'ततस्त्वनियमेनैवे'त्यत्र तत इत्यनेन चतुरणुकमात्रपरिग्रहे चतुरणुककार्यमारभ्यैवानियमः प्रतीयेत तन्निरासाय ततस्त्र्यणुकेभ्य इति व्याख्यातम् । तथा च चतुरणुकोत्पत्तावप्यनियम एवेति भाव इत्याहुः । खण्डावयविनो लक्षणमाह **द्रव्यसमवायिकारणानीति** । अत्रान्त्यावयविव्यावृत्त्यै पूर्वभागः, परमाणुव्यावृत्त्यै चोत्तरभागः, निमित्तकारणदण्डादिव्यावृत्त्यै समवायिपदम् । कारणपदं कार्यद्रव्याणीति द्रव्यपदं च स्पष्टार्थम् ॥ **बहुवचनमिति** । खण्डावयविनामिति बहुवचनमित्यर्थः । मूले तत इति 'आद्यादित्वात्तृतीयार्थात्तसिरि'ति भावेनाह **ततस्तैरिति** ॥ **संख्यानियमं विनेति** । एतावद्भिरेवेति संख्यानियमं विनेत्यर्थः । खण्डावयविभिः खण्डावयविनामारम्भायोगेन सर्वावयविपदेन खण्डावयविसंग्रहानुपपत्त्या सर्वावयविपदमन्त्यावयविमात्रपरमित्याशयेनाह **सर्वावयविनामन्त्यावयविनामिति** । तानेव विशिष्य निर्दिशति **शरीरेन्द्रियविषयाणामिति** । द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवीति तल्लक्षणयोगादिति भावः । मूले द्रव्योत्पत्तिवद्गुणकर्मणोरुत्पत्तेरनुपन्यासान्न्यूनत्वमाशङ्क्य स्पष्टत्वेन शिष्यैरेव ज्ञातुं शक्यत्वात्तदनुपन्यासो न दोषायेत्याशयकं 'स्तदिच्छाद्दृष्टचोदिता' इति पूर्वग्रन्थतात्पर्यप्रदर्शनपूर्वकं स्वयं गुणकर्मणोरुत्पादं सूचयति **तदनेनेत्यादि** ।

**स०— ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ । अत्रापीति** । परमाणुपुञ्जवादं परिमाणवादम् अनियमवादं च व्यावर्तयितुमवधारणमिति पूर्ववत् व्याख्येयमित्यर्थः ।

**प०**— व्यावर्तयतीत्युक्तं व्यावर्त्यत्रयं व्यनक्ति **परमाणुद्वयेनेत्यादिना** ॥ **निरन्तरतयेति** । विरलपरमाणुद्वयेनाव्यवहितत्वया संश्लिष्टतयोत्पन्नपरमाणुद्वयं नेत्यर्थः ॥ **पूर्ववद्व्याख्यानमिति** । संयुक्तसजातीयद्व्यणुकत्रयरेव तेभ्योत्यन्तभिन्नानि तत्समवेतानि प्रागविद्यमानान्येव त्र्यणुकनामकानि पार्थिवानि आप्यतैजसवायवीयसंज्ञकद्रव्याणि उत्पद्यन्ते जायन्त इत्यसत्कार्यसूचनात् । एवशब्देन च निरन्तरोत्पन्नपरमाणुत्रयमेव त्र्यणुकमिति परमाणुपुञ्जवादस्य द्व्यणुकत्रयपरिणामवादस्य द्व्यणुकत्रयादाधिक्यस्य च व्यावर्तनादिति व्याख्येयमित्यर्थः । परमाण्वादिभिन्नकार्ये कथं तदणुसंज्ञेत्यत आह **अणु-**

**त्वेति ।** द्व्यवणू हेतू यस्य इत्यादिविग्रहसंभवात् द्व्यणुकादिसंज्ञेति भावः । तदात्मकमित्यनुवादः । चतुरणुकात्मकमिति व्याख्या । **उपचारादिति ।** त्र्यणुके चतुरणुके च परिमाणस्य महत्त्वादिति भावः । तत इत्यस्य मतभेदेनार्थद्वयमाह **तत इति ।**

**या० — निरन्तरतयोत्पन्नमिति ।** मिलिततयोत्पन्नमित्यर्थः । विश्लिष्टपरमाणुद्वयेनादृष्टादिवशान्मिलितपरमाणुद्वयं जायते तदेव द्व्यणुकलक्षणं कार्यं, न त्वन्योऽवयवीति परमाणुपुञ्जवादिभिरङ्गीकारात् । **सूचयतीति ।** असतः सत्तासंबंधस्यैव जनित्वादिति भावः ॥ **अत्रापीति ।** परमाणुपुञ्जवादं परिणामवादमनियमवादं च व्यावर्तयितुमवधारणमिति पूर्ववद्व्याख्येयमित्यर्थः ॥ **त्र्यणुकसंज्ञाऽपीति ।** त्रयोऽणवो द्व्यणुकलक्षणाः कारणभूता यस्य तत्त्र्यणुकमिति योगसम्भवादिति भावः । ननु स्यादिदं निर्वचनं यदि द्व्यणुकेऽणुत्वपरिमाणं स्यात्तदेव कुत इत्याशङ्कां परिहर्तुमणुत्वपरिमाणस्येत्यादि पूर्ववाक्यमिति ज्ञातव्यम् । ननु त्र्यणुकेष्वणुत्वपरिमाणाभावात्कथं चत्वारोऽणवो यस्य तच्चतुरणुकमिति योगसम्भव इत्यत आह **त्र्यणुकेष्विति ।** तथा चौपचारिकमणुत्वं त्र्यणुकेष्वस्तीति तदादायैव योगसम्भव इति भावः ॥ **द्रव्यसमवायिकारणानीति ।** अत्रान्त्यावयविपरमाणुव्युदासाय क्रमेण विशेषणे ॥

**श्री० —** व्यावर्तनप्रकारं दर्शयति **परमाणुद्वयेनैवेत्यादिना ॥ निरन्तरतयेति ।** विश्लिष्टपरमाणुभ्यो जातं मिलितपरमाणुद्वयमेव द्व्यणुकमित्यर्थः ॥ **परिणामविशेषमेवेति ।** परिणामविशेषोपेतमेव द्व्यणुकमित्यर्थः ॥ **असत्कार्यवादमिति ।** असतः सत्तासमवायस्यैव तन्मते जनिशब्दार्थत्वादिति भावः ॥ **पूर्ववद्व्याख्येयमिति ।** परमाणुपुञ्जवादमित्याद्युक्तरीत्यैवकारार्थो ज्ञातव्य इत्यर्थः । **चतुर्भिः द्व्यणुकैः ॥ अत्र चेति ।** द्व्यणुकेभ्य एव चतुरणुकमुत्पद्यत इति पक्षे द्व्यणुकेष्वणुत्वपरिमाणस्य सत्त्वात् । चत्वारोऽणवो यस्यारम्भकास्तच्चतुरणुकमिति योगसम्भवेन चतुरणुकसंज्ञा मुख्यैवेत्यर्थः ।

**च० — निरन्तरतया** मिलिततया ।

**सु० — सर्वमपि कार्यं भावरूपं कारणत्रितयजन्यम् । कारणानि च समवाय्यसमवायिनिमित्तनामानि । तत्र य(त्सम)त्र समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । तत्स्वरूपेण दर्शयति** कारणमिति ।

**अनु० —** कारणं समवाय्याख्यं परमाण्वादिरत्र हि ॥

**अत्र द्व्यणुकादिकार्योत्पत्तौ परमाण्वादिद्रव्यपदार्थः समवायिकारणम् । कुतः । अत्र परमाण्वादौ द्रव्ये हि यस्मात्सर्वकार्यं समवेतमुत्पद्यते तस्मादिति शेषः ।**

**शे०** — कारणं समवाय्यास्यमित्याद्युत्तरग्रन्थानर्थक्यमाशङ्क्य समवाय्यादिकारणस्य स्वरूपेण प्रदर्शनार्थत्वान्न तदिति भावेन किं तत्स्वरूपदर्शनेनापीत्यतः विप्रतिपत्तिविषयान्तरसूचनार्थं तदित्याशयवान् तत्प्रदर्शनपूर्वकं समवाय्यादिकारणस्वरूपोपदर्शनपरतयोत्तरवाक्यं योजयितुं विप्रतिपत्तिविषयान्तरं तावद्दर्शयति **सर्वमपीति** । अभावस्य निमित्तकारणमात्रजन्यत्वान्न सर्वस्य कार्यस्य कारणत्रितयजन्यत्वं युक्तमित्यत उक्तं **भावरूपमिति** । किन्नामकानि तानि त्रीणि कारणानीत्यतः प्राधान्यक्रमेण परप्रसिद्ध्यनुसारेण च तानि दर्शयति **कारणानि चेति** । तत्र तेषु कारणेषु मध्ये प्रथमनिर्दिष्टत्वात्प्रथमं समवायिकारणं लक्षयति **यत्समवेतमिति** । यत्र यत्समवेतं कार्यमुत्पद्यते तत्तस्य समवायिकारणमित्यर्थः । अत्र च यत्र यदुत्पद्यते तत्तस्य समवायिकारणमित्येव कृते भूतले घटध्वंसाद्युत्पत्तिमति अतिव्याप्तिरतः समवेतपदम् । यत्र यत्समवेतमित्येव चोक्ते घटे घटत्वसमवायवति अतिप्रसङ्गस्तदर्थमुत्पद्यत इति । कार्यपदं च स्पष्टार्थम् । कार्यपदघटितमेकं, उत्पद्यत इत्येतद्घटितं चापरमिति लक्षणद्वयार्थं वा तदिति द्रष्टव्यम् । यद्वा नेदं विशेषलक्षणं किन्नाम सामान्यलक्षणमेव । अत्र च पक्षे स्वसमवेतजनकत्वमुक्तवाक्यार्थो द्रष्टव्य इति ध्येयम् । परमाण्वादिरित्यादिपदस्य संकुचितासंकुचितवृत्तित्वविकल्पदोषनिरासाय तत्संग्राह्यतावच्छेदकमाह **द्रव्यपदार्थ इति** । मूले हिशब्दानर्थक्यमाशङ्क्य हेतुसूचनार्थत्वान्न तदिति भावेन तदाकाङ्क्षामुत्थाप्यात्रेत्यस्यानुवृत्तिं मनसि निधायापेक्षितपूरणेन हेतुपरतया तं योजयितुमाह **कुत इत्यादिना** ।

---

**च०** — **तत्समवायिकारणमिति** । समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणताशालीत्यर्थः ।

**सु०** — **समवाय्यसमवायिव्यतिरिक्तं कारणं निमित्तम् । तदुदाहरति** ईशेति ।

**अनु०** — ईशेच्छादृष्टकालास्तु निमित्तं कारणं मतम् ॥

**निमित्तं त्वित्यन्वयः । इदं च सर्वकार्यसाधारणं निमित्तं दर्शितम् । एवमन्यदपि द्रष्टव्यम् । यथा तुरीवेमादिकं पटस्येत्यादि ।**

**शे०** — यद्यपि परप्रसिद्ध्याद्यनुसारिनिर्देशक्रमानुसारेणासमवायिकारणलक्षणकथनपूर्वकं स्वरूपेण तदुपदर्शनानन्तरं निमित्तकारणं लक्षयित्वा स्वरूपेण तत्प्रदर्शयितुमुचितम् । तथाऽपि सूचीकटाहन्यायेनादौ निमित्तकारणमेवोदाहृतमिति भावेन तल्लक्षयति **समवाय्यसमवायिव्यतिरिक्तमिति** । नन्वत्र प्रकृतकार्यसमवायिकारणादिभिन्नत्वं विवक्षितमुत यत्किञ्चित्कार्यसमवायिकारणादिभिन्नत्वम् । नाद्यः । ध्वंसनिमित्तेऽव्याप्तेः । तत्र प्रकृतकार्यस्य ध्वंसस्य समवायिकारणाद्यप्रसिद्ध्या तद्भिन्नत्वस्य वक्तुमशक्य-

त्वात् । न च भावनिमित्तस्यैवात्र लक्षणलक्ष्यत्वाङ्गीकारान्न ध्वंसनिमित्ते अव्याप्तिरिति वाच्यम् । तथा सति सामान्यलक्षणानुयोगे मूकीभावप्रसङ्गात् । नान्त्यः । घटादिनिमित्ते दण्डादावव्याप्तेः । तस्य स्वगतरूपादिसमवायिकारणत्वेन यत्किञ्चित्समवायिकारणभिन्नत्वाभावात् । न च नेदं निमित्तसामान्यलक्षणं, किन्तु प्रागभावरूपस्य मुख्यस्य निमित्तस्यैवेति न घटादिनिमित्ते दण्डादावव्याप्तिरिति वाच्यम् । सामान्यलक्षणानुयोगे मूकीभावप्रसङ्गानुद्धारादिति चेत् । अत्र केचित् । प्रकृतकार्यनिष्ठप्रतियोग्यनुयोगिभावसम्बन्धाश्रयसमवायिकारणभिन्नत्वे सति तदसमवायिकारणभिन्नत्वे सति प्रकृतकार्यकारणत्वं निमित्तकारणत्वमिति सर्वसाधारणलक्षणमिति । तन्न । घटध्वंसनिमित्तकपालेऽव्याप्त्यापत्तेरिति । अत्र ब्रूमः । अपेक्षाबुद्धि(नाशान्यकार्य)नाशजनकनाशप्रतियोगिभिन्नत्वे सति कारणं निमित्तकारणमित्यत्र तात्पर्यात् । यद्वा यस्य यस्मिन्कार्ये समवायित्वाभावोऽसमवायित्वाभाव कारणत्वं च तत् तस्मिन् कार्ये निमित्तकारणमिति विवक्षितम् ! अस्ति चेदं ध्वंसनिमित्तेऽपि । तस्यापि ध्वंसे कार्ये समवायित्वाभावादसमवायित्वाभावात्कारणत्वाच्च । न च ध्वंसे कार्ये समवायित्वाप्रसिद्ध्या कथं तदभावस्तत्रेति वाच्यम् । एवं तर्हि वायौ हि घटरूपं नास्तीति प्रतीतिर्न स्यात् । वायौ घटरूपाप्रसिद्धेः । यदि च वायुमात्रस्य प्रसिद्धौ घटरूपस्य च प्रसिद्धौ वायौ घटरूपं नास्तीति प्रतीतौ न बाधकमिति मन्यसे. तदा ध्वंसस्य प्रसिद्धौ मुद्गरादेर्भावसमवायिकारणत्वस्य च प्रसिद्धौ ध्वंसे मुद्गरादीनां समवायिकारणत्वं नास्तीति प्रतीतौ न बाधकमिति समानमिति दिक् ॥ **अन्यदिति** । असाधारणमित्यर्थः ।

---

**सु० – समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणम् । समवयिकारणतत्समवायिकारणयोरन्यतरसमवेतत्वं समवायिकारणप्रत्यासन्नत्वम् । सामर्थ्यावधारणं चानन्यथासिद्धनियतपूर्वभावित्वेन भवति । तच्चासमवायिकारणं द्रव्यं समवायिकारणमितिवन्नैकोक्त्या वक्तुं शक्यम् । प्रतिकार्यं पृथक्त्वात् । अतस्तद्विवेकेन दर्शयितुं तज्ज्ञानस्य कार्यज्ञानसापेक्षत्वात्कार्याकार्यविभागं तावदाह** सामान्येति ।

**अनु०** — सामान्यान्त्यविशेषौ च समवायश्च तत्त्रयम् ॥
नित्यं क्रिया अनित्याश्च गुणद्रव्ये द्विरूपके ॥

**कार्यत्वानित्यत्वयोः समनियमान्नित्यानित्यविभागोक्त्या कार्याकार्यविभाग एव सिध्यति ।**

**शे०** — ननु 'सामान्ये'त्याद्युत्तरवाक्यमनर्थकम् । न च कार्याकार्यविभागप्रतिपादनार्थत्वान्न तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च 'कार्ये गुणक्रियाणामि'त्यादिना विविच्य वक्ष्यमाणासमवायिकारणोदाहरणज्ञानोपयोगित्वान्न तदानर्थक्यमिति वाच्यम् । समवायिकारणवत्

एकोक्त्यैव तस्य वक्तुं शक्यत्वेन विविच्य तद्वचनस्याप्यनर्थकत्वादित्यतः समवायिकारणवत्साधारण्येन तस्योपदर्शयितुमशक्यत्वेन विविच्यैव तदुपदर्शनस्यावश्यकतया तदपेक्षितकार्याकार्यविभागज्ञानोपयोगित्वान्न तत्कथनस्य वैयर्थ्यमिति भावेन तत्परतयोत्तरवाक्यं योजयितुं तदुपयोगितयाऽसमवायिकारणलक्षणं तावदाह **समवायिकारणप्रत्यासन्नमिति** । अत्र विशेष्यमात्रं समवायिकारणे गतमिति विशेषणभागः । तन्मात्रं च तन्तुत्वादौ गतमिति विशेष्यभागः । तदर्थश्च कारणत्वमात्रं न तु निश्चितकारणत्वम् । तन्तुत्वादावपि भ्रमरूपकारणत्वनिश्चयसंभवेनातिव्याप्त्यापातात् । न च निश्चयपदं प्रमापरम् । तस्यापि व्यर्थत्वात् । कारणत्वमात्रार्थत्वेऽप्यतिव्याप्त्यभावात् । यदत्राधिकं वक्तव्यं तदेतन्निराकरणावसर एव वक्ष्यते । ननु समवायिकारणप्रत्यासन्नत्वं न तावत्साक्षात्समवायिकारणप्रत्यासन्नत्वं युक्तम् । तन्तुसंयोगादौ तत्सत्त्वेऽपि च तस्य तन्तुरूपादावभावेनाव्याप्तिप्रसङ्गात् । नापि समवायिकारणसमवायिकारणप्रत्यासन्नत्वम् । तन्तुरूपादौ तत्सत्त्वेऽपि तन्तुसंयोगादावसत्त्वेनोक्तदोषात् । नाप्युभयम् । कुत्राप्यसत्त्वेनासंभवप्रसङ्गादित्यत आह **समवायिकारणेति** । एवमसमवायिकारणलक्षणमुक्त्वा तस्य विविच्योदाहर्तव्यतामुपपादयितुमेकोक्त्या तत्प्रदर्शनासंभवमुपपादयति **तच्चेति** । तर्हि कार्याकार्यविभाग एव वक्तव्यो न तु नित्यानित्यविभाग इत्यतस्तदुक्त्या तस्यैव सिद्धेर्नानुपपत्तिरित्यभिप्रेत्य तदुक्त्या तल्लाभमुपपादयति **कार्यत्वेति** ॥ **समनियमादिति** । यद्यपि कार्यत्ववति ध्वंसे अनित्यत्वविरहादनित्यत्ववति च प्रागभावे कार्यत्वविरहान्न

कार्यत्वानित्यत्वयोः समनियमः तथाऽपि प्रागभावोपलक्षितसत्तायोगित्वं कार्यत्वं स्वप्रच्युत्युपलक्षितसत्तायोगित्वं विनाशित्वमित्यभिप्रेत्य समनियमकथनमित्यवधेयम् ।

प०— एवं तर्हि तत्त्रयमकार्यमिति वक्तव्ये नित्यमिति कथमुक्तमित्यत आह **कार्यत्वानित्यत्वयोरिति** ।

च०— **समवायिकारणप्रत्यासन्नं** समवायिकारणनिरूपितकार्यैकार्थप्रत्यासत्तिकारणैकार्थप्रत्यासत्त्यन्यतरविशेषितम् ।

**सु०– षडिमे द्रव्यगुणकर्मसामान्यविशेषसमवायाः भावरूपाः पदार्थाः । अभावः सप्तमः । विधिरूपो भावः । निषेधरूपोऽभावः । गुणाश्रयो द्रव्यम् । समवायिकारणं वा । सामान्यवानसमवायिकारणमस्पन्दात्मा गुणः । चलनात्मकं कर्म । नित्यमेकमने(कानुगतं)कसमवेतं सामान्यम् । नित्येष्वेव द्रव्येष्वेव वर्तन्त एव ये ते (अन्त्य)विशेषाः । अत्यन्तव्यावृत्तिहेतवो वा । अयुतसिद्धयोः संबन्धः समवायः । अवश्यमाश्रयाश्रयिभावेनावस्थितावयुतसिद्धौ । नित्यः संबन्धो वा ।**

**शे॰ — विधिरूप इति ।** नञर्थानुल्लिखितधीविषय इत्यर्थः ॥ **निषेधरूप इति ।** नञर्थोल्लिखितधीविषय इत्यर्थः ॥ **गुणाश्रय इति ।** गुणवदन्यान्य इत्यर्थः । तेन नोत्पत्स्यमानगुणे द्रव्येऽव्याप्तिः । अन्योन्याभावस्य व्याप्यवृत्तितया कदाचिद्गुणवतो द्रव्यस्य गुणवदन्यत्वाभावात् गुणाश्रयत्वाभावेऽपि गुणवदन्यान्यत्वादिति भावः । न चैवमप्यनुत्पन्नगुणमेव प्रध्वस्तं यद्द्रव्यं तत्र कदाचिदपि गुणवत्त्वाभावेन गुणवदन्यत्त्वादव्याप्तिरिति वाच्यम् । गुणवद्वृत्तिपदार्थविभाजकोपाधिमदित्यत्र तात्पर्यात् । यद्वा एतदस्वरसादेव तल्लक्षणान्तरमाह **समवायिकारणं वेति ।** स्वसमवेतकार्यजनकतावच्छेदकजातीयमित्यर्थः । अतो न प्राचीनदोषानुषङ्ग इति ध्येयम् ॥ **सामान्यवानिति ।** सामान्यादिचतुष्टयव्यावृत्त्यर्थं सामान्यवानिति विशेषणम् । तच्च जातिमत्परमिति न सामान्यादौ प्रसङ्गः । जातिमत्त्वं च साक्षात्सम्बन्धेन विवक्षितम् । अन्यथा तत्तद्वृत्त्युपाधिशरीरप्रविष्टजातेः परम्परया तत्रावृत्तावनुगतव्यवहाराभावप्रसङ्गात् । द्रव्यव्यावृत्त्यै असमवायिकारणमिति । तदर्थश्च समवायिकारणभिन्नत्वमिति न कश्चित्क्षुद्रोपद्रवः । तदपि च स्वरूपायोग्यत्वं विवक्षितमतो नोत्पद्यमानद्रव्ये प्रसङ्गः । कर्मव्यावृत्त्यर्थमस्पन्दात्मेत्युक्तम् । कर्मभिन्न इत्यर्थः ॥ **नित्यमेकमिति ।** नित्यत्वमात्रं गगने । समवेतत्वविशिष्टमपि विशेषेष्वतोऽनेकेति । अनेकसमवेतत्वमात्रमपि संयोगादाववयविनि च गतमतो नित्यमित्युक्तम् । अनेकसमवेतत्वं च सर्वविशेषान्योन्याभाववत्समवेतत्वमिति न रूपत्वादावव्याप्तिः । एकपदं तु न लक्षणान्तर्गतं किन्तु विशेषवत्प्रतिव्यक्ति नानेकं सामान्यं किन्त्वेकमित्येकाकारप्रत्ययनिर्वाहक्षमत्वं तस्योपदर्शयितुमेव । समवेतपदं वृत्तिमन्मात्रपरमित्यङ्गीकृत्याभावसमवाययोरतिव्याप्तिनिरासाय तदित्यप्याहुः ।

कदलीकारोक्तं लक्षणमनुवदति **नित्येष्वेवेति ।** वर्तमानत्वमात्रं घटादावतिप्रसक्तमतो वर्तन्त एवेत्यवधारणं गृहीतं, नित्या इत्यर्थः । तथाऽपि गुणत्वादौ प्रसङ्गस्तदर्थं **द्रव्येष्विति ।** तथाऽपि घटत्वादौ प्रसङ्गस्तदर्थमवधारणं यावदर्थकम् । तथा च घटत्वादेर्नित्यत्वद्रव्यवृत्तित्वयोः सत्त्वेऽपि यावद्द्रव्यवृत्तित्वाभावान्नातिप्रसङ्गः । तथाऽपि सत्तायां प्रसङ्गस्तन्निवृत्त्यर्थं तृतीयमवधारणमन्ययोगव्यवच्छेदार्थम् । न च द्रव्यमात्रवृत्तय इत्युक्ते घटत्वादौ प्रसङ्गाभावात्तद्वारकावधारणं व्यर्थमिति वाच्यम् । नित्यद्रव्यत्वरूपोपाधौ प्रसङ्गवारकत्वात् । आत्मत्वमनस्त्वादौ प्रसङ्गवारणार्थत्वाद्यावदर्थकमवधारणमपि सार्थकम् । यावन्नित्यमात्रवृत्तयो नित्या इत्युक्ते नित्यगुणमात्रवृत्तिगुणत्वादावप्रसङ्गाद्द्रव्यपदमनर्थकमिति चेन्न । विशेषाणां नित्यगुणाद्यवृत्तित्वेन यावन्नित्यवृत्तित्वाभावादसम्भववारकतया तत्सार्थक्यादिति सर्वं सार्थकम् ॥ (यद्वा) केचित्त्वत्र द्रव्येषु ये वर्तन्ते ते विशेषा इत्युक्तेऽभावसमवायसामान्येष्वतिव्याप्तिस्तदर्थं द्रव्येष्वेवेत्युक्तम् । तथाऽपि गुणकर्मणोः प्रागभावध्वंसयोश्चातिव्याप्तिस्तदर्थं नित्येष्वेवेति । तथाऽप्यात्मत्वमनस्त्वयोर्नित्यद्रव्यगतगुणविशेषेषु चातिव्याप्तिरतो वर्तन्त एवेति । अनेन कदाचिद्वृत्तिः

कदाचिद्वृत्तिश्च व्यावर्त्यते । तेन नित्यद्रव्ये कादाचित्कक्वाचित्कज्ञानादीनां अकादाचित्कानामपि क्वाचित्कानां मनस्त्वादीनां च व्यवच्छेदः । तेषां देशतः कालतश्चावृत्तेरपि वर्तमानत्वाद्वर्तन्त एवेत्ययमंशो न सम्भवतीति भवत्यनेन तद्व्यावृत्तिः । नित्येष्वेवेत्यस्यानुक्तौ द्रव्यत्वेऽतिव्याप्तिरतस्तद्विशेषणम् । नित्येष्वेव वर्तन्त एवेत्येवोक्ते नित्यगुणेष्ववृत्त्याऽसम्भवस्तदर्थं द्रव्येष्वेवेति । नन्ववधारणेन कदाचिद्वृत्तिव्यावर्तनमयुक्तम् । कादाचित्कानामपि ज्ञानादीनां क्वाचित्कत्वेन तद्व्यावर्तकैवकारेणैव तद्व्युदासेन प्रयोजनाभावादिति चेन्न । परमाणुत्वपरममहत्परिमाणान्यतरत्वोपाधौ नित्येष्वेव (द्रव्येष्वेव) वर्तमानत्वात् अक्वाचित्कत्वाच्चेति तत्रातिव्याप्तिवारकत्वेनार्थवत्त्वात् । उपाधेश्च नानापदार्थघटितत्वेनानित्यतया कादाचित्कत्वेनाकादाचित्कत्वार्थकावधारणस्य तत्राभावेनातिव्याप्त्यनवकाशात् । अत एव न नित्यद्रव्यत्वरूपोपाधावपि प्रसङ्ग इति सर्वं सुस्थम् ॥ शङ्करभट्टास्तु । नित्येष्वेवेत्यन्ययोगव्यवच्छेदेन द्रव्यगुणकर्मणां व्यवच्छेदः । तेषामनित्येष्वपि वृत्तेः । द्रव्येष्वेवेत्य(न्य)योगव्यवच्छेदेन सामान्यानां व्यवच्छेदस्तेषामद्रव्येष्वपि वृत्तेः । वर्तन्त एवेत्ययोगव्यवच्छेदेन ज्ञानसुखादिशब्दानां व्यवच्छेदः । तेषां स्वासत्त्वकालेऽवृत्तेरयोगस्यापि सत्त्वात् । ननु च ज्ञानादीनां सामान्यानां च नित्येष्वेवेत्यनेनैव व्यवच्छेदात्किं पदान्तरेण । न हि गुणा नित्येष्वेव वर्तन्ते न वा सामान्यानि । तथा च गुणत्वेन सामान्यत्वेन च ताद्रूप्येण सर्वगुणसामान्यव्यवच्छेदः सिद्ध एवेति चेन्न । नित्यत्वस्य धर्मस्य व्यवच्छेदार्थं द्रव्येष्वेवेति करणात् । ताद्रूप्येण वृत्त्यविवक्षायां चात्मत्वादिनाऽतिव्याप्तिनिरासाय तृतीयावधारणमित्यभिप्राय इत्याहुः ॥ धुण्डिराजभट्टास्तु । नित्येष्वेवेति द्रव्यगुणकर्मसामान्यानां व्यावृत्तिः । वर्तन्त एवेति बुद्धिसुखादीनां व्यावृत्तिः । अवधारणेन नित्यद्रव्यवृत्तित्वस्य विवक्षितत्वात् । बुद्ध्यादीनां च परमाण्वादावभावात् । नित्येष्वेव वर्तन्त एवेत्युक्ते लक्षणस्यासम्भवः । विशेषाणां सर्वनित्यवृत्तित्वाभावात् । अतो द्रव्येष्वेवेत्युक्तमित्यभिप्राय इत्याहुः ॥ प्रशस्तपादाचार्योक्तलक्षणमनुवदति **अत्यन्तेति** । केवलमित्यर्थः । व्यावृत्तिहेतुत्वं च व्यावृत्तिबुद्धिहेतुत्वमिहाभिप्रेतम् । ततश्च व्यावृत्तिबुद्धिमात्रहेतवो न तु सामान्यादिवदनुवृत्तिप्रत्ययहेतवोऽपि ते विशेषा इत्यर्थः । अत्र व्यावृत्तिहेतुत्वमात्रं दण्डादिद्रव्ये रूपादिगुणे कर्मणि द्रव्यत्वादौ सामान्ये चातिव्याप्तमतोऽत्यन्तेत्युक्तम् । तथा च दण्डादिरूपस्य द्रव्यादेरदण्डयादिभ्यो व्यावर्तकत्वेऽपि दण्डयन्तरादिभ्योऽव्यावर्तकत्वेनानुवृत्तिप्रत्ययहेतुत्वस्यापि सत्त्वेन व्यावृत्तिप्रत्ययमात्रहेतुत्वाभावान्न अतिप्रसङ्गः । ते हि विशेषा एव व्यावृत्तिबुद्धिमात्रहेतवो न तु सामान्यरूपा इति तदुक्तेरिति भावः ।

**अयुतसिद्धयोरिति** । संयोगेऽतिव्याप्तिवारणायायुतसिद्धयोरित्युक्तम् । अयुतसिद्धयोर्घटकपालयोः सम्बन्धि यज्ज्ञानं तदप्ययुतसिद्धयोर्भवतीत्यतस्तत्रातिप्रसङ्गवारणाय सम्बन्धपदम् । घटकपालयोर्ज्ञानं च यद्यप्ययुतसिद्धयोर्भवति तथाऽपि न सम्बन्ध इति न तत्र प्रसङ्गः । अयुतसिद्धत्वं च परस्परापेक्षं विवक्षि-

तम् । अतो न संयोगेऽतिव्याप्तिः । घटपटयोर्यत्किञ्चिदपेक्षयाऽयुतसिद्धत्वेऽपि घटापेक्षया पटस्य पटापेक्षया च घटस्योक्तरूपायुतसिद्धत्वाभावादिति ध्येयम् ॥ **अवश्यमाश्रयेति** । कुण्डबदरनिरासायावश्यमित्युक्तं नियमेनेत्यर्थः । नन्वेवमवयव्यादीनामनित्यतया स्थित्यवश्यम्भावाभावेन ययोर्मध्ये एकस्यापरस्मिन्स्थिति-रेवेति नियमाभावादव्याप्तिः । न चाविनश्यदिति विशेषणात्सर्वं समञ्जसम् । तदर्थो हि विनश्यतार-हितत्वम् । तत्त्वं च यत्किञ्चिद्विनश्यतारहितत्वं वा सकलविनश्यतारहितत्वं वा । नाद्यः । उक्तदोषा-निवृत्तेः । न द्वितीयः । आत्मात्मत्वादिरूपयोर्नित्ययोरयुतसिद्धयोर्विनाशाप्रसिद्ध्या तत्राव्याप्तेः । न तृतीयः । असम्भवादिति चेन्न । ययोर्भावयोर्विद्यमानयोर्मध्ये एकस्यापरस्मिन्स्थितिरेव तत्त्वमयुतसिद्ध-त्वम् । यावेकस्मिन्कालेऽसम्बद्धौ न स्तः तत्त्वं वा तदिति तात्पर्यात् । आश्रयाश्रयिभावश्चात्र जगदाधा-रतानियामकसम्बन्धसंयोगातिरिक्तसम्बन्धेन विवक्षितः अतो न सर्वभावपदार्थकालयोः कपालावयवघटयोश्च अतिव्याप्तिरिति ध्येयम् ॥ **नित्यः सम्बन्ध इति** । गगनादिव्यावृत्त्यै परभागः । संयोगव्यावृत्त्यै पूर्वभागः । सद्भिन्नस्वभिन्नसम्बन्धाधेयभिन्नभावत्वं तत्त्वमिति तु परमार्थः । प्रलये जात्यादेः स्वरूपस-म्बन्धेन काले वृत्तावपि प्राक् समवायेनाधेयस्य न स्वभिन्नसम्बन्धाधेयभिन्नत्वमन्योन्याभावस्य व्याप्यवृत्तित्वात् । अवृत्तिव्यावृत्त्यै सद्भिन्नेति विशेषणम् ॥

स० — गुणलक्षणे असमवायिकारणपदं समवायिकारणभिन्नत्वपरम् । कदलीकारोक्तं लक्षणमनुवदति **नित्येष्वेवेति** । द्रव्येषु ये वर्तन्ते ते विशेषा इत्युक्ते अभावसमवायसामान्येष्वति-व्याप्तिः । तदर्थं द्रव्येष्वेवेत्युक्तम् । तथाऽपि गुणकर्मणोः प्रागभावप्रध्वंसयोश्चातिव्याप्तिः तदर्थं नित्ये-ष्वेवेत्युक्तम् । तथाऽप्यात्मत्वमनस्त्वयोः, नित्यद्रव्यगतगुणविशेषेषु चातिव्याप्तिः । अत उक्तं वर्तन्त एवेति । अनेन कदाचित् वृत्तिः, कदाचिदवृत्तिश्च व्यावर्त्येते । तेन नित्ये द्रव्ये कादाचित्क-कानित्कज्ञानादीनाम् अकादाचित्कानामपि काचित्कानां मनस्त्वादीनां व्यवच्छेदः । तेषां देशतः काल-तश्चावृत्तेरपि वर्तमानत्वात् वर्तन्त एवेति अयमंशो न संभवतीति भावः । नित्येष्वेवेत्यस्यानुवृत्तौ द्रव्य-त्वेऽतिव्याप्तिः । अतस्तदुपादानम् । द्रव्येष्वेवेत्यस्यानुपादाने नित्यगुणेष्ववृत्त्या असंभवः । तत्परि-हाराय द्रव्येष्वेवेति । ननु अवधारणेन कदाचिद्वृत्तिव्यावर्तनं न युक्तम् । कादाचित्कादीनामपि ज्ञाना-दीनां काचित्कत्वेन तद्व्यावृत्त्यर्थकैवकारेणैव तद्व्युदासादिति चेन्न । परमाणुत्वमहत्परिमाणान्यतर-त्वरूपोपाधौ अतिव्याप्तिवारकत्वात् । उपाधेश्चानित्यत्वेन कादाचित्कत्वेन अकादाचित्कत्वार्थकावधारणेन तद्व्यावृत्त्युपपत्तेः । अत एव नित्यद्रव्यत्वरूपोपाधावपि नातिप्रसङ्ग इति ध्येयम् । खण्डनटीकायां तु नित्येष्वेवेति अन्ययोगव्यवच्छेदेन द्रव्यगुणकर्मणां व्यवच्छेदः । तेषामनित्येष्वपि वृत्तेः । द्रव्येष्वेवेति अयोगव्यवच्छेदेन सामान्यव्यवच्छेदः । तेषामद्रव्येष्वपि वृत्तेः । वर्तन्त एवेति अयोगव्यवच्छेदेन

ज्ञानसुखादिशब्दानां व्यवच्छेदः । तेषां स्वासत्त्वकाले अवृत्तेरयोगोऽपीत्यर्थः । ननु ज्ञानादीनां च नित्येष्वेवेत्यनेन व्यवच्छेदात् किं पदान्तरेण । न हि गुणा नित्येष्वेव वर्तन्ते । न वा सामान्यानि । तथा च गुणत्वेन सामान्यत्वेन ताद्रूप्येण सर्वगुणसर्वसामान्यव्यवच्छेदः सिद्ध एवेति चेन्न । नित्यत्वस्य धर्मस्य व्यवच्छेदार्थं द्रव्येष्वेवेतिकरणादित्युक्तम् ।

प० —सामान्यादिस्वरूपं व्यक्तीकर्तुं पदार्थानाह **षडिमे इति** । गुणाश्रयत्वमाद्यक्षणे नेत्यतो लक्षणान्तरमाह **समवायिकारणमिति** । यदा तु गुणाश्रयत्वं गुणात्यन्ताभावानधिकरणत्वं विवक्षितं तदा विषयव्याप्त्यर्थं लक्षणान्तरम् ॥ **असमवायिकारणमिति** । समवायिकारणभिन्नमित्यर्थः । सामान्यादिचतुष्टये द्रव्ये कर्मणि चानतिव्याप्तये क्रमात्त्रीणि विशेषणानि ॥ **नित्यमेकमनेकानुगतमिति** । अनेकानुगतत्वमनेकसमवेतत्वम् । क्वचिदनेकसमवेतमित्येव पठ्यते । तेनात्यन्ताभावादौ समवाये च नातिव्याप्तिः । अधिकरणभेदेनाभावभेदानभ्युपगमेन अनेकाधिकरणेष्वाकाशाद्यत्यन्ताभावान्योन्याभावयोः सत्त्वात् । संयोगादावनतिव्याप्तये नित्यमित्युक्तिः । गगनादावनतिव्याप्तये अनेकानुगतमित्युक्तिः । अत्र नित्यमनेकसमवेतमित्येतावतैव पूर्तौ एकमित्युक्तिः स्वरूपकथनायेत्याहुः ॥ **नित्येष्वेवेत्यादि** । अत्र वर्तन्त इत्येवोक्तौ घटादावतिव्याप्तिः, अतो वर्तन्त एवेत्युक्तम् । घटादेराद्यन्तवत्त्वेन पूर्वोत्तरकालमवर्तनात् । तावत्युक्ते रूपत्वादौ, ततो द्रव्येष्विति । तावति सत्तायाम् । अतो द्रव्येष्वेवेति । तावत्युक्ते घटत्वादौ, अतो नित्येष्विति । तावत्युक्ते द्रव्यत्वादौ, अतो नित्येष्वेवेति । नित्येषु वर्तन्ते विशेषा इत्युक्तौ पार्थिवपरमाणुरूपादौ, अतो वर्तन्ते एवेति । तावत्युक्तौ सत्तादौ, अतो नित्येष्वेवेति । तावत्युक्तौ आप्यपरमाणुरूपत्वादौ, ततो द्रव्येष्विति । तावत्युक्ते परमाणुपारिमाण्डल्यान्यतरत्वादौ, अतो द्रव्येष्वेवेति । नित्येषु द्रव्येष्वेव वर्तन्त एव विशेषा इत्युक्तौ द्रव्यत्वगुणकर्मध्वंसादौ, अतो नित्येष्वेवेति ॥ **अत्यन्तव्यावृत्तिहेतवो वेति** । व्यावृत्तिशब्दो व्यावृत्तिधीपरः । अत्यन्तं केवलं व्यावृत्तिधीहेतवः । अयमस्मादन्य इति भेदधीमात्रहेतवो न कदाचिदनुगतबुद्धिहेतव इत्यर्थः । व्यावृत्तिहेतव इत्येवोक्तौ व्यावृत्तेः प्रागेव सिद्धत्वेन व्यावृत्तिधीहेतव इति वक्तव्यम् । तावतो द्रव्यत्वादावतिव्याप्तत्वादत्यन्तेति । तस्या द्रव्यादितो व्यावृत्तिधीहेतुत्वेऽपि इदं द्रव्यमिदं द्रव्यमित्यनुगत(वृत्ति)बुद्धेरपि हेतुत्वेन केवलं व्यावृत्तिबुद्धिहेतुत्वाभावात् ।

या० — **विधिरूप इति** । नञर्थानुल्लिखितधीविषय इत्यर्थः । **निषेधरूप इति** । नञर्थोल्लिखितधीविषय इत्यर्थः । गुणाश्रयत्वं प्रथमक्षणावच्छिन्नघटेऽव्याप्तमतो लक्षणान्तरमाह **समवायिकारणमिति** ॥ **सामान्यवानिति** । अत्रासमवायिकारणमित्यस्य समवायिकारणभिन्नमित्यर्थः । तथा च सामान्यादिचतुष्टये द्रव्ये कर्मणि चातिव्याप्तिवारणाय क्रमेण विशेषणानि ॥ **नित्यमेकमिति** ।

अत्र नित्यत्वमात्रं गगनेऽतिव्याप्तं, समवेतत्वविशेषितं विशेषे, अनेकत्वविशेषितं समवेतत्वं विशेषेष्वेकत्वविशेषितमनेकसमवेतत्वं संयोगादावयविनि च । समवेतत्वपरित्यागेनानुगतत्वमात्रोक्तावनेकाधिकरणकान्योन्याभावात्यन्ताभावयोः समवाये च अतः सर्वं सार्थकमिति बहवः । तच्चिन्त्यमित्यपरे । अनेकसमवेतत्वं यद्यनेकत्वसंख्यावत्समवेतत्वरूपं तदा रूपत्वादावव्याप्तिः । यदि च स्वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वरूपं तदैकपदं व्यर्थं, कुत्रापि विशेषे निरुक्तानेकसमवेतत्वाभावात् । समुदायस्य च समुदायिभिन्नस्याभावादिति । तस्मादत्रैकत्वं न लक्षणशरीरान्तर्गतं किन्तु सामान्यं सर्वत्रानुगतव्यवहारहेतुत्वादेकमेव न विशेषवत् प्रतिव्यक्तिभिन्नमिति स्वरूपकथनार्थमेवेति सम्प्रदायविदः ॥ **नित्येष्वेवेति** । अत्र द्रव्येषु ये वर्तन्ते ते विशेषा इत्युक्ते सामान्यसमवायाभावेष्वतिव्याप्तिरतो द्रव्येष्वेवेत्युक्तम् । तथाऽपि गुणकर्मणोस्तत्प्रागभावप्रध्वंसयोश्चातिव्याप्तिस्तदर्थं नित्येष्वेवेति । तथाऽप्यात्मत्वमनस्त्वयोर्नित्यद्रव्यगतगुणविशेषेषु चातिव्याप्तिरतो वर्तन्त एवेति । अयोगव्यवच्छेदकेनानेन कादाचित्कवृत्तिः क्वाचित्कवृत्तिश्च व्यावर्त्येते । ततश्च नित्यद्रव्येष्वेव सदा सर्वत्रवर्तमाना इत्यर्थो लभ्यते । तेन नित्यद्रव्येष्वेव विद्यमानानां कादाचित्कानां ज्ञानादीनां क्वाचित्कानां मनस्त्वादीनां च व्यवच्छेदसिद्धिः । ननु वर्तन्त एवेत्यवधारणस्य क्वाचित्कवृत्तिव्यवच्छेदकत्वव्याख्यानेनैव मनस्त्वादिवत् कादाचित्कानां ज्ञानादीनामपि व्यवच्छेदसिद्धौ कादाचित्कवृत्तिव्यवच्छेदकत्वमपि किमर्थं व्याख्येयं प्रयोजनाभावादिति चेन्न । सर्वनित्यद्रव्येष्वेव विद्यमाने नित्यद्रव्यत्वादावतिव्याप्तिवारणस्यैव तत्प्रयोजनत्वात् । उपाधीनां च नानापदार्थघटितानां अनित्यत्वात् । नित्येष्वेवेत्यस्यानुक्तौ द्रव्यत्वेऽतिव्याप्तिः । द्रव्येष्वेवेत्यस्यानुपादाने विशेषस्य नित्यगुणादिष्ववृत्त्याऽसम्भवोऽतः सर्वं सार्थकमेवेति ॥ **अत्यन्तव्यावृत्तिहेतव इति** । अत्यन्तव्यावृत्तिप्रत्ययहेतव इत्यर्थः । अत्र व्यावृत्तिप्रत्ययहेतुत्वमात्रं दण्डादिद्रव्ये गुणे रूपादौ कर्मणि द्रव्यत्वादिसामान्ये चातिव्याप्तमतोऽत्यन्तेत्युक्तम् । अत्यन्तं केवलं व्यावृत्तिहेतवो व्यावृत्तिहेतव एव न कदाऽप्यनुवृत्तिहेतव इति यावत् । दण्डादिकं तु न तथा । तस्य दण्डयन्तरादिभ्योऽव्यावर्तकत्वेनानुवृत्तिहेतुत्वस्यापि सत्त्वादित्यवधेयम् । अत एवाहुर्वैशेषिकाः 'ते हि विशेषा एव व्यावृत्तिबुद्धिमात्रहेतवो न तु सामान्यरूपा अपी'ति । **अवश्यमाश्रयेति** । कुण्डबदरादिव्युदासाय **अवश्यमिति** । नियमेनेत्यर्थः । नन्वेवं तन्त्वादिनाशक्षणे विनश्यदवस्थस्य पटादेस्तन्त्वाद्याश्रितत्वाभावादव्याप्तिः । न चाविनश्यन्तावित्यपि विशेषणं विवक्षितमिति वाच्यम् । आत्मात्मत्वादिरूपयोर्नित्ययोरयुतसिद्धयोर्विनाशाप्रसिद्ध्या अव्याप्त्यापत्तेरिति चेन्न । यावुभौ स्वस्थित्यवच्छिन्नकालावच्छेदेन नियमेनाश्रयाश्रयिभावेनावस्थितौ तौ अयुतसिद्धाविति विवक्षितत्वात् । आश्रयाश्रयिभावश्चातिरिक्तसम्बन्धेन विवक्षितोऽतो न कालघटत्वयोर्भूतलघटाद्यभावयोश्चातिव्याप्तिरिति द्रष्टव्यम् ।

**च०— निषेधरूपः** तादृशविशेष्यतापन्नः । गुणं लक्षयति **सामान्यवानिति** । प्रकृतलक्षणघटकमसमवायिकारणत्वं समवायिकारणभिन्नत्वरूपमेव न तु प्राक्दर्शितरूपं तदनात्मकगुणाव्यापनात् । तथा च सामान्यादिचतुष्टये द्रव्ये कर्मणि च तिप्रसङ्गमपहस्तयितुं विशेषणत्रयोपादानम् । सामान्यं लक्षयति **नित्यमिति** । अनेकसमवेतत्वं समवायावच्छिन्ननानाधिकरणतानिरूपकत्वं समवायावच्छिन्ननानाधेयताशालित्वं वा । संयोगादावनतिप्रसङ्गाय नित्यपदोपादानम् । अधिकरणभेदस्याभावभेदे निबन्धनत्वाभावेनात्यन्तान्योन्यभावयोरनतिप्रसक्त्यै समवायावच्छिन्नत्वमधिकरणतायामाधेयतायां वा निवेशितम् । एकपदं तु स्वरूपसङ्कीर्तनार्थेवेति स्थितम् । **नित्येष्वेवेत्यादि** । वर्तत इत्येव न्यासे घटादावतिप्रसङ्गः अतः एवेति न्यस्तम् । उत्पत्तिनाशवतो घटादेः पूर्वोत्तरकालमवर्तनात् । तावति कृते रूपत्वादावतो द्रव्येष्विति । तावन्मात्रे घटत्वादावतो नित्येष्विति । तावन्मात्रे द्रव्यत्वादावतो नित्येष्वेवेति । नित्येषु एव वर्तन्ते ते विशेषा इत्युक्तौ पार्थिवपरमाणुरूपादावतो वर्तन्त एवेति । तावति कृते सत्तादावतो नित्येष्वेवेति । तावदुक्तावाप्यपरमाणुरूपत्वादावतो द्रव्येष्विति । तावदुक्तौ परमाणुपारिमाण्डल्यान्यतरत्वादावतो द्रव्येष्वेवेति व्याकर्तॄणां दिशा समासः । प्रपञ्चिषतैतत्प्रपञ्चकाः । व्यावृत्तिशब्दस्तत्प्रतीतिपरः । अत्यन्तपदं केवलार्थकम् । तथा चानुवृत्तिप्रतीत्यहेतुत्वे सति व्यावृत्तिप्रतीतिहेतुत्वे पर्यवसितम् । दण्डादिद्रव्ये गुणे रूपादौ कर्मणि चलनादौ द्रव्यत्वादिसामान्ये चानतिप्रसङ्गायात्यन्तेति पदमुपात्तम् । तत्रानुवृत्तिप्रतीतिहेतुत्वस्यापि सत्वान्न क्षतिरिति भावः ।

---

**सु०— तत्र सामान्यमन्त्यविशेषश्च समवायश्चेत्येतत्त्रयं नित्यमकार्यं च । विशेष इत्येवोक्ते द्रव्यगुणकर्मसामान्यानामपि ग्रहणं स्यात् । विशिष्यतेऽनेनेति हि विशेषः । द्रव्यं च दण्डादिकमदण्ड्यादिभ्यो देवदत्तादिकं व्यावर्तयति । गुणश्च निर्गुणाद्द्रव्यम् । कर्मापि निष्क्रियान्मूर्तम् । सामान्यं द्विविधं परमपरं च । परं सत्ता प्रचुराश्रयत्वात् । अपरं द्रव्यत्वादि अल्पाश्रयत्वात् । तत्र परसामान्यस्यानुवृत्तिमात्रहेतुत्वेन सामान्यमात्रत्वेऽप्यपरसामान्यं व्यावृत्तेरपि हेतुत्वाद्विशेषोऽपि भवति । अतस्तद्व्यावृत्त्यर्थमन्त्येत्युक्तम् । अन्त्ये द्रव्यादिव्यावर्तकानामभावेऽपि ये व्यावर्तका भवन्ति तेऽन्त्याः । अत्यन्तव्यावृत्तिहेतव इति यावत् । न हि दण्डादिकं तथा । दण्डयन्तरादिभ्योऽव्यावर्तकत्वात् ।**

**शे०— परमपरं चेति** । **परं** व्यापकम्, **अपरं** व्याप्यमित्यर्थः । यत्सामान्यं यत्सामान्यसमानाधिकरणं सत् यदत्यन्ताभावसमानाधिकरणं तत्तस्य परमित्यर्थः । अत्र यदत्यन्ताभावसमानाधिकरणं यत्सामान्यमित्युक्तौ घटत्वमपि पटत्वापेक्षया परं स्यात् । घटत्वस्यापि पटत्वात्यन्ताभावसमानाधिकरणत्वात्तदर्थं यत्सामान्यसमानाधिकरणमित्युक्तम् । घटत्वं च न पटत्वसमानाधिकरणमिति नातिप्रसक्तिः ।

यत्सामान्यसमानाधिकरणं यत्सामान्यमित्युक्तौ पृथिवीत्वमपि द्रव्यत्वापेक्षया परं स्यात्। तस्यापि द्रव्यत्व-समानाधिकरणत्वात्। तदत्यन्ताभावसामानाधिकरण्यविवक्षायां च नातिप्रसङ्गः। पृथिवीत्वस्य द्रव्य-त्वात्यन्ताभावासमानाधिकरणत्वात्। जातिपरसामान्यपदोपादानाज्जातिव्यापकत्वनिर्वचनमेवेदं न तु व्यापकत्वमात्रलक्षणम्। प्रमेयत्वाभिधेयत्वादावतिव्याप्तिप्रसङ्गात्। द्रव्यत्ववत्त्वस्य पृथिवीत्वव्यापकत्व-प्रसङ्गाच्चेत्यवधेयम्। समानाधिकरणसामान्यसमानाधिकरणात्यन्ताभावप्रतियोगित्वं चापरत्वम्। अत्र चात्यन्ताभावप्रतियोगित्वं सत्त्वादिसाधारणं अत उक्तं सामान्यसमानाधिकरणेति। एवं जलत्वाद्यपि पृथिवीत्वादिव्याप्यं स्यात्। अत उक्तं समानाधिकरणेति। व्याप्यत्वाभिमतस्य समानाधिकरणं सामान्यं सत्ता, तत्समानाधिकरणात्यन्ताभावप्रतियोगि, व्याप्यमित्यर्थः। यद्वाऽऽकाशादावतिव्याप्तिवारणाय समानाधिकरणेति। व्याप्यत्वाभिमतसमानाधिकरणेत्यर्थः। आकाशस्य चावृत्तेः समानाधिकरणं नास्त्येव सामान्यस्य। यत्सामान्यं यत्सामान्यसमानाधिकरणं सद्यदत्यन्ताभावसमानाधिकरणं तत्तस्यापरमिति वेति न किञ्चिदनुपपन्नम्। क्रमेणोभयमुदाहरति **तत्रेति**। सत्तासामान्यं परमिति व्यवहर्तव्यमित्यर्थः। अतो न व्यापकत्वे साध्ये प्रचुराश्रयत्वहेतुः साध्याविशिष्ट इति भावः। सत्तायाः परत्वे हेतुमाह **प्रचुरेति**। द्रव्यत्वापेक्षयाऽधिकाश्रयत्वादित्यर्थः। अपरं द्रव्यत्वादीत्यादिपदेन गुणत्वादेः परिग्रहः॥ **अनुवृत्तिमात्र-हेतुत्वेनेति**। परस्परविशिष्टेषु द्रव्यगुणकर्मसु, अविशिष्टस्वसंबन्धात्स्वरूपानुवृत्तिप्रत्ययमात्रहेतुत्वेनेत्यर्थः। मात्रशब्देन स्वाश्रये इतरव्यावृत्ति(बुद्धि)हेतुत्वव्यावृत्तिः। यद्यपि, अत्र सत्ताया अप्यभावात्स्वाश्रये व्यावृत्तिबोधकत्वमस्त्येवेत्यनुवृत्तिप्रत्ययमात्रहेतुत्वं न युक्तम्। न च भावाद्व्यावृत्त्यबोधकत्वं विवक्षितम्। सामान्यादावौपपत्तिकसत्ताव्यतिरेकनिश्चये ततोऽपि व्यावृत्तिधीहेतुत्वात्। तथाऽपि जातिमद्व्यक्तिप्रतियोगि-कव्यावृत्त्यबोधकत्वेन सत्ता सामान्यमेव न विशेष इत्यत्र तात्पर्याददोष इति ध्येयम्॥ **व्यावृत्तेरपीति**। अनुवृत्तिसमुच्चयार्थोऽत्रापिशब्दः। तत्र द्रव्यत्वं परस्परविशिष्टेषु पृथिव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वा-त्सामान्यं, जातिमद्भ्यो गुणकर्मभ्यो व्यावृत्तिप्रत्ययहेतुत्वाच्च विशेषः। गुणत्वमपि परस्परविशिष्टेषु रूपर-सादिष्वनुवृत्तिवृत्तिप्रत्ययहेतुत्वात्सामान्यं, जातिमद्भ्यो द्रव्यकर्मभ्यो व्यावृत्तिबोधकत्वाच्च विशेषः। कर्म-त्वमपि परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात्सामान्यं, जातिमद्भ्यो द्रव्यगुणेभ्यो व्यावृत्तिबोध-कत्वाच्च विशेष इति भावः॥ **तेऽन्त्या इति**। अनेनान्ते भवा अन्त्या इति निर्वचनं सूचितम्। ननु द्रव्यादिव्यावर्तकाभावेऽपि ये व्यावर्तका भवन्ति तेषां व्यावृत्तिहेतुत्वात् विशेषत्ववत् अनुवृत्तिप्रत्ययहेतु-त्वात्सामान्यरूपताऽपि स्यात् तत्कथं केवलविशेषत्वमित्यतो भवेदेवं यद्यनुवृत्तिप्रत्ययहेतुताऽपि स्यान्न चैतदस्तीत्याशयेनाह **अत्यन्तेति**। व्यावृत्तिबुद्धिमात्रहेतव इत्यर्थः। अव्यावर्तकत्वादित्युपलक्षणम्। परस्परविशिष्टेष्वपि पिण्डेषु दण्डी दण्डीत्यनुवृत्तिप्रत्ययहेतुत्वादित्यपि द्रष्टव्यम्।

स० — **परसामान्यस्यानुवृत्तिमात्रहेतुत्वेनेति** । यद्यपि परसामान्यरूपसत्तायाः सत्ताजाति-रहितेभ्यो व्यावृत्तिहेतुत्वस्य विद्यमानत्वेन अनुवृत्तिमात्रहेतुत्ववचनं अनुपपन्नम् । तथाऽपि अपरसामान्यवत् जातिमद्व्यक्तिप्रतियोगिकव्यावृत्तिहेतुत्वाभावाभिप्रायेणानुवृत्तिमात्रहेतुत्वमुक्तमिति ज्ञेयम् । अत एवोक्तं लभट्रेण जातिमत्प्रतियोगिकभेदबुद्धिजनकत्वात् अपरसामान्यस्य विशेषाख्येति ।

प० — मूलं योजयति **तत्र सामान्यमिति** । उक्तपदार्थेषु मध्य इत्यर्थः । अर्थालब्धमर्थमाह **अकार्यं चेति** ॥ **विशिष्यत इति** । व्यावर्त्यत इत्यर्थः । विपूर्वात् 'शिष्'इतिधातोः अकर्तरि च कारके संज्ञायामिति करणे घञ्प्रत्यये पुगन्तेति गुणे विशेष इति सिद्धेरिति भावः । द्रव्यादेर्विशेषत्वं व्यनक्ति **द्रव्यं च दण्डादिकमिति** ॥ **अदण्डयादिभ्य इति** । दण्डहीनादिभ्य इत्यर्थः ॥ **द्रव्यमिति** । व्यावर्तयतीत्यनुषङ्गः ॥ **मूर्तमिति** । वृक्षादेर्मूर्तं व्यावर्तयतीत्यर्थः । सामान्य(स्य)विशेषत्वं विभागपूर्वं व्यनक्ति **सामान्यं द्विविधमिति** ॥ **परमपरमिति** । मुख्यममुख्यमित्यर्थः । **अनुवृत्तीति** । घटः सन् पटः सन्निति अनुगतबुद्धिमात्रहेतुत्वेन सामान्यमात्रत्वेपीत्यर्थः । अपीत्यङ्गीकारवादः । सामान्यादि-त्रयव्यावृत्तिहेतुत्वस्यापि सत्त्वात् द्रव्यगुणकर्मसु व्यावृत्तिबुद्ध्यहेतुत्वात् सामान्यमात्रत्वेपीत्युक्तं ।

या० — **अनुवृत्तिमात्रहेतुत्वेनेति** । यद्यपि सत्ताऽपि स्वाश्रये स्वानधिकरणसामान्यादिव्या-वृत्तिहेतुरपि भवतीतीदमनुपपन्नं, तथाऽपि अपरसामान्यवन्न सत्ताया जातिमद्व्यावृत्तिहेतुत्वमित्यभिप्रायेद-मुक्तमित्याहुः ॥ **तेऽन्त्या इति** । अनेनान्ते भवा अन्त्या इति निर्वचनं सूचितमिति ज्ञातव्यम् । ननु ये द्रव्यादिव्यावर्तकाभावेऽपि व्यावर्तका भवन्ति तेषामनुवृत्तिहेतुत्वे सामान्यरूपताऽपि स्यान्न केवल-विशेषत्वमत आह **अत्यन्तेति** ॥ **अव्यावर्तकत्वादिति** । तथा च दण्डादिकमनुवृत्तिहेतुरपि भवतीति भावः ।

च० — 'उपदेशेजनुनासिक' इति सूत्रव्याख्यावसरे उपदेशशब्दस्य करणसाधनघञन्ततया भाष्यकैय्यटादिषु व्याख्याततया प्रकृते करणसाधनघञन्ततामभिप्रेत्य व्याकुरुते । **विशिष्यत इति** । तेनाकर्तरि चेत्यतः परत्वात् ल्युट् प्राप्नोतीति शङ्कानवकाशः ।

**सु० — क्रिया उत्क्षेपणापक्षेपणाकुञ्चनप्रसरणगमनरूपा अनित्याश्च । चशब्दोऽवधारणे । न द्रव्यादिवदुभयरूपा इत्यर्थः ।**

**गुणा द्रव्याणि च नित्यानित्यभेदेन द्विविधानीति । तथा हि । द्रव्याणि पृथिव्य-प्तेजोवाय्वाकाशकालदिगात्ममनांसि । तत्र परमाणुरूपाणि पृथिव्यादीनि चत्वारि, गगनादीनि पञ्च नित्यानि । द्व्यणुकादिरूपाणि पृथिव्यादीनि चत्वार्यनित्यानीति । गुणाश्चानित्यद्रव्यगता**

अनित्या एव । पार्थिवपरमाणावैकत्वैकपृथक्त्वपरिमाणगुरुत्वानि नित्यानि । रूपरसगन्धस्पर्शानेकत्वानेकपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा अनित्याः । (आप्ये च) पाथसीये च रूपरसस्पर्शैकत्वैकपृथक्त्वपरिमाणगुरुत्वद्रवत्वस्नेहा नित्याः । अनेकत्वानेकपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा अनित्याः । तैजसे च रूपस्पर्शैकत्वैकपृथक्त्वपरिमाणानि नित्यानि । अनेकत्वानेकपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारा अनित्याः । वायवीये च स्पर्शैकत्वैकपृथक्त्वपरिमाणानि नित्यानि । अनेकत्वानेकपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा अनित्याः । आकाशे चैकत्वैकपृथक्त्वपरिमाणानि नित्यानि । अनेकत्वानेकपृथक्त्वसंयोगविभागशब्दा अनित्याः । काले दिशि चैकत्वैकपृथक्त्वपरिमाणानि नित्यानि । अनेकत्वानेकपृथक्त्वसंयोगविभागा अनित्याः । आत्मनि चैकत्वैकपृथक्त्वपरिमाणानि नित्यानि । अनेकत्वानेकपृथक्त्वसंयोगविभागा बुद्ध्यादयश्च नव अनित्याः । ईश्वरात्मनि विशेषोऽभिहितः । मनसि चैकत्वैकपृथक्त्वपरिमाणानि नित्यानि । अनेकत्वानेकपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा अनित्याः । इति विवेकः ।

**शे०** — भ्रमणरेचनादीनां गमन एवान्तर्भावमभिप्रेत्य क्रियापदं व्याख्याति **क्रिया इत्यादि** । क्रिया अनित्याश्चेत्यत्र क्रियाणामुभयरूपत्वाभावेन चशब्दस्य नित्यत्वसमुच्चायकत्वस्य बाधितत्वादवधारणार्थत्वेन तं व्याचष्टे **चशब्दोऽवधारण इति** । अवधारणव्यावर्त्यमाह **नेति** ।

ननु ध्वंसाप्रतियोगित्वतत्प्रतियोगित्वरूपनित्यत्वानित्यत्वयोरेकत्र विरुद्धत्वात्कथं 'गुणद्रव्ये द्विरूपके' इति द्रव्यगुणयोर्नित्यानित्यत्वरूपत्ववर्णनमित्यतो नात्राव्यवस्थया तयोर्नित्यानित्यरूपत्वमभिप्रेतं येन विरोधः स्यात्किन्तु किञ्चिन्नित्यं किञ्चिदनित्यमिति व्यवस्थयैवेति नानुपपत्तिरिति भावेनाह **तथा हीति** । तत्र कानि तानि द्रव्याणि कथं च तत्र व्यवस्थया नित्यानित्यत्वमित्यतस्तदुभयं दर्शयति **द्रव्याणीत्यादिना** । एवं द्रव्यस्योभयरूपतामुपदर्श्य गुणानामप्युभयरूपतां, के ते गुणाः कथं तत्र व्यवस्थया नित्यानित्यत्वमित्याशङ्काद्वयनिरासाय दर्शयति **गुणाश्चेति** । अत्र गुणाश्च रूपरसगन्धादयस्ते चेति योज्यम् ॥ **अनित्यद्रव्येति** । पार्थिवादिद्व्यणुकादिरूपेत्यर्थः ॥ **पार्थिवपरमाणाविति** । अत्र परिमाणं मुख्यमतेन पारिमाण्डल्यमेवाभिमतमेकदेशिमतेन ह्रस्वत्वमपि । एवमेवोत्तरत्रापि ॥ **आप्ये चेति** । अत्र परमाणावित्यनुवर्तते । एवमेव तैजसे वायवीये चेत्युत्तरत्रापि द्रष्टव्यम् ॥ **आकाशे चेति** । अत्र परिमाणं मुख्यमतेन परममहत्त्वमेव एकदेशिमतेन तु दीर्घत्वमपि । एवमेव कालदिगात्मस्वपि द्रष्टव्यम् । बुद्ध्यादिषु नवसु संस्कारो भावना ॥ **विशेष इति** । ज्ञानेच्छाप्रयत्नैकत्वैकपृथक्त्वपरिमाणानि नित्यानि ।

अनेकत्वानेकपृथक्त्वसंयोगविभागा अनित्या इत्येवंरूपो विशेषो 'नित्यज्ञानप्रयत्नेच्छमि'त्येतद्ग्रन्थव्याख्यानावसरेऽभिहित इत्यर्थः ॥ **मनसि चेति ।** अत्रापि परिमाणं पारिमाण्डल्यमेव मुख्यमतेनाभिमतम् । एकदेशिमतेन ह्रस्वत्वमपि । अत्र संस्कारो वेग ।

प० — क्रिया इत्यादिमूलं योजयति **क्रिया इति ।** ऊर्ध्वदेशसंयोगादिहेतुरुत्क्षेपणक्रिया । अधोदेशसंयोगादिहेतुरपक्षेपणं । अल्पदेशसंयोगादिहेतुराकुञ्चनं । अनल्पदेशसंयोगादिहेतुः प्रसारणं । अनियतदेशसंयोगादिहेतुर्गमनं ॥ **गुणाश्चेति ।** रूपरसगन्धस्पर्शशब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारभेदभिन्नेषु गुणेषु अनित्यद्र (व्यगताः गु) व्याणां गुणा अनित्या इत्यर्थः ।

श्री० — **विशेषोऽभिहित इति ।** नित्यज्ञानप्रयत्नेच्छमित्यनेनेत्यर्थः ।

**सु० — एवं कार्याकार्यविभागमुक्त्वा यस्य यदसमवायिकारणं तदाह कार्ये इति ।**

**अनु० —** कार्ये गुणक्रियाणां तु समवाय्यन्यकारणम् ।
कारणस्था गुणाद्यास्तु संयोगो द्रव्यकारणम् ॥

**कार्यकारणग्रहणमुपलक्षणम् । ततश्च कार्येऽकार्ये च द्रव्ये जायमानानां गुणानां समवायिकारणसमवायिकारणस्थाः समवायिकारणस्थाश्च गुणाः समवायिकारणस्थं कर्म च समवाय्यन्यकारणं असमवायिकारणम् । कर्मणश्च असमवायिकारणस्था गुणा एवासमवायिकारणमिति योज्यम् ।**

**आद्यस्तुशब्दो द्रव्याद्विशेषं द्योतयति । द्वितीयस्य द्रव्यकारणं त्वित्यन्वयः । यद्वा द्वावप्यनुक्तसमुच्चयार्थौ । तच्चोक्तम् । तथा हि । कार्यगतानां रूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वोत्तरसंयोगविभागगुरुत्वद्रवत्वस्नेहवेगानां कारणगता रूपादयोऽसमवायिकारणम् । पार्थिवपरमाणुगतानां रूपरसगन्धस्पर्शानां पार्थिवतैजसपरमाणुगतद्रवत्वस्य तद्गत एव तेजःसंयोगः । सर्वत्रानेकत्वानेकपृथक्त्वयोराश्रयगतैकत्वैकपृथक्त्वानि । संयोगविभागवेगानामाश्रयगतं कर्म । परत्वापरत्वयोराश्रयगतौ दिक्कालसंयोगौ । आत्मविशेषगुणानामात्मगतो मनःसंयोगः । शब्दस्याकाशगताः संयोगविभागशब्दाः । कर्मणश्चाश्रयगता गुरुत्वद्रवत्ववेगसंयोगा इति । द्रव्यस्य तु समवायिकारणानामवयवानां संयोगोऽसमवायिकारणमिति ।**

**शे० — यस्येति ।** गुणक्रियाद्रव्यरूपस्येत्यर्थः । नन्वत्र कार्यगतगुणानां (कर्मणां) कारणस्था गुणा असमवायिकारणमित्युक्त्या कार्यगतस्य गुणादेः कार्यकारणस्था गुणा असमवायिकारणमित्यर्थो

लभ्यते । कार्यपदसमभिव्याहारेण सामान्यपरस्यापि कारणपदस्य कार्यसमवायिकारणपरतया कारणस्था इत्यनेन कार्यसमवायिकारणस्थत्वलाभात् । तथा चाकार्यगतगुणानामसमवायिकारणानुक्तिप्रसङ्ग इत्यतो भवेदेतदेवं यद्यत्र कार्यकारणपदे कार्यकारणमात्रपरे स्याताम् । न चैतदस्ति । किन्नाम कार्यपदमत्र कार्यस्येव।कार्यस्याप्युपलक्षणया ग्राहकम् । कारणपदं च कारणस्येवाश्रयस्याप्युपलक्षणया ग्राहकम् । ततश्च कार्यगतगुणादीनां कार्यकारणस्था गुणा अकार्यगतगुणादीनां च तदाश्रयगुणा असमवायिकारणमित्यर्थपर्यवसानान्नानुक्तिदोष इत्याशयवानाह **कार्यकारणग्रहणमिति** । समवायिकारणसमवायिकारणस्था इति तु पर्यवसन्नार्थाभिप्रायेणोणोक्तम् । कार्यपदसमभिव्याहारेणैवोक्तार्थपर्यवसानात् । शब्दार्थानुसारेण; कारणस्थशब्दस्य समवायिकारणस्थमात्रार्थकत्वेन तदयोगदिति ध्येयम् ॥ **तथा समवायिकारणस्था इति ।** आश्रयगता इत्यर्थः ॥ यद्यप्यत्राश्रयगता इत्येव वक्तुमुचितम् । तथाऽपि स्वगतगुणादिकं प्रति स्वस्य समवायिकारणत्वायिप्रायेण समवायिकारणस्था इत्युक्तमिति ध्येयम् ॥ **कर्मणश्चेति** । कार्येऽकार्ये च जायमानस्येत्यनुवर्तते । कर्मणश्च समवायिकारणस्था गुणा एवासमवायिकारणमित्ययमेव वैशेषिकाणां मुख्यः सिद्धान्तः । कार्यगतकर्मणां तु कारणगतगुणकर्मणी कारणैकार्थप्रत्यासत्त्यादिना असमवायिकारणमिति, तत्त्वप्रकाशिकायां तु वैशेषिकैकदेशिमतोपन्यासान्नास्य तेन विरोध इत्यवधेयम् । कार्यगतकर्मणां कारणगतगुणकर्मणी कारणैकार्थप्रत्यसत्त्यादिनेत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा कार्यैकार्थप्रत्यासत्तेरेव, कारणपदेन च कर्मसमवायिकारणस्यैव तत्र ग्रहणादयमेव तत्त्वप्रकाशिकार्थ इत्यप्याहुः । आद्यत्वेन कर्मविशेषणादाद्यकर्मासमवायिकारणत्वं गुणानामेवेत्येतद्ग्रन्थाभिप्रायः। आद्यद्वितीयादिकर्मसाधारण्येन तद्गुणकर्मणोः कर्मसमवायिकारणत्वमिति टीकाऽ (तत्त्वप्रकाशिका) भिप्राय इत्यविरोध इत्यप्याहुः । कर्मसमवायिकारणगतगुणकर्मणीति वाऽर्थः । तथा च कर्मण आश्रयगता गुणा गुरुत्वद्रवत्ववेगसंयोगाः कर्म च कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारणम् । द्वितीयादिपतनस्पन्दनादिकं तृतीयादिपतनस्पन्दनादिकं प्रत्यसमवायिकारणमिति मतावष्टम्भेन तत्र कर्मग्रहणं कृतम् । वैशेषिकमतेऽपि तृतीयादिपतनस्पन्दनादिकं प्रति वेगस्यैवासमवायिकारणत्वं न द्वितीयादिपतनादेरित्यभिप्रेत्यात्र कर्मग्रहणं न कृतम् । अत एवात्र कर्मणश्चाश्रयगता गुरुत्वद्रवत्ववेगसंयोगा एवासमवायिकारणमित्यग्रे वक्ष्यतीति ध्येयम् ।

कार्यकारणग्रहणस्य तन्मात्रपरत्वमङ्गीकृत्य पक्षान्तरमाह **यद्वेति** । 'कार्ये गुणक्रियाणां त्वि'ति आद्यतुशब्देनाकार्यगतगुणादिरूपानुक्तसमुच्चयात् 'कारणस्था गुणाद्यास्त्वि'ति द्वितीयतुशब्देन चाश्रयगतगुणादिरूपानुक्तसमुच्चयात्कार्यगतगुणादीनां कारणकारणस्था गुणाद्या अकार्यस्थगुणादेराश्रयस्था गुणा

असमवायिकारणमित्यर्थलाभान्नोक्तदोष इति भावः । किं तदनुक्तं यत्समुच्चायकत्वं तुशब्दद्वयस्येत्यतः कार्येऽकार्ये चेत्यादिना तदुक्तमेवेत्याह **तच्चोक्तमिति ।। उत्तरसंयोगेति ।** उत्तरत्वं संयोगविभागयोर्विशेषणम् । संयोगविभागवेगानामाश्रयगतं कर्मासमवायिकारणमिति वक्ष्यमाणत्वेन कर्मणोऽप्यसमवायिकारणत्वान्न कारणगतसंयोगादेः कार्यगतसंयोगादिकं प्रत्यसमवायिकारणतयोक्तिर्युक्तेत्यतः कर्मण आद्यसंयोगाद्यसमवायिकारणत्वेऽपि संयोगादिजन्यसंयोगादौ कारणगतसंयोगादेरेवासमवायिकारणत्वमिति भावेनोत्तरत्वेन संयोगादिविशेषणं कृतमित्यवधेयम् ।। **कारणगता रूपादय इति ।** अत्र रूपादीनां कारणगतत्ववचनं कारणैकार्थप्रत्यासत्त्या समवायिकारणप्रत्यासन्नत्वसूचनार्थमिति बोध्यम् ।। **तद्गत एवेति ।** पार्थिवतैजसपरमाणुगत इत्यर्थः । असमवायिकारणमित्यनुवर्तते । तेजस्संयोगस्य तद्गतत्ववचनं च कार्यैकार्थप्रत्यासत्त्या समवायिकारणप्रत्यासन्नत्वसूचनार्थम् । एवमुत्तरत्राप्याश्रयगतत्ववचनस्य प्रयोजनमवधेयम् ।। **सर्वत्रेति ।** कार्येऽकार्ये चेत्यर्थः । अत्र सर्वत्राप्यसमवायिकारणमित्यनुवर्तते ।। **संयोगविभागेति ।** आद्यत्वेन संयोगविभागविशेषणमत्र द्रष्टव्यम् । वेगपदं चोत्तरवेगपरम् । सर्वत्रेति चानुवर्तते । एवं परत्वापरत्वयोरित्यत्रापि ज्ञेयम् ।। **आत्मेति ।** क्षेत्रज्ञात्मेत्यर्थः ।। **कर्मणश्चेति ।** अत्रापि सर्वत्रेत्यनुवर्तते । इतिशब्दस्तु विविच्य गुणसमवायिकारणप्रदर्शनसमाप्त्यर्थः । संयोगो द्रव्यकारणमित्यनेन तुरीतन्तुसंयोगसाधारण्येन संयोगस्य द्रव्यासमवायिकारणत्वमुच्यत इति भ्रान्तिं वारयितुं व्याचष्टे **द्रव्यस्य त्विति ।** समवाय्यन्यकारणमिति पूर्वग्रन्थानुरोधात् । अत्र कारणपदमसमवायिकारणपरमिति भावेनाह **असमवायिकारणमिति ।**

**स० — कर्मणश्चेति ।** कार्यगतगुणकर्मणां तु कारणगतगुणकर्मणां कारणैकार्थप्रत्यासत्त्यादिना समवायिकारणमिति तत्त्वप्रकाशिकायाम् एकदेशिमतोक्तेर्न तेनास्य विरोधः । अस्य वैशेषिकमुख्यसिद्धान्तत्वादिति भावः ।। **तच्चोक्तमिति ।** तच्च अनुक्तसमुच्चायार्थकत्वं चेत्यर्थः । **उक्तं** 'कार्यकारणग्रहणमुभलक्षणमि'त्यादिनेति शेषः । आद्यतुशब्दस्य कार्यगुणलक्षणानुक्तसमुच्चायकत्वं, द्वितीयस्य समवायिकारणस्थगुणसमुच्चायत्कत्वमिति भावः । प्रथमं पक्षमुपपादयति **तथा हीति ।**

**प० — एवं कार्याकार्ये इति ।** नित्यानित्यत्वविभागोक्त्याऽर्थालब्धस्यायमनुवादः । तुशब्दान्तत्रिपादीं योजयति **ततश्च कार्येऽकार्ये चेत्यादिना ।** आद्यतुशब्दार्थः **समवायिकारणस्थं कर्म चेति ।** एतत्सर्वमनुपदमेव तथाहीत्यादिना विवरिष्यते । **कर्मणश्चेति ।** कार्येऽकार्ये च जायमानस्येत्येमनुषङ्गः । समवायिकारणस्थाः गुणा एवेत्येवकारेण समवायिकारणसमवायिकारणस्थगुणव्यावृत्तिः न तु कर्मणः ।

कार्यगतकर्म(णां का)(णिका)णः कारणगतगुणकर्मणी असमवायिकारणमिति भाष्यटीकायामुक्तेः । यद्वा मतान्तरमुपेत्य टीकासुधयोर्भेदेनोक्तिरिति ज्ञेयम् । किं तदनुक्तं प्रमेयं यत्, तुशब्दद्वयेन समुच्चेयमित्यत आह **तच्चेति** । अनुक्तं प्रमेयं च कार्येऽकार्ये वेति समवायिकारणसमवायिकारणस्था इति पूर्वयोजनाया-मेवोक्तमित्यर्थः । अस्मिन्पक्षे कार्यग्रहणं नोपलक्षणम् । कारणपदं च न कारणकारणपरमित्यर्थः । कार्ये अकार्ये चेत्यादिनोक्तं विवृणोति **तथा हीत्यादिना** ॥ **कारणगता इति** । कार्यं प्रति यत्कारणं तद्गता इत्यर्थः । स्वकारणकारणगतेति यावत् । समवायिकारणस्थाश्चेत्युक्तं विवृणोति **पार्थिवपरमाण्विति** ॥ **तेजस्संयोग इति** । सौरालोकसंयोग इत्यर्थः । समवायिकारणस्थं कर्म चेत्युक्तं विवृणोति **संयोग-विभागवेगानामिति** ॥ **परत्वापरत्वयोरिति** । दिक्कृतयोः कालकृतयोश्चेति योज्यम् ॥ **आत्म विशेषेति** । ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां गुणानामित्यर्थः । कर्मणश्च समवायिकारणस्था गुणा एवेत्युक्तं विवृणोति **कर्मणश्चेति** । चतुर्थपादार्थमाह **द्रव्यस्य त्विति** ।

**या०— कर्मणश्चेति** । यत्तु तत्त्वप्रकाशिकायां 'कार्यगतकर्मणः कारणगतगुणकर्मणी असम-वायिकारणमि'त्युक्तं तत्तु वैशेषिकैकदेशिमतमवलम्ब्यैवेति भावबोधे स्पष्टम् । अतो न विरोध इति ज्ञातव्यम् ॥ **तच्चोक्तमिति** । **तच्च** अनुक्तं च । **उक्तं** पूर्वयोजनायामुपलक्ष्यतयोक्तं यत्तदेवेत्यर्थः । तथा चाद्यस्य तुशब्दस्याकार्य इत्यर्थः । द्वितीयस्य यथास्थितान्वयस्य कारणकारणस्था इत्यर्थ इति भावः । एवं चात्र कार्यकारणशब्दयोर्नोपलक्षकत्वमिति द्रष्टव्यम् ॥ **कारणगता इति** । समवायिकारणसमवायि-कारणगता इत्यर्थः ।

**सु०— उक्तस्य क्वचिदपवादमाह** एवमिति ।

**अनु०**— एवं स्थितेऽपि सिद्धान्ते विशेषस्तत्र कल्पितः ॥

**कारणगतं परिमाणं कार्यगतस्य परिमाणस्यासमवायिकारणमित्येवं सामान्यतः सिद्धान्ते स्थितेऽपि,** तत्र **परिमाणविशेषे** विशेषोऽन्यथाभावः कल्पितो **वैशेषिकैः** ।

**कथमित्यत** आह द्व्यणुक इति ।

द्व्यणुके परमाणौ च ह्रस्वत्वं परिमण्डलम् ॥
न कारणं कार्यगुणे

**चतुर्विधं परिमाणम्** । **अणुत्वं महत्त्वं ह्रस्वत्वं दीर्घत्वं च** । **तत्राणुत्वं द्विविधं, नित्य-मनित्यं च** । **नित्यं चतुर्विधपरमाणौ मनसि च** । पारिमाण्डल्यमिति **चोच्यते** । **अनित्यं द्व्यणुक एव** । **महत्त्वमपि द्विविधं नित्यानित्यभेदात्** । **नित्यमाकाशकालदिगात्मसु परम**

महत्त्वम् । अनित्यं त्र्यणुकादौ कार्यद्रव्ये । ह्रस्वत्वं द्व्यणुक एव दीर्घत्वं त्र्यणुकादिकार्यद्रव्य एव । केचित्परमाणावपि ह्रस्वत्वं गगनादावपि दीर्घत्वमभ्युपयन्ति । तत्र द्व्यणुके वर्तमानं ह्रस्वत्वम् । उपलक्षणमेतत् । अणुत्वं च कार्यगुणे द्व्यणुककार्यत्र्यणुकपरिमाणे । विषयसप्तमीयम् । त्र्यणुकमहद्दीर्घत्वयोरसमवायिकारणं न भवति । तथा परमाणौ वर्तमानं परिमण्डलं पारिमाण्डल्यं परमाणुकार्यद्व्यणुकगुणस्य ह्रस्वत्वस्याणुत्वस्य चासमवायिकारणं न भवति । त्र्यणुकादिगतं तु महत्त्वं दीर्घत्वं च चतुरणुकादिपरिमाणं प्रत्यसमवायिकारणं भवत्येवेति ।

शे० — पूर्वोत्तरग्रन्थयोर्विरोधमाशङ्क्य परिहरति **उक्तस्येति** । 'कार्ये गुणक्रियाणां तु समवाय्यन्यकारणं । कारणस्था गुणाद्या' इत्युक्तस्येत्यर्थः । **क्वचित्** परिमाणे । तथाऽप्यपवादस्यानेनैवोक्तत्वाद्द्व्यणुकइत्याद्युत्तरग्रन्थानर्थक्यमेवेत्यतस्तत्कथम्भावशङ्कानिरासाय तत्प्रकारप्रदर्शनार्थत्वस्य तदिति भावेन तदुपदर्शनपरतयोत्तरग्रन्थं योजयितुं तत्कथम्भावशङ्कामुत्थापयति **कथमितीति** । परिमाणस्यैकरूपत्वे वक्ष्यमाणस्य वैरूप्यलक्षणस्य हेतोरसिद्धिप्रसङ्गात् ह्रस्वत्वं परिमण्डलमिति विचित्रव्यवहारानुपपत्ति प्रसङ्गाच्च तथानिर्देशेन सूचिततद्विभागकथनपूर्वकं तद्व्यवस्थिततां चोपदर्शयति **चतुर्विधमित्यादिना** । दीर्घत्वं चेत्यतःपरमितिशब्दोऽध्याहार्यः । अन्यथा प्रत्येकं चातुर्विध्यप्रतीतिप्रसङ्गादिति द्रष्टव्यम् । परमाणुगताणुत्वस्य द्व्यणुकगताणुत्वं प्रत्यकारणत्वसाधकवैरूप्यहेतोः सिद्ध्यर्थमणुत्वविभागमाह **तत्राणुत्वमिति** । त्र्यणुकादावाकाशादौ च महत्त्वलाभाय तद्विभागमाह **महत्त्वमपीति** । त्र्यणुकादावित्यादिपदसंग्राह्यतावच्छेदकं धर्ममाह **कार्यद्रव्य इति** । एवं परिमाणानां व्यवस्थिततामभिधाय द्व्यणुके परमाणौ चेति मूलानुरोधेन प्रथमतो द्व्यणुकपरिमाणस्य कार्यपरिमाणं प्रत्यकारणत्वोपपादकतया तावत्कारिकाखण्डं योजयति **तत्रेति** । मूलग्रन्थाद्द्व्यणुकगतह्रस्वत्वस्य द्व्यणुककार्यत्र्यणुकपरिमाणेऽकारणत्वप्राप्तावपि द्व्यणुकगताणुत्वस्य तत्राकारणत्वालाभात्तल्लाभायाह **उपलक्षणमिति** । त्र्यणुकपरिमाणस्याकारणत्वं प्रत्यधिकरणत्वाभावात्सप्तम्यनुपपत्तिमाशंक्याह **विषयेति** । उक्तापवादस्य परिमाणे क्वाचित्कतास्फोरयितुं कारणपरिमाणस्य कार्यपरिमाणकारणतामप्युपदर्शयति **त्र्यणुकादिगतं त्विति** ।

प० — तत्रेत्यनूद्य व्याचष्टे **परिमाणविशेषे इति** । मूलं योजयति **तत्रेत्यादिना** । चतुर्विधपरिमाणमध्य इत्यर्थः । 'महत्वं चैव' इत्याद्यग्रेतनमूलोपयोगाय मूलाभिप्रेतं स्वयमाह **त्र्यणुकादिगन्तन्त्विति** ।

**सु०** -- **कस्मादेवं कल्पितमित्यत आह** वैरूप्यमिति ।

**अनु०** — वैरूप्यं तत्र कारणम् ॥

इत्याहुः

तत्र **द्व्यणुकपरमाणुपरिमाणानां त्र्यणुकद्व्यणुकपरिमाणानि प्रति कारणत्वाभावे वैरूप्यं विजातीयत्वं कारणम्। सजातीययोरेव हि तन्तुपटपरिमाणयोः कार्यकारणभावो दृष्टः। तथा च प्रयोगः। द्व्यणुकत्र्यणुकपरिमाणे न कार्यकारणभाववती विजातीयपरिमाणत्वात् व्यतिरेकेण तन्तुपटपरिमाणवत्। एवं परमाणुद्व्यणुकपरिमाणयोरपि द्रष्टव्यम्। परमाणोरणुत्वं द्व्यणुकाणुत्वस्य कारणमस्त्विति चेन्न। तत्रापि नित्यपरिमाणत्वस्य परमाणुत्वस्य च वैरूप्यस्य सत्त्वात्। एवञ्चेद्द्व्यणुकत्र्यणुकपरिमाणानां किमसमवायिकारणमित्यत आह** वैरूप्यमिति । **अनेकत्वमित्यर्थः। ईश्वरबुद्धिमपेक्ष्योत्पन्ना परमाण्वोर्द्वित्वसंख्या द्व्यणुकेऽणुत्वं ह्रस्वत्वं च करोति। द्व्यणुकेषु चोत्पन्ना त्रित्वसंख्या त्र्यणुके महत्त्वं दीर्घत्वं च करोतीति ॥**

**शे०** — अप्रयोजकतामाशङ्क्य दृष्टिविरोधस्यैव विपक्षे बाधकत्वान्न तदिति भावेनाह **सजातीययोरिति ॥ एवमिति द्रष्टव्यमिति** । परमाणुद्व्यणुकगतपरिमाणे न कार्यकारणभाववती विजातीयपरिमाणत्वात् । व्यतिरेकेण तन्तुपटपरिमाणवदिति द्रष्टव्यमित्यर्थः ॥ **परमणोरणुत्वमिति** । इदं च मुख्यमतमाश्रित्योक्तं एकदेशिमतेन ह्रस्वत्वमित्यपि द्रष्टव्यम् । द्व्यणुकाणुत्वस्येत्युपलक्षणम् । द्व्यणुकह्रस्वत्वस्येत्यपि द्रष्टव्यम् । द्व्यणुकत्र्यणुकपरिमाणं प्रत्यसमवायिकारणान्तरप्रदर्शनार्थं चेदं भाष्यमित्यभिप्रेत्य किं तदुपदर्शनेनेत्यतस्तत्सार्थक्याय तन्निवर्त्यशङ्कामुत्थापयति **एवं चेदिति ॥ किमिति** । न हि तेन विना परिमाणोत्पत्तिर्युक्ता । भावकार्यस्य कारणत्रयजन्यत्वनियमात् । ततश्च प्रतिकूलतर्कपराहतमुक्तानुमानमिति भावः । अत्र पक्षे वैरूप्यशब्दस्य विजातीयार्थत्वायोगात्प्रकृतोपयोगिनमर्थमाह **अनेकत्वमिति** । अत्र परमाणुगतद्वित्वसंख्याया द्व्यणुकगतत्रित्वसंख्यायाश्च संग्रहाय द्वित्वमित्येव वा बहुत्वमित्येव वाऽनुक्त्वाऽनेकत्वमित्येवोक्तम् । अन्यथा अन्यतरमात्राभिधाने द्व्यणुकत्र्यणुकपरिमाणासमवायिकारणकथनपरत्वाभावप्राप्त्योक्ताकाङ्क्षानुपरमप्रसङ्गादिति द्रष्टव्यम् । ननु परमाणुद्व्यणुकयोरतीन्द्रियत्वे तत्रायमेकोऽयमेक इत्यादिरूपापेक्षाबुद्धेरेवायोगेनापेक्षाबुद्धिजन्यद्वित्वादिसंख्योत्पत्तेरयोगात् । न तस्या अपि द्व्यणुकादिपरिमाणासमवायिकारणत्वं संभवतीत्यतोऽतीन्द्रियतयाऽस्माकं तत्रापेक्षाबुद्ध्यनुदयेऽपीश्वरस्य तत्संभवेन तदपेक्षाबुद्ध्यैवानेकत्वोपपत्तेर्नानुपपत्तिरित्याशयेनोक्तम् **ईश्वरबुद्धिमिति** । ईश्वरापेक्षाबुद्धिमित्यर्थः । द्व्यणुकेषु चेत्यत्रापीश्वरबुद्धिमपेक्ष्येत्यनुवर्तते ।

प० — वैरूप्यमित्यादिमूलमन्यथाप्यवतार्य व्याचष्टे **एवं चेदिति** ॥ परमतोपन्यासः ॥

या० — **परमाणोरणुत्वमिति** । तथा च न तत्र वैरूप्यमिति भावः ॥

सु० — **एवमुपन्यस्तं मतमपाकर्तुमधिकरण(सूत्र)मवतारयति** तानिति ॥

अनु० — तानथोवाच विद्याधीशः स्वयं प्रभुः ॥

उवाच **महद्दीर्घवद्वेत्यादीति शेषः । प्रबलतर्कोपबृंहितमतनिरासे सामर्थ्यं सूत्रकृतः कथमित्यत उक्तं** स्वयं साक्षात्सर्वविद्यानामधीशस्तस्मात्प्रभुरिति ।

शे० — महद्दीर्घवद्वेत्याद्यधिकरणेनैव तन्निरासेन 'तानथोवाचे'त्याद्युत्तरभाष्यस्योपन्यस्तमतनिरासकत्वाभावात् 'महत्त्वं चैव दीर्घत्वमि'त्यादिनैव सूत्रार्थकथनेनास्य सूत्रव्याख्यानरूपत्वाभावाच्च वैयर्थ्यमित्याशंक्यार्थकथनादिरूपेण व्याख्यानस्यानेकप्रकारत्वादस्य चार्थकथनरूपत्वाभावेऽपि परमतनिरासार्थं प्रवृत्ततदधिकरणावतरणरूपतया तद्रूपव्याख्यानत्वसम्भवान्न वैयर्थ्यमित्याशयेन तत्परतयोत्तरभाष्यं योजयति **एवमिति** । तानथोवाचेत्यत्रेदमुवाचेत्यनुक्त्या किमुवाचेत्याकाङ्क्षायां अनुपरमान्महत्त्वं चेत्यादियोजनायां चास्य भाष्यकृद्वाक्यत्वेन सूत्रकारवाक्यत्वाभावेनासदनुवादत्वप्रसङ्गात्साकाङ्क्षतया वाक्याभासत्वशङ्कामपाकर्तुमपेक्षितं पूरयति **महद्दीर्घवद्वेत्यादीति शेष इति** । ननु 'तानथोवाच सूत्रकृदि'त्येतावतैव सूत्रस्यावतरणसिद्धे 'विद्याधीश' इत्यादिभाष्यांशवैयर्थ्यमित्याशंक्य निरासकत्वोपयोगिसामर्थ्योपपादनार्थत्वान्न तदिति भावेन तदुपपादकतया तद्योजयितुं निरासकत्वानुपपत्तिशङ्कामुत्थापयति **प्रबलेति** ॥ **साक्षादिति** । परोपदेशमनपेक्ष्येत्यर्थः ।

श्री० — **सामर्थ्यमिति** । प्रभुशब्दोक्तमित्यर्थः ।

च० — एवमुपन्यस्तमित्यवधिकः परमतोपन्यासः ।

सु० — **न वैशेषिकादिमतविरोधेनोक्तार्थस्यान्यथात्वं शङ्कनीयम् । तस्योपपत्तिविरुद्धत्वात् । तथा हि । यत्तावदुक्तं द्व्यणुकादिपरिमाणं न त्र्यणुकादिपरिमाणस्यासमवायिकारणमिति, तदुपपत्तिविरुद्धमिति दर्शयन् 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यामि'ति सूत्रं व्याचष्टे** महत्त्वं चेति ।

अनु० — महत्त्वं चैव दीर्घत्वं त्र्यणुकाद्येषु कल्पितम् ॥
तस्माच्च सदृशं कार्यं तत्कार्येषूपजायते ॥
यथा तथैव ह्रस्वत्वात्पारिमाण्डल्यतोऽपि हि ॥
जायेत सदृशं कार्यं परिमाणं समत्वतः ॥

**एवशब्दस्य त्र्यणुकाद्येष्वेवेति कल्पितमेवेति वा संबन्धः।** त्र्यणुकाद्येषु **द्रव्येषु ।** तस्मात् **त्र्यणुकादौ कार्येऽन्त्यावयविव्यतिरिक्ते वर्तमानान्महत्त्वाद्दीर्घत्वात् । चशब्दो वाक्यार्थसमुच्चये ।** कार्यं **परिमाणम् ।** तत्कार्येषु **त्र्यणुकादिकार्येषु चतुरणुकादिषु । तथैवेत्येवशब्देन दृष्टान्त-दार्ष्टान्तिकवैषम्यशङ्कामपाकरोति ।** कार्ये **त्र्यणुके द्व्यणुके च** । समत्वतः **कार्यपरिमाणत्वादि-साम्यादिति हेतुवचनम् । हिशब्दो व्याप्तिद्योतकः ।**

**शे०** — ननु वैशेषिकमतनिरासार्थमेतदधिकरणमित्ययुक्तम् । तन्निरासस्य निष्प्रयोजनत्वेनास्य सादर्थ्यायोगात् । न च तदसामञ्जस्यज्ञापनमेव तन्निरासप्रयोजनमिति वाच्यम् । तज्ज्ञापनस्यापि प्रयोजनाभावात् । भावेऽपि सूत्रेष्वसामञ्जस्ये हेतोरनुक्तत्वेन सूत्राणां तन्निरासकत्वासम्भवात् । तत-श्चाधिकरणस्य तदर्थत्वायोगात्तद्व्याख्यानपरोत्तरभाष्यानर्थक्यमित्यतः 'अतश्चायमविरुद्धः समन्वयः' इति वैशेषिकादिसमयस्यानुपादेयत्वे फलोपदर्शनपरोत्तरग्रन्थानुरोधेनासामञ्जस्योपपादनफलं तदुपपादकं हेतुं चोपर्येव दर्शयंस्तत्सिद्धेश्च विषयविशेषे उपपत्तिविरोधप्रतिपादनपरसूत्रसाध्यत्वेन सूत्राणामुपपत्तिविरुद्धत्वरूप-हेतुसमर्थनार्थत्वात् समयनिरासार्थत्वसिद्धेर्न तद्व्याख्यानपरोत्तरभाष्यानर्थक्यमित्यभिप्रेत्य कथमेतेषां सूत्राणां विषयविशेषे उपपत्तिविरोधोपदर्शकत्वमित्यतोऽस्य सूत्रस्य तावद्दर्शयन्नेव तद्व्याख्यानपरतया महत्त्वं चेत्यु-त्तरभाष्यं सङ्गमयति **न वैशेषिकादिमतविरोधेनेति ।** महत्त्वं चैवेत्येवकारस्य वैयर्थ्यविरुद्धार्थत्वा-भ्यां यथावस्थितान्वयायोगाद्भिन्नक्रमतया तत्सम्बन्धमाह **एवशब्दस्येति ।** अतिप्रसङ्गनिरासाय त्र्यणु-काद्येष्वित्याऽऽद्यशब्दसंग्राह्यतावच्छेदकं धर्ममाह **द्रव्येष्विति ।** आकाशादिकार्यस्य द्रव्यस्यैवाप्रसिद्ध्या तद्गतमहत्त्वदीर्घत्वयोराकाशादिकार्ये स्वसदृशपरिमाणानारम्भकत्वेन तस्मादित्यनेन त्र्यणुकादिरूपकार्याकार्य-द्रव्यमात्रगतपूर्ववाक्यप्रकृतमहत्त्वदीर्घत्वपरामर्शायोगात्, घटपटादिरूपान्त्यावयविनिष्ठमहत्त्वदीर्घत्वयोरपि तत्कार्ये स्वसदृशपरिमाणानारम्भकत्वेन त्र्यणुकादिकार्यद्रव्यमात्रमहत्त्वदीर्घत्वयोरपि परामर्शायोगाद्योग्यतया अनन्त्यावयविकार्यद्रव्यमात्रनिष्ठमहत्त्वादेरेवायं परामर्श इति भावेन त्र्यणुकादौ कार्येऽन्त्यावयविव्यतिरिक्ते वर्तमानादित्युक्तम् ॥ **वाक्यार्थसमुच्चय इति** पूर्वार्धरूपवाक्यार्थेन सहैतद्वाक्यार्थस्य समुच्चय इत्यर्थः । वक्ष्य-माणरीत्या पूर्ववाक्योक्तबाधकपरिहारसमुचितस्यैवैतद्वाक्योक्तानुमानस्य विवक्षितार्थसाधकत्वादिति भावः । यद्वा तस्मादित्यस्योभयपरामर्शकत्वेन न केवलं 'महत्त्वात्सदृशं कार्यं तत्कार्येषूपजायते किन्तु दीर्घत्वाच्च सदृशं कार्यं तत्कार्येषूपजायत' इति वाक्यार्थसमुच्चय इत्यर्थः ॥ **त्र्यणुकादिकार्येषु चतुरणुकादिष्विति ।** इदं च चतुर्भिर्द्व्यणुकैरारब्धं चतुरणुकमिति मतमनाश्रित्य चतुर्भिस्त्र्यणुकैरारब्धं चतुरणुकमित्येव च मतमाश्रित्योक्त-मिति ध्येयम् । 'ह्रस्वत्वात्पारिमाण्डल्यतोऽपि हि' इति 'ह्रस्वपरिमण्डलाभ्यामि'ति सौत्रक्रमानुसारि-

नुसारिपूर्वभाष्यक्रमानुरोधेन कार्यं इत्येतत्त्र्यणुकादित्वेन व्याख्याति **त्र्यणुके द्व्यणुके चेति** । भाष्ये समत्वत इत्यस्य सूत्राव्याख्यानरूपत्वाद्वैयर्थ्यमाशङ्क्य सूत्रेऽपेक्षितहेतुसूचनार्थत्वान्न तदिति भावेन तत्सूचितहेतुप्रदर्शनपूर्वकं हेतुकथनपरतया तद्योजयति **समत्वत इत्यादिना** ॥ **व्याप्तिद्योतक इति** । तथा चापेक्षितानुमानाङ्गव्याप्तिद्योतनार्थत्वान्न भाष्ये हिशब्दो व्यर्थ इति भावः ।

**प०**— मूलं सङ्गमयितुमाह **न वैशेषिकादीति** । त्र्यणुकाद्येष्वित्यत्र गुणाद्यग्रहणाय विशेष्य-माह **त्र्यणुकाद्येषु द्रव्येष्विति** । तस्मादित्यनुवादः । दीर्घत्वादित्यन्तं व्याख्या ॥ **चशब्द इति** । तस्माच्चेति चशब्दो यथाश्रुत एव सन् पूर्वोत्तरार्धरूपवाक्यद्वयोक्तार्थद्वयसमुच्चय इत्यर्थः । यद्वा जायत इत्यनन्तरं इति च कल्पितं यथेति पूर्वार्धोक्तिनोत्तरार्धोक्तार्थसमुच्चय इत्यर्थः । महत्वान्महत्वं दीर्घत्वाच्च दीर्घत्वं यथा जायत इति वाक्यद्वयार्थसमुच्चय इत्येके । कार्यमित्यस्य विशेष्यमाह **कार्यं परिमाण-मिति** । कार्ये इत्यनुवादः । त्र्यणुके द्व्यणुके चेति व्याख्या ॥ **व्याप्तिद्योतक इति** । वक्ष्यमाण-प्रयोगेष्विति भावः ।

**या०**— **वाक्यार्थसमुच्चय इति** । पूर्वार्धरूपवाक्यार्थेन सहैतद्वाक्यार्थस्य समुच्चय इत्यर्थः । वक्ष्यमाणरीत्या पूर्ववाक्योक्तबाधपरिहारसमुच्चितस्यैवैतद्वाक्योक्तानुमानस्य विवक्षितसाधकत्वादिति भावः । यद्वा तस्मादित्यस्योभयपरामर्शकत्वेन महत्त्वात्सदृशं कार्यमित्याद्येकं वाक्यम् । दीर्घत्वात्सदृशं कार्यमित्या-द्यपरम्, एवं च न केवलं महत्त्वात्सदृशं कार्यं तत्कार्येषु जायते किन्तु दीर्घत्वाच्च सदृशं कार्यं तत्कार्येषु जायत इति वाक्यार्थसमुच्चय इत्यर्थः ।

**सु०— यद्यपि महदादिशब्दा द्रव्यवचनास्तथाऽपि भावप्रधानत्वात्परिमाणवाचिनो(पि) भवन्तीत्याशयेन महत्त्वमित्याद्युक्तम् । सूत्रकृतश्च भावप्राधान्येनोक्तिः कणादसूत्रानुसारेण । 'कारणबहुत्वात्कारणमहत्त्वात्प्रचयविशेषाच्च महदि'त्यादि हि तत् । महद्दीर्घवदिति षष्ठ्यर्थे वतिः । विभक्तिविपरिणामेन वा सकाशादित्यध्याहारेण वा तस्मादित्युक्तम् । अत्रैतावदादौ वक्तव्यम् । यथा तस्मात्कार्येषु कार्यमुपजायते तथैव ह्रस्वत्वात्पारिमाण्डल्यतोऽपि कार्ये परिमाणं जायेत समत्वतो हीति ।**

**शे०**— सूत्रे महदादिशब्दप्रयोगात्तदनुरोधेन भाष्येऽपि महदित्याद्येव प्रयोक्तव्यत्वान्महत्त्वमि-त्याद्युक्तिः सूत्राननुसारिणीत्याशंक्य सूत्रभाष्ययोरपि संवादं दर्शयति **यद्यपीत्यादिना** ॥ **द्रव्यवचन इति** । अत्रैव प्रयोगप्रत्ययप्राचुर्यादिति भावः । **भावप्रधानत्वात्** लक्षणया भावप्रतिपादकत्वात् ।

**परिमाणवाचिनः** परिमाणपराः । तत्रापि प्रयोगप्रत्यययोः सत्त्वादिति भावः । नन्वेवं स्वायत्तन्यायविरोध इत्याशंक्य स्वोक्तेः कणादिसूत्रानुसारित्वज्ञापनार्थत्वेन प्रयोजनसद्भावान्न स इत्याशयेनाह **सूत्रकृतश्चेति** । किं तत्कणादसूत्रं यदनुसारित्वं सूत्रकृदुक्तेरित्यतस्तदुदाहरति **कारणबहुत्वादिति** । यद्यपि 'कारणबहुत्वाच्चे'त्येव कणादिसूत्रपाठः तथाऽपि 'चकारो महत्त्वप्रचयौ समुच्चिनोति । महत्परिमाणमुत्पद्यत इति सूत्रशेष' इत्यस्य सूत्रस्य भाष्यकृता व्याख्यातत्वात्तदनुवादोऽयं कृत इति ध्येयम् । 'इत्यादि हि तदि'त्यादिपदेन 'महत्यनेकद्रव्यत्वाद्रूपाच्चोपलब्धिरि'ति पूर्वस्य, 'अतो विपरीतमणौ, अणुमहदिति तस्मिन्विशेषभावात् विशेषाभावाच्चे'त्याद्युत्तरस्य च कणादसूत्रस्य परिग्रहः । महत्त्वमित्यादेर्भाष्यस्य महदित्यादिसूत्रविसंवादं परिहृत्य सात सदृशमित्यादेर्भाष्यस्य महद्दीर्घवच्चेति सूत्रविसंवादमाशंक्य परिहरति **महद्दीर्घवदिति ॥ षष्ठ्यर्थे वतिरिति ।** अत्र यद्यपीति शेषः । 'तत्र तस्येवे'ति स्मरणादिति भावः ॥ ततश्च सूत्रानुसारेण तस्येति षष्ठीप्रयोग एव भाष्ये युक्त इति भावः । **विभक्तिविपरिणामेनेति** । अत्र तथाऽपि इति शेषः । यद्यपि तत्र तस्येवेति सूत्रस्य प्रायिकत्वेनाभियुक्तव्याख्यानमनुरुध्य प्रायिकतामेवाश्रित्य घटवदित्यादिप्रयोगोपपादनं स्वयमन्यत्र कृतम् । तथाऽप्यप्रायिकत्वं, घटवदित्यादिप्रयोगाणां च गौणतामेवाश्रित्य विभक्तिविपरिणामाद्याश्रयणमित्यवधेयम् । एवं पञ्चम्यर्थे षष्ठ्यङ्गीकारे सुब्विभक्तौ लक्षणा भवतीति षष्ठ्यर्थतामेवाश्रित्यानन्वयपरिहाराय योग्यमपेक्षितं पूरयति **सकाशादित्यध्याहारेण चेति** ।

प० - ननु सूत्रे महदित्याद्युक्त्या द्रव्यप्रतीतेः कथं महत्त्वमित्यादिना परिमाणपरत्वेन व्याख्यानमित्यत आह **यद्यपीति** । सूत्र इति योज्यम् ॥ **इत्यादि हि तदिति** । कणादसूत्रमित्यर्थः । कारणबहुत्वाच्च महदित्येव कणादसूत्रपाठेपि तदीयव्याख्योक्तरीत्या चशब्दसमुच्चयप्रदर्शनेन कारणमहत्वात् प्रचयविशेषाच्च महदित्यनुवादः कृत इत्यदोषः । एवमनुवादोपि वक्ष्यमाणप्रयोगेषु दृष्टान्तसौकर्याय व्याप्तिलाभाय च । अत एवाग्रे व्यणुकपरिमाणवदित्याद्युक्तिः । 'न च यत्र केवलेने'त्यादिना व्यभिचारोद्धारश्च । आदिपदेनातोविपरीतपरिमाणाविन्युत्तरसूत्रं ग्राह्यं ॥ **षष्ठ्यर्थे वतिरिति** । 'तत्र तस्येवे'ति सूत्रे सप्तम्यन्तात् षष्ठ्यंताच्चेवार्थे वतिप्रत्ययोक्तेरिह च सूत्रे महद्दीर्घयोरिवेत्यर्थे महद्दीर्घवदिति प्रयोग इत्यर्थः। तर्हि मूले तस्य च सदृशद्रव्यमिति वक्तव्ये तस्मादिति कथमुक्तमित्यत आह **विभक्तीति** । सूत्रे महद्दीर्घयोरिवेति अभिप्रेतायाः षष्ठ्याः महद्दीर्घाभ्यामिति पञ्चमीत्वेन विपरिणामेनेत्यर्थः ॥ **सकाशादिति** । महतो दीर्घस्य च सकाशादित्यध्याहारेणेत्यर्थः । वक्ष्यमाणप्रयोगोपयुक्तं निष्कृष्य दर्शयति **अत्रेति** ।

या० — **कारणबहुत्वादिति** । यद्यपि 'कारणबहुत्वाच्चे'त्येव कणादसूत्रपाठस्तथाऽपि तदर्थानुवादोऽयमिति ज्ञातव्यम् । 'चकारो महत्त्वप्रचयौ समुच्चिनोति । महत्परिमाणमुत्पद्यत इति सूत्रशेष' इति तदीयैः कारणबहुत्वाच्चेति सूत्रस्य व्याख्यातत्वादिति ध्येयम् । इत्यादि हि तदित्यत्र आदिपदेनातो विपरीतमणावित्युत्तरसूत्रसंग्रहः ।

श्री० — **भावेति** । महत्त्वदीर्घत्व(त्वेति)भावस्य प्राधान्यमभिप्रेत्य सूत्रे महदित्याद्युक्तिरित्यर्थः । **तत्** सूत्रम् । तत्र महदित्युक्तेरिति भावः ॥ **वतिरिति** । 'तत्र तस्येवे'त्युक्तत्वेन सप्तम्यर्थस्य प्रकृतेऽयोगेन षष्ठ्यर्थ इत्युक्तम् । तर्हि महत्त्वस्य दीर्घत्वस्येत्यर्थासङ्गतिरित्यत आह **विभक्तीति** । षष्ठीविभक्तिं विपरिणाम्य पञ्चम्यर्थो वाच्य इत्यर्थः । अथ षष्ठ्येवास्तु न तस्या विपरिणामस्तर्हि कथमित्यत आह **सकाशादिति** ।

च० **भावप्रधानत्वात्** । प्रकृतिजन्यबोधीयप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नोऽभावस्तद्विशेष्यकशाब्दधीजनकत्वात् । **षष्ठ्यर्थे वतिरिति** । तत्र तस्यैवेति षष्ठ्यन्तादिवार्थे वतेर्विधानादिति भावः ॥ **विभक्तीति** । सूत्रावयवतयाभिप्रेतषष्ठ्याः पञ्चमीत्वेन विपरिणामादिर्थः ।

सु० — एतदुक्तं भवति । त्र्यणुकद्व्यणुकपरिमाणं स्वाश्रयाश्रयसमवायिकारणपरिमाणजम् कार्यपरिमाणत्वाच्चतुरणुकादिपरिमाणवत् , द्व्यणुकपरमाणुपरिमाणं परिमाणारम्भकं द्रव्यसमवायिकारणपरिमाणत्वात् , त्र्यणुकपरिमाणवत् त्र्यणुकद्व्यणुके वा परिमाणारभ्यपरिमाणवती कार्यद्रव्यत्वाच्चतुरणुकादिवत् , द्व्यणुकपरमाणू परिमाणासमवायिकारणपरिमाणवन्तौ द्रव्यसमवायिकारणत्वात् त्र्यणुकवदिति । न च विवक्षितार्थासिद्धिः, अन्यथाऽनुपपत्त्या तत्सिद्धेः । न च यत्र केवलेन प्रचयेन परिमाणमारभ्यते तत्र व्यभिचार इति वाच्यम् , तस्यापि पक्षतुल्यत्वात् । न चैवं सति बाधः , प्रचयकारणताया अनिवारणात् । न चोभयकारणत्वकल्पने गौरवदोषः , द्वयोरपि क्लृप्तशक्तित्वात् । द्व्यणुकपरिमाणं त्र्यणुकपरिमाणाजनकम् , परमाणुपरिमाणं च द्व्यणुकपरिमाणाजनकम् , परिमाणत्वात् पटपरिमाणवत् ; इत्यादिना सत्प्रतिपक्षतेति चेन्न, तत्समवायिकारणपरिमाणत्वाभावस्योपाधित्वात् , त्र्यणुकपरिमाणं चतुरणुकपरिमाणाजनकम् , परिमाणत्वात्पटपरिमाणवत् , इत्याद्याभाससमानयोगक्षेमत्वाच्च । परमाणुपरिमाणं परिमाणानारम्भकं नित्यपरिमाणत्वात् गगनपरिमाणवदित्यपि न; द्रव्यसमवायिकारणपरिमाणत्वाभावस्योपाधित्वात् । आप्यपरमाणुरूपं रूपानारम्भकं नित्यत्वात् गगनपरिमाणवत् , परमाणवो द्रव्यानारम्भका नित्यत्वाद्गगनवत् , इत्याद्याभासतुल्यत्वाच्च ।

**शे०** — 'यथा तथैव ह्रस्वत्वादि'त्य देरेव प्रयोगप्रकारत्वासम्भवात्तत्सूचकत्वाभिप्रायेऽपि सूचित-प्रयोगस्यैकत्वप्रतीतेस्तदनेकत्वलाभाय तत्तात्पर्यमाह **एतदुक्तं भवतीति** ।' तत्र प्रथमतः कार्यपक्षकं प्रयोगमाह **त्र्यणुकद्व्यणुकपरिमाणमिति** । अत्र त्र्यणुकपरिमाणपक्षकमेकं द्व्यणुकपरिमाणपक्षकं चापरमित्यनुमानद्वयमभिमतम् । कारणपक्षकं प्रयोगमाह **द्व्यणुकपरमाणुपरिमाणमिति** । अत्रापि द्व्यणुकपरिमाणपक्षकमेकं परमाणुपरिमाणपक्षकं चान्यदित्यनुमानद्वयमभिमतम् । कार्याश्रयपक्षकं प्रयोगमाह **त्र्यणुकद्व्यणुके इति** । अत्रापि त्र्यणुकपक्षकमेकं (परमाणुपरिमाण)द्व्यणुकपक्षकं चान्यदित्यनुमानद्वयमभिमतम् । कारणाश्रयपक्षकमपि प्रयोगमाह **द्व्यणुकपरमाणू इति** । अत्रापि द्व्यणुकपक्षकमेकं परमाणुपक्षकं चान्यदित्यनुमानद्वयमभिमतम् । अत्र त्र्यणुकद्व्यणुकपरिमाणद्वयस्य द्व्यणुकपरमाणुपरिमाणद्वयस्य त्र्यणुकद्व्यणुकयोर्द्व्यणुकपरमाण्वोश्चैकीकृत्य, पक्षतया निर्देशस्त्वन्यतरपक्षप्रयोगेऽन्यतरस्य पक्षतुल्यत्वोपदर्शनेन तत्र व्यभिचारनिरासार्थ इति ध्येयम् । सम्मतं चैतद्ग्रन्थकारस्य, उत्तरत्र द्व्यणुकपरिमाणं त्र्यणुकपरिमाणाजनकं परमाणुपरिमाणं च द्व्यणुकपरिमाणाजनकं परिमाणत्वाद्घटपरिमाणवदिति तत्तत्परिमाणपक्षकप्रतिपक्षमुद्भाव्य तन्निरासात् । अन्यथा द्व्यणुकपरमाणुपरिमाणे इत्युभयपक्षीकारेणैव तदुद्भावनप्रसङ्गादिति द्रष्टव्यम् । इतीत्यस्यैतच्छब्देन सम्बन्धः ॥ **न च विवक्षितार्थेति** । त्र्यणुकद्व्यणुकपरिमाणं स्वाश्रयसमवायिकारणपरिमाणजमिति प्रथमानुमानस्य त्र्यणुकादिपरिमाणस्य द्व्यणुकादिपरिमाणजन्यत्वसाधकतया प्रकृतोपयोगेऽपि, द्व्यणुकपरमाणुपरिमाणं परिमाणारम्भकमिति द्वितीये, द्व्यणुकपरमाणुपरिमाणयोः परिमाणारम्भकत्वमात्रसिद्धावपि त्र्यणुकद्व्यणुकपरिमाणासमवायिकारणत्वस्यासिद्ध्या, त्र्यणुकद्व्यणुके परिमाणारभ्यपरिमाणवतीति तृतीये त्र्यणुकद्व्यणुकयोर्यत्किञ्चित्परिमाणारब्धपरिमाणवत्त्वमात्रसिद्धावपि तयोर्द्व्यणुकपरमाणुपरिमाणारभ्यत्वस्यासिद्ध्या, द्व्यणुकपरमाणू असमवायिकारणपरिमाणवन्ताविति चतुर्थे द्व्यणुकपरमाणुपरिमाणस्य परिमाणान्तरासमवायिकारणत्वसिद्धावपि त्र्यणुकद्व्यणुकपरिमाणासमवायिकारणत्वस्यासिद्ध्या विवक्षितार्थासिद्धिरिति न च वाच्यमित्यर्थः ॥ **अन्यथाऽनुपपत्तेरिति** । द्वितीयचतुर्थानुमानयोर्द्व्यणुकपरमाणुपरिमाणयोरसमवायिकारणत्वस्य सिद्धिः अन्यथा तत्पर्यवसानानुपपत्तेस्त्र्यणुकपरिमाणासमवायिकारणतामादायैव पर्यवस्यति । तृतीयानुमानेऽपि त्र्यणुकद्व्यणुकपरिमाणयोः परिमाणारभ्यत्वसिद्धिरन्यथा तत्पर्यवसानानुपपत्तेर्द्व्यणुकपरिमाणारभ्यत्वमादायैव पर्यवस्यतीत्यर्थः ॥ **न च यत्रेति** । तूलपिण्डादावित्यर्थः । प्रचयो नाम प्रशिथिलावयवसंयोगः । तथा चाद्यस्य हेतोस्तूलपिण्डपरिमाणे द्वितीयस्य तूलपिण्डावयवपरिमाणे तृतीयस्य तूलपिण्डे चतुर्थस्य तूलपिण्डावयवे व्यभिचार इति च (न वाच्यमि,नेत्यर्थः ॥ **तस्यापीति** । उक्तस्य तत्तदनुमानव्यभिचारोदाहरणस्य तत्तदनुमानपक्षतुल्यत्वादित्यर्थः । लाघवतर्कसहकृतप्रचयकारणताग्राहकप्रमाणेन प्रचयमात्रकारणताग्राहिणा परिमाणजन्यत्वा-

भावबोधनात्तत्साधने बाध इत्याशयेन गूढाभिसन्धिः शङ्कते **न चैवमिति** । जन्यपरिमाणत्वावच्छिन्ने कारणपरिमाणजन्यत्वस्य व्याप्तिबलेनावधारणात्परिमाणोत्कर्षस्य प्रचयाभावेऽसम्भवेन प्रचयस्यापि तत्कारणत्वावधारणादुभयोरपि कारणत्वस्य प्रामाणिकतया तद्बाधितत्वाद्बाधवतर्कानुत्थानेन तत्सहकारासिद्धेः प्रचयकारणताग्राहकस्य तत्कारणतामात्रग्राहकतया तन्मात्रकारणत्वाग्राहकत्वादबाध इत्याशयेन गूढाभिसन्धिरे-वोत्तरमाह **प्रचयकारणताया इति** । पूर्ववादी स्वाशयमुद्घाटयति **न चेति** । सिद्धान्त्यपि तमु-द्घाटयति **द्व(उभ)योरपीति ॥ तत्समवायिकारणेति** । यद्यपि प्रतिपक्षे नोपाधिर्दोषः । उपाधेः प्रतिपक्षोन्नायकतया दूषणत्वात्प्रतिपक्षस्य च पूर्वमेव सिद्धत्वात् । अन्यथा तदुद्भावनवैयर्थ्यप्रसङ्गात् । तथाऽपि स्वपक्षसाधनार्थमेकं परसाधनप्रतिरोधार्थमपरमिति सार्थक्यादन्यायो ह्येकेन बहूनां प्रतिरोधः । उक्तं च 'द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावत' इति । सिद्धं चैतल्लोकशास्त्रयोः । उक्तं हि 'प्रमाणतोऽप्रतिपत्ताविति' न्यायभाष्यव्याख्यानावसरे न्यायवार्तिकेऽपि 'प्रमाणेन प्रमाणाभ्यां प्रमाणैरिति सम्प्लवोऽवगम्यत' इति । न्यायवार्तिकटीकायां च 'दार्ढ्यार्थकपरस्परसंवादरूपसम्प्लवावसर' इतीत्यव-धेयम् । यद्वाऽङ्गीकारवादोऽयमत एवात्रापरितोषाद्दोषान्तरमाह **त्र्यणुकपरिमाणमित्यादिना ॥ नित्य-परिमाणत्वादिति** । त्र्यणुकादिपरिमाणे व्यभिचारनिरासार्थं पूर्वभागः । ननु परिमाणत्वादिति व्यर्थम् । नित्यत्वमात्रस्यैवाव्यभिचारादिति चेन्न । कालादौ व्यभिचारनिरासार्थत्वात् । न च परिमाणानारम्भकत्वं परिमाणासमवायिकारणत्वाभावः । तथा च कालादेरप्यसमवायिकारणत्वाभावेन साध्यसत्त्वादेव न तत्र व्यभिचार इति वाच्यम् । परिमाणकारणत्वाभावमात्रस्यैव साध्यत्वेन तत्सम्भवात् । न चैवं प्रतिपक्षत्वा-नुपपत्तिः । सामान्याभावस्य विशेषविरोधित्वेन तदुपपत्तेः । यद्वा पूर्वानुमानेऽपि कारणतामात्रस्यैव साध्यत्वेन तदुपपत्तिः । न चैवं विवक्षिता समवायिकारणत्वासिद्धिः । परिमाणकारणत्वसिद्धौ तस्यान्या-दृशस्यासम्भवेन परिशेषेणासमवायिकारणत्वस्यैव सिद्धिसम्भवादित्याशय इत्याहुः ।

वस्तुतस्तु परिमाणानारम्भकत्वं परिमाणासमवायिकारणत्वाभाव एव विवक्षितः । न चैवं का-लादावप्युक्तसाध्यसत्त्वेन तत्राव्यभिचाराद्विशेष्यवैयर्थ्यमिति वाच्यम् । न ह्यत्र नित्यत्वे सति परिमाण-त्वादिति हेत्वर्थः । येन वैयर्थ्यं चोद्येत, किन्नाम नित्यस्य परिमाणत्वादित्येव । न चात्र वैयर्थ्यप्र-सक्तिरस्ति । यथोक्तविशेषणविशेष्यभावे तदप्रसरात् । अन्यथा धूमप्रागभावादित्यादावपि धूममात्रस्यैव हेतुत्वोपपत्तेः प्रागभावादित्यस्यानर्थक्यप्रसङ्गादिति ध्येयम् । अङ्गीकृत्य प्रतिपक्षेऽप्युपाधिसद्भावं तमाह **द्रव्येति** । तदनङ्गीकारेणापि दोषान्तरमाह **आप्येति** । रूपानारम्भकत्वं चात्र रूपासमवायिकारण-त्वाभावः, न तु रूपकारणत्वाभावः इति न कालादौ व्यभिचार इति ध्येयम् ॥ **द्रव्यानारम्भक इति** । द्रव्यसमवायिकारणत्वाभाव एव साध्य इति कालादौ न व्यभिचारो नित्यत्वस्येति भावः ।

स० — **विवक्षितार्थेति** । तथा च द्व्यणुकपरिमाणस्य परमाणुपरिमाणजन्यत्वासिद्ध्या अर्थान्तरत्वमिति भावः । **अन्यथाऽनुपपत्त्येति** । परमाणौ परिमाणान्तराभावात् तत्परिमाणजन्यत्वे सिद्धे पारिमाण्डल्यजन्यत्वस्यैव सिद्धत्वेन नार्थान्तरत्वमिति भावः । **नित्यपरिमाणत्वादिति** । यथोक्तविशेषण-विशेष्यभावे दोषाभावान्न परिमाणत्वादित्यस्य वैयर्थ्यमिति भावः ।

प० — कथं प्रयोग इत्यत आह **एतदुक्तमिति** । **न च विवक्षितार्थासिद्धिरिति** । द्वितीये चतुर्थे च प्रयोगे द्व्यणुकपरमाणुपरिमाणयोः परिमाणासमवायिकारणत्वमात्रसिद्धावपि विवक्षितस्य त्र्यणुकद्व्यणुकपरिमाणासमवायिकारणत्वस्यासिद्धिः । तथा तृतीयेपि प्रयोगे त्र्यणुकद्व्यणुकपरिमाणयोः परिमाणारभ्यत्वमात्रसिद्धावपि विवक्षितस्य तयोः द्व्यणुकपरमाणुपरिमाणारभ्यत्वस्यासिद्धिर्न चेत्यर्थः ॥ **अन्यथानुपपत्त्येति** । द्वितीयचतुर्थप्रयोगयोः त्र्यणुकद्व्यणुकपरिमाणासमवायिकारणत्वेन विना तृतीये च प्रयोगे द्व्यणुकपरमाणुपरिमाणारभ्यत्वेन विना चानुपपत्त्या साध्यपर्यवसानायोगेन विवक्षितार्थसिद्धेरित्यर्थः ॥ **न च यत्रेति** । तूलपिंडादौ प्रचयेन प्रशिथिलावयवसंयोगरूपेणेत्यर्थः ॥ **व्यभिचार इति** । तूलपिंडादिपरिमाणे तदवयवपरिमाणे तूलपिंडादिद्रव्ये तदवयवे च यथायोगं व्यभिचारः प्रागुक्तहेतूनां ध्येयः ॥ **नचैवमिति** । तत्रापि परिमाणकारणत्वेंगीकृते सति प्रचयकारणकत्वविषयप्रत्यक्षबाध इत्यर्थः । **द्वयोरपीति** । परिमाणस्य हेतुत्वमन्यत्र प्रमितं परिमाणोत्कर्षे च प्रचयहेतुकत्वं च वाच्यमित्युभयहेतुकत्वमावश्यकमेवेति भावः ।

या० — **न च विवक्षितार्थासिद्धिरिति** । प्रथमानुमानातिरिक्तानुमानेष्विति शेषः । द्वितीयचतुर्थानुमानयोर्द्व्यणुकपरमाणुपरिमाणयोः असमवायिकारणत्वमात्रसिद्धावपि त्र्यणुकद्व्यणुकपरिमाणासमवायिकारणत्वस्य विवक्षितार्थस्यासिद्धिस्तथा तृतीयानुमाने त्र्यणुकद्व्यणुकपरिमाणयोः परिमाणारभ्यत्वमात्रसिद्धावपि तयोर्द्व्यणुकपरमाणुपरिमाणारभ्यत्वस्य विवक्षितार्थस्यासिद्धिरिति भावः ॥ **अन्यथाऽनुपपत्त्येति** । द्वितीयचतुर्थानुमानयोर्द्व्यणुकपरमाणुपरिमाणयोरसमवायिकारणत्वसिद्धिः, त्र्यणुकद्व्यणुकपरिमाणासमवायिकारणतामादायैव पर्यवस्यति । अन्यथा तत्पर्यवसानानुपपत्तेः । तथा तृतीयानुमाने त्र्यणुकद्व्यणुपरिमाणयोः परिमाणारभ्यत्वसिद्धिः तयोर्द्व्यणुकपरमाणुपरिमाणारभ्यत्वमादायैव पर्यवस्यति । अन्यथा तत्पर्यवसानानुपपत्तेरित्यर्थः ॥ **न च यत्र केवलेनेति** । । तूलपिण्डादावित्यर्थः । प्रचयो नाम प्रशिथिलावयवसंयोगः । तथा चाद्यस्य हेतोस्तूलपिण्डपरिमाणे, द्वितीयस्य तूलपिण्डावयवपरिमाणे, तृतीयस्य तूलपिण्डे,

चतुर्थस्य तूलपिण्डावयवे व्यभिचार इत्यर्थः ॥ **तस्यापीति**। उक्तस्य तत्तदनुमानव्यभिचारोदाहरणस्यापि तत्तदनुमाने पक्षतुल्यत्वादित्यर्थः ॥ **द्वयोरपीति**। जन्यपरिमाणत्वावच्छिन्ने कारणपरिमाणजन्यत्वस्य व्याप्तिबलेन अवधारणात्। परिमाणोत्कर्षस्य च प्रचयाभावेऽसंभवात्। द्वयोरपि तूलपिण्डपरिमाणे कारणत्वं क्लृप्तमित्यर्थः।

**श्री०** — अन्त्यावयविपरिमाणे व्यभिचारवारणाय **द्रव्यसमवायिकारणेत्युक्तम्**। षष्ठ्यन्तमेतत् ॥ **एवं सतीति**। तूलपिण्डपरिमाणस्यापि पक्षतुल्यतामुक्त्वा परिमाणासमवायिकारणकत्वे साध्ये तूलपिण्डपरिमाणस्य प्रचयासमवायिकारणताया एव सिद्धत्वेन बाधः स्यादित्यर्थः ॥ **तत्समवायिकारणपरिमाणत्वाभावस्येति**। तत्समवायिकारणस्य यत्परिमाणं तत्त्वाभावस्योपाधित्वादित्यर्थः। तथा च त्र्यणुकसमवायिकारणपरिमाणत्वाभाव आद्यानुमाने उपाधिः। द्व्यणुकसमवायिकारणपरिमाणत्वाभावो द्वितीयानुमाने उपाधिरिति भावः।

**च०** — **न च विवक्षितार्थासिद्धिरिति**। द्वितीयाद्यनुमानेष्विति पूरणीयम्। त्र्यणुकद्व्यणुकपरिमाणत्वावच्छिन्नोद्देश्यिका द्व्यणुकपरमाणुपरिमाणजन्यत्वरूपसमीहितसाध्यविधेयिकानुमितिर्यथाऽऽद्यानुमानादुदेति न तथा द्व्यणुकपरमाणुपरिमाणादिधर्मिकसमीहितपरिमाणारम्भकत्वविधेयिकानुमितिः द्वितीयादित्रिकादुदेतीति भावः। **अन्यथानुपपत्त्येति**। त्र्यणुकद्व्यणुकपरिमाणासमवायिकारणतामादायैव द्वितीयतुरीययोस्तृतीये च द्व्यणुकपरमाणुपरिमाणारभ्यत्वमादायैव तत्तत्पक्षेषु साध्यं पर्यवस्यति। अन्यथा तत्पर्यवसानानुपपत्तेरित्यर्थः। **न च यत्रेति**। प्रशिथिलावयवसंयोगः प्रचयः। तूलपिण्डपरिमाणे आद्यहेतोः, द्वितीयस्य तदवयवपरिमाणे, तृतीयस्य तूलपिण्डे, तुरीयस्य तदवयवे व्यभिचार इत्यर्थः। **तस्यापि** तत्तद्धेतूनां व्यभिचारनिरूपकाधिकरणस्यापि। **तुल्यत्वादिति**। न हि पक्षे पक्षतुल्ये वा **व्यभिचार** इत्यभियुक्तोक्तेरिति भावः। **द्वयोरपि** परिमाणप्रचययोरपि। **क्लृप्तशक्तित्वादिति**। व्याप्तिबलेन परिमाणस्यान्वयव्यतिरेकाभ्यां परिमाणोत्कर्षे प्रचयस्य च सामर्थ्यस्य क्लृप्तत्वादित्यर्थः।

**सु० — एतेन परमाणुद्व्यणुकपरिमाणे परिमाणानारम्भके अणुत्वान्मनःपरिमाणवदित्यपि परास्तम्। न चानणुत्वमुपाधिः। वक्ष्यमाणन्यायेन परिमाणावान्तरजातेरपाकरणात्। पक्षीकृताद्ध्रस्वत्वादव्यावृत्तेश्च।**

**शे०** — **एतेनेति**। द्रव्यसमवायिकारणपरिमाणत्वाभावस्यैवोपाधित्वेन परमाणवो न द्रव्यारम्भका अणुत्वान्मनोवदित्याभासतुल्यत्वेन चेत्यर्थः। द्व्यणुकपरिमाणं स्वाश्रयसमवायिकारणपरिमाणजं कार्य-

परिमाणत्वादिति । व्यणुकपरिमाणं परिमाणारम्भकं द्रव्यसमवायिकारणपरिमाणत्वादिति । परमाणुपरिमाणं परिमाणारंभकं द्रव्यसमवायिकारणपरिमाणत्वादिति । व्यणुकं परिमाणारम्भपरिमाणवत् कार्यद्रव्यत्वादिति । व्यणुकं परिमाणासमवायिकारणपरिमाणवत् द्रव्यसमवायिकारणत्वादिति । परमाणुः परिमाणासमवायिकारणपरिमाणवान्द्रव्यसमवायिकारणत्वादिति षट्सु प्रयोगेषूपाधिमाशङ्क्य निराकरोति **न चेति** । अत्र नाणुत्वमनणुत्वमिति व्युत्पत्त्याऽणुत्वभिन्नत्वम् । न अणु अनणु तस्य भावोऽनणुत्वम् अणुद्रव्यभिन्नत्वं चोपाधितयाऽभिप्रेतम् । तत्रोदाहृताद्यप्रयोगत्रयेऽणुत्वभिन्नत्वमुत्तरप्रयोगत्रये चाणुद्रव्यभिन्नत्वमित्यनुसन्धेयम् । तथा हि । स्वाश्रयसमवायिकारणपरिमाणजन्यत्वरूपसाध्यवति चतुरणुकपरिमाणेऽणुत्वभिन्नत्वसत्त्वेन साध्यव्यापकत्वात्कार्यपरिमाणत्वरूपसाधनवति व्यणुकपरिमाणे तस्याणुत्वरूपतयाऽणुत्वभिन्नत्वाभावेन साधनाव्यापकत्वात् । द्वितीयतृतीययोरपि परिमाणारम्भकत्वरूपसाध्यवति त्र्यणुकपरिमाणेऽणुत्वभिन्नत्वसद्भावेन साध्यव्यापकत्वाद्द्रव्यसमवायिकारणपरिमाणत्वरूपसाधनवतोश्च व्यणुकपरमाणुपरिमाणयोरणुत्वरूपतया तयोरणुत्वभिन्नत्वाभावेन साधनाव्यापकत्वाच्चाणुत्वभिन्नत्वस्योपाधित्वम् । चतुर्थेऽपि परिमाणारम्भपरिमाणवत्वरूपोक्तसाध्यवति चतुरणुकादावणुद्रव्यभिन्नत्वसत्त्वेन साध्यव्यापकत्वात् । कार्यद्रव्यत्वरूपहेतुमति व्यणुकेऽणुद्रव्यत्वात्तस्य अणुद्रव्यभिन्नत्वाभावेन साधनाव्यापकत्वात् । पञ्चमषष्ठयोश्च परिमाणासमवायिकारणपरिमाणत्त्वरूपसाध्यवति त्र्यणुके महद्द्रव्यत्वात्तस्याणुभिन्नत्वेन साध्यव्यापकत्वात् । द्रव्यसमवायिकारणत्वरूपसाधनवतोश्च व्यणुकपरमाण्वोरणुद्रव्यतया तयोस्तद्भिन्नत्वाभावेन साधनाव्यापकत्वाच्चाणुद्रव्यभिन्नत्वस्य उपाधित्वमिति द्रष्टव्यम् ॥ **वक्ष्यमाणन्यायेनेति** । यथा त्र्यणुकादिषु महत्त्वमेकजातीयमेवोत्कर्षापकर्षवत्परेणाङ्गीकृतं यथा वाऽणुत्वं परमाणुव्यणुकयोः एवं परिमाणमवान्तरजातिरहितमेव सर्वद्रव्येषूत्कर्षापकर्षवद्वर्तते । तथा चैकद्रव्ये वर्तमानं परिमाणं द्रव्यान्तरवर्त्युत्कृष्टपरिमाणापेक्षयाऽणुत्वमित्युच्यते । तदेव च द्रव्यान्तरवर्त्यपकृष्टपरिमाणापेक्षया महत्त्वमुच्यत इत्यादिवक्ष्यमाणन्यायेनेत्यर्थः ॥ **परिमाणावान्तरजातेरिति** । परिमाणत्वादिव्याप्याणुत्वत्वादिजातेरित्यर्थः । तथा च मन्मते चतुरणुकत्र्यणुकादिपरिमाणेऽप्यणुत्वरूपतया तस्य तद्भिन्नत्वाभावेन चतुरणुकादेरप्यणुद्रव्यतया तद्भिन्नत्वाभावेन साध्याव्यापकत्वात् । व्यणुकपरमाणुपरिमाणयोरप्यणुत्वभिन्नतया व्यणुकादेरप्यणुद्रव्यभिन्नतया साधनव्यापकत्वाच्च नानणुत्वमुपाधिरिति भावः । अङ्गीकृत्यापि परिमाणावान्तरजातिभेदमुपाधिं दूषयति **पक्षीकृतादिति** । व्यणुकपरिमाणपक्षकप्रयोगद्वयेऽणुत्वह्रस्वत्वरूपपरिमाणद्वयस्य पक्षतयाऽणुत्वभिन्नत्वस्याणुत्वरूपपरिमाणेऽसत्त्वेऽपि ह्रस्वत्वरूपपरिमाणस्याणुत्वभिन्नतया तत्रोपाधिव्यतिरेकाभावात् । परमाणावपि ह्रस्वत्वमस्तीति त्वदेकदेशिमते परमाणुपरिमाणपक्षकतृतीयानुमानेऽपि ह्रस्वत्वरूपतत्परिमाणेऽणुत्वभिन्नत्वरूपोपाधेः सत्त्वेन तत्रोपाधिव्यतिरेकाभावेन साधनव्यापकत्वान्नाणुत्वभिन्नत्वमुपाधिरिति भावः ।

**स०— एतेनेति** । आभासतुल्यत्वेनेत्यर्थः । **वक्ष्यमाणन्यायेनेति** । तथा च पक्षे अनणुत्वसद्भावेन साधनव्यापकत्वात् दृष्टान्ते च अणुत्वसद्भावेन अनणुत्वाभावेन साध्याव्यापकत्वमिति भावः ।

**प०— एतेनेति** । आभाससाम्यादिकथनेनेत्यर्थः । प्रागुक्तप्रयोगेषु उपाधिमप्याशङ्क्य निराह **नचानणुत्वमिति** । अणुपरिमाणान्यत्वं अणुद्रव्यभिन्नत्वं चेत्यर्थः । तेन परिमाणपक्षकद्रव्यपक्षकप्रयोगेषु चतुर्ष्वप्युपाधिशङ्केति ध्येयम् ॥ **वक्ष्यमाणेति** । 'महत्वं च परमाणावणावपि । कथं त्र्यणुकपूर्वेषु नाणुत्वमपी'त्यादौ वक्ष्यमाणेत्यर्थः । तथा च त्र्यणुकचतुरणुकादावप्यणुपरिमाणस्य सत्त्वेन साध्याव्यापकत्वमिति भावः । साधनव्यापकत्वं चाह **पक्षीकृतादिति** ॥

**या०— एतेनेति** । परमाणवो द्रव्यानारम्भका अणुत्वान्मनोवदित्याभासतुल्यत्वेनेत्यर्थः ॥ **न चानणुत्वमिति** । प्रथमद्वितीयहेत्वोः न अणुत्वमनणुत्वम् इत्यणुत्वभिन्नत्वरूपमनणुत्वं, तृतीयचतुर्थयोस्तु नाण्वनणु तस्य भावोऽनणुत्वमित्यणुद्रव्यभिन्नत्वरूपं, तदुपाधिनेत्यर्थः ॥ **परिमाणावान्तरेति** । तथा चास्मन्मते त्र्यणुकचतुरणुकादावप्यणुत्वसत्त्वेन तत्परिमाणे, तत्र च साध्याव्यापकतेति भावः ॥ **ह्रस्वत्वादेरिति** । द्व्यणुकनिष्ठह्रस्वत्वपरिमाणस्याणुत्वभिन्नत्वादुक्तोपाधिः पक्षैकदेशवृत्तिरित्यर्थः । आदिपदेन त्वन्मते त्र्यणुकगतस्य महत्त्वस्यापि पक्षीकृतस्याणुत्वभिन्नत्वादुक्तोपाधेस्तस्मादव्यावृत्तिः । त्र्यणुकस्यापि पक्षीकृतस्य महत्त्वेनानणुत्वादुक्तोपाधेस्तस्मादव्यावृत्तिश्च ग्राह्या । तथा च सर्वत्रोपाधिव्यतिरेकेण सत्प्रतिपक्षकरणे भागासिद्धिरिति भावः ॥

**श्री०— परिमाणावान्तरजातेरपाकरणादिति** । 'महत्त्वं चैव दीर्घत्वं' 'न महत्त्वं च' 'अणुत्वं च महत्त्वं चे'त्यादिना ग्रन्थेनेत्यर्थः । अयं भावः । पाचकत्वपाठकत्वादिवत्परस्परपरिहारेण विद्यमानयोरेकत्र समावेशरूपसाङ्कर्यरूपबाधकशून्या हि जातिः । यदि ह्यणुत्वादिकं परिमाणावान्तरजातिः परमाणुद्व्यणुकत्र्यणुकादिद्रव्यमात्रवृत्तिरसङ्कीर्णेति स्यात्तर्ह्येवास्माकं विरोधि स्यान्न चैवं, किन्नाम, परिमाणं सर्वत्रैकजातीयमेव । अणुत्ववत्येव पदार्थेषु स्वापकृष्टवस्त्वपेक्षया महत्त्वस्य दीर्घत्वस्य चाङ्गीकारेणाणुत्वत्वादीनां चतुर्णामप्येकत्र समावेशाङ्गीकारात् । तथा च दृष्टान्ते त्र्यणुकपरिमाणादौ साध्याव्यापकतेति भावः । साधनव्यापकत्वं चाह **पक्षीकृतादिति** । द्व्यणुकपरिमाणादित्यर्थः ॥

**च०— एतेन** आभासतुल्यताव्युत्पादनेन । **न चानणुत्वमिति** । अणुपरिमाणान्यत्वमणुपरिमाणोपेतद्रव्यभिन्नत्वं च तन्त्रावृत्त्याद्याश्रयणेनार्थः । तेनैतदुक्तं भवतीत्यादिना प्रदर्शितानुमानचतुष्टयेपीयमुपाधिशङ्केति मन्तव्यम् । **वक्ष्यमाणेति** । तथा च साध्याव्यापकतेति भावः ।

**सु०** — ननु च त्र्यणुकादिपरिमाणं चतुरणुकादिपरिमाणं च सजातीयमिति युक्तस्तत्र कार्यकरणभावः । द्व्यणुकत्र्यणुकपरिमाणयोस्तु विजातीयत्वात्कथं तथात्वमित्यतो दृष्टान्तदार्ष्टान्तिकयोः सदृशमित्युक्तम् । यथा त्र्यणुकादिपरिमाणाच्चतुरणुकादौ सजातीयं परिमाणमुत्पद्यते । तथा द्व्यणुकपरमाणुपरिमाणादपि त्र्यणुादौ सजातीयपरिमाणोत्पादस्यैव सिसाधयिषितत्वान्न दोष इत्यर्थः ।

**शे०** — ननु कार्यकरणभावापन्नपरिमाणानां सदृशमिति सादृश्यवर्णनमनर्थकमित्याशङ्क्य वैधर्म्येण दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिशङ्कापरिहारार्थत्वान्न तदिति भावेन तच्छङ्कापरिहारकतया तद्योजयितुं वैषम्यप्रदर्शनेन दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिमाशङ्कते **ननु चेति** । परमाणुगतेन अणुत्वेन द्व्यणुके ह्रस्वत्वस्य, द्व्यणुकगतेन ह्रस्वत्वेन त्र्यणुके महत्त्वस्योत्पत्तिः सिद्धान्त्यभिमतेति भावेनेयं शङ्का । अत एव यथेत्यादिना सिद्धान्त्याशयवर्णनमुपपन्नमिति ध्येयम् । द्व्यणुकत्र्यणुकपरिमाणयोरित्यत्र द्व्यणुकपदं परमाणोरप्युपलक्षणम् । अन्यथा परमाणुद्व्यणुकपरिमाणयोरिव द्व्यणुकत्र्यणुकपरिमाणयोरपि वैजात्येऽपि कार्यकारणभावोपपत्तेः शङ्काया निर्दलत्वप्रसङ्गात् । अत एवाशयवर्णनदशायां द्व्यणुकपरमाणुपरिमाणादपि त्र्यणुकादौ सजातीयपरिमाणोत्पादस्यैवेत्यादिना परमाणोरपि द्व्यणुकसमकक्षतयोपादानमिति मन्तव्यम् ।

---

**सु०** — ननु च त्र्यणुकादौ महत्त्वदीर्घत्वे द्व्यणुकादौ त्वणुत्वह्रस्वत्वे प्रमाणसिद्धे । तत्कथं साजात्यसाधने बाधो न भवेदित्यत उक्तं महत्त्वं चेति । कल्पनैवैषा वैशेषिकाणां न तु परिमाणावान्तरजातिभेदे प्रमाणमस्ति । किन्नाम परिमाणमेकजातीयमेवोत्कर्षापकर्षवदिति भावः । अनेन वैरूप्यस्यासिद्धिरुक्ता वेदितव्या ।

**शे०** — तथाऽपि 'महत्त्वं चैव दीर्घत्वमि'त्यादिभाष्यखण्डवैयर्थ्यमेव । न च त्र्यणुकादौ महत्त्वादेः कल्पितत्वप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वादित्यतः सजातीयपरिमाणोत्पादनसाधने बाधकपरिहारार्थत्वान्न तदिति भावेन बाधकशङ्कापरिहारकतया तद्योजयितुं तच्छङ्कामुत्थापयति **ननु चेति** ॥ **एकजातीयमेवेति** । त्र्यणुकादौ महत्त्ववत्परमाणुद्व्यणुकयोरणुत्ववच्चेति भावः । **उत्कर्षवत्** द्रव्यान्तरवर्त्यपकृष्टपरिमाणापेक्षयोत्कर्षवत् । **उपकर्षवत्** द्रव्यान्तरवर्त्युत्कृष्टपरिमाणापेक्षयाऽपकर्षवदित्यर्थः ॥ **अनेनेति** । सर्वद्रव्यवर्तिपरिमाणस्यैकजातीयत्ववर्णनेनेत्यर्थः ॥ **असिद्धिरिति** । तस्य विजातीयत्वरूपत्वादिति भावः ।

**श्री०** — **द्व्यणुकादावणुत्वह्रस्वत्वे इति** । आदिपदेन परमाणुग्रहणम् । परमाणावपि ह्रस्वत्वस्य कैश्चिदङ्गीकारादेवमुक्तम् । **अनेन** कल्पितमिति वचनेन ।

**सु०** — **ननु च द्व्यणुकादिपरिमाणस्य परमाण्वादिपरिमाणाजन्यत्वे बाधकाभावादप्रयोजकत्वमनुमानानाम् । द्व्यणुकादिपरिमाणस्य संख्ययैव जन्मसम्भवादित्याशङ्कां परिहरन् वाशब्दं व्याख्याति** न चेदिति ।

**अनु०** — न चेन्महत्त्वतश्चैव दीर्घत्वादपि नो भवेत् ।

**चापिशब्दावितरेतरयोगे । एवशब्दो नो भवेदेवेति सम्बध्यते ।**

**शे०** — ननु 'न चेन्महत्त्वतश्चे' त्युत्तरभाष्यमनर्थकम् । न च सौत्रवाशब्दव्याख्यानरूपत्वान्न तदिति वाच्यम् । महद्दीर्घवद्ध्रस्वपरिमण्डलाभ्यामित्येतावतैव पूर्णत्वेन सूत्रे वाशब्दस्याप्यनर्थकत्वादित्याशङ्क्य, उक्तानुमानेष्वप्रयोजकताशङ्कानिरासाय विपक्षे बाधककथनार्थत्वान्न तद्वैयर्थ्यमित्यभिप्रेत्य तद्व्याख्यानपरतयोत्तरग्रन्थं सङ्गमयितुमप्रयोजकताशङ्कामुत्थापयति **ननु चेति** । ननु च द्व्यणुकादिपरिमाणस्य परमाण्वादिपरिमाणाजन्यत्वे जन्यत्वमेव न स्यात् । भावकार्यस्य कारणत्रितयजन्यत्वनियमात् । अन्यस्य चासमवायिकारणस्याभावात् । तथा च जन्मानुपपत्तेरेव बाधकत्वान्नाप्रयोजकत्वमित्यतो भवेदेवं कथञ्चिद्यद्यसमवायिकारणमन्यत्किञ्चिन्न भवेत् । न चैतदस्ति । ईश्वरापेक्षाबुद्धिमपेक्ष्योत्पन्नपरमाण्वादिगतद्वित्वादिसंख्याया एव तत्रासमवायिकारणत्वसंभवादित्याह **द्व्यणुकादिपरिमाणस्य संख्ययैवेति** ॥ **वाशब्दं व्याख्यातीति** । अनेन वाशब्दः पक्षान्तरे । तच्च योग्यतावशाद्ध्रस्वत्वपारिमाण्डल्ययोरिव महत्त्वदीर्घत्वयोरप्यकारणत्वरूपमित्युक्तं भवति ॥ **इतरेतरयोग इति** । त्र्यणुकगतमहत्त्वमात्रस्य दीर्घत्वमात्रस्य वा चतुरणुकपरिमाणाजनकत्वात्परस्परसापेक्षस्यैव च तज्जनकत्वात्परस्परापेक्षाणामेकस्मिन्कार्ये सन्निपाते च देवदत्तयज्ञदत्ताभ्यां कृतमित्यादावितरेतरयोगदर्शनात् अत्रापि चापिशब्दावितरेतरयोग इत्यर्थः । यद्यप्यत्र त्र्यणुकगतमहत्त्वाच्चतुरणुकगतमहत्त्वं तद्गतदीर्घत्वाच्च तद्गतं दीर्घत्वं नो भवेदिति योजनया वाक्यद्वयार्थसमुच्चये चापिशब्दौ व्याख्यातुं शक्यौ । तथाऽप्येकवाक्यतालाघवाय चतुरणुकगतमहत्त्वदीर्घत्वयोश्चतुरणुकपरिमाणत्वेनैककार्यत्वविवक्षयेतरेतरयोगोक्तिः । अत एव 'चतुरणुकादिपरिमाणमिति शेषः' इत्येव वक्ष्यति । अन्यथा महत्त्वं दीर्घत्वं चेत्येवावक्ष्यदिति ध्येयम् । वैयर्थ्यविरुद्धार्थत्वनिरासायैवशब्दं भिन्नक्रमतया योजयति **एवशब्द इति** ।

**सु०** — **इतरेतरयोग इति** । महत्त्वस्य दीर्घत्वस्य च परस्परसापेक्षस्यैव कार्यजनकत्वेन परस्परसापेक्षाणामेवैकैकस्मिन् कार्ये सन्निपातादितरेतरयोग इति भावः ।

**प०** — **वाशब्दमिति** । महद्दीर्घवद्वेति सूत्रस्थ वाशब्दमित्यर्थः ।

**या० — इतरेतरयोग इति ।** यद्यपि महत्त्वात् चतुरणुकादिगतं महत्त्वं दीर्घत्वादपि तद्गतं दीर्घत्वं नो भवेदिति वाक्यद्वयकरणे तदर्थयोः परस्परसमुच्चये चापिशब्दौ व्याख्यातुं शक्यौ, तथाऽप्येकवाक्यतालकेघवाय चतुरणुकादिगतं परिमाणद्वयमिह चतुरणुकादिपरिमाणत्वेनैकमेव कार्यं विवक्षितम् । अत एव चतुरणुकादिपरिमाणमिति शेष इति वक्ष्यति । तत्र च न कारणगतस्य महत्त्वमात्रस्य दीर्घत्वमात्रस्य वा जनकत्वं, किन्तु सहितयोरेव, साहित्यप्रतियोगिनोश्चैकक्रियासम्बन्धे इतरेतरयोग एव विहित इतीतरेतरयोग एव व्याख्याताविति ज्ञातव्यम् ।

**सु० — इदमिह वक्तव्यम् । द्व्यणुकादिपरिमाणेऽसमवायिकारणलक्षणमस्ति न वेति । आद्येऽसमवायिकारणलक्षणसद्भावेऽपि त्र्यणुकादिपरिमाणं द्व्यणुकादिपरिमाणजं न चेद्भवेत्तदा त्र्यणुकादिगतान्महत्त्वतो दीर्घत्वाच्च नो भवेदेव, चतुरणुकादिपरिमाणमिति शेषः । इदमुक्तं भवति । यदि समवायिकारणप्रत्यासन्नत्वादिसद्भावेऽपि नासमवायिकारणत्वं तदेदमतिव्यापकत्वादलक्षणं स्यात् । तथा च न तथाभूतस्यापि महत्त्वादेरसमवायिकारणत्वं स्यादिति । द्वितीये किं समवायिकारणप्रत्यासत्तिर्नास्ति उत सामर्थ्यावधारणम् । नाद्यः । द्व्यणुकादिपरिमाणस्य त्र्यणुकादिपरिमाणसमवायिकारणसमवायिकारणे द्व्यणुकादौ समवेतत्वस्य प्रमितत्वात् । समवायिकारणसमवेतत्वाभावान्न चेत् द्व्यणुकादिपरिमाणात्त्र्यणुकादिपरिमाणस्योत्पादस्तदा त्र्यणुकादिगताभ्यां महत्त्वदीर्घत्वाभ्यां चतुरणुकादिपरिमाणमपि नो भवेत् तस्यापि समवायिकारणसमवेतत्वाभावात् । न द्वितीयः । अनन्यथासिद्धनियतपूर्वभावित्वेन हि सामर्थ्यमवधारणीयम् । तच्चास्ति द्व्यणुकादिपरिमाणे । एवमपि न चेत्ततस्त्र्यणुकादिपरिमाणादिजन्म, तदोक्तप्रसङ्ग एव ।**

**शे० —** ननु तर्काङ्गभूतव्याप्तिविरहात्तर्काभासोऽयम् । न च विशेषव्याप्त्यभावेऽप्यविशेषरूपसामान्यव्याप्तिसद्भावान्न तथेति वाच्यम् । तल्लक्षणभावाभावाभ्यां विशेषेण तदसिद्धेरित्याशङ्कां परिहरन्नेवापेक्षितं पूरयति **इदमित्यादिना ।** नन्वत्राप्रयोजकत्वमसमवायिकारणलक्षणसद्भावेऽपि द्व्यणुकादिगताणुत्वादेरकारणत्वस्य त्र्यणुकादिगतस्य महत्त्वादेश्च कारणत्वस्याप्युपपत्त्योक्तापाद्यापादकयोः प्रयोज्यप्रयोजकभाव प्रतिभासादित्याशङ्क्य नात्राणुत्वादेरसमवायिकारणत्वाभावः त्र्यणुकादिगतमहत्त्वादेरकारणत्वापादकतया साक्षादभिमतः किन्नाम परम्परयेत्यतो नाप्रयोजकत्वमित्यभिप्रेत्य परम्परयाऽप्रयोजकतामुपदर्शयति **इदमुक्तं भवतीति ॥ नासमवायिकारणत्वमिति ।** द्व्यणुकगताणुत्वादेरिति शेषः । तथा-

**भूतस्यापीति ।** समवायिकारणप्रत्यासन्नत्वादिविशिष्टस्यापीत्यर्थः । समवायिकारणप्रत्यासन्नत्वादेस्त-लक्षणत्वादिति भावः ।

आद्ये किं कारणैकार्थप्रत्यासत्तिर्नास्तीत्यभिमतं किंवा कार्यैकार्थप्रत्यासत्तिर्नास्तीति विकल्पद्वयं मनसि निधायाद्यं प्रत्याह **नाद्य इति ।** द्वितीयमुत्थाप्य तद्दूषणपरतया मूलं योजयति **समवायि-कारणेति ।** आद्यद्वितीयं प्रतिक्षिपति **नेति ।** कुतो नेत्यत एतत्पक्षदूषणपरतयाऽपीदमेव मूलमपेक्षितपूरणेन योजयति **अनन्यथेत्यादिना ॥ उक्तप्रसङ्ग एवेति ।** त्र्यणुकादिमहत्वादेरनवधृतसामर्थ्यत्वापाताद-कारणत्वं स्यादित्युक्तप्रसङ्ग एवेत्यर्थः ।

**स० — उक्तप्रसंग एवेति ।** त्र्यणुकादिगतपरिमाणस्यापि अनन्यथासिद्धनियतपूर्ववृत्तित्वेन सामर्थ्यानवधारणापातेन तस्यापि चतुरणुकादिपरिमाणजनकत्वं न स्यादित्युक्तप्रसंग एवेत्यर्थः ।

**प० —** ननु व्याप्त्यभावात्कथमेवमापादनमित्यत आह **इदमिह वक्तव्यमिति ।** समवायिका-रणसमवेतत्वं नेति प्रमितत्वादयुक्तमित्युक्तम् । अस्मिन्पक्षे बाधकोक्तिपरतयापि मूलं योजयति **समवायि-कारणसमवेतत्वाभावान्न चेदिति ॥ उक्तप्रसंग एवेति ।** महद्दीर्घत्वाभ्यामपि चतुरणुकपरिमाण-मपि नो भवेदित्युक्तप्रसंग इत्यर्थः ।

**श्री० — उक्तप्रसंग एवेति ।** त्र्यणुकादिगतमहत्त्वदीर्घत्वाभ्यां चतुरणुकादिपरिमाणमपि नो भवेदित्यर्थः ।

---

**सु० — सदृशपरिमाणस्यैव कारणत्वावधारणाद्विसदृशमेतदकारणमवर्जनीयसन्निधीति चेत् । किमिदं विसदृशत्वम् । किं जातिभेदः । उत वैलक्षण्यमात्रम् । नाद्यः । परमाणुद्व्यणु-कादिपरिमाणानामनुमानेनैकजातीयत्वस्यापि साधितत्वात् । द्वितीये वैलक्षण्यमात्रेण न चेत्कारणत्वं तदा महत्त्वादेरपि न स्यात् । न हि त्र्यणुकचतुरणुकमहत्त्वे न विलक्षणे । सोत्कर्षत्वस्यानुभवसिद्धत्वात् ।**

**शे० —** 'न चेदि'त्यादिवाक्यं प्रकारान्तरेणापि योजयितुं तन्निवर्त्यशङ्कामुत्थापयति **सदृशेति ।** तन्तुपटादाविति शेषः । ननु त्र्यणुकपरिमाणस्य चतुरणुकादिपरिमाणं प्रति सदृशपरिमाणत्वेन कारणत्वे गृहीत एव त्र्यणुकादिपरिमाणं प्रति द्व्यणुकादिपरिमाणस्यापि परिमाणत्वेन तज्ज्ञातव्यमित्येकं प्रति पूर्ववृत्तित्वे गृहीत एवापरं प्रति यस्य पूर्ववृत्तित्वं गृह्यते तत्तेनान्यथासिद्धमित्येवंरूपान्यथासिद्धिलक्षण-सद्भावात्कथं सामर्थ्यावधारणमिति शङ्कते **सदृशेती**त्यप्याहुः । वैसादृश्यस्य जातिविशेषत्वपक्षे न चेदि-त्यादिग्रन्थासङ्गतेस्तत्पक्षं बहिरेव प्रदूष्य वैलक्षण्यमात्रपक्षनिरासकतया मूलं योजयितुं विकल्पयति **किमि-**

**दमित्यादिना ॥ साधितत्वादिति ।** 'तस्माच्च सदृशं कार्यं तत्कार्येषूपजायत' इत्यादिनेति शेषः । अपेक्षितपूरणेन द्वितीयपक्षनिरासपरतया मूलमेव योजयति **द्वितीय इति ।**

**प०**— अनन्यथासिद्धत्वं नेति शंकते **सदृशेति ।**

**श्री०**— **अवर्जनीयेति ।** तथा चाकाशादीनां घटाद्युत्पत्ताविवावश्यकल्प्यमाननियतपूर्ववर्तिद्वित्वादिसंख्ययैव द्व्यणुकादौ परिमाणोत्पत्तौ सम्भवत्यां सत्यां तत्सहभूतमेतत्परमाण्वादिपरिमाणमन्यथासिद्धत्वादकारणमित्यर्थः ।

**सु०— अथ सङ्ख्यात एव जन्मसम्भवे परिमाणस्यापि कारणत्वं न कल्पनीयमिति चेत् । तथाऽप्युक्त एवातिप्रसङ्गः । चतुरणुकादिपरिमाणस्यापि सङ्ख्यात एव जननोपपत्तेः । यत्र तु नियामकविशेषस्तत्र परिमाणमप्याद्रियतामिति । यद्यपि परिणामवादिनां नायं पन्थाः । किन्तूपादानानि स्वगुणयुक्तानि तथाविधकार्यतामापद्यन्त इति । तथाऽपि परमतमाश्रित्य प(रेषामेवेदं)रस्येदं दूषणाभिधानमिति न काचित्क्षतिः ।**

**शे०**— पूर्वोक्तसंख्याकारणत्वनिरासपरतयाऽपीदमेव मूलं योजयति **अथेत्यादिना ।** अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतत्वमन्यथासिद्धत्वमित्युक्तरूपामन्यथासिद्धिं शङ्कते **अथेती-**त्यप्याहुः ॥ **उक्त एवेति ।** त्र्यणुकपरिमाणस्यापि कारणत्वं न कल्प्यमित्युक्त एवेत्यर्थः । **संख्यात एवेति ।** त्र्यणुकगतसंख्यात एवेत्यर्थः । ननु द्वितन्तुके पटे कारणबहुत्वाभावेन महत्त्वानुपपत्त्या तस्याप्रत्यक्षत्वप्रसङ्गात्तन्निरासाय तन्तुद्वयगतपरिमाणमेव तत्कारणतयाऽङ्गीकर्तव्यम् । तत्कथं कारणगतसंख्यात एव कार्यगतपरिमाणजन्मोक्तिरित्यतो न वयं सर्वथा परिमाणस्य कार्यगतपरिमाणं प्रति कारणत्वं व्यासेधामः, किन्तु द्व्यणुकत्र्यणुकपरिमाण इव चतुरणुकादिपरिमाणेऽपि कारणगतसंख्याया एव कारणत्वोपपत्तेर्न तत्र परिमाणस्य कारणत्वमिति कार्यविशेष एव तस्य कारणतां निराकुर्मः । तथा च यत्र द्वितन्तुके कारणसंख्या नास्ति तत्र कारणपरिमाणस्य कार्यपरिमाणजनकतायामङ्गीकृतायामपि नास्माकमनुपपत्तिरित्याशयेनाह **यत्र त्विति ।** परमाणुपरिमाणस्य द्व्यणुकपरिमाणं प्रति द्व्यणुकपरिमाणस्य च त्र्यणुकपरिमाणं प्रति कारणत्वव्युत्पादनस्य सिद्धान्तविरोधमाशङ्क्य परिहरति **यद्यपीति ।** कारणगुणस्य कार्यगुणकारणत्वं न स्वसिद्धान्त इत्यर्थः । **कस्तर्हि सिद्धान्त इति पृच्छति किन्त्विति ।** उत्तरमाह **उपादानानीति ॥ तथाविधेति ।** गुणयुक्तेत्यर्थः ।

**प०**— तथाप्युक्त एवातिप्रसंग इत्येतद्विधिमुखेन व्यनक्ति **चतुरणुकादीति ।** ननु स्थूलैः सूक्ष्मैश्च समसंख्यैस्तन्तुभिर्निर्मितयोः पटयोः परिमाणभेदो न स्यात् संख्याभेदस्य तत्राभावादित्यत

आह **यत्र त्विति** ॥ **परिमाणमपीति** । द्वयोरपि क्लृप्तश(प्रसक्ति क्तित्वादिति भावः । तस्माच्च सदृशमित्यादिश्लोकद्वयोक्तानि दृष्टांतदार्ष्टांतिकानिष्टापादनानि न परिणामवादे सिद्धांते युक्तानीत्यत आह **यद्यपीति** ॥ **॥ पारिमाण्डल्यादेर्हेतुत्वेऽनुमानानि ॥**

**या०**— ननु सर्वत्र कारणसंख्यात एव कार्यपरिमाणजन्माङ्गीकारे कथं वितस्तिपरिमिततन्तुत्रयारब्धपटपरिमाणापेक्षया हस्तचतुष्टयपरिमिततन्तुत्रयारब्धपटपरिमाणे दीर्घत्वविशेषः । कारणगतसंख्याया उभयत्राविशिष्टत्वादित्यत आह **यत्र तु नियामकेति** । एतादृशस्थले कारणगतपरिमाणमपि कारणमङ्गीक्रियतामित्यर्थः ।

**श्री०**— नन्वेवं संख्यात एव परिमाणोत्पत्तौ हस्तचतुष्टयवितस्तिचतुष्टयपरिमिततन्तुत्रयजन्ये पटे परिमाणभेदो न स्यात् । त्रित्वसंख्याया अविशिष्टत्वादित्यत आह **यत्र त्विति** ।

**सु०** — **एवं परमाणुपरिमाणाद्द्व्यणुकपरिमाणस्योत्पादः ततस्त्र्यणुकपरिमाणस्य जन्म तेषां चैकजातीयत्वमित्यनुमानेन साधितम् । तदसत् । प्रतितर्कपराहतत्वात् । तथा हि । किं परमाणुपरिमाणाद्द्व्यणुके द्व्यणुकपरिमाणाच्च त्र्यणुके सजातीयपरिमाणस्याणुत्वस्योत्पत्तिः साध्यते उत महत्त्वस्य अथ ह्रस्वत्वस्य यद्वा दीर्घत्वस्य । सर्वेषामपि पक्षाणां दुष्टत्वं प्रतिजानीते** सदृशस्य हीति ।

**अनु०** — सदृशस्य हि कार्यस्य नैव योगः कथञ्चन ॥

**योगो घटना ॥ कथञ्चन उक्तप्रकारेषु केनापि प्रकारेण ।**

**शे०** — सदृशस्येत्याद्युत्तरभाष्यानर्थक्यमाशङ्क्योक्तानुमाने प्रतितर्कपराहतिशङ्कोत्थापनपूर्वकं तत्परिहारप्रदर्शनार्थत्वान्न तदिति भावेन तत्परतयोत्तरग्रन्थं योजयितुं तर्कपराहतिशङ्काया निर्विषयतया निर्दलतां परिहर्तुं पूर्ववाक्यतात्पर्यार्थप्रदर्शनपूर्वकं तामुत्थापयति **एवमित्यादिना** । मूले सदृशस्येत्यनेनैव तदयोगकथनेन तर्कपराहतेरुक्तत्वादप्रत्यक्षत्वमेवेत्यंशस्य वैयर्थ्यमित्याशङ्क्यैकस्य प्रतिज्ञापरत्वात् अपरस्य च तत्रापेक्षितहेतुसमर्पकत्वान्नान्यतरवैयर्थ्यमित्यभिप्रेत्य वाक्यद्वयस्याप्यर्थं तावत् दर्शयति **सर्वेषामपीत्यादिना** । सर्वेषां पक्षाणां दुष्टत्वप्रतिज्ञाया मूलारूढतासिद्ध्यर्थं कथञ्चनेतिपदतात्पर्यमाह **कथञ्चनेति** ।

**प०** — कथञ्चनेत्यनुवादः । उक्तेत्यादि व्याख्या ।

**सु०** — **कुत इत्यतः प्रथमपक्षेऽनिष्टमाह** अप्रत्यक्षत्वमिति ।

**अनु०** — अप्रत्यक्षत्वमेव स्याद्यतः कार्येष्वणुत्वतः ॥

इति चेत्

यदि परमाणुपरिमाणादणुत्वेन सजातीयं द्व्यणुके, द्व्यणुकपरिमाणाच्च त्र्यणुके परिमाणमुत्पद्यते। तदा सर्वकार्येष्वणुत्वप्रसङ्गेनास्मदाद्यप्रत्यक्षत्वमेव स्यात्तस्माद्वेति। द्व्यणुकस्याप्रत्यक्षत्वमिष्टमेवेत्यतोऽवधारणम्। सर्वेषामपि कार्याणामप्रत्यक्षत्वमेव स्यात्। न तु (यस्य) कस्यचित्प्रत्यक्षत्वमिति। द्रव्यस्य ह्यस्मदादिप्रत्यक्षत्वं महत्त्वे सत्युद्भूतरूपस्पर्शवत्त्वेन व्याप्तम्। तथा च त्र्यणुकादीनामणुत्वे महत्त्वाभावादप्रत्यक्षत्वं स्यात्॥ एतेन तृतीयोऽपि परास्तः। त्र्यणुकादेरपि ह्रस्वत्वे महत्त्वाभावेनाप्रत्यक्षत्वप्रसङ्गस्य दुर्निवारत्वात्।

शे०— अप्रत्यक्षत्वमेवेत्युत्तरवाक्यस्य विकल्पितपक्षचतुष्टये दूषणसमर्पकत्वाभावादाद्यपक्षदूषणपरतया तद्योजयति प्रथमपक्षेऽनिष्टमाहेति। अपेक्षितं पूरयन्नाद्यपक्षदूषणपरतया मूलं व्याचष्टे यदीत्यादिना। मूलेऽप्रत्यक्षत्वमित्यनेन पूर्तेः अवधारणानर्थक्यमित्याशङ्क्येष्टापत्तिशङ्कापरिहारेण तर्कस्याना भासत्वोपपादनार्थत्वान्न तदिति भावेन तत्तात्पर्यमाह द्व्यणुकस्येति। अणुत्वेनाप्रत्यक्षत्वापादनस्याप्रयोजकतापरिहारायाह द्रव्यस्य हीति। बहिर्द्रव्यस्येत्यर्थः। अतो नात्मनोऽप्रत्यक्षत्वप्रसङ्ग इति ध्येयम्॥ अस्मदादिप्रत्यक्षत्वमिति। अस्मदादिलौकिकप्रत्यक्षत्वमित्यर्थः। तेन न सामान्यादिलक्षणादिजन्यास्मदादिप्रत्यक्षविषये गगनादौ व्यभिचार इति ध्येयम्।

महत्त्वे सतीति। अत्र चोद्भूतत्वं रूपस्पर्शयोरुभयोरपि विशेषणम्। द्रव्यस्य स्पार्शनत्वे उद्भूतस्पर्शवत्त्वमात्रस्यैव तन्त्रत्वे निदाघोष्मणोऽपि प्रत्यक्षत्वापत्त्या फूत्कार इव तद्गतसंख्यादीनां प्रत्यक्षत्वप्रसङ्गः। योग्यद्रव्यवृत्तित्वेन तेषां योग्यतया द्रव्यग्राहकसामग्रीग्राह्यत्वावधारणात्। नाप्युद्भूतरूपवत्त्वमात्रं तन्त्रं चंद्राद्युद्योतस्य नयनगतपित्तद्रव्यस्य च प्रत्यक्षत्वप्रसक्त्या तद्गतसंख्यादिग्रहप्रसङ्गात्। तदेवमेकैकस्य व्यभिचारादुभयमपि बहिरिन्द्रियजद्रव्यसाक्षात्कारे प्रयोजकमिति नवीनमतमनुसृत्येदमुक्तम्। संप्रदायमते उद्भूतरूपवत्त्वमात्रस्यैव तत्र तन्त्रत्वेन विशिष्टस्यातन्त्रत्वात्। अन्यथा चलति पक्षिकाण्डादौ पूर्वोत्तरदेशसंयोगविभागयोरप्रत्यक्षत्वप्रसङ्गात्। पूर्वोत्तरदेशयोः प्रभामण्डलत्वेनानुद्भूतस्पर्शतयाऽप्रत्यक्षत्वात्। तथा च चलतीति धीरपि तल्लिङ्गिका न स्यात्। न च पूर्वोत्तरदेशानुपलम्भोपलम्भाभ्यां संयोगविभागावनुमाय ताभ्यां गत्यनुमानमस्त्विति वाच्यम्। पूर्वोत्तरदेशयोरप्रत्यक्षत्वेन लिङ्गासिद्ध्या तदयोगादिति द्रष्टव्यम्॥ अत्र केचित्। सम्प्रदायमतमेव समीचीनम्। उद्भूतरूपवत्त्वमात्रस्य प्रयोजकतायां लाघवात्। न चैवं चन्द्रप्रभादौ सङ्ख्याद्युपलम्भापत्तिरिति वाच्यम्। पक्ष्यादौ संयोगादिप्रत्यक्षानुरोधेनोद्भूतरूपवत्त्वस्यैव प्रयोजकत्वस्य सिद्ध्या तत्र दोषस्य पृष्ठनिविष्टवस्त्वादाविव कल्पनात्। विष्वग्विसारिसरूपसजातीयसंवलनस्यैव चान्ततो दोषत्वात्। न च सामान्यविशेषयोर्भिन्नप्रयोजकप्रयोज्यत्वनियमभङ्गापत्तिः एवं सति स्यादिति वाच्यम्। कार्यगुणं प्रति संयोगं प्रति च द्रव्यत्वेनैव प्रयोजकत्वदर्शनेन तन्नियमाभावात्। अपि

च भवतु सामान्यप्रयोजकता रूपवत्त्वस्य । चाक्षुषत्वप्रयोजकता तु रूपवत्त्वग्राहकसामग्रीसमावेशस्यैवेति न तन्नियमभङ्गः । अत एव सत्यपि सामान्यप्रयोजके रूपवत्त्वे नान्धकारे सुवर्णप्रत्ययः । न चालोकाभावात्तत्र तद्विलम्ब इति वाच्यम् । तस्यालोकाप्रकाश्यत्वात् । न च तत्र रूपग्राहकसामग्रीसमावेशः । तेजोरूपस्याभिभूतत्वात् । पार्थिवरूपस्यालोकसापेक्षत्वात् । अत एव स्वव्यञ्जकैकयोग्यगुणवत्त्वमपि न प्रयोजकम् । उद्भूतरूपापेक्षया गौरवादिति । तदपरे न क्षमन्ते । एवं तर्हि लाघवादुद्भूतस्पर्शवत्त्वमेव तत्र प्रयोजकमस्तु न च पक्ष्यादिसंयोगाग्रहप्रसङ्गः । आनुमानिकत्वोपपत्तेः । न च लिङ्गघटकपूर्वोत्तरदेशरूपप्रमानुपलम्भात्तदनुपपत्तिरिति वाच्यम् । रूपेण तदनुमानात् । अन्यथोद्भूतरूपवत्त्वस्य प्रयोजकत्वपक्षेऽपि फूत्कारसंयोगप्रतीतिप्रसङ्गात् । तत्रानुमानिकत्वे च वृथा पक्षपातः । तस्माद्विनिगमनाविरहादुभयं प्रयोजकमिति नवीनमतमेव समीचीनमिति तदेवोपन्यस्तमिह टीकायाम् ।

वस्तुतस्तु महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वमेवात्मेतरद्रव्यप्रत्यक्षतायां तन्त्रमिति सम्प्रदायमतमेव सम्यक् । तथा हि । विशिष्टस्य तत्र प्रयोजकत्वपक्षे महत्त्वसमानाधिकरणोद्भूतरूपस्पर्शवत्त्वस्य प्रत्येकं बहिरिन्द्रियजद्रव्यसाक्षात्कारे तद्द्रव्यचाक्षुषत्वे तत्स्पार्शनत्वे च प्रयोजकतायां गौरवम् । किञ्चैवं सौरालोकस्यापि प्रत्यक्षत्वे तद्गतसंख्यादेरपि प्रत्यक्षत्वापत्तिः । यदि चाश्रयप्रत्यक्षतायामपि तद्गतसंख्यादि न प्रत्यक्षं योग्यवृत्तिसंख्यादेर्योग्यत्वस्यौत्सर्गिकतया तन्नियमाभावादिति मन्यसे, तदा लाघवान्महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वमात्रमेव तथाऽस्तु । चन्द्रोद्योतादेः प्रत्यक्षत्वेऽपि तद्गतसंख्यादीनां तद्वदेव प्रत्यक्षत्वोपपत्तेः । विच्छिन्नविसारिसरूपसजातीयसंवलनदोषात्तदनुपलम्भ इति चेत् अत्रापि तुल्यम् । नयनरश्म्यावच्छिन्नपित्तद्रव्ययोश्च संख्यासंयोगपरिमाणादीनामपि प्रत्यक्षत्वान्न तत्प्रसङ्गो बाधकः । न चैवं महत्त्वसमानाधिकरणोद्भूतस्पर्शवत्त्वमात्रमेव बहिर्द्रव्यप्रत्यक्षताप्रयोजकमस्त्विति वाच्यम् । तथा सति इन्द्रनील प्रभाया अप्रत्यक्षत्वप्रसंगात् । न च महत्त्वसमानाधिकरणोद्भूतविशेषगुणवत्त्वमात्रमेव तत्र तन्त्रमस्तु लाघवात् । इन्द्रनीलप्रभाया अप्युक्तरूपवत्तया तदप्रत्यक्षत्वाप्रसङ्गाच्चेति वाच्यम् । तथा सत्याकाशस्याप्युक्तरूपविशिष्टत्वेन प्रत्यक्षत्वापातात् । न च जन्यमहत्त्वसमानाधिकरणोद्भूतविशेषगुणवत्त्वस्य तन्त्रत्वान्नोक्तप्रसङ्ग इति वाच्यम् । रसनाप्रवर्तिपित्तद्रव्यस्य तैजसोष्मणोऽप्यप्रत्यक्षत्वेन तदयोगात् । न च त्वत्पक्षेऽपि सुवर्णस्थतैजसभागानामपि महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वात्प्रत्यक्षत्वप्रसङ्ग इति वाच्यम् । तदीयशुक्लभास्वररूपस्योपष्टम्भकपीतरूपाभिभूततयाऽननुभवेऽपि तैजसभागानां सुवर्णत्वेन चाक्षुषतया तस्येष्टत्वात् । वस्तुतस्तु तदीयस्पर्शवत्तद्रूपस्याप्यनुद्भूतत्वान्न महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वं तस्येति न तत्प्रत्यक्षत्वापत्तिः । न चैवं सुवर्णस्याचाक्षुषत्वापत्तिः । अस्पार्शनत्वापत्तेः । अनुद्भूतस्पर्शवत्त्वेऽपि तुल्यतयोद्भूतस्पर्शवत्त्वस्यापि स्वीकर्तव्यत्वापातात् । न चैवं तदस्पार्शनमेव त्वचोपष्टम्भकमात्रस्यैव ग्रहा-

द्दिति वाच्यम् । तथा सत्येतदचाक्षुषमेव चक्षुषोपष्टम्भकमात्रस्यैव ग्रहादिति तुल्यत्वेनानुद्भूतरूपव-त्त्वाक्षतेरिति सङ्क्षेपः ।

ननूक्तव्याप्त्याऽमहत्त्वेनाप्रत्यक्षत्वापादनसमर्थनेऽपि अणुत्वेन तदापादनासमर्थनादप्रयोजकत्वतादवस्थ्यमित्यतो नात्राणुत्वेनाप्रत्यक्षत्वापादनं साक्षादभिमतं किन्त्वणुत्वस्य महत्त्वाभावाविनाभूतत्वात्तेन महत्त्वाभावमापाद्य तेनैव प्रत्यक्षत्वाभावापादनमिति नाप्रयोजकत्वमित्याशयेनाह **तथा चेति** ।

यदि परमाणुपरिमाणाद्ध्रस्वत्वेन सजातीयं द्व्यणुके द्व्यणुकपरिमाणाच्च त्र्यणुके परिमाणमुत्पद्येत तदा सर्वकार्येषु ह्रस्वत्वप्रसङ्गेनास्मदाद्यप्रत्यक्षत्वमेव स्यादतस्तन्नेति वाक्ययोजनां मनसि निधाय तृतीयपक्षनिरासपरतयाऽप्येतदेव मूलं (व्याख्याति) व्यापारयति **एतेनेति** । ननु ह्रस्वत्वेनाप्रत्यक्षत्वापादनमप्रयोजकताग्रस्तमित्यतो न साक्षादत्र तेनाप्रत्यक्षत्वापादनमभिप्रेतं येनोक्तदोषः स्यात्किन्नाम ह्रस्वत्वस्य महत्त्वाभावाविनाभूतत्वात्तेन महत्त्वाभावमापाद्य तेनैवाप्रत्यक्षत्वापादनमिति नाप्रयोजकत्वमित्याशयेनाह **त्र्यणुकादेरपीति** ।

प० — **द्रव्यस्य हीति** । बहिर्द्रव्यस्येत्यर्थः । **रूपस्पर्शवत्त्वेनेति** मतभेदेनोद्भूतरूपवत्त्वेनोद्भूतस्पर्शवत्त्वेन चेति ध्येयम् ।

या० — **द्रव्यस्येति** । बहिर्द्रव्यस्येत्यर्थः ॥ **उद्भूतरूपस्पर्शवत्त्वेनेति** । एतन्मते प्रदीपप्रभायाश्चान्द्रमहसो निदाघोष्मणो वायोश्चाप्रत्यक्षत्वमेवेति द्रष्टव्यम् ।

श्री० — **अस्मदादिप्रत्यक्षत्वं** चाक्षुषप्रत्यक्षत्वम् । अन्यथाऽऽत्मनोऽप्रत्यक्षतापत्तेरिति ध्येयम् । महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वं वा महत्त्वसमानाधिकरणोद्भूतस्पर्शवत्त्वं वेति नियामकद्वयं ज्ञेयम् । तप्तवारिस्थतेजसि उद्भूतरूपाभावेन स्पार्शनप्रत्यक्षत्वाभावापत्त्या स्पर्शवत्त्वमभिहितमिति ज्ञातव्यम् ।

**सु० — द्वितीये तु परमाणुद्व्यणुकयोरपि महत्त्वे प्रत्यक्षत्वापत्तिः । न चोद्भूतरूपस्पर्शयोरन्यतराभावेन तदभावः । त्र्यणुकादावपि तदनुद्भावापत्तेः । अत एव चतुर्थोऽपि परास्तः ॥ दीर्घत्वे महत्त्वस्यावर्जनीयत्वादिति पक्षद्वयदूषणं स्पष्टत्वान्नोक्तम् ॥ यद्यपीदं परिमाणावान्तरजातीनामणुत्वादीनामप्रामाणिकत्वोक्त्या परिहृतमेव । तथाऽपि तस्यैवार्थस्य स्फुटीकरणार्थं पुनराशङ्कितमित्यदोषः ।**

शे० — द्वितीयचतुर्थपक्षयोर्मूलेऽदूषणात्प्रसक्तां न्यूनतामनुक्तिनिमित्तोपन्यासेन परिहरन्स्वयं पक्षद्वयं दूषयति **द्वितीये त्वित्यादिना** । ननु महत्त्वेन प्रत्यक्षत्वापादनं न युक्तम् । तन्मात्रस्यातिप्रसङ्गेनाप्रयोजकत्वात् । किन्तु महत्त्वे सत्युद्भूतरूपस्पर्शान्यतरवत्त्वमेव । न च तत्परमाणुद्व्यणुकयोरस्तीति

कथं तदापादनमित्याशङ्क्य निषेधति **न चेति** ॥ **तदापत्तेरिति** । तथा सत्यारम्भके उद्भूतरूपस्पर्शयोरभावेन तदारब्धत्र्यणुकादावपि तयोरन्यतराभावप्रसङ्गेन विशिष्टप्रयोजकविरहादप्रत्यक्षत्वापत्तेरित्यर्थः । ततश्च त्र्यणुकादिप्रत्यक्षत्ववादिना तदारम्भकद्व्यणुकादौ तयोरन्यतराभावस्य वक्तुमशक्यत्वेन विशिष्टप्रयोजकसद्भावात्तत्प्रत्यक्षत्वप्रसङ्गोऽवर्जनीय इति भावः ॥ **अत एवेति** । परमाणुद्व्यणुकयोरपि प्रत्यक्षत्वापत्तेरेवेत्यर्थः । दीर्घत्वेऽप्यमहत्त्वादेवाप्रत्यक्षत्वोपपत्तेरप्रयोजकमेतदित्यतो न दीर्घत्वेन साक्षात्प्रत्यक्षत्वापादनमत्राभिमतं किन्नाम दीर्घत्वस्य महत्त्वाविनाभूतत्वात्तदापादनमुखेनैवेति नाप्रयोजकत्वमित्याशयेनाह **दीर्घत्व इति** । मूले 'सदृशस्य ही'त्यादिशङ्कानुत्थानमाशङ्क्य निराकरोति **यद्यपीत्यादिना** ॥ **परिमाणावान्तरेति** । परिमाणत्वावान्तरेत्यर्थः ॥ **अणुत्वादीनामिति** । अणुत्वत्वादीनामित्यर्थः ॥ **अप्रामाणिकत्वोक्त्येति** । 'महत्त्वं चैव दीर्घत्वं त्र्यणुकाद्येषु कल्पितम्'इत्यादिनेति शेषः ॥ **तस्यैवार्थस्येति** । महत्त्वं चैव दीर्घत्वमित्यादिनोक्तस्य परिमाणत्वावान्तरजातीनामणुत्वत्वादीनामप्रामाणिकत्वस्यैवेत्यर्थः ॥

**प०— तदभावापत्तेरिति** । अप्रत्यक्षत्वापत्तेरित्यर्थः । कारणीभूतपरमाणुद्व्यणुकयोरसत उद्भूतरूपादेस्तत्कार्यत्र्यणुकादावप्यभावादित्यर्थः ॥ **अत एवेति** । परमाणुद्व्यणुकयोः प्रत्यक्षत्वापातादेवेत्यर्थः । तत्प्रयोजनकमहत्त्वाभावात् कथमेतदित्यत आह **दीर्घत्व इति** ॥ **इति पक्षद्वयेति** । द्वितीयचतुर्थरूपपक्षद्वयदूषणमित्यर्थः । मूले आद्यपक्षदूषणमात्रप्रतीतावप्येतेन तृतीयोपि परास्त इत्युक्ततया तेन पक्षद्वयदूषणं लब्धमिति भावः ॥ **अप्रामाणिकत्वोक्त्येति** । पूर्वं मूले कल्पितशब्दैवशब्दयोः प्रयोगस्याप्रामणिकत्वोक्तिपरतया व्याख्यानात्ताभ्यां तासामप्रामाणिकत्वोक्त्येत्यर्थः ।

**या०— अत एव चतुर्थोपीति** । परमाणुद्व्यणुकयोरपि दीर्घत्वे प्रत्यक्षत्वापत्तेरेवेत्यर्थः । नुन तत्र प्रत्यक्षत्वप्रयोजकमहत्त्वाभावात्कथं प्रत्यक्षतापादनमित्यत आह **दीर्घत्वे(ने)ति** ॥ **अप्रामाणिकत्वोक्त्येति** । 'त्र्यणुकाद्येषु कल्पितमि'त्यत्रेति शेषः ।

**श्री० त्र्यणुकादावपीति** । रूपं स्पर्शो वोद्भूतो न भवतीत्युद्भूतपदोपरि भारः । रूपं स्पर्शो वा गृह्यत एव, विविच्य तु न गृह्यते सूक्ष्मत्वादिति प्राञ्च इत्येतन्मतानुसारेणेदम् । **अत एव गूढाभिसन्धित्वादेव** ।

**सु०— अत्र तावद्विकल्पितेषु महत्त्वपक्षं गृह्णाति** न महत्त्वं चेति ।

**अनु०—** न महत्त्वं च परमाणावणावपि ।

**चशब्दो दीर्घत्वसमुच्चयार्थः** । अणौ **द्व्यणुके** । **कथं न कथ्यत इति** वक्ष्यमाणमत्रापि **सम्बध्यते** ।

**यदुक्तं किमणुत्वस्योत्पत्तिः साध्यत इत्यादि, तत्र परमाणुमहत्त्वाद्‌व्यणुके महत्त्वम् । द्व्यणुकमहत्त्वात्त्र्यणुकमहत्त्वमुत्पद्यते इत्येष पक्षस्तावत्परिगृह्यत इत्यर्थः । यद्यप्यत्र परिमाणावान्तरजात्यभावान्नैवं विकल्प एव युज्यत इति वक्तव्यम्, तथाऽपि तदभावमेवोपपादयितुं गूढाभिसन्धिना पक्षपरिग्रहः कृत इति ज्ञातव्यम् ।**

**शे०— दीर्घत्वसमुच्चयार्थ इति ।** यद्यपि परमाण्वादिगतमहत्त्वस्य द्व्यणुकादिगतमहत्त्वजनकत्वमिति प्रथमपक्षस्यैवायं परिग्रह इति दीर्घत्वसमुच्चयार्थतया चशब्दव्याख्यानमयुक्तमित्याभाति । तथाऽपि कारणगतमहत्त्वदीर्घत्वयोरितरेतरसापेक्षयोरेव कार्यगतमहत्त्वजनकत्वं न तु नैरपेक्ष्येणेति ज्ञापयितुमेवं व्याख्यातम् । अत एव 'न चेन्महत्त्वतश्चैव दीर्घत्वादपि नो भवेदि'त्यत्र चापिशब्दावितरेतरयोगार्थतया व्याख्याताविव्यवधेयम् । अणावपि परमाणावित्यणावित्यस्य परमाणुविशेषणतायामानर्थक्यं द्व्यणुके महत्त्वस्यानुक्तिश्च भवतीत्यभिप्रेत्याणावित्येतदेव तत्परतया व्याचष्टे **अणाविति ।** साकाङ्क्षतया प्रसक्तामाभासतां परिहरति **कथं नेति ।** प्रथमपक्षपरिग्रहस्य मूलारूढतामुपदर्शयति **यदुक्तमित्यादिना ।** भाष्यकारीयपक्षपरिग्रहस्यानर्थक्यमाशङ्क्य परिहरति **यद्यप्यत्रेत्यादिना ।** तन्मूलकदूषणाभिधानं तु दूरापास्तमित्येवार्थः ॥ **तदभावमिति ।** परिमाणावान्तरजात्यभावमित्यर्थः ।

**प०— महत्त्वपक्षमिति ।** मूले महत्त्वपक्षस्य स्वशब्देनोपादानादेवमुक्तम् । वस्तुतस्तु महत्त्वदीर्घत्वपक्षावित्यर्थः ॥ **परमाणुमहत्त्वमिति ।** परमाणुदीर्घत्वादीत्यपि ध्येयम् ॥ **गूढाभिसन्धिनेति ।** 'अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षये'त्यत्र व्यक्तीकरिष्यमाणाभिप्रायं गूढं कृत्वा पूर्वार्धेन पक्षद्वयं उत्तरार्धेनाणुत्वरूपपक्षं च परिजग्राहेत्यर्थः ।

**सु०— अत एव पक्षान्तरमपि गृह्णाति** कथमिति ।

**अनु०—** कथं त्र्यणुकपूर्वेषु नाणुत्वमपि कथ्यते ॥

**परमाणोरणुत्वाद्‌द्व्यणुकेऽणुत्वं द्व्यणुकाणुत्वात्त्र्यणुकेऽणुत्वं ततश्च चतुरणुकेऽणुत्वमिति वा पक्षः परिगृह्यत इति भावः । नन्वेवं सति पक्षद्वयोक्तदोषापत्तिर्व्याघातश्चाधिकः । तथा हि । परमाणुमारभ्यान्त्यावयविपर्यन्तस्योद्भूत(रूप)स्पर्शवतो महत्त्वे सर्वस्यापि प्रत्यक्षत्वं स्यात् । अणुत्वे चाप्रत्यक्षत्वं स्यात् । न च परमाण्वादेः प्रत्यक्षत्वं त्र्यणुकादेरप्रत्यक्षत्वं युक्तम् । प्रत्यक्षत्वाप्रत्यक्षत्वे च परस्परव्याहते । यत्प्रत्यक्षं घटादि न तदप्रत्यक्षम् । यच्चाप्रत्यक्षं गगनादि न तत्प्रत्यक्षमिति तयोः परस्परपरिहारेणैव वृत्तेः ।**

शे० — **अत एवेति** । पक्षपरिग्रहस्य तदभावोपपादनार्थत्वादेवेत्यर्थः । इष्टापादनरूपत्वा-च्चर्कयोराभासत्वमित्यत आह **न च परमाण्वादेरिति** । एवं पक्षद्वयोक्तदोषापत्तिमुपपाद्य व्याघातमप्युपपादयति **प्रत्यक्षत्वाप्रत्यक्षत्वे चेति** ।

प० — उत्तरार्धमवतारयति **अत एवेति** । परिमाणावान्तरजात्यभावोपपादनार्थं प्रवृत्तत्वादेवेत्यर्थः । अन्यथा व्यवस्थितमेकमेव पक्षं परिगृह्णीयादिति भावः । अवतारितार्धस्य तात्पर्यमाह **परमाणोरिति** ॥ **पक्षद्वयोक्तदोषेति** । दीर्घत्वपक्षस्य चशब्देन समुच्चिततया कण्ठोक्तत्वाभावात्पूर्वार्धोत्तरार्धयो कण्ठोक्तं महत्त्वाणुत्वपक्षरूपपक्षात्रभिप्रेत्य पक्षद्वयेत्युक्तम् । इष्टापत्तिं निराह **न च परिमाण्वादेरिति** । व्याघातश्चेत्युक्तं व्यनक्ति **प्रत्यक्षत्वेति** ।

**सु० — किञ्च महत्त्वाणुत्वे परस्परविरुद्धे कथमेकैकत्राङ्गीकर्तुमुचिते । (तदाह) यथा आह सूत्रकारः** 'दृष्टान्ताच्चे'ति । **न च कालभेदेन विरोधपरिहारः, परिमाणस्य यावद्द्रव्यभावित्वादित्याशङ्क्य प्रत्यक्षत्वाप्रत्यक्षत्वप्रसङ्गयोस्तावदिष्टापादनत्वं वदन्व्याहतिं परिहरति** प्रत्यक्षत्वेति ।

अनु० — प्रत्यक्षत्वतदन्यत्वे पुरुषापेक्षयाऽखिले ॥

**परमाण्वादावखिलेऽपि द्रव्ये प्रत्यक्षत्वाप्रत्यक्षत्वे स्त एवेति नैतौ प्रसङ्गौ युक्तौ । न च व्याहतिः । पुरुषभेदापेक्षया व्यवस्थोपपत्तेरिति । एतच्चोत्तरत्र स्फुटीभविष्यति ।**

शे० — व्याघातं प्रकारान्तरेणापि दर्शयति **किञ्चेति** । कथं महत्त्वाणुत्वयोः परस्परविरुद्धत्वमित्यतः सूत्रकारेणैव तत्समर्थितमित्यभिप्रेत्योक्तार्थे कणादसूत्रसम्मतिमेवाह **यथाऽऽहेति** । सप्तमाध्यायस्य प्रथमाह्निक इति शेषः । तत्सूत्रं पठति **दृष्टान्ताच्चेतीति** । बिल्वापेक्षयाऽऽमलकमणु । आमलकापेक्षया कुवलमणु । कुवलापेक्षयाऽऽमलकं महत् । आमलकापेक्षया बिल्वं महदिति कुवलामलकबिल्वेष्वणुत्वमहत्त्वव्यवहारप्रत्यययोर्दर्शनादणुत्वमहत्त्वयोः सामानाधिकरण्यमित्याशङ्क्याणुमहदिति तस्मिन्विशेषाभावाद्विशेषाभावाच्चेति सूत्रेण कार्यस्याप्यणुत्वस्य द्व्यणुकमात्रवृत्तित्वान्नित्यस्य च तस्य परमाणुवृत्तित्वात्कुवलादौ तदभावेन महत्त्वासमानाधिकरणद्वित्वस्य कुवलाद्यवयवेष्वभावात् । अवयवबहुत्वमहत्त्वप्रचयानां च कुवलयाद्यवयवेषु भावात् । कुवलामलकबिल्वेषु महदिति व्यवहारो मुख्योऽणुत्वव्यवहारस्तु भाक्त इति दर्शयित्वैककालत्वादित्युत्तरसूत्रेणाणुव्यवहारस्य भाक्तत्वे हेतुमुक्त्वा महदिति व्यवहारस्य मुख्यत्वे हेतुकथनार्थमिदं सूत्रं दृष्टान्ताच्चेति । यथा, वस्तुगत्या शुक्लेष्वेव पटशङ्खस्फटिकादिषु

शुक्लशुक्लतरशुक्लतमव्यवहारस्तथा वस्तुगत्या महत्त्वेव कुवलामलकबिल्वेषु स्थूलस्थूलतरस्थूलतमव्यवहारोऽतोऽसौ मुख्य इति । अत्र च यथा पटस्य स्फटिकवदुत्कृष्टशुक्लत्वाभावेऽपि न नीलत्वादिकं किन्त्वपकृष्टशुक्लत्वमेव तथा कुवलादेर्बिल्ववदुत्कृष्टमहत्त्वाभावेऽपि नाणुत्वं किन्त्वपकृष्टमहत्त्वमेवातस्तद्व्यवहार एव तत्र मुख्य इत्यर्थसिद्ध्या महत्त्वाणुत्वयोः परस्परविरुद्धत्वेनैकत्रासमावेशलाभ इति द्रष्टव्यम् । अणुत्वं च महत्त्वं चेत्युत्तरवाक्येऽणुत्वमहत्त्वयोरपि विरोधपरिहारात्तावदित्युक्तम् । प्रसङ्गयोरिष्टापादनत्वस्य व्याहतिपरिहारस्य च मूलारूढतासिद्ध्यर्थमपेक्षितपूरणेन मूलं योजयति **परमाण्वादाविति** । ननु च प्रत्यक्षत्वाप्रत्यक्षत्वयोर्महत्त्वामहत्त्वादिमात्रनिमित्तकत्वेन परमाण्वादेरखिलस्य द्रव्यस्य महत्त्वाणुत्वयोरभ्युपगमे महत्त्वाणुत्वरूपप्रत्यक्षत्वाप्रत्यक्षत्वप्रयोजकधर्मद्वयाक्रान्ततया सर्वस्य कञ्चित्प्रतीव सर्वान्प्रत्यपि प्रत्यक्षत्वाप्रत्यक्षत्वयोरवर्जनीयत्वात्कञ्चित्प्रति प्रत्यक्षत्वं कञ्चिच्चाप्रत्यक्षत्वमित्येवंरूपेण पुरुषभेदापेक्षया प्रत्यक्षत्वाप्रत्यक्षत्वव्यवस्थाऽयोगात् तद्व्याहतिनादवस्थ्यमित्यतः प्रत्यक्षत्वादेर्महत्त्वादिमात्रनिमित्तकत्वे प्रत्यक्षत्वाप्रत्यक्षत्वविरोधस्योक्तरीत्या प्रसक्तावपि महत्त्ववतोऽपि अणुत्वस्य मन्दलोचनेन प्रत्यक्षतोऽनुपलम्भेन प्रत्यक्षत्वादेः तन्निमित्तकत्वाभावोपपादनपूर्वकं पुरुषाणामिन्द्रियपाटवापाटवनिमित्तत्वस्यैवाणुत्वं च महत्त्वं चेत्युत्तरवाक्यव्याख्यानावसरेऽत एवेत्यादिना ग्रन्थेन व्यवस्थापनात् तत्पाटवापाटवयोश्च सर्वपुरुषसाधारणत्वाभावात् यस्येन्द्रियपाटवं तं प्रति प्रत्यक्षत्वस्य यस्य च तदपाटवं तं प्रत्यप्रत्यक्षत्वस्य च संभवाद्युक्तैव पुरुषभेदापेक्षया प्रत्यक्षत्वाप्रत्यक्षत्वव्यवस्थेत्याह **एतच्चेति** ।

---

**स०** — ननु महत्त्वाणुत्वयोः सति विरुद्धत्वे एकत्रानङ्गीकार्यत्वम् । तदेव कुत इत्यत आह **यथाहेति** ॥ **दृष्टान्ताच्चेति** । महत्त्वाणुत्वे परस्परविरुद्धे गुणत्वव्याप्यपरिमाणत्वावान्तरजातिमत्वात् । यत् यत् गुणत्वव्याप्यावान्तरजातिमत् तत् परस्परविरुद्धम् । यथा गुणत्वव्याप्यरूपत्वरूपजात्यवान्तरनीलत्वपीतत्वरूपजातिमति नीलादौ परस्परविरुद्धत्वदर्शनादित्यर्थः । एतच्चोत्तरत्र टीकाकारा एव 'स्यादयं परमाण्वादिष्वखिलद्रव्येषु अणुत्वमहत्त्वाङ्गीकारे विरोधः । यदि रूपे नीलत्वपीतत्ववत् परिमाणे अणुत्वमहत्त्वादिजातियोगः स्यादि'त्यादिना स्पष्टयिष्यन्ति । तथा च गुणत्वव्याप्यावान्तरजातिमत्त्वेन महत्त्वाणुत्वयोः परस्परविरुद्धत्वसाधने गुणत्वव्याप्यनीलत्वादिलक्षणरूपत्वावान्तरजातिमतो नीलादिरूपलक्षणस्य दृष्टान्तस्य सत्त्वादिति सूत्रार्थ उक्तो भवति । **उत्तरत्रेति** । 'अणुत्वं च महत्त्वं च' इत्युत्तरत्र 'अत एव प्रत्यक्षत्वाप्रत्यक्षत्वविरोधोऽप्यपास्त' इत्यादिना स्फुटीभविष्यतीति भावः ।

**प०** - **महत्त्वाणुत्वे चेति** । यद्यप्यणुत्वमहत्त्वे चेति वाच्यम् । अजाद्यदन्तमिति स्मरणात् । तथापि मूलोक्तिक्रमानुरोधेनैवमुक्तं **यथा(तदा)हसूत्रकार इति** । अणुत्वमहत्वे विरुद्धे इत्येतदाह सूत्र-

कारः कणाद इत्यर्थः । तत्सूत्रं पठति **दृष्टान्ताच्चेतीति** । अणुत्वमहत्त्वयोरेकत्रासमावेशे सति कथं कुव(लयाम)लामलकबिल्वादिषु लौकिकानां उत्तरोत्तरापेक्षया पूर्वपूर्वस्याणुत्वव्यवहारः । पूर्वपूर्वापेक्षयोत्तरोत्तरस्य महत्त्वव्यवहार इत्याशङ्क्य तेषु महत्त्वमेव नाणुत्वं इति वक्तुं इदं सूत्रम् । यथा शुक्लेष्वपिपटशङ्खस्फटिकादिषु शुक्लशुक्लतरशुक्लतमव्यवहारेपि उत्तरोत्तरापेक्षया पूर्वपूर्वस्य शुक्लतमत्वादिव्यवहारो नेत्येतावता नीलत्वादिकं नास्ति किन्तु शुक्लत्वमेव तद्दृष्टान्तेन इहापि कुव(लयाम)लामलकबिल्वादिषु महत्तरमहत्तमत्वादिमहत्त्वोत्कर्षापेक्षयाऽणुत्वव्यवहारेऽप्यणुत्वं नास्त्येव । किन्तु महत्त्वमेवेति तद्व्यवहारो मुख्योऽणुत्वव्यवहारो गौणो न मुख्यः । परमाण्वादाविवाणुत्वपरिमाणासत्त्वादिति तदीयसूत्राभिप्रायः ।

**या० — सूत्रकारः** कणादः ॥ **दृष्टान्ताच्चेतीति** । एककालत्वादिति पूर्वसूत्रे हि कुवलामलकबिल्वेष्वणुत्वव्यवहारो भाक्त इत्यत्र हेतुरुक्तः इदानीं तत्र महत्त्वव्यवहारो मुख्य इत्यत्र हेतुकथनायेदं सूत्रं, तस्यायमर्थः । यथा वस्तुगत्या शुक्लेष्वेव पटशङ्खस्फटिकादिषु शुक्लशुक्लतरशुक्लतमव्यवहारस्तथा वस्तुगत्या महत्स्वेव कुवलामलकबिल्वेषु स्थूलस्थूलतरस्थूलतमव्यवहारोऽतोऽसौ मुख्य इति । अत्र यथा पटस्य स्फटिकवदुत्कृष्टशुक्लत्वाभावेऽपि न नीलत्वादिकं किन्त्वपकृष्टं शुक्लत्वमेव, तथा कुवलादेर्बिल्ववदुत्कृष्टमहत्त्वाभावेऽपि नाणुत्वं, किन्तु महत्त्वमेवातस्तद्व्यवहार एव तत्र मुख्य इत्यभिप्रायान्महत्त्वाणुत्वयोर्नैकत्र समावेश इति प्रकृतलाभ इति द्रष्टव्यम् । ननु यन्महत्त्वोपेतं त्र्यणुकादि तत्सर्वेषां प्रत्यक्षमेव यच्च तच्छून्यं परमाण्वादि न तत्कस्यापि प्रत्यक्षमतः कथमखिलेऽपि द्रव्ये पुरुषभेदापेक्षयाऽपि प्रत्यक्षत्वाप्रत्यक्षत्वे उपपद्येते इत्यत आह **एतच्चेति** । 'अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षये'त्युत्तरानुव्याख्यावसरे न प्रत्यक्षत्वाप्रत्यक्षत्वे महत्त्वादिमात्रनिमित्तके किन्तु पुरुषाणामिन्द्रियपाटवापाटवनिमित्तके । अन्यथा मन्दविलोचनेनापि त्र्यणुकमुपलभ्येतेत्यादिना स्फुटीभविष्यतीत्यर्थः ।

**सु० — इदानीमणुत्वमहत्त्वव्याघातं परिहरति** अणुत्वं चेति ।

अनु० — अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षया ॥

**अखिलेत्यनुवर्तते । अणुत्वं च महत्त्वं चाखिले वस्तुनि विद्येते । न तु विरुद्धे । कथम् । यतो वस्तुव्यपेक्षयाऽणुत्वं च महत्त्वं च तदेवोच्यत इति योजना ।**

**एतदुक्तं भवति । स्यादयं परमाण्वादिष्वखिलद्रव्येष्वणुत्वमहत्त्वाङ्गीकारे विरोधो यदि रूपे नीलत्वपीतत्ववत्परिमाणेऽणुत्वमहत्त्वादिजातियोगः स्यात् । न चैवम् । प्रमाणाभावात् । किन्तु यथा त्र्यणुकादिषु महत्त्वमेकजातीयमेव, उत्कर्षापकर्षवत्परेणाङ्गीकृतम् । यथा चाणुत्वं**

**परमाणुद्व्यणुकयोः । एवं परिमाणमवान्तरजातिरहितमेव सर्वद्रव्येषूत्कर्षापकर्षवद्वर्तते । तथा चैकत्र द्रव्ये वर्तमानं परिमाणं द्रव्यान्तरवर्त्युत्कृष्टपरिमाणापेक्षयाऽणुत्वमित्युच्यते । तदेव द्रव्यान्तवर्तिनोऽपकृष्टपरिमाणस्यापेक्षया महत्त्वमित्युच्यते । एवञ्च कुतो विरोधः । यथा खल्वेकमेव द्रव्यं द्रव्यभेदापेक्षया सन्निकृष्टं विप्रकृष्टं चोच्यमानं न विरोधास्पदम् । अत एव प्रत्यक्षत्वाप्रत्यक्षत्वविरोधोऽप्यपास्तः । तयोर्महत्त्वादिमात्रनिमित्तत्वे हि स स्यात् । न चैवम् । किन्तु पुरुषाणामिन्द्रियपाटवापाटवनिमित्तत्वमेव । अन्यथा मन्दविलोचनेनापि त्र्यणुकमुपलभ्येत । तर्हि गगनादेरपि कदाचित्प्रत्यक्षत्वं स्यादिति चेन्न । उद्भूतरूपाभावात् । द्व्यणुकानुपलम्भो गुणविशेषविपर्ययाधीनः आलोकेन्द्रियसन्निकृष्टचाक्षुषद्रव्यानुपलम्भत्वात् । पवनानुपलम्भवदित्यादिकं त्वपकृष्टमहत्त्वादिनैवान्यथासिद्धम् । तर्हि पर्वतादेरप्रत्यक्षता स्यात् इति चेन्न । अपकर्षविशेषस्य विवक्षिततत्वात् । नासौ व्यवस्थितोऽस्तीति चेत् । सत्यम् । अत एव पुरुषापेक्षयेत्युक्तमिति ।**

**शे०** — ननु च नीलपीतयोरिवाणुत्वमहत्त्वयोरपि व्यवस्थितत्वेनासहवृत्तिस्वभावत्वान्न परमाण्वादिसकलद्रव्येषु तयोः सहवृत्तित्वनिरूपणं युक्तम् । अन्यथा नीलपीतयोरपि तत्प्रसङ्गात् । अन्यत्रादृष्टत्वेन सहवृत्तेरसम्भवाच्चेत्यतस्तद्वैषम्योपदर्शनेन प्रतिबन्दीं मोचयन्नेवाणुत्वमहत्त्वरूपतामेकस्यैव परिमाणस्य दृष्टान्तकथनेनोपपादयति **एतदुक्तं भवतीति ।** नीलत्वपीतत्वरूपस्य रूपत्वावान्तरजातिविशेषस्य, व्यवस्थापकस्यैव सत्त्वात् नीलपीतरूपयोरपि व्यवस्थिततयाऽसहवृत्त्युपपत्तावप्यणुत्वत्वमहत्त्वत्वरूपस्य परिमाणत्वावान्तरजातिविशेषस्य परिमाणेऽसत्त्वेन व्यवस्थापकाभावेनाणुत्वमहत्त्वयोरव्यवस्थितत्वात्सहवृत्त्युपपत्तिरिति भावः । ननु रूपे नीलत्वपीतत्वरूपजातिवत् परिमाणेऽप्यणुत्वमहत्त्वादिरूपजातिरप्यस्त्येवेति न व्यवस्थापकाभाव इत्यवैषम्यमेवेत्यतो नीले नीलमित्येव पीते पीतमित्येव च सार्वजनीनाविगीतानुगतप्रत्ययव्यवहारस्य सत्त्वात्तदनुरोधेन रूपे नीलत्वपीतत्वादिरूपावान्तरजातिकल्पनासम्भवेऽपीहाणुत्वेऽणुत्वमित्येव महत्त्वे महत्त्वमित्येव सार्वजनीनाविगीतानुगतप्रत्ययव्यवहाराभावात्परिमाणेऽणुत्वत्वादिजातिकल्पकाभावेन तत्कल्पनमशक्यमित्याह **प्रमाणाभावादिति** । ननु परिमाणेऽणुत्वत्वादिजात्यभावं तत्राणुत्वं महत्त्वमित्यादिप्रत्ययव्यवहाराणां निर्निबन्धनत्वं स्यादिति न तत्रोक्तरूपजात्यभावो वक्तुं युक्त इत्यभिप्रेत्य पृच्छति **किन्तु इति** । परिमाणस्यावान्तरजातिरहितत्वेऽपि नोक्तव्यवहारणां निर्निबन्धनत्वमापद्यते । तेषां परिमाणनिष्ठोत्कर्षापकर्षनिबन्धनत्वसम्भवादित्यभिप्रेत्य भवेदेतदेवं यद्यवान्तरजातिरहितस्य परिमाणस्योत्कर्षापकर्षवत्त्वमपि सम्भावितं स्यात् । न च तदस्ति । अवान्तरजातिरहितस्योत्कर्षाद्यदर्शनेन तस्यासम्भावित-

त्वादित्यतोऽवान्तरजातिरहितस्याप्युत्कर्षापकर्षवत्ताया दर्शनानुरोधेन तत्र तत्र परेणाङ्गीकारात्, असम्भावितत्वाभावेन परिमाणस्यापि तदङ्गीकारो युक्त इति वक्तुं अवान्तरजातिरहितेऽप्युत्कर्षापकर्षवत्त्वाङ्गीकारं परस्य निदर्शयति **यथेति** ॥ **एकजातीयमेवेति** । महत्त्वत्वावान्तरजातिरहितमेवेत्यर्थः । परमाणुद्व्यणुकयोरित्यतः परं एकजातीयमेवोत्कर्षापकर्षवत्परेणाङ्गीकृतमित्यनुवर्तते ।

एवमवान्तरजातिरहितस्यापि परिमाणस्योत्कर्षापकर्षौ दृष्टान्तोपदर्शनेन सम्भाव्य परिमाणनिष्ठयोस्तयोरणुत्वादिव्यवहारनिदानत मुपदर्शयति **तथा चेति** । एकस्यापि परिमाणस्य तत्तद्वस्तुव्यपेक्षयाऽणुत्वमहत्त्वकथनस्योक्तामविरुद्धतां सम्भावयितुमनुरूपदृष्टान्तमाह **यथा खल्विति** । नन्वेवं महत्त्वाणुत्वयोरविरोधेन परमाणव्यखिलद्रव्यवृत्तित्वे सर्वस्यापि परमाण्वादेः प्रत्यक्षत्वाप्रत्यक्षत्वप्रयोजकीभूतमहत्त्वाणुत्वाक्रान्ततया सर्वान्प्रति प्रत्यक्षत्वाप्रत्यक्षत्वप्रसक्त्या पुरुषभेदापेक्षया व्यवस्थाया असम्भवात्प्रत्यक्षत्वाप्रत्यक्षत्वव्याघातः स्यादित्यत आह **अत एवेति** । अत एवेत्युक्तं हेतुमेव दर्शयति **तयोरिति** । महत्त्वादिमात्रनिमित्तत्वाभावे प्रत्यक्षत्वादेराकस्मिकत्वप्रसक्तिरिति शङ्कते **किन्त्विति** । उत्तरमाह **पुरुषाणामिति** । ततश्च तन्निमित्तभूतयोरिन्द्रियपाटवापाटवयोः सर्वपुरुषसाधारणत्वाभावान्न सर्वान्प्रति सर्वस्य प्रत्यक्षत्वाप्रत्यक्षत्वप्रसङ्ग इति भावः । भवेदेवं यदि प्रत्यक्षत्वादेर्महत्त्वादिमात्रनिमित्तत्वाभावः स्यात् स एव च कुत इत्यतो महत्त्वादिमात्रस्य प्रत्यक्षत्वादिप्रयोजकतायां बाधकमुपलक्षणत्वेनाह **अन्यथेति** । इन्द्रियपाटवस्यापि प्रत्यक्षत्वप्रयोजकत्वेऽप्याकाशादेरपि प्रत्यक्षत्वापत्त्या बाधकतौल्यात्प्रयोजकत्वं न स्यादिति शङ्कते **तर्हीति** । पुरुषाणामिन्द्रियपाटवमात्रस्य द्रव्यप्रत्यक्षत्वप्रयोजकत्वे भवेदाकाशादेः प्रत्यक्षत्वप्रसङ्गः । न चास्माभिस्तन्मात्रस्य तत्प्रयोजकत्वमभ्युपगम्यते किन्तूद्भूतरूपवत्त्वसहितस्यैव, न च तदाकाशादेरस्तीति न प्रसङ्गतौल्यमित्याशयेन परिहरति **उद्भूतेति** । यद्यपि सिद्धान्ते पञ्चीकरणेन रूपमस्त्येवेति न तदभावोऽपि, तथाऽपि तदनाश्रयणेन वा परारीत्या वेदं रूपाभावाभिधानम् । वस्तुतस्तु पञ्चीकरणेन रूपस्य तत्र सत्त्वेऽपि तस्यानुद्भूतत्वान्नानुपपत्तिः । अत एव तत्र रूपाभावादिति रूपाभावमात्रमनभिधाय उद्भूतरूपाभावादित्युद्भूतरूपपर्यन्तं धावनं कृतमिति ध्येयम् । अनुमानेनाप्रत्यक्षत्वे महत्त्वाभावनिमित्तकत्वस्य सिद्धत्वान्न प्रत्यक्षत्वस्येन्द्रियपाटवनिमित्तत्वं कल्पयितुं शक्यमित्याशयेन महत्त्वाभावस्याप्रत्यक्षत्वप्रयोजकतासाधकतयोदयनेन उक्तं लीलावत्यनुमानमाशङ्कते **द्व्यणुकेति** । अत्रोद्भूतरूपवत्त्वेन पक्षो विशेष्यः । तथा चोद्भूतरूपगुणविपर्ययाधीनत्वमादाय दृष्टान्तीकृते पवनानुपलम्भे साध्यपर्यवसानवत्पक्षीकृते द्व्यणुकानुपलम्भेऽपि साध्यपर्यवसानेन महत्त्वविपर्ययाधीनत्वस्याप्रत्यक्षताप्रयोजकत्वासिद्ध्या प्रकृतासङ्गतिदूषणानवकाशः । उद्भूतरूपद्व्यणुकानुपलम्भस्य पक्षतया तत्रोद्भूतरूपविपर्ययमादाय साध्यपर्यवसानस्य बाधिततया हेतोः पक्षधर्मताबलेन महत्त्वविपर्ययाधीनत्वमादायैव पक्षे साध्यपर्यवसानसंभवादिति द्रष्टव्यम् । पक्षेऽनुपलम्भपदं च

चाक्षुषानुपलम्भपरम् । अन्यथा द्व्यणुकस्पार्शनानुपलम्भे भागासिद्धिप्रसङ्गात् । हेतौ चाक्षुषद्रव्यानुपलम्भत्वादित्यस्य द्रव्यचाक्षुषानुपलम्भत्वादित्यर्थः । तथा च चाक्षुषं यद्द्रव्यं तदनुपलम्भत्वादिति यथास्थित योजनायां पक्षदृष्टान्तयोरसिद्धिः । चाक्षुषो यो द्रव्यस्यानुपलम्भ इति योजनायां चालोकेन्द्रियसन्निकृष्टत्वस्य द्रव्यविशेषणत्वानुपपत्तिः तस्यान्यविशेषणत्वसंभवादिति दूषणानवकाश इति द्रष्टव्यम् ॥ अनुपलम्भादिति गन्धानुपलम्भेन व्यभिचारीत्यत उक्तं **द्रव्येति** । द्रव्यानुपलम्भादिति श्रोत्रेण घटाद्यनुपलम्भेन व्यभिचारीत्यत उक्तं **चाक्षुषेति** । असन्निकृष्टघटादेश्चाक्षुषानुपलम्भेन तद्वारणायेन्द्रियसन्निकृष्टपदम् । अन्धकारस्थघटादेश्चाक्षुषानुपलम्भेन तद्वारणायालोकेत्युक्तम् ।

**अपकृष्टमहत्त्वादिनैवेति** । आदिपदेनोत्कृष्टाणुत्वसंग्रहः । उपलक्षणं चैतत् । अदृष्टविशेषविपर्ययाधीनत्वेन वा दूरसाक्षात्कारे माषराश्यादौ संयोगविशेषस्यापि साक्षात्कारकारणत्वदर्शनात्तदभावेन वाऽर्थान्तरत्वं चक्षुरिन्द्रियाद्यनुपलम्भेनानैकान्त्यं च । अथ यादृशो गुणविशेष उपलम्भाव्यभिचारी तादृशस्तत्रापि नास्त्येवेति न व्यभिचार इति वाच्यम् । तथा सति गन्धानुपलम्भेन व्यभिचारवारणार्थं द्रव्येति विशेषणवैयर्थ्यप्रसङ्गात् । तत्रापि तादृशगुणाभावस्य वक्तुं शक्यत्वेन साध्यसद्भावात् ।

अत्रोक्तं वर्धमानेन । 'द्व्यणुकं चाक्षुषसाक्षात्कारासाधारणकारणैकवृत्तिगुणाभाववत् आलोकेन्द्रियसन्निकृष्टत्वे सत्यचाक्षुषत्वात् । पवनवदित्यनुमानमत्राभिमतम् । अतो नादृष्टविपर्ययाधीनत्वेन वा संयोगविशेषाभावेन वाऽर्थान्तरतेति' । तदसत् । अपकृष्टमहत्त्वादिनैवोक्तहेतूपपत्त्याऽन्यथासिद्धत्वमिति मूलोक्तदोषस्यात्रापि तादवस्थ्यात् । व्यक्तिपुरस्कारेणादृष्टविशेषस्यापि चाक्षुषसाक्षात्कारासाधारणकारणतायाः पूर्वमुपपादितत्वेनादृष्टविशेषाभावेनार्थान्तरतादवस्थ्येन तद्वारकस्य चाक्षुषसाक्षात्कारासाधारणकारणेति गुणविशेषणवैयर्थ्यं चेत्यलम् ।

**तर्हीति** । अप्रत्यक्षत्वप्रयोजकस्यापकृष्टमहत्त्वस्य तत्रापि सत्त्वादिति भावः ॥ **नासाविति** । एवादृश एव महत्त्वापकर्षोऽप्रत्यक्षताहेतुरिति निश्चितो न भवतीत्यर्थः ॥ **अत एवेति** । अप्रत्यक्षत्वप्रयोजकमहत्त्वापकर्षस्य निश्चेतुमशक्यत्वादेवेत्यर्थः । पुरुषापेक्षयेत्युक्तौ हि यस्मिन्महत्त्वापकर्षे सति मन्दलोचनेन पुरुषेण द्रव्यं प्रत्यक्षीकर्तुं न शक्यते, स एव महत्त्वापकर्षोऽप्रत्यक्षताहेतुरिति विज्ञेय इति सिध्यतीति भावः । इतीत्यस्यैतदुक्तं भवतीति पूर्वेण सम्बन्धः ।

स० — **द्व्यणुकानुपलम्भ इति** अत्र चाक्षुषत्वमनुपलम्भविशेषणम् । न तु द्रव्यस्य । तेन नासिद्धिः, न वा दृष्टान्ते साधनवैकल्यमिति भावः ।

प० — एतच्चोत्तरत्र स्फुटीभविष्यतीत्युक्तं व्यनक्ति **अत एव प्रत्यक्षत्वाप्रत्यक्षत्वयोर्विरोधोप्यपास्तइत्यादिना** । सापेक्षतयाऽणुत्वमहत्त्वयोरविरोधादेवेत्यर्थः ॥ **तर्हीति** । इन्द्रिय-

पाटवस्य प्रत्यक्षत्वप्रयोजकत्व इत्यर्थः । द्व्यणुकाप्रत्यक्षत्वं तदमहत्त्वप्रयुक्तमित्यस्य कस्यचिदनुमानमाशङ्कते **द्व्यणुकानुपलम्भ इति** ॥ **गुणविशेषेति** । स च महत्त्वोद्भूतरूपस्पर्शान्यतरवत्त्वम् । **विपर्ययः** अभावः । तथाच द्व्यणुके रूपस्पर्शवत्त्वेन तदभावाधीनत्वेन साध्यपर्यवसाने बाधान्महत्त्वाभावाधीनत्वेन पर्यवसानादमहत्वं द्व्यणुके सिद्ध्यति । दृष्टान्ते तु पवनस्य महत्त्वेन रूपस्पर्शान्यतराभावाधीनत्वेन साध्यानुगमः ॥ **आलोकेति** । आलोकेन्द्रियाभ्यां सन्निकृष्टं यद्द्रव्यं तद्विषयकचाक्षुषानुपलम्भत्वादित्यर्थः । अन्यथा चाक्षुषं यद्द्रव्यमिति यथाश्रुतग्रहणेऽसिद्धिसाधनवैकल्ययोगापत्तेः । घटविषयकरासनानुपलम्भेऽव्यभिचाराय **चाक्षुषेति** । चाक्षुषगुणाद्यनुपलम्भेऽव्यभिचाराय **द्रव्येति** । असन्निकृष्टान्धकारस्थद्रव्यचाक्षुषानुपलम्भेऽव्यभिचाराय **इन्द्रियसन्निकृष्टेति आलोकसन्निकृष्टेति** चोक्तिः ॥ **अपकृष्टमहत्त्वादिनेति** । उत्कृष्टाणुत्वमादिपदार्थः ॥ **तर्हीति** । अपकृष्टमहत्त्वादेः प्रयोजकत्व इत्यर्थः ॥ **अत एवेति** । अप्रत्यक्षत्वप्रयोजकमहत्त्वापकर्षस्य एतादृशो महत्त्वापकर्षोऽप्रत्यक्षताहेतुरिति व्यवस्थितत्वाभावादेव यत्पुरुषप्रत्यक्षेण यादृशं द्रव्यमुपलभ्यते तस्य तत्रत्यतादृशपरिमाणविशेषः प्रत्यक्षताप्रयोजकः, यादृशं नोपलभ्यते तत्रत्यःपरिमाणविशेषः तस्याप्रत्यक्षताहेतुरित्येवंरूपेण पुरुषापेक्षयेत्युक्तमित्यर्थः ।

या० — **तदेवेति** । तदेव वस्तु उच्यत इत्यर्थः ॥ **अत एवेति** । महत्त्वाणुत्वयोरेकत्र समावेशेन विरोधाभावादेवेत्यर्थः ॥**तर्हीति** । यदि इन्द्रियपाटवमेव प्रत्यक्षत्वे निमित्तमिति शेषः । महत्त्वाभावस्याप्रत्यक्षत्वप्रयोजकतासाधकं कस्यचिदनुमानमनूद्य दूषयति **द्व्यणुकानुपलम्भ इति** । अत्र द्व्यणुकचाक्षुषानुपलम्भ एव पक्षतया विवक्षितोऽतो न स्पार्शनद्व्यणुकानुपलम्भे भागासिद्धिः । साध्ये च गुणविशेषशब्देन महत्त्वोद्भूतरूपयोरन्यतरस्यैव ग्रहणम् । तेन पक्षे महत्त्वविपर्ययाधीनत्वमादाय दृष्टान्ते चोद्भूतरूपविपर्ययाधीनत्वमादाय साध्यपर्यवसानमिति द्रष्टव्यम् । चाक्षुषद्रव्यानुपलम्भत्वादित्यस्य द्रव्यचाक्षुषानुपलम्भत्वादित्यर्थः । तेन चाक्षुषं यद्द्रव्यं तदनुपलम्भत्वादिति यथास्थितयोजनायां पक्षदृष्टान्तयोरसिद्धिः । चाक्षुषो यो द्रव्योपलम्भस्तद्भिन्नत्वादिति कथञ्चिद्योजनायामालोकेन्द्रियसन्निकृष्टेत्यस्य द्रव्यविशेषणत्वानुपपत्तेः । तस्यान्यविशेषणत्वासम्भवादिति दूषणानवकाश इति ध्येयम् । अत्र च द्रव्यपदं गुणानुपलम्भे व्यभिचारवारणाय । त्वगिन्द्रियेण प्रभाऽनुपलम्भे व्यभिचारवारणाय चाक्षुषपदम् । न च तत्रोद्भूतस्पर्शविपर्ययाधीनतामादाय साध्यस्यापि सत्त्वान्न व्यभिचार इति वाच्यम् । गुणविशेषशब्देन महत्त्वोद्भूतरूपान्यतरमात्रस्य विवक्षिततयोक्तत्वात् । अन्धकारस्थस्येन्द्रियासन्निकृष्टस्य च घटस्य चाक्षुषानुपलम्भे व्यभिचारवारणायालोकेन्द्रियसन्निकृष्टेति विशेषणमिति ज्ञातव्यम् । अपकृष्टमहत्त्वादिनैवेत्यात्रादिपदेनोत्कृष्टाणुत्वसङ्ग्रहः ॥ **नासौ व्यवस्थित इति** । एतादृशो महत्त्वापकर्षोऽप्रत्यक्षताहेतुरिति निश्चितो न भवतीत्यर्थः ॥ **अत एवेति** । अप्रत्यक्षत्वप्रयोजकमहत्त्वापकर्षस्य निश्चेतुमशक्यत्वादेवेत्यर्थः । पुरुषापेक्षयेत्युक्तौ हि यस्मिन्मह-

त्त्वापकर्षे सति मन्दविलोचनेन पुरुषेण द्रव्यं प्रत्यक्षीकर्तुं न शक्यते स एव महत्त्वापकर्षोऽप्रत्यक्षताहेतुरिति निश्चयो भविष्यतीति भावः ।

**श्री० — जातियोगः स्यादिति** । तर्ह्येव एकत्र विरुद्धजातिद्वयाभावेन विरोधः स्यादिति शेषः । **द्रव्यभेदो** द्रव्यविशेषः । अत एवेत्युक्तं विशदयति **तयोरिति** । प्रत्यक्षत्वाप्रत्यक्षत्वयोः । महत्त्वादीत्यादिपदेनोद्भूतरूपस्पर्शयोः संग्रहः ॥ **अन्यथेति** । महत्त्वमेव प्रयोजकमिन्द्रियपाटवं त्वप्रायोजकमेव यदीत्यर्थः ॥ **तर्हीति** । यदीन्द्रियपाटवं महत्त्वं चेत्युभयं प्रत्यक्षतायां प्रयोजकं तर्हि इत्यर्थः । **गगनादेरपि** महत्त्वोपेतस्यापि । कदाचिदित्यनन्तरमिन्द्रियपाटवोपेतस्यापि कस्यचित्पुंस इति शेषः ॥ **अपकृष्टेति** । उत्कृष्टमहत्त्वरूपगुणविपर्ययभूतेनापकृष्टमहत्त्वेनेत्यर्थः ॥ **तर्हीति** । यदि चाक्षुषद्रव्यानुपलम्भो महत्त्वाभावाधीनो न भवति किन्त्वपकृष्टमहत्त्वाधीन एव तर्हि गगनाद्यपेक्षयाऽपकृष्टमहत्त्वस्य पर्वतादावपि सत्त्वेन तस्याप्रत्यक्षतापत्तेरिति भावः । **अपकर्षविशेषस्य** अपकृष्टत्वमहत्वविशेषत्वस्य, चाक्षुषद्रव्यानुपलम्भप्रयोजकतया विवक्षितत्वादित्यर्थः । **असौ** विशेषः । **अत एव** व्यवस्थितत्वेनाव्यवस्थाप्रदर्शनार्थमेवेत्यर्थः ॥ **इत्युक्तमिति** । 'अणुत्वं च महत्त्वं चे'त्यनेनेत्यर्थः ॥

**सु० — अस्त्वेवं परिमाणेऽवान्तरजात्यभावस्तथाऽपि न सर्वत्र महत्त्वाणुत्वाभ्युपगमो युज्यते । उत्कृष्टापकृष्टपरिमाणापेक्षया हि मध्यवर्ति परिमाणमणुत्वं महत्त्वं चोच्यत इत्युक्तम् । तच्च द्व्यणुकादिपरिमाणे संभवति । न च परमाणुपरिमाणे । न हि परमाणुपरिमाणादपकृष्टं परिमाणमस्ति । यदपेक्षया तन्महत्त्वं स्यात् । अतः परमाणोरणुत्वमेव । तथा च न महत्त्वं चेत्यसदित्यत आह** तारतम्येति ।

**अनु० —** तारतम्यस्थिता यस्मात्पदार्थाः सर्व एव च ॥

**यस्मात्सर्वेऽपि पदार्थाः परिमाणतारतम्येनैव स्थिताः । स्वपरिमाणापेक्षयोत्कृष्टापकृष्टपरिमाणवन्तः । सर्वाण्यपि द्रव्याणि कुतश्चित्परिमाणादुत्कृष्टेन, कुतश्चिदपकृष्टेन परिमाणेन उपेतानीति वा । तस्मात्परमाणोरपि महत्त्वं युज्यते इति संबन्धः । अयमत्र प्रयोगः । परमाणुः कुतश्चिदुत्कृष्टेन परिमाणेन युक्तः, स्वपरिमाणापेक्षयाऽपकृष्टपरिमाणवानिति वा, द्रव्यत्वात्तन्तुवदिति । न च परमाणोरपकृष्टद्रव्याभावाद्बाधितविषयत्वम् । तद्भागानां वक्ष्यमाणत्वात् । न च तेष्वेव व्यभिचारः । तेषामपि भागवत्त्वात् ।**

**शे० —** ननु पूर्वग्रन्थेनैव परिमाणत्वावान्तरजात्यभावसिद्ध्या सौत्रानुमानसिद्धे'स्तारतम्यस्थिता' इति सर्वद्रव्याणां कुतश्चिदुत्कृष्टेन कुतश्चिदपकृष्टेन परिमाणेनोपेतत्ववर्णनमनर्थकमित्याशङ्क्य 'महत्त्वं च

परमाणावणावपि' इत्यादिनोक्तस्य सर्वत्राणुत्वमहत्त्वाभ्युपगमस्य समर्थनार्थत्वान्न तदिति भावेन तत्समर्थनपरतया योजयितुं तदनुपपत्तिशङ्कामुत्थापयति **अस्त्वेवमित्यादिना ॥ सम्भवतीति** ॥ तदपेक्षयोत्कृष्टापकृष्टपरिमाणवद्भावेन अपकृष्टपरिमाणापेक्षया महत्त्वस्योत्कृष्टपरिमाणापेक्षया चाणुत्वस्यावर्जनीयत्वादिति भावः ॥ **स्वपरिमाणापेक्षयेति** । अत्र प्रथमपक्षेऽवधित्वं द्वितीये त्वाश्रयत्वमिति पक्षयोर्भेद इति ध्येयम् । कुतश्चित्परिमाणादुत्कृष्टेन कुतश्चिदपकृष्टेन परिमाणेनोपेतानीति द्वितीयव्याख्यानानुसारेण साध्यं निर्दिशति **कुतश्चिदिति** । कुतश्चिदपकृष्टपरिमाणेनोपेतत्वसाधने सिद्धसाधनता ; परेणापि तदङ्गीकारात् । अतस्तत्परित्यज्य कुतश्चिदुत्कृष्टेनेत्येवोक्तमिति मन्तव्यम् । स्वपरिमाणापेक्षयोत्कृष्टापकृष्टपरिमाणवन्त इति प्रथमव्याख्यानानुसारेण साध्यं निर्दिशति **स्वेति** । अत्रापि स्वपरिमाणापेक्षयोत्कृष्टपरिमाणवत्त्वस्य परेणाप्यङ्गीकारेण सिद्धसाधनता स्यात्तन्निवृत्यर्थमपकृष्टेत्युक्तम् । यद्यपि व्याख्यानक्रमानुसारेणैतत्साध्यं प्रथमं निर्दिश्यानन्तरं पूर्वसाध्यं निर्देष्टव्यम् । तथाऽप्यन्यनिष्ठोत्कृष्टापकृष्टपरिमाणावधित्वापेक्षयोत्कृष्टापकृष्टपरिमाणाश्रयत्वस्य मुख्यत्वात् व्यतिक्रमेण साध्यनिर्देश इति ध्येयम् ॥ **वक्ष्यमाणत्वादिति** । 'अतः सर्वपदार्थानां भागाः सन्त्येवे'त्यादिनेति शेषः ।

स० — **स्वपरिमाणापेक्षयेति** । अत्र प्रथमपक्षे अवधित्वम् । द्वितीये आश्रयत्वमिति भेदः । **वक्ष्यमाणत्वादिति** । 'सर्वदिक्ष्वपि संबन्धात्' इत्यादिनेति शेषः ।

प० — एवं सर्वत्राणुत्वमहत्त्वयोः तत्प्रयुक्तप्रत्यक्षत्वाप्रत्यक्षत्वयोः समावेशोक्त्या प्रागुक्तानुमानानां (तर्कपराहतावुद्धृतायां) तर्कपराहत्युद्धारे बाधकमाशङ्कते **अस्त्वेवमित्यादिना ॥ इत्यसदिति** । 'न महत्त्वं च परमाणावणावपी'त्युक्तमयुक्तमित्यर्थः । स्वकृतयोजनाद्वयानुसारेण परिमाणविषयकं परिमाणाश्रयद्रव्यविषयकं च साध्यद्वयमाह **कुतश्चिदिति स्वपरिमाणेति च** । कुतश्चित्परिमाणादित्यर्थः । अपकृष्टपरिमाणवानित्यस्यापकृष्टपरिमाणद्रव्ययुक्त इत्यर्थः । यद्वा परिमाणविषयकमेव साध्यद्वयम् । आद्ये युक्तत्वमाश्रयत्वं द्वितीये तु तद्वत्त्वं तत्साहित्यमात्रमिति ध्येयम् । मूले द्वयोरुक्तावपि उत्कृष्टपरिमाणे विवादाभावात् अपकृष्टपरिमाणमेव साधितमिति ज्ञेयम् ॥ **वक्ष्यमाणत्वादिति** । 'अतस्सर्वपदार्थानां भागाः संत्येवे'त्यत्रेति भावः ।

या० — **स्वपरिमाणापेक्षयेत्यादि** । अत्र प्रथमे पक्षेऽवधित्वं द्वितीये त्वाश्रयत्वमिति भेदः ॥ **वक्ष्यमाणत्वादिति** । 'अतः सर्वपदार्थानां भागाः सन्त्येवे'त्यत्रेति शेषः ॥

**सु०** — **तदेवं परमाणुद्व्यणुकादिपरिमाणानां वैजात्यस्याभावाद्युक्तं सौत्रमनुमानमिति सिद्धम्। यद्यपि वैजात्यमङ्गीकृत्यापि कार्यकारणभावः शक्योपपादनः। अन्यथा संख्याया अप्यकारणत्वापत्तेः। परिमाणस्यैवमिति नियमस्य निर्मूलत्वात्। तथाऽपि वस्तुस्थितिरेव वक्तव्येति परिमाणत्वावान्तरजात्यपाकरणेन सजातीयतामुपपाद्यानुमानं समाहितमिति ज्ञातव्यम्।**

**शे०** — भाष्यकारीयस्य परिमाणत्वावान्तरजात्यपाकरणेन सजातीयतामुपपाद्यानुमानसमर्थन-स्यानर्थक्यमाशङ्क्य परिहरति **यद्यपीति। शक्योपपादन इति**। तथा च सजातीयतोपपादनमनर्थकमिति शेषः॥ **अन्यथेति**। विजातीययोः कार्यकारणभावाभाव इत्यर्थः॥ **सङ्ख्याया इति**। ईश्वरापेक्षा-बुद्ध्योत्पन्नायाः परमाणुगतद्वित्वसङ्ख्याया द्व्यणुकगतबहुत्वसङ्ख्यायाश्चेत्यर्थः। तस्या अपि द्व्यणुकपरि-माणेन त्र्यणुकपरिमाणेन च विजातीयत्वादिति भावः। ननु परिमाणस्य सजातीयपरिमाणजनकत्वनि-यमाद्वैजात्ये तदसम्भवात्साजात्यव्युत्पादनमर्थवदित्यत आह **परिमाणस्येति निर्मूलत्वादिति**। वैपरीत्यस्यापि वक्तुं शक्यत्वादिति भावः॥ **वस्तुस्थितिरेवेति**। शिष्यानुकम्पया प्रवर्तनेन ग्रन्थानां वादप्रक्रियया प्रवृत्तत्वादिति भावः।

**प०** — **सौत्रमिति**। महद्दीर्घवद्वेति सूत्रोक्तं प्राक्प्रपञ्चितं अनुमानचतुष्टयं साध्विति सिद्ध-मित्यर्थः। भाष्येऽनौचित्यमाशङ्क्य निराह **यद्यपीति**।

**श्री०** — **शक्योपपादन इति**। तथा चोक्तप्रबन्धेन साजात्यमङ्गीकृत्य सर्वत्राणुत्वस्य वा महत्त्वस्य वोपपादनं व्यर्थमिति भावः॥ **अन्यथेति**। वैजात्ये यदि कार्यकारणभावो नेत्यर्थः। तर्हीति शेषः। **आपत्तेः** विजातीयत्वात्सङ्ख्यापरिमाणयोरिति शेषः। ननु विजातीयत्वेऽपि सङ्ख्या-परिमाणयोरेव विजातीययोः कार्यकारणभावोऽङ्गीकृतः। न विजातीययोः परिमाणयोः अतः संख्ययो-त्पत्तिः परिमाणस्य युक्ता न परिमाणादिति चेन्न। निर्मूलत्वादेतत्कल्पनाया इत्याह **परिमाणस्यैवमि-तीति**।

**सु०** — **परमाणोरप्युत्कृष्टपरिमाणाश्रयत्वमुक्तं तदाक्षिपति** यथेति।

**अनु०** — यथा महत्त्वविश्रान्तिस्तथाऽणुत्वस्य चेष्यते॥

परिमाणत्वतश्चेत्

**यथा महत्त्वस्य विश्रान्तिस्तथा परिमाणत्व(तो)हेतोरणुत्वस्य च विश्रान्तिरिष्यते चेदिति योजना । अत्र महत्त्वाणुत्वशब्दाभ्यां परिमाणोत्कर्षापकर्षावुच्येते । ताभ्यां च तत्तारतम्य-मुपलक्ष्यते ।**

परिमाणत्वत इति । **परिमाणतारतम्यत्वादित्यर्थः । तथा चाणौ सिद्धेऽणुत्वसिद्धिस्तत्सिद्धौ च तत्(अणुत्व) सिद्धिरिति परस्पराश्रयदोषः परास्तः । तदयमर्थः । परिमाणापकर्षतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् परिमाणोत्कर्षतारतम्यवदित्यनुमानेन परिमाणापकर्ष-तारतम्यस्य क्वचिद्विश्रान्तिसिद्धौ यत्रेदं विश्रान्तं यतः परमणुर्नास्ति स परमाणुरिति परिमाणा-पकर्षकाष्ठाश्रयतया सिद्धस्य परमाणोः कथमुत्कृष्टपरिमाणाख्यमपि महत्त्वं साधयितुं शक्यम् । धर्मिग्राहकप्रमाणेन स्ववचनेन (च) व्याघातादिति ।**

**शे०** — अणुत्वविश्रान्तिशङ्कासमाधानयोः प्रकृतानुपयोगात्तत्परोत्तरग्रन्थवैयर्थ्यमाशङ्क्य पूर्वोक्तस्य परमाणोरुत्कृष्टपरिमाणाश्रयत्वस्याक्षेपेण समाधानार्थत्वेन प्रकृतसङ्गतत्वान्न तदिति भावेन तदाक्षेपसमाधानप-रतयोत्तरग्रन्थं योजयितुं पूर्वोक्तमनुवदति **परमाणोरपीति ॥ इति योजनेति** । महत्त्वशब्देन समस्तस्यापि विश्रान्तिशब्दस्य बुद्ध्या विवेकेन णुत्वस्येत्यनन्तरमनुवृत्तिः । तथेत्यनन्तरं परिमाणत्वत इत्यस्येष्यत इत्यनन्तरं चेदित्यस्य चान्वयश्चाङ्गीकर्तव्यः । अन्यथाऽसङ्गतेरिति भावः । तर्हि तारतम्ये परिमाणत्वाभावाद्धेतोरसिद्धिः स्यादित्यत आह **परिमाणत्वत इतीति** । किमर्थान्तरपरि-कल्पनया प्रतीतार्थपरत्वमेव किं न स्यादित्यतो निमित्तमुपलक्षणत्वेनाह **तथा चेति** । परमाणुरूपेऽणौ सिद्धे सति तदाश्रिताणुत्वस्य सिद्धिः । तत्सिद्धौ चाश्रयासिद्ध्यभावेनाणुत्वं क्वचिदाश्रितमिति यथास्थित-मूलोक्तानुमानेनाणुत्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः । न च द्व्यणुकरूपाणुसिद्ध्याऽप्यणुत्वसिद्धिसम्भवा-न्नेतरेतराश्रय इति वाच्यम् । परमाण्वसिद्धिदशायां द्व्यणुकस्याप्यसिद्ध्याऽणुत्वसिद्ध्ययोगादित्याशयात् । **स्ववचनेन चेति** । परमाणुरिति स्ववचनेन चेत्यर्थः । परमाणुशब्दे न तदपेक्षयाऽण्वभावस्य कथना-दिति भावः ।

**स०** — स्ववचनव्याघातमुपपादयति **यतः परमणुरिति** ।

**प०** — एवं तर्कपराहत्युद्धारेणानुमानानि समर्थ्य तारतम्येति मूलाभिप्रेते अयमत्र प्रयोग इति-प्रागुक्तानुमाने प्रतिज्ञादोषवदर्थवचनविरोधरूप बाधकव्याघातोक्तिपरतया मूलं व्याचष्टे **यथेति** । अत्र यथाश्रुतमूलानुरोधात् अणुत्वं क्वचिद्विश्रान्तं परिमाणत्वान्महत्त्ववदित्युक्तावणुद्रव्यसिद्धावणुत्वपरिमाणसिद्धिः तत्सिद्धौ च तदाश्रयत्वेनाणुद्रव्यसिद्धिरिति वक्ष्यमाणान्योन्याश्रयापत्त्या आश्रयासिद्ध्यापातादाह अत्र

**महत्त्वाणुत्वेति** । एवं विवक्षायां बीजं स्वयमेवाह **तथा चेति** ॥ **स्ववचनेन चेति** । यतः परमाणुर्नास्ति स परमाणुरिति निर्वचनात्स्वापेक्षयाऽपकृष्टपरिमाणवान्न तादृशपरिमाणवांश्चेति प्रतिज्ञास्वरूपनिष्पत्त्या स्ववचनव्याघात इति भावः ।

**या० — तथा चाणौ सिद्ध इति** । परमाणुरूपेऽणौ सिद्धे हि तदाश्रितस्याणुत्वस्य सिद्धिः, तत्सिद्धौ चाश्रयासिद्ध्यभावेनाणुत्वं क्वचिदाश्रितमिति यथास्थितमूलोक्तानुमानेनाणुसिद्धिरित्यर्थः । न च द्व्यणुकरूपाणुसिद्ध्याऽप्यणुत्वसिद्धिसम्भवान्नेतरेतराश्रय इति वाच्यम् । परमाण्वसिद्धिदशायां द्व्यणुकस्यापि न सिद्धिरित्याशयात् ॥ **स्ववचनेन चेति** । यतः परमाणुर्नास्ति स परमाणुरिति निरुक्तत्वादिति भावः ।

**श्री० —** महत्त्वाणुत्वशब्दाभ्यां परिमाणोत्कर्षापकर्षावुच्येते इत्येवं व्याख्याने बीजमाह **तथा चेति** । अणुपदार्थसिद्धौ तन्निष्ठाणुत्वरूपपरिमाणावान्तरजातिसिद्धेरित्यर्थः ॥ **तत्सिद्धौ चेति** । अणुत्वसिद्धौ तदधिकरणभूताणुपदार्थसिद्धिरित्यर्थः ॥

**सु० — अत्र वक्तव्यम् । केयं क्वचिद्विश्रान्तिर्नाम । किमियत्तापरिच्छेदः, त्र्यणुकपरिमाणात् षष्ठभाग एव परिमाणं, न ततोऽपकृष्टमस्तीति; किंवा क्वचिद्द्रव्ये वृत्तिः, अपकर्षतारतम्यमियत्तावच्छेदरहितमेव किन्त्वनन्तांशोपेतमपि तत्सर्वं क्वचिदाश्रितमेवेति ।**

**तत्राद्ये साध्ये दृष्टान्तः साध्यविकल इत्याह नेति ।**

**अनु० —** न महत्त्वस्यापि विश्रमः ॥

**दृष्टान्तीकृतस्य महत्त्वस्य परिमाणोत्कर्षतारतम्यस्यापि** विश्रमः **उक्तरूपो नास्ति । न केवलं पक्षस्येत्यपेरर्थः ॥ कुतो नास्तीत्यत आह** दृश्यत इति ।

दृश्यतेऽनन्त इत्येव

**परिमाणोत्कर्षतरतमभावोऽनन्तोऽनवधिक इत्येव दृश्यते । न त्वियत्तापरिच्छेदवानिति । बाधकप्रमाणसद्भावात्साधकाभावाच्चेत्यर्थः । कालात्ययापदिष्टं चास्मिन्पक्षेऽनुमानमित्याह** तथेति ।

तथानन्त्यमणावपि ॥

**तथाशब्दो दूषणसमुच्चये । न केवलं परिमाणोत्कर्षतरतमभावोऽनन्त इति दृश्यते । किन्त्वसावणौ परिमाणापकर्षतारतम्येऽप्यानन्त्यमनवधिकत्वं दृश्यत इत्यर्थः ।**

शे० — विश्रान्तिशब्दस्य वक्ष्यमाणप्रकारेण इयत्तामात्रपरिच्छेदार्थत्वविवक्षायां 'विश्रान्तो यद्यनन्तांश' इत्युत्तरग्रन्थासङ्गतिप्रसङ्गात् वक्ष्यमाणरीत्या क्वचिद्द्रव्ये वृत्त्यर्थत्वे च 'न महत्त्वस्यापि विश्रम' इत्यव्यवहितग्रन्थासङ्गतिप्रसङ्गात् तत्तत्पक्षनिरासकत्वेन व्यवस्थयोत्तरग्रन्थं योजयितुं सम्भावितं विश्रान्तिशब्दार्थं द्वेधा विकल्पयति **अत्र वक्तव्यमिति** । इयत्तापरिच्छेद इत्युक्तमेव विशदयति **त्र्यणुकेति** । क्वचिद्द्रव्ये वृत्तिरित्युक्तमेव विशदयति **अपकर्षतारतम्यमित्यादिना** । परिमाणापकर्षतारतम्यमित्यर्थः । नन्वेवं परमाणोर्महत्त्वाभावसिद्ध्याऽर्थान्तरता विश्रान्तिशब्दार्थालाभश्चेत्याशयेन पृच्छति **किन्त्विति** । उत्तरमाह **अनन्तांशोपेतमपीति** । तदनन्तांशोपेतमपि परिमाणं सर्वं क्वचिद्द्रव्यविशेषे आश्रितमेव पर्यवसितमेव । एवशब्देन क्वचित्पर्यवसितिसाधनस्यावश्यकत्वं सूचयति । तथा च पूर्वकल्पे परिमाणापकर्षतारतम्यस्य इयत्तापरिच्छेद एव साध्य अत्र तु तस्येयत्तापरिच्छेदराहित्येऽपि क्वचिद्द्रव्ये पर्यवसितिरित्येतावत्साध्यतया विवक्षितमिति भावः । अत्र क्वचित्पर्यवसितिमात्रसाधने पूर्वकल्पे वक्ष्यमाणो दोष इयत्तापरिच्छेदराहित्यमात्रसाधनेऽप्यर्थान्तरता परमाणुमहत्त्वाभावस्यासिद्धेरित्यत उभयमपि साध्यतयोपात्तमिति मन्तव्यम् । ननु तथाऽपि न महत्त्वस्येति वाक्येन कस्य पक्षस्य किं दूषणमुक्तं भवतीत्यतो विशिष्य तदुट्टङ्कनपूर्वकं तत्परतयोत्तरग्रन्थं योजयति **तत्रेति** । विकल्पितपक्षयोरित्यर्थः । **आद्ये** साध्ये इयत्तापरिच्छेदः साध्य इति पक्षे ॥ **उक्तरूप इति** । इयत्तापरिच्छेदरूप इत्यर्थः । मूले अपिशब्दस्य वैयर्थ्यमाशङ्क्य तत्समुच्चेतव्यप्रदर्शनेन तस्यार्थवत्तामाह **न केवलमिति** । परिमाणोत्कर्षतारतम्यस्यानन्तत्वेन दर्शनप्रतिपादनस्यानर्थक्यमाशङ्क्य पूर्ववाक्योक्तविश्रमाभावोपपादनार्थत्वान्न तदिति भावेन तदुपपादकतया तद्योजयितुं तदुपपादकाकाङ्क्षामुत्थापयति **कुत इति** । एवशब्दार्थमाह **न त्विति** । तथाऽपि महत्त्वस्य विश्रमो नास्तीत्यत्र को हेतुरनेनोक्तो भवतीत्यतो 'दृश्यतेऽनन्त' इत्यंशेनोक्तं हेतुमाह **बाधकेति** । एवेत्यंशेनाप्युक्तं तमाह **साधकेति** । दृष्टान्तस्य साध्यविकलतोपपादनेनाद्यपक्षस्य दूषितत्वात्तथेत्युत्तरग्रन्थानर्थक्यमाशङ्क्य दूषणान्तरोपदर्शनार्थत्वान्न तदिति भावेनोच्यमानदूषणस्य विशिष्योट्टङ्कनपूर्वकं तत्समर्पकतयोत्तरग्रन्थं योजयति **कालेति** । ननु मूले दूषणान्तरपरत्वज्ञापकाभावान्न तत्परत्वमित्यतः, तथाशब्द एव तत्र ज्ञापक इति भावेन तदर्थमाह **तथेति** । दूषणसमुच्चयमेव दर्शयन्नपेक्षितपूरणेन मूलं योजयति **न केवलमिति** । अणावानन्त्यदर्शनेन परिच्छेदाभावसिद्धावपि पक्षे तदसिद्धेः कथं कालात्ययापदिष्टत्वमित्यतोऽणुशब्दस्य लक्षितलक्षणया परिमाणापकर्षतारतम्यपरत्वं मनसि निधायाह **अणौ परिमाणापकर्षतारतम्य इति** ।

प० — इयत्तापरिच्छेद इत्यस्य विवरणं **त्र्यणुकेत्यादि** । किं वा क्वचिद्द्रव्ये वृत्तिरित्यस्य व्याख्या **अपकर्षतारतम्यमित्यादि** ॥ **पक्षस्येति** । परिमाणापकर्षतारतम्यस्येत्यर्थः ॥ इत्येव दृश्यत

इति । साक्ष्यादिनेति भावः । विवरिष्यते चैतदग्रे 'केवलं साक्षिमानेने'त्यादौ । कुतो नास्तीत्यस्य दृश्यत इत्यादिना किमुत्तरमुक्तमित्यत आह **बाधकप्रमाणसद्भावात्साधकाभावाच्चेत्यर्थ इति** ॥ **कालात्ययापदिष्टं चेति** । प्राक् अपिपदसूचितमिति योज्यम् ॥ **अस्मिन्पक्ष इति** । प्रागुक्तरूपेयत्तापरिच्छेदो विश्रान्तिरिति पक्ष इत्यर्थः । अणावित्यनुवादः । परिमाणेत्यादि व्याख्या ।

रा० — इयत्तापरिच्छेद इत्युक्तमेव विशदयति **त्र्यणुकपरिमाणादिति** । क्वचिद्द्रव्ये वृत्तिरित्युक्तमेव विशदयति **अपकर्षतारतम्यमित्यादिना** । नन्वेवं परमाणोर्महत्त्वाभावासिद्ध्याऽर्थान्तरता विश्रान्तिशब्दार्थालाभश्चेत्याशयेन पृच्छति **किन्त्विति** । उत्तरमाह **अनन्तांशोपेतमपीति** । तदनन्तांशोपेतमपि परिमाणं सर्वं क्वचिद्द्रव्यविशेषे आश्रितमेव पर्यवसितमेव एवकारेण क्वचित्पर्यवसितिसाधनमावश्यकमिति सूचयति । तथा च पूर्वकल्पे परिमाणापकर्षतारतम्यस्येयत्तापरिच्छेद एव साध्यः, अत्र तु तस्येयत्तापरिच्छेदराहित्येऽपि क्वचिद्द्रव्ये पर्यवसितिरित्येतावत्साध्यतया विवक्षितमिति भावः । अत्र क्वचित्पर्यवसितिमात्रसाधने पूर्वकल्पे वक्ष्यमाणो दोषः । इयत्तापरिच्छेदराहित्यमात्रसाधने त्वर्थान्तरता । परमाणुमहत्त्वाभावासिद्धेः । अत उभयमपि साध्यतयोपात्तमिति द्रष्टव्यम् ॥

श्री० — **इयत्तावच्छेदरहितमेवेति** । त्र्यणुपरिमाणात् षष्ठभाग एव परिमाणं न ततोऽपकृष्टमस्तीति इयत्तापरिच्छेदेत्यर्थः । **अनन्तांशोपेतम्** अनन्तांशरूपम् । अपकर्षतारतम्यं नामानन्तांशरूपत्वमेव विवक्षितमित्यर्थः । अनन्तांशरूपमपि तत्क्वचिदाश्रितमिति वक्ष्यति । **उक्तरूपः** पूर्वन्यायेन घटनिष्ठपरिमाणान्महत्त्वात् षष्ठभाग एवेत्यादिरूपेयत्तापरिच्छेद इत्यर्थः ।

**सु० – 'दृश्यतेऽनन्त इत्येवे'तीयत्तापरिच्छेदो न दृष्टान्ते दृश्यत इति एवशब्देन उक्तम् । तद्विशदयति नेति ।**

**अनु०** — न महत्तत्त्वगुणत एतावानिति हीश्वरः ॥

परिच्छिन्नः

**महत्तत्त्वमिति द्रव्यविशेषस्येयं (स्यैव) संज्ञा । तेन आन्महत इत्येष विधिर्न भवति । 'दृष्टानुगतिर्हि संज्ञाछन्दसोः' इष्यते । यथाऽऽह 'बहुलं तणी'ति । गुणशब्दोऽत्र तन्त्रेण द्विः उपात्तः । तत्राद्यस्य परिमाणाख्यो गुणविशेषोऽर्थः । द्वितीयस्य गुणनम् ईश्वर इति परममहत्त्वाश्रयद्रव्योपलक्षणम् । परिमाणोत्कर्षतारतम्यस्येयत्तापरिच्छेदो हि तथा सति दृष्टः स्यात् । यदि महत्तत्त्वादिपरिमाणगणनयेश्वरादिः एतावान्पञ्चगुणपरिमाणवान् षड्गुणपरिमाणवान्वेति परिच्छिन्नः स्यात् । न चैवम् । तथा सति परममहत्त्वानुपपत्तेरिति हिशब्दार्थः ।**

**अत्र महत्तत्त्वग्रहणेनेदं सूचयति । यदुक्तं वैशेषिकादिभिः पृथिव्यादीनि नवैव द्रव्याणि इति तदसत् । महदहङ्कारादीनामपि सत्त्वात् । न च तत्र प्रमाणाभावः । श्रुत्यादेः प्रमाणस्य विद्यमानत्वात् । न च त्र्यणुकादिकमेव तथोच्यते । अव्यक्तत्वादिश्रवणात् । न च बाधकं किञ्चित् विद्यते । येनोपचारकल्पनेति । ईश्वरग्रहणेन जीवात्मनामपि यत्परैः परममहत्त्वमुक्तं तदसदिति सूचयति । उपपादयिष्यते खल्वणुत्वं जीवस्येति ।**

शे० — ननु महत्तत्त्वेत्याद्युत्तरभाष्य-नर्थकम् । न चेश्वरस्येयत्तापरिच्छेदराहित्योपपादनार्थं तदिति वाच्यम् । तद्वर्णनस्य प्रकृतासङ्गतत्वादित्यतेऽव्यवहितेन 'तथाऽऽनन्त्यमणावपि' इत्यनेन तस्य सङ्गत्यभावेऽपि व्यवहितेन 'दृश्यतेऽनन्त इत्येवे'त्यनेन तत्रत्यैवशब्दोक्तार्थप्रपञ्चकत्वेनास्य सङ्गतत्वान्न वैयर्थ्यमित्यभिप्रेत्य तत्सङ्गततया तद्योजयति **दृश्यते इत्यादिना** । नन्वान्महतः समानाधिकरणजातीययोरिति महच्छब्दस्य समानाधिकरणजातीययोः परत ,आत्वविधानान्महादेव इत्यादिवन्महातत्त्वेत्येव भवितव्यं तत्कथं ,महत्तत्त्वेति निर्देश इत्यत आह **महत्तत्त्वमितीति ॥ तेनेति** । यद्यप्यान्महतः समानाधिकरणजातीययोरित्यस्य विधेः स्थान्यादेशव्यत्ययेन द्वन्द्वेऽल्पाच्तरस्य परनिपातेन चानित्यत्वादेव महत्तत्त्वेति व्युत्पादयितुं शक्यम् । अत एव तस्यैव महत्सुखवत्वाच्च तेषामिति गीताभाष्यटीकायां तथैव समर्थितमिति संज्ञात्वाश्रयणमनर्थकमित्याभाति । तथाऽपि नित्यत्वेऽपि संज्ञात्वाश्रयणेन परीत्यैवात्वाभवव्युत्पादनसम्भवे किमगतिकागतिकतदनित्यत्वव्युत्पादनेनेत्याशयेन संज्ञात्वमाश्रित्यैव समाहितमिति ध्येयम् । अस्तु संज्ञात्वं तथाऽपि कुतोऽत्र न आत्वविधिप्रसङ्ग इत्यत आह **दृष्टेति** । संज्ञाविषये छन्दोविषये च यथा प्रयोगो दृश्यते तथैव साधुत्वं वाच्यमित्यर्थः । तत्कुत इत्यतस्तत्र भाष्यकारसम्मतिमाह **यथाऽऽहेति** । तद्वाक्यं पठति **बहुलं तणीतीति** । तणिति संज्ञाछन्दसोः पूर्वाचार्याणां संज्ञा । अत्र तणि इतीति पदच्छेदः । तणि इति च सप्तम्येकवचनम् । विषयसप्तमी चेयम् । ततश्च तणि संज्ञाविषये छन्दोविषये च व्याकरणविधिर्बहुलं भवतीत्यर्थः ।

ननु श्रुत्यादेस्त्र्यणुकचतुरणुकादिप्रतिपादकतया सावकाशत्वान्न तद्व्यतिरिक्तमहदादिगमकत्वमित्याशङ्क्य निषेधति **न चेति ॥ अव्यक्तत्वादिति** । महदादीनामिति शेषः । आदिपदेन पृथिव्यादिभूतभिन्नत्वपरिग्रहः । त्र्यणुकादेर्व्यक्तत्वपृथिव्यादिभूतात्मकत्वयोस्त्वया स्वीकारान्न श्रुत्युक्तमहदादिरूपत्वमिति भावः । अव्यक्तत्वादिश्रवणस्यौपचारिकत्वान्न बाधकत्वमित्यत आह **न चेति** । अन्यथाऽतिप्रसङ्गादिति भावः । लाक्षणिकपदप्रयोगे प्रयोजनमाह **ईश्वरग्रहणेनेति ॥ उपपादयिष्यत इति** । 'उत्क्रान्तिगत्यागतीनामि'त्यादिनोत्तरपाद इति शेषः ।

म० — ननु 'आन्महत' इत्यनेनात्वे महानात्वगुणस्वत इति स्यादित्यत आह **महत्तत्वमितीति** । **दृष्टानुगतिरिति** । संज्ञाविषये छन्दोविषये वा यथा प्रयोगस्तथैव साधुत्वमित्यर्थः । 'बहुलं तणीति' पाठः । तणि इतीति पदच्छेदः । तणि संज्ञायां छन्दसि वा बहुलं दृष्टानुगतिर्हीत्यर्थः ।

प० — **महत्तत्वमितीति** । ननु कथं महत्तत्वमिति । महच्च तत् तत्वं चेतिविग्रहे महातत्वमिति प्राप्नोति महाहृद इतिवत् । 'आन्महतः समानाधिकरणजातीययोरि'ति सूत्रे समानाधिकरणशब्दे जातीयशब्दे च परतो महच्छब्दस्याकारोऽन्तादेशो भवतीति तकारस्याकारविधानादित्यत आह **आन्महत इतीति** । कुत इत्यत आह **दृष्टानुगतिर्हीति** । संज्ञायां छन्दोविषये च यथाप्रयोगो दृष्टः तथैवानुगतिरनुसरणमिष्यते प्राज्ञैरित्यर्थः । कुत एवमित्यतो वार्तिकसंमतिमाह **यथाहेति** । चतुर्थस्याद्यपादे स्त्रीप्रत्ययप्रकरणे अस्वाङ्गपूर्वपदाद्वेति सूत्रे बहुलं तणीति वक्तव्यमिति वार्तिकम् । तणिति संज्ञाछन्दसोः प्राचां संज्ञा । तणीति सप्तमी । संज्ञाछन्दसोर्विषये बहुलं कार्यं भवतीत्युक्तेरिह तकारस्यात्वं न भवतीत्यर्थः ॥ **तन्त्रेणेति** । सकृदुच्चरितमनेकोपकारकं तन्त्रमिति वदन्ति ॥ **श्रुत्यादेरिति** । तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति महानव्यक्ते लीयत इति । 'यस्याहङ्कारः शरीरं यस्य बुद्धिः शरीरं यस्याव्यक्तं शरीरमि'त्यादिश्रुतेः । 'त्रिविधोऽयमहङ्कारो महत्तत्वादजायत' इत्यादिस्मृत्यादेः प्रमाणस्येत्यर्थः ॥ **अव्यक्तत्वादीति** । अव्यक्तत्वभूतकारणत्वभूतलयाधारत्वभूतभिन्नत्वादिश्रवणादित्यर्थः । त्र्यणुकादेस्तु व्यक्तत्वभूतात्मकत्वाङ्गीकारादिति भावः । अव्यक्ते द्व्यणुकोपादानकत्वादव्यक्तत्वोपचार इत्यत आह **न च बाधकमिति** । **उपपादयिष्यत इति** । 'उत्क्रान्तिगत्यागतीनामि'ति सूत्रकृतोपपादयिष्यते अग्रेतनपाद इति भावः ।

या० — **आन्महत इति** । 'आन्महतः समानाधिकरणजातीययोः' महत आकारोऽन्तादेशः स्यात्समानाधिकरणे परे जातीये च पर इति सूत्रार्थः । उदाहरणं तु महादेव इत्यादि ॥ **दृष्टानुगतिरिति** । संज्ञाविषये छन्दोविषये वा यथा प्रयोगस्तथैव साधुत्वं वाच्यमित्यर्थः ॥ **बहुलं तणीतीति** । तणीति संज्ञाछदन्सोः पूर्वाचार्याणां संज्ञा । तद्विषये व्याकरणविधिर्बहुलं भवतीत्यर्थः । अत्र तणि इतीति पदच्छेदः । अतस्तद्विषय इति व्याख्यातमिति द्रष्टव्यम् ॥ **न च त्र्यणुकादिकमेवेति** । त्र्यणुकचतुरणुकादिकमेव महदहङ्कारादिप्रतिपादकश्रुत्यादिषु महदहङ्कारादिपदैरुच्यत इत्यर्थः ॥ **अव्यक्तत्वादीति** । महदादीनामिति शेषः । आदिपदेन पृथिव्यादिभूतभिन्नत्वश्रवणसंग्रहः । त्र्यणुकादेश्च त्वया व्यक्तत्वपृथिव्याद्यात्मकत्वयोः स्वीकारादिति भावः ॥ **उपपादयिष्यत इति** । उत्क्रान्तिगत्यागतीनामित्यत्रेति शेषः ॥

श्री० — नन्वु क्षेत्रज्ञेश्वरयोरुभयोरप्यात्मनोऽर्थाप्तत्वादीश्वरमात्रग्रहणं कुत इत्यत आह **ईश्वरेति** ।

च० — उक्तेऽर्थे वार्तिकं प्रमाणयति **यथाह बहुलन्तणीति** । अष्टलक्षण्यां तुरीयलक्षणीयाद्यचरणे स्त्रीप्रत्ययप्रकरणे 'अस्वाङ्गपूर्वपदाद्वेति' सूत्रस्थवार्तिकमेतत् । तणिति संज्ञाछन्दसोः प्राचां संज्ञा । तणीति सप्तम्यन्तं । संज्ञाछन्दसोर्विषये बहुलं कार्यं भवतीत्युक्त्या यथा प्रयोगस्तथैव साधुत्वं वाच्यमित्यर्थः ।

सु० — दृष्टान्ते विश्रमाभावोपपादनस्य प्रयोजनमाह तथेति ।

अनु० — तथाणोश्च नैतावद्भागता क्वचित् ॥

यतो दृष्टान्त एतावद्गुणमेव परिमाणमुत्कृष्यते नातोऽधिकमिति साध्यं नास्ति । अतस्तथा तद्दृष्टान्तेन अणोः अणुत्वस्य परिमाणापकर्षस्य चैतावद्भागता त्र्यणुकपरिमाणात् षष्ठभाग एव परिमाणमपकृष्यते नातोऽधिकमितीयत्ता क्वचिद्द्रव्ये न सिध्यति । न हि महाह्रदं सपक्षीकृत्य पर्वतेऽग्निमत्त्वं शक्यसाधनम् । तदसिद्धौ च न विवक्षितार्थलाभः । अस्मादेतावद्भागमेव परिमाणमपकृष्यते नातोऽधिकमित्यस्यार्थस्य हि सिद्धावपकर्षकाष्ठाश्रयभूतं कुतश्चिदप्यनुत्कृष्यमाणं द्रव्यं सिध्यतीति ।

यद्वाऽनेन वाक्येन प्रतिपक्षमाह । तथा हि । समर्थितं तावत्परिमाणोत्कर्षतारतम्यं न क्वचिद्विश्रान्तमस्मादेतावद्गुणमेव परिमाणमुत्कृष्यत इतीयत्ताभावादिति । तथा तद्दृष्टान्तेनाणोश्चैतावद्भागता क्वचिन्नास्तीति साध्यत इति । अत्रायं प्रयोगः । परिमाणापकर्षतारतम्यं क्वचिन्न विश्रान्तम् परिमाणतारतम्यत्वात् परिमाणोत्कर्षतारतम्यवदिति ।

शे० — तथेत्युत्तरभाष्यानर्थक्यमाशङ्क्य दृष्टान्ते विश्रमाभावोपपादनप्रयोजनोक्त्यर्थत्वान्न तदिति भावेन तद्योजनप्रदर्शकतया तद्योजयति **दृष्टान्त इति** । माऽस्तु क्वचिद्द्रव्ये उक्तरूपेणेयत्तायाः सिद्धिः किं तावतेत्यत आह **तदसिद्धौ चेति** । इयत्तायाः क्वचिद्द्रव्येऽसिद्धावित्यर्थः । तत्कथमित्यत उक्तमेवोपपादयति **अस्मादिति** । दृष्टान्ते साध्यवैकल्योपपादनेनैवोक्तप्रयोजनसिद्ध्या तत्परत्वे वाक्यानर्थक्यं भवतीत्यपरितोषात्प्रकारान्तरेण योजयति **यद्वेति**। प्रतिपक्षसमर्पकतया भाष्यं योजयति **तथा हीत्यादिना** ॥ **एतावद्गुणमेवेति** । पञ्चगुणं षड्गुणमेवेत्यर्थः । यथाश्रुतस्य भाष्यस्यैव प्रयोगप्रक्रियात्वभ्रान्तिनिरासायाह **अत्रेति** ।

स० — **तदसिद्धौ चेति ।** इयत्तायाः क्वचिद्द्रव्ये असिद्धौ चेत्यर्थः । तदेवोपपादयति **अस्मादिति ।**

प० — **षष्ठ भाग एवेति ।** परमाणुद्वयारब्धद्व्यणुकत्रयेण त्र्यणुकस्यारब्धतया त्र्यणुकपरिमाणस्य परमाणुपरिमाणात् षड्गुणाधिक्येन त्र्यणुकपरिमाणात्परमाणुपरिमाणं षष्ठभाग एवापकृष्यत इत्युक्तम् ॥ **तदसिद्धाविति ।** त्र्यणुकपरिमाणात् षष्ठभाग एवापकृष्यते परिमाणमित्यस्यासिद्धावित्यर्थः । **विवक्षितार्थे** परमाणुरूपार्थ इति भावः । तदेवाह **अस्मादिति ।** तदयमर्थ इत्यदिना पूर्ववाद्युक्तानुमाने दृष्टान्तस्य साध्यहीनताबाधोक्तिपरिहारत्वेन 'न महत्त्वस्यापी'त्यादिमूलं व्याख्याय तथेत्यादिवाक्यमनुमानं विवक्षितार्थासाधकमित्येतदुक्तिपरतया व्याख्यातमधुनान्यथापि व्याचष्टे **यद्वेति ॥ अनेनेति ।** 'तथाणोश्चे'त्यादिवाक्येनेत्यर्थः । **समर्थितमिति ।** 'न महत्त्वस्यापि विश्रम' इत्यादिनाधस्तनग्रन्थेनेति भावः । तत्तात्पर्यं संग्रहेणानुवदति **तावदित्यादिना ।** तथेत्यादिवाक्यतात्पर्यमाह **तथेति ।** एतस्यार्थः **तद्दृष्टान्तेनेति ।** अणोरित्यस्याणुत्वपरिमाणापकर्षस्येति पूर्ववदर्थो ध्येयः ॥ **एतावद्भागतेति ।** त्र्यणुकपरिमाणात् षष्ठभागतेत्यर्थः ।

या० — **तदसिद्धाविति ।** इयत्तायाः क्वचिद्द्रव्येऽसिद्धावित्यर्थः । तदेवोपपादयति **अस्मादिति ।**

श्री० — **उत्कृष्यते** उत्कृष्टं भवति । **अपकृष्यते** अपकृष्टं भवति । एवमुत्तरत्र ॥ **तदसिद्धाविति ।** अणोरेतावद्भागताया असिद्धावित्यर्थः ॥ **विवक्षितेति ।** अपकर्षकाष्ठाश्रयभूतद्रव्यसिद्धिरूपेत्यर्थः । तदेव विशदयति **अस्मादिति । अनुत्कृष्यमाणं** कस्माच्चिदपि स्वयमुत्कृष्टं न भवति किन्तु सर्वापेक्षया स्वयमेवापकृष्टं इत्यर्थः ।

सु० — **द्वितीयं शङ्कते** विश्रान्त इति ।

**अनु०** — विश्रान्तो यद्यनन्तांशः कश्चिदस्तीति गम्यते ॥

**विश्रान्त इत्यस्य त्र्यणुकाद्यपेक्षया परिमाणतोऽनन्तांशो द्रव्यविशेषः कश्चिदस्तीत्यर्थ इति द्वितीयपक्षो गम्यतेऽभ्युपगम्यते यदीत्यर्थः** । इदमु(एतदु)क्तं भवति । **परिमाणापकर्षतारतम्यमियत्तानवच्छिन्नमेव । किन्त्वनन्तांशरूपमपि तत्क्वचिदाश्रितमिति । निराकरोति** नेति ।

नावसाययितुं शक्यो विरोधादेव केवलम् ॥

**तर्हीति शेषः । कश्चिदिति वर्तते । एवं साधने कश्चिदपि द्रव्यविशेषो नावसाययितुं शक्यः । अयमेव सर्वतोऽपकृष्टपरिमाणवान्नातोऽपकृष्टपरिमाणोऽस्तीति सर्वान्तिमतया न प्रति-**

पत्तु कश्चिच्छक्यते । कुतः केवलं साक्षाद्विरोधात् । परिमाणापकर्षोऽनन्तश्च पर्यवसितश्चेति हि विप्रतिषिद्धमेतत् । भवितव्यं चावसानेन । अन्यथा सर्वस्याप्युत्कृष्टापकृष्टपरिमाणसम्भवेन परमाणोर्महत्त्वनिराकरणासम्भवात् । एवशब्देन विरोधस्यापरिहार्यत्वं सूचयति । तदनेनापसिद्धान्तोऽभिहितो भवति ।

**शे०** — **द्वितीयमिति** । क्वचिद्द्रव्ये वृत्तिरिति द्वितीयमित्यर्थः । परिमाणापकर्षतारतम्यं क्वचिद्विश्रान्तमिति तारतम्यधर्मिकप्रतिज्ञायाः परिमाणतोऽनन्तांशो द्रव्यविशेषः कश्चिदस्तीत्यर्थकथनमनुपपन्नमित्यत आह **एतदुक्तं भवतीति** ॥ **तर्हीति शेष इति** । 'विश्रान्तो यद्यनन्तांश' इति पूर्वत्र यदीति श्रवणादिति भावः ॥ **वर्तत इति** । पूर्ववाक्यात्कश्चिदित्यनुवर्तते इत्यर्थः । तर्हीत्यस्य व्याख्यानं **एवं साधन इति** । कश्चिद्द्रव्यविशेषो नावसाययितुं शक्य इत्येतावन्मात्रं न परस्यानिष्टमित्यतोऽपेक्षितपूरणेन योजयति **कश्चिदपीत्यादिना** । कश्चिदपि द्रव्यविशेषो नावसाययितुं शक्य इत्येतदेव विवृणोति **अयमेवेति** । केवलमित्यनुवादेन साक्षादिति व्याख्यानम् । विरोधादित्युक्तं विरोधमेव प्रकटयति **परिमाणेति** । माऽस्त्वेवं कस्यापि द्रव्यविशेषस्य सर्वान्तिमतया प्रतिपत्तुं शक्यत्वं किमेतावतेत्यतोऽनवसाने बाधकं वक्तुमाह **भवितव्यं चेति** । अवसानेनेत्यतः पूर्वमुक्तविधयेति शेषः । भाष्ये एवशब्दस्याभिक्यमाशङ्क्य परिहरति **एवशब्देनेति** । ननु 'नावसाययितुमि'त्यादिना मूलग्रन्थेन द्वितीयपक्षस्य किं दूषणमुक्तमित्यत आह **तदनेनेति** । त्र्यणुकपरिमाणापेक्षया षष्ठभागपरिमाणद्रव्य एव तदवसानस्य तत्सिद्धान्तत्वादिति भावः ।

**प०** — **द्वितीयमिति** किं वा क्वचिद्द्रव्ये वृत्तिरित्यादिनोक्तपक्षमित्यर्थः । तर्हि मास्तु पर्यवसितिरित्यत आह **भवितव्यं चेति** ॥ **तदनेनेति** । 'नावसाययितुं शक्य' इत्यन्तेनेत्यर्थः । तत्पक्षे त्र्यणुकपरिमाणापेक्षया षष्ठभागपरिमाणेऽवसानाङ्गीकारात् तस्य चाशक्यतया परमाणुमहत्त्वस्याप्यापत्तेरिति भावः ।

**या०** — परिमाणापकर्षतारतम्यं क्वचिद्विश्रान्तमिति तारतम्यधर्मिप्रतिज्ञायाः परिमाणानन्तांशो द्रव्यविशेषः क्वचिदस्तीत्यर्थकथनमनुपपन्नमत आह **इदमुक्तं भवतीति** । ननु क्वचिदाश्रितमित्ययमंशः परित्यज्यतेऽतो न विरोध इत्यत आह **भवितव्यं चेति** । तथारित्यागेऽर्थान्तरता स्यादिति भावः । **तदनेनेति** । अवसानाभावोपपादनेनेत्यर्थः । तत्सिद्धान्ते त्र्यणुकपरिमाणापेक्षया षष्ठभागपरिमाणे द्रव्येऽवसानाङ्गीकारादिति भावः ।

**श्री०**— नन्वनन्तस्यापि परिमाणापकर्षस्य पर्यवसितत्वानङ्गीकारान्न विप्रतिषिद्धमेतदित्यत आह **भवितव्यं चेति** । क्वचिदाश्रितत्वरूपपर्यवसानानङ्गीकारे बाधकमाह **अन्यथेति** ॥ **महत्त्वनिराकरणेति** अणुत्वविश्रान्त्यधिकरणत्वेति यावत् । तथा चावसाने वाच्ये विरोध इति भावः ।

**सु०— यदि चानन्त्यमवधीर्य परिमाणापकर्षतारतम्यं क्वचिदाश्रितमित्येव प्रतिज्ञार्थः स्यात् । तथाऽपि न सिमा(षा)धयिषितमवसानं लभ्यत इत्यर्थान्तरता स्यात् । यथाऽऽकाशादेरुत्कृष्टपरिमाणं द्रव्यं नास्ति तथा परमाणोरपकृष्टपरिमाणं द्रव्यं नास्तीति तात्पर्यार्थ इति चेत् । सत्यम् । नायमितो लभ्यत इति उच्यते । परिमाणापकर्षतारतम्यं क्वचिन्निरतिशयम् परिमाणतारतम्यत्वात्परिमाणोत्कर्षतारतम्यवदिति विवक्षितमिति चेत् । कोऽयमतिशयो नाम । किमाधिक्यमुत न्यूनता । अथ साधारणं किञ्चित् । आद्ये बाधः । द्वितीये दृष्टान्तस्य साध्यविकलता । न तृतीयः । तदभावात् । शब्दसाम्यमात्रेणानुमानाप्रवृत्तेः । यथाऽऽकाशादिपरिमाणमुभयावधिमन्न भवति । तथा त्र्यणुकावयवावयवपरिमाणमपि साध्यमिति चेन्न । हेत्वभावात् । परिमाणत्वस्य घटादिपरिमाणे व्यभिचारात् । नित्यपरिमाणत्वस्याश्रयानित्यताया वक्ष्यमाणत्वेनासिद्धेः । परिमाणकाष्ठात्वस्य च साध्यत्वात् । एवं तात्पर्यान्तराण्यपि निराकार्याणीति ।**

---

**शे०— अवधीर्येति** । अनादृत्येत्यर्थः । धृङ् अनादरण इति स्मरणादिति भावः ॥ **प्रतिज्ञार्थ इति** । तथा च परिमाणापकर्षस्यानन्त्यस्य पर्यवसितत्वासाधनान्न विरोध इति भावः ॥ **न सिसाधयिषितेति** । त्र्यणुकपरिमाणापेक्षया षष्ठभागपरिमाणोपेतद्रव्यविशेषेऽवसानस्य सिसाधयिषितत्वात्तदसिद्धेरर्थान्तरतेत्यर्थः । उपलक्षणं चैतत् । प्रथमपक्षोक्तरीत्या दृष्टान्तस्य साध्यवैकल्याच्चेत्यपि द्रष्टव्यम् ॥ **बाध इति** । तदपेक्षयोत्कृष्टपरिमाणसद्भावेन तद्राहित्याभावादिति भावः ॥ **दृष्टान्तस्येति** । तदपेक्षयाऽपकृष्टपरिमाणसद्भावेन तद्राहित्यस्य तत्राभावादिति भावः ॥ **तदभावादिति** । आधिक्यन्यूनतासाधारणस्यातिशयस्याभावादित्यर्थः । नन्वतिशयशब्दवाच्यत्वमेव तदुभयसाधारणमस्तीति कथं तदभाव इत्यत आह **शब्देति** ॥ **अनुमानाप्रवृत्तेरिति** । अन्यथा गोशब्दवाच्यत्वेन पृथिव्या अपि श्रृङ्गित्वानुमानप्रसङ्गादिति भावः ॥ **उभयावधिमन्न भवतीति** । उत्कर्षापकर्षावधिमन्न भवतीत्यर्थः । एतच्च घटवत्यपि भूतले घटपटौ न स्त इति प्रतीत्या व्यासज्यवृत्तिधर्मावच्छिन्नाभावोऽस्तीति वादिमतेनोक्तम् । तथा च दृष्टान्तेऽपकर्षावधेः पर्वतादिपरिमाणस्य सत्त्वेन पक्षीकृते त्र्यणुकावयवावयवपरिमाणे चोत्कर्षावधेर्द्व्यणुकादिपरिमाणस्य सत्त्वेन तदभावस्य तत्रासम्भवात्कथमुभयावधिमत्त्वाभावसाधनमिति शङ्कानवकाशः । दृष्टान्ते

अपकर्षावधिमत्त्वस्य दार्ष्टान्तिके चोत्कर्षावधिमत्त्वस्य सत्त्वेऽप्युत्कर्षापकर्षावधिमत्त्वाभावस्य व्यासज्यवृत्तिधर्मावच्छिन्नाभाववादिमतेऽप्रत्यूहत्वादित्यवधेयम् । द्व्यणुकावयवावयवपरिमाणमिति त्वाश्रयासिद्धिपरिहारायोक्तम् । महावयविनोऽवयवावयववत्त्वनियत्या द्व्यणुकेऽप्यवयवावयववद्द्रव्यसिद्धौ परिमाणरहितद्रव्याभावेन तत्परिमाणस्यापि सिद्ध्या तदनवकाशादिति भावः । तत्कथमित्यतः स किं परिमाणत्वं वा, नित्यपरिमाणत्वं वा, परिमाणतारतम्यकाष्ठात्वं वेतिविकल्पान्मनसि निधायाद्यं व्याचष्टे **परिमाणत्वस्येति** ॥ **घटादेरिति** । तस्योत्कर्षापकर्षावधिमत्त्वादिति भावः । द्वितीयं प्रत्याह **नित्यपरिमाणत्वस्येति** ॥ **वक्ष्यमाणत्वेनेति** । 'रूपस्पर्शादिहेतुभ्य' इत्यादिनेति शेषः । तृतीयं दूषयति **परिमाणकाष्ठात्वस्येति** । परिमाणतारतम्यकाष्ठात्वस्येत्यर्थः ॥ **साध्यत्वादिति** । तथा च साध्याविशिष्टतेति भावः । नन्वणुत्वं सजातीयप्रतियोगिकोत्कर्षापकर्षानाश्रयवृत्ति परिमाणत्वव्याप्यजातित्वात् । महत्त्वत्ववदित्यत्र तात्पर्यम् । अत्र चोत्कर्षापकर्षयोरन्यतरगर्भतया साध्यद्वयमभिमतम् । तावतैवाभिमतसिद्धेः । साजात्यं चात्र परिमाणत्वसाक्षाद्व्याप्यजात्या । तथा च सजातीयपरमाणुपरिमाणप्रतियोगिकोत्कर्षानाश्रयीभूतत्र्यर्थकपरिमाणवृत्तित्वमेकेन सिध्यति । सजातीयत्र्यर्थकपरिमाणप्रतियोगिकापकर्षानाश्रयीभूतपरमाणुपरिमाणवृत्तित्वं चापरेण सिध्यति । त्र्यर्थकापेक्षया परमाणोरन्यतरत्वेन तत्परिमाणस्य त्र्यर्थकपरिमाणप्रतियोगिकोत्कर्षाश्रयत्वात् । च दृष्टान्तासिद्धिः । सजातीयापकर्षानाश्रयत्वस्य व्योमपरिमाणे सजातीयोत्कर्षानाश्रत्वस्य च त्रसरेणुपरिमाणे सत्त्वेन तद्वृत्तितया महत्त्वत्वे साध्यसत्त्वात् । न चानुभवसिद्धपर्वतादिमहत्त्ववृत्तिजातिविशेषे परममहत्त्वत्वजातौ व्यभिचार इति वाच्यम् । व्याप्यपदस्य साक्षाद्व्याप्यपरत्वात् । यद्वाऽणुत्वत्वं स्वसमानजातीयनिरूपितापकर्षासमानाधिकरणस्वसमानजातीयनिरूपितोत्कर्षसमानाधिकरणम् परिमाणत्वसाक्षाद्व्याप्यजातित्वात् । महत्त्वत्ववदित्यत्र तात्पर्यमित्याशङ्क्याह **एवं तात्पर्यान्तराणीति** । किरणावलीप्रकाशलीलावतीप्रकाशानुसारेणोक्तरीत्या तात्पर्यान्तराणीत्यर्थः । परिमाणत्वावान्तरजातेरभावस्य प्रागुपवर्णितत्वेनाश्रयासिद्ध्यादेरुक्तरीत्येतरेतराश्रयत्वादिदोषाणां चाप्यविशिष्टत्वादिति भाव ।

**प०**— तर्ह्यनन्तत्वं त्यज्यतां एवं च न विरोध इत्याशङ्कामनूद्य निराह **यदि चेति** । **अवधीर्य** तिरस्कृत्येत्यर्थः ॥ **न सिसाधयिषितेति** । द्व्यणुकषष्ठभागपरिमाणद्रव्यासिद्धेरिति भावः । **तदभावादिति** । आधिक्यन्यूनतासाधारणस्यातिशयस्याभावादित्यर्थः ॥ **शब्दसाम्येति** । निरतिशयमितिशब्दसाम्यमात्रेणेत्यर्थः । अन्यथा गोत्वेन पृथिव्या अपि शृङ्गित्वानुमानापत्तेरिति भावः । **उभयावधिमन्न भवतीति** । आकाशपरिमाणस्योत्तरावधिमत्त्वाभावेऽपि पूर्वावधिमत्त्वेन उभयावधिमत्त्वं यथा नास्ति तथा द्व्यणुकावयवावयवपरमाणुपरिमाणमप्युभयावधिमन्नेत्युक्तौ उत्तरावधिमत्त्वेन तदभावेन साध्यपर्यवसाने बाधा-

त्पूर्वावधिमत्त्वाभावेनैव साध्यपर्यवसानमिति परमाणोरणुत्वमात्रमेव सिध्यति । न महत्त्वमपीतीष्टसिद्धिरिति भावः । **वक्ष्यमाणत्वेनेति** 'रूपस्पर्शादिहेतुभ्यः परमाणोरनित्यते'त्यादाविति भावः । परिमाणकाष्ठात्वमेव पक्षदृष्टान्तयोरनुगतो हेतुरस्त्वित्यत आह **परिमाणकाष्ठात्वस्य चेति** । परिमाणतारतम्यकाष्ठात्वस्येत्यर्थः ।

**या०— अवधीर्येति** । अनादृत्येत्यर्थः । धृङनादर इति धातोः ॥ **सिषाधयिषितमिति** । त्र्यणुकपरिमाणापेक्षया षष्ठभागपरिमाणोपेतद्रव्यविशेष एवावसानं सिषाधयिषितं तन्न लभ्यत इत्यर्थः ॥ इदमुपलक्षणम् । प्रथमकल्पोक्तसाध्यवैकल्यादिदोषोऽपि स्यादिति द्रष्टव्यम् ॥ इतः विश्रान्तिशब्दात् । **तदभावादिति** । आधिक्यन्यूनतासाधारणस्यातिशयस्याभावादित्यर्थः । **अनुमानाप्रवृत्तेरिति** । अन्यथा गोशब्दसाम्येन पृथिव्यां शृङ्गानुमानप्रसङ्ग इति भावः ॥ **उभयावधिमन्न भवतीति** । उत्कर्षापकर्षावधिमन्न भवतीत्यर्थः । इदं चैकसत्त्वेपि द्वयमिह नास्तीति प्रतीत्या व्यासज्यवृत्तिधर्मावच्छिन्नाभावोऽस्तीति मतमाश्रित्य । तथा च दृष्टान्ते उत्कर्षावधेः पर्वतादिपरिमाणस्य सत्त्वेऽप्यपकर्षावध्यभावमादाय साध्यपर्यवसानम् । पक्षे चापकर्षावधेर्द्व्यणुकादिपरिमाणस्य सत्त्वेऽप्युत्कर्षावध्यभावमादायेति ज्ञातव्यम् । त्र्यणुकावयवावयवपरिमाणमित्याश्रयासिद्धिव्युदासायोक्तम् । महावयविन्यवयवावयवनियमेन त्र्यणुकेऽप्यवयवावयवद्रव्यसिद्धौ परिमाणरहितद्रव्याभावेन तत्परिमाणस्यापि सिद्धिरित्याशयात् ॥ **परिमाणकाष्ठात्वस्येति** । परिमाणतारतम्यकाष्ठात्वस्येत्यर्थः ॥ **साध्यत्वादिति** । साध्यसमत्वादित्यर्थः ॥ **एवं तात्पर्यान्तराणीति** । अणुत्वं सजातीयप्रतियोगिकोत्कर्षापकर्षानाश्रयवृत्ति परिमाणत्वव्याप्यजातित्वात् महत्त्ववदित्यादीनि नवीनोत्प्रेक्षितानीत्यर्थः । **निराकार्याणीति** । परिमाणत्वावान्तरजातेरभावेन सिद्धयाद्यापत्तेः उक्तेतरेतराश्रयादिदोषाच्च निराकार्याणि इत्यर्थः ॥

**श्री०— निरतिशयमित्यस्यापकर्षतारतम्यं विवक्षितद्रव्यं विनाऽन्यत्रातिशयेन नास्तीत्यर्थः । एवं दृष्टान्तेऽपि ॥ आद्ये बाध इति** । निरतिशयमित्यस्य स्वापेक्षयाऽधिकशून्यमिति यद्यर्थः तर्हि गगनादिनिष्ठोत्कर्षे स्वापेक्षयाधिकशून्यत्वे विद्यमानेऽप्यपकर्षतारतम्ये महत्त्वरूपाधिकपरिमाणोपेतत्वस्यैव सत्त्वाद्बाधः । यदि न्यूनताशून्यमित्यर्थः, तर्हि इदं यद्यपि पक्षेऽपकर्षतारतम्ये स्वापेक्षया न्यूनताशून्यत्वमस्ति । तथापि दृष्टान्ते उत्कर्षतारतम्ये न्यूनपरिमाणोपेतत्वस्यैव सत्त्वेन साध्यवैकल्यमित्यर्थः ॥ **घटादिपरिमाण इति** । उत्कर्षावधिभूतस्य सर्षपादेरपकर्षावधिभूतस्य पर्वतादेः सत्त्वेनोभयावधिमत्त्वस्यैव सत्त्वादिति भावः ।

**सु०— परिमाणोत्कर्षतारतम्यस्यानन्तत्वं दृश्यत इत्युक्तम् । तत्केन प्रमाणेनेत्याशङ्क्य कालाकाशेश्वरादीनि हि द्रव्याणि परममहत्त्ववन्तीष्यन्ते । तत्र कालाकाशयोस्तावत्परिमाणोत्कर्षस्यानन्त्यं साक्षिसिद्धमित्याह** केवलमिति ।

अनु० — केवलं साक्षिमानेन कालो देशोऽपि नान्तवान् ॥

**केवलशब्देन प्रमाणान्तराभावं प्रतिजानीते । देश इत्याकाश उच्यते । नान्तवानित्यनवधिकपरिमाणोत्कर्षवान् । दृश्यत इति वक्ष्यमाणमत्रापि सम्बध्यते । कालाकाशौ हि केवलं साक्षि(वेद्या)सिद्धावित्युपपादितं प्रथमाध्याये । अतस्तत्परिमाणोत्कर्षस्यानवधिकत्वमपि तेनैव गम्यत इति ।**

शे० — 'केवलं साक्षिमानेने'त्युत्तरभाष्यस्यानर्थक्यमाशङ्क्य कालाकाशयोः परिमाणोत्कर्षानन्त्यस्य साक्षिसिद्धत्वोपवर्णनार्थत्वान्न तदिति भावेन तदुपपादकतयोत्तरग्रन्थं योजयितुं तत्प्रतिपादनस्यापि न पूर्वेण सङ्गतिरित्यनोऽव्यवहितपूर्वग्रन्थेन सङ्गत्यभावेऽपि व्यवहितेन तेन सङ्गतेर्विद्यमानत्वान्नासङ्गतिरित्याशयवानव्यवहितपूर्वग्रन्थसङ्गतिप्रदर्शनपूर्वकमुत्तरग्रन्थं सङ्गमयति **परिमाणेति** ॥ **उक्तमिति** ॥ 'दृश्यतेऽनन्त इत्येवे'त्यनेनेति शेषः । 'अणीयांश्च महीयांश्चे'त्यदिना परिमाणानन्त्यस्येश्वरे आगमसिद्धताया वक्ष्यमाणत्वात्तदभिप्रायेण तावदित्युक्तम् । साक्षिमानेनेत्येतावता पूर्त्या भाष्ये केवलमित्यस्यानर्थक्यमित्याशङ्क्य परिहरति **केवलशब्देनेति** ॥ **वक्ष्यमाणमिति** । अपर्यवसितिरित्युत्तरवाक्य इति शेषः । ननु कालाकाशयोः परिमाणोत्कर्षस्य कुतः साक्षिसिद्धतेत्यतो धर्मिग्राहकत्वात्तस्येत्याह **कालाकाशौ हीति** ॥ **उपपादितमिति** । 'कालो हि साक्षिप्रत्यक्षः सुषुप्तौ च प्रतीतितः', 'सत्यत्वं गगनादेश्चे'त्यादिनेति शेषः ।

प० — एवं 'तारतम्यास्थिता' इत्यादावुक्ते परमाणुगतपरिमाणोत्कर्षापकर्षरूपप्रमेये विरोधितया यथा महत्त्वेत्यादिना शङ्कितमनुमानं न महत्त्वस्येत्यादिना साध्यवैकल्यबाधप्रतिपक्षापसिद्धान्तार्थान्तरत्वहेत्वभावसाध्याविशिष्टत्वदोषैर्निरस्य सर्वस्याणुत्वमहत्त्वे पुरुषापेक्षया प्रत्यक्षत्वाप्रत्यक्षत्वे चोपपाद्य महद्दीर्घवद्वेति सूत्राभिमतं प्रागुक्तानुमानचतुष्टयं समर्थितम् । तत्र प्रागुक्तसाध्यवैकल्यबाधयोः प्रपंचनपरः 'केवलं साक्षी'त्यादिः 'अतोनाणुत्वे'त्यन्त उत्तरो ग्रन्थ इति भावेनावतारयति **परिमाणेति** ॥ **आकाश उच्यत इति** । अत्र सर्वत्राकाशपदेनाव्याकृताकाशो ग्राह्यः । नान्तवानिति नसमास इति भावेनार्थमाह **अनवधिकपरिमाणोत्कर्षवानिति** ॥ **उपपादितमिति** । 'कालो हि साक्षिप्रत्यक्षः सुषुप्तौ च प्रतीतित' इत्यादिनानुमानिकपाद इति भावः ।

सु० — **परिमाणापकर्षतारतम्यस्याप्यानन्त्यं दृश्यत इत्युक्तम् । तत्केन प्रमाणेनेत्याशङ्क्य कालाकाशयोस्तावत्साक्षिणैवेत्याह** अपर्यवसितिश्चेति ।

अनु०　अपर्यवसितिश्चाणोर्दृश्यते साक्षिणा द्वयोः ॥

**द्वयोः काले गगने च** । अणोश्च **परिमाणापकर्षतारतम्यस्य चेत्यर्थः** । अपर्यवसितिः आनन्त्यम् ।

**नन्वेतदनुपयुक्तम् । परमाणुपरिमाणतोऽपकृष्टपरिमाणसद्भावे प्रमाणोपन्यासस्य कार्यत्वे कालाकाशयोः परिमाणोत्कर्षानन्त्ये प्रमाणोपन्यासस्य प्रयोजनाभावादिति । मैवम् । न हि परेण साक्षादेवमुक्तम् । किन्तु परिमाणोत्कर्षपरम्परावत्तदपकर्षपरम्पराऽपि पर्यवसानवतीति । तथा च कालाकाशयोः परिमाणोत्कर्षापकर्षपरम्परायाः पर्यवसानाभावे साक्षिप्रमाणोपन्यासः कथमसङ्गतः ।**

**नन्वस्तु कालाकाशयोः परिमाणोत्कर्षोऽनवधिकः । तदपकर्षानन्त्यं तु कथम् । व्याहतत्वात् । मैवम् । साक्षिसिद्धत्वात् । प्रमितेऽर्थे विरोधानवकाशात् ।**

शे० — परिमाणोत्कर्षानन्त्यस्य साक्षिसिद्धतायाः पूर्वेणैव सिद्धत्वादपर्यवसितिश्चाणोरित्युत्तरभाष्यमनर्थकमित्याशङ्क्य कालाकाशयोः परिमाणोत्कर्षानन्त्यस्य साक्षिसिद्धत्वसिद्धावपि परिमाणापकर्षानन्त्यस्य साक्षिसिद्धताया असिद्धेस्तदुपवर्णनार्थत्वान्न तदिति भावेन तदुपपादकतया तद्योजयितुं तत्प्रतिपादनस्य न पूर्वेण सङ्गतिरित्यतोऽव्यवहितेन सङ्गत्यलाभाद्व्यवहितेन तामुपदर्शयन्नुत्तरभाष्यमवतारयति **परिमाणापकर्षेति** ॥ **उक्तमिति** । 'तथाऽऽनन्त्यमणावपी'त्यादिनेति शेषः । नन्वत्र ययोः कयोश्चिद्द्वयोरणोरपर्यवसितिः साक्षिणा दृश्यत इत्येतावदुच्यते, न तु कालाकाशयोः परिमाणापकर्षानन्त्यं साक्षिणा दृश्यत इति तत्कथमनेन कालाकाशयोः परिमाणापकर्षानन्त्यस्य साक्षिसिद्धत्वसिद्धिरित्यतः पूर्ववाक्ये कालाकाशयोः प्रकृतत्वाद्द्वयोरित्यस्य तत्परतां, चशब्दस्याणोश्चेति भिन्नक्रमतामणोरित्यस्योक्तरीत्या परिमाणापकर्षतारतम्यपरतां अपर्यवसितिपदस्य च योगेनानन्त्यपरतामङ्गीकृत्य प्रकृतोपयोगिपरतयैतद्योजयति **द्वयोरित्यादिना** ॥ **व्याहतत्वादिति** । एकत्रोत्कर्षापकर्षयोरनवधिकत्वस्य विरुद्धत्वादित्यर्थः । कालाकाशयोः परिमाणोत्कर्षापकर्षानवधिकत्वस्य साक्षिसिद्धत्वान्न विरुद्धत्वमिति परिहरति **साक्षीति** । साक्षिसिद्धत्वेऽपि परिमाणोत्कर्षापकर्षयोरेकत्र विरुद्धत्वं किन्न स्यादित्यत आह **प्रमितेऽर्थ इति** । सहदृष्टौ च विरुद्धौ चेत्यस्य विप्रतिषिद्धत्वादिति भावः ।

प० — **इत्युक्तमिति** । 'तथानंत्यमणावपी'त्यत्रेति भावः । द्वयोरिति सप्तमीत्युपेत्याह **काले गगने चेति** । अणोश्चेत्यस्य व्याख्या **परिमाणेत्यादि** ॥ **एवमुक्तमिति** । परमाणुगतपरिमाणादपकृष्टपरिमाणसद्भावो नास्तीत्येवं साक्षान्न ह्युक्तं पूर्ववादिनेत्यर्थः । 'यथा महत्त्वविश्रांतिस्तथाणुत्वस्य चे'ति मूलानुरोधादाह **किन्तु परिमाणेत्यादि** ।

सु० — कालादावनवधिकः परिमाणापकर्षः साक्षिसिद्ध इत्येव नेष्यत इति चेत् । किं साक्षिणा नावगम्यते, उतावगतोऽपि न सत्यः, अथवा साक्षी नाम प्रमाणं नास्ति ।
आद्यं शङ्कते यदीति ।

अनु० — यदि नो साक्षिगम्यं तत्

तदिति कालादेः परिमाणापकर्षस्यानन्त्यं सामान्येन परामृशति । दूषयति महत्त्वमिति ।

महत्त्वं केन गम्यते ॥

कालाकाशयोरिति वर्तते । महत्त्वम् अनवधिकः परिमाणोत्कर्षः । तर्हीति शेषः । अयमभिसन्धिः । कालादौ परिमाणोत्कर्षस्यानन्त्यमुपेत्य हि परेण तदपकर्षानन्त्यं नेष्यते । तत्र तक्तव्यम् । प्रकर्षानन्त्यं केन प्रमाणेनावगम्यत इति । साक्षिणेति चेत् । अपकर्षानन्त्यमपि तद्बलेन कुतो नाङ्गीकार्यम् । तत्तेन नावगम्यत इत्युक्तमिति चेत् । इदमपि (तदपि) तेन नावगम्यत इति वदन्तं प्रति किमुत्तरम् । अनुभवापलापो न युक्त इति चेत् । समं प्रकृतेऽपि । यथा हि कालादेरुत्कर्षानवधिकत्वमनुभवे चकास्ति । तथाऽपकर्षानन्त्यमपीति किमेकत्र पक्षपातेन । अन्यथैकापलापे द्वितीयस्याप्यपलापो दुरुत्तरः स्यादिति ।

---

शे० — भवेदेतदेवं यदि परिमाणोत्कर्षापकर्षानवधिकत्वं कालाकाशयोः साक्षिसिद्धं स्यात् । न चैतदस्तीति कथमविरुद्धत्वमिति शङ्कते कालादाविति । अपर्यवसितेस्तदिति नपुंसकेन परामर्शानुपपत्तिमाशङ्क्याह तदितीति ॥ वर्तत इति । 'अपर्यवसितिश्चाणोर्दृश्यते साक्षिणा द्वयोरि'त्यतोऽनुवर्तत इत्यर्थः । यद्यपि कालाकाशयोरिति न पूर्वत्र श्रुतं तथाऽपि श्रुतस्य द्वयोरित्यस्य तदर्थत्वाभिप्रायेणेदमुक्तम् ॥ तर्हीति शेष इति । 'यदि नो साक्षिगम्यं तदि'ति पूर्वत्र यदीति श्रवणादिति भावः । नन्वत्र कालादेः परिमाणापकर्षानन्त्यस्य साक्षिसिद्धत्वाभावे तदुत्कर्षानन्त्यस्यापि साक्षिसिद्धत्वं न स्यादित्यापाद्यते । तदयुक्तम् । कालादेरुत्कर्षानन्त्यस्यैव परेणाङ्गीकारेण तस्य साक्षिसिद्धत्वाभावस्य परं प्रतीष्टत्वेन तदापादनस्येष्टापादनत्वात्तर्कमूलभूतव्याप्त्यभावाच्चेत्यतः प्रकर्षानन्त्यस्य साक्षिसिद्धत्वोपपादनेन तदभावस्यानिष्टतामुपदर्शयन्नविशेषव्याप्तिमप्युपदर्शयति अयमभिसन्धिरिति ॥ उपेत्येति । अस्तु कालाकाशयोः परिमाणप्रकर्षोऽनवधिक इति तद्वचनादिति भावः ।

श्री० — अपर्यवसितेः प्रकृतत्वादाह तदितीति । सामान्ये नपुंसकमिति सूत्रादिति भावः ।

सु० — स्यादेतत् । न कालादेः परिमाणोत्कर्षानन्त्यं साक्षिसिद्धमिति ब्रूमः । किंतु अनुमानगम्यम् । तथा च न प्रतिबन्दीग्रह इत्यत आह विश्रान्तिरिति ।

अनु० — विश्रान्तिस्तारतम्येन दृश्यते ह्यनुमानतः ॥

परिमाणोत्कर्षपरम्पराया इति शेषः । अनुमानत इति तृतीयार्थे तसिः । नानुमानेन कालादावनवधिकपरिमाणोत्कर्षसिद्धिः । हि यस्मात्तारतम्येनानुमानेन तद्विश्रान्तिर्दृश्यते । परिमाणोत्कर्षतारतम्यं इयत्तावत्परिमाणतारतम्यत्वात्तदपकर्षतारतम्यवदिति प्रत्यनुमानप्रतिरुद्धत्वादिति यावत् । न च दृष्टान्तोऽस्माकं साध्यविकल इति वाच्यम् । अपकर्षतारतम्यस्य अन्तवत्त्वमुपेत्योत्कर्षतारतम्यस्यानन्त्यमनुमिमानस्य परस्यैवं प्रतिपक्षोत्प्रेक्षा स्यादित्युच्यमानत्वात् । तथा च साक्षिविरुद्धं प्रत्यनुमानमिति वक्तव्यम् कथं तर्हि स एव कालादावनवधिकपकृष्टपरिमाणं न साधयेदिति ।

शे० — ननु परिमाणोत्कर्षानन्त्यस्य साक्षिसिद्धत्वप्रतिबन्द्या तदपकर्षानन्त्यस्य साक्षिसिद्धत्वसमर्थनेनाविरुद्धत्वसिद्धेर्विश्रान्तिरित्युत्तरभाष्ये कालादौ परिमाणोत्कर्षतारतम्यस्य परिमाणतारतम्यत्वेनेयत्तावत्त्वप्रतिपादनमनर्थकमित्याशङ्क्य तदुत्कर्षानन्त्यसाधकानुमानस्य प्रत्यनुमानपराहतत्वप्रतिपादनेन तस्यानुमानिकत्वेन प्रतिबन्दीग्रहासंभवशङ्कापरिहारार्थत्वान्न तदिति भावेन तच्छङ्कापरिहारकतयोत्तरभाष्यं योजयितुं कालादावुत्कर्षानन्त्यस्यानुमानिकत्वेन प्रतिबन्दीग्रहासंभवशङ्कामुत्थापयति स्यादेतदिति । तथा चेष्टापादनरूपत्वात्तर्काभासोऽयमिति भावः । तर्हि केन प्रमाणेन तदवगम्यत इति पृच्छति किन्त्विति । न ह्यभ्युपगमोऽप्रामाणिक इति संभवर्तति भावः । उत्तरमाह अनुमानगम्यमिति । संप्रतिपन्नः सर्वोऽपि परिच्छिन्नः कालः स्वतः स्थूलेन कालान्तरेण युक्तः कालत्वान्मुहूर्तादिकालवदिति कालानन्त्यसाधकम् । संप्रतिपन्नः सर्वोऽपि परिच्छिन्नो देशः स्वतः स्थूलेन देशान्तरेण युक्तो देशत्वाद्धस्तादिदेशवदित्यादिपदोक्तं देशानन्त्यसाधकमनुमानं च द्रष्टव्यम् । प्रत्यनुमानस्य मूलारूढतासिद्ध्यर्थमपेक्षितं पूरयति परिमाणोत्कर्षेति । अनुमानत इति पञ्चम्यन्तात्तसिरिति पक्षे तारतम्यस्यैवानुमानत्वासिद्धेस्तत्सिद्ध्यर्थमाह अनुमानत इति ॥ तृतीयार्थे तसिरिति । आद्यादित्वादिति भावः । भाष्ये हिशब्दानर्थक्यमाशङ्क्य यस्मादित्यर्थत्वान्न तदित्यभिप्रेत्य हेतुसमर्पकतया भाष्यं योजयितुमपेक्षितां प्रतिज्ञां तावत् पूरयति नानुमानेनेति ॥ न च दृष्टान्त इति । सिद्धान्तेऽपकर्षतारतम्यस्याप्यनवधिकत्वाभ्युपगमेन इयत्तावत्त्वाभावादिति भावः । भवेदेतदेवं यद्येतत्सिद्धान्तिनोऽनुमानं स्यात् । न चैतदस्ति । किन्त्वित्यत आह अपकर्षतारतम्यस्यान्तवत्त्वमिति ।

प० — तारतम्येनेत्येतत्सामानाधिकरण्यादाह **तृतीयार्थे तसिरिति** । 'प्रतियोगे पंचम्यास्तसि-रि'ति सूत्रे 'आद्यादिभ्य उपसंख्यानमि'त्युक्तत्वात् आद्यादेराकृतिगणत्वादत्र तृतीयार्थे तसिरित्यर्थः ॥ **तारतम्येनानुमानेनेति** । तारतम्यत्वहेतुनेत्यर्थः । **अस्माकं** सिद्धान्तिनामित्यर्थः ॥ **इति वक्तव्य-मिति** । परिमाणोत्कर्षानन्त्यं ब्रुवतेति भावः ॥ **स एवेति** । साक्ष्येवेत्यर्थः ।

या० — ननु तारतम्यस्यैव अनुमानत्वात्तयोश्च भिन्नविभक्तिकतया निर्देशाद्विशेषणविशेष्य-भावायोग इत्यत आह **अनुमानत इतीति** ।

श्री० — **अस्माकमिति** । अपकर्षतारतम्यस्येयत्तामनभ्युपगच्छतां मते । **प्रत्यनुमानं** इयत्ता-साधकम् । **स एव साक्ष्येव** ।

**सु० अस्तु तह्यागमात्कालादावनवधिकोत्कृष्टपरिमाणसिद्धिरित्याशङ्क्याह** यदीति ।

**अनु०** — यद्यागमादनन्तं तन्महत्त्वमवगम्यते ॥

अनन्तमेव चाणुत्वं कुतो नैवावसीयते ॥

आगमात् **स एषोऽनन्त इत्यादेः** । तन्महत्त्वं **कालादिपरिमाणोत्कर्षः** । अणुत्वं **परि-माणापकर्षः** । **एतदु(इदमु)क्तं भवति** । **नागमः कालाद्यनन्ततां स्वयं प्रतिपादयति** । **तत्प्रवृत्तेः प्रागेव साक्षिणा तत्प्रतिभासात्** । **किन्त्वनुवाद एवायम्** । **प्रतिपादकत्वे वा नास्मत्प्रयोजन-परिक्षयः** । **यस्मादागमात्कालाद्युत्कर्षोऽनवधिकः प्रतीयते तस्मादेवापकर्षानन्त्यप्रतीतेः** । **अनन्तशब्दो ह्यनवच्छेदमात्रमाचष्टे** । **स च यथा परिमाणोत्कर्षविषयो** व्याख्यायते । **तथा तदपकर्षविषयोऽपि शक्यते** व्याख्यातुमिति ॥

**शे०** – ननु 'यद्यागमादनन्तं तदि'त्याद्युत्तरभाष्यमनर्थकम् कालादावुत्कर्षानन्त्यस्यानुमानिकत्व-निरासेन उत्कर्षापकर्षानन्त्यस्य साक्षिसिद्धतायाः पूर्वेणैव सिद्धत्वात् । न च कालादेः उत्कर्षानन्त्यस्य आगमसिद्धतां शङ्कमानं प्रति तदपकर्षानन्त्यस्यापि आगमसिद्धतोपपादनार्थं तदिति वाच्यम् । प्रयोजन-विशेषाभावेन साक्षिसिद्धतापरित्यागेन कालादौ परिमाणोत्कर्षानन्त्यस्यागमसिद्धताया एवानाशङ्कनीय-त्वात्तत एव च तदपकर्षानन्त्यस्याप्यागमसिद्धतोपपादनस्याप्यनुपयोगादित्यतः कालादेरुत्कर्षानन्त्यस्यागम-सिद्धत्वेन साक्षिसिद्धत्वाभावात्कालादावुत्कर्षापकर्षानन्त्ययोरुत्कर्षानन्त्यस्य साक्षिसिद्धत्वेऽपकर्षानन्त्यस्यापि तदेष्टव्यम् अपकर्षानन्त्यस्य तदसिद्धत्वे चोत्कर्षानन्त्यस्यापि तदसिद्धत्वमेवेति सिद्धान्तिनोक्ताया 'यदि नो साक्षिगम्यं तदि'ति साक्षिसिद्धत्वप्रतिबन्द्याः आपादकासिद्धिव्युत्पादनेन वाऽऽपाद्यस्येष्टत्वव्युत्पादनेन वा परिहारार्थतयाऽर्थवत्त्वेन परेण तदाशङ्कायाः कर्तव्यत्वात्सिद्धान्तिनश्च माऽस्त्वेवमुत्कर्षानन्त्ययोः

कालादौ साक्षिसिद्धत्वप्रतिबन्दी, आगमसिद्धत्वप्रतिबन्दी तु वक्ष्यमाणरीत्या स्यादेवेति व्यर्थ एव साक्षिसिद्धत्वपरित्यागेनोत्कर्षानन्त्यस्यागमसिद्धताऽङ्गीकारः परस्येति ज्ञापनायापकर्षानन्त्यस्यागमसिद्धत्वोपपादनमप्यावश्यकमेवेति न काऽप्यनुपपत्तिरिति भावेन तदाशङ्कापरिहारकतयोत्तरभाष्यं योजयितुं साक्षिसिद्धत्वप्रतिबन्दीं मोचयितुं कालादावुत्कर्षानन्त्यस्यागमसिद्धत्वशङ्कामुत्थापयति **अस्तु तर्हीति** ॥ **स एषोऽनन्त इत्यादेरिति** । आदिपदेन कालानन्त्यप्रतिपादकागमपरिग्रहः । अत्र च स इति तच्छब्दस्याकाश इति होवाचेति पूर्ववाक्यप्रकृताकाशपरत्वाद्विवक्षितार्थसिद्धिः । यद्यप्यत्राकाशस्तल्लिङ्गादिति न्यायेनास्याकाशस्य विष्णुत्वान्न स एषोऽनन्त इत्यागमेन प्रसिद्धाकाशस्योत्कार्षानन्त्यसिद्धिरित्येव वक्तुमुचितम् । तथाऽप्यङ्गीकृत्य पूर्वपक्षरीत्याऽस्याकाशस्य प्रसिद्धाकाशत्वं अयं ग्रन्थः । अङ्गीकारवादस्येदं प्रयोजनम् । यत्साक्षिसिद्धत्वप्रतिबन्दीपरिहारायाङ्गीकृतमुत्कर्षानन्त्यस्यागमसिद्धत्वं तदुत्कर्षापकर्षानन्त्ययोराकाशादौ आगमसिद्धत्वप्रतिबन्ध्यन्तरसम्पादकत्वादनर्थकमेवेति ज्ञापनमिति ध्येयम् ।

ननु केवलं साक्षिमानेनेत्यादिना कालाद्यानन्त्ये साक्ष्यतिरिक्तप्रमाणाभावस्योक्तत्वादागमात्तत्सिद्धिव्युत्पादनं पूर्वविरुद्धमित्यतो यद्यागमादित्यादिनोक्तप्रमाणान्तराभ्युगमस्याङ्गीकारवादत्वान्न विरोध इति भावेनाङ्गीकारवादतया ग्रन्थतात्पर्यं वक्तुं केवलमित्यादिपूर्वग्रन्थानुरोधेन वस्तुस्थितिं तावदाह **एतदुक्तं भवतीति** । कुतो न स्वयं प्रतिपादयतीत्यत आगमप्रवृत्तेः प्राक् सतः कालाद्यानन्त्यज्ञानस्यागमनिमित्तत्वायोगादित्याह **तत्प्रवृत्तेरिति** । अन्यथा कदाचित्तत्र संशयविपर्ययाद्यन्यतमप्रसङ्गादिति भावः । तत्प्रवृत्तेः प्रागेवेत्युपलक्षणम् । सर्वथा तत्प्रवृत्त्ययोग्यानां जातिबधिराणामपि तत्प्रतिभासनादित्यपि द्रष्टव्यम् । का तर्हि स एषोऽनन्त इत्यादेर्गतिरिति पृच्छति **किन्त्विति** । उत्तरमाह **अनुवाद एवायमिति** । साक्षिसिद्धानन्त्यानुवाद एवेत्यर्थः । **तत्प्रवृत्तेः प्रागेवेति** । पूर्वोक्तयुक्तेरेवेति भावः । अत एव केवलसाक्षिभास्यत्वसिद्धे आगमस्यानुवादकत्वसिद्धिस्तत्सिद्धौ च केवलसाक्षिभास्यत्वसिद्धिरित्यन्योन्याश्रयोऽपि निरस्तः । आगमप्रवृत्तेः प्राक् सतः कालाद्यानन्त्यज्ञानस्यागमनिमित्तकत्वानुपपत्त्यैव तत्सिद्ध्या केवलसाक्षिभास्यत्वसिद्धेरनुवादकत्वसिद्ध्यनपेक्षत्वादिति ध्येयम् । यद्वाऽस्य लोकस्य का गतिरिति सर्वलोकगति प्रश्नोत्तरत्वेनाकाशमेव सर्वाधारत्वेन इति होवाचेति वाक्येन प्रतिज्ञाय तत्र हेत्वाकाङ्क्षायां सर्वाणीत्यारभ्य 'स एषोऽनन्त' इत्यन्तेनानन्तत्वादिकं तत्र हेतुतया तावदुच्यते । न चासिद्धस्य हेतुत्वमुपपन्नम् । ह वा इति प्रसिद्धिद्योतकनिपातद्वयविरुद्धं च । ततः सिद्धत्वे वाच्ये तस्याश्च प्रमाणान्तरेणोक्तरीत्याऽनुपपन्नत्वेन साक्षिणैव वाच्यतया तत्सिद्धाऽऽनन्त्यानुवादकत्वमेव 'स एषोऽनन्त' इत्यदेरेष्टव्यमित्येवं केवलमित्यादिपूर्वग्रन्थानुरोधेन वास्तवं परिहारमभिधायाभ्युपगमवादतया मूलग्रन्थतात्पर्यमाह **प्रतिपादक-**

त्वे वेति । अभ्युपगमवादप्रयोजनं चागमस्योत्कर्षानन्त्यप्रतिपादकत्ववत्परीत्यैव तदपकर्षानन्त्यप्रतिपादकत्वसूचनमेवेति बोध्यम् । इतीत्यस्येत्येतदुक्तं भवतीति पूर्वेण सम्बन्धः ।

स० — ननु 'केवलं साक्षिमानेन' इत्यत्र केवलशब्देन कालाद्यानन्त्ये साक्ष्यतिरिक्तप्रमाणान्तराभावस्य पूर्वं प्रतिज्ञातत्वात् इदानीं यद्यागमादित्यस्य कालाद्यानन्त्यप्रमाणकत्वोक्तौ पूर्वोत्तरविरोधः स्यादित्यत आह **एतदुक्तं भवतीति** ॥ **कित्वनुवाद एवायमिति** । ननु कालाद्यानन्त्यं न साक्षिग्राह्यम् । किं त्वागमग्राह्यमेवेति वदन्तं प्रति आगमस्य साक्षिसिद्धानन्त्यानुवादत्वोक्तिरयुक्ता । सिद्धे कालाद्यानन्त्यस्य साक्षिसिद्धत्वे 'स एषोऽनन्त' इत्यागमस्य तदनुवादकत्वसिद्धिः । तत्सिद्धौ च प्रमाणान्तराभावात् कालाद्यानन्त्यस्य साक्षिग्राह्यत्वसिद्धिरित्यन्योन्याश्रयापातादिति चेन्न । जातिबधिरादीनामपि कालाकाशप्रतीतेः आगमस्य तद्बोधकत्वानुपपत्त्या साक्षिणैव तत्सिद्धेरिति प्रथमाध्याये ह्यर्थस्य त्वाभिप्रेतत्वेन अन्योन्याश्रयानवकाशात् । **'अस्य लोकस्य** का गतिः' इति प्रश्नोत्तरत्वेन 'आकाश इति होवाच' इत्यनेनाकाशस्य सर्वाधारत्वं प्रतिज्ञाय तत्र हेत्वाकाङ्क्षायां 'सर्वाणी'त्यारभ्य 'स एषोऽनन्त' इत्यन्तेन अनन्तत्वादेस्तत्र हेतुत्वाभिधानात् । असिद्धस्य तदनुपपत्तेः, सिद्धेश्च मानान्तरेणासंभवेन साक्षिण एव तत्त्वस्य वक्तव्यत्वात् आगमस्य तदनुवादकत्वमभिप्रेतमित्यप्याहुः ।

प० — **स एषोनन्त इत्यादेरिति** । आकाश इति होवाचेति प्रकृतमाकाशमेतच्छब्देन परामृश्य 'स एष परोवरीयानुद्गीथः स एषोनन्त' इति तस्यानन्त्योक्तेरिति भावः । आकाशस्तल्लिङ्गादित्यत्राकाशस्य विष्णुत्वोक्तावपि वैशेषिकादिभिस्तथात्वानङ्गीकारात् तैरेवात्र साक्षिसिद्धत्वे विवदमानैरागमसिद्धत्वशङ्कनात्तन्मतानुरोधेनैतद्वाक्योक्तिरित्यदोषः । आदिपदे 'नानन्ताकाशवत्पश्यन्नि'त्यादि संग्रहः । ननु 'केवलं साक्षिमानेने'त्यत्र साक्ष्यन्यमानाप्रवृत्तेरुक्तत्वात् इहागमादपि परिमाणोत्कर्षापकर्षसिद्धिः कथमुपेयते इत्यतोभ्युपेत्यवादोयमिति भावेनाह **एतदुक्तं भवतीति** ॥ **अनन्तशब्दो हीति** । स एषोनन्त इत्यादौ स्थित इति ज्ञेयम् ॥ **॥ साक्षिणा परिमाणोत्कर्षापकर्षसिद्धिः ॥**

या० — **स एषोऽनन्त इत्यादेरिति** । अत्र तच्छब्दस्य प्रकृताकाशपरामर्शकत्वादिति भावः । यद्यप्याकाशाधिकरणेऽयमाकाशशब्दो विष्णुपरतया निर्णीतः, तथाऽप्यव्यक्ताधिकरणन्यायेनान्यपरोऽपि भवतीत्यभिप्रेत्येत्युक्तमिति ध्येयम् । केवलं साक्षिमानेनेत्यत्र कालाद्यानन्त्ये साक्ष्यतिरिक्तप्रमाणाप्रवृत्तेरुक्तत्वादिदानीं कथमागमात्तत्सिद्धिरुच्यत इत्यत आह **इदमुक्तं भवतीति** ॥ **अनुवाद एवायमिति** । वस्तुतः पूर्वपक्षिणं प्रत्येवमेवोत्तरं देयमतो न विरोध इति भावः । केवलसाक्षिभास्यत्वं तु प्रथमाध्या-

योक्तेर्जातिबधिराणामप्याकाशादिप्रतीतेरित्यादिहेतुभिः सिद्धम् । अतः केवलसाक्षिभास्यत्वे सिद्धे आगमस्यानुवादत्वसिद्धिस्तत्सिद्धौ च केवलसाक्षिभास्यत्वसिद्धिरित्यन्योन्याश्रय इति परास्तम् । एवं वास्तवं परिहारं स्वयमभिधाय मूलमभ्युपगमवादेनैव प्रवृत्तमतो न विरोध इत्याशयेनाह **प्रतिपादकत्वे वेति** ।

**श्री०— किन्त्विति** । साक्षिसिद्धामनन्ततामनुवदति श्रुतिरित्येव, न तु तत्र स्वार्थसत्त्वनिश्चायकत्वरूपं तात्पर्यमित्यर्थः । अभ्युपेत्याह **प्रतिपादकत्वे इति** । अर्थप्रतिपादने यदि तात्पर्यमित्यर्थः ।

**च०— अनन्तशब्दो हीति** । 'स एषोनन्त' इत्यादौ स्थित इत्यवसेयम् ।

**॥ साक्षिणा परिमाणोत्कर्षापकर्षसिद्धिः ॥**

सु०— **परिमाणोत्कर्षवत्तदपकर्षस्यापि कालादावानन्त्यं साक्षिणाऽऽगमेन वा प्रतीयत एव । तथाऽपि न तत्सत्यम् । न हि प्रतीतत्व(ति)मात्रेण सत्यतानिश्चयोऽतिप्रसङ्गादिति द्वितीयं निराकरोति** महत्त्वेति ।

**अनु०** — महत्त्वाणुत्वयोर्नैव विश्रान्तिरुपलभ्यते ॥

**कालादौ परिमाणोत्कर्षापकर्षयोर्विश्रान्तिरियत्तावच्छेदो बलवत्प्रमाणेन नैवोपलभ्यते । अत्र महत्त्वग्रहणं दृष्टान्तार्थम् । इदमुक्तं भवति । यथा कालादौ परिमाणोत्कर्षस्यानन्त्यं साक्ष्याद्यवगतं विपरीतग्राहकप्रमाणाभावात्सत्यमेव । तथा तदपकर्षस्यापि । विना बाधकेन साक्ष्यादिसिद्धं परिमाणापकर्षानन्त्यं कालादावसत्यं चेत्तदुत्कर्षानन्त्यमप्य(कालादाव)सत्यं स्यात् । अविशेषात् । ततश्चापरिच्छिन्नपरिमाणताऽङ्गीकारो (भज्येत) नङ्क्ष्येत । अतिप्रसङ्गस्तु बाधकाभावेनापास्त इति ।**

शे०— महत्त्वाणुत्वयोरित्यादिग्रन्थस्यानर्थक्यमाशङ्क्य द्वितीयपक्षनिरासकतया तं सङ्गमयितुं तं पक्षमुत्थापयति **परिमाणेति** ॥ **अतिप्रसङ्गादिति** । शुक्तिरजतादेरपि प्रतीततया तत्सत्यतानिश्चयप्रसङ्गादित्यर्थः । भाष्ये कालादावणुत्वपरिमाणापकर्षस्य विश्रान्तिरियत्तापरिच्छेदो बलवत्प्रमाणे नैवोपलभ्यत इत्येतावतैव साक्ष्याद्यवगतस्यापकर्षानन्त्यस्य सत्यतासिद्धेर्महत्त्वग्रहणमधिकमित्याशङ्क्याह **अत्रेति** । कथमत्र दृष्टान्तदार्ष्टान्तिकभावः किं च दृष्टान्तोपदर्शनेन प्रयोजनमित्यत आह **इदमुक्तं भवतीति** । तत्र दृष्टान्तदार्ष्टान्तिकभावोपपादनं **यथेत्यादि** । तदपकर्षस्यापीत्यतः परं आनन्त्यं साक्ष्याद्यवगतं विपरीतग्राहकप्रमाणाभावात्सत्यमेवेत्यनु-

वर्तनीयम् । दृष्टान्तोपदर्शनप्रयोजनमाह **विनेति** । यदविशिष्टस्य यस्य यद्भवति तदविशिष्टस्यापरस्यापि तद्भवतीति तर्कमूलभूतसामान्यव्याप्तेः सूचनायाह **अविशेषादिति** । इष्टापत्तिं परिहरति **ततश्चेति** । एवं तर्हि प्रतीतत्वाविशेषाच्छुक्तिरजतादेरपि सत्यतानिश्चयप्रसङ्ग इत्यतो भवेदयमतिप्रसङ्गः यदि प्रतीततामात्रं तत्सत्यतानिश्चायकतयाऽभिमतं स्यान्न चैतदस्ति । किन्तु निर्बाधप्रतीतत्वमेव, तच्च न शुक्तिरजतादेरस्तीति नातिप्रसङ्ग इत्याह **अतिप्रसङ्गस्त्विति** ।

प० – साक्ष्यवगतोऽपि न सत्य इति प्राग्विकल्पितद्वितीयकल्पं विवृण्वन्नेवावतारयति **परिमाणोत्कर्षवदित्यादिना अतिप्रसङ्गादिति द्वितीयं निराकरोतीत्यन्तेन** । शुक्तिरूप्यादेरपि सत्यत्वापत्तिरूपातिप्रसङ्गादित्यर्थः । प्रागणुत्वासिद्धेरेव शङ्कनादाह **अत्र महत्त्वग्रहणमिति** । अस्फुटत्वादाह **इदमुक्तं भवतीति** । एवन्तर्हि प्रागुक्तातिप्रसङ्गस्य का गतिरित्यत आह **अतिप्रसङ्गस्त्विति** । शुक्तिरूप्यादेर्बाधकाभावादिति वैषम्यमिति भावः ।

या० – **अतिप्रसङ्गस्त्विति** । प्रतीतत्वमात्रेण सत्यतानिश्चये शुक्तिरजतादेरपि तन्निश्चयः स्यादित्यतिप्रसङ्गस्तु प्रतीतत्वहेतुविशेषणतया विवक्षितेन बाधकाभावेनापास्त इत्यर्थः ।

**सु० — नन्वस्त्येव परिमाणापकर्षस्यानन्त्याभ्युपगमे बाधकम् । तथा हि । अपकर्षो नामाल्पता । आनन्त्यं चानल्पता । न च विरुद्धयोर्विशेषणविशेष्यभावः संभवति । न हि भवति पीतोऽपीत इति । अतो बाधकसद्भावात्प्रतीतमप्यपकर्षानन्त्यं त्यज्यत इत्यत आह** अन्यदेवेति ।

**अनु०** — अन्यदेव ह्यनन्तत्वं महत्त्वाणुत्वयोः समम् ॥

**नानन्तत्वं नामानल्पत्वम् । किन्त्वन्यदेव परिच्छेदाभावरूपम् । तस्मात्परिमाणोत्कर्षापकर्षयोः समानो धर्म इति युज्यते । अत्रापि महत्त्वग्रहणं दृष्टान्तत्वेन । यथा महत्त्वस्य विशेषणं तथाऽणुत्वस्यापीति । यद्यनन्तत्वं नामानल्पत्वं स्यात्तदोत्कर्षस्यापि विशेषणं न स्यात् । न हि तदेव तस्य विशेषणं भवति । पीतः पीत इत्यदर्शनात् । अतस्तत्रानन्त्यं नाम परिच्छेदाभाव इति स्वीकृत्य विशेषणविशेष्यभावः समर्थनीयः । तथा प्रकृतेऽपीति । यथा हि परिमाणोत्कर्षो गगनादावनवधिकस्तथा तदपकर्षोऽप्यनवधिक एवेति विशेषणविशेष्यभावाभ्युपगमे न कोऽपि दोष इति ।**

**शे०** – अन्यदेवेत्युत्तरवाक्यानर्थक्यमित्याशङ्क्य पूर्ववाक्योक्तस्य परिमाणापकर्षानन्त्यस्य कालादौ निर्बाधप्रतीतिसिद्धत्वस्य बाधकाभावव्युत्पादनेन समर्थनार्थत्वान्न तदिति भावेन बाधकाभावोपपादक-

तथा तद्योजयितुं तच्छङ्कामुत्थापयति **नन्विति** । आनन्त्यं चानल्पतेत्यत्रानल्पशब्दस्य भावप्रधानत्वाश्रयणेऽनल्पतेत्यर्थोऽभिमतः। अन्यथाऽपकर्षोऽनन्त इति प्रयोगस्याल्पत्वमनल्पत्वमित्यर्थप्राप्त्या वक्ष्यमाणविरोधानुपपत्तिप्रसङ्गादिति ध्येयम् । अस्त्वेवमपकर्षानन्त्ययोरल्पताऽनल्पतारूपत्वं किन्त्वतः इत्यत आह **न च विरुद्धयोरिति** । अपकर्षोऽनन्त इत्युक्त्या ह्यल्पत्वमनल्पत्वमित्युक्तं स्यात् । न चेदं सम्भवति । स्वस्य स्वान्यत्वासम्भवेन विशेषणत्वानुपपत्तेरित्यर्थः । यद्यप्यत्र प्रतियोगिनोऽल्पत्वस्य तदन्यस्य च परस्परविरहरूपत्वादिरूपविरोधासम्भवाद्विरुद्धयोरित्येतदसमञ्जसमित्याभाति । तथाऽपि विरुद्धयोरित्यस्य परस्परभिन्नयोरित्यर्थकत्वाददोषः । यद्यपि च परस्परभिन्नयोरपि विशेषणविशेष्यभावो नानुपपन्नः तथाऽपि नाभेदेन तयोरन्वयः सम्भवतीत्यत्र तात्पर्याददोष इति ध्येयम् । वस्तुतोऽनल्पताशब्देऽल्पताशब्दस्य भावप्रधानत्वेन नञश्च 'अकर्तरि च कारके संज्ञायामि'त्यादाविव प्रतिषेधार्थकत्वेन अनल्पतारूपाऽऽनन्त्यस्याल्पतात्वात्यन्ताभावरूपत्वादपकर्षोऽनन्त इति प्रयोगस्याल्पतारूपोऽपकर्षोऽल्पतात्वात्यन्ताभाववान् इत्यर्थपर्यवसानात् अल्पतारूपस्यापकर्षस्याल्पतात्वात्यन्ताभावरूपस्य चानन्त्यस्य परस्परविरहरूपत्वादेव विरुद्धत्वमिति यथाश्रुतमेव रमणीयमिति ध्येयम् । विरुद्धयोर्विशेषणविशेष्यभावानुपपत्तिं दृष्टान्तोक्त्या प्रथयति **न हीति** । आद्ये पीते पीतान्यत्वस्याभावात्पीत पीतान्य इत्यभेदेनान्वयादर्शनादित्यर्थः । द्वितीयव्याख्यायां चापीतशब्दस्थपीतशब्दस्य भावप्रधानत्वान्नञ्श्च प्रतिषेधार्थकत्वात्पीतोऽपीत इत्यस्य पीतत्ववान्पीतत्वाभाववानित्यर्थपर्यवसानात्परस्परविरहरूपतया विशेषणविशेष्यभावादर्शनादित्यर्थः। उक्ताशङ्कानिवर्तकतयाऽपेक्षितपूरणेन मूलं योजयति **नेत्यादिना** । मूलेऽन्यदेव ह्यनन्तत्वमणुत्वस्येत्येतावतैवापकर्षानन्त्ययोर्विशेषणविशेष्यभावसमर्थनान्महत्त्वग्रहणमधिकमित्याशङ्क्य परिहरति **अत्रापीति** । दृष्टान्तदार्ष्टान्तिकभावमेव दर्शयति **यथेति** । दृष्टान्तत्वेन महत्त्वग्रहणस्यापि किं प्रयोजनमित्यत आनन्त्यस्यानल्पतारूपत्वाभावसिद्धिरेव तत्प्रयोजनमित्यभिप्रेत्य तदुपदर्शनपूर्वकं दृष्टान्तदार्ष्टान्तिकभावमेव विशदयति **यदीत्यादिना** ॥ **न हि तदेव तस्येति** । महत्त्वस्योत्कर्षरूपत्वेनानल्पतारूपत्वादानन्त्यस्य चानल्पत्वरूपत्वान्महत्त्वमनन्तमित्यस्यानल्पतारूप उत्कर्षोऽनल्पतेत्यर्थपर्यवसाने नञः प्रतिषेधार्थत्वे च अल्पत्वात्यन्ताभावः अल्पत्वात्यन्ताभाव इत्यर्थपर्यवसानेन स्वस्यैव स्वविशेषणत्वं वाच्यम् । न च तत्सम्भवतीत्यर्थः । तत्रैवानुरूपं दृष्टान्तमाह **पीत इति** ॥ **विशेषणविशेष्यभाव इति** । महत्त्वमनन्तमित्येवंरूप इत्यर्थः ॥ **प्रकृतेऽपीति** । अपकर्षोऽनन्त इत्यत्रापीत्यर्थः । किमनेनोक्तं भवतीत्यतो वाक्यतात्पर्यमाह **यथा हीति** । इतीत्यतःपरं भाव इति शेषः ।

स० — **न च विरुद्धयोर्विशेषणविशेष्यभाव इति** । अपकर्षस्याल्पतारूपत्वात् आनन्त्यस्य चानल्पतारूपत्वात् अनन्तानल्पशब्दयोः समानार्थत्वेन अल्पशब्दस्य भावप्रधानत्वात् अल्पं न भवतीत्य-

नल्पमिति अनल्पशब्दस्य अल्पत्वान्योन्याभाववदर्थत्वात् अन्योन्याभावस्यैव च भावप्रत्ययार्थत्वात् अनल्पताशब्देन अल्पत्वान्योन्याभावस्यैव लाभात् अल्पताऽनल्पतेत्यनेन अल्पत्वान्योन्याभावत्वोक्तौ विरोधापत्तेरिति भावः। यद्वा 'अकर्तरि च कारके संज्ञायाम्' इत्यत्र पर्युदासपक्षे कारकग्रहणवैयर्थ्याप-त्त्या तत्सार्थक्याय यथा कर्तृशब्दस्य कर्तृत्वपरत्वं अभ्युपेत्य नञः प्रसज्यप्रतिषेधार्थकत्वस्य वैयाकरणै-रुक्तत्वात् असदादिशब्देषु टीकाकारैरपि तथाभ्युपगमात् अल्पताशब्दस्य अल्पतात्वपरत्वमभ्युपेत्य अनल्पताशब्दस्य अल्पतात्वात्यन्ताभावार्थकत्वात् अल्पतात्ववती अल्पतात्वात्यन्ताभाववतीत्यभिधाने विरोधापत्तेरित्यर्थः। **न हि तदेव तस्येति**। उत्कर्षस्य अनल्पतारूपत्वात् अनल्पतायाश्च अल्पता-न्योन्याभावरूपत्वात् आनन्त्यस्य तद्विशेषणत्वे अल्पतान्योन्याभाववान् अल्पतान्योन्याभाववानिति विशेषण-विशेष्यभावस्य वाच्यत्वात् तस्य चाभेदेनासंभवादिति भावः।

**या०**— आनन्त्यं चानल्पतेत्यत्रानल्पताशब्दान्तर्गताल्पशब्दो भावप्रधानो विवक्षितः। अन्त्या-ल्पशब्दयोः पर्यायत्वात्। तथाचानन्त्यं अनल्पतेत्यर्थः पर्यवस्यति। एवमग्रेऽपि। तेन यथाश्रुते वक्ष्यमाणविरोधादेरनुपपत्तिः। अपकर्षादिकमनन्तमिति प्रयोगस्याल्पत्वादिकमनल्पमित्यर्थप्राप्त्या विरोधा-देरसम्भवादिति दूषणानवकाश इति ध्येयम्। ततः किमित्यत आह **न च विरुद्धयोरिति**। अपकर्षोऽ-नन्त इति प्रयोगे ह्यल्पत्वमनल्पत्वमित्युक्तं स्यात्। न चेदं संभवति। स्वस्मिन्स्वान्यत्वस्य विरुद्धत्वेन विशेषणत्वानुपपत्तेरित्यर्थः। ननु तथाऽपि विरुद्धयोरिति कथम्। प्रतियोगिनोऽल्पत्वस्य तदन्यस्य च परस्परविरहरूपत्वादिरूपविरोधासंभवादिति चेन्मैवम्। परस्परं भिन्नयोर्नाभेदेनान्वयः संभवतीत्यत्र तात्पर्यात्। नञः प्रतिषेधार्थत्वेन परस्परविरहरूपत्वरूप एव विरोधोऽत्राभिप्रेत इत्यप्याहुः। तथा प्रकृतेऽपीत्युक्तमेव दर्शयति **यथा हीति**।

**श्री०— समानो धर्म इति**। परिच्छेदाभावरूपमानन्त्यमुत्कर्षापकर्षयोः समानो विशेषण-भूतो धर्म इति युज्यत इत्यर्थः॥ **उत्कर्षस्यापीति**। अनल्पतापर्यायस्येत्यर्थः। कुत इत्यत आह **न हीति**।

**सु०**— आनन्त्यं नामानल्पत्वादन्यदित्येतत्प्रत्याययितुं दृष्टान्तान्तरमाह **बहुत्वेति**।

**अनु०**— बहुत्वाल्पत्वयोर्यद्वत्सङ्ख्यायामुपलभ्यते ॥

आनन्त्यम्

यद्वत् यथा संख्यायां बहुत्वाल्पत्वयोर्विशेषणतयाऽऽनन्त्यमुपलभ्यते । बहुत्वमनन्तमल्पत्वं चानन्तमिति । तथा प्रकृतेऽपीति । यद्यनन्तत्वं नामानल्पत्वं स्यात् तदा न बहुत्वस्य विशेषणं स्यात् । तस्यैव तद्विशेषणत्वायोगात् । नाप्यल्पत्वस्य, विरोधात् । अतः, अवच्छेदाभाव एवानन्तत्वमित्यङ्गीकृत्य बहुत्वमल्पत्व (चानन्त)चापर्यवसितमिति विशेषणविशेष्यभावो बोद्धव्यः । तथा परिमाणोत्कर्षापकर्षयोरपीति ।

शे० — दृष्टान्तदार्ष्टान्तिकभावस्फोरणाय वाक्यं योजयति यद्वदिति । अत्र यद्वदिति मौलपदानुवादेन यथेति व्याख्यानम् । तस्यैवेति । बहुत्वस्यानल्पतारूपत्वात् आनन्त्यस्यानल्पतारूपत्वात् बहुत्वमनन्तमित्यत्रानल्पत्वमनल्पत्वमित्यर्थपर्यवसानादिति भावः ॥ विरोधादिति । आनन्त्यस्यानल्पतारूपत्वादनल्पत्वमनन्तमित्यस्य अल्पत्वमनल्पत्वमिति वाऽल्पत्वत्वात्यन्ताभाववदिति वा अर्थपर्यवसानादिति भावः ॥ अतोऽवच्छेदाभाव एवेति । परिच्छेदाभाव एवेत्यर्थः ।

स० — तस्यैवेति । बहुत्वमनन्तमित्यत्र बहुत्वस्य अनल्पतारूपत्वात् आनन्त्यस्यापि तद्रूपत्वात् उक्तरीत्या अभेदान्वयानुपपत्तेरिति भावः । विरोधादिति । अल्पत्वमनन्तमित्यत्र अनन्तत्वस्य चोक्तरीत्या अल्पतान्योन्याभावरूपत्वात् अल्पतात्वात्यन्ताभावरूपत्वाद्वा अल्पता अल्पतान्योन्याभाववती अल्पतात्वात्यन्ताभाववतीत्यस्य विरुद्धत्वादिति भावः ।

प० — अवच्छेदाभाव एवेति । परिच्छेदाभाव एवेत्यर्थः ।

या० — अतोऽवच्छेदाभाव एवेति । परिच्छेदाभाव एवेत्यर्थः ।

श्री० — बहुत्वस्य अनल्पतारूपस्येत्यर्थः । नाप्यल्पत्वस्येत्यनन्तरमनल्पतारूपमनन्तत्वं विशेषणमिति वर्तते । कुतो नेत्यत उक्तं विरोधादिति ॥ दृष्टान्तान्तरमिति । महत्त्वस्य दृष्टान्ततयोक्तत्वादित्यर्थः ।

सु० — ननु च नास्त्येव संख्यायां बहुत्वाल्पत्वयोरानन्त्यम् । बहुत्वस्य परार्ध एव पर्यवसितत्वात् । अल्पत्वस्य चैक(ा)त्वावधित्वात् । यथोक्तम् । 'सा चैकत्वादिपरार्धपर्यन्ता' इति । अतः कथमयं दृष्टान्त इत्यत आह एकेति ।

अनु० — एकभागानां तावत्त्वं ह्यवगम्यते ॥

संख्यामधिकृत्य हि गणितशास्त्रं प्रवृत्तम् । तत्र च कलासवर्णनप्रभागभागानुबन्धभागापवाहभागभागादिप्रकरणेष्वेकभागानां तावत्त्वमनवधिकत्वं गम्यते हि यस्मात्तस्मादवगम्यते अस्त्येकत्वादप्यपकृष्टानवधिका संख्येति । परार्धात्परतोऽपि संख्यासद्भावः स्फुट एवेति नोपपादितः । संभवति हि परेषामपीश्वरापेक्षाबुद्ध्या परमाण्वादौ परार्धात्परतोऽपि संख्यो-

स्पत्तिः । ततःपरं संज्ञाकरणं तु गणकानां प्रयोजनाभावात् । एतामेव विप्रतिपत्तिमपनेतुं संख्यादृष्टान्तोपादानं कृतमिति ॥

शे० - तथाऽप्येकभागानामित्यंशवैयर्थ्यम् । न चैकत्वापेक्षयाऽपकृष्टसङ्ख्यासद्भावप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्य प्रकृतोपयोगादर्शनादित्याशङ्क्य महत्त्वाल्पत्वयोरित्यादिना प्रागुक्त-सङ्ख्यादृष्टान्ते प्राप्तानुपपत्तिपरिहारेण तत्समर्थनार्थत्वान्नानुपपत्तिरिति भावेन सङ्ख्यादृष्टान्तोपपादकतया तद्योजयितुं तत्रानुपपत्तिशङ्कामुत्थापयति ननु नास्त्येवेति ॥ पर्यवसितत्वादिति । तदपेक्षयाऽधिक-संख्याया अभावादिति भावः ॥ अवधित्वादिति । एकत्वापेक्षयाऽपकृष्टसंख्याया अभावादिति भावः । अपकृष्टसंख्याया एकत्वावधित्वे बहुत्वसंख्यायाश्च परार्धावसानत्वे काणादसूत्रसम्मतिमाह यथोक्तमिति । यद्यपि सा चैकत्वादिपरार्धपर्यन्तेत्येवं न कणादसूत्रमस्ति किन्त्वर्थादनेकद्रव्यद्वित्वादिका परार्धान्तेत्येव, तथाऽपि सा पुनरेकद्रव्यानेकद्रव्या च । तत्रैकद्रव्या जातिमत्येकत्वसंख्या द्वित्वत्वादि-जातिमत्यनेकद्रव्या द्वित्वादिका परार्धान्तेत्यादितत्सूत्रव्याख्यानरूपप्रशस्तपादभाष्याद्यनुरोधेन लब्धत-त्सूत्रार्थानुवादोऽयं कृत इत्यवधेयम् । तत्रेति । गणितशास्त्र इत्यर्थः ॥ कलेत्यादि । भागजातौ करणसूत्रं प्रवृत्तम् । अन्योन्यहाराभिहितौ हरांशौ राश्योः समच्छेदविधानमेव । मिथो हराभ्यामपव-र्तिताभ्याम् यद्वा हरांशौ सुधियाऽत्र गण्यौ । उदाहरणम् । रूपत्रयं पञ्चलवस्त्रिभागो योगार्थमेतान्वद तुल्यहारान् । त्रिषष्ठिभागस्य चतुर्दशांशः समच्छिदो मित्यवियोजनार्थे । प्रभागजातौ करणसूत्रं वृत्ता(र्धं)लवघ्नाश्च हराहरघ्नाः । भागप्रभागेषु सवर्णनं स्यात् । उदाहरणम् । द्र्यमार्धत्रिलवद्वयस्य सुमते पादद्वयं यद्भवेत्तत्पञ्चांशकषोडशांश(क)चरणः सम्प्रार्थ्यते प्रार्थिने । दत्ता येन वराटकाः कति कदर्येणार्पितास्तेन तान् । ब्रूहि त्वं यदि वेत्सि वत्स गणिते जातिं प्रभागाभिधाम् । भागानुबन्ध-भागापवाहजात्योः करणसूत्रं सार्धवृत्तम् । छेदघ्नरूपेषु लवाधनार्णमेकस्य भागा अधिको न कश्चित् । स्वांशाधिकोनः खलु यत्र तत्र भागानुबन्धे च लवापवाहे । तलस्थहारेण हरं निहन्यात् । स्वांशाधि-कोने न तु तेन भागान् । उदाहरणं तु, गुण्यान्त्यमेकं गुणकेन हन्यादुत्सादितेनैवमुपान्त्यमादीन् । गुण्यस्ततोऽधो गुणखण्डतुल्यैः । तैः खण्डकैः संगुणितो यतो वेत्यादिगणितशास्त्रादवगन्तव्यमेतत् । नन्वेतावताऽपि न संख्यादृष्टान्तसमर्थनमनेन वाक्येन सम्भवति । एकत्वापेक्षयाऽपकृष्टसंख्यासद्भावमात्रस्या-नेन प्राप्त्याऽल्पत्वस्यानन्त्यसिद्धावपि परार्धादुत्कृष्टसंख्यान्तरासिद्ध्या बहुत्वस्यानवधिकत्वासिद्ध्या बहुत्वस्य परार्ध एव पर्यवसन्नत्वादिति शङ्काया अपरिहारादित्यत आह परार्धात्परत इति । संख्यासद्भावस्य स्फुटतामेव दर्शयति सम्भवतीत्यादिना । तर्हि गणकानां तत्संज्ञाकरणप्रसङ्ग इत्यतस्तदकरणे निमित्त-

माह ततःपरमिति । परार्धपर्यन्तसंज्ञाकरणेनैव गणनप्रयोजनसिद्धेस्तदुत्तरसंख्यासंज्ञाकरणाभावो न दोषा-येति भावः ॥ एतामेवेति । बहुत्वस्य परार्ध एव पर्यवसन्नत्वादल्पत्वस्य चैकत्वानवधित्वान्न संख्याया बहुत्वाल्पत्वयोरानन्त्यमस्तीत्येतामित्यर्थः ॥ संख्यादृष्टान्तोपादानमिति । दृष्टान्तान्तरोपादानमित्यर्थः । अन्यथा महत्त्वदृष्टान्तेनैवानन्त्यस्य परिच्छेदाभावरूपत्वसिद्ध्या विशेषणविशेष्यभावसमर्थनाद्वैयर्थ्य-प्रसङ्गादिति भावः ।

सं०— कलेति । भागजातौ करणसूत्रं प्रवृत्तम् । 'अन्योन्यहारामिहतौ हरांशौ राश्योस्समच्छेदविधानमेव । मिथो हराभ्यामपवर्तिताभ्यां यद्वा हरांशौ सुधियोऽत्र गुण्यौ । उदाहरणम् । रूपत्रयं पञ्चलवस्त्रिभागो योगार्थमेतान्वद तुल्यहारान् । त्रिषष्टिभागस्य चतुर्दशांशस्समच्छिदौ मित्र वियोजनार्थे ॥ प्रभागजातौ करणसूत्रम् । 'लवालवघ्नाश्च हरा हरघ्ना भागप्रभागेषु सवर्णनं स्यात्' । उदाहरणम् । 'व्योमार्धत्रिलवद्वयस्य सुमते पादद्वयं यद्भवेत् तत्पञ्चांशकषोडशांशकरणस्सं-प्रार्थ्य तेनार्थिनम् । (दे प्रार्थने) दत्ता येन वराटकाः कति कदर्पेणार्पितास्तेन तान् ब्रूहि त्वं यदि वेत्सि वत्स गणिते जातिं प्रभागाभिधाम् । भागानुबन्धभागापवाहजात्योः करणसूत्रम् । 'छेदघ्नसूत्रेषु लवाधनार्णमेकस्य भागा अधिकोनकाश्चेत् । स्वांशाधिकोनः खलु यत्र तत्र भागानुबन्धे च लवापवाहे । तलस्थहारेण हरं निहन्यात् स्वांशाधिकोने न तु तेन भागान् । उदाहरणम्— 'गुण्यान्तमेकं गुणकेन-हन्यादुत्सादितेनैवमुपान्त्यमादीन् । गुण्यस्ततोऽधो गुणखण्डतुल्यैस्तैः खण्डकैस्संगुणितो यतो वा । इत्यादिगणितशास्त्रादवगन्तव्यमेतत् ।

प०— यथोक्तमिति । गणकैरुक्तमित्यर्थः ॥

॥ कालाकाशयोः परिमाणोत्कर्षापकर्षयोरविश्रान्तिसमर्थनम् ॥

या०— प्रकरणेष्विति । गणितशास्त्रीयप्रकरणेष्वित्यर्थः ।

श्री०— एकभागानां तावत्त्वं यद्यप्युक्तं गणितशास्त्रे, तथाऽपि तत्र तस्य तात्पर्यं नास्तीति चेत्तत्राह सङ्ख्यामिति ॥ प्रयोजनाभावादिति । प्रयोजनस्य लोकव्यवहारस्य परार्धपर्यन्तं कृतसंख्ययैव सिद्धेरिति भावः । एतामेवेति । 'ननु नास्त्येव संख्यायामि'ति पूर्वदर्शितामित्यर्थः ।

सु०— एवं कालाकाशयोः परिमाणोत्कर्षापकर्षानन्त्यं साक्षिणा प्रसाध्येश्वरे तदागमेन साधयति अणीयांश्चेति ।

अनु०— अणीयांश्च महीयांश्च भगवानागमोदितः ॥

'अणोरणीयान्महतो महीयानात्मे'त्यागमेन भगवानीश्वरोऽणोरप्यणीयान्महतोऽपि महीयानुदितः । न च तत्राणुमहच्छब्दाभ्यां किञ्चिद्व्यवस्थितमुच्यते । विशेषणाभावात् । ततो यद्यदपकृष्टपरिमाणं ततस्ततोऽप्यपकृष्टपरिमाणो यद्यच्चोत्कृष्टपरिमाणं ततस्ततोऽप्युत्कृष्टपरिमाण इत्युक्तं स्यात् । तथा चेश्वरगतयोः परिमाणोत्कर्षापकर्षयोरनवधिकत्वमेव लभ्यते ।

नन्वणीयान्महीयानित्युक्त एव भगवति परिमाणोत्कर्षापकर्षयोः पर्यवसानात्कथं तयोः अनवधिकत्वमित्यत आह अणीयानिति । अणीयान्महीयानित्युक्तयोरप्यणोर्महतश्चेति शब्दविषयत्वादिति ।

श्रु० — अणीयानित्युत्तरभाष्यस्याव्यवहितपूर्वार्थोपपादकत्वाभावेन पूर्वभाष्येण सङ्गत्यभावादानर्थक्यमाशङ्क्याव्यवहितेन तेन सङ्गत्यभावेऽपि 'दृश्यतेऽनन्त इत्येव तथाऽऽनन्त्यमणावपी'त्युक्तस्य परिमाणोत्कर्षापकर्षयोरनवधिकतायाः प्रामाणिकत्वस्येश्वरांशे आगमसिद्धत्वोपपादनात्तत्समर्थनेन तत्सङ्गतत्वान्न तदिति भावेन वृत्तानुवादपूर्वकमुक्तार्थपरतयोत्तरग्रन्थं सङ्गमयति एवमिति । कोऽसावागम इत्यतस्तदुपदर्शनपूर्वकमीश्वरस्योत्कर्षापकर्षानन्त्यस्यागमसिद्धत्वप्रतिपादकतया वाक्यं योजयति अणोरिति । नन्वत्र वाक्येऽणुमहच्छब्दयोः परमाणुमहत्तत्त्वरूपद्रव्यविशेषपरत्वेनापकृष्टोत्कृष्टद्रव्यमात्रपरत्वाभावेनेश्वरस्यैतदागमबलेन परमाण्वपेक्षयाऽपकृष्टत्वस्य महत्तत्त्वापेक्षया चोत्कृष्टत्वस्य प्राप्तावपि, परिमाणोत्कर्षापकर्षयोरनवधिकत्वस्याप्राप्तेर्नैतद्बलेन विवक्षितार्थसिद्धिरित्याशङ्क्य निषेधति न चेति । कुतो नेत्यतोऽर्थविशेषपरत्वनिश्चायकप्रमाणाभावादित्याह विशेषणाभावादिति ।

नन्वत्राणीयान्महीयानित्युक्तभगवतोऽपि अणोर्महत इति पञ्चम्यन्ताणवादिशब्दविषयतायां स्वस्मादपि स्वस्य विरुद्धोत्कृष्टत्वापकृष्टत्वप्रसङ्गेनाणीयानित्याद्युक्तस्य भगवतोऽणोरित्यादिविषयत्वासंभवादणीयानित्याद्युक्तभगवत्येव परिमाणोत्कर्षापकर्षपर्यवसानान्न निरवधिकत्वमित्यभिप्रायेण गूढाभिसन्धिः शङ्कते नन्विति । अणीयानित्याद्युक्तस्यापि भगवतोऽणोरित्यादिविषयत्वाद्युक्ता परमाणोत्कर्षापकर्षयोर्भगवति निरवधिकत्वस्यानेन सिद्धिरित्यभिप्रेत्य गूढाभिसन्धिरेवोक्ताक्षेपपरिहारकतयाऽप्येतदेव भाष्यं पुनरवतारयति इत्यत आहाणीयानितीति । भाष्यस्य पूर्वोक्तयोजनायं मुक्ताक्षेपपरिहारकत्वायोगात्प्रकृतोपयोगितया तद्योजयति अणीयान्महीयानित्युक्तयोरपीति । अनेनाणीयान्महीयानिति उक्तशब्दाभ्यामुक्तोऽपि भगवानणोर्महत इत्यागमोदितोऽणोर्महत इति शब्दविषय इति भाष्ययोजनोक्ता भवति ।

प० — तदागमेनेति । परिमाणोत्कर्षापकर्षानन्त्यमित्यर्थः ॥ व्यवस्थितमिति । अणुपदेन परमाणुलक्षणमेव द्रव्यं ग्राह्यं महच्छब्देन च गगनमेवेति न नियम इत्यर्थः । इत्युक्तयोः श्रुतावुक्तयोरीशरूपयोरपि श्रौताभ्यां अणोर्महत इति शब्दाभ्यां गृहीतत्वादित्यर्थः ।

या० — **किञ्चिद्व्यवस्थितमिति ।** अणुशब्देन परमाणुरूपमेकमेव द्रव्यमुच्यते महच्छब्देन च महत्त्वस्वरूपमेकमेव द्रव्यमिति नेत्यर्थः । कुत इत्याशङ्कायां तत्तात्पर्यज्ञापकलिङ्गाभावादित्याह **विशेषणाभावादिति ॥ अणीयान्महीयानित्युक्तयोरपीति ।** अणोरणीयानित्यागमेऽणीयान्महीयानित्युक्तयोर्भगवद्रूपयोरप्यणोर्महतश्चेति श्रौतपञ्चम्यन्तपदाभ्यामवधितयोपादानादित्यर्थः । तथा च यद्यदणीयान्महीयानिति निर्दिश्यते तत्तत्पञ्चम्यन्ताणुमहच्छब्दाभ्यामवधितयोपादाय ततोऽप्यणीयान्महीयानिति व्याख्यायते । ततश्चानवधिकतासिद्धिरिति भावः ।

सु० — **नन्वेवं सति स्वस्मादपि स्वयमपकृष्ट उत्कृष्टश्चेत्यागतम् । को नेत्याह । यथा चैतत्तथा वक्ष्यते ।**

**श्रुत्यन्तरं चेश्वरे परिमाणोत्कर्षापकर्षयोरानन्त्यं प्रतिपादयदस्तीत्याह** आनन्त्येति ।

**अनु०** — आनन्त्यवाचकश्शब्दो द्विधाऽऽनन्त्येऽपि मानताम् ॥
याति

**'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ब्रह्मण आनन्त्यस्य वाचकोऽनन्तशब्दस्तावद्देशतः कालतो वस्तुतश्चानन्त्यमाह । तत्र देशानन्त्यं नामानवधिकपरिमाणवत्त्वम् । कालानन्त्यं नामानवच्छिन्नसत्ताकत्वम् । वस्त्वानन्त्यं नामापरिच्छिन्नसंख्यागुणकर्मविग्रहवत्त्वम् । तत्र यदा परिमाणानन्त्यस्य वाचकस्तदा द्विधानन्त्येऽपि उत्कर्षापकर्षाभ्यामानन्त्येऽपि मानतां याति । न तूत्कर्षानन्त्यमात्रे विशेषाभावादिति । नन्वनेकार्थत्वमन्याय्यः । कोऽत्र न्यायविरोधः । निरर्थकशब्दप्रयोगायोगात्तावदेकोऽर्थोऽङ्गीकार्यः । द्वितीयाङ्गीकारे तु न किञ्चिद्बीजमिति कल्पनागौरवम् । उच्यते । यत्र ह्येकस्मिन्नर्थे व्यवस्थिते सति वृथैवार्थान्तराङ्गीकारस्तत्रैवमेतत् । न चैवं प्रकृते । अनन्तशब्दो हि परिच्छेदाभावमाह । परिच्छे(दश्च)दो हि देशतः कालतो वस्तुतश्च भवन्युगपदेव प्राप्नोति । न च तत्र कस्यचित्प्राथम्यमस्ति । नाप्यन्यतमपरित्यागे कारणम् । एवं परिमाणानन्त्येऽप्युत्कर्षापकर्षपरिग्रहो द्रष्टव्य इति ।**

शे० — पूर्वपक्षी किञ्चित्स्वाशयमुद्घाटयति **नन्वेवमिति ।** विदिताभिप्रायः सिद्धान्त्यपि किञ्चित्स्वाशयमुद्घाटयति **को नेत्याहेति ।** तर्हि विरोधः स्यादिति पूर्ववाद्यभिसन्धिं निराकरोति **यथा चेति॥ वक्ष्यत इति ।** विशेषशक्त्या निर्भेदमप्याकाशमनन्तांशोपेतं तत्रानवधिकौ परिमाणोत्कर्षापकर्षौ व्यवस्थया वर्तेते इत्यादिनेति शेषः । तत्र चाकाशपदस्येश्वराद्युपलक्षणतयाऽभिप्रेतत्वान्नासङ्गतिरिति ध्येयम् ।

आनन्त्येत्याद्युत्तरभाष्यस्य पूर्वशेषत्वाभावाद्वैयर्थ्यमित्याशङ्क्य परिहरति **श्रुत्यन्तरं चेति**। कोऽसावानन्त्यवाचकः शब्द इत्यतः तदुपदर्शनपूर्वकं त्रेधानन्त्येऽप्यनन्तशब्दस्य प्रमाणत्वाद्भाष्ये द्विधेत्यस्यानुपपत्तिरित्याशङ्कानिरासायानन्त्यवाचक इत्यस्यावृत्तिमपेक्षिताध्याहारं वाक्यभेदं चाश्रित्य भाष्यं योजयति **सत्यमित्यादिना** ॥ **अनवच्छिन्नसत्ताकत्वमिति** । अकादाचित्कसत्ताकत्वमित्यर्थः ॥ **अपरिच्छिन्नेति** । अपरिच्छिन्नाः संख्यागुणकर्मविग्रहा यस्येत्येवात्र विग्रहोऽभिमतो न त्वपरिच्छिन्ना सङ्ख्या येषां ते यथोक्ता एवम्भूता गुणकर्मविग्रहा यस्येति । तथा सत्यपरिच्छिन्नसङ्ख्याख्यगुणकर्मविग्रहत्वमिति प्रसक्त्याऽपरिच्छिन्नसङ्ख्यागुणकर्मविग्रहत्वमिति सार्वत्रिकपाठानुपपत्तिप्रसङ्गात् । यद्यप्यपरिच्छिन्नगुणकर्मविग्रहत्वोक्त्याऽपि सङ्ख्याया अपरिच्छिन्नत्वं सिद्ध्यत्येव तथाऽपि सामान्यविशेषभावमाश्रित्य कुरुपाण्डवन्यायेन पृथगुपादानम् । तत्प्रयोजनं च सङ्ख्याया गुणत्वे वादिविप्रतिपत्तिसूचनमित्यवधेयम् । गूढाभिसन्धिश्शङ्कते **नन्विति** । सकृत्प्रयुक्तस्येति शेषः । तथा च सकृत्प्रयुक्तस्यानन्तशब्दस्य न त्रिविधानन्त्यवाचकत्वम् । नापि परिमाणानन्त्यवाचकत्वपक्षे परिमाणोत्कर्षापकर्षानन्त्यवाचकत्वम् । तस्य न्यायविरुद्धत्वादित्यर्थः । भवेदनन्तशब्दस्यानेकार्थत्वाभावो यद्यत्र न्यायविरोधः स्यान्न चासावस्तीति न तदनुपपत्तिरिति गूढाभिसन्धिरेव परिहरति **कोऽत्रेति** । पूर्ववादी कल्पनागौरवप्रसङ्ग एव न्यायविरोध इति स्वाशयमुद्घाटयति **निरर्थकेति** । सिद्धान्त्यपि स्वाशयमुद्घाटयति **उच्यत इत्यादि** । कथमेकस्मिन्नर्थे व्यवस्थिते वृथैवार्थान्तराङ्गीकाराभावः प्रकृत इत्यतोऽनन्तशब्दस्य त्रिविधानन्त्येतमुपपादयति **अनन्तशब्दो हीति** । ननु श्वेतो धावतीत्यादावर्थद्वयस्य युगपत्प्राप्तावपि यथैकार्थपरित्यागेनैकार्थनियमनं, तथा प्रकृतेऽपि कस्यचित्परित्यागेनार्थविशेषनियमनं भविष्यतीत्यतः प्रमाणान्तरविरोधभावात्तत्र युगपत्प्रतीतयोरेकस्य परित्यागसम्भवेऽपि प्रकृते तदभावान्न तत्त्यागो युक्त इत्याह **नापीति** । अन्यथाऽतिप्रसङ्गादिति भावः ॥ **एवमिति** । अनन्तशब्दस्य परिमाणानन्त्यवाचकत्वपक्षेऽप्यनवधिकोत्कर्षापकर्षरूपार्थद्वयस्य युगपत्प्राप्त्याऽन्यतरस्य प्राथम्याभावाच्छ्वेतो धावतीत्यादाविव युगपत्प्रतीतत्वेऽप्येकपरित्यागे कारणाभावाच्च उभयार्थत्वमेवेत्युक्तन्यायाविषयत्वोपपादनेनोत्कर्षापकर्षपरिग्रहो द्रष्टव्य इत्यर्थः ।

प० — **यथाचैतत्तथा वक्ष्यत इति** । 'महतोऽल्पत्वमपि ही'त्यादावप्यनवधिकपरिमाणोत्कर्षापकर्षवत्त्वोक्त्या भगवत्यपि, तद्व्यक्तीभविष्यतीति भावः ॥ **अनवच्छिन्नसत्ताकत्वमिति** । त्रिकालसत्त्वमित्यर्थः । अन्याय्यत्वं व्यनक्ति **निरर्थकेति** । समाधत्ते **उच्यत इति** ॥ **व्यवस्थिते सति** पूर्वं प्रमिते सतीत्यर्थः ॥ **परिमाणानन्त्येपीति** । तत्रापि युगपदेवोभयप्राप्त्या अन्यतरमात्रग्रहणे बीजाभावादुत्कर्षापकर्षोभयानन्त्यग्रह इत्यर्थः ।

**या०**— नन्वेवं सति विरोध इत्यत आह **यथा चैतदिति** । 'विशेषशक्त्या निर्भेदमप्याकाशमनन्तांशोपेतम् । तत्रानवधिकौ परिमाणोत्कर्षापकर्षौ व्यवस्थया वर्तेते' इति वक्ष्यत इत्यर्थः । तत्राकाशपदमीश्वराद्युपलक्षकतयाऽभिप्रेतमिति नासङ्गतिः ॥ **अनवच्छिन्नसत्ताकत्वमिति** । अकादाचित्कसत्ताकत्वमित्यर्थः । **एवं परिमाणानन्त्येऽपीति** । तत्रापि युगपदेवार्थद्वयप्राप्त्याऽन्यतरमात्रग्रहणे विनिगमकाभावेनोभयार्थतापरिग्रहः ।

**सु०— नन्वेवं कालतो गुणतश्चानन्त्यवाचकस्यानन्तशब्दस्याल्पकालत्वमल्पगुणत्वं चार्थः स्यात् । अन्यथाऽल्पपरिमाणवत्त्वमपि न स्यात् । अविशेषादिति चेत् । किमिदं कालतो गुणतश्चाल्पत्वमापाद्यं किमल्पा एव गुणाः सन्ति ब्रह्मणो न बहुतराः । तथा अल्पकालीनैव सत्ता न प्रचुरकालीनेति । किंवा सर्वकालगतस्याल्पकालेऽप्यवस्थितिः स्यात् । महागुणस्य चाल्पोऽपि गुणः स्यादिति ।**

**आद्यं दूषयति** नैवेति ।

**अनु०—** नैव गुणाल्पत्वं कालाल्पत्वं च मानगम् ॥

**गुणाल्पत्वं कालाल्पत्वं च मानगम् । अनन्तं ब्रह्मेति श्रुतिप्रतिपाद्यं नैव भवेदिति गूढाभिसन्धेः प्रतिज्ञा । हेतुमुत्तरत्र वक्ष्यति ।**

**द्वितीयमाशङ्क्याङ्गीकरोति** सर्वेति ।

सर्वकालगतस्याल्पकालेऽपि स्यादवस्थितिः ॥
महागुणस्य चाल्पोऽपि गुणः स्यादिति चेद्भवेत् ॥

**इतिचेदापाद्यते । तद्भवेदेवेत्यर्थः । अत्र गुणग्रहणं क्रियादेरप्युपलक्षणम् । गुणकालयोर्यथेष्टमुपादानं प्राथम्यनिरासार्थम् । तेनोक्तकल्पनागौरवपरिहारं सूचयति ।**

**शे०— अल्पकालत्वमल्पगुणत्वं चार्थः स्यादिति** । परिमाणानन्त्यवाचकत्वे द्विविधानन्त्ये मानत्ववदनन्तशब्दस्य कालानन्त्यवाचकत्वे गुणानन्त्यवाचकत्वेऽपि च द्विविधानन्त्येऽपि तस्य मानत्वसंभवादिति भावः। अल्पकालत्वाल्पगुणत्वयोस्तदर्थत्वाभावे बाधकाभावेनाप्रयोजकमेतदित्याशङ्क्य परिहरति **अन्यथेति ॥ न स्यादिति** । अर्थ इति शेषः । तर्कमूलभूतव्याप्तेरभावात्तर्काभासोऽयमित्यतो विशेषव्याप्त्यभावेऽपि यदविशिष्टस्य यस्य यद्भवति तदविशिष्टस्यापरस्यापि तद्भवतीत्यविशेषलक्षणसामान्यव्याप्तिसद्भावान्नानुपपत्तिरित्याशयेनाह **अविशेषादिति** । नैव गुणाल्पत्वमित्यादेः सर्वकालगतस्येत्यादेश्चैकस्मिन्पक्षेऽनवकाशाद्भिन्नभिन्नपक्षनिरासकतया वाक्यद्वयं सङ्गमयितुं संभावितं विकल्पद्वयमाह **किमि-**

**दमित्यादिना** । सर्वकालगतस्येत्युत्तरत्र कालाल्पत्वगुणाल्पत्वयोरङ्गीकारात्कथं नैव गुणाल्पत्वमित्यादिना तन्निराकरणमित्यत उक्तं **गूढाभिसन्धेरिति** । अत्र निषेध्यं न कालाल्पत्वमात्रं गुणाल्पत्वमात्रं वा किन्तु सावधारणं तन्निषेध्यमित्यभिसन्धिर्गूढ इति द्रष्टव्यम् ।

**उत्तरत्रेति** । 'देशेऽप्येतन्न नो मतमि'त्युत्तरत्रेत्यर्थः । वस्त्वानन्त्यं नामापरिच्छिन्नसंख्यागुणकर्मविग्रहत्वमिति व्याख्यातत्वात्तदनुरोधेनाह **अत्र गुणग्रहणमिति** । आदिपदेन विग्रहपरिग्रहः । अत्रेत्युपलक्षणम् । नैवाल्पगुणत्वमिति पूर्वत्रेत्यपि द्रष्टव्यम् । **अत्र प्रकरण** इति वाऽर्थः । ननु नैव गुणाल्पत्वमिति पूर्ववाक्योक्तक्रमेण सर्वकालगतस्येत्यत्रापि गुणकालयोर्गुणादितयैव वा सर्वकालगतस्येत्येतद्वाक्यानुरोधेन पूर्ववाक्येऽपि कालादितयैव वा तयोर्निर्देश उचितस्तत्किमिति क्वचिद्गुणादितया क्वचित्कालादितयोपादानमित्यत आह **गुणकालयोर्यथेष्टमिति** ॥ **प्राथम्येति** । अनन्तशब्दार्थतया प्राथम्येनैकस्यैव प्राप्तिनिरासार्थमित्यर्थः । किं प्राथम्यनिरासेनापीत्यत आह **तेनेति** ॥ **उक्तेति** । 'उच्यते यत्र ह्येकस्मिन्नर्थे व्यवस्थित' इत्यादिना पूर्वोक्तेत्यर्थः ।

**स० — उत्तरत्रेति** । **'देशेप्येतन्न नोमतमि'**त्यत्रेत्यर्थः । वस्त्वानन्त्यं नामापरिच्छिन्नसंख्यागुणकर्मविग्रहवत्त्वमिति पूर्वं व्याख्यातत्वात् तदनुसारेणाह **गुणग्रहणमिति** । ननु गुणाल्पत्वं कालाल्पत्वं चेत्युक्तक्रमेणैवोत्तरत्रापि गुणाल्पत्वस्यैव प्रथमतो वक्तव्यत्वात् क्रमं विहाय यथेष्टं 'सर्वकालगतस्याल्पकालेऽपि स्यादवस्थितिः । महागुणस्य चाल्पोऽपि गुणः स्यादि'त्युत्तरत्र कालाल्पत्वस्य प्रथमतो ग्रहणमयुक्तमित्यत्राह **गुणकालयोरिति** ।

**प० — अर्थःस्यादिति** । अनन्तशब्दस्येति योज्यम् ॥ **न स्यादिति** । अर्थ इत्यनुवृत्तिः । वक्ष्यमाणमूलानुरोधेन पूर्वविकल्पे किमल्पा एव गुणा इति गुणाः पूर्वं निर्दिष्टाः । उत्तरविकल्पे तु महागुणस्य चेति पश्चान्निर्दिष्टाः । मूलेऽप्येवं निर्देशस्य गुणकालयोर्यथेष्टमुपादानं प्राथम्यनिरासार्थमिति स्वयमेव गतिं वक्ष्यति । गुणाद्यल्पत्वस्य सर्वकालगतस्येत्युत्तरग्रन्थेऽभ्युपगतेः कथमत्र न मानगमित्यप्रामाणिकतोक्तिरित्यत आह **गूढाभिसन्धेरिति** । अल्पमात्रगुणवत्त्वं अल्पकालमात्रसत्त्वं नेत्यभिप्रायो गूढ इत्यर्थः । स तु 'तावत्त्वमेव नैव स्यादि'त्युत्तरत्र व्यक्तीभविष्यतीति भावः । इयं प्रतिज्ञा चेद्धेतुः केत्यत आह **हेतुमिति** । देशेप्येतन्न नो मतमित्यत्रापादकाभावादिति हेतुं वक्ष्यतीत्यर्थः ॥ **यथेष्टमुपादनमिति** । नैव गुणाल्पत्वमिति सार्धश्लोके कचित्पूर्वं गुणानामुक्तिः कचित्कालस्य पूर्वमुक्तिः अनन्तशब्दार्थतया प्राथम्येनैकस्य प्रतीतिनिरासार्थमित्यर्थः । तस्यापि किं फलमित्यत आह **तेनोक्तेति** । अनेकार्थत्वस्यान्याय्यत्वविवरणपरेण निरर्थकशब्दप्रयोगेत्यादिग्रन्थेनोक्तकल्पनागौरवेत्यर्थः ।

**या०— न स्यादिति** । अर्थ इति शेषः । ननु गुणाल्पत्वं कालाल्पत्वं चोत्तरत्राङ्गीक्रियते । अतः कथमिदं निराकरणमित्यत आह **गूढाभिसन्धेरिति** । अत्र निषेध्यं कालगुणाल्पत्वं सावधारणमित्यभिसन्धिर्गूढ इति द्रष्टव्यम् ॥ **उत्तरत्रेति** । 'देशेऽप्येतन्न नो मतमि'त्यत्रेत्यर्थः । वस्त्वानन्त्यं नामापरिच्छिन्नसंख्यागुणकर्मविग्रहत्वमिति व्याख्यातत्वात्तदनुसारेणाह **गुणग्रहणमिति** ॥ **यथेष्टमुपादानमिति** । नैव गुणाल्पत्वमित्यादिसार्धश्लोके क्वचिद्गुणस्य क्वचित्कालस्यादित्योपादानमित्यर्थः ॥ **प्राथम्येति** । अनन्तशब्दार्थतया प्राथम्येनैकस्यैव प्राप्तिनिरासार्थमित्यर्थः ।

**सु०— ननु यदि कालाल्पत्वं गुणाल्पत्वं चाङ्गीक्रियते । कथं तर्हि नैव गुणाल्पत्वमिति निराकरणमित्यतोऽभिसन्धिमुद्घाटयति** तावत्त्वमेवेति ।

**अनु०** — तावत्त्वमेव नैव स्यात्

अल्पत्वमेवेत्यर्थः । **इत्युक्तं प्रागिति शेषः । कुतो न स्यादिति चेत् । आपादकाभावादित्याह** देशेऽपीति ।

देशेऽप्येतन्न नो मतम् ॥

**परिमाणेऽपीत्यर्थः** । एतत् तावत्त्वमेव । नः **अस्माकम् । एतदुक्तं भवति । परिमाणविषयेऽस्मदीयं श्रुतिव्याख्यानमुपलभ्य हि गुणकालयोरप्येतदापाद्यते । आपादकान्तराभावात् । न च परिमाणेऽस्माभिरेवं व्याख्यायते । अपकृष्टमेव परिमाणमनवधिकमस्ति नोत्कृष्टमिति । द्विधानन्त्येऽपीत्युक्तत्वात् । अतो निर्मूलमेतदापादनमिति ।**

**शे०**—'ननु तावत्त्वमेव नैव स्यादि'त्युत्तरवाक्यमनर्थकम् । न चैतन्नैव गुणाल्पत्वमित्युक्ताभिप्रायकथनरूपत्वान्नानर्थक्यमिति वाच्यम् । तदभिप्रायकथनेऽपि निमित्ताभावादित्यतः तत्र प्राप्तानुपपत्तिपरिहारार्थत्वात्तदभिप्रायकथनस्य नानर्थक्यमिति भावेन तत्र प्राप्तानुपपत्तिपरिहारार्थं तदभिसन्ध्युद्घाटनपरतयोत्तरवाक्यं योजयितुं तदुक्तेऽर्थेऽनुपपत्तिशङ्कामुत्थापयति **नन्विति** ॥ **अल्पत्वमेवेत्यर्थ इति** । गुणकालयो**रिति** शेषः । पूर्वोक्ताभिसन्ध्युद्घाटनस्य मूलारूढतां कर्तुमपेक्षितं पूरयति **इत्युक्तं प्रागिति शेष इति** । तथापि **देशेऽप्येतन्न** नो मतमित्येतद्भाष्यखण्डवैयर्थ्यमेव । न च परिमाणेऽपि तावत्त्वासम्मतिकथनार्थं तदिति वाच्यम् । तत्कथनस्याप्यानर्थक्यादित्यत आपदाकाभावकथनार्थत्वान्न तदिति भावेन तत्कथनपरतयोत्तरवाक्यं सङ्गमयितुं तन्निवर्त्यशङ्कामुत्थापयति **कुत इति** । आपादकाभावस्य मूलारूढतासिद्ध्यर्थं देशपदार्थमाह **परिमाणेऽपीति** । **एतत्तावत्त्वमेवेति** । तावत्त्वमेवेति

पूर्ववाक्ये सावधारणस्यैव प्रस्तुतत्वादेतदिति सावधारणस्यैव परामर्श इति भावः । ननु परिमाणे तावत्त्वमेवेत्यसम्मतावपि गुणकालयोस्तावत्त्वमेवेत्यापादनं भविष्यति । आपादकान्तरस्यापि सम्भवेन परिमाणे तावत्त्वस्यैव तदापादकतायां निमित्ताभावात्कथं च परिमाणे तावत्त्वासम्मतिरित्यत आह **एतदुक्तं भवतीति** । एतच्छब्दस्य वक्ष्यमाणेनेतिशब्देन संबन्धः ।

प० — भावानवगमादाह **एतदुक्तं भवतीति** ॥ **एतदापाद्यत इति** । अल्पत्वमेवेत्येतदित्यर्थः ॥ **इत्युक्तत्वादिति** ॥ **ईशस्यानवधिकपरिमाणोत्कर्षापकर्षत्वे श्रुतिद्वयोक्तिः** ॥

**सु० — नन्वेतदीश्वरादेरनवधिकोत्कृष्टापकृष्टपरिमाणसमर्थनमयुक्तम् । सूत्रकारेण क्वाप्यनुक्तत्वात् । महद्दीर्घवद्वेति सूत्रस्य विजातीययोरपि कार्यकारणभावोपपादनेन व्यधिकरणयोरप्यपरिच्छिन्नपरिमाणोत्कर्षापकर्षयोरुपपादनेन वा समर्थयितुं शक्यत्वादित आह** महत इति ।

**अनु० —** महतोऽल्पत्वमपि हि व्योमवत्प्राह वेदवित् ॥

**निरवधिकपरिमाणोत्कर्षवतो(ऽपि) ब्रह्मणोऽल्पपरिमाणवत्त्वं च व्योम दृष्टान्तीकृत्य** व्योमवच्चेति **सूत्रखण्डेन प्राह सूत्रकारः । अतो ब्रह्मणो गगनस्य वाऽनवधिकपरिमाणोत्कर्षापकर्षसद्भावस्तत्सिद्धान्तो भवत्येवेति ।**

**शे० —** ननु महतोऽल्पत्वमपि हीत्युत्तरष्यमनर्थकम् । न चैतदीश्वरादेरनवधिकोत्कृष्टापकृष्टपरिमाणसद्भावस्य सूत्रकृत्कथितत्वकथनार्थं तदिति वाच्यम् । तत्कथनस्याप्यनर्थकत्वात् । न चेदं स्वकीयस्येश्वरादावनवधिकोत्कृष्टापकृष्टपरिमाणसमर्थनस्य सूत्रकृदसम्मतत्वेनायुक्तताशङ्कानिरासार्थत्वान्नानर्थक्यमिति वाच्यम् । महद्दीर्घवद्वेति व्याख्येयसूत्रानुरोधेनैवोक्तार्थस्य सूत्रकृत्सम्मतत्ववर्णनसम्भवेन तत्त्यागेन सूत्रान्तरपर्यन्तधावनस्याकुशलत्वापादकतयाऽयोगादित्यतो व्याख्येयस्य सूत्रस्यान्यथासिद्धत्वादेतदनुरोधेन सूत्रकृत्सम्मतत्वसमर्थनासम्भवाद्युक्तमेतत्सूत्रपरित्यागेन सूत्रान्तरपर्यन्तधावनमित्येदभिप्रेत्य सूत्रकृदकथितत्वशङ्कानिरासकतयोत्तरभाष्यं योजयितुं 'महद्दीर्घवद्वेति' सूत्रस्यान्यथासिद्धिव्युत्पादनपूर्वकं सूत्रकृदकथितत्वेन भाष्यकारीयस्येश्वरादावनवधिकोत्कृष्टापकृष्टपरिमाणसमर्थनस्यायुक्तताशङ्कामुत्थापयति **नन्वेतदिति** ॥ **सूत्रकारेण क्वापीति** । तथा च सूत्रानुक्तार्थसमर्थनरूपत्वादभाष्यत्वमिति भावः । नन्वयमर्थो महद्दीर्घवद्वेति सूत्र एव सिद्धः । यद्यपि चायं न सूत्रस्य श्रौतोऽर्थः । तथाऽप्याक्षिप्तार्थो भवत्येवेति भवति सूत्रार्थः । तथा हि । अत्र सूत्रे तावत्परमाणुद्व्यणुकपरिमाणाभ्यां ह्रस्वत्वपारिमांडल्याभ्यां द्व्यणुकत्र्यणुकयोः परिमाणमुत्पद्येतेत्यापादनमर्थतया प्रतीयते । तत्र वैजात्यात्कथमिदमापादनमिति शङ्कानिरासाय वैजात्यमसिद्धं सर्वत्र द्रव्ये आपेक्षि-

कार्णुत्वमहत्त्वयोर्दर्शनेन त्वदभिमतपरमाण्वादेरपि किञ्चिदपेक्षया महत्त्वादित्यवश्यं प्रतिवक्तव्यमेव । तत्र च परिमाणापकर्षतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् उत्कर्षपरिमाणतारतम्यवदित्यनुमानबाधशङ्कायां तदनुमाने दृष्टान्ते साध्यवैकल्याद्यभिधानाय परिमाणोत्कर्षापकर्षयोरनवधिकत्वसमर्थनस्यात्रावश्यकत्वात् । अतः सूत्राक्षिप्तप्रमेयसमर्थनपरत्वान्नाभाष्यत्वमित्याशङ्क्याह महद्दीर्घवद्वेति ॥

विजातीययोरिति । वैजात्यमङ्गीकृत्यापि कार्यकारणभावः शक्योपपादनः । अन्यथा परमाण्वादिगतद्वित्वादिसंख्याया अपि द्व्यणुकादिपरिमाणविजातीयतया तदकारणत्वप्रसङ्गात् । परिमाणस्यैवमिति नियमस्य निर्मूलत्वात् । तथा च सूत्रार्थस्यान्यथासिद्धत्वान्नोक्तार्थस्य तदाक्षिप्तत्वमिति भावः । अस्तु वा परमते परिमाणत्वावान्तरजात्यपाकरणायोक्तरीत्यनुसरणम् । तथाऽपि यदेकस्यामेवाकाशादिव्यक्तौ परिमाणोत्कर्षापकर्षयोरनवधिकत्वसमर्थनं तत्सर्वथा नोक्तसूत्राक्षिप्तमित्याशयेनाह व्यधिकरणयोरिति । आकाशे परिमाणोत्कर्षपरिच्छेदः परमाणौ च तदपकर्षपरिच्छेदः । इत्येवं भिन्नाधिकरणयोरित्यर्थः । एवमपि साध्यवैकल्याद्युक्तिसम्भवेन सूत्रार्थनिर्वाहादिति भावः ॥

तत्सिद्धान्तो भवत्येवेति । यद्यप्येवमप्येतत्समर्थनं तत्सूत्रव्याख्यानावसर एव कर्तुमुचितम् । तथाऽप्युक्तानुमाने साध्यवैकल्यादिव्युत्पादनाय परिमाणोत्कर्षापकर्षयोरनवधिकत्वं तावदवश्यमत्र समर्थनीयम् । तच्च यद्यपि व्यधिकरणयोरपि परिमाणोत्कर्षापकर्षयोरुपपादितेऽपि पर्यवस्यतीति तादृशमेव व्युत्पाद्यम् । तथाऽप्यन्यत्र सूत्रकारोक्तं यदाकाशादावेकस्मिन्नेव परिमाणोत्कर्षापकर्षयोरानन्त्यं तस्यापि सिंहावलोकनन्यायेनात्र समर्थनं कृतमित्यवधेयम् ।

प० — क्वाप्यनुक्तत्वादिति । अक्षरनयेऽन्यभावव्यावृत्तेश्चेत्यत्रेश्वरे अणुत्वमहत्त्वयोरुक्तावपि तयोरनवधिकत्वस्य तत्रानुक्तिरिति भावेन पूर्वमीश्वरादेरनवधिकोत्कृष्टत्याद्युक्तिः । 'अल्पश्रुतेरिति चेत्तदुक्तमि'त्यस्यापि व्योमवदित्येतत्प्रपञ्चनरूपत्वादिति भावः । ननु महद्दीर्घवद्वेति सूत्रे ह्रस्वत्वपारिमाण्डल्याभ्यामपि परिमाणोत्पत्तिं ब्रुवता सूत्रकृता परिमाणावान्तरजातेरपाकरणे वैजात्यनिरसनपूर्वं सर्वपरिमाणानां सजात्यसूचनेन व्यणुकादिगतपरिमाणस्येव परमाण्वादिगतपरिमाणस्याप्यणुत्वमहत्त्वयोराक्षेपिकयोः सूचनादित्यत आह महद्दीर्घवद्वेति सूत्रस्येति । वैजात्यमित्युपेत्यैव ह्रस्वत्वपरिमाण्डल्याभ्यां विजातीयाभ्यामपि महत्त्वं दीर्घत्वं जायते । यथा परमाण्वादिगतद्वित्वत्रित्वसंख्याया व्यणुकादौ परिमाणजन्मोपेयते । प्रशिथिलावयवसंयोगरूपप्रचयात्तूलपिण्डादिपरिमाणजन्माङ्गीक्रियते तथेत्येवमुपपादनेनेत्यर्थः ॥

व्यधिकरणयोरिति । गगनादावेवानवच्छिन्नोत्कर्षः परमाणुष्वेव तादृशपरिमाणापकर्ष इत्युपपादनेनेत्यर्थः । व्योम दृष्टान्तीकृत्येत्यत्र व्योमेति भिन्नं पदं द्वितीयान्तम् ॥ सूत्रखण्डेनेति । 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्चे'ति लिङ्गपादीयसूत्रांशेनेत्यर्थः ।

या० — सूत्रकारेणेति । तथा चापसिद्धान्त इति भावः । ननु महद्दीर्घवद्वेति सूत्राक्षिप्तमेवेदम् । तथा हि । अस्मिन्सूत्रे तावद्ध्रस्वत्वपारिमाण्डल्याभ्यां द्व्यणुकत्र्यणुकयोरपि परिमाणमत्पद्येतेत्यापादनमर्थतया प्रतीयते, तत्र वैजात्यात्कथमिदमापादनमिति परेणोक्तेऽसिद्धं वैजात्यं सर्वत्रापि किञ्चिदपेक्षयाऽणुत्वमहत्त्वयोरसत्त्वेन त्वदभिमतपरमाणोरपि किञ्चिदपेक्षया महत्त्वादित्यस्माभिरभिहिते परेण परिमाणापकर्षतारतम्यं क्वचिद्विश्रान्तमित्यनुमानेन परमणौ महत्त्वाभावे साधिते तदनुमाने साध्यवैकल्याद्यभिधानाय परिमाणोत्कर्षापकर्षयोरनवधिकत्वं समर्थनीयमेव अतः सूत्राक्षिप्तप्रमेयसमर्थने कथमपसिद्धान्तशङ्केत्यत आह महद्दीर्घवद्वेति ॥ विजातीययोरपीति । संख्यापरिमाणयोस्तेनैव स्वीकृतत्वादिति भावः । तथा च सूत्रार्थस्यान्यथाऽनुपपत्त्याऽऽक्षेपोऽसिद्ध इति भावः । अस्तु वा परमते परिमाणत्वावान्तरजात्यभावोपपादनायोक्ताऽपि रीतिः । तथाऽपि यदेकैकस्यामेवाकाशादिव्यक्तौ परिमाणोत्कर्षापकर्षयोरनवधिकत्वं समर्थितं तत्सर्वथा नोक्तसूत्राक्षिप्तमित्याशयेनाह व्यधिकरणयोरपीति । आकाशे परिमाणोत्कर्षापरिच्छेदः परमाणौ तदपकर्षापरिच्छेद इति भिन्नाधिकरणयोरपीत्यर्थः । एवमपि साध्यवैकल्याद्युक्तिसम्भवेन सूत्रार्थनिर्वाहादिति भावः ॥ तत्सिद्धान्तो भवत्येवेति । नन्वेवं चेत्तत्रैवैतत्सूत्रसमर्थनं न्याय्यम् । सत्यम् । उक्तानुमाने साध्यवैकल्यादिकथनाय परिमाणोत्कर्षापकर्षयोरनवधिकत्वं तावदवश्यमत्र समर्थनीयम् । तच्चोक्तरीत्या यद्यपि नैकस्मिन्नेव वस्तुन्यपेक्षितम् । तथाऽप्यन्यत्र सूत्रकारोक्तं यदाकाशादावेकस्मिन्नेव परिमाणोत्कर्षापकर्षयोरानन्त्यं तदपि प्रसङ्गात्समर्थयितुमत्रेदमुक्तमिति ज्ञातव्यम् ।

श्री० — तत्सिद्धान्त इति । सूत्रकारसिद्धान्त इत्यर्थः ।

सु० — किञ्च योऽर्थो निरवकाशप्रमाणसिद्धो यद्विपर्यये चानिष्टं स सर्वोऽपि सिद्धान्त एव । तत्र कालाकाशयोरी(रपी)श्वरे चानवधिकपरिमाणोत्कर्षापकर्षसद्भावः साक्षिणाऽऽगमेन च सिद्ध इत्युक्तम् । तद्विपर्यये बाधकमाह यदीति ।

अनु० — यद्यल्पदेशसंस्थानं न सर्वत्रापि नो भवेत् ॥

कालादेरिति वर्तते । सर्वत्रापि संस्थानमिति च । कालादीनां सर्वगतत्वं परेणाप्यङ्गीकृतम् । सर्वगतत्वं च सर्व(त्र)देशे संस्थानम् । तथा च यदि कालादेरल्पाल्पतरदेशेषु संस्थानं न स्यात् । तदा सर्वत्रावस्थानमपि नो भवेत् । कुत इत्यत आह स्थितस्य हीति ।

स्थितस्य ह्यल्पदेशेषु सर्वगत्वं भवेद्ध्रुवम् ॥

एकत्राप्यनवस्थस्य कुत एवाखिलस्थता ॥

ध्रुवमित्यवधारणे । अल्पदेशेषु स्थितस्यैवेति । यथा खल्वेकैकं वर्णमुच्चारयत एव सर्ववेदोच्चारणम् । न त्वेकमपि वर्णमनुच्चारयतः, तथाऽल्पाल्पतरदेशेषु स्थितस्यैव हि सर्वदेशगतत्वं भवेत् । एकैकत्रापि देशेऽनवस्थितस्याखिलदेशस्थता कुत एव भवेत् । अनेन यो यत्समुदायं व्याप्नोति स तदेकदेशानपि व्याप्नोति(त्येव), यश्चैकदेशान्न व्याप्नोति नासौ तत्समुदायमित्यन्वयव्यतिरेकौ दर्शितौ ।

शे० — सूत्रकृत्कथितत्ववर्णनात्पूर्वभाष्येणैव भाष्यकारीयस्याकाशादावनवधिकपरिमाणोत्कर्षापकर्षव्युत्पादनस्य समर्थनात् यद्यल्पदेशेत्युत्तरभाष्यानर्थक्यमित्याशङ्क्य रीत्यन्तरेणाप्येकत्रैवाकाशादावनवधिकपरिमाणोत्कर्षापकर्षसद्भावस्य सूत्रकारसिद्धान्तत्वसमर्थनार्थत्वान्न तदानर्थक्यमित्यभिप्रेत्य तदुपपादकतयोत्तरग्रन्थं सङ्गमयितुं सूत्रकारसिद्धान्तत्वोपपादकं रीत्यन्तरं तावदाह किञ्चेति । तर्हि निरवकाशप्रमाणसिद्धत्वं तद्विपर्यये बाधकं चोभयमप्यभिधातव्यं तत्कथं विपर्ययेऽनिष्टत्वकथनमात्रेण तत्सिद्धिरित्यतः 'केवलं साक्षिमानेने'त्यादिनाऽनवधिकपरिमाणोत्कर्षापकर्षसद्भावस्य कालादौ साक्षिसिद्धतायाः समर्थितत्वात्तदकथयित्वैव विपर्ययेऽनिष्टमात्रकथनस्योपपन्नत्वादित्यभिप्रेत्य निरवकाशप्रमाणसिद्धत्वोपदर्शनपूर्वकमनिष्टकथनपरतयोत्तरग्रन्थं योजयति तत्रेत्यादिना । साकाङ्क्षत्वेन वाक्याभासत्वपरिहारायापेक्षितं पूरयति कालादेरिति ॥ संस्थानमिति चेति । सर्वत्रापीत्यतः परं संस्थानमित्यनुवर्तनीयमित्यर्थः । आपाद्यस्यानिष्टत्वमुपदर्शयति कालादीनामिति । तर्हि भवतु सर्वगतत्वाभावप्रसङ्गोऽनिष्टः, सर्वत्र संस्थानाभावस्य तु किमायातमित्यत आह सर्वगतत्वं चेति । किमनेन विपर्यये बाधकमुक्तं भवतीत्यतस्तर्कविरोध इति भावेन तत्स्वरूपोपदर्शकतया भाष्यं योजयति तथा चेति । विपर्ययेऽनिष्टकथनस्य पूर्वेणैव सिद्धेः स्थितस्य हीत्युत्तरभाष्यानर्थक्यमाशङ्क्य तर्काङ्गव्याप्तेरन्वयव्यतिरेकोपदर्शनेन समर्थनार्थत्वान्नानर्थक्यमित्यभिप्रेत्य व्याप्त्युपपादकतयोत्तरभाष्यं योजयितुं व्याप्त्यभिधानेन निवर्तनीयामप्रयोजकताशङ्कामुत्थापयति कुत इति । यदल्पदेशस्थितं तस्य सर्वगतत्वं ध्रुवं भवेदिति योजनायामल्पदेशस्थितत्वं व्याप्यं सर्वदेशस्थितत्वं व्यापकमिति प्राप्नोति । न च तद्युज्यते । घटादेरल्पदेशस्थस्यापि सर्वदेशस्थत्वाभावदर्शनेन व्यभिचरितत्वात् । अतोऽत्र यत्सर्वदेशस्थं तदल्पदेशस्थमिति व्याप्यव्यापकभावो वाच्यः । न चोक्तयोजनायां विवक्षितव्याप्यव्यापकभावस्य लाभः सम्भवतीत्यतः तल्लाभायावधारणार्थस्य ध्रुवमित्यस्य ध्रुवमल्पदेशस्थस्यैवेत्यन्वयो वाच्यः । तथा चाल्पदेशस्थस्यैव सर्वदेशस्थत्वमित्यर्थपर्यवसानाद्वह्निमानेव धूमवानित्यादाविव विवक्षितव्याप्यव्यापकभावलाभान्नाव्यापकव्यावृत्त्याऽव्याप्यव्यावृत्त्यापादनवादस्य तर्काभासत्वमित्याशयवानवधारणसम्बन्धं तावद्दर्शयति अल्पदेशेषु स्थितस्यैवेति । गगनादि-

कमेकदेशस्थितं सर्वदेशस्थत्वात् इत्यभिप्रेतानुमाने यद्येकदेशस्थं न स्यात्तर्हि सर्वदेशस्थं न स्यादित्यप्रयोजकतानिरासकतर्के च मूलभूतव्याप्तेर्विशिष्य दृष्टान्ताभावेनासम्भवात्सामान्यव्याप्तिरेवानुसन्धेयेति भावेन तद्व्याप्तावनुरूपं दृष्टान्तमाह **यथेत्यादि**। अनेन सर्वत्रेदोच्चारयिताऽन्वयदृष्टान्तः। तस्य समुदायव्यापिन एकदेशव्याप्तेरपि सत्त्वात्। सर्वथाऽनुच्चारयिता च व्यतिरेकदृष्टान्तः। तस्यैकदेशाव्यापिन समुदायाव्याप्तेरपि सत्त्वादित्युक्तं भवति। विवक्षितान्वयव्यतिरेकयोर्मूलारूढतां दर्शयितुं मूलयोजनामाह **यथेत्यादि**। वाक्यतात्पर्यप्रदर्शनम् **अनेनेति**।

स० — **उक्तमिति**। पूर्वम् 'उच्यत' इत्यादिनोक्तमित्यर्थः।

प० — कालाकाशबुद्ध्याह **साक्षिणेति**। आकाशेश्वराभिप्रायेणाह **आगमेन चेति**। 'स एषोनन्तः' 'अणोरणीयान्' 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्याद्यागमेनेत्यर्थः॥ **इति चेति**। सर्वत्रापीत्यनन्तरं संस्थानमिति चानुवर्तत इत्यर्थः॥ **सर्वगतत्वमिति**। यद्यपि परेणावृत्तिमत्त्वमेवाभ्युपेतं तथाऽपिविभुत्वाङ्गीकारात् विभुत्वस्य च सर्वगतत्वेन विनानुपपत्तेरेवमुक्तम्। अत एव तत्तथैव व्यनक्ति **सर्वगतत्वञ्चेति**।

**सु० — न केवलमल्पाल्पतरदेशस्थत्वाभावे सर्वगत्वाभावप्रसङ्गः। किन्तु शशविषाणादिवत्सत्ताऽपि न स्यादित्याह** शून्यत्वमेवेति।

---

अनु० — शून्यत्वमेव तस्य स्याद्यस्यैकत्रापि न स्थितिः॥

**एवञ्च कालादीनामल्पाल्पतरदेशावस्थानेऽल्पाल्पतरपरिमाणवत्त्वमप्यवर्जनीयमित्यनवधिकपरिमाणापकर्षसिद्धिः। अनवधिकोत्कर्षस्तु परेणाप्यङ्गीकृत एवेति न तद्विपर्यये बाधकमुक्तम्। सर्वत्रापि नो भवेदित्येव वा द्रष्टव्यम्। न हि परममहत्त्वाभावे सर्वगतत्वं संभवति। तथा चाह 'विभुत्वान्महानाकाश' इत्यादि। अल्पाल्पतरदेशपर्यवसितस्याल्पाल्पतरपरिमाणत्वम्। न चैवमाकाशादीति चेत्। तत्किमाकाशादि समुदितरूपं येन पर्यवसानापर्यवसानविषयत्वमश्नुवीत। किन्त्वेकमेव। तच्च यद्यल्पाल्पतरदेशेषु तिष्ठेत्तदा तत्तत्परिमाणं भवत्येव (भवेदेव)। यदि तत्र तत्र स्थितस्य तत्तत्परिमाणत्वं तदा घटादावपि तत्प्रसङ्ग इति चेन्न। तस्य सांशत्वेनान्यथासिद्धत्वात्।**

शे० विपर्यये बाधकोक्त्याऽनवधिकपरिमाणोत्कर्षापकर्षसद्भावस्याकाशादौ सूत्रकारसिद्धान्तत्वसमर्थनाच्छून्यत्वमेवेत्युत्तरवाक्यानर्थक्यमित्याशङ्क्य विपर्यये बाधकान्तरोपदर्शनार्थत्वेन तस्यापि सूत्रकारसिद्धान्तत्वोपपादकत्वान्न तदिति भावेन बाधकान्तरोपदर्शकपरतयोत्तरग्रन्थं योजयति **न केवलमिति**॥ **सत्ताऽपीति**। न चाल्पदेशस्थत्वाभावेऽपि सर्वदेशस्थत्वान्न शून्यत्वप्रसङ्ग इति वाच्यम्। एकदेशस्थत्वाभावेन सर्वदेशस्थ-

त्वाभावस्यापि प्राप्तत्वेन सर्वदेशस्थत्वेन तन्निरासायोगादित्याशयात् । ननु च कालादेरल्पाल्पतरदेशस्थतया तदधिकरणदेशस्याल्पाल्पतरपरिमाणप्राप्तावपि कालादेस्तदप्राप्तेः कथं कालादावनवधिकपरिमाणापकर्षसिद्धिरित्यत आह **एवञ्चेति।** अल्पाल्पतरपरिमाणाभावेऽल्पाल्पतरदेशस्थत्वायोगात्तेन तत्सिद्धिरिति भावः । ननु तथाऽपि नानेन भाष्येणानवधिकपरिमाणोत्कर्षापकर्षसद्भावस्याकाशादौ सूत्रकारसिद्धान्तत्वं सिध्यति। अपकर्षानन्त्याभावे बाधकोक्त्याऽनेनापकर्षानन्त्यप्राप्तावप्युत्कर्षानन्त्याभावे भाष्ये बाधकानुक्त्या तदानन्त्यस्य विपर्यये बाधकबलेनाप्राप्तत्वादित्यतस्तदनुक्तौ निमित्तकथनेनोक्तशङ्कां परिहरति **अनवधिकेति ॥ परेणाप्यङ्गीकृत एवेति ।** परिमाणोत्कर्षानन्त्यस्य गगनादावेवानवधिकपरिमाणापकर्षस्य परमाणावेवोपपादनेन वाऽस्य सूत्रस्य समर्थयितुं शक्यत्वादिति शङ्काकर्त्रा गगनादावनधिकपरिमाणोत्कर्षस्याङ्गीकारान्न तत्र बाधकमुक्तमिति भावः । अस्मिन्पक्षे उत्कर्षानन्त्यव्यतिरेके बाधकानुक्तिर्भाष्ये भवतीत्यपरितोषात्पक्षान्तरमाह **सर्वत्रापीति ॥ द्रष्टव्यमिति ।** विपर्यये बाधकमित्यनुवर्तते । तदेवोपपादयति **न हीति ।** निरवधिकपरिमाणोत्कर्षाभाव इत्यर्थः । तथा चैतद्योजनायामेतदापादकं पूरणीयमित्युक्तं भवति । कुतः परममहत्त्वाभावे सर्वगतत्वासंभव इत्यतः तथा सति सूत्रकारीयस्य सर्वगतत्वेन परममहत्त्वसाधनस्यानुपपत्तिप्रसङ्गादिति भावेन सर्वगतत्वेन परममहत्त्वसाधनपरं कणादसूत्रं पठति **तथा चाहेति ।** यद्यपि 'विभुत्वान्महानाकाशस्तथाऽऽत्मे'ति कणादसूत्रं, तथाप्येकदेशस्यैव प्रकृतोपयोगात्तन्मात्रमेव मुखत उदाहृतम् । अन्यत्तु आदिशब्देन संगृहीतमिति मन्तव्यम् । यथाऽऽकाशं विभुत्वात्सकलमूर्तसंयोगित्वात्परममहत्परिमाणवत् तथाऽऽत्माऽपि परममहानित्यात्ममहत्त्वस्य विभुत्वेन साधने आकाशस्य दृष्टान्तीकरणान्न परममहत्त्वं विनाऽऽकाशस्य सर्वगतत्वमिति विवक्षितसिद्धिरिति ध्येयम् ॥ **पर्यवसितस्येति ।** पर्याप्त्या वर्तमानस्येत्यर्थः । घटादौ तथा दर्शनादिति भावः ॥ **न चैवमिति ।** आकाशस्याल्पतरदेशपर्यवसितत्वेऽन्यत्र तदभावापातादिति भावः ॥ **समुदितरूपमिति ।** सेनावनादिवत् विभिन्नानेकवस्तुसमुदायरूपमित्यर्थः ॥ **एकमेवेति ।** अखण्डमेवेत्यर्थः । अभिन्नांशोपेतमिति यावत् ॥ **तत्तत्परिमाणं भवेदेवेति ।** तत्रांशांशिनोरत्यन्ताभेदादिति भावः । आशयमविद्वान् **शङ्कते यदि तत्र तत्रेति ।** आशयमुद्धाटयति **तस्य सांशत्वेनेति ।** विभिन्नांशवत्त्वेनेत्यर्थः । तथा च तत्र तत्र देशेऽवस्थितघटाद्यंशानां तत्तत्परिमाणत्वेऽपि न घटादेराकाशादेरिव तत्तत्परिमाणत्वप्रसङ्गः । तस्य तेभ्यो भिन्नत्वेनाकाशादाविवात्यन्ताभेदाभावादित्याशयः ।

स०— **सत्ताऽपीति ।** अल्पदेशस्थत्वाभावे सर्वगतत्वस्याप्यसंभवेन शून्यत्वमेव स्यादित्यर्थः । तेनाल्पदेशस्थत्वाभावेऽपि सर्वगतत्वान्न शून्यत्वापत्तिरिति शङ्कानवकाश इति भावः । **परेणाऽप्यङ्गीकृत एवेति ।** परिमाणोत्कर्ष (र्षानन्त्यस्य) तारतम्यस्य गगनादावेव, अपकर्ष (अनवधिकपरिमाणापकर्षस्य)

तारतम्यस्य परमाणावेवोपपादनेन वाऽस्य सूत्रस्य समर्थयितुं शक्यत्वादिति शङ्काकर्त्रा गगनादौ अनवधिकोत्कर्षस्याङ्गीकारान्न तत्र बाधकमुक्तमिति भावः । **समुदितरूपमिति** । भिन्नावयवसमुदायरूपं नेत्यर्थः ।

प० — किं तावता प्रकृत इत्यत आह **एवञ्च कालादीनामिति** ॥ **इत्येव वा द्रष्टव्यमिति** । महत्त्वविपर्ययेपि बाधकोक्तिपरतया द्रष्टव्यमित्यर्थः । तथा च तत्र बाधकानुक्तिःसिद्धेति भावः । नन्वेवमापाद्यमात्रलाभेपि आपादकस्यालाभ इत्यतः तदपि योज्यमिति भावेन तदर्थमाह **न हि परममहत्त्वाभाव इति** ॥ **तथा चाहेति** । तार्किक इत्यर्थः । शङ्कते **अल्पाल्पतरेति** । पर्यवसितस्य परमाण्वादेरिवाल्पदेशे कृत्स्नस्वरूपेण वर्तमानस्येत्यर्थः **समुदितरूपमिति** । माषराश्यादिवद्भिन्नांशोपेतसमुदायरूपं नेत्यर्थ ॥ **अश्नुवीतेति** । प्राप्नुयादित्यर्थः ॥ **एकमेवेति** । अत्यन्ताभेदोपेतानन्तांशयुक्तमेकव्यक्तिरूपमेवेत्यर्थः ॥ **सांशत्वेनेति** । भिन्नाभिन्नांशवत्त्वेनेत्यर्थः ।

या० — नन्वेवं कालाद्यधिकरणदेशस्यैवाल्पाल्पतरपरिमाणवत्त्वं प्राप्तं न कालादेरत आह **एवं च कालादीनामिति** ॥ **न हि परममहत्त्वाभाव इति** । निरवधिकपरिमाणोत्कर्षाभाव इत्यर्थः । इदमापादकमत्र मूले पूरणीयमिति भावः । **विभुत्वात्** सर्वगतत्वात् । **महान्** निरवधिकोत्कृष्टपरिमाणवानिति तत्फक्किकार्थः ॥ **पर्यवसितस्येति** । पर्याप्त्या वर्तमानस्येत्यर्थः ॥ **समुदितरूपमिति** । सेनावनादिवद्भिन्नानेकवस्तुसमुदायरूपमित्यर्थः ॥ **एकमेवेति** । अखण्डमेवेत्यर्थः । अभिन्नांशोपेतमिति यावत् ॥ **तत्तत्परिमाणं भवेदेवेति** । तत्रांशिनोऽत्यन्ताभेदादिति भावः । आशयमविद्वान् शङ्कते **यदि तत्र तत्रेति** । आशयमुद्घाटयति **तस्य सांशत्वेनेति** । विभिन्नांशवत्त्वेनेत्यर्थः । तथा च तत्र तत्र देशेऽवस्थितघटाद्यंशानां तत्तत्परिमाणत्वेऽपि न घटादेराकाशादेरिव तत्तत्परिमाणत्वप्रसङ्गः । तस्य तेभ्यो भिन्नत्वेनाकाशादाविव अत्यन्ताभेदाभावादित्याशयः ।

श्री० — यद्वा बाधकमुक्तमेवेत्याह **सर्वत्रापीति** । इत्येव इत्यनेनैव । बाधकमुक्तमिति शेषः । तद्विशदयति **न हीति** ॥ **तत्प्रसङ्ग इति** । घटादेरपि तत्र तत्र स्थितस्याकाशादेरिव तत्तत्परिमाणत्वप्राप्त्याऽनेकपरिमाणवत्त्वप्रसङ्ग इत्यर्थः ।

सु० — **ननु च सर्वमूर्त(द्रव्य)संयोगित्वमेव सर्वगतत्वं, न सर्वत्र संस्थानम् । आकाशादेरनाश्रितत्वात् । संयोगश्च तत्तत्परिमाणाभावे(ऽपि) भवेदेव । न हि घटो गगनेन संयुज्यमानो भवति परममहान्नापि परमाणुना संयुज्यमानः परमाणुः । तत्कस्य हेतोः । संयोगस्य प्रदेशवृत्तित्वादिति । मैवम् । सर्वपरिमाणानामप्याकाशे सत्त्वात्परमाणुना च घटांशस्यैव संयोगात् । तथा हि । विशेषशक्त्या, निर्भेदमप्याकाशमनन्तांशोपेतम् । तत्र अनवधिकौ परिमाणोत्कर्षापकर्षौ व्यवस्थया वर्तेते । ततश्च घटो वितस्तिपरिमाणेनैवाकाशेन**

**संयुज्यते । स्वयं च तत्परिमाण इति को दोषः । घटांश एव परमाणुसंयोगो वर्तते, न घट इति कथं घटस्य परमाणुना तर्ह्याकाशप्रदेशा एवाल्पाल्पतरप्रदेशसंयोगिन इति, त एव तत्तत्परिमाणाः स्युर्नाकाशमिति चेन्न । तेषामप्याकाशात्मकत्वात् । अन्यथा संयोगस्य प्रदेशवृत्तित्वं न स्याद्व्याघातादिति ।**

शे० — यदि कालादेरल्पाल्पतरदेशेषु संस्थानं न स्यात्तदा सर्वत्रावस्थानमपि न स्यादिति विपक्षबाधकतर्कस्येष्टापादनरूपत्वेनाभासत्वादकिञ्चित्करत्वमित्याशङ्कते **ननु चेति ।** ननु विपरीतस्यापि वक्तुं शक्यत्वात्कुतोऽवधारणमित्यतो युक्तिमाह **आकाशादेरिति ।** 'आश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः' इति प्रशस्त(देवा)पादाचार्योक्तेरिति भावः । ननु तर्हि यो येन संयुज्यते स तत्परिमाणः, यथा परमाणुना संयुज्यमानः परमाणुः परमाणुपरिमाण इति व्याप्तिबलेन सर्वसंयोगिन्याकाशादौ तत्तत्परिमाणप्राप्त्याऽपकर्षानन्त्यप्राप्तेरस्मदिष्टसिद्धिरित्यत आह **संयोगश्चेति ॥ नापीति ।** घट इति वर्तते ॥ **संयोगस्येति ।**परमाणुना संयुज्यमानस्य घटस्य परमाणुत्वे परमाणुसंयोगस्य परमाणौ सर्वत्र सत्त्वेनैकदेशवृत्तित्वरूपप्रदेशवृत्तित्वाभावप्रसङ्गान्न तस्य परमाणुपरिमाणत्वमिति भावः ।

अस्तु अत्र सर्वमूर्तसंयोगित्वमेव सर्वगतत्वं, तथाऽपि तत्तत्परिमाणाभावे तत्तत्संयोगानुपपत्त्या तत्संयोगेनैव गगनादौ तत्तत्परिमाणसिद्धिरवर्जनीयैव । न चैवं घटस्य गगनेन संयुज्यमानस्य परममहत्त्वप्रसक्तिरिति वाच्यम् । स्वपरिमाणसमानपरिमाणेनैव गगनेन घटस्य संयोगाङ्गीकारेण तदनापत्तेः । न च गगने परममहत्त्वमेकमेव परिमाणं न त्वन्यदिति कथं स्वपरिमाणसमानपरिमाणेनैव गगनेन संयोगो घटस्य स्यादिति वाच्यम् । सर्वपरिमाणानामपि तत्र सत्त्वेनाविरोधादित्याशयेन प्रथमदोषपरिहारं प्रतिजानीते **सर्वेति ।** सर्वपरिमाणसदृशपरिमाणानामित्यर्थः । द्वितीयदोषपरिहारं प्रतिजानीते **परमाणुना चेति ।** ननु परिमाणभेदस्य द्रव्यभेदप्रयोजकत्वादाकाशे सर्वपरिमाणाङ्गीकारे आकाशभेदप्रसङ्गः,अन्यथा स्वयमेव स्वापेक्षयोत्कृष्टमपकृष्टं चेति प्रपक्त्या विरोधप्रसङ्गः इत्याशङ्कां परिहरन्नुक्तमुपपादयति **तथा हीत्यादिना ।** तत्रोक्ताक्षेपपरिहारायोपोद्घातेनाकाशस्यानन्तांशवत्तामुपदर्शयति **विशेषशक्त्येति ॥ आकाशमिति ।** आकाशपदमीश्वरादेरुपलक्षकम् । अत एव पूर्वमाकाशादेरित्युक्तमित्यवधेयम् । अनन्तत्वस्य भेदाविनाभूतत्वादंशानामनन्तत्वे भेदप्रसङ्गः इत्यत उक्तं **निर्भेदमिति ।** तर्हि व्यापकनिवृत्तौ व्याप्यनिवृत्तेरवश्यम्भावात् भेदाभावेऽनन्तत्वस्याभावप्रसङ्गः इत्यतो भवेदेतदेवं यद्यनन्तत्वस्य भेदमात्रेणाविनाभावनियमो भवेत् । न चैवम् । किन्नाम भेदविशेषयोरन्यतराविनाभावनियम एव । ततश्च प्रकृते भेदाभावेऽपि तत्प्रतिनिधिविशेषस्य सत्त्वेनोक्तस्य व्यापकस्य निवृत्त्यभावान्नानन्तत्वनिवृत्तिरिति भावेनोक्तं **विशेषशक्त्येति ।** तथा च तत्तद्वस्तुसंयुक्ताकाशांशगतान्येव तत्तत्परिमा-

णानि । अत एव न विरोधशङ्काऽपीति भावः । यदर्थमुपोद्घातेनानन्तांशत्वमुपवर्णितं तदिदानीमाह **तत्रेति** । आकाशांशेष्वित्यर्थः । आकाशे उत्कृष्टापकृष्टांशानां अनन्तत्वात्तत्र उत्कृष्टेषु परिमाणोत्कर्षानवधिकत्वं अपकृष्टेषु च परिमाणापकर्षानवधिकत्वमिति परिमाणोत्कर्षापकर्षानन्त्ययोर्व्यवस्थितत्वेनोत्कृष्टानामपकृष्टत्वस्यापकृष्टानामुत्कृष्टत्वस्य चासत्त्वान्न विरोध इति भावः । प्रतिज्ञातं प्रथमदोषपरिहारमुपपादयति **ततश्चेति** । परमाणुना च घटांशस्यैव संयोगादित्युक्तं द्वितीयदोषपरिहारमुपपादयति **घटांश एवेति** । परमाणुमात्रसंयुक्तस्य घटांशस्य परमाणुत्वं चेष्टमेवेति भावः । अल्पाल्पतरदेशसंयोगिन इत्युपलक्षणम् । उत्कृष्टोत्कृष्टतरदेशसंयोगिन इत्यपि द्रष्टव्यम् ॥ **नाकाशमिति** । तथा च सर्वपरिमाणानामप्याकाशे सत्त्वादित्युक्तमसदिति भावः । भवेदयं प्रसङ्गो यद्याकाशात्तत्तत्परिमाणास्तदवयवा भिन्नाः स्युर्न चैवमित्याह **तेषामपीति** । भेदाभावेऽपि विशेषबलाद्विरुद्धनानापरिमाणावयवाभिन्नत्वमुपपन्नमिति भावः । अंशानामाकाशात्मकत्वानभ्युपगमे बाधकमाह **अन्यथेति** । अयं भावः । इह पक्षीत्यादिप्रतीतिसिद्धाकाशसंयोगस्यांशिसंयोगत्वात् घटाद्यंशिसंयोगस्य तदंशवृत्तित्वस्य दर्शनेन यो यदंशिनस्संयोगः स तदंशवृत्तिरिति नियमबलात् आकाशांशवृत्तित्वमवश्यं वाच्यम् । तच्च आकाशांशानां आकाशानात्मकत्वे नोपपद्यते । अंशिसंयोगस्य अंशवृत्तितायामविशेषेण घटसंयोगस्यापि पटवृत्तित्वापत्त्या अंशवृत्तिनस्संयोगस्य अंशवृत्तिताया अतिप्रसङ्गपराहतत्वात् । घटसंयोगो घटवृत्तिः तद्गुणत्वात् रूपवत् । अंशवृत्तिसंयोगो न घटसंयोगः तदन्यवृत्तित्वात् पटसंयोगवदिति प्रमाणबाधाच्च । अंशानां अंश्यात्मकतायां तु नैतद्दोषद्वयप्रसक्तिः । घटांशस्य घटेनाभिन्नत्वेन, पटवत् घटेनात्यन्तभिन्नत्वाभावात् घटसंयोगस्य घटांशवृत्तितायामपि पटस्य घटेनाभेदाभावेन घटांशवैषम्यात् पटवृत्तित्वाभावोपपत्त्या प्रसंगमूलभूताविशेषरूपव्याप्त्यसिद्ध्या उक्तातिप्रसङ्गनिराससंभवात् । अंशवृत्तेरेव घटवृत्तित्वेन आद्यस्यानुमानस्य सिद्धसाधनत्वात् । अंशावृत्तित्वे सति घटवृत्तित्वसाधने च दृष्टान्तस्य साध्यविकलत्वात् । द्वितीये तु स्वरूपासिद्धिस्स्यात् । अंशस्य घटाभिन्नत्वेन तत्संयोगस्य घटसंयोगत्वेऽपि तस्यैवांशस्य घटभिन्नत्वस्यापि सत्त्वेन घटभिन्नवृत्तित्वस्य उपपन्नतया घटभिन्नवृत्तित्वरूपहेतुं प्रति घटसंयोगत्वाभावस्य अप्रयोजकत्वाच्च । ततश्च अंशांशिनोर्भेदे आकाशसंयोगस्य अंशवृत्तित्वरूपप्रदेशवृत्तित्वानुपपत्तेः । अभेदे च तदुपपत्तेः । अभेदेन विनाऽनुपपद्यमानेन उक्तांशवृत्तित्वरूपप्रदेशवृत्तित्वेन आकाशांशानां आकाशाभेदसिद्धिरिति ॥ ननु संयोगस्य प्रदेशवृत्तित्वं नाम अंशवृत्तित्वमिह न विवक्षितम् । किन्तु स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव । तच्च अंशवृत्तित्वं विनापि संभवतीति कथं तदभावापादनमित्याशङ्क्य न प्रदेशवृत्तित्वं स्वात्यन्ताभावसामानाधिकरण्यं वक्तुं शक्यम् । प्रतियोगितदत्यन्ताभावयोस्सामानाधिकरण्यस्य व्याहतत्वेनायोगात् , किन्तु अंशवृत्तित्वमेवेति तदभावापादनमित्याशयेनाह **व्याघातादिति** ॥

यदत्र वक्तव्यं, तत् 'अंशे संयोगदृष्टेश्चे'त्येतद्ग्रन्थव्याख्यानावसरे टीकायां टीकाकार एव वक्ष्यतीति न कश्चित् क्षुद्रोपद्रवः ॥ अन्ये तु प्रदेशानामाकाशात्मकत्वे तद्वृत्तिसंयोगस्याकाशैकदेशे सत्त्वेऽप्येकदेशान्तरेऽसत्त्वेन तत्प्रदेशवृत्तित्वसम्भवेऽपि प्रदेशानां तदात्मकत्वाभावे संयोगस्य तत्तदेकदेशे सत्त्वेऽप्याकाशेऽसत्त्वेनैकदेशे च व्याप्यवृत्तितया संयोगस्याव्याप्यवृत्तित्वं न स्यादित्यर्थः । ननु संयोगस्याव्याप्यवृत्तित्वं नैकदेशवृत्तित्वमभिमतं, किन्तु स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव । तच्चैकदेशवृत्तित्वं विनाऽपि सम्भवतीति कथं तदभावापादनमित्याशङ्क्य नाव्याप्यवृत्तित्वं स्वात्यन्ताभावसामानाधिकरण्यं वक्तुं शक्यम् । प्रतियोगितदत्यन्ताभावयोः सामानाधिकरण्यस्य व्याहतत्वेनायोगात् । किन्तु प्रदेशवृत्तित्वरूपमेवेति युक्तमेव तदभावापादनमित्याशयेनाह व्याघातादित्यप्याहुः । केचित्त्वन्यथेत्यस्य प्रदेशानङ्गीकार इत्यर्थं वर्णयन्तो व्याघातादित्यस्याकाशो निरंशः तत्संयोगश्चांशवृत्तिरित्यस्य व्याहतत्वादित्यर्थमाहुः ।

स० — **संयोगस्येति** । परमाणुना संयुज्यमानस्य घटस्य परमाणुत्वे परमाणुसंयोगस्य परमाणौ व्याप्यवृत्तित्वस्य परेणाङ्गीकारात् तदेकदेशवृत्तित्वरूपप्रदेशवृत्तित्वानुपपत्त्या न तस्य परमाणुपरिमाणत्वमिति भावः । अस्तु सर्वमूर्तसंयोगित्वमेव सर्वगतत्वम् । तथाऽपि तत्परिमाणाभावे संयोगानुपपत्तेस्तत्परिमाणत्वमावश्यकमेव । न चैवं गगनेन संयुज्यमानघटस्यापि तत्परिमाणत्वापत्तिरिति वाच्यम् । स्वपरिमाणवतैव गगने तस्य संयोगेन परममहत्त्वानापत्तेः । न च गगने परममहत्त्वात्परिमाणान्तरमेव नास्तीति वाच्यम् तत्तत्परिमाणसमानसर्वपरिमाणानामपि तत्र सत्त्वादित्याशयेन आद्यदोषपरिहारं प्रतिजानीते **सर्वेति** । द्वितीयदोषमप्युद्धरति **परमाणुना चेति** । प्रथमदोषपरिहारमुपपादयति **तथा हीति** । ननु यद्याकाशे अनवधिकौ परिमाणोत्कर्षापकर्षौ वर्तेते इत्यभ्युपेयते तर्हि वितस्तिपरिमाणेनाकाशेन संयुक्तस्य घटस्य वितस्तिपरिमाणत्ववत् परममहत्त्वमपि स्यात् । वितस्तिपरिमाणस्याकाशस्य महाकाशाभिन्नत्वेन महत्त्वात् । अन्यथा यत् यत्संयुक्तं तत् तत्परिमाणमिति व्याप्तेस्तत्रैव व्यभिचारः स्यादित्यत उक्तम् **व्यवस्थयेति** । यत् यतोऽपकृष्टं तत्ततोऽपकृष्टमेव । यत् यत उत्कृष्टं तत् ततः उत्कृष्टमेवेति व्यवस्थयेत्यर्थः । द्वितीयदोषपरिहारमुपपादयति **घटांश एवेति** ॥ **अन्यथेति** । अन्यथा आकाशस्य प्रदेशानङ्गीकार इत्यर्थः ॥ **व्याघातादिति** । प्रदेशानङ्गीकारे प्रदेशवृत्तित्वस्य व्याहतत्वादित्यर्थः । यद्वा निर्भेदस्याप्याकाशस्याभिन्नांशानङ्गीकारेणांश एव संयोगावस्थानाङ्गीकारात् त्वदभिप्रेतसंयोगस्य प्रदेशवर्तित्वमपि न स्यादित्यर्थ इत्यप्याहुः । वस्तुतस्तु प्रदेशानामाकाशात्मकत्वे तद्वृत्तिसंयोगस्याकाशैकदेशे सत्त्वेन देशान्तरे तदभावात् प्रदेशवृत्तित्वसंभवेऽपि प्रदेशानाम् आकाशात्मकत्वाभावे घटसंयोगस्य प्रदेशे संपूर्णस्यैव सत्त्वात् एकदेशवृत्तित्वरूपप्रदेशवृत्तित्वं न स्यादित्यर्थ इति ।

प० — सर्वत्राप्यवस्थानं गगनादेर्न स्यादित्यस्येष्टापादनरूपत्वात्तर्काभासोऽयमिति शङ्कते **ननु चेति** । सर्वमूर्तसंयोगोपि तत्तन्मूर्तपरिमाणे सत्येव स्यादित्यत आह **संयोगश्चेति** । यदि सर्वगतत्वं नाम सर्वमूर्तसंयोगित्वं, न तु सर्वत्र संस्थानमिति मन्यसे, भवतु तावदेव तुष्यतु भवान् दुर्जनः, तावतापि महत्त्ववत्यपि गगनेऽनवधिकपरिमाणापकर्षोऽपि सिध्यत्येव । मूर्तं नामेयत्तावच्छिन्नपरिमाणोपेतद्रव्यम् । एवं च तत्तन्मूर्तपरिमाणतुल्यपरिमाणवत्त्वे सत्येव तत्तन्मूर्तसंयोगित्वं नान्यथेति भावेन निराह **मैवमिति** । यदत्रोक्तं तत्तद्रूपपरिमाणाभावेऽपि संयोगो भवत्येव न हि घटो गगनेनेत्यादि । तत्र घटो न महत्परिमाणेन गगनेन संयुज्यते किं तु घटपरिमाणतुल्यपरिमाणेनैव गगनेनातो न व्यभिचार इति भावेनाह **सर्वपरिमाणानामपीति** । सर्वमूर्तपरिमाणतुल्यपरिमाणानामित्यर्थः । यदपि नापि परमाणुनेति व्यभिचारान्तरचोदनं तदपि नेत्याह **परमाणुना चेति** ॥ **घटांशस्यैवेति** । तस्य च परमाणुपरिमाणतुल्यपरिमाणत्वमेवेति नापि व्यभिचार इति भावः । नन्वेवं घटस्याप्यनवधिकापकर्षसिद्धिर्गगनवदिति चोद्यं तु घटांशानां भिन्नत्वात्तस्य सांशत्वेनेति पूर्वग्रन्थ एव निरस्तमिति भावः । सर्वपरिमाणानामित्यादिनोक्तं प्रमेयद्वयं व्यनक्ति **तथा हीत्यादिना परमाणुनेत्यन्तेन** ॥ **व्यवस्थयेति** । सूक्ष्मसूक्ष्मतरसूक्ष्मतमांशेषु तत्तदनुरूपापकृष्टपरिमाणानि स्थूलस्थूलतरस्थूलतमांशेषु तत्तदनुगुणोत्कृष्टपरिमाणानीत्येवं व्यवस्थयेत्यर्थः । घटांश एवेति सप्तमी । स चांशो घटाद्भिन्न इति भावः ॥ **अन्यथेति** । अंशानामाकाशात्मकत्वाभाव इत्यर्थः । अभेदे ह्याकाशसंयोगस्तदंशे वर्तत इति प्रदेशवृत्तित्वं लभ्यते । भेदे त्वंशे वर्तमानः संयोगो नाकाशसंयोगः किन्त्वंशसंयोग एव आकाशधर्मिकः संयोगः आकाशात्मके तत्प्रदेशे वर्तत इत्युक्तौ तु न व्याघातः आकाशधर्मिकः संयोगः आकाशभिन्नांशधर्मिकः इत्यस्यैव व्याघातादित्यर्थः । अंशसंयोगस्याकाशसंयोगानात्मकत्वात् तदनात्मके तद्व्यवहारस्य व्याहतेरिति भावः ।

या० — ननु तर्हि यो येन संयुज्यते स तत्परिमाण इति व्याप्तिबलेनैव सर्वसंयोगिन्याकाशादौ तत्तत्परिमाणप्राप्तिरित्यत आह **संयोगश्चेति** ॥ **संयोगस्येति** । अन्यथा व्याप्यवृत्तित्वमेव स्यादिति भावः । न हि घटो गगनेनेत्युक्तं व्यभिचारं परिहरति **सर्वपरिमाणानामिति** सर्वपरिमाणसदृशपरिमाणानामित्यर्थः । नापि परमाणुनेत्युक्तं दोषं परिहरति **परमाणुना चेति** । ननु परिमाणभेदस्य द्रव्यभेदप्रयोजकत्वादाकाशे सर्वपरिमाणाङ्गीकार आकाशभेदप्रसङ्गोऽन्यथा स्वयमेव स्वापेक्षयोत्कृष्टमपकृष्टं चापद्येत । तथा च विरोध इत्याशङ्कां परिहरन्नुक्तमुपपादयति **तथा हीत्यादिना** । अत्राकाशपदं भगवदाद्युपलक्षकम् । अत एव पूर्वमाकाशादेरित्युक्तमित्यवधेयम् । नन्वंशेष्वनन्तत्वं कथं भेदाभावे भवेदित्यत उक्तं **विशेषशक्त्येति** । तथा च तत्तद्वस्तुसंयुक्ताकाशांशगतान्येव तत्तत्परिमाणानीति भावः । अत

एव न विरोधशङ्काऽपीत्याह **तत्रेति** । अंशेष्वित्यर्थः । आकाशे उत्कृष्टापकृष्टांशानामनन्तत्वात्तेषु केषुचिदुत्कृष्टेषूत्कृष्टपरिमाणमनवधिकं केषुचिदपकृष्टेष्वपकृष्टपरिमाणमनवधिकमस्तीति व्यवस्थाङ्गीकारान्न विरोध इति भावः । इदानीं सर्वपरिमाणानामप्याकाशे सत्त्वादित्यनेनोक्तं प्रथमदोषपरिहारमुपपादयति **ततश्च घट इति** । परमाणुना च घटांशस्यैव संयोगादित्यनेनैवोक्तं द्वितीयदोषपरिहारमुपपादयति **घटांश एवेति** । अल्पाल्पतरप्रदेशसंयोगिन इत्युपलक्षणम् । स्थूलस्थूलतरदेशसंयोगिन इत्यपि ग्राह्यम् । **नाकाशमितीति** । तथा च सर्वपरिमाणानामप्याकाशे सत्त्वादित्युक्तमयुक्तमित्याशयः ॥ **तेषामपीति** । विशेषशक्त्येत्युक्तत्वान्न पुनर्विरोधादिशङ्केति भावः ॥ **अन्यथेति** । अंशांशिनोरभेदाभाव इत्यर्थः **प्रदेशवृत्तित्वमिति** । अव्याप्यवृत्तित्वमित्यर्थः । अंशांशिनोरभेदे हि अंशिसंयोगस्यांशे वृत्त्याऽव्याप्यवृत्तित्वं लभ्यते । तयोर्भेदे तु अंशे प्रतीयमानः संयोगोंऽशस्यैव गुणः स्यान्नांशिनः । ततश्च व्याप्यवृत्तिरेव स्यान्नाव्याप्यवृत्तिरिति भावः । नन्वंशिसंयोगोस्याव्याप्यवृत्तित्वं न तदंशे विद्यमानत्वरूपम् । किन्तु स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपमतः कथमिदमापादनमित्यत आह **व्याघातादिति** । संयोगतदत्यन्ताभावयोः सामानाधिकरण्यमेव न सम्भवतीति विरोधादित्यर्थः । अन्यथेत्यस्याकाशेंऽशानामेवाभाव इत्यर्थः । व्याघातादित्यस्य चाकाशो निरंशस्तत्संयोगश्च प्रदेशवृत्तिरित्यङ्गीकारे व्याघातादित्यर्थ इत्यप्याहुः ।

---

**श्री० — सर्वपरिमाणानामिति** । घटपरिमाणसदृशपरिमाणस्यापि गगने सत्त्वेन तत्परिमाणसदृशपरिमाणवत्त्वं घटे प्राप्तमेवेति भावः । **तेषामपि** आकाशप्रदेशानामपि ।

**सु० — कालादौ परिमाणोत्कर्षापकर्षयोरानन्त्यमुपपाद्योपसंहरति** अत इति ।

अनु० — अतो नाणुत्वविश्रान्तिर्न महत्त्वस्य च क्वचित् ॥

क्वचित् **कालादौ त्रये । यद्वाऽनुमानदूषणोपसंहारोऽयम् । ततश्च कालातीतत्वदृष्टान्तदोषावपरिहार्याविति** ।

**कालाकाशेश्वरेषु परिमाणोत्कर्षापकर्षयोरनन्त्यमस्तीत्युक्तम् । न केवलं तेष्वेव । किन्तु प्रकृत्यादौ सर्वगते परममहति द्रव्यान्तरेऽपीत्याह** उभयेति ।

उभयानन्त्ययुक् तस्माद्यदि मुख्यं महद्भवेत् ॥

तस्मादिति । **कालादिषूक्तन्यायात्** । मुख्यं महत् **परममहत्** ।

**शे० —** उत्तरभाष्यस्य पौनरुक्त्यमाशङ्क्योपसंहारार्थत्वान्न तदिति भावेनोपसंहारपरतया योजयति **कालादाविति। दृष्टान्तदोषः** साध्यवैकल्यम्। उभयेत्युत्तरभाष्यानर्थक्यमाशङ्क्य प्रकृत्यादिद्रव्यस्योक्तन्यायेन

परिमाणोत्कर्षापकर्षानन्त्योपपादनार्थत्वान्न तदिति भावेन वृत्तानुवादपूर्वकं प्रकृत्यादेस्तदुपपादकतयोत्तरभाष्यं योजयति **कालेति** ।

**प० — अथ इति** । कालाकाशेश्वरेष्वित्यर्थः ॥ **अनुमानदूषणेति** । 'तारतम्यस्थिता यस्मादि'त्यत्रोक्ते परमाणुगतपरिमाणाणुत्वमहत्त्वरूपे प्रमेये विरोधितया 'यथा महत्त्वे'त्यादिना शङ्कितानुमानस्य दूषणयोः साध्यवैकल्यबाधयोः 'न महत्त्वस्यापि विश्रम' इत्यादिनोक्तयोरुपसंहारोऽयमित्यर्थः ।

**श्री० — अनुमानेति** । अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तमित्युक्तानुमानेत्यर्थः ॥ **तत्रश्चेति** । 'अतो नाणुत्वविश्रान्तिरि'त्यनेन कालात्ययापदिष्टतायास्तथा 'न महत्त्वस्य चे'त्यनेन साध्यवैकल्यरूपदृष्टान्तदोषस्य चापरिहार्यत्वं उक्तं ज्ञेयम् । **प्रकृत्यादौ** प्रकृत्यादिरूपे द्रव्यान्तरेऽपीत्यर्थः ।

**सु० — यदि कालादेरप्यानन्त्यं स्यात् । कथं तर्हि सत्यं ज्ञानमनन्तं ब्रह्मेत्यानन्त्यं ब्रह्मणो लक्षणत्वेनोच्यते । न ह्यतिव्याप्तं लक्षणं भवतीत्यत आह** तच्चेति ।

**अनु०** — तच्च ब्रह्म परं साक्षात्

**परमिति केवलार्थे । यद्यपि कालादिकमप्यनन्तं, तथाऽपि ब्रह्मैव तदनन्तमित्युच्यते । कुतः** । साक्षात् **परानपेक्षयाऽनन्तत्वात्** । **अपराधीनत्वापेक्षयेति यावत्** । **पक्षान्तरमाह** सर्वेति ।

सर्वानन्त्ययुतं सदा ॥

**नास्यां श्रुतावानन्त्यमात्रं लक्षणत्वेनोच्यते । किन्तु देशतः कालतो गुणादितश्च । तादृशं च ब्रह्मैवेति न दोषः । यथोक्तम् 'देशतः कालतश्चैव गुणतश्च त्रिधा ततिः । सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणाः' इति । पक्षान्तरमन्वाचिनोति** सदेति । **पूर्वेणैव संबन्धः । तथा च काललक्षणेषु देशतोऽनन्तेष्वपि नातिव्याप्तिरिति** ।

**शे०** — तच्चेत्युत्तरभाष्ये आनन्त्यस्य ब्रह्मण्यपराधीनत्ववर्णनस्य प्रकृतानुपयोगमाशङ्क्यातिव्याप्तिनिरासाय लक्षणाविष्करणार्थत्वान्न तदिति भावेनातिव्याप्तिनिरासाय लक्षणाविष्करणार्थतयोत्तरग्रन्थं सङ्गमयितुमानन्त्यस्य ब्रह्मलक्षणत्वानुपपत्तिशङ्कामुत्थापयति **यदीति** । मूले चशब्दो अप्यर्थ इत्यभिप्रेत्याह **यद्यपि कालादिकमिति** । नन्वथाऽप्यसम्भवः । अनन्तत्वस्याभावगर्भतया प्रतियोगिरूपपरापेक्षत्वादित्यत आह **अपराधीनत्वेति** । स्वसत्तादौ परनियम्यत्वाभावापेक्षयेत्यर्थः । भगवदानन्त्यं च तथा भवतीति नासम्भव इति भावः । **किन्त्विति** । न च सर्वानन्त्ययुतत्वं न लक्षणं, गुणानन्त्यमात्रस्यैवानतिप्रसक्तत्वेन लक्षणत्वोपपत्त्या व्यर्थविशेषणत्वादिति वाच्यम् । प्रकृतलक्षणे सर्वत्वेन रूपेण तस्य प्रवेशेऽपि

प्रातिस्विकेन रूपेण तस्याप्रविष्टतया वयर्थ्यानवकाशादिति भावः। गुणादित इत्यादिशब्देन क्रियाविग्रहयोः परिग्रहः। ब्रह्मण एव त्रिविधानन्त्यं न त्वन्यस्येत्यत्र प्रमाणमाह **यथोक्तमिति ॥ पक्षान्तरमिति ।** देशकालादिनिरासाय प्रकारद्वयमभिहितं पूर्वत्र। इदानीं कालमात्रे तन्निरासाय प्रकारान्तरं कथ्यते। अत एव प्रकारद्वयस्य प्रकृत्यादिसर्वव्यावर्तकत्वात्प्राधान्यम्, अस्य तु कालक्षणमात्रव्यावर्तकत्वादप्राधान्यमिति भावेनान्वाचिनोतीत्युक्तम्। न तु लक्षणान्तरपरत्वेनायं ग्रन्थो योज्यः। कालक्षणे उक्तलक्षणाभावेनातिव्याप्त्यभावेऽप्याकाशादावतिव्याप्तितादवस्थ्यादिति ध्येयम्। **पूर्वेणैव सम्बन्ध इति।** बुद्ध्या विविक्तेनानन्त्यमिति पूर्वेण सदेत्यस्य सम्बन्ध इत्यर्थः। एतत्पक्षाश्रयणप्रयोजनमाह **तथा च कालेति।** केचित्तु लक्षणान्तरत्वेऽप्यस्य न दोषः। न चाकाशादेरपि सदानन्त्ययुतत्वात्तत्रातिव्याप्तिरिति वाच्यम्। अंशतोऽप्यानन्त्यस्य विवक्षितत्वेन तदप्रसङ्गात्। न चैवं सदेति व्यर्थम्। तन्महिम्नैवास्यार्थस्य लब्धत्वादित्याहुः।

प० — मूले तच्चेति चोऽवधारणे भिन्नक्रम इत्युपेत्याह **ब्रह्मैवेति।** तदित्यनुवादेनार्थमाह **तत् अनन्तमिति।** अनन्तत्वस्यान्तरूपप्रतियोग्यपेक्षत्वात् परानपेक्षयेति कथमुक्तमित्यत आह **अपराधीनत्वेति।** गुणादीत्यादिपदेन क्रियाविग्रहयोर्ग्रहः ॥ **यथोक्तमिति।** द्वितीये गीताभाष्ये उक्तमित्यर्थः। **पक्षान्तरमन्वाचिनोतीति।** चशब्दस्य हि चत्वारोऽर्थाः। इतरेतरयोगसमाहारसमुच्चयान्वाचया इति। तत्रान्वाचयो नाम भिक्षामट गां चानयेत्यत्र भिक्षाटनसमये गौर्दृष्टा चेदानय न चेन्मास्त्वित्येवंरूपः। तथा च सदानन्त्ययुतमित्युक्त्या कालतोऽप्यानन्त्यस्य लाभेन क्षणलवादिमात्रव्यावर्तकत्वेन परममहन्मात्राव्यावर्तकत्वादन्वाचिनोतीत्युक्तम्। यद्वा अनन्याधीनानन्त्यलक्षणमिति पक्षे देशकालगुणादिभिरानन्त्यमिति पक्षे च न काप्यतिव्याप्तिशङ्का। किन्तु प्रकरणप्राप्तोभयविधपरिमाणानन्त्यमात्रमनन्तशब्दार्थ इति पक्षे क्षणादावतिव्याप्तिशङ्कायां सदेति विशेषणमन्वेतीत्यर्थः। कालादावतिव्याप्तिशङ्का तु प्रागुक्तरीत्या द्वेधा निरसनीयेति भावः।

या० — मूले चशब्दो अप्यर्थ इत्यभिप्रेत्याह **यद्यपि कालादिकमिति।** नन्वथाऽप्यसम्भवः। अनन्तत्वस्याभावगर्भतया प्रतियोगिरूपपरापेक्षत्वादित्यत आह **अपराधीनत्वेति।** स्वसत्तादौ परनियम्यत्वाभावापेक्षयेत्यर्थः। भगवदानन्त्यं च तथा भवतीति नासंभव इति भावः। गुणादित इत्यत्रादिपदेन क्रियाविग्रहयोर्ग्रहणम् ॥ **पूर्वेणैवेति।** बुद्ध्या विविक्तेनानन्त्ययुतमित्यनेनैव सम्बन्ध इत्यर्थः। तथा च नित्यानन्त्ययुतत्वमत्र लक्षणतया विवक्षितमिति भावः। आनन्त्यं चात्र देशत एव विवक्षितमिति ज्ञातव्यम्। नित्यत्वविशेषणस्य कृत्यमाह **तथा च काललक्षणेष्विति।** कालरूपक्षणेष्वित्यर्थः।

इदं क्षणानां देशतोऽनन्तत्वमुपपादयितुमिति ज्ञातव्यम् । क्षणानामनित्यत्वेन तदानन्त्यस्याप्यनित्यत्वान्नि- त्यत्वविशेषणेन तद्व्यावृत्तिरिति भावः । न चैवमपि प्रकृत्यादावतिव्याप्तिः । 'इदं वा अग्रे नैव किञ्च- नासीदि'त्यादिना भगवदितरस्य कस्यापि मुख्यनित्यत्वाभावावगमेन तदानन्त्ये मुख्यनित्यत्वासम्भवात् । मुख्यनित्यत्वस्यैव च लक्षणे विवक्षितत्वात् । न चैवं तावदेव लक्षणमस्तु किं विशेषणेनेति वाच्यम् । मुख्यनित्यत्वस्य पृथग्ग्रहविशेषणत्वे हि इयमाशङ्का । न चैवं किन्त्वानन्त्यविशेषणमेतत् । तत्र च यथो- क्तविशेष्यविशेषणभावे न वैयर्थ्यमिति समधानमित्याशयात् ॥

श्री० — अन्वाचिनोतीति । अप्रधानार्थान्तरसूचनमन्वाचयः । यथा वटो भिक्षामट गां चानयेत्यत्र भिक्षाटनं प्रधानं गवानयनं पाक्षिकम् । भिक्षाटनसमये यदि गौर्लभ्यते तर्ह्यानय नो चेन्नेति । एवमिह सदानन्त्ययुतमिति नित्यदा देशानन्त्ययुतत्वमुक्तम् । अनेन कालरूपक्षणेषु देशानन्त्येष्वतिव्याप्ति- परिहारसूचनमपि भवतीत्यतिव्याप्तिपरिहारोऽप्रधानम । यद्यतिव्याप्तिपरिहार एव पूर्वलक्षणयोरिवात्रापि प्रधानं प्रयोजनं स्यात्तर्ह्यव्याकृताकाशे प्रकृत्यादौ चातिव्याप्तिरवश्यं परिहार्या स्यान्न च पर्यहार्षीत् तेन ज्ञायते तत्र न भार इत्यतोऽयमन्वाचयः । तथा च कालक्षणादिव्यावर्तकमात्रमेवेदं लक्षणमिति भावः इत्याहुः ।

**सु० — परमाणावपि परिमाणापकर्षतारतम्यविश्रान्तिर्नास्तीत्युक्तम् । तदसत् । परिमाणस्य द्रव्याश्रयत्वात् । परमाणुतोऽप्यपकृष्टपरिमाणाश्रयस्य द्रव्यस्याभावात् । मैवम् । परमाणुभागानां सत्त्वात् । न च तेषु विश्रान्तिः । तेषामपि (भागसत्त्वात्) सभागत्वात् । अविश्रान्तभागपरम्परा कुतः सिद्धेत्यतः साक्षिणेति वक्तुं साक्षी नाम प्रमाणमेव नास्तीति वदतो बाधकं तावदाह यदीति ।**

अनु० — यदि साक्षी स्वयम्भातो न मानं केन गम्यते ॥

अक्षजादेश्च मानत्वम्

**साक्षी नाम मानं यदि नेष्यते तदाऽक्षजादेर्ज्ञानस्य मानत्वम् । चशब्दाद्बहिः काला- काशादिकमन्तः सुखादिकं च केन प्रमाणेन गम्यते न केनापि । तद्ग्राहकस्य प्रमाणान्तरस्य अभावात् । न च तन्मा भूदिति वाच्यम् । तद्व्यवहारविलयप्रसङ्गादिति ।**

**नन्वस्तु साक्षिणमनङ्गीकुर्वाणस्येदं बाधकम् । साधकं (तु) किमित्यत आह स्वयम्भात इति । यस्तु स्वयं प्रकाशमानेऽपि साक्षिणि विप्रतिपद्यते सोऽक्षजादेर्मानत्वं सप्रमाणकं वस्तु- त्वाद्घटवदिति प्रसङ्गसूचितेनानुमानेन बोधनीयः । प्रसक्तप्रतिषेधश्च वक्ष्यमाणन्यायेन**

भविष्यति । धर्मिग्राहकप्रमाणेनैव सिद्धेर्न तत्प्रामाण्ये पृथक् प्रमाणं वक्तव्यम् । अत एव मानमित्युक्तम् ।

**श्री० —** ननु 'यदि साक्षी'त्युत्तरभाष्यमनर्थकम् । न च साक्षिप्रमाणे विवदमानं प्रति विपक्षे बाधकोपदर्शनेन साक्षिप्रामाण्यसमर्थनार्थमेतदिति वाच्यम् । तत्समर्थनस्यापि प्रकृतोपयोगादर्शनादित्याशङ्कयाऽव्यवहितेन पूर्वग्रन्थेन तस्यासंगतत्वेऽपि 'तथानन्त्यमणावपी'ति विप्रकृष्टपूर्वग्रन्थोक्तस्य परमाणोः परिमाणापकर्षतारतम्यविश्रान्त्यभावस्योपपादकतया तत्सङ्गतत्वेन पूर्वग्रन्थसङ्गतिसम्भवान्नानुपपत्तिरिति भावेन तद्ग्रन्थसङ्गततयोत्तरभाष्यं सङ्गमयितुं तदनुपपत्तिशङ्कामुत्थापयति **परमाणावपीत्यादिना ॥ वक्तुमिति ।** 'अतः सर्वपदार्थानामि'त्याद्युत्तरभाष्येणेति शेषः ॥ **इति वदत इति ।** प्राग्विकल्पितेषु पक्षेषु तृतीयं पक्षं वदत इत्यर्थः । उत्तरत्र साक्षिप्रामाण्ये साधकस्यापि वक्ष्यमाणत्वात्तावदाहेत्युक्तम् । व्यवहितत्वादन्वयं दर्शयन् तृतीयपक्षनिरासस्य मूलारूढतामुपदर्शयति **साक्षीत्यादिना ।** अक्षजादेश्चेति चशब्दानर्थक्यमाशङ्कयानुक्तसमुच्चयार्थत्वान्न तदिति भावेन तमुपदर्शयति **चशब्दादिति ।** उत्तरत्र परिहाराभावेन प्रश्नार्थत्वायोगादाक्षेपार्थतया किंशब्दं व्याचष्टे **नेति ।** नन्वनुमानादिनैव कालाकाशादिसिद्धिर्भविष्यतीति कथमाक्षेप इत्यतोऽनुमानादिना तदसिद्धेः'सत्यत्वं गगनादेश्चे'त्यादिना पूर्वमेव समर्थितत्वान्न प्रमाणान्तरेण तत्सम्भव इत्याह **तद्ग्राहकेति ।** भाष्ये विपर्यये बाधकाभिधानस्य स्वयम्भात इत्येतद्विशेषणनैरपेक्ष्येणैव सिद्धेस्तद्वैयर्थ्यमित्याशङ्कय साक्षिप्रमाणे साधकोक्त्यर्थत्वान्न तदिति भावेनतत्परतया तद्योजयितुं साधकाभावशङ्कामुत्थापयति **नन्विति ।** विपर्ययेऽनिग्रहकथनमात्रस्यैव तत्साधकत्वे न क्वापि साधकं वक्तव्यं स्यादिति भावः । नन्वस्त्वक्षजादिमानत्वस्यैवं सप्रमाणकत्वसिद्धिस्तावता कथं साक्षिप्रामाण्यसिद्धिस्तस्य साक्षीतरप्रमाणवेद्यत्वस्यापि सम्भवादित्यतः परिशेषात्तत्सिद्धिरिति भावेन परिशेषमुपपादयति **प्रसक्तेति । वक्ष्यमाणन्यायेनेति ।** 'अनवस्थाऽन्यथा भवेदि' त्यनुपदमेव वक्ष्यमाणन्यायेनेत्यर्थः ।

**प० — साक्षिणेति वक्तुमिति ।** 'अतः सर्वपदार्थानामि'त्यादिग्रन्थे वक्तुमित्यर्थः । **इति वदत इति ।** 'यदि नो साक्षिगम्यं तदि'त्येतदवतारिकायां कृतविकल्पेषु साक्षी नाम प्रमाणमेव नास्तीत्यवशिष्टतृतीयं पक्षं वदत इत्यर्थः ॥ **बाधकन्तावदिति ।** स्वयम्भात इति वक्ष्यमाणसाधकापेक्षया तावच्छब्दः ॥ **न च तदिति ।** प्रामाण्यादेर्ग्रहणमित्यर्थः ॥ **घटवदितीति ।** अनुमानेनेत्यन्वयः । सामान्यानुमानेनेत्यर्थः ॥ **प्रसंगसूचितेनेति ।** 'यदि साक्षी'त्यादिनोक्तेन प्रामाण्यादेर्ग्रहणव्यवहारयोर्विलोपरूपातिप्रसङ्गेन सूचितेनेत्यर्थः । नन्वनेनानुमानेन सिद्धस्य प्रामाण्यस्य प्रत्यक्षाद्यन्यतमत्वसंभवात् साक्षिसिद्धिः कुत इत्यत आह **प्रसक्तेति ।** यथा न्यायमते गगनादिसिद्धिः सामान्यविशेषाभ्यां,

तथेति भावः ॥ **वक्ष्यमाणेति** । प्रामाण्यविषये प्रसक्तस्यानुमानस्यानवस्थाऽन्यथा भवेदिति वक्ष्यमाण-विपक्षबाधकन्यायेनेत्यर्थः । सुखादिविषये च 'इच्छा ज्ञानं सुखं दुःखं भयाभयकृपादयः । साक्षि-सिद्धा न कश्चिद्धि तत्र संशयवान्कचित् । यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तत्' इत्यदिना ज्ञानपादे वक्ष्यमाणसंशया(द्य)भावादिरूपन्यायेन प्रसक्तमानसप्रत्यक्षादेः प्रतिषेधश्च भविष्यतीत्यर्थः । साक्षिसिद्धावपि तन्मानत्वं केन सिद्ध्येदित्यत आह **धर्मीति** । अक्षजादेर्मानत्वं सप्रमाणकं वस्तुत्वादिति सामान्यानुमानरूपेण परिशेषसहितेन साक्षिरूपधर्मिग्राहकेण प्रमाणेनेत्यर्थः ।

**या० — वक्ष्यमाणन्यायेनेति** । 'अनवस्थाऽन्यथा भवेदि'त्यनुपदमेव वक्ष्यमाणन्यायेनेत्यर्थः । प्रवृत्तिसामर्थ्येनानभ्यासदशायां प्रामाण्यसिद्धिः, तज्जातीयत्वेन त्वभ्यासदशायामिति ज्ञातव्यम् ॥

**श्री० — प्रसङ्ग इति** । यदि साक्षिनामकं मानं न स्यात्तदाऽक्षजादेर्मानत्वग्रहो न स्यादिति तर्केत्यर्थः । ननु सप्रमाणकत्वप्रवृत्तिसामर्थ्याद्यनुमानरूपप्रमाणमादायापि पर्यवस्यतीति न साक्षिरूप-प्रमाणसिद्धिरित्यत आह **प्रसक्तेति** । अस्तु साक्षी, तत्प्रामाण्यं कुतः सिद्धं, येन सप्रमाणकमित्युक्तें साक्षिणमादाय पर्यवसानं स्यादित्यत आह **धर्मीति** । साक्षिरूपधर्मिग्राहकेण प्रमाणेन स्वेनैव सिद्धे साक्षिप्रामाण्य इत्यर्थः । तस्य स्वप्रकाशत्वादिति भावः । **पृथक्** साक्षिभिन्नम् । **मानं** स्वसिद्ध-मानत्वोपेतमित्यर्थः ।

---

**सु० — न साक्षिणोऽनभ्युपगमेऽप्यक्षजादिज्ञानप्रामाण्यमप्रामाणिकं प्रसज्यते प्रवृत्तिसामर्थ्येन तज्जातीयत्वेन वाऽनुमानेन तत्सिद्धेरित्यत आह** अनवस्थेति ।

**अनु० —** अनवस्थाऽन्यथा भवेत् ॥

अन्यथा **साक्षीतरप्रमाणवेद्यत्वाङ्गीकारे । तर्हि साक्षिप्रामाण्यमप्यन्येन ग्राह्यमित्यनव-स्थैवेति चेन्न । तस्य स्वप्रकाशत्वादिति । तदिदमुक्तं स्वयम्भात इति ।**

**शे० — प्रवृत्तीति** । प्रवृत्तिसामर्थ्येनानभ्यासदशायां प्रामाण्यसिद्धिः । अभ्यासदशायां तु तज्जातीयत्वेनेति भावेनात्रोभयोपादानमिति ध्येयम् । मूले **अनवस्थेति** । तस्यायं भावः । प्रवृत्तिसा-मर्थ्यस्याप्यगृहीतप्रामाण्यस्य प्रामाण्यानिश्चायकत्वेन गृहीतप्रामाण्यस्यैव तथात्वमङ्गीकार्यम् । तथा च तत्प्रामाण्यमप्यन्येनैव ग्राह्यम् । तत्प्रामाण्यमप्यन्येनैवेत्यनवस्थाप्रसङ्गादिति । तर्हि साक्षिणोऽपि प्रामाण्य-ग्राहकत्वं न स्यादिति भावेन शङ्कते **तर्हीति** । साक्षिणः स्वप्रकाशत्वेन स्वयमेव स्वप्रामाण्यग्राहकत्वेन ग्राहकान्तरानपेक्षणान्नानवस्थेत्याह **तस्येति** । वृत्तिज्ञानस्य तु जडत्वेन न स्वप्रकाशत्वं सम्भवतीति न स्वस्यैव स्वप्रामाण्यग्राहकत्वमित्यनवस्थैवेति भावः ।

प० -- अपरिचित(प्र)देशाभिप्रायेणाह **प्रवृत्तिसामर्थ्येनेति** । फलवत्प्रवृत्तिजनकज्ञाने-नेत्यर्थः । अभ्यासदशापन्नाभिप्रायेणाह **तज्जातीयत्वेनेति** । समर्थप्रवृत्तिजनकज्ञानजातीयत्वेनेत्यर्थः । अन्यथेत्यनुवादः । साक्षीत्यादि व्याख्या ।

श्री०— अनभ्यासाभ्यासदशापेक्षया प्रवृत्तीत्यादि वक्ष्यमाणेत्युक्तं दर्शयितुमाह **नेति** ।

सु० — **किमतो यद्येवं साक्षी नाम प्रमाणमस्तीत्यत आह** अत इति ।

अनु० — अतः सर्वपदार्थानां भागाः सन्त्येव सर्वदा ॥
सर्वदिक्ष्वपि संबन्धात्

**साक्षित इत्यर्थः । सर्वपदार्थानां परमाणोस्तद्भागानां चेत्यर्थः ।** सन्त्येव **इति सिद्धमिति शेषः । यद्वा सर्वपदार्थानामित्यनेनानुमानमपि सूचयति । परमाणुः सभागः पदार्थत्वाद्घटवत् इति । न चाश्रयासिद्धिर्धर्मिग्राहकविरोधो वा । साक्षिणा परमाणुसिद्धेरुक्तत्वात् । तेन च सभागतयैव सिद्धेः । न चैवमनुमानवैयर्थ्यम् । प्रमाणसंप्लवाङ्गीकारात् । सभागत्वमात्रे विप्रतिपन्नं प्रति सार्थक्याच्च । अनुमानान्तरमाह** सर्वदेति ।

**युगपदित्यर्थः । सर्वदिक्षु स्थितैर्द्रव्यैः संबन्धात्संयोगादपि** भागाः **सन्तीत्यवगम्यते । यद्यपि सभागत्वमात्रसाधने संयोगित्वमात्रं प्रयोजकम् । गगनादीनामपि भागाङ्गीकारेण व्यभिचाराभावात् । तथाऽपि बहुभागसाधनाय विशेषणोपादानम् । तथा हि । परमाणुर्दश-भागवान्युगपद्दशमूर्तसंयोगित्वात् (प)घटवदिति ।**

शे० — ननु सर्वपदार्थानां साक्षिणा सभागत्वसाधनत्वस्य न **प्रकृतोपयोग** इत्यतः प्रकृतपर-माणुतद्भागमात्रपरतया सर्वपदार्थानामित्येतद्योजयति **परमाणोरित्यादिना** । वाक्याभासत्वपरिहारा-यापेक्षितं शेषं पूरयति **इति सिद्धमिति शेष इति** । सन्त्येवेत्यतःपरमिति **सिद्धमिति शेष** इत्यर्थः । अस्मिन्पक्षे सर्वपदार्थानामित्यस्य न स्वारस्यमित्यपरितोषात्पक्षान्तरमाह **यद्वेति ॥ पदार्थत्वादिति** । गुणादेरपि पदार्थसभागत्वस्य वक्ष्यमाणत्वान्न व्यभिचार इति भावः ॥ **धर्मिग्राहकेति** । अवयवाव-यविप्रसङ्गो हि तावदनुभूयमानत्वान्नापलापमर्हतीत्यवश्यमसावभ्युपेयः । स च न तावन्निरवधिक एवाभ्युपगन्तुं शक्यते । तथा सत्यनन्तावयवारब्धत्वाविशेषान्मेरुसर्षपादीनां परिमाणभेदानुपपत्तिप्रसङ्गात् । न च कारणसङ्ख्याया अविशेषेऽपि परिमाणप्रचयविशेषाद्विशेष इति युक्तम् । तयोरपि सङ्ख्यावि-शेषमन्तरेणानुपपत्तेः । न च विनाशावधिरेवायम् । अन्त्यस्य निरवयवत्वे तदनुपपत्तेः । द्रव्यस्यावयव-

विभागनाशाभ्यां विना विनाशाभावात् । नापि विभागावधिः । तस्य विभज्यमानाश्रयतया तदभावेऽयोगात् । न चैकाश्रयो विभाग इति युक्तम् । किञ्चिदेव हि कुतश्चिद्विभज्यते न तु तदेव तस्मात् । तदेवं निरवयवद्रव्यावधिरेवायमवयवावयविविभाग इति निरवयवद्रव्यसिद्धौ स एव परमाणुरिति क्रियाविभागादिन्यायेन निरवयवतयैव परमाणोः सिद्धत्वाद्धर्मिग्राहकविरोध इत्यर्थः ॥ **साक्षिणेति ।** 'यदि साक्षिमितं नैतन्नानुमा तत्र वर्तते । पक्षीकर्तुमशक्यत्वादि'त्यादिना साक्षिणा परमाणुसिद्धेर्वक्ष्यमाणत्वादित्यर्थः । उक्तत्वादित्यतीतत्वोक्तिस्तु निश्चितत्वाभिप्रायेत्यवधेयम् ॥ **सम्प्लवाङ्गीकारादिति ।** सम्प्लवस्य दार्ढ्यहेतुत्वान्न वैयर्थ्यमिति भावः ॥ **सभागत्वेति ।** तथा च साक्षिणा परमाणुमात्रसिद्धावपि तत्सभागत्वस्य तेनासिद्धया तत्सिद्ध्यर्थत्वान्नानुमानवैयर्थ्यमिति भावः । ननु सर्वदिक्षु स्थितैर्द्रव्यैः परमाणोः संयोगस्य यौगपद्यमात्रेणापि परमाणोर्दशभागवत्त्वरूपविवक्षितसाध्यसिद्धिसम्भवात्तत्संयोगानां सार्वकालिकत्वस्यानपेक्षितत्वाद्भाष्ये सर्वदेति संयोगानां सार्वकालिकत्ववर्णनमनर्थकमित्याशङ्क्य यौगपद्यमात्रपरत्वात्सर्वदेत्यस्य नानर्थक्यमिति भावेन तत्तात्पर्यमाह **युगपदित्यर्थ इति ।** एवं सर्वदेति हेतुविशेषणार्थमभिधायेदानीं तद्वैयर्थ्यमाशङ्क्य परिहरति **यद्यपीत्यादिना ।** ननु च गगनादौ व्यभिचारान्न संयोगित्वमात्रस्य प्रयोजकत्वमित्याशङ्क्य तर्हि विशिष्टस्यापि गगनादौ व्यभिचारान्नाप्रयोजकत्वमिति तुल्यमेव । यदि च सभागत्वरूपमाध्यस्यापि गगने सत्त्वान्न विशिष्टस्य हेतुत्वपक्षे तत्र व्यभिचार इति मन्यसे तर्ह्यविशिष्टस्यापि हेतुत्वपक्षे तत एव न व्यभिचार इति हेतुविशेषणवैयर्थ्यमेवेत्याशयवानाह **गगनादीनामिति ॥ बहुभागेति ।** दशभागेत्यर्थः ॥ **युगपद्दशेति ।** यद्यप्यत्र दशभागानामपि सर्वत्र सत्त्वेन व्यभिचाराभावान्न तद्वारणं विशेषणप्रयोजनं सम्भवति । तथाप्युक्तसाधने हेतोरसामर्थ्यशङ्कावारणमेव तत्प्रयोजनमिति मन्तव्यम् । तथा हि । [illegible]भागे क्रमेण दशमूर्तसंयोगानां सम्भवात् अन्यथासिद्धिशङ्कापरिहाराय युगपदिति विशेषणम् । द्वित्रिमूर्तसंयोगानां तावद्भागाक्षेपकतायामपि दशभागानाक्षेपकत्वेन विवक्षितासिद्धिप्रसङ्गपरिहाराय दशेति पदम् । एकस्मिन्नपि भागेऽमूर्ताकाशादिसंयोगानां स्थितिसम्भवात्पुनरप्रयोजकत्वमेवेत्याशङ्कानिवारणाय मूर्तेति विशेषणमित्यूह्यम् ।

प० — **पदार्थत्वादिति ।** गुणक्रियादेरपि सभागत्वान्न व्यभिचार इति भावः ॥ **धर्मिग्राहकेति ।** प्रत्यक्षसिद्धं त्र्यणुकं स्वल्पपरिमाणद्रव्यारब्धं कार्यत्वात्पटवदिति द्व्यणुकसिद्धौ तदपि पक्षीकृत्यैवं साधने सिध्यन् नित्यनिरवयवत्वेनैव सिध्यति । अन्यथाऽनवस्था स्यात् । अतस्तद्विरोध इति भावः । यद्वा परिमाणापकर्षतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् । परिमाणोत्कर्षतारतम्यव-

दित्याद्यनुमानेन परिमाणापकर्षस्य क्वचिद्विश्रान्तिसिद्धौ यत्रेदं विश्रान्तं स परमाणुरिति प्रागुक्तधर्मिग्राहकेत्यर्थः ॥ **उक्तत्वादिति** । 'केवलं साक्षिमानेन कालो देशोपि नान्तवानि'ति ग्रन्थव्याख्यावसरे उक्तत्वादित्यर्थः ॥ **सभागत्वमात्र इति** । परमाणुस्वरूपे विप्रतिपत्तिं निराह **मात्रपदेन** । तथाच नाश्रयासिद्धिरिति भावः । पदार्थत्वादित्यनुमानस्य प्रागुक्तेराह **अनुमानान्तरमिति** । ससम्यन्वयाय शेषमाह **स्थितैर्द्रव्यैरिति** । युगपद्दशमूर्तसंयोगित्वादित्यत्र वस्तुमात्रेपि दशभागसत्त्वेन विपक्षाभावेन विशेषणानां व्यभिचारावारकत्वेप्यप्रयोजकत्वनिरासार्थत्वमस्तीति तदुक्तिः । संयोगमात्रस्य सांशत्वेनैवोपपत्त्योक्तसाध्येऽप्रयोजकत्वात्क्रमेणैकस्मिन्नपि दशमूर्तसंयोगसंभवादप्रयोजकत्वानुपपत्तये युगपदित्युक्तिः । एवं दशेत्यस्यापि कृत्यं ध्येयम् । एकस्मिन्नप्यंशे कालाकाशप्रकृत्यकारादिवर्णरूपदशमूर्तसंयोगसंभवान्मूर्तेत्युक्तिः ।

**या० — पदार्थत्वादिति** । गुणादेः प्रागभावादेश्च पदार्थस्य भागाङ्गीकारान्न व्यभिचार इति भावः ॥ **धर्मिग्राहकेति** । अवयवावयविप्रसङ्गस्तावदनुभूयते । स यदि निरवधिः स्यात्तदा मेरुसर्षपयोस्तुल्यपरिमाणत्वं स्यादनन्तावयवारब्धत्वाविशेषात् । अतो निरवयवं द्रव्यं किञ्चिदवधितयाऽङ्गीकार्यं । स एव परमाणुरिति परमाणुः सिध्यन्निरवयवतयैव सिध्यतीति धर्मिग्राहकविरोध इत्यर्थः ॥ **युगपद्दशेति** । यद्यप्यत्र बहुभागानामपि सर्वत्र सत्त्वेन व्यभिचाराभावान्न तद्वारणं विशेषणप्रयोजनं, तथाऽप्युक्तसाध्यसाधने हेतोरसामर्थ्यशङ्कावारणमेव तत्प्रयोजनम् । तथा हि । घटादावेकस्मिन्नपि भागे क्रमेण दशमूर्तसंयोगानां संभवादन्यथासिद्धिशङ्कापरिहाराय 'युगपदिति' विशेषणम् । द्वित्राणां संयोगानां दशभागानपेक्षत्वाद्दशेति । एकस्मिन्नपि भागेऽमूर्ताकाशादिसंयोगानां स्थितिसंभवात्पुनरप्रयोजकताशङ्कावारणाय **मूर्तेति** विशेषणम् ॥

**श्री० — आश्रयासिद्धिरिति** । परमाणोरेवाभावाद्धर्म्यनन्तते अश्रयासिद्धिः । परमाणुग्राहकानुमानेन निर्भागतयैव प्रसिद्धत्वादसद्रीत्या धर्मिग्राहकमानबाध इत्यर्थः । उभयं क्रमेण परिहरति **साक्षिणेत्यादिना** । **तेन चेति** । साक्षिणेत्यर्थः ॥ **एवमिति** । यदि साक्षिणा सभागत एव सिद्धः परमाणुस्तर्ह्यनुमानं व्यर्थं, सिद्धसाधनतापत्तेरित्यर्थः ॥ **प्रमाणेति** । एकस्मिन्नर्थे इति शेषः ॥ **सभागत्वमात्र इति** । परमाणुस्वरूपस्य साक्षिसिद्धत्वमङ्गीकृत्य सभागत्वस्य साक्षिसिद्धत्वे यो विप्रतिपद्यते तं प्रति साक्षिसिद्धं परमाणुं पक्षीकृत्य तत्सभागत्वमनुमानेन साध्यत इत्यर्थः । ननु गगनादौ संयोगित्वे सत्यपि सभागत्वाभावाद्व्यभिचार इत्यत आह **गगनादीनामिति** ॥ **विशेषणेति** । पदार्थे सर्वदिक्स्थितत्वरूपविशेषणेत्यर्थः ।

सु० — ननु द्रव्यत्वेनैवालं किं संयोगित्वेन । (हेतूच्छित्तिरूप) विपक्षे बाधकसूचनार्थमिति ब्रूमः । तथा हि । अस्ति तावत्परमाणोः परमाण्वन्तरसंयोगः । अन्यथा द्व्यणुकाद्यारंभानुपपत्तेः । न चैकेनैवेति नियमः । कारणाकारणसंयोगजसंयोगप्रक्रियायामेकैकस्य परमाणोः सजातीयविजातीयपरमाणुद्वयेन युगपत्संयोगस्योरीकृतत्वात् । पाषाणादिमध्यवर्तिनः परमाणोः परितोऽवस्थितैः परमाणुभिः संयोगाभावाद्यनुपपत्तेश्च । न च मूर्तानां युगपदेकदेशावस्थानं संभवति । प्रदेशवर्तिनश्च संयोगाः । साक्षिसिद्धत्वात् । घटादौ तद्दर्शनेन च परमाणौ(णावप्य) तदनुमानाच्च । तथा च यदि परमाणुरनेकांशो न स्यात्, तदा युगपदनेकैर्न संयुज्येतेति ।

ननु संयोगस्य प्रदेशवृत्तित्वं नाम स्वात्यन्ताभावसमानदेशत्वमेव । न तु घटसंयोगो घटावयवे वर्तत इति । तत्कथं भागाभावे संयोगानुपपत्तिरिति । मैवम् । प्रत्यक्षादिसिद्धस्य अवयववृत्तित्वस्य परित्यागेनाप्रामाणिकव्याहताङ्गीकारस्यानुचितत्वात् । वक्ष्यते चैतत् ।

शे० — ननु द्रव्यत्वेनैवालं किं संयोगित्वेनेति । ननु द्रव्यत्वस्य संयोगित्वरूपहेतुशरीराप्रवेशात्कथमत्र तेनैवालमिति शङ्केति चेत् । अत्र वदन्ति । परमाणोः सभागत्वसाधके पदार्थत्वानुमाने गुणादौ व्यभिचारवारणायावश्यं विशेषणीयेन द्रव्यत्वेनैव परमाणोर्दशभागवत्त्वरूपविवक्षितसाध्यस्यापि साधनसंभवात्संयोगित्वरूपहेत्वन्तराश्रयणमनर्थकमित्यत्र तात्पर्यमिति । तन्न । गुणादावपि सभागत्वसद्भावेन तत्र व्यभिचाराप्रसक्त्योक्तप्रकाराश्रयणायोगात् । अन्ये तु । विमतश्चक्षुष्मान् रूपज्ञत्वादित्यादौ गुणज्ञत्वरूपसामान्यस्य साधकत्वानुपपत्त्या रूपज्ञत्वरूपविशेषस्य साधकतयाऽवश्यं विवक्षणीयत्वेऽपि संयोगित्वस्य संयोगलक्षणगुणविशेषवत्त्वरूपत्वात्तत्र च गुणवत्त्वरूपसामान्यस्यैव विवक्षितसाध्यसाधकत्वोपपत्तौ न हि तद्विशेषस्य संयोगित्वस्य साधकतयोन्यासो युक्तः । गुणवत्त्वमेव च द्रव्यत्वमिति तेनैवालमिति शङ्कोपपत्तिरित्यभिप्राय इत्याहुः । केचित्तु अप्राप्तयोर्द्रव्ययोः प्राप्तिः संयोग इति संयोगलक्षणानुरोधेन संयोगित्वस्य द्रव्यत्वघटितमूर्तिकत्वेन लाघवात् द्रव्यत्वेनैवालमिति शङ्कोपपत्तिः । न च कर्मविरोधी गुणः संयोग इत्यादिलक्षणाश्रयणेन द्रव्यत्वस्य हेतुशरीराप्रवेशान्नैतच्छङ्कावकाश इति वाच्यम् । तथाऽपि पूर्वमते तच्छङ्काया अप्रत्यूहत्वात् । एतन्मतेऽपि संयोगित्वरूपहेतोः पक्षे साधकतया द्रव्यत्वस्यावश्याश्रयणीयत्वेन तद्धेतोरेवेति न्यायेन द्रव्यत्वमेव हेतुरस्त्विति तदाशयादित्याहुः । वस्तुतस्तु द्रव्यत्वस्य जातित्वेन लघुत्वात्संयोगित्वस्योपाधितया गुरुत्वाच्च तस्य प्रयोजकत्वमिति लाघवमनुसृत्यैवेदमुक्तम् । न तु द्रव्यत्वस्य तत्र प्रवेशाभिप्रायेण । अत एव साध्यव्यापकाव्यभिचारित्वमिति लक्षणे

साध्याव्यभिचारित्वस्यैव लघुत्वेन लक्षणौचित्यादिरूपा शास्त्रकाराणामुक्तिः सङ्गच्छते । अन्यथा तत्र तस्याप्रवेशेन तदनवकाशादिति द्रष्टव्यम् ।

कोऽसौ विपक्षे बाधकस्तर्को यत्सूचकत्वेन संयोगित्वस्य सार्थकत्वमुच्यत इत्यतस्तं प्रतिपादयितुं प्रतिजानीते **तथा हीति** । वक्ष्यमाणतर्कस्येष्टापत्तिमुपोद्घातेन तावत्परिहरति **अस्ति तावदिति** ॥ **अन्यथेति** । परमाणोः परमाण्वन्तरसंयोगस्याभत्त्व इत्यर्थः । असमवायिकारणविरहादिति भावः । **अस्ति परमाणोः परमाण्वन्तरसंयोगः** किन्त्वेकेनैव । तथा च युज्यते द्व्यणुकारम्भः । तथा चानेकैः संयोगस्यासिद्धेर्न वक्ष्यमाणतर्कस्यानिष्टापादनत्वसिद्धिरित्याशङ्क्य निषेधति **न चेति** ॥ **कारणाकारणसंयोगजप्रक्रियायामिति** । पार्थिवाप्ययोः परमाण्वोः प्रथममनारम्भकसंयोगे जाते पार्थिवे परमाणौ पार्थिवपरमाण्वन्तरेण आप्ये च परमाणावाप्येन परमाण्वन्तरेण द्व्यणुकद्वयारम्भकसंयोगद्वयमुत्पद्यते । ताभ्यां च संयोगाभ्यां सजातीयनिष्ठाभ्यां द्व्यणुकद्वयं युगपदारभ्यते । तत्र यः पार्थिवाप्यपरमाण्वोरनारम्भकः संयोग उत्पन्नस्तेनैकेनैव पार्थिवपरमाणुनाऽऽप्यद्व्यणुकेनैकः संयोगः । आप्यपरमाणुना पार्थिवद्व्यणुकेन चापरः संयोगो द्व्यणुकयोः कारणगुणप्रक्रमेण रूपाद्युत्पत्तिकालमेव जायते । कारणाकारणसंयोगे कार्याकार्यसंयोगयोरवश्यं जननादित्यादिकारणाकारणसंयोगजप्रक्रियायामेकैकस्यैव परमाणोः सजातीयविजातीयपरमाणुद्वयेन युगपत्संयोगस्य वैशेषिकसूत्रवृत्तिकारप्रशस्तभाष्यकारादिभिरुररीकृतत्वादित्यर्थः । अत्र च विजातीययोः पार्थिवाप्यपरमाण्वोरनारम्भक एकः संयोगस्तयोरेव च तदैव सजातीयपरमाण्वन्तरसंयोगो द्व्यणुकद्वयारम्भकोऽपरः स्वीकृत इति स्पष्टमवगम्यत इति भवत्यनेन विवक्षितसिद्धिरिति ज्ञेयम् । ननु एतावताऽप्येकस्य परमाणोर्बहुभिर्युगपत्संयोगस्याप्राप्तेरिष्टापत्तिनादवस्थ्यमित्यत आह **पाषाणादीति** ॥ **संयोगाभावेति** । संयोगाभावे पाषाणावस्थानमेव न स्यादिति भावः । ननु परमाणूनां परितोऽवस्थितिः एव कुतो येन युगपदनेकदेशसंयोगप्राप्तिरित्यत आह **न च मूर्तानामिति** । अत्र युगपदिति विशेषणात्कालभेदे एकभूतलवर्तिनोर्घटपटयोः स्वारब्धपटनाशानन्तरं तेषामेव तन्तूनां पटान्तरारम्भकत्वादेकस्मिन्नेव तन्तौ वर्तमानयोश्च पटयोर्नैकदेशताविरोध इति सूचयति । नन्वेकतन्तुकपटस्य तन्तुवृत्तित्वात्तत्र च तन्तुद्वयसंयोगस्य समवायिकारणस्याभावात्तन्त्ववयवावयवस्य तन्तुसंयोग एव तत्रावश्यं तथा वाच्यः । तथा चासमवायिकारणावच्छिन्ने कार्यनियमादसमवायिकारणस्य च तन्त्ववयवावयवे तन्तौ च वृत्तेः । तन्त्ववयवावयवे तन्तोः पटस्य च वृत्त्यवश्यम्भावात्कथं मूर्तयोरपि समानदेशताविरोध इति चेत् । अत्राहुः । एकतन्तुकपटे मानाभावादिति न वस्तुतो भावेऽप्यसमवायिकारणतन्त्ववयवावयवतन्तुसंयोगः, पटश्च तन्तावेव स्तः । न च कार्यस्यासमवायिकारणान्यूनानतिरिक्तदेशतानियमः । गौरवात् । किन्त्वसमवायिकारणसमानदेशत्वमात्रनियम इति न मूर्तयोः समानदेशत्वप्राप्तिरिति द्रष्टव्यम् । अङ्गीकृत्य चेदमुक्तं

न वस्तुनः । घटतदवयवयोरेकत्र भूतले वृत्तित्वदर्शनेन तदसामानाधिकरण्यनियमासिद्धेः । अवयवावयव-विभागानापन्नयोस्तथाभावो नास्तीति चेन्न । आलोकमण्डलव्याप्त एव देशे वायुसञ्चारदर्शनेन तस्याप्यसिद्धेः । निबिडावयवत्वे सतीति विशेषणाददोष इति चेन्न । तस्यापेक्षिकस्य सर्वत्र सम्भवात् । आत्यन्तिकस्य च वज्रादन्यत्रासम्भवात् । पटमहारजनयोरेकस्मिन्नेव भूतले सद्भावदर्शनाच्च । समवाय-वृत्त्या तथाभावस्तत्रापि नास्तीति चेन्न । अत्रापि समवायवृत्त्या परमाणूनां परमाणौ वृत्त्यसम्मत्या प्रकृताविरोधप्रसङ्गादिति दिक् ॥ एवं तर्कस्येष्टापादनतामपाकृत्याप्रयोजकतामप्यपाकरोति **प्रदेशवर्तिन इति** । ततश्चैकस्य परमाणोर्बहुभिः संयोगस्य बहुंशत्वं विनाऽनुपपत्तेर्नाप्रयोजकतेति भावः । भवेदेतद्यदि संयोगस्य प्रदेशवृत्तित्वमेव सिद्धं स्यात्तदेव तु कुतः सिद्धमित्यत आह **साक्षीति** । साक्षिणि विप्रतिपन्नं प्रत्यनुमानमप्याह **घटादाविति** । अनेन परमाणुसंयोगस्तदवयववृत्तिर्भवितुमर्हति परमाणुसंयोगत्वात् । यो यत्संयोगः स तदवयववृत्तिरिति सामान्यव्याप्तिमूलकं विमतः संयोगः प्रदेशवृत्तिः संयोगत्वात् । यः संयोगः स प्रदेशवृत्तिरिति विशेषव्याप्तिमूलकं चानुमानं सूचितं भवति । संयोगित्वोक्त्या सूचितं विपक्षे बाधकं तर्कं दर्शयति **तथा चेति** । युगपदनेकैरित्यत्र मूर्तैरिति शेषः ।

प्रदेशवृत्तित्वस्याप्यवृत्तित्वरूपत्वाभावेन बहुंशत्वं विनाऽपि बहुभिः संयोगस्य परमाणौ सम्भवादप्रयोजकत्वमेवेत्याशङ्कते **नन्विति** ॥ **प्रत्यक्षादीति** । प्रत्यक्षपदं तद्विशेषसाक्षिपरम् । आदिपदेन घटादावपि तद्दर्शनेनेत्यादिनोक्तानुमानपरिग्रहः । **व्याहताङ्गीकारस्येति** । प्रतियोगितदत्यन्ताभावयोः सामानाधिकरण्यस्य विरुद्धत्वादिति भावः । नन्वेकत्रैव वृक्षे कपिसंयोगतदत्यन्ताभावयोर्दर्शनान्न विरोध इत्यत आह **अप्रामाणिकेति** । अंशभेदेनैव वृक्षे संयोगतदत्यन्ताभावयोरनुभूयमानत्वेन यदवच्छिन्ने संयोगस्तदवच्छिन्ने तदत्यन्ताभावस्यासिद्ध्या नाविरुद्धत्वं कल्पयितुं शक्यत इति भावः । ननु घटसंयोगो घटावयववृत्तिरित्ययुक्तम् । अतिप्रसङ्गात् । तथा सति पटवृत्तिरपि घटसंयोगः स्यात् । घटसंयोगो घटवृत्तिस्तद्गुणत्वाद्रूपवत्, अंशवृत्तिः संयोगो न घटसंयोगस्तदन्यवृत्तित्वात्पट-संयोगवदिति प्रमाणविरोधाच्चेत्यत आह **वक्ष्यते चैनदिति** । 'अंशांशिनोरभेदेन त्वंशसंयोग एव हि । अंशिन' इत्यादिनेति शेषः । अयमर्थः । अंशांशिनोरभेदस्य समर्थितत्वेन पटवद्घटांशस्य घटादत्यन्त-भिन्नत्वाभावेनाविशेषासिद्धेर्न तन्मूलकस्यातिप्रसङ्गस्यात्रावसरः । अंशवृत्तेरेव घटवृत्तित्वादाद्यानुमानस्य सिद्धसाधनत्वात् । अंशावृत्तित्वे सति घटवृत्तित्वसाधने च दृष्टान्तस्य साध्यवैकल्यप्रसङ्गात् । द्वितीय-हेतोस्तु स्वरूपासिद्धत्वादन्यथासिद्धत्वाच्च न बाधकत्वमपीति वक्ष्यत इत्यर्थः ।

**स०— ननु द्रव्यत्वेनैवालं किं संयोगित्वेनेति** । विमतश्चक्षुष्मान् रूपज्ञत्वादित्यादौ गुणज्ञत्वरूपसामान्यस्य साध्यसाधकत्वानुपपत्त्या रूपज्ञत्वरूपविशेषस्य हेतुत्वावश्यम्भावेऽपि प्रदेशे संयो-

गित्वस्य संयोगलक्षणगुणविशेषवत्त्वरूपत्वात् । तत्र च गुणत्वरूपसामान्यस्यैव विवक्षितसाध्यसाधक त्वोपपत्तौ न तद्विशेषस्य संयोगित्वस्य साधकत्वोपन्यासो युक्तः, किन्तु गुणित्वमात्रस्यैव तदेव च द्रव्यत्व-मिति भावः । परमाणोः सभागत्वसाधके पदार्थत्वानुमाने गुणादौ व्यभिचारवारणायावश्यं विशेषणीयस्य द्रव्यत्वस्यैव परमाणोर्देशभागवत्वसाधकत्वसंभवेन संयोगित्वरूपहेत्वन्तरकथनं व्यर्थमित्यभिप्राय इत्यप्याहुः ॥ **कारणाकारणसंयोगजप्रक्रियायामिति ।** पार्थिवद्व्यणुककारणं पार्थिवपरमाणुरकारणमाप्यपरमाणुराप्य-द्व्यणुककारणमाप्यः परमाणुरकारणं पार्थिवपरमाणुः तत्समवेतसंयोगात् पार्थिवपरमाणुकार्यं पार्थिवद्व्यणुक-मकार्यमाप्यः परमाणुराप्यपरमाणोः कार्यमाप्यद्व्यणुकं अकार्यं पार्थिवपरमाणुः तत्समवेतौ संयोगौ पार्थिव-परमाण्वाप्यद्व्यणुकगत एकः आप्यपरमाणुपार्थिवद्व्यणुकगतोऽपर इति संयोगद्वयं युगपदुत्पद्यत इत्यर्थः । पार्थिवद्व्यणुकमाप्येन परमाणुनाऽऽप्यद्व्यणुकं पार्थिवपरमाणुना संयुज्यते तदकार्यत्वे सति संयोगिकार्यत्वात् यद्यदकार्यत्वे सति यत्संयोगिकार्यं तत्तेन संयुज्यते यथा तुरीसंयुक्तः पटः तुर्यैत्यनुमानादिति भावः ।

**प०** — ननु संयोगित्वस्य द्रव्यत्वावच्छेदेनैव ज्ञेयतया प्रथमोपस्थितत्वाल्लघवादव्यभिचाराच्च तदेव हेतुरस्त्विति शङ्कते **ननु द्रव्यत्वेनैवेति ।** **किं संयोगित्वेनेति ।** तथा च तदनुबन्धित्वाद्युगपद्देश-मूर्तेत्यपि व्यर्थमिति भावः ॥ **कारणाकारणेति ।** एवं हि प्रक्रिया । अन्यतरकर्मज उभयकर्मज-स्संयोगजश्चेति त्रिविधो हि संयोगः । तत्र पार्थिवपरमाणुः पूर्वं विजातीयाप्यपरमाणुना संयुक्तो भवति । पश्चात्सजातीयपार्थिवपरमाण्वन्तरेण संयुज्यमानः पार्थिवद्व्यणुकमारभते तदैव द्व्यणुकेन तत्कारण-पार्थिवपरमाणुना प्राक्संयुक्तः आप्यपरमाणुः संयुज्यते । स च पार्थिवद्व्यणुकाप्यपरमाण्वोः कार्या-कार्यसंयोगः पार्थिवपरमाण्वाप्यपरमाण्वोस्संयोगेन जायत इति कारणाकारणसंयोगजः कार्याकार्य-संयोगजः हस्ततरुसंयोगजः कायतरुसंयोगो यथा तथेत्येवंरूपायां प्रक्रियायामित्यर्थः । तावता दशभाग-वत्त्वं च न स्फुटमित्यत आह **पाषाणादीति ।** पाषाणादेः स्थूलावयवितया द्विशो द्विशोऽनेकपरमाण्वा-रब्धानेकद्व्यणुकचतुरणुकाद्यवयवैरुत्पन्नत्वेन पाषाणादावनेकपरमाणुसत्त्वात्परमाणुभिरित्युक्तं । ननु पाषा-णादौ तदवयवावयवपरंपरया स्थितानां परमाणूनामेकत्रैव सत्त्वमस्तु कुतः परितोऽवस्थानमित्यत आह **न च मूर्तानामिति ।** तावता संयोगित्वे भागाः कुत इत्यत आह **प्रदेशवर्तिनश्चेति ।** साक्षिणि विप्रतिपन्नं प्रत्याह **घटादाविति ।** परमाणुगतसंयोगाः तत्प्रदेशवर्तिनः संयोगत्वाद्घटनिष्ठसंयोगवदित्य-नुमानाच्चेत्यर्थः । न संयुज्येतेती यत्रेतिशब्दस्येतिहेतूच्छित्तिरूपविपक्षे बाधकसूचनार्थमिति पूर्वेणान्वयः । नन्वंशिसंयोगस्यांशगत्वेऽन्यनिष्ठत्वाविशेषात्पटसंयोगो घटेपि स्यादंशगतोपि तदंशे सोपि तदंश इत्यनवस्था (यांसं) यामंशिसंयोगस्य क्वाप्यवस्थानमेव न स्यादित्यत आह **वक्ष्यते चैतदिति ।** 'अंशां-शिनोरभेदेन त्वंशसंयोग एव ही'त्यादिग्रन्थ इति भावः ।

या० — **ननु द्रव्यत्वेनेति** । अप्राप्तयोर्द्रव्ययोः प्राप्तिः संयोग इति संयोगलक्षणे द्रव्यत्वस्य प्रविष्टत्वेन लाघवादित्याशयः । न च कर्मविरोधी गुणः संयोग इत्यादिसंयोगलक्षणाश्रयणे द्रव्यत्वस्य हेतुशरीरेऽप्रवेशान्नैतच्छङ्कावकाश इति वाच्यम् । तदापि पक्षे संयोगित्वरूपहेतुसाधकतया द्रव्यत्वस्यावश्यं ज्ञातव्यत्वेन तद्धेतोरेवेति न्यायेन तदेव हेतुरस्त्वित्याशयात् । वक्ष्यमाणतर्के इष्टापत्तिं परिहर्तुमाह **अस्ति तावदित्यादि** । तथा च न विशेष्याभावमादायेष्टापत्तिरिति भावः ॥ **कारणाकारणेति** । यथाऽऽहुर्वैशेषिकाः । पार्थिवाप्ययोः परमाण्वोः प्रथममनारम्भके संयोगे जाते पार्थिवपरमाणौ पार्थिवपरमाण्वन्तरेणाऽऽप्ये च परमाणावाप्यपरमाण्वन्तरेण द्व्यणुकद्वयारम्भकं संयोगद्वयमुत्पद्यते । ताभ्यां संयोगाभ्यां सजातीयनिष्ठाभ्यां द्व्यणुकद्वयं युगपदारभ्यते । तत्र यः पार्थिवाप्यपरमाण्वोरनारम्भकः संयोगः पूर्वमुत्पन्नस्तेनैकेनैव पार्थिवपरमाणुनाप्यद्व्यणुकेनैकः संयोग आप्यपरमाणुना पार्थिवद्व्यणुकेनापरः संयोगो द्व्यणुकयो रूपाद्युत्पत्तिकालमेव जायते । कारणाकारणसंयोगेन कार्याकार्यसंयोगयोरवश्यं जननादिति । अत्र हि विजातीययोः पार्थिवाप्यपरमाण्वोरनारम्भक एकः संयोगस्तयोरेव तदैव सजातीयपरमाण्वन्तरसंयोगो द्व्यणुकद्वयारम्भकोऽपरः स्वीकृत इति स्पष्टमवगम्यत इति द्रष्टव्यम् । नन्वेतावताऽपि नानेकैर्युगपत्संयोगः प्राप्त इतीष्टापत्तिरेवेत्यत आह **पाषाणादीति** ॥ **संयोगाभावेति** । संयोगाभावे हि पाषाणावस्थानमेव न स्यादिति भावः । परमाणूनां परितोऽवस्थितत्वमेवासिद्धं येन युगपदनेकसंयोगप्राप्तिरित्यत आह **न च मूर्तानामिति** । एवं तर्के इष्टापत्तिशङ्कामपाकृत्याप्रयोजकत्वशङ्कामप्यपाकरोति **प्रदेशवर्तिन इति** । तथा चैकस्य परमाणोरनेकैः संयोगो नानेकान् तदंशान्विनोपपद्यतेऽतो नाप्रयोजकतेति भावः । युगपदनेकैरित्यत्र मूर्तैरिति शेषः । पुनरप्रयोजकतामाशङ्कते **ननु संयोगस्येति** ॥ **व्याहताङ्गीकारस्येति** स्वस्य स्वात्यन्ताभावसमानदेशत्वं व्याहतमिति भावः । कपिसंयोगतदभावयोरपि परस्परभिन्नवृक्षावयवगतत्वान्न समानदेशत्वम् । ननु घटसंयोगो घटावयववृत्तिरित्यप्ययुक्तम् । अतिप्रसङ्गात् । तथा सति हि पटवृत्तिरपि घटसंयोगः स्यादित्यत आह **वक्ष्यते चैतदिति** 'अंशांशिनोरभेदेन त्वंशसंयोग एव हि । अंशिन' इत्यत्रेति शेषः ॥

श्री० — ननु द्व्यणुकाद्यारम्भानुपपत्त्याऽस्तु परमाणोः परमाण्वन्तरसंयोगः । स चैकस्य परमाणोरेकेनैव परमाणुनेत्यस्तु युगपदनेके संयोगाः सन्तीति कुत इत्याशङ्क्य निषेधति **न चैकेनैवेति नियम इति** ॥ **कारणाकारणसंयोगजसंयोगप्रक्रियायामिति** । कदाचिदादौ पार्थिवाप्यपरमाण्वोरकारणीभूतः संयोगो जातः । विजातीयपरमाणुसंयोगस्य द्रव्यानारम्भकत्वात् । अनन्तरं पार्थिवपरमाण्वन्तरसंयोगो जातः । आप्यपरमाणौ चाप्यपरमाण्वन्तरसंयोगः । तत्र पार्थिवपरमाणुद्वयसंयोगेन पार्थिवद्व्यणु-

कमुत्पन्नं आप्यपरमाणुद्वयसंयोगेन चाप्यद्व्यणुकमुत्पन्नम् । तथा च द्व्यणुकद्वयजनकत्वात्पार्थिवपरमाणुद्वयसंयोग आप्यपरमाणुद्वयसंयोगश्च कारणीभूतः संयोग इत्युच्यते । तदनन्तरमाप्यद्व्यणुकेन पार्थिवपरमाणोः संयोगो जातः । पार्थिवद्व्यणुकेन चाप्यपरमाणोः । तथा चाकारणसंयोग आदौ तदनन्तरं कारणीभूतः संयोगस्तज्जन्यं यत्पार्थिवाप्यद्व्यणुकद्वयं तज्जन्यो यः संयोग आप्यपार्थिवपरमाण्वोर्भवतीति तत्प्रक्रियायामित्यर्थः । तथा चैकस्मिन्पार्थिवपरमाणौ विजातीयाप्यपरमाणुसंयोग एकः । सजातीयपार्थिवपरमाण्वन्तरसंयोगोऽपरः, आप्यद्व्यणुकसंयोगोऽन्य इत्येवं संयोगत्रयम् । तथैकस्मिन्नाप्यपरमाणौ विजातीयपार्थिवपरमाणुसंयोग एकः । सजातीयाप्यपरमाण्वन्तरसंयोगोऽन्यः । पार्थिवद्व्यणुकसंयोगोऽपर इत्येवं संयोगत्रयं प्राप्तम् । तथा च संयोगस्य प्रदेशवृत्तित्वादेकैकत्रांशत्रयसिद्धिरिति भावः । विपक्षे बाधकसूचनार्थमित्युक्तं विपक्षे बाधकतर्कमाह **तथा चेति** ॥ **घटसंयोग इति** । घटे पदार्थान्तरसंयोग इत्यर्थः ।

**च०**— ननु पटसंयोगो घटावयववृत्तिरित्युक्तम् । तथा सति पटवृत्तितापि घटसंयोगस्य स्यादित्यत आह **वक्ष्यते चैतदिति** । 'अंशांशिनोरभेदेन त्वंशसंयोग एव हि । अंशिन' इत्यत्रेति पूरणीयम् ।

**सु०**— **ननु परमाणुः सावयव इति स्वव्याघातस्य मुख्यमुदाहरणम् । यो हि सर्वतः अपकृष्टो यतः परमाणुर्नास्ति तं परमाणुमाचक्षते । तस्य सावयवत्वेऽवयविनोऽवयवानामपकृष्टपरिमाणत्वावश्यम्भावात्कथं न व्याहतिरित्यत आह** अविभाग इति । [ १. अपकृष्टपरिमाणं ]

**अनु०**— अविभागः पराणुता ॥

**स्यादयं विरोधो यदीदं परमाणुपदप्रवृत्तिनिमित्तं स्यात् । न चैवम् । सावयवतया साक्षिसिद्धे तदसंभवात् । किन्तु** अविभागः पराणुता **परमाणुशब्दप्रवृत्तिनिमित्तम् । तथा च कुतो व्याघात इति ।**

**नन्वविभाग इति कथमिदं विज्ञायते । सर्वथा विभागलक्षणगुणाभाव इति चेन्न । गुणादेरपि परमाणुत्वप्रसङ्गात् । द्रव्यत्वे सतीति विशेषणाददोष इति चेन्न । असंभवात् । यत्किञ्चिद्विभागाभावाभिप्राये मेरुमन्दरयोरप्यणुत्वप्रसङ्गात् । अवयवविभागाभावोऽभिमत इति चेन्न । गगनादेरपि परमाणुत्वापत्तेः । अवयवनाशादेव नष्टस्यावयविनोऽपि तदापत्तेः इति । मैवम् । यस्य विभिन्नावयवेषु सत्स्वपि तेषां विभागो न कदाऽपि भवितुमर्हति स परमाणुरिति व्याख्यानात् । एतेनावयवपरंपराविश्रान्त्यभा)श्रमाभावेऽनवस्थेत्यपि परास्तम् । मूलक्षयाभावस्य सूचितत्वात् ।**

**शे०** — नन्वविभागः पराणुतेत्यायुत्तरभाष्यमनर्थकम् । न चैतत्परमाणुशब्दप्रवृत्तिनिमित्तोपदर्शनार्थमिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न च पराभिमतस्य परमाणुशब्दप्रवृत्तिनिमित्तत्वाभावज्ञापनार्थत्वान्न तदिति वाच्यम् । तज्ज्ञापनस्यापि प्रयोजनाभावादित्याशङ्क्य परमाणोः सभागत्वसाधकानुमाने व्याघातशङ्कापरिहारार्थत्वात्तस्य न तदिति भावेन तच्छङ्कापरिहारकतयोत्तरवाक्यं योजयितुं तदनुमाने व्याघातशङ्कामुत्थापयति **नन्विति** । कथमत्र व्याघात इत्यतस्तमेवोपदर्शयति **यो हीत्यादिना** । ननु पराभिमतमेव परमाणुशब्दप्रवृत्तिनिमित्तमित्यपि वक्तुं शक्यत्वान्नानेनाभिमतसिद्धिरित्यत एतद्भाष्यसूचितं परोक्तस्य प्रवृत्तिनिमित्तत्वमुपपादयन्व्याघातपरिहारकतया वाक्यं योजयति **स्यादयमित्यादिना** ।

**कथमिदमिति** । अविभाग इति लक्षणवाक्यार्थः केन प्रकारेण विज्ञायते भवद्भिरित्यर्थः । काऽत्र कथन्तेत्यतः किमत्र सर्वथा विभागाभाव एव प्रवृत्तिनिमित्ततयाऽभिमतः, किंवा यत्किञ्चिद्विभागाभावः, अथवाऽवयवविभागाभाव इति विकल्पान्मनसि निधायाद्यं दूषयति **सर्वथेति** । किमत्र निर्विशेषणमविभागत्वं तत्त्वेनाभिमतं किंवा सविशेषणमिति विकल्पद्वयं मनसि निधायाद्यं प्रत्याह **गुणादेरपीति** । गुणादेर्निर्गुणतया सर्वथा विभागाभावस्य तत्रापि सत्त्वादिति भावः । द्वितीयमाशङ्कते **द्रव्यत्वे सतीति विशेषणादिति** ॥ **असम्भवादिति** । विभागस्य द्रव्यसामान्यगुणत्वादिति भावः । आद्यद्वितीयमुत्थाप्य दूषयति **यत्किञ्चिदिति** । तृतीयमाशङ्कते **अवयवेति** । अतिव्याप्त्या दूषयति **गगनादेरपीति** । तत्रावयविनो नित्यत्वेनावयवानां (अवयवविभागवत्त्वस्य) विभागस्यासत्त्वादिति भावः । गगनादेः सावयवत्वेऽवयवविभागाभावे च विप्रतिपन्नं प्रति घटादावनित्यावयविन्यपि तामाह **अवयवेति** । ननु च तन्त्वाद्यवयवसंयोगनाशेनावयविनाशादवयवि(ना)नोऽस्त्येव यावत्स्वसत्त्वमवयवविभागवत्त्वमित्युक्तलक्षणागमनात्कथं तत्रातिव्याप्तिरित्यतस्तादृशावयविन्यतिव्याप्त्यसम्भवेऽप्यवयवनाशादेव नष्टे तस्मिन्यावत्स्वसत्त्वमवयवविभागवत्त्वाभावादतिव्याप्तिरवर्जनीया इत्याशयेनोक्तम् **अवयवनाशादेव विनष्टस्येति** ॥ **यस्येति** । तेषाम् अवयवानां परस्परमिति शेषः । सत्यवयविनीत्यपि शेषः । यस्य तेषामित्यादिविशेषणमहिम्ना तेषामित्यस्यावयवाऽवयवित्वावस्थापन्नानामित्यर्थः । अत्र च यदीयावयवानां विभागो भवितुं नार्हति स परमाणुरित्येव कृते गगनादेरपि परमाणुत्वापत्तिः । तस्य नित्यतया तदीयावयवानामपि विभागभवनानर्हत्वात् । तन्निरासाय यस्य विभिन्नावयवेषु सत्स्वित्युक्तम् । तस्य च विभिन्नावयवानामसत्त्वान्नातिप्रसङ्गः । येषां विभागो न भवतीत्येतावन्मात्रं चावयवनाशान्न श्यति द्रव्येऽप्यस्तीति तादृशावयविनोऽपि परमाणुत्वप्रसङ्गस्तन्निरासायार्हतीत्युक्तम् । [illegible]

यितुं कदाऽपीत्युक्तम् । कुत्रापि तत्सजातीयेऽपीति यावत् । तथा चावयवनाशेन नष्टे वस्तुनि त्ववयवविभागयोग्यताऽस्ति । ततश्च तत्सजातीये वस्तुन्यवयवानां विभागदर्शनात्सज तीयदर्शनरूपस्य योग्यताकल्पकस्य तत्र सत्त्वाद्विभागो भवितुं नार्हतीत्यस्यांशस्य तत्राभावान्नातिप्रसङ्गः । अत एव न द्व्यणुकादावतिप्रसङ्गः । तत्राप्यणुकार्यत्वेन सजातीयतया वादिप्रतिवादिसम्मते चतुरणुके तद्विभाग-दर्शनेन द्व्यणुकादौ विभागादर्शनेऽपि तद्भवनयोग्यतायाः सत्त्वेनोक्तलक्षणविरहात् । नाप्यसम्भवः । उक्तरीत्याऽन्यत्र योग्यतायाः कल्पकसद्भावेन कल्पयितुं शक्यत्वेऽपि परमाणौ तद्विरहेण योग्यतायाः कल्पयितुमशक्यत्वात् । न च विभिन्नावयवत्वस्य परमाणावसिद्ध्या पुनरप्यसम्भव इति वाच्यम् । उत्पत्तिविनाशवत्परमाणोः स्वावयवैर्भेदस्यावश्याश्रयणीयत्वात् । तस्मिन्सत्यप्यसत्त्वस्यैवावयवावयविभेद-व्यवस्थापकतया सिद्धान्ते सम्मतत्वात् । न च परमाण्ववयवेऽतिव्याप्तिरिति वाच्यम् । भूतसूक्ष्माणामेव परमाण्ववयवत्वेन तेषां चानादिनित्यत्वेन भेदसाधकखण्डितत्वयुक्तेस्तत्राप्रसरणेन तद्भेदासिद्ध्या विभिन्नाव-यवेषु सत्स्वित्यनेनैव तत्रातिव्याप्तिपरिहारात् ।

यत्तु ततोऽपि परमाणुत्वं तदंशानामित्यादिवाक्यानुरोधात्तेषामपि लक्ष्यत्वमेवेति न तत्रातिप्रसङ्ग इति केषाञ्चित्समाधानम् । तन्न । तत्रोक्तरीत्या लक्षणाभावेनाव्याप्तिप्रसङ्गात् । 'कणादाद्या निरंशिनं यमाहुर्भ्रान्तिदर्शनादि'त्यादितदुत्तरग्रन्थानुरोधेन त्रसरेणुषष्ठभागस्यैव परमाणुत्वेन 'लक्ष्यतायास्तत्रापि सिद्धत्वेन ततोऽपि परमाणुत्वमि'त्यस्य पूर्वपक्षवाक्यत्वस्यैव वाच्यतया तदनुरोधेन परमाण्ववयवानां लक्ष्य-त्वस्य कल्पयितुमशक्यत्वाच्च । न च मनसि प्रसङ्गः । तस्यापि लक्ष्यत्वात् । जीवपरमाणोराका-शपरमाणोश्चालक्ष्यत्वान्न तत्राव्याप्तिरपीति सङ्क्षेपः ।

**एतेनेति** । यस्य विभिन्नावयवेषु सत्स्विति परमाणोर्विभिन्नावयवसद्भावोक्त्या तदवयवानां भूतसूक्ष्माणां विभिन्नावयवासत्त्वसूचनद्वारा नित्यत्वसूचनपरेणाविभाग इति मूलेनेत्यर्थः ॥ **मूलक्षयेति** । न तावदवयवपरम्पराकल्पकाभावोऽत्र मूलक्षयस्सम्भवति । अविश्रान्तावयवपरम्परायाः साक्षिसिद्धतायाः समर्थनात् । नापि घटादिकार्यानुत्पत्तिरूपप्रयोजनपरिक्षयः । जनकीभूतावयवपरम्पराया अविश्रान्ति-पक्षे पूर्वपूर्वावयवानुत्पत्तावुत्तरोत्तरावयवानुत्पत्त्या घटादिरूपप्रकृतकार्यस्याप्यनुत्पत्तिरिति मूलक्षयप्रसङ्गोऽपि परमाण्ववयवभूतसूक्ष्मेषु तद्विश्रान्त्यभ्युगमवादे तदप्रसरादिति भावः ।

प० — **कथमिदमिति** । 'अविभाग, इतीदं वाक्यं कथं व्याख्यायत इत्यर्थः । संभावित-पक्षानुट्टङ्क्य निराह **सर्वथेत्यादिना** । **असंभवादिति** । द्रव्यस्यैव विभागगुणाश्रयत्वादिति भावः । **मेरुमन्दरयोरपीति** । तयोः कदापि संयोगाभावेन विभागरूपगुणस्यापि तयोरन्योन्यनिरूपितस्य कदापि

अभावादिति भावः ॥ **अवयवेति** । अवयवनिरूपिते विभाग इत्यर्थः ॥ **तेषां विभाग इति** पार्थक्यमित्यर्थः । अत्र गगनेऽनतिव्याप्तये विभिन्नावयवेषु सत्स्वपीत्युक्तिः । अवयवानाशान्नष्टे अवयविन्यनतिव्याप्तये तेषां विभागो न कदापि भवितुमर्हतीति योग्यताऽभाव उक्तः । तत्र सजातीये अवयव्यन्तरे अवयवविभागदर्शनरूपयोग्यतासत्त्वान्नातिव्याप्तिरिति भावः । 'न चावयवभेदेन स्यादेव ह्यनवस्थितिरि'ति गीतातात्पर्योक्तेर्नित्यपरमाणावपि अवयवभेदोऽस्त्येवेति केचिद्व्याचक्षते । अन्ये तु न्यायमते गगनेपि सावयवत्वे विवादादवयवेषु सत्स्वित्येतावता गगनादावनतिव्याप्तेर्विभिन्नेति स्वरूप-कथनम् । न्यायमते भेदप्रतिनिधिविशेषानभ्युपगमादवयवानामवयविना भेदाभावे निरवयवमेवेति प्राप्तमिति तदीयशङ्काऽपनुत्तयेऽवयवसत्त्वस्फुटीकरणाय (वि)भिन्नेत्युक्तमिति पररीत्यैवेदं लक्षणं परं प्रत्युक्तम् । अत एव लक्षणान्तरमिति व्याचक्षते । वस्तुतस्तु विभिन्नावयवेष्वित्यस्यावयविना भिन्नेष्विति नार्थः । किन्तु एकैकोऽप्यवयवः स्वान्तर्भेदयुक्तः सखण्डो न त्वखण्ड इत्यर्थः । तथा च विभिन्नेषु सखण्डेषु अनेकांशोपेतेष्ववयवेष्विति फलितार्थः ॥ **सूचितत्वादिति** । अवयवानामारम्भकत्वे पूर्वपूर्वावयवारम्भा-नन्तरमेवोत्तरोत्तरावयवारम्भनियमेन प्रकृतपरमाणुलक्षणावयव्यारम्भस्य वाच्यतया पूर्वपूर्वासिध्या परमा-ण्वाख्यावयव्यसिद्धेर्मूलक्षयकारी स्यात् । न चैवम् । आरम्भकावयवानां कार्यदशान्यदशायां विभक्त त्वात् इह चाविभाग इति कदापि विभागाभावोक्त्याऽनारम्भकत्वसूचनेन वा कदाप्यवयवविभागा-भावोक्त्या परमाणोरकार्यत्वनित्यत्वयोः सूचनेन वा प्रकृतपरमाण्वाख्यवस्तूत्पत्तिज्ञप्त्यप्रतिबन्धकत्वसूचना-दिति भावः ।

**या० — कथमिदमिति** । 'अविभाग' इति लक्षणावाक्यार्थः केन प्रकारेण विज्ञायते भवद्भिरित्यर्थः ॥ **गगनादेरपीति** । तत्रावयविनो नित्यत्वेनावयवविभागस्याभावादिति भावः ॥ **अवयवनाशादेवेति** । न तु तत्संयोगनाशात् । येन तत्रावयवविभागः स्यात् । तथा च तत्र यावत्स्वसत्त्वमवयवविभागाभावादतिव्याप्तिरिति भावः ॥ **यस्य विभिन्नेति** । अत्र गुणादिष्वतिव्या-प्तिपरिहारायावयवेषु सत्स्वपीत्युक्तम् । इदं च पररीत्यैव । अस्मन्मते गुणादेरपि सभागत्वादिति द्रष्टव्यम् । गगनादावतिव्याप्तिपरिहाराय विभिन्नेति । अवयवनाशादेव नष्टेऽवयविन्यतिव्याप्तिवार-णायार्हतीति । नार्हतीत्येतदुपपादयितुं कदाऽपीत्युक्तम् । **कुत्रापि** तत्सजातीयेऽपीति यावत् । अवयवनाशेन नष्टेऽवयविनि त्ववयवविभागयोग्यताऽस्ति तत्सजातीयेऽवयविन्यवयवविभागदर्शनादिति भावः ॥ **मूलक्षयेति** । यस्य विभिन्नावयवेषु सत्स्वपि तेषां विभागो भवितुं नार्हतीत्युक्त्या परमाणु-रूपावयविनो नित्यत्वावगमेन स्वावयवाजन्यतायाः सूचनादित्यर्थः । तथा च यदि हि तत्तज्जनकीभू-

तावयवपरम्पराया अविश्रमस्तदा परमनवस्थादूषणम् । पूर्वपूर्वावयवानुत्पत्तावुत्तरोत्तरावयव्यनुत्पत्तेः प्रकृतकार्यस्याप्यनुपपत्तिरिति मूलक्षयसम्भवात् । न चैवमस्माभिरङ्गीक्रियते किन्त्वनन्तांशोऽपि परमाणुः स्वावयवाजन्य एवादिकार्यजनक इति । ततश्च घटादिकार्यजनकावयवपरम्परायास्तत्र विश्रान्तिसम्भवान्न मूलक्षय इति भावः ।

श्री० — **तदसम्भवादिति** । साक्षिसिद्धे परमाणौ तस्य यतः परमाणुर्नास्ति स परमाणुरिति निर्वचनस्यासम्भवादित्यर्थः ॥ **गुणादेरिति** । गुणे गुणानाङ्गीकारादित्यर्थः ॥ **असम्भवादिति** । विभागस्य सामान्यगुणत्वेन द्रव्यत्वे सति विभागलक्षणगुणशून्यः परमाणुरित्युक्तेऽसंभवादिति भावः ॥ **मेरुमन्दरयोरिति** । तत्रापि स्वस्वनिष्ठयत्किञ्चिद्वृक्षे प्रत्यन्तपर्वतादिविभागाभावोऽस्तीति भावः ॥ **अवयवनाशात्** समवायिकारणनाशात् ।

च० — **कथमिदमिति** । 'अविभाग' इत्यानुपूर्वीकमौलप्रतीकं कीदृशार्थप्रत्यायकं विज्ञायते भवद्भिरित्यर्थः ॥ **सर्वथेति** । विभागत्वरूपसामान्यधर्मावच्छिन्नाभाव इत्यर्थः ॥ **प्रसङ्गादिति** । गुणादेर्निर्गुणत्वादिति भावः । विभागपदस्य भावसाधनघञन्ततया । **असंभवादिति** । द्रव्यत्वावच्छेदेन विभागोपगतेरिति भावः ॥ **मेरुमन्दरयोरपीति** । तदेकतरानुयोगिकापरप्रतियोगिकसंयोगस्य अलीकतया तन्नाशकविभागस्याप्यलीकत्वादिति भावः । सिद्धान्तिदिशेदम् । न्यायनयेऽलीकप्रतियोगिकाभावानुपगतेरित्यवसेयम् ॥ **अवयवेति** । तेषां पार्थक्याभाव इत्यर्थः ॥ **गगनादेरपीति** । अवयविनस्तत्र नित्यत्वेनावयवविभागाभावादिति भावः । गगनादेः सावयवत्वेऽवयविविभागाभावे च विप्रतिपन्नं प्रति पटादावनित्यावयविन्यतिप्रसङ्गमभिधत्ते **अवयवेति** । **तदापत्तेः** परमाणुत्वापत्तेः । अत्र गगनादावनतिप्रसङ्गाय सप्तम्यन्तपदोपादानम् । अवयवनाशान्नष्टेवयविन्युक्तक्षतिविधूननाय योग्यताभावपर्यन्तानुधावनम् । तत्सजातीयेऽवयविन्यवयवविभागावनतिदर्शनेन तद्योग्यताया एव तत्र सत्त्वान्न क्षतिरिति भावः । अत्र विभिन्नावयवेष्वित्यस्यावयवं विना भिन्नेष्विति नार्थः । किन्तु एकैकोऽप्यवयवः स्वान्तर्भेदयुक्तः सखण्डो न त्वखण्ड इत्यर्थः । तथा च विभिन्नेषु अनेकांशेष्वेतेष्ववयवेष्विति फलितार्थ इति व्याकर्तॄणां निरूढः पन्थाः ॥ **सूचितत्वादिति** । नार्हतीत्यन्तेन परमाणुलक्षणावयविनो नाशाभावावगत्या स्वावयवाजन्यतायाः ध्वनितत्वादित्यर्थः । तथा चोत्पत्त्यप्रतिबन्धकतया नेयमनवस्था दूषणमिति भावः ।

**सु० -- यद्वा विभिद्यते विभज्यते इति विभागः । तदभावः परमाणुतेति । यतः स्वावयवं विना स्वतन्त्रमनवयवरूपमपकृष्टपरिमाणं (वस्तु) नास्ति स परमाणुरिति यावत् ॥**

**श्रु०** — ननु परमाणुशब्दाद्यतः परमाणुर्नास्ति स परमाणुरिति परोक्तमेव तच्छब्दप्रवृत्तिनिमित्तं प्रतीयते न तु यस्य विभिन्नावयवेषु सन्त्वित्याद्युक्तरूपमित्यविभागस्य परमाणुशब्दप्रवृत्तिनिमित्तत्वाश्रयणमयुक्तमित्यतः परोक्तं परमाणुशब्दप्रवृत्तिनिमित्तमङ्गीकृत्यापि यथा तत्र न व्याहतिस्तथा तत्परतया भाष्यं व्याचष्टे **यद्वेति** । नन्वेवमविभाग इत्यस्य यतो विभिन्नं वस्तु नास्तीत्यर्थः स्यात् । ततश्चासम्भव इत्यत आह **यत इति** । अत्र यतोऽपकृष्टपरिमाणं नास्ति स परमाणुरित्युक्तेऽसम्भवः । स्वावयवानां वा तदवयवानां वाऽपकृष्टपरिमाणानां सत्त्वादतः स्वतन्त्रमित्युक्तम् । तस्यैव विवरणमनवयवरूपमिति । अवयवत्वावस्थाऽनापन्नमित्यर्थः । तथा च परमाण्वपेक्षयाऽपकृष्टपरिमाणसत्त्वेपि अवयवत्वावस्थाऽनापन्नापकृष्टपरिमाणाभावान्नासम्भवः ।

ननु परमाण्ववयवभूतभूतसूक्ष्मावयवानां भूतसूक्ष्मरूपस्वावयविनाऽभेदेनावयवत्वावस्थापन्नानामेव तेषां सत्त्वेन तादृशापकृष्टपरिमाणमादायासम्भवस्योक्तविशेषणेन परिहारेऽपि परमाण्ववयवभूतभूतसूक्ष्माणां परमाणुना भेदाभावे पूर्वलक्षणस्याव्याप्त्यापत्त्या तद्भेदस्यावश्यकत्वेनावयवत्वावस्थानापन्नानामपि तेषां परमाणूत्पत्त्यादेः पूर्वं सत्त्वावश्यम्भावात् स्वावयवरूपभूतसूक्ष्मलक्षणापकृष्टपरिमाणसद्भावात् तादृशापकृष्टपरिमाणमादाय परमाणावसम्भवः स्यादेवेत्यत उक्तं **स्वावयवं विनेति** । स्वावयवातिरिक्तमित्यर्थः । तथा च परमाण्वपेक्षया स्वावयवरूपस्यावयवत्वावस्थानापन्नापकृष्टपरिमाणस्य सत्त्वेऽपि स्वावयवातिरिक्तस्य अवयवत्वावस्थानापन्नापकृष्टपरिमाणस्याभावान्नासम्भवः । नचैवं द्व्यणुकस्यापि परमाणुत्वापत्तिः । तदपेक्षया तदवयवातिरिक्तस्य अवयवत्वावस्थानापन्नापकृष्टपरिमाणस्य तत्राप्यभावादिति वाच्यम् । तत्रापि परमाण्ववयवभूतभूतसूक्ष्माणामेव द्व्यणुकावयवातिरिक्तानाम् अवयवत्वावस्थाऽनापन्नानामपकृष्टपरिमाणत्वेन तत्रोक्तलक्षणाभावात् । नापि परमाण्ववयवेऽतिव्याप्तिः । तदवयवावयवानामपि सर्वदाऽवयवत्वावस्थाऽऽपन्नानामेव सत्त्वेन तत्रोक्तलक्षणसद्भावादिति वाच्यम् । अत्र स्वावयवव्यतिरिक्तेति विशेषणमहिम्ना स्वावयवानामनवयवत्वावस्थाऽऽपन्नानामप्यपकृष्टपरिमाणानां सत्त्वलाभेन भूतसूक्ष्मावयवानां चावयवत्वावस्थापन्नानामेव सत्त्वेन स्वावयवरूपावयवत्वावस्थाऽनापन्नापकृष्टपरिमाणस्य तत्राभावेन तत्रोक्तलक्षणविरहात् । अत एव नाकाशपरमाणौ जीवपरमाणौ वाऽतिव्याप्तिः । तत्र तदवयवानामनवयवत्वावस्थाऽऽपन्नानामपकृष्टपरिमाणानामभावात् । न च मनसि प्रसङ्गः । तदवयवभूतभूतसूक्ष्माणामनवयवत्वावस्थाऽऽपन्नानामपकृष्टपरिमाणत्वेनतत्रोक्तलक्षणसत्त्वादिति वाच्यम् । तस्य लक्ष्यतयेष्टत्वेन तदप्रसङ्गात् । परैरपि निरवयवः क्रियावान्परमाणुरिति लक्षणे तस्य लक्ष्यत्वाङ्गीकारात् अन्यथा परमाणुलक्षणस्य तत्रातिव्याप्तिप्रसङ्गात् । तथा-

चायं लक्षणनिष्कर्षः । यतः स्वावयवा एवावयवत्वावस्थाऽनापन्ना अप्यपकृष्टपरिमाणाः सन्ति तदतिरिक्तमनवयवत्वावस्थाऽऽपन्नमपकृष्टपरिमाणं नास्ति स परमाणुरिति सर्वमनवद्यम् ।

केचित्तु । अनवयवरूपमित्यस्य स्वानवयवरूपमित्यर्थमङ्गीकृत्य स्वावयवं विनेत्यस्य स्वतन्त्रपदार्थविवरणरूपतां चाश्रित्य यतः स्वतन्त्रं स्वानवयवरूपमपकृष्टपरिमाणं नास्ति स परमाणुरित्येवात्र परमाणुलक्षणं ग्रन्थकृदभिमतम् । अत्र च यतोऽपकृष्टपरिमाणं नास्ति स परमाणुरित्येव कृते स्वावयवावयवरूपापकृष्टपरिमाणसद्भावादसम्भवः । तद्वारणाय **स्वतन्त्रमिति** । तस्य विवरणं **स्वावयवं विनेति** । तथा च यदीयापकृष्टपरिमाणं कुतोऽस्यास्मादपकृष्टत्वमित्युक्ते तदवयवावयवत्वादित्येवंरूपेण स्वावयवापेक्षं न भवतीत्यर्थः । ततश्चावयवावयवानामपकृष्टत्वस्य अवयवसापेक्षत्वेन तदनपेक्षापकृष्टपरिमाणाभावान्नासम्भवः । तथाऽपि परमाण्वपेक्षया तदवयवरूपापकृष्टपरिमाणसद्भावादसम्भव एव । तदीयापकृष्टत्वस्य स्वावयवानपेक्षत्वेन स्वावयवमनन्तर्भाव्यापकृष्टपरिमाणस्यैव सत्त्वात् । अत उक्तं **स्वानवयवरूपमिति** । ततश्च स्वावयवरूपस्यैवापकृष्टपरिमाणस्य सद्भावात्स्वावयवानपेक्षं स्वावयवरूपमपकृष्टं परिमाणं नास्तीति नासम्भवः । न चैवम् यतः स्वानवयवरूपमपकृष्टपरिमाणं नास्तीत्येव लक्षणमास्ताम् कृतमितरेणेति वाच्यम् । स्वावयवावयवानां परमाण्वनवयवत्वेन अनवयवरूपापकृष्टपरिमाणसद्भावेनासम्भवापत्त्या स्वावयवं विनेत्यस्यावश्यकत्वात् । न च परमाण्ववयवेऽतिप्रसङ्गः । तस्यापि परमाणुत्वेन लक्ष्यत्वात् । न चैवं द्व्यणुकेऽप्युक्तरीत्या लक्षणसत्त्वादतिप्रसङ्गः । तत्र द्व्यणुकावयवमनन्तर्भाव्यापकृष्टस्य स्वानवयवरूपस्य मनस एव सत्त्वेन स्वानवयवरूपमपकृष्टं परिमाणं नास्तीत्यस्यांशस्य तत्राभावात् । एवञ्च सर्वं सार्थकमेवेत्याहुः ।

अत्र ब्रूमः । परमाण्ववयवानां लक्ष्यत्वाङ्गीकारेण तत्रातिव्याप्तिपरिहारस्तावदयुक्तः । तथा सति पूर्वलक्षणस्य तत्राव्याप्त्यापातात् । तत्र त्रसरेणुषष्ठभागस्यैव लक्ष्यत्वमत्र च तदवयवानामपीति वैचित्र्यकल्पनं च निर्मूलत्वादुपेक्षणीयम् । न चान्यथाऽनुपपत्तिरेव तत्र मूलम् । उक्तरीत्योभयत्रापि त्रसरेणुषष्ठभागस्यैव लक्ष्यतायामपि लक्षणद्वयस्य समञ्जसीकृतत्वात् । किञ्च परमाण्वपेक्षया जीवावयवरूपस्यापकृष्टपरिमाणस्य सत्त्वात्तदादायासम्भव एव । तस्य त्रसरेणुषष्ठभागानवयवत्वात् । तदवयवानपेक्षत्वाच्च तत्रोक्तदूषणाभावात् । यदि च परमाणुत्वावच्छिन्नस्य लक्ष्यत्वाज्जीवस्यापि तादृशत्वेन जीवावयवस्य स्वानवयवत्वाभावेन स्वानवयवरूपापकृष्टपरिमाणाभावस्य सत्त्वान्नासम्भव इति मन्यसे तर्हि त्रसरेणुषष्ठभागवत्तदवयवोऽपि परमाणुत्वेनात्र लक्ष्य इति त्वन्मते परमाण्ववयवावयवस्यापि स्वावयवत्वेन स्वानवयवरूपापकृष्टपरिमाणाभावस्य सत्त्वात् । अवयवावयवमादायासम्भवप्रसक्तेरेवाभावेन स्वावयवं विनेति विशेषणवैयर्थ्यप्रसङ्गादिति सङ्क्षेपः ॥ छ॥

**च०** — 'न चानवयवं वस्तु कचिन्स्यान्मानगोचरमि'ति गीतातात्पर्योक्त्या सर्वं सावयवमिति उपेत्य स्वमतसाधारण्येन लक्षणान्तरमाह **यद्वेतीति** केचित् । अन्ये तु यतः परमाणुर्नास्ति स परमाणुरिति परनिर्वचनमनुसृत्य लक्षणान्तरं **यद्वेतीति** वदन्ति ॥ **विभज्यत इति** । विपूर्वस्य भञ्जो आमर्दन इत्यस्य कर्मणि घञित्युक्तं भवति । न(न्वेवंय)न्वयं यतो विभिन्नं नास्ति स परमाणुरिति प्राप्तं तथा चासंभव इत्यतो विवक्षितमाह **यत इति** । यतः स्वावयवं विनाऽपकृष्टपरिमाणं वस्तु नास्ति स परमाणुरित्युक्तौ अन्यावयवस्याप्यपकृष्टस्य सत्त्वेनासंभवापत्तेस्तद्विवरणं कृतं **स्वतन्त्रेति** । तस्यापि फलितार्थः **अनवयवरूपमिति** । अवयवानात्मकमित्यर्थः । तथा च यतः अवयवानात्मकमपकृष्टपरिमाणमचेतनं वस्तु नास्ति स परमाणुरिति निष्कृष्टार्थः । प्रकरणबलादचेतनमिति लाभान्नेशरूपमादायासंभवशङ्का कार्या ॥

**पदार्थत्वसंयोगित्वाभ्यां परमाणोः सांशत्वसाधने व्याघातनिरासः ॥**

**या०** — ननु परमाणुशब्दादुक्तलक्षणाप्रतीत्या न तच्छब्दप्रवृत्तिनिमित्तमित्यस्वरसात् यतः परमाणुर्नास्ति स परमाणुरिति परोक्तमेव लक्षणमनुसृत्य यथाऽत्र न व्याहतिस्तथा व्याख्याति **यद्वेति** । नन्वेवमविभाग इत्यस्य यतो विभिन्नं वस्तु नास्तीत्यर्थः स्यात्ततश्चासंभव इत्यत आह **यतः स्वावयवमिति** । अत्र यतोऽपकृष्टपरिमाणं नास्ति स परमाणुरित्येवोक्तेऽसंभवतादवस्थ्यं, परमाण्वपेक्षयाऽपकृष्टपरिमाणस्य तदवयवस्य सत्त्वादतः **स्वावयवं विनेति** । नन्वेवमप्यसंभव एव । एतत्परमाण्वपेक्षया अपकृष्टपरिमाणस्यान्यपरमाण्ववयवस्य सत्त्वादतः स्वावयवं विनेत्यस्य तात्पर्यमाह **स्वतन्त्रमिति** । अप्रतीत्याऽस्याप्यर्थमाह **अनवयवरूपमिति** । अवयवभिन्नमित्यर्थः । तथा च यतोऽवयवभिन्नमपकृष्टपरिमाणं जडं नास्ति स परमाणुरिति लक्षणं पर्यवस्यति । अतो लक्ष्यभूतपरमाण्वपेक्षयाऽपकृष्टपरिमाणस्य भगवद्रूपविशेषस्य सत्त्वात्पुनरसंभव इति शङ्काऽनवकाश इति ध्येयम् । एतद्दोषपरिहारायैवास्वतन्त्रमित्येव अत्र पदं विवक्षितमित्यप्याहुः । नन्वेवं परमाण्ववयवेऽतिव्याप्तिः । तदपेक्षयाऽपकृष्टपरिमाणस्यानवयवरूपस्यान्यस्याभावादिति चेन्न । अवयवभिन्नत्वे सतीति विशेषणस्याप्यत्राभिप्रेतत्वात् । न चैवमसंभवः परमाणोरप्यादिकार्यावयवत्वादिति वाच्यम् । अविभक्तावयवभिन्नत्वस्य विवक्षितत्वात् । परमाणोश्चादिकार्यावयवान्तराद्विभक्तत्वात् । अतो नासंभवो नाप्यतिव्याप्तिरिति । पूर्वलक्षणेऽत्र च प्रकृतिरूपं सूक्ष्मं यद्रजस्तदेव लक्ष्यम् । न पराभिप्रेतं जालसूर्यमरीचिस्थसूक्ष्मभागापेक्षया षष्ठभागरूपम् । अग्रे तदनित्यताया वक्ष्यमाणत्वेनोक्तलक्षणयोस्तत्रासंभवादिति ज्ञातव्यम् ।

**च०** — अत्र 'न चानवयवं वस्तु कचित्स्यान्मानगोचरमि'ति तत्तात्पर्योक्त्या सर्वं सावयवमिति उपेत्य स्वमतसाधारण्येन लक्षणान्तरमाह **यद्वेतीति** व्याचक्षते । ननु परमाणुशब्दादुक्तलक्षणाप्रतीत्या

न तच्छब्दप्रवृत्तिनिमित्तमिदमित्यस्वरसाद्यत: परमाणुर्नास्ति स परमाणुरिति परोक्तमेव लक्षणमनुसृत्य यथात्र न व्याहतिस्तथा व्याख्याति **यद्वेतीत्य**प्यवतारयन्ति । **प्रकृते** विभागपदस्य कर्मसाधनघञन्तता-मभिप्रेत्य व्याकुरुते **विभज्यत इति** । यथाश्रुतार्थादरे विभिन्नवस्तुशून्यत्वमित्यर्थपर्यवसानेनासंभवापत्त्या विभागपदस्यापकृष्टपरिमाणवस्तुपरतां तथापि स्वावयवमादायोक्ततादवस्थ्यवारणाय स्वावयवान्यत्वस्य प्रतियोगितावच्छेदककोटिनिवेशे परमाण्वन्तरावयवमादाय तद्विधूननाय स्वीयत्वांशमवयवे निवेश्यावयवत्वा-वच्छिन्नभिन्नापकृष्टपरिमाणवस्तुशून्यत्वं तदिति परिष्कुरुते **यत: स्वावयवमिति** । अत्र लक्ष्यभूतपरमा-ण्वपेक्षयाऽपकृष्टपरिमाणभगवद्रूपविशेषमादायासंभवापत्तये जडत्वांशोऽस्वतन्त्रत्वांशो वा प्रतियोगिताव-च्छेदककोटौ निवेशनीय इति स्थितम् । अत्र परमाण्ववयवेऽतिप्रसङ्गवारणायावयवभिन्नत्वं विशेष्य-विधयापि निवेशनीयम् । परमाणोरप्यवयवत्वेनासंभवव्युदासायावयवभिन्नत्वमविभक्तावयवभिन्नत्वरूपं ग्राह्यम् । परमाणोश्चादिकार्यावयवान्तराद्विभक्तत्वादिति पर्यष्कार्षु: । पूर्वलक्षणेऽत्र च **प्रकृतिरूपं** सूक्ष्मं यद्रजस्तदेव लक्ष्यं न तु पराभिप्रेतं जालसूर्यमरीचिस्थसूक्ष्मभागापेक्षया षष्ठभागरूपम् । अग्रे तदनित्य-ताया अभिधास्यमानत्वेनोक्तलक्षणयोस्तत्रासंभवादिति ज्ञातव्यम् इत्यभ्यधुर्व्याकर्तार: । **न हि परमाणवो**

भूतसूक्ष्माणीत्येतत्रयान्तिमफक्किकां जालसूर्यमरीचिस्थत्र्यणुकषष्ठभागपरिमिता ये परमाणव: परेण मूल-कारणतया स्वीकृतास्ते भूतसूक्ष्माणि नेत्यर्थ: । **किन्त्वहङ्कारोपचितानीति** । अत्राहङ्कारपदं तत्कार्याणां भूतानामप्युपलक्षकम् । तथा च तामसाहङ्कारतत्कार्यभूतोपचितानि भूतसूक्ष्माणि पराभिमतपरमाणव इत्यर्थ इति व्याचख्युश्चेति तद्दिशा भूतसूक्ष्माणामेव सौधलक्षणद्वयलक्ष्यताऽवसीयते । 'मनुष्या देवलोकेपि विशेषेणैव दर्शने । अंशांशित्वविशेषं तु यस्य द्रष्टुं न शक्नुयु: । चरमो विशेष इति तं मुनयो ब्रूयुरञ्जसा । परमाणु: स विज्ञेय: कणादाद्या: निरंशिनम् । अनन्तांशयुतत्वेऽपि यं ब्रूयुर्भ्रान्तिदर्शनात् । ततोपि परमाणुत्वं तदंशानां तु यद्यपि । अनन्तत्वाद्विवेकार्थमस्योक्ता परमाणुते'ति तत्त्वविवेक इति भागवत-तात्पर्ये किमचेतने पटादावन्त्यावयविन्येव भेदाभेदाविति नेत्याह **अत्रेति** । **'अत्रावयवभेदेन स्यादेव** ह्यनवस्थिति:' । अचेतने पटादौ स्वावयवैर्भेदाभेदौ तदवयवस्यापि स्वावयवैर्भेदाभेदावित्यपर्यवसानमेव भवेदित्यर्थ: । परमाणोर्निरवयवत्वेन पर्यवसानसंभवात्कथमनवस्थितिरित्यत आह **न चेति** । न केवलं निरवयवत्वे प्रमाणाभावात्परमाणो: सावयवत्वमपि तु पूर्वपरादिभागभेदेन सावयवत्वावगमाच्चेत्याह **पूर्वेतीति** न्यायदीपिकाविवृताशयगीतातात्पर्यम् । परमाणुत्वमापेक्षिकं न तु परिनिष्ठितमेकत्र अतो यत: परमाणुर्नास्ति स परमाणुरिति न किन्तु यदवयवानां परस्परविभागो न क्रियते स परमाणुरिति युक्तमिति सन्न्यायरत्नावलि: । यत: परमाणुर्नास्ति स परमाणुरिति वदता तेन यत्परमाणुनिरवयवत्व-मभिप्रेतं तन्निराकरोति **अत: सर्वेति** । तर्हि सृष्टिकारणस्य कस्यचित्परमाणो: किं लक्षणमित्याकाङ्क्षायामाह

**अविभाग इति** । यतः विभागो नास्ति स परमाणुरिति नयचन्द्रिका च भूतसूक्ष्माणामेव परमाणुपदवाच्यतामवगमयतीति मन्तव्यम् । अत्र कतिपये व्याचक्षाणाः न च विभिन्नावयवत्वस्य परमाणावसिध्या पुनरप्यसंभव इति वाच्यम् । उत्पत्तिविनाशवत्परमाणोः स्वावयवैर्भेदस्याश्रयणीयत्वात् । तस्मिन् सत्यप्यसत्त्वस्यैवावयवावयविभेदव्यवस्थापकतया सिद्धान्ते सम्मतत्वादिति समादधानास्त्रसरेणुषष्ठभागस्यैव तादृग्लक्षणद्वयलक्ष्यतामुपगच्छन्ति । अत्र गुरुपादाः ननु 'खण्डिते भेद ऐक्यं चे'त्युक्तेः कथमखण्डितावयविनां भूतसूक्ष्माणां स्वावयवैर्भेदाभेदाविति तन्मतदिशा द्वयोर्लक्षणयोर्लक्ष्यं सूक्ष्ममिति स्थितम् । यादुपत्यमते तत्र भिन्नावयवता कथमिति शङ्कमानाः गीतातात्पर्योदाहृतप्रमाणानुरोधेन यस्यामवयवावयविधारायां क्वचित्खण्डितत्वं तद्धारापतितानामवयवावयविनां भेदाभेदादिति व्याख्यानान्न भूतसूक्ष्माणां स्वावयवैर्भेदाभेदानुपपत्तिस्तद्धारापतितानां भूतसूक्ष्मावयवकानां नैयायिकपरमाणूनां स्वावयवेषु सत्स्वपि खण्डितत्वात् । आकाशावयविनस्तु न कदाचित्खण्डितत्वम् । न ह्यपरिच्छिन्नाकाशावयविनो महत्तत्त्वावच्छिन्नाकाशोऽवयवस्तस्यापि योऽहङ्कारतत्त्वावच्छिन्नाकाशोऽवयवस्तस्यापि बुद्धितत्त्वावच्छिन्नाकाशोऽवयवस्तस्यां धारायां न कदाचिदप्यवयवेषु सत्सु अवयविनः खण्डितत्वमुपलभ्यत इति न तत्र भेदाभेदाविति न कश्चिद्दोष इति यादवाचार्याणामाशयं प्रकाश्य तन्मतं प्रातिष्ठिपन् ।

सु० — नन्वेवमवयवपरम्पराविश्रान्त्यभावेऽनन्तावयवारब्धत्वाविशेषात्सर्षपमहीधरयोः परिमाणाविशेषः स्यात्। न च कारणसंख्याऽविशेषेऽपि तत्परिमाणप्रचयविशेषात्सर्षपमहीधरयोः परिमाणविशेष इति वाच्यम् । अवयवानन्त्यसाम्ये तयोरप्यनुपपत्तेरिति ।

उच्यते । किमयं प्रसङ्गः, उतानुमानम् ।

आद्ये ह्ययमर्थः । यदि सर्षपमहीधरावविश्रान्तावयवपरम्परौ स्यातां तदा अनन्तावयवारब्धौ प्रसज्येयाताम् । तथा च समपरिमाणौ भवेतामिति । तत्रोभयत्रापि व्याप्त्यभावः । यदविश्रान्तावयवपरम्परं तदनन्तावयवारब्धम् । यच्चैवं तत्तुल्यपरिमाणमिति । किन्नाम भवतोपलब्धम् । किञ्चावयवपरम्पराविश्रान्त्यभावे ते सर्वेऽपि संभूयानन्ताः स्युः । सर्षपमहीधरारंभकाणामानन्त्यं तु कुतः । अत एव द्वितीयप्रसङ्गस्यापादकासिद्धिः । एतेनावयवपरम्पराविश्रान्त्यभावे समसंख्यावयवारब्धत्वं ततश्चावयवपरिमाणादिविशेषाभावे परिमाणाविशेषः स्यादितीत्यपि परास्तम् । व्याप्त्यसिद्धेः । समसंख्यावयवारब्धत्वासिद्धेश्च ।

द्वितीये त्विदमुक्तं स्यात् । सर्षपमहीधरौ नानन्तावयवारब्धौ विसदृशपरिमाणत्वात् । विमतौ नाविश्रान्तावयवपरम्परौ अनन्तावयवानारब्धत्वादिति । आद्ये सिद्धसाधनम् ।

न हि सर्षपादेरवयवपरम्पराविश्रान्त्यभाववादिनाऽनन्तावयवारब्धत्वमङ्गीकृतम् । किन्तु संभूतानामनन्तत्वम् । तदभावसाधने मां प्रति दृष्टान्ताभावः । गुणादौ साधनाभावात् । द्वितीयस्य त्वप्रयोजकतेति ।

**शे० — तत्परिमाणेति ।** कारणपरिमाणप्रचयेत्यर्थः । भवेत्कारणपरिमाणप्रचयविशेषात्सर्षपमहीधरयोः परिमाणविशेषः । यदि सर्षपमहीधरारम्भकाणामवयवानां परिमाणप्रचयविशेषावुपपन्नौ स्याताम् । न च तौ परमते उपपद्येते । महीधरारम्भकावयवस्येव सर्षपारम्भकावयवानामप्यनन्तावयवारब्धत्वेन परिमाणस्य प्रचयस्य च अविशेषस्यैव प्रसक्तेरित्यभिप्रेत्य परिहरति **अवयवानन्त्यसाम्य इति ।** सर्षपमहीधरारम्भकावयवानामनन्तावयवारब्धत्वसाम्य इत्यर्थः । **तयोः** सर्षपमहीधरारम्भकावयवगतयोर्विशिष्टपरिमाणप्रचययोरपीत्यर्थः । यथाऽनन्तावयवारब्धत्वाविशेषात्सर्षपमहीधरयोः परिमाणाविशेषः प्रसञ्जितः । तथा तदुभयारम्भकावयवयोरप्यनन्तावयवारब्धत्वाविशेषेण परिमाणप्रचययोरप्यविशेषस्यैव प्रसञ्जयितुं शक्यत्वान्न तेन तदुपपत्तिरिति भावः । यद्वाऽवयवसङ्ख्यायां यत्र विशेषस्तत्रैवावयवगतपरिमाणप्रचयविशेषयोः परिमाणभेदप्रयोजकत्वेनावयवसङ्ख्यासाम्ये तयोरप्रयोजकत्वादवयवसंख्यासाम्यात्प्रकृते तत्परिमाणप्रचयविशेषयोर्न परिमाणभेदप्रयोजकत्वमित्याशयेनाह **अवयवेति ॥**

**उभयत्रापीति ।** उदाहृततर्कद्वयेऽपीत्यर्थः । कुतोऽत्र व्याप्त्यभाव इत्यतो व्याप्तिद्वयस्वरूपप्रदर्शनपूर्वकं व्याप्तिग्रहणस्थलस्य परं प्रत्यसिद्धेरित्याह **यदिति ।** प्रथमतर्केऽप्रयोजकत्वमप्याह **किञ्चेति ॥** **सर्षपमहीधरारम्भकाणामिति ।** साक्षात्तत्समवायिकारणानामित्यर्थः । **आनन्त्यं तु कुत इति ।** न कुतोऽपि किन्तु सर्षपारम्भकेषु बहुत्वं महीधरारम्भकेषु च बहुतरत्वमित्येवेति विशेषः । तथा चावयवपरम्परया आनन्त्येऽपि साक्षात्समवायिकारणानां बहुत्वबहुतरत्वकृतः परिमाणभेदो युक्तः । अत एव द्रव्यकिरणावलीप्रकाशकृताऽप्यनन्तावयवारब्धत्वाविशेषे कश्चित्तादृग्बहुतरावयवारब्धः कश्चित्तादृगल्पावयवारब्ध इत्यवान्तरसङ्ख्याभेदादेव परिमाणभेदः स्यादित्येव तात्पर्यं वर्णितमिति ध्येयम् । **अत एवेति ।** अवयवपरम्परया विश्रान्त्यभावे तेषां सर्वेषां सम्भूयानन्तत्वेनारम्भकानन्त्याभावादेवेत्यर्थः ॥ **द्वितीयप्रसङ्गस्येति ।** यद्यनन्तावयवारब्धौ स्यातां तर्हि समपरिमाणौ स्यातामिति प्रसङ्गस्येत्यर्थः ॥ **आपादकेति ।** अनन्तावयवारब्धत्वरूपेत्यर्थः । उक्तदूषणातिदेशेन तात्पर्यान्तरमपि परकीयमनूद्य दूषयति **एतेनेति ।** ननु समसङ्ख्यावयवारब्धत्वात्कारणसङ्ख्याऽविशेषेऽपि तत्परिमाणप्रचयभेदात्परिमाणभेदोपपत्तेरप्रयोजकत्वमित्यतोऽवयवसङ्ख्यावैषम्य एवावयवपरिमाणादिविशेषस्य परिमाणभेदकत्वान्न सङ्ख्यासाम्येऽ दिति भावेनोक्तम् **अवयवपरिमाणादिविशेषाभाव इति ।** एतेनेत्युक्तमेव विशदयति **व्याप्त्यसिद्धेरिति ।** यत् अविश्रान्तावयवपरम्परं तत् समसंख्यावयवारब्धं, यच्चैवंविधं तदविशिष्टपरि-

माणमिति व्याप्तेर्दृष्टान्ताभावेनासिद्धेरित्यर्थः ॥ **समेति** उक्तरीत्या गाक्षात्समवायिकारणेषु संख्यासाम्यस्याभावादिति भावः । ततश्च द्वितीयप्रसङ्गस्यापादकासिद्धिरिति भावः ।

**द्वितीय इति** । अनुमानमिति द्वितीय इत्यर्थः । सिद्धसाधनतामेवोपपादयति **न हीति** । साक्षात्सर्षपारम्भकाणां नानन्तत्वमङ्गीकृतमित्यर्थः । ननु च सम्भूय नन्तावयवारब्धत्वाभावस्यैव साधनान्न सिद्धसाधनमित्यत आह **तदभावेति** ॥ **दृष्टान्ताभाव इति** । विसदृशपरिमाणस्य द्रव्यस्य सम्भूयानन्तावयवारब्धस्यादर्शनादिति भावः । ननु च मास्तु तर्हि द्रव्यमत्र दृष्टान्तो गुणादिकं तु भविष्यतीत्यत आह **गुणादाविति** । तथा च साधनवैकल्यमिति भावः । न च सदृशपरिमाणशून्यत्वस्य तदर्थत्वान्न साधनवैकल्यमिति वाच्यम् । तथाऽपि प्रतिवादिरित्या तद्वैकल्यापरिहारात् । तेन गुणेऽपि गुणाङ्गीकारादिति भावः । एवं तदारम्भकाणां सम्भूया[नानाम]नन्तत्वात्साध्यवैकल्यमेवेत्यभिप्राय इत्याहुः ॥ **द्वितीयस्य त्विति** । विमतौ नाविश्रान्तावयवपरम्परावित्यादिद्वितीयानुमानस्येत्यर्थः । विपक्षे बाधकाभावादिति भावः ।

स० — **गुणादाविति** । न च सदृशपरिमाणशून्यत्वस्य हेत्वर्थत्वात् न गुणादौ साधनाभाव इति वाच्यम् तावतापि साध्यवैकल्यापरिहारात् ।

प० — मूलोक्तमुपलक्षणं मत्वा तर्कपराहतिमाशङ्क्य निराह **नन्वेवमित्यादिनैवमनेकमुदाहरणमित्यन्तेन** । अवयवेत्युक्याऽऽरंभकत्वभ्रान्त्या शङ्कत इति ध्येयम् ॥ **अवयवानन्त्येति** । सर्षपमहीधरजनकावयवानामानन्त्यसाम्ये इत्यर्थः ॥ **तयोरपीति** । सर्षपमहीधरावयवयोरपीत्यर्थः ॥ **तथा चेति** । अनन्तावयवारब्धत्व इत्यर्थः । **उभयत्रापि** तर्कद्वयेपि । व्याप्त्यभाव इत्युक्तं व्यनक्ति **यदविश्रान्तेति** । तदीयभ्रान्तिप्रकटनेनाद्यतर्के आपादकाप्रयोजकत्वं चाह **किञ्चेति** ॥ **कुत इति** । न ह्यस्माकमवयवपदेनारंभकममिमतम् । येन भ्रान्तस्त्वमेवमापादनं कुर्याः किंत्वनारंभकीभूतांशा एवारंभकावयवेभ्योऽन्ये एव विवक्षिताः । अत एवमापादनेऽप्रयोजकत्वमेव प्राप्नोतीति भावः । नन्वविभागरूपपरमाणुपर्यन्तमेवमारंभकत्वेपि परमाणुद्व्यणुकादिवस्त्वंशानां भवदभिमतावयवानामारंभकपरमाणुद्व्यणुकाद्यवयवत्वात् तद्द्वारा तेषामप्यनन्तानामारंभकत्वं प्राप्तमेवेति शङ्क्यम् । व्याप्त्यभावेनासंमतेः, आनन्त्ये तारतम्यसत्त्वाच्चेति ॥ **अत एवेति** । अवयवपदेनानारंभकांशानां विवक्षितत्वादेवेति वाऽऽद्यतर्केणारब्धत्वस्यालाभादेवेति वार्थः ॥ **द्वितीयेति** । तथा च समपरिमाणावित्युक्तद्वितीयप्रसंगस्यानन्तावयवारब्धत्वरूपापादकासिद्धिरित्यर्थः ॥ **एतेनेति** । व्याप्त्यभावादित्युक्तत्वेनेत्यर्थः । तदेव व्यनक्ति **व्याप्त्यसिद्धेरिति** । परमते तादृशवस्तुनोऽभावेन दृष्टान्ताभावादिति भावः ॥ **समसंख्येति** । पर्वतारम्भकावयवापेक्षया सर्षपारम्भकावयवानामल्पत्वेन संख्यातारतम्यसत्वादिति भावः ॥ **द्वितीये त्विति** । उक्तानुमानमितिपक्ष

इत्यर्थः ॥ **संभूतानामिति ।** मिलितानामित्यर्थः । नन्वनेनैव हेतुना सर्षपमहीधरौ न संभूतानन्तावयवाविति साध्यत इत्यत आह **तदभावेति ।** गुणकर्मादिस्तु दृष्टान्त इत्यत आह **गुणादाविति ॥ द्वितीयस्य स्थितिरिति ।** विमताविन्युक्तस्येत्यर्थः ।

**या० — अवयवानन्त्यसाम्य इति ।** सर्षपमहीधरावयवजनकेष्ववयवेष्वानन्त्यसाम्य इत्यर्थः । **तयोः** सर्षपमहीधरावयवगतयोरपीत्यर्थः । यथाऽनन्तावयवारब्धत्वविशेषात्सर्षपमहीधरयोः परिमाणाविशेष आपादितः, तथा तदुभयावयवेष्वपि आनन्त्यसाम्येऽनन्तावयवारब्धत्वाविशेषात् सर्षपमहीधरावयवेषु परिमाणप्रचययोरविशेष एव स्यान्न तु विशेष इत्यापादनात्तयोरप्यनुपपत्तिरिति भावः । यद्वाऽवयवसंख्यासाम्ये परिमाणप्रचयविशेषयोरपि परिमाणभेदप्रयोजकत्वानुपपत्तेरित्यर्थः । यत्र ह्यवयवसंख्यायां विशेषस्तत्रैव तयोः परिमाणभेदप्रयोजकत्वं न तत्साम्येऽपीति भावः । तर्के अप्रयोजकतामप्याह **किञ्चेति ॥ सर्षपमहीधरारम्भकाणामिति ।** साक्षात्तत्समवायिकारणानामित्यर्थः । आनन्त्यं कुत इत्यनन्तरं किन्तु सर्षपारम्भकेषु बहुत्वं महीधरारम्भकेषु बहुतरत्वमित्येवेति शेषः । तथा चावयवपरम्पराया आनन्त्येपि सर्षपमहीधरयोः साक्षात्समवायिकारणबहुत्वबहुतरत्वकृतः परिमाणभेदो भविष्यतीति भावः । उक्तं च वर्धमानेन 'अनन्तावयवारब्धत्वाविशेषेऽपि कश्चित्तादृग्बहुतरावयवारभ्यः कश्चित्तादृगल्पावयवारभ्य इत्यवान्तरसंख्याभेदादेव परिमाणभेदः स्या'दिति । दृष्टान्ताभावभीत्या यत्केनचित्समसंख्यावयवारब्धत्वमेव साध्यतया विवक्षितमित्युक्तं तदप्यनूद्य दूषयति **एतेनेति ॥ तनश्चेति ।** अवयवसंख्यावैषम्य एव ह्यवयवपरिमाणप्रचयविशेषयोः परिमाणभेदकतया कल्पनं दृष्टं न तत्संख्यासाम्येऽपीति भावः ॥ **व्याप्त्यसिद्धेरिति ।** परमतेऽवयवपरम्पराविश्रान्त्यभावस्याप्रसिद्धत्वादिति भावः ॥ **समसंख्येति ।** उक्तरीत्या साक्षात्समवायिकारणेषु संख्यासाम्यस्याप्यभावादिति भावः । सिद्धसाधनतामुपपादयति **न हीति ।** साक्षात्सर्षपारम्भकाणां नानन्तत्वमिति भावः । **अप्रयोजकतेति ।** संभूतावयवानामानन्त्येनावयवानामविश्रान्त्युपपत्तेरित्यर्थः ।

**श्री० — अविशेषः** कार्ये इति शेषः ॥ **व्याप्त्यसिद्धेरिति ।** द्वितीयतर्के हस्तचतुष्टयवितस्तिचतुष्टयारब्धे पटे परिमाणाविशेषाभावेन व्यभिचार इत्यर्थः । आरब्धत्वमङ्गीकृतमित्यत्रारब्धपदोपरि भारः ॥ **सम्भूतानामिति ।** आरम्भकाणां अनारम्भकाणां चावयवानां सम्भूतानामित्यर्थः । न तु जनकीभूतावयवानामेवानन्त्यमिति भावः । **तदभावेति ।** विमतौ सम्भूयाप्यानन्त्योपेतावयवौ न भवत इति साधने । **मां प्रति** सर्वत्राप्यवयवेषु सम्भूयानन्त्यमेवेत्यङ्गीकारिणं मां प्रति । गुणानां निरवयवत्वेनानन्तावयवारब्धत्वाभावेन दृष्टान्तत्वं भविष्यतीत्यत आह **गुणादाविति ।** गुणादेर्निर्गुणत्वेन तत्र विसदृशपरिमाणवत्त्वरूपसाधनाभावादित्यर्थः ।

च० — **अवयवानन्त्यसाम्ये** सर्षमहीधरारंभकावयवेष्वानन्त्यसाम्ये । **तयोः** तत्तदवयवगत-परिमाणप्रचयविशेषयोः । तथा चानन्तावयवारब्धत्वे उभयत्रापि अविश्रान्तावयवपरम्परत्वापादकानन्ता-वयवारब्धत्वापाद्यकत्वादृशारब्धत्वापादकसमपरिमाणत्वापाद्यकापत्तिद्वये निदर्शिताद्यप्रसङ्गे आपाद्यमन्तरे-णाप्यापादकसत्त्वोपपत्त्याऽप्रयोजकतामभिधत्ते **किञ्चेति** । तथा च तत्तत्समवायिकारणगतबहुत्वबहुतरत्व-कृतः परिमाणभेदः संपत्स्यत इति भावः । **आपादकसिद्धिः** अनन्तावयवत्वाभावसाधने । **द्वितीयस्य** विमतावित्युक्तस्य ।

सु० — **स्यादेतत् । सर्षपावयवपरंपराया निरवधिकत्वे मूर्तानां समानदेशत्वानुपपत्तौ सर्षपावयवैर्जगति व्याप्ते विश्वव्यापी सर्षपः स्यादिति महीधरस्यानवकाश एवेत्यापादनार्थ इति चेन्न । पार्थिवपरमाणूनामनन्तत्वेऽपि मूर्तान्तरावकाशदर्शनात् । सर्षपो यावन्तं देशमवष्टभ्य वर्तमानो दृश्यते तावत्येवानवधिकाया अपि तदवयवपरंपराया अवस्थानाच्च । अत एव हि आकाशादीनामप्यनवधिकामंशपरंपरामुपेत्य तत्र परिमाणापकर्षानन्त्यमुपपादितम् ।**

शे० — नन्वयवपरम्पराविश्रान्त्यभावेऽनन्तावयवारब्धत्वाविशेषात्सर्षपमहीधरयोः परिमाणा-विशेषः स्यादिति प्रसङ्ग एवाभ्युपगम्यते । न च तत्पक्षोक्तदोषः । सर्षपमहीधरयोः परिमाणाविशेषस्य यथाश्रुतस्यापाद्यतयाऽनभिमतत्वेन तदप्रसरादिति भावेन तदर्थमनुवदति **स्यादेतदिति** ॥ **मूर्ताना-मिति** । कृतव्युत्पादनमेतत् । सर्षपावयवानामनन्तत्वेन तैर्जगति व्याप्तेऽपि न महीधरस्य जगत्यनवकाशः प्रसज्यते । पार्थिवपरमाणूनामनन्तत्वेन तैर्जगति व्याप्तेऽपि मूर्तान्तरावकाशदर्शनात् । यदि च तेषा-मणुत्वेनाप्रतिघत्वान्न मूर्तान्तरावकाशविघातकत्वमिति मन्यसे तर्हि सर्षपावयवपरम्पराया अप्यणुत्वेन महीधरावकाशाविघातकत्वान्न तदनवकाशप्रसङ्गोऽपीत्याशयेन समाधत्ते **पार्थिवेति** । एवं सर्षपावयव-परम्पराया अनवधिकत्वेऽपि जगति व्याप्तिमङ्गीकृत्य महीधरस्यावकाशः समर्थितः । इदानीं त्वनधिक-त्वेऽपि सर्षपावयवपरम्परायास्तया जगति व्याप्तिरेवासिद्धेत्याह **सर्षप इति** । ननु सर्षपो यावति प्रदेशे वर्तमानो दृश्यते तस्य देशस्याल्पपरिमाणत्वात्तत्रैवाविश्रान्तसर्षपावयवपरम्पराया अवस्थानाङ्गीकारे मूर्तानां समानदेशत्वापत्तिर्दुर्वारेत्यतः तस्मिन्प्रदेशेऽप्यनवधिकपरिमाणापकर्षसद्भावान्नानुपपत्तिरित्याह **अत एवेति** । यावन्तं देशमवष्टभ्य सर्षपो वर्तमानो दृश्यते तावत्येव प्रदेशेऽनवधिकाया अवयवपरम्पराया अवस्थान-सम्भावनार्थत्वादेवेत्यर्थः । आदिपदेन कालादिपरिग्रहः । अन्यथा कालाकाशेश्वराणामनन्तापकृष्ट-परिमाणांशपरम्पराभावे सर्षपाद्यवयवपरम्पराया अनवधिकाया आधारनियामकयोरभावेनावस्थानमनुपपन्नं

स्यादिति भावः । नन्वेकस्मिन्प्रदेशेऽनवधिकापकर्षपरिमाणाभ्युपगमे विरोध इत्यत उक्तम् **अनवधिकांश-परम्परामुपेत्येति** । तत्तदंशपरम्पराया एवाल्पाल्पतराल्पतमपरिमाणाश्रयत्वान्न विरोध इति भावः ।

प० — **अत एव हीति** । अवयवी हि यावन्तं देशमवष्टभ्य वर्तमानो गम्यते तावति देशे तदवयवानामवस्थानाभ्युपगमादेवेत्यर्थः । यद्वाऽनन्तानां सर्षपाद्यवयवानामवस्थानार्थत्वादित्यर्थः । आकाशप्रकृत्यादिपरममहतामित्यर्थः । अथवाऽवयवपरंपरावत्त्वमारब्धत्वे प्रयोजकं नेत्यत्र ज्ञापकमाह **अत एव हीति** । प्रागुक्ततर्कानुमानयोरप्रयोजकत्वेनाविश्रातावयवपरंपरात्वस्यारब्धत्वासाधकत्वादेव आकाशकालप्रकृत्यादीनां नित्यानामप्यनवधिकांशपरंपरामुपेत्याणुत्वमुक्तम् । अन्यथाऽनादिनित्येषु कथमंशपरंपरामुपेयादित्यर्थः ॥

या० — **अत एवाकाशादीनामिति** । अनन्तसर्षपाद्यवयवावस्थानलक्षणप्रयोजनवशादेवेत्यर्थः । आदिपदेन कालेश्वरग्रहणम् । अन्यथा कालाकाशेश्वराणामनन्तापकृष्टपरिमाणकांशपरम्पराभावे सर्षपाद्यवयवपरम्पराया अनवधिकाया आधारनियमकयोरभावेनावस्थानमनुपपन्नं स्यादिति भावः ॥

श्री० — **यावन्तं देशमिति** । आकाशप्रदेशमित्यर्थः । तथा च सर्षपावयवैर्जगति व्याप्त इत्युक्तमसदिति भावः ॥

च० — **अत एव** सर्षपाधिष्ठानदेशे तदवयवावस्थानादेव ।

---

**सु० — ननु मा भूत्साक्षात्सर्षपमहीधरारंभकाणां समसंख्यत्वम्, तथाऽप्यवयवपरंपराया विश्रान्त्यभावे संभूतावयवानां समसंख्यत्वात्परिमाणभेदो न स्यादि(त्युच्यत इति)ति चेन्न । आनन्त्येऽपि तारतम्यसंभवात् । अनन्ता हि पार्थिवपरमाणवोऽनन्ताश्चान्त्यविशेषाः ॥ न च ते समसंख्याः । तथा मत्याप्यपरमाणुषु तदभावापातात् । तथा सर्वकल्पेषु संसारिणोऽनन्ताः । तथाऽप्यपवर्गवशात्तारतम्यमुपेयमेव । एवमनेकमुदाहरणमिति ।**

शे० — **नन्विति** । यद्यपि यदविश्रान्तावयवपरम्परं तत्सम्भूय समसंख्यावयवारब्धं यच्चैवंविधं तदविशिष्टपरिमाणमिति व्याप्त्यसिद्ध्या दूषितप्रायमेतत् । तथाऽप्यधिकं वक्तुं पुनराशङ्क्यमिति ध्येयम् । आद्ये तर्केऽप्रयोजकत्वं द्वितीये चापादकासिद्धिरिति भावेन परिहरति **आनन्त्येऽपीति** ॥ **अपवर्गवशादिति** । प्रतिकल्पमिति शेषः ॥ **तारतम्यमिति** । संसारिणामानन्त्य इति शेषः । पूर्वपूर्वकल्पीयसंसार्यानन्त्यापेक्षयोत्तरोत्तरकल्पीयतदानन्त्यस्यापकृष्टत्वात्तदानन्त्यं नैकप्रकारमिति भावः ॥ **एवमनेकमिति**। कल्पानां तदन्तर्गतवर्षाणां तदन्तर्गतमासानां तदन्तर्गतपक्षाणां तदन्तर्गतदिवसानां तदंतर्गतप्रहराणां-

तदन्तर्गतमुहूर्तानां तदन्तर्गतघटिकाक्षणलवादीनां चानन्त्येऽपि न तेषां साम्यमित्यनेकमुदाहरणमित्यर्थः । एतेनैव, 'सर्षपो यदि साक्षात्परंपरासाधारणमेर्वारम्भकान्यूनावयवारब्धः स्यात्तर्हि तावत्परिमाणाधिकरणं स्यादित्यत्रोक्तस्य तात्पर्यम् । यद्वाऽत्र मेरुपदं स्थूलपरं सर्षपपदं द्व्यणुकपरम् । ततश्च यदि द्व्यणुकं सावयवारब्धं स्यात्तर्हि महत्स्यादिति महत्त्वापत्तिरेवात्र तुल्यपरिमाणत्वापत्तिरभिमतेति नोक्तदोषः । यद्वा द्व्यणुकत्रसरेण्वोः सावयवावयवारब्धत्वेन तुल्यपरिमाणत्वापादनेऽस्य तात्पर्यम्' इति परेषां तात्पर्यवर्णनमपि निरस्तम् । तथा हि । तत्र न तावदाद्यः । तर्के ह्यापादकस्य पराभ्युपगमोऽपेक्षितः । न च मेरुसर्षपयोस्तुल्यावयवत्वं परो मन्यते । सर्षपस्य निरवध्यवयवपरम्परायाः स्वल्पसंख्याका एव साक्षादवयवा मेरोस्तु तादृशा बहुसंख्याका अवयवा इति तेनाङ्गीकारात् । तथा चापादकासिद्धिप्रसङ्गः । न द्वितीयः । द्व्यणुकेऽपि महत्त्वस्य 'महत्त्वं च परमाणावणावपी'त्यादिनोपपादितत्वेनेष्टापादनत्वात् । न तृतीयः । सावयवावयवारब्धानामपि घटपटादीनां तुल्यपरिमाणत्वाभावेन तर्कस्य मूलशैथिल्यात् । न च महत्त्वे तुल्यत्वमापाद्यतया विवक्षितम् तच्च घटपटादीनामस्त्येवेति न व्यभिचार इति वाच्यम् । तथा सति द्व्यणुकत्र्यणुकयोरपि महत्त्वेन तौल्यस्योपपादितत्वेनेष्टापादनत्वात् । न चैवं तत्प्रत्यक्षापत्तिः । प्रत्यक्षत्वाप्रत्यक्षत्वयोरिन्द्रियपाटवापाटवादिनिमित्तताया उपपादितत्वेन महत्त्वामहत्त्वनिमित्तत्वासिद्धेः । अन्यथा मन्दलोचनस्यापि त्र्यणुकप्रत्यक्षप्रसङ्गादिति दिक् ।

---

स० — **आनन्त्येपि तारतम्यसंभवादिति** । यत्रानन्त्यं तत्र समसंख्यत्वमिति व्याप्त्यभावेन समसंख्यत्वरूपापादकस्यैव सिध्द्या न तेन समपरिमाणत्वापादनं उपपन्नमित्युक्तं भवति ।

प० — **साक्षात्सर्षपमहीधरारंभकाणामिति** । परमाणुद्व्यणुकादिरूपाणामित्यर्थः ॥ **अवयवेति** । परमाण्वादिगतावयवपरंपराया इत्यर्थः ॥ **अपवर्गवशादिति** । मोक्षवशादित्यर्थः । मुक्तानामानन्त्यं संसारिणामप्यानन्त्यमस्ति प्रत्येकं तदुभयानान्त्यापेक्षया मिलिततदुभयानन्त्यमधिकमित्येवमादिरूपेणानन्त्यतारतम्यमित्यर्थः ॥ **एवमनेकमिति** । दिनपक्षमाससंवत्सराद्यानन्त्यं सप्तसमुद्रेष्वेकैकसमुद्रसैकतानन्त्यमप्युदाहरणं ध्येयमित्यर्थः ॥

## सुरेशोक्तपरिमाणासमवायिकारणप्रक्रियाखण्डनम् ॥

या० — **उपेयमेवेति** । संसारिणामानन्त्य इति शेषः । पूर्वपूर्वकल्पेषु यावन्तः संसारिणस्तावन्तो नोत्तरोत्तरकल्पेषु सन्ति । प्रतिकल्पं बहूनामपवर्गसद्भावात् । तथा च तदानन्त्ये तारतम्यमुपेयमेवेति भावः ॥ **एवमनेकमिति** । अनन्ता कल्पा अनन्ता वत्सरा अनन्ताश्च मासादयः । न च तेष्वानन्त्यं सममित्याद्यनेकमित्यर्थः । अत्र केचिन्नवीनाः । सर्षपो यदि साक्षात्परम्परासाधारणमेर्वारम्भकान्यूनावय-

वारभ्यः स्यात्तर्ह्येतत्परिमाणाधिकपरिमाणः स्यादित्यत्रोक्ततर्कस्य तात्पर्यमित्याहुः । तत्तुच्छम् । सक्षात्सर्षपारम्भकाणां साक्षान्मेर्वारम्भकावयवापेक्षया न्यूनत्वेनापादकासिद्धेः। वर्धमानस्तु मेरुपदं स्थूलपरं, सर्षपपदं च द्व्यणुकपरं, तेन यदि द्व्यणुकं सावयवावयवारब्धं स्यात् तदा महत्त्स्यादिति महत्त्वापत्तिरेव तुल्यपरिमाणत्वापत्तिः । यद्वा द्व्यणुकत्रसरेण्वोः सावयवावयवारभ्यत्वे तुल्यपरिमाणापादने तात्पर्यमित्याह । तदपि मन्दम् । आद्ये पक्षे द्व्यणुकेऽपि महत्त्वस्योपपादितत्वेनेष्टापत्तेः । द्वितीये तु सावयवावयवारब्धानां घटपटादीनां तुल्यपरिमाणत्वाभावेन व्यभिचारात् । महत्त्वेन तुल्यतापादने त्विष्टापत्तेरिति ॥

**श्री० — सम्भूतावयवानामिति** । साक्षात्सर्षपारम्भकावयवास्तदनारम्भकाश्चावयवाः सम्भूयानन्ताः । एवं साक्षान्महीधरारम्भकावयवास्तदनारम्भकाश्चावयवाः सम्भूयानन्ता इत्यर्थः ॥ **आनन्त्येऽपीति** । सर्षपारम्भकावयवानां तदनारम्भकावयवानां च सम्भूयानन्त्ये महीधरारम्भकाणां तदनारम्भकाणां च सम्भूयानन्त्येऽपीत्यर्थः ॥ **तथा सतीति** । विशेषानन्त्यपार्थिवपरमाण्वानन्त्ययोर्यदि साम्यं तर्हि तेषां विशेषाणां पर्थिवपरमाणुष्वेवसत्त्वप्राप्त्या इतरत्र तदभाव एव स्यादित्यर्थः ।

**च० — उदाहरणमिति** । कल्पानन्त्यवत्सरानन्त्यमासानन्त्यादिकमित्यर्थः ।

**सूत्रघटकपदाभिहितपरिमाणसमवायिकारणप्रक्रियानिराक्रियामीमा ॥**

---

**सु० — यदेतत्सूत्रकृता परिमाणासमवायिकारणविषये दूषणमुक्तम् । तदुपलक्षणमात्रम् । अन्यत्राप्यसमवायिकारणे स्वयं दूषणान्यूहनीयानीत्याशयवान्द्रव्यासमवायिकारणसंयोगविषये अन्यथाप्रतिपत्तिं निराकरोति** तत्संयोगादिति ।

**अनु० —** तत्संयोगादनियतात्पदार्थानां जनिर्भवेत् ॥

**अवयवसंयोगो द्रव्यासमवायिकारणमिति वदन्तोऽपि वैशेषिकादयः परमाणुकार्योत्पत्तौ द्वयोरेव सजातीययोरेव परमाण्वोरेव संयोग(स्यासमवायिका)स्य कारणत्वमित्याद्याचक्षते । तदश्रद्धेयम् किन्नाम तेषां कारणानामनियतादुक्तनियमरहितात्संयोगात्पदार्थानां द्रव्याणां जनिर्भवेत् । किञ्चित्कार्यं द्वयोः परमाण्वोः संयोगादुपजायते । तद्द्व्यणुकमुच्यते । कदाचित् त्रयाणां तत्त्र्यणुकं चतुर्भिः परमाणुभिरारब्धं च(तच्च)तुरणुकम् । एवमन्यदपि । तथा किञ्चित्सजातीययोः परमाण्वोः संयोगात्किञ्चिद्विजातीययोः । एवं किञ्चित्परमाण्वोरेव संयोगात्किञ्चित्परमाणुद्व्यणुकयोरित्यादि । एवं द्व्यणुककार्योत्पत्तावप्यनियमो द्रष्टव्यः ।**

**शे० —** 'तत्संयोगादनियतादि'त्युत्तरभाष्यानर्थक्यमाशङ्क्य द्रव्यासमवायिकारणनिराकरणार्थत्वान्न तदिति भावेन तथा सत्युत्सूत्रार्थप्रतिपादकत्वेनाभाष्यत्वप्रसङ्ग इत्यतस्तच्छङ्कानिराकरणपूर्वकं द्रव्यासमवायि-

कारणनिरकरणपरतयोत्तरग्रन्थं सङ्गमयति **यदेतदित्यादिना** । इत्यादीत्यादिपदेन द्व्यणुकादिकार्यभूतत्र्यणुकाद्युत्पत्तावपि पराभिमतस्य त्रयाणामेव सजातीयानामेव द्व्यणुकानामेव संयोगस्य कारणत्वमित्यादेः संग्रहः । अत एवैवं द्व्यणुककार्योत्पत्तावप्यनियमो द्रष्टव्य इत्युत्तरत्र ग्रन्थकृद्वक्ष्यतीति ध्येयम् ॥ **उक्तनियमरहितादिति** द्वयोरेवेत्यादिनियमरहितादित्यर्थः । तत्कथमित्यतो द्वयोरित्यंशेऽनियममुपदर्शयति **किञ्चिदिति।** सजातीययोरित्यंशेऽपि तमुपदर्शयति **तथेति** । परमाण्वोरेवेत्यंशेऽपि तमुपदर्शयति **एवमिति** ।

**प० — अन्यथाप्रतिपत्तिं** द्व्यणुकादिकार्ये विषयवैपरीत्येनाङ्गीकारमित्यर्थः ॥ **परमाणुकार्येति** । परमाणुतः कार्योत्पत्तावित्यर्थः ॥ **इत्यादीति** । त्र्यणुकोत्पत्तौ त्रिभिरेव द्व्यणुकैः सजातीयैरेवेत्यादिग्रहः । एवं परिष्कृत्य मूलं योजयति **तेषामित्यादिना** ।

**या० — इत्याद्याचक्षत इति** । अत्रादिपदेन त्र्यणुकाद्युत्पत्तावपि तदुक्तनियमसंग्रहः ॥

**श्री० — त्रयाणामिति** । त्रयाणां परमाणूनां संयोगाज्जातमित्यर्थः ॥ **एवमन्यदपीति** । चतुर्णां परमाणूनां संयोगाज्जातं चतुरणुकमित्यर्थः ।

**च० — अन्यथाप्रतिपत्तिं** द्वयोरेवेत्यादिनाऽभिधास्यमानाम् ।

---

**सु० — कुत इति चेत् उक्तनियमे प्रमाणाभावादित्याह** द्वयोरेवेति ।

**अनु० —** द्वयोरेव तु संयोग इति केनावसीयते ॥

**तुशब्दो विशेषार्थः । तेन सजातीययोः परमाण्वोरिति नियमो लभ्यते ।** संयोगः **आदिकार्यस्यासमवायिकारणमिति शेषः ।** केन **प्रमाणेनेत्याक्षेपे । उपलक्षणमेतत् । त्रयाणामेव द्व्यणुकानामित्यपि द्रष्टव्यम् । ननु सावयवस्यानेकसंयोगः संभवति । परमाणुस्तु निरवयव इति द्वयोरेवेति नियमसिद्धिरित्युक्तोत्तरम् । निरवयवत्वे द्वयोरपि संयोगो न संभवति । संयोगस्यांशवृत्तित्वात् ।**

**शे० —** 'तत्संयोगादि'ति भाष्येणैव द्रव्यासमवायिकारणसंयोगविषयेऽन्यथाप्रतिपत्तिनिराससिद्धेः किं 'द्वयोरेवे'त्युत्तरग्रन्थेनेत्याशङ्क्य प्रमाणाभावेन प्रागुक्तानियमोपपादनार्थत्वान्न तदिति भावेन (तत्परतयो,तथोत्तरवाक्यं योजयितुं तदनुपपत्तिशङ्कामुत्थापयति **कुत इतीति** ॥ **उक्तेति** । द्वयोरेवेत्याद्युक्तेत्यर्थः । भाष्ये 'द्वयोरेव तु संयोग' इत्येनेन प्रामाणाभावेन द्वयोरेवेति नियमनिराकारणेऽपि सजातीययोरेव परमाण्वोरेवेति नियमद्वयस्यानिरासान्नानेन परोक्तनियमभङ्गसिद्धिरित्यतोऽत्र भाष्ये तुशब्देन सजातीययोरित्याद्युक्तनियमद्वयलाभान्नानुपपत्तिरिति भावेन तुशब्दबलेनोक्तनियमद्वयलाभमु-

पपादयितुं तदनुकूलतया तुशब्दार्थमाह **तुशब्द इति** । साकङ्क्षत्वप्रयुक्तवाक्याभासत्वपरिहारायापेक्षितं पूरयति **कार्यस्येत्यादि** ॥ **आक्षेप इति** । परिहाराभावेन प्रश्नार्थत्वासम्भवादिति भावः । द्व्यणुककार्योत्पत्तौ प्रमाणाभावेन पराभिमतनियमभङ्गस्य मूलारूढतासिद्ध्यर्थमाह **उपलक्षणमिति** ॥ **ननु सावयवस्येति** । तत्रावयवभेदेन तत्संयोगोपपत्त्याऽनेकसंयोगाङ्गीकारे मूर्तानां समानदेशत्वापत्तेरभावादित्यर्थः । **परमाणुस्त्विति** । तस्य निरवयवत्वेन तत्तदवयवभेदेन तत्तत्संयोगानुपपत्त्याऽनेकसंयोगाङ्गीकारे मूर्तानां समानदेशताप्रसङ्गात्तद्रूपबाधकेन निरवयवस्य परमाणोरनेकसंयोगानुपपत्तावपि द्वयोः परमाण्वोः संयोगाङ्गीकारे मूर्तानां सामानाधिकरण्यप्रसङ्गादुक्तबाधकभावेन निरवयवेऽपि तत्सम्भवान्नद्वयोः संयोगानुपपत्तिरिति भावः ॥ **उक्तोत्तरमिति** । उक्तप्रायोत्तरमित्यर्थः । एतदेव दर्शयति **निरवयवत्व इति** । तत्र हेतुमाह **संयोगस्येति** । यो यत्संयोगः स तदंशवृत्तिरिति व्याप्तेरित्यर्थः । तथा च द्वयोरपि संयोगोपपादकतया परमाणोः सावयवताया आवश्यकत्वात्तत एवानेकसंयोगपक्षेऽपि मूर्तानां समानदेशत्वाप्रसङ्गान्न द्वयोरेवेति नियमसिद्धिरिति भावः ।

प० — **उक्तोत्तरमिति** । परमाणोरपि सावयवत्वसमर्थनेनोक्तपरिहारमेतच्चोद्यमित्यर्थः । दोषान्तरं चाह **निरवयत्व इति** ।

या० — **उक्तोत्तरमिति** । परमाणोरपि सावयवत्वस्योक्तत्वादित्यर्थः ।

श्री० — **उक्तोत्तरमिति** । परमाणोरपि सावयवत्वस्य साधितत्वादिति भावः । दूषणान्तरमाह **निरवयवत्व एति** ।

च० — **उक्तोत्तरम्** परमाणोरपि सावयवत्वादित्यानुपूर्वीकम् ।

**सु० — ननु सजातीयसंयोग एवारंभक इति नियमो न निष्प्रमाणकः । परमाणुकार्ये गन्धाद्युत्पत्तेरेव तत्र प्रमाणत्वात् । तथा हि । पार्थिवाप्यपरमाणुभ्यां यद्येकं कार्यमुत्पद्यते तदा तदगन्धमस्नेहमापद्येत । पार्थिवतैजसाभ्यामुत्पन्नमगन्धरूपमुत्पद्येत । एकस्य गन्धादेरनारंभकत्वात् । अतो गन्धाद्युत्पत्त्यैव सजातीयसंयोगस्यारंभकत्वसिद्धिरित्यत आह** कारणस्येति ।

अनु० — कारणस्य गुणास्तेन भवेयुः कार्यगा अपि ॥

तेनेति । **द्वयोरेवेति नियमाभावेनेत्यर्थः । स्यादेतद्विजातीयारंभकत्वे बाधकम् । यदि द्वयोरेव परमाण्वोः संयोगः कार्यारंभक इति नियमः प्रमाणवान्स्यात् । न चैवम् । तथा च बहूनां परमाणूनां विजातीयानां संयोगात्कार्यारंभे कारणगता गन्धादयो गुणाः (सद्वितीयाः) सजातीयाः सन्तः** (कार्यगाः) **कार्यगतगन्धाद्यारंभका अपि भवेयुः, को दोषः ।**

शे०— **कार्यमिति** । द्व्यणुकमित्यर्थः । ननु द्व्यणुकं यदि पार्थिवजलपरमाण्वारब्धं स्यात्तर्हि निर्गन्धं स्यादित्यत्र पार्थिवपरमाणुजलपरमाण्वारब्धस्य द्व्यणुकस्य पक्षत्वेन विवक्षायामाश्रयासिद्धिः । तन्मते तादृशद्व्यणुकस्याभावात् । पार्थिवपरमाणुद्वयारब्धस्य द्व्यणुकपदेन विवक्षायां चापादकासिद्धिः । तत्र जलारब्धत्वस्यानभ्युपगमात् । किञ्च गन्धवदजन्यत्वमत्रोपाधिः । न च घटजन्ये रूपादौ व्यभिचारेण यत्र निर्गन्धत्वं तत्र गन्धवदजन्यत्वमिति व्याप्तिविरहान्न साध्यव्यापकत्वमस्येति वाच्यम् । शुद्धसाध्यव्यापकत्वाभावेऽपि द्व्यणुकत्वे सति यत्र निर्गन्धत्वं जलद्वयारब्धद्व्यणुकादौ तत्र गन्धवदजन्यत्वसत्त्वेन पक्षधर्मावच्छिन्नापाद्यव्यापकतया पार्थिवद्व्यणुके जलारब्धत्वसंदेहेन सन्दिग्धापादकाव्यापकतया चोपाधित्वसम्भवादित्यत आह **एकस्य गन्धादेरिति** । गन्धाद्यन्तरासहकृतस्येत्यर्थः । तत्रारम्भकस्य पार्थिवपरमाणुगतस्य गन्धस्य गन्धान्तरासहकृतत्वात् । तादृशाप्यपरमाणुगतस्नेहस्य च स्नेहान्तरासहकृतत्वात् । पार्थिवतैजसाभ्यामारब्धे चारम्भकपार्थिवपमाणुगतगन्धरसयोः गन्धाद्यन्तरासहकृतत्वान्नारम्भकत्वमित्यर्थः ।

अयं भावः । पार्थिवद्व्यणुकत्व द्व्यणुकमात्रवृत्तित्वे सति यदि आप्योपादेयवृत्तिः स्यात्तर्हि निर्गन्धमात्रवृत्तिः स्यादिति विपक्षे बाधकतर्कबलेन हेतोः साध्यव्याप्यतयोपाधेः साध्याव्यापकत्वम् । अत्र च सत्तादौ व्यभिचारवारणाय सत्यन्तम् । पार्थिवपरमाणुद्वयारब्धद्व्यणुकमात्रवृत्तिधर्मे व्यभिचारं वारयितुमाप्योपादेयवृत्तीति विशेष्यभागः । आपाद्ये मात्रपदमिष्टापत्तिवारणाय । विजातीयारब्धे परेण निर्गन्धत्वाभ्युपगमात् । ननु पार्थिवाप्यद्व्यणुकवृत्तिसंयोगद्वित्वादौ व्यभिचारः । न च-अतो गुणान्यत्वे सतीत्यापादके विशेषणमभिमतं न तत्र व्यभिचार इति वाच्यम् । द्व्यणुकत्वादौ तदुभयद्व्यणुकान्यतरत्वादौ च तथाऽपि व्यभिचारादिति चेत् । अत्र केचित् । द्व्यणुकपदस्यात्र पृथिवीसमवायिकारणकपरतया पृथिवीसमवायिकारणकमात्रवृत्तित्वे सतीति सत्यन्तार्थलाभात् । पार्थिवाप्यद्व्यणुकवृत्तिसंयोगादेर्द्व्यणुकादेश्चाप्यसमवायिकारणकद्व्यणुकवृत्तित्वेन पृथिवीसमवायिकारणकमात्रवृत्तित्वाभावान्न व्यभिचारः । न चैवं दृष्टान्तालाभः । पृथिवीजलद्व्यणुकसमवायिकारणकसंयोगवृत्तितत्संयोगत्वादेस्तथात्वादित्याहुः । तन्न । पृथिवीजलद्व्यणुकसमवायिकारणकसंयोगपार्थिवद्व्यणुकान्यतरत्वे तथाऽपि व्यभिचारतादवस्थ्यात् । वस्तुतस्तु निर्गन्धमात्रवृत्तीत्यनन्तरं वृत्तिपदपूरणेन निर्गन्धमात्रवृत्तिवृत्तित्वस्यैवापाद्यत्वस्थितेर्नोक्तव्यभिचारः । द्व्यणुकत्वादेरपि निर्गन्धमात्रवृत्तिजलद्व्यणुकादिवृत्तित्वात् । न चैवं सत्तादावप्यापाद्यसत्त्वेन व्यभिचाराभावात्सत्यन्तवैयर्थ्यं स्यादिति वाच्यम् । पृथिवीजलद्व्यणुकोपादेयसंयोगवृत्तितत्संयोगत्वादौ व्यभिचारवारकत्वात् । न चैवमपि मात्रपदवैयर्थ्यम् । पार्थिवद्व्यणुकपूर्वोक्ततत्संयोगान्यतरत्वे व्यभिचारवारकत्वादिति सङ्क्षेपः ।

**तथा च बहूनामिति ।** ननु बहूनां परमाणूनां विजातीयानां संयोगात्कार्यारम्भे कारणगत-गन्धादेः सद्वितीयत्वं न सम्भवति । पार्थिवाप्यतैजसपरमाण्वारब्धे कारणगतगन्धस्नेहयोः, पार्थिवतैजसवायवीयपरमाण्वारब्धे च पृथिवीगतगन्धरसयोर्गन्धाद्यन्तरसहकृतत्वालाभात्कथं तत्कार्यगतगन्धाद्यारम्भकत्वमिति चेन्न । यत्र च पार्थिव एक आप्यश्चैकस्तैजसोऽप्येक एवेति वा यत्र पार्थिव एकस्तैजसोऽप्येको वायवीयश्चैक एवेति वा विजातीयानां पार्थिवाप्यतैजसपरमाणूनामथवा पार्थिवतैजसवायवीयानां वा संयोगात्कार्यारम्भस्तत्र कारणगतगन्धस्नेहरसानां गन्धाद्यन्तरासहकृतत्वेन सद्वितीयत्वासम्भवेऽपि यत्र पार्थिवौ द्वावाप्यौ च द्वौ तैजसस्त्वेक इत्येवं बहूनां विजातीयानां पार्थिवादिपरमाणूनां संयोगात्कार्यारम्भस्तत्र कारणगतगन्धस्नेहरसानां गन्धाद्यन्तरसहकृतत्वेन सद्वितीयत्वलाभात्कार्यगतगन्धाद्यारम्भकत्वस्य नानुपपत्तिरित्यभिप्रायेणैतद्ग्रन्थप्रवृत्तेः । यत्र च पार्थिव एक एवेत्याद्युक्तरीत्या विजातीयानां संयोगात्कार्यारम्भस्तत्रैककस्यापि गन्धादेरारम्भकत्वे बाधकाभावादित्यादिरूपेण 'नन्वनियमवादिने'त्यादिशङ्कासमाधानरूपेण न्यायेनैव कार्यगतगन्धाद्यारम्भकत्वोपपत्तेर्नानुपपत्तिप्रसङ्ग इत्याशयः ।

**प०**—तेनेतिमूलोक्ततात्पर्यं व्यनक्ति **स्यादेतदित्यादिना ॥ तथा चेति ।** द्वयोरेवेति नियमस्याप्रामाणिकत्वे सतीत्यर्थः । फलितमाह **बहूनामिति ।** एकैकस्यानेकस्य वाऽऽप्यादिपरमाणोरपीति योज्यम् । **विजातीयानां** पार्थिवादीनामित्यर्थ । मूलपदानि योजयति **कारणगता इति ।**

---

**या०— तथा च बहूनामिति ।** सजातीयानामिति शेषः । अत एव सद्वितीयाः सन्त इति वक्ष्यमाणमुपपद्यत इति ध्येयम् ।

**श्री०— तदिति ।** कार्यमित्यर्थः ॥ **अगन्धमस्नेहमिति ।** पार्थिवपरमाणुजन्यत्वात्तस्मिन्कार्ये गन्धेन भाव्यम् । आप्यपरमाणुजन्यत्वात्स्नेहेन भाव्यम् । तथा चाप्यपरमाणुजन्यत्वात्तत्कार्यमगन्धमापद्येत कारणीभूताप्यपरमाण्वादौ गन्धाभावात् । पार्थिवपरमाणुजन्यत्वात्तत्कार्यमस्नेहमापद्येत । तत्कारणीभूतपार्थिवपरमाण्वादौ स्नेहाभावादित्यर्थः । **अगन्धमरूपमिति । अरूपम्** अपाकजरूपरहितम् । पार्थिवपरमाणुजन्यत्वात्तस्मिन्कार्ये गन्धेन भाव्यम् । तैजसपरमाणुजन्यत्वादपाकजरूपेण भाव्यम् । तथा च तैजसपरमाणुजन्यत्वात्तत्कार्यमगन्धमापद्येत । कारणीभूततैजसपरमाणौ गन्धाभावात् । पार्थिवपरमाणुजन्यत्वात्तत्कार्यमपाकजरूपाभाववदापद्येत । तत्कारणीभूतपार्थिवपरमाणावपाकजरूपाभावादित्यर्थः । **एकस्येति ।** समवायिकारणीभूतैकपरमाणुनिष्ठस्यैकस्य गन्धस्येत्यर्थः ।

सु० — नन्वनियमवादिना द्व्यसंयोगस्यारंभकत्वं तावदिष्यते । तत्र विजातीययोरारंभकत्वे कार्ये गन्धाद्यनुत्पत्तिः प्रसज्यत इति चेन्न । एकैकस्यापि गन्धादेरारंभकत्वे बाधकाभावात् । अपेक्षणीयान्तराभावात्सन्ततोत्पत्तिप्रसङ्गो बाधक इति चेन्न । कार्यद्रव्योत्पत्तेरपेक्षणीयत्वात् । समवायिकारणाभावे कार्यानुत्पादात् । अन्यथाऽनेकगन्धाद्यभ्युपगमेऽपि समानो दोषः । तदिदमुक्तं कार्यगा इति ।

एतच्च परमतरीत्योक्तम् । वस्तुतस्तु यतः कारणान्येव कार्याकारेणोत्पद्यन्ते तेन कारणगुणा एव कार्यगा भवेयुः । ततश्च विजातीयारंभकत्वे को दोषः । एवं तर्हि पृथिवीत्वादिजातिसङ्करः स्यादिति चेत् । ततः किम् । व्यवहारविलोपः स्यादिति चेन्न । 'वैशेष्यात्तु तद्वाद' इति परिहरिष्यमाणत्वात् । तथाऽपि सम्प्रतिपन्नसजातीयारब्धकार्यदृष्टान्तेन विप्रतिपन्नानामपि सजातीयारब्धत्वमनुमास्यत इति चेन्न । विजातीयारंभकत्वस्य साक्ष्यादिप्रमाणसिद्धत्वेन बाधात् ।

शे० — यद्यप्येवमुक्तरीत्या बहूनां विजातीयानां संयोगात्कार्यारम्भस्थले एव कार्ये गन्धाद्यनुत्पत्तिप्रसञ्जनमेव संभवतीति तदेवाशङ्कनीयम् इति तत्परित्यागेन द्व्यसंयोगात् कार्यारम्भस्थले तदनुत्पत्तिप्रसञ्जनपर्यन्तं धावनमनर्थकमित्याभाति । तथाऽपि स्थलान्तरे तद्व्युत्पादनेनार्थतोऽभिप्रेतस्यापि सिद्धिमभिप्रेत्य वा परेण तत्रैव विजातीययोरारम्भकत्वे गन्धाद्यनुत्पत्तिप्रसङ्गस्य व्युत्पादितत्वाद्वा स्वयमपि तत्रैव गन्धाद्यनुत्पत्तिप्रसङ्गमुत्थापयति **नन्विति** । द्व्यसंयोगस्यापि हेतुतामुपपादयितुमनियमवादिनेत्यनियमवादित्वादेवेति हेतुगर्भविशेषणम् । अन्यथा एतदंशे नियमवादित्वप्रसक्त्याऽनियमवादित्वभङ्गप्रसक्तेरिति भाव ॥ **अनुत्पत्तिः प्रसज्यत इति** । एकैकस्य गन्धादेरनारम्भकत्वादिति भावः । समवायिकारणाभावान्न सन्ततकार्योत्पत्तिप्रसङ्ग इत्यभिप्रेत्य गूढाभिसन्धिरुत्तरमाह **एकैकस्यापीति** । तथा च न गन्धाद्यनुत्पत्तिप्रसङ्गेन सजातीययोरेवारम्भकत्वमिति नियमसिद्धिरिति भावः । आशयमविद्वान्पूर्वपक्षी स्वाशयमुद्घाटयति **अपेक्षणीयान्तराभावादिति** । सिद्धान्ती स्वाशयमुद्घाटयति **कार्यद्रव्योत्पत्तेरिति** । तदुत्पत्त्यपेक्षामुपपादयति **समवायिकारणाभाव इति** । उत्पाद्यस्य गन्धादेर्यत्समवायिकारणं द्व्यणुकादि, तदनुत्पत्तौ तदभावादेव परमाणुगन्धादि न तत्र गन्धादिकमारभत इत्यर्थः । कार्ये गन्धाद्युत्पत्तेः कार्योत्पत्त्यपेक्षत्वं परेणाप्यवश्यं वाच्यम् । अन्यथा गन्धाद्यन्तरासहकृतस्य गन्धादेर्गन्धाद्यारम्भकत्ववादिमत इव तत्सहकृतस्य गन्धादेस्तदारम्भकत्ववादिमतेऽप्यपेक्षणीयान्तराभावात्परमाणुद्वयगतगन्धादिद्वयस्य गन्धाद्यारम्भकत्वसंभवेन सन्ततोत्पादप्रसङ्गस्यावर्जनीयत्वादित्याह **अन्यथेति** । तथा च गन्धादिद्वयस्यारम्भ-

कत्ववादिना कार्ये गन्धाद्युत्पत्तेः कार्योत्पत्त्यपेक्षत्वात्तदभावेन न सन्ततोत्पादप्रसङ्ग इत्येव समाधानं वाच्यम् । तच्चैकैकस्यैव गन्धादेरारम्भकत्वपक्षेऽपि तुल्यमेव । इयांस्तु विशेषः । समवायिकारणीभूतद्व्यणुकस्याभावस्तव सजातीयसंयोगाभावप्रयुक्तः, मम तु विजातीयसंयोगाभावप्रयुक्त इतीति द्रष्टव्यम् । कार्ये गन्धाद्युत्पत्तेः कार्योत्पत्त्यपेक्षत्वकल्पनमपि नौन्मूलमित्याह **तदिदमुक्तमिति** । अनेन कार्यगा इत्येतत्कार्योत्पत्त्यपेक्षिण इति व्याख्यातं भवति ।

कारणगतस्य गन्धादेः कार्यगतगन्धाद्यारम्भकत्ववर्णनस्य सिद्धान्तविरोधमाशङ्क्य परिहरति **एतच्चेति** । ततश्च कारणगतगन्धादेः कार्यगतगन्धाद्यारंभकत्वाभावादेव न सन्ततकार्योत्पत्तिप्रसङ्ग इति भावः ॥ **एवं तर्हीति** । विजातीयानामप्येककार्यारंभकत्व इत्यर्थः । द्व्यणुस्य पार्थिवपरमाण्वारब्धत्वेन गन्धवत्त्वाद्गन्धवत्त्वस्य च पृथिवीत्वव्यवस्थापकत्वात् द्व्यणुकस्य पृथिवीत्वं वाच्यम् । तथाऽऽप्यपरमाण्वारब्धत्वेन सांसिद्धिकद्रवत्वादिप्रसंङ्गात्तस्य च आप्यत्वव्यवस्थापकत्वात्तस्याप्यत्वमपि वाच्यम् । तथा च पृथिवीत्वादिजातिसङ्करः । पृथिवीत्वजलत्वयोः परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशादिति भावः । इष्टापत्त्या समाधत्ते **ततः किमिति** । पृथिवीत्वादिजातिसङ्करो न स्वरूपेणानिष्टस्तदुन्नेयदोषाभावान्न तदुन्नायकोऽपीति भावः । स्वरूपेणानिष्टत्वाभावेऽप्यनिष्टान्तरापादकत्वादनिष्टत्वमेवेति नेष्टापत्तिरिति शङ्कते **व्यवहारेति** । पार्थिवं द्व्यणुकमाप्यं द्व्यणुकमित्यादिव्यवहारेत्यर्थः । मिश्रितत्वादिति भावः । किं यत्र द्व्यणुकादिकार्यारम्भक एकः पार्थिवः परमाणुः अपरश्चाप्यः तत्र व्यवहारविलोपप्रसङ्गोऽभिधीयते किंवा यत्रारम्भकं पार्थिवं परमाणुद्वयमाप्यश्चैकः तत्र । नाद्यः । तत्रोभयथाव्यवहारस्येष्टत्वेनैकमात्रव्यवहारस्यानभिमततया तद्विलोपस्येष्टत्वादित्याशयेन द्वितीयं पक्षं दूषयति **न वैशेष्यादिति** ॥ **साक्ष्यादिप्रमाणेति** । वक्ष्यमाणरीत्या परमाणूनां साक्षिसिद्धत्वात्तत्संबन्धिनो विजातीयारम्भकत्वस्य धर्मिग्राहकसाक्षिसिद्धत्वादिति भावः । आदिपदेन त्रिवृत्करणादिप्रतिपादकागमग्रहः ।

स० — **वैशेष्यादिति** । न च-तत्रैकः पार्थिवः परमाणुः अपरश्चाप्यः तदुभयारब्धद्व्यणुके पार्थिवः आप्य इति व्यवहारविलोपः स्यात् तत्र वैशेष्याभावादिति-वाच्यम् । तत्रोभयात्मकव्यवहारस्यैव सद्भावेनैकैकमात्रविषयव्यवहारस्यैवाभावादिति भावः ॥ **अतिप्रसङ्ग इति** । तन्तुद्वयारब्धपटदृष्टान्तेन सर्वत्रापि द्वयारब्धत्वसाधनापातादिति भावः ।

प० — **अयनिमवादिनेति** । सिद्धान्तिनेत्यर्थः ॥ **इष्यत इति** । किंचित्कार्यं द्वयोः परमाण्वोः संयोगादुपजायत इति पूर्वमुक्तत्वादिति भावः । अस्तु कार्यद्रव्योत्पत्तिरपीत्यत आह **समवायीति** । मूलं सिद्धान्तवदि । योजयितुं तेनेति परामर्शविषयमध्याहृत्य विशदयति **यतः कारणान्येवकार्या-**

**कारेणोत्पद्यन्त इति** ॥ **तेनेति** । कारणानामेव कार्याकारेणोत्पद्यमानत्वेन हेतुनेत्यर्थः ॥ **व्यवहारेति** । इयं पृथिवी इमा आप इत्यादिव्यवहार इत्यर्थः ॥ **वैशेष्यादिति** । 'मांसादिभौमं यथाशब्द-मितरयोश्चे'ति द्वितीयाध्यायान्तिमाधिकरणे वैशेष्यात्तु तद्वादस्तद्वाद' इति गुणसूत्रं । पार्थिवादिशरीराणां पाञ्चभौतिकत्वेपि पार्थिवशरीरमिदमाप्यमिदं तैजसमिदमित्येवं विशिष्य व्यवहारो वैशेष्यादाधिक्यात् । यस्मिन्देहे यस्य भूतस्याधिक्यं तद्व्यवहार इति तदर्थः । तथा च तेन न्यायेन परिहरिष्यमाणत्वा-दित्यर्थः ॥ **संप्रतिपन्नसजातीयारब्धकार्येति** । अनियमवादिना कदाचित्सजातीयैरप्यणुभिः कार्यो-दयस्वीकारादिति भावः ॥ **साक्ष्यादीति** । आदिपदेन विजातीयकारणारब्धलोष्ठादिदृष्टान्तेन विजाती-यारब्धत्वानुमानस्य 'तासां त्रिवृतं त्रिवृतमेकैकामकरोदि'त्याद्यागमस्य च ग्रहः ।

**या० — द्वयसंयोगस्येति** । कदाचिद्द्वयसंयोगस्यापीत्यर्थः । अनियमवादित्वादेवेति भावः ॥ **साक्ष्यादिप्रमाणेति** । परमाणूनां वक्ष्यमाणरीत्या साक्षिसिद्धत्वे तत्सम्बन्धिनां विजातीयारम्भकत्वस्यापि तन्सिद्धत्वमित्याशयः । आदिपदेन त्रिवृत्करणादिप्रतिपादकागमग्रहणम् ।

**श्री० —** एकैकस्य गन्धादेरारम्भकत्वे बाधकमाशङ्कते **अपेक्षणीयेति** । **सन्ततेति** । प्रलयेऽप्ये-कस्य परमाणोस्तद्गन्धस्य च सत्त्वात्कार्यं स्यादित्यर्थः । अपेक्षणीयत्वमुपपादयति **समवायीति** ॥ **अन्य-थेति** । अनेकेषां गन्धादीनां कार्यगन्धाद्यारम्भकत्वपक्षेऽपि प्रलयेऽनेकेष परमाणूनां तद्गन्धस्य च भावा-त्कार्यं स्यादेवेत्यर्थः । कार्यद्रव्योत्पत्त्यपेक्षामङ्गीकृत्य समाधिः समानः । **कार्यगा** इत्यस्योत्पन्नं यत्कार्यं द्रव्यं तत्रत्या इत्यर्थः ॥ **ततश्चेति** । एकस्मिन्नपि परमाणौ विद्यमानो य एको गन्धः स एव कार्ये भवतीत्यङ्गी-कारादिति भावः ॥ **एवं तर्हीति** । यदि पार्थिवाप्यपरमाणवो विजातीया मिलित्वा एककार्यारंभका इत्यर्थः । **व्यवहारः** इदं पार्थिवमिदमाप्यमित्यादिरूपः ॥ **वैशेष्यादिति** । तत्तद्भागबाहुल्यापेक्षयेत्यर्थः । सम्प्रतिपन्नं यत्सजतीयतन्त्वारब्धं पटादिकार्यं तद्दृष्टान्तेन कार्यत्वादिति हेतुनेति शेषः । **विप्रतिपन्नानां** द्व्यणुकादीनाम् ॥

**सु० — स्यादेतत् । यदि बहूनां परमाणूनां संयोगस्यारंभकत्वं स्यात् । न चैवम् । आरंभकसंख्यापकर्षतारतम्यं क्वचिद्विश्रान्तम् तारतम्यत्वात् परिमाणतारतम्यवदित्यनुमानेना-रंभकसंख्यापकर्षस्य क्वचिद्विश्रान्तिसिद्धावेकस्यारंभकत्वे सन्ततोत्पत्त्यादिप्रसङ्गात्त्र्यादिकल्पने गौरवाद् द्वयोरेव परमाण्वोः संयोगो द्रव्यारंभक इति नियमसिद्धेरित्यत आह** तारतम्येनेति ।

**अनु० —** तारतम्येन सर्वेऽपि महान्तश्चाणवो यतः ॥

**यतः कारणात्तारतम्येन सर्वेऽप्यर्था महान्तश्चाणवश्च समर्थिताः ततः परिमाणतारतम्यवदिति दृष्टान्तस्य साध्यविकलत्वात् द्वयोरेव तु संयोग इति केनावसीयत इति संबन्धः । किञ्चानेनैव न्यायेन द्व्यणुकद्वयसंयोगस्याप्यारंभकत्वं किं नेष्यते । बहुत्वाभावे कार्यमहत्त्वानुपपत्तिप्रसङ्गादिति चेन्न । यतस्तारतम्येन सर्वेऽपि महान्तश्चाणवश्च समर्थिताः तेन द्व्यणुकमहत्त्वात्तदुत्पत्त्युपपत्तेः । परमाणुद्वयारब्धकार्यदृष्टान्तेन सर्वत्रानुमाने त्वतिप्रसङ्ग इति ॥**

**शे०** — 'ननु तारतम्येने'त्याद्युत्तरभाष्यमनर्थकम् । न च सर्वेषां पदार्थानां महत्त्वाणुत्वसद्भावप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च परिमाणतारतम्यस्य अविश्रान्तिप्रतिपादनार्थत्वान्न तदिति वाच्यम् । तस्याप्युपयोगादर्शनादित्यत आरम्भकसंख्यापकर्षतारतम्यस्य परिमाणतारतम्यदृष्टान्तेन विश्रान्तिसाधकानुमाने दृष्टान्तस्य साध्यवैकल्योपदर्शनार्थत्वान्न परिमाणतारतम्यस्याविश्रान्तिप्रतिपादनवैयर्थ्यमित्यभिप्रेत्य तर्हि तत्प्रतिपादनस्य न पूर्वेण सङ्गतिरित्यतोऽव्यवहितपूर्ववाक्येन तदभावेऽपि 'द्वयोरेव तु संयोग' इत्युक्तानियमास्यार्थत उपपादकतया तत्सङ्गतत्वान्नासङ्गतिरिति भावेन तत्सङ्गततयोत्तरभाष्यं योजयितुं तद्वाक्योक्तानियमपक्षानुपपत्तिशङ्कामुपपादयति **स्यादेतदिति** ॥ **सन्ततोत्पत्त्यादिप्रसङ्ग इति** । एकस्य गन्धादेरारम्भकत्वे सन्ततोत्पादप्रसङ्गस्य कार्योत्पत्त्यपेक्षतया परिहर्तुं शक्यत्वेऽप्येकैकस्यापि परमाणोर्द्व्यणुकारम्भकत्वेऽपेक्षणीयान्तराभावान्न सन्ततोत्पादप्रसङ्गः परिहर्तुं शक्य इति भावः । परिमाणापकर्षतारतम्यस्य क्वचिद्विश्रान्तिसिद्धौ किञ्चित्सर्वतोऽपकृष्टमेव न ततोऽन्यदप्यपकृष्टमित्यर्थसिद्ध्या सर्वतोऽप्यपकृष्टपरिमाणाश्रयतया परमाणुसिद्धिवदारम्भकसंख्यापकर्षतारतम्यस्यापि क्वचिद्विश्रान्तम् किञ्चिदपकृष्टसंख्यावच्छिन्नमेवारम्भकम् न त्वनवधिकसंख्यावच्छिन्नमपीत्यर्थसिद्ध्या द्वित्वावच्छिन्नस्य आरम्भकत्वसिद्धौ तन्त्वादेस्तद्रूपताया बाधितत्वात्परिशेषेण तथाविधं कारणं परमाणुलक्षणमेव सिध्यतीति भावः । साकाङ्क्षत्वप्रयुक्तवाक्याभासतापरिहारायापेक्षितं पूरयन्वाक्यं योजयति **यत इत्यादिना** । तारतम्येनेत्यादिमूलं प्रकारान्तरेणापि योजयितुं तदुपयुक्तमर्थमतिप्रसङ्गमुखेन तावदाह **किञ्चेति** ॥ **अनेनैवेति** । आरम्भकसंख्यापकर्षस्य उक्तानुमानेन क्वचिद्विश्रान्तिसिद्धौ एकस्यारम्भकत्वे सन्ततोत्पादप्रसङ्गात्त्र्यादिकल्पने गौरवाद्द्वयोरेव द्व्यणुकयोः संयोगस्त्र्यणुकहेतुरिति नियमस्य सिद्धिरित्युक्तन्यायेनेत्यर्थः । एवमुपयुक्तमभिधाय तत्रार्थे प्रसक्तानुपपत्तिपरिहारकतया भाष्यं योजयितुं तन्निवर्त्यशङ्कामुत्थापयति **बहुत्वेति** । कारणबहुत्वतन्महत्त्वातिरेकेण कार्यमहत्त्वे प्रयोजकान्तराभावात् द्वयोरेव द्व्यणुकयोः हेतुत्वे च कारणबहुत्वस्य चाभावान्न त्र्यणुके महत्त्वोत्पत्तिर्युज्यत इत्यर्थः । कारणबहुत्वाभावेऽपि तन्महत्त्वादेव कार्ये महत्त्वोत्पत्त्युपपत्तेर्नानुपपत्ति

रित्याशये ोक्तार्थसमर्पकतया मूलं योजयति **न यत इत्यादिना** । नन्वनियमवादिना द्वयोरपि कारणत्वं क्वचिदवश्यमङ्गीकर्तव्यमेव । तथा च संप्रतिपन्नपरमाणुद्वयारब्धकार्यदृष्टान्तेन विप्रतिपन्नानामपि तत्कार्याणां परमाणुद्वयारब्धत्वानुमानसंभवाद्द्वयोरेव कारणत्वमिति नियमसिद्धिः स्यादित्यतस्त्र्याद्यारब्धत्वस्य साक्ष्यादिप्रमाणसिद्धत्वेन बाधरूपातिप्रसङ्गान्नैवमनुमातुं शक्यमित्याह **परमाण्विति** । यद्वा परमाणुद्वयारब्धकार्यदृष्टान्तेन सर्वत्र विप्रतिपन्नतत्कार्येष्वपि परमाणुद्वयारब्धत्वानुमाने तन्तुद्वयारब्धपटदृष्टान्तेन बहुतन्त्वारब्धे पटे तन्तुद्वयारब्धत्वानुमानप्रसङ्ग इत्यतिप्रसङ्ग इत्यर्थः । बाधितत्वान्न तत्प्रसङ्ग इति तु प्रकृतेऽपि तुल्यमित्यर्थः ॥

**प०**— परमते द्व्यणुकत्र्यणुकपरिमाणयोः द्वित्वत्रित्वसंख्याजन्यत्वादाह **आरंभकसंख्येति** ॥ **संततोत्पत्त्यादीति** । आदिपदेनैकस्मादपि तन्त्वादेः पटाद्युत्पत्तिप्रसङ्गः, अनुभवविरोधादिश्च ग्राह्यः ॥ **अनेनैव न्यायेनेति** । एकस्यानारंभकत्वात् त्रित्वकल्पने गौरवादित्युक्तन्यायेनेत्यर्थः । नन्वनियमवादिनापि कदाचित्परमाणुद्वयारब्धं कार्यमुपेयते । तथा च तद्दृष्टान्तेन विमतं सर्वं परमाणुकार्यं पर्वं द्व्यणुकं परमाणुद्वयारब्धं परमाणुकार्यत्वादिति साध्यत इत्यत आह **परमाणुद्वयारब्धेति** ॥ **अतिप्रसङ्ग इति** । तन्तुद्वयारब्धपटदृष्टान्तेन बहुतंत्वारब्धपटेपि तदनुमानप्रसङ्ग इत्यर्थः ॥

**॥ द्व्यणुकादिद्रव्यासमवायिकारणनिरासः ॥**

**या०**— ननु द्व्यणुकं परमाणुद्वयेनैवारब्धं परमाणुकार्यत्वात्परमाणुद्वयारब्धसंयोगादिवदित्यनुमानेनैव द्वयोरेवेति नियमसिद्धिरित्यत आह **परमाणुद्वयारब्धेति** । **सर्वत्र** द्व्यणुकादिपरमाणुकार्येषु ॥ **अतिप्रसङ्ग इति** । तन्तुद्वयारब्धपटदृष्टान्तेन सर्वत्रापि पटे तन्तुद्वयारब्धत्वानुमानप्रसङ्ग इत्यादिरूप इत्यर्थ ॥

**श्री०**— **आरम्भकेति** । तथा च घटादिदशसंख्याकावयवजन्यं तथा चतुरणुकत्र्यणुकं चतुष्टयजन्यं त्र्यणुकं द्व्यणुकत्रयजन्यं द्व्यणुकं परमाणुद्वयजन्यमित्यारम्भकसंख्याप्रकर्षस्य तारतम्यमित्यर्थः । **आरंभकत्वं** त्र्यणुकारम्भकत्वम् । तथा च न द्व्यणुकत्रयसंयोगजन्यत्वमिति भावः । **बहुत्वाभावे** द्व्यणुक इति शेषः । **कार्ये** त्र्यणुके ॥

**सु०— अस्त्वेवमुक्तनियमेषु प्रमाणाभावस्तथाऽप्यनियमसृष्टौ किं मानमिति चेत् । साक्षी तावत् । लोष्टादिकार्याणामनियतसंख्यैर्विजातीयैर्विसदृशैश्चारंभदर्शनेनानुमानं च । आगमाश्चात्र बहुलं भवन्ति । तद्दर्शनं भ्रान्तिरिति चेत् । किं नियमग्राहकप्रमाणविरोधादेवमुच्यते । उत केवलया वैशेषिकादिकल्पनया विरोधात् ।**

आद्यं दूषयति न चेति ।

अनु० — न च तत्प्रोक्तसृष्टौ तु मानं

**सजातीयाभ्यामेव द्वाभ्यामेव परमाणुभ्यामेवेत्यादिनियमवत्यां तत्प्रोक्तसृष्टौ तु मानं नास्ति यत् साक्ष्यादिसिद्धस्यास्मदभिमतसृष्टिप्रकारस्य बाधकं स्यात् । तथा चोक्तम् (प्राक्) ।**

द्वितीयं दूषयति केवलेति ।

केवलकल्पना ॥

कथं साक्षिमितस्यास्य शक्नुयाद्वारणे क्वचित् ॥

**निर्मूलेत्यर्थः । साक्षीत्युपलक्षणम् ।** अस्य **अनियमारंभस्य । कल्पनामात्रस्य प्रामाणिकनिवारकत्वेऽतिप्रस(ङ्ग इति)ङ्गादिति भावः ।**

**शे०** — ननु 'न च तत्प्रोक्तसृष्टावि'त्याद्युत्तरभाष्यमनर्थकम् । न च परोक्तनियमसृष्टौ प्रमाणाभावोपदर्शनार्थं तदिति वाच्यम् । उक्तनियमे प्रमाणाभावस्य 'द्वयोरेव तु संयोग इति केनावसीयते' इत्यनेनैव सिद्धत्वात् । न चानियमसाधकप्रमाणानां नियमसाधकप्रमाणेनाबाधोपपादनार्थं तदिति वाच्यम् । तथा सत्यनियमपक्षे प्रमाणानामादावुपन्यसनीयत्वापत्त्या तान्यनुपन्यस्य तेषां नियमग्राहकप्रमाणाबाधं वर्णयतो भाष्यकारस्याकुशलत्वप्रसङ्गादित्याशङ्क्य स्पष्टत्वात्तत्प्रमाणानां शिष्यैरेवोहितुं शक्यत्वेन तान्यनुपन्यस्यैव तेषां प्रमाणानां भाष्यकारैरयं अबाधितत्ववर्णनं नानुपपन्नमित्यभिप्रेत्यानियमपक्षसाधकप्रमाणानां अबाधितत्ववर्णनपरतयोत्तरभाष्यं सङ्गमयितुं कानि तानि प्रमाणनीत्यतस्तानि वक्तुमनियमपक्षसाधकप्रमाणाकाङ्क्षामुत्थापयति **अस्त्वेवमित्यादिना** । साक्षिणि विप्रतिपन्नं प्रत्यनुमानमप्याह **लोष्ठादीति** । उपाधिप्रतिपक्षग्रस्तत्वशङ्कया शङ्कितप्रामाण्यमनुमानं न तन्निर्णयाय प्रभवतीत्यतोऽनुमानानुग्राहकागमानप्याह **आगमाश्चात्रेति** । भ्रमत्वस्य बाधकैकसमधिगम्यत्वात्प्रकृते च बाधकाभावान्न भ्रान्तित्वमित्याशयेन संभावितबाधकविकल्पप्रदर्शनपूर्वकं तन्निरासकतया भाष्यं योजयति **किमित्यादिना** । साक्ष्यादीत्यादिपदेनानुमानागमपरिग्रहः । कथमुक्तनियमवत्यां तत्प्रोक्तसृष्टौ मानाभाव इत्यत आह **तथा चोक्तमिति** । द्वाभ्यामेव परमाणुभ्यामेव सजातीयाभ्यामेवेत्यादिनियमवत्यां तत्प्रोक्तसृष्टौ यथा प्रमाणाभावः तथा द्वयोरेव तु संयोग इत्यादिना पूर्वमेवोक्तमित्यर्थः । भाष्ये केवलपदानर्थक्यमाशङ्क्याबाधकत्वोपपादकनिर्मूलत्वोपदर्शनार्थत्वान्न तदिति भावेन तदर्थमाह **निमूलेत्यर्थ इति** । अनुमानादेरप्यनियमसाधकत्वेनोक्तत्वान्मूले साक्षिमात्रग्रहणमनुपपन्नमित्यतः तस्य प्रमाणान्तरोपलक्षणार्थत्वान्नानुपपत्तिरिति भावेनोपलक्षणतया तद्व्याचष्टे **साक्षीत्युपलक्षणमिति** ।

स० — **तथा चोक्तमिति** । सजातीयाभ्यामेव द्वाभ्यामेव परमाणुभ्यामेवेत्यादिनियमवत्यां तत्प्रोक्तसृष्टौ यथा प्रमाणं नास्ति तथा पूर्वमेवोक्तमित्यर्थः । लोष्ठादिकार्याणामनियतसंख्यैरित्यादिना अनुमानादेरप्युक्तत्वादाह **साक्षीत्युपलक्षणमिति** ।

प० — **अनुमानश्चेति** । द्व्यणुकादिकार्यं द्वाभ्यामेवेत्यादिनियमशून्यकारणजन्यं कार्यद्रव्यत्वाल्लोष्ठादिवदित्यनुमानमित्यर्थः । तत्र विजातीयं जलं तेजश्च विसदृशं सिकतादि ध्येयम् ॥ **आगमाश्चेति** । "तासां त्रिवृतं त्रिवृतमि"त्याद्या इत्यर्थः । सत्त्वादिगुणत्रयमेलनेन सृष्टिबोधकपुराणाद्यागमाश्चेत्यर्थः । तथा 'नित्यान्येतानि सौक्ष्म्येण ह्यीन्द्रियाणि तु सर्वशः । तेषां भूतैरुपचयः सृष्टिकाले विधीयत' इत्याद्युपचयबोधकागमाश्च तथा 'प्राणा वा इदमग्र आसुः । तेभ्यो भूतानि जज्ञिर' इत्याद्याश्चेत्यर्थः ॥ **तद्दर्शनमिति** । लोष्ठादिकार्येषूक्तप्रकारदर्शनं साक्षिदर्शनं तादृशागमदर्शनं चेत्यर्थः ॥ **तथा चोक्तमिति** । नियमग्राहकतया पराभिमतं यदनुमानरूपं प्रमाणं तत्सर्वं 'द्वयोरेव तु संयोग इति केनावसीयते' इत्यादिसार्धश्लोकव्याख्यावसर एवाशङ्क्य निरासाद्यथास्माकं न बाधकं तथोक्तमेवेत्यर्थः ॥ **उपलक्षणमिति** । प्रागुक्तानुमानागममित्यस्येत्यपि ज्ञेयमिति भावः । अस्येत्यनुवादः । अनियमारंभस्येति व्याख्या ॥ **अतिप्रसङ्ग इति** । बौद्धसांख्यादिकल्पनयापीश्वरादिप्रामाणिकार्थनिवारणप्रसङ्ग इत्यर्थः ।

---

श्री० — **अनियतसंख्यैः** सजातीयैः ॥ **विजातीयैर्विसदृशैश्चेति** । न च विजातीयत्वं विसदृशत्वं चैकमेवेति वाच्यम् । विजातीययोरपि ब्राह्मणक्षत्रिययोर्मुखादिसादृश्यदर्शनात् । सजातीययोरपि ब्राह्मणयोर्मुखादौ वैसादृश्यस्यानुभवसिद्धत्वाद्विजातीयत्वं विसदृशत्वं च भिन्नमेवेति ज्ञातव्यम् । एवमेव सजातीयत्वं सदृशत्वं च भिन्नमेवेति च ज्ञातव्यम् । अत एव 'सदृशं च सजातीयं नासत्पक्षे किमेव ही'ति वक्ष्यति । **अनुमानं चेति** । द्व्यणुकादिकार्यमनियतसंख्याकसजातीयविजातीयविसदृशकारणजन्यं कार्यत्वाल्लोष्ठादिकार्यवदित्यनुमानमित्यर्थः ॥ **आगमेति** । विजातीयैर्विसदृशैश्च तत्त्वैर्ब्रह्माण्डोत्पत्तेरागमसिद्धत्वादिति भावः । अत्र विजातीयादिजन्यत्वे ॥ **भ्रान्तिरिति** । उक्तानुमानागमजन्यं ज्ञानमित्यर्थः ॥ **उक्तमिति** । 'द्वयोरेव तु संयोग इति केनावसीयत' इत्युक्तमित्यर्थः ।

सु० — अत्र तत्प्रोक्तसृष्टाविति सामान्यतो वदताऽन्यदपि तत्कल्पितमप्रामाणिकमिति सूचितम् । तथा हि 'प्रकृतेर्महान्महतोऽहङ्कारोऽहङ्कारात्क्रमेणाकाशादीनि महाभूतानी'त्येतां श्रुत्यादिप्रसिद्धां प्रक्रियामपहाय वाय्वादीनां चतुर्णामन्योन्यानपेक्षैव सृष्टिर्व्युत्क्रमेण च भि-

हिता । विनैव बाधकेन 'आकाशाद्वायुर्वायोरग्निरि'त्यादिपञ्चमी भाक्ती स्वीकृता । अत्यन्तासत एव च जनिरङ्गीकृता । सर्वाऽपि सृष्टिः समवाय्यादिकारणत्रयाधीनाऽभ्युपगता । तत्र समवायिकारणं समवायाप्रामाणिकत्वस्य वक्ष्यमाणत्वादयुक्तम् । अत एवासमवायिकारणमपि । तदधीननिरूपणत्वाच्च तल्लक्षणस्य । समवायिनिमित्तयोरतिव्याप्तेश्च । तथा हि । तन्तुपटयोः उत्पन्नस्य द्वित्वस्य पटः समवायिकारणम् । स च द्वित्वसमवायिकारणे तन्तौ समवेतत्वात् समवायिकारणप्रत्यासन्नः । समवायिकारणतयाऽवधृतसामर्थ्यश्च । शरीरात्मनोरुत्पन्नस्य द्वित्वस्यापेक्षाबुद्धिर्निमित्तम् । सा च द्वित्वसमवायिकारणात्मसमवेतत्वान्निमित्तत्वाच्चोक्तलक्षण-सम्पन्ना । समवायिकारणप्रत्यासन्नतया सामर्थ्यावधारणमभि(हि)मतम् । न च तथा प्रकृत इति चेत् । तथाऽपि व्याप्यबुद्धेर्व्यापकबुद्धिं प्रति विषयबुद्धेर्धर्माधर्मयोश्च सुखदुःखे प्रत्यसमवायिकारणत्वापत्तेः । न ह्यन्यगतं व्याप्यबुद्ध्याद्यन्यगतस्य व्यापकबुद्ध्यादेर्निमित्त भवति । आत्मनि प्रदेशभेदान्नेति चेन्न । आद्यादिशब्दानां द्वितीयादिशब्दासमवायिकारणत्वाभावापत्तेः । एकाकाशगतत्वेन तत्संभवे प्रकृतेऽपि समानम् ।

**शे०** — भाष्ये सामान्योक्तेर्वैयर्थ्यमाशङ्क्य परकल्पितप्रमेयान्तरस्याप्रामाणिकत्वसूचकत्वान्न तदिति भावेन तत्प्रयोजनमाह **अत्रेति** । किं तत्प्रमेयं कथं च तदप्रामाणिकमित्यतस्तदुभयं दर्शयति **तथा हीत्यादिना** । श्रुत्यादीत्यादिपदेन पुराणपरिग्रहः ॥ **अन्योन्यानपेक्षैवेति** । यद्यपि वाय्वादीनामबादिसृष्टौ आधारत्वेनापेक्षा परमतेऽप्यस्त्येव तथाऽप्युपादानतया तदनपेक्षत्वाभिप्रायकोऽयं ग्रन्थ इत्यवधेयम् ॥ **व्युत्क्रमेण चेति** । आकाशाश्रिततया वायोरादावुत्पत्तिः ततस्तदाश्रिततया जलस्य, ततस्तदाश्रिततया पृथिव्यास्ततस्तदाश्रिततया तेजस इति व्युत्क्रमेणेत्यर्थः स्पष्टं चैतत्प्रशस्तपादभाष्यादौ सृष्टिसंहारविधिप्रसङ्गे । व्युत्क्रमेण चेति चशब्दस्त्वन्योन्यानपेक्षत्वसमुच्चयार्थः॥ **भाक्तीति**। अमुख्येत्यर्थः ॥ पूर्वपूर्वस्योत्तरोत्तराधारताया एव पञ्चम्यर्थत्वाभ्युपगमात्तस्या भाक्तत्वमिति भावः ॥ **अत्यन्तासत एवेति** । न तु सदसत इत्येवार्थः ॥ **सर्वाऽपि सृष्टिरिति** । भावसृष्टिरित्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'कार्यकारणयोश्चैव गुणादेः पञ्चकस्य चे'त्यादिनेति शेषः ॥ **अत एवेति** । समवायिकारणस्यायुक्तत्वादेवेत्यर्थः ॥ **तदधीनेति** । तज्ज्ञानाधीनज्ञानत्वादित्यर्थः । अननुसंहितोपाधेरुपहितप्रत्ययायोगादित्यर्थः । तत्कथमित्यतस्तदुभयमुपपादयितुं प्रतिजानीते **तथा हीति** । निर्देशक्रमेण समवायिकारणेऽतिव्याप्तिमुपपादयति **तन्तुपटयोरुत्पन्नस्य द्वित्वस्येति** । न च यावत्समवायिकारणप्रत्यासन्नत्वस्य विवक्षितत्वान्न तत्पटेऽतिप्रसङ्गः तस्य द्वित्वसमवायिकारणतन्तुसमवेतत्वेऽपि पटसमवेतत्वाभावादिति वाच्यम् । तथा

सति घटपटगतद्वित्वासमवायिकारणे घटपटगतैकत्वेऽव्याप्तिप्रसङ्गात् । तस्य द्वित्वसमवायिकारणघटपटगतत्वेऽपि घटगतैकत्वस्य पटसमवेतत्वाभावेन पटगतैकत्वस्य च घटसमवेतत्वाभावेन यावत्समवायिकारणप्रत्यासन्नत्वविरहादिति भावः । निमित्तकारणेऽपि तामुपपादयति **शरीरात्मनोरिति** ॥ **न च तथा प्रकृत इति** । पटस्य समवायिकारणतया सामर्थ्यावधारणात् । अपेक्षाबुद्धेश्च निमित्ततयैव तदवधारणान्न समवायिकारणप्रत्यासन्नत्वेन तदवधारणमिति न समवायिनिमित्तयोरतिव्याप्तिरिति भावः । व्याप्यबुद्ध्यादेर्व्यापकबुद्ध्यादिकं प्रति समवायिकारणप्रत्यासन्नत्वेन सामर्थ्यावधारणमुपपादयति **न ह्यन्यगतमित्यादिना** । तथा सति पुरुषान्तरीयव्याप्यज्ञानादिना पुरुषान्तरीयानुमित्याद्यापातादिति भावः ॥ **आत्मनीति** । तथा च यत्प्रदेशावच्छिन्ने व्याप्यबुद्ध्यादि न तत्प्रदेशावच्छिन्ने व्यापकबुद्ध्यादीति न तत्रातिव्याप्तिरिति भावः ॥ **नेति** । तत्रापि यत्प्रदेशावच्छिन्ने द्वितीयादिशब्दोत्पत्तिर्न तत्प्रदेशावच्छिन्न एवाद्यादिशब्दा इति तत्रातिव्याप्तिरिति भावः ॥ **प्रकृतेऽपि सममिति** । व्याप्यबुद्ध्यादेर्व्यापकबुद्ध्यादिना प्रदेशभेदेन वृत्तावप्येकात्मगतत्वमस्त्येवेति तत्संभव इति समानमित्यर्थः ।

सू० — **वाय्वादीनां चतुर्णामिति** । वायूत्पत्त्यनन्तरं जलोत्पत्तिः ततः पृथिव्याः, ततस्तेजस इति क्रमेण व्युत्क्रमेण चेत्यर्थः ! **पञ्चमी भाक्तेति** । पूर्वपूर्वस्योत्तरोत्तराधारत्वमात्राङ्गीकारेण एतत्कारणत्वानङ्गीकारात् तद्वाचिपञ्चम्यर्थपरतया व्याख्यानं गौणमित्यर्थः ॥

प० — **श्रुत्यादीति** । आदिपदेन तृतीयस्कन्धगतसप्तदशाध्यायादिसिद्धमिति गृह्यते ॥ **अन्योन्यानपेक्षैवेति** । तत्तत्परमाण्वादिभिरेव सजातीयैर्विजातीयामिश्रैर्व्यणुकादिजन्माङ्गीकारादिति भावः ॥ **व्युत्क्रमेण चेति** । अनादिनित्ये गगने प्रथमं वायुसृष्टिः । पश्चात्तदाधारतया जलस्य । पश्चात्पृथिव्याः । पश्चात्तेजस इत्यभिहितेत्यर्थः ॥ **भाक्तीति** । आधारार्थकत्वेनामुख्या स्वीकृतेत्यर्थः ॥ **तन्तुपटयोरुत्पन्नस्येति** । व्यतिषिक्तन्तुपटोभयसमवायिकारणकतया तदुभयाधारतया इमौ तन्तुपटावित्युत्पन्नस्येत्यर्थः । द्वित्वं प्रति पटगतैकत्वमसमवायिकारणं न तु पट इति द्वित्वसमवायिनि पटेऽतिव्याप्तिरित्यर्थः । शरीरात्मनोरित्यपि प्राग्वत् । शङ्कते **समवायीति** ॥ **न च तथा प्रकृत इति** । किंतु पटः समवायिकारणत्वेनापेक्षाबुद्धिश्च निमित्तकारणतया द्वित्वं प्रत्यवधृतसामर्थ्य इत्यर्थः ॥ **तथापीति** । पूर्वोक्तस्थलद्वयेऽतिव्याप्तिपरिहारेपि व्याप्यबुद्धाविष्टानिष्टवस्तुविषयकबुद्धौ धर्मेऽधर्मेऽतिव्याप्तिरित्याह **व्याप्येति** । धूमादिज्ञानं वह्न्यादिज्ञानं प्रतीत्यग्रेतनमाकृष्यते ॥ **विषयबुद्धेरिति** । स्रक्चन्दनवनितादिसर्पवृश्चिकादिरूपविषयविषयकबुद्धेरित्यर्थः । व्याप्यबुद्धिविषयबुद्धिधर्माधर्माणां तत्कार्यभूतव्यापकबुद्धिसुखदुःखानां

चात्मैव समवायिकारणमिति व्याप्यबुद्ध्यादीनां स्वकार्यव्यापकबुद्ध्यादिकं प्रति समवायिकारणप्रत्यासन्नतयैव सामर्थ्यावधारणं नान्यथेत्येतद्व्यनक्ति **न ह्यन्यगतेति** । कार्येण सहैकदेशावच्छेदेन समवायिकारणप्रत्यासन्नतया सामर्थ्यावधारणमभिमतमिति भावेनातिव्याप्त्युद्धा माशङ्कते **आत्मनीति** ।

या० — **अन्योन्यानपेक्षैवेति** । अन्योन्यानुपादानकैवेत्यर्थः । तेनाधारतया वाय्वादीनामबादिसृष्टावपेक्षितत्वात्कथमिदमिति शङ्काऽनवकाश इति ध्येयम् । **व्युत्क्रमेण चेति** । आदावाकाशे वायोरुत्पत्तिस्ततस्तदाश्रिततयाऽनलस्य ततस्तदाश्रिततया पृथिव्यास्ततस्तदाश्रिततया तेजस इति व्युत्क्रमेणेत्यर्थः । इदं च प्रशस्तपादभाष्यादौ स्पष्टम् ॥ **पञ्चमी भाक्तीति** । अमुख्येत्यर्थः । पूर्वपूर्वस्योत्तरोत्तराधारत्वमेव नोपादानत्वमतः पञ्चम्या आधारत्वमेवार्थ इति स्वीकारादिति भावः ॥ **अत्यन्तासत एवेति** । न तु सदसत इत्येवार्थः ।

श्री० — **व्युत्क्रमेण** पृथिव्यादिक्रमेण । समवायिन्यतिव्याप्तिमुपपादयति **तन्त्विति** ॥ **तन्ताविति** । तन्तुपटयोरुभयोरपि द्वित्वं प्रति समवायिकारणत्वादिति भावः । निमित्ते तामुपपादयति **शरीरेति** ॥ **न च तथेति** । अयमर्थः । पटस्य समवायिकारणत्वेन कारणत्वे सत्यपि समवायिकारणप्रत्यासन्नत्वेन कारणत्वावधारणं विवक्षितम् । प्रकृतकार्यसमवायिकारणप्रत्यासन्नत्वं कारणतावच्छेदकत्वेन विवक्षितमिति यावत् । न चेदं कारणताच्छेदकं पटेऽस्ति । तथात्वे घटपटयोरुत्पन्नस्य द्वित्वस्य पटः कारणं न स्यात् । समवायिकारणीभूतघटाप्रत्यासन्नत्वात् । तथाऽपेक्षाबुद्धावपि नेदं कारणतावच्छेदकमस्ति । तथात्वे घटपटयोरुत्पन्नं द्वित्वं प्रति अपेक्षाबुद्धेः कारणत्वं न स्यात् । समवायिकारणीभूतघटपटोभयाप्रत्यासन्नत्वात् । तथा च नावधृतसामर्थ्यम् । तन्तुद्वयसंयोगादौ तु वर्तत इदम् । अन्यनिष्ठस्य तददर्शनादिति ॥ **विषयबुद्धेरिति** । इष्टार्थोपलब्धौ सुखमनिष्टार्थोपलब्धौ दुःखमिति प्रसिद्धत्वादित्यर्थः । कारणतावच्छेदकमत्रोपपादयति **न हीति** । तन्त्वन्यघटगतद्वित्वं प्रति पटो न कारणं तथा न हीत्यर्थः ॥ **आत्मनीति** । तथा च व्यापकबुद्धिसमवायिकारणीभूतात्मप्रत्यासन्नत्वं न व्याप्यबुद्धाविति नात्रोक्तमवच्छेदकमस्तीत्यर्थः ॥ **आद्येति** । तत्रापि द्वितीयादिशब्दसमवायिकारणीभूताकाशप्रदेशगतत्वं नाद्यशब्देऽस्तीत्यर्थः ॥ **तदिति** । असमवायिकारणत्वेत्यर्थः ॥ **समानमिति** । एकात्मगतत्वेनेत्यर्थः ।

च० — **भक्ती** अमुख्या । **अत्यन्तासत एवेति** । न तु सदसत इत्यर्थः ।

**सु०— एवमन्यत्राप्यतिव्याप्तिरूहनीया । सङ्केतोऽयमाचार्यस्य । अतो नातीवात्र निर्बन्धः करणीय इति चेत् । एवं तर्हि निर्मूलैवेयं प्रक्रियेति सिद्धमेव ।**

**शे०—** किञ्चैवं सति ज्ञानादीनामिच्छादीन्प्रति स्वस्वप्रत्यक्षं प्रति चासमवायित्वं प्रसज्यते । इच्छादीनां स्वप्रत्यक्षस्य च समवायिकारणे आत्मनि ज्ञानादीनां समवेतत्वेन समवायिकारणप्रत्यासन्नत्वात् अनन्यथासिद्धनियतपूर्ववृत्तित्वेन कारणत्वाच्च तत्रोक्तलक्षणसद्भावादित्याह **एवमन्यत्रापीति ।** न चात्मावृत्तित्वविशेषणान्नैष दोष इति वाच्यम् । तथा सति ज्ञानाद्यसमवायिकारणे आत्ममनःसंयोगेऽव्याप्तिप्रसङ्गात् । न चात्मभिन्नावृत्तित्वविशेषणान्नाव्याप्त्यतिव्याप्ती । आत्ममनःसंयोगस्यात्मभिन्नमनोवृत्तित्वात् । ज्ञानादीनां च तदभावादिति वाच्यम् । एवमप्यात्मैकत्वे द्वित्वासमवायिकारणेऽव्याप्तेः । तस्यात्मभिन्नवृत्तित्वाभावात् । अत एव चात्मविशेषगुणभिन्नत्वे सतीति विशेषणान्नाव्याप्त्यतिव्याप्ती इति निरस्तम् । आत्मैकत्वप्रत्यक्षं प्रति आत्मैकत्वस्यासमवायित्वापत्तेरनिवारणात् । अतएवात्ममनःसंयोगाजन्यत्वे सतीति विशेषणाददोष इति परास्तम् । जन्यस्य सर्वस्याप्यसमवायिकारणस्यादृष्टद्वारा तज्जन्यत्वेनाव्याप्तिप्रसङ्गाच्चेति भावः । नन्वदृष्टद्वाराऽऽत्ममनस्संयोगाजन्यत्वे सति समवायिकारणप्रत्यासन्नं विषयतातिरिक्तरूपेण कारणम् असमवायिकारणमिति विवक्षितमिति न किञ्चिदेतदित्याशङ्क्य तथा सति पटरूपे पटस्याप्यसमवायित्वप्रसङ्गः । न च समवायिकारणप्रत्यासत्त्यभावान्न तथेति वाच्यम् । पटरूपं प्रति तन्तुरूपस्येव कारणैकार्थप्रत्यासत्तेरविशेषादित्याशयेनाह **एवमन्यत्रापीति ।** ननु द्रव्यभिन्नत्वे सतीत्यप्यत्र विशेषणमिति नायमपि दोष इत्याशङ्क्य तथाऽपि तुरीतन्तुसंयोगेऽतिव्याप्तिरेव । तस्यापि द्रव्यभिन्नत्वात् । आत्ममनोयोगाजन्यत्वाद्विषयतातिरिक्तरूपेण कारणत्वाच्चोक्तलक्षणस्य तत्र सत्त्वादित्याशयेनाह **एवमन्यत्रापीति ।** न च तुरीतन्तुसंयोगस्यापि पटं प्रत्यसमवायित्वमेवेति लक्ष्यत्वादेव न तत्रातिव्याप्तिरिति वाच्यम् । तथा सत्यसमवायिकारणनाशे द्रव्यनाशस्यावश्यम्भावेन तुरीतन्तुसंयोगनाशेन पटनाशप्रसङ्गात् । न च खण्डपटादौ व्यभिचारात्तुरीतन्तुरीसंयोगस्य पटं प्रति कारणत्वमेव नास्तीति नातिव्याप्तिरिति वाच्यम् । तथा सति कुविन्दादीनामप्यकारणत्वप्रसङ्गात् । कुविन्दादीनां पटविशेषकारणत्वाभ्युपगमे च तुरीतन्तुसंयोगस्यापि तत्प्रसक्त्या विशेषं प्रत्यसमवायित्वप्रसङ्गस्य दुर्निवारत्वादिति ध्येयम् ।

अथाऽपि स्यात् यथाश्रुतमेवैतल्लक्षणम् । समवायिकारणप्रत्यासन्नत्वेन च कारणत्वमिह विवक्षितम् । तुरीतन्तुसंयोगादीनां तु न तेन रूपेण जनकता, किन्तु तुरीतन्तुसंयोगत्वेनैवेति न तत्रातिव्याप्तिरिति चेन्न । तथा सति व्याप्यबुद्धेर्व्यापकबुद्धिं प्रति विषयबुद्धेर्धर्माधर्मयोश्च सुखदुःखे प्रति असमवायिकारणत्वप्रसङ्ग इत्याकरोक्तदोषानुद्धारात् । अन्यगतव्याप्यबुद्ध्यादेरन्यगतव्यापक-

बुद्ध्याद्यनिमित्ततया समवायिकारणप्रत्यासन्नतयैव तत्र व्याप्यबुद्ध्यादेः कारणत्वात् । तन्तुसंयोगादीनामपि तन्तुसंयोगत्वेनैव जनकतया समवायिकारणप्रत्यासन्नत्वेन जनकत्वविरहादसम्भवापत्तेश्च । न च भावकार्यत्वावच्छिन्नकार्यतानिरूपितकारणताऽसमवायिकारणनिष्ठानुगतधर्मावच्छेद्या । स चानुगतो धर्मोऽन्यस्यासम्भवादुक्त एवेति तेन रूपेण कारणताऽऽवश्यकीति वाच्यम् । तस्य तन्तुत्वादावतिप्रसक्तत्वेनासमवायिकारणनिष्ठकारणतानवच्छेदकत्वात् । कारणभागप्रवेशे चात्माश्रयाद्यापत्तेः । किञ्च तेषां तेन रूपेण कारणत्वे तन्त्वादीनामकारणत्वप्रसङ्गः । तेषां हि कारणत्वे विनिगमनाविरह एव बीजम् । स चैवं सति न सम्भवतीति कथं तेषां कारणत्वं स्यात् । न च समवायिकारणप्रत्यासन्नपदेन समवायिकारणमात्रप्रत्यासन्नत्वं विवक्षितमिति न तुरीतन्तुसंयोगेऽतिव्याप्तिः । तस्य समवायिभिन्नतुरीसमवेतत्वेन समवायिकारणमात्रसमवेतत्वाभावादिति वाच्यम् । तथा सत्यात्ममनःसंयोगे कालपिण्डसंयोगे पाके चाव्याप्तिप्रसङ्गेन तस्यासम्भवदुक्तिकत्वादिति भावः ।

ननु कार्यध्वंसप्रयोजकध्वंसाप्रतियोगिद्रव्यकारणावृत्तीति विशेषणमिह विवक्षितम् । अस्यार्थः । कार्यध्वंसं प्रति प्रयोजकीभूतो यो ध्वंसस्तदप्रतियोगि यद्द्रव्यकारणं तदवृत्तीति । तुरीतन्तुसंयोगस्य च कार्यध्वंसप्रयोजकध्वंसाप्रतियोगितुरीवृत्तित्वान्न पटं प्रत्यसमवायित्वप्रसङ्गः । पाकस्य कार्यध्वंसप्रयोजकध्वंसाप्रतियोगितेजोवृत्तित्वात् तत्राव्याप्तिपरिहाराय द्रव्यकारणेत्युक्तम् । पाकस्य यद्यपि कार्यध्वंसप्रयोजकध्वंसाप्रतियोग्यवृत्तित्वं नास्ति । तथाऽपि कार्यध्वंसप्रयोजकध्वंसाप्रतियोगि यद्द्रव्यकारणं तद्वृत्तित्वं नास्तीति विशिष्टाभावस्य सत्त्वान्नाव्याप्तिरिति न कश्चिद्दोष इति चेन्मैवम् । कपालाकाशसंयोगे शब्दाद्यसमवायिकारणेऽव्याप्त्यनिस्तारात् । तस्य शब्दादिरूपकार्यध्वंसप्रयोजकध्वंसाप्रतियोगिनि द्रव्यकारणे कपाले वृत्तेः । आत्ममनसोरपि द्रव्यकारणतयाऽऽत्ममनःसंयोगेऽव्याप्तेश्च । अत एव द्रव्यसमवायिकारणाकारणसंयोगिभिन्नत्वे सतीति विशेषणान्नातिव्याप्तिरिति निरस्तम् । एवमपि पटतुरीसंयोगासमवायिनि तुरीतन्तुसंयोगेऽव्याप्तेरनिस्तारात् । एतेनैव स्वकार्यसमवायिकारणभिन्नरूपवदसमवेतत्वं विशेषणमतो नातिप्रसङ्ग इति निरस्तम् । एवमपि भेर्याकाशसंयोगाद्यव्याप्तेरिति सङ्क्षेपः ।

नव्यास्तु । स्वकार्यद्रव्यानधिकरणवृत्तिभिन्नत्वे सति द्रव्यभिन्नत्वे सत्यदृष्टाद्वारकात्ममनोयोगाजन्यत्वे सति समवायिकारणप्रत्यासन्नं विषयतातिरिक्तरूपेण कारणमसमवायिकारणमिति विवक्षितम् । अत्र च कारणमसमवायिकारणमित्युक्ते आत्मैकत्वं स्वाध्यक्षं प्रति असमवायि स्यात् । तदर्थं विषयतातिरिक्तरूपेणेति । तावत्युक्ते समवायिकारणे गतम् । अतः समवायिकारणप्रत्यासन्नमिति । तावत्युक्ते च ज्ञानादौ गतम् । अतोऽदृष्टाद्वारकात्ममनोयोगाजन्यत्वे सतीति । तावत्युक्ते पटोऽपि स्वरूपं प्रत्यसमवायि-

कारणं स्यात्तदर्थ द्रव्यभिन्नत्वे सतीति। एतावत्युक्ते च तुरीतन्तुसंयोगे गतम्। अतः स्वकार्यद्रव्यानधिकरणवृत्तिभिन्नत्वे सतीति। न चात्ममनःसंयोगादौ स्वकार्यद्रव्याप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्। स्वकार्यद्रव्यानधिकरणवृत्तयः तुरीतन्तुसंयोगादयः प्रसिद्धास्तदन्यत्वस्य तत्रापि सत्त्वात्। न च तर्हि तुरीपटसंयोगासमवायिनि तुरीतन्तुसंयोगेऽव्याप्तिः। तस्यैव तद्भिन्नत्वाभावादिति वाच्यम्। न हि य एव तुरीतन्तुसंयोगः पटमारभते स एव तुरीतन्तुसंयोगं बाधाकिन्त्वन्य एवेति, तत्रापि विशिष्टभेदसत्त्वात्। एवञ्च न कश्चिद्दोषः। तथा हि। स्वकार्यद्रव्यानधिकरणवृत्तिभिन्नत्वविशेषणान्न तुरीतन्तुसंयोगादावतिव्याप्तिः। द्रव्यभिन्नत्वविशेषणाच्च न तन्तुपटयोरुत्पन्नद्वित्वसमवायिकारणे पटेऽतिव्याप्तिः। अदृष्टाद्वारकात्ममनोयोगाजन्यत्वविशेषणाच्च नापेक्षाबुद्ध्यादौ प्रसङ्ग इति। तत्राप्येतदेवोत्तरम् **एवमन्यत्रापीति।**

अयमाशयः। आत्मत्वरूपसामान्यप्रत्यासत्त्या यदा आत्मप्रत्यक्षं तदा प्रत्यासत्तितया तज्जनकात्मत्वे एवमप्यतिव्याप्तेः। तस्य स्वकार्यद्रव्यानधिकरणवृत्तितुरीतन्तुसंयोगादिभिन्नत्वाद्द्रव्यभिन्नत्वाददृष्टाद्वारकात्ममनोयोगाजन्यत्वादात्मप्रत्यक्षसमवायिकारणात्मसमवेतत्वात्प्रत्यासत्तितया तज्जनकत्वेन विषयतातिरिक्तरूपेण कारणत्वाच्चोक्तलक्षणस्य सत्त्वात्। शरीरात्मसंयोगोऽपि ज्ञानादिहेतुरिति मते त्राप्यतिव्याप्तेश्च। किञ्च परमात्मक्षेत्रज्ञगतद्वित्वनिमित्तकारणीभूतेश्वरापेक्षाबुद्धावतिव्याप्तिः। तस्या अपि स्वकार्यद्रव्यानधिकरणवृत्तितुरीतन्तुसंयोगादिभिन्नत्वात्, द्रव्यभिन्नत्वात्, आत्ममनोयोगाजन्यत्वाच्च तत्रोक्तलक्षणसद्भावात्। तदर्थं जन्यत्वे सतीति विशेषणे च परमात्मक्षेत्रज्ञगतद्वित्वसमवायिकारणे परमात्मक्षेत्रज्ञगतैकत्वेऽव्याप्तेः। संयोगविशेषात्मकसंग्रहासाधारणकारणे स्नेहेऽतिव्याप्तेश्च। न च तस्यापि संग्रहासमवायिकारणत्वमेवेति न तत्रातिव्याप्तिरिति वाच्यम्। तस्य संयोगरूपतया संयोगकर्मान्यतरमात्रासमवायिकारणत्वनियमस्य परैरभ्युपगतत्वेन तदयोगात्। ईश्वरापेक्षाबुद्धावतिव्याप्तिवारणाय ज्ञानवदवृत्तीति विशेषणे आत्ममनःसंयोगेऽव्याप्तेः। तत्परिहाराय मात्रपदप्रक्षेपे चात्मगतैकत्वेऽव्याप्तेः। किञ्च द्वितीयादिशब्दकारणीभूताऽऽद्यादिशब्देष्वपि सत्त्वात्तत्रातिव्याप्तिरेव। तेषामपि स्वकार्यद्रव्यानधिकरणतुरीतन्तुसंयोगादिभिन्नत्वात्, द्रव्यभिन्नत्वादेश्च सत्त्वात्। न चाद्यादिशब्दानां द्वितीयादिशब्दासमवायिकारणत्वेन लक्ष्यत्वान्न तत्रातिव्याप्तिरिति वाच्यम्। तथा सति ज्ञानादीनामप्यसमवायिकारणत्वेन लक्ष्यत्वस्य वक्तुं शक्यत्वेन तत्रातिव्याप्तेरेवाभावात् तद्वारकादृष्टाद्वारकात्ममनोयोगाजन्यत्वे सतीति विशेषणवैयर्थ्यापातात्। न चात्ममनोयोगस्यैवासमवायिकारणस्य सत्त्वान्न ज्ञानादेस्तथात्वमिति तद्वारकविशेषणसार्थक्यमेवेति वाच्यम्। तथा सति भेर्याकाशसंयोगरूपासमवायिकारणान्तरसत्त्वादाद्यादिशब्दानां द्वितीयादिशब्दासमवायिकारणत्वमपि नास्तीति तत्रातिव्याप्तिपरिहाराय शब्दतन्मात्रवृत्तीत्यादि विशेषणस्याप्यावश्यकत्वात्। न

च भेर्याकाशसंयोगस्य द्वितीयादिशब्दसमवायिकारणप्रदेशान्तरप्रत्यासन्नत्वाभावान्नासमवायित्वमिति वाच्यम् । तर्हि तत एवाद्यादिशब्दानामपि प्रदेशान्तरवर्तिनां प्रदेशान्तरवर्तिद्वितीयादिशब्दसमवायिकारणाप्रत्यासन्नत्वादसमवायित्वाभावापातात् न चाकाशत्वेनैक्यात्तत्प्रत्यासन्नत्वं तर्हि तत एव भेर्याकाशसंयोगस्यापि तत्प्रत्यासन्नतया असमवायिकारणत्वोपपत्तेर्नाद्यादिशब्दानां द्वितीयादिशब्दासमवायिकारणत्वं स्यादिति यत्किञ्चिदेतत् । एतेनव समवायिकारणसमकालीनद्रव्यनाशप्रयोजकनाशप्रतियोगितावच्छेदकरूपवत्त्वमसमवायिकारणत्वं, तादृशं च रूपं यद्यप्यसमवायिकारणत्वमेव तथाऽपि तेन रूपेणाप्रवेशान्नात्माश्रय इति मतान्तरमपि परास्तम् । गुणाद्यसमवायिकारणे तन्तुरूपादावसमवायिकारणत्वस्य सत्त्वेनातिप्रसक्ततया समवायिकारणसमानकालीनद्रव्यनाशप्रयोजकनाशप्रतियोगितावच्छेदकत्वानुपपत्तेरिति दिक् ।

स० — ननु स्वकार्यद्रव्यानधिकरणवृत्तिभिन्नत्वे सति द्रव्यभिन्नत्वे सति अदृष्टाद्वारकात्ममनस्संयोगाजन्यत्वे सति समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणमिति विवक्षितम् । अत्र तुरीतन्तुसंयोगे अतिव्याप्तिपरिहाराय पूर्वविशेषणम् । पटाद्यावृत्त्यर्थं द्वितीयम् । व्याप्यबुद्ध्यादेर्व्यापकबुद्ध्यादिकं प्रति असमवायिकारणत्वपरिहाराय तृतीयम् । तत्कथमतिव्याप्तिदानमित्यत आह- **एवमन्यत्राप्यतिव्याप्तिरूहनीयेति** । लक्षणान्तरेऽप्युक्तन्यायेनातिव्याप्तिर्द्रष्टव्येत्यर्थः । तथा हि- परमात्मक्षेत्रज्ञगतद्वित्वनिमित्तकारणीभूतेश्वरापेक्षाबुद्धावतिव्याप्तेः, जन्यत्वे सतीति विशेषणे परमात्मक्षेत्रज्ञगतद्वित्वासमवायिकारणे परमात्म-क्षेत्रज्ञगतैकत्वे अनादिनित्ये अव्याप्तेः, संयोगविशेषरूपसंग्रहासाधारणकारणस्नेहे अतिव्याप्तेश्च । न च तस्यापि संग्रहासमवायिकारणत्वमेव इति न तत्र अतिव्याप्तिरिति वाच्यं । तस्य संयोगरूपत्वेन संयोग--कर्मान्यतममात्रासमवायिकारणत्वाभावात् । ईश्वरापेक्षाबुद्धावतिव्याप्तिवारणाय ज्ञानवदवृत्तीतिविशेषणे आत्ममनस्संयोगे अव्याप्तेः । मात्रपदप्रक्षेपे चात्मगतैकत्वे अव्याप्तेरिति दिक् ।

प० — **एवमन्यत्रापीति** । तुरीतन्तुसंयोगादावित्यर्थः ।

या० — **एवमन्यत्रापीति** । तुरीतन्तुसंयोगादावित्यर्थः ।

श्री० — **अन्यत्र** तुरीतन्तुसंयोगे ।

सु० — पाकजप्रक्रियां चाप्रामाणिकीमङ्गीकुर्वन्ति । त(त्र)च वक्ष्यत इत्यलम् ॥

शे० — **पाकजप्रक्रियामिति** । घटादेरामद्रव्यस्याग्निना सम्बद्धस्याग्न्यभिघातान्नोदनाद्वा तदारम्भकेषु परमाणुषु कर्माण्युत्पद्यन्ते तेभ्यो विभागः, विभागेभ्यः संयोगविनाशाः, संयोगविनाशेभ्यः कार्यं द्रव्यं विनश्यति । तस्मिन्विनष्टे परमाणुष्वग्निसंयोगादौष्ण्यापेक्षाच्छ्यामादीनां विनाशः पुनरन्यस्मादग्निसंयोगादौष्ण्यापेक्षात्पाकजा जायन्ते । तदनन्तरं भोगिनामदृष्टापेक्षादात्माणुसंयोगादुत्पन्नपाकजेष्वणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगाद्व्यणुकादिप्रक्रमेण कार्यद्रव्यमुत्पद्यते । तत्र च कारणगुणक्रमेण रूपाद्युत्पत्तिर्भवतीति पाकजप्रक्रियामित्यर्थः ॥ **अप्रामाणिकीमिति** । उक्तेर्थे प्रमाणाभावादिति भावः । ननु नोदनाद्युत्पत्तौ कर्मोत्पत्तिः प्रमाणम् । कर्मसु विभागास्तेषु पूर्वसंयोगनिवृत्तिस्तत्र कार्यद्रव्यविनाशस्तत्र पूर्वरूपादिपरावृत्तिस्तथा रूपाद्यन्तरोत्पत्तिः स्थूलद्रव्योत्पत्तौ प्रमाणम् । सा तावदवयवपरम्परायाम् । सा द्व्यणुके । तदुत्पत्तिः परमाणुसंयोगे । स च तत्क्रियायाम् । साऽदृष्टवदात्मसंयोग इति कथमुक्तप्रक्रियाया अप्रामाणिकत्वमित्यत आह **तत्र वक्ष्यत इति** । परमाणुष्विव कार्यद्रव्येषु पूर्वरूपादिनिवृत्तेरपूर्वरूपाद्युत्पत्तेरुपपत्तेर्न विवक्षितार्थसिद्धिरिति 'अनिवृत्तविनाशास्तु धर्मा उभयरूपका' इत्येतद्व्याख्यावसरे वक्ष्यत इत्यर्थः । ननु पार्थिवावयविरूपादयः स्वाश्रयविनाशादेव विनश्यन्ति अवयविरूपादित्वात्पटरूपादिवत् । कारणगुणेभ्य एवोत्पद्यन्ते तत एव तद्वदेवेति आश्रयनाशेनैव नाशस्य कारणगुणेभ्य एव चोत्पत्तेश्च सिद्धिर्भविष्यतीत्यत आह **अलमिति** । तदर्थस्तु क्वचित्सत्याश्रयेऽपि विनाशेऽग्निसंयोगजत्वे च विरोधाभावात् । अन्यथा कार्यद्रव्यं संयोगनाशादेव नश्यति कार्यद्रव्यत्वाद्व्यणुकवदित्यादिकमपि स्यादिति ।

प० —**पाकजप्रक्रियामिति** । पीलुपाकप्रक्रियामित्यर्थः । आमघटश्यामतादिकं घटेऽग्निसंयोगे सति नोदनादिवशेन जातकर्मणा कपालद्वयसंयोगनाशेन नश्यति । एवं कपालद्वयादिगतमपीत्यापरमाणु स्वस्वाश्रयद्रव्यनाशेन नश्यति । परमाण्वोस्तु नित्यत्वेन तच्छ्यामत्वादिकमेव नश्यति । पुनर्भोजकादृष्टवशादुत्पन्नरूपान्तरयोः संयोगे सति द्व्यणुकादिक्रमेण घटोत्पत्तौ तत्र पीतरूपाद्युत्पत्तिरिति । एवंरूपा प्रक्रिया न प्रमाणवतीत्यर्थः । ननु घटरूपादयः स्वाश्रयनाशादेव नश्यन्ति पार्थिवावयविरूपादित्वान्नष्टपटगतरूपादिवदित्यादिप्रमाणमस्तीत्यत आह **तच्च वक्ष्यत इति** । 'अनिवृत्तविनाशास्तु धर्मा उभयरूपका' इत्यादिव्याख्यानावसरेऽप्रामाणिकत्वं वक्ष्यत इत्यर्थः ॥

॥ अनियमप्रमाणानां सादृश्यादीनां बाधकोद्धारः ॥

या० — 'विमताः पार्थिवावयविरूपादयः स्वाश्रयविनाशादेव नश्यन्ति अवयविरूपादित्वा-द्भग्नपटरूपादिवत् । कारणगुणेभ्य एवोत्पद्यन्ते तत एवे'त्यादिप्रमाणानां पीलुपाकप्रक्रियायां सत्त्वात्कथम-प्रामाणिकत्वं प्राक्जप्रक्रियाया इत्यत आह तच्च वक्ष्यत इति । 'अनिवृत्तविनाशास्तु धर्मा उभयरूपका' इत्यनुव्याख्याव्याख्यावसर इति शेषः ॥

श्री० — तच्चेति । अप्रामाणिकत्वमित्यर्थः ।

सु० — ननु परमाणुद्व्यणुके एव तावन्न साक्षिसिद्धे कुतस्तदीयारंभप्रकारः । तत्कथमुक्तं साक्षिमितस्येति । तत्राह यदीति ।

अनु० — यदि साक्षिमितं नैतत्

एतदिति । परमाण्वादिकम् । तर्हि तदप्रामाणिकमेवापद्यत इति शेषः ॥ स्यादेतत् । यद्यपि महत्त्वाभावान्न परमाण्वादिकं चक्षुरादेर्गोचरः । बहिरस्वातन्त्र्यान्मनसोऽपि । आग-मादि तु नानुमानाद्भिद्यते । भेदेऽप्यतीन्द्रिये सङ्केतानुपपत्तेर्नागमस्य विषयः । तथाऽप्यनुमानं तत्र (प्रमाणं) भविष्यति । तत्कथं परमाण्वादेः साक्षिवेद्यत्वाभावेऽप्रामाणिकत्वापत्तिरित्यत आह नेति ।

नानुमा तत्र वर्तते ॥

कथमिति चेत् । किं परमाण्वादिकमेव पक्षीकृत्य तत्साध्यते । उतान्यत् ।

शे० — ननु यदीत्युत्तरभाष्यमनर्थकम् । न च परमाण्वादेः साक्षिसिद्धत्वोपपादनार्थमेतदिति वाच्यम् । तत्साधनस्यापि प्रकृते उपयोगादर्शनादित्यतः साक्षिमितस्यास्येति प्रागुक्तस्यानियमेन तदारम्भकप्रकारस्य परमाणोः साक्षिसिद्धतामन्तरेणानुपपत्तेस्तदुपपादनार्थत्वान्न तदिति भावेन तत्समर्थनपरतयोत्तरभाष्यं योजयितुं तदनुपपत्तिशङ्कामुत्थापयति नन्विति । पूर्वोत्तरवाक्ययोरसङ्गतिपरि-हाराय वाक्यभेदेन योजयितुमपेक्षितपूरणेन पूर्वस्य वाक्याभासतां परिहरति तर्हीति ॥ अप्रामाणिकत्व-प्रसञ्जनेन साक्षिसिद्धतायाः परमाण्वादेः पूर्वेणैन सिद्धेर्नानुमेत्युत्तरभाष्यमनर्थकम् । न चानुमानिकत्वेन प्रामाणिकत्वसम्भवादप्रामाणिकत्वाभावो भविष्यतीत्यप्रयोजकताशङ्कानिरासायानुमानिकत्वाभावोपपादनार्थं तदिति वाच्यम् । तावताऽऽनुमानिकत्वाभावमात्रप्राप्तावपि प्रात्यक्षिकत्वागमिकत्वाद्यभावासिद्ध्या प्रत्यक्षसिद्धतयाऽऽगमोपमानादिसिद्धतया वा प्रामाणिकत्वसम्भवशङ्कानिरासायाप्रत्यक्षत्वादेरपि वक्त-व्यतयाऽऽनुमानिकत्वाभावमात्राभिधानस्यानुपपन्नत्वादित्यतस्तन्निरासस्योपायासमाधानत्वाच्छिष्यैरेव तन्नि-

रासः कर्तुं शक्यत इति भावेन तदनिराकृत्यानुमानिकत्वमात्रनिरासोपपत्तेरिति भावेन प्रमाणान्तरनिरासं स्वयं दर्शयन्नानुमानिकत्वादप्रामाणिकत्वानुपपत्तिशङ्कामुत्थापयति **स्यादेतदिति** । परमाण्वादेः प्रत्यक्षतां वदन्प्रष्टव्यः । किं बाह्यप्रत्यक्षत्वं तस्याभिमतं किंवाऽऽन्तरप्रत्यक्षत्वमिति विकल्पद्वयं मनसि निधाय महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वाभावान्न प्रथम इत्याह **यद्यपीति** । यद्यपि 'महत्त्वं च परमाणावणावपी'ति परमाण्वादेर्महत्त्वस्य व्युत्पादितत्वान्न तदभावकथनं सङ्गतं, तथाऽपि स्वमताभिनिवेशेनेदमुक्तमित्यवधेयम् । द्वितीयं प्रत्याह **बहिरिति** । न गोचर इति वर्तते । बहिरर्थविशेषणके तद्विशेष्यके वा प्रत्यये मनसोऽस्वातन्त्र्यान्न मनसो गोचर इत्यर्थः । यद्यपि स रामः श्यामो युवा चेत्यादिज्ञानान्तरोपनीतबहिरर्थविशेष्यकमानसप्रत्ययस्य रामं स्मरामीत्यादिज्ञानान्तरोपनीतबहिरर्थविशेषणस्य मानसप्रत्ययस्य च दर्शनाज्ज्ञानान्तरोपनीतबहिरर्थविशेषणके तादृशबहिरर्थविशेष्यके वा प्रत्यये मनसः सामर्थ्याज्ज्ञ तः परमाणुरिति ज्ञानान्तरोपनीतबहिरर्थपरमाण्वादिविशेष्यकः प्रत्ययः परमाणुमहं जानामीति तादृशपरमाण्वादिविशेषणकप्रत्ययो वा मानसो भविष्यत्येव; तथाऽपि मनोमात्रगोचरत्वस्यात्परमाण्वादेर्ज्ञानविषयत्वासम्भवात् रूपाद्युपलब्धिकारणचक्षुरादिवज्ज्ञानकारणमनसो ज्ञानविषयतानिरपेक्ष्येण तद्विशेष्यके बहिरर्थविशेषणके वा प्रत्यये सामर्थ्यं नास्तीति भावेनैतदभिधानमित्यवधेयम् । अस्तु तर्ह्यागमादिकमेव तत्र मानमित्यत आह **आगमादि त्विति** । आदिपदेनोपमानादिपरिग्रहः । वाक्यादेर्वाक्यार्थादावनुमानतया प्रमाणत्वमिति वैशेषिकमतमाश्रित्येदमुक्तम् । नैयायिकमतमाश्रित्याह **भेदेऽपीति** ॥ **सङ्केतानुपपत्तेरिति** । आगमात्तदवगमे सति तत्र सङ्केतग्रहसिद्धिस्तत्सिद्धौ चावगतसमयादागमात्तदवगम इत्यन्योन्याश्रयापत्तेरित्यर्थः ॥ **किं परमाण्वादिकमिति** । विप्रतिपन्नं परमाण्वादिकमेवेत्यर्थः । विप्रतिपन्नस्य वन्ह्यादेरेव वन्हिः पर्वतवृत्तिरिति स्वपक्षीकारेण, पर्वतो वन्हिमानित्यन्यपक्षीकारेण च साधनदर्शनाद्विप्रतिपन्नपरमाण्वादिपक्षीकारेण तत्साधनपक्षस्यान्यपक्षीकारेण तत्साधनपक्षस्य च प्रसक्तिसम्भवाद्विकल्पोपपत्तिरित्यवधातव्यम् ॥ **उतान्यदिति** । परमाण्वाद्यन्यदित्यर्थः ।

---

**या० - किं परमाण्वादिकमेवेति** । शब्दोऽनित्यो नित्यत्वं शब्दवृत्ति, पर्वतो वन्हिमान्वन्हिः पर्वतवृत्तिरित्युभयथाऽपि प्रयोगदर्शनादेवं विकल्पोपपत्तिरिति ध्येयम् । (प्रकृते तु पारिमाण्डल्यं किञ्चिद्द्रव्यवृत्तीति प्रयोगे द्रव्यरूपं यत्साध्यं तस्यैव साध्यस्य तद्विपरीते द्रव्यं पारिमाण्डल्यवदिति प्रयोगे पक्षत्वादिति भावः । साध्यस्यैव पक्षत्वात्) । तथा च विवादास्पदं द्रव्यं पारिमाण्डल्यवत् द्व्यणुककारणत्वाद्व्यतिरेकेण त्र्यणुकादिवदिति प्रयोगो द्रष्टव्यः । एवं द्व्यणुकसाधनायामपि ह्रस्वत्ववत् त्र्यणुककारणत्वादिति प्रयोक्तव्यम् ॥

**श्री०— नानुमानादिति** । यथाऽऽहुः कणादसुगतौ 'पुनरनुमानं च तच्चे'ति । **तत्र** परमाणुसद्भावे ।

**सु०— आद्ये तत्प्रमाणान्तरतःसिद्धं न वा । पक्षद्वये दोषमाह** पक्षीकर्तुमिति ।

**अनु०—** पक्षीकर्तुमशक्यत्वात्कुत एवानुमा भवेत् ॥

**सिद्धत्वे पक्षलक्षणाभावादसिद्धत्वे न्यायाविषयत्वात्परमाण्वादेः पक्षीकर्तुमशक्यत्वात् तत्पक्षीकारेणानुमा दूरनिरस्तेति ।**

**ननु पक्षीकरणासंभवे कथमनुमानानुपपत्तिरित्यत आह** यत्रेति ।

यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात् ॥

**यथा तथेत्यध्याहर्तव्यम्** । यत्र यद्विषये । विषयं **देशम्** । **यथा हि विषयप्राप्तेः पदन्यासः कारणम् । स्थाण्वस्थाणुसंयोगस्यास्थाणुक्रियाहेतु(क)त्वात् । अतः पदन्यासाभावे विषयप्राप्तिरपि नास्ति । तथाऽनुमोत्पत्तौ पक्षीकरणं कारणम् । न हि पर्वतादिर्वा वह्न्यादिर्वा अनुमानस्य विषयः । किन्तु तत्संबन्धः । न च संबन्धिज्ञानेन विना संबन्धज्ञानं संभवति । अतः पक्षीकरणाभावे नानुमानोत्पत्तिः संभवतीति ।**

**शे० पक्षलक्षणाभावादिति** । सिद्धधर्मविशिष्टत्वेन साध्यधर्मविशिष्टत्वाभावात्साध्यधर्मविशिष्टस्यैव पक्षत्वादिति भावः । **न्यायाविषयत्वादिति** । सन्दिग्धस्यैव च न्यायविषयत्वादिति भावः ॥ **स्थाण्विति** । स्थाणुश्येनादिसंयोगस्येत्यर्थः ॥ **अस्थाण्विति** । श्येनादिक्रियाहेतुकत्वादित्यर्थः

**प०— पक्षलक्षणाभावादिति** । सन्दिग्धसाध्यधर्मविशिष्टत्वस्य पक्षलक्षणत्वादिति भावः ॥ **न्यायाविषयत्वादिति** । सन्दिग्धस्यैव न्यायविषयत्वादिति भावः । **स्थाण्विति** अचलवस्तूपलक्षणम् । देशस्याप्यचलत्वात् । कारणमित्युक्तं व्यनक्ति **न हीत्यादिना** ।

**या०— न्यायाविषयत्वादिति** । बुद्धावनारूढस्योद्देश्यतयाऽनुमित्यविषयत्वात्, 'सिद्धं धर्मिणमुद्दिश्य साध्यधर्मो विधीयत' इति वचनादिति भावः ॥ **स्थाण्विति** । स्थावरेत्यर्थः ॥

**श्री०— तत्** परमाण्वादिकम् ।

**च०— पक्षलक्षणाभावात्** । विशेष्यताप्रत्यासत्त्या साध्यसंदेहवत्त्वरूपलक्षणाभावात् ।

सु० द्वितीयमपि निराकरोति पक्षीकर्तुमिति । द्व्यणुकं हि पक्षीकृत्य परमाणुरनुमातव्यः । कार्यमेवात्र प्रमाणमित्युक्तत्वात् । तच्चेदानीमप्यसिद्धमिति पक्षीकर्तुमशक्यत्वात्कुत एव तत्कारणपरमाण्वनुमा भवेत् ।

शे० — द्वितीयमिति । अन्यदिति द्वितीयमित्यर्थः । कुतो द्व्यणुकमेव पक्षीकृत्य परमाणुरनुमातव्य इत्यतोऽत्र 'कार्यमेव प्रमाणं भविष्यतीत्याशयवता नेह प्रमाणान्तरमादर्शित'मिति किरणावलीकारवाक्यं प्रमाणयति कार्यमेवात्रेति । किरणावल्यां परमाणुलक्षणा नित्येति प्रशस्तपादभाष्यवाक्यव्याख्यानावसर इत्यर्थः । इदानीं परमाणुसाधनावसरे ।

प० — द्वितीयमपीति । उतान्यदिति पक्षमित्यर्थः ॥ उक्तत्वादिति । तार्किकैरिति योज्यम् ।

सु० — अनुमितं द्व्यणुकं पक्षीकृत्य परमाणुरनुमास्यत इति चेन्न ।

तदपि हि परमाणुं पक्षीकृत्य यदि साध्यते तदोक्त एव दोष इत्याह पक्षीकर्तुमिति । अद्याप्यसिद्धस्य परमाणोः पक्षीकर्तुमशक्यत्वात्कुत एव तत्कार्यद्व्यणुकानुमा भवेत् । नन्वणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वान्महत्परिमाणतारतम्यवदित्यनुमानेन परमाणुसिद्धिर्भविष्यतीति चेन्न । विकल्पानुपपत्तेः । अणुपरिमाणशब्देन किं परिमाणापकर्षोऽभिधीयते, किंवा परमाणुपरिमाणम्, यद्वा द्व्यणुकपरिमाणम्, यदि वोभयपरिमाणम् । नाद्यः दूषितत्वात् । उत्तरपक्षत्रयं दूषयति पक्षीकर्तुमिति । परमाणुद्व्यणुकयोरसिद्धौ तत्परिमाणस्याप्यसिद्धेः । एकैकत्र तारतम्यस्याभावाच्चेति भावः ।

यदिदं जालसूर्यमरीचिस्थं सर्वतः सूक्ष्मतमं रज उपलभ्यते तत्त्र्यणुकमित्युच्यते । तदिदं महत्, चाक्षुपद्रव्यत्वात्; घटवत् । कार्यं च; महत्त्वे सति चाक्षुषत्वात्, महत्त्वे सति क्रियावत्त्वाद्वा । सावयवं च, कार्यद्रव्यत्वात् । तदवयवाश्च द्व्यणुकनामानः । तेऽपि कार्याः सावयवाश्च, महद्द्रव्यारंभकत्वात् तन्तुवत् । यश्च तदवयवः स एव परमाणुः, तदवयवकल्पनायां प्रमाणाभावाद्बाधकसद्भावाच्च । अतोऽनुमानेनैव परमाणुद्व्यणुकसिद्धिरित्यत आह पक्षीकर्तुमिति । प्रत्यक्षस्य त्र्यणुकस्यैव परमाणुत्वसंभवेन तत्कार्यत्वमात्रयवत्वसाधनाय पक्षीकर्तुमशक्यत्वात्कुत एव द्व्यणुकपरमाण्वोरनुमा भवेत् ।

शे० — किमत्र परमाणुमेव पक्षीकृत्य व्यणुकानुमानमभिमतं किंवा व्यणुकमिति विकल्पं मनसि निधायाद्यमनूद्य दूषयति **तदपि परमाणुं पक्षीकृत्येति ॥ महत्परिमाणतारतम्यवदिति ।** अत्र महतो द्रव्यस्य परिमाणं महत्परिमाणमिति व्यधिकरणसमासोऽभिप्रेतः । तेन आन्महत इत्येष विधिरत्र न प्राप्नोति । तस्य सामानाधिकरण्य एवात्वविधायकत्वादत्र च तदभावादिति भावः ॥ **दूषितत्वादिति ।** केयं क्वचिद्विश्रान्तिः किमियत्तापरिच्छेदः किंवा क्वचिद्द्रव्ये वृत्तिरिति विकल्प्य 'न महत्त्वस्य विश्रम । दृश्यतेऽनन्त इत्येव तथाऽऽनन्त्यमणावपी'त्यादिनेति शेषः ॥ **असिद्धेरिति ।** तथा चाश्रयासिद्धिरिति भावः । **एकैकत्रेति ।** परमाणुपरिमाणमात्रे द्व्यणुकपरमाणुमात्रे चेत्यर्थः । तथा च स्वरूपासिद्धिरपीति भावः । द्वितीयं दूषयितुमुत्थापयति **यदिदमिति । चाक्षुषद्रव्यत्वादिति ।** द्व्यणुकादावव्यभिचाराय चाक्षुषेति । रूपादावव्यभिचाराय द्रव्यत्वकीर्तनम् । **महत्त्वे सति चाक्षुषत्वादिति ।** जातौ व्यभिचारवारणाय महत्त्वे सतीति । आत्मादौ तद्वारणाय चाक्षुषत्वोत्कीर्तनम् । **महत्त्वे सति क्रियावत्त्वादिति ।** अत्र मनसि व्यभिचारवारणाय महत्त्वे सतीति विशेषणम् । आत्मादिव्यावृत्त्यर्थं क्रियावत्त्वादित्युक्तम् । कार्यत्वादित्यत्र कार्यत्वमात्रं रूपादौ गतं द्रव्यत्वमात्रं चात्मादौ गतमतो विशिष्टग्रहणम् ॥ **महद्द्रव्यारम्भकत्वादिति ।** महच्छब्दस्यात्र भावप्रधानत्वान्महता महत्त्वेन युक्तं महद्द्रव्यमिति वैयधिकरण्याश्रयणे - आत्वप्राप्तिरिति द्रष्टव्यम् । यद्वा द्रव्यस्यारम्भकं द्रव्यारम्भकं, महतो द्रव्यारम्भकं महद्द्रव्यारम्भकं महत्त्वं च योग्यतया द्रव्येणान्वेतीति नानुपपत्तिरिति ध्येम् । वस्तुतस्तु स्थान्यादेशोक्तिव्यत्ययेन द्वन्द्वेऽल्पाच्तरस्य परनिपातेन च 'आन्महतः'इत्यस्य विधेरनित्यत्वस्यान्यत्र स्थितत्वात्सत्यपि सामानाधिकरण्ये नात्वप्राप्तिरिति तत्त्वम् । अन्ये तु महाद्रव्यारम्भकत्वादित्येव मूलपाठस्तद्विपरीतस्तु लेखकदोषपतित इत्याहुः । द्रव्यारम्भकत्वस्य परिमाणौ व्यभिचारान्महत्त्वेन द्रव्यमत्र विशेषितम् । न च तस्यासिद्धौ क्व व्यभिचारः, सिद्धौ च व्यभिचारः किं करिष्यतीति वाच्यम् । आपाततः प्रतिपन्ने परमाणौ व्यभिचारदर्शनेन परावृत्तिर्माभूदित्यस्यार्थस्य विवक्षितत्वात् द्रव्यपदं च स्वरूपकथनं, न हेत्वन्तर्गतम् । अत एव महदारम्भकत्वादित्येवोत्तरत्र व्यवहार इति द्रष्टव्यम् । ननु द्व्यणुकवत्परमाणुरपि कार्यः सावयवश्च किन्न स्यादित्यतः साधकभावाभावाभ्यां वैषम्यान्नैवमित्याह **तदवयवेति ।** द्व्यणुकस्य कार्यत्वाश्रयणे बाधकाभावाद्युक्तं तस्य कार्यत्वं सावयवत्वं च । परमाणोस्तु कार्यत्वसावयवत्वयोराश्रयणे सर्षपमहीधरयोस्तुल्यपरिमाणत्वापत्तिरूपबाधकसद्भावाच्च न तदित्याह **बाधकसद्भावाच्चेति ॥**

प० — **विकल्पानुपपत्तेरिति ।** विकल्पे कृते कस्यापि विकल्पस्योपपत्तेरभावादित्यर्थः ॥ **दूषितत्वादिति ।** 'न महत्त्वस्यापि विश्रमः' इत्यादिना साध्यवैकल्यबाधादिना दूषितत्वादित्यर्थः ॥

**एकैकत्र तारतम्यस्येति** । परमाणौ द्व्यणुके वैकैकत्रेत्यर्थः । तथा चाश्रयासिद्धिरिति भावः । **शङ्कते यदिदमित्यादिना** ॥ **तदिदमिति** । उपलक्ष्यमाणं सूक्ष्मं वस्तु पक्षः । महदि(चे)ति साध्यम् । मनसि गुणादौ चाव्यभिचाराय क्रमाच्चाक्षुषद्रव्यत्वादिति च पदद्वयम् ॥ **कार्यश्चेति** । तदिदमिति वर्तते । घटत्वादौ गगनादौ चाव्यभिचाराय महत्त्वे सतीति चाक्षुषत्वादिति च क्रमात्पदद्वयम् । घटवदित्यत्राप्यन्वेति । मनसि गगनादौ चाव्यभिचाराय क्रमाद्विशेषणं विशेष्यं च ॥ **सावयवश्चेति** । तदिदमित्यस्ति । गगनादौ गुणादौ चाव्यभिचाराय कार्यद्रव्यत्वादिति क्रमेण पदद्वयम् । शब्दाद्यारंभके गगनादौ द्रव्यारंभके परमाणौ चाव्यभिचाराय महद्द्रव्यारंभकत्वादिति क्रमाद्विशेषणद्वयम् ॥ **बाधकेति** । अनवस्थारूपबाधकसद्भावाच्चेत्यर्थः ॥ **तत्कार्यत्वेति** । तस्य कार्यत्वसावयवत्वयोः साधनायेत्यर्थः ॥

**या०**— महत्त्वे सति क्रियावत्त्वादित्यत्र मनसि व्यभिचारवारणाय महत्त्वे सतीति विशेषणम् ॥ **बाधकसद्भावाच्चेति** । अनवस्थालक्षणबाधकसद्भावाच्चेत्यर्थः । मेरुसर्षपयोस्तुल्यपरिमाणत्वापत्तिरूपबाधकसद्भावाच्चेति वाऽर्थः ।

**श्री०**— **एकैकत्रेति** । परमाणुपरिमाणतारतम्यं द्व्यणुकपरिमाणतारतम्यमिति वा साधने एकैकत्र एकैकनिष्ठे परिमाणे तारतम्याभावादित्यर्थः । द्व्यणुके व्यभिचारवारणाय चाक्षुषपदम् । रूपरूपत्वयोस्तद्वारणाय द्रव्यपदम् । सामान्ये व्यभिचारवारणाय महत्त्वे सतीत्युक्तम् । गगनादौ तद्वारणाय चाक्षुषपदम् । मनसि व्यभिचारवारणाय महत्त्वे सतीत्युक्तम् । गगनादिवारणाय क्रियावत्त्वे सतीत्युक्तम् । परमाणौ व्यभिचारवारणाय महदिति द्रव्यविशेषणम् । द्व्यणुके व्यभिचारवारणाय चाक्षुषपदम् ॥

**सु०**- **महत्त्वात्कथमसौ परमाणुरिति चेन्न । महत्त्वासिद्धेः । चाक्षुषद्रव्यत्वात्तत्सिद्धिरिति चेन्न । कस्यचिदमहतोऽपि चाक्षुषत्वे बाधकाभावात् । महत्त्वं च द्रव्यचाक्षुषतायां कारणमिति चेत् । सत्यम् । क्वचिदन्यदपि कारणं कल्पयिष्यते । गौरवं तथा सति स्यादिति चेन्न । धर्मिकल्पनातो धर्ममात्रकल्पनायाः लघुत्वात् । अस्तु वा महत्त्वम् । तथाऽप्यणुत्वेन तस्य समावेशे को विरोधः । कार्यत्वसाधनं चाप्रयोजकम् । महतोऽप्यात्मनः प्रत्यक्षवच्चाक्षुषत्वोपपत्तेः । परममहत्त्वाभावेन क्रियासंभवाच्च । महत्त्वस्य कारणबहुत्वं कारणमिति चेन्न । नित्यत्वोपपत्तेः । चाक्षुषमहत्त्वान्नेति चेन्न । बाधकाभावात् । अत एव कार्यद्रव्यत्वमसिद्धम् । सन्तु वा तदवयवास्त एव परमाणव इति तेषां पुनरवयवसाधनाय पक्षीकर्तुमशक्यत्वात्तुल्य**

एवानुमा भवेत् । ननु महद्द्रव्यारंभकत्वात्तेऽपि सावयवा एवेति चेन्न । निरवयवस्य महादीर्घद्रव्यारंभकत्वे बाधकाभावात् । बहुत्वेनैव महत्त्वारंभोपपत्तेः । द्रव्यारम्भे सावयवत्वस्यानुपयोगात् । सन्तु वा त्र्यणुकावयवास्तेऽपि कुतः परमाणवः । महद्द्रव्यारम्भकत्वेन तेषामपि सावयवत्वानुमानात् । अनवस्था बाधिकेति चेन्न । तदवयवानां तदवयवावयवानां वा निरवयवत्वेन तद्विश्रान्तेः । कथं चेयमनवस्था दूषणम् । मेरुसर्षपादीनां समपरिमाणत्वापत्तिस्तु दूषिता । घटादिकार्यानुत्पत्तिरिति चेन्न । सावयवस्यैव नित्यत्वोपपत्तेः । यथोक्तम् । अविभागः परागुरमाणुतेति ॥

**शे०— क्वचिदन्यदपीति ।** यथा हि द्रव्यगुणयोश्चाक्षुषत्वेऽप्येकस्य प्रयोजकस्य तत्रासम्भवाद्द्रव्यचाक्षुषतायां गुणचाक्षुषतायां च भिन्नभिन्नमेव प्रयोजकमभ्युपेयते तथा द्रव्यचाक्षुषत्वेऽप्येकस्य तस्योक्तरीत्याऽसम्भवात्क्वचिन्महत्त्वं क्वचिदणुत्वमिति प्रयोजकद्वयमेव कल्प्यम् । अन्यथा चाक्षुषत्वेऽप्येकमेव प्रयोजकमभ्युपेत्य द्रव्यगुणयोरन्यतरस्य अचाक्षुषताया एवाङ्गीकर्तव्यत्वापातादिति भावः । ननु त्र्यणुकस्य कार्यतायाः साधितत्वात्कथं परमाणुत्वमित्यत आह **कार्यत्वसाधनं चेति** । ननूक्तहेतुद्वयोच्छित्तिरूपविपक्षबाधकसद्भावात्कथमप्रयोजकत्वमित्याशङ्क्य न तावत्प्रथमहेतूच्छित्तिर्बाधिकेत्याह **महतोऽपीति** । अकार्यस्यापीति शेषः (अर्थः) । चाक्षुषत्वोपपत्तेरित्यत्र त्र्यणुकस्येति शेषः । अन्यथा प्रत्यक्षत्वेनात्मनोऽपि कार्यत्वापत्तेरिति भावः । द्वितीयहेतूच्छित्तिरपि न बाधिकेत्याह **परममहत्त्वाभावेनेति ॥ महत्त्वस्य कारणबहुत्वमिति ।** कार्यमहत्त्वं प्रति कारणमहत्त्वकारणबहुत्वयोरेव कारणत्वात्त्र्यणुकस्य कार्यत्वपक्षे तन्महत्त्वं प्रति कारणमहत्त्वस्य कारणत्वासम्भवेऽपि कारणबहुत्वस्य तत्सम्भवात्त्र्यणुके महत्त्वोत्पत्त्युपपत्तावपि तस्याकार्यत्वाभ्युपगमे कारणबहुत्वस्यापि कारणत्वासंभवान्न त्र्यणुकस्य महत्त्वोत्पत्त्युपपत्तिरिति भावः । भवेत्त्र्यणुकस्याकार्यत्वे महत्त्वानुपपत्तिर्यदि तदनित्यमस्माकमभिमतं स्यान्न चैवम् । किन्तु नित्यमेवेति न तदनुपपत्तिरित्याह **नित्यत्वोपपत्तेरिति ।** केचित्तु जन्यमहत्त्वाधिकरणत्वात्त्र्यणुकं कार्यं सावयवं चाङ्गीकार्यमिति पूर्ववाक्यार्थं वर्णयन्तस्त्र्यणुकमहत्त्वस्य नित्यत्वादसिद्धो हेतुरित्येतद्वाक्यतात्पर्यमाहुः । ननु त्र्यणुकमहत्त्वं जन्यं चाक्षुषमहत्त्वात् घटमहत्त्ववदित्यनुमानेनानित्यत्वसिद्धेः कथं महत्त्वस्य नित्यता स्यादिति शङ्कते **चाक्षुषेति ॥ बाधकेति ।** तथा चाप्रयोजकत्वान्न तेनास्यानित्यत्वसिद्धिरिति भावः ॥ **अत एवेति ।** कार्यत्वसाधकयोरुक्तहेत्वोरप्रयोजकत्वेनासाधकत्वादेवेत्यर्थः ॥ **असिद्धमिति ।** तथा च न तेन सावयवत्वसाधनमुपपद्यत इति भावः । ननूक्तहेतुच्छित्तिरेव विपक्षे बाधिकाऽस्तीति कथं तदभाव इत्यतः किमत्र निरवयवत्वेऽवय-

वपरिमाणरूपकारणाभावेन महत्त्वरूपविशेषणारम्भो न स्यादिति विवक्षितमुत द्रव्यारम्भप्रयोजकस्य सावयवत्वस्य तत्राभावाद्द्रव्यरूपविशेष्यारम्भ एव न स्यादित्यभिमतमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **बहुत्वेनैवेति** । त्र्यणुकस्य सावयवद्व्यणुकारंभकत्ववादिनापि न अवयवगतपरिमाणेन त्र्यणुके महत्त्वोपपादोऽङ्गीकृतः । तदवयवे द्व्यणुके महत्त्वाभावात्, किन्तु बहुत्वेनैव । तथा च निरवयवा-रब्धत्वेऽपि तदवयवगतबहुत्वेनैव तन्महत्त्वारंभो भविष्यतीति भावेन बहुत्वेनैवेत्येवकारः । द्वितीयं दूषयति **द्रव्यारंभ इति** । अन्यथा त्वन्मते निरवयवत्वात्परमाणोरपि द्व्यणुकारम्भकत्वं न स्यादिति भावः । ननु तदवयवकल्पनायां प्रमाणाभावादेव तेषां परमाणुत्वमित्युक्तमित्यत आह **महद्द्रव्या-रम्भकत्वेनेति** । ननु तदवयवकल्पनायां बाधकसद्भावात्तेषामेव परमाणुत्वमित्यभिप्रेत्य शङ्कते **अनवस्थेति** ॥ **कथं चेदमिति** । मूलक्षयाभावादिति भावः । ननु तथा सत्यनन्तावयवारब्धत्वा-विशेषान्मेरुसर्षपादीनां समपरिमाणत्वस्य प्रसङ्गात्तस्य चाप्रामाणिकत्वादप्रामाणिकस्वीकाररूपानिष्टा-पादकत्वात्कथं मूलक्षयाभाव इत्यत आह **मेरुसर्षपादीनामिति** ॥ **दूषितेति** । आनन्त्येऽपि तारतम्यसद्भावादित्यादिनेति शेषः । तथाऽपि प्रमितघटादिकार्योत्पत्तिपरित्यागापादकतयाऽनवस्था बाधिका भविष्यतीत्याशङ्कते **घटादीति** । परमाणोर्निरवयवत्वाङ्गीकारे द्व्यणुकादिक्रमेण घटादिका-र्योत्पत्तिसम्भवेऽपि परमाणोरपि सावयवत्वेऽवयवपरम्पराया अविश्रान्तेर्घटादिकार्यानुत्पत्तिः प्रसज्यत इत्यर्थः । सावयवस्यैवेत्यतःपरं कस्यचिदिति शेषः । तथा चावयवपरम्पराया अनवधिकत्वेऽप्यारम्भ-कावयवपरम्परायाः परमाण्ववयवभूतभूतसूक्ष्मेषु विश्रान्तेर्न घटादिकार्यानुत्पत्तिलक्षणमूलक्षयोऽपीति भावः । ननु परमाणोरपि सावयवत्वे कथं तस्य परमाणुत्वम् । यो हि सर्वतोऽपकृष्टो यतः परमाणुर्नास्ति तं हि परमाणुमाचक्षते । तस्य च सावयवत्वेऽवयविनोऽवयवानामपकृष्टपरिमाणत्वावश्यम्भावात्प-रमाणुत्वासम्भवादित्यतः स्यादयं विरोधो यदीदं परमाणुशब्दप्रवृत्तिनिमित्तं स्यान्न चैवम् । सावयवत्वेन साक्षिसिद्धे तस्मिंस्तदसम्भवात् । किन्नामान्यदेवेति न व्याघात इत्यभिप्रेत्योक्तमर्थं स्मारयति **यथोक्तमित्यादिना** । न तु सावयवस्यापि परमाणोर्नित्यत्वे सम्मतिकथनमेतत् । तथा सति पूर्वो-त्तरविरोधप्रसङ्गादित्यवधेयम् ।

स० — **अस्तु वेति** । न च महत्त्वस्य सावधिकत्वात् त्र्यणुकापेक्षया अणोरेवाभावान्न तस्य महत्त्वापत्तिरिति वाच्यम् । तदंशानामेव तदपेक्षया न्यूनपरिमाणत्वेन महत्त्वसंभवादिति गूढाभिप्रायात् । **महतोऽपीति** । अन्यथा प्रत्यक्षत्वेनात्मनोऽपि कार्यत्वापत्तेरिति भावः । महत्त्वे सति क्रियावत्त्वात् इत्यत्राप्यप्रयोजकत्वम् । न च नित्यत्वे क्रियाया अनुपपत्तिः । परममहत्त्वस्यैव क्रियाया अभावे

प्रयोजकत्वेन नित्यत्वस्य तदप्रयोजकत्वेन नित्यत्वेऽपि परममहत्त्वाभावेन क्रियाया उपपत्तेरित्याह **परममहत्त्वाभावेनेति** ॥ **अत एवेति** । कार्यत्वसाधकत्वेनाभिप्रेतयोः महत्त्वे सति चाक्षुषत्वमहत्त्वे सति क्रियावत्त्वयोरप्रयोजकत्वेन तदसाधकत्वादेव कार्यद्रव्यत्वस्यासिद्धत्वान्न तेन सावयवत्वसाधनमुपपन्नमिति भावः । **महद्द्रव्यारम्भकत्वादिति** । न च 'आन्महतस्समानाधिकरणजातीययोः' इत्यात्वे महाद्रव्यारंभकत्वादिति वक्तव्यत्वात् महद्द्रव्यारम्भकत्वादित्यनुपपन्नमिति वाच्यम् । द्रव्यं द्विविधम् । परमाणुरूपं द्रव्यम्, महद्द्रव्यं चेत्येवम् । महद्द्रव्यमित्यस्य संज्ञात्वेन 'दृष्टानुगतिर्हि संज्ञा छन्दसो' इत्युक्तसमाधानस्यात्राप्युपपन्नत्वात् । किरणावल्यां 'महद्द्रव्यारंभकत्वम्' इत्युक्तत्वेनास्य परोक्तानुवादरूपत्वेन अनुकरणस्य यथोपदिष्टस्यैव साधुत्वेनादोषादित्याहुः ।

प०—**को विरोध इति** । आपेक्षिकपरिमाणोत्कर्षापकर्षयोरेकत्र समावेशस्य साधितत्वादिति भावः । कार्यत्वस्य प्राक्साधनात्कथं अणुत्वं तस्येत्यत आह **कार्यत्वसाधनश्चेति** । कार्यत्वसाधकहेतुद्वयस्यापि क्रमादप्रयोजकत्वं व्यनक्ति **महतोपीत्यादिना** । अकार्यस्यापि त्र्यणुकस्येति योज्यम् ॥ **बाधकाभावादिति** । त्र्यणुकमहत्त्वस्य चाक्षुष(मह)त्वेपि नित्यत्वे बाधकाभावादित्यर्थः ॥ **अत एवेति** । कार्यत्वसाधकहेत्वोरप्रयोजकत्वेन कार्यत्वासाधकत्वादेवेत्यर्थः ॥ **असिद्धमिति** । तथा च तेन न सावयवत्वसिद्धिरिति भावः ॥ **महद्द्रव्यारंभकत्वादिति** । 'आन्महतःसमानाधिकरणजातीययोरि'त्यत्र महत आदिति वक्तव्ये विधेयोद्देश्ययोर्व्यत्यासेन निर्देश आत्वविधेरनित्यत्वज्ञापनार्थमिति गीताभाष्यटीकायामुक्तत्वान्महद्द्रव्येति साधु । महत्त्वानुपपत्तिर्वा द्रव्यारंभानुपपत्तिर्वा निरवयवत्वे बाधिकेत्यतः क्रमेण निराह **बहुत्वेनैवेत्यादिना** ॥ **महद्द्रव्यारंभकत्वेनेति** । द्व्यणुकस्यापेक्षिकमहत्त्वस्य पूर्वं साधनान्नासिद्धिरिति भावः । अङ्गीकृत्याप्यनवस्थां तस्या अदोषत्वमाह **कथञ्चेयमिति** । केन प्रकारेण दूषणमित्यर्थः । मेरुसर्षपयोस्तुल्यपरिमाणतापादकत्वेनोत सावयवस्य जन्यत्वेन प्रलये नाशनियमेन कारणाभावेनादिकार्यानुत्पत्त्यापादकत्वेन । आद्यं निराह **मेर्विति** ॥ **दूषितेति** । 'अविभागाः पराणुते'त्येतद्ग्रन्थव्याख्यावसर इति भावः । द्वितीयं शङ्कित्वा निराह **आदिकार्येति** ॥ **यथोक्तमिति** । कदाप्यवयवाविभागोक्त्या नित्यत्वसूचनेन प्रलयेऽप्यवस्थानोपपत्त्याऽऽदिकार्यानुत्पत्त्यभावादिति भावः ।

॥ **परमाणुद्व्यणुकयोरानुमानिकत्वनिरासेन साक्षिसिद्धत्वसमर्थनम्** ॥

या०— ननु त्र्यणुके कार्यत्वस्य साधितत्वात्कथं तस्य परमाणुत्वमङ्गीक्रियत इत्यत आह-**कार्यत्वसाधनमिति** । ननूक्तहेतुद्वयोच्छित्तिरूपविपक्षबाधकसद्भावात्कथमप्रयोजकमित्यतस्तावन्न प्रथमहेतूच्छित्तिर्बाधिकेत्याह **महतोऽपीति** । अकार्यस्यापीति शेषः । **चाक्षुषत्वोपपत्तेरिति** । त्र्यणुकस्येति

शेषः । द्वितीयहेतूच्छित्तिरपि न बाधिकेत्याह **परममहत्त्वेति** । तर्कद्वयेऽप्यप्रयोजकतेति **भावः** ॥ **महत्त्वस्येति** । तथा च जन्यमहत्त्वाधिकरणत्वात्त्र्यणुकं कार्यं सावयवं चाङ्गीकार्यमिति भावः । त्र्यणुकमहत्त्वस्य नित्यत्वादसिद्धो हेतुरित्याह **नित्यत्वेति** । त्र्यणुकमहत्त्वं जन्यं **चाक्षुषमहत्त्वाद्घट**-महत्त्ववदिति हेतुसाधनान्नासिद्धिरित्याशङ्कते **चाक्षुषेति** ॥ **बाधकेति** । तथा चाप्रयोजकतेति भावः ॥ **अत एवेति** । कार्यत्वसाधकहेत्वोरप्रयोजकत्वेनासाधकत्वादेवेत्यर्थः ॥ **असिद्धमिति** । तथा च न तेन सावयवत्वसाधनमुपपद्यत इति भावः ॥ **ननु महद्द्रव्येति** । महद्द्रव्यमिति द्रव्यविशेषस्य संज्ञा, तेनान्महत इत्येष विधिर्नभवति । 'दृष्टानुगतिर्हि संज्ञाछन्दसोरि'ति पूर्वोक्तमेव समाधानमत्र बोध्यम् । किरणावल्यादौ महद्द्रव्यारम्भकत्वादित्युदयनोक्तमेवात्रानूद्यते । अनुवादो ह्यनुकरणविशेषः । अनु-करणस्य च यथोपदिष्टस्यैव साधुत्वमतोऽत्र नोक्तशङ्केत्यप्याहुः । ननु बाधकाभावादिति न युक्तम् । यतो हेतूच्छित्तिरेवात्र बाधिकेति चेत् । अत्र वक्तव्यम् । किं निरवयवेऽवयवपरिमाणरूपकारणाभावेन महत्त्वरूपविशेषगारम्भो न स्यादित्यापाद्यते उत द्रव्यारम्भप्रयोजनकस्य सावयवत्वस्य तत्राभावे द्रव्यरूप-विशेष्यारम्भ एव न स्यादितीति । आद्यं दूषयति **बहुत्वेनेति** । द्वितीयं दूषयति **द्रव्यारम्भ इति** । त्वन्मते निरवयवस्यापि परमाणोर्द्रव्यारम्भकत्वादिति भावः ॥ **कथं चेयमिति** । अप्रामाणिकत्वंकारा-दिरूपानिष्टानापादकत्वादिति भावः । ननु मेरुसर्षपयोस्तुल्यपरिमाणत्वमप्रामाणिकमेवं सति प्रसज्यत इत्यत आह **मेरुसर्षपेति** । तथाऽपि प्रामाणिकघटादिकार्योत्पत्तिपरित्यागापादिकेयमित्याशङ्कते **घटा-दीति** ॥ **सावयवस्यैवेति** । अनन्तावयवोपेतस्य प्रकृतिरूपस्य सूक्ष्मरजस इत्यर्थः । तथा चावयवपर-म्परायाः आनन्त्येऽपि कारणीभूतावयवपरम्परायाः नित्ये सूक्ष्मरजसि विश्रान्तेर्न घटादिकार्यानुत्पत्तिरित्यर्थः ।

**श्री॰**—ननु चाक्षुषद्रव्यत्वमस्तु महत्त्वं माऽस्त्विति शङ्का न युज्यते । महत्त्वाभावे चाक्षुषद्रव्य-त्वमेव न स्यादिति हेतूच्छित्तिरेव बाधिकेत्याशङ्कते । **महत्त्वमिति** । **क्वचित्** त्र्यणुकरूपे द्रव्ये । **अन्यत्** महत्त्वातिरिक्तम् । **तथा सति** चाक्षुषद्रव्यतायां प्रयोजकद्वयकल्पने ॥ **धर्मीति** । चाक्षुषद्रव्यत्वे महत्त्वं **कारणं** प्रकल्प्य **तेन च** त्र्यणुके महत्त्वं प्रसाध्य तस्य महद्द्रव्यस्य परमाणुत्वं न संभवतीति तदतिरिक्तं किञ्चित्पर-माण्वाख्यं धर्मि कल्पनीयमिति धर्मिकल्पनात इत्यर्थः ॥ **धर्मेति** । चाक्षुषद्रव्यत्वेन सिद्धे त्र्यणुकाख्ये द्रव्ये, महत्त्वातिरिक्तप्रयोजकीभूतं किञ्चिद्धर्मं कल्पयित्वा तस्यैव परमाणुत्वकल्पनं लघ्वित्यर्थः ॥ **को विरोध इति** । विरोधस्य वस्तुत्र्यपक्षयेत्यनेन परिहृतत्वादिति भावः ॥ **महतोऽपीति** । ननु महत्त्वे सति चाक्षुषत्वमस्तु अकार्यत्वमेवास्त्वित्यप्रयोजकता न युक्ता, अकार्यस्य द्रव्यस्य महत्त्वे सति चाक्षुषत्वा-दर्शनादिति चेन्न । यथाऽकार्यस्य महद्द्रव्यस्य कुत्रापि प्रत्यक्षत्वानुपलब्धावपि आत्मरूपमहद्द्रव्यस्य तत्कल्पितं, एवमकार्यस्य महद्द्रव्यस्य कुत्रापि चाक्षुषत्वानुपलब्धावपि त्र्यणुकाख्ये द्रव्ये चाक्षुषत्वोपपत्तेः ।

अन्यथाऽऽत्मनः तन्न स्यादिति भावः ॥ **परमेति** । ननु द्वितीयहेतौ महत्त्वे सति क्रियावत्त्वेऽप्यकार्यत्वमस्त्विति न युज्यते । अकार्यस्य महतो गगनादेरिव क्रियावत्त्वमेव न संभवतीति हेतुच्छित्तिरिति चेन्न । अकार्यस्य परममहत एव क्रियावत्त्वं नोपयुक्तं गगनादिवत् । त्र्यणुकरूपकार्यद्रव्यस्यापरममहत्त्वायुक्तं क्रियावत्त्वमिति भावः ॥ **कारणमिति** । तथा च त्र्यणुकनिष्ठजन्यमहत्त्वस्यासमवायिकारणभूतबहुत्वसंख्याधिकरणं त्र्यणुकसमवायिकारणभूतं किञ्चिद्द्रव्यं कल्पनीयमिति तदेव द्व्यणुकमिति हृदयम् । **उपपत्तेः** त्र्यणुकनिष्ठमहत्त्वस्येति शेषः ॥ **नेतीति** । त्र्यणुकमहत्त्वं न नित्यं चाक्षुषमहत्त्वाद्घटमहत्त्ववदित्यर्थः । गगननिष्ठमहत्त्वे व्यभिचारवारणाय चाक्षुषपदम् । **बाधकेति** । तथा च चाक्षुषमहत्त्वेऽपि नित्यत्वमस्त्विति भावः ॥ **अत एवेति** । उक्तरीत्या कार्यत्वसाधकहेतोरप्रयोजकत्वादित्यर्थः । **कार्यद्रव्यत्वं** सावयवत्वमाधकमित्यर्थः ॥ **मेरुसर्षपादीनामिति** । अनन्तावयवारब्धत्वाविशेषादिति भावः ॥ **दूषितेति** । आनन्त्येऽपि कालक्षणाद्यानन्त्य इव तारतम्यसद्भावान्नोक्तदोष इति दूषितमिति भावः । प्रामाणिकपरित्यागहेतुत्वादियमनवस्था दूषणमित्याशङ्क्य **घटादीति** । आरम्भकानन्तावयवपरम्पराङ्गीकारेऽनन्तावयवानामुत्पत्त्यैव कालस्य पर्यवसितत्वाद्घटादिकार्यस्योत्पत्त्यवकाशस्यैवाभावेन घटादिकार्यानुत्पत्तेर्बाधिकायाः सत्त्वादियमनवस्था दूषणमिति भावः ।

**सु०** — एवं परमाणुद्व्यणुकयोरनुमानतः सिद्धिमपाकृत्य प्रसङ्गादाकाशादिपरिमाणोत्कर्षानन्त्यस्यानुमानिकत्वं न युज्यत इति यदुक्तं तत्प्रपञ्चयति देशान्तरेति ।

**अनु०** — देशान्तरादिशब्दाश्च शशशृङ्गादिशब्दवत् ॥

योऽयं योजनादिपरिच्छिन्नो देशः सम्प्रतिपन्नः स स्वतः स्थूलेन देशान्तरेण युक्तो देशत्वाद्धस्तादिदेशवदित्याद्यनुमानैः खल्वाकाशादिपरिमाणोत्कर्षानन्त्यं साधनीयम् । त एते देशान्तरादिशब्दाः देशान्तरादिसाधकानुमानप्रयोगाः । शशशृङ्गादिशब्दवत् शशशृङ्गादिसाधकानुमानप्रयोगैस्तुल्यं वर्तन्ते । अनेनैव प्रकारेण शशशृङ्गादिकमप्यनुमातुं शक्यत इति यावत् । शब्दमात्रमेवैतत् । न त्वनुमानमिति सूचयितुं शब्दा इत्युक्तम् ॥ न केवलमाकाशादीनां परिमाणोत्कर्षानन्त्यानुमानं प्रतिपक्षपराहतम् । अपि तु संप्रतिपन्नानि सर्वशृङ्गाणि शृङ्गान्तरवन्ति शृङ्गत्वाद्गोशृङ्गवत् । विमताः सर्वे पुत्राः पुत्रान्तरोपेताः पुत्रत्वाद्देवदत्तपुत्रवदिति शशशृङ्गादिसाधकानुमानाभाससमानयोगक्षेमं चेत्यर्थः ।

**शे०** — ननु परमाण्वादेरानुमानिकत्वनिरासस्य नाणुमेति प्रक्रान्तस्य पूर्वग्रन्थेनैव सिद्धत्वात्किं 'देशान्तरादिशब्दाश्च' त्यादिभाष्येण । न चेदमाकाशादिपरिमाणोत्कर्षानन्त्यस्यानुमानिकत्वाभावप्रतिपाद-

नपरमिति नानर्थक्यमिति वाच्यम् । 'विश्रान्तिस्तारतम्येन दृश्यते ह्यनुमानत' इत्यादिनैवाकाशादि-परिमाणोत्कर्षानन्त्यस्य आनुमानिकत्वाभावप्रतिपादनेन तादर्थ्यायोगात् । न च तथैवायं प्रपञ्च इति वाच्यम् । तथा सत्यस्य ग्रन्थस्य तत्रैव संनिवेशनीयतया परमाण्वादेरानुमानिकत्वनिरासग्रन्थे तन्नि-वेशस्यासङ्गतत्वापातादित्याशङ्क्य वृत्तानुवादेन सङ्गतिप्रदर्शनपूर्वकं पूर्वोक्तानुमानिकत्वाभावप्रपञ्चन-परतयोत्तरग्रन्थं सङ्गमयति **एवमित्यादिना** ॥ **यदुक्तमिति** । 'विश्रान्तिस्तारतम्येने'त्यादिनेति शेषः ॥ **योऽयं योजनादीति** । सर्वोऽपि परिच्छिन्नो देशः पक्ष इत्यर्थः ॥ **स्वतः स्थूलेनेति** । स्वस्मात्स्थूले-नेत्यर्थः । एवञ्च यद्देशान्तरं सिध्यति तदपरिच्छिन्नमेव भविष्यतीति भावः । इत्यादीत्यादिपदेन सर्वोऽपि परिच्छिन्नः कालः स्वतः स्थूलेन कालान्तरेण युक्तः कालत्वान्मुहूर्तादिकालवदित्यनुमानपरि-ग्रहः । आकाशादीत्यादिपदेन कालादिपरिग्रहः । देशान्तरादिशब्दानां देशान्तरादिशब्दमात्रपरत्वे देशान्तरादिसाधकानुमानप्रयोगस्य शशशृङ्गादिसाधकानुमानाभाससमानयोगक्षेमतया भाष्यादलाभप्रसङ्गा-त्तल्लाभाय लक्षणया तत्साधकानुमानप्रयोगपरतया व्याचष्टे **त एते देशान्तरादीति** ॥ **शशेति** । अनेन 'तेन तुल्यं क्रिया चेद्वतिरि'ति सूत्रेण विहितोऽयं वतिरित्युक्तं भवति । एतदेव विशदयति **अनेनैवेति** । स्वायत्तन्यायविरोधमाशङ्क्य ज्ञापनीयार्थविशेषस्य सत्त्वान्नैवमित्याह **शब्दमात्रमेवैतदिति** । देशान्तरादिशब्दाश्चेत्यत्रत्यभाष्ये चशब्दस्य शशशृङ्गादिशब्दवच्चेति भिन्नक्रमत्वान्नानर्थक्यमित्यभिप्रेत्य तदर्थमाह **न केवलमित्यादिना** ॥ **प्रतिपक्षपराहतमिति** । परिमाणोत्कर्षतारतम्यमियत्तावत् परिमाण-तारतम्यत्वात्तदपकर्षतारतम्यवदिति 'विश्रान्तिस्तारतम्येन दृश्यते ह्यनुमानतः' इति प्रागुक्तप्रतिपक्षपराह-तमित्यर्थः ॥ **पुत्रान्तरोपेता इति** । इदं च वन्ध्यापुत्रसाधकम् ।

प०— **इति यदुक्तमिति** । 'यदि नो साक्षिगम्यं तन्महत्त्वं केन गम्यत' इत्यादाविति भावः । **स्वत इति** । स्वस्मादित्यर्थः । शब्दपदं प्रयोगपरमित्युपेत्याह **प्रयोगा इति** ॥ **प्रयोगैस्तुल्यं वर्तन्त इति** । तेन तुल्यं क्रिया चेद्वतिरिति तृतीयान्ताद्वतिरिति भावः । मूले चशब्दः 'विश्रान्तिस्तारत-म्येन दृश्यते ह्यनुमानत' इत्यत्रोक्तेन परिमाणोत्कर्षतारतम्यमियत्तावत् परिमाणतारतम्यत्वात् । तदपकर्ष-तारतम्यवदिति प्रतिपक्षेण समुच्चयार्थ इत्याह **न केवलमिति** । आदिपदगृहीतमाह **विमता इति** । वंध्यापुत्रोप्यनेन सिद्ध्येदिति भावः ।

या०— **योऽयं योजनादिपरिच्छिन्न इति** । सर्वोऽपि परिच्छिन्नो देशः पक्ष इत्यर्थः ॥ **स्वतः स्थूलेनेति** । स्वस्मात्स्थूलेनेत्यर्थः । एवं च यद्देशान्तरं सिध्यति तत् अपरिच्छिन्नमेव भवि-ष्यतीति भावः ॥ **प्रतिपक्षपराहतमिति** । परिमाणोत्कर्षतारतम्यम् इयत्तावत् परिमाणतारतम्यत्वात्

तदपकर्षतारतम्यवदित्युक्तसत्प्रतिपक्षपराहतमित्यर्थः । **पुत्रान्तरोपेता इति** । इदं च वन्ध्यापुत्रसाधकमित्यवगन्तव्यम् ।

श्री० — **यदुक्तमिति** । 'विश्रान्तिस्तारतम्येन दृश्यते ह्यनुमानत' इत्यनेनेत्यर्थः । 'तत्र तस्येवेति' षष्ठीसप्तम्यर्थयोरसम्भवात् 'तेन तुल्यं क्रिया चेद्वतिरि'त्यनेन क्रियातौल्ये इयं वतिरित्याह **तुल्यमिति** । अनुव्याख्यानस्य भावमाह **न केवलमित्यादिना** ।

**सु० — न वयमेवमाकाशादिपरिमाणोत्कर्षानन्त्यमनुमिमीमहे । येनातिप्रसङ्गः स्यात् । किन्तु विप्रतिपन्नो देशः स्वतः स्थूलेन सदृशेन सजातीयेन वा द्रव्यान्तरेण युक्तो देशत्वाद्धस्तादिदेशवत् । सोऽप्येवं सोऽप्येवम् । एवं कालेऽप्यनुमातव्यम् । न चैवं शशशृङ्गानुमानं शक्यम् । तस्यात्यन्तामतोऽनुपलभ्यमानस्य गवादिशृङ्गैः सादृश्यसाजात्ययोरभावात् । न च आकाशादेरप्येकैकत्वात्सादृश्याद्यभावः । औपाधिकभेदेन तदुपपत्तेरित्यत आह** सदृशं चेति ।

अनु० — सदृशं च सजातीयं नास्मत्पक्षे किमेव हि ॥

**संप्रतिपन्नदेशादिना सदृशं सजातीयं (चा)वाऽस्मत्पक्षे गगनादिपरिमाणोत्कर्षानन्त्यमनभ्युपगच्छतां पक्षे किमेव न भवति । किन्तु भवत्येवेति । तथा च संप्रतिपन्नदेशस्य ततः स्थूलेनात्मना सदृशेन सजातीयेन वोपेतत्वस्य सिद्धत्वात्सिद्धसाधनता स्यात् । आकाशादिपरिमाणोत्कर्षानन्त्यासिद्धेरर्थान्तरता चेति । संप्रतिपन्नदेशस्येश्वरादिमत्त्वं बाधितं संबन्धाभावादिति चेन्न । देशान्तरेणापि संबन्धाभावात् । एतेन शशविषाणादिसाधकानुमानेऽपि बाधाभिधानं परास्तम् । देशान्तरानुमानेऽपि साम्यात् । तदेवं परमाणुद्व्यणुकयोराकाशादिपरिमाणोत्कर्षानन्त्यस्य च साक्षिसिद्धतामनङ्गीकृत्य केवलानुमानवेद्यत्वस्वीकरणमनुपपन्नमित्युक्तम् ॥**

शे० — ननु सदृशं च सजातीयमित्युत्तरभाष्यमनर्थकम् । न च सर्वस्य सादृश्यसाजात्यप्रतिपादनार्थं तदिति वाच्यम् । तस्याप्यनर्थकत्वात् । न चात्मनो देशान्तरादिना सादृश्यादिसद्भावसिद्धिस्तत्प्रयोजनमिति वाच्यम् । तस्या अपि निष्प्रयोजनत्वात् । न च देशान्तरादिसाधकानुमानस्यात्मना सिद्धसाधनत्वादिरिसिद्धिस्तत्प्रयोजनमिति वाच्यम् । आत्मनः परिच्छिन्नदेशादिभ्योऽधिकपरिमाणत्वमात्रेणैव देशान्तरादिसाधकानुमानस्यात्मना सिद्धसाधनत्वादिवर्णनसम्भवेन तदर्थमात्मनः सादृश्यादेरनपेक्षितत्वात् । न च स्वतः स्थूलेन सदृशेन सजातीयेन च द्रव्यान्तरेण युक्तत्वे साध्ये सादृश्यसाजात्ययोरभावे कथमात्मनोऽधिकपरिमाणवत्त्वमात्रेण सिद्धसाधनमिति वाच्यम् । स्वतः स्थूलेन

देशान्तरेण युक्तत्वमात्रसाधनेनापि देशान्तरादिसिद्धिसम्भवेन सादृश्यादिघटितोक्तरूपसाध्यस्यैवाकर्तव्यत्वात् । न च देशान्तरादिसाधकानुमानस्य शशशृङ्गादिसाधकानुमानाभाससमानयोगक्षेमत्वशङ्कानिरासाय सादृश्यादिघटितोक्तरूपसाध्यान्तरकरणमावश्यकमिति वाच्यम् । सम्प्रतिपन्नानि सर्वशृङ्गाणि स्वसदृशसजातीयशृङ्गान्तरवन्ति शृङ्गत्वाद्गोशृङ्गादिवदित्यनुमानस्य कर्तुं शक्यतयोक्तरूपसाध्यान्तरकरणेऽपि शशशृङ्गादिसाधकानुमानाभाससमानयोगक्षेमताया अवर्जनीयत्वात् । आकाशादेरेकैकत्वेन तद्भेदापेक्षसादृश्यादिघटितसाध्यस्य बाधितत्वाच्च तत्साधनस्यैवायोगादित्याशङ्क्य साध्यान्तरकरणेऽनुमानाभाससमानयोगक्षेमताया बाधस्य चाप्रसङ्गाद्युक्तं सिद्धसाधनत्वादिना तन्निराकरणायात्मनः सादृश्यादिसमर्थनमित्यभिप्रेत्य साध्यान्तरनिरासकतयोत्तरभाष्यं योजयितुं सादृश्यादिघटितसाध्यकदेशान्तरानुमानेऽनुमानाभाससमानयोगक्षेमत्वाद्यभावशङ्कामुत्थापयति **न च वयमित्यादिना** । तस्मात्यन्तासत्त्वमेव कुत इत्यतो, योग्यत्वे सत्यनुपलभ्यमानत्वादिति भावेनोक्तम् **अनुपलभ्यमानस्येति** ॥ **सादृश्यसाजात्ययोरिति** । तयोः सद्धर्मत्वादिति भावः ॥ **सादृश्याद्यभाव इति** । सादृश्यसाजात्ययोर्व्यक्तिभेदनियतत्वादिति भावः । एकैकस्याप्याकाशादेरौपाधिकभेदेन नानाभूतत्वाच्च सादृश्याद्यनुपपत्तिरित्याह **औपाधिकेति** । **ततः** सम्प्रतिपन्नदेशात् ॥ **आत्मनेति** । स्वेनेत्यर्थः । सम्प्रतिपन्नदेशेनेति यावत् । सजातीयेनेत्यतः परमीश्वरादिनेति शेषः । ईश्वरादेरपि गगनादिना द्रव्यत्वेन रूपेण सादृश्यसाजात्ययोः सद्भावादिति भावः । न च स्वतः

स्थूलेन सदृशेन सजातीयेन च द्रव्यान्तरेणोपेतत्वमात्रसाधने उक्तरीत्या सिद्धसाधनत्वप्राप्तावपि तादृशेन देशान्तरेणोपेतत्वसाधनान्न दोष इति वाच्यम् । तादृशदेशान्तरस्याप्रसिद्धत्वेन तत्साधनेऽप्रसिद्धविशेषणत्वप्रसङ्गेन तद्भिया द्रव्यान्तरयुक्तत्वमात्रस्यैव साधनीयत्वेनोक्तदोषतादवस्थ्यादित्याशयात् । ननु बाधादेव नार्थान्तरमित्याशङ्कते **सम्प्रतिपन्नदेशस्येति** । ईश्वरेण सह सम्प्रतिपन्नदेशसम्बन्ध उभयोः समानदेशत्वं विना न सम्भवतीत्युभयोरप्येकदेशेन सम्बन्धो वाच्यः । स च न सम्भवति । देशस्य देशान्तरेण सम्बन्धाभावात् । तथा च बाध इति भावः । उक्तरीत्या देशस्य देशान्तरेण सम्बन्धोऽपि समानदेशत्वेनैव वाच्यः । स चोक्तरीत्या न सम्भवतीति बाध एवेत्याह **देशान्तरेति** । तथा च बाधादेव न पक्षेऽपि साध्यसिद्धिर्भवेदिति भावः । ननु देशान्तरानुमानस्य न शशशृङ्गाद्यनुमानसमानयोगक्षेमत्वं वक्तुं युक्तम् । शशशृङ्गेण सह सम्प्रतिपन्नशृङ्गाणां सम्बन्धाभावेन शृङ्गान्तरवत्त्वस्य बाधितत्वेन वैषम्यादित्यत आह **एतेनेति** । एतेनेत्युक्तमेव हेतुं दर्शयति **देशान्तरानुमानेऽपीति** । तथा च बाधितत्वस्योभयत्रापि साम्यादाभाससमानयोगक्षेमत्वमवर्जनीयमिति भावः ।

**प०— आत्मनेति** । परमतरीत्या जीवात्मनेति वेश्वरात्मनेति वार्थः । नित्यत्वद्रव्यत्वादिना सादृश्यसाजात्ययोर्भावादिति भावः ॥ **संबन्धाभावादिति** । अजसंबन्धयोगानभ्युपगमाद्विभुत्वेनोर्ध्वाधरीभावशून्ययोराधाराधेयभावायोगाच्चेति भावः ॥ **देशान्तरेणापीति** । एकत्वादिति भावः ।

**॥ आकाशादेः परिमाणानन्त्यानुमानस्याभाससाम्योक्त्या साक्षिसिद्धत्वसमर्थनम् ॥**

**या० — आत्मनेति** । ईश्वरेणेत्यर्थः । आत्मन्यपि द्रव्यत्वेन सादृश्यसाजात्ययोः सत्त्वादिति भावः ॥ **बाधाभिधानमिति** । शशशृङ्गेण सम्बन्धाभावाच्छृङ्गान्तरमस्तीत्येतद्बाधितमिति बाधाभिधानमित्यर्थः ।

**श्री०— स्वतः** स्थूलेन सदृशेन द्रव्यान्तरेण युक्तः, स्वतः स्थूलेन सजातीयेन द्रव्येण युक्तः, इति प्रयोगद्वयम् । सदृशेन सजातीयेन वेत्यत्र विजातीययोरपि ब्राह्मणशूद्रयोः सादृश्यदर्शनेन सदृशसजातीयशब्दौ भिन्नार्थावेवेति ज्ञातव्यम् । परिमाणोत्कर्षानन्त्यमनभ्युगच्छतामित्येव पाठः ॥ **सम्बन्धाभावादिति** । ईश्वराकाशयोरुभयोरपि व्यापकत्वेन क्रियाभावात्तज्जन्यः संयोगो न युक्त इत्यर्थः ॥ **सम्बन्धाभावादिति** । स्वस्य स्वेनेत्यर्थः ।

**सु०— एवमागममनादृत्येश्वरधर्माद्यनुमानमप्ययुक्तमिति प्रसङ्गादाह येनैवेति ।**

**अनु०— येनैव च प्रकारेणात्यसिद्धमनुमीयते ॥**
**तेनैव शशशृङ्गादेः शक्यमस्तित्वकल्पनम् ॥**

---

**अत्यसिद्धमित्यनेनागमानादरं दर्शयति । शशशृङ्गादेरित्यप्रामाणिकस्योपलक्षणम् । एतच्च तत्र तत्र लेशतो दर्शितम् ।**

शे०— येनैवेत्युत्तरभाष्यानर्थक्यमाशङ्क्येश्वरादेरानुमानिकत्वनिरासार्थत्वान्न तदिति भावेन तत्परतयोत्तरग्रन्थं योजयितुं तत्प्रतिपादनस्य प्रकृतेन का सङ्गतिरित्यतो वृत्तवर्तिष्यमाणार्थप्रदर्शनपूर्वकं तामाह **तदेवमित्यादिना** ॥ **आगमानादरमिति** । आगमादरे हि तस्यागमसिद्धत्वप्राप्त्याऽत्यसिद्धत्वानुपपत्तिप्रसङ्गादिति भावः । नन्वादिशब्दस्य स्वसमभिव्याहृतपदार्थातिरिक्तसर्वार्थपरतया वियदादीत्यादौ प्रसिद्धत्ववदत्रापि शशशृङ्गादेरित्यादिपदेन शशशृङ्गातिरिक्तप्रामाणिकाप्रमाणिकसाधारणसर्वार्थग्रहणमेव न्याय्यम् । ततश्च प्रामाणिकांशे तर्कस्येष्टापादनरूपत्वेनाभासत्वापत्त्याऽऽदिपदार्थसङ्कोचोऽवश्यं वाच्यः । न चावच्छेदकाभावे स युज्यत इत्यवच्छेदकमवश्यं वाच्यम् । न च तत्प्रकृतेऽस्तीति कथं संकुचितार्थत्वमपीत्यतः 'अन्यथा सप्तमरसभावोऽप्यनुमयाऽऽपतेदि'त्युत्तरवाक्यसूचितमादिपदसंग्राह्यतावच्छेदकमाह **शशशृङ्गादेरित्यप्रामाणिकोपलक्षणमिति** । सामान्यवाचकस्य शब्दस्य साधारणवाच्यतावच्छेदकातिरिक्तासाधारणावच्छेदकावच्छेदकेन वृत्तौ लक्षणैव । प्रथमोपस्थितमुख्यार्थस्य बाधेन परित्या-

गात् । सा चाजहत्स्वार्थलक्षणैवेति भावेनोपलक्षणमित्युक्तम् । तथा च नातिप्रसक्तिरिति भावः ॥ तत्र तत्रेति । 'वस्तुत्वात्तुरगः शृङ्गी पुष्पवत्खं सुतैर्युता । चित्रिणी च रसः षष्ठो रसत्वात्सोत्तरो भवेदि'ति शास्त्रयोनिसूत्रे । 'जड आत्मैव वस्तुत्वाप्रमेयत्वाज्जडं चितिः । घन आकाश इत्याद्या वार्यन्ते केन हेतुने'त्यानन्दमयाधिकरणे चेत्येवं तत्र तत्रेत्यर्थः ।

स०—ननु आदिशब्दस्य स्वसमभिव्याहृतपदार्थातिरिक्तसर्वार्थपरताया वियदादीत्यादौ प्रसिद्धत्वेन शशशृङ्गादेरित्यत्रापि शशशृङ्गातिरिक्तप्रामाणिकाप्रामाणिकसर्वार्थग्रहणे प्राप्ते तत्र च प्रामाणिकांशे तर्कस्येष्टापादनरूपत्वेन आभासत्वापत्त्या आदिशब्दार्थसङ्कोचस्यावश्यकत्वात् तस्य चावच्छेदकेन विना अनुपपत्त्या प्रकृते अवच्छेदकं किमित्यतः 'अन्यथा सप्तमरसभाव' इत्युत्तरग्रन्थसूचितमवच्छेदकमाह **अप्रामाणिकस्योपलक्षणमिति** । सामान्यवाचकशब्दस्य साधारणवाच्यतावच्छेदकातिरिक्तासाधारणावच्छेदेन वृत्तौ लक्षणैव । प्रथमोपस्थितमुख्यार्थस्य बाधे त्यागात् । सा चाजहल्लक्षणैवेति भावेनोपलक्षणपदप्रयोगः । तथा चात्र वाक्ये आदिपदेनाप्रामाणिकोपलक्षणमिति भावः । **तत्र तत्रेति** । 'वस्तुत्वात्तुरगश्शृङ्गी' इत्यादावित्यर्थः ।

प०—**एतच्च तत्र तत्र लेशतो दर्शितमिति** । 'वस्तुत्वात्तुरगः शृङ्गी पुष्पवत्खं सुतैर्युता । चित्रिणी च रसः षष्ठो रसत्वात्सोत्तरो भवेदि'ति शास्त्रयोनिनये । तथा 'जड आत्मैव वस्तुत्वात्प्रमेयत्वाज्जडं चितिः । घन आकाश इत्याद्या वार्यन्ते केन हेतुने'त्यानन्दमयनये कामाच्च नानुमानापेक्षेतिसूत्रव्याख्यानावसरे च दर्शितमित्यर्थः ।

या०—**आगमानादरमिति** । आगमादरे हि तस्यागमसिद्धत्वप्राप्त्याऽत्यसिद्धत्वमनुपपन्नमिति भावः । अत्यसिद्धमित्यस्य आगमाननुगृहीतकेवलानुमानसिद्धमित्यर्थः । ननु शशशृङ्गादेरिति समासः शशशृङ्गातिरिक्तसर्वार्थपरः । बहुव्रीहावादिपदस्य स्वसमभिव्याहृतपदार्थातिरिक्तसर्वार्थपरतायाः प्रसिद्धत्वात् । तथा च प्रकृते तेन प्रामाणिकस्यापि प्राप्तौ तदंशे इष्टापत्तिरत आह **अप्रामाणिकेति** । न च समासशक्त्यैवाप्रामाणिकग्रहणसम्भवे किमर्थमुपलक्षणमाश्रयणीयमिति वाच्यम् । सामान्यतः शशशृङ्गातिरिक्तसर्वार्थपरसमासेनाप्रामाणिकरूपविशेषबोधस्योपलक्षणां विनाऽयोगादित्याशयात् ॥ **तत्र तत्रेति** । 'वस्तुत्वात्तुरगः शृङ्गी पुष्पवत्खं सुतैर्युता । चित्रिणी च रसः षष्ठो रसत्वात्सोत्तरो भवेदि'त्यत्र । तथा 'जड आत्मैव वस्तुत्वात्प्रमेयत्वाज्जडं चितिः । घन आकाश इत्याद्या वार्यन्ते केन हेतुने'त्यादौ चेत्यर्थः ।

सु०— न (च) शशशृङ्गाद्यनुमानप्रतिबन्दीग्रस्तत्वमात्रेणैतेषामनुमानानामप्रामाण्यं युक्तम् । तथा सति धूमानुमानस्याप्यप्रामाण्यप्रसङ्गात् । तत्रापि हि शक्यते वक्तुं यदि धूमवत्त्वात्पर्वतोऽग्निमांस्तदा पशुत्वाच्छशोऽपि विषाणवान्स्यादिति । अथोच्येत । तुल्ययोगक्षेमत्वे हि प्रतिबन्दीग्रहः । अन्यथाऽतिप्रसङ्गात् । न चात्र तुल्ययोगक्षेमता धूमानुमानस्य, व्याप्त्यादिसामर्थ्यसहितत्वात् । शशशृङ्गाद्यनुमानस्य तदभावादिति । सममेतत्प्रकृतेऽपि । प्रस्तुतानुमानानामपि व्याप्त्यादिमत्त्वादित्यत आह प्रत्यक्षमिति ।

अनु०— प्रत्यक्षमागमो वाऽपि भवेद्यत्र नियामकः ॥
सैव व्याप्तिर्भवेन्मानं नान्या सन्दिग्धमूलतः ॥

वाशब्दः समुच्चये । अपिरनुमानस्य समुच्चयार्थः । नियामको ग्राहकः । मानम् अनुमानमानत्वोपयोगिनी । अन्या प्रत्यक्षाद्यगृहीता । सन्दिग्धमूलतः सन्दिग्धव्यभिचारत्वतः । अव्यभिचारो हि साहित्यस्य व्याप्तित्वे मूलम् । तत्र प्रत्यक्षगृहीता व्याप्तिर्यथा धूमस्याग्निना । आगमगृहीता यथा । ब्राह्मणो न हन्तव्य इति । अनुमानगृहीता यथा । व्यतिरेकिप्रयोगे । एतदुक्तं भवति । प्रत्यक्षाद्यवधृतं हि व्याप्त्यादि अनुमानमाना(नता)ङ्गम् । न स्वसमयमात्रसिद्धम् । सन्दिग्ध(ग्धा)व्यभिचा(र)रित्वात् । समयानां सन्दिग्धमूलत्वाच्च । विद्यते च धूमाद्यनुमानानां प्रमाणावधृतं व्याप्त्यादीति न प्रतिबन्दीग्रहमात्रेण तद्भङ्गः । न परमाण्वाद्यनुमानानामिति प्रतिबन्दीग्रस्तत्वादप्रामाण्यमेव । ननु व्याप्त्याद्यभावे किं प्रतिबन्दीग्रहेण । तत एवाप्रामाण्यसिद्धेरिति । सत्यम् । प्रत्यक्षाद्यनवधृतव्याप्त्यादेरपि प्रामाण्येऽतिप्रसङ्गो वा तदप्रामाण्ये दृष्टान्तो वा प्रतिबन्दीग्रहेण द्योत्यत इत्यदोष इति ।

शे०—ननु 'प्रत्यक्षमागमो वाऽपी'त्युत्तरभाष्ये प्रत्यक्षादिसिद्धव्याप्तेरनुमानमानत्वाङ्गत्वं तदसिद्धायास्तु तस्यास्तदनङ्गत्वमिति प्रतिपाद्यते । तदनर्थकम् । न च- धूमादिनिष्ठव्याप्तेः प्रत्यक्षादिसिद्धत्वेनानुमानमानत्वाङ्गत्वाद्धूमाद्यनुमानस्य प्रामाण्यम् । महदारम्भकत्वादिनिष्ठव्याप्तेस्तदसिद्धत्वेन तदनङ्गत्वात्तस्याप्रामाण्यमिति वैषम्योपपादनार्थं तदिति - वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वादित्यतोऽवैषम्यशङ्कानिरासार्थत्वान्न तदिति भावेन तच्छङ्कापरिहारकतयोत्तरवाक्यं योजयितुमाभाससमानयोगक्षेमत्वभावाभावाभ्यामेव तत्सिद्धेः कथमवैषम्यशङ्काऽपीत्यत आभाससमानयोगक्षेमत्वस्य धूमाद्यनुमानेऽपि अविशिष्टत्वात्तदुपपत्तिरिति भावेनावैषम्यशङ्कामुत्थापयति **न च शशशृङ्गाद्यनुमानेति** ।

साम्यमेव विशदयति **प्रस्तुतानुमानानामिति** । महदारम्भकत्वाद्यनुमानानामित्यर्थः । उपलक्षणं चैतत् । शशशृङ्गाद्यनुमानानां तदभावादित्यपि द्रष्टव्यम् । ततश्च तुल्ययोगक्षेमत्वाभावान्न

प्रतिबन्दीग्रहणं युक्तमिति भावः । भाष्ये वाशब्दस्य विकल्पार्थकतायाः समुच्चयार्थकापिशब्दविरुद्धत्वेनासम्भवादाह **वाशब्दः समुच्चय इति** । तर्हि वाशब्देनैव समुच्चयसिद्धेस्तदर्थकापिशब्दवैयर्थ्यमित्यतः स्वशब्दोपात्तयोः प्रत्यक्षागमयोरन्योन्यसमुच्चयस्य वाशब्देन सिद्धावपि स्वशब्देनानुक्तस्यानुमानस्य समुच्चयसिद्ध्यर्थत्वात् अपिशब्दस्य न वैयर्थ्यमिति भावेन तदर्थमाह **अपिरिति** । नियामकत्वस्य चेतनमात्रनिष्ठत्वादचेतनस्य प्रत्यक्षादेस्तदसम्भवमाशङ्क्याह **नियामक इति** । प्रत्यक्षादिसिद्धव्याप्तेरप्यमानत्वात्तन्मानत्वोक्त्यनुपपत्तिरित्याशङ्क्यौपचारिकीयमुक्तिरिति भावेनोपचारे निमित्तमाह **मानमिति** ॥ **प्रत्यक्षाद्यगृहीतेति** । सैवेति पूर्वत्र प्रत्यक्षादिगृहीतव्याप्तेरेव प्रकृतत्वादिति भावः । नन्वस्त्वव्यभिचारसन्देहस्तथाऽपि कथं सन्दिग्धमूलत्वं व्याप्तेरित्यत आह **अव्यभिचारो हीति** ॥ **साहित्यस्येति** । सामानाधिकरण्यस्येत्यर्थः । ततश्च व्यभिचारसन्देहे युक्तमेव व्याप्तेः सन्दिग्धमूलत्वमिति भावः ॥ **आगमगृहीता यथेति** । ब्राह्मणत्वावच्छिन्नेऽनिष्टसाधनहननादिमत्त्वस्य मानान्तराविषयतयाऽऽगममात्रवेद्यत्वादिति भावः ॥ **व्यतिरेकिप्रयोग इति** । धूमस्याग्निनेव प्राणादिमत्त्वस्य हेतोर्यत्प्राणादिमत्तत्सात्मकमित्यन्वयव्याप्तेर्जीवच्छरीरे प्रागवगतायाः अपि तत्रैव तद्विप्रतिपत्तावुपदर्शयितुमशक्यत्वेन दृष्टान्तविरहात्प्रत्यक्षेण व्याप्तिग्रहासम्भवेन प्राणादिमत्त्वं सात्मकत्वेन व्याप्तं तदभावव्यापकाभावप्रतियोगित्वाद्यो यदभावव्यापकाभावप्रतियोगी स तद्व्याप्तो यथा धूमोऽग्निनेत्यनुमानेनैव तत्र व्याप्तेर्ग्राह्यत्वादिति भावः । ननु व्याप्त्यादिमात्रस्यैवानुमानमानत्वाङ्गत्वसम्भवेन प्रत्यक्षाद्यवधृतस्य तस्य तदङ्गत्वे नियामकाभावात्कथं प्रत्यक्षाद्यवधृतस्य व्याप्त्यादेस्तदङ्गत्वकथनम् । अस्तु वा तत् । तथाऽपि नोक्तप्रतिबन्दीनिस्तारः । धूमाद्यनुमान इव परमाण्वाद्यनुमानेऽपि प्रत्यक्षाद्यवधृतव्याप्त्यादेः सत्त्वेन तद्वदेव शशविषाणाद्यनुमानवैलक्षण्यसम्भवादित्यत आह **एतदुक्तं भवतीति** । यद्वा नन्वेतावताऽपि कथमुक्तप्रतिबन्दीपरिहार इत्यत आह **एतदुक्तं भवतीति** ॥ **सन्दिग्धेति** । अन्ततः पक्ष एव व्यभिचारशङ्कासम्भवादिति भावः ॥ **समयानामिति** । व्याप्त्यादिग्राहकाणामिति शेषः ॥ **सन्दिग्धमूलत्वाच्चेति** । समयप्रामाण्योपपादकाप्तवाक्यत्वादेः सन्दिग्धत्वाच्चेत्यर्थः ॥ **प्रतिबन्दीग्रहमात्रेणेति** । शशशृङ्गाद्यनुमानप्रतिबन्दीग्रहणमात्रेणेत्यर्थः । ननु न परमाण्वाद्यनुमानानां व्याप्त्याद्यभावो वक्तुं युक्तः । तथा सति तत एव तदनुमानानामप्रामाण्यसिद्धेः प्रतिबन्दीग्रहणवैयर्थ्यप्रसङ्गात् । तथा च धूमाद्यनुमानानां विशेष एवेति न प्रतिबन्दीग्रस्तत्वमित्याशङ्कते **नन्विति** ।

**स० — वाशब्दस्समुच्चय इति** । अपिशब्देन व्यतिरेक्यनुमानादिव्याप्तिनिश्चायकतया प्रत्यक्षागमाविव अवश्यं ग्राह्यानुमानस्य समुच्चेतव्यत्वादनुमानसमुच्चयप्रत्यक्षागमविकल्पयोश्च विरुद्धत्वात् वाशब्दः समुच्चयार्थः । **सन्दिग्धमूलत्वाच्चेति** । समयप्रामाण्योपयुक्ताप्तवाक्यत्वादेः सन्दिग्धत्वेन सन्दिग्धमूलत्वादित्यर्थः ।

प० शङ्कने न शशशृङ्गादीति ॥ सममेतत्प्रकृतेपीति । ईश्वराद्यनुमानेष्वपीत्यर्थः । तदेव व्यनक्ति **प्रस्तुतेति** । नन्वव्यभिचारसन्देहे कथं व्याप्तिमूलं सन्दिग्धमित्यत आह **अव्यभिचारो हीति** ॥ **ब्राह्मणो न हन्तव्य इतीति** । यो यो ब्राह्मणः स सर्वोपि न हन्तव्य इति तद्वाक्यस्य तात्पर्यात् । अत्र ब्राह्मणत्वजातिरेव विवक्षिता । लिङ्गं त्वविवक्षितम् । उक्तं च तन्त्रवार्तिके । 'यो ब्राह्मण इति ह्युक्ते हननप्रतिषेधतः । ब्राह्मणे हनने वापि लिङ्गं नान्यद्विधीयत' इति ॥ **व्यतिरेकीति** । प्राणादिमत्त्वं सात्मकत्वेन व्याप्तम् तदभावव्यापकाभावप्रतियोगित्वात् । यदेवं तदेवं यथा धूमादीत्येवंरूपेणेति भावः । अस्फुटत्वादाह **एतदुक्तमिति** ॥ **स्वसमयेति** । महद्द्रव्यारंभकं सावयवमित्यादि स्वमतमात्रसिद्धमिति भावः । कुतो व्यभिचारसन्देह इत्यत आह **समयानामिति** । सन्दिग्धाप्तिकत्वादित्यर्थः ॥ **न परमाण्वादीति** । प्रमाणावधृतं व्याप्त्यादीत्यनुषङ्गः ।

या०— नन्वव्यभिचारसन्देहे कथं व्याप्तिमूलं सन्दिग्धमित्यत आह **अव्यभिचारो हीति** । **साहित्यस्य** सामानाधिकरण्यस्य ॥ **व्यतिरेकप्रयोग इति** । तत्र दृष्टान्ताभावेन प्रत्यक्षेण हेतावन्वयव्याप्तिग्रहासम्भवेन प्राणादिमत्त्वं सात्मकत्वव्याप्यं तदभावव्यापकाभावप्रतियोगित्वादित्यनेनैव सा गृह्यत इत्यर्थः । **सन्दिग्धेति** । अन्ततः पक्ष एव व्यभिचारशङ्कासम्भवादिति भावः ॥ **समयानामिति** । व्याप्त्यादिग्राहकाणामिति शेषः ।

श्री०— **प्रस्तुतेति** । विमतो देश इत्याद्यानां शशशृङ्गादिसाधकानां व्याप्त्याद्यभावादित्यपि द्रष्टव्यम् । **समुच्चये** परस्परमिति शेषः । अव्यभिचारस्य मूलत्वमुपपादयति **अव्यभिचार इति** ॥ **न प्रतिबन्दीति** । पशुत्वाच्छशोऽपीत्युक्तेरित्यर्थः । न परमाण्वाद्यनुमानानां प्रमाणावधृतं व्याप्त्यादीत्यनुवर्तते । **तत एव** अव्याप्त्याद्यभावादेव । **तदिति** । प्रत्यक्षाद्यनवधृतव्याप्त्यादिकस्य ततः सहदर्शनात् ।

सु०— सत्यमेतत्प्रत्यक्षाद्यवधृतैव व्याप्तिरनुमानप्रामाण्योपयोगिनीति । सा च धूमानुमानवत्परमाण्वाद्यनुमानेष्वप्यस्त्येव । धूमस्याग्निनेव महदारंभकत्वादीनामपि सावयवत्वादिना साहित्यदर्शनादित्यत आह **सहेति** ।

अनु० — सहदर्शनमात्रेण न व्याप्तिरवसीयते ॥

न धूमादीनामप्यग्न्यादिभिः सहदर्शनमात्रेण व्याप्तिरवसीयते । येन महदारम्भकत्वादीनामपि सावयवत्वादिभिस्ततोऽवसीयेत । तथा सत्यग्न्यादीनां धूमादिभिरपि व्याप्त्यध्यवसायप्रसङ्गात् । सहदर्शनमात्रस्य तत्रापि सत्त्वात् । व्यभिचारानुपलम्भे सति साहित्यदर्शनं

**व्याप्त्यध्यवसायहेतुरिति चेत् । किं सकलदेशकालनिष्ठोऽनुपलम्भः, किं वा तद्विशेषनिष्ठः । नाद्यः । अस्मदाद्यशक्यत्वात् । न द्वितीयः । अतिप्रसङ्गादिति ।**

**श्रे०** — ननु 'सहदर्शनमात्रेणे'त्युत्तरभाष्ये साहित्यदर्शनस्य धूमादौ व्याप्तिग्राहकत्वनिराकरणं क्रियते तदनर्थकम् । न चैतद्धूमाद्यनुमानस्य परमाण्वाद्यनुमानापेक्षया वैषम्योपदर्शनार्थमिति वाच्यम् । धूमाद्यनुमानस्य प्रत्यक्षाद्यवधृतव्याप्तिकत्वेन परमाण्वाद्यनुमानस्य तदनवधृतव्याप्तिकत्वेन वैषम्यस्य पूर्वत्रैवोपदर्शितत्वेन तदुपदर्शनाय साहित्यदर्शनस्य व्याप्त्यग्राहकत्वस्य निरूपणीयत्वादित्यतः साहित्यदर्शनस्योभयत्राप्यविशिष्टत्वेन परमाण्वाद्यनुमानस्यापि प्रत्यक्षाद्यवधृतव्याप्तिकत्वान्न तस्य धूमाद्यनुमानाद्वैषम्यमित्याशङ्कानिराकरणार्थत्वात्साहित्यदर्शनस्य व्याप्त्यग्राहकत्ववर्णनस्य नानुपपत्तिरित्यभिप्रेत्य तदविशेषशङ्कानिराकरणपरतयोत्तरभाष्यं योजयितुं तां शङ्कामुत्थापयति **सत्यमिति** ॥ **अस्त्येवेति** । तथा च न परमाण्वाद्यनुमानस्यापि शशशृङ्गाद्यनुमानसाम्यमिति भावः ॥ **तत इति** । सहदर्शनमात्रादित्यर्थः ॥ **तथा सतीति** । धूमादीनामग्न्यादिभिः सहदर्शनमात्रेण व्याप्त्यध्यवसायाभ्युपगम इत्यर्थः ॥ **व्यभिचारानुपलम्भ इति** । तथा च व्यभिचारानुपलम्भसहकृतसाहित्यदर्शनस्य सत्त्वात्तेन धूमादीनामग्न्यादिभिर्व्याप्त्यध्यवसायसम्भवेऽप्यग्न्यादीनां धूमादिभिः सह व्यभिचारोपलम्भेन तदनुपलम्भसहकृतसाहित्यदर्शनस्याभावान्नाग्न्यादीनां धूमादिभिर्व्याप्त्यध्यवसायप्रसङ्ग इति भावः ॥ **अतिप्रसङ्गादिति** । महानसादिरूपदेशविशेषे व्यभिचारानुपलम्भसत्त्वादग्न्यादीनामपि धूमादिभिर्व्याप्त्यध्यवसायः स्यादित्यतिप्रसङ्गः स्यादित्यर्थः ।

**प०** — शङ्कते **सत्यमेतदिति** । **तद्विशेषनिष्ठः** देशकालविशेषनिष्ठ इत्यर्थः ॥ **अतिप्रसङ्गादिति** । प्रमेयत्वादेरपि वह्निव्याप्यताप्रसङ्गान्महानसादावव्यभिचारोपलम्भादिति भावः ।

**या०** — **अतिप्रसङ्गादिति** । महानसादिरूपदेशविशेषे व्यभिचारानुपलम्भसत्त्वात् वह्नावपि धूमव्याप्त्यध्यवसायप्रसङ्गादित्यर्थः ।

**श्री०** — **अवसीयेत** व्याप्तिः ।

**सु०** — **कथं तर्हि व्याप्त्यध्यवसायः स्यादित्यत आह** यदैवेति ॥

**अनु०** — यदैवाव्यतिरेकेऽस्य ह्यक्षजं वाऽऽगमो भवेत् ॥
तन्निर्धारितयुक्तिर्वा व्याप्तिः सैवापरा न हि ॥

अव्यतिरेके साध्याभिमतव्यतिरेकेणासत्त्वे । अस्य साधनाभिमतस्य धर्मस्य युक्तेर्व्याप्ति-निश्चयहेतुत्वेऽनवस्था (स्या नात् । तद्व्याप्तेरपि युक्त्यन्तरेण निश्चेतव्यत्वादित्यत उक्तं तन्निर्धारितेति । व्याप्तिशब्दोऽध्याहार्यः । तेन प्रत्यक्षेणागमेन वा निर्धारितव्याप्तिकेत्यर्थः । अपरा साहित्यदर्शनमात्रनिबन्धना न हि ।

अयमर्थः । नियतः संबन्धो हि व्याप्तिर्न संबन्धमात्रम् । नियमश्च व्यभिचाराभावः । अतः साहित्य इव व्यभिचाराभावेऽपि प्रमाणप्रवृत्तौ व्याप्तिसिद्धिः । न चैतदशक्यम् । अनुमित्यनुदये सर्वव्यवहारविलोपप्रसङ्गेन कार्यदर्शनादेव तत्सिद्धेः । प्रकारस्तु चिन्त्यते ।

तत्र धूमस्याग्निना संबन्धस्तावत्प्रत्यक्षेणावगम्यते । परिचितदेशकालयोर्व्यभिचारश्च नावगम्यते । देशान्तरादिगते तु व्यभिचारे संदेहोऽवशिष्यते । स च न तावद्व्यभिचारचिह्न-दर्शनजन्यः । किन्तु भूयःसहचरिततया दृष्टा अदृष्टव्यभिचारा अपि धर्मा व्यभिचारिणो दृष्टाः । धर्मश्चायमित्येवमुत्पद्यते । तत्र यद्ययमेतत्सहवृत्तिस्वभावस्तदाऽन्यत्रापि सहैव वर्तेत । स्वभावस्यानपायात् । यदि चासहवृत्तिस्वभावस्तदाऽत्रापि न सह वर्तेत । असहवृत्तिस्वभावस्यापि सहवृत्तिर्निमित्तान्तरायत्ता चेदत्रोपलभ्येत । सहवृत्तिस्वभावस्यापि निमित्तान्तराद्व्यभिचारो भविष्यतीति तु निर्बीजा शङ्का नोदेत्येव । सर्वव्यवहाराभावप्रसङ्गात् ।

तदेवं मीमांसासहकृतं प्रत्यक्षं धूमस्याग्निसंबन्धं गृह्णद्व्यभिचाराभावमप्याकलयतीति व्याप्तिमवधारयत्येव । अनुमानागमाभ्यां तु व्याप्तिग्रहप्रकारः सुगम एवेति ।

शे० — यद्येवेत्युत्तरवाक्यानर्थक्यमाशङ्क्य व्याप्त्यध्यवसायोपायकथनार्थत्वान्न तदिति भावेन तत्प्रतिपादकतयोत्तरभाष्यं योजयितुं तत्प्रयोजकाकाङ्क्षामुत्थापयति कथमिति । ननु मूले तन्निर्धारितेति युक्तिविशेषणमनर्थकम् । न च प्रत्यक्षागमनिर्धारितव्याप्तिकत्वं युक्तेरुपदर्शयितुं तदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वादित्यतो युक्तेर्व्याप्तिनिश्चयाकत्वानुपपत्तिशङ्कापरिहारार्थकत्वान्न तदिति भावेन तस्या व्याप्तिनिश्चायकत्वानुपपत्तिशङ्कामुत्थापयति युक्तेरिति । युक्तेरेव प्रत्यक्षेणागमेन निर्धारितत्वविवक्षायां नानवस्थानिस्तारः । युक्तेः प्रत्यक्षादिना निर्धारितत्वेन तन्निर्धारणाय युक्त्यन्तरानपेक्षायामपि तद्व्याप्तेर्युक्त्यन्तरेण निश्चेतव्यत्वानिस्तारादित्यतोऽत्रापेक्षितमध्याहरति व्याप्तिशब्द इति । तन्निर्धारित-शब्दात्परत इति शेषः ।

ननु संबन्धरूपत्वाद्व्याप्तेस्तन्निश्चयाय संबन्धग्राहकप्रत्यक्षादेरपेक्षा युक्ता । साधनस्य साध्यव्यति-रेकेणासत्त्वग्राहकप्रत्यक्षादेस्तु कथं तत्रोपयोग इत्यत आह अयमर्थ इति ॥ न संबन्धमात्रमिति ।

अन्यथा व्यभिचारिणो वह्न्यादेरपि धूमादिना साहित्यमात्रसद्भावात्तद्व्याप्तिप्रसङ्गादिति भावः । नन्वेवं नियमस्य निरुच्यमानव्याप्तिरूपत्वादात्माश्रय इत्यत आह **नियमश्चेति** । यद्वा नन्वेवं नियमग्राहकप्रमाणस्य व्याप्तिनिश्चयापेक्षाप्राप्तावपि न साधनस्य साध्यव्यतिरेकेणासत्त्वरूपाव्यभिचारग्राहकप्रत्यक्षाद्यपेक्षाप्राप्तिरित्यत आह **नियमश्चेति** । सम्बन्धपदेन साहित्यांशस्य पृथगभिधानाद्विशिष्टवाचकोऽपि नियमशब्दो लक्षणया विशेषणीभूताव्यभिचारमात्रपर इति भावः । ननु सकलदेशकालनिष्ठव्यभिचाराभावे प्रमाणप्रवृत्तिर्व्याप्तिसिद्धावुपयोगिनीति वाऽभिमतं किंवा तद्विशेषनिष्ठव्यभिचाराभावे प्रमाणप्रवृत्तिः । नान्त्यः । तथा सति वन्ह्यादीनामपि धूमादिना व्याप्तिसिद्धिप्रसङ्गात् । अतो द्वितीय एव वाच्यः । न चासावपि युक्तः । तथा सति सकलदेशकालनिष्ठव्यभिचाराभावे प्रमाणप्रवृत्तेरसद्द्व्यशक्यत्वेन धूमादीनामग्न्यादिभिर्व्याप्त्यसिद्ध्या धूमाद्यनुमानोच्छेदप्रसङ्गादित्याशङ्क्य निषेधति **न चैतदशक्यमिति** । सकलदेशकालनिष्ठव्यभिचाराभावे प्रमाणप्रवृत्तेरसदाद्यशक्यत्वं वदन्प्रष्टव्यः । किमुक्तार्थे कल्पकं नास्तीत्यभिमतं किंवा तत्समर्पकप्रकारो नास्तीति विकल्पद्वयं मनसि निधाय द्यं प्रत्याह **अनुमितीति** ॥ **सर्वव्यवहारेति** । प्रवृत्त्यादिसर्वव्यवहारेत्यर्थः । द्वितीये त्वाह **प्रकारस्त्विति** ।

---

**स च न तावदिति** । तच्चिन्हानुपलम्भादिति भावः । अत्र चिन्हशब्दो लिङ्गपरः ॥ ततश्च व्यभिचारलिङ्गसंशयजन्य इत्यर्थ इत्याहुः ॥ **अन्यत्रापीति** । देशान्तरादावपीत्यर्थः । **स्वभावस्येति** । अपाये च सहवृत्तेः स्वभावत्वहानेरिति भावः ॥ **अत्रापीति** । परिचितदेशकालयोरपीत्यर्थः ॥ **निमित्तान्तरेति** । उपाधिरूपनिमित्तान्तरेत्यर्थः । अधर्मसाधनत्वादिसाध्येनासहवृत्तिस्वभावस्यापि हिंसात्वादिसाधनस्य निषिद्धत्वादिरूपोपाधिनिमित्तायत्तसहवृत्तेर्दर्शनादिति भावः ॥ **तदिति** । निमित्तान्तरमित्यर्थः । योग्यं चेदिति शेषः । अयोग्यस्य शङ्कितुमशक्यत्वाद्योग्यस्य चानुपलम्भबाधितत्वाच्च तन्निमित्ता धूमादेरग्न्यादिना सहवृत्तिरिति भावः ॥ **निर्बीजेति** । अप्रतिबन्धिकेत्यर्थः । यथा हि साधनस्य साध्येन निरुपाधिकसहचार एव तत्साधनाङ्गं न तु सोपाधिकोऽपि । अन्यथा सोपाधिकसाध्यसहचारवतो मैत्रीतनयत्वादेरपि श्यामतासाधनत्वप्रसङ्गात् । तथा व्यभिचारोऽपि निरुपाधिक एवासाधनत्वे हेतुः । यथा प्रमेयत्वस्य नित्यत्वेन । न हि प्रमेयत्वं स्वभावेन नित्यत्वाव्यभिचारि, व्यभिचारि तु निमित्तान्तरेणेत्यत्र नियामकं पश्यामः । यस्तु स्वभावेन साध्याव्यभिचारिणोऽपि साधनस्यौपाधिको व्यभिचारो नासावप्रामाण्यकारणमिति भावः । ननु सोपाधिकसाध्यसहचारस्योक्तातिप्रसङ्गग्रस्तत्वाद्युक्तमसाधनाङ्गत्वम् । सोपाधिकव्यभिचारस्य तु तदभावाद्दूषणाङ्गत्वं भवेदेवेत्यतः 'अतो हि

भोजनादीनामिष्टसाधनतानुमेति स्वप्रामाण्यविरोधितया कारणीभूतग्रन्थानुरोधेन सोपाधिकव्यभिचारस्य दूषणत्वे बाधकमाह सर्वव्यवहाराभावेति । यदि सोपाधिको व्यभिचारोऽप्यप्रामाण्यहेतुः स्यात्तदा क्वचिदनिष्टसाधनत्वस्याप्युपलम्भात्ता व्येष्टसाधनत्वेनापथ्यत्वाद्युपाधिनिबन्धनस्य व्यभिचारस्य भोजनत्वादिसाधनेऽपि सत्त्वेन विमतं भोजनमिष्टसाधनं भोजनत्वाद्ध्यस्तनभोजनवत् इत्यागामिभोजनादीनामिष्टसाधनत्वानुमानस्याप्यमानत्वस्य प्रमेयत्वादिवदमानत्वेन व्यवहर्तृभिर्निश्चितत्वस्यापि प्रसक्त्या ततो भोजने प्रेक्षावतां निःशङ्कप्रवृत्त्यादिरूपव्यवहाराभावप्रसङ्गादित्यर्थः । यद्वा ननु सहवृत्तिस्वभावस्यापि निमित्तान्तराद्व्यभिचारो भविष्यतीति शङ्का कुतो नोदेतीत्यतः तत्कारणोपाधिशङ्कारूपनिमित्तविरहादिति भावेनोक्तं निर्बाजेति । ननु योग्यस्योपाधेरनुपलम्भबाधितत्वेन तज्ज्ञानस्योक्तशङ्काकारणत्वासम्भवेऽप्ययोग्योपाधिशङ्कया व्यभिचारशङ्का भविष्यत्येवेत्यतो भवेदेतदेवं यद्ययोग्योपाधिशङ्कैवोपपद्येत । न च सोपपद्यते । तथा सति सर्वत्र तच्छङ्कया व्यभिचारशङ्काप्रसङ्गेन व्याप्त्यनिश्चयादनुमितिमात्रोच्छेदापत्तेरिष्टसाधनताज्ञानविरहात्साध्यसर्वप्रवृत्तिविलयप्रसङ्गादित्याशयेनाह सर्वेति ।

मीमांसासहकृतेति । इदं च यत्रोपाधिशङ्का तत्रैव, न तु सर्वत्र । तथा सत्युक्तरूपमीमांसाया अपि व्याप्तिनिश्चयसापेक्षत्वेनानवस्थापातात् । सर्वत्र तु भूयोदर्शनव्यभिचारादर्शनसहकृतप्रत्यक्षेणैव व्याप्तिग्रह इत्यवगन्तव्यम् । न चैवं व्याप्तिग्राहिणः प्रत्यक्षस्य भूयोदर्शनव्यभिचारादर्शनोपाध्यभावनिश्चयाः सहकारिण इति पद्धत्या विरोधः । तत्रोपाध्यभावनिश्चयस्यापि व्याप्तिग्राहकप्रत्यक्षं प्रति सहकारित्वाभिधानादिति वाच्यम् । तस्या उपाधिशङ्कास्थलाभिप्रायकत्वेन सार्वत्रिकाभिप्रायकत्वाभावात् । अन्यथोपाध्यभावनिश्चयस्य व्याप्तिसापेक्षतर्काधीनत्वेनानवस्थापातात् । पद्धतावेव तर्कस्य क्वाचित्कत्वोक्तेश्चेति द्रष्टव्यम् ॥ व्याप्तिप्रकार इति । व्याप्त्यवगमप्रकार इत्यर्थः । क्वचिद्व्याप्तिग्रहप्रकार इत्यपि पाठः ॥ सुगम इति । व्याप्तिप्रत्यक्षे भूयोदर्शनापेक्षावत् अत्र तदपेक्षाविरहात् । प्रत्यक्षस्य व्यक्तिविशेषमात्रविषयतयाऽन्यत्र व्यभिचारसन्देहनिरासायोक्तरीत्या मीमांसायाः सहकारित्वस्यावश्यं कल्पनीयत्वेऽप्यागमादेर्ब्राह्मणत्वाद्यवच्छिन्नेऽनिष्टसाधनहननादिसत्त्वबोधकत्वेन व्यक्तिविशेषमात्रविषयकत्वाभावादुक्तरीत्या मीमांसायाः सहकारित्वस्याकल्पनीयत्वाद्वा साहचर्यज्ञानजन्यव्याप्तिग्रहे दृष्टान्तापेक्षायामपि यो ब्राह्मणः स न हन्तव्य इत्यागमादिजन्यव्याप्तिज्ञाने व्याप्त्यनुमितौ वा यथाऽमुक इति दृष्टान्तापेक्षाविरहाद्वेत्यर्थः । इतीत्यस्येत्ययमिति पूर्वेण संबन्धः ।

स० — निर्बाजेति । अप्रतिबन्धिकेत्यर्थः । यथा निरुपाधिकसहचार एव साधनाङ्गं न सोपाधिकः, तथा व्यभिचारोऽपि निरुपाधिक एव दूषणाङ्गं न तु सोपाधिकोऽपीत्यर्थः । सर्वव्यवहारा-

**भावप्रसंगादिति** । एकत्रौपाधिकव्यभिचारदर्शनमात्र सर्वत्र तच्छङ्काबीजं चेत् सर्वत्र भोजने सविषान्नभोजनदृष्टान्तेन व्यभिचारशङ्कया भोजनादौ निश्शङ्का प्रवृत्तिर्न स्यात् । अतो दूषकताबीजशून्या इयं शङ्का नोदेतीत्यर्थः ।

प० — मूलपदानामर्थमाह **अव्यतिरेक इत्यादिना** । व्याप्तिशब्दोऽध्याहर्तव्य इत्युक्तं व्यनक्ति **तेनेति** । दुर्गमत्वात्तात्पर्यमाह **अयमर्थ इति** । 'प्रत्यक्षमागमो युक्तिर्वा यदा भवेदि'त्युक्तम् । प्रत्यक्षं तावद्व्यनक्ति **तत्र धूमस्येति** ॥ **व्यभिचारचिह्नेति** । व्यभिचारे यच्चिह्नं सोपाधिकत्वादिकं तज्जन्यो न हि किंतु साधारणधर्मदर्शनजन्य इत्याह **भूयः सहचरिततयेत्यादिना** ॥ **निमित्तान्तरायत्ता चेदिति** । उपाधिरूपादीत्यर्थः । व्याप्तिग्रहप्रकारः सुगम एवेतीतिशब्दस्यायमर्थ इति पूर्वेणान्वयः प्रागस्माभिर्दर्शितः ।

यो० — **व्यभिचारचिन्हेति** अत्र चिन्हशब्दो लिङ्गपरस्ततश्च व्यभिचारलिङ्गसंशयजन्य इत्यर्थः ॥ **निमित्तान्तरादिति** अयोग्यादित्यर्थः ॥ **निर्बीजेति** । अयोग्यस्य शङ्कितुमशक्यत्वेनोपाधिशङ्कारूपबीजाभावादिति भावः । अयोग्यस्य शङ्कितुमशक्यत्वं कुत इत्यत आह **सर्वेति** । सर्वप्रवृत्तीनामनुमितिरूपेष्टसाधनतत्ज्ञानसाध्यत्वेनातीन्द्रियोपाधिशङ्कयेष्टसाधनतानुमित्यसंभवे सर्वप्रवृत्त्यभावप्रसङ्गादित्यर्थः ॥ **मीमांसासहकृतमिति** । इदं च यत्रोपाधिशङ्का तत्रैव, न तु सर्वत्रेति द्रष्टव्यम् । अन्यथोक्तविमर्शस्यापि व्याप्तिनिश्चयसापेक्षत्वेनानवस्थापातादिति अवधेयम् ।

श्री० — तर्हि व्यभिचारदर्शनसहकृतसहचारदर्शनस्य व्याप्त्यग्राहकत्वे ॥ **साध्याभिमतेति** । साध्यात्यन्ताभाववदवृत्तित्वे । मूले व्याप्तिरित्यस्य व्याप्तिग्रहोपयोगिनीत्यर्थः । **एतत्** प्रमाणेन सर्वथा व्यभिचाराभावज्ञानम् । **प्रकारः** प्रमाणेन व्यभिचाराभावनिश्चयप्रकार इत्यर्थः ॥ **स चेति** । व्यभिचारसन्देह इत्यर्थः ॥ **न तावद्व्यभिचारचिन्हेति** । अत्र व्यभिचारचिन्हशब्दो लिङ्गपरः । लिङ्गाभावे व्यभिचारोद्भावनायोगेन लिङ्गस्यापि व्यभिचारचिन्हत्वात् व्यभिचारः चिन्हं यस्येति व्युत्पत्त्या वा लिङ्गं ग्राह्यम् । अत्र मात्रशब्दो द्रष्टव्यः । तथा च न लिङ्गदर्शनमात्रजन्य इत्यर्थः । तर्हि केन जन्य इति पृच्छति **किन्त्विति** । साधारणधर्मदर्शनजन्य इत्युत्तरमाह **भूय इति** ॥ **अदृष्टेति** तत्कालमात्र इत्यर्थः ॥ **दृष्टा इति** । शतशः सहचरितयोरपि पार्थिवत्वलोहलेख्यत्वयोर्वज्रे व्यभिचारो दृष्ट इत्यर्थः । व्यभिचारसन्देहनिरासकतर्कमाह **तत्रेत्यादिना** । **तत्** निमित्तान्तरम् । सर्वत्राप्येवं निर्बीजशङ्कोत्पत्तौ बाधकमाह **सर्वेति** । **मीमांसा** तर्कः ॥ **सुग्रह एवेति** । व्यतिरेकव्याप्त्याऽन्वयव्याप्त्यनुमानस्थले ब्राह्मणो न हन्तव्य इत्येवमित्यर्थः ।

सु० — नन्वनेनैव न्यायेन महदारम्भकत्वादीनामपि व्याप्तिनिश्चयसंभवात्कथं परमाण्वादावनुमानाप्रवृत्तिरिति चेन्न । पक्षेतरत्वस्योपाधित्वसंभवेन व्यभिचाराभावानिश्चयात् । अथ तस्योपाधित्वं नास्तीत्युच्येत तदा बाधकमाह अन्यथेति ।

अनु० — अन्यथा सप्तमरसभावोऽप्यनुमयाऽऽपतेत् ॥
अनिष्टानि च सर्वाणि ह्यनुमा कामचारिणी ॥

पक्षेतरत्वस्योपाधितामनादृत्य प्रमाणान्तरासहकृतेनैवानुमानेन परमाण्वादिसिद्ध्यभ्युपगम इत्यर्थः । मधुरो रसो लवणादिरसपञ्चकव्यतिरिक्तरसान्योन्याभाववान् रसत्वाल्लवणवदित्याद्यनुमया । अनिष्टानि च सर्वाणि दहनशैत्यादीन्यापतेयुः । कुतः । यस्मादेवंविधानुमा कामचारिणी । ननु च सप्तमरसादेरनुपलम्भादिबाधितत्वात्पक्षेतरत्वोपाधिदुष्टत्वमनुमानानामिति चेत्समं प्रकृतेऽपि । परमाण्वादेरप्यनुपलम्भबाधितत्वात् । अयोग्यं तदिति चेत् । तुल्यं सप्तमरसादावपि । अनुमानप्रामाण्ये सप्तमरसादिसिद्धावयोग्यत्वं कल्प्यम् । कल्पिते च तस्मिन्ननुमानप्रामाण्यसिद्धिरित्यन्योन्याश्रयत्वमिति चेत् । एतदपि तादृगेव । अनुपभोग्यस्य सप्तमरसादेः कल्पने गौरवमिति चेत् । समाधिसाम्यम् । प्रमिते न गौरवं दोष इत्येतदपि समानम् । तस्मात्परमाण्वादेः साक्षिवेद्यत्वमङ्गीकृत्य प्रतिबन्दी मोचनीयेति कथं न तस्य साक्षिवेद्यत्वमिति ॥

शे० — नन्वन्यथेत्युत्तरभाष्यमनर्थकम् । न चैतत्पक्षेतरत्वस्य दूषणत्वाभावे बाधकोपदर्शनद्वारा तद्दूषणत्वसमर्थनपरत्वान्नानर्थक्यमिति वाच्यम् । तत्समर्थनस्यापि प्रकृते उपयोगादर्शनात् । न च परमाण्वादिसाधकानुमाने पक्षेतरत्वस्योपाधित्वसिद्धिस्तत्प्रयोजनमिति वाच्यम् । तत्रोपाधित्वप्रतिपादनस्याप्युपयोगादर्शनादित्यतो मीमांसासहकृतप्रत्यक्षस्य धूमाद्यनुमान इव परमाण्वाद्यनुमानेऽपि व्याप्तिनिश्चायकत्वसंभवशङ्कानिरासार्थत्वेन तत्रोपाधिप्रतिपादनस्यार्थवत्त्वादित्यभिप्रेत्योक्तशङ्कानिरासाय तत्र पक्षेतरत्वस्योपाधिमुपदर्शयितुं तदनङ्गीकारे बाधकसमर्पकतयाऽन्यथेत्याद्युत्तरभाष्यं योजयितुं परमाण्वाद्यनुमानस्य धूमाद्यनुमानसाम्यशङ्कामुत्थापयति नन्विति ॥ अनेनैव न्यायेनेति । यथा धूमस्य वह्निना संबन्धग्राहिणः प्रत्यक्षस्यापि मीमांसासहकारात्तद्व्यभिचाराभावनिश्चायकत्वं, तथा महदारंभकत्वादेः सावयवत्वादिना संबन्धग्राहिणः प्रत्यक्षस्याप्युक्तविधमीमांसासहकारेण तद्व्यभिचाराभावनिश्चायकत्वस्य मयाऽपि वक्तुं शक्यत्वादित्यर्थः ॥ अथेति । अनुमानमात्रोच्छेदकत्वादिति भावः ।

**प्रमाणान्तरासहकृतेनैवेति** । नन्वनेनैव न्यायेनेत्यादिशङ्काग्रन्थे धूमस्याग्निनेव महदारंभकत्वादेः सावयवत्वादिना व्याप्तिग्राहकप्रत्यक्षादिप्रमाणान्तरसद्भावप्रतिपादनात्कथं प्रमाणान्तरासहकृतानुमानेनेत्यनुवाद, इति चेन्न । व्याप्तिग्राहकत्वेन तत्सत्त्वाभ्युपगमेऽपि संवादकतया प्रत्यक्षादिप्रमाणाभावाभिप्रायेणैतद्ग्रन्थप्रवृत्तेरविकलत्वात् ॥ **लवणादीति** । एतच्च चित्ररसाभावपक्षमाश्रित्योक्तम् । तत्सद्भावपक्षे तु लवणादिरसषट्कव्यतिरिक्तेति प्रयोक्तव्यम् । अत्र लवणादिरसपञ्चकव्यतिरिक्तपक्षीकृतमधुररसान्योन्याभाववत्त्वस्य लवणादेः सत्त्वात् दृष्टान्ते साध्यपर्यवसानं, पक्षे च लवणादिरसपञ्चकव्यतिरिक्तत्वस्य सत्त्वेऽपि तत्प्रतियोगिकान्योन्याभावस्य बाधितत्वेनासंभवाद्धेतोः पक्षधर्मताबलेन पक्षे साध्यं सिद्ध्यदप्रसिद्धं रसान्तरमादायैव पर्यवस्यतीति सप्तमरसस्य सिद्धिः । एवमेवाष्टमरससिद्धिरित्यवधेयम् ॥ **अनुपलम्भादिबाधितत्वादिति** । तथा च बाधोन्नीतपक्षेतरत्वस्य सर्वत्रासंभवान्नानुमानमात्रोच्छेदः इति भावः ॥ **समं प्रकृतेऽपीति** । परमाण्वाद्यनुमानानामपि पक्षेतरत्वोपाधिदुष्टत्वमिति सममित्यर्थः । साम्यमेवोपदर्शयति **परमाण्वादेरिति** । परमाण्वादेरयोग्यतया तदनुपलम्भस्यान्यथासिद्धत्वान्न बाधकत्वमिति न पक्षेतरत्वोपाधिदुष्टत्वं परमाण्वाद्यनुमानानामित्याशङ्कते **अयोग्यमिति** । सप्तमरसस्याप्ययोग्यतया तदनुपलम्भस्यान्यथासिद्धत्वान्न बाधकत्वमिति न पक्षेतरत्वोपाधिदुष्टत्वं सप्तमरसाद्यनुमानानामिति तुल्यमित्याह **तुल्यमिति** । तर्ह्यनुमानप्रामाण्ये परमाण्वादिसिद्धावयोग्यत्वं कल्प्यं, कल्पिते च तस्मिन्ननुमानप्रामाण्यमित्यन्योन्याश्रयत्वमिति तुल्यमेवेत्याह **एतदपीति** ॥ **समाधीति** । अनुपभोग्यस्य परमाण्वादेरपि कल्पने गौरवस्याविशिष्टत्वादिति भावः । यदि साक्षीत्यादिनोक्तमर्थमुपसंहरति **तस्मादिति** ।

**स०— अनेनैव न्यायेनेति** । मीमांसासहकृतं प्रत्यक्षं महदारम्भकत्वादेः सावयवत्वादिसम्बन्धं गृह्णत् व्यभिचाराभावमाकलयतीति न्यायेनेत्यर्थः । **प्रमाणान्तरासहकृतेनेति** । एतच्च संवादकप्रमाणराहित्याभिप्रायेण, न तु सर्वथा प्रमाणान्तरराहित्याभिप्रायेण, अनेनैव न्यायेनेत्यादिपूर्वग्रन्थविरोधादिति ध्येयम् । **मधुरो रस इति** । अत्र लवणादिरसपञ्चकव्यतिरिक्तपक्षीकृतमधुररसान्योन्याभाववत्त्वस्य लवणादिरसे सत्त्वात्पक्षे च लवणादिपञ्चकव्यतिरिक्तत्वस्य सत्त्वेन तत्प्रतियोगिकान्योन्याभाववत्त्वस्य तत्र बाधितत्वात् अप्रसिद्धरसमादाय पक्षे साध्यपर्यवसानं द्रष्टव्यम् । **लवणादीति** । चित्ररसाभावपक्षे एतत्साध्यम् । तत्सद्भावमते तु लवणादिषट्कव्यतिरिक्तरसान्योन्याभाववानिति साध्यं द्रष्टव्यम् ।

**प०— मधुर इति** । दृष्टान्ते पक्षीभूतमधुरप्रतियोगिकान्योन्याभाववत्त्वेनेति ज्ञेयम् । 'यदि साक्षिमितं नैतदि'त्यादिनोक्तमुपसंहरति **तस्मादिति** ।

**या०** **मधुरो रस इति** । अत्र दृष्टान्ते लवणादिरसपञ्चकव्यतिरिक्तो यः पक्षीकृतो मधुररसस्तदन्योन्याभावमादाय साध्यपर्यवसानम् । पक्षे च लवणादिरसपञ्चकव्यतिरिक्तो न मधुर एव रसो ग्रहीतुं शक्यस्तदन्योन्याभाववत्त्वस्य तत्र बाधितत्वात् । अतो योऽप्रसिद्धः सप्तमो रसस्तदन्योन्याभावमादायैव साध्यपर्यवसानमित्यवधेयम् ।

**श्री०** — **नास्ति** सर्वानुमानोच्छेदकत्वात् । मधुरो रसः सप्तमरसवानित्युक्तेऽप्रसिद्धविशेषणतापत्तेराह **लवणादीति** । तथा च दृष्टान्ते लवणादिपञ्चकव्यतिरिक्तपक्षीभूतमधुररसमादाय साध्योपपादनं । पक्षे तु सप्तमरसमादायेति ज्ञेयम् । पक्षेऽपि दृष्टान्तवदेव साध्योपपादने बाधापत्तेरिति च ज्ञेयम् ॥ **बाधितत्वादिति** । तथा च बाधोन्नीतपक्षेतरत्वं व्यतिरेकेऽसाधारण्याभावाद्दूषणमेवेत्यर्थः । कथं तर्हि प्रकृते बाध इत्यत आह **परमाण्विति** । तथा च परमाण्वादिसाधकानुमानेऽपि पक्षेतरत्वमुपाधिरित्यर्थः ॥ **अयोग्यमिति** । योग्यानुपलब्धेरभावग्राहिकाया अभावादिति भावः । **अयोग्यत्वं कल्प्यम्** अनुपलम्भबाधपरिहारायेति शेषः ॥ **तस्मिन्निति** । अनुपलम्भबाधाभावादिति भावः । **एतदिति** । परमाण्वादिसाधकानुमानप्रामाण्ये परमाण्वादिसिद्धावनुपलम्भबाधपरिहारायायोग्यत्वं कल्प्यम् । कल्पिते च तस्मिन्नुक्तबाधाभावादनुमानप्रामाण्यसिद्धिरित्यन्योन्याश्रयोपेतमेवेत्यर्थः । **साम्यम्** अनुपलभ्यमानपरमाण्वादिकल्पनेऽपि गौरवमित्यर्थः । **प्रमिते** अनेनानुमानेनैव प्रमिते, परमाण्वादौ । **समानम्** अनेनैवानुमानेन सप्तमरसादेरपि प्रमितत्वादिति भावः । **तस्मात्** एवं केवलानुमानवेद्येऽतिप्रसङ्गात् । **प्रतिबन्दी** सप्तमरसादिकं न साक्षिसिद्धमिति तदनुमानाप्रमाण्यं परमाण्वादिकं तु साक्षिसिद्धमिति तदनुमानं प्रमाणमित्युक्त्वा सा प्रतिबन्दी मोचनीयेत्यर्थः ॥

**च०** — यदि साक्षिमितमित्यादिनोक्तं निगमयति **तस्मादिति** ।

**सु०** — ॐ **समवायाभ्युपगमाच्च साम्यादनवस्थितेः** ॐ ॥ ॐ **उभयथाऽपि न कर्मातस्तदभावः** ॐ इति सूत्रम् । तत् 'नित्यमेव च भावादि'त्यागामिसूत्रव्याख्यानन्यायेनैव व्याख्यातं भविष्यतीति मन्वानस्तदपहाय हेत्वन्तरेण वैशेषिकादिसमयमपाकुर्वन् (तु) 'समवायाभ्युपगमाच्च साम्यादनवस्थितेरि'त्येतत्सूत्रं व्याचष्टे कार्येति ।

अनु० — ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥

कार्यकारणयोश्चैव

समवाय ईर्यत इति वक्ष्यमाणमत्रापि संबध्यते । अनेन समवायप्रतिपादकं परेषां 'इहेति यतः कार्यकारणयोः स समवाय' इति सूत्रमर्थतोऽनुवदति । अत्र कार्यकारणशब्दाववयव्यव-

यववाचकौ । तौ चोपलक्षणपराविति सूचनार्थश्चशब्दः । एवशब्दः समवायस्येहप्रत्ययसिद्धत्वं सूचयति ।

शे० — ॐसमवायाभ्युपगमाच्च साम्यादनवस्थितेःॐ ॥ ननु कार्यकारणयोरित्युत्तरभाष्यमनर्थकम् । न चैतत्समवायाभ्युपगमाच्चेत्येतत्सूत्रव्याख्यानरूपत्वान्नानर्थकमिति वाच्यम् । वैशेषिकसमयस्य पूर्वसूत्रेणैव निरस्तत्वेन तस्य सूत्रस्याप्यनर्थकत्वात् । कथञ्चिदर्थवत्त्वे वोभयथाऽपीत्येतत्सूत्रोत्तरत्वात्तस्य तद्व्याख्यानपूर्वकमेव व्याख्येयतया तदव्याख्यायैतन्मात्रव्याख्याने निमित्ताभावाच्चेत्यतस्तदव्याख्याने निमित्तप्रदर्शनपूर्वकं 'समवायेति' सूत्रस्यार्थवत्तामुपदर्शयन्नेव तत्सूत्रार्थकथनपरतयोत्तरभाष्यं योजयति **उभयथाऽपीत्यादिना** । कार्यकारणयोर्गुणादिपञ्चकान्तर्गतत्वेन गुणादेः पञ्चकस्येत्यनेनैव सङ्गृहीततया कार्यकारणयोश्चेति पृथक् तद्ग्रहणानर्थक्यप्रसक्त्या कार्यकारणयोः गुणादेः पञ्चकस्य च समवाय ईर्यत इति यथाश्रुतैकवाक्यतया योजनाया असम्भवात्कार्यकारणयोश्चेवेत्येकोऽत्र योगः, गुणादेरित्यादिकश्चापर इति वाक्यभेदमाश्रित्यात्रपक्षे साकाङ्क्षतया प्रसक्तवाक्याभासशङ्कापरिहारायापेक्षितं पूरयति **समवाय ईर्यत इति** । अत्र भाष्येऽयुतसिद्धयोरित्येव वक्तव्ये तथाऽनुक्त्वा कार्यकारणयोरित्युक्तौ किंनिमित्तमित्यतः समवायनिरूपणपरवैशेषिकसूत्रे कार्यकारणयोरित्येवोक्तेस्तदनुवादरूपेऽत्र भाष्ये तथोक्तिर्युक्तेत्यभिप्रेत्य किं तत्सूत्रं यदनुवादत्वमस्योच्यत इत्यतस्तदुदाहरणपूर्वकमस्य तदनुवादतां दर्शयति **अनेनेति** । आनुपूर्व्या अन्यादृशत्वेन शब्दतोऽनुवादताया बाधितत्वादाह **अर्थत इति** । दण्डघटयोः समवायानभ्युपगमात्कार्यकारणशब्दयोः कार्यकारणमात्रपरत्वस्यानुपपन्नत्वात्तदर्थमाह **अत्र कार्येति** । ननु कार्यकारणपदाभ्यामवयवावयविनोः कारणत्वेन कार्यत्वेन च सामान्येन रूपेणोपस्थितेः कार्यकारणपदयोस्तद्वाचकत्ववत् क्रियाक्रियावतोरपि ताभ्यां सामान्येन रूपेणोपस्थितेस्तद्वाचकत्वस्याप्यङ्गीकर्तव्यत्वात् क्रियात्वेन क्रियावत्त्वेन च रूपेण तदुपस्थितिदशायां कार्यकारणशब्दयोः क्रियातद्वदुपलक्षणत्वात्तद्वाचकत्वाभावाभिप्राये चावयवत्वेनावयवित्वेन च रूपेणावयवावयविनोरप्युपस्थितिदशायां तदुपलक्षणत्वेन तद्वाचकत्वस्याप्यसम्भवात्कथमवयवावयविमात्रवाचकत्वाभिधानमिति चेत् । अत्र वदन्ति । अवयवावयविनोर्विशेषरूपेण वाच्यत्वासंभवेऽपि विशेषस्यापि कार्यत्वेन कारणत्वेन च सामान्यरूपेण वाच्यत्वात्तदभिप्रायेणैतद्ग्रन्थप्रवृत्त्युपपत्तेः । न चैवं क्रियातद्वतोरप्युक्तरूपेण तद्वाच्यत्वापत्तिरिति वाच्यम् । तत्त्वेऽपि तयोर्विशेषरूपेणैवोपस्थित्यर्थं तत्र लक्षणाश्रयणात् । न च तेनैव रूपेणोपस्थितेरपि न प्रयोजनं किञ्चिदिति वाच्यम् । क्रियातद्वतोर्गुणगुण्यादिसमानयोगक्षेमत्वोपदर्शनस्यैव तत्प्रयोजनत्वात् । अन्यथाऽवयवावयविसमानयोगक्षेमत्वप्रसक्त्याऽवयविन इव क्रियाया अप्यवयवमात्रनिष्ठत्वमेव न तु

गुणादेरिव सकलनिष्ठत्वमिति प्रसङ्गादिति । कार्यकारणयोश्चेति चशब्दवैयर्थ्यमाशङ्क्य कार्यकारणशब्दयोः अवयवावयविवाचकतया गुणगुण्यादिपरत्वाभावेन, गुणगुण्यादेः समवायाभावशङ्कावारणाय, तयोः गुणगुण्याद्युपलक्षणपरत्वसूचनार्थत्वात् न तदित्याह तौ चेति । तथाऽपि भाष्ये एवेत्यंशवैयर्थ्यमाशङ्क्य तत्सूत्रोक्तायाः समवायस्येहप्रत्ययसिद्धताया अत्रानुक्तेर्न कार्यकारणयोरित्यादिभाष्यस्यार्थतः समवायप्रतिपादकसूत्रानुवादत्वं सम्भवतीति शङ्कापरिहाराय समवायस्येहप्रत्ययसिद्धत्वसूचनार्थत्वान्न वैयर्थ्यमित्यभिप्रेत्यैवकारस्यार्थमाह एवशब्द इति । यद्यपि कार्यकारणयोः समवाय एवेर्यत इति संबन्धे समवायरूपार्थावधारणेन समवायस्य प्रामाणिकत्वमेव सिध्यति तन्मात्रेणैवार्थावधारणनिर्वाहात्, न त्विहप्रत्ययसिद्धत्वम् । तथाऽप्यन्यस्य तत्साधकस्य प्रमाणस्यादर्शनात्सामान्यसिद्धेर्विशेषपर्यवसायित्वमभिप्रेत्यैतदुक्तम् । अत एव सूचयतीत्युक्तमित्यवधेयम् ।

स० — ॐ उभयथापि न कर्मातस्तदभावः ॐ । कार्यकारणशब्दाविति । ननु कार्यकारणपदाभ्याम् अवयव्यवयवयोः कार्यत्वेन कारणत्वेन च सामान्यधर्मेणोपस्थितिदशायां तद्वाचकत्वाभाववत् अवयवित्वादिविशेषरूपेण तदुपस्थितिदशायामवयवावयविवाचकत्वस्याप्यभावेन साम्यात् कथमवयव्यवयववाचकत्वमुच्यत इति चेन्न । अवयव्यादेर्विशेषरूपेणोपस्थितिदशायां तद्वाचकत्वाभावेऽपि कार्यत्वादिसामान्यरूपेणोपस्थितिदशायां तद्वाचकत्वोपपत्तेः । न च तर्हि क्रियादेरपि सामान्यरूपेणोपस्थितिदशायां कार्यकारणशब्दयोः तद्वाचित्वस्यापि सत्त्वात् कथं लक्ष्यत्वाभिधानमिति वाच्यम् । क्रियात्वादिविशेषरूपेणोपस्थित्यर्थं लक्षणाया आवश्यकत्वात् । न च तद्रूपेणोपस्थितेरपि निष्प्रयोजनत्वाल्लक्षणा व्यर्थेति वाच्यम् । क्रियाक्रियावतोः गुणगुण्यादिसमानयोगक्षेमत्वस्यैव तत्प्रयोजनत्वात् । अन्यथा अवयविसमानयोगक्षेमत्वापत्त्या गुणादिवत् अवयवावयव्यादिसकलनिष्ठत्वं न ज्ञायेतेति तज्ज्ञानार्थं विशेषरूपेणैवोपस्थितिर्वाच्या । सा च न लक्षणां विनेति लक्षणोक्तिर्युक्तैवेति भावः ।

प० — ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥ इत्यागामिसूत्रव्याख्यानन्यायेनेति । 'नित्येन्छत्वात्परेशस्य परमाणुमदात्वत' इत्यादिनेति भावः ॥ अत्रापीति । 'कार्यकारणयोश्चे'त्येतदनन्तरमित्यर्थः । अर्थतोनुवादत्वं व्यनक्ति अत्रेति ॥ तौ चेति ॥ सूत्रस्थौ । इहप्रत्ययेति । स चाग्रेविवरिष्यते । एतच्च समवाय एवेत्यन्वये सति सिध्यतीति भावः ।

या० — ॐ उभयथाऽपि न कर्मातस्तदभावः ॐ ॥ उपलक्षणपराविति । गुणगुण्यादीनामिति शेषः ॥ एवशब्द इति ॥ एवशब्दस्य समवाय ईर्यत एवेति सम्बन्धे तेन समवायरूपार्थावधारणलाभादर्थावधारणस्य च प्रमाणसिद्धत्वं विनाऽसम्भवात्समवाये प्रमाणस्य चान्यस्यादर्शनादिहेतिप्रत्ययसि-

द्भूत्वमेव तस्येति सूचयतीत्यर्थः । तथा च कार्यकारणयोरित्यनेन परकीयसमग्रसूत्रार्थानुवादो लब्ध इति भाव ॥

श्री० — ॐ उभयथाऽपि न कर्मातस्तदभावः ॐ ॥ कार्यकारणयोः सम्बन्धः समवाय इत्युक्ते निमित्तकारणेनापि कार्यस्य सम्बन्धः समवायः स्यादतो व्याचष्टे **कार्यकारणशब्दाविति** ॥ **सूचयतीति** । तथा च समवाय एवेर्यते न संयोगः । समवायश्चेहप्रत्ययसिद्ध इति भावः ॥

**सु० — तदेतत्स्वयमेव विवृणोति गुणादेरिति ।**

**अनु० —** गुणादेः पञ्चकस्य च ॥
भिन्नस्यैव तु संबन्धः समवायोऽन्य ईर्यते ॥

**गुणादेः पञ्चकस्येति गुणाचयविक्रियासामान्यविशेषाणामित्यर्थः । चशब्देन गुण्यादिपञ्चकस्य चेति समुच्चिनोति । ननु गुणगुण्यादिकमभिन्नं भिन्नाभिन्नं वा तत्किं समवायेनेत्यत उक्तं** भिन्नस्यैवेति । **तुशब्दो विशेषार्थः । न ययोः कयोश्चिद्गुणगुणिनोः समवायः, किन्त्वयुतसिद्धयोरेवेति । स गुणगुण्यादिस्वभाव एव चेन्न पदार्थान्तरसिद्धिरित्यत उक्तम्** अन्य इति । **ईर्यते वैशेषिकादिभिः, अतोऽपि तद्दर्शनमयुक्तमिति शेषः ।**

**अयमर्थः । वैशेषिकादयोऽवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योः विशेषनित्यद्रव्ययोरत्यन्तभेदमभ्युपगम्यात्यन्तभिन्नमेव समवायाख्यं संबन्धमभ्युपगच्छन्ति । ततोऽप्यनुपपन्नभाषिण इति ।**

**शे० —** तर्हि कार्यकारणयोश्चैवेत्येतावतैव समवायप्रतिपादकसमग्रसूत्रार्थानुवादसिद्धेर्गुणादेरित्युत्तरवाक्यस्य वैयर्थ्यमित्याशङ्क्य कार्यकारणपदोपलक्ष्यार्थप्रदर्शनेन तद्विवरणरूपत्वान्न तदित्याशयेन तत्परतयोत्तरभाष्यं योजयति **तदेतदिति** । गुणादेः पञ्चकस्येत्यस्य गुणगुण्यादिपञ्चकपरत्वे समुच्चेयाभावेन समुच्चयार्थकभाष्यस्थचशब्दवैयर्थ्यप्रसङ्गात्तद्वैयर्थ्याधेयपञ्चकपरतया तद्व्याचष्टे **गुणादेरिति** ॥ **तर्किं समवायेनेतीति** । गुणगुण्यादेरत्यन्तभेदवादेऽबाधितेहप्रत्ययरूपसम्बन्धकार्यानुरोधेन तन्निमित्तसम्बन्धत्वेन समवायस्यावश्याङ्गीकार्यत्वेऽपि तदभेदवादे इहेदमिति प्रत्ययस्यायथार्थत्वेनाबाधितेहप्रत्ययरूपसंबन्धकार्याभावान्न तन्निमित्तसंबन्धतया समवायोऽङ्गीकार्य इति भावः । मूले तुशब्दस्यावधारणार्थत्वनिर्देशार्थत्वयोरनुपपत्तेस्तद्वैयर्थ्यमाशङ्क्य गुणगुण्यादेरयुतसिद्धत्वरूपविशेषद्योतनार्थत्वान्न तदिति भावेन तदर्थमाह **तुशब्द इति** । तुशब्दद्योतितं विशेषमेव दर्शयति **न ययोरिति** । तथाऽपि मूले समवायस्यान्यत्वकथनमनर्थकमित्याशङ्क्य समवायस्य गुणगुण्यादिसंबन्ध्यन्यत्वप्रतिपादनार्थं तदित्यभिप्रेत्य तत्प्रतिपा-

वनस्य निष्प्रयोजनतां परिहरति **स इति** । अत्रापेक्षितपूरणेन साकाङ्क्षत्वप्रयुक्तवाक्याभासतां परिहरति **अतोऽपीति** । बुद्ध्यारोहाय वाक्यद्वयस्य तात्पर्यमाह **अयमर्थ इति** ।

प० — **तदेतदिति** । कार्यकारणशब्दावयव्यवयवपराविति तौ चोपलक्षणपराविति प्राक्च-शब्दसूचितं चेत्यर्थः ॥ **गुण्यादीति** । गुणि-अवयवि-क्रियाश्रयजात्याश्रयविशेषाश्रयाणामित्यर्थः ॥ **अयुतसिद्धयोरिति** । एतल्लक्षणं तन्मतोपन्यासव्याख्यावसरे विवृतम् ॥ **पदार्थान्तरेति** । षट्पदार्थमध्य-स्थपदार्थान्तरेत्यर्थः ।

या० — **विवृणोतीति** । गुणादिपञ्चकमध्ये कार्यकारणयोः पुनर्ग्रहणादेवं व्याख्यातमिति द्रष्टव्यम् ॥

श्री० — **अभिन्नमिति** । तथा चेहप्रत्ययस्यैवाभावेन किं समवायेनेत्यर्थः ॥ **भिन्नाभिन्न-मिति** । तथा च भेदस्य सत्त्वात्तेनैवेहप्रत्ययोपपत्तौ न समवायेन कृत्यमित्यर्थः । तमेव विशेषं व्यनक्ति **न ययोरिति** । तथा च यदि भेदसद्भावमात्रेणैवेहप्रत्ययस्तदा मेरुनिष्ठगुणेनापि मन्दरो गुणी स्यात् । अतो भेदेऽपि पुनर्गुणगुण्यादिव्यवहारनिर्वाहाय समवायोऽङ्गीकार्य इत्यर्थः ॥ **पदार्थान्तरेति** । षट्कसंख्यापूरकसमवायरूपेत्यर्थः ॥

---

**सु० — ननु च गुणगुण्यादीनामत्यन्तभेदस्तावद्व्यपदेशभेदादिप्रमाणसिद्धः । अन्यथा स्तम्भकुम्भादीनामप्यत्यन्तभेदो न स्यात् । अस्ति चेह तन्तुषु पट, इह पटे रूपमिह मूर्ते कर्मेह गवि गोत्वमिह नित्यद्रव्ये विशेष इत्यबाधितः प्रत्ययः । न चेहेदमिति प्रत्ययो विनाऽतिरिक्तेन संबन्धेनोपपद्यते । इह कुण्डे बदराणीति प्रत्ययस्य संयोगपूर्वकत्वदर्शनात् । स चायमयुतसिद्धयोः संबन्ध इति संयोगाद्भिद्यते । युतसिद्धयोर्हि संबन्धः संयोगः । द्रव्य-मात्रवृत्तिश्च । तदेवं प्रमितस्य समवायस्याभ्युपगमे कथमयुक्तवादित्वं वैशेषिकादीनामित्यत आह भिन्नत्वेति ।**

**अनु० —** भिन्नत्वसाम्यतस्तस्य ताभ्यां योगो भवेद्ध्रुवम् ॥

भिन्नत्वसाम्यत इत्युपलक्षणम् । इहप्रत्ययसाम्यतश्चेत्यपि द्रष्टव्यम् । तस्य समवायस्य । ताभ्याम् अवयवावयव्यादिसंबन्धिभ्यां सह । योगः संबन्धः ।

एतदुक्तं भवति । इह तन्तुषु पट इत्यादिप्रत्ययः संबन्धपूर्वकोऽबाधितेहप्रत्ययत्वादिह कुण्डे बदराणीति प्रत्ययवदिति समवायमनुमिमानेन योऽबाधितेहप्रत्ययः स संबन्धपूर्वक इति

व्याप्तिरवश्यमङ्गीकरणीया । विद्यते चेह तन्तुपटयोः समवाय इत्यबाधितेहप्रत्ययः । तेन समवायस्यापि तन्तुपटाभ्यां समवायोऽभ्युपगन्तव्य एव स्यात् । न चाभ्युपगम्यते । अतस्तत्र अनैकान्तिकमनुमानमिति ।

ननु तन्तुपटयोः समवायः सिद्धो न वा । सिद्धश्चेत्किमुत्तरकालभाविनाऽनैकान्त्येन । न चेत्कानैकान्त्यम् । मैवम् । आपाततः प्रतीते संबन्धे व्यभिचारं दृष्ट्वा परावृत्तेरावश्यकत्वस्य विवक्षितत्वात् ।

शे० — व्यपदेशभेदप्रमाणस्य गुणगुण्यादावत्यन्तभेदासाधकत्वे बाधकमाह अन्यथेति । व्यपदेशभेदाद्यतिरिक्तस्य स्तम्भकुम्भादिभेदप्रमाणस्याभावादिति भावः । अस्तु गुणगुण्यादीनामत्यन्तभेदास्तथाऽपि न तावन्मात्रेण तत्र समवायः सिध्यति । तथा सति मेरुमन्दरयोरपि तत्प्रसङ्गादित्यतो नात्यन्तभेदमात्रस्य समवायप्रयोजकत्वं वयमभ्युपगच्छामो येनोक्तदोषः स्यात् । किन्त्वबाधितेहप्रत्ययसहकृतस्यैव तस्येति नातिप्रङ्ग इत्यभिप्रेत्य गुणगुण्यादावबाधितेहप्रत्ययस्वरूपमुपदर्शयति अस्ति चेति । अप्रयोजकत्वमाशङ्क्य हेतूच्छित्तिमेव विपक्षे बाधकत्वेनाह न चेति । तर्हीह कुण्डे बदराणीति प्रत्ययस्येव इह तन्तुषु पट इत्यादीहप्रत्ययस्यापि संयोगपूर्वकत्वेन प्रकृतप्रतिज्ञातार्थोपपत्तेरर्थान्तरत्वमित्याशङ्क्य बाधादेव न तदित्याह स चेति । तावताऽपि कथं संयोगभेदसिद्धिरित्यत आह युतसिद्धयोरिति । प्रकारान्तरेण संयोगवैलक्षण्यमुपदर्शयति द्रव्येति । अयं च गुणगुण्यादिवृत्तिरपीति भावः । किमेतावता पूर्वानुमाने दूषणमुक्तं भवतीत्यत आह एतदुक्तं भवतीति ॥ अवश्यमङ्गीकरणीयेति । अन्यथा व्याप्तिविकलतयाऽनुमानस्याभासत्वप्रसङ्गादिति भावः ।

आपातत इति । व्यभिचारानुपस्थितिदशायामनुत्पन्नायां अपि सम्बन्धानुमितेः अनन्तरभाविना व्यभिचारोपलम्भेन दुष्टकरणजन्यतानिश्चयात् अप्रामाण्यनिश्चये तद्विषयपरित्यागस्यावश्यकत्वस्य विवक्षितत्वादित्यर्थः ॥

प० — द्विवचननिर्वाहायाह संबन्धिभ्यामिति । कोऽनेन दोष उक्त इत्यत आह एतदुक्तमिति । इह गगने नीलिमेत्यादौ अव्यभिचारायाबाधितेति हेतुविशेषणम् । संबन्धपूर्वकत्वं च संबन्धजन्यत्वं वा संबन्धप्रतीतिपूर्वकत्वं वा ॥ आपातत इति । दोषावमर्शात्प्राक्प्रतीतेऽनुमिते सति विमर्शिते व्यभिचारं दृष्ट्वा परावृत्तेः समवायानुमितितो निवृत्तेरित्यर्थः । यद्वा आपाततः प्रतीते संबन्धे व्यभिचारं पश्यतो व्याप्तिग्रहवैमुख्येन तदूहासंभवादिति तर्कताण्डवरीत्याऽर्थः ।

**या०— आपाततः प्रतीत इति ।** व्यभिचारानुपस्थितिदशायां सम्बन्धानुमितौ सत्यां तत्र व्यभिचारोपलम्भे पूर्वोत्पन्नानुमितौ दुष्टकरणजन्यतानिश्चयेनाप्रामाण्यनिश्चये तद्विषयपरित्यागस्याव- श्यकताया विवक्षितत्वादित्यर्थः ॥

**श्री० — अन्यथेति ।** व्यपदेशभेदादिरूपे प्रमाणे सत्यपि यदि भेदो नेत्यर्थः ॥ **द्रव्यमा- त्रेति ।** अयं तु समवायो गुणादावप्यस्तीति भावः ।

**च० — ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥ अबाधितः प्रत्यय इति ।** तन्तुपटादीनां आधाराधेयभावप्रत्ययस्तद्व्यतिरेकरूपबाधप्रत्ययविनिर्मुक्तोऽस्तीत्यर्थः । **संबन्धपूर्वः** मत- भेदेन संबन्धजन्यस्तत्प्रतीतिजन्य इति वार्थः । **उत्तरकालभाविना** संबन्धानुमित्युत्तरकालीनप्रतीति- गोचरानैकान्त्येन ॥ **आपाततः प्रतीत इति ।** हेतुसाध्ययोः सहचारादिग्रहदशायामुत्पन्नव्यभिचार- प्रतिसंधानस्यानुमित्यौपयिकव्याप्तिग्रहविघटकतया तत्प्रतिबन्धकत्वेप्यनुमित्युत्तरकालीनानैकान्त्यप्रतिसंहिते- रुक्तदिशा तद्विरोधिताविरहेण तदप्रतिबद्धपूर्वोत्पन्नसंबन्धानुमितिधर्मिकेण तादृशानुमित्यनन्तरभावि- व्यभिचारोपलब्धिनियन्त्रितभ्रमात्मकपरामर्शजन्यतानिर्णयाधीनाप्रामाण्यनिश्चयेनास्कन्दितानुमित्यविषय- त्वसमर्थनादिति भावः ।

**सु० — नन्वत्र भिन्नत्वसाम्यं किमर्थमुपन्यस्तम् । न हि भिन्नत्वं हेतूकृतमिति । सत्यम् । अबाधितत्वद्योतनार्थं भिन्नत्वग्रहणम् । विभिन्नवस्त्वभावे खल्विह प्रत्ययो बाधितः स्यात् । इह तन्तुपटयोः समवाय इति प्रत्ययोऽपि संबन्धपूर्वक एव तन्तुपटसमवायस्यैतत्कार- णत्वादिति चेन्न । आधाराधेयतया प्रतीयमानयोः संबन्धस्य परेण सिसाधयिषितत्वात् । अन्यथा स्थाणुश्येनयोः संयोग इत्यत्र समवायासिद्धिप्रसङ्गात् । इन्द्रियार्थसन्निकर्षादिना सिद्धसाधनतापत्तेश्च ।**

**शे० — अत्रेति ।** साम्यादिति सूत्रे भिन्नत्वसाम्यत इति भाष्ये चेत्यर्थः । ननु व्यभिचारोप- पादकहेतुवृत्तेरुपपादनार्थत्वान्न तदुपन्यासानर्थक्यमित्याशङ्क्य भवेदेतदेवं कथञ्चिद्यद्यत्र भिन्नत्वं हेतूकृतं स्यान्न चैतदस्तीत्याह **न हीति** ॥ **अबाधितत्वद्योतनार्थमिति ।** इहप्रत्ययस्येति शेषः । तथा च विपक्षे हेतुविशेषणाबाधितत्वोपदर्शनार्थत्वाद्भिन्नत्वसाम्यस्य न सूत्रभाष्ययोस्तदुपन्यासवैयर्थ्यमिति भावः । आशयमजानानः सम्बन्धपूर्वकत्वमात्रं साध्यमिति मन्यमानः साध्यस्यापि सद्भावान्न व्यभिचार इति शङ्कते **इह तन्तुपटयोरिति ।** आशयमुद्धाटयति **नाधारेति ।** तन्तुपटसमवायश्चाधारतया प्रतीयमानयो- स्तन्तुपटयोराधेयतया प्रतीयमानस्य समवायस्य च न सम्बन्ध इति सम्बन्धपूर्वकत्वाभावाद्व्यभिचार

एवेत्यर्थः । सम्बन्धपूर्वकत्वमात्रस्यैव साध्यत्वसम्भवे किमाधाराधेयतया प्रतीयमानयोरिति तद्विशेषणेनेत्यत्राह तन्मात्रस्य साध्यत्वे बाधकमाह **अन्यथेति** । इहप्रत्यये सम्बन्धपूर्वकत्वमात्रस्यैव साध्यत्वाभ्युपगम इत्यर्थः । इह तन्तुपटयोः समवाय इति प्रत्यये तन्तुपटसमवायस्येवेह स्थाणुश्येनयोः संयोग इति प्रत्ययेऽपि स्थाणुश्येनसंयोगस्यैव कारणताया वक्तुं शक्यत्वात्तन्तुपटयोः समवायस्य च समवायान्तरासिद्धिवत्स्थाणुश्येनयोः संयोगस्य च समवायासिद्धिप्रसङ्गादित्यर्थः ।

स० — **अबाधितत्वद्योतनार्थमिति** । इहप्रत्ययस्येति शेषः ।

प० — **न हि भिन्नत्वमिति** । त्रिष्वपीहप्रत्ययसाम्यमेवेति भावः ॥ **अबाधितत्वद्योतनार्थमिति** । इह तन्तुपटयोः समवाय इति इहप्रत्ययस्येति भावः । तद्व्यनक्ति **विभिन्नेति** । व्यभिचारोद्धारमाशङ्कते **इहेति** । तस्य विवरणं **तन्तुपटयोरिति** । साध्यसत्त्वं व्यनक्ति **तन्तुपटेति** । इह तन्तुपटयोः समवाय इत्यत्र यस्तन्तुपटसंबन्धितया समवायत्वप्रकारेण च संबन्धो भासते तस्य विषयतया जनकत्वात्तत्पूर्वकत्वेनैव तत्रापि साध्यसत्त्वेन नानैकान्त्यम् । पूर्वानुमाने संबन्धपूर्वक इत्येव सामान्यतः साध्यकरणादिति शङ्कार्थः । परिहारस्य तन्तुपटावाधारत्वेन समवायो ह्याधेयतया तन्तुपटयोः समवाय इत्यत्र प्रतीयते । तत्राधाराधेयभावनिर्वाहकीभूतः संबन्धोऽन्य एव वाच्यः । तादृशस्यैव पूर्वोक्तानुमाने तवाभिमतत्वात् स च नेत्यनैकान्त्यं तदवस्थितमेवेति ॥ **आधाराधेयभावतया प्रतीयमानयोरिति** । तथा प्रतीयमानयोः संबन्धिनोः संबन्धस्येत्यर्थः । कुत एवं सिसाधयिषितत्वमित्यत आह **अन्यथेति** । सामान्यतः संबन्धपूर्वकत्वमात्रसाधन इत्यर्थः ॥ **संयोग इत्यत्रेति** । संयोगप्रत्ययः संबन्धपूर्वक इति प्रतिज्ञायामित्यर्थः । बाधकान्तरं चाह **इन्द्रियेति** । अन्यथेत्यनुषङ्गः ।

या० — **अबाधितत्वद्योतनार्थमिति** । इहप्रत्ययस्येति शेषः । तथा च विपक्षे हेतुविशेषणोपपादनार्थं भिन्नत्वग्रहणमिति भावः ॥ **अन्यथेति** । आधाराधेयतया प्रतीयमानयोर्योऽतिरिक्तस्संबन्धस्तत्पूर्वक इति साध्यस्यासिषाधयिषितत्वे, इह स्थाणुश्येनयोः संयोग इति विशिष्टप्रत्ययस्यापि पक्षत्वेन तत्रापि संयोगपूर्वकतामादायैव साध्यपर्यवसाने तदंशे समवायासिद्धिप्रसङ्गादित्यर्थः ॥

श्री० — तदुपपादयति **विभिन्नेति** । **विभिन्नवस्त्वभावे,** वस्तुनि भेदाभाव इति यावत् । प्रकृते च भेदस्यैव सत्त्वादिहप्रत्ययोऽबाधित एवेति भावः । **तन्तुपटसमवायस्य** इह तन्तुषु पट इति तन्त्वाधारकपटाधेयकविशिष्टप्रत्ययनिर्वाहकस्य । **एतदिति** । **एतस्य** इह तन्तुपटयोः समवाय इति विशिष्टप्रत्ययस्येत्यर्थः । तं प्रतीति यावत् । **सिषाधयिषितत्वादिति** । तथा च तन्तुपटयोः समवाय इति तन्तुपटाधारकसमवायाधेयकविशिष्टप्रत्ययनिर्वाहकः कश्चिदाधेयादन्य एव समवायोऽङ्गी-

कार्यो न तु स एवेत्यर्थः । इह तन्तुषु पट इत्यादिविशिष्टप्रत्ययः सम्बन्धपूर्वक इति साध्ये दूषणान्तरमाह **इन्द्रियेति** । इन्द्रियार्थसन्निकर्षस्यापि विशिष्टप्रत्ययजनकत्वादित्यर्थः ।

**च० — अन्यथा** सप्तम्यन्तार्थानुयोगिकसंबन्धविषयकत्वस्यासिषाधयिषितत्वे ।

**सु० — नन्वनवस्थितेरिति सूत्रं कथम् । इत्थम् । यदि व्यभिचारपरिहाराय समवायस्यापि समवायान्तरमुपेयते । तदाऽनवस्थितिरिति ।**

**इह केचित्समवायं प्रत्यक्षमाचक्षाणाः, यत इति च विषयसप्तमीं व्याचक्षाणाः तत्स्थेम्ने अनुमानमाचक्षते । तेषामिहप्रत्ययस्य संबन्धपूर्वकत्वं नाम तत्प्रतीतिपूर्वकत्वमेव । तन्मते स्फुटैवानवस्था ।**

**ये तु प्रत्यक्षतां नाभ्युपगच्छन्ति । संबन्धस्य सत्तामात्रेणेहप्रत्ययकारणत्वमाहुस्तेषाम् ; अवस्थितिः सिद्धान्तः तद्विरोधोऽनवस्थितिः इत्यनवस्थितिशब्दोऽपसिद्धान्तवाची व्याख्यायते;**

**यद्वेह कुण्डे बदराणीतिवत्संबन्धस्य प्रतीत्यैवेहप्रत्ययकारणत्वादत्रापि प्रतीतिमापाद्यानवस्थैव वक्तव्या । कुण्डबदरसंयोगस्य योग्यतया अवर्जनीयतया प्रतीतिर्नेहप्रत्ययकारणमिति कुत एषा कल्पना । सत्तामात्रेणेहप्रत्ययकारणत्वोपपत्तौ प्रतीतेरपि कारणत्वकल्पकाभावादिति चेन्न । सत्यपि संयोगे कुतश्चिद्व्यवधानादप्रतीयमाने नेहबुद्धिर्भवति । भवति चासत्यपि संयोगे तद्विपर्ययादित्यन्वयव्यतिरेकयोः कल्पकत्वात् । स्वस्वामिभावादयोऽपि हि ज्ञाता एव संबन्धनिमित्तव्यवहारहेतवो दृष्टा नान्यथा । न ते संबन्धा अद्विष्ठत्वादिति चेन्न । संयोगस्याप्यद्विष्ठताया वक्ष्यमाणत्वात् । किञ्चैवं समवायोऽपि न संबन्धः स्यात् । तस्यानाश्रितत्वाभ्युपगमात् ।**

**नन्वेवं तर्हि नानैकान्त्यम् अनवस्थयैव बाधितत्वेनाबाधितेहप्रत्ययत्वस्य तत्रावृत्तेरिति चेन्न । अनवस्थायाः साध्यबाधकत्वेन साधनाबाधकत्वात् । साध्यबाधेनैव साधनबाधनाभ्युपगमस्य व्याप्तिनिश्चयोत्तरकालीनत्वात् । तन्तुपटयोः समवाय इति प्रतीतिरपि संबन्धपूर्विकैव । किन्त्वारोपित एवासौ संबन्ध इति चेन्न । अनवस्थाऽनिस्तारात् । आरोपितसंबन्धपूर्वकत्वं हि संबन्धारोपपूर्वकत्वमेव, प्रतीतौ चेयमनवस्थोक्तेति कथं (तन्निस्ता)निस्तारः । किञ्चैवं वदता सत्तयैव संबन्धस्य कारणत्वमिति मतं त्यक्तं स्यात् ।**

**अपि चाबाधितोऽपीहप्रत्ययो यदि संबन्धारोपमात्रेण भवेत्तदा तन्तुपटादावपि किन्न भवेदिति समवायासिद्धिः । क्वचित्सिद्धस्य क्वचिदारोपः कुत्राप्यभावे तदसिद्धिरिति चेन्न ।**

स्थाणुश्येनयोः संबन्धस्य सत्त्वात् । अन्यथा समवायेऽपि समवायान्तरारोपो न स्यात्समवायान्तरस्य क्वाप्यसत्त्वात् संभवात् ।

समवाये भेद एवारोप्यते न समवायान्तरमिति चेन्न । तावन्मात्रेणेहप्रत्ययायोगात् । संबन्धिसंबन्धभावोऽप्यारोप्यत इति चेन्न । तर्हि तन्तुपटादावपि तदारोपमात्रेणेहप्रत्ययोपपत्तौ किं समवायेनेति ।

शे० — ननु भिन्नत्वसाम्यस्य हेतुविशेषणाबाधितत्वोपपादनद्वाराऽबाधितेहप्रत्ययत्वरूपहेतोर्विपक्षे वृत्तिप्रतिपादकत्वेनानैकान्तिकत्वोपपादकत्वात्सार्थक्येऽपि पूर्वभागेनैव व्यभिचारोपपादनसिद्धया 'अनवस्थितेरि'त्यंशस्य तदुपपादकत्वाभावाद्वैयर्थ्यमेवेत्याशयेन शङ्कते **नन्विति** । **सूत्रं** सूत्रखण्डः । **कथं** प्रकृतान्वयीति शेषः ॥ **इत्थमिति** । तथा चानवस्थापरिहाराय तत्र समवायपूर्वकत्वाभावस्यैव वाच्यतया विपक्षे साध्याभावोपपादकत्वेनानवस्थितेरित्यस्यापि व्यभिचारोपपादकत्वान्न वैयर्थ्यमिति भावः ।

ननु चोत्पत्तिज्ञप्त्यप्रतिबन्धकत्वान्नेयमनवस्था दूषणमित्यतो ज्ञप्तिप्रतिबन्धकतया तस्या दूषणतामुपदर्शयितुमाह **इहेति** । ननु समवायस्यातीन्द्रियत्वेनानुमानात्प्रागनवगतेर्नेहेतिप्रत्ययस्य सम्बन्धप्रतीतिपूर्वकत्वं साधयितुं शक्यमित्यत उक्तं **समवायप्रत्यक्षमाचक्षाणा इति** । नन्विहेतिप्रत्ययस्य समवायप्रतीतिपूर्वकतासाधने वैशेषिकसूत्रविरोधः । तत्र 'इहेति यतः' इति स्वरूपसत्समवायसाध्यत्वस्योक्तत्वादित्यत उक्तं **यत इति च विषयसप्तमीमिति** । तथा च समवायस्य प्रत्यक्षविषयत्वप्रतिपादकत्वेन सूत्रस्य तज्जनकत्वप्रतिपादकत्वाभावान्न तद्विरोध इति भावः । नन्वेवं प्रत्यक्षेणैव समवायसिद्धावुक्तानुमानवैयर्थ्यमित्यत उक्तं **तत्स्थेम्न इति** । प्रत्यक्षेण तत्सिद्धावपि तत्साधकप्रत्यक्षप्रामाण्यस्थैर्याय अनुमानसंवादोऽप्यपेक्षित इति न तद्वैयर्थ्यमिति भावः ॥ **स्फुटैवेति** । इहप्रत्ययकारणीभूतसंबन्धप्रत्ययस्यापीहप्रत्ययत्वेन सम्बन्धप्रतीतिपूर्वकत्वावश्यम्भावात्तज्जनकीभूतसम्बन्धप्रतितेरनुपपत्तौ प्रकृतेहप्रत्यस्याप्यनुपपत्तिप्रसक्त्या ज्ञप्तिप्रतिबन्धकत्वादिति भावः ।

**ये त्विति** । नन्वत्र भाष्योक्तदिशा वस्त्वनवस्थाया एव वक्तुं शक्यत्वात्किमर्थमनवस्थाशब्दस्यापसिद्धान्तवाचित्वाश्रयणमिति चेत् । उच्यते । अवयवावयविनोर्विशेषणविशेष्यभावप्रतीत्युपपादकत्वेन स्वीकृतस्य समवायस्य स्वेन रूपेण सतः प्रतीत्युपपादकत्वाभावात्प्रतीतस्यैव तस्य तथात्वं वाच्यम् । तत्प्रतीतिरपि विशेषणविशेष्यभावेनेति तदुपपत्तये समवायान्तरमङ्गीकार्यमित्येवमेव तत्र तत्रापीति सम्बन्धप्रतीतिपूर्वकत्वपक्ष एवानवस्थाया भाष्येऽभिप्रेतत्वेन वस्त्वनवस्थायास्तत्राप्यसम्मतत्वात् । अपि

च नात्र वस्त्वनवस्था वक्तुं युक्ता । इह तन्तुपटयोः समवाय इतीहप्रत्यये सम्बन्धपूर्वकत्वसत्त्वेऽपि तत्प्रतीत्यनपेक्षत्वात् । ननु तत्कारणीभूतसंबन्धस्यापीहप्रत्ययविषयत्वेन सम्बन्धप्रतीतिपूर्वकत्वमत्र जेनीयमित्यनवस्थैवेति चेत् । सत्यमियं वस्तुगतिः । न तु समवाये इहप्रत्ययस्य सम्बन्धप्रतीतिसापेक्षत्वं, तदभावे च कथमनवस्था।अनवस्थितासिद्धकारणपरम्परायामेवानवस्थाया अङ्गीकारात् । तथा च वस्त्वनवस्थाऽनुपपत्त्या भाष्येऽपि प्रतीत्यपेक्षयैव तस्या अभिप्रेतत्वात्स्वरूपसत्त्यैव समवायस्येहप्रत्ययकारणत्वेऽनवस्थाया असम्भवेनापसिद्धान्तवाचित्वस्यावश्याश्रयणीयत्वात् । एवञ्चात्र सम्बन्धप्रतीतिपूर्वकत्ववादिमते यथास्थितानवस्थापर एव सूत्रस्थोऽनवस्थितिशब्दः । सत्तयैव सम्बन्धस्योपयोग इति मते तु प्रसिद्धानवस्थापरत्वासम्भवेऽपि तत्त्वं भावेनेति सूत्रात्समवायस्यैकत्वेन समवाये समवायान्तरस्य सिद्धान्तविरुद्धत्वादनवस्थितिशब्दोऽपसिद्धान्तपर इति द्वेधाऽनवस्थितिशब्दः सौत्रो व्याख्यातो द्रष्टव्यः ।

अस्मिन्पक्षेऽनवस्थितिशब्दस्य प्रसिद्धार्थपरित्यागो भवतीत्यरुचिं मनसि निधाय पक्षान्तरमाह **यद्वेति** ॥ **प्रतीतिमापाद्येति** । तन्तुपटादिसम्बन्धः प्रतीत्यैव इहप्रत्ययजनकः सम्बन्धत्वात्कुण्डबदरसम्बन्धवदिति कारणीभूतप्रतीतिमनुमायेत्यर्थः । समवायस्यानीन्द्रियत्वं त्वयुक्तमेवेति भावः ॥ **अनवस्थैवेति** ॥ अत्र पक्षे मूलक्षयस्य वक्तुं शक्यत्वादिति भावः । नन्वेवं 'धर्मस्य धर्मसन्तानादनवस्थाकरो भवेदि'ति वक्ष्यमाणधर्मानवस्थाऽपि दूषणं न स्यादविशेषादिति चेत् । अत्र वदन्ति । विषमोऽयमुपन्यासः । सन्गौरिति प्रतीतेर्गवि सत्त्वस्यैव सद्गोत्वमिति प्रतीत्या गोत्वेऽपि सत्त्वस्याङ्गीकार्यत्वात् । तथा सत्त्वं सदित्यपि प्रतीत्या सत्त्वेऽपि तत्सिद्धेरनवस्थासम्भवेऽपीहप्रत्ययस्य समवायजन्यत्वपक्षे जनकीभूतसमवाये इहप्रत्ययाभावेन तन्निर्वाहकतया समवायान्तरस्यानङ्गीकर्तव्यतया तत्रानवस्थाया असम्भवादिति । संयोगो, ज्ञातः सन् सम्बन्धनिमित्तव्यवहारहेतुः, सम्बन्धत्वात्स्वस्वामिभावसंबन्धवदित्यनुमानं मनसि निधाय दृष्टान्ते साध्यवैकल्यं परिहरति **स्वस्वामिभावादय इति** । अत्र नान्यथेत्यतःपरमतः संयोगोऽपि ज्ञात एव संबन्धनिमित्तव्यवहारहेतुरिति वाक्यशेषः । संबन्धनिमित्तव्यवहारहेतव इत्यत्र व्यवहारशब्दोऽभिज्ञापरः । ततश्च विशिष्टप्रत्ययहेतव इत्यर्थः । अत्र संबन्धस्य प्रतीत्यैव विशिष्टप्रत्ययकारणत्वसमर्थनं यत्रात्यन्तभिन्नयोरेव विशेषणविशेष्यभावप्रतीतिस्तत्रैव, न तु सर्वत्र । गुणगुण्यादीनां संबन्धाभावेन तदज्ञानेऽपि सविशेषाभेदमात्रेण विशिष्टप्रत्ययस्य सिद्धान्ते स्वीकारात् । अत एव नास्मन्मतेऽनवस्था । विशेषणविशेष्यसंबन्धस्य तदभिन्नत्वेन तद्विशिष्टप्रतीतौ संबन्धप्रतीत्यनपेक्षणादिति ज्ञातव्यम् । माऽस्तु साध्यवैकल्यं । साधनवैकल्यं तु स्यादेवेत्यभिप्रेत्य तेषामसम्बन्धत्वमेव कुतः इत्यतः संबन्धित्वविरोधिनोऽद्विष्ठत्वात्तत्सिद्धिरित्याह **न त इति** । तामेनासंबन्धत्वसिद्धिः

स्वस्वामिभवादीनां स्यात् । तथा सति तत एव संयोगस्याप्यद्विष्ठत्वेनास्यासंबन्धत्वप्रसक्त्याऽसिद्ध्यादिप्रङ्गादित्यभिप्रेत्य घटपटयोः संयोगो घटपटौ संयुक्ताविति द्विष्ठतया प्रतीयमानस्य कथं न द्विष्ठत्वमित्याशङ्कामपाकरोति **संयोगस्यापीति** ॥/ **वक्ष्यमाणत्वादिति** । 'संयोगश्च विभागश्च भेदश्चैव पृथक् पृथगि'त्यादिनेति शेषः । यत्तु "संयोगपक्षकोक्तानुमाने उपाधिमाशङ्कते **न त इति** । अनेनासंबद्धत्वमुपाधिरित्युक्तं भवति । नन्वसंबद्धत्वस्यैवासम्भवात्साध्याव्यापकत्वमित्यत आह **अद्विष्ठत्वादिति** । तथा चाद्विष्ठत्वेन स्वस्वामिभावादीनामसम्बद्धत्वस्य सिद्धत्वान्न तत्र साध्याव्यापकत्वमिति भावः ॥ **संयोगस्यापीति** । तथा च पक्षादव्यावृत्तत्वान्नोपाधित्वमि"त्युपाधिशङ्कानिरासपरतयैतद्ग्रन्थव्याख्यानम् । तन्न । तथा सति स्वोक्तानुमानेऽप्यसिद्धिप्रसङ्गात् ॥ **अनाश्रितत्वाभ्युपगमादिति** । न च 'आश्रितत्वं चान्यत्र नित्यद्रव्येभ्य' इति वचनादुक्तग्रन्थविरोधः । तत्र समवायस्याश्रितत्वाभिधानादिति वाच्यम् । यथा न विरोधस्तथा तद्ग्रन्थव्याख्यानावसर एव वक्ष्यमाणत्वात् ।

ननु साध्यस्य साधनव्यापकत्वेन साध्यबाधे साधनबाधस्याप्यवर्जनीयत्वात्कथमनवस्थायाः साधनाबाधकत्वमित्यतः सत्यमेवैतत् यत्साध्यबाधे साधनबाध इति । किन्तु यत्र साध्यसाधनयोर्व्याप्तिनिश्चयस्तत्रैव साध्यबाधे साधनबाधो न तु सर्वत्र । ततश्च प्रकृते तदनिश्चयान्न साध्यबाधेऽपि साधनबाध इत्याह **साध्यबाधेनेति** । ननु तन्तुपटयोः समवाय इति प्रतीतिरपि संबन्धपूर्विकैवेत्यङ्गीक्रियते न संबन्धप्रतीतिपूर्विका ततश्च नानवस्था । तस्य संबन्धस्यारोपितत्वाङ्गीकारेण वस्तुतः समवाये समवायान्तरानङ्गीकारेण तदनवकाशादित्याशयेन शङ्कते **तन्तुपटयोरिति** । ननु संबन्धप्रतीतिपूर्वकत्वानङ्गीकारात्कथमनवस्थेत्यत आह **आरोपितेति** । **एवं वदता** आरोपितसंबन्धपूर्वकत्वं वदता । **त्यक्तं स्यादिति** । आरोपितसंबन्धपूर्वकत्वस्य संबन्धारोपपूर्वकत्व एव पर्यवसन्नत्वादिति भावः ।

अबाधितेहप्रत्ययस्य वास्तवसंबन्धकार्यत्वान्नारोपितसंबन्धेन तन्तुपटयोः समवाय इति प्रतीतिनिर्वाह इति व्यभिचार एवेत्यभिप्रेत्यारोपितसंबन्धेन तन्निर्वाहे बाधकमाह **अपि चेति** । तन्तुपटादावबाधि(नारोपि,तेहप्रत्ययस्यारोपितसंबन्धमात्रेण निर्वाहेऽपि न समवायासिद्धिः । क्वचित्सत एव क्वचिदारोप्यत्वेन समवायस्य क्वाप्यसत्त्वे आरोपानुपपत्त्या तदन्यथाऽनुपपत्त्यैव क्वचिद्वास्तवत्वस्यावश्यकत्वादिति शङ्कते **क्वचिदिति** । यद्यपि जिज्ञासाधिकरणे आरोपितस्यान्यत्र सत्त्वे मानाभावादित्यादिनाऽऽरोपितस्य क्वचिदपि सत्त्वं नापेक्षितमिति पराभिमतान्यत्रसत्त्वग्राहकप्रमाणनिरासेन व्युत्पादितमित्युक्तनियमासिद्धिरित्येव वक्तुमुचितम् । तथाऽपि स्पष्टत्वात्तदनुक्त्वा परप्रक्रियामङ्गीकृत्यैव समवायारोपमुपपादयति **स्थाणुश्येनयोरिति** । ननु स्थाणुश्येनयोर्यः संयोगः संबन्धोऽस्ति, न तस्य तन्तुपटादावारोप इष्यते । यस्य च समवायस्य स इष्यते नासौ स्थाणुश्येनयोर-

स्तीति कथमन्यत्र सिद्धस्य संबन्धस्य तन्तुपटादावारोपः स्यादित्यतस्तर्हि समवाये समवायान्तरारोपस्याप्यनुपपत्तिः समवायान्तरस्य क्वाप्यसत्त्वात् । यदि च समवायान्तरस्य समवायान्तरत्वेन क्वचिदप्यसत्त्वेऽपि समवायत्वेन रूपेण सत्त्वात्तदारोप इति मन्यसे तर्हि समवायस्यापि समवायत्वरूपेण स्थाणुद्वयेनादावसत्त्वेऽपि संबन्धत्वेन रूपेण सत्त्वाद्युक्तस्तन्तुपटादावारोप इत्याह **अन्यथेत्यादिना** । नन्वन्यत्र सत एवारोपः । न चैवं समवायान्तरस्य समवाये आरोपो न स्यादिति वाच्यम् । अन्यत्र सतो भेदस्यैव तत्रारोपाभ्युपगमेन समवायान्तरारोपस्यानभ्युपगमात्तदभावापादनस्येष्टापादनत्वादिति शङ्कते **समवाय इति ॥ तावन्मात्रेणेति** । समवायो भेदवानिति समवाये भेदारोपमात्रेणेत्यर्थः । समवाये भेदारोपेण ह्यन्यः समवायोऽस्तीत्येव ज्ञातं न तु तस्मिन्समवायानुयोगिकतन्तुपटप्रतियोगिकसंबन्धत्वमिति कथं तावन्मात्रेणायमिह तन्तुपटयोः समवाय इतीहप्रत्ययः स्यादिति भावः ॥ **तदारोपेति** । संबन्धिसंबन्धभावारोपेत्यर्थः । **इहप्रत्ययेति** । इह तन्तुषु पट इतीहप्रत्ययेत्यर्थः ।

**स०** — नन्वत्र भिन्नत्वसाम्यस्याबाधितेहप्रत्ययत्वरूपहेतोः विपक्षे सत्त्वप्रतिपादकत्वेन अनैकान्त्योपपादकत्वेन सार्थकत्वेऽपि अनवस्थितेरित्यस्य तदुपपादकत्वस्याप्रतीतेः तस्य वैयर्थ्यमिति शङ्कते **नन्विति** । तथा चानवस्थापरिहाराय समवायपूर्वकत्वाभावस्य वाच्यत्वात् साध्याभावोपपादकत्वेन अनैकान्त्योपपदकत्वमिति परिहर्तुरभिप्रायः । **स्फुटैवेति** । संबन्धप्रतीतेरपि इहप्रत्ययत्वावश्यम्भावात् पुनरत्र संबन्धप्रतीतिपूर्वकत्वोक्तौ अनवस्थैवेत्यर्थः । ननु सूत्रस्य द्वेधा व्याख्यानान्नापसिद्धान्त इत्यत आह **यद्वेति । वक्ष्यमाणत्वादिति** । 'संयोगश्च विभागश्च भेदश्चैव पृथक्पृथक्' इत्यादिनेति शेषः । **तस्यानाश्रितत्वाभ्युपगमादिति** । ननु न 'चाश्रितत्वं चान्यत्र नित्यद्रव्येभ्य' इति वचनेन तस्यान्याश्रितत्वात्कथमनाश्रितत्वादित्युच्यते इति चेन्न । **संयोगादेः** स्वातिरिक्तसंबन्धेन आधारसन्निकृष्टत्ववत् समवायस्य स्वातिरिक्तसंबन्धेनाधारसन्निकृष्टत्वाभावात् अनाश्रितत्वोपपत्तेरिति भावः । न चोत्तरग्रन्थविरोधः । तस्य परिहरिष्यमाणत्वादिति ध्येयम् । ननु साध्यबाधे साधनबाधस्याप्यावश्यकत्वात् अनवस्थायाः साधनबाधकत्वमावश्यकमित्यत आह **साध्येति** । साध्यसाधनयोर्व्याप्तौ निश्चितायां साध्यबाधे साधनबाधस्यावश्यकत्वेऽपि प्रकृते साध्यसाधनबाधस्यानुपपन्नत्वादिति भावः । **क्वचिदिति** । य एव हि समवायः अवयवादिषु अवयव्यादीनां संबन्धः, स एव अवयव्यादिषु आत्मनः संबन्ध इति परेणोक्तेरिति भावः ।

**प०** — **सूत्रं कथमिति** । सूत्रांशः कथं व्याख्येय इत्यर्थः । साम्यादित्यस्य भिन्नत्वसाम्यात एवाबाधितेहप्रत्ययसाम्यादिति सौत्रपदस्य द्वेधार्थकथनेनानैकान्त्यस्य प्राप्तत्वादिति भावः । तदा

अनवस्थितेरित्युक्तानवस्थितिशब्दार्थं द्वेधा विवृणोति **इहेत्यादिना व्याख्यायत इत्यन्तेन** ॥ **विषयेति** । यतो यत्र यद्विषये इहेति प्रत्यक्षप्रत्ययः स संबन्धः कार्यकारणयोः समवाय इति व्याचक्षाणा इत्यर्थः । **तत्स्थेम्ने** तत्प्रत्यक्षत्वस्थैर्यायेत्यर्थः । स्थेमशब्दनिर्वाहश्च जगज्जन्मस्थेमेत्याद्यपद्यव्याख्यावसरे दर्शितः । **अनुमानम्** प्रागुक्तानुमानमित्यर्थः ॥ **तत्प्रतीतिपूर्वकत्वमिति** । संबन्धप्रतीतिजन्यत्वमित्यर्थः । स्वसंबन्धस्य पूर्वं प्रत्यक्षतः प्रतीतौ सिद्धायामेव प्राक्पक्षीकृतेहप्रत्ययानां तज्जन्यत्वं सिध्यतीति तत्स्थेम्ने इत्युक्तमिति भावः ॥ **स्फुटैवेति** । इह तन्तुपटयोः समवाय इति बुद्धौ अव्यभिचाराय तत्रापि संबन्धप्रतीतिपूर्वकत्वे तत्राप्येवमित्यनेकसंबन्धप्रतीत्यसिद्ध्या प्रकृतप्रत्यये तत्पूर्वकत्वे सिद्धे व्यभिचारस्तदवस्थ एवेति व्यभिचारोपपादकत्वेनैवानवस्थितिपदं(व्याख्येयं)इत्यर्थः । **अनवस्थितिशब्द इति** । अत्रादौ यदीत्यादितदेत्यन्तं वाक्यं योज्यम् । अपसिद्धान्तवाचित्वं क्लिष्टमित्यत आह **यद्वेति** ॥ **इहप्रत्ययेति** । आधाराधेयभावप्रत्ययेत्यर्थः ॥ **आपाद्येति** । इह तन्तुपटयोः समवाय इति प्रत्ययोपीहप्रत्ययत्वादिह कुण्डे बदराणीति प्रत्ययवत् संबन्धप्रतीतिपूर्वक इत्यापाद्येत्यर्थः । नेह बुद्धिरिति पदविभागः ॥ **संबन्धनिमित्तव्यवहारेति** । अस्येदं स्वं अस्यायं पुत्रः अस्येयं भार्या अस्यायं नप्तेत्यादिव्यवहारहेतव इत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'संयोगश्च विभागश्च भेदश्चैव पृथक्पृथगि'त्यत्रेति भावः । ननु व्यापकबाधे तद्व्याप्यहेतोः कथं न बाधः । अन्यथा व्यापकभावायोगादित्यत आह **साध्येति** । **शङ्कते तत्रेति** । ननु स्था(णो:)णुद्वयेननिरूपितसंबन्धसत्त्वेपि तन्तुपटनिरूपितसंबन्धो न सिद्ध इत्यत आह **अन्यथेति** । आरोपितरूपेणैव सत्त्वापेक्षायामित्यर्थः ॥ **तावन्मात्रेणेति** । समवायो भिन्न इत्यारोपमात्रेणेत्यर्थः ॥ **सम्बन्धिसम्बन्धभाव इति** । समवायिसमवायनिरूपितत्वमपीत्यर्थः ।

**या०** **सूत्रं कथम्** । सूत्रांशः किमर्थः । व्यभिचारोपपादनस्य पूर्वभागेनैव जातत्वादिति भावः ॥ **तदाऽनवस्थितिरिति** । तथा च विपक्षे समवाये साध्याभावोपपादनद्वारा व्यभिचारोपपादक एवायमप्यंश इति भावः । ननूत्पत्तिज्ञप्त्यप्रतिबन्धत्वात्कथमियमनवस्था दूषणमित्याशङ्कायां ज्ञप्तिप्रतिबन्धकतामुपपादयितुमाह इह **केचिदित्यादिना** । ननु समवायस्यातीन्द्रियत्वेनानुमानात्प्रागप्रतीतौ कथमिहेतिप्रत्ययस्य सम्बन्धप्रतीतिपूर्वकत्वं साधयितुं शक्यमित्यत उक्तं **समवायं प्रत्यक्षमाचक्षाणा इति** । नन्विहेतिप्रत्ययस्य समवायप्रतीतिपूर्वकतासाधने सूत्रविरोधः । तत्रेहेति यत इतीहप्रत्ययस्य स्वरूपसत्समवायसाध्यत्वस्योक्तत्वादित्यत उक्तं **यत इति च विषयसप्तमीमिति** । तथा च सूत्रं समवायस्य प्रत्यक्षविषयत्वमेव प्रतिपादयति न तज्जनकत्वमतो न विरोध इति भाव. । ननु समवायस्य प्रत्यक्षत्वे उक्तानुमानवैयर्थ्यमित्यत उक्तं **तत्स्थेम्न इति** । प्रत्यक्षप्रामाण्यस्थैर्याय तन्निश्चयायेति यावत् । अनुवाद-

संवादमाचक्षतेऽतो न वैयर्थ्यमित्यर्थः ॥ **स्फुटैवेति** । जनकीभूतसम्बन्धप्रतीतिपरम्पराया अपर्यवसाने पूर्वपूर्वसम्बन्धप्रतीत्यनुपपत्त्योत्तरोत्तरसम्बन्धप्रतीतेरनुपपत्तौ प्रकृतेहप्रत्ययस्याप्यनुपपत्तिरिति ज्ञप्तिप्रतिबन्धसम्भवादिति भावः ॥ **अपसिद्धान्तवाचीति** । यदि व्यभिचारपरिहाराय समवायेऽपि समवायान्तरमङ्गीक्रियते तदाऽनवस्थितिरपसिद्धान्त इति व्याख्यायत इत्यर्थः । तत्त्वंभावेनेतिसूत्रेण समवायैकत्वस्य तेनोक्तत्वादिति भावः । न चात्रापि व्यभिचारपरिहाराय तत्र तत्र समवायपरम्परास्वीकारेनवस्थैव कुतोऽनवस्थितिपदार्थतया न व्याख्यात इति वाच्यम् । समवायबाहुल्यप्राप्तावुत्पत्तिज्ञप्त्यतिबन्धकतया मूलक्षयाभावेन तस्या अत्र वक्तुमनुचितत्वादित्याशयात् । **प्रतीतिमापाद्येति** । तन्तुपटादिसम्बन्धः प्रतीत्यैवेह प्रत्ययजनकः संबन्धत्वात्कुण्डबदरसम्बन्धवदिति कारणीभूतप्रतीतिमनुमायेत्यर्थः । समवायातीन्द्रियत्वं तु त्याज्यमेवेति भावः ॥ **अनवस्थैवेति** । एवं सति मूलक्षयस्य वक्तुं शक्यत्वादिति भावः ॥ **सम्बन्धनिमित्तव्यवहारहेतव इति** । अत्र व्यवहारोऽभिज्ञारूपः । तथा च विशिष्टप्रत्ययहेतव इत्यर्थः । एतच्च संबन्धस्य प्रतीत्यैव विशिष्टप्रत्ययकारणत्वसमर्थनं यत्रात्यन्तभिन्नयोरेव विशेषणविशेष्यभावप्रतीतिस्तत्रैव, न तु सर्वत्र । गुणगुण्यादीनां संबन्धाभावेन तदज्ञानेऽपि सविशेषाभेदमात्रेण विशिष्टप्रत्ययस्य सिद्धान्ते सत्त्वात्, अत एव नास्मन्मतेऽनवस्था । विशेषणविशेष्यसंबन्धस्य तदभिन्नत्वेन तद्विशिष्टप्रतीतौ संबन्धप्रतीत्यनपेक्षणादिति ज्ञातव्यम् ॥ **वक्ष्यमाणत्वादिति** । 'संयोगश्च विभागश्च भेदश्चैव पृथक् पृथगि'त्यत्रेति शेषः ॥ **अनाश्रितत्वाभ्युपगमेति** । संयोगवत्स्वातिरिक्तसंबन्धेनाश्रितत्वाभावादिति भावः । ननु साध्यस्य व्यापकत्वात्तद्बाधे व्याप्यस्य साधनस्यापि बाध आवश्यक इत्यत आह **साध्यबाधनेनेति** । प्रकृते चाधुनाऽपि न व्याप्तिनिश्चय इति भावः । **शङ्कते तन्तुपटयोरिति** ॥ **स्थाणुश्येनयोरिति** । स्थाणुश्येनयोः संयोगः संबन्धतया गृहीतस्तन्तुपटादावारोप्यत इत्यर्थः । ननु तन्तुपटादौ प्रतीयमानः संबन्धः समवायतयैव प्रतीयते । न च स्थाणुश्येनसंबन्धस्तथा प्रतीतोऽतः कथमयमारोप इत्यत आह **अन्यथेति** । आरोप्यमाणः संबन्धो येन रूपेण प्रतीयते तेनैव रूपेण तस्यान्यत्र प्रसिद्ध्यपेक्षायामित्यर्थः ॥ **आरोपो न स्यादिति** । इह तन्तुपटयोस्समवाय इति इहप्रत्ययनियामकत्वेन उक्तः संबन्धारोपोऽपि न स्यादित्यर्थः । कुत इत्यत आह **समवायान्तरस्येति** ॥ **तावन्मात्रेणेति** । समवायो भेदवानित्यारोपमात्रेणेत्यर्थः । समवाये भेदारोपेण ह्यन्यः समवायोऽस्तीत्येव ज्ञातं, न तु तस्मिन्समवायानुयोगिकतन्तुपटप्रतियोगिकसंबन्धत्वमपि । अतस्तावन्मात्रेण कथमयमिहप्रत्यय इत्यर्थः ।

श्री०— **विषयसप्तमीमिति** । तसेः सार्वविभक्तिकत्वात्सप्तम्यर्थे तसिः । सा च विषयत्वार्थिका । तथा चेहेतिप्रत्ययो यद्विषय इत्युक्त्या समवायस्य प्रतीतिविषयत्वं लभ्यत इत्यर्थः ॥ **तत्प्र-**

**तीतीति** । अप्रतीतस्य कारणत्वेऽतिप्रसङ्गो वक्ष्यमाणो ज्ञेयः ॥ **यद्वेति** । विमतः समवायसम्बन्धः प्रतीतः सन्नेवेहप्रत्ययकारणं, सम्बन्धत्वात्, इह कुण्डे बदराणीति विशिष्टप्रत्ययनियामकसंयोगवदित्यनुमानं द्रष्टव्यम् । अत्र साध्यवैकल्यमाशङ्कते **कुण्डेति** । **तद्विपर्ययात्** संयोगभ्रमेण । ननु विमतः संयोगः, न प्रतीतः सन्निहप्रत्ययादिव्यवहारकारणं, सम्बन्धत्वात् स्वस्वामिभावादिसम्बन्धवदित्यनुमानेन संयोगस्याप्रतीतस्येहप्रत्ययकारणत्वसिद्धेः पुनरुक्तानुमाने साध्यवैकल्यमित्याशङ्क्यात्र दृष्टान्ते साध्यवैकल्यमित्याह **स्वस्वामीति** । तथा च प्रत्युत सम्बन्धत्वेन हेतुना स्वस्वामिभावसंबन्धदृष्टान्तेन संयोगस्यापि प्रतीतस्यैवेहप्रत्ययादिव्यवहारकारणत्वमनुमेयमित्याशयः । अत्र साधनवैकल्यमाशङ्कते **न त इति** । तर्हि स्वस्वामिभावादिदृष्टान्तेन सम्बन्धत्वेन हेतुना संयोगस्य प्रतीत्या इहप्रत्ययहेतुत्वाभावसाधकानुमाने स्वरूपासिद्धिरित्याह **संयोगस्यापीति** । तथा च न तत्र संबधत्वहेतुरस्तीति भावः । किञ्च स्वस्वामिभावादीनामद्विष्ठत्वेन सम्बन्धत्वाभावमङ्गीकृत्योक्तानुमाने साधनवैकल्यं यद्युच्येत, तर्हि समवायस्यापि सम्बन्धत्वं न स्यात् । 'तावाश्रित' इत्युक्तसम्बन्धलक्षणाभावात् । तथा चेह तन्तुषु पट इत्यादिविशिष्टप्रत्ययः सम्बन्धपूर्वक इति त्वदीयानुमानं बाधितविषयं स्यादित्याह **किञ्चैवमिति** ॥ **एवं तर्हीति** । एतावता प्रबन्धेन प्रतीतस्यैवेहप्रत्ययकारणतामुपपाद्यानवस्था यदि दीयत इत्यर्थः । **नानैकान्त्यमिति** । इह तन्तुपटयोः समवाय इतीहप्रत्यये ॥ **साध्येति** संबन्धपूर्वकत्वरूपसाध्येत्यर्थः ॥ **साधनेति** । इहप्रत्ययत्वरूपसाधनेत्यर्थः । तथा चाबाधितेहप्रत्ययत्वप्राप्त्याऽनैकान्त्यानुकूलैवेयमनवस्थेत्यर्थः ॥ **साध्यबाधनेनैव साधनेति** । तन्निरूपितव्याप्त्युपेतेहप्रत्ययत्वरूपसाधनेत्यर्थः । तथा चाबाधितेहप्रत्ययत्वाभावान्नानैकान्त्यमिति भावः । अनवस्थेत्यतःपूर्वमारोपितसम्बन्धपरम्परयाऽपीति शेषः । तदुपपादयति **आरोपितेति** ॥ **प्रतीतौ चेति** । तथा चारोपस्यापि प्रतीतित्वेन तत्परम्पराया अपि प्रतीतिपरम्परात्वादिति भावः ॥ **एवं वदतेति** । विशिष्टप्रत्ययस्य सम्बन्धारोपपूर्वकत्वमेव, संबन्धस्य न स्वरूपेण सत्त्वमित्येवं वदतेत्यर्थः । **इहप्रत्ययः** इह तन्तुपटयोः समवाय इतीहप्रत्ययः । **तन्तुपटादौ** इह तन्तुषु पट इत्यादौ । **क्वचित्सिद्धस्य** अन्यत्र विद्यमानस्य । **तदसिद्धिः** आरोपासिद्धिः । प्रधानाभावादिति शेषः । तथा च यदीह तन्तुषु पट इत्यत्र स्वरूपेण समवायः सिद्धः स्यात्तदैव तत्र सिद्धस्य समवायस्येह तन्तुपटयोः समवाय इत्यत्राप्यारोपः स्यादन्यथा नेति समवायसिद्धिर्नेति भावः । **तन्तुपटावपि तदारोपमात्रेणेति** । इह तन्तुषु पट इत्यात्रापि संबन्धिसम्बन्धभावारोपमात्रेणेत्यर्थः ।

**च०**— उत्पत्त्यप्रतिबन्धकत्वेपि ज्ञप्तिप्रतिबन्धकतया अनवस्थायाः दूषणत्वं घटयति **इह हि केचिदिति** ॥ **तत्स्थेम्ने** प्रत्यक्षप्रामाण्यावधृतौ । **वक्ष्यमाणत्वात्** । 'संयोगश्च विभागश्च

भेदश्चैव पृथक् पृथगि'त्यादिनाऽभिधास्यमानत्वात् । अनाश्रितत्वाभ्युपगमात् । संयोगस्येव स्वातिरिक्त-संसर्गावच्छिन्नकिञ्चिन्निरूपिताधेयता विशेषितत्वाभावात् । साध्यबाधेनैव व्यापकबाधेनैव । साधनबाध-नाभ्युपगमस्य व्याप्यबाधानाङ्गीकारस्य । शङ्कते संबन्धेति ।

सु० — ननु समवायेऽपीहेदमिति प्रत्ययः समवायाधीन एव । न चापसिद्धान्तोऽन-वस्था वा । तस्यैव समवायस्य स्वनिर्वाहकत्वात् । य एव हि समवायोऽवयवादिष्ववयव्यादीनां संबन्धः, स एवावयवावयव्यादिष्वात्मना संबन्ध इत्याशङ्कते स इति ।

अनु० — स स्वनिर्वाहकश्चेत्स्यात्

सः अवयवावयव्यादिसमवायः । एवं तर्हि किं समवायेन; द्रव्यस्यैव स्वनिर्वाहकत्वोपप-त्तेरिति परिहरति द्रव्यमेवेति ।

द्रव्यमेव तथा न किम् ॥

तर्हीति शेषः । तथा स्वनिर्वाहकम् ।

किं कस्मात् । अयमाशयः । यदीहेदमिति बुद्धिर्नावश्यं स्वातिरिक्तसंबन्धसापेक्षा । क्वचित्स्वनिर्वाहकत्वात् । तर्हि द्रव्यगुणादीनामिहेदमिति प्रत्ययोऽपि नातिरिक्तसंबन्धाधीनो-ऽङ्गीकार्यः । द्रव्यस्यैव स्वनिर्वाहकतयाऽपि तदुपपत्तेरिति । समवायः संबन्धात्मकत्वात् स्वनिर्वाहकः, न द्रव्यमिति चेन्न । तदसिद्धौ संबन्धत्वस्याप्यसिद्धेः । संयोगस्यापि स्वनिर्वाहकता-पत्तेश्च । तस्यानित्यत्वान्नेति चेन्न । समवायनित्यत्वस्यासिद्धेरिति ।

श्री० — यद्यपि 'न चापसिद्धान्तोऽनवस्थे'त्युभयाभावः प्रतिज्ञातः, तथाऽप्यत्र सम्बन्धप्रतीति-पूर्वकत्वानङ्गीकारेणानवस्थापरिहारस्य स्पष्टत्वात्तमनुपपाद्यैवापसिद्धान्ताभावमेव विवृणोति तस्यैवेति । 'स स्वनिर्वाहकश्चेत्स्यादि'ति पूर्ववाक्ये चेच्छब्दश्रवणादाह तर्हीति शेष इति ॥ क्वचिदिति । अवयवादिष्ववयव्यादीनां सम्बन्धभूतस्यैव समवायस्यावयव्यादिष्वात्मनः सम्बन्धत्वाभ्युपगमादिति भावः ॥ संयोगस्यापीति । अन्यथा तत्र व्यभिचारापातादित्यर्थः । न चेष्टापत्तिरिति वाच्यम् । तथा सति संयोगस्य द्रव्येण सह समवायाभावप्रसङ्गादिति भावः । ननु नित्यसम्बन्धत्वस्यैव हेतुत्वा-ङ्गीकारान्नानैकान्त्यमित्याशयेन शङ्कते तस्येति । एवं तर्हि माऽस्त्वनैकान्त्यं, मानाभावेन तन्नित्य-त्वासिद्धेर्विशेषणासिद्धिः स्यादेवेत्याशयेनाह समवायेति ।

स० — संयोगस्येति । तथा च संयोगस्य द्रव्येण समवायानभ्युपगमापातादिति भावः ।

प० .. नि-मित्यनुवादः कस्मादिति व्याख्या ॥ **तदसिद्धाविति** समवायासिद्धाविति वा स्वनिर्वाहकत्वासिद्धाविति वार्थः ।

या० — **तदसिद्धाविति** ॥ समवायस्यैवासिद्धावित्यर्थः ॥ **संयोगस्यापीति** । तथा च स्वनिर्वाहकत्वसाधकसम्बन्धत्वस्य व्यभिचार इति भावः ।

श्री० — आत्मनः समवायस्य । कुतो नावश्यं स्वातिरिक्तसंबन्धसापेक्षतेत्यत आह **क्वचिदिति** । इह तन्तुपटयोः समवाय इत्यत्रेत्यर्थः । **स्वनिर्वाहकः** स्वस्मिन्नाश्रयाश्रयिभावनिर्वाहक इत्यर्थः ।

**सु० — एवं द्रव्याद्गुणादीनामत्यन्तभेदेऽपि न तत्संबन्धः समवायलक्षणोऽपरः सिध्यति । समवायवद्द्रव्यस्यैव स्वनिर्वाहकत्वोपपत्तेः कल्पनालाघव(त्व)ाच्चेत्युक्तम् । इदानीं गुणादीनां द्रव्यादत्यन्तभेदाभावाच्च न समवायसिद्धिरित्याशयवांस्तदत्यन्तभेदे परोपन्यस्तान्हेतूनपाकर्तुं तावदुपोद्घातमाह** विशेष इति ।

अनु० — विशेषस्तद्गतत्वादिर्यद्यभिन्नेऽवसीयते ॥
गुणक्रियादिरूपस्य निषेधः केन हेतुना ॥

अभिन्ने समवाय इति शेषः । अवसीयते अङ्गीक्रियत इति यावत् । गुणक्रियादिरूपस्य विशेषस्येति शेषः । केन हेतुना **न केनापि** ।

**इदमुक्तं भवति । समवाये तावदवयवावयव्यादिगतत्वमङ्गीकृतम् । 'आश्रितत्वं चान्यत्र नित्यद्रव्येभ्य' इति वचनात् । न चानित्यद्रव्यगुणकर्मसामान्यविशेषाणामिव समवायस्य तद्गतत्वं नाम समवायलक्षणवृत्तिः संभवति । तस्याभिन्नत्वात् । अतस्तद्गतत्वं (नाम) समवायस्वरूपमेवेत्यङ्गीकर्तव्यम् । परतन्त्रतयोपलब्धिस्तद्गतत्वमिति चेन्न । तस्याः समवायधर्मत्वानुपपत्तेः । तद्विषयत्वात्तद्धर्मत्वमिति चेन्न । विषयत्वस्यापि समवायस्वरूप(त्व)ानतिरेकात् ।**

शे० — ननु '**विशेषस्तद्गतत्वादिरि**'त्युत्तरवाक्यमनर्थकम् । न च समवायनिष्ठतद्गतत्वादिधर्माणां तद्विशेषत्वप्रतिबन्धा द्रव्यनिष्ठगुणक्रियादीनां द्रव्यविशेषत्वप्रतिपादनार्थत्वान्न तदिति वाच्यम् । तत्प्रतिपादनस्य प्रकृतेऽसङ्गतत्वात् । न च गुणादीनां द्रव्यादत्यन्तभेदसाधकव्यपदेशभेदादिहेतूनामन्यथासिद्ध्यादिनाऽपाकरणायास्योपोद्घातरूपत्वान्न प्रकृतासङ्गतिरिति वाच्यम् । तदपाकरणस्यापि प्रयोजनाप्रतिभासात् । न च गुणादीनां द्रव्यादत्यन्तभेदाभावसिद्धिरेव तत्प्रयोजनमिति वाच्यम् । तत्सिद्धेरपि

प्रयोजनाप्रतिभासात् । न च समवायाभावसिद्धिरेव तत्प्रयोजनमिति वाच्यम् । तद्भेदेऽपि समवायाभावसिद्धेर्वर्णितत्वेन समवायाभावसिद्ध्यर्थं तद्भेदाभावस्यावर्णनीयत्वादित्याशङ्क्य भेदमङ्गीकृत्य समवायनिराकरणसिद्धावपि प्रकारान्तरेणापि तन्निराकरणार्थत्वाद्भेदनिराकरणस्य नानुपपत्तिरिति भावेन वृत्तवर्तिष्यमाणार्थप्रदर्शनपूर्वकं भेदसाधकहेत्वपाकरणपरतयोत्तरग्रन्थं सङ्गमयितुं तदुपोद्घातरूपतया तावद्गुणादेर्द्रव्यविशेषत्वप्रतिपादकमव्यवहितग्रन्थं सङ्गमयति एवमित्यादिना । तद्गतवादेः समवायाभिन्नस्यापि तद्विशेषत्वमित्यस्यार्थस्य मूलारूढतासिद्ध्यर्थमपेक्षितं पूरयति समवाय इति ।

ननु समावायस्यावयव्यादिगतत्वस्यैव परं प्रत्यसम्मतेः कथञ्चित्सम्मतावप्यनित्यद्रव्यगुणकर्मादिवद्तत्स्वरूपस्यैव तद्गतत्वस्य वक्तुं शक्यत्वेन तस्य समवायस्वरूपत्वस्यैवासिद्धेः स्वरूपत्वेऽपि वा तत्स्वरूपमात्रत्वस्यैवाभ्युपगमे बाधकाभावेन समवायविशेषत्वस्याप्यसिद्धत्वात्कथं तत्प्रतिबन्द्या गुणक्रियादेर्द्रव्यस्वरूपस्यैव तद्विशेषत्वसिद्धिरित्यत आह इदमुक्तं भवतीति । कथं पराङ्गीकारस्य परं प्रति सिद्धिरित्यतस्तद्वाक्यादेवेति भावेन विवक्षितार्थोपपादकं प्रशस्तदेवाचार्यवाक्यमुदाहरति आश्रितत्वं चान्यत्रेति । नित्यद्रव्याणि विहाय भावपदार्थानामिदं साधर्म्यमित्यर्थः । ननु संयोगवृत्त्या नित्यद्रव्याण्यप्याश्रितान्येवेति तद्व्यावृत्तिरयुक्तेति चेन्न । समवायेनाधेयताया एवेहाश्रितत्वरूपतया विवक्षितत्वेन संयोगेनाधेयानामपि तेषां समवायेनाधेयताविरहेण तद्व्यावृत्तेरुपपन्नत्वात् । न चैवं समवायस्यापि समवायेनाधेयताविरहेण नित्यद्रव्यतुल्यतयाऽनाश्रितत्वप्रसङ्गेन समवायस्य तद्गतत्वसाधकत्वाभावादस्य वाक्यस्य संमतितयोपन्यासः कथमिति वाच्यम् । समवायो हि स्वरूपसंबन्धेन वर्तत इति तावद्विवादम् । स्वरूपसंबन्धस्तु धर्म्यात्मक एवेति न तस्य समवायेनाधेयताविरहः । ततश्च समवायेनाधेयतासाधकत्वादुदाहृतग्रन्थस्य युक्त एवात्र तदुपन्यासः । इयांस्तु विशेषः । नित्यद्रव्याणि विहाय भावमात्रसाधारण्येपि समवायेनाधेयताऽनित्यद्रव्यगुणकर्मादौ स्वातिरिक्तेन समवायेनास्ति समवायस्य तु स्वेनैव समवायेनेति । अत एव च न तस्यानाश्रितत्वादिति पूर्वग्रन्थविरोधोऽपि । स्वभावत आधारसन्निकृष्टस्यापि समवायस्य गुणकर्मादीनामिव स्वातिरिक्तसन्निकर्षाभावाभिप्रायेण पूर्वग्रन्थस्य, स्वभावत आधारसन्निकृष्टत्वाद्वृत्तिमत्त्वमित्यभिप्रायेण चैतद्ग्रन्थस्य प्रवृत्तेरित्यवधेयम् ॥ समवायलक्षणेति । स्वातिरिक्तसमवायलक्षणेत्यर्थः ॥ तस्येति । वृत्तिप्रयोजकसंबन्धस्य समवायस्वरूपत्वेन तदतिरिक्तत्वाभावादित्यर्थः ॥ परतन्त्रेति । तदाश्रितत्वेनोपलब्धिरेव तद्गतत्वम् । सा चात्मगुणत्वान्न समवायस्वरूपमिति भावः ॥ तस्या इति । आत्मवृत्तित्वेन तद्धर्मत्वेऽप्युपलब्धेः समवायावृत्तित्वेन तद्धर्मत्वायोगादित्यर्थः । उपलब्धेः समवायेनात्ममात्रवृत्तित्वेऽपि विषयतासंबन्धेन समवायवृत्तित्वात्तद्धर्मत्वोपपत्तिरिति भावेन शङ्कते तद्विषयत्वादिति ।

स० — **आश्रितत्वं चान्यत्र नित्यद्रव्येभ्य इति** । नित्यद्रव्याणि विहाय इदं साधर्म्यमुक्तमित्यर्थः । ननु समवायेऽप्येतन्नास्ति । अन्यथा तस्यानाश्रितत्वाभ्युपगमादित्यादिपूर्वग्रन्थविरोधापातादिति चेन्न । समवायस्य समवायान्तराभावेऽपि स्वभावत आधारसन्निकृष्टत्वेन स्वातिरिक्तसंबन्धेनाधारसन्निकर्षाभावाभिप्रायेण तस्यानाश्रितत्वाभ्युपगमादिति पूर्वग्रन्थस्य च प्रवृत्तत्वेन अत्र च स्वभावत आधारसन्निकर्षसद्भावाभिप्रायेण वृत्तिमत्त्वाभिधानेनाविरोधादिति भावः ।

प० — इतिवचनादित्युक्ततार्किकवचनस्थान्यत्रशब्दार्थं विवृण्वन्नेवाश्रितत्वस्वरूपं व्यनक्ति **न चानित्यद्रव्येत्यादिना ॥ समवायलक्षणवृत्तिरिति ।** समवायलक्षणसंबन्धेनाधेयतया वर्तमानमित्यर्थः । एतदभिप्रायेण प्राक् तस्यानाश्रितत्वाभ्युपगमादित्युक्तमिति भावः ।

या० — ननु समवायस्यानाश्रितत्वाभ्युपगमादिति पूर्वमुक्तत्वात्कथमवयव्यादिगतत्वमङ्गीकृतमित्युच्यत इत्यत आह **आश्रितत्वं चेति** । समवायेनाधेयत्वमाश्रितत्वमिह विवक्षितम् । नित्यद्रव्याणि विहाय भावपदार्थानामिदं साधर्म्यमुक्तमिति तद्वचनार्थः । ननु समवाये समवायेनाधेयता नास्तीत्यसङ्गतमेतदिति चेन्न । समवाये हि स्वरूपतासम्बधेनाधेयत्वं वाच्यं, सम्बन्धभूतं स्वरूपं च समवाय एव, तस्य स्वनिर्वाहकत्वात् । । एवं च समवायेऽपि समवायेनाधेयता प्राप्तैव । इयांस्तु विशेषः । अनित्यद्रव्यगुणकर्मादौ स्वातिरिक्तेन समवायेनाधेयता, समवाये तु स्वाभिन्नेनैव सा, समवायस्यानाश्रितत्वाभ्युपगमस्तु स्वातिरिक्तसंबन्धेनाधेयत्वाभावाभिप्राय इति न कोऽपि विरोध इत्याशयात् ॥ **समवायलक्षणेति** । स्वातिरिक्तसमवायलक्षणेत्यर्थः । **अभिन्नत्वात्** एकत्वात् ॥ **परतन्त्रेति** । तदाश्रितत्वेनोपलब्धिरेव तद्गतत्वम् । उपलब्धिश्चात्मगुणत्वान्न समवायस्वरूपमिति भावः । अत एवाह **तस्या इति** ॥

श्री० — **समवायलक्षणवृत्तिरिति** । समवायसंबन्ध इत्यर्थः ॥ **तस्याभिन्नत्वादिति** । समवायस्यैकत्वादित्यर्थः ॥ **तस्या इति** । आत्मधर्मभूताया उपलब्धेरित्यर्थः ।

**सु० — एवमस्तित्वाभिधेयत्वज्ञेयत्वसंबन्धत्वादयोऽपि समवायेऽभ्युपगताः, न समवायस्वरूपाद्भिद्यन्ते । भेदे हि तेषां समवायेन संबन्धो वक्तव्यः । अन्यथा कथमेते तत्र स्युः । न च संबन्धो युक्तः; संयोगस्य गुणत्वेन द्रव्यमात्रवृत्तेः, समवायस्य चाभिन्नत्वात् । तत्र पृच्छामः । समवायस्य तद्गतत्वादिधर्माणां चाभेदे कथमपर्यायशब्दवाच्यत्वं, धर्मधर्मिभावः, षष्ठीप्रयोगो, ज्ञातत्वाज्ञातत्वम्, एकत्वानेकत्वमित्यादि युज्यत इति ॥ न ह्य(चा)त्रोपचारादि-**

कल्पना युक्ता । मुख्यप्रयोगादेरदर्शनात् । न तद्गतत्वादि समवायतन्मात्रं, देशः स्यात् । किन्तु समवायाभिन्नमपि तद्विशेषात्मकम् अतो व्यपदेशभेदादि युज्यते । विशेषस्य भेदप्रतिनिधित्वादित्येवागतिकतया तत्र समाधिरभिधानीयः । तथा च यद्यभिन्नेऽपि समवाये तद्गतत्वादिविशेषोऽङ्गीक्रियते तदा गुणक्रियादिकमपि द्रव्यस्वरूपमेव सद्विशेषात्मकं भवतु न तु तन्मात्रम् । समवायधर्मास्तद्विशेषाः, गुणादयस्तु न द्रव्यविशेषा इत्यत्र विशेषहेत्वभावात् इति ।

**शे०** — तद्गतत्वस्य समवाये वृत्तिं तत्स्वरूपानतिरिक्तत्वं चोपपाद्य 'तद्गतत्वादिरि'ति मूले आदिपदसंगृहीतधर्माणां तदुभयमुपपादयितुमाह **एवमित्यादिना** ॥ **अभ्युपगता इति** । अन्यथाऽस्तित्वज्ञेयत्वादेः अकेवलान्वयित्वप्रसक्तेः । संबन्धत्वाभावे च समवायस्य च तद्विशेषत्वानुपपत्तेरिति भावः । अस्तु अभिधेयत्वादीनां समवाये वृत्तिस्तत्स्वरूपाद्भेदाभावस्तु कुत इत्यत आह **भेदे हीति** ॥ **अन्यथेति** । संबन्धाभाव इत्यर्थः । अस्तु तर्हि तेषां धर्माणां समवायेन संबन्धोऽपीत्यत आह **न चेति** । **अभिन्नत्वात्** एकत्वात् । अस्तु तद्गतत्वादीनां समवायस्वरूपत्वं, तावताऽपि कुतस्तद्विशेषत्वमित्यत आह **तत्रेति** । ननु समवायस्तद्गत इत्यादिव्यवहारस्यौपचारिकतया भ्रान्तिमूलकतया वोपपत्तेर्नोक्तव्यवहारः तद्गतत्वादीनां समवायमात्रत्वे बाधक इत्याशङ्क्याह **न हीति** । आदिपदेन भ्रान्त्यादिमूलत्वपरिग्रहः । मुख्यप्रयोगादेरित्यत्रादिपदेन बाधकप्रमाणसंग्रहः । देवदत्तः सिंहो नेत्यपि व्यवहारदर्शनेन सदा देवदत्तादौ सिंहादिव्यवहाराभावात्सिंहो देवदत्त इत्यादिव्यवहारस्यौपचारिकत्वादेः कल्पनसंभवेऽपि समवायस्तद्गतो नेति कदाऽप्यव्यवहारेण समवायस्तद्गत इत्येव च सर्वदा व्यवहारेणोक्तव्यवहारस्यौपचारिकत्वादिकल्पनमनुचितमिति भावः । किं तावताऽपि सिद्धमित्यत आह **नेति** । अत्र तस्मादिति शेषः ॥ **समवायतन्मात्रमिति** । समवायेन निर्विशेषाभिन्नमित्यर्थः । **अनुपपत्तिः** व्यवहारानुपपत्तिः ॥ **तद्विशेषात्मकमिति** । तेन सह सविशेषाभिन्नमित्यर्थः । भेदप्रतिनिधिभूतविशेषाश्रयीभूतधर्मरूपमिति यावत् ॥ **अत इति** । तद्गतत्वादेः समवायेन सविशेषाभेदस्य सद्भावादित्यर्थः । ननु भेदकार्यस्य व्यपदेशभेदादेः कथं तदभावे विशेषमात्रेणोपपत्तिरित्यतो भेदप्रतिनिधित्वेन भेदकार्यकारित्वाद्विशेषस्य युक्तस्तेन व्यपदेशभेदादिनिर्वाह इत्याह **विशेषस्येति** ॥ **द्रव्यस्वरूपमेवेति** । द्रव्येणात्यन्ताभिन्नमित्यर्थः । एतच्च यावद्द्रव्यभाविगुणक्रियादिकमभिप्रेत्योक्तम् । अयावद्द्रव्यभाविगुणादेर्द्रव्येण भेदाभेदयोर्वक्ष्यमाणत्वेनात्यन्ताभेदाभावादित्यवधेयम् । वस्तुतो न त्वत्यन्ताभिन्नमित्यर्थः । ततश्च न कश्चित्क्षुद्रोपद्रवः ॥ **विशेषात्मकमिति** । भेदप्रतिनिधिरूपविशेषाश्रयी-

भूतधर्मरूपमेवेत्यर्थः । धर्मधर्मिपदार्थातिरिक्ततृतीयपदार्थस्यैव भेदप्रतिनिधिविशेषत्वस्योत्तरत्र वक्ष्यमाणतया गुणक्रियादिधर्ममात्रस्य भेदकार्यकारित्वरूपविशेषताया बाधितत्वादित्यवधेयम् । केचित्तु । एतद्ग्रन्थानुरोधाद्गुणक्रियादिधर्ममात्रस्यैव भेदकार्यकारिविशेषत्वं, न तु ततोऽतिरिक्तो विशेषोऽस्तीत्याहुः ॥ **समवायधर्मा इति** । तद्गतत्वादय इत्यर्थः । **तद्विशेषाः** भेदप्रतिनिधिविशेषाश्रयीभूतधर्मरूपा इत्यर्थः । **द्रव्यविशेषाः** विशेषाश्रयीभूतद्रव्यधर्मरूपाः ।

**स० — समवायस्येति** । समवायस्यैकत्वेन समवाये आश्रितत्वादेः समवायानुपपत्तिरिति भावः । **उपचारादिकल्पनेति** । आदिपदेन भ्रान्तिमूलत्वपरिग्रहः । **मुख्यप्रयोगादेरिति** । आदिपदेन बाधकप्रत्ययाभावपरिग्रहः ।

**प० —** तत्र पृच्छाम इत्यत्र तच्छब्दार्थं व्यनक्ति **समवायस्य तद्गतत्वादिधर्माणां चाभेद इति** । पृच्छाम इत्येतद्व्यनक्ति **कथमित्यादिना** । मार्गाश्चलन्ति, मञ्चाः क्रोशन्तीत्यादाविव समवायस्य तद्गतत्वमिति षष्ठीप्रयोगादिरुपचारेणास्त्वित्यत आह **न ह्यत्रेति** । आदिपदेन भ्रान्तिमूलत्वग्रहः ॥ **मुख्यप्रयोगादेरिति** । आदिपदेन बाधग्रहः । मार्गे पुरुषाश्चलन्तीति, मञ्चगताः पुरुषाः क्रोशन्तीति कदाचिन्मुख्यप्रयोगस्य, मार्गे चलनं नास्ति मञ्चेषु क्रोशनं नास्तीति च बाधस्य च भावात्तत्रोपचारकल्पनेपीह समवाय एव तद्गतत्वमित्यभेदप्रत्ययरूपादिमुख्यप्रयोगबाधयोरदर्शनान्नोपचारकल्पनेत्यर्थः । कथं तर्हि तत्र निर्वाह इत्यत आह **नेति** । विशेषहेत्वभावादितीतिशब्दस्येदमुक्तं भवतीति पूर्वेणान्वयः ।

**या० — अत्र** अपर्यायशब्दवाच्यत्वादावित्यर्थः । **उपचारादिकल्पनेति** । आदिपदेन भ्रान्तिमूलकत्वसंग्रहः ॥ **मुख्यप्रयोगादेरिति** । अत्रादिपदेन बाधकप्रमासंग्रहः । देवदत्तः सिंहो नेतिवत्समवायस्तद्गतत्वादिमान्नेत्यादिरूपो यदि मुख्यप्रयोगो बाधकप्रमा वा कदाचिद्दृश्येत तदाऽत्रोपचारादिकल्पना युक्ता स्यात्र ह्येवं कदाचिद्दृश्यते इत्यर्थः ॥ **समवायतन्मात्रमिति** । यथा रूपं न गुणमात्रं अपि तु **गुणविशेषः** । एवं तद्गतत्वादिकं न समवायमात्रमपि तु तद्विशेष इति सामान्यविशेषभावमेवाभिप्रेत्येत्थमुक्तं, न तु धर्माणामेव भेदकार्यनिर्वाहकविशेषरूपत्वमात्रमभिप्रेतम् । सामान्यविशेषरूपयोर्धर्मधर्मिणोरभेदे भेदकार्यनिर्वाहकस्य वस्तुस्वभावविशेषरूपस्य तस्य तृतीयस्यैवात्रान्यत्र च बहुशो व्यवहारादिति ज्ञातव्यम् । **विशेषस्येति** । सामान्यविशेषयोरभेदेऽपि भेदकार्यनिर्वाहकसमवायस्य स्वभावविशेषस्वेत्यर्थः । एवं गुणक्रियादिकमपि द्रव्यस्य स्वरूपमेव सद्विशेषात्मकं भवत्वित्यादावपि सामान्यविशेषभाव एवाभिप्रेतो न गुणादीनामेव भेदप्रतिनिधिविशेषरूपत्वं, अग्रे तस्य तृतीयस्यैव वक्ष्यमाणत्वादित्यवगन्तव्यम् ॥ **आहेति** । परोपन्यस्तहेतूनां अप्रयोजकतामाहेत्यर्थः ।

**श्री०— अन्यथेति** । तद्गतत्वादेः समवायस्वरूपत्वेऽङ्गीकृते सतीत्यर्थः ॥ **समवायस्य चेति** । तथा च तद्गतत्वादिधर्मैर्बहुभिरेकस्य समवायस्य च संबन्धरूपः समवाय एक एव न युक्त इत्यर्थः ॥ **तत्र पृच्छाम इति** । तद्गतत्वादेः समवायस्वरूपत्वे सिद्धे सतीत्यर्थः ॥ **कल्पनेति** । अपर्यायशब्दवाच्यतादेः । **मुख्येति** । यथा सदा तीरादौ गङ्गादिशब्दव्यवहाराभावेऽपि कदाचिन्मुख्यभूतप्रवाहे गङ्गादिशब्दव्यवहारोऽस्ति, तद्वत्प्रकृतेऽपर्यायव्यवहारादेरौपचारिकत्वं कल्पयता कदाचित्पर्यायशब्दवाच्यता समवायतद्धर्माणां वाच्या । न चासावस्तीत्यर्थः ॥ **नेत्यारभ्य समाध्यभिधानप्रकारः** । **अनुपपत्तिः** अपर्यायशब्दव्यवहारादेः । **विशेषात्मकं** सविशेषाभिन्नम् । इदानीं मूलं योजयति **तथा चेति** । **तन्मात्रं** निर्विशेषाभिन्नम् । **तद्विशेषाः** समवायेन सविशेषाभिन्नाः । **न द्रव्यविशेषाः** द्रव्येण न सविशेषाभिन्ना इत्यर्थः ।

**सु०— किमतो यद्येवमित्यत आह द्रव्यमेवेति** ।

**अनु० —** द्रव्यमेव ततोऽनन्तविशेषात्मतया सदा ॥
नानाव्यवहृतेर्हेतुः

**समवायधर्मवद्गुणादीनां द्रव्यविशेषत्वादित्यर्थः । अनन्तशब्दो यत्र यावन्तो व्यवहाराः तावतामुपलक्षकः ।** नानाव्यवहृतेः **व्यपदेशभेदादेरित्यर्थः । एतदुक्तं भवति । गुणगुण्यादेः अत्यन्तभेदे सिद्धे हि तत्संबन्धः समवायः सिध्यति । गुणगुण्याद्यत्यन्तभेदस्तु न प्रामाणिकः ।** तथा हि न तावत्तत्र प्रत्यक्षं प्रमाणं, गवाश्वादिवदनुपलम्भात् । अतो गुणगुणिनावत्यन्तभिन्नावपर्यायशब्दवाच्यत्वात् । घटपटवदित्याद्यनुमानमेव वक्तव्यम् । तच्चानैकान्तिकम् । समवायस्य तद्धर्माणां (च) भेदाभावेऽप्यपर्यायशब्दवाच्यत्वादन्यथासिद्धं च । यथा समवाये तद्गतत्वादिधर्माणां भेदाभावेऽपि विशेषापरनामकात्स्वभावविशेषादेवापर्यायशब्दवाच्यत्वादिकमुपपादनीयम् । गत्यन्तराभावात् । तथा गुणगुण्यादीनाम(त्यन्ता)भेदेऽपि गुणादीनां द्रव्यविशेषत्वे- (न द्र)तद्द्रव्यमेव विशेषशक्त्यैवापर्यायशब्दवाच्यत्वादिव्यवहारहेतुर्भविष्यति । तथा च विपक्षे बाधकाभावादप्रयोजकत्वं हेतूनामिति ।

**शे०— द्रव्यविशेषत्वात्** । विशेषाश्रयीभूतद्रव्यधर्मरूपत्वादित्यर्थः । ईश्वरस्यद्रव्यविशेषस्यानन्तधर्मवत्तयाऽनन्तविशेषात्मकत्वसंभवेऽपि तदन्यत्र तदसंभवादाह **अनन्तशब्द इति** । ननु प्रमाणमात्राभावस्यैव वस्त्वभावव्यवस्थापकत्वेन तद्विशेषाभावस्य तदव्यवस्थापकत्वाद्गुणादेर्द्रव्येणात्य-

न्तभेदाभावसाधकतयाऽपि प्रमाणमात्राभाव एव वक्तव्यस्तत्कथं भेदसाधकपरोपन्यस्तानुमानमात्रनिरासेन कृतार्थता। किञ्चानेनानुमानस्य दूषणमुक्तं भवतीत्यनेनाऽत्यन्तभेदाभावसाधकप्रमाणाभावं प्रत्यक्षदूषणं च बहिरेव प्रदर्श्य विवक्षितमनुमानदूषणं प्रदर्शयितुं तात्पर्यमाह **एतदुक्तं भवतीति**। इत्याद्यनुमानमित्यत्रादिपदेन गुणगुणिनावत्यन्तभिन्नौ धर्मधर्मिभावेन प्रतीयमानत्वादेकत्वानेकत्वरूपविरुद्धधर्माधिकरणत्वादित्यादेः संग्रहः। अनैकान्तिकत्वमेव विशदयति **समवायस्येति** ॥ **अन्यथासिद्धत्वं चेति**। यद्यप्यन्यथासिद्धेर्व्याप्यत्वासिद्धतया दूषणत्वेन पृथग्दूषणत्वाभावाद्व्यभिचारोद्भावनानन्तरं न तदुद्भावनमुचितम्। तथाऽपि पृथग्दोषत्वमभ्युपेत्यायं ग्रन्थः प्रवृत्त इत्यवधेयम्। केचित्तु। निमित्तान्तराभावे सत्यपर्यायशब्दवाच्यत्वस्यैव हेतुत्वाश्रयणात्समवाये च विशेषरूपनिमित्तान्तरसद्भावान्नानैकान्त्यमित्यत आह **अन्यथासिद्धत्वं** चेत्यवतारमाहुः। तन्न। तथा सति समवायवद्गुणगुण्यादिस्थलेऽपि विशेषरूपनिमित्तान्तरसद्भावेन हेतुविशेषणासिद्धिप्रसक्त्या सविशेषणहेत्वङ्गीकारेण व्यभिचारपरिहारचोदनायाः कर्तुमशक्यत्वात्। शक्यत्वे वोत्तरग्रन्थे सविशेषणहेतोरेवान्यथासिद्धेरुपवर्णनीयतया निर्विशेषहेतोस्तद्वर्णनासाङ्गत्यप्रसङ्गाच्चेति। अन्यथासिद्धिमेव प्रकटयति **यथेत्यादिना** ॥ **विपक्षे बाधकाभावादिति**। अनुकूलतर्कवत एव हेतोः प्रयोजकत्वेन तद्धीनस्याप्रयोजकत्वमित्यर्थः।

स०— **अन्यथासिद्धं चेति**। व्यभिचारकथनानन्तरमपि उपाधिकथनात् तद्वत् व्यभिचारकथनानन्तरमपि अन्यथासिद्ध्युद्भावनं युक्तम्।

प०— ननु गुणगुण्यादेर्भेदस्य प्रमितत्वेन समवायेन विना विशिष्टप्रत्ययानिर्वाहात्कथमेवमुक्तिः, विशेषस्तद्गतत्वादिरित्यादेः कथं प्रकृतोपयोगः, येनोपोद्धतत्वं तस्येत्यत आह **एतदुक्तमिति** ॥ **इत्यादीति**। आदिपदेन धर्मधर्मिभावापन्नत्वज्ञाताज्ञातभावापन्नत्वादिहेतुग्रहः। अन्यथासिद्धञ्चेत्युक्तं व्यनक्ति **यथेत्यादि** ॥ **हेतूनामितीति**। गुणगुण्यादिभेदसाधकप्रागुक्तहेतूनामित्यर्थः। इतिशब्दस्यैतदुक्तमिति पूर्वेणान्वयः।

सु०— यद्वा **विशेषस्तद्गतत्वादिरित्यनेनैव गुणगुण्याद्यत्यन्तभेदसाधकानां हेतूनामनैकान्त्याप्रयोजकत्वे वर्णिते। यदि तद्गतत्वादिधर्माभिन्ने समवाये तद्गतत्वादिविशेषोऽभ्युपेयते। विशेषेणैव च व्यवहारा निर्वहिष्यन्ते। तदा व्यपदेशभेदादिहेतूनां व्यभिचारान्यथासिद्धिभ्यां आभासत्वात्केन हेतुना द्रव्यस्य गुणक्रियादिरूपस्य गुणक्रियादिस्वरूपत्वस्य निषेधः (करिष्यते) क्रियते। गुणगुण्याद्यत्यन्तभेदः केन हेतुना साधयिष्यत इति यावत्। अन्यथासिद्धिमेव**

प्रकटयन्नुपसंहरति द्रव्यमेवेति । समवायवदिति वक्ष्यमाणमत्रापि संबध्यते । यथा समवायस्य तद्गतत्वादिविशेषात्मतया व्यपदेशभेदादिव्यवहारहेतुत्वम् । तथा द्रव्यमेव घटादिकं गुणक्रियाद्यनन्तविशेषात्मतया नानाव्यवहृतेर्हेतुर्भवतीति ।

नन्वौपचारिकत्वं वा भ्रान्तिमूलत्वं वा व्यवहाराणामङ्गीकृत्य हेतूनां दूषणं शक्यम् । तत्किं विशेषाङ्गीकारेण । नैवं शक्यम् । औपचारिकत्वादौ हि कदाचिन्मुख्यो व्यवहारः स्यात् । न हि तीरादौ सदा गङ्गादिव्यवहारोऽस्ति । न चैवं प्रकृते । सदैवापर्यायशब्दवाच्यत्वादेः सत्त्वात् । यदाप्यभेदबोधाय रूपमेव घट इति वा विज्ञानं ब्रह्मेति वा व्यवह्रियते तदापि न पर्यायतामुपेत्य, तथाऽननुभवात् । अतो वक्तव्यमेवात्र निमित्तम् । तदिदमुक्तं सदेति ।

शे० — अत्र पक्षे विशेषस्तद्गतत्वादिरित्याद्यवाक्यस्योपोद्घाततत्वकल्पना भवतीत्यपरितोषादाह यद्वेति । तद्वर्णनप्रकारमेव दर्शयति यदीति । विशेषो विशेषाश्रयीभूतधर्मरूपः ॥ विशेषेणैवेति । धर्मधर्मिव्यतिरिक्तस्वभावविशेषेणैवेत्यर्थः । तर्हि पूर्ववाक्येनैव परोपन्यस्तहेतूनामनैकान्त्यान्यथासिद्धिभ्यामाभासत्वसिद्धेः 'द्रव्यमेवे'त्युत्तरवाक्यानर्थक्यमित्याशङ्क्य पूर्वो न्यथासिद्धिप्रकारप्रदर्शनपूर्वकमुपसंहारार्थतया तत्कथन्ताशङ्कापरिहारार्थत्वान्न तदिति भावेन तत्परतयोत्तरभाष्यं सङ्गमयति अन्यथेति । अन्यथासिद्धिप्रकारप्रपञ्चकत्वस्य मूलारूढतासिद्ध्यर्थमपेक्षितं पूरयति समवायवदितीति । वक्ष्यमाणम् उत्तरवाक्य इति शेषः ।

मूले सदापदवैयर्थ्यमाशङ्क्य तन्निवर्तनीयां शङ्कामुत्थापयति नन्विति । औपचारिकत्वादावित्यादिपदेन भ्रान्तिमूलत्वपरिग्रहः ॥ मुख्यो व्यवहार इति । । घटो न रूपीत्येवंरूप इत्यर्थः ॥ न हीति । तीरं न गङ्गेत्यपि व्यवहारदर्शनादिति भावः ।

प० — प्रागुक्तोपोद्घातत्वेन व्याख्यातमधुना प्रकारान्तरेण व्याचष्टे यद्वेत्यादिना भविष्यतीत्यन्तेन ॥ निर्वहिष्यन्त इति । वहतेरनिट्त्वेपि स्पष्टार्थमेवमुक्तम् । निर्वक्ष्यत इत्युक्तौ निर्वचनभ्रान्त्यापत्तेः । मूलोक्ते परकीयहेतुदूषणेऽनौचित्याशयेनाशङ्क्य निराह नन्वित्यादिना । उपचारकल्पने मुख्यव्यवहारः कुत इत्यतस्तद्दर्शनादित्याह न हीति ॥ व्यवहारोस्तीति । किन्तु गङ्गातीरे ग्रामः गङ्गाकूले वृक्ष इत्यादिमुख्योप्यस्तीति भाव ॥ न चैवं प्रकृत इति । गुणगुण्यादौ घटादिद्रव्यं गुणा इति, तन्तवः पट इति, मूर्तं क्रियेत्यादिर्वा द्रव्यमस्तीति वाच्ये कदाचिद्गुणोस्तीत्यादिपर्यायतया वा मुख्यो व्यवहारश्चेत्कदाचित्स्यात्तदा परं भेदव्यपदेशादिरुपचरितो वा भ्रान्तिमूलो वेति कल्प्यम् । न चैवमस्तीत्यर्थः ॥ अत्र निमित्तमिति । सदा भेदेन व्यवहारे हेतुर्वाच्य इत्यर्थः ।

या० **विशेषेणैव चेति** । तृतीयेन समवायस्वभावविशेषेणेत्यर्थ ॥ **व्यवहाराणां** गुणगुण्यादावपर्यायशब्दव्यवहाराणां ॥ **दूषणम्** औपचारिकत्वादित्यादिना अन्यथ सिद्धत्वात् नात्यन्तभेदसाधकत्वरूपमित्यर्थः । **औपचारिकत्वादौ** गङ्गायां घोष इत्यादिस्थले । **मुख्यो व्यवहार इति** । तीरं गङ्गा नेत्यादिमुख्यव्यवहारवदित्यर्थः ॥

श्री० **प्रकृत इति** । कदाचिद्वा मुख्य· पर्यायव्यहार इत्यर्थः । अस्त कदाचिन्मुख्यो व्यवहार इत्यौपचारिकत्वं कल्प्यमिति युक्तमित्याशङ्क्य निषेधति **यदाऽपीति** ॥ **अत इति** । तच्च विशेष एवेति शेष: । सदा नानाव्यवहृतेःपर्यायव्यवहारस्य हेतुर्न कदापि पर्यायव्यवहारस्येत्यर्थः इत्याह **मदेति** ।

**सु० नन्वनन्तविशेषात्मकमेकमेव द्रव्यमिति व्याहतमिति चेत् । किं माता वन्ध्येतिवत्साक्षाद्विरोधः, किंवा कृतकं नित्यमितिवद्व्याप्त्या । नाद्यः यतोऽनन्तत्वं संख्याविशेषः, एकत्वं चाभेदः । न द्वितीयः । यत्रानेकत्वं तत्रावश्यं भेद इति व्याप्तौ हि म स्यात् । न चैवम । भेदप्रतिनिधिना विशेषेणैव अनेकत्वसंख्यानिर्वाहादित्याह** अनन्तत्वमिति ।

**अनु० —** अनन्तत्वं विशेषतः ॥

**ईश्वराख्यद्रव्यविशेषाणामनन्तत्वमन्यत्रानेकत्वमिति द्रष्टव्यम् । अत्रापि समवायवदिति संबध्यते । एक एव हि समवायोऽनेकधर्मात्मकोऽङ्गीक्रियते ।**

शे० — ननु 'अनन्तत्वं विशेषतः' इत्युत्तरवाक्यमनर्थकम् । न चानन्तत्वस्य विशेषाधीनत्वप्रतिपादनार्थमेतदिति वाच्यम । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न चानन्तत्वस्य भेदाधीनत्वाभावप्रतिपादनार्थत्वान्न तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात । न च यत्रानन्तत्वं तत्रावश्यं भेद इति व्याप्त्यभावप्रतिपादनार्थत्वान्न तस्यानर्थक्यमिति वाच्यम् । व्याप्त्यभावप्रतिपादनस्याप्यनर्थकत्वात् । न च व्याघातशङ्कापरिहारार्थत्वान्न तदिति वाच्यम् । तावता व्याप्तिमूलकव्याघातशङ्कापरिहारेऽपि साक्षाद्विरोधरूपव्याघातशङ्काया अनेनापरिहारेणास्य तत्परिहारकत्वायोगादित्यतो नेदं साक्षाद्विरोधशङ्कापरिहारकतयाऽभिमतं किन्तु व्याप्तिमूलकतच्छङ्काया एव । साक्षाद्विरोधशङ्कायास्तु प्रकारान्तरेणैव परिहार इत्यभिप्रेत्य तत्कथमित्यत: सांमुख्येन व्याघातशङ्कामुत्थाप्य तत्र संभावितविकल्पद्वयप्रदर्शनपूर्वकमाद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षदूषणतया मूलं योजयति **नन्वित्यादिना** ॥ **साक्षाद्विरोध इति** । परस्परविरहात्मकत्वलक्षण इत्यर्थः ।

प० — **साक्षाद्विरोध इति** । परस्परनिषेधतयेत्यर्थः । **विशेषणैवेति** । एतेन मूले विशेषत इति तृतीयार्थे तसिरिति दर्शितं ॥ **अन्यत्रानेकत्वमिति** । भेदेन व्यपदिश्यमानानां गुणक्रियादीनामेवेह प्रकरणप्राप्तत्वात्तदभिप्रायेणानेकत्वमित्युक्तम् ॥

या० — **साक्षाद्विरोध इति** । परस्परविरहप्रतिपादकतया विरोध इत्यर्थः ।

श्री० — **स स्यादिति** । यत्रानेकत्वं तत्राभेदापरपर्यायमेकत्वमिति विरोधः स्यादित्यर्थः ॥ **न चैवमिति** । यत्रानेकत्वं तत्र भेद इति न व्याप्तिरप्रयोजकत्वादित्यर्थः । ननु भेदाभावेऽनेकत्वमेव न स्यादिति हेतूच्छित्तिरूपबाधकसद्भावान्नाप्रयोजकतेति चेत्तत्राह **भेदप्रतिनिधिनेति** । भेदाभावेऽपीति शेषः । तथा च तर्कोऽप्यन्यथासिद्ध्याऽप्रयोजक एवेत्याशयः ॥ **ईश्वराख्येति** । ईश्वररूपे द्रव्ये विद्यमानानां तेनाभिन्नतां ज्ञानादिधर्मणाम् । अन्यत्र ईश्वररूपद्रव्यभिन्नद्रव्यस्थितानां विशेषाणां धर्माणामनन्तत्वं नामानेकत्वमित्यर्थः ।

मु० — **नन्वयं नानाव्यवहारनिर्वाहहेतुर्विशेषो यदि द्रव्यात्मैव कथं तर्हि (तद्द्रव्य) द्रव्यस्य विशेषः स्यात् । तदीयताया भेदव्याप्तत्वात् । मैवम् । विनाऽपि भेदेन तत्प्रतिनिधिना विशेषेणैव विशेषस्य तदीयतोपपत्तेः । एवं तर्हि तस्यापि विशेषस्य विशेषत्वसिद्धये विशेषान्तरमङ्गीकर्तव्यमित्यनवस्थेत्यत आह** विशेषश्चेति ।

---

अनु० — विशेषश्च विशेषी स स्वेनैव समवायवत् ॥

**यथा समवायः स्वेनैव समवायी, न संबन्धान्तरेणेत्यभ्युपगम्यानवस्था परेण पराक्रियते । तथा स द्रव्येऽनेकव्यवहारनिर्वाहहेतुर्विशेषश्च स्वेनैव विशेषी न पुनर्विशेषान्तरेण । अतो न** कश्चिद्दोष इति । समवायवदित्युपलक्षणम् । **सत्ताऽन्त्यविशेषवच्चेत्यपि द्रष्टव्यम् । यथा द्रव्यगुणकर्मसु सद्व्यवहारहेतुः सत्ता स्वेनैव सती स्वीकृता । यथा च नित्यद्रव्येष्वत्यन्तव्यावृत्तिप्रत्यये हेतुरन्त्यो विशेषः स्वेनैवात्यन्तव्यावृत्तस्तथैवेति** ।

शे० — **विशेषत्वसिद्धय इति** । विशेषस्य तदीयतासिद्धय इत्यर्थः ॥ **विशेषान्तरमिति** । भेदस्य तत्रानङ्गीकारेण तेन तदीयताया अनिर्वाहादिति भावः ॥ **कश्चिदिति** । तदीयत्वानुपपत्तिलक्षणो वाऽनवस्थालक्षणो वेत्येवं कश्चिदित्यर्थः ॥ **स्वीकृतेति** । अन्यथा सद्व्यवहारहेतोः सत्तायास्तत्र विरहात्सता सतीति व्यवहारानुपपत्तिप्रसङ्गात्सत्तान्तराङ्गीकारे चानवस्थानादिति भावः ॥ **स्वेनैवात्यन्तव्यावृत्त इति** । अन्यथा व्यावृत्तिबुद्धिहेतोर्व्यावर्तकान्तरस्य च तत्राभावाद्व्यावृत्तधीस्तत्र न स्यादिति भावः ।

श्री० — **विशेषत्वसिद्धये** धर्मत्वसिद्धये ।

सु० — अथाऽपि स्यात् । गुणगुण्यादिभेदमभ्युपगच्छता मया इहेदमिति व्यवहार-निर्वाहाय समवायोऽङ्गीक्रियते, तस्य चानवस्थापरिहाराय स्वनिर्वाहकत्वम् । अभेदं (अभ्यु)-चाभ्युपगच्छता त्वयाऽपर्यायशब्दवाच्यतादिसिद्धये विशेषोऽङ्गीक्रियते, तस्य चानवस्थानिरासाय स्वनिर्वाहकत्वमिति पक्षद्वये समाने को विशेषोऽभेदपक्षे, येन स परिगृह्यते । समवायस्याप्रामाणिकत्वमिति चेत् । समं विशेषेऽपि । अपर्यायव्यवहारादिना स सिद्ध इति चेत् । तर्हि समवायोऽपीहेदमित्यादिना सिद्ध इति तुल्यम् । तदनैकान्तिकमित्युक्तमिति चेत् । अपर्याय-व्यवहारादिकमपि घटपटादावनैकान्तिकमिति समानम् । अस्तु तर्हि गुणगुण्यादिभेदे प्रमाणाभावो विशेष इति चेन्न । अभेदेऽपि प्रमाणाभावात् । गवाश्वादिवद्विवेकेनानुपलम्भो अभेदे प्रमाणमिति चेत् । तर्हि व्यपदेशभेदादि भेदे प्रमाणमस्तीति समाधिसाम्यम् । तद्व्यभिचारान्यथासिद्धिभ्यां निरस्तमिति चेत् । अभेदप्रमाणमपि तादृगेव । तस्यापि क्षीर-नीरादौ व्यभिचारात् । अयुतसिद्धत्वेनान्यथासिद्धेश्च ॥ तस्मान्निर्निमित्तोऽयमभेदपक्षपात इत्यत आह कल्पनेति ॥

अनु० — कल्पनागुरुतादोषात्पदार्थान्तरता न हि ॥

पदार्थान्तरता गुणगुण्यादीनामिति शेषः । यद्यपि भेदाभेदपक्षयोः स्वनिर्वाहकसमवाय-विशेषाङ्गीकारेण साम्यं, तथाऽपि भेदपक्षे कल्पनागुरुतादोषात् गुणगुण्यादीनां पदार्थान्तरता नाङ्गीक्रियते । कल्पनालाघवादभेद एवोपेयत इति ।

कथं भेदवादे कल्पनागौरवमित्यत आह कल्पयित्वेति ।

कल्पयित्वा षट्पदार्थान्साभावानपि केवलम् ॥
एकस्मिन्स विशेषश्चेत्किं पूर्वं तस्य विस्मृतिः ॥

केवलमित्येतत् षडित्यनेनैकस्मिन्नित्यनेन च संबध्यते । एकस्मिन् समवाये, सः विचित्र-व्यवहारहेतुश्चेदङ्गीक्रियत इति शेषः । किं कस्मात् । पूर्वं द्रव्य इत्यर्थः । तस्य विशेषस्य ।

श्री० — ननु 'कल्पनागुरुता' इत्युत्तरग्रन्थे गुणगुण्यादीनां पदार्थान्तरत्वाङ्गीकारे कल्पना-गौरवं नियामकतया कथ्यते । तदनर्थकम् । न च भेदपरित्यागेनाभेदस्यैव स्वीकाराय भेदाभेदपक्षयोः साम्यशङ्कापरिहारार्थमेतदिति वाच्यम् । प्रापकाभावेन तच्छङ्काया एवानुदयात् । कथञ्चिदुदयेऽपि वा समवायस्य गुणगुणिभेदस्य वाऽप्रामाणिकत्वेनाभेदादेश्च प्रामाणिकत्वेनैव तच्छङ्कापरिहारसंभवेन तत्परिहाराय कल्पनागौरवपर्यन्तधावनानर्थक्यमित्यतोऽत्र निमित्तान्तरेण वैषम्यशङ्कानिरासपूर्वकं साम्य-

शङ्कामुत्थाप्य तन्निरासपरतयोत्तरग्रन्थं सङ्गमयति अथाऽपि स्यादित्यादिना ॥ **व्यवहारनिर्वाहायेति** । इह कुण्डे बदराणीत्यादिव्यवहारस्य संबन्धपूर्वकत्वदर्शनादिह तन्तुषु पट इत्यादिव्यवहारस्यापि तन्तु-पटसंबन्धं विनाऽयोगादन्यस्य चासंभवादित्यर्थः ॥ **अनवस्थापरिहारायेति** । इह तन्तुषु पट इत्यादि-प्रत्ययवत् इह तन्तुपटयोः समवाय इति समवाये इहेदमिति प्रत्ययस्याप्याधाराधेयतया प्रतीयमानयो-स्तन्तुपटसमवाययोस्तत्प्रयोजकसंबन्धपूर्वकत्वे समवायेऽपि समवायप्रसक्त्याऽनवस्थाप्रसङ्गादिति भावः ॥ **विशेष इति** । अपर्यायशब्दवाच्यत्वादेर्भेदकार्यस्य गुणगुण्यादावसता भेदेन कर्तुमशक्यत्वादिति भावः ॥ **अनवस्थेति** । तदीयताया भेदस्यासत्वेन विशेषे विशेषानङ्गीकारे विशेषस्य तदीयताया अनिर्वाहादिति भावः ॥ **तादृगेवेति** । व्यभिचारान्यथासिद्धिभ्यां निरस्तमेवेत्यर्थः । तत्कथमित्यतो तावद्व्यभिचारमुपदर्शयति **तस्यापीति** । अन्यथासिद्धिमप्युपदर्शयति **अयुतसिद्धत्वेनेति** ॥ **स्वनिर्वाहक-समवायविशेषेति** । स्वनिर्वाहकौ च तौ समवायविशेषौ च, तयोरङ्गीकारेणेत्यर्थः । पूर्वेणैव सिद्धे-रुत्तरग्रन्थवैयर्थ्यमाशङ्क्य प्रतिज्ञातकल्पनागौरवप्रकारदर्शनार्थत्वान्न तदिति भावेन तत्प्रतिपादकतयोत्तर-ग्रन्थं सङ्गमयितुं तत्कथन्ताशङ्कामुत्थापयति **कथमिति** ॥ **केवलमित्येतदिति** । केवलमित्येकस्मिन्नि-त्यनेन सन्निधानेऽप्यन्वये योग्यताया एव प्रयोजकत्वेन 'अर्थतो ह्यसमर्थानामानन्तर्यमकारणमि'ति न्यायेन सन्निधानस्याप्रयोजकत्वाद्योग्यतायाश्च वक्ष्यमाणरीत्योभयत्रापि अविशिष्टत्वात्समप्रयोजनत्वाच्चो-भयत्र संबन्धाश्रयणमिति ध्येयम् । विशेष इत्येतावता पूर्तेः स इति तद्विशेषणवैयर्थ्यमित्याशङ्क्य विशेषस्य विचित्रव्यवहारहेतुत्वसूचनार्थत्वान्न तदिति भावेन स इत्यस्यार्थमाह **स विचित्रव्यवहार-हेतुरिति** ॥ **तस्य विशेषस्येति** । विचित्रव्यवहारनिर्वाहकतया विशेषस्यैव पूर्वत्र प्रकृतत्वादिति भावः ।

प० — **अनैकान्तिकमित्युक्तमितीति** । इह तन्तुपटयोः समवाय इत्यादाविति भावः ॥ **घटपटादाविति** । तत्र भेदेनैव तद्व्यवहारो न विशेषेणेति भावः ॥ **व्यभिचारान्यथासिद्धिभ्या-मिति** । समवायतद्धर्मेषु व्यभिचारेण भेदप्रतिनिधिविशेषकृतान्यथासिद्ध्या च निरस्तमित्यर्थः ॥ **क्षीरनीरादाविति** । आदिपदेन माषराशिस्थमष्यादाविति संगृह्यते । तत्र हंसादिकृतविवेकोपलम्भेन भेदस्यैव तत्र सत्त्वेनाभेदस्याभावादिति भावः ॥ **अन्यथासिद्धेश्चेति** । गवाश्वादिवद्विवेकेनानुपलम्भ-स्येति योज्यम् । तथा च न तस्य गुणगुण्याद्यभेदसाधकत्वमिति भावः ॥ **स्वनिर्वाहकसमवाय-विशेषेति** । स्वनिर्वाहकयोः समवायविशेषयोरङ्गीकारेणेत्यर्थः । स इत्यनुवादः विचित्रेति व्याख्या । किमिति, पूर्वमित्यनुवादः कस्मादिति द्रव्य इति च व्याख्या ।

या० — **स्वनिर्वाहकसमवायविशेषेति** । स्वनिर्वाहकौ च तौ समवायविशेषौ च, तयोरङ्गीकारेणेत्यर्थः ॥

श्री० - **तदनैकान्तिकं** इहप्रत्ययस्य न समवायसाधकत्वमिह कुण्डे बदराणीत्यत्र भूतले घटो नास्तीत्यत्र च व्यभिचारादित्यर्थः । **अपर्यायव्यवहारादिकं** विशेषसाधकमिति शेषः । न हि घटपटयोःपर्यायशब्दवाच्यत्वान्यथाऽनुपपत्त्या विशेषः कल्प्यते । तस्मादपर्यायव्यवहारादिना सविशेषः सिद्ध इति न वाच्यमिति भावः । **व्यपदेशभेदादि** अपर्यायशब्दव्यवहारः ॥ **तदिति** । समवायस्य तद्गतत्वादिधर्माणां च भेदाभावेऽपर्यायशब्दवाच्यत्वस्य सत्त्वात्समवाये व्यभिचारः । भेदं विना विशेषेणैवापर्यायशब्दव्यवहारोऽन्यथासिद्धश्चेत्यर्थः ॥ **अभेदप्रमाणमपीति** । गवाश्वादिवद्विवेकेनानुपलम्भरूपम् अभेदसाधकं प्रमाणमपि, **तादृक्** व्यभिचार्यन्यथासिद्धं चेत्यर्थः । व्यभिचारः कुत्रत्यत आह **तस्यापीति** । **अन्यथासिद्धः** विवेकेनानुपलम्भस्याभेदसाधकस्य हेतोरभेदं विनाऽयुतसिद्धत्वेनान्यथासिद्धमित्यर्थः ।

**सु०— अयमभिसन्धिः । व्यपदेशभेदादिप्रमाणमवलम्ब्य वैशेषिकादिभिर्द्रव्यादयो भावपदार्थाः षडेव । अभावोऽपि सप्तम इति कल्पितम् । समवाये प्रतीतं तद्गतत्वादिकं तु न समवायातिरिक्तम् । किन्तु स्वभावभेदापरनाम्ना विशेषेणैव तत्र व्यपदेशभेदाद्युत्पत्तिरिति च । तत्रान्ततोऽप्यङ्गीकर्तव्येन व्यपदेशभेदादिनिर्वाहकेण विशेषेणैव द्रव्येऽपि तन्निर्वाहो वक्तव्यः । सप्तपदार्थीनिरूपणं न कर्तव्यम् । यद्वा द्रव्यवत्समवायेऽपि तद्गतत्वादीनां भेद एव स्वीकार्यः । तेषां च द्रव्यादिष्वन्तर्भावासंभवे सप्तपदार्थनियमस्त्याज्यः । विशेषकारणेन विना क्वचिद्भेदस्य क्वचिद्विशेषस्याभ्युपगमे कथं कल्पनागौरवं न स्यात ॥ तदभावे वाऽभेदवादे कथं कल्पनालाघवं न भवेदिति । भेदप्रतीत्यप्रतीतिभ्यां विशेष इत्यादि तु निराकरिष्यते । अत्र द्विधाकल्पनप्रदर्शनार्थेनैव पूर्वार्धेन समवाये विशेषस्याङ्गीकर्तव्यताऽपि समर्थिता वेदितव्या । अत एव केवलशब्दसंबन्धः । सप्तैव हि पदार्थाः । न च तेषु समवायधर्माणामन्तर्भावः संभवतीति विशेषा एव तैर(तैऽ)ङ्गीकर्तव्या इति ।**

श्री०— नन्वेतावत ऽपि कथं भेदपक्षे कल्पनागौरवसिद्धिः, अभेदपक्षे च तल्लाघवसिद्धिरित्यतस्तदुभयं दर्शयितुमाह **अयमभिसन्धिरिति** ॥ **षडेवेति** । इति कल्पितमिति वक्ष्यमाणेन संबधः ! एतच्च कल्पयित्वा षट्पदार्थानित्यस्य तात्पर्यकथनम् । अनेन च द्रव्यादिभावपदार्थान् षडेवेति कल्पयित्वेत्युद्देश्यविधेयभावेन मूलयोजना सूचिता भवति ॥ **अभावोऽपीति** । एतच्च साभावानपीत्यस्य

तात्पर्यकथनम् । साभावानपि षट्पदार्थान्कल्पयित्वेत्येकवाक्यतया योजनायां कृष्णासहिता षट् पाण्डवा इत्यादाविवाभावस्यैव षष्ठत्वस्य प्राप्त्या सप्तपदार्थनियमकल्पनाऽलाभात्तल्लाभाय 'अपिः पदार्थसंभावने' त्यभियुक्तोक्तेर्मधुनाऽपि स्यादित्यादौ तदर्थतया दर्शनाद्देवानामपि पूर्यत इत्यादौ टीकाकारैरपि [उपासनापादे] तदाश्रयणाच्चेहाप्यपिशब्दो योग्यस्याभावनिष्ठसाप्तमरूपार्थान्तरस्य प्रतिपादक इति भावेन'अभावोऽपि सप्तम इति कल्पितमि'ति वाक्यभेदाश्रयणमिति ध्येयम् ॥ केचित्तु साभावानपीत्य-पिशब्दः कल्पयित्वेत्यस्यानुकर्षणार्थः । एवञ्चाभावसहितान्कल्पयित्वेति वचनव्यक्तिपर्यवसानादभाव-सहितेषु द्रव्यादिषु विधीयमानं कल्पनं 'सविशेषणे ही'ति न्यायेन विशेषणमभावमुपसंक्रामति । तत्र द्रव्यादीनां षण्णामभावसाहित्यवचनेऽभावस्य सप्तमताया अर्थाल्लाभात्सप्तम इत्युक्तम् । अभावोऽपी त्यपिशब्दस्य तु न केवलं द्रव्यादयो भावपदार्थाः षडेवेत्येव कल्पितं किन्त्वभावोऽपि सप्तम इति कल्पितमिति संबन्धः । ततश्चाभावं सप्तमं कल्पयित्वेति योजना सूचिता भवतीत्यभिप्राय इत्याहुः । कथं तर्हि व्यपदेशभेदाद्युपपत्तिरिति पृच्छति **किन्त्विति** । उत्तरमाह **स्वभावेति** । इति चेत्यतःपरं कल्पितमिति शेषः । अस्त्वेवं ततः किमित्यत आह **सप्तेति** । तथा सति गुणक्रियादीनां द्रव्यादिरू-पत्वापत्त्या गुणक्रियादिरूपपदार्थान्तरविरहप्रसङ्गात्सप्तैव पदार्था इति नियमभङ्गप्रसङ्ग इत्यर्थः । रीत्यन्तरेणापि सप्तपदार्थनियमभङ्गमुपपादयति **यद्वेति** । अस्त्वेवं ततः किमित्यतस्तथा सति तेषां द्रव्यादिष्वन्तर्भावासंभवात्पदार्थान्तरत्वप्रसङ्गेन पदार्थानामधिकसंख्यावत्त्वप्रसङ्गात्सप्तैव पदार्था इति नियमभङ्ग एवेत्याह **तेषां चेति** ॥ **क्वचिद्भेदस्येति** । द्रव्यस्य गुणक्रियादिभिर्भेदस्येत्यर्थः ॥ **क्वचिद्विशेषस्येति** । समवायस्य तद्गतत्वादिना सविशेषाभेदस्येत्यर्थः । ननु गुणगुण्यादौ भेदः प्रतीयते न समवायतद्गतत्वादौ अतो भेदप्रतीत्यप्रतीतिलक्षणविशेषकारणसद्भावात्समवायवद्विशेषस्य बहुप्रमाणसिद्धत्वाभावेन बहुप्रमाणसिद्धत्वतदसिद्धत्वलक्षणविशेषकारणसद्भावाच्च न तदभाव इत्यत आह **भेदप्रतीत्यप्रतीतिभ्यामिति** ॥ **निराकरिष्यत इति** । अनुपदमेवेति शेषः ॥ **द्विधाकल्पनेति** । गुणगुण्यादौ समवायतद्गतत्वादौ च गौरवोपपादनायोक्तरीत्या द्विधाकल्पनप्रदर्शनार्थेनेत्यर्थः ॥ **समर्थि-तेति** । समर्थनयुक्तिः सूचिता वेदितव्येत्यर्थः ॥ **अत एवेति** । तत्समर्थनयुक्तिसूचनार्थमेवेत्यर्थः । अन्यथा न तेन किञ्चित्कृत्यमिति भावः । सूचितां युक्तिमेवाह **सप्तैवेत्यादिना** ।

म० — **अभावोऽपि सप्तम इतीति** । अत्र साभावानपि षट्पदार्थान्, इत्यन्वये अभावस्यैव षष्ठत्वं प्राप्नोति । अतः 'अपिस्संभावना' इत्युक्तेः 'मधुनोऽपि स्यात , इत्यादाविव अपिशब्दः सप्तम इत्यस्यार्थान्तरस्य योग्यस्य प्रतिपादक इति भावः । ननु गुणगुण्यादौ भेदस्य समवायतद्गतत्वादौ च

विशेषस्याभ्युपगमेऽपि न कल्पनागौरवम् । द्रव्यस्य गुणादिना भेदस्यैव मानान्तरेण सिद्धत्वेन तस्यैव व्यपदेशभेदादिनिर्वाहकत्वौचित्यात् तद्गतत्वादेश्च समवायेन भेदस्यासिद्धत्वेन भेदव्यपदेशनिर्वाहानुपपत्त्या विशेषस्यैव निर्वाहकत्वावश्यम्भावेन विशेषकारणसद्भावेन वैचित्र्योपपत्तेरित्यत आह **भेदप्रतीत्यप्रतीतिभ्यां विशेष इतीति** ।

प० — अस्फुटत्वादाह **अयमभिसन्धिरिति** । ननु व्यपदेशभेदादिति मानस्योक्तत्वात्कथं केवलमित्युक्तिरित्यत्रस्तस्यान्यथासिद्धिमाह **व्यपदेशेति** । केवलपदमेवशब्दार्थमित्युपेत्योक्तम् **षडेवेति** । साभावानपीत्यस्य तात्पर्यं **अभावोऽपि सप्तम इतीति** । अयमितिशब्दः षडेवेत्यत्रान्वेति । सप्तमत्वकल्पनायामेव तात्पर्यमिति ज्ञापनाय सप्तम इत्युक्तिः । अभावस्य प्रामाणिकत्वात् । तृतीयपादाऽऽशयः **समवाय इत्यादि** ॥ **इति चेति** । कल्पितमित्यनुषङ्गः । चतुर्थपादतात्पर्यं तत्रान्ततोऽपीत्यादि ॥ **सप्तपदार्थीति** । समाहारद्विगुः । द्विगोरिति ङीप् । ननु सप्तपदार्थ्यां अन्योन्यं भेदः प्रतीयते । समवायधर्मेषु नैवमितीदमेव विशेषकारणमित्यत आह **भेदप्रतीतीति** । 'अभेदेन प्रतीतिश्चेदि'त्यादिव्याख्यावसरे आदिपदोपात्तं समवायस्य प्रामाणिकत्वं विशेषस्याप्रामाणिकत्वं च ततः समीपग्रन्थ एव निरसिष्यत इत्यर्थः । ननु समवायधर्माणां तद्विशेषत्वाङ्गीकारोऽसिद्धः येन द्रव्यादिषु भेदोऽभेदश्च समवायतद्धर्माणामिति द्विधाकल्पनादत्र गौरवमित्यत आह **अत्र द्विधेति** ॥ **पूर्वार्धेनेति** । कल्पयित्वेत्यर्धेनेत्यर्थः ॥ **समर्थितेति** । एवार्थककेवलपदेन तदङ्गीकारे युक्तेः सूचनादिति भावः ॥ **समवाये विशेषस्येति** । समवायधर्माणां समवायस्वभावविशेषत्वस्याङ्गीकर्तव्यतापीत्यर्थः ॥ **अत एवेति** । एवमुक्तार्थस्य समर्थनीयत्वादेव । केवलं षट् षडेव भावपदार्थाः इत्यर्थकथनाय केवलपदान्वयोऽन्यथा तत्पदं व्यर्थमेव स्यादिति भावः । समर्थनप्रकारमेव व्यनक्ति **मयैवेति** । केवलशब्दार्थः **एवेति** ॥ **विशेषा एवेति** । समवायधर्माः समवायस्वभावविशेषा एवेत्यर्थः ।

या० — **अभावोऽपि सप्तम इति** । अनेन साभावानपीत्यपिशब्दः कल्पयित्वेत्यस्यानुकर्षणार्थः । एवं चाभावसहितेषु विधीयमानं कल्पनं सविशेषणे हीति न्यायेनाभावमेवोपसंक्रामति । षट्सु चाभावसाहित्यवचनेऽभावस्य सप्तमत्वमर्थाल्लभ्यते । ततश्चाभावं सप्तमं कल्पयित्वेति मूलार्थ उक्तो भवतीति ज्ञातव्यम् । तर्हि व्यपदेशभेदादिकं कथमुपपद्यत इति पृच्छति **किन्त्विति** । उत्तरमाह **स्वभावभेदेति** । ननु गुणगुण्यादौ भेदः प्रतीयते न समवायतद्गतत्वादावतो विशेष इत्यत आह **भेदप्रतीत्यप्रतीतिभ्यामिति** । आदिपदेन समवायस्य बहुप्रमाणसिद्धत्वं । न विशेषस्येत्यादिर्विशेषो ग्राह्यः ॥ **निराकरिष्यत इति** । अनुपदमेवेति शेषः ॥ **द्विधाकल्पनेति** । गुणगुण्यादौ समवाय-

तद्गतत्वादौ च गौरवोपपादनायोक्तरीत्या द्विधाकल्पनप्रदर्शनार्थेनेत्यर्थः ॥ **समर्थितेति** । समर्थनयुक्तिः सूचिता वेदितव्येत्यर्थः ॥ **अत एवेति** । समर्थनयुक्तेः सूचनीयत्वादेवेत्यर्थः । अन्यथा न केवलशब्देन कृत्यमिति भावः । युक्तिसूचनाप्रकारमेवाह **समेवेति** ॥ **विशेषा एवेति** । समवायविशेषा एवेत्यर्थः ॥

**श्री० — स्वभावभेदेति** । स्वभावविशेषेत्यर्थः । ननु भेदाङ्गीकारे द्रव्यादिष्वन्तर्भावो न संभवतीत्यभेदः स्वीकार्य इति चेत्तत्राह **तेषां चेति** । **क्वचिद्** गुणगुण्यादौ । **क्वचित्** समवायनिष्ठे तद्गतत्वादौ । अभेदवादे तदभाव इत्यन्वयः । अभेदपक्षे तत्कल्पनागौरवस्याभावे च सतीत्यर्थः । ननु गुणगुण्यादौ भेदस्य प्रतीयमानत्वात्तमङ्गीकृत्य समवायोऽङ्गीकार्यः । तद्गतत्वादेः समवायेन भेदस्य अप्रतीयमानत्वात्समवायमनङ्गीकृत्य विशेष एवाङ्गीकार्य इत्यस्त्येव विशेषकारणमित्याशङ्क्य निषेधति **भेदेति** । प्रत्युत गुणादेर्गुण्यादिनाऽभेद एव प्रतीयते न भेद इति वक्ष्यामः ।

**सु० — न केवलं सर्वथाऽङ्गीकार्येण विशेषेणैव गुणगुण्यादिव्यपदेशभेदाद्युपपत्तौ द्रव्यभेदमङ्गीकृत्य समवाय (एव) एकस्मिन्विशेषाभ्युपगमे कल्पनागौरवमिति भेदमतमपहायाभेदपक्षपातः क्रियते । किन्तु समवाये प्रमाणाभावादपि ।**

**तथा हि । न तावत्तत्र प्रत्यक्षं प्रमाणम् । कुण्डदध्नोः संयोग इतिवत्तन्तुपटयोः समवाय इत्यप्रतीतेः । संबन्धप्रतीतिरेव तत्प्रतीतिरिति चेन्न । तस्या असंमतेः ।**

**एतेनायं तन्तुपटसंबन्धप्रत्ययश्चक्षुर्जन्योऽनन्यथासिद्धतदन्वयव्यतिरेकानुविधायित्वात्पटप्रत्ययवत् । अयं तन्तुपटयोः संबन्धो योगजधर्माजन्यजन्यसाक्षात्कारविषयस्तन्तुपटसंबन्धत्वादेतत्तन्तुपटान्तरसंयोगवदिति समवायप्रत्यक्षतासाधनमप्यपास्तम् । तन्तुपटसंबन्धतत्प्रत्यययोः असिद्ध्याऽऽश्रयासिद्धेः । संबन्धाप्रतीतौ शुक्लः पट इति सामानाधिकरण्यप्रतीतिर्न स्यात् । दण्डीकुण्डलीत्यादौ तस्य तत्पूर्वकत्वदर्शनादिति चेन्न, समवायोऽस्तीत्यादौ व्यभिचारात् ॥**

शे० — ननु विशेषस्य 'येन प्रत्यक्षसिद्धेने'त्यादिना प्रत्यक्षादिसिद्धत्वमुच्यते तदनर्थकम् । न च विशेषस्याप्रामाणिकत्वशङ्कानिरासार्थं तदिति वाच्यम् । प्रसञ्जकाभावेन तदप्रामाणिकत्वशङ्काया एव परस्यानुदयेन तन्निरासार्थत्वायोगात् । न च समवायाप्रामाणिकत्वोक्तिरेव तत्प्रसञ्जिकेति वाच्यम् । तदप्रामाणिकत्ववर्णनस्यापि प्रकृतोपयोगादर्शनेन सिद्धान्तिना तस्यावक्तव्यत्वेन तदुक्तेरप्यसिद्ध्या तस्यास्तत्प्रसञ्जकत्वायोगात् । न च भेदपरित्यागेन द्रव्यस्य गुणाद्यभेदपक्षपरिग्रहसिद्धिरेव तदप्रामाणिक-

त्वोक्तिप्रयोजनमिति वाच्यम् । भेदपक्षे कल्पनागौरवस्य तदभेदपक्षे तल्लाघवस्य च कल्पयित्वेत्यादि-पूर्वग्रन्थ एवोपवर्णितत्वेन तत एव तत्सिद्ध्या तदर्थत्वायोगादित्यतो न केवलं भेदपक्षे कल्पनागौरवात्त-स्यागेन तल्लाघवादभेदपक्षपरिग्रहः । किन्तु समवायस्याप्रामाणिकत्वादपीत्येवं युक्त्यन्तरपरतया सिद्धान्तिनः समवायाप्रामाणिकत्ववर्णनस्य सङ्गतत्वेन तस्यैव च विशेषाप्रामाणिकत्वशङ्काप्रसञ्जकतया तच्छङ्कायाः संभावितत्वेन तन्निरासार्थत्वात्तत्प्रामाणिकत्ववर्णनस्य न तत्परोत्तरग्रन्थस्यासङ्गतिरित्यभिप्रेत्योक्तरीत्या तद्योजयितुं वृत्तानुवादपूर्वकं समवायाप्रामाणिकत्वोक्तिं तावत्पूरयति **न केवलमित्यादिना** ।

ननु च प्रतिज्ञामात्रस्यासाधकत्वात्समवायसाधकप्रमाणानां विशिष्यानिरासेन तदसिद्धेस्तत्साधक-प्रमाणानां विशिष्य निरासोऽपि भगवता भाष्यकारेण कर्तव्यः स्यादिति तदनिरासो दोष इत्यतः स्पष्ट-तया शिष्यैरेव ज्ञातुं शक्यत्वात्न स दोषायेत्याशयेन स्वयं तन्निराकर्तुं प्रतिजानीते **तथा हीति** । समवाये प्रमाणं भवत्किं प्रत्यक्षमुतानुमानमिति विकल्पं मनसि निधायाद्यं दूषयति **न तावदिति** । उत्तरत्रानुमानस्यापि निरासात्तावदित्युक्तम् । तत्कथमित्यतः किमत्र क्लृप्तं प्रत्यक्षं, तत्साधकतयाऽभिमतं किंवा कल्प्यम् । आद्येऽपि किं तस्य साक्षात्समवायगोचरत्वमभिमतं, किंवा संबन्धमात्रगोचरस्यापि तस्य पर्यवसानगत्या तद्गोचरत्वमिति विकल्पान्मनसि निधायाद्यं प्रत्याचष्टे **कुण्डेति** । उपलक्षणं चैतत् । इमौ संयुक्ताविति वदिमौ समवेतावित्यप्रतीतेरित्यपि द्रष्टव्यम् ॥ **अप्रतीतेरिति** । न च प्रतीत्यभावोऽसिद्धः । समवायं जानामीत्यनुव्यवसायाभावादेव तत्सिद्धेरिति भावः । आद्ये द्वितीयमा-शङ्कते **सम्बन्धप्रतीतिरेवेति** । इह तन्तुषु पट इति तन्तुपटयोः, रूपी घट इति घटरूपयोश्च संबन्धप्रत्य-क्षप्रतीतेरेवेत्यर्थः । तन्तुपटयोर्घटरूपयोश्च संबन्धान्तरानुपपत्त्या भासमानसंबन्धस्य समवायत्वे पर्यवसा-नादिति भावः । अभाववद्भूतलमित्यादिसंबन्धप्रतीतिवत्स्वरूपसंबन्धविषयत्वसंभवेन भासमानसंबन्धस्य समवायत्वे न पर्यवसानमिति सत्येव दोषे वस्तुस्थितिमनुरुध्याह **तस्या असम्मतेरिति** । तन्तुपटादेर-भेदवादे संबन्धस्यैव भावात्तत्प्रतीतेरभावादिति भावः ।

आद्यद्वितीयमुत्थाप्यातिदेशेन दूषयति **एतेनेति** ॥ **अयं तन्तुपटेत्यादि** । आरभ्यारम्भकभावा-पन्नतन्तुपटसंबन्धप्रत्यय इत्यर्थः । अन्यथा तन्तुपटसंयोगप्रत्ययस्यापि तत्संबन्धप्रत्ययत्वेन पक्षत्वापत्त्या तस्य चक्षुर्जन्यतायाः परेणापि स्वीकारेण सिद्धसाधनत्वप्रसङ्गादिति भावः ॥ **अनन्यथासिद्धेति** । चक्षुरन्वय-व्यतिरेकानुविधायित्वमात्रं चक्षुर्जन्यधूमादिज्ञानजन्यवह्न्याद्यनुमितावप्यस्तीति तत्र व्यभिचारवारणायोक्त-मनन्यथासिद्धेति । चक्षुस्तु धूमादिग्रहे उपक्षीणत्वादन्यथासिद्धमेवेति नानन्यथासिद्धचक्षुरन्वय-व्यतिरेकानुविधायित्वमनुमितेरिति न तत्र व्यभिचारः । न च धूमादिज्ञानस्य चक्षुर्व्यापारान्तर-

व्यापारत्वान्न तत्रोपक्षय: । यद्धि यज्जनयित्वैव यज्जनयति तस्य तदवान्तरव्यापारत्वात् । चक्षुषो लिङ्गज्ञानमन्तरेणापि लिङ्गिज्ञाने सामर्थ्योपलम्भेन तज्ज्ञानस्य तदवान्तरव्यापारत्वायोगादिति भाव: ॥ **अयमिति** । अत्राप्यारम्भ्यारम्भकभावापन्नतन्तुपटसंबन्धस्यैव पक्षत्वान्न तादृग्रूपतन्तुपटसंयोगमादाय सिद्धसाधनत्वमिति द्रष्टव्यम् । साध्ये योगिसाक्षात्कारविषयतयेश्वरसाक्षात्कारविषयतया च सिद्धसाधनतावारणाय क्रमेण विशेषणद्वयम् । एतेनेत्यतिदिष्टं दूषणमेवाह **तन्तुपटेति** । एतच्च द्वितीयानुमानमाश्रित्योक्तम् । प्रथमानुमानमप्याश्रित्याह **तत्प्रत्ययेति** । उपादानोपादेयाभेदवाद इति शेष: । तद्भेदवादे तु घटाभावभूतलयोरिवेहापि स्वरूपसंबन्धस्य चाक्षुषत्वेनार्थान्तरत्वादिति दूषणं द्रष्टव्यम्। अस्तु तर्हि, गुणादेर्गुण्यादिना सह रूपी घट इत्यादिरूप संबन्धप्रत्ययश्चक्षुर्जन्य: अनन्यथासिद्धतदन्वयव्यतिरेकानुविधायित्वाद्धटप्रत्ययवदिति समवायप्रत्यक्षतासाधनम । न चात्रापि गुणगुणिसंबन्धप्रत्ययासिद्ध्याऽऽश्रयासिद्धिरिति वाच्यम् । सामानाधिकरण्यव्यवहाररूपकार्येण तस्य सिद्धेरा तदनवकाशादिति भावेन संबन्धाप्रतीतौ सामानाधिकरण्यव्यवहारानुपपत्तिं बाधकत्वेन शङ्कते **सम्बन्धेति** । गुणादेर्गुण्यादिना संबन्धाप्रतीतावित्यर्थ: । **सामानाधिकरण्यप्रतीति:** सामानाधिकरण्यव्यवहार: । 'नन्वभेदश्चेत्प्रत्यक्षेणैवेक्ष्यते तदा कथं शुक्ल: पट इति सामानाधिकरण्यव्यवहार' इत्युत्तरग्रन्थानुरोधात् । अत एव चोत्तरत्र तस्येति पुल्लिङ्गप्रयोग: । अन्यथा हि प्रतीतिपरिग्रहाय तस्या इत्येव वक्तव्यतया तस्येति पुल्लिङ्गप्रयोगानुपपत्तिप्रसङ्गात् इति द्रष्टव्यम् । भवेत्संबन्धाप्रतीतौ सामानाधिकरण्यव्यवहारानुपपत्तिर्बाधिका यदि सामानाधिकरण्यव्यवहारस्य संबन्धविषयत्वं स्यात् । न च तदस्ति । तस्य तादात्म्यमात्रविषयत्वेन संबन्धविषयत्वाभावात् । ततश्च संबन्धाप्रतीतावपि तादात्म्यप्रतीतिमात्रेण तादात्म्यावलम्बनस्य सामानाधिकरण्यव्यवहारस्योपपत्तेर्न तदनुपपत्तिप्रसङ्ग इत्यत: शुक्ल: पट इति सामानाधिकरण्यव्यवहारस्य शौक्ल्याश्रयपटत्वाश्रययोस्तादात्म्यावलम्बनत्वेऽपि दण्डी देवदत्त इत्यादौ दण्डादेर्देवदत्तेनेव शौक्ल्यस्य पटेन संबन्धमात्रावगाहित्वेन न तत्तादात्म्यावलम्बनत्वम् । अन्यथा दण्डी देवदत्त इत्यादेरपि दण्डदेवदत्ततत्तादात्म्यावलम्बनत्वापातात् । न च दण्डीत्यादिसामानाधिकरण्यव्यवहारे संबन्धार्थक-इनिप्रत्ययोगात्तस्य संबन्धावगाहित्वेऽपि शुक्ल: पट इत्यादौ तददर्शनान्न तस्य संबन्धावगाहित्वमिति वैषम्यमिति वाच्यम् । शुक्लगुणोऽस्यास्तीत्यर्थे 'अर्श आदिभ्योऽजि'त्यच्प्रत्ययविधानादत्रापि संबन्धार्थकप्रत्ययसद्भावेन शुक्ल: पट इत्युक्त्वा शौक्ल्यं पटस्येत्यभियुक्तव्याख्यानानुरोधेन च शौक्ल्यपटसंबन्धावगाहित्वस्योपपन्नत्वात् । ततश्च संबन्धविषयकसामानाधिकरण्यव्यवहारस्य संबन्धप्रतीतिकार्यतया तदभावेनासम्भवाद्भवेदेव संबन्धाप्रतीतौ समानाधिकरण्यव्यवहारानुपपत्तिर्बाधिकेत्याशयवानाह **दण्डीत्यादिना** । सत्त्वस्य समवायेनातिरिक्तसंबन्धाप्रतीतावपि समवायोऽस्तीत्यादिसामानाधिकरण्यव्यवहारदर्शनेन तर्कमूलमूलव्या-

मिशैथिल्येन सामानाधिकरण्यव्यवहारस्य संबन्धप्रतीतिकार्यत्वासिद्ध्या तेन गुणगुणिनोः संबन्धप्रतीत्यसिद्धेरत्राप्याश्रयासिद्धिरेवेत्याशयवान्समाधत्ते **नेति** ।

**प०** — कल्पयित्वेति कल्पनापदस्वारस्यं केवलपदस्य मानेन विनेत्यर्थान्तरं चाप्युपेत्याह **न केवलमिति** । कियत इत्यनेनान्वयः ॥ **तस्या इति** । संबन्धप्रतीतेरित्यर्थः । तयोरभेदादिति भावः ॥ **अयमिति** । अयुतसिद्धतन्तुपटसंबन्धप्रत्ययलाभायायमित्युक्तिः । अन्यथाऽर्थान्तरतापत्तेः । एवमग्रेऽपि ॥ अयं पटो नोऽभिमानित्याद्यनुमित्यादावव्यभिचारायानन्यथासिद्धेति च हेतुविशेषणम् । द्वितीयप्रयोगे ईश्वरप्रत्यक्षत्वेन योगजप्रत्यक्षत्वेन चार्थान्तरतावारणाय जन्येति योगजधर्माजन्येति च साध्यविशेषणे ॥ शङ्कते **संबन्धेति** । 'गुणवचनेभ्यो मतुपो लुगिष्ट' इति मतुपो लोपेन वा अर्श आद्यच्प्रत्ययान्तत्वेन वा शुक्ल इत्यस्य शुक्लवानित्यर्थः ॥ **सामानाधिकरण्येति** । गुणजात्योरेकपटरूपद्रव्यविशेष्यकत्वधीनं स्यादित्यर्थः ॥ **दण्डी कुण्डलीति** । देवदत्त इति विशेष्यं ज्ञेयम् ॥ **समवाय इति** । समवायत्वास्तित्वयोरेकविशेष्यकत्वप्रतीतावपि संबन्धप्रमितिपूर्वकत्वाभावादित्यर्थः ॥ **समवायप्रत्यक्षनिरासः** ।

**या०** — **असम्मतेरिति** । तन्तुपटयोरभेदेन संबन्धस्यैवाभावादिति भावः । **सामानाधिकरण्येति** । शुक्लत्वपटत्वयोरेकस्मिन्नधिकरणे संबन्धे एव हि तयोः सामानाधिकरण्यम् । संबन्धाभावे च तत्प्रतीतिर्न स्यादित्यर्थः ॥ **दण्डी कुण्डलीति** । एकस्मिन्देवदत्ते दण्डकुण्डलनिरूपितसंयोगद्वयस्यैव तत्र सामानाधिकरण्यघटकत्वादिति भावः । **समवायोऽस्तीति** । समवायत्वास्तित्वयोरेकस्मिन्समवायेऽतिरिक्तसंबन्धाप्रतीतावपि सामानाधिकरण्यप्रतीतिदर्शनेनोक्ततर्के व्यभिचारादित्यर्थः ।

**श्री०** — एकस्मिन्नेव समवाय इत्यन्वयः ॥ **सम्बन्धप्रतीतिरेवेति** । तन्तुपटयोः समवाय इति प्रतीत्यभावेऽपि तन्तुपटयोः संबन्ध इति संबन्धप्रतीतिरेव समवायप्रतीतिरित्यर्थः ॥ **तस्या इति** । संबन्धप्रतीतेरित्यर्थः । तयोरभेदाङ्गीकारादिति भावः । ईश्वरसाक्षात्कारविषयत्वेन सिद्धसाधनतापरिहाराय जन्यपदम् । योगिसाक्षात्कारविषयत्वेन सिद्धसाधनतापरिहाराय योगजधर्माजन्येत्युक्तम् । **सम्बन्धतत्प्रत्यययोरिति** । संबन्धस्यैवासिद्ध्या द्वितीयानुमाने आश्रयासिद्धिः । तत्प्रत्ययस्यैवासिद्ध्या प्रथमानुमान इति विवेकः ।

**च०** — गुणवचनेभ्यो मतुपो लुगिति तल्लोपात्, अर्शआद्यजन्तत्वाद्वा शुक्ल इत्यस्य शुक्लरूपरूपवानित्यर्थः । **सामानाधिकरण्येति** । शुक्लत्वपटत्वयोरेकस्मिन्नधिकरणे संबन्धे एव हि तयोः सामाधिकरण्यम् । संबन्धाभावे च तत्प्रतीतिर्न स्यादित्यर्थः । गुणजात्योरेकपटरूपद्रव्यविशेष्यकत्वधीन-

तदित्यर्थ इत्यप्यर्थापयन्ति ॥ दण्डी कुण्डलीति । एकस्मिन् धर्मिणि दण्डकुण्डलप्रतियोगिकसंयोगद्वयस्यैव सामानाधिकरण्यरूपत्वादिति हृदयम् । समवायेति । समवायत्वास्तित्वयोरेकधर्मिगतत्वप्रतीतावपि संबन्धप्रतीतिपूर्वकत्वाभावादित्यर्थः ॥ ॥ समवायप्रत्यक्षन्यक्कारः ॥

सु० नाप्यनुमानम् । इहेदमिति प्रत्ययस्य दूषितत्वात् । इह भूतले घटाभाव इति प्रत्यये व्यभिचाराच्च । भावमात्रविषयत्वेन विशेषणाददोष इति चेन्न । अभाववद्भावेऽप्युपपत्तौ अन्यथासिद्धेः । इह घटे ज्ञानमिति प्रत्यये व्यभिचारापरिहाराच्च । बाधितोऽयमिति चेन्न । अन्यथाप्रत्ययानुपलब्धेः ॥ एतेन जात्यादिगोचरो विशिष्टव्यवहारः संबन्धनियतो भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात्सघटं भूतलमिति व्यवहारवदित्यपास्तम् । ज्ञातो घटः, अस्ति समवायः इत्यादौ व्यभिचारात् ।

एते तन्तव एतत्पटसंबद्धा एतदाश्रयत्वाद्भूतलवत् , अयं पट एतत्तन्तुसंबद्ध एतदाश्रितत्वादेतदाश्रिततृणादिवदित्यप्यसत् । तन्तुपटयोराश्रयाश्रयिभावासिद्धेः । इह तन्तुष्वयं पट इति व्यवहारसिद्धतत्प्रत्ययात्तत्सिद्धिरिति चेन्न । इह समवायेऽस्तित्वमित्यादौ व्यभिचारात् ।

भूतलरूपादयो भूतलसंबद्धा भूतलविशेषणत्वात् घटवदित्यपि, भूतलविशेषणे ज्ञाने व्यभिचारादयुक्तम् ।

इह तन्तुषु पट इत्यादिप्रत्यय एतज्जनकसंयोगत्वरहितसंबन्धजन्य इहेतिप्रत्ययत्वादिह कुण्डे बदराणीति प्रत्ययवत् । न चेह भूतले घटाभाव इति प्रत्यये व्यभिचारः तत्रापि चक्षुर्भूतलसंयोगादिजन्यत्वस्य सत्त्वात्; इत्यपि न युक्तम् , अयं पट एतज्जनकतन्तुत्वरहितोपादानजन्यः पटत्वात्पटान्तरवदित्याभाससमानयोगक्षेमत्वात् ।

रूपादयः संबन्धवन्तः प्रमेयत्वाद्घटवदित्यप्यनुपपन्नम् , समवायाभावयोर्व्यभिचारात् । तत्रापि विशेषणविशेष्यभावाभ्युपगमान्नेति चेन्न, तस्य परेण संबन्धत्वानङ्गीकारात् । अङ्गीकारे वा तेनैवार्थान्तरत्वात् । मतुबर्थस्याभावाद्बाधितविषयत्वाच्च ।

समवायः स्वेनैव संबन्धी (इत्यादि) स्यादिति निरस्तम् ।

इदं चक्षुरेतज्जन्यसंयोगज्ञानत्वरहितसंबन्धज्ञानजनकं चक्षुष्ट्वादन्यचक्षुर्वत् , अहं मन्निष्ठसंयोगज्ञानत्वरहितसबन्धज्ञानवानात्मत्वादात्मान्तरवत् , अयं काल इदानीन्तनसंयोगज्ञानत्वरहितसंबन्धज्ञानवान्कालत्वादन्यकालवत् इत्यादीनि; आभाससमानयोगक्षेमत्वात् , विशेषणविशेष्यभावादिनाऽर्थान्तरत्वाच्चापास्तानि ।

संयोगत्वं संबन्धव्यावृत्तम् जातित्वाद्घटत्ववदिति सिद्धसाधनम् । जातेः प्रतिव्यक्ति-नियतत्वस्य वक्ष्यमाणत्वेनैकस्य संयोगत्वस्य संयोगान्तराद्व्यावृत्तेः, विशेषणविशेष्यभावादितो व्यावृत्तेश्च ॥ विवादाध्यासिता मृत् घटसंबद्धा द्रव्यत्वादाकाशवदिति च घट न्तरसंयोगेनार्थान्तरम् । एतद्घटसंबद्धेति निर्देशेऽप्येतद्घटसंबन्धमलब्ध्वा विनष्टद्रव्येऽनैकान्तिकम् तत्रापि परंपरासंबन्धोऽस्तीति चेत् । तर्हि सिद्धसाधनम् । मृत्संयुक्तभूतलस्य घटसंयुक्तत्वात् ।

तन्तुपटौ नित्यसंबन्धसंबद्धौ द्रव्यत्वादाकाशवदिति, दृष्टान्तस्य साध्यविकलत्वादपास्तम् । संयोगः स्वव्यतिरिक्तसंबन्धाद्भिन्नः प्रमेयत्वाद्घटवदित्यत्र स्वव्यतिरिक्तपदेन स्वान्योन्याभाव-विवक्षायां सिद्धसाधनता । एकस्य संयोगस्य संयोगान्तराद्भिन्नत्वात् । संयोगत्वरहितत्व-विवक्षायामप्रसिद्धविशेषणत्वम् । विशेषणविशेष्यभावादिना तत्समाधाने तेनैव सिद्धसाधनम् ।

अथ संयोग एतदन्यसंयोगत्वरहितसंबन्धान्यो मेयत्वाद्घटवत् इत्याद्याश्च ; आभास-समानयोगक्षेमत्वादुपेक्षणीयाः । तदेवं समवाये प्रमाणाभावान्न भेदपक्षोऽङ्गीक्रियते ॥ छ ॥

शे० — अस्तु तर्ह्यनुमानमेव तत्र मानमिति द्वितीयो निरवद्यत्वादित्याशङ्क्य तत्प्रतिबद्धलिङ्गा-भावान्न तदपि मानमित्याशयेनाह नापीति । नन्विह कुण्डे बदराणीत्यबाधितेहप्रत्ययस्याधाराधेययोः कुण्डबदरयोः संयोगरूपातिरिक्तसंबन्धपूर्वकत्वदर्शनात् इह तन्तुषु पट इत्यादेरपि इहेदमिति प्रत्ययस्याबा-धितेहप्रत्ययत्वेनाधाराधेययोस्तन्तुपटयोरतिरिक्तसंबन्धपूर्वकत्वसिद्धौ तस्य संबन्धस्यायुतसिद्धयोः संबन्धतया द्रव्यादिवृत्तितया च युतसिद्धयोः संबन्धाद्द्रव्यमात्रवृत्तेश्च संयोगादन्यत्वसिद्ध्या समवायत्वसिद्धिरिति समवायसाधकस्याबाधितेहप्रत्ययत्वस्यैव लिङ्गस्य सत्त्वात्कथं तदभाव इत्याशङ्क्य भवेदबाधितेहप्रत्ययत्वेन संबन्धपूर्वकत्वसिद्धिर्यदि योऽबाधितेहप्रत्ययः स आधाराधेययोरतिरिक्तसंबन्धपूर्वकः इत्यनुमानमूलभूता व्याप्तिः सिद्धा स्यात् । न चैतदस्ति । इह तन्तुपटयोः समवाय इतीहप्रत्ययस्याबाधितेहप्रत्ययत्वेऽपि समवायस्य तन्तुपटाभ्यामतिरिक्तसंबन्धानभ्युपगमेन आधाराधेययोरतिरिक्तसंबन्धपूर्वकत्वाभावेन तत्र व्यभि-चारादिति 'भिन्नवस्तुम्बतस्तस्य ताभ्यामि'त्यादिना पूर्वमेव समर्थितत्वेनाबाधितेहप्रत्ययत्वस्य लिङ्गत्वानु-पपत्तिरित्याशयेनाह इहेदमिति ॥ प्रत्ययस्येति । अबाधितेहेदमितिप्रत्ययस्येत्यर्थः । अन्यथा बाधि-तेहरजतत्वमितीहप्रत्यये व्यभिचारप्रसक्तेरिति द्रष्टव्यम् । ननु तन्तुपटयोः समवायः सिद्धश्चेत्किमुत्तरभा-विनाऽनैकान्त्येन । असिद्धश्चेत्स्वानैकान्त्यमित्युभयतः पाशारज्जुरिति चेन् । आपाततः प्रतीते संबन्धे व्यभिचारं दृष्ट्वा परावृत्तेरावश्यकत्वस्य विवक्षितत्वात् । यद्वा एतदस्वरसादेव दोषान्तरमाह इह भूतल

**इति** । उक्तप्रत्यये सत्त्वप्यबाधितेहेदमितिप्रत्ययत्वे आधाराधेययोर्भूतलघटाभावयोरतिरिक्तसंबन्धपूर्वकत्वाभावादिति भावः ॥ **भावमात्रेति** । तथा चेह भूतले घटाभाव इतीहप्रत्ययस्याभावभावविषयतया भावमात्रविषयकबाधितेहप्रत्ययत्वरूपहेतोरेव तत्रागमनान्न व्यभिचार इति भावः । भावमात्रविषयकत्वेनेहप्रत्ययविशेषणमनर्थकम् । न चेह भूतले घटाभाव इतीहप्रत्यये व्यभिचारपरिहारार्थं तदिति वाच्यम् । तत्परिहारस्यापि प्रयोजनाभावात् । न चानुमानस्यादुष्टत्वसंपादनद्वारा समवायसाधकत्वसमर्थनमेतत्प्रयोजनमिति वाच्यम् । व्यभिचाराभावेऽप्यन्यथासिद्धिग्रस्ततयाऽनुमानस्य दुष्टत्वेन तदसंभवादित्याह **अभाववदिति** । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु न व्यभिचारवारकत्वमपि संभवति । उदाहरणस्यानादरणीयत्वेनैकोदाहरणनिरासेऽप्युदाहरणान्तरानिरासादित्याशयेन व्यभिचारमप्याह **इहेति** ॥ **बाधित इति** । तथा च तत्र भावमात्रविषयकेहप्रत्ययत्वसत्त्वेऽप्यबाधितेहप्रत्ययत्वरूपहेत्वगमनान्न व्यभिचार इति भावः । अबाधितत्वविशिष्टहेतोरपि सत्त्वाद्व्यभिचार एवेत्यभिप्रेत्य कुतोऽत्र बाधकाभावसिद्धिरित्यतो योग्यानुपलब्धेरेवेत्याशयेनाह **अन्यथेति** ।

माऽस्त्वबाधितेहप्रत्ययस्तत्र लिङ्गम् । लिङ्गान्तरं तु भविष्यतीत्यतो लीलावत्युक्तमनुमानं तावदुपन्यस्य उक्तदूषणातिदेशेन दूषयति **एतेनेत्यादिना** । जात्यादीत्यादिपदेन गुणादेः परिग्रहः । अघटं भूतलमित्यादिषु बाधपरिहारार्थं जात्यादिगोचर इति पक्षे विशेषणं, विशिष्टपदं च स्वरूपसङ्कीर्तनम् । व्यवहारमात्रस्य विशिष्टव्यवहारत्वेन विशिष्टव्यवहारस्यैवासिद्ध्या व्यावर्त्याभावेनाव्यावर्तकत्वात् । **सम्बन्धनियतः** अतिरिक्तसम्बन्धनियतः । अत एव हेतौ भावमात्रविषयकत्वविशेषणमर्थवत् । अन्यथा अघटं भूतलमिति विशिष्टव्यवहारे स्वरूपसम्बन्धनियतत्वमादाय साध्यस्यापि सत्त्वाद्व्यभिचाराप्रसक्तेस्तद्वारणाय हेतौ भावमात्रविषयकत्वविशेषणवैयर्थ्यप्रसङ्गात् । एवञ्चाघटं भूतलमिति विशिष्टव्यवहारेऽनैकान्त्यनिरासाय **भावमात्रेति** । पीतः शङ्ख इत्यादिव्यवहारे तन्निरासायाबाधितेत्युक्तम् । विशिष्टपदं च पूर्ववत्स्वरूपसङ्कीर्तनम् ॥ **सघटं भूतलमिति व्यवहारवदिति** । सघटं भूतलमित्यबाधितव्यवहारवदित्यर्थः । अन्यथा बाधिते तत्र बाधितत्वघटितोक्तहेत्वभावेन साधनवैकल्यप्रसङ्गादिति द्रष्टव्यम् । एतेनेत्यतिदिष्टं दूषणं विशदयति **ज्ञातो घट इति** । तद्व्यवहारस्याबाधितत्वं चान्यथाप्रत्ययानुपलब्ध्या सिद्धमिति ध्येयम् । अभ्युपेत्यापि तस्याबाधितत्वमन्यत्र व्यभिचारमाह **अस्ति समवाय इत्यादाविति** ॥

**एते तन्तव इति** । एतत्पटारम्भकास्तन्तव इत्यर्थः । **एतत्पटसम्बद्धाः** स्वजन्यपटसम्बद्धाः । **एतदाश्रयत्वात्** स्वजन्यपटाश्रयत्वादित्यर्थः । कारणपक्षकमनुमानमुक्त्वा कार्यपक्षकमनुमानमप्याह **अयं**

**पट इति ।** व्याख्यानं पूर्ववत् ॥ न तन्तुपटयोराश्रयाश्रयिभावासिद्धिः वक्तुं शक्या । तत्प्रत्ययादेव तत्सिद्धिसंभवात् । न च तस्यैवासिद्धेर्न तेन तत्सिद्धिरिति वाच्यम् । आश्रयाश्रयिभावविषयकव्यवहारस्य तत्कार्यतया तेन विनाऽनुपपत्त्या कार्येण व्यवहारेणैव तत्प्रत्ययस्य सिद्धिसंभवात्कथं हेत्वसिद्धिरित्याशङ्कते **इहेति ।** भवेदेतदेवं यद्याश्रयाश्रयिभावव्यवहारस्य तत्प्रत्ययपूर्वकत्वं स्यात् । न चैतदस्ति । समवायास्तित्वयोराश्रयाश्रयिभावप्रत्ययाभावेऽप्याश्रयाश्रयिभावव्यवहारदर्शनेन व्यभिचरिततया तेन तत्प्रत्ययासिद्धिरित्याशयेनाह **समवाय इति ।**

**एतज्जनकेति ।** अत्रैतज्जनको यः संयोगस्तस्य भावस्तत्त्वं तद्रहितो यः सम्बन्धः तज्जन्य इति साध्यार्थः ॥ अत्र चेह कुण्डे बदराणीति प्रत्ययजनककुण्डबदरसंबन्धस्य संयोगतया संयोगत्वराहित्यस्य तत्राभावेऽपि तस्य पक्षीकृतेहप्रत्ययाजनकत्वेन एतज्जनकत्वरूपविशेषणाभावप्रयुक्तैतज्जनकसंयोगत्वरूपविशिष्टाभाववत्त्वेन एतज्जनकसंयोगत्वरहितसम्बन्धजनकत्वस्येह कुण्डे बदराणीति प्रत्यये सत्त्वाद्युक्तं तस्य दृष्टान्तत्वम् । इह तन्तुषु पट इति पक्षीकृतेहप्रत्ययकारणतन्तुपटसम्बन्धस्यैतत्प्रत्ययजनकत्वेन तत्रैतज्जनकत्वरूपविशेषणाभावप्रयुक्तैतज्जनकसंयोगत्वरूपविशिष्टाभावस्य बाधितत्वाद्धेतोः पक्षधर्मताबलेन संयोगत्वरूपविशेष्याभावप्रयुक्तोक्तरूपविशिष्टाभावस्यैव तत्र वक्तव्यत्वात् एतज्जनकसंयोगत्वरहितसम्बन्धजन्यत्वस्य पक्षे सिद्धौ समवायसिद्धिरिति द्रष्टव्यम् ॥ **व्यभिचार इति ।** विशेषणाभावप्रयुक्तविशिष्टाभाववद्भूतलघटाभावसंयोगरूपसम्बन्धजन्यत्वस्य तत्राभावादिति भावः । न च विशेषणविशेष्योभयाभावप्रयुक्तोक्तविशिष्टाभाववद्विशेषणविशेष्यभावरूपसम्बन्धजन्यत्वस्य तत्रापि सत्त्वान्न व्यभिचार इति वाच्यम् । विशेषणविशेष्यभावस्य परेण सम्बन्धत्वानभ्युपगमेन तमादाय साध्यसद्भावोपपादनसम्भवात् । अङ्गीकारे वा तेनैवार्थान्तरत्वादित्याशयात् ॥ **चक्षुर्भूतलसंयोगेति ।** तस्याप्येतज्जनकत्वरूपविशेषणाभावप्रयुक्तोक्तविधविशिष्टाभाववत्त्वादिति भावः ॥ **एतज्जनकेति ।** अत्र च पटान्तरोपादानस्य तन्तोस्तन्तुत्वरहितत्वाभावेऽपि तस्यैतज्जनकत्वाभावात् एतज्जनकत्वरूपविशेषणाभावप्रयुक्तैतज्जनकतन्तुत्वरूपविशिष्टाभाववत्त्वान्न दृष्टान्ते साध्यवैकल्यम् । पक्षे चैतज्जनकत्वरूपविशेषणाभावप्रयुक्तविशिष्टाभाववदुपादानजन्यत्वस्य बाधितत्वेन हेतोः पक्षधर्मताबलात्तन्तुत्वरूपविशेष्याभावप्रयुक्तविशिष्टाभाववदुपादानजन्यत्वमादायैव पक्षे साध्यपर्यवसानप्राप्त्या पटस्याप्यतन्तुजन्यत्वसिद्धिप्रसङ्गादित्यर्थः ॥

**तस्य परेणेति ।** संबन्धो हि संबन्धिभ्यां भिन्नस्तादाश्रितः स्वयमेकश्चेति संबन्धलक्षणानाक्रान्तत्वादिति भावः ॥ **मतुबर्थस्येति ।** संबन्धस्येत्यर्थः । रूपादिषु समवायरूपसंबन्धेन सहान्यस्य संबन्धस्याभावात्तत्साधने बाध इति भावः ।

ननु समवायस्य स्वनिर्वाहकत्वेन रूपादीनां घटादिभिर्यः समवायस्तस्यैव समवायेन सह रूपादीनां संबन्धत्वसंभवेन रूपादीनां तद्वत्त्वसंभवान्न बाधितविषयत्वमित्यत आह **समवाय इति ॥ निरस्तमिति ।** 'द्रव्यमेव तथा न किमि'त्यादिनेति शेषः ।

**इदं चक्षुरिति ।** अत्रान्यचक्षुर्जन्यसंबन्धज्ञानस्य संयोगज्ञानत्वेन तद्राहित्यस्य तत्राभावेऽप्येतज्जन्यत्वरूपविशेषणाभावप्रयुक्तैतज्जन्यसंयोगज्ञानत्वरूपविशिष्टाभावसत्त्वान्न दृष्टान्ते साध्यवैकल्यम् । एतच्चक्षुर्जन्यसंबन्धज्ञाने चैतज्जन्यत्वरूपविशेषणस्य सत्त्वेन तदभावप्रयुक्तविशिष्टाभावस्य तत्र बाधितत्वेन हेतोः पक्षधर्मताबलात्संयोगज्ञानत्वरूपविशेष्याभावप्रयुक्तविशिष्टाभावमादायैव साध्यपर्यवसानात्समवायसिद्धिरिति ध्येयम् ॥ **मन्निष्ठेति ।** मन्निष्ठं यत्संयोगज्ञानं तस्य भावस्तत्त्वं तद्रहितं यत्संबन्धज्ञानं तद्वानिति साध्यार्थः । ततश्चात्मान्तरगते संबन्धज्ञाने संयोगज्ञानत्वरूपविशेष्यस्य सत्त्वेन तदभावप्रयुक्तविशिष्टाभावस्य तत्रासंभवेऽपि तस्य मन्निष्ठत्वाभावेन मन्निष्ठत्वरूपविशेषणाभावप्रयुक्तमन्निष्ठसंयोगज्ञानत्वरूपविशिष्टाभावस्य संभवान्न दृष्टान्ते साध्यवैकल्यम् । मन्निष्ठसंबन्धज्ञाने च मन्निष्ठत्वरूपविशेषणसद्भावेन तदभावस्य तत्र बाधितत्वया विशेषणाभावप्रयुक्तोक्तरूपविशिष्टाभावासंभवेऽपि हेतोः पक्षधर्मताबलात्संयोगज्ञानत्वरूपविशेष्याभावप्रयुक्तोक्तविशिष्टाभावमादायैव साध्यपर्यवसानात्समवायसिद्धिरिति द्रष्टव्यम् ॥ **अयं काल इति ।** इदानीन्तनं यत्संयोगज्ञानं तस्य भावस्तत्त्वं तद्रहितं यत्संबन्धज्ञानं तद्वानिति साध्यार्थः । अत्र चान्यकालगतसंबन्धज्ञाने संयोगज्ञानत्वसत्त्वेन तदभावप्रयुक्तोक्तविधविशिष्टाभावासंभवेऽपि तस्येदानीन्तनत्वाभावेनेदानीन्तनत्वरूपविशेषणाभावप्रयुक्तेदानीन्तनसंयोगज्ञानत्वरूपविशिष्टाभावसत्त्वान्न दृष्टान्ते साध्यवैकल्यम् । एतत्कालसंबन्धगतज्ञाने चेदानीन्तनत्वरूपविशेषणसद्भावेन तदभावप्रयुक्तविशिष्टाभावासंभवाद्धेतोः पक्षधर्मताबलात्पक्षे साध्यं सिद्ध्यत्संयोगज्ञानत्वरूपविशेष्याभावप्रयुक्तविशिष्टाभावमादायैव पर्यवस्यतीति संयोगज्ञानत्वरहितसंबन्धज्ञानसिद्ध्या समवायसिद्धिरिति द्रष्टव्यम् । इत्यादीत्यादिपदेनायं देश एतद्देशगतसंयोगज्ञानत्वरहितसंबन्धज्ञानवान्देशत्वाद्देशान्तरवदित्यादिपरिग्रहः ॥ **आभाससमानयोगक्षेमत्वादिति ।** इदं चक्षुरेतज्जन्यसंयोगसमवायज्ञानत्वरहितसंबन्धज्ञानजनकं चक्षुष्ट्वादन्यचक्षुर्वत् । अहं मन्निष्ठसंयोगसमवायज्ञानत्वरहितसंबन्धज्ञानवानात्मत्वादात्मान्तरवत् । अयं काल इदानीन्तनसंयोगसमवायज्ञानत्वरहितसंबन्धज्ञानवान्कालत्वादन्यकालवदित्यादिरूपेणापि प्रयोक्तुं शक्यत्वादुक्तविधया समवायस्येव संयोगसमवायभिन्नस्य तृतीयस्यापि संबन्धस्य सिद्धिः स्यादित्यर्थः ॥ **विशेषणेति ।** एतज्जन्यसंयोगज्ञानत्वरहितसंबन्धज्ञानजनकत्वसिद्धावपि न समवायः सिध्यति । तादृशविशेषणविशेष्यभावादिरूपसंबन्धज्ञानजनकत्वेनापि प्रतिज्ञार्थपर्यवसानादिति भावः । न चाद्विष्ठत्वेन तेषामसंबन्धत्वान्न

तज्ज्ञानजनकत्वेन प्रतिज्ञार्थोपपत्तिरिति वाच्यम् । संयोगस्याप्यद्विष्ठतया वक्ष्यमाणत्वेन द्विष्ठत्वस्य संबन्धत्वसाधकत्वाभावादित्याशयात् ।

भवेत्संयोगत्वस्य संयोगान्तराद्व्यावृत्ततया सिद्धसाधनम् । यदि संयोगत्वस्य प्रतिव्यक्ति भिन्नत्वमेव भवेत् । न चैतदस्ति । तत्कथं सिद्धसाधनमित्यत उक्तं **जातेरिति** ॥ **वक्ष्यमाणत्वेनेति** । 'नरत्वादिकमप्येवं तत्तद्धर्मतयेयते' इत्यादिनेति शेषः । वस्तुगतिमनुरुध्य चैतदुक्तम् । वस्तुतस्तु जातेः प्रतिव्यक्तिनियतत्वानङ्गीकारेऽपि नास्माकं काचित्क्षतिः ॥ तावता संयोगत्वस्य संयोगान्तरादव्यावृत्तत्वप्रसक्तावपि विशेषणविशेष्यभावादिरूपसंबन्धव्यावृत्ततया सिद्धसाधनताऽनिस्तारादित्याशयेनाह **विशेषणेति** । मृदन्तरस्यैतद्धटसंयोगित्वात्सिद्धसाधनमित्यत उक्तं **विवादाध्यासितेति** । एतद्घटारम्भिकेत्यर्थः । किमत्र घटसंबद्धत्वमात्रं साध्यं किंवैतद्घटसंबद्धत्वमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **घटन्तरेति** ॥ द्वितीयं दूषयति **एतद्धटेति** ॥ **परम्परेति** । एतद्धटसंयुक्तभूतलसंयुक्तत्वात्तद्व्यस्यैतद्धटेन परम्परासंबन्ध इत्यर्थः । सिद्धसाधनत्वमेवोपपादयति **मृदिति** ।

**साध्यवैकल्यादिति** । एतदनुमानात्पूर्वं समवायासिद्धेरजन्यसंयोगस्य चानङ्गीकारादाकाशे नित्यसम्बन्धसम्बद्धत्वासिद्धेरिति भावः ।

संयोगस्य सम्बन्धत्वात्तस्मिन्सम्बन्धभिन्नत्वं बाधितमित्यतः स्वव्यतिरिक्तत्वेन संबन्धविशेषणं कृतम् । स्वव्यतिरिक्ताद्भिन्नत्वमात्रसाधने च न समवायसिद्धिरित्यत उक्तं **संबन्धेति** ॥ **एकस्येति** । पक्षीकृतसंयोगस्येत्यर्थः । **संयोगान्तरात्** स्वान्योन्याभाववत्संयोगात् । ननु संयोगत्वरहितत्वमेव संबन्धस्य स्वव्यतिरिक्तत्वं विवक्ष्यते । ततश्च संयोगान्तरस्य पक्षीकृतसंयोगान्योन्याभाववत्त्वेऽपि स्वस्यापि संयोगत्वान्न संयोगत्वरहितत्वमस्तीति पक्षीभूतसंयोगस्य संयोगत्वरहितसंबन्धभेदासिद्धेर्न सिद्धसाधनमित्यत आह **संयोगत्वेति** ॥ **अप्रसिद्धेति** । एतदनुमानप्रवृत्तेः पूर्वं संयोगत्वरहितसंबन्धस्यासिद्धत्वात्तद्भेदाप्रसिद्धेरिति भावः । ननु च संयोगत्वरहितसंबन्धस्य विशेषणविशेष्यभावादिरूपस्यैतदनुमानात्प्रागपि सिद्धेर्नाप्रसिद्धविशेषणतेत्यत आह **विशेषणेति** ।

**एतदन्येति** । एतदन्यो यः संयोगस्तस्य भावस्तत्त्वं तद्रहितो यः संबन्धस्तदन्य इति साध्यार्थः । अत्र चैतदन्यत्वरूपविशेषणाभावप्रयुक्तैतदन्यसंयोगत्वरूपविशिष्टाभाववत्पक्षीभूतसंयोगान्यत्वस्य घटे सत्त्वाद्युक्तं तस्य दृष्टान्तत्वम् । एतदन्यत्वरूपविशेषणाभावप्रयुक्तैतदन्यसंयोगत्वरूपविशिष्टाभावस्य पक्षीभूतसंयोगमात्रनिष्ठत्वेन तदन्यत्वरूपसाध्यस्य तत्र बाधितत्वेन हेतोः पक्षधर्मताबलात्संयोगत्वरूपविशेषणाभावप्रयुक्तोक्तविशिष्टाभाववद्यत्किञ्चित्सम्बन्धमादायैव तदन्यत्वरूपसाध्यस्य पक्षे सिद्धिरिति समवायसिद्धिरिति द्रष्टव्यम् ॥ **आभाससमानयोगक्षेमत्वादिति** । इमौ संयोगसमवायावेतदन्यसंयोग-

समवायत्वरहितसंबन्धान्यौ मेयत्वाद्घटवदित्यपि प्रयोक्तुं शक्यत्वादेतदुभयविलक्षणसंबन्धस्यापि सिद्धिप्रसङ्गादित्यर्थः ।

**स०— एतज्जनकेति** । एतज्जनकत्वे सति यत्संयोगत्वं तद्रहितो यः संबन्धः तज्जन्य इत्यर्थः । एतच्छब्देन पक्षीभूतस्य तन्तुषु पट इति प्रत्ययस्यैव परामर्शः। तथोत्तरत्रापि। अत्र एतज्जनकत्वरूपविशेषणाभावप्रयुक्तः एतज्जनकसंयोगत्वरूपविशिष्टस्याभावः इह कुण्डे बदराणीति प्रत्ययजनकसंयोगरूपसंबन्धे अस्तीति दृष्टान्ते साध्यपर्यवसानम् । पक्षीभूततन्तुषु पट इत्याकारप्रत्ययजनकसंबन्धे एतज्जनकत्वरूपविशेषणसद्भावेन तदभावप्रयुक्तविशिष्टाभावस्यानुपपत्त्या संयोगत्वरूपविशेष्याभावप्रयुक्तस्यैव तस्य वाच्यत्वात् संयोगत्वरहितसंबंधसिद्धौ समवायसिद्धिरिति भावः । **निरस्तं** 'द्रव्यमेव तथा न किमि'त्यादिनेति शेषः । **इदं चक्षुरिति** । अत्र एतज्जन्यत्वे सति संयोगज्ञानत्वरूपविशिष्टस्याभावः दृष्टान्तीकृतेऽन्यचक्षुषि एतज्जन्यत्वरूपविशेषणाभावप्रयुक्तः । पक्षे तु एतज्जन्यत्वरहितसंबन्धज्ञानजन्यत्वानुपपत्त्या संयोगज्ञानत्वरूपविशेष्याभावप्रयुक्त इति द्रष्टव्यम् । एवमेवोत्तरव्यतिरेकेष्वपि विशिष्टव्यतिरेको द्रष्टव्यः । **आभाससमानयोगक्षेमत्वादिति** । अयं पटः एतज्जनकतन्तुत्वरहितोपादानजन्यः पटत्वात् पटान्तरवदित्याभाससमानयोगक्षेमत्वादित्यर्थः । **एतदन्येति** । एतदन्यत्वे सति यत्संयोगत्वं तद्रहितो यः संबन्धः तस्मादन्य इत्यर्थः । अत्र चैतदन्यत्वरूपविशेषणाभावप्रयुक्तैतदन्यसंयोगत्वरूपविशिष्टाभाववत्पक्षीभूतसंयोगान्यत्वस्य घटे सत्त्वात् युक्तं दृष्टान्तत्वम् । एतदन्यत्वरूपविशेषणाभावप्रयुक्तैतदन्यसंयोगत्वरूपविशिष्टाभावस्य पक्षीभूतसंयोगमात्रनिष्ठत्वेन तदन्यत्वरूपसाध्यस्य तत्र बाधितत्वेन हेतोः पक्षधर्मताबलात् संयोगत्वरूपविशेष्याभावप्रयुक्तविशिष्टाभाववत् संबन्धान्तरमादायैव तदन्यत्वरूपसाध्यस्य पक्षे सिद्धेः समवायसिद्धिरिति भावः । **आभासेति** । इमौ संयोगसमवायौ एतदन्यसंयोगत्वसमवायत्वरहितसंबन्धान्यौ मेयत्वात् घटवदित्यपि प्रयोक्तुं शक्यत्वादुभयविलक्षणसंबन्धान्तरमपि सिद्ध्येदिति भावः ।

**प०—** इह तन्तुषु पट इति प्रत्ययः संबन्धपूर्वकः अबाधितेहप्रत्ययत्वादित्यनुमानमाशङ्क्य निराह **नापीति** ॥ **दूषितत्वादिति** । इह तन्तुपटयोः समवाय इति प्रत्यये व्यभिचाराद्युक्त्या दूषितत्वादिति भावः ॥ **इह भूतल इति** । भूतलघटाभावप्रत्यये अबाधितेहप्रत्ययत्वरूपहेतुसत्त्वेऽपि भूतलघटाभावयोः संबन्धान्तराभावादिति भावः ॥ **अभाववदिति** । संबन्धान्तराभावेऽप्यभावे इहेति प्रत्ययवदिह तन्तुषु पटः इह पटे रूपमिह मूर्ते क्रिया इत्यादिप्रत्ययोपपत्तावुक्तसंबन्धपूर्वकत्वसाध्येन विनोक्तहेतोः सिद्धत्वेनाप्रयोजकत्वमित्यर्थः ॥ **इह घट इति** । भावमात्रविषयत्वेन हेतुविशेषणेपीति योज्यम् ॥ **बाधितोयमिति** । तथा च विवक्षितहेतोरभावान्न व्यभिचार इति भावः ॥ **अन्यथा प्रत्ययेति** । नेह घटे ज्ञानमिति विपरीतबुद्धेरभावात्तदधीनत्वाद्बाधितत्वनिश्चयस्येति भावः ॥ **जात्यादीति** ।

ब्राह्मणोऽयं शुक्लः पट इत्यादि व्यवहार इत्यर्थः । अभाववद्भूतलं नीलं नभ इत्यादिव्यवहारे निर्विकल्पकव्यवहारे चान्यभिचाराय क्रमाद्विशेषणत्रयम् ॥ ज्ञात इति । ज्ञानविशेषणकघटविशेष्यकादिव्यवहारे स्वरूपसंबन्धान्यसंबन्धाभावादिति भावः ॥ तत्प्रत्ययादिति । आश्रयाश्रयिभावप्रत्ययात्तत्सिद्धिरित्यर्थः ॥ **भूतलविशेषणं ज्ञान इति** । ज्ञातं भूतलमित्यादिव्यवहारसिद्धम् इति योज्यम् ॥ **एतज्जनकेति** । इह तन्तुषु पट इति प्रत्ययजनको यः संयोगः चक्षुःसंयोगः तत्त्वरहितो यःसंबन्धः तज्जन्य इत्यर्थः । चक्षुस्संयोगेनार्थान्तरनिरासाय रहितान्तं विशेषणम् । अन्यजनकसंयोगत्वरहितैतज्जनकसंयोगेनार्थान्तरनिरासायैतज्जनकेति सयोगविशेषणम् । दृष्टान्ते एतज्जनकभिन्नसंयोगान्तरजन्यत्वात्साध्यानुगमः ॥ **इत्याभासेति** । तत्र तन्तुत्वहीनवस्तुसमवायिकारणत्वस्यानिष्टस्यापि साध्यतापत्तेर्नेदमनुमानमपि युक्तमित्यर्थः ॥ **मतुबर्थस्येति** । संबन्धवन्त इति साध्ये मतुबर्थस्य संबन्धघटितत्वात्तस्य च तत्राभावादिति भावः ।

ननु रूपादिसंबन्धस्य समवायत्वेपि तस्य स्वनिर्वाहकत्वान्न मत्वर्थो बाधित इत्यत आह **समवाय इति** । 'स स्वनिर्वाहकश्चेत्स्याद्द्रव्यमेव तथा न किमि'त्येतद्व्याख्यावसरे निरस्तमित्यर्थः ॥ **इदं चक्षुरिति** । बुद्धिस्थं चैत्रीयं चक्षुरित्यर्थः । एतज्जन्यं यत्संयोगविषयकज्ञानं तत्त्वरहितं यत्संबन्धज्ञानं तज्जनकमित्यर्थः । संयोगज्ञानजनकत्वेनार्थान्तरवारणाय रहितान्तं विशेषणम् । अन्यजन्यसंयोगज्ञानत्वराहित्येनार्थान्तरनिरासायैतज्जन्येति ॥ **अन्यचक्षुर्वदिति** । मैत्रीयचक्षुर्वदित्यर्थः । चैत्रीयचक्षुर्जन्यसंयोगज्ञानभिन्नसंयोगज्ञानजनकत्वेन तत्र साध्यानुगमो ध्येयः । अहमिति पक्षः । मन्निष्ठं यत्संयोगज्ञानं तत्त्वरहितं यत्संबन्धज्ञानं तद्वानित्यर्थः । अत्रापि पूर्ववत्साध्यपदकृत्यं दृष्टान्ते साध्यानुगमश्च ज्ञेयः ॥ **आभाससमानेति** इदं चक्षुरेतज्जन्यरूपवद्घटज्ञानत्वरहितघटज्ञानजनकम् चक्षुष्ट्वादन्यचक्षुर्वत् । अहं मन्निष्ठरूपवद्घटज्ञानत्वरहितघटज्ञानवान् आत्मत्वात् । आत्मान्तरवत् । अयं कालः इदानीन्तनरूपरसगन्धवद्घटज्ञानत्वरहितघटज्ञानवान् कालत्वादन्यकालवत् इत्यादिभी रूपरसादिहीनचक्षुर्ग्राह्यघटादिसाधकैराभासैः समानयोगक्षेमत्वादित्यर्थः । न च तेषु तादृशघटादेरभावाद्बाध इति चेत्तत्प्रयोगेपि तथैवेति साम्याद्विपक्षे बाधकाभावेनाप्रयोजकत्वमित्यस्यापि साम्यादिति भावः ॥ **विशेषणविशेष्यभावादिनेति** । आदिपदेन स्वस्वामिभावः जगदाधारताप्रयोजकत्वस्वरूपसंबन्धादिश्च ग्राह्यः । सिद्धसाधनमित्युक्तं व्यनक्ति **जातेरिति** । 'नरत्वादिकमप्येवं तत्तद्धर्मतयेयते'इत्यत्र वक्ष्यमाणत्वेनेत्यर्थः । मृदित्यन्तं पक्षः । घटसबद्धेति साध्यम् ॥ **परंपरेति** । एतद्घटसंबद्धभूतलाकाशात्मादिसंबन्ध इत्यर्थः ।

**एतदन्येति** । एतदन्यो यस्तत्र तत्त्वमस्ति तद्रहितो यः संबंधः तदन्य इत्यर्थः । एतदन्यसंयोगत्वरहितसंबंधः पक्षीकृतसंयोगो भवति । दृष्टान्ते पक्षीकृतसंयोगादन्यत्वेन साध्यानुगमः । पक्षे च स्वान्यत्वस्य स्वस्मिन्बाधात्तदन्यसंबंधान्यत्वेन पर्यवसानात्समवायसिद्धिरिति भावः ॥ आभाससमान-

**योगक्षेमत्वादिति ।** चैत्रीयो घटः एतदन्यघटत्वरहितघटादन्यः, चैत्रात्मा एतदन्यात्मत्वरहितात्मान्यः मेयत्वात्पटवत् मैत्रवत् इत्याभाससमानेत्यर्थः । एवं नवीनोत्प्रेक्षितानुमानांतरनिरासस्तु तर्कतांडवे प्रथमपरिच्छेदे ध्येयः ॥ **॥ समवायेऽनुमाननिरासः ॥**

**या० — बाधित इति ।** तथा च बाधितहप्रत्ययत्वरूपहेतोरभावान्न व्यभिचार इति भावः ॥ **अन्यथाप्रत्ययेति ।** बाधकप्रत्ययेत्यर्थः ॥ **एतज्जनकेति ।** अत्र सम्बन्धजन्य इत्येवोक्ते समवायासिद्ध्याऽर्थान्तरता स्यादतः संयोगत्वरहितेति सम्बन्धविशेषणम् । तावत्युक्ते कुण्डबदरसम्बन्धे संयोगत्वराहित्याभावेन साध्यवैकल्यमत एतज्जनकेति संयोगविशेषणम् । तथा चैतज्जनको यः संयोगः, तत्त्वराहित्यमेतज्जनकत्वरूपविशेषणाभावेन कुण्डबदरसम्बन्धेऽस्तीति न साध्यवैकल्यम् । तन्तुपटसम्बन्धे चैतज्जनकत्वरूपविशेषणस्य सत्त्वात्संयोगत्वाभावेनैव साध्यपर्यवसाने समवायसिद्धिरिति द्रष्टव्यम् । **मतुबर्थस्येति ।** सम्बन्धस्येति शेषः । समवायेऽतिरिक्तसम्बन्धाभावादिति भावः ॥ **इदं चक्षुरिति ।** अत्र सम्बन्धज्ञानजनकमित्येवोक्ते संयोगज्ञानजनकत्वेन सिद्धसाध्यताऽतः संयोगज्ञानत्वरहितेति सम्बन्धज्ञानविशेषणम् । दृष्टान्ते साध्यवैकल्यपरिहारायैतज्जन्येति संयोगज्ञानविशेषणम् । तथा चान्यचक्षुर्जन्यसम्बन्धज्ञाने संयोगज्ञानत्वसत्त्वेऽप्येतज्जन्यत्वरूपविशेषणाभावेन विशिष्टाभावसत्त्वान्न साध्यवैकल्यम् । एतच्चक्षुर्जन्यसम्बन्धज्ञाने चैतज्जन्यत्वरूपविशेषणस्य सत्त्वात्संयोगज्ञानत्वराहित्यमादायैव साध्यपर्यवसाने समवायसिद्धिरिति द्रष्टव्यम् । अहं मन्निष्ठेत्यत्रापि सिद्धसाध्यतावारणाय संयोगज्ञानत्वरहितेति सम्बन्धज्ञानविशेषणम् । साध्यवैकल्यवारणाय मन्निष्ठेति संयोगज्ञानविशेषणम् । एवं चात्मान्तरगते सम्बन्धज्ञाने संयोगज्ञानत्वसत्त्वेऽपि मन्निष्ठत्वरूपविशेषणाभावेन विशिष्टाभावसत्त्वान्न दृष्टान्ते साध्यवैकल्यम् । मदीयसम्बन्धज्ञाने च मन्निष्ठत्वरूपविशेषणस्य सत्त्वात्संयोगज्ञानत्वराहित्यमादायैव साध्यपर्यवसाने समवायसिद्धिरिति ज्ञातव्यम् । **एवमयं काल** इत्यत्रापि सिद्धसाध्यतावारणाय संयोगज्ञानत्वरहितेति सम्बन्धज्ञानविशेषणम् । साध्यवैकल्यपरिहाराय चेदानीन्तनेति संयोगज्ञानविशेषणम् । एवं चान्यकालगतसम्बन्धज्ञाने संयोगज्ञानत्वसत्त्वेऽपि इदानीन्तनत्वरूपविशेषणाभावेन विशिष्टाभावसत्त्वान्न साध्यवैकल्यम् । एतत्कालीनसम्बन्धज्ञाने चेदानीन्तनत्वरूपविशेषणस्य सत्त्वात्संयोगज्ञानत्वराहित्यमादायैव साध्यपर्यवसाने समवायसिद्धिरिति ज्ञातव्यम् ॥ **आभाससमानेति ।** इदं चक्षुरेतज्जन्यसंयोगसमवायज्ञानत्वरहितसम्बन्धज्ञानजनकमित्यादिरूपेणापि प्रयोक्तुं शक्यत्वेन तृतीयस्यापि सम्बन्धस्य तेन सिद्धिप्रसङ्गादित्यर्थः । अयं पट एतज्जनकतन्तुत्वरहितोपादानजन्यः पटत्वात्पटान्तरवदित्याभाससमानयोगक्षेमत्वादित्यर्थ इत्यप्याहुः ॥ **स्वव्यतिरिक्तेति ।** अत्र संयोगे सम्बन्धभिन्नत्वाभावेन बाधप्रसक्तौ तद्वारणाय स्वव्यतिरिक्तेति विशेषणमिति ज्ञातव्यम् ॥ **अयं संयोग इति ।** अत्र साध्ये

संयोगान्तरान्यत्वमादायार्थान्तरतावारणाय संयोगत्वरहितेति सम्बन्धविशेषणम् । दृष्टान्ते साध्यवैकल्य-परिहाराय एतदन्येति संयोगविशेषणम् । तथा चैतदन्यो यः संयोगत्वरहितः सम्बन्धः पक्षीकृत एव संयोगस्तद्भिन्नत्वमादाय दृष्टान्ते साध्यसत्त्वान्न साध्यवैकल्यम् । पक्षे च स्वान्यत्वस्य स्वस्मिन्बाधितत्वा-त्संयोगत्वरहितसंबन्धान्तरान्यत्वमादायैव साध्यपर्यवसाने समवायसिद्धिरिति ज्ञातव्यम् ।। **अभासेति** । इमौ संयोगसमवायौ एतदन्यसंयोगसमवायत्वरहितसंबन्धान्यौ संबन्धत्वाद्घटवदित्यपि प्रयोक्तुं शक्यत्वेन तृतीयस्यापि संबन्धस्य सिद्धिप्रसङ्गादित्यर्थः ।

श्री० — **नाप्यनुमानं** तन्तुपटसम्बन्धस्य सम्बन्धपूर्वकत्वसाधकमिति शेषः । **इहेदमितिप्रत्यय-स्येति** । अतिरिक्तसम्बन्धपूर्वकत्वसाधकाबाधितेहप्रत्ययत्वस्येत्यर्थः ॥ **दूषितत्वादिति** । इह तन्तुपटयोः समवाय इत्यत्र व्यभिचारेणेत्यर्थः ॥ **अभाववदिति** । इह भूतले घटो नेत्यत्रेहप्रत्ययो यथाऽतिरिक्तस-म्बन्धपूर्वकत्वाभावेऽपि स्वरूपसम्बन्धेनान्यथासिद्धः तथा भावेऽप्यस्त्वित्यप्रयोजकत्वरूपान्यथासिद्धिरि-त्यर्थः । स्वरूपासिद्धिर्नेत्याशङ्कते **इह तन्तुष्विति** । अनेनाश्रयत्वं प्रतीयते । अयं पट इत्याश्रितत्वं प्रती-यत इति नोक्तानुमानद्वये स्वरूपासिद्धिरित्यर्थः ॥ **तदिति** । आश्रयत्वाश्रितत्वेत्यर्थः । **तत्सिद्धिः** आश्रय-त्वाश्रितत्वरूपहेत्वोः सिद्धिः । **भूतलविशेषणे** भूतलं प्रति विशेषणे । तथा च ज्ञातं भूतलमित्यत्र व्यभि-चारो ज्ञानस्यात्मसम्बन्धित्वेन भूतलसंबन्धित्वाभावादित्यर्थः ॥ **समवायाभावयोरिति** । समवायेऽद्रव्यत्वध-र्मयोरभावभूतलयोश्चेति योज्यम् । साध्यस्यापि सत्त्वान्न व्यभिचार इत्याशङ्कते **तत्रापीति** ॥ **तस्येति** । सम्बन्धिभिन्नत्वघटितत्वलक्षणाभावादिति भावः । ननु सम्बन्धवन्त इत्यत्र मतुबर्थः सम्बन्धः स्वयं समवाय एवेत्याशङ्क्याह **समवाय इति** । **निरस्तं** 'स स्वनिर्वाहकश्चेत्स्यादि'त्यनेनेत्यर्थः । **व्यावृत्तेश्चेति** । ततश्चा-र्थान्तरतेत्यर्थः । एतद्घटसम्बन्धमलब्ध्वा स्थितेऽपि घटे एतद्घटसम्बन्धयोग्यता वर्तत एवेति न व्यभिचार इत्यतो योग्यताया अप्यभावं सूचयितुं विनष्ट इत्युक्तम् । नन्वेतद्घटसम्बद्धमलब्ध्वेत्ययुक्तम् । तत्स्थितिदशाया-मेतद्घटसम्बन्धभूतलसम्बन्धसत्त्वेन परम्परासम्बन्धस्य सत्त्वादिति शङ्कते **तत्रापीति** ॥ **मृदिति** । मृत्संयु-क्तभूतलस्य घटसम्बद्धत्वान्मृद्घटसम्बद्धेत्युच्यत इति सिद्धसाधनतेत्यर्थः ॥ **साध्येति** । अजसंयोगमादाया-काशे कालादिना सम्बद्धत्वमस्तीति शङ्कितुर्हृदयम् । साध्यवैकल्यं दातुश्चाजसंयोगो नास्तीति । **संयोग-त्वेति** । स्वातिरिक्तेति स्थाने एतद्विशेषणदाने इत्यर्थः ॥ **तदिति** । अप्रसिद्धविशेषणतेत्यर्थः ॥

च० — **व्यभिचाराच्चेति** । नैयायिकाभिमतविशेषणविशेष्यभावस्य तदुभयस्वरूपानतिरिक्त-त्वादिति भावः । **अन्यथासिद्धेः** साध्यमन्तरेणापि हेतुसत्त्वोपपत्तेः । **अन्यथाप्रत्ययेति** । नेह घटे ज्ञानमिति बाधकप्रत्ययेत्यर्थः । **एतज्जनकेति** । साध्यशरीरे रहितान्तानुपादाने समीहितासिद्धिप्रसङ्गेन

तद्विधूननाय तदुपादानम् । निदर्शने साध्यवैकल्यमपहस्तयितुं जनकान्तेन संयोगो विशेषितः । तथा च कुण्डबदरसंयोगे एतज्जनकत्वरूपविशेषणाभावनिबन्धनतद्विशेषितसंयोगत्वराहित्यमक्षतमिति नोक्तक्षतिरिति भाव । पक्षे साध्यसङ्गमनं तु समवायमादायैवेति समं हितसिद्धिरवसेया । **मतुबर्थस्य** समवायप्रतियोगिकसंबन्धान्तरस्य ॥ **इदं चक्षुरिति** । पुरोवर्ति चक्षुरित्यर्थः । समीहितसिद्धिनिरासाय संबन्धज्ञानविशेषणतया रहितान्तं निदर्शने साध्यवैकल्यपरिहाराय संयोगज्ञानविशेषणतयैतज्जन्यान्तमुपात्तम् । अनिदंचक्षुर्जन्यज्ञाने विशेषणाभावनिबन्धनतद्विशेषिताभावसत्त्वात्साध्यसङ्गमनं निदर्शनेऽवसेयम् । पक्षे तु समवायज्ञाने विशेष्याभावनियन्त्रितविशिष्टाभावमादायैव साध्यं सङ्गमनीयमिति समीहितसिद्धिरिति मन्तव्यम् । अनयैव दिशा शिष्टानुमानयोरपि पदप्रयोजनान्यवसेयानि ॥ **आभाससमानेति** । इदं चक्षुरेतज्जन्यसंयोगसमवायज्ञानत्वरहितसंबन्धज्ञानजनकमित्यादिरूपेणापि प्रयोक्तुं सुशकतया तृतीयस्यापि संबन्धस्य सिद्धिः प्रसज्येतेति भावः ॥ **आभाससमानयोगक्षेमत्वादिति** । अयं घट एतदन्यघटत्वरहितघटान्यः, चैत्रात्मा एतदन्यात्मत्वरहितात्मान्यः मेयत्वात्पटवन्मैत्रवदित्याद्याभाससमानेत्यर्थः ॥

**॥ समवायसाधकानुमानानां प्रतिविहितिः ॥**

सु० — **ननूक्तमत्राभेदपक्षोऽपि तर्हि नाङ्गीकार्यो विशेषे प्रमाणाभावादिति तत्राह येनेति ।**

अनु० — येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् ॥
भावाभावविभागेन यं विना न कथञ्चन ॥
एतादृशे विशेषेऽस्मिन्को द्वेषो वादिनां भवेत् ॥

**प्रत्यक्षसिद्धेनेत्यनेन प्रत्यक्षसिद्ध इति लभ्यते । येनाखिलो व्यवहारो भवेत् । यं विना न भवेदित्यन्वयव्यतिरेकाभ्यां विशेषकार्यत्वं व्यवहारस्य दर्शयता व्यवहारान्यथाऽनुपपत्तिश्च विशेषे प्रमाणं तदनङ्गीकारे व्यवहारोच्छेदप्रसङ्गश्चेत्युक्तं भवति । अखिल इत्यस्यैव विवरणं** भावाभावविभागेन **विधिनिषेधभेदेन (इति) । द्विविधस्तावदिति शेषः ।**

**ननु भेदपक्षेऽपि समवायाभ्युपगमेनाखिलोऽपि व्यवहारो घटिष्यते । अत्यन्ताभेदेऽपि** व्यावृत्तिस्वीकारेण **भेदाभेदाभ्यां तु सुतराम् । तत्किं विशेषेणेत्यत उक्तं** कथञ्चनेति ।

एतादृशे **सर्वव्यवहारनिर्वाहहेतौ** को द्वेषः **किन्निमित्ताऽनुपादित्सा । प्रमाणाभावो ह्यनुपादाननिमित्तम् । सति प्रमाणे नानुपादाननिमित्तमस्तीत्यर्थः । मा भूद्व्यवहार इत्यत उक्तं** वादिनामिति । **उपलक्षणं चैतत् । ज्ञातॄणां चेत्यपि द्रष्टव्यम् । विशिष्टविषयाभिज्ञाभिवदनलक्षणो ह्यत्र व्यवहारः प्रकृतः ।**

**शे०** — एवमभेदपक्षानङ्गीकारोपपादकविशेषाप्रामाणिकत्वशङ्कामुत्थापयितुं तत्प्रसञ्जकतया भेदपक्षानङ्गीकारोपपादकसमवायाप्रामाणिकतामुपपाद्य इदानीं तत्प्रसञ्जितां विशेषाप्रामाणिकत्वशङ्कामुत्थाप्य तत्परिहारकतयोत्तरग्रन्थं योजयति **नन्विति** ॥ **प्रमाणाभावादिति** । अपर्यायव्यवहारादेर्घटपटादावनैकान्तिकत्वेन तत्राप्रमाणत्वादन्यस्य च तस्याभावादिति भावः । ननु येन व्यवहारो भवेद्यं विना न भवेदित्येतावन्मात्रेणैव व्यवहारस्यान्वयव्यतिरेकाभ्यां विशेषकार्यतासिद्धेः प्रत्यक्षसिद्धेनेत्यस्य वैयर्थ्यं, तदप्रामाणिकत्वं शङ्कमानं प्रति प्रत्यक्षसिद्धत्वस्यासिद्धया प्रत्यक्षसिद्धेनेत्यनुवादानुपपत्तिश्चेत्यतोऽस्य विशेषे प्रमाणान्तरोपदर्शकत्वान्न वैयर्थ्यम् । प्रत्यक्षसिद्धत्वविधौ तात्पर्येणानुवादत्वाभावान्न तदनुपपत्तिरपीति भावेन तदुपदर्शयति **प्रत्यक्षसिद्धेनेत्यनेनेति** । ननु तथापि विशेषस्याप्रामाणिकत्वं शङ्कमानं प्रति तत्र प्रमाणस्यैव वक्तव्यतया व्यवहारविशेषयोरन्वयव्यतिरेकाभ्यां कार्यकारणभावव्युत्पादनमनर्थकमित्यतो विशेषसद्भावे व्यवहारान्यथाऽनुपपत्तिरूपप्रमाणस्य तदनङ्गीकारे व्यवहारोच्छेदरूपबाधकस्य च कथनार्थत्वान्नानर्थक्यमित्यभिप्रेत्य तत्तात्पर्यमाह **येनेत्यादिना** । अखिल इत्यनेन गतार्थत्वाद्भावाभावविभागेनेत्यस्य वैयर्थ्यमित्याशङ्क्य तद्व्याख्यानार्थत्वान्न तदित्याशयेनाह **अखिल इत्यस्यैवेति** । भावाभावविभागेनेत्यस्य व्याख्यानं **विधीति** । शुक्लः पट इत्यादिर्विधिव्यवहारो घटः, पटो नेत्यादिः निषेधव्यवहार इति द्रष्टव्यम् । भावाभावविभागेनेत्यस्य साकाङ्क्षत्वेन वाक्याभासत्वान्नाखिलपदार्थविवरणत्वमित्यतोऽपेक्षितशेषपूरणेन तद्विवरणतां घटयति **द्विविध इति** ।

मूले कथञ्चनेत्यस्य वैयर्थ्यमाशङ्क्य व्यवहारस्यान्यथासिद्धिशङ्कानिरासेन विशेषस्य व्यवहारस्यान्यथाऽनुपपत्तिसिद्धत्वोपपादनार्थत्वान्न तदिति भावेन तत्परतया तद्योजयितुं तत्तद्रादिरीत्या व्यवहारस्यान्यथासिद्धिशङ्कामुत्थापयति **नन्विति** । भेदपक्षे गुणक्रियादेर्द्रव्येणेति शेषः ॥ **अखिलोऽपि व्यवहार इति** । विधिनिषेधभेदेन द्विविधोऽपि व्यवहार इत्यर्थः ॥ **अत्यन्ताभेदेऽपीति** । अत्रापि गुणादेर्द्रव्येणेति शेषः ॥ **व्यावृत्तिस्वीकारेणेति** । अखिलोऽपि व्यवहारो घटिष्यत इत्यनुवर्तते । शुक्लः पट इत्यादौ शुक्लादिशब्दानां विधिवाचित्वे, विधीयमानानां शुक्लत्वादीनां पटादिद्रव्येणात्यन्ताभिन्नत्वेन पटादिद्रव्येऽभावात्स्वरूपमात्रस्यैकत्वात्पर्यायत्वं स्यात् । न चैवम् । अशुक्लत्वाद्यपोहवाचित्वात् । न चैवं सति वैयर्थ्यम् । पटादिद्रव्येऽशुक्लत्वादिविशेषणानां भ्रान्तिकल्पितत्वेन तन्निवारणार्थत्वात् । नापि शुक्लपदमशुक्लत्वस्येव तत्रारोपितस्याकारान्तरस्यापोहं वक्ति । येनैकेनैवालमिति स्यात् । तस्मान्न पर्यायत्वं वैयर्थ्यं चेत्याशयः । एतच्च तृतीयस्य द्वितीयेऽखण्डार्थतावादे आकर एव स्पष्टम् ॥ **भेदाभेदाभ्यामिति** अत्रापि पूर्ववच्छेषोऽनुवृत्तिश्च ।

मूले एतादृश इत्यस्यानर्थक्यामाशङ्क्य को द्वेषो भवेदित्युक्तार्थे हेतुसूचकत्वान्न तदिति भावेन तत्रापेक्षितहेतुसूचकतया तद्याचष्टे **एतादृश इति** । को द्वेष इत्यस्य प्रसिद्धार्थतायाः प्रकृतानुपयोगात्प्रकृतोपयुक्तमर्थमाह **को द्वेष इत्यादि** । व्यवहारनिर्वाहहेतुत्वस्यानुपादित्साऽयोगे कथं हेतुत्वमित्यतस्तन्निमित्तभूतप्रमाणाभावस्यासिद्धिघटकत्वात्तस्य तत्र हेतुत्वमिति भावेन तदुपपादयति **प्रमाणाभाव इति** । तथाऽपि वादिनामित्यनर्थकमित्याशङ्क्य विशेषानङ्गीकारे बाधकतयाऽभिप्रेतस्य व्यवहारोच्छेदप्रसङ्गस्येष्टापादनतयाऽऽभासताशंकानिवारणार्थत्वान्न तदिति भावेनेष्टापत्तिशङ्कानिरासकत्वेन तद्योजयितुं तच्छङ्कामुत्थापयति **मा भूदिति** । ज्ञातॄणां चेत्यस्योपलक्षणतया वादिशब्देन संग्रहातायां निमित्ताह **विशिष्टविषयेति** ॥ **प्रकृत इति** । उभयविधस्यापि तस्य विशेषान्वयव्यतिरेकानुविधायित्वेन तत्कार्यतया तत्साधकत्वेनेत्यर्थः ॥

**स०—** **अत्यन्ताभेदेऽपि व्यावृत्तिस्वीकारेण** इत्यस्य विवरणं 'सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनम्' इत्येतद्व्याख्याव्याख्यानावसरे स्पष्टम् ।

**प०—** प्रमाणाभावादिति वदन्तं प्रति प्रत्यक्षसिद्धेनेति कथमनुवाद इत्यत आह **इत्यनेनेति** । उपपादयिष्यते चैतदभेदेनेति श्लोके ॥ **विधिनिषेधेति** । शुक्लः पटो, घटः पटो नेत्येवंरूपेणेत्यर्थः । सामान्यादिपदार्थेषु इत्यादौ वक्ष्यमाणव्यवहारान्तरापेक्षया तावच्छब्दः ॥ **व्यावृत्तीति** । अन्यापोहस्वीकारेणेत्यर्थः । अखण्डवादे ज्ञानानन्दादेर्ब्रह्माभेदेप्यज्ञानदुःखादिव्यावृत्तिमात्रेणासंकीर्णव्यवहारोपगमादेवमुक्तं । 'सत्यज्ञानादिकेप्येवं न व्यावृत्त्या प्रयोजनमि'त्युक्तेः । उपलक्षणे ज्ञापकमाह **विशिष्टविषयेति** । गुणक्रियादिविशिष्टविषयेत्यर्थः ।

**या०—** ननु प्रमाणाभावादित्याशङ्कायां प्रत्यक्षसिद्धत्वस्य विधिरेव सङ्गतो नानुवाद इत्यत आह **प्रत्यक्षसिद्धेनेत्यनेनेति** ॥ **विधिनिषेधभेदेनेति** । अत्र शुक्लः पट इत्यादिर्विधिव्यवहारो, घटः पटो नेत्यादिर्निषेधव्यवहार, इत्यग्रे स्पष्टं भविष्यति ॥ **व्यावृत्तिस्वीकारेणेति** । अतद्व्यावृत्तिबोधस्वीकारेणेत्यर्थः । तथा च यथा सत्यज्ञानादीनां ब्रह्माभेदेऽपि न तद्वाचकपदानां पर्यायत्वादिकम् । तद्बोध्यानामनृतादिव्यावृत्तीनां भिन्नत्वात् । तथा गुणक्रियादीनां द्रव्याभेदेऽपि न तच्छब्दानां पर्यायत्वादिकं तच्छब्दबोध्यातद्व्यावृत्तीनां भिन्नानामेव स्वीकारादित्यर्थः । ननु किमर्थं ज्ञातॄणां चेत्युपलक्षणमित्यत आह **विशिष्टविषयेति** ।

सु० — किञ्चावयवावयव्यादिभेदे प्रमाणाभावाच्च तं परित्यज्याभेदपक्षोऽङ्गीक्रियते । ननूक्तमत्राभेदेऽपि प्रमाणं नास्तीति । तत्राह अभेदेनेति ।

अनु० — अभेदेन प्रतीतिश्च कार्यकारणपूर्वके ॥
अभावान्ते पदार्थेऽस्मिन्सविशेषाऽवसीयते ॥

इहापि कार्यकारणग्रहणेनावयव्यवयवावुच्येते । पूर्वशब्देन गुणगुण्यादिकम् । अभावशब्देनान्योन्याभावो गृह्यते । तस्यैव धर्म्यभिन्नत्वात् । यद्वाऽभावनद्रूपत्वेनेनोपलक्ष्येते । अवसीयते साक्षिणा । तथा हि । तन्तुपटादिविषया बुद्धिरत्यन्तभिन्नघटपटादिविषयबुद्धितो विलक्षणाऽनुव्यवसीयते उताविलक्षणा । न तावद्द्वितीयः । प्रतीत्यपलापानुपपत्तेः । आद्ये कथमभेदप्रतीतिर्नास्तीति शक्यं वक्तुम् । संबन्धेन वि(शे)शिष्यत इति चेन्न । कुण्डबदरप्रतीतितोऽपि वैलक्षण्यानुभवात् । संबन्धिनोरयुतसिद्धत्वात्तथेति चेन्न । आधाराधेयभावेनावस्थानसमये तस्याकिञ्चित्करत्वात् । अतस्तन्तुपटयोः कुण्डबदरयोश्च भेदे संबन्धे च समाने कालान्तरभाविनः संबन्धविनाशादेः संबन्धिविभागादेर्वा प्रत्यक्षप्रतीतिं प्रत्युपयोगा(योगा)भावाद्वैलक्षण्यं नानुभूयेत । अनुभूयते च तन्तुपटादिबुद्धिः कुण्डबदरादिबुद्धेर्विलक्षणेत्यभेदविषयैव साऽवसीयते ।

---

शे० — नन्वभेदेन प्रतीतिश्चेत्युत्तरवाक्येऽवयवावयव्यादीनामभेदवर्णनं क्रियते तदनर्थकम् । न च तद्भेदपक्षपरित्यागेन तदभेदपक्षस्याभ्युपगमनीयतासिद्ध्यर्थं तदिति वाच्यम् । अभेदपक्षे कल्पनालाघवस्य विशेषप्रामाणिकत्वस्य च प्रागुपपादितत्वेन तत एव तत्सिद्ध्या तदर्थं तदभेदप्रामाणिकत्ववर्णनस्यानपेक्षितत्वात् । न चाभेदपक्षे कल्पनागौरवशङ्कया विशेषाप्रामाणिकत्वशङ्कया च प्रसक्तायास्तदभेदस्यानभ्युपगमनीयताशङ्कायास्तेन निरासेऽपि तदभेदस्याप्रामाणिकत्वशङ्काप्रयुक्तायास्तस्यास्तेनानिरासात्तदर्थं तत्प्रामाणिकत्ववर्णनमप्यावश्यकमिति वाच्यम् । प्रसञ्जकाभावेन तदप्रामाणिकत्वशङ्काया एवानुदयेन तत्प्रसञ्जितानभ्युपगमनीयताशङ्कायाः सुतरामनुदयादित्यतोऽत्र मूलेऽभेदेन प्रतीतिश्चेति चशब्दबलेन भेदपक्षानभ्युपगमहेतुतया तदप्रा(मा)णिकत्वोक्तेरपि मध्येऽभिप्रेतत्वात्तस्य । एवं च तदभेदाप्रामाण्यशङ्कायाः प्रसञ्जकत्वेन तच्छङ्कायाः सम्भवात्तत्प्रसञ्जिततदभेदानभ्युपगमनीयताशङ्काया अभ्युदयात्तन्निरासार्थं तदभेदप्रामाणिकत्ववर्णनस्याप्यवश्यकत्वान्नानुपपत्तिरिति भावेनात्राभिप्रेतोक्तिपूरणपूर्वकं तत्प्रसञ्जितावयवावयव्याद्यभेदाप्रामाणिकत्वशङ्कामुत्थाप्य तत्परिहारकतयोत्तरग्रन्थं योजयति किञ्चेत्यादिना ।

दण्डघटादेरभेदप्रतीतेरसम्प्रतिपत्त्या कार्यकारणशब्दयोः कार्यकारणमात्रपरत्वानुपपत्तेस्तदर्थमाह इहापीति । कार्यकारणयोश्चेत्यादिपूर्ववाक्यापेक्षयाऽपिशब्दः । अभावशब्दस्य सामान्यशब्दत्वेन

सर्वपरत्वात्किमिति विशेषपरत्वाश्रयणमित्यत आह तस्यैवेति । प्रागभावादेर्धर्मिविनाशेऽप्यविनाशा-
दिना धर्मिणोऽत्यन्तभिन्नत्वस्यादृश्यत्वाधिकरणे समर्थितत्वादिति भावः ॥ आद्य इति । अभेदविषयत्वेन
विना वैलक्षण्यानुभवस्यानिर्वाहादिति भावः । ननु तन्तुपटादिबुद्धेः संबन्धविषयत्वेनैवानेकविधघट-
पटादिबुद्धितो वैलक्षण्योपपत्तेर्नाभेदविषयत्वमुदाहृतप्रतीतेः कल्पयितुमुचितमिति शङ्कते संबन्धेनेति ।
संबन्धविषयत्वेनोदाहृतप्रतीतेर्घटपटादिबुद्धितो वैलक्षण्यसिद्धावपि तद्विषयककुण्डबदरादिबुद्धितो वैल-
क्षण्यानुपपत्त्या ततो वैलक्षण्यसिद्ध्यर्थमभेदविषयत्वस्यावश्याश्रयणीयत्वान्न संबन्धविषयत्वेन वैलक्षण्य-
मुपपादनीयमित्याशयेन परिहरति कुण्डेति । न च संयोगादन्यसंबन्धविषयत्वेनैव ततोऽपि वैलक्षण्य-
सिद्धिसंभवात्किमभेदविषयत्वाश्रयणेनेति वाच्यम् । घटतदज्ञानतदभावादिबुद्धितो वैलक्षण्यस्य
तावताऽप्यसिद्ध्या तत्सिद्ध्यर्थमभेदविषयताया अवश्यमाश्रयणीयत्वात् । यदि च स्वरूपप्रत्यासत्तिसंयोगा-
न्यसंबन्धविषयत्वेनैवोदाहृतप्रतीतेः सर्ववैलक्षण्यसिद्धेर्नाभेदविषयत्वापेक्षेति मन्यसे तर्हि घटतद्धर्मिका-
न्योन्याभावबुद्धेर्घटपटादिबुद्धितो वैलक्षण्यं न स्यात् । तस्याः स्वरूपप्रत्यासत्तिसंयोगान्यसंबन्धविषय-
त्वाभावादित्याशयात् । ननु तथाऽपि तन्तुपटयोरयुतसिद्धत्वात्कुण्डबदरयोश्च तदभावादयुतसिद्धतन्तुपटा-
दिप्रतीतेर्युतसिद्धकुण्डबदरादिप्रतीतितो वैलक्षण्यस्यायुतसिद्धविषयत्वेन निर्वाहसम्भवान्न तदर्थं तस्या
अभेदविषयत्वं कल्पनीयमित्याशङ्कते संबन्धिनोरिति । आधाराधेयभावेनावस्थानसमये संबन्धविनाशा-
भावरूपस्य वा संबन्धिविभागाभावरूपस्य वाऽयुतसिद्धत्वस्य तन्तुपटयोरिव कुण्डबदरयोरप्यविशिष्टत्वेन
तन्तुपटादिप्रतीतेरिव कुण्डबदरादिप्रतीतेरप्युक्तरूपायुतसिद्धविषयत्वेन तदाश्रयणेनाप्युदाहृतप्रतीतेः
कुण्डबदरादिप्रतीतितो वैलक्षण्यानिर्वाहात्तन्निर्वाहार्थमभेदविषयकत्वकल्पनमावश्यकमित्यभिप्रायेण परिहरति
आधाराधेयभावेनेति । एवं वैलक्षण्यबुद्धेरन्यथोपपत्तिं निरस्य प्रकृततर्कस्य विपर्ययापर्यवसायित्वादाभास-
त्वमित्याशङ्कानिरासाय विपर्ययपर्यवसानं दर्शयन्नेवोपसंहरति अत इति । ननु तन्तुपटादिप्रतीतेः कुण्ड-
बदरादिप्रतीतेश्चाधाराधेयभावसंबन्धेनावस्थानकालानन्तरसम्बन्धिनाशाभावादिविषयकत्वाविशेषेऽपि तन्तु-
पटादिप्रतीतेः कुण्डबदरादिप्रतीतितो वैलक्षण्यं विनाऽप्यभेदविषयकत्वेनोपपद्यते । तन्तुपटयोस्तत्कालेऽपि
संबन्धविनाशाभावस्य संबन्धिविभागाभावस्य च सत्त्वात् । कुण्डबदरयोश्च कालान्तरे संबन्धविनाशस्य
संबन्धिविभागस्य च सत्त्वात् । कालान्तरभाविसम्बन्धविनाशादिविषयककुण्डबदरादिप्रतीत्यपेक्षया
कालान्तरभाविसम्बन्धविनाशाभावादिविषयकतन्तुपटादिबुद्धेर्वैलक्षण्यस्यान्यानपेक्षत्वादित्याशङ्क्य भवेदेवं
यदि कुण्डबदरादिप्रतीतेः कालान्तरभाविसम्बन्धविनाशादिविषयकत्वं तन्तुपटादेश्च तादृशसंबन्धविना-
शाभावादिविषयकत्वमेव स्यात् । न च तदस्ति । कुण्डबदरादिप्रतीतेः कुण्डबदरयोः संबन्धनाशो वा
कुण्डबदरयोर्विभागो वा भविष्यतीत्याकारत्वे कालान्तरभाविसंबन्धविनाशादिविषयकत्वस्य तन्तुपटा-

दिप्रतीतेश्च तन्तुपटसंबन्धविनाशो वा तन्तुपटविभागो वा न भविष्यतीत्याकारत्वे कालान्तरभाविसंबन्ध-विनाशाभावादिविषयकत्वस्य च प्राप्तावपि प्रत्यक्षाया: कुण्डबदरादिप्रतीतेस्तन्तुपटादिबुद्धेश्चेह कुण्डे बदराणि अयं पट इत्येवमाकारतयोक्ताकारत्वासम्भवेनोक्तरीत्या विषयवैलक्षण्यासम्भवेन तदुपपादक-तया ऽभेदविषयकत्वस्यैवावश्याश्रयणीयत्वादिति भावेनोक्तं **कालान्तरभाविन** इत्यादि ।

प० — **इहापीति** । न केवलं कार्यकारणयोश्चैतन्यत्रेत्यपेरर्थः ॥ **कथमभेदप्रतीतिर्ना-स्तीति** । वैलक्षण्यस्य विषयभेदाधीनत्वादिने ति भावः । संबन्धविषयत्वेनायुनर्संबन्धिविषयकत्वेन वाऽस्तु वैलक्षण्यधीरिति क्रममाशङ्क्य निराह **संबन्धेनेति** ॥ **विशे(शि)ष्यते** विलक्षणीक्रियत इत्यर्थः ॥ **आधाराधेयभावेनेति** । कुण्डबदरयोराधाराधेयभावेन यथावस्थानं तथा तन्तुपटयोराधारा-धेयभावेन संबद्धतयावस्थानकाले सतोऽप्ययुतसिद्धत्वस्य तन्तु(त्व)पटत्वादिधर्मस्येव प्रतीतिवैलक्षण्यानापादकत्वादित्यर्थः । ननु तदानीमविशेषेऽपि कालान्तरे कुण्डबदरसंयोगनाशोत्पादो वा संयोगविभागो वा वर्तते न(तन्तुपटादे)तूपादानादेरतोऽस्तु प्रतीतिवैलक्षण्यमित्याशङ्कां परिहरन्पर्यवसानमाह **अत इति** । तस्यैव विवरणं **उपयोगायोगादित्यन्तम्** ॥ **संबन्धे चेति** । आधाराधेयभावेनावस्थाने चेत्यपि ग्राह्यम् ।

या० — **आधाराधेयेति** ॥ उभयत्राप्याधाराधेयभावेनावस्थानसमये संयोगनाशाभावरूपस्य विभागाभावरूपस्य वाऽयुतसिद्धत्वस्याविशेषेण प्रतीतिवैलक्षण्यानुपपादकत्वादित्यर्थः । नन्विदानीमविशेषेऽपि कालान्तरे कुण्डबदरयोः संयोगनाशादिरूपं युतसिद्धत्वं भविष्यति न तन्तुपटादौ अतः प्रतीतिवैलक्षण्यमुपपद्यत इत्याशङ्कामपाकुर्वन्नुपसंहरति **अत इति** ।

श्री० — **अनेनेति** । अभावशब्देनाभावस्तद्धर्मो ज्ञेयत्वादिधर्मश्चोपलक्ष्यत इत्यर्थः । अजहत्स्वार्थलक्षणायां स्वार्थस्यापि लक्ष्यत्वादिति भावः ॥ **सम्बन्धेनेति** । तन्तुपटयोः सम्बन्धस्य सत्त्वेन घटपटादिबुद्धितस्तन्तुपटादिबुद्धिर्विशिष्यते घटपटयोः सम्बन्धाभावादित्यर्थः । **कुण्डबदरादिप्रतीतितोऽपि** सम्बद्धवस्तुप्रतीतितोऽपीत्यर्थः ।

च० — **अनुव्यवसीयते** अनुव्यवसायेन विषयीक्रियते । अनुव्यवोपसृष्टात् 'षो-अन्तकर्मणी'ति पठितात्षकि 'आदेच' इत्यात्वे 'घुमास्थे'ति ईत्वे रूपनिष्पत्तिरवसेया । **संबन्धेन** संबन्धविषयकत्वेन । **विशेष्यते** व्यावर्त्यते । **संबन्धिनोः** तन्तुपटयोः **तथा** व्यावर्त्यन्ते । **तस्य** अयुतसिद्धत्वस्य **अकिञ्चित्करत्वात्** प्रतीतिवैलक्षण्यानापादकत्वात् । **अभेदविषयैवेति** । विषयवैचित्र्यं विषयतावैचित्र्यंवाऽन्तरेण प्रतीतिवैचित्र्यायोगादिति भावः ।

---

१. 'षो-अन्तकर्मणी'त्यस्य कृत आत्वस्य सूत्रे 'सा' इति निर्देशः ।

**सु०** — **किञ्च पटोत्पत्तेः प्राग्यावन्तं देशमवष्टभ्य तन्तवस्तिष्ठन्ति पटोऽपि तावन्तमेव । न च मूर्तयोः समानदेशत्वं युज्यते । तेन ज्ञायते तन्त्वभिन्नः पट इति । न चावयवावयविनो रूपरसादिवत् द्वैतमनुभूयत इत्याद्यभेदप्रमाणं स्वयमूहनीयम् ।**

**शे०** — नन्वनेकेष्वभेदप्रमाणेषु सत्सु तत्परित्यागेन प्रत्यक्षमात्रोपन्यासोऽनुचितो भाष्यकाराणामित्यतः प्रत्यक्षस्योक्तरीत्या बहूपपादनसापेक्षत्वेन दुर्ज्ञेयतया प्रमाणान्तराणां च स्पष्टतया शिष्यैरेव ज्ञातुं शक्यत्वेन युक्तस्तत्परित्यागेन प्रत्यक्षमात्रोपन्यास इत्याशयवान्स्वयं तानि प्रमाणानि दर्शयन् पटस्तन्त्वभिन्नो मूर्तत्वे सति तत्समानदेशत्वात्तन्तुवदित्यनुमानं मनसि निधाय हेत्वसिद्धिं परिहरति **किञ्च पटोत्पत्तेरिति** । इह भूतले पट इति निर्बाधप्रतीतिबलादिति भावः । अप्रयोजकत्वं निराकरोति **न चेति** । फलं निगमयति **तेनेति** । नन्ववयवावयविभावानापन्नयोरेव मूर्तयोरसमानदेशत्वनियमाभ्युपगमात्तद्भावमापन्नयोस्तन्तुपटयोर्मूर्तत्वेऽपि समानदेशत्वोपपत्तेरप्रयोजकत्वमेवेत्यत आह **न चेति** । अनेन पटस्तन्त्वभिन्नस्तद्रूपरसादिभिन्नरूपरसादिशून्यत्वात्तन्तुवत् इत्यभिप्रेतानुमाने हेत्वसिद्धिः परिहृता भवति । न चावयविरूपादिभिरवयवरूपादेर्नाशादवयवावयविनोर्भेदेऽपि रूपरसादिद्वैतानुपलम्भसंभवादप्रयोजकत्वमिति वाच्यम् । तथा सत्यसमवायिकारणनाशेन कार्यनाशध्रौव्यादवयविन्यपि रूपाद्यनुलब्धिप्रसक्त्या तदनवकाशादित्याशयात् । इत्यादीत्यादिपदेन गुणगुण्याद्यभेदसाधकानुमानागमपरिग्रहः । केचित्तु अभेदेन प्रतीतिश्चेति चशब्दसंगृहीतमभेदप्रमाणं स्वयमुपदर्शयतीति किञ्चेत्यादिग्रन्थावतारं कृत्वा स्वयमूहनीयमित्यतः पूर्वं, परस्ताच्च 'स्पष्टत्वाच्छिष्यैरेव', 'इति भावेन भाष्यकृता चशब्देन संगृहीतं न तु स्वरूपेण प्रत्यक्षवदुपन्यस्तमिति च शेषमाहुः ।

**प०** — **रूपरसादिवद्द्वैतमिति** । रूपरसादेर्भेदोऽनुभूयते यथा तथा तन्तुपटयोर्द्वैतं भेदो न चानुभूयत इत्यर्थः । क्वचिद्रूपरसादिद्वैतमिति पाठः । तदा रूपभेदो रसभेदो गुणत्वादिभेदश्च न चानुभूयत इत्यर्थः । आदिपदेनाग्रे वक्ष्यमाणगुणगुण्याद्यभेदसाधकप्रमाणग्रहः ।

**या०** — ननु भेदे व्यपदेशभेदादीनि बहूनि प्रमाणानि सन्ति अभेदे तु प्रत्यक्षमेकमेवातः कथमभेदपक्षोऽङ्गीक्रियत इत्यतोऽभेदेऽपि बहूनि प्रमाणानि सन्तीत्याह **किञ्च पटेति** । अनेन पटस्तन्त्वभिन्नो मूर्तत्वे सति तन्तुदेशत्वात्तन्तुरूपाद्यभिन्नरूपादिमत्त्वात् तन्तुवदित्यनुमानद्वयं कार्यकारणाभेदसाधकप्रमाणमुक्तमिति ज्ञातव्यम् । आदिपदेन गुणगुण्याद्यभेदसाधकानामनुमानागमानां ग्रहणम् । ते चाग्रे वक्ष्यन्ते ।

**श्री०** — **न चावयवेति** । नापीत्यर्थः । यद्यवयवावयविनौ भिन्नौ स्यातां तर्ह्यवयवनिष्ठरूपाद्रसाद्वाऽवयविनिष्ठरूपरसयोर्द्वैतत्वं भेदोऽनुभूयेत । न चानुभूयत इत्यर्थः ।

च० — पटस्तन्तुभिन्नः मूर्तत्वे सति तन्तुदेशत्वात्, अवयवावयविनौ न परस्परं भिन्नौ भेदग्रहाविषयत्वादिति चानुमानमपि तत्र प्रमाणमभिप्रेत्याह **किञ्चेति । रूपरसादिवत् ।** षष्ठ्यन्ताद्वतिः । उपमेये षष्ठीदर्शनात् 'लाटो लड्डूवदि'तिवत् । **द्वैतं** भेदः ।

**सु० — नन्वभेदश्चेत्प्रत्यक्षेणैवेष्यते । तदा कथं शुक्लः पटश्चलति (पट) इत्यादिसामानाधिकरण्यादिव्यवहारः । तस्य दण्डी कुण्डलीतिवद्भेदविषयत्वात् । न हि प्रतीतिविरोधी व्यवहारो भवतीत्यत उक्तं सविशेषेति । विशेषेण विषयेण उपेता ।**

**अयमर्थः । यत्र केवलमभेदः प्रतीयते न तत्र सामानाधिकरण्यव्यवहारो भवति । यथा घटः कलश इति । अत्र त्वभेदः प्रतीयमानो विशेषेण सहित एव प्रतीयते । विशेषश्च भेदप्रतिनिधिः सामानाधिकरण्यव्यवहारं प्रसूत इति ।**

**शे०** — भाष्येऽभेदप्रतीतेः सविशेषेति विशेषविषयत्वमुक्तम् । तदनर्थकम् । तन्तुपटादिप्रतीतेरभेदविषयत्वसिद्धिमात्रेण तदभेदस्य प्रामाणिकत्वसिद्ध्या तत्पक्षपरिग्रहसिद्धेस्तस्यानपेक्षितत्वादित्यतः प्रत्यक्षप्रतीतेरभेदविषयकत्वे प्राप्तानुपपत्तिपरिहारार्थत्वाद्विशेषविषयकत्ववर्णनस्य नानुपपत्तिरिति भावेन तदनुपपत्तिपरिहारकतया तद्योजयितुमभेदस्य प्रत्यक्षप्रतीतिविषयत्वेऽनुपपत्तिशङ्कां तावदुपादयति **नन्विति ॥ सामानाधिकरण्यव्यवहार इति ।** शौक्ल्यपटत्वयोः सामानाधिकरण्यव्यवहार इत्यर्थः । ननु सामानाधिकरण्यव्यवहारस्याप्यभेदप्रतीत्यैव जननसंभवात्का कथन्तेत्यतो व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वेन भेदविषयकोक्तव्यवहारस्य भेदज्ञानसाध्यत्वान्न तदभेदप्रतीतिसाध्यत्वं संभवतीत्यभिप्रेत्याह **तस्य भेदविषयत्वादिति ।** उक्तरूपसामानाधिकरण्यव्यवहारस्य शौक्ल्यादीनामाश्रयेण परस्परं च भेदविषयत्वादित्यर्थः । ननु सामानाधिकरण्यव्यवहारस्य तादात्म्यावलम्बनतायाः प्रसिद्धत्वाच्छुक्लः पट इति व्यवहारस्यापि शौक्ल्यपटतादात्म्यविषयत्वमेवेति कथं तद्भेदविषयत्वं तस्येति चेन्न । तथा सति दण्डी देवदत्तः कुण्डली देवदत्त इत्यादेरपि सामानाधिकरण्यव्यवहारस्य दण्डदेवदत्ततादात्म्यविषयत्वापत्तेः । यदि च भेदाविनाभूतसंबन्धार्थकस्य इनेः प्रयोगाद्दण्डीत्यादिशब्दव्यवहारस्य भेदविषयकत्वमेवेति मन्यसे तर्हि शुक्लगुणोऽस्यास्तीत्यस्मिन्नर्थेऽर्श आदिभ्योऽजित्यकारप्रत्ययविधानाच्छुक्लः पट इत्यादेरपि शाब्दव्यवहारस्य भेदविषयत्वमेवेति समानमेवेत्याशयेन सामानाधिकरण्यव्यवहारस्य भेदविषयतां दृष्टान्तोपदर्शनेनोपपादयति **दण्डी कुण्डलीतिवदिति ।** ननु व्यवहारस्य व्यवहर्तव्यज्ञानपूर्वकताया निर्निबन्धनत्वादभेदविषयकप्रतीत्याऽपि भेदविषयकव्यवहारोपपत्तेर्न तदनुपपत्तिरित्यतस्तथा सति घटकलशयोरभेदप्रतीत्याऽपि घटः कलश इति सामानाधिकरण्यव्यवहारजननप्रसङ्गान्न प्रतीतेः

स्वविरोधिव्यवहारजनकत्वमित्यभिप्रेत्याह **न हीति** । नन्वत्राभेदप्रतीतेः सविशेषत्वमेवोच्यते न तु विशेषविषयत्वं तत्कथमनेनोक्तशङ्कापरिहार इत्यतः प्रकृतोपयोगितया तद्व्याचष्टे **विशेषेणेति** । ननु विशेषविषयत्वेऽपि नाभेदप्रतीतेः सामानाधिकरण्यव्यवहारजनकत्वं युक्तम् । तथा सति घटकलशयोरभेदप्रतीत्याऽपि सामानाधिकरण्यव्यवहारजननप्रसङ्गादित्यतोऽभेदप्रतीतेः सामानाधिकरण्यव्यवहारजनकत्वं तद्व्यवहारजनकत्वं च तदुभयव्यवस्थापकोक्त्योपपादयति **अयमर्थ इति** । नन्वस्त्वभेदस्य विशेषसहितस्यैव प्रतीतेः सामानाधिकरण्यव्यवहारजनकत्वं प्रकृते केवलाभेदप्रतीत्यभावः । तथाऽपि कथं शुक्लः पट इति सामानाधिकरण्यव्यवहारः, तस्य भेदप्रतीतिसाध्यस्य तदभावेऽपि विशेषप्रतीत्याऽनिर्वाहादित्यत आह **विशेषश्चेति** ।

**प०** — व्यवहारस्य तथात्वेपि प्रतीतौ किं प्राप्तमत आह **न हीति** ।

**श्री०** — **भेदविषयत्वात्** भिन्नवस्तुविषयकत्वात् । **उपेता** ऽभेदप्रतीतिः ।

**च०** — **भेदविषयत्वात्** । बहुव्रीहेर्भावप्रत्ययः ।

**सु०** — **नन्वभेदप्रतीतिमभिभूय विशेषप्रतीतिः स्वकार्यं कथं कुर्यात्, करोति चेदभेदप्रतीतिरपि विशेषप्रतीतिमभिभूय स्वकार्यं कथं न कुर्यात् । मैवम् । न हि प्रतीतिरस्तीत्येव व्यवहारः किन्तु प्रयोजनेऽपि सति । प्रयोजनं च सामानाधिकरण्यव्यवहारेणैव बहुलं लोकवेदयोः । यदा त्वभेदव्यवहारः प्रयोजनवांस्तदा सोऽपि दृश्यत एव यथा विज्ञानमानन्दं ब्रह्मेत्यादि ॥**

**शे०** — ननु तथाऽपि तत्र विशेषप्रतीत्या सामानाधिकरण्यव्यवहार उपपादयितुं शक्यः, तथा सत्यभेदप्रतीतरप्यत्र सद्भावेन तयाऽभेदव्यवहारस्यापि जननप्रसङ्गात् । न च विशेषप्रतीत्याऽभिभूतत्वान्नाभेदप्रतीतिः स्वकार्यकारिणीति न तत्प्रसङ्ग इति वाच्यम् । तथा सत्यभेदप्रतीत्याऽभिभूतत्वेन विशेषप्रतीतेरपि स्वकार्याकारित्वेन तयोक्तव्यवहारासंभवात् । न हि विना विनिगमकं विशेषप्रतीत्यैवाभेदप्रतीतेरभिभवो न त्वभेदप्रतीत्या विशेषप्रतीतेरिति नियन्तुं शक्यमिति कथमत्र सामानाधिकरण्यमात्रव्यवहार इति शङ्कते **नन्विति** । **अभिभूय** स्वप्रयोजनाक्षमीकृत्य । **स्वकार्यं** सामानाधिकरण्यव्यवहारम् । **स्वकार्यं** घटकलशादाविवाभेदकार्यम् । अयं पर्यनुयोगो यदि प्रतीतिमात्रं स्वकार्यव्यवहारकारकमित्यभ्युपगम्येत । न चैवम् । किन्तु व्यवहारसाध्यप्रयोजनसहितैव प्रतीतिस्तत्कारणमिति । ततश्च प्रकृतोदाहरणे विशेषप्रतीतेस्तादृशत्वेन तया सामानाधिकरण्यव्यवहारजननेऽप्यभेदप्रतीतेरतादृशत्वेन तयाऽभेदव्यवहारजननासंभवान्नातिप्रसङ्ग इत्याशयेन परिहरति **मैवमिति** । नन्वभेद-

प्रतीत्याऽभेदव्यवहारो यदि नाभ्युपेयते तर्हि 'विज्ञानमानन्दं ब्रह्मे'त्याद्यभेदव्यवहारोऽप्यभेदप्रतीत्या न स्यादित्यतोऽत्राभेदप्रतीतेरभेदव्यवहारसाध्यप्रयोजनशून्यत्वात् शौक्ल्यपटयोरभेदव्यवहाराजनकत्वेऽपि तत्राभेदव्यवहारसाध्यप्रयोजनवत्त्वादभेदप्रतीत्या तदभेदव्यवहारजननमुपपद्यत एवेत्याशयेनाह यद्वान्विति ॥ छ ॥

प० — **स्वकार्यमिति** । अभेदव्यवहाररूपं कथं न कुर्यादित्यर्थः ॥ **प्रयोजनं चेति** । इतरव्यावृत्त्यादिप्रयोजनं च । **लोके** नीलं वृषमानय कपिलां गामानयेत्यादि । अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणातीत्यादौ **वेदे** बहुलमस्तीत्यर्थः । इत्य दीत्यादिपदेन कं ब्रह्म खं ब्रह्मेत्या- — दिसंग्रहः ॥ ॥ **तन्तुपटाद्यभेदे प्रमाणोक्तिः** ॥

या० — **स्वकार्यं** सामानाधिकरण्यव्यवहाररूपम्, **स्वकार्यम्** घटकलशादावित्राभेदव्यवहार- रूपम् ।

**श्री०** — **स्वकार्यं** भेदव्यवहारम् । **स्वकार्यम्** अभेदव्यवहारम् । **व्यवहारेण** शुक्लः पट इत्यादिभेदव्यवहारेण, लोकवेदयोर्दृष्टः ।

**च०** — **अभिभूय** तिरस्कृत्य । **लोकवेदयोरिति** । नीलमुत्पलमित्यादि लोके, अरुणया, पिङ्गाक्ष्येत्यादि वेदे च तुल्यमस्तीत्यर्थः ॥

॥ **तन्तुपटाद्यभेदे प्रमाणोक्तिः** ॥ **विशेषस्य प्रत्यक्षप्रमाणकतोक्तिः** ॥

**सु० — यद्वा विशेषः प्रत्यक्षार्थापत्तिसिद्ध इत्युक्तम् । तत्कथमित्यतः प्रत्यक्षसिद्धतां तावदुपपादयति** अभेदेनेति । **अनुक्तसमुच्चयार्थश्चशब्दः । पदार्थ इत्येकवचनं जातिविषयम् अस्ति यतस्तस्मात्सा सविशेषाऽवसीयत इति योजना । ततश्चायमर्थः । अस्ति तावद्द्रव्यत्वाद्यव्यादि- पदार्थमात्रेऽभेदेन प्रतीतिः । कुण्डबदरादिप्रतीतितोऽस्या व्यावृत्ततयाऽध्यवसायात् । न च अभेदमन्तरेण व्यावृत्तिहेतुरस्ति । अतोऽसति निमित्तान्तरे सम्मतभेदवस्त्वन्तरप्रतीतितो व्यावृत्तेयमभेद एव विश्राम्यतीति । अस्ति च तथाऽपि सामानाधिकरण्यादिव्यवहारः । तत्र यदीयमभेदमात्रविषया स्यात्तदा न सामानाधिकरण्यादिव्यवहारं कुर्यात् । घटः कलश इति व्यवहारादर्शनात् । ततो ज्ञायतेऽधिकोऽपि विषयोऽस्या विद्यत इति । न च भेदोऽसाविति वाच्यम् । भेदाभेदवादेऽप्यन्ततो विशेषस्याङ्गीकार्यत्वात् । तथा चेयमभेदप्रतीतिरिन्द्रियजा सविशेषावसीयत इति ॥**

शे० — अवयवावयव्याद्यभेदस्य **प्रत्यक्षसिद्धत्वोपपादकतया** प्रकृतग्रन्थयोजनायामध्याहृतसङ्गतिराश्रयणीया भवतीत्यपरितोषाच्छ्रुतिसङ्गत्यैव योजयति **यद्वेति** । सामान्यादीत्युत्तरग्रन्थेनार्थापत्तिसिद्धत्वस्य अप्युपपादनात्तद्वदित्युक्तम् ॥ **अनुक्तसमुच्चयेति** । सामानाधिकरण्यव्यवहारसमुच्चयेऽर्थः । अवयवावयव्याद्यभेदप्रतीतेः परं प्रत्यक्षसिद्धया तदनुवादेन विशेषविषयकत्वमात्रविधायकतया प्रकृतग्रन्थयोजनाया असंभवादयं ग्रन्थोऽवयवावयव्यादेरभेदप्रतीतेरपि विधायक एवेत्यभिप्रेत्य तल्लाभायापेक्षितं पूरयति **अस्ति यत इत्यादिना** । नन्ववयवावयव्यादिप्रतीतेर्नियामकाभावेनाभेदविषयकत्वस्याकल्पनीयत्वात् कल्पनीयत्वेऽपि वा केवलाभेदविषयकत्वसंभवेन तदधिकविषयत्वस्याकल्पनीयत्वात् । कल्पनीयत्वेऽपि वा भेदविषयकत्वकल्पनयैव सर्वनिर्वाहान्न विशेषविषयतायाः कल्पकं किञ्चिदित्ययुक्तमेव तत्प्रतिज्ञाद्वयमित्यतोऽपेक्षितहेतुकथनेन तदुपपादयति **ततश्चेति** । ननु तन्तुपटावभिन्नावित्यप्रतीत्या तत्प्रतीतेस्तदभेदविषयत्वाभावात्कथं तत्राभेदेन प्रतीतिरुच्यत इत्यतस्तन्तुपटादिप्रतीतेरभेदविषयत्वमुपपादयति **कुण्डेति** । नन्वभेदविषयकत्वाभावेऽपि तद्व्यावर्तकविषयकत्वमात्रेण तन्तुपटादिप्रतीतेः कुण्डबदरादिप्रतीतितो वैलक्षण्यानुभवस्य संभवात्तेनाभेदविषयकत्वसाधनेऽप्रयोजकत्वं व्यावर्तकविषयकत्वमात्रसाधने चार्थान्तरत्वमित्याशङ्क्य व्यावर्तकविषयत्वमात्रसाधनान्नाप्रयोजकत्वं तत्साधनेऽपि तद्व्यावर्तकान्तरनिरासेनाभेदविषयकत्व एव पर्यवसानान्नार्थान्तरत्वमपीत्याशयेन व्यावर्तकान्तरं निराचष्टे **न चाभेदमन्तरेणेति** । संबन्धस्य कुण्डबदरादिसाधारणत्वेन तत्प्रतीतौ वैलक्षण्यानुपपादकत्वात्संयोगान्यसंबन्धस्य च घटतद्ज्ञानतदभावादिसाधारणत्वेन तत्प्रतीतितो वैलक्षण्यानुपपादकत्वात्स्वरूपप्रत्यासत्तिसंयोगान्यसंबन्धस्य च घटतद्धर्मिकान्योन्याभावादावसत्त्वेन तद्बुद्धेर्घटपटादिबुद्धितो वैलक्षण्यानुपपादकत्वात्तदानीन्तनस्याश्रयाश्रयिभावस्य कुण्डबदरादिप्रतीतावपि भानान्नियमस्य च तन्तुपटादिबुद्धावप्यभानेनाश्रयाश्रयिभावनियमरूपायुतसिद्धेरपि तद्वैलक्षण्यानुपपादकत्वात्तन्तुपटादिप्रतीतौ संबन्धनित्यत्वस्य संबन्ध्ययुतसिद्धत्ववाऽस्फुरणेन समवायस्यापि तद्वैलक्षण्यानुपपादकत्वान्नाभेदातिरिक्तस्य व्यावर्तकत्वं संभवतीत्यर्थः । अस्त्वेवं किं तत इत्यतः परिशेषसिद्धमर्थं निगमयति **अत इति** । प्रथमप्रतिज्ञोपपादनसमाप्त्यर्थ इतिशब्दः । वक्ष्यमाणतर्के उपोद्घातत्वेनेष्टापत्तिं प्रथमं परिहरति **अस्ति चेति** । तर्कसिद्धमर्थं दर्शयति **तत इति** ॥ **अन्तत इति** । विशेषं विना परस्परविरुद्धयोर्भेदाभेदयोरेकत्रावस्थानानुपपत्त्या तद्घटनार्थमपि विशेषस्यैवाश्रयणीयत्वादित्यर्थः । यद्वा भेदाभेदानवस्थापरिहारार्थं विशेषस्याङ्गीकर्तव्यत्वादित्यर्थः ।

प० — **अनुक्तसमुच्चयार्थश्चशब्द इति** सामानाधिकरण्यादिव्यवहारसमुच्चयार्थ इत्यर्थः ॥ **अभेदेनेति** । अवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्विशेषनित्यद्रव्ययोः समवायतद्धर्मयोरभेदेन प्रतीतिरित्यर्थः ॥ **असति निमित्तान्तर इति** । अयुतसिद्धत्वादिनिमित्तान्तरस्य प्राङ्निरा-

सादिति भावः । संमतभेदेति बहुव्रीहिः । कुण्डबदरादिरूपवस्त्वन्तरेत्यर्थः । विश्राम्यतीतीति शब्दस्यायमर्थ इति पूर्वेणान्वयः । चशब्दसमुच्चितमाह **अस्ति चेति** । **सामानाधिकरण्यादीति** । शुक्लः पटः, पटस्य रूपं, तृणस्य चलनमित्यादिव्यवहारग्रहः ॥ **इयमिति** । अभेदप्रतीतिरित्यर्थः । **भेदोभाविति** । अभेदाधिको विषय इत्यर्थः । तथा चाभेदभेदविषयत्वेन व्यवहारप्रतीत्योरुपपत्तौ किं विशेषेणेति भावः ॥ **भेदाभेदवादेऽप्यन्तत इति** । गुणगुण्यादेर्भेदाभेदवादेपि भेदाभेदयोर्विरोधशान्त्यर्थमपि विशेषस्याङ्गीकार्यत्वादित्यर्थः । चतुर्थपादार्थमाह **तथा चेयमिति** । अस्यापीति शब्दस्यायमर्थ इति पूर्वेणान्वयः ॥ छ ॥ **॥ विशेषस्य प्रत्यक्षत्वोपपादनम् ॥**

**या० — अनुक्तसमुच्चयेति** । सामानाधिकरण्यादिव्यवहारसमुच्चयार्थ इत्यर्थ ॥ अनुक्तसमुच्चयार्थ इत्युक्तं दर्शयति **अस्ति चेति** ॥ **इयमिति** तन्तुपटाद्यवयवावयविप्रतीतिरित्यर्थः । **आधिको** विशेषरूपः । **अन्तत इति** । विरोधशान्त्यर्थमित्यर्थः ।

**सु० — प्रागुक्तं समवाये विशेषोऽङ्गी(कर्तव्य) क्रियत इति तत्र तावदेव । किन्तु सर्वेष्वपि पदार्थेष्विति दर्शयन्विशेषस्य व्यवहारान्यथाऽनुपपत्तिसिद्धतां चोपपादयति** सामान्यादीति ।

**अनु० —** सामान्यादिपदार्थेषु तन्निष्ठत्वादयोऽखिलाः ॥
कथं धर्मा निवार्यन्ते वस्त्वैक्येऽपि हि वादिभिः ॥

तन्निष्ठत्वादयो **व्यक्तिनिष्ठत्वादयः । कथमित्याक्षेपे** । वस्त्वैक्येऽपि **धर्म्यैक्येऽपि । कुतो न निवार्यन्त इत्यत उक्तं** वादिभिरिति । **अविसंवादिव्यवहारसिद्धत्वादिति यावत्** ।

**एतदेव प्रपञ्चयति** कार्यस्येति ।

कार्यस्य तत्तन्निष्ठत्वं गुणादेर्व्यापितादिकः ॥
कथं विशेषो नैवास्ति

**अस्ति तावदवयविनोऽवयवनिष्ठत्वं नाम धर्मः । गुणानां केषाञ्चिद्रूपादीनामाश्रयव्यापित्वम् केषाञ्चित्संयोगादीनां प्रदेशवृत्तित्वम्, रूपादीनामुद्भूतत्वम्, सर्वेषां चतुर्विंशतित्वम्, कर्मणश्च आश्रयव्यापित्वमनित्यत्वं पञ्चत्वं मूर्तनिष्ठत्वम्, सामान्यस्यापि द्रव्यगुणकर्मनिष्ठत्वम्, नित्यत्वमनुगतत्वम्, द्विविधत्वमित्यतिबहुलोऽयं पदार्थधर्मसमूहः । न चायमाश्रयतो भिन्न एवेति युक्तम् । अस्ति च धर्मधर्म्यादिव्यवहारः । तन्तुषु पटः, प(घ)टो न भवति घ(प)ट इत्यादिः । स चायमत्यन्ताभेदेऽनुपपद्यमानः स्वोपपादकं विशेषमवगमयतीति सर्वपदार्थेषु कथं विशेषो नैवास्ति ।**

शे० — सामान्यादिपदार्थेषु तन्निष्ठत्वादिधर्माणां धर्म्यभिन्नत्वोपपादनपुरःसरमनिवारणीयत्व-मुच्यते । तदनर्थकमित्याशङ्क्य सामान्यादिपदार्थेषु विशेषसमर्थनार्थत्वान्न तदित्यभिप्रायेण तत्र विशेषसमर्थनपरतया तद्योजयितुं तत्र विशेषसमर्थनस्यापि का सङ्गतिरित्यतस्तामाह **प्रागुक्तमिति** । 'विशेषस्तद्गतत्वादिर्यद्यभिन्नेऽवसीयते' इत्यादिनेति शेषः । एवं व्यवहितेन सङ्गतिमुक्त्वाऽव्यवहितेनापि तामाह **विशेषस्येति** । उत्तराभावेन कथमित्यस्य प्रश्नार्थत्वायोगादाह **आक्षेप इति** । वादिभिरित्यस्यानर्थ-क्यमित्याशङ्क्य निवार्यार्थत्वे हेतूक्त्यर्थत्वान्न तदिति भावेन तत्परतया तद्योजयितुं हेत्वाकाङ्क्षामुत्थापयति **कुत इति** । कथमनेन तदाकाङ्क्षापरिहार इत्यतोऽपेक्षितहेतुसमर्पकतया तत्तात्पर्यमाह **अविसंवादीति** । सामान्यादीति पूर्ववाक्योक्तार्थस्य कार्यस्येत्युत्तरवाक्येन प्रतिपादनात्पौनरुक्त्यमित्याशङ्क्योक्तार्थप्रपञ्चकत्वान्न तदिति भावेनोक्तार्थप्रपञ्चकतया तद्योजयति **एतदेवेति** । प्रपञ्चकत्वं च सामान्यादीत्यादिपदसंग्राह्यस्य तन्निष्ठत्वान्वय इत्यादिपदसंग्राह्यस्य कथं विशेषो नैमित्तीत्यापादकस्य च कथनादित्यवगन्तव्यम् ॥ **युक्तमिति** । तथा सत्युदाहृतधर्माणां षड्भ्यः पदार्थेभ्योऽतिरिक्तत्वेन षडेव पदार्था इति नियमभङ्ग-प्रसक्तेरिति भावः । अस्तु धर्मपदार्थस्य धर्मिणाऽभेदः स तु अत्यन्ताभेद एव किन्न स्यादित्यतस्तत्र बाधकमाह **अस्ति चेति** । उक्तव्यवहारमेवाभिनयेन दर्शयति **तन्तुषु पट इत्यादिना** ॥ **अनुपपद्यमान इति** । घटः कलश इति सामानाधिकरण्यव्यवहारदर्शनादिति भावः ।

प० — **प्रागुक्तमिति** । 'विशेषस्तद्गतत्वादिर्यद्यभिन्न' इत्यत्रोक्तमित्यर्थः । वस्त्वैक्येपीत्यस्य व्याख्या **धर्म्यैक्येपीति** । धर्मिणा सहैक्येपीत्यर्थः ॥ **न चेति** । भिन्न एवेति न च युक्तमेवेत्येतदग्रे स्पष्टीभविष्यतीति भावः । धर्मधर्म्यादीत्यादिपदेन षष्ठ्यन्तादिव्यवहारग्रहः । 'कार्यकारणपूर्वके ॥ अभावान्ते पदार्थे' इति प्राङ्मूलोपात्तयोराद्यन्तयोस्तावद्दर्शयति **तन्तुषु पट इति** । गुणगुण्यादौ तु स्पष्ट इति भावः । एतेन प्राग्विधिनिषेधभेदेन द्विविधो व्यवहार इत्युक्तं विवृतं ज्ञेयम् ।

या० — प्रत्याहारन्यायेन कार्यकारणयोरभावधर्मिणोश्च धर्मधर्म्यादिव्यवहारं दर्शयति **तन्तुषु पट इति** । आदिपदेनावयव्यादीनां तत्तन्निष्ठत्वादिधर्मसमूहेपि अवयविन्यवयवनिष्ठत्वमित्यादिरूपधर्मधर्म्या-दिव्यवहारसंग्रहः ।

श्री० — **धर्म्यैक्येपि** धर्मिणा तन्निष्ठत्वादिधर्माणामैक्येपि ॥ **तन्तुषु पट इति** । पटेऽवयव-निष्ठत्वं धर्मतया प्रतीयत इत्यर्थः ।

च० — **प्रागुक्तं** 'विशेषस्तद्गतत्वादिर्यद्यभिन्न' इत्यत्राभिहितम् । **आश्रयव्यापित्वम्** आश्रय-निष्ठं निरवच्छिन्नाधिकरणतानिरूपकत्वं, तन्निरूपितनिरवच्छिन्नाधेयताशालित्वं वा । व्याप्यवृत्तेरवच्छेद-कानुपगमादिति भावः । **प्रदेशवृत्तित्वं** देशविशेषावच्छिन्नाधिकरणतानिरूपकत्वं, तदवच्छिन्नाधेयता-

शालित्वं वा । अवच्छेद्याधिकरणसंबन्धिन एवावच्छेदकतया नातादृशस्यावच्छेदकतेत्यवसेयम् । **मूर्तनिष्ठत्वं** परिच्छिन्नपरिमाणवन्निष्ठत्वम् ।

**सु० — सत्यम् । सन्त्येव द्रव्यादिषु सप्तस्वपि पदार्थेषु ते ते धर्माः । किन्त्वाश्रयतो भिन्ना एव । तथा च तत्संबन्धनिबन्धनतयैवोपपद्यमानो व्यवहारः सर्वपदार्थेषु न विशेषमाक्षेप्तुमलमित्याशयेन शङ्कते** स चेति ।

**अनु० —** स च धर्मोऽपरो ॥

**न केवलं गुणादि द्रव्यादितो भिन्नम् । किन्तु** सः **तत्तन्निष्ठत्वादिधर्मश्च** अपरः **स्वाश्रयाद्भिन्नो यद्यङ्गीक्रियत इत्यर्थः । निराकरोति** षडिति ।

षट्पदार्थातिरेकः स्यात्

**तर्हि धर्माणां षड्भ्यः पदार्थेभ्योऽतिरेकः स्यात् । तथा च षडेव पदार्था इति नियमो** भज्येतेति ।

**शे० —** स च धर्मोऽपर इत्यत्र **चशब्दार्थमाह न केवलमिति** । अस्त्वेवं धर्मपदार्थस्य षट्पदार्थातिरिक्तत्वं, किं तत इत्यतः पदार्थनियमेऽपि हीत्युत्तरग्रन्थतात्पर्यतो लब्धं षट्पदार्थनियमभङ्गं बाधकत्वेनाह **तथा चेति** ।

**प० —** शङ्कते **सत्यमिति** ।

**सु० — ननु स्वाश्रयतो विभिन्ना अपि धर्मा न ष(ड्भ्यः)ट्पदार्थेभ्योऽतिरिच्यन्ते । किन्तु त एवान्योन्यविशेषणीभूता धर्मा इत्युच्यन्ते । यथाऽऽह 'यद्यपि धर्माः षट्पदार्थेभ्यो न व्यतिरिच्यन्ते । किन्तु त एवान्योन्यापेक्षया धर्मधर्मिणश्च भवन्ती'ति । अन्यत्रापि 'तेषां धर्मास्त एव परस्परं विशेषणीभूताः' इति । तत्कथं नियमभङ्ग इति । मैवम् । तन्निष्ठत्वादीनां षट्सु पदार्थेष्वन्तर्भावयितुमशक्यत्वात् । तथा हि । 'आश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः' इत्यभ्युपगतं कार्यद्रव्यगुणकर्मसामान्यविशेषसमवायानामवयवादिनिष्ठत्वं न तावद्द्रव्यादिकम् । गुणादिवृत्त्यनुपपत्तेः । नापि समवायः तस्य स्ववृत्त्यनुपपत्तेः । किञ्चाधार्याधारभूतयोः संबन्धः समवाय इष्यते । तथा च कथं स एवाधारित्वमाधारत्वं च स्यात् । तथा रूपादीनामाश्रयव्यापित्वं न द्रव्यादिष्वन्तर्भवति । तेषां गुणवृत्तित्वासंभवात् । समवायस्तूक्तरीत्या निरस्तः । अपि च वृत्तित्वमात्रं समवायः । व्याप्यवृत्तित्वं त्वतिरिक्तं निर्वक्तव्य(वाच्य)म् । कृत्स्ने स्वाश्रये समवायस्तदिति चेन्न । द्रव्यस्यासमुदितत्वेन कृत्स्नत्वाद्यनवकाशात् । स्वाभावेन सहा-**

**नवस्थानं व्याप्यवृत्तित्वमिति चेन्न । तस्याप्यन्तर्भाव्यत्वात् । अभावोऽसाविति चेन्न । निराक-रिष्यमाणत्वात् ।**

शे० — धर्माणामाश्रयतो भिन्नत्वेऽपि षट्पदार्थानतिरेकान्न पदार्थनियमभङ्ग इति किरणावली-कारमतमाशङ्कते **नन्विति** । अस्य पक्षस्य तत्सम्मतत्वं कुतोऽवगम्यत इत्यतस्तद्वाक्यादेवेत्याशयेन तद्वाक्यद्वयं पठति **यथाऽऽहेत्यादि** । 'षण्णामपि पदार्थानां साधर्म्यमस्तित्वाभिधेयत्वानी'ति प्रशस्तपाद-भाष्यव्याख्यानावसर इति शेषः । यद्यपि 'यद्यपि धर्मा अपि षट्पदार्थेभ्यो न व्यतिरिच्यन्ते तथाऽपि परस्परमङ्गतापन्नाः परस्परविवेकायोपयुज्यन्ते' इत्येव किरणावलीग्रन्थपाठस्तथाऽपि तदर्था-नुवादोऽयमित्यदोषः । अत एव स्पष्टमपि तद्वाक्यं पठति **अन्यत्रापीति** । पदार्थधर्मसंग्रह इत्याद्यपद्यव्याख्यानावसर इति शेषः । **तेषां** द्रव्यादीनां धर्माः **त एव** द्रव्यादय एव । अतो न सप्तपदार्थापत्तिरित्यर्थः । कथं तर्हि धर्मधर्मिभाव इत्यत उक्तं **परस्परमिति** । द्रव्यलक्षणं रूपादिकं गुणस्तल्लक्षणं गुणत्वं जातिरित्यादिक्रमेणान्योन्यं विशेषणविशेष्यभाव इति नोक्तदोष इति सम्मतिग्रन्थार्थः ॥ **अवयवादिनिष्ठत्वमिति** । अत्रादिपदेन गुणिमूर्तव्यक्तिनित्यद्रव्यायुतसिद्धसंबन्धिनां संग्रहः ॥ **गुणादीति** । अवयवगुणिमूर्तव्यक्तिनित्यद्रव्यायुतसिद्धसंबन्धिनिष्ठत्वादीनि न तावद्द्रव्यगुणकर्मविशेष-रूपाणि । द्रव्यगुणकर्मविशेषाणां गुणवृत्त्यनुपपत्तेः । अवयवनिष्ठत्वादीनां च गुणेऽपि सत्त्वात् । नापि सामान्यरूपाणि । सामान्यानां सामान्यवृत्त्यनुपपत्तेः । अवयवनिष्ठत्वादीनां च सामान्येपि सत्त्वादित्यर्थः ॥ **तस्य स्ववृत्तीति** अवयवनिष्ठत्वादिधर्माणां च समवायेऽपि सत्त्वादित्यर्थः ।

**किञ्चाधारीति** । अवयवावयव्यादेराधाराधेयप्रयोजकतया हि समवायोऽङ्गीकृतः । तत्कथं स एव प्रयोज्यरूपाधाराधेयभावोऽपि स्यात् । प्रयोज्यस्य प्रयोजकभिन्नत्वनियमादित्यर्थः । केचित्तु । अवयवादि-निष्ठत्वस्य समवायरूपत्वे आधारित्वं समवाय इति प्राप्नोति । अवयवादिनिष्ठत्वमाधारत्वमित्यनर्थान्तरत्वात् । ततश्च तत्तुल्ययोगक्षेमत्वादाधारत्वमपि समवाय इत्येव स्यात् । नचैतद्युज्यते आधार्याधारयोः सम्बन्धस्य सम वायत्वमङ्गीकुर्वता परेणाधारित्वाधारत्वातिरिक्तस्यैव समवायत्वाङ्गीकारेणाधारित्वाधारत्वयोरेव समवायत्वस्य वक्तुमशक्यत्वादित्यर्थ इत्याहुः ॥ **तेषां गुणवृत्तित्वेति** । गुणादिवृत्तित्वेत्यर्थः । द्रव्यगुणकर्मविशेषाणां गुणवृत्तित्वाभावेनाश्रयव्यापित्वस्य गुणवृत्तित्वाभावापत्त्या द्रव्यगुणकर्मविशेषेषु, सामान्यस्य सामान्यवृत्तित्वा-भावेनाश्रयव्यापित्वस्यापि सामान्यवृत्तित्वाभावप्रसङ्गेन सामान्ये च न तदन्तर्भावः सम्भवतीति भावः ॥ **उक्तरीत्येति** । तस्य स्ववृत्तित्वानुपपत्तेरित्युक्तरीत्येत्यर्थः ॥ **असमुदितत्वेनेति** । अनेकसमुदाय-रूपत्वाभावेनेत्यर्थः । यदेव ह्यनेकसमुदायात्मकं वस्तु तत्रैव कृत्स्नपदप्रवृत्तिनिमित्तकृत्स्नत्वस्यावकाशो न पुनरेकस्मिन्नपि वस्तुनि । समुदायस्थले कृत्स्नपदप्रयोगवदेकस्मिन्नर्थे तदप्रयोगादिति भावः । आदिपदेन

सर्वत्वादिपरिग्रहः । तेन सर्वस्मिन्नपि स्वाश्रये समवायस्तादित्यादिकमपि निरस्तं भवतीति ज्ञातव्यम् ॥ **स्वाभावेनेति** । स्वात्यन्ताभावेनेत्यर्थः । अन्यथा स्वप्रागभावादिना सहावस्थायिनो रूपादेः स्वाभावेन सहानवस्थायित्वरूपाश्रयव्यापित्वस्यासम्भवप्रसङ्गादित्यवधेयम् । स्वाभावेन सहानवस्थानस्य तादृशावस्थानाभावरूपत्वादाश्रयव्यापित्वमभाव एव भविष्यतीत्याशयेन शङ्कते **अभाव इति** ॥ **निराकरिष्यमाणत्वादिति** । अभावेऽभावानङ्गीकारेणाश्रयव्यापित्वस्याभावत्वे तस्य भाववृत्तित्वाभावप्रसङ्ग इत्यनुपदमेवात्र कश्चिद हेत्यादिनोद्भाव्य निराकरिष्यमाणत्वादित्यर्थः ॥

**स०** — **उक्तरीत्येति** तस्य स्ववृत्त्यनुपपत्तेरित्युक्तरीत्या निरस्त इत्यर्थः ॥ **निराकरिष्यमाणत्वादिति** । 'निषेधविधिबोध्यत्वाभावात्' इत्यादिनेति शेषः ।

**प०** — **किंतु त एवेति** । तत्वादय एव तन्तुषु पट इति पटे विशेषणीभूतावयवगताश्रितस्वरूपधर्मो नान्यः । रूपस्याश्रयव्यापित्वं नाम घटे रूपमिति विशेषणीभूतो घट एवेत्येवंरूपेण विशेषणीभूताः संतो धर्मा इत्युच्यन्त इत्यर्थः । तत्र तदीयसंमतिमाह **यथाहेति** । इत्यभ्युपगतमित्यस्यावयवादिनिष्ठत्वमित्यन्वयः । अन्यत्र नित्यद्रव्येभ्य इत्यत्रानित्यद्रव्याणि कानीत्यतः तद्व्यक्ति **कार्यद्रव्येत्यादि** । आश्रितत्वमित्यस्यार्थोऽवयवादिनिष्ठत्वमिति । गुण्यादिनिष्ठत्वमादिपदार्थः ॥ **द्रव्यादिकमिति** । द्रव्यादिविशेषान्तमित्यर्थः ॥ **गुणादीति** । गुणादिविशेषान्तपदार्थसार्थेऽपि स्वस्वाश्रयनिष्ठत्वस्य सत्त्वादिति भावः । अयमर्थः । पटादेरवयविनस्तन्त्वादिरूपस्वाश्रयनिष्ठत्वं द्रव्यं चेद्गुणादावपि स्वाश्रयनिष्ठत्वं द्रव्यमिति वाच्यम् । तच्चायुक्तम् । गुणकर्मादौ द्रव्यस्य वृत्त्यनुपपत्तेः । नापि गुणकर्मसामान्यविशेषाः । गुणकर्मणोर्गुणकर्मविशेषाश्रयत्वाभावात् । नापि स्वाश्रयगतत्वं सामान्यान्तर्भूतम् । सामान्यविशेषयोरपि तस्य सत्त्वेन तयोः सामान्यविशेषाधारत्वाभावादिति । ननु पटादिकार्यद्रव्यगुणकर्मादीनां स्वस्वाश्रयनिष्ठत्वधर्मस्य गुणादिवृत्तित्वेन द्रव्यगुणादिष्वन्तर्भावायोगेऽपि समवायेंऽतर्भाव संभवति । समवायस्य द्रव्यादिविशेषान्तपदार्थमात्रेऽपि सत्त्वेन गुणादिवृत्त्यनुपपत्तेरित्युक्तदोषाभावादिति भावेन तत्पृथगाशङ्क्य निराह **नापि समवाय इति** ॥ **तस्येति** । स्वस्वाश्रयनिष्ठत्वस्य समवायान्तर्भावे सति समवायेऽपि समवायिनिष्ठत्वमस्तीति समवायेऽपि समवायोऽस्तीति प्राप्त्या समवायस्यैकत्वोपगमाच्च स्ववृत्तित्वं स्यात् । तच्चानुपपन्नमित्यर्थः । तथा च कथं स एवेति । पटादेः स्वस्वाश्रयनिष्ठत्वं नामाधाराधेयभाव एव तन्नियामकः समवायो नियम्यभूताधारत्वमाधारित्वं च कथं भवेदित्यर्थः ॥ **द्रव्यादिष्विति** । द्रव्यगुणकर्मविशेषेष्वित्यर्थः । नापि सामान्येऽन्तर्भवति । तस्य सामान्यवृत्तित्वानुपपत्तेरित्यपि ध्येयम् ॥ **समवायस्त्विति** । समवायान्तर्भावस्तु स्ववृत्तित्वानुपपत्तेरित्युक्तरीत्या निरस्त इत्यर्थः । समवायेऽपि स्वाश्रयव्यापित्वसत्त्वादिति भावः ॥ **असमुदितत्वेनेति** । राशिवनसेनादिवदनेकसमुदाय-

रूपत्वाभावेनेत्यर्थः । परमाणुपुञ्जवादे हि कृत्स्ने स्वाश्रये सर्वस्मिन् आश्रय इत्यादि युज्यते । न ह्येवं त्वन्मत इति भावः ॥ **निराकरिष्यमाणत्वादिति** । स्वाभावेन सहानवस्थानरूपस्वाश्रयव्यापित्वस्याभावेऽपि सत्त्वेनाभावेऽभावानङ्गीकारेणेत्युपरितनग्रन्थेनाभावेऽभावसत्त्वस्य निराकरिष्यमाणत्वात् तस्य तत्रान्तर्भावो न युक्त इत्यर्थः ।

या० — **अवयवादिनिष्ठत्वमिति** । अत्रादिपदेन गुणिमूर्तव्यक्तिनित्यद्रव्यायुतसिद्धसंबन्धिसंग्रहः ॥ **गुणादीति** । अवयवगुणिमूर्तव्यक्तिनित्यद्रव्यायुतसिद्धसंबन्धिनिष्ठत्वानि न तावद्द्रव्यगुणकर्मविशेषरूपाणि । द्रव्यगुणकर्मविशेषाणां गुणवृत्त्यनुपपत्तेः । अवयवनिष्ठत्वादीनां च गुणेऽपि सत्त्वात् । नापि सामान्यरूपाणि । सामान्यानां सामान्यवृत्त्यनुपपत्तेः । अवयवनिष्ठत्वादीनां च सामान्येऽपि सत्त्वादित्यर्थः ॥ **तस्य स्ववृत्तीति** । अवयवनिष्ठत्वादिधर्माणां समवायेऽपि सत्त्वादिति भावः ॥ **किञ्चाधारीति** । आधाराधेयभावप्रयोजकतया हि समवायोऽङ्गीकृतः स एव कथं प्रयोज्यरूपाधाराधेयभावोऽपि स्यात् । प्रयोज्यस्य प्रयोजकभिन्नत्वनियमादित्यर्थः ॥ **तेषां गुणवृत्तित्वेति** । गुणादिवृत्तित्वेत्यर्थः । ततश्चायमर्थः । आश्रयव्यापित्वं न तावद्द्रव्यगुणकर्मविशेषेष्वन्तर्भवति । तेषां द्रव्यादीनां गुणवृत्तित्वासम्भवात् । अस्य च गुणवृत्तित्वात् । नापि सामान्ये, सामान्यस्य सामान्यवृत्तित्वासम्भवात् । अस्य च सामान्यवृत्तित्वादिति ॥ **असमुदितत्वेनेति** । अनेकसमुदायरूपत्वाभावेनेत्यर्थः । यत् अनेकसमुदायात्मकं वस्तु, तत्रैव कृत्स्नपदप्रवृत्तिनिमित्तस्य कृत्स्नत्वस्यावकाशो नैकस्मिन्नपि वस्तुनि । घटसमुदायस्थले कृत्स्नं घटमानयेतिवदेकस्मिन्घटे कृत्स्नपदाप्रयोगादिति भावः । आदिपदेन सर्वत्वादिसंग्रहः । तेन सर्वस्मिन्स्वाश्रये समवायः तदित्यादिकमपि निराकृतमिति ज्ञातव्यम् । **निराकरिष्यमाणत्वादिति** । अभावेऽभावानङ्गीकारेणाश्रयव्यापित्वस्याभावरूपत्वेऽभावगतत्वानुपपत्तेरिति निराकरिष्यमाणत्वादित्यर्थः ॥

श्री० — त एव षट्पदार्था एव । **तेषां** पदार्थानां । कार्यद्रव्यादाववयवादिनिष्ठत्वमेव नास्ति अनाश्रितत्वाभ्युपगमादित्यतो नैवमङ्गीकृतं त्वयेत्याह **आश्रितत्वं चेति** ॥ **स्ववृत्तीति** । अवयवादिनिष्ठत्वं समवायेऽपि तावदस्ति । यद्ययं धर्मः समवायः स्यात्तर्हि स्ववृत्तिः समवायस्यात्माश्रयाद्युक्तेत्यर्थः ॥ **स एवेति** । समवाय एवेत्यर्थः ॥ **किञ्चाधारीति** । अवयवावयविनोराधाराधेयभावनियामकसंबन्धो हि समवायः । आधाराधेयभावरूपमेवावयवादिनिष्ठत्वं जातं नान्यत् । तथा चास्य समवायरूपत्वे आधारित्वमाधारित्वनियामकत्वमाधारत्वं तन्नियामकत्वं समवायस्य न स्यात् ।

नियम्यनियामकभावस्य भेदव्याप्तत्वेनाभेदे तदयोगादित्यर्थः ॥ **उक्तरीत्येति** । आश्रयव्यापित्वस्य समवायेऽपि सत्त्वेन तस्य समवायत्वे तस्य स्ववृत्त्यनुपपत्तेरित्युक्तरीत्येत्यर्थः । **वृत्तिमात्रं** आश्रयवृत्तिमात्रघटक एव समवायो न व्यापित्वघटक इत्यर्थः । **अतिरिक्तं** समवायात् **तत्** आश्रयव्यापित्वम् । **तस्यापि** उक्तधर्मस्यापि ।

च० — उक्तार्थे तदीयवचनं प्रमाणयति **यथाहेति** । अभ्युपगतमित्येतदागामिनाऽवयवनिष्ठत्वमित्यनेनान्वेति । नित्यद्रव्याणि दर्शयति **कार्यद्रव्येत्यादि** । **निराकरिष्यमाणत्वादिति** । अभावे अभावानङ्गीकारेणाऽऽश्रयाश्रयित्वस्य अभावरूपत्वेऽभावगतत्वानुपपत्तेरिति प्रतिविधास्यमानत्वादित्यर्थः ।

**सु० — एवं संयोगादीनां प्रदेशवृत्तित्वं निरस्तम् ॥ उद्भूतत्वं च न जातिविशेषः । रूपत्वादिना परापरभावानुपपत्तेः । यदि हि रूपत्वं परं स्यात्तदा स्पर्शस्योद्भूतत्वं न स्यात् । यदि चोद्भूतत्वं परं भवेत्तदा सर्वमपि रूपमुद्भूतमिति चक्षुरादेरपि प्रतीतिः स्यात् ।**

शे० — **एवं संयोगादीनामिति** । प्रदेशवृत्तित्वं न तावद्द्रव्यगुणकर्मविशेषेष्वन्तर्भवति । तथा सति द्रव्यादीनां गुणवृत्तित्वाभावेनास्य गुणवृत्तित्वाभावप्रसङ्गात् । नापि सामान्ये । तस्याभाववृत्त्यभावेन संयोगाभावस्य प्रदेशवृत्तित्वाभावप्रसङ्गात् । नापि समवाये । संयोगवत्तत्समवायस्यापि प्रदेशवृत्तित्वेन स्ववृत्त्यनुपपत्तिप्रसङ्गात् । अपि च वृत्तिमात्रं समवायः प्रदेशवृत्तित्वं त्वतिरिक्तमेव निर्वक्तव्यम् । स्वाश्रयैकदेशे समवायस्तदिति चेत् । आकाशपरमाणुसंयोगे तदसंभवात् । स्वाभावेन सहावस्थानं तदिति चेन्न । तस्याप्यन्तर्भाव्यत्वात् । अभावोऽसाविति चेन्न । निषेधबुद्धिबोध्यत्वाभावात् । अभावेऽभावानङ्गीकारेण संयोगाद्यभावस्य प्रदेशवृत्तित्वाभावप्रसङ्गाच्चेति निराकरिष्यमाणत्वादिति पूर्वोक्तन्यायेन निरस्तप्रायमित्यर्थः । परापरभावानुपपत्तिमेव प्रथयति **यदि हीति** ॥ **परमिति** । व्यापकमित्यर्थः ॥ **उद्भूतत्वं न स्यादिति** । तद्व्यापकस्य रूपत्वस्य स्पर्शेऽभावात् । व्यापकनिवृत्तौ च व्याप्यनिवृत्तेरावश्यकत्वादित्यर्थः ॥ **सर्वमपि रूपमिति** । उद्भूतत्वाभावे रूपत्वाभावप्राप्त्या सर्वमपि रूपमुद्भूतमेव स्यादित्यर्थः ॥ **चक्षुरादेरिति** । घटादेरिव महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वाविशेषादिति भावः ।

स० — **एवं संयोगादीनामिति** । निराकरिष्यमाणत्वादेवेत्यर्थः ।

प० — **एवं संयोगादीनां प्रदेशवृत्तित्वमिति** । तन्न तावद्द्रव्यगुणकर्मविशेषेष्वन्तर्भवति । संयोगादिगुणेषु द्रव्यगुणादेः [दि]वृत्तित्वानुपपत्तेः । नापि समवायाभावेष्वन्तर्भावः । संयोगाद्यभावेऽ-

प्येकदेशवृत्तित्वसत्त्वादिति निरस्तमित्यर्थः । प्रदेशवृत्तित्वस्य समवायत्वेऽभाववृत्तित्वं न स्यात् । तस्यायुतसिद्धमात्रनिष्ठत्वेनाभावस्य च अनयुतसिद्धत्वात् । अभावत्वे त्वभाववृत्तित्वं न स्यात् । अभावेऽभावानंगीकारात् । अभावे च प्रदेशवृत्तित्वसत्त्वादिति भावः । रूपादिगतोद्भूतत्वधर्मस्यापि द्रव्यादिष्वंतर्भावोऽसम्भावित इति जातित्वमेव निराचष्टे **उद्भूतत्वं चेति** ॥ **परापरभावेति** । व्यापकव्याप्यभाव इत्यर्थः । तस्य रूपत्वादिजातिं प्रत्यधिकवृत्तित्वे वा न्यूनवृत्तित्वे वा जातित्वं संभवति । नान्यथा । जातित्वबाधकसांकर्यापातादिति भावः । सङ्कर्यं चाग्रे विवरिष्यामः ॥ परापरभावायोगं व्यनक्ति **यदि हीति** । परमिति व्यापकं तत्प्रत्युद्भूतत्वं व्याप्यं यदि स्यादित्यर्थः ॥ **परं भवेदिति** । रूपत्वं प्रति व्यापकं भवेदित्यर्थः । **प्रतीतिः** साक्षात्कार इत्यर्थः ॥

**या० — एवं संयोगादीनामिति** । प्रदेशवृत्तित्वं न तावद्द्रव्यगुणकर्मविशेषेष्वन्तर्भवति । द्रव्यादीनां गुणवृत्तित्वाभावादस्य च गुणवृत्तित्वात् । नापि सामान्ये । सामान्यस्य चाभावावृत्तित्वादस्य च संयोगाद्यभावेऽपि सत्त्वात् । नापि समवाये संयोगवत्तत्समवायेऽपि प्रदेशवृत्तित्वसत्त्वेन स्ववृत्त्यनुपपत्तेः । अपि च वृत्तिमात्रं समवायः प्रदेशवृत्तित्वं त्वतिरिक्तं निर्वक्तव्यम् स्वाश्रयैकदेशे समवायस्तदिति चेन्न । आकाशपरमाणुसंयोगे तदसम्भवात् । स्वाभावेन सहावस्थानं तदिति चेत् । तस्याप्यन्तर्भाव्यत्वादिति निरस्तप्रायमित्यर्थः । **परं** व्यापकम् ॥

**श्री० — एवमिति** । प्रदेशवृत्तित्वस्य द्रव्यादौ नान्तर्भावः । गुणादावपि सत्त्वादित्युक्तरीत्या निरस्तमित्यर्थः । **परापरभावः** व्याप्यव्यापकभावः । उद्भूतत्वं रूपत्वं विहाय स्पर्शेऽस्ति । रूपत्वं चोद्भूतत्वमपहायेन्द्रियगतरूपादौ । समावेशस्तु घटरूपे, इति साङ्कर्यमित्येतद्भङ्ग्यन्तरेणाह **यदि हीत्यादिना** ॥ **रूपत्वमिति** । यत्रोद्भूतत्वं तत्र रूपत्वमिति रूपत्वस्य व्यापकत्वे सर्वमप्युद्भूतं रूपमेवेति प्राप्त्या स्पर्शस्योद्भूतत्वं न स्यादित्यर्थः ॥ **उद्भूतत्वमिति** । यत्र रूपत्वं तत्रोद्भूतत्वमित्युद्भूतत्वस्य व्यापकत्वे सर्वमपि रूपमुद्भूतमेवेति प्राप्त्या चक्षुषस्तत्रवारिस्थतेजोगतरूपस्याप्युद्भूतत्वप्राप्त्या महत्त्वसमानाधिकरणोद्भूतरूपवत्वाच्चक्षुरादेरपि प्रत्यक्षत्वापत्त्याऽतीन्द्रियत्वं न स्यादित्यर्थः ।

**चं० — परापरभावानुपपत्तेः** व्याप्यव्यापकभावानुपपत्तेः ।

**सु० — चतुर्विंशतित्वं च न संख्या, गुणानां निर्गुणत्वाङ्गीकारात् । उपचारोऽयमिति चेन्न । निमित्ताभावात् । न तावदेकार्थसमवायो निमित्तम् । द्रव्ये चतुर्विंशतित्वनियमाभावात् । प्रत्येकं रूपादिषु तत्प्रसङ्गाच्च । अपर्यायचतुर्विंशतिशब्दवाच्यत्वमिति चेन्न । शब्देऽपि चतुर्विंशतित्वाभावात् । चतुर्विंशतिपुरुषोच्चारितापर्यायशब्दवाच्यत्वमिति चेन्न ।**

**बधिरादीनां रूपादिषु संख्याव्यवहाराभावप्रसङ्गात् ॥ एवमन्येषामपि धर्माणामन्तर्भावो निरसनीयः ।**

शे० — चतुर्विंशतित्वस्य संख्यारूपत्वे गुणवृत्तित्वानुपपत्तिरित्यभिप्रेत्य तत्र हेतुमाह **गुणानामिति** । तथा च गुणास्तु चतुर्विंशतिरेवेत्यादिव्यवहारानुपपत्तिरिति भावः ॥ **उपचारोऽयमितीति** । तथा च चतुर्विंशतिरित्यादिर्न मुख्यव्यवहारो येन प्रवृत्तिनिमित्तविरहाद्गुणेषु तदनुपपत्तिः प्रसज्येत । किन्तु सिंहो देवदत्त इत्यादिव्यवहारवदौपचारिक एव । तस्य च न प्रवृत्तिनिमित्तापेक्षत्वमिति न तदनुपपत्तिरिति भावः । औपचारिकत्वाद्व्यवहारस्य प्रवृत्तिनिमित्तधर्मानपेक्षत्वेऽपि न सर्वथा निर्निमित्तत्वमतिप्रसङ्गादिति सिंहसादृश्यादिवदिह निमित्तान्तराभावेनौपचारिकव्यवहारस्याप्यनुपपत्तिरेवेत्याह **निमित्ताभावादिति** । तत्कथमित्यतः किमत्र चतुर्विंशतित्वसंख्ययैकस्मिन्नर्थे गुणानां सामानाधिकरण्यं निमित्तं किंवाऽपर्यायचतुर्विंशतिशब्दवाच्यत्वमात्रं, किंवा चतुर्विंशतिपुरुषोच्चारितापर्यायशब्दवाच्यत्वम् । आद्येऽपि किं सामानाधिकरण्यनियमोऽभिमतः सामानाधिकरण्यमात्रं वेति विकल्पान्मनसि निधायाद्यं दूषयति **द्रव्य इति** । तथा च गुणाश्रयस्य द्रव्यस्य चतुर्विंशतित्वनियमाभावेन गुणानां चतुर्विंशतित्वसंख्यासामानाधिकरण्यनियमाभावान्न तस्योक्तव्यवहारनिमित्तत्वमिति भावः । द्वितीयं प्रत्याह **प्रत्येकमिति** । गुणादीनामिव रूपादीनामपि प्रत्येकं चतुर्विंशतित्वसंख्यासामानाधिकरण्यात्तत्रापि प्रत्येकं चतुर्विंशतित्वव्यवहारः स्यादित्यर्थः । यद्यपि मुख्यप्रयोग एव निमित्तानुसारी तत्र निमित्तस्य सामग्रीत्वेन कार्याव्यभिचरिततया तस्य निमित्तानुसारित्वकल्पनाया न्याय्यत्वात् । न त्वमुख्यप्रयोगोऽपि । तत्र निमित्तस्य सामग्र्येकदेशत्वेन कार्याव्यभिचाराभावेन प्रयोगस्य निमित्तानुसारित्वासम्भवात् । अन्यथा सिंहसादृश्यस्य माणवक इव शार्दूलेपि सत्त्वेन तत्रापि सिंहशब्दप्रयोगापातात् । किन्तु तत्र निमित्तमेव प्रयोगानुसारीति गुणास्तु चतुर्विंशतिरेवेत्यादिव्यवहारानुसारेण गुणानां चतुर्विंशतित्वसंख्यया सह सामानाधिकरण्यस्य गुणेषु तद्व्यवहारे निमित्तत्वकल्पनमुचितम् । न तु प्रत्येकं रूपादिषु रूपादीनां चतुर्विंशतित्वसंख्यया सामानाधिकरण्यस्य रूपादौ तद्व्यवहारे निमित्तत्वकल्पनमिति नात्र निमित्तानुसारेण प्रयोगापादनमुचितम् । तथाऽपि निमित्तस्याप्यमुख्यप्रयोगे सामग्रीत्वमेवेत्यभिप्रायेणैतदापादनमिति ध्येयम् । द्वितीयमाशङ्कते **अपर्याय इति** ॥ **शब्देऽपीति** । तस्य गुणत्वेन निर्गुणत्वाभ्युपगमादिति भावः । तृतीयमाशङ्कते **चतुर्विंशतीति** ॥ **बधिरादीनामिति** । जातिबधिराणामित्यर्थः । तेषां रूपादिषु शब्दघटितोक्तप्रवृत्तिनिमित्तज्ञानासम्भवेन तत्र चतुर्विंशतिसंख्याव्यवहाराभावप्रसङ्गादित्यर्थः । आदिपदेन पुरुषगतचतुर्विंशतित्वाज्ञानिनामन्धानां परिग्रहः ॥ ॥

**एवमन्येषामपीति** । अनित्यत्वनित्यत्वानुगतत्वादीनामित्यर्थः । अनित्यत्वादिकमपि न द्रव्यादिष्वन्तर्भवति गुणादिवृत्तित्वानुपपत्तेरिति निरासकन्यायसूचनायैवमित्युक्तम् । अयमर्थः । अनित्यत्वं न द्रव्यगुणकर्मविशेषान्यतमत्, तेषां गुणवृत्तित्वासम्भवात् । अस्य च गुणेऽपि सत्त्वात् । नापि सामान्यम्, अभावेऽपि वृत्तेः । अत एव न समवायोऽपि । एवं नित्यत्वमपि न द्रव्यादिष्वन्तर्भवति । तेषां गुणवृत्तित्वानुपपत्तेः । अस्य च गुणेऽपि वृत्तेः । नापि सामान्यसमवाययोः । तयोः स्ववृत्तित्वासम्भवात् । अस्य च सामान्यसमवाययोरपि वृत्तेः । एवमनुगतत्वमपि न द्रव्यादिरूपम् । गुणादिवृत्तित्वानुपपत्तेः । नापि सामान्यम् । स्ववृत्त्यनुपपत्तेः । अत एव न समवायः । एवं द्विविधत्वमपि न द्रव्यादिरूपम् । गुणवृत्तित्वानुपपत्तेः । नापि सामान्यम्, अभाववृत्तित्वानुपपत्तेः । अत एव न समवायोऽपीति ।

प० — **एकार्थेति** । द्रव्येषु चतुर्विंशतित्वमस्ति रूपादयो गुणाश्च सन्तीत्येकाश्रयत्वाद्गुणाश्चतुर्विंशतिरित्युपचर्यत इत्यर्थः ॥ **अपर्यायेति** । अपर्याया ये चतुर्विंशती रूपरसादिशब्दाः तद्वाच्यत्वमेव चतुर्विंशतित्वमित्यर्थः । **बधिरादीनामिति** । पुरुषगतचतुर्विंशतित्वाज्ञानिनां अन्धानामित्यादिपदार्थः । **एवमन्येषामिति** । नित्यत्वानुगतत्वादिप्रागुक्तधर्मान्तराणां गुणादिवृत्तित्वानुपपत्त्या द्रव्यादिष्वन्तर्भावो निरसनीय इत्यर्थः ।

---

या० **एकार्थसमवाय इति** । चतुर्विंशतिद्रव्येषु चतुर्विंशतित्वसङ्ख्यया चतुर्विंशतिगुणानां सामानाधिकरण्यमित्यर्थः । **बधिरादीनामिति** । तेषां शब्दघटितोक्तप्रवृत्तिनिमित्तज्ञानासम्भवेन चतुर्विंशतिसङ्ख्याव्यवहाराभावप्रसङ्गादित्यर्थः । आदिपदेन पुरुषगतचतुर्विंशतित्वाज्ञानिनामन्धादीनां संग्रहः ॥ **एवमन्येषामिति** । नित्यत्वानुगतत्वद्विविधत्वादिधर्माणामित्यर्थः । तेषामपि न द्रव्यादिरूपत्वम् । गुणादिवृत्त्यनुपपत्तेरित्यन्तर्भावो निरसनीय इत्यर्थः । अनुगतत्वं कथं गुणवृत्तीति चेन्न । द्वित्वबहुत्वादावनेकसमवेतत्वरूपानुगतत्वस्य सत्त्वात् ।

श्री० — **एकार्थेति** । चतुर्विंशतित्वं गुणश्चेत्येतदुभयमेकस्मिन्नर्थे द्रव्ये समवेतमित्यर्थः ॥ **प्रत्येकमिति** । तथा च चतुर्विंशतित्वरूपयोरुभयोरप्येकस्मिन्द्रव्ये समवेतत्वेनोक्तनिमित्तसत्त्वादेकस्मिन् रूपेऽपि चतुर्विंशतित्वव्यवहारः स्यादित्यर्थः ॥ **अपर्यायेति** । इदं गुणेषु सर्वेषु रूपरसाद्यपर्यायचतुर्विंशतिशब्दवाच्यत्वमस्तीति तत्र चतुर्विंशतित्वव्यवहारोऽस्ति न रूपेऽपर्यायचतुर्विंशतिशब्दवाच्यत्वरूपनिमित्ताभावादिति भावः ॥ **शब्देऽपीति** । शब्दस्य गुणत्वेन तत्र संख्याया अभावेनापर्यायचतुर्विंशतिशब्देत्येतद्वचनमयुक्तमिति भावः । शब्दे चतुर्विंशतित्वं घटयितुं निमित्तं व्याख्याति **चतुर्विंशतीति** । वाच्यत्वमित्यत्र निमित्तं गुणेषु चतुर्विंशतित्वव्यवहार इति शेषः ॥ **बधिरेति** चतु-

विंशतित्वस्य संख्यात्वान्निरुक्तशब्दघटितनिमित्तज्ञानाभावेऽपि बधिरस्य रूपादिषु चतुर्विंशतित्वसंख्याव्यवहारस्य जायमानत्वेन नात्रैतन्निमित्तमित्यर्थः । आदिपदेनाव्युत्पन्नस्यैतन्निमित्तज्ञानाभावेऽपि चतुर्विंशतिसंख्याका एते घटा इति व्यवहारस्य जायमानत्वान्नेदमत्र निमित्तमिति भावः ।

च० — एकार्थसमवायः एकस्मिन्नर्थे गुणसंख्ययोः समवायः ॥ बधिरादीनामिति । शब्दघटितोक्तप्रवृत्तिनिमित्ताप्रतिसन्धानादिति भावः ।

सु० कश्चिदाह । धर्मपदार्थोऽभावेऽन्तर्भवतीति । तदसत् । निषेधबुद्धिबोध्यत्वाभावात् । अभावेऽभावानङ्गीकारेण तद्धर्माणामभावत्वायोगाच्च । द्रव्यादिषड्लक्षणान्यतमराहित्यमभावत्वम् । न तु निषेधबुद्धिबोध्यत्वमिति चेन्न । लोकप्रतीतिमवधूय स्वकल्पनादरणे द्रव्यमेव भावस्तल्लक्षणरहितोऽभाव इत्यपि कल्पनाप्रसङ्गात् । अतस्तन्निष्ठत्वादयो द्रव्यादिधर्मास्तदात्मान एवाङ्गीकार्याः । तथा चाह 'भावस्य स्वरूपमेवावस्थाभेदेनास्तित्वं ज्ञेयत्वमभिधेयत्वं चोच्यते' इति । न च विशेषमपहायावस्थाभेदः शक्यनिरूपणः ।

शे० — ननु धर्मपदार्थस्योक्तरीत्या षट्पदार्थान्तर्भावासंभवेऽप्यभावेऽन्तर्भावे बाधकानुपलब्धेस्तत्रान्तर्भावो भविष्यतीति न धर्माणां षड्भ्यः पदार्थेभ्योऽतिरेकेऽपि न षडेव पदार्था इति नियमभङ्ग इति पूर्वदोषोपमर्देन एकदेशिमतमुत्थापयति कश्चिदाहेति । केचित्तु । द्रव्यादिषड्लक्षणराहित्यरूपाभावलक्षणाक्रान्तत्वादभावत्वमेव धर्मपदार्थस्येति गूढाभिसन्धेरियमाशङ्केत्याहुः । धर्मपदार्थस्याभावेऽन्तर्भावं वदतः किमभावत्वमभिमतं निषेधबुद्धिबोध्यत्वं वा द्रव्यादिषड्लक्षणान्यतमराहित्यं वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति निषेधेति । धर्मपदार्थस्याभावलक्षणानाक्रान्तत्वान्नाभावत्वमित्यर्थः । तत्तन्निष्ठत्वादेर्निषेधबुद्धिबोध्यत्वाभावेनाभावत्वनिरासासंभवेऽपि स्वात्यन्ताभावेन सहावस्थानाभावरूपस्य स्वाश्रयव्यापित्वस्य तद्बुद्धिबोध्यत्वेन तस्याभावत्वनिरासे एतद्युक्तेरप्रवृत्तेस्तत्साधारणदूषणमाह अभावेऽभावानङ्गीकारेणेति । आश्रयोऽभाव आश्रितादभावाच्च तावद्भिन्नः । तथा सत्यनवस्थानात् । तत्रापि तन्नास्तिताप्रतीत्या तत्सिद्धेरकुण्ठितत्वात् । नाप्यभिन्नः । आत्माश्रयप्रसङ्गादिति युक्त्येति शेषः । द्वितीयमाशङ्कते द्रव्यादीति ॥ अत इति । तन्निष्ठत्वादेः स्वाश्रयादत्यन्तभेदेऽपि द्रव्यादिष्वनन्तर्भूतत्वेन षट्पदार्थनियमस्योक्तरीत्याऽसम्भवादेवेत्यर्थः । धर्मपदार्थस्य द्रव्याद्यात्मकत्वं न केवलं युक्तिसिद्धत्वादेवाङ्गीकार्यं किन्तु परस्य सम्मतं चेत्याह तथा चाहेति । तद्वाक्यं पठति भावस्वरूपमेवेति । अविचित्रस्य वस्तुस्वरूपस्य कथमस्तित्वादिविचित्रव्यवहारालम्बनत्वमित्यत उक्तं अवस्थाभेदेनेति ।

**या॰**— **भावस्य** पदार्थस्य। **अवस्थाभेद इति**। भावरूपाणामपि अस्तित्वादीनामित्यर्थः।

**श्री॰**— **धर्मेति**। तन्निष्ठत्वादीत्यर्थः **अभाव इति**। द्रव्यादिषु षड्लक्षणान्यतमराहित्यमेवाभावत्वमभिप्रेतमतस्तन्निष्ठत्वादिरूपधर्मपदार्थस्याभावेऽन्तर्भावो युक्त इत्यभिप्राय इति ध्येयम्। **तद्धर्माणाम्** अभावनिष्ठानां तन्निष्ठत्वादिधर्माणाम् ॥ **अभाव इत्यपीति**। ततश्च गुणादेरप्यभावत्वं स्यादिति भावः। अवस्थाप्रयुक्तो द्रव्ये भेदो **अवस्थाभेदः**।

**च॰**— **धर्मपदार्थः** धर्मरूपः पदार्थः। **अवधूय** तिरस्कृत्य।

**सु॰— ननु धर्मा धर्मितो भिन्ना एव। न चोक्तदोषः। नैयायिकादिभिः परमाण्वारंभवादिभिः षडेव पदार्था इति नियमस्यानङ्गीकृतत्वात्। धर्मपदार्थस्य पृथगङ्गीकृतत्वाच्च। तथा च भिन्नधर्मसंसर्गवशात्सर्वव्यवहारोपपत्तौ न तदन्यथाऽनुपपत्त्या विशेषसिद्धिरित्यत आह** पदार्थेति।

**अनु॰**— पदार्थानियमेऽपि हि ॥
धर्मस्य धर्मसन्तानादनवस्था(ऽऽकरो)खनिर्भवेत् ॥

**पदार्थानां षडेवेति नियमाभावपक्षेऽपि हि यस्माद्धर्मस्य धर्मसन्तानादनवस्थाया आकरो भवेदयं पक्षः, तस्माद्धर्मधर्माणामाश्रयाभेदेऽवश्यमङ्गीकार्ये तत्र धर्मधर्म्यादिव्यवहारान्यथाऽनुपपत्त्या विशेषोऽङ्गीकरणीय इति योज्यम्।** खनिः आकरः।

**शे॰**— ननु 'पदार्थानियमेऽपि ही'त्युत्तरवाक्ये धर्मानवस्थाप्रसङ्गनेन धर्माणां स्वाश्रयतोऽत्यन्तभिन्नत्वनिराकरणं क्रियते। तदनर्थकम्। प्रकृतानुपयोगात्। न चात्यन्तभिन्नधर्मसंसर्गवशाद्विशेषसाधकव्यवहारोपपत्तिशङ्कानिरासार्थं तदिति वाच्यम्। षट्पदार्थातिरेकः स्यादिति पूर्वग्रन्थे पदार्थनियमभङ्गापादनेनैव धर्माणां स्वाश्रयतोऽत्यन्तभिन्नत्वनिराससिद्ध्या पुनस्तदाश्रयणेनान्यथासिद्धिशङ्कानुदयात् इत्यतो नियमवादिनं प्रति नियमभङ्गापादनसम्भवेन तेन धर्माणां स्वाश्रयतोऽत्यन्तभेदनिराससिद्ध्या तदाश्रयणेन पुनस्तस्यान्यथासिद्धिशङ्कानुदयेऽपि पदार्थानियमवादिनं नैयायिकं प्रति तन्नियमभङ्गस्येष्टापादनतयाऽसम्भवेन तेन धर्माणां स्वाश्रयतोऽत्यन्तभेदनिरासासिद्ध्याऽनियमवादिनस्तदाश्रयणेन विशेषसाधकव्यवहारस्यान्यथासिद्धिशङ्कासम्भवेन तन्निरासार्थतया तं प्रत्यप्यनवस्थाप्रसङ्गेन भेदनिराकरणस्यार्थवत्त्वान्न तत्परोत्तरभाष्यवैयर्थ्यमित्यभिप्रेत्यानियमपक्षेऽपि तद्भेदनिरासपरतयोत्तरभाष्यं योजयितुमनियमपक्षमाश्रित्यान्यथासिद्धिशङ्कामुत्थापयति **नन्विति**। ननु धर्माणां षड्भ्योऽतिरेके षडेवेति नियमभङ्गप्रसङ्गादनतिरेके

च षट्स्वन्तर्भावानुपपत्तेर्न धर्मिणो भिन्नत्वाश्रयणं युक्तमित्याशङ्क्य निषेधति **न चेति** । तत्कुत इत्यतो-ऽतिरिक्तत्वपक्षोक्तं दोषं परिहरति **नैयायिकादिभिरिति** । आदिपदेन तदेकदेशिमतपरिग्रहः । परमा-ण्वारंभवादिभिरिति क्वचित्पठ्यते तत्स्वरूपकथनमित्यवधेयम् । धर्मपदार्थस्य पृथगङ्गीकारेणानतिरेकान-भ्युपगमान्न तत्पक्षोक्तान्तर्भावानुपपत्तिरपीत्याह **धर्मपदार्थस्येति** ॥ **सर्वव्यवहारेति** । धर्मधर्म्यादि-व्यवहारेत्यर्थः ।

**स० — न चोक्तदोष इति** । षट्पदार्थातिरेकलक्षण इत्यर्थः ।

**प० —** वैशेषिकपरीक्षायां नैयायिकादिदूषणमनुचितमित्यत उक्तं **परमाण्वारंभवादिभिरिति** । उभयेषामप्यारम्भवादित्वाददोष इति भावः ॥ **धर्मपदार्थस्येति** । तद्गतत्वादिप्रागुक्तधर्मपदार्थस्येत्यर्थः ॥ **सर्वव्यवहार इति** । तन्तुषु पटः शुक्लः पट इत्यादिप्रागुक्त इत्यर्थः ।

**या० — नैयायिकादिभिरिति** । वैशेषिकभिन्नैस्तार्किकादिभिरित्यर्थः ।

**श्री० — उक्तदोषः** द्रव्यत्वाद्यन्तर्भावसम्बन्धरूपः ।

**च० — नैयायिकादिभिः** वैशेषिकान्यैर्न्यायमधीयानैस्तं प्रतिसन्दधानैर्वा ।

**सु० — एतदुक्तं भवति । धर्मपदार्थं द्रव्यादिभ्यो भिन्नमभ्युपगच्छन्प्रष्टव्यः । अस्ति-त्वादिधर्मेष्वप्यस्तित्वादिकमस्ति न वा । नेति पक्षेऽनुभवविरोधः । अस्तित्वं न ज्ञेयं नाभि-धेयमिति स्वक्रियाविरोधश्च । अन्यथा द्रव्यादिष्वपि तदभावापत्तिः । आद्ये तदाश्रयतो भिन्न-मभिन्नं वा । आद्ये तत्राप्यस्तित्वाद्यन्तरमित्यनवस्था स्यात् । द्वितीये त्वस्ति तावत्तत्रापि धर्मधर्म्यादिव्यवहारः । स चानुपपद्यमानो विशेषं गमयतीति । किञ्च धर्मगता धर्मा यदि आश्रयाभिन्नास्तदा किं द्रव्यादिगतास्तित्वादिधर्मैरपराद्धम् । येन ते द्रव्यादितो भिद्येरन् । योगक्षेमसाम्यात् । ततस्तेषामेव द्रव्याद्यभेदे सति पुनर्व्यवहारान्यथाऽनुपपत्त्या द्रव्यादिष्वेव विशेषसिद्धिः (इति) ।**

**शे० —** ननु द्रव्यादिधर्माणामाश्रयतो भिन्नत्वेऽपि धर्मवत्त्वासिद्धेस्तत्सिद्धावपि तन्मात्रस्या-प्रयोजकत्वाद्भिन्नधर्मवत्त्वाभिप्राये च तदसिद्ध्याऽऽपादकासिद्धिप्रसङ्गेन धर्मानवस्थाया अप्रसङ्गात्कथ-ञ्चिदापादकसिद्ध्या तेन तदापादनसंभवेऽपि धर्मधर्माणां धर्माभेदसिद्ध्या तत्र सामानाधिकरण्यव्यवहारा-नुपपत्त्या विशेषसिद्धावपि प्रकृतद्रव्याणां तदभेदासिद्ध्या तत्रोक्तव्यवहारेण विशेषासिद्धेः कथमुक्तशङ्कापरिहार इत्यतो धर्माणां धर्मवत्त्वसाधनप्रणाड्योक्तशङ्कापरिहारं दर्शयितुमाह **एतदुक्तं भवतीति** । अनुभवमतिक्रामन्तं प्रति दूषणान्तरमाह **अस्तित्वमिति** । यथा मूकोऽहमिति वचनक्रियया

मूकपदोक्तवचननिषेधो विरुध्यते तथाऽस्तित्वं न ज्ञेयं नाभिधेयमित्यस्तित्वसंबन्धित्वेन ज्ञेयत्वाभिधेयत्व-निषेधकास्तित्वविषयकज्ञानाभिधानक्रियया नेति पदोक्तस्तन्निषेधो विरुध्यत इत्यर्थः । उभयमप्यवगणयन्तं प्रत्यनिष्टान्तरमाह अन्यथेति । अस्तित्वादिधर्मेष्वस्तित्वाद्यभावे द्रव्यादिष्वपि तदभावापत्तिरनुभवविरोधा-देरुभयत्राप्यविशिष्टत्वादन्यस्य नियामकस्य चाभावादिति भावः । गमयतीत्यत्रत्यस्येतिशब्दस्य द्रव्यादिष्वेव विशेषसिद्धिरिति वक्ष्यमाणेनान्वयः । तत्रत्यस्य चेत्येतदुक्तं भवतीति संबन्धः । केचित्तु गमयती-त्यत्रत्यस्येतिशब्दस्येतदुक्तं भवतीति पूर्वेण संबन्धमङ्गीकृत्य नन्वस्तु धर्मधर्माणां धर्मभिन्नतया तत्र विशेषसिद्धिः । द्रव्यादिधर्माणां तु तदभेदासिद्ध्या तत्र विशेषासिद्धेः कथमुक्ताक्षेपपरिहार इत्यत आहेति किंचेत्यादिग्रन्थावतारमाहुः ॥ योगक्षेमेति । अप्राप्तप्राप्तिवाचकयोगशब्देन साधकसद्भावोऽभि-मतः । प्राप्तसंरक्षणपरेण क्षेमशब्देन च बाधकाभावोऽभिमतः । ततश्च साधकबाधकाभावयोः साम्यादित्यर्थः ।

प० — **योगक्षेमेति** । धर्म धर्मान्तरमस्तीति धर्मे धर्मान्तर[स्य]योगः तथा [प्रायःत्व] [भिप्रायात्तादा] प्यनवस्थाभिया तत्र तादात्म्याङ्गीकारेऽपि धर्मधर्म्यादिव्यवहारबलेनान्यतरपरिलोपाभाव-रूपः क्षेमो यथा तथा द्रव्येपि रूपादिगुणयोगः तयोरभेदेप्यन्यतरलोपाभावरूपक्षेमश्च सम इति योगक्षेमसाम्यादित्युक्तं । साधकबाधकाभावसाम्यादित्यर्थ इत्येके ।

---

या० — **तत्** अस्तित्वादिधर्मजातम् । **योगक्षेमेति** । अप्राप्तप्राप्तिवाचकयोगशब्देनात्र बाधकाभावो ग्राह्यः । प्राप्तपरिरक्षणपरेण क्षेमशब्देन साधकसद्भावस्तयोः साम्यादित्यर्थः ।

श्री० — **स्वक्रियेति** । अस्तित्वमिति व्यवहारेणास्तित्वज्ञानस्य सत्त्वेन न ज्ञेयमित्युक्तेः स्वक्रियाविरोधः । अस्तित्वमित्युक्ते तच्छब्देनैवाभिधेयत्वप्राप्त्या नाभिधेयमित्युक्तेऽपि तथेति ज्ञेयम् ॥ **अन्यथेति** । अस्तित्वादिधर्मेष्वस्तित्वादिकमनुभवसिद्धमपि यदि नाङ्गीक्रियत इत्यर्थः । **धर्मगताः** अस्तित्वादिधर्मगताः **धर्मा** अस्तित्वादिधर्मा ॥ **अभिन्ना इति** अभिन्नधर्माः इत्यर्थः ।

**सु० — नन्वस्त्येव द्रव्यादिधर्मेष्वस्तित्वादिष्वप्यस्तित्वादिकम् । तच्चाश्रयतो भिन्नमेव । न चैवं धर्मस्यानवधिकधर्मसन्तानादनवस्थादोषः । उत्पत्तिज्ञप्तिप्रतिबन्धकत्वाभावेनादोषत्वात् । यथाऽऽहुः 'मूलक्षयकरीं प्राहुरनवस्थां हि दूषणमि'ति । यदर्थमुत्तरोत्तरानुसरणं तन्मूल-मुत्पत्तिर्ज्ञप्तिर्वा । ततो भिन्ननिमित्ततयोपपद्यमानो व्यवहारो न विशेषमाक्षेप्तुमलमित्यत आह सामान्यस्यापीति ।**

अनु० सामान्यस्यापि सामान्यं गुणस्यापि गुणो ह्यतः ॥
नाङ्गीकृतः

सामान्यस्य गोत्वादेः, सामान्यं सत्तालक्षणम् । गुणस्य च रूपादेः, संख्यापृथक्त्वादि-गुणः अत अनवस्थाभयादेव हि नाङ्गीकृतः ।

अयमाशयः । सामान्यस्यापि सामान्यं तावत्परेण नाङ्गीकृतम् । तथा गुणस्यापि गुणो नाङ्गीकृतः । तत्कस्मादिति वक्तव्यम् । न तावत्प्रतीत्यभावात् । सद्गोत्वं चतुर्विंशतिगुणा रूपाद्रसः पृथगिति प्रतिभासस्य दुरपन्हवत्वात् । न च न सद्गोत्वमित्यादि बाधकमस्ति येन प्रतीतस्यापि परित्यागः । गोत्वं न सत्तावदपरसामान्यशून्यत्वाद्विशेषवत्, गुणा न गुण-वन्तोऽद्रव्यत्वात्क्रियावदित्यादिबाधकमस्तीति चेन्न । विपक्षे बाधकाभावेनाप्रयोजकत्वात् । दृष्टान्तयोः(श्च) साध्यविकलत्वाच्च । यदि गोत्वादौ सत्ता स्यात्तदा सत्तायामपि स्यात् । तथा चात्माश्रयत्वमिति चेन्न । सत्तान्तरस्वोपपत्तेः । किञ्च प्रतीते किमात्माश्रयता करिष्यति । अन्यथा प्रमेयत्वादीनां केवलान्वयित्वं न स्यात् । आत्माश्रयभयाद्यतः प्रमेयत्वादिव्यावृत्तिः तस्यैव विपक्षत्वात् । उक्तं च 'कथं स्ववृत्तिरिष्टा चेद्यथाऽन्यत्रेति गृह्यताम् । प्रमाणं शरणं वृत्तौ न भिन्नाभिन्नतेयते' इति । गुणानामपि गुणवत्त्वे द्रव्यलक्षणयोगाद्द्रव्यतापत्तिरिति चेन्न । प्रतीतिमनुरुध्य लक्षणान्तरस्य कर्तव्यत्वात् । तस्मात्सामान्ये सामान्यं गुणे च गुणः अनवस्थाभयादेव नाङ्गीक्रियत इत्येव वक्तव्यम् । यथाऽऽह 'व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथा-नवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रहः' इति । न चानवच्छिन्ना सामान्यपरंपरा गुणपरंपरा चोत्पत्तिज्ञप्तिप्रतिबन्धे हेतुः । तथा च यथा सा दूषणं तथा प्रकृताऽपि दूषणमेव । न चेत्साऽपि न स्यादिति सामान्यादेरपि सामान्याद्यङ्गीकार्यं स्यात् । यदि कथञ्चिज्ज्ञप्ति-प्रतिबन्धकत्वं तत्र व्युत्पाद्येत । तर्हि वयमप्यत्र तद्व्युत्पादयिष्याम इति ।

शे० — ननूत्तरग्रन्थे सामान्यादौ सामान्याद्यनभ्युपगमस्यानवस्थानिमित्तकत्वमुच्यते तदनर्थक-मित्याशङ्क्य धर्मानवस्थाया विपक्षे बाधकोपदर्शनमुखेन दूषणत्वोपपादनार्थत्वान्न तदिति भावेन तत्परतयो-त्तरग्रन्थं योजयितुं धर्मानवस्थाया दूषणत्वानुपपत्तिशङ्कामुत्थापयति नन्विति । उत्पत्तिज्ञप्तिप्रतिबन्धक-त्वेनानवस्थाया दूषणत्वे नियामकमाह यथाऽऽहुरिति ।

नन्वत्र मूलक्षयकरत्वमनवस्थाया दूषणत्वे नियामकमुक्तं न तूत्पत्तिज्ञप्तिप्रतिबन्धकमिति कथमस्योक्तार्थनियामकत्वेनोपन्यास इत्यत आह यदर्थमिति ॥ व्यवहार इति । द्रव्यादिधर्माणां

द्रव्येण, धर्मधर्माणां च स्वाश्रयेण सामानाधिकरण्यव्यवहार इत्यर्थः ॥ **विशेषमिति** । द्रव्यादिषु द्रव्यादिधर्मेषु चेति शेषः । ननु सामान्यादौ सामान्याद्यनभ्युपगमस्य तत्साधकप्रमाणाभावबाधकप्रमाणसद्भावनिबन्धनत्वात् अनवस्थानिबन्धनत्वमेव तावदसिद्धम् । तन्निबन्धनत्वेऽपि वा सामान्यानवस्थाया उत्पत्त्यादिप्रतिबन्धकत्वेनैव दूषणत्वसम्भवात्तदप्रतिबन्धकत्वेऽपि दूषणत्वासिद्धेरेव तदप्रतिबन्धकत्वेऽपि वा तस्या अप्यदूषणत्वमिष्टमेवेति कथं तद्दृष्टान्तेन धर्मानवस्थाया दूषणत्वसिद्धिरित्यतस्तदुपपादयति **अयमाशय इति**। सामान्यादौ सामान्याद्यनङ्गीकारः किं साधकाभावनिबन्धनः किं वा बाधकसद्भावनिबन्धन इति विकल्पद्वयं मनसि निधायाद्यमनूद्य दूषयति **न तावदिति** । बाधकमपि न सद्गोत्वमित्यादिप्रत्यक्षं वाऽभिमतमनुमानं वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **न चेति** । आदिपदेन न चतुर्विंशतिगुणा न रूपादयः पृथगित्यादिप्रत्यक्षपरिग्रहः । योग्यानुपलम्भबाधेन तादृशप्रत्यक्षासिद्धेर्न तद्बाधकमिति भावः । द्वितीयमाशङ्कते **गोत्वमिति** ॥ **दृष्टान्तयोरिति** । विशेषस्य सत्ताशून्यतायाः क्रियायाश्च गुणशून्यतायाः प्रतिवादिनो ममासिद्धेरिति भावः । आद्यप्रयोगेऽप्रयोजकत्वपरिहारमाशङ्कते **यदीति** ॥ **सत्तायामपि स्यादिति** । अविशेषादिति भावः । इष्टापत्तिं परिहरति **तथा चेति** । **सत्तान्तरत्वेति** । तथा च नात्माश्रयत्वमिति भावः । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु तत्सत्तावत्त्वापादनेऽपि नानुपपत्तिरित्यभिप्रेत्यात्माश्रयत्वस्यादोषतां विपक्षे बाधकदर्शनेनोपपादयति **किञ्चेति** ॥ **स्ववृत्तिरिति** । प्रमेयत्वादेः स्ववृत्तिप्रसङ्गे तदाक्षेपोयं प्रमेयत्वादीनां स्ववृत्तिः कथमिष्टेति चेदिति । आश्रयाश्रयिभावस्य भेदव्याप्तत्वान्न स्ववृत्तिः सम्भवतीति भावः । उत्तरमाह **यथेति** । यथाऽन्यत्र स्वभिन्ने घटादौ प्रमेयत्वस्य वृत्तिरिष्यते तथा स्वस्मिन्नपि वृत्तिर्गृह्यतां स्वीक्रियतामित्यर्थः । तत्र वृत्तिप्रयोजकस्य भेदस्य सत्त्वादुपपद्यते वृत्तिः, अत्र तु न तथेत्याशङ्क्याह **प्रमाणमिति** । उपलक्षणमेतत् । अवृत्तौ प्रमाणाभाव एव शरणमित्यपि द्रष्टव्यम् । यतः प्रमाणमेव वृत्तौ शरणं न भेदो यतश्च प्रमाणाभाव एवावृत्तौ शरणं नाभेद इति । ततश्च वृत्तौ प्रमाणस्यैव नियामकत्वेन भेदस्यानियामकत्वादभेदेऽपि प्रमाणबलात्स्ववृत्तिरुपपन्नेति भावः । द्वितीयानुमानेऽप्यप्रयोजकत्वमाशङ्क्य परिहरति **गुणानामपीत्यादिना** । एवं सामान्यादौ सामान्याद्यनभ्युपगमस्यान्यनिमित्ततां परिहृत्य अनवस्थानिमित्ततां निगमयति **तस्मादिति** ।

सामान्ये सामान्यानङ्गीकारस्यानवस्थामूलकत्वमुदयनसम्मतं चेत्यभिप्रेत्य तद्वाक्यमुदाहरति **यथाऽऽहेति** । अस्यार्थः । अनेकासु व्यक्तिषु सङ्गतिग्रहणस्यानन्त्यव्यभिचाराभ्यामशक्यत्वात्तदर्थमनुवृत्तप्रत्ययनिर्वाहाय च जातिरङ्गीकरणीया । व्यक्तिभेदाभावे तु स्वरूपेणैव निर्वाहाद्व्यर्था जातिरिति व्यक्त्यभेदो जातिबाधकः । तुल्यत्वं नाम जात्याश्रयव्यक्तीनामन्यूनानधिकत्वम् । अयंभावः ।

घटादिष्वेकस्यैव जात्या सङ्गतिग्रहणाद्युपपत्तौ परापरभावानापन्नतावन्मात्रव्यक्तिवृत्तिकरीरत्वादिरूपद्वितीय- जात्यङ्गीकारो निष्प्रामाणिक इति तुल्यत्वं जात्यन्तरसद्भावे बाधकम् । परस्परपरिहारेणैव वर्तमानयोर्जात्योरेकत्र समावेशः सङ्करः । स च जातिबाधकः । अन्यथा गोत्वाश्वत्वयोरप्येकत्र समावेशसम्भावनया गौस्तिष्ठतीत्युक्ते तत्राश्वत्वस्यापि शङ्कितत्वान्नाश्व इति निश्चयाभावेन क्वापि प्रवृत्तिनिवृत्ती न स्यातामिति । तथाऽनवस्थितिरपि सामान्यनिष्ठजातेर्बाधिका । तथा हि । अनुवृत्त- प्रत्ययनिर्वाहाय व्यक्ताविव जातावपि यदि जातिः कल्प्येत तदा कल्पितायामपि जातौ तन्निर्वाहाय जातिरङ्गीकरणीयेत्यनन्तजातिकल्पनायामनवस्था । तथा विशेषेषु जातिसद्भावे समानधर्माक्रान्तत्वेन कदाचित्संशयहेतुत्वस्यापि सम्भवादत्यन्तव्यावृत्तिबुद्धिजनकत्वाभावेन विशेषरूपताव्याघातो बाधकः । समवाये सामान्याभ्युपगमे व्यक्तेरभेदस्तावदेको बाधकः । संबन्धाभावश्चापरः । समवायतन्निष्ठजाति- रूपसंबन्धिनोरद्रव्यत्वेन संयोगाभावात्समवाय एव हि तत्र संबन्धो वाच्यः । तत्र जात्याश्रयत्वेनाभिम- तसमवायव्यतिरिक्तसमवायान्तरानङ्गीकारे स्वात्मनि वृत्तिः प्रसज्येत । तदङ्गीकारे तु तत्रापि समवाय- निष्ठजात्या वर्तितव्यमेव । अवृत्तौ सकलसमवायावृत्त्या जातिरूपताव्याघातात् । तथा चान्योन्याश्रय- त्वमिति समवाये सामान्यस्य संबन्धाभावो जातिबाधक इति ॥ **तथा चेति** । उत्पत्त्याद्यप्रतिबन्धकत्वेऽपी- त्यर्थः ॥ **सेति** । अनवच्छिन्नसामान्यपरम्परेत्यर्थः ॥ **तथा प्रकृताऽपीति** । उत्पत्त्याद्यप्रतिबन्धकत्वेऽपि धर्मानवस्थाऽपि दूषणमेवेत्यर्थः ॥ **न चेदिति** । उत्पत्त्याद्यप्रतिबन्धकत्वाद्धर्मानवस्थाया अदूषणत्वे तत एवानवच्छिन्नसामान्यपरम्पराया अपि दूषणत्वं न स्यादित्यर्थः । इष्टापत्तिं परिहरति **इतीति** ।

**यदि कथञ्चिदिति** । जातिरियं जातिरियमित्यनुवृत्तप्रत्ययनिर्वाहाय जातिषु यदि जातिः कल्प्येत तर्हि कल्पितायामपि जातावियं जातिरित्यनुवृत्तप्रत्ययनिर्वाहाय जातिरङ्गीकरणीयेत्यनन्ता जातयः कल्प- नीयाः स्युः । ततश्च 'नागृहीतविशेषणा विशेष्ये बुद्धिरुदेती'ति न्यायेन तत्तज्जातिविषयविशिष्टबुद्ध्य- नुपपत्तौ इयं जातिरिति ज्ञानं न स्यादिति जात्यनवस्थाया ज्ञप्तिप्रतिबन्धकत्वम् । तथा गुणास्तु चतुर्विंश- तिरित्यादिप्रत्ययनिर्वाहाय गुणेषु गुणाः कल्प्यन्ते तर्हि कल्पितेषु गुणेष्वपि संख्यादिप्रत्ययनिर्वाहायान्ये गुणाः कल्पनीयाः । एवं तत्र तत्रेत्यनन्तगुणाः कल्पनीयाः स्युः । ततश्च नागृहीतविशेषणान्यायेन तत्त- त्संख्यादिविषयविशिष्टबुद्ध्यनुपपत्तौ चतुर्विंशतिगुणा इति प्रत्ययस्याप्यनुपपत्तिरिति गुणानवस्थाया ज्ञप्तिप्रति- बन्धकत्वं यदि व्युत्पाद्येतेत्यर्थः । स्यादियं जातिगुणविशिष्टबुद्ध्यनुपपत्तिर्यदि जात्यादिरूपविशेषणज्ञानस्य स्वगतजात्याद्यन्तरविशिष्टविषयकतानियमः स्यात् । न चैवम् । क्वचिज्जात्यादिरूपविशेषणज्ञानस्य निर्वि- कल्पकत्वेऽपि क्षत्यभावात् । नागृहीतविशेषणान्यायस्य सविकल्पकबुद्धिविषयत्वादित्याशयेनोक्तं **कथञ्चि- दिति** ॥ **तर्हीति** । यद्यस्तित्वमस्तीत्यादिप्रत्ययनिर्वाहायास्तित्वादावप्यस्तित्वादिकं कल्प्येत तर्हि कल्पि-

तेष्वस्तित्वादिषु तन्निर्वाहायास्तित्वाद्यन्तरम् कल्पनीयम् । एवं तत्र तत्रेत्यनन्तधर्माः कल्पनीयाः स्युः । ततश्च नागृहीतविशेषणान्यायेन तत्तदस्तित्वादिविषयकविशिष्टबुद्ध्यनुपपत्तावस्तित्वमस्तीत्यादिबुद्धेरप्यनुपपत्तिरिति धर्मानवस्थाया अपि ज्ञप्तिप्रतिबन्धकत्वं व्युत्पादयिष्याम इत्यर्थः । इतीत्यस्येत्ययमिति पूर्वेणान्वयः ।

स० उक्तं चेति यथा अन्यवृत्तिस्तथा स्वस्मिन्नपि वृत्तिरिष्टेति चेत् तर्हि कथं गृह्यताम्, न कथमपि । आत्माश्रयस्य ज्ञप्तिप्रतिबन्धकस्य सत्त्वादित्याशयः । प्रामाणिकेऽर्थे बीजाङ्कुरपरम्परावत् अप्रतिबन्धकत्वान्नोक्तदोष इति परिहरति **प्रमाणमिति** ।

प०— ननु **मूलक्षयेति** वाक्ये उत्पत्तिज्ञप्तिक्षयकरत्वम् न प्रतीयत इत्यत आह **यदर्थमिति** । ततः किमित्यत आह **तत इति** । अनवस्थायाः मूलक्षयकरत्वाभावादित्यर्थः ॥ **भिन्ननिमित्ततयेति** । धर्मणामाश्रयतो भिन्नत्वहेतुनेत्यर्थः ॥ **दृष्टान्तयोश्चेति** । विशेषवत्क्रियावदित्युक्तविशेषक्रिययोरित्यर्थः । विशेषे सत्तायाः, क्रियायां कर्माण्युत्क्षेपणादिभेदेन पचेति पञ्चत्वसंख्यायाः, एतत्क्रियातः सा क्रिया पृथगिति पृथक्त्वस्य गुणस्य, सत्त्वादित्यर्थः । किंचेत्यादिनोक्तं प्रमेयं तार्किकवाक्येन संवादयति **उक्तं चेति** । प्रमेयत्वादीनां स्ववृत्तिरिष्टा चेत्कथं ज्ञातव्या सेति चेत् अन्यत्र घटादौ घटत्वादिवृत्तिर्यथा तथा गृह्यताम् । ननु तत्र भेदाद्घटत्वादेर्घटादौ वृत्तिः सुग्रहा । प्रमेयत्वादिष्वभेदात्कथमित्यत उक्तम् **प्रमाणं शरणं वृत्तौ** । धर्माणां क्वचिदाश्रितत्वे प्रमाणं प्रमितिरेव कारणं न तु भिन्नत्वाभिन्नत्वे वृत्त्यवृत्तिनिमित्ते यतः अतोऽभेदेऽपि प्रमितत्वात्स्ववृत्तिरिष्टैवेत्यर्थः ॥ **व्यक्तेरभेद इति** । आकाशत्वं न जातिः तत्र व्यक्तेरेकत्वेनानेकानुगतस्वरूपजातिलक्षणाभावात् । **तुल्यत्वं** तुल्याश्रयकत्वमन्यूनानधिकदेशवृत्तित्वमिति यावत् । घटत्वेन तुल्याश्रयकत्वं करीरत्वकलशत्वकंबुग्रीवत्वपृथुबुध्नोदराकारत्वादीनां जातित्वे बाधकम् । **संकरो** नाम परस्परपरिहारेण वर्तमानयोरेकत्र समावेशः । यथा प्रागुक्तोद्भूतत्वं रूपत्वं विना(उद्भूत) स्पर्शे । रूपत्वं चोद्भूतत्वं विनानुद्भूतरूपे । रूपत्वं उद्भूतत्वं चोद्भूतरूप इति रूपत्वेन सांकर्यमुद्भूतत्वस्य जातित्वे बाधकं । जातौ जात्यंगीकारेऽनवस्था बाधिका । विशेषे जात्यंगीकारेऽव्यंतव्यावर्तकत्वरूपविशेषस्वरूपहानिर्बाधिका । समवायत्वस्य जातित्वे संबंधाभावो बाधक इति जातिबाधकसंग्रह इत्यर्थः । नन्वस्त्वेवमनवस्थाभयाज्जात्यादौ जात्यन्तराद्यनङ्गीकारः, तावता धर्मसन्तानानवस्थोत्पत्त्याद्यप्रतिबन्धकत्वान्न दोष इत्यस्य किमुत्तरमनेन प्राप्तमित्य आह **न चानवच्छिन्नेति** । अपर्यवसितेत्यर्थः ॥ **प्रकृताऽपीति** । धर्मस्य धर्मसंतानरूपेत्यर्थः ॥ **न चेदिति** । प्रकृतदूषणं न चेत्सामान्याद्यनवस्थापि दूषणं न स्यादिति हेतोरित्यर्थः ॥ **यदि कथंचिदिति** । सामान्यादौ तन्निष्ठोत्तरोत्तरसामान्याद्यन्तरज्ञानं विना पूर्वपूर्वसामान्यादिज्ञानं नोत्पत्तुमर्हति । 'नागृहीतविशेषणा विशेष्ये धीरि'ति न्यायादिति व्युत्पादनमस्माकमपि समानमित्यर्थः ।

या० — **कथं स्ववृत्तिरिति।** प्रमेयत्वादीनां स्ववृत्तिरिष्टा चेत्सा कथम् । आश्रयाश्रयिभावस्य भेदव्याप्तत्वादिति शङ्काभिप्रायः । उत्तरमाह **यथाऽन्यत्रेति।** यथाऽन्यत्र स्वभिन्ने वृत्तिः तथा स्वस्मिन्नपि वृत्तिर्भविष्यतीत्यर्थः । ननु वृत्तिप्रयोजकस्य भेदस्याभावात्कथमिदमुच्यत इत्यत आह **प्रमाणमिति।** इदमुपलक्षणम्। अवृत्तौ प्रमाणाभाव एव शरणमित्यपि द्रष्टव्यम्। न भिन्नाभिन्नत्वे वृत्यवृत्तिप्रयोजके इति शेषः । सामान्ये सामान्याङ्गीकारेऽनवस्था बाधिकेत्यत्र उदयनसम्मतिमाह **यथाऽऽहेति व्यक्तेरभेद इति।** अस्यार्थः। अनेकासु व्यक्तिष्वानन्त्यव्यभिचाराभ्यां सङ्गतिग्रहणादेरशक्यतया तदर्थमनुवृत्तप्रत्ययनिर्वाहार्थं च जातिरङ्गीकार्या। व्यक्तिभेदाभावे तु तत्स्वरूपेणैव सर्वस्य निर्वाहाद्व्यर्था जातिरिति व्यक्त्यभेदो जातिबाधकः। तुल्यत्वं नाम जात्याश्रयव्यक्तीनामन्यूनानतिरिक्तत्वम्। घटादिष्वेकयैव घटत्वजात्या सङ्गतिग्रहणाद्युपपत्तौ परमाणावनन्ततद्व्यक्तिमात्रवृत्तिकरीरत्वादिरूपद्वितीयजात्यङ्गीकारो निष्प्रमाणक इति तत्र तुल्यत्वं जात्यन्तरसद्भावे बाधकम्। परस्परपरिहारेण वर्तमानयोर्जात्योरेकत्र समावेशः सङ्करः। सोऽपि जातिबाधकः। अन्यथा गोत्वाश्वत्वयोरप्येकत्र समावेशसम्भावनया गौस्तिष्ठतीत्युक्ते तत्राश्वत्वस्यापि शङ्कितत्वात् नाश्व इति निश्चयासम्भवेन न निष्कम्पा प्रवृत्तिः स्यादिति । अनवस्थितिश्च जातौ जात्यङ्गीकारे बाधिका। विशेषेषु सामान्यसद्भावे समानजात्याकारत्वेन कदाचित्संशयहेतुत्वस्यापि सम्भवात् अत्यन्तव्यावृत्तिबुद्धिजनकत्वाभावेन विशेषरूपताहानिर्बाधिका। समवाये जात्यङ्गीकारे व्यक्त्यभेदस्तावदेको बाधकोऽपरश्च सम्बन्धाभावः। समवायतन्निष्ठजात्योरद्रव्यत्वेन संयोगासम्भवे समवाय एव वाच्यः। न च सोऽपि युक्तः। तस्यात्माश्रयत्वप्रसङ्गभीत्याऽन्यत्वे तत्रापि समवायनिष्ठजात्या भवितव्यम् । अन्यथा सकलसमवायावृत्तौ तस्या जातिताव्याघातात् । तदर्थं च तत्रापि समवायान्तराङ्गीकारेऽनवस्थाप्रसङ्गः। अत संबन्धाभावः समवाये जातिस्वीकारे बाधक इति ॥ **यदि कथञ्चिदिति।** इयं जातिरियं जातिरित्यनुवृत्तप्रत्ययनिर्वाहाय यदि जातिषु जातिः कल्प्येत तर्हि तासु कल्पितायामपि जातावनुवृत्तप्रत्ययनिर्वाहाय जात्यन्तरमङ्गीकरणीयम्। एवं तत्र तत्रेत्यनन्ता जातयः कल्पनीयाः स्युर्न चेदं संभवति। ततश्च 'नागृहीतविशेषणाविशेष्ये बुद्धिरुदेती'ति न्यायेन पूर्वपूर्वजातिविषयविशिष्टबुद्ध्यनुपपत्ताविय जातिरिति प्रत्ययस्याप्यनुपपत्तिरिति जात्यनवस्थायां ज्ञप्तिप्रतिबन्धकत्वम् । तथा गुणाश्चतुर्विंशतिरित्यादिप्रत्ययनिर्वाहाय यदि गुणेषु गुणाः कल्प्यन्ते तर्हि कल्पितेषु गुणेष्वपि संख्यादिप्रत्ययनिर्वाहायान्ये गुणाः कल्पनीयाः । एवं तत्र तत्रेत्यनन्ता गुणाः कल्पनीयाः स्युः । न चेदं सम्भवति। ततश्च नागृहीतविशेषणान्यायेन पूर्वपूर्वसंख्यादिविषयविशिष्टबुद्ध्यनुपपत्तौ चतुर्विंशतिगुणा इत्यादिप्रत्ययस्याप्यनुपपत्तिरिति गुणानवस्थायामपि ज्ञप्तिप्रतिबन्धकत्वं यदि व्युत्पाद्येतेत्यर्थः । स्यादियं जातिगुणविशिष्टबुद्ध्यनुपपत्तिर्यदि जात्यादिरूपविशेषणज्ञानस्यापि स्वगतजात्याद्यन्तरविशिष्टविषयकतानियमः

स्यात् । न चैवम् । क्वचिज्जात्यादिरूपविशेषणज्ञानस्य निर्विकल्पकत्वेऽपि क्षत्यभावात् । नागृहीतविशेषणा-न्यायस्य सविकल्पकबुद्धिपरत्वादित्याशयेनोक्तं कथञ्चिदिति ॥ तर्हि वयमपीति । यद्यस्तित्वमस्तीत्यादि प्रत्ययनिर्वाहायास्तित्वादावप्यस्तित्वादिकं कल्प्यते तर्हि कल्पितेष्वप्यस्तित्वादिषु तन्निर्वाहायास्तित्वाद्यन्तरं कल्पनीयम् । एवं तत्र तत्रेत्यनन्ता धर्माः कल्पनीयाः स्युः । न च तथा संभवति । ततश्च नागृहीत-विशेषणान्यायेन पूर्वपूर्वास्तित्वादिविषयविशिष्टबुद्ध्यनुपपत्तौ अस्तित्वमस्तीत्यादिबुद्धेरप्यनुपपत्तिरिति तत् कथञ्चिज्ज्ञप्तिप्रतिबन्धकत्वं व्युत्पादयिष्याम इत्यर्थः ।

श्री० — अत एव नाङ्गीकृत इत्युक्तमुपपादयितुं परिशेषमाह न तावदित्यादिना ॥ सत्ता-न्तरेति । सत्तानिष्ठा सत्ता न स्वयमेव, येनात्माश्रयः किन्त्वन्यैवेत्यर्थः । प्रतीते सत्ता सतीति सत्तायां सत्तावत्त्वे प्रतीते सतीत्यर्थः ॥ अन्यथेति स्वनिष्ठत्वेन प्रतीतत्वेऽपि यद्यात्माश्रयत्वं दोष इत्यर्थः । यतः प्रमेयत्वात् ॥ विपक्षत्वादिति । शब्दः प्रमेयोऽभिधेयत्वादित्यत्र प्रमेयत्वस्यैव विपक्षत्वेन व्यभिचार इति भावः ।

च० — अभिहितार्थे उदयनवचनं प्रमाणयति यथाहेति । स्वाश्रयव्यक्त्यैक्यादाकाशत्वं, घटत्वेन समनैयत्या करीरत्वादिकं, उद्भूतत्वं रूपत्वेन तदनधिकरणवृत्तित्वावच्छिन्नतत्सामानाधिकरण्यरूपसाङ्कर्यात्, जातौ जातित्वादिकमनवस्थातः, विशेषाणामत्यन्तव्यावर्तकत्वरूपलक्षणहान्यापत्त्या विशेषत्वम्, अभावत्व-मसंबन्धान्न जातिरिति तदर्थोऽवधेयः । कथंचिदिति । जात्यादिरूपविशेषणज्ञानत्वावच्छेदेन स्वगत-जात्याद्यन्तरविशिष्टविषयकत्वानुपगमेन जात्यादिरूपविशेषणज्ञानत्वसामानाधिकरण्येन निर्विकल्पकत्वोप-गत्यापि सामञ्जस्यान्नागृहीतविशेषणा विशेष्ये बुद्धिरुदेतीति न्यायस्य सविकल्पकपरत्वादित्याशयः ।

**सु० — यदि कश्चिद्वैयात्याद्ब्रूयात् । अस्त्येव सामान्यस्यापि सामान्यं गुणस्यापि गुणो निर्बाधप्रतीतिसिद्धत्वात् । उत्पत्तिज्ञप्त्यप्रतिबन्धहेतोरनवस्थाया दोषत्वायोगात् । अतो नैतन्न्यायेन धर्मपरंपराऽनवस्थाभयान्निवारणीयेति । तत्राह स चेति ।**

अनु० — स च यदि नानवस्था क्वचिद्भवेत् ॥

**स च गुणस्यापि गुणः । चशब्दात्सामान्यस्यापि सामान्यं यद्यङ्गीक्रियते तदा ब्रूमो नानवस्था क्वचिद्भवेदिति ।**

**अयमाशयः । एवं वदन्कश्चिदनवस्थादूषणमङ्गीकरोति न वेति वाच्यम् । न चेत् दूषणान्तरमपि नाङ्गीकुर्यात् । अविशेषात् । तथा च कथायां नाधिकारी स्यात् । नाद्यः । धर्मसामान्यगुणानवस्थाया अदूषणत्वे विमताया अपि दूषणत्वायोगात् । विशेषहेतोरभावात् ।**

शे० — ननु स चेन्युक्तवाक्यवैयर्थ्यम् । न च सामान्यादेः सामान्यादिमत्त्वनिरासाय तत्पक्षे बाधकोपदर्शकत्वान्न तदिति वाच्यम् । अपसिद्धान्तप्रसङ्गेन साधकाभावेन सामान्याद्यनवस्था-ग्रस्ततया च तस्याप्रसक्तत्वेनानिरसनीयत्वादित्यतः प्रसञ्जकोपदर्शनेन सामान्यादेरपि सामान्यादिम-त्त्वाप्रसक्तिमुपदर्शयति **यदीति** । अनन्वयदोषपरिहाराय यदीत्यादिश्रवणाल्लब्धं शेषमाह **तदेति** । नन्वनवस्थायाः क्वचिदप्यदूषणत्वमिष्टमेवेति नानवस्था क्वचिद्भवेदित्यापादनानुपपत्तिः । यत्र सामान्याद्यनवस्थाया अदोषत्वं तत्रानवस्थान्तरस्याप्यदोषत्वमिति विशेषव्याप्तेः दृष्टान्ताभावेनायोगादु-त्पत्त्यादिप्रतिबन्धकत्वभावाभावाभ्यां विशेषेणाविशेषमूलकव्याप्तेरप्ययोगाद्व्याप्तिवैकल्यं चेत्यतस्तदुभयं परिहर्तुमाह **अयमिति** । नन्वनवस्थाया दूषणत्वानङ्गीकारेण दूषणान्तरस्यापि तत्त्वेनाङ्गीकारापादनम-युक्तम् व्याप्तिवैकल्यादित्यतो विशेषव्याप्त्यभावेऽपि सामान्यव्याप्तिसद्भावान्नानुपपत्तिरित्याह **अवि-शेषादिति** । इष्टापत्तिं परिहरति **तथा चेति** ॥ **धर्मेति** । धर्मानवस्थायाः सामान्यानावस्थाया गुणानवस्थाया इति संबन्धः । अत्रापि विशेषव्याप्तौ दृष्टान्ताभावेन तदसंभवाद्व्याप्तिवैकल्यमित्याशङ्क्य विशेषव्याप्त्यभावेऽपि सामान्यव्याप्तिसद्भावान्नानुपपत्तिरित्याह **विशेषेति** ।

प० — **अतो नैतन्न्यायेनेति** । सामान्यादिपरंपरा यथाऽनवस्थाभयान्निवार्यते तथास्तित्वादि-धर्मपरंपराऽपि निवारणीयेति न (च)वाच्यमित्यर्थः ॥ **धर्मसामान्यगुणानवस्थाया इति** । दूषणत्वेन त्वदङ्गीकृताया इत्यर्थः । धर्मानवस्थायाः सामान्यानवस्थायाः गुणानवस्थाया इत्यर्थः ॥ **विमताया इति** । दूषणत्वेन त्वदङ्गीकृताया इत्यर्थः ।

या० — **क्वचिदिति** । परमाणोरवयवपरम्पराङ्गीकारस्थले इत्यर्थः ॥

श्री० — **न चेत्** प्रकृतानवस्थादूषणं न चेदित्यर्थः । **धर्मेति** । असमदुक्तधर्मानवस्था सामान्या-नवस्था गुणानवस्था च । **तस्या** इति जात्येकवचनम् । **विमतायाः** त्वया दूषणत्वेनाङ्गीकृताया अप्यनवस्थायाः ॥

च० — वैयात्यात् धौत्यात् ॥ व्यवहारान्यथानुपपत्त्या विशेषसमर्थनम् ।

सु० — नन्वपर्यवसितपरंपरामात्रसाम्येऽपि यत्रोत्पत्त्यादिप्रतिबन्धकत्वं तत्र दूषणत्वम् । यत्र तदभावस्तत्रादूषणत्वमिति चेत् । किमर्थमुत्पत्त्यादिप्रतिबन्धकत्वमनुसरणीयम् । अनवस्था हि तर्कविशेषः । तर्कश्चानिष्टप्रसञ्जनम् । उत्पत्त्यादिप्रतिबन्धश्चानिष्टः । प्रामाणिकपरित्याग-रूपत्वात् । उत्पत्त्यादेः प्रामाणिकत्वात् । अतस्तदप्रतिबन्धे तर्कत्वायोगात्कथं दूषणत्वम् । एवमेव दूषणत्वेऽतिप्रसङ्ग इति चेत् । किं प्रामाणिकपरित्याग एवानिष्ट उताप्रामाणिकस्वीका-रोऽपि । नाद्यः । नियामकाभावात् । द्वितीये कथं न प्रकृतानवस्था दूषणम् । अत्यन्तभिन्न-

धर्मपरंपराया अप्यप्रामाणिकत्वात् । अथाप्रामाणिकस्वीकारो न दूषणम् तर्हि प्रामाणिकपरित्यागोऽपि न (दूषणं) स्यादिति नानवस्था क्वचिद्दूषणं भवेत् । अथानिष्टापत्तिहेतुरनवस्थादूषणम् । न पुनरनिष्टरूपेति चेन्न । अनिष्टरूपैवानवस्था दूषणम् । न त्वनिष्टापत्तिहेतुरित्यपि वक्तुं शक्यत्वेन क्वचिदङ्गीकृताऽप्यनवस्था न दूषणं भवेत् । तस्मात्प्रामाणिकपरित्याग प्रामाणिकपरिग्रहरूपा वा तद्धेतुर्वाऽनवच्छिन्नपरंपराऽनवस्थेति वाच्यम् । अत एव नातिप्रसङ्गः । तथा च धर्मपरंपराया अप्यनवस्थात्वेनाभेद एवाङ्गीकार्यः । एवं चोक्तन्यायेन व्यवहारान्यथाऽनुपपत्त्या विशेषसिद्धिरिति ॥

शे० — उत्पत्त्यादिप्रतिबन्धकत्वभावाभावाभ्यां विशेषादविशेषोऽसिद्ध इति भावेन शङ्कते नन्विति । भवेदेतदेवं यद्युत्पत्तिज्ञप्तिप्रतिबन्धकत्वं तद्दूषणत्वौपयिकं स्यात् । न चैतदस्ति । तर्कत्वसम्पादकतया चरितार्थस्योत्पत्त्यादिप्रतिबन्धकत्वस्य तद्दूषणत्वौपयिकत्वकल्पने मानाभावात् । ततश्च यत्रोत्पत्त्यादिप्रतिबन्धस्तत्र तदप्रतिबन्धकत्वे तर्कत्वासिद्धेस्तत्सिद्ध्यर्थतयोत्पत्त्यादिप्रतिबन्धकत्वस्यानुसरणीयत्वेऽपि यत्र पुनस्तदप्रतिबन्धकत्वेऽपि प्रकारान्तरेणैव तर्कत्वनिर्वाहस्तत्रोत्पत्त्यादिप्रतिबन्धकत्वस्याननुसरणीयत्वात् । धर्मानवस्थायाश्च प्रकारान्तरेण तत्सिद्धेर्नोत्पत्त्यादिप्रतिबन्धकत्वस्य तत्रानुसरणीयतेति नोत्पत्त्यादिप्रतिबन्धकत्वतदप्रतिबन्धकत्वकृतोऽपि विशेषोऽनवस्थाद्वयस्येति न तदसिद्धिर्दोष इत्यभिप्रेत्योत्पत्त्यादिप्रतिबन्धकत्वस्य तर्कत्वसम्पादकतयाऽनुसरणीयतां परमुखेनैव वाचयितुं गूढाभिसन्धिस्तत्प्रयोजनं पृच्छति किमर्थमिति । आशयमविद्वान् शङ्कते अनवस्था हीति । अत्रानवस्थाशब्दस्तत्प्रसञ्जनोपलक्षणम् । अन्यथा तत्प्रसञ्जनस्यैव तर्कविशेषतयाऽनवस्थायास्तर्कविशेषत्वाभिधानानौचित्यादिति द्रष्टव्यम् । अपर्यवसितपरम्पराया अनिष्टत्वोपपादकत्वेनोत्पत्त्यादिप्रतिबन्धकत्वस्य तर्कत्वोपयोगित्वं वक्तुं तर्कस्वरूपज्ञाने तज्ज्ञानासम्भवात्तल्लक्षणमाह तर्कश्चेति । ततश्चानिष्टरूपानवस्थाप्रसञ्जनरूपत्वादनवस्थाप्रसङ्गस्य तर्कविशेषत्वमित्युक्तं भवति । ननु च कथमपर्यवसितपरम्परारूपाया अनवस्थाया अनिष्टत्वं येन तत्प्रसञ्जनस्यानिष्टप्रसञ्जनत्वात्तर्कविशेषत्वं स्यादित्यतः स्वतोऽनिष्टत्वाभावेऽपि तस्यास्तादृशानिष्टसम्पादकत्वात्तदिति भावेन तत्सम्पाद्यस्योत्पत्त्यादिप्रतिबन्धस्य स्वतोऽनिष्टतामाह उत्पत्त्यादीति ॥ एवमेवेति । उत्पत्त्याद्यप्रतिबन्धेऽप्यपर्यवसितपरम्परासाम्यमात्रेण दूषणत्वे बीजांकुरपरम्पराया अपि दूषणत्वं स्यादित्यप्रतिप्रसङ्ग इत्यर्थः। एवं तद्बुत्पत्त्याद्यप्रतिबन्धकत्वेऽप्यप्रामाणिकस्वीकाररूपतया प्रकृतधर्मपरम्पराया अप्यनिष्टत्वेन तत्प्रसञ्जनस्य तर्कत्वाद्दूषणं भविष्यतीत्याशयेनाप्रामाणिकस्वीकारस्यानिष्टतां विकल्पमुखेनोपपादयति किमित्यादिना । प्रामाणिकपरित्याग एवानिष्ट इत्यादेऽपि किं प्रामाणिकपरित्यागत्वमेवोक्तार्थनियामकं किंवाऽन्यत्किञ्चि-

दिति विकल्पद्वयं मनसि निधाय द्वितीयमसिद्ध्या दूषयति **नाद्यो नियामकाभावादिति** । अप्रामाणिकस्वीकारोऽपीति द्वितीयं दूषयति **द्वितीय इति** । आद्ये आद्यमाशङ्कते **अथेति** । अनिष्टताप्रयोजकीभूतप्रामाणिकपरित्यागतायास्तत्राभावादिति भावः । अत्र प्रामाणिकपरित्यागत्वमेवानिष्टताप्रयोजकमित्यर्थसिद्धौ तच्छून्यत्वादप्रामाणिकस्वीकारस्यानिष्टत्वाभावसिद्धिस्तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयप्रसङ्ग इति सत्येव दोषेऽतिप्रसङ्गरूपं दोषान्तरमाह **तर्हीति** । अप्रामाणिकस्वीकारत्वरूपानिष्टताप्रयोजकधर्मानाक्रान्तत्वादित्यर्थः । अनिष्टापत्तिहेतुत्वस्यैवानवस्थाया दूषणत्वे प्रयोजकत्वाद्वद्यत्योत्पत्त्यादिप्रतिबन्धकानवस्थाया दूषणत्वेऽपि न प्रकृतानवस्थाया दूषणत्वम् । तस्या अप्रामाणिकस्वीकाररूपानिष्टरूपत्वेनानिष्टापत्तिहेतुत्वाभावादित्याशयेन शङ्कते **अथेति** । अनिष्टापत्तिहेतुत्वमेव दूषणतानियामकमित्यर्थसिद्धौ तच्छून्यत्वात्प्रकृतानवस्थाया अदूषणत्वसिद्धिस्तत्सिद्धौ च तत्सिद्धिरिति स्फुटमत्रेतरेतराश्रयत्वमिति सत्येव दोषेऽतिप्रसङ्गेनैव दूषयति **नानिष्टरूपैवेत्यादिना** । अतिप्रसङ्गाभिधानेन सिद्धमर्थमुपसंहारव्याजेनाह **तस्मादिति** ॥ प्रामाणिकपरित्याग एवानिष्टो न त्वप्रामाणिकस्वीकार इति अनिष्टापत्तिहेतुरेवानवस्था दोषो न त्वनिष्टरूपेति वा नियमस्य नियामकाभावेनासम्भवदुक्तिकत्वादित्यर्थः । **तद्धेतुर्वेत्यत्र** तच्छब्देन प्रामाणिकपरित्यागमात्रपरामर्शः । अप्रामाणिकपरिग्रहहेतुरूपापर्यवसितपरम्पराया अप्रसिद्धत्वेनोभयपरामर्शस्यायोगादिति द्रष्टव्यम् ॥ अत **एवेति** । अपर्यवसितपरम्परामात्रस्यानवस्थात्वाभावादेवेत्यर्थः ॥ **नातिप्रसङ्ग इति** । बीजाङ्कुरपरम्पराया अपि दूषणत्वं स्यादित्यप्रसङ्गो नेत्यर्थः । अपर्यवसितपरम्परामात्रस्य दूषणत्वाभ्युपगमे तत्प्रसक्तावपि तस्मादित्यादिनोक्तप्रकाराश्रयणे तदप्रसङ्गादिति भावः ॥ **अभेद एवेति** । अत्यन्तभिन्नधर्मपरम्पराया अप्रामाणिकपरिग्रहरूपत्वेन दूषणतया भेदपक्षस्याश्रयितुमशक्यत्वादित्यर्थः । इति शब्दस्येत्ययमिति पूर्वेणान्वयः ॥ छ ॥

**स०— एवमेवेति** । उत्पत्त्यादिप्रतिबन्धकत्वाभावेऽपि अपर्यवसितपरम्परामात्रसाम्येनानवस्थाया दूषणत्वे बीजाङ्कुरपरम्पराया अपि दूषणत्वमित्यतिप्रसङ्ग इत्यर्थः । **अत एव नातिप्रसङ्ग इति** । प्रामाणिकपरित्यागाप्रामाणिकपरिग्रहरूपा वा तद्धेतुर्वाऽनवच्छिन्नपरंपरा इति यतोऽत एव बीजाङ्कुरपरंपराया अपि दूषणत्वमित्यतिप्रसङ्गपरिहार इत्यर्थः ।

**प०—** किमर्थमिति प्रश्नोत्तरमाह **अनवस्था हीति** ॥ **एवमेवेति** । अनिष्टापादनत्वाभावेपि दोषत्वे बीजाङ्कुराद्यनवस्थाया अपि दोषत्वप्रसङ्गादित्यर्थः ॥ **कथं न प्रकृतेति** । धर्माद्यनवस्थेत्यर्थः ॥ **अनिष्टापत्तिहेतुरिति** । उत्पत्तिज्ञप्तिप्रतिबन्धकानवस्थैवोत्पत्तिज्ञप्त्यभावरूपानिष्टस्यापादकत्वात् अनिष्टा-

पत्तिहेतुर्नान्येति भावः ॥ **क्वचिदङ्गीकृतापीति** । प्रामाण्यपरतस्त्वादावङ्गीकृतापीत्यर्थः ॥ **अत एवेति** । त्रिविधानवस्थायाः दोषत्वं नान्यस्या इत्यङ्गीकारादेव बीजांकुरानवस्थादेरपि दोषत्वरूपप्रागुक्तातिप्रसङ्गो नेत्यर्थः ॥ छ ॥

**॥ व्यवहारान्यथानुपपत्तिरूपार्थापत्त्या विशेषसमर्थनम् ॥**

**या० — उत्पत्त्यादिप्रतिबन्धश्चेति** । तथा चोत्पत्त्यादिप्रतिबन्धप्रसञ्जनमेव **योगेना**त्रानवस्थारूपतर्कतया विवक्षितं अन्यथाऽनवस्था हि तर्कविशेष इत्युपक्रमविरोधादिति ज्ञेयम् । अत एवोक्तं **पद्धतौ** । 'मूलक्षयापरनामिका प्रकृतकार्यविलोपलक्षणाऽनवस्थे'ति ॥ **एवमेवेति** । उत्पत्त्याद्यप्रतिबन्धेऽप्यपर्यवसितपरम्परासाम्यमात्रेण दूषणत्वे बीजाङ्कुरानवस्थाया अपि दूषणत्वं स्यादित्यतिप्रसङ्ग इत्यर्थः । ननु प्रामाणिकस्योत्पत्त्यादेः परित्यागे नानवस्थाशब्दो रूढ्या प्रवृत्तः, किन्तूत्पत्त्यादेरवस्थित्यभाव इति योगेनैव । तद्धेतुभूतापर्यवसितपरम्परायामेव तु रूढः । रूढार्थस्यैव आह्यत्वात्प्रामाणिकपरित्यागरूपमूलक्षयरूपानिष्टहेतुभूतैवानवस्था दूषणं अत एवाहुः 'मूलक्षयकरीं प्राहुरनवस्थां हि दूषणमि'त्याशङ्कते **अथानिष्टापत्तीति** ॥ **अनिष्टरूपैवेति** । रूढिसाम्यात् उदाहृतवचनस्य क्वाचित्काभिप्रायकत्वाच्चेति भावः ॥ **न दूषणं भवेदिति** ॥ घटादिकार्यानुत्पत्तिरूपमूलक्षयरूपानिष्टापत्तिहेतुत्वादिति भावः ॥ **तस्मादिति** । अनिष्टरूपतायां विशेषाभावादित्यर्थः । अत्राप्युक्तरीत्या प्रामाणिकपरित्यागस्यानवस्थात्वं यौगिकमेवेति ज्ञातव्यम् । प्रामाणिकपरित्यागरूपाया रूढ्या अपर्यवसितपरम्पराया उदाहरणाभावेन क्वाप्यदर्शनात् । तद्धेतुर्वेत्यत्र तच्छब्देन प्रामाणिकपरित्यागमात्रपरामर्शः । अप्रामाणिकपरिग्रहहेतुरूपापर्यवसितपरम्पराया अपि क्वाप्यदर्शनात् । ततश्च योगेन प्रामाणिकस्योत्पत्त्यादेः परित्यागरूपैकाऽनवस्था । रूढ्या चाप्रामाणिकपरिग्रहरूपा प्रामाणिकपरित्यागहेतुरूपा चेति द्विविधेति त्रिविधैवानवस्थाऽत्रोक्तेति ज्ञातव्यम् ॥ **उक्तन्यायेनेति** अस्तित्वादिधर्मेष्वपि अस्तित्वादिकमस्ति । अस्ति चेत् तत्रापि धर्मधर्म्यादिव्यवहारः । स चानुपपद्यमानो विशेषं गमयतीत्युक्तन्यायेनेत्यर्थः ।

**श्री० —** अनुसरणीयतामाशङ्कते **अनवस्थेति** । **एवमेव** प्रामाणिकपरित्यागरूपत्वाभावेऽपीत्यर्थः ॥ **अतिप्रसङ्ग इति** । शशविषाणपरित्यागस्यापि दूषणत्वं स्यादित्यर्थः । न स्यादित्यत्र दूषणमित्यनुवर्तते ॥ **न पुनरिति** । तथा च धर्मसामान्यपरम्परा चानिष्टरूपेति न दूषणमिति हृदयम् । **अत एव** प्रामाणिकपरित्यागादिरूपत्वादेव । शशविषाणपरित्यागस्य तथात्वाभावादिति भावः ॥ **व्यवहारेति** । भेदकार्यसामानाधिकरण्यव्यवहारेत्यर्थः ॥ छ ॥

**सु०— अपि च यो धर्मधर्मिणोर्भेदं समवायं चाङ्गीकृत्याभेदं विशेषं चावजानाति तेनानवस्थातो बिभ्यता गुणसामान्ययोर्गुणसामान्यप्रतीतिरेवापलपनीया । विनैव बाधकेन भ्रान्तिर्वा वाच्या । प्रतीत्यपलापादितो वा बिभ्यतोऽनवस्था स्यादित्येकं सन्धित्सतोऽन्य(त्प्र)-च्च्यवते । अभेदं विशेषं चाङ्गीकुर्वतां तु नेदं दूषणद्वयमतोऽपि तत्पक्षपात इत्याशयवानाह** अस्मत्पक्ष इति ।

**अनु०**— अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः ॥
अनन्यत्वान्नानवस्था

**धर्मधर्मिणोः सविशेषाभेदवादिनां पक्ष इत्यर्थः । गुणाद्या गुणाः सामान्यानि च । तद्वन्तो गुणवन्तः । सामान्यवन्ति च । तेन चतुर्विंशतिगुणाः सद्घोत्वमित्यादिप्रतीतिविरोधो नास्तीति शेषः** । अनन्यत्वात् **धर्मधर्मिणोरिति शेषः । अप्रामाणिकापर्यवसितपरंपरारूपा ह्येषा । अनन्यत्वे कथं तद्वत्त्वमिति तदवस्थः प्रतीतिविरोध इत्यत उक्तं** विशेषतो हि तद्वन्त इति । **भेदसंबन्धकार्यकारी हि विशेष इति ।**

**शे०**— 'अस्मत्पक्षे गुणाद्या' इति स्वपक्षे प्रतीतिविरोधाद्यभाववर्णनस्य पूर्वेण सङ्गत्यभावा-दानर्थक्यम् । न च धर्मधर्मिणोर्भेदपक्षपरित्यागेनाभेदपक्षपरिग्रहे को हेतुरित्यतः तत्र हेतुकथनार्थत्वेन तेन सङ्गतिसम्भवान्नानर्थक्यमिति वाच्यम् । 'कल्पनागुरुतादोषादि'त्यादिनैव तत्र हेतुकथनेन तच्छङ्कायाः प्रागेव निरस्तत्वेन तादर्थ्यायोगादित्याशङ्क्य तत्र निमित्तान्तराभिधायकत्वान्नानर्थक्यमिति भावेन व्यवहित-सङ्गतिप्रदर्शनपूर्वकं निमित्तान्तराभिधायकतया तद्योजयति **अपि चेति** ।

**प०— एकं सन्धित्सत इति** । प्रतीतितदभ्रान्तित्वे सन्धातुमिच्छतः अन्यदनवस्थाराहित्यं प्रच्यवते । तत्सन्धित्सतः प्रतीत्यादिकं प्रच्यवतेऽपयातीत्यर्थः । मूलस्थानवस्थापदार्थमाह **अप्रामा-णिकापर्यवसितपरंपरारूपेति** । धर्मपरंपरारूपेत्यर्थः ।

**श्री०**— प्रतीत्यपलापादित इत्यत्रादिपदेन विनैव बाधकेन भ्रान्तित्वकथनाच्च बिभ्यत इत्यर्थः । प्रतीत्यनुसारेण गुणसामान्यादौ गुणसामान्याद्यनुसरण इति यावत् ॥ **एकमिति** । अनवस्थाया दूषणत्वाङ्गीकारे तद्भयेन प्रतीत्यपलापो दोषः स्यात् । प्रतीत्यपलापभयेन तदादरे चानवस्था स्यादित्यर्थः । द्वयं प्रतीत्यपलापानवस्थारूपम् । मूले नानवस्थेत्युक्तम् । कुतो नानवस्थेत्यत आह **अप्रामाणिकेति** । एषा अनवस्था । तथा च गुणादीनां तद्वत्त्वं प्रतीतिसिद्धमिति नाप्रामाणिकत्वं परम्परायाः । तेषां चानन्यत्वाङ्गीकारान्नापर्यवसितपरम्परेत्यर्थः ।

सु० — एवमवयवावयव्यादीनामभेदोऽत्र निरूपितः । इदानीं क्वचिद्भेदाभेदावपि भवत इति तदपवादमाह भेद इति ।

अनु० — भेदो नाशे भवेत्तथा ॥

यद्वा यद्यवयव्यादयोऽवयवाद्यभिन्नाः । कथं तर्हि सत्स्वेवावयवादिषु विनश्यन्तीत्यत आह भेद इति ।

तथाशब्दः समुच्चये । अवयवादिषु सत्स्वेवावयव्यादीनां नाशे भेदोऽभेदश्च भवेदित्यर्थः । अत्र नाश इत्युपलक्षणम् । यत्र सत्स्वेवावयवेष्ववयविनोऽभावः सति गुणिनि गुणस्याभावस्तत्र भेदाभेदावित्यादि द्रष्टव्यम् । अन्यथा यत्रावयवावयव्यादीनां युगपद्विनाशस्तत्र भेदाभेदावुक्तौ न स्याताम् ।

इदमुक्तं भवति । सत्यपि तस्मिन्नसत्त्वादित्यनेन हेतुनाऽवयव्यादीनामवयवादिभ्यो भेदमात्रं वा साध्यतेऽत्यन्तभेदो वा । आद्ये सिद्धसाधनता भागासिद्धिश्च । तथा हि । सत्यप्यु(त्यु)पादाने कदाचिदुपादेयमसत् । यथा पटः । एवं सत्यपि द्रव्ये केचिद्गुणा असन्तो यथा पाकजादयः । तथा सत्यप्या(त्येवा)श्रये काश्चित्क्रिया असत्यो यथा पटचलनादयः । जातिश्च काचित्सति जातिमत्यसती । यथा ब्राह्मण्यम् । तत्र भेदाभेदयोरङ्गीकाराद्भेदसाधनं सिद्धविषयम् । गगनतद्भागयोरीश्वराद्याश्रितज्ञानादिगुणक्रियाजातिष्वभावाद्भागासिद्धत्वं हेतोः इति । न द्वितीयः । कालात्ययापदिष्टत्वात् । अभेदस्य प्रागुपपादितत्वादुपपादयिष्यमाणत्वाच्चेति ।

शे० — निरूपित इति । 'अभेदेन प्रतीतिश्चे'त्यादिनेति शेषः ॥ तदपवादमिति । यद्यप्ययं नाभेदापवादः । प्रागुक्तस्याभेदस्यात्रानिषेधात् । तथापि अपवादकप्रमाणशून्यत्वेन प्रसक्तं यदभेदस्यात्यन्तिकत्वं तदपवादत्वाभिप्रायेणेयमपवादत्वोक्तिरिति ध्येयम् । अत्र पक्षे भेदाभेदप्रतिपादनस्य प्रासङ्गिकत्वं भवतीत्यपरितोषात्पक्षान्तरमाह यद्वेति । अत्र नाश इत्यस्य नाशमात्रार्थप्रतीतिनिरासायाह अत्रेति उपलक्षणमिति । अभावस्येति शेषः । नाशशब्दस्य विशेषपरत्वे सम्भवति सति किमिति सामान्योपलक्षकत्वमित्यतो विशेषपरत्वे बाधकमाह अन्यथेति ॥ उक्तौ न स्यातामिति । तत्र सत्स्वेवावयवादिष्ववयव्यादीनां नाशरूपस्य भेदाभेदप्रयोजकस्याभावादित्यर्थः । सामान्योपलक्षणत्वे च तत्राप्यवयवादिष्ववयव्यादिप्रागभावसद्भावेनोक्तप्रयोजकलाभाद्भेदाभेदाभिधानसिद्धिरिति भावः । भेदसाधकानुमानस्य किमनेन दूषणमुक्तं भवतीत्यतस्तद्दर्शयितुमाह इदमुक्तं भवतीति । नन्वेकदेशे भेदसिद्धावप्यवयवादिमात्रे

तदसिद्धेन सिद्धसाधनम् । एकदेशमात्रपक्षत्वे च न भागासिद्धिरिति कथमेतदित्यतो नेदं दूषणद्वयमेकपक्षविषयकम् । नाप्यव्यवस्थितयत्किञ्चिद्विषयकम् । किन्तु व्यवस्थितपक्षमेवेति नानुपपत्तिरित्यभिप्रायेण व्यवस्थितविषयतया तद्योजयितुं प्रतिजानीते तथा हीति । तत्कथमित्यत स्तस्मिन्सत्यप्यसत्त्वादिति हेतुर्यावति विश्राम्यति तावत एव पक्षत्वे सिद्धसाधनत्वमित्यभिप्रेय तद्विश्रान्त्यधिकरणमवयव्यादिकं शृङ्गग्राहकतयोपदर्शयन्नेव सिद्धसाधनत्वमुपपादयति सत्यप्युपादान इत्यादिना सिद्धविषयमित्यन्तेन । एवं सिद्धसाधनतामुपपाद्य तत्परिहारायावयव्यादिमात्रपक्षीकारे भागासिद्धिरित्यभिप्रेत्योक्तहेतोः पक्षैकदेशवृत्तेः सिद्धसाधनत्वप्रपञ्चावसर एवोपवर्णितत्वेन तामनुक्त्वा एकदेशेऽवृत्त्युपवर्णनपूर्वकं तामाह गगनतद्भागयोरित्यादिना । अत्र इतिशब्दः प्रतिज्ञातदोषद्वयोपपादनसमाप्त्यर्थः ॥ प्रागिति । 'अभेदेन प्रतीतिश्चे'त्यादिनेति शेषः । उपपादयिष्यमाणत्वाच्चेतीति । 'सामस्त्योच्छेदिनोऽन्यत्र धर्मा उभयरूपका' इत्यादिनेति शेषः । अत्रेतिशब्दस्येदमुक्तं भवतीति पूर्वेणान्वयः ।

प० — क्वचिद्भेदाभेदावपीति । एतेन भेदो नाश इत्यत्र क्वचिदित्यनुवृत्तिं सूचयति । तथाशब्दः समुच्चय इत्युक्तं व्यनक्ति भेदोऽभेदश्चेति ॥ उपलक्षणमिति । प्रागभावप्रध्वंससाधारण्येनाभावमात्रस्योपलक्षणमित्यर्थः ॥ इत्यादि द्रष्टव्यमिति । यत्र सत्यप्याश्रये क्रियाऽभावः सत्यां व्यक्तौ जातेरभाव तत्र भेदाभेदाविति द्रष्टव्यमित्यर्थः । ननु नाशपदस्योपलक्षणत्वमुपेत्यावयविनोऽभावः गुणस्याभावः तत्र भेदाभेदाविति कुतो व्याख्येयम् । यत्रावयवेषु सत्सु अवयविनो नाशः गुणिनि सति गुणस्य नाश इत्येव कुतो न व्याख्यायत, इत्यत आह अन्यथेति । अभावोपलक्षणत्वानङ्गीकार इत्यर्थः ॥ उक्तौ न स्याताममिति । युगपन्नाशस्थलेपि भेदाभेदयोर्वाच्यत्वात् नाशपदस्याभावपरत्वे पूर्वं तन्तुषु सत्स्वपि पटस्याभावाद्भेदाभेदौ तत्राप्युक्तौ स्याताम् । अत एवमाश्रयणीयमिति भावः । ननु यद्यवयव्यादय इत्यादिना कृतचोद्यस्य किमुत्तरमुक्तमित्यत आह इदमुक्तमिति ॥ पाकजादय इति । पाकजरूपरसादयः । आदिपदात् संयोगादयः ॥ यथा ब्राह्मण्यमिति । गाधिजस्य विश्वामित्रस्य तपसा प्रागुत्पत्त्य एव ब्राह्मणत्वजातेरुत्पत्तेर्महातपआदिना कश्चिन्नाशश्चेति भावः ॥ प्रागुपपादितत्वादिति । 'अभेदेन प्रतीतिश्चे'त्यादिग्रन्थव्याख्यावसर इति भावः ॥ उपपादयिष्यमाणत्वाच्चेति । 'दृष्टिप्रमाणतश्चे'त्यादिग्रन्थ इति भावः । इति शब्दस्येदमुक्तमिति पूर्वेणान्वयः ।

या० — उपलक्षणमिति । प्रागभावस्यापीति शेषः ॥

श्री० — तदिति । अभेदस्येत्यर्थः ॥ यद्वेति । तथा च सत्यपि तस्मिन्नसत्त्वेन हेतुनाऽवयवावयव्यादीनां भेद एव साध्यत इत्यर्थः । समुच्चये अभेदस्य । उपलक्षणं कस्मात्कार्यमित्यत आह

**अन्यथेति** । यत्र इति धर्मिणि धर्मस्य नाशस्तत्र भेद इत्येवोक्त इत्यर्थः । उपलक्षणं कृत्वा यत्र सत्त्वव्ययेष्वविरोऽभाव इति सामान्येनैवोक्तौ यत्र युगपद्विनाशस्तत्राप्यवयव्युत्पत्तेः प्राक् सति धर्मिणि धर्मस्याभावः प्रागभावो वर्तत एवेति तत्संग्रहोऽपि जात एवेति भावः । सिद्धसाधनतामुपपादयति **सत्युपादान इति** । भागासिद्धिमुपपादयति **गगनेत्यादिना** ।

**सु०—स्यादेतत्** । यथा भेदसाधकानां व्यपदेशभेदादीनां विशेषाश्रयेणैवान्यथासिद्धिरुक्ता । तथा सत्यपि तस्मिन्नसत्त्वस्यापि विशेषेणैव निर्वाहः क्रियताम् । किं भेदाभेदाभ्युपगमेन । मैवम् । विशेषस्य भेदकार्यव्यवहारमात्रनिर्वाहकत्वेन विनाशं प्रत्यनिर्वाहकत्वात् । सकलभेदकार्यकारित्वे विशेषो भेद एव, न तत्प्रतिनिधिः स्यात् । किञ्चानेकाश्रितस्यावयविनो द्वित्वादेश्चाश्रयेणात्यन्ताभेदे सत्याश्रयाणामपि परस्परमभेदः प्रसज्यते । तत्परिहारार्थं तावदवश्यं तत्र भेदोऽङ्गीकरणीयः । न चावच्छेदकेन विना भेदाभेदभूमेः संग्रहः स्यादित्ययावदाश्रयभावित्वमेव ग्राह्यम् । तत्रापि विशेष एव सङ्करं वारयिष्यतीति तु निरस्तम् । किञ्च प्रमाणानुसारिणी व्यवस्था न तु स्वेच्छानुसारिणी । प्रमाणं तु भेदाभेदाववगाहत इति वक्ष्यते । ननु अनित्यद्रव्याश्रिता एकत्वादयोऽपि गुणाः किं भेदवन्तस्तेषामपि द्रव्यकार्यतया तदुत्तरक्षणभावित्वादिति । मैवम् । उक्तोत्तरत्वात् । उक्तं ह्येतत् । उपादानद्रव्यं गुणवदुपादेयतया परिणमत इति ।

**शे०—**'भेदो नाशे भवेत्तथे'ति तस्मिन्सत्यप्यसत्त्वरूपभेदकार्यनिर्वाहाय अयावदाश्रयभाविष्ववयव्यादिष्ववयवादिभिर्भेदाभेदाभ्युपगमेन प्रसक्तां भाष्यकाराणामचातुरीं तत्र तदभ्युपगमे कारणविशेषोक्त्या परिहर्तुं तस्मिन्सत्यप्यसत्त्वस्यान्यथासिद्धिमुत्पादनेन तस्यानभ्युपगमनीयतां शिष्यमुखेन शङ्कते **स्यादेतदिति** । यावदाश्रयभाविनामवयव्यादीनामिवायावदाश्रयभाविनामपि तेषामवयवादिभिः सविशेषाभेदाभ्युपगमेनैव सकलभेदकार्यनिर्वाहसम्भवे क्वचित्सविशेषाभेदस्य क्वचिद्भेदाभेदाभ्युपगमो निर्निबन्धन इत्याशयः । द्विविधं भेदकार्यं साधारणमसाधारणं च । तत्र साधारणं प्रतिनिधिसाध्यं नासाधारणमपि । लोके तथा दर्शनात् । ततश्च यावदाश्रयभाविष्ववयव्यादिषु व्यपदेशादिरूपसाधारणकार्यस्यैव सत्त्वात्तस्य च भेदप्रतिनिधिना विशेषेणापि निर्वाहाद्भेदमात्रसाध्यस्यासाधारणकार्यस्य चाभावात्तत्र भेदाभेदाभ्युपगमः । अयावदाश्रयभाविषु तु प्रतिनिध्यसाध्यस्य तस्मिन्सत्यप्यसत्त्वरूपासाधारणभेदकार्यस्य सत्त्वात्तन्निर्वाहाय भेदाभेदाभ्युपगमस्यार्थवत्त्वादिति भावेन भेदकार्यस्योक्तरूपेण द्वैविध्यं सूचयन्नेव विशेषस्य साधारणासाधारणतत्कार्यनिर्वाहकत्वतदभावावाह **मैवमिति** । ननु किमनया

कल्पनया विशेषस्यैव साधारणासाधारणभेदभिन्नभेदकार्यमात्रनिर्वाहकत्वसंभवेन कल्पकाभावादित्यत आह सकलेति ॥ आश्रयाणामपि परस्परमिति । यद्यदत्यन्ताभिन्नेनात्यन्ताभिन्नं तत्तेनात्यन्ताभिन्नमिति नियमादिति भावः । नन्वस्तु तर्हि तत्र भेदः । अयावदाश्रयभाव्यवयव्यादिमात्रे तु कुतः स इत्यत आ- न चेति । नन्वनेकाश्रितस्यावयव्यादेरवयवादिभिस्त्यन्ताभेदेऽपि विशेषबलादेवैकेन पटेनात्यन्ताभिन्नानां तन्तूनामभेदाभावरूपस्य तद्भेदकार्यस्य निर्वाहान्न तत्रापि भेदोऽभ्युपगन्तव्य इत्याशङ्क्य निराकरोति तत्रापीति ॥ निरस्तमिति । सकलभेदकार्यकारित्वे विशेषस्य भेदत्वापत्त्या प्रतिनिधित्वाभावप्रसङ्गात् सकलतत्कार्यकारिणस्तत्प्रतिनिधिताया लोकवेदविरुद्धत्वादिति निरस्तमित्यर्थः । अयावदाश्रयभाव्यवयव्यादेरवयवादिभिर्भेदाभेदयोरेव प्रमाणसिद्धत्वाच्च तदभ्युपगम इत्याह किञ्चेति । नेति । विपरीतेच्छया विप(र्यय)रीतस्यापि प्रसङ्गादिति भावः । कथमत्र भेदाभेदयोः प्रामाणिकत्वमित्यत आह प्रमाणं चेति ॥ वक्ष्यत इति । 'दृष्टिप्रमाणतश्चे'त्युत्तरग्रन्थ इति शेषः । ननु तस्मिन्सत्यप्यसत्त्वस्यानित्यद्रव्याश्रितैकत्वादिगुणेष्वनैकान्त्यान्न भेदप्रमाणत्वमिति शङ्कते नन्विति । उक्तोत्तरत्वादित्येतद्विशदयति उक्तं चैतदिति । 'न चेन्महत्त्वतश्चैव दीर्घत्वादपि नो भवेदि'त्येतद्ग्रन्थव्याख्यानावसरे यद्यपि परिणामवादिनां नायं पन्था इत्यादिनेति शेषः । ततश्च द्रव्यतद्गुणयोः समानकालीनत्वात्कार्यकारणभावाभावेन तस्मिन्सत्यप्यसत्त्वस्य तत्राभावान्नानैकान्त्यमिति युक्तं तस्य भेदप्रमाणत्वमिति भावः ।

स० — निरस्तमिति । सकलभेदकार्यकारित्वे विशेषो भेद एव, न तत्प्रतिनिधिरित्यादिनेति शेषः ।

प० — आश्रयाणामपि परस्परमिति । तन्त्वभिन्नपटाभिन्नत्वात्तन्त्वन्तरस्य पटाभिन्नद्वित्वत्रित्वाद्यभिन्नत्वात्पटस्येति हेतोः यो यदभि(न्नाभिन्नस्स)न्नधर्माभिन्नः स तदभिन्नो यथा घटो घटेनेति व्याप्त्यादिसंभवादिति भावः ॥ भेदाभेदभूमेरिति । भेदाभेदाङ्गीकारस्थलस्येत्यर्थः । इतिशब्दो हेत्वर्थः ॥ तत्रापीति । अयावद्द्रव्यभाविस्थल इत्यर्थः ॥ निरस्तमिति । सकलभेदकार्यकारित्व इति ग्रन्थे निरस्तमित्यर्थः ॥ वक्ष्यत इति । 'दृष्टिप्रमाणतश्चैव विरोधो दर्शने कथमि'त्यादाविति भावः । उक्तोत्तरत्वादित्युक्तं व्यनक्ति उक्तं ह्येतदिति । 'न चेन्महत्त्वतश्चैव दीर्घत्वादपि नो भवेदि'त्येतद्वाक्यव्याख्यावसारे उक्तमित्यर्थः । तथा च पौर्वापर्याभावेन गुणिनि सत्येकत्वाभाव इत्यस्य [illegible]भेदाभेदावुपेयौ तत्रेति भावः ।

या० — निरस्तमिति । सकलभेदकार्यकारित्वे विशेषोऽपि भेद एव स्यान्न तत्प्रतिनिधिरित्यनेन निरस्तमित्यर्थः ॥ वक्ष्यत इति । 'दृष्टिप्रमाणतश्चैवे'त्यत्रेति शेषः ॥ उक्तं ह्येतदिति । 'न चेन्महत्त्वतश्चैव दीर्घत्वादपि नो भवेदि'त्यनुव्याख्याव्याख्यावसरे 'यद्यपि परिणामवादिनां नायं पन्थाः ।

किन्तूपादानानि स्वगुणयुक्तानि तथाविधकार्यतामापद्यन्त' इत्युक्तमित्यर्थः । तथा च समानकालीनत्वादनित्यद्रव्यतद्गुणयोर्न कार्यकारणभाव इति भावः ॥

**श्री०** — निर्वाह इत्यनन्तरमभेदमेवाङ्गीकृत्येति शेषः । **विनाशं** भेदकार्यभूतम् । **सकलेति** । व्यवहारविनाशरूपोभयेत्यर्थः । **प्रसज्यते** यत् यदभिन्नाभिन्नं तत्तेनाभिन्नं यथा रामरूपाभिन्ननारायणाभिन्नं कृष्णरूपं रामरूपेणाभिन्नमिति व्याप्तिबलादित्यर्थः । **भूमेः** एतादृशस्थले भेदाभेदाविति भेदाभेदस्थल इत्यर्थः । **ग्राह्यं** सङ्ग्राहकत्वेनेत्यर्थः । ननु द्वित्वादीनामत्यन्ताभेद एवावयविनाऽस्तु न भेद आश्रयाणां परस्पराभेदरूपं सङ्करं च विशेष एव निवारयिष्यतीत्यशङ्क्याह **तत्रापीति** ॥ सकलभेदकार्यकारित्वे विशेषो भेद एव स्यात् न तत्प्रतिनिधिरिति निरस्तमित्यर्थः । **किं भेदवन्त इति** । एकत्वपरिमाणगुरुत्वादीनामनित्यद्रव्याश्रितानामप्यत्यन्ताभेद एव भवद्भिः स्वीकृतः । तेऽपि धर्माः किमर्थं न भेदवन्तो भवन्ति । तस्मिन्सत्यप्यसत्त्वरूपभेदसाधकयुक्तेरत्रापि सत्त्वादित्यत आह **तेषामपीति** । प्रथमं निर्गुणमेव द्रव्यमुत्पद्यते । पश्चात्तत्समवेता गुणा उत्पद्यन्त इति स्थितेरिति भावः ॥

**च०** — **व्यपदेशादीनां** व्यवहारादीनां ।

**सु०** — **ननु भेदाभेदावेकत्र विरुद्धौ । तत्कथमयावदाश्रयभाविनामवयविगुणकर्मसामान्यानामवयवादिभिर्भेदाभेदाभ्युपगम इत्यत आह** विशेषमेवेति ।

---

**अनु०** — विशेषमेव संश्रित्य

**भेदाभेदावेकत्र भवत इति संबन्धः । अवधारणं कालादिभेदव्यावृत्त्यर्थम् ।**

**शे०** — ननु 'विशेषमेव संश्रित्ये'त्युत्तरवाक्यमनर्थकम् । न चैतदयावदाश्रयभाविष्ववयव्यादिषु विशेषसद्भावप्रतिपादनार्थमिति वाच्यम् । भेदेन तस्मिन्सत्यप्यसत्त्वस्येव व्यपदेशभेदादेरपि निर्वाहसंभवेन निष्प्रयोजनतया तत्र विशेषस्यानपेक्षितत्वेन तत्प्रतिपादनस्याप्यनर्थकत्वादित्यतो नेदं व्यपदेशभेदादिनिर्वाहार्थं विशेषनिरूपणं किन्तु भेदाभेदयोरविरोधोपपादनार्थमेवेति न तत्परोत्तरग्रन्थवैयर्थ्यमिति भावेन तदविरोधोपपादकतया तद्योजयितुं किं तदुपपादनेनापीत्यतो विरुद्धत्वप्रयुक्तानभ्युपगमनीयत्वशङ्कानिरासस्तत्प्रयोजनमिति भावेन तच्छङ्कामुत्थापयति **नन्विति** । साकाङ्क्षतया प्रसक्तां वाक्याभाम्तां भेदो भवेत्तथेत्यपेक्षितपूरणेन परिहरति **भेदेति** । विशेषमेवेत्येवकारवैयर्थ्यमाशङ्क्य परिहरति **अवधारणमिति** । कदाचिद्भेदः कदाचिदभेद इति कालभेदस्य क्वचिद्भेदः क्वचिदभेद इति देशभेदस्य किञ्चित्प्रतियोगिको भेदः अभेदस्त्वन्यप्रतियोगिक इति प्रतियोगिभेदस्य च व्यावृत्त्यर्थमवधारणमित्यर्थः । अन्यथा कालादिभेदेनैव विरुद्धयोर्भेदाभेदयोरेकत्रावस्थानसंपत्तेस्तत्र विशेषाङ्गीकारवैयर्थ्यप्रसङ्गादिति भावः ।

**श्री०** — **कालादीति** । उत्पत्तेः प्रागभेदोऽनन्तरमभेद इति कालभेदेत्यर्थः ।

सु०— कथं विशेषाश्रयणे विरोधशान्तिरित्यत आह विशेष इति ।

अनु०— विशेषो बलवान्यतः ॥

बलवान्भेदकार्यकरण इति शेषः । ततो विशेषं समाश्रित्यैकत्र भेदाभेदौ भवत इत्यन्वयः । अयमर्थः । भेदो हि विरोधशान्तिहेतुः । तथा हि । क्वचिदाश्रयभेदो यथा मधुरायां देवदत्तसद्भावः स्रुघ्ने तदभावः । क्वचित्कालभेदो यथा मधुरायामेव देवदत्तस्य भावाभावौ । क्वचित्प्रतियोगिभेदो यथा गवयो गोघटाभ्यां सदृशो विसदृशश्चेति । भेदप्रतिनिधिश्च विशेष इत्युक्तम् । अतः कथमसौ भेदाभेदावेकदैवैकत्रैव नावस्थापयेदिति ।

शे०— तथाऽपि 'विशेषो बलवान्यत' इति विशेषस्य भेदकार्यकरणे समर्थत्ववर्णनमनर्थकमित्याशङ्क्य विशेषस्य विरोधशान्तिहेतुत्वोपपादनार्थत्वान्न तदिति भावेन तद्धेतुत्वोपपादकतया तद्योजयितुं तद्धेतुत्वानुपपत्तिशङ्कामुत्थापयति कथमिति । नन्वत्र विशेषस्य समर्थत्वमात्रमुच्यते न तु भेदकार्यकरणे समर्थत्वमिति कथमनेनोक्ताकाङ्क्षानिवृत्तिरित्यतोऽत्रापेक्षितं शेषमाह बलवानिति । ननु भेदकार्यकरणे समर्थत्वेन विशेषस्य तत्कार्यकारित्वमेव स्यान्न तु विरोधशान्तिहेतुत्वमपि । तस्या भेदकार्यत्वासिद्धेः । तत्कार्यत्वेऽपि वा तस्याः, विशेषस्य तद्धेतुत्वे नियामकाभावादित्यतो विरोधशान्तेर्भेदकार्यत्वोपपादनपूर्वकं विशेषस्य तद्धेतुतायां नियामकं स्मारयितुमाह अयमर्थ इति ॥ स्रुघ्न इति । परिष्कृतभूम्यामित्यर्थः ।

प०— स्रुघ्न इति । पुरविशेषस्य स्रुघ्न इति नाम ।

या०— स्रुघ्न इति । परिष्कृतभूम्यामित्यर्थः ॥

च०— स्रुघ्ने नगरविशेषे । नान्यथेति ॥ अयावद्द्रव्यभाविनि भेदाभेदसमर्थनम् ।

सु०— एवं तर्ह्यतिप्रसङ्गः । सर्वत्र विशेषमाश्रित्य विरोधस्योत्सादयितुं शक्यत्वादित्यत आह दृष्टीति ।

अनु०— दृष्टिप्रमाणतश्चैव

दृष्टिश्च तत्प्रमाणं च । प्रमाणभूता दृष्टिरित्यर्थः । ततो भेदाभेदौ न विरुद्धाविति संबन्धः । चशब्दो विशेषेण सह दृष्टेः समुच्चये । न स्वेच्छामात्रेण भेदाभेदावित्युपेत्य विशेषेण विरोधाभावोऽभिधीयते । येनातिप्रसङ्गः स्यादित्येवशब्दः । उक्तं तावदवयवावयव्याद्यभेदग्राहिणी दृष्टिरस्ति । संबद्धवस्तुबुद्धितो विलक्षणतयाऽनुव्यवसायात् । अस्ति च भेदग्राहिणी सत्यपि तस्मिन्नसत्त्वादिति हेतुजनिता दृष्टिरिति । न चैते बाध्यबाधके । अन्यतराननुवृत्तिप्रसङ्गात् । नापि प्रतिपक्षभूते । प्रतिपत्तॄणामुभयोदासीनतापत्तेः । चैवम् न ।

अतो द्वयोरपि प्रामाण्यमेषितव्यम् । प्रमाणतश्च भेदाभेदयोरवगतयोर्न विरोधः । तदिदमुक्तं प्रमाणत इति ।

शे०— ननु 'दृष्टिप्रमाणतः' इति भेदाभेदयोः प्रामाणिकत्ववर्णनमनर्थकम् । न च तयोरेकत्राविरुद्धत्वसमर्थनार्थमेतदिति वाच्यम् । विशेषेण तयोरविरुद्धत्वस्य सिद्धत्वेन तस्यानपेक्षितत्वादित्यतः प्रमाणसहकृतस्यैव विशेषस्य तत्साधकत्वेन केवलस्य तस्यासाधकतया तत्प्रामाणिकत्ववर्णनस्यार्थवत्त्वादिति भावेन तत्प्रामाणिकत्ववर्णनपरतया उत्तरग्रन्थं योजयितुं विशेषमात्रस्य प्रयोजकतामतिप्रसङ्गेन दूषयितुं तच्छङ्कामुत्थापयति एवं तर्हीति । घटपटादावपि भेदाभेदौ स्यातामित्यतिप्रसङ्ग इत्यर्थः । दृष्टेः प्रमाणत्वमप्युपपाद्यमिति भावेनाह प्रमाणभूतेति । चशब्दस्येतरसंग्राहकत्वात् एवशब्दस्य च तद्व्यावर्तकत्वाद्भाष्ये चैवशब्दयोर्विरोधमाशङ्क्य चशब्दसंग्राह्यस्य एवशब्देनाव्यावर्तितत्वात्तद्व्यावर्तितस्य च चशब्देनासंग्रहान्न तयोर्विरोध इति भावेन तत्संग्राह्यव्यावर्त्ये दर्शयति चशब्द इत्यादिना । नन्ववयवावयव्यादिषु भेदाभेदग्राहिणी दृष्टिरेव तावदसिद्धा कुतस्तस्याः प्रामाण्यं, येन तन्मूलकत्वाद्भेदाभेदाभ्युपगमस्य स्वेच्छामात्रमूलकत्वाभावादतिप्रसङ्गपरिहारः स्यादित्यतोऽभेदग्राहिणीं दृष्टिं तावदाह उक्तं ह्येतदिति । 'अभेदेन प्रतीतिश्चे'त्यादिनेति शेषः । अवयवावयव्यादिप्रतीतेरत्यन्तभिन्नघटपटादिप्रतीतितो वैलक्षण्याननुभवस्य प्रतीत्यपलापानुपपत्तिपराहतत्वात्तद्वैलक्षण्यानुभवस्य चाभेदविषयत्वं विनाऽनिर्वाहात्तत्प्रतीतेरभेदग्राहकत्वमिति भावः । ननु च संबन्धविषयत्वमात्रेणाप्यसंबद्धघटपटादिबुद्धितो वैलक्षण्योपपत्तेर्न तदर्थमभेदविषयत्वं तस्याः कल्पनीयमित्यतस्तावता घटपटादिबुद्धिवैलक्षण्यसिद्धावपि संबद्धकुण्डबदरादिबुद्धितो वैलक्षण्यानुभवानिर्वाहात्तन्निर्वाहायाभेदविषयत्वमेव कल्पनीयमित्याशयवानाह संबद्धेति । एवमभेदग्राहिणीं दृष्टिमुपदर्श्य भेदग्राहिणीं दृष्टिमप्युपदर्शयति अस्ति चेति । नन्वस्तु भेदाभेदग्राहकं दृष्टिद्वयं, तत्प्रामाण्यं तु कुत इत्यतः किमत्र दृष्टिद्वयस्य बाध्यबाधकभावापन्नत्वान्न प्रामाण्यमित्यभिमतं प्रतिपक्षभूतत्वाद्वेति विकल्पद्वयं मनसि निधाय पक्षद्वयमप्यनूद्य दूषयति न चेत्यादिना । उभयत्राप्रीष्टापत्तिं परिहरति न चैवमिति । पक्षद्वयनिराकरणेन सिद्धमर्थं दर्शयति अत इति । प्रकारान्तराभावादित्यर्थः । प्रामाण्यसमर्थनस्य प्रयोजनमाह प्रमाणतश्चेति ।

प०— उक्तं तावदिति । 'अभेदेन प्रतीतिश्चे'त्यत्राभेदग्राहिणी दृष्टिरस्तीति 'भेदो नाशो भवेत्तथे'त्यत्र भेदग्राहिहेतुजदृष्टिरस्तीत्युक्तमित्यर्थः ॥ संबद्धवस्त्विति । कुण्डबदरादिवस्तुबुद्धित इत्यर्थः । एते इति । दृष्टी इत्यर्थः ॥ अन्यतरेति । इदं रूप्यं नेदं रूप्यमिति दृष्ट्योर्बाध्यबाधकभावापन्नयोर्मध्ये बाध्यदृष्टेरनुवृत्त्यभावदर्शनादिति भावः ।

या० — **उक्तं तावदिति** । 'अभेदेन प्रतीतिश्चेत्यत्रेति शेषः ॥

श्री० — **अतिप्रसङ्गः** घटतदभावयोरपि विरोधाभावरूपः ॥ **समुच्चय इति** । न केवलं भेदाभेदौ विशेषेण विरुद्धौ, किन्नाम दृष्टिप्रमाणतश्चेत्यर्थः ॥ **हेतुजनिता दृष्टिरिति** । अनुमानजनिता प्रतीतिरित्यर्थः । **एते** प्रतीती । **अवगतयोः** सतोः । अवगतत्वादिति यावत् ॥

सु० — **ननु भवद्भिरेतौ भेदाभेदावेकत्रैवैकदेव प्रमितौ । तथाऽपि कथं विरोधशान्तिरित्यत आह** विरोध इति ।

अनु० — 　　　　　विरोधो दर्शने कथम् ॥

**सहदर्शने सति कथं विरोधो वक्तुं शक्यते । सहदृष्टौ विरुद्धौ चेति विप्रतिषिद्धमिति भावः ।**

**एतदेव विवृणोति** विरोधो हीति ।

विरोधो ह्यविरोधश्च यतोऽदर्शनमानकौ ॥

ततो दृष्टे विरोधस्तु सद्भिरापाद्यते कथम् ॥

**सर्वत्र परस्परपरिहारेणैव सत्त्वदर्शनं सहानवस्थानलक्षणविरोधे प्रमाणम् । क्व चित्सहदर्शनं चाविरोधे । अन्यस्यानिरूपणात् । अतः सहदृष्टे भेदाभेदलक्षणे वस्तुद्वये विरोधः कथमुच्येत । सहदर्शने ह्यविरोधः स्यात् । पुनर्विरोधकथने व्याघातानिवारणादिति । हिशब्देन शीतोष्णादौ रूपरसादौ च विरोधाविरोधयोर्दर्शनैकप्रमाणत्वं निदर्शयति । तुशब्दस्य दृष्टे त्विति संबन्धः । सद्भिर्विद्वद्भिरित्युपहासः । वैशेषिकादयो हि संयोगविभागशब्दात्मविशेषगुणानां तत्रैव तदैव भावाभावावुपेत्य सहदर्शनाद्विरोधो नास्तीति वदन्तः पुनरत्र सहदर्शनेपि विरोधमुद्भावयन्तः स्वव्याहतभाषिणः स्वोक्तविस्मरणशीलाः स्वदृष्टिपक्षपातिनः कथं सन्तः स्युः । सर्वत्रासहदृष्टयोर्यदि कश्चिदाग्रहमात्रेण सहावस्थानं मन्यते तं प्रत्येव विरोधोद्भावनं क्रियते नान्यथेति ॥**

शे० — नन्ववयवावयव्यादौ भेदाभेदयोः प्रमितत्वेनैविरोधस्य सम्भवित्वात्प्रमितयोर्विरुद्धत्वस्य व्याहतत्ववर्णनमनर्थकमिति तत्परोत्तरवाक्यानर्थक्यमित्यतः प्रमितत्वेऽपि भेदाभेदयोर्विरुद्धत्वमस्त्विति शङ्काया व्याहतत्वेनानुदयोपपादनार्थत्वान्न तदिति भावेन तदुपपादकतयोत्तरग्रन्थं योजयितुमुक्तानुमाने अप्रयोजकताशङ्कामुत्थापयति **नन्विति** । सहदृष्टयोर्विरुद्धत्वस्य व्याहतत्ववर्णनेनाप्रयोजकताशङ्काया

अनुदयात्तस्य विरोधदर्शने कथमित्यनेनैव सिद्धेस्तत्प्रतिपादकस्य 'विरोधो ह्यविरोधश्चे'त्यादेर्गतार्थतामाशङ्क्य परिहरति **एतदेवेति** ॥ **स्वव्याहतभाषिण इति** । सहदर्शने विरोधोद्भावना स्वव्याहतभाषित्वम् । तच्च सहदर्शने ह्यविरोधः स्यात्पुनर्विरोधकथने व्याघातादित्युक्तप्रकारेण द्रष्टव्यम् ॥ **स्वोक्तेति** । संयोगादौ सहदर्शनस्य विरोधपरिहारकत्वमुक्त्वाऽत्र पुनस्तदुद्भावनात्स्वोक्तविस्मरणशालित्वम् । स्वकीय सहदर्शनस्य विरोधपरिहारकत्वमभ्युपगम्य संयोगतदभावौ एकत्राभ्युपगम्यात्र पुनर्विरोधमुद्भावयतां स्वकीयसहदर्शने सहदर्शनत्वाभिमानात्स्वदृष्टिपक्षपातित्वमिति द्रष्टव्यम् । ननु चैवं सति संयोगतदत्यन्ताभावादौ सहावस्थाने विरोधोद्भावनं सिद्धान्तेऽनुपपन्नं स्यात् । अवयवावयव्यादौ भेदाभेदावुपेत्य सहदर्शनाद्विरोधो नास्तीति चाभिधायात्र पुनः सहदर्शने विरोधोद्भावनस्य स्वव्याहतभाषित्वापादकतयाऽसंभवादित्यत आह **सर्वत्रेति** । इतीत्यनन्तरं न सिद्धान्ते व्याहतभाषित्वप्रसङ्ग इति शेषः ।

**प०** — 'ननु भवतामि'त्यत्र भवतामिति क्रियापदं न तु भवच्छब्दस्य आमित्यर्थः । संयोगश्च विभागश्च शब्दश्चात्मविशेषगुणाश्च तेषामित्यर्थः । तेषामव्याप्यवृत्तित्वोगमादिति भावः । एवं तर्हि विरोधोद्भावनम् क्वापि न स्यादित्यत आह **सर्वत्रेति** ।

॥ अयावद्द्रव्यभाविनि भेदाभेदसमर्थनम् ॥

**श्री०** — **निदर्शयतीति** । शीतोष्णादौ विरोधः परस्परपरिहारेणैव सत्त्वदर्शनप्रमाणकः । रूपरसादावविरोधः सहदर्शनप्रमाणक इत्यर्थः । यदि विरुद्धत्वेन प्रतीतावपि भेदाभेदौ न विरुद्धौ तर्हि विरोधोद्भावनं कुत्र कार्यमित्यत आह **सर्वत्रेति** ।

**सु०** — **धर्मधर्मिणोर्भेदाभेदौ क्वचिदिति सङ्क्षेपेणोक्तम्** । **तत्किं सर्वेष्वपि द्रव्येषूत केषुचिदेवेत्यपेक्षायामाह** अभिन्न इति ।

**अनु०** — अभिन्नो भगवान्स्वेन तदन्येन विभेदवान् ॥

**भगवानिति चेतनमात्रोपलक्षणम्** । स्वेन **स्वावयवगुणक्रियादिभिः** । तदन्येन **प्रकृतिजीवजडात्मना प्रपञ्चेनेत्येवं व्यवस्थितावेव भेदाभेदौ न त्वेकविषयावित्यर्थः** । **अयावद्द्रव्यभाविधर्मैर्भेदाभेदौ कुतो न स्यातामित्यत** आह नित्या इति ।

नित्या धर्मास्तदीयास्तु सर्वेऽस्मान्नैव भेदिनः ॥

**तुशब्दोऽवधारणे** । अस्मात् **कारणात्** । अस्मात् भगवतः । **द्वित्वादिसंख्याव्यतिरिक्ता इति शेषः** ।

शे० — 'अभिन्नो भगवान्स्वेने'त्यादेर्धर्मधर्मिणोरत्यन्ताभेदः क्वचित्क्वचिद्भेदाभेदाविति व्यवस्थोपदर्शनपरग्रन्थस्य प्रकृतेन सङ्गत्यप्रतीतेरसङ्गतिमाशङ्क्याव्यवहितपूर्वेणासङ्गतावपि 'भेदो नाशो भवेत्तथे'त्युक्तार्थविवरणरूपत्वेन तत्सङ्गतत्वान्नासङ्गतिरित्यभिप्रेत्य तद्विवरणरूपतया तद्योजयितुमुक्तार्थानुवादपूर्वकं तत्प्रयोजकीभूतामाकाङ्क्षामुत्थापयति **धर्मधर्मिणोरित्यादिना** । यद्यपि सत्येव धर्मिणि धर्माणां च यत्र नाशस्तत्र भेदाभेदावित्युक्तेर्नेयं सङ्क्षेपेणोक्तिः तथाऽपि सत्येव धर्मिणि धर्माणां नाशोऽत्रैवेत सर्वत्र द्रव्य इत्यनभिधानाभिप्रायेणेयं सङ्क्षेपोक्तित्वोक्तिः । अत एवापेक्षाप्रकारप्रदर्शनं तथैव करिष्यत इत्यवधेयम् । नन्वीश्वरस्येव जीवस्यापि स्वावयवगुणक्रियादिभिरत्यन्ताभिन्नत्वेन भिन्नाभिन्नत्वाभावात्किं सर्वेष्वपि द्रव्येषूत केषुचिदेवेत्यपेक्षापूरके वाक्ये तत्पूरणाय जीवेश्वरसाधारण्येनैव तदत्यन्ताभेदस्य प्रतिपादनीयतयेश्वरमात्रासाधारण्येन तदभिधानमनुपपन्नमित्यतोऽत्र वाक्ये भगवत्पदस्य चेतनमात्रोपलक्षणत्वादीश्वरमात्रपरत्वाभावादस्य वाक्यस्य जीवेश्वरसाधारण्येनैव तदत्यन्ताभेदबोधकत्वेनेश्वरमात्रासाधारण्येन तदभिधायकत्वाभावान्नानुपपत्तिरिति भावेन भगवत्पदं चेतनमात्रपरतया व्याचष्टे **चेतनमात्रोपलक्षणमिति** । ननु भगवान्स्वेनाभिन्न इत्यनेन भगवतः स्वेनाभेद उच्यते, न तु गुणक्रियादिभिरिति नानेन धर्मधर्मिणोर्भेदाभेदौ सर्वत्र द्रव्येषूत केषुचिदेवेत्युक्ताकाङ्क्षाया निवृत्तिरित्यतोऽत्र स्वशब्दस्य स्वीयपरत्वेन स्वपरत्वाभावान्नानुपपत्तिरिति भावेन स्वपदार्थमाह **स्वेनेति** । प्रकृतिजीवजडात्मनेत्युपलक्षणम् । ईश्वरप्रकृतिजडात्मनेत्यपि द्रष्टव्यम् ॥ **व्यवस्थिताविति** । भिन्नप्रतियोगिकावित्यर्थः ॥ **न त्वेकेनेति** । न त्वेकप्रतियोगिकावित्यर्थः । न च भगवति द्वित्वादिना जीवे च चिन्तादिनाऽपि भेदाभेदसद्भावादेकविषयावपि भेदाभेदौ स्त एवेति न तन्निषेधो युक्त इति वाच्यम् । वक्ष्यमाणानुसारेणेहापि तदुभयव्यतिरिक्तत्वस्य ज्ञातुं शक्यतया तदतिरिक्ते एकविषयकभेदाभेदाभावाभिप्रायात् ॥ **अयावद्द्रव्यभावीति** । जीवेश्वरयोरिति शेषः । द्वित्वादिसंख्याव्यतिरिक्ता इत्युपलक्षणम् । चिन्तादिव्यतिरिक्ता इत्यपि द्रष्टव्यम् । ततश्च जीवेश्वरयोरयावद्द्रव्यभाविभिर्द्वित्वादिभिश्चिन्तादिभिश्च भेदाभेदसद्भावेऽपि तदुभयव्यतिरिक्तानां सर्वेषां धर्माणां नित्यतया यावद्द्रव्यभावित्वान्न तैर्भेदाभेदावित्युक्तं भवति ।

प० — 'भेदो नाशो भवेत्तथे'त्यत्र क्वचिदिति पदस्यानुवृत्तिमुपेत्य तथाशब्देनाभेदसमुच्चयं चोपेत्य भेदो नाश इति पदस्य निर्गलितार्थमनुवदति **भेदाभेदौ क्वचिदिति संक्षेपेणोक्तमिति** ॥ **नत्वेकविषयाविति** । एकनिरूपितावित्यर्थः । 'समुदायमृते क्वचिदि'ति वक्ष्यमाणानुरोधेनाह **द्वित्वादिसंख्येति** ।

या० — **न त्वेकविषयाविति** । न त्वेकप्रतियोगिकावित्यर्थः

श्री० — **न स्यातामिति** । चेतनानामपीति शेषः ॥ **इत्यत आहेति** । इत्याशङ्कायां चेतनस्वरूपेऽयावद्द्रव्यभाविनो धर्मा एव न सन्ति सर्वेषां नित्यत्वादित्युत्तरमाहेत्यर्थः । ननु सर्वेऽपि धर्मा नित्या एव , तैश्चात्यन्ताभेदे द्वित्वेनाप्यभेदप्राप्त्याऽऽश्रययोरप्यभेदः स्यादत आह **द्वित्वादीति** ।

च० — **चेतनमात्रोपलक्षणं** चेतनसामान्योपलक्षणं ।

सु० — **क्व तर्हि भेदाभेदावित्यत आह** सामस्त्येति ।

अनु० — सामस्त्योच्छेदिनोऽन्यत्र धर्मा उभयरूपिणः ॥

भावे

अन्यत्र **परमेश्वरात्** । जडे वस्तनीति यावत् । सत्येव **धर्मिणि सामस्त्येनोच्छेदवन्तो ये धर्मास्ते** उभयरूपिणो **भिन्नाभिन्ना इत्यर्थः । अभिभवव्यावृत्त्यर्थं सामस्त्येत्युक्तम् । यद्वा सामस्त्ये द्रव्यस्याविकलत्वे नाशाभावेऽपि ये उच्छेदिन इति व्याख्येयम् । किं स्वसद्भाववेलायामभेदिनोऽसद्भाववेलायां भेदिन इत्येवं कालभेदेन भेदाभेदावित्यत उक्तं** भाव इति । **स्वसद्भावदशायामेवोभयरूपका इत्यर्थः । विनष्टस्यासत्त्वेन भेदचिन्तानवकाशात् । प्रागत्यन्ताभेदे विनाशासंभवाच्च । कुतो भिन्नाभिन्ना इत्यत आह** त एवेति ।

अनु० — त एव चोच्छेदात्तदन्ये च समस्तशः ॥

**प्रत्यक्षबलेन** त एव **धर्मिस्वरूपभूता एव** उच्छेदात् **सत्येव धर्मिण्यसत्त्वाद्धेतोस्तदन्ये । चशब्दौ मिथः समुच्चयार्थौ । समस्तश इत्ययावद्द्रव्यभाविविवक्षयोक्तम् ॥**

शे० — अन्यत्र परमेश्वरादित्युपलक्षणम् । जीवादित्यपि द्रष्टव्यम् । एतदेव चाभिप्रेत्य तात्पर्यमाह **जडवस्तुनीति यावदिति ॥ अभिभवेति** । सौरालोकादिना दीपादिप्रभाया अभिभवरूपोच्छेदसत्त्वेऽपि दीपादिना तस्या भेदाभेदाभावात्तद्व्यावृत्त्यर्थं सामस्त्येत्युक्तमित्यर्थः । नन्वभिभवो नोच्छेदः । किन्तु बलवत्सजातीयग्रहणकृतमग्रहणमतः सामस्त्येति व्यर्थमित्यरुचेराह **यद्वेति** । नन्वसद्भाववेलायां भेदिनः सद्भाववेलायां चाभेदिन इत्येवं कालभेदेनैव भेदाभेदौ किन्न स्यातामित्यतोऽसद्भाववेलायां भेदिन इत्यत्र तावद्बाधकमाह **विनष्टस्येति** । भेदस्य धर्मिस्वरूपत्वेन धर्मिनाशे तन्नाशेन धर्मिनाशानन्तरं भेदोऽस्तीति चिन्तायाः कर्तुमशक्यत्वादित्यर्थः । नन्वस्य 'तस्मात्प्रध्वस्तभेदादी'त्युत्तरानुव्याख्याव्याख्यानरूपोत्तरग्रन्थेन विरोधः । तत्र 'नष्टानामपि वस्तूनां भेदो नैव विनश्यति' इति वाक्यं प्रमाणीकृत्य नष्टधर्मिकभेदस्य सत्त्वाभिधानादत्र पुनस्तन्निषेधादिति चेन्न । यथा

न विरोधस्तथा तद्वाक्यव्याख्यानावसर एव वक्ष्यमाणत्वात् । सद्भावदशायामभेदिन इत्यत्रापि बाधकमाह **प्रागिति** । विनाशादिति शेषः । सद्भावदशायामिति यावत् । त एवेति पुनर्भेदाभेदाभिधानानर्थक्य माशङ्कयोभयरूपत्वे धर्माणां प्रमाणाभिधायकत्वान्न तदिति भावेन तत्र प्रमाणसमर्पकतया तद्योजयितुं तच्छङ्कामुत्थापयति **कुत इति** त एवेति प्रतिज्ञातधर्मिस्वरूपतायां प्रमाणस्यानुपन्यासेन प्रसक्तां मूले न्यूनतामपेक्षितपूरणेन परिहरति **प्रत्यक्षबलेनेति** । एकेनैव समुच्चयसिद्धेरितरवैयर्थ्यमित्यत उक्तं **मिथ इति** । ननु जडे वस्तुनि सर्वधर्माणां सत्येव धर्मिण्यसत्त्वाभावेन कथं भागासिद्धस्य हेतोः सर्वधर्म-भेदसाधकत्वमित्यतः समस्तश इत्यस्य सत्यप्याश्रयेऽसत्त्वहेतुविश्रान्त्यधिकरणमात्रपरत्वेन सर्वधर्मपरत्वा-भावेन भागासिद्ध्यप्रसक्त्या युक्तैव तस्य भेदसाधकतेत्याशयेन तत्तात्पर्यमाह **समस्तश इतीति** ।

**प०— अभिभवेति** । महारजनाद्यभिभूतपटादिगतशुक्लादिरूपेभेदाभावात्तद्व्यावृत्त्यर्थमित्यर्थः ॥ **यद्वेति** । अस्मिन् पक्षे सति धर्मिणीति नाध्याहार इति भावः । स्वसद्भावदशायामेवोभयरूपका इत्येतद्व्यनक्ति **विनष्टस्येति** ॥ **मिथ इति** । तत एव च तदन्ये चेति समुच्चय इत्यर्थः ।

**॥ अभेदभेदाभेदस्थलोक्तिः ॥**

**या०— अभिभवेति** । सौगलेकादिना दीपादिप्रभाया अभिभवरूपोच्छेदसत्त्वेऽपि दीपा-दिना तस्या भेदाभेदाभावात्तद्व्यावृत्त्यर्थं सामस्त्येत्युक्तमित्यर्थः । नन्वभिभवो नोच्छेदः किन्तु बलवत्स-जातीयग्रहणकृतमग्रहणमतः सामस्त्येति व्यर्थमित्यरुचेराह **यद्वेति** ॥ **विनष्टस्यासत्त्वेनेति** । भेदस्य धर्मिस्वरूपत्वाद्धर्मिनाशानन्तरं तत्र भेदोऽस्तीति चिन्ताया: कर्तुमशक्यत्वात्सद्भावदशायामेव भेदोऽङ्गी-कार्य इति भावः । एवमसद्भाववेलायां भेदिन इत्यत्र बाधकमुक्त्वा सद्भावदशायामभेदिन इत्यत्र बाधकमाह **प्रागत्यन्ताभेद इति** । विनाशात्प्राक् सद्भावदशायामित्यर्थः ॥ छ ॥

**श्री०— अभिभवेति** । सति धर्मिणि ये उच्छेदवन्तो धर्माः ते भिन्नाभिन्ना इत्युक्ते दीपप्रकाशो दीपात्यन्ताभिन्नोऽपि यदा सौरप्रकाशेनाभिभूतोऽस्ति तदा सति धर्मिणि दीपे तत्प्रकाशेऽभिन्नेऽभिभव-वरूपोच्छेदसद्भावेन दीपेन भिन्नाभिन्नः प्रसज्येतेत्यर्थः । **अभिभवो** अभिभूतं वस्तु । **सामस्त्योच्छेदिनः** समूलोच्छेदिनः । अत एवास्वरसात्पक्षान्तरमाह **यद्वेति** । धर्माः स्वासद्भावदशायां भेदिन इत्येतदयुक्तमित्यत आह **विनष्टस्येति** । धर्मस्यैवाभावे कस्य धर्मिणः सकाशाद्भेदश्चिन्त्यत इत्यर्थः । स्वसद्भावदशायामभेदिन इत्युक्ते तदानीं भेदाभावेनात्यन्ताभेद एवोक्तः स्यात्। ओमिति चेत्तत्राह **प्रागिति** । धर्माणां विनाशात्प्राग्धर्मिणाऽत्यन्ताभेदेऽङ्गीक्रियमाणे, सति धर्मिणि धर्माणां विनाशो न सम्भवतीत्यर्थः । **मिथो** भेदाभेदयोरित्यर्थः ॥

सु० — यदुक्तं यावदवयवभाविनोऽवयविनोऽवयवैरत्यन्ताभेदोऽयावदवयवभाविनस्तु भेदाभेदाविति । तेनान्यदपि चोद्यं परिहृतमित्याह अंशांशिनोरिति ।

अनु० — अंशांशिनोरभेदेन त्वंशसंयोग एव हि ॥
अंशिनो नानवस्थाऽतो यद्यप्यंशेष्वविश्रमः ॥

तथा हि । सर्वदिक्ष्वपि संबन्धादिति यदंशतः संयोग इत्युक्तं तदयुक्तम् । अनवस्थापत्तेः । घटसंयोगो हि घटांशसंयोगपूर्वकः । सोऽपि तदंशसंयोगपूर्वकः । न चेयं निरंशे परंपरा विश्राम्यतीति वाच्यम् । अंशपरंपराया अविश्रमस्याप्यङ्गीकृतत्वात् । अतः पूर्वपूर्वसंयोगानुत्पत्तावुत्तरोत्तरानुत्पत्तिप्रसङ्गादंशतः संयोग इति नियमो नोपपद्यत इति । तदिदमसङ्गतम् । यद्यप्यंशत एव संयोगो यद्यपि चांशेष्वंशपरंपराया अविश्रमस्तथाऽप्यंशांशिनोरभेदेनैवांशसंयोग एव हि यस्मादंशिनः संयोगोऽतो नानवस्थेति ।

शे० — 'अंशांशिनोरभेदेने'त्यादेः प्रकृतासङ्गतत्वादानर्थक्यमित्याशङ्क्याव्यवहितग्रन्थेन सङ्गत्यभावेऽप्यवयवावयव्याद्यभेदाभिधानस्योक्तानुपपत्तिपरिहाररूपप्रयोजनाभिधायकतया तदभेदप्रतिपादकव्यवहितग्रन्थसङ्गतिसम्भवान्नानर्थक्यमिति भावेन व्यवहितसङ्गततयोत्तरग्रन्थं योजयति यदुक्तमिति । 'अभेदेन प्रतीतिश्चे'त्यादिनेति शेषः । कोऽसावुक्तोऽर्थः का च तत्रानुपपत्तिर्यत्परिहारोऽवयवावयव्यभेदोक्तिप्रयोजनमित्यत उक्तार्थोदर्शनपूर्वकं तत्रानुपपत्तिं तावदुद्भावयति तथा हीत्यादिना ॥ अङ्गीकृतत्वादिति । अन्यथांऽशपरम्परायां यत्रैव विश्रमः तत्रैवापकर्षतारतम्यस्य विश्रान्तत्वापत्त्या तस्य नवधिकत्वं प्रागुक्तं बाधितं स्यादित्यर्थ इति भावः ॥ अत इति । अंशसंयोगस्यांशिसंयोगं प्रति कारणत्वात्तदभावे तदनुपपत्तिप्रसङ्गादित्यर्थः । उक्ताक्षेपस्य मूलारूढतासिद्ध्यर्थं यद्यपीत्यस्यांशतः संयोग इत्यस्य चावृत्तिमभिप्रेत्य वाक्यं योजयति यद्यपीत्यादिना ।

प० — 'एकस्मिन्जात एवे'त्युत्तरमूलानुरोधेन चोद्यं तावद्व्यनक्ति सर्वदिक्ष्विति । अंशिन इति मूलार्थविवरणेन परिहारं व्यनक्ति तदिदमसङ्गतमित्यादिना । तुशब्दः एवार्थ इत्युपेत्याह अभेदेनैवेति ।

श्री० -- तेनेति । अयावदवयवभाविनामभेदस्यापि कथनेनेत्यर्थः ॥ घटसंयोगो हीति । घटनिष्ठः संयोगो घटांशसंयोगजन्यः, यथा हस्ततरुसंयोगजन्यः कायतरुसंयोग इत्यर्थः ।

च० यावदवयवभाविनः । स्वावयवनिरूपितकालिकसंबन्धावच्छिन्नाधिकरणतात्वावच्छिन्नव्यापकतावच्छेदकस्वनिरूपितसंबन्धावछिन्नाधिकरणतावत्त्वस्य ।

॥ अभेदस्य भेदाभेदयोश्च स्थलसङ्कीर्तनम् ॥

सु० — अयमभिसन्धिः । स्यादियमनवस्था यदि सर्वत्रांशत एव संयोग इति वदतामस्माकमंशिनः संयोगोंऽशसंयोगेनैव जायत इत्यभिप्रायः स्यात् । न चैवम् । किन्तु यो यस्य अंशिनः संयोगः स तदंशे वर्तते । निरंशस्य तु संयोगः क्व नाम वर्तताम् । अतः परमाण्वोः संयोगे सति तद्वृत्त्यर्थमंशोऽङ्गीकरणीय इति । न ह्येवं सति काचिदनवस्थाऽस्ति । अनवस्थितकार्यकारणभूतासिद्धसंयोगपरंपराश्रयणाभावात् । एतावत्तु भवेत् । घटसंयोगो घटांशवृत्तिरित्यप्ययुक्तम् । अतिप्रसङ्गात् । तथा सति हि पटवृत्तिरपि घटसंयोगः स्यात् । प्रमाणविरोधाच्च । घटसंयोगो घटवृत्तिस्तद्गुणत्वात्तद्रूपवदिति । घटांशवृत्तिः संयोगो न घटसंयोगः तदन्यवृत्तित्वात् । पटसंयोगवदिति । एतदप्यनवकाशम् । अंशांशिनोरभेदस्य साधितत्वात् । अतिप्रसङ्गो हि तदा स्याद्यदि पटवद्घटांशोऽपि घटादत्यन्तभिन्नः स्यात् । अभेदे तु क्वातिप्रसङ्गः । अनुमानस्याप्याद्यस्य सिद्धसाधनता । अंशवृत्तेरेव घटवृत्तित्वात् । अंशावृत्तित्वे सति घटवृत्तित्वसाधने दृष्टान्तः साध्यविकलः स्यात् । द्वितीयस्तु हेतुः स्वरूपासिद्धोऽन्यथासिद्धो वेति । यदि घटसंयोगो घटांशे वर्तते तर्हि घटांशसंयोगः क्व वर्तत इति चेत् । अनेन (एव) न्यायेन तदंशे सोऽपि तदंश इति ब्रूमः । न चैवमनवस्था । सर्वेऽप्यंशिसंयोगास्तत्तदंशवृत्तय इत्यत्रेतरेतरापेक्षाया अभावात् ।

---

शे० — अंशांशिनोरभेदस्यानवस्थापरिहारोपयोगितया नात्रोपन्यासः किन्त्वनुपपत्त्यन्तरनिरासार्थतयैवेत्यभिप्रेत्य तदनपेक्ष्यैवानवस्थां परिहर्तुमुक्तनियमाभिप्रायमाह **अयमभिसन्धिरिति** । इतीत्यतः परमभिप्राय इति वर्तते । तर्हि किमर्थमत्र तदुपन्यास इत्यतोऽनुपपत्त्यन्तरनिरासार्थतां तस्य दर्शयितुमनुपपत्त्यन्तरं तावदुद्भावयति **एतावत्त्विति** । अतिप्रसङ्गमेव विशदयति **तथा सति हीति** । अविशेषादिति भावः । प्रमाणविरोधमेव दर्शयति **घटसंयोग इति** । मूलविघटनेनातिप्रसंगं परिहरति **अतिप्रसङ्गो हीति** । किमत्र घटवृत्तित्वमात्रं साध्यं किंवांऽशावृत्तित्वे सति घटवृत्तित्वमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **अनुमानस्यापीति** । सिद्धसाधनत्वमेव प्रथयति **अंशवृत्तेरेवेति** । द्वितीयमनूद्य दूषयति **अंशावृत्तित्वे सतीति** ।। **साध्यविकल इति** । घटरूपस्यापि घटांशवृत्तित्वाङ्गीकारेण तत्र घटांशावृत्तित्वस्य परं प्रत्यसिद्धेरिति भावः । तदन्यवृत्तित्वं किं तदत्यन्तभिन्नवृत्तित्वमभिमतं तद्भिन्नवृत्तित्वमात्रं वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **द्वितीयस्त्विति** । अंशांशिनोर्भेदाभेदवादिनं प्रति तदत्यन्तभिन्नवृत्तित्वस्यासिद्धेरिति भावः ।। द्वितीयं दूषयति **अन्यथासिद्धो वेतीति** । घटभिन्नवृत्तित्वरूपहेतुं प्रति घटसंयोगत्वाभावो न प्रयोजकः । अंशस्य घटाभिन्नत्वेन तत्संयोगस्य

घटसंयोगत्वेऽपि तस्यैवांशस्य घटभिन्नत्वस्यापि सत्त्वेन घटभिन्नवृत्तित्वस्य चोपपन्नत्वात् । तथा चांशस्य घटभिन्नत्वमेवोक्तहेतुं प्रति प्रयोजकमित्यन्यथासिद्ध इत्यर्थः । इतीत्यस्यायमिति पूर्वेण संबन्धः । अनवस्थाप्रसङ्गरूपविपक्षे बाधकसद्भावान्नाप्रयोजकत्वमित्यभिप्रेत्य गूढाभिसन्धिः पृच्छति **यदीति** । अनवस्थितकार्यकारणभूतासिद्धसंयोगपरम्पराया अभावान्नानवस्थेत्यभिप्रेत्य गूढाभिसन्धिरेव परिहरति **अनेनैवेति** । पूर्वपक्षी स्वाशयमुद्घाटयति **न चेति** । सिद्धान्त्यपि तमुद्घाटयति **सर्वेऽपीति** ॥ **इतरेतरापेक्षाया इति** । तथा च मूलक्षयकारित्वं नास्तीति भावः । न च सामान्यानवस्थावदप्रामाणिकस्वीकारूपा । प्रामाणिकत्वा**दित्याशयात्** ।

प०— सर्वदिक्ष्विति प्रागुक्तस्याभिप्रायोक्तिपरमिदं मूलमिति तात्पर्यार्थमाह **अयमभिसंधिरिति** । प्रमाणविरोधाच्चेत्युक्तं विरोधिप्रमाणं व्यनक्ति **घटसंयोग इति** । पटसंयोगवदितीतिशब्दस्येतिप्रमाणेति पूर्वेणान्वयः ॥ **साध्यविकल इति** । घटतदंशानामभेदेन घटरूपादेरपि तदंशवृत्तित्वादिति भावः ॥ **स्वरूपासिद्धोऽन्यथासिद्धो वेति** । तदन्येत्यत्र अत्यन्तभिन्नवृत्तित्वविवक्षायामसिद्धिः, अंशांशिनोर्भेदाभेदेनांशवृत्तेः संयोगस्यांशिसंयोगत्वेपि तदन्यवृत्तित्वस्योपपत्तेर्भेदाभेदेनान्यथासिद्धमित्यर्थः । यद्वा संयोगस्योभयवृत्तित्वेन घटवृत्तितयाऽप्युपपत्त्या तदन्यवृत्तित्वमन्यथासिद्धमित्यर्थः ।

॥ **अंशांशिसंयोगैक्यम्** ॥

---

**या०**—तदन्यवृत्तित्वादित्यत्र यद्यत्यन्तभेदो विवक्षितस्तदा स्वरूपासिद्धिर्यदि च भेदमात्रं विवक्षितं तदाऽन्यथासिद्धिः । साध्याभावेऽप्यभेदेन हेतोरुपपत्तेरित्याह **द्वितीयस्तु हेतुरिति** ॥ **इतरेतरापेक्षाया इति** । तथा च मूलक्षयकारित्वं नास्तीति भावः । न च सामान्यानवस्थावदप्रामाणिकस्वीकाररूपा । प्रामाणिकत्वादित्याशयात् ॥

**श्री०**— **घटांशे वृत्तिरित्यपीति** । घटादत्यन्तभिन्नघटांशेत्यर्थः । अत्यन्तभेदेप्येकसंयोगस्यापरसंयोगत्वेऽतिप्रसङ्गमेवोपपादयति **तथा सति हीति** । प्रमाणविरोधमेवोपपादयति **घटेत्यादिना** ॥ **साध्यविकल इति** । रूपस्य व्याप्यवृत्तित्वेनांशावृत्तित्वघटितं साध्यं नास्तीत्यर्थः । हेतौ तदन्येत्यत्रात्यन्तभेदविवक्षायामाह **स्वरूपासिद्ध इति** । घटतदंशयोरभेदेन तदन्यत्वाभावादिति भावः । भेदमात्रविवक्षायामाह **अन्यथासिद्धो वेति** । घटांशवृत्तिसंयोगस्य तदन्यवृत्तित्वेऽपि घटसंयोगत्वं सम्भवति । अभेदस्यापि सत्त्वादित्येवं भेदाभेदाभ्यामन्यथासिद्धो वेत्यर्थः ॥ **न्यायेनेति** । घटसंयोगो घटांशे वर्तत इति न्यायेन ॥ **अभावादिति** । जन्यजनकभावानङ्गीकारादिति भावः ।

**च०— दृष्टान्तः** तद्रूपलक्षण: ॥ **साध्यविकल इति** । घटरूपस्यापि तदभिन्नतदंशवृत्तित्वादिति भाव: । तत्प्रतियोगिकात्यंतभेदो हेतुतावच्छेदकघटक इत्यभिप्रेत्य स्वरूपासिद्ध इति । तदविशेषितभेद-निवेशाशयेनान्यथासिद्धो वेति । घटतदंशयोर्भेदाभेदोपगमेन साध्यमन्तरेणापि हेतुसत्त्वोपपत्तेरिति भाव: ।

॥ अंशांशिसंयोगैक्यसमर्थनम् ॥

**सु० — एवं तर्हि परमाणुवृत्तिरपि संयोगो घटसंयोगः स्यादिति चेत् । को नेत्याहेति । अंशसंयोग एव ह्यंशिनः संयोगोऽतो नानवस्थेत्युक्तमनवस्थापरिहारं विवृणोति** एकस्मिन्निति ।

**अनु०—** एकस्मिञ्जात एवान्यः संयोगो जायते यदि ॥
अनवस्था तदैव स्यात्संयोगैक्ये भवेत्क सा ॥

**अवयवपरंपराया अविश्रममभ्युपगम्यैकैकस्मिन्नवयवसंयोगे जात एवान्योऽवयवसंयोगो जायत इति यद्यङ्गीकुर्मस्तदैवानवस्था स्यात् ।** संयोगैक्ये **अवयविसंयोगः क्रियातो जातस्तदवयवे वर्तते, अवयववृत्तेः संयोगादपरोऽवयविनः संयोगो नास्तीति वादे तु, क साऽनवस्थेति ।**

**शे० —** विपक्षे बाधकान्तरमाशङ्कते **एवं तर्हीति** । इष्टापत्तेस्तर्काभासोऽयमित्याशयेन परिहरति **क इति** । एकस्मिन्नित्युत्तरवाक्यस्य पूर्वेण गतार्थतामाशङ्क्य परिहरति **अंशेति** ।

**श्री०— एवं तर्हीति** । यद्यंशांशिनोरभेदेनांशसंयोग एवांशिनस्संयोग: तर्हि परमाणोरपि घटांशत्वात्तत्संयोगोऽपि घटसंयोगः स्यादित्यर्थः ॥

**सु० — एतेनैतदपि निरस्तम् । यदाहुः । संयोगस्त्रिविधोऽन्यतरकर्मजोभयकर्मज-संयोगजभेदात् । तत्रान्यतरकर्मजो यः क्रियावता निष्क्रियस्य, यथा स्थाणोः श्येनेन । उभय-कर्मजस्तु विरुद्धदिक्क्रिययोः सन्निपातो, यथा मल्लयोः । संयोगजस्तु संयोगः कारणाकारण-संयोगात्कार्याकार्यसंयोगो, यथा हस्ततरुसंयोगात्कायतरुसंयोग इति ।**

**न हि हस्ततरुसंयोगातिरिक्तः कायतरुसंयोगोऽस्ति । येनासौ तज्जन्यः स्यात् । प्रमाणाभावात् । किन्तु हस्तकर्मणा जनितो हस्तवृत्तिः संयोग एव हस्तकाययोरभेदात्काय-संयोगो भवति ।**

**अत एव हस्तस्याशुचिसंयोगे कायक्षालनादिविधयोऽप्युपपद्यन्ते ।**

शे० – अनवस्थापरिहारार्थं भाष्यकारैरुपन्यस्तं संयोगैक्यं न तत्परिहारमात्रप्रयोजनकं किन्तु परोक्तसंयोगत्रैविध्यनिरासप्रयोजनकमपि भवतीत्याशयेन तदर्थतयाऽपि तद्योजयति **एतेनेति** । संयोगैक्यवचनेन तत्त्रैविध्यमपि निरस्तमित्यर्थः । कास्तास्तिस्रो विधा इत्यतस्ता दर्शयति **अन्यतरेति** । अयं चान्यतरकर्मज उभयकर्मजः संयोगजश्च संयोग इति तत्सूत्रस्यार्थानुवादः ।

अन्यतरकर्मजं लक्षयति **तत्रेति** । **तत्र** तेषु मध्ये । **क्रियावता** चलता । **निष्क्रियस्य** तदभिमुखक्रियारहितस्येत्यर्थः । तत्संयोगानुकूलक्रियाशून्यत्वमेव च निष्क्रियत्वमत्र विवक्षितम् । तेन यत्रैकः स्वाभिमुखीं दिशं गच्छत्यन्यश्च तत्पृष्ठमनुगच्छति तत्र सक्रियस्यापि सक्रियेणान्यतरकर्मजसंयोगस्य दर्शनेन सर्वथा निष्क्रियत्वस्य बाधितत्वादिति भावः । तमुदाहरति **यथेति** ।

उभयकर्मजं लक्षयति **उभयेति** । विरुद्धे दिशौ प्राचीप्रतीच्यौ अवाच्युदीच्यौ वा । दृश्यादृश्ये इति यावत् । एकदिगभिमुखेनापरस्य अप्रत्यक्षत्वस्यैव दिशो विरुद्धत्वात् । ययोः क्रिययोस्तौ विरुद्धदिक्क्रियौ तयोः सन्निपातोऽभिघात इत्यर्थः । तमुदाहरति **यथेति** । यद्यपि कर्मणः कर्मत्वेनैव संयोगं प्रति कारणत्वात्प्रत्येकमेव कर्मणोः संयोगजनकत्वमिति संयोगद्वयमेवोत्पत्तुमर्हति । तथाऽपि संयोगद्वयस्याननुभवात्कर्मभ्यां सम्भूय एक एव संयोगो जन्यते । अत एव नैककर्मणाऽन्यथासिद्धिः । विनिगमकाभावेनोभयोरप्यारम्भकत्वादिति भावः । ननु तथाऽपि कर्मत्वेनैव संयोगजनकत्वात्कपालद्वयजन्यघटवदवान्तरजातिभेदाभावात्कथं त्रैविध्यमिति चेत् । अत्राहुः । जातिभेदाभावेऽप्यन्यतरकर्मजत्वाद्युपाधिभेदात्तत्पुरस्कारेणैवायं विभाग इति । यद्वा कस्यचित्संयोगस्य यावत्स्वाश्रयं विभागविरोधित्वं कस्यचिन्नेत्यवान्तरभेदस्यावश्यकत्वात्तत्र चान्यतरकर्मोभयकर्मणामेव प्रयोजकत्वमिति तदभिप्रायेणायं विभाग इति । वस्तुतस्तु ययोः सामान्ययोः कार्यकारणभावो, बाधकं विना तयोर्विशेषयोरपि स इति न्यायात्कर्मत्वेन संयोगजनकत्वबलादेवान्यतरकर्मत्वेनोभयकर्मत्वेन च तत्कारणतासिद्ध्या तज्जन्यतावच्छेदकत्वेन जातिविशेषस्याप्यवश्यं स्वीकर्तव्यत्वसिद्ध्या तमादायैव त्रैविध्यानुसरणस्यौचित्यादित्यवधेयम् । कथात्वेन वादादीनामेकत्वसम्भवेऽपि तद्भेदवत्स्वतन्त्रेच्छाया अपर्यनुयोज्यत्वादेवायमपि भेदो निर्वाह्य इत्यप्याहुः ।

संयोगजं लक्षयति **संयोगजस्त्विति** । तमुदाहरति **यथेति** । अत्र हस्तस्य कायकारणत्वात्तरोश्च तदकारणत्वात्तत्संयोगस्य कारणाकारणसंयोगत्वम् । कायस्य हस्तकार्यत्वात्तरोश्च तदकार्यत्वात्तत्संयोगस्य कार्याकार्यसंयोगत्वं बोध्यम् । न च तत्र मानाभावः । करतरुसंयोगे सति शरीरं तरुसंयुक्तमिति

प्रतीतेरेव तत्र प्रमाणत्वात् । ननु नायं संयोगजः संयोगोऽन्यतरकर्मजत्वात् । तथा हि । करतरुसंयोगः किं करमात्रकर्मणः किंवा तरुमात्रकर्मण आहोस्विदुभयकर्मणः । नाद्यः । करकर्मकाले शरीरकर्मणोऽप्यावश्यकतया तस्मादेव शरीरतरुसंयोगोत्पत्तिसम्भवे करतरुसंयोगस्यापि तत्र हेतुत्वे मानाभावात् । न द्वितीयः । तरुकर्मणा करतरुसंयोगजनिकाले शरीरं किं हस्तपिहितं येन तरुकर्मणैव शरीरतरुसंयोगमुपेक्ष्य करतरुसंयोगस्य शरीरतरुसंयोगकारणत्वमङ्गीकर्तुमुद्यतोऽसि । अत एव न तृतीयः । अथ करतरुसंयोगः करमात्रकर्मण एव । न च तदुक्तदोषः । अवयविकर्मणो यावदवयवकर्मनियतत्वेन करमात्रकर्मकाले शरीरे कर्माभावादिति चेत् । अस्त्वेतद्यथातथा । करकर्मण एव कायतरुसंयोगे कारणता भविष्यति । करतरुसंयोगजनकतया क्लृप्तत्वात् । न च करगतकर्मणस्तत्रासमवायिकारणत्वं न सम्भवति । समवायिकारणप्रत्यासत्त्यभावादिति वाच्यम् । तन्तुरूपस्येव कारणैकार्थप्रत्यासत्त्यैव तत्सम्भवादिति चेन्मैवम् । सामानाधिकरण्यलाघवेन सजातीयत्वलाघवेन च करतरुसंयोगस्यैव कारणत्वं न तु कर्मणः सजातीयसमानाधिकरणकारणसम्भवे विजातीयासमानाधिकरणकल्पनस्याप्रामाणिकत्वादिति । इतीत्यस्येत्येतदपीति पूर्वेण संबन्धः । एतेनेत्युक्तमेव विशदयति **न हीति** । कुतो नास्तीत्यत आह **प्रमाणेति** । संयोगद्वैतापतिभासादिति भावः ।

**अत एवेति** अवयवसंयोगस्यैवावयविसंयोगत्वादेवेत्यर्थः । अयम्भावः । हस्तस्याशुचिसंयोगे कायक्षालनादिकर्तव्यता तावद्विधीयते । न चेयं निर्निमित्ता सम्भवति अतिप्रसङ्गादिति निमित्तं वाच्यम् । तच्च न तावद्धस्ताशुचिसंयोग एवेति वक्तुं शक्यम् । अन्यनिष्ठसंयोगस्यान्यक्षालननिमित्तताया अतिप्रसङ्गपराहतत्वात् । नापि हस्ताशुचिसंयोगजन्यकायाशुचिसंयोगस्तत्र निमित्तम् । हस्ताशुचिसंयोगातिरिक्तकायाशुचिसंयोगस्यैवाप्रामाणिकतया तन्निमित्तताया दूरनिरस्तत्वात् । तस्मादवयवावयविनोरभेदेनावयवसंयोगस्यैवावयविसंयोगत्वमिति संयोगद्वयैक्येनैव तदुपपत्तिर्न प्रकारान्तरेणेति ॥ तातचरणास्तु प्रमाणाभावेन हस्ततरुसंयोगातिरिक्तकायतरुसंयोगाभावादित्युक्तम् । तत्र प्रमाणाभावोऽसिद्धः । हस्तस्याशुचिसंयोगे सति कायक्षालनादिविध्यन्यथाऽनुपपत्त्या तस्य सिद्धत्वादित्यत आह **अत एवेति** । हस्तकर्मणा जनितस्य हस्तवृत्तिसंयोगस्यैव हस्तकाययोरभेदेन कायसंयोगत्वादेवेत्यर्थः । ततश्चाभेदेनैव कायक्षालनादिविधेरुपपन्नत्वेन तदन्यथाऽनुपपत्त्यभावान्न तयाऽप्यतिरिक्तकायसंयोगसिद्धिरिति भाव इत्याहुः ॥ संयोगभेदमादाय हि कायक्षालनादिविधिः परेणोपपादितः । तत्र यदि संयोगभेदो न स्यात्तदा तन्निमित्तककायक्षालनादिविधेरनुपपत्तिः स्यादित्यत आह **अत एवेति** । संयोगैक्यादेवेत्यर्थ इत्यप्याहुः ।

स० — अत एवेति । हस्तसंयोगकायसंयोगयोरभेदादेवेत्यर्थः । ननु भेदेऽपि कायप्रक्षालनमुपपन्नम् । हस्त ाशुचिसंयोगेन कायस्याशुचिसंयोगोत्पादनादिति चेन्न । हस्तस्याशुचिसंयोगातिरिक्तस्य कायाशुचिसंयोगस्यैवाप्रामाणिकत्वात् । तथा च हस्तस्याशुचिसंयोगेन कायस्याशुचिसंयोगोत्पादनानुपपत्तेः हस्तसंयोगे तस्यैव प्रक्षालनादिकं विधेयम् । न तु कायस्य । तस्मादन्यथानुपपत्त्या तयोरैक्यसिद्धिरिति ।

प० — एतेनेति । अंशांशिसंयोगस्यैक्यकथनेनेत्यर्थः ॥ विरुद्धदिक्क्रिययोरिति । दिक् च क्रिया च दिक्क्रिये। विरुद्धे दिक्क्रिये ययोस्तौ विरुद्धदिक्क्रियौ तयोरित्यर्थः । तरुसंयोग इतीतिशब्दस्येत्येतदपि निरस्तमिति पूर्वेणान्वयः । कथमित्यत आह न हीति ॥ कायक्षालनादीति । 'नारं स्पृष्ट्वा अस्थि सस्नेहं सवासा जलमाविशेदि'त्यादिविधय इत्यर्थः ।

श्री० — अत एव हस्तकाययोरभेदादेव । उपपद्यन्ते न ह्यत्यन्तभेदे एकस्याशुचिसंयोगेऽपरस्य क्षालनं युक्तम् । देवदत्तस्याशुचिसंयोगे यज्ञदत्तस्य क्षालनादर्शनादित्यर्थः ।

च० — एतेन अंशांशिसंयोगैक्यसमर्थनेन । विरुद्धदिक्क्रिययोरिति । कृतेतरद्वन्द्वादिक्रियापदस्य विरुद्धपदेन बहुव्रीहिरिति व्याकुर्वन्ति । कृतकर्मधारयविरुद्धदिक्पदेन सप्तमीद्विवचनान्तेन क्रियापदस्य व्यधिकरणबहुव्रीहिरित्यपि व्याचक्षते । इतीति निरस्तमित्यनेनान्वेति ।

---

सु० — अत एव विभागजोऽपि विभागो निरस्तः ।

द्विविधं हि तमाचक्षते । कारणाकारणविभागात्कारणविभागाच्चेति । तत्राद्यो यथा । हस्ततरुविभागात्कायतरुविभागः । द्वितीयो यथा । द्वितन्तुकावयवे तन्तौ कर्मोत्पन्नं तस्य तन्त्वन्तराद्विभागं करोति । विभागात्तन्त्वोः संयोगो नश्यति । ततो द्वितन्तुकविनाशः । तत इदानीं तन्त्वोर्वर्तमानो विभागः सक्रियस्यावयवस्य द्वितन्तुकसंयुक्ताकाशादिदेशाद्विभागं करोतीति ।

तत्राद्यस्तावदनुपपन्नः । हस्ततरुविभागातिरिक्तस्य कायतरुविभागस्यानुपलम्भात् । हस्तकर्मणा जनितो हि विभागो हस्तकाययोरभेदाद्धस्तकायगुणो भवति । अत एव विवादाध्यासितो विभागो न कर्मासमवायिकारणकः कर्मैकार्थासमवेतत्वात् । शब्दवदित्यसिद्धतया निरस्तम् ।

द्वितीयस्त्वनुपपन्नतरः । तन्तुकर्मणैव तन्तोस्तन्त्वन्तरादाकाशादिदेशाच्च विभागोत्पत्त्युपपत्तौ क्रमकल्पनानुपपत्तेः । अन्यथांगुलिकर्मणांगुलेरंगुल्यन्तरादेव विभागो भवति आकाशादिदेशात्तु विभागादेवेति स्यात् ।

**नन्वंगुलिकर्म अंगुलिविभागमाकाशादिविभागं च करोति । तयोर्विभागयोरविरुद्धत्वात् । तन्तुकर्म तु तन्त्वन्तरविभागमाकाशादिविभागं (च) न कर्तुमर्हति । तयोर्विभागयोः द्रव्यारंभकसंयोगविरोधित्वाविरोधित्वरूपविरोधात् । न ह्यविरुद्धात्कारणाद्विरुद्धकार्योत्पत्तिः संभवतीति । मैवम् । एकस्मादेव कर्मणः संयोगविभागजननाभ्युपगमात् । तन्तुकर्मणा द्रव्यारंभकानारंभकतन्त्वन्तराकाशसंयोगजन्माङ्गीकाराच्च । अन्यथा कारणाकारणसंयोगजसंयोगवत्कारणात्रसंयोगजोऽपि संयोगः स्वीकार्यः स्यात् ।**

शे० **अत एवेति** । अवयवावयविनोरभेदेनावयवविभागस्यैवावयविविभागत्वात् अवयवविभागातिरिक्तस्यावयविविभागस्य प्रमाणाभावेनासत्त्वादेवेत्यर्थः ॥ **कारणविभागाच्चेति** । कारणमात्रविभागाच्चेत्यर्थः ॥ **हस्तेति** । हस्तकर्मजनिताद्धस्ततरुविभागाज्जातः कायतरुविभागो हस्तस्य कायकारणत्वात्तरोश्च तदकारणत्वात्कायस्य च हस्तकार्यत्वात्तरोश्च तदकार्यत्वाद्भवति कारणाकारणविभागजः कार्याकार्यविभाग इत्यर्थः ॥ **द्वितन्तुकावयवे तन्ताविति** । द्वितन्तुकस्य पटस्यावयवभूते तन्तावित्यर्थः ॥ **तन्त्वन्तरादिति** । आरम्भकद्रव्यादित्यर्थः ॥ **संयोगो नश्यतीति** । द्रव्यारम्भकसंयोगो नश्यतीत्यर्थः । विभागस्य संयोगविरोधित्वात्तेन तन्नाश इत्यर्थ इति भावः ॥ **तत इति** । असमवायिकारणनाशे कार्यनाशस्यावश्यकत्वादिति भावः । एवं कर्मविशेषाद्विभागविशेषस्ततो द्रव्यारम्भकसंयोगनाशस्तस्मादवयविनाश इत्यस्तु, विभागजविभागस्य तु न काऽपि वार्तेत्यत आह **तत इति** ॥ **सक्रियस्येति** । यस्मिंस्तन्तौ कर्मोत्पन्नं तस्येत्यर्थः ॥ **आकाशादिति** । अनारम्भकदेशादित्यर्थः ॥ **हस्तकर्मणेति** । हस्तकर्मणा जनितो हस्तवृत्तिर्विभाग एव हस्तकाययोरभेदात्कायवृत्तिर्भवतीत्यर्थ. ॥ **अत एवेति** । प्रमाणाभावेनावयवविभागातिरिक्तस्यावयविविभागस्यासत्त्वादेवेत्यर्थः ॥ **असिद्धतयेति** । हस्तकर्मणा सहैकार्थसमवेतस्य हस्तविभागस्यैव हस्तकाययोरभेदेन कायविभागतया कर्मैकार्थसमवेतत्वेन तदसमवेतत्वस्यासिद्धत्वादित्यर्थः ॥ **तन्तुकर्मणैवेति** । तन्त्वन्तरविभागजनकतन्तुकर्मणैवेत्यर्थः । **क्रमकल्पनेति** । द्वितन्तुकावयवे तन्तौ कर्मोत्पन्नं तस्य तन्त्वन्तराद्विभागं करोतीत्यादिना प्रागुपदर्शितक्रमकल्पनेत्यर्थः । तन्तुकर्मणस्तन्त्वन्तरादेव विभागजनकत्वं नाकाशादिदेशादिति विप्रतिपद्यमानं प्रत्यनिष्टमाह **अन्यथेति** । विशेषहेत्वभावादिति भावः ।

प्रतिबन्दीमूलभूतमविशेषं वैधर्म्योपदर्शनेन विघटयंस्तत्परिहारमाशङ्कते **नन्विति** । किमत्र कर्मणो विरुद्धकार्यद्वयमात्राजनकत्वमभिमतं किंवा विरुद्धविभागद्वयाजनकत्वमिति विकल्पद्वयं मनसि निधायाद्यं प्रत्याचष्टे **एकस्मादिति** । क्रिया, क्रियातो विभागो, विभागात्पूर्वदेशसंयोगनाश उत्तरदेशसंयोगोत्पत्तिरेति तदभियुक्तोक्तेरिति भावः । एकस्यापि तन्तुकर्मणो विरुद्धसंयोगद्वयजनकत्ववद्विरुद्ध-

विभागद्वयजनकत्वस्याप्युपपत्तेर्न द्वितीयोऽपीति भावेनैकस्य कर्मणो विरुद्धसंयोगद्वयजनकतायाः परेणाङ्गीकृततामाह **तन्तुकर्मणेति** । तन्तुकर्मणो द्रव्यारम्भकानारंभकतन्त्वन्तराकाशसंयोगजनकत्वाङ्गीकारं विपक्षे बाधकोपदर्शनेनोपपादयति **अन्यथेति** । तन्तुकर्मणः संयोगजनकत्वाभाव इत्यर्थः । अयम्भावः । यथा हि हस्तकर्मणो हस्ततरुसंयोगजनकत्वेऽपि कायतरुसंयोगाजनकत्वात्त्वन्मते कायतरुसंयोगो न कर्मजः किन्तु हस्तकर्मजनितहस्ततरुसंयोगजन्यतया कारणाकारणसंयोगजन्यकार्याकार्यसंयोगरूपत्वात् संयोगजसंयोग एव । तथा तन्तुकर्मणस्तन्तोस्तन्त्वन्तरसंयोगजनकत्वेऽपि तन्त्वाकाशसंयोगजनकत्वाभावात् तन्त्वाकाशसंयोगोऽपि न कर्मजः । किन्तु तन्तुकर्मजन्यो यस्तन्तोस्तन्त्वन्तरेण संयोगस्तज्जन्यतया कारणमात्रसंयोगजन्यकारणाकारणसंयोगरूपत्वात्संयोगजसंयोग एवेति विभागजविभागवत्संयोगजसंयोगस्याप्युक्तरूपेण द्वैविध्यप्रसक्त्या तदैकविध्यसिद्धान्तभङ्गप्रसङ्गात् । तत्संरक्षणाय तन्त्वन्तरसंयोगस्येव तन्त्वाकाशसंयोगस्यापि तन्तुकर्मजन्यत्वमेवाङ्गीकर्तव्यमिति युक्तमेव तत्प्रतिबन्द्या तन्तुकर्मण एव विरुद्धविभागद्वयजनकत्वमिति ।

**प० — अत एवेति** । अवयवावयविनोरभेदादेवेत्यर्थः ॥ **द्वितन्तुकेति** । द्वितन्तुकं यत्कार्यं तदवयवभूते तन्तावित्यर्थः ॥ **आकाशादिदेशादिति** । तथा च द्वितन्तुको यः पटः तत्कारणीभूतयोस्तन्त्वोर्विभागाज्जातो विभागः कारणविभागाज्जातो विभाग इति ज्ञेयम् । अत एवेति हस्तकर्मणेत्यादिपूर्ववाक्योक्तस्य परामर्शः ॥ **विवादाध्यासितो विभाग इति** । कारणविभागाज्जातत्वेनोक्तो विभाग इत्यर्थः ॥ **कर्मैकेति** । कर्मणा सहैकस्मिन्नर्थेऽसमवेतत्वादित्यर्थः ॥ **संयोगविभागजननेति** । उत्तरदेशसंयोगपूर्वदेशविभागयोर्जननाभ्युपगमादित्यर्थः ॥ **तन्त्वन्तराकाशसंयोगेति** । तन्त्वन्तरसंयोगाकाशसंयोगयोर्जन्मेत्यर्थः ॥ **अन्यथा कारणाकारणेति** । कारणमात्रविभागजन्योऽपि विभागोऽस्तीति स्वीकार्यं इत्यर्थः ।

**या० — द्वितन्तुकावयव इति** । द्वितन्तुकस्य पटस्यावयवभूते तन्तावित्यर्थः ॥ **अन्यथा कारणाकारणेति** । एवं तन्तुकर्मणैवोभयविभागोत्पत्तिसम्भवेऽपि यदि क्रमविशेषभयेन कल्पनया कारणविभागजोऽपि विभागः स्वीक्रियत इत्यर्थः ॥ **कारणमात्रसंयोगजोऽपीति** । तन्तोः कर्मणा आदौ तस्य तन्त्वन्तरसंयोगस्तेन च संयोगेन सक्रियस्य तन्तोस्तन्त्वन्तरावच्छिन्नाकाशसंयोगो जायत इत्यपि स्वीकार्यमित्यर्थः । अत्राप्येकेन कर्मणा विरुद्धयोः संयोगयोर्युगपदुत्पत्त्यसम्भवेन क्रमः कल्प्यत इति भावः ।

**श्री० —** अत एवेत्युक्तं विशदयति **हस्ततरुविभागातिरिक्तस्येत्यादिना** ॥ **भवतीति** । तथा चाभेदेन हस्ततरुविभागस्यैव कायतरुविभागत्वात्तत्र च हस्तकर्मण एवासमवायिकारणत्वं न विभाग-

स्येति भावः ॥ **विवादाध्यासित इति** । कायतरुविभाग इत्यर्थः । **न कर्मासमवायिकारणक इति** । किन्तु हस्ततरुविभागासमवायिकारणक इत्यर्थः ॥ **कर्मैकार्थेति** । कर्मणो हस्तनिष्ठत्वाद्विभागस्य च कायवृत्तित्वान्न कर्मैकार्थसमवेतत्वं कायतरुविभागस्येत्यर्थः । तथा च विभागासमवायिकारणकत्वमेव वक्तव्यमित्यर्थः ॥ **शब्दवदिति** । आद्यशब्दस्य संयोगविभागासमवायिकारणकत्वात् द्वितीयादिशब्दस्य पूर्वशब्दासमवायिकारणकत्वेन साध्यमस्तीति ध्येयम् । अत एवेत्युक्तं विशदयति **असिद्धत्वेति** । हस्तकाययोरभेदात्कायतरुविभागस्यैव हस्ततरुविभागत्वेन कर्मणश्च हस्तनिष्ठत्वात्कायविभागस्यापि हस्तनिष्ठत्वात्कर्मैकार्थसमवेतत्वमस्तीति स्वरूपासिद्धिरित्यर्थः । **द्वितीयः** कारणमात्रविभागजविभागः ॥ **क्रमेति** । तन्तुकर्मणा सक्रियस्य तन्तोः तन्त्वन्तरान्निष्क्रियाद्विभागः, तस्मात्कारणमात्रविभागात्सक्रियस्य तन्तोस्तन्त्वन्तरावच्छिन्नाकाशविभाग इति क्रमेत्यर्थः । **अन्यथा** उक्तरीत्या क्रमकल्पने । आकाशादिदेशात्सक्रियस्याङ्गुलेर्निष्क्रियाङ्गुल्यवच्छिन्नाकाशदेशाद्विभाग इत्यर्थः । **विभागात्** अङ्गुलिद्वयविभागात् ॥ **इति स्यादिति** । तथा च कारणमात्रविभागजोऽपि विभागः स्वीकार्य इति भावः ॥ **अविरुद्धत्वादिति** । अङ्गुलिद्वयसंयोगस्य वाऽङ्गुल्याकाशसंयोगस्य वा द्रव्यानारम्भकत्वेनाङ्गुलिद्वयविभागाकाशविभागयोरपि द्रव्यानारम्भकसंयोगविरोधित्वेन वक्ष्यमाणविरुद्धत्वाभावादिति भावः ॥ **न ह्यविरुद्धात्कारणादिति** । तन्तुकर्मरूपादविरुद्धात्कारणात् उक्तप्रकारेण विरुद्धं यत्कार्यं तन्त्वन्तरविभागाकाशविभागरूपं तन्न भवतीत्यर्थः । अविरुद्धात्कारणाद्विरुद्धकार्यद्वयं न हि भवतीति नियमस्य स्थलद्वये व्यभिचारमाह **एकस्मादेवेत्यादिना** ॥ **द्रव्यारम्भकेति** । तन्तुकर्मणा जातस्तन्त्वन्तरसंयोगः पटरूपद्रव्यारम्भक इत्यर्थः ॥ **संयोगविभागेति** । तद्रूपविरुद्धकार्येत्यर्थः । द्रव्यारम्भकानारम्भकेति कार्ये विरुद्धत्वं दर्शयितुमुक्तम् ॥

च० — **द्वितंतुकावयव इति** । बहुव्रीहिगर्भः षष्ठीतत्पुरुषः । **सक्रियस्येति** बहुव्रीहिः । स्वजनक(स्व=विभाग)क्रियाविशिष्टस्येत्यर्थः ।

सु० — ननु संयोगस्य न स्वरूपतो विरोधोऽस्ति । यतो द्रव्यानारंभकद्रव्यसमवेत एव संयोगो द्रव्यानारंभकः । द्रव्यानारंभकं च द्रव्यं सप्तविधम् । आरब्धद्रव्यमन्त्यावयविस्पर्शरहितं विनश्यदवस्थं विनश्यदवस्थसंयोगं निष्फलारंभं विजातीयं चेति । ततः कर्मणैव संयोगद्वयजन्मोपपत्तिरिति । एवं तर्हि विभागयोरपि को विरोधः । द्रव्यारम्भानारम्भप्रयुक्तत्वाद्विरोधप्रतीतेः । तन्तुद्वयविभागजनकं तन्तुकर्म न तन्त्वाकाशविभागजनकं द्रव्यारम्भकसंयोगविरोधिविभागजनककर्मत्वात् द्रव्यानारम्भकसंयोगविरोधिविभागजनककर्मवत् इत्याभास-

**समानयोगक्षेमम् । तन्तुकर्म न तन्त्वन्तरविभागजनकं कर्मत्वात् संप्रतिपन्नकर्मवदित्यपि प्रयोगसंभवात् । तत्र प्रमाणबाध इति चेत् । सममन्यत्रापि । विभागद्वययौगपद्यानुभवात् । तन्तुकर्म आकाशविभागजनकं कर्मत्वादिति प्रतिपक्षश्च । आकाशविभागे विभागेन कर्तव्ये कर्मणो निमित्तत्वाभ्युपगमात्सिद्धसाधनमिति चेन्न । जनकशब्दस्यासमवाय्यर्थत्वात् ।**

शे० — ननु तन्तुकर्मणः संयोगद्वयजनकत्वप्रतिबन्द्या विभागद्वयजनकत्वमुपपादयितुमशक्यम् । संयोगद्वयस्य स्वरूपतोऽविरुद्धत्वेन तज्जनकत्वस्य कर्मणि विरुद्धत्वानापादकतयोक्तविभागद्वयस्य च विरुद्धत्वेन तज्जनकत्वस्य तदापादकतया वैषम्येण प्रतिबन्दीमूलभूताविशेषासिद्धेरित्याशयेन वैषम्यमाशङ्कते **नन्विति ॥ स्वरूपत इति** । स्वभावत इत्यर्थः । **द्रव्यानारम्भकेति** । उपलक्षणं चैतत् । द्रव्यारम्भकद्रव्यसमवेत एव संयोगो द्रव्यारम्भक इत्यपि द्रष्टव्यम् । ततश्च तन्तोस्तन्त्वन्तरेण संयोगस्य द्रव्यारम्भकद्रव्यसमवेतत्वप्रयुक्तमेव द्रव्यारम्भकत्वं, न स्वाभाविकम् । आकाशसंयोगस्य च द्रव्यानारम्भकद्रव्यसमवेतत्वप्रयुक्तमेव द्रव्यानारम्भकत्वं न स्वाभाविकमिति न संयोगस्य स्वरूपतो विरोध इति भावः । नन्वनारब्धद्रव्यत्वादिविशिष्टेऽपि तन्त्वादौ वर्तमानो न सर्वः संयोगो द्रव्यारम्भक इति संयोगविशेषत्वेन द्रव्यारम्भकत्वम् । अनारम्भकसमवेतमात्रस्य व्यभिचारित्वात् । स च विशेषो जातिरूप एवेति संयोगयोर्वैजात्यात् तज्जनककर्मणोरविरुद्धजातीयत्वमावश्यकमिति नैकस्य कर्मणो द्रव्यारम्भकानारम्भकसंयोगजनकत्वम् । अतः कारणमात्रसंयोगजन्यः कारणाकारणसंयोगः स्यादेवेति चेन्न । सहकारिभेदसमवधानादेव तदुपपत्तौ वैजात्ये मानाभावात् । तथा च कर्मणो वैजात्यमसिद्धमिति एकस्यैव कर्मणस्तदुभयजनकत्वान्नोक्तविधसंयोगप्रसङ्ग इति । ननु भवेदाकाशसंयोगस्य द्रव्यानारम्भकद्रव्यसमवेततया द्रव्यानारम्भकत्वं, यद्याकाशस्य द्रव्यानारम्भकता स्यात् । सैव तु कुत इत्यतः स्पर्शरहितत्वादिति भावेन द्रव्यानारम्भकद्रव्यविभागमाह **द्रव्येति ॥ आरब्धद्रव्यमिति** । कार्यव्याप्तं तन्त्वादीत्यर्थः ॥ **अन्त्यावयवीति** ।पटादीत्यर्थः ॥ **स्पर्शरहितमिति** । आकाशादिपञ्चकमित्यर्थः ॥ **विनश्यदवस्थमित्यादि** । एतदुभयरूपं तन्त्वादिकमेव द्रष्टव्यम् । **निष्फलारम्भमिति** । एतादृशं च द्रव्यं परमाणुद्वयारब्धे आदिकार्ये तृतीयः परमाणुः । द्व्यणुककार्ये च चतुर्थं द्व्यणुकम् । तत्र परमाणुद्वयारब्धे तत्कार्येश्वरापेक्षाबुद्धिजन्यपरमाणुगतद्वित्वसंख्ययैव ह्रस्वत्वाणुत्वरूपपरिमाणस्य द्व्यणुककार्ये चेश्वरापेक्षाबुद्धिजन्यद्व्यणुकगतत्रित्वसंख्ययैव महत्त्वदीर्घत्वरूपपरिमाणस्यारम्भसम्भवेन परमाणुकार्ये तृतीयपरमाणोः द्व्यणुककार्ये च चतुर्थस्य द्व्यणुकस्यारम्भकताकल्पनस्य व्यर्थत्वादिति द्रष्टव्यम् ॥ **विजातीयमिति** । पार्थिवाप्यपरमाण्वोर्नैककार्यारम्भकत्वम् । तथा सति तत्कार्यस्य निर्गन्धत्वादिप्रसङ्गात् । पृथिवीत्वादिजातिसङ्कप्रसङ्गाच्चेति भावः ॥ **तत इति** । संयोगद्वयस्य स्वरूपतोऽविरुद्धत्वादित्यर्थः ।

एवं विभागयोरपि स्वरूपतोऽविरुद्धत्वेन तन्तुकर्मणैव तन्तोस्तन्त्वन्तरविभागस्येवाकाशादिदेशादपि तद्विभागस्य जननसम्भवात् क्व विभागजो विभाग इत्याशयेन प्रतिबन्दीमूलभूतमविशेषमेवोपपादयति **एवं तर्हीति** ॥ **को विरोध इति** । न स्वरूपतो विरोधः किन्त्वौपाधिक एवेत्यर्थः । तत्कथमित्यत आह **द्रव्येति** । द्रव्यारम्भकसंयोगविरोधित्वतदनारम्भकसंयोगविरोधित्वरूपविरुद्धोपाधिद्वयप्रयुक्तत्वादित्यर्थ । द्वितन्तुकावयवे तन्तावुत्पन्नस्य कर्मणो विवक्षितविभागद्वयजनकत्वाभावस्यानुमानेन सिद्ध्या न तन्तुकर्मणैव तदुत्पत्त्युपपत्तिरिति युक्तैव क्रमकल्पनेत्याशङ्कते **तन्त्विवति** । द्रव्यारम्भकसंयोगविरोधिविभागजनकमित्यर्थः ॥ **नेति** । नानारम्भकसंयोगविरोधिविभागजनकमित्यर्थः । अत्र तन्तुकर्मणो द्रव्यारम्भकसंयोगविरोधिविभागजनकत्वे सति तदनारंभकसंयोगविरोधिविभागजनकत्वाभावो न साधयितुं शक्यते । परं प्रति दृष्टान्ताभावात् । अनारंभकसंयोगविरोधिविभागजनकत्वाभावमात्रसाधने च न विभागद्वयजनकत्वाभावसिद्धिः इत्यत उभयजनकत्वाभावसिद्ध्यर्थं तन्तुद्वयविभागजनकत्वस्य साध्यकोट्यनन्तभावमङ्गीकृत्य पक्षविशेषणत्वमाश्रितम् । ततश्च पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्ध्या तन्तुकर्मणो विवक्षितविभागद्वयजनकत्वाभावसिद्धिरिति द्रष्टव्यम् ॥ **द्रव्येति** । अत्र द्रव्यानारम्भकसंयोगविरोधिविभागजनकतन्तुकर्मणि आकाशादिविभागजनके व्यभिचारवारणाय द्रव्यारम्भकसंयोगविरोधीति विभागविशेषणम् ॥ **द्रव्यान्तरेति** । घटादीत्यर्थः । दूषयति **आभासेति** । तदेवोपपादयति **तन्तुकर्मेति** ॥ **सत्प्रतिपन्नेति** । द्रव्यान्तरारम्भकसंयोगविरोधिविभागजनककर्मवदित्यर्थः । बाधितत्वाबाधितत्वाभ्यां वैधर्म्येणाविशेषसिद्धेः कथं साम्यमित्याशङ्कते **तत्रेति** ॥ **सममिति** । तथा चात्रापि प्रमाणबाधादविशेष एवेति भावः । प्रमाणबाधमेवोपपादयति **विभागद्वयेति** ॥ **तन्तुकर्मेति** । अत्रापि तन्तुद्वयविभागजनकमिति पक्षविशेषणं द्रष्टव्यम् । ततश्च पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्ध्या द्वितन्तुकावयवतन्तुकर्मण एव तन्त्वन्तरादाकाशादिदेशाच्च विभागजनकत्वप्राप्तेरुद्देशसिद्धिविरोधित्वात् युक्तमस्य सत्प्रतिपक्षत्वमिति भावः । कर्मत्वादित्यतः परमङ्गुलीकर्मवदिति शेषः । सिद्धसाधनताग्रस्तत्वेनातुल्यबलत्वान्न सत्प्रतिपक्षत्वमिति शङ्कते **आकाशेति** ।

प० — आरब्धद्रव्यमिति बहुव्रीहिः । **निष्फलारंभमिति** । कपालद्वयेनैव घटारंभे तृतीयकपालो निष्फलारंभद्रव्यम् । द्वाभ्यामेव परमाणुभ्यां द्व्यणुकोत्पत्तौ तृतीयपरमाणुर्निष्फलारंभद्रव्यमित्येवं ज्ञेयम् ॥ **विजातीयमिति** । आप्यपरमाण्वादिकं पार्थिवद्व्यणुकाद्यनारंभकमिति ज्ञेयम् । एवं चाकाशस्य निःस्पर्शकत्वेन द्रव्यानारंभकत्वात्तन्त्वन्तरसंयोगाकाशसंयोगयोरारंभकत्वानारंभकत्वरूपविरोधस्यारंभकानारंभकद्रव्यसमवेतत्वेन सोपाधिकतया स्वाभाविकत्वाभावात्तदुभयजन्माङ्गीकारो न युक्तः विभागद्वयजन्माङ्गीकारस्तु युक्त इति शङ्काभिप्रायः ॥ तन्तुद्वयेति कर्मान्तं पक्षः । न तन्त्वित्यादि साध्यम् । **द्रव्येति** ।

द्रव्यारंभको यः संयोगस्तद्विरोधी यो विभागः तज्जनककर्मत्वादित्यर्थः । अदृष्टादावव्यभिचाराय कर्मपदम् । तन्त्वन्तरसंयोगजनके तन्त्वाकाशविभागजनके तन्तुकर्मण्यव्यभिचाराय द्रव्यारंभकसंयोगविरोधीति विशेषणम् ॥ **द्रव्यान्तरेति** । घटारंभक इत्यर्थः ॥ **इत्याभासेति** । इति परकीयानुमानं वक्ष्यमाणाभाससमानमित्यर्थः । आभासप्रयोगमेवाह **तन्तुकर्मेति** ॥ **संप्रतिपन्नकर्मवदिति** । घटकर्मवदित्यर्थः । सममित्युक्तं बाधकप्रमाणं दर्शयति **विभागद्वयेति** । तन्त्वन्तराकाशादिभागद्वयेत्यर्थः । **कर्मत्वादिति** । कर्ममात्रस्य स्वाश्रयवस्तुन आकाशप्रदेशाद्विभागजनकत्वेन सिद्धोऽनुबन्ध इति दृष्टान्तानुक्तिः ॥ **विभागेनेति** । प्रागुक्तकारणविभागे(नाङ्गीक)न कर्तव्ये सतीत्यर्थः ।

**या०**—ननु यः क्रमकल्पको विरोधः स स्वाभाविक एव विवक्षितः नोपाधिकः । प्रकृतसंयोगयोश्च न स्वाभाविको विरोधः किन्त्वौपाधिकोऽतस्तयोर्न क्रमेणोत्पत्तिर्येन कारणमात्रसंयोगजोऽपि संयोगः स्वीकार्य इत्याशङ्कते **ननु संयोगस्येति** ॥ **स्वरूपत इति** स्वभावत इत्यर्थः । द्रव्यानारम्भकेत्युपलक्षणमेतत् । यतो द्रव्यारम्भकद्रव्यमात्रसमवेत एव संयोगो द्रव्यारम्भक इत्यपि ग्राह्यम् । तथा च तन्तोस्तन्त्वन्तराकाशसंयोगयोर्द्रव्यारंभकत्वानारम्भकत्वे द्रव्यारम्भकद्रव्यमात्रसमवेतत्वद्रव्यानारंभकद्रव्यसमवेतत्वरूपोपाधिप्रयुक्ते इत्युक्तं भवति । ननु द्रव्यानारम्भकद्रव्यत्वं कथमाकाशस्योच्यतेऽन्त्यावयविन एव तथात्वप्रसिद्धेरित्यत आह **द्रव्यानारम्भकं चेति** । तथा चाकाशस्यापि स्पर्शरहितत्वात् द्रव्यानारंभकत्वमुपपन्नमिति भावः ॥ **निष्फलारम्भमिति** । यथाऽऽदिकार्यारम्भकत्वं न तृतीयस्य परमाणोर्द्वाभ्यामेव परमाणुभ्यामादिकार्यारम्भसंभवात् । तत्परिमाणस्य च ह्रस्वत्वरूपस्य परमाणुद्वित्वसङ्ख्ययैवोत्पत्तेस्तत्र तृतीयस्य परमाणोरारम्भकत्वकल्पनं निष्फलमिति ज्ञातव्यम् ॥ **विजातीयमिति** । पार्थिवाप्यपरमाणुद्वयं नैककार्यारम्भकं जातिसाङ्कर्यापत्तेरिति भावः ॥ **को विरोध इति** । तथा चाविद्विरिति भावः । **द्रव्यारम्भानारम्भेति** । द्रव्यारम्भकसंयोगविरोधित्वतदनारम्भकसंयोगविरोधित्वरूपविरुद्धोपाधिद्वयप्रयुक्तत्वादित्यर्थः ॥ **द्रव्यारम्भकेति** । तन्त्वन्तरासंयुक्ततन्तुकर्मणि तन्त्वाकाशविभागजनके व्यभिचारवारणाय द्रव्यारम्भकसंयोगविरोधीति विभागविशेषणम् ॥ **द्रव्यान्तरेति** । घटारम्भकेत्यर्थः ।

**श्री०**— **नन्विति** । तन्त्वन्तरसंयोगाकाशसंयोगयोरुभयोरपि निष्क्रिये तन्तौ सहावस्थानदर्शनादिति भावः ॥ **को विरोध इति** । सक्रियतन्त्वन्तरनिष्ठविभागाकाशविभागयोरुभयोरपि निष्क्रिये तन्त्वन्तरेऽपि द्विष्ठत्वेन सहदर्शनेन स्वरूपतोऽविरोध इत्यर्थः । नन्वेवमुक्तविभागयोरविरोधे तत्र विरोधप्रतीतिः कथमित्यतो विरुद्धोपाधिद्वयनिबन्धनैवेत्याह **द्रव्यारम्भेति** । तथा च तन्तुकर्मणैव सक्रियस्य तन्तोस्तन्त्वन्तराकाशविभागौ युगपदेव भवतः नोक्तक्रमेण, येन कारणमात्रविभागजोऽपि विभागः स्वीकार्यः स्यादित्याशयः । तन्तुकर्मणो नोभयविभागजनकत्वं किन्त्वेकविभागजनकत्वमेवेत्याशङ्कते

**तन्तुद्वयेत्यादिना** ॥ **तन्त्वाकाशविभागेति** । तन्तुविभागाकाशविभागेत्यर्थः । अत्र पक्षे विशेषणबलात्तन्तुद्वयविभागजनकत्वे सत्यप्याकाशविभागजनकत्वाभाव एव एकत्वे द्वयमिह नास्तीति प्रत्या साध्यत इति ज्ञेयम । **द्रव्यान्तरं** घटादि । तदारम्भको यः संयोगः कपालद्वयसंयोगस्तद्विरोधिविभागजनकं तत्कपालगतं कर्म तद्वदित्यर्थः । **इति** अनुमानम् । आभाससमानयोगक्षेमत्वमेव दर्शयति **तन्त्विति** । **सम्प्रतिपन्नकर्म** घटादिकर्म । **तत्र** प्रयोग । **अन्यत्र** त्वदनुमाने । तदेवोपपादयति **विभागद्वयेति** । तन्तुद्वयविभागाकाशविभागेत्यर्थः । कर्मत्वादित्यत्र ङ्गुलिकर्मवदिति शेषः । **विभागेन** तन्तुद्वयरूपकारणमात्रविभागेन । **कर्मणः** तन्तुनिष्ठस्येति शेषः । **सिद्धसाधनं** सत्प्रतिपक्षानुमानमिति शेषः ॥

च० — **आरब्धद्रव्यमिति** बहुव्रीहिः । **विजातीयमिति** । जातिसाङ्कर्यापत्त्या पार्थिवजलीयपरमाणुद्वयं नैककार्यारंभकमिति भावः । **तन्तुद्वयेत्यादि** । तन्त्वाकाशविभागजनकतन्तुकर्मण्यनैकान्त्यमपहस्तयितुं हेतुतावच्छेदकघटकविभागो विरोधीत्यन्तेन विशेषितः । अदृष्टादौ तद्व्युदासाय कर्मपदोपादानम् । **इत्याभासेति** । इत्यन्यदीयानुमानमनुपदं दर्शयिष्यमाणाभाससमानयोगक्षेममित्यर्थः । **संप्रतिपन्नेति** । पटादिनिष्ठकर्मवदित्यर्थः । **प्रमाणबाधः** तन्तुकर्मधर्मिकतन्त्वतरप्रतियोगिकविभागजनकत्वे अनुमित्यौपयिकप्रत्यक्षादिबाधः । **विभागद्वययौगपद्यानुभवात्** तन्त्वन्तरानुयोगिकविभागाकाशानुयोगिकविभागद्वयानुभवात् । **कर्मत्वादिति** । कर्मत्वावच्छेदेन स्वाश्रयवस्तुप्रतियोगिकाकाशप्रदेशानुयोगिकविभागजनकताया अवधृततया निदर्शनाप्रदर्शनम् ।

सु० - **एतेन विमतं कर्म द्रव्यारम्भकसंयोगविरोधितदविरोधिविभागजनकं न भवति कर्मत्वादिति निरस्तम् । विमतं कर्म द्रव्यारम्भकानारम्भकसंयोगारम्भकं न भवति कर्मत्वात् । श्येनकर्मवदित्याभासतुल्यत्वात्सत्प्रतिपक्षत्वाच्च । यदाकाशविभागजनकं कर्म न तद्द्रव्यारम्भकसंयोगविरोधिविभागजनकं यथांगुलिकर्मेति व्याप्तेस्तन्तुकर्मणो गगनविभागजनकत्वे तन्त्वन्तरविभागजनकत्वं न स्यादिति चेन्न । यद्यत्प्रदेशविभागजनकं न भवति न तत्तत्प्रदेशस्थद्रव्यविभागजनकमिति व्याप्त्याकाशदेशविभागाजनकत्वे तन्त्वन्तरादपि विभागजनकं न स्यादिति प्रतिप्रसङ्गसंभवात् ।**

**किञ्च तन्तोराकाशविभागो यदि विभागजो न तु कर्मजस्तदा सकर्मकस्येवाकर्मकस्यापि कुतो न स्यात् । विभागस्योभयत्रापि साम्यात् । उत्तरविभागे कर्म निमित्तकारणमित्यतो नेति चेन्न । आद्यविभागजननेनैवोपक्षीणस्य कारणत्वानवधारणात् । अवधारणे वाऽसमवायित्वस्य अनिवारणात् । अन्यथा तल्लक्षणस्यातिव्याप्तेरित्यलं विस्तरेण ॥**

शे० — **विमतं कर्मेति** । द्वितन्तुकावयवे तन्तावुत्पन्नं कर्मेत्यर्थः । अत्राप्यङ्गुलीकर्मवदिति शेषो द्रष्टव्यः ॥ **आभासतुल्यत्वादिति** । ततश्च तन्तुकर्मणस्तन्त्वाकाशसंयोगाजनकत्वात् तन्तुकर्मजन्यतन्त्वन्तरसंयोगजन्यतया कारणमात्रसंयोगजन्यकारणाकारणसंयोगोऽपि स्यादिति भावः ॥ **सत्प्रतिपक्षत्वाच्चेति** । द्रव्यारम्भकसंयोगविरोधिविभागजनकं तन्तुकर्म तदविरोधिविभागजनकं कर्मत्वादङ्गुलीकर्मवदिति सत्प्रतिपक्षत्वाच्चेत्यर्थः । अत्र च पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्ध्या पूर्वानुमानसाध्यविपरीतविषयकत्वलाभात्सत्प्रतिपक्षत्वमित्यवधेयम् । तर्कपराहतत्वापराहतत्वाभ्यामनुमानद्वयस्य वैषम्यान्न प्रतिपक्षत्वमित्याशयेन विभागद्वयजनकत्वसाधकानुमानस्य तर्कपराहतिमाशङ्कते **यदितिप्रतिप्रसङ्गेति** । ततश्च विभागद्वयजनकत्वाभावसाधकानुमानस्यापि तर्कपराहतत्वाद्युक्तमस्य सत्प्रति पक्षत्वमिति भावः ।

तन्त्वाकाशविभागस्य द्वितन्तुकावयवतन्तुकर्मजन्यत्वेऽतिप्रसङ्गपरिहारं वदन्नेव तन्तुद्वयविभागजन्यत्वे तस्यातिप्रसङ्गमप्याह **किञ्चेति** ॥ **तन्तोरिति** । द्वितन्तुकावयवतन्तोरित्यर्थः ॥ **विभागज इति** । तन्तुकर्मोत्पन्नतन्तुद्वयविभागज इत्यर्थः । **न त्विति** । न तु तन्तुकर्मज इत्यर्थः ॥ **सकर्मकस्येवेति** । यस्मिंस्तन्तौ कर्मोत्पन्नं तस्येवेत्यर्थः ॥ **अकर्मकस्यापीति** । यस्मिंस्तन्तौ कर्मद्वयविभागजनकं कर्म नोत्पन्नं तस्यापीत्यर्थः । **विभागस्येति** । तथाच कर्मजन्यत्वे तस्य जनकीभूतकर्मण एकमात्रवृत्तितयोभयावृत्तित्वादेकमात्रवृत्तित्वसंभवेऽपि विभागजत्वे तस्योभयवृत्तितया तज्जन्याकाशविभागस्याप्युभयवृत्तित्वावश्यम्भावादिति भावः ॥ **उत्तरविभाग इति** । सक्रियस्य तन्तोर्द्वितन्तुकसंयुक्ताकाशदेशविभाग इत्यर्थः । तथा च निमित्तकारणीभूतकर्मसद्भावात्सकर्मके तन्तौ विभागेन विभागोत्पत्तावपि अकर्मके तन्तौ निमित्तकारणकर्माभावेन विभागेन नाकाशविभागजननप्रसङ्ग इति भावः ॥ **आद्यविभागजननेनैवेति** । तन्तुद्वयविभागजननेनैवेत्यर्थः ॥ **अनवधारणादिति** । अन्यथासिद्धत्वादिति भावः । नन्वेवं सत्युत्तरदेशसंयोगोत्पत्तावपि तस्य हेतुत्वं न स्यात् । विभागजनकतयाऽन्यथासिद्धेस्तत्रापि वक्तुं शक्यत्वात् । यदि च न तस्य विभागजननेनोपक्षयस्तर्हि नोत्तरविभागेऽपि तस्योपक्षय इति कथं न कारणत्वं तत्रेत्यत आह **अवधारणे वेति** । एतच्च विभागद्वयस्य पौर्वापर्यमभ्युपेत्योक्तम् । वस्तुतस्तु विभागद्वययौगपद्यानुभवात्तत्पौर्वापर्यमेवासिद्धिमिति नाद्यविभागजनकतया तस्योपक्षीणत्वमिति द्रष्टव्यम् ॥ **असमवायित्वस्येति** । तल्लक्षणाक्रान्तत्वादिति भावः । तल्लक्षणाक्रान्तस्याप्यसमवायित्वाभावे दूषणमाह **अन्यथेति** । ननु कर्मविशेषव्यावृत्तस्यैव तल्लक्षणस्य करणान्न तस्य तत्रातिव्याप्तिरित्यत आह **अलमिति** । तथा सत्यन्योन्याश्रयः स्यादिति भावः ॥

स० — **सकर्मकस्येवेति** । यस्मिन् तन्तौ कर्मोत्पन्नं तस्येवेत्यर्थः । **अकर्मकस्येति** । यस्मिन् तन्तौ कर्म नोत्पन्नं तस्येत्यर्थः ।

प० — एतेनेत्युक्तं व्यनक्ति **विमतं कर्म द्रव्यारंभकानारंभकेत्यादिना** । परेण हि तन्तुकर्मणस्तन्त्वन्तरसंयोगमाकाशसंयोगं च प्रत्यसमवायिकारणत्वमंगीकृतम् । तादृशविभागद्वयं प्रति तु तथात्वं नोपेतम् । तथा च विभागद्वयाजनकत्ववत् संयोगद्वयाजनकत्वस्यापि सुसा(धन)ध्यत्वादाभाससाम्यमित्यर्थः ॥ **सत्प्रतिपक्षत्वाच्चेति** । विमतं कर्म प्रागुक्तविभागद्वयजनकं द्वितन्तुकपटावयवकर्मत्वात् तादृशसंयोगद्वयजनककर्मवदित्यपि प्रयोगसंभवादिति भावः । प्रतिपक्षानुदयमाशङ्कते **यदाकाशेति** ॥ **इति व्याप्तेरिति** । यथांगुलिकर्मेति दृष्टान्तसंभवादिति भावः ॥ **सकर्मकस्येवाकर्मकस्यापीति** । सक्रियस्येवाक्रियस्यापीत्यर्थः । तन्तोरिति विशेष्यानुकर्षः ॥ **विभागस्येति** । तन्त्वाकाशविभागस्य तन्तुकर्मणि सत्यसति चोभयत्र साम्यादित्यर्थः । यद्वा तन्तुद्वयविभागजनकस्य तन्त्वाकाशविभागजनने कर्मसत्वासत्वयोः साम्यादित्यर्थः ॥ **उत्तरविभाग इति** । तन्त्वाकाशविभाग इत्यर्थः । यद्वा सकर्मकस्य श्येनस्येवाकर्मकस्यापि स्थाणोरित्यर्थः । **उभयत्र** श्येने स्थाणौ चेत्यर्थः ॥ **नेति चेदिति** । अकर्मकस्यापि कुतो न स्यादिति दोषो न चेदित्यर्थः । असमवायित्वस्येति पदच्छेदः । समवायिकारणप्रत्यासन्नत्वादिलक्षणसंभवादिति भावः ॥ **संयोगविभागयोरवान्तरभेदनिरासः** ।

या० — **सत्प्रतिपक्षत्वाच्चेति** । द्रव्यारम्भकसंयोगविरोधिविभागजनकं तन्तुकर्म तदविरोधिविभागजनकं कर्मत्वादङ्गुलिकर्मवदिति सत्प्रतिपक्षत्वाच्चेत्यर्थः । अत्र पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेः पूर्वानुमानसाध्यविपरीतविषयकत्वात् तत्सत्प्रतिपक्षतेति ज्ञातव्यम् । एवं च तन्तुकर्मणि द्रव्यारम्भकसंयोगविरोधितदविरोधिविभागद्वयजनकत्वं पूर्वसाध्यविपरीतं न साधयितुं शक्यं, परं प्रति दृष्टान्ताभावादतः कथं सत्प्रतिपक्षतेति शङ्कानवकाशः । सकर्मकस्येवेत्यत्र तन्तोरिति वर्तते ॥ एवमग्रेऽपि अकर्मकस्येत्यत्रापि तन्तोरिति ज्ञातव्यम् । **उत्तरविभाग इति** । सक्रियस्य तन्तोर्द्वितन्तुकसंयुक्ताकाशदेशविभाग इत्यर्थः । तथा च क्रिये तन्तौ नाकाशविभागो विभागेन जायते । निमित्तकारणरूपकर्माभावादिति भावः ।

श्री० — **विमतं कर्मेति** । तन्तुकर्मेत्यर्थः । एकसत्त्वे द्वयमिह नास्तीति द्वित्वावच्छिन्नाभावाङ्गीकारेण तन्तुकर्मणो द्रव्यारम्भकसंयोगभूततन्तुद्वयसंयोगविरोधिभूततद्विभागजनकत्वेऽप्याकाशसंयोगस्य द्रव्यानारम्भकत्वेन द्रव्यारम्भकसंयोगाविरोध्याकाशविभागजनकत्वं नास्तीति तदुभयविभागजनकं न भवतीति साध्यं युक्तमिति ज्ञेयम् । अत्राङ्गुलिकर्मदृष्टान्तस्तत्रांगुलिद्वयसंयोगस्य द्रव्यानारम्भकत्वेन द्रव्यारंभकसंयोगविरोधिविभागजनकत्वाभावात् तदनारम्भकाकाशसंयोगाविरोधितद्विभागजनकत्वाभावाच्चोभयजनकत्वाभावोऽस्तीति तत्र साध्यं ज्ञेयम् । **विमतं कर्म** तन्तुकर्म श्येनकर्मवदिति दृष्टान्तो ज्ञातव्यः । अत्रापि तन्तुकर्मणो द्रव्यारम्भकतन्तुद्वयसंयोगारम्भकत्वेऽपि द्रव्यानारंभकाकाशसंयोगजनकत्वाभावेनोभयारम्भकत्वाभावोपपादनं ज्ञेयम् । श्येनकर्मणि दृष्टान्तेऽपि द्रव्यानारम्भकश्येनस्थाणुसंयोगारंभकत्वे सत्यपि

द्रव्यारंभकसंयोगारम्भकत्वं नास्तीत्युभयारंभकत्वाभावो ज्ञेयः । आभासतुल्यत्वादित्यनेन एतेनेत्युक्तं विवृतं भवति । तर्कपराहतिमाशङ्कते **यदिति** । तर्केऽप्रयोजकतापरिहाराय यदा काशेत्यादिना व्याप्तिरुच्यत इति व्याख्येयम् ॥ **अंगुलिकर्मवदिति** । तत्र अंगुल्यन्तरावच्छिन्नाकाशविभागजनकत्वमस्ति । तथाऽङ्गुलिद्वयसंयोगस्य द्रव्यानारम्भकत्वेन तदारम्भकसंयोगविरोधिविभागजनकत्वाभावेन साध्यमस्तीति ज्ञेयम् ॥ **तन्त्वन्तरविभागेति** । द्रव्यारम्भकसंयोगविरोधिभूतेत्यर्थः । अनेनैव न्यायेनोत्तरवाक्यमपि व्याख्येयम् । **अजनकत्वे** तन्तुकर्मण इति वर्तते । **तन्त्वन्तरात्** तत्प्रदेशस्य द्रव्यभूतात् ॥ **तन्तोरिति** । द्वितन्तुकावयवभूतस्य तन्तोरित्यर्थः ॥ **आकाशविभाग इति** । द्वितन्तुकसंयुक्ताकाशदेशविभाग इत्यर्थः । **विभागजः** सक्रियतन्तुनिष्ठविभागजः । **न कर्मजः** तन्तुकर्मजो न भवतीत्यर्थः ॥ **सकर्मकस्येति** सकर्मकस्य तन्तोराकाशविभागो यथा सक्रियतन्तुनिष्ठविभागाद्भवति, तथाऽकर्मकस्य यस्तन्तुराकाशसंयुक्तः संस्तथैवास्ते तस्याक्रियस्यापि तन्तोराकाशाद्विभागः कस्मान्न भवतीत्यर्थः । नन्वसमवायिकारणभूतविभागस्य सक्रिये तन्तावेव सत्त्वेन तत्रैवाकाशदेशविभागो जायते, न निष्क्रिये तन्तौ, तत्रासमवायिकारणविभागस्याभावादिति चेत्तत्राह **विभागस्येति** । **उभयत्रापि** सक्रिये निष्क्रिये च तन्तावित्यर्थः । एतद्दोषपरिहारं शङ्कते **उत्तरविभागेति** । सक्रियस्य तन्तोर्द्वितन्तुकसंयुक्ताकाशदेशविभागे तन्तुकर्मणो निमित्तकारणत्वादित्यर्थः । तथा चाक्रिये तन्तौ द्वितन्तुकसंयुक्ताकाशविभागो न सक्रियतन्तुनिष्ठविभागेन जायते । निष्क्रिये तन्तौ निमित्तकारणीभूतकर्माभावादिति भावः । कर्मणो निमित्तकारणत्वं न संभवति । अनन्यथासिद्धनियतपूर्ववृत्तित्वेन कारणत्वावधारणं वाच्यम् । तदिह न संभवति । तन्तुकर्मण आद्यो यो विभागस्तन्त्वन्तरविभागः तज्जनकत्वेनान्यथासिद्धत्वेनाका विभागे कारणत्वानवधारणादित्याह **आद्यविभागेति** ॥ **अनवधारणादिति** । तथा च निमित्तकारणत्वं दूरोत्सारितमिति भावः । **अनिवारणादिति** । तन्तुकर्मण आकाशविभागेऽसमवायिकारणत्वस्यैव संभवेन निमित्तं कारणमित्येतदयुक्तमित्यर्थः ॥ **अन्यथेति** । असमवायिकारणलक्षणस्य सत्त्वेऽप्यसमवायित्वाभाव इत्यर्थः । **अतिव्याप्तेरिति** । उत्तरविभागसमवायिकारणे सक्रिये तन्तौ, कर्मणः प्रत्यासन्नत्वात्कारणत्वाच्च तन्तुकर्मण्यतिव्याप्तिरित्यर्थः ।

**च० — एतेन** समनन्तरमभिधास्यमानाभासतुल्यत्वेन । कृतैकशेषविभागपदं विरोध्यविरोधिपदाभ्यां समस्यते । **सत्प्रतिपक्षत्वात्** विमते कर्मणि द्वितन्तुकावयवगत कर्मत्वेन हेतुना दर्शितविभागद्वयजनकत्वस्य तादृशसंयोगद्वयजनककर्मनिदर्शनेन सुसाधतया सत्प्रतिरोधत्वात् । बाधकप्रसङ्गेन प्रतिरोधोदयमाशङ्कते **यदाकाशेति** ॥ **सकर्मकस्य** सक्रियस्य । **अकर्मकस्य** निष्क्रियस्य । **उभयत्रापीति** । विभागस्य कर्मजन्यत्वोररीकारे तज्जनककर्मण एकव्यक्तिमात्रगतत्वेन दर्शितसकर्मका-

कर्मकोभयावृत्तित्वसंभवेपि विभागजत्वे तस्योभयवृत्तितया तज्जनिताकाशविभागस्याप्युभयवृत्तित्वावश्यंभावादिति भावः । उभयत्र श्येने स्थाणौ चेत्यपि स्थितम् । **संयोगविभागयोः परोदीरितवैलक्षण्यनिरासः ॥**

**सु० — एवं छलत्वेनानवस्थाप्रसङ्गं निराकृत्य प्रकारान्तरेण निराकरोति** अंश इति ।

**अनु०** — अंशे संयोगदृष्टेश्च

**अंशिसंयोगस्यांशवृत्तित्वदृष्टेश्च नानवस्थादोष इत्यर्थः । दृष्टत्वे कथमदोषत्वमित्यत** आह दृष्ट इति ।

दृष्टे का साऽनवस्थितिः ॥

आपादकेऽर्थे **दृष्टे सति** सा **अनवस्थितिः** का **न दूषणमिति यावत् । एतदुक्तं भवति । यद्यंशतः संयोगः स्यात्तदाऽनवस्था स्यात्ततश्च संयोगाभाव एवापद्येत । न चासौ युक्तः । तस्मान्नांशतः** संयोग **इति हि विपर्यये पर्यवसानं कर्तव्यम् । अनवस्थायास्तर्कत्वात् । विपर्ययापर्यवसायिनश्च तर्काभासत्वनियमात् ।**

**अत्रांशतः संयोगो न भवतीति कोऽर्थो यद्यंशिसंयोगस्यांशसंयोगपूर्वकतानियमो नास्तीति । तद्योमिति वदामः । यद्यंशिसंयोगोंऽशवृत्तिर्न भवतीति । तन्न । घटाद्यंशिसंयोगस्य तदंशवृत्तितायाः प्रत्यक्षदृष्टत्वेन विपर्ययपर्यवसानस्य बाधितत्वात् । घटसंयोगो घट एव वर्तते । किन्त्वव्याप्यवृत्तित्वात्तदंशवृत्तिरिवावभासत इति चेत् । केयमव्याप्यवृत्तिता नाम अन्या अंशवृत्तित्वात् । स्वाभावसमानाधिकरणत्वमिति चेन्न । विरुद्धत्वात् । दृष्टत्वादविरोध इति चेन्न । किमंशभेदेन भावाभावौ दृश्येते उत घट एवेति सन्देहात् । न ह्यविरुद्धविषयत्वे सति विरुद्धविषयताऽङ्गीकर्तुमुचिता । उपाधिभेदादविरोध इति चेत् । के त उपाधयः । अंशा एवेति चेत् । त एव सन्तु तर्हि संयोगावाभावाश्रयाः किमं(शि)शवृत्तित्वेन विरुद्धेन अङ्गीकृतेन । अंशांशिनोरभेदेनातिप्रसङ्गस्यापास्तत्वादिति ॥**

**शे० —** ननु ' संयोगैक्ये भवेत्क्व सा ' इत्यनवस्थायाः पूर्वमेव परिहृतत्वात् किमुत्तरेण ग्रन्थेनेत्यतस्तस्य प्रकारान्तरेण तन्निराकरणार्थत्वान्नानर्थक्यमिति भावेन वृत्तानुवादपूर्वकं तत्परतयोत्तरग्रन्थं योजयति **एवमिति ॥ छलत्वेनेति** । अंशतः संयोगो भवतीत्यस्माद्वाक्यस्यांशिसंयोगस्यांशसंयोगपूर्वकत्वमित्यनभिमतार्थकल्पनयाऽनवस्थाया उक्तत्वादिति भावः । किं तत्प्रकारान्तरमित्यतस्तत्सूचयन्नेव तदुपपादयति **एतदुक्तं भवतीति** ॥

**तद्यौमिति वदाम इति** । अंशांशिनोरभेदेनांशसंयोगस्यैवांशिसंयोगतया तस्यांशसंयोगपूर्वकत्वाभावस्य अस्मत्सम्मतत्वादिति भावः ॥ **तदंशवृत्तिरेवेति** । तथा चांशवृत्तित्वदर्शनस्य भ्रमत्वेनाप्रमाणत्वान्न विपर्यये पर्यवसानस्य प्रमाणबाधितत्वमिति भावः ॥ **अन्या अंशवृत्तित्वादिति** । ततश्चांशवृत्तित्वातिरिक्ताया अव्याप्यवृत्तिताया दुर्निरूपत्वेनाव्याप्यवृत्तित्वेनाप्यंशवृत्तित्वप्राप्त्या तस्य वास्तवतालाभेन तद्दर्शनस्य प्रमाणत्वप्राप्तेर्विपर्यये पर्यवसानस्य प्रमाणबाध एवेति भावः । नन्वव्याप्यवृत्तित्वं नाम नांशवृत्तित्वं, किन्तर्ह्यन्यदेवेति न तद्दर्शनस्य प्रमाणत्वप्राप्तिरित्याशङ्कते **स्वाभावेति** । स्वप्रतियोगिकात्यन्ताभावसामानाधिकरण्यमित्यर्थः । अन्यथा प्राग्ध्वंसाभावसामानाधिकरण्याद्रूपादेरप्यव्याप्यवृत्तित्वप्रसङ्गादिति भावः । न संयोगस्य स्वात्यन्ताभावसामानाधिकरण्यं युक्तम् । भावाभावयोः स्वाभाविकविरोधात् । अन्यथा घटस्यापि स्वात्यन्ताभावसामानाधिकरण्यप्रसङ्गादित्याशयेन परिहरति **नेति** । प्रतियोगितदत्यन्ताभावयोः सामानाधिकरण्यस्येति शेषः । नन्वत्यन्ताभावः प्रतियोगिसमानाधिकरणोऽभावत्वात्प्रागभाववदिति चेन्न । भावाभावयोर्हि विरोधपरिहारो द्वेधा सम्भवति । कालभेदेन देशभेदेन वेति । तत्र प्रागभावप्रध्वंसाभावयोः कालभेदेन विरोधपरिहारात्प्रतियोगिसामानाधिकरण्याङ्गीकारेऽपि न विरोधः । अत्यन्ताभावस्य तु नित्यत्वेन कालभेदेन विरोधपरिहारासम्भवेन देशभेदेनैव तस्य परिहरणीयत्वात्कथं प्रतियोगिसामानाधिकरण्यम् । अथ नित्योऽप्यन्योन्याभावः प्रतियोगिसमानाधिकरणो दृश्यते । घटवत्येव भूतले घटान्योन्याभावानुभवात् । ततः कथं तत्र विरोधपरिहार इति चेत् । इत्थम् । अभावो हि प्रतियोगितावच्छेदकावच्छिन्नेन प्रतियोगिना विरुध्यते, न पुनः प्रतियोगिमात्रेण । तथा सत्यदण्डिनि पुरुषे विद्यमाने दण्डी पुरुषो नेति निषेधाभावप्रसङ्गात् । तत्र प्रतियोगितावच्छेदकावच्छिन्नपुरुषस्यासत्त्वेऽपि प्रतियोगिभूतपुरुषमात्रस्य सत्त्वात् । एवञ्चान्योन्याभावोऽपि यद्यपि प्रतियोगिसमानाधिकरणस्तथाऽपि प्रतियोगितावच्छेदकतादात्म्यावच्छिन्नेन प्रतियोगिना न समानाधिकरणः । न हि भूतले घटो भूतलात्मना वर्तते । तेन नान्योन्याभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसमानाधिकरणः । तथा च प्रयोगः । अत्यन्ताभावः, प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसमानाधिकरणत्वे सति तादृशप्रतियोगिसमानकालीनो न, अभावत्वात्सम्मतवदिति ।

ननु सर्वत्र परस्परपरिहारेणैव सत्त्वदर्शनं सहानवस्थानलक्षणविरोधे प्रमाणम् । क्वचित्सहदर्शनं चाविरोधे । अन्यस्यानिरूपणात् । ततश्चान्यत्र भावाभावयोरेकत्र विरोधेऽपि न संयोगतदत्यन्ताभावयोरेकत्र विरोधः । दर्शनबलेनैव संयोगतदत्यन्ताभावयोः सामानाधिकरण्यसिद्धेरिति भावेन शङ्कते **दृष्टत्वादिति** । न च दर्शनमात्रं वस्तुतत्त्वव्यवस्थापकमतिप्रसङ्गात् । किन्तर्हि प्रमारूपमेव । तत्प्रामाण्यं च विरोधपरिहारे । विरुद्धार्थप्रतिपादकयोरन्यतराप्रामाण्यावश्यम्भावात् । विरोधपरिहारश्च

प्रमाणबलादेवेत्यन्योन्याश्रयात् । तस्माद्युक्त्या विरोधं परिहृत्य पश्चात्प्रतीतेः प्रामाण्यं निश्चेतव्यम् । तच्चात्र नास्तीति नैतद्युक्तमिति परिहारे सत्येव सन्दिग्धासिद्ध्याऽपि हेतुं दूषयति **किमंशभेदेनेति ।** किमंशद्वयाश्रितत्वेनेत्यर्थः । निश्चितासिद्ध्याऽपि तं दूषयति **न ह्यविरुद्धेति ।** ननु भावाभावावेकत्र न विरुद्धौ किन्त्वेकावच्छेदेनैव । ततश्च यदवच्छेदेन घटे संयोगस्तदवच्छेदेन तत्र संयोगाभावस्य यदवच्छेदेन संयोगाभावस्तदवच्छेदेन च तत्र संयोगस्य विरुद्धत्वप्राप्तावप्यवच्छेदकभेदेनैकत्रैव घटे संयोगतदत्यन्ताभावावप्यविरुद्धावेवेति युक्तं तयोः सामानाधिकरण्यमिति शङ्कते **उपाधीति ।** **उपाधिभेदादिति** वदतः किमंशातिरिक्तोपाधिभेदोऽभिमतः किंवांऽशभेद इति विकल्पद्वयं मनसि निधायांशातिरिक्तोपाधीनामनिरूपणान्न तद्भेदो युक्त इत्याशयेनाद्यं प्रत्याह **के त इति ।** अस्तु तर्ह्यंशभेद एवेति द्वितीयो निरवद्यत्वादिति शङ्कते **अंशा एवेति ॥ त एवेति ।** संयोगतदत्यन्ताभावयोरेकाश्रितत्ववादिनाऽपि तदवच्छेदकतयांऽशानामवश्याश्रयणीयत्वादंशद्वयाश्रितत्वेन संयोगभावाभावदर्शनानुकूलत्वाच्चेति भावः ॥ **किमिति ।** अविरुद्धविषयत्वे सति विरुद्धविषयताया अङ्गीकर्तुमनुचितत्वादिति भावः । घटांशवृत्तित्वे घटसंयोगस्य पटवृत्तित्वमपि स्यादविशेषादित्यतो भवेदयमतिप्रसङ्गो यदि पटवद्घटांशोऽपि घटादत्यन्तभिन्नः स्यात् । न चैवम् । ततश्च घटाभिन्नत्वाद्घटांशस्य तद्वृत्तित्वेऽपि तद्भिन्नत्वात्पटस्य न तद्वृत्तित्वं घटसंयोगस्येति वैषम्येणाविशेषासिद्धेर्नातिप्रसङ्ग इत्याह **अंशांशिनोरभेदेनेति ॥ अपास्तत्वादिति ।** एतावत्तु भवेदित्यादिनेति शेषः । इतीत्यस्यैतदुक्तं भवतीति पूर्वेणान्वयः ।

प० — **एवं छलत्वेनेति ।** 'सर्वदिक्ष्वपि संबन्धादि'त्युक्तस्यैकस्मिन् जात एवेत्यादिनाऽनूदितमभिप्रायान्तरं ग्रन्थकृदनभिमतमेव प्रकल्प्योक्तो योऽनवस्थाप्रसङ्गस्तं छलोत्तरमेतदि'त्यंशांशिनोरभेदेन त्वि'त्यादिग्रन्थेन निराकृत्येत्यर्थः ॥ **इति सन्देहादिति ।** तथा च दृष्टत्वादिति हेतुः सन्दिग्धासिद्ध इति भावः । भवतामपि तर्ह्यंशवृत्तित्वानिर्णय एवेत्यत आह **न ह्यविरुद्धेति ।** भिन्नांशवृत्तित्वेनेति योज्यम् । ननूक्तमत्र घटांशसंयोगः यदि घटवृत्तिस्तर्हि पटवृत्तिरपि स्यादित्यत आह **अंशांशिनोरभेदेनेति । संयोगस्य पराभिप्रेताव्याप्यवृत्तित्वनिरासः ॥**

या० — **छलत्वेनेति ।** अंशतस्संयोगो भवतीत्यसद्वाक्यस्यांशसंयोगपूर्वकतांऽशिसंयोगस्येत्यनभिप्रेतार्थकल्पनयाऽनवस्थाया उक्तत्वादिति भावः ॥ **दृष्टत्वादिति ।** भावाभावयोरेकस्मिन्घटे सामानाधिकरण्यस्य दृष्टत्वादित्यर्थः ॥ **अंशभेदेनेति ।** अंशद्वयाश्रितत्वेनेत्यर्थः ॥ **सन्देहादिति ।** तथा च दृष्टत्वादिति हेतुः सन्दिग्धासिद्ध इति भावः । निश्चितासिद्धिमप्याह **न ह्यविरुद्धेति ॥ अतिप्रसङ्गस्येति ।** घटसंयोगो यदि घटांशवृत्तिस्तर्हि पटवृत्तिरपि किन्न स्यादुभयोर्घटभिन्नत्वाविशेषादित्यतिप्रसङ्गस्येत्यर्थः ॥

**श्री०— छलत्वेनेति** । यो यस्यांशिनः संयोगः स तदंशे वर्तते । निरंशस्य तन्तुसंयोगः क्व वर्ततामतः परमाणोः संयोगे सति तद्वृत्त्यर्थमंशोऽङ्गीकरणीय इत्यभिप्रायेणोक्तस्यांशतः संयोगो भवतीत्यस्मद्वाक्यस्यांशिनः संयोगो अंशसंयोगेन जायत इत्यस्मदनभिप्रेतार्थान्तरं कल्पयित्वाऽनवस्थारूपदूषणस्य छलत्वादिति भावः । 'कञ्चिदर्थमभिप्रेत्य प्रयुक्ते वचने पुन । अनिष्टमर्थमारोप्य तन्निषेधः छलं मतमि'ति वचनादिति द्रष्टव्यम् ॥ **ततश्च संयोगाभाव एवेति** । तथा च तत्रैव कालपर्यवसानापत्त्या प्रकृतघटसंयोगरूपकार्यस्योत्पत्तुमवकाशाभावेन मूलक्षयादिति भावः ॥ **अत्रेति** विपर्ययपर्यवसान इत्यर्थः ॥ **घट एवेति** । अंशिन्येवेत्यर्थः ॥ एकत्रैव न स्वाभावसामानाधिकरण्यं विरुद्धत्वात् किन्त्वंशभेदेनैवेति वाच्यम् । कुत इति चेत् अविरुद्धविषयत्वसम्भवादित्याह **न हीति** । **उपाधिभेदादिति** । अंशिन्येवेत्यर्थः ॥ ननु यद्यंशानामेव संयोगाभावाधिकरणत्वं तर्ह्यंशवृत्तिः संयोगो न घटसंयोगः स्यात् । अन्यथा पटवर्तिनोऽपि संयोगस्य घटीयत्वापत्तेरित्यत आह **अंशांशिनोरिति** । अपास्तत्वात् 'अंशांशिनोरभेदेने'त्यादिनेत्यर्थः ॥

**च०— छलत्वेनेति** । अंशतः संयोगो भवतीत्यस्मदीयवाक्यस्यांशिसंयोगपूर्वकत्वरूपानभिप्रेतार्थकल्पनयाऽनवस्थाया उक्तत्वादिति भावः ॥ **दृष्टत्वादिति** । कपिसंयोगतदभावयोरेकत्र सामानाधिकरण्यस्य दृष्टत्वादित्यर्थः । निश्चितासिद्धिमप्याह **न हीति** ।

---

सु० — प्रतितर्कपराहतत्वाच्चाप्रसङ्गोऽयमित्याह यदीति ।

अनु० — यद्यंशगो न संयोगः कार्येषु प्रथिमा कथम् ॥

**यदि कारणानां संयोगस्तदंशवृत्तिर्न स्यात्तदा तदारब्धेषु कार्येषु कारणापेक्षया परिमाणोत्कर्षो न स्यादित्यर्थः ।**

**अयमभिसन्धिः । कारणपरिमाणापेक्षया कार्ये परिमाणोत्कर्षस्तावत्सर्वत्र प्रचयजन्यः । द्वितूलके तथा दर्शनात् । प्रचयहीनतूलद्वयजन्यरज्जुद्रव्ये तदभावोपलम्भाच्च । प्रचयश्च कारणयोः प्रशिथिलः संयोगः । प्रशिथिलता च संयोगस्य केषुचिदंशेषु वृत्तिः केषुचिदवृत्तिरेव । नान्या । अनिरूपणात् । ततः संयोगस्यांशवृत्तित्वाभावे प्रचयोऽसौ न भवतीति कारणाभावादुत्कृष्टपरिमाणोत्पादो न स्यादिति ।**

**शे०**— ननु 'यद्यंशग' इत्युत्तरभाष्यमनर्थकम् । न च कारणसंयोगस्य तदंशवृत्तित्वाभावे तदारब्धकार्ये परिमाणोत्कर्षानुपपत्तिप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्य प्रकृतोपयोगादर्शनादित्यतोऽनवस्थाप्रसङ्गस्य प्रतितर्कपराहतिप्रतिपादनेनाप्रसङ्गत्वप्रतिपादनार्थत्वान्न तदिति भावेन तत्प-

रतयोत्तरग्रन्थं योजयति **प्रतितर्केति** । न केवलं विपर्ययापर्यवसायित्वादप्रसङ्ग इति चार्थः । नन्वत्र संयोगस्यांशवृत्तित्वाभावे कार्येषु प्रथिमा न स्यादित्येवोच्यते, न तु कारणसंयोगस्य तदंशवृत्तित्वाभावे तदारब्धकार्ये परिमाणोत्कर्षानुपपत्तिरिति । ततश्च कथमस्य प्रतितर्कपराहतिपरत्वमित्यतोऽपेक्षितपूरणेन प्रतितर्कपराहतिपरतया मूलं व्याचष्टे **यदित्यादिना** । ननु कारणसंयोगस्यांशवृत्तित्वाभावेऽपि तदारब्धे कार्ये कारणपरिमाणापेक्षया परिमाणोत्कर्षो नानुपपन्नः । तस्यांशवृत्तिकारणसंयोगजन्यत्वासिद्ध्या अकारणाभावेन कार्याभावापादनतयाऽप्रयोजकत्वेनानुत्थानादित्यत आह **अयमभिसन्धिरिति** । कुतस्तस्य प्रचयजन्यत्वमित्यतोऽन्वयव्यतिरेकाभ्यामिति भावेनान्वयं तावद्दर्शयति **द्वितूलक इति** । व्यतिरेकमप्याह **प्रचयहीनेति** । अस्त्वेवं कारणपरिमाणापेक्षया कार्ये परिमाणोत्कर्षस्य प्रचयजन्यत्वं, तवताऽपि कथं तस्य तत्संयोगजन्यत्वमित्यत आह **प्रचयश्चेति** । नन्वस्तु कार्ये परिमाणोत्कर्षाय कारणयोः प्रशिथिलसंयोगरूपप्रचयापेक्षा, तथाऽपि कथं कारणसंयोगस्यांशवृत्तितायास्तत्रोपयोगो येन तदभावात्तदभावापादनमित्यत आह **प्रशिथिलता चेति** । कुतो नान्येत्यतः सा किं स्वाभावसमानाधिकरणताऽभिमता तदन्या वा काचित् । नाद्यः । विरुद्धत्वादित्यादिना निरस्तत्वादित्यभिप्रेत्य द्वितीयं दूषयति **अनिरूपणादिति** । इतीत्यस्येत्ययमिति पूर्वेण संबन्धः ।

प० — **अप्रसंगोऽयमिति** । अयं परोक्तानवस्थाप्रसंगस्तर्कप्रतिहतिरूपांगहीनत्वात् **अप्रसंगः** तर्काभास इत्याहेत्यर्थः ॥ **द्वितूलक इति** । प्रशिथिलावयवसंयोगोपेततूलपिंडद्वयारब्धसूत्र इत्यर्थः ।

सु० — **अस्त्वन्यत्र संयोगो यथातथा । प्रस्तुते परमाणौ संयोगस्यांशवृत्तित्वाभावे नातिप्रसङ्ग इति चेन्न । अन्वयव्यतिरेकाभ्यां कारणपरिमाणोत्कृष्टस्य कार्यपरिमाणस्य प्रचयाख्यांशवृत्तिसंयोगजत्वावधारणात्कारणाभावे च कार्याभावनियमात्परमाणुसंयोगस्यांशवृत्तित्वाभावे तत्कार्ये द्व्यणुके परमाणुपरिमाणादुत्कृष्टपरिमाणं नोत्पद्येतेत्यस्यैव बाधकस्य सत्त्वात् । नन्विदमिष्टापादनम् । परमाणुतो द्व्यणुके परिमाणोत्कर्षाभावादित्यत आह** परमाणोरिति ।

अनु० — परमाणोरणोर्नास्ति महत्त्वेत्यद्भुतं वचः ॥

**परमाणुपरिमाणादणोर्द्व्यणुकस्य महत्ता परिमाणोत्कर्षो नास्तीति वचोऽद्भुतं स्वव्याहतं प्रमाणविरुद्धं चेत्यर्थः । अयमाढ्योऽयं परमाढ्य इतिवदणुपरमाणुशब्दाभ्यामेव परिमाणतारतम्यावगतेस्तदभाववचनं स्वव्याहतं भवति । द्वितन्तुकपरिमाणवद(संमृदि)समुदितावयवजन्यद्रव्यपरिमाणत्वेन द्व्यणुकपरिमाणस्य परमाणुपरिमाणादुत्कर्षस्यानुमानावगतत्वाच्चेति ।**

शे० — गूढाभिसन्धिराशङ्कते **अस्त्वन्यत्रेति** । गूढाभिसन्धिरेव परिहरति **अन्वयेति** । पूर्ववादी स्वाशयमुद्घाटयति **नन्विति** । सिद्धान्त्यपि स्वाशयोद्घाटनपरतया मूलं व्यापारयति **अत आहेति** । तत्र स्वव्याहतत्वमुपपादयति **अयमाढ्य इति** । प्रमाणविरोधमुपपादयति **द्वितन्तुकेति** । द्व्यणुकपरिमाणं स्वकारणपरिमाणादुत्कृष्टम् असम्मृदितावयवजन्यद्रव्यपरिमाणत्वात् द्वितन्तुकपरिमाणवदित्यत्र प्रयोगो द्रष्टव्यः । संमृदितदुकूलद्वयजन्यरज्जुद्रव्यपरिमाणे व्यभिचारवारणायासम्मृदितावयवेति विशेषणमिति द्रष्टव्यम् । इति शब्दः प्रतिज्ञातदोषद्वयोपपादनसमाप्तौ ।

प० — स्वव्याहतिं प्रमाणविरोधं च क्रमेण दर्शयति **अयमाढ्य इति द्वितन्तुकेति च** ॥

या० — प्रमाणविरोधं दर्शयति **द्वितन्तुकेत्यादिना** । अत्र द्व्यणुकपरिमाणं स्वकारणपरिमाणादुत्कृष्टं असम्मृदितावयवजन्यद्रव्यपरिमाणत्वाद्द्वितन्तुकपरिमाणवदिति प्रयोगो द्रष्टव्यः । अत्र सम्मृदितदुकूलद्वयजन्यरज्जुद्रव्यपरिमाणे व्यभिचारवारणायासम्मृदितावयवजन्येति विशेषणमिति द्रष्टव्यम् ॥

च० — **अयमाढ्य इति** । अयं धनीत्यर्थः । **अन्यदीयानवस्थित्युक्तेस्तर्कपराहतिप्रदर्शनम्** ।

**सु० — ननु यत् कारणपरिमाणजन्यमुत्कृष्टपरिमाणं तदेव प्रचयजन्यम् । त्र्यणुकपरिमाणवद्द्व्यणुकपरिमाणमपि कारणपरिमाणजन्यं न भवति । किन्तु कारणसंख्याजन्यमेव । तत्कथं परमाणोः प्रचयाभावे द्व्यणुके परिमाणोत्कर्षानुत्पादापादनमित्यत आह अणूनामिति ।**

**अनु० —** अणूनां प्रथिमापेक्षां विनैव त्र्यणुकेऽपि सः ॥
परमाणोर्महत्त्वं च विनेत्येतद्वचः कथम् ॥

**द्व्यणुकानां परिमाणोत्कर्षापेक्षां विनैव संख्यामात्रेण त्र्युणुके स परिमाणोत्कर्षो जायते । तथा परमाणोर्महत्त्वं परिमाणोत्कर्षं विना केवलसंख्यया द्व्यणुके परिमाणोत्कर्षो जायत इत्येतद्वचः कथं घटते । महद्दीर्घवद्वेति निरस्तत्वादिति भावः । चापिशब्दावितरेतरसमुच्चये । अत्र परिमाणमात्रग्रहणे कर्तव्ये प्रथिमेति महत्त्वमिति चोक्तिर्विसदृशपरिमाणत्वस्यानपेक्षाहेतोः निराकरणं स्मारयितुमिति ॥**

शे० — नन्वणूनां प्रथिमापेक्षामित्युत्तरकारिकायां द्व्यणुकादिपरिमाणस्य परमाण्वादिपरिमाणजन्यत्वमुपपाद्यते, तदनर्थकमित्याशङ्क्य द्व्यणुकपरिमाणस्य प्रचयजन्यत्वसंभावनेन परमाणोः प्रचयाभावे द्व्यणुके परिमाणोत्कर्षानुत्पादापादनोपपादनार्थत्वान्न तदिति भावेन तदापादनोपपादकतया तद्योजयितुं द्व्यणुकपरिमाणस्य संख्याजन्यत्वेन प्रचयजन्यत्वव्यापकस्य कारणपरिमाणजन्योत्कृष्टपरिमाणत्वस्याभाव-

व्युत्पादनेन तद्व्याप्यस्य प्रचयजन्यत्वस्यापि व्यावृत्तिमुपपादयन्नेव परमाणोः प्रचयाभावे द्व्यणुके परिमाणोत्कर्षानुत्पादापादनानुपपत्तिमाशङ्कते **नन्विति** ॥ **न भवतीति** । सजातीययोरेव तन्तुपटपरिमाणयोः कार्यकारणभावदर्शनाद्विजातीययोर्द्व्यणुकत्र्यणुकपरिमाणयोरिव परमाणुद्व्यणुकपरिमाणयोरपि न कार्यकारणभाव इति भावः । तत्किं द्व्यणुकादिपरिमाणमसमवायिकारणजन्यमेव न भवतीति पृच्छति **किन्त्विति** । तथात्वे भावकार्यस्य कारणत्रितयजन्यत्वसिद्धान्तव्याकोपादिति भावः । परिहरति **कारणेति** । ईश्वरापेक्षाबुद्धिजन्यद्व्यणुकगतत्रित्वसंख्यया त्र्यणुकपरिमाणमिव तदपेक्षाबुद्धिजन्यपरमाणुगतद्वित्वसंख्ययैव द्व्यणुकपरिमाणं जन्यत इति नोक्तदोष इति भावः । चापिशब्दयोरन्यतरेणैव समुच्चयसिद्धेरन्यतरवैयर्थ्यमाशङ्क्याह **चापिशब्दाविति** ॥ **अत्र परिमाणेति** । तावतैव प्रचयजन्यत्वव्यापककारणपरिमाणजन्योत्कृष्टपरिमाणत्वप्राप्त्या तद्व्याप्यप्रचयजन्यत्वनिर्वाहेण परमाणोः प्रचयाभावे द्व्यणुके परिमाणोत्कर्षानुत्पादापादनसमर्थनादिति भावः ।

प० — **विसदृशपरिमाणत्वस्यानपेक्षाहेतोरिति** । द्व्यणुकत्र्यणुकपरिमा[णेस्वोत्पत्तौपर]णोत्पत्तौ स्वकारणपरमाणुद्व्यणुकगतपरिमाणे नापेक्ष्येते । विसदृशत्वात् । विजातीयत्वादित्यस्य पराभिमतहेतो'र्महत्त्वं च परमाणावणावर्पा'त्यादिना कृतं निराकरणं स्मारयितुमित्यर्थः । **परोक्तानवस्थायास्तर्कपराहत्युक्तिः** ॥

श्री० — **अनपेक्षाहेतोरिति** । 'अणूनां प्रथिमापेक्षां विनैवे'त्युक्तानपेक्षाहेतोरित्यर्थः । **निराकरणम्** अणुत्वं च महत्वं चेत्यादिना कृतम् ।

सु० — **अंशांशिनोरत्यन्ताभेदो भेदाभेदौ चेति यदुक्तं तद्विशदयति** अंशिन इति ।

अनु० — अंशिनोंऽशैरभेदोयमंशेन तु भिदाभिदा ॥

**यथा गगनादेर्यावदंशभाविनोंऽशिनः स्वांशैरत्यन्ताभेदस्तथा पटादेरंशिनोऽपि सर्वैरंशैः अत्यन्ताभेदः एकैकांशेन तु भिदाभिदा । अयमित्युत्तरवाक्येन सम्बध्यते ।**

**नन्वेतदयुक्तम् । सर्वतन्तुभावेऽपि कदाचित्पटस्याभावात् । खण्डिते भेदाभेदस्वीकारात् । अत एकेनेव सर्वैरपि तन्तुभिः पटस्य भेदाभेदावेवोचितौ । तथा चोक्तं ब्रह्मतर्के । 'तन्तुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथं गतः । अनन्यश्चेत्तन्तुभावे पटाभावः कुतो भवेदि'ति । उच्यते । व्यतिषङ्गविशिष्टा हि तन्तवोऽवगम्यन्ते । न च तद्भावे कदाऽपि पटाभावः । तस्माद्व्यतिषङ्गविशेषविशिष्टैः सर्वतन्तुभिः पटस्यात्यन्ताभेद एव । अविवक्षितव्यतिषङ्गैः सर्वतन्तुभिस्तु भेदाभेदावेवेति न कश्चिद्विरोधः ।**

**नन्वेवं तर्हि व्यतिषक्ततन्तुव्यतिरेकेण पटाभावे परमाणुपुञ्जवादापत्तिरिति । मैवम् । यथा हि गुणानां द्रव्याभेदे(ऽपि) न द्रव्यं निर्गुणम् । यथा च परेषां सामान्यादावतिरिक्त-सत्ताभावे(ऽपि) नासत्त्वम् । तथा व्यतिषक्ततन्तव एव पटस्तथाऽपि न पटाभावः । किन्तु सन्ति व्यतिषक्तास्तन्तवः पटश्च । स च तेभ्यो न भिद्यते इति । कथमेतदिति चेत् । विशेष-शक्त्यैवेति ब्रूमः ।**

शे० – अवयवावयविनोरत्यन्ताभेदस्य 'अभेदेन प्रतीतिश्चे'त्यादिना, भेदाभेदयोश्च 'भेदो नाशे भवेत्तथे'त्यादिनैव प्रतिपादनादंशिनोंऽशैरित्यादितत्प्रतिपादकोत्तरग्रन्थानर्थक्यमाशङ्क्य परिहरति **अंशांशिनोरिति** । मूलेंऽशिनोंऽशैरभेद इत्यस्यावृत्तिंमश्यादिशब्दानां चार्थविशेषपरतां यथातथाशब्द-योरध्याहारं चाश्रित्य तद्व्याचष्टे **यथेत्यादिना** । अंशिनोंऽशैरभेदोंऽशेन तु भिदाभिदैत्येतावतैव पूर्तेरयमित्यस्य वैयर्थ्यमाशङ्क्याह **अयमितीति** । उत्तरवाक्ये तत्सम्बन्धप्रकारश्च'उक्तोऽयमर्थः सर्व-प्रत्यक्षविषयो यस्मादि'त्युत्तरग्रन्थादेव स्पष्टप्रतिभासः ।

**एतत्** पटस्य सर्वैस्तन्तुभिरत्यन्ताभेद इत्येतत् । तत्कुत इत्यतो भेदाभेदसाधकप्रमाणोपन्यासपूर्वकं भेदाभेदयोरौचित्यमुपदर्शयति **सर्वेति ॥ एकेनेवेति** । दृष्टान्ततया तस्योपादानमन्यथैकेनापि तन्तुना पटस्यात्यन्ताभेदप्रसक्त्या भेदाभेदौ न स्यातामविशेषादित्यतिप्रसङ्गसूचनार्थमिति ज्ञेयम् । न केवलं पटस्य सर्वैस्तन्तुभिर्भेदाभेदयोर्न्यायप्राप्तत्वादौचित्यं किन्त्वागमसिद्धत्वादपि । अन्यथा भेदाभेदप्रतिपा-दकागमविरोधापत्तेरिति भावेनाह **तथा चोक्तमिति** । तथोक्तं चेत्यन्वयः । तद्वाक्यं पठति **तन्तुभ्य इति** । यद्यप्येतद्गीतातात्पर्यनिर्णयटीकायामेकैकतन्तोः पटेन भेदाभेदोपपादकतया व्याख्या-तम् । यद्येकैकतन्तोः पटोऽत्यन्तभिन्नः स्यात्तर्हि व्यतिषङ्गविशेषविशिष्टैकैकतन्तुभ्यः पटः पृथग्दृश्येत । न चैतदस्ति नाप्येकैकतन्तुना पटोऽत्यन्ताभिन्नो व्यतिषङ्गविशेषरहितैकैकतन्तुभावे पटाभावा-नुपपत्तेः । अतः पटस्यैकैकेन तन्तुना भेदाभेदाविति । ततश्च न पटस्य सर्वैस्तन्तुभिर्भेदाभेदोपपादकतयाऽ-त्रास्योपन्यासः सङ्गतस्तथाऽपि यदि सर्वतन्तुभ्यः पटोऽत्यन्तभिन्नस्तर्हि व्यतिषङ्गविशेषविशिष्टसर्वतन्तुभ्यः पटः पृथग्दृश्येत । न चैतदस्ति । नापि सर्वतन्तुभिः पटोऽत्यन्ताभिन्नो व्यतिषङ्गविशेषरहितसर्वत-न्तुभावे पटाभावानुपपत्तेरिति । तन्तुभ्य इति बहुवचनप्रयोगाद्यावत्तन्तुभ्य इति प्रतीतिबलेन न्यायसाम्येन च लब्धयोजनान्तरमभिप्रेत्य सर्वतन्तूनामपि पटेन भेदाभेदप्रतिपादकत्वस्यापि सम्भवात्तत्त्वेनात्रोदाहरणमिति द्रष्टव्यम् । एकस्य तन्तोरपि पटेन कुतो भेदाभेदौ येन तद्दृष्टान्तेन सर्वतन्तूनामपि पटेन भेदाभेदौ स्यातामित्याशङ्कानिरासायैकस्य तन्तोः पटेन भेदाभेदोपपादकतयैवात्रोपन्यासो न तु सर्वतन्तूनां पटेन

तयोरुपपादकतयेति न योजनान्तरपरिकल्पनाक्लेश इत्यप्याहुः । यादृशैस्तन्तुभिरत्यन्ताभेदोऽभिहितो न तत्र खण्डितत्वं यत्र च खंडितत्वं न तत्राभेदोऽभिधीयत इति नानुपपत्तिरिति भावेन सिद्धान्तयति **उच्यत इति** ॥ **व्यतिषङ्गविशिष्टा इति** । व्यतिषङ्गे सति विशिष्टा इत्यर्थः ॥ **तस्मादिति** । व्यतिषङ्गविशिष्टतन्तु-भावे कदाचिदपि पटाभावाभावादित्यर्थः ॥ **व्यतिषङ्गेति** । व्यतिषङ्गे सति विशिष्टैरित्याशयः । अन्यथा व्यतिषङ्गे सति यत्तन्तूनां विशिष्टं रूपमित्यग्रिमग्रन्थविरोधप्रसङ्गादिति द्रष्टव्यम् ॥ **न कश्चि-द्विरोध इति** । खण्डितत्वभेदाभेदाङ्गीकारप्रयुक्तसिद्धान्तविरोधरूपो ब्रह्मतर्कविरोधरूपो वेत्येवं न कश्चिदित्यर्थः ।

आशयमजानानो व्यतिषक्तास्तन्तव एव पट इति सम्भ्रान्तश्चोदयति **नन्वेवमिति** ॥ **व्यतिष-क्ततन्तुव्यतिरेकेणेति** । तन्तुव्यतिषङ्गव्यतिरेकेणेत्यर्थः । अनेनैव न्यायेन व्यतिषङ्गविशिष्टपर-माणुष्वेव गोघटादिबुद्ध्युपपत्तावतिरिक्तावयविकल्पने मानाभावादिति भावः । भ्रान्तप्रतीतमर्थ-मभ्युपेत्यैव तावदुत्तरमाह यथा **हीत्यादिना** । यथेत्यतःपरं यद्यपीति पूरणीयम् ।

स० — **व्यतिषङ्गविशेषविशिष्टैः सर्वतन्तुभिः पटस्यात्यन्ताभेद एवेति** । **अत्रेदं** तत्त्वम् । तन्तूनां विशिष्टाकारेण पटस्यात्यन्ताभेद एवेत्यर्थः । अत एव 'न हि तन्तुव्यतिषङ्गं पटमाचक्ष्महे । किं तु व्यतिषंगे सति यत्तन्तूनां विशिष्टं रूपम्' इत्युत्तरग्रन्थः संगच्छते ।

---

ननु न विशिष्टाकारातिरिक्तः पटोऽस्ति । व्यतिषक्तानां तन्तूनां विशिष्टाकारो ह्यसौ इत्यादिनोत्तरत्र विशिष्टाकारस्यैव पटत्वोक्तेः । अन्यथा तद्विरोधादिति चेन्न । तत्रापि विशिष्टाकारा-भिन्नः पट इत्यभिप्रायात् । अन्यथा विशिष्टाकारस्य तन्त्वाश्रितत्वं न स्यात् पटवत् । न च पटस्यापि तदाश्रितत्वम् । तन्तुषु पट इति प्रतीत्यसिद्धेरित्यादिग्रन्थानानुगुण्यात् । न च विशिष्टा-कारोऽपि न तदाश्रित इति तस्यैव पटत्वेऽपि नानुपपत्तिरिति वाच्यम् । विशिष्टं च विशेष्याश्रितं द्रव्यान्तरमिति अन्यथाख्यातिस्थलीयमूत्रानुसारेण तस्य तन्त्वाश्रितत्वावश्यम्भावात् । अन्यथा तद्विरोधापत्तेरिति । विशिष्टाकाराभिन्नस्यापि पटस्य तदनाश्रितत्वं च घटाभिन्नस्यापि रूपादेः जलाहरणाद्यसामर्थ्यवत् विशेषशक्त्यैवोपपद्यत इति ।

प० — **उत्तरवाक्य इति** । सर्वप्रत्यक्षेति वाक्य इत्यर्थः ॥ **उक्तं ब्रह्मतर्क इति** । भेदा-भेदावित्येतत्प्रमेयमेकादशाध्यायगीतातात्पर्योदाहृतब्रह्मतर्के पूर्वार्धेऽभेदस्य, उत्तरार्धे भेदस्य च प्रतीत्यो-क्तमित्यर्थः । तन्तुभाव इत्यस्य तन्तूनां भावे सत्व इत्यर्थः ॥ **व्यतिषंगेति** । तिर्यगूर्ध्वरूपेण संश्लेषविशेषविशिष्टेत्यर्थः ॥ **अवगम्यन्त इति** । प्रत्यक्षसिद्धा इत्यर्थः । तन्तुभ्योन्य इति

पूर्वार्धेऽनुपपत्तिमाशङ्क्याभिप्रायमाह **नन्वेवं तर्हीति** । न द्रव्यमिति नासत्त्वमिति च पदच्छेदः ॥ **पटश्चेति** । अस्तीति योज्यम् ॥ **विशेषशक्त्यैवेति** । विशेषशब्दितवस्तुसामर्थ्येनैवेत्यर्थः ।

**या०** — ब्रह्मतर्कवचने पूर्वार्धे पटे सर्वतन्त्वभेदसाधनमुत्तरार्धे तत्रैव सर्वतन्तुभेदसाधनमिति ज्ञातव्यम् । **तन्तुभाव** इत्यस्य सर्वतन्तुभाव इत्यर्थः ॥ **व्यतिषङ्गविशिष्टा इति** । व्यतिषङ्गे सति विशिष्टा इत्याशयोऽत्र विवक्षितः । एवं व्यतिषङ्गविशेषविशिष्टैरिति व्याख्येयम् । अतो व्यतिषङ्गे सति यत्तन्तूनां विशिष्टं रूपमित्यग्रेतनग्रन्थविरोधो नेति द्रष्टव्यम् । आशयमविद्वांस्तन्तुव्यतिषङ्ग एव पट इति मत्वा शङ्कते **नन्वेवमिति** ॥ **व्यतिषक्ततन्तुव्यतिरेकेणेति** । तन्तुव्यतिषङ्गव्यतिरेकेणेत्यर्थः । अनयैव नीत्या व्यतिषङ्गविशेषविशिष्टपरमाणुष्वेव गोघटादिबुद्ध्युपपत्तावतिरिक्तावयविकल्पनं न स्यादिति भावः । भ्रान्तप्रतीतमर्थमभ्युपेत्यैव तावदुत्तरमाह **यथा हीत्यादिना** ।

**श्री०** — **तद्भावे** व्यतिषङ्गविशिष्टतन्तूनां भावे । एवं तर्हीत्यस्य विशदनं **व्यतिषक्तेति** ॥ **परमाणुपुञ्जेति** । तद्वादेऽप्युपादानसमूहव्यतिरेकेण कश्चनातिरिक्तोऽवयवी नास्तीत्यर्थः ।

**सु०** — **ननु व्यतिषक्तसर्वतन्तुभ्योऽपि पटस्य भेदोऽङ्गीकार्यः । तन्तुव्यतिषङ्गानन्तरं पटस्य जायमानत्वात् । कथं चैकैकतन्तुनाऽभेदः एकैकत्र पटबुद्ध्यभावादित्यत आह सर्वेति ।**

**अनु०** — सर्वप्रत्यक्षविषयः कथमेव ह्यपोह्यते ॥

**उक्तोऽयमर्थः सर्वप्रत्यक्षविषयो यस्मात्तस्मात्कथमेवापोह्यते । एतदुक्तं भवति । अस्ति तावद्व्यतिषक्तसर्वतन्तूनां पटस्य चाभेदे प्रत्यक्षम् । तत्प्रतीतेः सम्बद्धवस्तुद्वयप्रतीतिवैलक्षण्यस्य साक्षिसिद्धत्वात् । न च भेदे प्रमाणमस्ति । येन सोऽपि स्वीकरिष्यते । जायतां नाम तन्तुव्यतिषङ्गानन्तरं पटस्तथाऽपि न विवक्षितार्थहानिः । न हि तन्तुव्यतिषङ्गं पटमाचक्ष्महे । किन्तु व्यतिषङ्गे सति यत्तन्तूनां विशिष्टं रूपम् । न चैकैकतन्तुपरित्यागे सर्वतन्तवो नाम सन्ति । अतस्तत्राप्यस्त्येवाभेदप्रतीतिः । एकैकत्र पटबुद्ध्यभावस्तु भेदमाक्षिपति । न तु प्रत्यक्षसिद्धमभेदमपवदतीति ॥**

**शे०** — ननु 'सर्वप्रत्यक्षविषय' इत्युत्तरवाक्ये पटस्य व्यतिषङ्गविशिष्टतन्तुभिरभेदस्यैकैकतन्तुनाऽप्यभेदस्य प्रत्यक्षसिद्धत्वमुच्यते, तदनर्थकमित्याशङ्क्य 'अशिनोंऽशैरभेदोऽयमंशेन तु भिदाभिदे'ति पूर्ववाक्योक्तस्य व्यतिषङ्गविशिष्टतन्तुभिरत्यन्ताभेदस्यैकैकेन तन्तुना च भेदाभेदस्य भेदाभेदशङ्कानिरासेनात्यन्तभेदशङ्कानिरासेन चोपपादनार्थत्वान्नानर्थक्यमिति भावेन पूर्ववाक्योक्ततदुभयोपपादकतयोत्तरवाक्यं

योजयितुं व्यतिषङ्गविशिष्टतन्तुभिः पटस्य भेदाभेदाशङ्कामेकैकतन्तुना चात्यन्तभेदशङ्कां तद्बीजमुपदर्शयन्नेवोत्थापयति नन्विति। यद्यपि व्यतिषङ्गविशिष्टैस्तन्तुभिरेवात्यन्ताभेदोऽभिहितः, न तु तन्तुव्यतिषङ्गेणेति न तन्तुव्यतिषङ्गेण पटस्य भेदोपपादनसङ्गतिः, तथाऽपि तद्ग्रन्थस्योक्तमाशयमजानानस्य तन्तुव्यतिषङ्गेण पटस्यात्यन्ताभेद इति भ्रान्तस्येयमाशङ्का। अत एवोत्तरग्रन्थे तदाशयवर्णनमिति ध्येयम्।

**उक्तोऽयमर्थ इति**। अत्रायमित्यनुवादेनोक्तार्थ इति तद्व्याख्यानं कृतम्। कथमनेनोक्ताक्षेपद्वयपरिहार इत्यत आह **एतदुक्तं भवतीति**॥ **वैलक्षण्यस्येति**। तस्याभेदविषयत्वं विनाऽनुपपत्तेरभिहितत्वादिति भावः। **साक्षिसिद्धत्वादिति**। विलक्षणप्रतीत्यपलापानुपपत्तेरिति भावः। ननु तन्तुव्यतिङ्गानन्तरं पटस्य जायमानत्वादेव पटस्य तद्भेदः सिद्ध इति कथं भेदे प्रमाणाभाव इत्यतस्तावता व्यतिषङ्गेण सह भेदप्राप्तावपि न हानिरस्माभिस्तदत्यन्ताभेदानङ्गीकारात्। येन चात्यन्ताभेदोऽभ्युपगतस्तद्भेदस्य चानेनाप्राप्तेरिति भावेन स्वाशयमुद्घाटयति **जायतामित्यादिना**॥ **विशिष्टं रूपमिति**। तदत्यन्ताभिन्नमेव पटमाचक्ष्महे इति पूर्वेण सम्बन्धः। ननु पटस्तन्त्वनाश्रित इति सिद्धान्तः। तन्तुषु पट इति प्रतीत्यसिद्धेरिति पूर्वग्रन्थानुसारात्। तन्तुविशिष्टाकारश्च तन्त्वाश्रितः। विशिष्टं च विशेष्याश्रितं द्रव्यान्तरमित्यन्यथाख्यातिस्थलीयग्रन्थानुरोधात्। अतः कथं तयोरभेद इति चेन्न। अभेदेऽपि विशेषशक्त्यैव पटविशिष्टाकारयोस्तन्त्वाश्रितत्वानाश्रितत्वसम्भवात्। कथमन्यथा त्वग्ग्राह्याग्राह्ययोः पटरूपयोरभेद इति। तदेतदभिप्रेत्योक्तं पूर्वत्र 'कथमेतदिति चेत्। विशेषशक्त्यैवेति ब्रूमः' इत्यादिनेति। कथञ्चैकैकतन्तुना पटस्याभेद इत्याक्षेपस्य समाधानमाह **न चैकैकेति**। समुदायस्य समुदाय्यभिन्नत्वादिति भावः। ततश्च सर्वतन्तूनां पटाभेदस्य पूर्वमुक्तत्वात्तदभिन्नस्यैकैकस्यापि तन्तोः पटाभेद आवश्यकः। अन्यथैकैकतन्तुव्यतिरेकेण सर्वतन्तूनामभावात्सर्वेषामपि तद्भेदः स्यादिति समाधानमुक्तं भवति। नन्वेवं व्यतिषङ्गे सति ये विशिष्टास्तन्तवस्तेषां पटेनात्यन्ताभेदस्य पूर्वमुक्तत्वात्तदभिन्नस्याप्येकैकस्य तन्तोः पटेनात्यन्ताभेदापत्तिरिति चेन्न। एकैकस्य तन्तोर्विशिष्टतन्तुभिरत्यन्ताभेदे हि तथा स्यात्। न चैतदस्ति। किन्तु भेदाभेद एव। तत्र विशिष्टतायाः खण्डितत्वादिति न किञ्चिदेतत्। नन्वेकैकत्र तन्तौ पटबुद्ध्यभावेन तदभेदाभावसिद्धेः कथमेकैकस्य तन्तोः पटेनाभेद इत्यतो भेदमात्रेण पर्यवसन्नस्य बुद्ध्यभावस्य भेदमात्राक्षेपकत्वान्नाभेदापवादकत्वमित्याह **एकैकत्रेति**। ननु भेदेनेवाभेदाभावेनापि तत्पर्यवसानसम्भवात् भेदाक्षेपकत्ववदभेदाभावाक्षेपकत्वमप्यस्त्वित्यत आक्षेप्यस्य प्रमाणाविरुद्धताया आक्षेपसामग्रीत्वात्प्रकृते चाभेदस्य प्रत्यक्षसिद्धत्वेन तदभावस्य प्रमाणबाधितत्वेनाक्षेपसामग्रीविरहान्न तदाक्षेपकत्वमित्याशयेनोक्तं 'न तु प्रत्यक्षसिद्धमभेदमपवदती'ति॥

स०— कथं चैकतन्तुनाऽभेद इत्येतत्परिहरति–**न चैकैकेति**। तथा च एकैकस्य तन्तोः पटात् भेदे एकैकतन्तुव्यतिरेकेण सर्वतन्तूनामभावात् सर्वेषामपि भेद एव स्यादिति एकैकस्यापि तन्तोः पटेनाभेदस्याप्यावश्यकत्वादित्यर्थः । न चैवमेकैकस्य तन्तोः पटेन भेदाभेदाभ्युपगमे सर्वेषामपि भेदाभेदापत्त्या अत्यन्ताभेदोपपत्त्यर्थम् एकैकस्याप्यत्यन्ताभेदाभ्युपगमापत्तिरिति वाच्यम् । सर्वैरपि तन्तुभिरत्यन्ताभेदस्यानभ्युपगतत्वात् विशिष्टाकारेणैवात्यन्ताभेदस्याभ्युपगमात् । न चैवं तन्तूनामपि पटेनात्यन्ताभेद एवास्तु । विशिष्टाकारस्यैव पटाभेदसंभवादिति वाच्यम् । केनापि रूपेणाभेदासहिष्णुभेदस्यैव अत्यन्तभेदत्वात् । तन्तूनां च पटेनात्यन्तभेदे केनापि रूपेण पटेन भेद सहिष्णुभेदो वाच्यः । न चासौ युक्तः । तन्तूनामेव विशिष्टाकारलक्षणरूपेण पटाभेदसद्भावेन तत्सहिष्णुभेदस्यैव सद्भावेन तदसहिष्णुभेदस्यानुपपन्नत्वात् । न चैवं पटस्य विशिष्टाकारेणात्यन्ताभेदाभ्युपगमात् तन्तूनां पटस्य च भेदाभेदानुपपत्तिः । यस्य येनात्यन्ताभेदः तस्य केनापि रूपेण भेदस्याभावो हि अत्यन्ताभेदः । तथा च विशिष्टाकारेण पटस्यात्यन्ताभेदेऽपि तेन सह केनापि रूपेण भेदाभावात् । विशिष्टाकारस्य तन्तुरूपत्वेपि तन्तूनां विशिष्टाकाररूपत्वाभावादिति दिक् ।

प०— अत्रारम्भवादी शङ्कते **ननु व्यषतिक्तेति**। एकैकतन्तुना भेदाभेदावित्यत्राभेदांशमाक्षिपति **कथं चैकैकेति**। अभेद इति पदच्छेदः । अयमिति पूर्वस्मादिहान्वितस्यार्थ **उक्तोऽयमर्थ इति** ॥ **सम्बद्धेति**। कुण्डबदररूपवस्तुद्वयेत्यर्थः । विशिष्टं पदार्थान्तरं विशेष्याभिन्नमिति मतमुपेत्याह **जायन्तां नामेति** ॥ अन्यथा कस्तदा पटोऽवशिष्यत इति तत्वप्रकाशिकावाक्यविरोधादित्यन्ये । कथं चैकैकेत्युक्ताक्षेपं प्रत्याह **न चैकैकेति** । अपवदतीतिशब्दस्यैतदुक्तमिति पूर्वेणान्वयः । **अभेद भेदाभेदस्थलोक्तिः** ।

या०— भ्रान्त एव पुनः शङ्कते **ननु व्यतिषक्तेति** ॥ **उक्तोऽयमर्थ इति** । अत्रायमित्युत्तरवाक्येन संम्बध्यत इत्युक्तत्वादयमित्यनूद्योक्तोऽर्थ इति व्याख्यानं कृतमिति द्रष्टव्यम् । इदानीं परभ्रान्तिं खण्डयन्स्वाशयमुद्घाटयति **न हि तन्तुव्यतिषङ्गमित्यादिना** ॥ **विशिष्टं रूपमिति** । ननु पटस्तन्त्वनाश्रित इति सिद्धान्तः । तन्तुषु पट इति प्रतीत्यसिद्धेरित्यन्यत्रोक्तत्वात् । तन्तुविशिष्टाकारश्च तन्त्वाश्रित एव वक्तव्यः । विशिष्टं च विशेष्याश्रितं द्रव्यान्तरमिति पूर्वाध्याये उक्तत्वात् । अतः कथं तयोरभेद इति चेन्न । अभेदेऽपि विशेषशक्त्यैव तन्त्वाश्रितत्वानाश्रितत्वयोरुपपत्तेः । कथमन्यथा त्वग्ग्राह्याग्राह्ययोः पटरूपयोरभेद इति । कथं चैकैकतन्तुनाऽभेद इत्यस्य समाधानमाह **न**

चैकैकेति । समुदायस्य समुदाय्यभिन्नत्वादिति भावः । तथा च सर्वतन्तूनां पटाभेदस्य पूर्वमुक्तत्वात्तदभिन्नस्यैकैकस्यापि तन्तोः पटाभेद आवश्यक इति समाधानमुक्तं भवतीति ज्ञातव्यम् । नन्वेवं व्यतिषङ्गे सति ये विशिष्टास्तन्तवस्तेषां पटेनात्यन्ताभेदस्य पूर्वमुक्तत्वात्तदभिन्नस्यैकैकस्यापि तन्तोः पटेनात्यन्ताभेदापत्तिरिति चेन्मैवम् । एकैकस्य तन्तोर्विशिष्टतन्तुभिरत्यन्ताभेदे हि तथा स्यान्न चैवम् । किन्तु भेदाभेद एव । तत्र विशिष्टतायाः खण्डितत्वात् । अतो यत्किञ्चिदेतत् ।

श्री०— ननु व्यतिषङ्गानन्तरं पटस्य जायमानत्वादिति भेदे प्रमाणमुक्तमिति चेत्तत्राह **जायतां नामेति** ॥ **विवक्षितेति** व्यतिषक्ततन्त्वभिन्नः पट इति विवक्षितार्थस्य । **आचक्ष्महे** तथा च व्यतिषङ्गस्य कुविन्दव्यापारत्वेन तदनन्तरं जायमानत्वेन लिङ्गेन व्यतिषङ्गाद्भेदसाधनमिष्टमिति भावः ।

सु०— **अथापि स्यात् । अवयव्यादीनामवयवादिभिरभेदो नोपपद्यते । एको ह्यवयव्यनेके चावयवाः । तदभेदेऽवयवानामप्यभेदोऽवयविनो वा भेदः प्रसज्येत । तथा गुणाश्च केचिदनेकाश्रिताः । एकैव हि संयोगव्यक्तिर्द्वयोर्द्वयोर्वर्तते । तथा विभागव्यक्तिरपि । संख्या च द्विविधा । एकत्वानेकत्वभेदात् । तत्रैकत्वस्यैकद्रव्यगतत्वेऽपि द्वित्वादिकमनेकाश्रितम् । एवं पृथक्त्वमपि द्विविधम् । एकपृथक्त्वमनेकपृथक्त्वं च । तत्रैकपृथक्त्वस्यैकद्रव्यवृत्तित्वेऽपि द्विपृथक्त्वादिकमने(कद्रव्याश्रि)काश्रितमेव । एवञ्च गुणानां गुणिनैक्ये संयोगाद्याश्रयानेकद्रव्याभेदो वा संयोगादिभेदो वाऽऽपद्येत । सामान्यं चैकमनेकाश्रितम् । तस्य व्यक्त्यभेदे व्यक्तीनामप्यभेदः सामान्यस्य वा भेदः प्रसज्येतेत्यतः संयोगविभागपृथक्त्वानां तावदनेकाश्रितत्वं नास्तीत्याह** संयोगश्चेति ।

अनु०— संयोगश्च विभागश्च भेदश्चैव पृथक् पृथक् ॥

**भेद इति पृथक्त्वमुच्यते । चशब्दा इतरेतरयोगे ।** पृथक्पृथगेव **एकैकद्रव्याश्रिता एवेत्यर्थः । ततश्चैकेन गुणेनाभिन्नत्वे द्रव्ययोरप्यभेदः स्यादित्यतिप्रसङ्गस्यापादकासिद्धिः । अनेकद्रव्याभिन्नत्वे गुणस्यापि भेदः स्यादित्यस्येष्टापत्तिर्दूषणमित्युक्तं भवति ।**

शे०—ननु संयोगविभागादेरेकैकद्रव्याश्रितत्ववर्णनस्य पूर्वेण सङ्गत्यभावात् तत्परोत्तरग्रन्थानर्थक्यमाशङ्क्याव्यवहितपूर्वेण तस्य सङ्गत्यभावेऽपि 'अभेदेन प्रतीतिश्च कार्यकारणपूर्वके' इत्यादिव्यवहितपूर्वग्रन्थोक्तगुणगुण्याद्यभेदे प्राप्तानुपपत्तिपरिहारेण तदुपपादकतया तत्सङ्गतिसम्भवान्न तत्परोत्तरग्रन्थानर्थक्यमिति भावेन तत्सङ्गततया उत्तरग्रन्थं योजयितुं तद्वाक्यार्थमाक्षिपति **अथापि स्यादिति** ॥

**अवयवानामप्यभेद इति**। नीलतन्त्वभिन्नपटाभिन्नस्य पीततन्तोर्नीलतन्त्वभेदः स्यात्। यद्यदत्यन्ताभिन्नेनात्यन्ताभिन्नं तत्तेनात्यन्ताभिन्नमिति नियमादिति भावः। **अवयविनो वा भेद इति**॥ अत्यन्तभिन्नानेकावयवात्मकत्वादिति भावः **तयेति**। एकैव विभागव्यक्तिर्द्वयोर्द्वयोर्वर्तेत इत्यर्थः। **संयोगाद्याश्रयानेकद्रव्याभेद इति**। घटभिन्नपटस्यापि घटाभेदः स्यादित्यर्थः। यद्यदत्यन्ताभिन्नेनात्यन्ताभिन्नं तत्तेनात्यन्ताभिन्नमिति व्याप्तेरिति भावः **संयोगादिभेदो वेति**। अत्यन्तभिन्नानेकद्रव्याभिन्नत्वादिति भावः ॥ **व्यक्तीनामप्यभेद इति**। घटाभिन्नद्रव्यत्वाभिन्नपटस्यापि घटाभेदः स्यादुक्तव्याप्तेरिति भावः॥ **सामान्यस्य वेति**। अत्यन्तभिन्नानेकद्रव्याभिन्नत्वादिति भावः। नरत्वादिकमप्येवमित्यादिना सामान्यस्यापि तन्निरूपणात्तावदित्युक्तम्॥ **पृथक्त्वमुच्यत इति**। ननु च परेण द्विपृथक्त्वस्यैवानेकाश्रितत्वेनाङ्गीकारात्तस्यैवानेकाश्रयत्वाभावोपपादनार्थं प्रवृत्तेऽत्रवाक्ये भेद इति द्विपृथक्त्वमुच्यत इत्येव व्याख्यातत्वात् पृथक्त्वमुच्यत इति कथं व्याख्यानमिति चेन्न। प्रसङ्गात् पृथक्त्वमात्रस्य अनेकाश्रयत्वाभावोपपादनार्थं प्रवृत्तमूलगतभेदशब्दानुसारेण तथा व्याख्यानसम्भवात्। अत एव घटाद्भिन्नः पट इत्युदाहरणमप्युपपन्नम् अन्यथैकपृथक्त्वस्यैकैकाश्रयत्वपरतादृशोदाहरणासङ्गतेरिति ध्येयम्॥ **इतरेतरयोग इति**। ननु चात्र संयोगादिष्वेकद्रव्याश्रितत्वरूपपृथक्त्वसमुच्चयार्थतयैव चशब्दाः कुतो न व्याख्याताः इति चेत्। उच्यते। स्यादेतदेवं यद्येकाश्रितत्वमात्रमत्र विधेयं स्यात्। न चैवम्। पृथगित्येवाश्रवणात्। किन्त्वेकैकद्रव्याश्रितत्वमेव पृथक् पृथगित्युक्तत्वात्। तत्सम्बन्धश्च न प्रत्येकं संयोगादौ सम्भवति। किन्तु मिलितेष्वेव। ततश्च साहित्यप्रतियोगिनां संयोगादीनां परस्परानपेक्षाणामेककार्यसम्बन्धाभावेन समुच्चयस्य बाधितत्वान्न समुच्चयार्थत्वं युक्तं, किन्तु तेषां परस्परसापेक्षाणामेककार्यसम्बन्धादितरेतरयोगस्यैव न्यायप्राप्तत्वात्तदर्थतया व्याख्यानमित्याशयात्। **एकेन गुणेनेति**। एकेन संयोगादिनेत्यर्थः।

प० — **संयोगविभागपृथक्त्वानां तावदिति**। नरत्वादिकमप्येवमिति सामान्यस्यानेकवृत्तित्वं नास्तीति वक्ष्यतीति तावच्छब्दार्थः। एवकारान्वयेनानूद्यार्थमाह **पृथक्पृथगेवैकैकद्रव्याश्रिता एवेत्यर्थ इति**॥ **एकेन गुणेनेति**। संयोगेनेत्यर्थः।

या० — **इतरेतरयोग इति**। ननु संयोगादिष्वेकद्रव्याश्रितत्वरूपपृथक्त्वसमुच्चय एव कुतो न चशब्दो व्याख्यात इति चेत्। उच्यते। स्यादेतदेवं यद्येकाश्रितत्वमात्रमत्र विधेयं स्यात्। न चैवम्। पृथक् पृथगित्युक्तत्वात्। किन्त्वेकैकाश्रितत्वम्। तत्सम्बन्धश्च न प्रत्येकं संयोगादौ सम्भवति किन्तु मिलित एव। अतः साहित्यप्रतियोगिनामेककार्यसंबन्धे इतरेतरयोगस्य विहितत्वादितरेतरयोग एव व्याख्यात इति द्रष्टव्यम्॥ **गुणेनेति**। संयोगादिनेत्यर्थः।

**श्री०** — **तदभेदे** एकेनावयविनाऽनेकेषामवयवानामभेदे । **अभेदो** यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तेरिति भावः । एतद्व्याप्तिबलादेवोत्तरत्राप्यभेदोपपादनं द्रष्टव्यम् । **भेदः** अनेकावयवाभिन्नत्वादित्यर्थः । एवमुत्तरत्रापि भेदोपपादनं ज्ञेयम् । भेदः अनेकत्वम् ॥ **एकद्रव्यगतत्वेऽपीति** । तथा च तेनाभेदो युक्त उक्तदोषाभावादिति भावः । एवमुत्तरवाक्यभावोऽपि ज्ञेयः । **द्रव्याभेदः** द्रव्याणामभेदः । **तस्य** सामान्यस्य । द्रव्यगुणकर्माणि व्यक्तय उच्यन्ते । द्रव्ययोरिति पूर्वोत्तराभ्यां सम्बद्ध्यते ॥ **आपादकासिद्धिरिति** । संयोगादेर्गुणस्यानेकत्वेनैकेन गुणेनाभिन्नत्वं नास्तीत्यापादकासिद्धिरित्यर्थः ।

**च०** — ब्रह्मतर्कवचने पूर्वदले पटे निखिलतन्त्वभेदसाधनं दलान्तरे तत्रैव तावद्भेदसाधनं द्रष्टव्यम् **संयोगविभागपृथक्त्वानां तावदिति** । 'नरत्वादिकमप्येवं तत्तद्धर्मतये'ति सामान्यानेकवृत्तित्वस्य प्रतिविधास्यमानतया तदवधिकप्राथम्यद्योतनार्थस्तावच्छब्दः ।

**सु०** — ननु घटपटसंयोगविभागभेदा घटपटसंबन्धितयाऽनुभूयन्ते । तत्कथमेकैकाश्रिताः । तथात्वे चैकैकस्मिन्नेव संयुक्तादिप्रत्ययप्रसङ्ग इत्यत आह अन्योन्येति ।

**अनु०** — अन्योन्यप्रतियोगेन ह्युभयोरपि दृश्यते ॥

**प्रतियोगः प्रतियोगित्वम् । अन्योन्यस्य प्रतियोगोऽन्योन्यप्रतियोगः । यत्संयोगादिरुभयोरपि दृश्यते तदन्योन्यप्रतियोगेन हि निमित्तेन । अत्रोभयोरपीत्यनेकोपलक्षणम् । भेदस्य बहुसंबन्धितयाऽपि प्रतीतेः । एतदुक्तं भवति । घटप्रतियोगिकः संयोगादिः पटेऽस्ति । तथा पटप्रतियोगिको घटेऽस्ति । तस्मादुभयसंबन्धितया प्रतिभासोऽतिप्रसङ्गाभावश्च युज्यत इति ।**

**शे०** — अन्योन्यप्रतियोगेनेत्युत्तरग्रन्थानर्थक्यमाशङ्क्य संयोगादीनामनेकाश्रितत्वसाधकप्रमाणस्यैकाश्रयत्वबाधकस्य चान्यथासिद्धिव्युत्पादनेन निरासार्थत्वान्न तदिति भावेन तत्परतया तद्योजयितुमनेकाश्रितत्वसाधकमेकाश्रयत्वे बाधकं चाशङ्कते **नन्विति** ॥ **भेदस्य बहुसम्बन्धितयाऽपीति** । अत्र भेदस्येत्युपलक्षणम् । संयोगादेरित्यपि द्रष्टव्यम् । अत एवोत्तरत्र संयोगस्यापि संयुक्ताविमौ संयुक्ता इमे इति बहुसम्बन्धितया प्रतीत्युदाहरणमिति ध्येयम् । कथमनेन परोक्तसाधकस्य बाधकस्य चान्यथासिद्धिसमर्थनमित्यत आह **एतदुक्तं भवतीति** ॥ **अतिप्रसङ्गाभावश्चेति** । एकस्मिन्नेव संयुक्तादिप्रत्ययप्रसङ्गरूपातिप्रसङ्गाभावश्चेत्यर्थः ।

स० — **अतिप्रसंगाभावश्चेति** । एकस्मिन्नेव संयुक्तादिप्रत्ययः स्यादित्यतिप्रसंगश्च नेत्यर्थः ।

प० — **भेदस्य बहुसम्बन्धितयेति** । एते पृथगिति बहुसंबन्धितया पृथक्त्वस्य प्रतीतेरित्यर्थः । **अतिप्रसंगाभावश्चेति** । एकस्मिन्नेव संयुक्तादीत्युक्तातिप्रसङ्गस्याभावश्चेत्यर्थः ।

या० — **अतिप्रसङ्गाभावश्चेति** । एकस्मिन्नेव संयुक्तादिप्रत्ययप्रसङ्ग इत्यतिप्रसङ्गश्च नेत्यर्थः ।

श्री० — **सम्बन्धितयेति** । घटपटयोः संयोग इति घटपटोभयाश्रितत्वेनेत्यर्थः । **तथात्वे** एकैकाश्रितत्वे । ननु तर्ह्येकैकाश्रितत्वे एकस्मिन्संयुक्तादिप्रत्ययः स्यादित्यतिप्रसङ्ग इति चेत्तत्राह **अतिप्रसङ्गाभावश्चेति** । एकैकाश्रितत्वेऽपि प्रतियोगिनिरूप्यत्वात्तदप्रतीतौ धर्मिभूतैकैकमात्रप्रतीतौ तत्र संयोगो न प्रतीयत इत्यर्थः ।

सु० — **स्यादेतद्यदि संयोगादीनामेकैकवृत्तित्वे प्रमाणं स्यात् । तदेव नास्तीत्यत आह** अन्योन्येति । **पृथक् पृथगेवेत्यनुवर्तते । अन्योन्यप्रतियोगेन हेतुना संयोगादिकमुभयोरपि पृथक् पृथगेव हि दृश्यते ।**

**अयमर्थः । पटो घटेन संयुक्तो घटाद्विभक्तो घटाद्भिन्न इति पटधर्मः संयोगादिर्घटप्रतियोगिकतया प्रतीयते । यश्च यत्प्रतियोगिको नासौ तद्धर्मः । यथा स्थविरप्रतियोगिकमपरत्वं न स्थविरधर्मः । तस्मान्नायं संयोगादिर्घटधर्मः । एवं घटधर्मः संयोगादिः पटप्रतियोगितयोपलभ्यमानो न पटधर्मो भवितुमर्हति । तथा च पृथक् पृथगेव संयोगादिरनेकधर्मोऽवगम्यत इति ।**

शे० — ननु संयोगश्च विभागश्चेत्यादिना संयोगादीनामेकैकाश्रयत्वं प्रतिज्ञातं तन्मात्रं च न साधकम् । विपरीतप्रतिज्ञया विपर्ययस्यापि सिद्धिप्रसङ्गादित्यतः 'अन्योन्यप्रतियोगेनेत्ये'तन्न केवलं परोक्तसाधकबाधकान्यथासिद्धिप्रतिपादनेन तन्निरासमात्रपरं किन्तु स्वपक्षे साधकप्रमाणप्रदर्शनपरं चेति नातिप्रसङ्ग इति भावेन तत्परतया तद्योजयितुं साधकाभावशङ्कामुत्थापयति **स्यादेतदिति** । एकैकद्रव्यमात्राश्रितत्वरूपसाध्यस्यानुक्त्या प्रसक्तां तदनुवृत्तिकथनेन परिहरति **पृथक् पृथगित्यनुवर्तत इति** । उपलक्षणं चैतत् । संयोगश्चेत्यादिकमनुवर्तत इत्यपि द्रष्टव्यम् । अन्यथा धर्म्यनिर्देशप्रयुक्ततत्तादवस्थ्यात् । अत एव संयोगादिकमिति संयोगाद्यन्तर्भावेणैव योजनाप्रदर्शनमुत्तरत्रेत्यवधेयम् ॥ **अन्योन्यप्रतियोगेन हेतुनेति** । अन्योन्यप्रतियोगिकत्वेन हेतुनेत्यर्थः ।

ननु भवेद्घटपटसंयोगादेरन्योन्यप्रतियोगिकत्वेनैकैकद्रव्यमात्राश्रितत्वसाधनं, यद्यन्योन्यप्रतियोगिकत्वमेव तस्य सिद्धं स्यात् । न च तदस्ति । तत्साधकमानाभावात् । तथा च हेत्वसिद्धेर्नानुमानसम्भवः ।

दृष्टान्ताभावेन व्याप्त्यसिद्ध्या व्याप्यत्वासिद्धिश्चेत्यत आह **अयमर्थ इति** । घटप्रतियोगिकत्वसाधकप्रतीतिमेवाभिनयेनोपदर्शयति **पटो घटेनेत्यादिना** । विशेषव्याप्तौ दृष्टान्ताभावेन तदसम्भवेऽपि सामान्यव्याप्तिरविकलैव तत्र दृष्टान्तस्य सत्त्वादिति भावेन तामाह **यथेति** ॥ **अयमिति** । पटधर्म इत्यर्थः । **पटप्रतियोगिकतयोपलभ्यमान इति** । घटः पटेन संयुक्तः पटाद्विभक्तः पटाद्भिन्न इति पटप्रतियोगिकतयोपलभ्यमान इत्यर्थः । उभयोरपीत्यनेकोपलक्षणमिति पूर्वोक्तं मनसि निधायाह **अनेकधर्म इति** । इतीत्यस्यायमिति सम्बन्धः । **इयं गतिरिति** । इदं च गुडजिह्विकामात्रम् । **पृथक्त्वदृष्टान्तेनैव पटो घटेन संयुक्तः घटाद्विभक्त** इति घटः पटेन संयुक्तः पटाद्विभक्त इति चान्योन्यप्रतियोगिकतया प्रतीयमानसंयोगविभागयोरेकैकमात्रवृत्तित्वस्य तावता प्रासादपर्यायौ संयुक्तादिमे संयुक्ता इति च प्रतीयमानसंयोगादेरनेकाश्रितत्वस्यैव, प्रतियोग्यनिरूप्यस्यैकाश्रयत्वे मानाभावेन, शङ्कितुं शक्यत्वात् । अत एव 'एतेन संयुक्ताविमावित्यादिप्रतीतिरपि व्याख्याता वेदितव्ये'ति तुल्यन्यायत्वोक्तिः सिद्धान्ते सङ्गच्छत इत्यवधेयम् ॥ **यत्तु भिन्नाविमावित्यादि** । इमौ द्वावित्यादौ द्वित्वस्येवेमौ भिन्नावित्यादौ भेदस्यैकत्वमेव विषयः । अन्यथा द्वित्वस्यापि तथात्वापत्तेरिति भावः ।

**प०**— अन्योन्येतिवाक्यमन्यथापि व्याचष्टे **स्यादेतदित्यादिना** ॥ **घटाद्भिन्न इति** । घटात्पृथगित्यर्थः ॥ **न स्थविरधर्म इति** । किंतु युवधर्म इति भावः । उभयोरपि दृश्यत इत्येतदानुमानिकज्ञप्तिपरतया व्याचष्टे **अनेकधर्मोऽवगम्यत इति** ।

**श्री०**— **घटधर्म इति** । प्रतियोगिभूतघटेत्यर्थः । **पटधर्मः** प्रतियोगिभूतपटधर्म इत्यर्थः ॥ **पृथक् पृथगेवेति** । एकप्रतियोगिकमपरनिष्ठं चेत्यर्थः ।

**सु०— नन्वस्तु संयोगविभागयोरियं गतिः । न तु पृथक्त्वे । यद्धि घटात्पटः पृथक् पटाच्च घटः पृथगित्यन्योन्यप्रतियोगिकतया प्रतीयते तदेकपृथक्त्वं पृथक् पृथगेवाभ्युपगम्यते । यत्तु भिन्नाविमौ भिन्ना इमे इति प्रतीयते तदनेकपृथक्त्वमनेकाश्रितमेव प्रतियोग्यनिरूप्यस्यैकाश्रित(श्रय)त्वे मानाभावादित्यत आह** भिन्ना इति ।

**अनु०**— भिन्ना इति तु भेदानां समुदायो हि दृश्यते ॥
यथैव च पदार्थानाम्

**इमे भिन्ना इत्यादिप्रतीतौ भेदानां समुदायोऽनेकत्वं हि दृश्यते । कथम् । यथैव च पदार्थानाम्** ।

एतदुक्तं भवति । यथा हि शुक्ला इमे पटा इत्यादिप्रतीतावनेके पटा अनेकानि च तद्विशेषणानि शौक्ल्यान्यवभासन्ते । तथा भिन्ना इम इत्यादिप्रतीतावप्यनेके पदार्था अनेके च भेदाः प्रकाशन्ते इत्यभ्युपगन्तव्यम् । न च विशेषप्रमाणमस्ति । येनात्रान्यो विधिर्भविष्यतीति । एतेन संयुक्ताविमावित्यादिप्रतीतिरपि व्याख्याता वेदितव्या ।

शे० — 'यथैव च पदार्थानामि'त्यभिहितदृष्टान्तव्युत्पादनपूर्वकं दार्ष्टान्तिकं व्युत्पादयितुमाह एतदुक्तं भवतीति । नन्विमे भिन्ना इत्यादेरिमे शुक्ला इत्येतत्साम्यमेव कुतो वक्तव्यम् । इमेऽनेके इत्येतत्साम्यस्यापि वक्तुं शक्यत्वादित्यत आह न चात्रेति । भेदस्यैकत्वे प्रमाणाभावाद्द्वित्वस्य चैकत्वे तत्सत्त्वान्न भिन्ना इत्यस्येमेऽनेके इत्येतत्साम्यं, किन्तु इमे शुक्ला इत्येतत्साम्यमेवेति भावः । इमौ भिन्नाविमे भिन्ना इति प्रतीतिव्याख्यानमन्यत्राप्यतिदिशति एतेनेति । यथा हि शुक्ला इमे पटा इत्यादिप्रतीतावप्यनेके पटाः अनेकानि च तद्विशेषणानि शौक्ल्यान्येव भासन्ते, तथा इमे संयुक्ताः इत्यादिप्रतीतावपि अनेके पदार्था अनेके च संयोगाः प्रकाशन्त इत्यभ्युपगन्तव्यम् । न चात्र विशेषप्रमाणमस्ति । येनात्रान्यो विधिर्भविष्यति । अन्यथेमे शुक्ला इत्यादिप्रतीत्याऽनेकाश्रितैकशौक्ल्यादिसिद्धिप्रसङ्गादिति व्याख्याता वेदितव्येत्यर्थः ।

---

प० — भिन्नाविमाविति । भेदशब्दोऽत्र पृथक्त्वपरो ज्ञेयः ॥ मानाभावादिति । यश्च यत्प्रतियोगिक इति प्रागुक्तयुक्तेरत्रापि सत्त्वादिति भावः ॥ एतेनेति । पृथक्त्वप्रतीतिव्याख्यानेन । संयु-(क्ताविति)क्तौ विभक्ताविति धीरपि संयोगादिसमुदायविषयतया व्याख्यातेत्यर्थः । अत्र प्रकरणेऽसकृदुपात्तो भेदशब्दः पृथक्त्वपर इत्युपेत्य पृथक्त्वमुलभ्यत इत्युक्तं ॥ इत्यादिप्रतीतिरपीति । तत्राप्यस्यामुना संयोगोऽस्य विभाग इत्यनेन संयोगादिविषया धीरिति व्याख्यातेत्यर्थः ।

श्री० — अनेकाश्रितत्वमुपपादयति प्रतियोगीति । यो यत्प्रतियोगिको नासौ तद्धर्म इति व्याप्तिबलादेकाश्रितत्वं वक्तव्यम् । न हीमौ भेदवन्ताविमावित्यादौ प्रतियोगिनिरूपितत्वं प्रतीयते । अत एकाश्रितत्वे न मानमस्तीत्यर्थः ॥ शुक्ला इम इति । अनेन 'यथैव च पदार्थानामि'त्येतदुक्तार्थम् । ननु भिन्ना इम इत्यादिप्रतीतावप्येकस्यैव भेदस्यानेकाश्रितत्वं प्रतीयत इति चेत्तत्राह न च विशेषप्रमाणेति । एकस्यैवानेकनिष्ठत्वे विशेषप्रमाणं नास्तीत्यर्थः । अन्यो विधिः भेदवन्ताविमावित्यत्रानेकाश्रित एक एव भेद इति त्वयोच्यमानः प्रकारः ।

सु० — नन्वनयोर्भेदोऽमीषां भेद इति प्रतीतावनेकाश्रितं पृथक्त्वमुपलभ्यते । तत्कथमेतदिति चेत् । किमत्रानेकस्य धर्मितयाऽवभासं प्रमाणयसि, उत धर्मस्यैकत्वावभासम्, उतोभयावभासम् । पक्षत्रयेऽप्युत्तरमाह अनयोरिति ।

अनु० — अनयोर्भेद इत्यपि ॥
इतोऽमुष्यामुतोऽमुष्य भेदो दृष्टो द्विधर्मिकः ॥

अस्यामपि प्रतीतावितो घटादमुष्य पटस्यामुतः पटादमुष्य घटस्य भेद इत्येवं द्विधर्मिको भेदो दृष्टः । तथा च नैवस्य धर्मित्वेऽपि धर्मस्यैकत्वावभासासम्मतेर्नानेनाभिमतार्थसिद्धिरित्युक्तं भवति । अनेनैवानयोः संयोग इत्यादिप्रतीतिरपि व्याख्याता द्रष्टव्या ।

शे० — अनेकाश्रितं पृथक्त्वमुपलभ्यत इति । उपलक्षणं चैतत् । अनयोः संयोगोऽमीषां संयोग इत्यादिप्रतीतौ संयोगादेरप्यनेकाश्रितत्वोपलम्भात्संयोगादेरपि नैकैकाश्रितत्वमित्यपि द्रष्टव्यम् ॥ एकत्वावभासासम्मतेरिति । एकवचनस्यान्यथासिद्धेर्वक्ष्यमाणत्वादिति भावः । अनेन मूलेऽनेकपदमध्याहार्यमिति सूचयति । अत एवानेकधर्मिकानेकभेदविषयत्वमित्युत्तरत्रानुवादः सङ्गच्छत इति द्रष्टव्यम् ॥ व्याख्याता द्रष्टव्येति । अस्यामपि प्रतीतौ घटस्य पटेन संयोगः पटस्य घटेन संयोग इत्येवं द्विधर्मिकः संयोगो दृष्टः । तथा चानेकस्य धर्मित्वेऽपि धर्मस्यैकत्वावभासासम्मतेर्नानेनाभिमतार्थसिद्धिरिति व्याख्याता द्रष्टव्येत्यर्थः ।

या० — एकत्वावभासेति । एकवचनस्यान्यथासिद्धेर्वक्ष्यमाणत्वादिति भावः । अनेन मूलेऽनेक इति पदमध्याहार्यमिति सूचयति ।

श्री० — अत्रेति । एकस्यानेकाश्रितत्व इत्यर्थः ।

सु० — ननु वचनलिङ्गा हि वक्तुरभिप्रायाः । भेद इति चैकवचनं प्रयुज्यते । तेन अनुमीयतेऽस्यां प्रतीतावेक एव भेदो द्विधर्मिको दृष्ट इति । तस्मादन्योन्यप्रतियोगिकानेकधर्मिकानेकभेदविषयत्वं प्रतीतेर्न वक्तुं शक्यमित्यत आह तत्रेति ।

अनु० — तत्रैकवचनं यत्तद्विप्राणां भोजनं यथा ॥

तत्र अनयोर्भेद इत्यादिवाक्ये, भेदद्वये वा । भोजनमित्येकवचनं यथा तथेत्यर्थः । एतेन एकवचनेन प्रतीतेरेकार्थविषयत्वानुमानेऽनैकान्तिकत्वं समुदायविषयत्वेनान्यथासिद्धिश्चेत्युक्तं भवति । अवयविनस्त्वेकत्वेऽपि न कश्चिद्दोषः । आकाशस्य स्वावयवैरभेदवदवयवानामप्यभेदस्य अङ्गीकृतत्वात् । पटस्य च यादृशेन तन्तुसमुदायेनात्यन्ताभेदोऽभिहितः स एक एव । व्यति-

**षक्तानां तन्तूनां विशिष्टाकारो ह्यसौ । स चागन्तुकत्वात्तन्तुभ्यो भिन्नाभिन्न एव । एकैकेन तन्तुना सर्वैश्चाभेदेऽपि भेदस्यापि विद्यमानत्वान्नान्योन्याभेदप्रसक्तिरिति स्वयमेवोह्यतामिति नोक्तम् ।**

शे० — तत्रैकवचनमिति भेद इत्येकवचनगतिकथनानर्थक्यमाशङ्क्य प्रतीतिकार्यव्यवहारे एकवचनप्रयोगात् कारणीभूतप्रतीतेरेकार्थविषयत्वसिद्ध्या पूर्वोक्तस्य प्रतीतेरन्योन्यप्रतियोगिकानेकधर्मिकानेकभेदविषयत्वस्यानुपपत्तिशङ्कानिरासार्थत्वान्न तदिति भावेन तत्परतया तद्योजयितुमुक्तानुपपत्तिशङ्कामुत्थापयति **नन्विति** ॥ **एक एव भेदो द्विधर्मिको दृष्ट इति** । उपलक्षणं चैतत् । संयोगो विभाग इति चैकवचनं प्रयुज्यते, तेनानुमीयतेऽस्यां प्रतीतावेक एव संयोगादिर्द्विधर्मिको दृष्ट इत्यपि द्रष्टव्यम् । भेदेत्युपलक्षणन् । अन्योन्यप्रतियोगिकानेकधर्मिकानेकसंयोगादिविषयत्वं प्रतीतेर्न वक्तुं शक्यत इत्यपि द्रष्टव्यम् ॥ **अनैकान्तिकत्वमिति** । सत्यपि भोजनमित्येकवचनप्रयोगे व्यवहारकारणीभूतभोजनप्रतीतेरेकार्थविषयत्वाभावादिति भावः ॥ **समुदायविषयत्वेनेति** । भवेत् प्रतीतिकार्यव्यवहारे एकवचनप्रयोगात् तत्कारणप्रतीतेः एकार्थविषयत्वानुमानं, यदि प्रतीतेरेकार्थविषयत्वं विना तत्कार्ये व्यवहारे एकवचनमनुपपन्नं स्यात्, न चैतदस्ति । प्रतीतेरेकार्थविषयत्वाभावेऽपि समुदायविषयतामात्रेणैकवचनप्रयोगनिर्वाहादन्यथासिद्धिश्चेत्यर्थः । गुणगुण्याद्यभेदानुपपत्तिपरिहारवत् अवश्यवक्तव्यस्यावयवावयव्यभेदानुपपत्तिपरिहारस्य मूलेऽनुक्त्या प्रसक्तां न्यूनतां तदनुक्तौ निमित्तकथनेन परिहरिष्यन्नेव स्वयं तां परिहरति **अवयविनस्त्विति** । अवयवैरिति शेषः ॥ **न कश्चिदिति** । अवयवानामभेदप्रसङ्गरूपो वाऽवयविनो भेदप्रसङ्गरूपो वेत्येवं न कश्चिदित्यर्थः । तत्कथमित्यत उक्तो दोषः किमाकाशादावभिप्रेतः किंवा पटादाविति विकल्पद्वयं मनसि निधायाद्यं प्रत्याह **आकाशस्येति** ॥ **अवयवानामपीति** । परस्परमिति शेषः । तथा च तत्रावयवाभेदापादनमिष्टापादनमिति भावः । द्वितीये त्वाह **पटस्य चेति** ॥ **स एक एवेति** । तथा च तत्राप्यैक्यापादनमिष्टापादनत्वादनुपपन्नमिति भावः । यादृशेन समुदायेनेत्युक्तमेव विशदयति **व्यतिषक्तानामिति** ॥ **असाविति** । समुदाय इत्यर्थः । ननु विशिष्टाकारेणैव पटस्याभेदेन तन्तुभिरभेदस्यानभ्युपगमात्पटैक्येन तन्तूनामभेदापादनासम्भवेऽप्येकस्य विशिष्टाकारस्यानेकतन्त्वभेदाद्विशिष्टाकारैक्येणैव तन्तूनां परस्परमभेदापादनमनिवार्यमेवेत्यतो भवेदेतदेवं यदि विशिष्टाकारस्य तन्तुभिरत्यन्ताभेदः स्यान्न चैतदस्तीत्याह **स चेति** । आगन्तुकत्वादिति विशिष्टाकारस्य तन्तुभ्यो भिन्नत्वे खण्डितस्वरूपहेतुकथनम् । ननु पटैक्येन न विशिष्टाकारैक्यमापादयामो, येनेष्टापादनं स्यात् । किन्त्वयं तन्तुस्तन्त्वन्तराभिन्नस्तदभिन्नपटाभिन्नत्वात् । सर्वतन्तवो वा परस्परमभिन्ना अन्योन्याभिन्नपटाभिन्नत्वादिति तन्तूनामेवान्योन्याभेद-

मेवेति नेष्टापत्तिरित्यतो भवेदेतदेवं यदि पटस्यैकैकेन तन्तुनाऽविवक्षितव्यतिषङ्गैः सर्वतन्तुभिर्वाऽत्यन्ताभेदः स्यान्न चासावस्तीति न तदापत्तिरिति पूर्वोक्तमेव परिहारं स्मारयति **एकैकेनेति** । ततश्च यत् यद्भिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तिरत्यन्ताभेदस्थलमात्रनिष्ठेति भावः । अत एवाकाशावयवानां पूर्वमन्योन्याभेद उक्त इति ज्ञातव्यम् ॥ **स्वयमेवोह्यतामिति** । स्पष्टत्वाच्छिष्यैरिति शेषः । **नोक्तं** भाष्यकृतेति शेषः ।

**स०** — 'संयोगश्च विभागश्च भेदश्चैव' इत्यादिना संयोग विभाग-भेदानामेकद्रव्याश्रितत्वोपपादनेन गुणगुणिनोरैक्य एव मूलकारेणानुपपत्तिपरिहारः कृतः । स चोपलक्षणमित्यभिप्रायेण **'एको हि अवयवी, अनेके चावयवाः** । तदभेदे अवयवानामप्यभेदः, अवयविनो वा भेदः प्रसज्येते'त्युक्तानुपपत्तिं परिहर्तुं प्रतिजानीते **अवयविनरित्वति** । **तन्तूनां विशिष्टाकारो हीति** । तद्विशिष्टाकाराभिन्न इत्यर्थः । **नान्योन्याभेदप्रसक्तिरिति** । तदभेदे अवयवि(वा)नामप्यभेदः अवयविनो वा भेद इत्यन्योन्याभेदप्रसक्तिर्नेत्यर्थः ।

**प०** — वचनलिङ्गा इति बहुव्रीहिः ॥ **तेनानुमीयत इति** । अनयोर्भेद इत्यादिवाक्ये प्रतीतं पृथक्त्वादिकमप्येकैकमेव भवितुमर्हति एकवचनान्ततयाऽऽप्तोक्तत्वात् । घटोस्तीत्यादिवाक्यप्रतीतघटादिवदित्यनुमीयत इत्यर्थः । यदुक्तं प्रा'गेको ह्यवयवी अनेके चावयवाः तदभेदेऽवयवानामप्यभेदः अवयविनो वा भेदः प्रसज्यत' इति तदुद्धरति **अवयविनस्त्वेकत्वेपीति** । अवयविपदेनाकाशादिरकार्योऽभिमतः, अथ कार्यो घटादिरुभयत्रापि क्रमेण समाधिमाह **आकाशस्येत्यादिना** । एकेन पटेनाभेदे तन्तूनामन्योन्याभेदापादनं किं व्यतिषङ्गदशायामथान्यदा । आद्ये नानिष्टमित्याह **यादृशेनेति** । अन्त्ये आह **स चेति** ॥ **तन्तुभ्य इति** । अव्यतिषक्तेभ्य इति भावः । तावता कथमुक्तदोषनिरास इत्यत आह **एकैकेनेति** । **नोक्तं** ग्रन्थकृतेति योज्यम् ।

**या०** — मूलमुपलक्षणपरमित्यभिप्रेत्याह **अवयविनस्त्विति** । उक्तो दोषः किमत्राकाशादावखण्डितेऽवयविन्युताखण्डिते पटादाविति विकल्पमभिप्रेत्याद्यं दूषयति **आकाशस्येति** । तथा चावयविन एकत्वेऽवयवानामभेदापादनं तत्रेष्टमेवेति भावः । द्वितीये त्वाह **पटस्य चेति** ॥ **स एक एवेति** । तथा च तत्रैक्यापादनमिष्टमेवेति भावः । ननु न व्यतिषङ्गविशिष्टे तन्तुसमदाये ऐक्यमापाद्यते, येनेष्टापादनं स्यात् । किन्त्वविवक्षितव्यतिषङ्गेष्वेव सर्वतन्तुष्विति शङ्कायां तत्र पटेनात्यन्ताभेदरूपतापादकमेव सिद्धमित्याह **व्यतिषक्तानामित्यादिना** । नन्वथाऽप्ययं तन्तुस्तन्त्वन्तराभिन्नस्तदभिन्नपटाभिन्नत्वात् । सर्वतन्तवो वाऽन्योन्याभिन्ना अन्योन्याभिन्नपटाभिन्नत्वादिति तन्तूनामेवान्योन्याभेदप्रस-

क्तिरित्यत आह **एकेकेनेत्यादिना**। ततश्च यत् यदभिन्नाभिन्नं तत्तदभिन्नमिति व्याप्तिरत्यन्ताभेदस्थल-मात्रनिष्ठेति भावः। अत एवाकाशावयवानां पूर्वमन्योन्याभेद उक्त इति ज्ञातव्यम् ॥

**श्री० — वचनलिङ्गा** वचनरूपलिङ्गेनानुमेयाः। **अनुमाने** अयं पुरुष एकार्थविषयप्रतीतिमान् एकवचनप्रयोक्तृत्वादित्यनुमानेऽनैकान्तिकत्वम्, विप्राणां भोजनमित्यत्रैकवचनप्रयोग एकार्थविषयप्रतीतिं विना समुदायविषयत्वेनाप्युपपन्न इत्यन्यथासिद्धिः। नन्वेकेन संयोगादिनाऽभिन्नत्वात्तदाश्रयाणामप्यभेदः स्यादिति दूषणं यद्यपि नास्ति, संयोगस्यानेकत्वेनापादकासिद्धेः। तथाऽप्येकेनावयविनाऽभिन्नत्वादवयवानामभेदःस्यादिति यद्दूषणं 'अथापि स्या'दित्यादिना ग्रन्थेनोक्तं तदपरिहार्यमेव। तत्र संयोगादिन्यायासम्भवादित्यत आह **अवयविनस्त्विति**। नन्वेकावयव्यभिन्नत्वेऽवयवानामप्यन्योन्यमभेदः स्यादुक्तव्याप्त्या इत्यस्ति दोष इति चेत्तत्राह **आकाशस्येति**। **अभेदवत्** अत्यन्ताभेदवत्। **अङ्गीकृतत्वात्** तथा चेष्टापत्तिर्गगनाद्यवयविविषये इति भावः। ननु तर्हि तत्र माऽस्तु। तथाऽप्येकेन पटरूपेणावयविनाऽभिन्नतन्तूनां परस्परमभेदः स्यादित्यापाद्यत इति चेत्तत्राह **पटस्येति**। **यादृशेन** व्यतिषङ्गविशेषविशिष्टतन्तुसमुदायेन। **स एक एवेति**। तथा च तत्रावयवभूतस्य विवक्षिततन्तुसमुदायस्यैकत्वेनावयवाभेदः स्यादित्यापादनमिष्टमित्यर्थः। ननु तन्तूनां विशिष्टाकारस्यैव पटत्वात्तदभिन्नानां विवक्षितविशेषतन्तूनामपि परस्परमभेदः स्यादुक्तव्याप्त्येत्यत आह **व्यतिषक्तानामिति**। **असौ** पटः ॥ **स चेति**। तन्तुनिष्ठः पटरूपो विशिष्टाकारः। भिन्नाभिन्नत्वे उक्तामुक्तिं स्मारयति **आगन्तुकत्वादिति**। केवलतन्तुषु सत्स्वपि पटरूपविशिष्टाकारस्यासत्त्वादित्यर्थः। **तन्तुभ्यः** व्यतिषङ्गविशेषरहिततन्तुभ्यः ॥

**च० — वचनलिङ्गा हीति**। वचनं परिभाषणं लिङ्गमनुमापकं येषामिति बहुव्रीहिरतो न पुंस्त्वानुपपत्तिः।

**सु० — नन्वेवं तर्हि संयोगादेरप्येकैकाश्रितत्वं न वक्तव्यम्। अयावद्द्रव्यभावित्वेन भेदाभेदाभ्यामेवोक्ताक्षेपसमाधानादिति। सत्यम्। तथाऽपि वस्तुस्थितिरियमुक्तेत्यदोषः। अपि चाजसंयोगे नायं समाधिः संभवति। स एव नास्ति प्रमाणाभावादिति चेन्न। परमाणोः आकाशादिसंयोगाङ्गीकारात्। सोऽपि परमाणुकर्मज इति चेन्न। प्रागसंयोगप्रसङ्गात्। अंशभेदादेति चेन्न। स्वाभाविकस्यानभ्युपगमात्। औपाधिकस्य च निराकरिष्यमाणत्वात्।**

**किञ्चाकाशमीश्वरेण संयुज्यते द्रव्यत्वाद्घटवत्। न च मूर्तत्वमुपाधिर्विशेषणवैयर्थ्यात्। परिच्छिन्नपरिमाणवत्त्वं हि मूर्तत्वम्। तत्र परिमाणवत्त्वेनैवालम्। परिच्छिन्नत्वविशेषणं तु व्यर्थमेव। आकाशमीश्वरेण न संयुज्यते अमूर्तत्वाद्रूपवदिति चेन्न। अद्रव्यत्वस्योपाधित्वादिति ॥**

शे० — संयोगश्चेत्यादिभाष्यानर्थक्यमाशङ्कते **नन्विति** । **एवं तर्हीति** । यदि अवयवावयव्यभेदपक्षोक्ताक्षेपस्य तद्भेदाभेदाभ्यामेव समाधानं तर्हीत्यर्थः । कथं तर्हि गुणानां गुणिनैक्ये संयोगाद्याश्रयानेकद्रव्याभेदो वा संयोगादि दो वाऽऽपद्येतेति गुणगुण्यभेदपक्षोक्ताक्षेपसमाधानमित्याशङ्क्यैवं तर्हीति सूचितमेव प्रपञ्चयति **अयावद्द्रव्यभावित्वेनेति** ॥ **तथाऽपीति** । अनेन नोक्ताक्षेपपरिहारकतया ग्रन्थो योज्यः किन्त्वेवमाक्षेपपरिहारे सत्येव स्वयं वस्तुस्थितिमाहेत्येवेति सूचयति । अस्मिन्पक्षे भाष्यस्य वस्तुस्थितिकथनपरता भवतीत्यपरितोषादाह **अपि चेति** । तत्र यावद्द्रव्यभावित्वेन भेदाभेदयोरनुपपत्त्या ताभ्यामेवोक्ताक्षेपसमाधानानुपपत्तेस्तत्समाधानार्थमेकैकाश्रितत्वस्यैव वक्तव्यतया तत्परभाष्यस्यार्थवत्त्वमित्याशयः ॥ **अङ्गीकारादिति** । आकाशस्य निष्क्रियत्वेन तत्कर्मजन्यत्वस्य निरवयवतया संयोगजस्य च संयोगस्यासम्भवात्परमाण्वाकाशसंयोगस्याजन्यत्वमिति भावः । आकाशस्य विभुत्वेन निष्क्रियत्वात्तत्कर्मजन्यत्वासम्भवेऽपि परमाणोः सक्रियत्वेन तत्कर्मजन्यत्वादन्यतरकर्मजन्यत्वमिति न तत्संयोगस्याजन्यत्वमिति शङ्कते **सोऽपीति** ॥ **प्रागसंयोगेति** ॥ अप्राप्तिपूर्वकप्राप्तेरेव संयोगतया प्रागसंयोगं विना संयोगासम्भवादित्यर्थः । न चेष्टापत्तिः । व्यापकत्वादाकाशस्य प्राक् परमाणुभिरसंयोगानुपपत्तेरिति भावः । ननु च परमाणौ वर्तमाना क्रिया संयुक्तेनाकाशप्रदेशेन स्वाश्रयं विभज्यासंयुक्तेन तेन संयुनक्तीति न लक्षणानुपपत्तिरिति शङ्कते **अंशभेदादिति** । किमत्राकाशप्रदेशः स्वाभाविकोऽभिमतः किंवौपाधिक इति विकल्पं मनसि निधायाद्यं प्रत्याचष्टे **स्वाभाविकस्येति** । तथा चापसिद्धान्त इति भावः । द्वितीयं प्रत्याह **औपाधिकस्य चेति** ॥ **निराकरिष्यमाणत्वादिति** । 'नानिर्वाच्यं हि तेनेष्टमत औपाधिकान्ययोः । सत्यत्वात्को विशेषः स्यादि'त्यादिनेति शेषः ।

एवं परमाणोराकाशादिना संयोगस्य परमाणुकर्मजन्यत्वानुपपत्तेरजन्यत्वमेवेत्युक्तम् । इदानीं विभूनां परस्परं संयोगोऽप्यजसंयोग इत्यभिप्रेत्य तत्साधकमनुमानमुपन्यस्यति **किञ्चेति** । न चायं कर्मजन्यः सम्भवति विभूनां निष्क्रियत्वात् । नापि संयोगजस्तेषां निरवयवत्वादतः परिशेषादज एवायं संयोग इति भावः । घटेश्वरसंयोगाश्रयत्वस्य घट इवेश्वरेऽपि वृत्त्या तत्र च मूर्तत्वविरहेण न साध्यव्यापकत्वमिति सत्येव दोषे दोषान्तरमाह **विशेषणेति** । तद्वैयर्थ्यमेवोपपादयति **परिच्छिन्नेति** ॥ **परिच्छिन्नविशेषणं त्विति** । न च साधनाव्यापकतानिर्वाहाय तत्सार्थकमिति वाच्यम् । तथात्वे प्रतिपक्षोन्नयनेऽसिद्धिवारकत्वप्रसङ्गेन वैयर्थ्यानिस्तारात् ॥ **आकाशमिति** । यद्यपि मूर्तत्वोपाधौ व्यर्थविशेषणत्वोक्त्या तदुन्नेयप्रतिपक्षानुमानेऽसिद्धिवारकतया विशेषणवैयर्थ्यसूचनात्प्रतिपक्षानुमानमपि दूषितप्रायमेवेति न पुनः प्रतिपक्षमाशङ्क्य निराकरणं युक्तम् । तथाऽपि दूषणान्तरविवक्षया पुनराशङ्क्यमिति द्रष्टव्यम् ॥ **अद्रव्यत्वस्योपाधित्वादिति** । यद्यपि सत्प्रतिपक्षे नोपाध्युद्भावनं युक्तम् । पूर्वानुमानस्यैव तत्र

सत्प्रतिपक्षतया तस्य वैयर्थ्यात् । तथाऽपि स्वपक्षसाधनार्थमेकं परसाधनप्रतिरोधनार्थमपरमिति द्वयोरप्यर्थवत्त्वात् । अन्यायो ह्येकेन बहूनां प्रतिरोधः । उक्तं च 'द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावत' इत्यादिना । नन्वेवमप्याकाशेश्वरौ परस्परं न संयुज्येते युतसिद्धिरहितत्वात् । अवयवावयविवदित्यनेन प्रतिपक्ष इति चेन्न । युतसिद्धिमात्राभावस्यासिद्ध्या परस्परयुतसिद्ध्यभावस्य च प्रतियोग्यसिद्ध्याऽयोगेन तदनवकाशात् । यदत्रोक्तं वर्धमानेनाकाशं नेश्वरसंयोगि, ईश्वरसंयोगप्रागभावशून्यत्वाद्रूपवदित्यत्रोक्तानुनस्यमा तात्पर्यमिति । तन्न । अद्रव्यत्वस्यात्राप्युपाधित्वेनासमानबलत्वात् ।

प०— **उक्ताक्षेपेति** । संयोगिनोरप्यैक्यापादनरूपेत्यर्थः । नायं समाधिरिति पदच्छेदः । **निराकरिष्यमाणत्वादिति** । 'यद्यस्यौपाधिको भेदः कुत एकत्वमिष्यत'इत्यादिनाऽत्रैव समवायनिरासप्रकरणे निराकरिष्यमाणत्वादित्यर्थः ॥ **व्यर्थमेवेति** । न च साधनाव्यापकत्वार्थं तदर्थवदिति वाच्यं । व्याप्तिग्रहौपयिकस्यैव त्वन्मतेऽर्थवत्त्वात् । साध्यसमव्याप्त उपाधिरिति मते परिमाणवत्त्वेनैव साध्यव्याप्यत्वस्येव साध्यव्यापकत्वस्य च ग्रहणसंभवेन गुरुधर्मावच्छेदेन तयोरग्रहणे साध्यव्यापकत्वाद्यभावापत्तेः । तदिदमाह **व्यर्थमेवेति** ॥ **संयोगादेरयुगधर्मत्वोक्तिः** ॥

या०— **निराकरिष्यमाणत्वदिति** । 'नानिर्वाच्यं हि तेनेष्टमत औपाधिकान्ययोः । सत्यत्वात्को विशेषः स्यादि'त्यत्रेति शेषः । **परिच्छिन्नविशेषणं त्विति** । न च साधनाव्यापकतानिर्वाहाय तत्सार्थकमिति वाच्यम् । तथात्वेऽपि प्रतिपक्षोन्नयनेऽसिद्धिवारकत्वप्राप्त्या वैयर्थ्यानिस्तारादित्याशयात् ॥

श्री०— **नन्वेवमिति** । एकस्यैवावयविनः पटादेरनेकावयवैर्भेदाभेदाङ्गीकारेणावयवानामप्यभेदापत्तिरूपदोषो यदि परिह्रियत इत्यर्थः । **उक्ताक्षेपेति** । एकेन संयोगादिनाऽभिन्नयोर्घटपटयोरपि परस्परमभेदापत्तिः, यत् यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तेरित्युक्तस्याक्षेपस्य संयोगादिना भेदाभेदाङ्गीकारेणोक्तदोषाभावात् उक्तव्याप्तिश्चात्यन्ताभेदस्थलविषयत्वादिति समाधानं संभवतीत्यर्थः । संयोगस्यैकस्यैवानेकाश्रितत्वं नास्तीति वस्तुस्थितिः ॥ **अजेति** । यः कालाकाशयोर्नित्यः संयोगस्तस्यैकस्यैवाश्रयेणाभेदे उक्तव्याप्तिबलादाश्रयाणामप्यभेदः स्यात् इत्याशङ्कायामयावद्द्रव्यभावित्वेन भेदाभेदयोः सत्त्वान्नोक्तदोष इति समाधानं न संभवति । अजत्वादेव तस्यायावद्द्रव्यवृत्तित्वाभावात् । अतस्तत्र संयोगो द्विष्ठ एव न भवतीत्यापादकासिद्धिरित्येव समाधानं वाच्यमिति भावः । **स एव** अजसंयोग एव ॥ **प्रमाणाभावादिति** । संयोगस्यान्यतरकर्मोभयकर्मजत्वनियमात् कालाकाशयोश्च कर्माभावान्नाजसंयोगोऽस्तीति भावः । **प्राक्** कर्माभावदशायाम् । ननु नायं दोषः परमाणुकर्मणा यस्मिन्नाकाशांशे संयोगो जायते, तस्य परमाणुसंयोगस्य पूर्वं कर्माभावदशायां तस्मिन्नेवाकाशांशेऽसत्त्वेऽपि आकाशांशानां भेदाद्बहुत्वाङ्गी-

कारात्तदंशभिन्नाकाशांशान्तरेण परमाणोः संयोगोऽस्त्येव, अतः प्रागसंयोगप्रसंगादित्येतदयुक्तमित्याशयेन शङ्कते **अंशभेदान्नेति चेदिति** । स्वाभाविकस्याकाशेंऽशस्येति शेषः ॥

**च० — अजसंयोगे** उत्पत्तिशून्यसंयोगे । **नायं समाधिः** अयावद्द्रव्यभावित्वेन भेदाभेदाभ्यामेवोक्ताक्षेपसमाधानम् । **निराकरिष्यमाणत्वात्** । 'नानिर्वाच्यं हि तेनेष्टमत औपाधिकान्ययोरि'त्यादिना प्रत्याख्यास्यमानत्वात् । **व्यर्थमेवेति** । अत्र व्याकर्तारः 'न च साधनाव्यापकतानिर्वाहाय तदिति वाच्यमिति शङ्कमानास्तथात्वे प्रतिपक्षोन्नयनेऽसिद्धिवारकत्वप्रसङ्गेन वैयर्थ्यानिस्तारादि'ति समादधति । व्याप्तिग्रहौपयिकस्यैव तन्मतेऽर्थवत्त्वात् । साध्यसमव्याप्त उपाधिरिति मते परिमाणवत्त्वेनैव साध्यव्याप्यत्वस्यैव साध्यव्यापकत्वस्य च ग्रहसंभवेन गुरुधर्मावच्छेदेन तयोरग्रहणे साध्यव्यापकत्वाद्यभावापत्तेरित्यपि समादधते ॥ ॥ **संयोगादेः प्रातिस्विकत्वसमर्थनम्** ॥

**सु० — इदानीं सामान्यस्यैकैकाश्रितत्वमाह** नरत्वादिकमिति ।

**अनु० —** नरत्वादिकमप्येवं

एवं **संयोगादिवदेकैकवृत्तीत्यर्थः** । **सामान्यमपीति वक्तव्ये ब्राह्मणत्वादेरयावद्द्रव्यभावित्वेनापि तत्र परिहारः संभवतीति ज्ञापयितुं नरत्वादिकमित्युक्तम् । उपपादनं च नैकप्रकारमिति योगविभागः ॥ कुतो नरत्वादिकं प्रतिव्यक्ति भिन्नमित्यत आह** तत्तदिति ।

तत्तद्धर्मतयेयते ॥

**यथाहि नरेषूपलभ्यमानेषु तदीयं रूपादिकं प्रतिनियतमुपलभ्यते । तथा नरत्वादिकमपि तत्तन्नियतधर्मतयैवेयते दृश्यते इति प्रत्यक्षमुक्तम् ॥ यद्वा योऽनेकाश्रितो धर्मो नासावेकैकप्रतीतौ प्रतीयते, यथा द्वित्वादि । प्रतीयते च नरत्वादिकमेकैकप्रतीतावतो नानुगतमित्यनुमानमनेन सूचयति ।**

शे० — एवमित्यनेन पृथक् पृथगिति साध्यस्यैवान्योन्यप्रतियोगेनेति साधनस्याप्यतिदेश इति भ्रान्तिवारणाय तदर्थमाह **एवमिति** । **ब्राह्मणत्वादेरिति** । महापातकेन ब्राह्मणत्वजातेरपायान्न पिण्डेन तस्या अत्यन्ताभेदः, किन्तु अयावद्द्रव्यभावित्वात्पिण्डेन भेदाभेदावेव । ततश्च तत्र भेदाभेदाभ्यामेव व्यक्त्यभेदेऽपि सामान्यस्याश्रयाभेदादेः परिहारसम्भवान्नैकैकद्रव्यवृत्तित्वापेक्षत्वमिति भावः । न च महापातकेन ब्राह्मणत्वजातेरपाये मानाभावः शङ्क्यः, 'मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयादि'त्यादिस्मृतेरेव तत्र मानत्वात् । नन्वेतैर्वाक्यैर्न विवक्षितार्थसिद्धिः । एतानि कर्मनिन्दावचनानि वर्णत्रयकर्महानिप्रतिपादनार्थानि चेति भाट्टैरुक्तत्वादिति चेन्न । शूद्रशब्दस्य बाधकं विना जातिरूपस्वार्थपरित्यागेनान्यपरत्वा-

योगात् । किञ्च कर्मनिन्दापरत्वे तस्माद्ब्राह्मणाय नावगुरेदित्यवगोरणादिनिषेधशेषभूतानां 'योऽवगुरेत्तं शतेन यातयेदि'ति शतयातनादिवाक्यानामपि कर्मनिन्दापरत्वात्फलपरत्वाभावप्रसङ्गेनावगोरणनयभङ्ग-प्रसङ्गात् । वर्णत्रयकर्महानिप्रतिपादनार्थत्वे च 'वसन्ते ब्राह्मणोऽग्नीनादधीते'त्यादावपि ब्राह्मणशब्दस्य क्षत्रियवैश्यकर्मराहित्यपरत्वस्य वक्तुं शक्यत्वाच्छूद्रस्याप्यग्निविद्यासम्भवेन वैदिककर्माधिकारस्याऽपशू-द्राधिकरणभङ्गप्रसङ्गाच्च । विश्वामित्रत्रिशङ्क्वादीनां च वरशापादिना क्षत्रियत्वापाये ब्राह्मणत्वादिप्रा-प्तिस्मरणाच्च । न च तान्यपि ब्राह्मणकर्मयोग्यत्वप्रतिपादनार्थानीति युक्तम् । ब्राह्मणत्वजातेरभावे ब्राह्मण्योद्देश्येन विहितकर्मयोग्यताया एवासम्भवादित्यास्तां विस्तरः ॥ **योगविभाग इति** । 'संयोगश्च विभागश्चे'ति 'नरत्वादिकमप्येवं' इतीत्येवंरूपो वाक्यभेद इत्यर्थः ॥ **अनुमानमिति** । नरत्वादिकमनेका-श्रितो धर्मो न, एकैकप्रतीतौ प्रतीयमानत्वादित्यनुमानमित्यर्थः ।

**स०— तत्र परिहारस्सम्भवतीतीति** । आश्रययोरभेदपरिहारसंभवादिति भावः । **योगविभाग इति** । 'संयोगश्च विभागश्च भेदश्चैव पृथक् पृथक्' । ('नरत्वादिकमप्येवं') वाक्यविभाग इत्यर्थः ।

**प०— अयावद्द्रव्यभावित्वेनापीति** । महापातकादिना ब्राह्मणत्वादेर्नाशेन तस्य यावत्स्वा श्रयभावित्वाभावेन स्वाश्रयाद्भेदस्यापि संभवाद्ब्राह्मणत्वादेरनेकव्यक्त्यनुगतस्य व्यक्त्या साकमभेदे व्यक्तीनामन्योन्यमभेदः स्यादिति दोषपरिहारः संभवति । नरत्वादेरनेकानुगतस्य व्यक्त्यभेदे व्यक्तीनामभेदो दुष्परिहरः । अतस्तस्य प्रतिव्यक्ति भिन्नत्वोक्तौ च व्यक्तिभेदापत्तिदोषपरिहारार्थ इति ज्ञापयितुमित्यर्थः । ननु 'संयोगश्च विभागश्च भेदश्चैव पृथक्पृथगिति'वाक्य एव नरत्वादिसामान्यमप्यसंगृह्य 'नरत्वादिकम-प्येवमि'ति भिन्नवाक्येन सामान्यस्यैकाश्रितत्वं किमर्थमुक्तमित्यत आह **उपपादनं चेति** । संयोगादेः घटः पटेन संयुक्तः पटाद्विभक्त इति पटाद्यन्यप्रतियोगिकतया घटादिधर्मिकतया प्रतीत्या प्रतियोगिधर्मि-ताऽयोगेनैकधर्मत्वम् । जातेस्त्वेकप्रतीतावेव प्रतीतेरेकधर्मित्वमित्येवं धर्मिप्रतियोगिविभागाद्वाक्यभेदः ।

**या०— अयावद्द्रव्यभावित्वेनापीति** । अयावद्द्रव्यभावित्वे भेदस्यापि सत्त्वेनाश्रयाभेदा-प्रसक्तेरिति भावः ॥

**श्री०— परिहार इति** । ब्राह्मणत्वस्य व्यक्त्यभेदे तासामपि परस्परमभेदः स्यादित्याक्षेपेऽया-वद्द्रव्यभावित्वेन खण्डितत्वाद्भेदाभेदोक्त्या परिहारः सम्भवतीत्यर्थः । सत्यपि धर्मिणि रसविक्रयादिना ब्राह्मण्यनाशस्य 'मासेन शूद्रो भवति ब्राह्मणो रसविक्रया'दि'त्यागमसिद्धत्वादिति भावः । अतो यावद्द्-द्रव्यभावि नरत्वाद्येव गृहीतम् । ननु संयोगादिवन्नरत्वादेरपि प्रातिस्विकत्वे 'संयोगश्च विभागश्च भेदश्चैव पृथक् पृथक् । नरत्वादि चेति' तत्रैव कस्मात्संयोगादिसमकक्षत्वेन नोक्तमतो वाक्यभेदो व्यर्थ

इत्यत आह **उपपादनमिति** । **योगो** वाक्यम् ॥ **सूचयतीति** । नरत्व दिकं नानेकानुगतमेकैकप्रतीतौ प्रतीयमानत्वाद्व्यतिरेकेण द्वित्वादिवदित्यनुमानं सूचयतीत्यर्थः ॥

**च०— अयावद्द्रव्यभावित्वेनेति** । महापातकादिना ब्राह्मण्याद्यभावस्य स्मृतिसिद्धत्वादिति भावः ।

**सु०— किञ्च नरत्वादिकं नानेकानुवृत्तं धर्मत्वाद्रूपादिवत् । अस्याभासोद्धारं करोति नेति**

**अनु०—** न सर्वधर्म एकोऽस्ति

सर्वधर्मः **अनेकवृत्तिधर्मः । तेन धर्मत्वं न भग्नव्याप्तिकमिति शेषः । पक्षधर्मता तु स्फुटैवेति** ।

**शे०—** ननु 'न सर्वधर्म एकोऽस्ती'त्येकस्य धर्मस्यानेकवृत्तित्वाभावप्रतिपादनमनर्थकम् । न च धर्मत्वस्य व्याप्तिभङ्गराहित्यप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्यापि प्रकृतोपयोगादर्शनेनानर्थकत्वादित्यतः पूर्वोक्तार्थे तदुपयोगाभावेऽपि सामान्यस्यानेकवृत्तित्वाभावसाधकतयाऽभिप्रेतानुमाने आभासोद्धारार्थकत्वात्तस्य न तत्प्रतिपादनानर्थक्यमिति भावेनाभिप्रेतानुमाने तदुद्धारपरतया तद्योजयितुमभिप्रेतमनुमानं तावदाह **किञ्चेति** । नन्वत्र धर्मस्यानेकवृत्तित्वाभावमात्रमुच्यते न तु धर्मत्वस्य भग्नव्याप्तिकत्वराहित्यमिति कथमस्याभासोद्धारपरत्वमित्यतोऽपेक्षितं शेषमाह **तेनेति** । नन्वेवमाभासोद्धारार्थं प्रवृत्तेन व्याप्तिभङ्गराहित्यवत् अपक्षधर्मत्वराहित्यस्याप्युपदर्शनीयत्वात् पक्षधर्मताया अपि वक्तव्यत्वेनावश्यवक्तव्यानुक्त्या भाष्ये न्यूनत्वमित्याशङ्क्य स्पष्टत्वाच्छिष्यैरेव तस्या ज्ञातुं शक्यत्वेन अवश्यवक्तव्यत्वाभावान्न तदनुक्तिर्न्यूनत्वापादिकेत्याशयेनाह **पक्षधर्मता त्विति** । अतो न स्वयमुपदर्शितेति वाक्यशेषः । उपलक्षणं चैतत् । व्याप्तिवदावश्यकत्वाभावज्ञापनार्थं चेत्यपि द्रष्टव्यम् ।

**सु०— नन्वनेकत्वसंख्या तावदनेकाश्रिता । एकैकस्मिन्द्वित्वादेः शङ्कितुमप्यशक्यत्वात् । न हि द्वित्वादिकमेकैकप्रतीतौ प्रतीयते । न च प्रतियोगिनिरूप्यम् । धर्मितयैवानेकेषामनुभवात् । अतो धर्मत्वहेतोस्तत्रानैकान्त्यमित्यत आह** समुदायस्त्विति ।

**अनु०—** समुदायस्तु भिन्नगः ॥

**समुदायोऽनेकत्वं भिन्नगोऽनेकाश्रितः । सत्यमनेकत्वसंख्याऽनेकाश्रिता । तथाऽपि तदन्यत्वेन हेतुविशेषणाददोष इति भावः । सा चापेक्षाबुद्धिजन्यत्वाद्यावद्द्रव्यभाविनी** भिन्नाभिन्नेति नाश्रययोरभेदापत्तिः ।

**शे०** — तथाऽपि समुदायस्तु भिन्नग इत्यनेकत्वसङ्ख्याया अनेकाश्रितत्ववर्णनमनर्थकमित्याशङ्क्यानेकत्वसङ्ख्यायामुक्तहेतोर्व्यभिचारपरिहारार्थत्वान्न तदिति भावेन तच्छङ्कापरिहारकतया तद्योजयितुं तच्छङ्कामुत्थापयति **नन्विति** । शङ्कितुमशक्यत्वादित्युक्तं तत्कुत इत्यतो बाधकसद्भावादित्यत आह **न हीति** । एकैकवृत्तित्वे एकैकप्रतीतावेव प्रतीयेत । न च तथा प्रतीयते । तस्मान्न तस्यैकैकवृत्तित्वमिति भावः । एकैकवृत्तित्वेऽपि संयोगादिवत्प्रतियोगिनिरूप्यत्वमात्रेणैकैकप्रतीतावेव प्रतीत्यभावः किन्न स्यादित्यत आह **न चेति** । यद्वा द्वित्वादेरेकैकवृत्तित्वस्य शङ्कितुमशक्यत्वादित्युक्तम्, तत्कुत इत्यत एकैकवृत्तित्वसाधकतया भवदभिमतयुक्तिद्वयस्याप्यत्रासम्भवादित्याशयवान्किं तस्य सामान्यवदेकैकप्रतीतावेव प्रतीयमानतयैकैकवृत्तित्वमभिमतं किंवा संयोगादिवदन्योन्यप्रतियोगिकत्वादिति विकल्पद्वयं मनसि निधायाद्यं निराचष्टे **न हीति** । धर्मत्वं च गहननिविष्टत्वान्न तत्साधकमित्याशयः । द्वितीयं निराचष्टे **न चेति** । तत्कुत इत्यत आह **धर्मिणयैवेति** । न तु प्रतियोगितयेत्येवार्थः । यद्यप्यत्र समुदायस्तु भिन्नग इति मूलानुरोधात्समुदायमात्रे व्यभिचारः शङ्कनीय इत्यनेकत्वसंख्याया तच्छङ्का न स्वरसा, तथाऽपि विशिष्टाकारस्य विशेष्याश्रितद्रव्यान्तरतया प्रधानत्वादुपसर्जनत्वरूपधर्मत्वाभावेन तत्साधारण्येन व्यभिचारशङ्काऽनुदयादनेकत्वसंख्यामात्राश्रयणेन तच्छङ्केति द्रष्टव्यम् ॥ **समुदायोऽनेकत्वमिति** । न चानेकत्वातिरिक्तसमुदायस्यैवाभावाद्व्यर्थं व्याख्यानमिति वाच्यम् । वनमिति प्रतीतिविषयीभूतवृक्षसमुदायस्य एकस्थानसम्बन्धनिमित्तकविशिष्टाकाररूपत्वेनानेकत्वसंख्यातिरिक्तस्यापि समुदायस्य सत्त्वेन तद्व्यावर्तनार्थत्वात् । न चैकस्थानसम्बन्ध एव वनमिति प्रतीतिविषयो न तु तन्निमित्तकविशिष्टाकार इति वाच्यम् । तथा सति दण्डीत्यादिप्रतीतेरपि दण्डसम्बन्धमात्रविषयकत्वापत्तौ अतिरिक्तविशिष्टसिद्धिप्रसङ्गात् । तथा च तत्रैव वनमित्यत्रापि विशिष्टाकार एव विषय इति कथमनेकत्वातिरिक्तसमुदायाभाव इत्युपपन्नं व्याख्यानमिति ध्येयम् नन्वनेन वाक्येन समुदायस्यानेकाश्रितत्वाभिधानाद्व्यभिचार एव दृढीकृतो न तु परिहृत इति कथं तत्परिहारकतया ग्रन्थावतार इत्यतोऽभिप्रायमाह **सत्यमित्यादिना** । एवं तर्हि व्यभिचाराभावेऽप्यनेकत्वसंख्याया आश्रयाभेदादाश्रयाणामभेदप्रसङ्गोऽनेकत्वसंख्याया वा भेदप्रसङ्ग इति प्रागुक्तं दोषं प्रसङ्गात्परिहरति **सा चेति** । नाश्रययोरभेदापत्तिरित्युपलक्षणम् । नानेकत्वसंख्याया भेदापत्तिरित्यपि द्रष्टव्यम् । अनेकत्वसङ्ख्ययेव यावद्द्रव्यभाविविशेषणविशिष्टाकारेणापीश्वरस्य भेदाभेदावेवाभिमतौ समुदायमूत इत्यत्र विशिष्टाकारस्याप्यभिमतत्वादिति बहवः ।

**प०** — नन्वेकप्रतीतावप्रतीयमानद्वित्वादिकं संयोगादिवदेकैकाश्रितमस्त्वित्यत आह **न च प्रतियोगिनिरूप्यमिति** । एवं तर्हि प्रागुक्तउदाश्रितव्यक्त्यभेददोषः स्यादेवेत्यत आह **सा चेति** ।

**या०** — **न हि द्वित्वादिकमिति** । येन नरत्वादिवदनेकाश्रितं न स्यादिति भावः । **न च प्रतियोगिनिरूप्यमिति** । तथा च संयोगादिवदपिश्रितैकमात्रातत्वमिति भावः ।

**श्री०** **न च प्रतियोगिनिरूप्यमिति** । येन, यो यत्प्रतियोगिको नासौ तद्धर्म इत्युक्तव्याप्तिबलात्संयोगनरत्वादिवदेकमात्राश्रितं स्यादिति भावः । कुतो न प्रतियोगिनिरूप्यं द्वित्वमित्यत आह **धर्मितयेति** ॥

**च०** — **प्रतियोगिनिरूप्यं** प्रतियोगिप्रतिपत्त्यधीनप्रतिपत्तिकम् ।

**सु०** — **प्राभाकरास्त्वाहुः । सादृश्यं तावदेकमनेकानुगतं, तत्र धर्मत्वहेतोर्व्यभिचारः । न च वाच्यं सामान्यमेव सादृश्यमतः पक्षे व्यभिचारचोदनेयमनुपपन्नेति । जातिसङ्करप्रसङ्गात् । अस्ति हि कयोश्चिदश्वरासभव्यक्त्योः सादृश्यं, तत्र यदि सादृश्यमश्वत्वात्परम् तदा सर्वेषामप्यश्वानां रासभसादृश्यं स्यात् । यदि चापरं तदा रासभव्यक्तावप्यश्वत्वं स्यात् । एवं रासभत्वेऽपि वाच्यम् । न सादृश्यमश्वरासभवृत्ति ब्रूमः । किन्तु तदवयववृत्ति । द्रव्यगुणाद्यवयकर्मवृत्तीनि सामान्यान्येव हि सादृश्यनामान्यभ्युपगच्छामोऽतो न जातिसङ्करदोष इति चेन्न । गौर्गवयेन सदृशीत्यादिव्यवहाराणाममुख्यत्वप्रसङ्गात् । न च सामान्यं प्रतियोगिनिरूप्यम् । तन्निरूप्यं च सादृश्यमिति स्फुटोऽनयोर्भेद इत्यत आह एतादृशं चेति ।**

**अनु०** — एतादृशं च सादृश्यं पदार्थेषु पृथक् पृथक् ॥

**भवतु सादृश्यं सामान्यतो भिन्नं तथाऽपि तत्पदार्थेषु पृथक् पृथगेवेति न तेन धर्मत्वहेतोर्व्यभिचारः । एतादृशमिति तत्रोक्तहेत्वतिदेशः । न हि सादृश्यस्यानेकवृत्तित्वे प्रमाणमस्ति । सदृशाविमावित्यादेः शुक्लाविमावित्यादिवदुपपत्तेः । अनयोः सादृश्यमित्यादेश्चास्यानेन सादृश्यमस्यानेन सादृश्यमित्युपपत्तेः । एकवचनस्य (च) विप्राणां भोजनमित्यादिवदुपपन्नत्वात्प्रतियोगिनो धर्मित्वासंभवाच्च । एकाश्रितत्वेऽपि प्रतियोगिनिरूप्यत्वेनैकैकप्रतीतावपि अप्रतीतिसंभवाच्चेति ।**

**शे०** — ननु 'एतादृशं च सादृश्यमि'ति सादृश्यस्यैकैकव्यक्तिमात्रवृत्तित्ववर्णनमनर्थकम् । न च साध्यस्य तत्रोपपादनेन धर्मत्वहेतोर्व्यभिचारपरिहारार्थं तदिति वाच्यम् । परमते सादृश्यस्य सामान्यरूपतया पक्षत्वेन तत्र व्यभिचारस्य शङ्कितुमशक्यत्वादित्यतो नेयं प्रतिवादिनः शङ्का, किन्तु प्राभाकरस्य । तेन च सादृश्यस्य सामान्यातिरिक्तत्वाङ्गीकारेणापक्षतया तत्र व्यभिचारचोदनाया युक्तत्वान्न तत्परिहारकोत्तरग्रन्थवैयर्थ्यमित्यभिप्रेत्य तदभिमतं सादृश्यसामान्ययोर्भेदसमर्थनप्रकारमुपदर्शय-

त्रेत्र प्राभाकररीत्या तत्र व्यभिचारशङ्कामुत्थापयति **प्राभाकरास्त्विति** ॥ **अत इति** सर्वत्र पक्षे व्यभिचारचोदनप्रसङ्गेनानुमानमात्रोच्छेदकत्वादिति भावः ॥ **अश्वत्वात्परमिति** । अश्वत्वव्यापकमित्यर्थः ॥ **तदेति** । यत्राश्वत्वं तत्र रासभसादृश्यमिति व्याप्तेरिति भावः ॥ **अपरमिति** । अश्वत्वव्याप्यमित्यर्थः । **अश्वत्वं स्यादिति** । तत्रापि सादृश्यस्य सत्त्वाद्व्याप्यवति च व्यापकावश्यम्भावनियमादिति भावः ॥ **एवं रासभत्वेऽपीति** । सादृश्यं यदि रासभत्वव्यापकं तर्हि सर्वेषामपि रासभानामश्वसादृश्यं स्यात् । यदि च रासभत्वव्याप्यं तदाऽश्वव्यक्तावपि रासभत्वं स्यादिति वाच्यमित्यर्थः । अश्वरासभवृत्तीत्यतःपरं सामान्यमिति शेषः । अश्वरासभवृत्ति सामान्यं न तयोः सादृश्यमित्यर्थः । तर्हि सामान्यमेव सादृश्यमिति रिक्तं वच इति पृच्छति **किन्त्विति** । परिहरति **तदवयववृत्तीति** । अत्रापि सामान्यमिति शेषः । अश्वरासभयोर्येऽवयवास्तद्वृत्तिसामान्यमश्वरासभयोः सादृश्यमित्यर्थः । उपलक्षणं चैतत् । तद्गुणकर्मवृत्तीत्यपि द्रष्टव्यम् ॥ **द्रव्यगुणावयवेति** । द्रव्ययोर्यानि गुणावयवकर्माणि तद्वृत्तीनि सामान्यान्येवेत्यर्थः । अत एवोक्तं 'सामान्यान्येव भूयांसि गुणावयवकर्मणाम् । भिन्नप्रधानसामान्यवर्तिसादृश्यमुच्यत' इति । अयमर्थः । इह गुणादिगतसामान्यापेक्षया गोत्वगवयत्वयोः प्राधान्यं भिन्ने पृथक्कृते प्रधानसामान्ये गोत्वगवयत्वलक्षणे ययोस्तौ गोगवयौ भिन्नप्रधानसामान्यौ तयोर्वर्तमानं सादृश्यं नाम गोगवयसम्बन्धिनां गुणावयवकर्मणां यानि सामान्यानि तान्येव नान्यदिति वादिभिरुच्यत इति । अत्र च प्रधानसामान्ययोर्भिन्नत्वं सम्भवदपेक्षयोक्तम् । तदभावेऽपि द्वयोर्घटयोरेकजातिव्यङ्ग्ययोरेव गुणादिगतसामान्यद्वारेण सादृश्यव्यवहारदर्शनात् । अत्र गुणावयवकर्मणामित्युपलक्षणम् । ततोऽन्यत्रापि जात्या सदृशः, कुलेन सदृशो, विद्यया सदृश इत्यादिव्यवहारदर्शनादित्यवधेयम् ॥ **अमुख्यत्वेति** । तत्रोक्तव्यवहारस्य तद्गुणावयवकर्मगतसामान्यनिबन्धनत्वेन गोगवयगतसामान्यानिबन्धनत्वादिति भावः । तयोर्भेदे युक्त्यन्तरमाह **न चेति** । नापीत्यर्थः । सप्रतियोगिकत्वनिष्प्रतियोगिकत्वरूपविरुद्धधर्माधिकरणत्वाच्च सादृश्यसामान्ययोर्भेद इति भावः । उपलक्षणं चैतत् सादृश्यस्योत्कर्षापकर्षरूपवत्त्वाज्जात्यादौ वर्तमानत्वाच्च । जातेस्तु तदभावात्तयोर्भेद इत्यपि द्रष्टव्यम् ।

'सादृश्यं पदार्थेषु पृथक् पृथगि'त्येतावतैवानेकवृत्तित्वाभावप्रतिपादने सादृश्ये व्यभिचारपरिहारसिद्धेरेतादृशमिति भाष्यखण्डवैयर्थ्यमित्याशङ्क्य पदार्थेषु पृथक् पृथगित्युक्तानेकवृत्तित्वाभावस्यानेकवृत्तित्वे प्रमाणाभावरूपहेतूक्त्या समर्थनेन तदसिद्धिपरिहारार्थत्वान्नानर्थक्यमिति भावेन तत्तात्पर्यमाह **एतादृशमितीति** । तमेव दर्शयति **न हीति** । ननु सदृशाविमावितीमे सदृशा इति चानेकाश्रितत्वेन सादृश्यप्रतीतिरेव तत्र प्रमाणं भविष्यतीति कथं प्रमाणाभाव इत्यत आह **सदृशाविमावित्यादेरिति** । यथा हीमौ शुक्लाविमे शुक्ला इति प्रतीतावनेके पटा अनेकानि च तद्विशेषणानि शौक्ल्यान्यवभासन्ते

तथेमौ सदृशाविमे सदृशा इत्यादिप्रतीतावप्यनेके पदार्था अनेकानि च सादृश्यानि प्रतीयन्त इत्येवाभ्युपगन्तव्यम् । विशेषप्रमाणाभावात् । ततो नानया प्रतीत्या सादृश्यस्यानेकाश्रितत्वसिद्धिरिति भावः । नन्वनयोः सादृश्यममीषां सादृश्यमिति प्रतीतावनेकाश्रितमेव सादृश्यं प्रतीयते तत्कथं तत्र प्रमाणाभाव इति चेत् । किमत्रानेकस्य धर्मितयाऽवभासं प्रमाणयस्युत धर्मस्यैकत्वावभासमुतोभयावभासं । पक्षत्रयेऽप्युत्तरमाह **अनयोरित्यादि** । तथा चानेकस्य धर्मित्वेऽपि द्विधर्मिकस्यानेकस्य सादृश्यस्यैवात्र प्रतिभासेन धर्मस्यैकत्वावभासासम्मतेर्नानेनाप्यभिमतसिद्धिरिति भावः । ननु वचनलिङ्गो हि वक्तुरभिप्रायः । सादृश्यमिति चात्रैकवचनं प्रयुज्यते । तेनानुमीयतेऽस्यां प्रतीतावेकमेव सादृश्यं द्विधर्मिकं दृष्टमिति । तस्मादन्योन्यप्रतियोगिकानेकधर्मिकानेकसादृश्यविषयत्वं प्रतीतेर्न वक्तुं शक्यत इत्यत आह **एकवचनस्य चेति** । नैकवचनेन प्रतीतेरेकार्थविषयत्वमनुमातुं शक्यते । विप्राणां भोजनमित्यादौ सत्यप्येकवचनप्रयोगे तन्मूलप्रतीतेरेकार्थविषयत्वाभावेनानैकान्त्यात्समुदायविषयत्वेनान्यथासिद्धत्वाच्चेति भावः । स्यादेतदेवं यदि सादृश्यस्यैकैकद्रव्याश्रितत्वे प्रमाणं स्यान्न चैतदस्तीत्यत आह **प्रतियोगिन इति** । पटधर्मः सादृश्यं नान्यधर्मस्तत्प्रतियोगिकत्वात् । यो यत्प्रतियोगिको नासौ तद्धर्मः । यथा स्थविरप्रतियोगिकमपरत्वं न स्थविरधर्म इत्यनुमानमेव तत्र प्रमाणमिति भावः । ननु न सादृश्यमेकैकाश्रितमभ्युपगन्तुं शक्यम् । तथा सत्येकप्रतीतावेव सादृश्यप्रत्ययप्रसङ्गादित्यत आह **एकाश्रितत्वेऽपीति** ॥ **प्रतियोगिनिरूप्यत्वेनेति** । तज्ज्ञानाधीनज्ञानत्वेनेत्यर्थः । यथा स्थविरप्रतियोगिकस्यापरत्वस्य युवमात्रधर्मत्वेऽपि युवप्रतीतावेव न प्रतीतिः । स्थविररूपप्रतियोगिज्ञानविरहेण प्रतीतिसामग्रीविरहात् । तथेहापि प्रतियोगिज्ञानरूपकारणविरहान्नैकैकप्रतीतावपि सादृश्यप्रतीतिरिति भावः ।

स० — **अश्वत्वात्परम्** अश्वत्वव्यापकमित्यर्थः । **तदेति** । यत्राश्वत्वं तत्र रासभसादृश्यमिति व्याप्तेरिति भावः । **एवमिति** । सादृश्यस्य रासभत्वव्यापकत्वे सर्वेषामपि रासभानामश्वसादृश्यापत्त्या तद्व्याप्यत्वे अश्वव्यक्तावपि रासभत्वापत्तिरिति भावः । **न चेति** नापीत्यर्थः ।

प० — **संकरप्रसङ्गादिति** । अश्वत्वादिजात्येति योज्यम् ॥ **यदि सादृश्यमिति** । त्वया जातित्वेनोपेतमश्वनिष्ठं रासभव्यक्तिसादृश्यमश्वत्वात्परमश्वत्वजातिव्यापकजातिरित्यर्थः । अश्वत्वं व्याप्यं स्यादिति यावत् । व्यापकमित्यर्थः । **अपरमिति** । अश्वत्वव्याप्यमित्यर्थः ॥ **रासभव्यक्ताविति** । रासभव्यक्तौ रासभान्तरसादृश्यस्य सत्त्वाद्व्याप्यवृत्तौ व्यापकसत्त्वनियमादिति भावः । **एवं रासभत्वेऽपीति** । रासभविशेषस्थमश्वसाम्यं सादृश्यं जातिरूपं चेद्रासभत्वात् परं चेत्तदा सर्वरासभानामश्वसादृश्यप्रसङ्गः । यदि चापरं तदा अश्वव्यक्तावपि तत्सादृश्यस्य सत्त्वाद्रासभत्वं स्यादित्येवं वाच्यमित्यर्थः ।

तथा च परस्परपरिहारेण सतोरश्वत्वरासभसादृश्ययोः एकव्यक्तिविशेषेऽश्वादौ समावेशः सांकर्यमतो न जातिः सादृश्यमित्यर्थः ॥ **अश्वरासभवृत्तीति** । सामान्यमिति विशेष्यमनुषज्यते ॥ **तदवयववृत्तीति** । तदवयवा**दिवृत्तिसामान्यमेव** सादृश्यं ब्रूम इत्यर्थः । 'सामान्यान्येव भूयांसि गुणावयवकर्मणाम् । भिन्नप्रधानसामान्यवृत्तिसादृश्यमुच्यत इति श्लोकार्थोक्त्या पराभिप्रायं व्यनक्ति **द्रव्यगुणेति** । ययोर्द्रव्ययोः सादृश्यमुच्यते' तयोर्द्रव्ययोर्ये गुणाः ये चावयवाः यानि च कर्माणि तद्वृत्तीनि सामान्यान्येवेत्यर्थः । भिन्नप्रधानेत्यस्य भिन्ने प्रधानसामान्ये गोत्वगवयत्वे ययोस्तौ गोगवयौ तद्वृत्तीत्यर्थः ॥ अतिदेशमेव व्यनक्ति **न हीत्यादिना** ॥ **प्रतियोगिन इति** । अनयोः सादृश्यमित्यत्रान्यतरस्य प्रतियोगित्वनियमेन तस्य धर्मित्वायोगात्कथमनेकाश्रितत्वं सादृश्यस्येत्यर्थः ।

**या०—अश्वत्वात्परमिति** । अश्वत्वव्यापकमित्यर्थः ॥ **एवं रासभत्वेऽपीति** । अश्वसादृश्यस्य रासभत्वव्यापकत्वे सर्वेषामपि रासभानामश्वसादृश्यं स्यात् । तद्व्याप्यत्वेऽश्वव्यक्तावपि रासभत्वापत्तिरिति वाच्यमित्यर्थः । अश्वरासभवृत्तीत्यनन्तरं सामान्यमिति शेषः । तदवयववृत्तीत्युपलक्षणम् । तद्गुणकर्मवृत्तीत्यपि द्रष्टव्यम् ॥ **द्रव्यगुणावयवेति**। द्रव्ययोर्यानि गुणावयवकर्माणि तद्वृत्तीनीत्यर्थः । यथाऽऽहुः । सामान्यान्येव भूयांसि गुणावयवकर्मणाम् भिन्नप्रधानसामान्यवर्तिसादृश्यमुच्यत । भिन्ने प्रधानसामान्ये गोत्वगवयत्वरूपे ययोस्तौ गोगवयौ भिन्नप्रधानसामान्यौ तद्वृत्तीत्यर्थः ।

---

**श्री०—पक्ष इति** नरत्वादिसामान्यस्यैव पक्षत्वादिति भावः ॥ **जातीति** । यदि सादृश्यं जातिस्तर्ह्यश्वत्वेन रासभत्वेन च साङ्कर्यं स्यादित्यर्थः । कथमिति चेदित्थम् । यद्यश्वत्वाद्रासभसादृश्यं परं व्यापकं तदा यत्राश्वत्वं तत्र सर्वत्रापि रासभसादृश्यमिति व्याप्तिः स्यात् । न चैषा सम्भवति अश्वान्तरे रासाभासदृशे व्यभिचारात् । यदि वा रासभसादृश्यमपरं व्याप्यं तदा यत्र रासभसादृश्यं तत्राश्वत्वमिति न व्याप्तिः । रासभसदृशे रासभान्तरे व्यभिचारात् । समावेशस्तु रासभसादृश्याश्वत्वयो रासभसदृशे कस्मिंश्चिदश्वे । तथाऽश्वसादृश्यमपि न जाति । रासभत्वेन साङ्कर्यात् । अश्वसादृश्यं रासभत्वं विहायाश्वान्तरेऽस्ति । रासभत्वं चाश्वसादृश्यं विहाय रासभान्तरेऽश्वासदृशेऽप्यस्ति । तयोः समावेशस्त्वश्वसदृशे कस्मिंश्चिद्रासभेऽस्तीत्येवं जातिसाङ्कर्यं भङ्ग्यन्तरेणोपपादयति **अस्ति हीत्यादिना** । अस्ति हीत्यनेन समावेश उक्तो ध्येयः । **सादृश्यं** रासभसादृश्यम् । ननु न साङ्कर्यम् । द्रव्यस्य ये गुणा ये चावयवा यच्च कर्म तन्निष्ठानि यानि सामान्यानि तेषामेव सादृश्यसंज्ञकत्वात् । तथा च रासभसादृश्याश्वत्वयोर्नैकत्राश्वे समावेशः । रासभसादृश्यस्याश्वभिन्नेऽश्वावयव एव सत्त्वेनाश्वत्वजातेश्चाश्वरूपावयविन्येव सत्त्वेन तयोरेकत्र समावेशायोगात् । तथाऽश्वसादृश्यरासभत्वयोरपि न समावेशो रासभे । अश्वसादृश्यस्य

रासभावयवे सत्त्वेन रासभरूपावयविन्येव रासभत्वजातेः सत्त्वेन तयोरेकत्रासमावेशात् । तथा च सादृश्यस्य सामान्यरूपत्वे दोषाभावान्न पक्षे व्यभिचारचोदना युक्तेत्याशयेन शङ्कते **न सादृश्यमित्यादिना ॥ गौरिति।** एतद्व्यवहारेण गोरूपावयविन्येव गवयसादृश्यस्य प्रतीयमानत्वेन तस्यावयवनिष्ठत्वे व्यवहारोऽमुख्यः स्यादित्यर्थः । तमेव दर्शयति **न हीत्यादिना ॥ इत्यादेरिति ।** द्विवचनस्येत्यर्थः ॥ **प्रतियोगिन इति ।** सादृश्यस्यानेकवृत्तित्वे प्रतियोगिवृत्तित्वप्राप्त्या तस्य धर्मित्वं प्राप्तं तन्न सम्भवतीत्यर्थः । ननु सादृश्यस्यैकैकाश्रितत्वे एकप्रतीतौ प्रतीतिः स्यादिति चेतत्राह **एकाश्रितत्वेऽपीति ।**

**न०— परम्** व्यापकम् । **अपरम्** व्याप्यम् ।

**सु०— नरत्वादिसामान्यस्य प्रतिव्यक्ति भिन्नत्वेऽनुमानान्तरमाह** एकस्मिन्निति ।

**अनु०—** एकस्मिन्सविनष्टेऽपि यतोऽन्यत्रैव दृश्यते ॥

**एकस्मिन्नरे नष्टे तदाश्रितं नरत्वं तावन्नष्टम् । तथाऽपि स नरत्वलक्षणो धर्मोऽन्यत्र नरान्तरे दृश्यत एव यतोऽतोऽपि नरत्वादिकमित्युक्तेन संबन्धः । यद्वा विनष्टं विनाशः सह विनष्टेन वर्तत इति सविनष्टं तस्मिन्विनाशवतीति यावत् । अथवाऽऽश्रयेण सह विनष्टं सविनष्टं तस्मिन्निति योजना । अयमत्र प्रयोगः । नष्टानष्टवर्ति नरत्वं भेदवत् विरुद्धधर्माश्रयत्वाच्छायाऽऽतपवत् । न चासिद्धो हेतुः । नष्टाश्रयस्य नरत्वस्य नष्टत्वात् । अन्यस्य तु दृश्यमानत्वेन अविनष्टत्वात् । यद्वेदं नरत्वं विनष्टान्नरत्वाद्भिद्यतेऽविनष्टत्वाद्घटवत् । यदि वा तन्नरत्वमविनष्टान्नरत्वाद्भिद्यते विनष्टत्वाद्घटवदिति ।**

**शे०—** एकस्मिन्नित्युत्तरग्रन्थस्य 'एतादृश'मिति पूर्वग्रन्थेनैकवाक्यत्वासंभवादानर्थक्यमित्याशङ्क्य तथाऽपि नरत्वादिकमिति व्यवहितग्रन्थेन प्रतिज्ञातेऽर्थे हेत्वन्तरसमर्पकत्वेन तदेकवाक्यतया तत्सङ्गतत्वान्नानर्थक्यमिति भावेन तत्सङ्गततया योजयति **नरत्वादिसामान्यस्येति ॥ तदाश्रितमिति ।** आश्रयनाशे तदाश्रितनाशस्य रूपादौ दृष्टत्वादिति भावः । स इति नरत्वसामान्यस्य न परामर्शो घटते लिङ्गव्यत्ययदोषादित्यतस्तत्परामृष्टव्यमाह **स नरत्वलक्षणो धर्म इति ।** हेतुत्वज्ञापनाय यत इत्यस्य दृश्यत इत्यनेनान्वयमाह **दृश्यत एव यत इति ।** अस्यानुमानान्तरताया मूलारूढतासिद्ध्यर्थमपिशब्दस्यात्रापि संबन्धमाह **अतोऽपीति ।** अत्र पक्षे नरत्वस्य विनाशित्वोक्तेर्मूलारूढतासिद्ध्यर्थं तदाश्रितं नरत्वमपि नष्टमेवेत्याद्यध्याहारः, स इति पुल्लिङ्गं च क्लिष्टं भवतीत्यपरितोषात्सविनष्टेऽपीति पदैक्यमङ्गीकृत्य योजयति **यद्वेति ।** नन्वस्मिन्पक्षे नरत्वस्य विनष्टेन सह वर्तमानत्वलाभेऽपि विनष्टत्वालाभाद्विनष्ट-

स्वहेतोर्मूलेऽनुक्तिप्रसङ्ग इत्यतो विनष्टशब्दस्य भावसाधनत्वेन विनाशपरत्वान्न तदनुक्तिप्रसङ्ग इत्यभिप्रेत्याह **विनष्टं विनाश इति** । अस्मिन्नपि पक्षे नरत्वस्य विनाशिताया मूलारूढत्वप्रसावपि तदुपपादकस्याश्रयनाशस्य तदलाभान्न हेत्वसिद्धिपरिहारसूचकत्वमप्यस्य ग्रन्थस्य सम्भवतीत्यतस्तस्यापि लाभाय सविनष्टशब्दस्यार्थान्तरमाह **अथवेति** । एकस्मिन्सविनष्टेऽपीति यथाश्रुतग्रन्थस्यैवानुमानप्रकारताभ्रमनिरासायाह **अयमत्रेति** । मूलग्रन्थस्याद्ययोजनानुसारेण प्रयोगप्रकारं दर्शयति **नष्टानष्टेति** । पदैक्ययोजनानुसारेणापि तमाह **यद्वेति** । अनष्टनरवृत्तिनरत्वमित्यर्थः । **तन्नरत्वमिति** । एतन्नरवर्तिनरत्वमित्यर्थः । ननु तन्नरत्वस्य नष्टत्वेन तद्धर्मिकभेदस्यापि तस्य धर्मिस्वरूपतया नाशावश्यम्भावान्न तद्धर्मिकभेदस्य वर्तमानत्वं साधयितुं शक्यत इति चेन्न । तन्नरत्वस्य तन्नराभिन्नस्य कार्याकारेण नाशेऽपि कारणाकारेणावस्थानात्तद्धर्मिकभेदस्यापि तथैवावस्थानमित्यभिप्रेत्यैतत्साधनप्रवृत्तेः । अत एवोत्तरत्र 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'त्येकदेशिमतानुसारेणैवमेव नष्टधर्मिकभेदस्यावस्थानोपपादनमित्यवधेयम् ।

**स०** — **यद्वा इदं नरत्वं विनष्टान्नरत्वात् भिद्यत इति** । इदं च 'नष्टानामपि वस्तूनां भेदो नैव विनश्यति' इति वदतां टीकाकाराणां मतेनैवेति बोध्यम् । ग्रन्थकृन्मतेन नष्टधर्मिकभेदस्यापि नाशादिति बोध्यम् ।

**प०** — विनष्ट इति भावे निष्ठाप्रत्यय इति भावेनाह **विनष्टं विनाश इति** ॥ **यदि वा तन्नरत्वमिति** । नष्टेप्यनष्टभेदस्य कारणात्मत्वेन सत्त्वस्य 'तस्मात्प्रध्वस्तभेदादी'त्यत्र वक्ष्यमाणत्वादयं प्रयोगो नायुक्त इति ध्येयम् ।

**या०** — **यदि वा तन्नरत्वमिति** । ननु तन्नरत्वस्य नष्टत्वात्कथं तद्धर्मिकभेदस्य वर्तमानता साधयितुं शक्या । भेदस्य धर्मिस्वरूपत्वादिति चेन्न । भिद्यन्त इति व्यपदेशस्य वर्तमानसामीप्यार्थतया विवक्षितत्वात् । तथा च पूर्वं भिन्नमासीदिति प्रतिज्ञार्थो विवक्षितः । यद्वा तन्नरत्वस्य तन्नराभिन्नस्य कार्याकारेण नाशेऽपि कारणाकारेणावस्थानात्तद्धर्मिकभेदस्यापि तथैवावस्थानमित्यभिप्रेत्येदम् । अत एव 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति प्राचां वाच इति ज्ञातव्यम् ।

**श्री०** — भावे क्तः प्रत्यय इत्याशयेनोक्तं **विनष्टं विनाश इति** ॥ **सह विनष्टं सविनष्टमिति** ।'सहस्य सः' इति सूत्रादिति भावः । **इदं** अविनष्टम् ।

सु० — भवेदेतद्यदि विनष्टनराश्रितमपि नरत्वं विनश्येत् । न चैतदस्ति तस्य नित्यत्वादित्यत आह कुत इति ।

अनु० — कुतो भस्मत्वमाप्तस्य नरत्वं पुनरिष्यते ॥

भस्मत्वमाप्तस्य नरस्येति शेषः । पुनः आश्रयनाशोत्तरकालम् । इष्यते अस्तित्वेनेति शेषः । नष्टस्येति वक्तव्ये भस्मत्वमाप्तस्येति वचनमवस्थान्तरापत्तिरेव विनाशो न तु तार्किकादीनामिव सर्वथा नास्तित्वमिति सूचयितुम् । आश्रयनाशोत्तरकालं सामान्यसत्त्वं; विमतं विनाशवत् विनाशवदाश्रयसमवेतत्वाद्रूपादिवत् इत्यादिप्रमाणविरुद्धम्, अप्रामाणिकं चेत्यर्थः ।

शे० — ननु 'कुतो भस्मत्वमाप्तस्ये'त्युत्तरग्रन्थे आश्रयनाशोत्तरकाले सामान्यसत्त्वं निराक्रियते तदनर्थकमित्याशङ्क्य विनाशस्यासिद्धिपरिहारार्थत्वान्न तदिति भावेन तदसिद्धिपरिहारकतया तद्योजयितुं विनाशित्वासिद्धिशङ्कामुत्थापयति भवेदिति ॥ न चैतदित्यादि । ततश्च नष्टत्वानष्टत्वरूपविरुद्ध-धर्माधिकरणत्वस्य, विनष्टत्वस्य च हेतोरसिद्धिः । अविनष्टत्वहेतोश्च साध्याप्रसिद्धिरिति भावः । मूले कुत इत्यस्य साधकप्रमाणाभावाद्बाधकप्रमाणसद्भावाच्च सत्त्वं नेत्याक्षेपार्थतामभिप्रेत्य तत्तात्पर्यमाह आश्रय-नाशेति ।

प० — पुनरित्यनुवादः । स्वाश्रयनाशोत्तरकालमिति व्याख्या । सामान्यसत्त्वमित्यस्य इत्यादि-प्रमाणविरुद्धमित्यादिनाऽन्वयः ।

श्री० — सामान्यसत्त्वं प्रमाणविरुद्धमित्यादिनाऽन्वयः ।

सु० — नष्टनराश्रितस्यापि नरत्वस्य पुनः सत्त्वं न निष्प्रमाणकं प्रत्यक्षसिद्धत्वात् । नष्टानष्टनराश्रितं नरत्वं तावदेकम् । तच्चाविनष्टे नरे पुनरुपलभ्यते । अत एवानुमानमपि बाधितविषयमित्यत आह एकत्व इति ।

अनु० — एकत्वे नास्ति मानं च

स्यादेतद्यद्येतयोरेकत्वे मानं स्यात् । न च तदस्तीत्यर्थः । न च प्रत्यभिज्ञानं प्रमाणम् । तस्य स्वरूपतः प्रमाणत्वेन च सन्दिग्धत्वात् । चशब्देनान्योन्याश्रयत्वं समुच्चिनोति । एकत्वे हि पुनः (तस्य) सत्त्वसिद्धिस्तत्सिद्धौ चैकत्वसिद्धिरिति ।

शे० — तथाऽपि नरत्वस्यैकत्वनिराकरणमनर्थकमित्याशङ्क्य पूर्ववाक्योक्तस्याश्रयनाशोत्तरकाले सत्त्वस्याप्रामाणिकत्वप्रमाणबाधितत्वयोरुपपादनार्थत्वान्न तदिति भावेन तदुपपादकतया तद्योजयितुं तदसिद्धिशङ्कामुत्थापयति नष्टेति ॥ अनुमानमपीति । विनाशवदाश्रयसमवेतत्वादित्यनुत्यमानमित्यर्थः ॥

बाधितविषयमिति । ततश्च नष्टनराश्रितस्यापि नरत्वस्य पुनः सत्त्वं न प्रमाणबाधितमपीति भावः । तदेवेदं नरत्वमिति प्रत्यभिज्ञानमेव तत्र प्रमाणमिति कथं प्रमाणाभाव इत्याशङ्क्य निषेधति न चेति । तत्कुत इत्यतः स्वरूपतः प्रमाणत्वेन च निश्चितमेव च साधनबाधनक्षमम् । न चेदं तथा । स्वरूपेण प्रमाणत्वेन चास्यानिश्चितत्वात्कथमनेन सत्त्वसिद्धिर्भवेदित्याह तस्य स्वरूपत इति । तदेवेदं नरत्वमिति प्रत्यभिज्ञास्वरूपस्यैवाभावाद्दुर्दर्शनाभ्यासविजृम्भितस्य तस्य सत्त्वेऽपि तत्प्रामाण्यस्यासम्मतेरित्यर्थः । नन्वाश्रयनाशोत्तरकालमुपलभ्यमानतया पुनः सत्त्वसिद्धेस्तत एवैकत्वसिद्धिर्भविष्यतीत्यत आह च शब्देनेति । अन्योन्याश्रयमेव स्पष्टयति एकत्वे हीति ।

प० — प्रत्यभिज्ञानमिति चैत्रगतमेव नरत्वं मैत्रे इति प्रत्यभिज्ञानमित्यर्थः ।

या० — तस्य स्वरूपत इति । तदेवेदं नरत्वमिति प्रत्यभिज्ञास्वरूपस्यैवाभावाद्दुर्दर्शनाभ्यासविजृम्भितस्य तत्सत्त्वेऽपि तत्प्रामाण्यस्यासम्मतेरित्यर्थः ॥

श्री० — एतयोः नष्टानष्टनरवर्तिनोर्नरत्वयोः । प्रत्यभिज्ञानं यन्नष्टाश्रितं नरत्वं तदेवेदं नरत्वमित्येवंरूपम् ॥ स्वरूपत इति । तथा चैवं प्रत्यभिज्ञैव नास्तीत्यर्थः ॥ प्रमाणत्वेनेति । यद्येवमस्ति प्रत्यभिज्ञा तर्ह्यप्रमाणमेव, भ्रमरूपेत्यर्थः । भेदस्य प्रमाणसिद्धत्वेन तद्बाधादिति भावः ।

सु० — एवं सामान्यादीनां प्रत्याश्रयं भेदे प्रत्यक्षानुमानान्युक्त्वा श्रुतिमप्याह श्रुतिरपीति ।

अनु० — श्रुतिरप्याह सादरम् ॥

भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि ॥
स्वैः स्वैर्धर्मैरभिन्नाश्च स्वरूपैरपि सर्वशः ॥
अनिवृत्तविनाशास्तु धर्मा उभयरूपकाः ॥
न केनचिदभिन्नोऽतो भगवान्स्वगुणैर्विना ॥
इति

आह सामान्यादीनां प्रत्याश्रयं भेदमिति शेषः । भिन्नाः परस्परतो भेदवन्तः । अन्योन्यं भिन्ना धर्मा येषां ते भिन्नधर्माः । भिन्नधर्मा इत्यनेनाश्रयतोऽपि भेदोऽभिहित इति शङ्कानिरासार्थमुक्तं स्वैरिति । स्वरूपैरपि यथा भगवान्मत्स्यादिभिः । स्वैः स्वैर्धर्मैरभिन्नाश्चेत्यस्यापवादोऽनिवृत्तेति । अनिवृत्तेऽप्याश्रये विनाशो येषां ते तथोक्ताः । यथाऽऽमघटश्यामतादयः । उभयरूपका भिन्नाभिन्नाः । न केनचिदिति श्रुतिः स्वप्रकृतमुपसंहरति । अत्र सर्वश इत्यादिवचनादुक्तविवरणाच्चादरः प्रतीयते ॥

शे० — श्रुतिरपीत्युत्तरग्रन्थस्याव्यवहितप्रकृतसामान्यमात्रविषयकताभ्रमनिरासाय प्रतिपाद्यमाह **एवमिति** । आदिपदेन संयोगादीनां परिग्रहः । भिन्नाः स्वगतभेदवन्त इत्यन्यथाप्रतीतिनिरासायाह **भिन्ना इति** । अन्योन्यं आश्रयतश्च भिन्ना धर्मा येषां ते तथोक्ता इत्यन्यथाप्रतीतिनिरासाय भिन्नधर्मा इत्येतद्व्याचष्टे **अन्योन्यमिति** । ननु प्रतीत एवार्थोऽस्तु किं सङ्कोचेनेत्यत आह **भिन्नधर्मा इत्यनेनेति** ॥ **स्वप्रकृतमिति** । श्रुतौ प्रकृतमित्यर्थः ॥ **सर्वश इत्यादिवचनादिति** । आदिपदेनाखिला इति वचनपरिग्रहः । अखिला इत्युक्त्यैव वा सर्वश इत्युक्त्यैव वा विवक्षितार्थसिद्धावपि यदुभयमुपादीयते तेनादरो वाऽवगम्यत इत्यर्थः ॥ **उक्तविवरणाच्चेति** । 'स्वैः स्वैर्धर्मैरभिन्नाश्चे'त्यनेन भिन्नधर्माश्चेत्यस्य 'अनिवृत्तविनाशाश्च धर्मा उभयरूपका' इत्यनेन 'स्वैः स्वैर्धर्मैरभिन्नाश्चेत्यस्य विवरणादित्यर्थः । तत्र च स्वैः स्वैर्धर्मैरभिन्नाश्चेत्यस्य भिन्नधर्मा इत्यनेनाश्रयतोऽपि धर्माणां भेदोऽभिहित इति शङ्कानिरासकतयाऽनिवृत्तेत्यादेस्तु स्वैः स्वैर्धर्मैरभिन्नाश्चेत्युक्तार्थापवादकथनरूपतया तद्विवरणत्वं बोध्यम् । शङ्कानिरासकत्वादिना विवरणस्यानेकप्रकारत्वं चानुभाष्यस्याद्यश्लोकत्रयस्य भाष्यस्याद्यश्लोकविवरणरूपत्वं वदद्भिष्टीकाकारैरेवोक्तमनुसन्धेयम् ॥ छ ॥

प० — **प्रत्यक्षानुमानानीति** । तत्तद्धर्मतयेयत इत्यत्रास्य प्रत्यक्षादिपरत्वेन व्याख्यानादिति भावः ॥ 'स्वरूपैरपी'त्यस्य स्वकीयावतारविग्रहैरभिन्ना इत्यर्थमुपेत्य तस्य स्थलमाह **स्वरूपैरित्यादिना** ॥ **आमघटेति** । अपक्वघटेत्यर्थः । उदाहृतवाक्ये भगवतोऽप्रकृतत्वात्कथं भगवानित्युपसंहार इत्यत आह **न केनचिदिति** । उपसंहरतीत्यन्वयः । कर्त्राद्याकांक्षायां 'श्रुतिः स्वप्रकृतमि'त्युक्तम् । मूलकृदनुदाहृते पूर्वभागे प्रकृतमित्यर्थः । 'श्रुतिरप्याह सादरमि'त्युक्तं मूले । तत्रादरज्ञापकमाह **सर्वश इत्यादीति** । आदिपदेन 'अनिवृत्तविनाशाश्चे'त्यपवादवचनग्रहः । आदरमात्रे सर्वश इति प्रागुक्तस्यापवादं च न ब्रूयादिति भावः । भिन्नधर्मा इत्यत्राश्रयतोपि भेदो नाभिमतः । किंत्वेकव्यक्तिधर्मापेक्षया व्यक्त्यन्तरधर्माणामेवेति भावेन 'स्वैः स्वैर्धर्मैरभिन्ना' इत्यनेन 'भिन्नधर्मा' इ(त्युक्तस्य)त्यस्य विवरणाच्चेत्यर्थः ॥ छ ॥

या० — **सर्वश इत्यादिवचनादिति** । अत्रादिपदेनाखिला इति वचनस्य ग्रहणम् । ततश्चाखिला इत्युक्त्यैव विवक्षितार्थलाभे पुनः सर्वश इति वचनादादरो ज्ञायत इत्यर्थः ॥ **उक्तविवरणाच्चेति** । स्वैः स्वैरित्यनेन भिन्नधर्माश्चेत्युक्तस्य विवरणादित्यर्थः । अत्र धर्माणामाश्रयभेदशङ्कापरिहाराय तदभेदोक्त्या परस्परं भेद एव भिन्नधर्मा इत्यत्र विवक्षित इति विवरणं लभ्यत इति ज्ञातव्यम् । तथा स्वैः स्वैर्धर्मैरभिन्ना इत्युक्तस्यानिवृत्तविनाशा इत्यपवादोक्त्या येऽनिवृत्तविनाशा न भवन्ति तैरेवाभेद इति विवरणादित्यर्थः ॥

श्री० — **अन्योन्यं** रूपरसादेः परस्परमित्यर्थः ॥ **स्वरूपैरिति** । तथा च स्वैरभिन्नाः स्वैः स्वैर्धर्मैरभिन्नाश्चेति योज्यम् ॥

सु० — ननु घटादेरामद्रव्यस्याग्निना संबद्धस्य, अग्न्यभिघातान्नोदनाद्वा तदारंभकेषु परमाणुषु, कर्माण्युत्पद्यन्ते । तेभ्यो विभागाः; विभागेभ्यस्संयोगविनाशाः । संयोगविनाशेभ्यः कार्यद्रव्यं विनश्यति । तस्मिन्विनष्टे परमाणुष्वग्निसंयोगादौष्ण्यापेक्षाच्छ्यामादीनां विनाशः । पुनरन्यस्मादग्निसंयोगादौष्ण्यापेक्षात्पाकजा जायन्ते । तदनन्तरं भोगिनामदृष्टापेक्षादात्माणुसंयोगादुत्पन्नपाकजेष्वणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगाद्द्व्यणुकादिप्रक्रमेण कार्यं द्रव्यमुत्पद्यते । तत्र च कारणगुणप्रक्रमेण रूपाद्युत्पत्तिर्भवति । तत्कथमामघटश्यामत्वादीनामयावद्द्रव्यभावित्वमुच्यते ।

मैवम् । अत्र प्रमाणाभावात् ।

शे० — अनिवृत्तविनाशा इति पाकजोत्पत्तिस्थले भाष्यकारीयं द्रव्याविनाशाभिधानं न केवलं पाकजानामयावद्द्रव्यभावित्वप्रतिपादनेन तद्भेदाभेदोपपादनार्थं, किन्नाम कार्यद्रव्यविध्वंसवन्तः परमाणव एव पच्यन्त इति पीलुपाकवाद्युक्तपाकजप्रक्रियानिरासार्थं चेत्यभिप्रेत्य तां निरसितुं पीलुपाकवादाश्रयणेनोक्तानुपपत्तिमाशङ्कते नन्विति । आदिपदेन सर्वपार्थिवोपादानम् । यद्यप्यामेति न घटावयविनो विशेषणं, तस्य सर्वस्यामत्वेन वैयर्थ्यात् । नापि परमाणोः सर्वस्य तस्य पक्वत्वेन विरोधात् । तथाऽप्यापाकनिक्षिप्ताग्निसाध्यपाकापेक्षया पृथिवीमूलकारणपरमाणोरेवैतद्विशेषणमिति ध्येयम् । अग्निना सम्बद्धस्य संयुक्तस्य पाकनिक्षिप्तस्येति यावत् । तदारम्भकेषु घटाद्यारम्भकेषु, परम्परयेति शेषः । परमाणुषु कर्माण्युत्पद्यते । अत्र तदारम्भकेष्विति कार्यनाशादिप्रक्रियासिद्ध्यर्थमुक्तम् । कारणनाशस्य कार्यनाशहेतुत्वादिति बोध्यम् । अभिघातान्नोदनाद्वेत्य परमाणुष्वित्यनेनैव संबन्धः । न तु घटादेरग्न्यभिघातान्नोदनाद्वेति । तथा सति घटादिनिष्ठाभिघातनोदनयोर्घटादावेव कर्मजनकतया परमाणुषु कर्मानुपपत्तिप्रसङ्गात् ।

कः पुनरभिघातनोदनयोर्विशेष इति चेत् । येन संयोगेन जनितं कर्म संयोगिनोः परस्परं विभागहेतुर्भवति, यः संयोगः शब्दनिमित्तकारणं च भवति स संयोगविशेषोऽभिघातः । यथा पाषाणादेः पादादिसंयोगः । वेगापेक्षेण पादसंयोगेन पाषाणादौ कर्मोत्पत्तौ तेन तत्र शब्दविभागयोरुपपत्तेः । येन संयोगेन जनितं कर्म संयोगिनोः परस्परं विभागहेतुर्न भवति यः संयोगः शब्दकारणनिमित्तं च न भवति स संयोगविशेषो नोदनम् । यथा पङ्के पादसंयोगो नोदनम् । पङ्के पादसंयोगजेन कर्मणा तत्र शब्दविभागयोरजननात् । यदि तत्रापि शब्दविभागयोरुत्पत्तिस्तर्ह्यभिघात एव स इत्यादि विभावनीयम् ॥ एतदेव शाङ्करे काणादसूत्रोपस्कारे पञ्चमाध्यायस्य द्वितीयान्हिके 'नोदनादभिघातात्संयुक्तसंयोगाच्च पृथिव्यां कर्मे'ति सूत्रव्याख्यानावसरे स्पष्टम् ।

प्रशस्तपादभाष्ये तु 'यः संयोगविशेषो विभागापेक्षः परस्परं विभागहेतोरेकस्य कर्मणः कारणं सोऽभिघातः, यस्तु गुरुत्वद्रवत्ववेगप्रयत्नान् समस्तान्व्यस्तान्वाऽपेक्षमाणः परस्परमविभागहेतोरेकस्य कर्मणः कारणं स नोदनमित्यनयोर्विशेषः' इत्युक्तम् ॥ स्वजनकक्रियासमानाधिकरणक्रियाजनकः संयोग एवाभिघातः स्वजनकक्रियाव्यधिकरणक्रियाजनकसंयोगस्तु नोदनमित्यनयोर्भेद इति केचित् ॥ स्पर्शवद्वेगवद्द्रव्यसंयोगोऽभिघातः, वेगरहितस्पर्शवद्द्रव्यसंयोगस्तु नोदनमिति बहवः ॥ तदुभयं जातिरेवेति प्राञ्चः । **तेभ्यः** कर्मभ्यो, विभागाः । विभागेभ्यः **संयोगविनाशः** द्रव्यारंभकसंयोगनाशः । **कार्यद्रव्यं** द्व्यणुकलक्षणं, तस्यैव साक्षात्परमाणुजन्यत्वात् । यद्यपि द्व्यणुकानां बहुत्वाद्बहुषु बहुवचनमिति कार्यद्रव्याणीति बहुवचनमेव प्रयोक्तुमुचितं, तथाऽपि जात्यभिप्रायमेतदेकवचनमित्यवधेयम् ॥ उपलक्षणं चैतत् । द्व्यणुकनाशे सति समवायिकारणनाशात् त्र्यणुकनाश इत्यादिक्रमेण घटान्तं द्रव्यं नश्यतीत्यपि द्रष्टव्यम् ।

द्व्यणुकाद्यन्त्यावयविपर्यन्तं कार्यनाशानन्तरं परमाणुष्वग्निसंयोगाद्रूपादिचतुष्टयं नश्यतीत्याह **तस्मिन्निति** । सौरतेजोवच्चक्षुरादितेजसां न पाचकत्वमिति मन्वानो विशिनष्टि **औष्ण्यापेक्षादिति** । पृथिव्याः श्यामं रूपमनादीति मतं निराकुर्वञ्जन्मनो भावमाह **पुनरिति** । अन्यथाऽनादेर्भावस्य नित्यत्वाच्छ्यामादीनां विनाशानुपपत्तिप्रसक्तेरिति भावः । परमाणुषु रूपाद्युत्पादविनाशौ नैकपावकसम्पर्ककारणकौ रूपाद्युत्पादविनाशत्वात् । श्यामाद्युत्पादविनाशवदित्याह **अन्यस्मादिति** । ननु चैक एवाग्निसंयोगः पूर्वरूपादेर्नाशकोऽन्यस्य रूपादेरुत्पादकश्च भविष्यतीति किमित्युत्पादकनाशकयोरग्निसंयोगयोरन्यत्वाश्रयणम् । न चैकस्योत्पादकत्वनाशकत्वे विरुद्धे कथं स्याताम् इति वाच्यम् । एकदोत्पाद्यनाश्यव्यक्तिभेदेन तयोरविरोधात् । तद्यथैक एव शब्दः पूर्वशब्दं नाशयत्युत्तरं चोत्पादयति । अन्यथा तदपि न स्यात् । कालभेदाद्वा तयोरविरोधात् । यथोपान्त्यशब्द एकदाऽन्त्यशब्दं नाशयत्यन्यदा तमेवोत्पादयति च । अन्यथोपान्त्यशब्दस्याप्यन्त्यशब्दोत्पादकत्वनाशकत्वाभावापातात् । तत्कथमेतदिति चेत् । सत्यम् । तथाऽपि पाकजेषु व्यक्तिभेदेन कालभेदेन वा नैकस्योत्पादकत्वनाशकत्वे सम्भवतः । कार्यविनाशविशिष्टं कालमपेक्ष्यैव हि रूपादिविनाशो भवति; सति कार्ये कार्यावष्टम्भस्यैव तत्प्रतिबन्धकत्वात् । न चात्र नियामकाभावः । अवयवरूपादिसमानकालत्वाव्याप्यत्वादवयविरूपादेः । सति च कार्यद्रव्ये परमाणुरूपादिनाशेऽवयवरूपाद्यभावेऽप्यवयविरूपादिसद्भावेनोक्तनियमभङ्गापत्तेरेव तत्र नियामकत्वात् । तथा रूपादिविनाशविशिष्टं कालमपेक्ष्यैव रूपाद्युत्पादो भवति । एकदैकस्मिन्नाश्रये नानारूपाननुभवेन सति रूपादौ रूपाद्यन्तरानुपपत्तेः । न चैतावन्तं कालमेकोऽग्निसंयोगोऽनुवर्तितुमीष्टे, तेजसोऽविलम्बगमनशीलत्वादित्याशयात् । **पाकजा** रूपरसगन्धस्पर्शाः । स्यादेतत् । यद्येमापरमा-

ण्वन्तो विनाशः स्वतन्त्राश्च परमाणवः पच्यन्ते, तदा कुलालादिव्यापारमन्तरेण घटादीनां पुनरावृत्तौ लोकव्यवहारोच्छेदः, व्यर्थश्च तेषां प्राच्यः प्रयास इत्यत आह **तदनन्तरमिति** । रूपाद्युत्पत्तेरनन्तरं । **भोगिनाम्** उदकाद्याहरणद्वारेण तत्साध्यसुखदुःखाद्यनुभवभोगिनाम् । **अदृष्टापेक्षात्** धर्माधर्मापेक्षात् । आत्माणुसंयोगादित्यत्रात्मग्रहणं स्पष्टार्थं, भोगिनामित्यनेनैवात्मोपादानात् ॥ **अणुष्विति** । परमाणुष्वित्यर्थः । **कर्मणामुत्पत्तौ** सत्यां । **तेषां** परमाणूनां । **परस्परम्** अन्योन्यम् । संयोगादिति जात्यभिप्रायमेकवचनम् । द्व्यणुकम् आदि **यस्य** क्रमस्य तेन ।

**कार्यद्रव्यं** घटादिलक्षणमुत्पद्यते । **तत्र कारणगुणप्रक्रमेण रूपाद्युत्पत्तिः** परमाणुरूपादेर्द्व्यणुकेषु रूपादिकं, द्व्यणुकरूपादेस्त्र्यणुकेषु रूपादिकमित्यनेन क्रमेणेत्यर्थः । प्रमाणाभावेनोक्तप्रक्रियाया एवासिद्धत्वान्न तदाश्रयेणोक्ताक्षेपः संभवतीत्याशयेनाह **नैवमिति** ।

**प०** — पीलुपाकप्रक्रियामाश्रित्य शङ्कते **ननु घटादेरिति** । कुम्भकारेण पाकार्थं निक्षिप्तघटादेरित्यर्थः । अभिघातो नाम बलवदग्निसंयोगः । नोदनं नाम स्वस्थानाद्वस्तुनश्चलनहेतुसंयोगविशेषः ॥ **कार्यद्रव्यमिति** । द्व्यणुकप्रभृत्यन्त्यावयविपर्यंतं कार्यद्रव्यमित्यर्थः ॥ संयोगनाशविभागादिशब्देन तत्तत्कार्यावयवपरमाणुसंयोगनाशादयो ग्राह्याः ॥ **श्यामादीनामिति** । रसादिरादिपदार्थः ॥ **उत्पन्नपाकजेष्विति** । उत्पन्नानि पाकजानि रूपादीनि येषां तेष्वित्यर्थः ॥ **कारणगुणप्रक्रमेणेति** । कारणगुणाः कार्यगुणानारभन्त इति क्रमेणान्त्यावयविपर्यंतं रूपाद्युत्पत्तिरित्यर्थः ॥ **अत्रेति** । उक्तविधनाशोत्पत्त्योः प्रमाणाभावादित्यर्थः ।

**या०** — पीलुपाकवादी शङ्कते **नन्विति** ॥ **अग्निना सम्बद्धस्येति** । आमपाकनिक्षिप्तस्येत्यर्थः । तदारम्भकेषु परमाणुष्वग्न्यभिघातान्नोदनाद्वेत्यन्वयः । अन्यथा घटादेरप्यभिघातादित्यन्वये परमाणुषु कर्मानुपपत्तिः । **अग्न्यभिघातान्नोदाद्वेति** । नन्वभिघातनोदनयोः को विशेषः । उच्यते । यः संयोगविशेषः शब्दे निमित्तकारणं भवति यज्जनितं कर्म संयोगिनोः परस्परं विभागहेतुश्च भवति स संयोगविशेषोऽभिघातः । यथा पाषाणादेः पादादिसंयोगोऽभिघातः । वेगापेक्षेण पादसंयोगेन पाषाणे कर्मोत्पत्तौ तेन तत्र शब्दविभागयोरुत्पत्तेः । यस्तु शब्दे निमित्तकारणं न भवति यज्जनितं कर्म संयोगिनोः परस्परं विभागहेतुश्च न भवति स संयोगविशेषो नोदनम्। यथा पङ्के पादसंयोगो नोदनम् । पङ्केपादसंयोगजेन कर्मणा तत्र शब्दविभागयोरजननात् । यदि तत्रापि शब्दविभागयोरुत्पत्तिस्तर्ह्यभिघात एव स इत्यादि विभावनीयम् ॥ **कार्यद्रव्यमिति** । द्व्यणुकादिघटान्तमित्यर्थः ।

श्री० — नन्वामघटस्य पाकेनापरमाण्वन्तभङ्गे तन्निष्ठश्यामत्वस्यापि नाशेन श्यामत्वस्यापि यावद्-द्रव्यभावित्वात्कथमयावद्द्रव्यभाविधर्मत्वं 'अनिवृत्तविनाशास्त्वि'त्यनेनोच्यते । पीलुपाकप्रक्रियया आश्रयस्यापि नाशेनानिवृत्तेऽप्याश्रये विनाशाभावादित्याशङ्कते **नन्वित्यादिना** ॥ **अग्न्यभिघातादिति** । अग्निरूपस्पर्शवद्वेगवद्द्रव्यसम्बन्धरूपादित्यर्थः ॥ **नोदनाद्वेति** । आमघटे जलेन पूर्णे सत्यामद्रव्यस्य जलेन सम्बद्धस्य जलरूपद्रववद्द्रव्यसंबन्धरूपान्नोदनाद्वेत्यर्थः ॥ **जायन्त इति** । पार्थिवपरमाणुरूपादिगुणा जायन्त इत्यर्थः । **उत्पन्नपाकजेषु** उत्पन्नाग्निसंयोगजन्यरूपादिमत्स्वित्यर्थः ।

च० — पीलुपाकप्रक्रियां प्रत्याचिख्यासुस्तद्दिशा शङ्कते **नन्विति** । **अग्न्यभिघातान्नोदनाद्वेति** परमाणुष्वित्यनेनैवान्वेति । न तु घटादेरित्यनेन । तथा सति परमाणुषु कर्मोत्पत्त्य-निर्वाहात् । शब्दनिमित्तकारणत्वे सति संयुक्तयोः परस्परविभागहेतुभूतकर्मजनकत्वलक्षणलक्षितः संयोगोऽभिघातः, वेगापेक्षपादसंयोगेन पाषाणे कर्मोत्पत्त्या शब्दविभागयोर्जननेन पाषाणादेः पादादिसंयोगोऽभिघातः । शब्दनिमित्तकारणत्वतादृशविभागहेतुभूतकर्मजनकत्वविनिर्मुक्तत्वाङ्कितःसंयोगो नोदनम् । पङ्के पादसंयोगजनितकर्मणा तत्र शब्दविभागयोरजननेन पङ्कादौ पादसंयोगो नोदनमिति स्थितम् । प्रपञ्चनं तु निबन्धान्तरदिशाऽवसेयम् ॥ ॥ **जातेः प्रातिस्विकत्वे प्रत्यक्षानुमानश्रुतिकथनम्** ॥

---

**सु० — नोदनाद्युत्पत्तौ कर्मोत्पत्तिः प्रमाणम्, कर्मसु विभागाः, तेषु पूर्वसंयोगनिवृत्तिः, तत्र कार्यद्रव्यविनाशः, तत्र च पूर्वरूपादिपरावृत्तिः, तथा रूपाद्यन्तरोत्पत्तिः स्थूलद्रव्योत्पत्तौ प्रमाणम्, सा तदवयवपरम्परायाम्, सा द्व्यणुके, तदुत्पत्तिः परमाणुसंयोगे, स च तत्क्रियायाम्, साऽदृष्टवदात्मसंयोग इति चेन्न । परमाणुष्विव कार्यद्रव्येषु पूर्वरूपादिनिवृत्तेरपूर्वरूपाद्युत्पत्तेरुपपत्तेः । पार्थिवावयविरूपादयः स्वाश्रयविनाशादेव विनश्यन्ति अवयविरूपादित्वात् दग्धपटरूपादिवत् । कारणगुणेभ्य एवोत्पद्यन्ते तत एव तद्वदेवेति चेन्न । क्वचित्सत्याश्रयेऽपि रूपादीनां विनाशेऽग्निसंयोगजत्वे च विरोधाभावात् । अन्यथा कार्यद्रव्यं संयोगविनाशादेव विनश्यति कार्यद्रव्यत्वात् द्व्यणुकवदित्यादिकमपि स्यात् ।**

शे० — कार्यस्यैव कारणे प्रामाण्यात्कथमुक्तप्रक्रियाया अप्रामाणिकत्वमित्याशयेन शङ्कते **नोदनाद्युत्पत्तावित्यादिना** । कर्मसु विभागा इत्यादौ प्रमाणमित्यनुवर्तनीयम् । विभागशब्दश्च विभागाजन्यविभागपर एव । तस्यैव कर्मकार्यतया स्वकारणे कर्मणि प्रमाणत्वसम्भवात् । न तु विभागसामान्यपरः । तस्यातत्कार्यतयाऽतत्कारणकर्मणि प्रामाण्यानुपपत्तेरित्यवधेयम् । नोदनाद्युत्पत्तौ

कर्मोत्पत्तिः प्रमाणं कर्मसु, विभागास्तेषु पूर्वसंयोगनिवृत्तिस्तत्र कार्यद्रव्यविनाश इति इत्यस्तु । एतेषां कार्यकारणभावावधारणात्कारणं विना च कार्यानुत्पत्तेः । कार्यद्रव्यं विनश्यतीत्यत्र तु किं प्रमाणम् । न हि सति द्रव्ये रूपादीनां विनाशोत्पत्ती नोपपद्येते । परमाणुष्विव कार्यद्रव्येऽपि तयोरविरोधादित्याशयेनाह **परमाणुष्विति** । अपूर्वरूपाद्युत्पत्तेरित्यतः परं चेति शेषः ।

स्वाश्रयविनाशादेव नश्यन्तीत्यत्र साध्ये नष्टघटरूपेणार्थान्तरतापरिहारायैवेत्युक्तम् । परमाणुगतरूपादिभिरनैकान्तिकतापरिहारायावयविग्रहणम् । कार्यगतसत्तादिव्यावृत्त्यै रूपादीत्युक्तम् । कारणगुणेभ्य एवेत्यत्र स्वकारणगुणेभ्य एवेत्यर्थः । **तत एवेति** । अवयविरूपादित्वादेवेत्यर्थः । **तद्वदेवेति** । दग्धपटरूपादिवदेवेत्यर्थः । यथा द्रव्यनाशे क्वचित्समवायिकारणनाशो हेतुः क्वचिच्चासमवायिकारणनाशो हेतुः । न तु सर्वत्र द्रव्यनाशे समवायिकारणनाश एव हेतुरिति वाऽसमवायिकारणनाश एव हेतुरिति वा यथा न नियमोऽभिमतः, तथाऽवयविरूपादिनाशेऽपि क्वचिदाश्रयनाशः क्वचिच्चाग्निसंयोगो हेतुर्भविष्यतीत्यप्रयोजकमाद्यमनुमानमित्याशयवानाह **क्वचिदिति** । क्वचिदवयविनि रूपाद्याश्रये सत्यप्यग्निसंयोगाद्रूपादीनां विनाशे विरोधाभावादित्यर्थः । द्वितीयानुमानेऽप्यप्रयोजकतामाह **अग्निसंयोगजत्वे चेति** । क्वचित्पार्थिवावयविरूपादीनामग्निसंयोगजत्वेऽपि विरोधाभावादित्यर्थः । पार्थिवावयविरूपादीनां स्वाश्रयनाशादेव विनाशाभ्युपगमे तत्कारणगुणेभ्य एवोत्पादाङ्गीकारे चातिप्रसङ्गमाह **अन्यथेति** । तथा च समवायिकारणनाशस्य कार्यद्रव्यनाशहेतुत्वं तदभिप्रेतं भज्येतेति भावः । आदिपदेन पार्थिवपरमाणुरूप-शब्दसुखादयः आश्रयनाशविनाश्याः कार्यत्वे सति विशेषगुणत्वाद्घटरूपवदित्याभासांतरपरिग्रहः । एतेनैवायं पार्थिवोऽवयवी द्रव्यनाशजन्यध्वंसप्रतियोगिरूपादिमान् अवयवरूपजन्यरूपवान्वा परमाणुभिन्नरूपित्वाज्जलावयविवदित्यत्र वा, आमश्यामघटरूपनाश आश्रयनाशजन्योऽग्निसंयोगाजन्यो वा घटरूपनाशत्वात्स्फुटितघटरूपनाशवदित्यत्र वा एतत्तात्पर्यमिति वर्धमानोक्तं निरस्तम्, अन्यथेत्युक्ताभाससाम्यस्यात्राप्यनिस्तारात् ।

**प०** — उत्तरोत्तरकार्याण्येव पूर्वपूर्वकारणरूपार्थेषु प्रमाणमिति शङ्कते **नोदनादीति** । अभिघात आदिपदार्थः ॥ परावृत्तिरिति पर्यंतं प्रमाणमि(त्यनु)त्यावृत्तिः ॥ **सेति** । रूपाद्यंतरोत्पत्त्यनुमितस्थूलद्रव्योत्पत्तिरित्यर्थः ॥ **कारणगुणेभ्य इति** । प्रयोगांतरे पार्थिवावयविरूपादय इति पक्षस्यानुवृत्तिर्ज्ञेया ॥ **तत एवेति** । अवयविरूपादित्वात्पटरूपादिवदेवेत्यर्थः ॥ **विनाशेऽग्निसंयोगजत्वे चेति** । रूपादीनमिति योज्यम् । परमाणाविवेति भावः । तथा च प्रागुक्तप्रयोगावप्रयोजकावित्युक्तं भवति । **इत्यादिकमपीति** । कार्यद्रव्यं समवायिनाशान्नश्यति कार्यद्रव्यत्वात् । द्व्यणुकादिवदितिप्रयोग आदिपदार्थः

या० — कार्यमेव कारणे प्रमाणं भविष्यतीत्याशङ्कते **नोदनाद्युत्पत्तावित्यादिना**। कर्मसु विभागा इत्यादौ प्रमाणमित्येतदनुवर्तनीयम् ॥ **क्वचिन्सतीति** । क्वचिदवयविनि रूपाद्याश्रये सत्यपि रूपादीनां विनाश इत्यर्थः । तथा च पूर्वानुमानमप्रयोजकमिति भावः ॥ **अग्निसंयोगजत्वे चेति**। तथा च द्वितीयानुमानमप्रयोजकमिति भावः ।

श्री० — नोदनादिना नाशो नाप्रामाणिकः । यतः कार्यमेव कारणसद्भावे मानमित्याशयेन शङ्कते **नोदनादीत्यादिना** । तथा द्रव्यान्तरोत्पत्तिरपि नाप्रामाणिकीत्याह **तथेत्यादिना** ॥ **परमाणुष्विति** । यथा सत्स्वेव परमाणुषु पाकेन पूर्वरूपनिवृत्तिरूपान्तरोत्पत्ती भवतः, तथा सत्येव कार्यद्रव्ये पूर्वरूपोत्तररूपविनाशोत्पत्त्योः सम्भवेन कार्यद्रव्यनाशस्यावक्तव्यत्वादित्यर्थः । तथा च पिठरपाकप्रक्रियैवास्तु न पीलुपाकप्रक्रियेति भावः । कार्यद्रव्यनाशोऽनुमानसिद्धत्वात्स्वीकार्य इत्याशङ्कते **पार्थिवेति** । **उत्पद्यन्ते** पार्थिवावयविरूपादय इति वर्तते । यदा कारणगुणजन्यत्वं रूपादेस्तदा कार्यद्रव्यनाशेन द्रव्यान्तरमुत्पद्यते । तत्र च गुणाः कारणगुणेभ्यो जायन्त इति स्यादिति भावः ॥ **क्वचिदिति** । अवयविरूपादेराश्रये सत्यपि विनाशस्य सम्भवादाद्यानुमानेऽप्रयोजकता । तथा सत्येवावयविद्रव्येऽवयविरूपादेर्घटाग्निसंयोगरूपकासमवायिकारणत्वे सम्भवति सति कार्यद्रव्यनाशमङ्गीकृत्य कारणगुणेभ्य एवोत्पत्तिर्नैव वाच्या । तथा च द्वितीयानुमानेऽप्यप्रयोजकतेति भावः । **अन्यथेति** । यदि रूपादेः स्वाश्रयविनाशेनैव नाशः कारणगुणेभ्य एव चोत्पत्तिरुच्यत इत्यर्थः स्यात् । तथा च समवायिकारणनाशेन द्रव्यनाशः क्वापि न स्यात् । क्वचिद्दृष्टत्वात्तदङ्गीकारे प्रकृतेऽपि तत्तुल्यमिति हृदयम् ।

**सु० — नन्वग्निसंयोगः सर्वावयवेष्वस्ति न वा । न चेत्तत्र रूपादिविनाशोत्पादासम्भवः । तथा चावयवावयविनोर्विलक्षणरूपादिमत्त्वं स्यात् । आद्येऽग्न्यवयवानां सर्वत्र प्रवेशेन अवयविनाशस्यावर्जनीयत्वमिति चेन्न । अवयविद्रव्याणां सच्छिद्रत्वेन प्रवेशोपपत्तेः । संस्थानापगमाभावेनावयविविनाशायोगात् । तथाविधस्यैवोदाहृतत्वादित्यलम् ॥**

शे० — क्वचित्सत्यप्याश्रये पार्थिवरूपादेरग्निसंयोगेन विनाशेऽग्निसंयोगजत्वे च विरोधाभावादित्यप्रयोजकतयाऽनुमानद्वयं दूषितम् । तत्र बाधकं तर्कमाशङ्कते **नन्विति** ॥ **सर्वावयवेष्वस्ति न वेति** । अन्तर्बहिःसाधारण्येन कार्यद्रव्यसंबन्धिसर्वावयवेष्वस्ति, किं वा बहिष्ठावयवेष्वेवेत्यर्थः ॥ **तत्रेति** । दृढतरावयवान्तरावरुद्धमध्यभाग इत्यर्थः । पूर्वरूपादिनिवृत्त्यपूर्वरूपाद्युत्पत्तिहेतोरग्निसंयोगस्याभावात्कारणाभावे च कार्यासंभवादिति भावः । अस्तु तत्र रूपादिविनाशोत्पादासंभवः, किं तावताऽप्य-

निष्टमित्यत आह **तथा चेति** ॥ **विलक्षणेति** । श्यामा अवयवा, अवयवी च रक्त इत्येवं विलक्षणेत्यर्थः । न चेदं युक्तम् । अवयवावयविनोरेकजातीयरूपवत्तानियमादिति भाव ॥ **आद्य इति** ॥ **सर्वत्रेति** । अन्तर्बहिःसाधारण्येन सर्वावयवेष्वित्यर्थः । तेन विना तत्र रूपादिनाशोत्पादासंभवादिति भावः ॥ **अवयविनाशस्येति** । मूर्तानां समानदेशताविरोधादवयवान्तरसंयुक्ते मध्यभागे तेजःसंयोगस्यैवासंभवात्कथञ्चित्संभवे वाऽऽपरमाणु तेजःसंबन्धात्तेजसश्च स्पर्शवत्तया च नोदनाभिघातयोरन्यतरस्य संयोगस्यावश्यम्भावाद्द्रव्यारंभकावयवक्रियोत्पादादिक्रमेण द्रव्यनाशस्यावर्जनीयत्वादिति भावः ।

अग्निसंयोगः सर्वावयववृत्तिरिति पक्षमभ्युपगम्य तत्रोक्तां दृढतरावयवान्तरावरुद्धमध्ये तेजःसंयोगस्यासंभावनां तावत्परिहरति **अवयविद्रव्याणामिति** ॥ **सच्छिद्रत्वेनेति** । अन्यथा कुम्भादावन्तर्निहितानां तैलघृतादीनां स्पन्दनस्रवणाद्यनुपपत्तेरिति भावः । तथा च स्फटिकादेः सच्छिद्रतया तन्मध्ये इन्द्रियवत् घटादेः कार्यद्रव्यस्यापि सच्छिद्रतया तन्मध्येऽप्यग्निसंयोगोपपत्तेर्न मध्यभागे पाकानुपपत्तिरित्याशयः । तर्हि स्पर्शवद्वेगवत्तेजस आपरमाणुसंबन्धान्नोदनादिक्रमेण द्रव्यविनाशावश्यम्भावात्सत्येवाश्रयेऽग्निसंयोगेन रूपादिनिवृत्त्याद्यभ्युपगमभङ्ग इत्यत आह **संस्थानापगमाभावेनेति** । संस्थानापगम एव हि कार्यद्रव्यनाशहेतुर्न त्वन्यः । तथा हि । न तावत्स्पर्शवद्वेगवद्द्रव्याभिघातमात्रादवयवविनाशो वक्तुं शक्यः । तथा सति प्रबलपवनाभिमुखविनिहितघटादेरपि नाशापत्तेः । अथ तादृशतेजस एवायं स्वभावः । यत्पूर्वव्यूहविनाशेन व्यूहान्तरोत्पादनम् । यथाऽऽहोदयनः । 'ईदृशो हि तेजसो हि वेगातिशयः स्पर्शातिशयो वे'त्यादीत्यभिमतम् । तदसत् । तथा सति मुसलाभिहते घटादावविनाशापातात् । तेजस इत्येतदप्यनैकान्तिकम् । न हि चाक्षुषं चान्द्रं वा तेजो घटादि प्रपाचयतीति परोऽनुमन्यते । तस्माद्यत्र प्रबलं संस्थानापगमलक्षणं विनाशप्रत्यायकमस्ति तत्रैव विनाशो नान्यत्रेत्येव तत्त्वमिति कथमत्र संस्थानापगमाभावे विनाशः स्यादित्याशयः ।

अस्त्वेवं यत्राग्निसंयोगेऽपि संस्थानापगमाभावः । यत्र तु संस्थानापगमोऽपि तेन जातस्तत्र द्रव्यनाशावश्यम्भावात्कथं तद्घटश्यामतादेरयावद्द्रव्यभावित्वमित्यत आह **तथाविधस्यैवेति** । यत्राग्निसंयोगेऽपि संस्थानानपगमो घटादौ तादृशघटादिश्यामतादेरेवानिवृत्तविनाशा इत्यत्रोदाहरणतयोक्तत्वात् यत्राग्निसंयोगेन संस्थानापगमाद्द्रव्यनाशोऽपि तादृशघटादिश्यामतादेर्यावद्द्रव्यभावित्वेऽपि नास्माकं काचित्क्षतिरित्याशयः । यद्वा ननु भवतु यत्सच्छिद्रं घटादि तत्र मध्येऽप्यग्निसंयोगात्पाको, यत्तु सच्छिद्रं न भवति पाषाणादि तत्राग्निसंयोगायोगात्कथं मध्ये पाकः स्यादित्यत आह **तथाविधस्यैवेति** । सच्छिद्रघटादिश्यामतादेरेवानिवृत्तविनाशा इत्यत्रोदाहरणतयोक्तत्वात् निश्छिद्रपाषाणादिश्यामतादेस्तत्त्वेनानुदाहृतत्वात् तत्राग्निसंयोगेन मध्ये पाकासंभवेऽपि न क्षतिरिति भावः । किञ्च यदि कार्यद्रव्यविनाशः

स्याचर्हि स एवायं घट इति प्रत्यभिज्ञाविरोधः । तयाऽऽमपक्वावस्थयोरैक्यावगमात् । कथं वा सर्वास्ववस्थास्वापाकादौ घटादेस्तादृशस्यैव दर्शनम् । घटादेरुपरि निहितानां शरावोदञ्चनादीनां तथैव दर्शनम् । अग्निसंयोगेन घटादिस्फुटने हि तेषां पाकावश्यम्भावात् । मुद्गरादिप्रहारे तथा दर्शनात् । कथं वा यावन्त एव पाके निहितास्तावन्त एव पुनः प्राप्यन्ते । परमाणुभिर्द्व्यणुकादिप्रक्रमेण न्यूनानामधिकानां वा तदानीमारम्भसंभवात् । कथं वा यत्परिमाणाघटादय आपाके निहितास्तत्परिमाणा एव घटादयः परिपक्वा दृश्यन्ते । रेखोरेखादिचिन्हविलोपो वा कथं न भवेदित्यादिदूषणजातमभिप्रेत्याह **अलमिति** ।

यत्त्वत्रोदयनादिभिरुक्तं सूच्यग्रेण घटादौ त्रिचतुरत्रसरेण्वपगमे सति द्रव्यारम्भकसंयोगनाशेन द्रव्यनाशावश्यम्भावेन सर्वासामनुपपत्तीनामुभयसमाधेयत्वात् । न हि तत्र द्रव्यं न नश्यतीति शक्यते वक्तुमिति । अत्रैकदेशिनः परिहारमाहुः । कतिपयावयवनाशेऽप्यवशिष्टावयवानाश्रित्य कार्यावस्थानसंभवात्तत्रापि घटादीनां न नाशोऽन्यथा प्रत्यभिज्ञानाद्यनुपपत्तिरेवेति । तदसत् । तावदवयवावस्थानयोग्यस्य घटादेः स्वल्पेष्ववयवेषु वृत्तेरनुपपन्नत्वात् । अविनष्ट एव घटादौ संवृतपटवत्परिमाणसङ्कोचादेः तदुपपत्स्यत इति चेन्न । कठिनतावयवानां काष्ठपाषाणस्तम्भकुम्भादीनां सङ्कोचविकासयोरत्यन्तायोगात् । अस्तु तर्हि तत्र घटादिनाशकाभिमतेन परिमाणस्यैव नाश इति चेन्न । परिमाणस्याश्रयनाशैकनाश्यत्वात् । घटादिप्रत्यभिज्ञानवत्सूचीकरणस्थले परिमाणस्यापि प्रत्यभिज्ञायमानत्वेन तन्मते तन्नाशस्याप्यनुपपत्तेरिति । वयं तु ब्रूमः । तत्र कार्यद्रव्यनाशकस्य त्रिचतुरत्रसरेण्वपगमस्य प्रत्यक्षतया न्यूनाधिकभावस्य प्रत्यक्षेणोपलम्भात्कार्यभेदस्थित्या प्रत्यभिज्ञादेः सादृश्यविषयतयाऽन्यथासिद्धिरेव । न चैकत्र प्रत्यभिज्ञाया अन्यथासिद्धौ प्रकृतेऽपि तथाभावः शङ्कनीयः । बाधाबाधाभ्यामेव व्यवस्थोपपत्तेः । अन्यथाऽतिप्रसङ्गात् । तस्मान्न प्रतिबन्ध्यवकाश इति ॥ छ ॥

प० — **संस्थानेति** । पृथुबुध्नाद्याकाररूपसंस्थानेत्यर्थः । ननु निश्छिद्रे परमाण्वादौ कथमित्यत आह **तथाविधस्येति** । अनिवृत्तविनाशा इत्यत्र सच्छिद्रतयाभिमतस्य घटादेरेव आमघटश्यामतादय इत्युदाहृतत्वादित्यर्थ इत्येके । प्रत्यभिज्ञाविरोधादिबाधकं पीलुपाकप्रक्रियायां स्फुटमितिभावेनोक्तं **इत्यलमिति** ॥ **जातेः प्रतिव्यक्ति भिन्नत्वे प्रत्यक्षानुमानश्रुतीनामुक्तिः** ॥

या० — आश्रयनाशेऽसमवायिकारणभूतावयवसंयोगनाश एव प्रमाणं । तत्र चान्यथाऽनुपपत्तिरेव मानमित्याशयेन शङ्कते **नन्वग्निसंयोग इत्यादिना** ॥ **अन्त्यावयवानामिति** । घटारम्भकसर्वावयवगताग्निसंयोगस्य प्रदेशवृत्तित्वादिति भावः ॥ **अवयविनाशस्येति** । घटारम्भकसर्वावयवेष्वग्निसंयोगोपपादना-

यामन्यवयवानां सत्त्वं, मूर्तानां समानदेशताविरोधात् घटावयवानां परस्परसंयोगनाशं विना नोपपद्यते। अवयवसंयोगनाशे चावयविनाशस्यावर्जनीयत्वम् । असमवायिकारणनाशे कार्यनाशनियमादिति भावः ॥ **सच्छिद्रत्वेनेति** । घटाद्यन्तर्निहितानां जलतैलादीनां बहिः स्रवणदर्शनादिति भावः ॥ **संस्थानापगमेति** । अवयवसंयोगापगमाभावेनेत्यर्थः । घटावयवेषु परस्परं संयोगस्यानाशेऽपि वन्ह्यवयवानां प्रवेशो नानुपपन्नः । घटादीनां सच्छिद्रत्वेन मूर्तानां समानदेशताया अप्राप्तेरिति भावः । ननु यत्सच्छिद्रं न भवति पाषाणादि तत्र का गतिरित्यत आह **तथाविधस्येति** । सच्छिद्रघटादिश्यामतादेरेवानिवृत्तविनाशा इत्यत्रोदाहरणतयोक्तत्वादित्यर्थः । किञ्च यद्यामपाके निक्षिप्तस्य घटादेर्विनाशः कथं तर्हि स एवायं घट इति प्रत्यभिज्ञा । कथं वा सर्वास्ववस्थास्वामपाकादौ घटादेस्तादृशस्यैव दर्शनम् । घटादेरुपरि निहितानां शरावोदञ्चनादीनां तथैव दर्शनं च । घटादिनाशे हि तेषां पातः स्यात् । कथं वा यावन्त एवामपाके निहितास्तावन्त एव पुनः प्राप्यन्ते । परमाणुभिर्द्व्यणुकादिक्रमेण न्यूनानामधिकानां वा तदानीमारम्भसंभवात् । कथं वा तावत्परिमाणान्येव घटादीन्यामपाकानन्तरमुपलभ्यन्ते । रेखोपरेखादिचिन्हविलोपो वा कथं न भवेदित्यादिदूषणमभिप्रेत्याह **इत्यलमिति** । यत्तु कश्चिदाह तत्र सूच्यग्रेण घटादौ त्रिचतुरत्रसरेणुविभागे सति द्रव्यारम्भकसंयोगनाशे। द्रव्यनाशे सर्वासामनुपपत्तीनामुभयसमाधेयत्वादिति तत्तुच्छम् । तत्र द्रव्यनाशप्रयोजकस्य त्रिचतुरत्रसरेण्वपगमस्य प्रत्यक्षसिद्धत्वेन प्रत्यभिज्ञादेर्भ्रमत्वकल्पनात् । प्रकृते च तथाविधस्य द्रव्यनाशप्रयोजकस्यादर्शनात् । तदिदमुक्तं **तत्र प्रमाणाभावादिति** ॥

**श्री० — तत्रेति** । यत्रावयवेऽग्निसंयोगो नास्ति तत्रेत्यर्थः । इष्टापत्तिरिति चेत्तत्राह **तथा चेति** । तथाऽप्यवयविनाशः कुतो नेति चेत्तत्राह **संस्थानेति** ॥

**सु० — एवं सामान्यस्यानेकवृत्तित्वं प्रमाणैरपाकृतम् । तदयुक्तम् । तस्यानेकवृत्तित्वाभावे बाधकसद्भावात् ।**

**तथा हि । सर्वेषु गोपिण्डेषु यद्यनुगतमेकं गोत्वसामान्यं न स्यात् तदा तत्र गोशब्दसङ्गतिग्रहणलक्षणा व्युत्पत्तिर्न स्यात् । वृद्धव्यवहारोपदेशादिना हि व्युत्पत्तिर्भवति । न च प्रतिपिण्डं व्यवहारादिकमस्ति । तेषामानन्त्येन व्युत्पत्तावेव पुरुषायुषपर्यवसानप्रसङ्गात् । अतो यत्रोपदेशादिकं तत्रैव व्युत्पत्तिर्व्यवहारश्चेति स्यात् ॥ अथ विनैवैकेन निमित्तेनोपदेशाद्यभावेऽपि गोपिण्डान्तरे गोशब्द(सङ्गतिं)सङ्केतं गृह्णीयात् । तदाऽश्वपिण्डेऽपि किन्न गृह्णीयात् । अविशेषात् । अनुगतगोत्वे तु गोशब्दवृत्तिनिमित्ततयोपदेशादिनाऽवगते नायं दोषः प्रादुष्यात् ॥ तस्मादनेकेष्वेकशब्दसङ्गतिग्रहणान्यथाऽनुपपत्त्याऽनुगतमेकमभ्युपगन्तव्यमेव ।**

**शे०**— ननु व्युत्पत्तिरपीत्युत्तरभाष्यमनर्थकम् । न चैतत्सादृश्येन सङ्गतिग्रहणादिसम्भवप्रतिपादनार्थमिति वाच्यम् । तत्प्रतिपादनस्य प्रकृतासङ्गतत्वादित्यतः सामान्यस्यानुगतत्वसाधकतया तदभावे बाधकत्वेन पराभिमताया व्युत्पत्त्या अन्यथाऽनुपपत्तेः सादृश्येनान्यथोपपत्तिवर्णनान्निरासेन प्रागुक्ततदनुगतत्वोपपादकतया तत्सङ्गतत्वान्न तद्वर्णनानर्थक्यमित्यभिप्रेत्य वृत्तानुवादपूर्वकं पूर्वसङ्गतिं दर्शयंस्तदाक्षेपसमाधानपरतयोत्तरग्रन्थं सङ्गमयति **एवमित्यादिना** ॥ **अपाकृतमिति** । 'नरत्वादिकमप्येवमि'त्यादिनेति शेषः । तदेवोपपादयति **तथा हीत्यादिना** । मूले व्युत्पत्तिपदस्य पदवाक्यसाधारण्येन व्युत्पत्तिमात्रपरतायाः क्रियापदं कारकपदं विना नान्वयबोधकमिति सामान्यज्ञानरूपवाक्यव्युत्पत्तौ अनुगतसामान्यस्यानुपयोगेनासम्भवात् पदव्युत्पत्तिमात्रपरत्वमेवेत्यभिप्रेत्य तद्व्याख्याति **गोशब्दसङ्गतिग्रहणलक्षणा व्युत्पत्तिरिति** । नन्वनुगतसामान्याभावेऽप्यस्तु पदव्युत्पत्तिरित्यप्रयोजकोऽयं तर्क इत्यतोऽनुगतसामान्यस्य पदव्युत्पत्तौ प्रयोजकतामुपदर्शयितुं सम्प्रतिपन्नान् पदव्युत्पत्तिहेतूंस्तावदाह **वृद्धव्यवहारेति** । चैत्र जलमाहरेति प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य जलाहरणविषया प्रवृत्तिर्वृद्धव्यवहारः । अयं गौरित्याप्तवाक्यमुपदेशः । आदिपदेन व्याकरणोपमानकोशवाक्यशेषविवरणप्रसिद्धपदसमभिव्याहाराणां परिग्रहः । ततश्चानुगतसामान्यरूपप्रवृत्तिनिमित्तावधारणद्वारा उपदेशादेर्व्युत्पत्तिहेतुत्वं, न तस्य व्युत्पत्तावप्रयोजकत्वमित्याशयः । ननु स्वातन्त्र्येण व्यवहारोपदेशादेर्व्युत्पत्तिहेतुत्वसम्भवान्नानुगतसामान्यरूपप्रवृत्तिनिमित्तावधारकतया व्युत्पत्तिहेतुत्वकल्पनमुचितमित्यतः किमेवं वदतः प्रतिपिण्डमुपदेशादिकं व्युत्पत्तिहेतुतयाऽभिमतं, किं वा व्यक्तिविशेषनिष्ठमिति विकल्पद्वयं मनसि निधायासम्भवेनाद्यं प्रत्याचष्टे **न चेति** । असम्भवे हेतुमाह **तेषामिति** । द्वितीयेऽपि व्यक्तिविशेषनिष्ठमुपदेशादिकं किं तत्रैव व्युत्पत्तिहेतुरित्यभिमतं, किं वा सार्वत्रिकव्युत्पत्तिहेतुरिति विकल्पद्वयं मनसि निधायाद्यं प्रत्याचष्टे **अत इति** । ततश्च गोशब्दादपूर्वार्थधीर्न स्यादिति भावः । द्वितीयमतिप्रसङ्गेन दूषयति **अथ विनैकेनेति** । शक्यतावच्छेदकरूपप्रवृत्तिनिमित्तेनेत्यर्थः । प्रसङ्गमूलभूतव्याप्त्यभावात्तर्काभासोऽयमित्याशङ्क्य यदविशिष्टस्य यस्य यद्वत्ति तदविशिष्टस्यापरस्यापि तद्वतीत्यविशेषलक्षणव्याप्तिसद्भावान्नानुपपत्तिरित्याशयेनाह **अविशेषादिति** । नन्वयं प्रसङ्गस्त्वत्पक्षेऽपि समान इत्यतोऽनुगतसामान्यरूपप्रवृत्तिनिमित्तभावाभावाभ्यां विशेषान्नातिप्रसङ्ग इत्यभिप्रेत्योक्तं प्राक् **विवनैवैकेन निमित्तेति** । तदेव विभावयन्नभिप्रेतमुपदेशादेः प्रवृत्तिनिमित्तावधारणद्वारा सार्वत्रिकव्युत्पत्तिहेतुत्वमप्याह **अनुगतेति** ।

**प०**— **बाधकेति** । शक्तिग्रह-कार्यकारणभावग्रह-व्याप्तिग्रहसामान्यापवादभावरूप-बाधकसद्भावादित्यर्थः ॥ **उपदेशादिनेति** । व्याकरणोपमानकोशादिरादिपदार्थः ॥ **पुरुषायुषेति** । 'अचतुर-

विचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरज-सनिश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वा' इति निपातना साधु अथ **विवेनैकेनेति** । असाधारणैकधर्मेण विनेत्यर्थः ।

या० — **अथ विनैकेनेति** । शक्यतावच्छेदकरूपप्रवृत्तिनिमित्तेनेत्यर्थः ॥

श्री० — **अविशेषादिति** । निमित्ताभावोपदेशाभावयोरविशेषादित्यर्थः ॥

च० — **बाधकेति** । शक्तिव्यासिकार्यकारणभावग्रहानुपपत्तिलक्षणेत्यर्थः । साङ्कर्यादसंबन्धाच्च न जातित्वमुपाधिश्च नानुगत इति भावः । **सङ्गतिग्रहणलक्षणा** वाच्यवाचकभावसंबन्धज्ञानरूपा । **पुरुषायुषेति** । अचतुरेत्यादिनाऽकारः समासान्तो निपातितः ।

**सु० — ननु कथं तर्हि सामान्यरहितेषु पृथिव्यादिषु भूतमूर्तादिशब्दसङ्गतिग्रहणम् । उच्यते । तत्रापि बाह्यैकेन्द्रियग्राह्यगुणाश्रयत्वेयत्तावच्छिन्नपरिमाणत्वाद्युपाधिनिबन्धनैव व्युत्पत्तिः । उपाधीनां व्यावृत्तत्वेऽप्यनुगतसामान्याश्रयत्वेन दोषाभावात् ।**

शे० — ननु भूतत्वमूर्तत्वज्ञेयत्वाभिधेयत्वाद्यनुगतसामान्यरहितेष्वपि पृथिव्यादिषु त्वन्मते एकस्य भूतादिशब्दस्य व्युत्पत्तिवदनुगतसामान्येन विनैव अनेकेष्वपि गोपिण्डेषु एकस्य गोशब्दस्य संगतिग्रहणोपपत्तेः अनुगतसामान्येन विना व्युत्पत्त्यनुपपत्तेरभावान्न तयाऽनुगतसामान्यसिद्धिरित्याशङ्कते **नन्विति** । मूर्तादीत्यादिपदेन ज्ञेयाभिधेयादिपरिग्रहः । न च भूतत्वादीन्यप्यनुगतानीति वाच्यम् । तथा सति वक्ष्यमाणरीत्या नित्यत्वस्याप्यनिवार्यतया जातित्वप्रसङ्गात् । न चेष्टापत्तिः । भूतत्वमूर्तत्वयोर्जातित्वस्य सङ्करग्रस्तत्वात् । ज्ञेयत्वादेश्च सामान्यादावपि वृत्तेरित्याशयात् ॥ भवेदेवं व्युत्पत्तेरन्यथोपपत्तिः । यद्यनुगतसामान्येन विना भूतादिशब्दव्युत्पत्तिरभिमता स्यात् । न चैतदस्तीत्यभिप्रेत्य-तत्कथमित्यतः किमत्र व्युत्पत्तिनिदानं सामान्यमेव नास्तीत्यभिमतं, किंवाऽङ्गीकृत्य सामान्यं तस्यानुगतत्वं नास्तीति विकल्पद्वयं हृदि निधायाद्यं दूषयति **तत्रापीति** । भूतशब्दव्युत्पत्तिर्बाह्यैकेन्द्रियग्राह्यगुणा-श्रयत्वोपाधिनिबन्धना । मूर्तशब्दव्युत्पत्तिः इयत्तावच्छिन्नपरिमाणत्वोपाधिनिबन्धनेति योज्यम् । परिमाण-त्वादीत्यादिशब्देन ज्ञानविषयत्वादिपरिग्रहः । ननु बाह्यैकेन्द्रियग्राह्यगुणाश्रयत्वं परमाण्वव्यासमिति चेत् । उच्यते । द्रव्यग्राहकयावदिन्द्रियाग्राह्यबहिरिन्द्रियग्राह्यगुणवृत्तिगुणत्वव्याप्यजातिमद्गुणवत्त्वं तत्त्वमिति विवक्षितत्वात् । अस्यार्थः । द्रव्यग्राहकानि यावन्तीन्द्रियाणि चक्षुस्त्वङ्मनांसि, तदग्राह्या बहिरिन्द्रियग्राह्या च या गुणान्वयी वृत्तिर्जाती रूपत्वादिस्तद्गुणवत्त्वमिति । अस्ति चैतत्परमाणुष्वपीति नाव्याप्तिः । अत्र द्रव्यग्राहकयावदिन्द्रियाग्राह्यत्वविशेषणानुपादाने सङ्ख्यामादायात्मादावतिव्याप्तिः ।

बहिरिन्द्रियग्राह्या या गुणत्वन्यूनवृत्तिः संख्यात्वजातिस्तद्वत्याः संख्याया आत्मादौ सत्त्वात् । उपादाने त्वस्य नातिव्याप्तिः । संख्यात्वस्य यावद्द्रव्यग्राहकेन्द्रियग्राह्यत्वात् । न त्वत्र ग्राह्यान्तं गुणविशेषणम् । तथात्वे तादृशत्रसरेणुसंयोगवृत्तिसंयोगत्वादिजातिनिबन्धनातिव्याप्तितादवस्थ्यात् । द्रव्यग्राहकेत्यपि तदर्थमेव । अन्यथा संख्यात्वस्यापि यावदिन्द्रियाग्राह्यतयोक्तदोषतादवस्थ्यात् । द्रव्यग्राहकेन्द्रियाणि चक्षुस्त्वङ्मनांसि तदग्राह्यत्वं न रूपत्वादिष्वित्यव्याप्तिरित्यत उक्तं **यावदिति** । तथा च विशिष्टाभावस्य प्रत्येकं ग्राह्यत्वेऽपि सत्त्वान्नाव्याप्तिः । द्रव्यग्राहकयावदग्राह्यत्वमात्रोक्तौ संयोगत्वस्यापि प्राप्तिः । तस्य द्रव्यग्राहकसन्निकर्षविशेषाग्राह्यत्वात् । एवञ्च द्रव्यग्राहकयावदग्राह्या बहिरिन्द्रियग्राह्या च या गुणत्वन्यूनवृत्तिः संयोगत्वजातिस्तद्वतः संयोगस्यात्मन्यपि सत्त्वादात्मन्यतिव्याप्तिरित्यत उक्तम् **इन्द्रियेति** । संयोगत्वजातिश्च न द्रव्यग्राहकयावदिन्द्रियाग्राह्येति नातिव्याप्तिः । इन्द्रियग्राह्यत्वविशेषणानुपादानेऽप्यात्मन्यतिव्याप्तिः । अनुमानादिमात्रग्राह्ययावद्द्रव्यग्राहकेन्द्रियाग्राह्यधर्मत्वादिजातिमतो धर्मादेरात्मन्यपि सत्त्वात् । उपादाने तु तस्य नातिव्याप्तिः । धर्मत्वादेरिन्द्रियग्राह्यत्वाभावात् । बहिर्विशेषणानुपादानेऽपि तथा । मनोमात्रग्राह्यतया द्रव्यग्राहकयावदिन्द्रियाग्राह्यज्ञानत्वसुखत्वादिजातिमतो ज्ञानादेस्तत्र सत्त्वात् । उपादाने तु न दोषः । ज्ञानत्वादेर्बहिरिन्द्रियाग्राह्यत्वात् । बहिरिन्द्रियग्राह्यत्वं चात्र बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वमभिमतम् । अन्यथा ज्ञातो घट इति प्रत्यक्षे ज्ञानत्वस्याप्युपनीतभानविषयतया बहिरिन्द्रियग्राह्यत्वेन तद्वज्ज्ञानादिमति आत्मन्यतिव्याप्तितादवस्थ्यात् । प्रभामनोनिष्ठसामान्यगुणसाधारणचक्षुर्मात्रग्राह्योत्कर्षापकर्षरूपजातिमत्परिमाणवन्मनोऽव्याप्तये गुणत्वव्याप्येति जातिविशेषणम् । गुणत्वव्याप्यत्वं चात्र गुणत्वन्यूनवृत्तिजात्यन्यूनवृत्तित्वं विवक्षितम् । उत्कर्षत्वादिरूपजातिस्तु गुणत्वन्यूनवृत्तिपरिमाणत्वन्यूनवृत्तिरेवेति तद्व्युदासः । गुणवृत्तिपदं स्वरूपकथनम् । जातिपदं चाशुविनाशिविशेषगुणत्वशून्यान्यत्वमादाय ज्ञानादिभङ्ग्यादात्मन्यतिव्याप्तिवारणाय; तस्य शब्दज्ञानादिमात्रवृत्तित्वेनोक्तरूपत्वात् । अग्रिमगुणपदं स्वरूपकथनमेवेति सर्वमनवद्यम् । उपलक्षणं चैतत् । बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वं चेत्यपि द्रष्टव्यम् । यद्यप्येतदपि यथाश्रुतं परमाणुष्वव्याप्तमेव, तथाऽपि महत्त्वाश्रयेन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वव्याप्यजातिमद्गुणवत्त्वमित्यत्र तात्पर्यान्न दोषः । अत्रात्मन्यतिव्याप्तिवारणाय ग्राह्यान्तं गुणविशेषणं, न तु पूर्ववज्जातिविशेषणम् । संस्कारत्वमादाय भावनासाधारण्यादात्मन्यतिव्याप्तितादवस्थ्यात् । महत्त्वाश्रयग्राह्यत्वमिच्छादावप्यस्ति । आत्मग्राह्यत्वात् । तद्वृत्तिर्गुणत्वव्याप्या जातिरिच्छात्वादिका । तद्वदिच्छादिगुणवत्त्वाय आत्मन्यपि सत्त्वात् । तत्रातिव्याप्तिवारणायेन्द्रियेति विशेषणम् । संयोगत्वजातिमादायात्मन्यतिव्याप्तिवारणायोक्तं विशेषेति । सत्तामादायात्मन्यतिव्याप्तिवारणाय गुणत्वव्याप्येति । गुणत्वशून्यान्यत्वमादाय ज्ञानादिसाधारण्यादात्मन्यतिव्याप्तिवारणाय जातिपदम् । अग्रिमगुणपदं स्वरूपकथनमेवेत्यनवद्यम् ।

**इयत्तेति** । इयत्ता परिच्छेदस्तेनावच्छिन्नं परिच्छिन्नमिति यावत् । एवम्भूतं यत्परिमाणं तद्योगित्वमित्यर्थः । आकाशादिव्यावृत्त्यै इयत्तावच्छिन्नेत्युक्तम् । यद्यपि मूर्तत्वं जातिरेव नोपाधिः । न च भूतत्वेन सङ्करः । सति जातित्वसाधके भूतत्वस्यैवोपाधित्वात् । अवश्यं चैतदेवम् । अन्यथा शरीरत्वेन साङ्कर्यात् पृथिवीत्वमपि जातिर्न स्यात् । गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वं जातिः न तु शरीरत्वम् । जातित्वव्यवस्थापकानां कार्यतावच्छेदकत्वादीनामभावादिति चेत् तुल्यं मूर्तत्वे अपि । जातित्वव्यवस्थापकस्य क्रियासमवायिकारणतावच्छेदकत्वस्य मूर्तत्वे सत्त्वाद्भूतत्वे च तदभावात् । अत एवोक्तं कर्म मूर्तद्रव्यसमवेतमेवेति । तस्मान्मूर्तत्वं जातिरेवेति । जातिनिबन्धनैव मूर्तशब्दव्युत्पत्तिरिति नव्यमतम् । तथाऽपि जरन्नैयायिकादिमतमाश्रित्येदमुपाधिनिबन्धनत्वकथनमित्यवधेयम् । **उपाधिनिबन्धनेति** । उक्तविधभूतत्वाद्यौपाधिकधर्मनिबन्धनेत्यर्थः । न वयं भूतादिशब्दव्युत्पत्तिनिदानं सामान्यमेव नास्तीति ब्रूमः किन्त्वङ्गीकृत्य सामान्यं तस्यानुगतत्वमात्रं निराकुर्म इति द्वितीयं प्रत्याचष्टे **उपाधीनामिति** । भूतत्वाद्यौपाधिकधर्माणामित्यर्थः । **अनुगतसामान्याश्रयत्वेनेति** । अनुगतसामान्यघटितत्वेनेत्यर्थः । औपाधिकधर्माणामुपाध्यतिरेकपक्षे व्यावृत्ततया तेषामननुगतत्वेन व्युत्पत्तिनिदानत्वासम्भवेऽप्युपाध्यनतिरेकवादे तेषां गुणत्वपरिमाणत्वज्ञानत्वाभिधात्वादिजातिमात्ररूपत्वप्राप्त्या तेषां परम्परासम्बन्धेन घटादावप्यनुगतत्वसम्भवाद्युक्तं व्युत्पत्तिनिदानत्वमिति भावः ।

---

**स० — तत्रापीति** । भूतशब्दव्युत्पत्तौ बाह्यैकेन्द्रियग्राह्यगुणाश्रयत्वस्य, मूर्तशब्दव्युत्पत्तौ अवच्छिन्नपरिमाणत्वस्य निमित्तत्वादुपपत्तिः । अत्र इन्द्रियग्राह्यगुणाश्रयत्वस्यैव निमित्तत्वे आत्म-मनसोरपि भूतशब्दव्युत्पत्त्यापत्त्या बाह्येति विशेषणम् । बाह्येन्द्रियग्राह्यगुणाश्रयत्वस्यैव निमित्तत्वे परमाणौ भूतशब्दप्रवृत्तिर्न स्यात् । तद्गुणानामपि बाह्येन्द्रियग्राह्यत्वाभावात् । अतो बाह्येन्द्रियगुणसजातीयसंख्यासंयोगाश्रयगुणाश्रयत्वस्य उक्तौ तस्य आत्मन्यपि सत्त्वात् तत्रापि भूतशब्दव्युत्पत्त्यापत्त्या तत्परिहारार्थत्वेन एकपदस्य सार्थक्यादिति भावः । **अनुगतसामान्याश्रयत्वेनेति** । अनुगतसामान्यघटितत्वेनेत्यर्थः ।

प० — **सामान्यरहितेष्विति** । भूतमूर्तादिपदशक्यतावच्छेदकतया भूतत्वादिसामान्यरहितेषु पृथिव्यादिषु पञ्चसु गगनं विना मनसा सह पञ्चसु चेत्यर्थः ॥ **बाह्यैकेति** । बाह्यैकेन्द्रियग्राह्यगुणाश्रयत्वोपाधिना भूतपदस्यावच्छिन्नपरिमाणत्वलक्षणोपाधिना मूर्तपदस्य व्युत्पत्तिरित्यर्थः । पृथिव्यादिषु पञ्चसु तादृशाः गुणाः गन्धरसरूपस्पर्शशब्दाः अविभुत्वात्परिच्छिन्नपरिमाणत्वं च बोध्यम् । कालादातिवनप्रसक्त्यर्थमिन्द्रियग्राह्येति । आत्मन्यनतिप्रसक्तये बाह्येन्द्रियग्राह्येत्युक्तिः । एकेति स्पष्टार्थम् । तच्च

स्थूलपृथिव्यादिषु भूतपदव्युत्पत्तिनिमित्तम् । परमाण्वादिसाधारणभूतपदव्युत्पत्तौ तु बहिर्द्रव्यत्वावच्छिन्न-विशेषगुणाश्रयत्वादिकं ज्ञेयम् । अत एवादिपदप्रयोगः । केचित्तु बाह्येन्द्रियग्राह्यजातिमद्गुणा-श्रयत्वमिति तदर्थः । एवं च परमाण्वादावपि भूतपदव्युत्पत्तिः सुशकेत्याहुः ॥ **अनुगतसामान्येति** । गुणत्वरूपानुगतसामान्याश्रयत्वेनानुगमसंभवादित्यर्थः ।

**या० — सामान्यादिरहितेष्विति** । भूतत्वमूर्तत्वादिसामान्यरहितेष्वित्यर्थः । आदिपदेनोपा-धिग्रहणम् । भूतत्वमूर्तत्वयोर्न सामान्यरूपत्वं; साङ्कर्यात् । उपाधेश्च नानुगततेति भावः । **मूर्तादिश-ब्देति** । आदिपदेन भावाभावादिशब्दसङ्ग्रहः ॥ **तत्रापीति** । भूतशब्दव्युत्पत्तिर्बाह्यैकेन्द्रियग्राह्य-गुणाश्रयत्वनिबन्धना । मूर्तशब्दव्युत्पत्तिस्त्वियत्तावच्छिन्नपरिमाणवत्त्वनिबन्धनेति विवेकः । आदिपदेन नञर्थानुल्लिखितधीविषयत्वाद्युपाधिनिबन्धना भावादिशब्दव्युत्पत्तिरिति ज्ञातव्यम् । अत्रेन्द्रियग्राह्यगुणा-श्रयत्वमात्मन्यतिप्रसक्तमतो बाह्येति विशेषणम् । इदं च न भूतशब्दवाच्येषु परमाणुषु सम्भवति । तद्गुणानामतीन्द्रियत्वात् । अतो बाह्येन्द्रियग्राह्यजातिमद्गुणाश्रयत्वं विवक्षितमित्यवश्यं वाच्यम् । एतच्च बाह्येन्द्रियग्राह्यसंख्यात्वादिजातिमत्संख्याद्याश्रये कालादावतिप्रसक्तमत एकेति विशेषणम् । संख्यात्वादिकं च न बाह्येन्द्रियग्राह्यमिति सर्वं सार्थकमिति ज्ञातव्यम् । **उपाधीनामिति** । उपाधि-घटकानां पदार्थानामित्यर्थः ॥ **अनुगतसामान्येति** । अनुगतसामान्यैरनुगतीकृतानां तेषामुपाधिघटक-त्वान्नानुगम इति भावः । अत एवाहुः । 'परम्परासम्बद्धा जातिरेवोपाधिरिति' ।

**श्री० — सामान्यरहितेष्विति** । भूतत्वमूर्तत्वरूपजातिरहितेष्वित्यर्थः ॥ **भूतेति** । अनेकेषु पृथिव्यादिपञ्चकेष्विदं भूतमित्याद्यनुगतव्यहारान्यथाऽनुपपत्त्यैकस्य भूतशब्दस्य सङ्गतिग्रहणं वाच्यम् । न हि तत्रानुगतं भूतत्वं सामान्यं जातिरूपमस्ति । मूर्तत्वेन साङ्कर्यात् । एवमाकाशं विना मनः-सहितेषु पृथिव्यादिषु मूर्तशब्दव्यवहारेण मूर्तशब्दस्य सङ्गतिग्रहणमपेक्षितम् । न हि तत्रापि मूर्त-त्वमनुगतं सामान्यमस्ति । भूतत्वेन साङ्कर्यादिति भावः । गुणाश्रयत्वमवच्छिन्नपरिमाणत्वं चेति द्वन्द्वः । बाह्येन्द्रियग्राह्यगुणाश्रयत्वं भूतशब्दव्युत्पत्तौ निमित्तमवच्छिन्नपरिमाणत्वं मूर्तशब्दव्युत्पत्तौ निमित्तमिति विवेकः । इन्द्रियग्राह्यगुणाश्रयत्वस्यैव भूतशब्दव्युत्पत्तौ निमित्तत्वे मनोरूपान्तरिन्द्रि-यग्राह्यज्ञानादिगुणाश्रयत्वस्यात्मन्यपि सत्त्वात्तत्रापि भूतशब्दव्युत्पत्तिः स्यादतो बाह्येति । एवं तर्हि परमाणौ भूतशब्दव्युत्पत्तिर्न स्यात् । तद्गुणानां बाह्येन्द्रियाग्राह्यत्वेनोक्तनिमित्ताभावादिति चेन्न । तत्रापि बाह्येन्द्रियग्राह्यगुणसजातीयगुणाश्रयत्वस्य सत्त्वात् । एवं तर्ह्यात्मन्यपि पुनर्भूतशब्दव्युत्पत्तिः स्यात्तत्रापि बाह्येन्द्रियग्राह्यघटादिनिष्ठैकत्वादिसङ्ख्यारूपगुणसजातीयगुणाश्रयत्वस्य सत्त्वादतो बाह्यैकेन्द्रियेत्येकपदमपि

देयमत्रेत्याहुः । **उपाधीनां** तद्धटकपदार्थानाम् ॥ **अनुगतेति** । इन्द्रियत्वगुणत्वादिरूपानुगतसामान्याश्रयत्वादित्यर्थः । तथा चेन्द्रियत्वादेरनुगतत्वेनेन्द्रियादीनामप्यनुगतत्वात्तद्धटितोपाधीनामप्यनुगतप्रायत्वमिति भावः ।

च० — **पृथिव्यादिषु** तदादिपञ्चसु । भूतत्वमूर्तत्वादीनां **बाह्येत्यादि** । आत्मन्यतिप्रसङ्गाय-ग्राह्यान्तं, कालादौ तद्व्युदासाय बाह्येति । एकपदं स्पष्टार्थम् । इदं च कार्यभूते पृथिव्यादौ भूतपदव्युत्पत्त्यौपयिकम् । परमाणुसाधारणतद्व्युत्पत्त्यौपयिकं तु बहिर्द्रव्यत्वावच्छिन्नविशेषणाश्रयत्वमिति स्थितम् । परमाणुगुणानामतीन्द्रियतया । यथाश्रुतस्य परमाण्वसंग्राहकतया बाह्येन्द्रियग्राह्यजातिमद्गुणाश्रयत्वमिति परिष्कृत्य तादृशसंख्यात्वाद्याश्रयविशेषितकालादावनतिप्रसङ्गायैकपदोपादानमित्यप्याशयमाविर्भावयन्ति । प्रपञ्चनं तु निबन्धान्तरे द्रष्टव्यम् । **अनुगतसामान्येति** उपाधिघटकसामान्यानामेव पारम्पर्येण तत्तत्पदव्युत्पत्त्यौपयिकतेति भावः ।

**सु० — किञ्चानुगततन्तुत्वपटत्वादिसामान्याभावे कार्यकारणभावावधारणं न स्यात् । ततश्च कार्यार्थिनः कारणे प्रवृत्तिर्न स्यात् ।**

**शे०** — एवं मूलेऽन्यथासिद्धत्वेन कण्ठोक्तव्युत्पत्त्यन्यथाऽनुपपत्तिमभिधाय अपिपदेन सङ्गृहीतकार्यकारणभावावधारणाद्यनुपपत्तिमपि तत्साधकतया विवक्षुः कार्यकारणभावावधारणानुपपत्तिं तावदाह **किञ्चेति** । अनुगतेत्यतः पूर्वं कारणत्वकार्यत्वावच्छेदकेति पूरणीयम् । इष्टापत्त्या तर्कस्याभासतां निरस्यति **ततश्चेति** ।

**सु० — कार्यकारणभावे ह्यन्वयव्यतिरेकौ वोपदेशो वा प्रमाणम् । न च व्यावृत्तेषु वस्तुष्वन्वयव्यतिरेकग्रहणमुपपद्यते । नियमव्यभिचारयोर्दुर्ज्ञानत्वात् ।**

**शे०** — नन्वनुगततन्तुत्वाद्यभावेऽप्यस्तु कार्यकारणभावावधारणमित्यप्रयोजकोऽयं तर्क इत्यतो अनुगतसामान्यस्य कार्यकारणभावावधारणे प्रयोजकतामुपदर्शयितुं सम्प्रतिपन्नं तत्प्रमाणं तावदाह **कार्येति** । तर्हि ताभ्यामेव कार्यकारणभावावधारणोपपत्तेर्नानुगतसामान्यस्य तत्रोपयोगसिद्धिरिति अप्रयोजकत्वतादवस्थ्यमित्यतो नान्वयव्यतिरेकयोरज्ञातयोः तदवधारकत्वमतिप्रसङ्गात् । किन्तु ज्ञातयोरेव, तज्ज्ञानं चानुगतसामान्यं विना न सम्भवतीत्यस्त्येवानुगतसामान्यस्यान्वयव्यतिरेकग्रहणोपपादकतया तत्रोपयोग इत्यभिप्रेत्यानुगतसामान्याभावेऽन्वयव्यतिरेकग्रहणासम्भवमुपपादयति **न च व्यावृत्तेष्विति** । अनुगतकार्यतावच्छेदककारणतावच्छेदकधर्मशून्येष्वित्यर्थः । कुतोऽनुगतसामान्याभावेऽन्वयव्यतिरेकग्रहणा-

नुपपत्तिर्येन तदुपपादकतयाऽनुगतसामान्यस्य प्रयोजकता स्यादित्यतोऽनुगतसामान्यस्यान्वयव्यतिरेकनियमतदनियमरूपव्यभिचारग्रहहेतुत्वादित्यभिप्रेत्य तदभावे तयोर्दुर्ग्रहत्वमाह **नियमव्यभिचारयोरिति ।** व्यक्त्यपेक्षया नियतत्वस्य दण्डादाविव रासभेऽपि सत्त्वात् दण्डस्यान्वयव्यतिरेकावेव, रासभस्य च न ताविति न नियमानियमौ ज्ञातुं शक्याविति जात्यपेक्षयैव तौ ग्राह्यौ । ततश्च जातिसद्भावपक्षे दण्डजातीयस्य घटजातीयापेक्षया नियम एव, रासभजातीयस्य च घटजातीयापेक्षयाऽनियम एवेत्येवं नियमानियमयोर्ज्ञातुं शक्यत्वेऽप्यनुगतसामान्याभाववादिमते रासभादाविव दण्डादावपि जात्यभावेन तदपेक्षया नियमस्याप्यसम्भवेन दण्डादेर्नियम एव रासभादेश्चानियम इति न नियमव्यभिचारौ ज्ञातुं शक्यावित्यर्थः ।

प० — **नियमव्यभिचारयोर्दुर्ज्ञानत्वादिति ।** तन्तुपटव्यक्तिविशेषापेक्षया नियमस्य रासभेपि सत्त्वात् । पटान्तरं प्रति रासभो व्यभिचारी चेत्तन्तुरपि तथेति तन्त्वादौ नियमस्य रासभादौ व्यभिचारस्य दुर्ज्ञानत्वेन कारणाकारणविभागो न स्यादिति भावः ।

या० — **अन्वयव्यतिरेकौ वेति ।** व्यभिचारज्ञानाभावसहकृतमन्वयव्यतिरेकसहचारग्रहणमित्यर्थः । **न च व्यावृत्तेष्विति ।** तेषामानन्त्येन तत्रैव पुरुषायुषपर्यवसानप्रसङ्गादिति भावः । ननु सर्वेषु वस्तुषु तदसम्भवेऽपि प्रसिद्धेषु कतिपयेषु तद्ग्रहणमुपपद्यत एवेत्यत आह **नियमेति ।** अप्रसिद्धेषु वस्तुषु किमेवमन्वयव्यतिरेकयोर्नियम उत क्वचित्तद्व्यभिचार इति निश्चेतुमशक्यत्वादित्यर्थः । तथा चाप्रसिद्धव्यक्त्यन्तरे व्यभिचारसंशयेन क्वाचित्कमन्वयव्यतिरेकग्रहणं न कारणताग्राहकमिति भावः । अनुगतसामान्याङ्गीकारे तु पटत्वतन्तुत्वादौ कार्यकारणभावावच्छेदकतयोपदेशादिनाऽवगते यत्र यत्र यत्रावच्छेदकधर्मदर्शनं तत्र तत्रोपदेशाद्यभावेऽपि कार्यकारणभावावधारणमुपपद्यत इति द्रष्टव्यम् ।

श्री० — **व्यावृत्तेषु** अननुगतैकैकव्यक्तिषु कुतो नोपपद्यत इत्यत आह **नियमव्यभिचारयोरिति ।** अन्वयव्यतिरेकयोरित्यर्थः । न ह्येकस्मिंस्तन्तौ पटकारणत्वं गृहीतुं शक्यं, तथा सति क्वचिद्रासभसद्भावदशायामपि पटोत्पत्तेस्तस्यापि कारणत्वं गृह्येत । न वैतत्तन्त्वभावे पटाभाव इति व्यभिचारो व्यतिरेको वा गृहीतुं शक्यते, तथा सत्येतत्तन्त्वभावेपि कदाचित्पटोत्पत्तिशङ्कापत्तेः । अनुगतसामान्याङ्गीकारे तु तन्तुत्वावच्छिन्ने सति पटत्वावच्छिन्नं भवति तदभावे तदभाव इति तन्तुत्वावच्छेदेन पटत्वावच्छेदेन च कार्यकारणभावग्रहणे नातिप्रसङ्ग इत्याहुः ॥

**सु०— उपदेशश्चानन्तेषु न संभवत्येवेत्युक्तम् ।**

**शे०—** ननु तथाऽप्युपदेशेन कार्यकारणभावावधारणं, विनैवानुगतसामान्यं भविष्यतीत्यप्रयोजकत्वमेवेत्यत उपदेशस्यानुगतकारणतावच्छेदककार्यतावच्छेदकधर्मावधारणद्वारा कार्यकारणभावावधारणहेतुत्वेन स्वातन्त्र्येण तद्धेतुत्वाभावात् अस्त्येवात्राप्यनुगतसामान्यापेक्षेत्यभिप्रेत्य स्वातन्त्र्येणोपदेशस्य कार्यकारणभावावधारणहेतुतां निराचिकीर्षुः किं प्रतिपिण्डमुपदेशः कार्यकारणभावावधारणहेतुरित्यभिमतं, किंवा व्यक्तिविशेषनिष्ठः स तद्धेतुरिति विकल्पद्वयम् । द्वितीयेऽपि व्यक्तिविशेषनिष्ठ उपदेशः किं तत्रैव कार्यकारणभावावधारकः, किं वा सार्वत्रिकतद्धेतु । नाद्यः । तथा सत्यनुपदिष्टे कारणत्वानवधारणेनाप्रवृत्तिप्रसङ्गात् । न द्वितीयः । विनैवैकेन निमित्तेनोपदेशाभावेऽपि व्यक्त्यन्तरे कारणत्वावधारणे रासभादेरपि तदवधारणप्रसङ्गेन व्यक्तिविशेषनिष्ठस्योपदेशस्यानुगतसामान्यावधारकतया सार्वत्रिकव्युत्पत्तिहेतुत्वस्यावश्याश्रवणीयत्वादनुगतसामान्यसिद्धिरिति नाप्रयोजकत्वं तस्येति द्वितीयपक्षदूषणं चाभिप्रेत्याद्यपक्षदूषणमुक्तदूषणातिदेशेन दूषयति **उपदेशश्चेति** । तथा सति कार्यकारणभावावधारण एव पुरुषायुषपर्यवसानप्रसक्तेरित्यर्थः ।

**स०— उक्तमिति** । व्युत्पत्तावेव पुरुषायुषपर्यवसानप्रसङ्गात्, इत्यादिनोक्तमित्यर्थः ॥

**प०— इत्युक्तमिति** । तेषामानन्त्येन व्युत्पत्तावेव पुरुषायुषपर्यवसानादित्यनेनेति भावः ।

---

**सु०— अपि च व्याप्तिज्ञानमप्यनुगतसामान्याभावेऽनुपपन्नं स्यात् । व्यावृत्तवस्तूनामन्वयव्यतिरेकावगमानुपपत्तेः ।**

**शे०— अनुगतेति** । व्याप्यव्यापकतावच्छेदकधूमत्ववह्नित्वाद्यनुगतसामान्येत्यर्थः । नन्वनुगतसामान्यस्य व्याप्तिग्रहणे नोपयोगं पश्याम इत्यप्रयोजकोऽयं तर्क इत्याशङ्क्यान्वयव्यतिरेकाभ्यां वोपदेशेन वा व्याप्तिर्ज्ञातव्या । अन्वयव्यतिरेकयोश्च गृहीतयोरेव तद्धेतुत्वम् । तद्ग्रहणं चोक्तरीत्याऽनुगतसामान्यसापेक्षमेवेत्यन्वयव्यतिरेकग्रहणोपपादकतयाऽस्त्येवानुगतसामान्यस्य तत्रोपयोग इत्यभिप्रेत्यानुगतसामान्याभावेऽन्वयव्यतिरेकग्रहणानुपपत्तिमाह **व्यावृत्तेति** । धूमत्ववन्हित्वाद्यनुगतधर्मशून्यानामित्यर्थः । उक्तरीत्या नियमव्यभिचारयोर्दुर्ज्ञानत्वादिति भावः । उपलक्षणं चैतत् । उपदेशेन व्याप्तिग्रहपक्षेऽपि पूर्ववदुपदेशस्य स्वातन्त्र्येण तद्धेतुत्वानुपपत्त्या धूमत्वादिसामान्यधर्मावधारकतयैव तद्धेतुत्वस्याङ्गीकर्तव्यत्वात् अस्त्येवानुगतसामान्यापेक्षेत्यपि द्रष्टव्यम् ॥

**प०— अन्वयव्यतिरेकावगमेति** । व्यक्तिविशेषापेक्षयाऽन्वयस्य रासभेपि सत्वात् एतत्तन्त्वभावे पटाभाव इति व्यतिरेकस्य तादृशव्यक्तिविशेषेऽनुपलम्भात् पटान्तरापेक्षया च व्यतिरेकस्याभावाच

तदवगमानुपपत्तेरित्यर्थः । एवमन्यादावपि ज्ञेयम् । तथा च कार्यकारणानुमित्याद्ययोग इति भावः । अन्वयव्यतिरेकेत्यस्य सहचारावगमानुपपत्तेरिति वार्थः । तत्साध्यत्वाद्व्याप्तिग्रहस्येति भावः ।

या० — नन्वनुगतसामान्याभावेऽपि व्यभिचारज्ञानाभावसहकृतमन्वयव्यतिरेकसहचारदर्शनमेव व्याप्तिज्ञानजनकं भविष्यतीत्यत आह **व्यावृत्तेति** । तेषामानन्त्येन ज्ञातुमशक्यत्वादिति भावः । केषाञ्चित्तदवगमस्तूक्तरीत्या व्यभिचारशङ्काकलङ्कितो न व्याप्तिज्ञानजनकः । अनुगतसामान्याङ्गीकारे तु धूमत्वादौ व्याप्त्यवच्छेदकतयोपदेशादिनाऽवगते यत्र यत्र तद्दर्शनं तत्र तत्र व्याप्त्यवधारणमुपदेशाद्यभावे अप्युपपद्यत इति ज्ञातव्यम् ।

श्री० — **अन्वयव्यतिरेकेति** । व्याप्तीत्यर्थः ।

**सु० — सामान्यापवादन्यायश्चानुगतसामान्याभावे न भवेत् । द्वयोः प्रमाणयोरेकस्वरूपविषयत्वे (ह्य)त्वन्यतरस्याप्रामाण्यमेव स्यात् । भिन्नविषयत्वे नापवादविषयोऽस्ति । अस्ति च तावद्गौरयमित्यनुगताकारप्रत्ययः । न चासौ व्यावृत्तेषु सम्भवति । भ्रान्तत्वप्रसङ्गात् । न चैतत्सर्वमन्यापोहनिबन्धनम् । तस्यापि प्रतिपिण्डं व्यावृत्तत्वात् । अनुगतत्वे वा किमपराद्धं सामान्येन । तथा च विधिरूपः प्रत्ययोऽपि समाहितः स्यात् ।**

शे० — **सामान्यापवादेति** । सामान्यस्योत्सर्गं प्रति विषयत्वादत्र सामान्यग्रहणेनोत्सर्गो लक्ष्यते । ततश्चोत्सर्गापवादेत्यर्थः । सामान्याभावेन तद्विषयकोत्सर्गासंभवात् उत्सर्गापवादन्यायानुपपत्तेः । तथाऽप्यनुगतसामान्यसिद्धिरिति भावः । भवेदेतदेवं यद्युत्सर्गस्य सामान्यविषयत्वं स्यात् । न चैतदस्ति । अपवादविषयमात्रविषयत्वस्य तद्भिन्नविषयत्वस्य वा संभवेन तस्यानावश्यकत्वादित्यतस्तदुभयं निराकरोति **द्वयोः प्रमाणयोरित्यादिना** । 'न हिंस्यादि'त्युत्सर्गस्य, 'अग्नीषोमीयं पशुमालभेते'त्यपवादस्य चाग्नीषोमीयपशुहिंसारूपैकस्वरूपविषयत्वे विधिनिषेधयोरन्यतरस्याप्रामाण्यं स्यात् । न चैतद्युक्तम् । उभयोरपि प्रमाणत्वादित्यर्थः ॥ **भिन्नविषयत्व इति** । अग्नीषोमीयमित्यपवादप्रमाणस्य यागीयहिंसाविषयत्वं, 'न हिंस्यादि'त्युत्सर्गस्य तदितरहिंसाविषयकत्वमिति भिन्नविषयत्व इत्यर्थः ॥ **नापवादेति** । हिंसात्वादिसामान्यधर्मपुरस्कारेण प्रवृत्तोत्सर्गप्रमाणविषयत्वप्रसक्तिमानेव ह्यपवादप्रमाणविषयतया प्रसिद्धः । न चासौ भिन्नविषयत्वे संभवतीत्यतोऽपवादविषयसिद्ध्यर्थमुत्सर्गस्यानुगतसामान्यविषयत्वमवश्यं वाच्यमित्यनुगतसामान्यसिद्धिरिति भावः । एकाकारप्रत्ययान्यथाऽनुपपत्त्याऽप्यनुगतसामान्यसिद्धिरित्यभिप्रेत्यानुगताकारप्रत्यये विप्रतिपद्यमानं प्रति तत्सद्भावमुपपादयति **अस्ति चेति** । प्रमितस्यापन्हवायोगादिति भावः । अस्त्वनुगताकारप्रत्ययस्तथाऽपि कथं तदनुपपत्तिरित्यतोऽनुगतसामान्यविषयत्वात् तस्योक्त-

रूपसामान्यसद्भाव एवोपपत्तिरित्यभिप्रेत्यानुगतसामान्याभावे तदसंभवमाह **न चामाविति** । नन्वनुगत-सामान्याभावेऽपि तद्विषयकोऽयं प्रत्ययोऽस्तु को दोष इत्याशङ्क्य तथा सति भ्रान्तित्वप्रसङ्गः । न चेष्टापत्तिः । बाधकाभावेन तदसंभवादित्याशयवानाह **भ्रान्तत्वेति** । भ्रान्तिर्भ्रान्तमिति 'नपुंसके भावे क्तः' इति भावे क्तप्रत्ययः । तस्य भावस्तत्त्वं, तत्प्रसङ्गात् भ्रान्तित्वप्रसङ्गादिति यावत् । ननु सर्वेष्वेव गोपिण्डेष्वगोभ्योऽश्वादिभ्यो व्यावृत्तिरस्ति । सैव गोशब्दप्रवृत्तिनिमित्तं तदवधारकतयैव चोपदेशादे-र्व्युत्पत्तिहेतुत्वं भविष्यतीति न विधिरूपं गोवृत्तिसामान्यं विना व्युत्पत्त्यनुपपत्तिरिति न तयोक्तरूप-सामान्यसिद्धिः । एवमन्यव्यावृत्तिरेव नियमव्यभिचारग्रहसंपादकतयाऽन्वयव्यतिरेकग्रहोपपादिका भविष्यतीति नानुगतसामान्यं विना कार्यकारणभावस्य व्याप्तेर्वाऽवधारणानुपपत्तिरिति न ताभ्यामप्यभि-मतसामान्यसिद्धिः । अहिंसाव्यावृत्तिरूपधर्मपुरस्कारेणैव प्रवृत्तोत गेप्रमाणविषयत्वप्रसक्तिमत्त्वेनापवाद-विषयत्वोपपत्तेः नोत्सर्गापवादन्यायानुपपत्तिरिति न तयाऽपि तत्सिद्धिः । अनुगतमतिरप्यतद्व्यावृत्त्यै-वोपपद्यते । भवति हि गौरियमिति प्रतीतेरगोव्यावृत्तोऽयमिति विषयः । जातिवादिनाऽपि गोत्वा-दिविशिष्टप्रत्ययस्य तद्विषयत्वस्यैवाभ्युपगमात् । न हि तन्मते वैशिष्ट्यमतद्व्यावृत्तेरन्यदस्ति । तथा च नानुगताकारप्रत्ययेनापि तत्सिद्धिरित्यपोहवादिनो बौद्धस्य मतमाशङ्क्य निषेधति **न चेति** । भवेदेवम-पोहाश्रयणेन व्युत्पत्त्यादेरन्यथोपपत्तिवर्णनम् । यद्यपोहस्य सर्वानुगतता स्यात् । न च साऽस्तीत्याह **तस्यापीति** । प्रतिपिण्डं भिन्नस्य तस्य न सार्वत्रिकव्युत्पत्त्याद्यङ्गत्वमिति भावः । नन्वनुगतत्वाङ्गी-कारात्तस्य नेयमनुपपत्तिरित्यतः तथा सति नरत्वादेर्भिन्नाश्रितत्वसाधकधर्मत्वादेः अत्रैवानैकान्त्यप्रसङ्गादिति दोषे सत्येव दोषान्तरमाह **अनुगतत्वे वेति** सामान्यस्यानुगतत्वपक्षे प्रसक्तस्यानेकाश्रितस्य सामान्यस्या-श्रयेण त्वत्यन्ताभेदात् आश्रयाणामपि परस्परमभेदप्रसङ्गरूपदोषस्य, अपोहस्यानुगतत्ववादे अनेकाश्रितस्यापोह-स्याश्रयेणात्यन्ताभेदादाश्रयाणामपि परस्परमभेदप्रसङ्ग इत्येवं समानतया सामान्यपरित्यागेनापोहवादाश्रयणे विशेषहेत्वभावादित्यर्थः । तर्हि तव एवापोहपरित्यागेन सामान्यपरिग्रहोऽपि तव किं निबन्धन इत्यत आह **तथा चेति** ॥ **विधीति** । एकाकारस्य विधिरूपेण यः प्रत्ययः सोऽस्तीत्यर्थः । प्रत्ययेनानुगता-कारस्य विधिरूपत्वसिद्धेः पोहस्य निषेधरूपतया तदयोगादनुगताकारप्रत्ययविषयतया नासावङ्गीकर्तुं शक्यत इति विधिरूपं गोवृत्तिगोत्वमेव तथाऽभ्युपगम्यत इति भावः ।

**स०—भ्रान्तत्वेति** । भ्रान्तिः **भ्रान्तम्** । नपुंसके भावे क्तः । तस्य भावः तत्त्वम् । अनुगताकारप्रत्ययस्य अनुगतप्रवृत्तिनिमित्तविषयकत्वात् । तदभावे तत्प्रत्ययस्य भ्रमत्वप्रसङ्गादित्यर्थः ।

**प०—सामान्यापवादेति** । न हिंस्यादिति हिंसात्वसामान्यमाश्रित्य प्रवृत्तं सामान्यशास्त्रं, अग्नीषोमीयं पशुमालभेतेति विशेषविषयोऽपवाद इति न्यायो न स्यादित्यर्थः । तद्व्यनक्ति **द्वयोरिति** ।

सामान्यापवादप्रमाणयोरित्यर्थः ॥ **नापवादविषयोस्तीति** । प्रसक्तिमत एवापवादविषयत्वाज्जात्याश्रयस्यैवापवादविषयेपि प्रसज्यमानत्वादिति भावः । अनुगतधर्माभावे बाधकचतुष्टयमुक्त्वा तत्सत्त्वे प्रत्यक्षं च प्रमाणयति **अस्ति चेति** ॥ **न चासाविति** । प्रतीतिसिद्धोनुगताकार इत्यर्थः । तथा च भ्रान्तत्वेत्यत्रेतनोक्तिरुपपन्ना । अन्यथा भ्रान्तित्वेत्युक्तिप्रसङ्गात् । **अन्यापोहः** अतद्व्यावृत्तिः ।

**या० — सामान्यापवादेति** । उत्सर्गापवादन्याय इत्यर्थः ॥ **द्वयोरिति** । उत्सर्गापवादप्रमाणयोरित्यर्थः । न हिंस्यात्सर्वभूतानीत्युत्सर्गप्रमाणम् । अग्नीषोमीयं पशुमालभेतेत्याद्यपवादप्रमाणम् । अनयोश्च यद्यग्नीषोमीयपशुहिंसारूपैकस्वरूपमात्रविषयकत्वं, तदाऽन्यतरस्याप्रामाण्यमेव स्यादित्यर्थः ॥ **भिन्नविषयत्व इति** । यागीयहिंसातदितरहिंसाविषयकत्व इत्यर्थः ॥ **नापवादविषय इति** । हिंसात्वादिसामान्यधर्मपुरस्कारेण प्रवृत्तोत्सर्गप्रमाणविषयत्वप्रसक्तिमानेवापवादप्रमाणविषयः प्रसिद्धः । न चासौ भिन्नविषयत्वे युक्त इत्यर्थः । तथा चापवादविषयसिद्ध्यर्थमनुगतसामान्यमावश्यकमिति भावः ॥ **भ्रान्तत्वेति** । अत्र भ्रान्तिर्भ्रान्तं, भावे क्तः । 'नपुंसके भावे क्त'इति भावेऽपि तस्य विधानादिति ज्ञातव्यम् ॥

**श्री० — असौ** अनुगतप्रत्ययः । **व्यावृत्तेषु** अननुगतैकैकव्यक्तिषु । कुतो न सम्भवतीत्यत आह **भ्रान्तत्वेति** । भावे क्तः । अनुगतप्रत्ययस्यानुगतनिमित्तविषयकत्वावश्यम्भावात्तदभावेऽपि अनुगतप्रत्ययाङ्गीकारे **तस्य** तद्विषयकप्रत्ययस्य भ्रान्तत्वं स्यादित्यर्थः । अतद्व्यावृत्तिरूपान्यापोहस्याभावरूपस्य निमित्तस्य सर्वत्र विधिरूपानुगतप्रत्ययनिमित्तत्वमनानुभाविकम् । भावरूपानुगतसामान्याङ्गीकारे तु नायं दोष इत्याह **तथा चेति** ॥

**च० — अन्यापोहनिबन्धनं** अतद्व्यावृत्तिनिबन्धनम् ।

**सु० — एवञ्चाङ्गीकार्ये गोत्वादेरनुगमे नित्यत्वमप्यनिवार्यमित्यत आह** व्युत्पत्तिरपीति ।

**अनु० —** व्युत्पत्तिरपि हि सादृश्येनैव गम्यते ॥

**अपिपदं कार्यकारणभावावधारणादिसमुच्चयार्थम् । हिशब्दो यस्मादित्यर्थे । गम्यते अभ्युपगम्यतेऽवगम्यत इति वा । अस्ति तावत्सादृश्यं नाम पदार्थान्तरम् । गोसदृशो गवय इत्याद्यध्यक्षसिद्धत्वात् । तेनैव चोपपद्यते व्युत्पत्त्यादिकम् । तस्मान्न तदर्थं गोत्वादेरनुगतत्वं कल्पनीयम् ।**

**शे० — नित्यत्वमनिवार्यमिति** । व्यक्तौ नष्टायामपि जातेरनुभूयमानत्वादनित्यत्वे तदयोगान्नित्यत्वसिद्धिरिति भावः । मूलेऽपिपदानर्थक्यमाशङ्क्य कार्यकारणभावावधारणादिसमुच्चयार्थत्वान्न तदिति भावेन तदर्थतया अपिशब्दं व्याचष्टे **अपिपदमिति** । आदिपदेन व्याप्तिज्ञानादिपरिग्रहः । मूले

हिशब्दस्य तत् आशङ्क्य एतद्वाक्यार्थस्य हेतुत्वसूचनार्थत्वान्न तदिति भावेन हिशब्दं तदर्थतया व्याचष्टे **हिशब्द इति** । उपसर्गा हि धातुलीनस्यार्थस्य व्यञ्जका एवेति मतमाश्रित्य गम्यत इत्येतद्व्याचष्टे **गम्यतेऽभ्युपगम्यत इति** । अभ्युपगममात्रस्य वस्तुव्यवस्थापकत्वाभावान्न तेन व्युत्पत्त्यादेरन्यथैवोपपत्तिसिद्धिरिति तदर्थकैवशब्दानुपपत्तिमाशङ्क्य तदुक्तान्यथैवोपपत्तिसिद्ध्यर्थं गम्यत इत्येतत्प्रकारान्तरेण व्याचष्टे **अवगम्यत इति वेति** । ननु प्रमाणाभावात्सादृश्यमेव नास्ति । सत्त्वेऽपि वा सिद्धांते तदनुपपत्तिरेव । तथा हि । न तावत् 'सामान्यान्येव भूयांसि गुणावयवकर्मणाम् । भिन्नप्रधानसामान्यवर्ति-सादृश्यमुच्यते' इत्युक्तरीत्या गोगवययोर्गुणावयवकर्मगतसामान्यान्येव सादृश्यमिति वक्तुं शक्यम् । अनुगतसामान्यानभ्युपगमात् । नापि तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं, धर्ममात्रस्य प्रातिस्विकताङ्गीकारेण गोगवययोः परस्परगतधर्मवत्त्वाभावेन सादृश्याभावप्रसङ्गात् । तद्गतधर्मशब्देन तद्गतधर्मसदृशधर्माभिधाने च स्फुटमात्माश्रयत्वम् । तत्कथं सादृश्येन व्युत्पत्त्यादेरन्यथोपपत्तिवर्णनमित्यतः प्रमाणोपन्यासेन तत्सद्भावं तावदाह **अस्ति तावदिति** । सामान्यात् भिन्नं परमते सामान्यादिवदखण्डमेव सादृश्यमित्यङ्गीकारान्न सिद्धान्ते तदनुपपत्तिरपीत्याशयेनोक्तं **पदार्थान्तरमिति** ।

**स०** — ननु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमित्येवंरूपसादृश्यस्य भवन्मतेऽसंभवात् कथं तेन शक्तिग्रहः । तथा हि धर्ममात्रस्य प्रातिस्विकत्वेन तद्गतधर्मवत्त्वाभावात् । तत्सदृशधर्मवत्त्वे चात्माश्रयापातादित्यतो नेदं सादृश्यलक्षणं किं त्वन्यदेवेत्याह **अस्ति तावदिति** । तथा च गणनाव्यवहारासाधारणकारणं संख्येत्यादाविव सदृशप्रतीतिविषयत्वमेव सादृश्यमित्यत्रापि नात्माश्रयत्वम् ।

**प०** — **नित्यत्वमपीति** । एकव्यक्तिनाशेपि व्यक्त्यन्तरे दर्शनादिति भावः ॥ **अवगम्यत इति वेति** । सादृश्येन शब्दशक्त्यादिकमनुमेयमित्यर्थः । यदि अवयवगुणकर्मवृत्तिसामान्यान्येव सादृश्यं, तदा किमधिकमाचीर्णमित्यत आह **पदार्थान्तरमिति** ।

**या०** — **नित्यत्वमपीति** । एकव्यक्तिनाशेऽप्यन्यत्र तदवस्थानसम्भवादिति भावः । नन्वनुगतसामान्याभावे सादृश्यस्याप्यभावः 'सामान्यान्येव भूयांसि गुणावयवकर्मणाम् । भिन्नप्रधानसामान्यवर्ति सादृश्यमुच्यते' इत्युक्तत्वेन गोगवययोर्गुणावयवकर्मगतसामान्यानामेव सादृश्यरूपत्वादित्यत आह **पदार्थान्तरमिति** । सामान्यभिन्नमित्यर्थः । नन्वेवं सादृश्यस्य न निर्वचनं सम्भवति । धर्ममात्रस्य प्रातिस्विकतया तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपस्य निर्वचनस्यासम्भवात् । तद्धर्मसदृशधर्मवत्त्वरूपस्य चात्माश्रयेण दुष्टत्वादिति चेत् । सत्यम् । परमते सामान्यमिवास्मन्मते सादृश्यमखण्डमेवाङ्गीकार्यमिति साम्प्रदायिकाः । अन्ये तु गणनव्यवहारासाधारणकारणं सङ्ख्येत्यादाविव सदृशप्रतीतिविषयत्वमेव सादृश्यमिति तन्निर्वचनेऽपि न दोष इत्याहुः ॥

**च० — अवगम्यते** सादृश्येन शब्दशक्त्यादिकमनुमीयते । **पदार्थान्तरम्** । अवयवगुणकर्मवृत्तिसामान्यातिरिक्तम् । अत्र व्याकर्तारः निखिलधर्माणां प्रातिस्विकतया तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपस्य, आत्माश्रयप्रसङ्गेन तद्धर्मसदृशधर्मवत्त्वरूपस्य च सादृश्यस्य दुर्वचत्वेपि न्यायनये सामान्यवदखण्डमेव सादृश्यमङ्गीकार्यमिति न्यभान्त्सुः ।

**सु० — सादृश्येन तावत् शब्दव्युत्पत्तिप्रकारं दर्शयितुमुपक्रमते** सर्वेष्विति ।

**अनु० —** सर्वेषु युगपच्छब्दः सदृशेषु प्रवर्तते ॥

**बहवो हि शब्दसङ्गतिग्रहणोपायाः । तत्र यदोपदेशतो व्युत्पद्यते तदाऽयं गौरित्युपदेशवाक्यं व्याप्तिग्राहकतयोपयुज्यते । कथम् ! सादृश्योपधानेन सर्वेषु गोपिण्डेषु युगपदेककालमयमित्यादिशब्दः प्रवर्तते । अयं गौरित्यस्यायमेतत्सदृशाः सर्वेऽपि गोशब्दवाच्या इत्यर्थो वक्त्रा अभिप्रेयते । श्रोत्रा चावधार्यत इति यावत् । द्वयोरपि सार्वत्रिकव्युत्पत्तिकामत्वेन वाक्यस्यैकपिण्डविषय(क)त्वकल्पनानुपपत्तेरिति भावः ।**

**शे० —** ननु सर्वेष्वित्युत्तरवाक्यमनर्थकम् । न चोपदेशस्य व्याप्तिग्राहकतामुपदर्शयितुं तदिति वाच्यम् । तदुपदर्शनस्य प्रकृतानुपयोगादित्याशङ्क्य 'व्युत्पत्तिरपि हि'ति पूर्ववाक्यप्रतिज्ञातस्य सादृश्येन व्युत्पत्तिभवनप्रकारस्योपदर्शनाय तदुपक्रमरूपत्वात्तस्य न तदिति भावेन तदुपक्रमरूपतया तद्योजयति **सादृश्येनेति** । उपक्रमे उपदेशस्य व्याप्तिग्राहकत्वोक्त्या प्रसक्तां भाष्ये तन्मात्रस्यशब्दसङ्गतिग्रहणोपायत्वभ्रान्तिं तदुपायानेकत्वकथनेन तावत्परिहरति **बहवो हीति** । 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यैर्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः'इत्यादिप्रसिद्धिद्योतनार्थो हिशब्दः । तर्ह्युपदेशस्य व्याप्तिग्राहकत्वोक्तिर्भाष्यकारीया अनुपपन्ना स्यादित्यतो भवेदेवं यदि सा उपदेशमात्रस्य सङ्गतिग्रहणोपायत्वाभिप्राया स्यात् । न चैवम् । उपायानेकत्वस्य प्रमितत्वेन तदयोगात् । किन्त्वन्याभिप्रायैवेत्यतो नानुपपत्तिरित्यभिप्रेत्य तदुक्तेरभिप्रायमाह **तत्रेति** । बहुषूपायेषु ॥ व्यक्तिविशेषस्य गोशब्दवाच्यत्वपरतया प्रतिभासादुपदेशस्य व्याप्तिग्राहकत्वं न सम्भवतीति भाष्यकारीयं तद्वर्णनमनुपपन्नमित्याशयेन पृच्छति **कथमिति** । उपदेशवाक्यस्थस्यायमित्यादेर्व्यक्तिविशेषनिष्ठत्वाभावात्तद्ग्राहकत्वोपपत्तिरिति भावेनायं गौरित्युपदेशवाक्यस्य व्याप्तिग्राहकत्वोपपादकतया भाष्यं योजयति **सादृश्योपधानेनेति** । तेन निमित्तेनेत्यर्थः । तथा चायमिति शब्दस्य सन्निहिते गवि मुख्यैव वृत्तिः । असन्निहितगोव्यक्तिषु सादृश्येन निमित्तेन प्रवृत्तत्वाद्गौणी । युगपद्वृत्तिद्वयविरोधश्च न दूषणमित्युक्तं भवति । तथाऽप्युपदेशस्य

कथं व्याप्तिग्राहकत्वसिद्धिरित्यतस्तत्तात्पर्यमाह **अयं गौरित्येतस्येति** । ननु नायमित्यादेर्गौण्याऽसन्निहितपिण्डपरत्वं संभवति । तन्निमित्तभूताया अन्वयानुपपत्तेरभावेन गौण्याश्रयणस्यानुचितत्वादित्यतो अन्वयानुपपत्तिरेव न तत्र निमित्तम् । तथा सति यष्टीः प्रवेशयेत्यादौ तदभावेन लक्षणाभावप्रसङ्गात् । किन्तु क्वचित्तात्पर्यानुपपत्तिरपि । तथा चेहान्वयानुपपत्तेरभावेऽपि तात्पर्यानुपपत्तेः सद्भावाधुक्तमुख्यवृत्त्याश्रयणमित्यभिप्रेत्य तात्पर्यानुपपत्तिमुपपादयति **द्वयोरिति** । वक्तृश्रोत्रोरित्यर्थः ॥ **सार्वत्रिकेति** । श्रोतुर्मम सार्वत्रिकव्युत्पत्तिर्भवत्विति कामनावत्त्वेन वक्तुरप्यस्य सार्वत्रिकव्युत्पत्तिर्भवत्विति कामनावत्त्वेनेत्यर्थः ।

**स० — द्वयोरपीति** । वक्तृश्रोत्रोरित्यर्थः । श्रोतुः सार्वत्रिकव्युत्पत्तिकामत्वात् , वक्तुरपि अस्य सार्वत्रिकव्युत्पत्तिर्भवतु इति कामनाया विद्यमानत्वादिति भावः ।

**प० — बहवो हीति** । 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यैर्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः' इत्युक्तदिशा व्याकरणादयो बहव इत्यर्थः ॥ **उपदेशत इति** । आप्तवाक्यरूपादित्यर्थः ॥ **सादृश्योपधानेनेति** । सादृश्यरूपनिमित्तेनेत्यर्थः ।

**या० — बहवो हीति** । 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यैर्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः' इत्युक्तेरिति भावः ॥ **सादृश्योपधानेनेति** । सादृश्यरूपनिमित्तेनेत्यर्थः । तथा चायमितिशब्दस्य सन्निहितगवि मुख्यैव वृत्तिरसन्निहितगोषु गौणी सादृश्येन निमित्तेन प्रवृत्तत्वादित्युक्तं भवति । युगपद्वृत्तिद्वयविरोधश्च नास्मन्मते दोष इति भावः ॥ **श्रोत्रा चेति** । यष्टीः प्रवेशयेत्यादाविव प्रकरणबलादिति भावः । **सार्वत्रिकेति** । श्रोतुर्मम सार्वत्रिकव्युत्पत्तिर्भूयादिति कामनावत्त्वेन वक्तुरप्यस्य सार्वत्रिकव्युत्पत्तिर्भवत्विति कामनावत्त्वेनेत्यर्थः । अनेन तात्पर्यानुपपत्तिरमुख्यवृत्त्याश्रयणे बीजभूतोपपादिता भवतीति ज्ञातव्यम् ।

**श्री० — बहवो हीति** । 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यैर्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः' इत्युक्तेरिति भावः ॥ **उपदेशत** आप्तवाक्यादित्यर्थः ।

**च० — सादृश्योपधानेन** सादृश्यरूपनिमित्तेन । तथा चायमिति शब्दस्य सन्निहिते गवि मुख्यैव वृत्तिरसन्निहितगोव्यक्तिषु सादृश्येन निमित्तेन प्रवृत्तत्वाद्गौणी । युगपद्वृत्तिद्वयविरोधश्च सिद्धान्ते नेति न क्षतिरिति भावः ।

सु० — यद्ययं गौरित्यादिवाक्यं नैकपिण्डमात्रविषयम् । किन्त्वयं चैतत्सदृशाश्च सर्वे गोशब्दवाच्या इति व्याप्तिपरं तदा सङ्गतिग्रहणोत्तरकालं गामानयेत्युक्ते गोशब्दात्सर्वगोप्रतिपत्तिः स्यात् । अभीष्टगोप्रतिपत्तिस्तु जायते सा कथमिति तटस्थस्य चोद्यं परिहरति तथाऽपीति ।

अनु० — तथाऽपि प्राप्तितस्त्वेकवचनाच्च विशेषतः ॥

अभीष्टावगतिश्च स्यात्

यद्यप्युपदेशो नैकपिण्डविशेषगोचरस्तथाऽपि गामानयेत्युक्तेऽभीष्टगोपिण्डावगतिः स्यादेव । कथम् । प्राप्तितो योग्यत्वात् । अतीतानागतानामत्यन्तविप्रकृष्टदेशस्थानां गवामानयनयोग्यताऽभावमालोच्य तत्परित्याग इत्यर्थः । तर्हि सन्निहितसर्वगोप्रतिपत्तिः कुतो न भवति इति चेन्न । गामित्येकवचनात् । तथाऽपि यस्य कस्यचिदेकस्य गोपिण्डस्य प्रतिपत्तिः स्यात् । नाभीष्टस्यैवेति चेन्न । शबलां बहुलां कालाक्षीमित्यादिविशेषणात् । एतदुक्तं भवति । गोशब्दाद्भवत्येव सर्वगोप्रतिपत्तिः । किन्तु लिङ्गप्रकरणादिबलात्पिण्डविशेषे कार्यप्रतिपत्तिरिति ।

शे० — ननु तथाऽपीत्युत्तरभाष्यमनर्थकम् । न च गामानयेत्यादिवाक्यस्याभीष्टावगमकत्वव्युत्पादनार्थं तदिति वाच्यम् । तद्व्युत्पादनस्याप्यनर्थकत्वात् । न चोक्तरीत्या गोशब्दस्य सकलगोपिण्डेषु सङ्गतिग्रहणाभ्युपगमे तदुत्तरकालं गामानयेत्युक्ते गोशब्दात्सर्वगोव्यक्त्युपस्थित्या सर्वत्र कार्यप्रतीतिप्रसङ्गेन पिण्डविशेषे कार्यप्रतिपत्त्यनुपपत्तिशङ्कापरिहारार्थत्वात्तद्व्युत्पादनमर्थवदिति वाच्यम् । तथा सति पूर्ववादिमतेऽपि सङ्गतिग्रहणकाले गोत्वसामान्यलक्षणप्रत्यासत्त्या सर्वगोव्यक्तीनामुपस्थित्या सर्वोपसंहारेणैव सङ्गतिग्रहणात्तदुत्तरकालं गामानयेत्युक्ते गोशब्दात्सर्वगोव्यक्तीनामुपस्थित्या सर्वत्र कार्यप्रतिपत्तिसङ्गेन पिण्डविशेषे तदनुपपत्तिप्रसङ्गस्य तुल्यत्वेन तस्योभयसमाधेयतया तेनोक्तविधयाऽतिप्रसक्तशङ्कायाः कर्तुमशक्यत्वेन तत्परिहारार्थत्वायोगादित्यतः प्रतिवादिनस्तथा शङ्काया असंभवेऽपि तटस्थस्य तच्छङ्कायाः संभवेन तत्परिहारार्थतया न तदानर्थक्यमिति भावेन तटस्थशङ्कानिवर्तकतया तद्योजयितुं तामुत्थापयति **यदीति** । ननु च गामानयेत्यादौ गोशब्दात्सर्वगोप्रतीतिरिष्टैवेति न तदापादनं युक्तमित्यतः तथा सति सर्वत्र कार्यप्रतिपत्तिप्रसङ्गेन व्यक्तिविशेष एव तदनुपपत्तिप्रसक्तिरिति भावेन पिण्डविशेषे कार्यप्रतिपत्त्यनुपपत्तिमाह **अभीष्टेति** । अभीष्टगोपिण्डावगतिरित्यादौ सर्वत्रायमेवार्थः । ननु नानेन भाष्येणोक्तशङ्कापरिहारः । प्रसिद्धस्योक्तावगतिकरणस्यात्रानुपन्यासादित्यतो यद्यप्युपदेशो नैकपिण्डगोचरो यद्यपि च सङ्गतिग्रहणोत्तरकालं गामानयेत्युक्ते गोशब्दात्सर्वगोप्रतिपत्तिरेव भवति, तथापि **अभीष्टावगतिः** पिण्डविशेषे कार्यप्रतिपत्तिर्युज्यत एवेति मूलयोजनामभिप्रेत्योक्तशङ्कापरिहारं भाष्यारूढतया दर्शयति **एतदुक्तं भवतीति** ॥ **गोशब्दादिति** । तथा च तदापादनमिष्टापादनत्वान्नायुक्तमिति भावः । तर्हि सर्वत्र

कार्यप्रतिपत्तिप्रसङ्गेन व्यक्तिविशेष एव तदनुपपत्तिः स्यादित्यभिप्रेत्य पृच्छति **किन्त्विति** । मूले प्रापित इत्याद्यनेकविशेषणसूचितहेतुबलात्तदुपपत्तिरिति समाधत्ते **लिङ्गेति** । अभीष्टावगतिरित्यस्य विवरणं **पिण्डविशेषे कार्यप्रतिपत्तिरितीति** । आनयनप्रतिपत्तिरित्यर्थः । इतीत्यस्येत्येतदिति पूर्वेणान्वयः ।

**स०— गोशब्दादिति** । अत्रादौ सर्वगोप्रतीतिः ततो व्याप्त्यनुसन्धानेन विशेषप्रतिपत्तिरिति प्रतीतिद्वयं नाभिप्रेतम् । किं तु सैन्धवादिशब्दानां प्रकरणाद्यनुसारेण विशेषार्थबोधकत्ववत् प्रकृतेऽपि प्रकरणादेव गोशब्दात् विशेषप्रतीतेरेव जायमानत्वादिति बोध्यम् ।

**प०—** एतत्सदृशा इत्यस्यायमेतत्सदृशश्चेत्यर्थो ध्येयः । सामान्यप्रत्यासत्तिवादिनं प्रतीदं चोद्यं सममिति वा शक्त्याद्यग्रहचोद्यसमाधिप्रस्तावे एतच्चोद्यसमाध्योर्विजातीयत्वात्तटस्थस्य चोद्यमित्युक्तम् । विशेषत इत्यस्यार्थः **इत्यादि विशेषणादिति** ॥ **लिङ्गप्रकरणादीति** । शबलत्वादिलिङ्गेत्यर्थः । आदिपदेन सान्निध्ययोग्यत्वादिग्रहः ॥ **कार्येति** । आनयनबन्धनादिकार्यप्रतिपत्तिरित्यर्थः ॥

**या०— तटस्थस्येति** । वैशेषिकमते शक्तिग्रहकाले गोत्वसामान्यलक्षणया सर्वगोव्यक्त्युपस्थितौ तत्र सर्वगोशब्दसङ्गतेर्गृहीतत्वेनास्याः शङ्कायास्तेनापि समाधेयत्वान्न तस्येयं शङ्केति भावः ॥ **कार्यप्रतिपत्तिरिति** । कृतिसाध्यानयनादिप्रतिपत्तिरित्यर्थः । अनेन असन्निहितपिण्डेष्वानयनं कृत्यसाध्यमिति तत्परित्याग इति सूचयति ।

**श्री०— बहुलां** कपिलाम् । 'बहुला कपिला धेनुरि'त्यमरः । **कार्यप्रतिपत्तिरिति** । आनयनादेः कर्तव्यताप्रतिपत्तिरित्यर्थः ।

**सु०— अस्त्वयं गौरित्यादिवाक्यं** व्याप्तिपरम् । ततः **किमित्यत** आह शक्तिरिति ।

**अनु०—** शक्तिः सादृश्यगा यतः ॥
तादृशोऽयं च तच्छब्द इति ज्ञापयति स्फुटम् ॥

**यतो वाचकत्वशक्तिः शब्दस्य सादृश्यगा** सादृश्यसम्बन्धिनी सादृश्य( स्य ) व्यापिकेति यावत् । **अस्माद्वाक्यादवधारितेति शेषः । अतस्तां शक्तिं** तत्तद्विषयतया **सादृश्यं स्फुटं ज्ञापयति** ॥ **कथमित्यतः प्रयोगप्रकारं दर्शयति** तादृश इति ।

**चो यस्मादित्यर्थे । अयं परिदृश्यमानो यस्मात्तादृश उपदेशकाले सन्निहितेन पिण्डेन सदृशस्तस्मात् । तच्छब्दः स शब्दो यस्य वाचकोऽसौ तथोक्तः । इतिशब्दः प्रकारवाची ।**

**प०— अस्माद्वाक्यादिति** । अयं गौरित्यादिवाक्यादित्यर्थः ।

**श्री॰— सादृश्यव्यापिकेति** । सादृश्यस्य व्यापिकेत्यर्थः । **तत्तद्विषयतया** गवादिविषयकतया, तद्वाचकतया ।

**सु॰— अयमत्र समुदायार्थः । व्युत्पत्त्यर्थं तावन्नानुगतं किमप्यङ्गीकरणीयम् । सादृश्येनैव तदुपपत्तेः । न च वाच्यं सादृश्यमप्यनुगतं चेत्किं सामान्येनापराद्धम् । व्यावृत्तत्वे कथं सार्वत्रिकव्युत्पत्त्यङ्गमिति । न हि सादृश्यं शब्दशक्तिविषयतया प्रवृत्तिनिमित्ततया वा अभ्युपगम्यते । किन्नाम लिङ्गतया । यथा हि गन्धवत्त्वं न पृथिवीशब्दवाच्यम्, नापि तत्प्रवृत्तिनिमित्तम्, किन्तु पृथिवीत्ववत्या व्यक्तेः पृथिवीशब्दवाच्यत्वे लिङ्गमेव । तथा ते ते व्यावृत्ताकारा एव तैस्तैर्व्यावृत्तैर्द्रव्यगुणकर्मसामान्यादिभिर्निमित्तैस्तत्तच्छब्दवाच्याः । सादृश्यं तु व्यावृत्तमपि तदवबोधे लिङ्गतयोपयुज्यते । तथा हि । यदाऽयं गौरित्युपदेशपूर्विका व्युत्पत्तिस्तदा तद्वाक्यं व्याप्तिग्राहकम् । अयं चैतत्सदृशाश्च सर्वे गोशब्दवाच्या इत्येवम्परत्वात् । व्यवहारादिपूर्विकायां तु व्युत्पत्तौ भूयोव्यवहारादिदर्शनेन सादृश्यव्याप्यताऽवगमो भवति । ततश्चैतद्वाक्यादिनाऽवगतव्याप्तिरनुमिमीते 'अयं गोशब्दवाच्यो भवितुमर्हति तत्सदृशत्वात् यस्तत्सदृशस्स गोशब्दवाच्यस्तथा चायं तत्सदृशस्तस्माद्गोशब्दवाच्यः' इति ।**

**शे॰** मूले स्फुटपदानर्थक्यमाशङ्क्य सादृश्यस्य सङ्गतिग्राहकत्वपक्षेऽनुपपत्तिलेशो नास्तीति सूचनार्थत्वान्न तदिति भावेन तत्रानुपपत्त्यभावमुपपादयन्नेवाकाङ्क्षाक्रमेण 'व्युत्पत्तिरपी'त्यादेः स्फुटमित्यन्तस्य ग्रन्थस्याभिप्रायमाह **अयमत्रेति ॥ किमपीति** । सामान्यमपोहश्चेत्येवं किमपीत्यर्थः । तत्कुत इत्यतो भवेदेवं सामान्यादेरनुगतस्याङ्गीकर्तव्यत्वं, यदि तेन विना व्युत्पत्त्यनुपपत्तिः स्यात् । न च साऽस्तीत्याशयेनान्यथैव तदुपपत्तिमाह **सादृश्येनैवेति** । ननु सादृश्यस्य न व्युत्पत्त्यङ्गत्वं वक्तुं शक्यते । तद्धि गवादिव्यक्तिवत्सादृश्यस्य शब्दशक्तिविषयतया वा वाच्यं, गोत्वादिवत्प्रवृत्तिनिमित्ततया वा, तृतीयप्रकाराभावात् । तदुभयं च सादृश्यस्यानुगतत्वपक्षे यद्यपि संभवति । तत्र सादृश्यस्यैकत्वप्राप्त्या तत्र शक्तिग्रहे प्रवृत्तिनिमित्तताग्रहे वा पुरुषायुषपर्यवसानाप्रसङ्गात् । तथाऽप्यनुगतत्वं न तस्य त्वया वक्तुं शक्यम् । तथा सति धर्माणामनुगतत्वपक्षे बाधकस्य तदाश्रयाभेदप्रसङ्गस्य सामान्यानुगतत्वे इव, सादृश्यानुगतत्वेऽप्यविशिष्टत्वेन सामान्यसादृश्ययोरुभयोरप्यनुगतत्वस्यैव वाऽननुगतत्वस्यैव वाऽङ्गीकर्तव्यत्वेन तथाऽनङ्गीकृत्य सामान्यमननुगतं सादृश्यं त्वनुगतमित्यर्धजरतीयाश्रयणायोगात् । अतो व्यावृत्तत्वमेव तस्य त्वया वाच्यम् । न च तत्पक्षे व्युत्पत्त्यङ्गत्वं तस्योक्तविधया संभवति । तत्पक्षे सादृश्यानामनन्तत्वप्रसक्त्या तत्र शक्तिग्रहे प्रवृत्तिनिमित्ताग्रहे वा तत्रैव पुरुषायुषपर्यवसानप्रसङ्गात्कथं तेन

व्युत्पत्तेरन्यथैवोपपत्तिवर्णनमित्याशङ्क्य निषेधति **न चेति** । कुतो नेत्यतः सादृश्यस्योक्तप्रकारद्वयेन व्युत्पत्त्यङ्गत्वपक्षेऽनुगतत्वाननुगतत्वविकल्पतद्दोषप्रसक्तावपि तथा व्युत्पत्त्यङ्गत्वानभ्युपगमान्न तत्प्रसङ्ग इत्याह **न हीति** । तर्हि प्रकारान्तराभावात्सादृश्येनैव तदुपपत्तिरिति रिक्तं वच इत्याशङ्कते **किन्नामेति** । अस्ति लिङ्गतया व्युत्पत्त्यङ्गत्वं नाम तृतीयप्रकार इति परिहरति **लिङ्गतयेति** । उक्तरूपतृतीयप्रकारे विप्रतिपद्यमानं प्रति अनुरूपदृष्टान्तोपदर्शनव्याजेन विपक्षे बाधकमाह **यथा हीति** ॥ **न पृथिवीशब्दवाच्यमिति** । तच्छब्दात्तदप्रतिभासादिति भावः ॥ **नापीति** । गन्धवत्त्वस्य पृथिवीशब्दशक्यतया सह समनियतत्वेऽपि गोत्ववत्तया ज्ञात एव गोशब्दशक्तिग्रहवद्गन्धवत्तया ज्ञात एव पृथिवीशब्दशक्तेर्ग्रहान्न प्रवृत्तिनिमित्तत्वं तस्येति भावः । **व्यावृत्ताकारा इति** । व्यक्तिविशेषा इत्यर्थः । **द्रव्यगुणकर्मेत्यादि** । दण्ड्यादिशब्दे द्रव्यं, शुक्लादिशब्दे गुणः, पाचकादिशब्दे कर्म, गवादिशब्दे सामान्यं, डित्थादिशब्दे त्वादिशब्दोक्त आकारविशेषः प्रवृत्तिनिमित्तमिति विवेको द्रष्टव्यः । सहयोगे चेयं तृतीया । ततश्च व्यक्तीनामिव प्रवृत्तिनिमित्तानामपि तच्छब्दवाच्यत्वमेवात्राभिमतम् । न च गोत्वस्य प्रवृत्तिनिमित्तत्वे शक्यतावच्छेदकत्वेन पृथिवीशब्दे गन्धवत्त्वस्येवाशक्यत्वं स्यात् । ततश्च गोशब्दजन्यधीविषयत्वं न स्यादिति वाच्यम् । अवच्छेदकं हि द्विविधम् । एकं सत्तया, यथा पृथिवीत्वजातिनिमित्तके पृथिवीशब्दे गन्धवत्त्वम् । तस्य पृथिवीशब्दशक्यतया सह समनियतत्वेऽपि गन्धवत्तया ज्ञात एव पृथिवीशब्दशक्तेरग्रहात् । अपरं ज्ञाततया यथा गोत्वजातिनिमित्तके गोशब्दे गोत्वम् । गोत्ववत्तया ज्ञात एव गोशब्दशक्तिग्रहात् । तत्राद्यं न प्रवृत्तिनिमित्तं किन्तु द्वितीयमेव । तच्च शक्यमेव । यो ह्येतच्छब्दनिष्ठशक्तेरयं विषय इति ज्ञाने शक्तिं प्रति विषयतया भासते स एव हि शक्यः । शक्तिं प्रति विषयतया भानं विशेष्यरूपायां व्यक्ताविव विशेषणभूते गोत्वेऽप्यस्त्येव । तथा च कथं शक्यत्वव्याप्येन प्रवृत्तिनिमित्तत्वेन तस्याशक्यत्वापादनम् । युक्तं च घटादिनिष्ठसाक्षात्कारजनकतावच्छेदकस्यापि उद्भूतरूपस्य तज्जनकत्ववत् घटोऽयमिति ज्ञानं प्रति घटनिष्ठविषयतावच्छेदकस्यापि घटत्वस्य तद्विषयत्ववच्च, शक्यतावच्छेदकस्यापि शक्यत्वम् । शक्यत्वाविशेषे अपीदं प्रवृत्तिनिमित्तमिदं नेति व्यवस्था तु विशेषणत्वविशेष्यत्वाभ्यामेव युक्ता । व्यक्तय एव वाच्या इति पद्धतिग्रन्थे तु 'विशेष्यतये'ति शेषपूरणान्न तद्विरोध इत्यवधेयम् । यद्वा हेतावियं तृतीया । तेन व्यक्तीनामेव वाच्यत्वं न निमित्तानामिति सिद्ध्यति । तथा च पद्धतिग्रन्थोऽपि यथाश्रुत एव सङ्गच्छते । अत्र च पक्षे पूर्वोक्तज्ञाने शक्तिं प्रति विषयतया भासमानत्वे सति यद्विशेष्यं तदेव शक्यमभिमतम् । तथा च गोत्वमप्यशक्यमेव शक्यतावच्छेदकम् । शब्दात्तद्धीस्तु शक्यत्ववच्छक्यतावच्छेदकत्वस्यापि शाब्दधीविषयत्वे तन्त्रत्वादुक्ता । अत एव च परमते पारिभाषिकाकाशादिपदात् अशक्यस्यापि शब्दाश्रयत्वस्य धीरिति द्रष्टव्यम् । अत्र च द्रव्यगुणकर्मसामान्यादिभिरिति वदता द्रव्यादीनां निमित्तानाम-

ननुगमेऽपि यथा दण्ड्यादिशब्दव्युत्पत्तिः तथा गोत्वादिसामान्यस्याननुगमेऽपि गवादिशब्दानां व्युत्पत्ति-रित्यस्तु । न च तत्रापि दण्डत्वादिकमनुगतमिति वाच्यम् । तथाऽपि निमित्तीभूतदण्डादेरनुगतत्वा-लाभात् । न हि पितुः पाण्डित्येन पुत्रः पण्डितो भवतीति सूचितमिति ज्ञातव्यम् ॥ **तदवबोध इति** । तत्तत्प्रवृत्तिनिमित्तविशिष्टव्यक्तिविशेषाणां तत्तच्छब्दवाच्यतावबोध इत्यर्थः ।

नन्वस्त्वेवं यत्रोपदेशतो व्युत्पद्यते तत्रोपदेशस्योक्तरीत्या व्याप्तिग्राहकत्वेन सादृश्यस्य व्याप्त्यव-धारणात्तेन तच्छब्दवाच्यत्वानुमितिः । यत्र तु व्यवहारादिना व्युत्पद्यते तत्र सादृश्यस्य व्याप्यत्वानव-धारणात्कथं तेन तदनुमितिः । न ह्युपदेशत एव व्युत्पद्यते न व्यवहारादिनेति तवापि मनोगतं भविष्यति । नापि युक्तमेतदित्यतस्तत्पक्षे सादृश्यस्य व्याप्यत्वावधारणे उपायमाह **व्यवहारादीति** ।

**स० — व्यावृत्तत्व इति** । सादृश्यस्य गोत्वादिवदननुगतत्वे यत्र गोत्वज्ञानं, तत्रैव गोशब्द-वाच्यत्वज्ञानसंभवेऽपि अन्यत्र तदज्ञानवत् प्रकृतेऽपि यत्र सादृश्यज्ञानं, तस्यैव गोशब्दवाच्यत्वज्ञानेऽपि अन्यत्र तज्ज्ञानाभावे तच्छब्दवाच्यत्वज्ञानं न संभवतीति भावः । **प्रवृत्तिनिमित्ततया** इत्यस्याप्यय-मेवार्थः ।

**प० — कथं मार्वत्रिकेति** । विप्रकृष्टानामनुपस्थितेः शक्तिं प्रति विषयत्वेन वा निमित्तत्वेन वा सादृश्यमनुप्रविशेत्तदानन्त्येन तद्विषयकत्वादिना शक्तिग्रहस्याशक्यत्वाच्चेति भावः ॥ **न हीति** । एतेन गोशब्दात्सादृश्यधीप्रसङ्गोऽपि प्रत्युक्तः । **व्यावृत्ताकाराः** पदार्था इति शेषः । अत्र तैस्तैर्व्यावृत्तैः सामान्यैरित्येव प्रकृतत्वाद्ग्रन्थे द्रव्यगुणकर्मणामप्युक्तिर्दृष्टान्तार्था । यथा दण्डी चैत्रः शुक्लः पटः पाचको याजक इत्यादौ दण्डादिद्रव्यगुणकर्मणामननुगमेपि दण्ड्यादिषु दण्ड्यादिशब्दव्युत्पत्तिः तथा गोत्वादिसामान्यस्याननुगमेपि गवादिशब्दानां व्युत्पत्तिरस्तु । न च तत्र दण्डत्वशुक्लत्वादिकमनुगतमिति वाच्यं । तथापि निमित्तस्य दण्डादेरननुगमात् । न हि पितुः पाण्डित्येन पुत्रः पण्डितो भवतीत्युक्तं तर्कताण्डवे ॥ **भूयो व्यवहारादीति** । विसदृशेऽप्रयोगात्सदृशेष्वेव प्रयोगात्सादृश्यं शक्तिव्याप्यमिति गृह्णातीत्यर्थः । आदिपदेन विसदृशे व्यवहाराभावग्रहः ।

**या० — शब्दशक्तिविषयतयेत्यादि** । येनाननुगतसादृश्येषु शब्दशक्तिग्रहे प्रवृत्तिनिमि-त्तताग्रहे वा पुरुषायुषपर्यवसानं स्यादिति भावः ॥ **ते ते व्यावृत्ताकारा इति** । ते ते व्यक्तिविशेषा इत्यर्थः ॥ **द्रव्यगुणकर्मेत्यादि** । दण्ड्यादिशब्दे द्रव्यं, शुक्लादिशब्दे गुणः, पाचकादिशब्दे कर्म, गवा-दिशब्दे सामान्यं, प्रवृत्तिनिमित्तमिति विवेको द्रष्टव्यः । आदिशब्दात् डित्थादिशब्दप्रवृत्तिनिमित्तभूतः आकारविशेषो ग्राह्यः । सहयोगे चेयं तृतीया । ततश्च प्रवृत्तिनिमित्तानामपि तत्तच्छब्दवाच्यता अनेनोक्ता भवतीति ज्ञातव्यम् । युक्तं चैतत् । यो ह्येतच्छब्दनिष्ठशक्तेरयं विषय इति ज्ञाने

शक्तिं प्रति विषयतया भासते स एव वाच्यः । शक्तिं प्रति विषयतया भानं च विशेष्यरूपायां व्यक्ताविव विशेषणभूतेषु निमित्तेष्वस्त्येवेति ! वाच्यत्वाविशेषेऽपीदं प्रवृत्तिनिमित्तं इदं नेति व्यवस्था तु विशेषणत्वविशेष्यत्वाभ्यामेव युक्ता । व्यक्तय एव वाच्या इति पद्धतिवाक्यं तु विशेष्यतयेति शेषपूरणेन व्याख्येयम् । अतो न विरोध इति ज्ञातव्यम् । 'हेतावियं तृतीया । तेन व्यक्तीनामेव वाच्यत्वं न निमित्तानाम् । पूर्वोक्तज्ञानशक्तिं प्रति विषयतया भासमानत्वे सति यद्विशेष्यं तस्यैव वाच्यत्वात् । शब्दप्रवृत्तिनिमित्तधीस्तु वाच्यत्ववद्वाच्यतावच्छेदकत्वस्यापि शाब्दधीविषयत्वे तन्त्रत्वाद्युक्ता । कथमन्यथा परमते पारिभाषिकाकाशादिपदाशक्यस्य शब्दाश्रयत्वस्य धीरि'त्यप्याहुः । द्रव्यगुणकर्मसामान्यादिभिरिति वदता द्रव्यादीनां निमित्तानामननुगमेऽपि यथा दण्ड्यादिशब्दव्युत्पत्तिस्तथा सामान्यस्याप्यननुगमे गवादिशब्दव्युत्पत्त्युपपत्तिरस्तु । न च तत्रापि दण्डत्वादिकमनुगतमिति वाच्यम् । तथाऽपि निमित्तदण्डादेरननुगमात् । न हि पितुः पाण्डित्येन पुत्रः पण्डितो भवतीति सूचितमिति ज्ञातव्यम् । **तदवबोध इति** । तत्तत्प्रवृत्तिनिमित्तविशिष्टव्यक्तिविशेषाणां तत्तच्छब्दवाच्यताबोध इत्यर्थः ।

**श्री० — शब्दशक्तीत्यादि** । यथा परमते गोपदस्य गोत्वरूपजातौ शक्तिः तथा चानुगतं गोत्वमेव गोपदशक्यम्, तत्पदशक्तिविषयः । तदेव च गोपदप्रवृत्तौ निमित्तम् । न हि तथा सादृश्यमस्माभिरुच्यमानं गवादिपदशक्तिविषयः । गोपदस्य सादृश्ये शक्तिरिति यावत् । गवादिपदप्रवृत्तिनिमित्तं वाऽभ्युपगम्यते । यद्यनुगतं सादृश्यमेव पदशक्यं प्रवृत्तिनिमित्तं चेत्यभ्युपगम्येत तर्ह्येव सादृश्यमप्यनुगतं चेत्किं सामान्येनापराद्धम् । व्यावृत्तत्वे कथं सार्वत्रिकव्युत्पत्त्यङ्गत्वमिति दूषणावकाशः स्यान्न चैवमभ्युपगम्यते किन्नाम लिङ्गतयेत्यर्थः ॥ **सादृश्यव्याप्यतेति** । गोशब्दवाच्यत्वं प्रति सादृश्यस्य व्याप्यतेत्यर्थः ।

**सु० — नन्वत्र को दृष्टान्तः । उपदेशकाले सन्निहितो गोपिण्ड इति चेन्न । तस्य** तत्सदृशत्वाभावात् । **मैवम् । दृष्टान्तनियमस्य निरस्तत्वात् ॥ न च सास्नादिमत्त्वमेव लिङ्गमस्तु किं सादृश्येनेति वाच्यम् । तस्य गोत्ववत्प्रतिव्यक्तिव्यावृत्तत्वात् । सादृश्यस्य तु व्यावृत्तत्वेऽपि प्रतियोगिनिरूप्यत्वेनानुगतफलसाधकत्वानुभवात् ॥** सास्नादिमत्त्वस्यापि **सादृश्योपहितस्य लिङ्गत्वमभ्युपगच्छामः । न च वाच्यं गोसादृश्यमश्वेऽप्यस्तीति** तत्रापि **गोशब्द**वाच्यतानुमानप्रसङ्ग **इति । जातिनिमित्तत्वेऽप्येवं प्रसङ्गस्य समानत्वात् ॥ जातिविशेषो निमित्ततयाऽङ्गीक्रियते योऽव्यभिचारीति चेत् । तर्हि** सादृश्यविशेष **एव लिङ्गं यो लक्षणभूत** इति वदामः ।

शे० — **तस्येति ।** पुरोवर्तिगोपिण्डस्य स्वप्रतियोगिकसादृश्यभावादित्यर्थः । **दृष्टान्तनियमस्येति ।** दृष्टान्त एव व्याप्तिरुपदर्शनीयेति नियमस्येत्यर्थः ॥ **निरस्तत्वादिति ।** 'असार्वत्रिकश्च दृष्टान्तदोषः । न हि सर्वत्र दृष्टांत एव व्याप्तिरुपदर्शनीयेत्यस्ति नियमः । आनुमानिकागमिकव्याप्तेस्तदनपेक्षणादि'त्यादिना युक्तिपाद इति शेषः । तथा च यदोपदेशपूर्विका व्युत्पत्तिस्तदा व्याप्तेरागमगम्यत्वात् । यदा च व्यवहारादिपूर्विका व्युत्पत्तिः तदा भूयोदर्शनाद्यवगतव्यतिरेकव्याप्त्या सादृश्यस्य शक्तिव्याप्यत्वानुमानेन तस्यानुमानिकत्वान्न दृष्टान्तापेक्षेति भावः । ननु तथाऽप्यनुगतसामान्याभावे प्रत्यासत्त्यभावेन सर्वव्यक्त्युपस्थित्यभावात्सर्वोपसंहारेण व्याप्तिग्रहानुपपत्तौ कथमनुमानेन वाच्यताग्रह इति चेन्न । सामान्याकारेण सर्वव्यक्त्युपस्थितेः साक्षिरूपत्वेन प्राणभृन्मात्रसिद्धत्वात् । यद्वक्ष्यति । 'अतः सर्वपदार्थाश्च सामान्यात्साक्षिगोचराः' इति । किं सास्नादिमत्त्वमात्रं लिङ्गमस्त्वित्यभिप्राय उत सदृशसास्नादिमत्त्वमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **तस्येति ।** एकस्य सास्नादिमत्त्वस्य सन्निहितासन्निहितसकलपिण्डसंबन्धाभावान्न तन्मात्रस्य लिङ्गत्वमित्यर्थः । तर्हि तद्वदेव सादृश्यस्यापि प्रतिव्यक्तिव्यावृत्तत्वादलिङ्गत्वं स्यादित्यतो व्यावृत्तस्यापि सादृश्यस्यास्त्येव सन्निहितासन्निहितसर्वसंबन्धित्वम् । यथा हि त्रिविक्रम एकेन पादेनोर्ध्वलोकमन्येनाधरं लोकं स्पृशति तथा सादृश्यं प्रतियोगितारूपसंबन्धेनातीतादिकं धर्मित्वरूपसंबन्धेन पुरोवर्तिनमपि स्पृशत्येव । न च वैरूप्यमुभयानुगतस्य निरूपकत्वस्यैकरूपत्वात् । ततश्च सर्वसंबन्धित्वाद्युज्यते तस्य सार्वत्रिकव्युत्पत्त्यङ्गत्वमित्याशयवानाह **सादृश्यस्य तु व्यावृत्तत्वेऽपीति ।** अत्र सादृश्यस्य प्रतियोगिनिरूप्यत्वेन तत्संबन्धित्वस्यापि संभवात्सर्वसंबन्धितया शक्तिग्राहकत्वोपपत्तेरिति वक्तव्ये यदनुगतफलसाधकत्वानुभवादिति सामान्येन वचनं तदनुगतजात्यभावे सर्वव्यक्त्युपस्थितिरेव न स्यात् । कथञ्चित्तत्संभवेऽपि क्रोडीकारकस्यैकस्य गोत्वादेरभावेन सर्वगवादिव्यक्त्युपसंहारेण शक्तिग्रहो न स्यात् । तथा विनैवैकेन निमित्तेनोपदेशाद्यभावेऽपि यदि गोपिण्डान्तरे शक्तिं गृह्णीयात् तदाऽश्वपिण्डेऽपि तां गृह्णीयादित्यतिप्रसङ्गश्चेत्युपदेशादिना शक्तिग्रहे प्रसक्तदोषत्रयस्यापि परिहारार्थमिति ज्ञेयम् । तथा हि । न तावत्सर्वव्यक्त्यनुपस्थितिप्रसङ्गदोषः । परमते सामान्यप्रत्यासत्तिभूतेन शक्यत्वावच्छेदकेनैवैकेन गोत्वेनेव मन्मतेऽप्युपदेशव्यवहारभूयोदर्शनादिना शक्तिग्रहकाले उपस्थितगवादिव्यक्तिविशेषधर्मिकेणातीतानागतसकलगवादिव्यक्तिप्रतियोगिकेणैकेन सादृश्येनातीतानागतसकलशक्यव्यक्तीनामुपस्थितिसंभवात् । इयांस्तु भेदः । त्वन्मते जातिरतीताद्याश्रिता, मन्मते तु सादृश्यं ध्वंसादिवत्प्रतियोगित्वेन तत्संबद्धमिति । युक्तं च तदनाश्रितत्वेऽपि संस्कारवत्प्रत्यासत्तित्वेन तदुपस्थापकत्वम् । प्रत्युत त्वन्मत एवातीतादेरसत्त्वाज्जात्याश्रयत्वमयुक्तमिति । नापि द्वितीयो दोषः । त्वन्मते एकजात्येव मन्मतेऽप्युक्तरीत्या सर्वव्यक्तिसंबन्धिनैकेन सादृश्येन क्रोडीकृतासु व्यक्तिषु

शक्तिग्रहसंभवात् । इयांस्तु भेदः । त्वन्मते गोत्वं ज्ञातं सत्प्रत्यासत्तिः, मन्मते तु सादृश्यमज्ञातमेव प्रत्यासत्तिः । एवं त्वन्मते गोत्वं शक्तिग्रहे विशेषणत्वाच्छाब्दज्ञाने विषयत्वेन प्रविशति, मन्मते तु सादृश्यं प्रत्यासत्तिमात्रत्वान्न तत्र प्रविशतीति गोशब्दाद्गोसदृशधीर्न भवति । यद्वा तवेव ममापि पुरोवृत्तिगोवृत्तिगोत्वं ज्ञातमेव प्रत्यासत्तिः किन्तु तदेकमिति स्वविशिष्टव्यक्त्युपस्थापकं, मम तु नानेति स्वविशिष्टसादृश्यप्रतियोगिगोत्वान्तरविशिष्टोपस्थापकमिति । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः । नापि तृतीयो दोषः । सादृश्यस्योक्तरीत्या सन्निहितासन्निहितसकलसंबद्धत्वेन तद्भावाभावाभ्यां विशेषवत्त्वेन तदनवकाशात् । एवञ्चात्र टीकायामनुगतं फलं, सर्वव्यक्त्युपस्थितिः सर्वत्र शक्तिग्रहोऽतिप्रसङ्गपरिहारश्चेति त्रितयमपि, विवक्षितमित्यवधेयम् । सदृशसास्नादिमत्त्वं लिङ्गमस्त्विति द्वितीयपक्षाङ्गीकारेण समाधत्ते **सास्नादीति ॥ सादृश्येति ।** सादृश्यविशिष्टस्येत्यर्थः । सन्निहितगोपिण्डवृत्तिसास्नादिमत्त्वं लिङ्गं भवत्येवेत्यर्थः ॥ **अनुमानप्रसङ्ग इतीति ।** अन्यथा तत्रैव व्यभिचरितं गोसादृश्यं गव्यपि तच्छब्दवाच्यत्वानुमापकं न स्यादिति भावः । अव्यभिचरितसादृश्यविशेषस्यैव लिङ्गत्वान्न व्यभिचार इत्यभिप्रेत्य विशेषस्य निमित्ततां परमुखेनैव वाचयितुं प्रतिबन्दीं तावद्गृह्णाति **जातिनिमित्तत्वेऽपीति ।** गोगतद्रव्यत्वादिजातेर्गोव्यक्त्यन्तर इवाश्वादिव्यक्तावपि सत्त्वेन तस्यापि गोशब्दवाच्यताप्रसङ्गादित्यर्थः । उपलक्षणं चैतत् । उपमितौ गोसदृशपश्वन्तरस्य गवयशब्दवाच्यताधीः स्यादित्यपि द्रष्टव्यम् । आवापोद्वापाभ्यां गोत्वादिजातेरेव निमित्ततया ग्रहात् न अतिप्रसक्तजातिमादाय अश्वादेः गोशब्दवाच्यताप्रसङ्गः । उपमितावपि अन्तरङ्गसादृश्यस्यैव आवापोद्वापाभ्यां निमित्ततया ग्रहात् न गोसदृशपश्वन्तरस्य गवयशब्दवाच्यताधीप्रसङ्ग इत्याशयेन शङ्कते **जातिविशेष इति ।** अत्रापि पूर्ववदुपलक्षणम् । एवं तर्ह्यत्राप्यश्वादिव्यावृत्तमन्तरङ्गं सास्नादिमत्त्वगोत्वादिप्रयुक्तं सादृश्यमेव तत्र लिङ्गमिति नाश्वादौ गोशब्दवाच्यतानुमानप्रसङ्गो न वा तत्रैव व्यभिचारप्रसङ्ग इत्याह **तर्हीति ॥ लक्षणभूतः** अव्याप्त्यादिशून्यः ।

स० — **दृष्टान्तनियमस्य निरस्तत्वादिति ।** 'असार्वत्रिकश्च दृष्टान्तदोषः । न हि सर्वत्र दृष्टान्त एव व्याप्तिः प्रदर्शनीयेत्यस्ति नियमः । आनुमानागमिकव्याप्तेस्तदनपेक्षणात्' इत्यादिना युक्तिपादे निरूपितत्वादित्यर्थः । सास्नादिमत्त्वमेव लिङ्गमित्यभिप्रायो वा सदृशसास्नादिमत्त्वमेवेत्यभिप्रायो वेति विकल्प्याद्यं दूषयति **न चेति । सादृश्यस्य त्विति ।** द्वितीयमङ्गीकृत्य समाधत्ते **सास्नादिमत्त्वस्येति ।** सदृशसास्नादिमत्वस्येत्यर्थः ।

प० — **दृष्टान्तनियमस्य निरस्तत्वादिति** । 'व्याप्तिरेव तु सा स्मृते'त्येतद्व्याख्यानावसरे न विलक्षणत्वाधिकरणे व्याप्तिरेवानुमानाङ्गं न पुनः सपक्षे तदुपदर्शनमपीति, 'लिङ्गराहित्यमव्याप्तिरि'त्येतद्व्याख्यावसरे चागमिकानुमानिकव्याप्तेर्दृष्टान्तानपेक्षणादिति निरस्तत्वादित्यर्थः । तथा च प्रकृते उपदेशगम्यत्वात् व्याप्तेरागमिकत्वान्न दृष्टान्तापेक्षा । व्यवहारावगतव्याप्तेरपि व्युत्पन्नपिण्डेषु कश्चित्पिण्डो दृष्टान्तः व्यतिरेकदृष्टान्तो वेति भावः । सादृश्यमपि नानुगतमित्यत आह **सादृश्यस्य त्विति** । पक्षीकृते पुरोवर्तिनि विद्यमानं देशकालव्यवहितानन्तगोव्यक्तिप्रतियोगिकमपि परमतेऽनन्तगोपिण्डसंबद्धगोत्वमिव प्रतियोग्यनुयोगिभावसंबन्धेन देशकालविप्रकृष्टानन्तगोसंबद्धं पुरोवर्तिधर्मिकतया पुरोवर्त्तिसंबद्धं च भवतीत्यनुगतधर्मस्य यत्फलं अनन्तव्यक्त्युपस्थितिरूपमुक्तरूपेणानन्तगोव्यक्तिसंबन्धेन क्रोडीकृतानन्तव्यक्तिषु शक्तिग्रहरूपं वा तस्य साधकत्वानुभवादित्यर्थस्तर्कताण्डवे व्यक्तः ॥ **सादृश्योपहितस्येति** । सादृश्योपाधियुक्तस्य । अयं गोशब्दवाच्यः पूर्वदृष्टगोधर्मसदृशसास्नादिमत्त्वादित्येवंरूपेण लिङ्गत्वमित्यर्थः । एतच्च सास्नादिमान्गौरिति लक्षणवा(क्यस्थयुक्ति)क्याच्छक्तिग्रहाभिप्रायेणेति ज्ञेयम् ॥ **जातीति** । अयं गौरित्युपदेशेन शक्तिग्रहे त्वन्मतेपि गोत्वन्यायेन द्रव्यत्वादिजात्यन्तरस्य निमित्तताप्रतीत्या अश्वेपि गोशब्दवाच्यत्वधीः स्यादित्यर्थः ॥ **जातिविशेष इति** । गोत्वादिः । अन्तरङ्गत्वादिति भावः ॥ **लक्षणभूत इति** । अतिव्याप्तिशून्य इत्यर्थः ।

---

या० — **निरस्तत्वादिति** । न हि सर्वत्र दृष्टान्त एव व्याप्तिदर्शनीयेत्यस्ति नियमः । आनुमानिकागमिकव्याप्तेस्तदनपेक्षणादित्यादिना युक्तिपादे निरस्तत्वादित्यर्थः । तथा च यदोपदेशपूर्विका व्युत्पत्तिस्तदा व्याप्तेरागमगम्यत्वान्न दृष्टान्तापेक्षा । यदा च व्यवहारादिपूर्विका तदापि भूयोव्यवहारादिदर्शनेन व्यतिरेकव्याप्त्यवगमे तेन सादृश्यस्य शक्तिव्याप्यतावगमोऽनुमितिरूपो भवतीति न तत्रापि दृष्टान्तापेक्षेति भावः । ननु तथाऽप्यनुगतसामान्याभावे प्रत्यासत्त्यभावेन सर्वव्यक्त्युपस्थित्यसम्भवात्सर्वोपसंहारेण व्याप्तिग्रहानुपपत्तौ कथमनुमानेन वाच्यताग्रह इति चेन्न । सामान्याकारेण सर्वव्यक्त्युपस्थितेः साक्षिरूपत्वेन प्राणभृन्मात्रसिद्धत्वात् । यद्वक्ष्यति 'अतः सर्वे पदार्थाश्च सामान्यात्साक्षिगोचराः' इति ॥ **प्रतिव्यक्तिव्यावृत्तत्वादिति** । तथा च नैकस्य सास्नादिमत्त्वस्य सन्निहितासन्निहितगोपिण्डसम्बन्धः सम्भवतीति भावः ॥ **प्रतियोगिनिरूप्यत्वेनेति** । अनेनासन्निहितगोपिण्डवृत्तिसादृश्यस्य सन्निहितगोपिण्डेनापि सम्बन्ध उक्तो भवतीति ज्ञातव्यम् । **अनुगतफलेति** । अतिप्रसङ्गवारणाय सार्वत्रिकव्युत्पत्त्यादिरूपं यदनुगतफलं तत्साधकत्वानुभवादित्यर्थः । अयमाशयः । उपदेशादिना यत्र पिण्डे शक्तिग्रहस्तत्सम्बद्धेनैकेन निमित्तेन विनोपदेशाद्यभावेऽपि यदि गोपिण्डान्तरे शक्ति

गृह्णीयात्तदाऽश्वपिण्डेऽपि किन्न गृह्णीयादविशेषादित्यतिप्रसङ्गवारणाय तावदुपदेशादिकाले सन्निहितासन्निहितपिण्डसम्बद्धमेकं निमित्तं वाच्यम् । तच्च त्वन्मते यथा प्रवृत्तिनिमित्तरूपं गोत्वं तथा मन्मते लिङ्गभूतं सादृश्यमेव । इयांस्तु विशेषः । त्वन्मते गोत्वं सन्निहितासन्निहितगोपिण्डाश्रितम् । मन्मते त्वसन्निहितपिण्डाश्रितं सादृश्यं प्रतियोगिनिरूप्यत्वेन सन्निहितगोपिण्डेनापि सम्बद्धमिति । सास्नादिमत्त्वं तु न सादृश्यवत्सन्निहितासन्निहितगोपिण्डसम्बद्धमेकमस्ति । अतो न तदुक्तानुगतफलसाधकमिति । नन्वेवं सास्नादिमत्त्वस्य गोलक्षणत्वेन प्रसिद्धस्य व्यवहारार्थत्वानुपपत्तिरित्यत आह **सास्नादिमत्त्वस्यापीति ॥ सादृश्योपहितस्येति** । सादृश्यविशिष्टस्येत्यर्थः । सन्निहितगोपिण्डवृत्तिसास्नादिमत्त्वसदृशसास्नादिमत्त्वमेव लिङ्गं, न केवलं, येन सन्निहितासन्निहितगोपिण्डसम्बन्धस्यैकस्मिन्नभावेन व्यवहारार्थता न स्यादिति भावः ॥ **एवं प्रसङ्गस्येति** । अतिप्रसक्तद्रव्यत्वादिजातिमादायेति भावः ॥ **लक्षणभूत इति** । अतिव्याप्त्यादिशून्य इत्यर्थः ।

**श्री० — अश्वेऽप्यस्तीति** । चतुष्पात्त्वादिसादृश्यमश्वेऽप्यस्तीत्यर्थः ॥ **प्रसङ्ग इतीति** । तथा चोक्तानुमाने व्यभिचार इति भावः ॥ **एवं प्रसङ्गस्येति** । यदि गोशब्दप्रवृत्तौ जातिर्निमित्तं तर्हि गवादिनिष्ठद्रव्यत्वादिजातेरश्वेऽपि सत्त्वेन तत्रापि गोशब्दप्रवृत्तिः स्यादिति भावः । **जातिविशेषो** गोत्वरूपः ।

---

**च० — सादृश्यस्य तु व्यावृत्तत्वेपीति** । पक्षीकृते पुरोवर्तिनि विद्यमानं देशकालविप्रकृष्टानन्तव्यक्तिप्रतियोगिकमपि परमतेऽनन्तगोपिण्डसंबद्धगोत्वमिव प्रतियोग्यनुयोगिभावसंबन्धेन देशकालविप्रकृष्टानन्तगोसंबद्धंपुरोवर्तिधर्मिकतया पुरोवर्तिसंबद्धं च भवतीत्यनुगतधर्मस्य यत्फलमनन्तव्यक्त्युपस्थितिरूपमुक्तरूपेणानन्तगोव्यक्तिसंबन्धेन क्रोडीकृतानन्तव्यक्तिषु शक्तिग्रहरूपं च तस्य साधकत्वानुभवादित्यर्थस्तर्कताण्डवे व्यक्त इति स्थितम् । **सादृश्योपहितस्य** सादृश्यघटितस्य । सन्निकृष्टगोव्यक्तिवृत्तिसास्नादिमत्त्वसदृशसास्नादिमत्त्वस्य तु हेतुतामूरीकुर्म इति भावः ।

**सु० — एतेन कार्यकारणभावावधारणादिकमपि समाहितं वेदितव्यम् । सादृश्येनैव तदुपपत्तेः । अन्त्यविशेषे हि न किञ्चिदनुगतमस्ति, नाप्यनुगताश्रय उपाधिः । तद्भावे द्रव्यगुणकर्मवदत्यन्तव्यावर्तकत्वस्वरूपहानिप्रसङ्गात् । तथाऽप्यस्ति तत्र विशेषशब्दव्युत्पत्तिः अत्यन्तव्यावृ(त्ति)त्तबुद्धिं प्रति कारणत्वावधारणमित्यादि । तत्र परेणापि लक्षणरूपं सादृश्यमेवादरणीयमिति ॥**

शे० — शक्तिग्रहे उक्तं प्रकारं कार्यकारणभावावधारणादावप्यतिदिशति **एतेनेति** । तथा च न तदन्यथाऽनुपपत्त्याऽप्यनुगतसामान्यसिद्धिरिति भावः । एतेनेत्युक्तमेव विशदयति **सादृश्येनैवेति** । उपदेशादिना सन्निहितदण्डघटप्रतियोगिकसादृश्यस्य कार्यकारणभावव्याप्तत्वमवधार्यते । ततश्चैतद्वाक्यादिनाऽवगतव्याप्तिरसन्निहितेऽपि पिण्डे उपदेशसन्निहितपिण्डसादृश्येन लिङ्गेन कार्यकारणभावमनुमिमीत इति सादृश्येनैव कार्यकारणभावावधारणम् । आदिपदेन व्याप्त्यवधारणादिपरिग्रहः । तत्राप्युपदेशादिना सन्निहितधूमादिपिण्डसादृश्यस्य वह्न्यादिव्याप्यताव्याप्तिरवधार्यते । ततश्चोपदेशादिनाऽवगतव्याप्तिरसन्निहितधूमादिपिण्डे सन्निहितधूमादिप्रतियोगिकसादृश्येन वन्ह्यादिव्याप्यतामनुमिमीत इति सादृश्येनैव व्याप्त्यवधारणम् । एवं सन्निहितासन्निहितसंबद्धसादृश्यपुरस्कारेण प्रवृत्तस्योत्सर्गप्रमाणस्यापवादविषयेऽपि प्रवृत्तिसंभवान्न सामान्यापवादानुपपत्तिरपीत्याशयः । मूले सादृश्येनैवेत्यवधारणानर्थक्यमाशङ्क्य क्वचिद्व्युत्पत्त्याद्यङ्गत्वेन सादृश्यस्यैव परेण समाश्रयणीयत्वात्तस्यैव सर्वत्र व्युत्पत्त्याद्यङ्गत्वकल्पने कल्पनालाघवम् । इतरथा क्वचित्सादृश्यं व्युत्पत्त्याद्यङ्गम् अन्यत्र सामान्यमिति कल्पनागौरवमित्येतदर्थसूचकत्वान्न तदानर्थक्यमित्याशयेन भवेदेवं यदि क्वचिदपि व्युत्पत्त्याद्यङ्गत्वेन सादृश्यं परेण समाश्रयणीयं स्यात्, तदेव तु कुत इत्यतस्तदुपपादयति **अन्त्यविशेषे हीति** ॥ **किञ्चिदिति** । सामान्यमपोहश्चेत्येवं किञ्चिदित्यर्थः ॥ **अनुगताश्रय इति** । अनुगतजातिघटित इत्यर्थः । उभयाभावे हेतुमाह **तद्भाव इति** । अन्त्यविशेषेषु जातिरूपस्यौपाधिकस्य वा

उक्तरूपस्य धर्मस्य स्वीकारे तादृशद्रव्यगुणकर्मवत् तेषामनुगतत्वप्रसङ्गेन व्यावृत्तैकस्वभावात्मकस्वरूपहानिः स्यात । न हि साक्षात्संबद्धेन धर्मेणानुगमे व्यावृत्तैकस्वभावहानिः । न तु परम्परासंबद्धेनानुगम इति संभवतीति भावः ॥ **लक्षणरूपमिति** । अव्यभिचरितमित्यर्थः । न च, न लक्षणरूपसादृश्यमपि तत्र परेणाङ्गीकर्तुं शक्यम्, तदङ्गीकारेऽप्यत्यन्तव्यावर्तकत्वस्वरूपहानिप्रसङ्गस्य तुल्यत्वादिति वाच्यम् । सादृश्यस्य परेणानुवृत्तिहेतुताया अनङ्गीकारादित्याशयात् ॥

प० — **एतेन कार्यकारणभावावधारणादिकमिति** । व्याप्त्यवधारणं लक्ष्यलक्षणावधारणम् । उत्सर्गापवादावधारणमादिपदार्थः । विवृतमेतत्तर्कताण्डवे 'घटजातीयोत्पत्तौ दण्डजातीयस्य नियमो दण्डस्य घटकारणत्वं । धूमजातीयस्य वह्निजातीयरहितेऽवृत्तिः धूमस्य वह्निव्याप्तिः । लक्षणजातीयस्य लक्ष्यजातीयेऽवृत्तिरव्याप्तिः, अलक्ष्यजातीये वृत्तिरतिव्याप्तिरित्यादिव्यवस्था युक्ता । इयांस्तु विशेषः । परमते साजात्यमेकजात्याश्रयत्वमेव, मन्मते त्वेकजातीयसदृशजात्याश्रयत्वमि'त्यादिना । **लक्षणरूपम्** अव्यभिचारिरूपं ॥ **अनुगतजात्यभावेपि सादृश्येनैव व्युत्पत्त्याद्युक्तिः** ॥

या० — एतेनेत्युक्तं विवृणोति **सादृश्येनैवेति** । उपदेशादिना सन्निहितकार्यकारणव्यक्तिप्रतियोगिकसादृश्यस्य कार्यकारणभावव्याप्यतावगमे तेनैवासन्निहितदण्डादावपि कारणत्वाद्यवधारणस्योक्त-

रीत्योपपत्तेरित्यर्थः । आदिपदेन व्याप्त्यवधारणसामान्यापवादन्यायपरिग्रहः । उपदेशादिना सन्निहित-धूमादिसादृश्यस्य वन्ह्यादिव्याप्तिव्याप्यतावगमेऽसन्निहितधूमादावनुमानेनैव व्याप्त्यवधारणसम्भवात् । एवं सन्निहितासन्निहितसम्बन्धसादृश्यपुरस्कारेण प्रवृत्तस्योत्सर्गप्रमाणस्यापवादविषयेऽपि प्रवृत्तिसम्भवात्सामान्यापवादन्यायोऽपि नानुपपन्न इति भावः । सादृश्येन व्युत्पत्त्यादिकं परेणाप्याश्रयणीयमिति वक्तुमाह **अन्त्यविशेषे हीति ॥ अत्यन्तेति** केवलेत्यर्थः । तथा च यथा द्रव्यगुणकर्मणामनुगतसामान्याश्रयत्वेनानुवृत्तिहेतुत्वान्न व्यावृत्तिमात्रहेतुत्वरूपमत्यन्तव्यावर्तकत्वं तथा विशेषाणामप्यनुगतधर्माश्रयत्वेऽनुवृत्तिहेतुत्वस्यापि प्रसङ्गेनात्यन्तव्यावर्तकत्वरूपं यद्विशेषाणां स्वरूपं तद्धानिप्रसङ्गादित्यर्थः ॥ **लक्षणरूपमिति** । अतिव्याप्त्यादिशून्यमित्यर्थः । अथवा लक्षणं रूपं घटकं यस्य तल्लक्षणरूपं लक्षणघटितमित्यर्थः । न चैवं तत्र सादृश्याङ्गीकारेऽप्यत्यन्तव्यावर्तकत्वहानिप्रसङ्गः । सादृश्यस्य परेण सामान्यवदनुवृत्तिहेतुत्वानङ्गीकारादित्याशयात् ।

**श्री०— कार्येत्यादि ।** एतद्दण्डसदृशे दण्डे सति एतद्घटसदृशघटो जायते, तदभावे तदभावः; इत्यादिरूपेणेत्यर्थः ॥ **अस्तीति ।** तथा च विशेषेष्वनुगतसामान्यानङ्गीकारात्तत्रानुगतव्यवहारो न स्यादित्यर्थः ॥ **अनुगताश्रय इति ।** अनुगताश्रयघटित इत्यर्थः । तथा च विशेषेष्वनुगतव्यवहारेऽनुगतजातेर्निमित्तत्वाभावेऽप्यनुगतं यद्द्रव्यत्वं तदाश्रयभूतं यत् यावन्नित्यद्रव्यजातं तद्धटितो यावन्नित्यद्रव्यवृत्तित्वरूपो य औपाधिको धर्मः स एव विशेषेष्वनुगतव्यवहारे निमित्तभूत इति भावः ।

**सु०— एवमनुगतसामान्यानभ्युपगमेनैव व्युत्पत्त्यादिकं समर्थितम् । यस्तु मन्यते अनुगतसामान्येनैव व्युत्पत्त्यादिकं नान्यथेति तस्य बाधकमाह** जातितश्चेदिति ।

अनु० — जातितश्चेत्कथं तासु

**यद्यनुगतजातिनिमित्तैव सर्वत्र व्युत्पत्तिः कार्यकारणभावावधारणादिकं च स्यात् । तदा तासु जातिषु कथं जात्यादिशब्दव्युत्पत्तिरनुगतबुद्धिकारणत्वावधारणं, गोत्वं नित्यं जातित्वादित्यादिव्याप्तिज्ञानमित्यादिकं स्यात् । जातिषु जात्यभावेन तत्र व्युत्पत्त्यादिकं न स्यादित्यर्थः ॥**

**शे०—** जातित इत्याद्युत्तरग्रन्थस्य व्युत्पत्त्याद्यङ्गत्वोपपादकपूर्वग्रन्थशेषत्वभ्रमनिरासाय वृत्तानुवादपूर्वकं प्रयोजनमाह **एवमिति** ।

प०— **अनुगतबुद्धीति** । इयं जातिरियं जातिरित्येवं रूपानुगतबुद्धीत्यर्थः ॥ **इत्यादिकमिति ।** जातिर्व्यक्तिरिति द्वेधेत्युत्सर्गः, दोषात्तु नेत्यपवादः, इत्युत्सर्गापवाद आदिपदार्थः ।

**च०— व्युत्पत्त्यादिकम्** शक्तिज्ञानादिकम् । **अनुगतधर्मानुपगमेपि सादृश्येनैव व्युत्पत्त्यादिनिर्वाहः ।**

सु० — यदि वैयात्यात्कश्चिद्ब्रूयात् 'अस्ति जातिष्वपि जातित्वं नाम जातिस्तद्वशात्तत्र सर्वमुपपद्यते' इति; तं प्रत्याह तत्र चेदिति ।

अनु० -- तत्र चेदनवस्थितिः ॥

यदि तत्र जातिष्वपि जातित्वं नाम जातिरङ्गीक्रियते तदाऽनवस्थितिः स्यात् । तथा हि गोत्वादिजातिषु जातिशब्दप्रवृत्तिनिमित्तं या जातित्वं नाम जातिः सा न तावत्स्वरूपे वर्तते । स्ववृत्तेरप्रामाणिकत्वात् । अतः स्वव्यतिरिक्तास्वेव जातिषु वर्तत इति वाच्यम् । तथा च स्वव्यतिरिक्तजातिषु जातिशब्दप्रवृत्तावियं निमित्तं स्यान्न तु स्वरूपेऽपि । अतस्तस्यां तद्व्यतिरिक्तासु जातिष्वेकस्य जातिशब्दस्य प्रवृत्तौ निमित्तं जात्यन्तरमङ्गीकरणीयम् । तत्राप्येवमेवेत्यनवस्थेति ।

शे० — स्ववृत्तेरप्रामाणिकत्वादिति । देशकालादेः स्ववृत्तिस्तु प्रमाणबलादाश्रीयते । न च जातित्वस्य स्वस्मिन्वृत्तौ प्रमाणमस्तीत्यतो न स्ववृत्तित्वं तस्येति भावः ॥ तत्राप्येवमिति । जातित्वजातौ तद्व्यतिरिक्तासु गोत्वादिजातिषु च जातिशब्दप्रवृत्तिनिमित्तं यज्जात्यन्तरमङ्गीक्रियते तन्न तावत्स्वरूपेऽपि वर्तते । स्ववृत्तेरप्रामाणिकत्वादित्यतः स्वव्यतिरिक्तास्वेव जातिषु तद्वर्तत इति वाच्यम् । तथा च स्वव्यतिरिक्तजातिषु जातिशब्दप्रवृत्ताविदं निमित्तं स्यात् । न तु स्वरूप इत्यतस्तस्मिंस्तद्व्यतिरिक्तासु जातिषु चैकजातिशब्दप्रवृत्तौ निमित्तं जात्यन्तरमेवाङ्गीकरणीयमित्येवमर्थः ।

श्री० — स्वरूप इति । स्वस्मिञ्जातित्व इत्यर्थः ॥ तस्यां जातित्वरूपजातौ ।

सु० — ननु गोत्वादिजातिषु जातित्वप्रयुक्तो जातिशब्दः । जातित्वे तूपदेशाधीनो भवतु । तस्या एकत्वादिति । मैवम् । न ह्यस्माभिः सादृश्यमिव भवता जातिः (जाति)-शब्दवृत्तौ ज्ञापकतयोपेयते । येन क्वचिदुपदेशो निवेश्यते । किन्तु निमित्ततया । तत्रोपदेशोपन्यासस्य क्वोपयोगः ।

शे० — जातित्वप्रयुक्त इति । गोत्वादिजातीनामनन्तत्वेन तत्र जातिशब्दव्युत्पत्तेरुपदेशाधीनतायास्तत्रैव पुरुषायुषपर्यवसानप्रसङ्गबाधितत्वेनासंभवादिति भावः ॥ तस्या इति । तथा च न तत्र जातिशब्दव्युत्पत्तेरुपदेशाधीनतायां तत्रैव पुरुषायुषपर्यवसानप्रसङ्ग इति भावः ॥ क्वचिदिति । जातिरूपज्ञापकाभाववत्यां जातित्वजातावितित्यर्थः । ज्ञापकाननुगमस्यादोषत्वादिति भावः ॥ निमित्ततयेति । शक्तिस्थित्यवच्छेदकतयेत्यर्थः ॥ उपयोग इति । प्रवृत्तिनिमित्ताननुगमस्य दोषत्वादिति भावः ।

प० — **ज्ञापकतयोपेयत इति** । तथात्वे उपदेशेन ज्ञापकेन जातित्वे जातिविशेषपदशक्तिर्ज्ञाप्या स्यात् । न चैवम् । निमित्तत्वेन त्वया स्वीकारात् । तथा च जातित्वरूपजातौ जात्यन्तरस्य अभावे निमित्ताभावेन तत्र जातिपदशक्तिग्रहो न स्यादित्यर्थः ।

या० — **क्वचिदिति** । जातिरूपज्ञापकाभावस्थल इत्यर्थः । **निमित्ततयेति** । शक्तिस्थित्यवच्छेदकतयेत्यर्थः ।

श्री० — **तस्याः** जातिनिष्ठाया जातित्वरूपजातेः । तथा चोपदेशस्यानन्त्येन कर्तुमशक्यत्वादित्युक्तदूषणावकाशो नेत्यर्थः । **ज्ञापकतया** लिङ्गत्वेनेत्यर्थः । एवं चास्मन्मते सादृश्यस्य लिङ्गत्वात्तज्ज्ञानं क्वचिदुपदेशेन संभवति । न हि तद्वत् त्वया जातेर्लिङ्गत्वमङ्गीकृतमिति भावः ॥ **किन्तु निमित्ततयेति** । जातित्वे जातिशब्दः किंप्रयुक्त इति शङ्कायामुपदेशाधीन इत्येतदसङ्गततरम् । यथाऽस्मन्मते सादृश्यं शब्दवाच्यत्वे लिङ्गत्वेनोपयुज्यते इति क्वचिदुपदेशो लिङ्गभूततज्ज्ञापकत्वेनोपयुज्यते । तथा त्वन्मते जातिर्न ज्ञापकतया लिङ्गत्वेनोपयुज्यते, किन्नामायं शब्दोऽत्रास्मान्निमित्तात्प्रवर्तत इति शब्दप्रवृत्तौ निमित्ततया । ततश्च जातित्वे जातिशब्दः केन प्रवृत्तिनिमित्तेन प्रवर्तत इत्याशङ्कायामुपदेशाधीनो जातित्वे जातिशब्द इत्यस्यासङ्गतत्वात् । न ह्युपदेशो जातित्वे जातिशब्दप्रवृत्तौ निमित्तं, येनेदं वचनं सङ्गतं स्यादित्यर्थः ।

---

सु० — **स्थानान्तरेऽपि बाधकमाह** तथैवेति ।

अनु० — तथैव व्यक्तिविज्ञानं व्यक्तित्वाभावदूषितम् ॥

**यथा जातिविज्ञानं जातित्वाभावेन दूषितं तथैव व्यक्तिविज्ञानं व्यक्तीनां व्यक्तिशब्दवाच्यत्वविज्ञानं तन्निमित्तव्यक्तित्वजात्यभावेन दूषितम् । द्रव्यगुणकर्माणि खलु व्यक्तय उच्यन्ते । न च तत्र व्यक्तित्वं नाम सामान्यमस्ति । सत्तया परापरभावाभावात् । तस्मात्तत्र व्यक्तिशब्दवाच्यत्वज्ञानं न स्यात् । मा भूद्व्यतिरिक्तं व्यक्तित्वं सत्तैव व्यक्तिशब्दप्रवृत्तौ निमित्तं भविष्यतीति चेन्न । सामान्यस्य पर्यायप्रवृत्तौ निमित्तत्वात् । सद्व्यक्तिशब्दयोरपर्यायत्वात् । अन्यथा संयोग्यादिशब्दानामपि द्रव्यादिशब्दपर्यायत्वं स्यात् ।**

शे० — **जातिविज्ञानमिति** । जातीनां गोत्वादीनां विज्ञानं जातिशब्दवाच्यत्वज्ञानं जातिविज्ञानमित्यर्थः । **जातित्वाभावेन** तन्निमित्तजातित्वजात्यभावेनेत्यर्थः ॥ **सत्तयेति** । द्रव्यगुणकर्मसु विद्यमाना सत्ताभिन्ना सर्वाऽपि जातिः सत्ताव्याप्यैव दृष्टेत्यतस्तत्र वर्तमाना व्यक्तित्वरूपजातिरपि सत्ताव्याप्यैव इत्यतः सत्ता व्यापिका व्यक्तित्वं व्याप्यमित्येवं सत्तया व्याप्यव्यापकभावो व्यक्तित्वस्य वाच्यः । न

चासौ युज्यते । सत्ताव्यक्तित्वयोर्द्रव्यगुणकर्ममात्रवृत्तितया सत्ताव्याप्यत्वनियामकस्य तदपेक्षया न्यूनवृत्तित्वस्य व्यक्तित्वे, व्यक्तित्वव्यापकतानियामकस्य तदपेक्षयाऽधिकवृत्तित्वस्य च सत्तायामभावादित्यर्थः । द्रव्यगुणकर्ममात्रवृत्तिव्यक्तित्वस्य तन्मात्रवृत्तिसत्तापेक्षया न्यूनवृत्तित्वाभावेन सत्ताव्याप्यत्वस्य तदपेक्षयाऽधिकवृत्तित्वाभावेन तद्व्यापकत्वस्य चासंभवात्समनियतजात्यन्तरस्य च तुल्यत्वरूपबाधकवशात्परेण द्रव्यादावनभ्युपगमान्न व्यक्तित्वं जातिरित्यर्थ इत्याहुः ॥ **सामान्यस्य पर्यायप्रवृत्ताविति** । घटशब्दप्रवृत्तिनिमित्तघटत्वस्यैव तत्पर्यायकरीरादिशब्दप्रवृत्तिनिमित्ततादर्शनादिति भावः । भवतु तर्हि तद्वदेव सच्छब्दप्रवृत्तिनिमित्तभूतसत्ताया एव तत्पर्यायिभूतव्यक्तिशब्दप्रवृत्तावपि निमित्तत्वमित्यतो भवेदेवं यदि घटकरीरादिशब्दवत् सद्व्यक्तिशब्दयोरपि पर्यायत्वं स्यान्न च तदस्तीत्याह **सद्व्यक्तिशब्दयोरिति** । सहप्रयोगदर्शनान्न तयोः पर्यायत्वमिति भावः ॥ **अन्यथेति** । एकप्रवृत्तिनिमित्तकत्वेन सद्व्यक्तिशब्दयोः पर्यायत्वाभ्युपगम इत्यर्थः ॥ **संयोगादीति** । द्रव्यशब्दप्रवृत्तिनिमित्तस्य द्रव्यत्वस्यैव संयोगिशब्दप्रवृत्तिनिमित्तत्वसंभवेनैकप्रवृत्तिनिमित्तकताया वक्तुं शक्यत्वादिति भावः ।

**स०— सत्तया परापरभावाभावादिति** । व्यक्तित्वस्य द्रव्यगुणकर्ममात्रवर्तिनः तन्मात्रवृत्तिसत्तापेक्षया न्यूनवृत्तित्वाभावेन सत्ताव्याप्यत्वानुपपत्तेः । तदपेक्षया अधिकवृत्तित्वाभावेन सत्ताव्यापकत्वासंभवाच्चेत्यर्थः । न च सत्तासमानव्याप्तत्वमेव व्यक्तित्वस्य किं न स्यादिति वाच्यम् । सत्तासमानव्याप्तजात्यन्तरस्य द्रव्यादौ परेणानभ्युपगमादिति भावः ।

**प०— बाधकमाहेति** । अनुगतजात्यैव शक्यादिग्रहाङ्गीकार इति योज्यम् । **परापरभावेति** । व्यापकव्याप्यभावेत्यर्थः । परत्वे जात्यादेरपि व्यक्तित्वापत्तिः । अपरत्वे द्रव्यादिषु कस्यचिद्व्यक्तित्वं न स्यात् । तथा च सत्तया तुल्यव्यक्तिकत्वापत्त्या करीरत्वादेरिव न जातित्वमिति भावः ॥ **सामान्यस्येति** । परजातेरपरजातेर्वे(रेवे)ति भावः । यथा घटत्वस्य करीरकलशकुम्भादिशब्दप्रवृत्तौ निमित्तत्वं तथा सत्तारूपपरसामान्यस्यापि सत् सत्यं पारमार्थिकमबाधितमित्यादिपर्यायशब्दप्रवृत्तौ निमित्तत्वात्सच्छब्दव्यक्तिशब्दयोरपर्यायत्वान्न व्यक्तिशब्दप्रवृत्तौ तस्य निमित्तत्वमित्यर्थः ॥ **अन्यथेति** । सच्छब्दव्यक्तिशब्दयोरन्यूनानधिकविषयत्वमात्रेण पर्यायत्वोपगम इत्यर्थः ।

**या०— परापरेति** । न्यूनाधिकवृत्तित्वाभावादित्यर्थः । तथा च तुल्यत्वाख्यं जातिबाधकमायातीति भावः **पर्यायप्रवृत्ताविति** । यथा घटत्वमेव करीरादिशब्दप्रवृत्तावपि निमित्तमित्यर्थः ॥ **अन्यथेति** । सद्व्यक्तिशब्दयोरप्येकप्रवृत्तिनिमित्तकत्वेन पर्यायत्व इत्यर्थः ॥ **संयोग्यादीति** । तत्रापि द्रव्यत्वस्यैकस्य निमित्तस्योभयत्र सम्भवादिति भावः ।

**श्री०** — **व्यतिरिक्तं** । व्यक्तिव्यतिरिक्तम् ॥ **अपर्यायत्वादिति** । यथा घटकरीरशब्दयोः पर्यायत्वाद्घटत्वं करीरादिशब्दप्रवृत्तौ निमित्तं दृष्टं, एवं सद्व्यक्तिशब्दयोः पर्यायत्वे हि सत्ता व्यक्तिशब्दप्रवृत्तौ निमित्तं स्यात् । न चैवमित्यर्थः ।

**च०** — **परापरभावाभावात्** । व्याप्यव्यापकभावाभावात् । **सामान्यस्य** घटत्वादेः । **पर्यायप्रवृत्तौ** । एकधर्मावच्छिन्ननिरूपकताकशक्तिकशरीरादिपदप्रयोगे ।

**सु०** — **ननु शब्दमात्रस्य जातिनिमित्तत्वात्सत्तया परापरभावशून्यमपि द्रव्यगुणकर्मसु व्यक्तित्वमस्त्येवेत्यतो नोक्तदोष इत्यत आह** यदीति ।

**अनु०** — यदि तच्चास्ति तस्यापि विशेषेष्वनवस्थितिः ॥

**तर्हि तस्य व्यक्तित्वस्यापि विशेषेषु व्यक्तिषु प्रवेशः स्यात् । तथा चानवस्थितिरिति योजना । तथा हि । यः शब्दोऽनेकवाचकः स सर्वो जातिनिमित्तक इति स्वीकृत्य द्रव्यगुणकर्मसु व्यक्तित्वं नाम जातिर्यद्यङ्गीक्रियते । तर्हि तस्यामन्यासु च जातिषु जातिशब्दप्रवृत्तये जातित्वं नाम जातिरङ्गीकर्तव्या स्यात् । ओमिति चेत् । तर्हि सा व्यक्तित्वजातिरपि जातित्वजातिं प्रति व्यक्तिः स्यात् । न च सा स्वरूपे वर्तते ततो द्रव्यादित्रये तस्यां च व्यक्तिशब्दप्रवृत्त्यर्थमपरं व्यक्तित्वमङ्गीकरणीयम् । तत्र पुनर्जातिशब्दप्रवृत्तये जातित्वमभ्युपगन्तव्यमिति साऽपि तदाश्रयतया व्यक्तिः स्यात् । तस्यां पुनर्व्यक्तित्वान्तरमित्येवमनवस्थेति ।**

**शे०** — द्रव्यगुणकर्मसु व्यक्तित्वसामान्यनिराकरणावसरे विशेषेष्वनवस्थितिप्रतिपादनासङ्गतिमाशङ्क्यापेक्षितं पूरयन्प्रकृतोपयोगितया व्याचष्टे **तर्हीत्यादिना** । ननु कथं व्यक्तित्वस्य व्यक्तिषु प्रवेशः कथं च तन्मात्रेणानवस्था इत्यतस्तदुभयमुपपादयितुं प्रतिजानीते **तथा हीति** ॥ **अङ्गीकर्तव्येति** । अनेकवाचकस्य सर्वस्यापि शब्दस्य जातिनिमित्तकत्वाङ्गीकाराज्जातिशब्दस्य चानेकवाचकत्वादिति भावः ॥ **न च सेति** । स्ववृत्तेरप्रामाणिकत्वादिति भावः । **तत्रेति** । अपरस्मिन्व्यक्तित्व इत्यर्थः ॥ **साऽपीति** । व्यक्तित्वान्तररूपा जातिरपीत्यर्थः ॥ **तदाश्रयतयेति** । जातित्वजात्याश्रयतयेत्यर्थः ॥ **तस्यामिति** । व्यक्तित्वजातिरूपव्यक्तावित्यर्थः ॥ **व्यक्तित्वान्तरमिति** । अन्यथा व्यक्तिशब्दप्रवृत्त्यनुपपत्तेः प्रवृत्तेश्च प्रामाणिकत्वादिति भावः ।

**प०** — अन्यथानुपपत्त्या सत्त(आ)पत्त(या) तुल्यव्यक्तिकस्यापि व्यक्तित्वस्य जातित्वमुपेयत इति शङ्कते **ननु शब्दमात्रेति** ॥ **तस्यामन्यासु चेति** । व्यक्तित्वरूपजातौ द्रव्यगुणकर्मत्वादिरूपासु चेत्यर्थः ॥ **न च सेति** । व्यक्ति(जाति)त्वजातिरित्यर्थः । स्ववृत्तित्वस्याप्रामाणिकत्वादिति भावः । **तस्यां चेति** । व्यक्तित्वजातौ चेत्यर्थः ।

**श्री०— अनेकवाचक इति ।** एकवाचकत्वे तच्छब्दस्य तत्र प्रवृत्तौ न जातिर्निमित्तम् । व्यक्त्यभेदस्य जाति ।धकत्वेन तत्र जातेरभावात् । यथाऽऽकाशत्वमिति भावः । **तस्यां** व्यक्तित्वजातौ **अन्यासु** द्रव्यत्वाद्यासु । **सा** व्यक्तित्वजातिः । **तस्यां** व्यक्तित्वजातौ । **तत्र** व्यक्तित्वे । **साऽपि** व्यक्तित्वरूपव्यक्तिनिष्ठा व्यक्तित्वजातिः ।

**सु०— स्थलान्तरे बाधकमाह** कथमिति ।

**अनु०—** कथं स्वरूपत्वमपि ज्ञायतेऽनुगतं यदि ॥
एकव्युत्पत्तिपर्यन्तमनवस्थादिदूषितम् ॥

**अत्र स्वरूपमित्यध्याहर्तव्यम् । ततश्चायमर्थः । यद्यनुगतसामान्यनिबन्धनैव सर्वत्र व्युत्पत्तिस्तदा सकलपदार्थस्वरूपं स्वरूपशब्दवाच्यतया कथं ज्ञायते । अनुगतस्य स्वरूपत्वसामान्यस्याभावात् । स्वरूपेषु स्वरूपशब्दव्युत्पत्तिर्न स्यादिति । ननु च सर्वस्वरूपेष्वनुगतं स्वरूपत्वमङ्गीक्रियते मयाऽतो नोक्तदोष इत्यत उक्तं 'स्वरूपत्वमपि यद्यनुगतमङ्गीक्रियते तदा अनवस्थादिदूषितं भवती'ति । तथा हि । सर्वेषु स्वरूपेषु यत्स्वरूपशब्दप्रवृत्तिनिमित्तं स्वरूपत्वं नाम सामान्यमभ्युपगम्यते , तदपि तावत्स्वरूपमेव । न च तत्र स्वयमेव वर्तते । आत्माश्रयत्वस्यालौकिकत्वात् । अतस्तस्मिन्नन्येषु च स्वरूपेषु स्वरूपशब्दप्रवृत्तयेऽन्यत्स्वरूपत्वं नाम सामान्यमङ्गीकार्यम् । तदपि स्वरूपमेवेत्यनवस्था । आदिपदेनान्त्यविशेषस्वरूपेषु स्वरूपत्वसामान्याङ्गीकारेऽत्यन्तव्यावृत्तिधीहेतुत्वं न स्यात् । समवायाभावस्वरूपे च संबन्धाभाव इति ज्ञातव्यम् ।**

**अनवस्थाद्यनिष्टप्रसङ्गस्य विपर्यये पर्यवसानं सूचयति** एकव्युत्पत्तिपर्यन्तमिति ।

**एकं केवलमनुगतसामान्यहीनमिति यावत् । तस्मिन्व्युत्पत्तिरेकव्युत्पत्तिस्तत्पर्यन्तं तावदिदं दूषणमुपप्लवत एव । यावदनुगतसामान्यनिबन्धनैव सर्वत्र व्युत्पत्तिरिति पक्षं परित्यज्य सामान्यहीनेऽपि व्युत्पत्तिमङ्गीकुर्यादित्यर्थः । अनवस्थादिपरिहारायानुगतसामान्येन विनाऽपि व्युत्पत्तिरङ्गीकरणीयेति भावः ।**

**शे०— अत्र स्वरूपमित्यध्याहर्तव्यमिति ।** उपलक्षणं चैतत् । स्वरूपशब्दवाच्यतयेत्यध्याहर्तव्यमित्यपि द्रष्टव्यम् । दूषितं भवतीत्यत्र दूषितमिति भावे क्तः । भवतीत्यध्याहृतोक्तिः । तथा च दूषणं भवतीत्यर्थः । अत एवोत्तरत्र दूषणमित्येवानुवाद इति द्रष्टव्यम् ॥ **अत्यन्तव्यावृत्तिधी-**

**हेतुत्वं न स्यादिति** । अनुगतस्वरूपत्वसामान्याश्रयत्वात्तेषां द्रव्यगुणकर्मवदनुगतकल्पत्वेनानुवृत्तिबुद्धिहेतुत्वस्यापि सद्भावादिति भावः । ततश्च स्वरूपहानिरिति हृदयम् । समवायाभावस्वरूपे चेत्यतःपरं स्वरूपत्वसामान्याङ्गीकार इत्यनुवर्तते ।

प०— **बाधकमाहेति** । व्युत्पत्त्यादेरनुगतजातिहेतुकत्वे इति योज्यम् ॥ **समवायाभावस्वरूपे चेति** । समवायाभावयोः स्वरूपे च स्वरूपत्वजातिस्वीकारे तत्र समवायानभ्युपगमेन संबन्धाभाव इत्यर्थः । **इदं दूषणमिति** । मूले दूषितमिति पदं भावार्थनिष्ठान्तमिति भावः ।

या०— **दूषणं भवतीति** । अनेनानवस्थादिदूषितमिति मूले भावे क्तो भवतीत्यध्याहार इति सूचयति ।

श्री०— **न स्यादिति** । विशेषेष्वनुगतस्वरूपत्वजात्यङ्गीकारे तेषामपि साजात्यापत्त्यैकस्मिन्पार्थिवे परमाणौ सजातीयपरमाण्वन्तरव्यावृत्तिबोधकत्वं न स्यादित्यर्थः । रूपहानिरिति त्वदुक्तेरिति भावः ॥ **स्वरूपे चेति** । स्वरूपत्वजात्यङ्गीकारे इति वर्तते । समवायस्वरूपस्य तन्निष्ठस्वरूपत्वस्य च न संयोगोऽद्रव्यत्वात् । नापि समवायः समवायान्तराभावात् । तस्यैव चाङ्गीकारे आत्माश्रयात् । तथाऽभावस्वरूपतन्निष्ठस्वरूपत्वयोश्च न संयोगसमवायौ । उक्तरीत्याऽसम्भवादेवेत्यर्थः । 'रूपहानिरसम्बन्धः' इति समवायस्वरूपे जात्यङ्गीकारे सम्बन्धाभावस्य बाधकतया परेणोक्तत्वादिति भावः । **अङ्गीकुर्यादिति** । एवमङ्गीकारे तु नोपप्लव इत्याशयः । सूचितं विपर्ययपर्यवसानं दर्शयति **अनवस्थादीति** ।

च०— **समवायाभावस्वरूपे** समवायस्वरूपाभावस्वरूपे । **सामान्यनिबन्धनेति** बहुव्रीहिः । निबन्धनशब्दो नियामकवचनः ।

सु०— **नन्विदं सकलमप्यसङ्गतम् । तथा हि । यदुक्तं 'जातिनश्चेत्कथं तास्वि'ति; तत्तावदसत् । जातिषु जात्यन्तराभावेऽपि नित्यत्वे सत्यनेकानुगतत्वेनोपाधिना जातिशब्दव्युत्पत्त्युपपत्तेः । अस्तु वा जातिषु जातित्वं नाम जातिः । न चानवस्था । जातित्वे जातिशब्दस्य स्वरूपनिबन्धनत्वोपपत्तेः । 'तथैव व्यक्तिविज्ञानमि'त्येतदप्यसत् । व्यक्तित्वाभावेऽपि जातिव्यञ्जकत्वोपाधिना द्रव्यादिषु व्यक्तिशब्दप्रवृत्त्युपपत्तेः । व्यक्तित्वजात्यङ्गीकारेऽपि नानवस्था । व्यक्तित्वे व्यक्तिशब्दस्य स्वरूपनिमित्तत्वसंभवात् । यदपि 'कथमि'त्यादि**

**तदयुक्तम् । प्रमाणगम्यत्वोपाधिनैव स्वरूपशब्दव्युत्पत्त्युपपत्तेः । स्वरूपत्वाभ्युपगमेऽपि नानवस्था । तत्र स्वरूपशब्दस्य स्वरूपमात्रनिबन्धनत्वात् । अन्त्यविशेषेषूपाधिनिबन्धन एवेति न रूपहानिः । समवायादौ स्वरूपमेव संबन्ध इत्यतो न कश्चिद्दोष इत्याशङ्कां परिहरन्ननुगतसामान्यदूषणमुपसंहरति** कल्पनेति ।

**अनु०**— कल्पनागौरवात्तेन युक्ता नानुगकल्पना ॥

**सर्वत्र व्यावृत्तमेव वाच्यं शब्दप्रवृत्तौ निमित्तं च । व्युत्पत्तिस्तु सादृश्यनिबन्धनेत्येकरूपकल्पनेन सर्वसामञ्जस्ये क्वचिदनुगतं सामान्यं निमित्तं क्वचिदुपाधिः क्वचित्स्वरूपमेवेत्यनेककल्पने कल्पनागौरवं स्यादित्यर्थः । तेन बाधकसद्भावेन साधकाभावेन च ।**

**नन्वनुगतत्वाभावे कथं गोत्वादिकं सामान्यम् । अननुगतत्वेऽपि गुणकर्मवदवान्तरभेदस्य कल्पनीयत्वादिति ॥**

**शे० — उपाधिनिबन्धन एवेति** । न चोपाधेरप्यनुगतसामान्यघटितत्वेन तदाश्रयत्वे विशेषाणामनुगतसामान्याश्रयत्वम् अवर्जनीयमित्यनुगतत्वप्राप्तेः कथं न स्वरूपहानिरिति वाच्यम् । तावता परम्परासम्बन्धेनानुगतधर्माश्रयत्वप्राप्तावपि साक्षात्सम्बन्धेन तदनाश्रयत्वेनानुगतत्वाप्राप्तेः साक्षात्सम्बन्धेन तदाश्रयताया एवानुगतत्वप्रयोजकत्वादित्याशयात् ।

गोत्वादेरननुगतत्वे सामान्यशब्दवाच्यत्वानुपपत्तिमाशङ्कते **नन्विति** । समानानां भावः सामान्यमिति यौगिकसामान्यशब्दवाच्यतायास्तदनुगततायामेवोपपत्तेरित्याशयः । सत्यम् । समानानां भावः सामान्यमिति सामान्यशब्दो यौगिक इति, किन्तु सादृश्य एव तथा, न तु सर्वत्र । अन्यथा रूपादिविशेषापेक्षया गुणे, उत्क्षेपणादिविशेषापेक्षया कर्मणि च सामान्यशब्दप्रयोगाभवप्रसङ्गात् । त्वन्मते गोत्वादेरिव गुणकर्मणोरप्यनुगतत्वाभावात् किन्त्ववान्तरभेदभिन्नसर्वात्मके वस्तुनि रूढश्च । ततश्च रूढ्या सामान्यशब्दवाच्यत्वाद्गोत्वादेर्न तेनानुगतत्वसिद्धिरित्याशयेन समाधत्ते **गुणकर्मवदिति** । यथा हि रूपादिसर्वविशेषात्मकेषु अननुगतेऽपि गुणेऽवांतरभेदवत्त्वमात्रेण रूपादिविशेषापेक्षया सामान्यमिति व्यवहारो, यथा वोत्क्षेपणादिसर्वविशेषात्मके अननुगतेऽपि कर्मण्युत्क्षेपणाद्यपेक्षयोक्तेनैव निमित्तेन सामान्यमिति व्यवहारः । तथा सर्वतत्तद्गोत्वरूपविशेषात्मकेऽननुगतेऽपि गोत्वेऽवान्तरभेदवत्त्वरूपनिमित्तमात्रकल्पनया युज्यत एव सामान्यमिति व्यवहारः । न च गुणकर्मणोरप्यनुगतसामान्याश्रयत्वात्सामान्यव्यवहारविषयत्वमिति वाच्यम् । तथाऽपि गुणकर्मणोरननुगतत्वापरिहात् । न हि पितुः पाण्डित्येन पुत्रः पाण्डितो भवतीत्याशयः । केचित्त्वननुगतत्वस्य गुणकर्ममात्रवृत्तितानियमाद्गोत्वादेरप्यननुगततायां गुणकर्मणोरन्यतरत्वप्रसक्त्या तद्भिन्नसा-

मान्यरूपपदार्थान्तरत्वानुपपत्तिप्रसङ्गान्न तस्याननुगतत्वमिति शङ्कार्थः । एवं सति गुणकर्मणोरप्यन नुगतत्वं न स्यात् । तत्राप्यननुगतत्वस्य गुणमात्रवृत्तित्वनियमाश्रयणेनोत्क्षेपणादेरननुगततायां गुणत्व-प्रसक्त्या तद्भिन्नकर्मरूपपदार्थान्तरत्वानुपपत्तिप्रसङ्गस्य, कर्ममात्रवृत्तित्वनियमाश्रयणेन च रूपादेरन-नुगततायां कर्मत्वप्रसक्त्या तद्भिन्नगुणरूपपदार्थान्तरत्वानुपपत्तिप्रसङ्गस्य च तद्बाधकस्य तुल्यत्वात् । यदि चाननुगतत्वस्य गुणमात्रवृत्तित्वे कर्ममात्रवृत्तित्वे च प्रमाणाभावेन तन्नियमासिद्धयोभयवृत्तित्वा-दुत्क्षेपणादेर्वा रूपादेर्वाऽननुगततायामप्यवान्तरभेदसद्भावेन गुणत्वकर्मत्वयोरप्रसङ्गान्नोक्तरीत्या पदार्थान्तर-त्वानुपपत्तिरिति मन्यसे, हन्त तर्ह्यननुगतत्वस्य प्रमाणाभावेन गुणकर्ममात्रवृत्तित्वनियमस्याप्यसिद्ध्या गोत्वादेरननुगतत्वेऽप्यवान्तरभेदसद्भावेन गुणकर्मान्यतरत्वाप्रसङ्गान्न गुणकर्मभिन्नपदार्थत्वानुपपत्तिरिति युज्यते तस्याननुगतत्वमिति परिहारार्थ इत्यप्याहुः ॥

प० — **कथं गोत्वादिकं सामान्यमिति** । योगार्थस्याभावादिति भावः ॥ **अवान्तरभेद-स्येति** । द्रव्याश्रितयोर्गुणकर्मणोः प्रत्येकव्यक्तिनिष्ठत्वाविशेषेपि कर्मान्यत्वे सति जातिमात्राश्रयत्व(भावा)-द्युपाधिना गुण इति, संयोगविभागासमवायित्वोपाधिना कर्मेति, भेदः कल्प्यते तथा त्वदभिमतजाते-र्द्रव्यगुणकर्मसामान्याश्रितायाः प्रतिव्यक्ति व्यावृत्तत्वाविशेषेऽप्यनेकेष्वेकशब्दव्युत्पत्तिहेतुसादृश्यं प्रति प्रयो-जकत्वाद्युपाधिना सामान्यमित्युच्यत इत्यवान्तरभेदस्य कल्प्यत्वादित्यर्थः ॥ **अनुगतजात्यैव व्युत्पत्त्या-द्यङ्गीकारे बाधकोक्तिः** ।

---

या० — **कथं गोत्वादिकं सामान्यमिति** । समानानां भावः सामान्यमिति योगेन हि सामान्यशब्दवाच्यत्वं गोत्वादीनां वाच्यं तत्तेषामननुगतत्वे **कथं** न कथमपि सम्भवतीति भावः । न सामान्यशब्द उक्तरीत्या सर्वत्र यौगिकः । तथात्वेरूपादिविशेषापेक्षया गुणे उत्क्षेपणादिविशेषापेक्षया कर्मणि च सामान्यशब्दप्रयोगानुपपत्तेः । न हि त्वन्मते गोत्वादिकमिव गुणकर्मणी अप्यनुगते । किन्त्ववान्तरभेदभिन्नसर्वात्मके वस्तुनि रूढे एवेत्याशयेनोत्तरमाह **गुणकर्मवदिति** । यथा रूपादिसर्व-विशेषात्मकेऽननुगतेऽपि गुणेऽवान्तरभेदवत्त्वमात्रेण रूपादिविशेषापेक्षया सामान्यशब्दव्यवहारः । यथा वा तेनैव निमित्तेनोत्क्षेपणादिसर्वविशेषात्मकेऽननुगतेऽपि कर्मण्युत्क्षेपणादिविशेषापेक्षया सामान्यशब्द-व्यवहारस्तथा सर्वतत्तद्गोत्वरूपविशेषात्मकेऽननुगतेऽपि गोत्वे सामान्यशब्दव्यवहार उपपद्यत एव । अवान्तरभेदवत्त्वरूपस्य निमित्तस्यात्रापि कल्पयितुं शक्यत्वादित्यर्थः । न च गुणकर्मणोरनुगतसामान्या-श्रयत्वादेव सामान्यरूपत्वमिति वाच्यम् । तथाऽपि गुणादेरननुगतत्वात् । न हि पितुः पाण्डित्येन पुत्रः पण्डितो भवतीति भावः । समानानां भावः सामान्यमिति योगेन सामान्यशब्दवाच्यमस्मन्मते सादृश्य-मेवेत्यवधेयम् ।

श्री० — **स्वरूपनिबन्धनत्वेति** । जातित्वस्वरूपनिबन्धनत्वेत्यर्थः । तथा च जातित्वं स्वनिर्वाहकमिति भावः । एवमग्रेऽपि ॥ **उपाधिनिबन्धन एवेति** । यावन्नित्यद्रव्यवृत्तित्वरूपोपाधीत्यर्थः । जातिनिबन्धनतायामेव हि असम्बन्धरूपं जातिबाधकमिति भावः ॥ **समवायादाविति** । समवायेऽङ्गीकृतेन स्वरूपत्वसामान्येन सह स्वरूपमेव सम्बन्धः । असम्बद्ध इत्यस्यातिरिक्तसम्बन्धाङ्गीकारविषयत्वात् । आदिपदेनाभावो ग्राह्यः । तथा चाभावेऽपि स्वरूपत्वसामान्येन सह स्वरूपमेव संबन्ध इत्यर्थः । **क्वचिद्** द्रव्यादौ । **क्वचित्** सामान्यादौ । **क्वचित्** समवायाभावयोः । नन्वनुगतजात्यभावे गोत्वादीनां सामान्यशब्दवाच्यत्वं न सम्भवति समानानां सदृशानामनेकेषां भाव एको धर्म एव हि सामान्यम् । तथा चानेकानुगतत्वरूपतल्लक्षणाभावात्सामान्यशब्दवाच्यत्वं कथमित्याशङ्कते **नन्वनुगतत्वाभाव इति** । उक्तरीत्या सामान्यशब्दो गोत्वादौ न यौगिकः । तथात्वे रूपादिविशेषापेक्षया गुणे, उत्क्षेपणादिविशेषापेक्षया कर्मणि च सामान्यशब्दप्रयोगानुपपत्तेः । न हि गोत्वादिकमिव गुणकर्मणी अप्यनुगते । अतोऽवान्तरभेदभिन्नसर्वविशेषात्मके वस्तुनि रूढः । तथा चावान्तरभेदभिन्नरूपादिसर्वविशेषात्मकत्वात् अननुगतोऽपि गुणः सामान्यमित्युच्यते । एवमवान्तरभेदभिन्नोत्क्षेपणादिसर्वविशेषात्मकत्वादननुगतमपि कर्म सामान्यमित्युच्यते । एवमिहापि तत्तद्गोत्वादीनामननुगतानां बहूनां प्रातिस्विकानां विद्यमानत्वात्तत्तद्गोत्वादिरूपसर्वविशेषात्मकत्वादननुगतमपि गोत्वादिकं सामान्यमित्युच्यते । तथा चावान्तरभेदवस्त्वमेव सामान्यशब्दार्थ इत्याह **गुणकर्मवदिति** ॥ **भेदस्येति** । भेदवस्त्वस्येत्यर्थः ।

च० — **बाधकसद्भावेन** । अनुगतधर्मेणैव व्युत्पत्त्याद्यङ्गीकारे तत्र तत्र तदनिर्वाहप्रसङ्गेन ॥

॥ **अनुगतधर्मनियन्त्रितैव सार्वत्रिकी व्युत्पत्तिरित्युपगतौ बाधकोक्तिः** ॥

**सु० — एवं समवायं स्वरूपतो निराकृत्येदानीं यत्समवायस्य सर्वत्रैकत्वं नित्यत्वं च 'तत्त्वं भावेने'ति सूत्रेणोक्तम्, तत्त्वं, समवायस्य सर्वत्रैकत्वं नित्यत्वं च, भावेन, सत्तया व्याख्यातमिति । तदपि निराचिकीर्षुरादौ तावदेकत्वं निराकर्तुं पीठमारचयति** औपाधिकेति ।

**अनु०** — औपाधिकविशिष्टाद्यमपि तद्वस्तु किं ततः ॥

अन्यत्

औपाधिकः **पाचकयाजकादिः विशिष्टो नीलाग्निमदादिः । आद्यग्रहणादुपलक्षितग्रहणम् । अपिशब्दो दूषणान्तरसमुच्चयार्थः । तद्वस्तूपाध्यादित्रयम् । किंशब्दस्योभयतः संबन्धः । तत उपाध्यादित्रयात् । वस्त्वित्यस्यैतदौपाधिकविशिष्टाद्यमित्यनेनापि संबध्यते ।**

शे० — 'औपाधिकविशिष्टाद्यमि'त्युत्तरग्रन्थस्यौपाधिकादेरुपाध्याद्यतिरेकानतिरेकविचारपरस्य पूर्वेण सङ्गत्यप्रतीतेरानर्थक्यं तथाऽपि समवायैकत्वं निराकर्तुं तत्पीठिकारचनरूपत्वेनोत्तरग्रन्थसङ्गतत्वान्न तदानर्थक्यमित्यभिप्रेत्य वृत्तानुवादपूर्वकमुत्तरग्रन्थसङ्गततया तं योजयति **एवमित्यादिना** ॥ **औपाधिकः पाचकयाचकादिरिति** । न चोपाधेरपि विशेषणोपलक्षणान्यतरत्वात् । औपाधिकस्यापि विशिष्टोपलक्षितान्यतरत्वमेवेति तद्ग्रहणेनैव गृहीतत्वात्पृथक् तद्ग्रहणं न युक्तमिति वाच्यम् । विशेष्यप्रतियोगिकतन्निष्ठभेदज्ञापकत्वमुपाधित्वम् अन्यप्रतियोगिकविशेष्यनिष्ठभेदज्ञापकत्वं च विशेषणत्वादिकमिति तद्भेदविवक्षया पृथग्ग्रहणसम्भवात् । **उभयत इति** । किं तद्वस्तु किं वा ततोऽन्यदित्युभयत इत्यर्थः । सम्बध्यत इत्यनेनौपाधिकविशिष्टाद्यं वस्तु किं तद्वस्तु किं वा ततोऽन्यदिति वाक्ययोजनोक्ता भवति ।

प० — **तावदेकत्वमिति** । एवमेवासतः सत्तासमवाय इति वक्ष्यमाणनित्यत्वनिरासापेक्षया तावच्छब्दः ॥ **दूषणान्तरेति** । समवायपक्षे प्रागुक्ताप्रामाणिकत्वादिदूषणापेक्षया सिद्धसाधनत्वादिदूषणान्तरेत्यर्थः । औपाधिकविशिष्टाद्यमित्यनूद्य किं तद्वस्तु किं(वा) ततोन्यदिति योजनेति भावेन तद्वस्त्वित्यनूद्य तस्यार्थमाह **तद्वस्तूपाध्यादित्रयमिति** । उपाधिपुरुषतत्संबन्धा इत्यर्थः ।

च० — **तावदेकत्वमिति** । 'एवमेवासतः सत्तासमवाय' इत्यादिना समवायनित्यत्वस्य प्रत्याख्यास्यमानतया तदेकत्वप्रत्याख्याने तदवधिकप्राथम्यद्योतनार्थस्तावच्छब्दः ।

---

सु० — अयमर्थः । समवायस्य सर्वत्रैकत्वं वदतेदं तावद्विविच्यताम् । एक एव पुरुषः पचनयजनादिभिरुपाधिभिरवच्छेदकैर्धर्मैः पाचको याजकश्चेत्याद्यभिधीयते; स पाचकयाजकादिरौपाधिकोऽर्थः किं पचनाद्युपाधिपुरुषतत्संबन्धेभ्योऽनन्य उतान्य इति । तथा समानाधिकरणं व्यावर्तकं विशेषणम् । यथोत्पलस्य नीलं रूपं पर्वतस्य चाग्निः । व्यधिकरणं तु व्यावर्तकमुपलक्षणम् । यथा नीलरूपगतं नीलत्वमुत्पलस्य ।

अन्ये तु कार्यप्रवेशाप्रवेशाभ्यां विशेषणोपलक्षणयोर्भेदमाचक्षते । यथा लम्बकर्णमानीयतां चित्रगुरानीयतामिति ॥ अपरे तु शाब्दसामानाधिकरण्यवैयधिकरण्याभ्याम् । यथा दण्डी देवदत्तो जटाभिस्तापस इति ॥ केचित्पुनर्व्यवच्छित्तिसमये सत्त्वासत्त्वाभ्याम् । तत्र विशिष्टं नीलमग्निमान्वा विशेषणविशेष्यतत्संबन्धेभ्योऽनन्यत् अन्यद्वा । उपलक्षितं चोपलक्षणोपलक्ष्यतत्संबन्धेभ्योऽनन्यत् अन्यद्वेति ।

तत्रान्यत्वपक्षस्तावदनुभवाभ्युपगमोपपत्तिविरुद्धत्वादसंभावित एव । न हि पाचकादिः पचनादित्रयातिरिक्तोऽनुभूयते । न च योग्यस्याननुभवे सत्त्वं सिद्ध्यति । नाप्यग्निमदादिः

**पर्वताद्यतिरिक्तोऽनुभूयते । अतिरिक्तत्वे चौपाधिकविशिष्टादेर्द्रव्याद्यन्तर्भावासंभवात् । षट्-पदार्थातिरेकप्रसङ्गेनाभ्युपगमविरोधः स्यात् । यदि चौपाधिकविशिष्टाद्यमतिरिक्तं स्यात् तदा पाचकमानयेत्युक्ते पुरुषाद्यानयनं न क्रियेतेत्याद्युपपत्तिविरोधः ।**

**शे०** — ननु कथमस्य समवायैकत्वनिराकरणं प्रति पीठिकारचनरूपत्वमित्यतस्तद्दर्शयितुमाह **अयमर्थ इति** ॥ **समानाधिकरणमिति** । जटाभिस्तापस इत्यादौ तृतीययोपलक्ष्यमाणोपलक्षणभावे जटादावतिव्याप्तिनिरासाय समानाधिकरणमित्युक्तम् । न च तदपि यत्किञ्चित्समानाधिकरणमिति कथं तेन तन्निरासः । स्वप्रत्याय्यव्यावृत्त्या सहैकाधिकरणत्वस्य समानाधिकरणपदेन विवक्षितत्वात् । ताव-त्येवोच्यमाने नीलमुत्पलमित्यत्र नैल्यापादिता नीलव्यावृत्त्या सहैकाधिकरणे गगनोत्पलसंयोगादावतिव्या-प्तिः । तदर्थं व्यावर्तकमित्युक्तम् । तद्व्यावृत्तिबुद्धिजनकविशिष्टज्ञानावच्छेदकमिति च तदर्थः । अतो न नीलरूपरहितपदार्थव्यावृत्तिसमानाधिकरणे नीलरूपरहितपदार्थतादात्म्याभावलक्षणां व्यावृत्तिं सत्त्यैव प्रत्याययति उत्पलेन्द्रियसंयोगादावतिव्याप्तिः । अधिकरणं चात्र देशकालोभयरूपं विवक्षितम् । तेन यत्राश्रये यत्कालीना व्यावृत्तिः प्रत्याय्या तत्कालीनतदधिकरणवृत्ति विशेषणमन्यदुपलक्षणम् इत्यर्थपर्यवसा-नात् काककालीनगृहव्यावृत्तिपरे प्रयोगे काकस्य विशेषणत्वेऽपि सामान्यतो गृहविशेषव्यावृत्तिपरे प्रयोगे काकस्योपलक्षणत्वसंभवान्नोपलक्षणाभावप्रसङ्ग इति ध्येयम् ॥ **व्यधिकरणं त्विति** । एतच्च विशेष-णेऽतिव्याप्तिपरिहारायोक्तम् । व्यधिकरणत्वं च स्वप्रत्याय्यव्यावृत्त्या सह विवक्षितमिति न यत्किञ्चिद्व्य-धिकरणे विशेषणेऽतिप्रसङ्गः । तावन्मात्रं विशेष्यस्याप्यस्तीति तत्रातिप्रसङ्गवारणाय व्यावर्तकमित्युक्तम् । व्यावृत्तिबुद्धिजनकविशिष्टज्ञानावच्छेदकमित्यर्थात् नादृष्टेश्वरादावतिव्याप्तिरिति भावः । असंभावनापरि-हाराय तदुभयं क्रमेणोदाहरति **यथेति** । एवमुत्तरत्रापि द्रष्टव्यम् ।

**कार्यप्रवेशेति** । कार्यान्वयि विशेषणं तदनन्वय्युपलक्षणमिति कार्यान्वयानन्वयाभ्यामित्यर्थः ॥ **शाब्देति** । एकविभक्त्यन्तपदवाच्यं विशेषणं भिन्नविभक्त्यन्तपदवाच्यमुपलक्षणमिति शाब्दसामा-नाधिकरण्यवैयधिकरण्याभ्यामित्यर्थः । अत्र चैकत्वं सारूप्यमभिमतं न त्वभेदः । तथा सति दण्डी पुरुष इत्यादौ प्रथमैकवचनव्यक्तिभेदस्य सत्त्वेनैकत्वाभावादसंभवप्रसङ्गात् । सारूप्यमप्यत्र व्यावर्त्यवा-चकपदविभक्त्यैव विवक्षितम् । अन्यथा यत्किञ्चित्तृतीयान्तपदसारूप्यस्य जटाभिरिति तृतीयायामपि सद्भावेन तत्रातिव्याप्त्यपरिहारापातात् । व्यावर्त्यवाचकपदविभक्त्या सारूप्यविवक्षायां तु न तत्रा-तिव्याप्तिः । व्यावर्त्यः पुरुषस्तद्वाचकं पदं पुरुष इति पदं तत्र या विभक्तिः प्रथमा तया सह सारू-प्यस्य जटाभिरित्युपलक्षणे विद्यमानतृतीयाया अभावात् । यद्यपि च प्रथमातृतीययोरपि विभक्तित्वा-

दिना सारूप्यसत्त्वान्न तद्विवक्षयाऽपि तत्प्रतीकारः संभवति तथाऽपि विभक्तिविभाजकप्रथमात्वादिधर्म-पुरस्कारेण तद्विवक्षणान्नातिप्रसङ्गः । न चैवं जटावांस्तापस इति प्रयोगे जटानामप्युक्तरूपसामानाधि-करण्यसत्त्वाद्विशेषणत्वप्रसङ्ग इति वाच्यम् । तत्र तस्येष्टत्वात् । न चैवमुपलक्षणत्ववादविरोधः । तृतीयाप्रयोगकाले तासामुपलक्षणत्वाभिप्रायेण तदुपपत्तेरिति ध्येयम् । एवं व्यावर्त्यवाचकपदविभक्ति-विरूपविभक्त्यन्तपदवाच्यत्वस्यैव द्वितीयलक्षणे विवक्षितत्वान्न कश्चित्क्षुद्रोपद्रव इति ॥ **व्यवच्छित्ति-समय इति** । स्वप्रत्याय्यव्यावृत्तिसमय इत्यर्थः ।

ततश्च यावत्स्वप्रत्याय्यव्यावृत्तिभावि विशेषणं यावत्स्वप्रत्याय्यव्यावृत्त्यभावि तूपलक्षणमित्युक्तं भवति । मूलेऽन्यत्वपक्षस्यासम्भावितत्वेनानुपपन्नतायाः स्पष्टत्वाददूषणमिति न तददूषणान्न्यूनत्वं शङ्क्य-मित्यभिप्रेत्य स्वयं तत्पक्षस्यासम्भावनानिमित्तप्रदर्शनपूर्वकमसम्भावितताम् आह **तत्रेति** । तत्कथमित्यतोऽनु-भवविरुद्धता तावदुपदर्शयति **न हीति** । प्रतिज्ञातमभ्युपगमविरोधमुपदर्शयति **अतिरिक्तत्वे चेति** ॥ **द्रव्यान्तर्भावासम्भवादिति** । गुणादावपि तस्य वृत्तेर्न द्रव्यादित्वं तस्येति भावः । उपपत्तिविरोधमप्यु-पदर्शयति **यदि चेति** ॥

**प० — समानाधिकरणमिति** । स्वबोध्यव्यावृत्तिसमानाश्रयमित्यर्थः । एतेन व्यधिकरण-मित्युक्तार्थम्(:) । अन्यद्वेतीतीतिशब्दस्यायमर्थ इति पूर्वेणान्वयः । अन्यत्वपक्षं स्वयं निराह **तत्रान्यत्वपक्ष इत्यादिना अनुपपन्न एवेत्यन्तेन** । अनुभवादित्रितयविरोधं क्रमेण व्यनक्ति **न हीति, अतिरिक्तत्वे चेति, यदि चेतिग्रन्थेन** । अग्निमदादिरित्यादिपदेन प्रागुक्तचतुर्विधोपलक्षितग्रहः ॥ **द्रव्याद्यन्तर्भावा-संभवादिति** । गुणानाश्रयत्वात् गुणादावपि वैशिष्ट्यादेः सत्त्वादिति भावः ।

**या० — समानाधिकरणमिति** । प्रत्याय्यव्यावृत्तिसमानाधिकरणमित्यर्थः । एवं व्यधिकरण-मित्यत्रापि प्रत्याय्यव्यावृत्तिव्यधिकरणमित्यर्थः । मूलेऽन्यत्वपक्षः स्फुटदूषणत्वान्न दूषित इत्यभिप्रेत्य स्वयं तं दूषयति **तत्रान्यत्वपक्ष इत्यादिना** ॥ **द्रव्याद्यन्तर्भावेति** । गुणादावपि तस्य वृत्तेरिति भावः ।

**श्री० — शाब्दसामानाधिकरण्यं** एकविभक्त्यन्तपदवाच्यत्वम् । भिन्नविभक्त्यन्तपदवाच्यत्वं **वैयधिकरण्यम्** । एताभ्यां विशेषणोपलक्षणयोर्भेदमाचक्षत इत्यनुवर्तते । **व्यवच्छित्तिः** व्यावृत्तिः । तद्बो-धसमये यत्सत्तद्विशेषणम् । यथा दण्डो देवदत्तस्य । व्यावृत्तिबोधसमये यदसत्तदुपलक्षणम् । यथा काको गृहस्येति । एताभ्यां विशेषणोपलक्षणयोर्भेदमाचक्षत इति सम्बन्धः । अनुभवादिविरोधं क्रमेणो-पपादयति **न हीत्यादिना** । नन्वननुभूयमानस्याप्यतिरिक्ततया सत्त्वं किं न स्यादित्यत आह **न चेति** ॥

च० — **समानाधिकरणमिति** । स्वप्रत्येतव्यव्यावृत्तिसमानाधिकरणमित्यर्थः । **व्यधिकरणं** तादृशव्यावृत्त्यधिकरणावृत्ति । **यथेति** । लम्बकर्णयोरानयनक्रियान्वयितेव चित्रगवाणां न सेति भावः । **शब्देति** । स्वप्रकृतिकविभक्तिवृत्तिविभक्तिविभाजकप्रथमात्वादिसमान्यतमधर्मवद्विभक्तिप्रकृतिस्वरूपसमानविभक्तिकत्वतदवृत्तितादृशधर्मवद्विभक्तिप्रकृतिस्वरूपविरुद्धविभक्तिकत्वाभ्यामित्यर्थः । **व्यवच्छित्तिसमये** व्यावृत्तिप्रतीतिसमये । प्रतियोगितासंसर्गकाभावबुद्धौ प्रतियोग्यंशे भासमानत्वं विशेषणत्वम् । प्रतियोगिताप्रकारकाभावबुद्धौ प्रतियोगितावच्छेदककोटयप्रविष्टतया तदंशे भासमानत्वमुपलक्षणत्वमित्यपि न्यायनयनिष्णाताः । तद्यथा घटो नास्तीतिप्रतीतावभावविशेषणतापन्नघटे विशेषणीभूय भासमानघटत्वस्याद्यं सोंदण्डोपाध्यायदिशा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववानिति बुद्धौ भासमानव्यापकतावच्छेदकत्वादेः द्वितीयमिति तदीयाकरे व्यक्तम् ।

**सु० — नन्ववच्छित्तिरौपाधिकत्वं, व्यवच्छित्तिश्च वैशिष्टयं त्रितयाद्भिन्नमेवेति चेन्न । अवच्छित्तेरनिरूपणात् । सा किमुपाधिसंबन्धो वा पुरुषस्यैकत्वं वा स्वगतो भेदो वा । आद्ये न त्रयातिरेकः । द्वितीये त्वनौपाधिकादविशेषः । तृतीये त्वसत्त्वप्रसङ्गः । व्यवच्छित्तिर्वैशिष्टयमिति चायुक्तम् । तस्या नीलादिपदार्थत्वाभावात् । सा हि वैशिष्टयप्रतीतिफलविषयतया अनुभूयते ।**

शे० — **सा किमिति** । उपाधिसम्बन्धादेकमेव वस्तु भिद्यत इति सर्वैरङ्गीकृतत्वादौपाधिकस्थलेऽवच्छित्तिपदार्थतया क्रमेणोपाधिसम्बन्धादीनां विकल्पकोटितया प्रसक्तिरित्यवधेयम् ॥ **आद्य इति** । उपाधिसम्बन्धस्य त्रितयान्तर्भूतत्वादिति भावः ॥ **अविशेष इति** । तत्रापि पुरुषैकत्वसद्भावादिति भावः ॥ **असत्त्वप्रसङ्ग इति** । स्वाभिन्ने स्वस्मिन्स्वप्रतियोगिकभेदस्य विरुद्धत्वेनासत्त्वात्तदात्मकस्यौपाधिकत्वस्यासत्त्वप्रसङ्ग इत्यर्थः । न च स्वाभिन्ने स्वस्मिन्न स्वभेदो विरुध्यते । स्वस्मिन्स्वाभेदस्य स्वाभाविकत्वाद्भेदस्य चौपाधिकत्वात्स्वाभाविकौपाधिकयोश्चाविरोधस्य बहुलमुपलम्भादिति वाच्यम् । औपाधिकस्यापि स्वाभाविकवदेव सत्यत्वेन तदविशिष्टतया त्वन्मते विरोधापरिहारादित्याशयात् । नन्वपोहपदार्थवादिनं प्रति व्यावृत्तेर्नीलादिपदार्थत्वाभावोऽसिद्ध इत्यतस्तमनुभवविरोधेन दूषयति **सा हीति** । वैशिष्टयप्रतीतेः फलं या व्यावृत्तिप्रतीतिस्तद्विषयतयेत्यर्थः । नीलादिपदजनितनीलरूपादिविशिष्टप्रत्ययानन्तरं ह्यनीलादिप्रतीतिव्यावृत्तिर्हि जायते । तथा च व्यवच्छित्तिर्वैशिष्टयज्ञाप्यैव न वैशिष्टयरूपेति भावः ।

**सु० — पुरुषस्यैकत्वं वा ।**

प०— **असत्त्वप्रसङ्ग इति ।** स्वप्रतियोगिकस्वगतभेदस्यासत्त्वादिति भावः ॥ **तस्या इति ।** व्यवच्छित्तेरित्यर्थः ॥ **सा हीति ।** व्यवच्छित्तिः वैशिष्ट्यप्रतीतेर्यत्फलं व्यावृत्तिधीस्तद्विषयतया साक्षिसिद्धेत्यर्थः ।

या०— **सा किमुपाधिसम्बन्धो वेत्यादि ।** अत्र ह्युपाधिसम्बन्धादेकमेव वस्तु भिद्यत इति परैरङ्गीकृतत्वादवच्छित्तिशब्दार्थतया क्रमेणोपाधिसम्बन्धादीनां विकल्पकोटितया प्रसक्तिरित्यवधेयम् ॥ **असत्त्वप्रसङ्ग इति ।** स्वाभिन्ने स्वस्मिन्स्वप्रतियोगिकभेदस्य विरुद्धत्वेनासत्त्वात्तदात्मकस्यौपाधिकत्वस्यासत्त्वप्रसङ्ग इत्यर्थः । ननु पुरुषेऽभेदस्य स्वाभाविकत्वेन तत्र स्वाभाविकभेदासम्भवेऽप्यौपाधिको भेदो न विरुद्ध इति कथं तस्यासत्त्वमिति चेन्न । 'यद्यस्यौपाधिको भेदः कुत्र एकत्वमिष्यते । नानिर्वाच्यं हि तेनेष्टमि'त्यादिनाऽस्याः शङ्काया अग्रे निराकरिष्यमाणत्वात् ॥ **फलविषयतयेति ।** फलीभूतप्रतीतिविषयतयेत्यर्थः । नीलादिपदजनितनीलरूपादिविशिष्टप्रत्ययानन्तरं ह्यनीलादिव्यावृत्तिप्रतीतिर्जायते । तथा च व्यवच्छित्तिर्वैशिष्ट्यज्ञाप्यैव न वैशिष्ट्यरूपेति भावः ॥

श्री०— **न त्वयातिरेक इति ।** पचनाद्युपाधिपुरुषतत्सम्बन्धेभ्योऽतिरेको भेदो न "। उपाधिसम्बन्धरूपावच्छित्तेरिति शेषः । **अविशेषः** एकत्वस्य पुरुषे स्वाभाविकत्वादुपाधिकथनं व्यर्थमित्याशयः । **तस्याः** व्यवच्छित्तेः ॥ **पदार्थेति ।** पदप्रतिपाद्यत्वेत्यर्थः । **सा हि** व्यवच्छित्तिः ।

---

**सु०— विशेषणविशेष्यसंबन्धावगाह्येकं वा विज्ञानमविरलमनेकं वा विशिष्टमिति कश्चित् । यथाऽऽह 'विशेषणं विशेष्यं च तत्संबन्धफलार्पकम् । ज्ञानरूपं स्वसामर्थ्याद्विशिष्टमिति कीर्तितमि'ति । तन्न । विशिष्टस्य बाह्यार्थतयाऽनुभवात् । अन्यथा साध्यधर्मविशिष्टः पक्षः । सोऽनुमानेन प्रज्ञापनीय इत्याद्ययुक्तं स्यात् । तस्मादतिरेकपक्षोऽनुपपन्न एव ।**

शे०— लीलावतीकारोक्तं 'विशेषणविशेष्यतत्संबन्धेभ्योऽतिरिक्तं विशिष्टपदार्थं' दूषयितुमनुवदति **विशेषणेति ।** अत्र टीकायां विशेषणविशेष्यसंबन्धावगाहीत्येव पाठः, चिरन्तनकोशेषु तथा दर्शनात् । खण्डनादिषु विशेषणविशेष्ययोरिव तत्संबन्धस्याप्येकानेकज्ञानविषयतायाः स्पष्टमुक्तत्वाच्च । क्वचिद्विशेषणविशेष्यस्वरूपावगाहीति पाठः । तत्रापि स्वरूपपदं संबन्धपरमेव । तथा च विशेषणविशेष्यसंबन्धावगाह्येकं ज्ञानं विशिष्टम् । अथवा तदवगाह्यनेकमविरलं विज्ञानं विशिष्टमिति पक्षद्वयमुक्तं भवति । आद्ये लक्षणे विशेषणाद्येकैकमात्रविषयकेषु ज्ञानेष्वतिप्रसङ्गनिवारणायाद्यं विशेषणम् । घटपटौ रूपं समवेतमित्यनेकप्रतीतिषु तद्वारणाय द्वितीयमिति द्रष्टव्यम् । विशेषणविशेष्यसंबन्धावगाहिनि

भिन्नेन्द्रियजन्यानेकज्ञानात्मके सुरभिचन्दनमित्यादिविशिष्टे एकज्ञानत्वाभावादव्याप्तिवारणायाविरलमिति द्वितीयपक्षसङ्कीर्तनम् । अत्र चाविरलत्वमव्यवहितत्वं कालविलम्बेनानुत्पन्नत्वमिति यावत् । अत्र कालविलम्बेनोत्पद्यमानानां विशेषणाद्यवगाहिनानाज्ञानानां विशिष्टत्वप्रसङ्गं निवारयितुमविरलमित्युक्तम् । उक्तविशेषणकस्य विशेष्यानवगाह्यनेकज्ञानस्य व्यवच्छेदायोक्तं **विशेष्येति** । उक्तविशेष्यकस्य विशेषणानवगाह्यनेकज्ञानस्य तत्प्रसङ्गोच्छेदायोक्तं **विशेषणेति** । उक्तविशेषणकस्य संबन्धानवगाह्यनेकज्ञानस्य तद्व्यवच्छेदाय संबन्धेत्युक्तम् । न चैकज्ञानात्मके विशिष्टे द्वितीयस्यानेकज्ञानात्मके च तस्मिन्नाद्यस्य लक्षणस्याभावात्परस्पराव्याप्तिरिति वाच्यम् । उभयान्यतरत्वे तात्पर्यात् । तस्य चोभयत्रापि सत्त्वेन तदनवकाशात् । नन्वेवंरूपं विशिष्टं लीलावतीकृतोक्तमिति कुतो विज्ञायत इत्यतस्तद्वाक्यादेवेत्यभिप्रेत्य तदुदाहरति **यथेति** । यद्यप्यत्र ज्ञानेन रूप्यते निरूप्यते विषयीक्रियत इति यावत् ज्ञानरूपं ज्ञानविषयो विशेषणं विशेष्यं चशब्दात्संबन्ध इत्येतत्स्वसामर्थ्यात् यतो विशिष्टव्यवहारजनकमता विशिष्टमिति कीर्तितमिति योजना प्रतीयते, संमता चेयं सर्वतान्त्रिकाणामेकज्ञानारूढो वाऽविरलानेकज्ञानारूढो वाऽनेकोऽर्थः संबन्धश्च विशिष्टपदार्थ इत्येतन्मतस्य खण्डनादावाशङ्क्य निराकरणादुक्तयोजनानभिमतौ तस्यानवकाशात् । एवं चैकज्ञानोपरूढानां वाऽविरलनेकज्ञानोपरूढानां वा विशेषणविशेष्यसंबन्धानां विशिष्टत्वप्रतिपादक एवायं ग्रन्थः । न त्वेकस्य ज्ञानस्य अनेकस्य ज्ञानस्य वा विशिष्टत्वप्रतिपादक इति नास्योपयोगः प्रकृत इति तदुपन्यासोऽनुचित इत्याभाति । तथाऽपि तथा योजनायां विशेषणमित्यादिग्रन्थस्य किं वैशिष्ट्यं ज्ञानविशेष इत्यादिप्रश्नपरिहारात्मकतत्पूर्वग्रन्थविरोधप्रसङ्गात्तामुपेक्ष्योक्तरीत्या ज्ञानरूपं ज्ञानविषयो विशेषणं विशेष्यं चशब्दात्संबन्धश्च विशेषणविशेष्यतत्संबन्धावगाहिज्ञानमिति यावत् । तच्चैकमविरलमनेकं वा विशिष्टमिति कीर्तितमिति योजनान्तरमाश्रित्य ज्ञानस्य विशिष्टपदार्थत्वप्रतिपादकत्वलाभेन प्रकृतोपयोगोऽस्तीत्याशयेनैतदुपन्यास इति द्रष्टव्यम् । ज्ञानस्य तत्संबन्धफलार्थकमिति विशिष्टव्यवहारजनकत्वकथनं तु प्रसिद्धस्यापि विशिष्टस्य विशिष्टपदार्थतायां नियामकतया पराभिमतस्य विशिष्टव्यवहारजनकत्वस्य प्रसिद्धे विशिष्ट इवोक्तरूपज्ञानेऽपि सत्त्वाद्युक्तं तस्य विशिष्टपदार्थत्वमित्यभिप्रेत्य, तथा च तत्संबन्धफलार्थकं तयोर्विशेषणविशेष्ययोर्यः संबन्धो वैशिष्ट्याख्यः स यथा विशिष्टव्यवहारं जनयतीति विशिष्टनामा । तथा ज्ञानमपि, फलं विशिष्टव्यवहारं जनयतीत्यतो विशिष्टमिति कीर्तितमिति योज्यम् । स्वसामर्थ्यादिति स्वभाववादानुसरणं तु शङ्कान्तरनिरासाय कृतम् । तथा हि । विशिष्टव्यवहारः संबन्धकार्यः । तस्य कथं ज्ञानं हेतुः स्यात् । अन्यकार्यस्यान्येनाजननादन्यथाऽतिप्रसङ्गः स्यादिति शङ्किते यथा वैशिष्ट्यनिमित्तकत्वेऽपि विशिष्टव्यवहारस्य न वैशिष्ट्यं स्वविशिष्टव्यवहारं

वैशिष्ट्याजनयति तत्रैव तद्वृत्तेरप्रामाणिकत्वेनासंभवात् । किन्तु स्वभावादेव । अत एव नातिप्रसङ्गः । तथा विवक्षितज्ञानविशेषोऽपि स्वभावादेव विशिष्टव्यवहारजनकोऽतो नातिप्रसङ्ग इति सर्वमनवद्यम् ।

**अनुभवादिति** । तथा च विशिष्टस्य बाह्यार्थत्वस्थित्या नान्तरत्वेनानुभूयमानज्ञानरूपता तस्येत्यर्थः ॥ **इत्याद्ययुक्तं स्यादिति** । ज्ञानस्य मानसप्रत्यक्षत्वादिति भाव । आदिपदेन दण्डिन-मानयेत्यादौ विशिष्टस्यानयनकर्मत्वानुपपत्तिपरिग्रहः । ज्ञानस्यामूर्तत्वेनानयनाद्यसंभवादिति द्रष्टव्यम् । अतिरेकपक्षस्योपपादितमसंभावितत्वमुपसंहरति **तस्मादिति** । अनुभवादिविरुद्धत्वादित्यर्थः । एवेत्यतः परम् 'इति स्फुटमेवेत्यतो न मूलकृता दूषितः' इति शेषः ।

**स० — अविरलमिति** । अगृहीतभेदमित्यर्थः । 'विशेषणं विशेष्यं च' इत्यादिकारिकाया अयमर्थः । **ज्ञानरूपं** ज्ञानेन रूप्यते निरूप्यते तत् ज्ञानरूपम् । **ज्ञानविषय** इति यावत् । तादृशं विशेषणं विशेष्यं विशेष्यविशेषणावगाहिज्ञानमिति यावत् । स्वयं विशेषणविशेष्यसंबन्धविषयकमपि स्वसामर्थ्यादेव विशेषणविशेष्ययोः संबन्धव्यवहारजनकं ज्ञानं विशिष्टमिति कीर्तितमिति ।

**प० — अविरलमिति** । अगृहीतविवेकमनेकं विज्ञानमित्यनुषङ्गः ॥ **यथाऽऽहेति** । ज्ञान-रूपमगृहीतविवेकमेकं वाऽनेकरूपं ज्ञानं वा विशिष्टमिति कीर्तितम् । सामर्थ्यात्तत्संबन्धफलार्पकम् । तयोः संबन्धे सति संबन्धबुद्धौ सत्यां यत्फलं विशिष्टव्यवहारादिकं तदर्पकं सद्विशिष्टमित्युच्यते । तत्संबन्धेत्यत्र तच्छब्दपरामर्शविषयः क इत्यत उक्तं **विशेषणमिति** । विशेषणं विशेष्यं च यद्वर्तते तयोः संबन्धे सति ।

**या० — अविरलमिति** । अगृहीतभेदमित्यर्थः । ननु विशेषणविशेष्यावगाह्यविरलानेकज्ञानं कथं विशिष्टं, तस्य तदुभयसम्बन्धाविषयकत्वेनातद्व्यावृत्तिप्रत्ययादिरूपफलजनकत्वासम्भवादित्याशङ्कां तत्सम्मतिप्रदर्शनव्याजेन परिहरति **यथेति** । ज्ञानरूपमविरलज्ञानयोः स्वरूपसम्बन्धाविषयकत्वेप्यगृहीत-भेदत्वेन सम्बन्धविषयकैकज्ञानसादृश्यरूपात्स्वसामर्थ्यात् । यद्विशेषणं विशेष्यं च तत्सम्बन्धफलार्पकं, तयोर्विशेषणविशेष्ययोः सम्बन्धे तद्विषयकज्ञाने सति यत्फलमतद्व्यावृत्तिप्रत्ययादिरूपं तज्जनकं विशिष्ट-मिति कीर्तितमित्यर्थः ॥ **इत्याद्ययुक्तमिति** । ज्ञानस्य मानसप्रत्यक्षत्वादिति भावः । आदिपदेन दण्डविशिष्टमानयेत्यादौ विशिष्टस्यानयनादिकर्मत्वमयुक्तं स्यादिति ग्राह्यम् । ज्ञानस्यानयनाद्यसम्भवादिति द्रष्टव्यम् ।

**श्री० —** एकं विज्ञानं वेत्यन्वयः ॥ **बाह्यार्थतयेति** । तथा चान्तरज्ञानरूपत्वकथनमयुक्तमिति भावः ॥ **अन्यथा** बाह्यतयाऽनुभूयमानस्यापि ज्ञानरूपत्वे ।

सु०— अस्तु तर्ह्यौपाधिकविशिष्टाद्यं त्रितयानन्यदित्यत आह तदेवेति ।

अनु०— तदेव चेदग्निमत्त्वं किं तत्र भण्यते ॥

**प्रतिपत्तिसौकर्यायोदाहरणनिष्ठतया मतुपा प्रश्नः कृतोऽग्निमत्त्वमिति । धूमाद्यनुमानसाध्यं विशिष्टमित्यर्थः । औपाधिकादेरप्युपलक्षणमेतत् । अयमर्थः । अग्निमदादिविशिष्टं च यदि विशेषणविशेष्यतत्संबन्धेभ्योऽनन्यदङ्गीक्रियते । तदाऽपि वक्तव्यम् । किं तत्त्रितयमपि प्रत्येकं विशिष्टमुत(तत्र)ान्यतमम् । द्वितीयेऽपि किं विशेषणभूतोऽग्निरेवाग्निमच्छब्दार्थः, उत विशेष्यरूपः पर्वतः, अथ संबन्धः संयोगलक्षणः । संयोगपक्षेऽपि किं निर्विशेषणसंयोगः किंवाऽग्निना संयोगः । उत्तरत्रापि किमग्निसंयोगमात्रम् । उत पर्वतस्याग्निसंयोग इति । एवं पाचकादेरपि पचनादित्रयानन्यत्वे विकल्पो द्रष्टव्यः ।**

शे०—ननु चात्रौपाधिकविशिष्टोऽयमिति प्रक्रमानुरोधाद्विशिष्टं किं तत्र भण्यत इति विशिष्टमात्रनिष्ठतया विकल्पप्रश्नः कर्तव्यः,तत्कथमग्निमत्त्वं तत्र भण्यत इति विशिष्टविशेषाग्निमत्त्वनिष्ठतया विकल्पप्रश्न इत्यतो मन्दानां प्रतिपत्तिसौकर्यार्थमेवोदाहरणनिष्ठतया प्रश्नः कृतो न त्वस्य यथाश्रुत एवार्थः, किन्तु धूमाद्यनुमानसाध्यं विशिष्टं किं तत्र भण्यत इत्येवेत्यतो न प्रकृतानानुगुण्यमित्याह **प्रतिपत्तीति** । ननु तथाऽप्यौपाधिकविशिष्टाद्यं तदेवोपाध्यादित्रितयानन्यदिति शङ्काग्रन्थानुरोधेन विशिष्टस्यैवौपाधिकोपलक्षितयोरप्यत्र ग्राह्यत्वाद्विशिष्टमात्रे विकल्पप्रश्नानुपपत्तिरित्यतो विशिष्टोक्तेरत्रौपाधिकोपलक्षितोपलक्षणत्वेन विशिष्टमात्रपरत्वाभावान्नानुपपत्तिरित्यभिप्रेत्य तदुपलक्षणतया विशिष्टोक्तिं योजयति **औपाधिकेति** । नन्वग्निमत्त्वं किं तत्र भण्यत इति कथं विकल्पप्रश्नः कोटीनामनिर्देशेन तदलाभात् । न चाग्निसंयोगमात्रं चेदिति भूधरस्याग्निसंयोग इति कोटिद्वयप्रदर्शनशङ्काग्रन्थानुरोधेनात्राग्निसंयोगो वाऽग्निमच्छब्दार्थः । भूधरस्याग्निसंयोगो वेति कोटिद्वयलाभान्नानुपपत्तिरिति वाच्यम् । विशिष्टस्य विशेषणादित्रितयानन्यत्ववादिना विशेषणविशेष्ययोरपि विशिष्टतया वक्तुं शक्यत्वेन तत्परित्यागेन संयोगमात्रस्यैव विशिष्टपदार्थत्वस्य शङ्कितुमशक्यत्वादित्याशङ्क्य साक्षात्परम्परासाधारण्येन कोटीनामतिबाहुल्यादत्र तदनिर्देश इत्यभिप्रेत्य तदुपदर्शनेन विकल्पप्रश्नमुपपादयितुमाह **अयमर्थ इति** ॥ **प्रत्येकं विशिष्टमिति** । अग्निरपि पर्वतोऽपि संबन्धोऽपीत्येवं सर्वमपि विशिष्टमित्यर्थः । उत तत्राप्यन्यतम(मि)दिति विशेषणादित्रये यत्किञ्चिदेकमेव विशिष्टं न तु सर्वमित्येतत्कल्पार्थः । **विशेष्यरूपः पर्वत इति** । विशेष्यरूपः पर्वत एवाग्निमच्छब्दार्थ इति पूर्वेणान्वयः ॥ **एवमिति** । अयमर्थः । औपाधिकं यद्युपाधिपुरुषतत्संबन्धेभ्योऽनन्यदङ्गीक्रियते तदा वक्तव्यं किं तदुपाध्यादित्रितयमपि प्रत्येकमौपाधिकमुत

तत्रान्यतमत्(म्) । द्वितीयेऽपि किमुपाधिभूतः पाक एव पाचकशब्दार्थः, उत विशेष्यरूपः पुरुषः, अथ संबन्धः समवायलक्षणः । समवायपक्षेऽपि किं निर्विशेषणः समवायः किंवा पाकेन समवायः । उत्तरत्रापि पाकसमवायमात्रमुत पुरुषस्य पाकसमवाय इति । एवमेवोपलक्षितस्याप्युपलक्षणादित्रितयानन्यत्वे विकल्पो द्रष्टव्यः ।

प०— **तत्रान्यतमदिति** । अन्यतममिति पाठः साधुः न त्वन्यतमदिति । 'अड्डुतरादिभ्यः पञ्चभ्य' इत्यत्रोपात्तेभ्यो डतरडतमइतरअन्यअन्यतरशब्देभ्योऽन्यतमशब्दस्य पृथगुक्तेः । अन्यतमान्यतरशब्दावव्युत्पन्नौ स्वभावादेव द्विबहुत्वविषयौ । निर्धारणे कर्तृभेद इति पस्पशाह्निके कैयटोक्तेः ।

या०— **प्रत्येकं विशिष्टमिति** । विशेषणादिकं समस्तमपि विशिष्टमित्येतत्कल्पार्थः ।

श्री०— **उदाहरणेति** । अग्निमत्स्वरूपविशिष्टोदाहरणनिष्ठत्वेनाग्निमत्त्वं किं तत्र भण्यत इति प्रश्नः कृतः ।

च०— **अन्यतरमिति** । अन्यतमशब्दस्य डतरादिशब्दपञ्चकान्यतया न अड्डुतरादिभ्य इत्यस्य प्रवृत्तिरिति भावः ।

सु०— **अन्त्यपक्षातिरिक्तान्सर्वपक्षानपाकरोति** अग्नीति ।

---

अनु०— अग्निसंयोगमात्रं चेद्भवेत्तत्सिद्धसाधनम् ॥

**अग्निसंयोगमात्रमिति सर्वपक्षोपलक्षणम्** । चेत् अग्निमच्छब्दार्थ इति शेषः । तत् धूमवत्त्वाद्यनुमानमग्निपर्वतसंयोगानां समस्तानां व्यस्तानामग्निना संयोगस्य चाग्निमच्छब्दवाच्यविशिष्टत्वे धूमानुमानं सिद्धसाधनं स्यात् । विशिष्टस्यानुमानसाध्यत्वात् । अग्न्यादेर्विशिष्टस्य मानान्तरत एव सिद्धत्वादिति ।

शे०— नन्वेवमभिप्रायवर्णनेऽग्निसंयोगमात्रं चेदित्याद्युत्तरग्रन्थविरोधः । तत्राग्निसंयोगमात्रस्याग्निमच्छब्दवाच्यविशिष्टतामाशङ्क्य निराकरणादित्यतोभ वेदेवं यदि त्वदुक्तरीत्याऽग्निसंयोगमात्रस्य विशिष्टत्वमाशङ्क्य तन्निरासपरमिदं स्यात् । न चैतदस्ति । किन्तर्हि विशेषणादीनां सर्वेषामपि विशिष्टतामाशङ्क्य तन्निरासपरमिति न तद्विरोध इत्यभिप्रेत्य विशेषणादित्रितयमपि प्रत्येकमपि विशिष्टमिति विकल्पितानेकपक्षनिरासपरतया योजयति **अन्त्यपक्षेति** । भूधरस्याग्निसंयोग इत्येतत्पक्षव्यतिरिक्तसर्वपक्षानित्यर्थः । नन्वत्राग्निसंयोगमात्रमित्युक्तेः कथमस्य विकल्पिताशेषपक्षनिरासकत्वमित्यतोऽस्य विकल्पितानेकोपलक्षणत्वेन मुख्यवृत्त्याऽग्निसंयोगमात्रपरत्वाभावान्नानुपपत्तिरित्यभिप्रेत्य सर्वपक्षोपलक्षणतया तद्यो-

जयति **अग्निसंयोगमात्रमितीति** । **सर्वोपलक्षणम्** अन्त्यपक्षव्यतिरिक्तसर्वोपलक्षणमित्यर्थः ॥ **समस्तानामिति** । अग्निरपि पर्वतोऽपि संयोगोऽपीत्येवं प्रत्येकं विशिष्टभूतानां सर्वेषामित्यर्थः ॥ **व्यस्तानामिति** । अग्निरेव, पर्वत एव, संयोग एवेत्येवमन्यतमरूपेणैव विशिष्टभूतानामित्यर्थः ।

प०— चेदित्यनूद्य तदन्विततयाऽऽकाङ्क्षितं पूरयति **चेदग्निमच्छब्दार्थ इति शेष इति** । तदिति मूलानुवादः । धूमेत्यादि व्याख्या ॥ **समस्तानामिति** । प्रत्येकं विशिष्टमिति पक्षोक्तानां विशेषणविशेष्यतत्संबन्धानां मिलितानां त्रयाणामित्यर्थः ॥ **व्यस्तानामिति** । अन्यतममित्युक्तपक्षावान्तरभेदभिन्नानामित्यर्थः ॥ **संयोगस्य चेति** । संयोगपक्षेऽपीत्युक्तपक्षावान्तरभेदभिन्नस्येत्यर्थः ।

या०— **सर्वान्पक्षानिति** । अत्र सर्वशब्देन प्रत्येकं विशिष्टमिति प्रथमपक्षोऽपि सङ्ग्राह्यतया विवक्षितः । तेन तत्पक्षदूषणाभावान्न्यूनतेति शङ्काऽनवकाश इति ध्येयम् । अत एवाह **समस्तानामिति** । सर्वेषामित्यर्थः ॥ **व्यस्तानामिति** । अन्यतमरूपाणामित्यर्थः ।

श्री०— **समस्तानामिति** । त्रितयमपि प्रत्येकं विशिष्टमिति पक्षे त्रयाणामपीत्यर्थः । उत तत्रान्यतम(मि)दिति पक्षे व्यस्तानामित्युक्तम् । एकैकस्य वेति यावत् ।

**सु०— अस्तु तर्हि पर्वतस्याग्निना संयोगो विशिष्टरूपोऽग्निमच्छब्दार्थोऽनुमानसाध्य इत्यन्तिमः पक्षः । तत्रोक्तदोषाभावात् । पर्वताग्निसंयोगानां समस्तानां व्यस्तानामग्निसंयोगस्य च सिद्धत्वेऽपि पर्वतस्याग्निना यः संयोगस्तस्यानुमानतः प्रागसिद्धेरिति शङ्कते** भूधरस्येति ।

अनु०— भूधरस्याग्निसंयोगो यदि षष्ठ्यर्थ एव कः ॥

**अग्निमच्छब्दार्थो विशिष्टोऽनुमानसाध्य इति शेषः** । **दूषयितुं पृच्छति** षष्ठ्यर्थ इति । **पर्वतस्याग्निसंयोगस्य च सिद्धत्वेऽपि पर्वतस्य योऽग्निसंयोगः स न सिद्ध इत्यतः स एव विशिष्टोऽग्निमच्छब्दार्थोऽनुमानवेद्य इति वदता पर्वतस्येति षष्ठ्या निर्दिष्टः संबन्ध एव विशिष्टोऽग्निमच्छब्दार्थोऽनुमानवेद्य इत्युक्तं भवति । अन्यस्य सर्वस्य सिद्धत्वात् । षष्ठ्यर्थाश्च संबन्धा वैयाकरणैरनेके गणिताः । अतः कोऽत्र संबन्धो विवक्षित इति प्रश्नार्थः । एवशब्दः तस्यैव प्राधान्यद्योतनार्थः ॥**

शे०— कुतस्तस्य स्वीकार इत्यत आह **तत्रेति** ॥ **उक्तदोषेति** । सिद्धसाधनत्वाभावादित्यर्थः । दोषाभावमेवोपपादयति **पर्वतेति** । अपेक्षितपूरणेनान्तिमपक्षशङ्कापरत्वं घटयति **अग्निमच्छब्दार्थ इत्यादिना** । ननु षष्ठ्यर्थ एव क इति षष्ठ्यर्थसम्बन्धविकल्पोऽनुपपन्नः । प्रकृतशङ्काननुगुणत्वात् ।

न च षष्ठ्यर्थसम्बन्धस्य अनुमानवेद्यत्वसंभवप्रदर्शनार्थत्वेन प्रकृतसंगत्वात् न तदिति वाच्यम् । भूधरस्याग्निसंयोगमनुमानवेद्यमंगीकुर्वता षष्ठ्यर्थसंबन्धस्यैवानुमानवेद्यतया स्वीकर्तव्यत्वनिर्बन्धे कारणाभावेन तदसिद्धेः । कथञ्चित्तत्सिद्धावपि कः षष्ठ्यर्थ इति षष्ठ्यर्थसम्बन्धविकल्पानुपपत्तिरेव षष्ठ्यर्थसम्बन्धस्यानेकत्वासिद्ध्या निर्बीजत्वादित्यतः षष्ठ्यर्थसम्बन्धस्यानुमानवेद्यतया स्वीकर्तव्यतोपपादनपूर्वकं विकल्पप्रश्नबीजोपदर्शनेन तमुपपादयति **पर्वतस्येत्यादिना ॥ वैयाकरणैरिति** । 'षष्ठी स्थानेयोगे'त्यत्र, 'एकशतं षष्ठ्यर्थाः' इति महाभाष्ये, 'ते च स्वस्वामिभावादयः सम्बन्धाः षष्ठीदण्डके पठिताः' इति कैयटे चोक्तेरिति भावः ॥ **प्राधान्यज्ञापनार्थ इति** । प्राधान्यं च 'कस्यात्रासिद्ध्या साध्यत्वमन्यस्यासम्भवात् षष्ठ्यर्थस्य समवायस्येति वाच्यमि'त्यादि चोत्तरत्र स्फुटीभविष्यतीति ध्येयम् ।

**स०— प्राधान्यद्योतनार्थ इति** । प्राधान्यं च 'कस्य अत्रासिद्ध्या साध्यत्वमिति अन्यस्यासंभवात् षष्ठ्यर्थस्य समवायस्येति वक्तव्यम्' इत्यादि उत्तरत्र स्फुटम् ।

प०— **वैयाकरणैरनेके गणिता इति** । षष्ठी स्थानेयोगेत्याद्याध्यायाद्यपादीयसूत्रार्थमहाभाष्ये एकशतं षष्ठ्यर्था इत्युक्तेः । ते च स्वस्वामिभावादयो दण्डके पठिता इति कैयटाद्युक्तेरिति भावः ।

श्री०— कुतः षष्ठ्या निर्दिष्टः सम्बन्ध एव विशिष्टाग्निमच्छब्दार्थोऽनुमानवेद्य इत्याशङ्कायामेवशब्दद्योतितं प्राधान्यं तस्योपपादयति **अन्यस्य सर्वस्येति** । अन्यस्य सर्वस्य पर्वतस्य वाऽग्निसंयोगस्य वा प्रत्यक्षादिमानान्तरतः सिद्धत्वेन पर्वतस्येति षष्ठ्या निर्दिष्टो यः सम्बन्धस्तस्यैवानुमानवेद्यतया प्राधान्यमिति सूचयितुमेवशब्द इत्यर्थः ।

**च०— अनेके गणिता इति** । एकशतं षष्ठ्यर्था इति भाष्ये भाषणात्ते च स्वस्वामिभावादयो दण्डके पठिता इति कैयटाद्यभिहितेश्चेति भावः ।

**सु०— उत्तरं शङ्कते** समवाय इति ।

**अनु०**— समवायो यदि हि

**संयोगो हि गुणः पर्वतश्च गुणी गुणगुणिनोश्च समवायः संबन्ध इति प्रसिद्धमिति हिशब्दार्थः । षष्ठ्यर्थ इति वर्तते ।**

**निराकरोति** अस्य चेति ।

अस्य चैकत्वात्सिद्धसाधनम् ॥

**पर्वतादेरिवास्य समवायस्य च सिद्धत्वादिति** शेषः । सिद्धसाधनं **धूमाद्यनुमानमिति** शेषः । **कथं समवायस्य सिद्धत्वमित्यत उक्तम्** एकत्वादिति । **यस्तन्तुपटयोः समवायः स एव**

हि पर्वताग्निसंयोगयोः समवायः परेणाङ्गीकृतः । तन्तुपटयोः समवायश्च प्रत्यक्षेण वाऽनुमानेन वा सिद्ध एवेति ।

शे०— न्यायमतमाश्रित्याह **प्रत्यक्षेणेति** । वैशेषिकमतमाश्रित्याह **अनुमानेन वेति** ।

श्री०— समवाय ऐन्द्रियक इति मतानुसारेण प्रत्यक्षेण वेत्युक्तम् । अतीन्द्रिय इति मतानुसारेणानुमानेन वेत्युक्तम् । इह तन्तुषु पट इत्यादिविशिष्टप्रत्ययः सम्बन्धिभिन्नसंबन्धनिबन्धनः अबाधितेहप्रत्ययत्वादिह कुण्डे बदराणीति प्रत्ययवदित्यनुमानं द्रष्टव्यम् ।

सु०— अयमत्र समुदायार्थः । यद्येक एव सर्वत्र समवायः स्यात्तदा सर्वानुमानानां सिद्धसाधनता स्यात् । यद्यपि याथार्थ्यमेव प्रामाण्यं तथाऽपि शब्दवत्परार्थानुमानस्य परापेक्षया प्रवृत्तत्वात्सिद्धसाधनता दोष एव ।

तथा हि । सर्वमप्यनुमानं न वस्तुस्वरूपमात्रपरम् । तस्यासिद्धावाश्रयासिद्धेः । सिद्धौ च सिद्धसाधनत्वात् । किन्तु केनचिदुपहितं वा विशिष्टं वोपलक्षितं वेति वक्तव्यम् । तच्च विशिष्टादिकं न विशेषणादित्रयादन्यदेवेति युक्तम् । अनुपलम्भादिबाधात् । त्रयानन्यत्वेऽपि न विशेषणमात्रम् । तस्य अनुमानात्प्राक् सिद्धत्वात् । असिद्धौ चाप्रसिद्धविशेषणत्वापत्तेः । अग्नेरेवाग्निमच्छब्दार्थत्वे मतुपो वैयर्थ्यापत्तेश्च । नापि धर्मिस्वरूपमात्रम् । उक्तदोषात् । पर्वतोऽग्निमानित्येतयोरेकार्थत्वापत्तेश्च । न च संबन्धमात्रम् । संयोगो हि क्वचित्संबन्धः स्यात् यथाऽग्निपर्वतयोः । क्वचित्समवायः यथा रसाद्रूपानुमाने । द्वावपि स्वरूपतः सिद्धाविति सिद्धसाधनमेव । संयोगमात्रस्य सिद्धत्वेऽप्यग्न्यादिसंयोगः साध्य इत्यपि न वाच्यम् । तस्यापि महानसादौ सिद्धत्वात् ॥ अथ पर्वतादेरग्न्यादिसंयोगः साध्यः । अत्रापि विवेक्तव्यम् । कस्यात्रासिद्ध्या साध्यत्वमिति । अन्यस्यासंभवात् । षष्ठ्यर्थस्य समवायस्येति वक्तव्यम् । स च सर्वत्रैक एव चेत्पुनः सिद्धसाधनतैव स्यात् । अतः सर्वानुमानोच्छेदप्रसङ्गात्सर्वत्र समवायैक्यमयुक्तमिति ।

शे०— ननु वस्तुस्वरूपमात्रपरत्वादनुमानस्य मानान्तरसिद्धविशिष्टाद्याकारपरत्वाभावान्न सिद्धसाधनत्वम् । अस्तु वा विशिष्टाकारपरत्वमेव तस्य । न च सिद्धसाधनत्वप्रसङ्गो दोषः । तादृशस्यापि यथावस्थितार्थज्ञानजनकतया प्रामाण्यसम्भवेन तद्विघातकतया तस्य दोषत्वासम्मतेरित्यतो वस्तुस्वरूपमात्रपरत्वासम्भवं याथार्थ्येऽपि प्रामाण्यासम्भवं च व्युत्पादयन्नेव प्रतिपत्तिसौकर्याय औपाधिकमित्यादेरेकत्वात्सिद्धसाधनमित्यन्तस्य ग्रन्थस्याकाङ्क्षाक्रमेणाभिप्रायमाह **अयमत्रेति** । केनचिदुपहितं विशिष्टमुप-

लक्षितं वेत्यतःपरं यत्तत्परमिति पूरणीयम् । अनुपलम्भादिबाधादित्यत्रादिपदेनाभ्युपगमोपपत्त्योः परिग्रहः ।
**विशेषणमात्रमिति** । नन्वेतत्त्रितयानन्यत्वेऽप्यन्यतममे(दे)व विशिष्टमित्येतत्पक्षस्यैव निराकरणं तत्रैव विशेषणमात्रं विशेष्यमात्रमित्यादिविकल्पानां सत्त्वात् । न तु तत्पक्षे विशेषणादित्रितयमपि विशिष्टमिति प्राग्विकल्पितपक्षनिराकरणं तत्रोक्तविकल्पानामसंभवात् । तथा च तदनिरासान्न्यूनत्वम् । न च तस्यानिरास्यत्वादेवात्र तदनिरासोपपत्तेर्न तदिति वाच्यम् । 'अन्त्यपक्षव्यतिरिक्तान्पक्षानपाकरोती'ति पर्वताग्निसंयोगानां समस्तानां व्यस्तानामग्निसंयोगस्य च सिद्धत्वेनेत्यादिपूर्वग्रन्थानुरोधेन तत्पक्षस्यापि निरस्यत्वस्य सिद्धत्वेन तदनिरस्यत्वस्य कल्पयितुमशक्यत्वादिति चेत् । उच्यते । न विशेषणमात्रमित्याद्यन्यतमपक्षनिरासकानां 'प्राक् सिद्धत्वादसिद्धौ चाप्रसिद्धविशेषणत्वापत्तेरि'त्यादियुक्तीनां पक्षद्वयसाधारण्येनैतत्पक्षनिरासेनैव तन्निरासस्यापि सिद्धया पृथगनिरासोपपत्तेरिति । यद्वा न विशेषणमात्रमित्यादावुपलक्षणमेतन्न विशेषणमित्यादियोजना पक्षद्वयनिरासपरतयैवायं ग्रन्थो योज्यः । अत एव त्रितयानन्यत्वेऽपीत्येवोक्तम् । अन्यथाऽन्यतमत्वपक्ष इत्येवावक्ष्यदिति द्रष्टव्यम् । अप्रसिद्धविशेषणत्वं न स्वमते दोष इत्याशयेन (इत्यतो) दोषान्तरमाह **अग्नेरेवेति** ॥ **उक्तदोषादिति** । तदसिद्धावाश्रयासिद्धिः सिद्धौ च सिद्धसाधनत्वादित्युक्तदोषादित्यर्थः । आश्रयासिद्धिर्न स्वमते दोष इत्यतोऽत्र दोषान्तरमाह **पर्वतोऽग्निमानित्येतयोरिति** । ततश्च पर्यायत्वप्रसक्त्या सहप्रयोगाभावप्रसङ्गादिति भावः ॥ **सिद्धसाधनतैवेति** । तथा सति यस्तन्तुपटयोः समवायः स एव पर्वताग्निसंयोगयोः समवाय इति प्राप्त्या तन्तुपटसमवायस्य च प्रत्यक्षेणानुमानेन वा सिद्धत्वात्पर्वताग्निसंयोगसमवायस्यापि सिद्धत्वप्राप्तिरिति भावः । इतीत्यस्येत्ययं समुदायार्थ इति पूर्वेण संबन्धः ।

**स०**— **अनुपलम्भादिबाधादिति** । आदिपदेनाभ्युपगमोपपत्तिपरिग्रहः । **उक्तदोषात्** धर्मिमात्रस्य सिद्धत्वादित्युक्तदोषादित्यर्थः ।

**प०**— ननु याथार्थ्यमेव मानत्वमित्युक्तत्वात्सिद्धसाधनेपि तस्य सत्त्वात्को दोष इत्यत आह **यद्यपीति** ॥ **उपहितमिति** केनचिदुपाधिना युक्तमित्यर्थः ॥ **अनुपलम्भादीति** । प्रागुक्तदिशाऽनुभवाभ्युपगमोपपत्तिबाधादित्यर्थः ।

**या०**— किन्तु केनचिदुपहितं वा विशिष्टं वोपलक्षितं वेत्यस्यानन्तरं यत्तत्परमिति शेषः ॥ **अनुपलम्भादीति** । आदिपदेन अभ्युपगमोपपत्तिपरिग्रहः ॥

**श्री०**— नन्वस्तूक्तानुमानेषु सिद्धसाधनता । अथाऽपि याथार्थ्यरूपं प्रामाण्यं त्वक्षतमेवेति को दोष इत्याशङ्क्य निषेधति **यद्यपीत्यादिना** ॥ **केनचिदिति** । उपाधिना विशेषणेन वोपलक्षणेनेत्यर्थः ॥

**उक्तेति** । न धर्मिस्वरूपमात्रमनुमानवेद्यम् । सिद्धत्वात् । असिद्धौ चाश्रयासिद्धेरित्युक्तदोषादित्यर्थः । पर्वतस्यैवाग्निमच्छब्दार्थत्वे पौनरुक्त्यं चेत्याह **पर्वत इति** । **रसाद्रूपानुमान इति** । तयोरेकार्थसमवेतत्वमेव सम्बन्धः । समवायस्येत्यनन्तरमसिद्ध्या साध्यत्वमिति शेषः ।

**सु०— ननु तन्तुषु पटादिसमवायः पर्वताग्निसंयोगादिसमवायश्च यद्यपि स्वरूपेणैक एव, तथापि तन्तुपटादिपर्वताग्निसंयोगाद्युपाधिनिमित्तः समवायस्य भेदोऽप्यस्ति । ततः सिद्धत्वेऽपि साध्यत्वमुपपद्यत इत्यत आह यदीति ।**

अनु०— यद्यस्यौपाधिको भेदः कुत एकत्वमिष्यते ॥

**यदि अस्य समवायस्य साध्यत्वसिद्ध्यर्थमौपाधिको भेद इष्यते तदैकत्वं कुत इष्यते । समवायस्यैकत्वं हि न संख्याविशेषः । निर्गुणत्वात् । किन्त्वभेदः । न च भेदाभेदौ क्वापि परेणाङ्गीकृतौ । तस्मात्समवाये भेदस्याङ्गीकृतौ तद्विरुद्धोऽभेदो नाङ्गीकर्तुमुचित इति ।**

**ननु स्वाभाविकमेकत्वं स्वाभाविकेनैव भेदेन विरुध्यते न पुनरौपाधिकेन । स्वभावतः अभिन्नेऽपि गगनादावौपाधिकभेददर्शनात् । समवाये चौपाधिक एव भेदोऽभ्युपगतः । तत्कथं स्वाभाविकैकत्वाङ्गीकारोऽनुचित इत्यत आह नेति ।**

नानिर्वाच्यं हि तेनेष्टमत औपाधिकान्ययोः ॥

---

सत्यत्वात्को विशेषः स्यात्

**विरुद्धाभिमतयोरविरोधो हि कालभेदेन भवति । यथा तत्रैव भूतले तस्यैव घटस्य भावाभावयोः । देशभेदेन वा । यथा तदैव तस्यैव घटस्यास्तित्वनास्तित्वयोः । व्यक्तिभेदेन वा । यथा तत्रैव भूतले यदैकस्य घटस्य भावस्तदैव घटान्तरस्याभावः । पारमार्थिकत्वापारमार्थिकत्वाभ्यां वा । यथा गगने रूपतदभावयोः । तत्र तावत्समवायेऽभेदभेदयोर्नाद्यं विधात्रयं संभवतीति परस्यापि संप्रतिपन्नम् । नापि चतुर्थी विधा संभवति । समवायभेदस्यापारमार्थिकत्वमसत्त्वमनिर्वाच्यत्वं वा । आद्ये सिद्धसाधनत्वं तदवस्थमेव । द्वितीये त्विदमुपतिष्ठते । हि यस्मात्तेन वैशेषिकादिनाऽनिर्वाच्यं वस्तु नेष्टमतोऽसत्त्वानिर्वाच्यत्वाभावादौपाधिकस्य स्वाभाविकस्य च सत्यत्वात्को विशेषः स्यात् । औपाधिकस्यापि स्वाभाविकवत्सत्यत्वात्पारमार्थिकत्वापारमार्थिकत्वलक्षणस्य विरोधशान्तिहेतोः अभावादौपाधिकत्वाद्युक्त्या न किञ्चित्कृतं स्यादिति भावः ।**

शे०— ननु नानिर्वाच्यं हि तेनेष्टमित्यनिर्वाच्यत्वस्य वैशेषिकानङ्गीकृतत्ववर्णनस्य न प्रकृतसङ्गतिरिति तद्वर्णनमनर्थकम् । न च भेदस्यापारमार्थिकत्वाभावप्रतिपादनार्थं तदिति वाच्यम् ।

अनिर्वाच्यत्वाभावे असत्त्वेनैव अपारमार्थिकत्वसम्भवेनानिर्वाच्यत्वाभावमात्रेणापारमार्थिकत्वाभावासिद्ध्या तदयोगात् । अस्तु वा कथञ्चित्तत्सिद्धिः । तथाऽपि तत्प्रतिपादनस्य प्रकृतानुपयोगादसङ्गतिरेव । न च भेदाभेदयोः पारमार्थिकत्वापारमार्थिकत्वाभ्यामविरोधासम्भवप्रदर्शनार्थत्वान्नासङ्गतिरिति वाच्यम् । तयोरविरोधोपपादकत्वस्यैवासिद्ध्या तदयोगात् । सिद्धावपि वा पारमार्थिकत्वापारमार्थिकत्वयोरिवान्येषामविरोधहेतूनां बहूनां सद्भावेन भेदाभेदयोर्विरोधोपपादनाय तावद्धेत्वसम्भवस्यापीह वर्णनीयत्वेन तमत्युत्पाद्य एतन्मात्रासम्भववर्णनस्य तयोर्विरोधानुपपादकतयाऽश्लिष्टत्वादित्यतः सम्प्रतिपन्नानेकतद्धेतून्प्रदर्शयन्नेव तेषामिहासम्भववर्णने निमित्तं च दर्शयन्नेव पारमार्थिकत्वापारमार्थिकत्वाभ्यामविरोधपक्षेऽपि प्रकारान्तरेणापारमार्थिकत्वासम्भवं चोपर्येव दर्शयन्नेव परिशिष्टस्य सत्यत्वानिर्वचनीयत्वाभ्यां भेदाभेदयोरविरोधस्य असम्भवोपपादकतया मूलं योजयति **विरुद्धेत्यादिना** । वस्तुनो विरुद्धयोर्न्यायसहस्रेणाप्यविरोधसिद्धिरिति भावेनाभिमनयोरित्युक्तम् ।

प० — **भावाभावयोरिति** । अविरोध इत्यनुषङ्गः । एवमस्तित्वनास्तित्वयोरित्यत्र व्यक्तिभेदेनेत्यादौ चानुषङ्गो ध्येयः ॥ **इदमुपतिष्ठत इति** । नानिर्वाच्यमित्यादिमूलवाक्यमित्यर्थः । तद्व्याचष्टे **हि यस्मादित्यादिना** ।

श्री० — **औपाधिकभेददर्शनादिति** । उपाधिकृतभेददर्शनादित्यर्थः । औपाधिकस्य स्वाभाविकस्य चेत्यत्र स्वाभाविकस्येत्यन्यशब्दार्थः ।

च० — **विधात्रयं** प्रकारत्रयं ।

**सु० — इष्यते समवायभेदस्यानिर्वाच्यत्वं मया चेत्तदा को दोष इति चेदपसिद्धान्त इत्याह** मायेति ।

**अनु० —** मायावाद्यन्यथा वदेत् ॥

**अनिर्वाच्यवस्त्वङ्गीकारे वैशेषिकादिरपि मायावादी भवेदित्यर्थः ।**

**ननु प्रकारभेदेनापि विरोधशान्तिर्भव(विष्य)ति । यथा तत्रैव तदैव नीलपटसद्भावेऽपि पीतपटाभावः । तथा समवायेऽप्यौपाधिको भेदो न स्वाभाविकमभेदं विरुणद्धीत्यत आह** उपाधीति ।

उपाधिजन्यं तद्गम्यमिति चौपाधिकं भवेत् ॥

**उपाधिशब्दात्तृतीयासमर्थाज्जन्यगम्ययोः शेषिके ठकि कृते सति औपाधिकमिति भवति । ततः किमित्यत आह** उभयत्रेति ।

उभयत्राप्यनन्ताः स्युः समवाया इतस्ततः ॥

एवं सति समवायभेदस्यौपाधिकत्वं नामोपाधिजन्यत्वं वोपाधिगम्यत्वं वा वक्तव्यम् । तथा च पक्षद्वयेऽप्यनन्ताः समवायाः स्युः । तत्कथमित्यत आह इतस्तत इति । सर्वदेशकालगतानामवयवावयव्याद्युपाधीनामनन्तत्वादिति शेषः । उपाधीनामनन्तत्वेऽपि समवायानन्त्यं कुत इत्यत आह भिन्नत्वमिति ।

भिन्नत्वं चैव तेष्वस्ति

चो यस्मादित्यर्थे । न ह्यौपाधिको भेदो नामोपाधीनामेव भेदः । तथा सति समवायस्येति न स्यात् । उक्तदोषपरिहारश्च न भवेत् । किन्तु तेषु समवायेष्वेवोपाधिजन्यं तदवगम्यं वा भिन्नत्वमस्ति । भेदहेतवश्चोपाधयोऽनन्ता इति कथं न समवायानन्त्यम् । तथाऽप्यौपाधिकमेव तदानन्त्यमित्युक्तस्य किमायातमित्यत आह क इति ।

को विशेष उपाधिगे ॥

उपाधिगस्तत्सम्बन्धी औपाधिक इति यावत् । औपाधिकभेदे को विशेषो येनासावभेदं न विरुणद्धीत्यर्थः ।

शे० — ननूपाधिजन्यं तद्गम्यमित्यौपाधिकशब्दनिर्वचनपरोत्तरग्रन्थानर्थक्यम् । न चैतत्प्रकारभेदेन भेदाभेदयोरविरोधशङ्कापरिहारार्थत्वान्न तदिति वाच्यम् । प्रकारभेदस्य विरोधशान्तिहेतुत्वस्यैवासिद्ध्या तमादाय विरोधशङ्काया एवानुदयादित्यतः प्रकारभेदस्य दृष्टान्तोपदर्शनेन विरोधशान्तिहेतुत्वव्युत्पादनपूर्वकं तमादाय विरोधशङ्कामुत्थापयति नन्विति ॥ पीतपटाभाव इति । तस्यैव पटस्य पीतरूपविशिष्टतयाऽभाव इत्यर्थः । उपाधिशब्दादित्यादेरयमर्थः । उपाधिशब्दाज्जन्यगम्ययोरर्थयोष्ठकि ठस्येक इति सूत्रेण तस्येकादेशे किति चेत्याद्यचो वृद्धौ सत्यां यस्येति चेतीकारलोपे औपाधिकशब्दनिष्पत्तिरिति । नन्वपत्याद्यर्थ इव जन्यगम्ययोरर्थयोष्ठकोऽस्मरणात्कथमुपाधिशब्दादुक्तयोरर्थयोष्ठक् व्याख्यायत इत्यतः शेष इति लक्षणेनापत्यादिचतुरर्थ्यादन्यस्मिञ्जन्यगम्यादिरूपे शेषे यथायथमणादिप्रत्ययविधानेन चाक्षुषं रूपं, श्रावणः शब्द, इत्यादौ गम्यत इत्याद्यर्थे अणादिवदुपाधिशब्दादप्युक्तार्थे तेनैव ठकोऽप्युपपत्तेरित्याशयेनोक्तं शैषिक इति । मूले आपादकानुक्तेराह सर्वेति ॥ उक्तदोषपरिहारश्चेति । सिद्धसाधनतारूपोक्तदोषपरिहारश्चेत्यर्थः ।

स० — उक्तदोषपरिहारश्चेति । सिद्धसाधनतापरिहारो न भवेदित्यर्थः ।

प०— **पीतपटाभाव इति ।** सत्यपि विशेष्ये पटे विशेषणाभावनिबन्धनस्तदभावो यथा न विरुद्धस्तथौपाधिकभेदसत्त्वेऽपि स्वाभाविकभेदाभावेनाभेदो न विरुद्ध इत्यर्थः ॥ **जन्यगम्ययोरिति ।** उपाधिना जन्य उपाधिना गम्य इत्यर्थे शेष इति सूत्रेण ठक्प्रत्यये ठस्येक इतीकादेशे किति चेति सूत्रेणादिवृद्धौ यस्येति सूत्रेणान्त्यवर्णलोपे चौपाधिकेति रूपसिद्धेरुभयथापि विकल्पः कृत इति भावः ।

या०— **पीतपटाभाव इति ।** तस्यैव पटस्य विशिष्टरूपतयाऽभाव इत्यर्थः । ननु ठकोऽपत्याद्यर्थे विहितस्य कथमत्र प्राप्तिरित्यत आह **शैषिक इति ।** इत्यधिकृत्य विहित इत्यर्थः । यद्यप्युपाधिशब्दादुक्तेऽर्थे शैषिकष्ठक् विहितो न दृश्यते तथाऽपि 'विचित्रा हि तद्धितगतिरि'ति वचनादेतदुक्तमित्यवगन्तव्यम् । तथा चोपाधिशब्दात्तृतीयासमर्थादुक्तेऽर्थे ठकि कृते, तस्य ठस्येक इतीकादेशे, किति चेत्याद्यचो वृद्धौ, यस्येति चेतीकारलोपे, औपाधिकमिति भवतीति भावः ॥ **उक्तदोषेति ।** सिद्धसाधनतारूपोक्तदोषपरिहारश्च न भवेदित्यर्थः ।

श्री०— ननु यथैकस्मिन्नेव पटे नीलरूपविशिष्टत्वपीतरूपविशिष्टत्वरूपप्रकारभेदेनैकस्यैव पटस्य भावाभावौ न विरुद्धौ, तथैकस्मिन्नेव रूपसमवाये स्वाभाविकेऽभेदे सत्यप्यौपाधिको भेदः सम्भवति तयोर्भेदाभेदयोरौपाधिकत्वस्वाभाविकत्वरूपप्रकारभेदेनाविरोधसम्भवादित्याशङ्कते **ननु प्रकारेत्यादिना ।** नन्वित्यनन्तरं देशकालादिभेदेन वेति शेषः । जन्यगम्ययोरर्थयोर्वाच्ययोः सतोः । तथा चोपाधिशब्दात् **शैषिके** शेषे इत्यधिकृत्य विहिते ठक्प्रत्यये कृते ठस्येक इतीकादेशे यस्येति चेत्यनेन भसंज्ञकस्य धकारस्थस्येकारस्य लोपे उकारस्यौकाररूपवृद्धौ सत्यामौपाध इक औपाधिकेति रूपम् ॥ **तथा सतीति ।** यद्युपाधीनामेव भेदस्तत्प्रयुक्तो भेदः समवाये नास्ति, तर्हि समवायस्य भेद इति न स्यात् । तथा च समवाये भेदाभावेनैकत्वस्यैव सत्त्वेन तस्य तन्तुपटादौ सिद्धतया धूमानुमाने सिद्धसाधनता चेत्युक्तदोषपरिहारोऽपि न स्यादित्यर्थः ।

**सु०— एतदुक्तं भवति । नीलपटसद्भावेऽपि पीतपटाभाव इत्यत्र हि यदि विशिष्टविषयौ विधिनिषेधौ, तदा भिन्नविषयत्वेन विरोधाभावः । नीलपीतपटयोर्भिन्नत्वात् । न चैवं प्रकृते । भेदविशेषाभावेऽपि भेदान्तराभ्युपगमापत्तेः । तथा चैकत्वोक्तिरयुक्तैव । न हि पार्थिवपरमाणौ रूपादयोऽग्निसंयोगजा न त्वाप्यपरमाणुरूपादय इव स्वाभाविका इत्येतावता रूपादिरहितोऽसौ भवति । यदि च विशेषणविषयौ तदा समवाये भेदोऽस्त्येव । स तु संबन्धिभिरुपाधिभिः कृतो न त्वकृत्रिम इत्युक्तं स्यात् । तथा च घटादिभेदेन तुल्य इति रिक्तैवाभेदोक्तिः । उपधीनां च सर्वदाऽनपायान्न भेदस्यागन्तुकत्वं युक्तमिति ।**

**शे०** — ननु तथाऽपि प्रकारभेदेन विरोधशान्तिशङ्काया न परिहार इत्यत आह **एतदुक्तं भवतीति** ॥ **भिन्नविषयत्वेनेति** । तत्रश्च भिन्नविषयत्वेनैव तत्र विरोधपरिहारो न तु प्रकारभेदेनेति नायं प्रकारभेदेन विरोधपरिहारे दृष्टान्त इति भावः । कथं तत्र भिन्नविषयत्वमित्यतस्तद्दर्शयति **नीलपीतपटयोरिति** । विशिष्टस्य खण्डितत्वेन विशेष्याद्भिन्नाभिन्नतया नीलरूपविशिष्टपीतरूपविशिष्टपटयोः परस्परं भिन्नत्वादित्यर्थः । अस्तु तर्हि तेनैव प्रकारेण प्रकृतेऽपि विरोधपरिहार इत्यत आह **न चैवं प्रकृत इति** । स्वाभाविकत्वौपाधिकत्वविशिष्टयोर्भेदयोरपि भिन्नत्वादत्रापि भिन्नविषयत्वेनैव विरोधपरिहार इति च नेत्यर्थः । तत्र हेतुमाह **भेदविशेषेति** । स्वाभाविकभेदाभावेऽप्यौपाधिकभेदाभ्युपगमापत्तेरित्यर्थः । अत्रेष्टापत्तिं परिहरति **तथा चेति** । भेदाभावरूपैकत्वे क्तिरित्यर्थः । प्रतियोगिसत्त्वस्याभावविरोधित्वादिति भावः । ननु च स्वाभाविकप्रतियोगिसत्त्वमेव विरोधि न त्वौपाधिकमपि तत् । न चैतत्प्रकृत इति नैकत्वोक्तिविरोध इत्यत आह **न हीति** ॥ **यदि चेति** । पटे नैल्यरूपविशेषणविषयो विधिः पीतत्वरूपविशेषणविषयश्च निषेधो यदीत्यर्थः ॥ **तदा समवाय इति** । तथा सति समवायगतभेदेऽपि औपाधिकत्वरूपविशेषणविषयो विधिः निषेधस्तु स्वाभाविकत्वरूपविशेषणविषयः स्यादित्यर्थः । **अकृत्रिमः** स्वाभाविकः । इष्टापत्तिमाशङ्क्याह **तदा चेति** । तथा च यथा घटपटभेदस्य जन्यत्वेऽपि सत्यत्वादभेदविरोधित्वमेवं समवायभेदस्य जन्यत्वेऽपि सत्यत्वादभेदविरोधित्वं स्यादेवेति समवायेऽभेदोक्तिर्निर्विषयैवापाद्यत इत्यर्थः । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु समवाये भेदोऽप्यकृत्रिम एवेत्याह **उपाधीनां चेति** । नित्योपाधीनामपि सत्यत्वादिति भावः । न चैवमौपाधिकत्वानुपपत्तिः । उपाधिगम्यत्वेनापि तदुपपत्तेरित्याशयात् । इतीत्यस्येत्येतदिति पूर्वेण सम्बन्धः ।

**प०** — **नीलपीतपटयोर्भिन्नत्वादिति** । विशेषणभेदे विशिष्टयोर्भेदादिति भावः ॥ **यदि च विशेषणविषयाविति** । नीलपटोऽस्ति पीतपटो नास्ति समवाय उपाधिभेदभिन्नो भवति स्वाभाविकभेदभिन्नो न भवतीत्यादिविधिनिषेधाविति योज्यम् ।

**या०** — **भिन्नविषयत्वेनेति** । भिन्नविषयत्वेनैव विरोधाभावस्तत्र न प्रकारभेदेनेति भावः । कथं तत्र भिन्नविषयत्वमित्यतस्तदुपपादयति **नीलपीतपटयोरिति** । विशिष्टस्य खण्डितत्वे विशेष्याद्भिन्नाभिन्नत्वेन नीलरूपविशिष्टपीतरूपविशिष्टपटयोः परस्परं भिन्नत्वादित्यर्थः । नन्वेवमेकविशेष्यकयोर्विशिष्टयोर्भेदे तत्त्वोद्योतादौ सोऽयं देवदत्त इति प्रत्यभिज्ञाविषययोस्तत्तेदन्ताविशिष्टयोः परस्परमैक्यस्यो-

त्त्वात्तद्विरोध इति चेत् । उच्यते । यत्र खण्डितं विशिष्टद्वयं प्रति केवलं विशेष्यमेवोपादनं, तत्र **विशिष्टयोः** परस्परं भेदः । यत्र तु विशिष्टमेव विशिष्टान्तरोपादानं, तत्र तयोरभेदः । उपादानोपादेययोरभेदस्यावश्यकत्वात् । एवं च नीलपीतपटयोः पट एवोपादानमिति तयोर्भेदः । प्रत्यभिज्ञाविषययोश्च विशिष्टयोस्तत्तेदन्तान्यतरविशिष्ट एवोपादानमिति तयोरभेद आवश्यक इति तत्राभिप्रायोऽतो न कोऽपि विरोध इति । एवमन्यत्रापि दण्डी कुण्डलीत्यादिविशिष्टवैशिष्ट्यधीविषययोरपि विशिष्टयोरभेदो वाच्यः । तत्राप्येकविशेषणविशिष्टस्यैवापरविशेषणविशिष्टं प्रत्युपादानत्वादिति ज्ञातव्यम् ॥ **न चैवं प्रकृत इति** । स्वाभाविकत्वौपाधिकत्वविशिष्टयोर्भेदयोर्भिन्नत्वादत्रापि भिन्नविषयत्वेनैव विरोधाभाव इति न वाच्यमित्यर्थः ॥ **भेदविशेषेति** । स्वाभाविकभेदाभावेऽप्यौपाधिकभेदाभ्युपगमापत्तेरित्यर्थः । अत्रेष्टापत्तिं परिहरति **तथा चैकत्वोक्तिरिति** । भेदाभावरूपैकत्वोक्तिरित्यर्थः । प्रतियोगिसत्त्वस्याभावविरोधित्वादिति भावः । ननु स्वाभाविकप्रतियोगिसत्त्वमेवाभावविरोधि नौपाधिकं तदित्यत आह **न हि पार्थिवेति ॥ यदि च विशेषणेति** । पटे नैल्यरूपविशेषणविषयो विधिः पैत्यरूपविशेषणविषयो निषेधो यदीत्यर्थः ॥ **तदा समवाय इति** । प्रकृतेऽपि समवायगतभेदे विधिरौपाधिकत्वरूपविशेषणविषयो निषेधस्तु स्वाभाविकत्वरूपविशेषणविषय इति स्यादित्यर्थः । **अकृत्रिमः** स्वाभाविकः । इष्टापत्तिं परिहरति **तथा चेति** । यथा घटपटभेदस्य जन्यत्वेऽपि तस्य सत्यत्वादभेदविरोधित्वम् एवं समवायभेदस्य जन्यत्वेऽपि सत्त्वादभेदविरोधित्वं स्यादेव तथा च समवायेऽभेदोक्तिः रिक्ता निर्विषयेत्यर्थः । अभ्युपेत्य चेदमुदितम् । वस्तुतस्तु समवायभेदोऽकृत्रिम एवेत्याह **उपाधीनां चेति** । नित्यानामपि सत्त्वादिति भावः । न चैवमौपाधिकत्वानुपपत्तिः । उपाधिगम्यतयाऽपि तदुपपत्तेरित्याशयात् ।

श्री० — **न चैवं प्रकृत इति** । नीलपटसद्भावेऽपि पीतपटाभाव इव समवायेऽप्यौपाधिकभेदसद्भावेऽपि स्वाभाविकभेदो नास्तीत्येवं विधिनिषेधौ विशिष्टविषयावेवेति भिन्नविषयत्वेनैव विरोधाभावो न प्रकारभेदेनेति न वाच्यमित्यर्थः । कुतो न चेत्यत आह **भेदविशेषेति** । स्वाभाविकभेदाभावेऽपीत्यर्थः ॥ **भेदान्तरेति** । औपाधिकभेदेत्यर्थः ॥ **विशेषणविषयाविति** । विधिनिषेधाविति वर्तते । समवायभेदे स्वाभाविकत्वरूपविशेषणनिषेध औपाधिकत्वरूपविशेषणविधिरित्यर्थः ।

**सु० — उपाधिगम्यमौपाधिकमिति पक्षमङ्गीकृत्योक्तदोषाभावं शङ्कते** अविद्यमान एवेति ।

**अनु० —** अविद्यमान एवान्यः समवायोऽधिगम्यते ॥

उपाधिना

सत्यमुपाधिगम्यत्वादौपाधिकः समवायभेदोऽधिगमश्च न प्रमा । येनासौ भेदः पारमार्थिकः स्यात् । किन्तु विभ्रम एव । न चैवं भेदस्यासत्त्वप्राप्त्या सिद्धसाधनतातादवस्थ्यमिति वाच्यम् । यतोऽविद्यमान एवान्यः समवायोऽधिगम्यते तत्तदुपाधिनेति ब्रूमः । यथा अंगुल्यवष्टब्धनयनाद्युपाधिवशादविद्यमान एव द्वितीयश्चन्द्रोऽधिगम्यते । तथा तैस्तैः संबन्धिलक्षणोपाधिभिरविद्यमाना एवानेके समवायाः प्रतीयन्ते । त एते समवाया औपाधिकभेदभिन्ना इत्युच्यन्ते । त एव चाग्निमदादिशब्दवाच्या अनुमानसाध्या विशिष्टाकाराः । तथा च न समवायैकत्वहानिः । चन्द्रवदारोपितानामनेकत्वेऽप्यनारोपितस्यैकत्वाविरोधात् । नाप्यनुमानानां सिद्धसाधनता । तथाविधसमवायानां प्रागसिद्धत्वादिति ।

परिहरति तद्गमकमिति ।

तद्गमकमनुमानं न मा भवेत् ॥

यद्यप्यस्मिन्पक्षे न सिद्धसाधनं धूमाद्यनुमानम् । तथाऽपि तद्गमकमविद्यमानसमवायसत्तां प्रतिपादयदनुमानजातं दहनशैत्यानुमानमिव बाधितविषयतया न प्रमाणं भवेत् । उपलक्षणं चैतत् । उपाधीन्विना समवायावभासस्य क्वाप्यभावात्सर्वत्रापि तस्याविद्यमानतैव स्यादित्यपि द्रष्टव्यम् । तदेवं सर्वानु(धूमाद्यनु)मानानां सिद्धसाधनत्वादिप्रसङ्गान्न समवायैक्यमुपपन्नमिति । एतच्चोपलक्षणम् । आगमापन्हवश्च समवायैक्ये स्यात् । पदार्थानां तत्संसर्गाणां च सिकतावद्विशकलितानां सिद्धत्वात् ॥

शे०—**उक्तदोषाभावमिति** । समवायानन्त्यप्रयुक्ततदेकत्वहानिसिद्धसाधनत्वरूपोक्तदोषाभावमित्यर्थः । उपाधेरविद्यमानान्यसमवायाधिगतिहेतुत्वं कथमित्यतोऽनुरूपदृष्टांतकथनेन तत्सम्भावयति **यथेति** । 'अग्निसंयोगमात्रं चेद्भवेत्तत्सिद्धसाधनमि'त्यादिना ग्रन्थेन यत्समवायस्यैकत्वे सिद्धसाधनत्वमनुमानानामुक्तं तदुपलक्षणमित्याह **एतच्चेति** । किं तदुपलक्षणमित्यत आह **आगमेति** । नदीतीरे पञ्च फलानि सन्तीत्याद्यागमप्रामाण्यापलापश्च स्यादित्यर्थः । तमेवोपपादयति **पदार्थानामिति** । तथा च ज्ञातज्ञापकत्वप्रसङ्गेन पदार्थमात्रस्य संसर्गमात्रस्य वा वाक्यार्थत्वानुपपत्तेर्नदीतीरस्य यः पञ्चफलसंयोगः स एव वाक्यार्थो वक्तव्यः । अत्रापि विवेक्तव्यं कस्याज्ञातत्वेन ज्ञाप्यत्वमिति अन्यस्यासम्भवात् षष्ठ्यर्थस्य समवायस्येति वाच्यम् । स सर्वत्रैक एव चेत्पुनर्ज्ञातज्ञापकतैव । तन्तुपटसमवायस्य प्रत्यक्षेणानुमानेन वा ज्ञातत्वादतो न तस्यैक्यमित्याशयः ।

स०— **आगमापन्हवश्चेति** । आगमस्यापि ज्ञातज्ञापकत्वापत्त्या प्रामाण्यं न स्यात् । अतोऽपि न समवायैक्यमित्यर्थः । तत्कथमित्यत आह **पदार्थानामिति** ।

प० — अनुमानस्य बाधितविषयत्वकथनं समवायस्वरूपासत्त्वस्योपलक्षणमित्याह **उपलक्षणं-चैतदिति** । अभावादित्यनन्तरमुपाधिनावभातस्याविद्यमानतोपगमाच्चेत्यपि ध्येयम् । **तस्य** समवायस्य । विद्यमानतैवेत्यर्थः ॥ **सिद्धसाधनत्वादिप्रसङ्गादिति** । बाधितविषयत्वं आदिपदार्थः । मूले सर्वानु-मानोच्छेदोक्तिरुपलक्षणं सर्वागमप्रामाण्योच्छेदस्येत्याह **एतच्चोपलक्षणमिति** ॥ **पदार्थानामिति** । वाक्यबोध्यसंसर्गप्रतियोगिनां तन्निरूपितसंसर्गाणां विशकलितानां सिद्धत्वेन ज्ञातज्ञापकत्वापत्त्या वाक्य-मात्राप्रामाण्यापत्तिरिति भावः । ननु गामानयेत्यादिवाक्येषु गवादिरूपपदार्थानां निर्विशेषेणान्वयमात्रस्य चान्यत्र प्रसिद्धत्वेपि गवादेरानयनादेश्च योन्वयः स न सिद्ध इति चेन्न । तत्रापि षष्ठ्यर्थस्य समवाया-नतिरेकात्तस्य चैकत्वेन सिद्धत्वादिति भावः ॥ **समवायस्यैकत्वनिरासः ।**

**या० — आगमापन्हव इति** । ज्ञातज्ञापकत्वादिप्रसङ्गान्नदीतीरे पञ्च फलानि सन्तीत्या-द्यागमप्रामाण्यापलापोऽपि स्यादित्यर्थः । तत्रापि नदीतीरादेः फलादिसंयोगस्यैव वाक्यार्थरूपत्वादिति भावः ।

**श्री० — असत्त्वप्राप्त्येति** । भेदप्रतीतेरप्रमात्वे भेदस्यासत्त्वप्राप्त्या वास्तवाभेदस्यैव प्राप्ते-रिति भावः । **उपाधिनेति** । यद्युपाधिना समवाया आरोपिता एव प्रतीयन्ते तर्ह्यारोपितस्यान्यत्र सत्त्वेन भाव्यम् । तत्र च प्रधानभूतसमवायस्य प्रतीतिः, विनोपाधिसंबन्धं केवलं समवाय इति न संभवति । तथा अप्रतीतेः । अतः सर्वदा उपधिसंबन्ध एव प्रतीयत इति वाच्यम् । उपाधिसंबन्धेन प्रतीयमानश्च सर्वत्राप्यारोपित एवेति कुत्रापि तस्य सत्त्वं न स्यादित्यविद्यमानतैव सर्वत्र प्राप्ता । न हि शशविषाणं त्वन्मते कुत्रचिदारोप्यते । तस्य कुत्रापि सत्त्वाभावात्तद्वदिति भावः । अग्निसंयोगमात्रं चेद्भवेत् तत्सिद्ध-साधनमिति समवायैक्ये सिद्धसाधनतारूपमनुव्याख्यानोक्तं दूषणमुपलक्षणमित्याह **एतच्चेति** ॥ **आगमेति** । समवायैक्ये आगमस्यापि ज्ञातज्ञापकत्वापत्त्याऽप्रामाण्यमेव स्यादित्यर्थः । तत्कथमित्यत आह **पदार्थाना-मिति** । नदीतीरे फलानि सन्तीत्यत्रोक्तरीत्या नद्यास्तीरस्य वा फलानां वा सत्ताया वा संयोग-रूपसंबन्धमात्रस्य वा फलादिसंबन्धमात्रस्य वा सिद्धत्वे न नदीतीरस्य यः फलसंयोगः सोऽसिद्धो वाक्यप्रति-पाद्य इति वाच्यम् । तत्रापि समवाय एव षष्ठ्यर्थ इति तस्य सर्वत्रैकत्वेन सिद्धत्वाज्ज्ञातज्ञापकतया वाक्यस्यानुपादेयता स्यादेव । तथा च अप्रामाण्यं दुर्वारम् । 'याथार्थ्यमेव मानत्वमपि वाक्यं प्रयोजकम् । मानत्वमेती'त्युक्तेः । एवमेव सर्ववाक्येषु ज्ञेयम् ।

**च० — द्वितीयचन्द्रोऽधिगम्यत इति** । ज्ञायत इत्यर्थः । **समवायैकत्वनिराक्रिया ॥**

**सु०— इदानीं समवायस्य नित्यत्वं निराकरोति** एवमेवेति ।

**अनु०** — एवमेवासतः सत्तासमवायो जनिर्मता ॥

**यथा समवायस्य सर्वत्रैकत्वाङ्गीकारे सर्वानुमानानां सिद्धसाधनत्वादिदुष्टत्वमुक्तम् । एवमेव तन्नित्यत्वाभ्युपगमे प्रागसतः सत्तासमवायो जनिर्दुष्टा मता । समवायनित्यत्वे न कस्यापि जनिः स्यादित्यर्थः । तत्कथमित्यत आह** तत्रापीति ।

तत्रापि ह्युक्तदोषाणां नैव किञ्चिन्निवारकम् ॥

**उक्तदोषाणां सिद्धसाधनत्वादीनाम् । तथा हि । प्रागसतः सत्तासमवायो जनिरिति परेण जनिलक्षणमभिहितम् । तत्र यदि समवायो नित्यः स्यात्तदा तल्लक्षणा घटजनिः प्राक्कुलालादिव्यापारादस्तीति तदर्थस्य तस्य सिद्धसाधनता स्यात् । ज्ञप्तौ हि सिद्धस्यापि साधनं घटते । किन्तु क्वचिदनपेक्षत्वमित्येव । कृतौ तु प्राक्सिद्धस्य साधनमेवाशक्यमिति कुलालादिव्यापारस्य निष्फलत्वं स्यात् । अथ समवायस्य नित्यत्वेऽपि प्रागसतः सत्तासमवायः साध्यः अस्तु को दोष इति चेन्न समवायैक्यव्याघातात् । औपाधिकः समवायस्य भेद इति चेत् । यथासंभवं सर्वमुक्तमनुसन्धेयम् । न हि प्रागसद्विषयो व्यापारः संभवति । तस्य सत्करणातिरिक्तकर्तव्याभावात् । सत्करणस्य सत्तासमवायानतिरेकात् । स्वरूपलाभः कुलालादिव्यापारसाध्य इति चेत् । एवं तर्हि किमपरेण सत्तासमवायेन । तदेवं समवायस्यैकत्वनित्यत्वे सर्वथाऽप्ययुक्ते इति । यद्वा समवायनिराकरणप्रसङ्गात्परोक्तं विशिष्टादेर्जनेश्च स्वरूपं तन्मतासामञ्जस्यप्रदर्शनायौपाधिकेत्यादिना निराकृतं (च) वेदितव्यम् ।**

शे० — **यथासंभवं सर्वमिति** । 'यद्यस्यौपाधिको भेदः कुत एकत्वमिष्यते' इत्यादिनोक्तं सर्वमप्युक्तरीत्याऽत्रानुसन्धेयमित्यर्थः । 'अविद्यमान एवान्यः समवायोऽधिगम्यते' इत्यादेरत्राप्रसङ्गादाह **यथासंभवमिति** । प्रागसत इत्युक्तोपाधेरेकत्वात् 'उभयत्राप्यनन्ताः स्युः समवाया इतस्तत' इत्यस्यात्राप्रसङ्गादेतदुक्तमित्याशय इत्याहुः । ननु चोक्तजनिलक्षणे विशेष्यप्यांशस्य समवायस्याजन्यतया कुलालादिव्यापारसाध्यत्वासंभवेऽपि विशेषणांशस्य प्रागसतस्तत्साध्यत्वोपपत्त्या न कुलालादिव्यापारवैयर्थ्यमित्यत आह **न हीति** । तत्कुत इत्यतः किं तस्य सत्करणातिरिक्तमेव कर्तव्यममितं किंवा सत्करणमुत स्वरूपलाभ इति विकल्पान्मनसि निधायाद्यमसिद्ध्या दूषयति **तस्येति** । द्वितीयं दूषयति **सत्करणस्येति** । तृतीयमाशङ्कते **स्वरूपेति** । 'औपाधिकविशिष्टाद्यमि'त्यादिप्रतिज्ञाद्यनुसारेण विशिष्टादिनिराकरणपरतया स्पष्टप्रतिभासस्य वाक्यजातस्य समवायैकत्वं निराकर्तुं पीठिकारचनपरतया व्याख्यानमनुचितमित्यरुचिं मनसि निधाय प्रकारान्तरेण तत्तात्पर्यमाह **यद्वेति** ।

प० — समवायनित्यत्व इति पदच्छेदः । **तदर्थस्य** तस्य व्यापारस्य । नन्वेकत्वपक्षोक्तदोषाणां नित्यत्वपक्षेपि साम्यात्तत आधिक्याभावादेवमेवासत इत्यतिदेशो न युक्त इत्यत आधिक्यमाह **न ह्यसौ हीति** ॥ **क्वचिदिति** । सर्वाविवादस्थले इत्यर्थः ॥ **यथासंभवं सर्वमुक्तमिति** । विरोधाभावो देशकालव्यक्तिभेदेन भवति । स च समवाये परस्य न संभवः । किंतु पारमार्थिकत्वापारमार्थिकत्वाभ्यां भेदाभेदयोरविरोधो वाच्यः । तत्रौपाधिकभेदस्यापारमार्थिक(त्वे अस)त्वमसत्त्वमनिर्वाच्यत्वं वा । आद्ये सिद्धसाधनत्वम् । अन्त्ये मायावादितापत्तिः । सत्तारूपोपाधिनाऽन्योऽविद्यमान एव समवायो भाति । स एव च जनिश्चेत्तर्हि घटादिसर्ववस्तुजनिरसत्या स्यात् इत्येवमनुसन्धेयमित्यर्थः । सत्तारूपोपाधेरेकत्वात्तदानन्त्यप्रयुक्तसमवायानन्त्यमिह नापादयितुं शक्यमिति यथासम्भवमित्युक्तम् । ननु सत्तासमवायस्य कुलालव्यापारासाध्यत्वेपि प्रागसतः सत्तासमवायो जनिरित्युक्तत्वाद्विशेषणांशस्यासतोऽस्तु कुलालादिव्यापारविषयतेत्यत आह **न हीति** ॥ **समवायस्य नित्यत्वनिरासः** ॥ 'औपाधिकविशिष्टाद्यमि'त्यादेर्निवारकमित्यन्तस्य व्याख्यानान्तरमाह **यद्वेति** ॥ **विशिष्टादेरिति** । विशिष्टौपाधिकोपलक्षितानामित्यर्थः ।

या० — **यथासम्भवं सर्वमिति** । 'नानिर्वाच्यं हि तेनेष्टमि'त्यादिना 'अनुमानं न मा भवेदि'त्यन्तेन ग्रन्थेन यदुक्तं तत्सर्वमप्यत्रोक्तरीत्याऽनुसन्धेयमित्यर्थः । नन्वत्र प्रागसत इत्युक्तोपाधेरेकत्वात् 'उभयत्राप्यनन्ताः स्युः समवाया इतस्ततः' इत्युक्तं कथमनुसन्धेयमित्यत उक्तं **यथासम्भवमिति** । ननूक्तजनिलक्षणे विशेष्यांशस्य सत्तासमवायस्याजन्यत्वेन कुलालादिव्यापारसाध्यत्वासम्भवेऽपि विशेषणांशस्य प्रागसतस्तत्साध्यत्वोपपत्त्या न कुलालादिव्यापारवैयर्थ्यमित्यत आह **न हीति** ।

श्री० — **तदर्थस्य** घटजनिप्रयोजनकस्य । **तस्य** कुलालादिव्यापारस्य । **सिद्धस्यापि** ज्ञातस्यापि । **साधनं** ज्ञापनम् । धारावाहिकज्ञाने दर्शनादिति भावः ॥ **सिद्धस्य** उत्पन्नस्य । **साधनमेव** उत्पादनमेव ॥ **औपाधिक इति** । प्रागसत इत्युपाधिप्रयुक्त इत्यर्थः ॥ **कर्तव्याभावादिति** । तथा च यः प्रागत्यन्तमसंस्तस्य सत्करणं शतेनापि यत्नानामसंभावितमिति पूर्वं सत्त्वमङ्गीकार्यमिति शेषः । ततोऽपि किमित्यत आह ॥ **सत्करणस्येति** । ततश्च समवायस्य नित्यतया पूर्वं सिद्धत्वात्तदर्थकस्य कुलालादिव्यापारस्य निष्फलत्वमनिवार्यमिति वाक्यशेषः । **स्वरूपलाभः** सत्तासमवायातिरिक्तस्वरूपलाभः ।

च० — **सर्वथाप्ययुक्ते इति** ॥ **समवायनित्यत्वनिरासः** ॥

**सु०— नन्वेतत्सर्वं व्याहतम् । युष्माभिरपि लोकवेदव्यवहारं परिपालयद्भिर्विशिष्टादेः अङ्गीकरणीयत्वात् । तत्राप्युक्तदोषानुषङ्गादित्यतो विशिष्टादिनिरूपणे तावद्दोषाभावं स्वमते दर्शयति** असदिति ।

**अनु०—** अस्मत्पक्षे विशेषस्य सर्वत्राङ्गीकृतत्वतः ॥
नास्ति दोषः क्वचित्

**विशिष्टाकारो न विशेषणं नापि संबन्धः । किन्नाम विशेष्यम् । न च तन्मात्रम् । द्विविधो हि विशिष्टाकारः । यावद्विशेष्यभाव्ययावद्विशेष्यभावी च ।**

**तत्राद्यो विशेष्येणात्यन्ताभिन्नः । यथेश्वरः स्वरूपेण सर्वज्ञः । एवं यत्र यत्र विशेषण-संबन्धो यावद्विशेष्यभावी तत्र तत्र विशिष्टाकारोऽपि तथाभूतो विशेष्येणात्यन्ताभिन्नो द्रष्टव्यः । तथाऽपि विशेषस्य भेदप्रतिनिधेः सर्वपदार्थेष्वङ्गीकृतत्वेनेश्वरः सर्वज्ञ इत्यपर्यायशब्दप्रवृत्त्याद्यनु-पपत्तिदोषो नास्ति । ईश्वर एव सर्वज्ञ इत्यभेदस्तावत्प्रमितः । भेदे तु न निरवकाशं प्रमाणमस्तीति ।**

**द्वितीयस्तु विशेष्येण भिन्नाभिन्नः । यथा पर्वतेनाग्निमान् । यथा हि संयोगविशेष-सचिवास्तन्तवः पटाकारेण परिणमन्ते । तथाऽऽगन्तुकविशेषणसंबन्धाद्विशेष्यस्वरूपं विशिष्टा-कारेण परिणमते । तत्र यद्यपि भेदाभेदौ वस्तुनः स्वरूपभूतौ तथाऽप्यस्मत्पक्षे विशेषस्य सर्वत्राङ्गीकृतत्वतो न सङ्करदोषः । तदिदमुक्तं** क्वचिदिति । **अत्यन्ताभेदस्थले भेदाभेदस्थले चेत्यर्थः ।**

**शे०—** ननु 'अस्मत्पक्षे विशेषस्ये'त्युत्तरवाक्यमनर्थकम् । न च स्वमते विशिष्टादिनिरूपणे दोषाभावोपदर्शनार्थं तदिति वाच्यम् तदुपदर्शनस्याप्यनर्थकत्वात् । न च विशिष्टादिनिरासकन्यायस्य स्वव्याहतत्वेन जात्युत्तरत्वशङ्कानिरासार्थत्वान्न तदिति वाच्यम् । सिद्धान्ते विशिष्टादेरनङ्गीकारेणैव तन्निरासकन्यायस्य स्वव्याहतत्वाभावसिद्ध्या जात्युत्तरत्वशङ्काया अनवसरग्रस्तत्वादित्यतः स्वमते विशिष्टा-देरङ्गीकरणीयत्वोपपादनेन जात्युत्तरत्वशङ्कामुत्थाप्य तन्निरासाय स्वमते विशिष्टादिनिरूपणे दोषाभावो-पदर्शकतयोत्तरवाक्यं योजयितुं विशिष्टादिनिरासकन्यायस्य स्वव्याहतत्वशङ्कामुत्थापयति **नन्वेत-दिति ॥ न तन्मात्रमिति ।** तथा सति तच्छब्दयोः पर्यायत्वादिप्रसङ्गादिति भावः । किन्त्वित्यतः क्वचिद्विशेष्येणात्यन्ताभिन्नं क्वचिच्च भिन्नाभिन्नमिति वैलक्षण्यं वक्तुमत्यन्ताभेदावच्छेदकं भेदाभेदावच्छे-दकं च तद्विभागकथनमुखेनाह **द्विविधो हीत्यादिना ।**

**विशेषणसंबन्ध इति ।** विशिष्टाकार इत्यर्थः । तथाभूत इत्यस्यैव विवरणं **विशेष्येणात्यन्ताभिन्न इति ॥ अपर्यायशब्दप्रवृत्त्यनुपपत्तिरिति ।** सहप्रयोगानुपपत्तिरित्यर्थः । आदिपदेन पदान्तरवैयर्थ्यप्रसङ्गपरिग्रहः । नन्वीश्वरस्य सार्वज्ञादिविशिष्टेन कुतोऽत्यन्ताभेदो येन विशेषमाश्रित्य तत्रोक्तदोषपरिहार उपपद्यते इत्यतः किमत्राभेद एव माऽस्त्वित्यभिप्रायः किंवा भेदोऽप्यास्तामिति विकल्पं मनसि निधाय तादात्म्यव्यवस्थापकतया क्लृप्तसामानाधिकरण्येनाभेदस्य सिद्धत्वान्नाद्य इत्याह **ईश्वर एवेति ।** द्वितीयं दूषयति **भेदे त्विति ।** येन सोऽपि स्वीकरिष्यत इति भावः । ननु व्यपदेशभेदादिरूपं साधकं प्रमाणमिहाप्यस्त्येवेति कथं तदभाव इत्यत उक्तं **निरवकाशमिति ।** तस्मिन्सत्यप्यसत्त्वरूपमित्यर्थः । व्यपदेशभेदादिकमन्यथासिद्धत्वान्न भेदसाधकं किन्त्वनन्यथासिद्धत्वात्तस्मिन्सत्यप्यसत्त्वमेव, तच्चात्र विशिष्टाकारस्य यावद्विशेष्यभावित्वान्नास्तीति नाप्रामाणिकभेदस्वीकारो युक्त इति भावः ।

**वस्तुनः स्वरूपभूताविति ।** तदत्यन्ताभिन्नावित्यर्थः । वस्तुना तयोर्भेदस्य भेदाभेदस्य वाऽनवस्थाग्रस्तत्वेनासंभवादिति भावः ॥ **न सङ्कर इति ।** भेदाभेदयोर्वस्तुनाऽत्यन्ताभिन्नत्वे एकेन वस्तुनाऽत्यन्ताभिन्नत्वे एकेन वस्तुनाऽत्यन्ताभिन्नयोर्भेदाभेदयोरपि यद्यदत्यन्ताभिन्नेनात्यन्ताभिन्नं तत्तेनात्यन्ताभिन्नमिति व्याप्तिबलेनात्यन्ताभेदापत्त्या भेदस्याप्यभेदत्वमभेदस्यापि भेदत्वमित्येवंरूपः सङ्करो नेत्यर्थः । उपलक्षणमेतत् । भेदाभेदशब्दयोर्न पर्यायत्वप्रसङ्ग इत्यपि द्रष्टव्यम् । कथमेतदित्यतः प्रकृतोपयोगितया तद्याचष्टे **अत्यन्तेति ।**

**स० — न सङ्करदोष इति ।** भेदाभेदयोर्वस्तुस्वरूपत्वे भेदस्याभेदत्वम् । अभेदस्य भेदत्वमिति सङ्कर इति न वाच्यम् । विशेषेण तत्परिहारोपपत्तेरिति भावः ।

**प० — तावद्दोषाभावमिति ।** जनेर्निरूपणे दूषणाभावोक्तिपरतयासदित्यादेः करिष्यमाणव्याख्यापेक्षया तावच्छब्दः ॥ **ईश्वरः स्वरूपेण सर्वज्ञ इति ।** स्वरूपप्रज्ञप्त्या सर्वज्ञ इत्यर्थः । तथाभूतो यावद्विशेष्यभावीत्यर्थः । भेदेनैवास्त्वपर्यायशब्दप्रवृत्त्यादिकमित्यत आह **ईश्वर एवेति ।** 'यः सर्वज्ञ' इत्यादिश्रुत्यादिभिरिति भावः । **न निरवकाशमिति ।** धर्मिधर्मभावादिव्यवहारस्तु विशेषेणोपपन्न इति भावः । अग्निमानित्यग्निमत्स्वरूपविशिष्टाकारः पर्वतेन भिन्नाभिन्न इत्येतदुपपादयति **यथा हीति ॥ सचित्राः** सहिताः । ननु भेदाभेदयोरपि विशिष्टविशेष्यरूपभेदाभेदस्वरूपत्वात्कथं विशिष्टविशेषाद्यसाङ्कर्यमित्यत आह **तत्र यद्यपीति ।**

**या० — न सङ्करदोष इति ।** भेदाभेदयोरेकवस्तुस्वरूपत्वेन तयोः परस्परमैक्यं वा परस्परकार्यकारित्वं वा स्यादिति दोषो नेत्यर्थः ।

श्री० — ननु विशिष्टाकारस्य सर्वज्ञस्येश्वररूपविशेष्येणात्यन्ताभेदे ईश्वरसर्वज्ञशब्दयोः पर्यायत्वप्राप्त्येश्वरः सर्वज्ञ इत्यपर्यायशब्दव्यवहारो न स्यादित्यत आह **तथाऽपीति** ॥ **अस्तीति** । अतोऽत्यन्ताभेद एव वाच्य इत्यर्थः । **संयोगविशेषो** व्यतिषङ्गरूपः । ननु भेदाभेदयोरेकवस्तुस्वरूपत्वेन तयोरैक्यरूपं साङ्कर्यं परस्परकार्यकारित्वरूपं वा साङ्कर्यं स्यादित्यत आह **तथाऽपीति** ।

च० — **सर्वज्ञः** सर्वपदार्थगोचरस्वरूपप्रज्ञप्तिविशिष्टः । **यथाभूतो** यावद्विशेष्यभावी । **न सङ्करदोषः** । अपर्यायशब्द-प्रवृत्त्याद्यनुपपत्तिदोषः ।

सु० — **यद्वा क्वचिदित्यौपाधिकादित्रय इत्यर्थः । तस्याप्युक्तप्रकारत्वात् । एतेन भेदहीनेऽप्याकाशादावौपाधिको भेदो दृष्ट इत्य(प्य)पास्तम् । विशेषनिबन्धनानामेवाकाशाद्यंशानां घटाद्युपाधिभिः स्फुटीकरणादिति । जनिनिरूपणे दोषाभावं स्वमते दर्शयति** असदिति । **विशेषस्य परिणामस्य जनित्वेनाङ्गीकृतत्वतो न कश्चिद्दोषोऽस्तीति योजना । मृदादीनां घटाद्याकारापत्तिरेव घटादिजनिर्न तु समवाय इत्यर्थः ॥**

शे० — विशिष्टस्वरूप एवावान्तरभेदविवक्षया तत्तात्पर्यवर्णनं न स्वरसं, 'विशिष्टादिनिरूपणे दोषभावं स्वमते दर्शयति' इत्येतत्तात्पर्यकथनविरुद्धं चेत्यरुच्या प्रकारान्तरेण व्याचष्टे **यद्वेति** । नन्वाकाशे औपाधिकभेदस्य स्वयमप्यङ्गीकारात्समवायस्यौपाधिकभेदनिराकरणं स्वव्याहतमित्यत आह **एतेनेति** । एतेनेत्युक्तमेव विशदयति **विशेषेति** ।

प० — **त्रय इति** । औपाधिकविशिष्टोपलक्षितरूपत्रय इत्यर्थः ॥ **स्वमते विशिष्टादिपदार्थस्थित्युक्तिः** ॥

श्री० — **उक्तप्रकारत्वादिति** । औपाधिकादिकं द्विविधम् । तत्र **यावद्विशेष्यभावि** चेद्विशेष्येणात्यन्ताभिन्नं न चेद्भिन्नाभिन्नमित्युक्तप्रकारत्वादित्यर्थः ॥ **एतेनेति** । विशेषस्य सर्वत्राङ्गीकृतत्वत इत्यनेन । **औपाधिको** भेद इत्यर्थः । **दृष्ट इतीति** । तथा च तद्वद्भेदहीनेऽपि समवाये औपाधिको भेदो जायत इति नोक्तसिद्धसाधनत्वदोष इत्यर्थः । स्यादिदं यदि भेदहीनेप्याकाशे उपाधिना भेदो जायेत । न चैवम् । अंशादिनाऽत्यन्ताभिन्नेऽप्यव्याकृताकाशे भेदप्रतिनिधिविशेषनिबंधना अनेकेंऽशाः सन्ति । त उपाधिभिर्ज्ञाप्यन्त एव । न ह्येवं समवाये भेदोऽस्ति । य उपाधिभिर्ज्ञाप्येत । अतो दृष्टान्तोऽसंप्रतिपन्न इत्युक्तदोषतादवस्थ्यमेवेत्याह **विशेषेति** । एतदुपपादनं च 'खेपि देशान्तरस्य सः । ज्ञापको विद्यमानस्ये'त्यन्यत्र स्पष्टम् । अनेन स्वभावतोऽभिन्ने गगनादावौपाधिकभेददर्शनादिति पूर्वपक्षसमयोक्तं निरस्तं भवति । स्फुटीकरणात् ज्ञापनादित्यर्थः ।

**सु०—** स्यादेतत् । क्वचिद्भावो विशेष्यो विशिष्टाकारश्चाभावो दृश्यते । यथा घटो न जानाति प्रकृतिर्न कर्त्रीति । क्वचिच्चाभावो विशेष्यो विशिष्टाकाराश्च भावः प्रतीयते । अभावोऽस्ति । अभावः प्रमेय इति । न च विधिनिषेधात्मनोर्भावाभावयोरभेदो युज्यते । तत्कथं विशेष्याभिन्नं विशिष्टमुच्यत इत्यत आह भावो हीति ।

**अनु०—** भावो ह्यभावश्च स एव हि ॥

क्वचिदित्यनुवर्तते । यो भावः स एव क्वचिदभावो भवति । यश्चाभावः स एव क्वचिद्भावो भवतीत्येतदुभयं प्रसिद्धमेवेत्यर्थः । वाक्यार्थद्वयप्रसिद्धिद्योतनार्थं हिशब्दद्वयम् । तत्कथमित्यत आह अभावस्य चेति ।

अभावस्य च धर्माः स्युर्भावास्तेषां च तेऽखिलाः ॥

अस्ति तावदिदं यदभावस्यापि भावा धर्माः स्युस्तथा तेषां च भावानां च तेऽभावा धर्माः स्युरिति । अखिला इति बहुत्वोपलक्षणम् । एतदपि नाङ्गीकरोमीत्यत आह प्रत्यक्षेति ।

प्रत्यक्षमानतः सर्वमेतन्नो वारणक्षमम् ॥

प्रत्यक्षग्रहणमुपलक्षणार्थम् । यस्मादभावस्यापि भावा धर्माः सन्ति भावस्य चाभावा इत्येतत्सर्वं प्रत्यक्षादिप्रमाणतः सिद्धम् । अतो न वारयितुं शक्यम् ।

---

शे०— ननु भावो ह्यभावश्चेत्यादिना भावस्यैव क्वचिदभावत्वमभावस्यैव क्वचिद्भावत्वमित्युच्यते तदनर्थकम् । न च भावाभावयोरैक्योपदर्शनार्थं तदिति वाच्यम् । तदुपदर्शनस्यापि प्रकृतानुपयुक्तत्वेनानर्थक्यात् । न च प्रागुक्तस्य विशेष्यविशिष्टाकारयोरभेदस्योपपादकतया प्रकृतोपयोगसंभवान्नानर्थक्यं तस्येति वाच्यम् । ईश्वरसार्वज्ञयोर्वा पर्वताग्निमतोर्वा ऐक्यस्य भावाभावैक्यानपेक्षत्वेन तस्य तदुपपादकत्वासंभवादित्यतो यत्र विशेष्यस्य विशिष्टाकारस्य च भावरूपता यत्र तदुभयस्याभावरूपताऽस्ति तत्र भावाभावयोरैक्यस्य विशेष्यविशिष्टाकारयोरैक्यस्यानुपपादकत्वेऽपि यत्र विशेष्यविशिष्टयोर्मध्येऽन्यतरस्याभावरूपत्वमन्यतरस्य भावरूपत्वं तत्र तयोरैक्योपपादकत्वसंभवाद्भावाभावयोरैक्यव्युत्पादनस्य प्रकृतोपयोगान्न तदानर्थक्यमित्यभिप्रेत्य तदुपपादकतयोत्तरवाक्यं योजयितुमुदाहरणविशेषनिष्ठतया विशेष्यविशिष्टाकारयोरैक्यानुपपत्तिशङ्कामुत्थापयति **स्यादेतदिति ॥ यथा घटो न जानातीत्यादि ।** नन्वत्र ज्ञानादिमत्प्रतियोगिकान्योन्याभाववानेव विशिष्टाकारः प्रतीयते । स च भाव एव । तद्विशेषणीभूतोऽन्योन्याभाव एव स चाभावरूपः । तत्कथमिदं विशिष्टाकारस्याभावरूपताप्रदर्शनायोदाहरणमिति चेत् । उच्यते । विशिष्टाकारस्य विशेषणघटितमूर्तिकत्वाद्विशेषणस्यान्योन्याभावस्याभावतायां तद्घटितविशिष्टाकारस्याप्यभावत्वमेव । विशेषणभावाभावत्वयोरेव विशिष्टाकारस्य भावाभावत्वयोस्तन्त्रत्वात् ।

वस्तुतस्तु यथा घटः पटो न भवतीत्यत्र पटात्मको नेति प्रतीतेस्तत्र पटतादात्म्यनिषेधरूपेऽन्योन्याभाव एव नञ् । अत एवान्योन्याभावस्य मृद्घट इतिवद्घटसामानाधिकरण्येनाभेदस्यैव भानात्तदभेदस्य प्रत्यक्षत्वोपपादनं ग्रन्थान्तरीयं सङ्गच्छते । तथा घटो न जानातीत्यादावपि घटो ज्ञानवदात्मको नेति प्रतीतेरत्र ज्ञानवत्तादात्म्यनिषेधरूपेऽन्योन्याभाव एव नञ् । तथा चात्र ज्ञानवत्तादात्म्यनिषेधरूपोऽन्योन्याभाव एव विशिष्टाकार इति युक्तैव विशिष्टाकारस्याभावत्वोक्तिरिति ध्येयम् । कुतो भावाभावयोरभेदायोग इत्यतो विरुद्धस्वभावत्वादिति हेतुमभिप्रेत्य तत्साधकं हेतुमाह **विधिनिषेधात्मनोरिति** । तर्हि घटस्यापि स्वाभावत्वप्रसङ्ग इत्यत आह **क्वचिदित्यनुवर्तत इति** । तथा च यत्र धर्मधर्मिभावः प्रमितस्तत्रैव भावस्याभावत्वाश्रयणान्नातिप्रसङ्ग इति भावः । यो भावः स एवाभाव इति **यथास्थितयोजनायां** यत्र भावो विशेष्यो विशिष्टाकारश्चाभावस्तत्र विशेष्यविशिष्टयोरभेदमात्रोपपादकत्वलाभाद्यत्राभावो विशेष्यो विशिष्टाकारश्च भावस्तत्राभेदोपपादकत्वालाभान्नोक्ताक्षेपपरिहारकत्वमस्य ग्रन्थस्येत्यतस्तत्सिद्ध्यर्थमभावस्य च धर्माः स्युरित्युत्तरग्रन्थं मनसि निधायोभयथा वाक्यं योजयति **यो भाव इत्यादिना** । प्रत्यक्षादिप्रमाणत इत्युत्तरवाक्यं मनसि निधायाह **प्रत्यक्षग्रहणमुपलक्षणार्थमिति** ।

**प०— घटो न जानातीति** । ज्ञानकर्तृत्वाभावविशिष्ट इत्यर्थः । **न कर्त्रीति** । कर्तृत्वाभाववतीत्यर्थः । विशेषणस्याभावत्वे च तत्संबन्धाद्विशेष्यमभावाद्यात्मकविशिष्टाकारतया परिणमत इति विशिष्टाकारोऽभावो भाव इति चोक्तमिति ज्ञेयम् । स एवेति तच्छब्दश्रवणादाह **यो भाव इति** ॥ **यश्चाभाव इति** । सर्वत्र घटतदभावादावपि नाभेद इति सूचनाय क्वचिदित्युक्तम् । विवरिष्यते चैतत्प्रत्यक्षादिप्रमाणत इत्येतद्व्याख्याने ॥ **वाक्यार्थद्वय इति** । यो भाव इति यश्चाभाव इत्युक्तवाक्यार्थद्वय इत्यर्थः ।

**या०— घटो न जानातीत्यादि** । नन्वत्र ज्ञानादिमदन्योन्याभावविशिष्टो घटादिः प्रतीयते । तत्र विशिष्टाकारो घटादिविशेष्याभावरूप एव विशेषणीभूतोऽन्योन्याभावरूपोऽतः कथमिदं विशिष्टाकारस्याभावरूपताप्रदर्शनायोदाहरणमिति चेत् । उच्यते विशेषणीभूतान्योन्याभावस्य विशेष्येण घटादिना अत्यन्ताभिन्नत्वात् तदात्मकस्य विशिष्टाकारस्य अभावरूपता युक्तैव । अत एव पर्युदासस्थलेऽन्योन्याभावविशिष्ट एव नञः शक्तत्वेन तदेव निषेधधीगोचर इति सिद्धान्तः । निषेधधीगोचर एवाभाव इति च । अतो न किञ्चिदत्रानुपपन्नमिति । विशिष्टाकारस्य विशेषणघटितमूर्तिकत्वात्प्रकृते चाभावस्य विशेषणत्वात्तद्घटितमूर्तिको विशिष्टाकारोऽप्यभावात्मैवेत्यप्याहुः ।

श्री० — अभावस्याखिलाः धर्मा भावः स्युर्भावानां चाखिला धर्मा अभावरूपा इत्युक्तम् । न ह्यभावे स्थिताः सर्वे धर्मा भावरूपाः । अज्ञातृत्वादीनां तदभावात् । न वा भावे स्थिताः सर्वे धर्मा अभावरूपाः । ज्ञेयत्वादेस्तदभावादित्यत आह **अखिला इतीति** ।

च० — **न जानातीति** । ज्ञाननिरूपिताश्रयतारूपकर्तृत्वाभावविशिष्ट इत्यर्थः । **न कर्त्री** कर्तृत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टा । **अस्ति किञ्चिन्निरूपिताधेयताविशिष्टः** ।

**सु० — अस्त्वभावभावयोर्भावाभावधर्मवत्त्वम् । तथाऽपि भावस्याभावत्वमभावस्य च भावत्वं क्वचिदस्तीत्यत्र किमायातमित्यत** आह सर्वे इति ।

सर्वे भावा अभावाश्च पदार्थास्ते न सर्वदा ॥

**यतोऽभावाभावयोर्भावाभावधर्मवत्त्वं सिद्धम् । सिद्धश्च धर्मधर्मिणोरभेदस्तेन कारणेन सर्वे भावाः पदार्था अभावाश्च भवन्ति । अभावाश्च सर्वे पदार्था भावा भवन्तीत्युक्तमुपपन्नमित्यर्थः ।**

**यद्येवं भावस्याप्यभावत्वमभावस्य च भावत्वं तर्हि द्रव्यादयो भावा एव प्रागभावादयस्त्वभावा एवेति सर्वत्र प्रसिद्धो भावाभावविभागः कथमित्यत** आह तथाऽपीति ।

तथाऽपि प्रथमं बुद्धेर्यो निषेधस्य गोचरः ॥

सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमं परः ॥

**निषेधस्य बुद्धेरिति सामानाधिकरण्यम्** । परो भावः । **यद्यप्येषोऽर्थः प्रागेवोक्तस्तथाऽपि प्रसङ्गात्पुनः स्मारित इत्यदोषः** ।

शं० — निषेधस्य या बुद्धिस्तस्या इति वैयधिकरण्येऽभावलक्षणेऽभावप्रवेशादात्माश्रयत्वं भवतीत्यतोऽन्यथा व्याचष्टे **निषेधस्य बुद्धेरितीति** । बुद्धेर्निषेधत्वं च नास्तीत्याकारत्वम् । तथा च नास्तीति बुद्धिगोचरत्वमिति लक्षणं पर्यवसितं भवति । उपलक्षणं चैतत् । विधिबुद्धेरिति सामानाधिकरण्यमित्यपि द्रष्टव्यम् । अन्यथा तत्रापि विधेर्बुद्धिर्विधिबुद्धिस्तस्या इति वैयधिकरण्याश्रयणे भावलक्षणे भावप्रवेशादात्माश्रयत्वप्रसक्तेरित्यपि द्रष्टव्यम् ॥ **प्रागेवोक्त इति** । प्रथमप्रतिपत्तिषु निषेधविधिरूपत्वं भावाभावत्वमत्र हीत्यादिना युक्तिपाद उक्त इत्यर्थः ॥ **अदोष इति** । तथाऽपि प्रथमं बुद्धेरित्यस्य ग्रन्थस्य प्रथमप्रतिपत्तिष्विति युक्तिपादीयग्रन्थेन पुनरुक्तिलक्षणदोषो नेत्यर्थः ।

स० — आत्माश्रयपरिहारायाह **निषेधस्य बुद्धेरिति सामानाधिकरण्यमिति** ।

प० — निषेधो नामाभावः । तथाचाभावविषयकबुद्धेर्विषयोऽभाव इत्युक्तावात्माश्रयत्वमत आह **निषेधस्य बुद्धेरिति सामानाधिकरण्यमिति** । बुद्धेर्निषेधात्मकत्वं नाम नञर्थघटितत्वम् । पर इत्यनुवादः भाव इति व्याख्या ॥ **प्रागेवोक्त इति** । युक्तिपादे'ऽसदितिचेन्न प्रतिषेधमात्रत्वादिति नये' 'प्रतिषेधात्मकत्वं तु भावस्याभावधर्मतः । धर्मधर्म्यैक्यतश्चैव न तु तन्मात्रता भवेदि'त्यादिना 'निषेधविधिरूपत्वं भावाभावत्वमत्र ही'त्यन्तेन ग्रन्थेनोक्त इत्यर्थः ।

या० — आत्माश्रयपरिहारायाह **निषेधस्येति** । परप्रतिक्षेपरूपाया इत्यर्थः । एवं मूले विधिबुद्धेरित्यत्र परप्रतिक्षेपानात्मकबुद्धेरित्यर्थो ज्ञातव्यः । अतो न तत्रात्माश्रयत्वमिति ध्येयम् ॥ **प्रागेवोक्त इति** । युक्तिपादे'प्रथमप्रतिपत्तिषु । निषेधविधिरूपत्वं भावाभावत्वमत्र ही'त्यत्रैवोक्त इत्यर्थः ।

श्री० निषेधस्याभावस्य बुद्धेर्विषयोऽभावः । भावबुद्धिविषयो भाव इत्यात्माश्रयापत्तेरत आह **सामानाधिकरण्यमिति** । अनेन निषेधरूपत्वं बुद्धौ स्वाभाविकमेव नाभावविषयकत्वप्रयुक्तम् । स्पष्टत्वसाक्षात्त्ववत् । अतो नात्माश्रय इत्याशयः ।

**सु० — अभावभावयोर्भावाभावधर्मवत्त्वं प्रत्यक्षादिसिद्धमित्युक्तम् । तत्कथमित्यत आह** तस्मादिति ।

**अनु० — तस्मात्प्रध्वस्तभेदादि सदित्येवावगम्यते ॥**

प्रध्वस्तं **प्रध्वंसो भेदः पृथक्त्वम् । आदिपदेन प्रमेयत्वादिग्रहणम् । यस्मादभावस्य भावधर्मत्वमस्ति । तस्मादेव हि प्रध्वंसाभावादेः पृथक्त्वप्रमेयत्वादिभावधर्मजातमस्त्येवेत्यवगम्यते । प्रत्यक्षादिनेति योजना । प्रध्वंसः प्रागभावाद्वा घटाद्वा पृथक् प्रमेयोऽभिधेयश्चेत्यवगम्यते । अभावस्य (च) भावधर्मानभ्युपगमे तद्विरोधः स्यादिति भावः । घटः पटो न भवतीति भावस्यान्योन्याभावधर्मत्वं स्फुटत्वान्न प्रदर्शितम् ।**

शे० — प्रध्वस्तशब्दस्य कर्मसाधनत्वे प्रध्वस्तघटस्यैव विशेष्यतालाभेनाभावस्य विशेष्यताया अलाभात्तल्लाभायार्थमाह **प्रध्वस्तं प्रध्वंस इति** । नपुंसके भावे क्त इति भावेऽपि क्तविधानादिति भावः । मूले सदित्येवेत्यत्र सदेवेति संबन्धमभिप्रेत्य तद्व्याख्यानमस्त्येवेर्तीति । अभावभावयोर्भावाभावधर्मत्वं कथं प्रत्यक्षादिसिद्धमिति शङ्कापरिहाराय प्रवृत्ते तस्मादिति वाक्येऽभावस्य भावधर्मतासिद्ध्यर्थं तत्प्रदर्शनवद्भावस्याभावधर्मतासिद्ध्यर्थं तत्प्रदर्शनस्याप्यवश्यं कर्तव्यत्वात्तदप्रदर्शनप्रसक्तां न्यूनताशङ्कामप्रदर्शने निमित्तोक्त्या परिहरति **घट इति** ।

स० — **प्रध्वस्तम् प्रध्वंसः इति** । नपुंसके भावे क्तः, इति वचनादिति भावः ।

या० — **प्रध्वस्तं प्रध्वंस इति** । भावेऽपि नास्य विधानादिति भावः ।

सु० — **एवमभावभावयोर्भावाभावात्मकत्वं सामान्यतः प्रसाध्य प्रकृते योजयति** अस्तीति ।

अनु० — अस्त्यभावोऽस्ति च ध्वंसो देहाभावश्च भस्मता ॥

इत्यादि युज्यते सर्वं

**तस्मादित्यनुवर्तते । यत एवमभावस्य भावत्वं भावस्य चाभावत्वमुपपादितम् । तस्मादभावोऽस्ति प्रध्वंसोऽस्ति । देहाभावो भस्मतेत्यभावस्य विशेष्यत्वं भावस्य च विशिष्टत्वं तयोश्चाभेदस्तथा घटो न जानातीति भावो विशेष्योऽभावश्च विशिष्टाकारस्तयोश्चाभेद इत्युक्तं युज्यत इत्यर्थः ।**

शे० — **प्रकृते योजयतीति** । विप्रतिपन्नविशिष्टाकारे योजयतीत्यर्थः ॥ **देहाभाव इति** । देहप्रध्वंस इत्यर्थः । भस्मतेत्यत्र देहस्येति शेषः । ततश्च देहध्वंसो नाम देहभस्मता भस्मनो भावो भस्मावस्थेत्यर्थः । न चैवं विशेष्यस्य देहध्वंसस्य भस्मावस्थयैवाभेदः प्राप्तो न विशिष्टेनातः कथमस्य प्रकृतसङ्गतिरिति वाच्यम् । भस्मावस्थाया अपि विशिष्टविशेषरूपत्वादित्याशयात् ।

या० — **देहाभाव इति** । देहध्वंस इत्यर्थः । भस्मतेत्यत्र देहस्येति शेषः । तथा च देहध्वंसो नाम देहस्य भस्मता भस्मनो भावो भस्मावस्थेत्यर्थः । न चैवं विशेष्यस्य देहाभावस्य भस्मावस्थयैवाभेदः प्राप्तो न विशिष्टेनातः कथं प्रकृतसङ्गतिरिति वाच्यम् । भस्मावस्थाया अपि विशिष्टविशेषरूपत्वादित्याशयात् ॥

श्री० — **उपपादितमिति** । विशेष्यविशिष्टयोरित्यत्र ॥ भावरूपस्य विशेष्यस्य धर्मित्वादभावरूपस्य विशिष्टस्यापि धर्मत्वात्तयोरैक्यमिति भावः ॥

सु० — **यदि भावाभावयोरेकत्वं न विरुद्धं तदा घटोऽपि स्वाभावात्मा किन्न स्यादित्यत आह** प्रत्यक्षादीति ।

अनु० — प्रत्यक्षादिप्रमाणतः ॥

**सिद्धमिति शेषः । भावाभावयोर्विशेष्यविशिष्टयोरैक्यं प्रत्यक्षादिप्रमाणसिद्धं न तु घटतदभावयोः । अतो नातिप्रसङ्ग इत्यर्थः । यद्वा भावाभावयोर्धर्मधर्मिभावो धर्मधर्मिणोश्च अभेदः प्रामाणिक इत्येतत्किं भावाभावयोर्विशेष्यविशिष्टयोरैक्यस्योपपादकं किंवा संभावनाहेतुः । आद्ये तूक्तोऽतिप्रसङ्गः । द्वितीये साधकं वाच्यमित्यत्रेदमुक्तम् । अनेन क्वचिदित्युक्तं विवृतं भवति ।**

शे० ननु भावाभावयोर्धर्मधर्मिभावो धर्मधर्मिणोश्चाभेदो भावाभावयोर्विशेष्यविशिष्टाकारयोरैक्यस्य संभावकतयैवोच्यते, न तूपपादकत्वेन तत्कथं तत्रातिप्रसङ्गपरिहारकतया प्रत्यक्षादीति ग्रन्थावतार इत्यरुचेराह यद्वेति ॥ उक्तोऽतिप्रसङ्ग इति । घटोऽपि स्वाभावात्मा किन्न स्यादित्यतिप्रसङ्ग इत्यर्थः ॥ इदमुक्तमिति । 'प्रत्यक्षादिप्रमाणत' इतीदमुक्तमित्यर्थः ॥ अनेनेति । ययोर्भावाभावरूपयोर्विशेष्यविशिष्टाकारयोरैक्यं प्रत्यक्षादिप्रमाणसिद्धं तावेव भावाभावौ, 'भावो ह्यभावश्च स एव ही'त्यत्र विवक्षितौ, न त्वन्यौ येनातिप्रसङ्गः स्यादित्यतिप्रसङ्गपरिहारेण 'भावो ह्यभावश्चे'ति वाक्येऽनुवर्तितस्य कचिदित्यस्य विवरणं कृतं भवतीत्यर्थः ।

स०— उक्तोऽतिप्रसंग इति । घटोऽपि स्वाभावात्मा किं न स्यादित्युक्तातिप्रसङ्ग इत्यर्थः । अनेन कचिदित्युक्तं विवृतमिति 'भावो ह्यभावश्च स एव हि' इत्यत्र अनुवर्तितस्य कचिदित्युक्तस्य विवरणं कृतं भवतीत्यर्थः । यो भावः स एव क्वचिदभावो भवतीत्युक्ते तर्हि घटस्यापि स्वाभावत्वं स्यादिति तत्र प्राप्तातिप्रसङ्गस्य 'प्रत्यक्षादिप्रमाणत' इत्यनेन परिहारेण तद्विवरणादिति भावः ।

प०— आद्ये तूक्तोऽतिप्रसङ्ग इति । घटोऽपि स्वाभावात्मा स्यात्, घटाभावस्य घटेपि सत्त्वेन तद्धर्मत्वादित्यर्थः ॥ इदमुक्तमिति । 'प्रत्यक्षादिप्रमाणत' इत्युक्तमित्यर्थः ॥ अनेन कचिदितीति । यत्र प्रमाणमस्ति तत्रैव भावाभावयोरभावभावात्मकत्वं, नान्यत्रेति भावेनैकेन, 'प्रत्यक्षादिप्रामाणत' इत्यनेन 'कचिद्भावो ह्यभावश्चे'त्यत्र कचिदित्येतद्धटतदभावादावभेदप्रमाणाभावस्थले नेति विवृतमित्यर्थः । क्वाचित्कौपाधिकविशिष्टादेर्विशेष्याभेदोक्तौ बाधकोद्धारः ।

या०— अनेन क्वचिदित्युक्तमिति । ययोर्भावाभावयोरैक्यं प्रत्यक्षादिप्रमाणसिद्धं तावेव प्राक् क्वचिदित्यत्र ग्राह्यौ नान्यौ येनोक्तातिप्रसङ्गः स्यादित्यतिप्रसङ्गपरिहारेण विवृतमित्यर्थः ॥

श्री०— उक्तोऽतिप्रसङ्ग इति । यद्येवमुपपाद्य भावाभावयोरैक्यमुच्यते तर्हि घटतदभावयोरप्यैक्यं स्यात् । घटस्याभाव इति तत्रापि धर्मधर्मिभावदर्शनादिति भावः ॥ इदमुक्तमिति । उपपादकमेवेदमित्यभिप्रेत्य तत्रोक्तातिप्रसङ्गपरिहाराय प्रत्यक्षादिप्रमाणत इति साधकमित्यर्थः । भावाभावयोरैक्यं न प्रत्यक्षादिप्रमाणसिद्धमतो नातिप्रसङ्ग इति भावः ॥

च०— स्वाभावात्मा । स्वप्रतियोगिकाभावरूपः ।

सु०——अथवा भावो हीत्यादिना परिणामवादः प्रपञ्च्यते । तथा हि । केचित्परिणामवादिनः सत एवाभिव्यक्तिं जनिमाहुः । तद्व्युदासार्थमाह भावो हीति । अत्र भावाभावशब्दौ सदसत्परौ । यः कारणत्वाभिमतो मृत्पिण्डः स कार्यघटात्मनाऽभावः स एव तदात्मना भावश्च । यद्वा स घटः प्रागुत्पत्तेर्भावः सन्, स एव तदभावोऽसंश्च । अथवा यः कुलालादिव्यापारात्प्रागभावो घटात्मनाऽसन्मृत्पिण्डः स एव तदनन्तरं भावो घटात्मना सन् भवतीति । एतदुक्तं भवति । कार्यं कारणेन भिन्नाभिन्नम् । तत एव प्रागुत्पत्तेः सदसत् । अतः कारणं प्राक्कारकव्यापारादकार्यात्मकं सत्कार्यरूपतामापद्यते यत्सा जनिरिति ।

नन्वेकस्यैव भिन्नत्वमभिन्नत्वं च सत्त्वमसत्त्वं च विरुद्धमित्यतो यथैकस्यैव भावत्वमभावत्वं च न विरुद्धम् तथैतदपीत्यादौ संभावनां तावदुपदर्शयन्नेकैकस्य भावत्वमभावत्वं च उपपादयति अभावस्येति सार्धश्लोकद्वयेन । पूर्ववदेव व्याख्यानम् ।

अस्त्वियं संभावना । निश्चायकं तु किमित्यतो भेदासत्त्वयोः परेणाप्यङ्गीकृतत्वादभेदसत्त्वे प्रमाणेन साधयति तस्मादिति । प्रध्वस्तस्य घटादेर्भेदः प्रध्वस्तभेदः । आदिपदेनानुत्पन्नस्य कारकत्वं गृह्यते । 'नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति यत्प्रध्वस्तभेदस्य सत्त्वमवगम्यते यच्च घटो जायते घटं जनयतीत्यनुत्पन्नस्यापि कर्तृत्वं कर्मत्वं (च) वा । तत्तस्मात्कार्यस्य कारणाभेदात्प्रागुत्पत्तेर्विनाशोत्तरं च सत्त्वादेव हि युज्यते । न ह्यत्यन्तासत्त्वमापन्नस्य स्वरूपभेदः सन्निति युज्यते । नाप्यत्यन्तासतः कारकत्वम् । न च कार्यस्य पृथगेव सत्त्वमस्ति । अनुपलम्भात् । अतः सत्त्वं कारणाभेदश्चाङ्गीकरणीयः । न च विनैव बाधकेनोपचारत्वकल्पना युक्ता । अतिप्रसङ्गात् । तदिदमुक्तमवगम्यत एवेति । न केवलं व्यवह्रियत इत्यर्थः । अभावस्य च भावाः स्युर्धर्मास्ते च प्रत्यक्षादिप्रमाणसिद्धत्वाद्युज्यन्त एव न तु निराकरणार्हा इत्युक्तम् । तद्विशदयति अस्तीति । आदिपदेन घटादेर्भावस्य पटान्योन्याभावधर्मत्वं गृह्यते ।

शे०—'अस्मत्पक्षे विशेषस्ये'त्येतद्वाक्यद्वितीयव्याख्यानुसारेणापि 'भावो ह्यभावश्चे'त्यादिग्रन्थं व्याख्याति अथवेति ॥ परिणामवाद इति । 'अस्मत्पक्षे विशेषस्ये'त्यत्रोक्त इति शेषः ॥ य इति । अत्र मृत्पिण्डस्य स्वकार्यघटात्मनाऽसत्त्वस्य तदात्मना सत्त्वस्य चोक्त्या कार्यस्य कारणेन भिन्नाभिन्नत्वमुक्तं भवति । ततोऽपि किमित्यत्राप्येतदेवोत्तरमित्यभिप्रेत्य कार्यस्य कारणेन भिन्नाभिन्नत्वोक्त्या लब्धं कार्यस्योत्पत्तेः प्राक् सदसत्त्वमपि तदर्थतया योजयति यद्वेति । तावताऽपि

किमित्यत्रापेतदेवोत्तरमित्यभिप्रेत्य सदसत्त्वोक्त्या लब्धमर्थं तदर्थतया योजयति **अथवेति** । व्याख्यात-पक्षत्रयस्य फलफलिभावमुपपादयितुमाह **एतदिति** । कार्यं कारणेन भिन्नाभिन्नमिति प्रथमयोजनाया लब्धार्थप्रदर्शनम् । 'तत एव प्रागुत्पत्तेरि'ति द्वितीययोजनायाः । 'अतः कारणं प्रागि'ति च तृतीय-योजनाया इति ध्येयम् । इतीत्यस्येत्येतदिति पूर्वेणान्वयः । प्रध्वस्तघटादिभेदसत्त्वस्य प्रागुत्पत्ते-र्विनाशोत्तरं च कार्यसत्तापेक्षत्वमुपपादयति **न हीति** । अनुत्पन्नस्य कारकताया अपि तत्सापेक्षत्व-मुपपादयति **न पीति** । अस्तु तर्हि तदुभयोपपादकतया कार्यस्य प्रागुत्पत्तेर्विनाशोत्तरं च सत्त्वसिद्धिः । तथाऽपि कारणात्मना तु तत्सिद्धिः कुत इत्यतः पृथक् सत्त्वाभावात्तदित्याशयेनाह **न चेति** । कुतो नेत्यतोऽनुपलम्भबाधितं तदित्याशयेनाह **अनुपलम्भादिति** । ननु घटो जायते घटं जनयतीत्या-देर्मृत्तिका घटीभवति मृत्तिकां घटीकरोतीत्यर्थकत्वेन यथाश्रुतार्थत्वाभावान्न विवक्षितार्थसाधकत्वमित्या-शङ्क्य किं बाधकसद्भावान्मुख्यार्थपरित्यागेनोपचाराश्रयणम्, उत तदभावेऽपीति विकल्पं मनसि निधाया-द्यमसिद्ध्या दूषयति **न चेति** । द्वितीये त्वाह **अतिप्रसङ्गादिति** । उक्तव्यवहाराणामौपचारिकत्वा-भावो ग्रन्थकारस्याप्यभिमत इत्याह **तदिदमुक्तमिति** । कथमनेनौपचारिकत्वाभावसिद्धिरित्यतस्तदुपपादक-तया तद्योजयति **अवगम्यत एवेत्यादिना** ।

'ननु कथमसतो भाति भास्यत इति कर्तृत्वं कर्मत्वं वा, समस्तसामर्थ्यरहितत्वात् । अथ सामर्थ्यरहितत्वमपि कथम्, भाववदभावस्यापि सद्धर्मत्वदर्शनात् । बौद्धमेवाभावाश्रयत्वं न वस्तुकृतमतो न विरोध इति चेत् समं कर्तृत्वकर्मत्वयोरपि । अन्यथा जायते घट इत्यादि न स्यादि'ति जिज्ञासा-सूत्रीयग्रन्थेन घटो जायत इत्यादौ कर्तृत्वादेर्बौद्धत्वाभ्युपगमेनोपपत्तिरुक्ता । तथाऽत्यन्तसत्कार्यवाद्यभिमता-सदकरणादित्यादिहेतुनिरासावसरे 'नन्वसतः कथं कर्मत्वं सतः कार्यत्वमपि कथमिति समानम् । अनेन घटो जायत इत्यपि प्रत्युक्तं । तर्हि घटं करोतीत्यादेः कोऽर्थः । मृत्तिकां घटीकरोति मृत्तिका घटीभवती'ति ग्रन्थेन घटो जायत इत्यादीनामर्थान्तराभ्युपगमेनोपपत्तिरुक्ता । अत्र पुनः 'घटो जायते घटं जनयतीत्यनु-त्पन्नस्यापि कर्तृत्वं कर्मत्वं च कार्यस्य कारणाभेदात्प्रागुत्पत्तेर्विनाशोत्तरं च सत्त्वादेव युज्यते' इति ग्रन्थेन घटादीनां पूर्वं सत्त्वेन तदुपपत्तिरभिधीयते । तत्कथमेतेषां ग्रन्थानां परस्परं न विरोध इति चेत् अत्र प्राहुः स्वामिनः । न तावज्जिज्ञासासूत्रीयग्रन्थेनैतत्पादीयग्रन्थद्वयस्य विरोधः । तत्र परं प्रति प्रतिबन्दीमुखेन प्रवृत्त्या पराङ्गीकृतात्यन्तासत्कार्यवादस्यानुपपन्नतया वक्ष्यमाणत्वात् । सदसत्कार्य-वादस्य परेणानभ्युपगमादभावाश्रयत्वादिवत् कर्तृत्वादेर्बौद्धत्वानङ्गीकारे तव घटो जायत इत्यादेरनुपपत्ति-रेवेत्याशयात् । नाप्येतत्पादीयग्रन्थद्वयस्य परस्परविरोधः । अत्यन्तसत्कार्यानभ्युपगमेऽपि कारणा-त्मना सत्ताऽभ्युपगमात् । कारकव्यापारात्प्रागकार्यात्मकस्य कारणस्य कारकव्यापारेण कार्यरूपतापत्तेः

सदसत्कार्यवादिमते जनित्वात् । मृत्तिका घटीभवतीत्यादिर्घटो जायते इत्यादेरर्थ, इति न कर्तृत्वाद्यनुपपत्तिरिति एतत्पादीयपूर्वग्रन्थाशयः । अस्य तु ग्रन्थस्यात्यन्तिकसत्त्वस्योक्तरीत्याऽनेकानुपपत्तिग्रस्तत्वात्कार्यस्य कारणात्मनाऽपि सत्त्वानभ्युपगमे उक्तजनिपदार्थासंभवाद्घटो जायत इति कर्तृत्वाद्यनुपपत्तिरेव । न चात्रोक्त ( असत्ख्याति वाद ) प्रकारेण बौद्धकर्तृत्वाद्यभ्युपगमेनोपपत्तौ कारणात्मना कार्यसत्त्वसाधकतया कर्तृत्वाद्युक्तिरयुक्तेति वाच्यम् । प्रतीतिसिद्धप्रध्वस्तभेदसत्त्वस्य प्रकारान्तरेणानुपपत्त्या तदर्थतया कारणात्मना सत्त्वस्य, तत एव तादृशजनिपदार्थस्य चावश्याङ्गीकार्यत्वसिद्धेः कर्तृत्वादेरपि निर्वाह इत्याशयेनाभ्युच्चययुक्तितया कर्तृत्वादेरुपन्यासात् । अत एव भाष्ये स्वशब्देन भेदग्रहणम् । आदिपदेन च कर्तृत्वादेरुपादानम् । न तु कर्तृत्वादेरन्यथानिर्वाहाभावाभिप्रायेण ॥ अथवा भातीत्यादिभानक्रियाकर्तृत्वस्य बौद्धस्यासति व्यवहारवत् बौद्धस्य जनिकर्तृत्वस्य नात्यन्तासति व्यवहार इत्याशयेनास्यापि साधकतयोपन्यास इत्याशयः । एवञ्चैतत्पादीयपूर्वोत्तरग्रन्थयोरेकवाक्यतायां नानुपपत्तिः । अत एव सत्त्वमात्रे साध्ये सिद्धसाधनमिति पूर्वग्रन्थे । नाप्यत्यन्तासतः कारकत्वं इत्यत्यन्तपदमत्र ग्रन्थे । तस्मान्न कुत्रापि विरोध इति ।

प० — **अभाव इति** । असन्नित्यर्थः । **भावश्चेति** ॥ स्वरूपेत्यर्थः ॥ **इति यत्प्रध्वस्तभेदस्य सत्त्वमिति** ॥ तैत्तिरीयभाष्योक्तस्मृत्याऽवगम्यते । **तदिति** युज्यत इत्यन्वयः । कारणाभेदात्सत्त्वादेवेति व्यधिकरणे पञ्चम्यौ हेतुहेतुमद्भावापन्नौ । ननु कार्यस्य प्रागूर्ध्वं पृथक् सत्त्वादेव भेदकारकत्वे स्याताम् । किं कारणात्मना सत्त्वेनेत्यत आह **न च कार्यस्येति** । ननु भेदकारकत्वयोर्नायं प्रत्ययः । किन्तु व्यवहारः । स च(कारणविष)भेदकारकविषयतयोपचर्यत इत्यत आह **न च विनैवेति** ॥ **घटादेरिति** । घटः पटो न भवती येवं गृह्यत इत्यर्थः ।

**या० — परिणामवाद इति** । 'अस्मत्पक्षे विशेषस्ये'त्यत्रोक्त इति शेषः । 'कार्यं कारणेन भिन्नाभिन्नमि'ति प्रथमयोजनाया लब्धार्थप्रदर्शनम् । 'तत एव प्रागुत्पत्तेरि'ति द्वितीययोजनायाः । 'अतः कारणं प्रागि'ति च तृतीययोजनाया इत्यवधेयम् ।

**श्री० — सत एव** अत्यन्तसत एव ॥ **घटात्मनाऽभाव इति** । असन्नित्यर्थः । **तदात्मना** कारणात्मना । **भावः** सन्नित्यर्थः ॥ **संभावनेति** । एकस्यैव भिन्नत्वमभिन्नत्वं सत्त्वमसत्त्वं चाविरुद्धमित्यत्र यथैकस्यैव भावत्वमभावत्वं च दृष्टमित्येतत्संभावकमेव न निश्चायकमिति भावः । नाशोत्तरं च सत्त्वात्प्रध्वस्तभेदस्य सत्त्वं युज्यत इत्येतदुपपादकं **न हीति** । उत्पत्तेः प्राक् सत्त्वात्कर्तृत्वं कर्मत्वं च युज्यत इत्यस्योपपादकं **नापीति** ॥ **पृथगिति** । कारणसत्ताव्यतिरेकेणेत्यर्थः । ननु प्रध्वस्तभेदप्रतिपादकं नष्टानामपीति वाक्यम्, अनुत्पन्नस्य

कर्तृत्वादिप्रतिपादकं घटो जायत इत्यादिवाक्यं चोपचरितार्थं किन्न स्यात् । अत एव प्रध्वस्तभेद-सत्त्वमनुत्पन्नस्य कर्तृत्वादिकं व्यवहारमात्रमेव न तु तदनुसारेण तथाऽवगमः कल्पनीय इति चेत्तत्राह **न चेति** ।

**च०— घटं जनयतीति ।** 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णावि'ति । एषामण्यन्तावस्थायां कर्तृकर्मसंज्ञाविधानादण्यान्तावस्थायां घटो जायत इत्यत्र कर्तुर्घटस्य ण्यन्तावस्थायां कर्मता सङ्गच्छत इति भावः ।

**सु०— स्यादेतत् । अन्योन्याभावस्य भावधर्मत्वेऽपि तस्य भावात्पृथक्त्वेन कथं भावस्याऽभावत्वमुच्यते । अन्योन्याभावस्य भेदत्वाद्भेदस्य च स्वरूपत्वाङ्गीकारादिति चेन्न । स्वरूपभेदस्यान्योन्याभावातिरिक्तत्वात् । यच्चोक्तमभावेऽपि पृथक्त्वमस्तीति तदसत् । प्रमाणाभावात् । स्वरूपभेदेनैवासङ्करोपपत्तेः । पृथक्त्वस्य च स्वरूपभेदातिरिक्तत्वादित्यत आह** अन्योन्येति ।

**अनु०—** अन्योन्याभावभेदौ च पृथक्त्वं च पृथक् पृथक् ॥
यत्कल्पयन्ति तच्चैव कल्पनागौरवाद्गतम् ॥

---

**पृथक् पृथग्विभिन्नानीत्यर्थः । चशब्दो दूषणान्तरसमुच्चयार्थः । गतं प्रागेव निराकृतम् । अनेन पुनरुक्तिदोषः परिहृतो भवति ।**

**शे०—** नन्वन्योन्याभावभेदौ चेत्याद्युत्तरवाक्यमनर्थकम् । न चान्योन्याभावपृथक्त्वस्वरूप-भेदानां पार्थक्याभावप्रतिपादनार्थं तदिति वाच्यम् । तेषां पार्थक्येऽपि प्रकृतविरोधाभावेन तत्प्रतिपादन-स्येहानपेक्षितत्वादित्यतः पार्थक्यवादे प्रागुक्तस्य भावाभावयोरभावभावधर्मत्वेनाभावभावात्मकत्वस्यासिद्धि-प्रसङ्गेन पार्थक्यव्युत्पादनस्य तदुपपादकतया प्रकृतसङ्गतत्वान्न तदानर्थक्यमिति भावेन तदुपपादक-तयोत्तरग्रन्थं योजयितुं तत्पार्थक्यवादमाश्रित्य प्रागुक्तस्य भावाभावयोरभावभावधर्मताया अभावभावत्वस्या-प्यनुपपत्तिशङ्कामुत्थापयति **स्यादेतदिति ॥ तस्य भावात्पृथक्त्वेनेति** । अन्योन्याभावस्य धर्मि-स्वरूपत्वे प्रमाणाभावादिति भावः । ननु भेदो हि धर्मिस्वरूपमिति सर्वैरङ्गीकर्तव्यम् । अन्यथा अनवस्थादिदोषप्रसङ्गात् । अभावे स्वरूपातिरिक्तस्यासंभवेन भेदाभावप्रसक्तेश्च । अन्योन्याभावश्च भेद एवेति कथं न तस्य धर्मिस्वरूपत्वम् । भेदस्य धर्मिस्वरूपत्वसाधकसामानाधिकरण्यव्यवहारस्यैवा-न्योन्याभावस्य धर्मिस्वरूपत्वसाधकत्वादित्यभिप्रेत्य शङ्कते **अन्योन्याभावस्येति** । भेदस्य धर्मिस्वरूपत्वेऽपि

नान्योन्याभावस्य धर्मिस्वरूपत्वम् । अन्योन्याभावस्वरूपभेदयोर्भिन्नत्वात् । स्वरूपभेदो हि द्रव्यादिसकल-पदार्थवृत्तिः अन्योन्याभावस्तु न तथा । अभाववृत्तित्वाभावात् । तत्राप्यन्योन्याभावाभ्युपगमे अनवस्थाप्रस-ङ्गात् । ततश्च स्वरूपातिरिक्तभेदत्वादन्योन्याभावस्य न धर्मिस्वरूपत्वसिद्धिरित्याशयेन परिहरति **न स्वरूप-भेदस्येति** । ननु चाभावे पृथक्त्वानभ्युपगमे तस्य पदार्थान्तरेण सङ्कीर्णत्वापत्त्या असङ्कीर्णाभावस्वरूपा-सिद्धिप्रसङ्गात् । असङ्कीर्णतत्स्वरूपसिद्ध्यन्यथाऽनुपपत्तिरेव तत्र पृथक्त्वसद्भावे मानमिति न प्रमाणाभाव इत्याशङ्क्य भवेदेतदेवं यदि पृथक्त्वाभावेऽसङ्कीर्णतत्स्वरूपासिद्धिः प्रसज्येत । न चैतदस्ति । स्वरूपभेदेनैव तत्सिद्धिसंभवादित्याशयेन समाधत्ते **स्वरूपभेदेनैवेति** । ननु स्वरूपभेदानतिरिक्तत्वात्पृथक्त्वस्य अभावे स्वरूपभेदाभ्युपगमे, तत्र पृथक्त्वसत्त्वसिद्धेर्न तत्र पृथक्त्वमस्तीति वचनं रिक्तमित्याशङ्क्य भवेदप्येवं कथञ्चिद्यदि स्वरूपभेदात्पृथक्त्वमपृथक् स्यात् । न चैतदस्ति । स्वरूपभेदस्य द्रव्यादिसकल-पदार्थवृत्तित्वात्पृथक्त्वस्य च गुणत्वेन द्रव्यमात्रवृत्तितया सर्ववृत्तित्वाभावेन तस्य ततो भिन्नत्वात् । ततश्चाभावे स्वरूपभेदस्य सद्भावेऽपि तत्र पृथक्त्वाप्रसेरभावे तदभावोक्तिर्युक्तैवेत्याशयेनाह **पृथक्त्वस्य चेति** । मूले कल्पनागौरवाच्च गतमित्यन्वयं मनसि निधायाह **चशब्दो दूषणान्तरसमुच्चयार्थ इति** । 'कल्पनागौरवाद्यास्तु दोषास्तत्र विरोधिनः' इत्यादिना पूर्वत्रादिशब्दोक्तदृष्टहान्यदृष्टकल्पनारूपदोषान्तर-समुच्चयार्थश्चशब्द इत्यर्थः । ननु गतमित्यस्य पक्षस्य प्रागेव निराकृतत्वकथनमनर्थकमित्यत उक्तार्थस्मारक-त्वसूचनेनास्य ग्रन्थस्य पूर्वग्रन्थेन पुनरुक्तिपरिहारार्थत्वान्न तदानर्थक्यमित्याशयेन तत्तात्पर्यमाह **अनेनेति** ।

स० – **च शब्दो दूषणान्तरसमुच्चयार्थ इति** । 'कल्पनागौरवाद्गतम्' इत्यत्र कल्प-नागौरवमात्रस्योक्तत्वेऽपि 'कल्पनागौरवाद्यास्तु दोषास्तत्र विरोधिनः' इत्येतदनुव्याख्यानुसारेण दृष्टहानिर-दृष्टकल्पनारूपदूषणान्तरसमुच्चयार्थश्चशब्द इत्यर्थः ।

प० — सिद्धान्ती शङ्कते **अन्योन्याभावस्येति** ॥ **दूषणान्तरसमुच्चयार्थ इति** । 'कल्पनागौरवाद्या' इति लिङ्गपादे आद्यपादेनोक्तौ यौ दोषौ दृष्टहानिरदृष्टकल्पना च तत्समुच्चयार्थोऽत्र चशब्द इत्यर्थः । अत एवाग्रे गौरवादिकमित्यादिपदप्रयोगः ॥ **प्रागेवेति** । 'अदृश्यत्वादिगुणक' इति लिङ्गपादीयादृश्यत्वा-धिकरणे 'पृथक्त्वाभावतद्रूपान्भेदान्स्त्रीन्कल्पयन्ति चेत् । कल्पनागौरवाद्यास्तु दोषास्तत्रविरोधिन' इत्यत्र गौरवदृष्टहान्यदृष्टकल्पनारूपदोषैर्निराकृतमित्यर्थः ॥ **अनेनेति** । गतमिति प्रागुक्तस्मारणेनेत्यर्थः ॥ **अन्यो-न्याभाव(भेद)पृथक्त्वानां भेदे प्रागुक्तदोषस्मारणम्** ।

या० — **स्वरूपभेदस्येति** । अभावेऽभावन्तरानङ्गीकारेण स्वरूपभेदस्यैव तत्राङ्गीकारादिति भावः ॥ **पृथक्त्वस्य चेति** । तस्यागुणत्वेन द्रव्यमात्रवृत्तित्वादिति भावः ॥ **दूषणान्तरसमुच्चयेति** । वैशेषिकमत इति शेषः ॥ **प्रागेवेति** । 'पृथक्त्वाभावतद्रूपान्भेदांस्त्रीन्कल्पयन्ति चेत् । कल्पनागौरवाद्यास्तु दोषास्तत्र विरोधिन' इत्यत्रैवेत्यर्थः ।

श्री० — **यच्चोक्तमिति** । 'तस्मात्प्रध्वस्तभेदादी'त्यनेन प्रध्वस्तस्य प्रध्वंसस्य भेदः पृथक्त्वमिति व्याख्यानात् । ननु प्रध्वंसे पृथक्त्वाभावे प्रागभावघटाद्यभेदरूपं साङ्कर्यं स्यादित्यत आह **स्वरूपभेदेनैवेति** । **अनेन** गतमिति प्रागुक्तार्थस्मारणेन ।

सु० — **कथं कल्पनागौरवादिकमित्यत आह** पर्यायत्वेनेति ।

अनु० — पर्यायत्वेन ते शब्दा ज्ञायन्ते सर्व एव हि ॥

**क्रमप्रयोज्यत्वेनेत्यर्थः** । सर्व एव **लौकिका वैदिकाश्च** ॥

शे० — **कथं कल्पनागौरवमिति** । गौरवादिकमित्यर्थः ॥ **क्रमप्रयोज्यत्वेनेति** । पृथग्वाक्यतया प्रयोज्यत्वेनेत्यर्थः । न जात्वेकवाक्यनिर्देशेन तेषां प्रयोग इति भावः । 'पृथक्त्वान्यत्वभेदास्तु पर्यायेणैव लौकिकैः । व्यवह्रियन्ते सततं वैदिकैरपि सर्वशः' इति पूर्वग्रन्थं मनसि निधाय सर्वपदार्थमाह **लौकिका वैदिकाश्चेति** । अत्र मूले पर्यायत्वकथनेनैव कल्पनागौरवादिदोषव्युत्पादनसिद्धयोक्ताक्षेपपरिहारसिद्धेः किं तद्व्युत्पादनेनेत्यभिप्रेत्यात्र टीकायां कल्पनागौरवादिदोषाव्युत्पादनमिति गुरवः । तत्रायं भावः । यथा घटकलशकुम्भव्यवहाराणां पर्यायत्वादेकेनैव निमित्तेनैवोपपत्तौ घटत्वाद्यनेकनिमित्तकल्पने कल्पनागौरवम् । यथा च घटादिव्यवहारान्पर्यायेणैव कुर्वाणैस्तन्निमित्तमेकतयैव दृष्टमिति तत्त्रित्वाङ्गीकारे दृष्टहानिरदृष्टकल्पना च भवति । तथा पृथगादिव्यवहाराणामपि पर्यायत्वादेकेनैव स्वरूपभेदेनैवोपपत्तौ निमित्तत्रयकल्पने कल्पनागौरवं, नियमेनासहप्रयोक्तृभिः पृथक्त्वादीनामैक्यं दृष्टमिति तत्परित्यागेन त्रित्वकल्पनायां दृष्टहानिरदृष्टकल्पना च स्यादिति ।

स० — 'व्यवह्रियन्ते सततं वैदिकैरपि सर्वशः' इत्येतदनुसारेणाह **सर्व एवेति** ।

श्री० — लौकिका वैदिकाश्च शब्दा इत्यन्वयः ।

सु०— अत्र मायावादिनश्चोदयन्ति । स्वरूपभेदानतिरिक्तयोरन्योन्याभावपृथक्त्वयोर्भावाभावधर्मत्वोपलम्भात्सर्वपदार्थानामपि भावाभावात्मतासिद्धिरिति यदुक्तं तदयुक्तम् । भेदस्य वस्तुस्वरूपत्वानुपपत्तेः । तथा हि । भेदस्तावद्विदारणात्मा । भिदिर्विदारण इति विदारणार्थभिदिधातुरूपत्वाद्भेदशब्दस्य । तस्य च विदारणात्मनो भावस्वभावत्वे तस्यापि विदारणं स्यात् । तथा तदेकदेशानामपि भेदः स्वभाव इति तत्रापि विदारणं भवेदित्यनेन क्रमेण सर्वशून्यता स्यात् ।

किञ्च भेदस्य वस्तुस्वरूपत्वे न तत्रैकता समवेयात् । अभेदैकार्थसमवायिन्या एकताया भेदेन विरोधात् । एकत्वाभावेऽनेकत्वमपि न स्यात् । तत्समाहाररूपत्वात् तत्कार्यत्वाद्वा तस्य । एकत्वानेकत्वविकलं च शून्यमेवापद्यते ।

अपि च यदि भेदो वस्तुस्वरूपं स्यात्तदा प्रतियोग्यनपेक्षः प्रसज्येत । स्वरूपस्यानपेक्षत्वात् । न हि घटात्पटस्य भेद इतिवत् घटात्पट इति प्रतीतिरस्ति । घटो भिन्नो घटस्य भेद इति विशेषणविशेष्यभावसंबन्धप्रतिभासोऽपि भेदस्य वस्तुस्वरूपत्वे दुर्घटः स्यात् । न हि स्वयमेव स्वस्य विशेषणं संबन्धि वा भवति । संशयविपर्ययौ चैवमुच्छिद्येयाताम् । भेदाग्रहनिमित्तौ हि तौ भवतः । तत्र यदि धर्मिणमवगाह्य तौ भवतस्तदा तत्स्वभावभूतो भेदोऽपि गृहीत इति क्व तयोरवकाशः । न चेन्निर्विषयत्वात्सुतराम् । यदि चास्मादयं भिन्न इति प्रतियोगिघटिततया प्रतीयमानो भेदो वस्तुनः स्वरूपं स्यात् तदा तस्य सपरिकरस्य भेदस्य स्वरूपेऽन्तर्भावात्प्रतियोगिनोऽपि स्वरूपतया निमज्जनादद्वैतमतमेव पर्यवस्येदिति ।

तानपाकरोति भेदस्येति ।

अनु०— भेदस्य तु स्वरूपत्वे ये वदन्ति च शून्यताम् ॥
अद्भुतास्ते यतोऽन्यस्य प्रतियोगित्वमिष्यते ॥

तुशब्दः प्रकृताद्वैशेषिकादेर्व्यवच्छिन्दन्ने त्विति संबध्यते । स्वरूपत्वे भेद्यवस्तुस्वरूपत्वे । शून्यतां सर्वस्यापीति शेषः । चशब्दः पूर्वोक्तदूषणसमुच्चयार्थः । अद्भुता आश्चर्याः । न लौकिकेष्वेवंविधा दृश्यन्ते नापि परीक्षकेष्विति यावत् । तत्कथमित्यतः शून्यतापत्तिं तावन्निराकरोति यत इति । यो भेदो यस्य स्वरूपमिष्यते तं भेदं प्रति ततोऽन्यस्यैव वस्तुनः प्रतियोगित्वमिष्यते यतस्तस्माददद्भुतास्त इति संबन्धः ।

शे०— वैशेषिकमतनिरासपरपूर्वोत्तरग्रन्थसन्दष्टत्वाद्भेदस्येत्यादिग्रन्थोऽपि तन्मतनिरासपर इति मन्दाशङ्कापरिहाराय मायावादिमतनिरासपरतयोत्तरग्रन्थं योजयितुं तन्मतमुत्थापयति अत्रेति । तत्र हेत्वा-

काङ्क्षायां निराकार्यतया मूले सूचितान्हेतूनुपपादयितुं प्रतिजानीते **तथा हीति** । मूले स्वशब्दोक्तां शून्यतापत्तिं तावदुपपादयति **भेदस्तावदिति** । अत्र भेदस्य विदारणत्वं नाम करणसाधनतया विदारकत्वमेवाभिमतम् । अन्यथोत्तरदूषणासङ्गतेरित्यवधेयम् ॥ **तस्य चेति** । भावस्वभावत्वे भावसम्बद्धत्वे चेत्यर्थः । विदारकस्य लवित्रादेः स्वसम्बन्धिविदारकत्वदर्शनाद्विदारकस्य भेदस्य स्वसम्बन्धिधर्मिविदारकत्वमवश्यं वाच्यम् । अन्यथा विदारकत्वरूपस्वभावहानिप्रसङ्गादित्यर्थः । यद्वा भेदस्य वस्तुस्वरूपत्वे प्रतियोगिनिरूप्यत्वमेव न स्यात् । वस्तुस्वरूपस्य प्रतियोग्यनिरूप्यत्वात् । तथा च धर्मिस्वरूपस्य भेदस्य प्रतियोगिनः सकाशाद्धर्मिणो विदारकत्वायोगाद्धर्मिण्येव विदारणं वाच्यम् । अन्यथा स्वभावहानिप्रसङ्गादित्यर्थः । यद्यपि स्वरूपभेदवादे भेदस्य धर्मिसम्बन्धाभावान्न तद्विदारकत्वप्रसञ्जनं युक्तिमत्, तथाऽपि भेदस्य धर्मत्वं चास्तीति भ्रान्त्या शङ्क्यम् । अत एव परिहारे तथैव भावयिष्यतीति ध्येयम् । अस्त्वेवं धर्मिणो विदारणम् । तथाऽपि मूलोक्तः शून्यत्वप्रसङ्गः कथमित्यतस्तमुपपादयति **तथेति** ।

मूले स्वरूपत्वे बाधकतयोक्तां शून्यतां रीत्यन्तरेणाप्युपपादयति **किञ्चेति** । भेदो वस्तुधर्मस्तत एव भिन्न इति भ्रान्त्या शङ्क्यमिति द्रष्टव्यम् । नन्वेकताया भेदेन कथं विरोध इत्यतो भेदविरुद्धाभेदरूपैकार्थसमवेतत्वादेकताया भेदेन विरोध इत्यभिप्रेत्योक्तम् **अभेदैकार्थसमवायिन्या इति** । अत्रैकत्वस्य भेदेन सहोक्तरीत्या विरोधसिद्धौ तत्समानसंवित्संवेद्यत्वादेकत्वविरुद्धानेकत्वरूपैकार्थसमवायित्वाद्भेदस्यैकतया विरोध उक्तो भवति । ततश्च भेदाभेदविरोध एकत्वानेकत्वविरोधश्च पर्यवसन्नो वेदितव्यः । एकत्वानेकत्वविरोधपरिहारन्यायेन भेदाभेदविरोधस्यापि परिहृतप्रायत्वादेकत्वानेकत्वविरोधाभावमात्रोपपादनमप्युपपन्नमेवेत्यवधेयम् । यद्वा भेदेनेत्यस्य भेदैकार्थसमवायिनाऽनेकत्वेनेत्यर्थः । एकत्वानेकत्वयोर्विरोधोपपादनार्थं तयोरभेदभेदसामानाधिकरण्यसङ्कीर्तनमत्र । एवञ्चापि चैकत्वानेकत्वयोः सामानाधिकरण्यमिति सिद्धान्तग्रन्थः सङ्गच्छत इत्यवधेयम् । अप्रयोजकत्वं परिहरति **तदिति** । एकत्वद्वयसमाहाररूपत्वादनेकत्वस्य नैकत्वाभावे तत्संभव इत्यर्थः । एकत्वस्यानेकत्वं प्रत्यसमवायिकारणत्वादसमवायिकारणीभूतैकत्वाभावे न तत्कार्यभूतानेकत्वसंभव इत्याह **तत्कार्यत्वाद्वेति** ॥ **शून्यमेवेति** । सङ्ख्यारहितस्य द्रव्यस्यासत्त्वादिति भावः । मूले 'ये वदन्ति च शून्यताभि'त्यत्र शून्यतां चेत्यन्वयमभिप्रेत्य चशब्दसूचितानि दूषणान्याह **अपि चेति** ॥ **प्रतियोगीति** । तत्प्रतीत्यनपेक्षप्रतीतिविषय इत्यर्थः । विशेषणविशेष्यभावसंबन्धप्रतिभासोऽपीत्यत्र विशेषणविशेष्यभावश्च संबन्धश्च विशेषणविशेष्यभावसंबन्धौ, तत्प्रतिभास इत्यर्थः ॥ **घटो भिन्न इति** । विशेषणविशेष्यभावप्रतिभासो घटस्य भेद इति संबन्धप्रतिभास इति संबन्धः । उभयोर्दौर्घट्यमेवोपपादयति **न हीति** ॥ **निर्विषयत्वादिति** ।

धर्मिज्ञानाभावादित्यर्थः । **प्रतियोगिघटिततया** तद्विशिष्टतया ॥ **सपरिकररयेति** । प्रतियोगिघटितस्येत्यर्थः । **प्रतियोगिनोऽपीति** । परिकरवतो यद्भवति तत्परिकरस्यापि भवतीति व्याप्तेरिति भावः ।

मूले तुशब्दस्यानर्थक्यमाशङ्क्य विशेषार्थत्वान्न तदित्यभिप्रेत्य व्यावर्तकोपदर्शनपूर्वकं तदपेक्षितमन्वयमाह **तुशब्द इति** । भेदस्य धर्मिस्वरूपत्वे शून्यतापत्तेर्बाधकत्वस्य मूलारूढतासिद्ध्यर्थं स्वरूपत्वत इत्येतत्तथा व्याचष्टे **स्वरूपत्वत इति** ॥ **पूर्वोक्तदूषणेति** । अपि च भेदो यदि वस्तुस्वरूपं स्यात्तदा प्रतियोग्यनपेक्षः प्रसज्येतेत्यादिपूर्वोक्तदूषणसमुच्चयार्थ इत्यर्थः ।

स०— **अभेदैकार्थसमवायिन्या इति** इत्यस्यायं भावः । यद्धर्मस्य भेदस्य यत्र समवेतत्वं तत्र अनेकत्वस्यापि समवेतत्वं । यत्र च भेदस्य धर्मिस्वरूपत्वं तत्र अनेकत्वमपि समवेतमिति । तथा च पटधर्मभूतभेदस्य पटे समवेतत्वे पटस्याप्यनेकत्वं स्यात् इत्यापादनसंभवेऽपि मया भेदस्य पटस्वरूपत्वाङ्गीकारात् पटोऽपि अनेकत्वं स्यात् इत्येव आपादनीयम् । पटस्यापि अनेकत्वं स्यादिति आपादनं तु व्यधिकरणमिति भावः ।

प०— **भिदिधातुरूपत्वादिति** । भिदिर् इत्यत्रेर् इत्संज्ञा वक्तव्येति वार्तिकेनेर् इत्यस्येत्संज्ञायां तस्य लोप इति तस्येतो लोपे घञ्प्रत्यये पुगन्तलघूपधस्य चेति गुणे कृत्तद्धितसमासाश्चेति प्रातिपदिकसंज्ञायां च स्वाद्युत्पत्तौ भेद इति सिद्धिरिति ज्ञेयम् । भेदशब्दः करणसाधन इति मन्वानस्य चोद्यमेतत् ॥ **तस्येति** । भावस्य **विदारणं** द्वैधीभावः स्यादित्यर्थः । न तत्रैकतेति पदच्छेदः ॥ **अभेदैकार्थेति** । अभेदेन सहैकार्थे निष्ठाया इत्यर्थः । एकत्वाभावे इति विभागः । मतभेदेनाह **तत्समाहारेति** । अनेकत्वस्यैकत्वानां समाहाररूपत्वादित्यर्थः । अनेकत्वं प्रति एकत्वं समवायिकारणमिति मतेनाह **तत्कार्यत्वाद्वेति** ॥ **घटो भिन्न इति** । पटादिति योज्यम् ॥ **एवमिति** । भेदस्य वस्तुस्वरूपत्व इत्यर्थः ॥ **भेदाग्रहेति** । यत्कोटिकौ संशयविपर्ययौ तन्निरूपितपुरोवृत्तिनिष्ठभेदाज्ञाने- त्यर्थः ॥ **न चेदिति** । धर्मिणं विषयीकृत्य न भवतश्चेदित्यर्थः ॥ **सुतरामिति** । संशयविपर्यययोरनवकाश इति योज्यम् ॥ **सपरिकरस्येति** । संबन्धिसहितस्येत्यर्थः ॥ **चशब्दः पूर्वोक्तेति** । ये वदन्तिचेति चशब्दः शून्यतां चेत्यत्रान्वितः सन्प्रतियोग्यपेक्षत्व-विशेषणविशेष्यभावादिप्रतिभासदौर्घट्य-संशयविपर्ययोच्छेदा-द्वैतपर्यवसानरूपदूषणानि चेति ये वदन्तीति समुच्चयार्थ इत्येके । पूर्वं मायावादिनं प्रति तत्र तत्र यानि दूषणान्युक्तानि तैः सह लक्षणपरीक्षकबहिर्भावादिरूपाद्भुतत्वादिदूषणसमुच्चयार्थ इत्यन्ये । समवायदूषणेन समुच्चयार्थ इत्यपरे । संयोगश्च विभागश्च भेदश्चेत्यत्र पूर्वपक्षिणा भेदादेर्युगधर्मत्ववादिनोक्तसर्वाद्वैतदोषसमुच्चयार्थ इति केचित् ।

या० **विदारणात्मेति** । लवित्रादिवद्विदारकरूप इत्यर्थः **भावस्वभावत्व इति** । भावसंबद्धत्व इत्यर्थः । विदारकस्य लवित्रादेः स्वसम्बद्धविदारकत्वदर्शनादिति भावः । यद्यपि भेदस्य धर्मिस्वरूपत्वपक्षे नेदमापादकं संभवति तथाऽपि भेदस्य प्रतीयमानभावधर्मत्वान्यथाऽनुपपत्त्या भावसम्बन्धोऽप्यवश्यं वाच्य इत्यभिमानेनेदमुदितमिति ज्ञातव्यम् ॥ **किञ्च भेदस्येति** । इदमपि प्रतीतिसिद्धं भेदस्य भावधर्मत्वं न हातुं युक्तमित्यभिप्रेत्येति ज्ञातव्यम् ॥ **भेदेनेति** । भेदैकार्थसमवायिनाऽनेकत्वेनेत्यर्थः । एकत्वानेकत्वयोर्विरोधोपपादनाय तयोरभेदभेदसामानाधिकरण्यमत्रोक्तमिति ध्येयम् । एवं च 'अपि चैकत्वानेकत्वयोः सामानाधिकरण्यमि'ति सिद्धातग्रन्थः सङ्गच्छत इति ध्येयम् ॥ **शून्यमेवेति** । संख्यारहितद्रव्यस्यैवाभावादिति भावः । **निर्विषयत्वादिति** । धर्मिज्ञानाभावादित्यर्थः ॥ **सपरिकरस्येति** । प्रतियोगिघटितस्येत्यर्थः ॥ **पूर्वोक्तदूषणेति** । 'न तत्रैकता समवेयादि'त्यादिनोक्तदूषणानां समुच्चयार्थ इत्यर्थः ।

श्री० — उपालम्भादित्यनन्तरं धर्मधर्मिणोरैक्यादिति शेषः ॥ **धर्मिणमिति** । **धर्मिणमवगाह्य** विषयीकृत्य **तौ** संशयविपर्ययौ जायेते इत्यर्थः ॥ **तदिति** । धर्मीत्यर्थः । **न चेत्** संशयविपर्ययौ धर्मिणमवगाह्य नोत्पद्येते चेदित्यर्थः । **निर्विषयकत्वात्** निर्धर्मिकत्वात् । **सुतरामिति** । धर्मिज्ञानाभावादेव संशयविपर्ययौ कुत्र स्यातामित्यर्थः । **पूर्वोक्तेति** । किञ्च भेदस्येत्यादिना पूर्वोक्तेत्यर्थः ।

च० — **भिदिधातुरूपत्वादिति** । भिदेर्भावसाधनघञि निष्पन्नत्वाद्भेदशब्दस्येति भावः । **समवेयात्** वर्तेत । **भेदाग्रहनिमित्तौ** ज्ञानाभावाधीनौ ।

सु० — **अन्यस्य प्रतियोगित्वेऽपि कथमुक्तदोषपरिहार इत्यत आह** प्रतियोगिनो हीति ।

अनु० — प्रतियोगिनो हि भेदोऽयं न तु स्वस्मात्कथञ्चन ॥

**हिशब्दः पूर्ववद्धेतौ । अयमित्येवम्भावस्य प्रत्यक्षादिसिद्धतां सूचयति । स्वस्मात् धर्मिस्वरूपात् ॥ इदमुक्तं भवति । विदारणात्मा हि भेदो यस्य यतस्तं ततो विदारयेत् । न तु यं कमपि यतः कुतश्चिन् । न (हि) च घटस्वरूपस्य भेदस्य घट एव प्रतियोगी येन स्वस्मिन्विदारणं स्यात् । किन्तु घटादन्य एव । ततो विदारणं तु नानिष्टं । तस्य शून्यतानापादकत्वादिति ।**

**किञ्च भिद्यतेऽनेनेति यदि भेदशब्दः करणसाधनो भवेत् तदा भेदः कमपि विदारयेत् । न चैवम् । भावसाधनत्वाङ्गीकारात् । अतोऽभ्युपगम्यैव करणसाधनतामयं परिहारः अभिहित इत्याशयवानाह** कथञ्चनेति । **इदमुदितमिति शेषः** ।

शे० — **पूर्ववद्भुताविति** । 'यतोऽन्यस्य प्रतियोगित्वमिष्यते' इति पूर्ववाक्यार्थस्य यथाऽद्भुतास्त इति साध्यभागेनान्वयस्तथा हिशब्दस्यायं भेदः प्रतियोगिन एव न स्वस्माद्धि यस्मात्तस्मादद्भुतास्त इति साध्यभागेनान्वय इत्यर्थः ॥ **एवम्भावस्येति** । प्रतियोगिनः सकाशादेव धर्मिणो भेदको भेदो न स्वस्मात्स्वस्येत्येवम्भावस्येत्यर्थः । ननु विदारकस्य लवित्रादेः स्वसंबन्धिकाष्ठादिविदारकत्वदर्शनाद्विदारकस्य भेदस्य स्वसंबन्धिधर्मिविदारकत्वावश्यम्भावान्न प्रतियोगिन एव धर्मिणो विदारको भेद इति नियमः । अस्तु वोक्तनियमस्तथाऽपि घटस्यैव तत्र प्रतियोगित्वात्स्वस्माद्धर्मिस्वरूपविदारकत्वं तस्यावश्यकमिति कथं न तत्प्रसङ्गः । अस्तु वाऽन्यस्यैव प्रतियोगित्वनियमस्तथाऽपि तस्माद्धर्मिणो विदारकत्वाभ्युपगमे कथं न शून्यभावापत्तिः । विदारणमात्रस्यैव तदापादकतया तदभ्युपगमे शून्यत्वापत्तेर्वज्रलेपायमानत्वादित्यत आह **इदमुक्तं भवतीति** ॥ **घटस्वरूपस्येति** । इदं च स्वमतानुसारेण । वस्तुतस्तु घटधर्मिकस्येत्यर्थः ॥ **घट एव प्रतियोगीति** । तथा सति तस्य घटधर्मिकत्वं न स्यात् । यो यत्प्रतियोगिको नासौ तद्धर्मिक इति नियमात् । अन्यथा स्थविरप्रतियोगिकस्यापरत्वस्यापि स्थविरधर्मत्वप्रसक्तेरिति भावः । इतीत्यस्येदमिति पूर्वेण संबन्धः ।

कथञ्चनेत्यनेनोक्तपरिहारस्यावक्तव्यत्वं मूले उक्तं तदयुक्तम् । तथा सत्युक्तशङ्कापरिहारोपायाभावेन तदनिवृत्तिप्रसङ्गात् । निवृत्तौ वाऽस्य परिहारस्यावक्तव्यत्वप्रसङ्गाच्चेत्यतः प्रकारान्तरेण शङ्कापरिहारमेतत्परिहारोक्तेर्गतिं चोपदर्शयन्नेव कथञ्चनेत्युक्तावक्तव्यतामुपपादयति **किञ्चेति** ।

---

प० — **पूर्ववद्भुताविति** । हेत्वर्थमुपेत्य यत एवमतस्तेऽद्भुता इति पूर्ववद्योजना कार्येत्यर्थः ॥ **यस्य यत इति** । यद्धर्मिको यन्निरूपित इत्यर्थः । न च घट एव प्रतियोगीत्यस्य किन्तु घटादन्य एवेत्यन्वयः ॥ **तत इति** । अन्यस्मादित्यर्थः ॥ **अयं परिहार इति** । यतोन्यस्येत्यादिपरिहार इत्यर्थः ॥ **इदमिति** । यतोऽन्यस्य प्रतियोगित्वमित्यादिकमुदितमित्यर्थः ।

या० — **घटस्वरूपस्येति** । इदं च स्वमतानुसारेण । वस्तुतस्तु घटधर्मिकस्येत्यर्थः ।

श्री० — **पूर्ववद्भुताविति** । व्युत्पत्तिरपि हि इत्यत्र हिशब्दो यथा यस्मादिति हेत्वर्थः । तथाऽयमपीत्यर्थः । **कमपि** धर्मिणम् ॥ **भावेति** । भेदनं भेद इत्येवंरूपेणेत्यर्थः । **कथञ्चन इदमुदितम्** अभ्युपगम्योक्तमित्यर्थः ।

च० — **करणसाधनः** करणप्रत्ययकघञन्तः । **भावसाधनत्वाङ्गीकारात्** धात्वर्थानुवादकघञन्तत्वोपगमात् ।

सु० — **किञ्च विदारणमपि लवित्रादि यत्सम्बन्धि तद्विदारयति । न तु स्वात्मानम् । अतो धर्मभेदवादे कथञ्चिदिदं वक्तव्यम् । स्वरूपभेदवादे तु कास्यात्रकाशः । भेदस्य वस्तुस्वरूपत्वे न तत्रैकता समवेयादित्यप्यनेनैव निरस्तम् ।**

**न ह्येकताऽनेकते स्वरूपेण विरुद्धे । एकस्यैव घटस्यान्यापेक्षयाऽनेकत्वदर्शनात् । किन्तु यदपेक्षयाऽनेकस्तदपेक्षयैवैक इति विरुद्धम् । तत्र घटस्य परस्मात्प्रतियोगिन एव भेद इति । तदपेक्षयैवानेकत्वं स्वापेक्षया त्वेकत्वमिति को विरोधः । अपि चैकत्वानेकत्वयोः सामानाधिकरण्यं वा विरुद्धं धर्मधर्मिभावो वा । आद्ये नैकताया भेदेन विरोधः । भेदस्य स्वरूपत्वेनैकतासामानाधिकरण्याभावात् । न द्वितीयः । एकं द्वित्वमिति दर्शनात् । एकत्वानेकत्वाभावेऽपि शून्यत्वं कुतः । वैशेषिकादीनां गुणादिवन्मायावादिनां ब्रह्मवद्गुणस्यापि सत्त्वोपपत्तेरिति ।**

**शे०** — ननु तथाऽपि करणसाधनत्वाश्रयणे प्राप्तशङ्कापरिहारायोक्तपरिहारस्यावश्यकत्वप्राप्त्या तदवक्तव्यतापरकथञ्चनपदास्वारस्यमित्यतः तदाश्रयणेऽप्युक्तदोषाप्रसङ्गव्युत्पादनेन तस्यावक्तव्यतामुपपादयति **किञ्चेति** ॥ विदारणं विदारकमित्यर्थः ॥ **न तु स्वात्मानमिति** । स्ववृत्तिविरोधादिति भावः ॥ **धर्मभेदवाद इति** । धर्मिभिन्नधर्मभेदवाद इत्यर्थः । धर्मभेदवादे भेदस्य वस्तुधर्मत्वेन तत्संबन्धित्वात्तद्विदारकत्वप्रसक्तिरित्यर्थः । विदारकस्य लवित्रादेर्निष्प्रतियोगिकत्वेन स्वसंबन्धिमात्रविदारकतायामपि भेदस्वरूपस्य विदारकस्य सप्रतियोगिकत्वेन प्रतियोगिनः सकाशादेव धर्मिणो विदारकत्वं न तु स्वस्मादिति न शून्यत्वापत्तिरिति धर्मभेदवादेऽपि परिहारः संभवतीत्यभिप्रेत्योक्तं **कथञ्चिदिति** । भेदस्य धर्मिस्वरूपत्वे न तत्रैकता समवेयादित्युक्तदिशा शङ्किताया: शून्यताया मूले पृथक्परिहारात् न्यूनत्वमित्याशङ्क्य प्रतियोगिनो हीत्यादिमूलेनैव तत्परिहारसिद्धेर्न पृथक् तत्परिहार इत्यभिप्रेत्य तत्परिहारकतयाऽप्येतदेव वाक्यं योजयितुमाह **भेदस्येति** ।

नन्वत्र घटस्य प्रतियोग्यपेक्षया भिन्नत्वं स्वापेक्षया त्वभिन्नत्वमुच्यते न त्वेकत्वानेकत्वविरोधस्तत्कथमनेन शङ्कापरिहारः । न च यो यदपेक्षयाऽनेको नासौ तदपेक्षयैको यदपेक्षया चैकस्तदपेक्षया नानेक इत्येवमापेक्षिक एवैकत्वानेकत्वयोर्विरोधः स च परिहृत एव । घटस्य प्रतियोगिनोऽन्यस्माद्भिन्नत्वोक्त्या तदपेक्षयाऽनेकत्वसूचनमुखेन तदपेक्षयैकत्वाभावस्य स्वापेक्षया चाभिन्नत्वोक्त्या तदपेक्षयैकत्वसूचनमुखेन तदपेक्षयाऽनेकत्वाभावस्य च सूचनेन यदपेक्षयाऽनेक एको वा तदपेक्षयैकत्वस्यानेकत्वस्य चाप्राप्तेरिति वाच्यम् । य एको नासौ कथमप्यनेको, यश्चानेको नासौ कथमप्येक इत्येकत्वानेकत्वयोः स्वरूपेणैव विरोधस्य संभवेन तत्परित्यागेनाऽऽपेक्षिकविरोधकल्पनायोगादित्यतः स्वरूपेण विरोधस्यासंभव-

दुक्तिकत्वोपपादनपूर्वकमापेक्षिकविरोधमेव परिशिष्य तन्निगमपरतया वाक्यं योजयति **न हीत्यादिना** ॥ **धर्मधर्मिभाव इति** । भेदस्य वस्तुस्वरूपत्वे तत्समनियतानेकत्वस्यापि तथात्वप्राप्तावेकत्वरूपो धर्मस्तत्र न समवेयादित्यापादने एकत्वस्यानेकत्वधर्मित्वं विरुद्धमित्यर्थप्रतीतेरयं कल्प आशङ्कित इति ध्येयम् ॥ **भेदेनेति** । तन्नियतानेकत्वेनेत्यर्थः ॥ **भेदस्येति** । तन्नियतानेकत्वस्येत्यर्थः ।

**प०** — करणसाधनत्वेपि परोक्तदोषो न लगतीत्याह **किञ्च विदारणमिति** ॥ **लवित्रादीति** । छेत्रादीत्यर्थः । आदिपदेन संहर्त्रादेर्ग्रहणम् ॥ **इदं वक्तव्यमिति** । धर्मिभूतघटादेर्विदारणमितीदमित्यर्थः ॥ **भेदस्येति** । भेदशब्दोऽत्रानेकत्वपर इत्याह । **गुणादिवत्** गुणादेरिव । **ब्रह्मवत्** ब्रह्मण इवेत्यर्थः ॥ **अगुणस्येति** । एकत्वानेकत्वसंख्यारूपगुणहीनस्येत्यर्थः ।

**या०** — **धर्मभेदवाद इति** । धर्मिभिन्नधर्मभेदवाद इत्यर्थः । तत्रैव धर्मत्वेन संबद्धत्वसिद्धिसंभवेनापादकासिद्धेरभावादिति भावः । तत्रापि घटं स्वस्मान्न विदारयति । अन्यस्माद्विदारणं तु नानिष्टमित्यभिप्रेत्य कथञ्चिदित्युक्तम् ॥ **स्वरूपभेदेति** । न चैवं भेदस्य प्रतीयमानभावधर्मत्वानुपपत्तिः । अभेदेऽपि विशेषबलेन तदुपपत्तेः । तथा चाभिन्ने भेदे धर्मत्वस्य धर्मिसंबन्धाभावेऽपि संभवादापादकासिद्धिरत्रेति भावः ॥ **धर्मधर्मिभाव इति** । भेदस्य वस्तुस्वरूपत्वे तत्समनियतानेकत्वस्यापि तथात्वप्राप्तावेकत्वरूपो धर्मस्तत्र न समवेयादित्यापादने एकत्वस्यानेकत्वधर्मत्वं विरुद्धं इत्यर्थप्रतीतेः अयं कल्प आशङ्कित इति ध्येयम् ॥ **भेदेनेति** । भेदनियतानेकत्वेनेत्यर्थः ॥ **भेदस्येति** । तन्नियतानेकत्वस्येत्यर्थः ।

**श्री०** — करणसाधनतापक्षे दोषान्तरमाह **किञ्चेति** ॥ **अतो धर्मेति** । अयमर्थः । यदि विदारकात्मकभेदरूपो धर्मो धर्मिणः सकाशाद्भिन्नः स्यात्तर्हि धर्मिणि वर्तत इति स्यात् । तथा च यथा केशाद्भिन्नं लवित्रादि यत्केशादिसंबन्धि तद्विदारयति तद्वदयं भेदोऽपि स्वसंबद्धं धर्मिणं विदारयेदिति स्यात् । न चैवम् । किन्तु तस्य विदारकस्वरूपस्य भेदस्य धर्मिस्वरूपत्वाङ्गीकाराद्धर्म्यपि लवित्रादिवदन्यस्य विदारकमेव जातम् । न तु स्वात्मनः स्वयं विदारकम् । लवित्रादावदर्शनात् । तस्मात्स्वस्मिन्नपि विदारणापत्तिरिति दूषणमलग्नकमिति ॥ **भेदस्येति** । अनेकत्वैकार्थसमवायिनो भेदस्येत्यर्थः ॥ **सामानाधिकरण्याभावादिति** । तस्य भेदगर्भत्वादिति भावः ॥ **द्वित्वमिति** । घटपटनिष्ठं द्वित्वमेकं स्तम्भकुम्भनिष्ठं तु द्वित्वं द्वितीयमिति प्रयोगदर्शनाद्द्वित्वं धर्मित्वैकत्वं धर्मतया प्रतीयत इत्यर्थः । **एकत्वानेकत्वाभावेऽपि** एकत्वानेकत्वरूपगुणाभावेऽपीत्यर्थः ।

**च०** — **लवित्रादि** । छिदिक्रियासाधनं कुठारादि । **सामानाधिकरण्यम्** एकाश्रयवृत्तित्वं । **गुणादिवदिति** । गुणादीनां निर्गुणत्वाङ्गीकारादिति हृदयम् । **ब्रह्मवदिति** । निर्विशेषत्वोपगतेरिति भावः । वतिद्वयमपि षष्ठ्यन्तप्रकृतिकम् ।

**सु०— ननु भेदो वस्तुस्वरूपं चेत्प्रतियोगिनिरूप्य एव न स्यात् । स्वरूपस्य तदभावात् । अतो नायं परिहारो युज्यते । तथा च स्वस्मिन्नेव विदारणे पुनः शून्यतैवेति चेन्न । स्वतः परतोऽपि व्याप्त्यसिद्धेः । यथा (हि) परनिरूप्यमपि ब्रह्मणो जीवैक्यं ब्रह्मस्वरूपं मायावादिनाऽङ्गीकृतम् अस्माभिश्च परत्वादिकं द्रव्यस्वरूपम् तथा प्रतियोगिनिरूप्यस्यापि भेदस्य वस्तुस्वरूपत्वे को विरोधः ।**

**शे०— अयं परिहार इति ।** 'यतोऽन्यस्य प्रतियोगित्वमिष्यते, प्रतियोगिनो हि भेदोऽयमि'त्युक्तपरिहार इत्यर्थः ॥ **स्वस्मिन्नेव विदारण इति ।** अविदारणे विदारकत्वस्वभावहान्यापत्तेरिति भावः । स्वतो व्याप्त्यसिद्धिं तावदुपपादयति **यथा हीति ॥ परनिरूप्यमिति ।** ऐक्यस्य परनिरपेक्षत्वे तत्त्वंपदार्थपराणां सत्यं ज्ञानं विज्ञानमित्यादीनामैक्यमहावाक्यैकवाक्यत्वाभावेन वैयर्थ्यं स्यादिति भावः ॥ **ब्रह्मस्वरूपमिति ।** ऐक्यस्य चास्वरूपत्वे च सत्त्वेऽद्वैतहानिः । मिथ्यात्वे च तत्परस्य तत्त्वमसीत्यादेरतत्त्वावेदकत्वप्रसक्तेरिति भावः । परतो व्याप्त्यसिद्धिमुपपादयति **अस्माभिश्चेति ।** परत्वादिकमित्यतःपूर्वं परनिरूप्यमपीत्यनुवर्तते । आदिपदेनापरत्वपरिग्रहः ।

**प०— नायं परिहार इति ।** भेदस्यान्यनिरूप्यत्वेनोक्तः परिहार इत्यर्थः ॥ **तथा चेति ।** विदारकस्य भेदस्यान्यनिरूप्यत्वायोगे स्वनिरूप्यत्वावश्यंभावात्स्वस्मिन्नेव विदारणं स्यादित्यर्थः ॥

---

**परत्वादिकमिति ।** दिगादिनिरूप्यं परत्वं अपरत्वं चेत्यर्थः ।

**श्री०—** कुत इत्यत आह **स्वरूपस्येति ।** वस्तुस्वरूपस्य प्रतियोगिनिरूप्यत्वाभावेन तदात्मकभेदस्यापि प्रतियोगिनिरूप्यत्वं न स्यादतः 'प्रतियोगिनो हि भेदोऽयं न तु स्वस्यादि'ति परिहारोऽयुक्त इत्यर्थः । ततोऽपि किमित्यत आह **तथा चेति ।** तथा च 'प्रतियोगिनो ही'ति समाधेरयुक्तत्वाद्विदारकात्मनो भेदस्य धर्मिस्वरूपत्वे स्वस्मिन्नेव विदारणप्राप्त्या शून्यतापत्तिरिति भावः ॥ **स्वतः परत इति ।** स्वरीत्या शङ्कितुर्मायावादिनो रीत्या, परेषां प्रतिवादिनामस्माकं च रीत्येत्यर्थः ॥ **व्याप्तीति ।** यत्परसापेक्षं तत्परनिरपेक्षस्वरूपं न भवतीति व्याप्तिरित्यर्थः । उभयं क्रमेणोपपादयति **यथेत्यादिना ॥ परेति ।** जीवरूपप्रतियोगीत्यर्थः । **ब्रह्मस्वरूपं ।** परनिरपेक्षब्रह्मस्वरूपाभिन्नम् ॥ **परत्वेति !** अयमस्मात्पर इति प्रतियोगिसापेक्षं परत्वादिकं तन्निरपेक्षपिण्डरूपद्रव्येणाभिन्नमित्यर्थः ॥ **वस्त्विति ।** तदनिरूप्यवस्तुस्वरूपत्व इत्यर्थः ।

**च०— प्रतियोगिनिरूप्यः ।** प्रतियोगिप्रतिपत्त्यधीनप्रतिपत्तिपूर्वकः । **तदभावात् ।** तादृशप्रतिपत्तिकत्वाभावात् । **स्वतः परतः** वादिप्रतिवादिदिशा ।

सु० — **किञ्च भेदो वस्तुस्वरूपमिति ब्रुवाणो वस्तुस्वरूपस्य परनिरूप्यत्वं कथमभ्युपेयात् । एतावत्तु स्यात् । एकस्यैव वस्तुनः प्रतियोगिप्रतीतिमपेक्ष्यानपेक्ष्य च प्रतीतिः कथम् । तत्रापि न सैव प्रतीतिरुभयीं गतिमश्नुते । किन्तु प्रतीतिद्वयमेतत् । तच्चैकस्मिन्नपि वस्तुनि विशेषबलमवलम्ब्य समञ्जसं भविष्यतीति भेदस्य परप्रतियोगितोपपत्तेः कुतः स्वस्मिन्विदारणापत्तिः ।**

शे० — एवं तर्कमूलभूताया व्याप्तेरभावमभिधाय घटभेदस्य घटस्वरूपत्वं वदता भेदवद्घटस्यापि परनिरूप्यतायाः घटवच्च भेदस्याप्यपरनिरूप्यतायाश्चाभ्युपगमेन अनपेक्षवस्तुस्वरूपत्वासिद्ध्याऽऽपादकासिद्धिश्चेत्याह **किञ्चेति** ॥ **अपरनिरूप्यत्वमिति** । परनिरूप्यत्वाभावमित्यर्थः । ननु च घटस्यापरनिरूप्यत्ववत्परनिरूप्यत्वस्याभ्युपगमे तत्प्रतीतेः प्रतियोगिप्रतीत्यनपेक्षत्ववत् तत्प्रतीतिसापेक्षत्वं वाच्यम् । तथा भेदस्यापि परनिरूप्यत्ववत् अपरनिरूप्यत्वस्याप्यभ्युपगमे तत्प्रतीतेः प्रतियोगिप्रतीतिसापेक्षत्ववत् तदनपेक्षत्वं वाच्यम् । न च तद्युज्यते । एकस्य वस्तुनः प्रतियोगिप्रतीतिसापेक्षतदनपेक्षप्रतीतेर्विरुद्धत्वात् । तत्कथं घटस्य भेदस्य च प्रत्येकं परनिरूप्यत्वतदनिरूप्यत्वस्वीकार इत्याशङ्कते **एतावत्त्विति** । कथमित्यतःपरमितीति शेषः । तथा च विरोधेन परनिरूप्यत्वासंभवात् स्वस्मिन्नेव विदारणं स्यादित्याशयः । किमेकस्य वस्तुनः प्रतियोगिप्रतीतिसापेक्षतदनपेक्षप्रतीतिविषयत्वमात्रं विरुद्धं किं वा तादृशैकप्रतीतिविषयत्वम् । नाद्यः । एकस्यामेव तत्तायां संस्कारसापेक्षनिरपेक्षस्मृत्यनुभवविषयत्वस्यैकस्मिन्नेवाग्न्यादौ व्याप्त्यादिधीसापेक्षनिरपेक्षानुमितिप्रत्यक्षविषयत्वादेर्दर्शनेन तद्वदेव एकस्यैव वस्तुनोऽपि प्रतियोगिप्रतीतिसापेक्षतदनपेक्षप्रतीतिविषयत्वस्याविरुद्धत्वात् । अतो द्वितीय एवाश्रयणीयः । न चासाविहास्ति । घटस्य प्रतियोगिप्रतीतिसापेक्षानपेक्षैकप्रतीतिविषयत्वस्यास्माभिरनभ्युपगमादित्याशयेन परिहरति **तत्रापीति** । तत्रापि कुतः स्वस्मिन्विदारणापत्तिरित्यन्वयः ॥ **सैवेति** । घटप्रतीतिरित्यर्थः । घटप्रतीतिर्भेदप्रतीतिर्वा यैव प्रतियोगिप्रतीतिसापेक्षा सैव तदनपेक्षा, यैव च तदनपेक्षा सैव तदपेक्षाऽपीत्येवमित्यर्थः । येन विरोधः शङ्क्येतेति शेषः । तर्हि घटस्य भेदस्य च प्रत्येकं प्रतीतिद्वयाभावात् प्रतियोगिप्रतीतिसापेक्षानपेक्षप्रतीतिविषयत्वप्राप्तेः घटादिकमपि परनिरूप्यं भेदोऽप्यपरनिरूप्य इति रिक्तमेव वच इति पृच्छति **किन्त्विति** । भवेदेतदेवं यदि घटस्य घटत्वेन भेदस्य भेदत्वेनेत्येवं घटभेदयोरेकैकैव प्रतीति स्यात् । न चैवम् । किन्तु घटस्य घटत्वेनेव भेदत्वेनापि, भेदस्य भेदत्वेनेव घटत्वेनापीत्येवं घटभेदयोरस्ति प्रतीतिद्वयम् । तत्र घटस्य घटत्वेन प्रतीतेः प्रतियोगिप्रतीत्यनपेक्षत्वेऽपि भेदत्वेन तत्प्रतीतेस्तत्सापेक्षत्वं, भेदत्वेन तत्प्रतीतेस्तत्सापेक्षत्वेऽपि घटत्वेन तत्प्रतीतेस्तदनपेक्षत्वम् । एवं भेदस्य भेदत्वेन प्रतीतेः प्रतियोगिप्रतीत्यपेक्षत्वेऽपि घटत्वेन तत्प्रतीतेस्तदनपेक्षत्वम् । घटत्वेन भेदप्रतीतेस्तदनपेक्षत्वेऽपि भेदत्वेन तत्प्रतीतेस्तदपेक्षत्वं भविष्यतीति को विरोधः । प्रमेयत्वादिना निरपेक्षस्याप्यभावसादृश्यादेर-

भावत्वादिना सापेक्षत्वस्य स्वरूपेण निरपेक्षस्यापि दण्डादेर्ब्रह्मणश्च कारणत्वेन ज्ञानत्वेन च सापेक्षत्वस्य दर्शनात् । सप्रतियोगिकनिष्प्रतियोगिकत्वव्यवस्था तु यत् असाधारण्येन स्ववाचकपदप्रवृत्तिनिमित्तावच्छेदेन प्रतीतौ प्रतियोगिप्रतीतिसापेक्षं, तत् सप्रतियोगिकमन्यत्तु निष्प्रतियोगिकमिति युज्यते । यदि च तत्रैकस्यैवार्थस्य लघुत्वकठिनत्वशब्दोल्लेखेन निरपेक्षस्याप्यगुरुत्वाद्रवत्वशब्दोल्लेखेन सापेक्षत्ववद्ब्रह्मशब्दोल्लेखेन निरपेक्षस्याभेदशब्दोल्लेखेन सापेक्षत्वं तर्हीहापि घटशब्दोल्लेखेन निरपेक्षस्यापि भेदशब्दोल्लेखेन सापेक्षत्वं भविष्यतीति न काऽप्यनुपपत्तिरित्याशयेन परिहरति **प्रतीतिद्वयमेतदिति** । आदौ घट इति घटत्वेन प्रतीतिः, पश्चात् न पट इति पटभिन्नत्वेन प्रतीतिरिति प्रतीतिद्वयमित्यर्थ इत्यप्याहुः ।

प० — **कथमिति** । कथंशब्दानन्तरमितिशब्दोऽध्याहार्यः । पूर्वेणान्वयः । समाधत्ते **तत्रापीति** ॥ **सैवेति** । अयं घट इति प्रतीतिरित्यर्थः ॥ **उभयीमिति** । अन्यनिरूप्यत्वानिरूप्यत्वरूपाम् ।

या० — **अपरनिरूप्यत्वमिति** । परनिरूप्यत्वाभावमित्यर्थः । कथमित्यस्यानन्तरमितिशब्दोऽध्याहार्यः । तथा च विरोधेन परनिरूप्यत्वासंभवात्स्वस्मिन्नेव विदारणं स्यादित्याशयः । उत्तरमाह **तत्रापीति** । तत्रापि कुतः स्वस्मिन्विदारणापत्तिरित्यन्वयः ॥ **सैवेति** । या, अयं घट, इति प्रतीतिरित्यर्थः ॥ **प्रतीतिद्वयमिति** । आदौ घट इति घटत्वेन प्रतीतिः, पश्चान्न पट इति पटभिन्नत्वेन तस्यैव प्रतीतिरिति प्रतीतिद्वयमित्यर्थः ।

श्री० — **भेदः** परनिरूपितत्वस्वभावः । **वस्तुस्वरूपस्य** परनिरूप्यभेदाभिन्नस्य । **अपरनिरूप्यत्वं** परनिरूप्यत्वाभावम् । अन्यथा विरुद्धधर्माधिकरणत्वेन भेदस्य वस्तुस्वरूपत्वमेव न स्यादित्यर्थः । **अपेक्ष्य** भेदांशे । **अनपेक्ष्य** वस्तुस्वरूपांशे । कथमित्येतावत्स्यादित्यन्वयः । एतावदेवाशङ्कनीयं स्यादित्यर्थः । तत्रोत्तरं **तत्रापीति** ॥ **सैवेति** । एकैव भेदप्रतीतिः एकैव वस्तुप्रतीतिर्वा । **उभयीं** प्रतियोग्यादिप्रतीतिसापेक्षत्वं तदनपेक्षत्वं चेति द्वयीं गतिं नाश्नुत इत्यर्थः । **द्वयम्** अभेदेऽप्येकस्मिन्नेव वस्तुनि प्रतियोगिसापेक्षा न पट इति भेदप्रतीतिरेका, तन्निरपेक्षा अयं घट इति घटत्वेन वस्तुप्रतीतिरेकेति प्रतीतिद्वयम् । नन्वभेदादेव प्रतीतिद्वयमित्येतद्विरुद्धमित्यत आह **तच्च प्रतीतिद्वयमिति** ॥ **प्रतियोगितेति** । प्रतियोगिकत्वेत्यर्थः ।

च० — **उभयीं गतिं** । प्रतियोगिप्रतीतिनियन्त्रितत्वानियन्त्रितत्वे । **प्रतीतिद्वयं** प्रतियोगितासंसर्गावच्छिन्नकिंचिन्निष्ठप्रकारतानिरूपितभेदत्वावच्छिन्नप्रकारतानिरूपितपटत्वावच्छिन्नविशेष्यताका घटभिन्नः पट इत्याकारिकैका, अयं घट इत्याकारिका तादृशविशेष्यत्वानिरूपिकाऽपरा ।

**सु०— अस्तु वा स्वरूपविदारणम् । तथाऽपि शून्यतापादनमयुक्तमेवेत्याशयवानाह** विभागेनेति ।

**अनु०**— विभागेनाल्पतैव स्यात्कुत एव तु शून्यता ॥

**लोष्टादेः खल्ववयवविभागेन लोष्टादिविनाशे सत्यल्पपरिमाणावयवावशेषोऽवगतो, न तु सर्वशून्यता । तथा सर्वत्रापि विभागेनाल्पताऽल्पावयवावशेषतैव स्याच्छून्यता तु कुत एव स्यात् ।**

**शे०**— ननु भेदस्य स्वस्मिन्विदारकत्वाभावप्रतिपादने तत्र विभागाभावसिद्धेर्विभागेनाल्पतैव स्यादिति स्वरूपे विभागेनाल्पत्वकथनानुपपत्तिरित्याशङ्क्याङ्गीकृत्य स्वस्मिन्विदारणं शून्यत्वप्रसङ्गनिरासार्थत्वात्तस्येत्यतो नानुपपत्तिरित्याशयेनाङ्गीकारवादेनोत्तरग्रन्थं योजयति **अस्तु वेति** । ननु विभागेनाल्पतैव स्याच्छून्यता न स्यादेवेति कुतोऽवधारणमित्यतो विभागेनाल्पताया एव दृष्टत्वात् शून्यतायाश्चादृष्टत्वात्तत्सिद्धिरित्यभिप्रेत्य विभागेनाल्पत्वशून्यत्वयोर्दृष्टादृष्टत्वे दर्शयति **लोष्टादेरिति** ।

**सु०— ननु च पश्चिमेषु स्थलेषु विदारणेनाल्पाल्पतराल्पतमवस्त्ववशेषेऽप्यन्ततः कस्यचिदवयवजातस्य** शून्यतायां सर्वशून्यता स्यादित्यत आह नेति ।

**अनु०**— न शून्यानां हि संयोगाद्भावो वस्तुन इष्यते ॥

**यत्संयोगेन हि यद्वस्तूत्पन्नं तस्मिन्विदारणे सति संयोगनाशाद्वस्तुनाशानन्तरं तदवशेषो भवति । यथा तन्तुसंयोगेनोत्पन्ने पटे तन्तुविदारणसंयोगनाशक्रमेण विनष्टे तन्त्ववशेषः । एवञ्च यदि केषाञ्चित्परमाल्पानां वस्तूनां शून्यसंयोगादुत्पत्तिः स्यात्तदा विदारणे सति संयोगनाशेन कार्यनाशे शून्यावशेषः स्यात् । न चैवं प्रामाणिकैरिष्यते । अतोऽसङ्गतं सर्वशून्यतापादनमिति** । भावो जन्म ।

**शे०**— ननु 'न शून्यानां हि संयोगादि'ति शून्यसंयोगस्य वस्तूत्पादकताया अप्रामाणिकत्ववर्णनमनर्थकमित्यतो विभागेनाल्पपरिमाणावयवाव(वि)शेषाभ्युपगमेऽपि प्रसक्तस्य सर्वशून्यत्वप्रसङ्गस्य निवारणार्थत्वान्न तस्यानर्थक्यमित्यभिप्रेत्य तत्प्रसङ्गनिवारकतयोत्तरग्रन्थं योजयितुं विभागेनात्यल्पपरिमाणावयवाव(वि)शेषपक्षेऽपि शून्यत्वप्रसङ्गमुत्थापयति **नन्विति** । नन्वस्तु शून्यसंयोगेन वस्तूत्पत्तिः, तथाऽपि शून्याव(वि)शेषः कुतो, नियामकाभावादित्यप्रयोजकत्वेनैव शून्यताप्रसङ्गनिवारणसंभवात्तत्संयोगस्योत्पादकताया अप्रामाणिकत्ववर्णनमनर्थकमित्यतो नियामकं वदन् शून्याव(वि)शेषप्रसङ्गं समर्थयते **यत्संयोगेन हीति** ।

**सु०— ननु शून्यत्वं नाम नात्यन्तासत्त्वमापाद्यत्वेन विवक्षितम् । किन्तु सूक्ष्मतमत्वमेव । तच्चानिष्टमित्यत** आह विदारणेति ।

अनु०— विदारणार्थो धातुश्च विभागगुणवाचकः ॥

**स्यादेतद्यदि भेदो विदारणात्मा भवेत् । न चैवम् । प्रमाणाभावात् । अङ्गीकृत्यैव तु पूर्वः परिहारोऽभिहितः ।**

**ननूक्तमत्र भेदशब्दादेव भेदस्य विदारणात्मकत्वमवगम्यते । स हि भिदेर्धातो रूपम् । स च विदारणार्थतया व्याख्यात इति । अत्रोत्तरम् । यदा भिदिधातुर्विदारणार्थो विवक्षितस्तदा भेदशब्दो विभागाख्यगुणवाचको न त्वन्योन्याभावलक्षणभेदवाचक इति । एतदुक्तं भवति । 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः' इति वचनाद्भिदिर्विभागवचनोऽन्यत्ववचनश्च । भिन्नो घट इत्युक्ते स्फुटित इति गम्यते । भिन्नं गगनं घटादित्यन्यदिति विज्ञायते । तत्र विभागो विदारणात्मा नान्यत्वम् । तदेव चात्र प्रकृतं न विभाग इत्यन्यतालक्षणस्य भेदस्य वस्तुस्वरूपत्वे विदारणप्रसङ्गेनात्यल्पतापादनमप्यसङ्गतमेव, छलत्वादिति ।**

**ननु विभागस्यान्यत्वस्य च को विशेषो येनैवमुच्यत इति चेन्न । गुणग्रहणेनैव परिहृतत्वात् । विभागो हि गुणतया वैशेषिकादिभिरुपात्तः । अन्यता चान्योन्याभाव इति स्फुटो भेदः ।**

**शे०**— ननु 'विदारणार्थ' इत्यादिभाष्यमनर्थकम् । न च भेदशब्दस्य विभागवाचित्वाभावप्रतिपादनार्थं तदिति वाच्यम् । तद्वाचित्वेऽपि दोषाभावेन तत्प्रतिपादनस्यानर्थक्यात् । न च स्वरूपे विभागेन शून्यताप्रसङ्गनिवारणार्थं तदिति वाच्यम् । 'विभागेनाल्पतैव स्यादि'ति तत्प्रसङ्गस्य पूर्वमेव परिहृतत्वादित्यतो विभागार्थत्वे उक्तरीत्याऽत्यन्तासत्त्वरूपशून्यताप्रसङ्गानवकाशेऽपि सूक्ष्मतमत्वरूपशून्यत्वप्रसङ्गापरिहारेण तत्परिहारार्थतया विभागवाचकत्वाभाववर्णनस्य अर्थवत्त्वादित्यभिप्रेत्योक्तातिप्रसङ्गवारकतयोत्तरवाक्यं योजयितुं सूक्ष्मतमत्वप्रसङ्गमुत्थापयति **नन्विति** । येन विभागेन तददर्शनाददृष्टकल्पना प्रसज्येतेति भावः । तद्व्यतिरिक्तस्य शून्यत्वस्याभावान्न तदापादनं संभवतीति पृच्छति **किन्त्विति** । अस्त्यतिरिक्तमपि किञ्चिच्छून्यत्वमिति युक्तमेव तदापादनमिति परिहरति **सूक्ष्मेति** । न चैतदिष्टापादनमित्यतो घटादेरिदानीं स्थूलतयैव दृश्यमानत्वान्न तदित्याह **तच्चानिष्टमिति** । ननु कथमस्याक्षेपस्यानेन वाक्येन परिहारः । अत्र विभागवाचकताया एवोक्तत्वात् । तस्याश्चोक्तप्रसङ्गोपो-

द्बलकत्वादित्यतोऽस्य साक्षात्तत्परिहारकत्वाभावेऽपि परम्परया तत्रोपयोगान्नानुपपत्तिरिति भावेन परम्परयोपयोगं दर्शयितुमुक्ताक्षेपपरिहारकं तावदादौ पूरयति **स्यादेतदिति ।** यदि प्रमाणाभावेन भेदो न विदारणात्मा, कथं तर्हि 'यतोऽन्यस्य प्रतियोगित्वमिष्यते । विभागेनाल्पतैव स्यादि'त्यादिः प्राचीनः परिहार इत्यत आह **अङ्गीकृत्यैवेति ।** तर्हि प्रमाणाभावेनैव भेदस्य विभागत्वाभावसिद्धेः किं भाष्येणेत्यतो भेदशब्दस्य विभागवाचकत्वाभावे, हेतोः प्रमाणाभावस्यासिद्धिशङ्कापरिहारार्थत्वेनोपयोगान्न तदानर्थक्यमित्याशयेन तत्परतया भाष्यं योजयति **ननूक्तमत्रेति ॥ व्याख्यात इतीति ।** पाणिनिनेति शेषः । ननु 'यदा भिदिधातुर्विदारणार्थो विवक्षित' इत्यत्र यदेति व्यर्थम् । अर्थान्तराभावेन व्यावर्त्याभावात् । भावे वा विदारण इति विशेषोक्त्यनुपपत्तेः । उपपत्तौ वा तत्परित्यागेनार्थान्तरग्रहणे नियामकाभावादित्यतोऽर्थान्तरप्रदर्शनपूर्वकं विशेषोक्तिं घटयन्नेवार्थान्तरत्वोपपादनपूर्वकं तत्फलं दर्शयति **एतदुक्तं भवतीति ॥** कुतो भिदेरुभयवचनत्वमित्यतः प्रयोगप्रत्यययोरविशेषादित्यभिप्रेत्योभयत्र प्रयोगप्रत्ययौ क्रमेण दर्शयति **भिन्न इत्यादिना ॥ तदेव चेति ।** अन्यत्वमेव वस्तुस्वरूपतया ग्रन्थे प्रतिपाद्यतया प्रकृतमित्यर्थः । इतीत्यस्यैतदिति पूर्वेण संबन्धः ।

प०— **तच्चानिष्टमिति** । महत्त्वेनोपलभ्यमानस्य सूक्ष्मत्वापत्तेरनिष्टत्वादिति भावः ॥ **व्याख्यात इति ।** वैयाकरणैरिति भावः ।

या०— **तच्चानिष्टमिति ।** घटादेरिदानीं स्थूलतयैव दृश्यमानत्वादिति भावः ॥ **विदारणात्मतयेति ।** विदारणार्थतयेत्यर्थः ॥ **व्याख्यातः** पाणिनिनेति शेषः ।

श्री०— **अङ्गीकृत्य** भेदस्य विदारणात्मत्वमिति शेषः । **स च** धातुः । **व्याख्यातो** 'भिदिर् विदारणे' इति पाणिनिना । **भेदशब्दो** भिद्धातुनिष्पन्नः ॥ **विभागाख्येति ।** विदारणात्मको यो विभागस्तद्रूपगुणेत्यर्थः । **गुणशब्दो**परि भारः । **स्फुटितः** कपालद्वयविभागवान् ॥ **एतदेव चेति ।** अन्यत्वमन्योन्याभावस्यैव धर्मिस्वरूपत्वाभिप्रायेण भेदो वस्तुस्वरूपमित्युक्ते विभागरूपार्थं गृहीत्वा तद्दूषणं छलोत्तरमिति ज्ञेयम् ।

सु०— **यस्तु गुणादिप्रक्रियां न मायावादी मन्यते । तं बोधयितुमाह** अविदारणेऽपीति ।

अनु०— अविदारणेऽपि ह्यास्यस्य भिन्नावोष्ठौ च तस्य च ॥

**आस्यस्येत्यास्यसंबन्धिनोरोष्ठयोर्ग्रहणम् ।** तस्य च **मायावादिन एव । यदा हि मायावादी निरुत्तरतया तूष्णीमास्ते तदा तदीययोरोष्ठयोर्विदारणलक्षणविभागाभावेऽप्योष्ठौ भिन्नावन्योन्याभावलक्षणभेदवन्तौ भवत एव । यदभावे च यदस्ति तत्ततोऽन्यदिति च**

प्रसिद्धमेव । अतो विभागाद्भेदोऽर्थान्तरमेवेति ज्ञायते । तस्य चेत्यनेन नातःपरं स्वरूपभेदे काचिदनुपपत्तिः संभाविताऽस्तीति सूचितम् । ननु कथं नास्ति । विशेषणविशेष्यभावानुपपत्त्यादेरपरिहृतत्वादिति चेन्न । स्वरूपत्वेऽपि विशेषबलेन विशेषणविशेष्यभावसंबन्धावभासोपपत्तेः । अन्यथाऽऽनन्दं ब्रह्म आनन्दं ब्रह्मण इत्यादेरनुपपत्तिप्रसङ्गात् । संशयविपर्ययानुपपत्तिरपि नास्ति । सविशेषत्वेन ज्ञाताज्ञातत्वोपपत्तेः । अन्यथाऽऽत्मस्वरूपे स्वयंप्रकाशमाने तत्स्वरूपमात्राणामद्वितीयत्वानन्दत्वादीनामपि प्रकाशनियमान्न जातु कस्यचित्संशयविपर्ययौ स्याताम् । अविद्यावशात्तत्र तथेति चेत् । अत्रापि साद(श्यादित्र)श्यवशात्तथेति सन्तोष्टव्यम् ।

शे०— ननु यस्य कस्यचिदोष्ठयोरविदारणोक्त्याऽपि विभागाभावेऽपि भेदप्राप्त्या भेदस्य विभागादर्थान्तरत्वसिद्धिसंभवेन तस्य चेति मायावादिन एवोष्ठयोरविदारणोक्तेर्न विशेषप्रयोजनं किञ्चिदित्यतस्तदीयोष्ठयोरविदारणोक्तेस्तस्य दूषणोद्भावकत्वासामर्थ्यसूचनद्वारा भेदस्य वस्तुस्वरूपतायामनुपपत्त्यभावसूचकत्वान्नानर्थक्यमित्यभिप्रेत्य विशेषोक्तेः प्रयोजनमाह **तस्य चेत्यनेनेति** ॥ **विशेषणविशेष्यभावानुपपत्त्यादेरिति** । विशेषणविशेष्यभावाद्यनुपपत्तेरित्यर्थः । आदिपदेन संबन्धपरिग्रहः । ततश्च विशेषणविशेष्यभावानुपपत्तेर्घटस्य भेद इति संबन्धानुपपत्तेश्चापरिहृतत्वादित्यर्थः । **विशेषणेति** । विशेषणविशेष्यभावश्च संबन्धश्च तयोरवभासोपपत्तेरित्यर्थः ॥ **न जात्विति** । उपलक्षणं चैतत् । उपदेशानर्थक्यं च स्यादित्यपि द्रष्टव्यम् । न चात्मस्वरूपज्ञानेनैक्यस्य स्वतो भानेऽप्यज्ञानविरोधिन्या वृत्तेरभावात्संशयाद्युपपत्तिरिति वाच्यम् । प्रत्यगर्थवदेव वृत्तेरभावेऽपि स्वतो भानेनैक्ये विप्रतिपत्त्याद्ययोगात् । अन्यथा प्रत्यगर्थेऽपि तत्प्रसङ्गादिति भावः । ऐक्यस्यात्मस्वरूपत्वेऽप्यविद्यावृतत्वादात्मप्रकाशेऽप्यप्रकाशोपपत्तेः संशयाद्युपपत्तिरिति शङ्कते **अविद्येति** । तर्हि भेदस्य वस्तुस्वरूपत्वेऽपि सादृश्यादिदोषवशाद्वस्तुप्रकाशेऽप्यप्रकाशोपपत्त्या विरोधिज्ञानाभावादेव संशयादिकं भविष्यतीत्याह **अत्रापीति** ।

श्री० — **नातः परमिति** । यो मायावादी अस्माभिः पराजितः सन्निरुत्तरतया तूष्णीमास्ते, तस्यैवौष्ठाविति तस्य निरुत्तरत्वकथनेन स्वरूपभेदेऽनुपपत्तिर्नास्तीति सूचितम् । ओष्ठयोः संयुक्तत्वेनानुपपत्तिकथने तस्यासामर्थ्यादिति भावः । **अन्यथा** विशेषणविशेष्ययोः स्वरूपत्वेऽप्यभिन्नत्वेऽपि विशेषणविशेष्यभावसंबन्धावभासस्य विशेषबलेनानिर्वाह इत्यर्थः । **संशयविपर्ययौ** अद्वितीयत्वादिधर्मसमूह इति शेषः । विशेषबलेन ज्ञाताज्ञातत्वे अत्रोक्त्वा संशयाद्युपपत्तिर्न क्रियते । किन्तु ब्रह्मणि प्रतीतेऽपि तदभिन्नानामप्यद्वितीयत्वादीनामविद्यारूपदोषवशादप्रतीत्या संशयाद्युपपत्तेरिति यद्युच्यते तर्हि इतरभेदस्य घटादिस्वरूपत्वेन धर्मिणि इतरासङ्कीर्णतया प्राग्गृह्यमाणत्वेन भेदाग्रहरूपनिमित्ताभावेन संशायाद्यभावेऽपि सादृश्यादिरूपदोषेण संभवत्येवेत्याह **अविद्येत्यादिना** । तत्र धर्मिस्वरूपान्तः ।

सु०— यच्चाद्वैतपर्यवसानमुक्तम् । तत्कुत इति वक्तव्यम् । यदि मन्येत यथा हि लम्बकर्ण आगतो, नीलमानीयतामित्यादौ परिकरवतो यद्भवति तत्परिकरस्यापि, तथा प्रतियोगिघटितस्य भेदस्य धर्मिस्वरूपत्वे प्रतियोगिनोऽपि त(त्र निम)न्निमज्जनं स्यादिति तत्र किं संभावनयेदमुच्यते उत व्याप्त्या । नाद्यः । प्रशिथिलमूलत्वात् । न द्वितीयः । चित्रगुरानीयतां काशीनिवासी समागत इत्यादौ तदभावात् । पारमार्थिकीं दृष्टिमवलम्बमानस्य तदपि असिद्धमिति चेत् । अहो पक्षपातोऽस्य यत्परस्यानिष्टं प्रसञ्जयन्व्याप्तिग्रहणाय लौकिकं दृष्टान्तं बहुमन्यते व्यभिचारे तु तत्रोदास्ते । परसिद्धेन परस्यैवानिष्टापादनमिति चेत् । तर्हि मूलशैथिल्यमपि परः स्वसिद्धेन प्रतिपत्स्यते । वैचित्र्यं किन्निमित्तमिति चेत् । व्यावर्तकत्वमात्रेण प्रतियोगिनामुपयोगादिति ब्रूमः ।

शे०— **तदभावादिति** । परिकरवतः क्रियान्वयेऽपि परिकरस्य क्रियान्वयाभावादित्यर्थः ॥ **पारमार्थिकीमिति** । तथा च तत्र परिकरवत क्रियान्वयाभावेन हेतोरेवानागमनान्नान्वयव्यभिचार इति भावः ॥ **तत्रोदास्त इति** । तत्प्रमेयानङ्गीकारित्वमेव तत्रोदासीनत्वमिति भावः ॥ **परसिद्धेनैवेति** । ततश्च परस्यानिष्टप्रसञ्जनार्थं व्याप्तिग्रहणाय लौकिकदृष्टान्तस्याप्यबहुमानान्न पक्षपात इति भावः । ननु चित्रगुन्यायविषयत्वमेव भेदस्य कुतोऽङ्गीकार्यं, लम्बकर्णन्यायविषयत्वस्यापि संभवात् । ततश्च भेदस्य वस्तुस्वरूपत्वे प्रतियोगिनोऽपि तत्स्वरूपत्वं भविष्यतीति सुहृद्भावेन पृच्छति **वैचित्र्यमिति** । भेदस्य लम्बकर्णन्यायविषयत्वं किन्निमित्तमित्यर्थः । चित्रगुरानीयतामित्यादाविव भेदे प्रतियोगिनामुपलक्षणतया व्यवार्तकत्वमात्रं, न कार्यान्वयित्वरूपं विशेषणत्वमपि । ततश्चोपलक्षणत्वमेव तन्न्यायविषयत्वे निमित्तमित्याशयेन परिहरति **व्यावर्तकत्वेति** ।

प०— **तदप्यसिद्धमितीति** । चित्रगुरानीयतामित्यादौ परिकरहीनस्यवानयनमित्येतदसिद्धमित्यर्थः ॥ **वैचित्र्ये किं निमित्तमिति** । लम्बकर्ण अनीयतामित्येतद्वैलक्षण्यं प्रकृतस्य सप्रतियोगिकस्य भेदस्येत्यर्थः । उपलक्षणत्वेन प्रतियोगिनो व्यावर्तकत्वादिति भावेनाह **व्यावर्तकत्वमात्रेणेति** । विवृतमेतत्सम्यङ् न्यायामृते द्वितीयपरिच्छेदे विशेष्यभेदखण्डनोद्धारवादे मायावाद्युक्तभेदखण्डनोद्धारे ॥ **समवायनिरासः** ॥

या०— **परः** सिद्धान्ती । **वैचित्र्यं किंनिमित्तमिति** । प्रतियोगिघटितस्य भेदस्य लम्बकर्णाद्युदाहरणवैचित्र्यं किंनिमित्तमित्यर्थः । अत्र किंशब्द आक्षेपे । ननु न परिकरवतो यद्भवति

तत्परिकरस्यापि भवतीति व्याप्तिरत्राभिप्रेता, येनोक्तव्यभिचारः स्यात्किन्तु विशिष्टस्य यद्भवति तद्विशेषणस्यापि भवतीत्येव । लम्बकर्ण आगत इत्यादौ तथा दर्शनात् । प्रतियोगिघटितभेदस्य च तद्वैचित्र्ये निमित्ताभावादतस्तस्य धर्मिस्वरूपत्वे प्रतियोगिनोऽपि तत्स्यादित्यापादनं सुस्थमेवेत्याशयेन शङ्कते **वैचित्र्यमिति** । प्रतियोगिघटितस्य भेदस्य लम्बकर्णादिवैचित्र्यं किन्निमित्तमित्यर्थः । किंशब्द आक्षेपे ॥ **व्यावर्तकत्वमात्रेणेति** । चित्रगुरानीयतामित्यादाविव प्रतियोगिनां भेद उपलक्षणतया व्यावर्तकत्वमात्रं, न कार्यान्वयित्वरूपंवि शेषणत्वमपि । ततश्चोपलक्षणत्वमेव वैचित्र्ये निमित्तमित्यापादका-सिद्धिरिति भावः ।

श्री०— **प्रशिथिलेति** । संभावनामात्रस्यासाधकत्वेन साधकप्रमाणभूतायाश्च व्याप्तेस्तर्के अभावेन प्रशिथिलमूलत्वं तर्कस्येत्यर्थः । **तदभावात्** परिकरवतो यद्भवति तत्परिकरस्यापि भवतीति व्याप्तेरभावा-दित्यर्थः । **तदपि** व्यभिचारस्थलभूतमुदाहरणमपि । **दृष्टान्तं** लम्बकर्णमानयेत्यादिकम् । **तत्र** धर्मिणि **तत्र** दृष्टान्ते । **लौकिको** दृष्टान्तो मया न स्वीक्रियते । परिकरवतो यद्भवतीत्यादिव्याप्तेर्लम्बकर्णादि-दृष्टान्ते भवद्भिरङ्गीकारात्तन्न्यायेन भेदस्य धर्मिस्वरूपत्वेऽप्यापादनं क्रियत इत्याशङ्कते **परसिद्धेनेति** । तर्हि धर्मिभेदस्य धर्मिस्वरूपत्वे प्रतियोगिनोऽपि धर्मिणि निमज्जनं स्यादिति यन्मायावादिनाऽऽपादनं क्रियते तस्मिंस्तर्के व्याप्तिग्रहणाय स्वरीत्या दृष्टान्ते तस्य पारमार्थिकस्याभावेन व्याप्त्यभावात्संभावना-मात्रस्य चासाधकत्वात्प्रशिथिलमूलत्वं स्वतर्कस्य परो मायावादी स्वसिद्धान्तसिद्धेन दृष्टान्ताभावप्रयुक्त-व्याप्त्यभावादिना प्रतिपत्स्यत इत्याह **तर्हीति** ।

च०— **परिकरवतः** विशेषणवतः । **परिकरस्य** विशेषणस्य । **प्रतियोगिघटितस्य** स्वनिरूपितानुयोगितासंसर्गेण प्रतियोगिविशेषितस्य । **प्रशिथिलमूलत्वात्** । व्याप्तिविकलत्वात् । **तदभावात्** स्वामिविप्रांशे भासमानयोर्गोकाश्योरानयनागमनान्वयाभावात् । **वैचित्र्यं किन्निमि-मिति** । लम्बकर्ण आगतो नीलमानीयतामित्यादौ विशेषणीभूतानां विशेष्यान्वय्यन्वयिता, घटभिन्नः पट इत्यादौ भेदविशेषणतापन्नघटे भेदान्वयिघटान्वयिता तादात्म्येन नेति वैलक्षण्यं किं निबन्धनमित्यर्थः । **व्यावर्तकत्वमात्रेणेति** । चित्रगोस्वामिन्यतादृशाद्व्यावृत्तत्वसाधने चित्रगव्युपलक्षितस्वामितैव हेतुर्न तु तद्विशेषिता सा, तावतैव स्वामितेतरव्यावर्तनेन सामञ्जस्यादिति यथा तद्वत् । पटधर्मिकघटभेदे दण्डा-द्यावृत्तत्वसाधनदशायां निरूपितत्वसंबन्धेन घटोपलक्षितानुयोगिताशालित्वस्यैव हेतुतोपेयते, न तु तद्विशे-षिततच्छालित्वस्य, तावतैव दण्डादिनिरूपितानुयोगिताव्यावर्तनेन सामञ्जस्यात् । इत्थं चोदाहरणानां वैचित्री दर्शितोपलक्षणत्वकार्यान्वयित्वरूपविशेषणत्वविवक्षातद्राहित्यकृतैवेति भावः ।

सु०— तदेवं स्वपरमतावलोकानपेक्षयैव दोषोद्भावनादुपेक्षणमेवोन्मत्तवाक्यवन्मायावादस्योचितम् । किन्निराकरणेनेत्याशयवानुपसंहरति अत इति ।

अनु०— अत उन्मत्तवाक्यत्वान्मायावादो ह्युपेक्षितः ॥

नन्वेवंविधं मतं सिद्धान्तविरुद्धत्वात्सूत्रकृता कुतोऽत्र न निराकृतमित्येतदनेन परिह्रियते । उपेक्षितः सूत्रकारेणेति शेषः ॥

शे०— उपेक्षित इति । मुख्यत(मुखत)· इति शेषः । न्यायसाम्येन निराकरणस्य 'नासत' इत्यादिना करणादिति द्रष्टव्यम् ।

सु०— एवं समवायं निराकृत्येदानीं संबन्धप्रसङ्गेन संबन्धिनामपि गुणादीनां प्रसक्तत्वादीश्वरगुणसंख्याविप्रतिपत्तिं निराकरोति न चेति ।

अनु०— न चामन्दसदानन्दस्यन्द्यनन्तगुणार्णवः ॥
ईश्वरोऽष्टगुणत्वेन प्रमेयोऽप्रमितत्वतः ॥

ईश्वरोऽष्टगुणत्वेन अष्टावेव गुणा अस्य सन्तीत्येवंरूपेण, न प्रमेयो न प्रतिपत्तव्यः । कुतः अप्रमितत्वतः अष्टगुणत्वे प्रमाणाभावात् । किन्त्वमन्दसदानन्दस्यन्द्यनन्तगुणार्णवः प्रमेयः । अर्णव इवार्णवः, क्षीरार्णवः सुधास्यन्दी भवति । अयश्चानल्पविदोषानन्दसुधास्यन्दी । सोऽनन्ता गुणाः शुभपदार्थाश्चिन्तामणिप्रभृतयोऽस्मिन्नित्यनन्तगुणः । अयमप्यानन्दादयोऽनन्ता गुणा अस्मिन्नित्यनन्तगुणः । अमन्दसदानन्दस्यन्दी चासावनन्तगुणश्चासावर्णवश्चेति विग्रहः ।

शे०— ननु न चामन्देतीश्वरगुणविप्रतिपत्तिनिराकरणस्य प्रकृतेन सङ्गत्यभावादनुपपत्तिमाशङ्क्य तस्य प्रकृतेन सङ्गत्यन्तराभावेऽपि प्रसङ्गलक्षणसङ्गतिसंभवान्न तदनुपपत्तिरित्यभिप्रेत्य वृत्तानुवादपूर्वकं प्रसङ्गसङ्गतिं दर्शयन्नुक्तविप्रतिपत्तिनिरासकतयोत्तरग्रन्थं योजयति एवमित्यादिना । अष्टगुणत्वमात्रं न विरोधिकोटि । अनन्तगुणेऽष्टगुणत्वस्यापि सद्भावात् । अन्यथाऽनन्तगुणत्वानुपपत्तेरित्यतो विरोधिकोटितानिर्वाहाय सावधारणतयाऽनूद्य व्याचष्टे अष्टगुणत्वेनेति । अष्टगुणत्वेनाप्रमितत्वत इत्यप्यन्वयमभिप्रेत्य तल्लब्धहेत्वनुवादोऽयम् 'अष्टगुणत्व' इति । मूलेऽमन्देत्यादेरानर्थक्यमाशङ्क्य प्रतिपत्तव्यत्वप्रकारोपदर्शनार्थत्वान्न तद्वैयर्थ्यमित्यभिप्रेत्य तदुपदर्शननिवर्त्यामाकाङ्क्षामुत्थापयति किन्त्विति । न तावन्न

प्रतिपत्तव्य एवेति युक्तिमत् तथा सति शास्त्रानर्थक्यापातात् । नापि रूपान्तरेण । तदभावादिति प्रश्नार्थः । रूपान्तरेण प्रतिपत्तव्यमिति द्वितीयमङ्गीकृत्य तदाह **अमन्देति** । 'ते चानन्ता हि संख्यया । अतोऽनन्तगुणो विष्णुरि'ति भागवततात्पर्यं मनसि निधायानन्तगुण इत्येतद्याचष्टे **अनन्ता इति** ।

**श्री०** — **स** समुद्रः ॥

**च०** — **संबन्धप्रसङ्गेन** समवायप्रसक्त्या ॥ **संबन्धिनाम्** समवायप्रतियोगिनां । **प्रसक्तत्वात्** स्मृतत्वात् ।

**सु०** — **अष्टगुणत्ववदनन्तगुणत्वेऽपीश्वरस्य प्रमाणं नास्तीत्यत आह** मयीति ।

**अनु०** — मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ॥

अनन्तगुणमाहात्म्यशक्तिज्ञानमहार्णवः ॥

नारायणः परोऽशेषचेतनेभ्यः परं पदम् ॥

इत्यादिवेदतद्वाक्यैरनन्तैश्चावसीयते ॥

अनन्तगुणता विष्णोः

**अनन्ता असंख्याता गुणा यस्यासावनन्तगुणः । गुणतोऽनन्त इति गुणानां प्रत्येकमनवधिकत्वमनन्तावान्तरविशेषवत्त्वं चाभिप्रेयते । अनन्तविग्रह इत्यन्तं भगवद्वाक्यम् । उत्तरं वेदवाक्यम् । गुणमाहात्म्येति सामान्यविशेषाभ्यामुक्तम् ।** माहात्म्यं **परिमाणातिशयः । परं पदमित्युद्दिश्यान्यदुच्यत इति न लिङ्गव्यत्ययदोषः ।**

**नन्वेतानि वचनान्युपचरितार्थानि किन्न स्युरित्यत आह** कथमेवेति ।

कथमेव ह्यपोद्यते ॥

**बाधकवशाद्धि मुख्यार्थोऽपोद्यते । न चात्र तदस्तीत्यतोऽनन्तगुणता विष्णोः कथमेवापोद्यते ।**

**शे०** — 'प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते । अनन्तत्वं तु गुणतो गुणतोऽनन्त एव चे'ति तात्पर्यं मनसि निधाय गुणतोऽनन्त इत्येतदनूद्य व्याख्याति **गुणतोऽनन्त इतीति** । 'यद्यनन्तविशेषाश्च तज्ज्ञानादेर्निवारिता' इत्युत्तरानुव्याख्यानानुसारेण प्रत्येकमसङ्ख्यातविशेषत्वमपि तदर्थ इत्याह **अनन्तावान्तरविशेषवत्त्वं चेति** । इत्यादिवेदतद्वाक्यैरित्यनुरोधेन प्रसक्तां मय्यनन्त इत्यादेर्वेदवाक्यतामनन्तगुणेत्यस्य च भगवद्वाक्यतां परिहरति **अनन्तेति** ॥ **सामान्यविशेषाभ्यामुक्तमिति** । अन्यथा माहात्म्यादेरपि गुणत्वाद्गुणपदेनैव गृहीतत्वात्पुनस्तद्ग्रहणे पौनरुक्त्यप्रसङ्ग इति भावः । ननु 'नारायणो-

अशेषचेतनेभ्यः पर' इतिवत्परं पदमित्यस्यापि विधेयत्वादनियतलिङ्गविधेयशब्दानां चोद्देश्यलिङ्गता-नियमात्पुलिङ्गेन भाव्यं, तत्कथं परं पदमिति नपुंसकम् । न च पदशब्दस्य नित्यनपुंसकत्वादनियतलिङ्गत्व-स्यैवासिद्धेर्युक्तं नपुंसकत्वमिति वाच्यम् । लिङ्गानुशासने पुलिङ्गाधिकारे 'नाडयपजनोपपदानि व्रणाङ्ग-पदानी'ति सूत्रवृत्तौ नाडीव्रणः अपाङ्गः जनपद इत्युदाहृत्य व्रणादीनामुभयलिङ्गत्वात्पुलिङ्गार्थोऽयमारम्भ इत्युक्तत्वेन पदशब्दस्योभयलिङ्गत्वस्थित्या नियतलिङ्गत्वायोगादित्यतो भवेदेवं यद्युक्तरीत्योद्देश्यविधेयभावः अत्राभिमतः स्यान्न चैवं, किन्तु परं पदमित्युद्दिश्यान्यस्यैवात्र विधानम् । तच्च तत्पूर्वग्रन्थे किं पदं परमिति जिज्ञासयैव सिद्धमिति नानुपपत्तिरित्याह **परं पदमित्युद्दिश्येति** ॥ **नन्विति** । मय्यनन्त इत्यादीनि वाक्यानि वाचं धेनुमुपासीतेत्यादिवदुपासनार्थानि । उपासनायाः कर्तव्यत्वेऽनन्तगुणतायां च तात्पर्ये वाक्यभेदप्रसङ्गात्कथमेतद्वाक्यबलेन विष्णोरनन्तगुणत्वसिद्धिरिति भावः ॥ **बाधकवशाद्धीति** । अन्यथा ज्ञानानन्दादिबोधकवाक्यानामप्युक्तरीत्या उपचरितार्थत्वप्रसङ्गेन ज्ञानादेरप्यसिद्धिप्रसङ्ग इति भावः ॥ **न चात्रेति** । अयोग्यस्य शङ्कितुमशक्यत्वाद्योग्यस्य चानुपलब्धिबाधितत्वादिति भावः ।

प० षष्ठस्कन्धे 'प्रत्येक(तो)शो गुणानां तु निस्सीमत्वमुदीर्यते । यदानन्त्यं तु गुणतस्ते चानन्ता हि संख्यया । अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव चे'ति चतुर्थाध्यायतात्पर्यानुरोधादाह **प्रत्येकमनवधिकत्वमिति** । 'यद्यनन्तविशेषाश्चे'त्युत्तरानुव्याख्यानानुरोधेनाह **अनन्तावान्तरविशेषवत्त्वं चेति** । प्रत्येकमित्यनुषङ्गः । भगवदिति कृष्णवाक्यम् । तेन मयीति व्याख्यातम् । परिमाणाति-शयमाहात्म्यस्य शक्तिज्ञानादेश्च गुणत्वात्कथं पृथगुक्तिरित्यत आह **सामान्येति** । **पद्यत इति** यौगिक-तया प्राप्यार्थकत्वे नारायणः परः पद इति विशेष्यनिघ्नतया भाव्यमित्यत आह **परं पदमित्युद्दिश्येति** ॥ **अन्यदिति** । विशेषणान्तरमित्यर्थः ।

या० — **अनन्तावान्तरविशेषवत्वं चेति** । तथा च प्रत्येकमप्यसंख्याततत्वरूपमेवानन्त्यमत्र विवक्षितमिति भावः । यद्यपि भागवततात्पर्ये गुणतोऽनन्त इत्यस्य प्रत्येकमनवधिकत्वमेकमेवार्थतयोक्तं तथाऽपि 'यद्यनन्तविशेषाश्च तज्ज्ञानादेरि'त्युत्तरानुव्याख्यानानुसारेण गुणानां प्रत्येकमसंख्यातविशेषवत्व-मपि तदर्थतयाऽत्रोक्तमिति ज्ञातव्यम् ॥ **न लिङ्गव्यत्ययदोष इति** । अन्यथा परं पदमित्यस्य विधेय-त्वेऽनियतलिङ्गस्य विधेयस्योद्देश्यलिङ्गतानियमेन पुलिङ्गेन भाव्यमिति भावः । न च पदशब्दस्य नित्यनपुंसकत्वादनियतलिङ्गत्वमेव नास्तीति वाच्यम् । लिङ्गानुशासने पुलिङ्गाधिकारे 'नाडयपजनोपप-दानि व्रणाङ्गपदानी'त्यत्र नाडीव्रणोऽपाङ्गो जनपद इत्युदाहृत्य व्रणादीनामुभयलिङ्गत्वात्पुलिङ्गार्थोऽय-मारम्भ इत्युक्तत्वेन पदशब्दस्योभयलिङ्गत्वावगमात् । अत एव पदशब्दस्य नियतलिङ्गत्वेनैव मूलसा-मञ्जस्यात्किमर्थमिदमुद्देश्यविधेयभावव्यत्यासेन समाधानमिति चोद्यानवकाश इति ध्येयम् ।

**च०**— षष्ठस्कंधे 'प्रत्येकतो गुणानां तु निस्सीमत्वमुदीर्यते । यदानन्त्यं तु गुणतस्तदात्वाश्रितसंख्यता । अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव चे'ति तुरीयाध्यायतात्पर्यमनुरुन्धानो व्याकुरुते **अनन्तावान्तरविशेषवत्त्वं चेति ॥ न लिङ्गव्यत्ययदोष इति ।** लिङ्गानुशासने 'नाड्यपजनोपपदानीति' सूत्रकृता नाडीव्रणः अपाङ्गः जनपद इत्युदाहृत्य व्रणादीनामुभयलिङ्गत्वेन (?) भवितव्यमित्याशङ्कासनायेत्थं समाहितमित्यवसेयम् ।

**सु०— यच्च वैशेषिकादिभिरीश्वरज्ञानेच्छाप्रयत्नानामखण्डत्वमुक्तं तदप्यसत् । 'अनन्तं गुणत'इति प्रत्येकं गुणानामनन्तविशेषवत्त्वस्यागमसिद्धत्वात् । तदनङ्गीकारे बाधकं** चाह यदीति ।

**अनु०**— यद्यनन्तविशेषाश्च तज्ज्ञानादेर्निवारिताः ॥
कथं तत्तद्विषयता सार्वज्ञार्थं विधीयते ।
औपाधिकविशेषस्तु पूर्वमेव निराकृतः ॥

तत्तद्विषयता **घटादिविषयता,** विधीयते **अस्तित्वेनाङ्गीक्रियते । मा भूत्तत्तद्विषयत्वमित्यत उक्तं** सार्वज्ञार्थमिति । **उपलक्षणं चैतत् । सर्वकर्तृत्वाद्यर्थं चेत्यपि द्रष्टव्यम् । अत्रानन्तविशेषा इति यथागमसिद्धोक्तिः । वस्तुतस्तु यदि ईश्वरज्ञानादि निर्विशेषं स्यात्तदा तत्तद्विषयत्वं न स्यात् । तदा च तस्य सार्वज्ञादिकं न स्यात् । सर्वविषयज्ञानवान्हि सर्वज्ञो नाम । तथा सर्वकार्योत्पत्तिविषयेच्छाप्रयत्नवान्सर्वकर्ता । सर्वकार्यविनाशविषयेच्छादिमांश्च सर्वसंहर्ता । अङ्गीकृतं च सार्वज्ञादि परेण परमेश्वरस्य । अतस्तदर्थं ज्ञानादेस्तत्तद्विषयतया भाव्यम् । कथं च तथा सति निर्विशेषत्वमिति ।**

**शे०— अखण्डत्वमिति ।** निर्विशेषत्वमित्यर्थः । सर्वकर्तृत्वाद्यर्थं चेत्यत्रादिपदेन सर्वसंहर्तृत्वपरिग्रहः ॥ **तथा सतीति ।** तत्तद्विषयत्वाभ्युपगम इत्यर्थः ।

**प०— सर्वकर्तृत्वाद्यर्थमिति ।** संहर्तृत्वमादिपदार्थः । अखण्डत्वखण्डनाय सविशेषत्वमात्रे वाच्ये सति यद्यनन्तविशेषाश्चेति किमर्थमुक्तमित्यत आह **अत्रानन्तेति ।** 'अनन्तगुणत' इति यथास्थितागमसिद्धस्योक्तिरित्यर्थः ।

**या०—** सर्वकर्तृत्वाद्यर्थं चेत्यत्रादिपदेन सर्वसंहर्तृत्वं ग्राह्यम् ।

सु० — एतेनैतदपि निरस्तम्। यदाहुः । 'अनित्यं हि ज्ञानादि कर्मकारकतया विषयसहितत्वमपेक्षेत । नित्यस्य तु किं विषयेणे'ति । विषयाणां चानन्त्यादनन्तविशेषतासिद्धिः ।

शे० — **एतेनेति** । सर्वविषयकज्ञानवत्त्वरूपसार्वज्ञस्य सर्वविषयकत्वाभावेऽसंभवोपपादकेन सार्वज्ञार्थमिति विशेषणेनेत्यर्थः ॥ **अनित्यं हीति** । कार्यं हीत्यर्थः ॥ **नित्यस्येति** । अकार्यस्येत्यर्थः । अयम्भावः । कारकमुत्पादकमिति च पर्यायावेतौ । कार्यमेव चोत्पादकमपेक्षते न त्वकार्यमपि । अकार्यं चेश्वरज्ञानमिति न तस्य कर्मकारकतया विषयापेक्षत्वमिति । नोत्पादकमेव कारकमिति नियमोऽस्ति, तथा सत्यस्ति गगनमित्यादौ गगनादीनामकारकत्वप्रसङ्गात् । तत्सत्ताया अकार्यत्वात् । किन्तु धात्वर्थाश्रयः कर्ता तद्विषयः कर्मेत्यादि । तत्र क्रियायाः कर्माद्यन्वितत्वानन्वितत्वे प्रति तदाकाङ्क्षानाकाङ्क्षे एव प्रयोजके, न तु कार्यत्वाकार्यत्वे । तथा सति कस्यचिद्धात्वर्थस्य कर्माद्यन्वितत्वं कस्यचिन्नेति व्यवस्थाऽभावप्रसङ्गात् । ततश्चेश्वरज्ञानस्याकार्यत्वेऽपि जानातेः सकर्मकक्रियावचनत्वेन कर्मान्वयप्रयोजकतदाकाङ्क्षासद्भावात्कर्मसहितत्वापेक्षाऽस्त्येवेत्यङ्गीकार्यम् । अन्यथेश्वरज्ञानस्य विषयानन्वितत्वेन सर्वविषयकज्ञानवत्त्वाभावप्रसङ्गेन सार्वज्ञानुपपत्तिप्रसङ्गादिति निरासप्रकारः । अस्त्वीश्वरज्ञानस्य तत्तद्विषयत्वं तावताऽपि कथमनन्तावान्तरविशेषवत्त्वं तस्येत्यत आह **विषयणां चेति** ।

प० — **एतेनेति** । विपक्षे सार्वज्ञ्यसर्वकर्तृत्वादिभङ्गापत्तिबाधककथनेनेत्यर्थः । नन्वेतावता सविशेषत्वमस्तु । अनन्तविशेषाः कुत इत्यत आह **विषयाणां चेति** ।

च० — **अपेक्षेत इति** । उत्पत्त्यादाविति पूरणीयम् ।

सु० — स्यादेतत् । निर्विशेषमेवेश्वरज्ञानं ज्ञप्तिरूपम् । तत्तु तैस्तैर्घटाद्युपाधिभिस्तत्तद्विषयमिति व्यपदिश्यते । एवमखण्डैव तस्येच्छाऽस्त्वित्येवमाकारा । तथाऽपि तैस्तैः सृष्ट्याद्युपाधिभिः सिसृक्षा सञ्जिहीर्षेत्याद्युच्यते । तथा प्रयत्नोऽपि । अतः स्वतो विशेषाभावेऽप्यौपाधिकविशेषवशात्तत्तद्विषयता सार्वज्ञादिकं च युक्तमित्यत आह औपाधिकेति ।

औपाधिकोऽपि विशेषोऽस्ति न वा । अस्ति चेत्कथं निर्विशेषत्वम् । न चेत्पुनः सार्वज्ञाद्यभाव इत्यादिपूर्वोक्तन्यायेनैव निरस्तमित्यर्थः । किञ्चोपाधिर्ज्ञानादिसंबद्धो विशेषमापादयेदसंबद्धो वा । आद्ये संबन्धो विषयविषयिभावातिरिक्तो नास्तीति पूर्वमेव तद्विषयतैष्टव्या । द्वितीयेऽतिप्रसङ्गः । अपि चास्त्वित्येवमाकारेणैवेच्छादिना सृष्ट्यादिकं भवति उत सृष्ट्यादिकं भवत्वित्येवमाकारेण । नाद्यः । अतिप्रसङ्गात् । द्वितीये स्वतः सविशेषत्वमित्येषा दिक् ।

शे० — **तथा प्रयत्नोऽपीति** । निर्विशेष एवेश्वरप्रयत्नः कृतिरूपस्तथाऽपि सृष्ट्याद्युपाधिभिस्तत्तद्विषय इति व्यपदिश्यत इत्यर्थः । तद्विषयतेत्यतः परं तत्प्रयुक्तमिति शेषः ॥ **आद्य इति** । अद्रव्यत्वान्न संयोगो, अन्यगुणस्यान्येनासमवायादीश्वरज्ञानस्य घटादिना समवायोऽपीति भावः । अस्तु तर्हि विषयविषयिभाव एव तयोः संबन्ध इत्यतस्तथा सति विशेषापादनप्रयोजकसंबन्धस्य तदापादनात्पूर्वभावित्वनियमात्पूर्वमेव सतस्तद्विषयत्वस्योपाधिसंबन्धाप्रयुक्तत्वान्नौपाधिकत्वमिति परिहरति **इति पूर्वमेवेति** ॥ **अतिप्रसङ्ग इति** । तथा सति काश्मीरस्थमहारजनाद्युपाधेरपि केरलदेशवर्तिवाससो विशेषकत्वं स्यादित्यतिप्रसङ्ग इत्यर्थः ॥ **अतिप्रसङ्गादिति** । प्रलयकारणीभूताया अस्त्वित्येवमाकारेच्छायाः सृष्टिकाले, सृष्टिकारणीभूतेच्छायाः प्रलयकालेऽपि सद्भावेन सृष्टिकाले प्रलयः प्रलयकाले सृष्टिः स्यादित्यतिप्रसङ्गादित्यर्थः ॥ **द्वितीये स्वतः सविशेषत्वमिति** । असम्बद्धस्य सृष्ट्याद्युपाधेरतिप्रसङ्गेन विशेषानापादकत्वात्सम्बद्धस्यैव तदापादकत्वं वाच्यम् । संबन्धश्च विषयविषयिभावातिरिक्तो नास्तीति पूर्वमेव तद्विषयतैष्टव्येति पूर्वोकरीत्येत्यर्थः । किञ्च ज्ञानादावागन्तुकोपाध्यधीनविशेषाङ्गीकारेऽन्योन्याश्रयश्च । सृष्ट्यादिकमन्तरेण सृष्ट्यादीच्छानुपपत्तिः सृष्ट्यादीच्छामन्तरेण सृष्ट्यादेरनुपपत्तिरित्यन्योन्याश्रयापत्त्या सृष्ट्याद्युपाधिनिबन्धनत्वानुपपत्त्या स्वाभाविकत्वावश्यंभावादिति भावः । **स्यादेतत्** । सृष्ट्यादिकं प्रति कारणीभूतसृष्ट्यादीच्छाया न स्वकार्यसृष्ट्याद्युपाधिनिबन्धनत्वं ब्रूमः, किन्त्वन्यत्तन्निबन्धनत्वमेवेति कथमन्योन्याश्रय इत्यतः तर्हि चक्रकादिकं स्यादित्याशयेनाह **एषा दिगिति** ।

प० — **पूर्वमेवेति** । उपाधिसंबन्धात्पूर्वमित्यर्थः ॥ **अतिप्रसङ्ग इति** । घटार्थप्रयत्नेन शरावस्य, शरावार्थयत्नेन घटस्य जन्मेत्याद्यतिप्रसङ्ग इत्यर्थः । **द्वितीये स्वत इति** । उपाधिसंबन्धात्प्रागेव सृष्ट्यादिविषयकत्वस्य वाच्यत्वात् । सृष्ट्याद्युपाधिसंबन्धेनैव सृष्ट्यादिकं भवत्वित्याकारकत्वेनात्माश्रयः । किंच स्वत एव सिसृक्षुत्वादिविशेषस्येच्छायामभावे सृष्टिर्भवत्वितीच्छा संहारोस्त्वित्येवमाकारापि कुतो न स्यात् । तथा च सृष्टिदशायां संहारः संहारदशायां सृष्टिरित्यपि स्यादित्याद्यभिप्रेत्याह **एषा दिगिति** । यद्वा यत्त्वीश्वरे ज्ञानचिकीर्षाप्रयत्नानां नित्यत्वमशरीरेपि ज्ञानेच्छादिकं तदप्येवं लोके ज्ञानादेरनित्यशरीरोपाधिकत्वाल्पविषयत्वपूर्वपूर्वहेतुकत्वादेर्दर्शनादिहापि तथाऽनुमानेन निरसनीयमित्याह **एषा दिगिति** ॥ **ईशज्ञानादेः सविषयत्वोक्तिः** ॥

या० — **द्वितीये स्वतः सविशेषत्वमिति** । असंबद्धस्य सृष्ट्याद्युपाधेरतिप्रसङ्गेन विशेषानापादकत्वात्संबद्धस्यैव तदापादकत्वं वाच्यम् । संबन्धश्च विषयिविषयभावातिरिक्तो नास्तीति पूर्वमेव

तद्विषयत्वेष्टव्येत्युक्तरीत्येत्यर्थः । किञ्च ज्ञानादावागन्तुकोपाध्यधीनविशेषाङ्गीकारे आगन्तुकोपाधिसिद्धौ ज्ञानादौ विशेषसिद्धिः तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयापत्तिः । तदिदमाह **एषा दिगिति** ।

**च०— अखण्डा** निर्भेदा । **एष्टव्या** अङ्गीकर्तव्या ।

**सु०— वैशेषिकादायः केचिदीश्वरज्ञानं स्वप्रकाशं न भवतीत्याहुः । तानपाकरोति** स्वप्रकाशत्वमपीति ।

**अनु०—** स्वप्रकाशत्वमपि तु यैर्ज्ञानस्य निवारितम् ॥
कथं सर्वज्ञता तस्य

**यैस्त्विति संबन्धः । केचिद्वैशेषिकादायः स्वप्रकाशतामङ्गीकुर्वन्तीत्येतत्सूचयितुं तुशब्दः ।** ज्ञानस्य **ईश्वरज्ञानस्य । तेषां पक्ष इति शेषः ।** तस्य **ईश्वरस्य । कथं स्वप्रकाशत्वाभावे सर्वज्ञताऽभाव इत्यत आह** स्वेति ।

स्वज्ञानाधिगमं विना ॥

**स्वज्ञानाधिगमाभावादित्यर्थः । एकमेव हीश्वरज्ञानं तच्च स्वव्यतिरिक्तमेव विषयीकरोति न तु स्वरूपमिति कथमीश्वरः सर्वज्ञः स्यादिति ।**

---

**च०— स्वप्रकाशताम्** । स्वविषयकप्रकाशतादात्म्यम् ।

**सु०— स्वप्रकाशज्ञानाभावेऽपीश्वरस्य सार्वज्ञसंभवं शङ्कते** ज्ञानमिति ।

**अनु०—** ज्ञानं विश्वाधिगं त्वेकं तज्ज्ञानविषयं परम् ॥
इति ज्ञानद्वयेनैव सर्ववित्परमेश्वरः ॥
इति चेत्

विश्वाधिगं **स्वव्यतिरिक्तसमस्तविषयम्** । तज्ज्ञानं **विषयो यस्य तत्तथोक्तम् । स्यादयं दोषो यदीश्वरस्यैकमेव ज्ञानं स्यान्न चैवम् । द्वे खल्वीश्वरज्ञाने । तत्रैकं स्वव्यतिरिक्तद्वितीयज्ञानसहितसर्वविषयम् । द्वितीयं तु तज्ज्ञानविषयीकारि । एवञ्च ज्ञानस्य स्वविषयत्वाभावेऽपीश्वरस्यैवंविधज्ञानद्वयेनैव सर्ववित्त्वमुपपद्यत इति ।**

**तथाऽपीश्वरस्यासार्वज्ञ्यं तज्ज्ञानस्य वा स्वप्रकाशत्वं दुष्परिहरमित्याशयवानुत्तरमाह** एष एवेति ।

॥ एष एवार्थस्तज्ज्ञानावसितो यदि ॥

स्वप्रकाशत्वमेव स्यात्

**आस्तां तावत्सजातीयात्मविशेषगुणयौगपद्यानुपपत्तिः । ज्ञानद्वयवानहं, ज्ञानद्वयेन सर्वज्ञोऽस्मि, इदं मे ज्ञानमेतज्ज्ञानविषयं एतच्चैतद्विषयमित्यादिरेष एवार्थ ईश्वरेण ज्ञायते न वा । नेति पक्षे तस्य सार्वज्ञं न स्यात् । आद्ये किमेतयोरन्यतरेणोत ज्ञानान्तरेण ।**

**प्रथमस्येदमुत्तरम् ॥ एष एवार्थस्तयोरन्यतरेण ज्ञानेनावसितो विषयीकृतो यदि तदा तस्य ज्ञानस्य स्वप्रकाशत्वं स्यादेवेति । तत्कथमित्यत** आह ज्ञानं हीति ।

ज्ञानं ह्येतद्विशेषणम् ।

**यद्यप्येतज्ज्ञानं न निष्कृष्टं स्वस्य स्वविषयतामापद्यते । तथाऽपि ज्ञानविषयस्यैतस्य ज्ञानद्वयवानहमित्यादेरर्थस्य विशेषणं भवत्येव । तथा च विशिष्टार्थविषयत्वे विशेषणभूतस्वविषयत्वमवर्जनीयमेव । न हि दण्डिसाक्षात्कारे दण्डो न स्फुरतीति युक्तमिति ।**

**द्वितीये दोषमाह** ज्ञानान्तरेणेति ।

ज्ञानान्तरेण चेदत्र भवेदेवानवस्थितिः ।

ज्ञानान्तरेण **तृतीयेन ज्ञानेन । यद्येषोऽर्थो विषयीक्रियते । अत्र अस्मिन्पक्षे** अनवस्थितिः **ज्ञानद्वयवानीश्वर इति नियमाभावो भवेत् ।**

**यस्तु ज्ञानत्रयवानिति नियमं मन्यते स प्रष्टव्यः । किं ज्ञानत्रयवानहमस्मीत्यादिकमर्थमीश्वरो वेत्ति न वेति । द्वितीये तु पुनरसार्वज्ञम् । आद्ये किमेतत्त्रयान्यतमेन, उत चतुर्थेन । नाद्यः स्वप्रकाशतापत्तेः । द्वितीये पुनरनवस्थैव । एवं ज्ञानान्तरपरम्पराभ्युपगमव्यसनं दुर्वारं स्यात् ।**

**शे०—** एवं विधज्ञानद्वयेनैव सर्वविस्त्वमुपपद्यत इति मूलपाठः स्पष्टएव । क्वचित्सर्वविषयत्वमुपपाद्यत इति पाठः । तत्र तज्ज्ञानस्येत्यनुवर्तनाद्विवक्षितसिद्धिः ॥ **अनवस्थैवेति** । ज्ञानत्रयवानेवेश्वर इति व्यवस्था न स्यादेवेत्यर्थः । यस्तु ज्ञानचतुष्टयवानीश्वर इति नियमं मन्यते स प्रष्टव्यः । किं ज्ञानचतुष्टयवानहमस्मीत्यादिकमर्थमीश्वरो वेत्ति न वेति । द्वितीये पुनरसार्वज्ञम् । आद्ये किमेतच्चतुष्टयान्यतमेनोत पञ्चमेन । नाद्यः । स्वप्रकाशत्वापत्तेः । द्वितीये ज्ञानचतुष्टयवानीश्वर इति नियमानुपपत्तिरेवेत्याशयेनाह **एवं ज्ञानान्तरेति** प्रसिद्धानवस्था तूत्पत्तिज्ञप्त्यप्रतिबन्धकत्वादत्र नाभिप्रेतेति ज्ञातव्यमित्याहुः ।

**प०—** पदार्थमुक्त्वा तात्पर्यमाह **स्यादयं दोष इति** । एवशब्दतात्पर्यमाह **आस्तां तावदिति ॥ इदं मे ज्ञानमिति** । द्वितीयज्ञानं प्रथमज्ञानविषयम् । **एतच्च** प्रथमं ज्ञानं च, **एतद्विषयं**

स्वातिरिक्तकृत्स्नविषयमित्यर्थः ॥ **इत्यादिरिति** । ज्ञानद्वयस्य यौगपद्यं विषयभेदमित्यादिरादिपदार्थः ॥ ( निष्कृष्टमिति ? ) तावता कथमनवस्थेत्याह **एवं ज्ञानान्तरेति** ।

या०— **द्वितीये पुनरनवस्थैवेति** । ज्ञानत्रयवानीश्वर इति नियमाभावो भवेदित्यर्थः । एवं ज्ञानचतुष्टयादिनियमाभ्युपगमेऽपि पञ्चमादिज्ञानाभ्युपगमप्राप्त्या नियमाभाव एवापादनीय इत्याह **एवं ज्ञानान्तरेति** । प्रसिद्धानवस्था तूत्पत्तिज्ञप्त्यप्रतिबन्धकत्वादत्र नाभिप्रेतेति ज्ञातव्यम् ।

सु०— **नन्वनन्तानीश्वरज्ञानान्यभ्युपगच्छामि को दोष इति चेन्न । कल्पनागौरवाद्वरमेकस्यैव ज्ञानस्य स्वप्रकाशत्वाभ्युपगम इत्याशयवानुपसंहरति** स्वप्रकाशत्वमिति ।

अनु०— स्वप्रकाशत्वमेतस्माद्दुर्निवारं समापतेत् ॥

**ननु ज्ञानं न स्वप्रकाशं वस्तुत्वादित्यादेः विरुद्धं (दि) स्वप्रकाशत्वं कथमङ्गीकर्तुमुचितमिति चेत् (न) । यत् वस्तु, न तत्स्वप्रकाशमिति व्याप्तिज्ञानं स्वात्मानं न विषयीकरोति चेन्न सर्वोपसंहारवद्व्याप्तिसिद्धिः । विषयीकरणे तु स्वप्रकाशत्वं दुर्निवारमित्याशयवतो वोपसंहारः ।**

शे०— वस्तुत्वादेरित्यादिपदेन जडत्वादिपरिग्रहः ।

प०— उत्पत्त्याद्यप्रतिबन्धकत्वान्न दोष इति शङ्कते ॥ **नन्वनन्तानीति** । अप्रामाणिकत्वमेव दोष इत्याह **कल्पनेति** ।

सु०— **यदुक्तमीश्वरोऽनन्तगुण इति तदनुपपन्नम् । चतुर्विंशतेरधिकानां गुणानामभावात् । तत्रापि केषाञ्चिदीश्वरेऽनुपपत्तेः । तस्मादुपपन्नैरष्टभिरेव गुणैरुपपन्नो भगवानिति । मैवम् । शौर्यौदार्यप्रागल्भ्यप्रभृतीनां गुणानां भावात् । परेण स्वीकृतेष्वपि केषाञ्चिदनुपपत्त्यभावाच्च । तथा हि । सुखं तावदीश्वरस्य कुतो नाङ्गीकर्तव्यम् । ईश्वरः सुखरहितो दुःखरहितत्वाद्घटवत् । सुखवांश्चेद् दुःखवान्प्रसज्यते देवदत्तवदिति विपक्षे बाधकोपपन्नादनुमानादिति चेत् । तत्रानुग्राहकस्य तर्कस्य तावद्दूषणमाह** सुखवानिति ।

अनु०— सुखवान्दुःखवांश्च स्यादिति व्याप्तिश्च नो भवेत् ॥

शे०— **केषाञ्चिदिति** । सुखदुःखादीनामित्यर्थः । अयम्भावः । नित्ययथार्थज्ञानस्य मोहासंभवात्तत्प्रभवद्वेषस्याप्यभावः । तदभावे च तन्मूलयोर्धर्माधर्मयोरभावः । इच्छाया अपि मोहाभावेनारागरूपत्वान्न धर्मादिकारणत्वम् । धर्माद्यभावे च तत्कार्ययोः सुखदुःखयोरप्यभाव एव । नित्यज्ञानत्वादेव स्मृत्यसंभवेन कल्पकाभावाद्भावनाया अप्यसंभव एवेति । परेण स्वीकृतेष्वपि केषाञ्चिदि-

त्यस्यानन्तरमङ्गीकार इति शेषः ॥ **वक्ष्यमाणरीत्येति** । ईश्वरस्य सुखवत्तायाः श्रुतिसिद्धत्वेन सुखवान्नेति विपर्यये पर्यवसानस्य श्रुतिबाधितत्वेनानुपपत्तेरिति भावः ।

**प०— उपपन्नैरिति** । उपपत्तिसिद्धैरेभिरष्टभिरेवेत्यर्थः । उपपत्तिश्च पूर्वपक्षोपन्यासावसर एवोक्तेति भावः । शौर्यादिर्गुणत्वे विप्रतिपन्नं प्रत्याह **परेण स्वीकृतेष्विति** । गुणत्वेनाङ्गीकृतेषु मध्ये केषांचित्सुखादीनामङ्गीकारेऽनुपपत्त्यभावाच्चेत्यर्थः ॥ **वक्ष्यमाणरीत्येति** । सुखमीश्वरे प्रामाणिकमिति वक्ष्यमाणरीत्येत्यर्थः ।

**या०** – परेण स्वीकृतेष्वपि केषाञ्चिदित्यस्यानन्तरमङ्गीकार इति शेषः ॥

**च०— प्रसज्येत इति** । सुखवत्त्वापादककदुःखवत्त्वापाद्यकापत्तिविशेषितादनुमानादित्यर्थः । एवम् 'अनुग्राहकं तर्कं निराकृत्ये'त्यवधिकः 'सुखित्वमापद्येते'तितर्कनिरासकग्रन्थः ।

**सु०— कथं व्याप्त्यभाव इत्यत आह** निर्दुःखत्वमिति ।

**अनु०—** निर्दुःखत्वं महानन्दः श्रुत्यैवेशस्य भण्यते ॥

**यद्यपि सुखित्वं दुःखित्वेन सहचरितं देवदत्तादावुपलब्धम् । तथाऽपीश्वरे निर्दुःखेऽपि वर्तमानं व्यभिचारित्वाद्व्याप्तिविकलं भवति । व्याप्त्या विना प्रसञ्जने चातिप्रसङ्गः ।**

---

**नन्विदमयुक्तम् । आपादनस्थले व्याप्तिभङ्गाङ्गीकारे प्रसङ्गमात्रोच्छेदापत्तेः । न च वाच्यं प्राक् प्रसञ्जनाद्व्याप्तिग्रहणवेलायामेवेदं व्याप्तिभङ्गोद्भावनमिति । सर्वत्राप्येवं वक्तुं शक्यत्वेनोक्तदोषानिस्तारादिति । मैवम् । स्वाभ्युपगममात्रेणापादनस्थले व्याप्तिभङ्गाभिधाने सत्येवमेतत् । न चैवं प्रकृते । श्रुतिबलेनैवेश्वरे सुखित्वस्य दुःखित्व( स्य )व्यभिचारोपपादनात् । तदिदमुक्तं** श्रुत्यैव भण्यत इति । **प्रत्येकं संबन्धादेकवचनम् ।**

**काऽसौ श्रुतिरित्यतोऽर्थतस्तामुदाहरति** य इति ।

योऽशनायापिपासे च शोकादींश्चातिवर्तते ॥

आनन्दं ब्रह्मणो विद्वान्विपाप्मेत्यादिका च सा ॥

**अनेन 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येती'ति श्रुतिमुपादत्ते । विपाप्मेत्यनेन 'य आत्माऽपहतपाप्मे'त्यादिश्रुतिम् ।** सा **निर्दुःखत्वाद्यभिधात्री ।**

**शे०— अतिप्रसङ्ग इति** । शब्दो यद्यनित्यः स्यात्तर्हि सावयवः स्यादित्यादिप्रसञ्जनस्यापि तर्कत्वं स्यादित्यतिप्रसङ्ग इत्यर्थः । ननु निर्दुःखत्वमहानन्दयोरीश्वरे सत्त्वोक्त्यैव व्याप्तिभङ्गसिद्धेः किं

तस्य श्रुतिसिद्धत्वाभिधानेनेत्यत आपादनस्थले व्याप्तिभङ्गस्य दूषणतोपपादनार्थत्वान्न तदानर्थक्यमिति भावेनापादनस्थले तद्भङ्गदूषणत्वानुपपत्तिशङ्कामुत्थापयति **नन्विति** ॥ **प्रसङ्गमात्रोच्छेदापत्तेरिति** । यदि निर्वह्निः स्यात्तर्हि निर्धूमः स्यादिति तर्कमूलभूताया यत्र निर्वह्नित्वं तत्र निर्धूमत्वमिति व्याप्तेरापादनविषये पर्वते, सत्यपि निर्वह्नित्वे, निर्धूमत्वाभावेन तद्वैकल्यस्य वक्तुं शक्यत्वादिति भावः ॥ **उक्तदोषेति** । प्रसङ्गमात्रोच्छेदापत्तिरूपोक्तदोषानिस्तारादित्यर्थः ॥ **प्रत्येकं संबन्धादिति** । निर्दुःखत्वं भण्यत इति, आनन्दो भण्यत इति प्रत्येकं संबन्धाद्भण्यत इत्येकवचनमुपपन्नमिति भावः ।

**प०** — स्पष्टार्थत्वात्तात्पर्यमेवाह **यद्यपि सुखित्वमिति** ।

**या०** — श्रुत्यैवेत्येवकाराभिप्रायमाह **स्वाभ्युपगममात्रेणेति** । **प्रत्येकमिति** । अन्यथा भण्येते इति स्यादिति भावः ।

**सु०** — **नन्वानन्दश्रुतेर्दुःखाभावविषयत्वोपपत्तेर्न श्रुत्यवष्टम्भेन प्रसङ्गमूलभूतव्याप्तिभङ्गो वक्तुं शक्यत इत्यतोऽङ्गीकृत्य तावत्सोपाधिकत्वमाह** ईश्वरस्येति ।

**अनु०** — ईश्वरस्य तथेष्टत्वं दुःखित्वोपाधिरित्यपि ॥
उक्ते किमुत्तरं ब्रूयात् श्रुत्यनादरतत्परः ॥

तथेष्टत्वं **दुःखी भवत्वितीष्टत्वम्** । दुःखित्वोपाधिः **दुःखित्वप्रयोजकम्** । **अपिपदेनाधर्मादिमत्त्वं समुच्चिनोति** । अनादरो **विना बाधकेन प्रतीतार्थपरित्यागः । मा भूत्तावत् श्रुत्यवष्टम्भेन व्याप्तिभङ्गः, सोपाधिकतया तु भविष्यति । सोपाधिकसंबन्धस्य व्यभिचारनियमादिति** ।

**शे०** — **अङ्गीकृत्येति** । आनन्दश्रुतेर्दुःखाभावपरत्वमङ्गीकृत्येत्यर्थः । एहदर्शनमात्रेणेत्यादिनाऽऽनन्दश्रुतेर्दुःखाभावपरत्वस्योत्तरत्र दूषणात्तावच्छब्दः । ननु तथाऽपि नन्वानन्दश्रुतिरित्युत्थापितशङ्कायाः कः परिहार इत्यतोऽभिप्रायमाह **मा भूदिति** । इतीत्यतः परमाशय इति शेषः ।

**प०** — तात्पर्यमाह **मा भूदिति** । भविष्यति व्याप्तिभङ्ग इत्यनुषङ्गः ।

**सु०** — **यः सुखी स दुःखी भवत्वितीश्वरेच्छाविषय एवेति नियमान्नायमुपाधिरित्यत आह न चेति** ।

**अनु०** — न चात्मदुःखितेच्छा स्यादत एन्निवार्यते ॥

**ईश्वरस्य हि 'आनन्दं ब्रह्मणो विद्वानि'त्यादिश्रुतेः सुखित्वेऽपि नोपाधिमत्त्वम् । कस्याप्यात्मदुःखितेच्छाऽभावादत एतदुपाधेर्व्याप्याभिमतव्यापकत्वं निवार्यते । यद्यप्ययं नियमो न दर्शनमात्रेण सिध्यति । अतिप्रसङ्गात् । नियामकं तु नास्तीति वक्तुं शक्यते । तथाऽपि श्रुत्यर्थपरित्यागं वारयितुं प्रसङ्गापादनायेदमुदितमिति द्रष्टव्यम् । भवेदेतद्यद्यानन्दश्रुतिः**

**सुखवादिनी स्यान्न चैतदस्ति । तस्या दुःखाभावपरत्वादिति चेत् । किं बाधकादियं श्रुतिः स्वार्थात्प्रच्याव्यते उतैवमेव । न तावद्द्वितीयः । दुःखाभावश्रुतेरप्यन्यथयितुं शक्यत्वेन तर्कस्येष्टापत्तितापत्तेः । आद्ये न तावत्प्रत्यक्षमागमो वा बाधकोऽस्ति । ततः सुखित्वे दुःखित्वप्रसङ्गो वा निर्दुःखत्वानुमानं वा बाधकमिति वाच्यम् । तदुभयमपि व्याप्तिबलप्रवृत्तं वा स्यात्सहदर्शनमात्रबलप्रवृत्तं वा । नाद्यः इतरेतराश्रयत्वप्रसङ्गात् । सिद्धे हि श्रुतेः स्वार्थप्रच्यावने तर्कानुमानयोर्व्याप्तिसिद्धिस्तत्सिद्धौ च श्रुतेः स्वार्थात्प्रच्यावनसिद्धिरिति ।**

**शे०— इति नियमादिति ।** तथा च साधनव्यापकत्वान्नायमुपाधिरिति भावः ॥ **अतिप्रसङ्गादिति ।** तथा सति धूमादीनामग्न्यादिभिरिवाग्न्यादीनामपि धूमादिभिः साहित्यदर्शनमात्रस्य सत्त्वेन व्याप्तिसिद्धिप्रसङ्गादित्यर्थः ॥ **नियामकं तु नास्तीति ।** साधनाभिमतस्य साध्याभिमतव्यतिरेकेणासत्त्वेऽक्षजाद्यन्यतमसद्भावरूपं 'यद्वैवाव्यतिरेकेऽस्य ह्यक्षजं वाऽऽगमो भवेत् । तन्निर्धारितयुक्तिर्वा व्याप्तिः सैवापरा न ही'त्यादिपूर्वग्रन्थोक्तं नास्तीत्यर्थः ॥ **प्रसङ्गापादनायेति ।** प्रसङ्गोत्थापनायेत्यर्थः ॥ **इदमुदितमिति ।** श्रुत्यवष्टम्भेन व्याप्याभिमताव्यापकत्वमुक्तमित्यर्थः ।

**प०— व्याप्याभिमतेति ।** व्याप्यत्वेन यदभिमतं तद्व्यापकत्वं निवार्येत इत्यर्थः । तथा च नोपाधिलक्षणाक्रान्तमेवेदमिति भाव. ॥ **अयं नियम इति ।** सुखवांश्चेद्दुःखवानपि प्रसज्येतेत्ययं नियमो न देवदत्तादौ सहदर्शनमात्रेणेत्यर्थः । **नियामकं त्विति ।** नियमग्राहकानुकूलतर्कादिकमित्यर्थः ॥ **इदमुदितमिति ।** श्रुत्यवलम्बेनेश्वर एव व्यभिचारोपपादनद्वारा व्याप्तिभङ्गोपपादनपरं निर्दुःखत्वं महानन्द इत्यादिकमुदितमित्यर्थः । श्रुत्यर्थपरित्यागं वारयितुं प्रसङ्गापादनायेत्युक्तम् । तत्कथमित्यतो व्यनक्ति **भवेदेतदित्यादिसिद्धिरितीत्यन्तेन ॥ तर्कस्येति ।** सुखी चेद्दुःख्यपि स्यादिति तर्कस्येत्यर्थः ।

**या०— नियामकं तु नास्तीति ।** व्याप्तिग्राहकानुकूलतर्कादिकं नास्तीत्यर्थः ॥ **प्रसङ्गापादनायेति ।** सङ्गत्युत्पादनायेत्यर्थः ॥ **इदमुदितमिति ।** आनन्दं ब्रह्मण इत्यादि श्रुत्यवष्टम्भेन व्याप्याभिमतसुखित्वस्य दुःखित्वेनेश्वरेष्टत्वरूपोपाधेरव्यापकत्वमुदितमित्यर्थः ।

**श्री०— नियमादिति ।** तथा च साधनव्यापकतेति भावः ॥ **अयं नियम इति ।** यः सुखी स दुःखी भवत्वितीश्वरेच्छाविषय एवेति साध्योपाध्योर्व्याप्यव्यापकभावरूपनियम इत्यर्थः ॥ **अतिप्रसङ्गादिति ।** वह्नावपि धूमेन सहदर्शनसद्भावादिति भावः । **नियामकं** साध्यव्यापकता-

निश्चायकम् ॥ **वक्तुमिति** । तथा च न साध्यव्यापकता वक्तुं शक्येत्यर्थः ॥ **श्रुत्यर्थपरित्यागमिति** । आनन्दश्रुतेरानन्दार्थकत्वमनङ्गीकृत्य यद्दुःखाभावविषयकत्वमुक्तं तद्वारयितुमित्यर्थः ॥ **इष्टापत्तितेति** । यदीश्वरः सुखी स्यात्तर्हि दुःखी स्यादिति तर्के इष्टापत्तिः । तस्यापि दुःखाङ्गीकारात् । न च निर्दुःखश्रुतिविरोधः । तस्या दुःखाभावरूपार्थपरत्वं विनाऽऽनन्दादिसद्भावरूपार्थान्तरेऽपि योजयितुं शक्यत्वादिति भावः ॥ **अनुमानं वेति** । ईश्वरो न सुखी निर्दुःखत्वाद्घटवदित्यनुमानमित्यर्थः ॥ **तत्सिद्धौ चेति** । तद्बाधादित्यर्थः ।

**सु० — नन्वेतद्भवतामपि समानम् । श्रुतेः स्वार्थपरत्वे तर्कानुमानयोर्व्याप्तिभङ्गः, सति च तस्मिन् श्रुतेः स्वार्थपरत्वमिति । मैवम् । यतः प्रतीतार्थपरित्याग एव बाधकमपेक्षते । न स्वार्थपरत्वं, बाधकाभावम् । तस्य प्रतीत्यैव सिद्धत्वात् । द्वितीये त्वतिप्रसङ्गः स्यादित्याह** सहेति ।

**अनु० —** सहदर्शनमात्रेण श्रुतीनामपलापकः ॥
यज्ञादेरपि पापस्य हेतुत्वं हिंसया युतेः ॥
नानुमाति कथं

**आपाद्येन साध्येन वा सहदर्शनं यस्यापादकस्य साधनस्य वा तत्सहदर्शनम् । तन्मात्रेण** श्रुतीनाम् **ईश्वरस्यानन्दवादिनीनाम्** अपलापकः **स्वार्थप्रच्यावकः । यज्ञादेरित्यादिपदेन गोभ्यो यवसदानं गृह्यते** । युतेः **योगात् । यदि सहदर्शनमात्रेणानन्दश्रुत्यर्थापलापः क्रियेत । तदा या हिंसा सा पापहेतुरिति सहदर्शनेन ज्योतिष्टोमादिश्रुत्यर्थापलापोऽपि क्रियतामविशेषादिति भावः ।**

**शे० — यवसदानमिति** । इदमपि तृणच्छेदरूपहिंसायुतमेवेति नासिद्धिरिति ध्येयम् ।

**प० — बाधकाभावमिति** । अपेक्षत इत्यर्थः ॥ **ज्योतिष्टोमादीति** । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिश्रुतेर्योऽर्थः ज्योतिष्टोमयागः सुखसाधनमिति, तदपलापोऽपि स्यात् । ज्योतिष्टोमादेरग्नीषोमीयादिपशुहिंसायुतत्वेन पापहेतुत्वानुमानसंभवेनापि सुखहेतुत्वायोगादिति भावः ।

**या० — यवसदानमिति** । इदमपि तृणच्छेदरूपहिंसायुतमेवातो नासिद्धिरिति द्रष्टव्यम् ।

**श्री० — सति च तस्मिन्निति** । तद्बाधाभावादित्यर्थः ॥ स्वार्थपरत्वमिति प्रथमा, बाधकाभावमिति द्वितीया, अपेक्षत इति संबन्धः । **तस्य** स्वार्थपरत्वस्य ।

**सु० — नन्वविशेषोऽसिद्धः । हिंसात्वपापसाधनत्वयोः साहचर्ये निषिद्धत्वस्योपाधेः विद्यमानत्वात् । न च सुखित्वदुःखित्वसंबन्धे कश्चिदुपाधिरस्ति । ईश्वरस्य तथेष्टत्वमुपाधिस्त्विदानीमपि गह(नं प्रवि)ननिविष्ट इत्याशङ्कते** तत्रेति ।

**अनु० —** तत्र यद्युपाधिर्निषिद्धता ॥

**अस्तीत्युच्यत इति शेषः ।**

**शे० — इदानीमिति ।** श्रुतेः स्वार्थपरत्वव्युत्पादनावसर इत्यर्थः । ततश्च श्रुतेः स्वार्थपरत्वे सिद्धे तद्बलेनोपाधेः साधनाव्यापकत्वसिद्धिस्तत्सिद्धौ च सोपाधिकत्वेनानुमानस्याभासतया श्रुत्यबाधकत्वात् श्रुतेः स्वार्थपरत्वसिद्धिरित्यन्योन्याश्रय इति भावः ।

**प० — गहनं प्रविष्ट इति ।** सुखित्वे दुःखित्वेनेच्छाविषय एवेत्याद्युक्त्या विप्रतिपत्तेरिति भावः ।

**सु० — केयं निषिद्धता नाम । अकर्तव्यतया श्रुत्युक्तत्वमिति चेत् । केयमकर्तव्यताऽपि । करणानर्हता वा कर्तुरनिष्टहेतुना वा । नाद्यः । ब्रह्महिंसाया अपि क्रियमाणत्वात् । द्वितीयेऽपि किं साक्षादनिष्टसाधनत्वं परंपरया वा । नाद्यः । हिंसानन्तरमेव दुःखोत्पादादर्शनात् । द्वितीये तु पापसाधनतयोक्तत्वमुपाधिरित्युक्तं स्यात् । एवञ्चात्राप्युपाधिसद्भावादविशेष एवेति परिहरति** अदुःखित्वेनेति ।

**अनु० —** अदुःखित्वेन चानुक्तिः कथं नोपाधितां व्रजेत् ॥

**'अदुःखित्वेनानुक्तिरिति' दुःखित्वेनोक्तिरित्यर्थः । काऽसौ देवदत्तादीनां श्रौती दुःखित्वोक्तिरित्यत आह** अदुःखमिति ।

अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ॥
तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते ॥
इति श्रुतिर्हि परमा

**प्रवर्तते दुःखप्रहाणसाधनं परमात्मानं प्रतिपादयतीत्यर्थः ॥**

**शे० — दुःखित्वेनोक्तिरित्यर्थ इति ।** एतच्च पापसाधनतयोक्तत्वरूपोपाधिसाम्यसिद्ध्यर्थं व्याख्यानम् । यद्वा 'जीवा एव तु दुःखिन' इति दुःखित्वोक्तेरेव तत्र प्रदर्शनादेवं व्याख्यानम् । नन्वत्रापि व्याप्याभिमताव्यापकता दुःखित्वेनोक्तत्वोपाधेः श्रुत्यवष्टम्भेनैव वाच्या । श्रुत्यर्थस्तु नाद्यापि व्यवस्थित इति पूर्वोपाधिवदयमपि गहननिविष्ट एवेति कथमुपाधिरिति चेत् । भवेदेतदेवं यद्यत्र श्रुत्यवष्टम्भेन व्याप्याभिमताव्यापकतोच्येत । न चैतदस्ति । किन्तु यः सुखी स दुःखित्वेनोक्त इति नियमो

न सहदर्शनमात्रेण अतिप्रसङ्गात् । नियामकं तु प्रमाणं नास्तीत्युक्तरीत्यैव, अतो न कोऽपि दोष इत्याशयात् ।

प० —सिद्धान्ती( स्वोपा,योपाधिसाम्याय परेणाप्युक्तेरेवोपाधित्वं वाचयितुं पृच्छति **केयमिति ।** वक्ष्यमाणश्रुत्यनुरोधादाह **दुःखित्वेनोक्तिरिति ॥ सुखित्वे दुःखित्वं स्यादिति तर्कनिरासः ॥**

**या० — दुःखित्वेनोक्तिरित्यर्थ इति ।** पापसाधनतयोक्तत्वरूपोपाधिसाम्याय 'जीवा एव तु दुःखिन' इति दुःखित्वोक्तेरेवोत्तरत्र प्रदर्शनेन चैवं व्याख्यातमिति ध्येयम् । नन्वत्र व्याप्याभिमता-व्यापकता दुःखित्वेनोक्तत्वोपाधेः श्रुत्यवष्टम्भेनैव वाच्या, श्रुत्यर्थस्तु नाद्यापि व्यवस्थित इति पूर्वोपाधि-वदयमपि गहनं प्रविष्ट इति चेन्न । नात्र श्रुत्यवष्टंभेन व्याप्याभिमताव्यापकतोच्यते । किन्तु यः सुखी स दुःखित्वेनोक्त इत्ययं नियमो न सहदर्शनमात्रेण सिद्ध्यति, अतिप्रसङ्गात् । नियामकं तु प्रमाणं नास्तीति उक्तरीत्यैव । अतो न कोपि दोष इत्याशयात् । पापसाधनतयोक्तत्वरूपोपाधावप्यस्याः शङ्कायाः साम्यादित्याशयात् ।

**श्री० — परम्परया** पापद्वारेत्यर्थः ।

**सु० — एवमनुमानानुग्राहकं तर्कं निराकृत्येदानीमीश्वरो न सुखी निर्दुःखत्वाद्घटवदि-त्यनुमानमपि दूषयति** श्रुत्युक्तिरिति ।

**अनु० —** श्रुत्युक्तिर्यदि कारणम् ॥
किं कार्यमनुमानेन गलस्तनसमेन हि ॥

कारणं प्रमायाः । **'आनन्दं ब्रह्मणो विद्वानि'त्यादिश्रुतिः प्रमाणं न वा । नेति पक्षे अपसिद्धान्तः । आद्ये तद्बाधितत्वेनाजागलस्तन इव विवक्षितार्थासाधकमनुमानमुपेक्षणीयमिति भावः ।**

**श्री० — अनुमानानुग्राहकमिति ।** ईश्वरः सुखरहितो दुःखरहितत्वाद्घटवदित्यनुमानस्यानु-ग्राहकं सुखवांश्चेद्दुःखवान्प्रसज्येत देवदत्तवदिति तर्कमित्यर्थः ।

**सु० — ननु श्रुतिः प्रमाणमेव किन्त्वनुमानविरुद्धत्वान्प्रतीतार्थं परित्यज्य दुःखाभाव-परतया व्याख्यातव्येत्याशङ्क्य; नैवम् , अनुमानस्य श्रुतिबाधकत्वादर्शनात् । क्वचिदुपजीव्य-त्वादिनैव बाधकत्वात् । एवमेव बाधकत्वाभ्युपगमे त्वतिप्रसङ्गः स्यादित्याह** अनुमानेनेति ।

**अनु० —** अनुमानेन यद्यर्थः श्रुतिदृष्टोऽप्यपोद्यते ॥
पूर्वोक्तेन प्रकारेण नेश्वरो धर्म एव च ॥
स्यात्तत्फलं च

पूर्वोक्तेन **शास्त्रयोनिसूत्रोक्तेन** । नेश्वरः स्यात् **श्रुतिदृष्टोऽपीश्वरोऽनुमानविरोधात्याज्यः स्यादिति यावत् । धर्मश्च नैव स्यात्तत्फलं च नैव स्यादित्यत्राप्येवमेव तात्पर्यम् । यज्ञक्रिया नादृष्टफलहेतुः क्रियात्वान्निष्ठीवनादिक्रियावत् । धर्मो वा न सुखसाधनमदृष्टत्वादधर्मवदित्याद्यनुमानसंभवात् । अतिप्रसङ्गस्य विपर्यये पर्यवसानमाह** तेनेति ।

तेनात्र श्रुतिरेव प्रमा भवेत् ॥

**यस्मादुपजीव्यत्वादिरहितेनानुमानेनानन्दश्रुतेर्बाधाभ्युपगमेऽनिष्टप्रसङ्गस्तेन कारणेनैषा श्रुतिरत्रेश्वरस्यानन्दवत्त्व एव** प्रमा **प्रमाणं भवेन्न पुनरन्यथा योज्येति** ।

**शे०** – ननु क्षित्यादिकं सकर्तृकं कार्यत्वादिति सर्वज्ञत्वादिविशिष्टतयेश्वरसाधकस्य कार्यत्वाद्यनुमानस्य जीवेश्वराभेदागमबाधकताया, मृन्न वक्त्री जडत्वादित्याद्यनुमानानां च 'मृदब्रवीदापोऽब्रुवन्नि-त्याद्यागमबाधकतायाश्च दर्शनात्कथमनुमानस्य श्रुतिबाधकत्वादर्शनमुच्यत इत्यतः कार्यत्वाद्यनुमानस्येश्वर-रूपधर्मिग्राहकतया तदभेदागमं प्रत्युपजीव्यत्वेन मृन्न वक्त्री जडत्वान्मृत्त्वादित्याद्यनुमानस्य प्रमाणावधृत-व्याप्तिपक्षधर्मताकत्वेन निरवकाशतया तत्तदागमापेक्षया प्रबलत्वात्तद्बाधकत्वेऽपि प्रकृतानुमानस्यागमापेक्षया प्राबल्यासिद्धेर्नागमबाधकत्वं सम्भवतीत्यभिप्रेत्याह **क्वचिदिति** ॥ **एवमेवेति** । उपजीव्यत्वादिना प्राबल्याभावेऽपीत्यर्थः ॥ **शास्त्रयोनिसूत्रोक्तेनेति** । शास्त्रयोनिसूत्रव्याख्यानावसरे शिवो न जग-त्कारणं पुंस्त्वाद्देवदत्तवदिति पुंस्त्वहेतुबलादिति भाष्योक्तेनेत्यर्थः ॥ **अत्राप्येवमेव तात्पर्यमिति** । श्रुतिदृष्टोऽपि धर्मोऽनुमानविरोधात्त्याज्यः स्यात् । श्रुतिदृष्टमपि फलमनुमानविरोधात्त्याज्यं स्यादित्येवमेव तात्पर्यमित्यर्थः । अत्र पूर्वोक्तप्रकारासंभवात्प्रकारान्तरमाह **यज्ञक्रियेत्यादिना** ॥ **अन्यथेति** । दुःखाभावपरतयेत्यर्थः ।

**प०**—ननु कथं 'प्राणा वा अणव' इत्यादिश्रुतेर्व्याप्तत्वसाधकदूरदर्शनश्रवणादियुक्तिबाध इत्यत आह **क्वचिदुपजीव्यत्वादिनैवेति**। दर्शनादिकार्यलिङ्गेनानुमितानां प्राणशब्दितेन्द्रियाणां श्रुत्याऽणुत्वोक्तेस्तत्रोप-जीव्यत्वेन बाधकत्वं, तथैव युक्तिपादे 'प्रायो युक्तिरपी'त्यत्र सुधायामुक्तेः । आदिपदेन निरवकाशत्वग्रहः । यथा मृदब्रवीदित्यादेर्मृन्नवक्त्री जडत्वादित्यादिबाधकेति ज्ञेयम् । पूर्वोक्तेनेत्यनुवादः, शास्त्रेति व्याख्या । 'वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः । किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखम् । वृक्षकृत्ना-खिलं वृक्षं वेत्ति पुंस्त्वाद्धि चैत्रवत् । इत्याद्यनुमया स्पर्धि नानुमानं परेशितुः । शक्तं विज्ञापने चाति-प्रसङ्गोऽनुमयेदृशे'त्यादिनोक्तेनेत्यर्थः । **नेश्वरः** स्यादित्यादेर्व्याख्या **श्रुतीत्यादि** । एवमेवेत्युक्तं व्यनक्ति **यज्ञक्रियेति** । अत्रेत्यनुवादः ईश्वरस्यानन्दवत्त्व इति व्याख्या ॥

**या०— शास्त्रयोनिसूत्रोक्तेनेति ।** शास्त्रयोनिसूत्रव्याख्यावसरे 'पुंस्त्वहेतुबलादि'त्याचार्योक्तेनेश्वरो न जगत्कर्ता पुंस्त्वाद्देवदत्तवदित्यनुमानेनेत्यर्थः । अत्र पूर्वोक्तप्रकारासंभवादाह **यज्ञक्रियेत्यादि ।**

**श्री०** — तर्हि श्रुतेः क्वचिदनुमानबाधः कथमुच्यत इत्यत आह **क्वचिदिति ॥ एवमेव तात्पर्यमिति ।** श्रुतिदृष्टो धर्मस्तद्दृष्टं तत्फलं वाऽनुमानविरोधात्याज्यं स्यादिति यावदिति पूर्वरीत्येत्यर्थः ।

**च०— क्वचित्** क्षित्यादौ सकर्तृकत्वसाधककार्यत्वाद्यनुमाने, मृदादौ वक्तृत्वाभावसाधकजडत्वादिहेतौ **च** जीवेश्वराभेदबोधकतत्त्वमस्याद्यागमस्य, मृदब्रवीदित्याद्यागमस्य च बाधकतायाश्च दर्शनादित्यर्थः । धर्मिग्राहकतयाऽऽद्यस्य, निरवकाशतया द्वितीयानुमानस्य च तदुपजीव्यत्वमिति भावः । **एवमेव** उपजीव्यत्वादिकमन्तरेणैव ॥ **शास्त्रयोनिसूत्रोक्तेन** तत्सूत्रव्याख्यारूप'वनकृत्त्वादी'त्याद्यानुपूर्वीकमौलप्रतीकाभिहितेन ।

**सु०— मा भूत् श्रुतिरप्रमाणं, मा च भूदनुमानबाधयाऽर्थान्तरपरा, तथाऽप्यनुमानस्य बाधिका कुतः; प्रतिरोधिका तु भवेदित्यत आह** ईशस्येति ।

**अनु०**— ईशस्यानुमयाऽसिद्धेः श्रुतिर्धर्मिप्रमा भवेत् ॥
तया सर्वगुणैः पूर्ण ईश उक्तो यतस्ततः ॥
अनानन्दानुमानस्य धर्मिग्राहिविरोधतः ॥
न प्रमाणं भवेत्

**अनुमयेति श्रुतिव्यतिरिक्तप्रमाणोपलक्षणम्।** धर्मिप्रमा **धर्मिग्राहकं प्रमाणम् । अनुमानं हि प्रमाणान्तरेण सिद्धे धर्मिणि प्रवर्तते नान्यथा । अत्र चेश्वरो धर्मी न चासावनुमानेन सिध्यतीति समर्थितं प्राक् । प्रत्यक्षाद्यविषयत्वं तु परस्यापि संमतम् । ततः परिशेषात् श्रुतिरेव धर्मिणः परमेश्वरस्य ग्राहिकेत्येष्टव्यम् । तथा चानेनानुमानेन श्रुतिप्रामाण्यमनुमतम् । अन्यथा स्वस्यानुत्थानप्रसङ्गात् । सा चोपजीव्या श्रुतिरीश्वरमानन्दवन्तमाचष्टे । ततस्तद्विरोधादनुमानमप्रमाणमेव । अग्निस्वरूपग्राहकप्रत्यक्षविरुद्धतच्छैत्यानुमानवदिति । न च वाच्यं यः सर्वज्ञ इत्यादिवाक्यमनुमानस्योपजीव्यं नानन्दवादीति । सर्वस्यापि वेदस्यैकवाक्यत्वेनाध(ज)चरतीयायोगात् । अन्यथाऽग्निग्राहकमेवोपजीव्यम् । न तु तदौष्ण्यग्राहकमित्यपि स्यात् ।**

शे० — **बाधिका कुत इति** । बाधकत्वप्रयोजकस्याधिकबलत्वस्यासिद्धेरिति भावः । नन्वीश्वरस्यानुमानासिद्धत्वोक्तिमात्रेण न श्रुतेर्धर्मिग्राहकता सिध्यति । प्रत्यक्षादेरपि तत्साधकत्वसंभवादित्यतोऽत्रानुमानपदस्य श्रुतिव्यतिरिक्तप्रमाणोपलक्षणत्वेन श्रुतिव्यतिरिक्तप्रमाणेनासिद्धत्वोक्तिरेवेयमिति भवेदेवानया श्रुतेर्धर्मिग्राहकतासिद्धिरित्याह **अनुमयेतीति** । श्रुतेर्धर्मिप्रमात्वस्य बाधितत्वादाह **धर्मिग्राहकप्राणमिति** । **नान्यथेति** । तथा सत्याश्रयासिद्धिप्रसङ्गादिति भावः ॥ **प्रागिति** । शास्त्रयोनिसूत्र इत्यर्थः ॥ **सम्मतमिति** । महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वाभावान्न प्रत्यक्षविषयत्वम् । उपमानस्य सङ्गतिग्राहकतया विषयविशेषनिष्ठत्वान्न तद्विषयत्वमिति भावः ॥ **अग्निस्वरूपग्राहकप्रत्यक्षेति** । अग्निस्वरूपग्राहकस्पार्शनप्रत्यक्षेत्यर्थः । **अग्निग्राहकमेवेति** । अग्निरूपधर्मिग्राहकं चक्षुरेवेत्यर्थः ॥ **न त्विति** । वन्ह्यौष्ण्यग्राहकं स्पार्शनप्रत्यक्षमित्यर्थः । ततश्च यदुपजीव्यं न तद्विरोधोऽनुष्णत्वानुमानस्य, येन चौष्ण्यग्राहकेण प्रत्यक्षेण विरोधः तच्च नोपजीव्यमित्यौष्ण्यग्राहकप्रत्यक्षस्य प्राबल्यासिद्ध्याऽनुमानबाधकत्वायोगादनौष्ण्यानुमितेरप्रामाण्यं न स्यादित्यर्थः । तस्मान्नरशिरःकपालाशुचित्वागमस्य तच्छुचित्वानुमानादुपजीव्यशुचित्वग्राहिशब्दसाजात्यमात्रेण प्राबल्यवद्वन्ह्यौष्ण्यग्राहिस्पार्शनप्रत्यक्षस्यानौष्ण्यानुमानादुपजीव्यधर्मिस्वरूपग्राहिचक्षुरादिसाजात्यमात्रेण प्राबल्यमित्येव वक्तव्यम् । ततश्चानेनैव न्यायेनानन्दवाक्यस्यानानन्दानुमानाद्धर्मिस्वरूपग्राहितयोपजीव्यत्वेन 'यः सर्वज्ञ' इत्याद्यागमेन साजात्यमात्रेण प्राबल्याद्युक्तमेवानन्दानुमानबाधकत्वमित्याशयः ।

---

प० — **प्रागिति** । शास्त्रयोनिसूत्र इत्यर्थः ॥ **अनेनानुमानेनेति** । निर्दुःखत्वादीश्वरो सुखीत्यनुमानेनेत्यर्थः । **अग्निस्वरूपग्राहकप्रत्यक्षेति** । त्वगिन्द्रियरूपप्रत्यक्षेत्यर्थः । उपजीव्यजातीयत्वेन बाधकत्वमुपपद्यत इति भावेनाह **सर्वस्यापि वेदस्येति** । नन्वीश्वरे सुखाभावानुमानं प्रति श्रुतिरीश्वररूपधर्म्यंश एवोपजीव्या, नत्वानन्दांश इत्यत आह **अन्यथेति** ।

या० -- **अग्निस्वरूपग्राहकेति** । अग्निस्वरूपग्राहकस्पार्शनप्रत्यक्षेत्यर्थः ॥ **अन्यथाऽग्निग्राहकमिति** । अग्निग्राहकस्पार्शनप्रत्यक्षेऽग्निविषयकत्वावच्छेदेनैवोपजीव्यत्वं न तदौष्ण्यविषयकत्वावच्छेदेनेत्यपि स्यात । तथा च शैत्यानुमानमपि तद्विरुद्धं न स्यादित्यर्थः । तत्र यथाऽग्निग्राहकस्पार्शनप्रत्यक्षस्य एकत्वात् अर्धजरतीयानुपपत्तेरौष्ण्यांशेऽप्युपजीव्यत्वं एवमशेषस्याप्यागमस्यैकवाक्यत्वादर्धजरतीयानुपपत्तेरानन्दाद्यागमस्याप्युपजीव्यत्वमेवेति भावः ।

श्री० — **उपलक्षणमिति** । प्रत्यक्षेणाप्यसिद्धेरिति ज्ञेयम् । **स्वस्य** अनुमानस्य ॥ **अमीति** । उष्णतयेति शेषः ।

च० — **प्राक्** शास्त्रयोनि सूत्रे । **अनेनानुमानेन** । सुखराहित्यसाधकनिर्दुःखत्वहेतुना **अग्निग्राहकमिति** । वह्नावौष्ण्यग्राहकस्पार्शनप्रत्यक्षे वह्निविषयकत्वावच्छेदेनानुमानोपजीव्यत्वं न तूष्णत्वविषयकत्वावच्छेदेनेत्यपि स्यादिति भावः ॥ **ईश्वरे सुखराहित्यसाधकानुमानप्रत्याख्यानम्** ॥

**सु० — अनेनैव न्यायेनेश्वरस्य विग्रहराहित्याद्यनुमानमपि सर्वं श्रुतिविरुद्धत्वादप्रमाणमेवेत्याशयवानुपसंहरति** तस्मादिति ।

**अनु० —** तस्मान्नानुमाऽत्रोपयोगिनी ॥

अत्र **ईश्वरविषये** । **अत एव सर्वगुणैः पूर्ण** इत्युक्तम् । **अन्यथाऽऽनन्दवानित्यवक्ष्यत्** ॥

श्री० — तस्मादित्युत्तरभाष्यमीश्वरस्यानानन्दानुमाया एव श्रुतिविरुद्धत्वादप्रामाण्योपसंहारपरमिति भ्रान्तिं परिहर्तुं तत्तात्पर्यमाह **अनेनैवेति** । ननु प्रतीतमाशयं परित्यज्य किमित्याशयान्तरपरिकल्पनमित्यतस्तत्र मूलकारीयं ज्ञापकमाह **अत एवेति** । ईश्वरे विग्रहराहित्याद्यनुमानानामपि सर्वश्रुतिविरोधेन अप्रामाण्यस्यात्राभिप्रेतत्वादेवेत्यर्थः ॥ **अन्यथेति** । अनानन्दानुमाया एव श्रुतिविरुद्धत्वादप्रामाण्याभिप्रायकत्व इत्यर्थः । अत्रेत्यस्य सुखपरत्वोपपत्तेः किमीश्वरविषयत्वाङ्गीकारेणेत्यतस्तथा सति सर्वगुणैः पूर्ण इत्यस्यासामञ्जस्यप्रसङ्गादीश्वरपरतैव युक्तेत्यप्याहुः ॥

स० — ननु अत्रेत्यस्य सुखपरत्वमेवास्तु किमीश्वरविषयत्वाङ्गीकारेण । न च पौनरुक्त्यम् । उपसंहाररूपत्वेन तदभावादित्यत आह **अत एवेति** ।

प० — **श्रुतिविरुद्धत्वादिति** । 'आनन्दरूपममृतम्, यदेकमव्यक्तमि'त्यादिश्रुतीत्यर्थः ॥ **अत एवेति** । ईश्वरस्य विग्रहराहित्याद्यनुमानमपि सर्वं श्रुतिविरुद्धमित्यस्याभिमतत्वादेवेत्यर्थः । आदिपदेनाल्पगुणत्वाद्यनुमानानामपि ग्राह्यत्वादिति भावः ॥ **सुखाभावाद्यनुमाननिरासः** ॥

या० — **अत एवेति** । ईश्वरे विग्रहराहित्याद्यनुमानानामपि सर्वश्रुतिविरोधेनाप्रमाण्यस्यात्राभिप्रेतत्वादेवेत्यर्थः ।

**श्री० — अत एवेति** । ईश्वरविषयेऽनुमानमात्रस्यानुपयोगित्वादेवेत्यर्थः । **इत्युक्तमिति** । अष्टगुणत्वादिसाधनस्य वा तदुपयुक्तविग्रहराहित्यादिसाधनस्य वाऽनुमानेन कर्तुमशक्यत्वेन सर्वगुणपूर्णत्वे बाधकलेशाभावादित्यर्थः ॥ **अन्यथेति** । अनुमानमात्रस्येश्वरेऽनुपयोगकथनेन सर्वगुणपूर्णत्वकथने यदि न तात्पर्यमित्यर्थः । यदीश्वरः सुखी तर्हि दुःखी स्यादिति तर्कबाधकत्वेनोक्तानन्दश्रुतावेवानुपपत्तेः परिहृतत्वादानन्दवानित्येवोच्येतेति भावः ।

**सु०— अनुपपत्त्यन्तरं वैशेषिकादिदर्शने दर्शयन्** 'नित्यमेव च भावात्' **इति सूत्रं व्याख्याति** नित्येच्छत्वादिति ।

**अनु०—** नित्येच्छत्वात्परेशस्य परमाणुसदात्वत: ॥
अदृष्टकालयोश्चैव भावात्कार्यं सदा भवेत् ॥

**वैशेषिकादयो हि कालविशेषे द्व्यणुकादिप्रक्रमेण महाभूतसृष्टिमभ्युपगच्छन्ति । तत्त-दीयप्रक्रियापर्यालोचनायां नोपपद्यते । किन्तु तत्पक्षे कार्यं सदा भवेत् । यदाऽभिलष्यते ततः प्रागपि भवेत् । कुतः । कारणसामग्रीसंपत्तिनिबन्धनो हि कार्योत्पत्तेः कालनियमः । तत्रादि-सृष्टौ परमाणवः समवायिकारणभूतास्तावत्सदा विद्यन्ते । निमित्तकारणं चेश्वरेच्छा नित्यैव । तथा कालो दिक्च क्व । यद्यप्यदृष्टं धर्माधर्मसमाख्यातं न नित्यं तथाऽपि प्रलयेऽस्तीत्यङ्गी-क्रियत एव । वृत्तिलाभस्तदा नास्तीति चेन्न । तस्यापीश्वरेच्छादिकारणकस्य तद्भावेऽभावानुप-पत्तेः । अत एव परमाणुसंयोगस्यासमवायिकारणस्याभावान्न सदा सृ(सदादिसृ)(महदादिसृ)-ष्टिरिति निरस्तम् । संयोगानुत्पादस्याप्यनुपपत्तेः । तदसमवायिकारणकर्माभावादिति चेन्न । तदनुत्पादस्याप्ययोगात् । न चातोऽन्यद्द्व्यणुकादेः कारणमस्ति । यद्वैकल्यादभिलषितसमया-त्प्राक् कार्याभावो भवेत् । सत्यां चाभिमतसामग्र्यां कार्यानुदये पश्चादपि नोत्पद्येत । नियामकाभावादिति ।** सदात्वं सदातत्वनम् । भावात् **प्रलयेऽपीति शेषः ।** एवशब्दस्य **सदैवेति संबन्धः । कार्यं भवेदिति चाभ्युपगम्योक्तम् । वस्तुतस्तु तत्पक्षे कदाऽपि द्व्यणुकाद्युत्पत्तिर्न संभवति । विनाशकारणस्येश्वरेच्छादेः सदातनत्वेन सत्प्रतिपक्षत्वात् । कार्योत्पत्तिसहकृत-मेवेश्वरेच्छादिकं विनाशकारणमित्यङ्गीकारेऽप्युत्पत्त्यनन्तरमेव विनाशः प्रसज्येतेति । अत एव सृष्ट्यादीति** वक्ष्यति ।

**शे०— अङ्गीक्रियत एवेति ।** अदृष्टस्य प्रलयेऽसत्त्वेऽसतः कारणत्वायोगेनादिकालीनकार्य-कारणत्वाभावापत्त्या सर्वोत्पत्तिमतां निमित्तमित्यभ्युपगमभङ्गप्रसङ्गादिति भावः ॥ **वृत्तिलाभ इति ।** वृत्तिनिरोधापगम इत्यर्थः । प्रलयहेतुनाऽदृष्टेन प्रतिबन्धाभाव इति यावत् । प्रलयकाले सर्गहेत्वदृष्टानां प्रलयहेत्वदृष्टेन प्रतिबद्धत्वरूपो वृत्तिनिरोध एवास्ति न तदपगमरूपो वृत्तिलाभ इति भावः ॥ **अभ्युप-गम्योक्तमिति ।** विरोधसामग्रीविरहमभ्युपगम्य सर्वदा कार्यसत्त्वमापादितमित्यर्थः । **अस्याभ्युपगम-**वादत्वे मूलकारीयं ज्ञापकमाह **अत एवेति ।** अन्यथा सृष्टीच्छेत्येवावक्ष्यदिति भावः ।

प० — **वृत्तिलाभ इति** । कार्योन्मुखत्वमित्यर्थः । **तस्यापीति** । अभावानुपपत्तेरित्यन्वयः ॥ **न महदादीति** । द्व्यणुकादीति वक्तव्ये महदादीन्युक्तिर्द्व्यणुकादिप्रक्रिया न प्रामाणिकी महदादिप्रक्रियैव प्रामाणिकीति सूचयितुम् । **सत्यां चाभिमतसामग्र्यां कार्यानुत्पादे पश्चादपि नोत्पद्येतेति** । एतेन 'उभयथापि न कर्मातस्तदभाव' इति सूत्रमपि व्याख्यातं भवति ॥ **सृष्ट्यादीति वक्ष्यतीति** । अत्रानभिप्रेतत्वे स्वमतदोषोद्धारग्रन्थे लयोपादानाय आदिपदं न प्रयुञ्जीतेति भावः ।

या० — **वृत्तिलाभ इति** । वृत्तिनिरोधापगम इत्यर्थः । प्रलयहेतुनाऽदृष्टेन प्रतिबन्धाभाव इति यावत् । प्रलयकाले सर्गहेत्वदृष्टानां प्रलयहेतुनाऽदृष्टेन प्रतिबद्धस्वरूपो वृत्तिनिरोध एवास्ति, न तदवगमरूपो वृत्तिलाभ इति भावः ॥ **ईश्वरेच्छादेः सदातनत्वेनेति** । अनेन सूत्रस्यार्थान्तरमुक्तमिति ज्ञातव्यम् ।

श्री० — **तस्यापि** वृत्तिलाभस्यापि ॥ **अङ्गीकार इति** । तथा चादौ द्व्यणुकाद्युत्पत्त्या भाव्यमेवेत्यर्थः । वस्तुतस्त्वित्युक्तमाचार्यानभिप्रेतं कुत उच्यत इत्यत आह **अत एवेति** ।

च० — **वृत्तिलाभः** कार्योन्मुखत्वम् ।

सु० — स्यादेवं यदि कालमात्रं सृष्टेर्वा संहारस्य वा कारणं स्यात् । न चैवम् । किन्तु कालविशेष एवातस्तद्भावाभावाभ्यां सृष्टिसंहारनियमो घटते । तथा नेश्वरेच्छामात्रं सृष्ट्यादिहेतुः किन्तु तद्विशेष एव ततस्तद्भावाभावप्रयुक्ता सृष्ट्यादिव्यवस्था स्यादिति चेन्न । किं कालदेशादेरौपाधिको भेदः, किंवा स्वाभाविकः । नाद्यः निरस्तत्वात् । द्वितीये त्वपसिद्धान्त इत्याह न हीति ।

अनु० — न हि कालविभेदोऽस्ति तत्पक्षे

हिशब्देन 'आकाशकालदिशामेकैकत्वादि'त्यादितद्वाक्यं स्मारयति । कालेतीश्वरेच्छाया अप्युपलक्षणम् ।

शे० — **कालविशेष एवेति** । सृष्टिकालसंहारकालरूप इत्यर्थः ॥ **नियम इति** । कालमात्रस्य सर्वदा सत्त्वेऽपि सृष्टिकारणसृष्टिकालस्य संहारकाले, संहारकारणस्य च संहारकालस्य सृष्टिकालेऽभावादिति भावः ॥ **तद्विशेष एवेति** । सिसृक्षासञ्जिहीर्षारूप इत्यर्थः ॥ **निरस्तत्वादिति** । कालविशेषस्य सृष्ट्याद्युपाधिनिबन्धनत्वे सृष्ट्यादिकमन्तरेण सृष्ट्यादिकालानुपपत्तिः । सृष्ट्यादिकालमन्तरेण च सृष्ट्याद्यनुपपत्तिरित्यन्योन्याश्रयत्वप्रसङ्गात् । तथेच्छाविशेषस्यापि सृष्ट्याद्युपाधिनिबन्धनत्वे सृष्ट्यादिकमन्तरेण सिसृक्षाद्यनुपपत्तिः सिसृक्षादिकमन्तरेण च सृष्ट्याद्यनुपपत्तिरित्यन्योन्याश्रयप्रसङ्गान्न कालविशेषादेरौपाधिकत्वमिति

भाव: । यद्यपीच्छाविशेषस्येव कालविशेषस्यौपाधिकता पूर्वं न निराकृता, तथाऽपीच्छाविशेषस्यौपाधिकत्वनिरासकन्यायस्यात्राप्यविशिष्टत्वेन तन्निरासेनैवैतन्निरासोऽपि सिद्ध एवेत्यभिप्रेत्य निरस्तत्वादित्युक्तमित्यवधेयम् ।

प० – **निरस्तत्वादिति** । 'उपाधिजन्यं तद्भ्रममिति चौपाधिकमि'त्यादिना निरस्तत्वादित्यर्थ: ।

श्री०— **तद्विशेष एव** सृष्टिविषयकेच्छासंहारविषयकेच्छारूप: ॥ **औपाधिक इति** । सृष्ट्याद्युपाधिनिबन्धनो भेद इत्यर्थ: ।

**सु०— नन्विदं दूषणं भवतामपि समानम् । तथा हि । महदाद्युपादानकारणं प्रकृतिर्नित्यैव । तथा निमित्तकारणमीश्वरेच्छाकालादिकमपि । तदेव च प्रलयकारणम् । अतः सृष्टिप्रलयसमयनियमो भवतामपि दुर्घट इत्यत आह** अस्मन्मत इति ।

**अनु० —**　　　　　　　　　　असन्मते हरे: ॥

विशेषकाल एवैतत्सृष्ट्यादीच्छा सदातना ॥

**यद्यप्यस्मन्मते हरेरिच्छा सदातना । प्रकृत्याद्युपलक्षणमेतत् । तथाऽपि विशेषकाल एवैतस्य महदादेः सृष्ट्यादि भवतीति योजना । अस्माभिः काले स्वभावत एव भेदोऽभ्युपगम्यते । तथा च कालविशेषस्यैव सृष्टिं संहारं च प्रति कारणत्वात्तद्भावाभावाभ्यां सत्स्वपीतरकारणेषु सृष्ट्यादिसमयनियमो युज्यत इति भावः ।**

**ननु कालविशेष इति वाच्यम् । मैवम् । विशिष्यत इति विशेषः, स चासौ कालश्चेति विग्रहग्रहणात् । ननु सदातनीति भवितव्यम् । मैवम् । नायं ट्युट्युलोरन्यतरः प्रत्ययः । किन्तु भ(ा)वार्थे तनप्रत्ययोऽयम् । अथवा तनेति तनोते रूपमेतत् ।**

शे० – ननु कालविशेष इति वाच्यमिति कालस्य विशेष इति षष्ठीसमासविधायके 'षष्ठी'ति सूत्रे षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वेन 'प्रथमानिर्दिष्टं समास उपसर्जनमि'त्युपसर्जनत्वात् उपसर्जनस्य च 'उपसर्जनं पूर्वमि'ति पूर्वनिपातविधानादिति भाव: । नात्र षष्ठीसमासोऽभिमतो, येनोक्तदोष: स्यात्किन्नाम 'विशेषणं विशेष्येण बहुलमि'ति समानाधिकरणसमास एवेत्यतो नानुपपत्तिरित्याशयेन विशेषशब्दस्य कालशब्देन सामानाधिकरण्यमुपपादयन्नेव परिहरति **मैवमित्यादिना** । ननु 'सायं चिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च'इति सूत्रेणाव्ययात्सदाशब्दात् ट्युट्युलोरन्यतरस्मिन्प्रत्यये समागते, तस्य तुडागमे 'युवोरनाकावि'ति तस्यानादेशे च सति निष्पन्नसदातनशब्दस्य टित्वा'ट्टिड्ढाणञि'त्यादिना ङीपि 'यस्येति चे'त्यकारलोपे सदातनीत्येव भाव्यम् । सदातनेति तु कथमित्याक्षिपति **नन्विति** ॥ **भ(ा)वार्थेति** । यद्यपि भावार्थे तन-

प्रत्ययो न विहितस्तथाऽपि सर्वत्राधिकारसूत्रे 'प्रत्ययः समासान्त' इत्येकवचनान्तप्रयोगस्यैव दर्शनात्तद्वत्तद्धित इत्येकवचनप्रयोगे कर्तव्ये यत्तद्धिता इति बहुवचनं, तेन संज्ञिनां बहुत्वसूचनादनुक्तोऽपि तद्धितः परिगृह्यत इति भावेन बहुवचनमनुक्ततद्धितपरिग्रहार्थम् । ततश्च पृथिव्या ञाञौ अग्रादिपश्चात्डिमच् इत्येवमादि लब्धं भवतीति वृत्तिकारेणोक्तत्वाद्भावेऽर्थेऽनुक्तस्यापि तनप्रत्ययस्य तद्धिता इति बहुवचनलब्धत्वमस्त्येवेत्यभिप्रेत्यैवमुक्तमिति ध्येयम् । यद्वैतदस्वरसादेवाह **अथवेति** ॥ **तनोते रूपमिति** । तनु विस्तार इत्यस्मात्तनोतीति कर्तरि नन्दिग्रहिपचादिभ्यो ल्युणिन्यच इति पचाद्यचि तनेतिरूपनिष्पत्तिरिति भावः ।

**स०**— ननु सदेत्यस्य अव्ययत्वेन 'सायं चिर'मित्यनेन ट्यु-ट्युलोर्मध्ये अन्यतरप्रत्यये टित्वात् 'टिड्ढाणञ्' इति ङीपि सदातनीति भवितव्यम् । सदातनेति कथमुक्तमिति शङ्कते **नन्विति** । उत्तरमाह **भ(ा)वार्थे तनप्रत्यय इति** । 'तद्धिता' इति बहुवचनज्ञापित'विचित्रा तद्धितगतिः' इति वार्तिकेण भावार्थे तनप्रत्यय इत्यर्थः । यद्वा एतदस्वारस्यादाह **अथवेति** ।

**प०**— ननु कालस्य विशेष इत्यर्थे राजपुरुष इत्यादाविव कालविशेष इति निर्देष्टव्यम्; 'उपसर्जनं पूर्वं' इति उपसर्जनस्य पूर्वनिपातोक्तेः। 'प्रथमानिर्दिष्टं समास उपसर्जनमि'ति समासविधायकसूत्रे प्रथमान्तनिर्दिष्टस्योपसर्जनत्वोक्तेः । 'षष्ठीति' षष्ठीसमासविधायकसूत्रे षष्ठ्यन्तस्य प्रथमान्ततया निर्देशादिति भावेन शङ्कते **ननु कालविशेष इति वाच्यमिति** । नायं विशेषशब्दो भावसाधनः, अपि तु कर्मसाधनः । 'अकर्तरि च कारके संज्ञायामि'ति कर्मण्यपि घञः स्मरणात् । तथा च विशेषशब्दस्य विशिष्टकाल इत्यर्थस्य कालविशेषणत्वा'द्विशेषणं विशेष्येण बहुलमि'ति समासे पूर्वनिपातो युक्त इति भावेनोत्तरमाह **विशिष्यत इतीति** । इतरस्माद्व्यावर्त्यत इत्यर्थः । कालविशेष इत्यर्थः फलिष्यतीति भावः ॥ **ननु सदातनीति भवितव्यमिति** । सदाशब्दस्याव्ययत्वात् 'सायञ्चिरंप्राह्णेप्रगेऽव्ययेभ्यः ट्युट्युलौ तुट् चे'ति सूत्रेण सदाशब्दाट्ट्युप्रत्यये ट्युलप्रत्यये वा कृते सति 'चुटूवि'ति टकारस्येत्संज्ञायां तस्य लोपे 'युवोरनाकावि'ति सूत्रेण 'यु' इत्यस्यानादेशे तुडागमे च सदातनशब्दात् स्त्रीत्वविवक्षायां 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनामि'तिसूत्रेण टित्वात् ङीप्प्रत्यये 'लशक्वतद्धित'इति ङकारस्य, 'हलन्त्यमिति' पकारस्य चापगमे 'यस्येति चे'त्यकारलोपे सदातनीति सिद्धेरिति भावः ॥ **तन प्रत्यय इति** । 'उणादयो बहुलमि'त्युक्तेरौणादिकोऽखण्डस्तनप्रत्यय इत्यर्थः । तथा च टित्वाभावेन ङीप्प्रत्ययस्याभावेऽजाद्यतष्टाबिति सूत्रेणाकारान्तत्वाट्टाप्प्रत्यय इति भावः ॥ **तनोते रूपमिति** । तनु विस्तार इत्यस्मादौणादिकोकारप्रत्ययः । **सदा** विस्तारोपेता, नित्येति यावदिति भावः ।

**या०**— **ननु कालविशेष इति** । समासविधायके 'षष्ठीति' सूत्रे षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वेनोपसर्जनतया पूर्वप्रयोग आवश्यक इति भावः ॥ **विशिष्यत इति** । तथा च नात्र षष्ठीसमासो

येनोक्तदोषावकाशः, किन्तु 'विशेषणं विशेष्येण बहुलमि'त्यनेन कर्मधारय एवेत्याशयः। नन्वव्यया-त्सदाशब्दात् 'सायञ्चिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् चे'त्यनेन विहितयोष्ट्युट्युलोरन्यतरस्मिन् प्रत्यये तुडागमे 'युवोरनाकावि'त्यनादेशे च सति, सदातनशब्दस्य निष्पन्नत्वात्तस्माट्टिड्ढाणेत्यादिना ङीपा भवित-व्यमित्याशङ्कते **ननु सदातनीति**।

**श्री०— ग्रहणात्** तथा च विलक्षणे काले इत्यर्थः। ततश्चार्थात्कालविशेष एवेत्युक्तं भवति।

**च०— विशिष्यत इति**। तथा च विशेषपदस्य भावसाधनघञन्ततावधीरणेन कर्मसाधन-घञन्तताश्रयणान्न षष्ठीसमासः, किन्तु 'विशेषणं विशेष्येण बहुलमि'ति समानाधिकरणतत्पुरुष इति भावः। ननु सदाशब्दस्याव्ययत्वेन 'सायं चिरमि'ति ट्युट्युलोरन्यतरस्मिन् प्रत्यये, तुडागमे युवोरित्यनादेशे स्त्रीत्व-विवक्षायां प्रत्ययटित्वनिबन्धनङीपि सदातनीति न्यासेन भवितव्यमित्याशङ्कते **नन्विति**।

**सु०— ननु ते कालभेदा यदि नित्यास्तदा स प्रसङ्गस्तदवस्थः। व्यर्थश्च कालभेदा-भ्युपगमः। अनित्यत्वे तत्कारणं वाच्यमिति चेत्। सत्यम्। उपादानं तु प्रकृतिरेव। निमित्तमाह** विशेषाश्चेति।

**अनु०** — विशेषाश्चैव कालस्य हरेरिच्छावशाः सदा ॥

**न केवलं महदादि किन्तु** कालस्य विशेषाश्च क्षणलवादयः। **एवशब्दस्य हरेरेवेति संबन्धः। सदेत्यनेन न युगपत्सर्वक्षणसृष्टिर्येन तेषामपि क्षणिकत्वं स्यात्। किन्तु निरन्तर-प्रवाहतयेत्युक्तं भवति।**

शे०— ननु विशेषाश्चेत्युत्तरभाष्यमनर्थकम्। न च कालविशेषाणां किमुत्पादकमिति जिज्ञा-सायामुत्पादकसङ्कीर्तनमेतदिति वाच्यम्। कालविशेषाणां नित्यत्वस्यापि सिद्धान्तिनाऽङ्गीकर्तुं शक्यत्वेन तदनित्यत्वासिद्ध्या तदुत्पादकजिज्ञासाया एव तं प्रत्यनुत्थानादित्यत उक्ताकाङ्क्षापूरकतयोत्तरवाक्यं योजयितुं नित्यत्वस्यानङ्गीकर्तव्यत्वोपपादनपुरःसरमनित्यतामङ्गीकार्य तदुत्पादकजिज्ञासामुत्थापयति **नन्विति ॥ स प्रसङ्ग इति**। सृष्टिप्रलयसमयनियमानुपपत्तिरूप इत्यर्थः ॥ **व्यर्थश्चेति**। उक्तातिप्र-सङ्गानिवारकत्वात्प्रयोजनान्तरस्य चाभावादिति भावः। ननु विशेषाश्चेत्युत्तरवाक्ये निमित्तकारणमुच्यते न तूपादानकारणं, तत्कथमिदमुपादानप्रश्नस्योत्तरं स्यात्। नेदमुपादानप्रश्नस्योत्तरम्। किन्त्वन्यदेव। इदं तु निमित्तप्रश्नस्यैवेत्यतो नानुपपत्तिरित्यभिप्रेत्य किमयमुपादानप्रश्नः किंवा निमित्तप्रश्न इति विकल्प-द्वयं मनसि निधाय तत्राद्यं बहिरेव प्रदूष्य द्वितीयपक्षनिरासपरतयोत्तरभाष्यं योजयति **सत्यमित्या-दिना**। मूले चशब्दोऽनुक्तसमुच्चयार्थ इत्यभिप्रेत्य तं दर्शयति **न केवलमिति**। तर्हीतरव्यावर्तकै-

वकारविरोध इत्यतो भिन्नक्रमत्वात्तस्य विशेषा इत्यनेनानन्वयान्न दोष इत्यभिप्रेत्य तस्यान्वयमाह **एवशब्दस्येति** ॥ **न युगपदिति** । युगपत्सर्वक्षणोत्पत्तौ उत्पन्नानां क्षणिकत्वे युगपदेव सर्वक्षणसमाप्त्यापत्त्योत्तरत्र क्षणाभावप्रसङ्गेन तत्कार्योपलम्भाभावप्रसङ्गादक्षणिकत्वमेव वाच्यमित्यक्षणिकत्वसिद्धिरिति भावः ।

**स०— स प्रसङ्ग इति** । सृष्टिप्रलयसमयनियमानुपपत्तिरूपातिप्रसङ्गस्तदवस्थ एवेत्यर्थः । **व्यर्थश्चेति** । उक्तातिप्रसङ्गपरिहारत्वाभावात् प्रयोजनान्तरस्य चाभावादिति भावः ।

**प०— प्रसङ्ग इति** । सृष्टिप्रलययोरव्यवस्थाप्रसङ्ग इति भावः ॥ **व्यर्थश्चेति** । सृष्ट्यादेः व्यवस्थित्यनापादकत्वादिति भावः ॥ **तेषामपि क्षणिकत्वमिति** । सर्वक्षणानामप्येकस्मिन्नेव क्षणेऽवस्थितिः स्यादित्यर्थः ॥ **निरन्तरेति** । अव्यवहितप्रवाहतयेत्यर्थः ।

**या०— अक्षणिकत्वमिति** । युगपत्सर्वक्षणसृष्ट्यङ्गीकारे क्षणानां प्रत्येकं सर्वाश्रयत्वेन सर्वक्षणावस्थायित्वप्राप्त्या तेषां क्षणमात्रावस्थायित्वरूपं क्षणिकत्वमनुपपन्नं स्यादित्यर्थः ।

**श्री०— व्यर्थश्चेति** । कालभेदाभ्युपगमेऽपि तस्य नित्यत्वेन सदा सृष्ट्यादिप्रसङ्गस्यानिवारणादित्यर्थः ॥ **तदिति** । कालभेदोत्पत्तावित्यर्थः ।

**च०— स प्रसङ्गः** सा सृष्टिप्रलययोरव्यवस्थापत्तिः ।

**सु०— ननु कालविशेषाणां परमेश्वराज्जन्म कुतः प्रमाणात्सिद्धमित्यत आह** सर्व इति ।

---

अनु०— सर्वे निमेषा इति हि श्रुतिरेवाह सादरम् ॥

**'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी'ति श्रुतिरेव कालविशेषाणामीश्वराज्जनिमाह हि इत्यर्थः । विशेषेण द्योतत इति विद्युत्तस्मात्परमपुरुषात्सर्वे निमेषाः कालभेदा अधिजज्ञिरे यथास्वं जायन्त इति । नन्वेषा श्रुतिः कालोपाधीनामीश्वराज्जननमाह, न तु कालस्य । तथा सति काष्ठाकलामुहूर्ताश्चेत्युत्तरवाक्यस्य पौनरुक्त्यप्रसङ्गात् । न हि सर्वनिमेषातिरिक्तं काष्ठाकलादिकमस्ति । उपाधयस्तु निमेषादिरूपाः पृथगेवेति न तत्र पुनरुक्तिदोष इत्यत उक्तं** सादरमिति । **यत्सर्वनिमेषजन्माभिधाय पुनः काष्ठादिजन्माभिधत्ते तदादरार्थमित्यतो न रुपुनक्तिदोषः । उपाधिभेदस्तु नोपपद्यत इत्युक्तमेवेति ।**

शे०— 'नन्वत्र विद्युतो भास्वत्याः पुरुषाद्धर्तुर्वायोरि'ति वायोरेव कालविशेषकारणत्वमुच्यते, तत्कथं परमेश्वरस्य तत्कारणत्वे एतच्छ्रुत्युदाहरणमित्यतो नेमे व्यधिकरणे पञ्चम्यौ, किन्तु समानाधिकरणे इति भावेन भगवत्परतया श्रुतिं व्याचष्टे **विशेषेणेति** । युगपदेव सर्वकालविशेषाणां सृष्टिर्भवतीति भ्रान्तिवारणायाह **यथास्वमिति** । **स्वं** स्वीयं कालमनतिक्रम्य **यथास्वम्** । यस्य कालविशेषस्य यदा

सृष्टिरुचिता तदा स कालविशेषः पुरुषाज्जायत इत्युक्तं भवति । **काष्ठाकलामुहूर्ताश्चेति** । यद्यपि 'कला-मुहूर्ताः काष्ठाश्चे'ति श्रुतिपाठस्तथाऽपि काष्ठानां कलामहूर्तापेक्षया 'क्षणद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम् । अष्टादशनिमेषाः स्युः काष्ठास्त्रिंशत्तु ताः कलाः । त्रिंशत्कलो मुहूर्तः स्यादि'ति वचन-सिद्धतत्प्राथम्यद्योतनाय प्रथमग्रहणं न तु तथैव श्रुतिपाठाभिप्रायेणेत्यदोषः । 'श्रीश्च ते लक्ष्मीश्च पत्न्या-वि'तिवच्छाखान्तरपाठोऽयमिति वा ॥ **न हि सर्वनिमेषातिरिक्तमिति** । सर्वकालभेदातिरिक्तमि-त्यर्थः । निमेषशब्दस्य कालभेदपरतया व्याख्यातत्वात् । तथा च पुनस्तद्वचने पुनरुक्तिरिति भावः । स्वमते तु नायं दोष इत्याह **उपाधयस्त्विति** । श्रुतौ निमेषपदमुपाध्यन्तरोपलक्षकमिति भावेन निमेषादीत्यादिपदप्रयोगः । अक्षिपक्ष्मसंयोगतरणिपरिस्पन्दविशेषादिरूपा इत्यर्थः ॥ **पृथगेवेति** । तत्तदुपाध्यवच्छिन्नकाष्ठादिकालापेक्षयेति शेषः ॥ **उक्तमेवेति** । 'नानिर्वाच्यं हि तेनेष्टमि'त्यादिनेति शेषः ।

**स०** — **उक्तमेवेति** । 'नानिर्वाच्यं हि तेनेष्टमत औपाधिकान्ययोः । सत्यत्वात्को विशेषस्स्यात्' इत्यादिनोक्तमेवेत्यर्थः ।

**प०** — यौगपद्यनिरासायोक्तं **यथास्वं जायन्त इति** । स्वस्वोचितकाल एवेत्यर्थः ॥ **इत्युत्तरवाक्य-स्येति** । 'कलामुहूर्ताः काष्ठाश्चे'त्येवमुत्तरवाक्यश्रवणेऽपि तत्र यथाश्रुतपाठक्रमो न विवक्षितः । किन्तु काष्ठादिक्रम एव । 'अष्टादशनिमेषास्तु काष्ठास्त्रिंशत्तु ताः कला' इत्यमराद्युक्त्या काष्ठाद्युत्पत्तिक्रमानुरोधेना-सदुक्तक्रम एव श्रुतौ विवक्षित इति भावेन काष्ठाकलेत्यनुवादः कृत इति ध्येयम् । **इत्युक्तमेवेति** । 'उपाधिजन्यं तद्रम्यमि'त्यादिनेति भावः ।

**या०**—युगपदेव सर्वकालविशेषसृष्टिवारणायाह **यथास्वमिति** । **स्वं** स्वीयं कालमनतिक्रम्येति यथास्वम् । यस्य कालविशेषस्य यदा सृष्टिः प्रमिता तदा स कालविशेषः पुरुषाज्जात इत्यर्थः ॥ **काष्ठाः कला मुहूर्ताश्चेति** । यद्यपि 'कलाः मुहूर्ताः काष्ठाश्चे'ति श्रुतिपाठस्तथाऽपि काष्ठानां कला-मुहूर्तापेक्षया प्राथम्यद्योतनायादौ ग्रहणमिति मन्तव्यम् । अत एवाहुः । 'क्षणद्वयं लवः प्रोक्तो निमेषास्तु लवद्वयम् । अष्टादश निमेषाः स्युः काष्ठास्त्रिंशत्तु ताः कलाः । त्रिंशत्कलो मुहूर्तः स्यादि'ति । **न हि सर्वनिमेषातिरिक्तमिति** । निमेषशब्दस्य कालभेदपरतया व्याख्यातत्वात्सर्वकालभेदातिरिक्तं काष्ठादिकं न ह्यस्तीत्यर्थः । तथा च पुनस्तद्वचने पुनरुक्तिरिति भावः । स्वमते तु न पौनरुक्त्यमि-त्याह **उपाधयस्त्विति** । अक्षिपक्ष्मसंयोगतरणिपरिस्पन्दविशेषादिरूपा इत्यर्थः । तथा च श्रौत-निमेषपदमन्योपाध्युपलक्षकमिति भावः । **पृथगेवेति** । तत्तदुपाध्यवच्छिन्नकाष्ठादिकालापेक्षयेति

**शेषः ॥ उक्तमेवेति ।** 'नानिर्वाच्यं हि तेनेष्टमतं औपाधिकान्ययोः । सत्यत्वात्को विशेष' इत्यत्रेति शेषः ।

**श्री०**— विद्युतः पुरुषादिति सामानाधिकरण्यमित्यभिप्रेत्य तत्र विद्युच्छब्दं निर्वक्ति **विशेषेणेति । कालोपाधीनां** अक्षिपक्ष्मसंयोगादिरूपनिमेषाद्युपाधीनाम् । **पृथगेव** कालादित्यर्थः ।

**सु०— ननु निमेषादिशब्दा अक्षिपक्ष्मसंयोगादिवाचिनो न साक्षात्कालाभिधायिनः । अतो नेयं श्रुतिर्व्यक्तं कालस्यैवेश्वराज्जन्म प्रतिपादयितुमलमित्यतोऽत्र स्पष्टां श्रुतिं चाह** उदीरयतीति ।

**अनु०** — उदीरयति कालाख्यां शक्तिमित्यस्य वागपि ॥

**'सोऽन्तःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयाण' इति** अस्य **ईश्वरस्य वागपि कालस्येश्वरादुत्पत्तिमाहेत्यर्थः । कालात्मिकां कालाख्यां सहकारिशक्तिमुदीरयाणो जनयन्नित्यर्थः । अत्र कालशब्दादीश्वरस्य जगत्सृष्टौ शक्तित्वाभिधानाच्च नार्थान्तरकल्पनावकाशः ।**

**शे०— नन्विति ।** निमेषशब्दोऽक्षिपक्ष्मसंयोगस्यैव वाचकः । काष्ठाकलादिशब्दा अपि तरणिपरिस्पन्दविशेषाणामेव वाचकाः । तद्द्वारैव तत्तदुपाध्यवच्छिन्नकालाभिधायिनो, न तु साक्षादित्यर्थः । अनुव्याख्यानानुसारेणोक्तं **कालाख्यामिति ॥ सहकारिशक्तिमिति** । सहकारिरूपां शक्तिमित्यर्थः । तथा चात्र शक्तिशब्दः सहकारिपर इत्युक्तं भवति ॥ **कालशब्दादिति** । निमेषादिशब्दानामिव कालशब्दस्य तदवाचकत्वादिति भावः ॥ **शक्तित्वाभिधानादिति** । सहकारित्वाभिधानादित्यर्थः । उपाधीनां तु जगदन्तःपातित्वान्नेश्वरकर्तृकजगत्सृष्टौ सहकारित्वमिति भावः ॥ **नार्थान्तरेति** । पूर्ववदक्षिपक्ष्मसंयोगाद्युपाधिरूपार्थान्तरकल्पनावकाशो नेत्यर्थः ।

**स०— नार्थान्तरेति** । निमेषादिशब्दानामक्षिपक्ष्मसंयोगादिवाचित्ववत् कालशब्दस्य तदवाचकत्वादिति भावः ॥

**प०** — अस्येत्यनुवादः । ईश्वरस्येति व्याख्या ॥ **शक्तित्वाभिधानादिति** । सहकारित्वाभिधानादित्यर्थः ।

**था०—ननु निमेषादिशब्दा इति** । निमेषशब्दोऽक्षिपक्ष्मसंयोगस्यैव वाचकः । काष्ठाकलादिशब्दा अपि तरणिपरिस्पन्दविशेषाणामेव वाचकाः । तद्द्वारैव तत्तदुपाध्यवच्छिन्नकालाभिधायिनो न साक्षादित्यर्थः । **अस्येश्वरस्येति** । भागवतवाक्यरूपा वेदव्यासस्य वागस्तीत्यर्थः । अनुव्याख्यानानुसारेणाह

**कालरूप मिति** ॥ **सहकारिशक्तिमिति** । सहकारिरूपां शक्तिमित्यर्थः । तथा च अत्र शक्तिशब्दः सहकारिपर इति भावः ॥ **शक्तित्वाभिधानादिति** । सहकारित्वाभिधानादित्यर्थः । उपाधीनां तु जगदन्तःपातिनां न जगत्सृष्टौ सहकारित्वमिति भावः ॥ **नार्थान्तरेति** । पूर्ववदक्षिपक्ष्मसंयोगाद्युपाधिरूपार्थान्तरकल्पनावकाशो नेत्यर्थः ।

**सु०　स्यादेतत् । कालस्तावत्सर्वोत्पत्तिमतां निमित्तम् । न च कालस्योत्पत्तौ कालान्तरमस्ति । तत्कथं तस्योत्पत्तिः । पूर्वकालः परकालस्य निमित्तमिति चेन्न । इदानीं जातस्तदानीं जात इत्यधिकरणतया कालस्य कारणत्वावधारणात् । अधिकरणस्य कार्योत्पत्तिसमानकालीनताया गेहे जातो गोष्ठे जात इत्यादौ निश्चितत्वादित्यत आह कालस्येति ।**

अनु०　कालस्य कालगत्वेन न विरोधोऽपि कश्चन ॥

**कालस्योत्पत्त्यङ्गीकारे न केवलं साधकसद्भावः किन्तु कश्चन विरोधोऽपि नास्तीति योजना । एतच्च प्रपञ्चयिष्यते ।**

**शे०**　निश्चितत्वादित्यनन्तरं पूर्वकालश्च न परकालरूपकार्योत्पत्तिसमानकालीन इति शेषः । ननु काल किं स्वगत इत्यभिमतं, किंवा कालान्तरगत इति । नाद्यः स्वस्कन्धारोहणवद्विरुद्धत्वात् । नान्त्य तदभावात् । भावे वा कालान्तरसृष्टिवैयर्थ्यात् । तस्याप्युत्पत्तौ कालान्तराङ्गीकारप्रसङ्गादित्यत आह **एतच्चेति** । 'ईशो देशश्च कालश्चे'त्यादिनेति शेषः । ननु कालस्य कालगत्वोक्तिमात्रेण कथमुक्तशङ्कापरिहार आत्माश्रयत्वप्रसङ्गश्चाधिक इत्यत आह **एतच्चेति** । 'ईशो देशश्च कालश्च स्वगता एव सर्वदे'त्यनुव्याख्याव्याख्यानावसरे पूर्वकालस्याधिकरणत्वाभावेऽपि कारणत्वम्, प्रामाणिकत्वान्नात्माश्रयत्वमित्यादि प्रपञ्चयिष्यत इत्यर्थ इति केचित् ।

**स०　एतच्च प्रपञ्चयिष्यत इति** । 'ईशो देशश्च कालश्च स्वगता एव सर्वदा' इत्यादिनेति शेषः ।

**प०**　कथमनेन स्यादेतदित्यादिना कृतचोद्यस्य निरास इत्यत आह **एतच्च प्रपञ्चयिष्यत इति** । 'कालस्य कालगत्वेने'त्युक्तं स्वगता इत्यादिनानुपदमेवेति भावः ।

**या०**　निश्चितत्वादित्यस्यानन्तरं पूर्वकालश्च न कार्योत्पत्तिसमानकालीन इति शेषः । ननु कालस्य कालगत्वोक्तिमात्रेण कथमुक्तशङ्कापरिहार आत्माश्रयप्रसङ्गश्चाधिक इत्यत आह **एतच्चेति** । 'ईशो देशश्च कालश्च स्वगता एव सर्वदे'त्यनुव्याख्याव्याख्यावसरे पूर्वकालीनस्याधिकरणत्वाभावेऽपि कारणत्वं, प्रामाणिकत्वान्नात्माश्रयत्वमित्यादि प्रपञ्चयिष्यत इत्यर्थः ।

सु० — एवं स्वमते कालविशेषभावाभावप्रयुक्तः सृष्ट्यादेः समयनियम इति समर्थितम् । प्रकारान्तरेण तं समर्थयते असंख्यातेति ।

अनु० — असंख्यातविशेषत्वादिच्छाया अपि सर्वदा ॥

सर्वदा विद्यमानाया इति शेषः । सर्वदा विद्यमानाया अपीश्वरेच्छयाः शक्तिव्यक्तिरूपावस्थितसिसृक्षात्वाद्यसंख्यातविशेष(वत्त्वा)त्वात् तद्व्यक्त्यव्यक्तिप्रयुक्तः सृष्ट्यादेः समनियमो युज्यत इत्यर्थः । यद्यपि कालभेदमात्रेण कृतसमाधानमेतत् । कालविशेषे स्रक्ष्यामीत्येवंरूपत्वाद्भगवदिच्छाया न मोघत्वमापद्यते । तथाऽपि वस्तुस्थितिरियं दर्शिता वेदितव्या ।

शे० — नन्विच्छाया असंख्यातविशेषत्ववर्णनमनर्थकम् । न च सृष्टिप्रलयसमयनियमसमर्थनार्थं तदिति वाच्यम् । कालविशेषभावाभावाभ्यां तन्नियमस्य समर्थितत्वादित्यतः प्रकारान्तरेण समयनियमसमर्थनार्थत्वादस्य न वैयर्थ्यमिति भावेन तत्परतयोत्तरग्रन्थं योजयति एवमिति । नन्वनेन सर्वदेच्छाया असंख्यातविशेषत्वमुच्यते । ततश्चोक्तनियमानुपपत्तिरेव दृढीकृता स्यादित्यतो नात्र यथाश्रुतसंबन्धः, किन्त्वन्यथैवेत्यतो नानुपपत्तिरिति भावेन साकाङ्क्षत्वप्रयुक्तवाक्याभासत्वमपेक्षितपूरणेन परिहरन्नेवोक्तनियमसमर्थनपरतया भाष्यं व्याचष्टे सर्वदेत्यादिना ।

प० — शक्तिव्यक्तिरूपावस्थितेति । शक्तिव्यक्तिस्वरूपं च 'अत्ता चराचरे'ति नये सम्यगुक्तमिति भावः ।

श्री० — ननु नैवं समाधानं कर्तुं शक्यम् । ईश्वरेच्छाया नित्यत्वेन सद्भावेऽपि सृष्ट्यादिरूपकालविशेषभावेन सा मोघा स्यादित्यत आह कालविशेषे इति ।

सु० — कालस्य कालगतत्वेनेत्युक्तं, तत्र किं कालः स्वगतः किं वा कालान्तरगतः । नाद्यः स्वस्कन्धारोहणवद्विरुद्धत्वात् । न द्वितीयः तदभावात् । भावे वा कालान्तरसृष्टिवैयर्थ्यात् । तस्याप्युत्पत्तौ कालान्तराङ्गीकारप्रसङ्गादित्यतः सप्रमाणकमुक्तं विवृणोति ईश इति ।

अनु० — ईशो देशश्च कालश्च स्वगता एव सर्वदा ॥

देश इत्यव्याकृताकाशाभिधानम् ।

शे० — कालान्तराङ्गीकारप्रसङ्गादिति । ततश्चानवस्था स्यादिति भावः ।

श्री० — भावे वेति । कालान्तरस्य सत्त्वे तेनैव सृष्ट्याद्युपपत्तौ तस्मिन्कालान्तरे एतत्कालसृष्टिर्व्यर्थेत्यर्थः ॥ तस्यापीति । अधिकरणीभूतकालान्तरस्यापीत्यर्थः ॥ कालान्तरेति । तथा चानवस्थेति भावः ।

सु० — स्वगता इत्युक्त्या प्राप्तां देशकालयोः स्वातन्त्र्यशङ्कां वारयति ईशाधीनाविति ।

अनु० — ईशाधीनौ च तौ नित्यं तदाधारौ च तद्गतौ ॥
इति श्रुतिरपि प्राह काले स्वोद्दिष्ट एव तु ॥
तत्कालसृष्टिमेवातो वाञ्छतीशः सदैव हि ॥
स्यात्कालः स तदैवेति कालस्य स्वगतत्वतः ॥

विशेषणत्रयेण सत्ताप्रतीतिप्रवृत्तीनां परमेश्वरायत्तत्वमुच्यते । श्रुतिरपीति साक्षिणं समुच्चिनोति । यतः कालस्य स्वगतत्वं श्रुतिः प्राह साक्षिणा च सिद्धम् । अतः कालस्य स्वगतत्वतः । स कालस्तदैव स्यादितीशः सदैव स्वोद्दिष्ट एव काले । तत्तत्कालसृष्टिमेव वाञ्छतीत्यन्वयः ।

शे० — स्वातन्त्र्यशङ्कामिति । 'स्वगता' इति स्वाश्रयत्वोक्त्याऽऽश्रयान्तरनैरपेक्ष्यसूचनात्स्वातन्त्र्यप्राप्तिरिति भावः ॥ विशेषणत्रयेणेति । ईशाधीनाविति विशेषणेन सत्तायाः, तदाधाराविव्यनेन प्रवृत्तेस्तद्गताविव्यनेन प्रतीतेः, परमेश्वरायत्तत्वमुच्यत इति विवेकोऽत्रानुसन्धेयः । अनेनेशाधीनौ ईशाधीनसत्ताकौ । सः आधारः प्रवर्तको ययोस्तौ तदाधारौ । तस्माद्गतं गतिर्ज्ञानं ययोस्तौ तद्गताविव्यनुव्याख्यानयोजनां सूचयति ।

प० — तत्तत्कालसृष्टिमिति । तत्तत्कालसृष्टिगोचरमित्यर्थः ।

या० — सत्ताप्रवृत्तीति । अनेनेशाधीनावीशाधीनसत्ताकौ, स आधारः प्रवर्तको ययोस्तौ तदाधारौ, तस्माद्गतं गतिर्ज्ञानं ययोस्तौ तद्गताविव्यनुव्याख्यानयोजनां सूचयति ।

श्री० — स्वोद्दिष्टे स्वसङ्कल्पिते ।

सु० — एतदुक्तं भवति । कालातिरिक्तकार्याणामेव कालोऽधिकरणतया कारणं न कालस्य । केवलं श्वो घटं स्रष्टाऽस्मीतिवत्कालसृष्टिं वाञ्छतः परमेश्वरस्याधिकरणतयोद्देश्यः कालः क इति प्रश्नोऽवशिष्यते । तत्र यः सृज्यः स एवेत्युत्तरम् । न हि सृज्यस्य प्राक् सत्त्वमस्ति । येनोद्देश्यत्वं सत्त्वमपेक्षेत । अधिकरणाधिकर्तव्यता चैकस्यैव श्रुत्यादिसिद्धा विशेषबलाच्चोपपद्यते । अतो न कालस्योत्पत्तौ काचिदनुपपत्तिरिति ।

शे० — ननु तथाऽपि स्यादेतदिति शङ्कायाः कथमनेन परिहार इत्यत आह । इदमुक्तं भवतीति । तथा च स्वव्यतिरिक्तसर्वोत्पत्तिमन्निमित्तत्वात्कालस्य न तदुत्पत्तावपि कालापेक्षेति भावः ।

केचित्तु 'कालातिरिक्तेति । तथा च पूर्वकालस्योत्तरकालं प्रत्यधिकरणत्वाभावेऽपि कारणत्वमस्त्येवेति भावः:' इत्यप्याहुः । किमर्थं तर्हि मूले कालस्य स्वगतत्ववर्णनमित्यतः शङ्कान्तरपरिहारार्थत्वात्तस्य नानर्थक्यमिति भावेन तन्निरसनीयां शङ्कामाह केवलमित्यादिना । ननु सृज्यस्य कालस्य प्रागसतः कथमधिकरतयोद्देश्यत्वमित्यतः किमत्र यदुद्देश्यं तत्प्राक् सदेवेति व्याप्तेः प्रागसत्त्वे कथमधिकरणतयोद्देश्यत्वमित्यभिमतं, किंवा सृज्यस्याधिकर्तव्यत्वादधिकरणाधिकर्तव्ययोश्च लोके भेदस्यैव दृष्टत्वात्कथमेकस्यैवाधिकरणाधिकर्तव्यत्वमिति विकल्पं मनसि निधायाद्यं दूषयति **न हीति** । सृज्यस्य घटस्योद्देश्यत्वेऽपि प्राक् सत्त्वाभावेनोक्तव्याप्तेरभावात्प्रागसतोऽपि सृज्यकालस्योद्देश्यतोपपद्यत इति भावः । द्वितीयेऽपि कथमिति किं प्रमाणप्रश्न उतोपपादकप्रश्न इति विकल्पद्वयं मनसि निधायाद्यस्योत्तरमाह **श्रुत्यादिसिद्धेति** । आदिपदेन साक्षिपरिग्रहः । द्वितीयस्योत्तरमाह **विशेषबला-चेति** ।

**स०**— केवलमित्यस्य प्रश्नोऽवशिष्यत इत्यन्वयः ॥ ननु सृज्यस्य कालस्य प्रागसतः कथमधिकरणतयोद्देश्यत्वमित्यतः किमत्र यदुद्देश्यं, तत्प्राक्सदेवेति व्याप्तेः प्रागसत्त्वे कथमुद्देश्यत्वमित्यभिप्रायः, यद्वा सृज्यस्याधिकर्तव्यत्वात् अधिकरणाधिकर्तव्ययोश्च लोके भेदस्यैव दृष्टत्वात् कथमेकस्यैवाधिकरणत्वमधिकर्तव्यत्वं चेत्यभिप्राय इति विकल्पं मनसि निधायाद्यं दूषयति **न हि सृज्यस्य सत्त्वमस्ति, येनोद्देश्यत्वं सत्त्वमपेक्षेतेति** । सृज्यस्य घटस्योद्देश्यत्वे विद्यमानेऽपि प्राक् सत्त्वाभावेन यदुद्देश्यं तत्प्राक्सदिति व्याप्तेस्तत्र व्यभिचारेणासंभवात् प्रागसतोऽप्युद्देश्यत्वोपपत्तिरिति भावः । द्वितीयं दूषयति **अधिकरणाधिकर्तव्यता चेति** ।

**प०**— ननु स्यादेतदित्यादिना कृतचोद्यस्य प्रपञ्चयिष्यत इति समाधिरुक्तः । तत्कथमनेन प्रपञ्चनेन समाधिः प्राप्त इत्यत आह **एतदुक्तमिति** ॥ **न तत्कालस्येति** । तथा च तस्य पूर्वकाल एव कारणं भविष्यतीति भावः । तर्हि स्वगतत्वोक्तेः क्वोपयोग इत्यत आह **केवलमिति** ॥ **स्रष्टाऽस्मीति** । अनद्यतने लुडिति भविष्यदनद्यतने लुटोऽभिधानादिति योगात्स्रष्टास्मीत्युक्तम् ।

**या०**— **कालातिरिक्तेति** । तथा च पूर्वकालस्योत्तरकालं प्रत्यधिकरणत्वाभावेऽपि कारणत्वमस्त्येवेति भावः । नन्वेवं मूले कालस्य स्वगतत्वं किमर्थमुक्तमित्यतस्तत्सङ्गमयितुमाह **केवलं च इत्यादिना** । ननु दृष्टान्तदार्ष्टान्तिकयोर्भविष्यत्कालस्य कथमुद्देश्यत्वम् । तस्य प्रागसत्त्वादित्यत आह **न हि सृज्यस्येति** । विधेयसमकालत्वं ह्युद्देश्यस्य वक्तव्यम् । अत्र च विधेयस्य सृज्यस्य घटस्य कालस्य वा प्राक् सत्त्वं न ह्यस्ति । येनोद्देश्यस्यापि भविष्यत्कालस्य सत्त्वमपेक्षितं स्यादित्यर्थः ॥

सु०— यदुक्तं यदेश्वरेच्छा सिसृक्षाकारा व्यज्यते तदा महदादिसृष्टिर्भवति । यदा तु सञ्जिहीर्षारूपा संपद्यते तदा संहारो भवतीति । तत्रेदं वैचित्र्यं किन्निमित्तमिति वाच्यम् । न च कालविशेषो निमित्तमिति युक्तम् । तस्येश्वरेच्छायत्तत्वात् । नापि पुरुषार्थायत्तम् । पारतन्त्र्यापत्तेरित्यत आह स्वभावादेवेति ।

अनु०— स्वभावादेव हीच्छैषा

एषा विचित्रा । तस्मात्कालविशेषाणामीश्वराधीनत्वे नेतरेतराश्रयदोषापत्तिरिति हिशब्दार्थः । कुत एतदित्यत आह देवस्येति ।

देवस्यैष इति श्रुतेः ॥

एतदवगम्यत इति शेषः ।

शे०— तस्येश्वरेच्छायत्तत्वादिति । तथा चान्योन्याश्रय इति भावः । पुरुषार्थायत्तं पुरुषप्रयोजनाधीनम् । ईश्वराधीनत्वे ईश्वरेच्छाधीनत्वे ॥ नेति । ईश्वरेच्छायाः कालविशेषाधीनत्वाभावादिति भावः । साकाङ्क्षत्वप्रयुक्तवाक्याभासतानिरासायापेक्षितं पूरयति एतदिति । 'ज्ञापकश्चायमर्थो न कारक' इति न्यायं मनसि निधायोक्तम् अवगम्यत इति ।

प०— पुरुषार्थेति । सृष्टिसंहारादेः कालभेदेनाव्यवस्थितत्वे पुरुषाणाम(ध्य)र्थ्यमानप्रयोजनासिद्धेस्तदर्थमेवं वैचित्र्यमुपेयमिति च नेत्यर्थः । इति श्रुतेरिति पञ्चम्याः अन्वयमाह एतदवगम्यत इति शेष इति ।

या०— तस्येश्वरेच्छेति । तथा चेतरेतराश्रयत्वापत्तिरिति भावः । पुरुषार्थेति । पुरुषप्रयोजनाधीनमित्यर्थः ।

श्री०— तस्येश्वरेच्छायत्तत्वादिति । तथा च सृष्टिसंहाररूपकालविशेषे प्राप्ते तदुपाधिकसिसृक्षासञ्जिहीर्षारूपेच्छाप्राप्तिः, तत्प्राप्तौ च तदायत्तकालविशेषप्राप्तिरित्यन्योन्याश्रय इति भावः । नेतरेतराश्रयत्वमिति । कालविशेषाणामौपाधिकत्वाङ्गीकार एवेतरेतराश्रयो, न स्वाभाविकानामीश्वराधीनत्व इत्यर्थः ।

**सु०— अपर आह । किमनया कालादिवैचित्र्यकल्पनया । यावता कारणानां कार्याणां च स्वभावादेव समयनियमोपपत्तेः । अन्ततोऽपि हि स्वभाववादोऽभ्युपगन्तव्यः । ततो वरमादावेव स्वभाववादाभ्युपगम इति । अत आह** स्वभावोऽपीति ।

**अनु०—** स्वभावोऽपि परेशेच्छावश इत्युदितः पुरा ॥

**पुरा 'चेतनानां विशेषो य' इत्यादौ । स्वभाववादमभ्युपगच्छताऽपि तन्नियामकतयेश्वरः अङ्गीकार्यः । ततस्तत्रैकत्रैव स्वभावानुसरणे प्रमाणायत्तेऽङ्गीकार्ये किमनेकत्र तदभ्युपगमेनेति भावः ।**

**प०—** पुरेति मूलानुवादः ॥ **इत्यादाविति** । लिङ्गपादे 'अन्तर उपपत्तेरि'त्येतदनुव्याख्याने ।

**श्री०— कालादिवैचित्र्येति** । कालविशेषभावाभावप्रयुक्तः सृष्ट्यादेः समयनियम इति काले वैचित्र्यकल्पनयेत्यर्थः । आदिपदेनेच्छायामप्यवान्तरवैचित्र्यमङ्गीकृत्य तद्व्यक्त्यव्यक्तिप्रयुक्तसृष्ट्यादिसमयनियम इति इच्छायामपि वैचित्र्यकल्पनया किमित्यर्थः । नन्वेवमकल्पने सर्वदा सृष्ट्यादिः स्यादित्युक्तदोष इत्यत आह **यावतेति** । कालविशेष एव सृष्टिर्भवति । कुतः । कारणस्य तदानीमेव कार्यजनकत्वस्वाभाव्यात् । कार्यस्य च तदानीमेवोत्पद्यमानत्वस्वाभाव्यादित्यर्थः ॥ **अन्तत इति** । काले इच्छायां च वैचित्र्यविशेषमङ्गीकृत्यापि तत्र प्राप्तेतरेतराश्रयदोषपरिहाराय विशेषाणां स्वाभाविकत्वमेष्टव्यमित्यर्थः । **आदावेव** कालेच्छायनङ्गीकृत्येत्यर्थः । **एकत्र** ईश्वरे, स्वाभाविकविशेषवतोऽपि कालस्येश्वराधीनत्वादेकत्र इत्युक्तम् । **अनेकत्र** कार्ये कारणे च ॥ **तदिति** ॥ स्वभावेत्यर्थः ।

**सु० — न केवलं पूर्वोक्तमेव प्रमाणं स्मर्तव्यम् । किन्तु प्रमाणान्तरमप्यस्तीत्याह** नित्या इति ।

**अनु० —** नित्या अनित्याश्च ततस्तदधीना इति श्रुतिः ॥

**तत इत्यस्य श्रुतावेव परामर्शविषयो द्रष्टव्यः । श्रुतिः सर्वस्येश्वराधीनतामाहेति शेषः ।**

**शे०— न केवलं पूर्वोक्तमिति** । एतच्च 'चेतनानां विशेषो यः स्वभावोऽपीश्वरार्पित' इत्यनुव्याख्याव्याख्यानावसरे 'न तदस्ति विना यत्स्यान्मया भूतं चराचरमि'त्युदाहृतप्रमाणसिद्धत्वाभिप्रायेण [illegible] ॥ **तत इत्यस्येति** । तत इत्यस्य परामर्शस्य विषयः, श्रुतावेव द्रष्टव्य इति संबन्धः । [illegible] पूर्वश्रुतौ प्रकृतस्य हेतोरेव तत इति परामर्शः । न त्वेतद्ग्रन्थे पूर्वप्रकृतस्ये-
[illegible]

**प०— न केवलं पूर्वोक्तमेव प्रमाणमिति** । तत्र मूलाभिमतं सुधोक्तं प्रमाणमित्यर्थः ।

**सु०— अनुपपत्त्यन्तरं वैशेषिकादिमते दर्शयत् ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ ॥ ॐ उभयथा च दोषात् ॐ ॥ इति सूत्रद्वयं व्याचष्टे रूपेति ।**

**अनु०— ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ ॥ ॐ उभयथा च दोषात् ॐ ॥**

रूपस्पर्शादिहेतुभ्यः परमाणोरनित्यता ॥

अनुमेया

**परमाणोरिति जात्यपेक्षमेकवचनम् । पार्थिवादीनां चतुर्विधानां परमाणूनां नित्यतामुपयन्ति वैशेषिकादयः । तदनुपपन्नम् । पार्थिवाः पाथसीयास्तैजसाश्च परमाणवोऽनित्या रूपवत्त्वात्पटवत् । यद्वा चतुर्विधा अप्यनित्याः स्पर्शवत्त्वात्पटवत् । एवं पार्थिवा आप्याश्चानित्या रसवत्त्वात्पटवत् । पार्थिवा अनित्या गन्धवत्त्वात्तद्वदेवेत्याद्यनुमानविरुद्धत्वात् । न च सावयवत्वमुपाधिः । गुणादौ साध्याव्याप्तेः । न च द्रव्यत्वावच्छिन्ने साध्येऽस्योपाधित्वम् । यद्रूपादिमत्तत्सावयवमिति साधनव्यापकत्वात् । न च धर्मिग्राहकविरोधः । साक्षिणैव परमाणुसिद्धेरुक्तत्वात् । अनित्यत्वे च परमाणूनां न मूलकारणत्वसिद्धिः । यदि च रूपादिमन्तोऽपि परमाणवो नानित्यास्तदा घटादयोऽप्यनित्या न स्युरविशेषात् । तथाऽ(च)पि न परमाणूनां मूलकारणत्वम् । न चेश्वरे हेतूनां व्यभिचारः । भौतिकत्वेन विशेषणात् । तथाच वक्ष्यति । 'भौतिकं त्वेव रूपादि व्याप्तं नाशेन नो मत' इति ।**

**शे०— ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ ॥ ॐ उभयथा च दोषात् ॐ ॥**
व्यक्त्यैक्यापेक्षत्वस्य बाधितत्वादाह **जात्यपेक्षमिति** । समुदायापेक्षमित्यर्थः ॥ **न च धर्मिग्राहकेति** । अवयवावयविप्रसङ्गस्तावदनुभूयते । स च न निरवधिकः । तथा सत्यनन्तद्रव्यारब्धत्वाविशेषात्सर्षपमहीधरयोस्तुल्यपरिमाणत्वप्रसङ्गात् । तस्मान्निरवयवं द्रव्यमवयविभूतं किञ्चिदेष्टव्यम् । स एव च परमाणुरिति धर्मिस्वरूपग्राहकप्रमाणेन निरवयवतयैव परमाणुसिद्धेः तत्सावयवत्वं धर्मिग्राहकमानविरुद्धमिति न वाच्यमित्यर्थः ॥ **उक्तत्वादिति** । 'यदि साक्षिमितं नैतन्नानुमा तत्र वर्तत' इत्यादिनेति शेषः । व्याप्तिवैकल्यात्तर्काभासोऽयमित्याशङ्क्य विशेषव्याप्तेरभावेऽप्यविशेषलक्षणसामान्यव्याप्तेः सद्भावान्नानुपपत्तिरित्याशयेनाह **अविशेषादिति** । अस्त्येव घटादीनामपि नित्यत्वमितीष्टापादनमेतदित्याह **तथाऽपीति** । घटादीनां नित्यत्वेऽपीत्यर्थः । परमाणुवद्घटादेरपि नित्यत्वे कार्यस्यैवाभावप्राप्तेः किमपेक्षया मूलकारणत्वं परमाणूनां स्यादिति भावः । अनेन **उभयथा** परमाणूनामनित्यत्वे, तद्वद्घटादीनां नित्यत्वे च परमाणूनां मूलकारणत्वानुपपत्तिरिति दोषात्परमतमसमञ्जसमिति सूत्रार्थ उक्तो भवति । **यद्यप्ययमर्थो न मूले** प्रतीयते तथाऽप्यनुकूलतर्कस्य मूलाभिप्रेतत्वादुक्तरीत्या सूत्रार्थोऽप्यभिप्रेत एवेति ज्ञातव्यम् ।

प०— **रूपादिमत्त्वाच्चेति** । 'रूपस्पर्शादिहेतुभ्य' इत्युक्तहेतून् पक्षभेदेन व्यनक्ति **पार्थिवा-** इत्यादिना **गन्धवत्त्वादित्यन्तेन** ॥ **न च धर्मिग्राहकेति** । 'पक्षीकर्तुमशक्यत्वादि'त्येतदवतारिकायां पूर्वोक्तं द्व्यणुकं सावयवं महद्द्रव्यारंभकत्वात् त्र्यणुकादिवदिति यदनुमानं द्व्यणुकावयवरूपपरमाणुरूप-धर्मिग्राहकं सावयवत्वेऽनवस्थादिरूपबाधकोपेततया तन्निरवयवत्वग्राहकमानं, तद्विरोध इत्यर्थः । **उक्तत्वा-दिति** । 'यदि साक्षिमितं नैतन्नानुमा तत्र वर्तत' इत्यत्रोक्तत्वादित्यर्थः । तेन च सावयवत्वेनैव सिद्धेः इति भावः । अस्त्वनित्यत्वं ततश्च किमित्यत आह **अनित्यत्वे चेति** । अस्तु घटादीनां नित्यत्वं ततः को दोष इत्यत आह **तथाऽपीति** । घटादिनित्यत्वपक्षेऽपीत्यर्थः । तथा चेति पाठे घटादीनां नित्यत्वे सतीत्यर्थः । कार्यद्रव्यस्यैवाभावादिति भावः । एतेन अनित्यत्वे चेत्यादिना परमाणूनामनित्यत्वे घटादीनां नित्यत्वे चोभयथाप्यणूनां मूलकारणत्वाभावरूपदोषादिति सूत्रार्थ उक्तो भवति ॥ **वक्ष्यतीति** । जैनमतनिरासप्रस्ताव इति ज्ञेयम् ।

या०— **न च धर्मिग्राहकेति** । अवयवावयविप्रसङ्गास्तावदनुभूयन्ते । स यदि निरवधिकः स्यात्तदा मेरुसर्षपयोस्तुल्यपरिमाणत्वं स्यात्, अनन्तद्रव्यारब्धत्वाविशेषात् । तस्मान्निरवयवं द्रव्यमवधिः स एव परमाणुरिति परमाणोर्निरवयवतयैव सिद्धेः, सावयवत्वाङ्गीकारे तद्विरोध इति नेत्यर्थः ॥ **उक्तत्वा-दिति** । 'यदि साक्षिमितं नैतन्नानुमा तत्र वर्तत इत्यत्रेति' शेषः । **तथाऽपीति** । घटादीनां नित्यत्वेऽपि इत्यर्थः । अनेन उभयथा परमाणूनामनित्यत्वे तद्वद्घटादीनां नित्यत्वे च परमाणूनां मूलकारणत्वानुपपत्तिरिति दोषात् परमतमसमञ्जसमिति सूत्रार्थ उक्तो भवति । यद्यप्ययमर्थो न मूले प्रतीयते, तथाऽप्यनुकूलतर्कस्य मूलेऽभिप्रेतत्वेनोक्तरीत्या सूत्रार्थोऽप्यभिप्रेत एवेति ज्ञातव्यम् ।

श्री०— **रूपवत्त्वादिति** । चतुर्णां पक्षीकारे भागासिद्धिप्रसङ्गात्त्रयाणां पक्षीकरणमिति ज्ञातव्यम् । साक्षिणैवेत्यनन्तरं सावयवतयैवेति शेषः । परमाणूनां रूपादिमत्त्वेनानित्यत्वानुमित्या किं प्राप्तमत आह **अनित्यत्वे चेति** । अनुमानेऽप्रयोजकतामाशङ्क्यानुकूलतर्कमाह **यदि चेति** । रूपत्वा-विशेषाद्घटादेरनित्यता स्यादिति यावदित्यत्रापीष्टापत्तौ चोदितायां बाधकमाह **तथाऽपीति** । तथा च घटादिकमारभ्य द्व्यणुकादिपर्यन्तं कार्यतया संप्रतिपन्नमपि यदि नित्यमङ्गीक्रियते तर्हि परमाणोः किं प्रति कारणत्वं स्यात् कार्यस्यैवाभावात् । कारणत्वाभावे च मूलकारणत्वं दूरोत्सारितमिति भावः ।

**सु० — नन्वस्माभिर्भूतसूक्ष्माणां नित्यताऽङ्गीक्रियते । तत्कथमेवमनुमीयते । मैवम् । न हि परमाणवो भूतसूक्ष्माणि, किन्नामाहं(कारो)मात्रोपचितानि। विकृताकाराश्च अनित्या एवेति ॥**

शे० — शिष्यः शङ्कते **नन्विति** । भूतसूक्ष्माणां नित्यतायाः स्वेनाङ्गीकारात्तेषामेव च परमाणुत्वात्तदनित्यत्वसाधनं तन्नित्यत्वाभ्युपगमविरुद्धत्वान्न युक्तमित्यर्थः । नित्यत्वेनाङ्गीकृतभूतसूक्ष्माणामेव परमाणुत्वाभावान्न तदनित्यतासाधनस्य तन्नित्यत्वाभ्युपगमविरुद्धत्वमिति परिहरति **न हीति** । भूतसूक्ष्माण्येव परमाणवो न हीति सम्बन्ध । जालसूर्यमरीचिस्थत्र्यणुकषष्ठभागपरिमिताः ये परमाणवः परेण मूलकारणतया स्वीकृतास्ते भूतसूक्ष्माणि नेत्यर्थः । येन तदनित्यतासाधनमनुपपन्नं स्यादिति शेषः । किं तर्हि गोतोऽश्व इव परमाणवो भूतसूक्ष्मेभ्योऽर्थान्तरमेवेति पृच्छति **किन्नामेति** । उत्तरमाह **अहङ्कारेति** । अत्राहङ्कारपदं तत्कार्यभूतानामप्युपलक्षकम् । ततश्च तामसाहङ्कारतत्कार्यभूतोपचितानि भूतसूक्ष्माण्येव पराभिमतपरमाणवो न त्वत्यन्तभिन्नमर्थान्तरमिति भावः ॥ **अनित्या एवेति** । ततश्च न पराभिमतपरमाणोरनित्यतासाधने काचिदस्माकं क्षतिरिति भावः ॥

प० — **परमाणव इति** पराभिमता इति योज्यम् ॥ **अहंमात्रोपचितानीति** । अहङ्कारतत्त्वमात्रोपचितानि यानि, तानि भूतसूक्ष्माणीत्यर्थः । उपचितरूपोऽनित्य इत्याह **विकृतेति** ।

या० — **न हि परमाणव इति** । जालसूर्यमरीचिस्थत्र्युणुकषष्ठकणपरिमिता ये परमाणवः परेण मूलकारणतया स्वीकृतास्ते भूतसूक्ष्माणि नेत्यर्थः । **अहङ्कारोपचितानीति** । अत्राहङ्कारपदं तत्कार्याणां भूतानामप्युपलक्षकम् । तथा च तामसाहङ्कारतत्कार्यभूतोपचितानि भूतसूक्ष्माणि पराभिमतपरमाणव इत्यर्थः ॥ २–२–६ ॥

च० — विनेयः शङ्कते **नन्विति** । सिद्धान्ते भूतसूक्ष्माणां परमाणुपदवाच्यानां नित्यतोपगत्या तदनित्यतासाधनं तद्विरुद्धमित्यर्थः । प्रतिविधत्ते **न हीति** । भूतसूक्ष्माणि पराभिमतपरमाणुपदवाच्यानि न हीति योजना । **अहङ्कारोपचितानीति** । अत्राहङ्कारपदं तत्कार्यभूतानामप्युपलक्षकम् । ततश्च तामसाहङ्कारतत्कार्यभूतोपचितानि भूतसूक्ष्माण्येव पराभिमतपरमाणव इत्यर्थः । उपचितरूपस्त्वनित्य इत्याह **विकृतेति** ॥ **वैशेषिकमतनिरासः** ॥

**सु० — ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ॥ इति सूत्रं व्याचष्टे श्रुतीनां चेति ।**

**अनु० — ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ॥**

श्रुतीनां च विरुद्धत्वान्न तन्मतम् ॥
उपादेयमतश्चायमविरुद्धः समन्वयः ॥ २–२–६ ॥

**संबन्धमात्रे षष्ठी । अन्यथा तृतीया स्यात् । श्रुतयश्च 'आत्मन आकाश' इत्याद्यास्तत्र तत्रोदाहृता ज्ञातव्याः । वैशेषिकादिमतस्यानुपादेयत्वे सिद्धे किं लब्धमित्यत आह** अतश्चेति । अयं **सकलगुणपूर्णपरब्रह्मविषयः** । अविरुद्ध इति **न वैशेषिकादिमतविरोधेनासमञ्जसो मन्तव्य** इति भावः ॥ २-२-६ ॥

**शे०— ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ॥ संबन्धमात्र इति** । करणत्वादिरूपसंबन्ध-विशेषाविवक्षया तत्सामान्यविवक्षया च श्रुतीनामिति षष्ठीत्यर्थः । कुतोऽत्र करणत्वाविवक्षा संबन्ध-सामान्यविवक्षा चाश्रयणीयेत्यत आह **अन्यथेति** । श्रुतीनां निरूपणक्रियाकरणत्वात्कर्तृकरणयोस्तृतीयेति तत्र तृतीयाविधानात् श्रुतिभिरिति तृतीया स्यादित्यर्थः ॥ **श्रुतयश्चेति** । 'आत्मन आकाश' इत्यादि-श्रुतिभिराकाशादिक्रमेण सृष्टेरुक्तत्वात् द्व्यणुकादिक्रमेण सृष्टिवादिनस्तच्छ्रुतिविरोध इत्याशयः ॥ **इति वैशेषिकाधिकरणं समाप्तम्** ॥ २-२-६ ॥

**स०— श्रुतयश्चेति** । तथा च 'आत्मन आकाश' इत्यादिश्रुतिभिराकाशादिक्रमेण सृष्टेः प्रतिपादनात् द्व्यणुकादिक्रमेण सृष्ट्यङ्गीकारे तद्विरोधादिति भावः ॥ २-२-६ ॥

**प०— अपरिग्रहाच्च** । वस्तुतो विरोधस्य सत्वादविरुद्ध इति कथमुक्तिरित्यत आह **न वैशे-षिकादिमतेति** ॥ २-२-६ ॥

**श्री०— संबन्धमात्र इति** । तच्च बाध्यबाधकरूपमिति भावः । **अन्यथेति** । करणत्व-विवक्षायां श्रुतिभिरिति तृतीया स्यादित्यर्थः । **श्रुतयश्चेति** । तथा चाकाशस्य नित्यत्वाङ्गीकारे तद्विरोधः स्यादित्यर्थः ॥ २-२-६ ॥

**॥ इति वैशेषिकाधिकरणम् ॥**

## ॥ अथ समुदायाधिकरणम् ॥

### ॥ अथ परमाणुपुञ्जवादिमतनिराकरणम् ॥

सु०— ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ अथेदानीं सौगतमतमपाक्रियते । ते च चतुर्विधाः । वैभाषिकाः सौत्रान्तिका माध्यमिका योगाचाराश्चेति । तत्र जगत्सत्यमेव परमाणुमयमाचक्षाणानां वैशेषिकादीनां निरसनप्रसङ्गादनतिभेदं वैभाषिकसौत्रान्तिकमतमादौ तावन्निराक्रियते ॥ विप्रतिपत्तिं दर्शयंस्तन्मतमुपन्यस्यति वैभाषिकाश्चेति ।

अनु०— ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥

वैभाषिकाश्च सौत्रान्ताः स्वरसक्षणिकं जगत् ॥

आहुरिति वक्ष्यमाणेन संबन्धः । क्षणिकं क्षणमात्रावस्थायि । मुद्गराभिघातादीनां विनाशहेतूनां प्रतिक्षणमनुपलम्भात्कथं क्षणभङ्गित्वमित्यत उक्तं स्वरसेति । स्वभावेनैव क्षणिकं स्वभाव एवायं वस्तुनो यद्विनाशित्वम् । तत्र का कारणापेक्षा । मुद्गरादयोऽपि न वस्तुविनाशहेतवः किन्नाम घटादितः कपालादेर्विसदृशकार्यस्योत्पत्तौ निमित्तभूता एवेति ।

शे०— ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ आनन्तर्ये हेतुं सूचयन्नेव तदधिकरणप्रघट्टकप्रतिपाद्यमाह अथेदानीमिति । हैतुकनिराकरणानन्तरमिति भावः । अयम्भावः । समयास्तावद् द्विविधाः । हैतुकाः पाषण्डाश्चेति । 'योगसाङ्ख्यकणादाक्षपादा वै हेतुवादिनः । पश्वीशशाक्तबुद्धाद्याः पाषण्डा इति कीर्तिता' इति स्मरणात् । तत्र हैतुका हेतुभिः प्रबला इति त एवादौ निराकार्या अनन्तरमेव च पाषण्डनिरासावसर इत्यतोऽत्र हैतुकनिरासानन्तरं पाषण्डनिरासः कर्तव्यः । पाषण्डोऽपि वेदप्रामाण्यानङ्गीकाराङ्गीकाराभ्यां द्वेधा भवति । तत्राद्योऽतिविरोधित्वादादौ निराकार्यः । स च बौद्धजैनभेदेन द्वेधा । तत्र बौद्धशास्त्रस्य प्रथमं निर्मितत्वात्प्राबल्याच्चादौ बौद्धा निराकार्या इति तत्पक्ष एवादौ निराक्रियत इति । वैभाषिकादिमतनिरासपरस्यास्य ग्रन्थस्य कथं सौगतनिरासकत्वमित्यतः तदवान्तरभेदत्वाद्वैभाषिकादीनां तदुपपत्तिरिति भावेन तद्भेदमाह ते चेति ॥ चतुर्विधा इति । यद्यपि भगवानेक एव गुरुस्तथाऽपि प्रतिपत्तिभेदात् विनेयभेदाद्वा चातुर्विध्यमिति द्रष्टव्यम् । यद्यपि मन्दमध्यमोत्तमबुद्धिभेदाद्विनेयानां त्रैविध्यमेवेति तदेव च वक्तुं युक्तम् । अत एव शाङ्करभाष्ये त एते त्रयो वादिनो भवन्तीत्यादिना तदेव दर्शितम् । तथाऽपि मन्दबुद्धीनां वैभाषिकसौत्रान्तिकभेदेन द्वैविध्याश्रयणात् साक्षात्परम्पराविभाजकोपाधीनेकीकृत्येयं चातुर्विध्योक्तिरिति द्रष्टव्यम् । ननु परमाणुपुञ्जरूपः क्षणिको बाह्योऽर्थो घटादिः सन्प्रत्यक्षश्चेति वदतो वैभाषिकात्सोऽनुमेय इति वदन्सौत्रान्ति-

कोऽत्यन्तविरोधी, ततोऽपि ज्ञानमेवास्ति न ततोऽतिरेकेण बाह्यार्थोऽस्तीति वदन्योगाचारोऽतितरां विरोधी, ततोऽपि सर्वशून्यवादी माध्यमिकोऽतितमां विरोधीति, माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकाः क्रमेणैव निराकार्याः । तत्कथमतिविरोधिनौ माध्यमिकयोगाचारौ प्रथममनिराकृत्य किञ्चिद्विरोधिनोर्वैभाषिकसौत्रान्तिकयोरेव प्रथमं निराकरणमित्याशङ्कां परिहरन्नेवैतदधिकरणप्रतिपाद्यमाह **तत्रेति** । **परमाणुमयं** परमाण्वारब्धम् ॥ **निरसनप्रसङ्गादिति** । परमाण्वारम्भवादनिरासेन तत्पुञ्जवादोपस्थितेः प्रसङ्गसङ्गत्या तन्निरास इति भावः । उपलक्षणं चैतत् । वैभाषिका हि परमाण्वाकाशदिक्कालात्ममनसां तथा सामान्यविशेषसमवायानां, तथा परमाणुपरिमाणादीनां गुणानां च केषाञ्चिन्नित्यतामभ्युपेत्य शेषाणां निरन्वयं विनाशमुपयन्तीत्यतस्तेऽर्धवैनाशिकाः । तेन तदुपन्यासो वैनाशिकत्वसाम्येन सर्ववैनाशिकान्स्मारयतीति प्रसङ्गसङ्गत्या तदनन्तरं वैनाशिकमतनिराकरणमित्यपि द्रष्टव्यम् । ननु योगाचारमाध्यमिकयोरिव वैभाषिकसौत्रान्तिकयोरपि मतभेदसद्भावात्पृथगेव तन्मतं निरसनीयम् । तत्किमिति मतद्वयस्यैकीकृत्य निरास इत्यत उक्तम् **अनतिभेदमिति** । यद्यपि वैभाषिकाणां बाह्योऽर्थः प्रत्यक्षः, सौत्रान्तिकानां त्वनुमेय इत्यस्ति तन्मतयोरवान्तरभेदः तथाऽपि परमाणुपुञ्जरूपस्य क्षणिकस्य, बाह्यार्थस्य घटादेः सत्यताया, उभयसम्मतत्वान्नात्यन्तं तन्मतयोर्भेद इति परमाणुपुञ्जसत्त्ववादिमतत्वेनैकीकृत्य मतद्वयं तन्निरासो युक्त इति द्रष्टव्यम् ॥ ॥ ननु वैभाषिका इत्याद्युत्तरभाष्यमनर्थकम् । न चायं परमतोपन्यास इति वाच्यम् । तस्याप्यनर्थकत्वादित्याशङ्क्य विप्रतिपत्तिविषयप्रदर्शनेन वैभाषिकादयो जगत्सत्यत्वमभ्युपगच्छन्त्येव तत्कथं तन्निरासायाधिकरणारम्भ इत्याशङ्कापरिहारेणाधिकरणारम्भसमर्थनार्थत्वात्तन्मतोपन्यासस्य न वैयर्थ्यमित्यभिप्रेत्य विप्रतिपत्तिप्रदर्शनार्थतासूचनपूर्वकं तन्मतोपन्यासपरतया ग्रन्थतात्पर्यमाह **विप्रतिपत्तीति** ।

**वक्ष्यमाणेनेति** । 'दुःखाभावं सुखं चाहुरि'त्युत्तरवाक्ये वक्ष्यमाणेनेत्यर्थः । ननु क्षणावस्थायित्वरूपक्षणिकत्वं सिद्धान्तेऽप्यभिमतं, तेन विना स्थायित्वानिर्वाहात् । न ह्यल्पाल्पतरकालावस्थायित्वं विना स्थायित्वं सूपपादम् । तत्कथमेतत् विप्रतिपत्तिविषयप्रदर्शनमित्यतो यथेदं विप्रतिपत्तिविषयप्रदर्शकं स्यात्तथा व्याचष्टे **क्षणिकमिति** । नन्वेवं मुद्गराभिघातादेर्विनाशहेतुत्वं न स्यादित्याशङ्क्येष्टापत्त्या परिहरति **मुद्गरादय इति** । तर्हि प्रयोजनान्तरस्याप्यभावादानर्थक्यमेव तेषामापन्नमिति पृच्छति **किन्नामेति** । प्रयोजनान्तरसद्भावान्नानर्थक्यमिति भावेन तदर्थत्वमाह **घटादित इति** ।

प० — ॐ **समुदाय उभयहेतुकेपि तदप्राप्तिः** । हैतुकनिरासानन्तरं पाषंडनिरासो भाष्यटीकोक्तरीत्यावसरप्राप्त इति स्मर्तव्यमिति भावेनाह **अथेदानीमिति** । वैदिकपाषंडापेक्षयाऽवैदिकपाषंड-

स्यातिविरोधित्वेन तन्निरासस्याद्यत्वद्योतनायेदानीमित्युक्तम् । चतुर्णां मध्ये द्वयोरादौ निरासे बीजमाह **तत्र जगदिति** । सत्यत्वपरमणुमयत्वाभ्यां वैशेषिकमतानतिभेदमित्यर्थः । यद्वा द्वयोः सहनिरासे हेतुमाह **अनतिभेदमिति** ॥ **विप्रतिपत्तिमिति** । निरासे बीजभूतामिति योज्यम् ॥

**या०— ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ अथेदानीमिति** । समया द्विविधा हैतुकाः पा(त)ष(ख,ण्ड श्चेति । 'अक्षपादकणादौ च सांख्ययोगौ च हैतुकाः । बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिताः' इति वचनात् । तत्र हैतुकाः प्रबलाः युक्तिमत्त्वात् । अतः पूर्वं ते निराकृताः । अथैवं हैतुकनिराकरणानन्तरं पाषण्डिमतमपाक्रियते । तदपि वेदप्रामाण्यानङ्गीकाराङ्गीकाराभ्यां द्वेधा । तत्राद्यमतिविरोधित्वादादौ निराकार्यम् । तदपि बौद्धजैनभेदेन द्वेधा । तत्र बौद्धमतस्य प्रथमनिर्मितत्वात्प्रबलत्वाच्च तदेवादावपाक्रियत इत्यर्थः । तदिदमाह **इदानीमिति** । नन्वेवं सर्वज्ञत्वादिवैभाषिकसौत्रान्तिकमतापेक्षया माध्यमिकयोगाचारमतयोर्जगदसत्त्ववादिमतत्वेनातितरां विरोधित्वात्त एवादौ निराकार्ये इत्यत आह **तत्र जगत्सत्यमेवेति** । वैभाषिकसौत्रान्तिकमतेऽपि जगतः सत्यत्वपरमाणुमयत्वयोरभिधानादिति भावः । इयांस्तु विशेषः । वैशेषिकादिमते सत्यं जगत् स्थायि परमाणुकार्यं च । वैभाषिकसौत्रान्तिकमते तु क्षणिकं परमाणुपुञ्जरूपं चेति । तदिदमाह **अनतिभेदमिति** । तथा च जगत्सत्यत्वपरमाणुमयत्व(व)ादिवैशेषिकमतनिरासेन तादृशवैभाषिकसौत्रान्तिकमतयोः स्मारितत्वात्प्रसङ्गसङ्गत्यैव तन्मतमादौ निराक्रियत इत्यर्थः ॥

---

**च०— ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ** ॥ 'अक्षपादकणादौ च सांख्ययोगौ च हैतुकाः । बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिता' इति वचनात्समयानां द्वैविध्यम् । तत्र हैतुका अहैतुकावधिकबलीयस्त्वेन पूर्वं निराकृताः । अथ हैतुकनिरासावसरः । पाषण्डोपि वेदप्रामाण्योपगमानुपगमाभ्यां द्वेधा । आद्यस्त्वतिप्रतीपत्वादादौ प्रत्याख्येयः । सोऽपि बौद्धजैनभेदभिन्नः । तत्र बौद्धमतस्य प्रथमनिर्मितत्वात् बलवत्वाच्चादौ तदेव प्रतिविधीयत इत्याशयेनाह **अथेदानीमिति** । **अनतिभेदं** अतिशयितभेदविनिर्मुक्तम् ।

**सु०— ननु च कारणानां क्रियया संयोगे सति तत्समवेततया तत्परिणामतया वा कार्येणोत्पत्तव्यम् । तत्कार्येणाप्येवमिति कथं क्षणिकत्वं जगत इत्यत आह** अणूनामिति ।

अनु० — अणूनां समुदायं च

**जगदाहुः । अणुसमुदाया एव गोघटादिबोधबोध्याः । न तु तदतिरिक्तोऽवयवी नामास्ति । येन क्षणिकता विरुध्येत । अणुमात्रमिति वक्तव्ये समुदायग्रहणमेको महानिति**

**प्रत्यक्षप्रत्ययविरोधपरिहारार्थम् । प्रत्येकमणूनामप्रत्यक्षत्वेऽनेकत्वेऽमहत्त्वेऽपि तत्समुदायस्य प्रत्यक्षत्वादि युज्यत इति भावः ।**

**शे०—** न्यायमतमाश्रित्योक्तं **तत्समवेततयेति** । भेदाभेदपक्षमाश्रित्योक्तं **तत्परिणामतयेति** ॥ **कथं क्षणिकत्वमिति** । जगतः क्षणिकतायां तन्तूनां प्रथमं क्रिया, अनन्तरं संयोग इत्युक्तक्रमायोगादिति भावः ॥ **तदतिरिक्त इति** । परमाणुसमुदायातिरिक्तः परमाण्वारब्धः परमाणुपरिमाणो वाऽवयवी नास्तीत्यर्थः । प्रत्यक्षत्वादीत्यादिपदेनैकत्वादिपरिग्रहः ॥

**च०— बोधबोध्याः** बोधविषयाः ।

**सु०— समुदायो हि मेलकेन (केनचित्) पुंसा भवति । न चास्मदादिस्तथेतीश्वरोऽभ्युपगन्तव्यः स्यात् । तथाऽवयव्यनभ्युपगमे गोघटादिविलक्षणाकारता न स्यादित्यत आह** कालेति ।

**अनु०—** कालकर्मनिमित्ततः ॥

उत्पत्तिकाले युक्तानां

**कालकर्मणी च ते निमित्ते च, ततः** । उत्पत्तिकाले **आदिसृष्टौ** । **अन्यदा तु निमित्तान्तरमस्तीति भावः । युक्तानां सन्निकृष्टतयोत्पन्नानामणूनां समुदायमिति संबन्धः ॥ कर्मादिवशादेव तथा तथा सन्निकृष्टाः परमाणवो जायन्ते । यथा यथा गोघटादिविचित्राकारावभासः स्यात् । तत्र किमीश्वरेण । किं वाऽवयविना । सिद्धान्तिनाऽपि हि कर्मादिकं निमित्तमङ्गीकर्तव्यम् । संयोगश्चावयव्युत्पादानुगुणः । तावतैव सर्वमुपपद्यत इति ।**

**शे०— तथेति** । मेलक इत्यर्थः । अस्मदादीनां परमाण्वदर्शित्वेन तन्मेलकत्वायोगादिति भावः ॥ **विलक्षणाकारतेति** । परमाणुना विलक्षणत्वादिति भावः । कालश्च कर्म च निमित्तं च कालकर्मनिमित्तानि तेभ्य इति कालकर्मनिमित्तत इति यथास्थितयोजनायामादिसृष्टिसंग्रहो न स्यात् । तत्र कालकर्मणोरिव निमित्तान्तरस्याजनकत्वात् अतस्तत्संग्रहाय तदनुगुणतया तद्व्याख्याति **कालकर्मणी चेति** । अत्रैवोपष्टम्भकतयोत्पत्तिकालपदं आदिसृष्टिपरतयाऽनूद्य व्याचष्टे **उत्पत्तिकाल इति** ॥ **अन्यदा त्विति** । अर्वाचीनसृष्टावित्यर्थः ॥ **निमित्तान्तरमिति** । तत्र कालकर्मणोरिव तदतिरिक्तमेलकपुरुषादिरूपनिमित्तस्यापि सद्भावेन कालश्च कर्म च निमित्तं चेत्युक्तयोजनायामपि न क्षतिरिति भावः । तावताऽपि कथमुक्ताक्षेपपरिहार इत्यत आह **कर्मादिवशादिति** । मेलकपुरुषेण विनेत्येवकारार्थः । ननु कर्मादिवशादिव ईश्वरेणापि मेलनं संभवत्येव, तथा परमाणुसंयोगेनेवावयव्यभ्युपगमेनापि

गोघटादि विलक्षणाकारता संभवत्येव । ततश्च विशेषात्कर्मादेरिवेश्वरस्य, परमाणुसंयोगस्येवावयविनोऽपि, मेलकत्वं, विलक्षणाकारताप्रयोजकत्वं चाभ्युपगन्तव्यमेव । तथा च कर्मादिकमेव मेलकं नेश्वरः, परमाणुसंयोग एव विलक्षणाकारतानियामको नावयवीति कुतोऽवधारणमित्यत आवश्यकत्वात्कर्मादेस्तत्सिद्धिरित्याशयेनेश्वरस्य मेलकत्वपक्षे तावत्कर्मादेरावश्यकत्वमुपदर्शयति **सिद्धान्तिनाऽपीति** । कर्मादिनिरपेक्षस्य तस्य कारणताया वेदाप्रामाण्यापादकत्वादिति भावः । अवयव्यभ्युपगमेऽवयवसंयोगस्याप्यवश्यमङ्गीकर्तव्यतामाह **संयोगश्चेति** । ततश्च तदभावेऽवयव्यनुपपत्तिरेव स्यादिति भावः । ननु सिद्धान्तिना कर्मादेरिव पूर्ववादिना मेलकपुरुषादेरप्यवश्याभ्युपगन्तव्यत्वादविशेष एवेति नोक्तावधारणसिद्धिः इत्यतो भवेदेवं यदि कर्मादिनिरपेक्षस्येश्वरादेरिव ईश्वरादिनिरपेक्षस्य कर्मादेरपि मेलकत्वाद्यनुपपत्तिर्भवेत् । न चैतदस्ति । ततश्च सिद्धान्ते उभयोः प्रयोजकत्वाश्रयणाद्गौरवम् । पूर्ववादे त्वेकैकमात्रस्यैतदाश्रयणाल्लाघवमिति तत एवोक्तावधारणसिद्धिरित्याशयेनाह **तावतैवेति** ।

**प०** — **निमित्तान्तरमिति** । कुलालादिमेलकपुरुषान्तरादीत्यर्थः ॥ **संयोगश्चेति** । सिद्धान्तिनाप्यङ्गीकर्तव्य इत्यनुषङ्गः । कुत इत्यत उक्त अवयवव्युत्पादानुगुण इति । हेतुगर्भमिदं ॥ **तावतैवेति** । सिद्धान्तिनाप्यंगीकर्तव्येन कालकर्मादिनाऽणूनां संयोगेन चेत्यर्थः ॥ **सर्वमिति** । प्रत्यक्षत्वमेकत्वं विलक्षणत्वमित्येतत्सर्वमित्यर्थः ॥

---

**या०** — **निमित्तान्तरमिति** । मेलकपुरुषादिरूपमित्यर्थः ॥

**सु०** — **किमनात्मप्रपञ्च एव क्षणिको नेत्याह** आत्मानमिति ।

**अनु०** — आत्मानं च क्षणस्थितम् ॥

**क्षणिकत्वहेतोः सत्त्वस्य सर्वत्र साम्यादिति भावः । क्षणिकत्वे प्रत्यभिज्ञाविरोध इत्यत आह** नित्यमिति ।

नित्यं सन्तानमेतेषां

एतेषाम् **अणूनाम्** । **सन्तानविषया प्रत्यभिज्ञेति भावः । न चैवं सत्त्वस्यानैकान्त्यम् । सन्तानस्य सत्त्वाभावात्** ।

**शे०** **सर्वत्रेति** । अनात्मनीवात्मन्यपीत्यर्थः । अन्यथाऽऽत्मन्येव व्यभिचरितत्वात्सत्त्वस्यानात्मन्यपि क्षणिकत्वसाधकत्वं न स्यादिति भावः ॥ **क्षणिकत्व इति** । आत्मानात्मप्रपञ्चस्येति शेषः । सोऽहमित्यादिप्रत्यभिज्ञयाऽऽत्मानात्मप्रपञ्चस्य स्थायित्वसिद्धेरिति भावः ॥ **एवमिति** । सन्तानस्य स्थायित्व

इत्यर्थः । क्षणिकत्वाभाववति सन्तानेऽपि सत्त्वस्य वृत्तेरिति भावः ॥ **सत्त्वाभावादिति ।** अर्थक्रिया-कारित्वरूपसत्त्वस्य सन्तानिमात्रनिष्ठतायाः परेणाभ्युपगमादिति भावः ॥

**या०— सर्वत्रेति ।** बाह्यान्तरवस्तुष्वित्यर्थः ॥ **सन्तानस्येति ।** अर्थक्रियाकारित्वरूपं सत्त्वं सन्तानिनामेव न सन्तानस्येति भावः ॥

**श्री०—॥ ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ एतेषाम्** अणूनाम् । **अवयवानाम्** परमाणूनाम् । **अनैकान्त्यं** नित्यभूते सन्तान इति शेषः ।

**सु०— एवं सामान्यतो निरूप्य विभागमाह पञ्चेति ।**

**अनु०—** पञ्चस्कन्धात्मना स्थितम् ॥

**जगद्वृक्षं पञ्चस्कन्धात्मना स्थितमाहुः । पञ्चस्कन्धानाह** संस्कारेति ।

संस्काररूपविज्ञानसंज्ञादुःखात्मना स्थितिः ॥

स्थितिः **स्कन्धानामिति शेषः । समनन्तरप्रत्ययः संस्कारस्कन्धः । रूपरसगन्धस्पर्श-शब्दात्मकाः परमाणवो रूपस्कन्धः । निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः । सविकल्पकं ज्ञानं संज्ञास्कन्धः । वेदनाऽपरपर्यायं दुःखं चैकस्कन्धः । अत्र रूपस्कन्धो बाह्यः । अन्ये चत्वार आभ्यन्तरा इत्याहुरिति संबन्धः ।**

---

**शे०— समनन्तरप्रत्यय इति ।** विज्ञानादिस्कन्धानां सम्बन्धिनी रागद्वेषमोहादिरूपा वासना समनन्तरप्रत्यय इत्यर्थः । एतदेवाभिप्रेत्योक्तं चन्द्रिकायां तेषां वासना संस्कारस्कन्ध इति ॥ **रूपेति ।** विषयेन्द्रियात्मना स्थिता इति शेषः । तत्र विषयात्मना स्थितानां रूपादीनां रूप्यन्त इति व्युत्पत्त्या रूपस्कन्धत्वमिन्द्रियात्मना स्थितानां तु तेषां रूप्यन्त एभिर्विषया इति व्युत्पत्त्या रूपस्कन्धत्व-मिति विशेषोऽत्रानुसन्धेयः ॥ **सविकल्पकं ज्ञानमिति ।** कुण्डली, गौर्गच्छतीत्यादिसविकल्पकज्ञान-मित्यर्थः ॥ **रूपस्कन्धो बाह्य इति ।** रूप्यमाणानां पृथिव्यादीनां बाह्यत्वेनान्तरत्वासंभवादिति भावः । यद्यपीन्द्रियात्मनाऽवस्थितानां रूपरसगन्धस्पर्शशब्दात्मकानां परमाणूनामाभ्यन्तरत्वमस्त्येवेति न तद्बाह्यत्वो-क्तिर्युक्ता, तथाऽपि विषयात्मना स्थितानां तेषामाभ्यन्तरत्वाभावाभिप्रायेणेयमुक्तिरिति द्रष्टव्यम् । यद्यपि रूप्यमाणपृथिव्यादीनामपि कायाकारेण संहततया कायस्थत्वमस्त्येवेति तेषामप्याध्यात्मिकत्वमेव तथाऽपि कायाकारेणासंहतानां पृथिव्यादीनामाध्यात्मिकत्वाभावाभिप्रायेणेयमुक्तिः । यद्यपि च कायाकारेणासंहता-नामपीन्द्रियसंबन्धात् आध्यात्मिकत्वमेव वक्तुं युक्तं, तथाऽपि विज्ञानादीनामिव स्वरूपेण नाध्यात्मिकत्व-मित्यभिप्रायेण बाह्यत्वोक्तिरिति ध्येयम् ।

प० **इत्याहुरितीति** स्थितिरित्याहुरित्यन्वय इत्यर्थः ।

**या०— समनन्तरप्रत्यय इति** । सजातीयपूर्वविज्ञानमित्यर्थः । न च पूर्वविज्ञानस्य संस्कारजनकस्य कथं संस्काररूपत्वमिति वाच्यम् । तन्मते वैशेषिकमत इव विज्ञानजन्यसंस्काराश्रयस्य स्थायिनोऽभावात्पूर्वविज्ञानमेव संस्कार इत्यभ्युपगमात् ॥ **रूपरसेति** । इदमुपलक्षणम् । इन्द्रियात्मका अपि परमाणवो रूपस्कन्धा इति ग्राह्यम् । रूपरसादीनां रूप्यत इति व्युत्पत्त्या रूपस्कन्धत्वं, इन्द्रियाणां तु रूप्यतेऽनेनेति व्युत्पत्त्येति ज्ञातव्यम् ।

**श्री०— ज्ञानम्** आलयज्ञानम् ।

**च०— जगद्वृक्षं** जगद्रूपं वृक्षम् ।

**सु०— सुखादीनां पदार्थान्तराणां विद्यमानत्वात्कथं पञ्चैव स्कन्धा इत्यत आह** दुःखाभावमिति ।

अनु०— दुःखाभावं सुखं चाहुः

**चशब्देन केचित्सुखं वेदनास्कन्धेऽन्तर्भावयन्तीति सूचितं भवति । यद्वाऽनुक्तसमुच्चयार्थश्चशब्दः । यथा मूर्ताभाव एवाकाशं, रूपादय एव पृथिव्याद्याः, संख्यादयस्तु गुणाः पृथगनुपलम्भान्न सन्त्येव । देशान्तरोत्पाद एव कर्मप्रत्ययालम्बनम् क्षणिकस्य वास्तवकर्मायोगात् । सन्निकृष्टविप्रकृष्टतयोत्पाद एव संयोगादिव्यवहारगोचरः । अतद्व्यावृत्तिरेव गोत्वादिसामान्यबुद्धिबोध्येत्यादि ।**

अरूपज्ञानसन्ततिम् ॥

मोक्षं

अरूपेति । **सन्तन्यमानं ज्ञानमेवात्मा तस्य विषयोपप्लवः संसारः ।** अरूपा **निर्विषया या ज्ञानसन्ततिस्तामेव मोक्षमाहुरानन्दमित्यतो न पञ्चस्कन्धप्रक्रियाभङ्ग इति ।**

**शे०—** मूले सुखं दुःखाभावं चाहुरिति चशब्दस्य भिन्नक्रमतामभिप्रेत्य तदर्थमाह **चशब्देनेति** । अस्मिन्पक्षे चशब्दस्य भिन्नक्रमताश्रयणं भवतीत्यपरितोषाद्यथास्थितान्वयमभिप्रेत्य तदर्थमाह **यद्वेति** । तमेव दर्शयति **यथेत्यादिना** । इत्यादीत्यादिपदेनोपाधित्वेनावश्याभ्युपेया क्रियैव काल इत्यस्य परिग्रहः । नन्वात्मनस्तद्गुणस्य पदार्थान्तरस्य सत्त्वात्कथं पञ्चस्कन्धप्रक्रियासिद्धिरित्याशङ्क्य अरूपज्ञानसन्ततिमित्यनेन मोक्षस्यैवात्मनो बन्धस्य च स्वरूपकथनान्न तावादायोक्तप्रक्रियाभङ्गः शङ्कनीय इति भावेन तद्वाक्यमात्मादित्रितयपरतया योजयति **सन्तन्यमानमित्यादिना** । आत्मनः क्षणिकत्व-

साधकार्थक्रियाकारित्वरूपसत्त्वोपपादनाय सन्तन्यमानमित्युक्तम् ॥ **विषयोपप्लव इति** । विषयसंबन्ध इत्यर्थः । 'तस्यानादिवासनावशात् यो विषयोपरक्तस्योत्पादः संसारः' इति चतुर्थे वक्ष्यमाणत्वादित्यवधेयम् ।

**स०— ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ इत्यादि** इत्यादिशब्देन अवश्याभ्युपेयक्रियाया एव कालत्वमित्यभिप्रैति ।

**प०— विषयोपप्लवो** विषयसंबन्ध इत्यर्थः ।

**या०—** नन्वात्मनस्तदीययोर्बन्धमोक्षयोश्च पञ्चस्कन्धातिरिक्तत्वात्कथं पञ्चस्कन्धप्रक्रियेत्यत आह **सन्तन्यमानमिति** । आत्मनः क्षणिकत्वसाधकार्थक्रियाकारित्वरूपसत्त्वोपपादनाय सन्तन्यमानमित्युक्तम् । सन्तानस्तु नार्थक्रियाकारीति भावः । **विषयोपप्लवो** विषयनिमित्तं दुःखम् ।

**च०— कर्मप्रत्ययालम्बनं** कर्मप्रत्ययविषयः । **सन्तन्यमानं** सन्तानविशिष्टम् । **विषयोपप्लवः** विषयसंबन्धः ।

**सु०— एवं वैभाषिकसौत्रान्तिकयोः साधारणं मतमुपन्यस्यावान्तरभेदं तु निराकरणप्रस्ताव एव विवक्षुर्यत्तावदुक्तं परमाणुसमुदाय एव गोघटादिप्रपञ्चो न त्ववयवी कश्चिदस्तीति तन्निराकर्तुं** समुदाय उभयहेतुकेऽपि तदप्राप्तिरिति **सूत्रं व्याचष्टे स इति** ।

---

**अनु०—** स समुदायो हि नैकस्मादेव युज्यते ॥

**योऽयं गोघटादिबुद्धिविषयत्वेनाभ्युपगतः समुदायः स किमेकपरमाणुहेतुकः, किंवा अनेकपरमाणुहेतुकः ।**

**नाद्यः । एकस्मात्परमाणोः समुदायोत्पादानुपपत्तेः । न ह्येकस्मिंस्तरौ तरुसमुदायबुद्धिः कस्यापि विद्यते । समुदायकल्पनं वानर्थकमापद्येत । महत्त्वैन्द्रियकत्वयोरसमर्थितत्वात् । अनेन अपिशब्दलब्धोऽर्थो दर्शितः ।**

**द्वितीयं निराकरोति नेति ।**

नोभयोश्च

**उभयग्रहणमनेकमात्रोपलक्षणम् । सकाशादिति शेषः । चशब्देन समुदायो युज्यत इत्यनुकृष्यते ।**

**कुतो न युज्यत इति चेत् । अनेकहेतुकत्वेऽपि किमसमुदितानेकहेतुकोऽथ समुदितानेकहेतुक इति वक्तव्यम् ॥ आद्ये सर्वत्र(ापि) गोघटादिबुद्धिप्रसक्तिः । असमुदितपरमाणूनां**

सर्वत्र भावात् । समुदायस्य च तन्मात्रहेतुकत्वात् । समुदायाङ्गीकारवैयर्थ्यप्रसङ्गश्च ॥ द्वितीयानुपपत्तौ हेतुमाह उभयत्वमिति ।

/ उभयत्वं यत्समुदायव्यपेक्षया ॥

यद्यस्मादुभयत्वं समुदितानेकत्वं समुदायसापेक्षम् । जाते हि समुदायेऽनेकेषां समुदितत्वं (सं)भवति । तस्मान्नेति संबन्धः ।

**शे०— निराकरणप्रस्ताव एवेति** । 'विश्वं प्रत्यक्षगं त्यक्त्वा तयोर्योऽनुमितं वदेदि'त्यादिनेति शेषः । नन्वेकस्मादपि परमाणोः समुदायोत्पादः किन्न स्यादित्यतः तर्ह्यविशेषादेकस्मात्तरोरपि तत्समुदायोत्पादः स्यात् । न चेष्टापत्तिः । तथा सति यो यत्समुदायः स तत्समुदायत्वप्रतीतिविषय इति व्याप्तेः तत्समुदायप्रतीतिप्रसङ्गादित्यतिप्रसङ्गमभिप्रेत्य तत्रेष्टापत्तिं परिहरति **न हीति** ॥ **महत्त्वेति** । कारणमहत्त्वतद्बहुत्वाभ्यां कार्ये महत्त्वदर्शनात्समुदायस्यैकपरमाणुहेतुकत्वे तन्निष्ठमहत्त्वप्रयोजकस्य कारणमहत्त्वस्य तद्बहुत्वस्य चाभावेन तत्प्रयुक्तस्य समुदाये महत्त्वस्याप्यसंभवात् तदभावे चैन्द्रियकत्वप्रयोजकधर्मशून्यत्वेन ऐन्द्रियकत्वस्याप्यभावप्रसङ्गादिति भावः । नन्वसमुदितानेकहेतुकत्वाभ्युपगमात् 'उभयत्वं यत्समुदायव्यपेक्षये'त्यन्योन्याश्रयत्वकथनानुपपत्तिरित्यतः समुदितानेकहेतुकत्व एव तदभिधानान्न तदनुपपत्तिरित्यभिप्रेत्य तत्पक्षनिराकरणपरतयोत्तरभाष्यं योजयितुमनेकहेतुकत्वं विकल्प्य प्रथमपक्षं तावद्बहिरेव दूषयति **अनेकहेतुकत्वेऽपीति** । यद्यप्यत्रा'न्यथा सर्वदा समुदायत्वं स्यादि'ति भाष्यानुसारेणामिलितपरमाणूनां सदा सद्भावेन समुदायस्यापि सदातनत्वापत्त्या प्रलयाभ्युपगमविरोधापत्तिरिति बाधकं वक्तुं शक्यते । तथाऽपि स्पष्टत्वात्तच्छिष्यैरेवोह्यतामिति भावेनातिप्रसङ्गान्तरमेवाह **आद्ये सर्वत्रेति** । न च कालकर्मादिनिमित्तस्य काचित्कत्वान्न सर्वत्र समुदायोत्पत्तिरिति सर्वत्र गोघटादिबुद्ध्यभावो युक्त इति वाच्यम् । 'अदृष्टमपि तस्यैव विशेषापादकं कुत' इत्यादिना तस्य दूषयिष्यमाणत्वेन तद्बलेनोक्तातिप्रसङ्गपरिहारानुपपत्तौ तात्पर्यात् ॥ **समुदायाङ्गीकारवैयर्थ्यप्रसङ्गश्चेति** । महत्त्वैन्द्रियकत्वयोरसमर्थनादिति भावः । यद्यप्यस्मिन्पक्षेऽसमुदितपरमाणूनामनेकत्वात्तद्धेतुके समुदाये तत्प्रयुक्तं महत्त्वं तत्प्रयुक्तं चैन्द्रियकत्वं वक्तुं युक्तं, तथाऽपि सन्निकृष्टकारणगतानेकत्वस्यैव कार्ये महत्त्वारंभकत्वदर्शनात्प्रकृते च तद्विरहान्न महत्त्वारंभ इत्याशयात् ।

**स०— निराकरणेति** । 'विश्वं प्रत्यक्षगं त्यक्त्वा' इत्यादिनाऽवान्तरभेदं विवक्षुरित्यर्थः । **महत्त्वेति** । कार्यमहत्त्वस्य कारणबहुत्वाधीनत्वस्य अन्यत्र दर्शनात् समुदायस्य एकहेतुकत्वे उक्तप्रकारद्वयेनापि महत्त्वासंभवात् तदभावे च ऐन्द्रियकत्वप्रयोजकाभावात् ऐन्द्रियकत्वस्याप्यसंभवादिति भावः । **वैयर्थ्यप्रसंगश्चेति** । महत्त्वैन्द्रियकत्वयोरसमर्थनादिति भावः । न च अस्मिन् पक्षे असमुदित-

-परमाणूनामनेकत्वात् कार्ये समुदाये महत्त्वस्य तत्प्रयुक्तेन्द्रियकत्वस्य च उपपत्तिरिति वाच्यम् । सन्निकृष्टानेकत्वस्यैव कार्ये महत्त्वसंपादकतया अन्यत्र दृष्टत्वात्' प्रकृते तदभावात्तयोरनिर्वाहादित्याहुः ।

प० — **अनेनेति** । युज्यत इत्यन्तेन ग्रन्थेन ॥ उभयहेतुकेपीति सौत्रापिशब्दलब्धार्थ इत्यर्थः ।

या० — नन्वेकस्मात्परमाणोः पारमार्थिकस्योत्पत्तेरनुपपन्नत्वेपि(समुदायस्य) सांवृतस्य तस्योत्पत्तिर्नानुपपन्नेत्यत आह **न ह्येकैकस्मिन्निति** । सांवृतोऽपि प्रतीत्यैव कल्प्यो नान्यथेति भावः ॥ **असमर्थितत्वादिति** । भ्रान्तिकल्पितसमुदायेन तयोरुपपादयितुमशक्यत्वादित्यर्थः ॥ **आद्ये सर्वत्रापीति** । यद्यप्यत्र'न्यथा सर्वदा समुदायसत्त्वं स्यादि'ति भाष्य उक्तत्वात्समुदायस्य सदा सत्त्वं स्यात्ततश्च प्रलयाद्यनुपपत्तिरित्येव वक्तव्यम् । तथाऽपि तद्भाष्यमुपलक्षणाभिप्रायमित्याशयेनात्रातिप्रसङ्गान्तरमेतदुक्तमिति ज्ञातव्यम् । न च कालकर्मादिनिमित्तस्य क्वाचित्कत्वान्न सर्वत्रापि गोघटादिबुद्धिप्रसङ्ग इति वाच्यम् । 'अदृष्टमपि तस्यैव विशेषापादकं कुत' इत्यग्रे तस्य दूष्यत्वादित्याशयात् ॥ **समुदायाङ्गीकारेति** । असमुदितानेकेष्वङ्गीक्रियमाणः समुदायो ह्यनेकत्वरूपो वा सांवृतो वा वक्तव्यः । न च ताभ्यां महत्त्वेन्द्रियकत्वादेः समर्थनं संभवति । यस्तु महत्त्वाद्युपपादकोऽन्योन्यसंयोगरूपः समुदायः स नासमुदितानेकेष्वङ्गीकर्तुं शक्यः । संयोगस्य विरलानेकधर्मत्वासंभवात् । अतोऽसमुदितानेकेष्वङ्गीक्रियमाणस्यानेकत्वरूपस्य सांवृतस्य वा समुदायस्य महत्त्वाद्यनुपपादकत्वादन्यस्य च तदङ्गीकारप्रयोजनस्य त्वन्मतेऽभावात्समुदायाङ्गीकारो व्यर्थः स्यादित्यर्थः ।

---

श्री० — नन्वसमुदितपरमाणूनां सर्वत्र सत्त्वेऽपि समुदायाभावान्न सर्वत्र गोघटादिबुद्धिप्रसङ्ग इत्यत आह **समुदायस्य चेति** । तथा च समुदायाभावोऽसिद्ध इति भावः ॥ **समुदायाङ्गीकारेति** । विरलानेकपरमाणूनां सदा सत्त्वेन तज्जन्यसमुदायस्यापि सदा सत्त्वात्प्रलयो न स्यादित्यतिप्रसङ्गस्यापरिहारेण समुदायाङ्गीकारो व्यर्थ इत्यर्थः । यद्वा एको महानित्यादिविरोधपरिहाराय महत्त्वेन्द्रियकत्वसमर्थनाय हि समुदायोऽङ्गीक्रियते । न चैवं सति तौ समर्थितौ भवतः । कारणस्य स्वसदृशकार्यजननस्वभावत्वेन विरलानेकपरमाणुभ्यः सम्मेलनरूपसमुदायोत्पत्त्ययोगेन समुदायस्यानेकत्वरूपतैव वाच्या । अनेकपरमाणव एव समुदायः । तदनेकत्वमेव समुदायत्वमिति वाच्यमिति यावत् । तथा च विरलपरमाणुभिरनेकपरमाणुरूपसमुदायाङ्गीकारेऽपि, महत्त्वेन्द्रियकत्वयोर्न समर्थित्वादन्योन्यसंयोगरूपसमुदायस्यैव महत्त्वाद्युपपादकत्वात् । तथा चैको महानित्यादिप्रत्यक्षप्रत्ययविरोध इति पूर्वोक्तातिप्रसङ्गानिवारणात्समुदायाङ्गीकारो व्यर्थ एवापन्न इत्यर्थः ।

त्र० — **तन्मात्रहेतुकत्वात्** असमुदितपरमाणुमात्रहेतुकत्वात् ।

सु०— समुदितानेकत्वस्य समुदायसापेक्षत्वेऽपि कुतस्ततः समुदायोत्पादो न युज्यत इत्याशङ्कां परिहरन्सूत्रार्थमुपसंहरति अत इति ।

अनु०— अतोऽन्योन्याश्रयत्वेन समुदायो न युज्यते ॥

समुदायस्य समुदितानेकेषां चेतरेतरापेक्षोत्पत्तिकत्वेनेत्यर्थः। समुदायानु(त्पत्तौ)पपत्तौ चाणूनां महानेक इति प्रत्यक्षबुद्धिगोचरताऽयोगादवश्यमङ्गीकरणीयोऽवयवीति । किञ्चायं समुदायः किं परमाणूनां संयोगः किंवाऽनेकत्वसंख्या । उत द्रव्यान्तरम् । नाद्यद्वितीयौ । अनङ्गीकारात् । अङ्गीकारेऽप्यतीन्द्रियाश्रितयोस्तयोरैन्द्रियकत्वानुपपत्तिः । तृतीये स एवावयवी । सांवृतोऽसाविति चेत् । तर्हि पुनर्महानित्यादिप्रमानुपपत्तिस्तदवस्थैव । भ्रान्तिरियमिति चेत्(न) । भ्रान्तेरभ्रान्तिपूर्वकत्वेन क्वचिन्महत्त्वादेर्वास्तवत्त्वप्रसङ्गात् । अनादिवासनावशादनादिरेवेयं भ्रान्तिरिति चेन्न । नीलादिज्ञानस्यापि तथात्वप्रसङ्गात् ।

शे०— अन्योन्याश्रयत्वेनेति मूलमुपलक्षणपरमित्याशयवानाह किञ्चेति ॥ ऐन्द्रियकत्वानुपपत्तिरिति । द्रव्यग्रहणयोग्यताव्यापकयोग्यतकत्वात्संयोगानेकत्वसंख्ययोरिति भावः ॥ स एवावयवीति । तथा च परमाणुसमुदायं गोघटादिबुद्धिबोध्यमङ्गीकुर्वाणेन परमाणुभिन्नद्रव्यान्तररूपस्यावयविनोऽङ्गीकृतत्वेन परमाणुव्यतिरिक्तोऽवयवी नाम नास्तीति प्रतिज्ञाव्याघात इति भावः ॥ सांवृत इति । पारमार्थिक एवावयवी पूर्वं निषिद्धो, न कल्पितोऽपीति कल्पितावयव्यभ्युपगमे न व्याघात इति भावः । समुदायस्य कल्पितत्वे तद्विषयस्यैको महानित्यादिप्रत्ययस्य प्रमात्वाभावापत्त्या तत्प्रमात्वसिद्ध्यर्थं समुदायस्य पारमार्थिकत्वस्यावश्याभ्युपगम्यत्वात् प्रतिज्ञाव्याघातोऽवर्जनीय एवेत्याशयेन परिहरति तर्हीति । एको महानित्यादिप्रत्ययस्य भ्रमत्वात्प्रमात्वाभाव इष्ट एवेति तदापादनमिष्टापादनमेवेत्याशङ्कते भ्रान्तिरेवेति । तथा च तद्विषयस्य कल्पितत्वान्न व्याघात इति भावः । भ्रान्तेः सत्यप्रधानसापेक्षत्वेन क्वचिदपि महत्त्वादेर्वास्तवत्वं विनाऽयोगात्क्वचिद्वास्तवत्वं वाच्यम् । तथा च यत्रैव महत्त्वादिकं वास्तवं, तस्यैवावयविनः पारमार्थिकत्वादुक्तप्रतिज्ञाविरोधतादवस्थ्यमित्याशयेन समाधत्ते भ्रान्तेरिति । ननु प्रधानं न स्वरूपेण भ्रान्तिहेतुः तथा सति अज्ञातरजतस्यापि तत्समारोपप्रसङ्गात् । नापि ज्ञानेन तस्य चिरविनष्टस्य भ्रमकारणताया बाधितत्वात् । किन्तु तत्संस्कारः स च तत्प्रमयेव तद्भ्रमेणापि संभवति । न च प्रमाजन्य एव संस्कारो भ्रमहेतुः । सत्यपि संस्कारे प्रमाजन्यत्वाभावेन भ्रमाभावादर्शनात् । न च अध्यस्तमेव देशान्तरादौ सदिति त्वया वक्तुं युक्तम् । तथा सति तार्किकचरणानुसरणप्रसङ्गात् । न च प्रथमारोपानुपपत्तिः अनादित्वात् आरोपपरम्परायाः । न हीदंपूर्वोऽयं महत्त्वादेरारोपः । न च कल्पर-

**घभ्रमानुपपत्तिः** । पूर्वकल्पानुभवजन्यसंस्कारस्य तत्रापि सद्भावात् । ततश्चावयविनो वास्तवत्वाप्राप्तेर्न प्रतिज्ञाव्याघात इत्याशयेन शङ्कते **अनादीति** । अनादिभ्रमप्रवाहोत्पन्नसंस्कारवशादित्यर्थः ॥ **नीलादिज्ञानस्यापीति** । महत्त्वादिज्ञानस्यानादिवासनावशादनादिभ्रान्तित्वात्क्वचिदपि महत्त्वादेर्वास्तवत्वाभाववत् नीलादिज्ञानस्याप्यनादिवासनावशादनादिभ्रान्तितया वक्तुं शक्यत्वेन तद्विषयस्य नीलादेरपि वास्तवत्वाभावापत्त्या रूपादिस्कन्धानां सत्त्वाभावात्क्षणिकत्वाभावप्रसङ्गादिति भावः ।

स० — **नीलादिज्ञानस्यापि इति** । कचिदपि महत्त्वादेः वास्तवत्वाभावेऽपि अनादिवासनावशान्महत्त्वज्ञानस्येव अनादिभ्रान्तित्वोपपत्त्या कचिदपि नीलादेः वास्तवत्वं न स्यादित्यर्थः ।

प० — **नीलादिज्ञानस्यापि तथात्वप्रसंगादिति** । तथा च रूपादिस्कन्धानामपि सत्त्वाभावेन क्षणिकत्वं न स्यादिति भावः ।

**या०** — अन्योन्याश्रयत्वेनेति मूलमुपलक्षणपरमित्याशयेनाह **किञ्चायमित्यादि** ॥ **अनङ्गीकारादिति** । द्रव्यातिरिक्तसंख्यादेरनङ्गीकारादित्यर्थः ॥ **नीलादिज्ञानस्येति** । तथा च रूपादिस्कन्धानां सत्त्वाभावेन क्षणिकत्वं न स्यादिति भावः ।

श्री० — **इतरेतरेति** । समुदितानेकतः समुदायः समुदाये सत्यनेकेषां समुदितत्वमित्येवमितरेतरापेक्षोत्पत्तिकत्वेनेत्यर्थः ।

**च०** — **अतीन्द्रियाश्रितयोस्तयोः** संयोगानेकत्वसंख्ययोः । **ऐन्द्रियकत्वानुपपत्तिः** । इन्द्रियजन्यसाक्षात्कारनिरूपितलौकिकविषयताश्रयत्वानुपपत्तिः । द्रव्यग्रहणयोग्यताव्यापकयोग्यताकत्वात्संयोगविभागयोरिति भावः । **सांवृतः** संवृतिपदाभिधेयाविद्याहेतुकोऽपारमार्थिकः ।

सु० — **ननु विषममिदमुच्यते । अवयविनि बाधकसद्भावात् । तथा हि । अवयवी किमवयवेषु प्रत्येकं कार्त्स्न्येन वर्तते । किं वैकदेशेन । आद्येऽनेकत्वप्रसङ्गः । न द्वितीयः । तस्यावयवान्विहायैकदेशाभावात् । भावे वा (त)त्रापि वृत्तिविकल्पप्रसङ्गात् ।**

**किञ्च केषुचित्तन्तुषु चलत्सु तद्गतोऽवयवी चलति न वा । नेति पक्षे युतसिद्धिप्रसङ्गः । आद्ये तु निश्चलावयवाश्रितो न चलतीति चलाचलत्वलक्षणो विरुद्धधर्माध्यासः । एवमावृतानावृतत्वरक्तारक्तत्वलक्षणावपि विरुद्धधर्माध्यासौ द्रष्टव्याविति ।**

**उच्यते । नास्माभिरवयवेभ्योऽत्यन्तभिन्नोऽवयवी गृह्यते । किन्तु तत्परिणामविशेष एव । तत्र कुतो वृत्तिविकल्पावकाशः । चलाचलत्वादिविरोधस्तु भेदाभेद(वादि)विरोधवदपाक्रियत इति नावयविनि बाधकसद्भावः । न च वाच्यं समुदायो भवद्भिरङ्गी(क्रिय)कृत एव**

**तत्तश्च त्राक्षेपसमाधानसाम्यमिति । यतोऽनेकेषामेककालदेशकार्याद्यवच्छेदेन मेलनं समुदायोऽभ्युपगम्यते । स चामिलितेभ्य एव भव(ती)ति ॥ स्थायितायां च तत्संभवो न क्षणभङ्गवाद इति वक्ष्यति ।**

**शे०** — ननु महत्त्वादिज्ञानस्यानादिवासनावशादनादिभ्रान्तित्वेन नीलादिज्ञानस्यापि तथात्वप्रसङ्ग इति तर्के मूलभूता व्याप्तिर्न विशेषतो वक्तुं शक्या दृष्टान्ताभावात् । नापि यदविशिष्टस्य यस्य यद्भवति तदविशिष्टस्यापरस्यापि तद्भवतीत्यविशेषलक्षणा सामान्यव्याप्तिस्तन्मूलतया वक्तुं शक्या । बाधकभावाभावाभ्यां महत्त्वादिज्ञानस्य नीलादिज्ञानस्य च वैषम्येण तदसिद्धेरित्याशङ्कते **ननु विषममिति । कार्त्स्न्येन** स्वरूपेणेत्यर्थः । **एकदेशेन** अवयवशः ॥ **अनेकत्वप्रसङ्ग** इति । अवयवानामनेकत्वादिति भावः ॥ **एकदेशाभावादिति** । तत्र मानाभावादिति भावः । ननु पटाद्यवयवतन्त्वाद्यतिरिक्ता हस्तवितस्त्याद्यवच्छेद्यास्तदेकदेशाः प्रत्यक्षत एवानुभूयन्ते । न हि पटो हस्तवितस्त्याद्यवच्छिन्नः तस्य ततोऽधिकपरिमाणत्वात् । नापि तन्तवः । तेषां ततो न्यूनपरिमाणत्वात् । तत्कथमवयवातिरिक्तैकदेशाभाव इत्यत आह **भावे वेति ॥ तत्रापीति** । अवयवातिरिक्तखण्डपटादिरूपैकदेशेष्वपीत्यर्थः । तेषामपि तन्त्वाद्यारब्धतया तत्कार्यत्वात्तन्तुष्वेव वृत्तिर्वाच्या । तत्राप्येकदेशाः किमवयवेषु प्रत्येकं कार्त्स्न्येन वर्तन्त उतैकदेशतः । आद्येऽनेकत्वप्रसङ्गः । नान्त्यः । तेषामवयवातिरिक्तैकदेशाभावात् । भावे वा तेषामपि तन्त्वाद्यारब्धतया तत्कार्यत्वात्तेषु वृत्तिर्वाच्या । साऽपि किं प्रत्येकं कार्त्स्न्येन, किं वैकदेशत इति । एकदेशेन वृत्तौ तत्र तत्राप्येकदेशान्तरापेक्षायामनवस्थाप्रसङ्गादिति भावः । विकल्पप्रसरादित्युपलक्षणम् । तद्दूषणप्रसरादित्यपि द्रष्टव्यम् ॥ **युतसिद्धिप्रसङ्ग इति** । असम्बद्धयोर्विद्यमानत्वप्रसङ्ग इत्यर्थः । **आद्य इति** । निश्चलावयवस्यावयविनोऽपि चलने युतसिद्धिप्रसक्तेरितिभावः ॥ **एवमावृतत्वानावृतत्वेति** । केषुचित्तन्तुष्वावृतेषु तद्गतोऽवयव्यावृतो न वा । नेति पक्षे युतसिद्धिप्रसङ्गः । आद्येऽनावृताश्रितस्य पटस्यावृतत्वे युतसिद्धिप्रसक्तेरनावृतत्वावश्यम्भावादावृतत्वानावृतत्वलक्षणविरुद्धधर्माध्यासः । एवं रागिद्रव्यार्धलिप्ते पटादौ रक्तत्वारक्तत्वलक्षणविरुधधर्माध्यास इत्यर्थः । यद्यप्येकावयवसहितस्योपलम्भेऽपि अन्यावयवमहितस्यानुपलम्भाद्ग्रहणाग्रहणलक्षणविरुद्धधर्माध्यासोऽपि परेण वर्णितः । तथाऽप्यावृतत्वानावृतत्वलक्षणविरुद्धधर्माध्यासोक्त्यैव तत्सिद्धेस्तस्यानुपन्यासो युक्तः । यद्वा ग्रहणाग्रहणलक्षणविरुद्धधर्माध्यासस्याप्युपलक्षणमेतदिति द्रष्टव्यम् ।

**तत्र कुत इति** । परिणामवादेऽवयविनोऽवयवाभिन्नत्वेनावयवेषु वृत्तेरेवाभावादिति भावः ॥ **भेदाभेदविरोधवदिति** । भेदाभेदविरोध इवेति भेदाभेदविरोधवदिति प्रथमान्ताद्वतिः । 'तत्र तस्येवे'ति सूत्रस्य

प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वादिति द्रष्टव्यम् । विशेषबलेन भेदाभेदविरोधपरिहारवत्तद्बलेनैवैतद्विरोध-परिहारोऽपीति भावः ॥ **नावयविनि बाधकसद्भाव इति** । ततश्च बाधकभावाभावाभ्यां वैषम्यानु-पपत्तेरविशेषसिद्ध्या तन्मूलकस्तर्को युक्त इति भावः । सूत्रकारीयस्य समुदायनिराकरणस्य जात्युत्तरता-माशङ्क्य परिहरति **न च वाच्यमित्यादिना** ॥ **एककालेति** । चन्द्रादे राह्वादिमेलनमेककालाव-च्छेदेन; वृक्षाणां मेलनमेकदेशावच्छेदेन, दण्डादिकारणानां मेलनं घटादिरूपैककार्यावच्छेदेन, आदिपदेन वर्णानां पदानां च मेलनमेकबुद्ध्यवच्छेदेनेति विवेको द्रष्टव्यः ॥ **वक्ष्यतीति** । 'कार्यं च कारणं चैव यत्कि-ञ्चिद्यस्यकस्यचित् । भवेन्नियामकाभावादिदमस्यैव कारणं । इति नित्यविनाशित्व' इत्यादिनेति शेषः ।

स० — **कात्स्न्येन** स्वरूपेणेत्यर्थः । **एकदेशेन** अवयवशः । अवयवी तन्तुषु एकदेशेन वर्तते इति द्वितीयेऽपि किं आरंभकावयवैरेव तेषु अवयवी वर्तते किंवा तदतिरिक्तावयवैरिति विकल्पं मनसि निधाय,आद्यं दूषयति **तस्य अवयवान्विहाय एकदेशाभावादिति** । अवयविनो अवयवेषु अवयवैरेव वृत्त्यभ्युपगमे आरंभकावयवव्यतिरिक्ता अवयवाः अवश्यं कल्पनीयाः स्युः । यैः आरंभकेषु अवयवेषु अवयवी वर्तेत । न चाप्रयोजकत्वं । यत्र यद्वर्तते तत् तदतिरिक्तावयवैरेव वर्तते इति व्याप्तेरेव नियामकत्वात् । कोशावयवव्यतिरिक्तैरवयवैरेव कोशव्यापित्वदर्शनादिति भावः । द्वितीयं दूषयति **भावे वा इति** । आरंभकावयवव्यतिरिक्तावयवांगीकारे अवयविनो अवयवभूततन्तुषु वृत्त्यंगीकारे आरंभकावयवव्यतिरिक्तावयवानां तन्तुषु वृत्तिर्वाच्या । तथा च तत्रापि एकदेशानां अवयवेषु कात्स्न्येन वृत्तौ अनेकत्वापत्त्या यत् यत्र वर्तते तत् तदतिरिक्तावयवैरेव वर्तेत इत्युक्तव्याप्त्यनुरोधेन आरंभक व्यतिरिक्तावयवानामपि अतिरिक्तावयवैरेव तन्तुषु वृत्तिरंगीकरणीया । एवं तेषामपि अवयवाना-मिति । कल्पितानन्तावयवव्यवहिततया प्रकृततन्त्ववयविनोर्विप्रकर्षात्तन्तुनिष्ठत्वं पटस्य न स्यादिति भावः । तत्रापीत्यस्य आरंभकावयवातिरिक्तावयवेषु इत्यर्थः । **वृत्तिविकल्पेति** । पटस्येति शेषः । अवयवातिरिक्तानामेकदेशानामभावे तस्याप्येकदेशस्यावयवित्वेन अवयवेषु तन्तुषु प्रत्येकं कात्स्न्येन वृत्तौ अनेकत्वप्रसङ्गः । एकदेशानां अभावात् न एकदेशेन । भावे वा तत्रापि वृत्ति-विकल्पप्रसंगादित्यर्थः । **वक्ष्यतीति** । कार्यं च कारणं चैव यत्किञ्चिद्यस्यकस्यचित् । भवेन्नियामका-भावादिदमस्यैव कारणम्' इत्यादिना वक्ष्यतीत्यर्थः ।

प० — **विषममिति** । अतिरिक्तावयविज्ञानस्य भ्रांतित्वे नीलादिज्ञानस्यापि तथात्वमित्ये-तद्विषममित्यर्थः । अवयविनीव नीलादौ बाधकाभावादिति भावेनाह **अवयविनीति** ॥ **अत्रापि वृत्तिविकल्पेति** । एकदेशेष्वपि किं प्रत्येकं कार्त्स्न्येन वर्ततेऽथैकदेशेन । आद्येऽनेकत्वप्रसङ्गः. अन्त्ये ततोप्येकदेशाभावात् । भावे वा तत्रापि वृत्तिविकल्पप्रसङ्गेनानवस्था स्यादिति भावः ॥ **एवमावृतेति** ।

केषुचित्तन्तुष्वावृतेषु रक्तेषु वा पटस्यावृतत्वे रक्तत्वे वाऽ नावृतारक्तावयवान्तरगतस्यानावृतत्वादिविरुद्ध-धर्माध्यासौ ज्ञेयावित्यर्थः ॥ **कुतो वृत्तिविकल्पेति ।** आधाराधेयभावस्यैवाभावादिति भावः ॥ **अपाक्रियत इति ।** विशेषबलेनेति भावः ॥ **एककालदेशेति ।** युगपदुत्पन्नशब्दानामेककालावच्छेदेन समुदायः । अनेकेषां वृक्षादीनामेकदेशावच्छेदेन वनसेनादिसमुदायः । दण्डचक्रादिकारणानां मेलनं घटादिरूपैककार्यावच्छेदेन' वर्णानां पदवाक्यमहावाक्यात्मनामेकज्ञानविषयतावच्छेदेन प्रकरणादेरेकार्थतात्पर्यकत्वादिना मेलनमित्यादिः आदिपदार्थः ॥ **वक्ष्यतीति ।** 'कार्यं च कारणं चैव यत्किञ्चिद्यस्यकस्यचित् । भवेन्नियामकाभावादिदमस्यैव कारणमि'त्यत्रेति भावः ।

**या० — तत्र कुत इति ।** परिणामवादेऽवयविनोऽवयवाभिन्नत्वेनावयवेषु वृत्तिरेव नास्तीति भावः ॥ **भेदाभेदेति ।** विशेषबलेनेति शेषः ॥ **एककालदेशेत्यादि ।** चन्द्रादे राह्वादिमेलनं कालावच्छेदेन, वृक्षादीनां मेलनं देशावच्छेदेन । दण्डादिकारणानां मेलनं घटादिकार्यावच्छेदेनादिपदाद्वर्णानां पदानां च मेलनं बुद्ध्यवच्छेदेनेति ज्ञातव्यम् ॥ **वक्ष्यतीति ।** 'कार्यं च कारणं चैव यत्किञ्चिद्यस्य कस्यचित् । भवेन्नियामकाभावादिदमस्यैव कारणम् । इति नित्यविनाशित्व' इत्यत्रेति शेषः ॥

**श्री० — स्थायितायां चेति ।** अनेकेषामेककालाद्यवच्छेदेन मेलनरूपः समुदायिनां स्थायित्व एव सम्भवति न क्षणिकत्व इत्यर्थः ॥

---

**च० — वृत्तिविकल्पेति ।** कार्त्स्न्यैकदेशाभ्यामवस्थितिविकल्पेत्यर्थः । **एककालदेशेत्यादि ।** एकक्षणोत्पन्नानेकशब्दानां चन्द्रादेः राह्वादेश्च मेलनमेककालावच्छेदेन, वृक्षकरितुरगादीनामेकदेशावच्छेदेन । दंडचक्रादिहेतूनामेककार्यावच्छेदेन । वर्णानां पदानां च मेलनमेकबुद्ध्यवच्छेदेनेति विवेकोऽवसेयः । **वक्ष्यति ।** 'कार्यं च कारणं चैव यत्किञ्चिद्यस्य कस्यचित् भवेन्नियामकाभावादिदमस्यैव कारणम् । इति नित्यविनाशित्व' इत्यादिनाऽभिधास्यति ।

**सु० — उक्तमर्थमाक्षिप्य समादधत्सूत्रम् ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ इति । तत्राक्षेपांशं तावद्व्याचष्टे** अन्योन्येति ।

**अनु० — ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥**

अन्योन्यापेक्षया पुंसः समुदायत्ववेदनम् ॥
स्यात्तत्सदातनत्वेऽपि तच्च सामीप्यहेतुकम् ॥
इति चेत्

भवेदिदमन्योन्याश्रयत्वं यद्ययं समुदायः कादाचित्कः स्यात् । न चैवम् । सदातनं त्विममभ्युपगच्छामः । एवं तर्हि सृष्टिप्रलयव्यवस्था न स्यादिति चेन्न । यतस्तस्य समुदायस्य सदातनत्वेऽपि पुंसः समुदायत्ववेदनं स्यात् । कदाचिदिति शेषः । ततस्तदपेक्षया सृष्ट्यादिव्यवस्थोपपद्यत इति भावः । समुदायस्य सदातनत्वे तद्वेदनमपि कुतः कादाचित्कमित्यत उक्तं तच्चेति । तत्समुदायत्ववेदनं परमाणुसामीप्यहेतुकम् । न च सामीप्यं सदाऽस्तीति वेदनस्य कादाचित्कत्वमिति । समुदायत्ववेदनस्य सामीप्यहेतुकता कुत इत्यत (उक्तं) आह अन्योन्येति । अन्योन्यपरमाणुज्ञानापेक्षया हि तद्भवति । न चान्योन्यज्ञानं सामीप्येन विना भवतीति ।

ननु वेदनमेव पुमानिति सौगता मन्यन्ते । तत्कथं पुंसो वेदनमिति । उच्यते । ज्ञानं हि द्विविधं भवति । प्रवृत्तिज्ञानमालयज्ञानं चेति । तत्रालयज्ञानं प्रवृत्तिज्ञानदुःखसंस्कारास्पदं पुमानित्युच्यते । प्रवृत्तिज्ञानं तु समुदायत्ववेदनमिति न विरोधः ।

एतदुक्तं भवति । अनेके परमाणव एव समुदायः । तदनेकत्वं च समुदायत्वम् । तन्मिलितेष्विव विरलेष्वपि विद्यते । किन्तु न सदा समुदायत्ववेदनं भवति । इतरपरमाणुसहितेतरपरमाणुज्ञाने सति हि समुदायत्वज्ञानं भवति । अपेक्षाबुद्धेरनेकत्वव्यञ्जकत्वात् । न चेतरेतरप्रत्ययो विरलेषु परमाणुषु संभवति । न हि मथुरापाटलिपुत्रस्थितयोर्वृक्षयोरितरेतरप्रत्ययो दृष्टः । किञ्चाधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो हि ज्ञानहेतवः । अधिपतिरिन्द्रियम् । न च विरलानां परमाणूनामिन्द्रियालम्बनताऽस्ति । नापि तेष्विन्द्रियाणामाधिपत्यम् । अतोऽदृष्टादिसहकारिवशादिन्द्रियानालम्बनविरलपरमाणुभ्यस्तदालम्बनतया तथातथा सन्निकृष्टाः परमाणवो जायन्ते । अनधिपतीन्द्रियेभ्यश्चाधिपतीन्द्रियाणि । अथेदानीं समनन्तरप्रत्ययबलादेको महानिति ज्ञानमुत्पद्यते । तेन नान्योन्याश्रयत्वम् । नापि सृष्ट्याद्यनुपपत्तिरिति ।

एतेन पक्षान्तरमपि सूचितम् । विरलपरमाणुभ्यः सन्निकृष्टाः परमाणवो जायन्ते । तदेव तेषां समुदायत्वम् । अतो न कश्चिद्दोष इति ।

**शे०** ॥ ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ ॥ एवं तर्हीति । समुदायस्य सदातनत्वेन तद्भावाभावरूपतत्प्रयोजकाभावादिति भावः ॥ कुत इति । ततश्च समुदायत्ववेदनस्यापि सदातनत्वान्न तदपेक्षयाऽपि सृष्ट्यादिव्यवस्थोपपत्तिरिति भावः । सामीप्यहेतुकत्वेऽपि कुतः कादाचित्कत्वमित्यतस्तद्धेतोः सामीप्यस्य कादाचित्कत्वात्तस्यापि कादाचित्कत्वमित्याह **न चेति** ।

**मन्यन्त इति** । सन्तन्यमानं ज्ञानमेवात्मेति तदुक्तेरिति भावः । **तत्कथमिति** । ज्ञान-स्यैकविधत्वेन स्वस्य स्ववत्त्वस्य विरुद्धत्वादिति भावः । 'तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम् । तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलत्वादिकमुल्लिखेदि'ति परोक्तं मनसि निधाय ज्ञानद्वैविध्यमाह **ज्ञानं हीति** । संस्कारास्पदमित्यत्र संस्कारपदं रागादिदोषपरम् । ननु भवेदेवमन्योन्याश्रयपरिहारो यदि समुदायस्य सदातनत्वं भवेत् । तदेव कथम् । कुतश्च समुदायत्ववेदनस्यान्योन्यापरमाणुज्ञानापेक्षत्वं, कुतश्चान्योन्य-परमाणुज्ञानस्य सामीप्यापेक्षत्वमित्यत आह **एतदुक्तं भवतीति** ॥ **विद्यत इति** । अतः समुदायः सदातन एवेति भावः । तर्हि सृष्ट्यादिव्यवस्थाऽनुपपत्तिः स्यादिति पृच्छति **किन्त्विति** । परिहरति **नेति** । अतस्तदपेक्षया सृष्ट्यादिव्यवस्थेति भावः । पाटलीपुत्रशब्दो नगरविशेषपरः । अतोऽर्थेन्द्रिय-संयोगीत्यादिसौत्रसमाधानांशव्याख्यानपरोत्तरग्रन्थानुरोधेनेतरेतरैः परस्परं ग्राह्यग्राहकभावेन संबद्धैरालम्बन-परमाण्वादिभिः प्रत्ययो यस्य स तथोक्तस्तस्य भावस्तत्त्वं तस्मादित्यपि सौत्रपूर्वपक्षांशयोजनामभिप्रेत्योत्तर-ग्रन्थनिवर्त्यपूर्वपक्षमप्येतद्भाष्यसूचिततया दर्शयति **किञ्चेति** । अधिपत्यालम्बनसहकारिस्वरूपनिरूपणमाकर एव स्पष्टम् । समनन्तरप्रत्ययस्तु पूर्वज्ञानमेवात्राभिमतः । न तु समनन्तरप्रत्ययः । संस्कारस्कन्ध इत्यत्रैव विज्ञानादिस्कन्धसंबन्धी रागादिः समनन्तरप्रत्ययात्पूर्वज्ञानाद्बोधरूपतेति ज्ञानहेतुतयोक्तसमनन्तर-प्रत्ययस्य ज्ञानरूपतायाः स्पष्टमभिधानादिति द्रष्टव्यम् । एतेषां च चतुर्णामेकस्मिन्ज्ञाने समुच्चयेन हेतुत्वमत्राभिमतं । 'तत्र तावच्चतुर्णां कारणानामेकस्मिन्नीलप्रत्यये समुच्चयेन कारणत्वसिद्ध्यर्थं द्वारभेद-प्रदर्शनमि'ति कल्पतरूक्तेरिति द्रष्टव्यम् ॥ **अधिपतिरिन्द्रियमिति** । चक्षुरादितत्तदिन्द्रियोत्पन्नरूपरसादि-ज्ञानस्य रसरूपादिसाधारण्ये प्राप्ते रूपरसादिनियामकं चक्षुरादीन्द्रियमधिपतिरित्युच्यते । लोके नियाम-कस्याधिपतित्वदर्शनादित्याशयः ॥ **न चेति** । अतो न सर्वत्र गोघटादिबुद्धिप्रसङ्ग इति भावः ॥ **समनन्तरप्रत्ययबलादिति** । पूर्वज्ञानादित्यर्थः । तन्मते नीलादिज्ञानस्य नीलाद्यालम्बनजन्यत्वेन विना नीलाद्याकारताविरहवत्पूर्वज्ञानजन्यत्वाभावे बोधरूपताविरहस्य सिद्धत्वेन बोधरूपतानिर्वाहाय एको महानित्यादिज्ञानस्य पूर्वज्ञानजन्यत्वमावश्यकमिति ध्येयम् ॥ **तेनेति** । परमाणुसमुदायस्य विरलपरमाणु-हेतुकत्वेन तत्समुदायस्य समुदितानेकेषां च परस्परापेक्षाविरहादित्यर्थः ॥ **नापीति** । समुदायस्य तद्वेद-नस्य च कादाचित्कत्वेन तदुभयापेक्षयैव सृष्ट्यादिव्यवस्थोपपत्तेरिति ॥ **एतेनेति** । समुदायत्ववेदनस्य सामीप्यहेतुकत्वकथनपरेण 'तच्च सामीप्यहेतुकमि'ति भाष्यखण्डेनेत्यर्थः ॥ **पक्षान्तरमिति** । परमाणूना-मनेकत्वमेव समुदाय इति प्राचीनपक्षापेक्षया परमाणूनां परस्परसंयोग एव समुदाय इति पक्षान्तरमपि सूचितं भवतीत्यर्थः ॥ **तदेवेति** । सन्निकृष्टत्वमेवेत्यर्थः ॥ **कश्चिदिति** । अन्योन्याश्रयो वा सृष्ट्यादि-व्यवस्थाऽनुपपत्तिर्वेत्येवं कश्चिदित्यर्थः ।

**स०— ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ एतेनेति** । समुदायत्ववेदनस्य सामीप्यहेतुकत्वकथनेन समुदायस्य सामीप्यहेतुकत्वरूपं पक्षान्तरमप्युक्तमित्यर्थः ।

**प०— इतरेतरप्रत्ययत्वादिति** । उक्तोर्थः । कथं तस्याक्षेप इत्यतो व्यनक्ति **भवेदिदमिति** । मूलं योजयति **यत इति** ॥ **तदपेक्षयेति** । वेदनापेक्षया सृष्टिः । तदभावापेक्षया लय इति व्यवस्थेत्यर्थः ॥ **तद्भवतीति** । समुदायत्ववेद(नेत्य)नमित्यर्थः । सन्निकृ(ष्टगुणलभ्यत्वाव)ष्टाणुज्ञानमावश्यकमित्यत्र युक्त्यन्तरमाह **किं चेति** ॥ **ज्ञानहेतव इति** । प्रवृत्तिज्ञान(दाने हे)जननहेतव इत्यर्थः ॥ **समनन्तरप्रत्ययबलादिति** । संस्कारबलादित्यर्थः ॥ **एतेनेति** । 'तच्च सामीप्यहेतुकमि'ति कथनेनेत्यर्थः ।

**या०— ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ** ॥ पूर्वविज्ञानसन्तान एव संस्कार इति मतमाश्रित्य संस्कारास्पदमित्युक्तम् । तेन संस्कारस्य पूर्वविज्ञानरूपत्वात्तस्य च प्रवृत्तिज्ञानपदेन गृहीतत्वात् पुनर्ग्रहणं कथमिति शङ्कानवकाश इति ध्येयम् । **तत्** समुदायत्ववेदनं । **न विरोध इति** । आलयज्ञानरूपस्यात्मनः प्रवृत्तिज्ञानरूपसमुदायज्ञानवत्त्वसंभवात् पुंसो वेदनमिति न विरुद्धमित्यर्थः ॥ पाटलिपुत्रनामकं किञ्चिन्नगरम् । अतोऽर्थेन्द्रियसंयोगीत्यादिसौत्रसमाधानांशव्याख्याननिवर्त्यं पूर्वपक्षं दर्शयति **किञ्चाधिपतीति** । अनेनेतरेतरैः परस्परं ग्राह्यग्राहकभावेन सम्बद्धैरालम्बनपरमाण्वादिभिः प्रत्ययो यस्येति सौत्रपूर्वपक्षांशो व्याख्यात इति द्रष्टव्यम् ॥ **अधिपतिरिन्द्रियमिति** । अर्थग्राहकमिन्द्रियमधिपतिशब्देन विवक्षितमित्यर्थः ॥ **सहकार्यदृष्टादि** । **आलम्बनम्** इन्द्रियविषयत्वयोग्यम् । समनन्तरप्रत्ययः पूर्वविज्ञानमिति स्पष्टत्वान्नोक्तम् । नन्वनेकेष्वणुष्वेकत्वमहत्त्वयोरभावात्कथं प्रतीतिरित्यत आह **समनन्तरेति** । संस्काररूपपूर्वविज्ञानबलादित्यर्थः । पूर्वं हि कदाचिदेकत्वमहत्त्वयोर्विज्ञानं समुत्पन्नम् । तदेव तन्मते संस्कार उच्यत इत्युक्तम् । स चानेकज्ञानव्यवहितोऽपि कदाचित्सजातीयज्ञानान्तरमुत्पादयति । शालिबीजमिवाङ्कुरपत्रकाण्डपत्रपुष्पफलाद्यनेकव्यवधानेन पुनः सजातीयबीजान्तरमिति तैरङ्गीकारात् । तथा चाविद्यमानमप्येकत्वादिकं संस्कारोपनीतं भासत इति भावः । एवं सर्वत्रापि सविकल्पकज्ञाने स्वलक्षणेऽविद्यमान एव विशेषणांशः पूर्वविज्ञानरूपसंस्कारबलाद्भासत इति उक्तं समनन्तरप्रत्ययस्य सार्वत्रिकसविकल्पकज्ञानहेतुत्वं, युक्तमित्यवगन्तव्यम् ॥ **एतेनेति** । सामीप्यहेतुकमित्यंशेनेत्यर्थः ॥ **तदेवेति** । सन्निकृष्टत्वमेवेत्यर्थः ॥ **न कश्चिद्दोष इति** । अन्योन्याश्रयत्वरूपो वा सृष्ट्याद्यव्यवस्थारूपो वा दोषो नास्तीत्यर्थः ।

श्री० — ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ।। तथा तथेति । गोघटाद्याकारेणेत्यर्थः ।

च० — ज्ञानहेतवः प्रवृत्तिज्ञानजननहेतवः ।। अधिपतिरिन्द्रियमिति । अर्थग्राहकमिन्द्रियमधिपतिशब्देनाभिप्रेतमित्यर्थः । समनन्तरप्रत्ययबलात् संस्काररूपपूर्वविज्ञानबलात् ।

सु० — समाधानांशं व्याचष्टे कार्येति ।

अनु० — कार्यसंभूतिमात्रव्यापृति कारणम् ।।
न तु कार्यविशेषेषु व्यापृतं कारणं भवेत् ।।

कार्यसंभूतिमात्रे व्यापृतिर्यस्य तत्तथोक्तं कारणं कार्यसंभूतिमात्रव्यापृति यतस्ततो नेति शेषः । यथाश्रुतमेतन्न परिहारक्षमम् अतोऽभिप्रायमाह न त्विति ।

विशिष्यन्त इति विशेषाः । कार्याण्येव विशेषाः कार्यविशेषाः । कारणमिति जातावेकवचनम् । कारणानि खलु स्वसदृशकार्यजननव्यापाराणि । न तु विसदृशकार्यजनने व्यापृतानीत्यर्थः ।

शे० — न तत्परिहारक्षममिति । कारणस्य विसदृशकार्यजनकत्वाभावस्यात्रानुक्त्याऽनालम्बनपरमाणूनां सन्निकृष्टपरमाणुजनकत्वाभावस्यालाभादिति भावः । ननु अत्र कार्यविशेषेषु कारणत्वाभावमात्रमुच्यते न तु विसदृशकार्यजनकत्वाभावः अतो नानेनाप्युक्ताक्षेपपरिहार इत्यतो नात्र कार्यनिष्ठविशेषेष्वित्यर्थोऽभिमतः, किन्तु विशिष्टकार्येष्वित्येव, तथा चोक्तार्थलाभ इति भावेन विशिष्टवाचकतया विशेषपदं व्याचष्टे विशिष्यन्त इति विशेषा इति । तथाऽपि कार्यनिष्ठविशेषेष्वित्येवार्थप्राप्त्या विसदृशकार्यजनकत्वाभावालाभः इत्यतो व्याख्याति कार्याण्येवेति ।। जातावेकवचनमिति । समुदाये एकवचनमित्यर्थः । अत एवाह कारणानीति ।

प० — विशिष्यन्त इति । व्यावर्त्यन्ते विलक्ष्यंत इत्यर्थः । विसदृशा इति लभ्यते । विशेषकाल एवेत्यादाविव कर्मसाधनो विशेषशब्द इति भावः ।

या० — भावव्युत्पत्त्या करणव्युत्पत्त्या वा लब्धार्थस्य प्रकृतानुपयोगादाह विशिष्यन्त इतीति । तथा च विशेषपदाद्विशिष्टवाचकाद्विसदृशरूपोऽर्थो लभ्यत इति ज्ञातव्यम् ।

च० — विशिष्यन्त इति । कर्मसाधनघञन्तो न भावकरणसाधनतदन्त इति भावः ।

सु०— किमतो यद्येवमित्यत आह अत इति ।

अनु०— अतोऽर्थेन्द्रियसंयोगिरूपकारणतात्मनः ॥

संयोगिरूपराहित्यान्नैव तज्ज्ञानताऽपि हि ।

सदृशकार्यजनकत्वनियमादित्यर्थः । संयोगिरूपे ग्राह्यग्राहकरूपे ये अर्थेन्द्रिये तयोः कार्ययोः कारणता संयोगिरूपकारणता । अर्थेन्द्रिययोः संयोगिरूपकारणता (अर्थेन्द्रियसंयोगिरूपकारणता ।) सा नैवोपपद्यते । कुतः । संयोगिरूपराहित्यात् । कारणयोरर्थेन्द्रिययोर्ग्राह्यग्राहकरूपराहित्यात् । आत्मनोऽपि कार्यस्य तत्समुदायविषयं ज्ञानं यस्यासौ तज्ज्ञानस्त(ज्ज्ञा)स्य भावस्तज्ज्ञानता नैवोपपद्यते । कुतः । हि यस्मात्कारणस्यात्मनो नैव तज्ज्ञानताऽस्तीति योजना ।

शे०— ये अर्थेन्द्रिये इति । कार्यभूते इत्यर्थः ॥ कार्ययोः कारणतेति । तत्कार्यनिरूपितकारणतेत्यर्थः ॥ अर्थेन्द्रिययोरिति । कारणतयाऽभिमतयोरित्यर्थः । )

प०— अर्थेन्द्रियसंयोगिरूपेत्यत्र संयोगिपदं ग्राह्यग्राहकभावापन्नकार्यभूतार्थेन्द्रियपरम् । कंठोपात्तमर्थेन्द्रियपदं चातादृशकारणभूतार्थेन्द्रियपरमित्युपेत्य विग्रहमाह संयोगिरूप इति । संयोगिरूपे प्रति कारणतेति मूलार्थमुपेत्याह तयोः कार्ययोः कारणतेति । तन्निरूपितकारणतेत्यर्थः । आत्मपदं च कार्यरूपात्मपरम् । तज्ज्ञानेति बहुव्रीहिः । तज्ज्ञानपदं च प्रकृतसमुदायज्ञानपरमित्युपेत्यार्थमाह आत्मन इति । आवर्तमानं चात्मपदं कारणीभूतात्मपरमित्युपेत्यार्थान्तरमाह हि यस्मादित्यादिना ।

या०— ये अर्थेन्द्रिये इति । कार्यभूते इत्यर्थः । तयोः कार्ययोः कारणतेत्यत्र तत्कार्यनिरूपिता कारणतेत्यर्थः ॥ अर्थेन्द्रिययोरिति । कारणतयाऽभिमतयोरित्यर्थः ।

श्री०— अर्थेन्द्रिययोः अग्राह्यग्राहकयोः । अनालम्बनानधिपतिरूपयोरिति यावत् ।

च०— मौलतज्ज्ञानतेति बहुव्रीहिप्रकृतिकतलन्तमित्यभिप्रेत्य व्याकुरुते आत्मन इत्यादि ।

सु०— इदमुक्तं भवति । कारणं हि सदृशकार्यजननस्वभावं (वा) स्यात, विसदृशकार्यजननस्वभावं वा, उभयस्वभावं वा, अनुभय(जनन स्वभावं वा ।

तत्र यद्याद्यः कल्पोऽङ्गीक्रियते तदेन्द्रियानालम्बनेभ्यो विरलपरमाणुभ्यस्तथाभूता एव परमाणवो जायेरन् । न पुनः कदाचिदिन्द्रियालम्बनभूता मिलिताः । इन्द्रियेभ्यश्चानधिपतिभ्यस्तथाविधान्येवेन्द्रियाण्युत्पद्येरन् । न जात्वर्थाधिपतीन्द्रियाणि । आत्मनश्चासमुदायज्ञानात्तादृश एवात्मा जायेत । न कदाचित्तज्ज्ञानवान् । अन्यथा कारणपरमाण्वादी-

**नामपीन्द्रियालम्बनत्वादिकमभ्युपगन्तव्यं स्यात् । इतरथा सदृशकार्यजननस्वभावभङ्गापत्तेः । उभयथा समुदायवेदनस्य कादाचित्कत्वं नोपपद्यत इति ।**

**शे०—** ननु कारणस्य विसदृशकार्यजनकत्वाङ्गीकारात् अनालम्बनपरमाणुभ्योऽप्यालम्बनपरमाणूनामनधिपतीन्द्रियेभ्योऽप्यधिपतीन्द्रियाणां समुदायाज्ञादप्यात्मनस्तज्ज्ञस्यात्मनश्चोत्पत्तिसंभवात्कारणस्य संयोगिरूपराहित्यादिना कथं कारणत्वाभावसमर्थनमित्यतः सदृशकार्यजनकतापक्षस्यैवेदं दूषणमिति नानुपपत्तिरिति भावेन संभावितकल्पप्रदर्शनपूर्वकमाद्यपक्षनिरासकतया मूलं योजयितुमाह **इदमुक्तं भवतीति** । आद्येऽपि कारणपरमाण्वादीनामनालम्बनत्वमेवेति नियमोऽभिमतः । अथवा कार्यपरमाण्वादीनामालम्बनत्वादिकमेवेति नियम इति विकल्पद्वयं मनसि निधायाद्यं दूषयति **तदेति । तथाभूता एव** इन्द्रियानालम्बनविरलपरमाणव एव । **तथाविधान्येव** अर्थानधिपतिभूतान्येव । **तादृश एव** असमुदायज्ञान एव । अस्तु तर्हि कार्यपरमाण्वादीनामालम्बनत्वादिकमेवेति द्वितीय इत्यत आह **अन्यथेति** । ननु कारणपरमाण्वादीनामनालम्बनत्वादिकमेवेति नियमेऽपि कार्यपरमाण्वादीनामनालम्बनत्वादिकमेवेति, तथा कार्यपरमाण्वादीनामालम्बनत्वादिकमेवेति नियमेऽपि कारणपरमाण्वादीनामालम्बनत्वादिकमेवेति च कुतो नियम्यत इत्यत उक्तप्रकारद्वयेनैव कारणस्य सदृशकार्यजनकतास्वभावनियमोपपत्तेरेव तन्नियमसिद्धिरित्यभिप्रेत्योक्तद्विविधनियमानभ्युपगमे बाधकमाह **इतरथेति** । अस्तु तर्हि कारणीभूतानालम्बनपरमाण्वादिवत्कार्यपरमाण्वादीनामप्यनालम्बनत्वादिकं, तथा कार्यभूतालम्बनपरमाण्वादीनामिव कारणपरमाण्वादीनामप्यालम्बनत्वादिकमिति पक्षद्वयमपि किन्नश्छिन्नमित्यत आह **उभयथेति** । आद्ये सामग्र्यभावेन समुदायवेदनस्यैवाभावान्न तस्य कादाचित्कत्वं, द्वितीये तु सर्वदा सामग्रीसद्भावेन समुदायवेदनस्यैव सत्त्वान्न तस्य कादाचित्कत्वमिति न कादाचित्कसमुदायवेदनापेक्षया सृष्ट्यादिव्यवस्थेति भावः ।

**स०— उभयथेति** । 'अन्योन्यापेक्षया पुंसः' इत्यादिनोक्ते अनेकपरमाणव एव समुदायः तदनेकत्वं समुदायत्वं इत्युक्तपक्षे, विरलपरमाणुभ्यः सन्निकृष्टाः परमाणवो जायन्ते तदेव समुदायत्वमिति सूचितपक्षे च इत्युभयथेत्यर्थः । कारणस्य सदृशकार्यजनकत्वमङ्गीकुर्वता विरलपरमाणुभ्यो विरलानामेव उत्पत्तिर्वाच्या । अन्यथा सदृशकार्यजनकत्वाभ्युपगमविरोधात् । तथा च कार्यस्यापि विरलत्वे समुदायत्ववेदनमेव न स्यादिति न तस्य कादाचित्कत्वमपि । अथ जनकीभूतानामपि अविरलत्वमंगीकृत्य सदृशकार्यनिर्वाहः तर्हि अविरलपरमाणूनां पूर्वमपि सत्त्वेन सर्वदा समुदायत्ववेदनापत्त्या कादाचित्कत्वमेवेत्यस्य अनुपपत्तिरित्युभयथा समुदायत्ववेदनस्य कादाचित्कत्वं नोपपद्यते इत्यर्थः ।

प० — अस्फुटत्वादाह **इदमुक्तमिति** ॥ **असमुदायज्ञानादिति** । समुदायज्ञानहीनादित्यर्थः ॥ **उभयथेति** । विरलाणुभ्यो जातसन्निकृष्टाणुविषयकापेक्षाबुद्धिव्यङ्ग्यानेकत्वसंख्यायाः समुदायत्वं विरलाणुभ्यः सन्निकृष्टतयाऽणूनां जननस्य वा समुदायत्वमिति कण्ठोक्तं सूचितं च यत्तत्प्रकारद्वयेपि न समुदायज्ञानस्य कादाचित्कत्वम् । येन सृष्टिप्रलययोर्व्यवस्था स्यात् । विरलेभ्यो विसदृशसन्निकृष्टाणुजन्मोत्पत्तेरेवायोगेन समुदायज्ञानासंभवाद्दूरे कादाचित्कत्वमिति भावः । इन्द्रियानालम्बनविरलपरमाण्वादिभ्य इति वाक्यस्यादिपदद्वयेनानधिपतीन्द्रियविरलपरमाणुभ्योऽधिपतीन्द्रियमिलितपरमाणुजनिरिति ग्राह्यम् ।

या० — **उभयथेति** । कारणसादृश्यं कार्ये इति पक्षे, कार्यसादृश्यं कारण इति पक्षे चेत्यर्थः ॥ **समुदायवेदनस्येत्यादि** । तत्र हि कादाचित्कः समुदायवेदनरूपविशिष्टनिषेधो विवक्षितः । स चाद्ये समुदायवेदनरूपविशेष्याभावेन, तत्र कदापि तत्सामग्र्यसंभवात् । द्वितीये तु कादाचित्कत्वरूपविशेषणाभावेन, तत्र सर्वदा तत्सामग्रीसत्त्वसंभवादिति ज्ञातव्यम् । केचित्तूभयथेत्यस्यानेके परमाणव एव समुदायस्तदनेकत्वं च समुदायत्वमित्युक्तपक्षे, विरलपरमाणुभ्यः सन्निकृष्टाः परमाणवो जायन्ते तदेव तेषां समुदायत्वमिति सूचितपक्षे चेत्यर्थः इत्याहुः ॥

श्री० — **उभयथेति** । कारणसादृश्यं कार्ये, कार्यसादृश्यं कारण इति च पक्ष इत्यर्थः ॥ **समुदायवेदनस्येति** । कारणसादृश्यं कार्ये इति पक्षे, कार्यभूतयोः संयोगिरूपयोः ग्राह्यग्राहकयोरालम्बनाधिपतीन्द्रिययोरिति यावत् । कारणीभूते ये अर्थेन्द्रिये अग्राह्याग्राहकरूपे अनालम्बनानधिपतिरूपे तयोः सादृश्यं वाच्यम् । तथा चालम्बनार्थाधिपतीन्द्रिययोरपि अनालम्बनानधिपतित्वप्राप्त्या वेदनसामग्र्या अभावेन समुदायवेदनमेव न स्यात् । तथा कार्यसादृश्यं कारण इति पक्षे आलम्बनाधिपतीन्द्रियसादृश्यस्यैव कारणयोः सत्त्वे तयोरप्यालम्बनाधिपतित्वप्राप्त्या समुदायवेदनसामग्रीसद्भावात्तस्य कादाचित्कत्वं न स्यादित्यर्थः ।

सु० — **द्वितीयमाशङ्कते विशेषेति** ।

अनु० — विशेषकार्यजनकं यदि कारणमिष्यते ॥

**तथा चेन्द्रियानालम्बनविरलपरमाण्वादिभ्यस्तदालम्बनमिलितपरमाण्वादिजनिरुपपद्यत इति भावः । निराकरोति** कुत इति

कुतः समानरूपत्वं कार्याणामपि सर्वशः ।

**नहीति शेषः । सर्वशोऽपि कार्याणामिति संबन्धः । अत्र कार्यग्रहणं परमतानुसारेण । कारणस्य विसदृशकार्यजननस्वभावतायामाकपालभावात्सर्वेष्वपि घटक्षणेषु घटाकारता न स्यात् ।**

**किन्तु घटक्षणाद्गजक्षणस्ततो गर्दभक्षण उत्पद्येत । तथा नीलक्षणात्पीतक्षणस्ततः कपोतक्षणो जायेत । नीलानुवृत्तिस्तु न स्यादिति ।**

**शे०—कार्यग्रहणमिति** । कार्याणामिति कार्यग्रहणमित्यर्थः । स्वमते प्रतिक्षणं जायमानानां कार्याणामेवाभावादिति भावः । यदि कारणं विसदृशकार्यजनकं तर्हि कार्याणां समानरूपत्वं न स्यादिति यथाश्रुते मूले वैयधिकरण्यशङ्कापरिहाराय तात्पर्यमाह **कारणस्येति** ॥ **आकपालभावादिति** । न चात्राकपालभावादिति कथं पञ्चमी, तद्विधायकाभावादिति वाच्यम् । 'आङ् मर्यादावचने' इति स्मृत्याऽत्राङो मर्यादायां कर्मप्रवचनीयत्वेन 'पञ्चम्यपाङ्परिभिरि'ति कर्मप्रवचनीयाङ्योगात्पञ्चम्युपपत्तेः । न चैवं कर्मप्रवचनीयस्याङः पञ्चम्यन्तेन कपालभावशब्देनाङ् मर्यादाभिविध्योरिति समासे 'सुपो धातुप्रातिपदिकयोरि'ति सुब्लोपेऽपविष्णुसंसार इत्यादाविवाकपालभावमित्येव भवितव्यं, तत्कथमाकपालभावादिति पञ्चमीति वाच्यम् । विभाषेति महाविभाषाधिकारेणाङ् मर्यादाभिविध्योरिति मर्यादार्थकस्याङो विकल्पेन पञ्चम्या समासविधानेन समासपक्षे आकपालभावमिति रूपप्राप्तावपि तदभावपक्षे आकपालभावादिति वाक्यस्यापि सम्भवेन पञ्चमीश्रवणोपपत्तेरिति ध्येयम् ॥ **सर्वेष्वपीति** । तेषामपि कारणत्वादिति भावः ॥ **घटाकारतेति** । घटक्षणतेत्यर्थः । सर्वेष्वपि क्षणेषु घटक्षणतोपपादिकाया घटानुवृत्तेरभावादिति भावः । तत्कथमित्यतः कारणस्य सदृशकार्यजनकत्वाभ्युपगमपक्षे प्रतिक्षणमाकपालभावाद्घटाद्घटस्यैवोत्पत्त्या घटानुवृत्तिसद्भावलाभात्सर्वेष्वपि क्षणेषु घटक्षणतानिर्वाहसम्भवेऽपि कारणस्य विसदृशकार्यजनकत्वाभ्युपगमपक्षे घटाद्गजस्य गजाद्गर्दभस्योत्पत्त्यापत्त्या प्रतिक्षणमाकपालभावाद्घटाद्घटस्योत्पत्त्यभावेन सर्वेष्वपि क्षणेषु घटानुवृत्तेर्घटक्षणतोपपादिकाया अलाभान्न घटक्षणतानिर्वाह इत्याशयेनाह **किन्त्विति** । अत्र घटो न सर्वेष्वपि क्षणेषु घटः, किन्त्वेकस्मिन्क्षणे घट इति ज्ञापनाय क्षणपदप्रयोगः । क्षणं हस्ती भवति क्षणं तुरगो भवतीति शाङ्करभाष्योक्तेरिति ज्ञेयम् ॥ **तथेति** । अत्रापि सर्वेषु क्षणेष्वित्यनुवर्तते । कपोतेति रूपविशेषस्य संज्ञा ॥ **नीलानुवृत्तिस्त्विति** । ततश्च सर्वेष्वपि क्षणेषु नीलान्नीलस्यैवोत्पत्त्यभावेन नीलानुवृत्तेरभावान्नीलक्षणता न स्यादिति भावः ।

स०—**परमतानुसारेणेति** । स्वमते प्रतिक्षणं तादृशकार्यत्वानभ्युपगमादिति भावः ।

प०—प्रतिक्षणं सिद्धान्ते कार्यजन्माभावादाह **अत्र कार्यग्रहणमिति** । अध्याहृततर्हीतिपदस्यार्थः **कारणस्येत्यादि** । शेषोक्तिः **आकपालभावादिति** । घटस्यात्यन्तिकविनाशेऽवशिष्टो यः कपालभावस्तत्पर्यन्तमित्यर्थः । तन्मते कपालतापत्तिरेव विनाश इत्यभ्युपगमादाकपालभावादित्युक्तम् । कपोतेति वर्णविशेषः । उत्तरोत्तरं प्रति पूर्वपूर्वकारणानां च विसदृशकार्यजननस्वभावत्वादिति भावः ।

**या० — अत्र कार्यग्रहणमिति ।** कार्याणामिति कार्यग्रहणमित्यर्थः । असन्मते प्रतिक्षणं कार्याणामभावादिति भावः । यदि कारणं विसदृशकार्यजनकं तर्हि कार्याणां समानरूपत्वं न स्यादिति यथाश्रुतमूले वैयधिकरण्यशङ्कापरिहाराय तात्पर्यमाह **कारणस्येत्यादिना** ॥ **सर्वेष्वपीति ।** तेषामपि कारणत्वादिति भावः । **घटाकारता** घटानुवृत्तिमत्ता । ततश्चायमर्थः । यदि कारणं विसदृशकार्य-जननस्वभावमिति पक्षोऽङ्गीक्रियते तर्ह्यकपालभावात्सर्वे क्षणा विसदृशकार्यजनकाः स्युः । तेषामपि कारणत्वात् । ततश्च घटानुवृत्तिमन्तो न स्युरिति । न च प्रतिक्षणं जायमानकार्याणामप्युत्तरोत्तरकार्य-कारणत्वात्तेषां विसदृशकार्यजनकत्वमापाद्य समानरूपत्वं न स्यादित्येव कुतो नोक्तम् । वैयधिकरण्य-शङ्कापरिहारस्यैवमपि संभवात् । तत्किं क्षणष्वापादनेनेति वाच्यम् । अर्थक्रियाहेतुत्वं हि सत्त्वं सजातीयक्षणान्तरोत्पाद एवार्थक्रिया, तद्धेतुत्वं च पूर्वक्षणस्यैव मुख्यं, ततश्च पूर्वोक्तक्षणयोरेव मुख्यः कार्यकारणभावः, तत्रत्यार्थयोस्तु तद्विशेषणतयैव, न प्राधान्येनेति तन्मतसूचनायैवमुक्तत्वात् । कपोतेति रूपविशेषस्य संज्ञा ।

**श्री० — कपोतेति ।** रूपविशेषस्य संज्ञेति द्रष्टव्यम् ।

**च० —** कपोतेति रूपविशेषस्य संज्ञेति स्थितम् । **पक्षद्वयम्** सदृशजननस्वभावत्वविस-दृशजननस्वभावत्वरूपकल्पद्वयम् ।

---

**सु० — अस्तु तर्ह्युभयस्वभावं कारणमिति तृतीयः पक्ष इति चेन्न । विरोधेनैकस्या-प्यजननप्रसङ्गात् । अविरोधे त्वाह** अत इति ।

**अनु० —** अतोऽनियत्या यत्किञ्चिद्यस्य कस्यापि कारणम् ।

**प्रकृतपक्षद्वयं समाहृत्यात इति परामृशति ।** अनियत्या **घटो घटस्यैव नीलो-नीलस्यैवेति नियतिं विना ।** यत्किञ्चित् **घटादिकं नीलादिकं** वा । यस्य कस्यापि **घटादेरघटा-देर्नीलादेरनीलादेश्च ।** कारणं स्यात् । **घटक्षणस्योभयविधकार्यजननस्वभावत्वेऽसौ तदुभयं जनयेत् । तथा चोपलभ्येतेति यावत् ॥ केचिदिदं** वाक्यं **पूर्ववाक्यशेषतया** व्याचक्षते । **सर्वशोऽपि कार्याणां समानरूपत्वं न स्यात् । किन्तु** विसदृशकार्यजननस्वभावत्वाद्घटादिकं **गजादेः कारणं स्यादिति ।**

**न चतुर्थः । अर्थक्रियारहितस्यासत्त्वप्राप्तेः । अर्थक्रियाकारित्वं सत्त्वमिति हि सौगताः ।**

**ननु च कार्यजननमात्रं वस्तुनः स्वभाव इत्यङ्गीकुर्मो न तूक्तेषु कमपि पक्षमित्यत आह** अत इति । **बुद्धिस्थमिमं कल्पमत इति परामृशति । अतिप्रसङ्गस्तु न तिरोहितः ।**

शे० — अतो नियत्येत्युत्तरग्रन्थस्य तृतीयपक्षनिरासकत्वं न संभवति । विरुद्धोभयस्वाभावत्वाभ्युपगमेन तत्रोक्तातिप्रसङ्गाप्रसरादित्यतोऽविरुद्धोभयस्वभावत्वपक्ष एवायमतिप्रसङ्ग इति नानुपपत्तिरिति भावेन तृतीयपक्षमुत्थाप्य तत्र संभावितं विकल्पद्वयं च कृत्वाऽऽद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षनिरासकतयोत्तरग्रन्थं योजयति **अस्तु तर्हीति ॥ प्रसङ्गादिति ।** ततश्चार्थक्रियाकारित्वरूपसत्त्वाभावप्राप्त्या क्षणिकत्वाभावप्रसङ्ग इति भावः ॥ **प्रकृतं पक्षद्वयमिति ।** कारणं सदृशकार्यजननस्वभावं विसदृशकार्यजननस्वभावमिति पक्षद्वयमित्यर्थः । **परामृशतीति ।** तेन कुतोऽयमतिप्रसङ्ग इत्यत उक्त अत **इति ।** कारणस्य सदृशविसदृशकार्यजननस्वभावत्वादिति योजना सूचिता भवति । एतदेव सूचयन्नुक्तप्रसङ्गस्येष्टापादनतां परिहरति **घटक्षणस्येति ।** तदुभयमपीत्यतःपूर्वमाकपालभावात्सर्वेष्वपि क्षणेष्विति शेषः । चिरन्तनटीकाकारमतमनुवदति **केचिदिति ।** अत्र 'यत्किञ्चिद्यस्य कस्यचिदि'त्यादेरस्वरस्यमितिभावेन केचिदित्युक्तम् ॥ स्पष्टत्वाच्चतुर्थपक्षदूषणस्य मूले तदनुक्तिरिति भावेन तं पक्षं दूषयति **नेति ।** अर्थक्रियारहितत्वमात्रेण कुतोऽसत्त्वप्राप्तिरित्यत आह **अर्थेति ।**

नन्वतःशब्दः प्रकृतस्य हेतुत्वमाह । न चात्र कार्यजननमात्रस्य वस्तुस्वभावतायाः प्रकृतत्वमस्ति । तत्कथमस्यार्थस्यात इति परामर्श इत्यतो वक्तृबुद्धौ परिवर्तमानमेव साक्षात्प्रकृतमित्युच्यते, ग्रन्थोक्तत्वं तु तल्लिङ्गतयैव तथा, एतच्च वक्तृबुद्धिस्थितमिति युक्तस्तस्य परामर्श इति भावेनोक्तं **बुद्धिस्थमिति ।** अनेन **अतः** कारणस्य कार्यजननमात्रस्वभावत्वाभ्युपगमादिति व्याख्यातं भवति । अनियत्येत्यादेरतिप्रसङ्गस्याविवरणे निमित्तमाह **अतिप्रसङ्गश्चेति ।** पूर्वव्याख्यानेनैव तद्विवरणसिद्धेः पृथगविवरणमिति भावः ।

प० — **पक्षद्वयमिति ।** सदृशजननस्वभावत्वं विसदृशजननस्वभावत्वं चेति यत्पक्षद्वयं अतोऽर्थेन्द्रियेत्यनेन विशेषकार्येत्यनेन प्रकृतं तत्परामृशतीत्यर्थः । परमते कालकर्मादेरेव कार्योत्पत्तौ सामग्रीत्वात्कालस्य च प्राधान्याद्घटक्षणस्योभयविधकार्यजननस्वभावत्व इत्यादिव्यवहारः कृत इति ज्ञेयम् ॥ **केचिदिति ।** अविरोधपक्षनिरासकतया(भिन्नवाक्यतया)स्वयं व्याख्यातमिदं वाक्यमतो नियत्येत्य(र्थैक)र्थं केचिदेकवाक्यतया व्याचक्षत इत्यर्थः । तं प्रकारं व्यनक्ति **सर्वेशोपीति ॥ अतिप्रसङ्गस्त्विति ।** सदृशस्य विसदृशस्य वा जननप्रसङ्गरूपातिप्रसङ्ग इत्यर्थः ।

या० — **अविरोधे त्विति ।** साङ्ख्यमते इन्द्रियाणां प्रमाऽप्रमाजननस्वभाववदिति भावः । उक्तरीत्या क्षणस्यैव मुख्यकारणत्वात्स एवापादनविषय इत्यभिप्रेत्याह **घटक्षणस्येति ।** एवमग्रेऽपि क्षणानामेव मुख्यकारणत्वाभिप्रायेण पूर्वपूर्वतराद्यदृष्टक्षणा इत्याद्युक्तिरित्यवधेयम् ॥

श्री० — **पक्षद्वयम्** उभयसमाहाररूपम् ।

सु० — स्यादेतत् । यथा भवन्मते प्रमाजननस्वभावत्वेऽपीन्द्रियादेर्दोषसहकारिवशाद-प्रमाजननम्, तथा कारणस्य सदृशकार्यजनकत्वेऽप्यदृष्टादिसहकारिसामर्थ्यात्कदाचिद्विसदृश-कार्यजननं भविष्यति । यद्वा यथा साङ्ख्यानामिन्द्रियादीनि प्रमाऽप्रमाजननस्वभावानि । तत्राप्रमाप्रतिपक्षाणां गुणानामुपनिपाते प्रमामेवोपजनयन्ति, प्रमाप्रतिपक्षाणां दोषाणामुप-निपाते त्वप्रमाम्, तथा कारणस्योभयस्वभावत्वेऽप्यदृष्टादिवशात्तदन्यतरजन्मोपपत्स्यते । अथवा यथा नैयायिकादीनामिन्द्रियादीनि ज्ञानमात्रजननस्वभावानि । गुणादिसहकार्युपनि-पातेन प्रमाद्यु(त्प)पपत्तिः, तथा कारणं कार्यजननस्वभावमेव । अदृष्टादिसहकारिसमव-धानात् (तु) तत्सदृशं विसदृशं वा जनयिष्यतीत्यत आह अदृष्टमपीति ।

अनु० — अदृष्टमपि तस्यैव विशेषापादकं कुतः ।

अत्रादृष्टग्रहणमुपलक्षणं (सहकारिमात्रस्य) ।

शे० — नन्वदृष्टमपि तस्यैवेत्यदृष्टस्य विशेषापादकत्वं निराक्रियते, तदनर्थकम् । न च कारणस्य सदृशकार्यजननादिस्वभावत्वेऽप्यदृष्टादिसहकारिवशाद्विसदृशकार्यजनकत्वं भविष्यतीति शङ्कानिरासार्थत्वान्न तदानर्थक्यमिति वाच्यम् । अतत्स्वभावस्यापि सहकारिवशात्तत्कार्यकारितायाः काप्यदर्शनेनासंभावनाग्रस्त-त्वेनोक्तविधशङ्काया अप्यनुत्थानादित्यतोऽतत्स्वभावस्यापि सहकारिवशेन तत्कार्यकारिताया बहुवादि-सम्मतत्वेन तद्वदेव सदृशकार्यजननादिस्वभावस्यापि कारणस्य सहकारिवशेन विसदृशकार्यजनकत्वादिति शङ्कोत्थानसंभवान्नानुपपत्तिरिति भावेनोक्तशङ्कानिवर्तकतयोत्तरवाक्यं योजयितुमतत्स्वभावस्यापि सहकारि-वशेन तत्कार्यकारिताया बहुवादिसम्मततामुपदर्शयन्नेव तच्छङ्कामुत्थापयति स्यादेतदिति ॥ प्रमाजन-नस्वभावत्वेऽपीति । यथेन्द्रियादीनां ज्ञानजननशक्तिः सहजा तथैव प्रमाजननशक्तिरपि सहजैव । अन्यथा प्रामाण्यस्य स्वतस्त्वभङ्गः स्यात् । सत्यप्येवं दोषसद्भावे न प्रमाजनकत्वं तेषां, किन्त्वप्रमाजनक-त्वमेव । दोषाणां सहजशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकताया बहुलमुपलम्भादिति भावः ॥ सांख्यानामिति । प्रामाण्याप्रामाण्ययोरपि स्वतस्त्वात्प्रमाजननशक्तिरप्रमाजननशक्तिश्च सहजैवेत्यर्थः ॥ तत्रेति । अन्यथा प्रामाण्याप्रामाण्ययोर्ज्ञानकारणमात्रजन्यत्वेनेन्द्रियादिजन्यज्ञानस्य प्रमात्वाप्रमात्वयो-रभ्युपगमे वस्तुनो विरुद्धद्वयाकारालिङ्गितत्वस्य परस्परविरोधेन प्रमाणत्वाप्रमाणत्वोभयविकलत्वाभ्युपगमे च तदुभयविकलस्य ज्ञानस्यायःशलाकावत् अविषयतायां निःस्वभावस्य ज्ञानस्यानुपपत्त्येन्द्रियादीनां ज्ञान-जनकत्वमेव नास्तीत्यभ्युपगमे च जगदान्ध्यस्य प्रसङ्गादुक्तव्यवस्थासिद्धिरिति भावः ॥ ज्ञानमात्रजनन-स्वभावानीति । अनित्यज्ञानत्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयाणीत्यर्थः । गुणादीत्यादिपदेन

दोषपरिग्रहः । प्रमादीत्यादिपदेन चाप्रमाया परिग्रहः । नन्वदृष्टादिसहकारिवशादिति पूर्वग्रन्थानुरोधेनादृष्टादिकमिति वक्तव्यम् । अदृष्टमपि तस्यैवेत्यदृष्टमात्रोक्तिस्तु कथमित्यत आह **अत्रेति** ।

प० **उपलक्षणमिति** । अदृष्टं क्षणस्योपलक्षणमिति, परेण सहकारित्वेन यदभ्युपगम्यतेऽदृष्टमन्यद्वा तत्सर्वस्योपलक्षणमिति वार्थः ॥

श्री० — **उपलक्षणमिति** । क्षणस्येति शेषः ।

**सु० — अदृष्टमपि विशेषस्य, आद्ये विसदृशकार्यजनकत्वस्य द्वितीयेऽन्यतरप्रतिबन्धस्य, तृतीये तूभयजनकत्वस्यापादकं कुत इत्येकं वाक्यम् । तथा हि । पूर्वपूर्वतराद्यदृष्टक्षणा विशेषानापादकास्तदापादका वा । आद्ये त्वस्यादृष्टक्षणस्य विशेषापादकत्वं न सिध्यति । कारणाभावात् । विशेषानापादकादृष्टक्षणजन्योऽप्य(यम)दृष्टक्षणः सहकारिवशाद्विशेषमापादयिष्यतीति चेन्न । तत्सहकारिण्यप्यस्य साम्यात् । (अ)तत्रापि सहकार्यन्तरानुसरणे गौरवमिति ।**

**तस्यैव कारणस्य विशेषापादकं कुत इत्यपरं वाक्यम् । तथा हि । विशेषापादकमप्यदृष्टं किं विवक्षितस्यैव कारणस्य विशेषमापादयति, कारणमात्रस्य वा । नाद्यः नियामकयोः कारणज्ञापकयोरभावादिति । येभ्य इन्द्रियानालम्बनविरलपरमाणुभ्यस्तदालम्बनमिलितपरमाणूत्पत्तिराशास्यते । यतश्चार्थानधिपैरिन्द्रियादर्थाधिपतीन्द्रियस्य । यस्माच्च समुदायज्ञानरहितादात्मनस्तद्वदात्मोत्पादः । तदिदं तस्यैवेत्युच्यते ।**

शे० — 'अदृष्टमपि तस्यैव विशेषापादकं कुत' इत्येकवाक्यतया योजनायामदृष्टस्य विशेषापादकत्वमेव नास्तीत्यस्यार्थस्यालाभात्तल्लाभाय वाक्यभेदमाश्रित्य मूलं योजयति **अदृष्टमपीति** । **आद्ये** कारणस्य सदृशकार्यजननस्वभावत्वे । **द्वितीये** कारणस्योभयस्वभावत्वे ॥ **अन्यतरेति** । सदृशविसदृशकार्ययोरन्यतरेत्यर्थः । **तृतीये** कारणानां कार्यजननस्वभावमिति पक्षे ॥ **कारणाभावादिति** । विशेषानापादकपूर्वपूर्वतराद्यदृष्टस्य सदृशकार्यमात्रजनकतया विशेषापादकादृष्टमात्रजनकत्वेन विशेषापादकादृष्टजनने कारणाभावादित्यर्थः ॥ **साम्यादिति** । अयमर्थः । पूर्वपूर्वतरसहकारिणः किं विशेषानापादकास्तदापादका वा । द्वितीये वक्ष्यामः । आद्ये त्वस्य सहकारिणो विशेषापादकत्वं न सिध्यति । तत्कारणतयाऽभिमतस्य पूर्वपूर्वतरसहकारिणो विशेषानापादकतया तस्य स्वसदृशसहकारिमात्रजनकतया विशेषानापादकसहकारिणस्तदुत्पत्तिसंभवेऽपि विशेषापादकसहकारिणो विसदृशतया ततः उत्पत्तेः असंभवादिति । ननु विशेषानापादकपूर्वपूर्वसहकारिजन्योऽप्ययं सहकारी सहकारिसामर्थ्याद्विशेषमापादयिष्यतीत्यत आह **तत्रापीति** ।

गौरवमित्यनवस्थोपलक्षणम् । ततः पूर्वपूर्वेतरसहकार्यन्तरस्य वक्ष्यमाणरीत्या विशेषापादकताया अयोगात्तदनापादकत्वमेव वाच्यम् । ततश्च विशेषानापादकसहकार्यन्तरजन्यस्यास्य सहकार्यन्तरस्य कारणाभावाद्विशेषानापादकत्वप्रसङ्गपरिहाराय, विशेषानापादकपूर्वपूर्वसहकार्यन्तरजन्यस्य सहकार्यन्तरस्यापि सहकार्यन्तरसामर्थ्यादेव विशेषापादकत्वाश्रयणावश्यम्भावादिति भावः ।

तर्हि मूले तस्यैवेत्यंशवैयर्थ्यमित्यत एकवाक्यतापक्षमाश्रित्यापि योजयितुमाह **तस्यैवेत्यादि ॥ कारणमात्रस्यापीति** । यस्य कस्यापि कारणस्येत्यर्थः ॥ **नियामकयोरिति** । अयम्भावः । पूर्वपूर्वेतरादृष्टं किं विवक्षितस्यैव कारणस्य विशेषापादकं किंवा कारणमात्रस्यैव तदापादकम् । द्वितीये वक्ष्यामः । आद्ये त्वस्यादृष्टस्य न विवक्षितस्य कारणस्यैव विशेषापादकत्वं सिध्यति । तत्तत्कारणस्यादृष्टस्य विवक्षितकारण एव विशेषानापादकतया तज्जन्यस्याप्यस्य विवक्षितकारण एव विशेषानापादकताया एव न्याय्यत्वेन विवक्षितकारण एव विशेषानापादकाददृष्टात्तादृशकारणे विशेषापादकादृष्टजननासंभवात् । विवक्षितकारण एव विशेषानापादकाददृष्टाज्जन्यमपीदमदृष्टं सहकारिविशेषाद्विवक्षितस्यैव कारणस्य विशेषमापादयिष्यतीति चेन्न । तत्सहकारिण्यप्यस्य प्रत्यवस्थानस्य समानत्वात्, तत्रापि सहकार्यन्तरानुसरणे त्वनवस्था स्यादिति । तस्यैवेति विवक्षितकारणस्यैवेति व्याख्यातम् । तत्र किं तद्विवक्षितं कारणमिति जिज्ञासायामाह **येभ्य इत्यादिना** इत्युच्यत इत्यन्तेन । अनेनेन्द्रियालम्बनपरमाणवोऽनधिपतीन्द्रियाणि-असमुदायज्ञान आत्मा चेत्येतद्विवक्षितं कारणमित्युक्तं भवति ।

प० — **अस्य साम्यादिति** । विकल्पादेःसमत्वादित्यर्थः । द्वितीयवाक्यं द्वितीयपक्षीयाद्यपक्षनिरासकतया व्याचष्टे **तथाहीत्यदिना ॥ विवक्षितस्येति** । इन्द्रियानालंबनविरलपरमाण्वादिरूपस्येत्यर्थः । तस्यैव विशेषापादकं कुत इत्यस्य तात्पर्यमाह **नियामकयोरिति** । तस्यैवेत्येतत्पदपरामृश्यं व्यनक्ति **येभ्य इत्यादिना** ॥

श्री० — **विशेषानापादका इति** । परमाण्वादिरूपे कारणे क्षणे चेत्यर्थः ॥ **आद्ये त्वस्यादृष्टक्षणस्येति** । अस्य इन्द्रियानालम्बनपरमाणूनामिन्द्रियालम्बनपरमाणुजनकत्वरूपविशेषसंपादकत्वस्येत्यर्थः । **कारणाभावादिति** । इन्द्रियालम्बनपरमाणुधूक्तरूपविशेषं तदाऽऽपादयेद्यदि स्वयं विशेषापादकपूर्वपूर्वादृष्टजन्यं स्यात् । न चैतदस्ति । कारणाभावात् इन्द्रियानालम्बनपरमाणुषु अस्यादृष्टस्योक्तरूपविशेषापादकत्वं न सिद्ध्यतीत्यर्थः । **सहकारिण्यप्यस्येति** । पूर्वपूर्वसहकारिक्षणाः यदि विशेषानापादकास्तर्ह्यस्यादृष्टस्य विशेषापादकत्वं न सिध्यति कारणाभावात् । विशेषानापादकसहकारिजन्यमप्यदृष्टं सहकार्यन्तरवशाद्विशेषान् आपादयिष्यतीति यदि तदा सहकार्यन्तरेऽप्यस्य साम्यमित्यादि ज्ञेयम् । विशेषानापादयिष्यति चेदित्येतदुपरि विकल्पं करोति **विशेषेत्यादिना** ।

**सु॰ — उभय(त्रापि द्वि)त्र द्वितीयौ कल्पौ दूषयति** यस्येति ।

**अनु॰** — यस्यकस्यापि टक्किञ्चिद्विशेषमुपपादयेत् ॥

**अत्रापि यत्किञ्चिददृष्टं विशेषमुपपादयेदित्येकं वाक्यम् । यदि पूर्वपूर्वतराद्यदृष्टस्या-प्यस्ति विशेषापादकत्वं तर्हि तदपि पूर्वपूर्वतरादिपरमाण्वादौ विशेषमापादयेदेव । समर्थस्य क्षेपानभ्युपगमात् तथा च समुदायप्रतीतेः समयनियमो न स्यादिति ।**

**यस्य कस्यापि विशेषमुपपादयेदिति द्वितीयम् । यदि कारणमात्रस्य विशेषापादकम-दृष्टमङ्गीक्रियते तदा सर्वेषामपि कारणानां विशेषमुपपादयेत् । तथा च घटपरमाणुमेलने सर्वेषामपि मेलनं स्यात् न तु कुत्राप्यभिलषितपरमाण्ववस्थानं भवेत् । न च युगपत्सर्व-समुदायो दृश्यत इति ।**

**शे॰ — उभयत्र द्वितीयाविति** । अदृष्टमपीत्यादिमूलग्रन्थे तस्यैवेत्येतत्पदप्रक्षेपाप्रक्षेपाभ्यां विभिन्नवाक्यार्थद्वये विकल्पितपक्षेषु पूर्वपूर्वतरादृष्टक्षणा विशेषानापादका इति अदृष्टमपि विवक्षितकारण-विशेषस्यैव विशेषापादकमिति च पक्षद्वयं पूर्वत्र निराकृतम् । इदानीं त्वदृष्टक्षणा विशेषापादका इति, अदृ-ष्टमपि कारणमात्रस्य विशेषापादकमिति चोभयत्र द्वितीयौ कल्पौ निराकरोतीत्यर्थः । अस्त्येव पूर्वपूर्वत-रादृष्टस्यापि परमाण्वादौ विशेषापादकत्वमितीष्टापादनमेतदित्यत आह **तथा चेति** ॥ **समयनियमो न स्यादितीति** । तथा च न समुदायत्ववेदनापेक्षयाऽपि सृष्ट्यादिव्यवस्थोपपद्यत इति भावः ॥ **सर्वेषामपीति** । इन्द्रियानालम्बनपरमाण्वादीनामिवान्येषामपि कारणानामित्यर्थः ॥ **कारणमात्रस्येति** । विवक्षितकारणस्येव यस्य कस्यापि कारणस्येत्यर्थः । इष्टापत्तिं परिहरति **तथा चेति** । अस्तु घटपरमाणुमेलनसमये सर्वपरमाणुमेलनमपीतीष्टापत्ति इत्यतस्तदेकसमुदायप्रतीतिदशायां सर्वसमुदायप्रतीतिः स्यादविशेषान्न च साऽस्तीत्याह **न चेति** ।

**म॰ — उभयत्र द्वितीयाविति** । तस्येत्येतत्पदप्रक्षेपाप्रक्षेपाभ्यां विभिन्नवाक्यार्थद्वये पूर्वपूर्वत-रादृष्टक्षणा विशेषापादका इति; अदृष्टमपि कारणमात्रस्य विशेषापादकमिति पक्षद्वयं निराकरोतीत्यर्थः । **अत्रापीति** । तन्तुसहकारित्वेनाभिप्रेतादृष्टविशेषस्य पटलक्षणतन्तुकार्यकारित्वाभावे विसदृशकार्यजनक-त्वाभावापत्त्या, तथा तत्रापि सहकारित्वेन कल्पितादृष्टविशेषस्यापि अदृष्टेन सह एककार्यकारयितृत्वाभावे तस्मिन्नदृष्टे विसदृशकार्यजनकत्वापादकत्वाभावापत्त्या तदुपपत्त्यर्थं कल्प्यमानादृष्टस्य पटरूपैककार्यजनकत्वा-वश्यंभावात् तन्त्वादिसहकार्यदृष्टादेरपि पटरूपैककार्यजननार्थं अपेक्षायामपि दण्डचक्रादिन्यायेन अनवस्था-पादकत्वेनाप्रामाणिकानेककल्पनात्मकत्वात्कल्पनागौरवमेव युक्तमित्यभिप्रायेण एतदभिधानमिति ध्येयम् ।

प०— **उभयत्रापि द्वितीयौ कल्पाविति**। तदापादका वेति कल्पं, कारणमात्रस्य वेति कल्पं चेत्यर्थः। अस्तु को दोष इत्यत आह **तथा चेति**। प्रलयकालीनविरलपरमाणूनामपि सन्निकृष्टपरमाणुजनकत्वे लयगताणूनामपि पूर्वपूर्वेत्युक्तदिशा सर्वेषामपि सन्निकृष्टतापत्त्या तन्निमित्तापेक्षबुद्धिव्यंग्यानेकत्वसंख्यारूपसमुदायवृत्तिसंभवेन संसारसमय एव समुदायज्ञानं न तु लय इति समयनियमो न स्यादित्यर्थः॥ **द्वितीयमिति**। वाक्यमिति वर्तते।

श्री०— **उभयत्रेति**। पूर्वपूर्वादृष्टक्षणा विशेषानापादकास्तदापादका वेति पक्षे, विशेषानापादकादृष्टजन्योऽप्ययमदृष्टक्षणः सहकारिवशाद्विशेषान् आपादयिष्यतीत्यत्र विकल्पिते विशेषापादकमप्यदृष्टं किं विवक्षितस्यैव कारणस्य विशेषमापादयति कारणमात्रस्यैव वेति पक्षे चेत्युभयत्रेत्यर्थः। **द्वितीयौ** पूर्वोत्तरादृष्टक्षणा विशेषापादकास्तथा विशेषापादकमप्यदृष्टं कारणमात्रस्य विशेषमापादयतीति द्वितीयत्वेनोक्तपक्षावित्यर्थः। **क्षेपो** विक्षेपो, विलम्बः।

सु०— **अथ मतम्। सर्वमिदं स्वव्याहतम्। तथा हि। तन्तवो यदि सदृशकार्यजननस्वभावास्तदा तन्त्वन्तरमेव जनयेयुर्न तु पटम्। यदि च विसदृशकार्यजननस्वभावास्तदा न तेभ्यः पार्थिवपटस्योत्पत्तिः स्यात्। किन्तु पायसीयं किमपि जायेत। उभयस्वभावत्वं तु विरुद्धम्। अनुभयस्वभावत्वे पटस्याप्यनुत्पत्तिः। सहकारिवशाद्यत्रथाङ्गीकारे सहकारिष्वपीदं समानम्। अथोच्येत। अस्ति(स्तु) तावत्तन्तुपटयोः कार्यकारणभावः। प्रमितस्यापन्हवानर्हत्वात्। स च यथा यथोपपद्यते तथा तथा कल्पयिष्यत इति। समप्रेतन्ममापीत्यत आह कार्यं चेति।**

अनु०— कार्यं च कारणं चैवं यत्किञ्चिद्यस्यकस्यचित्॥
भवेन्नियामकाभावात्।

**नित्यविनाशित्व** इत्येतद्वक्ष्यमाणमत्रापि संबध्यते। **यत्किञ्चिन्नीलादिकं यस्य कस्यचिदेव पीतादेः कार्यं स्यात्। यत्किञ्चित्पीतादिकं यस्य कस्यचिदेव नीलादेः कारणं स्यात्। कुतः। नीलं नीलस्यैव कार्यं स्यात् न पीतस्य। नीलमेव नीलस्य कारणं न पीतमि(त्यत्र)ति नियामकाभावादिति योजना। चशब्दौ मिथः समुच्चये।**

श्री०— ननु तन्तूनां सदृशकार्यजनकत्वनियमेऽपि सहकारिसामर्थ्याद्विसदृशपटरूपकार्यजनकत्वं भविष्यतीत्यत आह **सहकारीति॥ सहकारिष्वपीति**। सहकारिणां तन्तुषु विशेषापादकत्वं वदन्प्रष्टव्यः। किं पूर्वपूर्वसहकारिणो विशेषानापादकास्तदापादका वेति। तथेदमपरमपि विचारणीयम्। किं सहकारिणस्तन्तूनामेव विशेषमापादयन्ति उतान्येषां कारणानामपीति। तत्र न तावत्पूर्वपूर्वसहकारिणो विशेषानापादका इत्याद्यः पक्षः संभवति। तथा सति विशेषानापादकपूर्वपूर्वसहकारिणामपि

स्वसदृशकार्यजनकत्वात्तज्जन्यानामेतेषां सहकारिणां विशेषानापादकत्वप्रसङ्गेन सहकारिसामर्थ्यात्तन्तूनां विसदृशकार्यजनकत्वानुपपत्तिप्रसक्तेः । न च विशेषानापादकपूर्वपूर्वसहकारिजन्यानामप्येतेषां सहकारिण सहकार्यन्तरवशाद्विशेषापादकत्वं भविष्यतीति वाच्यम् । तत्सहकारिष्वप्यस्य प्रसङ्गस्य साम्यात् । तत्रापि सहकार्यन्तरानुसरणे तत्राप्यस्य प्रसङ्गस्य समानत्वेनानवस्थाप्रसक्तेः । नापि तेऽपि विशेषापादका इति द्वितीयः । तथा सति पूर्वपूर्वसहकारिणामपि तन्त्वादिकारणेषु विशेषापादकत्वप्रसङ्गेन तेभ्योऽपि पटोत्पत्त्यापत्त्या पटोत्पत्तेः समयनियमाभावप्रसङ्गात् । नापि सहकारिणस्तन्तूनामेव विशेषापादका इति तृतीयः । नियामकयोः कारणज्ञापकयोरभावेनोक्तनियमानुपपत्तेः । नाप्यन्येषामपि कारणानां विशेषापादक इत्यन्त्यः । तथा सति तन्तुषु विशेषापादकसहकारिभिरेव तन्तूनामिवान्येषामपि कारणानां विशेषापादनेन पटोत्पत्तिसमय एव घटाद्यवयविनामप्युत्पत्त्यापत्त्या युगपत्सर्वावयविदर्शनप्रसङ्गादिति सहकारिष्वपीदं दूषणजातं समानमित्यर्थः ।

प० — इतिशब्दानन्तरमत्रेति शेषं मत्वाह इत्यत्रेति ।

**सु० — एतदुक्तं भवति । संभवति स्थिरवादे परिहारोऽयम् । यद्यत्र समवेतं यद्येनाकारेण परिणतं वा तत्तस्य कारणं कार्यं चेति नियामकसद्भावेन कार्यकारणभावावधारणे सति तदुपपादककल्पनोपपत्तेः । क्षणभङ्गनये तु पूर्वोत्तरक्षणयोर्निरन्वयविनाशोत्पादयोः कार्यकारणभावावधारणोपाय एव नास्ति । समवायपरिणामयोरभावात् । तथा च कस्य बलादुपपादकं कल्पयिष्यत इति ।**

शे० — नन्वेवं पटोऽपि तन्तूनामेव कार्यं नान्येषाम् । तन्तव एव पटस्य कारणं नान्ये इत्यत्र नियामकाभावात्पटोऽपि यस्य कस्यचिदेव कार्यं स्यात् । तथा यत्किञ्चिदेव पटं प्रति कारणं, न तन्तव इत्यपि स्यात् । ततश्च तन्तुपटयोरपि कार्यकारणभावानवधारणप्रसक्त्या तदुपपादकविशेषकल्पनाऽप्यनुपपन्ना प्रसज्येतेत्यतो नित्यविनाशित्वे तदवधारणानुपपत्त्युक्त्या सूचितं स्वपक्षे तदवधारणोपायं दर्शयन्नेवोक्तप्रतिबन्दीं मोचयितुमाह **एतदुक्तं भवतीति । स्थिरवादे** एकस्य वस्तुनोऽनेकक्षणसंबन्धित्ववादे । न्यायमतमाश्रित्याह **यत्र समवेतमिति** । स्वमतेनाह **येनाकारेणेति । नियामकेति** । समवायपरिणामरूपेत्यर्थः । पूर्वोत्तरक्षणयोरिति सप्तमी । निरन्वयौ अन्वयरहितौ उत्पादविनाशौ ययोः पूर्वोत्तरनीलयोस्ते तथा तयोरित्यर्थः । यद्वा निरन्वयावुत्पादविनाशौ ययोरिति पूर्वोत्तरक्षणयोर्विशेषणम् । अत्र च पक्षे पूर्वोत्तरक्षणयोरित्यस्य पूर्वोत्तरक्षणावुत्पादकतया विद्येते ययोस्ते तथा तयोः पूर्वोत्तरक्षणोत्पन्नयोर्नीलयोरित्यर्थः । फलतस्त्वेक एवार्थः । निरन्वयेत्यादिविशेषणं तु समवायपरिणामाभावोपपादनाय । अत्र पूर्वनीलस्य निरन्वयो विनाश, उत्तरनीलस्य तु निरन्वय उत्पाद इति विवेकः । कथं तदवधारणोपाया-

भाव इत्यतः किमत्र समवायपरिणामावेव तदवधारकतयाऽभिमतौ किंवा ततोऽन्यदेव किञ्चिदिति विकल्पद्वयं मनसि निधायाद्यं निराचष्टे **समवायपरिणामयोरिति** । स्थिरवादे एकस्य वस्तुनोऽनेकक्षण-संबन्धसत्त्वेन तत्सापेक्षयोः समवायपरिणामयोः सत्त्वात् । ताभ्यां कार्यकारणभावावधारणोपपत्तावपि क्षणभङ्गवादे एकैकस्य वस्तुन एकैकक्षणमात्रसंबन्धित्वेनानेकक्षणसंबन्धविरहात् तत्सापेक्षसमवायपरिणाम-योरसत्त्वान्न तयोस्तदवधारकत्वमिति भावः ।

प०— कथमनेन प्रतिबन्दीपरिहार इत्यत आह **एतदुक्तं भवतीति** । मतभेदेनाह **यद्यत्र समवेतं येनाकारेण परिणतं वेति ॥ निरन्वयविनाशोत्पादयोरिति** । पूर्वक्षणस्य निरन्वयविनाशो नाम निःशेषविनाशः, उत्तरक्षणस्य निरन्वयोत्पादस्तु कारणानुस्यूतिरहित्येनोत्पादः ॥ **कस्य बलादिति** । कार्यकारणभावावधृतौ हि तदुपपादककल्पना युक्ता । तच्चाशक्यमित्युक्तमिति भावः ।

या०— **निरन्वयविनाशोत्पादयोरिति** । निरन्वयौ विनाशोत्पादौ ययोस्तौ तथा तयोरि-त्यर्थः । एतच्च समवायपरिणामाभावोपपादनाय । अत्र पूर्वक्षणस्य निरन्वयो विनाश, उत्तरक्षणस्य निरन्वय उत्पाद इति विवेकः । तथा हि । समवायपरिणामपक्षयोर्यथा कारणस्य केनचिद्रूपेण विनाशेऽपि केनचिद्रूपेणोत्तरत्र कार्येऽन्वयः, न तथैतन्मतेऽपि तु सर्वात्मना विनाश । अत एवोत्तरस्योत्पादोऽप्येतन्मते निरन्वय उत्तरोत्पत्तिसमये पूर्वस्य सर्वथाऽन्वयाभावादिति ॥ छ ॥

च०— **निरन्वयविनाशोत्पादयोरिति** । कृतद्वन्द्वविनाशोत्पादांशस्य निरन्वयपदेन बहुव्रीहिः ।

---

सु० — **समवायपरिणामयोरभावेऽपि यद्यदपेक्षया पूर्वभावि तदेव तस्य कारणम् । यच्च यदपेक्षया पश्चाद्भावि तदेव तस्य कार्यमित्यवधारणोपपत्तेर्नियामकाभावोऽसिद्ध इत्यतः कार्यनियमं तावन्निराकरोति इदमस्यैवेति ।**

अनु० — इदमस्यैव कारणम् ॥
इति नित्यविनाशित्वे केन मानेन गम्यते ॥

**इदं नीलम(स्य नील)स्यैव कारणम्, न तु पीतस्य; इत्येवं नीलस्य नीलकार्यत्वं, नित्यविनाशित्वे निरन्वयविनाशोत्पादपक्षे, केन मानेन गम्यते न केनापि । पश्चाद्भावमात्रस्य नी(लस्येव पीतस्यापि)लापेक्षयेव पीतापेक्षयाऽपि सत्त्वादिति भावः । सादेश्यं सारूप्यं वा नियामकमिति चेन्न । विरलपरमाणुभ्यो मिलितानां मिलितेभ्यश्च विरलानामुत्पत्त्यङ्गीकारात् ।**

**कारणनियममप्यपाकरोति इदं नेति ।**

इदं न जायतेऽमुष्मादित्यत्रापि न कारणम् ॥

**इदं नीलममुष्मात्पीतान्न जायते किन्तु नीलादेवेत्यत्र नीलस्य कारणत्वावधारणेऽपि, कारणं प्रमाणं, नास्ति । नीलस्येव पीतस्यापि नीलापेक्षया पूर्वभावितायाः सत्त्वादिति भावः ।**

शे० — द्वितीयमाशङ्कते **समवायपरिणामयोरभावेऽपीति** । किमनेन दूषणमुक्तं भवतीत्यतोऽतिप्रसञ्जकत्वान्न तस्य नियामकतेत्यभिप्रेत्यातिप्रसङ्गमाह **पश्चाद्भावमात्रस्येति** ।। **सादेश्यमिति** । ततश्चोक्तनिमित्तवशान्नीलस्य नीलकार्यत्वेऽपि तद्विरहान्न तस्य पीतकार्यत्वमिति भावः ।। **अङ्गीकारादिति** । तथा च व्यभिचारान्नैतदपि प्रयोजकमिति भावः । 'केन मानेन गम्यत' इति प्रमाणप्रस्तावात्कारणशब्दः प्रमाणपर इति भावेनाह **कारणं प्रमाणमिति** । ननु पूर्वभावित्वस्यैव तत्र प्रमाणत्वात्कथं प्रमाणाभाव इत्यतोऽतिप्रसञ्जकत्वान्न तस्य प्रमाणत्वमित्यभिप्रेत्यातिप्रसङ्गमुपदर्शयति **नीलस्येवेति** ।।

प० — इदमस्यैवेति वाक्यमुत्तरान्विततयाऽवतार्य योजयति **समवायपरिणामयोरभावेपीत्यादिना** । नित्यविनाशित्व इत्युपलक्षणं मत्वाह **निरन्वयविनाशोत्पादपक्ष इति** ।। **सादेश्यमिति** । समानदेशत्वमित्यर्थः । सादेश्यसारूप्ये द्वे अपि न स्त इत्याह **विरलेति** । विरलसन्निकृष्टवस्तूनां बहुलाल्पदेशत्वस्य वैरूप्यस्य चानुभाविकत्वादिति भावः ।। **विरलानामिति** । लयकाल इति योज्यं ।

**सु० — ननु यथा भवतां समवायपरिणामयोरभावेऽपि कुविन्दपटयोः कार्यकारणभावावधारणं तथा ममापि भविष्यतीत्यत आह** इदमस्येति । नित्यविनाशित्वे **आत्मन इति शेषः । युज्यतेऽस्माकं निमित्तकारणकार्ययोस्तद्भावावधारणमन्यत्रानुपक्षीणान्वयव्यतिरेकाभ्याम् । न तु परस्य । अस्माभिरन्वयव्यतिरेकानुसन्धातुरात्मनः स्थायित्वाभ्युपगमात् । परेण(च) क्षणिकतास्वीकारात् । न हि तथाविधोऽन्वयव्यतिरेकयोरन्यत्रानुपक्षयस्य चावधृतेरीष्ट इति भावः । योजना तु पूर्ववदेव ।। छ ।।**

शे० — **तथाविध इति** । क्षणिक इत्यर्थः । येन ह्यात्मनाऽन्वयव्यतिरेकाववधारितौ नष्ट एवासौ । कस्य पुनरन्यत्रानुपक्षयावधारणमिति भावः ।। छ ।।

प० — इदमस्यैव कारणमित्यदिकं प्रकारान्तरेण योजयति **ननु यथा भवतामित्यादिना** ।। **पूर्ववदेवेति** । इदमस्येति वाक्यं कार्यनियमनिरासकत्वेन, इदं न जायत इत्यादिकं तु कर्तृनियमनिरासकतया योजना कार्येत्यर्थः ।। **परमते समुदायनिरासः** ।।

**सु० — एवं समुदायं निराकृत्य सर्वस्य क्षणिकतामधुना प्रमाणाभावेन तद्विरोधेन चापाकर्तुमुत्तरो ग्रन्थः । तथा हि । न केवलं समुदायो नोपपद्यते । किन्नाम सर्वस्य क्षणिकता च । तत्र प्रमाणाभावात् । ननु प्रत्यक्षं क्षणिकतामर्थानामवगमयति । तद्धि वर्तमानमात्रगोचरमर्थस्य वर्तमानक्षणमात्रसंबन्धिनीं सत्तामवगाहते । न पूर्वोत्तरक्षणसंबन्धिनीमपि ।**

तत्कथं क्षणिकत्वमर्थानामप्रामाणिकमिति । उच्यते । किमिदं क्षणिकत्वं नाम । किं क्षणसंबधिसत्त्वम् । किंवा क्षणमात्र एवोत्पत्तिनाशवत्त्वम् । यद्वा क्षणान्तरासंबन्धित्वे सत्येकक्षणसंबन्धित्वम् । आद्यस्त्विष्ट एव । स्थायिनोऽप्यर्थस्यैकक्षणसत्तास्वीकारात् । द्वितीयतृतीयौ दूषयति विनाशेति ।

अनु० — विनाशोत्पत्तयश्चैव न दृश्यन्ते सदातनाः ॥

**अनेकपदार्थसंबन्धित्वेन बहुवचनम् । चशब्दस्तृतीयपक्षसमुच्चयार्थः । एवशब्दस्य नैवेति संबन्धः ।** सदातनाः **प्रतिक्षणभाविन्यः । प्रत्यक्षं खल्वर्थानां वर्तमानकालसत्तामवगाहते न पुनः क्षणमात्रभाविनावुत्पत्तिविनाशावपि । नापि क्षणान्तरासंबन्धित्वम् । तथा च कथं तेन क्षणिकता सिध्येदिति ।**

**टी०** — ननु विनाशोत्पत्तयश्चैवेत्यादेरुत्तरग्रन्थस्य समुदायनिराकरणपरपूर्वग्रन्थेन सङ्गत्यभावादानर्थक्यमित्याशङ्क्य वृत्तानुवादपूर्वकं तत्प्रयोजनं दर्शयन्नानर्थक्यं परिहरति **एवमिति** । ननु तथाऽपि सदातनोत्पत्तिविनाशानामदृश्यत्ववर्णनमनर्थकमेव । न च क्षणिकतायाः प्रत्यक्षासिद्धत्वसमर्थनार्थत्वान्न तदिति वाच्यम् । तदसिद्धत्ववर्णनस्याप्यनर्थकत्वादित्याशङ्क्य क्षणिकत्वानुपपत्तिप्रतिज्ञायां हेतूकृतप्रमाणाभावस्य प्रत्यक्षसिद्धत्वात् क्षणिकत्वस्येत्यसिद्धिशङ्कायां तत्परिहारे क्षणिकत्वानुपपत्तिप्रतिज्ञासिद्ध्यर्थत्वेन सार्थकत्वान्नानुपपत्तिरित्यभिप्रेत्य क्षणिकत्वानुपपत्तिप्रतिज्ञां तत्र प्रमाणाभावादिति हेतुं च बहिरेव पूरयित्वा प्रत्यक्षसिद्धत्वेन प्रमाणाभावासिद्धिशङ्कामुत्थाप्य तत्परिहारकतयोत्तरवाक्यं योजयति **तथा हीति** । विनाशोत्पत्तयश्चेत्यत्र चशब्दस्यार्थान्तरमाह **न केवलमिति** ॥

**प्रत्यक्षमिति** । सन् घट इत्यादिप्रत्यक्षमित्यर्थः । प्रत्यक्षस्य पूर्वोत्तरक्षणसम्बन्धिसत्तानवगाहित्वे हेतुगर्भं विशेषणमाह **वर्तमानमात्रगोचरमिति** ननु मूले क्षणिकतायाः प्रत्यक्षासिद्धत्वं नोच्यते किन्तु सदातनोत्पत्तिविनाशवत्त्वस्यैव, तत्कथमनेनोक्तशङ्कापरिहारः । न च सदातनोत्पत्तिविनाशवत्त्वमेव क्षणिकत्वं तथा च तस्य प्रत्यक्षासिद्धत्वोक्तिरेव क्षणिकतायाः प्रत्यक्षासिद्धत्वोक्तिरिति कथं न शङ्कापरिहार इति वाच्यम् । क्षणसम्बन्धित्वं क्षणिकत्वमित्यपि वक्तुं शक्यत्वेन क्षणिकत्वस्य सदातनोत्पत्तिविनाशरूपत्वासिद्धेरित्यतोऽत्र सम्भावितान्विकल्पान्मनसि निधाय पक्षान्तरं बहिरेव प्रदूष्यावशिष्टपक्षनिरासकतया ग्रन्थं सङ्गमयति **उच्यत इत्यादिना** । स्वीकारे हेतुमाह **स्थायिन इति** । अन्यथाऽनेकक्षणसम्बन्धित्वरूपस्थायित्वानुपपत्तेरिति भावः । ननु सदातने विनाशोत्पत्ती न दृश्येते इति वक्तव्यम् । विनाशोत्पत्तेर्द्वित्वात् । विनाशोत्पत्तय इति बहुवचनं कथमित्यत आह **अनेकेति** । बहुपदार्थसम्बन्धित्वेनेत्यर्थः

**तृतीयपक्षेति** । क्षणान्तरासम्बन्धित्वे सत्येकक्षणसंबन्धित्वरूपतृतीयपक्षेत्यर्थः । तर्हीतरव्यवृत्त्यर्थकैवकारविरोध इत्यतस्तस्य भिन्नक्रमत्वेनानेनासंबन्धान्न तद्विरोध इत्यभिप्रेत्य तत्संबन्धमाह **एवेति** । ननु शङ्किताया: सन् घट इत्यादि प्रत्यक्षस्य विवक्षितक्षणिकत्वग्राहकताया: कथमनेन वाक्येन परिहारः, इत्यतस्तदभिप्रायमाह **प्रत्यक्षं खल्वित्यादिना ॥ उत्पत्तिविनाशावपीति** । अवगाहत इति संबन्धः । **नापीति** । अत्राप्यवगाहत इति संबन्धः ॥ **तथा चेति** । क्षणमात्र एवोत्पत्तिविनाशवत्त्वरूपक्षणिकताया: क्षणान्तरासंबन्धित्वे सत्येकक्षणसंबन्धित्वरूपक्षणिकताया वा प्रत्यक्षेणागृहीतत्वान्न तेन तत्सिद्धिरिति भावः ।

**प०** — सदातना इत्यस्य प्रकृतोपयोगायार्थमाह **प्रतिक्षणभाविन्य इति** । सदान्त इति वाच्ये सदातना इत्युक्तेः साधुत्वं 'सृष्ट्यादीच्छा सदातने'त्यत्रोक्तमिति भावः ।

**श्री०** — ननूत्पत्तिविनाशयोर्द्वित्वाद्विनाशोत्पत्ती इति वाच्यम्, बहुवचनं कथमित्यत आह **अनेकपदार्थेति** । तथा च व्यक्तिबाहुल्याद्बहुवचनमिति भावः ॥

**सु० — ननु च प्रत्यक्षं पूर्वोत्तरक्षणवर्तित्वमप्यर्थस्य गृह्णाति न वा । नाद्यः वर्तमानमात्रग्राहित्वात् । द्वितीये तु प्रत्यक्षानुपलम्भेन पूर्वोत्तरक्षणयोरसत्त्वसिद्धेः क्षणिकतैव सि(ध्येदिति)द्धेति चेत् । द्वितीयं तावदुररीकुर्मः । न चैवं क्षणिकतासिद्धिः । योग्यानुपलम्भस्यैवासत्त्वगमकत्वात् । न च पूर्वोत्तरकालवर्तिता प्रत्यक्षयोग्या । वर्तमानमात्रग्राहिताया: परेणैवोक्तत्वात् । अस्तु वाऽऽद्यः पक्षः । कस्यचित्प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेऽपि तदेवेदमिति प्रत्यभिज्ञानलक्षणस्य तदभावादित्याशयेनाह** दृश्यत इति ।

अनु० — दृश्यते प्रत्यभिज्ञातः स्थिरत्वं सर्ववस्तुषु ॥

**विषयीक्रियत इत्यर्थः । तृतीयार्थे तसिः । एकस्यैवानेकक्षणसंबन्धित्वं स्थिरत्वम् । एतेन न केवलं प्रत्यक्षं क्षणिकतां न गोचरयति । किन्तु स्थायि(तां)त्वमपि गोचरयतीत्यपीति वदता परपक्षे प्रमाणविरोधः स्वपक्षे प्रमाणसद्भावश्चोदितो भवति ।**

**शे० — प्रत्यक्षानुपलम्भेनेति** । घटादेः प्रत्यक्षेण पूर्वोत्तरक्षणवर्तित्वेनानुपलब्धेरित्यर्थः । अनुपलब्धेरसत्त्वावगमकत्वादिति भावः ॥ **क्षणिकतासिद्धिरिति** । प्रत्यक्षानुपलम्भेन पूर्वोत्तरक्षणयोरसत्त्वसिद्धेरिति भावः । किमनुपलम्भमात्रमसत्त्वावगमकं किंवा योग्यानुपलम्भ इति विकल्पद्वयं मनसि निधायाऽऽद्यं प्रत्याह **योग्येति** । नानुपलब्धिमात्रमसत्त्वावगमकमतिप्रसङ्गात्किन्तु योग्यानुपलम्भ एव तथेति नानुपलम्भमात्रेण तत्सिद्धिरित्यर्थः । अस्तु तर्हि योग्यानुपलम्भेनैव तत्सिद्धिरिति द्वितीय

इत्यतस्तस्यासिद्धत्वान्नैवमित्याह **न चेति** ॥ **कस्यचिदिति** । अभिज्ञारूपस्येत्यर्थः । प्रत्यभिज्ञात इति प्रकृत्यर्थस्य पृथगभिधानात् दृश्यत इत्यत्र प्रकृत्यर्थविवक्षा न सम्भवतीत्यभिप्रेत्य व्याचष्टे **विषयीक्रियत इत्यर्थ इति** । प्रत्यभिज्ञानाद्विषयीक्रियत इत्यनन्वयप्रसङ्गेन प्रत्यभिज्ञात इति पञ्चम्यन्तात्तसेरयोगादाह **तृतीयार्थ इति** । आद्यादिभ्य उपसङ्ख्यानादिति भावः ॥ **एतेनेति** । 'विनाशोत्पत्तयश्चैव न दृश्यन्ते सदातनाः । दृश्यते प्रत्यभिज्ञातः स्थिरत्वं सर्ववस्तुष्वि'त्यनेन ग्रन्थेनेत्यर्थः । इति वदतैतेनेति सम्बन्धः । परपक्षे प्रमाणविरोध इत्युपलक्षणम् । तत्पक्षे साधकप्रमाणाभावश्चेत्यपि द्रष्टव्यम् । स्वपक्षे प्रमाणसद्भावश्चेत्युपलक्षणम् । स्वपक्षे प्रमाणविरोधाभावश्चेत्यपि द्रष्टव्यम् ।

**प०—तृतीयार्थे तसिरिति** । 'आद्यादिभ्य उपसंख्यानमि'ति सार्वविभक्तिकतसिप्रत्ययस्योक्त प्रत्यभिज्ञयेत्यर्थे तसिरयमिति भावः ।

**या०— प्रत्यक्षानुपलम्भेनेति** । पूर्वोत्तरक्षणयोरर्थस्य प्रत्यक्षानुपलम्भेनासत्त्वसिद्धेरित्यर्थः ॥

**श्री०— प्रत्यक्षयोग्येति** । येन पूर्वोत्तरक्षणयोरर्थस्य प्रत्यक्षानुपलम्भेनासत्त्वं सिद्ध्येदित्यर्थः । **परेणापि** स्थायित्ववादिनापि ।

**व०— तृतीयार्थे तसिरिति** । आद्यादिभ्य उपसंख्यानमिति कात्यायनवचनादिति भावः ।

**सु०— अनेन 'अनुस्मृतेश्चे'ति सूत्रं कृतव्याख्यानं वेदितव्यम् । सर्ववस्तुष्वित्यनेन सौगतानां प्रत्यभिज्ञानिराकरणं वैशेषिकादिमतमेव स्पृशति न त्वस्मन्मतमिति सूचयति ।**

**तथा हि । किमनया प्रत्यभिज्ञया नित्यत्वेनाभ्युपगतेषु परमाण्वादिषु स्थिरत्वं साध्यते किंवा घटादिषु । नाद्यः । तेषामतीन्द्रियत्वेन प्रत्यभिज्ञाप्रत्यक्षगोचरत्वस्याभ्युपगन्तुमशक्यत्वात् । न द्वितीयः । घटादिषु परेणापि प्रत्यभिज्ञाया भ्रान्तित्वस्य स्वीकार्यत्वात् । यदा हि घटादौ सूच्यग्रादिनैकोऽपि परमाणुरपैति तदा नष्टव्यमेव तदारब्धेन द्व्यणुकेन । विभागेनासमवायिकारणस्य संयोगस्य नष्टत्वात् । द्व्यणुकनाशे समवायिकारणनाशात्त्र्यणुकनाश इत्यनेन क्रमेण घटनाशोऽप्यवश्यम्भावी । न च परमाणुः प्रत्यक्षो येन तदपगमानपगमौ प्रत्यक्षेण शक्यनिश्चयौ । न च वाच्यं निबिडावयवेषु स्फटिकादिषु प्रत्यभिज्ञया स्थिरत्वं सेत्स्यतीति । तत्रापि परमाण्वपगमाभावस्य प्रत्यक्षेण निश्चेतुमशक्यत्वात् । निबिडावयवत्वं च न विभागायोग्यावयवत्वम् । विभागस्य प्रत्यक्षसिद्धत्वात् । किन्तु घटादितोऽप्युत्कृष्टकारणापेक्षत्वम् । न च तद्विशेषाभावः शक्योऽस्माभिरवगन्तुम् । दृश्यते हि कालतः स्फटिकादावपि गुरुत्वापकर्षः । न चावयवानपगमे स संभवतीति । नापि**

**गुणादौ स्थायित्वं प्रत्यभिज्ञया सिध्यति । तथापि कस्यचिदतीन्द्रियत्वात् । कस्यचिद्घटादितुल्यत्वात् । सामान्यादिकं तु स्वरूपतो नास्त्येव । सत्त्वेऽपि रूपादिसमानमेवेति शङ्कितप्रामाण्यं प्रत्यभिज्ञानं न कुत्रापि स्थैर्यसिद्धौ प्रमाणयितुं युक्तमिति ।**

शे० — क्षणिकत्वनिरासपरस्य विनाशोत्पत्त्यश्चेत्यादेर्भाष्यस्य उत्सूत्रार्थप्रतिपादकतया प्रसक्ताम् अभाष्यतां निराकरोति **अनेनेति** । भाष्ये सर्ववस्तुष्वित्यस्याधिकयमाशङ्क्यार्थविशेषसूचनार्थत्वान्न तदित्यभिप्रेत्य तमाह **सर्वेति** । **अपेति** विभज्यते । अस्त्ववयवविभागस्तथाऽपि न द्रव्यनाशः सम्भावितः । आरम्भकपरमाणूनां नाशाभावादित्यतो न समवायिकारणनाश एव द्रव्यनाशकारणं, किन्तु असमवायिकारणनाशोऽपि । न चाननुगमः शङ्क्यः । निमित्तेतरकारणनाशत्वेन द्रव्यनाशं प्रति नाशद्वयस्य कारणत्वाभ्युपगमात् । ततश्च युक्त एवासमवायिकारणनाशाद्द्रव्यनाश इत्यभिप्रेत्य सनिमित्तकं तन्नाशमाह **विभागेनेति** । ननु घटादौ सूच्यग्रादिनाऽपि न परमाणोरपगमो भवति । तथा चावयवविभागाभावान्न नसंयोगनाश इति कारणाभावान्न द्व्यणुकनाश इति नोक्तक्रमेण घटनाश इति न तत्र प्रत्यभिज्ञाया भ्रान्तित्वमित्यत आह **न चेति** ॥ अत्र परमाणोरप्रत्यक्षत्वाद्यथा तदपगमो न प्रत्यक्षेण निश्चेतुं शक्यः तथा तस्याप्रत्यक्षत्वादेव तदनपगमोऽपि न तत्र प्रत्यक्षेण निश्चेतुं शक्यते इति दृष्टान्ततयैव तदपगमग्रहणं कृतम् । अत एवोत्तरत्र परमाण्वपगमाभावस्य प्रत्यक्षेण निश्चेतुमशक्यत्वादित्यनपगममात्रस्य ग्रहणम् । ततश्च शङ्कितप्रामाण्यं प्रत्यभिज्ञानं न तत्र स्थैर्यस्य साधकमिति भावः । ननु च निबिडावयवत्वादेव स्फटिकादिष्वपि परमाण्वनपगमनिश्चयो भविष्यतीत्यतः साधकतया पराभिमतम् अवयवानां निबिडत्वं न तेषां विभागायोग्यत्वं वक्तुं युक्तम् । तथा सति स्फटिकादिकमवयवापगमकं न भवति विभागायोग्यावयवत्वादिति प्रयोक्तव्यम् । तच्च न सम्भवति । स्फटिकादेरवयविनो विनाशानन्तरं तदवयवविभागस्य प्रत्यक्षत्वेन हेत्वसिद्धिप्रसङ्गादित्याह **निबिडावयवत्वं चेति** । यद्यवयवानां निबिडत्वं न विभागायोग्यत्वं तर्हि किं तदिति पृच्छति **किन्त्विति** । परिहरति **घटादित इति** । घटावयवपरमाण्वपगमहेतुतोऽपीत्यर्थः । अस्तु तर्हि घटाद्यवयवापगमहेत्वपेक्षयोत्कृष्टकारणशून्यत्वादेव स्फटिकादिष्ववयवानपगमनिश्चय इत्यत आह **न चेति** ॥ **तद्विशेषेति** । घटाद्यवयवापगमहेत्वपेक्षयोत्कृष्टकारणाभाव इत्यर्थः । तथा च स्फटिकादिष्ववयवानपगमनिश्चयासम्भवाच्छङ्कितप्रामाण्यं प्रत्यभिज्ञानं न स्थैर्यसाधकमिति भावः । अङ्गीकृत्य चावयवापगमनिश्चयाभावमेतदुक्तम् । वस्तुतस्तु अवयवापगमस्यैव तत्र, स्फटिकादिकं पूर्वापेक्षयाऽवयवापगमवत्तदपेक्षया गुरुत्वापकर्षवत्त्वादित्यनुमानेन, निश्चितत्वान्निश्चिताप्रामाण्यं प्रत्यभिज्ञानं न तत्स्थैर्यसाधकमिति भावेनावयवापगमनिश्चायकलिङ्गस्य सिद्धिमुपपादयति **दृश्यते हीति** ॥ **कस्यचिदिति** । गुरुत्वादेरतीन्द्रियत्वान्न तस्य प्रत्यभिज्ञाप्रत्यक्षगोचरत्वमभ्युपगन्तुं शक्यत

इति भावः ॥ **कस्यचिदिति** । रूपादेरित्यर्थः ॥ **घटादीति** । तथा चोक्तरीत्या घटनाशसन्देहेन तदाश्रितरूपादिनाशसन्देहावश्यम्भावाच्छङ्कितप्रामाण्यं प्रत्यभिज्ञानं तत्रापि न स्थैर्यसाधकमिति भावः ॥ **नास्त्येवेति** । अनुगतप्रत्ययादेरपोहेनान्यथासिद्धत्वेन मानाभावादिति भावः ॥ ननु विधिरूपप्रत्ययेनैव तत्सिद्धिरित्यत आह **सत्त्वेऽपीति** ॥ **रूपादीति** । रूपादिवदेवाश्रयनाशेन नश्यतीत्यर्थः ।

**स०**— ननु निबिडावयवत्वादेव परमाण्वनपगमः स्फटिकादिष्वस्तु इत्यत आह **निबिडावयवत्वं चेति** । किमत्र अवयवानां निबिडत्वं इति विभागायोग्यावयवत्वं परमाण्वनपगमसाधकमभिप्रेतं किं वा अवयविविभागे घटाद्यवयवापगमहेत्वपेक्षया उत्कृष्टकारणापेक्षत्वं । तथा च तादृशोत्कृष्टकारणाभावात् अवयवानपगम इति । आद्यं दूषयति **न विभागेति** । द्वितीयं शङ्कते **किन्त्विति** । दूषयति **न चेति** । स्फटिकादौ घटाद्यवयवापगमहेत्वपेक्षयोत्कृष्टकारणाभावस्य निश्चेतुमशक्यत्वादसिद्ध्यापत्तिरिति भावः ।

**प०**—ननु यत्र घटादौ परमाण्वनपगमो निश्चितस्तत्र प्रत्यभिज्ञायाः प्रमात्वं भविष्यतीत्यत आह **न च परमाणुरिति** ॥ **विभागस्येति** । पाषाणादिना द्वैधीभावस्योपलंभादिति भावः ॥ **तस्यापि कस्यचिदिति** । परमाणुगतरूपादेरित्यर्थः ॥ **कस्यचिद्घटादितुल्यत्वादिति** । घटस्यावयवापगमादिना प्रतिक्षणनाशोत्पादाभ्युपगमे तद्गतरूपादिगुणस्यापि तदापत्तेरिति भावः । युक्तमितीतिशब्दस्येति यत्प्रत्यभिज्ञानिराकरणमिति पूर्वेणान्वयः ॥

**या०**— **प्रत्यक्षेण शक्यनिश्चयाविति** । तथा च प्रत्यभिज्ञाप्रामाण्यनिश्चयो न सम्भवतीति भावः । एवं निश्चेतुमशक्यत्वादित्यादावपि भावो वर्णनीयः ॥ **प्रत्यक्षसिद्धत्वादिति** । स्फटिकादेर्विनाशसमये तदवयवविभागस्य प्रत्यक्षसिद्धत्वादित्यर्थः ॥ **उत्कृष्टकारणेति** । घटादिकारणपरमाण्वपेक्षया परस्परसंश्लेषविशेषादिरूपो य उत्कर्षः तद्वत्परमाणुकारणकत्वमित्यर्थः ॥ **न च तद्विशेषेति** । स चासौ विशेषश्च तद्विशेषः । संयोगविशेषादिरूपोत्कर्ष इति यावत् । तदभावः तदपगमः । तथा च स्फटिकाद्यवयवानपगमप्रयोजको यः कारणसंश्लेषविशेषादिरूप उत्कर्षस्तदपगमस्य निश्चेतुमशक्यत्वे तत्प्रयोज्यावयवानपगमोऽपि तत्र निश्चेतुं न शक्यते, ततश्च स्फटिकादावपि प्रत्यभिज्ञानं शङ्कितप्रामाण्यमेवेति भावः । **दृश्यत इति** । अनुमानेन ज्ञायत इत्यर्थः ॥ **रूपादिसमानमेवेति** । रूपादिवदेवाश्रयनाशेन नश्यतीत्यर्थः ॥

**श्री०**— ननु सूच्यग्रेण परमाण्वपगमस्य प्रत्यक्षेण दृष्टत्वात्तत्र प्रत्यभिज्ञैव नोदेतीति चेत्तत्राह **न च परमाणुरिति** । सूच्यग्रेणापगतः परमाणुः ॥ **शक्यनिश्चयाविति** । यदि शक्यनिश्चयौ स्यातां तर्हि प्रत्यक्षेण घटे भेदस्य दृष्टत्वात्प्रत्यभिज्ञोदय एव न स्यात् । उदेति च प्रत्यभिज्ञा । तथा च वस्तुगत्या सूच्यग्रादिनाऽपगतपरमाणौ घटे जायमाना प्रत्यभिज्ञा अनिवारेवेति भावः ॥ **अशक्य-**

स्वादिति । तथा च तत्रापि परमाण्वपगमस्य वस्तुतो विद्यमानत्वात्तत्र जायमानप्रत्यभिज्ञा भ्रान्तिरित्यर्थः ॥ तद्विशेषाभाव इति । अवयवसंश्लेषाख्योत्कर्षरूपविशेषाभावः प्रत्यक्षेण स्फटिकेऽवगन्तुं न शक्यः येन प्रत्यभिज्ञा नोत्पद्येतेत्यर्थः । तथा च तद्विशेषस्यावगन्तुमशक्यत्वाद्दैवात्तत्रावयवसंश्लेषो यदि नष्टोऽस्ति तत्र च प्रत्यभिज्ञा यदा जाता तदा सा भ्रम एवेत्याशयः । स गुरुत्वापकर्षः । तथा च तत्रापि प्रत्यभिज्ञा भ्रान्तिरिति भावः । नन्वस्तु तर्हि सामान्ये प्रत्यभिज्ञया स्थिरत्वसिद्धिरित्यत आह सामान्यादिकमिति ॥

सु० — अत्रोच्यते । स्यादयं दोषः परमाण्वारम्भवादिनाम् । न परिणामवादिनामस्माकम् । तदेव (हि) वस्त्ववयवोपचयापचयाभ्यामन्यथा विक्रियते । न पुनरन्यदेव भवतीति हि परिणामवादिनो मन्यन्ते । अतः प्रत्यक्षयोग्येषु सर्ववस्तुषु प्रत्यभिज्ञया स्थिरत्वग्रहणं युक्तमेवेति ।

ननु भवन्मतेऽपि प्रत्यभिज्ञा (भ्रम एव) भ्रान्तिरेव । परिणामवादे पूर्वोत्तरवस्तुनोर्भेदाभेदाङ्गीकारात् । तदेवेदमिति च प्रत्यभिज्ञयाऽत्यन्ताभेदस्यावगाहनात् । उच्यते । यदा तु (यदि हि) पूर्वोत्तरकालभाविनोरभेदः प्रत्यभिज्ञाविषयोऽङ्गीक्रियते तदा सावधारणस्य प्रत्यभिज्ञानस्य भ्रमत्वेऽपि तदिदमिति तु न भ्रमः । तेनैव च स्थायित्वसि द्धि)द्धेः । यदा तु कालादिद्वयसंबन्धो विषयस्तदा सावधारणमपि न भ्रम इति ।

नन्विदं प्रत्यभिज्ञानं परिलूनपुनर्जातकुन्तलकलापादाविव भ्रान्तं किन्न स्यादिति चेत् (न) । बाधकाभावात् । एवमेव भ्रा(न्त)न्तित्वाभ्युपगमे नीलादिप्रत्ययानामपि तथात्वापत्ते (त्वप्राप्तेः) । न च प्रत्यक्षं बाधकमित्युक्तम् ॥ छ ॥

शे० — एवं सौगतानां प्रत्यभिज्ञानिराकरणं वैशेषिकादिमतमेव स्पृशतीत्युक्तमुपपाद्य न त्वस्मन्मतमित्युक्तमुपपादयति अत्रोच्यत इति । ननु सर्वस्यापि प्रपञ्चस्यैन्द्रियकत्वाभावेन प्रत्यभिज्ञाप्रत्यक्षगोचरत्वस्य अभ्युपगन्तुमशक्यत्वान्न प्रत्यभिज्ञानस्य सर्ववस्तुस्थैर्यसाधकत्वं सम्भवतीत्यतः सर्वशब्दस्य सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावित्यादाविव सङ्कुचितार्थत्वान्नानुपपत्तिरिति भावेनोक्तं प्रत्यक्षयोग्येषु सर्ववस्तुष्विति भ्रमत्वेऽपीति । तदा तत्र भेदनिषेधस्यापि प्रतीतेरिति भावः ॥ तदिदमिति त्विति । तद्देशकालविशिष्टविशेष्याभिन्नमिदं विशिष्टमिति विशिष्टद्वयस्यैकविशेष्याभिन्नत्वेन विशेष्याभेदसद्भावात्तन्निमित्तकविशिष्टद्वयाभेद एवात्राभिमतो न तु विशिष्टद्वयस्य साक्षादभेदः । विशिष्टद्वयस्य विशेष्येण सहायावद्द्रव्यभावितया भेदाभेदवत्त्वेन विशिष्टद्वयस्याभेदायोगात् । तथा च विशेष्येण सहाभेदस्यापि सत्त्वात्तन्मात्रांशे प्रमात्वं, भेदव्यावर्तकावधारणांशे तु भ्रमत्वम् । धूमवदग्निमतोरैक्येऽपीत्यादिटीकाग्रन्थ-

स्यापि विशिष्टद्वयस्य पर्वतरूपैकविशेष्याभेदाभिप्रायकत्वान्न तद्विरोध इत्यवधेयम् । ननु सावधारणस्य प्रत्यभिज्ञानस्य भ्रमत्वे कथं तेन स्थायित्वसिद्धिरित्यत आह **तेनैव चेति** । अवधारणशून्येनैव प्रत्यभिज्ञानेनेत्यर्थः ॥ **न भ्रम इति** । तदवधारणस्य कालादिसंबन्धरूपविशेषणायोगव्यवच्छेदकत्वेन धर्मिभेदनिषेधकत्वाभावादिति भावः ॥ **भ्रान्तमिति** । भ्रान्तिर्भ्रान्तमिति भावे क्तः ॥ **एवमेवेति** । बाधकाभावेऽपीत्यर्थः ॥ **तथात्वापत्तेरिति** । अविशेषाभावादिति भावः । ननु बाधकाभावोऽसिद्ध इत्यतस्तत्किं प्रत्यक्षमभिमतं उतानुमानमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **न चेति** ॥ **उक्तमिति** । 'विनाशोत्पत्तयश्चैव न दृश्यन्त सदातना' इत्यादिनेति शेषः ।

स०— **पूर्वोत्तरकालभाविनोरिति** ।

प०— **भ्रमत्वेपीति** । 'स चाबमिति तु ज्ञानं न मृषायं स एव तु । इति ज्ञानं मृषैव स्याद्भेदाभेदौ यतस्तनो: । अभेद एव जीवस्य नित्यं प्रत्येकशः पृथक् । देहदीपनदीवारिफुलादीनां पृथक्त्वतः । भेदाभेदौ परिज्ञेयाथि'त्येकादशस्कन्धद्वाविंशाध्यायतात्पर्योक्तेरिति भावः ॥ **न च प्रत्यक्षं बाधकमित्युक्तमिति** । 'विनाशोत्पत्तयश्चैव न दृश्यन्ते सदातना' इत्येतद्व्याख्यायां प्रत्यक्षं बाधकं नेत्युक्तप्रायम् । तद्विषयस्य विवेचनादिति भावः ॥ **क्षणिकत्वे प्रत्यक्ष(क्षे)प्रमाणाभावतद्विरोधयोरुक्तिः** ।

या०— **भ्रमत्वेऽपीति** । तदा तत्र भेदनिषेधस्यापि प्रतीतेरिति भावः ॥ **तदिदमिति** **त्वित्ति** । अन्यतरविशिष्टस्यान्यतरविशिष्टोपादानकत्वादुपादानोपादेययोश्चाभेदस्यापि सत्त्वादिति भावः । ननु सावधारणस्य प्रत्यभिज्ञानस्य भ्रमत्वे कथं तेन स्थायित्वसिद्धिरित्यत आह **तेनैव चेति** । अवधारणशून्येनैव प्रत्यभिज्ञानेनेत्यर्थः ॥ **न भ्रम इति** । तदाऽवधारणस्य कालादिसम्बन्धरूपविशेषणायोगव्यवच्छेदकत्वमेव न धर्मिभेदनिषेधकत्वमतो न भ्रम इत्यर्थः ॥ **बाधकाभावादिति** । परिलूनानां भूमौ पतितानां प्रत्यक्षेण दर्शनादिति भावः ।

श्री०— **अत इति** । अवयवावयविनोर्भेदाभेदाङ्गीकारेणाभेदस्यापि सत्त्वादित्यर्थः । **यदि ह्रीत्यादि** । अभेदः प्रत्यभिज्ञाविषयोऽङ्गीक्रियत इत्यत्र, यदा तु कालादिसम्बन्धो विषय इत्यत्र चाभेदशब्दसम्बन्धशब्दोपरिभारः । तथा च पूर्वमते तदेवेदमित्यत्र पूर्वकालविशिष्टं एतत्कालविशिष्टं च वस्त्वेकमित्यर्थः । द्वितीयमते तु तदेवेदमित्यस्य पूर्वकालसम्बन्ध्येतत्कालसम्बन्धीति कालद्वयसम्बन्धमात्रविषयकत्वमेवार्थो नाभेद इत्यर्थः ॥

च०— **भ्रान्तः किं न स्यादिति** । नपुंसके भावे क्तः, भ्रमरूपं किन्न स्यादित्यर्थः । **एवमेव बाधकमन्तरेणापि** ।

सु० — प्रत्यक्षस्याबाधकत्वेऽप्यनुमानं बाधकं भविष्यतीति शङ्कते फलादीनामिति।

अनु० — फलादीनां विशेषेण सर्वत्राप्यनुमीयते ॥
सत्त्वेन क्षणिकत्वं चेत्
आकाशस्याविशेषतः ॥
अविशेषोऽखिलस्यापि सत्त्वात्किन्नानुमीयते ।

आदिपदेन देहदीपादिग्रहणम्। विशेषेण परिमाणभेदेन, क्षणिकत्वं तावत्)अनुमीयत इति संबन्धः। ततस्तद्दृष्टान्तेन सर्वत्र फलादिव्यतिरिक्तेऽपि वस्तुनि सत्त्वेन हेतुना क्षणिकत्वमनुमीयते। एतदुक्तं भवति। यत्सत्तत्क्षणिकम् यथा फलादि, सन्तश्च पञ्चस्कन्धा इत्यनुमानं स्थिरत्वविषयप्रत्यभिज्ञाया बाधकं भविष्यति। न च फलादिदृष्टान्तः साध्यविकलः। यद्विरुद्धपरिमाणं तन्नाना दृष्टं यथा घटपटौ, विरुद्धपरिमाणं च फलादिकं पूर्वोत्तरक्षणयोः, इत्यनुमानेन फलादीनां क्षणिकतासिद्धेरिति ॥ परिहरति आकाशस्येति। अविशेषतः पूर्वोत्तर(क्षण)योर्भेदरहितत्वतः, अविशेषः पूर्वोत्तरक्षणयोर्भेदराहित्यम्। अखिलस्यापि विप्रतिपन्नस्य। इदमुक्तं भवति। यत्सत्तदक्षणिकम् यथाऽऽकाशम्। सच्च नीलादीति प्रत्यनुमानप्रतिरुद्धत्वेनानुमानस्याभासत्वान्न प्रत्यभिज्ञाबाधकत्वं संभवतीति। न चाकाशदृष्टान्तः साध्यविकलः। 'आकाशो द्वौ निरोधौ च नित्यं त्रयमसंस्कृतमि'ति परेणैवाङ्गीकृतत्वात्। क्षणिकतासाधकस्य परिमाणभेदादेराकाशेऽभावाच्च। तदिदमु(मप्यु)क्तं अविशेषतः परिमाणभेदादिरहितत्वत इति।

शे० - द्वितीयमाशङ्कते प्रत्यक्षस्येति। देहदीपफलादिष्वित्युत्तरग्रन्थानुरोधेनाह आदिपदेनेति। देहदीपादीत्यादिपदेनाङ्कुरपरिग्रहः। रूपरसादेर्घटादिभेदसाधकत्वप्रसङ्गेन विशेषमात्रस्य फलादिभेदसाधकत्वासम्भवाद्विशेषपदार्थमाह विशेषेणेति। सर्वत्र सत्त्वेन क्षणिकत्वमनुमीयत इत्येतावतैव विवक्षितसिद्धेः फलादीनां विशेषेणेत्यस्य तदेकवाक्यतया योजयितुमशक्यत्वाद्वाक्यभेदमाश्रित्य योजयितुमपेक्षितं पूर[ये]ति क्षणिकत्व]मित्यादिना। सर्वत्र सत्त्वेन क्षणिकत्वसाधने फलादिष्वेतदनुमानतः प्रागपि साध्यसिद्धेरंशत सिद्धसाधनता स्यादित्यभिप्रेत्य तद्व्यावर्तकमाह फलादिव्यतिरिक्तेऽपीति। किमर्थमत्रानुमानद्वयस्योपन्यास इत्याशङ्कां परिहरन्ननुमितिकारणव्याप्तिपक्षधर्मताज्ञानजनकोदाहरणोपनयात्मकद्व्यवयवन्यायवादिसौगतमातानुसारेणानुमानद्वयप्रकारमाकाङ्क्षाक्रमेण दर्शयति एतदुक्तं भवतीति। इतीत्यस्येत्येतदिति पूर्वेण सम्बन्धः। आकाशांशे सिद्धसाधनत्वप्रसङ्गभयादाह विप्रतिपन्नस्यापीति।

किं तावताऽपीत्यतस्तत्फलोपदर्शनपूर्वकमनुमानप्रयोगप्रकारमाह **एतदुक्तं भवतीति** ॥ **द्वौ निरोधाविति** । प्रतिसङ्ख्याप्रतिसङ्ख्यौ विनाशावित्यर्थः ॥ **असंस्कृतमिति** । यथा क्षणिकं नीलादिकमुत्तरं पूर्वेण संस्कृतमेव कारणस्य कार्ये वासनाकारितायाः परेणाङ्गीकृतत्वात् । न तथेदं त्रयं संस्कृतं इत्यसंस्कृतत्वकथनद्वाराऽविकृतत्वसूचकमिदं नित्यत्वे हेतुगर्भं विशेषणम् । नन्वविशेषत इति पूर्वोत्तरक्षणयोर्भेदरहितत्वत इति व्याख्यातं तत्कथमेतदुक्तार्थसमर्पकतयोपन्यस्यत इत्यतो विवक्षितार्थसमर्पकतया तद्याचष्टे **परिमाणेति** ।

प० — अंशतो बाधादिनिरासायाखिलशब्दविवक्षितमाह **विप्रतिपन्नस्येति** । तन्मतरीत्या द्यवयवप्रयोगमाह **यत्सत्तदक्षणिकमिति** ॥ **द्वौ निरोधाविति** । बुद्धिपूर्वकाबुद्धिपूर्वकविनाशावित्यर्थः ॥ **असंस्कृतमिति** । क्षणिकं घटादिकं यथा पूर्वक्षण(वासना)विनाशिना वासितं न तथा आकाशादित्रयमतो नित्यमित्यर्थः ।

था० — **द्वौ निरोधाविति** । प्रतिसंख्याप्रतिसंख्यौ विनाशावित्यर्थः ॥ **असंस्कृतमिति** । यथा क्षणिकं नीलादिकमुत्तरं पूर्वेण संस्कृतं परेण पूर्वस्योत्तरस्मिन्वासनाकारित्वाङ्गीकारात् । न तथेदं त्रयं संस्कृतम् । यतो नित्यमित्यर्थः । अनेनाप्रतिसंख्यानाशोपि नास्तीत्युक्तं भवति ।

**सु० — यद्वाऽऽकाशस्याविशेषतः परिमाणभेदरहितत्वतः । तद्दृष्टान्तेनाखिलस्यापि**

**फलादेरविशेषः पूर्वोत्तरकालयोः परिमाणभेदाभावः सत्त्वात् किं नानुमीयत इति योजना । एतदुक्तं भवति । नानुमानं प्रत्यभिज्ञाया बाधकं भवितुमर्हति । अनुमानस्य प्रत्यक्षतो दुर्बलत्वेन तद्बाध्यत्वात् । अन्यथा फलादिकं परिमाणभेदरहितं सत्त्वादाकाशवदित्यप्यनुमानप्रसङ्गात् । न ह्यत्र प्रत्यक्षादिबाधं विना कश्चिद्दोषोऽस्ति । तथा च तद्दृष्टान्ते क्षणिकत्वसाधकस्यासिद्धत्वात्साध्यविकलता स्यात् । ततः प्रत्यक्षविरोधेनैवास्यानुमानस्याप्रामाण्यम् । अन्यथाऽन्योन्याश्रय(ता)प्रसङ्ग इत्येव वक्तव्यम् । तच्च समं प्रकृतेऽपीति । एतेन 'आकाशे चाविशेषादि'ति सूत्रं व्याख्यातं भवति । तदनेन क्षणिकत्व(ता)साधकानुमानस्य सत्प्रतिपक्षत्वं बाधितविषयत्वं च वदताऽऽकाशेऽ(ना)नैकान्त्यमपि सूचितम् । भवदनुमानस्यापि फलादिनाऽनैकान्त्यमिति चेन्न । तत्रापि क्षणिकताभावस्य वक्ष्यमाणत्वात् (इति) ।**

शे० — अत्र पक्षेऽविशेषत इत्यस्याऽऽवृत्तिरनेकार्थत्वं चाश्रयणीयं भवतीत्यतः प्रकारान्तरेण योजयति **यद्वेति** । अखिलपदस्य विप्रतिपन्नपरत्वे दृष्टान्ते क्षणिकत्वसाधकस्यासिद्ध्या साध्यवैकल्यपर्यवसानालाभात्तल्लाभायाखिलपदं दृष्टान्तभूतफलादिपरतया व्याचष्टे **अखिलस्यापि फलादेरिति** । अस्मिन्पक्षे साक्षा

दुक्ताक्षेपपरिहारकत्वं ग्रन्थस्य न सम्भवतीत्यतोऽपेक्षितमाकाङ्क्षाक्रमेण दर्शयन्वाक्यतात्पर्यमाह **एतदुक्तं भवतीति** ॥ **अन्यथेति** । प्रत्यक्षतो दुर्बलस्याप्यनुमानस्य तद्बाधकत्व इत्यर्थः । तर्कमूलभूतव्याप्तिवैकल्यादाभासत्वमाशङ्क्याविशेषव्याप्तिसद्भावान्न तदित्याशयेनाह **न हीति** । अस्त्वेतदप्यनुमानमितीष्टापत्तिमाशङ्क्याह **तथा चेति** । **अन्यथाऽन्योन्याश्रयेति** । **अन्यथा** अनुमानेनैव प्रत्यक्षबाधे सिद्धेऽनुमानप्रामाण्ये तद्विरोधेन प्रत्यक्षस्याप्रामाण्यसिद्धिः । सति च तस्मिंस्तद्विरोधाभावेनानुमानप्रामाण्यसिद्धिरित्यन्योन्याश्रयप्रसङ्ग इत्यर्थः । न चैवं सिद्धे प्रत्यक्षप्रामाण्ये तद्विरोधेनानुमानस्याप्रामाण्यं, सति च तस्मिंस्तद्विरोधाभावेन प्रत्यक्षस्य प्रामाण्यमित्यन्योन्याश्रयप्रसङ्गात्प्रत्यक्षस्याप्यनुमानबाधकत्वं न स्यादिति वाच्यम् । प्रत्यक्षस्यानुमानापेक्षया प्रबलत्वेन तत्प्रामाण्यस्यानुमानविरोधपरिहारमनपेक्ष्यैव स्थितत्वेन तदनवकाशात् । न हि सिंहः शशशावकाभावमपेक्ष्य वनमवगाहत इति भावः । इतीत्यस्येत्येतदिति पूर्वेण सम्बन्धः । उत्सूत्रार्थप्रतिपादकत्वादभाष्यत्वमाशङ्क्य परिहरति **एतेनेति** । **तदनेनेन** इति वदता तेनानेनि ग्रन्थेनेति सम्बन्धः ॥ **भवदिति** । अक्षणिकत्वसाधकसत्त्वहेतोरपीत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'अभेदेऽपि विशेषेण देहदीपफलादिषु । विशेषदर्शनं युक्तमि'त्यादिनेति शेषः ।

प०— प्रतिप(क्षोक्तिप)क्षपरतया व्याख्याय बाधकोक्तिपरतयापि व्याचष्टे **यद्वाकाशस्येति** । किमनेनोक्तमित्यत आह **एतदुक्तमिति** ॥ **दृष्टान्त इति** । फलदेहदीपादौ परिणामरूपभेदस्य क्षणिकत्वसाधकस्यासिद्धत्वेन क्षणिकत्वसिध्यभावेन क्षणिकत्वरूपसाध्यविकलत्वात्तद्दृष्टान्तेन नीलादेरपि तत्साधनमयुक्तमापद्येतेत्यर्थः ॥ **अस्येति** । फलादिकं परिमाणभेदरहितमित्यस्येत्यर्थः ॥ **अन्यथेति** । अनुमानविरोधेन प्रत्यक्षस्यैवाप्रामाण्योक्तौ सत्यनुमानप्रामाण्ये तस्य च प्रत्यक्षबाधकत्वम् । सति च प्रत्यक्षाप्रामाण्ये तद्विरोधाभावेनानुमानस्य प्रामाण्यमित्यन्योन्याश्रयतेत्यर्थः ॥ **समं प्रकृतेपीति** । यत्सत्तत्क्षणिकम् यथा फलादि । सन्तश्चामी पञ्चस्कन्धा इत्यनुमानेपि प्रत्यक्षविरोधेनाप्रमाण्यं सममित्यर्थः ॥ **भवदनुमानस्यापि** यत्सत्तत्क्षणिकमित्युक्तानुमानस्यापीत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । '**अभेदेपि** विशेषेण देहदीपफलादिषु । विशेषदर्शनं युक्तमि'त्यत्रेति भावः ।

या०— **अन्यथाऽन्योन्याश्रयेति** । **अन्यथा** अनुमानेनैव प्रत्यक्षबाधेऽनुमानप्रामाण्ये तद्विरोधेन प्रत्यक्षाप्रामाण्यं, सति च तस्मिंस्तद्विरोधाभावेनानुमानप्रामाण्यमित्यन्योन्याश्रयताप्रसङ्ग इत्यर्थः । **वक्ष्यमाणत्वादिति** । 'अभेदेऽपि विशेषेण देहदीपफलादिषु । विशेषदर्शनं युक्तमि'त्यत्रेति शेषः ।

श्री०— **क्षणिकत्वसाधकस्येति** । परिमाणभेदस्येत्यर्थः । **अनुमानस्य** सत्त्वरूपहेतोः ॥ **बाधितेति** । प्रत्यभिज्ञयेत्यर्थः ॥ **भवदनुमानस्यापीति** । अक्षणिकत्वसाधकस्य सत्त्वहेतोरित्यर्थः ॥ **क्षणिकताऽभावस्येति** । क्षणमात्रावस्थायित्वरूपक्षणिकत्वाभावस्येत्यर्थः ।

सु० — भवेदिदं यद्याकाशस्य सत्त्वं स्यात् । न चैतदस्ति । मूर्ताभावत्वादाकाशस्य । भावत्वं हि सत्त्वमत्र विवक्षितम् । सस्वरूपत्वेऽपि वा सत्त्वे, अभावो निःस्वरूप इत्यङ्गीकृतमित्याशङ्क्याह यदीति ।

अनु० — यद्याकाशस्य सत्त्वं न कुत एव नरादिषु ॥

यद्याकाशस्य सत्त्वं नास्तीत्यङ्गीकृत्य प्रत्यनुमानेऽतिप्रसङ्गानुमाने च दृष्टान्तस्य साधनवैकल्यं स्वानुमानस्यानैकान्तिकत्वाभावश्चोच्यते । तदा देहादिषु सत्त्वं कुत एव सिद्धमिति ब्रूमः । तथा च परकीयस्यापि दृष्टान्तस्य साधनवैकल्यं स्यात् । यदि च विधिमुखप्रत्ययवेद्यत्वाद्देहादीनां भावत्वं प्रमाविषयत्वात्सत्त्वं चोच्यते । तदाऽऽकाशेऽपि समानमिति ।

शे० — इदमिति । सत्प्रतिपक्षत्वादिकमित्यर्थः । अस्तु मूर्ताभावत्वमाकाशस्य, तथापि सस्वरूपत्वरूपसत्त्वस्य तत्र सत्त्वात्कथं तन्निषेध इत्यतो भवेदेवं यदि सस्वरूपत्वं सत्त्वं स्यान्न चैवं किन्तु भावत्वमेव । न चैतत्तस्य संभवतीति युक्तस्तन्निषेध इत्याह भावत्वमिति । अत्र क्षणिकत्वसाधन इत्यर्थः । अङ्गीकृत्य च सस्वरूपत्वमभावस्येदमुक्तम् । वस्तुतस्तु तस्य निःस्वरूपत्वेनाङ्गीकृतत्वान्न सस्वरूपत्वमपीति युक्तस्तन्निषेधोऽपीत्याह सस्वरूपत्वेऽपि वेति ॥ प्रमाविषयत्वादिति । निःस्वरूपे प्रमाणप्रवृत्त्यनुपपत्तेस्तद्विषयत्वेन सस्वरूपत्वसिद्धिरिति भावः ॥

प० — प्रत्यनुमान इति । यत्सत्तदक्षणिकमिति प्रत्यनुमाने फलादिकं परिमाणभेदरहितमित्युक्तातिप्रसङ्गानुमाने चेत्यर्थः ॥ स्वानुमानस्येति । यत्सत्तत्क्षणिकमिति सौगतानुमानस्येत्यर्थः ॥ परकीयस्यापीति । सौगतोक्तस्यापि देहदीपफलादेरित्यर्थः । सत्त्वं चोच्यत इत्यत्र सत्त्वं नाम सस्वरूपत्वं ज्ञेयम् ।

या० — प्रमाविषयत्वात्सत्त्वमिति । सस्वरूपत्वरूपं सत्त्वमित्यर्थः ॥

श्री० — अभावो निस्स्वरूप इतीति । प्रमित्यविषय इत्यर्थः । तथा चाभावरूपेऽत एव निस्स्वरूपे आकाशे सस्वरूपत्वरूपं सत्त्वं नास्तीति भावः ।

सु० — प्रमाणान्तरेणाकाशस्याभावत्वं वारयितुमुपोद्घातमाह सधर्मीति ।

अनु० — सधर्मिप्रतियोगित्वमभावस्य नियामकम् ।

यत्राभावः स धर्मी । यस्याभावः स प्रतियोगी । तदुभयवत्त्वमभावस्य नियामकं व्यापकम् । योऽभावःस सर्वोऽपि धर्मिप्रतियोगिसहित एव । यथा घटाद्यभावः । स हि भूतलादिधर्मिणा घटादिप्रतियोगिना चोपेत एवेति ।

शे०- **प्रमाणान्तरेति** । आकाशो नाभावः, धर्मिप्रतियोगिनौ विना प्रतीयमानत्वाद्रूपादिवदित्यनुमानेनेत्यर्थः ॥ **वारयितुमिति** । 'अधर्मिप्रतियोगित्वमाकाशस्यावगम्यत' इत्यादिनेति शेषः । तर्ह्यस्य ग्रन्थस्य तद्ग्रन्थानन्तर्येणैव भाव्यं, तत्कथं पूर्वत्वमित्यत उपोद्घातसङ्गत्या तदुपपत्तिरिति भावेनोक्तम् **उपोद्घ मिति** । ननु धर्मिप्रतियोगिनोः को भेदो येन पृथगुपादानम् । किञ्चेदं धर्मिप्रतियोगिनोरभावनियामकत्वमित्यतो धर्मिप्रतियोगिनोर्भेदं दर्शयन्नेव नियामकत्वं व्याख्याति **यत्रेत्यादिना** । मूले अभावपदं भावप्रधानमित्यभिप्रेत्योक्तं व्याप्यव्यापकभावमेव स्फोरयति **योऽभाव इति** ॥

**सु०— नन्विदमनुपपन्नम् । अभावस्य हि धर्मिप्रतियोगिसाहित्यनियमः किं देशतः स्यात्, किंवा कालतः । आद्ये धर्मिणा सादेश्यं तावन्नास्ति । भूतलस्य स्वाश्रये, अभावस्य तु भूतले वृत्तेः । प्रतियोगिना तु विरुद्धमेव । द्वितीयस्तु यद्यपि धर्मिणा कथञ्चित्स्यात् । तथाऽपि प्रतियोगिना नास्त्येव । प्रागभावप्रध्वंसाभावयोः प्रतियोगिभिन्नकालत्वनियमादित्याशङ्कां परिहरन्नभावस्य धर्मिप्रतियोगिसाहित्यव्याप्तत्वमुपपादयति** तौ विनेति ।

अनु०— तौ विना न ह्यभावश्च क्वचिद्दृष्टः कदाचन ॥

**अत्र दृष्ट इति प्रकरणात्तौ विनेति तज्ज्ञानं विनेत्यर्थः । चशब्दोऽभावो दृश्यमानो धर्मिप्रतियोगिप्रतीतावेव दृश्यत इत्यन्वयसमुच्चयार्थः । हिशब्देनान्वयव्यतिरेकयोः प्रसिद्धत्वं सूचयति । तदनेनान्वयव्यतिरेकाभ्यामभावप्रतीतेर्धर्मिप्रतियोगिप्रतीतिपूर्वकतया व्याप्तिरुपपादिता भवति । यद्वा ताविति त्यनेन न ज्ञानमुपलक्षणीयम् । अभावः प्रतीयमानो धर्मिप्रतियोगिघटित एवात्रेदं नास्तीत्यादिरूपेण प्रतीयते । न तु तौ विना केवल इत्यन्वयव्यतिरेकाभ्यामेकज्ञानसंबन्धेन व्याप्यव्यापकभावोपपादनमेतदित्यवगन्तव्यम् । प्रातर्गजाद्यभावज्ञानं त्वन्यथोपपादयिष्यामः ।**

शे०— **देशत इति** । यत्राभावस्तत्र धर्मिप्रतियोगिनाविति देशत इत्यर्थः ॥ **कालत इति** । यदाऽभावस्तदा धर्मिप्रतियोगिनाविति कालत इत्यर्थः ॥ **प्रतियोगिना तु विरोधमेवेति** । न च प्रागभावप्रध्वंसयोः प्रतियोगिसमवायदेशवृत्तित्वात्कथं सादेश्याभाव इति वाच्यम् । तयोरपि प्रतियोगिसमानदेशत्वस्याविरुद्धत्वेनासत्त्वात् । न च कालभेदेनाविरोधः । तथा सति तत्कालावच्छिन्नस्यैवाधिकरणत्वप्राप्त्या भिन्नाधिकरणत्व एव पर्यवसानात् । यद्वाऽत्यन्ताभावस्य प्रतियोगिसमानदेशतायाः स्वरीत्याऽभावाभिप्रायेणैतदुक्तमिति ध्येयम् ॥ **धर्मिणा कथञ्चिदिति** । नित्यधर्मिकेष्वभावेषु कालतो

धर्मिसाहित्यनियमसत्त्वेऽपि कादाचित्कवस्तुधर्मिकेषु तेषु तस्यासत्त्वाभिप्रायेण कथञ्चिदित्युक्तमिति ज्ञातव्यम् ॥ **एकज्ञानसम्बन्धेनेति** । वैज्ञानिकसम्बन्धेनेत्यर्थः । अत्र व्याप्तिशरीरे प्रविष्टः सम्बन्धो न दैशिको नापि कालिकः किन्तु वैज्ञानिक एवेति भावः । ननु च प्रातश्चत्वरादौ प्रतियोगिस्मरणाभावेन गजाद्यभावमनुभूयैव देशान्तरं गतो गजस्मृतिमान्प्रातश्चत्वरे गजो नासीदिति गजाभावं प्रतिपद्यत इति तावदविवादम् । तादृशाभावप्रतीतिश्च तदनुभवस्तत्स्मरणं वा स्यात्तृतीयप्रकाराभावात् । तत्राप्यनुभवत्वपक्षे लिङ्गशब्दयोरनवकाशात् । प्रत्यक्षेणैवायमभावानुभवो वाच्यः । ततश्च तादृशाभावप्रत्यक्षेऽभावप्रतीतिर्धर्मिप्रतीतिपूर्विकेति धर्मिप्रतियोगिघटिताऽभावप्रतीतिरिति च व्याप्तिद्वयस्य व्यभिचारः । तत्र धर्मिणो विप्रकर्षात्प्रत्यक्षस्यासम्भवेन तत्पूर्वकत्वस्य वा तद्धटिताभावविषयकत्वस्य वाऽभावात् । न च तदा धर्मिणि ज्ञानमेव सन्निकर्ष इति नानुपपत्तिरिति वाच्यम् । अभावलौकिकप्रत्यक्षेऽभावांश इव धर्मिण्यंशेऽपि लौकिकस्यैव सन्निकर्षस्यापेक्षितत्वात् । अन्यथाऽभावेऽपीन्द्रियसम्बद्धविशेषणताया वक्तुमशक्यत्वेन तत्राभावप्रत्यक्षस्यैवासम्भवात् । तथा प्रातश्चत्वरे गजो नासीदित्यस्य स्मरणरूपत्वेऽपि स्मरणस्यानुभवपूर्वकत्वेन स्मरणहेत्वनुभवे प्रतियोगिस्मरणस्य पूर्वमभावेन तत्पूर्वकत्वस्योपनायकाभावेन तद्धटिताभावविषयकत्वस्यासम्भवेन प्रतियोगिप्रतीतावेव प्रतीयत इति प्रतियोगिघटित एव प्रतीयत इति च व्याप्तिस्तत्र व्यभिचार एवेति तत्कथमेतद्व्याप्तिद्वयं सङ्गच्छत इत्यतोऽभावविषयकप्रत्यक्षज्ञान एवायं नियमो न तु तज्ज्ञानमात्रे । प्रातश्चत्वरे गजो नासीदिति ज्ञानं च न प्रत्यक्षं किन्त्वानुमानिकमेवेति न तत्र व्यभिचारो दोषायेत्याशयेनाह **प्रातर्गजाद्यभावज्ञानं त्विति** ॥ **अन्यथेति** । अनुपलब्धिलिङ्गकानुमानेनैवेदमभावज्ञानम् । न च लिङ्गासिद्धिर्दोषः । स्मरणाभावेन लिङ्गेनैव तत्सिद्ध्युपपत्तेः । अत एव तत्र क्षणं ध्यात्वा नासीच्चत्वरे गज इति प्रतिपद्यते । न चैवं स्मरणाभावोऽप्यनुपलब्ध्यन्तरानुमेय इत्यनवस्थाप्रसङ्ग इति वाच्यम् । साक्षिग्राह्याणां बुद्धिसुखादीनामभावस्य नियमेन साक्षिप्रत्यक्षवेद्यत्वेनानुपलब्ध्यन्तरानुमेयत्वाभावेन तदनवकाशात् । अभावानुमितौ च प्रतियोगिवद्धर्मिणोऽप्युपनीतस्य भानमुपपद्यत एवेत्येवं भक्तिपादे 'अन्यत्र झडिति प्राप्त' इत्येतद्वाक्यव्याख्यानावसरे उपपादयिष्याम इत्यर्थः ।

**सू० —प्रतियोगिना तु विरुद्धमेवेति** । न च प्रागभावध्वंसयोः प्रतियोगिसमवायिदेश एव वर्तमानत्वस्य परैरङ्गीकारात् । तन्मते समानदेशत्वस्य सत्त्वात् मतान्तरेऽपि प्रतियोग्यधिकरणे तद्वृत्त्यभ्युपगमात् प्रागभावप्रध्वंसयोः प्रतियोगिसमानदेशत्वात् कथं तत्सादेश्यस्य विरुद्धत्वोक्तिरिति वाच्यम् । विरुद्धयोः समानदेशत्वानुपपत्त्या पराङ्गीकारस्याप्रामाणिकत्वात् । न च प्रागभावादेः कालभेदेन समानदेशत्वसंभवान्न विरोध इति वाच्यम् । कालभेदेन विरोधपरिहाराभ्युपगमे तत्तत्कालावच्छिन्नस्यैव

प्रागभावादेर्भिन्न- भिन्नाधिकरणत्व एव पर्यवसानेनास्मदभिमतसिद्धेरिति भावः । केचित्तु प्रागभावादेः समानदेशत्वेऽपि नात्यन्ताभावस्य स्वमते तदिति तन्मात्राभिप्रायकमेवाभावपदमत्रेत्यदोष इत्याहुः । ननु च राजमन्दिरं प्रति गतः प्रतियोगिस्मरणाभावात् तत्रत्यगजाभावमननुभूयैव देशान्तरं प्रति गतो गजरूपप्रतियोगिस्मृतिमान् प्रातश्चत्वरे गजो नासीदिति यदा प्रतिपद्यते, तदा तादृशगजाभावप्रतिपत्तेश्च प्रतिपत्तित्वादेवानुभवत्वं वा स्मृतित्वं वाच्यम् तद्व्यतिरेकेणान्यप्रतीतेरभावात् । तथा च गजाभावप्रतिपत्तिर्यद्यनुभवस्तर्हि आनुमानिकानुमानादेरभावात् प्रात्यक्षिक एवायं गजाभावानुभव इति वाच्यम् । तथा च तादृशाभा प्रत्यक्षानुभवे अभावः प्रतीयमानो धर्म्यप्रतीतावेव प्रतीयत इति, अभावः प्रतीयमानः धर्मिघटित एव अत्रेदं नास्तीत्यादिरूपेण प्रतीयत इति च भवदभिमतव्याप्तेर्व्यभिचारः । अभावप्रत्यक्षे धर्मिप्रत्यक्षस्यैव कारणत्वेन वाच्यत्वात्तत्र धर्मिणो विप्रकर्षेण तत्प्रत्यक्षासंभवात् तत्पूर्वकत्वस्य तद्घटितत्वस्य वा अभावप्रत्यक्षे अभावात् । यदि स्मरणत्वं मन्यसे तदाऽपि दृश्यमानोऽभावः प्रतियोगिप्रतीतावेव प्रतीयते, तद्घटिततया वा प्रतीयत इति भवदभिमतोक्तव्याप्तिद्वयस्य उक्तस्मरणहेतुगजाभावज्ञाने व्यभिचारः । स्मरणहेतुगजानुभवाभावात् पूर्वं गजस्मरणाभावात् तादृशप्रतियोगिप्रतीतिपूर्वकत्वस्य वस्तुशक्यत्वादुपनायकाभावादेव तद्घटिततया वा प्रतीतेरसंभवात् । तथा चोक्तव्याप्तेर्व्यभिचार इत्यतः अभावप्रत्यक्ष एवायं नियमो न तु तज्ज्ञानमात्रे । गजाभावज्ञानं तु स्मरणयोग्यस्य स्मरणलिङ्गजन्यमेवेति न तत्रोक्तदोष इत्याह **प्रातरिति** । ननु चाभावज्ञानस्य धर्मि-प्रतीतियोगिप्रतीतिसापेक्षत्वकथनमनुपपन्नम् । प्रातरत्र गजो नाभूदिति गजाभावज्ञानकाले, प्रतियोगिज्ञाने विद्यमानेऽपि, अधिकरणीभूतस्य चत्वरादेः प्रतियोग्यधिकरणत्वेन, तदभावानधिकरणत्वेन अभावधर्मिज्ञानस्य तत्राभावेन, तत्पूर्वकत्वासंभवादित्यतोऽभावप्रत्यक्ष एवायं नियमः । गजाद्यभावज्ञानं तु स्मरणयोग्यस्य स्मरणादिलिङ्गजन्यमेवेति न तत्रोक्तदोष इत्याह **प्रातर्गजाद्यभावज्ञानामिति** ।

**प०** — **धर्मिणा कथंचिदिति** । अनित्यधर्मिकाभावे (प्रलये घटाद्यभावे सत्यपि भूतलादिरूपानित्यधर्म्यभावात् कथं)कालतोऽपि न संभवतीत्यतः **कथंचिदित्युक्तमित्येके** । प्रतियोगिसत्त्वकाले यदा धर्मी तदानीमभाव इति व्याहत्यसंभ(व त्कथं)व इति **कथंचिदित्युक्तमित्यन्ये** ॥ **एकेति** । एकज्ञानविषयत्वसंबन्धेनेत्यर्थः । ननु प्रातर्गजाद्यभावज्ञानस्थले धर्मिणोऽसन्निकृष्टत्वेनात्रेदं नासीदित्येवं ज्ञानायोगेन न तत्रैकज्ञानसंबन्ध इत्यत आह **प्रातरिति** । 'अर्थापत्त्युपमाऽभावा अनुमान्तर्गता' इति भक्तिपादीयानुव्याख्यानव्याख्यावसरे स्मरणाभावलिङ्गरूपानुमानेनेत्युपपादयिष्याम इत्यर्थः ।

**या०** **धर्मिणा कथञ्चिदिति** । अत्र नित्यधर्मिकेष्वभावेषु कालतो धर्मिसाहित्यनियमसत्त्वेऽपि कादाचित्कवस्तुधर्मिकेषु तेषु स न संभवतीत्यभिप्रेत्य कथञ्चिदित्युक्तमिति ज्ञातव्यम् ॥ **एकज्ञान-**

**संबन्धेनेति** । वैज्ञानिकसंबन्धेनेत्यर्थः । तथा चात्र व्याप्तिशरीरप्रविष्टः संबन्धो न दैशिको नापि कालिकः, किन्तु वैज्ञानिक इति भावः । नन्विदमनुपपन्नं, प्रातश्चत्वरादौ प्रतियोगिस्मरणाभावेन गजाद्यभावमनुभूय देशान्तरं गतो गजस्मृतिमान्प्रातश्चत्वरे गजो नासीदिति यदाऽभावं प्रतिपद्यते तदा तत्र व्यवहितस्य चत्वरादेर्धर्मिण इन्द्रियासन्निकृष्टतया भानासंभवात् । न च तदा धर्मिणि ज्ञानमेव सन्निकर्षः । अभावलौकिकप्रत्यक्षेऽभाव इव धर्मिण्यपि लौकिकसन्निकर्षस्यैवावश्यकत्वात् । अन्यथाऽभावे अपीन्द्रियसंबद्धविशेषणताया वक्तुमशक्यत्वेन तत्राभावप्रत्यक्षस्यैवासंभवादित्यत आह **प्रातर्गजाद्यभावज्ञानमिति** । **अन्यथा** अनुभवाभावलिङ्गकानुमानेन । तथा च तत्राभावानुमितौ प्रतियोगिवद्धर्मिणोऽप्युपनीतस्य भाने न काप्यनुपपत्तिरिति भावः । अनुभवाभावोऽपि स्मरणाभावेनानुमेयः । स्मरणाभावश्च साक्षिवेद्योऽतो स्मरणाभावश्च नानवस्थेत्युपपादनमभिप्रेत्योक्तमुपपादयिष्याम इति । भक्तिपाद इति शेषः ।

**श्री०** — यत्राभावस्तत्र धर्मीति देशतो व्याप्तिर्नेत्याह **भूतलस्येति** । यत्राभावस्तत्र प्रतियोगीत्यपि न व्याप्तिरित्याह **प्रतियोगिनेति** । यद्यपि ध्वंसप्रागभावयोः प्रतियोगिसमवायदेशे सत्त्वेन प्रतियोगिना देशतः सादेश्यमस्ति, तथाऽप्यत्यन्तभावविवक्षयेदमिति द्रष्टव्यम् । तथा यदाऽभावस्तदा धर्मीति कालतो व्याप्तिरपि अतीतधर्मिकतया यदाऽभावो ज्ञायते तदा नास्ति । अथापि कथञ्चिद्वर्तमानधर्मिस्थले अस्त्येवायं नियमोऽथापि यदाऽभावस्तदा प्रतियोगीति नियमः कालिको न सम्भवत्येवेत्याह **द्वितीया त्वित्यादिना** ॥ **एकज्ञानेति** । अत्रेदं नास्तीति धर्मिप्रतियोग्यभावानां युगपज्ज्ञानविषयत्वेन प्रतीयमानत्वात्स एव सम्बन्ध इत्यर्थः ।

**सु०— किमतो यद्येवमभावस्य धर्मिप्रतियोगिसाहित्यं प्रतीतौ व्यापकमित्यत आह** अधर्मीति ।

**अनु०**— अधर्मिप्रतियोगित्वमाकाशस्यावगम्यते ॥

**प्रतीतावभावस्य व्यापकं सधर्मिप्रतियोगित्वमाकाशात्तावद्व्यावर्त(र्त्य)ते । यस्मादाकाश इत्येवावगम्यते न त्वत्रेदं नास्तीति । इयमपि (च) वस्तुतो मूर्ताभावगोचरैव प्रतीतिः प्रलयादिवन्नञ्वर्जिताभिलापसंबन्धादतादृशीव प्रकाशत इति चेन्न । नीलादिप्रतीतेरपि तथात्वप्रसङ्गात् । अनानुभाविकत्वस्योभयत्रापि साम्यात् । तथा च परस्याप्यसिद्ध्याद्यापातः । व्यापकनिवृत्त्या (च) व्याप्यनिवृत्तिरवश्यंभाविनीत्याकाशस्य नाभावत्वमिति । तदयं प्रयोगः । आकाशो नाभावः धर्मिप्रतियोगिनौ विनैव प्रतीयमानत्वाद्रूपवदिति । किञ्च मूर्ताभावमाकाशं वदता यो धर्मी तस्योच्यते स एवास्माकमाकाश इति नाम्न्येव विवादोऽवशिष्यते । वक्ष्यते चैतद्वियदधिकरण इति ।**

शे०— तर्कमूलभूतव्याप्त्यभावात्तद्विकलोऽयं तर्काभास इत्यतोऽविशेषव्याप्तिसद्भावान्नानुपपत्तिरित्यभिप्रेत्याविशेषमुपपादयति **अनानुभाविकत्वस्येति** । इष्टापत्तिं परिहरति **तथा चेति** ॥ **असिद्ध्याद्यापात इति** । तथा सति पक्षीकृतस्य नीलादेर्दृष्टान्तीकृतस्य फलादेर्वा वस्तुतोऽभावत्वप्रसक्त्या पक्षे दृष्टान्ते च सत्त्वहेतोरभावादसिद्धिसाधनवैकल्ये स्यातामित्यर्थः । अस्तु सधर्मिप्रतियोगित्वस्याकाशाद्यवृत्तिः । किं तावताऽपीत्यत आह **व्यापकेति** ॥ **अवश्यम्भाविनीति** । अन्यथा व्याप्यवति तत्रैव व्यापकाभावेन व्यभिचरिततया व्याप्यव्यापकभावाभावप्रसङ्गादिति भावः ॥ **नाम्न्येवेति** । निरधिकरणस्याभावस्याभावान्मूर्ताभावस्याकाशत्वं वदताऽपि तस्याधिकरणमवश्यं वाच्यम् । तत्राधिकरणस्याकाश इति नाम स्थापितमस्माभिः, परेण त्वाधेयस्य मूर्ताभावस्यैव तथा नाम स्थापितमिति नाम्न्येव विप्रतिपत्तिः । मूर्ताभावाधिकरणवस्तुनस्तूभयसंमतत्वान्न वस्तुनि विप्रतिपत्तिरित्याशयः । किञ्चास्मिन्पक्षे एकस्मिन्पतत्रिणि पतति द्वितीयेन पतत्रिणा कुत्र पतितव्यम् । यत्रासौ नास्ति तत्रेति चेत् । तर्हि येनाधिकरणेन एकस्य पतत्रिणोऽभावः परस्य च भावो विशेष्यते तदर्थान्तरमङ्गीकरणीयम् । स एव च प्रदेशरूप आकाश इति कथं तदनभ्युपगम इत्याशयवानाह **वक्ष्यते चैतदिति** । मूर्तद्रव्याणि चाकाशे स्थितान्येव हि सर्वदेत्यादिनेति शेषः ।

स०— **नाम्न्येवेति** । मूर्ताभावस्याकाशत्वं वदताऽपि आकाशस्य निरधिकरणस्यासंभवात् तदधिकरणस्यावश्यमङ्गीकार्यत्वात् तस्यैवास्माभिराकाशशब्देन संकेतितत्वात् तदाधेयस्य परेणाकाशशब्दार्थत्वाभ्युपगमात् नाम्न्येव विप्रतिपत्तिः । तदधिकरणीभूतवस्तुनस्तु उभाभ्यामभ्युपगमात् न वस्तुनि विप्रतिपत्तिरिति भावः ।

प०— **तथात्वप्रसङ्गादिति** । अभावगोचरत्वप्रसङ्गादित्यर्थः । अस्तु को दोष इत्यत आह **तथा चेति** । नीलादेरप्यभावत्वे सति पक्षे नीलादौ दृष्टान्ते फलादौ च सत्त्वाभावेनासिद्धिसाधनवैकल्यापात इत्यर्थः ॥ **वक्ष्यते चैतदिति** । किञ्चेत्यादिनोक्तं प्रमेयं 'न वियदश्रुतेरि'त्युत्तरपादीयाद्याधिकरणे युक्तिभिरुपपादयिष्यत इत्यर्थः ।

या०— **असिद्ध्याद्यापात इति** । नीलादेरपि वस्तुतोऽभावरूपत्वे सत्त्वरूपहेतोस्तत्रासंभवादिति भावः । आदिपदेन साधनवैकल्यग्रहणम् । फलादेरपि वस्तुतोऽभावत्वे तत्र सत्त्वस्य वक्तुमशक्यत्वादिति भावः ॥ **वक्ष्यते चैतदिति** । एकस्मिन्पतत्रिणि पतति द्वितीयेन पतत्रिणा कुत्र पतितव्यम् । यत्रासौ नास्ति तत्रेति चेत् । तर्हि येनाधिकरणेनैकस्य पतत्रिणोऽभावः परस्य च भावो विशिष्यते तदर्थान्तरमङ्गीकरणीयम् । स एव प्रदेशरूप आकाश इति कथं तदनभ्युपगम इत्यादियुक्त्यन्तरमप्यग्रे वक्ष्यत इत्यर्थः ।

श्री०— **इयमपि** आकाश इति प्रतीतिरपि ॥ **नञ्वर्जितेति** । नञर्थानुल्लिखितव्यवहारविषयत्वादित्यर्थः ॥ **अतादृशी वेति** । अभावाविषयकत्वैवेत्यर्थः ॥ **तथात्वेति** । नीलादिप्रतीतिरपि वस्तुतोऽभावभूतनीलादिगोचरैव, तथाऽपि प्रलयादिवदतादृशीव प्रकाशत इति स्यादित्यर्थः । अनुभवविरुद्धत्वान्न नीलादिप्रतीतेरभावविषयकत्वं यदि तर्ह्याकाशादिप्रतीतावपि सममेतदित्याह **साम्यादिति** । ननु नीलादिप्रतीतेरभावगोचरत्वे को दोष इति चेत्तर्हि नीलादेरभावत्वापत्त्या भावत्वाख्यसत्त्वेन हेतुना नीलादिप्रपञ्चस्य क्षणिकता साधयितुं न शक्यते स्वरूपासिद्धेरित्याह **तथा चेति** । यद्यधर्मिप्रतियोगित्वमाकाशस्यावगम्यतेतर्हि किमायातं प्रकृत इत्यत आह **व्यापकेति** । **धर्मीति** । मूर्ताभावाधिकरणभूत इत्यर्थः । तस्य मूर्ताभावस्य । । **नाम्न्येवेति** । मूर्ताभावं प्रति धर्मी यः स आकाशभिन्न इति त्वयोच्यते, मया तु स एवाकाश इत्युच्यत इत्येवं नाम्न्येव विवाद इत्यर्थः ॥

सु०— **सूत्रद्वयार्थमुपसंहरति** स्वीकारेति ।

**अनु०**— स्वीकारत्यागतोऽदृष्टदृष्टयोः सर्ववस्तुषु ॥
गुणानुन्मत्त एवासौ विदधात्यधिकं पुनः ॥

**अदृष्टस्य क्षणिकत्वादेः स्वीकृति(कार)तो दृष्टस्य स्थिरत्वादेस्त्यागतः । असौ सौगतः । अधिकं स्वत इति शेषः । उन्मत्तमपि स्वस्मादधिकविवेकवन्तं (स्या) ख्यापयतीत्यर्थः । न ह्युन्मत्तः सर्वत्राप्रमितं स्वीकरोति नापि प्रमितं त्यजतीति ।**

**ननु (च) यदि नीलादिकं क्षणिकं न स्यात्तदा सन्न स्यात् । अर्थक्रियाकारित्वं हि सत्त्वम् । व्याप्तं च क्रमयौगपद्याभ्याम् । तृतीयप्रकाराभावात् । न च स्थिरे तत्सम्भवः प्रसङ्गतद्विपर्ययाभ्याम् । तथा हि । स्थायीभावः किं (स्वी)स्वकीयामर्थक्रियां क्रमेण कुर्याद्युगपद्वा । आद्ये कालान्तरभाविनीमर्थक्रियां प्रतीदानीं समर्थो न वा । प्रथमे तामपीदानीं (नीमेव) कुर्यात् । समर्थस्य क्षेपायोगात् । द्वितीये तदाऽपि न कुर्यात् । इदानीमसमर्थोऽपि तदानीं समर्थत्वात्करिष्यतीति चेत् । तदा सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासो भावं भिन्द्यात् । द्वितीये त्वाद्यक्षण एव कर्तव्यस्य सर्वस्य कृतत्वात् द्वितीयादिक्षणेऽसत्त्वमवर्जनीयमेव । तदेवमनुकूलतर्कबललब्धप्रतिबन्धस्य क्षणिकत्वानुमानस्य बलवत्त्वात्प्रत्यभिज्ञाप्रत्यनुमाने तद्बाधिते न स्थैर्यसाधनायालमिति ।**

**मैवम् । एषां तर्काणां प्रतितर्कपराहतत्वादिनाऽऽभासत्वात् ।**

शे०— नन्वक्षणिकत्वेऽपि सत्त्वं भविष्यतीत्यप्रयोजकमेतदित्यतोऽक्षणिकत्वे सत्त्वानुपपत्तिं दर्शयितुं हेतूकृतं सत्त्वं तावन्निर्वक्ति। **अर्थेति** । अर्थक्रियाकारित्वमेव सत्त्वमित्यर्थः । निष्प्रमाणकत्वात्सामान्यविशेषसमवायानां सत्तासामान्याधारत्वानभ्युपगमेन तेषामसत्त्वप्रसङ्गाच्च सत्तासामान्यस्य, प्रमां प्रत्यालम्बनत्वस्यार्थक्रियाकारित्वप्रभेदरूपतया प्रमाणविषयतारूपप्रमाणग्राह्यताया अपि तत्त्वायोगादिति भावः । नन्वक्षणिकस्य भावस्याप्यर्थक्रियाकारित्वरूपं सत्त्वं नानुपपन्नमित्यप्रयोजकत्वतादवस्थ्यमित्यतोऽक्षणिके भावेऽर्थक्रियाकारित्वरूपसत्त्वव्यापकस्य निवृत्त्या तद्व्याप्यसत्त्वस्यापि निवृत्त्युपपत्तेर्नानुपपत्तिरित्यभिप्रेत्य किं तत्सत्त्वव्यापकं, यन्निवृत्त्याऽर्थक्रियाकारित्वरूपसत्त्वनिवृत्तिः स्यादित्यतस्तद्व्यापकं तावदुपदर्शयति **व्याप्तं चेति** । क्रमयौगपद्यान्यतरेण व्याप्तमित्यर्थः । ननु क्रमयौगपद्याभ्यामिव विधान्तरेणाप्यर्थक्रियाकारित्वसम्भवान्न तस्य तद्व्याप्यत्वमित्यतः क्रमाक्रमयोः परस्पराभावरूपतयाऽन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वेन प्रकारान्तराभावात्तत्सिद्धिरित्यभिप्रेत्य तदभावमाह **तृतीयेति** । अस्त्वर्थक्रियाकारित्वस्य क्रमाक्रमान्यतरव्याप्तत्वं, किं तावताऽपीत्यतोऽक्षणिकेऽर्थक्रियाकारित्वरूपसत्त्वव्यापकयोः क्रमाक्रमयोरसम्भवेन व्यापकव्यावृत्त्या तद्व्याप्यस्यार्थक्रियाकारित्वरूपसत्त्वस्यापि व्यावृत्तिसिद्धेर्नाप्रयोजकत्वमित्यभिप्रेत्याक्षणिके व्यापकयोः क्रमाक्रमयोरसम्भवमाह **न चेति** । **तत्सम्भवः** क्रमयौगपद्ययोः सम्भव इत्यर्थः । तत्र हेतुमाह **प्रसङ्गेति** । अक्षणिकस्य भावस्य क्रमेणार्थक्रियाकारितायामक्रमेणार्थक्रियाकारितायां च प्रसङ्गस्य प्रसङ्गविपर्ययस्य च प्राप्त्या न क्रमाक्रमौ सम्भवत इति भावः । कथं पक्षद्वयेऽपि प्रसङ्गतद्विपर्ययप्राप्तिरित्यत एकैकपक्षेऽपि तदुभयमुपदर्शयितुं प्रतिजानीते **तथा हीति** । पक्षद्वये प्रसङ्गतद्विपर्ययावुपदर्शयितुं विकल्पयति **स्थायीभाव इत्यादिना** । तत्र क्रमपक्षे कथं प्रसङ्गतद्विपर्ययावित्यत एकत्रैव पक्षे तयोरप्रवृत्तेः पक्षभेदेन तावुपस्थापयितुं विकल्पयति **आद्य इति** । क्रमे प्रसङ्गमुपदर्शयति **प्रथम इति** । यद्यदा यत्कार्यं प्रति समर्थं तत्तदा तत्करोत्येव, यथा सहकारिमध्यमध्यासीनं बीजमङ्कुरसमर्थमङ्कुरकारीति नियमात्स्थायीभावस्य प्रथमक्षणे कालान्तरभाव्यर्थक्रियाकारित्वसमर्थत्वे तत्कारित्वमवर्जनीयमेवेत्याह **समर्थस्येति** । **क्षेपो** विक्षेपो विलम्ब इति यावत् । क्रमे तद्विपर्ययमप्युपपादयति **द्वितीय इति** । यद्यदसमर्थं तन्न तत्कारि, यथा शिलाशकलमङ्कुरासमर्थं न तत्कारीति नियमादसमर्थत्वे कालान्तरभाव्यर्थक्रियाकारितायां स्थायीभावस्य कालान्तरेऽपि तदकारित्वमावश्यकमिति भावः । तन्मतेऽभावस्य तुच्छत्वेन विरुद्धधर्माध्यासस्य तत्र भेदकत्वासम्भवाद्भावं भिन्द्यादित्यत्र भावपदमिति बोध्यम् । यौगपद्यपक्षेऽपि यावद्धि कार्यं तेनाक्षणिकेन प्रथमे क्षणे सम्पादितं तावत्सर्वमपि सम्पादयितुं द्वितीयादिक्षणेषु समर्थो न वेति वाच्यम् । आद्ये तावत्सर्वमपि द्वितीयादिक्षणेष्वपि सम्पादयेत् । तावत्कार्यसम्पादनस्वरूपस्य द्वितीयादि-

क्षणेष्वपि भावात् । न च सम्पादितं पुनः शक्यसम्पादनमित्यतो यद्द्वितीयादिक्षणेषु सम्पादयति तत्प्रथम-क्षणे सम्पादितादन्यदित्येव वाच्यम् । तथा च क्रमपक्ष एव पर्यवसन्नः । तत्र च द्वितीयक्षणे सम्पादनी-यामर्थक्रियां प्रतीदानीं समर्थो न वा । प्रथमे तामपीदानीमेव कुर्यात् । द्वितीये तदाऽपि न कुर्यात् । इदानीमसमर्थोऽपि तदानीं समर्थत्वात्करिष्यतीति चेत् । तदा सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासो भावं भिन्द्यात् । प्रथमक्षणे यावत्सम्पादितं तावत्सर्वमपि द्वितीयादिक्षणे सम्पादयितुमसमर्थ इति द्वितीये प्रथमक्षणेऽपि न कुर्यात् । तदानीं समर्थोऽपीदानीमसमर्थत्वान्न करिष्यतीति च न वाच्यम् । तथा सति सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासप्राप्त्या भावभेदप्रसङ्गादिति पूर्वोक्तप्रकारेणैव प्रसङ्गतद्विपर्य-ययोः स्पष्टप्रतिभासत्वेन शिष्यैरेव ज्ञातुं शक्यत्वात्किं तद्वचनेनेत्यभिप्रेत्य तावनुपपाद्य दूषणान्तरमेवाह **द्वितीयेति** ।

स० — **न चेति** । स्थिरत्वे क्रमयौगपद्ये न संभवतः । तत्कुत इत्यत उभयत्र हेतुमाह **प्रसङ्गतद्विपर्ययाभ्यामिति** । स्थिरत्वेऽपि क्रमेणार्थक्रियाकारित्वाङ्गीकारे वक्ष्यमाणरीत्या प्रसंगः । स्थिरत्वेऽपि यौगपद्याङ्गीकारे प्रथमक्षण एव सर्वस्यापि कर्तव्यस्य कृतत्वेन कृत्यानवशेषेणार्थक्रियाकारित्वा-भावप्राप्त्या, **तद्विपर्ययः** स्थिरत्वविपर्ययः असत्त्वं स्यादित्यर्थः । तत्र क्रमे प्रसंगमुपपादयति **प्रथम इति** । **विरुद्धधर्माध्यास इति** । न च कालभेदेनाविरोधान्न भेद इति वाच्यम् । सामर्थ्यस्य स्वरूपत्वेन कालभेदेन विरोधपरिहारानुपपत्तेः । वस्तुतः कालभेदेनाविरोधं वदता तत्कालावच्छिन्नस्यैव भावाभावाधिकरणत्वाङ्गीकारात् तस्य चाभिन्नत्वात् विरुद्धधर्माध्यासः भावं भिन्द्यादेवेत्यक्षतमिति भावः। न चाभावस्यापि विरुद्धधर्माधिकरणस्य भेदावश्यम्भावाद्भावपदं व्यर्थमिति वाच्यम् । अभावस्य निर्धर्मकत्वाभ्युपगमेनाभावभेदस्यानेन प्रकारेणानुपपत्तेः । यौगपद्ये विपर्ययमुपपादयति **द्वितीये त्विति** ।

प० — **सूत्रद्वयार्थमिति** । 'समुदाय उभयहेतुकेपी'ति 'इतरेतरप्रत्ययत्वादि'ति च सूत्रद्वयार्थ-मित्यर्थः । यद्वा 'आकाशे चाविशेषात्' 'अनुस्मृतेश्चे'ति सूत्रद्वयार्थमित्यर्थः । 'दृश्यते प्रत्यभिज्ञात' इत्यनेनानुस्मृतेरित्यस्य, 'आकाशस्याविशेषत' इत्यनेनाकाशे चेत्यस्य च व्याख्योपक्रमः ॥ **क्षणिकत्वा-देरिति** । न दृश्यते दृश्यते चेति क्षणिकत्वस्थायित्वादेर्दृष्टत्वादृष्टत्वयोरुक्तेरिति भावः । क्षणिकत्वानु-मानस्य प्राबल्यमाशङ्कते **ननु च यदीति** ॥ **क्रमयौगपद्याभ्यामिति** । क्रमेण यौगपद्येन वा व्याप्तमित्यर्थः ॥ **तत्संभव इति** । क्रमयौगपद्ययोः संभवो न चेत्यर्थः । तत्र हेतुः **प्रसङ्गतद्विपर्य-याभ्यामिति** । प्रसङ्गोऽनिष्टापादनं, तद्विपर्ययस्तद्विपर्यये पर्यवसानम् । विकल्पमुखेन प्रसङ्गमात्रं ताव-द्व्यनक्ति **स्थायीभावः किमिति** । भावं भिन्द्यादित्यनन्तरमतो न क्रमेणेति । अवर्जनीयमेवेत्यनन्तरं न युगपदर्थक्रियाकारित्वमिति च व्यापकीभूतक्रमयौगपद्ययोरयोगे तद्व्याप्यार्थक्रियाकारित्वं सत्त्वं स्थायित्वे

वस्तुनो न युक्तमिति तस्य विपर्यये पर्यवसानं स्फुटत्वान्नोक्तम् । लब्धप्रतिबन्धस्य लब्धव्याप्तिकस्येत्यर्थः । न स्थैर्यसाधनायेति विभागः । तर्कपराहतत्वादिनेत्यादिपदेन 'अनुमानेन तर्कोपि व्याख्यात' इति वक्ष्यमाणव्याप्तिरहितत्वादिग्रहः । यद्वा पूर्वभावभवमित्यादौ वक्ष्यमाणाननुकूलत्वाभावग्रहः ।

या०— **क्रमयौगपद्याभ्यामिति** । क्रमयौगपद्यान्यतरेण व्याप्तमित्यर्थः ॥ **तत्संभव इति** । क्रमयौगपद्ययोः संभव इत्यर्थः ॥ **प्रसङ्गेति** । अत्र क्रमे प्रसङ्गो यौगपद्ये तद्विपर्ययो हेतुरिति विवेकः । प्रसङ्गशब्देन चानिष्टप्रसङ्गोऽतिप्रसङ्गो वा ग्राह्यः । तद्विपर्ययशब्दस्य च तस्यार्थक्रियाकारित्वरूपसत्त्वस्य विपर्ययोऽभाव इत्यर्थो विवक्षितः । क्रमे प्रसङ्गमुपपादयितुमाह आद्ये **कालान्तरेति** ॥ **क्षेपेति** । क्षेपो विक्षेपो, विलम्ब इति यावत् । कारणे सति कार्यं भवत्येवेति तन्मते नियमादिति भावः ॥ **विरुद्धधर्मेति** । न च कालभेदेनाविरोधान्न भेद इति वाच्यम् । सामर्थ्यस्य धर्मिस्वरूपत्वेन तदभावे धर्मिभेदस्यावश्यकत्वादित्याशयात् । भावं भिन्द्यादित्यत्र भावशब्दः पदार्थशब्दपर्यायः । तेन विरुद्धधर्माधिकरणत्वस्याभावेऽपि भेदहेतुत्वाद्भावपदमनर्थकमिति शङ्काऽनवकाशः । केचित्त्वभावस्य तन्मते निर्धर्मकत्व त्तत्र विरुद्धधर्माध्यासो न भेदहेतुरित्यभिप्रेत्य भावपदं प्रसिद्धभावपरमेवेत्याहुः । यौगपद्ये तद्विपर्ययमुपपादयति **द्वितीये त्विति** । यद्वा प्रसङ्गतद्विपर्ययमुपपादयति **द्वितीये त्विति** । यद्वा प्रसङ्गतद्विपर्ययाभ्यामित्यस्य विपर्ययपर्यवसानसहितानिष्टप्रसङ्गसद्भावादित्येवार्थः । अत्र च विपर्ययपर्यवसानमध्याहार्यमतो न न्यूनतेति ध्येयम् ।

---

**सु०— तथा हि । यद्यात्मानात्मप्रपञ्चः सर्वोऽपि क्षणिकः स्यात्तदा प्रमाऽप्रमारूपः सर्वो(कलो)ऽप्यनुमानागमप्रत्यभिज्ञालक्षणो व्यवहारो लुप्येत । तर्कस्याप्यस्य नोत्थानं स्यात् । तस्य तज्जातीयस्य वा तेन तज्जातीयेन वा सह भूयःसंबन्धावगमे (न) तादात्म्यतदुत्पत्त्यवधारणेन (वा) चोपाध्यभावा(द्य)वधारणेन वा व्यभिचाराभावनिश्चये सति व्याप्त्यवधारणम् । अवधृतव्याप्तेश्च पक्षदर्शनं लिङ्गदर्शनं च । ततोऽनुभूतव्याप्तिस्मरणम् । अथ यन्मया व्याप्तत्वेन ज्ञातं लिङ्गं तदत्र पक्षेऽस्तीत्यनुसन्धानम् । अथेदानीमनुमितिरित्यनुमानप्रक्रिया । न ह्येतत्सर्वं क्षणिकस्यात्मनः सम्भवति । येन हि सकृत् धूमो दृष्टो नष्ट एवासौ । कस्य भूयोदर्शनं कस्य च व्याप्त्यवधारणादि । यस्मिंश्च पर्वते धूमो दृष्टोनष्ट एवासौ । कुत्र पुनर्व्याप्तिलिङ्गानुसन्धानम् । कुत्र च साध्याध्यवसायः ।**

**शे०** अनुकूलतर्कबललब्धप्रतिबन्धस्येत्यत्र प्रतिबन्धो व्याप्तिर्जात्यादिरूपैकव्यक्तिकहेत्वाद्यभिप्रायेणाह **तस्य तेनेति** । धूमवन्ह्यादिरूपानेकव्यक्तिकहेत्वाद्यभिप्रायेणाह **तज्जातीयस्य तज्जातीये**

**नेति** । शिंशुपात्वस्य वृक्षत्वेन तादात्म्यावधारणेन, धूमस्य वह्निना तदुत्पत्त्यवधारणेन तत्र व्यभिचाराभावनिश्चयसंभवेऽपि रसेन रूपानुमानस्थले उक्तेन प्रकारद्वयेन न व्यभिचाराभावनिश्चयः संभवति । तत्र तादात्म्यतदुत्पत्त्योरसत्त्वात्कथं तत्र व्यभिचाराभावनिश्चय इत्यत उक्तम् **उपाध्यभावाद्यवधारणेन वेति** ॥ **व्याप्तत्वेन ज्ञातमिति** । अत्र व्याप्तिज्ञानस्य पूर्वमसत्त्वे व्याप्तलिङ्गमत्रास्तीति परामर्शो न संभवतीत्यभिप्रेत्यैवैतन्मया व्याप्तत्वेन ज्ञातमित्याद्युक्तं, न तु स्वातन्त्र्येण तदपेक्षितमित्यभिप्रायेण । व्याप्तं लिङ्गमत्रास्तीति ज्ञानसद्भावे तज्ज्ञानविलम्बेन कार्यविलम्बाभावेन तन्मात्रेणैव चारितार्थ्यादित्यवधेयम् ।

स० — तस्य इत्येतत् द्रव्यत्वादिजातिरूपैकहेतुव्यक्त्यभिप्रायेण । धूमादिरूपानेकहेतुव्यक्त्यभिप्रायेण तज्जातीयस्य इत्युक्तम् ।

प० — एकानेकव्यक्तिहेतुसाध्याभिप्रायेणाह **तस्य तज्जातीयस्य वेत्यादि** । तादात्म्यतदुत्पत्ती एव व्याप्तिनियामिके इति पराङ्गीकारादाह **तादात्म्येति** । अयं वृक्षश्चूतत्वादित्यादौ तादात्म्यम् । धूमाग्न्यादौ तदुत्पत्त्यादि ज्ञेयम् । मतान्तराभिप्रायेणाह **उपाध्यभावादीति** । **अवधृतव्याप्तेरिति** । पुंस इति योज्यम् ।

या० — **तस्येति** । इदं च जात्यादिरूपैकव्यक्तिकहेत्वभिप्रायेण । धूमादिरूपानेकव्यक्तिकहेत्वभिप्रायेण तज्जातीयस्येत्यादि ।

श्री० — **तस्य ... तेनेति** । शिंशुपात्ववृक्षत्वयोस्तादात्म्येन व्याप्त्यवधारणप्रकारः ॥ **तज्जातीयस्येति** । धूमजातीयस्य वह्निजातीयेनेति तदुत्पत्त्या भिन्नस्थले तदवधारणप्रकारः ।

**सु० — एवमागमेऽप्येकैकवर्णश्रवणानि, पदानुसन्धानम्, समयग्रहः, पुनः पदश्रवणम्, समयस्मरणम्, समयग्रहः, वाक्यार्थज्ञानमित्यनेकसंवि(कानुसन्)धानम्, नात्मनः क्षणिकतायामुपपद्यते । प्रत्यभिज्ञानमपि येन पूर्वावस्थोऽर्थो ज्ञातस्तेनैव तस्य वा तत्सदृशस्य वा दर्शने भवति । तत्कथं क्षणिकस्यात्मनः स्यात् ।**

**अनुमानेन तर्कोऽपि व्याख्यातः । प्रतिक्षणमात्मनोऽनात्मनश्च भेदेऽप्यनुमा(ना)द्यङ्गीकारेऽतिप्रसङ्गः स्यात् । यस्य कस्यचिद्व्याप्तिज्ञाने नारिकेलद्वीपवासिनोऽप्यग्निप्रमा (भवेत्) स्यात् । पर्वते लिङ्गदर्शनेन हृदेऽप्यग्निरनुमीयेतेत्यादि । पूर्वोत्तरक्षणवर्तिनामात्मनां पर्वतादीनां च कार्यकारणभावादुपपन्नोऽनुमानादिव्यवहार इति चेत् (न) । अन्यत्रस्यानपायात् । अन्यथोपाध्यायशिष्यबुद्ध्यादावपि प्रसङ्गात् ।**

शे० — **व्याख्यात इति** । तर्कस्यानुमानत्वात्तत्प्रक्रियैव तर्कप्रक्रिया, तदनुपपत्त्युपवर्णनमेव तर्कप्रक्रियानुपपत्तिवर्णनमिति न तस्य पृथगुपन्यासापेक्षेति भावः । अत्रात्मनो भेदेऽप्यनुमानाङ्गीकारे

अतिप्रसङ्गमेव स्फोरयति **यस्येति** । अनात्मनो भेदेऽप्यनुमानाद्यङ्गीकारे तं स्फोरयति **पर्वत इति** । आदिपदेन यस्य कस्यचित्पदानुसन्धाने सत्यन्यस्य संसर्गप्रमा भवेदित्य देरतिप्रसङ्गस्य परिग्रहः । अन्यत्वेऽपि कार्यकारणभावमात्रेणानुमानादिव्यवहाराभ्युपगमे बाधकमाह **अन्यथेति** । पूर्वोत्तरवर्तिनामात्मनां पर्वतादीनां च कार्यकारणभावादुपपन्नोऽनुमानादिव्यवहार इति वदतः किमभिमतं । किं पूर्वोत्तरवर्तिनामात्मनां पर्वतादीनां च कार्यकारणभावादन्यत्वमेव नास्तीति तत्प्रयोजकभेदाभावसत्त्वादुपपन्नोऽनुमानादिव्यवहार इति. किंवा भेदाभावस्य तदप्रयोजकत्वात्कार्यकारणभावस्यैव च तत्प्रयोजकत्वात्पूर्वोत्तरवर्तिनामात्मनां पर्वतादीनां च सत्यप्यन्यत्वे कार्यकारणभावमात्रेणानुमानादिव्यवहारप्रयोजकत्वमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **अन्यत्वस्यानपायादिति** । अन्यथा क्षणिकत्वभङ्गप्रसङ्गादिति भावः । द्वितीयं दूषयति **अन्यथेति** । सत्यपि भेदे कार्यकारणभावमात्रेणात्मादीनामनुमानादिव्यवहारप्रयोजकत्वं न युक्तं. तथा सत्याचार्यबुद्धिजनितशब्दजनितत्वाच्छिष्यबुद्धेरप्याचार्यबुद्ध्या कार्यकारणभावसद्भावादनुमानादिव्यवहारप्रयोजकत्वप्राप्त्याऽऽचार्यस्य व्याप्तिज्ञाने सति शिष्यस्याप्यग्न्यनुमितिः स्यात् । तथा यया कया चित्प्रणाड्याऽऽचार्येच्छाजन्यत्वाच्छिष्येच्छायास्तया कार्यकारणभावसद्भावादाचार्यस्यानुमित्सया शिष्यस्याप्यग्न्यनुमितिः स्यादविशेषादित्यर्थः । न च साक्षात्कार्यकारणभाव एवानुमानादिव्यवहारप्रयोजको न तु यथाकथञ्चित्कार्यकारणभावः । तथा चात्मनां पर्वतादीनां च तद्भावादनुमानादिव्यवहारप्रयोजकत्वेऽपि न शिष्याचार्यबुद्ध्यादेस्तत्प्रयोजकत्वं प्रसज्यते । प्रसञ्जकस्य साक्षात्कार्यकारणभावस्य तत्राभावादिति वाच्यम् । तथा सति व्यवहितसान्तानिकज्ञानानामपि साक्षात्कार्यकारणभावविरहादनुमानादिव्यवहारप्रयोजकत्वाभावप्रसक्त्या यथा कथञ्चित्कार्यकारणभावस्यैव तत्प्रयोजकत्वध्रौव्येणोक्तातिप्रसङ्गानिस्तारादिति भावः ।

**स०** — ननु पूर्वोत्तरक्षणवृत्तीनामात्मनां पर्वतादीनां चान्यत्वेऽपि संबन्धविशेषसत्त्वात् अनुमानादिव्यवहारोपपत्तावपि यस्य कस्यचित् व्याप्तिज्ञाने नारिकेलद्वीपवासिनः अग्निप्रमानुत्पत्तिः । तयोरसंबन्धादित्यत आह-**अन्यथेति** । अन्यत्वेऽपि संबन्धमात्रेणानुमानादिव्यवहाराभ्युपगमे उपाध्यायस्य लिङ्गदर्शने शिष्यस्य लिङ्गिज्ञानं स्यात् । न च तयोरन्यत्वात् कथं तदापदानमिति वाच्यम् । भेदेऽपि गुरु शिष्यभावलक्षणसंबन्धस्य तत्रापि वक्तुं शक्यत्वेनासंबन्धाभावादिति भावः । **अन्यथेति** । अन्यत्वे अपि कार्यकारणभावमात्रेणानुमानादिव्यवहाराभ्युपगमे उपाध्यायबुद्धेरर्थविशेषेण व्याप्य-व्यापकभावावधारणदशायां, शिष्यबुद्धेस्तदर्थेन व्याप्त्यनवधारणदशायामपि शिष्यबुद्ध्या तदर्थानुमानापातात् । न च तदस्ति । तस्मात् कार्य-कारणभावमात्रस्याप्रयोजकत्वात् अन्यत्वे अनुमानादिव्यवहारानुपपत्तिस्तदवस्थैवेति भावः ।

प० — **अनुमानेन तर्कोऽपि व्याख्यात इति** । यथाऽनुमाने पक्षलिंगव्याप्त्यादिज्ञानानां भिन्नभिन्नात्मनिष्ठतयाऽनुमानव्यवहारोऽयुक्तः तथा तर्कव्यवहारपरिलोपोऽप्यापादनं प्रति यद्धर्मि तज्ज्ञानस्यापादकज्ञानस्यापाद्यापादकव्याप्तिज्ञानादेश्च, भिन्नभिन्नात्मनिष्ठत्वेन व्याख्यात इत्यर्थः । **उपाध्यायशिष्यबुद्ध्यादावपि प्रसंगादिति** । तयोरपि हेतुहेतुमद्भावापन्नतया गुरुगतपक्षव्याप्त्यादिज्ञानेन शिष्यानुमित्यादिप्रसङ्गादित्यर्थः ॥

या० — **अन्यथेति** । पूर्वोत्तरक्षणवर्तिनामात्मनां पर्वतादीनां चान्यत्वेपि कार्यकारणभावादुपपन्नोऽनुमानादिव्यवहार इत्यङ्गीकार इत्यर्थः ॥ **उपाध्यायशिष्यबुद्ध्यादाविति** । अत्र बुद्धिशब्दः करणव्युत्पत्त्या अन्तःकरणविशेषपरः । उपाध्यायबुद्ध्या शिष्यबुद्धिः सुशिक्षिता उपाध्यायबुद्धिवदेव जायते इत्यनुभवेन तयोः कार्यकारणभावसत्त्वेन उपाध्यायबुद्धौ व्याप्त्यादिज्ञाने शिष्यबुद्धावपि अनुमित्यादिकं स्यादित्यतिप्रसङ्गादित्यर्थः । आदिपदेन पितुर्व्याप्त्यादिज्ञाने पुत्रस्यानुमित्यादिकं स्यादित्यस्य संग्रहः । परमते बुद्धिरेवात्मा तथा चोपाध्यायशिष्यबुद्ध्योः कार्यकारणभावसत्त्वादुपाध्यायस्य व्याप्त्यादिज्ञाने शिष्यस्यानुमित्यादिकं स्यादित्यतिप्रसङ्गादित्यर्थः । आदिपदेन तुरीवेमादिगतरूपादिना पटादौ स्पर्शाद्यनुमितिः स्यादित्यस्य संग्रहः ।

च० — **उपाध्यायशिष्यबुद्ध्यादाविति** । तयोरपि हेतुहेतुमद्भावोपपन्नतया गुरुगतपक्षव्याप्त्यादिज्ञनेन शिष्यस्यानुमित्यादिप्रसंगादित्यर्थः ।

---

**सु० — अथ मतम् । कारणक्षणाः कार्यक्षणेषु संस्कारानर्पयन्ति । अतः पूर्वपूर्वात्मसंस्कारयोगिनामुत्तरोत्तरेषामात्मनामनुमानादिव्यवहारो युज्यते । पर्वतादयोऽपि (पूर्व)पूर्वसंस्कारभाजः पक्षादित्वमश्नुवते इति । एतन्निराकरणाय सूत्रम्** ॥ ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ ॥ **इति । तद्व्याचष्टे** उत्तरेति ।

**अनु० — ॥ ॐ उत्तरोत्पादे च पूर्वनिरोधात्** ॐ ॥

उत्तरोत्पत्तिमात्रेण विनाशात्पूर्ववस्तुनः ॥
न संस्कारार्पकत्वं च युज्यते कस्यचित्क्वचित् ॥

कस्यचित् **कारणस्य,** क्वचित् **कार्ये । ततः किमित्यत आह** अत इति ।

**अनु०** — अतो ज्ञातं मयेत्यादि न ज्ञेयमनुमा कुतः ॥

**आत्मनः क्षणिकत्वात्संस्कारार्पणस्य च(व)संभवादित्यर्थः । यन्मया व्याप्तत्वेन ज्ञातं तदत्र विद्यत इत्यादि यथा भवति तथा** न ज्ञेयं **ज्ञातुमशक्यम् । ततश्चानुमा कुतः । आगमादेरप्युपलक्षणमेतत् ।**

शे० — ॥ ॐ **उत्तरोत्पादे च पूर्वनिरोधात्** ॐ ॥ **कारणक्षणा इति** । क्षणावच्छिन्नान्यात्मादिरूपकारणानीत्यर्थः ॥ **कार्यक्षणेष्विति** । क्षणावच्छिन्नेष्वात्मादिकार्येष्वित्यर्थः ॥ **पूर्वपूर्वात्मसंस्कारयोगिनामिति** । पूर्वपूर्वात्मसमर्पितसंस्कारयोगिनामित्यर्थः । **पूर्वसंस्कारभाज इति** । पूर्वपूर्ववर्तातादिसमर्पितसंस्कारभाज इत्यर्थः । ननु कारणं कार्ये संस्कारमर्पयतीति शङ्कायां तदेव निषेध्यं, तत्कथं कस्यचिदपि क्वचिदपि संस्कारार्पकत्वनिषेध इत्यतः प्रकृतोपयोगितया तदर्थमाह **कस्यचिदित्यादिना**। अत इति किमात्मनः क्षणिकतयाः परामर्शः, किंवा संस्कारार्पकत्वासम्भवस्य। नाद्यः आत्मनः क्षणिकत्वेऽपि पूर्वपूर्वात्मसमर्पितसंस्कारभाक्त्वादुत्तरस्यात्मन उक्तविधप्रतिसन्धानोपपत्त्या तदनुपपत्तिकथनास्यासांगत्यप्रसङ्गात् । नान्त्यः संस्कारार्पकत्वाभावे ह्यात्मनः स्थायित्वादेवोक्तविधप्रतिसन्धानोपपत्त्या तदनुपपत्तिकथनानुपपत्तिप्रसङ्गादित्याशङ्क्य नात्रात इत्येकैकमात्रपरामर्शोऽभिमतो येनोक्तदोषः स्यात्किन्तूभयपरामर्शः । ततश्च नोक्तप्रकारद्वयेन तदुपपत्तिसम्भावनावकाश इति तदनुपपत्तिकथनमुचितमेवेत्यभिप्रेत्योभयपरामर्शकतया तद्व्याचष्टे **आत्मन इति**। प्रक्रमविरोधापत्त्याऽनुमानपदस्याऽऽगमादिव्यावर्तकत्वानुपपत्तेस्तदुपलक्षणतया तद्योजयति **आगमादेरिति** ।

स० — **यन्मया व्याप्तत्वेन ज्ञातं विद्यत इत्यादीति**। अत्र व्याप्तिज्ञानस्य पूर्वमसत्त्वे व्याप्तं लिंगमत्रास्तीति ज्ञानं न संभवतीत्यभिप्रायेण 'यन्मया व्याप्तत्वेन ज्ञातम्' इत्याद्युक्तम् । न तु स्वातन्त्र्येण तदपेक्षितम् । व्याप्तं लिङ्गमत्र अस्तीति ज्ञानमात्रेण चारितार्थ्यादित्याहुः । अत्र व्याप्तलिङ्गं पक्षेऽस्तीत्येवावगमस्यावश्यकत्वात् यत् व्याप्तत्वेन ज्ञातं तदत्र विद्यत इति ज्ञानमनावश्यकमिति भाति । तथाऽपि व्याप्तं लिङ्गमत्रास्तीति ज्ञानाभावेऽसंभवेन पूर्वं व्याप्तिज्ञानस्यावाश्यकत्वात् क्षणिकत्वादेतत्संबन्धं द्योतयितुमिदमुक्तमिति ध्येयम् ॥

प० — **पूर्वपूर्वसंस्कारभाज इति**। पूर्वपूर्वतत्क्षणजन्यसंस्कारभाज इत्यर्थः ॥ **उत्तरोत्पादे च पूर्वनिरोधात्** । संबन्धसुधयैव श्लोकं व्याख्यातं मत्वा कस्यचिदिति क्वचिदितिपदयोरर्थमाह **कस्यचिदिति** ।

श्री० — ॐ **उत्तरोत्पादे च पूर्वनिरोधात्** ॐ ॥ **आगमादेरपीति** ॥ यादृशशक्त्युपेततया पदानि जातानि तादृशान्येवेमानि पदानीत्यादि यथा स्यात्तथा न ज्ञेयम् । ततश्च वाक्यार्थज्ञानं कुत, इत्यागमस्थलेऽपि द्रष्टव्यमित्यर्थः ।

सु० — **नन्वस्ति तावदनुमानादिव्यवहारः, सर्वलोकसिद्धस्यापन्हवायोगात् । तद्बलेनालौकिकमप्यसहभाविनः संस्कारार्पकत्वं कल्पयिष्यत इत्यत आह** एकत्वमिति ।

**अनु०** — एकत्वमनुभूतिस्थं त्यक्त्वा निर्मानिका भिदा ॥
कुत आत्मादिकेषु स्यात् ।

**किमनुमानादिव्यवहारान्यथाऽनुपपत्तिमात्रेणालौकिकं कल्पनीयम्, किंवाऽऽत्मादेः क्षणिकत्वेऽपि सति । नाद्यः आत्मादेः स्थायित्वेनैव तदुपपत्तेः । द्वितीयस्तु स्यात् । यद्यात्मादेः क्षणिकत्वं सिद्धं स्यात् । न च तदस्ति । प्रमाणबाधितत्वान्निष्प्रमाणकत्वाच्चेति** भावः । **एकत्वं भिदेत्यत्र पूर्वोत्तरकालयोरिति** शेषः । अनुभूतिस्थं **प्रत्यभिज्ञासिद्धम्** । **कुतोऽङ्गीकार्येत्यध्याहारात्समानकर्तृतासिद्धिः** ।

**शे०**— नन्वेकत्वादेरात्मादिनिष्ठत्वेनानुभूतिस्थत्वाभावात्कथं तत्स्थत्वकथनमित्यतो विषयतासम्बन्धेन तत्स्थत्वोपपत्तेर्नानुपपत्तिरित्याशयवान् 'दृश्यते प्रत्यभिज्ञात' इति पूर्वग्रन्थानुरोधेन तत्तात्पर्यमाह **अनुभूतिस्थमित्यादिना** । ननु 'समानकर्तृकयोः पूर्वकाल' इति समानकर्तृकत्व एव क्त्वाश्रवणादिह च त्यागं प्रति पुरुषस्य, स्यादिति क्रियां प्रति च भेदस्य, कर्तृत्वेनासमानकर्तृकत्वात् त्यक्त्वेति क्त्वाप्रत्ययानुपपत्तिरित्यत आह **कुतोऽङ्गीकार्येत्यध्याहारादिति** । ततश्च त्यागं प्रतीवाङ्गीकारक्रियां प्रत्यपि पुरुषस्यैव कर्तृत्वेन समानकर्तृकत्वलाभान्न क्त्वाप्रत्ययानुपपत्तिरिति भावः । यद्यपि 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यत' इत्यादौ क्रिययोरसमानकर्तृकत्वेऽपि क्त्वाप्रत्ययवत् इत्युक्त्या प्रतीयत' इति भाष्येऽपि क्रिययोरसमानकर्तृकत्वेऽपि क्त्वाप्रत्ययवच्चेहाप्यसमानकर्तृकत्वेऽपि त्यक्त्वेति क्त्वाप्रत्ययो युक्त एवेति अङ्गीकार्येति क्रियान्तराध्याहारवर्णनमनर्थकम् । तथाऽप्यङ्गीकृत्य क्रिययोः समानकर्तृकत्वे क्त्वाप्रत्ययविधानमेतदध्याहारवर्णनमित्यदोष इत्यवधेयम् ।

**स०**— **त्यक्त्वा इति** (अनुव्याख्याने) त्यागं प्रति पुरुषस्य कर्तृत्वात् स्यादिति क्रियां प्रति भेदस्य तत्त्वेन समानकर्तृकत्वाभावात् क्त्वाप्रत्ययानुपपत्तिः तत्राह– **कुत इति** । तथा च अङ्गीकारक्रियां प्रत्यपि पुरुषस्य कर्तृत्वात्तदुपपत्तिरिति भावः ।

**प०**— त्यक्त्वा स्यादिति कथं क्त्वाप्रत्ययोपपत्तिः । त्यागस्य पुरुषकर्तृकत्वात् । स्यादित्युक्त्या प्राप्तभवनक्रियायाश्च भिदेत्युक्तभेदकर्तृकत्वात् । त्यागभवनयोर्भिन्नकर्तृकत्वे तु 'समानकर्तृकयोः पूर्वकाले क्त्वे'ति क्त्वाप्रत्ययस्यैककर्तृकयोः क्रिययोः पूर्वकालीनायां क्त्वाप्रत्ययविधानात् । इह च समानकर्तृकत्वाभावादित्यतः स्यादित्यतः पूर्वं शेषमाह **कुतोंऽगीकार्येतीति** ।

**श्री०**– ननु त्यागे पुरुषस्य कर्तृत्वात्स्यादिति क्रियायां च भिदायाः कर्तृत्वेन समानकर्तृकताया अभावात्कथं क्त्वाप्रत्यय इत्यत आह **अङ्गीकार्येति** । तथा च त्यागाङ्गीकाररूपयोरुभयोः क्रिययोरेकपुरुषकर्तृकत्वान्न दोष इत्यर्थः ।

सु० — ननु च प्रत्यभिज्ञानं भ्रान्तमित्युक्तम् । तत्कथमात्मादेरैक्यं ततः सिध्येदित्यत आह बल्येवेति ।

अनु० — बल्येवानुभवो यतः ॥

तर्कबलेनानुमाने निरवकाशतया प्रबले सति हि तद्विरोधात्प्रत्यभिज्ञानं भ्रान्तं स्यात् । यदा तु तर्कस्योक्तविधयाऽऽभासत्वं, तदा कुतः क्षणिकत्वानुमानप्राबल्यम् । कुतश्च प्रत्यभिज्ञायास्तद्बाधः । अबाधितश्च प्रत्यभिज्ञानुभवो यतो बल्येव । अत आत्मादेरेकत्वं तेन सिद्धमिति संबन्धः । एतेनानुमानसिद्धस्य भेदस्य कथं निर्मानकत्वमित्यपि परास्तम् । तदुपजीव्यस्य तर्कस्याप्राप्यनवस्थानात् ।

शे० — भ्रान्तमिति । भ्रान्तिर्भ्रान्तमिति 'नपुंसके भावे क्तः' इति भावे क्तः ॥ उक्तविधयेति । प्रतितर्कपराहतत्वेनेत्यर्थः. साकाङ्क्षत्वप्रयुक्तवाक्याभासताशङ्कापरिहाराया्ह अत इति । एतेनेत्युक्तमेव विशदयति तदुपजीव्यस्येति । क्षणिकत्वानुमानापेक्षितप्रतिबन्धग्राहकत्वात्तर्कस्यानुमानं प्रत्युपजीव्यत्वमिति भावः अप्राप्यनवस्थानादिति । ततश्च तर्कस्यानाभासत्वसिद्धौ तत्सन्निवतया ऽनुमानस्य प्रामाण्यप्रसक्तेर्भेदस्य निर्मानकत्वाभावसिद्धिस्तत्सिद्धौ च प्रतितर्काप्रतिघातरूपाङ्गसम्पत्त्या तर्कस्यानाभासत्वसिद्धिरित्यन्योन्याश्रय इति भावः ।

प० — उक्तविधयेति । एषां तर्काणां प्रतितर्कपराहतत्वादिनेत्युक्तविधयेत्यर्थः ॥ भेदस्येति । प्रतिक्षणं घटादिभेदस्येत्यर्थः ॥

या० — अर्थक्रियेति । जलाहरणादिरूपक्रियेत्यर्थः ॥

श्री० — तर्कस्येति । क्षणिकत्वसाधकानुमानानुग्राहकस्य । न तु यदि नीलादिकमित्यादिनोक्तानुकूलतर्कस्येत्यर्थः । भेदस्येति । पूर्वोत्तरक्षणयोरात्मादिभेदस्य क्षणिकत्वस्येति यावदित्यर्थः ॥ एतेनेत्युक्तं विवृणोति तदिति

सु० — नन्वस्तूत्तरोत्पाद एव पूर्वस्य निरोधस्तथाऽपि कुतः पूर्वस्योत्तरस्मिन्संस्कारानाधायकत्वमित्यत आह कार्यकारणयोश्चेति ।

अनु० — कार्यकारणयोश्चैककालीनत्वं विना कथम् ॥
पूर्वसंस्कारयोगि स्यादुत्तरो नियमेन च ॥

उत्तरोत्पाद एव पूर्वस्य निरोधात्कार्यकारणयोरेककालीनत्वं तावन्नास्तीति लभ्यते । एककालीनत्वं च विना पूर्वाहितसंस्कारयोगित्वमुत्तरस्य न युज्यते । नियमेन चेत्यनेन क्वचिदपि न युज्यते कुतः सर्वत्रेति सूचयति । यद्वैककालीनत्व एव संस्कारार्पकत्वं दृष्टं न भिन्नकालत्व इति व्याप्तेरित्यर्थः ।

शे०— मूले 'कार्यकारणयोरेककालीनत्वं विने'ति हेतूकृतस्य कार्यकारणयोरेककालीनत्वाभावस्यासिद्धत्वाद्धेतूकरणानुपपत्तिमाशंक्य 'उत्तरोत्पादमात्रेण निरोधात्पूर्ववस्तुन' इति पूर्वभाष्यादेव तत्सिद्धिसंभवान्नानुपपत्तिरित्यभिप्रेत्य तद्भाष्यं मनसि निधायासिद्धिं परिहरति उत्तरोत्पाद एवेति । एककालीनत्वं विनोत्तरस्य पूर्वाहितसंस्कारयोगित्वं नियमेन न युज्यत इति योजनायां नियमनिराकरणप्राप्त्या क्वचिदेककालीनत्वं विनाऽप्युत्तरस्य पूर्वाहितसंस्कारयोगित्वसद्भावः प्राप्यते । स चानुपपन्नः । उत्तरेणासंबद्धस्य पूर्वस्योत्तरे वासनासमर्पकत्वायोगात् । योगे वा तत्रैव सर्वत्रापि तत्संभवेन नियमनिराकरणानुपपत्तिप्रसङ्गादित्यभिप्रेत्य नियमेनेत्येतत्परित्यागेनैव वाक्यं योजयति एककालीनत्वं चेति । तर्हि नियमेनेत्यस्य भाष्यखण्डस्य वैयर्थ्यमित्यतोऽर्थविशेषसूचकत्वान्न तद्वैयर्थ्यमित्यभिप्रेत्य तत्सूचितमर्थमभिनयेन दर्शयति नियमेन चेत्यनेनेति । एवमर्थसूचकत्वे नियमेनेत्यस्य मुख्यार्थपरित्यागादस्वारस्यं भवतीत्यपरितोषात्प्रकारान्तरेण तदर्थमाह यद्वेति ।

प०— इति लभ्यत इति । 'उत्तरोत्पत्तिमात्रेण विनाशादि'त्यधोक्तेनोत्तरोत्पादे च पूर्वनिरोधादिति सौत्रहेतुनैककालीनत्वं नास्तीति साध्यं लभ्यत इत्यर्थः । नियमेन चेत्यस्यार्थान्तरमाह यद्वेति ॥

सु०— नन्वेककालीनत्वाभावेऽपि कुतः संस्कारार्पकत्वं न स्यादित्यत आह संबद्धा एवेति ।

अनु०— संबद्धा एव संस्कारमन्यत्रादधतेऽखिलाः ।
असंबद्धः कथं पूर्व उत्तरे वासनाकरः ॥

यस्मात् अखिलाः संस्काराधायकाश्चम्पककुसुमादयः पदार्थास्तैलादिभिः संबद्धा एव अन्यत्र तैलादौ संस्कारमादधते, नासंबद्धा इत्यस्ति नियमः । न च भिन्नकालीन(ल)योः संबन्धो युज्यते । तस्मादुत्तरेणासंबद्धः पूर्वस्तस्मिन्नुत्तरे वासनां न कुर्यादिति ।

सु० — **उक्तमर्थं बुद्ध्यारोहार्थं सङ्कलय्याह** एककालतयेति ।

अनु० — एककालतया योगं विना संस्कारतः कथम् ॥

**अत्रैककालतया विना कार्यकारणयोर्योगो न युज्यते । योगं विना कारणस्य कार्ये संस्कारार्पकत्वं च न घटते, संस्कारतो विना कथमनुमानादिव्यवहार इत्यध्याहारेण योजना । यदीदं सङ्कलनं न क्रियेत तदा पूर्वो(क्तहेतूनां)क्तानां प्रत्येकं संस्कारानाधयकत्वे हेतुत्वं ज्ञायेत । सर्वत्र साध्यनिर्देशात् तत्र को दोषः । उक्ताकाङ्क्षाकुण्ठितत्वमेवेति ।**

**अत्रैते प्रयोगाः । पूर्वक्षण उत्तरक्षणे संस्काराधायको न भवति, तेनासंबद्धत्वात् । यो येनासंबद्धो नासौ तत्र संस्काराधायकः, यथा संप्रतिपन्नः । यद्वा यो यत्र संस्काराधायकः स तत्संबद्ध एव दृष्टो यथा संमतः । असम्बद्धस्यापि संस्काराधायकत्वे मृगमदो वसनमिव सर्वं वासयेदविशेषात् । असम्बद्धश्च पूर्व उत्तरेण । ततो भिन्नकालीनत्वात् । संप्रतिपन्नवत् । भिन्नकालीनयोरपि संबन्धेऽतिप्रसङ्गः । भिन्नकालीनश्च पूर्व उत्तरेण । तदुत्पाद एव विनष्टत्वात् । संमतवत् । प्रागेव नष्टस्य तेनैककालीनत्वशङ्का एव व्याहतेति । ननु लाक्षारसाहितबीजपूरकुसुमलौहित्यवत्किन्न स्यादिति चेत् (न) । तत्रापि निरन्वयविनाशोत्पादानभ्युपगमात् । अत्र च परसिद्धन्यायेन परस्य बोधनान्नाश्रयासिद्ध्यादि शङ्कनीयमिति ।**

---

**शे०** — 'कार्यकारणयोरेककालीनत्वं विने'त्यादिनोक्तस्यैव 'एककालतये'त्यादिनोत्तरत्राभिधानात्पौनरुक्त्यमाशङ्क्य परिहरति **उक्तमर्थमिति** । उक्तस्य सर्वस्यार्थस्यात्रानभिधानात्कथमस्य तत्सङ्कलनत्वमित्यतोऽपेक्षिताध्याहारेणोक्तसर्वार्थाभिधायकतया वाक्यं योजयति **अत्रेत्यादिना योजनेत्यन्तेन** । ननु किं सङ्कलनेनेत्यतो बुद्ध्यारोहार्थमित्येकं प्रयोजनं तावदुक्तमेव । प्रयोजनान्तरमप्याह **यदीदमित्यादिना** ॥ **पूर्वोक्तानामिति** । 'उत्तरोत्पादमात्रेणे'त्यादि'नोत्तरे वासनाकर' इत्यन्तेन श्लोकत्रयेणोक्तानामुत्तरोत्पाद एव विनष्टत्वकार्याभिन्नकालत्वकार्यासंबद्धत्वानामित्यर्थः ॥ **सर्वत्र साध्यनिर्देशादिति** । उक्तहेतुत्रयप्रतिपादकश्लोकेषु 'न संस्कारार्पकत्वं च युज्यत' इत्यनेन, 'पूर्वसंस्कारयोगी स्यादि'त्यनेन 'असंबद्धः कथं पूर्व उत्तरे वासनाकर' इत्यनेन पूर्वार्धोक्ततत्तद्धेतुसाध्यस्य निर्देशादित्यर्थः ॥ **उक्ताकाङ्क्षेति** । अस्तूत्तरोत्पाद एव पूर्वस्य निरोधस्तथाऽपि कुतः पूर्वस्योत्तरस्मिन्संस्कारानाधायकत्वमित्येककालीनत्वाभावेऽपि कुतः संस्कारार्पकत्वं न स्यादिति चोत्थापिताप्रयोजकत्वशङ्काकुलितत्वमेवेत्यर्थः । यदि पूर्वहेतुद्वयमपि साक्षात्संस्कारानाधायकत्वरूपसाध्यस्यैव साधकमित्यङ्गीक्रियते तत्रोक्ताप्रयोजकत्वशङ्काद्वयेन प्रतिबन्धः स्यात् । अत एवं परम्परा सङ्कलनेन ज्ञापितेति भावः । अनुव्याख्याने **सर्वत्र** परमसाध्य-

निर्देशस्तु सर्वथा पूर्वस्योत्तरे वासनाकरत्वं नास्तीति सूचयितुम् । श्लोकत्रयोक्तानुमानेषु दृष्टान्ताभावेन यथाश्रुतहेतूनां यथाश्रुतसाध्यैर्व्याप्त्यसिद्धिं विपक्षे बाधकानुक्त्याऽप्रयोजकतां चाशङ्क्याकांक्षानुसारेणानुमानप्रयोगप्रक्रियां प्रदर्शयन्व्याप्त्यसिद्ध्यादिकं परिहरति **अत्रैव इति** ॥ **पूर्वक्षण इति** पूर्वक्षणमात्रावस्थायि कारणमित्यर्थः ॥ **उत्तरेति** । उत्तरक्षणमात्रावस्थायिनि कार्य इत्यर्थः । अन्वयव्याप्तिमुक्त्वा व्यतिरेकव्याप्तिमप्याह **यद्वेति** । तथा च विशेषव्याप्त्यभावेऽपि सामान्यव्याप्तिसद्भावान्न तदसिद्धिरिति भावः । अप्रयोजकत्वं परिहरति **असंबद्धस्यापीति** । **मृगमदः** कस्तूरीरूपः । उक्तप्रसङ्गस्य व्याप्तिविकलत्वात्तर्काभासतामाशङ्क्य दृष्टान्ताभावेन विशेषव्याप्त्यभावेऽपि यदविशिष्टस्य यस्य यद्भवति तदविशिष्टस्यापरस्यापि तद्भवतीत्यविशेषलक्षणव्याप्तिसद्भावान्न तस्याभासत्वमित्याशयवानविशेषव्याप्तिमाह **अविशेषादिति** । अप्रयोजकत्वं परिहरति **भिन्नकालयोरिति** । अविशेषादिति भावः । ननु तदुत्पाद एव विनष्टस्यापि तेनैककालीनत्वमस्तु किं बाधकमित्यतो व्याहतत्वादुक्तशङ्कैव न भवितुमर्हति किं बाधककथनेनेत्याशयवानाह **प्रागेवेति** ।

ननु बीजपूरे लाक्षारससिक्ते सति तदीयकुसुमेषु लौहित्यमुत्पद्यत इति तावदविवादम् । न हि तत्र लाक्षारसस्य कुसुमेन संबन्धोऽस्ति । तदुत्पत्तेः प्रागेव तस्य नष्टत्वात् । तथा च कुसुमेनासंबद्धस्यापि लाक्षारसस्य कुसुमेषु लौहित्याधायकत्ववत् उत्तरक्षणावच्छिन्नकार्येणासंबद्धस्यापि पूर्वक्षणमात्रावस्थायिकारणस्य तत्र संस्काराधायकत्वं भविष्यत्येव, अन्यथा तेनासंबद्धत्वहेतोर्लाक्षारसे व्यभिचारः स्यादित्याशङ्कते **नन्विति** । 'फलपूरो बीजपूरो रुचिको मातुलुङ्गिके'त्यभिधानाद्बीजपूरशब्दो मातुलुङ्गपरः । लाक्षारसेनाहितं यद्बीजपूरकुसुमलौहित्यमिति सम्बन्धः । कुसुमस्य कार्यात्मना स्वोत्पत्तेः प्रागसत्त्वेऽपि कारणात्मना सत्त्वमस्त्येव । तथा लाक्षारसस्य स्वनाशानन्तरं कार्यात्मनाऽसत्त्वेऽपि कारणात्मना सत्त्वमस्त्येव । 'असद्यत्कार्यरूपेण कारणात्मतयाऽस्ति ही'त्यादिना तथैव व्यवस्थापनात् । तथा च कार्यात्मनाऽसतो लाक्षारसस्य कार्यात्मना सता बीजपूरकुसुमेन सह तेनाकारेण संबन्धविरहेऽपि कारणात्मना सतो लाक्षारसस्य तदात्मना सता कुसुमेन तेनाकारेण संबन्धसद्भावेनासंबद्धस्य संस्काराधायकतायास्तत्रासम्मतेर्नानैकान्त्यं, नापि तद्दृष्टान्तेन प्रकृतेऽसंबद्धस्यापि संस्काराधायकत्वसिद्धिरित्याशयवान्परिहरति **तत्रापीति** । ननु पूर्वक्षण उत्तरक्षणे संस्काराधायको न भवतीत्यादिप्रतिज्ञासु पूर्वक्षणपदार्थतयाऽभिमतस्य तन्मात्रावस्थायिनः पर्वतादेरनभ्युपगमेन तद्रूपस्याश्रयस्यासिद्धेराश्रयासिद्धिः, तथोत्तरपदार्थतयाऽभिमतोत्तरक्षणमात्रावस्थायिकार्यस्याप्रसिद्धेरप्रसिद्धविशेषणत्वं च स्यात् । तथा तेनासंबद्धत्वादिहेतुत्रयस्य स्वरूपासिद्धिश्चेत्यत **आह अत्र च परसिद्धन्यायेनेति** ।

स०— **पूर्वोक्तानामिति** कार्योत्पाद एव विनष्टत्व-कार्यभिन्नकालीनत्व-कार्यासंबद्धत्वानामित्यर्थः । **सर्वत्रेति** । 'उत्तरोत्पादमात्रेण विनाशात्पूर्ववस्तुनः' इत्यत्र, 'न संस्कारार्पकत्वमि'त्यत्र 'कार्यकारणयोश्चैककालीनत्वं विना कथमि'त्यत्र 'पूर्वसंस्कारयोगी स्यादुत्तर' इत्यनेन 'संबद्धा एवे'त्यत्रापि 'असंबद्धः कथं पूर्व उत्तरे वासनाकर' इत्यनेन साध्यनिर्देशादित्यर्थः । **उक्ताकांक्षेति** । न तेषां प्रत्येकं संस्कारानाधायकत्वे लिङ्गत्वम् । पूर्वक्षणः उत्तरक्षणे संस्कारानाधायकः, तदुत्पाद एव विनष्टत्वादित्यनुमानस्य, अस्तूत्तरोत्पाद एव पूर्वस्य निरोधः तथापि पूर्वस्योत्तरस्मिन् संस्काराधायकत्वं किं न स्यादित्युक्ताप्रयोजकत्वकांक्षाकलुषितत्वेन तदसाधकत्वात् । एवं भिन्नकालत्वान्न पूर्वस्योत्तरस्मिन् संस्काराधायकत्वं, इत्यत्रापि एककालीनत्वाभावेऽपि कुतः संस्कारार्पकत्वं न स्यादित्यप्रयोजकत्वशङ्कायां तस्यापि तत्र साक्षात्साधकत्वानुपपत्तेरिति भावः । अन्वयव्याप्तिमुक्त्वा व्यतिरेकव्याप्तिमाह **यद्वेति** । ननु तदुत्पाद एव विनष्टत्वेऽपि तेनैककालीनत्वमस्त्वित्यप्रयोजकत्वं स्यादेव इत्यतो व्याहतत्वान्नेयं शङ्का युक्ता इत्याह **प्रागेवेति** ॥ **नन्विति** । लाक्षारसेनाहितं यद्बीजपूरकुसुमलौहित्यमिति संबन्धः । तथा च कुसुमेनासंबद्धस्यापि लाक्षारसस्य कुसुमलौहित्याधायकत्वात् प्रकृतेप्यसंबद्धस्यापि संस्काराधायकत्वमिति भावः ॥ कुसुमस्य कार्यात्मनाऽसत्त्वेऽपि कारणात्मना सत्त्वेन तत्संबद्धलाक्षारसस्यैव तत्र लौहित्याधायकत्वं न असंबद्धस्येति न दोषः इति परिहरति **तत्रापीति** । तथा च तत्र कारणविशेषेण तदुपपत्तावपि प्रकृते तदभावात्संस्कारानुपपत्तिरेवेत्यर्थः । ननु च तदुत्पाद एव विनष्टत्वादित्ययुक्तम् । तस्य स्वयमनभ्युपगमादित्यत आह **अत्र चेति** ।

प०— **संकलय्येति** । संकलयित्वेत्यर्थः । **पूर्वो(क्ताना)क्तहेतूनामिति** । उत्तरोत्पाद एव पूर्वस्य नष्टत्वात् भिन्नकालीनत्वात्, असंबद्धत्वादिति हेतूनामुत्तरोत्पत्तीत्यर्धेन कार्यकारणयोश्चैककालीनत्वमित्यर्धेनासंबद्धः कथमित्यर्धेन चोक्तानां हेतूनां भिन्नकालीनत्वासंबद्धत्वसंस्काराधायकत्वरूपसाध्यत्रयेण क्रमादन्वयं विना (तदीय)तृतीयसाध्य एव हेतुत्वं ज्ञायेतेत्यर्थः ॥ **सर्वत्र साध्येति** । 'न संस्कारार्पकत्वमि'ति 'कथं पूर्वसंस्कारयोगी'ति 'कथं पूर्व उत्तरे वासनाकर' इति संस्कारानाधायकत्वरूपसाध्यस्य सर्वत्र हेतुत्रये निर्देशादित्यर्थः । शङ्कते **तत्र को दोष इति** । हेतुत्रयस्यापि संस्कारानाधायकत्वरूपसाध्यान्वये दोषः क इति शङ्कार्थः । उत्तरमाह **उक्ताकांक्षेति** । 'कार्यकारणयोश्चे'ति 'संबद्धा एवे'ति श्लोकद्वयावतारिकायामुक्ते ये आकाङ्क्षे ताभ्यां कुण्ठितत्वमेव दोष इत्यर्थः । असंबद्ध इत्यत्राभिप्रेतप्रयोगमाह **पूर्वक्षण इति** । संबद्धा एवेति पूर्वार्धाभिप्रेतव्याप्तिमाह **यद्वा यो यत्रेति** । तर्कमाह **असंबद्धस्येति** । **मृगमदः** कस्तूरी । **वसनं** वस्त्रं । स्वसंबद्धपटमिवासंबद्धमपि वासयेदिति भावः । 'कार्यकारणयोश्चैककालीनत्वमि'त्याद्यभिमतमाह **असंबद्धश्चेति** । **पूर्वक्षण** उत्तरक्षणेनेत्यन्वेति । तर्कमाह

**भिन्नकालीनयोरपीति** । अ(त्रा)सिद्धिपरिहारकतया उत्तरोत्पत्तीत्येतदभिमतमाह **भिन्नकालीनश्चेति** । तर्कमाह **प्रागेवेति** । ननूत्तरोत्पाद एव पूर्वस्यापि नष्टस्यापि लाक्षारसस्य बीजपूरकुसुमे लौहित्य-लक्षणातिशयाधायकत्वमस्तीति तद्वदस्त्वित्यप्रयोजकत्वं वाऽनैकान्त्यं वा हेतोः स्यादिति शङ्कते **ननु लाक्षारसेति** । बीजपूरो दाडिमतरुः । तस्य लाक्षारससेके सति तत्कुसुमे लौहित्यविशेषोऽसंबद्धेऽपि जायत इति । अन्ये तु बीजपूरो वृक्षविशेषः । तत्कुसुमे शुक्ले लौहित्यं जायत इत्याहुः ॥ **नाशोत्पादेति** । पूर्वनाशोत्तररूपोत्पादेत्यर्थः । ननु परेण क्षणस्याखण्डस्यैवाङ्गीकारादनुमानप्रयोक्तृमते च सखण्डत्वाद्यभ्युपगमादखण्डक्षणपक्षीकारे चाश्रयासिद्धिः, स्वरूपासिद्धिश्च स्यात् । असंबद्धत्वादेरन-भ्युपगमादित्यत आह **अत्र च परसिद्धेति** ।

या० — ॐ **उत्तरोत्पादे च पूर्वनिरोधात्** ॐ ॥ **तदा पूर्वोक्तानामिति** । 'उत्तरोत्पत्ति-मात्रेणे'त्यादि'नोत्तरे वासनाकर' इत्यन्तेन श्लोकत्रयेणोक्तानामुत्तरोत्पाद एव नष्टत्वकार्यभिन्नकालत्वकार्या-सम्बद्धत्वानां हेतूनामित्यर्थः ॥ **सर्वत्र साध्यनिर्देशादिति** । उक्तहेतुत्रयप्रतिपादकश्लोकेषु संस्कारना-धायकत्वरूपसाध्यस्य तत्तद्द्वितीयार्धेन निर्देशादित्यर्थः ॥ **उक्ताकाङ्क्षेति** । नन्वस्तूत्तरोत्पाद एव पूर्वस्य निरोधस्तथाऽपि कुतः पूर्वस्योत्तरस्मिन्संस्कारानाधायकत्वमिति । नन्वेककालीनत्वाभावेपि कुतः संस्कारार्प-कत्वं न स्यादिति चोक्ताप्रयोजकत्वशङ्काकुलि(ण्ठि)तत्वमेवेत्यर्थः।यदि पूर्वहेतुद्वयमपि साक्षात्संस्कारानाधायक-त्वस्यैव साधकमित्यङ्गीक्रियते तदोक्ताप्रयोजकत्वशङ्काद्वयेन प्रतिबन्धः स्यात् । अत एव परम्परा सङ्कल-नेन ज्ञापितेति भावः । अनुव्याख्याने सर्वत्र परमसाध्यनिर्देशस्तु सर्वथा पूर्वस्योत्तरे वासनाकरत्वं नास्तीति सूचयितुमिति ज्ञातव्यम् । **मृगमदः** कस्तूरी । **ननु लाक्षारसेति** । बीजपूराङ्कुरे यदि लाक्षारससेकः क्रियते तर्हि तदीयकुसुमेष्वत्यन्तं लौहित्यमुत्पद्यते । न हि तत्र लौहित्योत्पत्तिकाले लाक्षारसोऽस्ति । तस्य पूर्वमेव नष्टत्वात् । तद्वत्प्रकृतोदाहरणमपि किं न स्यादित्यर्थः । तथा च तत्रोक्तहेतूनां व्यभिचार इति भावः ॥ **निरन्वयेति** । निरन्वयौ कारणान्वयशून्यौ विनाशोत्पादौ तयोरनभ्युपगमादित्यर्थः । लाक्षारसरूपकारणस्य यथोत्तरत्रान्वयो न स्यान्न तथाऽत्यन्तं विनाशः । लौहित्योत्पादोऽपि न कारणान्वयशून्यः, किन्तु लौहित्योत्पत्तिकाले लाक्षारसः कारणात्मना बीजपूर-सम्बद्ध एवास्त्यतो न व्यभिचार इति भावः । ननु पूर्वक्षण उत्तरक्षणे संस्काराधायको न भवती-त्यादिप्रतिज्ञावाक्येषु पूर्वोत्तरक्षणमात्रावस्थायि वस्त्वपि प्रतिपाद्यतया विवक्षितमिति वाच्यम् । अन्यथा असङ्गतिप्रसङ्गात् । परेण हि पूर्वपूर्वपर्वताद्याहितसंस्कारभाजामुत्तरोत्तरेषां पर्वतादीनां पक्षत्वादिकमुपपद्यत इत्युक्तत्वेन तदभावस्यैवास्माभिः साधनीयत्वात् । तथा चास्मन्मते क्षणिकस्य वस्तुन एवाभावादाश्रया-सिद्धिः तदुत्पाद एव विनष्टत्वादित्यन्त्यस्य हेतोः स्वरूपासिद्धिश्च स्यादित्यत आह **अत्र च परसिद्धेति** ।

ख० — **लाक्षारसाहितेति** । लौहित्यविशेषणम् ।

**सु० — भवेदेतद्यदि कारणस्य कार्योत्पाद एव विनाशः स्यात् । स एव कुतः सिद्ध इत्यत आह** क्षणमात्रमिति ।

**अनु०** — क्षणमात्रमवस्थानं स्वीकृतं सर्ववस्तुषु ॥

**कार्यकारणयोस्तावदुत्तरपूर्वत्वमावश्यकम् । यौगपद्ये कार्यकारणभावव्याघातात् । ततः पूर्वक्षणवर्ति कारणं यदि कार्यक्षणेऽपि स्यात्तदा सर्ववस्तूनामङ्गीकृतं क्षणमात्रमवस्थानं भज्येत । अतः क्षणिकत्वाभ्युपगम एवोत्तरोत्पादे च पूर्वनिरोधं गमयतीति ।**

**शे० — भवेदेतदिति ।** कारणस्य कार्येणासम्बद्धत्वमित्यर्थः । ननु च कार्यकारणयोर्यौगपद्या-श्रयणेनापि क्षणमात्रावस्थायित्वनिर्वाहान्न तेन तदुत्पाद एव पूर्वस्य विनाशसिद्धिरित्यत आह **कार्यकारणयोरिति ॥ यौगपद्य इति ।** तथा सति कारणत्वव्यापकस्यानन्यथासिद्धनियतपूर्ववृत्तित्वस्य कार्यत्वव्यापकस्य चानन्यथासिद्धनियतपश्चाद्भावित्वस्य च प्रकृते व्यावृत्त्या तद्व्याप्यकारणत्वकार्यत्वयोरपि व्यावृत्तिध्रौव्यादिति भावः ॥

**या० — तदा सर्ववस्तूनामिति** । द्विक्षणावस्थायित्वप्राप्त्येत्यर्थः ।

**सु० — स्यादेतत् । कारणं क्षणस्य पूर्वविभागे लब्धसत्ताकं मध्यविभागे कार्यमुत्पाद्या-परविभागे तत्र संस्कारमाधाय नश्यतीत्यङ्गीकारे न कोऽपि दोष इत्यत आह** पूर्वेति ।

**अनु०** — पूर्वमध्यापरकलाविकलः क्षण इष्यते ॥

**अत्र विभागमात्रं कलोच्यते । पूर्वापरयोरभावे तन्निरूप्यमध्याभावः सिद्धः । इष्यते सौगतैः ।**

**शे० — न कोऽपि दोष इति ।** कार्यकारणभावव्याघातलक्षणो वाऽसम्बन्धप्रयुक्तः संस्काराना-धानलक्षणो वेत्येवं न कोऽपि दोष इत्यर्थः । ननु 'अष्टाविंशतिनिमेषास्तु काष्ठास्त्रिंशत्तु ताः कलाः । तास्तु त्रिंशत्क्षणा' इति स्मरणात्क्षणस्य पूर्वमध्यापरकलाराहित्याभ्युपगमेऽपि सभगत्वमात्राभ्युपगमान्न दोष इत्यत आह **अत्रेति** । न तूदाहृतवचनेनोक्तः कालविशेष इत्यर्थः । ननु पूर्वोत्तरविभागयोरिव न मध्यविभागस्याप्यभावोऽभ्युपगन्तुं शक्यते । तथा सति क्षणस्य निःस्वरूपत्वेन शून्यत्वापातादित्यतो नात्र स्वरूपेण मध्यविभागभावोऽभिधीयते, येन क्षणस्य शून्यतापत्तिरपि तु तस्मिन्मध्यत्वाभाव एव । तस्य पूर्वापरविभागनिरूप्यत्वेन तदभावेऽभावनियमादित्याह **पूर्वापरयोरिति** । ननु च क्षणे पूर्वमध्या-परविभागानां प्रामाणिकैरङ्गीकारात्कथं तदनङ्गीकारोक्तिरित्यत आह **सौगतैरिति** ।

**स०** — ननु क्षणस्य नेकभागात्मककलाराहित्याभ्युपगमेऽपि सभागत्वमात्राभ्युपगमान्न दोष इत्यत आह **अत्रेति** । ननु पूर्वोत्तरभागयोरनभ्युपगमेऽपि मध्यत्वमङ्गीकार्यम् । अन्यथा निस्स्वरूपत्वेनासत्त्वापातात् । तथा च कथं मध्याभावाभिधानमित्यतो नात्र स्वरूपेण तदभावोऽभिधीयते, येनासत्त्वापत्तिः । अपि तु मध्यत्वाभाव एव । तस्य पूर्वापरनिरूप्यस्य तदभावेऽभावनियमादित्याह **पूर्वापरयोरिति** । क्षणेऽप्यनेकविशेषाणां प्रामाणिकैरभ्युपगमात् कथं विकल इष्यत इत्युक्तिः इत्यत आह **सौगतैरिति** ।

**प०** — षोडशो भागः कलेति भ्रांतिं निराह **अत्रेति** । अत्र भागमात्रं कलोच्यते अन्ये तु 'अष्टादशनिमेषास्तु काष्ठास्त्रिंशत्तु ताः कलाः । तास्तुत्रिंशत्क्षण' इत्युक्ते कथं क्षणे कलादिराहित्योक्तिरित्यत आह **अत्रेति** व्याचक्षते । पूर्वोत्तरकलावैकल्यस्यैव परेणोक्तेः कथं मध्यवैकल्यानुवाद इत्यत आह **पूर्वापरयोरिति** ॥ **परोक्ततर्कस्य प्रतितर्कपराहत्युक्तिः** ॥

**या०** — ननु 'अष्टादशनिमेषास्तु काष्ठास्त्रिंशत्तु ताः कलाः । तास्तु त्रिंशत्क्षण' इति वचनात्कथं क्षणे पूर्वमध्यापरकलाराहित्यमुच्यत इत्यत आह **अत्र विभागमात्रमिति** । न तूदाहृतवचनोक्तकालविशेष इत्यर्थः । ननु पूर्वापरविभागयोरिव मध्यविभागस्याप्यभावे क्षणस्य शून्यतापत्तिरत आह **पूर्वापरयोरिति** । न स्वरूपेण मध्यमविभागाभावोऽभिधीयते येन क्षणस्य शून्यतापत्तिः, अपि तु तस्मिन्मध्यमत्वाभाव एव । तस्य पूर्वापरविभागनिरूप्यत्वेन तदभावेऽभावादित्यर्थः । ननु क्षणे पूर्वमध्यापरविभागानां प्रामाणिकैरङ्गीकृतत्वात्कथमेतदित्यत आह **सौगतैरिति** ।

**सु०** — **एवं तर्कस्य प्रतितर्कपराहतिमभिधायेदानीं यथा स्थायिनः सत्त्वानुपपत्तिरेवं क्षणिकस्यापि तदनुपपत्तेरननुकूलता नाम तर्कदोष इति प्रतिपादयितुं सूत्रम्** ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ इति । **तद्व्याचक्षाणस्तावद्विकल्पेन तत्पृच्छति पूर्वेति** ।

**अनु०** — **ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ** ॥

पूर्वभावभवं कार्यमुत तन्नाशसंभवम् ॥

**अर्थक्रियाकारित्वं हि सत्त्वं परस्याभिमतम् । तच्च वक्ष्यमाण (वि) कल्पद्वय(येन)व्याप्तम् । तृतीयप्रकारानिरूपणाम् । न च तत्क्षणिके संभवति । तथा हि क्षणिकाद्भावाद्भवत्कार्यं किं पूर्वस्य कारणस्य भावे भवति । कारणसत्तासमानकालीनसत्तमिति यावत् । उत तस्य कारणस्य नाशे सति संभवतीति** ।

आद्ये दोषमाह यौगपद्यमिति ।

यौगपद्यं सति भवेदुत्पाद्यानामशेषतः ॥

सति कारणे । कार्यं भवति चेत् तर्हीति शेषः । क्षणिकं हि कारणम् । कार्यं च तत्सत्तासमानकालीनसत्त्वं चेत्कार्यकारणयोः सहोत्पाद इत्युक्तं स्यात् । क्षणे विभागाभावस्योक्तत्वात् तत्तत्कार्याणामप्ययमेव न्याय इति तत्सन्तानभाविना(म)मशेषकार्याणां यौगपद्यं स्यात् । तच्च प्रत्यक्षादिविरुद्धमिति । अत्र यद्यपि युगपद्भवतोः कार्यकारणभावानुपपत्तिरपि दूषणम् । तथाऽपि तच्छिष्यैरेव ज्ञातुं शक्यत इति, 'उभयथा च दोषादि'ति सूत्रे कथितमिति वा (चा)त्र नोक्तम् ।

द्वितीयं निराकरोति विनाशे चेदिति ।

विनाशे चेन्न तत्कार्यं ॥

कारणस्य कार्यं भवेत्तर्हीति शेषः । तत्तस्य कार्यं न भवतीत्यापन्नम् । अन्यथा सर्वस्य सर्वं कार्यं स्यात् । न ह्यानन्तर्यमात्रेण कार्यकारणभावः । तथात्वे विनाशकार्यत्वप्रसङ्गात् । आनन्तर्यस्यान्यापेक्षयाऽपि सत्त्वात् । सादेश्यादेरपाकृतत्वात् । एवमन्यस्यापि कार्यं न भवतीति न कार्यं स्यादकारणं वा । उभयथाऽपि पूर्वस्यार्थक्रियाविरहादसत्त्वप्राप्तिरिति । सूत्रकृता सौगताभ्युपगतं पक्षं प्रधानीकृत्य दूषणमुक्तम् । भाष्यकृता त्वभावस्य भावसापेक्षत्वात्तेन क्रमेणातोऽर्थविरोधाभावः ।

शे० — ॥ ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ वक्ष्यमाणकल्पद्वयव्याप्तमिति । तदन्यतरव्याप्तमित्यर्थः । ननु वक्ष्यमाणप्रकारद्वयेनेव विधान्तरेणाप्यर्थक्रियाकारित्वसम्भवान्न तस्य तद्व्याप्यत्वमित्यतो वक्ष्यमाणप्रकारद्वयस्य परस्पराभावरूपतयाऽन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वेन प्रकारान्तराभावात्तत्सिद्धिरित्यभिप्रेत्य विधान्तराभावमाह तृतीयेति । अस्त्वर्थक्रियाकारित्वस्य वक्ष्यमाणकल्पद्वयव्याप्यत्वं किं तावताऽपीत्यतः क्षणिकेऽर्थक्रियाकारित्वरूपसत्त्वव्यापकस्य वक्ष्यमाणकल्पद्वयस्यासम्भवेन व्यापकव्यावृत्त्या तद्व्याप्यस्यार्थक्रियाकारित्वरूपसत्त्वस्यापि व्यावृत्तिसिद्धेर्नाप्रयोजकत्वमित्यभिप्रेत्य क्षणिके सत्त्वव्यापकस्य पक्षद्वयस्यासम्भवमाह न चेति । किं तत्सत्त्वव्यापकं पक्षद्वयं कथं च तस्य क्षणिके असम्भवो येन सत्त्वानुपपत्तिः स्यादित्यतो व्यापकीभूतपक्षद्वयप्रदर्शनपूर्वकं तदसम्भवमुपपादयितुमाह तथा हीति । यौगपद्यमित्यादेराद्यपक्षानुवादतासिद्ध्यर्थमपेक्षितं पूरयति सतीति ॥ उक्तत्वादिति । 'पूर्वमध्यापरकलाविलकः क्षण इष्यत' इत्यादिनेति शेषः । ज्ञातुं शक्यत इतीत्यत्र नोक्तमित्यनेन

सम्बन्धः । नन्वेवमतिप्रसङ्ग इत्यतोऽत्रानुक्तौ विशेषनियामकं चाह उभयथा चेति ॥ कथञ्चित्)नमिति । कारणे सति कार्यं भवत्येवेति नियमे सर्वदा कार्यभावात् न कार्यकारणभावविशेष इति भाष्यानुसारादित्यर्थः । अन्यथेति । पूर्वमसतोऽपि कारणत्वे कार्यत्वाभिमतस्यापि कारणत्वाभिमतमपि कार्यं स्यादित्यर्थः । ननु विनाशेऽपि पौर्वापर्यमात्रेण कार्यकारणभावव्यवस्था भविष्यतीत्यतः किमत्र तन्मात्रं नियामकं किं वा सादेश्यसारूप्यविशिष्टपौर्वापर्यमिति विकल्पद्वयं मनसि निधायाद्यपक्षे दूषणमाह न हीति । अन्यापेक्षयाऽपीति । विनाशापेक्षयाऽपीत्यर्थः । द्वितीयं दूषयति सादेश्यादेरिति । अपाकृतत्वादिति । 'विरलपरमाणुभ्यो मिलितपरमाणूनां, मिलितपरमाणुभ्यश्च विरलानामनधिपतीन्द्रियेभ्योऽधिपतीन्द्रियाणाम-धिपतीन्द्रियेभ्यश्चानधिपतीन्द्रियाणामुत्पत्त्यङ्गीकारादि'त्यादिना पूर्वत्रेति शेषः । अङ्गीकृत्य पूर्वस्य कारणत्वमुत्तरस्य कार्यत्वं च तस्य तत्कार्यत्वं न स्यादित्यापादितम् । वस्तुतस्तु उत्तरस्य कार्यत्वमेव न स्यात् । पूर्वस्य च कारणत्वमेव न स्यात् । उत्तरस्य तत्कार्यत्वाभावस्योपपादितत्वात् तेनैव न्यायेनान्यकार्यत्वाभावस्यापि वक्तुं शक्यत्वेन तस्य कार्यताया एवायोगात् । पूर्वस्य चोत्तरकारणत्वाभावस्योपपादितत्वात्तन्न्यायेनान्यकारणत्वाभावस्यापि सिद्धत्वेन कारणत्वायोगादित्याशयवानाह एवमिति । अस्तूत्तरस्य तत्कार्यत्वाभावः पूर्वस्याकारणत्वं चेत्यत आह उभयत्रापीति । उत्तरस्य तत्कार्यत्वाभावे पूर्वस्य अकारणत्वे चेत्युभयत्रेत्यर्थः । तस्य तत्कार्यत्वाभावे तद्रूपार्थक्रियाविरहादकारणत्वे च सर्वथैवार्थक्रियाविरहादिति भावः । ननु विकल्पितपक्षद्वयदूषणपरत्वात् 'असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा' 'यौगपद्यं सति भवेदि'त्यादिसूत्रभाष्ययो , सूत्रे पक्षद्वयदूषणे यः क्रमस्तेनैव भाष्ये भवितव्यम् । भाष्ये वा यस्तत्र क्रमस्तेनैव सूत्रेऽपि भवितव्यम् । तत्कथं पक्षद्वयनिरासपरसूत्रभाष्ययोर्भिन्नभिन्नक्रमवत्ता इत्यतः सूत्रे पक्षद्वयदूषणक्रमनियमे हेतुरन्यो विवक्षितो भाष्ये च तन्नियमे हेतुरन्यो विवक्षित इति भिन्नभिन्नक्रमहेतुविवक्षया भिन्नभिन्नक्रमवत्त्वोपपत्तिरित्यभिप्रेत्य तयो क्रमनियमे विशेषहेतू दर्शयति सूत्रकृतेति ॥

स० उक्तत्वात् 'पूर्वमध्यापरकलाविकल' इत्यादिना । नन्वानन्तर्यस्य अन्यविवक्षयाऽपि सत्त्वात् कारणविनाशेऽपि जायमानकार्यं तत्कार्यं न स्यात् । किं तु विनाशकार्यं स्यादित्यापादनमयुक्तम् । पश्चाद्भावमात्रस्यातिप्रसक्तत्वेऽपि कारणत्वे सादेश्यसारूप्ययोर्नियामकत्वाभ्युपगमेन सादेश्यादेर्विनाशादिनाऽभावेन तदकार्यत्वसंभवादित्यत आह सादेश्यादेरिति । 'विरलपरमाणुभ्यो मिलितानां मिलितेभ्यश्च विरलानां तथा अनधिपति–इन्द्रियेभ्योऽधिपति- इन्द्रियाणां तेभ्यश्च अनधिपति–इन्द्रियाणामुत्पत्त्यङ्गीकारादि'त्यादिना सादेश्यादेरपाकृतत्वादित्यर्थः । एवमिति विपर्ययपर्यवसाने बाधात् विपर्ययापर्यवसायित्वमित्येवमित्यर्थः । स्थायित्वप्रमाणस्य निर्बाधत्वस्य व्युत्पादितत्वात् । तावतैव विपर्ययापर्यवसानादेः सिद्धत्वेन पृथग्व्युत्पादनस्याकर्तव्यत्वादेवमित्यतिदेशमात्रं कृतमिति भावः ।

प॰— ॐ **असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** ॐ ॥ **इति सूत्रे कथितमिति** । सूत्रार्थस्तन्त्रदीपिकायां व्यक्तः ॥ **इति शेष इति** । तत्र कारणस्येत्यस्य विनाशे चेदित्यनेनान्वयः ॥ **अन्यथेति** । नष्टतया कारणस्याविद्यमानत्वेप्युत्पद्यमानस्य तत्कार्यत्व इत्यर्थः । नियतानन्तर्यं वा यथाकथञ्चिदानन्तर्यं वा कार्यकारणभावे नियामकम् ॥ आद्ये दोषः **तथात्व इति** । अन्त्ये दोषः **आनन्तर्यस्येति** । यद्वा कारणविनाशकाल एव कार्यस्योत्पत्तेः पौर्वापर्यभावाभावात्कथं विनाशकार्यत्वापादनमित्यत आह **आनन्तर्येति** । ननु समानदेशत्वं सादृश्यं वा नियामकं कार्यकारणभावे, अतो न 'सर्वं सर्वस्य कारणं स्यादि'त्युक्तदोष इत्यत आह **सादेश्यादेरिति** । 'विरलपरमाणुभ्यो मिलितानां, मिलितेभ्यश्च विरलानामुत्पत्त्यङ्गीकारादि'त्यादिनाऽपाकृतत्वादित्यर्थः । असति प्रतिज्ञेतिसूत्रानुरोधाद्विनाशे चेदिति कल्पस्य पूर्वमुक्तिः स्यादित्यत आह **सूत्रकृतेति** ।

**या॰**— ॐ **असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** ॐ ॥ **सूत्रे कथितमिति** । कारणे सति कार्यं भवत्येवेति नियमाङ्गीकारे दोषतया कथितमित्यर्थः । तथा हि भाष्यम् । 'कारणे सति कार्यं भवत्येवेति नियमे सर्वदा कार्यभावान्न कार्यकारणभावविशेष' इति ॥ **अन्यथेति** । पूर्वमसतोऽपि कारणत्व इत्यर्थः । किं नियतमानन्तर्यं कार्यकारणभावे नियामकमुत यथा कथञ्चिदानन्तर्यमिति विकल्पं मनसि निधायाद्यं दूषयति **तथात्व इति** । द्वितीयं दूषयति **आनन्तर्यस्येति** । यथाकथञ्चिदानन्तर्यस्येत्यर्थः ॥ **अन्यापेक्षयेति** । भिन्नदेशीयापेक्षया विसदृशापेक्षया चेत्यर्थः । सादेश्यादेरित्यत्रादिपदेन सादृश्यसंग्रहः ॥ **अपाकृतत्वादिति** । 'विरलपरमाणुभ्यो मिलितानां, मिलितेभ्यश्च विरलानामुत्पत्त्यङ्गीकारादि'त्यादिनाऽपाकृतत्वादित्यर्थः ।

**श्री॰**— ॐ **असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा** ॐ ॥ **अन्यथा** पूर्वमसतोऽपि कारणत्वे । **सर्वं** पूर्वं विद्यमानम् । **सर्वस्य** पश्चाद्भाविनोऽपि पदार्थस्य; कार्यं स्यादित्यर्थः । **एवमन्यस्यापीति** । उक्तविकल्पाभ्यां कारणत्वेनाभिमतस्य कार्यं यथा न भवत्येवमन्यस्यापि कार्यं न भवतीत्यर्थः ।

सु॰ — **नन्वस्ति तावत्प्रतिक्षणं कार्योत्पत्तिः । न च कार्यं कारणेन विनोत्पत्तुमलम् । तथा सति नित्यं सत्त्वमसत्त्वं वे(चे)त्यापत्तेः ।** अतः **कार्योत्पत्तिरेवान्यतरपक्षदोषमाभासयिष्यति । पक्षान्तरं वा ग्राहयिष्यतीत्यत आह** कार्योत्पत्तौ चेति ।

**अनु**— कार्योत्पत्तौ च का प्रमा ॥

स्यादेतद्यदि प्रतिक्षणं कार्योत्पत्तिः प्रमाणवती स्यात् । न चैतदस्ति । न च स्वाङ्गीकारमात्रेणार्थान्तराक्षेपसामर्थ्यमतिप्रसङ्गादिति । नन्वस्ति, यत्सत्तत्क्षणिकं यथा देहादि, सच्च विवादपदमिति प्रतिक्षणं कार्योत्पत्तौ प्रमाणमिति चेन्न । अस्यैव निराक्रियमाणत्वात् । देहादीनाम(देर)पि क्षणिकत्वाभावेन दृष्टान्तस्य साध्यविकलत्वाच्च ।

ननु देहादेः पूर्वोत्तरक्षणयोः परिमाणभेदेन भेदसिद्धौ क्षणिकत्वसिद्धिरित्युक्तमित्यत आह अभेदेऽपीति ।

अभेदेऽपि विशेषेण देहदीपफलादिषु ॥
विशेषदर्शनं युक्तमस्माकम् ॥

पूर्वोत्तरक्षणयोरिति शेषः । विशेषेण आरम्भवादाद्वैलक्षण्येन । आदिपदेनांकुरादि । विशेषदर्शनं परिमाणभेददर्शनम् । अस्माकं परिणामवादिनां मते । अयमर्थः । आरम्भवादिनो हि परिमाणं यावद्द्रव्यभाव्यभ्युपयन्ति । अवयवसंख्यातिशयानतिशयायत्तत्वात्परिमाणभेदस्य । अवयवापचये द्रव्यविनाशस्यावयवोपचये च तदुत्पादस्यावर्जनीयत्वात् । अतस्तेषां परिमाणभेदो द्रव्यं भिन्द्यादेव । अस्माकं त्ववस्थितमेव द्रव्यमवयवोपचयापचयाभ्यां त(त्त) परिमाणकतया विक्रियत इति दर्शनम् । तत्र परिमाणभेदो न भेदमाक्षिपतीति ।

---

शे० - अस्यैव निराक्रियमाणत्वादिति । ततश्च प्रतिक्षणं विश्वोत्पत्तेः प्रामाणिकत्वसिद्धौ तद्बलादुक्तप्रकारद्वयातिरिक्तप्रकारसिद्धिस्तत्सिद्धौ च तमादाय क्षणिकस्यार्थक्रियाकारित्वनिर्वाहेनाननुकूलत्वाप्राप्त्या तर्कस्यानाभासत्वसिद्धेः तत्साचिव्यादनुमानप्रामाण्यसिद्धेस्तेन विश्वस्य क्षणिकत्वसिद्धिरित्यन्योन्याश्रयः स्यादिति भावः । देहादीनामित्यादिपदेन दीपादेः परिग्रहः । परिमाणभेदेन भेदसिद्धाविति । परिमाणस्य यावद्द्रव्यभावित्वेन तद्भेदे वक्ष्यमाणरीत्या द्रव्यभेदस्यावश्यकत्वादिति भावः ॥ आरंभवादाद्वैलक्षण्येनेति । विशेषपदस्य परिमाणभेदपरतायाः पूर्वोत्तरक्षणयोर्द्रव्यभेदप्रसञ्जकतयाऽयोगादिति भावः । ननु भवतामन्यापेक्षया को विशेषो येनैवमुच्यत इत्यतोऽन्यापेक्षया विशेषसमर्पकतया अस्माकमित्येतत्तात्पर्यमाह अस्माकमित्यादिना । किं परिणामवादिनामारम्भवादाद्वैलक्षण्यमित्यतस्तद्दर्शयितुमाह अयमर्थ इति । इतीत्यस्येत्ययमर्थ इति पूर्वेण संबन्धः ।

सु० — किञ्च फलादीनां पूर्वोत्तरक्षणयोर्भेदः साध्यते, उताभेदाभावः । आद्ये सिद्धसाधनम् । भेदस्यास्माभिरप्यङ्गीकृतत्वात् । तावता क्षणभङ्गासिद्धेः । द्वितीये दोषमाह अनुभूतेत इति ।

**अनु०**— अनुभूतितः ॥

विशेषदर्शनं मानं यदि न स्थैर्यदृक्कुतः ॥

**तदिदं फलमिति प्रत्यभिज्ञया पूर्वोत्तरक्षणयोरभेदसिद्धेर्बाधितविषयमनुमानमिति शेषः । भ्रान्ता प्रत्यभिज्ञा नाभेदं साधयितुमलमिति चेत् । तर्हि भ्रान्तं परिमाणभेददर्शनं न भेदसाधनायालमिति ब्रूमः । परिमाणभेददर्शनं बाधकाभावात्प्रमाणमेवेति चेत्तत्राह** विशेषेति ।

**तर्हि स्थैर्यदृक्कुतो न मानम् । तस्या अपि बाधकरहितत्वात् । विशेषदर्शनं बाधकमिति चेत् । तर्हि स्थैर्यदर्शनं कुतो न बाधकम् । अतोऽनुपलभ्यमानविशेषयो(रनयो)र्बाध्यबाधकभावायोगादन्योन्यप्रतिपक्षताननुभवाच्चान्यतरपक्षपातं परित्यज्य भेदाभेदविषयतयैव व्यवस्थापनं युक्तम् । अन्यथा दृष्टान्ते साध्यसन्देहेनापि परानुमानं दुष्टं स्यादिति । एवं तर्काङ्गान्तरवैकल्यं स्वयमूहनीयम् ।**

**शे०**— ननु भेदाङ्गीकारेण क्षणभङ्गसिद्धेरसन्मतप्रवेशः स्यादित्यतोऽभेदासहकृतपूर्वोत्तरक्षणवर्तिद्रव्यभेदस्यैव क्षणभङ्गसाधकत्वेन भेदमात्रस्य तदसाधकत्वान्न भेदमात्रेण क्षणभङ्गसिद्धिरिति नोक्तदोष इत्याशयेनाह **तावतेति** । 'दृश्यते प्रत्यभिज्ञात' इति पूर्वग्रन्थानुरोधेनात्रानुभूतिपदं प्रत्यभिज्ञापरं, तृतीयार्थे चायं तसिरित्यभिप्रेत्य व्याचष्टे **तदिदं फलमिति** । **प्रत्यभिज्ञयेति** । भ्रान्ता प्रत्यभिज्ञेत्यादौ भ्रान्तिर्भ्रान्तेति भावे क्तः ॥ **कुतो न बाधकमिति** । न च विशेषदर्शनस्य भ्रमत्वे सिद्धे बाधकाभावात्स्थैर्यदर्शनस्य प्रामाण्यसिद्धिस्तत्सिद्धौ च तद्बाधितत्वेन विशेषदर्शनस्य भ्रमत्वसिद्धिः स्यादित्यन्योन्याश्रय इति वाच्यम् । तथा सति स्थैर्यदर्शनस्य भ्रमत्वसिद्धौ बाधकाभावाद्विशेषदर्शनस्य प्रामाण्यसिद्धिस्तत्सिद्धौ च तद्बाधितत्वात्स्थैर्यदर्शनस्य भ्रमत्वसिद्धिरित्यन्योन्याश्रयस्य त्वत्पक्षे (सत्वपक्षेऽपि) समानत्वादिति भावः । विशेषदर्शनस्थैर्यदर्शनयोः कुतो न बाध्यबाधकभाव इत्यतो बाध्यताप्रयोजकस्य न्यूनबलत्वस्य बाधकताप्रयोजकत्वस्य चाधिकबलस्य प्रकृते विरहादिति भावेन हेतुगर्भं विशेषणमाह **अनुपलभ्यमानविशेषयोरिति** अस्तु तर्ह्युक्तरीत्या समानबलयोरनयोः परस्परप्रतिपक्षत्वमित्यत आह **अन्योन्येति** । तथा सति प्रतिपत्तॄणामुभयोदासीनत्वापत्तेरिति भावः । अवश्यं चैतदेवमित्याह **अन्यथेति** । निश्चितसाध्यवैकल्यस्येव सन्दिग्धतद्वैकल्यस्यापि दृष्टान्तदोषत्वादिति भावः ॥ **एवं तर्काङ्गान्तरवैकल्यमिति** । नीलादिकं यदि क्षणिकं न स्यात्तर्हि सन्न स्यादिति तर्कमूलभूताया यदक्षणिकं तत् सत् न इति व्याप्तेरुक्तरीत्याऽऽकाशे व्यभिचाराद्व्याप्तिवैकल्यम् । प्रत्यभिज्ञया स्थायित्वस्य समर्थितत्वेन तद्बाधितत्वात्क्षणिकमेवेति विपर्ययपर्यवसानानुपपत्तिश्चेत्येवं तर्काङ्गान्तरवैकल्यं स्वयमूहनीयमित्यर्थः ।

**प॰— अन्यथा दृष्टान्त इति ।** भेदाभेदविषयतयैव व्यवस्थापनाभाव इत्यर्थः ॥ **साध्येति ।** अभेदाभावेन भेदाभेदेन वेति संदेहेनापीत्यर्थः ॥ **एवं तर्काङ्गान्तरेति ।** आत्मनः क्षणिकत्वेनापाद्यापादकयोः सहदर्शनतन्नियमादेर्गृहीतुमशक्यत्वेन व्याप्तिवैकल्यम् । प्रत्यभिज्ञया स्थायित्वसिद्धेरुक्तर्यदि स्थायि स्यात्तर्हि सन्न स्यादिति तर्कस्य विपर्ययपर्यवसानायोगादित्येवमूहनीयमित्यर्थः ॥

**या॰— एवं तर्काङ्गान्तरेति ।** यदि नीलादिकं क्षणिकं न स्यात्तर्हि सन्न स्यादित्यत्राकाशे व्यभिचारेण व्याप्तिवैकल्यं, प्रत्यभिज्ञया स्थायित्वस्य समर्थितत्वेन तद्बाधात्क्षणिकमेवेति विपर्यये पर्यवसानासंभवश्चेति तर्काङ्गान्तरवैकल्यं स्वयमूहनीयमित्यर्थः ।

**श्री॰— विशेषदर्शनं** परिमाणभेददर्शनम् । **बाधकं** स्थैर्यदृशः । **न बाधकं** विशेषदर्शनस्य ॥ **अन्यथेति ।** एवं व्यवस्थापनमकृत्वा स्थैर्यदृग्विशेषदर्शनयोर्बाध्यबाधकभावः सत्प्रतिपक्षता वा यद्युच्यत इत्यर्थः । **दृष्टान्ते** फलादौ ॥ **साध्येति ।** क्षणिकत्वरूपेत्यर्थः ।

**सु॰— नन्वेतानि सूत्राणि कुतो व्युत्क्रमेण(मतो) व्याख्यातानि । उच्यते । उपोद्घातप्रक्रियया सूत्रकारेणैवादौ बाधकानि निराकृत्यान्ते निष्कण्टका प्रत्यभिज्ञोपन्यस्ता । भाष्यकारेण तु सुबोधत्वाय शिष्याकाङ्क्षाक्रमेणादौ प्रत्यभिज्ञामभिधायानन्तरं तद्बाधकानि परिहृतानीति ।**

**प्रतिसंख्येत्यादिसूत्रद्वयं भाष्य एव स्पष्टमिति नात्र व्याख्यातम् ।**

---

**शे॰— व्युत्क्रमेणेति ।** आदौ 'समुदाय' इति, 'इतरेतरेति', सूत्रद्वयमनन्तरम् 'अनुस्मृतेश्चे'ति तत 'आकाशे चाविशेषादि'ति तत 'उत्तरोत्पादे' चेति ततो 'असती'त्येवं व्युत्क्रमेणेत्यर्थः । यदि चानया प्रणाड्या व्याख्यानेऽस्ति किञ्चिन्नियामकमिति तथा व्याख्यानमुपपन्नमिति मन्यसे तर्हि तदनुरोधेनैव सूत्रनिर्माणक्रमस्यापि प्रसक्त्या क्रमान्तरेण तन्निर्माणानुपपत्तिरिति भावः । भिन्नभिन्नक्रमनिमित्ताश्रयणेन सूत्रभाष्ययोः प्रवृत्तेर्भिन्नभिन्नक्रमवत्त्वमित्यभिप्रेत्य सूत्रभाष्ययोस्तथा प्रवृत्तौ निमित्तविशेषमुपदर्शयति **उच्यत इत्यादिना ॥ प्रतिसङ्ख्येत्यादीति ।** प्रतिसंख्येति सूत्रप्रतीकग्रहणेन समस्ततत्सूत्रग्रहणमत्राभिमतम् । आदिपदेन 'उभयथा च दोषादि'ति सूत्रान्तरपरिग्रहः । ततश्च 'प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदादि'ति सूत्रम् 'उभयथा च दोषादि'ति सूत्रं चेत्येवं सूत्रद्वयमित्यर्थः ।

**प॰—** अत्र ॐ अनुस्मृतेश्चेत्यन्तिमसूत्रं व्याख्याय ॐ आकाशे चाविशेषात् ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ असतिप्रतिज्ञोपरोधो यौगपद्यमन्यथेति सूत्राणि व्याख्यातानि ॥ तत्र शङ्कते **नन्वेतानीति ।**

**च॰— निष्कण्टका ।** अप्रामाण्यज्ञानानास्कन्दिता ।

सु०— दुःखाभावं सुखं च हुरिति यदनूदितं तन्निराकरोति दिगिति ।

अनु०— दिक्सुखे च खदृष्टान्ताद्भावौ सच्चेत्क्वचिद्भवेत् ।

खदृष्टान्तादित्याकाशस्य भावत्वे यो न्यायोऽभिहितस्तस्मादिति हेत्वतिदेशः । धर्मिप्रतियोगिनिरपेक्षमेव विधिरूपेण प्रतीयमानत्वादित्यर्थः । सद्भावः क्वचिद्भवेच्चेत्सद्दृष्टान्तेनेति शेषः । अनेनान्यथा रूपादीनामपि भावत्वं न स्यादविशेषादिति बाधकं सूचयति । यद्यपि दिशो नाकाशाद्भिद्यन्ते । तथाऽप्याकाशस्य भागसद्भावं ज्ञापयितुं तासां ग्रहणम् । एकवचनं तु जात्यभिप्रायम् ।

एतेनाकाशे चाविशेषादिति सूत्रं प्रकारान्तरेण व्याख्यातं भवति । आकाशादीनां भावत्वसमर्थनेन पञ्चस्कन्धात्मकं विश्वमिति निरस्तम् । आत्मनो ज्ञानात्मकत्वं तु नास्माकं अनिष्टम् (विरुद्धम्) । क्षणभङ्गिताया निरस्तत्वात् । ज्ञानस्यापि ग्राहकतायाः परेणाभ्युपगतत्वात् । मोक्षस्तु चतुर्थे परीक्षिष्यते ॥ छ ॥

शे०— 'दिक्सुखे च खदृष्टान्ताद्भावावि'ति मूले खदृष्टान्तादित्यस्य खदृष्टान्तेनेत्यभिप्रायकत्वे मूले हेत्वनुक्तिप्रसङ्गः । आकाशभावतायाः परासम्मतत्वेन तस्य दृष्टान्तत्वानुपपत्तिश्च भवतीत्यतो नेदं दृष्टान्ताभिधानं, किन्तु हेत्वतिदेश एवेति न कोऽपि दोष इत्यभिप्रेत्य तत्परतया तद्योजयति खदृष्टान्तादितीति । तमेवाभिनयेन दर्शयति धर्मीति । तर्हि भाष्ये दृष्टान्तानभिधानप्रसङ्गो दोष इत्याशङ्क्य सच्चेत्क्वचिद्भवेदित्येतदेव तदभिधानमिति न तदनभिधानप्रसङ्गोऽपीत्यभिप्रेत्य तत्समर्पकतया तद्योजयति सद्भाव इत्यादिना । तर्हि रूपादिदृष्टान्ते नेत्येव वक्तव्यं, किमनया वक्रोक्त्येत्यतो विपक्षे बाधकसूचनद्वाराऽप्रयोजकताशङ्कानिरासार्थत्वान्न तदुक्तेरानर्थक्यमित्याशयेन तथोक्तेः प्रयोजनमाह अनेनेति ॥ नाकाशाद्भिद्यन्त इति । आकाशभाग एव दिशो न तु न्यायमत इव तस्मादर्थान्तरमित्यर्थः । ततश्चाकाशस्य भावत्वसाधकपूर्वग्रन्थेनैव तद्भागरूपदिशामपि भावत्वसिद्धेः पृथक् तद्भावत्वसाधनमनर्थकमित्याशयः । आकाशस्य सभागत्वे वादिनां विप्रतिपत्तेस्तन्निरासाय सभागत्वप्रतिपादन एव तात्पर्याद्भावत्वसाधने तात्पर्याभावान्नानर्थक्यमिति परिहरति तथाऽपीति ॥ एतेनेति । खदृष्टान्तादित्यादिभाष्येणेत्यर्थः ॥ प्रकारान्तरेणेति । 'आकाशस्याविशेषतः । अविशेषोऽखिलस्यापि सत्त्वात्किन्नानुमीयत' इति प्राचीनव्याख्यानापेक्षयाऽऽकाशे भावत्वसाधको यो न्यायस्तस्य सुखेऽप्यविशेषान्न सुखमभावरूपमिति प्रकारान्तरेण व्याख्यातं भवतीत्यर्थः । ननु 'पञ्चस्कन्धात्मना स्थितमि'ति प्रागनूदिताया विश्वस्य पञ्चस्कन्धात्मताया अनिरासाद्भाष्ये न्यूनत्वमित्याशङ्क्याकाशादीनां भावत्वसमर्थनपरपूर्वभाष्येणैव तन्निरासिद्धेः किं पृथक् तन्निरासेनेत्यभिप्रेत्य पृथक् तदनिरासो भाष्यकाराणामित्याशयेन भावत्वसमर्थनपरपूर्वभाष्येणैव तन्निराससिद्धिमाह आकाशादीनामिति । ननु च सन्तन्यमानं ज्ञानमेवात्मेति 'अरूपज्ञानसन्ततिमि'ति पूर्वप-

क्षग्रन्थे सूचिताया आत्मनो ज्ञानरूपताया अनिरासाद्भाष्ये न्यूनत्वमेवेत्यतस्तस्याः स्वसम्मतत्वेनानिरासोपपत्तेर्न न्यूनतेत्यभिप्रेत्य तस्या अविरुद्धतामाह **आत्मन इति** । ननु तथाऽपि 'आत्मानं च क्षणस्थितमि'त्यनूदिताया आत्मक्षणिकतायाः स्वसंमतत्वाभावेन निराकार्यत्वात्तदनिरासान्न्यूनत्वमेव भाष्य इत्याशङ्क्य तस्या अप्युत्तरोत्पादे चेति सूत्रव्याख्यानावसरे 'अतो ज्ञातं मयेत्यादि न ज्ञेयमनुमा कुत' इत्यादिना आत्मानात्मप्रपञ्चसाधारण्येन निरस्तत्वात्पुनस्तन्निरासापेक्षेत्याशयेनाह **क्षणेति** । नन्वात्मनो ज्ञानरूपताया उभयसम्मतत्वात्तत्र विवादासंभवेऽपि स्वमते ज्ञानरूपस्यात्मनो ग्राहकताऽप्यस्ति न तु परमत इत्यस्येव विप्रतिपत्तिविषय इत्यत आलयज्ञानरूपत्वादात्मनः परमते आलयज्ञानकर्तृत्वरूपतद्ग्राहकत्वाभावेऽपि तदतिरिक्तप्रवृत्तिज्ञानकर्तृतायास्तन्मतेऽपि भावेनोक्तरूपग्राहकताया अपि सत्त्वान्न तदंशस्यापि विप्रतिपत्तिविषयतेत्याह **ज्ञानस्यापीति** । तथाऽपि 'अरूपज्ञानसन्ततिं मोक्षमि'त्यनूदितमोक्षस्यानिरासान्न्यूनत्वमेवेत्यतस्तस्य 'ज्ञानं स्वरसभङ्गञ्चेत्र नित्यं सन्तानमिष्यते । बौद्धाभ्यामपराभ्यां तु तस्याप्युक्तानुमा रिपुरि'त्यादिना चतुर्थस्य द्वितीये निराकरिष्यमाणत्वादत्रानिरासो न दोषापादक इत्याह **मोक्षस्त्विति** ।

स० — **प्रकारान्तरेणेति** । 'आकाशस्याविशेषतः । अविशेषोऽखिलस्यापि सत्त्वात्किं नानुमीयते' इत्यादिना पूर्वं व्याख्यातत्वात् प्रकारान्तरेणेत्युक्तमित्यर्थः । **ग्राहकताया इति** । जीवस्य ज्ञानरूपत्वमभ्युपगच्छताऽपि सौगतेनालयज्ञानरूपत्वस्यैवाङ्गीकारेण तदतिरिक्तप्रवृत्तिज्ञानकर्तृत्वस्य स्वीकारादयुक्तं तन्मतेऽपि जीवस्य ज्ञानकर्तृत्वरूपग्राहकत्वमिति न तदंशे विप्रतिपत्तिरिति भावः ।

प० — **इति सूत्रं प्रकारान्तरेणेति** । आकाशे भावत्वसाधकन्यायस्य सुखेप्यविशेषाद्भावत्वं तस्य, अन्यथा नीलादेरपि भावत्वं न स्यादिति व्याख्यातमित्यर्थ. । विप्रतिपन्नप्रमेयान्तरं कुतो न निरस्तमित्यत आह **आकाशादीनामिति** । सुखं दिग्भागाश्चादिपदार्थः ॥ **निरस्तत्वादिति** । 'कार्यं च कारणं चे'त्यादाविति भाव ॥ **ज्ञानस्यापि ग्राहकताया इति** । ज्ञानरूपस्याप्यात्मनः ऽस्वप्रकाशताया इत्यर्थः ॥ **चतुर्थ इति** । अध्याये द्वितीयपादे 'तत्र मोक्षस्वरूपं तु वादिनः प्रतिभाश्रया(बला)दि'त्यादिना परीक्षिष्यत इत्यर्थः ॥ **मतद्वयनिरासः** ॥

या० — **एतेनाकाशे चेति** । आकाशे यो भावत्वसाधको न्यायस्तस्य सुखेऽप्यविशेषान्न सुखमभावरूपमिति सूत्रयोजनाऽत्र द्रष्टव्या । नन्वथाप्यात्मनः क्षणभङ्गता निराकार्येत्यत आह **क्षणभङ्गताया इति** । ननु सौगतैर्ज्ञानरूपस्यात्मन आलयत्वमेव स्वीकृतं, न ग्राहकत्वमतोऽस्ति तत्र विप्रतिपत्तिरित्यत आह **ज्ञानस्यापीति** । ग्राहकताया अपीत्यपिशब्दसम्बन्धः । अहमित्यात्मरूपज्ञानस्य न केवलमालयत्वं, किन्तु स्वग्राहकत्वमप्यस्तीति बौद्धैः स्वीकृतमतो न तत्र विवाद इति भावः । नन्वरूपज्ञानसन्ततिमित्यनूदितो मोक्षः कुतो न निराकृत इत्यत आह **मोक्षस्त्विति** ॥

श्री० — ननु दिशां बहुत्वाद्दिशश्च सुखं च दिक्सुखानीति वक्तव्यम् । दिक् च सुखं चेति विग्रहमित्यभिप्रेत्य दिक्सुखे इत्युक्तिः कथं । विग्रहकाले दिक् चेत्येकवचनायोगात्तासां बहुत्वादित्यत आह **एकवचनमिति** । विग्रहकाल इति शेषः ॥

**सु० — स्यादेतत् । वैभाषिकसौत्रान्तिकयोर्यः साधारणः स्वमतविरुद्धः सिद्धान्तः स एव सूत्रकृता निराकृतः । यस्तु सौत्रान्तिकस्य सिद्धान्तविशेषः 'प्रमाणं तावद्द्विविधम् । प्रमेयद्वैविध्यात् । तत्र ज्ञानातिरिक्तः सर्वोऽपि रूपादिप्रपञ्चोऽनुमेय एव न तु प्रत्यक्षः । ज्ञानं(तु) नीलाद्याकारं प्रत्यक्षवेद्यमि'ति । स कस्मान्न निराकृत इत्यत आह** विश्वमिति ।

**अनु०** — विश्वं प्रत्यक्षगं त्यक्त्वा तयोर्योऽनुमितं वदेत् ॥
मायावादिवदेवासावुपेक्ष्यो भूतिमिच्छता ॥

तयोः **वैभाषिकसौत्रान्तिकयोर्मध्ये** यः **सौत्रान्तिको** विश्वं **रूपादिकं** प्रत्यक्षगं त्यक्त्वा **रूपादेर्विश्वस्य प्रत्यक्षवेद्यतां वैभाषिकादिभिरभ्युपगतामनभ्युपगम्येति यावत्** । अनुमितं वदेत् **रूपादेर्विश्वस्यानुमानवेद्यतामङ्गीकुर्यात** । **मायावादिना तुल्यं वर्तत इति मायावादिवत्** । **एतदुक्तं भवति । यथा सर्वान्दुःसमयानपाकुर्वता(ऽपि) सूत्रकृता न मायावादोऽत्र पादे निराकृतः । तस्यात्यन्तनिर्दलस्योपेक्षैव कार्या । न त्वीषत्सदलैः साङ्ख्यादिसमयैः सह निरास इति ज्ञापनार्थम् । तथा बाह्यानुमेयतावादोऽपीति । ननु मायावादः सूत्रोत्पत्त्युत्तरकालभावी । तस्य कथं निरासप्रसक्तिः । मैवम् । 'अनादिकालतो वृत्ता' इत्युक्तत्वात् । अन्यथा साङ्ख्यादिनिरासस्याप्यप्रसक्तेरिति** ।

श० — **साधारण इति** । बाह्यार्थो घटादिः परमाणुपुञ्जरूपः क्षणिकः सन्नित्येवंरूप इत्यर्थः । ननु विश्वं त्यक्त्वेत्यत्र त्यागो नामानभ्युपगम एव वाच्यः । अन्यस्यासम्भवात् । न चासाविहास्ति । रूपादेर्विश्वस्य तेनाभ्युपगमादित्याशङ्क्य विश्वं प्रत्यक्षगं त्यक्त्वेत्यस्य विशिष्टनिषेधत्वाद्विशिष्टनिषेधस्य च सति विशेष्ये बाधे विशेषणविषयतायाः 'सविशेषणे ही'ति न्यायसिद्धत्वात्प्रत्यक्षवेद्यत्वरूपविशेषणविषयत्वप्राप्त्या रूपादेर्विश्वस्याभ्युपगमेऽपि तस्य प्रत्यक्षवेद्यताया अनभ्युपगमान्नानुपपत्तिरिति भावेन विशिष्टनिषेधस्य विशेषणविषयतया तात्पर्यमाह **रूपादेर्विश्वस्येत्यादि** । षष्ठ्यर्थसप्तम्यर्थयोः प्रकृतान्वयासम्भवेन मायावादिन इवेति वा मायावादिनीवेति वा षष्ठीसमर्थात्सप्तमीसमर्थाद्वा 'तत्र तस्येवे'त्यनेन वतेरसम्भवात्तदनुपपत्तिमाशङ्क्य 'तेन तुल्यं क्रिया चेद्वतिरि'ति लक्षणान्तरेण वतिप्रत्ययसम्भवान्न दोष इत्याशयेन तत्तुल्यक्रियतामुपदर्शयति **मायावादिनेति** । कथं सौत्रान्तिकस्य मायावा-

दिना तुल्यक्रियात्वमित्यतस्तदुक्तेस्तात्पर्यमाह **एतदुक्तं भवतीति** ॥ **तथा बाह्यानुमेयतावादोऽपीति** । अत्यन्तं निर्दलस्य बाह्यानुमेयतावादस्योपेक्षैव कार्या न त्वीषत्सदलैर्वैभाषिकादिभिः समयैः सह निरासः कार्य इति ज्ञापनार्थं बाह्यानुमेयतावादोऽप्यत्र पादे न निराकृत इत्यर्थः । **सूत्रोत्पत्त्युत्तरकालभावीति** तस्य सूत्रव्याख्यानरूपत्वाद्व्याख्यानस्य च पश्चात्तनत्वनियमात्सूत्रोत्पत्त्युत्तरकालभावित्वं मायावादस्येति भावः ॥ **उक्तत्वादिति** । एतत्पादारम्भसमर्थनावसर इति शेषः । तथा च सूत्रोत्पत्तेः प्रागपि माया-वादसत्त्वाद्युक्तैव तन्निरासप्रसक्तिरिति भावः ॥ **अन्यथेति** । अनादिकालतो वृत्तत्वव्यतिरेकेण तन्नि-रासप्रसञ्जकस्यान्यस्याभावादिति भावः ।

**प०— द्विविधमिति** । प्रत्यक्षानुमानभेदेनेति भावः । ननु मायावादिवदिति कथम् । तत्प्रतियोगिनः सौत्रान्तिकस्यासाविति प्रथमान्तनिर्देशेन मायावादी यथोपेक्ष्यः तथा सौत्रान्तिकोऽप्यु-पेक्ष्य इति वाच्यत्वात् तत्र प्रथमासमर्थात् इवार्थे वतिप्रत्ययस्य विधायकाभावादित्यत आह **मायावादिनेति** । तथा च 'तेन तुल्यं क्रिया चेद्वतिरि'ति सूत्रेण तृतीयासमर्थात्तुल्यार्थे वतिप्रत्ययः । उपेक्षणरूपक्रियातुल्यत्वस्योभयत्र भावादिति भावः । कथमनेनोक्तशङ्कानिरास इत्यत आह **एतदुक्तमिति । न मायावादोऽत्र पादे निराकृत इति** । कण्ठत इति योज्यम् । मताविशेषेणार्था-न्निराकरणस्योत्तरनये स्फुटत्वात् । **इत्युक्तत्वादिति** । एतत्पादादाविति भावः ।

---

**या०— मायावादिना तुल्यं वर्तत इति** । तथा च 'तेन तुल्यं क्रिया चेद्वतिरि'त्यनेनैवात्र वतिर्न 'तत्र तस्ये'त्यनेन, षष्ठीसप्तम्यर्थयोः प्रकृतेऽन्वयासंभवादिति ज्ञातव्यम् ।

**श्री०— द्विविधं** प्रत्यक्षमनुमानं चेति द्विविधमित्यर्थः । कुतो द्वैविध्यमित्यत आह **प्रमेयेति** । परोक्षापरोक्षरूपप्रमेयेत्यर्थः । 'तत्र तस्येवे'त्यस्यायोगादाह **मायावादिनेति** ॥ **अप्रसक्तेरिति** । तस्यापि सूत्रोत्पत्त्युत्तरकालीनत्वादित्यर्थः ।

**सु०— नन्वप्रतिषिद्धमनुमतं भवतीति न्यायेन नीलादेर्विश्वस्याप्रत्यक्षत्वं सूत्रकारस्या-भिमतमेवेति कुतो न कल्प्यते । (नैवं) न चैवं शक्यम् । प्रमाणाविरुद्धः प्रमाणानुसारी च सूत्रकारस्याभिप्रायः कल्पनीयः । न चायमर्थस्तथेत्याशयवानाह** सर्वेति ।

**अनु०—** सर्वप्रमाणसिद्धं यद्बुद्धेर्भेदेन सर्वदा ॥
कथं नु तस्य बुद्धित्वं ॥

**अयमत्रोत्तरक्रमः । नीलादेरर्थस्याप्रत्यक्षत्वं न वक्तुं शक्यते । नीलादिप्रतीतेरपरोक्ष-तायाः साक्षिसिद्धत्वात् । इन्द्रियव्यापारभावभावित्वेनानुमानसिद्धत्वाच्च । अथ मतम् ।**

**येनार्थेन यज्ज्ञानं जायते तत् तदाकारं भवति । तच्च ज्ञानं स्वप्रकाशतया स्वगतं नीलाद्याकारमपि साक्षात्कुरुते । अतोऽपरोक्षतयोपलभ्यमानस्य नीलाद्याकारनिकरस्य बुद्धिगतत्वान्न कश्चिद्दोष इति । अत्रेदमुपतिष्ठते । यदपरोक्षतयाऽवभासमानं नीलाद्याकारचक्रं बुद्धेर्भेदेन सर्वदा सर्वप्रमाणसिद्धम् तस्य कथं नु बुद्धित्वमङ्गीक्रियते । बहिर्मुखतयेदन्त्वेन ह्ययं नीलाद्याकारोऽपरोक्षमवभासते । न जात्वन्तर्मुखतयाऽहं नीलमिति । तथा नीलापरोक्षज्ञानसमनन्तरं नीलार्थी नियमेन बहिः प्रवर्तते । तेनानुमीयतेऽनेन बहिरर्थ एव साक्षात्कृत इति । न ह्यन्यत्र ज्ञानमन्यत्र प्रवृत्तिरिति युज्यते । अतिप्रसङ्गात् । मध्येऽनुमानं तु निरसिष्यते । एवमाप्तोऽपि किमपरोक्षतया पश्यसीति पृष्टोऽङ्गुलिं प्रसार्येदमिति बाह्यमेव ब्रवीत्यतस्त्रिभिरपि प्रमाणैरपरोक्षतयाऽवभासमानस्य नीलाद्याकारस्य बुद्धितो भेद एवावसीयते । न चेदं सर्वं भ्रान्तम् । कदाऽप्यन्यथाप्रतीत्यभावात् । विनैव बाधकेन भ्रान्तित्वाभ्युपगमेऽतिप्रसङ्गात् । अतोऽपरोक्षतयाऽवभासमानो नीलाद्याकारो बाह्य एव, न तु बुद्धिगत इति ।**

**शे०**— नन्वत्र मूले यदपरोक्षतयाऽवभासमानं नीलाद्याकारचक्रं बुद्धेर्भेदेन सर्वदा सर्वप्रमाणसिद्धं तस्य तद्बुद्धिगतत्वानुपपत्तिरेवोच्यते, न तु नीलादेर्विश्वस्याप्रत्यक्षत्वानुपपत्तिः । तत्कथमनेन तस्याप्रत्यक्षत्वनिरास इत्यतो नेदं साक्षात्तन्निरासकं, किन्तु साक्षात्तन्निरासकमन्यदेव । इदं तु तत्र प्राप्तानुपपत्तिपरिहारेण तन्निरासकमिति परम्परयैवेत्यभिप्रेत्य साक्षात्तन्निरासकप्रदर्शनपूर्वकं तत्र प्राप्तानुपपत्तिपरिहारकतया ग्रन्थं सङ्गमयितुमाह **अयमत्रोत्तरक्रम इति** ॥ **अत्रेदमिति** । एतदाशङ्कापरिहारार्थमिदं मूलमित्यर्थः । तत्कथमित्यतोऽपेक्षितपूरणपूर्वकं वाक्यं योजयति **यदपरोक्षतयेत्यादिनाऽङ्गीक्रियत इत्यन्तेन** । कथमपरोक्षतया प्रतीयमानस्य नीलाद्याकारचक्रस्य बुद्धेर्व्यावृत्ततया सर्वप्रमाणसिद्धत्वमित्यतस्तावत्तस्य प्रत्यक्षसिद्धतां दर्शयति **बहिर्मुखतयेति** । पराक्त्वेनेत्यर्थः । तस्यैवाभिनयेनोपदर्शनमिदन्त्वेनेति ॥ **अन्तर्मुखतयेति** । प्रत्यक्त्वेनेत्यर्थः । तस्यैवाभिनयेनोपदर्शनम् **अहं नीलमितीति** । सन्तन्यमानमहमित्याकारमालयविज्ञानमेव परमते आत्मेति दर्शयितुमहमित्युक्तम् । अन्यथा बुद्धिर्नीलमित्येवावक्ष्यदिति द्रष्टव्यम् । अनुमानसिद्धतामप्याह **तथेति** । अनेन नीलार्थी बहिरर्थमात्रसाक्षात्कारवान् नीलापरोक्षज्ञानसमनन्तरं नियमेन बहिःप्रवर्तमानत्वादित्यनुमानमुक्तं भवति । अप्रयोजकतामाशङ्क्य परिहरति **न हीति** ॥ **अतिप्रसङ्गादिति** । तथा सति पुरोदेशे रजतसद्भावज्ञानानन्तरं रजतार्थिनो देशान्तरे प्रवृत्तिः स्यादित्यतिप्रसङ्गः स्यादित्यर्थः । ननु नीलापरोक्षज्ञानेन स्वगतनीलाकारस्यैव ग्रहणेऽपि नीलार्थिनो बहिर्नियमेन प्रवृत्तिः सम्भवति । ज्ञानगतनीलाकारग्रहणबहिःप्रवृत्त्योर्मध्ये बाह्यनीलानुमानप्रवृत्त्या बाह्यनीलस्यापि ज्ञातत्वसम्भवात् । तथा हि । अपरोक्षतयाऽवभासमानो बुद्धिगतो नीलाद्याकारः सकारणकः

कादाचित्कत्वादित्यनुमानेन सकारणत्वसिद्धौ कारणान्तरस्यासम्भवेन बाह्यनीलाद्याकारस्यैव कारणत्वेनाभ्युपेयत्वादित्यत आह **मध्येऽनुमानं त्विति** । 'विश्वमन्यच्च किंप्रममि'त्येतद्ग्रन्थव्याख्यानावसरे स्यादेतदित्यादिना मध्येऽनुमानमाशङ्क्य 'बाह्यतयैव नीलाद्याकारस्य स्फुरणादि'त्यादिना निरसिष्यत इत्यर्थः । आगमसिद्धतामप्युपदर्शयति **एवमिति** । प्रत्यक्षादेर्भ्रमत्वान्न प्रमाणसिद्धत्वं तद्भेदस्येति शङ्कते **न चेदमिति** । एवं भाष्ये हेत्वंशं व्याख्याय 'कथन्नु तस्य बुद्धित्वमि'ति साध्यांशं तात्पर्यतो व्याचष्टे **अत इति** । अनेन तस्यापरोक्षतयाऽवभासमानस्य नीलाद्याकारस्य **कथं बुद्धित्वं** बुद्धिगतत्वं, न कथमपि, किन्तु तस्य बाह्यत्वमेवेति योजनोक्ता भवति ।

स० — **बहिर्मुखतया** पराक्त्वेनेत्यर्थ । **अन्तर्मुखतया** प्रत्यक्त्वेनेत्यर्थः । ननु च नीलापरोक्षज्ञानेन स्वगतनीलाकारस्यैव ग्रहणेऽपि तदनन्तरं नीलार्थिनो नियमेन बहिः प्रवृत्तिः संभवति । ज्ञानगतनीलाकारग्रहणबहिःप्रवृत्त्योर्मध्ये बाह्यनीलानुमानस्य सद्भावेन तेनानुमानेन बाह्यनीलस्यापि ज्ञातत्वेन तत्र प्रवृत्त्युपपत्तेः । तथा हि । अपरोक्षतया अवभासितो बुद्धिगतो नीलाकारः सकारणकः कादाचित्कत्वादित्यनुमानेन सकारणकत्वे सिद्धे कारणान्तरस्यासंभवात् बाह्यनीलाद्याकार एव कारणत्वेनाभ्युपेय इति । तथा च नोक्तदोष इत्यत आह **मध्येऽनुमानं निरसिष्यत इति** । अनुपदमेव 'स्यादेतदि'त्यादिना मध्ये अनुमानमाशङ्क्य 'बाह्यतयैव नीलाकारस्य स्फुरणादि'त्यादिना निरसिष्यत इत्यर्थः ।

प० — **अहं नीलमिति** । परेण ज्ञानस्यात्मत्वोपगमादेवमुक्तम् । ननु नीलाद्याकारस्य ज्ञानगतस्याऽऽकस्मिकत्वायोगेन तद्धेतुतया बाह्यार्थमनुमाय पश्चाद्बहिरर्थे प्रवर्तत इत्यत आह **मध्य इति** । नीलाद्याकारावभासबाह्यार्थप्रवृत्त्योर्मध्य इत्यर्थः ॥ **निरसिष्यत इति** । 'विश्वमन्यच्च किंप्रममि'त्येतद्व्याख्याने स्यादेतदित्यनुमानप्रकारमाशङ्क्य निरसिष्यत इत्यर्थः ।

या० — **स्वगतं** स्वस्वरूपभूतम् । एवं बुद्धिगतत्वादित्यादौ तदभिन्नत्वादित्येवार्थः । अतः 'कथं नु तस्य बुद्धित्वमि'त्यादि समञ्जसमिति ज्ञातव्यम् ॥ **बहिर्मुखतयेति** । पराक्त्वेनेत्यर्थः ॥ **अन्तर्मुखतयेति** । प्रत्यक्त्वेनेत्यर्थः ॥ **अहं नीलमिति** । परेण सन्तन्यमानमहमित्याकारमालयज्ञानमेवात्मा, तदेव च नीलाद्याकारं भवतीति स्वीकृतत्वादहं नीलमित्युक्तमिति ज्ञातव्यम् । ननु नीलार्थी नीलापरोक्षज्ञानसमनन्तरं बुद्धिगतोऽपरोक्षतयाऽवभासमानोऽयं नीलाद्याकारः. कादाचित्कत्वात्कारणसापेक्षः तच्च कारणमन्यन्न भवितुमर्हतीति नीलादिकमेव तथेत्यनुमाय बहिः प्रवर्तत इत्यत आह **मध्येऽनुमानमिति** । नीलापरोक्षज्ञानप्रवृत्त्योर्मध्य इत्यर्थः ॥ **निरसिष्यत इति** । अनुपदमेव 'विश्वमन्यच्च किंप्रमम्' इत्यत्रेति शेषः ।

सु० **किञ्च बाह्यार्थस्याप्रत्यक्षत्वे तदसिद्धिरेव स्यात् । प्रमाणाभावात् । तथा च बाह्यार्थाभ्युपगमो रिक्तः स्यादित्याह** विश्वमिति ।

अनु० — विश्वमन्यच्च किंप्रमम् ॥

अन्यत् **ज्ञानमिति शेषः । का प्रमा यस्य तत् किंप्रमम् । अनुमेयो बाह्याकार इति चेत्(न) । सर्वथाऽसिद्धस्य पक्षीकरणायोगात् । लिङ्गाभावाद्व्याप्त्यसिद्धेश्च । स्यादेतत् । बुद्धिगतस्तावदाकारोऽपरोक्षमत्रभासते । स कादाचित्कत्वात्किमपि कारणमपेक्षमाणो बाह्यं नीलाद्यनुमापयिष्यतीति । मैवम् । बाह्यतयैव नीलाद्याकारस्य स्फुरणात् । कुत्र चेदमुपलब्धम्, यत्कादाचित्कं तत्कारणवदिति । ज्ञान एवेति चेत् (न) । बाह्याप्रत्यक्षत्ववादे तत्रापि कारणवत्त्वानवधारणात् । ज्ञानं पूर्वज्ञानकारणकमुपलब्धमिति चेत् । तर्ह्याकारोऽपि पूर्वाकारजन्यः कल्प्यताम् । किं बाह्यार्थव्यसनेन । नीलज्ञानानं(नोत्पादान)न्तरं पीतज्ञानोत्पाददर्शनान्नेति चेत् (न) । सदृशजन्यत्वस्य परेण क्वाप्यनुप(गन्तव्य)लब्धत्वात् ।**

शे० — किं विप्रतिपन्नबाह्यार्थपक्षकानुमानमभिमतं, किंवा संप्रतिपन्नतज्ज्ञानपक्षकमिति विकल्पद्वयं मनसि निधायाश्रयासिद्ध्याऽऽद्यपक्षं दूषयति **सर्वथेति** ।द्वितीयं दूषयति **लिङ्गाभावादिति** । ननु विज्ञानं बाह्यार्थसापेक्षं विज्ञानत्वादिति विज्ञानत्वमेव लिङ्गं भविष्यतीति न तदभाव इत्याशङ्क्य विज्ञानस्यात्र पक्षतया तदतिरिक्तस्य विज्ञानत्ववतो दृष्टान्तस्याभावेनान्वयतोऽतिरिक्तस्य बाह्यार्थस्याद्याप्यसिद्ध्या दृष्टान्ताभावेन व्यतिरेकतश्च व्याप्त्यसिद्धेर्नैवमित्याह **व्याप्त्यसिद्धेरिति** । सामान्यसिद्धिपरिशेषाभ्यामेव बाह्यार्थसिद्धिरस्त्वित्याशङ्कते **स्यादेतदिति** । पक्षासिद्धिशङ्कापरिहारायोक्तम् **अपरोक्षमवभासत इति** । अपेक्षमाण इत्यस्यानन्तरमन्यस्यासंभवादिति पूरणीयम् ॥ **बाह्यतयैवेति** । तथा च बुद्धिगतनीलाद्याकारासिद्धेराश्रयासिद्ध्या सामान्यसिद्धिरेवानुपपन्नेति भावः । आश्रयासिद्धिः स्वमते न दोष इत्यतो दोषान्तरमाह **कुत्र चेति** । तथा च व्याप्तिग्रहणस्थलाभावेन व्याप्तिज्ञानानुपपत्त्या व्याप्यत्वासिद्धेः सामान्यसिद्धिरनुपपन्नेति भावः। ज्ञान एव व्याप्तिग्रह इति वदन्प्रष्टव्यः । ज्ञानेऽभिमतं सकारणकत्वं वा बाह्यकारणकत्वं वा ज्ञानकारणकत्वं वेति विकल्पत्रयं मनसि निधायाद्यं दूषयति **बाह्याप्रत्यक्षत्ववाद इति** । बाह्यार्थस्य प्रत्यक्षत्ववादे ज्ञानस्य बाह्यार्थकारणकत्वनिश्चयसंभवेऽपि त्वन्मते तस्याप्रत्यक्षत्वान्न ज्ञाने तत्कारणकत्वनिश्चय इति भावः । ननु ज्ञानं प्रति न बाह्यं कारणमभ्युपगम्यते, येन तस्याप्रत्यक्षत्वेन ज्ञानस्य तत्कारणकत्वावधारणानुपपत्तिः प्रसज्येत, किन्नाम पूर्वज्ञानमेव तत्र कारणम् । तच्च प्रत्यक्षमेवेति तत्कारणकत्वावधारणमुपपन्नमेवेति द्वितीयं शङ्कते **ज्ञानमिति** । उत्तरज्ञानस्य पूर्वज्ञानजन्यत्ववदुत्तरज्ञानाकारस्यापि पूर्वज्ञानाकारजन्यत्व-

संभवेन बाह्यार्थं विनाऽनुपपत्तेरभावेन ज्ञानाकारेण बाह्यार्थानुमानासंभवादसिद्धिरेव स्यादित्याशयेन परिहरति **तर्हीति** । यत्र नीलज्ञानानन्तरं नीलज्ञानमेव भवति तत्र पूर्वज्ञानाकारस्योत्तरज्ञानाकार-जनकत्वसंभवेन बाह्यार्थं विना तदनुपपत्त्यभावेऽपि यत्र नीलज्ञानानन्तरं पीतज्ञानोत्पत्तिस्तत्र पूर्वज्ञाना-कारस्य विसदृशतयोत्तरज्ञानाकारजनकत्वासंभवादस्त्येव बाह्यार्थं विना ज्ञानाकारानुपपत्तिरिति युक्तं तेन बाह्यार्थानुमानमिति भावेन शङ्कते **नीलज्ञानानन्तरमिति** । भवेदेतदेवं यदि कारणस्य स्वसदृशकार्य-जनकतानियमः स्यात् । न चासावस्ति । विरलपरमाणुभ्यो मिलितपरमाणूनां मिलितपरमाणुभ्यश्च विरलपरमाणूनामनधिपतीन्द्रियेभ्यश्चाधिपतीन्द्रियाणामधिपतीन्द्रियेभ्यश्चानधिपतीन्द्रियाणामुत्पत्तिदर्शनात् । ततश्च तद्वदेव नीलज्ञानाकारस्यापि विसदृशपीतज्ञानाकारजनकत्वोपपत्तेर्न तस्य बाह्यार्थेन विनाऽनुपप-त्तिरिति कथं तदनुमापकत्वमित्याशयवानाह **सदृशेति** ।

**स०** — ननु ज्ञानं प्रति न बाह्यकारणमभ्युपगम्यते । येन तस्याप्रत्यक्षत्वेन ज्ञानस्य तत्कारण-वत्त्वावधारणानुपपत्तिः । किं तु पूर्वज्ञानमेव तत्र कारणम् । तच्च प्रत्यक्षमेवेति तत्कारणवत्त्वावधारण-मुपपन्नमिति शङ्कते **ज्ञानमिति** । **सदृशेति** विरलपरमाणुभ्यः अविरलपरमाणूनामुत्पत्तेरन्यथाऽनुपपन्न-त्वादिति भावः ॥ २–२–७–छ ॥

**प०** — ननु विशिष्य पक्षलिंगादेरभावेपि न्यायमते गगनादेरिव सामान्यपरिशेषाभ्यां बाह्या-र्थस्य सिद्धिः स्यादिति शङ्कते **स्यादेतदिति** ॥ **बाह्यं नीलादीति** । अन्यस्यासंभवादिति परिशेषा-त्तत्सिद्धिरिति भावः ॥ **बाह्यतयैवेति** । तथा च बुद्धिगतस्त वदित्यादिनोक्तः पक्षोऽसिद्ध इति भावः । व्याप्त्यसिद्धिं च वक्तुमाह **कुत्र चेदमिति** ॥ **तत्रापीति** । बाह्यार्थेपीत्यर्थः । यद्वा ज्ञानविषयेपीत्यर्थः । **परेणेति** । विरलेभ्यो मिलितादिजन्मवादिनेत्यर्थः ।

**या०** — किमनित्यत्वं शब्दवृत्तीत्यादाविव सिषाधयिषितं बाह्याकाररूपं साध्यमेव पक्षीकृत्या-नुमीयते, उत तद्विषयकं ज्ञानमिति विकल्पं मनसि निधायाद्यं दूषयति **सर्वथाऽसिद्धस्येति** । द्वितीयं दूषयति **लिङ्गाभावादिति** । ननु विज्ञानं बाह्यार्थसापेक्षं विज्ञानत्वादिति विज्ञानत्वमेव लिङ्गं भविष्य-तीत्यत आह **व्याप्त्यसिद्धेरिति** । विज्ञानस्य पक्षतया तदतिरिक्तस्य बाह्यार्थस्याधुनाऽप्यसिद्धया दृष्टान्ताभावेनान्वयतो व्यतिरेकतो वा व्याप्तेरसिद्धेरित्यर्थः । सामान्यसिद्धिपरिशेषरूपं मानमाशङ्कते **स्यादेतदिति** । पक्षासिद्धिशङ्कापरिहारायोक्तम् **अपरोक्षमवभासत इति** । अपेक्षमाण इत्यस्यानन्तरमन्य-स्यासम्भवादिति शेषः ॥ **बाह्यतयैवेति** । तथा च बुद्धिगतनीलाद्याकारोऽस्माकमसम्मत इत्याश्रयासिद्ध्या

सामान्यसिद्धिरेवानुपपन्नेति भावः। **कारणवत्त्वेति।** ज्ञानातिरिक्तं यद्बाह्यं तदेव तत्र कारणतया वक्तव्यम् । न ज्ञानमात्माश्रयप्रसङ्गत्वात् । तच्च त्वन्मते न प्रत्यक्षमिति न ज्ञाने कारणवत्त्वं निश्चेतुं शक्यमिति भावः । केचित्तु इन्द्रियादेरतीन्द्रियत्वेन तद्रूपकारणवत्त्वानवधारणादित्यर्थः । ज्ञानस्य कारणवत्वेऽपि व्यक्तिभेदान्नात्माश्रयत्वमित्याशङ्कते **ज्ञानमिति ॥ परेणेति ।** त्वत्प्रतिवादिनेत्यर्थः । तं प्रति बाह्यार्थस्याधुनाऽप्यसिद्धेरिति भावः । तथा च विसदृशत्वेऽपि पूर्वाकारजन्यत्वेनार्थान्तरमाशङ्क्तैवेति ध्येयम् ।

**श्री० — लिङ्गाभावादिति ।** बाह्याकारस्यानुमेयत्वे तदनुमापकस्य लिङ्गस्याभावात्कुत्र व्याप्तिसिद्धिः स्यादिति दूषणान्तरम् ।

**सु० — किञ्च वासनादिकमान्तरमेव सहकारीकृत्य विसदृश(मेव)मपि ज्ञानं जनयतीति कल्पनीयम् । न बाह्यम् । दृष्टेनैव कथञ्चिदुपपत्तावदृष्टकल्पनानुपपत्तेः । अतो बाह्योऽ(प्य)र्थः प्रत्यक्षसिद्ध इति शङ्कानास्पदत्वादिदं मतमत्र न दूषितमित्युक्तम् । यद्वा स्फुटतरानल्पदोषत्वेन शिष्यैरेव हेयतया ज्ञातुं शक्यत्वादित्याशयेनाह** सर्वेति ।

अनु० — सर्वलोको बिभेत्यज्ञो यस्मादनुभवात्सदा ॥
तस्यापलापिनः किन्न निष्प्रमाणकवादिनः ॥

**माध्यमिकादयोऽपि बाह्यार्था(द्य)नपन्हुवाना अपि ह्यनुभवाद्बिभ्यतः सांवृतसत्त्वाद्यभ्युपयन्ति । ततः सर्वैरनुसरणीय एवायमनुभवः । तमपि यः सौत्रान्तिकोऽपलपति, अनुभवसिद्धाया अपरोक्षस्य नीला(द्या)कारस्य बाह्यताया अपाकरणात् । तथा निष्प्रमाणकं वदति, नीलाद्याकारस्य बुद्धिस्थतायां प्रमाणाभावात् । तस्य(ाप्य) अनुभवस्य** अपलापिनः **निष्प्रमाणकवादिनस्तस्य सौत्रान्तिकस्य किं दूषणं न भवेत् । सर्वमपि भवेदिति ।**

शे० — ननु कारणस्य सदृशकार्यजनकत्वनियमेऽपि युज्यते विरलपरमाणुभ्यो मिलितपरमाणूनां तेभ्यश्च विरलपरमाणूनामुत्पत्तिस्तथाऽनधिपतीन्द्रियेभ्योऽप्यधिपतीन्द्रियाणां तेभ्यश्चानधिपतीन्द्रियाणां । सदृशकार्यजननस्वभावस्यापि कारणस्यादृष्टादिसहकारिवशाद्विसदृशकार्यजनकत्वसम्भवान्नीलपीतादिज्ञानस्थले च सहकारिविशेषसमवधानाभावान्न विसदृशकार्यजनकत्वं सम्भवतीत्यत आह **किञ्चेति ।** आन्तरवासनादिसहकारिसम्पत्त्या पूर्वज्ञानाकारस्यैव विसदृशोत्तरज्ञानाकारजनकत्वस्य संभवान्न बाह्यस्य पीताकारस्य पीतज्ञानाकारार्पकत्वं कल्प्यमित्याशयः । ननु पूर्वज्ञानस्येव बाह्यस्याप्यर्थस्य ज्ञानाकारजनकत्वसम्भवे कुत एतदवधारणम् । यत्पूर्वज्ञानमेवाऽऽन्तरवासनादिसहकारिवशाद्विसदृशमुत्तरज्ञानं जनयति,

न तु बाह्यं नीलादीत्यत आह **दृष्टेनैवेति** । क्लृप्तेनैवेत्यर्थः । यद्वाऽऽन्तरमेव सर्वं दृष्टमिति परेणाङ्गीकृतत्वादान्तरं वासनादिकं दृष्टं, बाह्यं नीलाद्यदृष्टमिति ज्ञातव्यम् । 'विभ्रमन्यच्च किंप्रममि'त्युपक्रान्तं बाह्यार्थस्याप्रत्यक्षत्वे तदसिद्धिप्रसङ्गमुपसंहरति **अत इति** । अनुमेयत्वे तदसिद्धिप्रसङ्गादित्यर्थः । बाह्यार्थानुमेयतावादस्यानिरस्यताया युक्त्योपपादितत्वात्तत्प्रतिपादकोत्तरग्रन्थवैयर्थ्यमाशङ्क्य पूर्वोपपादितप्रकारापेक्षया प्रकारान्तरेण तदुपपादनार्थत्वान्नानर्थक्यमिति भावेन प्रकारभेदमभिनयेनोपदर्शयन्नुत्तरग्रन्थं सङ्गमयति **शङ्कानास्पदत्वादित्यादिना** । बाह्यार्थानुमेयतावादस्यातिनिर्दलत्वेन शङ्काविषयत्वशून्यत्वादित्यर्थः । **उक्तं** सर्वप्रमाणसिद्धमित्यादिना पूर्वग्रन्थ इति शेषः । तस्यापलापिन इति व्यधिकरणे षष्ठ्याविव्यभिप्रेत्य योजयति **तस्यानुभवस्यापलापिन इति** । तस्येत्यस्यावृत्तिं समानाधिकरणषष्ठीत्वं चाश्रित्याह **तस्येत्यादि** ।

**प०**— **दृष्टेनैवेति** । प्रत्यक्षसिद्धेनैवेत्यर्थः । **बिभ्यत** इति प्रथमाबहुवचनम् । 'नाभ्यस्ताच्छतुरि'ति नुमभावः ॥

**या०**— **दृष्टेनैवेति** । क्लृप्तेनैवेत्यर्थः । यद्वाऽऽन्तरमेव सर्वं दृष्टमिति परेणाङ्गीकृतत्वादान्तरं वासनादिकं दृष्टं, बाह्यं नीलाद्यदृष्टमिति ज्ञातव्यम् ।

---

**श्री०**— नीलज्ञानानन्तरं पीतज्ञानोत्पाददर्शनादित्यत्रैव दूषणान्तरमाह **किञ्चेति** । अयमर्थः । पूर्वाकारेणैवोत्तराकारो जन्यते । न चोक्तदोषः । ज्ञानं नीलाकारं ज्ञानं स्वेन विसदृशं पीताकारं ज्ञानरूपं कार्यं जनयति । कथमिति चेत् । आन्तरवासनादिरूपसहकारिवशादिति ब्रूमः । तथा च न तदर्थं बाह्योऽर्थः कल्प्य इति । कुत इत्यत आह **दृष्टेनैवेति** ।

**सु०**— **'एकत्वमनुभूतिस्थं' 'स्वदृष्टान्तात्' 'तस्यापलापिन' इति परपक्षे तत्र तत्रानुभवविरोधोऽभिहितः । स कथमित्यतोऽभिनयेन तं दर्शयति** सोऽहमिति ।

**अनु०**— सोऽहं तदिदमेवाहं सुखी सद्गगनं दिशः ॥
सत्या इत्याद्यनुभवाः सदा तत्प्रतिपक्षगाः ॥

**अत्र स एवाहमित्यात्मैकत्वग्राही प्रत्यभिज्ञानुभवो दर्शितः । तदिदमित्यनात्मनः । अहं सुखीति सुखस्य विधित्वानुभवः । सत् भावरूपं गगनं, दिशः सत्या भावरूपा इति गगनस्य (च) दिशां च भावत्वानुभवः । आदिपदादिदं नीलं नाहं नीलमित्यादेः(परिग्रहः) ग्रहणम् ।** तत्प्रतिपक्षगाः **तदभ्युपगतार्थविरुद्धविषयाः ।**

**शे०— तत्र तत्रेति** । आत्मादेः क्षणिकत्वादावित्यर्थः ॥ **अभिनयेनेति** । तदाकारप्रदर्शनेनेत्यर्थः ॥ **स एवाहमिति** । अनेन तदिदमेवेत्यत्रत्यस्य एवकारस्य न यथाश्रुतः सम्बन्धः, किन्तु सोऽहमित्यनेन सम्बन्ध इत्युक्तं भवति । तदपि चात्मनो निर्विकारत्वात्पूर्वोत्तरकालभाविनस्तस्यात्यन्ताभेद एव प्रत्यभिज्ञाविषय इति प्रदर्शनार्थमित्यवधेयम् । **विधित्वेति** । भावत्वेत्यर्थः ।

**प०— इति परपक्ष इति** । इतिवाक्यत्रयेणेत्यर्थः ॥ **अभिनयेनेति** । तदाकारप्रदर्शनेनेत्यर्थः । सदित्यनुवादः । भावरूपमिति व्याख्या ॥ २-२-७ ॥

**या०— अभिनयेनेति** । आकारप्रदर्शनेनेत्यर्थः ॥ **स एवायमिति** । एवकारस्यात्र संबन्धप्रदर्शनमात्मनो निर्विकारत्वात्पूर्वोत्तरकालभाविनस्तस्यात्यन्ताभेद एव प्रत्यभिज्ञाविषय इति प्रदर्शनार्थमिति ज्ञातव्यम् ॥ २-२-७ ॥

**श्री०**— 'इदं नीलमि'ति नीलादेर्बाह्यत्वानुभवः । आन्तरत्वाभावानुभवप्रदर्शनं **नाहं नीलमिति** ।

**सु०-- वैभाषिकसौत्रान्तिक(मत)समयनिराकरणमुपसंहरति** अत इति ।

**अनु०** — अतो निर्मानमखिलप्रमाणप्रतिपक्षगम् ॥
दुर्मतं को नु गृह्णीयाद्विनाऽसुगततिं क्वचित् ॥ २-२-७ ॥

अखिलप्रमाणप्रतिपक्षगं **सर्वप्रमाणविरुद्धार्थविषयम्** । **अत एव दुर्मतम्** । **दिङ्नागप्रभृतिभिर्बहुभिर्गृहीतत्वात्कथं को नु गृह्णीयादित्याक्षेप इत्यत उक्तं** विनेति । **सत्पुरुषविषय एवायमाक्षेप इति भावः । न चैवं निराकरणवैयर्थ्यम् । उक्तार्थानुसन्धाने को नु गृह्णीयादिति व्याख्यानादिति** ॥ २-२-७ ॥

**शे०**— मूले 'निर्मानमखिलप्रमाणप्रतिपक्षगमि'ति दुर्मतत्वोपपादकं हेतुगर्भं विशेषणद्वयमिति भावेन तथैव योजयति **अत एवेति** । निर्मानत्वादेरेवेत्यर्थः । **एवमिति** । आक्षेपस्य सत्पुरुषमात्रविषयत्वाभ्युपगम इत्यर्थः । आक्षेपस्य सत्पुरुषमात्रविषयत्वे सत्पुरुषाणां तद्ग्रहणप्रसक्तेरेवाभावेन तन्निवारणार्थत्वायोगात्तदर्थकनिराकरणस्य वैयर्थ्यं स्यादित्याशयः ॥ **उक्तार्थानुसन्धान इति** । तथा चोक्तरीत्या हेयत्वप्रतिपादनेन तदनुसन्धाने सत्पुरुषाणां तद्ग्रहणप्रसक्त्यभावेऽपि मतनिराकरणाभावे तद्धेयत्वानुसन्धानाभावेन सपुरुषाणामपि तद्ग्रहणप्रसक्तेः सत्त्वेन तन्निराकरणार्थत्वसम्भवात्तदर्थकनिराकरणस्यार्थवत्त्वमेवेति भावः ॥ २-२-७ ॥

**श्री०— सत्पुरुषेति** । तथा च को नु गृह्णीयादित्यस्य कः सज्जनो गृह्णीयान्न कोऽपीत्यर्थो द्रष्टव्यः । ननु स्वत एव सज्जनेनेदं मतं न गृह्यतेऽतो वैभाषिकसौत्रान्तिकयोर्निराकरणमयुक्तमित्याशङ्क्य निराकरोति **न चैवमिति** । कुतो न वैयर्थ्यमित्यत आह **उक्तार्थेति** । उक्तार्थानुसन्धान इति मूले शेषोक्तिः । तथा च सज्जनस्यापि यद्यस्मदुक्तं तन्निराकरणप्रकारानुसन्धानं स्यात्तदैव न गृह्णीयात् । नो चेद्गृह्णीयादेव । ततस्तस्य सज्जनस्य तन्मताग्रहणप्रयोजकभूतोक्तार्थानुसन्धानायास्माभिर्निराकरणं कृतमिति न तस्य वैयर्थ्यमिति भावः ॥ २-२-७ ॥

॥ इति समुदायाधिकरणम् ॥

## ॥ अथ शून्यवादापाकरणम् ॥

सु०— ॐ नासतोऽदृष्टत्वात् ॐ ॥ **माध्यमिकमतमत्रापाक्रियते । तस्योक्तार्थविरुद्धतां दर्शयितुं तत्तावदुपन्यस्यति** अपर इति ।

**अनु०— ॐ नासतोऽदृष्टत्वात् ॐ ॥**

अपरः शून्यमखिलं मनोवाचामगोचरम् ॥
निर्विशेषं स्वयम्भातं निर्लेपमजरामरम् ॥
अशेषदोषरहितमनन्तं देशकालतः ॥
वस्तुतश्च

अपरो **माध्यमिक, 'इति ब्रूत' इति वक्ष्यमाणेन संबन्धः । शून्यमेव तत्त्वं न ततोऽन्यदस्तीति शेषः । ननु पञ्चस्कन्धास्ततोऽतिरिक्ताः सन्तीत्यत उक्तम्** अखिलमिति । **पञ्चस्कन्धात्मकमखिलं जगच्छून्यमेव, न ततोऽन्यदित्यर्थः । तच्छून्यं कुतः सिद्धमित्यत उक्तम्** स्वयम्भातमिति । **स्वयंभातत्वं च न स्वकर्मकप्रकाशत्वम् । किन्त्वपराप्रकाश्य(श)त्वमेवेत्याशयेनोक्तम्** मन इति । **प्रमाणमात्रोपलक्षणमेतत् ॥ कुतः प्रमाणाविषयत्वं शून्यस्य, निर्धर्मकत्वात् । सधर्मक एव प्रमाणप्रवृत्तिरित्युक्तम्** निर्विशेषमिति । **निखिलजगदात्मकं चेच्छून्यम् , तर्हि तद्धर्मा लेपजरामरणदुःखपरिच्छेदादयस्तस्यैव स्युरिति कथं निर्विशेषत्वादिकमित्यत आह** निर्लेपमिति । लेपो **धर्माधर्मसंबन्धः । दोषा दुःखादयः ।** वस्तुतश्चानन्तं **वस्त्वन्तरप्रतियोगिकान्योन्याभावरहितम् । यद्वा शुद्धं सर्वगतं नित्यं सर्वात्मकं शून्यमभिलप्यते । तत्कथं निर्विशेष(मु)मित्युच्यत इत्यत एतदुक्तम् । लेपादिदोषाभावमात्रेण शुद्धमुच्यते । देशादिपरिच्छेदाभावमादाय सर्वगतत्वादिवादो, न तु कमपि धर्ममाश्रित्येति ।**

**शे०— ॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥** अधिकरणप्रतिपाद्यानुक्तेर्मूले न्यूनतामाशङ्क्य भाष्य एव तस्योक्तत्वादत्रानुक्तिर्न दोषायेत्यभिप्रेत्य शून्यवादमपाकरोतीति भाष्यं मनसि निधायैतदधिकरणप्रतिपाद्यमाह **माध्यमिकेति** । नन्वपरः शून्यमित्यादिग्रन्थोऽनर्थकः । न चायं तन्मतोपन्यासः । तस्याप्यनर्थकत्वादित्यतो विप्रतिपत्तिविषयसूचनेन तदनिरस्यताशङ्कानिरसनद्वारा तन्निरस्यतासमर्थनार्थत्वात्तस्य नानर्थक्यमित्यभिप्रेत्य तन्मतोपन्यासवैयर्थ्यं परिहरंस्तन्मतोपन्यासपरतयोत्तरग्रन्थं सङ्गमयति **तस्येति ।** मूले शून्यमित्युक्त्या प्रसक्तं निःस्वरूपत्वं 'शून्यं तत्त्वमविज्ञेयमि'त्यादितद्वाक्यानुसारेणापेक्षितशेषं पूरयन्न-

रिहरति **शून्यमेवेत्यादिना** । अत्र मूलस्थं शून्यपदं सावधारणमित्यभिप्रेत्य शून्यमेवेत्यनुवादः, तत्त्वमित्यादिस्तु शेष इति द्रष्टव्यम् । **न स्वकर्मकप्रकाशत्वमिति** । विषयविषयिभावस्य प्रत्यक्पराग्भावरूपत्वेनैकस्य युगपदुभयरूपताया विरुद्धतया स्वस्य स्वविषयकज्ञानताया अयोगादिति भावः । यद्वा ज्ञानमर्थं विषयीकरोतीति व्यवहारान्यथाऽनुपपत्त्या ज्ञानस्यापि विषयीकरणलक्षणव्यापारं प्रति कर्तृत्वेन स्वविषयत्वे कर्तृकर्मभावो वाच्यः । न चासौ वक्तुं शक्यः । परसमवेतक्रियाफलशालित्वस्यैव कर्मलक्षणत्वेनैकस्यां क्रियायां कर्तृकर्मणोरेकत्वस्य विरुद्धत्वादतो न स्वविषयत्वं ज्ञानस्येति भावः । प्रमाणविशेषभूतमनोवागगोचरत्वमात्रेण न परप्रकाश्यत्वाभावसिद्धिः । तथा सति चक्षुराद्यगोचरत्वमात्रेण रसरूपादेरपि तत्सिद्धिप्रसङ्गादित्यतोऽत्र वाक्ये विशेषवाचकमनोवाक्शब्दयोः प्रमाणसामान्योपलक्षकत्वेन प्रमाणमात्रागोचरत्वलाभात्परप्रकाश्यत्वाभावसिद्धिरविकलैवेत्याशयेनाह **प्रमाणमात्रोपलक्षणमेतदिति** ॥ **सधर्मक एवेति** । रूपादिमत्त्येव चक्षुरादेः, व्याप्त्या व्यापकतावच्छेदकधर्मविशिष्टत्वेन पक्षधर्मतया च पक्षसंसृष्टत्वेन, साध्यस्य सिद्धयोक्तधर्मवत्येव साध्येऽनुमानस्य, शब्दप्रवृत्तिनिमित्तादिमत्येव च शब्दस्य प्रवृत्तिदर्शनादित्यर्थः । निर्विशेषत्वादिकमित्यादिपदेन स्वयम्भातत्वमनोवाचामगोचरत्वयोः परिग्रहः । निर्लेपमशेषदोषरहितमिति पदद्वयान्तर्गतयोर्लेपदोषपदयोः पौनरुक्त्यनिरासायार्थभेदमाह **लेपो धर्माधर्मसम्बन्ध इत्यादिना** । अनन्तमित्यस्य देशकालाभ्यामिव वस्तुत इत्यनेनापि सम्बन्धान्न साकाङ्क्षतेत्यभिप्रेत्य तथासम्बन्धमाह **वस्तुतश्चानन्तमिति** । वस्तुतोऽनन्तत्वं नाम सकलवस्त्वात्मकत्वमिति प्रतीतिनिरासाय तन्निर्वक्ति **वस्त्वन्तरेति** । स्वव्यतिरिक्तस्य सर्वस्य कल्पितत्वेनावस्तुत्वान्न वस्त्वन्तरप्रतियोगिकभेदवत्त्वं तस्येत्यर्थः ॥ **एतदिति** । निर्लेपमित्यादिकमित्यर्थः । देशादीत्यादिपदेन कालवस्तुनोः परिग्रहः । सर्वगतत्वादीत्यादिपदेन नित्यत्वसर्वात्मकत्वयोः परिग्रहः ॥ **कमपि धर्ममिति** । परममहत्परिमाणाप्रच्युतसत्तासर्वतादात्म्यरूपमित्यर्थः ।

स० — ॐ नासतोऽदृष्टत्वात् ॐ ॥ **कुत इति** । केन प्रमाणेनेत्यर्थः । प्रमाणागोचरत्वान्न तस्य प्रमाणेन सिद्धिरपेक्षितेति भावेन गूढाभिसन्धिराह **स्वयंभातमितीति** । अभिसंध्युद्घाटनं च मनो–वाचामित्यादिना करिष्यतीति द्रष्टव्यम् ।

प० — ॐ **नासतोऽदृष्टत्वात्** ॐ । पाठक्रमादाकांक्षाक्रमो बलीयानिति भावेनाह **तच्छून्यं कुत इत्यादिना** ॥ **अपरप्रकाश्यत्वमिति** । परप्रकाश्यत्वाभाव इत्यर्थः ॥ **सधर्मक एवेति** । महत्त्वादिमत्येव प्रत्यक्षस्य व्यापकताशक्यतावच्छेदकादिमत्येवानुमानादेः प्रवृत्तेरिति भावः । तद्धर्माः क इत्यत आह **लेपेति** । लेपदोषपदयोरपौनरुक्त्यायार्थभेदमाह **लेपो धर्माधर्मेति** ।

**या०— ॐ नासतोऽदृष्टत्वात् ॐ ॥ सधर्मक एवेति ।** रूपादिमत्येव प्रत्यक्षस्य, व्यापकतावच्छेदकधर्मवत्येवानुमानस्य, प्रवृत्तिनिमित्तादिमत्येव शब्दस्य, प्रवृत्तेरित्यर्थः । निर्लेपमशेषदोषरहितमित्यत्रत्ययोर्लेपदोषपदयोः पौनरुक्त्यपरिहारायार्थभेदमाह **लेपो धर्माधर्मेत्यादिना ॥ वस्त्वन्तरेति ।** स्वव्यतिरिक्तवस्त्वन्तरस्यैव परमार्थतोऽभावादिति भावः ।

**श्री०— ॐ नासतोऽदृष्टत्वात् ॐ ॥ एतदुक्तं** निर्लेपमिति वाक्यम् ॥ **दोषाभावमात्रेणेति ।** अन्यापोहेनेत्यर्थः ।

**च०— ॐ नासतोदृष्टत्वात् ॐ ॥ स्वकर्मकप्रकाशत्वं** । तादृशप्रकाशतादात्म्यं । **अपराप्रकाश्यत्वं** अपरप्रकाश्यत्वाभावः । **सधर्मक एव ।** सामानाधिकरण्यप्रत्यासत्त्या महत्वविशेषितरूपादिविशेषित एव प्रत्यक्षस्य, किञ्चिन्निष्ठव्याप्तिनिरूपकत्वादिविशिष्ट एवानुमानस्य, प्रवृत्तिनिमित्तादिमत्येव शब्दस्य, प्रवृत्तेरिति भावः । लेपदोषपदयोरैकार्थ्यात्पौनरुक्त्यं मा प्रासांक्षीदित्यर्थभेदमाह **लेप इत्यादि । वस्त्वन्तरेति ।** स्वान्यवस्तुन एव परमार्थतोऽभावादिति भावः ।

**सु०— उपायोपेयभावावस्थितपदार्थख्यापनं शास्त्रधर्मः । अतस्तत्त्वविषयां विप्रतिपत्तिं दर्शयित्वा विप्रतिपन्ने उपायोपेये दर्शयति** तदस्मीति ।

**अनु०—** तदस्मीति नित्योपासाऽपरोक्षितम् ॥
रागादिदोषरहितं तद्भावं योगिनं नयेत् ॥

**तच्छून्यमहमस्मीति नित्योपासयाऽपरोक्षीकृतम् ।** तच्छून्यं रागादिदोषरहितं **योगिनं** तद्भावं **शून्यत्वलक्षणं मोक्षं नयेदिति संबन्धः । यथोक्तम् । 'प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिनः (तापिनः) (भाविनः)' इति ।**

**शे०— शास्त्रधर्म इति ।** वक्तृश्रोत्रोरभिमतमनन्यसाध्यं फलमधिकृत्य तद्धेतुभूतं प्रमाणान्तराप्राप्तमर्थं प्रतिपादयतां वाक्यानां समूहस्यैव शास्त्रत्वेनोपायोपेयभावानवस्थितपदार्थख्यापकस्य निर्विषयत्वेन निष्प्रयोजनत्वेन च काकदन्तपरीक्षादिग्रन्थवदशास्त्रत्वादिति भावः । तदस्मीति नित्योपासनाऽपरोक्षितमित्यत्र विशेष्यानुक्त्या न्यूनतामाशङ्क्य तदस्मीति पूर्वप्रकृततच्छब्दोक्तशून्यस्यैव विशेष्यत्वान्नानुपपत्तिरिति भावेन विशेष्यं पूरयति **तच्छून्यमिति ॥ शून्यत्वलक्षणमिति ।** आदौ कर्तृत्वादिविशिष्टात्मविनाशलक्षणं, पश्चान्महाशून्यत्वलक्षणं चेत्यर्थः । 'यस्य शून्यैकरसताज्ञानात्मा त्वपगच्छति । स पुद्गलत्वान्निर्मुक्तो महाशून्यत्वमेष्यती'ति वक्ष्यमाणत्वादिति ध्येयम् । आदावात्मविना-

शरूपो मोक्षो भवतीत्येतत्कुतोऽवगतमित्यतस्तद्वाक्यादेवेत्यभिप्रेत्य तत्पठति **यथोक्तमित्यादिना** । तनोतीति तायी तनु विस्तार इति धातोः । तायिनो विस्तारिणस्तस्यावबोधसन्तानस्य प्रदीपस्यैव निर्वाणं निवृत्तिर्मोक्ष इत्यर्थः । न चैवं ज्ञाननाशस्यैव मोक्षत्वमित्यस्माद्वाक्याल्लभ्यते न त्वात्मनाशस्य, तत्कथमस्योदाहरणत्वमिति वाच्यम् । परेण ज्ञानस्यैवात्मत्वाङ्गीकारादिति भावः ।

**स०— तायिन इति** । 'प्रदीपस्येव निर्वाणं निर्मोक्षस्तस्य तायिनः इति' पाठः । अयमर्थः । तनोतीति तायी । 'तनु विस्तारे, इति धातोः । तथा च, तायिनः तस्य विस्तारिणः तस्य बोधसंतानस्य प्रदीपस्येव निर्वाणं निवृत्तिः मोक्ष इति । न नैवमपि ज्ञाननाशस्यैव मोक्षत्वमस्मात् वाक्याल्लभ्यते । न त्वात्मनाशस्य । तत्कथमस्योदाहरणमिति वाच्यम् । परेण ज्ञानस्यैवात्मत्वाङ्गीकारादिति भावः ।

**प०— तस्य तायिन इति** । तायृ संतानपालनयोः । तायिनः संतन्यमानस्य तस्य कर्तृत्वभोक्तृत्वादिभ्रांत्यात्मकस्य संसारस्य प्रदीपस्येव निर्वाणं निवृत्तिर्मोक्ष इत्यर्थः । केचित्तु भाविन इति पाठमुपेत्य शून्यभावनावधृतस्यात्मन इति व्याचक्षते । अन्ये तु तापिन इति पाठमुपेत्य योगिनस्तस्यात्मन इत्यर्थ इत्याहुः ॥

**या०— शून्यत्वलक्षणमिति** । आदौ कर्तृत्वादिविशिष्टात्मविनाशलक्षणं, पश्चान्महाशून्यत्वलक्षणं चेत्यर्थः । यद्वक्ष्यति । 'यस्य शून्यैकरसताज्ञानात्सा त्वपगच्छति । स पुद्गलत्वान्निर्मुक्तो महाशून्यत्वमेष्यती'ति । आदावात्मविनाशरूपो मोक्ष इत्यत्र तत्सम्मतिमाह **यथोक्तमिति** ॥ **प्रदीपस्येवेति** । यथा तैलाद्यपगमे प्रदीपस्य निर्वाणं विनाशस्तथा भाविनः शून्यभावनावतस्तस्य कर्तृत्वादिविशिष्टस्यात्मनः संवृत्यपगमे निर्वाणं विमोक्ष इत्यर्थः । तापिन इति पाठे ज्ञानिन इत्यर्थ इत्याहुः ॥

**श्री०— उपायोपेये** मोक्षसाधने धर्मादौ मोक्षे चेत्यर्थः ॥

**च०** शून्यत्वलक्षणमिति । 'यस्य शून्यैकरसताज्ञानात्सा त्वपगच्छति । स पुद्गलत्वनिर्मुक्तो महाशून्यत्वमेष्यती'त्यभिधास्यमानतयाऽऽदौ कर्तृत्वादिविशिष्टात्मनाशलक्षणं पश्चान्महाशून्यत्वलक्षणं चेत्यर्थः । उक्तार्थे तदीयवचनं प्रमाणयति **यथोक्तमिति** । अत्र तायिन इति पाठमूरीकुर्वाणास्तायृसन्तानपालनयोरिति स्मृतेस्तायिनः सन्तन्यमानस्य कर्तृत्वभोक्तृत्वादिभ्रान्त्यात्मकस्य संसारस्य प्रदीपस्य इव निर्वाणं निवृत्तिर्मोक्ष इत्यार्तीथपन् । भाविन इत्यानुपूर्वीमुपगच्छन्तो भाविनः शून्यभावनावत इति तापिन इत्येवोपपादयाना: योगिन इति च व्याकुर्वते ।

**सु०— यदि शून्यमुक्तरूपं कथं तर्ह्यखिलं शून्य(मित्युक्त)मित्यत** आह तस्यैवेति ।

**अनु०—** तस्यैवानादिसंवृत्या नानाभेदात्मकं जगत् ।

सदिवाभाति ।

**शून्यस्यैव । संव्रियतेऽनयेति संवृतिरविद्या । संवृतेः सत्यत्वेऽद्वैतहानिरारोपितत्वे तु संवृत्यन्तरापेक्षेत्यतोऽनादीत्युक्तम् ।** नानाभेदात्मकं **पञ्चस्कन्धात्मकम् । शून्याविद्याकल्पितत्वादखिलं शून्यमित्युच्यते । न पुनस्तदेव तदिति । तत्किमसदेवेदम् । तथात्वे वा कथं सदिति प्रतिभासः । सत्त्वारोपात् ।**

**शे०— उक्तरूपमिति** । निर्विशेषत्वादिरूपमित्यर्थः ॥ **कथं तर्हीति** । तस्यानेवंरूपतयोक्तरूपशून्यात्मताया बाधितत्वादिति भावः । ननु संवृतेः किं लक्षणं किं च कार्यमित्यतोऽविद्यालक्षणादिकमेव तल्लक्षणादिकमित्यभिप्रेत्य तयोर्भेदे तदनुपपत्तेस्तदभेदमाह **संवृतिरविद्येति** । अभिधानादेरभावेन रूढ्या संवृतिशब्दस्याविद्यापरत्वासम्भवादाह **संव्रियत इति** ॥ **अद्वैतहानिरिति** । संवृतेः शून्यात्मकत्वासम्भवेन तदतिरिक्तत्वावश्यम्भावात्तस्याः सत्त्वे तयैव सद्द्वितीयत्वमिति भावः ॥ **संवृत्यन्तरापेक्षेति** । आरोपस्य संवृतिकार्यत्वात् । तथा चानवस्थेति भावः ॥ **अतोऽनादीत्युक्तमिति** । तथाच संवृतेरारोपितत्वेऽप्यनादित्वेन संवृत्यन्तरानपेक्षत्वान्नानवस्थेति भावः । उपलक्षणं चैतत् । संवृतेर्भेदादिवत्स्वनिर्वाहकत्वेन संवृत्याख्यस्यारोपितस्य संवृत्यन्तरानपेक्षत्वाच्च नानवस्थेत्यपि द्रष्टव्यम् । तथाऽपि यदि शून्यमुक्तरूपं कथं तर्ह्यखिलं शून्यमित्युक्तमिति शङ्काया न परिहार इत्यत आह **शून्याविद्येति** । ओमिति वदन्तं प्रति तथा सति असद्रूपे तस्मिन्नसदित्येव प्रतीतेरावश्यकतया सन्घट इत्यादिसत्त्वप्रत्ययानुपपत्तिरित्याह **तथात्वे चेति** । किमत्र प्रमारूपसत्त्वप्रत्ययो न स्यादित्यभिमतं, भ्रमरूपो वा । नाद्यः । सत्त्वप्रत्ययस्य प्रपञ्चे प्रमात्वस्यास्माकमसम्मतत्वेनेष्टापत्तेरिति मनसि निधाय द्वितीयं दूषयति **सत्त्वारोपादिति** । अनिदंरूपेऽपि रूप्येऽधिष्ठानगतेदन्तारोपादिदं रूप्यमिति प्रत्ययवत्सत्त्वाभावेऽपि घटादिप्रपञ्चस्य मायिमतेऽधिष्ठानीभूतब्रह्मगतसत्त्वारोपात्सन्घट इति प्रत्ययवच्चैतन्मतेऽप्यधिष्ठानीभूतशून्यगतसत्त्वारोपाद्घटादौ सत्त्वप्रत्ययो नानुपपन्न इत्यर्थः ।

**प०— संव्रियतेऽनयेति** । करणव्युत्पत्त्या शून्यावरणहेत्वविद्या संवृतिरुच्यत इत्यर्थः । कथमिति पृष्टस्योत्तरं **सत्त्वारोपादिति** ॥

**या०— सत्त्वारोपादिति** । तथा च सत्त्वेन प्रतीतिरेव सत्ता, नार्थगतं सत्त्वमस्तीत्येतन्मताभिप्रायः ॥

श्री० — **शून्यमुक्तरूपमिति** । यदि शून्यमुक्तरूपं शुद्धसर्वगत्वादिरूपं तर्ह्यखिलं शून्यमित्यनेनाशुद्धासर्वगतादिरूपजगताऽनन्यत्वं कथमुक्तमित्यर्थः ॥ **तत्किमिति** । यदि शून्याविद्याकल्पितत्वेन । जगदारोपितं स्यादित्यर्थः । असद्भवत्येवेति चेत्तत्राह **तथात्वे वेति** । असत्त्वे वेत्यर्थः । 'तस्य चे'ति च शब्दमुच्चयं दूषणमाह **सत्त्वारोपादिति** ।

सु० — पक्षान्तरमाह सत्यत्वमिति ।

अनु० — सत्यत्वं सांवृतं तस्य चेष्यते ॥

तस्य **अरोपितस्य अपि** जगतः, **सांवृतं** सत्यत्व**मिष्यतेऽतो न सत्प्रत्ययविरोधः । अस्ति चेत्** जगतः **सत्त्वं कथं तर्ह्यसत् । येन सदिवाभातीत्युक्तमित्यत आह** पारमार्थिकेति ।

पारमार्थिकसत्यत्वं शून्यादन्यस्य न क्वचित् ॥

**सर्वथाऽबाध्यत्वं पारमार्थिक(स)त्त्वं तदभावादसदिदं जगदुद्गीयत इति । पारमार्थिकसत्त्वाभावे कथं जगत्यर्थक्रियादिव्यवहार इत्यत आह** सांवृतेनैवेति ।

सांवृतेनैव सत्त्वेन व्यवहारोऽखिला भवेत् ॥

अखिलो **हानोपादानोपेक्षाऽभिज्ञाऽभिवदनार्थक्रियालक्षणः । व्यवहारस्याप्यसत्त्वात् । स्वप्न इवेति शेषः । पारमार्थिकसत्त्वमेव व्यवहारविरोधि । तस्य सर्वक्रियारहितत्वात् । न तु तदभाव इति भावेनोक्तं** सांवृतेनैव सत्त्वेनेति ।

---

शे० — ननु च न सन्घट इत्यत्र सन्नित्यधिष्ठानशून्यानुवेधः । चाक्षुषादिज्ञाने रूपादिहीनस्य शून्यस्य स्फुरणायोगात् । अन्यथा नीलो घट इत्यादौ नील इत्यादिरधिष्ठानानुवेध इत्यापातात् । नैल्यादिकं घटेऽस्ति सत्त्वं तु नेति चेन्न । अस्यारोपितत्वसिद्ध्यधीनत्वेनेतरेतराश्रयत्वादिति पूर्वत्रारुच्याऽर्थगतस्य सांवृतसत्त्वस्य सत्त्वासत्त्वप्रत्यय इति पक्षान्तरोपदर्शनं भाष्य इति भावेनाह **पक्षान्तरमाहेति ॥ कथं जगत्यर्थक्रियादीति** । आदिपदेन हानादिपरिग्रहः । तुच्छस्याप्यर्थक्रियाकारित्वप्रसङ्गेन धीमात्रस्य नित्यातीन्द्रियस्य तदभावप्रसङ्गेनापरोक्षधियः, अमृतत्वेनापरोक्षतो ज्ञातस्यापि विषस्यासञ्जीवकत्वेनापरोक्षसत्त्वधियः, प्रपञ्चासत्त्वसिद्धेः प्राक् तदसिद्ध्याऽन्योन्याश्रयप्रसङ्गात् व्यावहारिकसत्त्वस्य, अननुगमेन सत्तात्रयस्य तद्द्वयस्य वा, परमार्थतोऽसत्त्वेन तत्र सत्त्वस्य विरुद्धतया सत्त्रयानुगतस्य सद्द्वयानुगतस्य सत्त्वसामान्यस्य, गौरवप्रसङ्गादसद्विलक्षणत्वस्य, तुच्छेऽतिप्रसङ्गादप्रातिभासिकत्वस्य, गौरवादप्रातिभासिकसत्त्वस्य, अतिगौरवादसद्वैलक्षण्ये सति प्रातिभासिकवैलक्षण्यस्य चार्थक्रियाकारित्वे-

अतन्त्रत्वेन **परमार्थसत्त्वस्यैव** तत्र तन्त्रत्वादर्थक्रियाकारित्वव्यापकस्य पारमार्थिकसत्त्वस्य व्यावृत्तौ तद्व्याप्य-स्यार्थक्रियाकारित्वस्यापि व्यावृत्त्यवश्यम्भावादिति भावः । **अर्थक्रिया** जलाहरणादिरूपार्थक्रियेत्यर्थः । तावताऽपि कथमुक्ताक्षेपपरिहार इत्यतोऽपेक्षितशेषं पूरयति **व्यवहारस्यापीति** । किमत्र पारमार्थिक-व्यवहारो न स्यादित्यापाद्यते किंवा व्यावहारिको व्यवहारो न स्यादिति । नाद्यः । उक्तरूपस्य व्यवहारस्य पारमार्थिकत्वाभावेन तदभावापादनस्येष्टत्वात् । न द्वितीयः । पारमार्थिकसत्त्वस्य पारमार्थिक-व्यवहारव्यापकत्वेन तद्व्यावृत्त्या पारमार्थिकव्यवहाराभावप्राप्तावपि तद्व्यावृत्तेर्व्यवहारव्यावृत्त्यप्रापकतया सां-वृतसत्त्वेन व्यावहारिकव्यवहारसंभवात् । प्रामाणिकत्वाच्चास्यार्थस्य नान्योन्याश्रय इति भावः । अपार-मार्थिकव्यवहारस्यापारमार्थिकसत्त्वेन सिद्धेरसंभावनापरिहाराय स्वप्नादिवदिति सूत्रानुसार्युत्तरभाष्यानुसारे-णानुरूपं दृष्टान्तमाह **स्वप्न इवेति** । सांवृतेन सत्त्वेन व्यवहारो भवेदित्येतावतैव पूर्तेरेवकारवैयर्थ्यमित्या-शङ्क्य अङ्गीकृत्य परमार्थसत्त्वस्य व्यवहारप्रयोजकतां व्यवहारस्याप्यसत्त्वात् परमार्थसत्त्वाभावेऽपि न व्यवहारानुपपत्तिरिति समाहितम् । वस्तुतस्तु परमार्थसत्त्वस्य व्यवहारविरोधित्वेन तत्राप्रयोजकत्वात् परमार्थसत्त्वाभावेनैवार्थक्रियाकारित्वोपपत्तेर्विरुद्धतयैव तर्कखण्डनसंभवान्न तदर्थं व्यवहारस्यासत्त्वकथ-नापेक्षेत्यर्थविशेषसूचकत्वान्न तस्य वैयर्थ्यमित्यभिप्रेत्य तथा एवकारतात्पर्यमाह **पारमार्थिकसत्त्वमेवेति** ॥ **वि(सर्व)क्रियारहितत्वादिति** । अर्थक्रियाकारित्वे च क्रियावेशप्रसक्त्या विकारावश्यम्भावादित्यर्थः ।

---

प०— **कथं तर्ह्यसदिति** । जगदिति योज्यं । **तस्य** पारमार्थिकसत इत्यर्थः ।

या०— **अर्थक्रियेति** । जलाहरणादिरूपार्थक्रियेत्यर्थः ।

श्री०— ननु व्यवहारस्यापि सत्त्वेऽद्वैतहानिरित्यत आह **व्यवहारस्यापीति** । **तस्य** पारमार्थि-कसत्त्ववतः शून्यस्य । तदभावो न तु पारमार्थिकसत्त्वाभावो व्यवहारविरोधीत्यर्थः ॥

सु०— **सृष्टिप्रलयविष(यं)ये विगानं दर्शयति** शून्यादिति । **सृष्टिकाले** प्रवर्तत **जायते** ।

अनु०— शून्यात्संवृतियोगेन विश्वमेतत्प्रवर्तते ॥
सृष्टिकाले पुनश्चान्ते स्तिमितं शून्यतां व्रजेत् ॥
इति ब्रूते ।

**शून्यस्य निष्क्रियत्वात्कथं विश्वकर्तृत्वमित्यत उक्तं** संवृतियोगेनेति । अन्ते **प्रलयकाले** । स्तिमितं **निष्क्रियम्** । **अनेन क्रियाविभागादिन्यायेन या विश्वस्य सत्यत्ववादिनां प्रलयप्रक्रिया सा निराक्रियते । स्वाप्नगजादिरिवेति शेषः** ।

शे०— सृष्टिकाल इत्यस्य नोत्तरत्र सम्बन्धः किन्तु पूर्वत्रेति भावेनान्वयं दर्शयन्सृष्ट्यादिविगानप्रदर्शकत्वलाभाय तदनुगुणतया प्रवर्तत इत्यादिपदजातं व्याचष्टे **सृष्टिकाल इत्यादिना ॥ अनेनेति ।** निष्क्रियार्थकस्तिमितपदेनेत्यर्थः ॥ **क्रियाविभागादिन्यायेनेति ।** ब्रह्मणो वर्षशतान्ते महेश्वरस्य सञ्जिहीर्षया पृथिव्याद्यारम्भकाणुषु क्रिया जायते, ततो विभागास्ततोऽसमवायिकारणसंयोगानां नाशस्ततो द्व्यणुकानां नाशस्ततस्त्र्यणुकादीनां महापृथिव्यादिपर्यन्तानां कार्याणां समवायिकारणनाशेन नाश इति प्रशस्तदेवाचार्योदीरितक्रियाविभागादिक्रमेणेत्यर्थः । संवृतियोगमात्रेण शून्याज्जगत्सृष्ट्यादेरसम्भावनाशङ्कापरिहाराय स्वप्नभ्रान्तिवदेवेदमित्याद्युत्तरभाष्यनुसारेणानुरूपं दृष्टान्तं शेषपूरणेनाह **स्वाप्नेति ।**

स०— **अनेनेति ।** निष्क्रियत्वार्थकस्तिमितपदेनेत्यर्थः ।

प०— **क्रियाविभागादीति ।** ईश्वरसंजिहीर्षया भूतकारणाणुषु क्रियायां जातायां तया अणुद्वयविभागे सति तत्संयोगरूपासमवायिकारणनाशेन द्व्यणुकनाशे क्रमादन्त्यावयविपर्यन्तनाश इत्येवं रूपेणोक्तातार्किकादीनां प्रलयप्रक्रियेत्यर्थः ॥

या— **क्रियाविभागादिति ।** ब्रह्मणो वर्षशतान्ते महेश्वरस्य सञ्जिहीर्षया पृथिव्याद्यारम्भकाणुषु क्रिया जायते । ततो विभागस्ततोऽसमवायिकारणसंयोगानां नाशस्ततो द्व्यणुकानां नाशस्ततस्त्र्यणुकादीनां महापृथिव्यादिपर्यन्तानां कार्याणां समवायिकारणनाशेन नाश इति क्रियाविभागादिक्रमेणेत्यर्थः ॥

---

सु०— **एवमुपन्यस्तमतनिरासार्थत्वेनाधिकरणमवतारयति** तमुद्दिश्येति ।

**अनु०—** तमुद्दिश्य जगाद जगतां गुरुः ॥

जगाद **इदमधिकरणमिति शेषः ।**

सु०— **यत्तावदुक्तं शून्यादेवेदं जगदुत्पद्यत इति तद्यथाश्रुतमपाकर्तुं सूत्रम्** ॐ नासतोऽदृष्टत्वात् ॐ **इति । तद्व्याचष्टे** नासत इति ।

**अनु०— ॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥**

नासतो जगतो भावो

**असतः सर्वविशेषविनिर्मुक्तत्वेन गगनकुसुमसमानाच्छून्याज्जगतो** भावो **जन्म नोपपद्यते । कुत इत्यत आह** न हीति ।

न हि दृष्टाऽसतो जनिः ॥

सतः क्वचित्

सतो **भवतः कार्यस्येति यावत्** । क्वचित् । **असतो** जनिर्न **दृष्टा** यतः । **अत्र सर्वत्र शून्यस्यासत्त्वमापाद्य दूषणाभिधानमिति ज्ञातव्यम् ।**

**शे०— ॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥ यथाश्रुतमिति** । यद्यपि शून्यात्संवृतियोगेन **विश्वमेतत्प्रवर्तत' इति** ग्रन्थानुरोधेन जगतः शून्याविद्याकल्पितत्वसिद्ध्या तदारोपाधिष्ठानत्वमेव शून्यस्य जगत्कारणत्वं परस्याभिमतमिति तदेव निराकर्तुमुचितम् । अन्यथाऽनभिमतपक्षनिरासेन छलप्रसङ्गात् । तथाऽपि शून्याज्जगदुत्पद्यत इति वदतः किं यथाश्रुत एव कार्यकारणभावोऽभिमतः किंवा तदविद्याकल्पितत्वात्तत्राध्यस्तत्वरूप इति विकल्पद्वयं मनसि निधाय द्वितीये वक्ष्याम इति भावेन यथाश्रुत एव शून्यजगतोः साध्यसाधनभावो विवक्षित इत्याद्यपक्षस्य नासतोऽदृष्टत्वादित्येतदुत्तरमित्येवं विकल्पमुखेन दूषणप्रवृत्तेर्न छलप्रसङ्ग इति ध्येयम् । ननु 'पारमार्थिकसत्यत्वं शून्यादन्यस्य न क्वचिदि'ति वदता परेण शून्यस्य पारमार्थिकसत्यत्वाभ्युपगमेन तदसत्त्वाभावान्नासत इत्यादिदोषस्य निरालम्बनत्वमित्याशङ्क्याह **अत्र सर्वत्रेति** । यदि शून्यं निर्विशेषं स्यात्तर्ह्यप्रामाणिकं स्यात् सधर्मक एव प्रमाणप्रवृत्तेर्दर्शनात् । ततश्च गगनकुसुमवदसत्स्यादित्यसत्त्वापादनपूर्वकमेवैतद्दूषणप्रवृत्तेर्न तन्निरालम्बनत्वमित्यर्थः ।

**स०— यथाश्रुतमपाकर्तुमिति** । यद्यपि 'शून्यात्संवृतियोगेन विश्वमेतत्प्रवर्तते' इति शून्यस्य सर्वारोपाधिष्ठानत्वाभिप्रायेणैव पूर्वं तथोक्तम् । न तु शून्यस्य दण्डादेरिव कारणत्वाभिप्रायेण । तथाऽपि पराभिप्रेतार्थविवक्षयैव शून्यस्य सर्वकारणत्वमेवोक्तमिति भावेन यथाश्रुतमपाकर्तुमित्युक्तमिति भावः ।

**प०— यथाश्रुतमिति** । शून्यविवर्तत्वमनाश्रित्य शून्याज्जगज्जायत इति यथाश्रुतमित्यर्थः ।

**या०— यथाश्रुतमिति** । शून्याविद्यया शून्येऽध्यस्तमेव जगच्छून्यकारणकमित्युच्यत इति तदभिप्रेतपक्षस्याप्यग्रे 'स्वप्नभ्रान्तिवदेवेदं संवृत्यैवोपलभ्यते । यदि सत्त्वेने'त्यादिना दूषयिष्यमाणत्वादिति भावः । अत्र शून्याज्जगदुत्पद्यत इति परेणोक्ते किं यथाश्रुत एव कार्यकारणभावोऽत्राभिप्रेत उत तदविद्याकल्पितत्वादिरूप इति विकल्पेनोत्थानान्न छलप्रसङ्ग इति ज्ञातव्यम् । ननु परेण शून्ये पारमार्थिकसत्त्वस्याङ्गीकारात्कथं तस्यासत्त्वमाश्रित्य दूषणाभिधानमित्यत आह **अत्र सर्वत्रेति** । यदि शून्यं सर्वविशेषविनिर्मुक्तं स्यात्तर्ह्यप्रामाणिकं स्यात् सधर्मक एव प्रमाणप्रवृत्तेर्दर्शनात् ततश्च गगनकुसुमवदसत्स्यादित्यापाद्येत्यर्थः ।

**च०— यथाश्रुतं** श्रूयमाणानुपूर्वीमहिमाधिगतम् ।

**सु०— स्यादेतत् । प्रमाणाभावः प्रमेयाभावं साधयति । न पुनः प्रमाणविशेषाभावः । मा हि भूदसदादिप्रत्यक्षव्यावृत्त्या धर्माद्यभावसिद्धिः । तदत्रापि प्रमाणाभावादिति हेतुर्वक्तव्यः । 'अदृष्टत्वादिति' प्रत्यक्षाभावकथनं तु कथम् । अनैकान्तिकत्वादित्यत आह** प्रमाणं चेति ।

**अनु०—** प्रमाणं च दृष्टिरेवाखिलाद्वरम् ॥

दृष्टिः प्रत्यक्षमेव अखिलात् अनुमानादागमाच्च वरं प्रमाणम् । अयमभिसन्धिः । नासतो जगतो भाव इति प्रतिज्ञाय कुत इत्याकाङ्क्षायां तत्र प्रमाणाभावादिति हेतुं मनसि निधाय कथं तत्र प्रमाणाभाव इति जिज्ञासायामनुमानागमयोः प्रत्यक्षमूलत्वेन ततः प्रत्यक्षमेव वरं प्रमाणमिति,आदावदृष्टत्वादिति तदभावोऽयं दर्शितो न तु प्रधानप्रतिज्ञायां हेतुत्वेन, येनोक्तदोषः स्यादिति ।

तर्ह्यनुमानाद्यभावो(ऽपि) वक्तव्य इत्यत आह प्रमाणं चेति । अयमाशयः । वेदादेः शून्यवादिना प्रामाण्यं नाङ्गीक्रियते । तदीयागमस्य त्वस्माभिरित्यतो नास्त्यत्रागमः संप्रतिपन्न इति शिष्यैरेव शक्यते ज्ञातुम् । प्रत्यक्षाभावेनानुमानस्याप्यभावः सिद्ध एव । प्रत्यक्षस्यानुमानोपजीव्यत्वात् । प्रत्यक्षेण क्वचिदुपलब्धमेव ह्यनुमानेन (क्वचित्)साधनीयम् । अतोऽनुमाना(द्य)भावस्यानुक्तावपि लाभाददृष्टत्वादित्येवोक्तं सूत्रकृतेति । अत एव प्रागुक्तं क्वचिदिति

**शे०** — ननु प्रमाणं च दृष्टिरेवेत्युत्तरवाक्यमनर्थकम् । न चैतत्प्रत्यक्षस्यानुमानादिकं प्रति मूलत्वकथनार्थत्वान्नानर्थक्यमिति वाच्यम् । तन्मूलत्वकथनस्यापि प्रकृतोपयोगाभावात् । न च प्रत्यक्षाभावेन तन्मूलकानुमानादेरभावोपपादनार्थत्वात्तस्योपयोग इति वाच्यम् । अनुमानाद्यभाववर्णनस्याप्यनर्थकत्वात् । न च प्रमाणमात्राभावोपपादनार्थत्वात्तस्यार्थवत्त्वम् । तदभाववर्णनस्यापि प्रकृतोपयोगादर्शनात् । न च जगदसतोः कार्यकारणभावो नास्तीति प्रतिज्ञातार्थोपपादकत्वात्तस्य प्रकृतोपयोग इति वाच्यम् । अदृष्टत्वादितिसौत्रहेतुनैव प्रतिज्ञातार्थसिद्धिसंभवेन तत्साधकतया प्रमाणाभावस्याननुसरणीयत्वादित्याशङ्क्यादृष्टत्वमात्रस्य प्रतिज्ञातार्थसाधकत्वासंभवेन प्रमाणाभावस्य तत्साधकतयाऽवश्यमनुसरणीयत्वात् । उक्तप्रनाड्या तदुपपादकत्वात्प्रत्यक्षवरत्वकथनस्य नानर्थक्यमित्याशयेनोत्तरग्रन्थं योजयितुं भवेदेतदेवं यद्यदृष्टत्वमात्रस्य प्रतिज्ञातार्थासाधकत्वं प्रमाणाभावस्य च तत्साधकत्वमिति स्यात् । तदेव कथमित्यतस्तदुभयमुपपादयितुं शङ्कामुत्थापयति **स्यादेतदिति** ॥ **मा हि भूदिति** । न भवति हीत्यर्थः । **वक्तव्य इति** । तस्य तत्साधकत्वादिति भावः ॥ **कथमिति** । तस्यातत्साधकत्वादिति भावः । कुतस्तस्यासाधकत्वमित्यतः तदुपपादयति **अनैकान्तिकत्वादिति** । धर्माधर्मादाविति शेषः । तत्रासदादिप्रत्यक्षव्यावृत्तिसत्त्वेऽपि तदभावाभावादिति भावः । नन्वेवमप्यदृष्टत्वादिति सौत्रहेतोर्न व्यभिचारपरिहार इत्याशङ्क्य तस्य प्रमेयाभावसाधकतयाऽभिमतहेत्वन्तरोपपादकत्वेन स्वातन्त्र्येण प्रमेयाभावासाधकत्वान्न व्यभिचार इत्यभिप्रेत्य प्रमाणं चेत्यादिभाष्याभिप्रायमाह **अयमिहाभिसन्धिरिति** ॥ **उक्तदोष इति** । अनैकान्त्यरूप इत्यर्थः । इतीत्यस्येत्ययमिति संबन्धः ।

**उपजीव्यत्वादिति** । अनेन मूले वरशब्द उपजीव्यत्वार्थकोऽखिलादित्यस्य विभक्तिविपरिणामेनानुवृत्त्यर्थ इति सूचितमिति ज्ञातव्यम् । उपजीव्यतामेवोपपादयति **प्रत्यक्षेण हीति** । अन्यथा अप्रसिद्धविशेषणत्वापातादिति भावः ॥ **अत एवेति** । प्रत्यक्षेण क्वचिदुपलब्धमेव ह्यनुमानेन क्वचित्साधनीयम् । न चेदं क्वचित्प्रत्यक्षेणोपलब्धं अतो न साधनार्हमिति परमते प्रत्यक्षाभावोक्तिमात्रेणानुमानस्याप्यभावो लभ्यत इति सूत्रकृदभिप्रायदर्शनार्थमेव प्राक् क्वचिदित्यनेन दृष्टान्ताभाव उक्तः । अन्यथा तदुक्तिर्व्यर्था स्यादिति भावः ।

**प०** — प्रमाणविशेषाभाव एव प्रमेयाभावं साधयतु को दोष इत्यत आह **मा हि भूदिति** । हि यस्मादेवं मा भूदसदादिप्रत्यक्षनिवृत्त्या धर्माद्यभावो नैव स्यात् तस्मात्प्रमाणविशेषाभावः प्रमेयाभावं न साधयति । अन्यथा धर्माद्यभावसिद्धिरपि स्यादित्यर्थः ॥ **तदत्रापीति** । असतः कार्यजनिर्नेत्यत्रापीत्यर्थः ॥ **अनैकान्तिकत्वादिति** । धर्मादेः प्रत्यक्षेणादृष्टत्वेपि धर्माद्यभावाभावेन तत्रानैकान्त्यादित्यर्थः । प्रकारान्तरेण तदेव वाक्यमवतार्य भावमाह **तर्ह्यनुमानाद्यभावोपीति** ॥ **अत एवेति** । दृष्टाद्यभावेनानुमानाभावस्य सिद्धत्वादेव । क्वचिन्न हि दृष्टेत्युक्तम् । तथा च क्वचिदप्यनुपलम्भेन दृष्टान्ताभावेनानुमानाभावसिद्धिरिति भावः ।

**या०** — **उपजीव्यत्वादिति** । अनेन मूले वरशब्दः उपजीव्यत्वार्थकोऽखिलादित्यस्य च विभक्तिविपरिणामेनानुमानस्येत्यर्थ इति सूचितमिति ज्ञातव्यम् ॥ **अत एवेति** । प्रत्यक्षेण क्वचिदुपलब्धमेव क्वचित्साधनीयं, न चेदं क्वचित्प्रत्यक्षेणोपलब्धमतो न साधनार्हमिति परमते प्रत्यक्षाभावोक्त्याऽनुमानस्याप्यभावो लभ्यत इति सूत्रकृदभिप्रायप्रदर्शनार्थमेव प्राक् क्वचिदित्यनेन दृष्टान्ताभाव उक्तोऽन्यथा तदुक्तिर्व्यर्था स्यादिति भावः ।

**श्री०** — **अत एवेति** । अनुमानं प्रति प्रत्यक्षस्योपजीव्यत्वादेवासतः सकाशात् सत उत्पत्तेः क्वाप्यदृष्टत्वेन तन्मूलकमनुमानमपि न सम्भवतीत्यर्थः ॥

**च०** — **मा हि भूदिति** । माङि लुङा सर्वलकारापवादकतया लङर्थे लुङिति न हि भवतीत्यर्थः ।

**सु०** — **मा भूच्छून्याज्जगदुत्पत्तौ प्रत्यक्षं प्रमाणम् । मा च भूदागमः । तथाऽप्यनुमानं भविष्यति । असतः सदुत्पत्तौ प्रत्यक्षाभावेन दृष्टानुमानानुपपत्तावपि सामान्यतो दृष्टस्योपपत्तेः । कारणस्य हि सत्त्वे निषिद्धेऽसत एव जन्म सेत्स्यतीत्याशङ्क्यानुमानानां तर्कप्रतिघातं वक्तुं सूत्रम्** ॐ उदासीनानामपि चैवं सिद्धिः ॐ **इति** । **तद्व्याचष्टे** यद्येवमिति ।

अनु०— ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥

यद्येवं सप्तमरसान्मधुरादिव पीनता ॥
भवेज्जनस्य मार्जारशृङ्गं गोरिव घातकम् ॥

यद्यसत एव यत्किञ्चित्कार्यं जायेत तदा मधुरादिव सप्तमरसाज्जनस्य पीनता स्यात् । गोः शृङ्गमिव मार्जारशृङ्गमपि जनस्य घातकं भवेदविशेषादित्यनेन एवं सत्युदासीनानां हेयो-(पादेयो)पेक्षणीयबुद्ध्यविषयाणां सप्तमरसादीनामपि सकाशात् पीनत्वादिकार्यस्य सिद्धिः प्रसज्येतेति सूत्रं व्याख्यातं भवति ।

शे०— ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ दृष्टानुमानेति । प्रत्यक्षयोग्यार्थानुमापकस्यैव दृष्टानुमानत्वादिति भावः ॥ सामान्यतो दृष्टस्येति । प्रत्यक्षायोग्यार्थानुमापकत्वरूपत्वात्तस्येति भावः । किं तत्सामान्यतो दृष्टानुमानमित्यतः सामान्यसिद्धिपरिशेषरूपमेवेत्यभिप्रेत्य तद्दर्शयति कारणस्य हीति । आदिकार्यं सकारणकं कार्यत्वाद्धटवदिति साध्यमानस्यादिकार्यकारणस्येत्यर्थः । परिशेषं दर्शयति सत्त्वे निषिद्ध इति । विवादपदं कारणं न सत् कारणत्वात् वर्णदैर्घ्यादिवदित्यादि-हेतुभिरिति शेषः । दण्डादिश्च पक्षतुल्य एवेति न तत्र व्यभिचारः । 'अन्तर्भावितसत्त्वं चेत्कारणं तदसत् ततः । नान्तर्भावितसत्त्वं चेत्कारणं तदसत् ततः' इति खण्डनोक्तहेतुभिरिति वा शेषो ज्ञातव्यः । सामान्यसिद्धिपरिशेषयोरपि सामान्यतो दृष्टत्वं परेषामपि संमतम् । रूपाद्युपलब्धिः सकरणिका क्रिया-त्वादिति सामान्यसिद्धेः प्रसक्तप्रतिषेधसहिताया अतीन्द्रियार्थानुमापकतया सामान्यतो दृष्टतायाः परैरङ्गीकृतत्वादित्यवधेयम् । यद्वाऽऽदिकार्यं सकारणकं कार्यत्वाद्धटवदिति सामान्यतो दृष्टस्येत्यर्थः अस्य च नित्यातीन्द्रियार्थानुमापकत्वाद्रूपादिज्ञानं सकारणं कार्यत्वाच्छिदिक्रियावदित्य दि नित्यातीन्द्रियार्थ-साधकानुमानवत्सामान्यतो दृष्टत्वम् । अथवा यथा कार्यत्वस्य सामान्यस्य कुठारादिनिष्ठकारणत्वसामान्या-वलम्बनेनैव चक्षुराद्यनुमापकत्वं, न तु चक्षुराद्याकारेणेति भवति सामान्यतो दृष्टत्वम् तथैव कार्यत्वस्य सामान्यस्य मृदादिकारणनिष्ठकारणत्वसामान्यावलम्बनेनैव शून्यानुमापकत्वं न तु शून्याकारेणेति भवति सामान्यतो दृष्टत्वमिति ज्ञेयम् । ननु चास्य सामान्यतो दृष्टस्य सकारणकत्वमात्रसाधकत्वेऽप्यसत्कारण-कत्वसाधकत्वाभावात्कथं तत्र प्रमाणत्वं इत्यतो यथा सकारणकत्वसाधकस्य कार्यत्वस्य केवलस्य चक्षुरादि-करणकत्वसाधकत्वाभावेऽपि प्रसक्तप्रतिषेधसहकृतस्य तस्य चक्षुरादिकरणकत्वसाधकत्वं, तथा कार्यत्वस्यापि केवलस्यासत्कारणकत्वासाधकत्वेऽपि प्रसक्तप्रतिषेधसहकृतस्य अस्य तत्साधकत्वान्नानुपपत्तिरिति भावेन प्रसक्तप्रतिषेधमुपदर्शयति कारणस्य हि सत्त्वे निषिद्ध इति । कारणस्य हि सत्त्वमसत्त्वं वा

वाच्यम् । तृतीयप्रकाराभावात् । तत्र च बाध्यतया कारणस्य सत्त्वे निषिद्धेऽसत्त्वसिद्ध्या असत्कारणत्वसिद्धिरिति । यद्वा प्रसक्तयोः सत्त्वासत्त्वयोर्मध्ये 'अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः । नान्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः' इति खण्डनोक्तवक्ष्यमाणहेतुभिः सत्त्वे प्रतिषिद्धेऽन्यत्राप्रसङ्गादसत्त्वप्राप्त्या तत्सहकृतसामान्यतो दृष्टेनासत्कारणत्वसिद्धिरिति भावः ॥ **असत एवेति** । यद्यपि शून्यस्यासत्त्वं न तत्सिद्धान्तः, तथाऽपि निर्विशेषत्वबललब्धाप्रामाणिकत्वसिद्धासत्त्वाभ्युपगमेनेयं शङ्केति भावः ।

**यद्यप्यसत एवेति** । अत्र यद्यसतः किञ्चिदुत्पद्येत तर्हि सप्तमरसाज्जनस्य पीनता स्यादित्येवापादनशरीरमभिमतं, न तु मधुरादिवदित्यपि तदन्तर्गतं, वैयर्थ्यात् । किन्तु यत्किञ्चित्कार्यकारित्वमनापाद्य पीनत्वकारित्वापादने को हेतुरित्यतस्तस्यैव स्वोचितत्वाद्युक्तं तदापादनमिति भावेनोक्तं **मधुरादिवदिति** । मधुरादिरसस्य पीनत्वकारित्वेनास्यापि रसत्वाविशेषात्पीनत्वापादकत्वमावश्यकमिति भावः । एतच्च चित्ररसो नास्तीति प्राचां मतमाश्रित्योक्तम् । चित्ररूपवच्चित्ररसोऽप्यस्तीति मते त्वष्टमरसाज्जनस्य पीनता स्यादित्यापादनं द्रष्टव्यम् । प्रसङ्गमूलभूतव्याप्तिवैकल्यात्प्रसङ्गद्वयस्याभासत्वमाशङ्क्य दृष्टान्ताभावेन विशेषव्याप्त्यभावेऽप्यविशेषलक्षणसामान्यव्याप्तिसद्भावान्न तस्याभासत्वमित्याशयेनोक्तम् **अविशेषादिति** । सौत्रोदासीनशब्दव्याख्यानरूपभाष्यस्थं हेयोपादेयबुद्धिवर्जितानामिति हेतुगर्भं विशेषणमयुक्तम्, तद्वर्जितानामपि तन्त्वादीनां हेतुत्वदर्शनादित्याशङ्क्य तद्बुद्धिविषयतावर्जितत्वं भाष्ये विवक्षितम् । तन्त्वादयश्च तद्बुद्धिविषया एवेति न दोष इत्याशयेनोक्तं **हेयोपादेयोपेक्षणीयबुद्ध्यविषयाणामिति** ।

**स०— कारणस्य हि सत्त्वे निषिद्धे इति** । कार्यत्वेन सकारणकत्वे सिद्धे त्वद्रीत्या सत्कारणत्वं वाच्यम्, मद्रीत्या शून्यकारणत्वं वा तृतीयप्रकाराभावात् । तत्र बाध्यत्वेन सत्कारणत्वे निषिद्धे शून्यकारणकत्वमेव सिद्ध्यतीति भावः ।

**प० — दृष्टानुमानेति** । क्वचिद्दृष्टस्यान्यत्रानुमानं दृष्टानुमानम् । अनीदृशं सामान्यतो दृष्टानुमानमिति ज्ञेयम् ॥ **सत्वे निषिद्ध इति** । स्वप्रकार्यं प्रति यत्कारणं तद्दृष्टान्तेन कारणत्वहेतुनाऽऽदिकालीनकारणं सन्नेत्यनुमानेन सत्वे निषिद्धे कार्यस्य कारणजन्यत्वनियमादसत एव जन्म सेत्स्यतीत्यर्थः ।

**या० —** असदापादितं शून्यस्यासत्त्वमभ्युपेत्य माध्यमिकः प्रत्यवतिष्ठते **मा भूच्छून्यादिति ॥ दृष्टानुमानेति** । प्रत्यक्षयोग्यार्थानुमापकस्यैव दृष्टानुमानत्वादिति भावः ॥ **सामान्यतो दृष्टस्येति** । तस्य प्रत्यक्षायोग्यार्थानुमापकरूपत्वादिति भावः । तादृशमनुमानं प्रकृते दर्शयति **कारणस्य हीति** । आदिकार्यं कारणजन्यं कार्यत्वाद्घटवदिति साध्यमानस्यादिकार्यकारणस्येत्यर्थः ।

तत्र प्रसक्तप्रतिषेधं करोति **सत्त्वे निषिद्ध इति** । विवादास्पदं कारणं, न सत्, कारणत्वाद्गुणदैर्घ्यादिवदित्यादिहेतुभिरिति शेषः । दण्डादिश्च पक्षतुल्य एवेति न तत्र व्यभिचारः । 'अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः । नान्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः' इत्यादिखण्डनोक्तहेतुभिरिति वा शेषो ज्ञातव्यः । अत एव रूपादिज्ञानं करणसाध्यं क्रियात्वाच्छिदिक्रियावदित्यनुमानं प्रसक्तप्रतिषेधसहितमतीन्द्रियार्थानुमापकं सामान्यतो दृष्टतया परैरुदाहृतमिति ज्ञातव्यम् ।

**सु०— प्रकारान्तरेण व्याख्याति** कार्यार्थीति ।

**अनु०** — कार्यार्थी कारणं सच्च नोपादद्यात्कथञ्चन ।

**यद्यसत एव कार्यमुत्पद्यते तदा पटादिकार्यार्थी कुविन्दादिः सत् तन्त्वादिकारणं सर्वथा नोपाददीत । असत एव पटाद्युत्पत्तेः । अतिप्रसङ्गान्तरमाह** नेति ।

**अनु०** — न प्रवर्तेत चेष्टाय शून्यादेवेष्टसंभवात् ॥

**न केवलमसतः कार्योत्पत्तौ सत्कारणोपादानानुपपत्तिः । किन्त्विष्टाय पटाद्युत्पादाय** न प्रवर्तेत । **न प्रयतेत च । कुतः ।** शून्यादेवेष्टसंभवात् । **एतेन तन्त्वाद्युपादानादु(द्यु)दासीनानां चिकीर्षादिरहितानां च पुंसां पटादिसिद्धिः स्यादिति सूत्रं** व्याख्यातं **भवति** ।

**शे०**— आद्यमतिप्रसङ्गमभिसन्धायाह **तन्त्वाद्युपादानादुदासीनानामिति** । द्वितीयमतिप्रसङ्गमभिसन्धायाह **चिकीर्षादिरहितानामिति** ।

**प०— ॐ उदासीनानामपि चैवं सिद्धिः ॐ** । चशब्दार्थमाह **न केवलमिति** । न प्रवर्तेतेत्यनुवादः । चशब्दान्वयेनार्थमाह **न प्रयतेत चेति ॥ एतेनेति** । कार्यार्थी न प्रवर्तेतेति चोक्तातिप्रसङ्गद्वयपरेण ग्रन्थेनेत्यर्थः । **उदासीनानां** उद्गत्यासीनानामित्यर्थः । प्रयत्ने उदासीना-(नाञ्चेति) नामिति वक्तव्यम् । स्पष्टत्वादयं तदर्थानुवादः **चिकीर्षादिरहितानां चेति** ।

**या०— ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ पटादिकार्यार्थीति** । पटादिचिकीर्षावानित्यर्थः । तथा च पटादिचिकीर्षावान्न स्यात्स तन्त्वाद्युपादानवांश्च न स्यादित्यापादनद्वयमत्र विवक्षितम् । अत एव वक्ष्यति 'चिकीर्षादिरहितानामि'ति ॥

**श्री०— ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ उपादानात्** स्वीकारात् । आदिपदेन प्रयत्नः ।

**सु०— प्रकारान्तरेण व्याख्याति** देशेति ।

**अनु०**— देशकालादिनियमो न हि शून्यात्सतो भवेत् ॥

शून्यात्सतः **शून्यादेव भवतः कार्यस्य देशकालवयोवस्थानियमो न भवेत्। तथा हि। यदि जगच्छून्यादेव भवेत् तदा गोधूमाः कृष्णभूमौ संपद्यन्ते न पाण्डुभूमौ। वसन्ते किंशुकाः पुष्पिता भवन्ति। न वर्षासु। त्रिहायिण्येव गौर्गर्भं धत्ते नान्यथा। सतुषा एव व्रीहयोऽङ्कुरानुत्पादयन्ति नेतरथेत्यादिदेशकालादिनियमः कार्योत्पत्तौ न स्यात्। शून्यस्य सर्वत्राविशिष्टत्वात्। अनेनोदासीनानां देशकालादिनियमानपेक्षाणामपि कार्याणां सिद्धिरुत्पत्तिः स्यादिति सूत्रं** व्याख्यातं भवति। शून्यादेव **कार्योत्पत्तौ कर्त्रुपादाननिमित्ता-पेक्षा न स्यादिति समुदायार्थः।**

**शे०** — देशनियममुदाहरति **तदा गोधूम इति**। कालनियममुदाहरति **वसन्त इति**। वयोनियममुदाहरति **त्रिहायिण्येवेति**। अवस्थानियममुदाहरति **सतुषा एवेति**॥ **समुदायार्थ इति**। 'कार्यार्थी कारणं सद्वे'त्यारभ्य 'सतो भवेदि'त्यन्तस्य ग्रन्थसन्दर्भस्य तात्पर्यार्थ इत्यर्थः।

**प०** — उक्तप्रसंगचतुष्टयस्य निष्कृष्यार्थमाह **कर्त्रुपादाननिमित्तेति**। अतिप्रसङ्गद्वयतापर्यं **निमित्तापेक्षा न स्यादिति**। चिकीर्षादेर्निमित्तत्वात्॥

---

**च०** — **पुष्पिता इति**। सञ्जातपुष्पा इत्यर्थः, 'तदस्य सञ्जातं तारकादिभ्य इतजि'ति स्मृतेः। **त्रिहायिणीति**। बहुव्रीहिः। त्रिचतुर्भ्यां हायनस्य णत्वमिति वचनाण्णत्वम्।

**सु०** — **नन्वादिसृष्टावेव** शून्यात्**कार्योत्पादं ब्रूमो न सर्वदा। अन्यदा तु कर्त्रादि-कारणगणादेव। अतो नातिप्रसङ्ग इत्यत आह** पुरुषेति।

**अनु०** — पुरुषेच्छानुसारेण यदि किञ्चित्प्रजायते॥
किन्नानुमीयते तद्वद्वस्तुत्वात्पुरुषोद्भवः॥
सर्वस्यापि

**किञ्चिदित्यधुनातनं कार्यम्।** वस्तुत्वात् **कार्यत्वात्।** सर्वस्यापीति। **आदिकालीनस्यापि कार्यस्येत्यर्थः। अनेन** ना **पुरुषः,** सतः **आदिकालीनस्य कार्यस्य कर्ताऽनुमातव्यः। कुतः।** दृष्टत्वात् **अधुनातनानां कार्याणां पुरुषकर्तृत्वस्य निश्चितत्वादिति प्रथमसूत्रं प्रकारान्तरेण व्या-ख्यातं भवति। सूत्रभाष्ययोः पुरुषग्रहणं तु उपादानाद्युपलक्षणम्।**

शे० — वस्तुत्वस्य पररीत्या शून्ये व्यभिचरितत्वादहेतुत्वमित्यतोऽनूद्य व्याचष्टे **वस्तुत्वात्कार्यत्वादिति**। अधुनातनकार्यांशे सिद्धसाधनताप्रसङ्गादाह **आदिकालीनस्येति** ॥ **प्रकारान्तरेणेति**। 'नासतो जगतो भावो न हि दृष्टाऽसतोजनिः। सतः क्वचिदि'ति प्राचीनव्याख्यानापेक्षया प्रकारान्तरेणेत्यर्थः। ननु चेदानीन्तनकार्यस्य कर्त्रुपादाननिमित्तेभ्य उत्पत्तौ शङ्कितायां तर्हीदानीन्तनकार्यदृष्टान्तेनादिकार्यस्यापि कार्यत्वात्कर्त्रुपादाननिमित्तवत्त्वस्यानुमानसंभवात् न तस्य शून्याज्जन्मसिद्धिरित्येव वक्तव्यम्। तत्कथं पुरुषेच्छानुसारेणेति भाष्ये नासत इति सूत्रे चेदानीन्तनकार्यदृष्टान्तेनादिकार्यस्य सकर्तृकत्वमात्रसाधनमित्यतः सूत्रभाष्ययोः पुरुषपदस्योपादाननिमित्तोपलक्षणत्वेन कर्तृमात्रपरत्वाभावेनादिकार्यस्य कर्त्रुपादाननिमित्तवत्ताया एवोभयत्र साधनान्नानुपपत्तिरित्याह **सूत्रभाष्ययोरिति**।

प० — **प्रथमसूत्रमिति**। 'नासतोऽदृष्टत्वादि'ति सूत्रमित्यर्थः ॥

श्री० — यद्वस्तु तत्पुरुषेच्छाधीनोत्पत्तिकमित्ययुक्तम्। शून्ये मद्रीत्या व्यभिचारादित्यत आह **कार्यत्वादिति** ॥

**सु० — नन्विदं सर्वमपि स्वव्याहतम्। तथा हि। यदुक्तं नासतोऽदृष्टत्वादिति। तत्सतः कारणत्वेऽपि समानम्। न हि सतः कारणत्वमपि क्वाप्यावयोः संमतम्। ननु च मधुरादिव गोः श्रृङ्गमिवेत्यादिना सतः सृष्टिसंहारकारित्वं निदर्शितम्। मैवम्। सर्वस्यापि जगतोऽसत्त्वेन तदन्तःपातिनो मधुरादेरपि सत्त्वाभावात्।**

**यश्चायमतिप्रसङ्गः 'असतः कारणत्वे सप्तमरसादेरपि मधुरादि (वत्) कार्यकारित्वप्रसङ्गः' इति। सोऽपि सतः कारणत्वे तन्त्वादीनां मृदादिकार्यकारित्वप्रसङ्गेन तुल्यः। तथाऽपि कारणत्वमात्रं सतोऽस्तीति चेत् (न)। तत्सत्त्वासंमतेरुक्तत्वात्। न हि सकलविक्रियातीतस्य कारणत्वं शक्यसंभावनम्। मधुरादीनां सप्तमरसादीनां चासत्त्वाविशेषेऽपि सद्बुद्धिभावाभावाभ्यां विशेषात्।**

**यदपि कार्यार्थीत्यादि। तदीश्वरस्य सर्वकारणत्वे तत एव पटादिसंभवात्तन्त्वाद्युपादानं न स्यात्। कुविन्दादेरिच्छादिकं च व्यर्थं स्यादिति समानम्। एतेन देशकालादीति प्रसङ्गोऽपि समीकृतो वेदितव्यः। यच्च पुरुषेच्छानुसारेणेत्युक्तम् (तदपि) तन्महदादिकार्यस्य कुलालादिजन्यतासाधनसमानयोगक्षेममिति।**

शे० — ननु सतः कारणत्वे तन्त्वादेरपि मृदादिकार्यकारित्वापादनमनुपपन्नम्। सत्त्वस्य कार्यकारित्वमात्रप्रयोजकतया सत्त्वे तन्मात्रापादनस्य सङ्गतत्वेऽपि, मृदादिरूपसद्विशेषत्वस्यैव मृदादिकार्यकारित्वे

प्रयोजकत्वेन, सत्त्वस्य तद्रूपविशेषप्रयोजकत्वाभावेन तदापादनस्यायोगात् । तन्त्वादेः पटादिरूपकार्यकारित्वे न कार्यकारित्वमात्रापादनस्य चेष्टापादनरूपत्वेनासम्भवात् । अतोऽत्र तादृशापादनोपपत्त्यर्थम् आपादकमप्यन्यकारणकार्यकारित्वमेव वाच्यम् । ततश्चात्र सतः कारणान्तरकार्यकारित्वे तन्त्वादेरपि मृदादिकार्यकारित्व स्यादित्येव प्रसङ्गः पर्यवसन्नः । न चासौ युज्यते । विपर्ययपर्यवसानहीनस्य तर्काभासतया तत्पर्यवसानावश्यंम्भावेन प्रकृते तन्त्वादेर्मृदादिकार्यकारित्वं च नास्ति । तस्मात्सतोऽपि कारणान्तरकार्यकारित्वं नास्तीत्येवंरूपविपर्ययपर्यवसानेन सतः कारणान्तरकार्यकारित्वाभावप्राप्तावपि स्वोचितकार्यकारित्वाभावस्याप्राप्त्या कारणत्वमात्रस्य लाभप्रसङ्गात् । असतः कारणत्वे च सप्तमरसादेरपि कार्यकारित्वमात्रस्यैवापादनेन तत्र विपर्ययपर्यवसानेनासतः कारणत्वमात्राभावप्राप्तेः । ततश्च वैषम्यान्न मृदादिकार्यकारित्वप्रसङ्गतुल्यत्वमित्याशयेन शङ्कते **तथाऽपि कारणत्वमात्रमिति** । उक्ततर्केणासतः कारणताया असत्त्वसिद्धावपि सर्वस्यापि जगतोऽसत्त्वेन तदन्तःपातिनस्तन्त्वादेः सत्त्वासम्मतेर्न सतः कारणत्वसिद्धिरित्याह **तदिति** । तस्य तन्त्वादिरूपकारणस्य सत्त्वासम्मतेः 'न हि सतः कारणत्वं क्वाप्यावयोः सम्मतमि'त्यत्रोक्तत्वादित्यर्थः । ननु सतः कारणत्वासम्मतावपि न किञ्चिन्नियामकमित्याशङ्क्य सतः कारणत्वे विक्रियाप्रसङ्गात्पारमार्थिकत्वहानिप्रसङ्गेन पारमार्थिकत्वस्य कारणत्वविरोधित्वान्न सतः कारणत्वसम्मतिरित्याह **न हीति** । यद्वा कारणत्वस्य सत्त्वविरोधित्वाच्च न सतः कारणत्वं सम्भवतीत्याह **न हीति** । नापीत्यर्थः । क्वचित्तथैव पाठः । नन्वेवं सतः कारणत्वासम्मतौ मधुरादीनां सप्तमरसादीनां चाविशेषादुभयेषां पीनत्वजनकत्वं तदजनकत्वं वा स्यात् । न तु केषाञ्चिज्जनकत्वं केषाञ्चिदजनकत्वमिति वैषम्यमित्यत आह **मधुरादीनामिति** ।

**स० — असतः कारणत्व इति** । अत्रासतः कारणत्वे सप्तमरसादेरपि पटतन्त्वादिरूपकार्यकारित्वप्रसङ्ग इत्येवापादनं विवक्षितम् । तत्र घटादिकार्यकारित्वमनापाद्य पीनत्वरूपकार्यकारित्वापादने को हेतुरित्यतः तस्यैव स्वोचितत्वात् युक्तमापादनमिति भावेन मधुरादिवदित्युक्तम् । मधुरादिरसस्य पीनत्वकारित्वेनास्यापि रसत्वाविशेषात्पीनत्वापादकत्वमुपपन्नमिति हृदयम् । **सतः कारणत्वे इति** । सतः कारणत्वे तन्त्वादेरपि मृदादिकार्यकारित्वापादनमप्रयोजकम् । सत्त्वस्य कार्यकारित्वमात्रप्रयोजकत्वे सत्त्वे कार्यकारित्वमात्रापादनस्य सङ्गतत्वेऽपि मृदादिरूपसद्विशेषत्वस्यैव घटादिकार्यकारित्वे प्रयोजकत्वेन सत्त्वस्य मृदादिकार्यकारित्वरूपतद्विशेषे प्रयोजकत्वाभावेनाप्रयोजकतया सत्त्वेन तदापादनासंभवात् । तन्त्वादेः पटादिरूपकार्यकारित्वेन तन्मात्रापादनस्येष्टत्वेनासंभवात् । तथा च तादृशापादनोपपत्त्यर्थमापादकमप्यन्यकार्यकारित्वमेव वाच्यम् । ततश्च सतः अन्यकार्यकारित्वे तन्त्वादेरपि मृदादिरूपकार्यकारित्व-

प्रसङ्ग इत्येवापादनस्य कर्तव्यत्वात् । तत्र च विपर्ययपर्यवसानस्यावश्यकत्वादस्य तन्त्वादेर्मृदादिकार्यकारित्वं नास्ति तस्मात्सतोपि कारणान्तरकार्यकारित्वं नास्तीत्येवंरूपस्यैव वाच्यत्वात् विपर्ययपर्यवसानेन कारणान्तरकार्यकारित्वाभावप्राप्तावपि स्वोचितकार्यकारित्वाहानेः कारणत्वमात्रं सतः प्राप्तमेव । असतः कारणत्वे च सप्तमरसादेरपि कार्यकारित्वमात्रस्यैवापादनेन विपर्ययपर्यवसानेनासतः कारणत्वमात्राभावस्य प्राप्तत्वेन वैरूप्यात् कथं समीकरणमिति भावेन शङ्कते **कारणत्वमात्रमिति** । उक्ततर्केण कारणत्वस्य सत्वसिद्धावपि सर्वान्तःपातिनः तन्त्वादेः सत्वासम्मत्या न सतः कारणत्वसिद्धिरित्यत आह **तदिति** । ननु कारणत्वस्य सत्त्वासम्मतावपि न किमपि मानम् अत्राह **न हीति** । सतः कारणत्वाङ्गीकारे विक्रियापत्त्या पारमार्थिकसत्त्वस्य कारणत्वविरोधित्वान्न सतः कारणत्वसम्मतिरिति भावः । ननु सतः कारणत्वासम्मतौ मधुरादीनां सप्तमरसस्य च रसत्वाविशेषात् पीनत्वकारित्वं स्यादित्युक्तातिप्रसङ्गानिस्तार इत्यत्राह **मधुरादीनामिति** ।

**प॰— तथापीति** । मृदादिकार्यकारित्वेपीत्यर्थः ॥ **उक्तत्वादिति** । जगतोऽसत्वेन तदंतःपातिन इत्यादिना, पूर्वग्रन्थ इति भावः । नन्वन्यस्य कारणस्य सत्त्वासंमतावपि सद्रूपं शून्यं कारणमुपेतमस्तीत्यतः शून्यस्य सद्रूपत्वेपि कारणत्वं नोपेयत इत्याह **न हीति** । शून्यस्येति योज्यम् । नन्वसत एव कारणत्वे सप्तमरसादपि पीनता स्यादित्युक्तमित्यत आह **मधुरादीनामिति** । न प्रवर्तेतेत्यस्योत्तरं **कुविंदादेरिति** । ईश्वरस्य सर्वकारणत्व इत्यापादकानुकर्षः । **कुलालादिजन्यतेति** । कुलालादिजन्यवर्तिघटादिजन्यतोपलंभेन महदादिकं कुलालादिजन्यमिति साधितं यथा बाधितं तथेदमपीत्यर्थः ॥

**या॰ -- कारणत्वमात्रमिति** । तन्त्वादेर्घटादिकारणत्वाभावेऽपि पटादिकारणत्वमस्त्येवेत्यर्थः । सप्तमरसादेस्तु न क्वापि कारणत्वमतो न प्रतिबन्दी युक्तेति भावः ॥ **तत्सत्त्वासम्मतेरिति** । तस्य तन्त्वादिरूपकारणस्य सत्त्वासम्मतेः । 'न हि सतः कारणत्वं क्वाप्यावयोः सम्मतमि'त्यत्रोक्तत्वादित्यर्थः । मन्मते सर्वस्य जगतः सत्त्वाभावे तदन्तःपातिनस्तन्त्वादेरपि न सत्त्वमिति भावः । ननु त्वयेदानीमसदापादितं शून्यस्यासत्त्वमङ्गीकृत्यैव प्रत्यवस्थानं कृतं, न वस्तुतस्त्वन्मते शून्यमसत्किन्तु पारमार्थिकसद्रूपं जगत्कारणं च । अतः सतः कारणत्वं क्वापि न सम्मतमिति रिक्तं वच इत्यत आह **न हि सकलेति** । तथा च यत्पारमार्थिकं शून्यं न तत्कारणं, यच्च संवृत्यवच्छिन्नं कारणं न तत्पारमार्थिकमतः सतः कारणत्वं न मम क्वापि सम्मतमिति भावः ।

**श्री॰— समीकृत इति** । ईश्वरस्य सर्वकारणत्वे तत एव गोधूमाद्युत्पत्तौ सम्भवत्यां देशादिनियमो व्यर्थ इत्यर्थः ॥

**सु०— अत्र यद्विश्वस्यासत्त्वमुक्तं तत्तावन्निराकर्तुं सूत्रम्** ॐ नाभाव उपलब्धेः ॐ **इति । तद्व्याचष्टे** न चेति ।

**अनु०— ॐ नाभाव उपलब्धेः ॐ ॥**

न चाभावो विश्वं सदिति गम्यते ॥

यतो

**भवतीति भावः । न भावोऽभावः । असदिति यावत् ।** सदिति गम्यते यत **इत्यनेन विश्वसत्यत्वे प्रत्यक्षं प्रमाणमुक्तं वेदितव्यम् । प्रत्यक्षेण सदित्यनुभूयमानमपि विश्वमसच्चेत्को दोष इत्यत आह** अनुभवेति ।

अनुभवरोधे तु वचनं वादिनः कुतः ॥

अनुभव(वि)रोधे तु **क्रियमाण इति शेषः । (तत्र) यदि सत्त्वेनोपलभ्यमानमप्यसत्स्यात्त-दोत्तरं** वदत्यपि **शून्यवादिनि नोक्तं त्वयेत्यतस्तेऽप्रतिभेति ब्रुवाणं परं प्रति शून्यवादिनः स्ववचनसाध(नो)कोपायाभावात्पराजय एवापद्येत । यदि च प्राश्निकाद्यवगतं कथं मद्वचनं नास्तीति ब्रूयात् तदाऽङ्गीकृतं प्रत्यक्षस्य प्रामाण्यमिति सत्त्वेन तदवगतं विश्वं कथमसत्स्यादिति ।**

**शे०— ॥ ॐ नाभाव उपलब्धेः ॐ ॥** विश्वस्याभावरूपतायाः परेणानभ्युपगमात् 'न चाभावो विश्वं सदि'त्यसदनुवादः । अभवनमभाव इत्याश्रयणेऽपि विश्वस्यासत्त्वाङ्गीकारेऽप्यसत्त्वरूपत्वान-ङ्गीकारादुक्तदोष एवेत्यतोऽन्यथा व्याचष्टे **भवतीति भाव इत्यादिना ।**

**स०— ॐ नाभाव उपलब्धेः ॐ ।** विश्वस्याभावरूपत्वस्य परेणानभ्युपगमात् 'न चाभावो विश्वं सदि'त्यसदनुवादः । अभवनं अभावः इत्यङ्गीकारेऽपि असत्त्वस्य विश्वरूपत्वानङ्गीकारात् उक्तो दोष एवेत्यतो व्याचष्टे **भवतीति भावः । न भावोऽभाव इति ।**

**प०— ॐ नाभाव उपलब्धेः ॐ ॥ भवतीति भाव इति ।** भू सत्तायामित्यतो भवतेश्चेत्यण्प्रत्ययेऽचोञ्णितीति वृद्धावावादेशे भाव इति सिद्धेरिति भावः ॥ **अनुभव(वि)रोधेत्विति ।** अनुभवानादरे **त्वित्यर्थः ॥**

**च०— भवतीति भाव इति ।** नायं घञन्तः किन्तु भवतेश्चेत्यनुशिष्टकर्तृसाधनाण् प्रत्ययान्त इति व्याचक्षाणाः । **अनुभवविरोधे** अनुभवानादरे ।

सु०— उक्तदोषपरिहारं शङ्कते स्वप्नेति ।

अनु०— स्वप्नभ्रान्तिवदेवेदं संवृत्यैवोपलभ्यते ॥
यदि सत्त्वेन ॥

स्वप्नश्च भ्रान्तिश्च तयोरिव स्वप्नभ्रान्तिवत् । यद्यपि परस्य स्वप्नोऽपि भ्रान्तिरेव । तथाऽपि गोबलीवर्दन्यायेन लोकव्यवहारमपेक्ष्य पृथगुक्तिः । यथा स्वप्ने भ्रान्तौ चासदेव गजादिकं सर्पादिकं च सदित्युपलभ्यते तथाऽसदेवेदं विश्वं स(त्यत्वे)त्त्वेनोपलभ्यते । एतदेव विश्वस्य शून्यकारणत्वं नाम । नापरम् । तत्र कथं सदित्युपलम्भेन विश्वस्य स(त्य)त्वसिद्धिः । न चैवमधिष्ठानस्य द्रष्टुः करणानां तद्दोषाणां च सत्त्वमङ्गीकार्यम् । अन्यथा भ्रान्तिवैचित्र्याद्यनुपपत्तिरिति वाच्यम् । असत्प्रकाशनशक्त्या संवृत्यैव सर्वस्योपपत्तौ तदङ्गीकारवैयर्थ्यात् । एवञ्च न वचनासिद्धिः । सांवृतसत्त्वस्य वचनस्य प्रत्यक्षेणैव सिद्धेः । तावतैव व्यवहारोपपत्तौ पारमार्थिकसत्त्वस्योपयोगाभावादिति ।

शे०-- तयोरिवेति । 'तत्र तस्येवे'ति षष्ठ्यन्ताद्वतिरिति भावः । यद्यप्यत्र भ्रान्तिस्वप्नवदिति वक्तव्यम् 'द्वंद्वे घी'ति इयन्तस्य पूर्वनिपातस्मरणात् । तथाऽपि 'स्वप्नमायासरूपे'ति श्रुत्यनुसारिस्वप्नादिवदिति सूत्रानुसारेण स्वप्नभ्रान्तिवदित्युक्तम्। वस्तुतस्तु 'लक्षणहेत्वोः क्रियायाः' 'समुद्राभ्राद्ध' इत्यादिषु यथायथं व्यभिचारं कुर्वता सूत्रकृतैतत्प्रकरणस्यानित्यत्वज्ञापनात् 'अल्पाच्तरमि'त्यस्यानित्यत्वात् 'शकुनिसूत्रयोरिति साध्वि'ति वदता ग्रन्थकारेण तदनित्यत्वस्य ज्ञापनाच्च द्वंद्वे घीत्यस्यात्र प्रसक्तिरिति ध्येयम् ॥ गोबलीवर्दन्यायेनेति । यथा गावः समागता बलीवर्दाश्चेत्यादौ लौकिकव्यवहारे बलीवर्दानामपि गोत्वाक्रान्ततया गोग्रहणेनैव ग्रहणप्राप्तावपि गोविशेषत्वात्सामान्यविशेषापेक्षया पृथगुक्तिः, तथा स्वप्नस्य भ्रान्तित्वेन भ्रान्तिग्रहणेन ग्रहणप्राप्तावपि तद्विशेषत्वात्सामान्यविशेषापेक्षया पृथगुक्तिर्युज्यत इति भावः ॥ एतदेवेति । शून्याविद्यया सदिति प्रतीयमानत्वमेवेत्यर्थः । अनेन तदविद्याकल्पितत्वादिरूप एव शून्यजगतोः कार्यकारणभावोऽभिमत इति प्राग्विकल्पितद्वितीयपक्षस्य निराकारणायेयमाशङ्केति सूचितं भवति । कल्पितत्वस्य साधिष्ठानत्वव्याप्यत्वाद्व्यापकीभूतसाधिष्ठानत्वव्यावृत्त्या तद्व्याप्यस्य कल्पितत्वस्यापि व्यावृत्तिरेवेत्यभिप्रेत्य कल्पितत्वे साधिष्ठानादित्वं स्यादित्याक्षिपति न चैवमिति ॥ अधिष्ठानस्येति । इदं रजतमित्येव भ्रान्तेर्दर्शनाद्रजतमित्येव च तददर्शनाद्भ्रान्तेरधिष्ठानसापेक्षत्वमिति भावः ॥ द्रष्टुरिति । भ्रमस्य समानाश्रयप्रमानिवर्त्यत्वेन ज्ञानस्य ज्ञातृसापेक्षत्वेन च द्रष्टृवश्यम्भावादिति भावः ॥ करणानामिति । प्रलये सत्यामप्यविद्यायामिन्द्रियादिकरणाभावेन तज्जन्यप्रमाया इव तज्जन्यभ्रमस्याप्यदर्शनेन भ्रान्तेः करणसापेक्षत्वनिश्चयादिति भावः ॥ तद्दोषाणामिति । अन्यथाऽप्रा-

माण्यस्य स्वतस्त्वापत्तेर्भ्रान्तेर्दोषापेक्षत्वनिश्चयादिति भावः। यद्यप्यप्रामाण्यस्य स्वतस्त्वापत्तिर्न परस्यानिष्टा तथाऽपि तं प्रत्यप्यप्रामाण्यपरतस्त्वव्यवस्थापनेन तत्सिद्धिमभिप्रेत्यैतदापादनमित्यवधेयम्। उपलक्षणमेतत्। देहादीनां चेत्यपि द्रष्टव्यम्॥ **सत्त्वमिति**। अधिष्ठानादेरध्यस्तत्वे च तदध्यासस्याप्यधिष्ठानाद्यन्तरसापेक्षत्वेनानवस्थाद्यापत्तेरिति कथं न विश्वसत्यत्वसिद्धिरिति भावः। ननु शून्यमेव जगद्भ्रमाधिष्ठानादिकं भविष्यति। तच्च सदेवेति न शून्यातिरिक्तविश्वसत्यत्वसिद्धिरित्यत आह **अन्यथेति**। शून्यस्यैव जगद्भ्रमाधिष्ठानत्वे तस्याविचित्रत्वेन घटोऽयं,पटोयमित्येवंरूपानेकभ्रान्तिविषयत्वानुपपत्तिः। यद्यप्यविचित्रस्यापि रज्जुखण्डस्य सर्प-माला-बलीवर्द-मूत्रत्वादिप्रकारकविचित्रविषयभ्रान्तित्ववच्छून्यस्यापि विचित्रानेकभ्रान्तिविषयत्वं वक्तुं शक्यं, तथाऽप्यविचित्रस्य युगपद्विचित्रानेकभ्रान्तिविषयत्वासम्भवस्यात्राभिप्रेतत्वाद्रज्जुखण्डस्य च क्रमिकविचित्रभ्रान्तिविषयतायामपि युगपत्तदभावाददोषः। आदिपदेनाधिष्ठानत्वस्य परिग्रहः। तदनुपपत्तिश्च निःसामान्ये निर्विशेषे च शून्ये, अधिष्ठानत्वे तन्त्रस्य सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषत्वस्याभावात्। ततश्च शून्यस्याधिष्ठानत्वाद्यनुपपत्त्या तदतिरिक्तस्य विश्वस्यैव तत्त्वे वाच्ये कथं न विश्वसत्यत्वसिद्धिरिति भावः। केशोण्डूकादिभ्रमस्य निरधिष्ठानस्यापि दृष्टत्वान्न भ्रान्तेरधिष्ठानसापेक्षत्वनियमः। प्रलये देहाद्यभावाद्भ्रमादर्शनेन भ्रान्तेस्तत्सापेक्षत्वेऽपि न भ्रमस्य तत्सत्त्वापेक्षत्वम्। अध्यस्तैरपि देहादिभिस्तदुपपत्तेः। न चैवमनवस्थाद्यापातः। तद्भ्रमस्यानादित्वेन तदनवकाशात्। न च कल्पाऽऽद्यभ्रमानुपपत्तिः। कल्पान्तरीयभ्रमजन्यवासनयाऽपि तदुपपत्तिरिति भावेन परिहरति **असत्प्रकाशनशक्त्येति**। ननु सांवृतसत्यस्य वचनस्य प्रत्यक्षेण सिद्धावपि पारमार्थिकस्य तस्यासिद्धेस्तवाप्रतिभैवेत्यत आह **तावतैवेति**। सांवृतसत्त्वमात्रेणैवेत्यर्थः। उपयोगाभावादित्युपलक्षणम्। सकलविक्रियातीतत्वेन व्यवहारविरोधित्वाच्चेत्यपि द्रष्टव्यम्।

**स०— स्वप्नभ्रान्तिवदिति**। यद्यप्यत्र 'द्वन्द्वे घि' इत्युक्तत्वात् भ्रान्तिस्वप्नवदिति वाच्यम्। तथापि 'स्वप्न-मायासरूपा' इति श्रुत्यनुसारि'स्वप्नादिवत्'इति सूत्रानुसारेण स्वप्न-भ्रान्तिवदित्युक्तमिति ध्येयम्। **न चैवमिति**। शून्यस्यैव कारणत्वे तस्याविचित्रत्वेन घटोऽयं पटोऽयमित्येवंरूपानेकविधभ्रान्तिकारणत्वासंभवेन शून्यातिरिक्तमेव तत्कारणं वाच्यमित्यर्थः।

**प०**— 'तत्र तस्येवे'ति सप्तम्यन्ताद्वतिरित्याह **तयोरिवेति**॥ **लोकव्यवहारमिति**। लौकिकैः स्वाप्नभ्रमयोर्यो भेदव्यवहारः तमपेक्ष्येत्यर्थः॥ **एतदेवेति**। असतः सत्त्वेनोपलभ्यमानत्वमेवेत्यर्थः॥ **न चैवमिति**। सत्त्वबुद्धेर्भ्रमत्व इत्यर्थः। अधिष्ठानस्य द्रष्टुरिति, व्यधिकरणे षष्ठ्यौ॥ **अन्यथेति**। अधिष्ठानाद्यभावे तद्वैचित्र्यनिबंधनस्य भ्रांतिबाधव्यवहारप्रवृत्त्यादिवैचित्र्यायोगादित्यर्थः॥

**या०— एतदेव विश्वस्येति** । शून्याविद्यया सदिति प्रतीयमानत्वमेवेवर्थः । अनेन यथाश्रुतकार्यकारणभावो वा, उत तदविद्याकल्पितत्वादिरूप इति पूर्वमभिप्रेते विकल्पे द्वितीयपक्षश्चाशङ्कित इति ध्येयम् ।

**श्री०— ॐ नाभाव उपलब्धेः ॐ ॥ असत्प्रकाशनम्** अविद्यमानप्रकाशनम् ।

**च०— तयोरिवेति** । तत्र तस्येवे'ति स्मृतेः षष्ठ्यन्तात्सप्तम्यन्ताद्वा वतिरिति भावः । **सत्त्वेनोपलभ्यते** सत्त्वप्रकारकोपलब्धिविषयः । सत्त्वं न विपर्यस्तं निरधिष्ठानादित्वादित्यनुमानेऽप्रयोजकत्वाशङ्कानिरसनौपयिकीं विपर्यस्तत्वापादककसाधिष्ठानादित्वापाद्यकापत्तिं दिदर्शयिषुराशङ्कते **न चेति** । **एवं** सत्त्वप्रतीतेर्विपर्यासरूपत्वे । **अन्यथा** शून्यस्यैव तादृशविपर्यासाधिष्ठानतामुपेत्य सामञ्जस्योपपादनान्न शून्यातिरिक्तस्य सत्यतासिद्धिरित्यभिहितौ । **भ्रान्तीति** । तथा सति तादृगधिष्ठानस्यावैचित्र्यादेकक्षणावच्छेदेनोत्पद्यमान'घटोऽयं पटोऽयमि'त्यनेकविचित्रविपर्यासाधिष्ठानत्वानुपपत्तेरिति भावः । अधिष्ठानमन्तरेणापि केशोण्डूकादिभ्रमदर्शनादध्यस्यमानदेहादिभिरेव भ्रान्त्युपपत्तेः कल्पाद्यकालीनभ्रमस्य कल्पान्तरीयभ्रमजन्यवासनयैवोपपत्तेर्न क्षतिरित्यभिप्रेत्य प्रतिविधत्ते **असत्प्रकाशनशक्त्येति** ।

**सु०— एतत्परिहाराय ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ इति सूत्रम्** । तद्व्याचष्टे **किञ्चेति** ।

**अनु०— ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥**

किञ्चात्र भ्रमो नैव निवर्तते ॥

**भवेदेवं यदि प्रपञ्चे रज्जुसर्पादाविव सत्त्वप्रत्ययो भ्रमः स्यात् । न चैवम् । तथात्वे** अत्र **प्रपञ्चे सत्त्वभ्रमः किमिति नैव निवर्तते । ज्ञानानां भ्रमत्वावधारणं हि बाधबोधाधीनम् । संप्रतिपन्नस्थले तथा दर्शनात् । प्रत्ययत्वमात्राधीनत्वे प्रागपि बाधबोधोदयाद्रज्जुसर्पादिज्ञाने लौकिकपरीक्षकाणां भ्रमत्वावधारणं स्यात् । न चैवं क्वचिद्दृष्टम् । न च प्रपञ्चसत्तावगमस्य बाधकं पश्यामः । ततो न भ्रमत्वावधारणं युक्तमिति । स्वप्नस्य भ्रान्तित्वाभावो, भ्रमस्य चाधिष्ठानाद्यपेक्षानियमः, सांवृतसत्त्वस्य व्यवहारनिर्वाहकत्वस्याभावश्चान्यत्र समर्थितोऽत्रानुसन्धेयः ।**

**शे०— ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥** ननु 'प्रपञ्चे सत्त्वभ्रमः किमिति नैव निवर्तत'इति ग्रन्थेन किं दूषणमुक्तं भवतीत्याशङ्क्य भ्रमत्वावधारकप्रमाणाभावात्सत्त्वप्रत्ययस्य तदवधारणानुपपत्तिरुक्ता भवतीत्यभिप्रेत्य, किं तद्भ्रमत्वावधारकं प्रमाणं, कुतश्च तस्य तदवधारकत्वं, कुतश्च तस्यैव तदवधारकत्वम्, कथं चात्र तदभावः, येन भ्रमत्वानुपपत्तिरित्यतस्तदवधारकं प्रमाणं तावदाह **ज्ञानानामिति** । कुतस्तस्यावधारकत्वमिति द्वितीयशङ्कां परिहरति **सम्प्रतिपन्नेति** । कुतस्तस्यैव तदवधारकत्वमन्यस्यापि

तत्सम्भवादिति तृतीयशङ्कां परिहरति **प्रत्ययत्वेति** । अस्त्येव बाधबोधोदयात्प्रागपि रज्जुसर्पादिज्ञाने लौकिकपरीक्षकाणां भ्रमत्वावधारणमितीष्टापादनमेतदित्यत आह **न चैवमिति** । तथाऽपि कथं प्रकृते तदवधारकप्रमाणाभाव इत्यतो बाधबोधः किं योग्य उतायोग्य इति विकल्पद्वयं मनसि निधाय नान्त्यः अयोग्यस्य शङ्कितुमशक्यत्वादिति द्वितीयपक्षदूषणं च मनसि निधायानुपलम्भबाधितत्वान्नाद्य इत्याह **न च प्रपञ्च इति** । निगमयति **अत इति** ॥ **युक्तमिति** । अनेन 'कर्मणि चे'त्यादाविव चशब्द इत्यर्थ इत्युक्तं भवति । मूले न्यूनतामाशङ्क्य परिहरति **स्वप्नस्येत्यादिना** ॥ **अन्यत्रेति** । अन्यत्रात्र च समर्थित इति सम्बन्धः । 'स्वप्नेऽपि वासनारूपमेव जगन्मनसि स्थितं बहिष्ठत्वेन प्रतीयत' इत्यादिना तत्त्वनिर्णये । तथा अत्र प्रथमस्य चतुर्थपादे 'न च स्वप्नोऽपि नो मृषा । वासनाजनितत्वेन तस्याप्यङ्गीकृतत्त्वतः' इत्यादिना, तृतीयस्य द्वितीये 'सन्ध्ये सृष्टिराह ही'त्यधिकरणे 'वासनाः सर्ववस्तूनामि'त्यादिना, तथा 'स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचिदि'त्यादिना च स्वप्नस्य भ्रान्तिकल्पितत्वाभावः । कल्पितत्वे च जगतः, सत्यं जगद्द्वयमपेक्षितम् । न हि सत्यशुक्तेः सत्यरजतस्य तयोः सादृश्यस्य चाभावे भ्रान्तिर्भवति । 'अधिष्ठानं च सदृशं तथ्यवस्तुद्वयं विना । न भ्रान्तिर्भवति क्वापी'त्यादिना तत्त्वनिर्णये, 'अन्यगा चेत्स्वतोऽन्यता । नादेहयोगिनो दृष्टिरिति तत्कारणं स्वतः । देहिनः कारणयुता देहाश्च यदि न भ्रमात् । किं भ्रान्तिकल्पितमि'त्यादिना प्रथमस्य चतुर्थे च भ्रमस्याधिष्ठानाद्यपेक्षानियमः । 'मिथ्यायाः साधकत्वं च', 'न सिद्धं चान्यसाधनम्', 'व्यवहारसतश्चापि साधकत्वं तु पूर्ववदि'त्यादिना जिज्ञासासूत्रे, 'व्यावहारिकता चास्य स्यादबाध्यत्व एव हि । बाध्यं नार्थक्रियाकारी'त्यादिना प्रकृत्यधिकरणे च, सांवृतसत्यत्वस्य व्यवहारनिर्वाहकत्वाभावश्च समर्थित इत्यर्थः ।

प० — ॐ **वैधर्म्याच्च न स्वप्नादिवत्** ॐ । अत्रेत्यनुवाद प्रपंच इति व्याख्या ॥ **नैव निवर्तत इति** । नैव बाध्यत इत्यर्थः । किंचेति चशब्दो भ्रमत्वबाध्यत्वयोर्व्याप्तिं, प्रकृते बाधाभावं च समुच्चिनोतीति भावेन तदाह **ज्ञानानामिति** ॥ **न चैवमिति** । भ्रमत्वावधारणमित्यर्थः ॥ **अन्यत्रेति** । स्वप्नस्य भ्रान्तित्वाभावादिः 'संध्ये सृष्टिराह ही'त्यग्रे भक्तिपादीयानुव्याख्याने 'न च स्वप्नोपि नो मृषा । वासनाजनितत्वेने'त्यादिप्रकृतिनयानुव्याख्याने, तत्वनिर्णयादौ चेति भावः ।

या० — मूलगतचशब्दार्थमाह **स्वप्नस्य भ्रान्तित्वाभाव इत्यादिना** ॥

च० — **अन्यत्र समर्थित इति** । 'स्वप्ने वासनारूपमेव जगन्मनसि स्थितं बहिष्ठत्वेन प्रतीयत' इत्यादिना तत्त्वनिर्णये च, प्रथमस्य तुरीये 'न च स्वप्नोपि नो मृषे'त्यादिना 'न भ्रान्तिरि'त्यादिना, 'मिथ्यायाः साधकत्वं चे'त्यादिना तत्र तत्र समर्थितोऽनुसन्धेय इति भावः ।

सु० — स्यादेतत् । किं प्रपञ्चप्रत्ययस्येदानीं बाधो नास्तीत्युच्यते । उतोत्तरकालेऽपि । आद्ये न तावता भवतोऽपि विश्वसत्यत्वावधारणं, शुक्तिरजतादौ तदयोगात् । द्वितीयस्तु नास्ति । प्रपञ्चप्रत्ययो बाधिष्यते प्रत्ययत्वात्सम्प्रतिपन्नवत् । इत्यागामिबाधसिद्धेरित्यत आह अनादेरिति ।

अनु० — अनादेरस्य विश्वस्य निवृत्तिर्यदि चेष्यते ॥
निवृत्तिश्च निवर्तेत तस्या भ्रान्तित्वसंभवात् ॥

अनादितोऽनुवृत्तस्येत्यर्थः । विश्वस्य तत्प्रत्ययस्य, निवृत्तिः बाधः । निवर्तेत बाध्येत । यदि प्रत्ययत्वात्प्रपञ्चप्रत्ययस्य बाधोऽनुमीयते, तदाऽवश्यं बाधप्रत्ययस्यापि बाधेन भाव्यम् । अन्यथा प्रत्ययत्वहेतोस्तत्र व्यभिचारापत्तेः । बाधकप्रत्ययस्य बाध्यत्वे प्रपञ्चप्रत्ययस्य याथार्थ्यसिद्धिः । तिष्ठतु तावत्परमार्थचिन्ता, व्यावहारिके तु तथा दृष्टमेव । न केवलमिदमापादनं किन्तु सम्भावितं चैतत् । यत्प्रपञ्चप्रत्ययस्य याथार्थ्यं तन्नास्तिताप्रत्ययस्य बाध्यत्वम् । अनादितोऽनुवृत्तस्यानेकसजातीयविजातीयसंवाद(व)तो याथार्थ्यसम्भवात् । कादाचित्कस्य संवादविधुर (रुद्ध) त्वेन भ्रमत्वसम्भवादिति ।

टी० — तावता इदानीं बाधाभावमात्रेण । कुतो नेत्यतस्तथा सतीदानीन्तनबाधाभावस्य क्वचिच्छुक्तिरजतादिज्ञानेऽपि सद्भावात् तस्यापि भ्रमत्वाभावावधारकत्वं स्यात् । न च तद्युज्यत इत्याह शुक्तिरजतादाविति । विश्वप्रत्ययस्य जन्यत्वात्कथमनादित्वाभिधानमित्यतो व्याचष्टे अनादितोऽनुवृत्तस्येति । विषयेण विषयिण उपलक्षणमित्यभिप्रेत्याह तत्प्रत्ययस्येति । निवृत्तेर्विषयसत्त्वेऽप्युपपन्नाया न तत्प्रत्ययभ्रमत्वसाधकत्वमित्यत आह निवृत्तिर्बाध इति । नन्वस्तु प्रपञ्चप्रत्ययस्य प्रत्ययत्वेन बाधानुमानं, तथाऽपि विश्वबाधप्रत्ययस्य बाधः कुतोऽङ्गीकार्यः । विपक्षे बाधकाभावेनाप्रयोजकत्वादित्यतो व्याप्तिमुपपादयति अन्यथेति । तथाऽपीष्टापादनरूपत्वान्नायं तर्क इत्यत आह बाधकप्रत्ययस्येति । अनेन प्रपञ्चप्रत्ययो बाधिष्यत इति परानुमानस्य प्रतितर्कपराहतिरुक्ता वेदितव्या । प्रपञ्चयाथार्थ्यं च तवानिष्टमतो न बाधकप्रत्ययस्य बाध्यत्वम् ततश्च विश्वप्रत्ययस्यापि प्रत्ययत्वेन न बाध्यत्वमिति विपर्ययपर्यवसानेन लाभादिति द्रष्टव्यम् । तर्कमूलभूतव्याप्तिमप्युपपादयति तिष्ठतु तावदिति ॥ एतदित्युक्तमेव दर्शयति यत्प्रपञ्चेति । तस्य सम्भावितताम् उपपादयति अनादित इति ॥ सजातीयविजातीयसंवादत इति । विशेषदर्शनजन्यसमानविषयकज्ञानान्तररूपसजातीयसंवादात्, अर्थक्रियादिरूपविजातीयसंवादाच्चेत्यर्थः ॥ संवादेति । सजातीयविजातीयसंवादेत्यर्थः ।

स०— ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ । नन्वस्तु प्रपञ्चप्रत्ययस्य प्रत्ययत्वेन बाधानुमानम् । तथापि विश्वबाधप्रत्ययस्य बाधः कुतोऽङ्गीकार्यः । विपक्षे बाधकाभावेनाप्रयोजकत्वादित्यतो व्याप्तिमुपपादयति **अन्यथेति** । ननु तथापि इष्टापादनरूपत्वान्नायं तर्कः साधुरित्यत्राह **बाधकप्रत्ययस्येति** । द्वितीयतर्कस्य व्याप्तिमुपपादयति **तिष्ठतु तावदिति** । अनेन प्रपञ्चप्रत्ययो बाधिष्यते इति परानुमानस्य प्रतितर्कपराहतिरुक्ता वेदितव्या । प्रपञ्चयाथार्थ्यञ्च तवानिष्टमतो न बाधकप्रत्ययस्य बाध्यत्वं, अतश्च विश्वप्रत्ययस्यापि प्रत्ययत्वेन न बाध्यत्वमिति विपर्ययपर्यवसानेन लाभादिति भावः ।

प०— ननु बाधकप्रत्ययस्येत्याद्ययुक्तं । मां प्रति परमार्थतो याथार्थ्यस्य काप्यसिद्धेरित्यत आह **तिष्ठत्विति** । 'तस्या भ्रांतित्वे'ति पादं व्याचष्टे **न केवलमिति** ॥

श्री०— ॐ **वैधर्म्याच्च न स्वप्नादिवत्** ॐ ॥ ननु निवृत्तेरपि निवृत्तौ किमायातं प्रकृत इत्यत आह **बाधकेति** ॥ ननु बाधकप्रत्ययस्य बाध्यत्वेऽपि न प्रपञ्चप्रत्ययस्य याथार्थ्यसिद्धिः परमार्थतः प्रत्ययद्वयस्याप्यसत्त्वाङ्गीकारात् । न हि वन्ध्यापुत्रस्य श्यामत्वाभावे गौरत्वं सिध्यतीति चेत् । सत्यम् । आस्तां त्वदीया परमार्थचिन्ता, व्यावहारिकीं मर्यादामवलम्बमानेन परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वमङ्गीकार्यमेव । ततश्च प्रपञ्चबाधप्रत्ययस्य बाध्यत्वे प्रपञ्चप्रत्ययस्य याथार्थ्यमनिवार्यमेवेत्याह **तिष्ठत्विति** । **संवादवतः** प्रपञ्चप्रत्ययस्य । **कादाचित्कस्य** तन्नास्तिताप्रत्ययस्य ।

---

सु० — **ननु च प्रपञ्चनिवृत्तिर्नाम शून्यमेव । तच्च परमार्थरूपं न कल्पितमदृष्टत्वात् । तत्कथं तत्प्रत्ययस्य बाध्यता स्यात् । किन्तु प्रपञ्चस्य दृष्टत्वेन कल्पितत्वसंभवात्तत्प्रत्यय एव बाध्यः । हेतुश्च प्रपञ्चप्रत्ययत्वेन विवेक्तव्य इत्यत आह** दृष्टस्येति ।

अनु० — दृष्टस्य भ्रान्तिता चेत्स्याददृष्टे न भ्रमः कुतः ॥

**भ्रान्तिताभ्रमशब्दाभ्यां कल्पितत्वमुच्यते । इदमुक्तं भवति । विपरीतमेतदुक्तं यत्सर्वप्रमाणदृष्टस्य प्रपञ्चस्य कल्पितत्वमादाय तत्सत्ताप्रत्ययस्य बाध्यत्वस्वीकरणम् । केनापि प्रमाणेनादृष्टस्य शून्यस्याकल्पितत्वं गृहीत्वा तत्सत्त्वप्रत्ययस्याबाध्यत्वोपादानम् । प्रामाणिकमकल्पितम् अप्रामाणिकं चाङ्गीक्रियमाणं कल्पितमिति सर्वसंमतत्वादिति ।**

शे० — **प्रपञ्चनिवृत्तिरिति** । तद्बाध इत्यर्थः ॥ **अदृष्टत्वादिति** । सर्वथाऽदृष्टे संस्काराभावेन तत्साध्यकल्पनाया अयोगादिति भावः ॥ **दृष्टत्वेनेति** । तत्र दर्शनजन्यसंस्कारसद्भावेन कल्पनाहेतुसद्भावादिति भावः । तथाऽपि प्रत्ययत्वहेतोर्न व्यभिचारपरिहार इत्यत आह **हेतुश्चेति** । एतदिति परामृष्टमेव दर्शयति **यदिति** । तस्य विपरीतोक्तितां दर्शयति **प्रामाणिकमिति** । इतीदमिति सम्बंधः ॥

स०— **दृष्टत्वेनेति** । सर्वथा अदृष्टे संस्काराभावेन कल्पनाया एवासंभवादिति भावः ।

प०— **हेतुश्च, प्रपञ्चप्रत्ययत्वेन विवेक्तव्य इति** । तथा च प्रत्ययत्वहेतोस्तत्र व्यभिचार इति प्रागुक्तदोषो नेति भावः । अस्फुटत्वादाह **इदमुक्तमिति** । एतदित्यस्य विवरणं यदित्यादिनोपादानमित्यन्तेन । कुत एतद्विपरीतमित्यत आह **प्रामाणिकमिति** । संमतत्वादितीतिशब्दस्य पूर्वेणेदमुक्तमित्यनेनान्वयः ॥

श्री०— **अदृष्टत्वादिति** । पारमार्थिकस्वरूपस्य कल्पितत्वसाधकदृश्यत्वहेतोरभावादित्यर्थः । ननु प्रत्ययत्वहेतोः प्रपञ्चनिवृत्तिप्रत्यये व्यभिचार इत्यत आह **हेतुश्चेति** । तथा च तन्निवृत्तिप्रत्यये न प्रञ्चप्रत्ययत्वमिति न व्यभिचारः ।

सु०— **एतदेव दृष्टान्तेन दर्शयति** गवामिति ।

अनु०— गवामशृङ्गिभावेन न हि स्याच्छशशृङ्गिता ॥

अशृङ्गिभावेन **सहितेति शेषः । कश्चिद्गवां शृङ्गित्वमस्तीत्याह कश्चिच्छशस्येति । तत्र परोक्तरीत्या गवां शृङ्गिता कल्पिता, दृष्टत्वात् । शशशृङ्गिता त्वकल्पिताऽदृष्टत्वादिति स्यात् । न ह्येवं लोके प्रतीतिः लोकानुसारेणैव च परमार्थो बोद्धव्यो नान्यथा । लोकन्यायस्यैव तद्बोधोपायत्वादिति ।**

शे०— इष्टापत्तिं परिहरति **न ह्येवमिति** । माऽस्तु लोके तथा, प्रकृते तु तथैव किन्न स्यादित्यत आह **लोकेति** ।

सु०— **तदेवं प्रत्यक्षबलेन विश्वसत्यता साधिता । तद्बाधकशङ्का च परिहृता । ततः किं सिद्धमित्यतो यदुक्तं पूर्वपक्षिणा सतोऽपि कारणत्वे प्रमाणाभाव इति तत्परिहृतमिति वदन्समीकरणान्तरमपि परिहरति** अस्माकं त्विति ।

अनु०— अस्माकं तु प्रमाणेन प्रसादादीश्वरस्य च ॥
उक्तभङ्ग्याऽऽगमानां च प्रामाण्याद्युज्यतेऽखिलम् ॥

**सत्कारणत्वत्रादिनाम् अखिलं परेणाक्षिप्तं युज्यते । कथम् । बाधविधुरेण प्रमाणेन जगतः सत्यत्वसिद्धौ मधुरादीनां पुष्टयादिकारणानां सत्त्वसिद्धेः । तन्त्वादीनां च विचित्रस्वभावतया प्रमाणेन सिद्धानां न मृदादिकार्यकारित्वप्रसङ्गः । न हि सत इवासतोऽपि स्वभावभेदोऽसत्त्वव्याघातात् । प्रमाणेनैव सतः कारणत्वोपलब्धेरनुपपत्तिराभासभूतैव । प्रमाणेन सत्तया**

प्रमितानां मधुरादीनां सद्बुद्धिमात्रवैलक्षण्यकल्पना त्वयुक्तैव । अन्यथा सद्बुद्ध्याऽनुगतात्सप्तमरसादपि पीनता सती स्यात् । ईश्वरस्य सर्वकारणत्वेऽपि तन्त्वाद्यपेक्षा पुरुषप्रयत्नाद्यपेक्षा देशकालादिनियमश्च युज्यत एव । तन्त्वाद्यपेक्षयैव कार्यमुत्पद्यतामितीश्वरस्य प्रसादात् सङ्कल्पात् । न चैवं निर्विशेषस्य शून्यस्य सङ्कल्पो युज्यते । न चैतदप्रामाणिकम् । आरम्भणाधिकरणोक्तरीत्याऽत्रागमानुमानादीनां प्रमाणत्वात् । न च वेदाद्यागमप्रामाण्यमसिद्धम् । प्रथमसूत्रोक्तरीत्याऽऽगमप्रामाण्यस्य सिद्धत्वात् । अनुमानेऽतिप्रसङ्गोऽप्यागमप्रामाण्येनैवापास्त इति । ब्रह्मादीन्सृष्ट्यादावीश्वरस्तेषु कृपयाऽपेक्षते परमेश्वरनियोगानुष्ठाने तेषां परमपुरुषार्थलाभादिति ज्ञापयितुं प्रसादादित्युक्तम् ।

शे० — **समीकरणान्तरमपीति** । सतः कारणत्वे तन्त्वादिना मृदादिकार्यकारित्वप्रसङ्ग इत्यादिरूपमित्यर्थः । सतः कारणत्वे तन्त्वादीनां मृदादिकार्यकारित्वप्रसङ्ग इत्युक्तं समीकरणं निराकरोति **तन्त्वादीनामिति** । नन्वेवं सप्तमरसादीनामपि विचित्रस्वभावत्वादेव न मधुरादिकार्यकारित्वप्रसङ्ग इत्यत आह **न हीति** । न हि सकलविक्रियातीतस्य कारणत्वं शक्यसंभावनमित्युद्भावितामनुपपत्तिमपि निराकरोति **प्रमाणेनैवेति** । मधुरादीनां सप्तमरसादीनां चेत्युक्तं विशेषं निराकरोति **प्रमाणेनेति** । प्रमाणविरोधादिति भावः ॥ **अन्यथेति** । सद्बुद्धिमात्रेणैव वैलक्षण्याभ्युपगम इत्यर्थः । सद्बुद्धिविषयत्वस्य मधुरादाविव तत्राप्यविशेषादिति भावः ॥ **तन्त्वाद्यपेक्षयैवेति** । न च कार्योत्पत्त्यर्थं तन्त्वाद्यपेक्षत्वेऽस्वातन्त्र्यप्रसङ्ग इति वाच्यम् । तेषां स्वाधीनसत्ताप्रतीतिप्रवृत्तिकतया तदपेक्षाया अनपेक्षत्वेन तदनापत्तेरित्याशयात् । नन्वेवं शून्यस्य सर्वकारणत्वेऽपि तन्त्वाद्यपेक्षयैव कार्यमुत्पद्यतामिति तस्य सङ्कल्पात्तन्त्वाद्यपेक्षोपपत्तिरित्यत आह **न चेति** । कुतो नेत्यतो निर्विशेषत्वाच्छून्यस्य तादृशसङ्कल्पानुपपत्तेरिति भावेनोक्तं **निर्विशेषस्येति** ॥ **न चैतदप्रामाणिकमिति** । तन्त्वाद्यपेक्षयैव कार्यमुत्पद्यतामितीश्वरस्य सङ्कल्पः, अपेक्षणीयस्य साधनस्य तदधीनत्वं चेत्येतदप्रामाणिकं नेत्यर्थः ॥ **अनुमानागमानामिति** । 'शक्तोऽपि भगवान्विष्णुरकर्तुं कर्तुमन्यथा । स्वभिन्नं कारणाभिन्नभिन्नं विश्वं करोत्यजः,' 'साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते । तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत्' 'द्रव्यं कर्म च कालश्च स्वभावश्चेतना धृतिः । यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया,' 'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनरि'त्याद्यागमानां 'शक्तोऽपि ह्यन्यथा कर्तुं स्वेच्छानियमतो हरिः । कारणैर्नियतैरेव करोतीदं जगत्सदे'तीश्वरकर्तृकसृष्टिः स्वव्यतिरिक्तसाधनसाध्या सृष्टित्वात्कुविन्दकर्तृकपटसृष्टिवदिति, न तत्साधनं स्वतन्त्रं, प्रेरणार्थं भगवताऽनुप्रविष्टत्वात् यथा प्राणादिरित्येवंरूपाणां, **'युक्तेः'** **'पटवच्च'**, **'यथा**

**प्राणादिरि'ति** सूत्रोक्तयुक्तीनां चेत्यर्थः । अनुमानानामिति मूलगतचशब्दार्थतयोक्तमिति ज्ञातव्यम् । यद्यप्येतान्यनुमानानि नोक्तसङ्कल्पसाधकानि, तथाऽपीश्वरसृष्टौ साधनान्तरसद्भावसाधकानि भवन्तीत्ये-तावन्मात्रेण तेषामत्रोपादानमिति ज्ञातव्यम् । वेदाद्यागमेत्यत्रादिपदेन 'प्रकृतिं स्वामवष्टभ्ये'त्यादिस्मृति-सङ्ग्रहः ॥ **प्रथमसूत्रेति** । जिज्ञासासूत्रे विषयसन्निकर्षाभावप्रयुक्ततदप्रामाण्यशङ्कायाः परिहृतत्वादिति भावः ॥ **अनुमानेऽतिप्रसङ्गोऽपीति** । 'पुरुषेच्छानुसारेण यदा दृष्टः पटोद्भवः । एतादृशत्वमन्यस्य वस्तुत्वात्केन वार्यते' इति प्रागुक्तास्मदनुमाने, तथा सति महदादिकार्यस्य कुलालादिजन्यत्वसाधनमपि तत एव स्यादित्युक्तोऽतिप्रसङ्गोऽपीत्यर्थः । मूले सङ्कल्पादित्येव वक्तव्ये तथाऽनुक्त्वा प्रसादादित्युक्तेः प्रयोजनमाह **ब्रह्मादीनिति** ।

**स०—** सतः कारणत्वे मृदादीनामपि तन्त्वादिकार्यकारित्वप्रसंग इत्युक्तसमीकरणं निराकरोति **तन्त्वादीनामिति** । नन्वेवं सप्तमरसादेरपि विचित्रस्वभावादेव न मधुरादिकार्यकारित्वप्रसंग इत्यत्राह **न हीति** । न हि सकलविक्रियाऽतीतस्य कारणत्वं शक्यसंभावनमित्युक्तानुपपत्तिमपि निराकरोति **प्रमाणेनै-वेति** । मधुरादीनां सप्तमरसादीनां चेत्युक्तं विशेषं निराकरोति **प्रमाणेनेति** । **प्रथमसूत्रेति** । विषया-भावात् सन्निकर्षाभावाच्च नागमस्य प्रामाण्यमिति आगमसामान्यप्रामाण्यविषयकशङ्कायाः, परिहारस्य तदुपपादकजिज्ञासासूत्रोक्तत्वादित्यर्थः । यत्तु 'न विलक्षण' सूत्रमेव प्रथमसूत्रम् । स्मृत्यधिकरण-सूत्रस्य पादचतुष्टयार्थप्रतिपादकस्य एतत्प्राथम्याविघातकत्वादिति । तन्न । 'अभिमान्यधिकरण इवात्रापि अनृतत्वादिहेतुविशेषेण वेदविशेषस्याप्रामाण्यशङ्कायां तत्परिहारस्यात्र कृतत्वेऽपि विषयादि-प्रदर्शनेन प्रामाण्यानभिधानात् । **अतिप्रसंगोऽपीति** । महदादिकार्यस्य कुलालादिजन्यत्वसाधनप्रसंग इत्यर्थः ।

**प०— समीकरणान्तरमिति** । अन्यदपि साम्यकरणमित्यर्थः ॥ **अनुपपत्तिराभासभूतैवेति** । सतः कारणत्वे तन्त्वादीनां घटादिकार्यकारित्वं स्यादित्युक्तानुपपत्तिराभासभूतेत्यर्थ इत्येके । अनुपपत्तिर्नाम यत्सत्तन्न कारणं, यत्कारणं तन्न सदिति प्रागुक्तव्याप्तिरित्यन्ये । सतां कारणत्वानुपपत्तिसाधकसकलविक्रि-यातीतत्वरूपयुक्तिरनुपपत्तिरित्यपरे । प्रसादादित्यनुवादः सङ्कल्पादिति व्याख्या । उक्तभंग्येत्य-स्यार्थः **आरंभणेत्यादि** । अत्र भगवान्सर्वस्वतंत्रोपि स्वाधीनसाधनान्येव लीलयोपादाय सृष्ट्यादि करोतीत्यर्थे 'शक्तोपि भगवान्विष्णुरकर्तुं कर्तुमन्यथा । स्वभिन्नं कारणाभिन्नं भिन्नं विश्वं करोत्यज' इत्याद्या-गमानां, विमता सृष्टिः कर्त्रन्यसाधनसाध्या सृष्टित्वात् पटसृष्टिवत् इत्याद्यनुमानानां 'तदनन्यत्वमारंभण-शब्दादिभ्य' इत्यत्र पूर्वपादेऽभिधानादिति भावः । एतेन मूले चशब्दोऽनुमानसमुच्चय इति सूचितम् । उक्तभंग्येत्यर्थं प्रकारान्तरेण व्याचष्टे **प्रथमसूत्रेत्यादिना** । जिज्ञासासूत्रे 'प्रत्यक्षवच्च प्रामाण्यं

स्वत एवागमस्य ही'त्यादिनोक्तेत्यर्थः ॥ **अनुमानेऽतिप्रसङ्गोऽपीति** । 'पुरुषेच्छानुसारेणे'त्यत्र परं प्रति यदसदुक्तमनुमानं तत्र महदादिकार्यस्य कुलालादिजन्यतासाधनसमानयोगक्षेममित्युक्तोऽतिप्रसङ्ग इत्यर्थः । तथा च बाधितविषयं परानुमानमिति भावः ॥ **विश्वसत्यताप्रत्यक्षस्यान्यथासिद्धिनिरासकपरतया 'वैधर्म्याच्च न स्वप्नादिवदि'त्यस्याद्यं वर्णकम् ।**

या० — **अनुपपत्तिराभासभूतैवेति** । यत्सत्तन्न कारणं, यत्कारणं तन्न सदित्यनुपपत्तिर्व्याप्तिरिति यावत् । तर्कताण्डवे तथा प्रतिपादितत्वात् । सा च व्यभिचारादाभासभूतैवेत्यर्थः । यद्वाऽनुपपत्तिशब्देन सतः कारणत्वानुपपत्तिसाधिका सकलविक्रियातीतत्वरूपा युक्तिर्ग्राह्या, सा स्वरूपासिद्ध्यादिनाऽऽभासभूतैव । सतो मृदादेर्विकारस्यानुभूयमानत्वादित्यर्थः ॥ **आगमानुमानानामिति** । 'शक्तोऽपि ह्यन्यथाकर्तुं स्वेच्छानियमतो हरिः । कारणैर्नियतैरेव करोतीदं जगत्सदे'त्याद्यागमानां, 'युक्तेः शब्दान्तराच्च', 'पटवच्च', 'यथा प्राणादि'रित्यत्रोक्तानुमानानां चेत्यर्थः । 'अनुमानानामिति' मूलगतचशब्दार्थतयोक्तानामिति ज्ञातव्यम् । यद्यप्येतान्यनुमानानि नोक्तसङ्कल्पसाधकानि, तथाऽपीश्वरसृष्टौ साधनान्तरसद्भावसाधकानि भवन्तीत्येतावन्मात्रेण तेषामत्रोपादानमिति ज्ञातव्यम् । **प्रथमसूत्रेति** । 'अथातो ब्रह्मजिज्ञासे'ति प्रथमसूत्रगतातःशब्दोक्तरीत्येत्यर्थः । 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य ही'त्यादिनाऽऽगमप्रामाण्यस्याप्यतःशब्दार्थतया व्याख्यातत्वात् ॥ ॐ **नाभाव उपलब्धेः** ॐ ॥ ॐ **वैधर्म्याच्च न स्वप्नादिवत्** ॐ ॥ **अनुमानेऽतिप्रसङ्ग इति** । पुरुषेच्छानुसारेणेत्यत्रोक्तमसदनुमानं महदादिकार्यस्य कुलालादिजन्यतासाधनसमानयोगक्षेममित्युक्तोऽतिप्रसङ्ग इत्यर्थः ॥ **प्रसादादित्युक्तमिति** । तथा च ब्रह्म यपेक्षयैव कार्यमुत्पद्यतामितीश्वरसङ्कल्प एव प्रसादरूप इति भावः ।

श्री० — **समीकरणान्तरं** सतः कारणत्वे तन्त्वादीनां मृदादिकार्यकारित्वप्रसङ्ग इत्यादि । नन्वसत एव कारणत्वाङ्गीकारेऽप्यतिप्रसङ्गपरिहारस्त्वसतोऽपि विचित्रस्वभावाङ्गीकारेण भविष्यतीत्यत आह **न हीति** । कुतो न हीत्यत आह **असत्त्वेति** । निःस्वभावत्वस्यैवासत्त्वेनासतोऽपि स्वभावभेदाङ्गीकारे निःस्वभावत्वरूपासत्त्वव्याघातादित्यर्थः ॥ **आगमेति** । आरम्भणाधिकरणोक्तागमस्तु 'शक्तोऽपि ह्यन्यथाकर्तुं स्वेच्छानियमतो हरिः । कारणैर्नियतैरेव करोतीदं जगत्सदा' इत्येवंरूपः । नन्वेवं तर्हीश्वरस्यादिसृष्टौ निमित्तकारणभूतब्रह्माद्यपेक्षा कुत इत्यत आह **ब्रह्मादीनिति** ।

च० — **आरंभणाधिकरणेति** । 'शक्तोऽपि भगवान्विष्णुरकर्तुं कर्तुमन्यथे'त्यादिना, 'सन्ध्ये सृष्टिराह ही'ति नये 'वासनाः सर्ववस्तूनामि'त्यादिना, 'स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचित्' इत्यादिना, 'अधिष्ठानं च सदृशं तथ्यवस्तुद्वयं विना' इत्याद्यागमानां, विमता सृष्टिः कर्त्रन्यसाधनसाध्या सृष्टित्वात्पटसृष्टिवदित्याद्यनुमानानामित्यर्थः ।

**सु॰— प्राग्विश्व(स्य) सत्यत्वसाधनायोपन्यस्तस्य प्रत्यक्षस्यान्यथासिद्धिमाशङ्क्य तत्परिहारत्वेन** वैधर्म्याच्च न स्वप्नादिवदिति **सूत्रं व्याख्यातम् । इदानीं विश्वमिथ्यात्वे पराभिहितस्य अनुमानस्य दूषकत्वेनापि (तद्या)व्याख्यातुं मिथ्यात्वेऽनुमानं तावच्छङ्कते** दृश्यत्वादिति ।

**अनु॰**— दृश्यत्वाद्विमतं मिथ्या स्वप्नवच्चेत् ॥

**सर्वं मिथ्येत्युक्ते संप्रतिपन्नमिथ्यात्वे शुक्तिरजतादौ सिद्धसाधनता, शून्ये बाधः (च) स्यात् । अतः सत्यत्वमिथ्यात्वाभ्यां विमतमित्युक्तम् । विमतं गगनादिकं मिथ्या दृश्यत्वात् स्वप्नवदित्यनुमानेन विश्वमिथ्यात्वसिद्धेः कथं (तत्)सत्यत्वमङ्गीक्रियत इत्यर्थः ।**

**शे॰**— ननु 'दृश्यत्वाद्विमतमि'त्युत्तरग्रन्थोऽनर्थकः । न चायं विश्वमिथ्यात्वेऽनुमानमाशङ्क्य तन्निरासार्थत्वान्नानर्थक्यमिति वाच्यम् । तस्यापि प्रकृते सङ्गत्यदर्शनात् । न च **वैधर्म्याच्च न स्वप्नादिवदित्ये**तत्सूत्रव्याख्यानत्वात्तस्यापि प्रकृतसङ्गतिरिति वाच्यम् । किञ्चेत्यादिना तस्य प्रागेव व्याख्यातत्वादित्याशङ्क्य प्रकारान्तरेण व्याख्यानार्थत्वादस्य ग्रन्थस्य नानर्थक्यमिति भावेन पूर्वोत्तरग्रन्थयोर्विषयभेदं दर्शयंस्तत्सूत्रव्याख्यानतयोत्तरग्रन्थं सङ्गमयति **प्रागित्यादिना** ॥ **शुक्तिरजतादाविति** । ननु शुक्तिरजतादौ तत्सिद्धावपि नांशे सिद्धसाधनम् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरिहोद्देश्यतया तदवच्छिन्ने साध्यसिद्धेरभावात् । न च तत्सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वात्तत्सिद्धेरंशतः सिद्धसाधनमिति वाच्यम् । तथा सत्युद्देश्यसिद्ध्या सम्पूर्णसिद्धसाधनत्वप्रसङ्गेनांशतः सिद्धसाधनत्वानवकाशात् । किञ्चैवं तत्सामानाधिकरण्येन साध्यसिद्धिरूपोद्देश्यसिद्धेरविकलत्वेनोद्देश्यसिद्ध्यविरोधादंशतो बाधस्यादोषत्वप्रसङ्गः । ततश्च यद्यत्र पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्या तर्ह्यंशतः सिद्धसाधनत्वेऽपि नांशतो बाधः । यदि च पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरुद्देश्या, तर्ह्यंशतो बाधप्रसक्तावपि नांशतः सिद्धसाधनतेति कथमुक्तदोषद्वयसमावेशोऽत्रेति चेत् । किमत्र पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्यतयाऽभिमता, किंवा पक्षतावच्छेदकावच्छेदेन । आद्ये शुक्तिरजतादौ पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्ध्योद्देश्यसिद्धेः सम्पूर्णैव सिद्धसाधनता,द्वितीये अंशे बाधः इति पक्षभेदेन दूषणद्वयस्याभिमतत्वात् । यद्यपि समानप्रकारकविरहज्ञानस्यैव प्रतिबन्धकतया शून्यत्वावच्छेदेन साध्याभावनिश्चयेऽपि सर्वत्वावच्छेदेन तदसिद्ध्या नांशबाधस्य दूषणत्वं सम्भवति । तथाऽपि पक्षतावच्छेदकावच्छिन्ने सर्वत्र जायमानाया अनुमितेस्तदंशे प्रमात्वप्रतिबन्धकतया तस्य दोषत्वमित्यत्र तात्पर्याददोषः । यत्तु उक्तविधया विकल्पद्वयमाश्रित्याद्येंऽशतः सिद्धसाधनत्वं, द्वितीयेंऽशतो बाध, इत्यत्रैतद्ग्रन्थतात्पर्यवर्णनं, तन्न । मूलकोशेषु सिद्धसाधनत्वमात्रस्योक्तत्वात्तस्य नोक्तरीत्या सम्पूर्णस्यैव सम्भ-

वेनांशतः सिद्धसाधनत्वपर्यन्तं धावनानर्थक्यात् । पक्षतावच्छेदकनानात्व एव तस्य दोषतया तदैक्ये तद्दूषणत्वासम्मतेश्चेति ॥

स०— **शुक्तीति** । पक्षतावच्छेदकसामानधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे शुक्तिरजतादौ तत्सिद्ध्या सिद्धसाधनम् । तत्परिहाराय पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वोक्तौ शून्ये बाधः स्यादित्यर्थः । तेन पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे अंशतः सिद्धसाधनम् न दोषः, उद्देश्यासिद्धेः । अतः पक्षतावच्छेदकसामानाधिकरण्येनैव साध्यसिद्धेरुद्देश्यत्वादंशतः सिद्धसाधनमिति वाच्यम् । तथा चोद्देश्यसिध्द्या संपूर्णसिद्धसाधनत्वापत्त्या अंशतः सिद्धसाधनत्वोक्त्यनुपपत्तिः । तत्सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यविरोधित्वाभावेनांशतो बाधानुपपत्तिश्चेति दोषानवकाशः । सिद्धसाधनत्वमात्राभिधानेनांशतः सिद्धसाधनत्वानभिधानात् पक्षतावच्छेदकावच्छेदेन तत्सिद्धेरुद्देश्यत्वेनेत्यभिधानेन अन्त्यदोषस्याप्यनवकाशादिति भावः ॥

प०— संप्रतिपन्नमिथ्यात्व इति बहुव्रीहिः । विमतमित्यस्य विशेष्यमाह **गगनादिकमिति** । शून्यासत्प्रातीतिकेभ्योऽन्यदित्यर्थः । अधिकं न्यायामृते ॥

या०— **सिद्धसाधनतेति** । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे रजतादौ तादृशसिद्धेर्जातत्वात्सिद्धसाधनतैव, नांशतः सिद्धसाधनता । पक्षतावच्छेदकनानात्व एव तस्य दोषत्वादित्यवधेयम् ॥ **बाधश्चेति** । यद्यपि समानप्रकारकविरहज्ञानस्यैव सिद्धिप्रतिबन्धकतया नांशे बाधस्य प्रतिबन्धकत्वं, तथाऽपि पक्षतावच्छेदकावच्छिन्ने सर्वत्र जायमानाया अनुमितेस्तदंशे प्रमात्वबाध इत्यत्र तात्पर्यमित्याहुः ।

श्री०— **अन्यथासिद्धिमिति** । सदित्युपलम्भेन न विश्वस्य सत्यत्वसिद्धिः, असदेव विश्वं सत्त्वेन प्रतीयत इत्यङ्गीकारादित्युक्तान्यथासिद्धिमित्यर्थः ।

सु०— **दूषयितुं पृच्छति** इयं चेति ।

**अनु०—** इयं च मा ॥

**तिष्ठतु तावद्विश्वम् ।** इयं च मा **इदमेव दृश्यत्वानुमानम् । मिथ्या सत्यं(त्या वे) वेति शेषः । आद्यं दूषयति** मिथ्येति ।

मिथ्या चेत्साध्यसिद्धिर्न

**न हि शब्देऽविद्यमानेन चाक्षुषत्वेन शब्दानित्यत्वं सिध्यतीति भावः । द्वितीये दृश्यत्वं दृश्यमदृश्यं वा । प्रथमं दूषयति** व्यभिचार इति ।

व्यभिचारो न चेद्भवेत् ॥

दृश्यत्वं मिथ्या न चेदथ च दृश्यम् । तदा (दृश्यत्वस्य) दृश्यत्व एव व्यभिचारो भवेत् । द्वितीये त्वज्ञानासिद्धता हेतोरिति भावः ।

शे०— 'सत्त्वं चास्यानुभूतित' इत्यादिनोत्तरत्र प्रतिज्ञादोषस्य बाधादेरप्यभिधास्यमानत्वादवसरक्रमानुरोधेन प्रतिज्ञादोषस्यैव प्रथममभिधातव्यत्वात् तमनुक्त्वा हेतुदोषस्य व्यभिचारादेरेव प्रथममभिधाने किन्निमित्तमित्यत इयं च मेत्यत्र सावधारणार्थकचशब्दाभिप्रायमाह **तिष्ठतु तावदिति** । दृश्यत्वस्य मिथ्यात्वेऽपि साधकत्वं भविष्यतीत्यप्रयोजकतामाशङ्क्य तथा सत्यविशेषाच्छब्देऽसतश्चाक्षुषत्वस्यापि तदनित्यत्वसाधकताप्रसङ्गान्नैवमित्याह **न हीति** ।

स०— 'सत्त्वं चास्यानुभूतित' इत्यादिनोत्तरत्र प्रतिज्ञादोषस्य बाधादेरभिधानादादौ प्रतिज्ञादोषमनुक्त्वा व्यभिचारादेरेवाभिधाने किं निमित्तमित्यतः 'इयं च मा' इत्यत्रावधारणार्थकचशब्दाभिप्रायमाह **तिष्ठत्विति** ।

प०— चशब्दसूचितमाह **तिष्ठतु तावद्विश्वमिति** । एतच्चासंगतिनिरासाय वा, प्रकृतानुपयुक्तोक्तिरूपनिग्रहस्थाननिरासाय वोक्तम् । विश्वमिथ्यात्वे दोषं पश्चाद्वक्ष्याम इति भावः । मिथ्यात्वमसत्त्वमित्युपेत्याह **न हि शब्द इति** ।

**सु०— स्यादेतत् । मिथ्यैव दृश्यत्वमिति ब्रूमः । न चैवं साध्यासाधकत्वम् । वर्णदैर्घ्यादीनां मिथ्याभूतानामपि साधकत्वस्योभयसिद्धत्वात् । चाक्षुषत्वादीनां त्वारोपाभावात् । आरोपेऽप्यसांव्यावहारिकत्वादसाधकत्वं, न तु मिथ्यात्वादित्यत आह** साधकत्वमिति ।

**अनु०**— साधकत्वमसत्यस्य साध्यं विप्रतिपत्तितः ॥

**यत्रोदाहरणे मिथ्यात्वं संप्रतिपन्नं तत्र साधकत्वे, यत्र च साधकत्वं संमतं तत्र मिथ्यात्वे विप्रतिपत्तितोऽसत्यस्य साधकत्वं साध्यमेव, न पुनरस्माकं सिद्धमिति ।**

शे०— **न चैवमिति** । मिथ्यात्वस्यासाधकत्वव्याप्तत्वादिति भावः । अत्र साध्यग्रहणं प्रकृताभिप्रायेणैव । न त्वापाद्यशरीरान्तर्गततया । तथा सति वक्ष्यमाणव्यभिचारस्यालग्नकत्वप्रसक्तेरित्यवधेयम् । व्याप्तिविकलत्वात्तर्काभासोऽयमित्याशयेनाह **वर्णदैर्घ्यादीनामिति** । आदिपदेन रेखारोपितवर्णस्फटिकलौहित्यादिपरिग्रहः । **साधकत्वस्य** अर्थभेदादिसाधकत्वस्य । यद्यपि दैर्घ्यादयो ध्वनिष्विव वर्णेष्वपि स्वाभाविका एवेत्यादिना प्रथमसूत्रे तेषां सत्यत्वव्यवस्थापनान्न मिथ्यात्वमिति न तत्र व्यभिचारस्तथाऽपि स्वमते तेषां मिथ्यात्वात्स्वरीत्या व्यभिचारशङ्केयम् । उभयसिद्धत्वोक्तिस्तु साधकत्वमात्रस्योभयसिद्धत्वाभिप्राया, न तु तन्मिथ्यात्वस्याप्युभयसिद्धत्वाभिप्रायेत्यदोषः । तदविशेषाच्चाक्षुषत्वा-

देरपि शब्दानित्यत्वसाधकत्वं स्यादित्याशङ्क्य दृश्यत्वादेश्चाक्षुषत्वादेश्च मिथ्यात्वाविशेषेऽप्यारोपितत्वानारोपितत्वाभ्यां वाऽऽरोपितत्वेऽपि सांव्यावहारिकत्वासांव्यावहारिकत्वाभ्यां वा विशेषेण तर्कमूलभूताविशेषव्याप्तेरसिद्धेर्नायं दोषप्रसङ्ग इत्याह **चाक्षुषत्वादीनां त्विति** ।

प०— **वर्णदैर्घ्यादीनामिति** । वर्णेष्वारोपितानां दैर्घ्यप्लुतह्रस्वत्वादीनामित्यर्थः । तर्हि चाक्षुषत्वाद्यपि शब्दानित्यत्वादि साधयेदित्यत आह **चाक्षुषत्वादीनामिति** ।

श्री०— वर्णदैर्घ्यादीनामित्यादिपदेन सवितृसुषिरादेर्ग्रहणम् । तर्हि असत्त्वाविशेषाच्चाक्षुषत्वादीनामपि साधकत्वं स्यादित्यत आह **चाक्षुषत्वादीनामिति** । पक्षे आरोपाभावादित्यर्थः ॥ **यत्रोदाहरण इति** । सवितृसुषिरादौ । **तत्र साधकत्वे इति** । तद्ज्ञानस्यैव साधकत्वात्तस्य च सत्यत्वादिति भावः । **यत्र च** वर्णदैर्घ्यादौ ॥ **तत्र मिथ्यात्व इति** । वर्णेषु वर्णदैर्घ्यं नाम दीर्घध्वनिव्यङ्ग्यत्वमेव, नान्यत् । तच्च सत्यमेवेति भावः ।

च०— **वर्णदैर्घ्यादीनां** वर्णेष्वारोपितानां दीर्घत्वादीनाम् ।

सु०— **विप्रतिपत्तौ साधकत्वं मिथ्यात्वं वा साधयिष्यामीति चेत्** । **किं सत्येन प्रमाणेनोत मिथ्याभूतेन** । **आद्ये तूक्तमेवोत्तरम्** । **द्वितीये दोषमाह** तस्य चेति ।

---

**अनु०— तस्य च**

**न हि क्वाप्यस्माकं मिथ्याभूतस्य साधकत्वं संमतम् । अतस्तस्यापि साधकत्वं साध्यमेव । तस्यापि साधकत्वं साधयिष्यामीत्यत आह** इतीति ।

इत्यनवस्था स्यात्

**पूर्वोक्तप्रकारेणेत्यर्थः । न हि सर्वमसत्यं साधकमित्येकं प्रमाणमस्ति । नापि सद्वादी कदाऽपि सत्त्वासत्त्वोदासीनेन प्रमाणेन साध्यसिद्धिमङ्गीकुर्यात् । येनानवस्थाशान्तिर्भवेदिति ।**

शे०— **विप्रतिपत्ताविति** । अत्र वाशब्दो व्यवस्थितविकल्पार्थः । मिथ्यात्वेन सम्प्रतिपन्ने साधकत्वविप्रतिपत्तिश्चेत्तस्य साधकत्वं साधयिष्यामि । साधकत्वेन संप्रतिपन्ने मिथ्यात्वविप्रतिपत्तिश्चेत्तन्मिथ्यात्वं साधयिष्यामीत्यर्थः ॥ **आद्ये तूक्तमेवोत्तरमिति** । 'सता चेद्द्वैतसिद्धिः स्यादि'त्युत्तरं जिज्ञासाधिकरणे उक्तमेवेत्यर्थः ।

स०— **विप्रतिपत्ताविति** । अत्र वाशब्दो विकल्पार्थः । मिथ्यात्वेन संप्रतिपन्ने साधकत्वविप्रतिपत्तिश्चेत् तस्य साधकत्वं साधयिष्यामि । साधकत्वेन संप्रतिपन्ने मिथ्यात्वविप्रतिपत्तौ च मिथ्यात्वं साधयिष्यामीति विकल्पो द्रष्टव्यः । **उक्तमेवोत्तरमिति** । साधकत्वेनाभिमतप्रमाणस्य सत्यत्वे

प्रष्टव्यम् । तत्किं दृश्यमदृश्यं वेति । आद्ये दृश्यत्वहेतोस्तत्र व्यभिचारः । द्वितीये अज्ञानासिद्धिः इत्युक्तमेवोत्तरमित्यर्थः ॥

प०— **विप्रतिपत्तौ साधकत्वमिति** । मिथ्याभूतस्येति योज्यम् । मिथ्यात्वं वेत्यत्र साधकस्येति च ॥ **आद्ये तूक्तमेवोत्तरमिति** । सत्यं प्रमाणं दृश्यमदृश्यं वा । आद्ये दृश्यत्वहेतोर्व्यभिचारः । अंत्येऽज्ञानासिद्धिरित्यर्थः । न विप्रतिपन्नं प्रत्यक्षं प्रमाणतयोपन्यसितुं शक्यम् । येनाज्ञानासिद्धिर्न लगेत् । किंत्वनुमानरूपमेवेत्यन्ये । 'सता चेदद्वैतसिद्धिः स्यान्न सिद्धं चान्यसाधनमि'त्युत्तरमुक्तमेवेत्यर्थः इत्यपरे । न चैवं द्वितीयकल्पेपि 'न सिद्धं चान्यसाधनमि'त्युत्तरमुक्तमेवेति वाच्यम् । अनवस्थोक्त्या पुनस्तस्यैवार्थस्यात्र सरणमित्यन्ये ॥ **दृश्यत्वहेतोरसिद्धिव्यभिचारयोरुक्तिः** ॥

या०— **आद्ये तूक्तमेवेति** । 'सता चेदद्वैतसिद्धिः स्यादि'त्युत्तरं प्रथमाधिकरणे उक्तमेवेत्यर्थः । सत्यं प्रमाणं दृश्यं चेत्तत्र व्यभिचारः । न चेदज्ञानासिद्धिरित्युत्तरमुक्तमेवेत्यर्थः इति केचित् । तत्र तत्सत्यं प्रमाणं प्रत्यक्षं चेत्कथमज्ञानासिद्धिरुद्भाव्येतेति चिन्त्यम् ॥

श्री०— ननु नानवस्था, सर्वमसत्यं साधकमित्येतदेकेनैव प्रमाणेन साध्यते, न परम्पराऽङ्गीक्रियते । तथा अस्तु वा परम्परा, तथाऽपि नानवस्था । सत्त्वासत्त्वोदासीनेन प्रमाणेन साध्यसिध्यङ्गीकारादित्यत आह **न हीत्यादिना** । **अङ्गीकुर्यात्** सत्त्वासत्त्वोदासीनस्य प्रमाणस्य बुद्धावेवानारोहेण तेन साध्यसिद्ध्ययोगादित्यर्थः ।

---

सु०— **एवमसिद्धिव्यभिचाराभ्यामनुमानं निराकृत्य प्रमाणबाधं चाह** सत्त्वं चेति ।

अनु०— सत्त्वं चास्यानुभूतितः ॥

अस्य **प्रपञ्चस्य** । अनुभूतितः **सिद्धमतो बाधितविषयं चानुमानमिति शेषः । न केवलं दृश्यत्वानुमानस्यानेन दोषेणाभासत्वं, किन्तु यदन्यदपि प्रपञ्चमिथ्यात्वेऽनुमानं जडत्वं वा परिच्छिन्नत्वं वा परैरुच्यते तस्यापीत्याह** अनुभूतीति ।

अनुभूतिविरोधेन मिथ्यात्वे मा न काचन ॥

उपलक्षणमेतत् । **पूर्वोक्तव्यभिचारासिद्धिभ्यां चेत्यपि द्रष्टव्यम् । तथा हि । जडत्वादिकं सत्यं मिथ्या वा । आद्ये जडत्वादिमन्न वा । प्रथमे व्यभिचारः । द्वितीयेऽपसिद्धान्तः । मिथ्या चेत्साध्यसिद्धिर्नेति ।**

शे०— **अनुभूतित इति** । आद्यादिभ्य उपसङ्ख्यानात्तृतीयार्थे तसिः ॥ **पूर्वोक्तेति** । 'मिथ्या चेत्साध्यसिद्धिर्न व्यभिचारो न चेद्भवेदि'ति पूर्वोक्तेत्यर्थः ॥ **सत्यं मिथ्या वेति** । यद्यपीयं

च मा। मिथ्या चेत्साध्यसिद्धिर्नेति पूर्वग्रन्थानुरोधादसिद्धिव्यभिचाराभ्यामिति पूर्वोक्तदूषणातिदेशग्रन्थानुरोधाच्च मिथ्या सत्यं वेत्येवं विकल्पं मनसि निधाय तत्क्रमेणैव दूषणाभिधानमुचितम् । तथाऽपि मिथ्यासत्ययोः सत्यमर्थतः प्रधानमिति तत्क्रमेणैव विकल्प्य दूषणाभिधानमिदम् । इयं च सेत्यादिपूर्वभाष्ये तु परेणाङ्गीचिकीर्षितत्वान्मिथ्यात्वकल्पस्य प्राधान्यमभिप्रेत्य मिथ्या सत्यं वेति विकल्प्य तत्क्रमेणैव दूषणमुक्तम् । तदनुसारेणैव चासिद्धिव्यभिचाराभ्यामिति दूषणातिदेशः कृत इत्यवधेयम् ॥ **व्यभिचार इति** ।जडत्वादिहेतुमति जडत्वादौ मिथ्यात्वाभावादिति भावः ॥ **अपसिद्धान्त इति** । जडत्वादेर्जडत्वादिमत्त्वाभावे चेतनत्वापरिच्छिन्नत्वप्रसक्तेरपसिद्धान्त इति भावः ॥ **मिथ्या चेत्साध्यसिद्धिर्नेतीति** । जडत्वादेर्मिथ्यात्वात्तेन मिथ्यात्वरूपसाध्यसिद्धिर्न स्यात् । न हि शब्देऽविद्यमानेन चाक्षुषत्वेन तदनित्यत्वं सिध्यतीति भावः ।

स०— **मिथ्या चेत्साध्यसिद्धिर्नेति** । जडस्य मिथ्यात्वे तेन मिथ्यात्वरूपसाध्यसिद्धिर्न स्यात् । न हि शब्दे अविद्यमानेन चक्षुषत्वेन शब्दानित्यत्वं सिद्ध्यतीति भावः ।

प०— **एवमसिद्धिव्यभिचाराभ्यामिति** । अत्रासिद्धिपदेनाज्ञानासिद्ध्यन्यतरवादिरीत्या स्वरूपासिद्धी ग्राह्ये ॥ **अपसिद्धान्त इति** । परेण शून्यादन्यत्सर्वं जडं परिच्छिन्नं चेत्यभ्युपगमादिति भावः ।

श्री०— **द्वितीय इति** । जडत्वादिहेतुना सर्वस्यापि मिथ्यात्वसाधनात्स्वस्यापि सर्वान्तःपातित्वेन स्वस्मिन्नपि मिथ्यात्वं साधयतीत्यङ्गीकृतं । तत्र स्वस्मिन्स्वस्याभावे तत्र हेतोरेवाभावेन मिथ्यात्वसाधनमयुक्तमित्यपसिद्धान्तः । जडे जडत्वाभावे तस्य चेतनत्वापत्त्या वाऽपसिद्धान्तः ।

**सु०— भवेदसत्त्वमनुमानानां यद्यनुभवविरोधो भवेत् । न चासावस्ति, मिथ्यात्वापरपर्यायं बाध्यत्वं ह्यनुमानसाध्यं । न च तदभावः प्रत्यक्षेण वेद्यः । तस्य वर्तमानमात्रविषयत्वेन कथञ्चिद्वर्तमानकालीनबाधाभावविषयत्वेऽपि कालान्तर(गत)भाविबाधाभावविषयत्वायोगादित्यत आह** अतीतेति ।

**अनु०**— अतीतानागतौ कालावपि नः साक्षिगोचरौ ॥

**अत्रातीतग्रहणं प्रासङ्गिकम् । न केवलं वर्तमान इत्यपेरर्थः** । नः **सर्वेषाम्** । **अन्यथा तद्विशिष्टव्यवहारानुपप(त्ते)त्तिरिति भावः ।**

**शे०— वर्तमानमात्रविषयत्वेनेति** । प्रत्यक्षस्य वर्तमानमात्रग्राहकत्वाद्वर्तमानकाले यदसत्त्वं तदभावरूपसत्त्वग्राहकत्वसम्भवेऽपि कालत्रयेऽपि यदसत्त्वं तदभावरूपसत्त्वग्राहकत्वं नोपपद्यते । तस्मा

कालान्तराविषयत्वेन तत्सम्बध्यसत्त्वाभावग्राहकत्वासम्भवादिति भावः । वर्तमानकाले पारमार्थिकस्यासत्त्वस्यानुमानवेद्यत्वाद्व्यावहारिकबाधाभावविषयस्य प्रत्यक्षस्यानुमानप्रमेयभूतपारमार्थिकबाधाभावाविषयकत्वेन न तदंशेऽपि बाधकत्वमिति भावेन कथञ्चिदित्युक्तम् । ननु कालान्तरे बाधो भविष्यतीति शङ्कितुरनागतकालाविषयकत्वात्तत्रत्यबाधाभावविषयकत्वाभावेन प्रत्यक्षस्य न बाधकत्वमित्येवाभिप्रेतत्वात्तं प्रत्यनागतकालविषयकत्वमात्रसाधनेनाप्युक्तशङ्कापरिहारसम्भवादतीतग्रहणमनर्थकमित्यत आह **अत्रातीतेति** ॥ **अन्यथा तद्विशिष्टेति** । न चानुमानोपनीतकालमादाय तद्विशिष्टव्यवहारोपपत्तिरिति वाच्यम् । 'पक्षीकर्तुमशक्यत्वान्नानुमा तत्र वर्तते । तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् । साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते' इत्यादिना प्रथमस्य चतुर्थे, काले प्रमाणान्तरप्रवृत्त्यसम्भवस्य निपुणतरमुपपादित्वादिति भावः ।

**स० — वर्तमानमात्रविषयत्वेनेति** । वर्तमानमात्रग्राहकस्य प्रत्यक्षस्य वर्तमानकाले यदसत्त्वं, तदभावरूपसत्त्वग्राहकत्वसंभवेऽपि कालत्रयेऽपि यदसत्त्वं, तदभावरूपसत्त्वग्राहकत्वं नोपपद्यते । कालान्तराविषयकत्वेन तत्सबन्ध्यसत्वाभावग्राहकत्वासंभवादिति भावः । वर्तमानकाले पारमार्थिकसत्त्वाभावस्यानुमानवेद्यत्वात् प्रत्यक्षस्य व्यावहारिकबाधाभावविषयकत्वेनानुमानप्रमेयपारमार्थिकबाधाभावाविषयकत्वात् न तदंशेपि बाधकत्वमित्याशयेन कथंचिदित्युक्तम् । कालान्तरे बाधकं भविष्यतीति शङ्कितुरनागतकालाविषयकत्वेन तत्रत्यबाधाभावाविषयकत्वात् न प्रत्यक्षस्य बाधकत्वमित्येवाभिप्रेतत्वात् । प्रत्यक्षस्यानागतकालविषयकत्वमात्रसाधनेनाप्युक्तशङ्कापरिहारसंभवात् अतीतग्रहणमनर्थकमित्यत आह **अतीतेति** ।

**प० —** वर्तमानकालेपि सर्वपुरुषीयबाधाभावाग्रहणात् कथंचिद्वर्तमानकालीनेत्युक्तमित्येके । अधिष्ठानगताबाध्यत्वमेव वर्तमानेपि विषये च घटादिगतमबाध्यत्वमिति कथंचिदित्युक्तमित्यन्ये । अनागतस्यैवात्र प्रस्तुतत्वादाह **अत्रातीतग्रहणमिति** । प्रकृतोपयोगायाह **नः सर्वेषामपीति** । एते च वयं च वयम् । 'त्यदादीनि सर्वैर्नित्यमि'त्यसदादेशे शेष इति भावः ॥ **अन्यथा तद्विशिष्टेति** । अतीतानागतकालविशिष्टः 'आसीत्, भविष्यती'त्यादिरूपो व्यवहार इत्यर्थः । कालादेः साक्ष्यन्यप्रमाणगोचरतायाः आनुमानिकपादे, वैशेषिकनये, वादावल्यां च निरासादिति भावः ।

**या० — अन्यथा तद्विशिष्टेति** । न चानुमानाद्युपनीतकालमादाय विशिष्टव्यवहारोपपत्तिरिति वाच्यम् । 'तदेतदिति सर्वं वा दृश्यं वा स्मृतिगोचरम् । साक्षिसिद्धेन कालेन खचितं ह्येव वर्तत' इत्यत्र प्रथमाध्याये काले प्रमाणान्तरप्रवृत्त्यसम्भवस्य निपुणतरमुपपादितत्वादिति भावः ।

**श्री० — बाध्यत्वं** प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् ।

**सु० — किमतो यद्येवमवर्तमानोऽपि कालः साक्षिगोचर इत्यत आह** तदिति ।

**अनु०** — तत्संबन्धितया सत्त्वमपि

**कालान्तरसंबन्धितया सत्त्वमबाध्यत्वम् । न केवलं वर्तमानकालीनबाधाभावोऽनुभववेद्यः । किन्तु सर्वकालगतोऽपीत्यर्थः । तत्कथमित्यत उक्तम्** दृष्टस्येति ।

दृष्टस्य साक्षिगम् ॥

**प्रत्यक्षादिप्रतीतिविषयस्य । प्रत्यक्षादिप्रतीतीनां प्रामाण्यस्य साक्षिणा ग्रहणादिति भावः ।**

**शे० — कालान्तरसम्बन्धितयेति** । अनागतकालसम्बन्धितयेत्यर्थः । नन्वस्त्वेवं साक्षिग्राह्यस्याकाशकालदिगात्ममनःसुखादिरूपप्रपञ्चस्य साक्षिणा त्रिकालाबाध्यत्वरूपसत्त्वसिद्धिः । तदितरस्येन्द्रियलिङ्गशब्दगम्यस्य प्रपञ्चस्य तु साक्ष्यविषयत्वान्न तेन तत्सिद्धिरित्यभिप्रेत्य शङ्कते **तत्कथमिति** । **दृष्टस्येत्यस्य** प्रत्यक्षप्रमाणदृष्टमात्रार्थत्वेऽनुमानादिविषयस्य धर्माधर्मादेरदृष्टत्वेन दृष्टस्येत्यनेनासंग्रहात् । तत्त्रिकालाबाध्यतायाः साक्ष्यसिद्धत्वात्तदसिद्धिरेव स्यादित्यतो विशेषवाचकपदस्य सामान्योपलक्षणतया दृष्टस्येत्यनेनैव तल्लाभान्नानुपपत्तिरित्याशयेन तद्याचष्टे **प्रत्यक्षादीति** । ननु प्रत्यक्षादिप्रमाणविषयीकृतत्वमात्रकथनेन कथमिन्द्रियादिगम्यस्य प्रपञ्चस्य त्रिकालाबाध्यतायाः साक्षिसिद्धत्वलाभ इत्यतोऽभिप्रायमाह **प्रत्यक्षादिप्रतीतीनामिति । प्रामाण्यस्य** याथार्थ्यस्य । ज्ञानगतस्य याथार्थ्यलक्षणप्रामाण्यस्य स्वतस्त्वेन ज्ञानग्राहकग्राह्यत्वनियमात्साक्षिणश्च ज्ञानग्राहकत्वात्तत्प्रामाण्यग्राहकत्वमावश्यकमिति भावः ।

**स० — साक्षिणेति** । चक्षुरादेर्वर्तमानमात्रग्राहकत्वेऽपि अस्मदभिमतसाक्षिणः अतीतानागतकालग्राहकताया अपि विद्यमानत्वात् कालत्रयेऽपि यदसत्त्वं, तदभावरूपात्यन्तिकाबाध्यत्वग्राहकत्वस्य सामग्रीसत्त्वप्रयुक्तस्य निर्बाधस्य परित्यागायोगात् । तद्बाधस्यैव च 'सत्त्वं चास्यानुभूतितः' इत्यादिना अभिधानान्नष दोष इत्यर्थः । एतच्चाभ्युपेत्योक्तम् । सन् घट इत्यादिबाह्यप्रत्यक्षविरोधोऽपि युक्त एव । चक्षुरादिगृहीतस्य वर्तमानकालसत्त्वस्यापि सामान्याभावरूपासत्त्वाभावरूपत्वात् । विशेषस्य प्रत्येकमपि सामान्याभावाभावत्वस्य स्थितत्वात् । अनेनैवाभिप्रायेण 'स्वकाले ह्यस्तितां गृण्हन्साक्षात्कार' इत्यादिवचनमपि व्याख्येयम् । न तु तत्र त्रिकालीनबाधाभावव्याप्यैककालीनबाधाभावग्राहकत्वमभिप्रायः । तथा सति प्रत्यक्षस्य व्याप्यग्राहकत्वापत्त्या 'प्रत्यक्षबाधिताश्चे'त्याद्युपक्रमविरोधित्वात् । प्रत्यक्षबाधिता इत्यस्य प्रत्यक्षसिद्धव्याप्तिकानुमानबाधिता इत्यर्थकल्पनस्य, अस्मदुक्तरीत्या यथास्थितस्यैवोपपन्नतया, असंभवादिति बोध्यम् ।

प० — अपिपदस्य तत्संबंधितयोपपीत्यन्वयमुपेत्यार्थमाह **न केवलमिति** । साक्षिगमित्यस्यार्थोऽनुभववेद्य इति । दृष्टपदं ज्ञानमात्रपरमित्युपेत्यार्थमाह **प्रत्यक्षादीति** । 'पश्यार्थैश्चानालोचन' इति ज्ञानमात्रेपि दृशेः प्रयोगादिति भावः ॥

**सु० — न हि विषयस्य त्रैकालिकाबाध्यत्वमनन्तर्भाव्य तत्प्रतीतेः प्रामाण्यं शक्यग्रहणम् । यदि प्रतीतिं गृह्णन् साक्षी तत्प्रामाण्यग्रहणस्वभावत्वात्तद्गृह्णंस्तद्विषयस्य त्रैकालिकाबाध्यत्वं व्यवस्थापयेत्तदा शुक्तिरजतादिप्रतीतेरपि स एव ग्राहक इति तस्या अपि प्रामाण्यं गृह्णीयात् । तथा च तद्विषयस्यापि रजतादेस्त्रैकालिकाबाध्यत्वं सिद्ध्येदित्यतो दृष्टशब्दं व्याख्याति** दृढेति ।

**अनु० — दृढदृष्टं तु यद्दृष्टं दृष्टाभासस्ततोऽपरम् ॥**

**यन्निर्दोषत्वेनावधृतया प्रतीत्या विषयीकृतं, तदेव दृष्टमित्युक्तम् । कुतः । इतरस्य सम्मुग्ध(स्य)दृष्टस्य दृष्टाभासत्वात् । मुख्यामुख्ययोश्च मुख्यग्रहणस्य न्याय्यत्वात् । कृतव्युत्पादनं चैतत्प्राक् ॥**

**शे०** – अस्तु ज्ञानप्रामाण्यग्राहकत्वं साक्षिणस्तथाऽपि तेन तत्तज्ज्ञानप्रामाण्यसिद्धिरेव स्यान्न तु तज्ज्ञानविषयप्रपञ्चस्य त्रिकालाबाध्यत्वसिद्धिरित्यतः प्रामाण्यस्योक्तरूपाबाध्यत्वघटितमूर्तिकत्वात्तद्ग्राहकस्य साक्षिणस्तत्तज्ज्ञानविषयस्य त्रिकालाबाध्यत्वरूपसत्त्वग्राहकत्वं नानुपपन्नमित्याशयेनाह **न हीति । तद्गृह्णन्** प्रतीतेः प्रामाण्यं गृह्णन् । **तद्विषयस्य** प्रतीतिविषयस्य, घटादेरित्यर्थः । न च शुक्तिरजतादिज्ञानानां प्रामाण्यमेव नास्ति किं साक्षिणा गृह्यतामिति वाच्यम् । तथा सति प्रपञ्चगोचराणामपि ज्ञानानां प्रामाण्याभावात्किं साक्षिणा गृह्यत इत्यपि वक्तुं शक्यत्वेन साक्षिणस्तत्प्रामाण्याग्राहकत्वप्रसक्त्या साक्षिणा त्रिकालाबाध्यत्वस्य प्रपञ्चेऽप्यसिद्धिप्रसङ्गात् । तस्मात्साक्षिणा प्रपञ्चस्याबाध्यत्वसिद्धिमभिलषता ज्ञानग्राहकस्य साक्षिणः प्रामाण्यग्राहकत्वं स्वभाव इत्येव वक्तव्यम् । तथा चोक्तप्रसङ्गस्सुस्थ इत्याशयेनोक्तं **तत्प्रामाण्यग्रहणस्वभावत्वादिति** ।

तर्हि ज्ञानग्राहकस्य साक्षिणः प्रामाण्यग्राहकत्वं स्वभाव इति गतः पक्ष इत्यत आह **कृतव्युत्पादनं चैतत्प्रागिति** । प्रथमस्य चतुर्थे 'न साक्षी ज्ञानं गृह्णन्प्रमाणमेवैतदिति गृह्णाति । किं तर्ह्यदोषं चेत्प्रमाणं सदोषमप्रामाणमिति व्यवस्थया । यदा त्वर्थित्वेन प्रामाण्यं निर्धारयिषितं तदा सजातीयविजातीयसंवादविसंवादभावाभावलक्षणपरीक्षया दोषाभावं निश्चित्य प्रामाण्यमवधारयति । दोषदर्शने त्वप्रामाण्यम् । प्रपञ्चप्रतीतेश्च प्रयत्नेनान्विष्यापि दोषमपश्यन्प्रामाण्यमवधारयतीति तत्सत्यत्वं साक्षिसिद्धम् । न चैवं शुक्तिरजतादीनां, दोषप्रतीतिदशायां प्रामाण्यानवधारणात् । तत्प्रतीतौ त्वप्रामाण्यनि-

श्चयात् । यदा तु निष्कम्पप्रवृत्त्यनुरोधेन तत्रापि कदाचित्प्रामाण्यं निर्धार्यत एव । तथाऽपि नासौ साक्षिरूपावधारणा, अपि तु मानसी'इत्यादिना 'अतो दोषप्रतीतस्य सत्यत्वं साक्षिणा मतम्' इत्येतद्ग्रन्थ-व्याख्यानावसरे कृतव्युत्पादनमेतदित्यर्थः ॥

**प०— त्रैकालिकाबाध्यत्वमिति** । त्रिकालसंबन्धी यो बाधः निषेधः, तदभावरूपमबाध्यत्व-मित्यर्थः । शङ्कते **यदीति** । **त्रैकालिकाबाध्यत्वं** कालत्रयसंबन्धिनिषेधाप्रतियोगित्वं, व्यवस्थापये-दित्यर्थः । तुरवधारणे । तदित्यध्याहृतेनान्वेतीत्युपेत्याह **तदेवेति** । ननु अस्त्वेवम् । प्रपञ्चदृष्टिरपि-शुक्तिरूप्यदृष्टिरिव किं नेत्यादिचोद्यनिरासायाह **कृतव्युत्पादनं चैतदिति** । 'सत्वं चास्यानुभूतित' इत्यादिना 'दृष्टाभासस्ततोऽपरमि'त्यन्ते(त्यने)नोक्तं प्रपञ्चमिथ्यात्वसाधकानां बाधितविषयत्वादिप्रमेयं सर्वं प्रकृत्यधिकरणे 'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितमि'त्यादेः, 'एवमक्षजमानत्वसिद्धां विश्वस्य, सत्यताम् । किमिति स्थापयेन्नायं निर्दोषज्ञानशक्तित' इत्यन्तस्यानुव्याख्यानस्य व्याख्यावसर इति भावः । एतेन बाधभावाभावरूपवैधर्म्यान्न स्वप्नादिवद्विश्वमिथ्यात्वमिति 'वैधर्म्याच्च न स्वप्नादिवदि'ति सूत्रस्य वर्णकान्तरं दर्शितम् ।  ॥ **मिथ्यात्वहेतूनां बाधितविषयत्वोक्तिः** ॥

**या०**—ननु ज्ञानग्राहकस्य साक्षिणः प्रामाण्यग्राहकत्वं स्वभावत एव चेत्कथं प्रपञ्चो दृढदृष्टः, शुक्तिरजतादिकं तु संमुग्धदृष्टमिति विवेको ज्ञातुं शक्य इत्यत आह **कृतव्युत्पादनमिति** । प्रथमाध्याये 'अतो दोषप्रतीतस्य सत्यत्वं साक्षिणा मतमि'त्यत्र न साक्षी ज्ञानं गृह्णन्प्रमाणमेवैतदिति गृह्णाति, किन्तर्ह्यदोषं चेत्प्रमाणं, सदोषं चेदप्रमाणमिति व्यवस्थया। यदा त्वर्थित्वेन प्रामाण्यं निर्धारयिषितं, तदा सजातीयविजा-तीयसंवादविसंवादभावाभावलक्षणया परीक्षया दोषाभावं निश्चित्य प्रामाण्यमवधारयति । दोषदर्शने त्व-प्रामाण्यम् । प्रपञ्चप्रतीतेश्च प्रयत्नेनान्विष्यापि दोषमपश्यन्प्रामाण्यमेवावधारयतीति तत्सत्यत्वं साक्षिसि-द्धम् । न चैवं शुक्तिरजतादीनां, दोषाप्रतीतिदशायां प्रामाण्यानवधारणात् । तत्प्रतीतौ त्वप्रामाण्यनि-श्चयात् । यदा तु निष्कम्पप्रवृत्त्यनुरोधेन तत्रापि कदाचित्प्रामाण्यावधारणं तन्मानसमेव, न साक्षिरूपमि'-त्यादि व्युत्पादनं कृतं, तत्रैवानुसन्धेयमित्यर्थः ॥

**श्री०— शक्यग्रहणं** साक्षिणा ॥

**सु०— सत्प्रतिपक्षाणि च दृश्यत्वाद्यनुमानानीत्याशयवानाह** भ्रान्तेरिति ।

अनु०— भ्रान्तेः संवृतिसत्यस्य विशेषोऽव्यभिचारवान् ॥
तेनाप्यङ्गीकृतः सम्यक् स नः सत्यत्वमेव हि ॥

**भ्रान्तिविषयत्वेन संप्रतिपन्नाच्छुक्तिरजतादिकादित्यर्थः।** संवृतिसत्यस्य **तथात्वेनाभ्युपगतस्य विश्वस्य** विशेषो **वैलक्षण्यम् अव्यभिचारवान्** कदाचित्क्वचिदपि **संप्रतिपन्नमिथ्याभावे अवर्तमानः।** तेन **शून्यवादिनाऽपि, सम्यगिति असन्देहेन।** स एव **विशेषो, नः** अस्माकं **मते विश्वस्य सत्यत्वं साधयिष्यतीति शेषः।** ततः सत्प्रतिपक्षाणि दृश्यत्वाद्यनुमानानीति। **अत्र तेनापि सम्यगङ्गीकृत इत्यनेन पक्षधर्मता समर्थिता। अव्यभिचारवानित्यनेन तु व्याप्तिः। अयमत्र प्रयोगः। विश्वं कालत्रयाबाध्यम्, प्रातीतिकविलक्षणत्वात्। व्यतिरेकेण शुक्तिरजत(ादि)वदिति।**

**शे०**— भ्रान्तिशब्दस्य ज्ञान इवार्थेऽपि परेषां प्रसिद्धेर्भ्रान्तिशब्देनार्थस्य ग्रहणप्राप्तावपि स्वरीत्या तदप्राप्तेर्लक्षणामाश्रित्य तदाह **भ्रान्तिविषयत्वेन संप्रतिपन्नादिति।** विश्वस्य संवृतिसत्यत्वासिद्धेस्तथाऽनुवादानुपपत्तिमाशङ्क्याह **संवृतीति ॥ प्रातीतिकविलक्षणत्वादिति।** असत्प्रातीतिकविलक्षणत्वादित्यर्थः ॥ अतो न तुच्छे व्यभिचार इति भावः।

**प०**— भ्रांतेरित्यादिपदानामर्थमाह **भ्रांतिविषयत्वेनेत्यादिना। मिथ्याभावे** मिथ्यात्वे। बहुव्रीहिसमासः ॥ **कालत्रयाबाध्यमिति।** कालत्रयवर्तिनिषेधाप्रतियोगीत्यर्थः ॥ **प्रातीतिकेति।** प्रतिभासमात्रशरीरत्वेनांगीकृतस्वप्न-रज्जुसर्प-शुक्तिकलधौतादिविलक्षणत्वादित्यर्थः। एतेन प्रातीतिकवैधर्म्यात् स्वप्नादिवन्न मिथ्यात्वं विश्वस्य, किंतु सत्यत्वमेवेत्यर्थान्तरं सूत्रस्य दर्शितम् ॥

**सु०— ननु च शुक्तिरजतादीनां प्राक् शून्यतत्त्वज्ञानाच्छुक्त्यादिज्ञानेनैव निवृत्तिः भवति। प्रपञ्चस्य तु शून्यज्ञानेन कदाचिन्निवृत्तिर्भविष्यतीत्येवं मया प्रातीतिकसांवृतयोः वैलक्षण्यमङ्गीकृतम्। न चेदं विश्वसत्यत्वे भवता हेतूकर्तुं शक्यम्, विरोधादित्यत आह** विज्ञानादिति।

**अनु०**— विज्ञानाद्व्यभिचारोऽस्य कदाचित्स्यादिति प्रमा ॥
नैव दृष्टा

व्यभिचारो **निवृत्तिः। नायं विशेषोऽङ्गीकर्तुं शक्यते, अप्रामाणिकत्वात्। न ह्यप्रामाणिकेन भृङ्गेणाश्वोऽन्यतो वि(शि)शेष्यमाणो दृश्यत इति। नन्विदं कदाचिद्बाधिष्यते दृश्यत्वाच्छुक्तिरजतादिवदित्यनुमानस्य सत्त्वात्कथमत्र प्रमाणाभाव इत्यतः (तस्यो)स्वोक्तं दोषं स्मारयति** प्रमेति।

प्रमा सा च न भवेत्स्वविरोधतः ॥

**या च शङ्क्यते सेत्यर्थः** ॥ स्वविरोधत इति । **स्वविषयस्य स्वस्य च बाध्यत्वापादकत्वादित्यर्थः । अन्यथा व्यभिचारापत्तेः । यस्य विषयोऽसन्(यत्) स्वयं च बाध्यं, कथं तत्प्रमाणं भवेत् । अतोऽस्य विशेषस्याप्रामाणिकत्वेनाङ्गीकर्तुमशक्यत्वे योऽन्यो विशेषः प्रामाणिकः प्रमाणाविरोधी चाङ्गीकर्तव्यः, सोऽस्माकं सत्यत्वे हेतुर्भविष्यतीति । स च प्रमाणगम्यत्वमर्थक्रियाकारित्वं चेति हृदयम् ।**

शे०— **विरोधादिति** । भाविबाधस्य त्रिकालाबाध्यत्वाभावव्याप्तत्वादित्यर्थः । विज्ञानेन भाविनि काले निवृत्तेः शङ्कितत्वेऽपि व्यभिचारस्याशङ्कितत्वादसदनुवादोऽयमित्याशङ्क्य व्यभिचारशब्दं निवृत्त्यर्थकतया व्याचष्टे **व्यभिचार इति** । निवृत्तिर्बाध इत्यर्थः ॥ **अन्यथेति** । स्वविषयस्य स्वस्य चाबाध्यत्वादित्यर्थः । स्वविषये स्वस्मिन्नेव चेति शेषः । स्वविषयस्य कदाचिद्बाध्यत्वस्य कदाचिदबाध्यत्वे दृश्यत्वस्य तत्रैव व्यभिचारः । कदाचिद्बाध्यत्वस्यादृश्यत्वे चानुमानवैयर्थ्यम् । तस्य साध्यज्ञप्त्यर्थत्वात् । तथा दृश्यत्वस्य कदाचिद्बाध्यत्वाभावे तत्रैव दृश्यत्वहेतोः व्यभिचारात् । दृश्यत्वस्यादृश्यत्वे चाज्ञानासिद्धिप्रसङ्गादिति भावः ॥ **कथं तत्प्रमाणं भवेदिति** । अन्यथा विश्वप्रत्ययस्येव शुक्तिरजतादिप्रत्ययस्यापि प्रामाण्यं स्यात् । असद्विषयत्वाविशेषात् । दृश्यत्वादेरिव चाक्षुषत्वादेरपि शब्दानित्यत्वे प्रामाण्यं स्यात् । उभयोरपि बाध्यत्वाविशेषादिति भावः । ननु तादृशो विशेष एव दुर्निरूप इत्यत आह **स चेति** ।

प०— नैव दृष्टेत्यंतस्य भावार्थमाह **नायमिति** । प्रपंचस्य शून्यज्ञाननिवर्त्यत्वरूपः ॥ **नन्विदमिति** । विश्वमित्यर्थः । आत्मात्मीयवाचित्वात्स्वपदस्यार्थद्वयमाह **स्वविषयस्य स्वस्य चेति** । बाध्यत्वरूपस्वविषयस्य दृश्यत्वरूपस्वस्य च दृश्यत्वेन बाध्यत्वापादकत्वादित्यर्थः ॥ **अन्यथेति** । हेतुसाध्ययोर्दृश्यत्वेऽपि बाध्यत्वाभावे इत्यर्थः । अस्तु बाध्यत्वं साध्यहेत्वोरित्यत आह **यस्येति** ॥ **बाध्यमिति** । असदित्यर्थः । बाधासिद्ध्योः प्राप्तेरिति भावः । **अतोऽस्येति** । शून्यज्ञाननिवर्त्यत्वरूपस्येत्यर्थः ॥

श्री०— **न हीति** । तथा चाप्रामाणिकेन शून्यज्ञानबाध्यत्वरूपधर्मेण प्रपञ्चो न प्रातिभासिकविलक्षण इत्यर्थः । **अन्यथा** स्वस्मिन्बाध्यत्वाभावे ॥

सु०— **ननु तर्ह्येवमेव कुतो नोच्यते । तथोच्यमाने प्रमाणानां तत्त्वावेदकत्वमर्थक्रियायाः सत्त्वमसति तदभाव इत्यादि बहु संविधेयं स्यात् । लाघवार्थं त्वेवमुक्तं, तदपि यथावसरमुपपादितमेव ।**

शे० — ननु तर्हि विश्वं कालत्रयाबाध्यं प्रमाणगम्यत्वादर्थक्रियाकारित्वाच्चेत्येव स्पष्टमभिधीयतां, किमनया 'भ्रान्तेः संवृतिसत्यस्य विशेषोऽव्यभिचारवान् । तेनाप्यङ्गीकृत' इति वक्रोक्त्येत्याशङ्कते **ननु तर्ह्येवमेवेति ॥ बहु संविधेयं स्यादिति ।** परेण प्रपञ्चग्राहकप्रमाणानां तत्त्वावेदकत्वस्यार्थक्रियायाः सत्त्वस्यासति साधकत्वाभावस्यानङ्गीकारात् । तद्व्युत्पादने च प्रयत्नगौरवप्रसङ्गादिति भावः ॥ **लाघवार्थमिति ।** प्रपञ्चे प्रातिभासिकवैलक्षण्यस्य परं प्रति संमतत्वेन तस्यासाधनीयत्वादत्र प्रयत्नलाघवमिति भावः । यद्येवं तर्हि प्रपञ्चग्राहकप्रमाणादेः कथं तत्त्वावेदकत्वादिसिद्धिरित्यतः 'मानत्वं प्रत्यभिज्ञाया अपि सर्वानुभूतिगम्' इत्यादिना तृतीयस्य द्वितीये चक्षुरादेस्तत्रैव 'मानता च कथं न स्यात्स्मृतेर्बाधश्च नात्र ही'त्यादिना मनसः, 'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम्' 'साक्षिसिद्धस्य न क्वापि बाध्यत्वं तददोषतः' इति प्रथमस्य चतुर्थे 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेत् । न हि बाधः क्वचिद्दृष्टो दुःखाद्यनुभवस्य तु' इत्यादिना द्वितीयस्य तृतीये च साक्षिणः 'तात्कालिकं प्रमाणत्वमक्षजस्य यदा भवेत् । प्रामाण्यस्य च मर्यादा कालतो व्याहता भवेदि'त्यादिना तत्रैवाक्षजस्य, ''विश्वं सत्यं' 'यच्चिकेत' 'प्रधान्वस्य' 'यथार्थतः'' । इत्यादिश्रुतयः सर्वा विश्वसत्त्यत्ववाचिका' इत्यादिना प्रथमस्य चतुर्थे । 'वेदवेद्यस्य मिथ्यात्वं यदि नैक्यस्य तत्कथमि'त्यादिना तृतीयस्य द्वितीये । 'दीर्घभ्रान्तिकरी चेत्स्यादतत्त्वावेदकप्रमा । रज्जुसर्पादिविज्ञानादप्याधिक्यादमानता । स्यादगमस्यानिवर्त्यमहामोहप्रदत्वतः' इत्यादिना चतुर्थस्य द्वितीये च । प्रत्यक्षादिप्रमाणानां तत्त्वावेदकत्वस्य, 'व्यावहारिकमेतस्मात्सत्यमित्येव चागतमि'त्येतद्ग्रन्थतद्व्याख्यानावसरे च 'कार्यस्यैव सत्त्वाभावे किं कारणसत्त्वयेति चेत् । कुतः प्रमाणात्कार्यसत्त्वाभावो भवता निश्चितः । श्रुत्यादेरेवेति चेत् । न । तस्यैवानेकान्तिकप्रसङ्गगहननिविष्टत्वादि'त्यादिना च कार्यसत्तायाः, 'मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः', न सिद्धं चान्यसाधनमि'त्यादिना जिज्ञासासूत्रे, 'भ्रमत्वे त्वियमुक्तिश्च तदन्तःपतनान्न हि', 'बाध्यं नार्थक्रियाकारि', 'व्यावहारिकता चास्य स्यादबाध्यत्व एव हि', 'न च स्वप्नोऽपि नो मृषा,' 'सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् । तदेवार्थक्रियाकारि तत्सदेवार्थकारकमि'त्यादिना प्रकृत्यधिकरणादौ चासतोऽसाधकत्वस्य च यथावसरं तत्र तत्रोपपादितत्वान्न तदसिद्धिप्रसङ्गोऽपीत्याह **तदपीति ॥**

प० — **यथाऽवसरमिति ।** 'व्यावहारिकता चास्य स्यादबाध्यत्व एव हि । बाध्यं नार्थक्रियाकारी'त्यादिप्रकृतिनयानुव्याख्यानावसर इति भावः ॥ **दृश्यत्वादिमिथ्यात्वहेतूनां प्रतिपक्षोक्तिः ।**

श्री० — **एवमेवेति ।** भ्रान्तेः प्रपञ्चस्य विशेषः प्रमाणगम्यत्वादिरेवेति कस्मान्नोक्तमित्यर्थः । प्रमाणगम्यत्वाद्भ्रान्तिवैलक्षण्यमित्युक्ते प्रमाणानामतत्त्वावेदकताशङ्कायां तत्त्वावेदकत्वं समर्थनीयम् । तथा

अर्थक्रियाकारित्वाद्भ्रान्तिवैलक्षण्यमित्युक्तेऽर्थक्रियाया अपि मिथ्यात्वान्न तया तद्वैलक्षण्यमिति शङ्कायां तस्याः सत्त्वं समर्थनीयम् । अथापि नार्थक्रियाकारित्वेन सत्यतासिद्धिः । स्वाप्नकामिनीसम्भोगादौ व्यभिचारशङ्कायामसतः स्वाप्नकामिनीसम्भोगस्य नार्थक्रियाकारित्वं, किन्तु सत्यस्य तज्ज्ञानस्यैवेति बहु संविधेयमिति तथा नोक्तमित्याह **तथेत्यादिना** ॥ **तदपीति** । प्रमाणानां तत्त्वावेदकत्वादिकमपि ॥

सु०— **यद्वा प्रपञ्चस्याबाध्यत्वे परिशेषप्रमाणमनेनोक्तम् । तथा हि । जगतो बाध्यत्वमबाध्यत्वं च प्रसक्तम् । तृतीयप्रकाराभावात् । बाध्यत्वं च प्रसिद्धपदार्थतत्त्वज्ञानेन, अन्येन वा । तत्राद्यं वादिप्रतिवादिभ्यामनभ्युपगतम् । द्वितीयं तु प्रमाणाभावनिरस्तम् । परिशेषादबाध्यत्वमेव सिध्यतीति ।**

**अथवा व्यापकानुपलब्धिलिङ्गकमनुमानम्(अनेन) एतेन श्लोकद्वयेनोक्तम् । बाध्यत्वं हि प्रसिद्धपदार्थतदितरतत्त्वज्ञाननिवर्त्यत्वेन व्याप्तम् । तच्च व्यापकमनभ्युपगमप्रमाणाभावाभ्यां जगतो व्यावर्तमानं स्वव्याप्यं बाध्यत्वमपि व्यावर्तयतीति ।**

शे०— **अनेनोक्तमिति** । 'भ्रान्तेः संवृतिसत्त्वस्ये'त्यादिश्लोकद्वयेनेत्यर्थः ॥ **तत्राद्यमिति** । एतच्च 'भ्रान्तेः संवृतिसत्यस्य विशेषोऽव्यभिचारवान् । तेनाप्यङ्गीकृत' इत्यनेन सूचितमित्यर्थः ॥ **द्वितीयं त्विति** । 'विज्ञानाव्यभिचारोऽस्य कदाचित्स्यादिति प्रमा । नैव दृष्टे'त्यादिना शून्यज्ञानाबाध्यत्वं सूचितमित्यर्थः । 'स नः सत्यत्वमेव ही'ति परिशेषसिद्धार्थकथनमित्याह **परिशेषादिति** । किं तद्बाध्यत्वव्यापकं, कथं चात्र तद्व्यावृत्तिरित्याशङ्क्य तद्दर्शयति **बाध्यत्वं हीति** ॥ **प्रसिद्धेति** । प्रसिद्धपदार्थतदितरतत्त्वज्ञाननिवर्त्यत्वेनेत्यस्यान्यतरतत्त्वज्ञाननिवर्त्यत्वेनेत्यर्थोऽवधेयः । क्वचिदन्यतरतत्त्वज्ञाननिवर्त्यत्वेनेत्यपि पाठः ॥ **अनभ्युपगमेत्यादि** । प्रसिद्धपदार्थतत्त्वज्ञाननिवर्त्यत्वस्यानभ्युपगमेन, तदितरपदार्थतत्त्वज्ञाननिवर्त्यत्वस्य प्रमाणाभावेन, व्यावृत्तिसिद्धिरिति विवेकः । इतीत्यस्य, इति व्यापकानुपलब्धिलिङ्गकमिति सम्बन्धः ।

स०— **परिशेषेति** । 'भ्रान्तेस्संवृतिसत्यस्य' इत्यादिश्लोकद्वयेनेत्यर्थः । **तत्राद्यमिति** । एतच्च 'भ्रान्तेस्संवृतिसत्यस्य विशेषोऽव्यभिचारवान् । तेनाप्यङ्गीकृत' इत्यनेन सूचितमित्यर्थः । **द्वितीयं त्विति** । 'विज्ञानाव्यभिचारोऽस्य कदाचित्स्यात्' इति 'प्रमाणेनैव दृष्टा' इत्यादिवाक्यैः शून्यज्ञानाबाध्यत्वं सूचितमित्यर्थः । 'स नः सत्यत्वमेव हि' इत्येतत् परिशेषसिद्धार्थकथनमित्याह **परिशेषादिति** ।

प०— **अनेनोक्तमिति** । 'भ्रान्तेरि'त्यादिश्लोकद्वयेनेत्यर्थः । तत्राद्यश्लोकतात्पर्यं **तत्राद्य-मिति** । वादिना शून्यत्वज्ञाननिवर्त्यत्वस्य, प्रतिवादिना केनापि निवर्त्यत्वाभावस्योपगमादिति भावः । द्वितीयश्लोकतात्पर्यं **द्वितीयं त्विति** । तच्चेत्यादिश्लोकद्वयतात्पर्यं **अनभ्युपगमेति** । वादिप्रतिवाद्यन-भ्युपगमेत्यर्थः ॥ **विश्वबाध्यत्वे परिशेषाद्युक्तिः** ॥ छ ॥ **मिथ्यात्वानुमानिरासः** ॥ छ ॥

श्री०— **निरस्तं** विज्ञानादिति श्लोकेन । प्रसिद्धपदार्थतत्त्वज्ञाननिवर्त्यत्वमनभ्युपगमेन, तदित-रतत्त्वज्ञाननिवर्त्यत्वं प्रमाणाभावेन प्रपञ्चाद्व्यावर्त्यत इति विवेकः ।

च०— **तत्त्वज्ञाननिवृत्त्यत्वेन व्याप्तं** तादृशनिवर्त्यत्वनिरूपितव्याप्तिविशेषितम् ।

सु०— **एवं प्रपञ्चमिथ्यात्वानुमानानि निराकृत्येदानीं तदनुग्राहकत्वेन, सत्यत्वप्रत्य-क्षस्य प्रतिकूलत्वेन च परोत्प्रेक्षितं तर्कमपि निराकर्तुमाशङ्कते** भेद इति ।

अनु०— भेदो विशेष्यधर्म्यादिग्रहणापेक्षया यदि ॥
अन्योन्याश्रयताहेतोर्दुर्ग्राह्य इति यत्

**आदिपदेन विशेषणप्रतियोगिनोर्ग्रहणम् । यदि गृह्यत इति शेषः । तर्हीति च । अयमर्थः । यदि प्रपञ्चो सांवृतो न स्यात्तदा प्रत्यक्षोऽप्यसौ न स्यात् । तथा हि । अनेकभे-दभिन्नो हि प्रपञ्च इष्यते । भेदस्य चाप्रत्यक्षतायां सोऽप्यप्रत्यक्ष एव । विना भेदेन तत्प्रतीतावद्वितीयशून्यप्रतीत्यापत्तेः । न च भेदप्रतीतिरुपपद्यते । भेदो हि प्रतीयमानो घटपटौ भिन्नाविति घटपटयोर्विशेषणतया, घटपटयोर्भेद इति ताभ्यां विशेष्यतया वा प्रत्येतव्यः । भेद इत्येव प्रतीतेरभावात् । यद्वा घटात्पटो भिन्न इति, घटात्पटस्य भेद इति वा घटप्रतियोगितया पटधर्मिकतया च भेदग्रहणमेष्टव्यम् । तत्रोभयत्राप्यन्योन्याश्रयत्वं, विशेष्ययोर्घटपटयोर्ज्ञाने सति हि तद्विशेषणतया भेदो ज्ञातव्यः । न हि देवदत्तादर्शने दण्डस्य तद्विशेषणतया दर्शनं युज्यते । विशेष्यज्ञानं च भेदापेक्षम् । न हि भेदाप्रतीतौ घट-पटाविति द्वित्वविशिष्टार्थप्रतीतिः सम्भवति । एवं विशेष्यतया भेदप्रतीतावपि द्रष्टव्यम् ॥ तथा धर्मिप्रतियोगिज्ञाने सति भेदज्ञानम् तन्निरूप्यत्वात् । भेदज्ञा(न एव) ने सति च धर्मिप्रतियोगिनोर्ज्ञानम् । न हि भेदाग्रहे धर्मिप्रतियोगिभावोऽवगन्तुं शक्यते । तथात्वे घटाद्घटस्य भेद(इत्यपि)प्रतीतिः स्यात् । न च परस्पराश्रयाणि कार्याणि सम्भवन्ति ।**

**अतो वास्तवत्वे भेदस्य प्रतीत्यनुपपत्तौ प्रपञ्चस्यापि तदापत्तेरविचारितरमणीयः संवृ-तिमय एवायमङ्गीकरणीय इति ।**

शे०— 'धर्मित्वप्रतियोगित्वतद्भेदा युगपद्यदि । विशेषणं विशेष्यं च तद्भावश्चे'त्युत्तर-ग्रन्थानुरोधेनादिशब्दार्थमाह **आदिपदेनेति** । साकाङ्क्षत्वात्प्रसक्तां वाक्याभासतामपेक्षितपूरणेन परिहरति **गृह्यत इति शेष इति** ॥ **तर्हीति चेति** । अत्र विशेष इति वर्तते । भेदस्याप्रत्यक्षत्वेऽपि कुतः प्रपञ्चस्याप्रत्यक्षत्वमित्यत उक्तं **भेदभिन्न इति** । तथाऽपि यत्र भेदोऽङ्गीक्रियते तस्य वस्तुनः प्रत्यक्षा-भावमात्रमेव भेदप्रत्ययाभावेन भविष्यति । अन्यत्र तु प्रपञ्चप्रत्यक्षे न बाधकमिति कथं तत्प्रत्यक्षत्वा-भावापादनमित्यतः सर्वत्रापि भेदसद्भावं प्रतिपादयितुं तदनेकत्वोक्तिः । नन्वन्योन्याश्रयाद्भेदप्रतीतेरेव निराकरणे त्वन्मतेऽपि भेदप्रतीतिर्न स्यादित्यतो मन्मते भेदस्य सांवृतत्वात्संवृतिवशेन भेदप्रतीतिसम्भवेऽपि त्वया तस्य पारमार्थिकत्वाङ्गीकारान्न तदुपपत्तिरित्याशयात् । ननु घटपटादिभेदस्य प्रत्यक्षत्वान्न तस्याप्रत्य-क्षत्वमित्याशङ्क्याह **न चेति** । **भेदप्रतीतिः** प्रत्यक्षरूपा भेदप्रतीतिरित्यर्थः । तत्कुत इत्यतोऽन्योन्याश्रयेण भेदप्रत्यक्षं दूषयिष्यन्द्वित्वावच्छिन्नयोर्घटपटयोर्विशेष्यत्वेन विशेषणत्वेन च प्रतीतिसापेक्षत्वं भेदप्रतीतेरुप-पादयितुं भूमिकां तावदारचयति **भेदो हीति** । ननु घटपटोभयविशेषणतया तद्विशेष्यतया च भेदप्रती-त्युदाहरणमसङ्गतम् । न च भेदप्रतीतेर्विशेष्यत्वेन विशेषणत्वेन च घटपटोभयप्रतीतिसापेक्षत्वमुपपादयितुं तदुदाहरणं युक्तमिति वाच्यम् । अस्यास्माद्भेद इति प्रतीत्या भेदस्यान्यतराश्रितत्वेन तत्प्रतीतेर्धर्मित्वेन प्रतियोगित्वेन च तत्प्रतीतिसापेक्षत्वेऽपि विशेष्यत्वादिना तत्प्रतीतिसापेक्षत्वाभावात् । न च घटात्पटस्य भेद इतिवत्पटाद्घटस्य भेद इत्यपि प्रतीतेर्विद्यमानत्वेन नान्यतरमात्राश्रितत्वनिश्चयस्तस्य सम्भवतीति वाच्यम् । अस्माभिर्भेदद्वयाङ्गीकारेण तन्निश्चयसम्भवादिति चेन्न । एकस्यैव भेदस्य द्विष्ठत्वपक्षे उभयोरपि धर्मित्वेन धर्मिप्रतियोगिसापेक्षभेदप्रतीतेर्वक्तुमशक्यत्वेन भेदद्वयाङ्गीकारेणान्यतरमात्राश्रितत्व-पक्षेऽपि धर्मिप्रतियोगिभावमनपेक्ष्य सम्बन्धमात्रापेक्षायां च विशेष्यत्वेन विशेषणत्वेन च घटपटोभय-प्रतीतिसापेक्षाया एव भेदप्रतीतेर्वक्तव्यत्वेन तदुदाहरणस्य सङ्गतत्वात् । अत एव तत्त्वनिर्णयटीकाया-मेकस्यैव भेदस्य द्विष्ठत्वपक्षे गत्यन्तराभावादिति, भेदद्वयाङ्गीकारेणान्यतरमात्राश्रयत्वेऽपि धर्मिप्रतियोगि-भावमनपेक्ष्य सम्बन्धमात्रापेक्षायां गत्यन्तराभावादिति चोक्तमिति ध्येयम् । न भेदो युगधर्मः किन्त्वेकस्यैव धर्मिप्रतियोगिभावापेक्षा चेत्यस्मिन्मतेऽपि भेदप्रत्यक्षमन्योन्याश्रयेण दूषयितुं भूमिकामार-चयति **यद्वेति** ।

**तत्रोभयत्रापीति** । विशेषणविशेष्यभावेन भेदप्रतीतौ धर्मिप्रतियोगिभावेन तत्प्रतीतौ चेत्यर्थः । तत्कथमित्यतो विशेषणविशेष्यभावेन भेदप्रतीतौ तद्दिदर्शयिषुर्विशेषणतया तत्प्रतीतौ तावदन्योन्याश्रय-त्वमुपपादयति **विशेष्ययोरिति** । घटपटाविति द्वित्वावच्छिन्नयोर्घटपटयोर्विशेष्यतया प्रतीतौ सत्या-मित्यर्थः । अत एव तत्त्वनिर्णयटीकायां 'घटपटाविति द्वित्वावच्छिन्नयोर्घटपटयोर्विशेष्यतया प्रतीतौ

सत्यामि'त्युक्तमिति ध्येयम् । भेदज्ञानस्य विशेष्यभूतद्वित्वावच्छिन्नघटपटज्ञानापेक्षत्वे नियामकमाह **तद्विशेषणतयेति** । द्वित्वावच्छिन्नघटपटविशेषणतयेत्यर्थः । तद्विशेषणत्वज्ञानस्य विशेष्यज्ञानकार्यत्वात्कार्यस्य च कारणापेक्षत्वाद्युक्तं तद्विशेषणतया भेदज्ञानस्य द्वित्वावच्छिन्नविशेष्यभूतघटपटज्ञानापेक्षत्वम् । अत एव तत्त्वनिर्णयटीकायां 'विशेषणादिप्रतीतेर्विशेष्यादिप्रतीतिकार्यत्वादि'त्युक्तम् । द्वित्वावच्छिन्नयोरिति विशेषणानुपादाने न भेदज्ञानस्य घटपटज्ञानकार्यत्वं सिध्यति । विशेष्यत्वेन विशेष्यप्रतीतित्वावच्छिन्नस्यापि घटपटान्यतरप्रतीतिमात्रस्य सत्त्वेऽपि भेदप्रतीतेरभावेन व्यभिचारात् । विशेषणोपादाने तु नायं दोषः । द्वित्वावच्छिन्नविशेष्यप्रतीतित्वस्यैव कारणतावच्छेदकत्वात् । उक्तस्थले घटपटान्यतरप्रतीतिमात्रस्य सत्त्वेऽपि कारणतावच्छेदकावच्छिन्नस्य कारणस्याभावेन तदप्रसङ्गादिति द्रष्टव्यम् । अत्र तद्विशेषणतयेत्यनेन तद्विशेषणताविषयकत्वमात्रमेव भेदज्ञानस्याभिमतं न तु तद्विशेषणत्वप्रकारकत्वमपि । तथा सति घटपटभेदो विशेषणमिति विशेषणत्वप्रकारकभेदज्ञानस्य विशेष्यभूतघटपटज्ञानापेक्षत्वप्राप्तावपि घटपटौ भिन्नाविति भेदज्ञानस्यातत्प्रकारकत्वेनोक्तयुक्त्या विशेष्यज्ञानापेक्षत्वाप्राप्त्या तदुपजीव्यन्योन्याश्रयत्वानुत्थानापातात् । तद्विशेषणत्वविषयतामात्रविवक्षायां तु नायं दोषः । घटपटौ भिन्नाविति भेदज्ञानस्य तद्विशेषणत्वाप्रकारकत्वेऽपि तद्विशेषणत्वमात्रविषयकत्वेन विशेष्यभूतघटपटज्ञानापेक्षत्वप्राप्त्याऽन्योन्याश्रयप्रसङ्गसम्भवादित्यवधेयम् । तद्विशेषणतयेत्युक्तयुक्तेरप्रयोजकत्वं परिहरति **न हीति** ।

ननु न तावताऽप्यन्योन्याश्रयनिर्वाह इत्यतो विशेष्यज्ञानस्य विशेषणीभूतभेदज्ञानापेक्षतामाह **विशेष्यज्ञानं चेति** । द्वित्वावच्छिन्नघटपटरूपविशेष्यज्ञानं चेत्यर्थः । कुतस्तस्य तदपेक्षत्वमित्यतो दण्डज्ञानाभावे दण्डविशेष्यत्वेन देवदत्तज्ञानादर्शनेन तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वादित्याशयेनाह **न हीति** । **द्वित्वविशिष्टार्थप्रतीतिः** भेदविशेष्यत्वेन द्वित्वविशिष्टार्थप्रतीतिरित्यर्थः । तत्त्वनिर्णयटीकायां द्वित्वावच्छिन्नघटपटरूपविशेष्यज्ञानस्य भेदज्ञानापेक्षत्वोपपादकतया भेदप्रतीत्यविनाभूतत्वाद्द्वित्वप्रतीतेरिति युक्त्यन्तरानुसरणं तु, विशेषणादिप्रतीतेर्विशेष्यादिप्रतीतिकार्यत्वादिति विशेषणत्वेन भेदज्ञानस्य विशेष्यतया घटपटरूपविशेष्यज्ञानापेक्षत्वोपपादकयुक्त्यैव द्वित्वावच्छिन्नघटपटरूपविशेष्यज्ञानस्य भेदज्ञानापेक्षत्वं न वक्तुं शक्यमिति नाभिप्रेत्य, किन्तु तस्य प्रकारस्य पूर्वोक्तरीत्या शिष्यैरेव ज्ञातुं शक्यत्वात्किं तदुपन्यासेनेत्यभिप्रेत्य, अनेनापि प्रकारेण भेदप्रतीत्यपेक्षायाः सम्यग्वक्तुं शक्यत्वादित्यभिप्रेत्यैवेति न तद्विरोध इति द्रष्टव्यम् । विशेषणतया भेदप्रतीतावुक्तमन्योन्याश्रयत्वं विशेष्यतया प्रतीतावप्यतिदिशति **एवंविशेष्यतयेति** । घटपटयोर्भेद इति घटपटयोरिति द्वित्वावच्छिन्नघटपटविशेष्यतया भेदप्रतीतिर्विशेषणीभूतद्वित्वावच्छिन्नघटपटज्ञानापेक्षा । विशेषणीभूतदण्डज्ञानाभावे तद्विशेष्यतया देवदत्तज्ञानादर्शनेन द्वित्वावच्छिन्नघटपटविशेष्यतया भेदप्रतीतेर्द्वित्वावच्छिन्नघटपटरूपविशेषण-

ज्ञानकार्यत्वात् । द्वित्वावच्छिन्नघटपटरूपविशेषणप्रतीतिश्च भेदज्ञानापेक्षा देवदत्तादर्शने तद्विशेषणतया दण्डज्ञानादर्शनेन भेदविशेषणतया द्वित्वावच्छिन्नघटपटज्ञानस्य भेदज्ञानकार्यत्वाद्विशेष्यतया भेद-प्रतीतावप्यन्योन्याश्रयत्वमित्यर्थः ।

एवं विशेषणविशेष्यभावेन भेदग्रहणेऽन्योन्याश्रयतामुपपाद्य धर्मिप्रतियोगिभावेन तद्ग्रहेऽपि तामुपपादयति **तथेति** ॥ **तन्निरूप्यत्वादिति** । भेदस्य ससम्बन्धिकपदार्थत्वेन सम्बन्धिभूतधर्मि-प्रतियोगिज्ञानाधीनज्ञानत्वादित्यर्थः ॥ घटात्पटस्य भेद इति पटस्य भेदं प्रति धर्मित्वं घटस्य चावधित्वेन प्रतियोगित्वं प्रतीत्यैव भेदः प्रत्येतव्य इति धर्मित्वप्रतियोगित्वप्रतीत्यपेक्षप्रतीतिकत्वमेवात्राभिमतम् तत्त्वनिर्णयटीकानुसारात् 'न हि भेदाग्रहे धर्मिप्रतियोगिभावोऽवगन्तुं शक्यते' इत्युत्तरग्रन्थानुसाराच्चेति द्रष्टव्यम् ॥ **धर्मिप्रतियोगिनोर्ज्ञानमिति** । धर्मित्वप्रतियोत्वयोर्ज्ञानमित्यर्थः । तदेवोपपादयति **न हीति** ॥ घटात्पटस्य भेद इति पटस्य भेदं प्रति धर्मित्वेन घटस्य प्रतियोगित्वेन प्रतिभासस्तयोर्भेदाग्रहे न सम्भवतीत्यर्थः । अस्तु भेदाग्रहेऽप्युक्तरीत्या धर्मित्वप्रतियोगित्वप्रतिभास इति वदन्तं प्रत्यनिष्टमाह **तथात्वत इति** । अविशेषादिति भावः । अस्त्वेवं परस्परज्ञानापेक्षया अन्योन्याश्रयत्वम् इत्यतः, तथा सति भेदज्ञानानुपपत्तिः सिद्धा इत्याशयेनाह **न चेति** ॥ **तदापत्तेरिति** । प्रतीत्यनुपपत्त्यापत्तेरित्यर्थः ।

**स०** — ननु अन्योन्याश्रयात् भेदप्रतीतेरेव निराकरणे त्वन्मतेऽपि भेदप्रतीतिर्न स्यादित्यतो

---

मन्मते भेदस्य सांवृतत्वात् संवृतिवशेन भेदप्रतीतिसंभवेऽपि त्वया तस्य पारमार्थिकत्वाङ्गीकारात् न तदुपपत्तिरित्यभिप्रायेण भेदभिन्न इत्युक्तम् । तथापि यत्र भेदो नाङ्गीक्रियते । तस्य वस्तुनः प्रत्यक्षाभावमात्रमेव भेदप्रत्ययाभावेन भविष्यति । अन्यत्र तु प्रपञ्चप्रत्यक्षे न बाधकमिति कथं प्रत्यक्ष-त्वाभावापादनमित्यतः सर्वत्रापि भेदसद्भावं प्रतिपादयितुमनेकत्वोक्तिरिति ज्ञेयम् । **उभयत्रापीति** । विशेषणत्वेन प्रतीतौ विशेष्यत्वेन प्रतीतौ चेत्यर्थः । तत्र विशेषणत्वेन भेदप्रतीतौ अन्योन्याश्रयत्व-मुपपादयति ( तत्र धर्मिप्रतियोगिभावमनपेक्ष्य संबन्धमात्रापेक्षायामन्योन्याश्रयत्वमुपपादयति ) **विशेष्ययोरिति** । भेदज्ञानस्य विशेष्यीभूतघट-पटज्ञानापेक्षत्वे नियामकमाह **तद्विशेषणतयेति** । तद्विशेषणत्वज्ञानस्य विशेष्यज्ञानकार्यत्वात् कार्यस्य च कारणापेक्षत्वात् युक्तं भेदज्ञानस्य विशेष्यीभूतघट-पटज्ञानापेक्षत्वमिति भावः । अत्र च घटपटौ भिन्नाविति प्रतीतेर्भेदांशे विशेषणत्वप्रकारकत्वाभावेऽपि तद्विशेषणत्वविषयकत्वमात्रमस्त्येव । तद्विशेषणतयेत्यनेन तद्विशेषणताविषयकज्ञानमात्रस्यैवाभि-प्रेतत्वात् ( विशेषणत्वेन रूपेण विशेषणज्ञानस्य कार्यत्वेन विशेष्ययोर्घटपटयोरज्ञाने तद्विशेषण-त्वेन भेदज्ञानानुपपत्तिरित्यर्थः । न चैवं घट-पटभेदो विशेषणमिति ज्ञाने विशेष्यज्ञानापेक्षा

यामपि घटपटौ भिन्नावित्यत्र न तदपेक्षा, अस्य विशेषणत्वेन ज्ञानत्वाभावादिति वाच्यम् । अस्य विशेषणत्वेन भेदज्ञानत्वमिति क्रमेणार्थाभिधानात् । ) तद्विशेषणत्वप्रकारकत्वविवक्षायां घट-पटभेदो विशेषणमिति विशेषणत्वप्रकारकज्ञानस्य विशेष्यीभूतघट-पटज्ञानविशेषणत्वज्ञानसापेक्षत्वेपि घटपटौ भिन्नौ इति प्रतीतेः तदप्रकारकत्वेन विशेष्यज्ञानापेक्षत्वाभावादिति द्रष्टव्यम् । विशेष्यज्ञानस्य भेदापेक्षत्वमुपपादयति **न हीति** । विशेषणज्ञानस्य विशेष्यज्ञानापेक्षत्वमुपपादयति **न हीति** । एवं भेदज्ञानस्य घट-पटज्ञानापेक्षत्वमुपपाद्य घट-पटज्ञानस्य भेदज्ञानापेक्षत्वं उपपादयति **विशेष्यज्ञानं चेति** । तत्कुत इत्यत आह **न हीति** । नन्वत्र भेदज्ञानस्य विशेष्यज्ञानापेक्षत्वमितिवत् विशेष्यीभूतघटपटज्ञानस्य भेदज्ञानापेक्षत्वं न वक्तुं शक्यम् । भेद इत्येवाप्रतीत्या विशेषणत्वादिनैव भेदप्रतीतिरितिनियमेन तद्भावस्य घट-पटज्ञानापेक्षत्वसंभवेऽपि घट-पटयोः घटः पट इति स्वातन्त्र्येणापि प्रतीतिसंभवेन विशेष्यत्वादिनैव प्रतीतौ नियामकाभावेन भेदज्ञानापेक्षत्वासंभवात् । न च घटपटयोः भेदस्य विशेषणविशेष्यभावप्रयोजकभेदापेक्षत्वाभिप्रायेण घट-पटज्ञानस्य भेदज्ञानापेक्षत्वमुच्यत इति वाच्यम् । तथा सति घटपटौ भिन्नाविति भेदविशेषणकप्रतीतेः घट-पटभेदस्य तद्विशेष्यभूतघट-पटयोश्च भेदप्रतीतिसापेक्षत्वेऽपि प्रत्येतव्यघट-पटभेदप्रतीत्यपेक्षायाः अभावेनान्योन्याश्रयाभावापातात् तत्कथमिति चेन्न । भेदस्य द्विष्ठत्वपक्षे हि इयमन्योन्याश्रयतोच्यते । द्विष्ठो हि भेदः प्रतीयमानो द्वित्वावच्छिन्नघटपटविशेषणत्वादिना प्रतीयते । तादृशे च भेदज्ञाने घटपटयोः द्वित्वावच्छिन्नयोरेव ज्ञानं कारणं वाच्यम् । तेन विना द्वित्वावच्छिन्नघटपटविशेषणत्वादिना भेदज्ञानानुपपत्तेः । द्वित्वावच्छिन्नघट-पटज्ञानं च घटपटगतद्वित्वप्रतीतिजनकघट-पटभेदज्ञानं विना न संभवतीति प्रत्येतव्यभेदज्ञानापेक्षत्वात् युक्तोऽन्योन्याश्रय इति भावेन द्वित्वविशिष्टेति विशेषणम् । घट-पटौ भिन्नावित्यादिप्रतीतौ द्वित्वावच्छिन्नघटपटयोरेव विशेष्यतया प्रतीयमानत्वेन घट-पटमात्रस्याविशेष्यत्वात् घट-पटप्रतीतिमात्रस्य भेदानपेक्षत्वे विशेष्यीभूतद्वित्वावच्छिन्नघट-पटप्रतीतेः भेदप्रतीत्यविनाभूतत्वात् द्वित्वप्रतीतेः भेदप्रतीत्यपेक्षत्वादिति भावः । ननु च विशेषणत्वेन रूपेण विशेषणज्ञानस्य विशेष्यज्ञानकार्यत्ववत् विशेष्यत्वेन रूपेण विशेष्यज्ञानस्यापि विशेषणज्ञानकार्यत्वमावश्यकम् । अत एवोक्तं तत्त्वनिर्णयटीकायां, विशेषणादिप्रतीतेः विशेष्यादिप्रतीतिकार्यत्वादिति । तथा च घट पटयोर्विशेष्यभूतयोर्ज्ञाने तद्विशेषणत्वेन भेदप्रतीतेरसंभवात् तदर्थं विशेष्यीभूतघट-पटप्रतीतिरावश्यकी । तत्प्रतीतिश्च विशेषणीभूतभेदप्रतीत्यधीना । तथा च भेदविशेषणीभूतभेदप्रतीतौ सत्यां तद्विशेष्यतया घट-पटप्रतीतिः तत्प्रतीतौ सत्यां च तद्विशेषणतया भेदप्रतीतिरित्यन्योन्याश्रय इति विशेषणादिप्रतीतेः विशेष्यादिप्रतीतिकार्यत्वाभ्युपगमेनैवान्योन्याश्रयस्योपपादयितुं शक्यत्वात् द्वित्वविशिष्टार्थेति विशेषणं व्यर्थम् । न च विशेषणादिप्रतीतेर्विशेष्यादिप्रतीतिकार्यत्वमिति वाच्यम् । तथा

सति भेदप्रतीत्यधीनत्वात् द्वित्वप्रतीतेः विशेष्यभूतद्वित्वावच्छिन्नघटपटप्रतीत्यर्थं भेदप्रतीत्यावश्यकत्वेऽपि भेदप्रतीत्यर्थं घट-पटप्रतीतेरनपेक्षत्वेनान्योन्याश्रयाभावापातात् । धर्मिप्रतियोगिभावानपेक्षत्वपक्षे तेनापि रूपेण तदनपेक्षणादिति चेन्न । भावानवबोधात् । भेदप्रतीतौ सत्यां द्वित्वविशिष्टार्थप्रतीतिः । तत्प्रतीतौ च भेदप्रतीतिरित्येवान्योन्याश्रयस्वरूपम् । तत्र च भेदप्रतीतेर्घटपटप्रतीत्यपेक्षत्वस्य प्रकारान्तरेणोपपादयितुमशक्यत्वात् उपपत्त्यर्थमेव विशेषणप्रतीतेर्विशेष्यप्रतीतिकार्यत्वमभ्युपगम्यते । न तु तेनैव रूपेण उक्तरीत्या अन्योन्याश्रयत्ववदानार्थं, तस्य प्रकारस्य विशिष्टज्ञानादिसाधारणत्वेन भेदमात्रसाधारणत्वाभावात् । न चैवं 'विशेषणादिप्रतीतेरि'त्यादितत्त्वनिर्णयटीकाविरोधः । तत्रादिपदेनोक्तार्थस्य विवक्षितत्वादिति वाच्यम् । घट पटौ भिन्नावित्यत्रविशेषणप्रतीतेर्विशेष्यकार्यत्वम् । घट-पटयोर्भेद इत्यत्र विशेष्यप्रतीतेर्विशेषणप्रतीतिकार्यत्वमित्यभिप्रायेणैव तत्रादिपदोपादानम् । न तु घट-पटौ भिन्नावित्येतत्प्रतीतावेव विशेषणविशेष्यप्रतीतेः विशेष्यविशेषणप्रतीतिसापेक्षत्वमित्यभिप्रायेणादिपदोपादनमिति न तद्विरोध इति भावः ।

**एवमिति** । घटपट-योर्भेद इति विशेष्यत्वेन भेदप्रतीतेर्विशेषणीभूतघट-पटज्ञानापेक्षत्वम् । विशेषणीभूतदण्डज्ञानाभावे तद्विशेष्यतया देवदत्तज्ञानादर्शनेन विशेष्यत्वविषयकज्ञानस्य विशेषणज्ञानकार्यत्वात् विशेषणीभूतघट-पटयोश्च स्वातन्त्र्येणापि प्रतीत्या भेदविशेषणत्वेनैव तत्प्रतीतिनियमाभावेनोक्तप्रकारेण तज्ज्ञानस्य भेदज्ञानापेक्षत्वासंभवेऽपि उक्तरीत्या द्वित्वविशिष्टार्थप्रतीतौ प्रत्येतव्यभेदज्ञानापेक्षायाः सत्त्वादिति भावः । घट-पटौ भिन्नाविति विशेष्यत्वेन भेदज्ञानस्यापि विशेष्यप्रतीतिकार्यत्वं घट पटयोर्भेदज्ञानविशेष्यत्वेन च तज्ज्ञानस्य विशेषणप्रतीतिकार्यत्वमिति भावेनैव विशेषणादिप्रतीतेरित्यादिना तत्त्वनिर्णयटीकायामादिपदोपादानम् । न तु घट-पटौ भिन्नावित्येतत्प्रतीतावेव विशेषणत्वविशेष्यत्वविषयकज्ञानाय विशेष्यविशेषणत्वप्रतीतिसापेक्षत्वाभिप्रायेणेति न तद्विरोध इति ध्येयम् ।

**प०**— भेदग्रहानुपपत्तिशङ्का प्रकृतानुपयुक्तेत्यत आह **अयमर्थ इति** । भेदो द्वित्वादिरिव व्यासज्यवृत्तिरिति मतेनादिपदेनोक्तं तावदाह **घटपटौ भिन्नाविति** । भेदेन युक्तावित्यर्थः । मूलोपात्तमाह **घटपटयोरिति** । युगधर्मो नेतिमतेनादिपदोक्तं मूलोपात्तं च क्रमेणाह **यद्वा घटादिति ॥ विशेष्यज्ञानं च भेदापेक्षमिति** । विशेष्यत्वेन ज्ञानं चान्योन्यं भेदाज्ञानापेक्षमित्यर्थः । धर्मिप्रतियोगितया च ज्ञाने सतीत्यर्थः ॥ **तदापत्तेरिति** प्रतीत्यनुपपत्त्यापत्तेरित्यर्थः । प्रागुक्तरीत्येति भावः ।

**या०**— भेदस्य द्विष्ठत्वपक्षमाश्रित्याह **भेदो हि प्रतीयमान इत्यादि ॥ विशेष्यतया वेति** । व्यावर्त्यतया वेत्यर्थः । भेद एकस्य धर्मोऽपरनिरूप्य इति मतमाश्रित्याह **यद्वा घटादिति ॥**

**विशेष्ययोर्घटपटयोरिति** । अयं भावः । भेदो हि संयोगादिवदुभयधर्मः । स चोभयसंबन्धितयैवावभासते न पृथक् । अत एवोक्तं 'प्राग्भेद इत्येव प्रतीतेरभावादिति' । उभयसंबन्धिता च कदाचित्तद्विशेषणता कदाचिद्विशेष्यता । एतदुभयरूपोभयसंबन्धितया भेदज्ञानमुभयज्ञानाधीनम् । उभयज्ञाने भेदस्य तत्संबन्धित्वेन प्रत्येतुमशक्यत्वात् । उभयज्ञानं च भेदज्ञानापेक्षं द्वित्वविशिष्टार्थप्रतीतेर्भेदज्ञानजन्यत्वात् । अतोऽन्योन्याश्रयत्वमिति ॥ **न हि देवदत्तेति** । इदं च देवदत्तविशेषणं दण्ड इति यदा दण्डे देवदत्तविशेषणत्वं प्रकारतया भासते तदभिप्रायकमेवेति ज्ञातव्यम् । तेन दण्डी देवदत्त इति ज्ञाने दण्डो विशेषणतया भासते । न चात्र देवदत्तज्ञानं कारणमिति कश्चिदभ्युपैति । विशेष्यज्ञानस्य विशिष्टज्ञानाहेतुत्वात् । अतः कथमेतदिति शङ्कानवकाशः । दण्डीति ज्ञाने दण्डे विशेषणत्वस्य संसर्गमर्यादया भानेऽप्युक्तज्ञान इव प्रकारत्वेनाभानात् । न च भेदनिष्ठविशेषणतादेरपि संसर्गमर्यादयैव भाने कथं तत्र घटपटरूपविशेष्यज्ञानं कारणं स्यादिति वाच्यम् । ससंबन्धिकपदार्थेषु विशेषणत्वादिरूपसंबन्धिसंबन्धस्य प्रकारतयैव भानमित्याशयात् । विशेषणादिप्रतीतेर्विशेष्यादिप्रतीतिकार्यत्वादिति तत्त्वनिर्णयटीकायामप्ययमेवाभिप्रायो वर्णनीयः ॥ **भेदापेक्षमिति** । भेदप्रतीत्यपेक्षमित्यर्थः । एतदेवोपपादयति **न हि भेदाप्रतीताविति** । ननु भेदस्य घटपटविशेषणतया प्रतीतिसमये घटपटयोस्तद्विशेष्यत्वमपि प्रतीयत एव । समानसंविद्वेद्यत्वात् । तथा च घटपटविशेषणतया भेदप्रतीतेर्घटपटप्रतीत्यभावेऽभाववद्भेदविशेष्यतया घटपटप्रतीतेरपि भेदप्रतीत्यभावेऽभाव इत्येव कस्माद्भेदप्रतीत्यपेक्षत्वमत्र नोपपादितमिति चेन्नैवं शङ्क्यम् । भेदे हि घटपटविशेषणत्वं यदा प्रकारतया भासते तदा घटपटयोर्विशेष्यत्वं संसर्गमर्यादयैव भासते, न प्रकारत्वेन येनोक्तरीत्या तत्र भेदप्रतीत्यपेक्षा स्यादतोऽत्र द्वित्वप्रतीतिद्वारैव भेदप्रतीत्यपेक्षत्वमुपपादितमिति ध्येयम् ॥ **एवं विशेष्यतयेति** । विशेष्यतारूपघटपटसंबन्धित्वस्य प्रकारतया भेदप्रतीतावित्यर्थः । **द्रष्टव्योऽन्योन्याश्रयत्वमिति** शेषः । तद्व्युत्पादनं प्रागेव कृतमत्रानुसन्धेयम् ॥ **तदापत्तेरिति** । प्रतीत्यनुपपत्त्यापत्तेरित्यर्थः ।

**श्री०**— प्रत्यक्षोऽपि दृश्योपीत्यनेन दृश्यत्वरूपहेतूच्छित्तिरूपबाधकमुक्तं वेदितव्यम् । **अप्रत्यक्षतायां** प्रत्यक्षेण गृहीतुमशक्यतायाम् । एवमुत्तरत्र । **सोऽपि** अनेकभेदभिन्नः प्रपञ्चोऽपि । **विशेष्यतया** व्यावर्त्यतया । घटपटयोर्विशेष्यतयैवेति यावत् । एकस्य भेदस्य द्विष्ठत्वपक्षे प्रतीतिमुपपाद्यैकप्रतियोगिकोऽपरधर्मिक इति पक्षे तद्ग्रहणे प्रकारमुपपादयति **यद्वेति** । तदेवोपपादयति **न हीति** ॥ **भेदाप्रतीताविति** । द्वित्वप्रतीतिकार्यत्वाद्भेदप्रतीतेरित्यर्थः ॥ **एवं विशेष्यतयेति** । घटपटयोर्भेदो घटात्पटस्य भेद इत्यत्रेत्यर्थः ॥ **तन्निरूप्यत्वादिति** । तस्य भेदस्य धर्मिप्रतियोगिनिरूप्यत्वादित्यर्थः । कुतो न शक्यत इत्यत आह **तथात्व इति** । भेदाग्रहे यदि धर्मिप्रतियोगिभावो ज्ञायत इत्यर्थः ।

च०—**अनेकभेदभिन्नः** अनेकभेदविशेषितः । 'भेदो हि प्रतीयमान' इत्यादिकं 'न हि भेदाप्रतीतावि'त्यन्तग्रन्थमित्थं व्याकुर्वते । भेदस्य द्विष्ठत्वपक्षमाश्रित्याह **भेदो हि प्रतीयमान इत्यादिना ॥ विशेष्यतया वेति** । व्यावर्त्यतया वेत्यर्थः । भेद एकस्य धर्मोऽपरस्य निरूप्य इति मतमाश्रित्याह **यद्वा घटादिति ॥ विशेष्ययोर्घटपटयोरिति** । अयं भावः । भेदो हि संयोगादिवदुभयधर्मः स चोभयसंबन्धितयैवावभासते । न पृथक् । अत एवोक्तं प्राक् 'भेद इत्येव प्रतीतेरभावादि'ति । उभयसंबन्धिता च कदाचित्तद्विशेषणता कदाचित्तद्विशेष्यता । एतदुभयरूपेणोभयसंबन्धितया भेदज्ञानं उभयज्ञानाधीनम् । उभयाज्ञाने भेदस्य तत्संबन्धित्वेन प्रत्येतुमशक्यत्वात् । उभयज्ञानं च भेदज्ञानापेक्षम् । द्वित्वविशिष्टार्थप्रतीतेर्भेदज्ञानजन्यत्वात् । अतोऽन्योन्याश्रयत्वमिति । **न हि देवदत्तेति** । इदं च देवदत्तविशेषणं दण्ड इति दण्डे देवदत्तविशेषणत्वं यत्र प्रकारतया भासते तदभिप्रायकमेवेति बोध्यम् । तेन दण्डी देवदत्त इति ज्ञाने हि दण्डो देवदत्तविशेषणतया भासते । न चात्रदेवदत्तज्ञानं कारणमिति कश्चिदभ्युपैति । विशेष्यज्ञानस्य विशिष्टज्ञानाहेतुत्वादतः कथमेतदिति शङ्कानवकाशः । दण्डीति ज्ञाने दण्डे विशेषणत्वस्य संसर्गतया भानेप्युक्तज्ञान इव प्रकारत्वेनाभानात् । न च भेदनिष्ठविशेषणतादेरपि संसर्गमर्यादयैव भानात्कथं तत्र घटपटरूपविशेष्यज्ञानं कारणं स्यादिति वाच्यम् । ससंबन्धिकपदार्थेषु विशेषणत्वादिरूपसंबन्धिसंबन्धस्य प्रकारतयैव भानमित्याशयात् । विशेषणादिप्रतीतेर्विशेष्यादिप्रतीतिकार्यत्वादिति तत्त्वनिर्णयटीकायामप्ययमेवाभिप्रायो वर्णनीयः । **भेदापेक्षमिति** । भेदप्रतीत्यपेक्षमित्यर्थः । एतदेवोपपादयति **न हि भेदाप्रतीतावितीति** ।

अत्र गुरुपादाः अभावप्रकारकधीसामान्यं प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनोऽभावांशे वैशिष्ट्यं, तादृशप्रतियोगिविशेषितेऽभावेऽधिकरणतावच्छेदकविशिष्टानुयोगिकवैशिष्ट्यं चावगाहत इति विशेषणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकीभूतविशिष्टप्रतियोगिकवैशिष्ट्यावगाहिबुद्धित्वाक्रान्तं विशेष्यतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकीभूतविशिष्टानुयोगिकवैशिष्ट्यावगाहिबुद्धित्वाक्रान्तं च भवतीत्यभावप्रत्ययो हि विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेत इति दीधितिकारोक्तिं व्याचक्षाणैर्विशिष्टवैशिष्ट्येत्यस्य विशिष्टस्य वैशिष्ट्यं विशिष्टवैशिष्ट्यमित्यर्थापयद्भिः समर्थितम् । इत्थं च भेदस्योभयवृत्तिताकल्पे समूहालम्बनात्मिकायास्तस्य प्रातिस्विकताकल्पे च तदात्मिकायाः घटपटौ भिन्नाविति घटः पटाद्भिन्नः पटो घटाद्भिन्न इति च प्रतीतेरुक्तदिशा विशेषणतावच्छेदकप्रकारकनिर्णयविशेष्यतावच्छेदकप्रकारकनिर्णयोभयजन्यतावच्छेदकीभूतधर्मद्वयाक्रान्ततयान्योन्याश्रयतामभिधित्समानः पीठिकामारचयति **भेदो हीत्यादिना** । घटपटोभयत्वावच्छिन्नविशेष्यतानिरूपितविशेषणत्वाभिन्नप्रतीतिनिरूपितविषयताश्रयो भेद इति घटपटोभयत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रतीतिनिरूपितविशेषणताश्रयो भेद इति

वान्वयबोधोऽवसेयः । विशिष्टानुयोगिकवैशिष्ट्यावगाहिबुद्धौ विशेष्यतावच्छेदकप्रकारकनिर्णयहेतुतां निदर्शनव्यतिरेकोपदर्शनेन समर्थयते न हीत्यादि । दण्डनिष्ठविशेषणतानिरूपकदर्शनं देवदत्तादर्शने न युज्यत इत्यर्थः । धर्मितावच्छेदकतया देवदत्तत्वमनवगाहमानायाः प्रतीतेर्देवदत्तो न दण्डीति बाध-ग्रहाप्रतिबध्यतया तादृशबाधग्रहदशायामप्येकत्र द्वयमिति नीत्या दण्डदेवदत्तत्वोभयावगाहिन्याः प्रतीतेरापत्त्या दण्डधर्मितावच्छेदकतयैव देवदत्तत्वभानोपगमावश्यंभावादिति भावः । इत्थं च सुरसरित इव स्वरसवाहिन्याष्टीकाकृत्पादसरण्येर्न क्वापि वाव्रज्या कल्पनीयेत्यभ्यधुरिति तद्दिशा सुधातत्त्वनिर्णयटीका-द्वयाक्षरानुपूर्वीसामञ्जस्यप्रकारोऽनसूयेन चेतसा विभावनीयः । भेदापेक्षं भेदप्रतीतिनियन्त्रितम् ।

सु०— निराकरोति नेति ।

अनु०— न तत् ॥

यदुक्तं भेदस्य दुर्ग्राह्यत्वं तन्नास्तीत्यर्थः । तत्कथमित्यत आह स्वरूपमिति ।

स्वरूपं वस्तुनो भेदो

यत् यस्माद्भेदो वस्तुनः स्वरूपं तस्मात् तस्य वस्तुनो ग्र(हे)हणे सति पश्चाद्भेदग्रह इति नास्ति । किन्तु वस्तुग्रह एव भेदग्रहः । तथा च क्वान्योन्याश्रयत्वं येन भेदो दुर्ग्रहः स्यादिति ।

---

भेदस्य वस्तुस्वरूपत्वं कुत इति चेन्न । यो हि भेदमेव नाङ्गीकुर्यात्, किं तस्यार्द्रकव-णिजो वहित्रचिन्तया । यस्तु भेदमङ्गीकृत्य तस्य वस्तुस्वरूपत्वं नाभ्युपैति तं प्रत्याह यदिति ।

यन्न तस्य ग्रहेऽग्रहः ॥

यस्माद्वस्तुनो ग्रहे तस्य भेदस्याग्रहो नास्ति तस्माद्भेदो वस्तुनः स्वरूपमिति सम्बन्धः ॥ अयमत्र प्रयोगः । विमतो भेदो घटस्वरूपं भवितुमर्हति घटग्रहेऽगृह्यमाणत्वरहितत्वात् घटस्वरूपवदेवेति ।

यदि अत्र तस्य ग्रहे गृह्यमाणत्वादित्येवोच्येत तदा घटपटाविति घटज्ञानेन ज्ञायमानेन पटेनानैकान्तिकत्वं स्यात् । तदर्थं 'तस्य ग्रहेऽग्रहो ने'त्युक्तम् । न हि घटग्रहे गृह्यमाणोऽपि पटो घटग्रहे सर्वथा गृह्यत एवेति नियमोऽस्ति । यज्ज्ञाने यत्सर्वथोपलभ्यते तत्तत्स्वरूपमिति व्याप्तावुच्यमानायां दण्डिज्ञाने दण्डोऽप्यवश्यं स्फुरत्येव । न चासौ दण्डिनः स्वरूपमित्यतो विशेषनिष्ठैव व्याप्तिरभिधातव्या ।

शे० — **वस्तुनः स्वरूपमिति** । धर्मिणः स्वरूपमित्यर्थः । अयम्भावः । न भेदो युगधर्मः । किन्त्वेकस्य धर्मोऽपरेण निरूप्यः । घटपटौ भिन्नावित्यत्रापि घटात्पटो भिन्नः पटाद्घटो भिन्न इत्येवार्थः । एवं घटपटयोर्भेद इत्यत्रापि घटपटधर्मिकं भेदद्वयमेव प्रतीयते । एकवचनं तु घटपटयो रूपमितिवत्समुदायापेक्षम् । स च भेदो धर्मिणः स्वरूपमेवेति । एतच्चोत्तरत्र टीकाकार एव स्पष्टयिष्यतीति ॥ **तथा चेति** । प्रतीतिद्वयाभावादिति भावः ॥ **आर्द्रकवणिज इति** । 'आर्द्रकं शृङ्गबेरं स्यादथ शुण्ठी महौषधमि'त्यभिधानादार्द्रकशब्दः शुण्ठीपरः ॥ **नियमोऽस्तीति** । घट इति घटत्वेन घटग्रहे पटग्रहाभावान्न नियम इति भावः ॥ **विशेषनिष्ठैवेति** । स्वभिन्नविशेषणविशेषितवस्तुस्वरूपनिष्ठैवेत्यर्थः ।

स० — **घटग्रहे अगृह्यमाणत्वरहितत्वादिति** । ननु प्रथमप्रतीतौ घटस्य न सर्वात्मकमिदं, किं तु स्वयमेवेत्येवं सर्वव्यावृत्ततयैव प्रतीतिः तत्त्ववादिना अभ्युपगम्यते । अन्यथा संशयाद्यापातात् । घटत्वेन रूपेण घटमात्रप्रतीतौ साक्षिरूपसर्वज्ञानसत्त्वोपपादनानर्थक्यापाताच्च । तथा च सर्ववैलक्षण्यप्रतियोगिभूतसर्वस्य घटग्रहे अगृह्यमाणत्वराहित्येन उक्तहेतोस्तत्र सत्त्वेऽपि घटस्वरूपत्वाभावात् व्यभिचार इति चेन्न । न सर्वात्मकमिदं किं तु स्वयमेवेत्येवं न वस्तुप्रतीतिः । तथा सति भावाभावलक्षणयोः परस्परातिव्याप्तिप्रसङ्गात् । किं तु अभिप्रायकथनमेतत् । प्रतीतिस्तु स्वरूपभेदस्यापि घट इत्येवं घटत्वेनैव रूपेण । तत्र चागृह्यमाणत्वराहित्याभावान्न व्यभिचारः । फलबलेन घटत्वेन रूपेण भेदज्ञानमेव संशयनिवर्तकमित्यङ्गीकारान्न संशयादिप्रसङ्गः । प्रमेयत्वेन रूपेण घटाभावप्रत्यक्षेऽपि प्रतियोगिज्ञानसापेक्षताया दृष्टत्वेन घटत्वेन रूपेण भेदज्ञानेऽपि सर्वरूपप्रतियोगिज्ञानापेक्षोपपत्त्या तदुपपादनस्यापि साम ञ्जस्यात् । 'स्वरूपभेदपक्षे वस्तुतः अन्योन्यप्रतियोगिकयोः घट- पटस्वरूपभेदयोरन्योन्यप्रतियोगित्वयोग्यघट - पटत्वादिरूपेण प्रतीतयोरि'त्यादिना न्यायामृतेऽपि घटत्वादिना प्रतीत्युपपादनमप्यत एवोपपद्यत इति ज्ञेयम् ।

प० — **किं तस्येति** । भेदे धर्मिस्वरूपत्वास्वरूपत्वचिन्तयेति योज्यम् । तत्र दृष्टान्तः **आर्द्रकेत्यादि** । **आर्द्रकम्** लशुनादि । तद्विक्रेतुः । वहित्रं नाम अनर्घ्यानेकवस्त्वादानोपायरूपा समुद्रयानभूता नौरुच्यते इति, स्वस्य धनिकयोग्यवस्तुचिंतया किमपि फलं यथा नास्ति तथेति भावः । नञ्द्वयेन नियमलाभ इति भावेनाह **सर्वथा गृह्यत एवेति नियमोऽस्तीति** । **विशेषनिष्ठैवेति** । यद्घटे गृह्यमाणेऽगृह्यमाणत्वरहितं तत्तदभिन्नं यथा घट[स्व]स्य रूपं । एवं, भेदः घटस्वरूपम् घटे गृह्यमाणेऽगृह्यमाणत्वरहितत्वादित्येवं विशिष्य विशिष्यैव प्रयोगव्याप्ती ध्येये इति भावः ।

या० — **वहित्रचिन्तयेति** । वहित्रं देशान्तरीयानर्घ्यनानावस्तुपूर्णा नौः । तच्चिन्ता धनवतां तादृशवस्तुवणिजामेवोचिता नार्द्रकवणिजः । तस्य दरिद्रत्वेन धनस्यैवाभावादिति भावः ॥ **विशेष-**

**निष्ठेवेति** । यद्घटग्रहे सर्वथाऽगृह्यमाणत्वरहितं तद्घटस्वरूपं, यथा घटस्वरूपमिति विशेषनिष्ठैवेत्यर्थः । स्वभिन्नत्वेनोभयसम्मतविशेषणविशेषितवस्तुस्वरूपनिष्ठैवेत्यर्थः ।

**श्री० — यस्तु** वैशेषिकादिः । तथा चानैकान्त्यमित्याह **न हीति** ॥ **नियमोऽस्तीति** । '**द्वौ** नञाविति' न्यायेन नियमो लभ्यत इत्यर्थः ॥ **यज्ज्ञाने यत्सर्वथेति** । नियमेनेत्यर्थः ।

**च० —** 'आर्द्रकं शृङ्गवेरं स्यादि'त्यभिधानादार्द्रकं शृङ्गवेरं लशुनादीत्यपि स्थितम् । **वहित्रं** नानानर्थ्यवस्त्वादानोपायभूता नौः । **अयमत्र प्रयोग इति** । घटभिन्नत्वाभिन्नत्वकोटिकविमतिविषयीभूतो घटानुयोगिकपटप्रतियोगिकभेदो घटस्वरूपं निरूपितत्वसंबन्धेन घटज्ञानविशेषितविषयतात्वावच्छिन्नव्याप्यतावच्छेदकस्ववृत्तिज्ञानीयविषयतात्वकत्वात् । ज्ञानीयत्वं च निरूपितत्वसंबन्धेन ज्ञानविशेषितत्वम् । अत्र च घटज्ञानीयविषयतासमानाधिकरणस्तज्ज्ञानीयविषयताकत्वादित्येवोक्तौ घटपटाविति समूहालम्बनीयविषयतामादाय पटेऽनैकान्त्यापत्त्या सामानाधिकरण्यमात्रानिवेशेन व्याप्यत्वपर्यन्तानुधावनम् । विषयतायां प्रातिस्विकतया कस्यांचित्पटविषयतायां तद्व्याप्यत्वमादायोक्तक्षतितादवस्थ्यापनुत्तये अवच्छेदकपर्यन्तानुधावनमिति समुदिताशयः ॥

**सु० — किञ्च विशिष्टं नाम विशेषणसंबन्धनिमित्तो विशेष्यस्याकारभेद इति पक्षे न विशिष्टप्रत्यये विशेषणस्फुरणमस्ति । किन्नाम विशेषणज्ञानं विशिष्टज्ञानकारणम् । आशुभावाच्च न क्रमो लक्ष्यते । यद्वा घटभेदौ पक्षीकृत्य नियमेनान्यतरप्रतीतावन्यतरस्य स्फुरणेनान्योन्याभिन्नत्वं साध्यम् । न हि दण्डिप्रतीतौ दण्ड(स्य)स्फुरणेऽपि, दण्डप्रतीतौ सर्वथा दण्डि(नः)स्फुरणमस्तीति ।**

**शे० —** ननु भेदस्य वस्तुस्वरूपत्ववादिना न घट इत्येव तत्प्रतीतिरङ्गीकर्तुं शक्यते । संशयाद्यनिस्तारापातात् । घटत्वेन रूपेण घटमात्रप्रतीतौ साक्षिरूपसर्वज्ञानोपपादनानर्थक्यापाताच्च । किन्नाम न सर्वात्मकमिदं किन्तु स्वयमेवेत्यादितत्त्वनिर्णयटीकानुसारेण सर्वविलक्षणत्वेनैव । तथा च सर्वविलक्षणत्वेन घटप्रतीतावगृह्यमाणत्वराहित्यस्य प्रतियोगिभूते सर्वस्मिन्सत्त्वेऽपि तस्य घटस्वरूपत्वाभावात्तत्र व्यभिचार इति चेन्न । भेदस्य धर्मिस्वरूपत्वेऽपि सर्वविलक्षणत्वेन रूपेण भेदप्रतीतिः सिद्धान्ते नाभिप्रेता । किन्तु घटत्वेनैव । न सर्वात्मकमित्यादिस्तु न प्रतीत्याकारः किन्त्वभिप्रायकथनमेतत् । कुत इति चेन्न । तथा सत्यभावलक्षणस्य भावेऽतिव्याप्तिप्रसङ्गात् । न च प्रथमप्रतीतौ भेदस्य घटत्वेन प्रतीत्यङ्गीकारे साक्षिरूपसर्वज्ञानोपपादनमनर्थकम् । प्रमेयत्वादिना रूपेणाभावज्ञानस्येव घटत्वेन तज्ज्ञानस्यापि प्रतियोगिज्ञानानपेक्षत्वादिति वाच्यम् । वस्तुनस्तदनपेक्षत्वेऽप्यभ्युपगमवादेन तदुपवर्ण-

नोपपत्तेः । न चैवं व्यावृत्त्यज्ञानेन सर्वत्र संशयाद्यापात इति वाच्यम् । फलबलेन घटत्वेन रूपेण तज्ज्ञानस्यैव संशयनिवर्तकत्वाङ्गीकारात् । तत्र चागृह्यमाणत्वराहित्याभावान्न प्रतियोगिभूते सर्वस्मिन् व्यभिचार इति । विशेषनिष्ठव्याप्त्यभ्युपगमे गौरवभयादाह **किञ्चेति** । न विशिष्टप्रत्यये विशेषणस्फुरणमस्तीति विशिष्टस्य विशेषणादिभिन्नाखण्डपदार्थरूपत्वादिति भावः । नन्वेवं सति दण्डादेर्विशेषणत्वानुपपत्तिः । कारणीभूतज्ञानविषयत्वे सति कार्यीभूतज्ञानविषयत्वस्यैव तन्निर्वचनत्वात् । दण्डादेश्च कारणीभूतज्ञानविषयतायामपि कार्यीभूतज्ञानाविषयत्वात् तत्कथं तज्ज्ञानस्य विशिष्टज्ञानकारणत्वकल्पनम् । न च कारणीभूतज्ञानविषयतामात्रमेव विशेषणत्वं न तु विशिष्टं गौरवात् । तच्च दण्डादेरविकलमिति युक्तमेव तज्ज्ञानस्य कारणत्वमिति वाच्यम् । तथा सत्यनुमितिजनकीभूतव्याप्तिज्ञानविषयस्य व्याप्त्यादेरप्यनुमितिविषयविशेषणत्वापातेन अविशिष्टस्य तत्त्वायोगादित्यरुचेराह **यद्वेति** ।

**प०**— सामान्यव्याप्तावपि न दोष इति भावेनाह **किञ्चेति** । ननूभयत्रानैकान्तिकत्वाभावसाम्येपि सामान्यव्याप्तिरेवादौ कुतो नाभिधीयत इत्यत आह **आशुभावाच्चेति** । आशु शीघ्रं धर्मिस्वरूपस्य भेदस्य भावाज्ज्ञानात्स्फुरणादिति यावत् । सर्वमतसाधारण्येनाह **यद्वेति** ।

---

**या०**— नन्वेवं गौरवमित्यरुचेराह **किञ्चेति** ॥ **न विशिष्टप्रत्यय इति** । विशिष्टस्याखण्डवस्त्वन्तररूपत्वादिति भावः । नन्वेवं दण्डादेर्विशेषणत्वमेव कुतः । तत्प्रतियोगिकवैशिष्ट्यस्य विशिष्टज्ञानेऽभानात् । न च जनकीभूतज्ञानविषयत्वमेव विशेषणत्वमिति वाच्यम् । अनुमितिजनकीभूतज्ञानविषयस्यापि व्याप्त्यादेरनुमितिविषयविशेषणत्वाभावादित्याशयेनाह **यद्वेति** ॥

**श्री०**— किञ्च यत् घटग्रहेऽगृह्यमाणत्वरहितं तद्घटस्वरूपं यथा घटस्वरूपमिति विशेषव्याप्तिर्न विवक्षिता, किन्तु यज्ज्ञाने यत्सर्वथोपलभ्यते तत्तस्य स्वरूपमिति सामान्यव्याप्तिरेव विवक्षिता । न च व्यभिचारः । दण्डरूपविशेषणसम्बन्धेन दण्डित्वरूपं विशिष्टं नामाकारान्तरं विशेष्ये च जायत इति पक्षे दण्डिज्ञाने विशिष्टरूपाकारान्तरविषयके दण्डविषयकत्वाभावात् । दण्डविषयकं यद्विशेषणज्ञानं तद्विशिष्टरूपाकारान्तरविषयकज्ञानकारणमेव । तज्ज्ञानानन्तरं विशिष्टज्ञानं जायते शैघ्र्यात्क्रमो न ज्ञायत इति न व्यभिचार इत्याह **किञ्चेत्यादिना** । **अन्यतरप्रतीतौ,** घटप्रतीतौ भेदः प्रतीयते तत्प्रतीतौ च घटः प्रतीयत इति नियमेनान्यतरप्रतीतौ ।

**सु० —** **भवेदेतद्यदि भेदो वस्तुग्रह एव गृह्येत । न चैवम् । किन्नाम वस्तुप्रतीत्युत्तरकालमेव । निर्विकल्पके (हि) च प्रत्यये वस्तुमात्रमवभासते । भेदस्तु वस्तुदर्शनोत्तरकालं प्रतियोगिस्मरणे सत्यवभासते । यथा सादृश्यमभावश्चेत्यत आह** अन्यथेति ।

**अनु० —** अन्यथाऽस्यामुना भेद इति वक्तुं न शक्यते ॥

**यदि भेदो वस्तुप्रतीतौ न प्रतीयेत तदाऽस्यामुना भेद इत्युत्तरकालं सविकल्पक(वि)ज्ञानमपि न जायेत । तथा च तथा व्यवहारोऽपि न स्यात् । अस्यामुनेति (हि) धर्मिप्रतियोगितया वस्तुद्वयमुद्दिश्य भेदो ज्ञायते । न चागृहीतभेदं तथोद्देष्टुं शक्यते । एकस्मिन्नपि तत्प्रसङ्गात् । भेदसत्तामात्रेण तदुपपत्तिरिति चेत् (न) । दूरस्थवनस्पत्योरभेदप्रत्ययाभावप्रसङ्गात् । दोषात्तत्र तथेति चेन्न । भेदस्य स्वरूपसत्तयैवोपयोगे दोषस्याकिञ्चित्करत्वादिति ।**

**शे० — न चैवमिति** । ततश्च घटग्रहेऽगृह्यमाणत्वात्तद्ग्रहितत्वहेतोरसिद्धिरिति भावः । नन्वेवं सर्वत्र संशयादिप्रसङ्ग इति शङ्कते **किन्नामेति** । वस्तुप्रतीत्युत्तरकाले प्रतीतो भेदः प्रसक्तमपि संशयादिकं निरोत्स्यतीति भावेनोत्तरमाह **वस्त्विति** । वस्तुप्रतीतिभेदप्रतीत्योर्यौगपद्यमेवास्तु किं पौर्वापर्यकल्पनयेत्यतस्तदुपपादयति **निर्विकल्पके हीति** । तदा प्रतियोगिस्मरणाभावेन भेदज्ञानसामग्रीविरहात् । अत एवोत्तरत्र प्रतियोगिस्मरणे सतीति सामग्रीसद्भावोपपादनमिति भावः । ननु वस्तुप्रतीतौ भेदाप्रतीतावपि नास्यामुना भेद इति व्यवहारानुपपत्तिप्रसक्तिः । वस्तुप्रतीत्युत्तरकालमुत्पन्नस्यास्यामुना भेद इति सविकल्पकस्य तादृशव्यवहारहेतुतया तत एव तद्व्यवहारसंभवादित्यतो भवेदेतदेवं **यदि तादृशं** भेदसविकल्पकमभ्युपगम्य व्यवहारानुपपत्त्यापादनमत्राभिप्रेतं स्यात् । न चैवं किन्नाम तादृशभेदसविकल्पकं न स्यात् । ततश्च तादृशो व्यवहारो न स्यादित्येवेति नातिप्रसङ्ग इति भावेनापेक्षितपूरणेनोभयानुपपत्तिसमर्पकतया वाक्यं योजयति **यदीत्यादिना** । ननु च वस्तुप्रतीतौ भेदाप्रतीतावप्यस्यामुना भेद इति भेदे सविकल्पकं ज्ञानं भविष्यति । प्राग्भेदज्ञानस्य तत्रोपयोगाप्रतिभासेनाप्रयोजकत्वादित्यतः तस्योपयोगं दर्शयति **अस्येति** ॥ **उद्दिश्येति** । संबन्धीकृत्येत्यर्थः । न तु निर्दिश्येत्यर्थः । ज्ञाने तदभावात् । **एकस्मिन्नपीति** । एकस्मिन्नपि घटे घटस्य घटेन भेद इत्युद्देशपूर्वकं भेदसविकल्पस्य तत्प्रयोज्यतादृशव्यवहारस्य च प्रसङ्गादित्यर्थः । ननु घटपटयोर्भेदसद्भावादस्यामुना भेद इत्युद्देशपूर्वकप्रतीत्यादिकमुपपद्यते । एकस्मिन्घटे च स्वेन स्वस्य भेदाभावान्न तथोद्देशादिप्रसङ्ग इति शङ्कते **भेदेति** । तर्हि **दूरस्थवनस्पत्यो**रपि परस्परभेदसद्भावात्तथोद्देशपूर्वकस्यामुना भेद इति भेदप्रत्ययस्य प्रसङ्गादभेदप्रत्ययो न स्यादित्याह **दूरस्थेति** ॥ **अकिञ्चित्करत्वादिति** । दोषस्य किं धर्मिप्रतियोगितया विलक्षणवस्तुद्वयप्रतीतिप्रबन्धकतयोपयोगः । उताभेदभ्रमजनकतया । नाद्यः । भेदग्रहस्योक्तप्रतीत्यनुकूलत्वे हि तद्विघटकतया दोषः प्रतिबन्धको भवेत् । अन्यस्य तद्विघटनीयस्य तत्राभावात् । **कार्यानुकूलकिञ्चि-**

द्विघटकस्यैव प्रतिबन्धकत्वात् । न च तदत्रास्ति । तत्र भेदस्य स्वरूपसत एवोक्तप्रतीतिजनकत्वा-ङ्गीकारात् । अत एव न द्वितीयः । स्वरूपसता भेदेनोक्तप्रतीतेर्विरोधिन्या उत्पत्तावभेदभ्रमजननस्या-संभवात् । न हि विरोधदर्शने सति अनाहार्यारोपो दोषेण जायमानः क्वचिद्दृष्ट इति भावः ।

प०— **निर्विकल्पके हीति** । भेदाद्यग्रहमात्रेण निर्विकल्पक इत्याद्युक्तिः । घटत्वपटत्वादि-प्रकारके घटपटादिज्ञाने इत्यर्थः । **वस्तुमात्रमिति** । मात्रपदेन भेदादि व्यावर्त्यते । न तु तन्निष्ठ-घटत्वादिधर्मो ऽपीति ज्ञेयम् ॥ **सविकल्पक(वि)ज्ञानमपीति** । धर्मिप्रतियोगिकोल्लेखिभेदविषयकज्ञानम-पीत्यर्थः । वक्तुं न शक्यत इत्युक्तेराह (**तथा च**) **तथा व्यवहारोऽपीति** ॥ **उद्दिश्येति** । निरूप्येत्यर्थः । वस्तुद्वयसंबन्धितयेति यावत् ॥ **दोषादिति** । दूरस्थत्वदोषादित्यर्थः ॥ **उपयोग इति** । ऐक्यप्रत्ययप्रतिबन्धादिकार्यकारित्व इत्यर्थः ।

या०— **उद्दिश्येति** । सम्बन्धीकृत्येत्यर्थः । न तु निर्दिश्येत्यर्थः । ज्ञाने तदभावात् ॥ **तत्प्रसङ्गादिति** । धर्मिप्रतियोगिभावेन विलक्षणवस्तुद्वयप्रतीतिप्रसङ्गादित्यर्थः ॥ **अकिञ्चित्करत्वा-दिति** । अत्र दोषस्य किं धर्मिप्रतियोगितया विलक्षणवस्तुद्वयप्रतीतिप्रतिबन्धकतयोपयोग उताभेदभ्र-मजनकतया । नाद्यः । भेदग्रहस्योक्तप्रतीत्यनुकूलत्वे हि तद्विघटकतया दोषः प्रतिबन्धको भवेत् । अन्यस्य तद्विघटनीयस्य तत्राभावात् । कार्यानुकूलकिञ्चिद्विघटकस्यैव प्रतिबन्धकत्वात् न च तदस्ति । भेदस्य स्वरूपसत एवोक्तप्रतीतिजनकत्वाङ्गीकारात् । अत एव न द्वितीयः । स्वरूपसता भेदेनोक्तप्रती-तेर्विरोधिन्या उत्पत्तावभेदभ्रमजननस्यासम्भवात् । न हि विरोधिदर्शनेऽनाहार्यारोपो दोषेण जायमानः क्वचिद्दृष्ट इति भावः ॥

श्री०— **उत्तरकालं** निर्विकल्पकोत्तरकालं ॥ **यथेति** । प्रतीत्यनन्तरं प्रतियोगिस्मरणे जाते सादृश्यादिकं प्रतीयत इत्यर्थः ॥ **न प्रतीयेतेति** । आदाविति शेषः । **तथा** अस्यामुना भेद इतीत्यर्थः । **भेदं** वस्तु । **तथा** धर्मिप्रतियोगितया । कुतो न शक्यत इत्यत आह **एकस्मिन्निति** ॥ **तदिति** । घटाद्घट इति धर्मिप्रतियोगितयोद्देशप्रसङ्ग इत्यर्थः ॥ **तदिति** । धर्मिप्रतियोगितयोद्दे-श्यत्वेत्यर्थः । तथा च भेदज्ञानं नापेक्षितमिति नान्योन्याश्रय इति भावः ॥ **दूरस्थेति** । तत्रापि वास्तवभेदस्य सत्त्वात् इमावित्युद्देश्यत्वसम्भवाद्भिन्नावित्येव प्रतीतिः स्यादित्यर्थः । **दोषादिति** । तथा च तत्र वास्तवभेदे सत्यपि दूरस्थत्वसादृश्यादिदोषवशादुद्देष्टुमशक्यत्वेनाभेदप्रत्यय एव भवतीत्यर्थः ।

सु० — न केवलं वस्तुदर्शने भेदस्फुरणमनभ्युपगच्छतोऽस्यामुना भेद इति पश्चात्कालीनं सविकल्पकज्ञानं तथा व्यवहारश्च नोपपद्यते । किं तर्हीत्यत आह अगृहीत इति ।

अनु० — अगृहीतो यदा भेदस्तदा स्वस्मादिति ग्रहः ॥

स्यात्

यदि घटदर्शनेऽपि तद्भेदो न दृष्टस्तद[ऽ]नन्तरं स्मर्यमाणो गृह्यमाणो वा प्रतियोगी पटोऽपि विना भेदेनोपलब्धव्यः । भेदादर्शने चावश्यमभेदज्ञानं स्यात् । तथा चोत्तरकालं स्वस्मात्स्वयं भिन्न इति सविकल्पको भेदग्रहः स्यादिति । अस्त्वेवमित्यत आह प्रतीतीति ।

प्रतीतिविरोधाच्च

चशब्दस्योत्तरत्र सम्बन्धः । पटाद्घटो भिन्न इत्येव हि सविकल्पिका प्रतीतिरनुभूयते । न जातु स्वस्मात्स्वयं भिन्न इति । अतः प्रतीतिविरोधादेवंविधः सविकल्पकग्रहो नाङ्गीकर्तुमुचित इति शेषः । किञ्च यदि स्वस्मात्स्वयं भिन्न इति सविकल्पको भेदग्रहः स्यात् । तदा कदाचित्तथाविधो वाग्व्यवहारोऽपि स्यात् । न चैवमित्याह न हीति ।

न हि कश्चित्तथा वदेत् ॥

एतेन किमेकप्रतीतिविरोधः, उत सर्वप्रतीतिविरोधः । नाद्यो व्यभिचारात् । न द्वितीयः असिद्धेरित्यपि परास्तम् । कदाऽपि कस्यचिदपि तथा व्यवहाराभावेन विपरीतव्यवहारेण च सर्वप्रतीतिसिद्धेरिति । अतो वस्तुप्रतीतावेव भेदस्य स्फुरणात्तत्स्वरूपत्वमेवेति ।

शे० — तथेति । अस्यामुना भेद इति धर्मिप्रतियोगिनयेत्यर्थः ॥ विना भेदेनेति । अस्यामुना भेद इति धर्मिप्रतियोगितया वस्तुद्वयमुद्दिश्य भेदेन न ज्ञायेतेत्यर्थः । अगृहीतभेदस्य वस्तुद्वयस्योक्तरीत्या धर्मिप्रतियोगितयोद्देष्टुमशक्यत्वादिति भावः । अस्त्वेवं घटदर्शनोत्तरकालमुपलभ्यमानस्य पटस्योक्तरीत्या भेदेनाग्रहः । किं तावताऽपीत्यतो भेदाभेदयोः परस्परविरुद्धतयाऽन्यतरनिषेधस्य अन्यतरविधिनान्तरीयकत्वाद्भेदेनाग्रहेऽभेदेन तद्ग्रहः स्यादित्याह भेदादर्शन इति । इष्टापत्तिमाशङ्क्य परिहरति तथा चेति । उत्तरकालं घटदर्शनोत्तरकालम् ॥ किञ्चेति । अनेन चशब्दस्योत्तरत्र संबन्ध इति प्रागुक्तं विवृतं भवति । यद्यथाऽनुभूयते तत्कदाचित्तथा व्यवहारविषय इति व्याप्तेरिति भावः । अस्त्येव कदाचित्तथाविधो वाग्व्यवहार इतीष्टापत्तिमाशङ्क्य परिहरति न चेति । प्रतीतिविरोधादेव तादृशभेदग्रहाभावसिद्धेः किमतिप्रसङ्गान्तराभिधानेनेत्यतः प्रतीतिविरोधानुपपत्तिशङ्कापरिहारेण तद्विरोधोपपादनार्थत्वात्तस्य नानर्थक्यमित्याशयेन तदनुपपत्त्याशङ्कां तत्परिहारकतां च दर्शयति एतेनेति । कतिपयप्र-

तिपत्तृप्रतीतिविरोधो वा सर्वप्रतिपत्तृप्रतीतिविरोधो वेति विकल्पार्थः ॥ **व्यभिचारादिति** । कतिपयप्रतिपत्तृ-प्रतीतिविरुद्धस्यापि सविकल्पकग्रहस्य बहुलमङ्गीकार्यतादर्शनेन यदेकप्रतीतिविरुद्धं तन्नाङ्गीकार्यमिति व्याप्त्यसिद्धेर्नैकप्रतीतिविरुद्धत्वेनानङ्गीकार्यत्वसाधनं युक्तमिति भावः ॥ **असिद्धेरिति** । कस्यचित्तथा प्रतीतिसद्भावेन सर्वप्रतीतिविरोधासिद्धेरित्यर्थः । एतेनेत्युक्तं विशदयति **कदाऽपीत्यादिना** ॥ **तथेति** । स्वस्मात्स्वयं भिन्नम् इति वाग्व्यवहाराभावेनेत्यर्थः ॥ **विपरीतेति** । घटात्पटो भिन्न इत्येव वाग्व्यवहारेणेत्यर्थः ।

प०— **चशब्दस्योत्तरत्र संबंध इति** । 'न हीत्युत्तरवाक्य इत्यर्थः । तदाह **किंच यदीति** ॥ ॥ **भेदस्य वस्तुस्वरूपत्वे वस्तुग्रहे भेदाग्रहाभावरूपप्रमाणोक्तिः** ॥

या०— **किञ्चेति** अनेनोत्तरत्र सम्बन्ध इत्युक्तं दर्शितमिति ज्ञातव्यम् ॥

श्री०— **वस्तुदर्शने** आदाविति शेषः । तथाऽस्यामुना भेद इतीत्यर्थः । **घटदर्शने** धर्मिभूतघटदर्शने । **तद्भेदः** पटाद्भेदः । **विना भेदेन** धर्मिणो घटस्य सकाशाद्भेदेन विना । **उपलब्धव्यः** । न्यायसाम्यादित्यर्थः ॥ **भेदादर्शने चेति** । धर्मिप्रतियोगिनोरिति शेषः । **उत्तरत्र** 'न ही'ति वाक्ये । **एवंविधः** स्वस्मात्स्वयं भिन्न इत्येवंरूपः ॥ **एकस्येति** । एकस्य पुंसः पटाद्घटो भिन्न इति या प्रतीतिस्तद्विरोधः स्वस्मात्स्वयं भिन्न इति प्रतीतेरित्यर्थः ॥ **सर्वेति** । सर्वेषां पुंसाम् । एकस्य प्रतीतिविरोधेन वस्त्वभावो न सिध्यति । वास्तवशुक्तिप्रतीतेरिदं रजतमित्येकप्रतीतिविरोधेन शुक्त्यभाव एव सिध्येदिति व्यभिचारादित्याह **नाद्य इति** । **असिद्धेः** सर्वेषां पुंसां घटाद्घटो भिन्न इति प्रतीतेरसिद्धेरित्यर्थः । कस्यचित्स्वस्मात्स्वयं भिन्न इत्यपि प्रतीतिर्भवतीति भावः । एतेनेत्युक्तं विशदयति **कदाऽपीति** । पटाद्घटस्य भेद इति विपरीतव्यवहारेण चेत्यर्थः ॥

सु०— **नन्वेवं भेदस्य वस्तुस्वरूपत्वेन तत्प्रतीतिभेदाभावादितरेतरसापेक्षत्वस्य सुतरामभावान्नान्योन्याश्रयत्वमित्युक्तम् । तत्र किं भेदो धर्मिणः स्वरूपम्, उत प्रतियोगिनोऽपि । न तावद्द्वितीयः । एकस्यैव भेदस्योभयस्वरूपत्वेऽद्वैतप्रसङ्गात् । आद्ये तु यद्यपि धर्मिज्ञान-भेदज्ञानयोर्नान्योन्याश्रयत्वम् तथाऽपि प्रतियोगिज्ञानापेक्षयाऽन्योन्याश्रयत्वं कथं परिहरणीयम् । मैवम् । भेदस्य स्वरूपतो ज्ञाने प्रतियोगिविशेषज्ञानानपेक्षणात् । प्रतियोगिस्वरूप-ज्ञाने चैतद्भेदज्ञानानपेक्षणात् । अस्तु तर्हि विशेषज्ञानेऽन्योन्याश्रयत्वम् । तद्धि घटात्पटो भिन्न इत्युत्पद्यते । तत्र धर्मिणो भेदेन प्रतिपन्नस्य वा प्रतियोगिता, अन्यथा वा । न ताव-द्द्वितीयः । स्वतोऽपि भेदप्रतीत्यापत्तेः । आद्ये प्रतियोगिस्वरूपभेदप्रतीतौ धर्मिणः प्रति-**

**योगितायां स एव न्यायः । तथा च पटाद्धटस्य भेदप्रतीतौ घटात्पटस्य भेदप्रतीतिरित्यन्योन्याश्रयत्वमिति । मैवम् । वस्तुतोऽन्योन्यप्रतियोगिकयोर्घटपटस्वरूपभेदयोः प्रतीतयोः सतोरसति सादृश्यादौ प्रतिबन्धकेऽन्योन्यप्रतियोगिकतया विशिष्टभेदप्रतीतौ बाधकाभावादिति ।**

**शे० — अद्वैतप्रसङ्गादिति** । यद्यदत्यन्ताभिन्नेनात्यन्ताभिन्नं तत्तेनात्यन्ताभिन्नमिति व्याप्त्या घटात्यन्ताभिन्नेन भेदेनात्यन्ताभिन्नस्य पटस्य घटात्यन्ताभेदप्रसङ्गादित्यर्थः ॥ **नान्योन्याश्रयत्वमिति** । घटप्रतीतेरेव भेदप्रतीतित्वेन प्रतीतिद्वयाभावात्परस्परसापेक्षत्वस्य सुतरामभावादिति भावः ॥ **कथमिति** । भेदस्य प्रतियोगिस्वरूपत्वाभावेन प्रतियोगिप्रतीतेरेव भेदप्रतीतित्वाभावात्प्रतियोगिज्ञानभेदज्ञानयोरुक्तरीत्या परस्परसापेक्षत्वादिति भावः । किं भेदस्य प्रतियोगिनश्च स्वरूपेण ज्ञाने परस्परापेक्षत्वमभिमतं किं वा विशेषरूपेण तज्ज्ञाने तदपेक्षत्वमिति विकल्पद्वयं मनसि निधायाद्यं निराचष्टे **भेदस्येति** । घटत्वेन भेदज्ञान इत्यर्थः ॥ **प्रतियोगीति** । पटत्वेन पटज्ञान इत्यर्थः । द्वितीयमाशङ्कते **अस्तु तर्हीति** ॥ **अन्यथा वेति** । धर्मिणोऽप्रतिपन्नभेदस्यापि स्वरूपेण प्रतीततामात्रेण वेत्यर्थः ॥ **स्वत इति** । स्वस्येति शेषः । तथा च पटात्पटो भिन्न इति प्रतीत्यापत्तेरित्यर्थः । धर्मिणः पटाद्भिन्नत्वेनाप्रतीतत्वे सति स्वरूपेण प्रतीतत्वस्य पटभेदप्रतियोगिताप्रयोजकस्य पटेऽपि सत्त्वादिति भावः । **धर्मिणः प्रतियोगितायामिति** । घटस्य पटभेदप्रतियोगित्वं हि पटप्रतियोगिकभेदधर्मित्वमेव । ततश्च धर्मिणः पटस्य घटरूपप्रतियोगिस्वरूपभेदप्रतियोगित्वमावश्यकमिति भावः । **स एव न्याय इति** । प्रतियोगिरूपधर्मिणो भेदेन प्रतिपन्नस्य धर्मिभूतस्य प्रतियोगिनः पटस्य प्रतियोगिता, ततोऽप्रतिपन्नभेदस्यापि स्वरूपेण प्रतीततामात्रेण वा । नान्त्यः । तथा सति घटस्यापि घटाद्भेदप्रतीत्यापत्तेः । प्रतियोगिरूपधर्मिणो भेदेनाप्रतिपन्नत्वे सति स्वरूपेण प्रतिपन्नत्वस्य पट इव घटेपि सत्त्वादिति भावः । अस्तु तर्हि धर्मिणः पटाद्धटाद्वा घटस्य पटस्य वा प्रतिपन्नभेदस्यैव प्रतियोगितेत्याद्यः पक्ष इत्यत आह **तथा चेति** । उपलक्षणं चैतत् । घटात्पटस्य भेदप्रतीतौ पटाद्धटस्य भेदप्रतीतिरित्यपि द्रष्टव्यम् । न धर्मिणो भेदेन प्रतिपन्नस्य प्रतियोगित्वं ब्रूमः । येनान्योन्याश्रयः स्यात् । नापि स्वरूपेण प्रतीतिमात्रं विवक्षितम् अपि तु विद्यमानभेदत्वमपि । तथा च स्वस्य स्वस्मात्तदभावान्न भेदग्रहप्रसङ्ग इत्याशयेन समाधत्ते **मैवमिति** । नन्वेतदप्यप्रयोजकम् । क्षीरनीरयोर्विद्यमानभेदयोरपि स्वरूपग्रहणे भेदग्रहादर्शनात् । तादृशयोर्दूरस्थवनस्पत्योर्भेदग्रहादर्शनाच्चेत्यतः समानाभिहारादिलक्षणदोषरूपप्रतिबन्धकवशात्तद्ग्रहणेऽप्यसति प्रतिबन्धके न तद्ग्रह इति भावेनोक्तम् **असति सादृश्यादौ प्रतिबन्धक इति** ॥ **विशिष्टभेदप्रतीताविति** । घटात्पटो भिन्न इति प्रतीतावित्यर्थः ।

स०— प्रतियोगिज्ञानापेक्षया अन्योन्याश्रयं वदन् प्रष्टव्यः । किं भेदस्य स्वरूपेण प्रतीतौ प्रतियोगिज्ञानापेक्षत्वमित्यभिप्रायः, किं वा विशेषप्रतीतौ, नाद्य इत्याह **भेदस्य स्वरूपतो ज्ञान इति** । ननु स्वरूपतो भेदज्ञानमपि न घट इत्येव । किं तु न सर्वात्मकमिदं, किन्तु स्वयमेवेत्येवमाकारम् । तत्र च सर्वस्य प्रतियोगित्वात् तज्ज्ञानापेक्षया अन्योन्याश्रयानिस्तार एव । न सर्वात्मकमिदं किं तु स्वयमेवेति धर्मिस्वरूपेण प्रतीयमानस्य भेदस्य सामान्यतः सर्वप्रतियोगिकत्वं 'स्वयमाणगृह्यमाण-॥ कतिपयविशेषप्रतियोगिकत्वं ह्यनुभूयत' इत्यादितत्त्वनिर्णयानुसारात् । अन्यथा तद्विरोध इति चेन्न । सामान्यतः सर्वप्रतियोगिकत्वस्यानुभूयमानत्वेन सर्वलक्षणप्रतियोगिज्ञानसापेक्षत्वाभ्युपगमेन तदविरोधात् । सर्वज्ञानस्य साक्षिरूपस्य सर्वदा सत्त्वेन तदपेक्षाया अनपेक्षत्वमित्यभिप्रायेण तदनपेक्षणादित्युक्तिसामञ्जस्यात् । न च सामान्यतः सर्वप्रतियोगिकत्ववत् स्मर्यमाणकतिपयविशेषप्रतियोगिकत्वस्याप्यनुभूयमानत्वात् तदपेक्षया स्वरूपप्रतीतावप्यन्योन्याश्रयात् तत्रान्योन्याश्रयत्वमपि कुतो नोच्यत इति वाच्यम् । घटः पटात् भिन्न इत्यादावन्योन्याश्रयपरिहारन्यायेन तदन्योन्याश्रयपरिहारस्यापि ज्ञातुं शक्यत्वेनैव तदनुक्तिः । न तु तस्यासंभवाभिप्रायेणेति भावः ।

प०— **धर्मिण इति** । पटस्येत्यर्थः ॥ **प्रतियोगिनोऽपीति** । घटस्येत्यर्थः ॥ **अद्वैतेति** ॥ घटपटयोरभेदप्रसङ्गादित्यर्थः । घटाभिन्नभेदस्वरूपत्वात्पटस्य यत् यदभिन्नवस्त्वभिन्नं तत् तदभिन्नं यथ घटाभिन्नपृथुबुध्नोदराकाराभिन्नघटस्वरूपं घट भिन्नमिति व्याप्तेरिति भावः ॥ **प्रतियोगिज्ञानापेक्षयेति** । प्रतियोगिज्ञाने सति धर्म्यभिन्नभेदज्ञानम् । तज्ज्ञाने घटादेः प्रतियोगित्वेन ज्ञानमित्यन्योन्याश्रयत्वमित्यर्थः ॥ **प्रतियोगिविशेषेति** । प्रतियोगिसामान्यज्ञानापेक्षा त्वस्त्येव । तच्च ज्ञानं 'सर्वं सामान्यतो यस्मात्सर्वैरेवानुभूयत' इत्युक्तेरस्त्येव सर्वप्राणिनामिति भावः ॥ **एतद्भेदेति** । धर्मिस्वरूपभेदभेदेत्यर्थः । यद्वा धर्मिप्रतियोगिकत्वेन धर्मिनिरूपितभेदज्ञानेत्यर्थः ॥ **स एव न्याय इति** । धर्मिणः सकाशाद्भेदेन प्रतिपन्नस्य प्रतियोगिता अन्यथा वा । न द्वितीयः । स्वतोऽपीत्युक्तदोषादिति न्याय इत्यर्थः ॥ **तथा चेति** । भेदेन प्रतिपन्नप्रतियोगित्वे सतीत्यर्थः ॥ ॥ **स्वमते भेदबुद्धावन्योन्याश्रयत्वपरिहारः** ॥

या०— **स्वरूपतो ज्ञान इति** । धर्मिस्वरूपस्येतरव्यावृत्ततया सामान्यतो ज्ञान इत्यर्थः ।

श्री०— धर्मिप्रतीत्यपेक्षयाऽन्योन्याश्रये दत्ते तत्स्वरूपत्वमङ्गीकृत्य तत्परिहारो यथा क्रियते एवं प्रतियोगिप्रतीत्यपेक्षयाऽपि नान्योन्याश्रयः । भेदस्य प्रतियोगिस्वरूपत्वस्याप्यङ्गीकारादिति कश्चिद्ब्रूयात्याद्वदिष्यति । तदर्थं प्रतियोगिस्वरूपत्वं धर्मिस्वरूपत्ववन्नाङ्गीकार्यम् । ततश्च प्रतियोगिप्रतीत्यपेक्षयाऽन्योन्याश्रयः स्यादेवेत्याशयेन विकल्पयति **उत प्रतियोगिनोऽपीति** । यत् यदभिन्नाभिन्नं

वचनेनाभिन्नमिति व्याप्तिबलात्प्रतियोगिनो धर्म्यभिन्नभेदाभिन्नत्वे धर्मिप्रतियोगिनोरप्यैक्यं स्यादित्याह **अद्वैतेति** ॥ **नान्योन्याश्रयत्वमिति** । भेदस्य धर्मिस्वरूपत्वेन प्रतीतिद्वयाभावादिति भावः । **भेदस्य स्वरूपतो ज्ञाने** भेदस्य घटस्वरूपत्वेन घटत्वादिना रूपेण ज्ञाने ॥ **प्रतियोगिस्वरूपेति** । वस्तुगत्या प्रतियोगिभूतस्य घटस्य पटत्वेन रूपेणेत्यर्थः ॥ **एतद्भेदेति** । पटप्रतियोगिकघटधर्मिकभेदरूपप्रत्येतव्यभेदेत्यर्थः । प्रतियोगिस्वरूपज्ञानं च तत्स्वरूपभेदेनैवोपपन्नमिति भावः । कथमित्यत आह **तद्धीति** । विशेषज्ञानमित्यर्थः ॥ **धर्मिणः** पटस्य सकाशात् ॥ **भेदेन प्रतिपन्नस्य घटस्य स्वतोऽपीति** । भेदेनाप्रतिपन्नस्यापि प्रतियोगित्व इति शेषः । **प्रतियोगिस्वरूपेति** । पटप्रतियोगिकघटधर्मिकेत्यर्थः । **धर्मिणो** घटप्रतियोगिकपटधर्मिकभेदरूपप्रत्येतव्यभेदे यो धर्मी पटस्तस्य प्रतियोगितायां, प्रतियोगिस्वरूपभेदप्रतीतौ प्रतियोगितायां स एव न्यायः, धर्मिणो भेदेन प्रतिपन्नस्य प्रतियोगित्वमन्यथा वेत्युक्त एव न्याय इत्यर्थः । ततश्च पटात् घटस्य भेदप्रतीतौ घटस्य प्रतियोगिकपटधर्मिकभेदरूपप्रत्येतव्यभेदसिद्धिः । एतद्भेदसिद्धौ पटस्य प्रतियोगित्वापत्त्या तत्प्रतियोगिकघटधर्मिकभेदसिद्धिरित्यन्योन्याश्रय इत्याह **तथा चेति** ॥ **वस्तुत इत्यादि** । अयं भावः । न हि प्रत्येतव्यभेदाधिकरणपटप्रतियोगिकभेदवत्त्वेन ज्ञातस्य प्रतियोगित्वमपेक्षितं येनोक्तरीत्याऽन्योन्याश्रयः स्यात्किन्तु गोर्गवयसादृश्यज्ञानाभावेऽपि वस्तुतो गवयसादृश्यवतो गोत्वादिना प्रतीतिमात्रेण गवयविषयत्वेन प्रतीतिमात्रेण वा गवयगतसादृश्यप्रतियोगित्वबुद्धिवद्वस्तुतः प्रत्येतव्यभेदाधिकरणप्रतियोगिकभेदवतो घटादेर्घटत्वादिना प्रतीतिमात्रेण प्रतियोगित्वोपपत्तेस्तन्मात्रमेवापेक्षितमित्यर्थः । ननु घटत्वादिना प्रतीतिमात्रेण प्रतियोगित्वज्ञाने पटाद्यभिन्नतया ज्ञातस्यापि घटादेः पटधर्मिकभेदप्रतियोगित्वं ज्ञायेतेति चेन्न । तदा घटत्वादिना ज्ञानाभावात् । पटैक्येनाप्रतीतस्य घटत्वादिना ज्ञानमात्रेण प्रतियोगित्वमुपपद्यत इति वोच्यमानत्वाददोषः । ननु वास्तवान्योन्यप्रतियोगिकभेदस्य दूरस्थवनस्पत्योः सत्त्वेन तत्राप्ययमस्माद्भिन्नोऽयं चास्माद्भिन्न इत्यन्योन्यप्रतियोगिकतया विशिष्टभेदज्ञानं स्यात् ततश्चाभेदप्रत्ययो न स्यादित्यत **उक्तमसतीत्यादि** । तत्र च सादृश्यादिप्रतिबन्धकमस्तीत्यर्थः ॥ **विशिष्टेति** । घटात्पटस्य भेद इति घटादिविशिष्टभेदे(दस्ये)त्यर्थः ।

**सु० — एवं स्वमतेन भेदप्रतीतावन्योन्याश्रयत्वं परिहृत्य भिन्नभेदवादिनां परिहारमाह** धर्मित्वेति ।

**अनु०—** धर्मित्वप्रतियोगित्वतद्भेदा युगपद्यदि ॥
विशेषणं विशेष्यं च तद्भावश्चैव गृह्यते ॥

उपलक्षणं चैतत् । धर्मिप्रतियोगिनौ चे(त्यपि)ति द्रष्टव्यम् । तद्भावो विशेषणत्वं विशेष्यत्वं च । अत्र विशेषणविशेष्ययोरन्यतरत्वाद्भेदस्य पृथग्ग्रहणाभावः ॥ अयमर्थः । किं निर्विकल्पकप्रतीतावन्योन्याश्रयत्वमुच्यते उत सविकल्पकप्रतीतौ ।

नाद्यः । तत्र धर्मिप्रतियोगिस्वरूपयोस्तद्भावयोस्तद्भेदस्य भेदयोर्वा युगप(दुभय)दवभासनात् । तथा विशेषण(विशेष्य)भूत(भाव)योर्घटपटयोर्भेदस्य च तद्भावयोश्च युगपत्प्रतीतेः । युगपदेव सर्वस्येन्द्रियसन्निकृष्टत्वात् । दर्शनयोग्यत्वाच्च । ननु धर्मिप्रतियोगिनोर्विशेषणविशेष्ययो[श्च] तद्भावोऽपरो भिन्नभेदवादिभिर्नेष्यते । तत्कथमेतत् । मैवम् । भूषणकारादिभिस्तस्याङ्गीकृतत्वात् । तेषामेव चायं परिहार इति । ननु यत्र प्रतियोगी पश्चात्प्रतीयते तत्र युगपदवभासो नास्तीति तद्दृष्टान्तेन सर्वत्राप्येवमनुमीयत इति चेन्न । असन्निहितवत्सन्निहितस्याप्यज्ञानसाधने प्रतीतिविरोधात् । यत्र(च)प्रतियोगी न सन्निहितस्तत्रापि धर्मिधर्मित्वभेदानां तावद्युगपत्प्रतीतिर्नोनुपपन्ना । ददिदमुक्तं को विरोध इति ।

को विरोधः

द्वितीयं निराकरोति स्वरूपेणेति ।

स्वरूपेण गृहीतो भेद एव तु ॥
अस्यामुष्यादिति पु विशेषणैव गृह्यते ॥

अस्यामुष्मादित्युपलक्षणम् । अनयोर्भेदो भिन्नाविमावित्यपि ग्राह्यम् । निर्विकल्पकप्रतीतार्थानामन्योन्यवैशिष्ट्यमात्रं सविकल्पकज्ञानेऽवभासते नाधिकमिति न तत्रापीतरेतराश्रयत्वमिति । तथा(चा)हुर्भिन्नभेदवादिनः । एकस्यामेव निर्विकल्पिकायां संविदि भेदस्य भेदिनोश्च युगपदवभासने सति तत्रैकं भेदिनमव धिकृत्यै)धीकृत्यैतस्मादयं भिन्न इति सविकल्पकबोधोदया(त्कथम)त्र व्यतिरिक्तभेदपक्षेऽन्योन्याश्रयत्वमिति ।

शे० — विशेषणादेरिव धर्म्यादेरप्यत्र संग्राह्यत्वात्तदग्रहान्मूले न्यूनतामाशंक्य धर्मित्वेत्यादेस्तदुपलक्षणत्वेन धर्मित्वादिमात्रपरत्वाभावान्न न्यूनतेत्याशयेन तदुपलक्षणतया व्याख्याति उपलक्षणं चैतदिति । पूर्वत्रेवात्रापि भेदस्यावश्यं ग्राह्यत्वात्तदग्रहान्न्यूनतेत्याशंक्याह अत्रेति । एक एव भेदो द्विष्ठ इति पक्षमाश्रित्य ह तद्भेदस्येति । भेदद्वयाङ्गीकारेणान्यतरमात्राश्रितत्वपक्षमाश्रित्याह भेदयोर्वेति ॥ तथा विशेषणेति । घटपटयोर्भेद इत्यत्र घटपटयोर्विशेषणत्वाद्घटपटौ भिन्नावित्यत्र तयं र्विशेष्यत्वात्प्रतीतिभेदेन तयं र्विशेषणविशेष्यभावमभिप्रेत्येदमुक्तम् । घटपटयोर्विशेषणविशेष्यभावोक्त्यैव भेदस्यापि तल्लाभात् विशेषणविशेष्यभूतस्य भेदस्येत्यनुक्त्वा भेदस्येत्येवमुक्तमिति ध्येयम् ।

स० — **विशेषणविशेष्यभावयोश्चेति** । घटपटौ भिन्नावित्यत्र घटपटयोर्विशेष्यत्वात् घटपटयोर्भेद इत्यत्र च तयोर्विशेषणत्वात् । प्रतीतिभेदेन तयोर्विशेषणविशेष्यभावमभिप्रेत्येदमुक्तम् । घटपटयोः विशेषणविशेष्यभावोक्त्या भेदस्यापि तल्लाभात् विशेषणविशेष्यभूतस्य भेदस्येत्यनुक्त्वा भेदस्येत्येवोक्तमिति ध्येयम् ।

प० — **अत्रेति** । 'विशेषणं विशेष्यं च तद्भावश्चे'त्यत्र भेद इति भेदस्य पृथगनुक्तिरित्यर्थः । अस्फुटत्वादाह **अयमर्थ इति** ॥ **निर्विकल्पकेति** । धर्मित्वप्रतियोगित्वादिवैशिष्ट्यानवगाहिप्रतीतावित्यर्थः ॥ न तु सर्वथा निष्प्रकारकेति घटपटत्वादिप्रकारकत्वात्तस्येति ज्ञेयम् ॥ **सविकल्पकेति** । धर्मित्वाद्युल्लेखिज्ञान इत्यर्थः ॥ **तत्रेति** । धर्मित्वाद्यप्रकारकतया निर्विकल्पकत्वेनाभिमतप्रतीतावित्यर्थः ॥ **धर्मिप्रतियोगिस्वरूपयोरिति** । घटत्वेन पटत्वेन घटपटस्वरूपयोस्तद्भावयोर्धर्मिप्रतियोगित्वयोरित्यर्थः । घटपटयोर्भेद इति प्रतीतिमुपेत्य वा घटात्पटो भिन्न इति प्रतीतिमुपेत्य वा **तद्भेदस्येति** । घटात्पटो भिन्नः पटाद्घटो भिन्न इति प्रतीतिमुपेत्याह **भेदयोर्वेति** ॥ **विशेषणविशेष्यभूतयोरिति** । घटपटयोर्भेद इत्यत्र विशेषणभूतयोर्घटपटौ भिन्नावित्यत्र विशेष्यभूतयोरित्यर्थः ॥ **भेदस्य चेति** । विशेष्यभूतस्य विशेषणभूतस्य चेति योज्यम् ॥ **तद्भावयोरिति** । विशेषणत्वविशेष्यत्वयोरित्यर्थः । सन्निहितघटपटाद्याशयेनाह **युगपदेव सर्वस्येति** । सन्निकर्षश्च परमते यथायोगं ध्येयः । असन्निधानस्थलाभिप्रायेण शङ्कते **ननु यत्रेति** ।

---

श्री० — ननु यथा धर्मित्वप्रतियोगित्वतद्भेदा इत्युक्तं तथा विशेषणं विशेष्यं च तद्भावस्तद्भेदाश्चेति कुतो नोक्तमत आह **अत्रेति** । भेदो हि क(स्य)योश्चिद्विशेषणतया वा विशेष्यतया वा प्रतीयते न भेद इत्येवातो विशेषणं विशेष्यं चेत्युक्त्यैव तद्भेदोऽप्युक्त एवेति भावः ॥ **अ(त)त्रेति** । निर्विकल्पकप्रतीतावित्यर्थः । तथा च धर्मिप्रतियोग्यादिप्रतीतौ सत्यां भेदप्रतीतिद्वयाभावात् एकस्यामेव निर्विकल्पकायां संविदि युगपदेव सर्वेषामवभासनान्नान्योन्याश्रयत्वमिति भावः ॥ **तद्भावयोरिति** । धर्मिप्रतियोगिस्वरूपनिष्ठयोर्धर्मित्वप्रतियोगित्वरूपयोर्धर्मयोरित्यर्थः । एकस्यैव भेदस्य द्विष्ठत्वपक्षाभिप्रायेण **भेदस्येत्युक्तम्** । घटपटधर्मिकं भेदद्वयमिति पक्षाभिप्रायेण **भेदयोरित्युक्तम्** । तथा च धर्मिप्रतियोग्यादिभेदस्य भेदयोश्चेत्यर्थः । **तद्भावयोः** घटपटत्वयोः ॥ **नेष्यत इति** । धर्मित्वादेर्गुणादावपि सत्त्वेन द्रव्यादावन्तर्भावायोगात् षट्पदार्थातिरेकः स्यादतो धर्मित्वादिरपरो धर्म्यादिस्वरूपाद्भिन्नो नेष्यतेऽत **एतत्** तद्भाव इति पृथग्ग्रहणं कथमित्यर्थः । **तस्य** अतिरिक्तधर्मित्वादिरूपधर्मस्य । **यत्र** असन्निहितस्थले । युगपद्धर्मिप्रतियोगिनोरिति शेषः ॥ **सर्वत्रापीति** । सन्निहितस्थलेऽपि यत्र प्रतियोगी सन्निहितस्तत्रापीत्यर्थः । एवं युगपदवभासाभावः । तथा च यदा धर्मी प्रतीयते तदा प्रतियोगी न प्रतीयत

एव । भेदधर्मिणोर्युगपन्निर्विकल्पकप्रतीतौ प्रतीतत्वाद्धर्मिप्रतीत्यपेक्षयाऽन्योन्याश्रयाभावेऽपि प्रतियोगि-प्रतीत्यपेक्षया तु स्यादेव, प्रतियोगिभेदयोर्युगपदप्रतीतत्वेन प्रतीतिद्वयाभावान्नान्योन्याश्रयत्वमिति परिहा-रायोगादित्यर्थः । अतिप्रसङ्गपराहतत्वादेवं न वाच्यमित्याह **असन्निहितवदिति** । असन्निहितप्रतियो-गिवत् । **सन्निहितस्यापि** प्रतियोगिनः । **प्रतीतीति** । प्रतियोगिज्ञानानुभवेत्यर्थः । तथा च प्रतीतिद्वया-भावान्न प्रतियोगिप्रतीत्यपेक्षयाऽप्यन्योन्याश्रय इति भावः । नन्वेवं प्रतीतिविरोधेनासन्निहितवत्सन्निहितस्या-प्यज्ञानायोगेऽपि यत्र वस्तुनः प्रतियोगी न सन्निहितः, तत्र प्रतीतिद्वयप्राप्त्या तत्प्रतीत्यपेक्षयाऽन्योन्याश्रयः स्यादेवेति चेत्तत्राह **यत्र चेति** । तथा च तत्र धर्मिप्रतीत्यपेक्षयाऽन्योन्याश्रयाभावेऽपि प्रतियोगिप्रती-त्यपेक्षया प्राप्तोऽन्योन्याश्रयस्तु 'वस्तुतोऽन्योन्यप्रतियोगिकयोः' इत्यस्मदुक्तरीत्या परिहरणीय इति हृदयम् । **तत्रापि** सविकल्पकज्ञानेऽपि । तथा च यदि निर्विकल्पकेऽप्रतीतो धर्मी, प्रतियोगी वा भेदो वा सविकल्पके प्रतीयेत तदा प्रतीतिद्वयप्राप्त्याऽन्योन्याश्रयः स्यात् । न चैवम् । किन्तु धर्म्यादिकं सर्वं निर्विकल्पके प्रतीतमेव । निर्विकल्पकेऽप्रतीतं तु वैशिष्ट्यमात्रमेव सविकल्पकेऽधिकं प्रतीयते । न हि वैशिष्ट्यप्रतीत्यपेक्षयाऽन्योन्याश्रयः । तथा च निर्विकल्पके स्वरूपेण गृहीतो भेद एव अस्मा-दमुष्मादिति विशेषतः अन्योन्यवैशिष्ट्योपेततया एकप्रतियोगिकतयाऽपरधर्मिकतयेति यावत् । सवि-कल्पके प्रतीयत इति मूलयोजना । ततश्च धर्म्यादिज्ञाने सति भेदज्ञानमिति नास्ति । युगपदेव सर्वेषां निर्विकल्पकेन भातत्वादिति न सविकल्पकप्रतीतावप्यन्योन्याश्रय इति भावः ।

---

**सु०— ननु किमर्थमयं परमतोपन्यासः । भेदपार्थक्यमन्तरेण विशेषप्रतीतावस्माकम (प्येवमे)प्ययमेव परिहार इति ज्ञापनार्थम् । तर्हीदमेव वाक्यं तथा व्याख्यायताम् । नै(चै)वं (शं)शक्यम् । तद्भेदश्चेति पृथग्भेदग्रहणविरोधात् । विशेषणविशेष्यभावेन ग्रहणमपि न धर्मि-प्रतियोगिप्रकाराद्भिद्यत इति वैशेषिकपरीक्षायामुक्तम् । अतो नात्र व्युत्पादनमपि कृतमिति ।**

**शे०— भेदपार्थक्यमन्तरेणेति** । अयमर्थः । यत्र धर्मिप्रतियोगिनौ सन्निहितौ तत्र धर्मि-प्रतियोगिनोस्तद्भावयोस्तद्भेदस्य च युगपदेव धीः । इदमनेन सदृशमितिवत् । तथा विशेषणविशेष्य-भूतयोर्भेदभेदिनोर्विशेषणविशेष्यभावस्य च युगपदेव धीः । इमौ सदृशावितिवत् । सर्वस्यैवे-न्द्रियसन्निकृष्टत्वाद्योग्यत्वाच्च । युगपदनेकज्ञानं च समूहालम्बनरूपमविरुद्धम् । दीपसहस्रविषयकसमूहा-लम्बनदर्शनात् । यत्र तु धर्मिप्रतियोगिनोरन्यतरस्यासन्निधानं तत्रापि संस्कारसचिवेन्द्रियसन्निकर्षेणैकमेव ज्ञानमुत्पद्यते । तदनेन सदृशमित्यादिवत् । तथा च कान्योन्याश्रय इति । एवं च धर्मिप्रतियोगिनौ यत्र न सन्निहितावन्यतरसंस्कारोऽपि यदा नास्ति, तदाऽनेन प्रकारेण युगपज्ज्ञानस्योपपादयितुमशक्यत्वात् स्वरूपं वस्तुनो भेद इत्यादिना प्रकारान्तरेण तदुपपादनं कृतमिति ध्येयम् ॥ **तर्हीदमेव वाक्यमिति** ।

धर्मित्वप्रतियोगित्वतद्भेदा इति वाक्यमेव विशेषप्रतीतावन्योन्याश्रयपरिहारपरतया व्याख्यायताम् । किमनेन वस्तुनोऽन्योन्यप्रतियोगिकयोर्घटपटरूपभेदयोरित्यादिना बहिरेव तत्परिहारकथनेनेति भावः ॥ **तद्भेद-श्चेतीति** । यद्यप्यत्र मूलग्रन्थानुरोधेन तद्भेदा इत्येव वक्तव्यम् , तथाऽपि धर्मित्वं च प्रतियोगित्वं च तद्भेदश्चेति विग्रहोऽत्राभिमत इति प्रदर्शनायैवमुक्तमित्यवगन्तव्यम् । विशेषणविशेष्यभावेन भेदग्रहणस्य धर्मिप्रतियोगिग्रहणप्रकाराद्भेदाभावस्य पूर्वमुक्तत्वात् । अत्र च 'विशेषणं विशेष्यं चे'ति विशेषण-विशेष्यभावेन भेदग्रहणस्य धर्मिप्रतियोगिग्रहणप्रकारात्पृथग्ग्रहणाच्च नैतदेव वाक्यं तथा व्याख्यातुं शक्यमित्याशयेनाह **विशेषणविशेष्यभावेन ग्रहणमपीति** । स्वमतेन नायं परिहार इत्यत्रात्र्यमपि ज्ञापकमाह **अत इति** । स्वमतेनास्य परिहारत्वाभावादित्यर्थः । तथात्वे ह्यन्यथाऽस्यामुना भेद इति वक्तुं न शक्यत इति धर्मिप्रतियोगिभावेन भेदग्रहणोपपादनवदन्यथेमौ भिन्नाविति वक्तुं न शक्यत इति विशेषणविशेष्यभावेन भेदग्रहणोपपादनस्यापि पृथक् कर्तव्यत्वप्रसङ्गादित्यर्थः ।

यद्वा ननु भेदपार्थक्यमन्तरेणास्माकमप्ययमेव परिहार इत्युक्तम् । तथा सति विशेषणविशेष्य-भावेन ग्रहणस्याप्यत्रोपपादितत्वेन तस्यापि भवदनुमतत्वापातादित्यतो नेदमनिष्टमित्याह **विशेषणविशेष्य-भावेन ग्रहणमपीति** । तथा च धर्मिप्रतियोगिभावेन ग्रहणस्य, विशेषणविशेष्यभावेन ग्रहणस्य च एकरूपत्वाद्धर्मिप्रतीयोगिभावेन ग्रहणस्य चास्मत्सम्मतत्वात्तद्विशिष्टविशेषणविशेष्यभावेन ग्रहणमप्यस्म-त्सम्मतमेवेति भावः । भवेदेतदेवं यदि विशेषणाविशेष्यभावेन ग्रहणं धर्मिप्रतियोगिप्रकारान्न भिद्यते इति स्यात् तदेव तु कुत इत्यत उक्तं वैशेषिकपरीक्षायामुक्तमिति । तथा च न तदुपपादनमिदानीं कार्यमिति भावः । नन्वेवं विशेषणविशेष्यभावेन ग्रहणस्य भवदनुमततायां तत्र प्राप्तानुपपत्तिपरिहारेण तद्व्युत्पादनमपि भवता कर्तव्यं स्यादित्यतो विशेषणविशेष्यभावेन ग्रहणस्य धर्मिप्रतियोगिभावेन ग्रहणा-विशिष्टतया तदुपपादनप्रकारेणैवास्याप्युपपादितत्वादेव पृथक् स्वयं तद्व्युत्पादनमपि न कृतमित्याह **अतो नात्रेति** । यस्त्वस्य वाक्यस्य परमतोपन्यासत्वमेवावश्यं वाच्यम् । अत्र विशेषणविशेष्यभावेन ग्रहण-स्यापि पृथक् सङ्कीर्तनात् । स्वमते च विशेषणविशेष्यग्रहणस्य धर्मिप्रतियोगिप्रकारादवैषम्यस्य वैशेषिक-परीक्षायामुक्तत्वेन तद्ग्रहणेनैव प्राप्तत्वात्पृथग्विशेषणविशेष्यभावेन ग्रहणमनर्थकमिति विशेषणेति पूर्व-वाक्यं व्याख्याय 'अस्यामुष्मादिति पुनर्विशेषेणैव गृह्यते' इत्युत्तरवाक्ये धर्मिप्रतियोगिभावेन ग्रहणवत् विशेषणविशेष्यभावेन ग्रहणस्याकृतत्वाच्चायं परमतोपन्यास एवेति निश्चीयत इत्युत्तरवाक्यव्याख्यानम् । तत्रात एव कण्ठतो नोक्तमित्येव वक्तव्यत्वाद्व्युत्पादनप्रदास्वारस्यम् । पूर्ववाक्ये विशेषणविशेष्यभावेन ग्रहणे तदनुसारेणोत्तरवाक्येऽपि तस्यावश्यं ग्राह्यत्वादन्यथा पूर्ववाक्येऽपि तद्ग्रहणवैयर्थ्यप्रसङ्गादिति ध्येयम् ।

स० — **भेदपार्थक्यमन्तरेणेति** । अयमर्थः । यत्र धर्मि-प्रतियोगिनौ सन्निहितौ तत्र धर्मि-प्रतियोगिस्वरूपयोः तद्भावयोः तद्भेदस्य च युगपदेव धीः, इदमनेन सदृशमितिवत् । तथा विशेषण-विशेष्यभूतयोर्भेदभेदिनोर्विशेषणविशेष्यभावस्य युगपदेव धीः, इमौ सदृशावितिवत् सर्वस्येन्द्रियसन्निकृष्टत्वात् योग्यत्वाच्च युगपदेकज्ञानं च समूहालम्बनमविरुद्धम् । दीपसहस्रविषयकसमूहालम्बनदर्शनवत् । यत्र तु धर्मि-प्रतियोगिनोरन्यतरस्यासन्निधानं तत्रापि संस्कारसचिवेन्द्रियसन्निकर्षेणैकमेव ज्ञानमुत्पद्यते तदनेन सदृशमित्यादिवत् । तथा च केवान्योन्याश्रय इति । एवं च धर्मि-प्रतियोगिनौ यत्र न सन्निहितौ अन्यतरसंस्कारोपि नास्ति तदा अनेन प्रकारेण युगपज्ज्ञानस्योपपादयितुमशक्यत्वात् स्वरूपं वस्तुनो भेद इत्यादिना प्रकारान्तरेण तदुपपादनं कृतमिति ध्येयम् । ननु भेदपार्थक्यमन्तरेणासाकमपि अयमेव परिहार इत्ययुक्तम् । तथा सति विशेषणविशेष्यभावेन ग्रहणस्याप्यत्रोपपादितत्वेन तस्यापि भवदनुमतत्वापातादित्यतो नेदमनिष्टापादनमित्याह **विशेषणविशेष्यभावेन ग्रहणमपीति** । तथा च धर्मि-प्रतियोगिभावेन ग्रहणस्य विशेषण विशेष्यभावग्रहणस्य चैकरूपत्वात् धर्मि-प्रतियोगिभावेन ग्रहणस्य चास्मत्संमतत्वात् तदभिन्नविशेषण-विशेष्यभावेन ग्रहणमपि संप्रतिपन्नमेवेति भावः । स्यादेवं यदि विशेषण-विशेष्यभावेन ग्रहणं धर्मि-प्रतियोगिप्रकाराभिन्नमित्येतत्स्यात् । तदेव कुत इत्यत उक्तम् **वैशेषिकपरीक्षायामुक्तमिति** । तथा च न तदुपपादनमिदानीं कार्यमिति भावः ।

---

नन्वेवं विशेषण-विशेष्यभावेन ग्रहणस्य भवदनुमतत्वेन तत्र प्राप्तानुपपत्तिपरिहारेण तद्व्युत्पादनमपि कर्तव्यं स्यादित्यतो विशेषणविशेष्यभावेन ग्रहणस्य धर्मिप्रतियोगिभावेन ग्रहणाविशिष्टत्वादेव तद्व्युत्पादनप्रकारेणैवास्याप्युपपादितत्वादेव तद्व्युत्पादनमपि न कृतमित्याह **अतो नात्रेति** । केचित्तु "अस्य वाक्यस्य परमतोपन्यासत्वमेवावश्यं वाच्यम् । तत्र विशेषण-विशेष्यभावेन ग्रहणस्यापि पृथक् संकीर्तनात् स्वमते च विशेषण-विशेष्यभावेन ग्रहणस्य धर्मि-प्रतियोगिप्रकाराभेदस्य वैशेषिकपरीक्षायामुक्तत्वेन तद्ग्रहणेनैव प्राप्तत्वात् पृथक् विशेषण-विशेष्यभावेन ग्रहणमनर्थकमि'ति 'अत एव विशेषणे'ति पूर्ववाक्यं व्याख्याय 'अस्यामुष्मादिति पुनर्विशेषणैव गृह्यते' इत्युत्तरवाक्ये धर्मि-प्रतियोगिभावेन ग्रहणवत् विशेषण-विशेष्यभावेन ग्रहणस्याकृतत्वाच्चायं परमतोपन्यास एवेति निश्चीयते" इति उत्तरवाक्यं व्याचक्षते । तत्पक्षे तत्र 'अत एव कण्ठतो नोक्तमि'त्येव वक्तव्यत्वात् व्युत्पादनपदस्यास्वारस्यम् । पूर्ववाक्ये विशेषण-विशेष्यभावेन ग्रहणे तदनुसारेणोत्तरवाक्येऽपि तस्यावश्यं ग्राह्यत्वात् । अन्यथा पूर्वत्र तद्ग्रहणाप्रसङ्गात् इति ध्येयम् ।

प० — **भेदपार्थक्यमिति** । भेदस्य पार्थक्यं भेदपार्थक्यं । तदशिष्यं संज्ञाप्रमाणत्वादिति निर्देशवत्साधुत्वमस्य ध्येयम् । तेन पूरणगुणेति न निषेधः शङ्क्यः ॥ **विशेषेति** । भेदो धर्मिविशेषो न धर्मिमात्रमित्युपगमेन धर्मिविशेषप्रतीतावित्यर्थः ॥ **इदमेवेति** । धर्मित्वप्रतियोगित्वेत्यादिमूलवचनं विशेषपरत्वेन व्याख्यायतामित्यर्थः । तद्भेदश्चेति विभज्यानुवादः कृतः । तेनैकवचनोपपत्तिः । नैवं शङ्क्यमित्यत्रान्यदपि ज्ञापकमाह **विशेषणेति** । धर्मिप्रतियोगित्व-द्भेदानां तदुपलक्षितधर्मिप्रतियोगिनोश्च पूर्वार्धे ग्रहणेनैव पूर्तौ विशेषणं विशेष्यं च तद्भावश्चेत्युत्तरार्धे विशेषणविशेष्यत्वेन धर्मिप्रतियोगिनोरुक्ति-र्व्यर्था । धर्मिप्रतियोगित्वरूपप्रकाराद्विशेषणविशेष्यभावरूपप्रकारो न भिद्यत इति वैशेषिकनये 'अन-योर्भेद इत्यपि । इतोऽमुष्य मुतोप्यस्य भेदो दृष्टो द्विधर्मिक' इति ग्रन्थेन प्रागेवोक्त्या पूर्वार्धोक्तानां ग्रहणेनैवोत्तरार्धोक्तग्रहणसंभावात्तेन ज्ञायते नैवं शक्यमितीत्यर्थः ॥ **अतो नात्रेति** । विशेषणविशेष्यभा-वस्येति योज्यम् । धर्मिप्रतियोगित्वविशेषणविशेष्यत्वयोरभेदादेवानयोर्भेद इति इमौ भिन्नावित्यपि व्युत्पा-दनमपि न कृतमित्यर्थः । अस्यामुष्मादिति पुनरुक्त्यैव तल्लाभात् । अन्यथा 'अस्यामुष्मादिति पुनर्विशेष-णैव गृह्यते' इति धर्मिप्रयोगित्वव्युत्पादनवदनयोर्भेद इति इमौ भिन्नाविति विशेषणैव (गृह्यत इति) विशेषणविशेष्यभावव्युत्पादनं च कुर्यात् । तथा स्वमतसमाधावपि पूर्वत्रेति वक्तुं न शक्यत इत्यत्रानयोर्भेद इतीमौ भिन्नाविति च वक्तुं न शक्यत इति व्युत्पादनं कुर्यात् । स्वमतसमाधौ परमतसमाधौ चोभयत्र तद्-व्युत्पादनं वा अभेदादेव धर्मित्वप्रतियोगित्वव्युत्पादनमात्रमेव कृतमतो न न्यूनतापि शङ्कनीयेति भावः ॥

॥ **भेदस्य धर्मिस्वरूपत्वेप्यन्योन्याश्रयत्वोद्धारः** ॥

या० — **तर्हीदमेव वाक्यमिति** । धर्मित्वप्रतियोगित्वतद्भेदा इति वाक्यमेव विशेषप्रतीतावन्यो-न्याश्रयपरिहारतया व्याख्यायताम् । वस्तुनोऽन्योन्यप्रतियोगिकयोर्घटपटस्वरूपभेदयोरित्यादिना बहिरेव तत्परिहारकथनेन किमिति भावः ॥ **तद्भेदश्चेति पृथग्भेदग्रहणेति** । अत्र यद्यपि तद्भेदा इति वक्तव्यं, तथैव च मूले पाठात् तथाऽपि धर्मित्वं च प्रतियोगित्वं च तद्भेदश्चेति विग्रहोऽत्राभिमत इति प्रदर्श-नायैवमुक्तमिति मन्तव्यम् । विशेषणं विशेष्यं चेति पृथग्विशेषणादिग्रहणविरोधाच्च नैवं शक्यमित्या-शयेनाह **विशेषणविशेष्यभावेनेत्यादि** ॥ **उक्तमिति** । 'संयोगश्च विभागश्च भेदश्चैव पृथक् पृथक् । अन्योन्यप्रतियोगेन ह्युभयोरपि दृश्यत' इत्यादिनोक्तमित्यर्थः । तथा च विशेषणविशेष्यभावेन भेदग्रह-णस्य धर्मिप्रतियोगिप्रकाराद्भेदाभावस्य पूर्वमुक्तत्वादत्र च विशेषणादेः पृथग्ग्रहणान्न स्वमतेनायं परिहारो वक्तुं शक्यत इति भावः । विशेषणादिभावेन भेदग्रहणस्य धर्मिप्रतियोगिप्रकाराद्भेदाभाव इत्यत्र न केवलं पूर्वोक्तिरेव ज्ञापिका, किन्त्वत्रत्यमपि ज्ञापकमस्तीत्याह **अत इति** । विशेषणादिभावेन भेदग्र-

हणस्य धर्मिप्रतियोगिप्रकाराद्भेदभावादित्यर्थः ॥ **व्युत्पादनमपीति** । 'अन्यथाऽस्यामुना भेद इति वक्तुं न शक्यत' इति यथा व्युत्पादनं कृतं तथा 'अन्यथेमौ भिन्नावित्यादि वक्तुं न शक्यत' इति पृथग्व्युत्पादनं न कृतम् । अन्यथा पृथक् तत्कर्तव्यमित्यर्थः । एतेन विशेषणविशेष्यभावेन भेदग्रहे योऽयमन्योन्याश्रय उक्तः तस्य स्वमते परिहारो मूले नोक्तोऽतो न्यूनतेत्याशङ्काऽपि निरस्ता । विशेषणादिभावेन भेदग्रहस्य धर्मिप्रतियोगिप्रकाराद्भेदभावेन पृथक् परिहाराभावस्यादोषत्वात् ।

**श्री०** — उत्तरमाह **भेदपार्थक्येति** । भूपगकारेण भेदो धर्मिस्वरूपात्पृथगित्यङ्गीकृत्य परिहारोऽभिहितः । तावन्मात्रमेव स्माभिरुच्यत इत्यर्थः । **विशेषप्रतीतौ** घटात्पटस्य भेद इतिविशेषप्रतीतौ ॥ **अयमेवेति** । धर्मित्वप्रतियोगित्वेत्यनेनोक्तः । यद्यपि परमत इवास्मन्मते न निष्प्रकारकं निर्विकल्पकं नाम ज्ञानमस्ति । तथा च न तद्रीत्याऽस्माभिः परिहर्तुं शक्यते । तथाऽपि धर्म्यादय आदौ सविकल्पकज्ञानेनैव समूहालम्बनरूपेण परभिप्रेतनिर्विकल्पकज्ञानस्थानीयेन युगपदेव प्रतीयन्ते पश्चात् विकल्पकान्तरेण पूर्वगृहीतानां वैशिष्ट्यमात्रं प्रतीयत इत्युच्यत इति न्यायसाम्यमभिप्रेत्यायमेवेत्युक्तम् । यद्वा निर्विकल्पकमङ्गीकृत्यायमेवास्त्वित्यर्थः । ननु विशेषणादिप्रतीत्यपेक्षयोक्तोऽन्योन्याश्रयः कुतो न परिहृत इति चेन्न । घटपटौ भिन्नौ घटपटयोर्भेद इति विशेषणविशेष्यभावेन ग्रहणं धर्मिप्रतियोगिप्रकारान्न भिद्यते । घटपटौ भिन्नावित्यादेरपि घटात्पटो भिन्नः पटाच्च घटो भिन्न इत्येवार्थस्य संयोगश्चेत्यादिनोक्तत्वात् । तथा च धर्मिप्रतियोगिप्रतीत्यपेक्षयोक्तान्योन्याश्रयपरिहारेणैतस्यापि परिहृतत्वादित्याह **विशेषणेति** ॥ छ ॥

**सु०** — **एवमापादकानभ्युपगमेनान्योन्याश्रयत्वप्रसङ्गं निराकृत्येदानीं दूषणान्तरं प्रतिजानीते** किञ्चेति ।

**अनु०** — किञ्च

**अन्यच्चेत्यर्थः । कथमिति चेत् । किमत्र यदि धर्म्यादिप्रतीत्यपेक्षया भेदः प्रतीयेत तदाऽन्योन्याश्रयत्वं स्यादि(त्या)त्येवापाद्यते, किंवा यदि भेदः प्रतीयेत तदाऽन्योन्याश्रयत्वं स्यादिति ।**

**आद्ये दोषमाह** भेद इति ।

भेदः कथं ग्राह्य इति यः परिपृच्छति ॥
धर्म्यादिभेदग्रहणाद्वेनोक्तोऽन्योन्यसंश्रयः ॥

कथमित्यापेक्षे । परिपृच्छतीति मृदूक्तिः । आक्षिपतीति यावत् । धर्म्यादिभेदग्रहणात् धर्म्यादिग्रहणसापेक्षभेदग्रहणात् । कथमिदं लभ्यते । धर्म्यादिपदस्य तद्ग्रहणोपलक्षणत्वात् । आदिपदस्य च कारणार्थस्याऽऽवृत्तेः । तदेतत्परस्परं व्याहतमिति शेषः । तथा हि । भेदो दुर्ग्रह इति प्रतिज्ञाय तदुपपत्तये हीदमुच्यते । अनेन च यदि भेदो धर्म्यादिप्रतीतिमपेक्ष्य प्रतीयेत तदाऽन्योन्याश्रयत्वं स्यात् । तथा च न प्रतीयेतेत्यापादनेन प्रतीयते चातो न धर्म्यादिग्रहणापेक्षा तत्प्रतीतिरिति लब्धं भवेत् । तथा च 'भेदो दुर्ग्रहः,' 'प्रतीयते च' इत्येतयोः कथं न पूर्वोत्तरविरोध इति ।

शे०— आपादकानभ्युपगमेनेति । धर्म्यादिज्ञानाधीनज्ञानत्वरूपापादकानभ्युपगमेनेत्यर्थः । आक्षेपस्यैव परेण कृतत्वेन कथंशब्दस्य प्रश्नार्थत्वामुपपत्तेराह आक्षेपेति । तर्हि परिपृच्छतीत्यनेन विरोध इत्यतस्तत्तात्पर्यमाह परीति ॥ कथमिति । ग्रहणसापेक्षत्वप्रत्यायकपदाश्रवणान्न तल्लाभ इति भावः । लक्षणाहेतुभूतविषयविषयिभावरूपशक्यसंबन्धसूचनाय तद्ग्रहणेत्युक्तम् ॥ आदिपदस्येति । अनेनादिपदमावर्तते आवृत्तं च कारणपरम् अतः सापेक्षत्वस्यापि लाभ इत्युक्तं भवति ॥ तदेतदिति । तत्प्रतिज्ञानमेतदापादनं च परस्परव्याहतमित्यर्थः । प्रतिज्ञापादनयोः परस्परविरोधमेवोपदर्शयति तथा हीत्यादिना ।

---

प०— एवमापादकानभ्युपगमेनेति । भेदज्ञानस्य धर्म्यादिज्ञानाधीनत्वेऽन्योन्याश्रय इति परोक्ततर्के यदापादकं तदनभ्युपगमेनेत्यर्थः । भेदस्य वस्तुस्वरूपत्वे तदस्वरूपत्वे दुर्गमज्ञानस्योक्तस्याऽन्याधीनत्वानभ्युपगमादिति भावः ॥ कथमिदमिति । 'धर्म्यादिभेदग्रहणादि'त्यनेन धर्म्यादिभेदग्रहणेत्यादिकमभिधेयं कथं लभ्यत इत्यर्थः । धर्म्यादीत्यत्रादिपदमावर्तते । धर्म्यादीति प्रथममादिपदं प्रतियोगिपरम् । द्वितीयं कारणपरम् । धर्म्यादीति धर्म्यादिग्रहणलक्षकम् । तथाच धर्मिप्रतियोगिग्रहणमादि कारणं यस्य भेदग्रहणस्य तद्धर्म्यादीत्युक्तार्थलाभ इत्याह धर्म्यादिपदस्येति । ऐकपद्यमपि समासप्रयोजनमित्युपेत्य पदस्येत्येकवचनोक्तिः ॥ कारणार्थस्येति । कारकार्थत्वेमेत्यर्थः । अन्योन्यसंश्रयं इत्यनन्तरं शेषमाह तदेतदिति ॥ इदमिति । अन्योन्याश्रयत्वमित्यर्थः । अनेन चेत्यस्य विवरणम् इत्यापादनेनेति । लब्धं भवेदित्यन्वयः ॥ तथा चेति । भेदग्रहो दुश्शक इति भेदाप्रतीतिं प्रतिज्ञाय प्रतीयते च भेद, इति भेदप्रतीत्यभ्युपगमे सतीत्यर्थः ।

यां०— आपादकानभ्युपगमेनेति । भेदज्ञानं यदि धर्म्यादिज्ञानाधीनं स्यात्तदाऽन्योन्याश्रयः स्यादिति तर्के यदापादकं भेदज्ञानस्य धर्म्यादिज्ञानाधीनत्वं तदनभ्युपगमेनेत्यर्थः ॥ कारणार्थ-

**स्याऽऽवृत्तेरिति** । आवर्तितस्यादिपदस्य कारणत्वमर्थ इत्यर्थः । **इति शेष इति** । ततश्चेयं मूलयोजना । भेदः कथं ग्राह्यो न कथमपीति यः **परिपृच्छति** आक्षिपति । भेदप्रतीतिरेव न स्तीति प्रतिजानीत इति यावत् । तेन वादिना तदुपपत्तये धर्म्यादिभेदग्रहणादन्योन्यासंश्रय उक्त अपि दिनम्तेन च विपर्यय-पर्यवसाने भेदप्रतीतिरेव लभ्यते । तथा च तत्प्रतिज्ञानमेतदापादनं च परस्परं व्याहतमिति । **तद्धर्ममिति** । प्रमात्वमित्यर्थः ।

श्री० — **कथमिदमिति** । मूले धर्म्यादीत्येव सत्त्वेन धर्म्यादिग्रहणसापेक्षेति कथं लभ्यत इत्यर्थः । सापेक्षत्वलाभार्थमाह **आदिपदस्येति** । **कारणार्थस्येति** ॥ तथा च धर्म्यादिज्ञानकारणकभेद-ग्रहणादित्यर्थः । ततश्च धर्म्यादिज्ञानकारणकत्वमेव तत्सापेक्षत्वमिति भावः । **तदुपपत्तये** प्रतिज्ञा-तभेददुर्ग्रहत्वोपपादनार्थम् ।

सु० — द्वितीये पृच्छामः । किं परेण क्वापि भेदो न गृहीतः किंवा क्वचिद्गृहीत इति । आद्यं दूषयति अन्यत्वेति ।

अनु० — अन्यत्वाग्रहणे प्रोक्तः कथमन्योन्यसंश्रयः ॥

यद्यन्यत्वं क्वापि न गृहीतं तदाऽन्योन्याश्रयत्वापादनमेव न शक्यम् । निराश्रयत्वात् । तद्धि प्रतीतयोर्द्वयोः कार्यकारणभावाश्रयणे सत्यापाद्यते । अन्ततो वादिप्रतिवादिनोः दूष्यदूष-कयोरापाद्यापादकयोर्भेदाग्रहेऽनुत्थानमेवापादनस्य । द्वितीयं दूषयति अन्यत्वमिति ।

अन्यत्वं यदि सिद्धं स्यात्कथमन्योन्यसंश्रयः ॥

सिद्धं प्रतीतम् । अन्योन्याश्रयत्वे हि भेदप्रतीतिरेव न स्यात् । न ह्यन्योन्याश्रयाणि कार्याणि क्वापि दृष्टानि प्रकल्प्यन्ते । तथा चास्ति चेद्भेदप्रतीतिः नूनमाभासभूतमेवेदमन्योन्या-श्रयत्वमप्रतिबन्धकत्वादिति । अस्ति भेदप्रतीतिः सा न प्रमेति तु तात्पर्यमिति चेन्न किमन्योन्याश्रयत्वमन्योन्योत्पादं प्रतिबध्नातीति मतं, किंवा तद्धर्मम् । आद्ये कथमप्रमाऽपि भेदप्रतीतिरुत्पद्यते । न द्वितीयः । अन्ययोरन्योन्याश्रयत्वमन्यत्तु लुप्यत इत्यस्यान्याय्यत्वात् । सांवृती प्र(तीति)तिपत्तिरिति चेत् । तर्हि किं पटः सांवृत इति येभ्यस्तन्तुभ्यो जातस्तेषामेव कारणं भ(व)विष्यतीति ।

श्री० — **निराश्रयत्वादिति** । निर्विषयत्वादित्यर्थः । कोऽसौ विषयो यदभावादापादनस्या-शक्यतेत्याह **तद्धीति** ॥ **तद्धर्ममिति** । प्रमात्वमित्यर्थः ॥ **अन्याय्यत्वादिति** । प्रतीतिगतेनान्योन्या-श्रयत्वेन तत्प्रमात्वनिषेधस्य चोरापराधान्माण्डव्यस्य शूलप्राप्तिवदयुक्तत्वादिति भावः । ननु च अप्रमारूपा

भेदप्रतीतिर्न सत्येति नान्योन्याश्रयप्रतिबद्धया अप्रमाया विषयवत् स्वयमपि संवृतिकार्यत्वेन तत्रान्योन्याश्रयादिना दौर्घट्यस्य भूषणत्वेन तदुत्पादस्याविरुद्धत्वादित्याशङ्कते **सांवृती प्रतीतिरिति चेदिति ।** प्रतीतेरसत्यत्वेऽपि व्यावहारिकत्वादन्योन्याश्रयादिप्रतिबद्धयत्वमेवेति न तदुत्पादो युक्तः । न ह्यन्योन्याश्रयादिदुष्टस्य व्यावहारिकता दृष्टचरी । तथा सति सांवृतस्य पटस्य स्वजनकतन्तुजनकत्वप्रसङ्गात् । यदि चान्योन्याश्रयादिदुष्टस्यापि संवृतिसामर्थ्याद्व्यावहारिकता स्यादिति मन्यसे । तर्हीश्वरसामर्थ्यादन्योन्याश्रयादिदुष्टस्यापि पारमार्थिकत्वमेव स्यादिति ममापि समानमित्याशयेन परिहरति **तत्किमिति ।**

**प०** — निराश्रयत्वं व्यनक्ति **तद्धीति ।** अन्योन्याश्रयत्वमित्यर्थः ॥ **तद्धर्मम् ।** प्रमा(ण)त्वादिरूपमित्यर्थः । नन्वन्योन्याश्रयत्वमुत्पत्तिप्रतिबन्धकं सदपि सांवृतप्रतीतेर्न प्रतिबन्धकमिति भावेन शङ्कते **सांवृतीति ।** संवृतिकार्येत्यर्थः । निराह **तत्किमिति ।** काकुरयं किंशब्दः ॥ **इतीति ।** इतिकृत्वेत्यर्थः ।

**या०** — नन्वप्रमारूपाभेदप्रतीतिर्न सत्या येनान्योन्याश्रयप्रतिबद्धा स्यात्किन्तु विषयवत्स्वयमपि संवृतिकल्पिता, तत्र चान्योन्याश्रयत्वादिना दौर्घट्यं भूषणमेवेत्याशयेन शङ्कते **सांवृती प्रतीतिरिति ॥**

**श्री०** — तद्धि अन्योन्याश्रयत्वम् । तथा चान्यत्वस्य क्वाप्यग्रहे वस्तुद्वयोपस्थित्यभावेन निराश्रयत्वात्कुत्र कार्यकारणभावाश्रयणेऽन्योन्याश्रयापादनमित्यर्थः । **अन्तत** इति दूषणान्तरम् । **अप्रतिबन्धकत्वात्** भेदज्ञप्त्यप्रतिबन्धकत्वादित्यर्थः । **अन्योन्योत्पादं** धर्म्यादिज्ञानभेदज्ञानयोः परस्परमुत्पत्तिम् । **तद्धर्मं** धर्म्यादिज्ञानभेदज्ञाननिष्ठं प्रमात्वरूपं धर्मम् । **अन्ययोः** धर्म्यादिज्ञानभेदज्ञानयोः । **अन्यत्तु** । तन्निष्ठ प्रमात्वम् ॥ **लुप्यत इति ।** भेदो यदि धर्म्यादिप्रतीत्यपेक्षया प्रतीयेत तदाऽन्योन्याश्रयः स्यात् । तथा च भेदप्रतीतेर्धर्म्यादिप्रतीत्यपेक्षैव निवर्ततां, भेदप्रतीतेः प्रमात्वे किमायातमित्यर्थः । अस्ति मम भेदप्रतीतिः । **सा सांवृते** तथा चान्योन्याश्रयदुष्टाया अपि भेदप्रतीतेः सांवृतत्वमेवोपपद्यत इत्याशङ्कते **सांवृतीति ।** अन्योन्याश्रयदुष्टस्य सांवृतत्वमपि कुतः । सांवृते स न दोष इत्यङ्गीकृतमिति चेत् । अतिप्रसङ्गादित्याह **तत्किमिति ॥ तेषामेवेति ।** तथा च पटस्यापि व्यावहारिकत्वादन्योन्याश्रयस्य च व्यावहारिकत्वाप्रतिबन्धकत्वस्य त्वयोच्यमानत्वादित्यर्थः ।

**सु०** — **नन्वनेनास्य तर्कस्य किं दुषणमुक्तं स्यादित्यत आह** एतादृशस्येति ।

**अनु०** — एतादृशस्य वक्तारावुभौ जात्युत्तराकरौ ॥
मायी माध्यमिकश्चैव

न केवलमेतज्जात्युत्तरं किन्तु यदन्यदपि तदीयं वचनम् । तथा हि । भेदस्यापि भेदान्तरभेद्यत्वेऽनवस्थेति । तथा भिन्ने भेदनिवेशश्चेत्तेनैव भेदेन भिन्नतायामात्माश्रयत्वं, भेदान्तराङ्गीकारे त्वनवस्था । अभिन्ने भेदनिवेशश्चेत्स्वतोऽपि पटस्य भेदापत्तिरिति ।

तथा न तावत्प्रत्यक्षेण भेद एव दृश्यते । भेद इत्येव प्रतीतेरननुभवात् । वस्तुनोऽपि प्रतीतौ न तावद्भेदपूर्वं वस्तुप्रतीतिः । उक्तदोषात् । नापि वस्तुप्रतीतिपूर्विका भेदप्रतीतिः । अभेदेन प्रतीते भेदप्रतीतावतिप्रसक्तेः । न च युगपत् । भेदप्रतीतिं प्रति वस्तुप्रतीतेः कारणत्वेन यौगपद्यायोगात् । न च प्रकारान्तरमस्तीति ।

तथा सत्तायाःकारणं वा कारणे सत्ता वा । आद्ये कारणस्यासत्त्वम् । द्वितीयेऽसत एव कारणत्वमित्यादि ।

तत्सर्वं जात्युत्तरमिति ज्ञापयितुमेतादृशस्येत्युक्तम् । सर्वस्यापि स्वव्याघातकत्वात् । भेदस्य सत्तायाश्च स्वरूपातिरिक्तयोरयुक्तयोः [(क्तायाः) (क्ततायाः) अयुक्तायाः ] एवाङ्गीकरणाच्च ।

कथमेयं जातिरिति चेन्न । सामान्यलक्षणसद्भावेऽस्य निर्बन्धस्य व्यर्थत्वात् । अहेतुप्रसङ्गनित्यसमास्वन्तर्भावाच्च ।

मायाशब्दस्य व्रीह्यादित्वान्मायीति साधुः । शून्यवादिनिरासे(नैव)न मायावादोऽपि निरस्तो वेदितव्य इत्यतिदेशज्ञापनाय मायी चेत्युक्तम् । एव शब्दस्योत्तरत्र सम्बन्धः ।

शे०— अनेनास्येति । किञ्च भेदः कथं ग्राह्य इति श्लोकद्वये ऽन्योन्याश्रयत्वापादनस्येत्यर्थः ॥ भेदस्यापीति । धर्मभेदवाद इति शेषः ॥ आत्माश्रयत्वमिति । तद्भेदस्य तद्भेदविशिष्टवस्तुवृत्तावंशतः स्ववृत्तेरावश्यकत्वादिति भावः ॥ भेदान्तराङ्गीकार इति । अपर्यवसिततत्परम्पराङ्गीकार इत्यर्थः ॥ अभिन्ने भेदनिवेशश्चेदिति । पटाद्भिन्ने घटे वर्तमानो भेदो यथा पटाद्घटं भिन्द्यात्तथा घटमपि घटाद्भिन्द्यात्समानयोगक्षेमत्वादिति भावः ।

भेदवस्तुनोः किमेकैकग्राहकं प्रत्यक्षमुतोभयग्राहकम् । उभयग्रहपक्षेऽपि युगपत् क्रमेण वा, क्रमपक्षेऽपि किं पूर्वं किमपरमिति विकल्प्य दूषयद्भिर्मण्डनमिश्रैर्भेदग्राहकत्वमेव प्रत्यक्षस्य नास्तीत्युक्तं; तदनुवदति तथेति । वस्त्वेवेति तु पक्षस्तदनर्थबीजमिति परित्यक्तः ॥ वस्तुनोपीति । धर्मिप्रतियोगिरूपवस्तुनोऽपीत्यर्थः ॥ भेदपूर्वमिति । भेदप्रतीतिपूर्विका वस्तुप्रतीतिरित्यर्थः ॥ उक्तदोषादिति । भेद इत्येव प्रतीतेरननुभवादित्युक्तदोषादित्यर्थः ॥ अभेदेन प्रतीत इति । भेदप्रतीतेः पूर्वं प्रतीयमाने वस्तुन्यभेद एव प्रतीयते । भेदाभेदौदासीन्येन वस्तुप्रतीतेरभावादित्याशयः ॥

**अतिप्रसक्तेरिति** । पटाभेदेन प्रतीते घटे पटभेदप्रतीत्यभ्युपगमे घटाभेदेन प्रतीते घटेऽपि घटभेदप्रतीत्यापत्तेरित्यतिप्रसङ्गादित्यर्थः ॥ **न च युगपदिति** । युगपद्भेदस्य वस्तुनश्च प्रतीतिरपि नेत्यर्थः ।

श्रीहर्षीयं जात्युत्तरवचनमप्युदाहरति **तथेति** । बीजमित्येव नाङ्कुरस्य कारणम् । किन्तु सद्बीजमिति सद्वादिना विशेष्यते । तत्र विकल्पयति **सत्तावत्कारणं वेति** । कारणस्वरूपे सत्तान्तर्गत्यनन्तर्गतिभ्यां सत्ताविशिष्टं कारणं तदुपलक्षितं वेति विकल्पार्थः ॥ **आद्य इति** । अन्तर्भावितसत्त्वस्य कारणत्वे सत्ताविशिष्टे सत्तासमवायाभावात्कारणमसदेव स्यात् । सत्तासमवायस्यैव सद्व्यवहारप्रयोजकत्वात् । तथा हि । विशिष्टं किं विशेषणविशेष्यतत्सम्बन्धा एव, किंवा तदन्यत् । आद्येऽपि किं सैव सत्ता सत्तान्तरं वा । आद्येऽशतो विशेषणांशेऽपि स्ववृत्तिप्रसङ्गः । यदि विशिष्टमन्यत्तर्हि सत्तायाः सत्ताविशिष्टे वृत्त्यभावप्रसङ्गः। विशेषणत्वात् स्वस्मिन्स्ववृत्त्यभाववत् स्वविशिष्टे स्ववृत्त्यभावनियमदर्शनात् । यदि च या सत्ता विशिष्टे वर्तते तदापि तामन्तर्भाव्य विशिष्टं कारणम्, अनन्तर्भाव्य वेत्युक्तदोषानतिवृत्तिरेवेत्यसत्त्वं कारणस्यापन्नमित्याशयः ॥ **असत एव कारणत्वमिति** । सत्त्वोपलक्षितं सत्तारहितं बीजं कारणमिति स्वयमेवाङ्गीकारादिति भावः। असामर्थ्यविहीनस्य कथं जात्युत्तरत्वमित्यतः साधारणासामर्थ्यसद्भावादित्याह **सर्वस्यापीति** । तत्रान्योन्याश्रयत्वापादनस्य पूर्वोत्तरविरुद्धत्वमाकर एव स्पष्टम् ॥ यच्च धर्मभेदवादे भेदस्यापि भेदान्तरभेद्यत्वेऽनवस्थापादनं तदप्यभेदस्याप्यभेदिभ्यामभेदान्तरस्याङ्गीकारेऽनवस्थाप्रसञ्जनस्य समानत्वात्स्वव्याघातकमेव । यच्च भिन्ने भेदनिवेशश्चेदित्यादिकमात्माश्रयत्वादिप्रसञ्जनं तदप्यभेदः किमभेदवति वर्तते उत तद्रहिते । आद्येऽपि तेनैवाभेदेनाभिन्नतायामात्माश्रयत्वम् अभेदान्तराङ्गीकारे त्वनवस्था । द्वितीये तु घटस्य घटेनेव पटेनाप्यभेदापत्तिरित्यात्माश्रयत्वादिप्रसञ्जनसाम्यात्स्वव्याघातकम् । यच्च न तावत्प्रत्यक्षेण भेद एव प्रतीयते भेद इत्येव प्रतीतेरननुभवादित्यादि प्रत्यक्षस्य भेदग्राहकत्वखण्डनं तदपि बिम्बप्रतिबिम्बयोर्न तावदभेद एव प्रत्यक्षेण दृश्यते । अभेद इत्येव प्रतीतेरननुभवात् । वस्तुनोऽपि प्रतीतौ न तावदभेदपूर्वं वस्तुप्रतीतिः उक्तदोषत्वात् । नापि वस्तुप्रतीतिपूर्विकाऽभेदप्रतीतिः, भेदेन प्रतीतेऽभेदप्रतीतावतिसक्तेः । न च युगपत्; अभेदप्रतीतिं प्रति वस्तुप्रतीतेः कारणत्वेन तदयोगात् । न च प्रकारान्तरमस्तीति त्वदभिप्रेताया अभेदस्य प्रत्यक्षताया अपि निराकरणसाम्यात्स्वव्याघातकम् । यच्च सत्तावत्कारणं नेत्यादिनोक्तं तदप्यसत्त्वविशिष्टं कारणं वा तदुपलक्षितं वा । आद्ये कारणस्य सत्त्वमात्माश्रयप्रसङ्गेनासत्त्वविशिष्टेऽसत्त्वाभावात् । द्वितीये तु सत एव कारणत्वमसत्त्वोपलक्षितमसत्त्वरहितं कारणमिति त्वयैवाङ्गीकारादित्यपि प्रत्यवस्थानसाम्यात् । **स्वव्याघातकमिति** । सर्वस्याप्युत्तरस्य स्वव्याघातकत्वादित्यर्थः । असाधारणमसामर्थ्यमप्याह **भेदस्य सत्तायाश्चेति** ।

**सामान्यलक्षणेति** । स्वव्याहतमुत्तरं जातिरिति जातिसामान्यलक्षणेत्यर्थः । अजातित्वे जातिसामान्यलक्षणस्य तत्र तिव्याप्तिः स्यादिति भावः ॥ **अहेतुप्रसङ्गनित्यसमास्विति** । अयमाशयः । भेदो विशेष्यधर्म्यादीत्यादिना शङ्कितस्यान्योन्याश्रयत्वप्रसञ्जनस्याहेतुसमायामन्तर्भावः । यद्यपि यत्र साधनस्य साध्यापेक्षया पूर्वापरसहभावनिरासेनाहेतुत्वचोदनम् अन्योन्याश्रयत्वं चारोप्यं तत्रैवाहेतुसमप्रवृत्तिः । यथा धूमवत्त्वज्ञानमग्निमत्त्वज्ञानात्किं पूर्वभावि, उतानन्तरभावि, उत सहभावि । नाद्यः । साध्याभावे तस्य साधनत्वायोगात् । न द्वितीयः । साधनाभावे च साध्यस्य तत्त्वायोगात् । न तृतीयः । अविशेषेण साध्यसाधनभावायोगादिति । अत्र तु साधनस्य साध्यात्पूर्वापरसहभावनिरासेनाहेतुत्वाचोदनात् । अन्योन्याश्रयत्वस्य प्रसञ्जनीयत्वेन तस्यात्रारोप्यत्वाभावाच्चास्य नाहेतुसमायामन्तर्भावः । तथाऽप्यत्र तथा प्रसङ्गस्याप्रवृत्तावपि तादृशप्रसञ्जनप्रवृत्तियोग्यत्वमकुण्ठितमेव । तत्रेहापि साधनं धर्म्यादिज्ञानं साध्याद्भेदज्ञानात्किं पूर्वभावि, किंवाऽनन्तरभावि, किंवा सहभावि । नाद्यः । कार्याभावे तस्य कारणत्वायोगात् । न द्वितीयः । कारणाभावे कार्यस्य तत्त्वायोगात् । न तृतीयः । अविशेषेण साध्यसाधनभावायोगादिति कारणीभूतधर्म्यादिज्ञानस्य कार्यभूतभेदज्ञानात्पूर्वापरसहभावनिरासेनाहेतुत्वप्रसञ्जनस्य तत एवान्योन्याश्रयत्वस्य तत्रारोप्यतायाश्च वर्णयितुं शक्योपपादनमेवेत्याशयात् । धर्मभेदवादे भेदस्य भेदान्तरभेद्यत्वेऽनवस्थापादनस्य तु प्रसङ्गसमायामन्तर्भावः । अनवस्थाभासप्रसञ्जनस्यैव प्रसङ्गसमत्वात् । अज्ञायमानानामेव भेदानां प्राथमिकभेदोपपादकत्वेन प्राथमिकभेदप्रतीतिरूपमूलक्षतेरभावेन प्रकृतानवस्थाया वस्तुतोऽनवस्थात्वानुपपत्त्या तदाभासत्वावश्यम्भावेन तत्प्रसञ्जनस्याप्यनवस्थाभासप्रसञ्जनत्वसंभवात् । यद्यप्यत्र तेनैव भेदेन भेद्यत्वे आत्माश्रयत्वप्रसञ्जनमेवास्ति न त्वनवस्थाप्रसञ्जनं, तथाऽपि तेनैव भेदेन भेद्यताया आत्माश्रयप्रसञ्जकत्वेन प्रकृते आश्रयणायोगात् । भेदान्तरभेद्यत्वमेव त्वया वाच्यम् । तथा चानवस्थेत्यत्र प्रवृत्तिप्रकाराश्रयणेऽस्त्येवानवस्थाभासप्रसञ्जनत्वमित्याशयात् । भिन्ने भेदनिवेश इत्यादिदूषणस्यापि प्रसङ्गसमायामन्तर्भावः । भेदान्तरभिन्ने भेदवृत्तावनवस्थाप्रसञ्जनात् । यद्यपि चात्र तेनैव भिन्नत्वे आत्माश्रयत्वप्रसञ्जनम् । अभिन्ने भेदनिवेशश्चेत्स्वतोऽपि भेदापत्तिप्रसञ्जनं चास्ति न त्वनवस्थाप्रसञ्जनम् । तथाऽप्यभिन्ने भेदनिवेशस्य स्वतोऽपि भेदापत्तिप्रसञ्जकतया तेनैव भेदेन भिन्ने भेदनिवेशस्यात्माश्रयत्वप्रसञ्जकतया परेण वक्तुमशक्यत्वाद्भेदान्तरभिन्न एव भेदनिवेशो वाच्यः । तथा चानवस्था स्यादिति अत्रैतद्दूषणप्रवृत्तिप्रकाराश्रयणेऽस्त्येवानवस्थाभासप्रसञ्जनत्वमित्याशयात् । प्रत्यक्षं किं भेदमेव गोचरयेदित्यादिदूषणस्याप्यहेतुसमायामन्तर्भावः । यद्यप्यत्र साधनस्य साध्यात्पूर्वापरसहभावनिरासेनाहेतुत्वप्रसञ्जनाभावान्नास्याहेतुसमायामन्तर्भावः संभवति, तथाऽप्यत्र प्रत्यक्षसिद्धधर्मिप्रतियोगिरूपवस्तुज्ञानं किं भेदज्ञानात्पूर्वभावि किंवा पश्चाद्भावि किंवा सहभावि । नाद्यः । साध्याभावे

तस्य साधनत्वायोगात् । न द्वितीयः । साधनाभावे साध्यस्य तत्त्वायोगात् । न तृतीयः । अविशेषेण साध्यसाधनभावायोग इत्येतद्दूषणप्रवृत्तिप्रकाराश्रयणे साधनस्य साध्यात्पूर्वभावनियमे हेतुत्व-प्रसञ्जनत्वमस्त्येवेत्याशयात् । सत्त्वात्कारणमित्यादिदूषणस्य नित्यसमायामन्तर्भावः । यद्यपि धर्मस्य तदन्यरूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेदि'ति नित्यसमलक्षणमिह यथाश्रुते नास्तीति नास्य तत्रान्तर्भावो वक्तुं युक्तः तथाऽपि सत्त्वात्कारणमित्यादेः सत्तारूपधर्मस्य कारणत्वमस्ति न वा । आद्येऽसदपि कारणम् । सत्तायाः सत्ताविरहेणासत्त्वात् । द्वितीये सत्ताया सदाकारप्रत्ययोऽपि न जननीय इति तन्मात्रप्रमाणायाः सत्ताया विलोपे सर्वं कारणं सदेवेति प्रसक्तिरित्यभिप्रायकत्वात् । सत्त्वरूपधर्मस्य कारणत्वाकारणत्वविकल्पानुपपत्त्या धर्मिणः कारणीभूतबीजादेः सत्त्ववैशिष्ट्यभङ्गप्रसक्त्या नित्यसमत्वमस्त्येवेत्याशयात् । सम्मतश्चायं प्रकारो ग्रन्थकारस्य यत्, यथाश्रुतप्रकारेण तस्य तस्य दूषणस्य तत्र तत्र जातावन्तर्भावासंभवेऽप्युक्तरीत्या तत्र तत्र प्रवृत्तिप्रकारान्तराश्रयणे तस्य तस्य तत्रान्तर्भावो-ऽस्त्येवेति । अत एव कतमेयं जातिरिति प्रश्नोऽन्तर्भावश्चेति परिहारश्च श्लिष्टौ । अन्यथा तदसाङ्गत्यप्रसङ्गात् । अत्र च टीकायां यथायोगमिति पूरणात् काचित्सृष्टिरिति ध्येयम् ।

ननु 'अस्मायामेधास्रजो विनिरि'ति मायाशब्दाद्विनिप्रत्ययस्मरणात् , तस्मिन्सति मायावीति भवितव्यं मायीति तु कथम् । न च दण्डीत्यादिवदिनिप्रत्यये मायीति रूपनिष्पत्तिरिति वाच्यम् । अ-दन्तत्वान्मायाशब्दस्य 'अत इनिठनावि'त्यनेन तस्मात्तदप्रसेरित्यतस्तेन तदप्राप्तावपि अनन्तेभ्यश्चेत्यनेन तत्प्राप्तिसंभवान्नानुपपत्तिरित्याशयेन तत्प्रापकमाह मायाशब्दस्येति ॥ व्रीह्यादिन्वादिति । व्रीह्या-दिगणे पठितत्वादित्यर्थः । 'अपरः शून्यमखिलमि'त्युपक्रमानुसारेण माध्यमिकस्यैवोपसंहारे ग्रहण-मुचितं मायी चेत्यधिकमित्य शङ्कयातिदेशज्ञापनार्थत्वान्न तस्यानर्थक्यमित्याशयेनातिदेशप्रकारं दर्शयन्नेव तत्सूचकतया तदानर्थक्यं परिहरति शून्येति ।

स०-भेद इत्येव प्रतीतेरननुभवादिति(?) । उक्तदोषादिति । भेद इत्येव प्रतीतेरननुभवा-दित्युक्तदोषादित्यर्थः । (नापि वस्तुप्रतीतिपूर्विका भेदप्रतीतिरिति ॥ अभेदेन प्रतीते भेदप्रतीता-वप्रसक्तेः । न च युगपत् । भेदप्रतीतिं प्रति वस्तुप्रतीतेः कारणत्वेन यौगपद्यायोगात् । ? ) बीजमित्येव नांकुरस्य कारणम् । किं तु सद्बीजमिति सद्रूपादिना विशेष्यते । तत्र वाच्यम् किं कारण-स्वरूपे सत्ताविशिष्टस्य कारणत्वमभिप्रेतम् उत सत्तायाः कारणस्वरूपे अप्रवेशात् सत्तोपलक्षितस्य वेति विकल्पं मनसि निधायाह तथेति । तथा सत्त्वविशिष्टमधिष्ठानम्, सत्त्वोपलक्षणं वा । आद्ये सत्त्व-विशिष्टे सत्त्वाभावादसदधिष्ठानमिति प्राप्तम् । अथ सत्त्वमधिष्ठानकोटौ न प्रवेश्यते, तर्हि असदधिष्ठा-

नमस्तु । सत्त्वासत्त्वयोरधिष्ठानकोटावप्रवेशादित्येवं सर्वस्य स्वव्याहतत्वादित्यर्थः । **आद्य इति** । अन्तर्भावितसत्त्वस्य कारणत्वे सत्ताविशिष्टे सत्तासमवायासंभवात् । कारणमसदेव स्यात् । सत्तासमवायस्यैव सद्व्यवहारप्रयोजकत्वाभ्युपगमात् । तथा हि विशिष्टं किं विशेषण-विशेष्य-तत्संबन्धा एव उतान्यत् । आद्येऽपि किं सैव सत्ता, किं वा सत्तान्तरम् । आद्ये अंशतो विशेषणांशेऽपि स्ववृत्तिप्रसङ्गः । यदि विशिष्टमन्यत् तर्हि सत्तायाः सत्ताविशिष्टे वृत्त्यभावप्रसङ्गः । विशेषणत्वात् स्वस्मिन् स्ववृत्त्यभाववत् स्वविशिष्टे स्ववृत्त्यभावनियमदर्शनात् । यदि चान्या सत्ता विशिष्टे वर्तते, तदाऽपि तामन्तर्भाव्य विशिष्टं कारणमनन्तर्भाव्य वेत्युक्तदोषानतिवृत्तिः स्थिरैवेत्यसत्त्वं कारणस्येति भावः ।

**सत्तावत्कारणं वेति** । सत्ताविशिष्टं कारणमित्यर्थः । कारणे सत्ताविशेषणं कारणस्वरूपान्तर्गतेति यावत् । **कारणे सत्ता वेति** । कारणे सत्तोपलक्षणमित्यर्थः । **आद्ये कारणस्यासत्त्वमिति** । यदि सत्ता विशेषणं तदा सत्त्वविशिष्टे सत्ताऽसंभवात् कारणमसदेव स्यात् । सत्तासमवायात् सद्व्यवहाराभ्युपगमादित्यर्थः । अन्तर्भावितसत्त्वं कारणम्, अनन्तर्भावितसत्त्वं वेति विकल्पाभिप्रायः । सत्ताऽपि कारणमित्यायातम् । सत्तायां न सत्तेत्यसदपि कारणमित्यर्थः । **द्वितीय इति** । यदि सत्तोपलक्षणम्, तदा कारणकोटौ सत्त्वाप्रवेशात् उपलक्षणतया तस्य बहिर्भावात् केवलं बीजस्वरूपमसदेव कारणमिति तत्कारणत्व भग्नं स्यादित्यर्थः । **सर्वस्यापीति** । अभिन्ने अभेदनिवेशश्चेत् तेनैवाभेदेनाभिन्नतायामात्माश्रयत्वम् । अभेदान्तराङ्गीकारे त्वनवस्था । भिन्ने अभेदनिवेशश्चेत् असतोऽपि घटस्याभेदापत्तिरिति । तथा अभेदप्रमाणेन अभेद एव न दृश्यते । अभेद इत्यप्रतीतेः । वस्तुनोऽपि प्रतीतौ न तावदभेदपूर्वं वस्तुप्रतीतिः । (.. ग्रन्थपातः ) **अहेतुप्रसङ्गनित्यसमास्विति** । अनवस्थाभासप्रसञ्जनमिति लक्षणे अनवस्थाशब्दस्य आत्माश्रयोपलक्षणत्वेन तत्प्रसञ्जनस्यापि प्रसङ्गसमत्वात् । तेनैव भेदेन भिन्नतायामात्माश्रयत्वमित्याद्यात्माश्रयापादनस्यापि प्रसङ्गसमायामेवान्तर्भावः । सत्तावत्कारणमित्यादेश्च 'धर्मस्य तदतद्रूपे'त्याद्युक्तलक्षणस्य नित्यसमायामन्तर्भावः । 'हेतोः साध्यापेक्षया पूर्वभावित्वादि'ति तल्लक्षणे हेतु-साध्यपदयोः कार्य-कारणमात्रोपलक्षणत्वात् । भेदपूर्वं वस्तु गोचरयेदित्यादेः अहेतुसमेऽन्तर्भाव इति बोध्यम् ॥ ननु 'अस्माया-मेधा-स्रजो विनिरि'ति विनिप्रत्यये 'मायावीति' स्यात् मायीति कथम् । न च दण्डीत्यादाविव 'इनि' प्रत्यये मायीत्यपि साध्विति वाच्यम् । तद्विधायकाभावात् । 'अत इनि-ठनावि'त्यत्र अत इति तपरकरणेनात्र तपरासंभवादित्यत्राह **मायाशब्दस्येति** ।

प०— एतादृशेतिपदस्वारस्यं वक्तुमाह **न केवलमिति** ॥ **भेदान्तरेति** । भेदभेदिनिरूपितभेदान्तरेत्यर्थः । अनवस्थेत्यनन्तरं अन्यथा वस्त्वेवास्ति न भेद असात् इति योज्यम् । तथा चोभयथापि

न भिन्नत्वं विश्वस्येति भावः ॥ **भेदेति** । भेदधीपूर्वकमित्यर्थः ॥ **उक्तदोषादिति** । भेद इत्येव प्रतीतेरननुभवादित्युक्तेत्यर्थः ॥ **अभेदेनेति** । वस्तुधीपूर्विका भेदधीश्चेद्भेदप्रतीतेः पूर्वं वस्तु अभेदेन प्रतीयत इति वाच्यम् । भेदाभेदौदासीन्येन वस्तुबुद्धेरभावात् । तथा चाभेदेन प्रतीते वस्तुनि भेदधीश्चेत्स्वस्मादपि स्वस्य भेदधीप्रसङ्ग इत्यर्थः । सत्तावदिति मतुप् । सत्ताविशिष्टं कारणत्वं वा कारणत्वविशिष्टं सत्ता वेत्यर्थः । 'अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः । नान्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः' इत्युक्तेरिति भावः । कथं तत्सर्वं जात्युत्तरमित्यत आह **सर्वस्यापीति** । भेदस्य दुर्ग्रहत्वं प्रतिज्ञाय तत्प्रतीतौ यदन्योन्याश्रयत्वमुक्तं तत्तावद्व्याहतमिति किं च भेद इत्यादिव्याख्यावसरे व्यक्तमुक्तम् । यदपि भेदस्यापीत्यनेनानवस्थापादनं तत्रापि परेण वादिप्रतिवादिनोर्दूष्यदूषणयोरापाद्यापादकयोर्भेदस्यावश्यमङ्गीकार्यत्वेनानवस्थात्माश्रयत्वादिदोषाणां साम्यात्स्वव्याहतिर्व्यक्तैव । यदपि सत्तावदित्यादिनोक्तं तदपि 'नान्तर्भावितसत्त्वं चेदधिष्ठानमसत्ततः' इति न्यायामृतोक्तदिशा सत्ताविशिष्टस्य वाधिष्ठानत्वं तदविशिष्टस्य वाधिष्ठानत्वमिति त्वदुक्तविकल्पदोषयोर्जगदुपादानकारणतया जगदारोपाधिष्ठानतया वाङ्गीकृतशून्यतत्वेऽपि सुवचत्वेन शून्यस्य सद्रूपस्यापि कारणत्वाधिष्ठानत्वयोरनापत्तेर्वक्तुमशक्यत्वात् । तथा(हि)सत्त्वविशि(ष्टस्य का-)ष्टं कारणत्वमुत तद्रहित(स्येति) इति विकल्पदोषयोः साम्येन सत एव कारणत्वमित्यपि सुवचत्वात्स्फुटैव व्याहतिः । तथा च सिद्धमपि दूषणासमर्थमुत्तरं जातिरित्युक्तजातिलक्षणे साधारणासाधारणरूपद्विविधसामर्थ्यमध्ये स्वव्याहतिरूपसाधारणसामर्थ्याक्रान्तत्वाज्जात्युत्तरमेवेदमिति भावः । असाधारणसामर्थ्यं च युक्ताङ्गहीनत्वमयुक्ताङ्गाधिक्यमविषयवृत्तित्वं चेति त्रिविधम् । तन्मध्ये द्वितीयमप्यस्तीत्याह **भेदस्य सत्तायाश्चेत्यादि** । ननु साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमभेदभिन्नासु चतुर्विंशतिजातिषु मध्ये कान्तर्भावोऽस्येति पृच्छति **कतमेति** ॥ **अहेतुप्रसङ्गनित्यसमास्विति** । समपदं प्रत्येकमन्वेति । यदि धर्म्यादिप्रतीत्यपेक्षया भेदः प्रतीयेत तदा अन्योन्याश्रय मि(ति आद्या पा)त्यापादने तु 'यद्धर्म्यादिबुद्धेरहेतुत्वचोदनम् । तथा न तावत्प्रत्यक्षेणे'त्यादिना यद्वस्तुप्रतीतेर्भेदधीरूपसाध्यं प्रति पूर्वापरसहभावविकल्पेनाहेतुत्वचोदनं तदुभयमहेतुसमायामन्तर्भवति । हेतोः साध्यापेक्षया पूर्वापरसहभावनिरासेनाहेतुत्वचोदनमहेतुसम इति तल्लक्षणात् । उक्तं हि । 'हेतोर्विकल्पसाध्यार्थपूर्वापरसहोदयम् । त्रेधापि तस्य हेतुत्वभङ्गो हेतुसमो भवेदि'ति । अन्योन्याश्रयत्वापादनरूपाद्यपक्षेऽपि भेदधियं विना धर्म्यादिधीर्न युक्तेति वदतो भेदधियं प्रति धर्म्यादिबुद्धेः पूर्वापरसहभावनिरासस्याभिप्रेतत्वात् । यदपि भेदस्यापीत्यादिनानवस्थापादनं तत्प्रसङ्गसमायामन्तर्भवति । अनवस्थाभासप्रसंजनं प्रसङ्गसम इति तल्लक्षणात् । 'अनवस्थाभासवाचः प्रसङ्गसमजातिते'त्युक्तेः । भिन्ने भेदनिवेश इत्युक्तानवस्थापि प्रसङ्ग-

समा जातिरेव । यदपि सत्तावत्कारणं वे(त्यादि)ति विकल्पेन दोषाभिधानं तस्यायं फलितार्थः । सत्ता सत्तावती न वा । आद्यस्यात्माश्रयत्वापसिद्धान्तयोरापत्तेरयोगेन सत्ताया असत्त्वापत्त्या न कारणस्य सत्ताविशिष्टमिति । द्वितीयेपि सत्ताया असत्त्वापत्त्या न कारणं सत्ताविशिष्टमिति । तथा च सत्तारूपधर्मस्य तदतद्रूपविकल्पानुपपत्त्या कारणाख्यधर्मिणः सत्ताविशिष्टत्वभङ्गोक्त्या नित्यसमान्तर्भावो व्यक्त एवेति । ननु अस्मायामेधास्रजो विनिरिति मायाशब्दान्मत्वर्थविनिप्रत्ययोक्तेर्मायावीति वाच्यं कथं मायीतीन्प्रत्ययः । अत इतिठनावित्यकारान्तादेव इनो विधानेन प्राप्त्यभावाच्चेत्यत आह **मायाशब्दस्येति** । व्रीह्यादिभ्यश्चेतिसूत्रे व्रीह्यादिभ्य इन्प्रत्ययविधानान्मायाशब्दस्य व्रीह्यादिगणे पठितत्वात् इन्प्रत्यये यस्येति चेत्यकारलोपे मायीति साधुरित्यर्थः ॥ **उत्तरत्रेति** । उपेक्ष्यावित्यत्रेत्यर्थः ।

या० - **भेदपूर्वं वस्त्विति** । भेदप्रतीतिपूर्विका वस्तुप्रतीतिरिति नेत्यर्थः ॥ **उक्तदोषादिति** । भेदप्रतीतेरननुभवादित्युक्तदोषादित्यर्थः ॥ **अभेदेन प्रतीत इति** । भेदप्रतीतेः पूर्वं प्रतीयमाने वस्तुन्यभेद एव प्रतीयते । भेदाभेदौदासीन्येन वस्तुप्रतीतेरभावादित्याशयः ॥ **सत्तावत्कारणं वेति** । सत्ताविशिष्टं कारणं वेत्यर्थः ॥ **कारणे सत्ता वेति** । कारणे बीजादौ सत्ता नान्तर्भवति किन्तु सत्ता तटस्थैवोपलक्षणमिति वेत्यर्थः ॥ **आद्ये कारणस्येति** । सत्ताविशिष्टे कारणे न सत्ता, आत्माश्रयत्वप्रसङ्गात् । अतः सत्ताविशिष्टस्य कारणस्यासत्त्वमेव प्राप्तमित्यर्थः ॥ **असत एव कारणत्वमिति** । कारणसत्तायास्तटस्थतयोपलक्षणत्वेऽसत एव बीजादेः कारणत्वमायातमित्यर्थः ॥ **सर्वस्यापीति** । भेदो दुर्ग्राह्य इति प्रतिज्ञाय तदुपपत्तये यदन्योन्याश्रयत्वमापादितं तत्तावत्स्वव्याघातकमिति 'किञ्च भेदः कथं ग्राह्यः' इत्यादिनोपपादितम् । यच्च भेदस्यापि भेदान्तरभेद्यत्वेऽनवस्थेत्युक्तं तदभेदस्याप्यभेदिभ्यामभेदान्तराङ्गीकारेऽनवस्थेत्यपि वक्तुं शक्यत्वात्स्वव्याघातकम् । तथा भिन्ने भेदनिवेशश्चेत्यादिकमपि स्वव्याघातकम् । अभेदोऽपि किमभिन्ने वर्तते उत तद्रहिते । आद्येऽपि तेनैवाभेदेनाभिन्नतायामात्माश्रयत्वम् । अभेदान्तराङ्गीकारे त्वनवस्था । द्वितीये तु घटपटयोरप्यभेदापत्तिरित्यपि वक्तुं शक्यत्वात् । तथा न तावत्प्रत्यक्षेण भेद एव दृश्यते, भेद इत्येव प्रतीतेरननुभवादित्यादिनोक्तमपि स्वव्याघातकम् । बिम्बप्रतिबिम्बयोर्न तावत्प्रत्यक्षेणाभेद एव दृश्यते । अभेद इत्येव प्रतीतेरननुभवात् । वस्तुनोऽपि प्रतीतौ न तावदभेदपूर्वं वस्तुप्रतीतिः उक्तदोषात् । नापि वस्तुप्रतीतिपूर्विकाऽभेदप्रतीतिः । भेदेन प्रतीतेऽभेदप्रतीतावतिप्रसक्तेः । न च युगपत् । अभेदप्रतीतिं प्रति वस्तुप्रतीतेः कारणत्वेन यौगपद्यायोगात् । न च प्रकारान्तरमस्तीति साम्यात् । तथा सत्तावत्कारणं कारणे सत्ता वेत्यादिनोक्तमपि स्वव्याहतम् । असत्तावत्कारणं वा कारणेऽसत्ता वा । आद्ये कारणस्य सत्त्वम् । आत्माश्रयत्वप्रसङ्गेनासत्ताविशिष्टे

असत्त्वाभावात् । द्वितीये तु सत एव कारणत्वम् । असत्त्वस्योपलक्षणत्वेन कारणकोटावप्रवेशादिति साम्यादिति सर्वस्यापि स्वव्याघातकत्वादित्यर्थः । असाधारणमयुक्ताङ्गाधिकत्वं चाह **भेदस्य सत्तायाश्चेति ॥ सामान्यलक्षणेति** । स्वव्याघातकमुत्तरं जातिरिति सामान्यलक्षणसद्भाव इत्यर्थः । **अहेतुप्रसङ्गेति** । भेदप्रतीतावन्योन्याश्रयत्वापादनं यत्, तत् तावदहेतुसमान्तर्भूतम् । साधनस्य साध्यार्थापेक्षया पूर्वभावमङ्गीकारयित्वा साध्यस्यापि साधनापेक्षया पूर्वभावमुपपाद्य, अन्योन्याश्रयत्वापादनेनाहेतुत्वचोदनमहेतुसम इति तल्लक्षणस्यात्र सत्त्वात् । धर्म्यादिप्रतीतिरूपसाधनस्य भेदप्रतीतिरूपसाध्यापेक्षया पूर्वभावोऽवश्यमङ्गीकार्यः । अन्यथा साधनत्वासंभवात् । न च तत् संभवति । भेदप्रतीतिरूपसाध्याभावे धर्म्यादिप्रतीतिरूपसाधनस्याप्यसंभवात् । ततश्चान्योन्याश्रयत्वापत्त्या न भेदो गृहीतुं शक्य इति त्वयोक्तत्वात् । न च 'हेतोर्विकल्प्य साध्यार्थपूर्वापरसहोदयम् । त्रेधाऽपि तस्य हेतुत्वभङ्गो हेतुसमो भवेदि'ति हेतोस्त्रैकाल्यासिद्धेरेव तल्लक्षणतयाऽभियुक्तैरुक्तत्वात्कथमेतदिति वाच्यम् । तत्र हेतोः साध्यसद्भावपश्चाद्भावपक्षयोः अहेतुत्वाभिधानस्यैतज्जात्यारोप्यान्योन्याश्रयत्वापादनानुपपादकतया हेतोः पूर्वभाव एव स्वीकार्य इत्यस्योपपादनार्थमेवोक्तत्वेन लक्षणान्तर्गतत्वेनानभिप्रेतत्वात् । तथा च पूर्वोक्तलक्षणमेव तल्लक्षणप्रणेतॄणामभिप्रेतमिति काऽत्र कथन्ता । नन्वयुक्तमेव साध्यस्य पूर्वभावमुपपाद्यान्योन्याश्रयत्वापादनमेतज्जातिलक्षणान्तर्गतम् । अन्यथा सदुत्तरान्योन्याश्रयत्वापादनस्याप्येतज्जातिरूपतापत्तेः । न च प्रकृते भेदप्रतीतिरूपसाध्यस्य धर्म्यादिप्रतीतिरूपसाधनापेक्षया पूर्वभावोऽयुक्तः । भेदस्याप्रतीतावस्मामुष्मादिति वैलक्षण्येन धर्म्यादिप्रतीतेरेवासंभवादित्युक्तत्वात् । तथा च कथमिदमहेतुसमान्तर्भूतमिति चेन्न । भेदस्य धर्मिस्वरूपताया उपपादितत्वेन धर्मिप्रतीतेरेव भेदप्रतीतितया त्वयोपपादितस्यापि भेदप्रतीतेर्धर्मिप्रतीत्यपेक्षया पूर्वभावस्यायुक्ततमत्वात् । अस्मामुष्मादिति वैलक्षण्यप्रतीतेश्च प्रकारान्तरेणोपपादितत्वात् । तदिदमुक्तं 'भेदस्य स्वरूपातिरिक्तताया अयुक्ताया एवाङ्गीकारादिति' । तस्मान्न किञ्चिदत्रानुपपन्नमिति । भेदस्यापि भेदान्तरभेद्यत्वेऽनवस्थेत्यापादनं तु प्रसङ्गसमान्तर्भूतम् । 'अनवस्थाभासवाचः प्रसङ्गसमजातिते'त्युक्तत्वात् । न च 'सिद्धे दृष्टान्तहेत्वादौ साधनप्रश्नपूर्वकमि'ति पूर्वभागस्यात्राभावात्कथमेतदिति वाच्यम् । तस्य स्फुटप्रतीत्यर्थत्वेन लक्षणशरीरानन्तर्गतत्वात् । अन्यथाऽननुगमापत्तेः । अत एव पद्धतौ 'अनवस्थाभासप्रसञ्जनं प्रसङ्गसम' इत्येवोक्तम् । यच्च भिन्ने भेदनिवेश इत्याद्यसत एव कारणत्वमित्यन्तं खण्डनत्रयं तन्नित्यसमान्तर्भूतम् । तथा हि । 'धर्मस्य तदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेदि'ति हि तल्लक्षणम् । अत्र चाद्ये खण्डने प्रपञ्चो भिन्न इत्युक्ते भेदरूपधर्मस्य भिन्नाश्रितत्वाभिन्नाश्रितत्वविकल्पानुपपत्त्या प्रपञ्चरूपधर्मिणस्तद्विशिष्टत्वभङ्गाभिधानात् । द्वितीये तु भेदप्रतीतौ वस्त्वपि प्रतीयत इत्युक्ते न तावद्भेदपूर्वं वस्तुप्रतीतिरित्यादिविकल्पानुपपत्त्या भेदप्रतीति-

रूपधर्मिणो वस्तुविषयकत्वरूपधर्मवैशिष्ट्यभङ्गाभिधानात् । तृतीयेऽपि सद्बीजादिकारणमित्युक्ते सत्ता-रूपधर्मस्य विशेषणत्वोपलक्षणत्वविकल्पानुपपत्त्या धर्मिणो बीजादेस्तद्वैशिष्ट्यभङ्गाभिधानादिति । मायी-तिशब्दस्य साधुत्वं पूर्वोक्तं स्मारयति मायाशब्दस्येति ।

श्री० — घटपटनिष्ठो भेदो घटपटाभ्यां भिद्यते । तदुभयप्रतियोगिकभेदवानिति यावत् । इत्येवं भेदान्तरेणायं भेदो भेद्यो भेदवान् । सोऽपि तथेत्यनवस्थेत्याह भेदस्यापीति । भिन्ने वस्तुनि घटादौ ॥ अभेदेनेति । वस्तुप्रतीत्यनन्तरं भेदः प्रतीयत इत्युक्ते आदौ तद्वस्त्वभेदेनैव प्रतीतमित्यायातीति ज्ञेयम् । सत्तावत् सत्ताविशिष्टम् । सत्ता वा उपलक्षणमिति शेषः । तथा च सत्तोपलक्षितमित्यर्थः ॥ आद्य इति । सत्ताविशिष्टे सत्ताया आत्माश्रयप्रसङ्गेनाभावादित्यर्थः । द्वितीये सत्ता उपलक्षणतया कारणेऽस्ति, वस्तुतो नास्तीति प्राप्तम् । तथा चासत एव कारणत्वम् ॥ सर्वस्यापीति । तथा हि । अभेदस्या-प्यभेदान्तराभेद्यत्वेऽनवस्था । तथाऽभिन्नेऽभेदनिवेशश्चेत्तेनैवाभेदेनाभिन्नतायामात्माश्रयत्वम् । अभेदान्तरा-ङ्गीकारेऽनवस्था । भिन्नेऽभेदनिवेशश्चेद्भिन्नयोरपि घटपटयोः परस्परमभेदापत्तिः । तथा न तावत्प्रत्यक्षेणा-भेद एव दृश्यते । अभेद इत्येव प्रतीतेरभावात् । वस्तुनोऽपि प्रतीतौ न तावदभेदपूर्वं वस्तुप्रतीतिः । उक्तदोषात् । नापि वस्तुप्रतीतिपूर्विकाऽभेदप्रतीतिः । तर्हि तद्वस्तु आदौ भेदेनैव प्रतीयत इत्यायातम् । तथा च भेदेन प्रतीतेऽभेदप्रतीतावतिप्रसक्तेः । न च युगपत् । अभेदप्रतीतिं प्रति वस्तुप्रतीतेः कारणत्वेन यौगपद्यायोगात् । न च प्रकारान्तरमस्ति । तथाऽसत्ताविशिष्टं कारणम् । कारणेऽसत्ता वा । आद्येऽसत्ता विशिष्टेऽसत्ताया आत्माश्रयेणाभावात्सत एव कारणत्वम् । द्वितीयेऽसत्त्वस्योपलक्षणतया कारणे तन्नास्तीति प्राप्तम् । तथा च सत एव कारणत्वमित्येवं सर्वस्यापि स्वव्याघातकत्वाज्जात्युत्तर-त्वमित्यर्थः । जात्युपयुक्तायुक्ताङ्गाधिकत्वं दर्शयति भेदस्येत्यादि । ननु 'अत इनिठनावित्याकारान्तादेव इनेर्विधानात् मायाशब्दस्य चाऽऽकारान्तत्वात्कथमतदन्तादिनिरित्यत आह मायेति । व्रीह्यादिगणे आकारान्तादपीनिरस्ति । वनमालीति दर्शनादित्यर्थः ॥

सु० — नन्वेतदन्योन्याश्रयत्वादिकं सूत्रकृतैव कुतो न निराकृतमित्यत आह तदिति ।

अनु० —　　　　　　　　　　तदुपेक्ष्यौ बभूवुभिः ॥

तस्माज्जात्युत्तराकरत्वादुपेक्ष्यावेव । न तु परिहाराय प्रतिवादीकर्तव्यौ । एतदुक्तं भवति । सदलमेव पूर्वपक्षिवचनं निराकर्तव्यं भवति न निर्दलम् । अन्यथाऽतिप्रसङ्गात् । एतच्च जात्युत्तरत्वेन निर्दलमित्युपेक्षितं सूत्रकृता । अस्माभिस्तु शिष्यव्युत्पादनाय निरा-कृतमिति ।

**शे०— उपेक्ष्यावेवेति ।** अनेनैवशब्दस्योत्तरत्र संबन्ध इत्युक्तं विवृतं भवति । एवशब्द-व्यावर्त्यमुदर्शयति **न त्विति ।** तच्छब्दपरमृष्टमायुराकरत्वस्य कथं सूत्रकारं प्रत्यनिराकर्त-व्यतायां प्रयोजकता । तथात्वे वा भाष्यकाराणामपि तत्रोपेक्षैव कर्तुमुचिता । तत्किमिति तन्निराकरणं तेषामित्यत आह **एतदुक्तं भवतीति ।**

**सु०— स्यादेतत् । शून्यवादी शून्यं जगत्कारणं मन्यते । मायावादी तु ब्रह्म । तत्कथं नासतोऽदृष्टत्वादित्यादिशून्यवादनिरासस्य मायावादेऽतिदेशः । मतवैषम्येऽतिदेशा-संभवादित्यत आह** यदिति ।

**अनु०—** यच्छून्यवादिनः शून्यं तदेव ब्रह्म मायिनः ॥

**तस्मादतिदेशो युक्त इति शेषः ॥ तत्कथमित्यत** आह न हीति ।

न हि लक्षणभेदोऽस्ति निर्विशेषत्वतस्तयोः ॥

**लक्षणभेदेन हि विप्रतिपन्नो भेदो बोधनीयः । न चासौ शून्यब्रह्मणोः सम्भवति । द्वयोरपि निर्विशेषत्वाङ्गीकारात् ।**

**ननु निर्विशेषत्वेन बाह्यलक्षणभेदाभावेऽपि सत्यज्ञानानन्तानन्दात्मकत्वं ब्रह्मणः स्वलक्षणं मायावादिनाऽङ्गीकृतम् । न शून्यस्य शून्यवादिना । तेन ब्रह्मशून्ययोर्भेदो भवि-ष्यतीत्यत आह** अनृतादीति ।

अनृतादिविरोधित्वमुभयोश्च स्वलक्षणम् ॥

**ब्रह्मणः सत्यज्ञानाद्यात्मकत्वं नामानृतजडादिविरोधित्वमेवाभिमतं मायावादिनोऽन्य-स्यासम्भवात्, 'अनृतजडविरोधिरूपमनन्तत्रयमलबन्धनदुःखताविरुद्धमि'ति तद् व्याख्यानाच्च । अनृतादिविरोधित्वं च शून्यवादी शून्यस्यापि मन्यते । 'जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यदि'ति वचनात् । ततो नैतदपि भेदकमिति युक्त एवातिदेशः ।**

**शे०—** तत्कथमित्यतः क्रमेण युक्तितद्व्याख्यानाभ्यामभिमततामुपपादयति **अन्यस्येत्या-दिना ॥ अन्यस्यासंभवादिति ।** परजातिरूपस्य सत्यत्वस्यापरजातिरूपस्य ज्ञानत्वस्यापरिच्छिन्न-परिमाणवत्त्वरूपानन्तत्वस्य च निर्धर्मके ब्रह्मण्यसंभवादित्यर्थः । दुःखताविरुद्धमित्यत्र स्वार्थे तल्-प्रत्ययः । तद्व्याख्यानाच्चेत्यत्र तच्छब्द आवर्तनीयः । तथा च तेषां वैदिकसत्यज्ञानानन्तशुद्धमुक्ता-नन्दपदानां तद्व्याख्यानात् तस्य मायावादिनो व्याख्यानाच्चेत्यर्थः । 'अतिनिकटमविक्रियं मुरारेः परमपदं प्रणयादभिष्टवीमी'त्युत्तरार्धेन संबन्धः । कथमेतदवगतमित्यतस्तद्वाक्यादेवेत्यभिप्रेत्य तदुदाहरति

**जाड्येति** ॥ **एतदपीति** । सत्यज्ञानानन्तानन्दात्मकत्वरूपं स्वलक्षणमपीत्यर्थः । न केवलं बाह्य-लक्षणमित्यपेरर्थः ।

**प०** — अभिमतं मायावादिन इत्येतद्धेतुद्वयोक्त्या व्यनक्ति **अन्यस्येति** । सत्यत्वज्ञानत्वादि-धर्मस्याखण्डत्वविरोधेनासंभवादिति भावः । 'अनृतजडविरोधिरूपमनन्तत्रयमलबन्धनदुःखताविरुद्धम् । अतिनिकटमविक्रियं मुरारेः परमपदं प्रणयादभिष्टवीमी'ति भाष्यकृतैव मुरारिशतके सत्यादिपदानामर्था-भिधानादित्यर्थः । दुःखतेत्यस्य भावभवित्रोरभेदेन दुःखेत्यर्थो ध्येयः ॥ **इति वचनादिति** । व्यक्तमेतत्तत्त्वोद्योते ।

**या०** — **अन्यस्यासंभवादिति** । परजातिरूपस्य सत्यत्वापरजातिरूपस्य ज्ञानत्वस्यापरिच्छिन्न-परिमाणवत्त्वादिरूपस्यानन्तत्वस्य च निर्धर्मकेऽसंभवादित्यर्थः । दुःखताविरुद्धमित्यत्र स्वार्थे तद्धित इति ज्ञातव्यम् ॥ **व्याख्यानाच्चेति** । वैदिकानां सत्यज्ञानानन्तशुद्धमुक्तानन्दपदानामिति शेषः । अस्य 'अतिनिकटमविक्रियं मुरारेः परमपदं प्रणयादभिष्टवीमी'त्युत्तरार्धेनान्वयः ।

**श्री०** — **बाह्येति** । स्वरूपातिरिक्तस्य जगदादिबाह्यपदार्थघटितस्य जगत्कारणत्वादिरूप-लक्षणस्योभाभ्यामुभयोरङ्गीकारेण तद्भेदाभावेऽपीत्यर्थः ।

---

**सु०** — **स्यादेतत्** । **प्रपञ्चमिथ्यात्वानुमाननिरासार्थं वैधर्म्याच्च न स्वप्नादिवदिति सूत्रम्** । तत्र यत् **'भ्रान्तेः संवृतिसत्यस्ये'ति दूषणमुक्तम्** । **तदेव वैधर्म्यादिति सूत्रे प्रतीयते** । **यत्पुनरुक्तं दृश्यत्वस्य सत्यत्वे तत्रैव व्यभिचारप्रसङ्गात्तस्य मिथ्यात्वं वाच्यम्** । **तथा चासा-धकत्वमिति तत्सूत्रे न दृश्यते** । **तत्कथमेतद्व्याख्यानमित्यत आह** स्ववाक्येति ।

**अनु०** — स्ववाक्याभावसंवादान्न कृत्यं प्रतिवादिनः ॥
तत्पक्ष इति वैधर्म्यान्न स्वप्नादिवदित्यजः ॥
अप्रयत्नान्निराचक्रे

**अत्र वाक्यमिति हेतुवाक्यार्थो दृश्यत्वं लक्ष्यते** । **तत्पक्ष इति विषयसप्तमी** । **तन्मिथ्यात्वसाधनविषय इति यावत्** । **इति शब्दो हेतौ** । अप्रयत्नात् **प्रयत्नमविधाय, 'वैधर्म्याच्च न स्वप्नादिव'दित्येव निराचक्र इति सम्बन्धः** । **एतदुक्तं भवति** । **दृश्यत्वस्य मिथ्यात्वं शून्यवादिनैवाभ्युपगतम्** । **मिथ्याभूतस्य( च)ासाधकत्वं सुप्रसिद्धमेव** । **अत ए(वै)त-द्विषये सद्वादिनः किमपि कृत्यं नास्त्येव** । **स्फुटदूषणव्युत्पादने सूत्रस्वव्याघातात्** । **तस्मा-देतद्दूषणव्युत्पादने सूत्रकृता प्रयत्नो न विहितः** । **अस्माभिस्तु तदभिप्रायः स्फुटीकृत इति** ।

शे०— **दूषणमिति** । सत्प्रतिपक्षादिरूपमित्यर्थः ॥ **तत्कथमिति** । सूत्रार्थकथनरूपत्वा-भावादिति भावः ॥ **प्रयत्नमविधायेति** । अनेनाप्रयत्नादिति मूले ल्यब्लोपनिमित्ता पञ्चमीत्युक्तं भवति ॥

प०— 'स्ववाक्याभावसंवादादि'त्यस्यार्थः **दृश्यत्वस्य मिथ्यात्वमित्यादि** । तत्पक्ष इत्यस्यार्थ **एतद्विषय इति** । दृश्यत्वस्य मिथ्यात्वविषय इत्यर्थः । प्रतिवादिन इत्यस्यार्थः **सद्वादिन इति** । प्रपञ्चस्य सत्यत्ववादिन इत्यर्थः ।

श्री०— **इत्येवेति** । भ्रान्तिवैलक्षण्येनैव सत्यत्वं साधितवान् । न तु दृश्यत्वस्य हेतोः सत्यत्वमि-थ्यात्वे विकल्प्य तद्दूषणविषये प्रयत्नं चकारेति भावः ॥ **सूत्रत्वेति** । अस्पष्टन्यायसूचनादेव हि सूत्रमित्यर्थः ॥

सु०— तथाऽपि **'सत्त्वं चास्यानुभूतित'** इति यत्प्रपञ्चमिथ्यात्वस्य प्रत्यक्षविरुद्धत्व-मुक्तम् । यच्च **'मिथ्यात्वे मा न काचने'**ति निष्प्रमाणत्वं, तदुभयं सूत्रे न दृश्यत इत्यत आह चेति ।

अनु० — चेति दृष्टिविरुद्धताम् ॥
निष्प्रमाणत्वमप्यस्य सूचयामास विश्वकृत् ॥ २-२-८ ॥

अस्य **मिथ्यात्वस्य** । नन्वनुक्तसमुच्चयार्थेन चशब्देनेदं दूषणद्वयं सूचितमिति यथा व्याख्यायते । तथा तदपि चशब्दार्थतया व्याख्यायताम् । किमनुक्तत्वाङ्गीकारेण । मैवम् । **'न कृत्यं प्रतिवादिनः'** इत्युक्तत्वात् । सूत्रे हेतुविशेषस्यानुपादानान्निष्प्रमाणकत्वं ज्ञापित-मित्यस्तु । किं चशब्दस्योभयसूचकत्वग्रहणेन । न । सति शब्दे भावकाशज्ञापकादरणा-नुपपत्तेः । स्वप्नादिवदिति सूत्रं स्वप्नवदिति व्याख्यातम् । कोऽत्राभिप्रायः । उच्यते । बहुस्थलेषु गृहीतेयं व्याप्तिरित्यतो न व्यभिचारमर्हतीति पूर्वपक्षिणोऽभिमानं सूचयितुं सूत्र-कारेणादिपदं प्रयुक्तम् । तथाऽपि प्रयोगवेलायामेक एव दृष्टान्त उपादेयोऽन्यथाऽऽधिक्यं प्रसज्यते,ज्येतेति । यथाऽऽह । हेतूदाहरणादिकम् अधिकमिति । एतज्ज्ञापनाय भाष्य-कारेण स्वप्नवदित्येवोक्तमिति सर्वं सुस्थम् ॥ २-२-८ ॥

शे०— **सूत्रे हेतुविशेषस्येति** ॥ वैधर्म्याच्च न स्वप्नादिवदिति सूत्रे सूत्रकारेण हेतुर्विशिष्य नोक्तस्तेन तदभावो ज्ञापितो भवति । यदि हेतुविशेषोऽपि स्यात्तर्हि सूत्रकारस्तमप्युपादद्यादिति विशिष्य हेत्वनुक्त्यैव निष्प्रमाणत्वज्ञापनसिद्धेर्न तत्सूचकत्वं चशब्दस्येत्यर्थः । दृष्टान्तोक्त्या हेतुरपि सामान्यत

उक्त एवेति कथं तदनुक्तिरिति शङ्कापरिहाराय विशेषपदम् । सावकाशेति । किं हेत्वभावादेव तदनुक्तिः किं वा दृष्टान्तोक्त्यैव हेतुरपि सुज्ञान इत्यभिप्रायेणेति शङ्काकवलितत्वान्नानुक्तिमात्रेण निष्प्रमाणकत्वसिद्धिरित्यर्थ इति बहवः । वस्तुतस्तु दूष्यत्वेन दृश्यत्वाद्यन्यतमस्य हेतुविशेषस्यानुपादानादित्यर्थः । ततश्च सूत्रे स्वप्नादिवदिति दृष्टान्तमात्रमुक्तं न कोऽपि हेतुविशेष उक्तः । तेन ज्ञायते स्वप्नादिदृष्टान्तेन मिथ्यात्वसाधकं यावत्साधनं तावत्सर्वमप्यत्र दूष्यतयाऽभिमतमिति । तेन च मिथ्यात्वं विश्वस्य निष्प्रमाणकमिति ज्ञापितमित्यस्तु, किं चशब्दस्यैतदर्थकत्ववर्णनेनेति शङ्काग्रन्थार्थः । अत्र हि मिथ्यात्वे प्रमाणसामान्याभावो ज्ञापनीयः । स चानुक्तसमुच्चायकेन चशब्देन शक्यैव ज्ञाप्यते । स्वप्नादिवदिति दृष्टान्तमुक्त्वा हेतुविशेषानुपादानं तूक्तरीत्याऽनुमानसामान्याभावज्ञापकतया सावकाशत्वान्न प्रमाणसामान्याभावज्ञापनायालमित्यतो न तदादरणं भाष्यकृता कृतमिति परिहारग्रन्थार्थः ॥ २-२-८ ॥

स०— सूत्रे हेतुविशेषस्येति । 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रे हेतुः विशिष्य नोक्तः सूत्रकारेण । तेन तदभावो ज्ञापितो भवति । यदि हेतुविशेषोऽपि स्यात्तर्हि सूत्रकारस्तमुपादद्यादिति विशिष्य हेत्वनुक्त्यैव निष्प्रमाणत्वज्ञापनमस्त्वित्यर्थः । दृष्टान्तोक्त्या हेतुरपि सामान्यत उक्त एवेति कथं तदनुक्तिरित्यतो विशेषपदमिति ध्येयम् । सावकाशेति । किं हेत्वभावादेव तदनुक्तिः किं वा दृष्टान्तोक्त्यैव हेतुरपि सुज्ञान इत्यभिप्रायेणेति शङ्कायाः सावकाशत्वात् नानुक्तिमात्रेण निष्प्रमाणकत्वासिद्धिरिति भावः ।

प०— शङ्कते सूत्र इति । 'वैधर्म्याच्चे'ति सूत्रे दृश्यत्वजडत्वपरिच्छिन्नत्वादिमिथ्यात्वहेतून् मध्येऽन्यतमाभावरूपहेतुविशेषस्यानुपादानात् (साधकभावाभाव)बाधकाभावरूपस्वप्नादिवैधर्म्यान्न मिथ्यात्वं विश्वस्येति निष्प्रमाणत्वं ज्ञापयितुं शक्यमिति भावः । किमिति भिन्नं पदम् । चशब्दस्येति विभागः । निराह नेति ॥ सावकाशेति । भ्रान्तेः संवृतिसत्यस्येत्यादिनोक्तरीत्या पराङ्गीकृतार्थक्रियाकारित्वादिरूपस्वप्नशुक्तिदुर्वर्णादिवैलक्षण्यपरत्वेनापि सावकाशवैधर्म्यशब्दरूपज्ञाप[कान्तराण मित्य]कानादरणादित्यर्थः ॥ स्वप्नवदिति व्याख्यातमिति । 'दृश्यत्वाद्विमतं मिथ्या स्वप्नवच्चे'त्यत्रेति भावः ॥ २-२-८ ॥

या०— शङ्कते सूत्रे हेतुविशेषस्येति । दूष्यत्वेन दृश्यत्वाद्यन्यतमहेतुविशेषस्यानुपादानादित्यर्थः । तथा च सूत्रे स्वप्नादिवदिति दृष्टान्तमात्रमुक्तं न कोऽपि हेतुविशेष उक्तः । तेन ज्ञायते स्वप्नादिदृष्टान्तेन मिथ्यात्वसाधकं यावत्साधनं तावत्सर्वमप्यत्र दूष्यतयाऽभिमतमिति । तेन च मिथ्यात्वं

निष्प्रमाणकमिति ज्ञापितमित्यस्तु, किं चशब्दस्यैतदर्थकत्ववर्णनेनेति भावः ॥ **सति शब्द इति** । अनुक्तसमुच्चयवाचकचशब्दे सतीत्यर्थः । अत्र मिथ्यात्वे प्रमाणसामान्याभावो ज्ञापनीयः । स चानुक्तसमुच्चायकेन चशब्देन शक्यैव ज्ञाप्यते । स्वप्नादिवदिति दृष्टान्तमुक्त्वा हेतुविशेषानुपादानं तूक्तरीत्याऽनुमानसामान्याभावज्ञापकतया सावकाशं, न प्रमाणसामान्याभावज्ञापनायालम् । अतो न तदादरणं भाष्यकृता कृतमित्यर्थः ॥ २-२-८ ॥

**श्री०— तदपीति** । दृश्यत्वं सत्यं मिथ्या वेत्येतदपीत्यर्थः ॥ **इत्युक्तत्वादिति** । तथा च स्फुटदूषणस्य सूचितत्वं न वक्तव्यमिति भावः ॥ **उभयेति** । 'एकसत्त्वे द्वयमिह नास्ती'ति न्यायेनेदम् । तथा च प्रमाणविरुद्धत्वमेव सूचितमित्यस्तु । न निष्प्रमाणकत्वसूचनमित्यर्थः ॥ **स्वप्नवदिति** । 'दृश्यत्वाद्विमतं मिथ्या स्वप्नवच्चेदि'त्यनेन व्याख्यातमित्यर्थः ॥ २-२-८ ॥

**॥ इति असदधिकरणम् ॥**

* * *

**॥ अथ अनुपलब्ध्यधिकरणम् ॥**

॥ विज्ञानवादापाकरणम् ॥

**सु०— ॐ न भावोऽनुपलब्धेः ॐ ॥ अत्र योगाचाराणां मतमपाक्रियते । तदर्थं तदुपन्यस्यति** ज्ञानमेवेति ।

**अनु०— ॥ ॐ न भावोऽनुपलब्धेः ॐ ॥**

ज्ञानमेवैकमखिलज्ञेयाकारं प्रभासते ।

**विज्ञानमेव तत्त्वं, न रूपादयश्चत्वारः स्कन्धाः; इति योगाचारा मन्यन्त इत्यर्थः । विज्ञानाङ्गीकारेऽपि विशेषमाह** एकमिति । **अद्वितीयमित्यर्थः । ननु ज्ञेयमपि रूपादिकं प्रत्यक्षादिसिद्धं तत्कथं विज्ञानमेव तत्त्वमित्यत** आह अखिलेति । **ज्ञानमेव ज्ञेयाकारं । न ज्ञेयं नाम ज्ञानाद्भिन्नमस्तीत्यर्थः । कुतो ज्ञेयस्य ज्ञानात्मकत्वमित्यत** आह प्रभासत इति । **ज्ञानं हि प्रकाशते । तेन प्रकाशमानत्वस्य ज्ञानत्वेन व्याप्तौ सिद्धायां नीलादेरपि प्रकाशमानस्य ज्ञानत्वं सिद्धमित्यर्थः । यद्वा प्रभासते नीलादिना सहैवेति शेषः । तेन 'सहोपलम्भनियमादभेदो नीलतद्धियोरि'त्युक्तं भवति ।**

**शे० ॐ न भावोऽनुपलब्धेः ॐ ॥** अधिकरणप्रतिपाद्यानुक्तेर्मूले न्यूनतामाशङ्क्य भाष्ये तदुक्तेस्तदनुसारेणात्रापि शिष्यैरेव ज्ञातुं शक्यत्वात्तदनुक्तिरत्र न दोषायेत्यभिप्रेत्य विज्ञानवादमपाकरो-

तीतिभाष्यं मनसि निधाय" स्वयमधिकरणप्रतिपाद्यमाह **अत्रेति** । तर्हि तन्निराकरणमेव कर्तव्यम् । किं ज्ञानमेवैकमखण्डमित्यादिना ग्रन्थेन । न चायं तन्मतोपन्यासः । तस्यानर्थकत्वादित्यतो विप्रतिपत्तिविषयोपदर्शनेन तन्मतानिरस्यताशङ्कानिरासार्थत्वात्तस्य नानर्थक्यमित्याशयेन तन्मतोपन्यासप्रयोजनप्रदर्शनपूर्वकं तत्परतयोत्तरग्रन्थं सङ्गमयति **तदर्थमिति** । निरस्यताप्रयोजकीभूतविरुद्धार्थत्वोपदर्शनेन तन्मतस्य निरसनासमर्थनार्थमित्यर्थः । ननु विज्ञानस्य तत्त्वता वैभाषिकादिमतसाधारणी न मतभेदप्रयोजकेत्यतो मूले उक्तस्यैवेत्यस्य तात्पर्यं वदन्नपेक्षितपूरणेन वाक्याभासतां परिहरति **विज्ञानमेव तत्त्वमित्यादिना विज्ञानाङ्गीकारेऽपीति** । विज्ञानस्य तत्त्वताङ्गीकारेऽपीत्यर्थः ॥ **विशेषमाहेति** । तर्हि विज्ञानव्यक्तीनामनन्तत्वादनन्तसद्व्यक्त्यङ्गीकारप्रसङ्गात्सदद्वैतभङ्ग इत्याशङ्कापरिहारार्थमिति शेषः । एकत्वसंख्याविस्वरूपस्यैकत्वस्य ज्ञानेऽसंभवात्संभवे वा सदद्वैतमतभङ्गशङ्कानिरासाक्षमत्वात्तच्छङ्कानिरासोपयोगित्वयैव मित्येतद्व्याचष्टे **अद्वितीयमित्यर्थ इति** । मूले ज्ञानस्याखिलज्ञेयाकारत्ववर्णनस्यानर्थक्यमाशङ्क्य ज्ञानमेवेत्युक्ताया ज्ञानमात्रतत्त्वताया उपपादनार्थं तदिति भावेन तदुपपादकतया तद्योजयितुं तदनुपपत्तिशङ्कामुत्थापयति **नन्विति** । तत्त्वरूपत्वाङ्गीकारप्रयोजकस्य प्रामाणिकत्वस्य ज्ञानज्ञेययोः साधारण्येनोभयोरपि तत्त्वरूपत्वमेव न तूक्तरीत्या तद्वैषम्यमित्यर्थः ॥ **ज्ञानं हीति** । अनेन ज्ञानमित्यस्यावृत्तिरुक्ता भवति । ज्ञानमेव हीत्यर्थः । अन्यथा ज्ञानत्वस्य प्रकाशमानत्वं प्रति व्यापकताया अलाभादिति द्रष्टव्यम् । अनेन यत्प्रकाशते तज्ज्ञानं यथा सम्मतं प्रकाशते च नीलादीत्युदाहरणोपनयात्स्यव्यवयवानुमानमेव ज्ञेयस्य ज्ञानात्मकत्वे प्रमाणमुक्तं भवति । अनुमानान्तरसंग्राहकतयाऽपि प्रतिभासत इति व्याख्याति **यद्वेति** ॥ **तेन सहोपलम्भनियमादिति** । यद्येन नियतसहोपलम्भनं तत्ततो न भिद्यते । यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमाः । नियतसहोपलम्भश्चार्थो ज्ञानेनेत्यनुमानमनेनोक्तं भवति । न चात्र हेत्वसिद्धिरिति शङ्क्यम् । विषयविज्ञानयोरेकस्यानुपलम्भेऽन्यस्योपलम्भाभावादेव तत्सिद्धिसंभवात् । न च प्रयोजकत्वं शङ्क्यम् । व्यापकाभावेन व्याप्याभावसाधनरूपतया तदनवकाशात् । तथा हि । विज्ञानवादिना निषेध्यो हि विज्ञानार्थयोर्भेदः सहोपलम्भनियमाभावेन व्याप्तः । यतो यौ भिन्नौ न ताववश्यं सहोपलभ्येते यथाऽश्विनाविति नियमात् । अश्विनोर्हि कदाचिदेकोपलम्भेऽन्यस्योपलम्भेऽपि न तन्नियमोऽस्ति । कदाचिदेकस्याभ्रादिनाऽऽच्छादनेऽप्यन्यस्योपलम्भदर्शनात् । न च भेदव्यापकः सहोपलम्भनियमाभावोऽर्थज्ञानयोरस्ति येन तद्व्याप्यो भेदोऽपि स्यात् । तयोः सहोपलम्भनियमेन तद्विरुद्धस्य सहोपलम्भनियमाभावस्यासंभवात् । स च ज्ञानार्थयोर्व्यावर्तमानः स्वव्याप्यं भेदमपि व्यावर्तयति । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरवश्यम्भावात् । ततश्च प्रतिबन्धसिद्धौ काप्रयोजकत्वशङ्केति भावः ।

स०— ॐ न भावोऽनुपलब्धेः ॐ ॥ सहोपलम्भनियमादित्यादिवाक्यस्यायमर्थः । संविन्नीलयोर्भेदे नीलसंविदि नीलस्य भानं न स्यात् । भिन्नस्यापि भाने नीलसंविदि नीलेतरस्य धवलपीतादेरपि भानं स्याद् । न च नीलसंविदि नीलस्य संबन्धोऽस्तीति नीलं भासते । धवलादेस्तु तत्र न संबन्ध इति न भानमिति वाच्यम् । नीलस्य नीलबुद्धेश्च संबन्धान्तरानुपपत्त्या संविदि नीलस्यारोपितत्वमेव संबन्ध इति तयोरभेदसिद्धिरिति भावः ।

प०— ॐ न भावोऽनुपलब्धेः ॐ ॥ **योगाचाराणामिति** । वैभाषिकसौत्रान्तिकमाध्यमिकयोगाचाराख्यभेदेन चतुर्विधबौद्धेषु त्रिषु निरस्तेष्वविशिष्टबौद्धमतम् निरस्यत इत्यर्थः । एवशब्दव्यावर्त्यमाह **न रूपादय इति** । रूपवेदनसंज्ञासंस्काराश्चत्वारो त्यर्थः । इतिशब्दानन्तर कांक्षितक्रियापदं कर्तृपदं च पूरयति इति **योगाचारा मन्यन्त इति** ॥ **व्याप्तौ सिद्धायामिति** । विज्ञानतत्व इति योज्यं । यद्वेत्यनन्तरम् (वि)ज्ञानम् हीत्यनुकर्षः ॥ **सहोपलम्भेति** । अंगुल्यवष्टम्भनयनेन दृश्यमानं द्वितीयचन्द्रादिकम् सत्यचन्द्रादिना नियमेन सहोपलभ्यमानं सत्यचन्द्राद्यभिन्नं दृष्टम् एवं नीलादिना सहैव भासमानम् ज्ञानं तेनाभिन्नमित्यर्थः ।

या०— ॐ न भावोऽनुपलब्धेः ॐ ॥ **अद्वितीयमित्यर्थ इति** । सजातीयभेदशून्यमित्यर्थः । सहोपलम्भनियमादित्यस्यायमयर्थः । यद्येन नियतसहोपलम्भनं तत्ततो न भिद्यते यथैकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमाः । नियतसहोपलम्भनश्चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः । निषेध्यो हि भेदः सहोपलम्भानियमेन व्याप्तः । यथा भिन्नावश्विनौ नावश्यं सहोपलभ्येते । कदाचिदभ्रापिधानेऽन्यतरस्यैकतरस्योपलब्धेः । सोऽयमिह भेदव्यापकानियमविरुद्धो नियम उपलभ्यमानस्तद्व्याप्यं भेदं निवर्तयतीति ॥

**सु०— नन्वयुक्तो ज्ञानज्ञेययोरभेदः । भेदस्य प्रतिभासनात् । एकमिति चायुक्तम् । विज्ञानसन्ततीनां भेदस्य एकैकस्यामपि सन्ततौ विज्ञानभेदस्य च विद्यमानत्वात् । किञ्च आस्तामन्यो भेदः । भेदाभावस्तावदभ्युपगम्यते । तेनैव विज्ञानस्य सद्वितीयत्वप्राप्तेर्नैकत्वमुपपद्यत इत्यत आह** तत्रेति ।

**अनु०**— तत्र सन्ततिभेदश्च स्वभेदो भेद एव च ॥
कल्पिताः प्रतिभासन्ते नानासंवृतिभूमिषु ॥

तत्र **ज्ञानज्ञेययोः भेद इति संबन्धः** । सन्ततिभेदः **सन्ततीनां परस्परं भेदः** । स्वभेदः **एकैकस्यामपि सन्ततौ पूर्वोत्तरज्ञानभेदः । कल्पिता एवेति संबन्धः** । नानासंवृतिभूमिषु **अनेका-**

**ज्ञानस्थानेष्वन्तःकरणेषु । यद्वा नानासंवृतिकारणकासु वासनास्विति निमित्तसप्तमी । तदुक्तम् 'भेदस्तु भ्रान्तिबुद्ध्यैव द(दृश्य इन्दा)श्येतेन्दाविवाद्वय' इति ।**

**शे०** — ननु 'तत्र सन्ततिभेदश्चे'त्यादिना ज्ञानज्ञेयभेदादेः कल्पितत्वं कथ्यते तदनर्थकम् । न च तद्ग्राहकस्य प्रत्यक्षादेः कल्पितार्थविषयकत्वेनाप्रामाण्यप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्यापि प्रकृते उपयोगादर्शनेनानर्थक्यादित्याशंक्य प्रागुक्तस्य ज्ञानज्ञेययोरभेदानुमानादेस्तद्विरोधेनाप्रामाण्यशङ्कापरिहारार्थत्वात्तस्य नानर्थक्यमिति भावेन तत्परतयोत्तरग्रन्थं योजयितुमुक्तार्थानुपपत्तिशङ्कामुत्थापयति **नन्विति ॥ विज्ञानसन्ततीनामिति** । घटज्ञानादिरूपविजातीयज्ञानसन्ततीनामित्यर्थः ॥ **एकस्यामपि सन्तताविति** । घटोऽयं घटोऽयमिति सजातीयज्ञानसन्तताविल्यर्थः ॥ **ज्ञानभेदस्येति** । पूर्वोत्तरज्ञानव्यक्तिभेदस्येत्यर्थः ॥ **किञ्चेति** । न च 'तत्र सन्ततिभेदश्चे'त्युत्तरवाक्येनैतच्चोद्यापरिहारः । तत्र ज्ञानज्ञेययोः ज्ञानसन्ततीनाम् एकसन्ततावपि पूर्वोत्तरज्ञानव्यक्तीनां च भेदनिरासेऽपि भेदाभावेन भेदस्यानिरासादिति वाच्यम् । तस्यापि ज्ञेयकोटावन्तर्भावेन ज्ञानज्ञेयभेदनिरासकेन 'तत्र भेद' इत्यनेनैव तन्निरासासिद्ध्या पृथगनिरासासम्भवादिति भाव । व्यवहितत्वात्सम्बन्धं दर्शयति **तत्रेति** । तत्रेत्यस्य व्याख्यानं **ज्ञानज्ञेययोरिति**। इतरसमुच्चायकचशब्दस्येतरव्यावर्तकैवकारेणैकत्रसंबन्धानुपपत्तिमाशङ्क्य एवशब्दस्य भिन्नक्रमतां दर्शयति **कल्पिता एवेति ॥ संबन्ध इति** । ज्ञानज्ञेयभेदादेः कल्पिततायाः परसंमतत्वं कुतोऽवगतमित्यतस्तद्वाक्यादेवेत्यभिप्रेत्य 'सहोपलम्भनियमादभेदो नीलतद्धियोरि'ति प्रागुदाहृतवद्वाक्यशेषमेवोदाहरति **तदुक्तमिति** ।

**स०** — **किञ्चेति** । न च 'तत्र सन्ततिभेदश्च' इत्यादिना नास्याः शङ्कायाः परिहार इति शङ्क्यम् । ज्ञान–ज्ञेययोः ज्ञानसंततीनामेकसंततावपि पूर्वोत्तरज्ञानव्यक्तीनां च भेदनिरासेनैव भेदाभावेनापि भेदनिरास इत्यभिप्रायेण पृथगदूषणसंभवात् । भेदाभावस्यापि ज्ञानकोटौ वा ज्ञेयकोटौ वा अन्तर्भावावश्यम्भावेन तद्भेदस्यापि स्वभेदत्व–स्वसंततिभेदत्व–ज्ञानज्ञेयभेदत्वावश्यम्भावादिति भावः ।

**प०** — **भेदस्येति** । बाह्याभ्यन्तरत्वादिना प्रागुपपादितदिशा भेदस्य प्रतिभासनादित्यर्थः । **विज्ञानसं(ततीनां)तानानां भेदस्येति** । घटपटादिज्ञेयभेदेनेति भावः । तत्रेत्यनुवादः । ज्ञानज्ञेययोरिति व्याख्या ॥ **भेद इति सम्बन्ध इति** । अन्तिमभेदपदेन सम्बन्ध इत्यर्थ इत्येके । अन्ये तु नैवमर्थः । अन्तिमभेद एवेत्यत्राभेद इति विच्छिद्य भेदाभाव इति तस्य व्याख्यातत्वात् । अन्यथा भेदाभावस्तावदभ्युपगम्यत एवेत्युक्तपक्षनिरासाप्राप्तेस्तस्मात्सन्ततिभेदश्चेत्यत्र भेदशब्देन बुद्ध्या विविक्तेनाध्याहृतेन वा भेद इत्यनेन सम्बन्ध इत्यर्थ इत्याहुः । अपरे त्वन्तिमभेद इत्यत्र भेद इत्यभेद इति च

द्वेधा विच्छेद इत्याहुः । केचिद्भेदाभावस्याकल्पिततया विज्ञानत्वात्मकतया तस्योत्तत्र कल्पितत्वोक्ति-प्रस्तावेन परिग्रहः; अतो भेद इत्येव व्यवच्छिद्य तेन सम्बन्ध इत्यर्थ इत्याहुः । एवकारान्वयमाह **कल्पिता एवेति सम्बन्ध इति** ॥ **इन्दाविति** । चन्द्रबिंब इत्यर्थः ।

**या०— विज्ञानसन्ततीनामिति** । घटपटस्तम्भ दिविज्ञानसन्ततीनामित्यर्थः ॥

**श्री०— ॐ न भावोऽनुपलब्धेः ॐ ॥ विज्ञानेति** । घटज्ञानसन्ततिः पटज्ञानसन्ततिरिति **विज्ञानसन्तती**, तथा **एकस्यामपि** घटज्ञानसन्ततौ, **विज्ञानभेदस्य पूर्वो**त्तरज्ञानभेदस्येत्यर्थः ।

**सु०— एवमनूदितं मतमपाकरोति इत्येतदपीति** ।

**अनु०** — इत्येतदपि नो युक्तं

**पूर्वमतसमुच्चयार्थोऽपिशब्दः** ।

**अनेन 'न भाव' इति सूत्रांशो व्याख्यातः । जगत् भावो ज्ञानं न भवतीत्यर्थः । भवतेरनुभवार्थत्वात् । उपसर्गा हि धातुलीनस्यार्थस्य व्यञ्जका एव** ।

**शे०**— हेत्वंशस्येव प्रतिज्ञांशस्य व्याख्येयस्याव्याख्याने न्यूनत्वमाशङ्क्य मतान्तरकरणप्रतिज्ञारूपपूर्वभाष्येणैव तद्व्याख्यानसिद्धेः पृथग्व्याख्यानं न न्यूनत्वापादकमित्याशयेन पूर्वभाष्यमेव तद्व्याख्यानतयाऽपि व्यापारयति **अनेनेति** । कथमित्यतस्तदेवाभिनयेन दर्शयति **जगदिति** । ननु तर्हि सूत्रे न ज्ञानमिति वक्तव्यं न भाव इति तु कथमुक्तम् । न च भावशब्दोऽपि ज्ञानपर इत्यदोषः । कर्तृसाधनभूधातुनिष्पन्नभावशब्दस्य सदर्थत्वेन ज्ञानपरत्वानुपपत्तेरित्यतः 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः' इति स्मरणात् धातूनामनेकार्थत्वस्थित्या भवतेरनुभवार्थत्वस्याप्युपपत्ते र्नुपपत्तिरित्याशयेनाह **भवतेरनुभवार्थत्वादिति** । नन्वेवं भावशब्देनैवानुभवलाभादनुभवशब्दे तदर्थस्यान्वित्युपसर्गस्य वैयर्थ्यं स्यादित्याशङ्क्योपसर्गाणां धातुगतशक्यतावच्छेदकत्वरूपोपसन्दानत्वावच्छेदकपर्यायद्योतकत्वेन तदर्थकत्वासिद्धेर्न तद्वैयर्थ्यमित्याह **उपसर्गा हीति** । प्रजयतीत्यत्र प्रोत्तरजित्वेन जिधातोरेव प्रकृष्टजये शक्तिकल्पनया प्रकृष्टजयबोधकत्वसिद्धेस्तद्द्योतकत्वमात्रम् यथा प्रेत्युपसर्गस्याश्रीयते तथाऽनूत्तरभूत्वेन भूधातोरेव ज्ञानविशेषे शक्तिकल्पनया ज्ञानविशेषबोधकत्वादन्वित्यस्योक्तरीत्या द्योतकत्वमेवेत्यर्थः । यद्यपि उपसर्गाणां वाचकत्वमेव स्वसिद्धान्तः । 'समिति ह्युपसर्गेण परमुख्यार्थतोच्यते' 'उपसंक्रमणं चैव द्वितीयोद्देशितं प्रति । अतिक्रमं वदन्तं तमुपशब्दो निवर्तयेदि'ति तत्र तत्र भगवत्पादोक्तेः । युक्तिरिद्धश्चायमर्थः । गवादिशब्दानां स्वार्थ इव जिधातोरावापोद्वापाभ्यां जय इव प्रादेरपि प्रकर्षादावावापोद्वापाभ्यां शक्तिग्रहात् । प्रकृष्टजयप्रत्ययस्य च जयमात्रे क्लृप्तशक्तिक-

जिधातुसमभिव्याहारेणैवोपपत्तौ धातावेव प्रोत्तरजित्वेन प्रकृष्टजये शक्तिकल्पनस्य गौरवात् । जिपूर्वप्रत्वेन प्रशब्दस्यैव प्रकृष्टजये शक्तिकल्पनाप्रतिबन्द्या चानुत्थानात् । तथाऽपि अङ्गीकारवादोऽयमित्यदोषः । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः । निरवकाशैतद्ग्रन्थानुरोधेन कर्मनिर्णयटीकानुरोधेन च द्योतकत्वस्य उदाहृतभगवत्पादग्रन्थानुरोधेन वाचकत्वस्य चावगतेरुभयमपि सिद्धान्त एव । तत्रश्चोपसर्गविशेषाभिप्रायेणैव वाचकत्वद्योतकत्वयोः समावेशस्यावश्यकत्वादुपसर्गविशेषस्य वाचकत्वेऽप्युपसर्गविशेषस्य द्योतकत्वात्तदभिप्रायेणैव वाऽयं ग्रन्थः । तर्कताण्डवे वाचकत्वसमर्थनमप्युपसर्गविशेषाभिप्रायकमेवेत्यप्याहुः । यद्यप्यत्र वो युष्माकं भाः साक्षात्कारत्वेनाभिमतं ज्ञानमित्यभिप्रेत्य वा, 'प्राप्तौ भूकशुद्धिचिन्तयोरि'ति (कविकल्पद्रुमीयं धातुपठवचनम् इति शे. वा. र.) वचनात् चिन्तार्थकज्ञानात्मकोऽपि भूधातुरस्तीति वा, नाभाव उपलब्धेरिति पूर्वसूत्र इवात्रापि सूत्रे कर्तृसाधनो भावशब्दः सद्रूपज्ञानवाचक एव । विज्ञानवादे ज्ञानादन्यस्यासत्त्वेन तद्वाच्यत्वासंभवात् । ज्ञानमित्यनुक्त्वा भाव इत्युक्तिस्तु शून्यवादिनं प्रत्युक्तो दोषो नास्माकमिति पूर्वपक्षोत्थापनार्थमेवेति वा व्युत्पादनं कर्तुं शक्यते । तथाऽप्युपायान्तरमेतदुपदर्शितं टीकायामित्यदोषः ।

("भ्रुल युक्तौ भुक् भूञ् प्राप्तौ भूक् शुद्धिचिन्तयोः" इति कविकल्पद्रुमः ।)

स०— **उपसर्गा हि धातुलीनस्यार्थस्य व्यञ्जका एवेति** । अत्र उपसर्गविशेषस्य वाचकत्वेपि उपसर्गमात्रे तदभावाभिप्रायेण व्यंजका एवेत्युक्तम् । न तु वाचकत्वाभावाभिप्रायेण । अन्यथा 'समिति ह्युपसर्गेण परमुख्यार्थतोच्यत' इत्यादिना विरोधप्रसङ्गादिति द्रष्टव्यम् । ननु प्रजयतीत्यादौ प्रादिनोपसर्गेण प्रकर्षादिरूपार्थविशेषप्रतीतेः प्रादेः प्रकर्षादौ शक्तिरेव । गवादिशब्दानां स्वार्थ इव प्रादेरपि प्रकर्षादौ आवापोद्वापाभ्यां शक्तिग्रहात् । प्रकृष्टजयस्य जयमात्रे क्लृप्तशक्तिकजिधातुसमभिव्याहारेणोपपत्तौ धातावेव प्रोत्तरजित्वेन प्रकृष्टजये शक्तिकल्पने गौरवात् । शुक्लां गामानयेत्यादौ गोशब्द एव शुक्लोत्तरगोशब्दत्वेन शुक्लगवि शक्तिकल्पनाप्रसंगाच्च । प्रकृति प्रत्ययाभ्यां प्रत्यय–प्रकृत्योरिवोपसर्गेण साधुत्वार्थमेव धातोरपेक्षणेन अर्थबोधनार्थमनपेक्षणात् । अन्यथा प्रत्ययस्यापि तदापत्तेः । अत एव भगवत्पादैरपि 'समिति ह्युपसर्गेण परमुख्यार्थतोच्यते' इत्युक्तमिति चेन्न । उपसर्गविशेषस्य वाचकत्वेऽपि उपसर्गमात्रस्योपसन्दानत्वमेवेत्यभिप्रायात् ।

प०— **अनेनेति** । नो युक्तमित्यनेनेत्यर्थः । भाव इति सौत्रपदानुवादः । ज्ञानमिति व्याख्या । भावशब्दस्य ज्ञानार्थत्वं कथमित्यत आह **भवतेरिति** । 'प्राप्तौ भूः (?) शुद्धिचिंतयोरिति कविकल्पद्रुमोक्त्या चिंतार्थस्य भवतेरप्रत्यये भाव इति सिद्धिरिति चन्द्रिकोक्तरीत्या चिंतार्थत्वमुपेत्यानुभवार्थत्वादित्युक्तं । नन्वन्वित्युपसर्गयुक्त एव भवतिरनुभवार्थे दृष्ट इत्यत आह **उपसर्गा हीति** ।

एतच्चाभ्युपेत्यवादेन । वस्तुतस्तु वाचका एवोपसर्गाः । तर्कताण्डवे तथा निपुणतरमुपपादितत्वादिति ज्ञेयम् ॥

**या०— अनुभवार्थत्वादिति ।** धातूनामनेकार्थत्वादिति भावः । नन्वेवमन्वित्युपसर्गस्य वैयर्थ्यमित्यत आह **उपसर्गा हीति ॥ व्यञ्जका एवेति ।** धातुगतशक्ततावच्छेदकरूपोपसन्दानापरपर्यायद्योतका एवेत्यर्थः । यथा प्रजयतीत्यत्र जिधातोरेव प्रोत्तरजित्वेन प्रकृष्टजये शक्तिकल्पनात्प्रकृष्टजयद्योतकत्वं प्रेत्यस्य, एवं भूधातोरेवानूत्तरभूत्वेन ज्ञानविशेषे शक्तिकल्पनात् शक्ततावच्छेदकत्वरूपमुपसन्दानत्वापरपर्यायद्योतकत्वमेवानूपसर्गस्य, न पुनरर्थविशेषे शक्तत्वरूपं वाचकत्वमिति भावः । इदं च पररीतिमाश्रित्यैवोक्तं न वस्तुनः । 'उपसर्गेत्वतो वेस्तु' इत्यत्र वीत्यस्योपसर्गत्वेनोत्तरपदार्थविशेषकत्वादिति पूर्वमुक्तत्वात् । 'समिति ह्युपसर्गेण परमुख्यार्थतोच्यत' इति वक्ष्यमाणत्वाच्च । उपसर्गाणां यथा अर्थविशेषवाचकत्वमेव नोपसन्दानत्वं, तथा तर्कताण्डवे प्रतिपादितं तत्रैवानुसन्धेयम् । उपसर्गविशेषाभिप्रायेणैवैतदित्यन्ये ॥ वस्तुतस्तु पूर्वसूत्र इवात्रापि सूत्रे कर्तृसाधनेन भावशब्देन सद्रूपं ज्ञानमुच्यते । विज्ञानवादे ज्ञानादन्यस्यासत्त्वात् । ज्ञानमित्यनुक्त्वा भाव इत्युक्तिस्तु नासतोऽदृष्टत्वादिति शून्यवादिनं प्रत्युक्तो दोषो नास्माकमिति पूर्वपक्षोत्थापनार्थमिति चन्द्रिकानुसारेण भावशब्दार्थोऽवगन्तव्यः ।

**श्री०—** नन्वनुरूपोपसर्गपूर्वकस्यैव भवतेरनुभवार्थत्वं युक्तं न केवलं भवतेः । प्रकृते चानुरूपोपसर्गाभावात्कथमनुभवार्थत्वमत आह **उपसर्गा हीति ।** तथा च भवतेरेवानुभववाचकत्वमित्यर्थः । यथाऽऽहुः । 'धातावेव विलीनोऽर्थ उपसर्गेण काश्यते । प्रहाराहारसंहारविहारपरिहारवदिति' ॥

**च०— ॐ न भावोनुपलब्धेः ॐ ॥ उपसर्गा हीति ।** धातुगतशक्ततावच्छेदकत्वरूपसन्दानत्वापरपर्यायद्योतकत्वविशेषिता इत्यर्थः । मतान्तरदिशैवेदं न सिद्धान्तदिशा । तथैव तर्कताण्डवे समर्थितत्वादिति स्थितम् । प्रपञ्चितं चैतदन्यत्र ।

**सु०— कुतो न युक्तमिति चेत् । किं ज्ञेयं स्वरूपेणासदेव विज्ञाने समारोपितं विज्ञानात्मक(मित्यु)मुच्यते, किंवा परमार्थसत एव ज्ञेयस्य जगतो विज्ञानात्मकत्वं भेदमात्रं त्वसदिति । आद्यस्त्वतीताधिकरणरीत्या निरस्तः । न द्वितीयः जगतो ज्ञानाभेदे प्रमाणाभावात् । न तावत्तत्र प्रत्यक्षमस्तीत्याह न हीति ।**

**अनु०—** न हि ज्ञानतया जगत् ॥

भासते

अनेनानुपलब्धेरित्येतद्व्याख्यातं भवति ॥ मा भूत्प्रत्यक्षेण ज्ञानार्थयोरभेदसिद्धिः । प्रकाशमानत्वाद्यनुमा(नात्तु)नेन तु भविष्यतीत्यत आह अनुभवस्यैवेति ।

अनुभवस्यैव विरुद्धत्वादपेशलम् ॥

तन्मतम्

संबन्धमात्रे षष्ठी । एवशब्देनानुभवस्यानुमानतः प्राबल्यं सूचयति । तन्मतं तदभिमतमनुमानमिति शेषः । ज्ञानज्ञेययोरैक्यमिति (च) वा । ज्ञानज्ञेययोः स्फुटं भेदस्यैव साक्षिसिद्धत्वात्कालात्ययापदिष्टत्वमनुमानस्येत्यर्थः । अनेनानुपलब्धेरित्येतदुपलब्धिविरोधादिति च व्याख्यातम् ।

ननु भेदग्राहकं प्रत्यक्षं भ्रान्तमिति चेन्न । बाधकाभावात् । अनुमानं बाधकमिति तु न वाच्यम् । प्रत्यक्षस्यानुमानतो बलवत्त्वात् । अन्यथा कालातीततोच्छेदप्रसङ्गात् । प्रत्यक्षस्य भ्रा(न्ति)न्तत्वेऽनुमानप्रामाण्यं तस्मिंश्च सति प्रत्यक्षस्य भ्रान्तत्वमित्यन्योन्याश्रयत्वाच्चेति ।

शे० — ननु जगतो विज्ञानात्मकत्वं नाम तत्रारोपितत्वमेव ममाभिमतम् । तथा च न हीत्युत्तरदूषणासङ्गतिरित्यतो नैतत्पक्षदूषणपरमुत्तरवाक्यं किन्नाम विज्ञानाभिन्नमेव जगदिति पक्षनिरासपरमित्यतो नानुपपत्तिरित्यभिप्रेत्य जगतो विज्ञानात्मकत्वोक्तौ संभावितं पक्षद्वयं विकल्प्याद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतयोत्तरग्रन्थं योजयति किं ज्ञेयमित्यादिना ॥ निरस्त इति । जगतो भ्रान्तिकल्पितत्वस्य तत्र साधकाभावेन बाधकसद्भावेन निरस्तत्वादिति भावः । ननु 'न हि ज्ञानतया जगदि'ति ज्ञानजगतोरभेदस्य प्रत्यक्षत्वाभाववर्णनमनर्थकम् । न चैतत्तदभेदस्य प्रामाणिकत्वाभावसमर्थनार्थमिति वाच्यम् । तस्य प्रागनुक्ततया तदुपपादकत्वायोगादित्यतो द्वितीयपक्षनिरासहेतुतया तस्याभिप्रेतत्वात्तदुपपादकस्योत्तरग्रन्थस्य नानर्थक्यमित्यभिप्रायेणाभिप्रेतोपपादकतयोत्तरग्रन्थं योजयितुं द्वितीयपक्षनिरासं प्रतिज्ञाय तद्धेतुतया प्रमाणाभावं तावद्व्याचरयति न द्वितीयो जगत इति । तथाऽपि प्रत्यक्षाभावमात्रेण न प्रमाणाभावसिद्धिरतिप्रसङ्गादित्यतोऽत्र यावत्प्रमाणविशेषाभावस्यैव प्रमाणाभावसाधकतयाऽभिमतत्वान्नानुपपत्तिरिति भावेन तत्किं प्रत्यक्षमुतानुमानमिति प्रमाणविशेषविकल्पं मनसि निधाय प्रत्यक्षाभावोपपादकतया न हीति ग्रन्थं सङ्गमयति न तावदिति । द्वितीयपक्षमुत्थापयति मा भूदिति । प्रकाशमानत्वादीत्यादिपदेन नियतसहोपलम्भरूपहेतुपरिग्रहः । 'न लोकाव्ययनिष्ठाखलर्थतृनामि'ति निष्ठायोगे षष्ठीनिषेधात् निष्ठान्तविरुद्धशब्दयोगेऽनुभवस्येति कथं षष्ठीत्यतो नायं षष्ठीमात्रस्य निषेधः किन्तु कारकषष्ठ्या एव । अन्यथा 'ब्राह्मणस्य कुर्वन्नोदनस्य पचन् अपां पेररसि नरकस्य जिष्णवो गुणैरि'त्यादौ षष्ठ्यनुपपत्ति-

प्रसङ्गात् । तथा च निष्ठायोगे कारकषष्ठ्यनुपपत्तावपि शेषषष्ठ्या अप्रतिषेधादस्याश्च शेषषष्ठीत्वान्नानुपपत्तिरित्याशयेनाह **संबन्धमात्र इति** । एतच्च न लोकेति निषेधस्य नित्यत्वमभ्युपगम्यैवोक्तं न वस्तुतः । तृजकाभ्यामिति वक्तव्ये तृचः सानुबन्धकस्य ग्रहणात् ज्ञापकात्तस्यानित्यतया कारकषष्ठीपक्षेऽपि निषेधाप्रवृत्त्युपपत्तेरिति ध्येयम् । नन्वनुमानविरोधस्याप्युत्तरत्रोच्यमानत्वादनुभवस्यैवेति कथमवधारणमित्यतोऽस्य बाधकत्वोपयोगिप्राबल्यसूचकतयोत्तरनिषेधकत्वाभावान्नानुपपत्तिरित्याशयेनाह **एव शब्द इति** । अनुमाननिरासकताया मूलारूढतासिद्ध्यर्थमनुरूपं शेषं पूरयति **अनुमानमिति शेष इति** । प्रमाणाभावसमर्थनफलोपपादकतयाऽपि शेषं पूरयति **ज्ञानज्ञेययोरैक्यमिति (चे)वेति** । अत्र शेष इति वर्तते ।

बाधकमपि किं तदभेदग्राहकं प्रत्यक्षमभिमतं किंवा तदभेदसाधकतयोपन्यस्तमनुमानमिति विकल्पं मनसि निधाय न हि ज्ञानतया जगद्दृश्यत इति ज्ञानजगतोरभेदे प्रत्यक्षाभावस्य पूर्वमुपपादितत्वान्न तस्य बाधकत्वं संभवतीत्याशयेनाद्यं दूषयति **बाधकाभावादिति** । द्वितीयं दूषयति **अनुमानं हीति** । तत्कुत इत्यतो दुर्बलस्यानुमानस्य प्रबलप्रत्यक्षबाध्यतया तद्बाधकत्वायोगादित्याह **प्रत्यक्षस्येति** । प्रबलत्वं चानुमितिकारणस्य पक्षसाध्यहेतुव्याप्त्यादेरनुमितिस्वरूपतत्प्रामाण्यादेश्च प्रत्यक्षेणैव ग्राह्यत्वादुपजीव्यत्वेनेति द्रष्टव्यम् । अस्तु प्रबलस्यापि प्रत्यक्षस्य दुर्बलेनैवानुमानेन बाध इत्यतस्तथा सत्यग्न्यौष्ण्यप्रत्यक्षस्य तच्छैत्यानुमानेनैव बाधप्रसङ्गात्कालात्ययापदिष्टोच्छेदः स्यादित्याह **अन्यथेति** ॥ **अन्योन्याश्रत्वाच्चेतीति** । न चैवमनुमानस्य भ्रान्तत्वे सिद्धे प्रत्यक्षस्य प्रामाण्यसिद्धिस्तस्मिंश्च सत्यनुमानस्य भ्रान्तत्वसिद्धिरिति तवाप्यन्योन्याश्रयः स्यादिति वाच्यम् । अक्षस्य प्रबलतयाऽनुमानविरोधपरिहारमनपेक्ष्यैव प्रामाण्यस्थित्या तदनवकाशात् । 'न हि सिंहः शशशावकाभावमपेक्ष्य वनमवगाहते' इत्याशयात् ।

प० — **अतीताधिकरणरीत्येति** । 'न चाभावो विश्वं सदिति गम्यते । यत' इत्युक्तरीत्येत्यर्थः । नन्वनुभवस्य विरुद्धत्वादिति कथं । 'न लोकाव्ययनिष्ठाखलर्थतृनामि'ति सूत्रेण निष्ठाशब्दितक्तप्रत्ययान्तयोगे सति षष्ठी न भवतीति निषिद्धत्वेन कर्तृकारणयोस्तृतीयेति कर्तरि तृतीयया भाव्यत्वादित्यत आह **संबंधमात्रे षष्ठीति** । षष्ठी शेष इति सूत्रोक्तसंबंध[मात्रेण ]सामान्ये षष्ठी । न तु क्रियाकर्तृभावरूपसंबंधविशेषे । 'न लोकाव्ययनिष्ठे'तिसूत्रे च कर्तृकर्मणोः कृतीति सूत्रप्राप्तषष्ठ्या एव द्वितीयाध्यायद्वितीयपादे निषेधः न संबंधमात्रप्राप्तषष्ठ्या इति भावः ।

या० — ननु 'न लोकाव्ययनिष्ठे'ति षष्ठीप्रतिषेधात्कथमनुभवस्य विरुद्धत्वादिति निष्ठायोगे षष्ठीत्यत आह **सम्बन्धमात्र इति** । नात्र 'कर्तृकर्मणोः कृती'त्यनेन कर्तरि षष्ठी, येनोक्तनिषेधावसरः,

किन्तु षष्ठी शेष इत्यनेनैव। अत्र च न तन्निषेधप्राप्तिरिति भावः ॥ **सूचयतीति**। 'शब्दादेव प्रमितः' इत्यत्रैवेति भावः ।

**श्री०— आद्यरित्यति**। ज्ञेयं स्वरूपेण सदैव विज्ञाने आरोपितमित्येतत् 'नाभाव उपलब्धेः', 'वैधर्म्याच्च न स्वप्नादिवदि'त्यतीताधिकरणन्यायेन निरस्तमित्यर्थः ॥ **अनेनेति** । तथा चानुपलब्धेरित्यस्य ज्ञेयस्य ज्ञानात्मकतायाः प्रत्यक्षेणानुपलब्धेरित्यर्थः ॥ **अनुमानत इति**। यत्प्रकाशते तद्विज्ञानं, यथा ज्ञानं। प्रकाशन्ते च नीलादय इत्यनुमानादित्यर्थः । अन्यथाऽनुमानेनैव प्रत्यक्षस्य बाधे वह्निरनुष्ण इत्यनेनानुमानेनैव स्पार्शनप्रत्यक्षस्य बाधापत्त्या कालात्ययापदिष्टरूपबाधोच्छेदप्रसङ्गादित्यर्थः। 'प्रत्यक्षस्य भ्रान्तित्व इत्यनन्तरं तद्विरोधाभावादिति शेषः। 'तस्मिंश्च सती'त्यनन्तरं तद्विरोधादिति शेषः ॥

**च०— संबन्धमात्रे षष्ठीति**। कर्तृकर्मणोः कृतीति सूत्रविहितायाः कर्तृत्वत्वकर्मत्वत्वरूपविशेषधर्मावच्छिन्नान्वयबोधौपयिकाकांक्षाशालिन्याः षष्ठ्या एव 'न लोके'तिसूत्रेण निषेधो न तु संबन्धत्वरूपसामान्यधर्मावच्छिन्नान्वयबोधौपयिकाकांक्षाशालिन्या शेषः इति लक्षणालक्षितायाः इति भावः ।

**सु०— अनुमानविरोधं चानुमानस्य प्रतिपादयितुं सूत्रम्** ॐ क्षणिकत्वाच्च ॐ **इति**। **तद्व्याचष्टे** क्षणिकत्वाच्चेति ।

---

**अनु०— ॐ क्षणिकत्वाच्च ॐ ॥**

क्षणिकत्वाच्च ज्ञानस्य स्थिररूपतः ॥

ज्ञेयस्योक्तप्रकारेण

**आशुतरविनाशित्वादित्यर्थः। न च ज्ञानस्य क्षणिकत्वं भ्रान्तम्। अबाधितप्र(तीति)त्ययसिद्धत्वात्।** स्थिररूपतः आशुतरविनाशितारहित(त्वात्)त्वतः। **अनुस्मृतेश्चेत्याद्युक्तप्रकारेण। अत्र क्षणिकत्वाक्षणिकत्वलक्षणविरुद्धधर्माध्यासं भेदहेतुं वदताऽऽन्तरबाह्यत्वादिरनेको विरुद्धधर्मसंसर्ग उपलक्षितो बोद्धव्यः।**

**शे०—** ॐ **क्षणिकत्वाच्चेति** ॥ ननु ज्ञेयस्याशुतरविनाशित्वराहित्यासिद्धिरेवेत्यत उक्तं मूले 'उक्तप्रकारेणे'ति। तद्व्याचष्टे ॥ **अनुस्मृतेश्चेत्याद्युक्तप्रकारेणेति** ॥

**प०—** क्षणिकत्वाच्चेति हेतोरसिद्धिनिरासाय वा विरुद्धधर्म एव तात्पर्यं न तु क्षणवर्तित्व इति भावेन वार्थमाह **आशुतरविनाशित्वादित्यर्थ इति** । स्थिररूपत इत्यस्य नित्यत्वत इति भ्रमनिरासायाह **स्थिररूपत इति**। इत्याद्युक्तेत्यत्रादिपदेन 'आकाशे चाविशेषत' इत्याद्युक्तक्षणिकत्वानुमानग्रहः।

**सु०— एवं प्रत्येकं निराकृतानि बौद्धमतानि साधारणदोषेण दूषयितुं सूत्रम्** ॐ सर्वथाऽनुपपत्तेश्च ॐ **इति । तद्व्याख्याति** सर्वेति ।

**अनु०— ॥ ॐ सर्वथाऽनुपपत्तेश्च ॐ ॥**

सर्वश्रुतिविरोधतः ॥

अनुभूतिविरुद्धत्वादपि पक्षा इमेऽशिवाः ॥ २-२-९ ॥

**श्रुतिप्रामाण्यस्य समर्थितत्वादवैदिकं प्रत्यपि श्रुतिविरोधकथनं युक्तमेव । अभ्युपगतश्रुतिप्रामाण्यं (शिष्यं) प्रति वा । तेषां पक्षाणामशिवत्वमनेन ज्ञाप्यत इति । नन्वनुभूतिविरोधः प्रागुक्त एव पुनः कस्मादुच्यते । उपसंहारार्थमित्यदोषः । यद्वा तदीयप्रमेयान्तरेऽपीति ॥ २-२-९ ॥**

**शे०— ॐ सर्वथानुपपत्तेश्च ॐ ॥** ननु श्रुतिप्रामाण्यमनभ्युपगच्छन्तं प्रति कथं श्रुतिविरोधकथनमित्यत आह **श्रुतीति** । स्वागमप्रामाण्यस्य बौद्धेनाप्यङ्गीकारात्तदागमप्रामाण्याभ्युपगमन्यायेनैव तं प्रति श्रुतिप्रामाण्यसमर्थनादित्यर्थः ॥ **प्रागिति**। 'सत्त्वं चास्यानुभूतितः' 'अनुभवस्यैव विरुद्धत्वात्'इत्यादिनेति शेषः । उपसंहारार्थत्वमगतिकागतिरिति पूर्वत्रापरितोषादाह **यद्वेति** । तत्तद्वाद्युत्प्रेक्षितप्रागनिराकृतप्रमेयविशेष एवानुभवविरोधोऽत्रोच्यते । न तु प्राङ्निराकृतेऽर्थ इत्यपौनरुक्त्यमित्यर्थः ॥२-२-९॥

**प०— समर्थितत्वादिति** । न विलक्षणत्वाधिकरणे, 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हीतिजिज्ञासाधिकरणे वा समर्थितत्वादित्यर्थः ॥ २-२-९ ॥

**श्री०— प्रागुक्त एवेति** । 'अनुपलब्धेरि'त्यनेन सूत्रखण्डेनेत्यर्थः ॥ **'अनुभवस्यैव विरुद्धत्वादिति** । तस्यानुभवविरोधकथनपरतया व्याख्यातत्वादिति ज्ञेयम् ॥ **प्रमेयान्तरेऽपीति** । तथा च केशोल्लुञ्छनसप्तघटिकाभोजनादिरूपतदीयप्रमेयान्तरेऽप्यनुभवविरोधं वक्तुं प्रागुक्त एवानुभवविरोधपुनरुक्त इति न दोष इत्यर्थः ॥ २-२-९ ॥

॥ इति अनुपलब्ध्यधिकरणम् ॥

## ।। अथ नैकस्मिन्नधिकरणम् ।।

### ।। स्याद्वादिमतदूषणम् ।।

सु० — ॐ नैकस्मिन्नसंभवात् ॐ ।। जैनमतमत्र निराक्रियते । निराकार्यांशज्ञापनाय तदुपन्यस्यति आर्हेति ।

अनु० — ॐ नैकस्मिन्नसंभवात् ॐ ।।

आह क्षपणको विश्वं सदसद्द्वयमद्वयम् ।।

द्वयाद्वयमतत्सर्वं सप्तभङ्गि सदातनम् ।।

द्विविधं तावद्विश्वं, जीवाजीवात्मकं निरीश्वरम् । तत्पुनः षड्द्रव्यात्मकम् । तानि च द्रव्याणि जीवधर्माधर्मपुद्गलकालाकाशनामानि । तत्र जीवास्त्रिविधाः । बद्धा योगसिद्धा मुक्ताश्चेति । धर्मो गतिहेतुर्जगद्व्यापी । अधर्मः स्थितिहेतुर्व्यापक एव । पुद्गलो रूपरसगन्धस्पर्शवत् द्रव्यम् । तत् द्विविधम् । परमाणुरूपं सङ्घातरूपं च । कालः, अभूद्भवति भविष्यतीति व्यवहारहेतुरप्यणुरूपः । आकाश एकोऽनन्तप्रदेशश्च । स द्विविधो लोकाकाशोऽलोकाकाशश्चेति । (ए)तेष्वणुव्यतिरिक्तान्यस्तिकायशब्दानि । अनेकदेशवर्तिनि द्रव्येऽस्तिकायशब्द(प्र)वृत्तेः । ते च जीवास्तिकायो धर्मास्तिकायोऽधर्मास्तिकायः पुद्गलास्तिकाय आकाशास्तिकाय इति पञ्च ।

अत्र च मोक्षोपयोगिनः सप्त पदार्था जीवाजीवास्रवबन्धनिर्जरसंवरमोक्षाः । जीवो ज्ञानदर्शनसुखवीर्यगुणः । अजीवो जीवोपभोग्यं वस्तुजातम् । आस्रवः तद्भोगोपकरणमिन्द्रियादिकम् । बन्धो द्विविधः । घातिकाघातिकचतुष्टयभेदात् । आद्यं जीवगुणानां ज्ञाना(नन्दा)दीनां प्रतिबन्धकम् । द्वितीयं शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखदुःखहेतुभूतम् । निर्जरो मोक्षसाधनं तपः । संवर इन्द्रिय निरोधः)निग्रहः । मोक्षः स्वाभाविकात्मस्वरूपाविर्भावः । मोक्षग्रहणेनैव मोक्षमार्गोऽपि संगृहीतः । स च सम्यग्ज्ञानसम्यग्दर्शनसम्यक्चारित्र्याख्यरत्नत्रयात्मकः ।

तदेतद्विश्वं सप्तभङ्गि प्रत्येकं सप्तप्रकारकम(मित्य)ाह क्षपणकः । कथम् । सदित्येकप्रकारः । असदिति द्वितीयः । द्वयं सदसदात्मकमिति तृतीयः । अद्वयम् अवक्तव्यमिति चतुर्थः । द्वयाद्वयमिति पञ्चमषष्ठौ । तत्र सदवक्तव्यं चेति पञ्चमः, असदवक्तव्यं चेति षष्ठः । अतत्सर्वमिति सप्तमः । सर्वमिति सदसदात्मकम्, अतदिति अवक्तव्यम् ।

तर्हि किं कालभेदेन सप्तभङ्गिः; नेत्याह सदातनमिति । एतच्चोपलक्षणम् । नित्यत्वानित्यत्व-भिन्नत्वाभिन्नत्वादिरूपेणाप्यनेकान्तवादोऽवगन्तव्यः ।

**शे०— ॐ नैकस्मिन्नसम्भवात् ॐ ॥** स्याद्वादिमतं दूषयतीति भाष्यं मनसि निधायैतदधि-करणप्रतिपाद्यमाह **जैनेति** । तन्मतोपन्यासवैयर्थ्यं परिहरति **निराकार्येति** । पञ्चास्तिकायादिसाम-यिकपदार्थाश्रितन्यायाभाससन्दृब्धे मते बुद्धिस्थे सत्येव तन्निरसनस्य संभवादिति भावः । मूले विश्वस्य सप्तभङ्गित्वानुवादः क्रियते । स च पराभिमतविश्वशब्दार्थाज्ञाने दुर्ज्ञानो भवतीत्यतो विश्वशब्दगृहीता-नर्थान्दर्शयति **द्विविधमिति** । सङ्क्षेपत इति शेषः ॥ **जीवाजीवात्मकमिति** । भोक्तृभोग्यात्मकमित्यर्थः । आस्रवादीनाम् अजीवे, मोक्षस्य च पक्षभेदादुभयत्रान्तर्भावाद्युक्तं सङ्क्षेपतो द्वैविध्यमिति भावः । जीवाजीवात्मकत्वस्य सिद्धान्तेऽप्यङ्गीकारात्कथमस्य निरसनीयत्वमित्यतस्तत्प्रयोजकमाह **निरीश्वरमिति ॥ योगसिद्धा इति** । नित्यसिद्धा इत्यर्थः । तत्रार्हन्मुनिर्नित्यसिद्धः । इतरे केचित्साधनैर्मुक्ता अन्ये बद्धा इति भेदः ॥ **धर्मो गतिहेतुरिति** । गतिः प्रवृत्तिः हेतुर्ज्ञापकं प्रमाणमस्य स तथोक्तः । सम्यक्-प्रवृत्त्यनुमेय इत्यर्थः । शास्त्रीयबाह्यप्रवृत्त्या ह्यान्तरोऽपूर्वाख्यो धर्मोऽनुमीयत इति भावः ॥ **अधर्म इति** । स्थितिहेतुः स्थित्यनुमेय इत्यर्थः । ऊर्ध्वगमनशीलो हि जीवः तस्य देहेऽवस्थानेनाधर्मोऽनुमीयत इति भावः ॥ **तद्द्विविधमिति** । यद्यपि पृथिव्यादीनि चत्वारि भूतानि स्थावरं जङ्गमं चेति पुद्गलस्य षाड्विध्यमेव परेणोक्तमिति षड्विधमित्येव वक्तुमुचितम् । तथाऽपि कस्यचित्परमाणुरूपेऽन्यस्य च सङ्घातरूपेऽन्तर्भाव इत्यभिप्रायेण द्वैविध्यमेवोक्तमित्यवधेयम् ॥ **लोकेति** । तत्रोपर्युपर्यवस्थितानां लोका-नामन्तर्वर्ती लोकाकाशस्तदुपरि मोक्षस्थानमलोकाकाशस्तत्र लोकानामभावादित्यर्थः । **जीवास्तिकाय इत्यादि** । 'कै शब्दे' इति धातोरस्तीति काय्यते शब्द्यत इत्यस्तिकायो, जीवश्चासावस्तिकायश्चेति कर्म-धारयः । पूर्यते गिलतीति(?) पुद्गिलः, स चासावस्तिकायश्चेति तथोक्तः ।

जीवाजीवास्रवबन्धनिर्जरसंवरमोक्षा इत्येव मूलपाठः ॥ **आस्रव इति** । आस्रावयति पुरुषं ज्ञानजननेन विषयेष्विति नानाविधेन्द्रियादिकमास्रव इत्यर्थः ॥ **घातिकचतुष्टयभेदेति** । अत्र घात्येव घातिकमिति स्वार्थे कः । घातिकं च चतुष्टयं चेति विग्रहः । अत्र घातिकमित्यनेन चतुर्विधमपि घातिकर्म । चतुष्टयमित्यनेन चतुर्विधमप्यघातिकर्म ग्राह्यं तेन घात्यघातिकर्मत्वरूपेण बन्धो द्विविध इत्यर्थः । क्वचित्तु घात्यघातिकर्मचतुष्टयभेदादिति वा पाठः । स तु सुगम एव । पाठद्वयेऽपि बध्ना-तीति बन्धो बन्धकं कर्म अष्टविधमिति तात्पर्यार्थः । किं तद्घातिककर्मेत्यत आह **आद्यमिति** । जीव-गुणानां प्रतिबन्धकं कर्म घातिकमित्यर्थः । यद्यपि घातिकं कर्म चतुर्विधं ज्ञानावरणीयं दर्शनावरणीयं मोहनीयमान्तरीयमिति । तत्र 'सम्यग्ज्ञानं न मोक्षहेतुरि'ति विपर्ययो ज्ञानावरणीयं कर्मोच्यते ।

'आर्हतदर्शनाभ्यासान्न मुक्तिरि'ति विपर्ययो दर्शनावरणीयम् । 'बहुषु विप्रतिषिद्धेषु तीर्थकरैरुपदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं' मोहनीयम् । 'सन्मोक्षमार्गे प्रवृत्तानां तत्प्रत्यूहकरं विज्ञानम्' आन्तरीयकम् । एतच्चतुर्विधं कर्म श्रेयोहन्तृत्वाद्घातिकर्मोच्यत इति घातिकचतुष्टयस्य श्रेयोहन्तृत्वमिति तत्सिद्धान्तः । तथाऽपि ज्ञानदर्शनसुखवीर्यगुणकस्य जीवस्य ज्ञानादिगुणानां मोक्षदशायामाविर्भविष्यतां संसारदशायां प्रतिघातकानि प्रवाहानादीनि पापरूपाणि चत्वारि घातिकर्माणीति विधान्तरेण चातुर्विध्यपरतदेकदेशिमतमाश्रित्यायं तदनुवाद इति द्रष्टव्यम् । अघातिकर्मोदाहरति **द्वितीयमिति** । यद्यप्यघातिकर्म चतुर्विधं वेदनीयं नामिकं गोत्रिकमायु(मु)ष्कं चेति । तत्र ममेदं ज्ञातव्यमस्तीत्यभिमानो वेदनीयम्, एतन्नामाऽहमस्मीत्यभिमानो नामिकं, विशिष्टवंशे जनितोऽस्मीत्यभिमानो गोत्रिकं, शरीरयात्रानिमित्तं कर्मायु(मु)ष्कमिति वा, सक्रियस्य शरीरस्य पावकपवनवशादीषद्घनीभावो शरीराकारेण परिणामो वेदनीयं, तच्छक्तिमिति तस्मिन् बीजे कललाख्यद्रवावस्थाया बुद्बुदावस्थायाश्चारम्भकक्रियाविशेषो नामिकं, बीजस्य शरीराकारपरिणामशक्तिर्गोत्रिकं, शुक्लशोणितव्यतिकरे जाते मिलितं तदुभयमायु(मु)ष्कं, तदेतच्चतुर्विधं कर्म तत्त्वज्ञानाविघातकत्वेन निःश्रेयसहेतुपरिपन्थिहेतुत्वाभावादघातिकर्माणीति परसिद्धान्तः । तथाऽपि शरीरसंस्थातदभिमानतत्स्थितितत्प्रयुक्तसुखादिनिमित्तानि पुण्यमिश्रितत्वात्पुण्यरूपाणि चत्वार्यघातिकर्माणीति तदेकदेशिमतानुवादोऽयमित्यविरोध इति द्रष्टव्यम् ॥ **निर्जर इति** । निःशेषं पुण्यापुण्यं सुखदुःखोपभोगेन जरयतीति निर्जर इत्यर्थः । तच्च मलिनवीरासनतिष्ठद्भोजनतप्तशिलारोहणकेशोल्लुण्ठनादिरूपमिति द्रष्टव्यम् ॥ **संवर इति** । आस्रवः स्रोतोद्वारं संवृणोतीति संवर इत्यर्थः । स च शमादिप्रवृत्तिरूपो द्रष्टव्यः । **स्वाभाविकात्मस्वरूपाविर्भाव इति** । उपलक्षणं चैतत् । अर्हन्मुनिप्राप्तिः सततोर्ध्वगतिश्चेत्यपि द्रष्टव्यम् । यद्यपि मोक्षो न मोक्षोपयोगीति तदुपयोगिषु तद्गणनमनुचितमित्याभाति तथाऽपि तदुद्देशस्य मोक्षोपयोगित्वाभिप्रायेण तस्य तत्र गणनमित्यवधेयम् । कोऽसौ मोक्षमार्गो यो मोक्षग्रहणेन गृहीत इत्युच्यते इत्यतस्तमुपदर्शयति **स चेति** । आत्मविविक्तत्वादिरूपेण देहस्य देहादिविविक्तत्वेनात्मनो वा दर्शनमिह सम्यग्ज्ञानमभिमतं पुद्गलदर्शनमिति तृतीये वक्ष्यमाणत्वात् । सम्यक् चारित्र्यं चाहिंसैकस्वरूपो धर्मोऽभिमतः 'धर्मोऽहिंसापरो नान्यः' इति तत्रैव वक्ष्यमाणत्वात् । यद्यपि सम्यग्दर्शनं च यद्यपरोक्षज्ञानं तदा सम्यग्ज्ञानग्रहणेनैव गृहीतम् । यदि च स्वसमयपरिपालनं तदा सम्यक्चारित्र्यग्रहणेनैव गृहीतमिति न पृथग्ग्रहणं युक्तम् । अत एव च मोक्षस्य सम्यग्ज्ञानसम्यक्चारित्र्यसमुच्चयसाध्यत्वमेवेति तत्सिद्धान्तः । अत एव तृतीये मोक्षसाधननिराकरणप्रस्तावे 'अस्ति मोक्षोऽपि धर्मेण यथार्थज्ञानतोऽपि चे'ति साधनतया द्वयोरेवानुवादः । तथाऽपि गुणदोषचिन्तामकृत्वा यथास्थिततन्मतानुवादोऽयं कृत इत्यदोषः ।

के ते सप्तप्रकाराः कदा कदा च प्रसरन्तीत्याशयेन पृच्छति **कथमिति** । 'तद्विधानविवक्षायां स्यादस्तीति मतिर्भवेत् । स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते ॥ क्रमेणोभयवाञ्छायां प्रयोगः समुदायवान् । युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥ आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते । अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ॥ (स) समुच्चयेन युक्तश्च सप्तमो भङ्ग इष्यते'॥ इत्यनन्तवीर्योदीरितसप्तभङ्गप्रकारं मनसि निधाय 'सदसद्द्वयमद्वयम् । द्वयादद्वयमतत्सर्वमि'ति मूलोक्तान् सप्तप्रकारानुपदर्शयति **सदित्येकप्रकार इत्यादिना** । अत्र सप्तस्वपि भङ्गेषु स्यादिति पदं पूरणीयम् । ततश्च स्यात्सत् । स्यादसत् । स्यात्सदसत् । स्यादवक्तव्यम् । स्यात्सदवक्तव्यं च । स्यादसदवक्तव्यं च । स्यात्सदसदवक्तव्यं चेति सप्तप्रकारं सिध्यति । अवश्यं चैतदेवम् । 'स्यादस्ति, स्यान्नास्ति, स्यादस्ति नास्ति च, स्यादवक्तव्यं, स्यादस्ति चावक्तव्यं च, स्यान्नास्ति चावक्तव्यं च, स्यादस्ति च नास्ति चावक्तव्यं चे'ति क्षपणकोक्तेः । अत्र च स्याच्छब्दस्तिङन्तप्रतिरूपकोऽनेकान्तद्योतको निपातः । यथाऽऽहुः । 'वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम् । स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः' इति । यदि पुनरयमनेकान्तद्योतकः स्याच्छब्दो न भवेत् । स्यादस्तीति वाक्ये स्यात्पदमनर्थकं स्यात् तदिदमुक्तमर्थयोगित्वादिति । अनेकान्तद्योतकत्वे तु स्यादस्ति कथञ्चिदस्तीति स्यात्पदात्कथञ्चिदर्थोऽस्तीत्यनेनानुक्तः प्रतीयत इति नानर्थक्यम् । एवञ्च सत्त्वमसत्त्वं सदसत्त्वं सदसद्विलक्षणत्वम् । सत्त्वे सति तद्विलक्षणत्वम्, असत्त्वे सति तद्विलक्षणत्वम्, सदसत्त्वे सति सदसद्विलक्षणत्वमित्याद्यनियतसप्तप्रकारता विश्वस्योक्ता भवतीति द्रष्टव्यम् ॥ **एतच्चेति** । सदादिप्रकारैः सप्तभङ्गोपदर्शकं सदसदित्यादिभाष्यमित्यर्थः । **नित्यत्वानित्यत्वेत्यादि** । स्यान्नित्यं, स्यादनित्यं, स्यान्नित्यं चानित्यं च, स्यान्नित्यानित्यविलक्षणं, स्यान्नित्यं च तद्विलक्षणं च, स्यादनित्यं च तद्विलक्षणं च, स्यान्नित्यं चानित्यं च नित्यानित्यविलक्षणं च' इत्यादिरूपेणानियतसप्तप्रकारतावादोऽवगन्तव्य इत्यर्थः । भिन्नत्वाभिन्नत्वादीत्यादिपदेन भावत्वाभावत्वादिरूपपरिग्रहः ।

सू० — ॐ **नैकस्मिन्नसंभवात्** ॐ । **निराकार्यशङ्काज्ञापनायेति** । पञ्चास्तिकायादिसप्तविकपदार्थाश्रितन्यायाभाससंदर्ब्धे मते बुद्धिस्थे सत्येव तन्निरसनस्य संभवादित्यर्थः । **द्विविधमिति** । संक्षेपत इति शेषः । **जीवाजीवात्मकमिति** । भोक्तृ-भोग्यात्मकमित्यर्थः । आस्रवादीनामजीवे मोक्षस्य च पक्षभेदादुभयत्रान्तर्भाव इति युक्तं संक्षेपतो द्वैविध्यमिति भावः । जीवाजीवात्मकत्वस्य सिद्धान्तेऽप्यङ्गीकार्यत्वात् कथमस्य निरसनीयत्वमित्यतः तत्प्रयोजकमाह **निरीश्वरमिति** ॥ **योगसिद्धाः** नित्यसिद्धा इत्यर्थः । तत्र अर्हन्मुनिर्नित्यसिद्धः, इतरे केचित् साधनैर्मुक्ताः अन्ये बद्धा इति भेदः । **धर्मो गतिहेतुरिति** । गतिः प्रवृत्तिः हेतुः ज्ञापकं प्रमाणं यस्य । सम्यक्प्रवृत्त्यनुमेय इत्यर्थः ।

शास्त्रीयत्र ह्यप्रवृत्त्या हि आन्तरोऽपूर्वाख्यो धर्मोऽनुमीयत इति भावः । **अधर्म इति** । स्थितिहेतुः-स्थित्यनुमेय इत्यर्थः । ऊर्ध्वगमनशालो हि जीवः, तस्य देहे अवस्थानेनाधर्मोऽनुमीयत इति भावः । **तद्द्विविधमिति** । यद्यपि पृथिव्यादीनि चत्वारि भूतानि, स्थावरं जङ्गमं चेति पुद्गलस्य षाड्विध्यमेव परेणोक्तमिति षड्विध इत्येवानुवदनीयम् । तथापि कस्यचित्परमाणुरूपे अन्यस्य संघातरूपेऽन्तर्भाव इत्यभिप्रायेण द्वैविध्यमेवोक्तमिति ध्येयम् । **लोकाकाश इत्यादि** । तत्र उपर्युपरि स्थितानां लोकानामन्तर्वर्ती लोकाकाशः । तदुपरि मोक्षस्थानमलोकाकाशः । तत्र लोकानामभावादित्यर्थः । जीवास्तिकाय इत्यादि । 'कै शब्दे' इति धातोः अस्तीति काय्यते शब्द्यते इत्यस्तिकायः । जीवश्चासौ अस्तिकायश्चेति कर्मधारयः । पूर्यते गिलतीति पुद्गलः स चापावस्तिकायश्चेति बोध्यम् । जीवाजीवास्रवबन्धनिर्जरसंवरमोक्षा इत्येव मूलपाठः । मूलकोशेषु तथा दर्शनादिति बोध्यम् । **आस्रव इति** आस्रावयति गमयति पुरुषं ज्ञानजननेन विषयेष्विति नानाविधेन्द्रियवृत्तिरास्रव इत्यर्थः । **घातिकचतुष्टयभेदात्** । इति क्वचित्पाठः । तत्र घात्येव घातिकः । स्वार्थे कः । घातिकं चतुष्टयं चेत्येवं द्विविध इत्यर्थः । अत्र घातिकमित्यनेन चतुर्विधमपि घातिककर्म गृह्यते । चतुष्टयमित्यनेन चतुर्विधमपि अघातिककर्म गृह्यते । तेन घात्यघातिककर्मरूपेण बन्धो द्विविध इत्यर्थः । क्वचित् घात्यघातिककर्मचतुष्टयभेदादिति पाठः । तत्र तु स्पष्टैव योजना । पक्षद्वयेऽपि बन्धोऽष्टविध इति तात्पर्यार्थः । अत्र ज्ञानावरणीयं, दर्शनावरणीयं, मोहनीयम्, आन्तरीयमिति घातिककर्मणश्चातुर्विध्यं बोध्यम् ॥ सम्यग्ज्ञानं न मोक्षहेतुरिति विपर्ययो ज्ञानावरणीयं कर्म । आर्हतमताभ्यासान्न मुक्तिरिति विपर्ययो दर्शनावरणीयम् । बहुषु तीर्थङ्करदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयम् । सन्मोक्षमार्गे प्रवृत्तानां तत्प्रत्यूहकरं ज्ञानमान्तरीयम् । तेषां श्रेयोहन्तृत्वात् घातिककर्मत्वम् । वेदनीयं, नामिकं, गोत्रिकम्, आमुष्कमित्यघातिककर्मणश्चातुर्विध्यम् । मयेदं ज्ञातव्यमस्ति इत्यभिमानो वेदनीयम् । एतन्नामाऽस्मीत्यभिमानो नामिकम् । विशिष्टवंशे जनितोऽस्मीत्यभिमानो गोत्रिकम् । शरीरयात्रानिमित्तं कर्म आमुष्कम् । अथ वा सक्रियस्य (शरीरस्य) बीजस्य पावक-पवनवशात् ईषद्घनीभावे शरीराकारेण परिणामो वेदनीयम् । तच्छक्तिमति तस्मिन् बीजे कललाख्यद्रवावस्थाया बुद्बुदावस्थायाश्चारम्भकक्रियाविशेषो नामिकम् । बीजस्य शरीराकारपरिणामशक्तिर्गोत्रिकम् । शुक्र-शोणितव्यतिकरे जाते मिलितं तदुभयस्वरूपमामुष्कम् । तान्येतानि पुद्गलाश्रयत्वादघातिकानि कर्माणि । तदेतत्कर्माष्टकं बध्नातीति व्युत्पत्त्या बन्ध इति विवेकः । **निर्जर इति** । निश्शेषं पुण्यापुण्यं सुख-दुःखोपभोगेन जरयतीति निर्जरः । स च मलिन-वर्रासन-तिष्ठद्भोजन-तप्तशिलारोहण-केशोल्लुञ्चनादिरूपो द्रष्टव्यः । **संवर इति** । स्रोतोद्वारं संवृणोतीति संवर इत्यर्थः । स च शमादिप्रवृत्तिरूपो द्रष्टव्यः । **स्वाभाविकात्मस्वरूपा-**

**विर्भाव इति** । उपलक्षणं चैतत् । अर्हन्मुनिप्राप्तिः, सततोर्ध्वगतिश्चेत्यपि द्रष्टव्यम् । विश्वं सप्तभङ्गि प्रत्येकं सप्तप्रकारम् । के ते सप्तप्रकाराः, कदा च प्रसरन्तीत्यपेक्षायामाह **कथमिति** । 'तद्विधानविवक्षायां स्यादस्तीतिमतिर्भवेत् । स्यान्नास्तीति प्रयोगस्स्यात्तन्निषेधे विवक्षिते । क्रमेणोभयवाञ्छायां प्रयोगस्समुदायवान् । युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः । आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते । अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः । समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते ।' इति सप्तभङ्गप्रकारं मनसि निधायाह–सदित्येकः प्रकार इत्यादिना । वस्तुनिष्ठः सप्तभङ्गोऽपि अनेनैवोक्तो वेदितव्यः । तत्राद्यप्रकारत्रयं स्पष्टम् । अवक्तव्यमिति चतुर्थ इत्यनेन सदसद्विलक्षणमित्ययमर्थः (उक्तः) । सदवक्तव्यं चेत्यनेन सत्त्वे सति सद्विलक्षणत्वमित्यर्थः । असदवक्तव्यमित्यनेन असत्त्वे सति असद्विलक्षणत्वमित्यर्थः । अतत्सर्वमित्यादेश्च सदसत्त्वे सति सदसद्विलक्षणत्वमित्यर्थः । तदनेन कथं सप्तप्रकाराः कदा च प्रसरन्तीति शङ्काद्वयनिरास इति बोध्यम् । तत्त्वप्रदीप सन्न्यायरत्नावल्योस्तु द्वितीय एव सप्तभङ्गतया उक्तः । अत्र च द्विविधोऽपीति अधिकोक्तावपि न विरोधः । टीकायां तु सत्स्यादिति भाष्यानुसारेण द्वितीय एव सप्तभङ्गतया उक्तः । अत्र तु 'सद-द्वयम्' इत्याद्यनुव्याख्यानस्योभयथाऽपि व्याख्यातुं शक्यत्वात् द्विविधस्यापि तस्योक्तिरिति भेदः ।

प० — ॐ **नैकस्मिन्नसंभवात्** ॐ ॥ सप्तभङ्गित्वाद्यंश एव विवाद इति भ्रमनिरासाय वा शिष्याणां प्रतिज्ञानाय वा विश्वमिति मूलोक्तविश्वरूपं तन्मतेऽनुवदति **द्विविधं तावदिति** ॥ **हेतुरिति** । प्रवृत्तिहेतुरित्यर्थः ॥ व्यापीति व्यापक, एवेति अ योऽर्थास इत्यर्थः ॥ **रूपरसेति** । तेजोजलपृथिवीवायुरूपभूतचतुष्टयमित्यर्थः ॥ **एतेष्विति** । षड्द्रव्येष्वित्यर्थः ॥ **अस्तिकायशब्दानीति** । अस्तिकायेतिशब्दो येषां तानीति बहुव्रीहिः । कुत एतच्छब्दत्वमेतेषामित्यत आह **अनेकदेशवर्तिनीति** । कालस्याणुत्वेन कालास्तिकाय इत्यभावादाह **इति पञ्चेति** ॥ **आद्यमिति** । घातकशब्दितबन्धनमित्यर्थः ॥ **द्वितीयमिति** । चतुष्टयशब्दितमित्यर्थः । शरीसंस्थानं च तदभिमानं च तत्स्थितिश्च तत्प्रयुक्तसुखदुःखे च तेषां चतुर्णां हेतुभूतमित्यर्थः ॥ **अतदिति** । सदसदात्मकत्वे सति सदसद्विलक्षणमिति सप्तम इत्यर्थः । व्यक्तीकृत एष सप्तभङ्गिप्रकारश्चन्द्रिकायाम् । **अनेकान्तवाद इति** । अनैयत्यवाद इत्यर्थः ।

या० — ॐ **नैकस्मिन्नसम्भवात्** ॐ ॥ मूले विश्वमित्यनूद्य तस्य सप्तभङ्गित्वमाहेत्युच्यते । इदं च तदभिमतविश्वशब्दार्थाज्ञाने सुज्ञानं न भवतीत्याशयेन तन्मते विश्वशब्दगृहीतानर्थान्दर्शयति

**द्विविधं तावदित्यादिना ॥ रूपरसेति** । पृथिव्यादिभूतचतुष्टयं स्थावरं जङ्गमं चेत्यर्थः ॥ **लोकाकाश इत्यादि** । उपर्युपरि स्थितानां लोकानामन्तर्वर्ती लोकाकाशः । तेषामुपरि मोक्षस्थानमलोकाकाशः । तत्र लोकानामसत्त्वात् ॥ **अनेकदेशवर्तिनीति** । अत एवानुभूतकालस्य, नास्तिकायशब्दवाच्यत्वमित्यर्थः । तथा चास्तिकायशब्दो न्यायनये समवायशब्द इव तन्मते पारिभाषिक एव न त्वभिधानादिसिद्ध इति भावः ॥ **आस्रव इति** । आस्रावयति पुरुषं विषयेष्विति इन्द्रियादिकमास्रवशब्दवाच्यमित्यर्थः । आस्रवयतीत्यास्रव इत्यन्ये । **बन्ध इति** । बन्धक इत्यर्थः ॥ **घातकचतुष्टयेति** । घातकं च चतुष्टयं चेति विग्रहः ॥ **प्रतिबन्धकमिति** । अज्ञानमिथ्याज्ञानादिकमित्यर्थः । **शरीरसंस्थानेति** । शरीरसंस्थानं च तदभिमानश्च तत्स्थितिश्च तत्प्रयुक्तसुखदुःखे च तेषां हेतुभूतं कर्मेत्यर्थः । तथा चैतेषां चतुर्णां हेतुभूतं यत्कर्मचतुष्टयं तच्चतुष्टयशब्देन विवक्षितमिति भावः ॥ **निर्जरो मोक्षसाधनमिति** । निःशेषं जरयति बन्धमिति व्युत्पत्तेरिति भावः । तच्च तपोमलपङ्कधारणास्नानमौनवीरासनतिष्ठद्भोजनतप्तशिलारोहणकेशोन्मूलनादिरूपमिति ज्ञातव्यम् ॥ **संवर इति** । संवृणोतीन्द्रियद्वारमिति व्युत्पत्तेरिति भावः ॥ **मोक्ष इति** । फलज्ञानस्यापि प्रवर्तकत्वमभिप्रेत्य मोक्षोपयोगिमध्ये मोक्षोऽपि परिगणित इति ध्येयम् । स च मोक्षमार्गः । सम्यग्दर्शनशब्देन पुद्गलस्य देहस्यात्मविविक्तत्वेन दर्शनं पुद्गलस्यात्मनो देहविविक्तत्वेन वा दर्शनं विवक्षितम् । स्वसमयनियमपरिपालनमेव सम्यग्दर्शनशब्देन विवक्षितमित्यप्याहुः । सम्यक् चारित्र्यं चाहिंसाप्रधानको धर्मः । 'धर्मोऽहिंसापरो नान्यो ज्ञानं पुद्गलदर्शनमि'ति वक्ष्यमाणत्वात् । अद्वयमित्यस्यार्थः **अवक्तव्यमिति** । अनिर्वचनीयं सदसद्विलक्षणमित्यर्थः । **सदवक्तव्यं चेति** । सत्त्वे सति सद्विलक्षणमित्यर्थः ॥ **असदवक्तव्यं चेति** । असत्त्वे सत्यसद्विलक्षणं चेत्यर्थः ॥ **अतदित्यवक्तव्यमिति** । तथा चातत्सर्वमित्यस्य सदसदात्मकत्वे सति सदसद्विलक्षणमित्यर्थ इति भावः । **अनैकान्तवाद इति** । अनियमवाद इत्यर्थः ।

**श्री०— ॐ नैकस्मिन्नसंभवात् ॐ ॥ गतिहेतुः** मोक्षहेतुः । **स्थितिहेतुः** संसारहेतुः । **संघातरूपं** साधनरूपं, कार्यरूपम् । **अणुरूपः** सूक्ष्मः । **अणुव्यतिरिक्तानि** कालव्यतिरिक्तानि ॥ **ते चेति** । अस्तिकाया इत्यर्थः । षण्णां द्रव्याणां मध्ये कालातिरिक्तपञ्चद्रव्याण्यस्तिकायशब्दवाच्यानीत्याह **जीवास्तिकाय इत्यादिना** ।

**च०— ॐ नैकस्मिन्नसंभवात् ॐ** ॥ अस्तिकायशब्दानीति बहुव्रीहिः ।

**सु०— अत्र सप्तभङ्गित्वनिरासार्थं** नैकस्मिन्नसंभवादिति **सूत्रं व्याचष्टे** नैतदिति ।

**अनु०—** नैतत्पदार्थ एकस्मिन्युक्त दृष्टिविरोधतः ॥

एतत्सप्तप्रकारत्वं कुतः । असंभवात् । सोऽपि कथं; दृष्टिविरोधतः । सर्वं हि स्वोपाधौ सत् परोपाधावसत् । स्वरूपेण भावोऽन्यात्मत्वादिनाऽभावः । द्रव्यरूपेण नित्यमवस्थाभेदेन अनित्यम् । स्वरूपादिनाऽभिन्नं स्वगुणादिना भिन्नाभिन्नमित्येव प्रतीयते । नातोऽन्येन प्रकारेण । अतो व्यवस्थया नियमग्राहकप्रत्यक्षादिविरोधेनासंभवादयुक्तमेवानेकान्तमतमिति ।

शे०— उक्तप्रतिज्ञायामसंभवहेतोः सूत्र एवोक्तेर्दृष्टिविरोधत इति भाष्ये तदभिधानमनर्थकमित्याशङ्क्य सौत्रहेतूपपादनार्थत्वेन स्वतन्त्रहेतुत्वमिध नत्वाभावान्नानुपपत्तिरित्याशयेन हेत्वाकाङ्क्षोत्थापनपूर्वकं सौत्रहेतुं व्यापार्य तदुपपादकतया तमुपपादयितुं हेत्वाकाङ्क्षामुत्थापयति कुत इतीति ॥ व्यवस्थयेति । अनेनोत्तरग्रन्थानुरोधेन दृष्टिपदं व्यवस्थया नियमग्राहकदृष्टिपरं तच्च प्रमाणमात्रोपलक्षणमित्युक्तं भवति ।

प०— कुत इत्याकांक्षायां सौत्रं हेतुमाह असंभवादिति । दृष्टिविरोधत इति ॥ स्वोपाधाविति । अत्रोपाधिशब्द आश्रयपरः । द्रव्यरूपेणेति । विशेष्यरूपेण नित्यं कार्यात्मना त्वनित्यमित्यर्थः । दृष्टिपदं प्रमाणमात्रपरमिति भावेनाह प्रत्यक्षादीति ।

या०— द्रव्यरूपेणेति । विशेष्यरूपेणेत्यर्थः । यद्वा प्रकृतिरूपेणेत्यर्थः । अवस्थाभेदेनेति । कार्यविशेषात्मनेत्यर्थः । स्वरूपेति । घटस्वरूपं पटस्वरूपेणेत्यर्थः ।

---

सु०— नन्वेकान्तदर्शनस्य मिथ्यादृष्टित्वेन न तद्विरोधोऽसंभवमाहवर्तीत्यत आह भावेति ।

अनु०— भावाभावतया विश्वं येन रूपेण मीयते ॥
तद्रूपमेव तदिति नियमः केन बाध्यते ॥

येन रूपेणेत्यस्यैव विवरणं भावाभावतयेति । तच्च व्यवस्थितसदसत्त्वाद्युपलक्षणं बोद्धव्यम् । यद्वा भावाभावतयाऽन्येन च येन सत्त्वादिना रूपेणेति योजना । अथवा येन भावाभावतया रूपेणेति सामानाधिकरण्येन योज्यम् । यदि वा भावाभावतयेत्यस्य विशेषणमेतत् । येन व्यवस्थितेन रूपेणेति । केन प्रमाणेनेत्याक्षेपः । भवेदेतन्नियमदर्शनस्य मिथ्यादृष्टित्वम् । यदि दृष्टस्य नियमस्य निवारकमनेकान्तसाधकं प्रबलप्रमाणं स्यात् । न चैतदस्ति । न च बाधकेन विना प्रत्ययानां मिथ्यात्वं कल्पयितुं युक्तमतिप्रसङ्गादिति ।

शे०— मूले येन रूपेण मीयत इत्येतावता पूर्तेर्भावाभावतयेत्यस्य वैयर्थ्यमाशङ्क्य परिहरति येन रूपेणेत्यस्यैव विवरणमिति । अल्पविषयकत्वाद्भावाभावतयेत्यस्य येन रूपेणेति बहुविषयकव्याख्यानत्वमनुपपन्नम् । तथा सति वासः परिधत्ते यत्क्षौममित्यादाविव विशेषविषयव्याख्यानानु-

सारेण सामान्यविषयस्य व्याख्येयस्यापि विशेषविषयकत्वस्थित्या भावत्वाभावत्वरूपेणानेकान्तवादापेक्षया रीत्यन्तरेणानेकान्तवादाभावप्रसङ्गादित्यतो व्याख्यानस्यापि व्यवस्थितसत्त्वासत्त्वाद्युपलक्षणत्वाश्रयणान्ना-नुपपत्तिरित्याशयेनाह **तच्चेति** । अत्र पक्षे व्याख्यानव्याख्येयभावो व्याख्यानस्योपलक्षणत्वं चाश्रयणीयं भवतीत्यपरितोषात्पक्षान्तरमाह **यद्वेति** अस्मिन्नपि व्याख्याने मूले चशब्दस्यान्येनेत्यस्य चाध्याहारक-ल्पनाप्रसङ्गादपरितुष्यन्नाह **अथवेति** । अत्रापि येन रूपेणेत्येतावता पूर्वेरितरवैयर्थ्यमित्यपरितोषादाह **यदि वेति** । किमस्य विशेषणस्य प्रयोजनमित्यतो भावत्वाभावत्वादेः प्रकारस्य स्वरूपेण भावोऽन्या-त्मत्वादिनाऽभाव इति प्रागुक्तरीत्या व्यवस्थितत्वोपदर्शनमेव तत्प्रयोजनमिति भावेन तत्तात्पर्यमाह **येनेति** ॥ **आक्षेप इति** । न केनापि प्रमाणेनेत्याक्षेप इत्यर्थः । तथाऽप्येकान्तदर्शनस्य भ्रमत्वादिति पूर्वशङ्कायाः कथं परिहार इत्यतो वाक्यतात्पर्यमाह **भवेदिति** । एकान्तदर्शनं यदि भ्रमः स्यात्तर्हि बाध्येतेत्यभिप्रेते तर्केऽप्रयोजकत्वमाशङ्क्य परिहरति **न चेति** ॥ **अतिप्रसङ्गादिति** । शुक्तिरजतप्रत्यय-स्येव सत्यरजतप्रत्ययस्यापि भ्रमत्वं स्यादित्यतिप्रसङ्गादित्यर्थः ।

**या० — एकान्तदर्शनस्येति** । नियमदर्शनस्येत्यर्थः । **असंभवम्** । अनेकान्तवादस्येति शेषः । **व्यवस्थितेति** । स्वस्वरूपेण भावः, अन्यात्मत्वेन अभाव इति व्यवस्थितेत्यर्थः ।

**सु० — नियमस्य बाधकमाशङ्कते** तत्तदिति ।

---

अनु० — तत्तद्दोषनिवृत्त्यर्थं स्वीकृता तत्तदात्मता ॥
यदि

**सद्वादिनो हि सत्त्वं विश्वस्य प्रमाणैः प्रातिष्ठिपंस्तदनङ्गीकारे दोषांश्च न्यरूरुपन् । एव-मसद्वादिनोऽप्यसत्त्वस्थापनं तदनङ्गीकारे दूषणं च व्युत्पादितवन्तः । तथाऽन्येऽपि स्वपक्ष-साधनं तदनभ्युपगमे बाधनं च कृतवन्तः । तथा च यदि स(त्य)त्वं नाङ्गीक्रियते तदा तु तदुपन्यस्तं प्रमाणमुपरुध्येत दूषणं चानुषज्जेत । एवमसत्त्वाद्यनङ्गीकारेऽपि । अतस्तद्दोष-परिहारार्थं तत्तत्प्रमाणानुसरणार्थं च तत्तदात्मता विश्वस्य मया स्वीकृता । तथा चानेकान्ते प्रबलप्रमाणसद्भावात्कथं नियमे बाधकाभाव इति । परिहरति** तैरिति ।

तैरखिलैर्दोषैर्लिप्यते चलदर्शनः ॥

**तर्हीति शेषः ।**

**शे० — तत्तत्प्रमाणानुसरणार्थं चेति** । अनेन तत्तद्दोषनिवृत्त्यर्थमित्युपलक्षणमित्युक्तं भवति ॥ **तर्हीति शेष इति** । पूर्वत्र यदीत्युक्तेरिति भावः ।

प०— 'तत्तद्दोषनिवृत्त्यर्थमि'त्येतत् तत्तत्साधकप्रमाणस्याप्युपलक्षणं मत्वा व्याचष्टे सद्वादिनो हीति । प्रातिष्ठिपन् प्रतिष्ठापितवन्त इत्यर्थः । प्रपूर्वात्तिष्ठतेर्ण्यन्तस्य लुङि रूपम् ।

सु०— इदमत्र वक्तव्यम् । सद्वादिमतानुसरणसमयेऽसत्त्वादिभङ्गीरङ्गीकरोषि (वा) न वेति । एवमसद्वादिचरणशरणप्रवेशवेलायां सत्त्वादिप्रकारानूरीकरोषि वा न वेति । एवमन्येष्वपि पक्षेषु विकल्पः । यद्याद्यस्तदाऽसौ अचलदर्शनः सदा सकलपक्षाङ्गीकारवान् तैर्दोषैरखिलै-(तैरखिलैर्दोषै)र्लिप्यते । तथा हि । सद्वादिनो हि न केवलं सत्त्वे प्रमाणं तदनङ्गीकारे च दूषणं च व्युत्पाद्य निवृत्ताः । किन्त्वसत्त्वादिपक्षेषु दोषानपि व्युत्पादितवन्तः । एवमसद्वादिनोऽपि नासत्त्वे प्रमाणं तदनभ्युपगमे बाधकं चाभिधायैवोपरताः, किन्नाम सत्त्वादिपक्षेषु दोषानपि उपपादितवन्तः । एवमन्येऽपि । तथा च सकलपक्षकक्षीकारे (तु) तत्तद्वाद्युक्तपक्षान्तरदोषलेपः कथं न स्यात् ॥ अथ मन्यसे । न ते दोषाः किन्त्वाभासाः । ते च नानेकान्तवादं बाधन्त इति । तदा कथं तानि प्रमाणानि । अनङ्गीकारे दोषाश्च नाभासाः । ( ये नानुम)-येनानुसरणीयाः । तस्मात्तत्तद्वादिव्युत्पादितप्रमाणाद्यनुसारेण सप्तभङ्गीरङ्गीकुर्वाणेन तदुक्तविपक्षदोषानुसारेण तत्परित्यागोऽपि कार्यः स्यात् । तथा चाङ्गीकारपरित्यागाभ्यामुभयत आकृष्टोऽयं कष्टां दशामाविष्टः स्यात् ॥ नन्वनेकान्तो द्वेधा । क्रमाक्रमभेदात् । तत्र क्रमानेकान्ते तावन्नाङ्गीकारपरित्यागौ विरुद्धौ । अक्रमानेकान्तेऽपि येन रूपेण नित्यत्वं तेनैवानित्यत्वमित्याद्यनङ्गीकारान्न विरोधः । तथा च सप्तभङ्ग्यङ्गीकारिणा मया तानि प्रमाणानि दूषणानि च व्यवस्थापितानि भवन्तीति नोक्तदोषः । मैवम् । तत्तत्प्रमाणादीनां व्यवस्थानर्हत्वात् । न खलु तत्तत्प्रमाणवा द्वादिभिस्तानि तानि प्रमाणादीनि सावकाशान्युपन्यस्तानि । तस्मात्सर्वेष्वपि (वादिषु) वादेषु परमास्तिकस्य कथितैव गतिः ॥ अपि चैवमपि सप्तभङ्ग्यङ्गीकारो निर्मूल एव । न ह्येवंवादिनो वादिनः प्रसिद्धाः । संभावनया तदङ्गीकारे च न सप्तत्वपरिनिष्ठा । संभावनावका(को शस्य निःसीमत्वात् ॥ किञ्च सर्वाङ्गीकारपक्षे स्यादस्ति च नास्ति चेति पक्षात्स्यादस्ति स्यान्नास्तीति पक्षद्वयं न भिद्यते ।

द्वितीयपक्षे तु चलदर्शन इत्येव दूषणम् । अपसिद्धान्ती स्यादिति ।

तदेवं सप्तभङ्ग्यङ्गीकारः प्रमाणविरुद्धोऽप्रामाणिकश्चेत्युक्तम् ॥ अखिलैर्दोषैर्लिप्यत इत्यनेन परस्परव्याहतिश्चेत्यपि सूचितम् ।

शे० — ननु सत्त्वपक्षाङ्गीकारसमयेऽसत्त्वादिपक्षाणामनभ्युपगमान्नायं दोष इत्यतोऽङ्गीकारपक्ष एवायं दोष इत्यतो नानुपपत्तिरित्यभिप्रेत्य संभावितपक्षद्वयं विकल्प्य आद्यपक्षदूषणतया ग्रन्थं योजयितुमाह **इदमत्रेत्यादिना** । ननु तत्तत्पक्षाङ्गीकारमात्रेणैव तत्तदुपन्यस्तप्रमाणानुसरणस्य तत्तद्दूषणाननुषङ्गस्य चोपपन्नत्वात्कथमखिलदोषलिप्तत्वं तस्येत्यतो नात्र दोषशब्देन तत्तदनङ्गीकारे निरूपितदोषोऽभिमतः, येन तदङ्गीकारमात्रेण तन्निवृत्तेः कथं दोषलिप्तता तस्येति शङ्क्येत, किन्नाम तदतिरिक्त एवेत्यतो नानुपपत्तिरित्यभिप्रेत्य तदुपपादयितुं प्रतिजानीते **तथा हीति** ॥ **कथितैव गतिरिति** । अङ्गीकारपरित्यागाभ्यामुभयत आकृष्टोऽयं कष्टां दशामापन्नः स्यादित्युक्तैव गतिरित्यर्थः ॥ **संभावनाकोशस्येति** । सत्त्वे सत्यसद्विलक्षणत्वं सत्त्वे सति सदसद्विलक्षणत्वमसत्त्वे सति सद्विलक्षणत्वमसत्त्वे सति सदसद्विलक्षणत्वं सदसत्त्वे सति सद्विलक्षणत्वं सदसत्त्वेऽसत्यसद्विलक्षणत्वमित्यादीनामनेकेषां प्रकाराणां संभवादिति भावः ॥ **स्यादस्ति च नास्ति चेति पक्षादिति** । स्यात्सदसदिति पक्षात्स्यात्सत्स्यादसदिति मिलितं पक्षद्वय न भिद्यत इत्यर्थः । युगपत्सर्वभङ्गयङ्गीकारपक्षे स्यात् दसदिति तृतीयपक्षाङ्गीकारेणैव स्यात्सत्स्यादसदिति आद्यपक्षद्वयाङ्गीकारसिद्धेः पुनस्तत्स्वीकारो व्यर्थः । तत्परित्यागे च सप्तभङ्गयङ्गीकारभङ्ग इति भावः ।

**द्वितीयेति** । सत्त्वपक्षाङ्गीकारसमयेऽसत्त्वादिभङ्गानङ्गीकारोऽसत्त्वाङ्गीकारसमये च सत्त्वादिप्रकाराणामनङ्गीकार इति प्राग्विकल्पितद्वितीयपक्ष इत्यर्थः ॥ **व्याहतिश्चेत्यपीति** । 'व्याहतं सदे'त्युत्तरत्र व्याहतत्वस्यापि कथनादिदमुक्तमित्यवधेयम् ।

स० — **कथितैव गतिरिति** । अङ्गीकारपरित्यागाभ्यामुभयत आकृष्टोऽयं कष्टां दशामाविष्टः स्यादित्युक्तैव गतिरित्यर्थः । **संभावनाकोशस्येति** । सत्त्वे सति असद्विलक्षणत्वम्, सत्त्वे सति सदसद्विलक्षणत्वम् , असत्त्वे सति असद्विलक्षणत्वम् , असत्त्वे सति सदसद्विलक्षणत्वम् , सदसत्त्वे सति सद्विलक्षणत्वम् , सदसत्त्वे सति असद्विलक्षणत्वमित्यादीनामनेकेषां प्रकाराणां संभवादिति भावः ।

प० — **कथं तानि प्रमाणानीति** । किन्त्वाभासानीति योज्यम् ॥ **अनङ्गीकार इति** । तदुक्तप्रमाणानामाभासतानङ्गीकार इत्यर्थः । ये इति विभागः ॥ **कष्टां दशामिति** । कृच्छ्रावस्थां प्राप्तवान्भवेदित्यर्थः । **क्रमानेकान्त इति** । इदानीं सत्त्वं पश्चादसत्त्वमित्येवं क्रमानेकान्त इत्यर्थः ॥ **कथितैव गतिरिति** । अङ्गीकारपरित्यागाभ्यामित्यादिनोक्तैव गतिरित्यर्थः ॥ **एवमपीति** । तत्तद्वाद्युक्तप्रमाणानुसरणाद्यर्थमनेकान्तवादावतारेपीत्यर्थः ॥ **एवं वादिन इति** । सदसदात्मकं सत्वे सति सद्विलक्षणमित्यादिप्रकारं ब्रुवाण इत्यर्थः ॥ **स्यादस्ति च नास्ति चेति पक्षादिति** । सदसदात्मकमिति पक्षादित्यर्थः ॥ **स्यादस्ति स्यान्नास्तीति पक्षद्वयमिति** । सदिति पक्षोऽसदिति

पक्षश्चेति पक्षद्वयमित्यर्थः । एकदैवानेकविधाङ्गीकारवादे सदसदात्मकमित्युक्तस्यैव (क्तेऽस्यैव)सदिति पक्षस्य सदितिपक्षस्य च प्राप्तेरिति भाव । स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्त(व्यं च) व्यश्च स्यादस्तिचावक्त(व्यं)व्यः स्यान्नास्ति चावक्त(व्यं च)व्यश्च स्यादस्ति च नास्तिचावक्त(व्यं चे)व्यश्चेत्यादिसप्तभङ्गीसंग्राहकपरकीयवाक्यं चन्द्रिकायां स्पष्टं व्याख्यातम् ॥ **द्वितीयपक्षे त्विति** । अङ्गीकारोपि वा न वेति प्राग्विकल्पितद्वितीयपक्षे त्वित्यर्थः ।

**या० — कष्टां दशामाविष्ट इति** । व्याहतभाषी स्यादित्यर्थः ॥ **कथितैव गतिरिति** । अङ्गीकारपरित्यागाभ्यामुभयत आकृष्टोऽयमित्यादिना कथितैव गतिरित्यर्थः ॥ **स्यादस्ति च नास्ति चेति पक्षादिति** । सदसत्स्यादिति पक्षात् सत्स्यादसत्स्यादिति पक्षद्वयं मिलितं न भिद्यत इत्यर्थः । युगपत्सर्वभङ्ग्यङ्गीकारपक्षे यदा सदसदिति पक्षोऽङ्गीकृतः, तदा सदित्यसदिति पक्षद्वयं स्वीकृतमेवेति पुनस्तदङ्गीकारो व्यर्थस्तत्परित्यागे च सप्तभङ्ग्यङ्गीकारभङ्ग इति भावः । ननु सदित्येकः प्रकारोऽसदिति द्वितीयः सदसदात्मक इति तृतीय इति पूर्वमुक्तत्वात्तथैव व्यवहर्तव्यम् । स्यादस्तीत्यादिविलक्षणव्यवहारः कथमिति चेत् । उच्यते । पूर्वं शिष्याणां सुबोधाय तच्छास्त्रीयशब्दानामर्थानुवाद एव कृतः, इदानीं स्वात्मनस्तदभिज्ञत्वद्योतनाय तच्छास्त्रीयशब्दैरेव व्यवहृतमिति न कोऽपि दोषः । ते च शब्दाः स्यादस्ति, स्यान्नास्ति, स्यादवक्तव्यः, स्यादस्ति च नास्ति च, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति सप्तभङ्गीप्रतिपादकास्तच्छास्त्रीया ज्ञेयाः । अत्र स्याच्छब्दस्तिङन्तप्रतिरूपको निपातोऽनेकान्तद्योती । यथाऽऽहुः 'वाक्येष्वनेकान्तद्योती गम्यं प्रति विशेषणम् । स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः' इति । तथा च स्यादस्तीत्यादौ वाक्ये स्याच्छब्दात्कथञ्चिदर्थोऽस्तीत्यादिभिरनुक्तः प्रतीयते । तेनानियमरूपोऽनेकान्तिको,न्तोऽवगम्यत इति ॥ **व्याहतिश्चेत्यपीति** । व्याहतं सदेत्युत्तरत्रानुवादादिदमुक्तमिति ज्ञातव्यम् ।

**श्री० — येनेति** । यदि तानि प्रमाणानि नाभासभूतानि तत्पक्षानङ्गीकारे च तेनोक्ता दोषाश्च यदि नाभासास्तर्ह्येव ते पक्षा अनुसरणीया इत्यर्थः ॥ **तदुक्तविपक्षेति** । सत्त्वे प्रमाणमभिधाय तद्विपक्षेऽसत्त्वपक्षे दूषणमुक्तवन्तः, अतस्तद्दोषानुसारेणासत्त्वपक्षपरित्यागोऽपि कार्यः स्यादित्यर्थः ॥ **कथितैव गतिरिति** । अङ्गीकारपरित्यागाभ्यामुभयत आकृष्टोऽयं कष्टां दशामाविष्टः स्यादित्युक्तैव गतिरित्यर्थः । **एवं वादिनः** विश्वं सदेवेति वादिनः । असदेवेति वादिनः । सदसदेवेति वादिनः । सदसद्विलक्षणमेवेति वादिनः । सत्त्वे सति सद्विलक्षणमेवेति वादिनः । असत्त्वे सत्यसद्विलक्षणमेवेति वादिनः । सदसत्त्वे सति सदसद्विलक्षणमेवेति वक्तारो वादिनो न हि प्रसिद्धाः, येन तद्वाग्युक्तप्रमाणानुसरणाय सप्तभङ्गिता विश्वस्य त्वयाऽङ्गीकार्या स्यादित्यर्थः ॥

सु० — **एवंभूतस्यापि सप्तभङ्गिनयस्य स्वीकारेऽतिप्रसङ्गं चाह** अतिहायेति ।

**अनु०** — अतिहाय प्रमाणाप्तनियमं सदसत्तया ॥
अशेषमाविरुद्धं च निर्मानं व्याहतं सदा ॥
सर्वप्रकारं वदतो दृष्टहानिरमग्रहः ॥
स्वव्याहतत्वमित्याद्या दोषाः सर्वे भवन्ति हि ॥

**अशेषमाविरुद्धं** वदत **इत्यस्योपपादनं** व्यवस्थितया सदसत्तया प्रमाणाप्तनियममतिहायेति । **सर्वे प्रकारा यस्य विश्वस्य तत्तथोक्तम् । सर्वश्चासौ प्रकारश्चेति वा । ननु क्रमानेकान्ते तावत्कालभेदेन न** व्याघातः । **अक्रमानेकान्तेऽपि रूपभेदेनेत्यत उक्तं** सदा सर्वप्रकारं वदत इति । **सदेति रूपाभेदस्याप्युपलक्षणम् ।**

**शे०** — प्रमाणविरुद्धत्वस्याशेषमाविरुद्धं वदत इत्यनेनैव कथनादप्रामाणिकत्वस्य च निर्मानमित्यनेनैव कथनात् 'अतिहाय प्रमाणाप्तनियममि'त्यादिभाष्यखण्डस्य वैयर्थ्यमित्यत आह **अशेषेति** । अन्यपदार्थप्रधानत्वेन बहुव्रीहेर्जघन्यत्वात्तदाश्रयणमनुपपन्नमित्यरुचेराह **सर्वश्चासाविति ॥ कालभेदेनेति** । एकस्मिन्नेव भूतले एकस्यापि घटस्य कालभेदेन सत्त्वासत्त्वोपलम्भेन तयोरविरुद्धत्वात्कालभेदेन विश्वस्य सत्त्वासत्त्वे युज्येते इत्यर्थः ॥ **रूपभेदेनेति** । तत्र तदैव नीलपटसद्भावेऽपि पीतपटाभावदर्शनात्प्रकारभेदेन सत्त्वासत्त्वयोरप्यविरोध इति भावः । ननु सदा सर्वप्रकारवादित्वात्कालभेदेन व्याघातपरिहारासंभवेऽपि रूपभेदेन व्याघातपरिहारः स्यादेवेत्यतः सदेत्यस्य रूपाभेदोपलक्षणत्वेन रूपभेदाभावस्यापि लाभान्न रूपभेदेनापि व्याघातपरिहारसिद्धिरित्यभिप्रेत्य सदेत्येतद्रूपाभेदोपलक्षणतया योजयति **रूपाभेदस्यापीति** ।

**प०** — **रूपभेदेनेति** । येन रूपेण सत्त्वं ततोऽन्येन रूपेणेत्येवं रूपभेदेनेत्यर्थः ॥ **रूपाभेदस्यापीति** । रूपभेदेनेति यदुक्तं तदभावस्यापीत्यर्थः ।

**या०** — **रूपभेदेनेति** । केनचिद्रूपेण सत्केनचिद्रूपेणासदित्यादिरूपेणेत्यर्थः ।

**श्री०** — **रूपभेदेनेति** । येन रूपेण सत्त्वं तेनैव रूपेणासत्त्वं नोच्यते, किन्तु रूपान्तरेणेत्यर्थः । **क्रमानेकान्ते** क्रमेण, अक्रमानेकान्ते रूपभेदेन ।

सु॰— अयमाशयः । यदि क्रमेण वा रूपभेदेन वाऽनेकप्रकारत्वम् तदा नायमनेकान्तवादः समर्थनीयः । सर्वैरपि वादिभिरङ्गीकृतत्वात् । न हि कोऽपि वादी पदार्थानां कालतो रूपतश्चावस्थावैचित्र्यमनङ्गीकुर्वाणोऽस्ति । यं प्रत्यनेकान्तवादावतारः सङ्गच्छेत । केवलं क्षणभङ्गो वाऽत्यन्तसत्कार्यवादो वाऽवस्थावस्थावतोरत्यन्तभेदो वाऽपाकरणीयः । अतः अनेकान्तवादमवतारयता क्षपणकेन सदा रूपाभेदेनैव च सर्वप्रकार(क)त्वमित्येव वक्तव्यम् । तथा च न व्याघातनिस्तार इति ।

शे॰— 'न हि कोऽपि वादी पदार्थानां कालतो रूपतश्चावस्थावैचित्र्यमनङ्गीकुर्वाणोऽस्ती'त्ययुक्तम् असद्वैभाषिकसांख्यवैशेषिकादीनामेव तथाभूतानां सत्त्वात् । न हि वैभाषिकमते एकस्यैव वस्तुनः कालतोऽवस्थावैचित्र्यरूपानेकान्तत्वमुपपद्यते । तैः पदार्थानां क्षणिकत्वस्याङ्गीकृतत्वेन पूर्वोत्तरकालयोर्वस्तुन एकत्वस्यैवाभावात् । नापि सांख्यमते तत्संभवति । कार्यावस्थाया अपि पूर्वं विद्यमानाया एवाभिव्यक्तिरिति कत्यन्तसत्कार्यवादिना तेनाङ्गीकृतत्वेनावस्थावैचित्र्याभावात् । वैशेषिकादिमतेऽपि न तत्संभवति । अवस्थायास्तद्वतश्चात्यन्तभेदस्यैव तैरङ्गीकृतत्वेन पूर्वोत्तरावस्थयोः परस्परमत्यन्तभेदात् तद्वतोरपि परस्परमत्यन्तभेदसिद्ध्या एकस्मिन्नवस्थावैचित्र्यालाभ दित्यत आह केवलं क्षणभङ्ग इत्यादिना । त्वदुक्तानेकान्तवादानङ्गीकारबीजानां क्षणिकत्वादीनां निराकरणे तदङ्गीकारस्य तेषामप्यौचित्या वर्जितत्वेन प्राप्ततया तान्प्रत्यपि त्वदीयमुक्तानेकान्तवादोपपादनं व्यर्थमेवेति भावः ।

प॰— तद्यपाकरणीयाभावान्मम मूकतैव स्यादित्यत आह केवलं क्षणभंगो वेति । वैभाषिकसांख्यवैशेषिकैः क्रमादङ्गीकृत इति भावः । निस्तार इतीतिशब्दस्यायमाशय इत्यनेनान्वयः ।

या॰— कालतो रूपतश्चावस्थावैचित्र्यलक्षणमनैकान्त्यमनङ्गीकुर्वाणो वादी कोऽपि नास्तीत्ययुक्तम् । साङ्ख्यवैभाषिकनैयायिकादीनामेव तथाभूतानां सत्त्वात् । न हि वैभाषिकमते एकस्यैव वस्तुनः कालतोऽवस्थावैचित्र्यरूपमनैकान्त्यमुपपद्यते । तैः पदार्थानां क्षणिकत्वस्याङ्गीकृतत्वेन पूर्वोत्तरकालयोर्वस्तुन एकत्वस्यैवाभावात् । नापि सांख्यमते तत्सम्भवति । कार्यावस्थाया अपि पूर्वविद्यमानाया एवाभिव्यक्तिरित्यत्यन्तसत्कार्यवादिना तेनाङ्गीकृतत्वेनावस्थावैचित्र्याभावात् । नैयायिकादिमतेऽपि न तत्सम्भवति । अवस्थायास्तद्वतश्चात्यन्तभेदस्यैव तैरङ्गीकृतत्वेन पूर्वोत्तरावस्थयोः परस्परमत्यन्तभेदे तद्वतोरपि परस्परमत्यन्तभेदप्राप्त्यैकस्मिन्नवस्थावैचित्र्यालाभादित्यत आह . केवलं क्षणभङ्ग इत्यादि । त्वदुक्तानैकान्तवादानङ्गीकारबीजानां क्षणिकत्वादीनां निराकरणे तदङ्गीकारस्य तेषामप्यौचित्या वर्जितत्वेन प्राप्ततया तान्प्रत्यपि त्वदीयमुक्तानैकान्त्योपपादनं व्यर्थमेवेति भावः ।

श्री० — क्षणभङ्ग इति । जैनानां मते जगतः स्थायित्वादिति भावः । रूपाभेदेन । येन रूपेण सत्त्वं तेनैव रूपेणासत्त्वमिति रूपाभेदेनेत्यर्थः ।

सु०— अशेषमाविरुद्धं सदा सर्वप्रकारत्वं वदतो दृष्टहानिः स्यात् । निर्मानं च सदा सर्वप्रकारं वदतो अमग्रहो अप्रामाणिकस्वीकारः स्यात् । व्याहतं सदा सर्वप्रकारं वदतः स्वव्याहतत्वं स्यादिति योजना । दृष्टहानाद्यनुषङ्गिदोषान्तरसंग्रहार्थमित्याद्या इत्युक्तम् ॥ हिशब्दः सर्वत्र प्रसङ्गहेतुसूचनार्थः । अयमर्थः । यदि प्रमाणविरुद्धमपि सर्वप्रकारत्वं विश्वस्य स्वीक्रियते तदा दहनशैत्यं वा गवालम्भनादेर्धर्मसाधनत्वादिकं वा(चा)ऽङ्गीकार्यं स्यात् । प्रमाणविरोधेन प्रतिपक्षनिराकरणं च न स्यात् । किन्तु प्रत्यभिज्ञादिविरुद्धमपि क्षणिकत्वादिकमङ्गीकर्तव्यं स्यात् । अविशेषात् । यदि चाप्रामाणिकमपि सर्वप्रकारत्वमुररीक्रियते तदा खरविषाणादिकं वा गोमांसादिभक्षणस्य धर्मसाधनत्वं चोररीकरणीयं स्यात् । प्रमाणाभावेन परमतनिरासोऽपि न कार्यः स्यात् । तद(प्य)भ्युपगमनीयमेव भवेदविशेषात् । तथा च दूष्योपादेयहीनस्य शास्त्रनिर्माणमपि न स्यात् । यदि च व्याहतमपि सर्वप्रकारत्वमङ्गीकुर्यात् तदा मातुरपि वन्ध्यात्वं, जिनोपदेशस्य प्रमाणतयाऽभ्युपगतस्याप्यप्रामाण्यं, बद्धस्यापि मुक्तत्वं, मुक्तस्यापि बद्धत्वं, सिद्धस्यापि रागित्वं, श्वपचस्यापि सिद्धत्वमित्यादिसर्वमप्यङ्गी(कुर्यात्)कार्यं स्यात् । अन्यथाऽनेकान्तभङ्गप्रसङ्गात् । एवञ्च न शास्त्रप्रणयनप्रयासः कार्यः । मत्तोन्मत्तादिभिरेवास्य कृतत्वादिति ॥

शे०— अशेषमाविरुद्धत्वादिकमपि दृष्टहान्यादित्रिके प्रत्येकं हेतुरिति भ्रमनिरासाय हेतुहेतुमद्भावमुपदर्शयति अशेषेत्यादिना योजनेत्यन्तेन ॥ हेतुसूचनार्थ इति । अविशेषलक्षणस्यानेकान्तभङ्गप्रसङ्गलक्षणस्य च हेतोः सूचनार्थ इत्यर्थः । आद्यशब्दसंगृहीतमनुषङ्गिदोषान्तरमेव दर्शयितुमाह अयमर्थ इत्यादिना । तर्कमूलभूतव्याप्तिवैकल्यात्तर्काभासतामाशङ्क्य विशेषव्याप्त्यभावेऽपि यदविशिष्टस्य यस्य यद्भवति तदविशिष्टस्यापरस्यापि तद्भवतीत्यविशेषव्याप्तिसद्भावान्न तर्काभासतेत्याह अविशेषादिति । इतीत्यस्येत्ययमर्थ इति पूर्वेण संबन्ध इति ॥ वर्तत इति । अनुवर्तत इत्यर्थः ।

स० — आनुषङ्गिकदोषान्तरसंग्रहार्थम् इत्याद्या इत्युक्तमित्युक्तम् । तदेव दोषान्तरं वक्तुमाह—अयमर्थ इति ।

प० — वाक्यं योजयति अशेषमाविरुद्धमित्यादिना ॥ हेतुसूचनार्थ इति । अविशेषादिति हेतुसूचनार्थ इत्यर्थः । आनुषंगिकदोषं हेतुं च दर्शयितुं प्रतिजानीते अयमर्थ इति ॥ प्रतिपक्षेति ।

परपक्षेत्यर्थः ॥ **अन्यथेति** । मात्रादेर्मातृत्वाद्येकप्रकारांगीकार इत्यर्थः ॥ **अस्य कृतत्वादिति** । व्याहतवाक्यप्रबंधस्येत्यर्थः ॥ **सप्तभंगित्वभंगः** ॥

**या०— हेतुसूचनार्थ इति** । अविशेषलक्षणस्यानेकान्तभङ्गप्रसङ्गलक्षणस्य च हेतोः सूचनार्थ इत्यर्थः । आद्यशब्दसंगृहीतं दोषान्तरं दर्शयितुमाह **अयमर्थ इति** ॥

**श्री०— प्रसङ्गे हेत्विति** । दृष्टहानेरमग्रहस्य स्वव्याहतत्वस्य च प्रसङ्गे आपादने । अविशेषानेकान्तभङ्गलक्षणहेत्वोः सूचनार्थो हिशब्द इत्यर्थः । अनुषङ्गिदोषान्तरं सूचितहेतुं च वक्तुमाह **अयमर्थ इति** । तदेत्यारभ्याविशेषादित्यन्तेन दृष्टहान्यनुषङ्गिदोषान्तरं कथितम् । यदि वेत्यारभ्य निर्माणमपि न स्यादित्यन्तेनाप्रामाणिकस्वीकाररूपामग्रहानुबन्धिदोषान्तरमुक्तम् । यदि चेत्यारभ्य कृतत्वादितीत्यन्तेन स्वव्याहतत्वानुबन्धिदोषान्तरमुक्तमिति ध्येयम् । अविशेषादनेकान्तभङ्गप्रसङ्गादिति हिशब्दसूचितहेतुप्रदर्शनं कृतमिति ज्ञातव्यम् ॥

**सु०— एवं विश्वस्य क्षपणकोक्तं सर्वप्रकारत्वं निराकृत्य तदुक्तमर्थान्तरमपि निराकर्तुमनुवदति** वक्तीति ।

**अनु०—** वक्ति स्वप्रभमात्मानं देहमानम्

**क्षपणक इति वर्तते । स्वप्रभं स्वप्रकाशं, देहस्य मानं परिमाणमिव मानं यस्यासौ तथोक्तः । अत्र देहमानत्वमेव विप्रतिपन्नोऽर्थः । स्वप्रभत्वं तु सम्मतमेवास्माकम् ॥ यद्वा स्वप्रभमिति क्रियाविशेषणम् । विना प्रमाणेन स्वीयया प्रभयोत्प्रेक्ष्यैव वक्तीति ॥ अथवाऽनेन देहपरिमाणत्वे जैनोक्तं प्रमाणाभासमनुवदति । तत्र स्वशब्देन स्वीयो देह उच्यते । तत्र प्रभा यस्यासौ तथोक्तः । तथा च प्रयोगः । देवदत्तात्मा, तद्देह एव, तत्र सर्वत्रैव च विद्यते । तत्रैव तत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलम्भात् । यो यत्रैव, यत्र सर्वत्रैव स्वासाधारणगुणाधारतयोपलभ्यते; स तत्रैव, तत्र सर्वत्र च विद्यते । यथा देवदत्तगृह एव तत्र सर्वत्रैव चोपलभ्यमानस्वासाधारणभास्वरत्वादिगुणः प्रदीपः । तथा चायं तस्मात्तथेति । अन्यथा कमनीयतनयालिङ्गनेन सर्वत्राल्हा(दा)क(द)करस्य (स्व)सुखस्याननुभवप्रसङ्गः । तथा च सर्वाङ्गीणरोमाश्वादिकार्यानुदयः स्यादिति । यद्वा प्रदीपस्येव स्वानपायिनी प्रभा यस्यासौ स्वप्रभ इति ।**

**शे०—** स्वप्रभं देहमानमित्यनुवादादुभयमपि विप्रतिपन्नमिति भ्रान्तिनिरासायाह **अत्रेत्यादिना** । एवं तर्हि स्वप्रभमित्यनुवादवैयर्थ्यमित्यपरितोषान्नेदं स्वप्रकाशत्वानुवादपरं किन्तु देहमानत्वस्य

स्वोत्प्रेक्षामात्रमूलकत्वाभिधानमेवेति न तद्वैयर्थ्यमिति भावेन तत्परतया योजयति **यद्वेति** । परेणानुमानावष्टम्भेनैवात्मनो देहमानत्वसमर्थनान्न स्वोत्प्रेक्षामात्रमूलकत्वाभिधानत्वमपि तस्य युक्तमिति पूर्वत्रापरितोषात्पराभिप्रेतानुमानसमर्पकतयाऽपि तद्व्याचष्टे **अथवेति** ॥ **अनुवदतीति** । सूचयतीत्यर्थः । कोऽसौ जैनोक्तो देहमानत्वसाधकः प्रमाणाभासो यत्सूचकतया स्वप्रभमित्यस्य सार्थक्यमित्यतस्तमाह **तथा चेति** ॥ **तद्देह एवेत्यादिना** । अत्रात्मनो व्याप्तत्वसिद्धयाऽर्थान्तरवारणायाद्य एवकारः । अणुत्वसिद्धयाऽर्थान्तरवारणाय सर्वत्रेत्युक्तम् । व्याहतिपरिहारायोक्तं तत्रेति । एवमग्रेऽपि हेत्वादौ तत्रेत्युक्तिर्व्याहतिपरिहारायेति ज्ञातव्यम् । देहापेक्षया किञ्चिन्न्यूनमध्यमपरिमाणसिद्धिव्युदासायान्त्य एवकारः । सर्वत्रैव नात्र सङ्कोच इत्यर्थः । एवञ्च युक्ताऽऽत्मनो देहमानत्वसिद्धिः । हेतौ तु घटाद्यवच्छिन्ने आत्मनि सुखाद्यनुभवाभावेनासिद्धिवारणाय तत्रेति । तद्देह एवेत्यर्थः । तत्र सर्वत्रोपलभ्यमानशब्दाश्रयेऽपरिच्छिन्नदेहगताकाशे व्यभिचारवारणायाद्य एवकारः । स्वासाधारणस्पर्शाधारतयोपलभ्यमाने देहाव्याप्ते प्राणवायौ व्यभिचारवारणाय सर्वत्रेत्युक्तम् । चरमैवकारस्तु सर्वत्रेत्यस्य न सङ्कोच इति ज्ञापयन् तत्सङ्कोचशङ्कया प्राणवायावेव व्यभिचारवारणायेति द्रष्टव्यम् । अत्र दृष्टान्ताभावेन विशेषतो व्याप्त्यसम्भवात्सामान्यव्याप्तिं दर्शयति **यो यत्रेति** । अत्र गृहे विद्यमानाकाशे व्यभिचारवारणायाद्य एवकारः । गृहैकदेशे वर्तिनि स्तम्भादौ तद्वारणायोक्तं तत्र सर्वत्रेति । सर्वशब्दे सङ्कोचशङ्कया तद्वर्तिनि तादृशवस्तुविशेषे व्यभिचारपरिहारायान्त्य एवकारः । प्रदीप इत्यनन्तरं तत्रैव तत्र सर्वत्रैव विद्यत इति शेषः । प्रदीपो यद्यप्येकदेशवर्त्येव तथाऽपि तदभिन्नप्रभायाः सर्वत्र विद्यमानत्वात्तदभिप्रायेण तत्र सर्वत्र विद्यमानत्वोक्तिरियमिति ज्ञातव्यम् । उपनयनिगमने दर्शयति **तथा चेति** । अप्रयोजकतामाशंक्य हेतूच्छित्तेरेव विपक्षे बाधकत्वान्न तदवकाश इति भावेनाह **अन्यथेति** ॥ **आल्हादेति** । अत्राल्हादशब्दो विकाररूपविकारपर इति ज्ञातव्यम् ॥ **सुखेति** । अनेन मूले प्रभाशब्दः सुखानुभवपर इत्युक्तं भवति । अत्रापीष्टापत्तिमाशंक्याह **तथा चेति** ।

'भौतिकं त्वेव रूपादी'त्युत्तरानुव्याख्यानप्रवृत्त्यौपयिकतयाऽपि स्वप्रभमित्येतद्व्याख्याति **यद्वेति** । अनेन प्रभाशब्दः पक्षे दृष्टान्ते च कान्तिविशेषपर एवेत्युक्तं भवति ।

प० — **स्वीयया प्रभयेति** । तस्मै हितमिति हिताद्यर्थे च्छप्रत्ययेन स्वीयशब्दनिर्वाहश्चन्द्रिकाव्याख्याने प्रदर्शितः । विभुत्वाविभुत्वसिद्ध्या चार्थान्तरनिरासाय क्रमात्तद्देह एवेति तत्र सर्वत्रैव चेति विशेषणद्वयं । देहेपि क्वचित्संकोचवारणाय सर्वत्रैवेत्येवशब्द इत्येके । स्पष्टार्थमित्यन्ये ॥ **स्वासाधारणगुणेति** । सुखं वा तदनुभवो वा तादृशो गुण इति भावः । शब्दरूपासाधारणगुणाधारतया सर्वत्रोपलभ्यमाने व्योम्न्यव्यभिचाराय तत्रैवेत्युक्तिः । स्पर्शगुणेन तथोपलभ्यमाने प्राणवायावव्यभिचाराय तत्र

सर्वत्रैवेत्युक्तिरित्याहुः ॥ **अन्यथेति** । सर्वदेहव्यापित्वाभावे इति विपक्षे बाधकतर्कोक्तिरित्येके । हेतोः पक्षधर्मोपपादकमेतदित्यन्ये । अत्राह्लादशब्देन सर्वशरीरगतविकारविशेषो ग्राह्यः ।

**या०— तद्देह एव तत्र सर्वत्रेति** । अत्रात्मनो व्याप्तत्वसिद्ध्याऽर्थान्तरवारणायाद्य एवकारः । अणुत्वसिद्ध्याऽर्थान्तरवारणाय **सर्वत्रेत्युक्तम्** । तद्देह एव सर्वत्रैव इत्यनयोः व्याहतिपरिहाराय **तत्रेति** । एवमग्रेऽपि हेत्वादौ तत्रेत्युक्तिर्व्याहतिपरिहारायैवेति ज्ञातव्यम् । देहापेक्षया किञ्चिन्न्यूनमध्यमपरिमाण-सिद्धिवारणायन्त्य एवकारः । सर्वत्रैव, नात्र सङ्कोच इत्यर्थः । एवं चात्मनो देहमानत्वमेव सिध्यतीति ज्ञातव्यम् । हेतौ तु घटाद्यवच्छिन्ने आत्मनि सुखाद्यनुभवाभावेनासिद्धिवारणाय **तत्रेति** । तद्देह एवेत्यर्थः । तत्र सर्वत्रोपलभ्यमानशब्दाश्रये वस्तुतोऽपरिच्छिन्ने देहगताकाशे व्यभिचारवारणायाद्य एवकारः । स्वासाधारणस्पर्शाधारतयोपलभ्यमाने देहाव्याप्ते प्राणवायौ व्यभिचारवारणाय **सर्वत्रेत्यु-क्तम्** । चरमैवकारस्तु सर्वत्रेत्यस्य न सङ्कोच इति ज्ञापयन्हेतोरभिमतसाध्यसिद्ध्यङ्गस्योपपादकः । अत्र दृष्टान्ताभावात्सामान्यतो व्याप्तिं दर्शयति **यो यत्रेति** । अत्र गृहे विद्यमानाकाशे व्यभिचारवारणायाऽऽद्य एवकारः । गृहैकदेशस्थे स्तम्भादौ तद्वारणाय यत्र सर्वत्रेत्युक्तम् । न्यूनतापरिहारायान्त्य एवकारः । प्रदीप इत्यनन्तरं तत्रैव तत्र सर्वत्रैव विद्यत इति शेषः । प्रदीपाभिन्नायाः प्रभाया गृहे सर्वत्र विद्यमान-त्वात्प्रदीपस्तत्र सर्वत्र विद्यत इत्युक्तिरुपपन्नेति ज्ञातव्यम् । हेतोः पक्षधर्मतामुपपादयति **अन्यथेति** ॥ **आल्हादेति** । अत्राल्हादशब्दो विकासरूपविशेषपर इति ज्ञातव्यम् ॥ **सुखेति** । तथा च प्रभाशब्दः पक्षे सुखानुभवपर इति भावः । यद्वा पक्षे दृष्टान्ते च प्रभाशब्दः कान्तिविशेषपर एवेत्यभिप्रेत्य योजनान्तरमाह **यद्वेति** । एतच्च व्याख्यानं 'भौतिकं त्वेव रूपादी'त्युत्त-रानुव्याख्यानमुत्थापयितुं कृतमिति ज्ञातव्यम् ॥

**श्री०—ॐ एवं चात्मा कात्स्न्र्यम् ॐ** ॥ तत्र प्रभेति । तत्र देहे प्रभा अनुभवो यस्येत्यर्थः ॥ **अन्यथेति** । उक्तानुमाने यद्यप्रयोजकतेत्यर्थः । बाधकं तर्कमाह **कमनीयेति** ॥ **सर्वाङ्गीणेति** । सर्वाङ्गसंबन्धीत्यर्थः ॥

**सु०—अत्रात्मनः कायपरिमाणत्वनिरासार्थं सूत्रम् ॐ एवञ्चात्माकात्स्न्र्यम् ॐ इति** ॥ **तस्य तात्पर्यमाह** तदपीति ।

**अनु०— ॐ एवञ्चात्माकात्स्न्र्यम् ॐ** ॥

**ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ** ॥

तदप्यलम् ॥

दुष्टं नानाशरीरेषु प्रवेशादन्यथाभवात् ॥

कुतः । अकात्स्न्यादिप्रसङ्गादिति शेषः । पिपीलिकादिदेहस्थस्य तत्परिमाणस्यात्मनः कर्मविपाकवशाद्गजगवयादिदेहप्राप्तौ तत्राकात्स्न्यं स्यात् । गजादिदेहगतस्य च तत्परिमाणस्य पिपीलिकादिदेहेऽतिरेकः स्यादित्युभयथा कायपरिमाणत्वानुपपत्तिरेवेति । एतदर्थत्वेन (वा) च नानाशरीरेष्विति वाक्यं योज्यम् । तत्रान्यथाभवादिति कायपरिमाणत्वाभावापत्तेरित्यर्थः ।

स्यादेतत् । यं यं देहं प्राप्नोत्यात्मा तत्तत्परिमाणो भवत्यतो नोक्तदोष इत्याशङ्का-निरासार्थं सूत्रम् ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ इति । तस्य तात्पर्यमाह तदप्यलमिति ।

चित्तस्थं परिमाणपर्यायं तच्छब्देन परामृशति । 'नानाशरीरेषु प्रवेशादन्यथाभवादि'ति स्थूलसूक्ष्मशरीरेषु प्रवेशात्स्थूलसूक्ष्मपरिमाणोपजनने सति परिमाणतद्वतोरत्यन्तभेदानभ्युप-गमादात्मन एवान्यथाभावप्रसङ्गादित्यर्थः ।

शे० — ॐ एवञ्चात्माकात्स्न्यम् ॐ ॥ अकात्स्न्यादिप्रसङ्गादिति । अकात्स्न्यादीत्या-दिपदेनातिरेकपरिग्रहः । अनेन सूत्रेऽकात्स्न्यपदमतिरेकस्याप्युपलक्षणमित्युक्तं भवति । तत्प्रसङ्गमेव विवृणोति पिपीलिकादीत्यादिना । उक्तयोजनायां शेषः पूर्णो भवतीत्यपरितोषादाह एतदर्थ-त्वेनेति । एतदर्थत्वेनापीत्यर्थः । न च पर्यायादित्युत्तरसूत्रव्याख्यानशेषत्वस्यापि सद्भावाद्वाशब्दः । इत्यर्थ इति । अत्र पक्षेऽन्यथापरिणामरूपान्यथाभावस्य तदर्थत्वासंभवादिति भावः ।

---

नोक्तदोष इति । नाकात्स्न्यादिप्रसङ्ग इत्यर्थः ॥ ॐ न च पर्यायादप्यविरोधो विकारा-दिभ्यः ॐ ॥ ननु परिमाणपर्यायस्य पूर्वत्राप्रकृतत्वात्कथं प्रकृतपरामर्शिना तच्छब्देन तस्य परामर्श इत्यतो ग्रन्थोक्तत्वाभावेऽपि बुद्धिस्थत्वेन प्रकृतत्वसंभवाद्युक्तस्तस्य परामर्श इत्याशयेनोक्तं चित्तस्थमिति । ननु नानाशरीरेषु प्रवेशादन्यथाभावादिति किं नानाशरीरप्रवेशेन आत्मनोऽन्यथाभावसाधनमभिमतं तदापादनं वा । नाद्यः । तथा सति बाधापसिद्धान्तप्रसङ्गात् । न द्वितीयः । सिद्धान्त इव पूर्व-पक्षेऽपि नानाशरीरप्रविष्टस्यात्मनोऽन्यथाभावाभावसंभवेनाप्रयोजकत्वापातात् । न च नानाशरीरप्रवेशो नापादकः किन्तु परिमाणान्यथाभाव एव । तथा च यद्यात्मा परिमाणान्यथाभाववान्स्यात् तर्ह्यन्यथा-भाववान्स्यादिति तर्कशरीरमत्र विवक्षितमिति वाच्यम् । तथा सति मूले आपादकानुक्तिप्रसङ्गेन न्यून-त्वापातात् । तदध्याहाराभिप्राये च नानाशरीरेषु प्रवेशादित्यस्य वैयर्थ्यापातात् । न चास्य परिमाणा-न्यथाभावोपपादकत्वादेतद्बलेनैव तल्लाभान्न वैयर्थ्यादिकमिति वाच्यम् । तथाऽपि परिमाणनिष्ठेनान्यथा-भावेनात्मनः तदापादनस्य चोरापराधान्माण्डव्यस्य शूलप्राप्तिवदयुक्तत्वेन तेन तदापादनानुपपत्तेरित्या-शङ्क्येदमापादनमेवेत्यभिप्रेत्य तत्रोक्तानुपपत्तिपरिहारं सूचयंस्तदुपपादयति नानाशरीरेष्वित्यादिना ।

प० — ॐ **एवं चात्मा कार्त्स्न्यम्** ॐ। **कायपरिमाणत्वाभावापत्तेरित्यर्थ इति**। **अन्यथा** पिपीलिकादिदेहं प्रविष्टस्य पिपीलिकादिदेहे हस्तिपरिमाणत्वाभावे, **अभवादित्यस्य** कायपरिमाणत्वाभावापत्तेरित्यर्थः ॥ ॐ **न च पर्यायादपि**। तदेव भाष्यमेतत्सूत्रार्थतयाप्यवतारयति **तस्य तात्पर्यमाहेति**। नानाशरीरप्रवेशान्निमित्तात्प्राप्तो यः परिमाणभेदरूपोऽन्यथाभवः तस्मात्परिमाणभेदरूपादन्यथाभवादात्मनोऽप्यन्यथाभवप्रसंगादिति योजनां मनसि निधाय व्याचष्टे **चित्तस्थमित्यादिना**।

**श्री० — तत्तात्पर्यमाहेति**। 'तदप्यलं। दुष्टं नानाशरीरेषु प्रवेशादन्यथाभवादि'त्येतद्वाक्यं **समग्रं 'न च पर्यायादपी'ति सूत्रतात्पर्यकथनपरमेव**। तत्र तदप्यलं दुष्टमित्येतावन्मात्रमेवैवं चेत्यादिसूत्रतात्पर्यकथनपरमित्याशयः ॥ **उभयथेति**। अकार्त्स्न्यं स्यादतिरेकश्च स्यादित्युभयथेत्यर्थः ॥ **एतदर्थत्वेनेति**। अकार्त्स्न्यादिप्रसङ्गादिति शेषमकृत्वोभयथा कायपरिमाणत्वानुपपत्तिरित्यर्थलाभायेत्यर्थः ॥ **इति वाक्यमिति**। उत्तरसूत्रतात्पर्यकथनपरमपि वाक्यमत्र योज्यमित्यर्थः। तत्र नानाशरीरेषु प्रवेशादित्यनेनाकार्त्स्न्यातिरेकौ तात्पर्यतो लब्धौ। उभयथा कायपरिमाणत्वानुपपत्तिरन्यथाभवादित्यनेनाभिप्रेतेत्याह **तत्रेति**। त्वदुक्तस्य कायपरिमाणत्वस्यान्यथाभावः प्राप्तः ॥ ॐ **न च पर्यायादप्यविरोधो विकारादिभ्यः** ॐ ॥ **पर्यायं** क्रमम्।

**सु० — अस्त्वात्मन एवान्यथाभावस्ततः को दोष इत्यत आह** अन्यथेति।

**अनु० —** अन्यथाभावि यद्वस्तु तदनित्यमिति स्थितिः ॥

तन्मते

स्थितिः व्याप्तिः। तन्मते **जैनदर्शने**। **अङ्गीकृतेति शेषः**। **ततोऽपि किमित्यत आह** तदिति।

तदनित्यत्वं

**यत एवं व्याप्तियतश्चान्यथाभावित्वमङ्गीकृतं तत् तस्मादात्मनोऽनित्यत्वमापततीति शेषः**। **अत्र दृष्टान्तः** पुद्गलस्येति।

पुद्गलस्यानिवारितम् ॥

**इवशब्दोऽध्याहार्यः**। पुद्गलस्य **देहस्येवेति**। यद्वा **पुद्गलशब्दो जरज्जैनैरात्मवाचित्वेन स्वीकृत इत्यत्रात्मवाची**। (यद्वा) यदि वा स्वमतेनायमात्मनि प्रयुक्तः। यथाऽऽहुः। **'पुद्गलो निरयं गिरन्नि'ति**। नन्ववस्थापर्यायरूपेणा(प्या)त्मनोऽप्यनित्यत्वमङ्गीक्रियत एव। तत्कथमनित्यत्वापादनमित्यतो वा पुद्गलस्य देहस्येवेत्युक्तम्। यथा देहस्य देहाकारनामपरि-

त्यागेन भस्मीभावलक्षणानित्यत्वं तथाविधमात्मनोऽप्यापाद्यत इति । ननु अन्यथाभावस्यैवं-विधानित्यत्वेन व्याप्तिर्नास्ति परमाण्वादौ व्यभिचारात् । तत्कथमापादनम् । मैवम् । परिमाणव्यत्ययलक्षणस्यान्यथाभावस्यैवंविधानित्यत्वव्याप्तत्वेन देहादौ दृष्टतया तद्वतोऽप्यात्मनस्तथाविधानित्यत्वस्य निवारयितुमशक्यत्वात् । तदिदमुक्तम् अनिवारितमिति ।

शे० — 'व्याप्त्या तथाऽन्यथाभावादि'त्युत्तरग्रन्थानुरोधेनाह स्थितिर्व्याप्तिरिति ॥ ततोऽपि किमितीति । व्याप्त्यङ्गीकारमात्रस्यादोषत्वादिति भावः। आत्मनोऽन्यथाभावेन देहस्यानित्यत्वप्रसञ्जनं चोरापराधान्माण्डव्यस्य शूलारोपणवदयुक्तम् । देहस्यानित्यत्वाङ्गीकारादिष्टापादनं चेत्यतोऽत्रात्मनोऽनित्यत्वस्यापाद्यमानत्वान्न दोषद्वयमपीत्यभिप्रेत्य तदापादनसिद्ध्यर्थमनुरूपं शेषं पूरयति आत्मन इति । अत्रात्मन आपततीत्येतावान् शेषो द्रष्टव्यः । तर्हि तावतैव चारितार्थ्यान्मूले पुद्गलस्येत्यस्यानर्थक्यमित्याशङ्क्य तर्कमूलभूतव्याप्तौ दृष्टान्तोपदर्शनार्थक्यमित्यभिप्रेत्य तदुपदर्शकतया तद्योजयति अत्र दृष्टान्त इति । पुद्गलस्येत्येतावन्मात्रस्य तदुपदर्शकत्वानुपपत्तेराह इवशब्द इति । अत्र पक्षे आत्मन इति शेषः । इवशब्दाध्याहारश्च कर्तव्यो भवतीत्यपरितोषादाह यद्वेति । अत्रापि जरज्जैनरीत्याश्रयणं कर्तव्यं भवतीत्यपरितोषादाह यदि चेति ॥ तत्कथमापादनमिति । अनिष्टप्रसञ्जनत्वाभावादिति भावः ॥ अतो वेति । अतश्चेत्यर्थः । अनेनात्र पुद्गलस्येत्यावर्तने । तत्र श्रुतस्यात्मार्थत्वमावर्तितस्य देहार्थत्वम् इवशब्दोऽध्याहार्य इत्युक्तं भवति । देहस्येवेत्युक्तमेवोपपादयति यथेति ॥ तथाविधमिति । तथा च तादृशानित्यत्वानभ्युपगमादात्मनो नेष्टापत्तिरिति भावः ॥ परमाण्वादाविति । तत्र प्रदेशविशेषसंयोगादिरूपस्यान्यथाभावस्य सत्त्वेऽपि विवक्षितानित्यत्वाभावादिति भावः ॥ तत्कथमिति । व्याप्तिविकलस्य तर्कस्याभासत्वादिति भावः ॥ परिमाणव्यत्ययेति । नन्वत्र कीदृशश्चान्यथाभाव इत्याद्युत्तरवाक्यपर्यालोचनयाऽन्यथाभावमात्रस्यैवानित्यत्वव्याप्तिसिद्धेः परिमाणव्यत्ययलक्षणस्येति तद्विवरणमनर्थकम् । न च परमाण्वादौ व्यभिचारपरिहारार्थं तत्, तन्नित्यत्वासिद्धेः । सिद्धत्वे वा पक्षसमत्वेनैव तत्परिहारसंभवात् । अवश्यं चैतदेवम् । अन्यथा वक्ष्यमाणव्याप्तावपि तत्र व्यभिचारापातादिति चेन्न । अन्यथाभावमात्रस्यैवानित्यत्वव्याप्तावपि प्रकृते आपादकतया विवक्षितस्य परिमाणान्यथात्वस्याभावेनैव व्यभिचारपरिहारसंभवे किं पक्षतुल्यत्वाद्याश्रयणेनेति भावेनैतद्ग्रन्थप्रवृत्त्या वक्ष्यमाणविरोधासंभवात् ।

स० — परिमाणव्यत्ययलक्षणस्यान्यथाभावस्येति । ननु 'अत्र कीदृशश्चान्यथाभाव' इत्याद्युत्तरग्रन्थपर्यालोचनया अन्यथाभावमात्रस्यैवानित्यत्वव्याप्तिसिद्धेः परिमाणव्यत्ययलक्षणस्येति विशेषणप्रक्षेपोऽनुपपन्नः । न च परमाण्वादौ व्यभिचारपरिहारार्थं तस्यावश्यकत्वम् । पक्षसमत्वेनैव तत्परिहार-

संभवात् । अन्यथा वक्ष्यमाणव्याप्तावपि परमाणौ व्यभिचारापातादिति चेन्न । अन्यथाभावमात्रस्यैवा-नित्यत्वव्याप्तावपि प्रकृते परिमाणान्यथात्वस्यापादकतया विवक्षितस्याभावेनैव व्यभिचारपरिहारसंभवे किं पक्षतुल्यत्वोक्त्येति भावेनैतत्प्रवृत्त्या वक्ष्यमाणविरोधाभावादित्याहुः ।

प०— **यथाहुरिति** । विष्णुतत्वनिर्णयकर्तारः **निरयं** नरकं **गिरन्** अनुभवन्ननुभवतीति कृत्वा जीवः पुद्गल इत्युच्यते इत्याहुरित्यर्थः । 'कर्मानुशयनाच्चैव संसार्यनुशयी स्मृत' इति वाक्य-शेषः ॥ **परमाण्वादाविति** । तत्रापि चलनसंयोगविभागादिरूपविकारस्य सत्वादिति भावः ।

**या०— ॐ एवं चात्मा कात्स्न्र्यम् ॐ ॥ ॐ न च पर्यायादप्यविरोधो विकारा-दिभ्यः ॐ ॥** भस्मीभावलक्षणेत्यत्र भस्मीभावपदेनावस्थान्तरापत्तिरुपलक्ष्यते । तेन कपालादिभाव-लक्षणान्यथाभाववति घटादौ न व्यभिचार इति ध्येयम् ॥ **एवं विधानित्यत्वेनेति** । आकारनाम-परित्यागेनावस्थान्तरापत्तिरूपेत्यर्थः ॥ **परमाण्वादाविति** । तत्रापि प्रदेशविशेषसंयोगादिरूपस्यान्यथा-भावस्य सत्त्वादिति भावः ॥ **परिमाणव्यत्ययलक्षणस्येति** । इदं च प्रकृताभिप्रायेणैवोक्तम् । वस्तुतस्तु महती या विकृतिस्तद्रूपान्यथाभावस्यैवोक्तविधानित्यत्वेन व्याप्तिरिति तस्याशयः इत्यग्रे 'अणुदेहस्य जीवस्य गजत्वे विकृतिर्हि या' इत्यत्र विभावयिष्यति ॥ तेन यौवनावस्थदेहे पूर्वपरिमाण-व्यत्ययस्य सत्त्वेऽप्युक्तविधानित्यत्वाभावाद्व्यभिचार इति चोद्यानवकाशः । विवक्षितमहाविकृति-रूपान्यथाभावस्य तत्राभावादिति ज्ञातव्यम् ।

श्री०— **एवं विधेति** । यथा देहस्येत्याद्युक्तप्रकारेण स्वरूपनाशरूपेत्यर्थः ॥ **अवस्थापर्या-येति** । सति धर्मिण्यवस्थाभेदेनेत्यर्थः ॥ **व्यभिचारादिति** । सर्वेषु परमाणुष्वप्यसंयुक्तेषु संयुक्तत्व-रूपस्य पार्थिवेषु तेषु पाकजरूपवत्त्वादिरूपान्यथाभावस्य च सत्त्वादित्यर्थः ॥ **परिमाणेति** । न हि परमाणुषु परिमाणव्यत्ययलक्षणान्यथाभावोऽस्ति, तस्य यावद्द्रव्यभावित्वाङ्गीकारादित्यर्थः ।

**सु०— नन्वस्मन्मतवद्भवन्मतेऽप्यात्मनोऽन्यथाभावोऽस्त्येव सुखदुःखाभ्यामुच्चनीच-त्वाभ्युपगमात् । अन्यथाभाविनश्च देहादेरनित्यतोपलब्धा । तस्माद्भवन्मतेऽप्यात्मनोऽनित्यता दुर्वारेत्यत आह** नेति ।

**अनु०**— नानित्यताऽस्मत्पक्षे तु चैतन्यादेर्विशेषिणः ॥
लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने क्वचित् ॥

**अन्यथाभाववतोऽप्यात्मनः प्रसज्यत इति शेषः । तत्कथमित्यत आह** चैतन्यादेरिति । **अस्मन्मत इति** वर्तते । **अनित्यतेति** च । **तुशब्दोऽवधारणे । अस्मन्मते चैतन्यादेर्लक्षणस्य**

निवृत्तावेव विशेषिणो लक्षणवतोऽर्थस्यानित्यता स्यात् । न तु जैनानामिवान्यथाभावमात्रेण । एवदुक्तं भवति । यस्य वस्तुनो यल्लक्षणं तन्निवृत्तिरूपोऽन्यथाभाव एव तदनित्यतानिबन्धनं नान्यथाभावमात्रमिति । एवं तर्हि शब्दादिलक्षणाभावाद्गगनादीनां महाप्रलये विनाशः स्यात् । चेष्टाश्रयत्वाभावाच्छरीरस्य सुप्त्यादौ विलयो भवेदित्यत उक्तं विशेषिणो लक्षणस्येति । विशेषवतो लक्षणस्य न तु लक्षणमात्रस्येत्यर्थः ।

किमतो यद्येवमित्यत आह नेति । तदिति सामान्येन वाक्यार्थं परामृशति । अनित्यत्वकारणत्वेनोक्तं विशेषिणो लक्षणस्य निवर्तनं चेतने क्वचिदपि न स्यात् । अतस्तस्यानित्यतापि न स्यात् । यद्वा तदिति लक्षणपरामर्शः । चेतने वर्तमानं क्वचिन्न निवर्तत इति शेषः ।

शे०— ननु नानित्यताऽस्मत्पक्ष इत्यादिनोत्तरग्रन्थेनात्मनोऽनित्यत्वाभाववर्णनं क्रियते तदनर्थकम् । न च परं प्रत्युद्भावितस्य दोषस्य स्वपक्षेऽपि समानत्वात् स्वव्याहतत्वेन जात्युत्तरत्वशङ्कानिवारणार्थं तदिति वाच्यम् । स्वपक्षे आत्मनोऽन्यथाभावस्यैवाभावेन तदप्रवृत्त्युपपत्त्या स्वव्याघाताप्रसरात् इत्यतोऽन्यथाभावप्रसञ्जनकथनेन तदुपपादनपूर्वकं स्वपक्षे दूषणसाम्यशङ्कामुत्थापयति नन्विति ॥ उच्चनीचत्वाभ्युपगमादिति । विकासरूपस्योच्चत्वस्य सङ्कोचरूपनीचत्वस्य च परिमाणान्यथात्वाभावेऽसंभवाद्विवक्षितान्यथाभावसिद्धिरिति भावः ॥ तस्मादिति । अन्यथाभाविनोऽनित्यत्वनियमादात्मनश्चान्यथाभावित्वादित्यर्थः । यद्यपि वक्ष्यमाणरीत्याऽन्यथाभावमात्रस्यैवानित्यताप्रयोजकत्वात् परिमाणव्यत्ययाभावेऽप्यन्यथाभावमात्रेणैवात्मनोऽनित्यत्वशङ्का संभवत्येव । तथाऽप्यङ्गीकृत्य परिमाणव्यत्ययलक्षणान्यथाभावस्य तत्प्रयोजकत्वं तद्व्युत्पादनं कृतमित्यवधेयम् ॥ वर्तत इति । अनुवर्तत इत्यर्थः ॥ अनित्यतेति चेति । वर्तत इत्यनुवर्तते । अन्यथाभावमात्रस्य तत्र प्रयोजकताव्यावृत्तये मूले तुशब्द इत्यभिप्रेत्य तदर्थमाह तुशब्द इति ॥ विशेषवत इति । स्वरूपभूतस्येत्यर्थः ॥ न त्विति । शब्दादिकं च न यावल्लक्ष्यभाविलक्षणमिति न तन्निवृत्त्या गगनादिनिवृत्तिप्रसङ्ग इति भावः । ननु 'लक्षणस्य निवृत्तौ त्वि'ति प्रकृतत्वात् 'न सा चेतने कुत्र' इति स्त्रीलिङ्गेन तच्छब्देन निवृत्तिपरामर्शो युक्तः । तदिति नपुंसकेनेति तु कथं तत्परामर्श इत्यतो नायं निवृत्तिपरामर्शः किन्तु सामान्येन चैतन्यादेर्विशेषिण इति पूर्ववाक्यार्थपरामर्श इति न नपुंसकत्वानुपपत्तिरिति भावेनाह तदितीति । तच्छब्दपरामृष्टव्यं पूर्ववाक्यार्थं दर्शयन्नेव तद्वाक्याभिप्रायमाह अनित्यत्वेति । अनेन मूले तच्छब्दो लक्षणनिवृत्तेस्तत्प्रयुक्तानित्यतायाश्च परामर्शक इत्युक्तं भवति । सामान्येन वाक्यार्थपरामर्शकत्वे तच्छब्दस्य तदिति नपुंसकं क्लिष्टं भवतीत्यतस्तत्स्वारस्याय पक्षान्तरमाह यद्वेति । तद्धि नेनानित्यत्वप्रयोजकस्य स्वरूपलक्षणविनाशस्य

आत्मन्यभावालाभात् अनित्यत्वाभावसमर्पकता न स्यादित्यतोऽपेक्षितशेषपूरणेन तत्समर्पकतां दर्शयति **चेतन इति** ।

**स०**— ननु उच्चत्वस्य विकासरूपत्वात् नीचत्वस्य संकोचरूपत्वात् तयोश्च परिमाणस्य अन्यथात्वभावे एव संभवेन त्वन्मतेऽपि आत्मनः परिमाणान्यथात्वादनित्यत्वमित्याशङ्कते **नन्विति** । वस्तुतो न परिमाणान्यथाभाव एव प्रयोजकः । वक्ष्यमाणरीत्या अन्यथाभावस्यैव प्रयोजकत्वात् । तन्मात्रस्य तत्त्वेऽपि परिमाणव्यत्ययलक्षणान्यथाभावस्येत्युक्तेः प्रकारान्तरेणैवोपपादितत्वेन तदनुसारेण विशिष्टस्य तत्त्वालाभात् । तथा च परिमाणव्यत्ययाभावेऽपि अन्यथाभावमात्रेणानित्यता शङ्कितेति भावः ।

**प०** — **उच्चनीचत्वाभ्युपगमादिति** । सुखेनात्मनः (तूल)स्थूलपिण्डस्येव प्रशिथिलावयवस्य विकास उच्चत्वं नाम । नीचत्वं त्वार्द्रचणकस्य शुष्कतादशायामिव संकोच इति ज्ञेयम् । स्यादित्यत्राकांक्षितं पूरयति **अनित्यतेति चेति** । वर्तत इत्यनुषङ्गः । **निवृत्तेः** प्रकृतत्वान्न सा चेतन इति वाच्यम् । कथं न तच्चेतन इत्युक्तमित्यत आह **तदिति सामान्येनेति** । स क इत्यत आह **अनित्यत्वेति** । क्वचिन्न निवर्तत इति शेषः इत्यस्य क्वचिदित्यस्य कदाचिदित्यर्थोऽग्रेऽनुवादेन व्यक्तः ।

**या०**— **अन्यथाभावमात्रेणेति** । एतच्च वक्ष्यमाणबाधकेनान्यथाभावमात्रं अनित्यत्वेन व्याप्तमिति जैनैरवश्यमङ्गीकार्यमित्यभिप्रेत्य, अतो महाविकृतिरूपान्यथाभावस्यैव तन्मतेऽनित्यत्वेन व्याप्तत्वात्कथमेतदिति शङ्कानवकाशः ।

**श्री०** — **अन्यथाभावमात्रेण** यादृशतादृशान्यथाभावेन । अनित्यतायां **निबन्धनं** हेतुः ।

**सु०**— **विशेषिणो लक्षणस्य निवृत्तौ लक्ष्यानित्यता स्यादित्युक्तम्** । **तद्विशदयति ओतेति** ।

**अनु०**— ओतप्रोतात्मकत्वं तु पटे देहेऽङ्गसंस्थितिः ॥
इत्यादिलक्षणस्यैव निवृत्तौ स्यादनित्यता ॥

**ओतप्रोतात्मकत्वं नाम तन्तूनां संयोगविशेषः पटे लक्षणमिति शेषः** । अङ्गसंस्थितिः **करचरणाद्यङ्गानां सन्निवेशविशेषः । आदिशब्दः प्रकारवचनः** । अनित्यता लक्ष्यस्येति शेषः । **यावल्लक्ष्यभाविनां लक्षणानां निवृत्तिरेव लक्ष्यानित्यत्वनिमित्तम् । तादृशं चात्मनश्चैतन्यम्** । **तच्च कदाऽपि न निवर्तते इति कथं तस्य विनाशप्रसङ्ग इति । यदुक्तमात्मा स्वप्रभ इति तदप्यसत् । स्वप्रभावतः प्रदीपादेरिव रूपस्पर्शापत्तेः । रूपादिमत्वाच्च विनाशित्वापत्तेः । यद्रूपादिमत्तदनित्यत्वमिति परेणैव व्याप्तेरङ्गीकृतत्वात् इति** ।

शे०— **विशदयतीति** । ततश्च न पौनरुक्त्यमिति भावः । विशेषलक्षणस्य शृङ्गिग्राहकतया स्वमुखेनैव कथनादस्य पूर्वविवरणत्वमिति द्रष्टव्यम् । आदिशब्दस्य प्रभृत्यर्थत्वे लक्षणमात्रनिवृत्तेरेव लक्ष्यानित्यतानिमित्तत्वप्राप्तेः आत्मनोऽपि तत्प्रसङ्गतादवस्थ्यादाह **आदिशब्द इति** । कोऽसौ प्रकारो यमादिशब्दो वक्तीत्यतस्तमुपदर्शयन्नेव वाक्यतात्पर्यमाह **यावदिति** । ननु 'भौतिकं त्वेव रूपादी'त्युत्तरग्रन्थे रूपादिमात्रस्यानित्यत्वव्याप्त्यभाववर्णनं क्रियते तदनर्थकम् । न च रूपादियुक्तत्वेऽप्यात्मनोऽनित्यत्वं नास्तीति प्रतिपादनार्थमेतदिति वाच्यम् । तत्प्रतिपादनस्य प्रकृतोपयोगादर्शनेनानर्थक्यापरिहारात् । न च परपक्षे प्रसञ्जितदोषस्य स्वपक्षे साम्याभावोपदर्शनार्थत्वान्नानर्थक्यमिति वाच्यम् । रूपादियुक्ततयाऽऽत्मनोऽनित्यतायाः पूर्वमप्रसञ्जितत्वेन स्वपक्षे तत्साम्यशङ्काया अनुदयात् । न चैतद्ग्रन्थेन परपक्षेऽप्येतद्दोषस्य वक्तव्यतायां तात्पर्यं कल्प्यम् । रूपादिमत्त्वस्य तं प्रत्यसिद्ध्या तेन तदनित्यत्वस्यापादयितुमशक्यत्वात् । न च रूपादिमत्त्वमप्यापाद्यमित्यत्र तात्पर्यम् । प्रसञ्जकाभावेन तदापादनायोगादित्यतः स्वपक्षे तद्दोषसाम्यशङ्कापरिहारकतयोत्तरग्रन्थं योजयितुं तच्छङ्काप्रसञ्जकतया परपक्षे रूपादिमत्त्वेनानित्यत्वापादनं विवक्षुः आपादकासिद्धिपरिहाराय तत्प्रसञ्जकं तावदुपदर्शयति **यदुक्तमिति** । अनेन स्वप्रभमित्यनेनोक्ता कान्तिरेव रूपाद्यापादिकेत्युक्तं भवति । एतच्च प्रदीपस्येव स्वानपायिनी प्रभा यस्यासौ स्वप्रभ इत्यन्तिमव्याख्यानमनुरुध्य द्रष्टव्यम् ॥ **प्रदीपादेरिवेति** । अनेन तर्कमूलव्याप्तेरभावात्तर्काभासोऽयमिति शङ्का परिहृता भवति । इष्टापत्तिं परिहरति **रूपादीति** ।

प०— **आदिशब्दः प्रकारवचन इति** । पृथुबुध्नोदराकारत्वादिरूपो यः प्रकारो घटलक्षणभूतस्तस्य वचन इत्यर्थः । अनित्यतेत्यत्र कांक्षितं तदनुवादपूर्वमाह अनित्यता **लक्ष्यस्येति शेष इति** । लक्षणवत इत्यर्थः ।

या०— स्वप्रभमित्यस्य चरमव्याख्यानमनुसृत्योत्तरमूलमुत्थापयितुमाह **यदुक्तमात्मा स्वप्रभ इत्यादि** ।

श्री० — **तादृशं** यावल्लक्ष्यभावि ।

सु०— **ननु सिद्धान्तेऽप्यात्मनो रूपादिमत्त्वमङ्गीक्रियत एव । रूपादिमतोऽनित्यत्वमिति** व्याप्तिश्च । **'रूपादिमत्त्वाच्च विपर्ययो दर्शनादि'त्युक्तत्वात् । तत्कथमनित्यत्वपरिहार इत्यत** आह भौतिकं त्विति ।

अनु०— भौतिकं त्वेव रूपादि व्याप्तं नाशेन नो मते ॥

**तुशब्दो विशेषार्थः । स एव भौतिकमिति विवृतः । न रूपादिमात्रमित्येवार्थः । न च भौतिकं रूपादिकमात्मन्यस्ति । तस्मान्नानित्यताप्रसङ्ग इति भावः ।**

यथा भवद्भिरन्यथाभावो विशेष्यते। यावल्लक्ष्यभावि(विशेष)लक्षणन्यावृत्तिरूपोऽन्यथाभावोऽनित्यत्वव्याप्त इति। रूपादिमत्त्वं च भौतिकत्वेन। तथाऽस्मन्मतेऽपि विशेषणप्रक्षेपे नोक्तदोष इत्यत आह नैवमिति।

नैवं तस्य

तस्य क्षपणकस्य मते नैवमन्यथाभावो रूपादिमत्त्वं च विशेष्यते। किन्तु सामान्यमेवानित्यत्वव्याप्ततयाऽङ्गीक्रियते ततो नोक्तदोषपरिहार इत्यर्थः। तत्कथमित्यत आह अन्यथेति।

अन्यथाभावो यस्यानित्यत्वमीरितम् ॥

रूपादियुक्तस्य तथा जगन्नाशित्वसिद्धये ॥

भूभूधरादेर्जगतो नाशित्वसिद्धये यस्यान्यथाभावस्तस्यानित्यत्वमीरितं क्षपणकेन। तथाशब्दः समुच्चये। रूपादियुक्तस्याप्यनित्यत्वमीरितमिति। यद्वा यत् रूपादियु(क्तं तत्त)क् तत्तथाऽनित्यमीरितमिति योजना। तस्येत्यस्य यस्येत्यनेनान्वयः। अन्यथा तु यच्छब्दश्रवणात्तच्छब्दाध्याहारः। पूर्ववाक्यात्तस्येत्यनुवर्तते वा। एतच्चोपपादयिष्यते।

शे० — एवं शङ्काप्रसञ्जकमुक्त्वा तत्साम्यशङ्कामुत्थापयति नन्विति। 'श्यामावदाताः शतपत्रलोचनाः' इत्युक्तेरिति भावः॥ व्याप्तिश्चेति। अङ्गीक्रियत एवेति पूर्वेण संबन्धः॥ विशेषणप्रक्षेप इति। यावल्लक्ष्यभाविलक्षणनिवृत्तिरूपस्य भौतिकत्वरूपस्य च विशेषणस्य प्रक्षेप इत्यर्थः। रूपादियुक्तस्येत्येकं पदमाश्रित्य व्याख्यातम्। इदानीं रूपादियुक् तस्येति पदभेदमाश्रित्य व्याचष्टे यद्वेति॥ योजनेति। इयं च यत्तच्छब्दाध्याहारमनित्यत्वमिति प्रकृतेऽपि योग्यत्वात्तथेत्यस्यानित्यमात्रपरत्वं चाश्रित्य कृतेति द्रष्टव्यम्। एवं योजनायां तस्येत्यस्यात्रानपेक्षितत्वाद्वैयर्थ्यमित्यतो यस्यान्यथाभावोऽनित्यत्वमीरितमिति पूर्ववाक्यस्थेन यस्येत्यनेन तस्येत्यस्यान्वयान्नानर्थक्यमित्याशयेनाह तस्येत्यस्येति। तर्हि कथमेकपदत्वेन व्याख्यानम्। तत्पदाश्रवणेन निराकाङ्क्षत्वालाभादित्यत आह अन्यथा त्विति। एकपदत्वेन व्याख्यान इत्यर्थः॥ यच्छब्दश्रवणादिति। यत्तदोर्नित्यसंबन्धत्वादिति भावः। अध्याहारस्यानुवृत्त्यपेक्षया जघन्यत्वा'न्नैवं तस्ये'ति पूर्ववाक्यात्तस्येत्यस्यानुवृत्तिसंभवेनाध्याहारकल्पनमयुक्तमित्याशयेनाह पूर्वेति। नन्वन्यथाभावमात्रस्य रूपादिमत्त्वमात्रस्य चानित्यत्वेन व्याप्तिः पराभिमता, न तु विशिष्टस्यान्यथाभावस्य विशिष्टस्य रूपादिमत्त्वस्य च तेन व्याप्तिरिति पूर्वमुक्तं तत्कुत इत्यत आह एतच्चेति। अविशिष्टस्यैवान्यथाभावादेरनित्यत्वेन व्याप्तिरित्येतच्च 'कीदृशश्चान्यथाभावो नाशहेतुतयेष्यते' इत्यादिनोपपादयिष्यत इत्यर्थः।

स० — उपपादयिष्यत इति। 'कीदृशश्चान्यथाभावो नाशहेतुतयेष्यते' इत्यादिनेति शेषः।

प०— **व्याप्तिश्चेति** । अङ्गीक्रियत एवेत्यनुषङ्गः ॥ **इत्युक्तत्वादिति** । वैशेषिकाधिकरणे सूत्रकृतेति शेषः । अन्यथाभावपदमुपलक्षणं मत्वाह **रूपादिमत्त्वं चेति** । यस्येति श्रवणलब्धमाह **तस्येति** । समुच्चय इत्युक्तस्य अन्वयोपदर्शनेन योजनामाह **रूपादियुक्तस्यापीति** । आदिपदेन स्पर्शग्रहः ॥ **अन्यथा त्विति** । रूपादियुक्तस्यापीति पूर्वयोजनापक्षे त्वित्यर्थः ॥ **पूर्ववाक्यादिति** । 'नैवं तस्ये'ति वाक्यादित्यर्थः ॥ **एतच्चेति** । अन्यथाभावमात्रं नाशहेतुरित्येतच्च कीदृशश्चान्यथाभावो नाशहेतुतयेष्यत इत्यादिनेति भावः ।

या०— **ननु सिद्धान्तेऽपीति** । 'श्यामावदाताः शतपत्रलोचना' इति वक्ष्यमाणत्वादिति भावः ॥ **विशेषणप्रक्षेप इति** । यावल्लक्ष्यभाविलक्षणनिवृत्तिरूपस्य भौतिकेत्यस्य च विशेषणस्य प्रक्षेप इत्यर्थः ॥ **अन्यथेति** । यदि रूपादियुक् तस्येति पदच्छेदमकृत्वा रूपादियुक्तस्येत्येकमेव पदं कृत्वा व्याख्यायत इत्यर्थः ॥ **अनुवर्तते वेति** । अनुवर्तत इति वा वक्तव्यम् । तदुभयं च जघन्यमिति वाक्यशेषः । ननु महाविकृत्यादिरूपस्यैवान्यथाभावस्यासन्मतेऽनित्यत्वेन व्याप्तिरङ्गीकृता नान्यथाभावमात्रस्य, येनोक्तदोषः स्यादित्यत आह **एतच्चोपपादयिष्यत इति** । अन्यथाभावमात्रस्यैवानित्यत्वेन व्याप्तिस्तेनाङ्गीकर्तव्येत्येतच्च 'कीदृशश्चान्यथाभावो नाशहेतुतयेष्यत' इत्यादिनोपपादयिष्यत इत्यर्थः ।

श्री०— कोऽयं रूपविशेषो यो नाशव्याप्य इत्यत आह **स एवेति** । तुशब्दोक्तो विशेष एवेत्यर्थः ॥ **अन्यथेति** । यस्येत्यनेनान्वयाकरणे इत्यर्थः ।

सु०— **उक्तमुपसंहरति** व्याप्त्येति ।

अनु०— व्याप्त्या तयाऽन्यथाभावादात्मनोऽनित्यता भवेत् ॥

**यदन्यथाभावि तदनित्यं यच्च रूपादिमत्तदनित्यमिति व्याप्त्या । अन्यथाभावादित्युपलक्षणम् । रूपादिमत्त्वाच्चेत्यपि द्रष्टव्यम् । स्यादेतत् । संप्रतिपन्नव्याप्तिकव्याप्यारोपे(ण) अनिष्टव्यापकारो(पः)पणं तर्कः । अत्र च न चेद्व्याप्तिः सम्मता कथं तर्हि तर्कत्वम् । मैवम् । व्याप्यवद्व्याप्तेरपि पराभ्युपगतत्वेऽपि तर्कत्वाविरोधात् । एवमेव क्वचिदाश्रयस्योभयासम्मतावपि न दोषः । वक्ष्यति चैतत् 'परन्यायैस्तु दूषणमि'ति ।**

शे०— 'अन्यथाभावि यद्वस्तु तदनित्यमिति स्थितिः । तन्मते तदनित्यत्वं पुद्गलस्यानिवारितमि'त्यादिनोक्तस्यैव 'व्याप्त्या तयाऽन्यथाभावादि'त्यादिनोत्तरत्राभिधानात् पौनरुक्त्यमित्याशङ्क्योपसंहारार्थत्वात्तस्य न तदिति भावेन तत्परतयोत्तरग्रन्थं योजयति **उक्तमिति** ॥ **संप्रतिपन्नेति** । उभयसंप्रतिपन्नेत्यर्थः । एतच्च व्याप्यस्वरूपसङ्कीर्तनं न लक्षणान्तर्गतम् ॥ **व्याप्यारोप इति** । व्याप्याङ्गीकार

इत्यर्थः । अन्यथा धूलीपटले धूमभ्रमानन्तरं वन्ह्यनुमितिस्थले यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति तर्के निरग्निकत्वस्य वस्तुतः सत्त्वेन तत्रारोपाभावादव्याप्तिप्रसङ्गादिति भावः ॥ **अनिष्टेति** । अनिष्टस्य वन्ह्यभावव्यापकस्य धूमाभावादेः प्रसञ्जनमित्यर्थः । अत्र जलह्रदे निर्धूमत्वापादनव्यावृत्त्यर्थम् **अनिष्टेति** । शब्दो यद्यनित्यः स्यात्तर्हि सावयवः स्यादित्यादिव्युदासाय **व्यापकेति** । शब्दो नित्यः कृतकत्वादिति कृतकत्वव्यापकस्य मीमांसकं प्रत्यनिष्टस्यानित्यत्वस्य साधनेऽतिप्रसङ्गव्युदासाय **प्रसञ्जनमित्युक्तम्** । प्रसञ्जनं च न तर्कः । तस्यैव निरुच्यमानतयाऽऽत्माश्रयप्रसङ्गात् । किन्तु आपादनं प्रसङ्गः । आपादनमित्युपरि वक्ष्यमाणत्वात् । न चैवमप्युक्तदोषः । आपादनमङ्गं कर्तव्यतया ज्ञापनमित्युपरि वक्ष्यमाणत्वादिति ध्येयम् । **अत्रेति** । अविशेषितेऽन्यथाभावादावनित्यत्वेन व्याप्तिर्न सम्मता चेद्भवता-मित्यर्थः । **कथमिति** । आत्मनोऽन्यथाभावाद्रूपादिमत्त्वाच्चानित्यत्वं स्यादित्यनित्यत्वप्रसञ्जनस्योक्तरूपतर्क-लक्षणाऽनाक्रान्तत्वात्तर्कत्वानुपपत्तिरित्यर्थः । **व्याप्यत्वदिति** । यथा स्वपक्षसाधने इदमित्थं न भवतीति परपक्षदूषणे च व्याप्यस्य स्वपरसिद्ध्यपेक्षायामपि अनिष्टोपदर्शनरूपे दूषणे व्याप्यभूतस्यापादकस्य परसिद्धत्वमेवापेक्षितं न स्वसिद्धत्वमपि तथा व्याप्तेरुभयसिद्धतायाः स्वपक्षसाधने उक्तरूपदूषणे चापेक्षा-यामपि अनिष्टोपदर्शनरूपे दूषणे व्याप्तेः परसिद्धत्वमेवापेक्षितं न तु स्वसिद्धत्वमपि । ततश्च व्याप्यादेरु-भयसिद्धत्वाभावे साधनत्वादिविरोधेऽपि न तर्कत्वविरोध इत्यर्थः । ननु यदि व्याप्यादिपदस्यावर्त्यर्थमस्ति तर्हि कस्यचिदर्थस्याङ्गीकारेऽर्थान्तरस्यापादनमिति पद्धत्युक्तलक्षणेऽपि व्याप्यादिपदं कर्तव्यं स्यात् । यदि च तन्नास्ति तर्ह्यत्रापि व्याप्यादिपदं न कर्तव्यं स्यादिति चेन्न । भावानवबोधात् । सेतिकर्त-व्यताकं हि करणम् । तत्र तर्कः करणधर्मी । तस्य व्याप्त्यादीन्यङ्गानि । तत्र करणधर्मिणः प्राधान्य-विवक्षयाऽङ्गेभ्यः पृथक्कृत्य पद्धतौ तर्कतयोक्तिः । अत्र तु सेतिकर्तव्यताकस्यैवेति न दोषः । न चैवमत्रोक्तलक्षणाभावेऽपि पद्धत्युक्तलक्षणसत्त्वेनाव्यापकेष्टप्रसङ्गानामपि तर्कत्वं स्यादिति वाच्यम् । इष्टापत्तेः । तर्हि तनोऽप्यनुमितिः स्यादिति चेन्न । अङ्गं विनाकृतस्य करणस्य क्रियां प्रत्यजनकतया अङ्गसाचिव्याभावेन तदप्रसङ्गादित्यन्यत्र विस्तरः ।

**एवमेवेति** । व्याप्यादिवदेवेत्यर्थः ॥ **क्वचिदिति** । पर्वतो यदि निरग्निकः स्यात्तर्हि निर्धूमः स्यादित्यत्राश्रयस्योभयसम्मतावपि, यद्यत्र घटोऽभविष्यत्तर्हि भूतलमिवाद्रक्ष्यत तुल्यदर्शनसामग्रीकत्वादिति तर्के आश्रयस्योभयासम्मतावपीत्यर्थः । ननु तर्के व्याप्यस्येव व्याप्तेरपि परसिद्धत्वमेवापेक्षितमाश्रयस्यो-भयसम्मतत्वमनपेक्षितमित्युक्तं तत्कुतः सिद्धमित्यत आह **वक्ष्यतीति** । तृतीयस्य द्वितीय इति शेषः । न्यायशब्दस्यात्र धर्मिलिङ्गव्याप्तिदृष्टान्तपरत्वाद्विवक्षितसिद्धिरिति द्रष्टव्यम् ।

प० — अन्यथाभावविशेषस्यानित्यत्वव्याप्यत्वेन सिद्धांतिनोपगमात् । अन्यथाभावमात्रस्य विनाशेन व्याप्तेरनङ्गीकारा[त्]कथमसंमतव्याप्तिकस्य तर्कत्वमुपेत्य 'व्याप्त्या तये'त्यादिनाऽनित्यत्वापादनमिति शङ्कते **स्यादेतदिति** ।। **क्वचिदाश्रयस्येति** । शून्यं न जगत्कारणमसत्त्वादित्यादाविति भावः । **वक्ष्यति चैतदिति** । परसिद्धत्वमात्रेणादोषत्वमित्येतद्भक्तिपादे वक्ष्यतीत्यर्थः । तदाह **परेति** ।

या० — **सम्प्रतिपन्नेति** । उभयसंप्रतिपन्नेत्यर्थः ।। **न चेद्व्याप्तिः सम्मतेति** । अविशेषितेऽन्यथाभावादावनित्यत्वव्याप्तिर्युष्माकं न चेत्सम्मतेत्यर्थः । **दूषणं** दूषणानुमानं तर्क इति यावत् ।।

श्री० — **व्याप्तेति** । मूलेन यदन्यथाभावित्वाद्रूपादिमत्त्वाच्चानित्यता स्यादात्मन इत्यापादनं कृतं तत्राशङ्कते **स्यादेतदिति** ।। **संप्रतिपन्नेति** । वादिप्रतिवादिनोरिति शेषः । यथा वन्हिर्माऽस्त्विति वन्ह्यभावरूपव्याप्यारोपे धूमाभावरूपानिष्टापादनं क्रियते । तत्र वन्ह्यभावधूमाभावयोर्व्याप्तिरुभयसम्मता तद्वदिह नास्ति । अविशेषितान्यथाभावरूपादिमत्त्वास्यापादकरूपव्याप्यस्यानित्यत्वरूपव्यापकेन व्याप्तेर्मन्मते सत्त्वेऽपि भवद्भिरनङ्गीकारात् । अतो व्याप्तेरुभयवाद्यसम्मतत्वान्नास्य तर्कत्वमित्याशयः । **व्याप्येति** । आत्मन्यन्यथाभावरूपादिमत्त्वरूपव्याप्यमापादकं यथा पराभ्युपगतमङ्गीकृत्यापाद्यते । एवं व्याप्तिरपि पराभ्युपगतैव स्वीक्रियत इत्यर्थः । **क्वचिदाश्रयस्येति** । क्वचित्तर्के परसिद्धमाश्रयमङ्गीकृत्य तर्कप्रवृत्तिः । यथा समवायो यदि स्यात्तदाऽनवस्था स्यादित्यादौ ।

---

सु० — **क्षपणकोक्तं प्रमेयान्तरं निराकर्तुं सूत्रम् ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ इति ।। तत्रान्त्यावस्थितेश्चेत्येतावत्तावद्व्याख्याति** नित्येति ।

**अनु० — ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ।।**

नित्योर्ध्वगतिरप्येषा या मुक्तिरिति कथ्यते ।।
अलोकाकाशमाप्तस्य कथं न विकृतिश्च सा ।।

**अपिशब्दः प्रमेयान्तरनिराकरणसमुच्चयार्थः । चशब्दः परिमाणपर्यायेण सह समुच्चये । या एषा नित्योर्ध्वगतिर्मुक्तिरिति जैनैः कथ्यते सा च कथमात्मनो विकृतिर्नो भवेत् । भवेदेव । तत्कथम् । अलोकाकाशमाप्तस्य । प्राक् लोकाकाशस्थो ह्ययमात्मा निरन्तरोर्ध्वगत्याऽलोकाकाशमाप्नोति । तथा चान्यथाभावादात्मनोऽनित्यत्वापत्तिरिति भावः । अनेनान्त्या (या)अवस्थितिः सन्ततोर्ध्वगतिलक्षणा । ततश्चात्मनोऽनित्यत्वापत्तिरिति सूत्रखण्डस्यार्थ उक्तो भवति ।**

शे० — ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ।। **प्रमेयान्तरमिति** । पूर्वं निरस्तात्सप्तभङ्गदेहमानत्वादेरन्यत्प्रमेयमित्यर्थः । भाष्येऽपिशब्दचशब्दयोरन्यतरवैयर्थ्यमाशङ्क्यार्थभेद-

कथनेन तत्परिहरति **अपिशब्द इति** । सप्तभङ्गादिनिराकरणेन सहैतन्निराकरणस्य समुच्चयार्थ इत्यर्थः ॥ **परिमाणपर्यायेणेति** । परिमाणान्यथाभावेन सह नित्योर्ध्वगतेः समुच्चयार्थ इत्यर्थः ॥ **सा चेति** । अनेन न केवलं परिमाणान्यथाभाव एवात्मनोऽन्यथाभावहेतुः किन्तु नित्योर्ध्वगतिश्चात्मनो विकृतिरन्यथाभावहेतुरिति परिमाणापरपर्यायेण समुच्चय उपदर्शितो भवति **तत्कथमिति** । नित्योर्ध्वगतौ सिद्धायां भवेत्तयाऽन्यथाभाव आत्मनः, सैव तु कथं सिद्ध्येदित्याशयः । तत्कथमित्यतः परम् इत्यत आहेति शेषः । अलोकाकाशमासस्येत्यत.परं चेतीति शेषः । अनेन मूले 'अलोकाकाशमासस्ये'त्येतन्नित्योर्ध्वगत्युपपादकमित्युक्तं भवति । कथमलोकाकाशप्राप्तिकथनेन नित्योर्ध्वगतिरित्यतस्तामुपपादयति **प्रागिति** । अस्त्वेवमात्मनोऽन्यथाभावः किं ततः 'तदनित्यत्वं पुद्गलस्यानिवारितमि'ति प्रागुक्तमतिप्रसङ्गफलतया दर्शयति **तथा चेति** ।

**प०— अन्त्यावस्थितेश्चोभयेति** ॥ **प्रमेयान्तरनिराकरणेति** । सन्ततोर्ध्वगतिरूपमुक्तिलक्षणप्रमेयान्तरेत्यर्थः ॥ **चशब्द इति** । न केवलं परिमाणपर्यायेण, किन्त्वन्त्यावस्थितेश्चानित्यत्वमिति समुच्चय इत्यर्थः ॥ **ततश्चात्मन इति** । तस्मादपि विकारादित्यर्थः ।

**श्री० — ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ** ॥ **अन्त्येति** । लोकाकाशं विहाय अन्त्या अलोकाकाशसंबन्धिनी याऽवस्थितिरित्यर्थः ॥ **ततश्चेति** । तस्या अन्त्यावस्थितेरङ्गीकारादित्यर्थः । सूत्रेऽध्याहारमाह **आत्मन इति** ।

---

**सु०— नन्वन्यथाभावमात्रमनित्यत्वस्य प्रयोजकमिति न तावद्भवदीयः पक्ष इत्युक्तम् । नापि मदीयः पक्षः । तत्कथं प्रदेशविशेषसंयोगमात्ररूपान्यथात्वेन मुक्तात्मनोऽनित्यत्वप्रसञ्जनमित्यतो जैनपक्षोऽयमिति समर्थयितुं तावत्पृच्छति** कीदृशश्चेति ।

**अनु० — कीदृशश्चान्यथाभावो नाशहेतुतयेष्यते ॥**

**क्षपणकेन हि क्षित्यादेः सर्वस्य नित्यत्वाद्यनेकान्तं समर्थयमानेन द्रव्यपर्यायाभ्यां नित्यत्वमनित्यत्वं चेत्युक्तम् । द्रव्याकारस्य कदाऽप्यनपायान्नित्यत्वम् । पर्यायोऽन्यथाभावः तस्मादनित्यत्वमिति । तत्र वक्तव्यम् । कीदृशोऽत्रान्यथाभावो नाशं प्रति हेतुतयेष्यते । किं संस्थानादिलक्षणापगमरूपो वा, साधारणो वेति भावः ।**

**शे० — अन्यथाभावमात्रमिति** । अविशेषितोऽन्यथाभाव इत्यर्थः ॥ **उक्तमिति** । 'नानित्यताऽस्मत्पक्षे त्वि'त्यादिनेति शेषः ।

प॰— विकल्पदूषणयोरनुक्तविषयत्वनिरासायाह **क्षपणकेन हीति** ॥ **द्रव्याकारस्येति** । विशेष्यस्वरूपस्येत्यर्थः ।

सु॰— **आद्यं शङ्कते** संस्थानेति ।

**अनु॰**— संस्थानापगमश्चेत्

**संस्थानग्रहणं लक्षणोपलक्षणम्** । **नाशहेतुतयेष्यत इति संबन्धः** । **प्रतिषेधति** स नेति ।

स न हि भूसागरादिषु ॥

**वक्तुं शक्यत इति शेषः** । **कुतो नेत्यत आह** स न हीति । **यावल्लक्ष्यभाविलक्षणापगमलक्षणोऽन्यथाभावो भूसागरादिषु पक्षैकदेशभूतेषु न हीदानीं प्रमितस्ततो हेतोः सन्दिग्धासिद्धत्वं स्यादित्यर्थः । प्रमितत्वे तु तस्यानित्यत्वेऽपि संशयो नास्तीत्यनुमानं व्यर्थमापद्यते ।**

शे॰— गुणकर्मादावमूर्ते संस्थानापगमं विनाऽप्यनित्यत्वसद्भावेन न तस्य तत्र प्रयोजकत्वमित्यत आह **संस्थानग्रहणमिति** । लक्षणोपलक्षणं यावल्लक्ष्यभाविलक्षणोपलक्षणमित्यर्थः । अन्यथा शब्दादिलक्षणापगमात् गगनादीनामपि महाप्रलये नाशप्रसङ्गात् । अत एव यावल्लक्ष्यभाविलक्षणापगम इत्येवोत्तरत्रानुवाद इत्यवधेयम् । संस्थानापगमः किं पक्षे प्रमितो न वा । आद्ये किं प्रत्यक्षेण उतानुमानागमाभ्यामिति विकल्पान्मनसि निधायाद्यं प्रत्याह **न हीदानीं प्रमित इति** । प्रत्यक्षस्य वर्तमानमात्रग्राहित्वाद्भूधरादिषु चेदानीं संस्थानापगमस्यावर्तमानत्वान्न तस्य प्रत्यक्षेण प्रमितिः संभवतीति भावः । नेति पक्षं प्रत्याह **तत इति** । अनुमानागमप्रमितत्वं प्रत्याह **प्रमितत्व इति** ॥ **अनुमानं व्यर्थमिति** । संस्थानापगमसाधकतयाऽवश्यमनुसरणीयादनुमानादागमाद्वा तदनित्यत्वस्यापि निश्चितत्वादिति भावः ।

प॰— द्रव्यभिन्नसंस्थानाभावादाह **संस्थानग्रहणमिति** । लक्षणं च यावल्लक्ष्यभावीत्यग्रे व्यक्तम् ॥ **अनुमानमिति** । द्रव्यविपर्ययाभ्यां नित्यत्वमनित्यत्वं चेत्यत्र विपर्ययशब्दितान्यथाभावादनित्यमित्युक्तानुमानमित्यर्थः ।

या॰ - ॐ **अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात्** ॐ ॥ गुणकर्मादावमूर्ते संस्थानापगमं विनाऽप्यनित्यत्वस्य भावात्कथं तेन तत्प्रयोज्यमित्यत आह **लक्षणोपलक्षणमिति** । यावल्लक्ष्यभाविलक्षणोपलक्षणमित्यर्थः ।

श्री॰— **प्रमितत्वे त्विति** । यावल्लक्ष्यभाविलक्षणापगमलक्षणान्यथाभावस्येति शेषः । तस्य निरुक्तान्यथाभावरूपहेतुमतो भूसागरादेरित्यर्थः । **व्यर्थं** सिद्धसाधनत्वादित्यर्थः ।

सु० — तर्हि द्वितीयोऽस्त्विति शङ्कते यः कश्चिदिति ।

अनु० — यः कश्चिदन्यथाभावो यदि

**पूर्ववदेव संबन्धः । अविवक्षितविशेष इत्यर्थः । एवं तर्हि मुक्तात्मनोऽप्यनित्यत्वापादनं सुस्थितमिति** भावेनाह मुक्तिश्चेति ।

मुक्तिश्च तादृशी ॥

तादृशी **अन्यथाभावस्वरूपा । एवमप्यात्मनो नित्यत्वे भूभूधरादीनामपि नित्यत्वं स्यात् । अन्यथा हेतोरनैकान्त्यात् । तदिदमुक्तं सूत्रकृता । 'उभयनित्यत्वादि'ति ।**

**अवयवोपचयापचयलक्षणोऽन्यथाभावोऽनित्यत्वे हेतुरिति चेत् (न) । स्फटिकादौ पक्षैकदेशे सन्दिग्धत्वात् । रूपादिमत्त्वं सविशेषणमुपादीयते चेत्को दोष इति चेन्न । परस्य वैयर्थ्यप्रसङ्गात् । न हि परो रूपादिमत्किञ्चिन्नित्यमभ्युपैति । आत्मनस्तु प्रभया रूपादिमत्त्वमापादितमेव । यद्वा आत्मनो रूपादिमत्त्वं स्वसिद्धान्त एव । रूपादिमतोऽनित्यत्वमिति व्याप्त्यङ्गीकारे पूर्वोक्तानित्यत्वप्रसङ्गो व्याख्यातव्यः ।**

शे० — **पूर्ववदेवेति ।** संस्थानापगमश्चेदिति वाक्ये नाशहेतुतयेष्यत इति पूर्वानुवृत्त्या यथा संबन्धस्तथा यः कश्चिदन्यथाभावो यदीति वाक्येऽपि नाशहेतुतयेष्यत इति पूर्वानुवृत्त्यैव संबन्ध इत्यर्थः ॥ **एवमपीति** । अन्यथाभाववत्त्वेऽपीत्यर्थ ॥ **स्यादिति** । अविशेषादिति भावः ॥ **अन्यथेति ।** अन्यथाभावित्वाविशेषेऽपि भूभूधरादीनामनित्यत्वमात्मनश्च नित्यत्वमित्यभ्युपगम इत्यर्थः ॥ **अनैकान्त्यादिति** । आत्मनैवेति शेषः ।

**सन्दिग्धत्वादिति** । परमाणोरप्रत्यक्षत्वेन तदवयवोपचयापचययोः प्रत्यक्षेण निश्चेतुमशक्यत्वादिति भावः । न च निबिडावयवत्वात् स्फटिकादेरवयवोपचयापचयलक्षणान्यथाभावाभावनिश्चयान्निश्चितासिद्धिरेव किन्नोच्यत इति वाच्यम् । निबिडावयवत्वं न विभागायोग्यावयवत्वं विभागस्य प्रत्यक्षसिद्धत्वात् । किन्तु घटादितोऽप्युत्कृष्टकारणापेक्षत्वमेव । न च तद्विशेषाभावः शक्योऽस्माभिरवगन्तुमिति न निश्चितासिद्धिरत्र वक्तुं शक्येति तात्पर्यात् । विशिष्टरूपादिमत्त्वस्यानित्यत्वप्रयोजकतायां दोषानुक्तिर्भाष्ये स्पष्टत्वात्स शिष्यैरेवोह्यतामिति भावेनेत्यभिप्रेत्य स्वयं तं पक्षं दूषयितुमाशङ्कते **रूपादिमत्त्वमिति** । किमाक्षेपे । न कोऽपि दोष इत्यर्थः । व्यभिचारोपाध्योरदर्शनादिति भावः ॥ **परस्य वैयर्थ्यप्रसङ्गादिति** । विशेषणवैयर्थ्यप्रसङ्गादित्यर्थः । न च हेतोर्व्यर्थविशेषणत्वं न दूषणं व्याप्तिपक्षधर्मतयोरप्रतिहतेरिति वाच्यम् । व्याप्त्युपयोगितया हि हेतौ विशेषणमुपादीयते, वैयर्थ्ये तु विशिष्टस्य व्याप्यत्वाभावाद्धेतुदूषणत्वमेवेति तृतीये वक्ष्यमाणत्वेन तदुपपत्तेरित्याशयात् । स्वमते

तद्वैयर्थ्याप्रसक्तेरुक्तं **परस्येति** । 'एकपक्षेऽपि दूषणमि'ति तृतीये वक्ष्यमाणत्वादन्यतररीत्याऽपि व्यर्थविशेषणत्वं दूषणमेवेत्यवधेयम् । परपक्षे वैयर्थ्यमेवोपपादयति **न हीति** ॥ **उपैतीति** । येन तद्वारणाय विशेषणमर्थवत्स्यादिति भावः । ननु रूपादिमतोऽप्यात्मनो नित्यत्वं परेणाप्यभ्युपगतमेवेति कथं तदनभ्युपगमोक्तिरित्यतो भवेदेवं यद्यात्मनो रूपादिमत्त्वं परेणाङ्गीकृतं स्यान्न चैतदस्तीत्याह **आत्मनस्त्विति** । न तु परस्य सिद्धान्त इत्येवार्थः । अतो न तत्र व्यभिचारपरिहाराय विशेषणमुपादेयमिति भावः ॥ **स्वसिद्धान्त एवेति** । स्वस्य जैनस्य सिद्धान्त एवेत्यर्थः । नन्वेवं तर्ह्यात्मन्येव व्यभिचारेण रूपादिमत्त्वमात्रस्यानित्यत्वेन सह व्याप्तेः परीत्याऽप्यसिद्ध्या विशिष्टस्य रूपादिमत्त्वस्यैवानित्यत्वप्रयोजकत्वप्राप्तेः आत्मनस्तदभावादेवानित्यत्वाप्रसङ्गात्कथमविशिष्टव्याप्तिमूलकः प्रागुक्त आत्मानित्यत्वप्रसङ्ग इत्याशङ्क्य केवलं रूपादिमत्त्वमेवानित्यत्वेन व्याप्तमित्यङ्गीकार एवात्मनोऽनित्यत्वप्रसञ्जनस्य तत्राभिमतत्वाद्विशिष्टस्य प्रयोजकत्वपक्षे तदप्रसक्तावपि नानुपपत्तिरित्याशयेनाह **रूपादिमत इति** । यद्वा भाष्यकारीयाविशिष्टान्यथाभावस्यानित्यत्वप्रयोजकत्वे दोषोक्तिः विशिष्टरूपादिमत्त्वस्यानित्यत्वप्रयोजकत्वपक्षदोषोपलक्षणमित्यभिप्रेत्य तं दोषमुपदर्शयितुं रूपादिमत्त्वमित्यादिशङ्कासमाधानात्मकग्रन्थप्रवृत्तिः । योजना तु पूर्ववदेव बोध्या । केचित्तु विशिष्टस्य प्रयोजकत्वे दोषस्य सत्त्वेऽपि तस्य स्पष्टत्वेन शिष्यैरेव ज्ञातुं शक्यत्वाद्भाष्यकृतः तत्पक्षे दोषानुक्तिरिति पूर्वग्रन्थार्थमुपवर्ण्य विशिष्टस्य प्रयोजकत्वे दोषाभावादेव तत्पक्षे दोषानुक्तिर्भाष्यकारस्येति पक्षान्तरमाह **यद्वेति** ॥ **स्वसिद्धान्त एवेति** । जैनसिद्धान्त एवेत्यर्थः । ततश्चात्मनोऽपि सप्तभङ्गीरङ्गीकुर्वता परेण रूपादेरप्यङ्गीकारात्तन्मात्रस्यैवानित्यत्वप्रयोजकतयाऽऽत्मनोऽपि तदापत्त्या तद्व्यावृत्त्यर्थं भौतिकेति विशेषणस्यावश्यं ग्राह्यत्वान्न परपक्षेऽपि विशेषणवैयर्थ्यमिति भावः । तर्हि रूपवत्त्वेनात्मानित्यत्वापादनपरपूर्वग्रन्थविरोधः स्यादित्यतोऽविशिष्टस्य रूपादिमत्त्वस्यानित्यत्वप्रयोजकत्वाङ्गीकारवादोपजीवनेन प्रवृत्तत्वात् तस्य वस्तुस्थितिकथनपरेणानेन ग्रन्थेनाविरुद्धत्वादित्याशयेनाह **रूपादिमत इति** । इति ग्रन्थप्रयोजनमाहुः ।

**स०** — ननु 'संस्थानापगमश्चेत्स न हि' इत्यादिना विशिष्टान्यथाभावस्यानित्यत्वप्रयोजकत्वे दोषोऽभिहितो भाष्यकृता । न तु विशिष्टरूपादिमत्त्वस्य प्रयोजकतायाम् । तत्र दोषानुक्तिः किं दोषस्य सद्भावेऽपि ज्ञातुं शक्यत्वात् दोषस्यैवाभावाद्वेति विकल्पं मनसि निधाय अस्ति चेत्कीदृश इति पृच्छति **रूपादिमत्त्वमिति** । **परस्येति** । जैनस्येति शेषः । अनेन सत्त्वेऽपि दोषस्य शिष्यैरेव ज्ञातुं शक्यत्वात् भाष्यकृतस्तदनुक्तिरिति प्रथमपक्षमुपपाद्य विशिष्टस्य रूपादिमत्त्वस्य प्रयोजकत्वे दोषाभावादेव

भाष्यकृतस्तदनुक्तिरिति द्वितीयं पक्षं मनसि निधायाह **यद्वेति** । **स्वः** मुख्यः, स चासौ सिद्धान्तश्च स्वसिद्धान्तः, न तु उपपादनसापेक्ष इत्यर्थः । तथा चात्मनोपि सप्तभङ्गीमङ्गीकुर्वता रूपादेरप्यङ्गीकृतत्वात् रूपादिमत एवानित्यत्वे आत्मनोऽपि तदापत्त्या तद्व्यावृत्त्यर्थं भौतिकेति विशेषणस्यावश्यकत्वान्न परपक्षे विशेषणवैयर्थ्यमिति भावः । तर्हि 'नैवं तस्यान्यथाभावो यस्यानित्यत्वमीरितम् । रूपादियुक्तस्य' इत्यादिना रूपादिमत्त्वस्यैव तत्प्रयोजकत्वात् आत्मनोऽनित्यत्वापादनं कथं सङ्गच्छत इत्यत आह **रूपादिमत इति** । अतः अविशिष्टस्य रूपादिमत्त्वस्यैव तत्प्रयोजकत्वाङ्गीकारान्न तद्विरोधोऽपि ।

प०— **पूर्ववदेवेति** । नाशहेतुतयेष्यत इति संबन्धः । **हेतोरिति** । विपर्ययशब्दितान्यथाभावरूपहेतोरित्यर्थः ॥ **उभयनित्यत्वादिति** । प्रसङ्गहेतुरयं **उभयनित्यत्वप्रसङ्गादिति** । अन्यथाभाववतोप्यात्मनो नित्यत्वे आत्मानात्मनोरुभयोरपि नित्यत्वं प्रसज्यत इत्यर्थः । यच्चोक्तं रूपादिमत्त्वादात्मनोऽनित्यत्वमिति । तत्र शङ्कते **रूपादिमत्त्वमिति** । नन्वेवं हेतोरसिद्धिरित्यत आह **आत्मनस्त्विति** ॥ **स्वसिद्धान्त एवेति** । जैनसिद्धान्त एवेत्यर्थः । कथं तर्ह्यात्मन्येव व्यभिचारात् 'व्याप्त्या तये'त्युक्तमित्यत आह **इति व्याप्त्यङ्गीकार इति** । रूपादियुक्तस्य तथेत्यत्रोक्तदिशा यद्रूपादिमत्तदनित्यमिति व्याप्तौ परेणाङ्गीकृतायां व्याप्त्या तयेत्यादिनात्मनोऽनित्यत्वप्रसङ्ग उक्त इति व्याख्यातव्य इत्यर्थः । यथाऽन्यथाभावस्यानित्यत्वव्याप्तत्वाङ्गीकारे मुक्तिरूपान्यथाभाववत्त्वेनात्मनोऽनित्यत्वप्रसङ्ग उक्तः । तथा रूपादिमत्त्वस्यानित्यत्वव्याप्तत्वोपगमे तादृशस्यात्मनोऽप्यनित्यत्वप्रसङ्गो व्याप्त्या तयेत्यादिनोक्त इति भावः ।

या०— **स्वसिद्धान्त एवेति** । क्षपणकसिद्धान्त एवेत्यर्थः । नन्वेवं तर्ह्यत्रैव व्यभिचारात्परमतेऽपि व्याप्त्यभावेन 'व्याप्त्या तयाऽऽत्मनोऽनित्यता भवेदि'ति पूर्वोक्तः कथमनित्यत्वप्रसङ्ग इत्यत आह **रूपादिमत इति** । पक्षे व्यभिचारचोदनं न परीक्षकसम्मतं अतस्तदितरत्र यद्रूपादिमत्तदनित्यमिति व्याप्तिश्चेत्परेणाङ्गीक्रियते, तदाऽस्मदीयः प्रागुक्तोऽनित्यत्वप्रसङ्गो युक्त एव । यदि च व्याप्तिग्रहणसमय एव तत्र व्यभिचारस्फुरणेन न परेणोक्तव्याप्तिरङ्गीक्रियते, तदा तं प्रति रूपादिमत्त्वेनात्मनोऽनित्यत्वप्रसङ्गोऽस्माभिर्नैवोच्यत इत्याशयः ।

श्री०— **पूर्ववदेवेति** । यथा 'संस्थानापगमश्चेदि'त्यस्य 'नाशहेतुतयेष्यत' इति पूर्वेण संबन्धस्तथा 'यः कश्चिदन्यथाभावो यदी'त्यस्यापि 'नाशहेतुतयेष्यत' इति पूर्वेणैव संबन्ध इत्यर्थः । **एवमपीति** । यादृशतादृशान्यथाभाववतोऽपि मुक्तात्मनो नित्यत्वाङ्गीकार इत्यर्थः । भूधरादीनामप्यविवक्षितविशेषान्यथाभाववतामपीत्यर्थः । **अन्यथेति** । भूधरादेरपि नित्यतामनङ्गीकृत्य यादृशतादृशान्यथा-

भावेन हेतुना भूधरादेरनित्यतैव यदि साध्यत इत्यर्थः ॥ **अनैकान्त्यादिति** । आत्मनीति शेषः । **तदिदमुक्तमिति** । एवं च हेतोरनैकान्त्यपरिहारायात्मभूधरयोरुभयोरपि **नित्यत्वात्** नित्यत्वस्याङ्गीकार्यत्वापातादिति सूत्रयोजना द्रष्टव्या ॥ **अवयवेति** । अस्त्वयं हेतुर्भूधरादौ न त्वात्मनीति न व्यभिचार इत्यर्थः ॥ **सन्दिग्धत्वादिति** । निरुक्तहेतोरित्यर्थः । ननु यद्रूपादिमत्तदनित्यमिति व्याप्तौ य आत्मनि व्यभिचार उक्तः स न युक्तः । यतो रूपादिमत्त्वं भौतिकत्वरूपविशेषणसहितमुपादीयते । तथा च यद्भौतिकरूपादिमत्तदनित्यमिति व्याप्त्यङ्गीकारादात्मनि च भौतिकरूपाभावान्न व्यभिचारः । ततश्चात्मनोऽनित्यता भवेदित्यापादनमयुक्तमिति भावेनाशङ्कते **रूपादिमत्त्वमिति** । **वैयर्थ्येति** । भौतिकत्वविशेषणस्येत्यर्थः । अस्मन्मते ईश्वरे व्यभिचारवारकतया सार्थक्यात्परस्येत्युक्तम् । तदुपपादयति **न हीति** । येन तत्र व्यभिचारवारणाय भौतिकत्वविशेषणं सार्थकं स्यादिति शेषः । ननु यदि रूपादिमदपि नित्यं परेण नाङ्गीकृतं कथं तर्हि भवद्भिर्यद्रूपादिमत्तदनित्यमिति व्याप्तेरात्मनि व्यभिचार उक्त इति तटस्थाशङ्कां परिहरति **आत्मनस्त्विति** । प्रभावतः प्रदीपादेरिव रूपस्पर्शोपपत्तेरिति रूपादिमत्त्वमापाद्य व्यभिचारो दत्तः, न तु परेणात्मनो रूपादिमत्त्वमङ्गीकृतमिति । तथा च व्यर्थविशेषणत्वमपरिहार्यमिति भावः । आपाद्य दूषणदानेऽपरितोषादाह **यद्वेति** । **स्वसिद्धान्तः** क्षपणकसिद्धान्तः । नन्वात्मनो रूपादिमत्त्वं यदि क्षपणकसिद्धान्तस्तर्ह्यत्रैवात्मनि व्यभिचारात् यद्रूपादिमत्तदनित्यमिति व्याप्त्यभावेन तदर्थं भौतिकत्वविशेषणस्य परेणावश्यंदेयत्वात् । यद्रूपादिमत्तदनित्यमिति व्याप्त्याऽऽत्मनोऽनित्यता भवेदित्यापादनमयुक्तमेवेत्यत आह **रूपादिमत इति** । तथा च भौतिकत्वरूपं विशेषणं त्यक्त्वा यद्रूपादिमत्तदनित्यमिति व्याप्तिः परेण यद्यङ्गीक्रियते तदैव व्याप्त्या तयेति पूर्वोक्तातिप्रसङ्गो व्याख्यातव्य इत्यर्थः । यदि भौतिकत्वविशेषणं दत्वा व्याप्तिरुच्यते तदाऽस्मदनुमतिरेवेति हृदयम् ।

**सु० — क्षपणकोक्तमर्थान्तरं दूषयितुमनुवदति** देहेति ।

**अनु०** — देहमाने विकारः स्यादिति स्थास्नूननात्मनः ॥

आह

देहमाने **देहमानत्वे । प्रमिते( सती)ति शेषः** । विकारः स्यात् **स्थावराणां सात्मकत्वाङ्गीकृतावात्मन इति शेषः** । इति **स मा भूदित्येवमर्थम्** । स्थास्नून् **वृक्षादीन्** । अनात्मनः **आत्मानधिष्ठितान्** । आह **क्षपणकः । अत्र क्षपणकः स्थावराननात्मन आहेत्येतावत्येव वक्तव्ये यदात्मनो देहपरिमाणत्वस्य प्रमितत्वात् वृक्षादीनामपि सात्मकत्वे तत्परिमाणत्वापत्तावंकुरावस्थायामणुमात्रस्य महावृक्षावस्थायां च महतो विकारित्वं विकारित्वादनित्यत्वं च प्रसज्येत**

**तन्मा प्रसाङ्क्षीदित्येतद(प्रसङ्क्षीत्येवम)र्थमिति हेतुकथनं, तत्पूर्वोक्तप्रमेयदृढीकरणार्थम् । यदि विकारित्वमात्रमनित्यत्वे प्रयोजकं जैनो नाभ्युपेयात् । तदा विकारित्वेनानित्यत्वप्रसङ्गाद्बिभ्यता स्थावराणामनात्मत्वं यत्तेनाभ्युपगतं तदनुपपन्नं स्यात् । न हि स्थावराणां सात्मकतायामात्मनो लक्षणापगमो भवति । किन्त्वन्यथाभावमात्रमिति । यद्वा दूषणसौकर्यार्थं हेत्वनुवादः ।**

**शे०** — देहमान इति वाक्ये विकारापत्त्युक्तावपि तस्याः स्थाम्नूनामनात्मत्वस्वीकारोपपादकत्वाभावात् तदुपपादिकायाश्चात्मनो विकारापत्तेरत्रानुक्तेस्तथाऽऽत्मनो विकारापादिकायाः स्थावराणां सात्मत्वाङ्गीकृतौ तत्तत्परिमाणत्वापत्तेरप्यनुक्तेस्तदापादिकाया देहमानत्वेन प्रमिततायाश्चानुक्तेः कथमस्य स्थावराणामनात्मत्वस्वीकारसाधकत्वमित्यतो विकारपदस्यावृत्तिं वक्ष्यमाणरीत्या द्व्यर्थतां चाभिप्रेत्यापेक्षितमर्थं शेषकथनेन पूरयन्व्याख्याति **देहमान इत्यादिना** । स्थावराणामनात्मत्वस्वीकारस्यात्मनो विकारापत्तिनिवृत्त्यर्थविकारापत्त्यर्थकत्वाभावेनेतिशब्दस्यैतदर्थकत्वासंभवादाह **इति स मा भूदित्येवमर्थमिति** । स्थावराणामात्मभिन्नत्वरूपानात्मत्वस्य सिद्धान्तेऽप्यङ्गीकारेण विप्रतिपत्तिविषयसूचकत्वानुपपत्तेस्तदर्थमाह **आत्मानधिष्ठितानिति ॥ इत्येव वक्तव्य इति** । देहमानत्वस्य प्रागेव निरस्ततयाऽदूष्यत्वेनाननुवाद्यत्वाद्दूष्यतया स्थावराणामनात्मत्वमात्रस्यैव वक्तव्यत्व दिति भावः । देहमानत्वप्रमितत्वादेः प्रयोज्यप्रयोजकभावमुपदर्शयन्नेव हेतुकथनपरवाक्यतात्पर्यमाह **यदात्मन इत्यादिना ॥ प्रमितत्वादिति** । देवदत्तात्मा, तद्देह एव तत्र सर्वत्रैव वर्तते तत्रैव तत्र सर्वत्रैव च स्वासाधारणगुणाधारतयोपलभ्यमानत्वादित्यनुमानेनेति शेषः ॥ **अणुमात्रस्येति** । अणुत्वमात्रपरिमाणस्येत्यर्थः ॥ **महत इति** । महत्त्वपरिमाणस्यात्मन इति संबन्धः ॥ **विकारित्वमिति** । परिमाणतद्वतोरत्यन्तभेदानभ्युपगमादिति भावः । मूले इतीत्यस्य तात्पर्यं **तन्मेत्यादि** । किं तत्पूर्वोक्तं प्रमेयं कथं च हेतुकथनस्य तद्दृढीकरणार्थत्वमित्यतः तदुभयं दर्शयति **यदीत्यादिना** । अनुपपत्तिमेव प्रथयति **न हीति** । अयमर्थः । अन्यथाभावमात्रस्य अनित्यताप्रयोजकत्वपक्ष एव स्थावराणामनात्मत्ववर्णनमुपपद्यते । तेषां सात्मकत्वाङ्गीकृतौ आत्मनस्तत्तत्परिमाणत्वप्राप्त्याऽनित्यत्वापादकान्यथाभावसद्भावेन तत्प्रसञ्जनसंभवात् । न तु यावल्लक्ष्यभाविलक्षणापगमस्यानित्यताप्रयोजकत्वपक्षे । तत्पक्षे स्थावराणां सात्मत्वाङ्गीकृतावात्मनस्तत्परिमाणत्वप्राप्त्याऽन्यथाभावमात्रप्रसक्तावप्यनित्यत्वप्रयोजकीभूतयावल्लक्ष्यभाविलक्षणापगमाप्राप्त्या अनित्यत्वप्रसञ्जनस्यैवासंभवेन तन्निवृत्त्यर्थत्वानुपपत्तेः स्थावराणामनात्मत्वाभ्युपगमस्यानर्थक्यमिति । 'स न हि भूसागरादिष्वि'त्यादिनैव विकारितामात्रस्यानित्यत्वप्रयोजकताया जैनेनाभ्युपगन्तव्यत्वस्य समर्थितत्वान्न हेत्वनुवादस्य तदर्थतेति पूर्वत्रारुच्या पक्षान्तरमाह **यद्वेति** ।

प० — **यदिति**। इति यद्धेतुकथनमित्यन्वयः। किं पूर्वोक्तप्रमेयं कथं च तस्य दृढीकरणमित्यत आह **यदीत्यादिना**।

**या०** — ननु स्थावराणां सात्मकत्वे यावल्लक्ष्यभाविलक्षणापगमेनैवानित्यत्वप्रसङ्गभयात्तेषामनात्मकत्वमुच्यत इत्यत आह **न हि स्थावराणामिति**।

**श्री०** — **तत्परिमाणत्वापत्तौ** वृक्षपरिमाणत्वापत्तौ सत्याम् **इति** यद्धेतुकथनं तदित्यन्वयः। तद्विवृणोति **यदीत्यादिना** ॥ **न हीति** यदि स्थावराणां सात्मकताऽङ्गीकारे स्थावरादिविकारेणात्मनोऽपि यावल्लक्ष्यभाविलक्षणापगमः स्यात्तर्ह्येव तस्यानित्यत्वप्राप्त्या तेषामनात्मता स्वीकार्या **स्यादित्यर्थः**। तथा चाभ्युपगतं परेण स्थावराणामनात्मत्वम्। तेन ज्ञायते विकारत्वमात्रमेवानित्यत्वे प्रयोजकत्वेन जैनेनाङ्गीकरणीयमिति। तत्र च 'व्याप्त्या तये'त्युक्तं दूषणं युक्तमिति भावः। किन्त्वन्यथाभावमात्रमिति पूर्वोक्तप्रमेयदृढीकरणार्थमित्यन्वयः।

**सु० — तदिदं विकारित्वापत्तिभयात्स्थावराणामनात्मत्वाङ्गीकरणमयुक्तम्। तथा सति हस्त्यादिशरीराणामप्यनात्मत्वस्याङ्गीकार्यत्वप्रसङ्गात्। तत्कथमित्यत आह** हस्त्यादीति।

**अनु०** — हस्त्यादिदेहेषु ह्यपि स्यादन्यथाभवः ॥

**पिपीलिकादिदेहस्थस्य तत्परिमाणस्य हस्त्यादिदेहेषु प्राप्तेष्वन्यथाभावः स्यात्** हि **तस्मात् इति। अथवा शरीरमात्रस्यानात्म(क)त्वमापाद्य तदुपपादनमिदं क्रियते। हस्त्यादिसर्वदेहेष्वपि आत्मनोऽन्यथाभावः स्यात्। उत्पत्तिसमये देहानां हस्तवित(स्त्यादिमा)त्तिमात्रपरिमाणत्वात् यौवने तूत्कृष्टपरिमाणत्वादिति। अनेनाविशेषादिति सूत्रखण्डस्यार्थ उक्तो भवति।**

**शे०** — ननु हस्त्यादीत्युत्तरवाक्ये हस्त्यादिदेहेष्वप्यात्मनोऽन्यथाभाववर्णनं क्रियते तदनर्थकम्। न च हस्त्यादिदेहानामनात्मत्वोपपादनार्थत्वान्नानर्थक्यमिति वाच्यम्। हस्त्यादिदेहानामनात्मत्वस्याप्रकृतत्वेन तदुपपादनार्थत्वायोगादित्याशङ्क्यात्र मूले हस्त्यादिदेहानामनात्मत्वापादनस्यापि मध्येऽभिप्रेतत्वेन तदुपपादकत्वस्य संभवादित्यभिप्रेत्य तदुपपादकतयोत्तरवाक्यं योजयितुमुक्तानुवादपूर्वकं तदुपपत्तिं प्रतिज्ञाय तत्र हेतुतया हस्त्यादिदेहानामनात्मत्वापादनं तावत्पूरयति **तदिदमिति** ॥ **अन्यथाभावः स्याद्धीति**। ततश्च विकारित्वादात्मनोऽनित्यता च स्यादित्यर्थः ॥ **हस्त्यादिदेहेष्विति**। विशिष्याभिधानं देहान्तरव्यावर्तकमित्याश्रित्य देहविशेषस्यानात्मत्वापादनोपपादकतया तद्वाक्यं व्याख्यातम्। इदानीं तु स्वरूपकथनतामाश्रित्य देहमात्रस्यानात्मत्वप्रसङ्गोपपादकतयाऽपि तद्योजयति **अथवेति**। सर्वदेहेष्वप्यात्मनोऽन्यथाभावमुपपादयति **उत्पत्तीति**। देहानां हस्तवितस्त्यादिमात्रपरिमाणत्वादित्येव

टीकापाठो, न तु देहादीनां हस्तवितस्त्यादिमात्रपरिमाणत्वादिति । मूलकोशेष्वदर्शनात् । ततश्चोत्पत्तिकालावच्छिन्नाल्पपरिमाणदेहस्थस्यात्मनः तत्परिमाणत्वस्य, यौवनावस्थायामुत्कृष्टपरिमाणदेहस्थस्यात्मनश्चोत्कृष्टपरिमाणत्वस्य प्रसङ्गात्परिमाणतद्वतोश्चात्यन्तभेदानभ्युपगमादात्मनोऽप्यन्यथाभावादिति भावः ॥ **अर्थ उक्तो भवतीति** । वृक्षादिदेहस्थस्यात्मनोऽन्यथाभाववत् हस्त्यादिदेहस्थस्याप्यात्मनोऽन्यथाभावसत्त्वादित्यर्थ उक्तो भवतीत्यर्थः ।

**प०** — दूषणसौकर्यार्थमित्येतद्व्यञ्जयन्मूलं योजयति **तदिदमित्यादिना** । हिशब्दानुवादेन तस्यार्थमाह **तस्मादिति** । यद्वा हीत्यस्य यस्मादिति व्यक्तं मत्वा तदविनाभावलब्धोक्तिः **तस्मादिति** ॥ **शरीरमात्रस्येति** । विकारित्वभयात् स्थावराणामनात्मत्वाङ्गीकरणमयुक्तम् । तथात्वे देहमात्रस्यानात्मत्वं स्यादित्यापाद्यम् । तत्कथमित्यतो हस्त्यादीत्यादिवाक्यं प्राप्तमित्यर्थः ॥ **अनेनेति** । हस्त्यादीत्यनेन स्थावराणामिव हस्त्यादिसर्वदेहानां विकारित्वाविशेषादनात्मत्वाविशेषप्रसङ्गादित्यर्थ उक्तो भवतीत्यर्थः ।

**श्री०** — आपादनप्रकारं दर्शयति । **हस्त्यादिसर्वशरीरेष्विति** । उपपादनप्रकारं दर्शयति **उत्पत्तीति** ॥ **सूत्रखण्डस्येति** । यथा स्थास्नुष्वात्माङ्गीकारे विकारप्राप्त्या तेषामनात्मकत्वं स्वीकृतं एवमेव सर्वशरीराणामपि सात्मकत्वाङ्गीकारे तद्विकारेण तत्रत्यात्मनोऽपि विकारप्राप्त्या तेषामपि सात्मकता न स्वीकार्या । कुतः । **अविशेषात्** । स्थास्नूनामनात्मकत्वे उक्तन्यायस्य हस्त्यादिशरीरानात्मतास्वीकारेऽप्यविशिष्टत्वात् । अन्यथा तदपि न स्यादित्यर्थो द्रष्टव्यः ।

---

**सु०— ननु च विषमोऽयमुपन्यासः । अल्पैव हि हस्त्यादिदेहेष्वात्मनो विकृतिः । वृक्षादौ तु महती । ततो वृक्षादीनामनात्मत्वे हस्त्यादीनामपि त(दुप)दापादनमनुचितमित्यत आह** अणुदेहस्येति ।

**अनु०** — अणुदेहस्य जीवस्य गजत्वे विकृतिर्हि या ॥
देहव्याप्तौ विशेषः कस्तस्याः स्थास्नुतनौ च नुः ॥

अणुदेहस्य **पिपीलिकादिदेहस्य जीवस्य** गजत्वे **प्राप्ते । यद्वोत्पत्तिसमये** अणुदेहस्य **हस्तवितस्त्यादिपरिमितदेहस्य, महागजत्वे** प्राप्ते देहव्याप्तौ (या) यावती **विकृतिः, स्थास्नुतनौ च नुः पुरुषस्य, या विकृतिस्तस्यास्तस्याश्च परस्परं को विशेषः । न कोऽपि । अयमर्थः । आत्मनः किं महती विकृतिरनित्यत्वहेतुत्वादनभ्युपगन्तव्या । किंवा विकृतिमात्रम् । नाद्यः । महत्त्वस्यापरिनिष्ठितत्वात्परिनिष्ठाकल्पने केषुचिद्वृक्षादिषु तदभावात् । तदनुरोधेनापि परिनिष्ठाङ्गीकारे हस्त्यादावपि तद्भावात् । द्वितीये तूभयोर्विकारित्वेनाविशेषाद्वृक्षादिवत् हस्त्यादावपि**

**अनात्मत्वमङ्गीकार्यम् । हस्त्यादिवद्वृक्षादीनामपि सात्मकत्वं न परित्याज्यमिति । एतेन अविशेषादित्यस्यार्थान्तरमुक्तं वेदितव्यम् ।**

**शे०** — अणुदेहस्येत्युभयत्राविशेषोपपादनानर्थक्यमाशङ्क्य तर्कमूलभूताविशेषव्याप्तिसमर्थनेन तन्मूलकतर्कोत्थानसमर्थनार्थत्वान्न तदिति भावेन तत्परतयोत्तरवाक्यं योजयितुं तर्कमूलभूताविशेषव्याप्त्यसिद्धिशङ्कामुत्थापयति **ननु चेति** । हस्त्यादिदेहेष्वपि स्यादन्यथाभाव इत्यस्याद्यव्याख्यानमनुसृत्याह **अणुदेहस्येति** । द्वितीयव्याख्यानमनुसृत्याह **यद्वेति** ॥ **न कोऽपीति** । अनेन मूले किंशब्द आक्षेपार्थ इत्युक्तं भवति ॥ **अपरिनिष्ठितत्वादिति** । अव्यवस्थितत्वादित्यर्थः । यत्किञ्चिदपेक्षया सर्वस्यापि महत्त्वादिति भावः ॥ **परिनिष्ठेति** । स्वरूपेणाव्यवस्थितस्यापि महत्त्वस्य किञ्चिदवच्छेदकेन व्यवस्थाकल्पन इत्यर्थः ॥ **केषुचिद्वृक्षादिष्विति** । अल्पपरिमाणवृक्षादिष्वित्यर्थः । **तदभावात्** किञ्चिदवच्छेदेन व्यवस्थितमहत्त्वस्याभावादित्यर्थः । तथा च तेषां वृक्षादीनामनात्मत्वं न स्यादिति भावः ॥ **तदविरोधेनापीति** । अल्पपरिमाणवृक्षादिसंग्रहेणापि महत्त्वस्य व्यवस्थितत्वकल्पन इत्यर्थः ॥ **तद्भावादिति** । तथा च हस्त्यादिदेहानामप्यनात्मत्वं स्यादिति भावः ॥ **अर्थान्तरमिति** । वृक्षादिवद्धस्त्यादीनामप्यनात्मत्वं हस्त्यादिवद्वृक्षादीनामपि सात्मकत्वं स्यादित्यर्थान्तरमित्यर्थः ।

**प०** — **अपरिनिष्ठितत्वादिति** । एतावदिति परिच्छेदानिश्चयादित्यर्थः । दशहस्तपरिमितत्वादिरूपेण परिनिष्ठां ब्रूम इत्यत आह **परिनिष्ठाकल्पन इति** । वटतालवंशवृक्षादिष्वभावादित्यर्थः ॥ **द्वितीय इति** । विकृतिमात्रमिति पक्ष इत्यर्थः ॥ **उभयोरिति** । वृक्षादिहस्त्याद्योरित्यर्थः ॥ **अर्थान्तरमुक्तमिति** । व्यक्तमेतदुभयोरित्यादिपूर्ववाक्ये ।

**श्री** — **तस्यास्तस्याश्चेति** । देहव्याप्यै पुरुषस्य या विकृतिस्तस्यास्तथा स्यात्तनौ या विकृतिस्तस्याश्चेत्यर्थः ॥ **परिनिष्ठेति** । अनित्यत्वसाधकविकृतौ महत्त्वमेतावदिति परिनिष्ठा इयत्ताविनिश्चयस्तत्कल्पन इत्यर्थः ॥ **तदाभावादिति** । परिनिष्ठितमहत्त्वस्याभावादित्यर्थः । तथा च केषाञ्चिद्वृक्षाणां सात्मकत्वं स्यादिति भावः । **तदवरोधेनेति** । वृक्षविशेषसाधारण्येनेत्यर्थः । तथा च न सात्मकत्वं तेषामिति भावः ॥ **तद्भावादिति** । तदविरोधेनाङ्गीकृतपरिनिष्ठितमहत्त्वस्य भावादित्यर्थः । तथा च सात्मकत्वं न स्यादिति भावः ।

**सु०** — **स्यादेतत् । न वयं विकारित्वापत्तिभयाद्वृक्षादीनामनात्मकत्वमाचक्ष्महे । किन्तु सात्मकत्वे प्रमाणाभावात् बाधकप्रमाणसद्भावाच्च । वृक्षादीनां देहत्वे तद्व्यापकमिन्द्रियवत्त्वमपि स्यात् । न च तदस्ति । तत्कार्यस्य श्रवणादेरभावात् । सोऽपि तज्ज्ञापकस्याभावात् । अदेहत्वे च न सात्मकत्वं शिलादिवदित्यत आह** गीतादिति ।

अनु० — गीतात्पुष्पफलावाप्तिः स्पर्शात्कार्श्यं रसात्स्थितिः ॥
अपि वृक्षस्य दृश्यन्त इति नानात्मता भवेत् ॥

गीतात्तावद्वृक्षस्यापि पुष्पफलावाप्तिर्दृश्यते। तया श्रवणमनुमीयते। विमतः श्रवणवान् गीतसान्निध्ये सति लब्धविकासत्वाद्राजादिवदिति । न चायं स्वभाव एव । राजादेरपि तत्प्रसङ्गात् । श्रवणेन च श्रोत्रसद्भावोऽनुमीयते । एवं शीतोष्णस्पर्शविशेषात्कार्श्यं दृश्यते । तेन सुकुमारशरीरवत्स्पर्शज्ञानमनुमीयते । तेन च त्वगिन्द्रियसत्त्वम् । तथोदकादिरसान्स्थितिरशुष्यतोऽवस्थानं दृश्यते। तेन सम्मतदेहवद्रसज्ञानं ततो रसनेन्द्रियसद्भावोऽनुमीयते । एवं कमनीयकान्तावलोकनेनोत्कोरकत्वं तिलकवृक्षस्योपलभ्यते। तेन दर्शनकामौ । ततो नयनमनसी सिध्यतः। धूपोपयोगेन चातिशयदर्शनाद्घ्राणसिद्धिरिति प्रसिद्धशरीरविशेषास्स्थावराणामनात्मता न सिद्ध्येत् ।

केचिन्मूले निषिक्तानामपामुपरि सर्पणादाध्यात्मिकवायुसंबन्धमनुमाय सात्मकत्वमनुमिमते । तदसत् । भस्मगुलिकादौ व्यभिचारात् ।

एतेनाविशेषादित्येतत्प्रकारान्तरेण व्याख्यातं भवति ।

शे० — किन्तद्बाधकप्रमाणमित्यतो वक्ष्यमाणमनुमानमेवेत्यभिप्रेत्य वृक्षादीनामपि देहत्वात् अदेहत्वमसिद्धमित्याशङ्क्य तत्सिद्धिमुपपादयति **वृक्षादीनामिति** । अप्रयोजकत्वं परिहरति **तद्व्यापकमिति** । व्याप्यवति व्यापकावश्यम्भावनियमान्न तदिति भावः । इष्टापत्तिं परिहरति **न चेति** । अनेन वृक्षादिकं न देह इन्द्रियवत्त्वाभावाद्घटवदिति व्यापकाभावलिङ्गकमनुमानमुक्तं भवति । अत्रापि हेत्वसिद्धिमाशङ्क्य 'वृक्षादिकं इन्द्रियवन्न तत्कार्यशून्यत्वात् घटवत्' इत्यनुमानात् तत्सिद्धेर्नैवमित्याह **तत्कार्यस्येति** । अत्रापि हेत्वसिद्धिमाशङ्क्य, विप्रतिपन्नं ज्ञानवन्न तत्कार्यप्रवृत्त्यादिशून्यत्वादित्यनुमानात्तत्सिद्धेर्नैतत्याह **सोऽपीति** । अस्त्वेवं वृक्षादीनामदेहत्वं ततः किं सिद्धमित्यतः सिद्धं बाधकमनुमानमुपन्यस्यति **अदेहत्वं चेति** । हेतोरन्यथासिद्धिमाशङ्क्य परिहरति **न चेति** ॥ **श्रोत्रेति** । श्रवणस्य श्रोत्रकार्यतया तेन विनाऽनुपपत्तेरिति भावः ॥ **तेन चेति** । कार्श्येनेत्यर्थः ॥ **तेन चेति** । स्पर्शज्ञानस्य त्वगिन्द्रियकार्यत्वेन तेन विनाऽनुपपत्तेरिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ **कान्तावलोकनेनेति** । कान्ताकर्तृकावलोकनेनेत्यर्थः ॥ **तेनेति** । उत्कोरकत्वेनेत्यर्थः । तस्य दर्शनकामकार्यतया तद्व्यतिरेकेऽनुपपत्तेरिति भावः ॥ **तत इति** । दर्शनकामाभ्यामित्यर्थः । दर्शनस्य नयनसाध्यतया तद्व्यतिरेके कामस्य च मनःसाध्यतया तद्व्यतिरेकेऽनुपपत्तेरिति भावः । साधकप्रमाणाभावशङ्कापरिहारकत्वेन 'नानात्मते'ति

वाक्यं योजयति **इतीति** । अनेन वृक्षादिकं सात्मकं शरीरत्वात्सम्प्रतिपन्नशरीरवदित्यनुमानमेव साधक प्रमाणमुक्तं भवति **व्यभिचारादिति** । तत्र सत्यपि मूले निषिक्तानामपामुपर्युपसर्पणे आध्यात्मिकप्राण-संबन्धाभावादिति भावः ॥ **प्रकारान्तरेणेति** । वृक्षादीनामिन्द्रियवत्तया प्रमितप्रसिद्धशरीराविशेषादिति प्रकारान्तरेणेत्यर्थः ।

प० — **केचिदिति** । तार्किकादयः ॥ **भस्मगुलिकादाविति** । भस्मनि गुलिकादावित्यर्थः । **प्रकारान्तरेणेति** । इन्द्रियवत्त्वेन स्थावराणां प्रसिद्धशरीराविशेषादिति व्याख्यातमित्यर्थः ।

या० — **प्रकारान्तरेणेति** । वृक्षादीनामिन्द्रियवत्त्वेन प्रसिद्धदेहाविशेषादिति प्रकारान्तरे-णेत्यर्थः ।

श्री० — **आचक्ष्महे इति** । येन तन्न्यायेन हस्त्यादिशरीराणामप्यनात्मकता स्यादिति शेषः । **सोऽपि** श्रवणाद्यभावोऽपि ॥ **तदिति** । श्रवणादीत्यर्थः । **अयं** विकासः ॥ **स्वभाव एवेति** । श्रवणाद्यभावेऽपि भवतीत्यर्थः ॥ **तत्प्रसङ्गादिति** । मुखविकासस्य स्वाभाविकत्वप्रसङ्गादित्यर्थः । तथा च राजादेरपि श्रवणं न कल्प्यमिति भावः ॥ **स्पर्शविशेषादिति** । अतिशीतादत्युष्णाच्च स्पर्शा-दित्यर्थः । **कार्श्यं** शुष्कता । **अशुष्यतो** वृक्षस्य । शोषाभावेनावस्थानमिति यावत् । **उत्कोरकत्वं** कुड्मलवत्त्वम् । **तिलकवृक्षो** अशोकवृक्षः । **केचित्** तार्किकाः । **आध्यात्मिकवायुः** शरीराभ्यन्तर-चारी प्राणवायुः ॥ **भस्मेति** । भस्मगुलिकं चेदुदके स्थाप्यते तर्हि तदुदकमुपर्युपसर्पतीति प्रत्यक्षसिद्धं, तेन तत्राप्याध्यात्मिको वायुरनुमीयेत । तथा च भस्मगुलिकमपि सात्मकं स्यादिति भावः । इति प्रसिद्धशरीराविशेषादिति यत्पूर्वमुक्तं तत्सूत्रखण्डस्यार्थान्तरकथनपरमित्याह **एतेनेति** ॥ **प्रकारान्त-रेणेति** । स्थावराणामिन्द्रियवत्त्वे प्रसिद्धशरीराविशेषात् स्थावराणामनात्मता नेत्येवंप्रकारान्तरेणेत्यर्थः ।

सु० — **'वक्ति स्वप्रभमि'त्यादिकमुत्सूत्रितं कस्माद्वर्णितमिति मन्दाशङ्कां निवारयितुं सूत्रारूढं करोति** एवञ्चेति ।

अनु० — एवञ्चात्माकात्स्न्र्यमिति तत एवाह वेदवित् ॥ २-२-१० ॥

इति **त्रिसूत्रीमिति शेषः** । तत एव **तदर्थमेव** । **उक्तस्यार्थस्य प्रतिपादनार्थमेव** । **एव-मन्यत्रापि सूत्रानुपन्यासेन व्याख्यानेऽपि नैवमाशङ्कनीयमिति ज्ञापयितुमिदमभिहितमिति** ॥ ॥ २-२-१० ॥

शे० — **मन्दाशङ्कामिति** । सूत्रानुपन्यासेऽप्युक्तरीत्या तत्तत्सूत्रारूढताया उपदर्शितत्वान्न प्रेक्षावतामियं शङ्केति भावः । वक्तीत्यादेः सर्वस्योदाहृतसूत्रमात्रार्थत्वभ्रान्तिनिरासायाह **त्रिसूत्रीमिति शेष**

इति ॥ **तदर्थमेवेति** । अनेनाद्यादिभ्य उपसङ्ख्यानात्तन इति चतुर्थ्यन्तात्तसिः, तादर्थ्ये चेयं चतुर्थी युक्ता भवति । तस्यैव विवरणम् **उक्तार्थस्य प्रतिपादनार्थमेवेति** ॥ २-२-१० ॥

**प०— इति शेष इति** । इतिशब्दानन्तमिति भावः । तत एवेत्यस्य प्रतिपदं **तदर्थमेवेति** । तद्विवरणम् **उक्तस्येत्यादि** ॥ २-२-१० ॥

**या०— मन्दाशङ्कामिति** । तत्र तत्र सूत्रारूढत्वस्य प्रेक्षावद्भिरुक्तरीत्या ज्ञातुं शक्यत्वान्न तेषामियं शङ्का किन्तु मन्दानामेवेति भावः ॥ २-२-१० ॥

**श्री०— एवमाशङ्कनीयमिति** । उत्सूत्रितं कस्माद्वर्जितमित्यर्थः । **इदमिति** । सूत्रारूढताप्रतिपादकम् । एवं चेत्यनुव्याख्यानमित्यर्थः ॥ २-२-१० ॥

**इति नैकस्मिन्नधिकरणम् ॥**

* * *

॥ अथ पत्युरधिकरणम् ॥

सु॰— ॐ पत्युरसामञ्जस्यात् ॐ ॥ इह महादेवं पुरस्कृत्य प्रवर्तमानानां मतमपाक्रियते । ते चतुर्विधाः शैवाः पाशुपताः कालामुखा महाव्रताश्चेति । तेषां सत्यप्यवान्तरभेदे साधारणमेव प्रमेयं वेदवादस्यातिविरुद्धत्वादपाकर्तुमनुवदति सर्वज्ञत्वादिकैरिति ।

अनु॰— ॐ पत्युरसामञ्जस्यात् ॐ ॥

सर्वज्ञत्वादिकैः सर्वैर्गुणैर्युक्तं सदाशिवम् ॥

जगद्विचित्ररचनाकर्तारं दोषवर्जितम् ॥

आहुः पाशुपताः

पशुपतेरिमे पाशुपता इति चतुर्विधा अपि गृह्यन्ते । ते सदाशिवं जगद्विचित्ररचनाकर्तारमाहुः । ततो जन्माद्यस्य यत इत्युक्तमसदिति । अज्ञानादिदोषयुक्तं कथं जगत्कर्तारमाहुरित्यत उक्तं दोषवर्जितमिति । सार्वज्ञाद्यभावेऽज्ञानादिवर्जनं चेतनस्य नोपपद्यत इत्यतः सर्वज्ञत्वादिकैः सर्वैर्गुणैर्युक्तमित्युक्तम् । यद्वा सर्वज्ञत्वादिकैः सर्वैर्गुणैर्युक्तं दोषवर्जितमिति प्रधानलक्षणविरुद्धार्थोपन्यासः । जगद्विचित्ररचनाकर्तारमिति श्रौतब्रह्मलक्षणविरुद्धार्थोक्तिः इत्यवगन्तव्यम् ।

---

शे॰— ॐ पत्युरसामञ्जस्यात् ॐ । अधिकरणप्रतिपाद्यानुक्तेर्मूले न्यूनतामाशङ्क्य पाशुपतपक्षं निराकरोतीति भाष्य एव तदुक्तेर्न तदनुक्तिर्दोषायेत्यभिप्रेत्य तद्भाष्यविवरणपूर्वकं स्वयमधिकरणप्रतिपाद्यमाह इहेति ॥ सत्यप्यवान्तरभेद इति । ईश्वरः कारणं भवति तथाऽपि नोपादानं किन्तु निमित्तमेव । तस्योपादानतायां कार्यगुणदोषैर्लेपः स्यात । मृदादीनामिव घटादिगुणदोषैस्ततो नोपादानता तस्येत्याद्यानां मतम् । चैतन्यरूपः पशुपतिर्भवत्येव निमित्तकारणमुपादानं चेति द्वितीयानां मतमिति परप्रमेय एवास्ति विप्रतिपत्तिराद्ययोर्द्वयोः । उत्तरयोस्त्ववान्तरप्रमेये । 'रुद्राक्षं कङ्कणं हस्ते जटा चैका च मस्तके । कपालं भस्मना स्नानं लकुटं कलशार्चनमि'ति कालामुखैः । 'दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति क्षणात् । कापालं व्रतमास्थाय यतिर्भवति मानव' इति । 'मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः । भगासनस्थमात्मानं ज्ञात्वा निर्वाणमृच्छति । कर्णिका रुचिकं चैव कुण्डलं च शिखामणिः । भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते । आभिर्मुद्रितदेहस्तु न भूय इह कायभाक्' । इति महाव्रतैश्चाधिकारसाधनयोः सौलभ्यस्य कथनादित्येवं चतुर्णां परापरप्रमेयेऽवान्तरभेदोऽस्तीत्यर्थः ॥ साधारण-

**मेवेति** । यद्यपि 'कार्यकारणयोगविधिदुःखान्ताः पञ्चपदार्थाः पशुपतिना पशुपाशविमोक्षणायोपदिष्टा' इत्यपि महादेवं पुरस्कृत्य प्रवर्तमानानां साधारणमेव प्रमेयम् । 'तत्र कार्यं प्राधानिकं महदादि । कारणं महेश्वरः । योगश्च चित्तवृत्तिनिरोध इत्यादिना योगशास्त्रेणोक्तः प्रणवाद्यनुष्ठानरूपो; विधिस्तु नानाविधो भिक्षाटनपात्रधारणादिरूपः कर्तव्यताविशेषः । दुःखान्तो मोक्षः । यत्र स्वातन्त्र्यमेव, न कदाचित्पारतन्त्र्यम् । परतन्त्रस्यैव सर्वाणि दुःखानि भवन्ति न तु स्वतन्त्रस्येश्वरस्य । पशुपतिश्च व्याख्यातः कारणत्वेन । पशवश्च रागद्वेषादिभिर्निबद्धा जीवाः ते च योगविधिभ्यां कार्याद्विलक्षणं पशुपतिमाराध्य दुःखान्तं मोक्षमधिगच्छन्ति । अन्यथा परतन्त्राः सन्तो वाक्तन्त्या नामभिर्दामभिरिव बद्धा रागद्वेषादिभिरनड्वाह इव विख्याताः शुष्कालाम्बुवत्संसारसमुद्रे इतस्ततोऽभिधावन्तः स्वर्गनरकादिषु बहूनि दुःखानि प्राप्नुवन्ति । 'अज्ञा अत एव पशवः' इत्येतत्सर्वेषां साधारणं प्रमेयम् । न तस्य सर्वस्यानुवादेन दूषणमिहास्तीति साधारणं प्रमेयमपाकर्तुमनुवदतीत्ययुक्तमिवाभाति । तथाऽपि साधारणप्रमेये विरुद्धमप्यंशं विहायातिविरुद्धांशस्य दूषणायायमनुवादः । अत एव वेदवादस्यातिविरुद्धत्वादित्युक्तम् । ततश्च वेदवादस्यातिविरुद्धं साधारणं प्रमेयमपाकर्तुमनुवदतीत्यर्थः ॥ **पाशुपता इति** । चतुर्विधेषु तेष्वेकविधाभूतपाशुपतानां परामर्श इति भ्रान्तिं निवारयति **पशुपतेरिति** । पशुपतिप्रणीतसिद्धान्तानुगामित्वाच्चतुर्णामपि पाशुपतत्वमिति ध्येयम् । जगद्विचित्ररचनाकर्तारमित्यस्यैव सर्वज्ञत्वादिकैः सर्वैर्गुणैर्युक्तं दोषवर्जितमिति विशेषणद्वयस्यापि सिद्धान्तविरुद्धार्थो न्यायसत्वस्यैव संभवे जगद्विचित्ररचनाकर्तृत्वोपपादकतया तद्योजनं क्लिष्टमिति पूर्वत्रापरितोषादाह **यद्वेति** ॥ **प्रधानेति** । मुख्यलक्षणेत्यर्थः । 'अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि । तावदेवेश्वरो नामे'ति भगवत्पादोक्तेरिति भावः । यद्वा साध्यलक्षणेत्यर्थः ॥ 'जन्माद्यस्येति सूत्रेण गुणपूर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तमि'ति पूर्वग्रन्थानुरोधादित्यवधेयम् ॥ **श्रौतेति** । लक्षणसूत्रे जन्मादिकारणत्वस्यानन्तगुणपूर्णत्वस्य च लक्षणतयाऽभिप्रेतत्वेऽपि जन्मादिकारणत्वस्य श्रुतिवृत्त्या प्रतिपादितत्वात् श्रौतत्वं । गुणपूर्णत्वादेश्च हार्दत्वेन श्रुतिवृत्त्याऽप्रतिपाद्यत्वादश्रौतत्वमिति भावः ।

स० — ॐ **पत्युरसामञ्जस्यात्** ॐ । अविशेषेणेश्वरवादोऽनेन निषिध्यते इति भ्रमनिवृत्त्यर्थमाह **महादेवमिति** ॥ **सत्यप्यवान्तरभेद इति** । शैवैः 'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थमि'ति श्रुतिमवलम्ब्य ब्रह्म-विष्णु-महेश्वरव्यतिरिक्तस्यैव साम्बशिवस्याभ्युपगमात् तज्ज्ञानादेव च मोक्षप्राप्तिरित्यङ्गीकृतम् । पाशुपतैस्तु पशुपतिरेव सर्वोत्तमः, तेन च कार्य-कारण-योग-विधि-दुःखान्ताः पञ्च पदार्थाः पशुपाशविमोक्षणायोपदिष्टाः, तत्र कार्यं प्राधानिकम् । महदादिकारणं महेश्वरः, योगः समाधिः, विधिः

त्रिषवणस्नानादि, दुःखान्तो मोक्ष इति पञ्चपदार्थाः । पशवो जीवाः, तेषां पाशो बन्धः, तद्विमोक्षो दुःखान्तः तदर्थमित्यङ्गीकृतम् । कालामुखैश्च 'रुद्राक्षं कङ्कणं हस्ते जटा चैका च मस्तके । कपालं भस्मना स्नानं लकुटं कलशार्चनम्' इत्यादिना भिन्न एवाधिकारो निरूपितः । महाव्रतैरपि 'दीक्षा-प्रवेशमात्रेण ब्राह्मणो भवति क्षणात् । कापालं व्रतमास्थाय यतिर्भवति मानवः' । तथा 'मुद्रिकाषट्क-तत्त्वज्ञः पञ्चमुद्रासमन्वितः । भगासनस्थमात्मानं (ज्ञा)ध्यात्वा निर्वाणमृच्छति । कर्णिका रुचिकं चैव कुण्डलं च शिखामणिः । भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते । आभिर्मुद्रितदेहस्तु न भूय इह कायभाक्' । इत्यादि वदद्भिरन्यदेव प्रमेयमभ्युपगतमिति चतुर्णामेषां पक्षाणामवान्तरभेदे विद्यमाने-ऽपीत्यर्थः । **श्रौतब्रह्मलक्षणेति** । लक्षणसूत्रे श्रुतिवृत्त्या प्रतिपादितत्वात् जन्मादिकारणत्वस्य श्रौतत्वं, गुणपूर्णत्वस्य चाक्षसत्वात् अश्रौतत्वमिति ध्येयम् ।

प० — ॐ **पत्युरसामञ्जस्यात्** ॐ । चतुर्विधानां ग्रहणायाह **महादेवं पुरस्कृत्य प्रवर्तमानानामिति** । अपाकरणे बीजोक्तिः **वेदवादस्येत्यादि** ॥ **पशुपतेरिम इति** । तस्येदमिति संबन्धमात्रेऽण्प्रत्यय इति भावः ॥ **प्रधानलक्षणेति** । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तमि'त्यानन्दमयाधिकरणानुव्याख्यानाद्युक्तदिशा जिज्ञासासूत्रस्थब्रह्मपदोक्तनिर्दोषगुणपूर्णत्वरूप-प्रधानलक्षणेत्यर्थः ॥ **श्रौतेति** । 'यतो वा इमानि भूतानि जायन्ते' 'यो नः पिता जनिते'त्यादिश्रुतिसिद्ध-जगज्जन्मादिहेतुत्वरूपब्रह्मलक्षणेत्यर्थः ।

---

या० — ॐ **पत्युरसामञ्जस्यात्** ॐ ॥ **प्रधानलक्षणेति** । साध्यलक्षणेत्यर्थः । 'जन्माद्य-स्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तमि'त्युक्तत्वादिति भावः ।

सु० — **तदेतद्दूषयितुं** पत्युरसामञ्जस्यादिति **सूत्रतात्पर्यमाह** तच्चेति ।

अनु० — तच्च बहुश्रुतिविरोधतः ॥

नोपादेयं मतं हि

**चशब्दः पूर्वतनैः(मतैः) सह समुच्चयार्थः । हिशब्दो हेतौ । तत् पशुपतेः सर्वजग-त्कारणत्वादिकं मतं नोपादेयम् । कुतः ।** पत्युः पशुपतेः । असामञ्जस्यात् दोषित्वात् । **तदनङ्गी-कारे च बहुश्रुतिविरोध इति योजना ।**

**कास्ताः श्रुतय इत्यतस्ता उदाहरति** अस्येति ।

अस्य देवस्य स्तुहि गर्तगम् ॥

उन्पिपेष शिरस्तस्य गृणीषे सत्पतिं पदम् ॥

यद्विष्णोरुपमं हन्तुं रुद्रमाकृष्यते मया ॥
धनुर्यं कामये तं तमुग्रं मा शिश्नदेवताः ॥
घ्नंच्छिश्नदेवानेकोऽसावासीन्नारायणः परः ॥
तस्माद्रुद्रः सम्प्रसादश्चाभूर्ना वैष्णवं मखम् ॥
यज्ञेन यज्ञमयजन्ताबध्नन्पुरुषं पशुम् ॥
यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा ॥

अनेन 'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः। विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावदि'ति (ऋ. ७-४०-५) श्रुतिमुपादत्ते।

'स्तुहि गर्तगमि'त्यनेन 'स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम्। मृळा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्निवपन्तु सेना' इति (ऋ २-३३-११)। 'उत्पिपेषे'त्यनेन 'रुद्रस्य त्वेव धनुरार्त्निः शिर उत्पिपेषे'ति। 'गृणीष' इत्यनेन 'कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम्। भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्म' इति (ऋ २-३३-१२)। 'पदमि'त्यनेन 'तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम्। पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनामि'ति (ऋ ५-३-३)। 'हन्तुमि'त्यनेन 'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ' इति (ऋ.१०-१२५-६)। 'यं कामये' इत्यनेन 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामि'ति (ऋ.१०-१२५-५)। 'मे'त्यनेन 'मा शिश्नदेवा अपि गुर्ऋतं न' इति। 'घ्नन्'इत्यनेन 'घ्नंच्छिश्नदेवाँ अभिवर्पसा भूदि'ति। 'एकोसावि'त्यनेन 'एको नारायण आसीन्न ब्रह्मा न च शङ्कर' इति। 'तस्मादि'-त्यनेन 'स रुष्टः स प्रसन्नो यद्रुष्टो यत्प्रसन्नस्तस्माद्रुद्रसम्प्रसादावभूतामि'ति। 'वैष्णवमि'त्यनेन 'तेषां मखं वैष्णवं यश आर्छदि'ति। यज्ञेनेति, अबध्नन्निति, यो भूतानामिति प्रसिद्धम्।

कथमेताभिः श्रुतिभिः पशुपतेर्निर्दोषत्वं विरुद्धमित्यतस्तासां तात्पर्यमाह इत्यादीति।

इत्यादिश्रुतिसामर्थ्यात्पारतन्त्र्यं जनिर्मृतिः ॥
पराधीनपदप्राप्तिरज्ञत्वं प्रलयेऽभवः ॥
प्रतीयन्ते

अभवः अभावः। प्रतीयन्ते पशुपतेरिति शेषः।

**शे०**—उक्तप्रतिज्ञायां सूत्र एवासामञ्जस्यादिति हेतूक्तेर्भाष्ये बहुश्रुतिविरोधत इति हेत्वभिधानानर्थक्यमित्याशङ्क्य नेदं प्रकृतप्रतिज्ञायां हेतुकथनपरं भाष्यं, किन्तु सौत्रहेत्वनङ्गीकारे बाधककथनद्वारा

तद्धेतूपपादकमेवेति नानर्थक्यमिति भावेन प्रकृतप्रतिज्ञायां सौत्रं हेतुमुपन्यस्य तदुपपादकतया भाष्यं योजयति **कुत इत्यादिना ॥ यज्ञेनेति ॥ अबध्नन्निति यो भूतानामिति प्रसिद्धमिति** । यद्यप्यत्र 'अस्य देवस्ये'त्यादाविव यज्ञेनेत्यादिनेदमुपादीयत इत्येव वाच्यम्, तत्प्रसिद्धत्ववचनं त्वनर्थकमेव, अस्य देवस्येत्यादिपूर्वोदाहृतानामपि प्रसिद्धत्वेन व्यावर्त्याभावात् । तथाऽप्यपेक्षितार्थप्रतिपादकस्य समस्तस्य श्रुतिखण्डस्य तत्र तत्रोदाहरणानुदाहरणाभिप्रायेणेयमुक्तिः । न हि 'यज्ञेन यज्ञमयजन्ते'त्याद्युदाहृतवाक्येनेव 'अस्य देवस्ये'त्यादावुदाहृतभागेनैव विवक्षितार्थलाभः संभावितः । प्रश्छिञ्चदेवानित्यत्रापि क्रियापदानुपन्यासान्न्यूनत्वमेवेति न ततोऽपि विवक्षितार्थलाभ इति भाव इत्याहुः । वस्तुतस्तु 'यज्ञेन यज्ञमयजन्ते'ति, 'अबध्नन्पुरुषं पशु' इति समग्रेण पादेन, यो भूतानामधिपती रुद्रस्तन्तिचरो वृषेति' श्लोकार्धेन यथाश्रुतानुपूर्वीविशिष्टश्रुतिपरिग्रहवदस्य देवस्येत्यादावनुव्याख्याने समग्रेण पादेनार्धेन वा यथास्थितानुपूर्वीविशिष्टतत्तच्छ्रुत्यपरिग्रहादियं प्रसिद्धत्वाप्रसिद्धत्वोक्तिरिति ध्येयम् । अभवशब्दस्य प्रलयेऽनुत्पत्त्यर्थताभ्रान्तिं निवारयति **अभवोऽभाव इति** ।

**स०— यज्ञेनेति, अबध्नन्निति, यो भूतानामिति प्रसिद्धमिति** । अत्र 'अस्य देवस्य' इत्यादाविवात्रापि यज्ञेनेत्यादिना इदमुपादीयते इत्येव वक्तव्यम् । न तु प्रसिद्धमिति । तत्प्रसिद्धत्ववचनं व्यर्थम् । पूर्वोदाहृतानामपि प्रसिद्धत्वादिति न वाच्यम् । अपेक्षितार्थप्रतिपादकस्य समस्तस्यापि आचार्येण उदाहरणानुदाहरणाभ्यामेतदुक्तेः समञ्जसत्वात् । न हि 'यज्ञेन यज्ञमयजन्त' इत्युदाहृतवाक्येनेव 'अस्य देवस्य' इत्यादौ विवक्षितार्थलाभः संभवति । 'प्रश्छिश्नदेवान्' इत्यत्रापि क्रियापदानुदाहरणात् न्यूनत्वमेवेति बोध्यम् ।

**प० — इति प्रसिद्धमिति** । इति वाक्यत्रयं प्रसिद्धमित्यर्थः ।

**सु०— 'अस्य देवस्ये'त्यनेन पराधीनपदप्राप्तिः प्रतीयते** । मीळ्हुषः **सेचकस्य, एषस्य इच्छारूपस्य,** अस्य **विष्णोर्देवस्य,** प्रभृथे **प्रभरणे पूजायामिति यावत्** । **हविर्भिः कृते सति** वया **बन्धको रुद्रो,** रुद्रियं महित्वं **रौद्रं पदं,** विदे **विविदे लेभे,** हि **यथा तथा हे अश्विनौ युवामपि** इरावत् **अन्नवत्,** वर्ति **वर्तनं,** यासिष्टं **अयासिष्ट प्राप्नवन्तौ स्थ इति** ।

**'स्तुही'त्यनेन स्तावकतया पारतन्त्र्यम्** । **हे रुद्र त्वं** श्रुतं **प्रसिद्धं,** गर्तसदं **हृदयगुहानिवासं, युवानं,** मृगं न भीमं **सिंहमिव भीषणम्,** उग्रम् **उग्राणां दैत्यानाम्,** उपहत्नुम् **उपहन्तारं, नृहरिं,** स्तुहि **स्तौषि । स एवं** स्तवान **स्तुवंस्त्वं,** जरित्रे **स्तोत्रे, त्वां स्तुवन्तं माम्** । मृळ **मृडय सुखय । ते सेनाश्चास्मदन्यमेव** निवपन्तु **घ्नन्त्विति** ।

'रुद्रस्ये'त्यनेनाज्ञत्वं पारतन्त्र्यं मृतिश्च । आरोपितं धनुर्हनावष्टभ्यावस्थितस्य रुद्रस्य शिरो ज्यायां (वम्रिरू)कामरूपेणेन्द्रेण छिन्नायामुत्क्षिप्ता धनुरार्त्निरुत्पिपेष चिच्छेदेति ।

'कुमार' इत्यनेनापि पारतन्त्र्यं जनिश्च । हे रुद्र कुमारः पुत्रो भवान् जगद्व्यामोहनाय कैलासमुपयन्तं, त्वां वन्दमानं पितरं कृष्णं प्रति ननाम । तेन स्तुतस्त्वं भूरेः पुरुषार्थस्य दातारं सत्पतिं गृणीषे स्तौषि स्तुतवानसि । एवम्भूतस्त्वमस्माभिः स्तुतः अस्मेऽस्मभ्यं भेषजा भेषजानि संसारव्याधिनिरसनानि ज्ञानानि रासि ददासि देहीति ।

'तव श्रिय' इत्यनेन पराधीनपदप्राप्तिर्जनिः पारतन्त्र्यं च । हे रुद्र यत् येभ्यस्ते जनिम जन्माभूत्ते मरुतो ब्रह्माणोऽतीतवर्तमानास्तव श्रिये सम्पदे चारु सुन्दरं चित्रमाश्चर्यं उपमं उप समीपे मा लक्ष्मीर्यस्य संवहनकर्त्री तत्तथोक्तम् । यद्विष्णोः पदं मर्जयन्तः शोधितवन्तः क्षालितवन्तः । तत्त्वया हृदि निधायि न्यधायि । तेन कारणेन त्वं गोनां गवां (वाचां) मध्ये गुह्यं नाम नारायणादिकं पासि जपोपदेशादिना पालयसीति । 'अहमि'त्यनेन मृतिः । अहं ब्रह्मद्विषे ब्रह्मद्विषां दैत्यानां शरवे हिंसकाय हिंसकं रुद्राय रुद्रं हन्तवै हन्तुमेव प्रलये धनुरातनोमि विस्तारयामीति ।

'यमि'त्यनेन पराधीनपदप्राप्तिः । अहं यं यं रुद्रं कर्तुं कामये तं तमुग्रं रुद्रं कृणोमि करोमि एवं तं ब्रह्माणं तमृषिं तं सुमेधां सुमेधसं करोमीति ।

'मे'त्यनेनाज्ञत्वम् । अतीतानागतवर्तमाना गुह्याभिमानिनो देवा रुद्रा अपि नोऽस्माक-मुपास्यमृतं ज्ञानरूपं ब्रह्म मागुर्न ज्ञातवन्त इति ।

घ्नन्नित्यनेन मृतिः । गुह्याभिमानिदेवान्घ्नन्नीश्वरो वर्पसा बलेन सर्वमभ्यभूदभिभूतवा-निति ।

'एक' इत्यनेन प्रलयेऽभावो जनिश्च ।

'तस्मादि'त्यनेन जनिः । परमेश्वररोषजो रुद्र इत्यर्थः । संप्रसादो ब्रह्मा ।

'तेषामि'त्यादिवाक्यैः पारतन्त्र्यम् । तेषां देवानां यशो, वैष्णवं मखं विष्णुमखे पशुत्वेन नियुक्तं रुद्रमार्छत्प्राप्तवदिति । देवा यज्ञेन रुद्रेण पशुना यज्ञं विष्णुमयजन्तेति । देवाः पुरुषं रुद्रं पशुमबध्नन्निति । यो भूतानामधिपती रुद्रः स विष्णोराज्ञारूपायां तन्त्यां चरति वृषा प्रसिद्धतन्त्यामिवेति ।

**शे०**— मिह सेचन इत्यस्माल्लिटः क्वसुरादेशे दाश्वान्साह्वान्मीढ्वांश्चेति निपातनादद्वित्वा-निट्त्वोपधादीर्घत्वढत्वेषु सत्सु निष्पन्नमीढ्वस्प्रातिपदिकात् षष्ठ्येकवचने वसोः संप्रसारणमिति संप्रसारणे, संप्रसारणाच्चेति पूर्वरूपत्वे, आदेशप्रत्यययोरित्यनेन स्थानिवत्त्वात्प्रत्ययावयवस्य सकारस्य षत्वे च, मीळ्हुष इति रूपसिद्धिरित्यभिप्रेत्य व्याचष्टे **सेचकस्येति** । भक्ताभिलषितवर्षितुरित्यर्थः ॥ **एषस्येच्छारूपस्येति** । तौदादिकात् इषु इच्छायामित्यस्मादकर्तरि च कारके संज्ञायामित्यनेन एषणमेष इति भावे घञि पुगन्तलघूपधस्य चेत्युपधागुणे च सति एषशब्दनिष्पत्तिरिति भावः । टीकायां तु अत्र आ ईश इति विग्रहः । शकारस्य व्यत्ययेन षकार इत्यभिप्रेत्य आ समन्तादीशस्येति व्याख्यानं कृतमित्यवधेयम् । वय बन्धन इत्यस्मात् असुनित्यनेन कर्तर्यसुनित्यभिप्रेत्याह **बन्धक इति** । अहङ्काराभिमानित्वेन जीवानां बन्धक इत्यर्थः । लाभार्थस्य विन्दतेर्लिटि द्विर्वचनाभावश्छान्दस इत्यभिप्रेत्याह **विदे विविद इति** । इराशब्दस्यान्ननामसु पठितत्वादाह **अन्नवदिति** । यासिष्टमिति लुङि बहुलं छन्दस्यमाङ्योगेऽपीति स्मरणादडभावश्छान्दस इत्यभिप्रेत्याह **अयासिष्टमिति** ।

नेति पदं हि लोके प्रतिषेधार्थ एव वर्तते । स्वाध्याये तु प्रतिषेधार्थे उपमार्थे च वर्तते । येन पदेनान्वीयते तत्पूर्वं प्रयुज्यमानं तत्प्रतिषेधे वर्तते । ततःपरं प्रयुज्यमानं तत्पदार्थप्रतियोगिकसादृश्ये वर्तते । 'नेति प्रतिषेधार्थोऽयं भाषायामुभयमन्वध्यायं नेन्द्रं देवममंसते'ति प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत्प्रतिषेधति, दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमीयत इति यास्कोक्तेः । तथा चोपमेयवाचिनो मृगशब्दादुपरिष्टात्प्रयुज्यमानं नेतिपदं मृगपदार्थप्रतियोगिकसादृश्यार्थकमित्याशयेनाह **सिंहमिवेति** । ननु न कुमारक इत्युपमेयवाचिकुमारकपदात्पूर्वं प्रयुज्यमानस्यापि नपदस्योपमानार्थत्वान्न पूर्वपदस्य वेदे प्रतिषेधार्थत्वनियमो युक्तः । न चार्भको न शिशुरिव कुमारकः सूक्ष्मे देह इति व्याख्यानान्न काचित्कुसृष्टिरिति वाच्यम् । तथाव्याख्यानस्य शब्दाननुगुणत्वात् । कुमारकशब्दस्य सूक्ष्मदेहार्थत्वव्यवस्थापकयो रूढियोगयोरभावात् । अर्भकशब्दस्य च सूक्ष्मदेहार्थत्वेऽर्भकमल्पकं शरीरं यस्येति व्युत्पत्त्युपपत्तेः । ततश्च न तत्र नपदस्यार्भकपदेनान्वयायोगात्कुमारकपदेनैवान्वय इत्युक्तदोषतादवस्थ्यमिति चेत् । न । नेन्द्रं देवममंसतेत्यादौ सर्वत्र पूर्वस्य नपदस्य प्रतिषेधार्थत्वेऽपि सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनात्प्रतिषेधार्थत्वाभावस्य कुमारशब्दार्थप्रतियोगिकसादृश्यार्थत्वस्य चोपपन्नत्वात् । उक्तं च टीकाकृता 'यद्यपि एवं नेतिपदं इवार्थे प्रसिद्धं, तथाऽपि क्वचित्पूर्वमपि भवती'ति । यत्तूदाहृतटीकावाक्यस्य 'खले न पर्षान्प्रतिहन्मि भूरी'त्यादौ क्वचित्पूर्वमपि नेतिपदमुपमार्थं दृष्टमिति न कुमारक इतीदमप्युपमार्थमेवेत्यभिप्रायवर्णनम् । तन्न । तथा सति पूर्वस्य नशब्दस्योपमानार्थतायाः दर्शनमात्रेणैव सिद्ध्या हेत्वाकांक्षोपरमात्सर्वे विधय इति तत्र हेतुप्रदर्शनपरोत्तर-

टीकाग्रन्थवैयर्थ्यप्रसङ्गात् । खले न खल इवेति भक्तिपादीयटीकानुरोधेन येनान्वीयते तस्मात्परत्वेन तस्य पूर्वत्वासिद्ध्या दृष्टान्तदार्ष्टान्तिकभावश्रयणस्य तद्विरुद्धत्वात् । न च धान्यानि यद्वत्खलगानीत्यादिस्मृत्यनुसारेणैतत्सिद्धिरिति वाच्यम् । तेन खलशब्दस्य तत्स्थितधान्योपलक्षणत्वस्य वा खलशब्दात्परतः स्थितधान्यानीति पदान्तराध्याहारस्य प्राप्तावपि नशब्दस्य पर्वानित्यनेनान्वयस्याप्राप्त्या तद्बलेनास्यार्थस्यासिद्धत्वात् । अत एव खलस्थितधान्यानीवेति नशब्दस्य परत्वमेव निदर्शितमिति दिक् । 'मृगं न भीमं' इत्यनेन पौनरुक्त्यपरिहारायाह **उग्रमुग्राणामिति** । षष्ठ्यर्थे द्वितीया । एकवचनं च जात्यभिप्रायमिति भावः ॥ **उपहन्तुमिति** । कृहनिभ्यां क्नुरिति हन्तेः क्नुप्रत्ययेऽनुदात्तोपदेशावनतितनोत्यादीनामनुनासिकलोपो झलि क्ङितीत्यनुनासिकलोपे हत्नुशब्दनिष्पत्तिर्बोध्या । वेदापभाष्यकारस्तु दशपादीवृत्तिस्थं तकाररहितं कृहनिभ्यां क्नुरिति पाठमनुसृत्य तकारोपजनश्छान्दस इत्याह । तत्तु हन्तिधातुं विवृण्वता माधवेनोपहत्नुमित्युदाहृत्य क्नोः कित्त्वादनुनासिकलोप इत्युक्तत्वेन तकारसहितपाठस्यैव तत्सम्मतत्वेन तद्विरोधादुपेक्ष्यम् । यत्तु माधवेनापि सुरूकृत्नुमिति मन्त्रं विवृण्वता तकारोपजनश्छान्दस इत्युक्तं तत्तु दशपादीवृत्तिमनुसृत्यैव, न तु वस्तुस्थितिमनुरुध्येति द्रष्टव्यम । स्तुहीति लोट्श्रवणाद्विध्यर्थत्वभ्रान्तिं वारयति **स्तौषीति** । लडर्थेऽयं लोडिति भावः । जरितृशब्दस्य स्तोतृनामसु पाठादाह **स्तोत्र इति** । द्वितीयार्थे चेयं चतुर्थीति भावेनाह **स्तुवन्तमिति** । मृडेत्येतदन्तर्णीतणिजर्थमित्यभिप्रेत्याह **मृडयेति** । शस्य ङित्त्वाल्लघूपदगुणाभाव इति ध्येयम् ॥ **सुखयेति** । मृड सुखन इति धातोरिति भावः । 'उपसर्गेण धात्वर्थो बलादन्यत्र नीयत' इत्यभियुक्तोक्तेरत्र नीत्युपसर्गश्रवणाद्धिंसार्थत्वमित्याशयेनाह **घ्नन्तीति** ।

**वम्रिरूपेण** कीटरूपेण । धनुरार्त्निः धनुषः कोटिस्तदग्रमिति यावत् ।

नानामेत्यत्र लिटि अभ्यासदीर्घश्छान्दस इति भावेनाह **ननामेति** । सुपां सुलुगिति चतुर्थीबहुवचनस्य शेआदेश इत्यभिप्रेत्याह **अस्मे अस्मभ्यमिति** ॥ **ददासीति** । रा दान इति धातोरिति भावः । विध्यर्थतालाभायाह **देहीति** । लोडर्थेऽयं लडिति भावः ।

**शोधितवन्त इति** । मृजूष् शुद्धाविति धातोरिति भावः ॥ **न्यधायीति** । 'बहुलं छन्दस्यमाङ्योगेऽपी'ति स्मरणान्निधायीति लुङ्यडभाव इति भावः ।

छन्दसि षष्ठ्यर्थे चतुर्थी वक्तव्येति स्मरणात् ब्रह्मद्विष इति चतुर्थी षष्ठ्यर्थ इति भावेनाह **ब्रह्मद्विषामिति** । यद्यप्यत्र चतुर्मुखस्य पञ्चममुखच्छेत्रे इति टीकोक्तरीत्या, दक्षप्रजापतिद्विष इति प्रकारान्तरेण वा व्याख्यातुं शक्यमिति व्यत्ययाश्रयणमनर्थकमित्याभाति, तथाऽपि सत्येव तस्मिन्नर्थाधिक्य-

लाभाय प्रकारान्तरोपदर्शनमेतदिति द्रष्टव्यम् । शॄ हिंसायामिति धातुव्याख्यानं मनसि निधायाह **हिंसकायेति** । हिंसाशीलायेत्यर्थः । ताच्छील्यार्थकस्य उप्रत्ययस्य श्रवणात् । अत एव टीकायां हिंसनशीलायेत्येव व्याख्यातमिति द्रष्टव्यम् । द्वितीयार्थेऽयं चतुर्थीति भावेनाह **हिंसकमिति** । एवमेव रुद्रायेत्यत्रापि द्रष्टव्यम् ॥ **हन्तुमेवेति** । तुमर्थे तवैप्रत्यय इति भावः । 'एव' इति 'उ'शब्दार्थकथनम् । न तु भीषणाद्यर्थमित्यर्थः ।

**कृणोमीति** । व्यत्ययो बहुलमिति विकरणव्यत्यय इति भावेनाह **करोमीति** ।

उपास्योपासकभाव एव 'न' इति षष्ठ्यर्थः संबन्ध इति भावेन तल्लब्धार्थकथनमुपास्यमिति ॥ **ज्ञानरूपमिति** । ऋ गतावित्यतो भावे क्त इति भावः ॥ **मागुरिति** । इण् गतौ इणोगाङ् लुङिति गादेशः । गतिस्थेति सिचो लुक् । अत इति झेर्जुस् न माङ्योग इत्यडभाव इति भावः । वर्पस्शब्दस्य बलनामसु पठितत्वादाह **वर्पसा बलेनेति** ॥ **जनिश्चेतीति** । 'तत एते व्यजायन्त विश्वो हिरण्यगर्भो-ग्निर्यमो वरुणरुद्रेन्द्रा' इत्युत्तरवाक्यानुसारेण । अन्यथाऽनुपपत्त्या वाऽत्र जनिलाभादियमुक्तिरिति ध्येयम् ।

म०— **जनिश्चेति** । 'तत एते व्यजायन्त विश्वो हिरण्यगर्भ' इत्याद्युत्तरवाक्यानुसारेण वा अन्यथानुपपत्त्या वा जनिलाभो बोध्यः ।

---

प०— मिह सेचने लुसदीर्घउपधाया इत्युपेत्यार्थमाह **सेचकस्येति** । अभीष्टवर्षकस्येत्यर्थः । इषु इच्छायामित्यतः पचाद्यच्प्रत्यये पुगन्त इति गुण इत्युपेत्याह **इच्छारूपस्येति** । प्रपूर्वस्य भृञ् भरण इत्यस्य भावे थक्प्रत्यय इत्युपेत्यार्थमाह **प्रभरण इति** । वय बन्धन इत्यतो सुन्प्रत्यय इत्युपेत्याह **वयाः बन्धक इति** । रुद्रशब्दात् घप्रत्यये तस्येयादेशे यस्येतिलोपे रुद्रियमिति रूपमुपेत्याह **रौद्रमिति** । विद्लृ लाभ इत्यस्य लिट्यभ्यासलोपे रूपमुपेत्याह **विदे विविद इति** । यासिष्टमिति मध्यमपुरुष-श्रवणलब्धमाह **युवामपीति** । या प्रापण इत्यतो लुङि रूपम् । छन्दस्यमाङ्योगोऽपीत्यडभाव इत्युपेत्याह **यासिष्टमयासिष्टमिति** । पदात्परस्य नशब्दस्येवार्थत्वप्रसिद्धेराह **सिंहमिवेति** । सुपां सुलुगित्यादिना षष्ठ्यर्थे प्रथमेत्युपेत्याह **उग्रमुग्राणामिति** । हन हिंसागत्योरित्यतः क्नुप्प्रत्यये ह्रस्वस्य पिति कृति तुगिति तुगागमे अनुदात्तोपदेशेत्यादिनाऽनुनासिकलोप इत्युपेत्याह **उपहन्तारमिति** । बहुलं छन्दसीति लडर्थे लोडित्युपेत्याह **स्तौषीति** । मृळेति मध्यमपुरुषश्रवणादाह **स्तुवन् त्वमिति** । ते इत्यस्य जरित्रेत्यत्रान्वयमुपेत्य वा योग्यताबलाद्वाऽऽह **त्वां स्तुवन्तमिति** । सुपां सुपो भवन्तीति वार्तिकोक्तेरिति भावः । अभ्यर्हितत्वाद्वास्मदन्यं इति श्रवणाद्वाह **मामिति** । ऋषिमित्यर्थः ।

मृडेत्यन्तर्णीतणिजन्तमुपेत्याह **मृडयेति** दैर्घ्यं संहितायामाधिक्यार्थम् । 'संहितायां यत्र दैर्घ्यं पदकाले दे यत्र न विद्यते । उक्तार्थस्य महाधिक्य श्रुतेस्तत्र विवक्षितमि'त्युक्तः ॥ **ते इति** । त्वदीया इत्यर्थः । 'दिव्यस्यैका धनुरार्त्निः पृथिव्यामपराश्रिता । तस्येंद्रो वम्रिरूपेण धनुर्ज्यामच्छिन त्स्वयमि'ति पूर्ववाक्यार्थमनुवदति **आरोपितमित्यादिना** । **धनुरार्त्निः** धनुःकोटिः । भवानित्यस्य ननामेत्यन्वयः । नानामेत्यत्र दैर्घ्यं प्राग्वत् । **तेनेति** कृष्णेनेत्यर्थः । **भूरेरिति** बहोरित्यर्थः । पुरुषार्थस्येति शेषोक्तिः । सुपां सुलुक्पूर्वसवर्णाच्छेयेत्यादिनासच्छब्दाच्छे इति सुबादेशं मत्वोक्तं **अस्मे** अस्मभ्यमिति । सुपां सुलुगित्यादिना सुपो डादेशं मत्वाह **भेषजाभेषजानीति** ॥ **ददामीति** । रा दान इति धातोरिति भावः । व्यत्ययो बहुलमित्युक्तेराह **देहीति** । यदित्यनुवादः । येभ्य इति व्याख्या जनी प्रादुर्भाव इत्यत उणादयो बहुलग्रहणात् इमनिच्प्रत्ययमुपेत्याह **जनिम जन्मेति** । यदिति श्रवणादाह **ते मरुत इति** । भूतपूर्वगत्यात्र मरुन्नामेति भावेनाह **ब्रह्माण इति** । बहुवचननिर्वाहायाह **अतीतेति** । संपदे मर्जयन्तेत्यन्वयः । 'यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूदि'त्यादेरिति भावः । मर्जयन्त । मृजूष् शुद्धौ । अमार्जयन्तेति वाच्येऽडभावो ह्रस्वत्वं च छान्दसमिति भावेनाह **शोधितवन्त इति** । सुपां सुलुगित्यादिना (तेइत्यत्र) तृतीयाविभक्तेः शे इत्यादेशं मत्वाह **तत् त्वयेति** । अडभावश्छांदस इत्युपेत्याह **न्यधायीति** । निहितमित्यर्थः ॥ **गवामिति** । वाचामित्यर्थः । अहमिति लक्ष्मीराह । एवमग्रेपि । ब्रह्मद्विषे । द्विषामित्येतदन्यत्रोक्तादर्थादर्थान्तरमित्युक्तं चन्द्रिकायाम् । 'तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेन इति हन्तेस्तुमर्थे तवैप्रत्यय इति भावेनाह **हन्तुमेवेति** । उशब्दार्थः एवेति । कृञः श्नुविकरणं छान्दसमित्युपेत्याह **करोमीति** । बहुवचननिर्वाहायाह **अतीतानागतेति** । विशे(शि)ष्योक्तिः **रुद्रा इति** । **नः** अस्माकमिति । मन्त्रद्रष्टृप्रयुक्तासच्छब्दगतषष्ठ्योक्तसंबन्धं व्यनक्ति **उपास्यमिति** । ऋ गताविति धातोर्गत्यर्थस्य ज्ञानार्थत्वादाह **ऋतं ज्ञानरूपमिति** । ब्रह्मेति विशेष्योक्तिः । इण् गतावित्यस्य लुङि इणो गालुङीति गादेशे उस्यपदान्तादित्याकारलोपे न माङ्योगइत्यडभावे सति गुरिति रूपं मत्वाह **मा गुर्न ज्ञातवन्त इति** । गुह्यभिमानिदेवानिति बहुवचनं प्राग्वत् । रुद्रानिति योज्यम् । भूदित्यत्राडभावश्छान्दस इत्युपेत्याह **अभ्यभूदिति** । व्यवहिताश्चेत्युपसर्गान्वयः । सर्वमिति योग्यतया लब्धोक्तिः । प्रलयेऽसतो जनिः सिद्धेति जनिश्चेत्युक्तम् । देवा वै सत्रमासतेत्युपक्रमादाह **देवानां यश इति** । आर्छदित्यन्वयः । वैष्णवं मखमित्यस्यार्थः । **विष्णुमख इति** । प्रकरणप्राप्तमाह **पशुना रुद्रेणेति** । देवा यद्यज्ञं तन्वाना इति पूर्ववाक्यस्थदेवपदान्वयेनार्थमाह **देवाः पुरुषमिति** ॥ **अधिपती रुद्र इति** । ढ्रलोपे पूर्वस्य दीर्घोण इति दीर्घत्वम् । वृषा वृषभः ।

या० — **एषस्येच्छारूपस्येति** । इषु इच्छायामित्यस्मात्पचाद्यचि गुणे च कृते एष इति शब्दनिष्पत्तिर्भवति । एतच्छब्दरूपत्वे त्वेतस्येति स्यादिति ज्ञातव्यम् ॥ **वया बन्धक इति** । वय बन्धन इत्यस्मादसुन्प्रत्यये वया इति रूपं भवतीति ज्ञातव्यम् । धनुरात्निर्धनुषः कोटिः अग्रमिति यावत् ।

**सु० — एतासां श्रुतीनामेतदर्थत्वोपपादनं त्वाचार्यैर्णैवान्यत्रोदाहृतेभ्यो वाक्येभ्यष्टीका-तश्चावगन्तव्यम् । अत एव सामर्थ्यादित्युक्तम् ।**

शे० — **आचार्यैर्णैवान्यत्रोदाहृतवाक्येभ्य इति** । अत्रैव प्रसङ्गान्तरे उदाहृतेभ्यो 'यः स्वात्ममायाऽभिभवं स्वयं गतो नाहं नभस्वांस्तमथापरे कुतः' । 'ब्रह्माऽपि यं वेत्ति न चेह सम्यगन्ये कुतो देवमुनीन्द्रमर्त्याः' इत्यादिभ्यः । 'यस्येहितं न विदुः स्पृष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये' इत्यन्तेभ्यो ब्रह्मशिवयमवाक्येभ्यः । भाष्ये उदाहृतात् । 'श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः । तदैवाच्युत यान्त्येव यदैव त्वं पराङ्मुख' इति शैवस्कान्दवचनात् । 'नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिन । बालः क्रीडनकैर्यद्वत्क्रीडतेऽस्माभिरच्युत' इति ब्राह्मब्रह्मवैवर्तवचनात् । गीता-भाष्ये तत्र तत्रोदाहृतात् । 'सत्यं सत्यं पुनः सत्यं शपथैश्चापि कोटिभिः । विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा । पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा । नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः' इति नारदीयवचनात्। 'यदन्तरं सिंहगजेन्द्रयोर्वने यदन्तरं सूर्यशशाङ्कयोरपि। यदन्तरं जान्हविसूर्यकन्ययोस्तदन्तरं ब्रह्मगिरीशयोरपि' इति स्कान्दशैववचनात् । 'संसारार्णवनिर्मग्न इदानीं मुक्तिमेष्यसी'ति स्कान्दे शिवं प्रति मार्कण्डेयवचनात् । 'स्थितप्रज्ञोऽपि यस्तूर्ध्वैः प्राप्य रौद्रपदं ततः । साङ्कर्षणं ततो मुक्तिमगाद्विष्णु-प्रसादत' इति गारुडवचनात् । 'महादेव परे जन्मंस्तव मुक्तिर्निरूप्यत' इति नारदीयवचनात् । 'यः स्थाणोः स्थाणुतां प्रादाद्भगवानव्ययो हरि'रित्यादिभागवततात्पर्योदाहृतवचनेभ्यश्चेत्यर्थः । **टीकातश्चेति** । सन्न्यायरत्नावलीतश्चेत्यर्थः । 'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिरि'त्यादरणीयत्व-वर्णनात् । टीकोक्तरीत्या यं कामय इत्यस्य । 'न त्वं वेत्सि न वेत्तीन्द्रो नाहं वेद्मि न शङ्करः । वेत्ति पारं महत्त्वस्य हरेरद्भुतकर्मण' इति टीकोदाहृतस्कान्दवचनात् मा शिश्नदेवा इति वाक्यस्य । 'नमो-ऽतिशायिने तस्मै देहिनां परमात्मने । नारायणाय विश्वाय निर्गुणाय गुणात्मने । यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः । एतौ च द्वाविह श्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदुद्देशितपन्थानौ सृष्टिसंहार-कारकावि'ति टीकोदाहृतशान्तिपर्ववचनानुसारेण स रुष्ट इत्यादिवाक्यस्य । 'देवा वै सत्रमासत ऋद्धि-कामास्तेऽब्रुवन् यन्नः प्रथमयश' इत्यादिटीकोदाहृतोपक्रमानुसारात् 'तेषां मखं वैष्णवमि'त्यस्य । 'तस्येन्द्रो वम्रिरूपेण धनुर्ज्यामच्छिनत्स्वयमि'ति गलेनावष्टब्धधनुषो धनुर्ज्याया यशःप्रत्याहर्तुकामेनेन्द्रेण छिन्न-

त्वस्योपरि श्रतत्वस्य टीकायामुपवर्णितत्वात् 'रुद्रस्य त्वेव धनुरा तिरित्यस्ये'त्येवं टीकोक्तरीत्या लिङ्गादिभ्य आचार्योदाहृतवचनेभ्यश्च यथायोगमुदाहृतश्रुतीनामुक्तार्थ वमुपपादनीयमित्यर्थ. ॥ **अत एवेति** । इहैतासां श्रुतीनामुक्तार्थत्वस्योपपादनसापेक्षत्वज्ञापनार्थमेवेत्यर्थः ।

**स० — टीकातश्चेति** । 'यं कामये' इत्यस्य चोक्तार्थत्वस्य सन्न्यायरत्नावल्यामुपपादितत्वादित्यर्थः । चशब्देन लिङ्गादेरपि संग्रहो बोध्यः । अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः' इत्यादरणीयत्ववर्णनात् । 'यं कामये' इत्युक्तार्थे तात्पर्य टीकोक्तरीत्या ज्ञेयम् । 'मा शिश्नदेवा' इत्यस्य 'न त्वं वेत्थ न वेत्तीन्द्रो नाहं वेद्मि न शङ्करः । वेत्ति पारं महत्त्वस्य हरेरद्भुतकर्मणः' इति टीकोदाहृतस्कान्दवचनेनोक्तार्थत्वम् । स रुष्ट इत्यस्य च 'नमोऽतिशायिने तस्मै देहि । परमात्मने । नारायणाय विश्वाय निर्गुणाय गुणात्मने । यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः । एतौ च द्वाविह श्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । (तदादेशित) तदुद्देशितपन्थानौ सृष्टिसंहारकारकौ' इति टीकोदाहृतशान्तिपर्ववचनानुसारेण उक्तार्थत्वं ज्ञेयमिति भावः ।

**प० — अन्यत्रोदाहृतेभ्य इति** । श्रीमद्भारततात्पर्यनिर्णयश्रीमद्भाष्यादावुदाहृतेभ्य इत्यर्थः । तदवलोकिनां स्फुटमेतदिति न प्रपञ्च्यते ॥ **टीकात इति** । सन्न्यायरत्नावलीत इत्यर्थः । तत्र हि शान्तिपर्वणीत्युपक्रम्य केषाञ्चिद्वचनानामुक्तत्वादिति भावः ।

**या० — आचार्येणैवान्यत्रोदाहृतेभ्य इत्यादि** । अस्य देवस्येत्यस्योक्तार्थत्वोपपादनं 'स्थितप्रज्ञोऽपि यस्तूर्ध्वः प्राप्य रौद्रपदं ततः । साङ्कर्षणं ततो मुक्तिमगाद्विष्णुप्रसादतः' इति गीताभाष्ये 'यः स्थाणोः स्थाणुतां प्रादाद्भगवानव्ययो हरिरि'त्यादि भागवततात्पर्ये चाचार्येणोदाहृतवाक्यसंवादेनावगन्तव्यम् । एवमितरेषामपि वाक्यानां उक्तार्थत्वोपपादनमप्याचार्येण तत्तद्ग्रन्थोदाहृतवाक्यसंवादेनावगन्तव्यमित्यर्थः ।

**श्री० — ॐ पत्युरसामञ्जस्यात् ॐ॥ टीकात इति** । सन्न्यायरत्नावल्या इत्यर्थः ।

**सु० — सूत्रार्थमुपसंहरति** सदोषत्वादिति ।

**अनु० —** सदोषत्वान्नेशः पशुपतिस्ततः ॥

**ततः श्रुतिबलेन सदोषत्वात्पशुपतिः ईशो जगत्कर्ता न भवति । दोषि(णो)यज्ञदत्तस्येव जगत्कर्तृत्वानुपपत्तेरिति** ।

**प० —** ईश इत्यनुवादः । जगत्कर्तेति व्याख्या ।

सु०—युक्त्यन्तरेण शिवस्य जगत्कर्तृत्वमपाकर्तुं सूत्रम् ॐ संबन्धानुपपत्तेश्च ॐ इति । तस्यार्थमाह अशरीरत्वत इति ।

अनु०— ॐ संबन्धानुपपत्तेश्च ॐ ॥

अशरीरत्वतस्तस्य संबन्धो जगता क्वचित् ॥

कर्तृत्वेन न युज्येत

तस्य शिवस्य । अशरीरस्यापि गगनादेर्जगता संबन्धदर्शनात्कथमेतदित्यतः संबन्धमेव व्याख्याति । क्वचित् कार्ये । कर्तृत्वेनेति । कार्यकर्तृत्वलक्षणः संबन्धो न युज्यत इत्यर्थः । क्वचिदित्यनेन कुतः सर्वकर्तृत्वमिति सूचयति । अयमत्र प्रयोगः । शिवो न कर्ताऽशरीरत्वात् सुप्तप्रलीनवदिति ।

ननु शिवः सिद्धो न वा । न द्वितीयः । आश्रयासिद्धेः । आद्ये तु कर्तृत्वेनैव सिद्ध इति धर्मिग्राहकमानविरोधः । किञ्च भवन्मते(ऽपि) शिवस्य कर्तृत्वं शरीरित्वं चाङ्गीक्रियत एव । तथा चापसिद्धान्तान्यतरासिद्धी स्यातामिति । उच्यते । इदमत्राकूतम् । पशुपतेर्जगत्कारणत्वं वदन्प्रष्टव्यः । किं पाशुपतादिशास्त्राण्यनुमानानि (चा)वाऽऽश्रित्येदमुच्यते, उत श्रुत्यादिकम् । आद्ये त्वतिप्रसङ्गोऽयमुच्यते । यदि पाशुपताद्याश्रित्येदमुच्यते तर्हि तस्याशरीरत्वमपि ततः सिद्धमिति तदप्यङ्गीकार्यं स्यात् । तथा च कर्तृत्वानुपपत्तिरिति । अत एव न युज्येतेति लिङ्प्रयोगः । द्वितीये तु वक्ष्यत इति । एवञ्च न कश्चिद्दोषः । शिवस्वरूपस्य अस्माकं श्रुत्यादितः सिद्धेराश्रयासिद्ध्यभावात् । परसिद्धेनाशरीरत्वेन कर्तृत्वाभावापादनाद्धर्मिग्राहकविरोधाद्यभावात् ।

एतेन पाशुपतादिविरोधात् श्रुतयोऽन्यथा योज्या इति निरस्तम् ।

शे०— ॐ संबन्धानुपपत्तेश्च ॐ ॥ सुप्तप्रलीनवदिति । सुप्तवत्प्रलीनवच्चेत्यर्थः । सुप्तस्याशरीरत्वं न मुख्यं किन्त्वभिमानाभावेनैव तदिति गौणमेव । मुख्यमेव च हेतुतया विवक्षितम् । अन्यथाऽसिद्ध्यापातादित्यतो दृष्टान्तान्तरमप्युक्तमित्यवधेयम् ॥ अत एवेति । आपादनमात्रस्यात्राभिप्रेतत्वादेवेत्यर्थः ॥ वक्ष्यत इति । 'शिवादिनामयुक्ताश्च श्रुतयो विष्णुवाचका' इत्यादिना शिवस्य जगत्कारणत्वप्रतिपादकश्रुत्याद्यभावो वक्ष्यत इत्यर्थः । न कश्चिद्दोष इत्युक्तमेव प्रपञ्चयति शिवेति ॥ ननु तर्हि माऽस्त्वाश्रयासिद्धिः जगत्कर्तृत्वेनैवेश्वरसिद्धेर्धर्मिग्राहकप्रमाणविरोधस्तु स्यादेव । तथा भवन्मतेऽपि शिवस्य शरीरित्वजगत्कर्तृत्वयोरङ्गीकारादन्यतरासिद्ध्यपसिद्धान्तौ च स्यातामित्यतः साधन एव तेषां

दूषणत्वस्यापादने च भूषणत्वेनादूषणत्वस्य 'अतो न दूषणेऽपसिद्धान्तादी'त्यादिनाऽन्यत्र 'अप्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्य दूषका' इत्यादिना तृतीयस्य द्वितीये समर्थनान्नानुपपत्तिरित्याह **परसिद्धेनेति** । 'परन्यायैस्तु दूषणमि'त्युपरि वक्ष्यमाणत्वादिति भावः । यद्यप्याश्रयस्यान्यतरासिद्धिरप्यापादने न दोषः । 'एवमेव क्वचिदाश्रयस्योभयासम्मतावपि न दोष' इति पूर्वग्रन्थानुरोधात् । तथाऽपि व्याप्यव्याप्त्यादिवत्सर्वत्र तदसिद्धेरदूषणतायाः क्वचिदित्यनेनैव व्यावर्तितत्वात्क्वचिद्दूषणत्वं क्वचिन्नेत्येवं किमर्धजरतीयाश्रयणेनेत्यभिप्रेत्याङ्गीकृत्य तद्दोषत्वमियमुक्तिरिति ध्येयम् । श्रुत्यनुमानाभ्यां शिवस्वरूपसिद्धेराश्रयासिद्धिरपीह नास्तीति वस्तुस्थितिप्रदर्शनायेदमुदितमिति वा ॥ **एतेनेति** । शिवकर्तृत्वस्य युक्तिविरुद्धत्वकथनेनेत्यर्थः । ततश्च युक्तिविरुद्धतत्कर्तृत्वाभिधायकतया पाशुपतादीनामप्रामाण्यान्न तद्विरोधस्य श्रुतीनामन्यथायोजनीयत्वसाधकत्वमिति भावः ।

**स०— युक्त्यन्तरेणेति** । जगत्कर्तृत्वरूपसंबन्धस्य अशरीरतया अनुपपत्तिरिति तदर्थविवक्षया सूत्रमिति बोध्यम् ॥ **इदमत्र कृतमिति** । तथाच आपादनस्यैव परं प्रति करणेन साधनपक्षानभ्युपगमात् न तत्रोक्तदोष इति भावः । **द्वितीये तु वक्ष्यत इति** । 'शिवादिनामयुक्ताश्च श्रुतयो विष्णुवाचका' इत्यादिना वक्ष्यत इत्यर्थः ।

**प०— ॐ संबन्धानुपपत्तेश्च ॐ** ॥ **सुप्तप्रलीनवदिति** । सुप्तवत्प्रलीनवत्प्रलयं प्राप्तवदित्यर्थः । सुप्तस्य देहाभिमानाभावेनाशरीरत्वं प्रलीने तु मुख्यमेवेति ज्ञेयम् । कैमुत्यायाऽऽद्यदृष्टान्तः ॥ **अत एवेति** । कर्तृत्वस्य पाशुपतादिधर्मिग्राहकमानसिद्धत्वादनिष्टापादनत्वद्योतनाय लिङ्प्रयोगः कृत इत्यर्थः ॥ **वक्ष्यत इति** । 'शिवादिनामयुक्ताश्च श्रुतयो विष्णुवाचका' इत्यादौ रुद्रकर्तृत्वे श्रुतिरेव नेति वक्ष्यत इत्यर्थः ॥ **एवं चेति** । परसिद्धेनैव परस्यापादने सतीत्यर्थः ॥ **श्रुत्यादित इति** । प्रागुक्तश्रुतिभिः । 'रुद्रं समाश्रिता देवा' इत्यादिस्मृतिभिश्चेत्यर्थः ॥ **विरोधादीति** । आदिपदेनान्यतरासिद्ध्यपसिद्धान्तयोर्ग्रहः ॥ **एतेनेति** । संबन्धानुपपत्तिकथनेनेत्यर्थः । तर्कपराहतत्वेन तस्यैवालब्धात्मकत्वादिति भावः ।

**या० — ॐ संबन्धानुपपत्तेश्च ॐ** । सुप्तस्याशरीरत्वमभिमानाभावेनैव न मुख्यं मुख्यमेव च हेतुतया वाच्यमन्यथाऽसिद्ध्यापत्तेरतो दृष्टान्तान्तरमाह **प्रलीनवदिति** ॥ **द्वितीये तु वक्ष्यत इति** । 'शिवादिनामयुक्ताश्च श्रुतयो विष्णुवाचका' इत्यादिना ग्रन्थेन शिवस्य जगत्कारणत्वप्रतिपादकं श्रुत्यादिकं नास्तीति वक्ष्यत इत्यर्थः ॥ **श्रुत्यादित इति** । प्रागुदाहृतश्रुत्यादित इत्यर्थः । ननु प्रागुदाहृतश्रुत्यादौ शिवस्य प्रतिपादनेऽपि तस्य जगत्कारणत्वाप्रतिपादनाद्धर्मिग्राहकमानविरोधाभावेऽप्यन्यतरासिद्ध्यपसिद्धान्तौ स्यातामित्यत आह **परसिद्धेनेति** ॥ **आपादनादिति** । आपादने च नान्यतरासिद्ध्यादिकं

दोष इति भावः । यथोक्तम् । 'परन्यायैस्तु दूषणमि'ति । अतो न दूषणेऽपसिद्धान्तादीति च । यद्यप्यापादनत्वादेवाश्रयस्यान्यतरासिद्धिर्न दोषः, एवमेव क्वचिदाश्रयस्योभयासंमतावपि न दोष इति पूर्वमुक्तत्वात् , तत एव धर्मिग्राहकमानविरोधोऽपि न दोषो मानविरोधस्यापादनालङ्कारत्वादिति शक्यते वक्तुम् । तथाऽप्याश्रयस्य सिद्धत्वेऽपि न धर्मिग्राहकमानविरोध इति वस्तुस्थितिप्रदर्शनायेदमिति ज्ञातव्यम् ॥ **एतेनेति** । उक्ततर्कबाधितत्वेन पाशुपतादेरप्रामाण्यस्यात्र सूत्रेऽभिप्रेतत्वेनेत्यर्थः ।

**श्री०** — ॐ **संबन्धानुपपत्तेः** ॐ ॥ **अपसिद्धान्तान्यतरासिद्धी इति** । शिवो न जगत्कर्तेति साधनेऽपसिद्धान्तः शरीरत्वादिति हेतोरन्यतरासिद्धिरित्यर्थः ॥ **कर्तृत्वानुपपत्तिरिति** । त्वन्मत इति शेषः । **इदं** जगत्कारणत्वं, **अत एवेति** तत्त्वज्ञापनार्थमेवेति । न कश्चिद्दोष इत्युक्तं विवृणोति **शिवस्वरूपस्येत्यादिना** । शिवो न प्रसिद्ध इति द्वितीयपक्षोक्ताश्रयासिद्धिं परिहरति **शिवस्वरूपस्येति** । शिवः प्रसिद्ध इत्याद्यपक्षोक्तधर्मिग्राहकमानविरोधोऽप्येतेनैव परिहृतः । शिवस्वरूपमात्रग्राहकस्यैव श्रुत्यादेर्धर्मिग्राहकप्रमाणत्वेनाङ्गीकृततया तेन जगज्जन्मादिकर्तृत्वाप्रतिपादनात् । नन्वथाऽपि किंचेत्यादिनोक्तापसिद्धान्तादिदोषोऽस्तु स्यादेवेत्यत आह **परसिद्धेनेति** । धर्मिग्राहकविरोधाद्यभावादित्यत्र धर्मिग्राहकविरोधादीत्य-द्गुणसंविज्ञानबहुव्रीहिणाऽपसिद्धान्तादिकमुच्यते । धर्मिग्राहकविरोधाभावस्य पूर्ववाक्येनैव लब्धत्वेन परसिद्धेनेति वाक्येन धर्मिग्राहकविरोधाभावोपपादनालाभादिति द्रष्टव्यम् । तथा च न तद्दूषणेऽपसिद्धान्तादिदोष इति भावः ॥ **एतेनेति** । अशरीरस्य कर्तृत्वायोगेनेत्यर्थः ॥ **अन्यथा योज्या इति** । रुद्राणामेकादशत्वेन प्रधानरुद्रातिरिक्तरुद्रपरा भवदुदाहृतश्रुतय इति भावः ।

**सु०** — **नन्वशरीरस्यापि कर्तृत्वे बाधकाभावाद्व्याप्तिविधुरोऽयं प्रसङ्गः । कारकप्रयोक्तृत्वं हि कर्तृत्वं न शरीरित्वमित्यत** आह देहिन इति ।

अनु० — देहिनो ज्ञानदर्शितः ॥

**सत्यं कारकप्रयोक्तृत्वमेव कर्तृत्वं न शरीरित्वमिति । तच्च न प्रयत्नेन विना संभवति । न चेच्छामन्तरेण प्रयत्नः । न च ज्ञानाद्विनेच्छा । न च शरीरादृते ज्ञानम् । देहिनामेव जाग्रतां ज्ञानदर्शनात् । अदेहिनां सुप्तप्रलीनानां चादर्शनात् । ततः कर्तृत्वस्य व्यापकं शरीरं शिवाद्व्यावर्तमानं तदपि व्यावर्तयतीति ।**

**शे०** — नन्वशरीरस्यापि कर्तृत्वं भविष्यतीति शङ्कैव नावतरति, कर्तृत्वस्य शरीरित्वरूपत्वेनाशरीरस्य शरीरित्वशङ्काया व्याहतत्वाद्व्याघातावधित्वादाशङ्काया इत्यतो भवेदेतदेवं यदि शरीरित्वं कर्तृत्वं

स्यान्न चैतदस्तीत्यभिप्रेत्य तन्निर्वचनेन व्याघातं परिहरति **कारकेति** । ननु 'देहिनो ज्ञानदृष्टित' इत्यनेन कथमप्रयोजकताशङ्कापरिहारः । विपक्षे बाधकानुपन्यासात् । न च शरीरत्वस्य व्यापकतायामस्य तात्पर्यादशरीरत्वेन कर्तृत्वाभावसाधनस्य व्यापकाभावेन व्याप्याभावसाधनरूपत्वलाभेन व्याप्यव्यापकभाव-भङ्गस्यैव विपक्षबाधकत्वसंभवाद्युक्तोऽनेनाप्रयोजकताशङ्कापरिहार इति वाच्यम् । शरीरित्वस्य व्यापकता-बोधकशब्दस्यात्र वाक्येऽश्रवणेन तदसिद्ध्योक्तप्रकारकल्पनायोगात् । न च देहिन एव ज्ञानदृष्टित इति एवशब्दस्यात्राध्याहारात्तल्लाभ इति वाच्यम् । तावता ज्ञानं प्रति शरीरित्वस्य व्यापकतालाभेनाशरीर-त्वेन ज्ञानाभावसाधनस्य व्यापकाभावेन व्याप्याभावसाधनत्वप्राप्त्या तत्रोक्तबाधकेना-प्रयोजकताशङ्कापरिहारसंभवेऽपि कर्तृत्वं प्रति शरीरित्वस्य व्यापकत्वालाभेनाशरीरत्वेन कर्तृत्वाभावानुमानस्य व्यापकाभावेन व्याप्याभावानुमानत्वालाभेन तत्रोक्तप्रकारेणाप्रयोजकत्वशङ्कापरिहा-रायोगादित्यतः कर्तृत्वस्य शरीरित्वव्याप्यज्ञानव्याप्यत्वेन सुतरां शरीरित्वव्याप्यतया तदभावेन तदभावानु-मानस्यापि व्यापकाभावेन व्याप्याभावानुमानत्वस्यावर्जनीयत्वान्नानुपपत्तिरित्यभिप्रेत्य कर्तृत्वस्य परम्परया ज्ञानव्याप्यताप्रकारप्रदर्शनपूर्वकं शरीरित्वव्याप्यतामुपदर्शयति **सत्यमित्यादिना** ॥ **तच्चेति** । कारक-प्रयोक्तृत्वं चेत्यर्थः । कारणाभावे कार्यानुदयादिति भावः । **तदपि व्यावर्तयतीति** । व्यापक-निवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वादन्यथा व्याप्यव्यापकभावभङ्गप्रसङ्गादिति भावः ।

---

**श्री०— कारकेति** । एतादृशं च कर्तृत्वं न शरीरसापेक्षमिति भावः । **न शरीरित्व-मिति** । येनाशरीरस्यापि कर्तृत्वायोग इति भावः । **तच्चेति** । कारकप्रयोक्तृत्वरूपं कर्तृत्वमित्यर्थः ॥ सुषुप्तिव्यावृत्तये जाग्रतामित्युक्तम् ।

**सु०— ननु ज्ञानजन्मन्येव शरीरस्योपयोगः । ज्ञानस्येन्द्रियजन्यत्वात् । इन्द्रियाणां च शरीरसंयोगनियमात् । नित्यज्ञानश्च भगवाञ्छिव इति किं तस्य शरीरेणेति । एवं तर्हि प्रयत्नजन्मन्येवेच्छोपयोगिनीति नित्यप्रयत्नस्येच्छाऽपि न स्यात् । तथेच्छोत्पत्तावेव ज्ञानमुप-युज्यत इति नित्येच्छस्य ज्ञानमपि न स्यात् ।**

**अथ न प्रयत्नमात्रं कर्तृत्वम्, अपि तर्हि ज्ञानेच्छे अपि । परिदृष्टसामर्थ्यकारकप्रयो-क्तृत्वं कर्तृत्वमिति हि वृद्धा इति चेत् । तथाऽपीच्छात्यागे बाधकाभावात् । कुतश्चैवं कल्प-नीयम् । कुलालादौ तथा दर्शनादिति चेत् । किं तत्र शरीरं न दृष्टम् । दृष्टमप्यनुपयुक्तमिति चेत् । किन्नियमाभावादेवमाश्रीयते, अन्यत्रोपक्षयाद्वा । नाद्यः । व्यभिचाराभावात् । शरीरप्रेरणेऽपरं शरीरं नास्तीति चेन्न । तेनैव सशरीरत्वात् । न द्वितीयः । निरस्तत्वात् ।**

**अन्यथा ज्ञानादीनामप्यनुपयोगप्रसङ्गः । कुतश्चास्य नित्यज्ञानत्वसिद्धिः । आगमादिति चेन्न । परस्पराश्रयप्रसङ्गात् । सिद्धे ह्यागमप्रामाण्ये नित्यज्ञानेश्वरसिद्धिस्तत्सिद्धौ चागमस्य तत्प्रणीतत्वेन प्रामाण्यसिद्धिरिति ।**

शे०— ननु ज्ञानजन्मन्येव शरीरस्योपयोगेन शरीरस्य जन्यज्ञानं प्रत्येव व्यापकत्वाधारणाच्छरीरव्यावृत्त्या जन्यज्ञानव्यावृत्तिसिद्धावपि ज्ञानमात्राव्यावृत्तेर्नित्यज्ञानस्येश्वरस्य तत एव कर्तृत्वोपपत्तेः न शरीरेण विना कर्तृत्वानुपपत्तिरित्यप्रयोजकत्वमेवेत्यभिप्रेत्य शरीरस्य ज्ञानजन्मन्युपयोगमुपपादयन्नेव तच्छङ्कमुत्थापयति **नन्विति** । इन्द्रियजन्यत्वादस्तु ज्ञानजन्मनीन्द्रियाणामपेक्षा शरीरस्य तु कुत इत्यत आह **इन्द्रियाणां चेति ॥ नियमादिति** । 'शरीरसंयुक्तं ज्ञानकारणमतीन्द्रियमि'ति तल्लक्षणादिति भावः । ज्ञानजन्मन्युपयोगेन शरीरस्य जन्यज्ञानमात्रव्यापकत्वकल्पने प्रयत्नजन्मन्येवेच्छाया इच्छाजन्मन्येव च ज्ञानस्योपयोगेन जन्यप्रयत्नं प्रत्येवेच्छाया व्यापकत्वस्य जन्येच्छां प्रत्येव च ज्ञानस्य व्यापकतायाः प्रसङ्गेन ज्ञानव्यावृत्त्या जन्येच्छाव्यावृत्तिप्राप्तावपीच्छामात्रव्यावृत्त्यप्राप्तेर्नित्येच्छया, इच्छाव्यावृत्त्या तद्व्याप्यजन्यप्रयत्नव्यावृत्तावपि प्रयत्नमात्रव्यावृत्त्यसिद्ध्या नित्यप्रयत्नमात्रेणैवेश्वरस्य कर्तृतानिर्वाहात्कर्तृत्वोपयोगितया ज्ञानादिकल्पनमपि न स्यादिति प्रतिबन्द्या समाधत्ते **एवं तर्हीति** ।

ननु कर्तृत्वनिरुक्त्यनुरोधेन ज्ञानादीनां कर्तृत्वप्रयोजकत्वावधारणान्न ज्ञानादिव्यतिरेकेऽपि प्रयत्नमात्रेण कर्तृत्वनिर्वाह इति शङ्कते **अथेति ॥ तथापीति** । परिदृष्टसामर्थ्यादित्यनेन कारकदर्शनस्य प्रयोक्तृत्वमित्यनेन प्रयत्नस्य प्रत्यायनात् । उपन्यस्तकर्तृत्वनिरुक्त्यनुरोधेन प्रयत्नातिरिक्तज्ञानप्राप्तावप्युक्तनिरुक्ताविच्छाप्रत्यायकाभावेनेच्छाऽसिद्धेरीश्वरस्य कर्तृत्वनिर्वाहकतयेच्छाकल्पनमनुपपन्नमेवेत्यर्थः । ज्ञानादेः कर्तृत्वप्रयोजकतासाधकप्रमाणबलेन शरीरस्यापि तत्प्रयोजकत्वसिद्धेर्न तेन विनेश्वरस्य कर्तृत्वनिर्वाह इति नाप्रयोजकत्वमित्यभिप्रेत्य तदुपपादयितुं ज्ञानादेः प्रयोजकत्वे कल्पकं तावत्पृच्छति **कुतश्चेति** । प्रयत्नमात्रं न कर्तृत्वप्रयोजकं किन्तु ज्ञानादिकमपीत्येवं कुतः प्रमाणात्सिद्धमित्यर्थः । कुलालादौ ज्ञानादिमतः कर्तृत्वदर्शनमेव ज्ञानादेः कर्तृत्वप्रयोजकतायां कल्पकमित्याशङ्कते **कुलालादाविति** । हन्तैवं तत एव शरीरस्यापि तत्र प्रयोजकत्वसिद्धिरित्याशयेन परिहरति **किं तत्रेति ॥ नियमाभावात्** यः कर्ता स शरीरीति नियमाभावात् ॥ **एवमिति** । अनुपयुक्तत्वमित्यर्थः ॥ **अन्यत्रेति** । ज्ञानजन्मनीत्यर्थः । शरीरप्रेरणे सत्यपि सकर्तृत्वे शरीरिजन्यत्वाभावेन तत्र व्यभिचारान्न तदभाव इत्याशङ्कते **शरीरेति** । कर्मभूतस्य शरीरस्य कर्तरि प्रवेशे च कर्तृकर्मविरोधप्रसङ्ग इति भावः ॥ **तेनैवेति** । कर्मीभूतशरीरेणैवेत्यर्थः । न चैवं कर्तृकर्मविरोधप्रसङ्गः । 'स्वाध्यायोऽध्येतव्य' इति विधेः

स्वाध्ययनविधायकत्वस्य शब्दशब्दस्य स्ववाचकत्वस्य घटशब्दशब्दस्य स्वव्यतिरिक्तवाच्यादर्शनेन स्वमात्र-वाचकत्वस्य च दर्शनेन कर्मकर्त्रोर्भेद एवेति व्याप्तेरौत्सर्गिकत्वेन धूमाग्निव्याप्तिवत्सङ्कोचनानर्हत्वाभावेन कर्मभूतस्यापि शरीरस्य कर्तरि प्रवेशस्योपपन्नत्वादिति भावः । शरीरत्वेन कर्तरि कारकत्वेन च कर्मणि प्रवेशो न विरुद्ध इत्यप्याहुः । प्रयत्नस्य शरीराकर्मकत्वात् तज्जन्यक्रियायास्तत्कर्मकत्वेऽपि शरीरावच्छिन्नस्यात्मनः कर्तृत्वं विशेषणभूतस्य शरीरमात्रस्य कर्मत्वमिति न प्राचीनदोष इत्यप्याहुः । निरस्तत्वादित्युक्तमेव प्रपञ्चयति **अन्यथेति** । तेषामपीच्छादिजन्मन्युपक्षयादिति भावः । अङ्गीकृत्य चेदमीश्वरज्ञानस्य नित्यत्वं व्यभिचाराभावबलेन शरीरस्य तद्व्यापकत्वसमर्थनं कृतम्। वस्तुतस्तु कुलालादिज्ञानस्येवेश्वरज्ञानस्यापि जन्यत्वेन तदुत्पत्त्यर्थमेव शरीरस्यापेक्षितत्वेन न शरीरं विना कर्तृत्वनिर्वाह इति नाप्रयोजकत्वमित्यभिप्रेत्य तज्ज्ञानस्य नित्यतामाक्षिपति **कुतश्चेति** ।। **आगमादिति** । पाशुपताद्यागमादित्यर्थः ।

स०— **शरीरप्रेरण इति** । न च कर्मीभूतशरीरस्य कर्तरि प्रवेशानुपपत्तिरिति वाच्यम् । शरीरत्वेन कर्तरि, कारकत्वेन च कर्मणि प्रवेशोपपत्तेरविरोधादिति भावः । निरस्तत्वमेव दर्शयति ( निरस्तत्वादित्युक्तमेव विवृणोति ) **अन्यथेति** ।

प०— **परिदृष्टेति** । परिज्ञातसामर्थ्यानि यानि कारकाणि तत्प्रयोक्तृत्वमित्यर्थः । न हि ज्ञानाभावे सामर्थ्यपरिज्ञानं युक्तमिति भावः ।। **कुतश्चेति** । प्रमाणादित्यर्थः ॥ **अन्यत्रेति** । ज्ञान-जन्मन्युपक्षयादित्यर्थः । व्यभिचारं शङ्कते **शरीरप्रेरण इति** ॥ **निरस्तत्वादिति** । एवं तर्हि प्रयत्नजन्मन्येवेत्यादिना निरस्तत्वादिति भावः । तदेव व्यनक्ति **अन्यथेति** । ज्ञानादेर्नित्यत्वेश्वरे शरीरस्यानुपयोगादित्यर्थः ॥

या०— **अन्यत्रोपक्षयाद्वेति** । जन्यज्ञानजनन एवोपक्षयाद्वेत्यर्थः । निरस्तत्वादित्युक्तमेव विवृणोति **अन्यथा ज्ञानादीनामिति** ॥

श्री०— **परिदृष्टेति** । कुलालादौ परिदृष्टं यत्सामर्थ्यं यज्ज्ञानेच्छासाहित्येन प्रयत्नवत्त्वरूपं कर्तृत्वं तदनुसारेणेश्वरेऽपि कल्पनीयमित्यर्थः । **एवं** ज्ञानेच्छावत्त्वम् । **दृष्टमपि** शरीरं । **नियमेति** । यत्र ज्ञानेच्छाप्रयत्नवत्त्वं तत्र शरीरमिति नियमेत्यर्थः । **एवम्** अनुपयुक्तमितीत्यर्थः । व्यभिचारमाशङ्कते **शरीरेति** । **तेनैवेति** । ननु तच्छरीरविशिष्टस्तच्छरीरं प्रेरयतीत्यङ्गीकारे एकस्यैव शरीरस्य प्रेर्यकोटौ प्रेरककोटौ च प्रवेशादात्माश्रय इति चेन्न । एकदेशः कर्ता समुदायः कर्मेति नात्माश्रय इत्याहुः । निरस्तत्वादित्युक्तं विशदयति **अन्यथेति** । शरीरं जन्यज्ञान एवोपयुक्तमिति यदि शरीरमनुपयुक्तमित्यर्थः । **प्रसङ्गः** एवं तर्हि तथेच्छोत्पत्तावेवेत्युक्तरीत्येत्यर्थः ।

सु० — उक्तदोषपरिहारमाशङ्क्य तन्निरासाय सूत्रम् ॐ करणवच्चेन्न भोगादिभ्यः ॐ इति । तन्नेत्यन्तं तावद्व्याचष्टे न चेति ।

अनु० — ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥

न च देहादिवद्विश्वमस्य स्यात्

यदुक्तमशरीरत्वाच्छिवस्य कर्तृत्वानुपपत्तिरिति । तदसत् । कुलालादयो हि कर्तारो दण्डादिकं साक्षात्प्रयत्नेनाधिष्ठातुमनीशानास्तदधिष्ठानाय साक्षात्प्रयत्नाधिष्ठेयं शरीरमपेक्षन्ते । अस्य तु विश्वं कारचक्रमेव देहवत्स्यात् साक्षात्प्रयत्नाधिष्ठेयं स्यात् । ततः किमपरेण शरीरेण । अत एव भगवान्विश्वमूर्तिरिति गीयते । न चादिसृष्टेः प्राक् कारकाभावः । मायादेरनादेर्विद्यमानत्वात् । अन्यथा सृष्ट्यनुपपत्तेरिति । आदिपदेनेन्द्रियाणां वक्ष्यमाणस्याधिष्ठानस्य च संग्रहः । तदिदं नोपपद्यत इत्यर्थः ।

शे० — ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ अधिष्ठातुं प्रेरयितुम् । अधिष्ठानाय प्रेरणाय । अधिष्ठेयं प्रेर्यम ॥ विश्वमूर्तिरिति । विश्वं कारकचक्रमेव मूर्तिर्देहो यस्येति तथोक्त इत्यर्थः । अस्तु तर्हि शिवो नादिकार्यकारणमशरीरत्वात्सुप्तप्रलीनवदित्यनुमानविरोधः । आदिसृष्टेः प्राक् कारकचक्राभावेन हेत्वसिद्धेरशक्यशङ्कत्वादित्याशङ्क्य निषेधति न चेति ॥ मायादेरिति । तथा चात्राप्यसिद्धिरेवेति भावः ॥ अन्यथेति । मायादेरप्यसत्त्व इत्यर्थः । उपादानाद्यभावादिति भावः ।

प० — ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ अधिष्ठातुं कार्योन्मुखीकर्तुमित्यर्थः । प्रयत्नाधिष्ठेयं प्रयत्नप्रेर्यम् । मूलं योजयति अस्य त्वित्यादिना ।

या० — ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ अधिष्ठातुं प्रेरयितुम् । अधिष्ठानाय प्रेरणाय । अधिष्ठेयं प्रेर्यम् ।

श्री० — ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ मायादेः प्रकृत्यादेः ॥ अन्यथेति । आदिसृष्टेः प्राक् प्रकृत्यादिकारकचक्रानङ्गीकार इत्यर्थः । सृष्टीति । उपादानाद्यभावादिति शेषः भावः ।

सु० — कुतो नेत्यतः सौत्रहेतुं व्याख्याति भोगेति ।

अनु० — भोगसंभवात् ॥

यदि शिवस्य कारकग्रामः साक्षात्प्रयत्नाधिष्ठेयः स्यात्तदा स तस्य सुखदुःखानुभवलक्षणभोगहेतुः स्यात् । साक्षात्प्रयत्नाधिष्ठेयेऽस्मदादिशरीरे तथा दर्शनात् । कर्मार्जितस्यैव तथात्व-

मिति चेन्न । साक्षात्प्रयत्नाधिष्ठेयत्वेन तथाभावस्याप्यापत्तेर्भोगादिमतश्च नेश्वरत्वम् । अतः शिवस्य भोगादिप्रसङ्गान्नेयं कल्पना युक्तेति ।

**श्री०**— तर्कमूलभूतव्याप्तिमुपदर्शयति **साक्षादिति** । **तथादर्शनात्** सुखदुःखानुभवलक्षणभोगहेतुत्वदर्शनात् । यत्र सुखदुःखानुभवलक्षणभोगहेतुत्वमस्मदादिशरीरे तत्र कर्मार्जितत्वमिति व्यापकाभिमतव्यापकत्वात् । यत्र च साक्षात्प्रयत्नाधिष्ठेयत्वं कारकग्रामेऽस्ति तत्र कर्मार्जितत्वाभावेन व्याप्याभिमताव्यापकत्वात्तर्कमूलभूतव्याप्तौ कर्मार्जितत्वमुपाधिरिति शङ्कते **कर्मार्जितस्यैवेति** ॥ तथात्वं सुखदुःखानुभवलक्षणभोगहेतुत्वम् । एवकारो वन्हिमानेव धूमवानित्यादाविव कर्मार्जितत्वस्य व्यापकतोपदर्शनार्थ इति बोध्यम् । साक्षात्प्रयत्नाधिष्ठेयेऽस्मदादिशरीरे कर्मार्जितत्वदर्शनेन कारकग्रामस्य साक्षात्प्रयत्नाधिष्ठेयत्वेनैव सुखदुःखानुभवलक्षणभोगहेतुत्वस्येव कर्मार्जितत्वस्याप्यापादनसम्भवेन व्याप्याभिमतव्यापकत्वान्न तस्योपाधित्वमित्याशयवानाह **साक्षादिति** । सुखदुःखानुभवलक्षणभोगस्य कर्मार्जितशरीरस्य चाङ्गीकारादिष्टापादनमेतदित्यत आह **भोगादिमतश्चेति** । भोगादिमतोऽस्मदादेरीश्वरत्वाभावदर्शनादित्यर्थः । नेश्वरत्वमित्यतःपरं स्यादिति शेषः ।

**प०**— **तथाभावस्यापि** । कर्मार्जितत्वस्यापीत्यर्थः ।

**श्री०**— **तथा** भोगहेतुत्वस्य । **तथात्वं** भोगहेतुत्वम् । **तथाभावस्यापि** कर्मार्जितत्वस्यापि । भोगसंभवादित्युक्तम् । किं तत इत्यत आह **भोगादिमतश्चेति** ।

---

**सु०**— हेत्वन्तरेण शिवस्य विश्वकर्तृत्वं निराकुर्वत् ॐ अधिष्ठानानुपपत्तेश्च ॐ इति सूत्रं व्याचष्टे अधिष्ठान इति ।

**अनु०** — ॐ अधिष्ठानानुपपत्तेश्च ॐ ॥

अधिष्ठाने स्थितः कर्ता कार्यं कुर्वन्प्रतीयते ॥

यः कर्ता कुलालादिः स पृथिव्यादावधिष्ठाने स्थित एव घटादिकार्यं कुर्वन्प्रतीयते । न तु निरधिष्ठानः कश्चित्किञ्चित्कुर्वाणः । अनेन व्यतिरेकाविनाभावेन निरधिष्ठानत्वस्याकर्तृत्वेन व्याप्तिरुपपादिता भवति । ततः किमित्यत आह नास्येति ।

नास्याधिष्ठानयोगोऽस्ति भूतानां प्रलये तदा ॥

अस्य शिवस्य । तदा आदिसृष्टिसमये । कुतो नास्ति । प्रागुत्पन्नानां पृथिव्यादीनां महाभूतानां प्रलये सति । तस्मात्कर्तृत्वमपि तस्य नोपपद्यत इति शेषः । ननु कारकाणामेव अधिष्ठानत्वं भविष्यति । मैवम् । साधिष्ठानस्य चेतनस्य भोगादिप्रसक्तेरुक्तत्वात् । नन्वयं

**निरधिष्ठानत्वहेतुः कर्तुर्विपक्षात्कुलालादिवाकर्तुः सपक्षाद्घटादेरपि व्यावृत्तत्वादसाधारणः । मैवम् । गगनादौ सपक्षे वृत्तेः ।**

**नन्विदं सूत्रद्वयं व्युत्क्रमेण कुतो व्याख्यातम् । संबन्धानुपपत्त्यधिष्ठानानानुपपत्त्योरुभयोरपि परिहारः करणवच्चेदित्यनेन निरस्यत इति ज्ञापनार्थम् । यदि खलु यथाक्रममेव व्याख्यायेत । तदा सन्निहिताधिष्ठानानुपपत्तिपरिहारनिरासकमेवेदं ज्ञायेत । व्युत्क्रमेण तु उभयमध्ये व्याख्याने सत्युभयसंबन्धि विज्ञायत इति । अत एव भाष्येऽधिष्ठानादिरूपमित्युक्तमत्र तु देहादिवदिति ।**

शे० — ॐ **अधिष्ठानानुपपत्तेश्च** ॐ ॥ **व्यतिरेकेति** । यद्यपि गगनादेरेवान्वयव्याप्तौ दृष्टान्तत्वसंभवात्साक्षात्तस्यैवोपदर्शयितुं शक्येति व्यतिरेकयोरविनाभावेन व्याप्त्युपपादनं गौरवकरमित्याभाति। तथाऽपि व्यतिरेकयोरविनाभावकथनं विना व्यभिचारशङ्काया अनिरासात्तदर्थं तदुपादानमिति द्रष्टव्यम् । भाष्ये साध्यानुक्तेराह **तस्मादिति** । **करणवच्चेन्न भोगादिभ्य** इत्यधिष्ठानानुपपत्तिपरिहारनिरासकमपि भवतीत्यभिप्रेत्य तत्परिहारनिरासपरतया योजयति । **ननु कारकाणामेवेति** । शङ्कासमाधानाभ्यामुपपादनं तु पूर्ववदेव द्रष्टव्यमिति भावः । न सकलसपक्षवृत्तित्वं हेतोरपेक्षितं तथा सति धूमस्यापि सपक्षेऽयोगोलकेऽवृत्त्याऽसाधारणत्वप्रसङ्गात् । किन्तु यत्किञ्चित्सपक्षवृत्तित्वम् । तच्च गगनादौ सपक्षैकदेशवृत्त्याऽस्त्येवेति नासाधारण्यमित्याशयेन परिहरति **मैवमिति** ।

**करणवच्चेति** सूत्रस्योभयसंबन्धित्वस्याभिप्रेतत्वमित्यत्रोपष्टम्भकमाह **अत एवेति** । अस्योभयसंबन्धिताया ग्रन्थकृदभिप्रेतत्वादेवेत्यर्थः । अन्यतरमात्रसंबन्धित्वस्याभिप्रेतत्वे तूभयत्रादिपदोपादानमनर्थकं स्यादिति भावः । देहादिवदितीत्यतःपरमुक्तमित्यनुवर्तते ।

स० — **व्यतिरेकेति** । यद्यप्यत्र **गगनादेरेव** अन्वयदृष्टान्तत्वसंभवेन व्यतिरेकयोरेव अविनाभावोक्तिरयुक्ता । तथाऽपि व्यभिचारशङ्कानिवृत्त्यर्थत्वात्तस्यैवोपादानम् ।

प० — **व्यतिरेकाविनाभावेनेति** । व्यतिरेकव्याप्त्येत्यर्थः ॥ **भोगादीति** । आदिपदेन जनिमृतिग्रहः ॥ **इदं सूत्रद्वयमिति** । 'करणवच्चे'ति 'अधिष्ठानानुपपत्तेश्चे'ति सूत्रद्वयमित्यर्थः । करणवच्चेदित्यस्य पश्चात्तनस्य पूर्वं व्याख्यानाद्व्युत्क्रमेणेत्युक्तम् ॥ **इत्यनेनेति** । इति शंकाभागेन निरस्यत इत्यर्थः ॥ **उभयमध्य इति** । संबंधानुपपत्त्यधिष्ठानानुपपत्त्युक्तिपरसूत्रद्वयमध्य इत्यर्थः ।

या० — ॐ **अधिष्ठानानुपपत्तेश्च** ॐ ॥ 'न च देहादिवद्विश्वमि'त्यत्रादिपदेनाधिष्ठानस्यापि गृहीतत्वात्करणवच्चेदिति सूत्रमधिष्ठानानुपपत्तिपरिहारनिरासकमपि भवतीति सूचितं । तत्प्रपञ्चयति **ननु कारकाणामेवेति** । करणवच्चेदिति सूत्रस्योभयसम्बन्धित्वमभिप्रेतमित्यत्रोपष्टम्भकमाह **अत एवेति** ।

उभयसम्बन्धित्वेन व्याख्यानस्याभिप्रेतत्वादेवेत्यर्थः । **अन्यथा** अन्यतरमात्रसम्बन्धित्वस्याभिप्रेतत्वे, उभयत्रादिपदोपादानमनुपपन्नं स्यादिति भावः ॥

**श्री० — ॐ अधिष्ठानानुपपत्तेश्च ॐ** ॥ अनेनेत्यनन्तरमीश्वरो जगत्कर्ता न, निरधिष्ठानत्वा-दित्यनुमान इति शेषः । **अनेन** अन्वयव्याप्तिप्रदर्शकेन मूलेन ॥ **व्यतिरेकाविनाभावेन** व्यतिरेक-व्याप्त्या । **व्याप्तिः** अन्वयव्याप्तिः ॥ **उपपादितेति** । व्यतिरेकव्याप्त्या व्यभिचारपरिहारस्य कृतत्वादिति भावः ॥ **गगनादाविति** । ततश्चासाधारण्याभावे कतिपयसपक्षवृत्तित्वमेव प्रयोजकं न सर्व-सपक्षवृत्तित्वम्। मा हि भूत् धूमानुमानस्याप्ययोगोलकेऽवृत्त्याऽसाधारण्यमिति भावः ॥ **उभयसंबन्धीति** । यदुक्तमधिष्ठानानुपपत्तिरिति तन्न । कारकचक्रस्यैवाधिष्ठानस्य सत्त्वादिति परिहारस्य भोगादिप्राप्त्या निरासेन तथा संबन्धानुपपत्तिरपि नास्ति, जगत एव तच्छरीरत्वेन संबन्धसंभवादिति परिहारस्यापि भोगा-दिप्राप्त्या निरासादित्युभयसंबन्धीत्यर्थः ।

**सु० — ननु युक्तं कुलालस्याधिष्ठानसापेक्षत्वं शरीरित्वात् । शरीरं हि गुरुत्वात्प्रसक्त-पतनं तत्प्रतिबन्धाय स्पर्शवदधिष्ठानमपेक्षते । अनवस्थितशरीरस्य कर्तृत्वायोगात् । ईश्वरस्य तु शरीरविधुरस्य किमधिष्ठानेन । इहेदं** जात**मित्यादिव्यवहारस्तु गगनादिकमाश्रित्योपपत्स्यत इत्यत आह** अदेहश्चेदिति ।

अनु० — अदेहश्चेदसर्वज्ञः शिलाकाष्ठादिवत्सदा ॥

**सदेत्यनेन** व्याप्तिमुपपादयति । **अत एव शिलाकाष्ठादिवदित्यनेकदृष्टान्तोपादानम् । तथा च कुतः सार्वज्ञम् । कुतश्च सर्वकर्तृत्वमिति भावः । स्यादेतत् । न सर्वथा सदाशिवः अशरीरः । किन्तु लीलया शरीराण्यपि गृह्णाति । ततो नायं दोषः । न च भोगादिप्राप्तिः । लीलया गृहीतस्य विग्रहस्य तदहेतुत्वादित्यत आह** देही चेदिति ।

देही चेदन्तवानेव यज्ञदत्तनिदर्शनात् ॥

**अन्तवान्मरणवान्स्यात् । उपलक्षणं चैतत् । दुःखादिमांश्च स्यादित्यपि द्रष्टव्यम् । नन्वसौ विग्रहो न तद्धेतुरित्युक्तम् । मैवम् । शरीरं न भोगायतनं चेत्यस्य व्याहतत्वात् । शरीरत्वेनैव तदनुमानाच्च । तदिदमाह** एवेति । **एतेन 'अन्तवत्त्वमसर्वज्ञता वे'ति सूत्रं व्याख्यातं भवति । पाठक्रमादर्थक्रमो गरीयानित्यतो व्युत्क्रमेण व्याख्यानम् ।**

**शे० — अत एवेति** । व्याप्तेरुपपादनीयत्वस्यात्राभिप्रेतत्वादेवेत्यर्थः । अन्यथैकेनैव दृष्टान्तेन पूर्तेरनेकदृष्टान्तोपादानस्यानर्थक्यादिति भावः । **कुतः सार्वज्ञमिति** । अनेन सर्वपदार्थपरित्यागेना-

ज्ञत्वमात्रं पूर्वमापादनीयमिति सूचयति । अत एव 'अन्यथा ज्ञानाभाव' इत्येव भाष्यं, 'यदि न शरीरी तर्हि तस्य ज्ञानमेव न स्यात्कुतः सार्वज्ञमि'ति तट्टीका चेति ध्येयम् ॥ **व्याहतत्वादिति** । भोगायतनं शरीरमिति तल्लक्षणादिति भावः । नन्वन्तवत्त्वमसर्वज्ञता वेति सौत्रक्रमानुरोधेन 'देहवत्त्वेऽन्तवत्त्वमन्यथा ज्ञानाभाव' इति भाष्य इवेहापि 'देही चेदन्तवानेव यज्ञदत्तनिदर्शनात् । अदेहश्चेदसर्वज्ञः शिलाकाष्ठादिवत्सदे'ति क्रमेणैव व्याख्यानं कर्तुमुचितम् । तत्कथं सौत्रक्रमविपरीतक्रमेण व्याख्यानमित्यत आह **पाठेति** । सूत्रे त्वभावस्य भावपूर्वकत्वात्प्रथमतो भावपक्षनिराकरणं कृतमिति भावः ।

**स०— पाठक्रमादिति** । सूत्रे तु अभावस्य भावपूर्वकत्वात् प्रथमं भावपक्षतिरस्करणमिति ध्येयम् ।

**प०— एतेनेति** । 'अदेहश्चे'ति श्लोकेन व्याख्यातमित्यर्थः । ननु सूत्रेऽन्तवत्त्वं मरणवत्त्वमिति देहित्वपक्षदोषं पूर्वमुक्त्वा असर्वज्ञता वेत्यदेहित्वपक्षदोषं पश्चादुक्तवानिति तदनुरोधाद्देही चेदित्युत्तरार्धस्य पूर्वं निवेशनेन भाव्यम् । तत्कथमदेहश्चेदित्यस्य पूर्वनिवेशनेन व्युत्क्रमेण व्याख्यानमित्यत आह **पाठक्रमादर्थक्रम इति** । संबन्धानुपपत्त्यधिष्ठानानुपपत्तिसूत्राभ्यामदेहत्वपक्षे दूषणे कथिते सति तदुद्धाराय करणवच्चेदिति सूत्रेण देहित्वमाशङ्क्य तत्पक्षेपि दूषणेऽभिहिते सत्यधिष्ठानानुपपत्तिदोषोद्धारः आदावाशङ्क्य निराकार्यश्च । करणवच्चेदित्यत्रोक्तदोषोद्धारः पश्चादाशङ्क्य निराकर्तव्यश्चेत्येवमर्थक्रमो ज्यायानिति तं क्रममनुसृत्य सौत्रपाठक्रममुल्लंघ्य अदेहश्चेदित्यादिना व्युत्क्रमेणान्तवत्त्वमिति सूत्रं व्याख्यातमित्यर्थः ।

**या०— कुतः सार्वज्ञमिति** । अनेन सर्वपदपरित्यागेनाज्ञत्वमात्रं पूर्वमापादनीयमिति सूचयति ।

**श्री०—** आकाशादिरूपाधिष्ठानस्य सत्त्वात्स्पर्शवदित्युक्तम् । नन्विहेदं जातमिति व्यवहारान्यथाऽनुपपत्त्या, इहप्रत्ययविषयभूतं भूम्यादि किञ्चिदधिष्ठानमङ्गीकार्यमित्यत आह **इहेति** । गगनाद्यधिष्ठानं च न स्पर्शवदिति भावः । **अत एव** व्याप्त्युपपादनार्थमेव । **तदहेतुत्वात्** भोगादिप्राप्त्यहेतुत्वात् । **असौ** लीलया गृहीतः । **तदिति** । भोगादीत्यर्थः । **उक्त** लीलयेत्यादिवाक्येनेत्यर्थः ॥ **अनुमानादिति** । लीलागृहीतं शरीरं सुखदुःखादिभोगप्राप्तिहेतुः शरीरत्वात्सम्मतशरीरवदित्यनुमानेन भोगायतनत्वस्यानुमानादित्यर्थः । **गरीयान्** अदेहित्वपक्षस्य तेनाङ्गीकृतत्वादिति भावः ।

**सु०— नन्वेवं शिवस्य जगत्कारणत्वमपाकुर्वतां कोऽभिप्रायः । किमकर्तृकमेवेदं विश्वमिति । किंवा विष्णुकर्तृकमिति । नाद्यः । कार्यस्याकर्तृकत्वे विरोधात् । अपसिद्धान्तप्रसक्तेश्च । न द्वितीयः । विष्णावपि कर्तर्यभ्युपगम्यमाने दोषाणामेषां समानत्वेन (स्व)व्याहत-**

त्वात् । तथा हि यदुक्तमसामञ्जस्यं शिवस्य तत्तावद्विष्णावपि समम् । 'जनितोत विष्णोः' इत्यादौ जन्मादिदोषश्रवणात् । संबन्धानुपपत्त्यादिकं तु स्फुटमेवेत्यत आह न चेति ।

अनु० — न चैतदखिलं विष्णौ

एतदखिलं दोषजातं, विष्णावपि विश्वस्य कर्तर्यभ्युपगते समानमिति न वाच्यम् । कुतः । श्रुत्यैव सकलदोषपरिहारेण विष्णोर्विश्वकारणत्वस्य प्रतिपादितत्वात् ।

शे० — विरोधादिति । यत्कार्यं तत्सकर्तृकमिति व्याप्तेरिति भावः । अकर्तृकत्वपक्षाश्रयणान्न व्याप्तिसम्मतिरपीति न विरोध इत्यत आह अपसिद्धान्तेति । कार्यस्याकर्तृकत्वाभ्युपगम इति शेषः ॥ स्वव्याहतत्वादिति । तथा चासामञ्जस्यादिति पाशुपतपक्षनिराकरणं जात्युत्तरत्वान्न बाधक्षममिति भावः ॥ स्फुटमेवेति । तदापादकाशरीरत्वस्य शिव इव विष्णावपि तुल्यत्वादिति भावः ॥ विश्वस्य कर्तरीति । न लोकेति निषेधस्य कर्तृषष्ठीनिषेधत्वेऽपि शेषषष्ठ्यनिषेधकत्वादनित्यत्वाद्वा तृन्योगेऽपि विश्वस्येति षष्ठ्युपपत्तिः । तृजन्तत्वपक्षे तु न काचिदपीयं कुसृष्टिरिति बोध्यम् ॥

सु० — ननु पशुपतेरप्येवमागमैरनुमानैश्च जगत्कारणता प्रतिपादितैव । ततः को विशेष इत्यत आह श्रुतीति ।

अनु० — श्रुतिप्रामाण्यगौरवात् ॥

पाशुपतादितोऽपि श्रुतीनां प्रामाण्यस्य गुरुत्वात् । एतदुक्तं भवति । पाशुपतादिकं हि शिवे जगत्कर्तरि सर्वज्ञे सिद्धे तत्प्रणीतत्वेन प्रमाणत्वेन निश्चीयेत । निश्चिते च तत्प्रामाण्ये शिवस्यैवंविधस्य सिद्धिरित्यन्योन्याश्रयतया दुरवधारणप्रामाण्यम् । अन्यतः शिवस्यैवंविधतासिद्धावलमनेन । न चान्यत्तादृशं प्रमाणमस्ति । अनुमानानां दूषितत्वात् । न चैवं श्रुतिप्रामाण्यम् । अपौरुषेयत्वेन करणदोषाणां बाधकप्रत्ययस्य चाभावे सति तस्य निष्कम्पमेव स्वतो निश्चितत्वात् । अतो निश्चितप्रमाणभावया श्रुत्या विधूतावद्यगन्धं विष्णोर्जगत्कारणत्वं सिध्यत्येवेति ।

शे० — आगमैरिति । पाशुपताद्यागमैरित्यर्थः ॥ अनुमानैश्चेति क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवत्, विवादाध्यासितं कर्म प्रयत्नाधारजं कर्मत्वात्सम्प्रतिपन्नवत् विप्रतिपन्ने पृथिव्युदके प्रयत्नवता धृते गुरुत्वे सत्यपातित्वात्संप्रतिपन्नवत्, क्षित्यादिकं प्रयत्नवद्विनाश्यं नाश्यत्वात्सम्प्रतिपन्नवदित्यादिभिरनुमानैरित्यर्थः । यद्यपि च कार्यत्वाद्यनुमानात्कर्तृमात्रं सिध्यति न पुनः शिवः कर्तेति । कर्तृमात्रे च विष्णोः कर्तृत्वाविरोधि लोकप्रसिद्ध्यादेरुभयत्र तुल्यत्वात् । तथाऽप्यनुमानं स्वप्रामाण्यनिषेधकश्रुत्युक्ते कर्तरि विष्णौ न पर्यवस्यति । किन्त्वागमोक्ते कर्तरीति नानुमानावष्टम्भेन विष्णोर्जगत्कारणत्वप्राप्तिः किन्तु

शिवस्यैवेति भावः । यद्वा शिवो जगज्जन्मादिकर्ता सर्वज्ञत्वात्सर्वशक्तित्वाद्वेत्यादिभिर्व्यतिरेक्यनुमानैस्तत्सिद्धिः । सर्वज्ञत्वादिकं चागमसिद्धमित्यागमसहायानुमानैः शिवस्य जगत्कारणत्वसिद्धिरित्यर्थः । किं तच्छ्रुतिप्रामाण्यस्य गुरुत्वं, कश्चानेन पक्षद्वयस्य विशेष उक्त इत्यत आह **एतदुक्तं भवतीति** ॥ **पाशुपतादिकमिति** । नन्वत्रादिशब्देन नानुमानपरामर्शस्तत्र वक्ष्यमाणान्योन्याश्रयाप्रसरात् । नापि लिङ्गपुराणादेस्तस्य व्यासकृतत्वेन शिवप्रणीतत्वाभावेन तत्राप्यन्योन्याश्रयाप्रसरात् । अन्यस्य च तत्संग्राह्यस्याभावादिति चेन्न । अन्योन्याश्रयप्रसक्तियोग्यस्यैतदधिकरणान्ते निरसिष्यमाणस्य स्कान्दाद्यागमस्यैव ग्रहणसंभवात् । 'ननु पशुपतेरप्येवमि'त्यादिशङ्काग्रन्थे पशुपतिशब्दस्य स्कन्दाद्युपलक्षणत्वस्याभिमतत्वादित्याशयः ॥ **जगत्कर्तरीति** । तच्च मोक्षादिकर्तृत्वस्येत्यत्र करिष्यमाणस्वकीयतत्साधुत्वव्युत्पादनेन कृतसाधुत्वव्युत्पादनम् । ननु प्रमाणान्तरेण शिवस्य सर्वज्ञत्वादिसिद्धेरङ्गीकारेण तदर्थं पाशुपतादिप्रामाण्यानपेक्षणान्नान्योन्याश्रयत्वमित्याशङ्क्य तथा सति तस्यैव प्रमाणस्य सार्वज्ञ्यादिसाधकतयोपन्यसनीयत्वात् पाशुपतागमोपन्यासवैयर्थ्यमित्याशयेनाह **अन्यत इति** । अङ्गीकृत्य सार्वज्ञ्यादिसाधकं प्रमाणान्तरं पाशुपतागमोपन्यासवैकल्यमभिहितम् । वस्तुतस्तु तादृशं प्रमाणमेव नास्तीति न तेन तत्सिद्धिरित्याशयेनाह **न चेति** ॥ **तादृशं** सार्वज्ञ्यादिबोधकम् । ननु चोक्तमनुमानजातमेव सार्वज्ञ्यादिसाधकं प्रमाणमस्तीति कथं तदभाव इत्यत आह **अनुमानानां चेति** ॥ **दूषितत्वादिति** । 'न पृथक् चानुमेश्वरे' इत्यादिना शास्त्रयोनिसूत्र इति शेषः ॥ **न चैवमिति** । श्रुतिप्रामाण्यं पाशुपतप्रामाण्यवद्दुरवधारणं नेत्यर्थः । प्रामाण्यस्योत्पत्तौ स्वतस्त्वापवादकाभावं दर्शयति **कारणदोषाणामभावे सतीति** । ज्ञप्तौ स्वतस्त्वापवादकाभावं दर्शयति **बाधकप्रत्ययस्याभावे सतीति** ॥ **निष्कम्पं** निश्शङ्कम् । अनेन गुरुत्वान्निष्कम्पं स्वतो निश्चितत्वं प्रमाणतया निश्चितत्वानिश्चितत्वलक्षण एव च पक्षद्वयस्य विशेष इत्युक्तं भवति । इतीत्यस्येत्येतदिति पूर्वेणान्वयः ।

स० — **पाशुपतादिकमिति** । नन्वत्र आदिशब्देन नानुमानस्य परामर्शः । तत्रोक्तान्योन्याश्रयाप्रसरात् । नापि लिङ्गपुराणादेः । तत्रापि अन्योन्याश्रयासंभवात् । तस्य च व्यासकृतत्वेन शिवप्रणीतत्वाभावात् । पुराणान्तरेण तस्य चानाशङ्कितत्वेन ग्रहणासंभवादिति चेन्न । अन्योन्याश्रयप्रसक्तियोग्यस्य एतदधिकरणान्ते निरसिष्यमाणस्य स्कान्दाद्यागमस्यैव ग्रहणसंभवात् पशुपतेरित्यादिशङ्काग्रन्थे पशुपतिशब्दस्य स्कन्दाद्युपलक्षणत्वाददोष इति भावः ।

प० — **आगमैरनुमानैश्चेति** । शास्त्रयोनिसूत्रपूर्वपक्ष्युक्तैः पाशुपतागमैरनुमानैश्चेत्यर्थः ॥ **दूषितत्वादिति** । शास्त्रयोनिसूत्र इति भावः ॥ **न चैवमिति** । अन्योन्याश्रयतया दुरवधारणं चेत्यर्थः । न विलक्षणत्वनयसिद्धमाह **अपौरुषेयेति** ।

या० — **आगमैरिति** । पाशुपताद्यागमैरित्यर्थः ॥ **दूषितत्वादिति** । शास्त्रयोन्यधिकरण इति शेषः ।

श्री० — **पशुपतेरप्येवमिति** । सकलदोषपरिहारेणेत्यर्थः । ननु द्वितीयकोटेरनङ्गीकारान्नान्योन्याश्रय इत्याशङ्क्याह **अन्यत इति** । अनुमानादित्यर्थः । **एवंविधतासिद्धौ** जगत्कर्तृतायाः सिद्धौ । **अनेन** पाशुपतशास्त्रेण । दूषणान्तरमाह **न चेति** । **तादृशं** शिवस्यैवंविधताप्रतिपादकम् ॥ **न चैवमिति** । श्रुतिप्रामाण्यम् एवं पाशुपतशास्त्रवद्दुरवधारणं न चेत्यर्थः ।

सु० — **कास्ताः श्रुतय इत्यतस्ता उदाहरति** मन इति ।

**अनु०** — मनोबुद्ध्यङ्गितां विष्णोर्लक्षयामो य एव सः ॥
स एव देहो विज्ञानमैश्वर्यं शक्तिरूर्जिता ॥
देहो विष्णोर्न ते विष्णो वासुदेवोऽग्रतो भवेत् ॥
एको नारायण आसीन्न ब्रह्मा न च शङ्करः ॥
अजस्य नाभावध्येकमर्पितं मात्रया परः ॥
सद्देहस्सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ॥
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः ॥
आनन्द एक एवाग्र आसीन्नारायणः प्रभुः ॥
प्रियं तस्य शिरो मोदप्रमोदौ च भुजौ हरेः ॥
आनन्दो मध्यतो ब्रह्म पुच्छं नान्यदभूत्क्वचित् ॥
मनसोऽस्याभवद्ब्रह्मा ललाटादपि शङ्करः ॥
पक्षयोर्गरुडः शेषो मुखादासीत्सरस्वती ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥

**अनेन 'बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भगवतो लक्षयामहे । बुद्धिमान्मनोवानङ्गवान्प्रत्यङ्गवानि'ति श्रुतिमुपादत्ते । 'य एवे'त्यनेन 'यदात्मको भगवांस्तदात्मिका व्यक्तिः किमात्मको भगवान्ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मक' इति । ऊर्जिता बलवती । सर्वत्राप्रतिबद्धा । एतदात्मको भगवांस्ततस्तस्य देहोऽप्येतदात्मक इति श्रुतिलब्धोऽर्थः । 'न ते विष्णवि'त्यनेन 'न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमापे'ति । 'वासुदेव' इत्यनेन 'वासुदेवो वा इदमग्र आसीदि'ति । 'मात्रये'त्यनेन 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' इति ।**

कथमेताभिः श्रुतिभिरभिप्रेतार्थसिद्धिरित्यतस्तासां तात्पर्यमाह इत्यादीति ।

इत्यादिश्रुतिसन्दर्भबलान्नित्यगुणात्मनः ॥
विष्णोर्देहाज्जगत्सर्वमाविरासीदितीयते ॥

नित्यश्चासौ गुणात्मा चेति तथोक्तः । तस्मात् । तत्र 'बुद्धी'ति श्रुत्या विष्णोर्देहवत्त्वमवगम्यते । अङ्गं देहः, प्रत्यङ्गानि हस्तादीनि, लक्षयामहे ज्ञापयामः । कथं बुद्धिमानित्यादि । 'यदात्मको भगवानि'त्यनया भगवतो देहस्य ज्ञानादिगुणात्मकत्वम् । व्यक्तिः देहः । 'न ते विष्णवि'त्यनया भगवतो देहस्य ज्ञानादिगुणात्मकत्वमनादिनित्यत्वम् । जातादिभिरप्राप्यमहित्वस्यान्यथाऽनुपपत्तेः । 'वासुदेव' इति श्रुतिद्वयेनानादिनित्यदेहत्वम् । 'अजस्ये'त्यनया देहवत्त्वं तस्याप्यजत्वम् । 'परो मात्रये'त्यनया देशकालगुणैरपरिच्छिन्नतनुत्वम् । 'सद्देह' इत्यादिश्रुतिद्वयेन जन्मादिदोषरहितगुणात्मदेहवत्त्वम् । सद्देहो जन्मादिदोषरहितदेहः । सुखगन्धः सुगन्धः । ज्ञानभा न तु तैजसभाः । ज्ञानज्ञान इत्यादेरतिशयितज्ञान इत्यादिरित्यर्थः । प्रियादिशब्दाः सुखविशेषवाचिनः । अन्यत् प्राकृतादिकम् । 'मनस' इत्यादिश्रुतिद्वयेन देहवत्त्वं ततो जगतो जन्म च । 'ब्राह्मणोऽस्ये'त्यादिवाक्यशेषात् । पक्षयोः पार्श्वयोः ।

अत्र कासुचित् श्रुतिषु विवक्षितार्थो न स्फुटं प्रतीयते । किन्तूपपत्तिसाध्य इत्याशयवतोक्तं बलादिति । आविरासीदित्यनेन सत्कार्यवादं सूचयति । ईयते ज्ञायते । अत्र सकलजगत्कारणत्वस्यैव श्रुतिसिद्धत्वे सर्वदोषपरिहारः सिध्यत्येव । न हि दोषेषु सत्सु तत्संभवति । तथाऽपि दोषाभावोऽपि श्रौतोऽस्ति किमुपपत्तिगवेषणयेत्याशयेन सोऽपि दर्शितः । तत्र देहवत्त्वेन देहाभावप्रयुक्तानि दूषणानि प्रयुक्तानि । तस्य च देहस्य ज्ञानानन्दादिगुणात्मकत्वेन जननादिदोषपरिहारोऽपि सिद्धः । जनितोतेत्यादिवाक्यं तु बह्वीभिर्निरवकाशादिभिः श्रुतिभिः विरुद्धमन्यथाव्याख्येयम् । तदिदमुक्तं सन्दर्भबलादिति ।

शे० — यदात्मको भगवानित्येतच्छ्रुतिव्यतिरिक्तश्रुत्यन्तरस्य 'विज्ञानं शक्तिरूर्जिता । देहो विष्णोरि'त्येतद्भाष्यखण्डसंग्राह्यत्वासंभवात् यदात्मक इति श्रुतेश्च य एव सः स एवेत्यनेनांशेनैव संगृहीतत्वान्मूले तदानर्थक्यमाशङ्क्य य एव सः स एव देह इति भाष्यखण्डसङ्गृहीतश्रुतिलब्धार्थकथनरूपत्वान्नानर्थक्यमिति भावेनोर्जितपदार्थकथनपूर्वकं विज्ञानमित्यादेर्लब्धार्थकथनतामुपदर्शयति ऊर्जितेत्यादिना । उदाहृतश्रुतिभिर्गुणानां नित्यत्वानुक्तेर्गुणात्मकत्वेन देहनित्यत्वसिद्ध्यसंभवेन गुणविशेषणवैयर्थ्यप्रसङ्गात् , देहसद्भावपक्षोक्तदोषपरिहाराय अवश्यवक्तव्यस्य देहनित्यत्वस्य साक्षादनुक्तिप्रसङ्गाद्, बहुव्रीहेरन्यपदार्थप्रधानस्य

वर्तिपदार्थप्रधानकर्मधारयात् जघन्यत्वाच्च नित्यत्वस्य गुणविशेषणतामङ्गीकृत्य नित्या गुणा यस्येति व्याख्यानमनुपपन्नमिति भावेनान्यथा व्याचष्टे **नित्यश्चासाविति**। किमत्र देहप्रत्यायकमित्यतोऽङ्गप्रत्यङ्गपदमेवेति तत्पदद्वयार्थमाह **अङ्गमिति ॥ ज्ञापयाम इति**। शिष्यादीन्प्रतीति शेषः। यदात्मक इति वाक्ये देहप्रत्यायकाभावात्कथं तेन देहस्य ज्ञानादिगुणात्मकत्वसिद्धिरित्यतो व्यक्तिपदमेव तत्प्रत्यायकमिति भावेन तद्व्याचष्टे **व्यक्तिरिति ॥ जातादिभिरिति**। अत्र तावद्विष्णोर्जातादिभिरप्राप्यमहिमत्वमुच्यते। तत्र विष्णोरपि जातत्वे तस्यापि प्रतियोगिकोटिनिवेशप्रसङ्गेनाजत्वे सिद्धे स्वरूपेणाजत्वस्य जीवादिसाधारणत्वेन देहत एव तस्य वक्तव्यतया तदुपपादकत्वेन ज्ञानादिगुणात्मकत्वसिद्धिरिति भावः ॥ **अनादिनित्यदेहत्वमिति**। अत्र प्रलयेऽवस्थानोक्त्याऽनादिनित्यत्वं प्रतीयते। तच्च न तत्स्वरूपापेक्षया जीवादिसाधारण्यात्। अतस्तद्देहापेक्षयैव तद्वक्तव्यमिति देहस्यानादिनित्यत्वसिद्धिरिति भावः ॥ **तस्याप्यजत्वमिति**। अजस्येत्यनेन पद्मनाभदेहविशिष्टस्यैव भगवतो गृहीतत्वादिति भावः ॥ **अपरिच्छिन्नतनुत्वमिति**। **मात्रया** मितेः परोऽसीति विष्णोरपरिच्छिन्नत्वे उक्ते तद्देहस्य परिच्छिन्नत्वात्कथं तस्यापरिच्छिन्नत्वमित्यत उक्तं **तन्वा वृधानेति**। शरीरेणाप्यभिवृद्धत्वं तदर्थः। शरीरस्याभिवृद्धिर्नाम अपरिच्छेद एवेति देहस्य योग्यतया श्रुत्यन्तरबलाद्वा त्रिविधापरिच्छिन्नत्वसिद्धिरिति भावः। **जन्मादिदोषरहितेति**। द्वितीयश्रुतावप्यन्यत्प्राकृतादिकं क्वचिदपि नाभूदित्युत्तरव्याख्यानानुरोधेन दोषराहित्यस्योक्तत्वलाभाच्छ्रुतिद्वयेनेत्यस्योपपत्तिरिति ज्ञेयम् ॥ **सुखविशेषवाचिन इति**। उपकारजं **प्रियं,** प्रकृष्टाप्रकृष्टविषयोत्थौ **मोदप्रमोदौ,** स्वरूपभूत **आनन्द,** इति वा, श्रवणोत्थं **प्रियं,** दर्शनोत्थो **मोदो,** भोगोत्थः **प्रमोदः,** स्वरूपभूत **अनान्द** इति वा टीकोक्तरीत्येति शेषः। नन्वत्र दोषराहित्यं न प्रतिपाद्यते तत्कथमस्य दोषराहित्ये प्रमाणतयोपन्यास इत्याशङ्क्य नान्यदभूदित्यनेनैव तत्प्रतिपादनाद्युक्तोऽस्य प्रमाणतयोपन्यास इति भावेन तत्सिद्ध्यर्थमन्यपदं दोषपरतया व्याचष्टे **अन्यत्प्राकृतादिकमिति**। ननु सहस्रशीर्षेति वाक्ये भगवतो देहप्रतिपादनेऽपि ततो जगतो जन्मानुक्तेः कथमुभयत्र प्रमाणतयोपन्यास इत्यत आह **ब्राह्मणोऽस्येत्यादीति**। श्रुतावासेत्येतत् 'यथा द्रौणेरुलूकेन कृतमप्यास बोधकमि'त्येतद्वाक्यस्थस्यासेत्यस्य साधुत्वव्युत्पादनेन कृतसाधुत्वव्युत्पादनम्। ननु विष्णोर्देहाज्जगज्जातमित्येव वक्तव्यमाविरासीदित्याविर्भावकथनं तु किमर्थमित्यतः सत्कार्यवादसूचनद्वारा वैशेषिकाद्यभिमतात्यन्तासत्कार्यवादनिरासार्थं तदिति भावेन तत्प्रयोजनमाह **आविरासीदित्यनेनेति ॥ सिध्यत्येवेति**। तथा च तत्साधनाय श्रुत्युपन्यासोऽनर्थक इति भावः ॥ **सोऽपीति**। न तूक्तोपपत्त्या तत्सिद्धिर्न संभवतीत्यभिप्रेत्येति भावः ॥ **देहाभावप्रयुक्तानीति**। संबन्धानुपपत्त्यज्ञत्वप्रसङ्गादीनीत्यर्थः ॥ **जननादिदोषेति**। देहवत्त्वप्रयुक्तान्तवत्त्वसुखदुःखादिभोगप्रसङ्गादिदोषेत्यर्थः। तर्हि

निर्विषयत्वाद्वाक्यस्याप्रामाण्यापत्तिरित्यत आह **जनितोतेत्यादीति** ॥ **अन्यथा व्याख्येयमिति** । 'गुणाः श्रुता इति ह्यसान्न दोषोऽर्थः श्रुतेर्भवेदि'त्येतद्ग्रन्थव्याख्यानावसरे 'विष्णुरिति यज्ञस्य यजमानस्य वा नाम, तौ सोमाद्भवत इति सोमो, जनितोत विष्णोरित्युच्यत' इति प्रागुपदर्शितप्रकारेण व्याख्येयमित्यर्थः । यद्यपि सोमादिशब्दवाच्यान्मूलरूपादवताररूपप्रादुर्भावपरतया सन्न्यायरत्नावली-व्याख्यानानुसारेण तथैवेदं व्याख्यातुमुचितम् । तथाऽपि सोमादिपदानां प्रसिद्धार्थपरत्वेऽपि 'अतो दोषवचो यत्र तद्वाक्यमवरं वदेदि'त्यृग्भाष्यानुसारेण 'यज्ञो वै विष्णुः पशवः शिपिरि'त्यादिश्रुत्या विष्णुशब्दस्य यज्ञादिनामत्वेनैवमपि व्याख्यातुं शक्यमिति भावेन व्याख्यानान्तरमेतदिति द्रष्टव्यम् ।

**स०**— गुणानां नित्यत्वस्य श्रुत्यनुक्तत्वादाह **नित्यश्चेति** । **जातादिभिरिति** । अत्र विष्णोः जातादिभिरप्राप्यमहिमत्वमुच्यते । तत्र विष्णोरपि जातत्वे तस्यापि प्रतियोगिकोटिनिवेशापत्त्या अजत्वे सिद्धे स्वरूपेण अजत्वस्य सर्वसाधारणतया देहत एव तद्वक्तव्यमिति भावः । 'मनस' इत्यादि-श्रुतिद्वयेन देहवत्त्वं, ततो जगतो जन्म चेत्युक्तम् । तदयुक्तम् । तत्राद्यवाक्ये अजत्वस्य प्रतीतावपि द्वितीयवाक्ये 'सहस्रशीर्षा पुरुष' इत्यत्र देहवत्त्वप्रतीतावपि जगतस्ततो जन्मनोऽप्रतीतेः श्रुतिद्वयेत्य-सामञ्जस्यादित्यत आह **ब्राह्मणोऽस्येतीति** ।

**प०** — **श्रुतिद्वयेनानादिनित्यदेहत्वमिति** । प्रलयेऽवस्थानोक्त्याऽनादिनित्यत्वे सिद्धे स्वरूपे-णानादिनित्यब्रह्मादेर्लये सत्वाभावोक्तिपूर्वमस्य सत्वोक्तौ देहतोऽप्यनादिनित्यत्वसिद्धिरिति भावः ॥ **तस्याप्यजत्वमिति** । अन्यथा सर्वलोकाधारपद्मनाभत्वायोग इति भावः ॥ **देशकालगुणैरिति** । संकोचकाभावाद्वर्धनं देशादित्रिभिरिति भावः ॥ **सुखविशेषवाचिन इति** । आनन्दमयाधिकरणभाष्य-टीकोक्तरीत्योपकारजं सुखं प्रियम् । प्रकृष्टापकृष्टविषयोत्थौ मोदप्रमोदौ । स्वरूपभूतसुखमानन्द इति सुखविशेषेत्यर्थः ॥ **अन्यत्प्राकृतादिकमिति** । तथाच द्वितीयश्रुतावपि दोषरहितदेहलाभाच्छ्रुतिद्वयेने-त्युक्तं साध्वित्यर्थः ॥ **श्रुतिसिद्धत्व इति** । श्रुतिप्रामाण्यगौरवादित्यस्याद्यव्याख्याने तथोक्तेरिति भावः ॥ **किमुपपत्तीति** । अज्ञानपारतन्त्र्यजनिमृत्यादिदोषेषु सत्सु जगत्कारणत्वासंभवादित्येवंरूपोपपत्तीत्यर्थः ॥ **दर्शित इति** । मन इत्यादिभिर्दर्शित इत्यर्थः ॥ **अन्यथा व्याख्येयमिति** । व्याख्यातमेतत्प्राक्जन्मा-धिकरणे । 'विष्णुरिति यजमानस्य यज्ञस्य वा नाम । तौ सोमाद्भवत इति सोमो विष्णोर्जनिता जनयितेत्युच्यत' इति ।

**या०** — **वासुदेव इति श्रुतिद्वयेनेति** । अत्र प्रलयेऽप्यवस्थानोक्त्याऽनादिनित्यत्वं तावत्प्र-तीयते । तच्च न स्वरूपापेक्षया । जीवसाधारण्यादतस्तद्देहस्यैव तत्सिध्यतीति भावः ॥ **तस्याप्य-**

जत्वमिति । अजस्येत्यनेन पद्मनाभदेहविशिष्टस्यैव भगवतो गृहीतत्वादिति भावः । न च तत्स्वरूपापेक्षयाऽजत्वम् तथात्वे 'अजस्य नाभावि'ति षष्ठ्यर्थसम्बन्धस्यामुख्यतापत्तेः ॥ **परो मात्रयेत्यनयेति** । मात्राया मितेः परोऽसीति विष्णोरपरिच्छिन्नत्वे उक्ते तद्देहस्य परिच्छिन्नत्वात्कथं तस्यापरिच्छिन्नत्वमित्यत उक्तं 'तन्वा वृधाने'ति । शरीरेणाप्यभिवृद्धो भवसीत्यर्थः । शरीरस्याभिवृद्धिरपरिच्छेदः । स च सङ्कोचे कारणाभावात्त्रिविधोऽपि विवक्षित इति भावः ॥ **जन्मादिदोषरहितेति** । द्वितीयश्रुतावप्यन्यत्प्राकृतादिकं क्वचिदपि नाभूदिति दोषराहित्यस्योक्तत्वाच्छ्रुतिद्वयेनेत्युपपन्नमिति ज्ञातव्यम् ॥ **सुखविशेषवाचिन इति** । उपकारजं प्रियम् । प्रकृष्टाप्रकृष्टविषयोत्थौ मोदप्रमोदौ । स्वरूपभूत **आनन्द** इति-सुखविशेषवाचिन इत्यर्थः ॥ **अन्यथाव्याख्येयमिति** । 'विष्णुरिति यजमानस्य यज्ञस्य वा नाम, तौ सोमाद्भवत इति सोमो विष्णोर्जनितेत्युच्यत' इति जन्माधिकरणोक्तरीत्या व्याख्येयमित्यर्थः ॥

**श्री०** — **अन्यथा** अनादिनित्यत्वाभावे । ननु मनस इति श्रुतौ देहवत्त्वस्य ततो जगज्जन्मनश्च श्रुतत्वेऽपि सहस्रेति श्रुतावीश्वरस्य देहवत्त्वश्रवणेऽपि ततो जगज्जन्माश्रवणाच्छ्रुतिद्वयेनेति कथमुक्तमित्यत आह **ब्राह्मणोऽस्येति** ॥ **उपपत्तिसाध्य इति** । 'न ते विष्णो जायमान' इति श्रुतौ भगवतो देहस्यानादिनित्यत्वरूपो विवक्षितोऽर्थो जातादिभिरप्राप्यत्वान्यथाऽनुपपत्त्यैव प्रतीयते, न स्फुटम् । 'सहस्रशीर्षेति' श्रुतौ हरेर्जगतो जन्म 'ब्राह्मणोऽस्येति' वाक्यशेषबलादेव प्रतीयते, न स्फुटमित्यर्थः । **सिद्ध्यत्येवेति** । अन्यथाऽनुपपत्त्येवेत्यर्थः । एतदेवोपपादयति **न हीति** ॥ **तत्संभवतीति** । जगज्जन्मादिकारणत्वमित्यर्थः । तथा च सकलजगज्जन्मादिकारणत्वमित्यर्थः । तथा चार्थात्स्वत एव सिद्धजन्मादिदोषरहितदेहवत्त्वोपपादकं 'सद्देह' इत्यादिश्रुतिद्वयकथनं व्यर्थम् ॥ **उपपत्तीति** । न हि दोषेष्वित्युक्तोपपत्तीत्यर्थः । **सोऽपि** श्रौतदोषाभावोऽपीत्यर्थः । दोषाभावप्रतिपादकश्रुतिर्दर्शितेति यावदिति भावः ।

**च०** — ॐ **पत्युरसामञ्जस्यात्** ॐ । **ज्ञानभाः** ज्ञानात्मकभास्वरूपः ॥

**सु०** — **स्यादेतत्** । **देहो ज्ञानानन्दादिगुणात्माऽनादिनित्यश्चेत्येतच्छशो विषाणवानितिवद्विरुद्धम् । यो देहः स भौतिको जन्मादिमानिति नियमदर्शनात्** । **ततो विष्णोर्देहमङ्गीकृत्य तस्याभौतिकत्वाद्यङ्गीकारे शशस्यापि विषाणित्वमङ्गीकार्यमित्यतो देहस्याभौतिकत्वादिना विरोधं तावदपाकरोति** मानवत्त्वादिति ।

**अनु०** — मानवत्त्वाद्विरोधः को

क इत्याक्षेपे । नास्ति विरोध इत्यर्थः । इदानीं शशविषाणप्रतिबन्दीं मोचयति नेति ।

न... नामानं क्वचिदिष्यते ॥

अङ्गीकुर्मः शशविषाणमपि । यदि परमेश्वरविग्रहस्यानन्दाद्यात्मकत्वमिव प्रामाणिकं स्यात् । न चैवम् । न ह्यप्रामाणिकं केनापि कदाऽपि क्वचिदप्येष्टुं शक्यत इति । ननु प्रामाणिकत्वेऽपि विरोधाभावः कथमित्यत आह अविरोध इति ।

अविरोधो विरोधश्च मानेनैव हि गम्यते ॥

ययोः क्वचित्सहदर्शनं तयोरविरोधः । ययोस्तु नियमेन व्यधिकरणतयैव दर्शनं तयोः विरोध इत्येवं सहदर्शनासहदर्शनलक्षणेन मानेन (हि) वस्तूनामविरोधविरोधाववगन्तव्यौ । तन्नियामकस्यान्यस्याभावात् । अतः प्रमाणेन सहदृष्टेऽर्थे विरोधः कथं स्याद्व्याघातादिति ।

उपसंहरति अत इति ।

अत उक्तं समस्तं च वासुदेवस्य युज्यते ॥

प्रमाणैः सहदृष्टेऽर्थे विरोधस्यानाशङ्कनीयत्वात् । उक्तम् उदाहृताभिः श्रुतिभिः । समस्तं चिदानन्दाद्यात्मकनिरवद्यविग्रहेण जगत्कारणत्वम् । एतच्चारूपवदेवेत्यादिना वक्ष्यमाणं शिष्यहितैषिणाऽऽचार्येणात्रोक्तमिति ज्ञातव्यम् ।

---

शे० — दर्शनादिति । अस्मदादिशरीरेष्विति शेषः ॥ व्याघातादितीति । प्रमाणेन सहदृष्टं विरुद्धं चेत्यस्य विप्रतिषिद्धत्वादित्यर्थः । नन्वेवं 'अरूपवदेव हि तत्प्रधानत्वादि'त्यधिकरणवैयर्थ्यं तत्प्रयोजनस्यानेनैव सिद्धेरित्यतस्तदधिकरणप्रमेयस्यैवेह भाष्यकारेण प्रतिपादनान्नानेन तस्य गतार्थतेति भावेनाह एतच्चेति ।

स० — नन्वेवं 'अरूपवदेव' इत्यधिकरणं व्यर्थम् । तत्कार्यस्यानेनैव सिद्धत्वादित्यतः तदधिकरणप्रमेयस्यैवात्र प्रतिपादनात् नानेन तस्य गतार्थतेति भावेनाह-एतच्चेति ।

प० — ननु परमतनिरासप्रस्तावे स्वमतस्थापनमुत्सूत्रितमिह कस्माद्भाषितमित्यत आह ॥ एतच्चारूपवदेवेति । 'अरूपवदेव हि तत्प्रधानत्वादि'ति भक्तिपादीयाधिकरणे वक्ष्यमाणाप्राकृतविग्रहत्वमित्यर्थः ।

श्री० — तदिति । अविरोधविरोधेत्यर्थः ।

सु०—नन्वेतदस्माकमपि समानम् । तथा हि । यद्यपि पाशुपतादिकमशक्यावधारणप्रमाणभावम् । तथाऽपि 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति ।' 'एको रुद्रो न द्वितीयाय तस्थे ।' 'स इमान् लोकानीशत ईशनीभिरि'त्याद्याः श्रुतयस्तावच्छिवस्य जगज्जन्मादिहेतुनामाचक्षते । शिवादिनामोपेतत्वात् । न च तथाविधस्यासमञ्जसत्वं संभवतीत्युदाहृताः श्रुतयोऽन्यथा योज्याः । अतः संबन्धानुपपत्त्यादिकं श्रुतिरेवाभासयिष्यति । तद्घटकं वा किमपि कल्पयिष्यतीत्यत आह शिवादीति ।

अनु०— शिवादिनामयुक्ताश्च श्रुतयो विष्णुवाचकाः ॥

भवेदेवं यद्येताः श्रुतयः शिवपराः स्युः । न चैवम् । किन्तु शिवादिनामयुक्ता अपि विष्णुविषया एव ।

नन्वेतत्कुतः । एवं सत्यस्माभिरपि वक्तुं शक्यत एव । एको नारायण इत्याद्या अपि श्रुतयः शिवपरा इति । मैवम् । शिवादिनाम्नां विष्णौ शक्तिमत्त्वात् । नारायणादिनाम्नां शिवे शक्त्यभवात् । अत्रापि किं मानमित्यत आह नामानीति ।

नामानि सर्वाणि च यमेको यो देवनामधाः ॥
विष्णुनामानि नान्यस्य सर्वनामा हरिः स्वयम् ॥
न नारायणनामानि तदन्येष्वपरे हरौ ॥
इत्यादिश्रुतयस्तत्र मानं चोक्तः समन्वयः ॥

अनेन 'नामानि विश्वाभि न सन्ति लोक' इत्यादिकां श्रुतिमुपादत्ते । 'एक' इत्यनेन । 'यो देवानां नामधा एक एवेति । नामानि धत्त इति नामधाः । नान्यस्य वाचकानि । न तदन्येषु वर्तन्ते । अपरे शिवादिशब्दाः । उक्तः समन्वयश्च तत्र मानमिति संबन्धः । समन्वयग्रहणेनैतदपि परिहृतम् । एता अपि श्रुतीरहं शिवादिवि(ववि)षयतया व्याख्यास्यामीति । उपक्रमादिभिर्लिङ्गादिभिश्च भगवत्परतया निश्चितत्वादिति ।

शे० -- अशक्यावधारणेति । उक्तरीत्याऽन्योन्याश्रयग्रस्तत्वादिति शेषः ॥ तथाविधस्येति । निश्चितप्रमाणभावया श्रुत्या जगत्कारणतयाऽवधारितस्येत्यर्थः । अन्यथा तादृशस्य विष्णोरप्यसामञ्जस्यप्रसङ्गादिति भावः । उदाहृता इति । 'अस्य देवस्य' 'स्तुहि गर्तगमि'त्यादिनेति शेषः । अन्यथा योज्या इति । तद्वाक्यस्थरुद्रादिशब्दानां यत्किञ्चित्क्रूरमात्रपरत्वं न पशुपतिपरत्वमित्यन्यथा योज्या इत्यर्थः । अन्यथा 'जनितोत विष्णोरित्यस्याप्यन्यथायोज्यत्वं न स्यादिति भावः । ननु शिवादिसर्वनाम्नां विष्णुवाचित्वे कथं 'यो देवानां नामधा' इति श्रुतिः प्रमाणम् । तत्र तत्प्रत्यायकाभावात् ।

नामधा इत्यस्य चाश्वकर्णादिशब्दवत्संज्ञामात्रत्वादित्यतोऽश्वकर्णादिशब्दानां सर्वथा यौगिकत्वासंभवात्केवलरूढत्वमाश्रीयते इह तु कॢप्तावयवशक्त्यैव प्रयोगप्रत्यययोरुपपत्तौ समुदायशक्तौ प्रमाणाभावेन रूढेरनौचित्याद्यौगिकत्वमेवेत्यतस्तेनैव विवक्षितलाभात्प्रामाण्योपपत्तिरिति भावेन नामधा इत्येतद्व्युत्पादयति **नाम नि धत्त इति नामधा इति** । आतो मनिन्क्वनिप्वनिपश्चेति चकाराद्विचि नामधा इत्यस्य साधुत्वमिति भावः । केचित्तु नामानि धीयन्ते देवेषु निधीयन्तेऽनेनेति नामधा इति करणसाधनत्वभ्रान्तिं वारयितुं नामानि धत्त इति व्याख्यानमित्याहुः । तन्न । करणे विचोऽननुशासनादेव तथाविधभ्रान्त्यनुदयात् । अन्ये तु यो देवानां नाम नामानि वेद यश्च धत्त इति धा इत्यन्यथाप्रतीतिनिवारणायेदं व्याख्यानमित्याहुः । गच्छतीत्यादौ धात्वर्थस्य तदनुकूलव्यापारस्य च देवदत्तगतत्वदर्शनात् कर्तृगतत्वे बाधकसद्भावादेव च छिनत्तीत्यादौ फलस्यान्यगतत्वाभ्युपगमात् । प्रकृते फलीभूतव्यवहारादेः कर्तृगतत्वे बाधकाभावान्न तत्त्याग इत्याशयेनेदं व्याख्यानमित्याहुः ।

**स०**— गच्छतीत्यादौ धात्वर्थस्य तदनुकूलव्यापारस्य च देवदत्तगतत्वस्य दर्शनात् कर्तृगतत्वे बाधकसद्भावेनैव छिनत्तीत्यादौ फलस्यान्यगतत्वाभ्युपगमात् प्रकृते च फलीभूतव्यवहारादेः कर्तृगतत्वे बाधकाभावान्न तत्त्याग इति भावेनाह **नामानीति ॥ समन्वयग्रहणेनेति** । न केवलं समन्वयेन शिवादिशब्दोपेतानां श्रुतीनां विष्णुवाचित्वमेव सिद्धमिति । किं नाम एतासां श्रुतीनां शिवादिविषयत्वाभावोऽप्युक्तो भवतीत्यर्थः ।

**प०**— नान्यस्येत्यनुवादेन शेषमाह **वाचकानीति** । तदन्येष्वित्यनुवादः । वर्तन्त इति शेषोक्तिः ।

**श्री०**— **तथाविधस्य** जगज्जननादिहेतोः । **असमञ्जसत्वम्** । **श्रुतयो** 'अस्य देवस्ये'-त्याद्याः ॥ **समन्वयेति** । उपक्रमादिप्रमाणकशक्तितात्पर्यलक्षणसंबन्धरूपसमन्वयग्रहणेनेत्यर्थः । **एताः** 'नामानी'त्यादिकाः ।

**सु०**— **मा भूच्छ्रुतिभिः शिवस्य जगत्कारणत्वावधारणं शैवपुराणैस्तु भविष्यति । न च तान्यपि विष्णुपराणि । उपक्रमादिबलेन शिवविषयतया निश्चितत्वादित्यत आह** पुराणानीति ।

**अनु०**— पुराणानि पुराणाद्यैर्विरुद्धत्वान्न तत्प्रमा ॥

पुराणाद्यैः **वैष्णवैः** । विरुद्धत्वात् **प्राक् प्राबल्यचिन्तायाः सत्प्रतिपक्षत्वात्** । **तदुत्तरं बाधितत्वाच्च** । तत् तत्र, **शिवस्य जगत्कारणत्वे** ।

**शे० — पुराणैस्त्विति ।** तेषु विष्ण्वादीनामुपसर्जनत्वोपपादनपूर्वकं शिवादीनां जगत्कारणत्वस्याभिहितत्वादिति भावः । **उपक्रमादिभिरिति ।** तात्पर्यलिङ्गविरोधान्न तेषां विष्णुविषयत्वमिति भावः । **प्रागिति ।** शैवपुराणापेक्षया वैष्णवपुराणानां विशेषानिर्धारणार्थं सत्प्रतिपक्षत्वमित्यर्थः । **तदुत्तरं त्विति ।** श्रुतिसंवादित्वेन वैष्णवपुराणानां प्राबल्यनिर्णयानन्तरमित्यर्थः ।

**सु० — न केवलं वैष्णवादिपुराणादिविरुद्धत्वादप्रमाणं शैवपुराणम् । किन्तु शैवप्रमाण(पुराण)विरुद्धत्वादपीत्याह** तदिति ।

**अनु० —** तद्विरुद्धेषु नो मानं पूर्वापरविरोधतः ॥

तद्विरुद्धेषु **शैवपुराणादिविरुद्धेषु शिवजगत्कारणादिषु** नो मानम् । **शैवपुराणमिति शेषः । कथं शैवपुराणस्य शैवपुराणविरोध** इत्यत आह पूर्वेति । **एतच्चान्यत्र दर्शितम् । किञ्च शैववैष्णवपक्षपातशून्यब्राह्मपुराणविरुद्धत्वाच्च शैवपुराणं विमतेऽर्थे न मानमित्याह** समेति ।

समब्राह्मविरोधाच्च

**इदमप्यन्यत्र दर्शितम् । एवं तर्हि वैष्णवानामपि पुराणादीनामप्रामाण्यं स्यात् । तेषामपि शैवब्राह्मपुराणविरुद्धत्वात्पूर्वापरविरोधाच्चेत्यत** आह नियमादिति ।

नियमाद्वैष्णवेष्वपि ॥

**एकप्रकारत्वात् । पूर्वापरविरोधाभावात् ।** शैवादिपुराणानामेतत्प्रतिबन्धकत्वाद्यसामर्थ्यादित्यपेरर्थः । **तेषां नाप्रामाण्यमिति** शेषः । ननु वैष्णवेष्वपि पुराणादिषु शिवादीनां **जगत्कारणत्वादिकं विष्णुना तदीयस्तुत्यादिकरणं च प्रतीयत एव ।** तत्कथं **नियम उच्यत इत्यत आह** मोहार्थमिति ।

मोहार्थमुक्तितश्चैव

शिवादीनां **जगत्कारणत्वादेरयोग्यजनव्यामोहनार्थमेवोक्तितः,** चशब्दाद्विष्णुना **शिवस्तुत्यादेर्मोहार्थं कृतस्यानुवादतश्च नियमो न विरुद्ध इति ।** कथं **शैवपुराणादीनां प्रतिरोधकत्वाद्यसामर्थ्यमित्यत** आह मोहार्थमिति । **शैवपुराणादीनां मोहार्थमेव** उक्तितः **कृतत्वात् । चशब्देन वैष्णवानां तत्त्वज्ञानार्थमेव कृतत्वात् । अत्र चार्थेऽन्यत्र प्रमाणान्युक्तानि ।**

**शे० — एतच्चान्यत्र दर्शितमिति ।** 'तद्ग्रन्थविरोधाच्च । तथा हि । शैवे स्कान्दे 'यदन्तरं व्याहरीन्द्रयोर्वेन' इत्यादिना गीताभाष्ये,' शैवे च स्कान्दे 'श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः ।

तदैवाच्युत यान्त्येव यदैव त्वं पराङ्मुख' इत्यादिना भाष्ये' च दर्शितमित्यर्थः ॥ **इदमप्यन्यत्र दर्शितमिति** । 'समब्राह्मविरोधाच्चे'त्यादिना गीताभाष्ये, ब्राह्मे च ब्रह्मवैवर्ते 'नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः । बालः क्रीडनकैर्यद्वत्क्रीडतेऽस्माभिरच्युत' इत्यादिना भाष्ये च दर्शितमित्यर्थः । वैष्णवादिपुराणानां पूर्वापराविरोधोपपादकतया मोहार्थमिति वाक्यं व्याख्याय शैवपुराणानामेतत्प्रतिबन्धकत्वासामर्थ्योपपादकतयाऽपि तदेव व्याख्यातुं शङ्कते **कथमित्यादिना** । शैवपुराणानां मोहार्थं कृतत्वं वैष्णवानां पुराणानां च तत्त्वज्ञानार्थमेव कृतत्वमित्येतत्कुत इत्यत आह **अत्र चार्थ इति** । 'एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति । त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय । अतथ्यानि वितथ्यानि दर्शयस्व महाभुज । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु' इति । 'मोहार्थान्यन्यशास्त्राणि कृतान्येवाज्ञया हरेः । अतस्तेषूक्तमग्राह्यमसुराणां तमोगतेः । यस्मात्कृतानि तानीह विष्णुनोक्तैः शिवादिभिः ।' 'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः । चकार शास्त्राणि विभू ऋषयस्तत्प्रचोदिताः । दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु' । 'वैष्णवानि पुराणानि पञ्चरात्रात्मकत्वतः । प्रमाणान्येव मन्वाद्याः स्मृतय' इत्यादिवाराहवचनादीनि भाष्यादावुक्तानीत्यर्थः ॥ २-२-११ ॥

**स०— एतच्चान्यत्रेति** । भाष्ये इत्यर्थः । **अन्यत्र** भाष्ये ॥

---

**प०— एतच्चान्यत्रेति** । शैवपुराणविरोधाच्छैवपुराणमप्रमाणमित्येतच्छैवे **च** स्कान्द इति श्रीमद्भारततात्पर्यनिर्णये द्वितीयाध्यायगीताभाष्ये प्रथमाध्यायबृहद्भाष्यादौ चेत्यर्थः । अत एवान्यत्रेति सामान्येनोक्तिः । **इदमप्यन्यत्रेति** । ब्राह्मे च ब्रह्मवैवर्त इति श्रीमद्भाष्यादिपूर्वोक्तग्रन्थेष्विति ज्ञेयम् । मोहार्थमित्येतत्प्रकारान्तरेण योजयति **कथं शैवेति** ॥ **अत्रचार्थेऽन्यत्रेति** । 'शैवान्पाशुपत**।**चक्र' इति 'मोहार्थान्यन्यशास्त्राणी'त्यादिना तात्पर्यनिर्णयादिग्रन्थेष्वेवेत्यादि ध्येयम् ।

**या०— एतच्चान्यत्रेति** । 'शैवे च स्कान्द' इत्यादिभाष्य इत्यर्थः ॥ **इदमप्यन्यत्रेति** । ब्राह्मे च ब्रह्मवैवर्त' इत्यादिभाष्य इत्यर्थः ॥ **अत्र चार्थेऽन्यत्रेति** । 'मोहार्थान्यन्यशास्त्राणि कृतान्येवाज्ञया हरेः । अतस्तेषूक्तमग्राह्यमसुराणां तमोगतेः । यस्मात्कृतानि तानीह विष्णुनोक्तैः शिवादिभिः' । 'वैष्णवानि पुराणानि पञ्चरात्रात्मकत्वतः । प्रमाणान्येवे'त्यादीनि प्रमाणानि महाभारततात्पर्यनिर्णयादावुक्तानीत्यर्थ ॥ २-२-११ ॥

**श्री०— पक्षपातशून्येति** । समशब्दार्थकथनम् ॥ २-२-११ ॥

**सु०— अधिकरणार्थमुपसंहरति** विष्णुरिति ।

**अनु०—** विष्णुरेको गुणार्णवः ॥

**तस्मादिति सिद्धमिति शेषः । ननु स्कन्दादिमतान्यप्युक्तार्थविरोधीनि सन्ति तानि कुतोऽत्र न निराक्रियन्त इत्यत आह** स्कन्देति ।

स्कन्दसूर्यगणेशादिमतानि न्यायतोऽमुतः ॥

निराकृतानि

अमुतो न्यायतः **पाशुपतमतनिराकरणन्यायतः । अतो न निराक्रियन्त इति शेषः । कथमनेन न्यायेन तन्निराकरणमित्यत आह** अशेषेणेति ।

अशेषेण सिद्धान्तस्याविशेषतः ॥ २-२-११ ॥

**कार्त्स्न्येन तदीयसिद्धान्तानां पाशुपतसिद्धान्तस्य चाविशेषतः । केवलदेवतान्तरपरिग्रहेणैव सिद्धान्तभेदः । प्रक्रिया तु सर्वत्र समानैव । अतः पूर्वनिराकरणन्यायेनैव तन्निराकरणं युक्तमेवेति भावः ॥ २-२-११ ॥**

**प०— इति शेष इति ।** आदौ 'तस्मादि'ति, अन्ते 'इति सिद्धमि'ति योज्यमित्यर्थः । **अमुतो न्यायत इति ।** पत्युः पदस्थाने स्कन्दस्येत्यादिपदं प्रक्षिप्य सूत्राणि योज्यानि । स्कन्दादेरसामञ्जस्ये प्रमाणानि तत्वनिर्णयादावुक्तानि ध्येयानीति भावः ॥ २-२-११ ॥

**॥ इति पत्युरधिकरणम् ॥**



॥ अथ उत्पत्त्य(शक्त्य)धिकरणम् ॥

सु० — ॐ उत्पत्त्यसंभवात् ॐ ॥ शाक्तं मतमत्रापाक्रियते । न निराकर्तव्यमेवैतत् । स्कान्दादिमतवदस्यापि पूर्वन्यायेनैव निरस्तत्वात् । यथा हि । पत्युरित्यस्य स्थाने स्कन्दस्येत्यादि पठित्वाऽसामञ्जस्ये तदनुसारिण्यः श्रुतय उदाह्रियन्ते । संबन्धानुपपत्त्यादिकं च तद्विषयं योज्यते । तथा शक्तावपि वक्तुं शक्यमेव (ते) । अन्यथा स्कन्दादिदर्शनमपि पृथगपाकरणीयं स्यात् । अथोच्येत । शाक्तमते पाशुपतादाचारभेदादेविद्यमानत्वात्तत्सिद्धान्ताविशेषो नास्तीति । तन्न । सौरादिमतेष्वपि तस्य विद्यमानत्वात् । अथ किं तेन । देवताविशेषपरिग्रहमन्तरेणोक्तार्थविरुद्धो दूष्योऽर्थः सर्वत्र समान एवेति ब्रूषे । तच्छाक्तेऽपि समानमित्यतो नैतदपि पृथगपाकरणीयमित्यत आह निराकृताविति ।

अनु० — ॐ उत्पत्त्यसंभवात् ॐ ॥

निराकृतौ विशेषस्य भावाच्छक्तिमतं पृथक् ॥

दूष्यते

सत्यम् । स्कान्दादिवच्छाक्तस्यापि मतस्य न पाशुपताद्विशेषः । अत एवोक्तदोषग्रामविषयत्वमपि । तथाऽपि तत्रासाधारणस्य दूषण(स्यापि वि)स्य विद्यमानत्वात्तद्विवक्षया शक्तिमतं पृथग्भङ्ग्या दूष्यते सूत्रकारेण । उत्पत्त्यसंभवो हि शाक्तस्यैवासाधारणदोषो न तु पुरुषदैवतानाम् । एतच्च वक्ष्याम इति ।

शे० — ॐ उत्पत्त्यसंभवात् ॐ ॥ एतदधिकरणप्रतिपाद्यानुक्त्या मूले न्यूनतामाशङ्क्य भाष्ये तदुक्तेस्तत एव तस्य शिष्यैर्ज्ञातुं शक्यत्वादत्र तदनुक्तिर्न दोषायेति भावेन 'शक्तिपक्षं दूषयती'ति भाष्यं मनसि निधायाधिकरणप्रतिपाद्यमाह शाक्तमिति । नन्वेवं तन्मतमुपन्यस्य दूषणीयम् । निराकृताविरयुत्तरभाष्ये तस्य पृथङ्निरसनीयत्वसमर्थनमनर्थकम् । न च पृथगनिरसनीयताशङ्कानिरासेनाधिकरणारम्भोपपादनार्थत्वान्न तदिति वाच्यम् । पूर्वमनिराकृतशक्तिपक्षनिरासकमात्रेणैवाधिकरणारम्भसिद्ध्या प्रापकाभावेनानिरसनीयत्वशङ्काया एवानवकाशादित्यत एतत्पक्षस्य पाशुपतपक्षाविशिष्टत्वेन सिद्धान्ताविशेषस्यैव तत्प्रापकत्वेन अनिरसनीयताशङ्कोदयसंभवात्तन्निरसनेनाधिकरणारम्भोपपादकस्यास्य भाष्यस्य न वैयर्थ्यमित्यभिप्रेत्य तत्सिद्धान्ताविशेषोपपादनपूर्वकं पृथगनिरसनीयताशङ्कामुत्थापयति न निराकर्तव्यमेतदित्यादिना । ननु यत्किञ्चिदुत्पत्तिकर्तृत्वस्य केवलस्त्रीणामप्युपलम्भात्कथमुत्पत्त्यसंभवः शाक्तस्यैवा-

साधारणो दोषो न तु पुरुषदेवतावादिनामित्यत आह **एतच्च वक्ष्याम इति** । 'दृष्टा पुंभ्यः सदा सृष्टिः स्त्रीपुंभ्यो वा विशेषतः । केवलाभ्यो न हि स्त्रीभ्य' इत्युत्तरग्रन्थव्याख्यानावसरे 'अत्र सृष्टिशब्देनापत्योत्पत्तिर्विवक्षिता न सृष्टिमात्रं, तस्य केवलाभ्योऽपि स्त्रीभ्यो दर्शनादि'त्यादिनोत्पत्त्यसंभवस्य शाक्तासाधारणत्वं वक्ष्याम इत्यर्थः ।

**स०— ॐ उत्पत्त्यसंभवात् ॐ** ॥ **एतच्च वक्ष्याम इति** । 'दृष्टा पुम्भ्यः' इत्यादिना वक्ष्याम इत्यर्थः ।

**प०— ॐ उत्पत्त्यसंभवात् ॥ अथ किं तेनेति** । आचारभेदादिना किमित्यर्थः ॥ **देवताविशेषपरिग्रहमन्तरेणेति** । तत्स्वरूपमात्रस्य संमतत्वादिति भावः ॥ **उक्तार्थेति** । पूर्वाध्यायोक्तार्थविरुद्धार्थो दूष्य इत्यर्थः ॥ **शाक्तस्येति** । मतस्येति योज्यम् ॥ **पुरुषेति** । पुरुषाः स्कन्दादयो दैवतान्येषां तेषां मतानामिति योज्यम् ॥ **एतच्चेति** । शक्तिमत एवायं दोषो न मतान्तर इत्येतच्च 'दृष्टा पुंभ्यः सदा सृष्टिरि'त्यादौ वक्ष्याम इत्यर्थः ।

**या०— ॐ उत्पत्त्यसंभवात् ॐ** । ननु तुल्याद्युत्पत्तिकर्तृत्वस्य केवलस्त्रीणामप्युपलम्भात्कथमुत्पत्त्यसंभवः शाक्तस्यासाधारणो दोष इत्यत आह **एतच्च वक्ष्याम इति** । अत्र सृष्टिशब्देनापत्योत्पत्तिर्विवक्षिता न सृष्टिमात्रमिति वक्ष्याम इत्यर्थः ।

---

**श्री० ॐ उत्पत्त्यसंभवात् ॐ** ॥ **तस्य** आचारभेदस्य **तेन** आचारभेदेन ॥ **उक्तार्थेति** । भगवत्सर्वोत्तमत्वरूपोक्तार्थेत्यर्थः । **समानः** तथा च सौरादिमतं न पृथगपाक्रियत इत्यर्थः । **इत्यतः** इति हेतोः ।

**सु०— एवमधिकरणारम्भमुपपाद्येदानीं शाक्तमत(स्थिति)मुपन्यस्यति** महतीति ।

**अनु०—** महती देवी ह्रीङ्कारी सर्वकारणम् ॥
त्रिपुराभैरवीत्यादिनामभिः साऽभिधीयते ॥

**शक्तिमतमिति वर्तते** । **सर्वस्यागामिना इतिशब्देन संबन्धः** । **देवी महती सर्वोत्कृष्टेति शक्तिमतमिति** । **कथं महतीत्यत उक्तं** सर्वकारणमिति । **सकलजगत्सृष्ट्यादिकारणत्वात् सार्वज्ञादिसर्वगुणवती समस्तदोषदूरा भ(ग)वतीत्यतः सर्वोत्कृष्टेति** । **नन्विदं शास्त्रमन्योन्यव्याहतं कथं प्रमाणं स्यात्** । **भुवनेश्वरीतन्त्रे हि सैव महती सर्वकारणमिति चोच्यते** । **त्रिपुरातन्त्रे तु त्रिपुरैव** । **तथा भैरवीतन्त्रे भैरवी** । **एवं कुब्जिकादितन्त्रेष्वन्या चान्या च** । **न च बह्वीनां सर्वोत्तमत्वमुपपद्यत इत्यत उक्तम्** । **ह्रीङ्कारी त्रिपुरा भैरवीत्यादिनामभिः सा भगव-**

त्येकैवाभिधीयते । अतो न (नान्योन्य)व्याघत इति ।

शाक्ताश्च त्रिविधाः । महावामा मध्यवामा अणुवामाश्चेति । एत एव क्वचिच्छाक्तशाम्भवाऽऽणवशब्दैरुच्यन्ते । तत्राद्यानां मतविशेषं दर्शयति तस्या इति ।

तस्याः सदाशिवाद्याश्च जायन्ते देवमानवाः ॥

भूतभौतिकमप्येतदिति

तस्याः केवलाया एव शक्तेः । सदाशिवग्रहणेन मतान्तराद्भेदो दर्शितः । तत्र सदाशिवस्य शक्तितो जन्मानभ्युपगमात् । एवमुपन्यस्तं महावाममतं तावदयुक्तमित्याह तदिति ।

तन्नोपपद्यते ॥

निरन्तरोपन्यस्तं महावाममतं तदिति परामृशति ।

शे० — वर्तत इति । अनुवर्तत इत्यर्थः । सर्वस्येति । 'महती सर्वकारणमि'त्यादेः सर्वस्येत्यर्थः । आगामिनेतिशब्देनेति । भूतभौतिकमप्येतदितीत्यत्रत्येनेतिशब्देनेत्यर्थः । तमेव संबन्धमभिनयेन दर्शयन्व्याख्याति ॥ देवीत्यादिना । सर्वकारणत्वमात्रस्य महत्त्वोपपादकत्वेऽपि तथायोजनायां श्रौतब्रह्मलक्षणाक्षेपसूचनलाभेऽपि प्रधानलक्षणद्वयाक्षेपसूचनालाभात्तल्लाभाय परम्परया महत्त्वोपपादकत्वेन तद्योजयति सृष्ट्यादिकारणत्वादिति । सृष्ट्यादिकर्तृत्वादित्यर्थः । सार्वज्ञादिगुणवती तत एव समस्तदोषविदूरेति योज्यम् ॥ न च बह्वीनामिति । तथा सत्यनेकेश्वरवादापत्त्या जगतोऽक्रियत्वोन्मथनप्रसङ्गादिति भावः । केवलाया एवेति । पुरुषाननुगृहीताया एवेत्यर्थः ।

प० संबन्ध इत्युक्तम् व्यनक्ति देवीति । सर्वकारणमित्युक्त्यैव निर्दोषगुणपूर्तिलाभ इत्याह सकलेति ।

श्री० — एत एव महावामादय एव ।

सु० — कुत इत्याकाङ्क्षायां सूत्रम् उत्पत्त्यसंभवादि'ति । तद्व्याख्यातुं तावद्व्याप्तिमुपपादयति दृष्टेति ।

अनु० — दृष्टा पुंभ्यः सदा सृष्टिः स्त्रीपुंभ्यो वा विशेषतः ।
केवलाभ्यो न हि स्त्रीभ्यस्तत उत्पत्त्यसंभवात् ।
नाच्यं महावाममतं

अत्र सृष्टिशब्देनापत्त्योत्पत्तिर्विवक्षिता न सृष्टिमात्रम् । तस्य केवलाभ्योऽपि स्त्रीभ्यो दर्शनात् । सदेति व्यभिचाराभावं सूचयति । वाशब्दस्तुशब्दार्थः । विशेषतः प्राचुर्येण ।

केषाञ्चिदेव हि द्रोणादीनां सृष्टिः केवलेभ्यः पुरुषेभ्यो दृष्टा । नन्वचतुरादिसूत्रेण स्त्रीपुंसेभ्य इति भवितव्यम् । स्त्रीपुंभ्य इति कथम् । 'समासान्तो विधिरनित्य' इति भविष्यति । यद्वा द्वन्द्वात्परः समासान्तोऽसौ निपातितः । अत्र तु स्त्रीभिः सहिताः पुमांसः (स्त्रीपुमांसः)तेभ्य इति न द्वन्द्व इति न भविष्यति । केवलाभ्यः पुरु(षानुग्रहहीनाभ्यः)षाननुगृहीताभ्यः ।

ततः किमित्यतः सूत्रं व्याख्याति तत इति । यत एवं व्याप्तिर्यतश्च प्रकृता(तिः) केवला । शिवादीनां ततो जन्माङ्गीकारात् । ततः कारणात्ततः शक्तेरपत्योत्पत्त्यसंभवात् इत्यर्थः ।

शे० — स्त्रीपुंभ्यो वेति वाशब्दस्य विकल्पाद्यर्थत्वानुपपत्तेराह वाशब्द इति । कथं केवलेभ्यः पुरुषेभ्यः सृष्ट्यपेक्षया स्त्रीपुंभ्यः सृष्टेः प्राचुर्यमितीत्यतस्तद्दर्शयति केषाञ्चिदेवेति ॥ समासान्तो विधिरिति । तदनित्यत्वं च शोभना आपोऽस्मिन्नस्तीति स्वप् इत्यादौ 'ऋक्पूरब्धूःपथामानक्ष' इति समासान्ताकारस्याभावादेवावसीयते । सति हि समासान्तस्य नित्यत्वे तत्रापि समासान्ताकारप्रसङ्गेन स्वपमिति रूपप्रसङ्गादिति केचित् । तन्न । 'न पूजनादि'ति निषेधादेव तत्र समासान्ताकाराप्रसक्तेः । तस्य तदनित्यतायामज्ञापकत्वात् । वस्तुतो बह्वप् बह्वपी बह्वप्पीत्यादावपूजनार्थतया 'न पूजनादि'ति निषेधाप्रसङ्गात् । समासान्तविधेर्नित्यतायां तत्प्रसङ्गो दुर्वार एवेति तदनित्यत्वादेव तत्र समासान्ताभावो वाच्यः । तथा अश्वादिगणे राजन्शब्दस्य पाठोऽपि तत्र प्रमाणम् । स हि 'प्रतेरंश्वादयस्तत्पुरुष' इत्यन्तोदात्तत्वार्थो राजाहःसखिभ्य इति टचो नित्यत्वे किं तेनेति दिक् । अङ्गीकृत्य समासान्तविधेर्नित्यत्वं समाधानमाह यद्वेति । यत्तदोर्नित्यसंबन्धात्तत इति तच्छब्दबलाद्यत इत्यस्य लाभं तस्यावृत्तिं तत इत्यस्यावृत्तिं चाश्रित्य मूलं योजयति यत इत्यादिना । प्रकृतेः केवलत्वमेव कथं सिद्धमित्यत आह शिवादीनामिति । तज्जन्यानां तेषामन्योन्याश्रयप्रसङ्गात् तदनुग्राहकत्वासंभवादिति भावः ।

प० — तस्य केवलाभ्य इति । स्थूलान्नशाकपाकादिनिर्मा सृष्टेर्निर्माणदर्शनादिति भावः । पुंभ्य इत्युक्तपक्षाद्विशेषद्योतनायाह वा शब्द इति ॥ व्यभिचाराभावमिति । केवलाभ्य इत्यत्र वक्ष्यमाणव्याप्तावित्यग्रे व्यक्तम् । अचतुरादिसूत्रेणेति । 'अचतुरविचतुरसुचतुरस्त्रीपुंसे'त्यादिसूत्रेण समासान्ततया निपातनादिति भावः । एतत्समग्रसूत्रं वैशेषिकनयसुधापरिमळे लिखितम् । अनित्य इति । ऋक्पूरब्धूःपथामानक्षे । द्वित्रिभ्यां पाद्दन्मूर्धस्वित्यादिनिर्देशाज्ज्ञापकादिति भावः ।

श्री० — नन्वचतुरेति सूत्रेणेति । स्त्री पुंस् इति स्थिते 'अचतुरेति' सूत्रेण समासान्ताच्प्रत्यये स्त्रीपुंसेति भवति । न द्वन्द्व इति । तथा च तत्र सूत्रे स्त्री च पुमांश्चेति द्वन्द्वसमासं विवक्षित्वा

तत्परत: समासान्तोऽच्प्रत्ययो विहित: । प्रकृते स्त्रीपुम्भ्य इत्यत्र न द्वन्द्वसमासो विवक्षित: किन्तु स्त्रीभि: सहिता: पुमांस: स्त्रीपुमांसस्तेभ्य: स्त्रीपुंभ्य इति मध्यमपदलोपीसमासरूपतत्पुरुष एव विवक्षित इति हेतोर्न द्वन्द्वोऽभिप्रेत इति तस्मात्स्त्रीपुम्भ्य इति भविष्यतीत्यर्थ: ।

च० ॐ उत्पत्त्यसंभवात् ॐ ॥ **समासान्तो विधिरनित्य इति** । अत्र ज्ञापकं तु प्रतेरंश्वादय इति सूत्रेऽश्वादिगणे राजन्शब्दपाठ: । अन्यथा राजाहःसखिभ्य इति टचैवसिद्धे किं तेन । 'स्फिगपूतवीणांऽजोध्वकुक्षिसीरनामनाम चे'ति सूत्रे अपाचेत्यनुवृत्त्या पस्फिगमित्यादावुत्तरपदान्तोदात्तविधायकेऽध्वशब्दग्रहणम् । इलिङ्ग उपसर्गादध्वन इत्यवन्यत्ययस्य नित्यत्वे चित्वादेव सिद्धं स्यादित्यादि प्रपञ्चनमाकरतोऽवसेयमिति समास: ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीमत्सत्यप्रियतीर्थपूज्यपादतनूज-
सर्वतन्त्रस्वतन्त्रगालवपुरीश्रीनिवासार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां
चषकनाम्न्यां श्रीमन्न्यायसुधाया: समासतो व्याख्यायां
द्वितीयाध्यायस्य द्वितीय: पाद: ॥

सु० — **अयमत्र प्रयोग: । आदिकालीनापत्त्योत्पत्तिर्न केवलस्त्रीकृता(कर्तृका) अपत्योत्पत्तित्वात् । याऽपत्योत्पत्ति: सा न केवलस्त्रीकर्तृका । यथा संप्रतिपन्ना । सा हि कदाचित् पुरुषमात्रात्कचित्पुरुषानुगृहीताभ्य: स्त्रीभ्यो दृष्टा । न पुन: क्वापि केवलाभ्य: स्त्रीभ्यो दृष्टा । येनोक्तव्याप्तेर्व्यभिचार: स्यादिति । यद्वा शक्तिर्नापत्यप्रसवित्री केवलस्त्रीत्वात्संप्रतिपन्नकेवलस्त्रीवत् । अत्र केवलाभ्यो न हि स्त्रीभ्य इत्यन्वयकथनं दृष्टेत्यादि तद्व्यभिचारपरिहारार्थमिति ज्ञातव्यम् । यदि वा केवलस्त्रीत्वान्नापत्यप्रसवित्री चेच्छक्ति: स्यात्तदा केवलपु(लात्पु)रुषत्वात् पुरुषोत्तमोऽपि तथा न स्यादित्याक्षेपमपाकर्तुं प्रागेव दृष्टेत्याद्युक्तम् । असिद्धं च केवलत्वं तस्य लक्ष्मीपतेरित्याशयेन स्त्रीपुंभ्य इत्युक्तम् । केवलाभ्य इति तु व्याप्त्युपपादकम् । अथवा यत् 'निराकृतौ विशेषस्य भावादि'त्यनेनास्य दोषस्यासाधारणत्वमुक्तम् तदुपपादनाय दृष्टेत्याद्युपन्यास: ।**

शे० — **अपत्योत्पत्तित्वादिति** । न चास्तीकाद्युत्पत्तौ व्यभिचार: । तस्या: केवलस्त्रीकर्तृकत्वादिति वाच्यम् । देहतो मनसो वचनतो वा पुरुषाननुगृहीतस्त्रीकर्तृकत्वाभावस्यैव साध्यतया तस्याश्च जरत्कार्वाद्यनुगृहीतस्त्रीकर्तृकत्वेन विशिष्टसाध्यस्यापि तत्र सत्त्वेन व्यभिचाराप्रसङ्गात् ॥ **काचित्पुरुषमात्रादिति** । न च स्त्रीदर्शनानन्तरीयकतया द्रोणादिसृष्टेरपि केवलपुरुषकर्तृकत्वाभावात्तत्सृष्टे: केवल-

पुरुषकर्तृकत्वोक्तिरनुपपन्नेति वाच्यम् । तत्र स्त्रीकृतदेहादिरूपव्यापाराभावमात्रेण केवलपुरुषकर्तृकत्व-स्वीकारादित्याशयात् । आदिकालीनापत्योत्पत्तेः केवलस्त्रीकर्तृकत्वाभावसाधने पर्यवसानगत्या शक्त्यप-त्योत्पत्तिकर्तृत्वाभावसिद्धावपि साक्षात्तदसिद्धेस्तत्सिद्ध्यर्थं प्रकारान्तरेण प्रयोगमाह **यद्वेति** । अत्र पक्षे दृष्टेत्यादेर्व्याप्त्युपदर्शकत्वस्य केवलाभ्य इत्यस्य व्यभिचाराभावोपपादकत्वस्य चासंभवात्प्रकारान्तरेण तदुप-योगमाह **अत्रेति** । एवमनुमानापेक्षितव्याप्त्याद्युपपादकतया दृष्टेत्यादिग्रन्थं व्याख्याय सूत्रोक्तानुमानस्य परप्रसञ्जितप्रतितर्कपराहतिरूपदूषणपरिहारकतयाऽपि तद्योजयति **यदि वेति** ॥ **आक्षेपमपाकर्तुमिति** तर्कमूलभूतव्याप्तिवैकल्योपपादनेनेति शेषः । तर्हि दृष्टेत्यादिग्रन्थस्य उत्पत्त्यसंभवादित्यनुमानग्रन्थानन्तर्यं स्यात् । तदैवोक्ताक्षेपप्रसरात्तत्कथं तस्य पूर्वभाव इत्यत उक्तं **प्रागेवेति** । उपोद्घातसङ्गत्येत्यर्थः । व्याप्तिवैकल्येन तर्कदूषणस्य पूर्वेणैव सिद्धेः स्त्रीपुंभ्यो वेति ग्रन्थानर्थक्यमित्याशङ्क्य व्याप्तिवैकल्येन दूषि-तस्य तर्कस्यापादकासिद्ध्याऽपि दूषणार्थत्वान्न तदिति भावेन तदुपपादकतया तद्योजयति **असिद्धं चेति** । तथाऽपि केवलाभ्य इत्यस्यानर्थक्यमेवेत्यतः केवलस्त्रीत्वस्य हेतोरुक्तसाध्येन व्याप्त्युपपादनार्थत्वान्न तदि-त्याह **केवलाभ्य इतीति** ॥ **अस्य दोषस्येति** । उत्पत्त्यसंभवस्येत्यर्थः । **असाधारणत्वं** शाक्तपक्षासाधारणत्वम् ।

**स०— अपत्योत्पत्तिरादिति** । न चास्तिकोत्पत्तौ व्यभिचारः । तस्याः केवलं स्त्रीकर्तृक-त्वादिति वाच्यम् । देहतो मनसो वचनतो वा पुरुषाननुगृहीतस्त्रीकर्तृकत्वाभावस्यैव साध्यतया तस्य च तत्रापि सत्त्वेन व्यभिचाराभावात् । न चैवं द्रोणादीनामपि सृष्टिः कथं केवलपुरुषकर्तृका । तत्रापि स्त्रीदर्शनमान्तरीयकत्वादिति वाच्यम् । तावताऽपि स्त्रीकृतदेहादिसंयोगरूपव्यापाराभावेनैव केवलपुरुष-कर्तृकत्वसंभवात् । **प्रागेवेति** । उपोद्घातादिसंगत्येति भावः ।

**श्री०— तद्व्यभिचारेति** । यत्र केवलस्त्रीत्वं तत्रापत्यप्रसवितृत्वाभाव इत्यन्वयव्याप्तौ व्यभि-चारपरिहारार्थमित्यर्थः । अत्र केवलस्त्र्यपि अपत्यप्रसवित्री क्वचित्स्यादिति व्यभिचारशङ्कायां सा न संभवतीत्युच्यते । 'दृष्टा पुम्भ्यः सदा सृष्टिः स्त्रीपुम्भ्यो वा विशेषतः' । दृष्टा केवलस्त्रियः सकाशा-दुत्पत्तिर्न दृष्टा, येन व्यभिचारः स्यादतो व्यभिचाराभावादुक्तान्वयव्याप्तिः समीचीनेत्येवं वक्तुं दृष्टेत्याद्युक्तमित्यर्थः ॥ **अपाकर्तुमिति** । ईश्वरो न जगत्प्रसविता केवलपुरुषत्वादिति सत्प्रतिपक्षानुमानं व्यभिचाराख्यदोषेण निराकर्तुमित्यर्थः ॥ **प्रागिति** । 'केवलाभ्य' इत्येतत्प्रागित्यर्थः । तर्हि 'स्त्रीपुम्भ्यो वा विशेषत' इत्येतद्व्यर्थमित्यतः सत्प्रतिपक्षानुमानेऽसिद्धिरूपं दोषान्तरं वक्तुं सार्थकमित्याह **असिद्धं चेति** । नन्वस्यां योजनायां 'केवलाभ्य' इत्येतद्व्यर्थमित्यत आह **केवलाभ्य इति** । अत्र शक्तिर्नापत्य-

प्रसवित्री । केवलस्त्रीत्वात्संप्रतिपन्नवदिति पूर्ववदनुमानं विवक्षितम् । तत्रान्वयव्याप्त्युपपादकमिदं वाक्यमुक्तरीत्येति भावः । **अस्य दोषस्य** केवलस्त्रीसकाशादेवोत्पत्त्यभावरूपस्य दोषस्य ॥ **उपपादनायेति** । दृष्टा पुम्भ्यः सदा सृष्टिः स्त्रीपुम्भ्यो वा विशेषतः दृष्टा केवलाभ्यः स्त्रीभ्यो न दृष्टा । अतस्तेन महावामेन केवलस्त्रीसकाशादेवोत्पत्तिः स्वीकृताऽत उत्पत्त्यसंभवादिति दोषस्तस्यैवासाधारण इत्यसाधारण्योपपादनायेत्यर्थः ।

**सु०— इदानीमधिकाशङ्कया मतान्तरमुत्थापयति** वामैरिति ।

वामैरन्यदुदीर्यते ।

**मध्यवामैरित्यर्थः । अन्यत् महावामसिद्धान्तात् । किं तदित्यत आह** शिवेति ।

शिवोपसर्जना शक्तिः ससर्जेदं समन्ततः ।

इति

**शिव उपसर्जनं यस्याः सा** शिवोपसर्जना । इदमित्यस्यैव व्याख्यानं समन्ततो **देशे काले च वर्तमानं कार्यमिति । एतदुक्तं भवति । नोत्पत्त्यसंभवोऽस्मन्मतेऽस्ति । अस्माभिः शिवसहितायाः शक्तेर्विश्वप्रस(भ)वस्याङ्गीकृतत्वात् । न चैवं (त)द्वयोः सर्वोत्कृष्टत्वं विरुद्धमापद्यते । शिवस्य शक्तिं प्रत्युपसर्जनत्वाङ्गीकारादिति ॥ एतत्प्रतिषेधति** तच्चेति ।

तच्चोपपन्नं न

**अत्राप्युत्पत्त्यसंभवस्यापरिहारादिति** भावः ।

शे०— **व्याख्यानमिति** । ततश्च न समन्तत इत्यस्य वैयर्थ्यमिति भावः ।

**सु०— तत्कथमित्यत्र सूत्रम् ॐ न च कर्तुः करणम् ॐ इति । तद्व्याचष्टे** शिवस्येति ।

**अनु० — ॐ न च कर्तुः करणम् ॐ ॥**

शिवस्याकरणत्वतः ।

अदेहत्वात्

**अकरणत्वत इत्यस्यैव स्वपदस्य वर्णनमदेहत्वादिति । यद्वाऽकरणत्वतो ज्ञानादिकरणाभावादित्यर्थः । तदेव कथमित्यतोऽकरणत्वतो निरिन्द्रियत्वादित्युक्तम् । तदपि कुत इत्यत उक्तमदेहत्वादिति । एतदुक्तं भवति । देहवता हि शिवेनापत्योत्पत्तौ शक्तेः साचिव्यमाचरणीयम् । न विदेहेन । तस्य प्र(वि)लीनवदिन्द्रियादिविज्ञानादिविकलस्य तदनुपपत्तेः । न च**

**शिवदेहोत्पत्तौ केवलायाः शक्तेः शक्तिरस्ति । प्रागुक्तदोषात् । अन्यथाऽत्रापि तथोपपत्तौ शिवाङ्गीकारवैयर्थ्यापत्तेश्च । न च शिवसहितायाः । विदेहस्य साहाय्यकरणानुपपत्तेः । अतः अङ्गीकृतस्यापि शिवस्याजागलस्तनायितत्वेनात्राप्युत्पत्त्यसंभव एवेति ।**

**शे० — ॐ न च कर्तुः करणम् ॐ ॥** अकरणत्वत इत्येतावतैव वाऽदेहत्वत इत्येतावतैव वा विवक्षितसिद्धेरन्यतरवैयर्थ्यमित्यत आह **अकरणत्वत इत्यस्यैवेति** । अत्र पक्षे व्याख्यानव्याख्येयभावाश्रयणं भवतीत्यपरितोषात्पक्षान्तरमाह **यद्वेति ॥ ज्ञानदिति** । ज्ञानादिरूपकारणशून्यत्वादित्यर्थः ॥ **तस्येति** । विदेहस्येत्यर्थः । इन्द्रियविकलस्य तत एव विज्ञानादिविकलस्येति योज्यम् । **तदनुपपत्तेः** साचिव्याचरणानुपपत्तेः । अस्तु तर्हि सदेहस्यैव शिवस्य शक्तिसहकारित्वमित्यतो भवेदेवं यदि तस्य सदेहत्वमुपपद्येत । न च तदुपपद्यत इत्यभिप्रेत्य तत्कुत इत्यतः शिवदेहोत्पादकत्वं किं केवलशक्तेरभिमतं शिवसहिताया एवेति विकल्पद्वयं मनसि निधायाद्यं निराचष्टे **न चेति ॥ प्रागुक्तेति ॥ उत्पत्त्यसम्भवादिति** । पूर्वसूत्रोक्तदोषादित्यर्थः ॥ **अन्यत्रेति** । शिवदेह इवान्यत्रापि कार्ये केवलशक्तेरेव कर्तृत्वोपपत्तेरित्यर्थः ॥ **शिवाङ्गीकारेति** । शिवस्य शक्तिं प्रति उपसर्जनत्वाङ्गीकारेत्यर्थः । द्वितीयमाशङ्क्य निरस्यति **न चेति** । शक्तेः शक्तिरित्यनुवर्तते ॥ **विदेहस्येति** । उपपत्तौ वा शिवदेह इवेतत्रापि विदेहस्यापि साहाय्यकरणोपपत्त्या तद्देहाङ्गीकारवैयर्थ्यापत्तेरिति भावः ।

**स० — अत उक्तमदेहत्वादितीति** । अदेहत्वस्य अकरणत्वविवरणरूपत्वस्य प्रागेवोक्तत्वेन ज्ञातुं शक्यत्वादनुक्तिरिति बोध्यम् ।

**प० — ॐ न च कर्तुः ॥ प्रागुक्तदोषादिति** । केवलाभ्यः स्त्रीभ्यः शरीरोत्पत्त्यसंभवादित्युक्तदोषादित्यर्थः ।

**श्री० — ॐ न च कर्तुः करणम् ॐ ॥ ज्ञानादिकरणाभावादिति** । मया शक्तेः साचिव्यमाचरणीयमित्येवं ज्ञानेच्छादिजनकसामग्र्यभावादित्यर्थः ॥ **तदनुपपत्तेरिति** । साचिव्याचरणानुपपत्तेरित्यर्थः ॥ **प्रागुक्तदोषादिति** । 'केवलाभ्यो न हि स्त्रीभ्य' इति प्रागुक्तेत्यर्थः । ननु शिवदेहोत्पादने केवलाया एव शक्तेः सामर्थ्यमङ्गीक्रियत इत्युत्पत्त्यसंभवरूपप्रागुक्तदोषो नेत्यत आह **अन्यथाऽत्रापि तथेति** । शिवदेहेतरकार्योत्पादनेऽपि **तथा** केवलाया एव शक्तेः सामर्थ्योपपत्तौ । **सहितायाः शक्तेः** । शिवदेहोत्पादने सामर्थ्यमस्तीत्यनुवर्तते ।

सु० — मतान्तरमुत्थापयति अपि हीति ।

अनु० —        अपि ह्यन्ये ब्रूयुः सर्वज्ञमीश्वरम् ।

अणुवामा

अन्येऽपीत्यन्वयः । तानेव विशेषनाम्नाऽऽह अणुवामा इति । अस्य मतस्य लोके प्रचुरतां सूचयितुं हिशब्दः । सर्वज्ञमित्युपलक्षणम् । जगत्सृष्ट्याद्युपयुक्तसकलकरणोपेतम् । इदमुक्तं भवति । शिवसहिता शक्तिर्जगज्जननीत्यभ्युपगच्छतो मम नोक्तदोषः । शिवस्य स्वाभाविकसार्वज्ञादिमत्त्वेन देहेन्द्रियानपेक्षणात् । लीलाविग्रहग्रहणेन शक्तिसाहाय्यकरणस्या-(संभोगस्या)प्युपपत्तेरिति । तदिदं दूषयति न तदिति ।

न तद्युक्तम्

शे० — ननु केवलाया: शिवसहिताया वा शक्तेः शिवदेहोत्पादकताया उक्तरीत्याऽनुपपत्त्या सदेहत्वासम्भवेन सदेहस्य शिवस्य सहकारित्वायोगाद्विदेहस्य च तस्येन्द्रियादिविकलत्वेन कर्तृत्वो-पयोगिज्ञानाद्यसम्भवेन शक्तिसाहाय्याचरणानुपपत्तिरेवेति कथमनेन पूर्वं प्रसञ्जितदोषपरिहार इत्यत आह इदमुक्तं भवतीति ॥ नोक्तदोष इति । उत्पत्त्यसंभवादित्युक्तदोषो नेत्यर्थः । पुरुषाननुगृहीतस्त्रीत्वस्य हेतोरसिद्धत्वादिति भावः ॥ अनपेक्षत्वादिति । ज्ञानादिजन्मन्येव शरीरादेरुपयोगदर्शनेन जन्यज्ञान-स्यैव देहेन्द्रियाद्यपेक्षत्वसिद्ध्या नित्यज्ञानत्वादीश्वरस्य शरीराद्यभावेऽपि तदुपपत्तेरिति भावः । तथाऽप्य-शरीरस्य शक्तिसंभोगानुपपत्त्या न शक्तिसाहाय्याचरणमित्यत आह लीलेति । इतीत्यस्येतीदमिति पूर्वेण संबन्धः ।

श्री० — स्वाभाविकेति अजन्येत्यर्थः ।

सु० — कुत इत्यत्र सूत्रम् ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ इति । तस्यार्थः । शिवस्य विज्ञानादिभावे अङ्गीकृते तस्य मतस्य प्रतिषेधो न क्रियत इति । नन्विदं मतमनुमतं न वा । नाद्यः । उक्तार्थविरुद्धत्वात् । न तद्युक्तमित्यस्य चायोगात् । द्वितीये कथं तद-प्रतिषेध इत्युक्तम् । कथं च न तद्युक्तमित्यत्रास्य हेतुत्वमित्यतस्तदप्रतिषेध इति निवेशयितुम-स्सूत्रं तावद्धेतुमाह ईशेति ।

अनु० — ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥

ईशवादप्रवेशनात् ।

शैवमतप्रवेशापत्तेरित्यर्थः ।

शे० — ॐ **विज्ञानादिभावे वा तदप्रतिषेधः** ॐ ॥ **उत्सूत्रितमिति** । यद्यपीश्वरवादान्तर्भाव इति भाष्यानुरोधादीशवादप्रवेशनादिति ग्रन्थस्य तदप्रतिषेध इति सूत्रखण्डार्थत्वस्यैव संभवान्नास्योत्सूत्रितत्वमस्ति । तथाऽपीति नैवात्र दूष्यत' इत्युत्तरग्रन्थस्य यथा तदप्रतिषेध इत्येतदर्थत्वं स्पष्टप्रतिभासं, न तथाऽत्रेत्यभिप्रेत्य वा तृतीयान्ततच्छब्दस्य कृतशब्दसापेक्षत्वेनासमर्थत्वादप्रतिषेधशब्देन समासानुपपत्तिरित्यभिप्रायेण वा इदमुत्सूत्रितत्वाभिधानम् । भाष्यटीकायां त्वीश्वरवादान्तर्भाव इति भाष्यानुरोधादसमर्थसमासमप्यङ्गीकृत्य तथा व्याख्यानमिति द्रष्टव्यम् । वस्तुतः शिवमतप्रवेशस्यैतन्मतेऽभावादाह **शैवेति** ।

स० — **उत्सूत्रमिति** । 'इति नैवात्र दूष्यत' इत्यस्यैव तदप्रतिषेध इत्येदर्थत्वस्य स्फुटप्रतिभासनात्, तृतीयान्ततच्छब्दस्य कृतशब्दसापेक्षस्य असमर्थतया अप्रतिषेधशब्देन समासानुपपत्तेश्चैतदुक्तम् । टीकायां तु 'ईश्वरवादान्तर्भाव' इत्येतद्भाष्यानुसारेण असमर्थसमासमप्यङ्गीकृत्य तथा व्याख्यानमिति बोध्यम् ।

प० — ॐ **विज्ञानादिभावे वा** ॥ **इति निवेशयितुमिति** । इत्येतत्सङ्गमयितुमित्यर्थः ।

सु० — **ननु शैवाः सार्वज्ञादिगुणोपेतं शिवमेकमेवाभ्युपयन्ति । शाक्तास्तु शिवं शक्तिं चेत्यस्ति महान्सिद्धान्तभेदः । तत्कथं शाक्तानां शैवमतानुप्रवेश इत्यत आपादितदोषोऽयमित्याशयवानाह** सार्वज्ञादीति ।

**अनु०** — सार्वज्ञादिगुणैर्युक्तं गुरुकल्पनया द्वयम ॥
न युज्यते

**सत्यं शाक्तैः सार्वज्ञादिगुणैर्युक्तं शिवशक्त्याख्यं द्वयमभ्युपगतमिति । तत्तु न युज्यते । कल्पनागौरवात् । तथा हि । न तावत्सार्वज्ञाद्युपेतं प्रत्यक्षेण सिद्धम् । परचित्तवृत्तीनां परं प्रत्यतीन्द्रियत्वात् । नाप्यागमेन । शाक्तागमस्य प्रामाण्यसन्देहात् । अपौरुषेयागमस्य परेण प्रामाण्यानादरणात् । आदरणे वा तत एव स्वमतहानेः । ततः प्रपञ्चरचनानुपपत्त्यैव तथाविधं वस्तु कल्पनीयम् । एकेनैव सार्वज्ञादिमता सर्वं निर्वहत्येव । तथा च वृथा तथाभूत(वस्तु)द्वयकल्पने कल्पनागौरवमेव । अत एकमेव तादृशं वस्त्वङ्गीकार्यमिति ।**

**ततः किमित्यत आह** तत इति ।

ततस्त्वीश एक एव प्रयोजकः ॥

उक्तहेतोरेकस्यैव सार्वज्ञादिमतोऽङ्गीकार्यत्वे केवलशक्तेरङ्गीकृतावुत्पत्त्यसंभवप्रसङ्गादीश एव सार्वज्ञाद्युपेतः प्रपञ्चरचनायाः प्रयोजकः शक्तिरङ्गीकर्तव्यः स्यात् । एवञ्च कथं न शैवमतप्रवेशः शाक्तमतस्येति ।

शे० — आपादितदोषोऽयमिति । शैवमतप्रवेश उपपाद्यो दोष इत्यर्थः ॥ सन्देहादिति । तत्प्रामाण्यनिश्चयस्य शक्तिसार्वज्ञसिद्ध्यधीनतया तदसिद्धिदशायामसिद्धेरिति भावः ॥ हानेरिति । तत्र शक्त्यादेरसार्वज्ञादिप्रतिपादनादिति भावः । तथाविधं सार्वज्ञादिगुणयुक्तं शिवशक्त्याख्यं वस्त्वित्यर्थः ॥ उक्तहेतोरिति । तथाविधवस्तुद्वयकल्पने कल्पनागौरवरूपोक्तहेतोरित्यर्थः ।

श्री० — उपेतं वस्तु । तत एव वेदादेव । वेदे विष्णोरेव सार्वज्ञ्यादिप्रतिपादनेन शिवशक्त्योः सार्वज्ञ्यमिति मतं विरुद्धं स्यादिति भावः । तथाविधं सर्वप्रपञ्चविषयकज्ञानोपेतम् ।

सु० — किमतो यद्येवम् । शाक्तस्यापसिद्धान्तेन पराजयः स्यादिति चेत्सत्यम् । तावताऽपि भगवत्सिद्धान्तानवक्लृप्तिरेव । शैवमतस्यापि भवत्सिद्धान्तविरोधित्वेन निराकर्तव्यत्वादित्यतस्तदप्रतिषेध इति सूत्रांशं सोपपत्तिकं निवेशयति उक्तेति ।

अनु० — उक्तदोषश्च तत्पक्ष इति नैवात्र दूष्यते ॥

यतः शैवपक्षो निरन्तरातीताधिकरण एवोक्तदोषोऽतोऽत्र न पुनर्दूष्यते पुनरुक्तिदोषभयादिति ।

शे० — शङ्कते किमत इति । शाक्तमतस्य शैवमतप्रवेशश्चेत्को दोष इत्यर्थः । तस्य स्वरूपेणादोषत्वादिति भावः । उत्तरमाशङ्कते शाक्तस्येति । उक्तदोष इति बहुव्रीहिः ।

प० — भवत्सिद्धान्तानवक्लृप्तिरिति । सूत्रकृत्सिद्धान्तानवक्लृप्तिरित्यर्थः ।

श्री० — एवं यदि शैवमतप्रवेशः । सिद्धान्त्युत्तरमाशङ्कते शाक्तस्येति ।

सु० — एवं प्रत्येकमपाकृतानि त्रीण्यपि मतानि साधारणदूषणेन निराकर्तुं सूत्रम् ॥ ॐ विप्रतिषेधाच्च ॐ इति । तद्व्याचष्टे श्रुतीति ।

अनु० — ॐ विप्रतिषेधाच्च ॐ ॥

श्रुतिस्मृतीतिहासानां सामस्त्येन विरोधतः ॥
सतां जुगुप्सितत्वाच्च नाङ्गीकार्यं हि तन्मतम् ।

सतां मध्ये जुगुप्सितत्वात् गोप्तुमिष्टत्वात् । यद्वा कर्तृकर्मणोः कृतीति कर्तरि षष्ठी । सद्भिर्निन्दितत्वादित्यर्थः । हिशब्देन श्रुत्यादीनां प्रसिद्धतां द्योतयति ।

शे०— ॐ **विप्रतिषेधाच्च** ॐ ॥ ननु मतां जुगुप्सितत्वादित्यत्र सतामिति कर्तरि कर्मणि वा षष्ठी संभवति । शाक्तकर्तृकतन्मतकर्मकगोपनं प्रति सतां कर्तृत्वकर्मत्वयोरसंभवात्, प्रत्युत शाक्तानां सत्स्वेव स्वमतस्य गोप्तुमिष्टत्वेन सतामधिकरणत्वात्, सत्स्विति सप्तम्येव युक्तेत्यतोऽत्र भाष्ये मध्ये शब्दाध्याहारस्याभिमतत्वात्तस्य च षष्ठ्यन्तेन सतामित्यनेन षष्ठीसमासे प्राप्ते तदपवादकतया पारे मध्ये षष्ठ्या वेत्यव्ययीभावसमासस्य वाशब्दात्पक्षे षष्ठीसमासस्य महाविभाषया तदुभयाभावपक्षे वाक्यविकल्पस्यानुशासनाद्वाक्यपक्षे मध्ये गङ्गाया इतिवत्सतां मध्य इति षष्ठ्युपपत्तिरित्याशयेनाह **सतां मध्य इति** । गुपेः सन्नन्तान्मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्त इत्यभिप्रेत्याह **गोप्तुमिष्टत्वादिति** । अस्मिन्पक्षे मध्य इत्यध्याहाराश्रयणं गुप्तिज्किद्भ्यः सन्निति निन्दार्थकाद्गुपेः स्वार्थे सन्विधानान्निन्दितत्वार्थतया प्रसिद्धस्य जुगुप्सितशब्दस्य गोप्तुमिष्टत्वार्थकत्वकल्पनं च भवतीत्यपरितोषान्निन्दितत्वार्थत्वमेव जुगुप्सितशब्दस्याङ्गीकृत्य तर्हि निन्द्यकर्तृत्वात्सतां कर्तृकरणयोस्तृतीयेति कर्तरि तृतीयविधानात्सद्भिरिति तृतीयया भवितव्यम् । सतामिति षष्ठी तु कथमित्यतः कर्तृकरणयोस्तृतीयेति प्राप्ततृतीयां बाधित्वा कर्तृकर्मणोः कृतीति कृद्योगे कर्तरि षष्ठीविधानाद्युक्ता सतामिति षष्ठीत्याशयेनाह **यद्वेति** । अनेन सन्नन्ताद्गुपेर्निष्ठेति भूते क्तप्रत्यय इत्युक्तं भवति । न च कर्तृकरणयोस्तृतीयेति प्राप्तां तृतीयां बाधित्वा कर्तृकर्मणोः कृतीति प्राप्तायाः षष्ठ्या न लोकाव्ययनिष्ठेति पुनः प्रतिषेधाद्देवदत्तेन भुक्तमितिवत्सद्भिर्जुगुप्सितत्वादिति तृतीयया भाव्यं सतामिति षष्ठी तु कथमिति वाच्यम् । तृन्नकाभ्यामिति वक्तव्ये तृचः सानुबन्धकस्य ग्रहणाज्ज्ञापकान्न लोकेति निषेधस्य नित्यताया आकर एव स्थितत्वात् । टीकाकारैरपि तत्र तत्र तदनित्यताया आश्रितत्वाच्चात्र अप्रवृत्तिसंभवेन षष्ठ्या उपपन्नत्वादित्याशयात् ।

स०— सतामिति 'कर्मणि षष्ठीति भ्रान्तिनिरसनायाह **सतां मध्य इति** । अस्मिन्पक्षे जुगुप्सितशब्दास्वारस्यात् गार्हितत्वार्थतया प्रसिद्धस्य तस्य गोपनीयत्वार्थतया व्याख्यानादित्यरुचिं मनसि निधाय पक्षान्तरमाह **यद्वेति** । न च कर्तरि षष्ठ्या 'न लोके'ति निषेधात् कथमस्य सामञ्जस्यम् । नञा निर्दिष्टमनित्यमित्यत्र तात्पर्यादित्याहुः ।

प०— ॐ **विप्रतिषेधाच्च** ॐ ॥ **गोप्तुमिष्टत्वादिति** । गुपू संवरणे । अप्रकाश्यत्वादित्यर्थः ॥ **कर्तृकर्मणोः कृतीति** । निष्ठाप्रत्ययस्य 'कृदतिङि'ति कृत्वात्तद्योगे षष्ठी । न च 'न लोकाव्ययनिष्ठे'ति निष्ठान्तयोगे षष्ठीनिषेधेन भाव्यमिति शङ्क्यम् । 'तेनानिष्टं कथं भवेदि'त्यादौ सुधोक्तदिशा नञा निर्दिष्टमनित्यमिति निषेधो न भवतीति भावः ।

या० — ॐ न च कर्तुः करणम् || ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ || ॐ विप्रतिषेधाच्च ॐ || यद्वा कर्तृकर्मणोरिति । ननु जुगुप्सितशब्दस्य निष्ठान्तत्वात्तद्योगे 'न लोकाव्ययनिष्ठे'ति षष्ठीप्रतिषेधात्कथमेतत् । सत्यम् । 'क्तस्य च वर्तमान' इति प्रतिप्रसवाददोषः । ननु तर्हि 'क्तस्य च वर्तमान' इत्यनेनैवात्र षष्ठीति वक्तव्यम् । मैवम् । तस्य प्रतिषेधप्रतिषेधन एव तात्पर्येण षष्ठीविधायकत्वाभावादित्याशयात् ||

सु० — केचिदिमां चतुःसूत्रीं भागवतमतनिराकरणपरतया व्याचक्षते । तथा हि । पाञ्चरात्रिका वासुदेवात्सङ्कर्षणो नाम जीवो जायते सङ्कर्षणात्प्रद्युम्नसंज्ञकं मनो जायते । प्रद्युम्नादनिरुद्धसंज्ञकोऽहङ्कारो जायत इति प्रक्रियामाहुः || तत्र सूत्रम् उत्पत्त्यसंभवादिति । वासुदेवात्सङ्कर्षणो नाम जीवो जायत इति तावदयुक्तम् । जीवस्योत्पत्त्यसंभवात् । उत्पत्तिमतो हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन् । ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात् । न जायते (न) म्रियत इत्यादिश्रुतिस्मृतिविरोधाच्च || न च कर्तुः करणम् । सङ्कर्षणसंज्ञकाज्जीवात्प्रद्युम्नसंज्ञकस्य मनसो जन्मापि पञ्चरात्रोक्तं नोपपद्यते । न हि लोके कर्तुर्देवदत्तादेः (करणं) परश्वधाद्युत्पद्यमानं करणं दृश्यते । यदा चोत्पद्यते तदा कर्मैव न करणम् । जीवस्य कर्ता मनश्च करणम् । ततस्तन्न ततो जनिमद्भवितुमर्हति । एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि चेतीश्वरादेव मनोजननश्रवणाच्च । एतेन प्रद्युम्नादनिरुद्धसंज्ञकोऽहङ्कारो जायत इत्यपि प्रत्युक्तम् । अथापि स्यात् । नैवैते सङ्कर्षणादयो जीवादिभावेनाभिप्रेयन्ते । किं तर्हीश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वरैर्धर्मैरन्विता अभ्युपगम्यन्ते । तस्मान्नायं दोष इति || अत्र परिहारं पठति विज्ञानादिभावे वा तदप्रतिषेधः । परमात्मनो वासुदेवस्येव सङ्कर्षणादीनामपि विज्ञानादिषाड्गुण्यसद्भावे तत एव चेश्वरत्वेऽभ्युपगम्यमानेऽपि तस्योत्पत्त्यसंभवदोषस्याप्रतिषेधः । प्रकारान्तरेण प्राप्नोत्येवायमुत्पत्त्यसंभवदोषः । तथा हि । न तावदेते चत्वारः परस्परं भिन्नाः । अनेकेश्वरकल्पनायां गौरवादिदोषापत्तेः । अभेदे तु कथं स्वत एव स्वस्योत्पत्तिः संभवेत् । निरतिशयत्वात् । न चैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन् । तद्व्यूहानामनन्तत्वाभ्युपगमात् || विप्रतिषेधाच्च । परस्परविरोधश्च पञ्चरात्रे भवति । ज्ञानैश्वर्यबलवीर्यशक्तितेजांसि भगवतो गुणा इति क्वचिदुच्यते । आत्मान एवैते भग(वतो)वन्तो वासुदे(वा इ)वस्येति क्वचिद्भगवत्स्वरूपत्वमित्यादि । वेदप्रतिषेधश्चात्र भवति । भगवाञ्छाण्डिल्यः षडङ्गं वेदमधीत्य तस्मिन्महत्याम्नाये निष्ठामनधिगच्छन्न्यः सर्वपरो धर्मो यस्मान्न भूयोऽस्ति कथं तं विद्यामित्येवं बलवद्विवेकमातिष्ठमानो बभूव । तत्र भगवते शाण्डिल्याय भगवता सङ्कर्षणेन

व्यक्तेन शब्दवच्छास्त्रं प्रोक्तमिति वेदनिन्दादर्शनात् । तथा चान्यत्र । 'अधीता भगवन्वेदाः साङ्गोपाङ्गाः सविस्तराः । श्रुतानि च मयाऽङ्गानि वाको वाक्ययुतानि च । न चैतेषु समस्तेषु संशयेन विना क्वचित् । श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यती'ति । तस्मादयुक्तं पञ्चरात्रशास्त्रमिति ।

तामिमामपव्याख्यां प्रत्याख्याति पञ्चरात्रेति ।

**अनु०**— पञ्चरात्रनिषेधार्थमेतान्याचक्षते यदि ॥

सूत्राण्यतिविरुद्धं तत्

आचक्षते व्याचक्षते । यदित्यस्यार्थे यदिशब्दः । तद्व्याख्यानमति(अति)शयेन विरुद्धं स्वव्याहतं प्रमाणान्तरप्रतिहतं चेत्यर्थः । तत्कथमित्यतः स्वव्याहतिं तावदुपपादयति यत इति ।

यत आह स भारते ॥

यस्मात्सूत्रकार एव भारते पञ्चरात्रस्य प्रामाण्यमाह । तस्मादत्र तन्निराकरणे सूत्रकारस्य स्ववचनव्याहतिः स्यादित्यर्थः ।

**शे०** — **केचिदिति** । मायावादिन इत्यर्थः । उत्पत्त्यसंभवमेव विवृणोति **उत्पत्तिमतो हीति** । जन्यो भावो विनाशीति व्याप्तेरिति भावः । अस्त्वनित्यत्वमपि तस्येत्यत आह **ततश्चेति** । मोक्षग्रहणं स्वर्गनरकयोरुपलक्षणम् । अनित्यत्वे जीवस्य परलोकिनोऽभावात्परलोकभावः स्यात् । ततश्च स्वर्गनरकापवर्गाभावापत्तेर्नास्तिकमतप्रवेश इति भावः । उत्पत्त्यादिमत्त्वे दोषान्तरमाह **न जायत इत्यादि** । ननु च देवदत्तः परशुं कृत्वा तेन पलाशं छिनत्ति । प्रयत्नेनेन्द्रियार्थात्ममनःसन्निकर्षलक्षणज्ञानकरणमुत्पाद्यात्मा अर्थं विजानात्येवेति लोके कर्तुः सकाशात्करणस्योत्पत्तिर्दृष्टैवेति कथं तददर्शनमित्यत आह **यदा चेति** । माऽस्तु करणस्य कर्तुः सकाशादुत्पत्तिर्मनसस्तु जीवादुत्पत्तिः किन्न स्यादित्यतो मनसोऽपि करणत्वाज्जीवस्य च कर्तृत्वान्न तस्य तस्मादुत्पत्तिरित्याह **जीवश्चेति** ॥ **एतेनेति** । मनोबुद्धिरहङ्कारश्चित्तं चेतेनेति पञ्चरूपस्यापि मनसो भगवतो जन्मप्रतिपादकोदाहृतप्रमाणेन मनोवृत्तिविशेषस्याहङ्कारस्यापि भगवत एव जन्मनः सिद्धत्वाज्जीवरूपकर्तृजन्यप्रद्युम्नात्तदुत्पत्तेरुक्तश्रुतिविरोधेनैवेत्यर्थः ॥ **ज्ञानैश्वर्येति** । **ज्ञानं चैश्वर्यं चेति** तयोः शक्तिरान्तरं सामर्थ्यं, **बलं** शरीरसामर्थ्यं, वीर्यं शौर्यं, **तेजः** प्रागल्भ्यमिति विवेकः । आद्येऽपि किं ते व्याहतकामाः स्युरुत नेति वाच्यम् । तत्राद्ये कार्यासिद्धिप्रसङ्ग इत्यभिप्रेत्य द्वितीये एकेनैवेश्वरेण तत्कार्यसिद्धेरितरानर्थक्यं भगवानेवैको वासुदेवः परमार्थतत्त्वमिति सिद्धान्तहानिश्चेत्याह **अनेकेश्वरेति** ॥ **निरतिशयत्वादिति** । पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिषु ज्ञानैश्वर्यादितारतम्यकृतविशेषस्यानङ्गीकारेण निरतिशयत्वादित्यर्थः । मृद्घटयोरति-

शयवतोरेव कार्यकारणभावदर्शनेनातिशयाभावे तदभ्युपगमस्य दृष्टवैलोम्यापादकत्वेनायोगादिति भावः । न चैते भगवद्व्यूहा इत्यत्र व्यूहशब्दो व्यूहिपर इति ध्येयम् ॥ **अभ्युपगमादिति ।** ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्य भगवद्व्यूहत्वाङ्गीकारादित्यर्थः ॥ **निष्ठामिति ।** इदमित्थमेवेति निश्चयमित्यर्थः ॥ **शब्दवच्छास्त्रमिति ।** असन्दिग्धार्थकैरेव शब्दैर्युक्तत्वात्पञ्चरात्रं शब्दवच्छास्त्रमित्यर्थः । यद्वा श्लोकात्मकं शास्त्रमित्यर्थः । **तथा चान्यत्रेति ।** परमसंहितायामित्यर्थः ।

मूलस्य यद्युपचन्धात्तर्कपरत्वेन योजनाया विपर्ययपर्यवसाने बाधप्रसङ्गेन व्याचक्षत इत्यत्र व्याचक्षीरन्निति लकारव्यत्ययस्य, अतिविरोधः स्यादित्येतावतैव पूर्तेरतिविरुद्धमित्यत्र कर्मणि निष्ठाप्रत्ययवैयर्थ्यस्य, तदित्यस्य तर्हीत्यर्थत्वस्य अतिविरुद्धमित्यनन्तरं स्यादित्यध्याहारस्य च कल्पनाप्रसङ्गानुपपत्तेस्तर्कपरतां परित्यज्य मूलं व्याख्याति **यदित्यस्यार्थ इति ॥ स्वव्याहतमिति ।** सूत्रकारस्य स्वव्याहतिप्रसञ्जकमित्यर्थः । **प्रमाणान्तरप्रतिहतमित्यत्र** सूत्रकारस्य प्रमाणान्तरप्रतिहतिप्रसञ्जकमित्यर्थः ।

स० — **अनित्यत्वादय इति ।** आदिपदेनाकृताभ्यागमकृतप्रणाशस्वर्गनरकादेः परामर्शः । **ज्ञानैश्वर्येत्यादि ।** ज्ञानं चैश्वर्यं च तयोः शक्तिरनन्तरं सामर्थ्यम् । **बलं** शरीरसामर्थ्यम् । **वीर्यं** शौर्यम् । **तेजः** प्रागल्भ्यम् इति ज्ञेयम् । आद्येऽपि किं ते व्याहतकामाः स्युः उत नेति वाच्यम् । आद्ये कार्यासिद्धिप्रसङ्ग इत्यभिप्रेत्य द्वितीये एकेनैवेशतायाः कृतत्वादितरानर्थक्यमित्यभिप्रेत्याह **अनेकेश्वरेति ॥ निरतिशयत्वादिति ।** अतिशयमृतेपि कार्यकारणभावाभ्युपगमे दृष्टवैकल्यमिति भावः । **भगवद्व्यूहा** इत्यत्र व्यूहशब्दो व्यूहिपर इति ज्ञेयम् ॥ **अभ्युपगमादिति ।** ब्रह्मादिस्तंबपर्यन्तं तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वाङ्गीकारादित्यर्थः ॥ **शब्दवच्छास्त्रमिति ।** श्लोकात्मकं शास्त्रमित्यर्थः । तथा **चन्यत्रेति ।** पदसंहितायामित्यर्थः ।

या० - **एतेन प्रद्युम्नादिति ।** कर्तृजात्प्रद्युम्नादित्यर्थः । अहङ्कारस्यापि मनोवृत्तिविशेषस्य करणरूपत्वेनेत्यर्थः ॥ **निरतिशयत्वादिति ।** वासुदेवात्सङ्कर्षणस्य, सङ्कर्षणाच्च प्रद्युम्नस्य, प्रद्युम्नाच्चानिरुद्धस्यातिशयाभावात् । भवितव्यं हि कार्यकारणयोरतिशयेन, यथा मृद्घटयोः । न ह्यसत्यतिशये कार्यं कारणमित्येवं कल्प्यत इत्यर्थः । **निष्ठां** इदमित्थमेवेति निश्चयम् ॥ **शब्दवदिति ।** असन्दिग्धार्थकैरेव शब्दैर्युक्तमित्यर्थः **तथा चान्यत्रेति ।** पञ्चरात्र एव परमसंहितारूपप्रदेशान्तरेऽप्युक्तमित्यर्थः । **स्वव्याहतमिति ।** सूत्रकारस्य स्वव्याहतिप्रसञ्जकमित्यर्थः । एवमग्रेऽपि ।

श्री० — ॐ **विप्रतिषेधाच्च** ॐ ॥ वेदस्य **विप्रतिषेधो** निन्दा **अत्र** पञ्चरात्रे । **बलवद्विवेकं** महान्तं विचारम् । **अन्यत्र** पञ्चरात्र एव स्थलान्तरे । **परमसंहितारूपे प्रदेशान्तरे ।** वेदविप्रतिषेधो भवतीत्यनुवर्तते ॥

**सु० — तद्भारतवचनमुदाहरति** पञ्चरात्रस्येति ।

**अनु०** — पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ॥
ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते ॥
पञ्चरात्रविदो ये तु यथाक्रमपरा नृप ॥
एकान्तभावोपगता वासुदेवं विशन्ति ते ॥
इति

**'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नान्युताहो नेति चोच्यतामि'ति । ज्ञानकरणत्वाज्ज्ञानशब्दवाच्यानि साङ्ख्यादीनि शास्त्राण्यन्योन्यविरुद्धान्युताविरुद्धानीति प्रश्नस्य 'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणे'ति परिहारोऽभिहितः । ततः पुनर्वस्तुविकल्पानुपपत्तेः परस्परविरुद्धानां सर्वेषां प्रामाण्यायोगादेतेषु किं प्रमाणमिति जिज्ञासायां, 'साङ्ख्यस्य वक्ता कपिल' इत्यादिना साङ्ख्यादीनामनाप्तकर्तृकत्वमभिधाय प्राग्वेदारण्यकपदोपलक्षितस्य पञ्चरात्रस्य परमाप्ततमेन नारायणेन प्रणीतत्वात्प्रामाण्यमित्यनेन वाक्येनोच्यते । वेदानां त्वपौरुषेयतया स्वत एव प्रामाण्यं सिद्धमेवेति नोक्तम् । फलवत्प्रवृत्तिजनकत्वादपि पञ्चरात्रस्य प्रामाण्यमिति । पञ्चरात्रविद इत्यनेन वाक्येनोच्यते ।** यथाक्रमपरा **देवतातारतम्यपराः ।** एकान्तभावोपगताः **अव्यभिचारिणीं भक्तिं प्राप्ताः ।**

**प्रकारान्तरेण स्वव्याहतिमाह** गीता चेति ।

गीता च तच्छास्त्रसङ्क्षेप इति हीरितम् ॥

तच्छास्त्रसङ्क्षेपः **पञ्चरात्रसङ्क्षेप इति हीरितम् । 'ब्रह्मरुद्रेन्द्रसूर्याणां यद्दत्तं विष्णुना पुरा । पञ्चरात्रात्मकं ज्ञानं व्यासोऽदात्पाण्डवेषु तत् । तेषामेवावतारेषु सेनामध्येऽर्जुनाय च । प्रादाद्गीतेति विनिर्दिष्टं (विज्ञातं) (विख्यातं) सङ्क्षेपेणायुयुत्सवे' (ते) इत्यादिना पुराणवाक्येनेति शेषः । ततः प्रमाणतया पञ्चरात्रसङ्क्षेपरूपां गीतां प्रणीतवतो बादरायणस्य पञ्चरात्रप्रामाण्यमनुमतमेवेति पुनरत्र तन्निराकरणे कथं स्वव्याहतिर्न भवेदिति ।**

**स्वव्याहतिं प्रकारान्तरेण दर्शयति** वेदेनेति ।

वेदेन पञ्चरात्रेण भक्त्या यज्ञेन चैव हि ॥
दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि ॥
इति वाराहवचनं

**एवं वराहपुराणे भगवद्दर्शनसाधनत्वेन वेदवत्पञ्चरात्रस्य प्रामाण्यमभ्युपगम्येह पुनस्तन्निराकरणे व्याघात एवेति ।**

**शे०** भावव्युत्पत्तेः सुप्रसिद्धत्वेऽपि सांख्यादिशास्त्राणां ज्ञप्तिरूपत्वाभावेन भावसाधनज्ञानशब्दवाच्यत्वानुपपत्तेर्ज्ञायतेऽनेनेति करणसाधनतामाश्रित्य तच्छब्दवाच्यतामाह **ज्ञानकरणत्वादिति ॥ वस्तुविकल्पानुपपत्तेरिति** । वस्तुनस्तत्तद्वादिपरिकल्पितविरुद्धानेकाकारत्वानुपपत्तेरित्यर्थः । वस्तुविकल्पानुपपत्तेः परस्परविरुद्धानां सर्वेषां प्रामाण्यायोगादित्युपलक्षणम् । वस्तुनो निःस्वभावत्वानुपपत्तेः परस्परविरुद्धानां सर्वेषामप्रामाण्यायोगादिति द्रष्टव्यम् । 'सांख्यं योगः पाशुपतमि'ति वाक्ये पञ्चरात्रस्यानिर्देशादेतेष्वेतद्विशिष्यत इति निर्धारणायोगमाशङ्क्य वेदारण्यकशब्दस्यात्र लक्षणया पञ्चरात्रपरत्वेन तेनैव पञ्चरात्रस्य निर्दिष्टत्वान्न निर्धारणानुपपत्तिरित्याशयेनाह **प्राग्वेदारण्यकपदोपलक्षितस्येति । ननु** वेदारण्यकपदस्य लक्षणया पञ्चरात्रपरत्वं नात्राश्रयितुं शक्यम् । तथा सत्यनेन वेदारण्यकस्य प्रामाण्यासिद्धिप्रसङ्गादित्यतस्तस्य प्रकारान्तरेणैव प्रामाण्यस्य सिद्धत्वादनेन तदसिद्धिर्न दोषायेत्यभिप्रेत्याह **वेदानां त्विति** । यद्यप्यदृष्टविषयकपौरुषेयवाक्यरूपस्य पञ्चरात्रस्य वेदैकार्थत्वरूपवेदमूलत्वाभावे, वेदस्याप्रामाण्ये वा, प्रामाण्यं न स्यादिति पञ्चरात्रप्रामाण्योक्त्यैव वेदप्रामाण्यसिद्धिरप्यनेनाविकलैव, तथाऽपि साक्षात्प्रामाण्यालाभाभिप्रायेणेयमुक्तिः । अत एव नोक्तमित्युक्तपदप्रयोग इति ध्येयम् । ब्रह्मरुद्रेन्द्रसूर्याणामित्यत्रान्येषामपि देवानामुपलक्षणतया ग्रहणात्तेषामेवावतारेष्वित्यस्योपपत्तिरिति ध्येयम् । प्रादादित्यत्र कृष्ण इति शेषः । **व्याघात एव** स्वव्याघात एव । श्रुतिस्थश्लोकशब्दस्य पञ्चरात्रविषयत्वमेव कुतः सिद्धं येन पञ्चरात्राप्रामाण्यकथनस्य श्रुतिविरुद्धत्वं स्यादित्यतो भारते पञ्चरात्रविषयतया श्लोकशब्दश्रवणादेव तत्सिद्धिरित्यभिप्रेत्य कुतस्तत्स्थस्यापि श्लोकशब्दस्य तत्परत्वमित्यतस्तस्यैव पूर्वत्र प्रक्रान्तत्वात्, अन्यथा प्रक्रमविरोधापत्तेरित्यभिप्रेत्याह **पञ्चरात्रेति ।**

**या०** — **प्राग्वेदारण्यकपदोपलक्षितस्येति** । जहत्स्वार्थलक्षणया गृहीतेत्यर्थः । किमर्थं लक्षणयेत्यत आह **वेदानां त्विति** । बहुवचनेन वेदाश्चारण्यकानि चेति द्वन्द्वैकवद्भावं सूचयति । ननु भाष्यटीकायां वेदप्रामाण्यस्यार्थाल्लाभकथनात् गीताभाष्यटीकायां चोपलक्षणया सिद्धिकथनात्तद्विरोध इति चेन्न । तद्भाष्ययोरिवात्रानुव्याख्याने सूचकाभावेन वेदप्रामाण्याकथनेनास्य व्याख्यानान्तरत्वेन दोषाभावात् । **'ब्रह्मरुद्रेन्द्रसूर्याणामि'**त्यत्रान्येऽपि देवा उपलक्षणया ग्राह्याः । तेन तेषामेवावतारेष्वित्येतदुपपन्नमिति ज्ञातव्यम् । अदादित्यत्र कृष्ण इति शेषः ।

**श्री०** — **वस्तुविकल्पेति** । विरुद्धानेकसाङ्ख्यादिशास्त्रोक्तवस्तुन एकप्रकारत्वायोगादित्यर्थः ।

सु० — एवं स्वव्याहतिमुपपाद्य प्रमाणान्तरविरोधं दर्शयति श्लोका इति ।

अनु० — श्लोका इति वचः श्रुतौ ॥

वचः अस्तीति शेषः । 'ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासपु(सःपु)राणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानी'त्यस्यां श्रुतौ ऋग्वेदादिप्रमाणोद्देशप्रसङ्गे श्लोका इति पञ्चरात्रमुपात्तम् । 'पञ्चरात्रविदो मुख्या' इति प्रकृतपञ्चरात्रविषयत्वेन 'ऋषीनुवाच तान्सर्वानदृश्यः पुरुषोत्तमः । कृतं शतसहस्रं हि श्लोकानां हितमुत्तममि'ति श्लोकशब्दस्य भारते प्रयोगात् । छन्दोगश्रुतौ ऋग्वेदो यजुर्वेद इत्यारभ्यैकायनमिति पञ्चरात्रमुच्यते । तत्समाख्यया श्लोकशब्दः पञ्चरात्रमुच्यते । तत्समाख्यया श्लोकशब्दः पञ्चरात्रविषयोऽशेषो(ऽवगम्यते) ज्ञायते । अतः श्रुत्या पञ्चरात्रप्रामाण्यं सिद्धमिति तदप्रामाण्यवादः श्रुतिविरुद्धः । स्पष्टश्रुतिविरोधं च दर्शयति वेदैश्चेति ।

वेदैश्च पञ्चरात्रैश्च ध्येयो नारायणः परः ॥

वेदपञ्चरात्रोक्तप्रकारेणेत्यर्थः । संहिताभेदात्पञ्चरात्रैरिति बहुवचनम् । परस्परविरुद्धशास्त्रद्वयानुसारेण कथं ध्यानमित्यत उक्तं पञ्चरात्रं चेति । इत्यादिवेदवचनैश्च पञ्चरात्राप्रामाण्यकथनं विरुद्धमिति शेषः । ततः किमित्यत आह पञ्चरात्रमिति ।

---

पञ्चरात्रं च वेदाश्च विद्यैकैव द्विधेयते ॥

इत्यादिवेदवचनैः पञ्चरात्रमपोद्यते ॥

कथमेव

यत एवं पञ्चरात्रनिराकरणं स्वव्याहतं प्रमाणान्तरव्याहतं च । अतोऽत्र सूत्रकारेण पञ्चरात्रं अपोद्यते दूष्यत इति कथमे(वं)व वक्तुं शक्यते । न हि व्याहतभाषी भगवानिति ।

शे० — श्रुतिस्थश्लोकशब्दस्य पञ्चरात्रविषयत्वं श्रुतिसमाख्ययाऽपि समर्थयते छन्दोगेति । श्लोकशब्दस्य पञ्चरात्रविषयताया उपपादनसापेक्षत्वेन तद्विरोधस्य स्पष्टश्रुतिविरोधत्वाभावान्न पूर्वग्रन्थेनोत्तरग्रन्थस्य पौनरुक्त्यमित्याह स्पष्टेति । पञ्चरात्रस्यैकत्वात्कथं तत्र पञ्चरात्रैरिति बहुवचनमित्यत एकत्वेऽपि तस्य परमसंहिता मानसंहितेत्यादिरूपेणानेकसंहितात्मकत्वात्तद्भेदविवक्षया तदुपपत्तिरित्याह संहिताभेदादिति । वेदपञ्चरात्रयोरेकविद्यात्ववर्णनमनर्थकमित्याशङ्क्य तयोरविरोधकथनेन प्रागुक्तवेद एव पञ्चरात्रोक्तप्रकारेण आध्यानोपपादनार्थत्वान्न तदिति भावेन सयुक्तिकं तदनुपपत्तिशङ्कामुत्थापयति परस्परेति । पञ्चरात्राप्रामाण्यकथनस्य श्रुत्यन्तरविरुद्धताया मूलारूढतासिद्ध्यर्थमित्यादिवचनैरित्यतः-

परमपेक्षितं शेषं पूरयति **इत्यादिवचनैश्चेत्यादिना** ॥ **व्याहतभाषीति** । स्वव्याहतभाषी प्रमाणान्तरव्याहतभाषी चेत्यर्थः ।

प० — **इत्यस्यां श्रुताविति** । षष्ठे काण्वश्रुतावित्यर्थः ॥ **प्रयोगादिति** । पंचरात्रविषयत्वेन श्लोकशब्दस्य भारते प्रयोगादित्यर्थः ॥ **छंदोगेति** । सप्तमे ।

श्री० — श्लोकानां कृतं शतसहस्रं ऋषीन्प्रत्युवाचेत्यन्वयः ॥ **शास्त्रद्वयेति** । 'वेदैश्च पञ्चरात्रैश्चे'त्युक्तं वेदपञ्चरात्ररूपशास्त्रद्वयेत्यर्थः ।

**सु० — स्यान्मतम् । नास्त्ययं व्याघातः । 'योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा स आत्मनाऽऽत्मानमनेकधा व्यूह्य व्यवस्थितः । तमित्थम्भूतं षाड्गुण्यविग्रहं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैः पञ्चकालाभि(धै)धानैरनेककालमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत' इत्यादेः पञ्चरात्रोदितस्यार्थस्य स्वीकृतत्वात् । तत्परतयैव भारतादिवाक्यानामुपपत्तेरिति । मैवम् । एवं सति सांख्यादिशास्त्रेष्वप्युपादेयांशस्य विद्यमानत्वेन विशेषतः पञ्चरात्रप्रामाण्याभिधानानुपपत्तेः । कृत्स्नस्येति विशेषणानुपपत्तेश्च । 'ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् । वेदार्थपूरकं ज्ञेयं पञ्चरात्रं यतोऽखिलमि'त्यखिलशब्दविरोधाच्चेति ।**

शे० — **अभिगमनेति** । वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनम् **अभिगमनम्** । पूजाद्रव्याणां आर्जनं **उपादानम्** । **इज्या** पूजा । **स्वाध्यायो** जपः । **योगो** ध्यानमिति, विवेकः ॥ **विशेषतः पञ्चरात्रेति** । पञ्चरात्र इव सांख्यादिशास्त्रेष्वप्येकदेशस्योपादेयतायाः सत्त्वेन सांख्यादिष्विव पञ्चरात्रेऽप्यनुपादेयांशस्य विद्यमानत्वेन, पञ्चरात्रवत्सांख्यादीनामप्येकदेशस्योपादेयत्वमात्रेण तत्प्रामाण्याभिधानस्य सांख्यादिवत् सर्वांशेऽप्यनुपादेयत्वेनैतदप्रामाण्याभिधानस्य वा प्रसङ्गात् । 'ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यत' इति सांख्यादीनामप्रामाण्याभिधानपूर्वकं पञ्चरात्रस्य विशिष्य प्रामाण्याभिधानानुपपत्तेरित्यर्थः । एकदेशस्यैवोपादेयत्वेन प्रामाण्ये 'पञ्चरात्रस्य कृत्स्नस्ये'त्यत्र कृत्स्नेति विशेषणानुपपत्तिश्च । तद्विशेषणेन सर्वांशेऽप्युपादेयत्वसमर्पणेन प्रामाण्यलाभादित्याह **कृत्स्नस्येतीति** ।

स० — **अभिगमनेति** । वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनम् **अभिगमनम्** । पूजाद्रव्याणामार्जनम् **उपादानम्** । **इज्या** पूजा । स्वाध्यायो **जपः** । **योगो** ध्यानम् ।

प० — **अभिगमनं** पूजार्थं भगवन्मन्दिराभिगमनम् । **उपादानं** पूजासाधनोपादानम् ।

**या०— पञ्चरात्रप्रामाण्याभिधानानुपपत्तेरिति ।** 'पञ्चरात्रस्य कृत्स्नस्ये'त्यादिनेति शेषः । **विद्या** ऽमिताक्षरं पञ्चरात्रं, श्लोका मिताक्षरं पञ्चरात्रं, सूत्राणि ब्रह्मसूत्रं महामीमांसिकाग्रन्थः साङ्कर्षणसूत्रं च **अनुव्याख्यानानि** बृहत्तर्कादयो **व्याख्यानानि** ब्रह्मतर्कादयः । तच्चोक्तम् 'अमितक्षरं पञ्चरात्रं विद्येत्याहुर्मनीषिणः । मिताक्षरं श्लोकवाच्यमुभयं वेद ईर्यते' इति च ब्रह्माण्डे । 'सूत्रं ब्रह्मसूत्राख्यं महा-मीमांसिका तथा । ...तथा ब्रह्मसूत्रं ब्रह्मतर्कादयस्तथा । प्रकाशिका निर्णयश्च तत्त्वनिर्णय एव च । व्याख्येति कथिताः सर्वाः स्वयं भगवता कृताः । बृहत्तर्कादयः सर्वा अनुव्याख्याः प्रकीर्तिता' इति संख्याने ।

**श्री०— 'पञ्चरात्रस्य कृत्स्नस्ये'**त्यत्रत्यकृत्स्नशब्दकृत्यं वक्तुमाह **स्यान्मतमित्यादिना ।** विद्यमानत्वेनेत्यतःपरं 'सांख्यस्य वक्ता कपिल' इत्यादिना सांख्यादिशास्त्राणामप्रामाण्यमभिधायेति शेषः । विशेषत इत्यनन्तरं पञ्चरात्रस्य कृत्स्नस्येत्यनेनेति शेषः ।

**सु०— इतश्च न पञ्चरात्रदूषणं युक्तमित्याह** अत्रेति ।

**अनु०—** अत्र दोषः कः

**अत्र पञ्चरात्रे को दोषो येन तन्निराक्रियेत न कोऽपीत्यर्थः । ननु कथं दोषो नास्ति जीवोत्पत्तेरसंभावितायास्तत्रोक्तत्वादित्यतोऽङ्गीकारवादेनाह** उत्पत्तिरिति ।

उत्पत्तिर्ज्ञोऽत इत्यपि ॥

---

इहैवोक्ता

**किं जीवोत्पत्त्यभिधानमात्रं पञ्चरात्राप्रामाण्यहेतुतयोपादीयते । उताभूतभवनरूप-जीवोत्पत्त्यभिधानम् । आद्ये तूत्पत्तिमात्रं** इहैव, **प्रमाणतयाऽभ्युपगते मीमांसाशास्त्रे, 'ज्ञोऽत एवे'ति सूत्रेणोक्तम् । अपिपदेन 'सर्व एव (वै) त आत्मानो व्युच्चरन्ती'ति श्रुत्याप्युक्तेति समुच्चिनोति । ततो वेदतन्मीमांसयोरप्यप्रामाण्यं स्यात् । अन्यथा हेतोरनैकान्त्यापत्तेरिति भावः । 'ज्ञोऽत एवे'ति सूत्रार्थे विप्रतिपन्नं प्रति श्रुतिरेवोदाहर्तव्या । स्यादेतत् । द्वितीय एव हेतुरुपादीयते । न चासौ श्रुतिसूत्रयोर्वर्तते । तत्र हि प्राग्विद्यमानस्यैव जीवस्य देहाद्युपाध्यपेक्षयैवोत्पत्तिरुच्यते । न त्वभूतभावलक्षणेत्यत आह न चेति ।**

न चाभूतभावस्तत्रापि कथ्यते ॥

**तत्रापि पञ्चरात्रेऽपि । यथा हि श्रुतिसूत्रयोः प्रतीतमपि जीवजननमभूतभवनं विहाय उपाधिविषयं व्याख्यायते । तथा पञ्चरात्रोक्तमपि तत्तथा व्याख्यायताम् । ततश्च स्वरूपासिद्धो हेतुरिति भावः ।**

**शे०** — मूले किंशब्दो न प्रश्नार्थः किन्त्वाक्षेपार्थ इत्याह **न कोऽपीत्यर्थ इति** ॥ **असम्भावितायां इति** । अनित्यत्वादिदोषप्रसञ्जकतयेति शेषः । ननु 'वासुदेवात्सङ्कर्षणो नाम जीवो जायत' इत्यादौ सङ्कर्षणादीनां वासुदेवादिभ्यः प्रादुर्भावरूपजननेरेवोक्त्या सर्वजीवोत्पत्त्युक्तिरेवासिद्धेति कथं तदाश्रयणेनायं परिहार इत्यत आह **अङ्गीकारवादेनेति** । जीवादिशब्दानां यथाश्रुतार्थत्वाभ्युपगमवादेनेत्यर्थः । **तत इति** । जीवोत्पत्त्यभिधानमात्रत्वादित्यर्थः ॥ **अन्यथेति** । जीवोत्पत्त्यभिधायकत्वेऽप्यप्रामाण्याभाव इत्यर्थः ॥ **अनैकान्त्येति** । वेदतन्मीमांसयोरिति शेषः । तत्र सत्यपि जीवोत्पत्त्यभिधायकत्वे प्रामाण्याङ्गीकारादिति भावः ॥ **सूत्रार्थे विप्रतिपन्नं प्रतीति** । आत्मा ज्ञानरूपः अत एवानुत्पत्तेरेव स्वयं ज्योतिरित्यादिश्रुतेश्च । इन्द्रियसम्प्रयोगादिस्तु विषयविशेषपरिच्छेदार्थ इत्यर्थकत्वात् ज्ञोऽत एवेति सूत्रस्य न जीवोत्पत्तिविषयतेति न तत्र व्यभिचार इति भावः । इष्टापत्तिं परिहरति **तच्चेति** ।

**म०** — **सूत्रार्थे विप्रतिपन्नं प्रतीति** । चैतन्यरूपब्रह्माभिन्नत्वादेव जीवोपि चैतन्यरूप एव न त्वागन्तुकज्ञानादिमानित्यर्थत्वात् ज्ञोऽत एवेति सूत्रस्य न भवदुक्तजीवोत्पत्तिपरत्वसिद्धिरिति भावः ॥ अनादिमाययेति वाक्ये मायाया अनादित्वोक्तेस्तदाश्रयजीवस्य सादित्वे तदनुपपत्तेः जीवस्याप्यनादित्वमेवाभिमतमिति भावः ।

**प०** — **उताभूतभवनरूपेति** । देहादिजडसाधारणोत्पत्तिरित्यर्थः ॥ **मीमांसाशास्त्र इति** । उत्तरपादीयदशमाधिकरणसूत्रं पठति **ज्ञोत एवेति** । जानातीति ज्ञो जीवः । 'इगुपधज्ञाप्रीकिरः कः' इति कः । ज्ञो जीवोऽत एव नात्मा श्रुतेरिति पूर्वसूत्रप्रकृतात्मशब्दितविष्णुत एवोत्पद्यते । अत एव 'सर्व(त,)एवे'ति श्रुतेरेवेत्युक्तम् । उत्पत्तिमात्रमित्यनुकर्षः ॥ **अन्यथा हेतोरिति** । पञ्चरात्रमप्रमाणं जीवोत्पत्तिसामान्यकथकत्वात्तादृशलौकिकवाक्यवदित्यभिमतहेतोरित्यर्थः । **द्वितीयहेतुरिति** । अभूतभवनरूपजीवोत्पत्तिबोधकत्वादिति हेतुरित्यर्थः ॥ **न चासाविति** । अभूतभवनरूपा जनिरित्यर्थः ।

**या०** — ननु ज्ञोऽत एवेति सूत्रस्य न जीवोत्पत्तिरर्थः । किन्तु तार्किकमत इवात्मनो ज्ञानं नागन्तुकं, किन्तु ज्ञानरूप एवात्माऽत एवानुत्पत्तेरेवेत्यादिरेवार्थः अतः कथमेतदित्यत आह **सूत्रार्थे विप्रतिपन्नमिति** ।

**श्री०** — **अङ्गीकारेति** । जायत इत्यस्य प्रादुर्भावरूपार्थस्य 'वासुदेवाज्जनिःप्रोक्ते'ति वक्ष्यमाणत्वादत्रोत्पत्तिरूपमेवार्थमङ्गीकृत्याहेत्यर्थः । **अभूतभवनं** प्रागभावप्रतियोगित्वरूपम् । स्वरूपेणैवोत्पत्तिरिति यावत् । **विप्रतिपन्नं** 'ज्ञोऽत एवे'ति सूत्रेन जीवोत्पत्तिः प्रतिपाद्या, किन्तु जीवस्य ज्ञानरूप-

त्वमेवेति यदि परो वदेदित्यर्थः ॥ **न त्विति** । तथा च न श्रुतिसूत्रयोर्व्यभिचार इति भावः । **तत्** जीवजननम् । **तथा** उपाधिविषयत्वेन ।

**सु०—ननु विषमोऽयमुपन्यासः। श्रुतिसूत्रयोः खलु 'अनादिमायया सुप्तः'। 'नानादित्वादि'त्यादिनाऽनादिकर्म(कर्मादि)संबन्धोऽभिधीयते । न ह्यभूत्वा (भवतो, भाववतो जीवस्या-सावुपपद्यते । अतस्तदनुरोधात्तत्र प्रतीतमपि जीवजननमन्यथा नेतव्यमेव । न च तथाविधं बाधकमिहास्ति । येन मुख्यार्थं परित्यज्यामुख्यार्थं प्रतिपद्येमहि । ततो मुख्यार्थे ग्राह्ये न हेतोरसिद्धिरित्यत आह** अनादीति ।

**अनु०**— अनादिकर्मणा बद्धो जीवः संसारमण्डले ॥
वासुदेवेच्छया नित्यं भ्रमतीति हि तद्वचः ॥

तद्वचः **पञ्चरात्रवाक्यम् । श्रुतिसूत्रवत्पञ्चरात्रेऽपि जीवस्यानादिकर्मसंबन्धाभिधानात्तदनुरोधेन तत्रोक्तं** जीवजनन**मप्यन्यथाव्याख्यातव्यमेव । पक्षपाते कारणाभावात् । तथा च हेतोरसिद्धिस्तदवस्थेत्यर्थः** ।

**शे०— अन्यथा नेतव्यमेवेति** । जीवोत्पत्तिप्रतिपादकं श्रुत्यादिकं तदुपाधिविषयतयैव योज्यमित्यर्थः । तथाचाभूतभवनरूपजीवोत्पत्त्यभिधायकत्वाभावान्न श्रुतिसूत्रयोर्व्यभिचार इति भावः । **हेतोरिति** । अभूतभवनरूपजीवोत्पत्त्यभिधायकहेतोरित्यर्थः ।

**प०— अनादिमाययेति** । 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यत' इति श्रुतौ 'न कर्माविभागादिति चेन्नानादित्वादि'ति वैषम्याधिकरणगुणसूत्रे कर्मणामनादित्वोक्त्याऽनादिकर्मसंबन्धोऽभिधीयत इत्युक्तम् । **अन्यथेति** । देहयोगविषयतयेत्यर्थः । **इहेति** । पञ्चरात्रे । **इदमिति** । श्रुतिसूत्रयोः श्रुतं जीवनमित्यर्थः ।

**श्री०— असौ** अनादिकर्मसंबन्धः । **अन्यथा** उपाधिविषयतया । इह पञ्चरात्रे । **मुख्यार्थं** 'जायत' इत्यस्याभूत्वाभवनरूपम् । **अमुख्यार्थम्** उपाधिविषयत्वरूपम् । **मुख्यार्थे** अभूत्वाभवनरूपे । **हेतोः** पञ्चरात्रमप्रमाणमभूत्वाभवनरूपजीवोत्पत्तिप्रतिपादकत्वादित्यनुमाने हेतोरित्यर्थः ।

**सु० — अथापि स्यात् । न कुत्रापि वेदादौ संसारसादित्वादिकं जीवानामभूत्वाभवनज्ञापकं स्पष्टमुक्तम् । अतः सावकाशमिदमन्यथा योज्यमेवेति चेत् । एतदपि समानमत्रेति भावेनाह** न हीति ।

**अनु०**— न हि संसारसादित्वं पञ्चरात्रोदितं क्वचित् ॥

**अनेनैव न्यायेन 'न च कर्तुः करणमि'त्येतदप्यपाकरणीयम् इति । तथा हि । किं करणं कर्तुर्न जायत इति व्याप्तिः किं वा यस्यां क्रियायां यत्करणं तत्तत्क्रियाकर्तुर्न जायत इति । नाद्यः । व्यभिचारात् । अन्यथा करणानामनुत्पत्तिप्रसङ्गात् । न द्वितीयः । प्रकृतेऽपि तथाभावासिद्धेः । एतस्माज्जायत इति श्रुतिविरोधोऽपि किं जीवान्मनसो जननमात्राभ्युपगमे स्यात् । उत जननविशेषाभ्युपगमे । नाद्यः । 'अन्नमशितं त्रेधा विधीयत' इत्यादिश्रुतेः प्रत्यहं मनसो जीवादुत्पत्तेः । न द्वितीयः । तथात्वस्य प्रकृतेऽप्यसम्मतेः । एवं मनसोऽप्यहङ्कारजन्मनि दोषः परिहरणीयः ।**

श्रु० — **अनेनैव न्यायेनेति** । प्रथमसूत्रार्थापाकरणन्यायेनेत्यर्थः ॥ **प्रकृते तथाभावेति** । पञ्चरात्रे ज्ञानलक्षणक्रियाकरणस्य मनसो ज्ञातृत्वावस्थापन्नादेव जीवाज्जन्मानभिधानादित्यर्थः ॥ **जननविशेषाभ्युपगम इति** । आदिकालीनजन्माभ्युपगम इत्यर्थः । **अन्नमशितमिति** । अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो कनिष्ठस्तन्मन इति श्रुतेर्मनसः प्रत्यहं जीवभुक्तान्नजातत्वावगमादित्यर्थः ॥ **एवं मनस इति** । अभिमानरूपक्रियायां करणस्य मनोवृत्तिविशेषस्याभिमन्तृत्वावस्थापन्नादेव जननानभिधानान्न विरोधरूपो दोषः । नाप्येतस्माज्जायत इति श्रुतिविरोधरूपः । स किं जीवज्जातान्मनसोऽहङ्कारस्य जननमात्रे स्यात् । उत जननविशेषे । नाद्यः । प्रत्यहं मनसो जीवाज्जन्मनः श्रौतत्वेन तद्वृत्तिविशेषरूपस्याप्यहङ्कारस्य मनोद्वारा जीवाज्जनने बाधकाभावात् । नान्त्यः । तथात्वस्य प्रकृतेऽप्यसंमतेरित्यपाकरणीय इत्यर्थः । एतेन यदुक्तं भामत्यां 'सङ्कर्षणोऽकरणः कथं प्रद्युम्नाख्यं मनःकरणं कुर्यात् । अकरणस्यापि करणे निर्माणसामर्थ्याभ्युपगमे कृतं करणनिर्माणेनाकरणादेव सकलकार्यसिद्धेरि'त्येतत्सूत्राभिप्राय इति तदपि निरस्तं भवति । तथा हि । न ह्यत्र मनसो जीवादादिकालीनं जन्माभिप्रेतमपि तु श्रौतं यत्प्रत्यहं मनसो जीवाज्जननं तदेव । तत्र चाकरणत्वहेतुरसिद्ध एवेति भावः ।

स० — **अनेनैवेति** । विकल्पव्यभिचारान्यथासिद्धिभ्यां परिहर्तव्यमित्यर्थः ।

प० — **जननविशेषेति** । घटादिसाधारणस्वरूपजननरूपेत्यर्थः । यद्वाऽऽदिकालीनाल्पोपचयरूपेत्यर्थः । **इति श्रुतेरिति** । षष्ठछन्दोगश्रुतेरित्यर्थः । भक्षितान्नस्य योणिष्ठो भागस्तन्मन इति प्रत्यहं भुक्तान्नसूक्ष्मभागैर्मनस उपचयरूपजनेः कथनादिति भावः । **एवं मनसोऽहङ्कारजन्मनीति** । मनसः अहङ्कारजननमात्रं वा जननविशेषो वा विरुद्धः । नाद्यः । अहङ्कारस्य मनोवस्थाविशेषत्वेन तज्जातत्वाविरोधात् । न द्वितीयः । तथात्वस्य प्रकृतेऽप्यसंमतेरिति परिहार्य इत्यर्थः ।

या० — **इदमन्यथा योज्यमेवेति** । जीवोत्पत्तिप्रतिपादकं श्रुत्यादिकमुपाधिविषयतयैव योज्य-मित्यर्थः । **अनेनैव न्यायेनेति** । यथा पञ्चरात्रे जीवस्यासंभाविताया अभूतभवनरूपोत्पत्तेरभिधानादिति हेतुरसिद्धत्वेन दूषितः । तथा करणेऽसंभावितस्य कर्तृत्वरूपत्वस्याभिधानादिति हेतुरप्यसिद्धत्वेनैवापाकर-णीय इत्यर्थः । **प्रकृते तथाभावेति** । पञ्चरात्रे ज्ञानलक्षणक्रियाकरणस्य मनसो ज्ञातृत्वावस्थापन्नादेव जीवाज्जन्मानभिधानादित्यर्थः । **जननविशेषाभ्युपगम इति** । आदिकालीनजननाभ्युपगम इत्यर्थः । **अन्नमशितं त्रेधेति** । 'अन्नमशितं त्रेधा विधीयते । तस्य यत्स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यम-स्तन्मांसं योऽणिष्ठस्तन्मन' इति श्रुतेर्मनसः प्रत्यहं जीवजातत्वावगमादित्यर्थः । **एवं मनसोऽहङ्कारेति** । अभिमानरूपक्रियायां करणस्य मनोवृत्तिविशेषरूपस्याहङ्कारस्याभिमन्तृत्वावस्थापन्नादेव जननानभिधानान्न युक्तिविरोधरूपो दोषः । नापि 'एतस्माज्जायत' इति श्रुतिविरोधरूपः दोषः । स किं जीवजातान्मनसः अहङ्कारस्य जननमात्रे स्यादुत जननविशेषे । नाद्यः । प्रत्यहं मनसो जीवाज्जनेः श्रौतत्वे तद्विशेषस्या-प्यहङ्कारस्य मनोद्वारा जीवाज्जनने बाधकाभावात् । नापि द्वितीयः । तथात्वस्य प्रकृतेऽप्यसम्मतेरिति अपाकरणीय इत्यर्थः । एतेन यदुक्तं भामत्यां 'सङ्कर्षणोऽकरणः कथं प्रद्युम्नाख्यं मनः करणं कुर्यात् । अकरणस्यापि करणनिर्माणसामर्थ्ये कृतं करणनिर्माणेन । अकरणादेव कार्यसिद्धेरित्येतत्सूत्राभिप्राय' इति तदपि निराकृतं भवतीति ज्ञातव्यम् । न ह्यत्र मनसो जीवादादिकालीनं जन्माभिप्रेतं येनाकरणत्वहेतुः श्लिष्टः स्यात् अपि तु श्रौतं यत्प्रत्यहं मनसो जीवाज्जननं तदेवात्राभिप्रेतं तत्र चाकरणत्वहेतुरसिद्ध एवेति ।

श्री० — वेदादावित्यत्राऽऽदिपदेन सूत्रग्रहणम् । **अतः** स्पष्टमनुक्तत्वात् सावकाशमिदमभूत्वा-भवनं वेदाद्युक्तम् **अन्यथा** उपाधिविषयतया योज्यम् । अतो न व्यभिचार इति भावः ॥ **तदपीति** । अभूत्वाभवनज्ञापकस्य संसारसादित्वादेः स्पष्टमवचनमपीत्यर्थः ॥ **समानमिति** । तथा च स्वरूपासिद्धि-रिति भावः ॥ **व्यभिचारादिति** । वस्तुतः करणभूतः कुठारः कर्तुर्देवदत्ताज्जायत एवेति व्यभिचार इत्यर्थः । **प्रकृते** सङ्कर्षणात्प्रद्युम्नसंज्ञकं मनो जायत इति वाक्ये ॥ **तथाभावासिद्धेरिति** । तथाभावस्य यस्यां क्रियायां ज्ञानलक्षणायां यत्करणं मनोरूपं करणं तत्, तत्क्रियाकर्तुर्ज्ञानलक्षणक्रियाकर्तुः सङ्कर्षणसंज्ञकस्य जीवस्य सकाशाज्जायत इत्येवंरूपार्थप्रतिपादनस्यासिद्धेरित्यर्थः । यद्यपि पुरुषात्कर्तुर्मनो जायते, तथाऽपि यदाऽयं ज्ञातृत्वावस्थापन्नस्तदैव तज्ज्ञानकर्तृत्वावस्थोपेतादेवैतन्मनो जायत इत्युक्त-वाक्यस्यार्थं यदि ब्रूमस्तदैव 'न च कर्तु करणमि'त्यनेन यस्यां क्रियायां यत्करणं तत्क्रियाकर्तुर्न जायत इति त्वदीयं दूषणं सङ्गच्छेत । न ह्येवं प्रकृतवाक्यस्यार्थोऽस्माभिरुच्यत इति भावः ॥ **तथात्वस्येति** । प्रकृते सङ्कर्षणनामकाज्जीवात्प्रद्युम्नसंज्ञकं मनो जायत इत्युक्तवाक्ये यद्यादिकालीनजननरूपो जननविशेषः प्रतिपाद्यत इत्यर्थः स्यात्तदैव भगवतः सकाशादुत्पत्त्यभिधायकै'तस्मादि'ति त्वदुक्तश्रुतिविरोधः स्यात् ।

न चैवम् । उक्तवाक्यस्य प्रकृते तथात्वासम्मतेः । आदिकालीनजननप्रतिपादकत्वस्यास्माकमसम्मते-रित्यर्थः ॥ **दोष इति** । अहङ्कारस्यापि मनोवृत्तिविशेषस्य करणरूपत्वान्न कर्तुः प्रद्युम्नसंज्ञकान्मनस उत्पत्तिः संभवतीत्युक्तदोष इत्यर्थः ॥ **परिहरणीय इति** । तथा हि 'किं करणं' इत्युक्तरीत्येत्यर्थः ।

**सु० — एवं जीवादिपदानां यथाश्रुतार्थाभ्युपगमेन सूत्रद्वयारोपितदोषपरिहारोऽ(वि)-भिहितः । इदानीं वासुदेवात्सङ्कर्षणो नाम जीवो जायत इत्यादिवाक्यस्य परकल्पितादर्थादर्था-न्तरमाह** जीवेति ।

**अनु० —** जीवाभिमानिशेषस्य नाम्ना सङ्कर्षणस्य तु ।
वासुदेवाज्जनिः प्रोक्ता प्रद्युम्नस्य ततस्तथा ।
मनोभिमानिनः कामस्यैवं

**जीवशब्दस्य प्रवृत्तिनिमित्तमुपपादयितुं** जीवाभिमानीत्युक्तम् । **सङ्कर्षणस्य भगवतो जनेरभावात्तद्व्युदासाय नाम्ना सङ्कर्षणस्य शेषस्येत्युक्तम्** । प्रोक्ता **वासुदेवादित्यादिना वाक्येन ।** ततः **सङ्कर्षणात् । तथाशब्दः समुच्चये** । जनिः **प्रोक्तेत्यर्थः** । **मनोभिमानिनः कामस्येत्यस्य पूर्ववदेव प्रयोजनम् । एवंशब्देन प्रद्युम्नादनिरुद्धसंज्ञकोऽहङ्कारो जायत इत्यत्राप्युक्तव्याख्यान-न्यायमतिदिशति । प्रद्युम्नादहङ्काराभिमानिनः कामपुत्रस्यानिरुद्धस्य** जनिः **प्रोक्तेति ।**

---

**शे० — पूर्ववदेवेति** । जीवाभिमानीत्यत्र जीवशब्दप्रवृत्तिनिमित्तोपपादनमिव मनोभिमानिन इत्यत्रापि मनःशब्दप्रवृत्तिनिमित्तोपपादनमेव प्रयोजनमित्यर्थः ।

**स० — पूर्ववदेवेति** । जीवाभिमानीत्यादिवदित्यर्थः ।

**प० — पूर्ववदेव प्रयोजनमिति** । मनःपदप्रवृत्तिनिमित्तोपपादनरूपं **प्रयोजनं** ध्येयम् । **अभि-**मानिनो जीवाद्यभिमन्यमानं प्रति स्वामिभावात् 'तदधीनत्वादर्थवदि'त्यत्रोक्तदिशा स्वातन्त्र्यरूपनिमित्तं तत्पदवृत्तौ सिद्धमिति भावः । अतिदिशतीत्येतद्दर्शयति **प्रद्युम्नादिति** :

**या० — पूर्ववदेवेति** । मनःशब्दप्रवृत्त्युपपादनमेव प्रयोजनमित्यर्थः ।

**श्री० —** जीवपदस्य प्रसिद्धो जीव एव यथाश्रुतार्थः । आदिपदेन जायत इत्यस्य स्वरूपेणो-त्पत्तिरेव यथाश्रुतोऽर्थः ॥ **सूत्रद्वयेति** । 'उत्पत्त्यसंभवात्' 'न च कर्तुः करणमि'ति सूत्रद्वयेन वासुदेवा-त्सङ्कर्षणो नाम जीवो जायत इति पञ्चरात्रवाक्ये यः परेणारोपितो दोषोऽप्रामाण्यरूप उक्तस्तत्परिहारो भगवत्पादैः 'अत्र दोषः क' इत्यादिनाऽभिहित इत्यर्थः ॥ **पूर्ववदेवेति** । कामे मनःशब्दप्रवृत्तिमुप-पादयितुं मनोभिमानिन इत्युक्तम् । अभिमानिन्येवाभिमन्यमानशब्दस्य मुख्यतः प्रवृत्तेः । प्रद्युम्नसंज्ञकस्य

भगवतो जनेरभावात् कामस्येत्युक्तमित्येवमभिमानिकामशब्दयोः प्रयोजनं जीवाभिमानीत्युक्तरीत्या द्रष्टव्यम् ।

सु०— नन्वेवमप्युत्पत्त्यसंभवदोषस्तदवस्थः शेषादीनामपि जीवत्वादिति । मैवम् । न ह्यत्र सङ्कर्षणादीनामुत्पत्तिरुच्यते । किन्तु जायत इति जनिरुच्यते । जनिश्च प्रादुर्भावः । जनी प्रादुर्भाव इति पठन्ति । प्रादुर्भावश्च शरीरोत्पत्तौ जीवस्य सुप्रसिद्धः । तदिदमुक्तं जनिः प्रोक्तेति । अत एव पूर्वोऽभ्युपगमवादः । अर्थान्तरमप्याह साक्षादिति ।

अनु०— साक्षाद्धरेः क्वचित् ॥

सङ्कर्षणादिनाम्नैव नित्याचिन्त्योरुशक्तितः ॥

व्यूह उक्तो

शेषादयोऽपि (हि) भगवदंगत्वाद्धरित्वेनोच्यन्ते । तद्व्युदासाय साक्षादित्युक्तम् । साक्षाद्धरेरेव सङ्कर्षणादिनाम्ना व्यूह उक्त इत्यन्वयः । नन्वत्रोक्त तदप्रतिषेधो हरेरुत्पत्त्यभावादित्यत उक्तं व्यूहो विभाग एवोक्तो न तूत्पत्तिरिति । यदप्युक्तं किमेतेऽन्योन्यं भिन्ना उत नेति । तस्योत्तरं हरेः एकस्यैवेति । नन्वेवं तर्हि निरतिशयत्वात्कथं स्वस्मादेव स्वस्य विभाग इत्यत उक्तं नित्येति । किन्नाम दुर्विभाव्यं भगवति यत्प्रमितमित्यर्थः ।

यदप्युक्तं नैवेते भगवद्व्यूहाश्चतुःसंख्यायामेव परिनिष्ठिताः अनन्तत्वादिति । तत्रोत्तरं क्वचिदिति । कालविशेषे प्रयोजनविशेषे चेत्यर्थः । अनभिज्ञो भगवान्भागवतसम्प्रदायस्य । आदिकाले हि भगवान्नारायणो निजमुक्तिपदप्रदानाद्यर्थं वासुदेवादिचतुर्व्यूहो बभूव । ततः कालान्तरे प्रयोजनान्तरार्थं दशद्वादशादिव्यूहो जातः । सेयं शुद्धसृष्टिरिति पाञ्चरात्रिकैरभिधीयते । तदपेक्षया चतुर्व्यूहवर्णनं कथं नामानुपपन्नमिति ॥ एवमधिकारिविशेषाराधनार्थमियमुक्तिर्युक्तैव । यथोक्तम् 'एकमूर्तिश्चतुर्मूर्तिरथवा पञ्चमूर्तिकः । द्वादशादिप्रभेदो वा पूज्यते सज्जनैर्हरिरि'ति ।

शे०— नन्वेवं जीवाद्यभिमानितया जीवादिशब्दवाच्यानां शेषादीनामेव वासुदेवादिभ्यः प्रादुर्भावरूपजनिमात्रस्यैव वासुदेवात्सङ्कर्षणो नाम जीवो जायत इत्यादिपञ्चरात्रार्थतया जीवादिमात्रस्य तदुत्पत्तेरतदर्थतया कथं तदाश्रयणेन 'किमत्र जीवोत्पत्तिप्रतिपादनमात्रं पञ्चरात्राप्रामाण्ये हेतुः उत अभूतभवनरूपजीवोत्पत्तिप्रतिपादनमि'ति विकल्पितपक्षद्वयदूषणपर 'उत्पत्तिर्ज्ञोऽत इत्यपीहैवोक्ता । न चाभूतभावस्तत्रापि कथ्यत' इति पूर्वः परिहार इत्यतस्तस्य जीवादिशब्दानां यथाश्रुतार्थाभ्युपगमवादेन प्रवृत्तेः

नानुपपत्तिरित्याह **अत एवेति** । जीवाद्यभिमानितया जीवादिशब्दवाच्यानां शेषादीनामेव सङ्कर्षणादिशब्दवाच्यत्वस्य तत एव तेषां वासुदेवादिभ्यः प्रादुर्भावस्यैवात्रोच्यमानत्वादेवेत्यर्थः ॥ **अभ्युपगमेति** । सर्वजीवादीनां वासुदेवादिभ्य उत्पत्तिमात्रस्य पञ्चरात्रार्थत्वस्यावास्तवत्वादिति भावः । एवं तर्हि दुःखादिकमप्यङ्गीकर्तव्यं स्यादित्यत उक्तं **यत्प्रमितमिति** । कालविशेष इत्याद्युक्तमेवोपपादयति **आदिकाल इत्यादिना** । मुक्तिपदप्रदानाद्यर्थमित्यादिपदेन संहारसृष्टिस्थितीनां ग्रहणम् । प्रयोजनान्तरमप्याह **एवमधिकारीति** । यद्वा कालविशेष इत्यस्योपपादनमादिकाल इति । प्रयोजनविशेषे चेत्युपपादयति **एवमधिकारीति** । मुक्तपदप्रदानाद्यर्थमित्यादिना प्रयोजनोक्तावपि व्यूहप्रयोजनमेतदेवेति भावः ।

**स०**— प्रयोजनविशेषे चेत्येतदुपपादयति **एवमधिकारीति** । मुक्तिप्रदानार्थक्रियादिप्रयोजनोक्तावपि व्यूहप्रयोजनमेतदेवेति ध्येयम् ॥ २-२-१२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितानुव्याख्यानस्य टीकायाः
श्रीमज्जयतीर्थमुनिप्रणीतायाः श्रीमन्न्यायसुधायाः टिप्पणिकायां विवृत्याख्यायां
श्रीविद्याधीशतीर्थपूज्यपादशिष्येण श्रीसत्यतत्त्वतीर्थभिक्षुणा कृतायां
द्वितीयाध्यायस्य द्वितीय पादः ॥

---

**प०**— **अत एवेति** । जीवादिशब्दानां तदभिमानि(नि)स्वातन्त्र्यरूपनिमित्तेन मुख्यत्वादेव **पूर्वः** उत्पत्तिर्नोक्त इत्यपीत्यादिना पूर्वोक्तार्थोऽभ्युपगमवाद इत्यर्थः । अत एवेत्यस्य जनिपदेनोत्पत्तेः प्रादुर्भावरूपत्वकथनादेवेत्यर्थ इत्येके । **भगवदंशत्वादिति** । भगवदंशाविष्टत्वादित्यर्थः । नन्वत्रोक्तमित्यस्य इत्यत इत्यत्रत्येतिपदेनान्वयः । **तदप्रतिषेध इति** । तस्योत्पत्त्यसंभवदोषस्याप्रतिषेध इत्यर्थः । कुत इत्यत उक्तम् **हरेरिति** । कालविशेषे चेत्याद्युक्तं व्यनक्ति **अनभिज्ञ इति** ॥ **मुक्ति(पद)प्रदानाद्यर्थमिति** । मुक्तिप्रदानविश्वसंहरणविश्वसर्जनविश्वपालनार्थं क्रमाद्वासुदेवसंकर्षणप्रद्युम्नानिरुद्धनामकचतुर्मूर्त्यात्मको व्यूहो बभूवेत्यर्थः । चतुर्व्यूहाद्युक्तेः फलान्तरमाह **एवमधिकारीति** ॥ **यथोक्तमिति** । नवमे गीतातात्पर्ये उक्तमित्यर्थः ।

**या०**— देहयोगेन प्रादुर्भावरूपजनेः सर्वजीवसाधारण्यात्पूर्वव्याख्यानमस्माकं सम्मतमेवातः कथमङ्गीकारवादेनाहेयुक्तमित्यत आह **अत एवेति** । जीवविशेषाणां शेषादीनां जीवाद्यभिमानितया जीवादिशब्दवाच्यानां सङ्कर्षणादिशब्दवाच्यत्वादेवेत्यर्थः । **अभ्युपगमेति** । सर्वजीवादीनां वस्तुगत्या

सङ्कर्षणादिशब्दवाच्यताऽभावादिति भावः । अन्यथाऽभ्युपगमवादत्वाभावे सकलजीवादीनां सङ्कर्षणादिनामकत्वमप्रामाणिकमेवाङ्गीकार्यं स्यादिति ध्येयम् । भगवदंशवादित्यत्र भगवतोंऽशो येषामिति बहुव्रीहिः । **मुक्तिपदप्रदानाद्यर्थमिति ।** अत्रादिपदेन संहारसृष्टिस्थितयो ग्राह्याः । प्रयोजनान्तरमप्याह **एवमधिकारीति ।**

**श्री० — अत एवेति ।** अत्र जायत इत्यस्य प्रादुर्भावरूपजनिरूपार्थकथनादेव । 'उत्पत्तिर्योऽन इत्यपी'त्यनेन यो जायत इत्यस्योत्पत्तिरूपार्थमङ्गीकृत्य व्याख्यानरूपप्रकारः सोऽभ्युपगमवादेनेति ज्ञायत इत्यर्थः । अत एव पूर्वमेनद्वाक्यलाभनिकासम्भयेऽङ्गीकारवादेनाहेयुक्तम् । तथैव जीवादिपदानां यथाश्रुतार्थाभ्युपगमेन परिहारोऽभिहित इति चोक्तम् । **इयमुक्तिः** चतुर्व्यूहत्वोक्तिः ॥

**सु० — अर्थान्तरकथनस्य प्रयोजनमाह** अन्यथेति ।

**अनु० —** अन्यथाऽनूद्य कथं दुष्टत्वमुच्यते ॥

**एवमर्थान्तरविवक्षया प्रयुक्तस्य वाक्यस्यान्यथानुवादं विधाय दूषणाभिधानं कथं क्रियते । छलप्रलङ्गादिति । न च जीवादिशब्दानामनुपपत्तिः । भगवत एव मुख्यतः प्राणधारणादिमतस्तदर्थत्वात् यच्च** विप्रतिषेधाच्चेति **सूत्रार्थतया कल्पितं परस्परव्याघातोऽस्ति पञ्चरात्र इति । तदपि नित्याचिन्त्योरुशक्तित इत्यनेनैव परिहृतम् । भगवच्छक्त्यैव गुणगुण्यादिव्यवहारोपपत्तिरिति । समर्थितश्च भेदपदेऽभिषिक्तः प्रमितसर्वनिर्वाहहेतुर्विशेषः ।**

**शे० — समर्थितश्चेति ।** 'येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् । भावाभावविभागेन यं विना न कथञ्चन । एतादृशे विशेषेऽस्मिन्को द्वेषो वादिनां भवेत्' । इत्यादिनाऽस्मिन्नेव पादे वैशेषिकाधिकरणे तत्र तत्र जन्मादिसूत्रादिषु चेति शेषः । ततश्च विशेषबलादपि गुणगुण्यादिव्यवहारोपपत्तिरिति भावः ।

**प० — समर्थितश्चेति ।** वैशेषिकनये आनन्दमयनयादौ च तत्र तत्रेति भावः ॥

**श्री० — अर्थान्तरेति ।** शेषादिजीवानां देहादौ प्रादुर्भावविवक्षया तथा हरेश्च प्रादुर्भावविवक्षया प्रयुक्तस्य वासुदेवात्सङ्कर्षणो नाम जीवो जायत इत्यादिवाक्यस्येत्यर्थः ॥ **अन्यथाऽनुवादमिति ।** अभूत्वाभवनरूपोत्पत्तिप्रतिपादकत्वरूपार्थान्तरं कल्पयित्वोत्पत्त्यसंभवादिति पञ्चरात्रदूषणं कथं क्रियते छलत्वादित्यर्थः । **भेदपदं** भेदस्थानम् ।

सु०— यदप्युक्तं शाण्डिल्यवृत्तान्तकथने पञ्चरात्रस्य वेदविद्वेषः प्रतीयत इति । तत् निराकरोति यदीति ।

अनु० — यदि विद्याच्चतुर्वेदानितिवद्वेदपूरणम् ॥
पञ्चरात्रादिति कुतो द्वेषः शाण्डिल्यवर्तने ॥

'यदि विद्याच्चतुर्वेदान्साङ्गोपनिषदान्द्विजः । न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षण' इत्यत्र वाक्ये यथेतिहासपुराणादितो वेदपूरणमभिप्रेयते । तथाऽत्रापि पञ्चरात्राद्वेदपूरणमेवाभिप्रेतं इति व्याख्याने सति, शाण्डिल्यवर्तनेऽभिधीयमाने पञ्चरात्रस्य वेदविद्वेषः प्रतीयत इति कुतः । न प्रतीयत इत्यर्थः । यद्वैवं वाक्यद्वये समाने सति शाण्डिल्यवर्तनाभिधायिन्येव वाक्ये भवतो द्वेषः कुतो येन यदि विद्यादित्येतदितिहासपुराणयोर्वेदपूरकत्वाभिप्रायमादाय 'भगवान् शाण्डिल्य' इत्यादिकं पञ्चरात्रस्य वेदविरोधित्वाभिप्रायमिति व्याख्यायत इति ।

अयमत्रोत्तरक्रमः । यद्येतद्वाक्यबलात्पञ्चरात्रस्य वेदविरोधित्वं कल्प्यते । तदा यदि विद्यादिति वाक्यबलादितिहासपुराणयोरपि तत्कल्प्यतां विशेषाभावात् (मविशेषात्) । अथ तत्र इतिहासादेर्वेदपूरकत्वमभिप्रायः । अत्रापि स एव कल्प्यताम् । विशेषाभावात् । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेदि'त्युत्तरवा(क्यविरो)क्यानुरोधात्तथा कल्पनं युक्तमिति चेत् । अत्रापि 'वेदार्थपूरकं ज्ञेय पञ्चरात्रमि'त्यादिवाक्यानुरोधात्तथा कल्पनमिति न कश्चिद्विशेषः अन्यत्र विद्वेषादिति परमसंहितावाक्यमप्येवमेव व्याख्यातव्यम् ।

शे० वेदपुराणमिति । वेदमहातात्पर्यविषयीभूतात्मनिर्णय इत्यर्थः । ननु 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेदि'त्युत्तरवाक्यानुरोधेनेतिहासादेर्वेदपूरकत्वाभिप्रायेण व्याख्यानं युक्तम् । पञ्चरात्रस्य तु वेदपूरकत्वाभिप्रायेण व्याख्याने न किञ्चिन्नियामकमिति नियामकभावाभावाभ्यां विशेषान्न तत्प्रतिबन्दीग्रह इत्यतो मूले इतिवदित्यंशसूचितमविशेषमाकाङ्क्षाक्रमेणोपपादयितुमाह **अयमत्रेति** ॥ **परमसंहितावाक्यमपीति** । 'अधीता भगवन्वेदाः साङ्गोपाङ्गा' इत्यादिप्रागुदाहृतं वाक्यमपीत्यर्थः ॥ **एवमेवेति** । वेदपूरकत्वेनैवेत्यर्थः ।

प० **वेदपूरणमिति** । तदनुसारेण वेदार्थवर्णनमित्यर्थः ॥ **वाक्यद्वय इति** । यदि विद्यादिति भगवांछाण्डिल्य इति वाक्यद्वय इत्यर्थः ॥ **परमसंहितावाक्यमपीति** । अधीता भगवन्वेदा इत्यादिवाक्यमपि वेदपूरकत्वाभिप्रायं व्याख्येयमित्यर्थः ।

या०— **वेदपूरणमिति** । वेदमहातात्पर्यविषयीभूतार्थनिर्णय इत्यर्थः ॥ **परमसंहितावाक्यमपीति** । 'अधीता भगवन्वेदा' इत्यादिवाक्यमपि वेदपूरकत्वाभिप्रायेणैव व्याख्यातव्यमित्यर्थः ।

**श्री०— शाण्डिल्यवर्तने** वृत्तान्ते पञ्चरात्रेणाभिधीयमाने कथिते सतीत्यर्थः । **वाक्यद्वये** यदि विद्यादिति, भगवान् शाण्डिल्य इति वाक्यद्वय इत्यर्थः । **तथा** वेदार्थपूर्वकत्वम् । एवमुत्तरत्र । **अन्यत्र** अन्यः ।

**सु०— अपव्याख्याननिराकरणमुपसंहरति** अतः परमेति ।

**अनु०—** अतः परमशास्त्रोरुद्वेषादुदितमासुरैः ॥
दूषणं पञ्चरात्रस्य वीक्षायामपि न क्षमम् ॥

वीक्षायामपि न क्षमं **व्यधिकरणमित्यर्थः । तर्हि कस्मादुदितमित्यत उक्तं** परमेति । परमशास्त्रं **पञ्चरात्रम् । द्वेष एव किं निबन्धन इत्यत उक्तं** आसुरैरिति । **भागवतशास्त्रे हि स्वाभाविक एव हि विद्वेषोऽसुराणाम् । न तु दोषदर्शननिमित्तः । एते चासुरसंबन्धिनस्तत्स्वभावाश्च वृत्तिकाराः । आसुरैरेवोक्तं न तु सूत्रकारेणेत्यनेन तस्मान्नायं सूत्रार्थः, किन्तु शाक्तमतनिरास एवेत्युक्तं भवति ।**

**शे० —** सर्वेषां वृत्तिकाराणामसुरस्वभावत्वरूपासुरत्वानुपपत्तेराह **एते चेति** । एते च वृत्तिकाराः केचिदसुरसंबन्धिनः केचित्तत्स्वभावाश्चेति योजना । तत्र सङ्करादयोऽसुरस्वभावा इतरे तत्संबन्धिन इति विवेकः ।

**प०—** आसुरैरित्यत्राण्प्रत्ययार्थमाह । **एते चासुरसंबन्धिन इति** । एते भाष्यकाराः भास्कराद्य इत्यर्थः। वृत्तिकारैरप्येवमेव वर्णितमिति तदनुसारि भाष्यादिकमित्यत आह **तत्स्वभावाश्च वृत्तिकारा इति** । यद्वा एतेच वृत्तिकाराः सूत्रार्थवर्णनकृतोऽसुरसंबन्धिनोऽसुरस्वभावाश्चेति समानाधिकरणं व्याख्येयम् ।

**या०— एते चासुरसंबन्धिन इति** । एते च वृत्तिकारा इत्यन्वयः । असुरसंबन्धिन इत्यादिना तस्येदमित्यर्थे वा तत्र भवतीत्यर्थे वाऽयं तद्धितो व्याख्यात इति ज्ञातव्यम् । सङ्करादीनामसुरस्वभावत्वमितरेषां तत्संबन्धित्वमिति विवेकः ।

**सु०— एतेनैतदपि प्रत्युक्तम्** । **यत्केचिदिदमधिकरणं सांख्यादिवत्पञ्चरात्रस्याप्यप्रामाण्यमाशङ्क्य तन्निरासार्थमिति वर्णयन्ति । तथा हि । उक्तरीत्या** 'उत्पत्त्यसंभवात्' 'न च कर्तुः करणम्' **इति सूत्रद्वयेन पञ्चरात्राप्रामाण्यं पूर्वपक्षयित्वा** विज्ञानादिभावे वा तदप्रतिषेध इति **सिद्धान्तितम् । वाशब्दात्पक्षो विपरिवर्तते । विज्ञानं चादि चेति परंब्रह्म विज्ञानादि, सङ्कर्षणप्रद्युम्नानिरुद्धानामपि परब्रह्मभावे सति तत्प्रतिपादकस्य तस्य शास्त्रस्य प्रामाण्यं न प्रतिषिध्यते ।** विप्रतिषेधाच्च **प्रतिषिद्धा हि जीवोत्पत्तिरस्मिन्नपि तन्त्रे । यथोक्तं परमसंहितायाम् ।**

'अचेतना परार्था च नित्या सततविक्रिया । त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते । प्राप्ति रूपेण संबन्धस्तस्याश्च पुरुषस्य च । स ह्यनादिरनन्तश्च परमार्थेन निश्चित' इति (इति)।

पञ्चरात्राप्रामाण्यशङ्कायां प्राप्तायामेव हि तन्निरासाय प्रयासः सार्थकः स्यात् । न च व्यधिकरणानि दूषणानि तच्छङ्कां प्रापयितुमीशते । न हि छलोत्तराण्येतावदधिकरणं प्रयोजयन्ति । अतिप्रसङ्गात । प्रकरणाननुगुणं चैतत् । परमतनिरासो ह्यत्र प्रकृतो न तु स्वमतसमर्थनम् । कृतं च तत् 'न विलक्षणत्वादि'त्यादिना । सूत्राक्षराननुरूपं चैतद्व्याख्यानम् । न ह्यत्र विज्ञानादिपदं ब्रह्मणि क्वचित्प्रयुक्तम् । तदप्रतिषेध इति च व्यर्थम् । न प्राज्ञत्वादित्येव वक्तव्यम् । लघु चैवं सूत्रं व्यक्तं च स्यात् ॥ तस्मादुक्त एव सूत्रार्थ इति स्थितम् ।

**शे०** — उक्तदूषणातिदेशेन रामानुजमतमपि निरस्तमित्याह **एतेनेति ॥ तत्प्रतिपादनस्येति** । तत्प्रतिपादकस्येत्यर्थः । न च संकर्षणादिषु जीवादिशब्दानामनुपपत्तिः । तेषां जीवाद्यधिष्ठातृत्वेन तदुपपत्तेः ॥ **वाशब्दादिति** । 'अपि वा कर्तृसामान्यादि'त्यादौ तद्दर्शनादिति भावः । इतीत्यस्य वर्णयन्तीति पूर्वेणान्वयः । अनभिप्रेतार्थान्तरं कल्पयित्वा छलेन सूत्रे पूर्वपक्षोक्त्ययोगमुपपाद्य परमतनिरासकेऽस्मिन्पादे स्वमतसमर्थनस्यासङ्गतत्वात् । तत्परत्वेऽस्याधिकरणस्य पादान्तर्भावासंभवात्तदसङ्गतिश्चेत्यत आह **प्रकरणेति ॥ कृतं चेति** । ततश्च तेन गतार्थत्वमिति भावः । विज्ञानादिशब्देन ब्रह्मोक्तिश्च क्लिष्टेत्याशयेनाह **सूत्राक्षरेति** । **उक्त एवेति** । शाक्तमतनिरास एवेत्यर्थः ।

**प०** — **केचिदिति** । रामानुजीयाः ॥ **विपरिवर्तत इति** । प्राक्सूत्रद्वयोक्तात्पक्षादयं पक्षस्तद्विपरीत इति द्योत्यत इत्यर्थः ॥ **विज्ञानं चादि चेतीति** । विज्ञानरूपं जगदादिभूतं च भवतीति । परब्रह्मविज्ञानादिशब्देन गृह्यत इत्याह **परं ब्रह्मविज्ञानादिति** । सूत्रार्थमाह **सङ्कर्षणेति ॥ तदिति** । तस्य प्रतिपादनं यस्मिन् तस्य शास्त्रस्येत्यर्थः । निश्चित इत्यत्रेतिशब्दद्वयपाठः स्वरसः । तस्य इति केचिद्वर्णयन्तीत्यन्वयः । एतेनेत्युक्तं व्यनक्ति **पञ्चरात्रेति** । **व्यधिकरणानीति** । अनभिप्रेतार्थविषयाणीत्यर्थः ॥ **अतिप्रसङ्गादिति** । पूर्वमतेष्वपि तदनभिप्रेतार्थदूषणोक्तिपराणि तदुद्धारार्थानि कानिचित्कर्तव्यानि स्युरित्येवमतिप्रसङ्गादित्यर्थः । क्वापि पंचरात्रप्रामाण्यसमर्थनस्याकृतत्वादिह क्रियत इत्यत आह **कृतं च तदिति** ।

**या०** — रामानुजीयानां व्याख्यानमप्यत्र निरस्तमिति दर्शयति **एतेनैतदपीति** । तत्प्रतिपादनस्येत्यत्र बहुव्रीहिः । **अत्रेति** । एतन्मीमांसाशास्त्र इत्यर्थः ॥ **इत्येव वक्तव्यमिति** । प्राज्ञपदं च 'वदतीति चेत्' 'तद्गुणसारत्वादि'त्यत्र ब्रह्मणि प्रयुक्तमित्यर्थः ।

**श्री०— केचित्** रामानुजाः । **उक्तरीत्या** मायावाद्युक्तरीत्या ॥ **पक्ष इति** । **पक्षः** पूर्वपक्षो विपरिवर्तत इत्यर्थः । **प्रतिपादनस्य** प्रतिपादकस्य ॥ **अस्मिन्नपि तन्त्र इति** । पञ्चरात्र इत्यर्थः । तथा च वासुदेवादिति वाक्यं यदि जीवोत्पत्त्यभिधायकं स्यात्तदैव परस्परविरुद्धत्वात्पञ्चरात्रमप्रमाणं स्यान्न चैवं, किन्नाम तद्वाक्यं विज्ञानादिशब्दवाच्यपरब्रह्मप्रतिपादकमित्यर्थः । **सम्बन्धो** भवतीति शेषः । **स हि** पुरुषशब्दवाच्यो जीवः । एतेनेत्युक्तं विशदयति **पञ्चरात्राप्रामाण्यशङ्कायामित्यादिना । तच्छङ्कां** पञ्चरात्राप्रामाण्यशङ्काम् । **एतावदधिकरणम्** एतावत्सूत्रोपेताधिकरणम् । **एतत्** पञ्चरात्रप्रामाण्यसमर्थनम् । **अत्र** अस्मिन्पादे । **न प्राज्ञत्वादिति** । वासुदेवादिति पञ्चरात्रवाक्यमप्रमाणं **न,** कुतः । प्राज्ञत्वात् । प्राज्ञस्य भगवतोऽत्र प्रतिपाद्यतयाऽङ्गीकारादित्येव सूत्रं स्यादित्यर्थः । **प्राज्ञपदं च ब्रह्मणि** अत्र शास्त्रे 'वदतीति चेन्न प्राज्ञो हि' 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदि'ति **प्रयुक्तमस्तीति 'न प्राज्ञत्वा'दित्युक्ते 'न ह्यत्रे'त्युक्तदूषणावकाशो नेत्यर्थः ।**

**सु०— पादार्थमुपसंहरति** अतोऽशेषेति ।

**अनु०**— अतोऽशेषजगद्धाता निर्दोषोरुगुणार्णवः ॥
नारायणः श्रुतिगणतात्पर्यादवसीयते ॥

**सांख्यादिविरोधिसमयानां निरस्तत्वात्प्रथमाध्याये यत्सकलश्रुतिसमन्वयेन भगवतो लक्षणद्वयं साधितं तन्निर्णीतमेवेत्यर्थः** ।

प०— स्वपक्षस्यात्र पादेऽसमर्थनात्तदुपसंहारः कथमित्यतोऽभिप्रायमाह **सांख्यादीति** ॥ **लक्षणद्वयमिति** । जगज्जन्मादिहेतुत्वगुणपरिपूर्णत्वरूपं जन्मादिसूत्रब्रह्मपदाभ्यामुक्तमित्यर्थः ।

**सु०— स्यादेतत् । 'न निगृह्य कथां कुर्यादि'त्यादिस्मृतिनिषिद्धं परनिराकरणमिदं न कार्यमेव । तत्कुतः सांख्यादिनिराकरणं कृतमिति चेन्न । अस्य निषेधस्य सद्विषयत्वात् । कुतः सङ्कोच इति चेत् । श्रुतिस्मृत्योः श्रुतेर्बलवत्त्वात् । श्रुतौ च परनिराकरणस्य कर्तव्यतया अवगतत्वादित्याशयवान् 'अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायां रताः ॥ विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति मन्त्रद्वयमर्थतोऽनुवदति** अन्धमिति ।

**अनु०**— अन्धन्तमः प्रविशन्ति ये त्वविद्यामुपासते ॥
ततो भूय इवायान्ति एतस्या नैव निन्दकाः ॥

ततो विद्यामविद्यां च यो जानात्युभयं सह ॥
दोषज्ञानादतीत्यैतां विद्ययाऽमृतमश्नुते ॥ २-२-१२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
द्वितीयाध्यायस्य द्वितीयः पादः ॥ २-२ ॥

अविद्याम् **अविद्याकल्पितमविद्यमानार्थम्** । आयान्ति **तमः** । **इवशब्दः किञ्चिदर्थः** । **उशब्दोऽवधारणार्थः** । **ये केवलं विद्यायामेव रता इत्युक्त्या लब्धस्यार्थस्य कथनम्** एतस्या नैव निन्दका इति । **अन्यथा विद्ययाऽमृतमश्नुत इत्यनेन विरोधः स्यात्** । ततः **अविद्यानिराकरणाभावे दोषसद्भावात् । सहेति समुच्चयनियमं द्योतयति** । दोषज्ञानादतीत्यैताम् **इत्यनेन** अविद्यया **दुष्टत्वेन ज्ञातया** मृत्युं **तामेवाविद्यां तत्कार्यं** दुःखादिकं चातीत्य तीर्त्वा **इत्यर्थो ज्ञायते** ।

**यद्यपि तत्त्वज्ञानं न स्वपक्षप्रमाणमात्रेण भवति, यावत्परपक्षप्रमाणं न निराक्रियते । सत्प्रतिपक्षस्य प्रमाणस्य निर्णयानङ्गत्वात् । अतस्तत्त्वज्ञानं कामयमानेनावश्यं स्वपक्षसाधनमिव परपक्षनिरासोऽपि विधेय एवेत्युपपत्तिसिद्धोऽयमर्थः । तथाऽप्यागमावष्टम्भेन प्रत्यवतिष्ठमानस्तथैव बोधनीय इत्याशयवता मन्त्रावुदाहृताविति सर्वमनवद्यम् ॥ २-२-१२ ॥**

**इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना । कृतायां टीकायां विषमपदवाक्यार्थविवृतौ द्वितीयेऽध्यायेऽयं समयचरणः पर्यवसितः ॥२-२॥**

---

**शे०** - **श्रुतेर्बलवत्त्वादिति** । 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि'ति न्याया**दिति** भावः । अविद्याया उपास्यत्वानुपपत्तेर्विषयिवाचकमविद्यापदं तद्विषयस्यान्यथाकारस्य लक्षकमित्यभिप्रेत्याविद्यापदं व्याचष्टे **अविद्यामविद्याकल्पितमित्यादिना** ॥ **किञ्चिदर्थ इति** । 'ततो भूय इव व्यक्तमि'ति तद्भाष्यानुरोधाद्व्यक्तत्वार्थक इत्यर्थः । उशब्दस्य विद्याया मित्यनेन संबन्ध इत्यभिप्रेत्याह **विद्यायामेवेति** । यथार्थज्ञान एवेत्यर्थः । **उक्त्या लब्धस्येति** । विद्यायां यथार्थज्ञान एव रता इत्यनेन न त्वन्यथाज्ञानिनिन्दां कुर्वन्तीत्यस्यार्थतो लब्धत्वादिति भावः ॥ **कथनमिति** । ततश्च 'एतस्या नैव निन्दका' इति भाष्यांशस्य पदार्थकथनरूपत्वाभावेऽपि तदार्थिकार्थकथनरूपत्वात्पूर्वोक्तमर्थतः श्रुत्यनुवादित्वमक्षतमिति भावः । पदार्थमनभिधाय लब्धार्थस्यैव कथने को हेतुरित्यत आह **अन्यथेति** । लब्धार्थाकथन इत्यर्थः ॥ **विरोधः स्यादिति** । अत्र ततो भूय एव ते तम इत्यनेन विद्याया एवाधिकतम प्राप्तिफलकत्वप्राप्तेरिति भावः । लब्धार्थकथने त्वन्यथाज्ञान्यनिन्दाया एवाधिकतमःप्राप्तिफलकत्वप्राप्तावपि मोक्षफलकतया वाक्यशेषावधारितविद्यायास्तदप्राप्तेर्न विरोध इति हृदयम् ॥ **दोषेति** । अधिकतमःप्राप्तिलक्षणेत्यर्थः ॥ **समुच्चयनियममिति** । मोक्षफलस्यांशत उभयसाध्यत्वमित्यर्थः ।

**दोषज्ञानादतीत्यैता मित्यनेना**विद्याया दुष्टत्वेन ज्ञानादविद्यातरणमात्रं भातीत्युच्यते । तत् दुःखाज्ञानादिरूपमृत्युतरणसाधनत्वप्रतिपादकतद्भाष्योदाहृतप्रमाणविरुद्धमित्यतः तत्प्रमाणानुरोधेन दोषज्ञानादतीत्यैतामित्येतद्व्याचष्टे **अविद्येति** ॥ **अगमर्थ इति** । स्मृतेः सद्विषयत्वेन सङ्कोचकर्तव्यतारूपोऽर्थ इत्यर्थः ॥ **आगमावष्टम्भेनेति** । 'न निगृह्य कथां कुर्यादि'ति स्मृत्यवष्टम्भेनेत्यर्थः ॥ **तथैवेति** । आगमावष्टम्भेनेत्यर्थः ॥ २-२-१२ ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥ १ ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां
श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्यस्य केशवस्य कृतौ
श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां
द्वितीयाध्यायस्य द्वितीयपादः समाप्तः ॥ २-२ ॥

प० — **श्रुतिस्मृत्योरिति** । श्रुतिस्मृत्योर्मध्य इत्यर्थः । अविद्याकल्पितमित्यस्य विवरणम**विद्यमानार्थमिति** । आयांतीति मूलानुवाद तम इति शेषोक्तिः ॥ **इवशब्द इति** । श्रुतिगत इति ज्ञेयम् । किंचिदित्यर्थ इत्युक्तं तदाह **केवलमिति** ॥ **अन्यथेति** । एवमर्थाननुवर्णने विद्यारतेरनर्थवर्णन इत्यर्थः । तत इति मूलपदानुवादः । अविद्येत्यादि व्याख्या ॥ **उपपत्तिसिद्ध इति** । तत्वनिर्णयान्यथानुपपत्तिरूपोपपत्तिसिद्धोयमर्थः । परपक्षनिरासो विधेय इत्येवार्थः ॥ **आगमेति** । 'न निगृह्य कथां कुर्यादि'त्यागमावष्टंभेनेत्यर्थः ॥ **तथैवेति** । आगमावष्टम्भेनव बोधनीय इत्यर्थः ॥ २-२-१२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचितब्रह्मसूत्रानुव्याख्यानटीकायाः
न्यायसुधायाः टिप्पण्यां परिमळाख्यायां
द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ २ ॥

या० — अविद्याया उपास्यत्वाभावादाह **अविद्याकल्पितमिति** । एवं विद्याशब्दोऽपि तद्विषयीभूतयथावस्थितहरिसर्वोत्तमत्वादिपरो ज्ञातव्यः ॥ **अन्यथेति** । लब्धार्थाप्रदर्शन इत्यर्थः ॥ **उपपत्तिसिद्धोऽयमिति** । स्मृतेः सद्विषयत्वेन सङ्कोचः कर्तव्य इत्ययमर्थ इत्यर्थः ॥ २-२-१२ ॥

वेदेशगुरुसच्छिक्षाशाणे निशितया धिया ॥
विचार्याभिहितोऽर्थोऽत्र तेन तुष्यन्तु सज्जनाः ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्ययदुपतिना विरचितायां सुधाटिप्पण्यां
द्वितीयाध्यायस्य द्वितीयः पादः ॥ २-२ ॥

श्री०— कृतं सूत्रकारेण ॥ **सद्विषयत्वादिति** । सज्जनान्निगृह्य बलात्कारेण निर्बन्धं कृत्वा तैः सह कथां न कुर्यादित्यर्थः॥ **इवशब्दः किञ्चिदर्थ इति** । किञ्चिद्भूय इत्यर्थः । नन्वविद्यमा-नोपासकापेक्षया विद्यायामेव रतानामन्यथोपासकनिन्दाऽकर्तृणामधिकं तमः कुतः । तदपेक्षयैषां दोषित्वा-भावादिति चेदुच्यते । विद्यायां रतत्वप्राप्त्याऽन्यथोपासकानामवश्यं निन्द्यत्वं ज्ञातमस्तीति प्राप्तम् । ज्ञात्वाऽपि निन्दाया अकरणे तदपेक्षया महान्दोषः । यथा सन्ध्यादेः कर्तव्यत्वविधिः शूद्रैः परित्यक्त-श्चेन्न तेषां तेन दोषः । तान्प्रति तद्विधेरप्राप्तत्वात् । ब्राह्मणैस्तु परित्यक्तश्चेत्तदपेक्षया भूयान्दोषो भवति । तान्प्रति तद्विधेः प्राप्तत्वेन प्राप्तपरित्यागित्वादिति भावः । यथोक्तं बृहदारण्यकभाष्ये एतच्छ्रुति-व्याख्यानसमये सप्तमाध्याये । 'अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवानि'त्यादि ॥ **अन्यथेति** । 'य उ विद्यायाश्रताः' इत्यस्य **एतस्या** नैव निन्दका' इति लब्धार्थाकथने, ये विद्यायामेव रतास्ते ततो भूय इव तमो विशन्तीत्येवार्थकथने, विद्याया अमृतसाधनत्वोक्तिविरोधः स्यात् । अतो 'विद्यायामेव रता' इत्यस्य **एतस्याः** अविद्याया नैव निन्दका इत्येव लब्धोऽर्थो वर्णनीय इत्यर्थः । ननूभयमित्यनेनैव विद्याऽविद्यासमुच्चयस्य लब्धत्वात्सहेति व्यर्थमत आह **सहेतीति** । **अयमर्थः** । 'न निगृह्येति' स्मृतेः सद्विषयकत्वेन सङ्कोचरूपोऽर्थ इत्यर्थः । तथा च तत्त्वज्ञानस्य स्वपक्षसाधनेन तद्विरोधिभूतपर-पक्षनिराकरणेन च जायमानत्वात् । सतां परत्वाभावात्तैः साकं कथां कृत्वा तन्निरासः किमिति कार्यः, अतो ये विरोधिनस्तत्पक्ष एव बलान्निराकार्यः अन्यथा तत्त्वज्ञानानुपपत्तेरित्युपपत्त्योक्तरूपः सङ्कोचः कार्य इति सिद्धत्वान्मन्त्रद्वयोदाहरणं व्यर्थमिति भावः । **आगमेति** । 'न निगृह्य कथां कुर्यादि'त्यागम इत्यर्थः । **प्रत्यवतिष्ठमानः** । स्यादेतदित्यादिना शङ्कमानः । **तथैव** आगमावष्टम्भेनैव बोधनीय इत्यर्थ इत्यशेषमनवद्यम् ॥ २-२-१२ ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते
टीकाऽगृहीतसुधावाक्यार्थविवरणे द्वितीयाध्यायस्य द्वितीयः पादः ॥ २-२ ॥

**॥ इति द्वितीयाध्यायस्य द्वितीयः पादः ॥**

श्रीकृष्णार्पणमस्तु ॥



श्रीमन् जयतीर्थ(टीकाकृत्पादाचार्य)विरचिता

# श्रीमन्-न्यायसुधा

षट्टिप्पणीसमेता

## अथ द्वितीयाध्यायस्य तृतीयः पादः

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

## ॥ अथ वियदधिकरणम् ॥

सु० — 'न वियदश्रुतेरि'त्यादि पादप्रतिपाद्यं ससङ्गतिकं दर्शयति अथेति ।

अनु० — अथाशेषसमाम्नायविरोधापाकृतिं प्रभुः ।

करिष्यन्नधिदैवाधिभूतजीवपरात्मनाम् ॥

प्रभुः सूत्रकारः, अनेन व्याचिख्यासिततया बुद्धिसन्निहितेन तृतीयेन पादेन वैदिकानां वचनानां परस्परं अविरोधं विरोधाभावं, दर्शयतीति प्रतिपाद्यकथनम् । अन्तर्भावलक्षणां सङ्गतिं दर्शयितुमुक्तम् अशेषेति । अशेषाश्च ते समाम्नायविरोधाश्चेति विग्रहः । करिष्यन् इत्यध्यायोपक्रमसमयापेक्षया । सूत्रकृता खलु सर्वानपि वेदविरोधान्परिहर्तुं द्वितीयोऽयमध्याय आरब्धः । वैदिकानां वचनानां परस्परविरोधोऽपि तदन्तर्भूत एवेत्यतस्तदपाकरणमिह सङ्गतमेवेति । आनन्तर्यलक्षणां सङ्गतिं दर्शयितुमथेत्युक्तम् । अवसरप्राप्तौ प्राधान्याद्युक्तिविरोधपरिहारस्य प्राथम्ये तत्प्रपञ्चात्मकत्वेन समयविरोधपरिहारस्य तदानन्तर्ये सति श्रुतीनां परस्परविरोधपरिहारस्य भवत्ययमवसर इति ।

नन्वेवं तर्ह्यस्य पादस्य चतुर्थपादाद्भेदो न स्यात् । तत्रापि वेदवचसां परस्परविरोधस्य अपाक्रियमाणत्वादित्यत उक्तम् अधिदैवेति । अधिदैवानि अव्यक्ताद्यभिमानिदेवताः । अधिभूतानि कार्यकारणोपेतानि वियदादिभूतानि ।

शे० — अथेत्यादिभाष्यानर्थक्यमाशङ्क्य पादप्रतिपाद्यसङ्गत्योरन्यतरमात्रप्रदर्शकत्वानुपपत्तेः उभयोपदर्शकतामाश्रित्य तत्सार्थक्यमाह नेति ॥ पादप्रतिपाद्यमिति । पूर्वोत्तरपादाभ्यां भेदस्य स्वस्मिन्नैकवाक्यत्वस्य च सिद्धय इति शेषः ॥ ससङ्गतिकमिति । पादस्याध्यायस्य च या सङ्गतिस्तत्सहितमित्यर्थः । उभयप्रदर्शकत्वमपि न सर्वस्य किन्त्वंशभेदेनेत्यभिप्रेत्य तद्विवरणपूर्वकमंशभेदेन तदाह प्रभुरित्यादिना । तृतीयपादस्य पूर्वत्राप्रकृतत्वात्प्रकृतपरामर्शिना इदंशब्देन तत्परामर्शानुपपत्तिमाशङ्क्य न ग्रन्थप्रकृतत्वमेव प्रकृतत्वं किन्तु बुद्धिप्रकृतत्वमेव । ग्रन्थप्रकृतत्वं तु तल्लिङ्गमेव । ततश्च तृतीयपादस्य बुद्धिप्रकृतत्वाद्युक्तः तस्येदंशब्देन परामर्श इत्यभिप्रेत्य तदुपपादयति व्याचिख्यासिततयेति। यद्यपि वचनानामित्यस्य न नञर्थेन संबन्धो घटते विरोधश्च समासे गुणभूतस्तथाऽपि बुद्ध्या विविक्तेन विरोधेन सम्बन्धो नानुपपन्न इत्याशयेनाह

**वचनानां परस्परमविरोध इति** । नञोऽभावाद्यनेकार्थत्वात् तावदर्थतायाश्च प्रकृतेऽयुक्तत्वादभिमतमर्थमाह **विरोधाभावमिति** । अत्र च नञ्विशिष्टेन विरोधपदेनाभावविशेषस्य लक्षणयोत्तरपदार्थप्राधान्यलाभात्तत्पुरुषत्वोपपत्तिः । यद्यपि क्वचिदुत्तरपदार्थप्राधान्येऽपि तत्पुरुषादर्शनात् असत्यप्युत्तरपदार्थप्राधान्ये तद्दर्शनाच्चस्योत्तरपदार्थप्राधान्यासिद्ध्या न लक्षणाश्रयणमर्थवत्तथाऽपि तस्यौत्सर्गिकतया क्वचिद्बाधकेनापवादेऽप्यन्यत्राविकलतया लक्षणाश्रयणस्यावश्यकत्वात् । वस्तुतस्तु तत्पुरुषमात्रस्य तदनियमेऽपि नञ्तत्पुरुषस्योत्तरपदार्थप्रधानताया भाष्यादिसिद्धत्वेनास्य च नञ्तत्पुरुषत्वेनोत्तरपदार्थप्राधान्यमावश्यकमेवेति लक्षणाश्रयणमर्थवत् । यदत्र वक्तव्यं तत् 'अविरोधोऽत्र साध्यत' इत्येतद्ग्रन्थव्याख्यानावसर एवोक्तमिति तत एव प्रतिपत्तव्यम् ॥ **अन्तर्भावेति** । अध्यायान्तर्भावेत्यर्थः । अशेषपदस्य समाम्नायविशेषणतायां विरोधे साकल्यालाभेन सकलविरोधपरिहारस्य द्वितीयाध्यायार्थत्वालाभ तल्लाभाय विरोधविशेषणतामाश्रित्य योजयति ॥ **अशेषाश्च त इत्यादिना** । तर्हि युक्तिसमयविरोधयोः पूर्वमपाकृतत्वेन भविष्यत्त्वासंभवात्करिष्यन्निति कथमत्राशेषसमाम्नायविरोधापाकृतेर्भविष्यत्त्वोक्तिरित्यतो भवेदेवं कथञ्चिद्यदि करिष्यन्नितीयं भविष्यत्त्वोक्तिः पादोपक्रमसमयापेक्षया स्यान्न चैवं किं तर्ह्यध्यायोपक्रमसमयापेक्षयैव । ततश्चाशेषविरोधापाकृतेः एतत्पादोपक्रमसमयापेक्षया भविष्यत्त्वाभावेऽप्यध्यायोपक्रमसमयापेक्षया भविष्यत्वान्नानुपपत्तिरित्याशयेनाह **करिष्यन्नितीति** । अन्तर्भावलक्षणां सङ्गतिमित्येतदेत्र प्रपञ्चयति **सूत्रकृतेति** ॥ **आनन्तर्येति** । पादद्वयानन्तर्येत्यर्थः ॥ **प्राधान्यादिति** । सर्वेषामपि विरोधानां युक्त्युपजीव्यत्वेन तद्विरोधस्य प्रबलत्वात्प्राधान्यमिति भावः ॥ **तत्प्रपञ्चात्मकत्वेनेति** । 'इतरेषां चानुपलब्धेरि'ति सामान्यतो निराकरणं समयानां कृतं विशेषतो निराकरोत्यस्मिन्पाद' इति भाष्योक्तेरिति भावः । अधिदैवेत्यत्र वृत्तिविषये गताद्यर्थे वर्तमानस्याधिशब्दस्य गतित्वाभावेऽपि प्रथमान्तेन दैवशब्देन कुगतिप्रादय इत्यत्र प्रादिग्रहणादधिगतानि दैवान्यधिदैवानीति प्रादिसमासः । योग्यतयाऽव्यक्तादीनां विषयतया संबन्ध इत्यभिप्रेत्य तत्तात्पर्यमाह **अव्यक्ताद्यभिमानिदेवता इति** । सम्मतश्चात्र प्रादिसमासो ग्रन्थकृतोऽत एव बहुवचनप्रयोगः । अधिभूतेत्यत्रापि अधिगतानि भूतानीति पूर्ववत्प्रादिसमासं योग्यतया कार्यकारणयं विषयतया सम्बन्धं चाभिप्रेत्य तत्तात्पर्यमाह **कार्यकारणोपेतानि वियदादिभूतानीति** ।

**प०** — अथेत्यादेः करिष्यन्नित्यन्तस्य ग्रन्थस्य साफल्यायाह **ससङ्गतिकमिति** । अविरोधाध्यायेऽन्तर्भावपूर्वपादानन्तर्यरूपाभ्यां सहितमित्यर्थः । अनेनेति व्याख्येयानुवादः । करिष्यन्निति भविष्यदर्थकलट्प्रयोगस्य साधुत्वायोक्तम् । **अध्यायोपक्रमेति** । **इहेति** । अविरोधाध्याये सङ्गतमेवेत्यर्थः । अथपदार्थोऽवसरप्राप्ताविति ॥ **तत्प्रपञ्चेति** । 'इतरेषां चानुपलब्धेरि'त्युक्तहेतुविस्तृतिरूप-

त्वादिति भावः । **अधि** अधिकृत्य अधिष्ठाय वर्तमानानि दैवानीति विग्रहमुपेत्य किमधिष्ठायेत्याकाङ्क्षायामाह **अव्यक्ताद्यभिमानिदेवता इति** । एताभिरेवाधिष्ठितानि भूतान्यधिभूतानीति विग्रहमुपेत्याह **अधिभूतानिति ॥ कार्यकारणेति** । कार्याणि वाय्वग्निप्रभृतीनि वा 'तासां त्रिवृतमि'त्युक्तत्रिवृद्रूपं वा । **कारणं** अव्यक्तादिकम् ।

गा०— **अधिदैवानीत्यादि** । नन्वत्राव्ययीभावे सति तस्याव्ययीभावश्चेत्यव्ययत्वात् 'अव्ययादाप्सुप' इति सुपो लुका भवितव्यम् । तथा च कथमधिदैवानीत्यधिभूतानीति चोपपद्यत इति चेत् । उच्यते । नायमव्ययीभावो येनोक्तदोषः किन्तु कर्मधारय एव । तत्राद्येऽधिरैश्वर्यार्थः । ततश्चाधीश्वराणि च तानि दैवानि चेति विग्रहमभिप्रेत्य तत्तात्पर्यमाह **अव्यक्ताद्यभिमानीति** । द्वितीये त्वाधिक्यार्थः । एवं च **अधि** अधिकानि च तानि भूतानि चेति विग्रहः । भूतानामाधिक्यं च कार्यकारणसाहित्येनेत्यभिप्रेत्य तत्तात्पर्यमाह **कार्यकारणोपेतानीति** । कार्यमण्डादिकं भौतिकम् । कारणमव्यक्तादिकम् । ताभ्यां सहितानीत्यर्थः । अत्र भूतकारणानामव्यक्तादीनां तत्कार्याणां देवतादिदेहादीनामप्युत्पत्तेः कथनादेवं व्याख्यातमित्यवगन्तव्यम् ।

श्री०— ननु पूर्वं पादद्वये विरोधस्य परिहृतत्वादत्र करिष्यन्निति कथमुक्तमित्यत आह **करिष्यन्निति** । तथा चास्मिन्नध्याये कर्तुं प्रवृत्त इत्यर्थो द्रष्टव्यः । तदुपपादयति **सूत्रकृतेति** ।

च०—　　　　॥ श्रीसत्यप्रियतीर्थगुरुभ्यो नमः ॥

श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः । सुनन्दतात्सेवया मे भक्त्याऽलंकृतयाऽनया ॥

मौलाथेत्यादिकं करिष्यन्नित्यन्तग्रन्थमवतारयति **ससङ्गतिकमिति** । अन्तर्भावलक्षणसङ्गत्यावसरात्मकानन्तर्यलक्षणसङ्गत्या चाविशेषितमित्यर्थः । स्फुटीकरिष्यति चैतदनुपदमेव । **व्याचिख्यासितनया** विषयिताप्रत्यासत्या प्रकृत्युपस्थाप्यव्याख्याविशेषितकर्मसाधनसन्प्रत्ययप्रत्याप्यमानेच्छानिरूपितविषयतानिरूपककर्मतापन्नतया । **अवसरप्राप्तौ** । प्रतिबन्धकीभूतयुक्तिसमयविरोधपरिहारगोचरविनेयजिज्ञासानिवृत्तौ सत्याम् । आधिदैवेत्यत्र वृत्तिविषये गताद्यर्थे वर्तमानस्याधिशब्दस्य गतित्वाभावेऽपि प्रथमान्तेन दैवशब्देन कुगतिप्रादय इत्यत्र प्रादिग्रहणादधिगतानि दैवानि अधिदैवानीति प्रादिमासः । अत एव बहुवचनोपपत्तिः । इयमेव दिगधिभूतशब्देपीति कतिपयेषां विन्यासः । अव्ययीभावश्चेत्यव्ययत्वापत्त्या नेमावव्ययीभावौ किं तु कर्मधारयौ । तत्राद्येऽधिरैश्वर्यार्थः । ततश्चाधि ईश्वराणि च तानि दैवानि चेति विग्रहं, द्वितीयेधिकार्थः एवं चाधि अधिकानि च तानि भूतानि चेति विग्रहमभिप्रेत्यायं ग्रन्थः । प्रावर्तिष्टेत्यपि विन्यस्यन्ति । अधिकृत्याधिष्ठाय वर्त-

मानानि दैवानीति वृत्त्यर्थप्रदर्शनमुपेत्यैवायमित्यपि व्याचक्षते । **कार्येत्यादि** । कार्यं महादिकम् । कारणमव्यक्तादिकम् ।

**सु० — इदमुक्तं भवति । यद्यपि पादद्वये वेदवाक्यानां परस्परविरोध एव निरस्यते । तथाऽपि विषयभेदाद्भेदो भविष्यति । इहाधिदैवादिविषयवाक्यानां चतुर्थे त्वध्यात्मविषयाणामिति । न चैवमस्य पादस्यानेकविषयत्वेनानेकत्वापत्तिः । अध्यात्मेतरविषयत्वेनैकत्वोपपत्तेः इति । अत्रापि क्रमनियमे हेतुमाचार्य एव वक्ष्यति ।**

**ननु च वेदवाक्यानां परस्परविरोधपरिहारः किमर्थः । मिथो विरुद्धानां प्रामाण्यानिश्चयात्तत्प्रामाण्यनिश्चयार्थ इति चेन्न । एवं सत्यस्य तर्कशास्त्रत्वप्रसङ्गेन मीमांसात्वव्याघातादिति । उच्यते । ब्रह्मणोऽशेषजगत्कारणत्वनिश्चयो ह्यशेषजगत्स्वरूपनिर्णये तस्य कार्यत्वादिनिर्णये च सति स्यान्नान्यथा । न च तद्विषयाणां वाक्यानां मिथो व्याघाते तत्स्वरूपनिर्णयो भवति । अतोऽधिदैवादिवस्तुतत्त्वावधारणार्थ एवायं मिथो विरोधपरिहारः । तदिदमप्युक्तं** स्वरूपनिर्णयायैवेति ।

**अनु०** — स्वरूपनिर्णयायैव वचनानां परस्परम् ।
पादेनानेनाविरोधं दर्शयत्यमितद्युतिः ॥

**ननु किं कतिपयवचनानामन्योन्यविरोधः परिह्रियते उत सर्वेषाम् । नाद्यः । वैयर्थ्यात् । तत्रैव वचनान्तरविरोधसद्भावेनानिर्णयतादवस्थ्यात् । न द्वितीयः । वेदवाक्यानामनन्तत्वेन ज्ञातुमशक्यत्वादित्यत उक्तम्** अमितद्युतिरिति । **सर्वज्ञ इत्यर्थः ।**

**शे०** — नन्वेवमपि न चतुर्थपादाद्भेदसिद्धिः । अधिदैवाद्यनेकविषयत्वेनैकपादत्वानुपपत्तिश्चाधिकेत्यत आह **इदमुक्तं भवतीति** । विषयभेदमेव दर्शयति **इहेति** । इतीदमिति पूर्वेणान्वयः । ननु तथाऽप्यादावध्यात्मेतरविचारोऽनन्तरमध्यात्मविचार इति क्रमनियमे हेतोरभावात्पादक्रमो न स्यादित्यत आह **अत्रापीति** । अध्यात्मेतरविषयश्रुतिविरोधपरिहारज्ञानस्य पूर्वत्वमध्यात्मविषयश्रुतिविरोधपरिहारज्ञानस्य चरमत्वमिति क्रमनियमेऽध्यात्मेतरविचारस्य बन्धमोक्षयोरन्तरङ्गत्वाभावरूपमध्यात्मविचारस्य तत्रान्तरङ्गत्वरूपं च हेतुं 'तस्य सन्निहितत्वत' इत्यादिना तृतीयस्य तृतीये आचार्य एव वक्ष्यतीत्यर्थः ॥ **तर्कशास्त्रत्वप्रसङ्गेनेति** । 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्र' इति वचनादिति भावः ।

**स०— वक्ष्यतीति** । उपासनापादे 'अध्यात्मप्रवणो भूत्वेत्यत्रान्तरङ्गबहिरङ्गत्वरूपमिति भावः ।

**प०— वक्ष्यतीति** । 'तस्य सन्निहितत्वत' इत्यत्रोपासनापादेऽध्यात्मेतरविचारापेक्षया अध्यात्मविचारस्यान्तरङ्गत्वादित्येवं वक्ष्यतीत्यर्थः । **मीमांसात्वव्याघातादिति** । 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनं इति जिज्ञासासूत्रानुव्याख्यानोक्त्या मेयनिर्णायकत्वान्मीमांसाया इति भावः । पूर्वोत्तरपक्षयोर्न्यायविवरणे ग्रन्थकृतैव विवृतत्वादवतारिका-मात्रमाह **एतत्पादेति** ।

**या०— अत्रापि क्रमनियम इति** । आदावध्यात्मेतरविचार एव कर्तव्यः पश्चादध्यात्म-विचार इति क्रमनियमेऽध्यात्मेतरविचारस्य बन्धमोक्षयोरन्तरङ्गत्वाभावरूपमध्यात्मविचारस्य तु तत्रा-न्तरङ्गत्वरूपं च हेतुं तस्य सन्निहितत्वतः इत्युपासनापादे वक्ष्यतीत्यर्थः ॥ **तर्कशास्त्रत्वप्रसङ्गेनेति** । 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रत' इति वचनादिति भावः ।

**च०— वक्ष्यतीति** । 'तस्य सन्निहितत्वत' इत्युपासनापादेऽभिधास्यतीत्यर्थः । **तर्केति** । 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रत' इति जिज्ञासान्यीयमूलोक्तेरिति भावः ।

**सु० – एतत्पादाधिकरणपूर्वपक्षसिद्धान्तयुक्तीः संगृह्याह** अनुभूतीति ।

---

**अनु०—** अनुभूतियुक्तिबहुवाग्रैलोम्यं च ततोऽधिकम् ।
एतत्सर्वं ततः साम्यं द्वारवैयर्थ्यमेव च ॥
दृष्टयुक्त्यनुसारित्वमुक्तान्यार्थाविरोधतः ।
प्रसिद्धनामस्वीकारो बहुवाक्यानुवर्तिता ॥
लोकदृष्टानुसारित्वं जीवसाम्यमनादिता ।
तत्र तत्र परिज्ञानं गुणसाम्यश्रुती तथा ॥
उत्पत्तिमत्त्वं स्वगुणाननुभूत्यल्पकल्पने ।
नानाश्रुतिश्च वैचित्र्यं युक्तयः पूर्वपक्षगाः ॥
व्यवस्थाऽनुपपत्तिश्च स्वातन्त्र्यमनुसारिता ।
मुख्यता शक्तिमत्त्वं च वैरूप्यं सर्वसंग्रहः ॥
गत्यादिरीशशक्तिश्च सर्वमानविरोधिता ।
अभीष्टासिद्धिसुव्यक्ती शास्त्रसिद्धिर्विपर्ययः ॥
विशेषकारणं चेति सिद्धान्तस्यैव साधिकाः ।

प०— ॐ न वियदश्रुतेः ॐ। अनुभूतियुक्तिबहुवाग्वैलोम्यं पूर्वपक्षस्य युक्तिः। व्यवस्था सिद्धान्तस्य। एतेन मातरिश्वा। ततोधिकमेतत्सर्वम्। अनुपपत्तिः चकाराद्यवस्था च। असंभवस्तु। सतः साम्यं स्वातन्त्र्यम्। तेजोऽतः। 'द्वारवैयर्थ्यम्'। अनुसारिता। आपः। दृष्टयुक्त्यनुसारित्वम्। मुख्यता। पृथिव्यधिकारः। उक्तान्यार्थाविरोधतः। प्रसिद्धनामस्वीकारे बहुवाक्यानुवर्तिता। शक्तिमत्त्वम्। चकारादधिकारादीनां निरवकाशत्वं च। तदभिध्यानादेव तु। लोकदृष्ट्यनुसारित्वम्। वैरूप्यम्। विपर्ययेण तु लोकदृष्ट्यनुसारित्वम्। वैरूप्यम्। अन्तरा विज्ञानमनसी। लोकदृष्ट्यनुसारित्वम्। सर्वसंग्रहः। नात्मा श्रुतेः। जीवसाम्यम्। सर्वसंग्रहः। ज्ञोऽत एव। अनादिता। सर्वसंग्रहः। उत्क्रान्तिगत्यागतीनाम्। तत्र तत्र परिज्ञानम्। गत्यादिः। व्यतिरेको गन्धवत्। गुणसाम्यम्। ईशशक्तिः। पृथगुपदेशात्। श्रुतिः। सर्वमानविरोधिता। यावदात्मभावित्वाच्च। उत्पत्तिमत्त्वम्। अभीष्टासिद्धिः। पुंस्त्वादिवत्त्वस्य। स्वगुणाननुभूतिः। सुव्यक्तिः। कर्ता शास्त्रार्थवत्त्वात्। अल्पकर्तृत्वकल्पनम्। शास्त्रसिद्धिः। अंशो नानाव्यपदेशात्। नानाश्रुतिः। विपर्ययः। अदृष्टानियमात्। वैचित्र्यम्। विशेषकारणमिति पूर्वोत्तरपक्षयुक्तीनां विवेको ज्ञेयः।

सु०— ॐ न वियदश्रुतेः ॐ॥ अत्राधिकरणेऽनादिर्वाऽयमाकाश इत्यादिश्रुतीनां गौणत्वमात्मन आकाशः संभूत इत्यादिश्रुतीनां मुख्यत्वमुपादाय वियत उत्पत्तिः समर्थिता। तत्र वियत्पदं नाकाशमात्रपरं किन्नाम। अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा काल इत्यादिश्रुतिविगानविषयाणां परमात्मातिरिक्तानां प्रकृत्यादीनामुपलक्षणार्थं ज्ञातव्यमित्याशयवानाह प्रकृतिरिति।

अनु०— ॐ न वियदश्रुतेः ॐ॥

प्रकृतिः पुरुषः कालो वेदास्तदभिमानिनः।
महदाद्याश्च जायन्ते

प्रकृतिः अचेतना पुरुषो जीवः तदभिमानिनः प्रकृत्याद्यभिमानिनः। महदाद्या इति महदहङ्कारमनोबुद्धीन्द्रियभूतसूक्ष्मतन्मात्राण्युच्यन्ते। प्रकृतस्योत्पत्त्यसंभवस्य नेति प्रतिषेधे लब्धमर्थमाह जायन्त इति। अयमभिसन्धिः। न तावत्प्रकृत्यादयो जन्मरहिता एवाभ्युपग(म्यत)ता इति युक्तम्। 'प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः' 'यावद्विकारन्तु विभागो लोकवदि'त्युक्तानां प्रतिज्ञाहान्यादीनामत्रापि साम्यात्। अन्यथा तेषामनैकान्तिकत्वापातात्। नाप्यविगीतजन्मानः। श्रुतिविगानस्य दर्शितत्वात्। न चाधिकरणान्तरं तत्परमस्ति। तस्मादत्रैव

**वियत्पदेन तेषामुपलक्षणं युक्तम् । मातरिश्वप्रभृतिषु पुनरधिकाशङ्कानिरासायाधिकरणान्तरारंभ इति ।**

**शे०** — ॐ **न वियदश्रुतेः** ॐ ॥ इत्यादिश्रुतीनामित्यत्रादिशब्देन 'यावद्ब्रह्म विष्ठितं तावती वागि'त्यादिश्रुतेः परिग्रहः । ननु महदादीनामनित्यतया प्रसिद्धत्वान्नोक्तश्रुतिविगानविषयत्वमभ्युपगन्तुं शक्यमित्यत आह **महदाद्या इतीत्यादि** । सूक्ष्मशब्दः पूर्वेणोत्तरेण च संबध्यते । तथा च महदादिभूतान्तानां यान्युपादानरूपाणि सूक्ष्माणि यानि च सूक्ष्मभूतानि तन्मात्राणि तान्येवात्र महदादिशब्दवाच्यतया विवक्षितानि, तेषां च प्रकृतिशब्दवाच्यत्वादुक्तश्रुतिविगानविषयत्वमुपपन्नमेव । प्रकृत्याद्यभिमानिनामपि श्रौतप्रकृत्यादिपदवाच्यतया विवक्षितत्वादुक्तश्रुतिविगानविषयत्वमेवेत्यवगन्तव्यम् । ननु प्रकृत्यादीनां जन्मराहित्यस्यैव वा जन्मवत्त्वेऽप्यविगीतजन्मत्वस्य वा विगीतजन्मत्वेऽपि वाऽधिकरणान्तरेणैव तेषां भगवज्जन्यत्वसिद्धिसम्भवात् वियत्पदस्याकाशमात्रपरत्वस्यैवोपपन्नत्वान्न प्रकृत्याद्युपलक्षणत्वमाश्रयितुं युक्तम् । उपलक्षणत्वे च मातरिश्वप्रभृतीनामपीहैवाधिकरणे भगवज्जन्यत्वस्य निश्चितत्वात् 'एतेन मातरिश्वे'त्यधिकरणान्तरानारम्भः स्यादित्यत आह **अयमिति** । इतीत्यस्येत्ययमिति पूर्वेण सम्बन्धः ॥

**प०** — ॐ **न वियदश्रुतेः** ॐ । भाष्यं सङ्गमयितुं प्रतिपाद्यमाह **अत्राधिकरण इति** । इत्यादिश्रुतीत्यादिपदेनाव्यक्तादिजन्मश्रुतिग्रहः । श्रुतावात्मेति परमात्मोच्यते अत आह **परमात्मातिरिक्तानामिति** । तस्य श्रुतिविगानविषयत्वेऽपि तन्निर्णयोऽसंभवस्त्वित्यत्र सेत्स्यतीति भावः । भूतसूक्ष्मेतिसूक्ष्मपदं प्रत्येकमन्वेति । अनुपचितानि महदादीनीत्यर्थः । **तन्मात्राणि शब्दस्पर्शादीनि** ॥ **अत्रापि साम्यादिति** । प्रकृत्यादिष्वपीत्यर्थः । प्रकृत्यादेरजन्यत्वे 'स इदं सर्वमसृजते'तिप्रतिज्ञाहानिः स्यात् । प्रकृत्यादेः सर्वपदनिर्दिष्टवस्त्वनतिरेकात् । न च संकोचः । 'आत्मा वा इदमेक एवाग्र आसीदि'त्याद्युत्पत्तिश्रुतिबाहुल्यात् । अल्पशक्तित्वाद्घटादिवद्वियदादिकं जायत इति वियदुत्पत्तावुक्तन्यायानां समानत्वादित्यर्थः ॥ **तेषामिति** । सर्वमसृजतेति सर्वसृष्टिप्रतिज्ञाविषयत्वबहूत्पत्तिश्रुतिविषयत्वाल्पशक्तित्वहेतूनां अव्यक्तादेरनुत्पत्तावेतस्मिन्नवानैकान्त्यापातादित्यर्थः ॥ **श्रुतीति** । 'अथ ह वा व नित्यानी'त्यादिश्रुतिविगानस्येत्यर्थः । महदादीनां प्रकृतिशब्दगृहीतत्वं यदि सूक्ष्मरूपे महदादिव्यवहारः स्यात् । किन्तु प्रकृतिरेवोच्यत इति ग्रन्थेन । तर्हि उत्तराधिकरणानां वैयर्थ्यमित्यत आह **मातरिश्वेति** । एतेन 'ज्ञोऽत एवे'त्यादेरारंभः समाहितः । तत्राप्यधिकाशङ्का तु चन्द्रिकायां व्यक्ता । इतिशब्दस्यायमभिसंधिरिति पूर्वेणान्वयः ।

या० — ॐ न वियदश्रुतेः ॐ । 'पुरुषः प्रकृतिरात्मा काल' इति श्रुतौ आत्मा परमात्मा, पुरुषो जीवः इति ज्ञातव्यम् । 'इत्यादिश्रुती'त्यत्रादिपदेन 'यावद्ब्रह्मविष्ठितं तावती वागि'त्यादि-श्रुतिर्ग्राह्या । ननु महदादीनामनित्यतया प्रसिद्धानां कथमुक्तश्रुतिविगानविषयत्वमत्राभिप्रेतमित्यत आह महदाद्या इतीत्यादि । सूक्ष्मशब्दः पूर्वेणोत्तरेण च संबध्यते । तथा च महदादिभूतान्तानां यान्युपादानरूपाणि सूक्ष्माणि यानि च सूक्ष्मभूतान्येव तन्मात्राणि तान्येवात्र महदादिशब्दवाच्यतया विवक्षितानि तेषां च प्रकृतिशब्दवाच्यत्वादुक्तश्रुतिविगानविषयत्वमुपपद्यत एवेति भावः । अत एव वक्ष्यति 'श्रुतिविगानस्य दर्शितत्वादि'ति । प्रकृत्याद्यभिमानिनामपि श्रौतप्रकृत्यादिशब्दवाच्यतया विव-क्षितत्वादुक्तश्रुतिविगानविषयत्वमित्यवगन्तव्यम् ।

श्री० — ॐ न वियदश्रुतेः ॐ ॥ तेषां विभागादिहेतूनाम् ।

च० — ॐ न वियदश्रुतेः ॐ ॥ श्रुतिगतपुरुषपदं जीवार्थमात्मपदं च परमात्मार्थकम् ।

सु० — इहाकाशस्योक्तं जन्म घटादेरिवाभूत्वाभवनलक्षणमिति केचिदास्थिताः । तत् निराकरिष्यन्स्वमतं तावदाह पराधीनेति ।

---

अनु० — पराधीनविशेषाप्तिः

इदं सर्वं ससर्जेति जनिमत्त्वमिहोदितम् ॥

'आत्मन आकाशः संभूतः' 'स इदं सर्वमसृजते'त्यादिश्रुतिं, विभक्तत्वादियुक्तिं चाश्रित्य यदिहाधिकरणे वियतो जनिमत्त्वमुदितं तत्पराधीनातिशयलाभलक्षणं प्रतिपत्तव्यम् । अपूर्वविशेषोपजनने हि विशिष्टाकारोपजनोऽवश्यम्भावी विशिष्टाकारश्च वस्तुस्वरूपाभिन्न इति तस्यैवासावुपजनो भवति । देवदत्तः शरीरी जातो विद्वान् जात इति, घटः संयुक्तो जातो विभक्तो जात इति चावस्थितस्वरूप एव वस्तुनि विशेषावाप्तिमात्रेण जननव्यवहारो दृश्यत एव ।

ननु परिणामवादे घटादेरप्येवैवोत्पत्तिर्यदवस्थितस्वरूपस्यैव मृदादेरप्याकारान्त(रावाप्तिः) रतापत्तिः । परैरपि परिणामवाद एवाङ्गीकृतो नारम्भवादः । अतो विवादाभावाद्व्यर्थोऽय-मारम्भः । यथा न व्यर्थस्तथाऽऽचार्य एव विवादविषयं स्पष्टयिष्यति ।

अत्र 'इदं सर्वं ससर्जे'ति श्रु(त्याद्युदा)त्युदाहरणं श्रुत्यादावप्येवमेव जन्म व्याख्येयमिति ज्ञापनार्थम् । यच्च वियत्पदं प्रकृत्याद्युपलक्षणपरमित्यभिप्रेतं तत्रोक्तरीत्योपपत्तिसूचनार्थं चेति ।

**शे०— केचिदिति** । मायावादिन इत्यर्थः ॥ **स्पष्टयिष्यतीति** 'स्थूलताभवः पूर्वशब्दविलोपश्च'-त्यादिनेति शेषः । अयमर्थः । द्विविधस्तावद्विकारो भवति विशेषावाप्तिर्विशेषिपरिवर्तश्च । तत्र विशेषावाप्तिर्नाम धर्मिणस्तादवस्थ्ये सति धर्ममात्रपरिवर्तः । अत एव न पूर्वशब्दविलोपो नापि शब्दान्तरापत्तिः । यथा श्यामस्य फलस्य पीतत्वापत्तिः । तत्र हि धर्मिगस्तादवस्थ्यं पीतत्वेऽपि फलव्यवहारानिवृत्तेः । श्यामत्वापगमेन सौरातपादिवशात्पीतत्वमुत्पद्यते विशेषिविपरिवर्तस्तु धर्मिस्वरूपस्यैव परिणामः । अत एव पूर्वशब्दविलोपः शब्दान्तरापत्तिश्च । यथा क्षीरस्य दधिभावः अत्र हि न धर्मिणस्तादवस्थ्यं दधित्वापत्तौ क्षीरव्यवहारानुपलम्भात्किन्तुधर्मिभूतं क्षीरमेवातञ्चनादिवशाद्दधिभूतम् । अत एव तत्र पूर्वशब्दविलोपः शब्दान्तरापत्तिश्च । तत्र धर्मिणस्तादवस्थ्ये सति धर्ममात्रपरिवर्तरूपविकारस्याकाशेऽस्माभिरङ्गीकृतत्वेऽपि घटादिसाधारणो यो धर्मिस्वरूपस्यैव परिवर्तरूपो विकार आकाशे परेणाभ्युपगम्यते, नासावस्माकं तत्र सम्मत इति स एव विवादविषय इति ॥ **उक्तरीत्येति** । प्रतिज्ञाहान्यादीनामत्रापि साम्यादित्युक्तरीत्येत्यर्थः ।

**स०— केचिदिति** । मायावादिन इत्यर्थः ॥ **विवादविषयमिति** । 'स्थूलताभवः पूर्वशब्दविलोपश्च यदि जन्मे'त्यादिना विवादविषयमित्यर्थः ।

**प०— अपूर्वविशेषोपजनन इति** । अपूर्वविशेषोत्पत्तावित्यर्थः ॥ **स्पष्टयिष्यतीति** । 'जन्म न स्थूलताभवः । पूर्वशब्दविलोपश्च यदि जन्मेति कीर्त्यत'इत्यादिना बदरफलादेः पीतत्वापत्तिरूपः परिणाम उपेयते । क्षीरादेः दधित्वापत्तिरूपपरिणामः उपेयते स एव विवादविषय इति स्पष्टयिष्यतीति भावः ॥ **उक्तरीत्येति** । प्रतिज्ञाहान्यादीनामत्रापि साम्यादित्याद्युक्तरीत्येत्यर्थः ।

**या०— केचिदिति** । सङ्करादय इत्यर्थः ॥ **विवादाभावादिति** । आकाशे घटादिसाधारणोत्पत्तेरेव भवद्भिरप्यङ्गीकार्यत्वादिति भावः ॥ **स्पष्टयिष्यतीति** । 'स्थूलताभवः । पूर्वशब्दविलोपश्च यदि जन्मेति कीर्त्यत' इत्यत्रेति शेषः । द्विविधः परिणामो धर्मिणस्तादवस्थ्ये धर्ममात्रपरिवर्तो धर्मिस्वरूपस्यैव परिवर्तश्चेति । तत्राद्यः श्यामस्य फलस्य पीतत्वापत्तिरूपः । द्वितीयस्तु क्षीरादीनां दधित्वाद्यापत्तिरूपः । तत्राद्यस्य परिणामस्याकाशेऽस्माभिरङ्गीकृतत्वेऽपि घटादिसाधारणो यो द्वितीयः परिणाम आकाशे परेणोच्यते सोऽस्माकं तत्र न सम्मत इति स एव विवादविषय इति स्पष्टनं तत्राभिप्रेतमिति द्रष्टव्यम् ॥ **उक्तरीत्येति** । प्रतिज्ञाहान्यादीनामत्रापि साम्यादित्याद्युक्तरीत्येत्यर्थः ।

**श्री०— उपजनो** जन्म, **तस्यैव** वस्तुन एव । **असौ** विशिष्टाकारस्योपजनः । श्रुत्यादावुक्तं जन्म एवमेव व्याख्येयमित्यन्वयः ।

च० — केचित्तु सङ्करादयः । अस्थिताः आङः स्थः प्रतिज्ञान इति स्मृतेः प्रतिज्ञातारः । स्पष्टयिष्यतीति । 'स्थूलतमावः । पूर्वशब्दविलोपश्च यदि जन्मेति कीर्त्यत' इत्यत्र स्फुटीकरिष्यतीत्यर्थः । श्यामफलस्य पीतत्वापत्तिरूपधर्ममात्रपरिवर्ताख्यपरिणामस्याकाशेऽङ्गीकृतत्वेपि क्षीरादीनां दधित्वाद्यापत्तिरूपधर्मिस्वरूपपरिवर्ताभिधपरिणाम एवाकाशे परेणाभिधीयमानो नोपेयतेऽस्माभिरिति स एव विवादविषय इति स्फुटीकरणं तत्रेति द्रष्टव्यम् ।

सु० — परोक्तरीत्या घटादिवदभूत्वाभवनलक्षणैवोत्पत्तिर्वियतः श्रुतिसूत्रविवक्षिता किन्न स्यादिति चेदत्र पृच्छामः । आकाशशब्देन किं विवक्षितं परेषां (किं) वैशेषिकादिवदवकाशमात्रमुत बाह्यानामिव मूर्ताभावः ।

आद्यं दूषयति अवकाशमात्रमिति ।

अनु० — अवकाशमात्रमाकाशः कथमुत्पद्यतेऽन्यथा ॥

अन्यथा पराधीनविशेषाप्तिर्जन्मेत्यनङ्गीकृत्याभूत्वाभवनं जन्मेत्यङ्गीकारेऽवकाशमात्रमाकाश इति चाङ्गीकारे कथमसावुत्पद्यते । तस्योत्पत्तिर्नोपपद्यत इति यावत् । सोपादाना हि स(र्वा)र्वसृष्टिर्दृष्टा न चाकाशोत्पत्तावुपादानमस्ति । न च ब्रह्मण उपादानत्वमुपपद्यत इति प्रकृत्यधिकरणे (निष्टङ्कितम्) निर्दिष्टम् । यस्य चोत्पत्तिस्तस्य प्रागभावेन भाव्यम् । न चाकाशस्य प्रागभावः संभवति । अनुपपन्नप्रतीतिकत्वात् । अभावो हि प्रतीयमानोऽस्यात्रेति प्रतीयते न तु निराश्रयः । न चाकाशाभावस्याश्रयप्रतीतिरुपपद्यते । यदेवेहेति निर्दिश्यते तस्यैवाकाशत्वात् । उपादानाश्रिताभाववादेऽपि तदभावान्नाभावप्रतीत्युपपत्तिः । तथा च श्रुतिः । 'अभावो हि प्रदेशस्य न ह्यत्राभाव इत्यपी'ति । अनवकाशरूपं ब्रह्मैवाकाशस्य पूर्वावस्था प्रागभावश्चोच्यत इत्यपि ब्रह्मणोऽनुपादानत्वेन प्रत्युक्तम् । प्रतियोग्याश्रय एवाभावाश्रयः । न चाकाशस्याश्रयोऽस्तीति तदभावोऽपि निराश्रयोऽस्त्विति चेन्न । निराश्रयत्वे कार्यत्वानुपपत्तेः । किञ्च प्रतीतावाकाशः स्वाश्रय इत्यतस्तदभावोऽप्याकाशाश्रयः प्रतीयेतेति विरुद्धमापद्यते । प्रकृतिराकाशस्य कारणमिति कश्चित् । तन्मते प्रकृतेरजन्मप्रसङ्गः । अथ तत्र पराधीनविशेषावाप्तिर्जन्माङ्गीक्रियते । तदाऽसंभावितोत्पत्तिके वियदादावप्येवमेवाङ्गीकरणीयमिति ।

शे० — तत्कथमित्यत आकाशोत्पत्तावुपादानं भवद्ब्रह्म वा स्यादतिरिक्तं वेति विकल्प्याद्यं प्रत्याख्याति न चेति ॥ निष्टङ्कितमिति । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यत' इत्यादिनेति शेषः । प्रागभावशून्यत्वादाकाशो नोत्पद्यत इत्यत्र न्यायविवरणोदाहृतश्रुतिं प्रमाणयति तथा चेति ।

न प्रदेशः कथंचनेति स्वरूपेण विकृतरूपेण वा नोदेतीति प्रतिज्ञातानुत्पत्तौ युक्तिरियमुच्यते **अभावो हीति** । यस्योत्पत्तिस्तस्य प्रागभावेन भाव्यम् । प्रदेशरूपस्यावकाशस्याभावः प्रागभावो न हि संभवतीत्यर्थः । कुतो नेत्यतोऽनुपपन्नप्रतीति(कत्वादित्याह ॥ **ह्यत्रेति** । अपिपदेन नञोऽनुकर्षः । अभावो हि प्रतीयमानोऽस्यात्रेति प्रतीयते न तु निराश्रयः । न च प्रदेशाभावस्याश्रयप्रतीति)रुपपद्यते यदेवात्रेति निर्दिश्यते तस्यैवाकाशत्वादिति भावः । ननु प्रागभावो नाभावविशेषः । येनाभावो हि प्रतीयमान इत्यादिनोक्तदोषः स्यात्किन्तु कार्यस्य स्वोपादानगता पूर्वावस्थैव । तथा च प्रकृतेऽवस्थावस्थावतोरभेदेनोपादानभूतं ब्रह्मैवाकाशपूर्वावस्था प्रागभावश्चेति पर्यवसानान्नोक्तदोषः ब्रह्मणश्चावकाशभिन्नत्वान्न यदेवेहेति निर्दिश्यत इत्युक्तदोषोऽपीति कस्यचिन्मतमाशङ्क्योक्तदोषेण दूषयति **अनवकाशरूपमित्यादिना** ॥ **प्रत्युक्तमिति** । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यत' इत्यादिनेति शेषः ॥ **कार्यत्वानुपपत्तेरिति** । कार्यस्य प्रवृत्तिमत्त्वनियमादिति भावः ॥ **तदभावोऽपीति** । न च घटे घटाभाववदाकाशाभावो न विरुद्ध इति वाच्यम् । घटे घटसत्त्वस्याप्रामाणिकत्वेन तत्र तदभावसंभवेऽपि इहाकाशमिति प्रतीत्याऽऽकाशे आकाशसत्त्वस्य सिद्धत्वेन तत्र तदभावस्य विरुद्धत्वादित्याशयः । आकाशोत्पत्तौ ब्रह्मातिरिक्तमेवोपादानमिति द्वितीयपक्षं शङ्कते **प्रकृतिरिति** ॥ **अजन्मप्रसङ्ग इति** । तदुत्पत्तावप्युपादानाभावेन घटादिसाधारण्येन जन्माभावप्रसङ्ग इत्यर्थः । न चेष्टापत्तिरिति वाच्यम् ।

---

**प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यो यावद्विकारं तु विभागो लोकवदित्युक्तानां** प्रतिज्ञाहान्यादीनामत्रापि साम्यात् अन्यथा तत्र तेषामनैकान्तिकत्वापातादित्यत्र तात्पर्यात् ॥ **एवमेवाङ्गीकरणीयमिति** । असंभावितोत्पत्तिकत्वाविशेषेऽपि कचित्पराधीनविशेषावाप्तिर्जन्म । कचिद्घटादिवदभूतभवनमित्यर्धजरतीयानुपपत्तेरिति भावः ।

**प०**— अन्यथेत्यनुवादः । इति चाङ्गीकार इत्यन्तं व्याख्या ॥ **तदभावादिति** । उपादानाभावादित्यर्थः ॥ **तथाच श्रुतिरिति** । आश्रयाभावेन नाकाशाभावप्रतीतिरिति एतन्नयन्यायविवरणोक्ता पैङ्गिश्रुतिश्चाहेत्यर्थः । 'आकाशो नीलिमोदेति न प्रदेशः कथंचने'ति पूर्वार्धे भूताकाशस्य नीलरूपत्वेनोत्पत्तिमभिधाय प्रदेशशब्दितावकाशस्यानुत्पत्तिमत्त्वमुक्त्वोपपाद्यते ॥ **अभावो हीति** । प्रदेशस्योत्पत्तौ प्रागभावेन भाव्यम् । न हि प्रदेशस्याभावोऽस्ति । अस्ति चेदत्राभाव इति प्रतीयेत । न ह्यत्राभाव इति प्रतीतिः । अतो नोत्पत्तिमान्प्रदेश इति श्रुत्यर्थः । **पूर्वावस्थेति** । कारणावस्थेत्यर्थः । **स्वाश्रय इति** । वैशेषिकनये तथा समर्थनादिति भावः ॥ **विरुद्धमिति** । स्वाश्रये स्वाभावस्य विरोधादिति भावः ।

या० — प्रागभावशून्यत्वादवकाशरूपाकाशो नोत्पद्यत इत्यत्र न्यायविवरणोदाहृतश्रुतिमाह **तथा च श्रुतिरिति** । 'आकाशो नीलिमोदेति न प्रदेशः कथञ्चने'ति पूर्ववाक्ये प्रदेशापरपर्यायावकाशरूपाकाशस्योत्पत्त्यभावः प्रतिज्ञातः, स कथमित्यतस्तत्र युक्तिमाह **अभावो हीति** । प्रदेशस्यावकाशस्याभावः प्रागभावो न हीत्यर्थः । कुतो नेत्यतः प्रत्येतुमशक्यत्वादित्याह **ह्यत्रेति** । अपिर्नञोऽनुकर्षणार्थः । तथा च हि यस्मादत्राधिकरणेऽभावः प्रागभाव इति प्रतीतिर्नेत्यर्थः । यदेवात्रेति निर्दिश्यते तस्यैव प्रदेशरूपत्वादिति भावः । ननु प्रागभावो नाभावविशेषो येनाभावो हि प्रतीयमान इत्यादिनोक्तदोषः स्यात् । किन्तु कार्यस्य स्वोपादानगता पूर्वावस्थैव । तथा च प्रकृतेऽवस्थाऽवस्थावतोरभेदेनोपादानभूतं ब्रह्मैवाकाशस्य पूर्वावस्था प्रागभावश्चोच्यते । अतो नाद्वितीयत्वभङ्गः । ब्रह्मणश्च अवकाशभिन्नत्वान्न यदेवेहेति निर्दिश्यत इत्युक्तदोषोऽपीति कस्यचिन्मतमाशङ्क्योक्तदोषेणैव दूषयति **अनवकाशरूपमित्यादिना** ॥ **कार्यत्वानुपपत्तेरिति** । कार्यद्रव्याणां वृत्तिमत्त्वनियमादिति भावः ॥ **स्वाश्रय इति** । देशः इहाकाशमिति(सर्वत्राऽस्तीति प्रतीतेरित्यर्थः ।) **तदभावोऽपीति** । न च घटे घटाभाववदाकाशेऽपि न तदभावो विरुद्ध इति वाच्यम् । घटे घटसत्त्वस्याप्रामाणिकत्वेन तत्र तदभावसंभवेऽप्याकाशे आकाशसत्त्वस्येहाकाशमिति प्रतीतिसिद्धत्वेन(तत्र तद्वत्वस्याविरुद्धत्वात्) तत्र तदभावस्य विरुद्धत्वादित्याशयात् ॥ **अजन्मप्रसङ्ग इति** । उपादानाद्यभावेन घटादिसाधारणजन्माभावप्रसङ्ग इत्यर्थः ॥

**श्री०** — नन्विहाकाशाभाव इत्यत्रेहप्रत्ययनिर्दिष्टस्य नाकाशता । किन्तु तदुपादानमेव । प्रागभावस्योपादानाश्रितत्वादित्यत आह **उपादानाश्रितेति** ॥ **तदिति** । उपादानेत्यर्थः ॥ **प्रकृतिरिति** । तथा च नोपादानाभाव इति भावः ।

**च०** — **तथा च श्रुतिरिति** । 'आकाशो नीलिमोदेति न प्रदेशः कथंचने'ति पूर्वदले भावभवित्रोरभेदान्नीलरूपवद्भूताकाशस्योत्पत्तिमभिधाय तद्घटकप्रदेशपदाभिहितस्य प्रतिज्ञातोत्पत्त्यभावे हेतुरनेनाभिधीयते । प्रदेशस्याव्याकृताकाशस्याभावः । प्रागभावो न हीत्यर्थः । अपिर्नञनुषङ्गार्थः । अत्र एतस्मिन्नधिकरणेऽभावः । प्रागभाव इति प्रतीतिर्नेत्यनेन प्रागभावराहित्ये तत्प्रतीत्यभावो हेतुत्वेनोक्तः । **अजन्मप्रसङ्ग इति** । उपादानादिविरहेण घटादिसाधारणजन्मासंभव इत्यर्थः ।

**सु०** — **द्वितीयेऽपि किं प्रदेशरूपमाकाशमङ्गीकृत्येदमुच्यते उतानङ्गीकृत्य । प्रथमे यस्य कस्यचिन्मूर्तद्रव्याभावस्योत्पत्तिर्वा सर्वस्य वा विवक्षिता । नाद्यः । तस्याः प्रत्यक्षादिसिद्धत्वेनाधिकरणानारम्भकत्वात् । द्वितीयं दूषयति** यदीति ।

**अनु०** — यद्यनाकाशता पूर्वं किं मूर्तनिबिडं जगत् ॥

सर्वस्यापि मूर्ताभावस्य सृष्टावुत्पत्त्यङ्गीकारे प्रलयेऽवश्यं तदभावोऽभ्युपगन्तव्यः स्यात्। अत्यन्तसतो जन्मासंभवात् । यदि च सृष्टेः पूर्वं प्रलयेऽनाकाशता सर्वस्य मूर्तद्रव्याभावस्याभावः अङ्गीक्रियते । तर्हि किं तदा मूर्तनिबिडं जगदङ्गीक्रियते । एतदेव स्पष्टयति मूर्तेति ।

मूर्तसंपूर्णता चैव यद्यनाकाशता भवेत् ।

यद्युक्तलक्षणाकाशाभावः प्रलये भवेत्तदा मूर्तसंपूर्णता भवेदेव । अभावाभावस्य भावानतिरेकात् । तद्व्याप्तत्वाद्वा । चशब्दोऽनुक्तसमुच्चयार्थः । सृष्ट्युत्तरकालं मूर्तमात्रं च न स्यात् । एवं च सर्गप्रलयविपरिवर्तः स्यात् । अधिका च प्रलये मूर्तसंपूर्तेरापत्तिः । मूर्तद्रव्याभाव एवाकाशो न ततोऽतिरिक्तोऽस्तीति द्वितीयं निराकरोति मूर्तद्रव्याणीति ।

मूर्तद्रव्याणि चाकाशे स्थितान्येव हि सर्वदा ॥

तदभावश्चेति चार्थः । यो मूर्तद्रव्याणि तदभावांश्चाङ्गीकरोति तेनावश्यं तदतिरिक्ताकाशोऽङ्गीकर्तव्य एव । यस्मात्तानि सर्वदाऽऽकाशे स्थितानि तेनेति योजना ।

शे० — **द्वितीय इति** । मूर्ताभाव एवाकाशपदेन विवक्षित इति द्वितीय इत्यर्थः ॥ **किं प्रदेशरूपमाकाशमङ्गीकृत्येत्यादि** । अत्र मूर्ताभाव आकाश इत्युक्तेर्निरवधारणत्वाभिप्राये तथा मूर्ताभावस्याकाशत्वप्राप्तावपि तददतिरिक्तप्रदेशस्याकाशत्वव्यावृत्तेरप्राप्तत्वादाद्यपक्षलाभः । सावधारणत्वे च प्रदेशस्याकाशत्वव्यावृत्तेर्लाभाद्द्वितीयपक्षस्य लाभ इति द्रष्टव्यम् । यद्वा स्वमतेनायं वदतीति परस्य परस्मिन्ननाश्वासात्सम्भावितत्वयाऽऽद्यपक्षस्य पराभ्युपगततया द्वितीयपक्षस्य प्रसक्तिरिति द्रष्टव्यम् ॥ **प्रत्यक्षादिसिद्धत्वेनेति** । ततश्चाधिकरणारम्भप्रयोजकीभूतसंशयाभावान्न तद्विषयतयैतदधिकरणारम्भ इति भावः ॥ **सृष्टाविति** । सृष्टिकाल इत्यर्थः । इष्टापत्तिं परिहरति **यदि चेति** । किं मूर्तनिबिडं जगदित्युक्तस्यैव मूर्तसम्पूर्णतेत्युत्तरवाक्येन प्रतिपादनात्पौनरुक्त्यमाशङ्क्य परिहरति **एतदेव स्पष्टयतीति** । आपाद्यस्वरूपस्य पूर्ववाक्ये निष्कृष्यानुक्तत्वात्किमनेनापादितं भवतीत्याशङ्कापरिहारः स्पष्टनस्य प्रयोजनमिति भावः । प्रलये मूर्तद्रव्याभावाभावसद्भावेऽपि कुतो मूर्तसम्पूर्णताप्राप्तिरित्यतो नेयङुवङ्स्थानाविति निषेधस्याश्रीत्यस्य नदीसंज्ञाविधित्वदर्शनाद्दर्शनबलेन निषेधनिषेधस्य भावतया 'निषेधस्य निषेधोऽपि भाव एव बलाद्भवेदि'त्यादिना तृतीयस्य तृतीये व्यवस्थापितत्वेन मूर्तद्रव्याभावाभावस्य मूर्तद्रव्यत्वप्राप्तेर्युक्ता प्रलये मूर्तसम्पूर्णताप्राप्तिरित्याशयेनाह **अभावाभावस्य भावानतिरेकादिति** ॥ **तद्व्याप्तत्वाद्वेति** । एतन्मते च तृतीयाभावस्य प्रथमाभावत्वान्नानवस्थेति भावः । अनुक्तसमुच्चयमेव दर्शयति **सृष्ट्युत्तरकालं चेति** । स्थितिकाल इत्यर्थः । मूर्तद्रव्याभावस्यैव तत्र सत्त्वादिति भावः । प्रागुक्तप्रसङ्गद्वयेऽपीष्टापत्तिं परिहरति

**एवञ्चेति** । **विपरिवर्तो** व्यत्यासः । सर्गस्य प्रलयत्वं प्रलयस्य सर्गत्वमित्येवंरूप इत्यर्थः । बाधकान्तरं चाह **अधिका चेति** । सर्गापेक्षयेति शेषः । सर्गे कस्यचिन्मूर्तस्य कस्यचिन्मूर्ताभावस्य च सत्त्वेन तत्र मूर्तसम्पूर्तेरभावादिति भावः ।

**प०— द्वितीयेपीति** । मूर्ताभाव एवाकाश इति पक्षेऽपीत्यर्थः । **तस्या इति** । घटादिध्वंसरूपाभावोत्पत्तेरित्यर्थः ॥ **अधिकरणेति** । न वियदश्रुतेरित्याद्यनेकसूत्रात्मकमधिकरणं तदुत्पत्तिप्रतिपादनार्थं नारभ्येत । अप्राप्ते शास्त्रमर्थवदिति न्यायादिति भावः । **सृष्टाविति** । सृष्टिकाले । मूलं योजयति **यदि च सृष्टिरिति** । अतिरेकमतेनाह **तद्व्याप्तत्वाद्वेति** । कुत आपत्तिरित्यत आह **मूर्तद्रव्याभाव एवेति** । अस्तीतीति शब्दो हेत्वर्थः । **द्वितीयमिति** । प्रदेशमनङ्गीकृत्येति पक्षमित्यर्थः । यद्वा मूर्ताभाव एवाकाशो न ततोऽतिरिक्तः प्रदेशो नामास्तीति द्वितीयमित्येकं वाक्यम् । हिशब्दार्थमाह **यस्मादिति** ।

**या०— किं प्रदेशरूपमाकाशमङ्गीकृत्येति** **प्रदेशरूपाकाशः** अव्याकृताकाशः । अयं विकल्पः 'किं मूर्तनिबिडं जगदि'ति वक्ष्यमाणदोषे जगच्छब्देन तदाधारस्य प्रदेशस्यैव विवक्षणीयत्वमभिप्रेत्य, अन्यथा तद्वाक्यार्थासंभवादिति ध्येयम् । **प्रत्यक्षादिसिद्धत्वेनेति** । प्रत्यक्षादिसिद्धे च संशयाद्यसंभवान्न तद्विषयतयैतदधिकरणारम्भो युज्यत इति भावः । **सृष्टाविति** । सृष्टिकाल इत्यर्थः ।

---

**श्री०— इदमुच्यत इति** । प्रदेशरूपमव्याकृताकाशमङ्गीकृत्य मूर्ताभावरूपाकाशस्याभूत्वाभवनरूपजननं श्रुतिसूत्रयोर्वियदादिपदेन विवक्षितमित्युच्यत इत्यर्थः ॥ **न ततोऽतिरिक्तोऽस्तीति** । प्रदेशरूपव्याकृताकाशमनङ्गीकृत्य मूर्तद्रव्याभाव एवाकाश इत्युच्यत इति द्वितीयं पक्षं निराकरोतीत्यर्थः ।

**च०— भावानतिरेकादिति** । द्वितीयाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वादिति भावः ।

**सु० — इदमुक्तं भवति । एकस्मिन् पतत्रिणि पतति द्वितीयेन पतत्रिणा कुत्र पतितव्यमिति वाच्यम् । यत्रासौ नास्ति तत्रेति चेत्तर्हि येनाधिकरणेनैकस्य पतत्रिणोऽभावः परस्य च भावो विशिष्यते तदर्थान्तरमङ्गीकरणीयम् । स एव प्रदेशरूप आकाश इति कथं तदनभ्युपगमः । किञ्चेह पक्षी नेह पक्षीति मूर्ततदभावाश्रयतया प्रदेशः साक्षिसिद्धः कथमपह्नोतुं शक्यते । अपि च किं मूर्तद्रव्यस्य प्रागभाव आकाशः किंवा प्रध्वंसो यद्वाऽत्यन्ताभावः अथवाऽन्योन्याभावः । न प्रथमद्वितीयौ । सृष्ट्युत्तरकाले निराकाशत्वप्रसङ्गात् । प्रागभावप्रध्वंसाभावयोरुपादाननिष्ठत्वेन तत्राकाशबुद्धेरन्यत्र तदभावस्य चापत्तेः । न तृतीयः । क्वचित्कदाचिन्मूर्तसद्भावे तदत्यन्ताभावानुपपत्तेः । न चतुर्थः । घटान्योन्याभावो हि पटस्तन्निष्ठो**

**वेति तत्राकाशबुद्धिप्रसङ्गात्। मूर्तद्रव्यसंसर्गाभावमात्रमाकाश इति चेत्तर्हि उत्पततः पतत्रिणः केन संसर्गो येन तदभावस्याकाशत्वं स्यादित्यवश्याश्रयणीयः प्रदेश इति। तदेवमाकाशस्याभूत्वाभवनरूपोत्पत्तिरयुक्तेति सिद्धम्।**

**शे०** — ननु मूर्तद्रव्याणां तदभावस्य चाकाशाश्रितत्वमेवासिद्धमिति न तेन तदुभयातिरिक्ताकाशस्याङ्गीकर्तव्यतासिद्धिरित्यत आह **इदमुक्तं भवतीति ॥ कुत्र पतितव्यमिति।** न तावद्यत्रासावस्ति तत्रैव पतनं संभवति। मूर्तानां सामानाधिकरण्यस्य बाधितत्वादिति भावः। मूर्ताश्रयतयाऽतिरिक्ताकाशसिद्धिमुपपाद्य मूर्ततदभावाश्रयतयाऽपि तत्सिद्धिमुपपादयति **किञ्चेति ॥ कथमिति।** तथा सति साक्षिप्रत्यक्षविरोधः स्यादिति भावः॥ **सृष्ट्युत्तरकाल इति।** स्थितिकाले मूर्तद्रव्यस्यैव सत्त्वेन तत्प्रागभावप्रध्वंसयोस्तत्रासत्त्वादिति भावः॥ **अत्यन्ताभावानुपपत्तेरिति।** सार्वदैशिकसार्वकालिकनिषेधस्यैवात्यन्ताभावत्वादिति भावः॥ **तत्राकाशबुद्धीति।** घट आकाशः पटे आकाश इति वा न कस्यचिद्बुद्धिरस्तीति भावः। मूर्तद्रव्यस्य यः केनचित्संसर्गस्तदभाव एवाकाशो न तु तत्प्रागभावादिर्विवक्षित इति नोक्तदोष इति शङ्कते **मूर्तद्रव्येति ॥ तर्हीति।** अत्र किंशब्द आक्षेपे न केनापीत्यर्थः। तथा च प्रतियोगिनोऽप्रसिद्धत्वेन तदभावस्याप्यप्रसिद्धत्वं स्यादतो मूर्तद्रव्यसंसर्गाभावस्याकाशत्वं वदताऽवश्यं मूर्तद्रव्यस्य केनचित्संसर्गो वाच्यः। न चोत्पततः पतत्रिणो मूर्तेन संसर्गः संभवति। तत्र मूर्ताभावात्। अतोऽमूर्तेनैव संसर्गो वाच्यः स एव चास्माकमाकाश इति भावः। यद्वा मूर्तद्रव्यसंसर्गाभावस्यैवाकाशत्वे इह पतत्र्युत्पततीत्येवंरूपेण मूर्तद्रव्यस्योत्पततः पतत्रिणः संसर्गं निरूप्य तदभावस्याकाशत्वं त्वया वाच्यम्। न च तद्युक्तम्। इहपदार्थभूतस्य प्रदेशस्य त्वयाऽनङ्गीकारेणान्यस्य चेहपदार्थस्य तत्रासंभवेन पतत्रिणस्तेन सह संसर्गस्यैव निरूपयितुमशक्यत्वेन तदभावस्याकाशताया निरूपणायोगादिति भावः। केचित्तु किंशब्दः प्रश्ने। किं मूर्तेन किंवा तदितरेणेति। नाद्यः। तथा सति मूर्तस्यैव पतत्र्याधारत्वेन मूर्ताभावस्य तद्विरहात्तस्याकाशत्वासिद्धेः। नान्त्यः। अमूर्तस्यैव तदाधारत्वेन तस्यैवाकाशत्वात्। उक्तं चैतत्‘मूर्तद्रव्याणि चाकाशे स्थितान्येव हि सर्वदे’त्याहुः।

**स०** — **तर्ह्युत्पततः पतत्रिण इति।** अत्र किंशब्द आक्षेपे, न केनापीत्यर्थः। तथा च प्रतियोगिनोऽप्रसिद्धत्वेन तदभावोऽसिद्ध इति भावः। यद्वा किंशब्दः प्रश्ने किं मूर्तेन तदितरेण वा। नाद्यः मूर्तस्यैव पतत्र्याधारत्वेन मूर्ताभावस्याकाशत्वासिद्धेः। न द्वितीयः अमूर्तस्यैव तदाधारत्वेन तस्यैवाकाशात्। एतदप्युक्तं **मूर्तद्रव्याणि चाकाश इति।**

**प०** — **सृष्ट्युत्तरकाल इति।** स्थितिकाल इत्यर्थः। तदा प्रागभावप्रध्वंसयोरभावादिति भावः॥ **आकाशस्याभूत्वाभवनरूपजन्मनिरासः॥**

**या०**— हिशब्दार्थमाह **किञ्चेह पक्षीत्यादिना ॥ सृष्ट्युत्तरकाल इति ।** स्थितिकाल इत्यर्थः । इदं च सर्वदेत्यस्य तात्पर्यकथनमित्यवगन्तव्यम् ।

**श्री०— पतत्रिणोऽभाव इति ।** यत्रासौ नास्तीत्यनेनोक्त इत्यर्थः । परस्य च भाव इति । तत्र पतितव्यमित्यनेनोक्त इत्यर्थः । **तदिति ।** भावाभावविशेषणीभूतमधिकरणमित्यर्थः । **अतिरिक्तं** मूर्तद्रव्याभावातिरिक्तम् ॥ **निराकाशत्वेति ।** सृष्ट्युत्तरकाले मूर्तपदार्थानामेव सत्त्वेन तत्प्रागभावप्रध्वंसयोरभावात्तद्रूपाकाशाभावेन निराकाशत्वप्रसङ्ग इत्यर्थः । मूर्तपदार्थप्रागभावप्रध्वंसयोरेवाकाशत्वे दूषणान्तरमाह **प्रागभावेत्यादि ।** तथा च घटादिमूर्तपदार्थप्रागभावप्रध्वंसयोर्मृदाद्युपादाननिष्ठत्वेन तत्रोपादाने आकाशसत्त्वप्राप्त्या मृदाद्युपादाने आकाशमस्तीति बुद्धेरापत्तेः । अन्यत्रानुपादाने आकाशो नास्तीति बुद्ध्यभावस्य चापत्तेरित्यर्थः ॥ **अत्यन्ताभावेति ।** त्रैकालिकाभावेत्यर्थः । अन्योन्याभावो धर्मिस्वरूपमित्यस्मन्मतानुसारेण **पट** इत्युक्तम् । तार्किकादिरीत्या **तन्निष्ठो वा** इत्युक्तम् ॥ **तत्राकाशबुद्धीति ।** आद्यपक्षे पटेऽयमाकाश इति बुद्धिः स्यात् । द्वितीयपक्षे पटे आकाशोऽस्तीति बुद्धिः स्यादित्यर्थः । विशेषानविवक्षित्वा सामान्यमात्रं विवक्षितमित्याशयेनोत्पत्तिविनाशशीलोऽयं तुरीयाभाव इति पक्षमभिप्रेत्य वा शङ्कते **मूर्तद्रव्येति ।**

**च०— विशेष्यते** व्यावर्त्यते । निराकाशत्वेऽपि स्थितिदशायां प्रागभावप्रध्वंसयोरभावादिति भावः । **तदत्यन्ताभावानुपपत्तेरिति ।** अत्यन्ताभावस्यालीकमात्रप्रतियोगिकत्वादिति भावः । **सिद्धमिति ॥ आकाशस्याभूत्वाभावनरूपोत्पत्तिनिरासः ॥**

**सु०— अस्त्वेवं परकृतमपव्याख्यानम् । कस्तर्ह्याकाशशब्दार्थः का च तस्य पराधीनविशेषाप्तिरित्यत आह** अत इति ।

**अनु०**— अत आकाशशब्दोक्तस्तद्देवोऽत्र विनायकः ।
देहोत्पत्त्या समुत्पन्न इति श्रुत्याऽभिधीयते ।

**परकीयव्याख्यानस्यायुक्तत्वादित्यर्थः । तद्देवो भूताकाशाभिमानीति विनायकस्याकाशशब्दवाच्यत्वोपपादनम् । अत्रात्मन आकाश इत्यादिश्रुतौ । देहोत्पत्त्येति पराधीनविशेषा(वा)प्तेर्विवरणम् । वाक्यद्वयमेतदित्यतोऽत्रेति श्रुत्येति च युज्यते । श्रुतेर्विषयान्तरं चाह** भूतमपीति ।

मूतमप्यसितं दिव्यदृष्टिगोचरमेव तु ।

उत्पद्यते

**भूतमप्याकाशशब्दोक्तं** तच्च घटादिवदुत्पद्यत इति श्रुत्याऽभिधीयत इति संबन्धः । **कुतो** भूताकाशस्योत्पत्तिमत्त्वमित्यत **उक्तं** असितमिति । **रूपित्वादित्यर्थः** । **तथा च श्रुतिः** । **'आकाशो नीलिमोदेती'ति** । तथा सति चाक्षुषत्वप्रसङ्ग इत्यत **उक्तं** दिव्येति । तुशब्देनानुद्भूतत्वविशेषं सूचयति । इदमुक्तं भवति । किं चाक्षुषत्वमात्रमापाद्यमुतास्मदादीन्प्रति । आद्ये त्विष्टापादनम् । दिव्यदृष्टिगोचरत्वाभ्युपगमात् । द्वितीये तु भूतादिशरीरेषु व्याप्तिभङ्गः । तत्रानुद्भूतादिकल्पनेऽत्रापि तत्समानं श्रुतिप्रामाण्यादिति ।

**शे०— आकाशशब्दवाच्यत्वोपपादनमिति** । तद्वेव इत्यनेन विनायकस्याकाशाभिमानित्वोक्त्या तत्सत्त्वादिप्रयोजकत्वलाभात्तदधीनत्वादर्थवदिति न्यायेन तस्याकाशशब्दमुख्यवाच्यत्वसिद्धिरिति भावः । ननु पराधीनविशेषितेत्यादिना पूर्वं पराधीनविशेषावाप्तेरेवोत्पत्तितयोक्तत्वाद्विनायकस्य देहोत्पत्त्योत्पन्नत्ववर्णने तद्विरोध इत्यतः कोऽसौ पराधीनविशेष इत्याकाङ्क्षायां देहोत्पत्तिलक्षण इति देहोत्पत्त्येत्यस्य प्रागुक्तपराधीनविशेषावाप्तिविवरणरूपत्वान्न पूर्वविरोध इत्यभिप्रेत्याह **देहोत्पत्त्येतीति** ॥ **आकाशो नीलिमोदेतीति** । नीलरूपविशिष्ट आकाश उत्पद्यत इत्यर्थः ॥ **श्रुतीति** । आकाशो नीलिमोदेतीति श्रुतिप्रामाण्यादित्यर्थः ।

---

**प०—** तद्वेव इत्यनुवादः । भूतेत्यादि व्याख्या ॥ **उपपादनमिति** । तत्प्रकारश्चाभिमन्यमानस्याभिमान्यधीनत्वा'त्तदधीनत्वादर्थवदि'त्यत्रोक्तदिशा स्वातन्त्र्यरूपनिमित्तेन तत्र तच्छब्दप्रवृत्तिरित्येवं रूपेण प्रागवद्धेयम् । अत्रेत्यनुवादः । श्रुतावित्यन्तं व्याख्या ॥ **वाक्यद्वयमेतदिति** । **अत्रेति** पदयुक्तं श्रुत्येतिपदयुक्तं चार्थद्वयमेकवाक्यतया न योज्यम् । पौनरुक्त्यापत्तेः । किन्तु भिन्नवाक्यतयेत्यर्थः । **श्रुतेरिति** । 'आत्मन आकाशः संभूत' इति श्रुतेरित्यर्थः । **नीलिमोदेतीति** । भावभवित्रोरभेदेन नीलिमेत्युक्तिः । नीलरूपयुक्त इत्यर्थः ।

**या०— नीलिमा** नीलरूपविशिष्टः ॥

**श्री०—** पौनरुक्त्यपरिहारायाह **वाक्येति** । **अत्र श्रुतौ** । विनायक आकाशशब्दोक्त इत्येकं वाक्यम् । स च 'देहोत्पत्त्या समुत्पन्न इति श्रुत्याऽभिधीयत' इत्यपरं वाक्यमिति वाक्यद्वयेत्यर्थः ॥ **केनेति** । तथा च येन संसर्गः स एवाकाश इत्यर्थः ॥ **तुशब्देनेति** । नीलरूपस्यानुद्भूतत्वरूपविशेषं तुशब्देन सूचयतीत्यर्थः ॥ **श्रुतीति** । आकाशो नीलिमोदेतीति श्रुतीत्यर्थः ।

सु० — नन्वाकाशस्याभूत्वाभवनलक्षणामुत्पत्तिमधुनैव निराकृत्यात्र पुनस्तदङ्गीकारे कथं पूर्वोत्तरव्याघातो न भवेदित्यत आह अव्याकृतमिति ।

अनु०— अव्याकृतं हि गगनं साक्षिगोचरम् ।

यतोऽव्याकृतमेव गगनं नोत्पद्यत इत्युक्तं न तु भूतमतो न विरोधः । तस्यानुत्पत्तौ हेत्वन्तरमप्याह नित्यं हि तदिति । न चैतदसिद्धम् । विनाशकारणाभावात् । न हि कारणान्तरमनपेक्ष्येश्वरेच्छा विनाशहेतुर्दृष्टा । उत्पत्तिश्रुतेस्तदपि कल्पनीयमिति चेन्न । तस्या भूततदभिमानिविषयत्वेन सावकाशत्वात् । अवश्यं चैतदेवम् । आत्मन आकाशः संभूत इत्यादेर्भूतप्रकरणत्वात् । नन्वव्याकृताकाशे प्रमाणमेव नास्ति । कस्यानुत्पत्तिरुच्यत इत्यत उक्तम् साक्षीति । तत्कथमित्यत आह प्रदेश इति ।

प्रदेश इति विज्ञेयं नित्यं नोत्पद्यते हि तत् ।

नन्वेतदेव भूताकाशमिति चेन्न । रूपित्वारूपित्वव्याकृतत्वाव्याकृतत्वपरिच्छिन्नत्वापरिच्छिन्नत्वश्रुतीनां सत्त्वात् । किञ्चोत्पत्त्यनुत्पत्तिश्रुत्योर्विरोधोऽप्याकाशद्वैतमवगमयति । व्यवस्थयाऽविरोधोपपत्तावनुत्पत्तिश्रुतेरौपचारिकत्वकल्पनायोगात् । न च प्रदेशस्योत्पत्तिरुपपद्यत इत्युक्तं प्राक् ।

ननु सूत्रकृतैव गौण्यसंभवादित्युक्तम् । सत्यम् । व्याख्यातं तद्भाष्यकृता । विवृतं चास्माभिः ।

शे०— भूततदभिमानिविषयत्वेनेति । न चैवमाकाशपदेन भूताकाशतद्देवता उच्यन्त इति टीकया विरोधः स्यादिति वाच्यम् । तत्र पराधीनविशेषावाप्त्यादिरूपोत्पत्तिसामान्यस्यैवाभिप्रेतत्वेन तथोक्तिसंभवादत्र त्वभूत्वाभवनरूपोत्पत्तिविशेषस्यैवाभिप्रेतत्वेन द्वयोरेव ग्रहणस्य न्याय्यत्वात् । न चैवमभिमानिनोऽपि ग्रहणं न स्यादभूत्वाभवनरूपोत्पत्तेस्तत्र बाधितत्वादिति वाच्यम् । अभिमानिशब्देन तद्देहस्य विवक्षितत्वादित्याशयात् ॥ रूपित्वारूपित्वेत्यादि । अयं भावः । प्रदेशरूप आकाशो नीरूपः साक्षिसिद्धश्च । अन्यथाऽवकाशवति गेहेऽन्धकारादौ हस्तचलनादिकं न स्यात् । भूताकाशं तु 'भूतमप्यसितं दिव्यदृष्टिगोचरमेव त्वि'ति श्रुत्या रूपवदप्रत्यक्षं च । एवं भूताकाशं 'सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः । पञ्चभूतात्मके देह' इत्यादिस्मृतिभिर्देहाकारेण विकारि । 'आत्मन आकाशः सम्भूत' इत्यादिप्रकरणानुगृहीतश्रुतिभि'स्तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगमि'त्यादिस्मृतिभिश्च तामसाहङ्कारकार्यत्वाद्व्याकृतम् । अवका-

शस्तु कूटस्थनित्यत्वेन साक्षिसिद्धत्वादव्याकृतः । एवं 'एतदण्डं विशेषाख्यं क्रमाद्वृद्धैर्दशोत्तरैः । तोया-दिभिः परिवृतमि'त्यादिस्मृतिभिर्भूतं परिच्छिन्नम् । प्रदेशस्तु 'आकाशवत्सर्वगतश्च नित्यः' । 'स यथाऽ-नन्तोऽयमाकाश' इत्यादिश्रुतिभिरपरिच्छिन्न इति । उपलक्षणं चैतत् । 'मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च । भागशो भागशस्त्वेनमनुगच्छन्ति सर्वश' इत्यादिस्मृतिभिर्भूतं गत्यादियोग्यभागवत् । प्रदेशस्तु न गत्यादियोग्यभागवान् । न हि प्रदेशविशेष एतद्देशं त्यक्त्वा देशान्तरं गच्छतीत्यतोऽपि वैलक्षण्यं बोध्यम् । श्रुतीनामिति बहुवचनमाद्यर्थे श्रुत्यादीनामित्यर्थः ॥ **उत्पत्त्यनुत्पत्तिश्रुत्योरिति** । 'आकाशो नीलिमोदे''त्यनादिर्वा अयमाकाश' इति चाकाशोत्पत्त्यनुत्पत्तिश्रुत्योरित्यर्थः । नन्वनादिर्वा अयमाकाश इत्यनुत्पत्तिश्रुतेरनादिरिवेत्यनादिरित्यौपचारिकत्वेनाप्युपपन्नत्वान्न श्रुतिद्वयविरोधेनाकाशद्वैत-सिद्धिरित्यत आह **व्यवस्थयेति ॥ न चेति** । नापीत्यर्थः ॥ **प्रागिति** । उपादानाभावात्प्रागभावाभावाच्च न प्रदेशस्योत्पत्तिरिति 'अवकाशमात्रमाकाशः कथमुत्पद्यतेऽन्यथे'त्यादिना प्रागुक्तमित्यर्थः । ननु गौण्यसं-भवादित्यादिना सूत्रकृतैवानादिरिवेत्यनादिरित्यनादित्वश्रुतेर्गौणत्वस्योक्तत्वात्तदनङ्गीकारेण व्यवस्थया श्रुति-द्वयविरोधाभिधाने तत्सूत्रविरोधः स्यादिति शङ्कते **नन्विति** । ननु भाष्येऽपि गौणीत्येवोक्तत्वान्न विवक्षितसिद्धिरित्यत आह **विवृतं चेति** । 'आकाशपदेन भूताकाशतद्देवता उच्यन्ते । तत्र भूतं स्वरूपत एवोत्पद्यते । रूपित्वात् । नीलिमोदेतीति श्रुतेश्च । तदभिमानिनोऽपि शरीरोत्पत्तिद्वाराऽ-स्त्येवोत्पत्तिः । अवकाशतदभिमानिनोस्त्वत्पत्ति पराधीनविशेषावाप्तिलक्षणोत्पत्तिरिति सर्वविषयत्वादुत्पत्ति-श्रुतिर्मुख्यार्थाऽनादित्वश्रुतिस्तु न सर्वविषयेति भवति गौणी । भूते कथमप्यवृत्तेरि'त्यादिना टीकायाम-सर्वविषयत्वेन गौणत्वस्यैव सूत्रार्थतया विवरणेनानादिरिवानादिरित्येवंरूपानादित्वस्य सूत्रकारान-भिप्रेतत्वान्न तद्विरोध इति भावः ।

स० — **तस्या भूततदभिमानिविषयत्वेनेति** । आत्मनः आकाश इत्यत्राकाशपदेन भूता-काशतद्देवता उच्यन्त इत्यादितत्त्वप्रकाशिकायामभ्युच्चयेन सर्वोत्पत्तिपरत्वान्न तद्विरोधः । नन्वनादिर्वा अयमाकाश इत्यनुत्पत्तिश्रुतेः अनादिरिवेत्यनादिरित्यौपचारिकत्वेनाप्युपपन्नत्वान्न श्रुतिद्वयविरोधेनाकाशद्वैत-सिद्धिरित्यत आह **व्यवस्थयेति** ॥ **न चेति** । नापीत्यर्थः । **प्रागिति** । 'अवकाशमात्रमाकाशः कथमुत्पद्यतेन्यथे'त्येतद्व्याख्यानावसरे 'सोपादाना हि सर्वा सृष्टिर्दृष्टा । न चाकाशोत्पत्तावुपादानमस्ती'त्या-दिना प्रदेशस्योत्पत्त्ययोगः पूर्वमुपपादित इत्यर्थः । ननु गौण्यसंभवादित्यादिना सूत्रकृतैवानादिरिवाना-दिरिति अनादित्वश्रुतेः गौणत्वस्योक्तत्वात्तदनङ्गीकारेण व्यवस्थया श्रुतिद्वयविरोधाभिधाने सूत्रविरोधा-भिधाने सूत्रविरोध इत्याह **नन्विति** ॥ **विवृतं चेति** । 'आकाशपदेन भूताकाशतद्देवता उच्यन्ते । तत्र भूतं स्वरूपत एवोत्पद्यते रूपित्वा'दाकाशो नीलिमोदेती'तिश्रुतेश्च तदभिमानिनोपि शरीरोत्पत्तिद्वारा

अस्त्युत्पत्तिः । अवकाशतदभिमानिनोरपि पराधीनविशेषलाभलक्षणोत्पत्तिरिति सर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्यार्था । अनादित्वश्रुतिस्तु न सर्वविषयेति गौणी । भूते कथमप्यवृत्तेरित्यादिना तत्त्वप्रकाशिकायामसर्वविषयत्वेन गौणत्वस्यैव सूत्रार्थतया विवरणेनानादिरिवानादिरित्येवंरूपानादित्वस्य सूत्रकारानभिप्रेतत्वान्न तद्विरोध इति भावः ।

प० — ईश्वरेच्छैव विनाशकारणमस्त्वित्यत आह **न हि कारणान्तरेति ॥ तदपीति** । ईश्वरेच्छामात्रस्य विनाशहेतुत्वमपीत्यर्थः । तत्र कल्पकोक्तिः **उत्पत्तिश्रुतेरिति** । संभूतश्रुतिबलादित्यर्थः । नन्वाकाशस्यैकत्वेऽप्युत्पत्तिमुपेत्यानुत्पत्तिश्रुतेश्चिरन्तनत्वाभिप्रायेणौपचारिकत्वं कल्प्यतामित्यत आह **व्यवस्थयेति ॥ न च प्रदेशस्योत्पत्तिरिति** । उत्पत्तिश्च नोपपद्यत इत्युक्तं 'कथमुत्पद्यतेऽन्यथे'त्यादावित्यर्थः । ननु संभूतादिवाक्यस्याकाशपदस्य भूताकाशप्रदेशरूपद्विविधाकाशपरत्वं स्वीकृत्योभयोरपि जनिमङ्गीकृत्य अनादिर्वा अयमाकाश इति श्रुतिस्थाकाशपदस्यापि तदुभयार्थत्वमुपेत्यानादित्वश्रुतेः भूते छत्रिवल्लक्षणा वा चिरन्तनत्वेन गौणी वा भूतेतरपरत्वेनामुख्यार्था वेत्युक्तं सूत्रे । इह तूच्यते संभूतवाक्यं भूतपरमेव । अनादिवाक्यमवकाशपरमेवेति । तत्कथमिति भावेन शङ्कते **ननु सूत्रकृतैवेति** । उत्पत्त्यनुत्पत्तिश्रुतिद्वयस्थाकाशशब्दस्योभयाकाशवाचित्वं तदभिमानिवाचित्वं च उत्पत्तिश्रुतेः सर्वविषयत्वेन मुख्यार्थत्वम् । अनुत्पत्तिश्रुतेः भूतेतरविषयत्वादिरूपेण गौणार्थत्वमित्येकं श्रुतिद्वयविरोधसमाधानम् । सितासिताकाशविषयतया भिन्नविषयत्वेनापरं विरोधसमाधानम् । तदुभयं न्यायविवरणेऽभिहितम् । तत्राद्यं भाष्यटीकयो(र्व्यक्त)रुक्तम् । अन्त्यं त्वत्र विवृतम् । समाधिद्वयस्य टीकायामनुक्तिबीजादिकं चन्द्रिकायां व्यक्तम् ।

या० — **तस्या भूततदभिमानविषयत्वेनेति** । न चैवमाकाशपदेन भूताकाशतद्देवता उच्यन्त इति तत्त्वप्रकाशिकया विरोधः । तत्र पराधीनविशेषावाप्त्यादिरूपोत्पत्तिसामान्यस्याभिप्रेतत्वेन तथोक्तिसम्भवात् । अत्र चाभूत्वाभवनरूपोत्पत्तिविशेषस्यैवाभिप्रेतत्वेन द्वयोरेव ग्रहणस्यावश्यकत्वादित्याशयात् । अभिमानिशब्देन तद्देहो विवक्षितः ॥ **व्याख्यातं तद्भाष्यकृतेति** । न गौणीत्यनेनाऽनादिरिवानादिरित्युपचाररूपाऽमुख्यवृत्तिर्विवक्षिता येन तद्विरोधः । किन्त्वनादित्वश्रुतिरुत्पत्तिश्रुतिवत्सर्वाकाशविषया नेत्येव विवक्षितमिति भाष्यकृता व्याख्यातमित्यर्थः । ननु भाष्येऽपि गौणीत्येवोक्तत्वात्कथमिदं भाष्यकृदभिप्रेतमिति ज्ञेयमित्यत आह **विवृतं चास्माभिरिति** । सर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्यार्था अनादित्वश्रुतिस्तु न सर्वविषयेति भवति गौणी'ति तत्त्वप्रकाशिकायां विवृतमित्यर्थः । अत्र चशब्दाद्वेत्युत्तरसूत्रे भाष्योदाहृता भागशो ह्युत्पद्यन्त इति श्रुतिरेव मूलमित्यवगन्तव्यम् ।

**श्री०** — ईश्वरेच्छैव विनाशकारणमिति चेत्तत्राह **न हीति** ॥ **तदपीति** । उत्पत्तिमतो विनाशनियमाद्विनाशे कारणान्तरमपि कल्पनीयमित्यर्थः ॥ २-३-१ ॥

**सु०** — **नन्वव्याकृताकाशस्योत्पत्त्यभावे मा भूदाकाशः संभूत इति विरोधः । इदं सर्वमसृजतेत्यादिश्रुतिविरोधस्तु भविष्यतीति चेन्न । तस्याभूत्वाभवनलक्षणोत्पत्त्यसंभवेपि पराधीनविशेषाप्तिरूपोत्पत्तिसद्भावादित्याह** तथाऽपीति ।

**अनु०** — तथाऽपि मूर्तसंबन्धपरतन्त्रविशेषयुक् ।
खमेवोत्पत्तिमन्नाम श्रुतिशब्दविवक्षितम् ।

**मूर्तसंबन्धश्चासौ परतन्त्रविशेषश्चेति विग्रहः । यदनादित्वेनोक्तं तदेव खमित्यर्थः । इदं सर्वमसृजतेति श्रुतिवाक्यं श्रुतिशब्दः ।**

**शे०** — मूले परतन्त्रविशेषयुगित्येतावतैव पूर्णे मूर्तसम्बन्धेति विशेषणवैयर्थ्यमित्याशङ्क्य कोऽसौ परतन्त्रो विशेष इत्याशङ्कापरिहाराय तद्विवरणार्थत्वान्मूर्तसम्बन्धेत्यस्य न वैयर्थ्यमित्यभिप्रेत्य तदनुरूपं विग्रहं दर्शयति **मूर्तसम्बन्धश्चासावित्यादिना** ।

**सु०** — **एवं श्रौता(सौत्रा)काशोत्पत्तिं व्याख्यायोपलक्षितप्रकृत्याद्युत्पत्तिं व्याख्याति** प्रकृतिरिति ।

**अनु०** — प्रकृतिः पुरुषः काल इत्येते च समस्तशः ।
ईशाधीनविशेषेण जन्या इत्येव शब्दिताः ।

इत्येते च **एतदादयश्च** । ईश्वराधीनविशेषेणैव **नाभूत्वाभावित्वेनेत्यर्थः । कालस्य त्वभूत्वाभवनमप्यस्तीत्याशयेनाह** कालेति ।

कालप्रवाह एवैको नित्यो न तु विशेषवान् ।

विशेषवान् **क्षणलवादिरूपः । उपपादितं चैतत्प्रागेव ।**

**शे०** — **श्रौताकाशेति** । सौत्रवियत्पदमुख्यार्थाकाशोत्पत्तिमित्यर्थः ॥ **उपलक्षितेति** । सौत्रवियत्पदोपलक्षितेत्यर्थः । उपलक्षितप्रकृत्याद्युत्पत्तिव्याख्यानाय प्रवृत्तेऽत्र वाक्ये प्रकृतिपुरुषकालानामिव महदादिसूक्ष्मभागानामपि वियत्पदोपलक्षितत्वेनावश्यं ग्राह्यत्वात्तदनुक्तिर्दोष इत्याशङ्क्य 'कडाराः कर्मधारये' सप्तमी शौण्डैरि'त्यादाविव बहुवचनादेवाद्यार्थावगमान्न तदनुक्तिर्दोष इत्याशयेनेत्येते चेत्यनूद्य व्याख्याति **एतदादयश्चेति** । जन्या इत्येवेत्यत्र यथाश्रुतैवकारस्य व्यर्थत्वे विरुद्धार्थत्वप्रसङ्गाद्भिन्नक्रमतामाश्रित्य तदुभयं परिहरति **ईशाधीनविशेषेणैवेति** । ननु क्षणलवादिरूपस्य कालविशेषस्योपादाननिमित्तयोरभावेनाभूत्वाभवनरूपोत्पत्तेरसंभवात्कथं तदभ्युपगम इत्यतो **वैशेषिकपरीक्षायां**

'विशेषाश्चैव कालस्य हरेरिच्छावशाः सदे'त्यादिना ग्रन्थेन प्रकृतिहरीच्छारूपोपादाननिमित्तकथनेना-भूत्वाभवनलक्षणोत्पत्तेः समर्थितत्वान्नानुपपत्तिरित्याशयेनाह **उपपादितं चेति** ।

**स० — उपपादितमिति** । 'विशेषाश्चैव कालस्य हरेरिच्छावशाः सदा । सर्वे निमेषा इति ही'त्यादिनोपपादितमित्यर्थः ।

**प० —** इतिशब्दः प्रभृत्यर्थ इत्यभ्युपेत्याह **इत्येते चैतदादय इति** । महत्तत्वादिसूक्ष्मभागा इत्यर्थः ॥ **प्रागेवेति** । पूर्वपादे वैशेषिकनये । 'विशेषाश्चैव कालस्य हरेरिच्छावशाः सदा । सर्वे निमेषा इति हि श्रुतिरप्याह सादरमि'त्यत्र प्रकृत्युपादानकत्वेश्वरेच्छानिमित्तकारणकत्वाद्युक्त्योपपादित-मित्यर्थः ।

**या० — एतदादयश्चेति** । महदादिसूक्ष्मभागा इत्यर्थः । अनेनैत इति बहुवचनमाद्यर्थे व्याख्यातमित्यवगन्तव्यम् ॥ **विशेषवानिति** । विशेषशब्दस्य प्रवाहरूपधर्मवाचित्वादिति भावः । ननु क्षणलवादिरूपकालविशेषाणामभूत्वाभवनरूपोत्पत्त्यङ्गीकारे उपादानादिकं प्रमाणं च वाच्यमित्यत आह **उपपादितं चेनदिति** । **प्राक्** समयपादे 'विशेषाश्चैव कालस्य हरेरिच्छावशाः सदा । सर्वे निमेषा इति हि श्रुतिरेवाह सादरमि'त्यत्र प्रकृतिरुपादानमीश्वरेच्छानिमित्तकारणम् । 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी'ति श्रुतिः प्रमाणमित्युपपादितमित्यर्थः । इच्छा सिसृक्षारूपा ।

---

**सु० —** प्राक् परिगणितानां प्रकृत्यादीनामीश्वराधीनविशेषावाप्तिरेव जन्मेत्युक्तम् । तत्र कस्य कीदृशी विशेषावाप्तिरित्यतः प्रकृत्यादित्रयाभिमानिदेवतायाः पराधीनविशेषावाप्तिं विशद-यति पुरुषेति ।

**अनु० —** पुरुषाव्यक्तकालानां रमैवैकाभिमानिनी ।
सिसृक्षुत्वविशेषं तत्साक्षाद्भगवदिच्छया ।
प्राप्तैव सृष्ट्युदिता

यस्मात्पुरुषादीनां रमाऽभिमानिनी । सा चैकैव देहदेह्यादिभेदरहिता । तत्तस्मात्साक्षा-द्भगवदिच्छया सिसृक्षुत्वविशेषं प्राप्तैव सृष्ट्युदिता । न तु विनायकाद्यभिमानिवद्देहोत्पत्ति-मतीत्यर्थः । यद्यपि भगवत्या इच्छाऽपि नित्या तथाऽपि (तदीय)व्यक्तिरूपस्येश्वरा(परा)धीन-त्वाभिप्रायेणेदमुक्तमिति ज्ञातव्यम् ।

**शे० —** यथाश्रुतयोजनायामेवशब्दस्यैकशब्दस्य च वैयर्थ्यं भवतीत्यतस्तदवैयर्थ्याय पुरुषेत्या-दिवाक्यमन्यथा योजयति **यस्मादित्यादिना** । ननु तथाऽपि रमाया एकैवेत्येकमात्रत्वकथनस्य प्रयोज-

नाभावादुक्तदोषतादवस्थ्यमित्यतो विनायकाद्यभिमानिवद्रमाया अपि देहोत्पत्तिरूपोत्पत्तेरेवोत्पत्तित्वसम्भवात्सिसृक्षुत्वविशेषं तदिति वक्ष्यमाणं प्रकारान्तराश्रयणमनर्थकमित्याशङ्कापरिहारार्थत्वादेकैवेत्यस्य नानर्थक्यमित्यभिप्रेत्य कथमनेनोक्तशङ्कापरिहार इत्यतस्तदुपयोगितया तद्याचष्टे **देहदेह्यादिभेदरहितेति** । तथा च तद्देहस्य स्वरूपत्वेन विनायकाद्यभिमानिवद्देहोत्पत्तेरपि तदुत्पत्तित्वासंभवात्प्रकारान्तराश्रयणमुपपन्नमिति भावः । प्राप्तैवेत्येवशब्दव्यावर्त्यं दर्शयति ॥ **न हीति** ॥ **इच्छाऽपि नित्येति** । तथा च न तस्या अपि भगवदिच्छया प्राप्तिर्युज्यत इति भावः ।

च० — **सिसृक्षुत्वविशेषं** सर्जनविषयकेच्छावत्वविशेषम् ॥

सु० — **प्रकृतेः पराधीनविशेषावाप्तिं विवृणोति** प्रधानमिति ।

**अनु०** — प्रधानं विकृतेरपि ।

**प्रधानमपि विकृतेरीश्वराधीनायाः कारणादिदं सर्वमसृजतेत्यादौ सृष्टमित्युदितमित्यर्थः । यथोक्तम् । 'विकारोऽव्यक्तजन्म ही'ति ।**

**पुरुषाणां पराधीनविशेषावाप्तिं स्पष्टयति** पुमांस इति ।

पुमांसो देहसंबन्धात्सृष्टिमन्त इतीरिताः ॥ २-३-१ ॥

**कालप्रवाहस्य प्रवाहिजन्म महदादीनां चोपचयावाप्तिर्विशेषलाभ इति स्पष्टत्वा(न्नात्रो)न्नोक्तम्** । एतेन 'ज्ञोऽत एव' 'तथा प्राणाः' **इत्यादिकमपि व्याख्यातं वेदितव्यम्** ॥२-३-१॥

श्री० — विकृतिवत्प्रकारान्तरस्यापि प्रधाने उत्पन्नत्वव्यवहारनिदानस्याभावेन यथाश्रुतापिशब्दयोजनाया असंभवेन भिन्नक्रमतया तं योजयति **प्रधानमपीति** । साकाङ्क्षत्वप्रयुक्तवाक्याभासत्वशङ्कापरिहाराय सृष्टिमन्त इतीरिता इत्युत्तरानुकर्षं योग्यतया वचनविपरिणामं चाश्रित्यापेक्षितपूरणेन तत्परिहरति **विकृतेरित्यादि** । विकृतिः प्रकृतेर्जन्मेत्यत्र नियामकमाह **यथोक्तमिति** । ननु प्राक् परिगणितानां प्रकृत्यादीनां पराधीनविशेषावाप्तिलक्षणजन्मविशदीकरणाय प्रवृत्तेऽस्मिन्ग्रन्थे प्रकृत्यादीनामिव कालप्रवाहस्य महदादिसूक्ष्मभागानां च प्राक् परिगणितत्वाविशेषेण तेषामपि पराधीनविशेषावाप्तेरवश्यं विशदीकरणीयतया तदनुक्त्या मूले न्यूनत्वमित्याशङ्कामनुक्तौ निमित्तकथनेन परिहरति **कालेति** ॥ २-३-१ ॥

प० — **यथोक्तमिति** । अष्टमे गीताभाष्ये ॥ **एतेन ज्ञोत एवेति** । तत्र जीवानां देहलाभरूपजने 'युक्तेश्चे'ति द्वितीयसूत्र कथनात् । 'तथा प्राणा' इत्युत्तरपादीयाधिकरणे प्राणशब्दितेन्द्रियाणामुपचयरूपजनेश्चाभिधानादिति भावः ॥ २-३-१ ॥

या० — **महदादीनां चेति** । सूक्ष्मरूपाणामित्यर्थः ॥ **एतेन ज्ञोऽत एवेत्यादि** । 'ज्ञोऽत एवे'त्यत्र जीवानां देहलाभरूपविशेषावाप्तिस्तथा 'प्राणा'इत्यादौ सूक्ष्मरूपाणामिन्द्रियादीनामुपचयावाप्त्यादिरूपविशेषलाभस्य चोक्तत्वादिति भावः ॥ २-३-१ ॥

॥ इति वियदधिकरणम् ॥



## ॥ अथ मातरिश्वाधिकरणम् ॥

सु० — ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ अतीताधिकरणे वियदादिविषयाणां उत्पत्त्यनुत्पत्तिश्रुतीनां व्यवस्थया विरोधः परिहृतः । इदानीं 'तेजोबन्नान्याकाश इति तान्यनित्यानि वायुर्वाव नित्य' इति श्रुतौ व्यवस्थितनित्यत्वानित्यत्ववन्तमप्याकाशमनित्यपक्षे निक्षिप्य वायोर्नित्यत्वाभिधानादाकाशदेवताया विनायकस्येव वायुदेवतायाः स्वरूपेण नित्यत्वं देहोत्पत्त्यादिना जन्मादिमत्त्वमिति व्यवस्थानुपपत्तेर्मुख्यैवानुत्पत्तिरित्यधिकाशङ्कया पूर्वपक्षिते व्यवस्थातिदेशेनैव सिद्धान्तितम् । तत्र कीदृशी वायौ श्रुतीनां व्यवस्था । ययाऽधिकाशङ्कापरिहारः स्यादित्यतस्तां दर्शयति एवमिति ।

अनु० — ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥

एवं प्रलयकालेऽपि प्रतिभातपरावरः ॥
मुख्यवायुर्नित्यसमः शरीरोत्पत्तिकारणात् ॥
पराधीनविशेषेण जनिमानेव शब्दितः ॥

यथा वियदनादि जन्मवच्चोक्तमेवमित्यर्थः । प्रतिभातपरावरः शरीराभावेऽपि प्रातिभेनैव ज्ञानेन विषयीकृतातीतानागतो यतस्तस्मान्नित्यसम इति शब्दितः । शरीरोत्पत्तिकारणात्पराधीनविशेषेणेत्येतयोर्हेतुहेतुमद्भावः । एवशब्दस्य पराधीनविशेषेणेवेत्यन्वयः । मुख्यवायुरित्यनेन भूतप्रकरणेऽपि न भूतवायुविषयमिदं सूत्रम् । तत्राधिकाशङ्काभावात् । अत एव नावान्तरभिमानिविषयम् । किन्नाम तत्परमाभिमानिविषयमेवेति सूचयति । स्वरूपातिरिक्तस्य प्रातिभज्ञानस्याप्यनुपप्लवादाकाशदेवततो विशेषो युज्यत इति भावः ।

शे० — ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ नन्वेवं प्रलयकालेऽपीत्युत्तरवाक्यमनर्थकम् । न च वायुविषयाणामुत्पत्त्यनुत्पत्तिश्रुतीनां व्यवस्थया विरोधपरिहारार्थमेतदिति वाच्यम् । अस्यातिदेशाधिकरणत्वेन तस्य च 'अतिदेशो हि तादृश' इत्युक्तरीत्याऽभ्यधिकाशङ्कासापेक्षत्वेन प्रकृते चाभ्यधिकाशङ्काया अनुक्तत्वेनाधिकरणारम्भस्यासिद्धौ व्यवस्थोपदर्शनस्यानवसरपराहतत्वादित्यतो भाष्येऽभ्यधिकाशङ्काप्रदर्शनेनाधिकरणारम्भस्य समर्थितत्वादत्र तदनुक्तिर्न दोषायेत्यभिप्रेत्य भाष्यानुसारेण स्वयमभ्यधिकाशङ्कोपदर्शनेनाधिकरणारम्भोपपादनपूर्वकं व्यवस्थोपदर्शकतयोत्तरवाक्यं योजयितुं वृत्तमनुवदति अतीताधिकरण इत्यादिना ॥ प्रातिभेनैवेति । योगप्रभावलब्धातिशयविशेषमनोवृत्तिरूपेणेत्यर्थः । यथाश्रुत-

योजनायामेवशब्दस्य वैयर्थ्यादिप्रसङ्गाद्भिन्नक्रमतामाश्रित्य तत्परिहरति **एवशब्दस्येति ॥ अत एवेति ।** तत्राधिकाशङ्काभावादेवेत्यर्थः । तथाऽपि व्यवस्थितनित्यत्वानित्यत्वमप्याकाशमनित्यपक्षे निक्षिप्य वायोर्नित्यत्वाभिधानस्य का गतिरुक्ता भवतीत्यतः प्रलयकाले प्रातिभेनेत्यादिना मूलोक्तमेव तत्परिहारं स्पष्टमाह **स्वरूपेति ।**

**प० — एतेन मातरिश्वा ॥ व्यवस्थयेति ।** सितासितव्योमविषयत्वेन च व्यवस्थयेत्यर्थः । प्रलयकालेपीत्यस्यार्थः **शरीराभावेपीति ॥ प्रातिभेनैव ज्ञानेन** योगर्धिलब्धातिशयवृत्तिरूपज्ञानेनेत्यर्थः । **भूतप्रकरणेपीति ।** न वियदित्यारभ्य पृथिव्यधिकाररूपेतिपर्यन्तं आत्मन आकाशः संभूत इति श्रुत्युक्तभूतपञ्चकविचारणादिति भावः ॥ **न भूतत्वादिति ।** आकाशाद्वायुरिति श्रुतेरत्र विचार्यत्वेऽपि पूर्वत्र यथाकाशशब्दितानां भूतावकाशतदभिमानिविनायकचित्प्रकृतिरूपाणां चतुर्णां विचार्यत्वं तथात्र नये भूतवायुतदमुख्यमुख्याभिमानिरूपत्रितयस्य न विचार्यता भूततदमुख्याभिमानिरूपद्वयस्य पूर्वन्यायेन सिद्धोत्पत्तिकत्वात्। तत उपरि शङ्काविशेषाभावादित्यर्थः । ननु विनायकाकोऽन्यत्रातिशयः येन मुख्याभिमानिविषयत्वं युज्यते इत्यत आह **स्वरूपेति ॥ प्रातिभज्ञानस्येति ।** योगर्धिलब्धातिशयवृत्तिरूपज्ञानस्येत्यर्थः ।

**या० — ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ मुख्यैवेति** देहतोपीत्यर्थः । **प्रातिभेनैवेति ।** योगप्रभावलब्धातिशयविशेषेण मनोवृत्तिरूपेणेत्यर्थः ॥ (ननु सकृच्छ्रुतस्य 'इदं सर्वमसृजते'ति श्रुत्युक्तसृजतेत्यस्य अनेकार्थत्वकल्पनं विरुद्धमित्यत आह **बाधकेति ॥ कल्पनेति ।** कल्पनस्याविरोधादित्यर्थः । )

**च० — ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ प्रातिभेनैवेति ।** स्वर्थिकाणामिदं योगध्यासादितविशेषकमनोवृत्तिरूपज्ञानेनेत्यर्थः ।

**सु० — यदुक्तमत्र प्रकरणे पराधीनविशेषावाप्तिरेव जनिर्नाभूत्वाभवनमिति तदुपपत्त्यन्तरेणोपपादयन्नधिकरणार्थमुपसंहरति** नैवेति ।

**अनु० —** नैव किञ्चित्ततो जन्मवर्जितं परमात्मने ॥
पराधीनविशेषत्वे जन्मनः स्थूलताभवः ॥
पूर्वशब्दविलोपश्च यदि जन्मेति कीर्त्यते ॥
रमाया नैव जन्मास्ति चैतन्यस्यापि केवलम् ॥
प्रधानस्य च वेदस्य

**इति सिद्धमिति शेषः । एतच्च जन्मनः पराधीनविशेषलाभ(स्वरूप)त्व एवाङ्गीकृते सिध्यति न त्वभूत्वाभवनरूपत्व इत्यर्थः । नन्वव्याकृताकाशस्याभूत्वाभवनानुपपत्तेरस्तु तत्र**

**पराधीनविशेषावाप्तिर्जन्मशब्दार्थः । अन्यत्र त्वभूत्वाभवनमेवाङ्गीक्रियते चेत्को दोषः । बाधकभावाभावाभ्यामनेकार्थत्वकल्पनाविरोधादित्यत आह स्थूलतेति ।**

**उपादानधर्मिणो धर्म्यन्तरात्मना परिवर्तः स्थूलताभवः । अत एव पूर्वशब्दविलोपश्च पूर्वशब्दनिवृत्तौ शब्दान्तरप्रवृत्तिश्चेत्यर्थः । उदाहृतं चैतत्प्रकृत्यधिकरणे । अभूत्वाभवनं यदि जन्मेति कीर्त्यत इत्युक्तेऽसदनुवादः स्यात् । परिणामवादिभिः क्वाप्यभूत्वाभवनानभ्युपगमात् । अतो विमतिपदं दर्शयितुं स्थूलतेत्याद्युक्तम् । तर्हि रमाया जीवचैतन्यस्यापि प्रधानस्य वेदस्य चैवंविधं जन्म नैवास्तीत्यतः परमेश्वरादृते सर्वं जनिमदिति न सिद्ध्येत् । तथा च 'इदं सर्वमसृजते'त्यादिप्रतिज्ञाहानिः 'आत्मा वा' इत्यादिशब्दविरोधो विभक्तत्वहेतोरनैकान्त्यं च स्यात् इति वाक्यशेषः । 'एष चेतनया युक्तो जीव इत्यभिधीयते' इत्यादिवचनाज्जीवशब्दो भूतादिसङ्घाते वर्तते । तस्य चोक्तविधोत्पत्तिरस्त्येवेत्यतः केवलं चैतन्यस्येत्युक्तम् । न हि क्षीरं दधि जातमितिवदिदं द्रव्यं रमादित्वेन परि(णतमि)वृत्तमित्यत्र प्रमाणमस्ति । किन्तु 'द्वावेतौ नित्यमुक्तौ नित्यौ सर्वगतौ', 'अजो नित्यः', 'अजामेकां', 'यावद्ब्रह्म विष्ठितं तावती वागि'त्यादिश्रुतिभ्योऽनादित्वमेवावगतम् ।**

शे० — **उपपादयन्निति** । उपपादयिष्यन्नित्यर्थः । ननु तथा सति सकृच्छ्रुतस्यानेकार्थत्वापत्तिरेव दोषः स्यादित्यत आह **बाधकेति** ॥ **उदाहृतं चैतदिति** । 'क्षीरादिवद्विकारः स्यादि'त्यादिनेति शेषः ॥ **क्वाप्यभूत्वेति** । अत्यन्तासत्कार्यवादानभ्युपगमादिति भावः ॥ **एवंविधमिति** । उपादानधर्मिणो धर्म्यन्तरात्मना परिवर्तरूपमित्यर्थः ॥ **विभक्तत्वेति** । अत्यल्पशक्तित्वेत्यर्थः ॥ **अनैकान्त्यमिति** । रमादिभिरिति शेषः ॥ **जीवशब्द इति** । जीवशब्दस्य भूतादिसङ्घाते वृत्त्या तत्पर्यायस्य चेतनशब्दस्यापि तत्र वृत्तिर्लब्धैवेति भावः । ननु रमादीनामप्युक्तरूपस्थूलताभावलक्षणमेव जन्म किन्न स्यादित्यत आह **न हीति** ॥ **किन्त्विति** । 'द्वावेताविति' श्रुत्या चित्प्रकृतेः, 'अजो नित्य' इति श्रुत्या पुरुषस्य, 'अजामेकामिति' श्रुत्या जडप्रकृतेः, 'यावदिति' श्रुत्या वेदस्यानादित्वमवगम्यत इति विवेकोऽत्रानुसन्धेयः ॥

प० — वर्जितमित्यनन्तरं शेषमाह **इति सिद्धमिति शेष इति** । जन्मपदस्यानेकार्थत्वकल्पनैव दोष इत्यत आह **बाधकेति** ॥ **उपादानधर्मिण इति** । उपादानभूतधर्मिण इत्यर्थः । अत एव धर्म्यन्तरात्मना परिवर्तनादेवेत्यर्थः ॥ **उदाहृतं चैतदिति** । 'पराधीनविशेषाप्तिर्निदर्शोऽन्यथाभवः । क्षीरादिवद्विकारः स्यादि'ति । 'शृङ्गाच्छरो विलोमभ्यो दूर्वा गोमयतस्तथा । वृश्चिकश्चे'ति चोदाहृतमित्यर्थः । यदीति श्रवणादाह **तर्हि रमाया इति** । चशब्दान्वयेनानुवादो **वेदस्य चेति** ॥ **विभक्तत्वहेतोरिति** ।

'यावद्विकारं तु विभाग' इति सूत्रोक्ताल्पशक्तिकत्वहेतोरित्यर्थः । **एष चेतनयेति** । भूतेन्द्रियादिसङ्घ इत्यर्थः । 'अजो नित्यः शाश्वतोऽयमि'ति जीवनित्यत्वे, 'अजामेकां लोहितशुक्लकृष्णामि'ति प्रधानस्य, यावद्ब्रह्मेति वेदस्य नित्यत्वे । **विष्ठितं** विशेषेण निर्विकारतया स्थितम् । तावती वागपि स्थितेत्यर्थः ।

**या०— उपपादयन्निति ।** उपपादयिष्यन्नित्यर्थः । उपपादयितुमिति यावत् । **अविरोधादिति ।** जन्मशब्दस्येति शेषः । **उदाहृतं चैनदिति ।** 'क्षीरादिवद्विकारः स्यादि'त्युदाहृतमित्यर्थः । **क्वाप्यभूत्वेति** । परिणामवादिभिः सत्कार्याङ्गीकारेण केवलासत्कार्यवादानभ्युपगमादिति भावः । **एषः** देहः ॥ **जीवशब्द इति ।** जीवशब्दस्य भूतादिसङ्घाते वृत्तौ तत्पर्यायस्य चेतनशब्दस्यापि तत्र वृत्तिः प्राप्तैवेति भावः । ननु रमादावपि स्थूलताभावरूपमेव जन्म किं न स्यादित्यत आह **न हि क्षीरमित्यादिना ।** द्वावेताविति वाक्येन चित्प्रकृतेरनादित्वावगमः । अज इति, पुरुषस्य । अजामिति, जडप्रकृतेः । यावदिति वेदस्येत्यवगन्तव्यम् ।

**सु०— ननु वेदस्य कीदृशी पराधीनविशेषाभिर्येन भवत्पक्षे प्रतिज्ञाहान्यादिकं न स्यादित्यत** आह वेदस्यापीति ।

**अनु०—** वेदस्यापीश्वरेच्छया ॥

व्यक्तिर्नाम विशेषोऽस्ति

**नियतविशिष्टानुपूर्वीकत्वेनार्थबोधकत्वशक्त्याविर्भावो** व्यक्तिः । **कालप्रवाहस्य नास्तित्वे दोषो वक्ष्यते । महदादिसूक्ष्मरूपनित्यता च श्रुत्या(दिष्व)पि प्रसिद्धा । अतोऽपि प्रतिज्ञाहान्याद्यनिस्तार इत्याशयवानुपसंहरति** तस्मादिति ।

तस्मात्तद्वशतैव हि ॥

उत्पत्तिरत्र कथिता ॥ २-३-२ ॥

तद्वशता **परमेश्वरवशत्वविशेषलाभः** । अत्र श्रुतिसूत्रयोः ॥ २-३-२ ॥

**शे०- नियतविशिष्टानुपूर्वीकत्वेनेति ।** अत्र नियतेति विशेषणं नियतत्वं नियतैकप्रकारत्वं, तच्च पूर्वोत्तरकालेष्वेव विवक्षितमिति न भारतादिसाधारण्यमिति जिज्ञासासूत्रोक्तनियतैकप्रकारत्वरूपवेदापौरुषेयत्वस्मारणेनानुपूर्व्याः स्वरूपकथनमेव बोद्धव्यम् । विशिष्टानुपूर्वीकत्वं च क्रमविशेषविशिष्टवर्णत्वमेवाभिमतम् । अत्र विशेषग्रहणेन भारतादिव्यावृत्तिः । वर्णानां क्रमविशेषविशिष्टत्वं च विशिष्टक्रमोपेतबुद्धिविषयत्वमेवाभिमतम् । प्रकारान्तरेण क्रमवैशिष्ट्यस्य वर्णेष्वसम्भवात् । तथा हि । क्रमो वर्णनिष्ठो वोच्चारणनिष्ठो वोपलब्धिनिष्ठो वा वाच्यः । चतुर्थप्रकारानिरूपणात् । तत्राद्ये स किं देशतः कालतो वा देशकालानुपाधिकः

पौर्वापर्यलक्षणो वर्णरूपवस्तुनिष्ठ एव वा । नाद्यः । वर्णानां सर्वगतत्वेन तदनुपपत्तेः । न द्वितीयः । वर्णानां नित्यत्वेन कालतोऽपि तदनुपपत्तेः । न तृतीयः । विरोधात् । न ह्युभयोरेकस्मिन्काले राजा जार इति प्रयोगसमये एकस्यैव जकारस्य रेफात्पूर्वापरभाव एकदैव युक्तः । नापि द्वितीयः । उच्चारणतत्क्रमयोः श्रोत्राविषयत्वात् । वेदस्य च श्रोत्रग्राह्यत्वात् । न तृतीयः । उपलब्धिनिष्ठत्वे चान्यधर्मत्वात्क्रमस्य वर्णानां तद्वत्त्वानुपपत्तेरिति । अत्र व्यक्तिर्विशेष इत्येव वक्तव्ये यदधिकवचनं तद्वर्णवत्क्रमस्यापीश्वरबुद्धिघटितस्य कूटस्थतयाऽऽद्यन्तशून्यत्वसूचनेन तदीयार्थबोधकत्वशक्तेः सहजत्वसूचनेन च तदुभयावाप्तेः पराधीनविशेषावाप्तित्वासम्भवसूचनद्वारा, द्विरूपोक्तपराधीनविशेषावाप्तिमात्रेणैव वर्णानां 'इदं सर्वमसृजते'ति वाक्योक्तसृज्यकोटिनिविष्टत्वोपपादनसम्भवे तदुपपादनाय व्यक्तिरूपविशेषाश्रयणं भाष्यकाराणामनर्थकमिति शङ्कानिराकरणार्थम् । ततश्चायमर्थः । यद्यपि वर्णाः कूटस्थतयाऽऽद्यन्तशून्यत्वान्नोत्पत्त्यादौ परापेक्षाः । नापि क्रमः । तस्यापीश्वरबुद्धिघटितस्य वर्णवदेव कूटस्थतयाऽऽद्यन्तशून्यत्वस्य स्थितत्वात् । नापि तेषामर्थावबोधशक्तिः । तस्या अपि गायत्र्यधिकरणीयन्यायविवरणटीकाद्यनुसारेण शब्दस्वभावत्वावगत्याऽनागन्तुकत्वेन पराधीनविशेषत्वायोगात् । तथाऽपि क्रमविशेषविशिष्टवर्णत्वेन रूपेण या वर्णानां सहजाऽर्थावबोधकशक्तिस्तदाविर्भावरूपा या व्यक्तिः सैव वर्णानां पराधीनो विशेष उपपद्यत इति ॥ **वक्ष्यत इति** । 'कालाधीना हि मुक्तता । काल एवागमोऽप्याह मुक्तिं कालनिवर्तने । मुक्तेरपि निवृत्तिः स्यान्नाकालत्वं ततो भवेत्' इत्यादिना भक्तिपादे 'यदि कालोऽपि नेत्याह कदेति प्रश्न उत्तरम् । किं वक्ष्यति यदावस्थां वदेत्सापेक्षतां व्रजेत् । अवस्थात्वादिति ह्यत्र हेतुः साऽपि कदेति च । पृष्टे कालश्च वक्तव्यो नाकालत्वं ततो भवेदि'त्यादिनोत्क्रान्तिपादे चेति शेषः ॥ २-३-२ ॥

प०— वेदस्य व्यक्तिर्नाम पुराणादेरिव क्रमविशेषनिर्माणमिति भ्रमनिरासायाह **अर्थावबोधकशक्त्याविर्भाव इति** । अन्यथारचनमेव व्यक्तिः किं नेत्यत आह **नियतविशिष्टेति** । नियता एकरूपा विशिष्टाऽसाधारणी आनुपूर्वी क्रमो यस्य तस्य भावस्तेनेति । आनुपूर्व्या वैशिष्ट्यं नामार्थविशेषबोधकत्वेन वा अदृष्टविशेषजनकत्वेन वेति बोध्यम् । यद्यपि क्रमस्य तत्त्वनिर्णयटीकोक्तरीत्या कृतकत्वेन प्रत्यध्यापकमुच्चार्यमाणत्वेन जनिमत्त्वमस्ति । तथापि छन्दोनयोक्तदिशाभ्युपेत्याजन्यत्वं भगवदधीनविशेषावाप्तिरूपोत्पत्तिं वक्तुं शक्त्याविर्भाव इत्युक्तम् । **वक्ष्यत इति** । भक्तिपादे । 'कालाधीना हि मुक्तता । काल एवागमोप्याह मुक्तिं कालनिवर्तने । मुक्तेरपि निवृत्तिः स्यादि'त्यत्र इत्यर्थः । **श्रुत्यादेोति** । प्रतिज्ञाहान्यादीत्यादिपदेनात्मा वा इदमेक एवाग्र इत्यादिश्रुतिविरोधविभक्तत्वहेत्वनैकान्त्ययोर्ग्रहणम् । यदि स्थूलताभाव एव जनिशब्दार्थस्तर्हीति योज्यम् । अत्रेत्यनुवादः । श्रुतिसूत्रयोरिति व्याख्या ॥ २-३-२ ॥

या० — **नियतविशिष्टानुपूर्वीकत्वेनेति** । नियतक्रमविशेषविशिष्टत्वेनेत्यर्थः । अत्र वेद-शब्देन वर्णा एव ग्राह्याः । तेषां चेश्वरेच्छया तद्बुद्ध्युपाधिकं क्रमविशेषविशिष्टत्वमादौ जायते । तेन चार्थावबोधशक्तेराविर्भावरूपा व्यक्तिर्भवति । तथा च कार्यकारणभावापन्नमिदं विशेषद्वयं तत्र पराधीन-मस्तीति भावः । यत्तु वर्णेष्वीश्वरबुद्ध्युपाधिकं नियतानुपूर्वीकत्वमजन्यमेव, अतोऽर्थावबोधशक्त्याविर्भाव एक एव तत्र पराधीनो विशेषोऽत्रोक्त इति । तन्न । ईश्वरबुद्ध्युपाधिकद्वित्वादिवत्तदुपाधिकवेदक्रमस्यापि जन्यत्वस्यैवौचित्यात् । अन्यथा तन्निमित्तकार्यावबोधकशक्त्याविर्भावस्य कादाचित्कत्वोक्त्ययोगात् । वैदिकपूर्वोत्तरवर्णक्रमस्याजन्यत्वे खण्डितत्वाभावप्रसङ्गेन तस्य वर्णैरत्यन्ताभेदप्राप्त्या तदभिन्नवर्णानां परस्पराभेदप्रसङ्गाच्चेति ॥ **वक्ष्यत इति** । 'कालाधीना हि मुक्तता । काल एवागमोऽप्याह मुक्तिं कालनिवर्तने । मुक्तेरपि निवृत्तिः स्यादि'ति भक्तिपाद इति शेषः । यद्यप्यत्र कालस्य निवर्तन एव दोषो वक्ष्यते न पूर्वमसत्त्वे । तथाऽपि न्यायसाम्येन कालस्य पूर्वमसत्त्वे संसारस्याप्यसत्त्वप्राप्त्या तस्याना-दित्वप्रसिद्धिविरोध इति दोषोऽपि तत्राभिप्रेत इति भावः । प्रसिद्धेत्यनन्तरं यत इति शेषः । अतोऽपी-त्यनन्तरं कालप्रवाहमहदादिसूक्ष्मरूपाणां पराधीनविशेषावाप्तिरूपोत्पत्त्यङ्गीकारे, तवेति वाक्यशेषः ॥

॥ इति मातरिश्वाधिकरणम् ॥

## ॥ अथ असंभवाधिकरणम् ॥

सु०— ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ असम्भाव्यमानजन्मनोर्गगनपवनयोरुत्पत्त्युक्तायमिदमाशङ्क्यते । सदजायतेत्यादिश्रुतेर्ब्रह्मणोऽपि जन्मास्ति । न च श्रुत्यादिविरोधः । स्वरूपोत्पत्त्यभावेऽपि परायत्तविशेषावाप्तिरूपोत्पत्तिसम्भवाद्गगनपवनवदिति । तन्निवृत्त्यर्थमिदमधिकरणमारब्धम् । एतच्चायुक्तमिवाभाति । असम्भव इत्यनुत्पत्तिमात्रप्रतिज्ञानात् । तस्य च परेणाप्यङ्गीकृतत्वात् । नन्ववधारणार्थस्य तुशब्दस्य प्रयोगान्नायं दोषः । सत्यम् । तथाऽपि तत्र हेतोरनभिधानादयुक्तमेव । नन्वनुपपत्तेरित्युक्तम् । सत्यम् । किं तस्यार्थो न ह्यसतः सदुत्पत्तेरदृष्टत्वादनुपपत्तेरिति । न चैतत्सर्वथाऽप्युत्पत्त्यभावमुपपादयितुमलम् । कारणविशेषप्रतिषेधात् । मैवम् । प्रसक्तकारणनिरासादन्यस्याप्रसङ्गात्कारणाभावस्यैव सिद्धेरिति स्थिते विभवादनुपपत्तेरिति हेतुं प्रकारान्तरेण व्याचक्षाणः सूत्रार्थमाह स्वतन्त्रत्वादिति ।

अनु०— ॐ असंभवस्तु सतोऽनुपपत्तेः ॐ ॥

स्वतन्त्रत्वात्परमात्मनः ॥
नैवोत्पत्तिः कथमपि न स्वतन्त्रं ततोऽपरम् ॥ २-३-३ ॥

कथमपीति । स्वरूपतो विशेषतश्चेत्यर्थः । कुतः परमात्मनः स्वातन्त्र्यमिति चेन्मैवम् । किं स्वतन्त्रमेव वस्तु नाङ्गीक्रियते किंवाऽतोऽन्यत्स्वतन्त्रमङ्गीकृत्य तस्य स्वातन्त्र्यं निराक्रियते । नाद्यः । अनवस्थितेरसम्भवाच्च । द्वितीयं प्रत्याह नेति । प्रमाणाभावात् । भावे वा तदेवास्माभिः परमात्मतयाऽङ्गीकरिष्यत इति भावः ।

शे०— ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ ननु स्वतन्त्रत्वादित्युत्तरवाक्यमनर्थकम् । न चासम्भव इत्येतत्सूत्रव्याख्यानार्थं तदिति वाच्यम् । सूत्रव्यावर्त्यशङ्काऽनुपदर्शनेन तदारम्भस्यैवासिद्ध्या तद्व्याख्यानस्यानवसरपराहतत्वादित्यतो भाष्यएव सूत्रव्यावर्त्यशङ्कोपदर्शनेन तदारम्भस्य समर्थितत्वादत्र तदसमर्थनं न दोषायेत्यभिप्रेत्य स्वयं भाष्यानुसारेणैतद्व्यावर्त्यशङ्काप्रसञ्जककथनपूर्वकं तदुपदर्शनेनैतदधिकरणारम्भं समर्थयते असम्भाव्यजन्मनोरिति । भाष्योक्तैतत्सूत्रव्याख्यानस्यानुपपन्नत्वात् 'स्वतन्त्रत्वात्परात्मन' इति ग्रन्थकारीयं प्रकारान्तरेण सूत्रव्याख्यानमिति भ्रमनिरासाय भाष्योक्तव्याख्यानं तत्र प्रसक्तानुपपत्तीरुद्भाव्य तत्परिहारेण समर्थ्यात्र प्रकारान्तरेण व्याख्याने हेतुं कथयन्नेव तत्परतयोत्तरग्रन्थं योजयति एतच्चायुक्तमिवाभातीत्यादिना ॥ व्याचक्षाण इति । न स्वतन्त्रमित्युत्तरवाक्येनेति शेषः । सूत्रे सच्छब्दः सद्भाववाची । 'सद्भावे साधुभावे च सदित्येतत् प्रयुज्यत' इति गीतोक्तेः । सद्भावश्च सत्त्वमेव । 'सत्त्वं स्वातन्त्र्यमुद्दिष्टमि'ति भारतोक्तिरिति भावेन सौत्रस्य सत इति हेत्वंशस्य स्वतन्त्रत्वादिति भाष्ये

व्याख्यानं कृतमिति द्रष्टव्यम् । अनुपपत्तेरिति हेतोः प्रकारान्तरेण व्याख्यानपरं भाष्यं योजयितुमाक्षिपति **कुत इति** ॥ **अनवस्थितेरसंभवाच्चेति** । यदि किमपि स्वतन्त्रं नाङ्गीक्रियते, प्रेरकपरम्परा परनिरपेक्षपरमेश्वरे न विश्राम्यतीत्युच्यत इति यावत्, तदाऽनवस्था स्यात्, नियम्यत्वसाम्येन नियम्यनियामकभावासंभवाच्चेत्यर्थः ॥ **प्रमाणाभावादिति** । अनेन प्रमाणाभावेन ततोऽन्यस्य स्वातन्त्र्यानुपपत्तेरित्यनुपपत्तेरिति सूत्रखण्डव्याख्यानं कृतं भवति ।

**प० — असंभवस्तु ।** अधिकरणमवतारयति **असंभाव्येति** । ईक्षतिकर्मेत्यत्र सच्छब्दस्य ब्रह्मणि समन्वितत्वादियं श्रुतिर्ब्रह्मपरा भवितुमर्हतीति भावेनाह **सदजायतेत्यादीति** ॥ **न च श्रुत्यादीति** । सदेव सोम्येदमग्र आसीदित्यादिश्रुतीत्यर्थः ॥ **अनुत्पत्तिमात्रेति** ॥ **संभवः** उत्पत्तिः । आकाशः संभूत इति प्रयोगादसंभवोऽनुत्पत्तिरित्यनुत्पत्तिमात्रेत्यर्थः ॥ **परेणेति** । पूर्वपक्षिणेत्यर्थः । असंभवस्त्विति तुशब्दस्य वियदादिव्यवस्थयोःपत्त्यनुत्पत्तिव्यवच्छेदार्थत्वात् । तेन पूर्ववादिचोद्यनिरासः सेत्स्यतीति शङ्कते **नन्ववधारणेति** ॥ **तथापि तत्रेति** । व्यवस्थयोत्पत्ति,त्त्यभावप्रतिज्ञानेपि । तत्र प्रतिज्ञातेर्थे इत्यर्थः ॥ **अयुक्तमिति** । तथा प्रतिज्ञानमिति योज्यम् । यद्वाधिकरणमित्यनुषङ्गः ॥ **सर्वथाप्युत्पत्त्यभावम्** स्वरूपेण विशेषेणाप्युत्पत्त्यभावमित्यर्थः । **प्रकारान्तरेणेति** । ब्रह्मणोऽन्यस्य स्वातन्त्र्यानुपपत्तिरित्येवंरूपेणेत्यर्थः । स्वतन्त्रवस्त्वनङ्गीकारे सूत्रकृत 'अन्तर उपपत्ते'रित्यत्र यद्बाधकमुक्तं तदेवाह **अनवस्थितेरसंभवाच्चेति** । स्वातन्त्र्याभावे तस्यापि नियामकेन भाव्यम् । तस्यापि नियामकान्तरेणेत्यनवस्थाप्रसङ्गात् । अभ्युपेत्य चेदमुदितम् । परतन्त्रताऽविशेषात्कस्यापि, किंचित्प्रति नियामकत्वासंभवाच्चेत्यर्थः । अनुपपत्तेरित्यस्य व्याख्यानान्तरार्थं मूलमवतारयति **द्वितीयं प्रत्याहेति** । एतेनेश्वरस्य स्वरूपतो विशेषतश्चानुत्पत्तिरेवेति प्रतिज्ञातार्थे स्वतन्त्रत्वादन्यस्य स्वतंत्रत्वाभावाच्चेति हेतुद्वयमुक्तं भवतीति भावः ॥

**या० — ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ॥ अङ्गीकारादिति ।** (कृतत्वादिति) स्वरूपतः उत्पत्त्यभावेऽपि इत्युक्तत्वादिति भावः । **प्रयोगादिति** । तेन परायत्तविशेषाभिरूपोत्पत्तेरपि व्यावर्तितत्वादिति भावः । **कारणविशेषेति** । असद्रूपकरणविशेषस्येत्यर्थः ॥ **स्वतन्त्रत्वादितीति** । अयं हेतुः सौत्रसच्छब्देन सूचितः । 'सत्त्वं स्वातन्त्र्यमुद्दिष्टमि'ति भारतोक्तेरिति ज्ञातव्यम् । 'असम्भवस्तु सतोऽनुपपत्तेरि'त्यस्य प्रकारान्तरेण व्याख्यानं कर्तुमाक्षिपति **कुत इति** ॥ **अनवस्थितेरित्यादि** । जीवस्य जीवान्तरनियामकत्वेऽनवस्थितेस्तस्यापि जीवत्वसाम्येन नियामकत्वासम्भवाच्चेत्यर्थः । तथा चानवस्थितेरसम्भवाच्च स्वतन्त्रवस्त्वेव नास्तीत्यस्यानुपपत्तेः प्रमाणाभावेन ततोऽन्यस्य स्वातन्त्र्यानुपपत्तेरित्यस्य द्वेधा व्याख्यानमत्र मूलकृदभिप्रेतमिति भावः ॥

**सु०— केचिदिदं सूत्रमन्यथा व्याचक्षते । प्राग्गुणिनां वियदादीनामुत्पत्तिरुक्ता । इदानीं रूपादीनां गुणानां दिक्कालादेश्चोत्पत्तिरुच्यते । सतो गुणादेरसम्भवो नोपपद्यते । प्रतिज्ञाहान्यादिनाऽनुपपत्तेरिति । तदसत् । वियत्पदेनैव सर्वस्योपलक्षणात् । अभ्यधिकाशङ्काभावाच्च । वियत्पदस्य सजातीयभूतमात्रोपलक्षकत्वं न्याय्यम् । विजातीयगुणाद्युपलक्षकत्वमयुक्तमिति चेन्न । सङ्गतिरेषा नाभ्यधिका शङ्का । रूपादीनामुत्पत्त्यश्रवणादिति चेन्न । प्रतिज्ञादिभ्यस्तदवगतेः । सङ्कोचस्तत्र कल्प्यत इति चेन्न । बाधकानुपन्यासादिति ।**

**शे०** – चिरन्तनवृत्तिकाराणां व्याख्यानमनूद्य दूषयति **केचिदिति** ॥ **प्रतिज्ञाहान्यादिनेति** । गुणादेर्ब्रह्मकार्यत्वे ब्रह्मविज्ञानेन 'येनाश्रुतं श्रुतं भवती'त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैरुक्तप्रतिज्ञासमर्थनस्य चोपपत्तावपि गुणादेर्ब्रह्मकार्यत्वभावेन तद्विज्ञानेन तद्विज्ञानासंभवेनोक्तप्रतिज्ञाहान्यादिप्रसङ्गेनासम्भवानुपपत्तेरित्यर्थः॥ **वियत्पदेनैवेति**। ततश्च वियत्पदोपलक्षितगुणादेर्ब्रह्मकार्यत्वस्य वियदधिकरणेनैव सिद्धेस्तदर्थस्याधिकरणस्य वैयर्थ्यमिति भावः । ननु यथा भवन्मते वियत्पदोपलक्षितस्यापि वायोर्न वियदधिकरणेन ब्रह्मकार्यत्वसिद्धिः । अत एव न तत्सिध्यर्थस्य मातरिश्वाधिकरणस्य वैयर्थ्यं, तथा मत्पक्षेऽपि रूपादेर्न वियदधिकरणेन ब्रह्मकार्यत्वसिद्धिः । नापि तत्सिध्यर्थस्यास्याधिकरणस्य वैयर्थ्यमित्यतः 'तेजोबन्नान्यथाश इति तान्यनित्यानि वायुर्वाव नित्य' इति श्रुतौ व्यवस्थितनित्यत्वमप्याकाशमनित्यत्वपक्षे निक्षिप्य वायोर्नित्यत्वाभिधानादाकाशदेवताया विनायकस्येव वायुदेवतायाः स्वरूपेण नित्यत्वं देहोत्पत्त्यादिना जन्मादिमत्त्वमिति व्यवस्थानुपपत्तेर्मुख्यैवानुत्पत्तिरित्यधिकाशङ्कया पूर्वपक्षिते उक्तव्यवस्थातिदेशेन सिद्धान्तार्थतया मातरिश्वाधिकरणसार्थक्यसम्भवेऽपि त्वत्पक्षे तादृशाभ्यधिकाशङ्काऽभावेन तन्निरासार्थत्वानुपपत्तेः वैयर्थ्यं तदवस्थमेवेत्याशयेनाह **अभ्यधिकेति** । अभ्यधिकाशङ्कयाऽधिकरणारम्भं समर्थयते **वियच्छब्दस्येति** ॥ **सङ्गतिरिति** । अन्तरङ्गत्वात्सजातीयोत्पत्तिविचार एव प्रथमं जिज्ञासाविषय इति वियत्पदेन सजातीयमेवोपलक्ष्य तदुत्पत्तिरेव पूर्वत्र विचारिता । अत्र तु विजातीयोत्पत्तिविचारप्रतिबंधकशिष्यजिज्ञासाया अपगमाद्विजातीयोत्पत्तिविचारस्यावसर इति सङ्गत्युपपादकमेव विजातीयत्वं नाभ्यधिकाशङ्काप्रापकम् । उक्तहेत्वनाच्छादकत्वादित्यर्थः । ननु वियत उत्पत्तिश्रवणं सिद्धान्तसाधको हेतुस्तस्य रूपादावसिद्धेः अस्त्येवोक्तहेत्वाच्छादकत्वमिति शङ्कते **रूपादीनामिति** ॥ **प्रतिज्ञादिभ्य इति** । 'येनाश्रुतं श्रुतं भवती'त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिभ्य इत्यर्थः । तथा चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञान्यथानुपपत्त्यैव रूपादेरपि ब्रह्मकार्यत्वसिद्धेरधिकरणवैयर्थ्यमेवेति भावः । भवदुक्तप्रतिज्ञादिभ्यो रूपादेर्ब्रह्मकार्यत्वावगतिः यद्युक्तप्रतिज्ञादिकमसंकुचितार्थं स्यान्न चैतदस्ति । तस्य रूपादिव्यतिरिक्तविषयकत्वेन सङ्कुचितार्थतया तेन तदसिद्धेरिति शङ्कते **सङ्कोच इति** । सङ्कोचस्य

बाधकप्रमाणाधीनत्वेन प्रकृते च बाधकाभावे न प्रतिज्ञादेः संकुचितार्थत्वमिति प्रतिज्ञादिभ्यस्तत्कार्यत्वावगतिरवर्जनीयैवेत्याह **नेति** ।

प० — **संगतिरेषेति** । सजातीयचिन्तनानन्तरं विजातीयचिन्तेति प्राप्तत्वादित्यर्थः । **नाभ्यधिकेति** । पूर्वन्यायसिद्धत्वादिति भावः । अभ्यधिकाशंकां चोदयति **रूपादीनामिति** । वियदादेः 'आकाशः संभूत' इत्युत्पत्तिश्रवणवद्रूपादेस्तच्छ्रुतिर्नेति विशेषशङ्केति भावः ॥

या० — **सङ्गतिरेषेति** । अन्तरङ्गत्वात्सजातीयोत्पत्तिविचार एव प्रथमं शिष्यजिज्ञासाविषय इति वियत्पदेन सजातीयमेवोपलक्ष्य तदुत्पत्तिविचार एव पूर्वं कृतः । इदानीं विजातीयोत्पत्तिविचारप्रतिबन्धिकायां तस्यामपगतायां विजातीयोत्पत्तिविचारस्यावसर इति सङ्गत्युपपादकमेव विजातीयत्वं नाभ्यधिकाशङ्काप्रापकं उक्तहेत्वनाच्छादकत्वादित्यर्थः ॥

श्री० — **ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ** ॥ ननु वियत्पदेन रूपादिगुणानुपलक्ष्य तेषामप्युत्पत्तिर्निर्णीतेति न शक्यते वक्तुम् । 'अस्ति तु' इति सूत्रोक्तोत्पत्तिश्रुतिसद्भावरूपयुक्तेर्वियदादिगुणिषु सम्भवेऽपि न गुणेषु सम्भवति । कुत इति चेत्तत्राह **रूपादीनामिति** । तथा चोक्तन्यायेन रूपादिगुणानामुत्पत्तिनिर्णयस्याशक्यत्वमित्यभ्यधिकाशङ्कया एतदधिकरणमारभ्यत इति भावः । **प्रतिज्ञादिभ्यः** 'इदं सर्वमसृजते'त्यादिभ्यः ॥

सु० — **अन्ये त्वेवं व्याकुर्वते । ब्रह्मण एवासम्भवो न तु तद्व्यतिरिक्तस्य । प्रतिज्ञाहान्यादिप्रसङ्गेनानुपपत्तेरिति** । एतदप्यसत् । **पूर्वेणैवास्यार्थस्य** लब्धत्वात् । **वियन्मातरिश्वनोरुत्पत्तिप्रतिपादनमुपलक्षणार्थमिति ज्ञापयितुमेतदिति चेन्न । प्रतिज्ञाहान्याद्युपन्यासेनैव तज्ज्ञापनसिद्धेः । समानन्यायोपलक्षणस्य मीमांसायां सर्वत्र प्रसिद्धत्वात् । अन्यथाऽतिदेशेऽभ्यधिकाशङ्काभ्यूहनवैयर्थ्यादित्युक्त एव सूत्रार्थः । एतदेव ज्ञापयितुं भगवताऽऽचार्येण प्रागेव 'नैव किञ्चिदि'त्युपसंहृतम्** ॥ २ ३ ३ ॥

शे० — रामानुजीयं व्याख्यानमनूद्य दूषयति **अन्ये त्विति** ॥ **तद्व्यतिरिक्तस्येति** । ब्रह्मव्यतिरिक्तस्य महदहङ्कारादेरित्यर्थः ॥ **प्रतिज्ञाहान्यादिप्रसङ्गेनेति** । महदादिप्रपञ्चस्य वियदधिकरणोक्तैरेकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिन्यायैरवगतब्रह्मकार्यभावस्यानुत्पत्तेरनुपपत्तेरित्यर्थः ॥ **पूर्वेणैवेति** । वियदाद्यधिकरणेनैवेत्यर्थः । तथा चास्य वैयर्थ्यमिति भावः । **उपलक्षणार्थं** समानन्यायोपलक्षणार्थम् । असति एतस्मिन्वियन्मातरिश्वनोरुत्पत्तिप्रतिपादनस्य तन्मात्रपरत्वस्यैव विज्ञानप्रसक्तेरिति भावः ॥ **प्रतिज्ञाहान्याद्युपन्यासेनैवेति** । भवेदेतदेवं यद्यसत्येतस्मिन्वियदाद्युत्पत्तिप्रतिपादनस्य तन्मात्रपरत्वं प्रतीयत

इति स्यात् । न चैतदस्ति । तदधिकरणोक्तैरेकविज्ञानेन सर्वविज्ञानादिन्यायैरेव सामान्यन्यायोपलक्षकत्वस्य विज्ञानसिद्धेरित्यर्थः ॥ **सर्वत्रेति** । आनन्दमयाधिकरणादावित्यर्थः ॥ **अन्यथेति** । सूत्रोपात्तवियदादिपदानां तत्तन्मात्रपरत्वमङ्गीकृत्य समानन्यायानुपलक्षणत्व इत्यर्थः ॥ **वैयर्थ्यादिति** । प्रागनुक्ततत्तच्छब्दसमन्वयप्रतिपादकतयाऽर्थवत्त्वेन गतार्थत्वशङ्काया एवानुदयादिति भावः ॥ **प्रागेवेति** । मातरिश्वाधिकरण एवेत्यर्थः ॥ २-३-३ ॥

प०— **अन्ये त्विति** । रामानुजीयाः । तद्व्यतिरिक्तस्य महदादेरित्यर्थः । तथाच महदादेरुत्पत्तिपरमेतदित्याहुरित्यर्थः ॥ **समानन्यायेति** । समानन्यायविषयाणामुपलक्षणस्येत्यर्थः ॥२-३-३॥

या०— **समानन्यायेति** । बहुव्रीहिरयं, तेन समानन्यायविषयोपलक्षणस्येत्यर्थः ॥२-३-३॥

श्री०— **अन्यथेति** । समानन्यायाक्रान्तस्यापि वक्तव्यत्व इत्यर्थः ॥ **वैयर्थ्यादिति** । पूर्वेणेदं गतार्थं समानन्यायत्वादिति शङ्कायां तत्राभ्यधिका शङ्का प्रदर्श्यते । सा न स्यादित्यर्थः ॥ **एतदेवेति** । भगवदितरपदार्थोत्पत्तिर्वियदधिकरण एव निर्णीतेत्येतदेव प्रमेयमित्यर्थः ॥ २-३-३ ॥

॥ इति असंभवाधिकरणम् ॥



## ॥ अथ व्यतिरेकाधिकरणम् ॥

सु०— ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥ अत्र योगिनां स्वरूपेणैवानेकत्व-मुपपाद्यते । तस्य च अविरोधश्चन्दनवदित्युक्तार्थोपपादकतया सङ्गतौ स्थितायां असम्भवस्तु सतोऽनुपपत्तेरिति यदीश्वरस्य सर्वस्वातन्त्र्यमुक्तं तदुपपादकत्वेनापि सङ्गतिं ज्ञापयंस्तथा सूत्रं व्याचष्टे अच्छेद्यस्यापीति ।

अनु०— ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥

अच्छेद्यस्यापि जीवस्य विभागं बहुधा हरिः ॥
कृत्वा भोगान्प्रदायैव चैक्यमापादयेत्पुनः ॥
अत ईशवशं सर्वं चेतनाचेतनं जगत् ॥

भोगांश्चेति सम्बन्धः । ऐक्यमेवेत्येवशब्दान्वयः । ऐक्यं एकरूपत्वम् । स्वरूपैक्यस्य विभागेऽपि सत्त्वात् । सर्वमीशवशम् । तथा च स एव स्वतन्त्र इति वाक्यशेषः ।

शे०— ॐ व्यतिरेको गन्धवत्तथा हि दर्शयति ॐ ॥ अव्यवहितपूर्वाधिकरणेन सङ्गतिमनभिधाय व्यवहिताधिकरणेन तदभिधानादस्याधिकरणस्याव्यवहिताधिकरणस्य सङ्गत्यभावमाशङ्क्य, भवेदेतदेवं यद्यच्छेद्यस्येत्यादिभाष्यं व्यवहितमात्रसङ्गतिकथनपरं स्यात् । न चैवम् । अव्यवहितपूर्वाधिकरणोक्तार्थोपपादकतया तत्सङ्गतेरपि सद्भावात्किन्तु व्यवहितेनापि सङ्गतिरस्तीत्यभिप्रायकमेव । उभयसङ्गतत्वेऽप्यव्यवहितत्वादेव तदधिकरणसङ्गतेः स्पष्टज्ञानत्वादनुक्तिः । व्यवहितत्वाच्चासम्भवस्त्वित्यधिकरणेन सङ्गतेरस्पष्टज्ञानत्वादुक्तिरित्यतो न कश्चिद्दोष इत्यभिप्रेत्य सङ्गतिजिज्ञासोत्थापनाय एतदधिकरणप्रतिपाद्यं वदन्नेव तस्याव्यवहिताधिकरणसङ्गतिं च दर्शयन्नेव व्यवहितेनापि सङ्गतिरस्तीत्यभिप्रायकत्वं च भाष्यस्य सूचयन्नेव व्यवहितसङ्गत्युपदर्शनपरतया भाष्यं सङ्गमयति अत्रेति । स्वरूपेणैवेति । न त्वौपाधिकभेदेनेत्यर्थः ॥ उक्तार्थोपपादकतयेति । चन्दनदृष्टान्तेन जीवस्यांशतो देहव्याप्तिप्रतिपादनेन यत्तस्यानेकांशत्वं लब्धं तदुपपादकतयेत्यर्थः ॥ भोगांश्चेतीति । अनेन च 'ऐक्यमापादयेदि'त्यत्रत्यचशब्दस्य न यथाश्रुतसम्बन्धः किन्तु भोगांश्चेत्येवंरूपेण भोगानित्यनेनैवेति न तस्य वैयर्थ्यमिति भावः । प्रदायैवेत्यत्रैवकारस्य वैयर्थ्यादिप्रसङ्गेन यथाश्रुतसम्बन्धानुपपत्तेस्तत्सार्थक्यं सूचयन् अपेक्षितसम्बन्धं दर्शयति ऐक्यमेवेति । ऐक्यशब्दस्य स्वरूपैक्यार्थताभ्रान्तिपरिहारायार्थमाह ऐक्यमेकरूपत्वमिति । अविभागवत्त्वमित्यर्थः । स्वरूपैक्यार्थत्वमेव किन्न स्यादित्यत आह स्वरूपैक्यस्येति । ततश्च तस्यापाद्यत्वानुपपत्तेरतदर्थता ऐक्यशब्दस्येति भावः । भगवतः स्वातन्त्र्यस्यात्रानुक्तेर्न तदुपपादकत्वमस्येत्यतोऽपेक्षितशेषपूरणेन स्वातन्त्र्योपपादकतामुपपादयति तथा चेति ।

प० — व्यतिरेको गन्धवत् ॥ **योगिनामिति** सौभरिप्रभृतीनाम् । स्वरूपेणैव न तूपाधिभेदेनेत्यर्थः । मूलोक्तदिशाऽसंभवस्त्विति नयानन्तर्यप्रतीतिनिरासायाह **उक्तार्थोपपादकतयेति** । उत्क्रान्तिगत्यागतीनामिति पूर्वाधिकरणगुणसूत्रे चन्दनबिन्दुदृष्टान्तेन अंशतो व्याप्त्युक्त्या प्राप्तमनेकांशत्वं यत्तदुपपादकतयेत्यर्थः ।

या० — ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥ **स्वरूपेणैवेति** । नोपाधिभेदेनेत्यर्थः ॥ **उक्तार्थेति** । चन्दनदृष्टान्तेन जीवस्यांशतो देहव्याप्त्यभिधाने यत्तस्यानेकांशत्वं लब्धं तदुपपादकमेतदधिकरणमिति सङ्गतौ स्थितायामित्यर्थः ॥ २-३-१३ ॥

श्री० — ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥ व्याख्याने निमित्तमाह **स्वरूपैक्यस्येति** । तत्रैव अच्छेद्यं छित्वा भोगं प्रदाय पुनरेकतासम्पादन एव ॥ २-३-१३ ॥

च० — ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥ **स्वरूपेणैवेति** । नोपाधिभेदेनेत्यर्थः ।

सु० ननु यैश्छेत्तुमशक्यं छित्वा तेषामपि भागानां भोगशक्तिं प्रदाय यदि पुनरेकतामापादयति हरिस्तर्हि तत्र तस्य सामर्थ्यं ज्ञायताम् । कार्यस्य कारणशक्तिं विनाऽनुपपत्तेः । सर्वं जगदीशवशमिति तु कथमित्यत आह अविभागमिति ।

अनु० — अविभागं विभागाय यदा नयति केशवः ॥
किमशक्यं परेशस्य तदेति ह्यभिधीयते ॥ २-३-१३ ॥

यथा लोके किञ्चिदद्भुतं कर्यं कृतवतस्तथाभूतेऽन्यत्रापि कार्यशक्तिः सम्भाव्यते । तथाऽत्यन्ताघटितमिदं घटयतो जगन्नाथस्य सर्वत्रापि शक्तिसम्भावना युक्तैवेति भावः । नन्वत्र सूत्रे जीवस्यानेकत्वापत्तिमात्रमुच्यते न तु तस्याः परमेश्वरायत्तत्वम् । तत्कथमनेन तस्य सर्वैश्वर्यावगतिरित्यत आह इति हीति । 'तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति । सोऽचिन्त्यः परमो गरीयान्' । 'अचिन्त्ययैशशक्त्यैव ह्येकोऽवयववर्जितः । आत्मानं बहुधा कृत्वा क्रीडते योगसम्पदे'ति सूत्रोपात्ताभ्यां श्रुतिस्मृतिभ्यां यस्मादेवमभिधीयते तस्मात्सूत्रेणाप्येवमेवमभिधीयते । प्रतिज्ञाप्रमाणयोरेकार्थताया आवश्यकत्वादिति ॥ २-३-१३ ॥

शे० — **इति तु कथमिति** । सर्वत्र सामर्थ्यज्ञापकाभावादिति भावः ॥ **संभावनायुक्तेरिति** । वराहगृध्रादिषु दूरस्थशब्दरूपग्रहणसमर्थेष्वपि तथाविधरसादिग्रहणसामर्थ्यस्यादृष्टत्वेन योऽशक्यमेकं करोति स तथाविधमपरमपि करोत्येवेति व्याहारभावेनानुमानत्वासंभवात्संभावनात्वोक्तेरिति ध्येयम् ॥२-३-१३॥

प० — भाष्योक्तश्रुतिस्मृती आह तं यथेति । हिशब्दार्थो यस्मादिति । आवृत्त्या योजयति सूत्रेणाप्येवमिति ॥ प्रतिज्ञाप्रमाणयोरिति । व्यतिरेक इति प्रतिज्ञा तथा च दर्शयतीति प्रमाणम् ॥ ॥ २-३-१३ ॥

॥ इति व्यतिरेकाधिकरणम् ॥



॥ अथ पृथगुपदेशाधिकरणम् ॥

सु० — ॐ पृथगुपदेशात् ॐ ॥ अत्र जीवात्मनः परमात्मनाऽऽत्यन्तिको भेदः समर्थ्यते । स्यादेतत् । यथा हि प्रत्यक्षादिप्रमाणैरवधारितदेवदत्तसिंहभेदस्य पुंसः सिंहो देवदत्त इति वाक्यश्रवणेऽपि न सिंहदेवदत्तस्वरूपैक्यप्रतिपत्तिर्भवति । किन्नाम गौण एवायं प्रयोग इत्यध्यवस्यति । तथा अथातो ब्रह्मजिज्ञासा इत्यादिभिः व्यतिरेको गन्धवत् इत्यन्तैः सूत्रैः जीवात्मपरमात्मभेदस्य प्रत्यक्षादिप्रमाणबलेनोपपादितत्वात्तत्त्वमस्यादिश्रुतिशतेनापि न तदभेदप्रतिपत्तिरुत्पत्तुमलम् । किन्तु गौणार्थ एव श्रुतय एव इति निश्चयो भवेत् । अतः प्रापकाभावान्नेदमधिकरणमारम्भणीयमित्यतोऽधिकाशङ्कां दर्शयन्पूर्वपक्षयति एवं स्थितेऽपीति ।

अनु० — ॐ पृथगुपदेशात् ॐ ॥

एवं स्थितेऽपि जीवैक्यं केचिदाहुः परात्मना ॥
तद्योऽहमिति पूर्वाभिः श्रुतिभिश्चानुमाबलात् ॥

एवमतीतग्रन्थोक्तन्यायेन जीवात्मपरमात्मनोर्भेदे निश्चितेऽपीत्यर्थः । स्मृतिभिश्चेति चार्थोऽनुमानबलाच्चेति वा संबन्धः ॥ एतदुक्तं भवति । यद्यपि भेदः प्राक् समर्थितस्तथापि जीवः परमात्मनाऽभिन्न एव । 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' । तत्त्वमसि । 'अहं ब्रह्मास्मी'त्यादिश्रुतेः । 'अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् । ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ती'त्यादिस्मृतेश्च । न चैताः श्रुतयः स्मृतयश्च गौणार्था योज्याः । उपक्रमादिबलेन तात्पर्यावधारणात् । बलवद्बाधकाभावाच्च । उपन्यस्तानि तु प्रमाणान्याविद्यकमिथ्याभेदविषयतयाऽपि संभवन्ति । तथा चानुमानम् । विमतो भेदो मिथ्या भेदत्वाच्चन्द्रभेदवदिति । न 'चास्मिन्नस्य च तद्योगं शास्ती'ति मुक्तावपि भेदोक्तिर्बाधिका । तस्या अवान्तरविषयत्वोपपत्तेः । न च परममुक्तौ भेदे प्रमाणमस्ति । 'यत्र त्वस्य सर्वमात्मैवाभूत् । विभेदजनके ज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति । आविमुक्तेस्तु भेदः स्याज्जीवस्य परमस्य च । ततः परं न भेदोऽस्ति भेदहेतोरभावत' इत्यादिश्रुतिस्मृतयोऽप्यवदन्नि च परममुक्तौ जीवपरभेदमित्येवं केचिद्वादिनो वदन्ति । अतो युक्तस्तन्निराकरणायाधिकरणारम्भ इति ।

शे० — ॐ पृथगुपदेशात् ॐ ॥ अधिकरणप्रतिपाद्यमाह अत्रेति । नन्वेवं स्थितेऽपीत्युत्तरवाक्यमनर्थकम् । न चाभ्यधिकाशङ्काप्रकारप्रदर्शनेनाधिकरणारम्भसमर्थनपरत्वान्न तदिति

वाच्यम् । प्रागनुक्तस्य जीवपरमात्मनोरात्यन्तिकभेदस्य समर्थनेनैवाधिकरणारम्भसिद्ध्या गतार्थताशङ्काऽनुदयेन तन्निरासकाभ्यधिकाशङ्काया अनपेक्षितत्वेन तयाऽधिकरणारम्भसमर्थनस्याकर्तव्यत्वादित्याशङ्क्यातीतग्रन्थेन जीवपरमात्मनोरात्यन्तिकभेदस्य समर्थितत्वेन गतार्थशङ्कोदयसंभवेन तन्निरासकाभ्यधिकाशङ्कयाऽधिकरणारम्भसमर्थनं युक्तमेवेत्यभिप्रेत्याभ्यधिकाशङ्कोपदर्शकतयोत्तरग्रन्थं योजयितुं तत्प्रयोजकीभूतां गतार्थताशङ्कामुत्थापयति **स्यादेतदिति** । श्रुतिभिश्चेति चशब्दस्य यथाश्रुतसंबन्धे उक्तसमुच्चायकत्वासंभवादनुक्तसमुच्चयार्थतया 'पौराणानि च वाक्यानी'त्युत्तरग्रन्थानुरोधेन तं व्याचष्टे **स्मृतिभिश्चेति चार्थ इति** । अस्मिन्पक्षेऽनुक्तसमुच्चायकता भवतीत्यपरितोषाद्भिन्नक्रमतामाश्रित्योक्तसमुच्चायकतयाऽपि तं व्याचष्टे **अनुमानबलाच्चेति वा संबन्ध इति** ।

ननु जीवात्मपरमात्मभेदस्य प्रत्यक्षादिप्रमाणबलेनोपपादितत्वात्तदभेदबोधकस्य तत्त्वमस्यादिवाक्यस्य सिंहो देवदत्त इत्यादिप्रयोगवद्गौणप्रयोगत्वादनुमानस्य च पावकशैत्यानुमानवत्कालात्ययापदिष्टत्वान्न भेदप्रापकत्वमिति कथमियमभ्यधिकाशङ्केत्यत आह **एतदुक्तं भवतीति** ॥ **गौणार्था योज्या इति** । योग्यताविरहेण मुख्यतो जीवात्मपरमात्मनोरभेदबोधकत्वासंभवादिति भावः ॥ **तात्पर्यवत्त्वावधारणादिति** । तथा च नोपचरितार्थत्वकल्पना युक्तेति भावः । ननु सत्स्वपि तात्पर्यलिङ्गेषु प्रत्यक्षादिप्रमाणविरोधात्प्रस्तरादिवाक्यवत्सोमेन यजेतेत्यादिवच्च न तत्त्वमस्यादिवाक्यानामद्वैतपरत्वम् । अन्यथा कुरूपं अशूरं चोद्दिश्याहो दर्शनीयेति शूर इति च शतकृत्वः प्रयुक्तस्य वाक्यस्यापि तत्परत्वप्रसङ्गादित्यतो बलवद्बाधकभावाभावाभ्यां वैषम्यान्न प्रतिबन्दीग्रहो युक्त इत्याह **बलवद्बाधकाभावाच्चेति** । ननु भेदग्राहकं प्रत्यक्षादिकमेव बलवद्बाधकं भविष्यतीति कथं तदभाव इत्यतस्तस्य भ्रमत्वान्न बाधकता संभवतीत्यभिप्रेत्य तस्य भ्रमतामुपपादयति **उपन्यस्तानीति** । भवेन्मिथ्याभूतभेदविषयतया प्रत्यक्षादेर्भ्रमत्वकल्पनं यदि भेदस्य मिथ्यात्वमेव सिद्धं स्यान्न च तदस्ति तत्प्रमाणाभावादित्यत आह **तथा चेति** । एतदनुमानविवरणं चोत्तरत्राकर एव स्पष्टम् । ननु नानेनानुमानेन जीवपरमात्मनोर्भेदमिथ्यात्वसिद्धिः । अनुमानस्य तद्भेदश्रुतिबाधितत्वेन कालात्ययापदिष्टत्वात् । न च भेदश्रुतेर्मिथ्याभूतभेदप्रतिपादकत्वेनाप्रमाणत्वान्न बाधकत्वमिति वाच्यम् । 'एतमानन्दमयमात्मानमुपसंक्रम्ये'त्यादौ परमेश्वरसामीप्यस्य 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'त्यादौ तत्साहित्यस्य च भेदाविनाभूतस्य मुक्तावभिधानेन मुक्तावपि भेदसिद्धेः । मुक्तौ शिष्यमाणस्य च भेदस्यात्मस्वरूपवदमिथ्यात्वस्यैव वक्तव्यत्वेन भेदश्रुतेर्मिथ्याभूतभेदविषयत्वासंभवेन पारमार्थिकभेदविषयत्वसिद्ध्या तद्बाधसंभवादित्याशङ्कते **न चेति** । अनुमानस्य परममुक्तौ भेदाभावविषयत्वादुदाहृतभेदश्रुतेश्चापरमुक्तिविषयत्वेन भिन्नविषयतया परस्परवार्तानभिज्ञयोर्विरोधस्यैवाभावेन बाध्यबाधकभावानुपपत्तेरित्याशयेन परिहरति **तस्या इति** ।

अस्तु तर्हि परममुक्तावेव भेदप्रमाणबाधोऽभेदानुमानस्येत्यतो भवेदेवं यदि तादृशं प्रमाणं स्यान्न च तदस्तीत्याह **न चेति** । न केवलं परममुक्तौ भेदो न श्रौत इत्येव किन्तु तदभाव एव श्रौत इत्यभिप्रेत्य तत्र श्रुतिस्मृतीरुदाहरति **यत्र त्वित्यादि** ।

प० — **पृथगुपदेशात्** ॥ **आत्यन्तिक इति** । अभेदासहिष्णुभेद इति वा पारमार्थिक इति वा मुक्तावप्यनिवर्त्य इति वार्थः । अहं हरिरिति चेतनाभेदः । इदं सर्वं जनार्दन इति जगद्भेदः । **द्वन्द्वगदाः** शीतोष्णादिरोगाः ॥ **उपक्रमादिबलेनेति** । ते चोपक्रमादयो भाष्यटीकयोर्दर्शिता इति भावः ॥ **उपन्यस्तानीति** । जीवपरभेदसाधकत्वेनेति भावः । ब्रह्मजिज्ञासेत्यादिषु उक्तब्रह्मशब्दादीनामित्यर्थः ॥ **आविद्यकमिथ्येति** । आविद्यकत्वान्मिथ्येत्यर्थः ॥ **तथा चानुमानमिति** ! अनुमानं च तथास्तीत्यर्थः । यद्वा श्रुतिसाहाय्ये सत्यनुमानमुच्यत इत्यर्थः । आनन्दमयनयान्तिमसूत्रे मुक्तावपि भेदस्याभिमतत्वेनोक्तत्वात्तद्विरोध इति शङ्कते **न चास्मिन्नस्य चेति** ॥ **अवान्तरेति** । अवान्तरमुक्तावित्यर्थः ।

**या०** — ॐ **पृथगुपदेशात्** ॐ ॥ **आत्यन्तिकेति** आत्यन्तिकमोक्षपर्यवसायी । गदशब्दो रोगवाचकः ।

**च०** — ॐ **पृथगुपदेशात्** ॐ ॥ अध्यवस्यति निश्चिनोति ।

---

**सु०** — **एवं पूर्वपक्षयित्वा सिद्धान्तयत्सूत्रं व्याचष्टे** न तदिति ।

अनु० — न तद्युक्तं यतो विष्णुः पृथगेवाभिधीयते ॥

**तत् जीवस्य परमात्मैक्यं । न युक्तम् । किन्तु पृथगेव जीवात्मपरमात्मानौ । कुतः । यतो विष्णुर्जीवाज्जीवश्च विष्णो'र्भिन्नोऽचिन्त्यः परमो जीवसङ्घादि'त्यादिश्रुति(स्मृति)भिः पृथगेव अभिधीयते तस्मादित्यर्थः । नन्वेताः श्रुतिस्मृतयोऽविद्याकल्पितभेदविषयतयाऽन्यथासिद्धाः न तात्त्विकभेदसिद्ध्यै प्रभवन्तीत्युक्तमिति चेत् । मा त्वरिष्ठाः । निराकरिष्यामः श्रुत्यादेः अतत्त्वावेदकत्वमित्याशयवानकल्पितभेदविषयां श्रुतिमुदाहरति** प्रज्ञेति ।

प्रज्ञानेत्रोऽलोक इति मुक्तौ भेदोऽभिधीयते ॥

**'एष ब्रह्मैष प्रजापतिरिन्द्र' इत्यादिना विश्वप्रपञ्चमनूद्य सर्वं तत्प्रज्ञानेत्रमिति तस्य प्रज्ञाख्यब्रह्मनेतृकत्वमभिधाय नेतृनेतव्यभावस्य कल्पितत्वादित्याशङ्कानिवृत्त्यर्थं प्रज्ञानेत्रोऽलोक इति श्रुत्या मुक्तावपि जीवपरयोर्भेदोऽभिधीयतेऽलोको मुक्तोऽपि प्रज्ञानेत्रो ब्रह्मनेतृक इति । नीयतेऽनेनेति नेत्रम् । दाम्नीत्यादिसूत्रात् । प्रज्ञा च ब्रह्म । 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्मे'ति**

**वाक्यशेषात् । न चात्र लोक इति पदं छेद्यम् । जनभुवनदेहरूपस्य लोकस्य प्रागेव ब्रह्मनेतृकत्वस्योक्तत्वेन पुनरुक्तिप्रसङ्गात् । न च नेतृनेतव्ययोरभेदः क्वचिदस्ति । न चावान्तरमुक्तिविषयेयं श्रुतिः । तत्र लोकातीतताऽयोगात् । देहेन्द्रियादिवैकल्यं खल्वलोकत्वम् । परममुक्तौ चानुवर्तमानो भेदो नाविद्याकल्पितो भवितुमर्हत्यतिप्रसङ्गादिति ।**

**शे०** — भिन्नो जीव इति भाष्यानुरोधेन यतो विष्णुरित्येतदुपलक्षणमित्यभिप्रेत्य व्याचष्टे **यतो विष्णुर्जीवाजीवश्च विष्णोरित्यादिना ॥ निराकरिष्याम इति ।** 'अप्रामाण्यं यदा भेदवाचकस्य भविष्यती'त्यादिनाऽस्मिन्नवाधिकरण इति शेषः । कथं प्रज्ञानेत्रपदाद्ब्रह्मनेतृकत्वस्य लाभ इत्यतो नेत्रशब्दार्थमाह **नीयतेऽनेनेति नेत्रमिति ।** णीञ् प्रापण इत्यस्मात्करणे ष्ट्रन्प्रत्यये प्रत्ययादेः षस्य ष प्रत्ययस्येतीत्संज्ञायां तस्य लोप इति लोपे सार्वधातुकार्धधातुकयोरिति गुणे च सति नेत्रमिति रूपनिष्पत्तिरिति भावः । नयतेः करणे ष्ट्रन्प्रत्ययस्यालाक्षणिकत्वं परिहरति **दाम्नीत्यादिसूत्रादिति ।** आदिपदेन 'शसयुजस्तुतुदसिचमिहपतदशनहः करणे' इति सूत्रशेषपरिग्रहः । दाबादिभ्यो धातुभ्यः करणे कारकेषु ष्ट्रन्प्रत्ययो भवतीत्युदाहृतसूत्रार्थः । ननु नेत्रशब्दस्योक्तनिर्वचनाश्रयणेऽपि प्रज्ञानेतृकत्वमेव ततः सिद्ध्येन्न ब्रह्मनेतृकत्वमित्यतोऽत्र वाक्ये प्रज्ञाशब्दस्य ब्रह्मपरत्वाद्युक्तोऽनेन ब्रह्मनेतृकत्वस्य लाभ इत्याशयवानाह **प्रज्ञा चेति ।** कुतः सामान्यपदस्यास्य ब्रह्मरूपविशेषपरत्वमित्यतो घृतशब्दसन्निहिताक्ताशब्दस्य घृतरूपविशेषपरत्वदर्शनेन विशेषशब्दसन्निहितसामान्यशब्दस्य विशेषपरत्वनियमात्तन्सिद्धिरित्यभिप्रेत्य कथमत्र विशेषशब्दसन्निधानमित्यतो विशेषशब्दोपेतं वाक्यशेषमुदाहरति **प्रज्ञेति॥ न चेति ।** तथा च मुक्तस्य ब्रह्मनेतृकत्वासिद्धेर्न **मुक्तौ** भेदाभिधायकत्वमस्येत्याशयः । नन्वनया श्रुत्या नेतृनेतव्यभावोक्तावपि भेदानुक्तेः कथं भेदाभिधायकत्वमित्यतो नेतृनेतव्यभावस्य भेदाविनाभूतत्वाद्भेदाविनाभूतधर्माभिधायकस्य तद्व्यापकभेदगमकताया अपि सत्त्वान्नानुपपत्तिरित्यभिप्रेत्य भवेदेतदेवं यदि नेतृनेतव्यभावस्य भेदाविनाभावः सिद्धः स्यात्स एव तु कुतः सिद्ध इत्यतोऽव्यभिचारादेव तत्सिद्धिरित्याह **न चेति ।** येनोक्तनियमो भज्येतेति भावः **॥ न चेति ।** ततश्चाविद्याकल्पितभेदविषयतयाऽन्यथासिद्धत्वादुदाहृतश्रुतेर्न ताত্त्विकभेदसाधकतेति भावः । नन्वस्त्वस्याः परममुक्तिविषयत्वं तथाऽपि तत्र कल्पितभेदविषयत्वमेव किन्न स्यादित्यत आह **परमेति ॥ अतिप्रसङ्गादिति ।** तत्रानुवर्तमानस्य ब्रह्मणोऽप्यविद्याकल्पितत्वं स्यादित्यतिप्रसङ्गादित्यर्थः ।

**प०** — विष्णुरित्युपलक्षणं मत्वाह **जीवश्चेति ॥ निराकरिष्याम इति ।** 'अप्रामाण्यं यदा भेदवाचकस्ये'त्यादाविति भावः । यद्वा 'वेदवेद्यस्य मिथ्यात्वं यदि नैक्यस्य तत्कथमि'ति भक्तिपादे

निराकरिष्याम इत्यर्थः । अलोको देहविधुर इत्युपेत्याह **अलोको मुक्तोपीति** । णी नी(ञ्) प्रापण इत्यस्मात्करणे ष्ट्रन्प्रत्यय इत्यत्र तृतीयाध्यायद्वितीयपादीयपाणिनीयसूत्रं पठति **दाम्नीति** । दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करण इति सूत्रात् ष्ट्रन्प्रत्यये षकारनकारयोर्लोपे पुगन्तेति गुणे धातुणकारस्य नकारे नेत्रमिति रूपमित्यर्थः । प्रज्ञा च वैष्णवी । सा च करणम् । प्रज्ञाप्रज्ञावतोरभेदस्य प्रज्ञानं ब्रह्मेति वाक्यशेषसिद्धतया ब्रह्मनेतृक इति कर्तृप्रत्ययान्तेन व्याख्यानं युक्तमिति भावः । **जनभुवनदेहेति** । लोकस्तु भुवने जन इत्यभिधानादिति भावः । अस्माल्लोकात्प्रेत्येत्यादौ देहे लोकशब्दप्रयोगदर्शनादिति भावः ॥ **प्रागेवेति** । सर्वं तत्प्रज्ञानेत्रमित्यत्रेत्यर्थः । भेदविषयकत्वं व्यनक्ति **न च नेतृनेतव्ययोरिति** । मिथ्याभेदविषयकत्वं निराह **परममुक्तौ चेति** ॥ **अतिप्रसङ्गादिति** । आत्मस्वरूपज्ञानानन्दयोरविद्यानिवृत्तेश्चाऽऽविद्यकत्वप्रसङ्गादित्यर्थः ।

**या०**— 'भिन्न एव जीव' इति भाष्यानुसारेणाह **जीवश्च विष्णोरिति** । तथा च यतो विष्णुरित्येतदुपलक्षणमिति भावः ॥ **दाम्नीत्यादिसूत्रादिति** । 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करण' इति सूत्रादित्यर्थः । एभ्यो धातुभ्यः करणे कारके ष्ट्रन्प्रत्ययो भवतीति सूत्रार्थः । उदाहरणं तु दात्रं नेत्रं शास्त्रमित्यादि । तथा चानेन सूत्रेण 'नीञ् प्रापण' इत्यस्मात्करणे ष्ट्रन्प्रत्यये प्रत्ययादेः षस्य लोपे गुणे च सति नेत्रमिति रूपमिति द्रष्टव्यम् । यद्यपि ब्रह्मनेतृक इति पूर्वमुक्तत्वाद्ब्रह्म कर्तृ, न करणम् । तथाऽपि करणान्तर्यामिरूपेण करणत्वमपि तस्यास्तीति ज्ञातव्यम् ॥ **अतिप्रसङ्गादिति** । तत्रानुवर्तमानस्य ब्रह्मणोऽप्यविद्याकल्पितत्वप्रसङ्गादित्यर्थः ॥

**श्री०** — ॐ **पृथगुपदेशात्** ॐ ॥ **सूत्रादिति** । नीञ् प्रापणे ञकारोऽनुबन्धार्थः । तथा चास्मात् ष्ट्रन्प्रत्यये न् इत्यस्य लोपे 'षः प्रत्ययस्य' प्रत्ययस्यादेः षस्य लोपः स्यादिति षकारलोपे नीत्र इति स्थिते गुणे नेत्रेति प्रातिपदिकम् । 'लोकस्तु भुवने जन' इत्यभिधानमभिप्रेत्याह **जनेति** । **प्रागेवेति** । 'एष ब्रह्म एष इन्द्र' इत्यादिना प्रागेवेत्यर्थः ॥ **लोकातीतेति** । अलोकपदोक्तेत्यर्थः ।

**च०** — **निराकरिष्याम इति** ॥ 'वेदवेद्यस्य मिथ्यात्वं यदि नैक्यस्य तत्कथं' इत्यादिना भक्तिपादे प्रतिविधास्याम इत्यर्थः ॥ **दाम्नीत्यादिसूत्रादिति** । दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहःकरण इति तृतीयाध्यायीयद्वितीयसूत्रादित्यर्थः ॥ नयतेः करणे ष्ट्रनि षकारनकाररूपानुबन्धयोर्लोपे गुणे धातुणकारस्य नत्वे नेत्रमिति रूपं सेत्स्यतीति भावः ॥ **अतिप्रसङ्गात्** । तुल्यदिशा ब्रह्मणोप्यविद्याकल्पितत्वप्रसङ्गात् ।

सु०— ननु मु(क्तौ भेदाभावेने)क्ताव भेदेऽनेकाः श्रुतयः स्मृतयश्च सन्ति । तत्कथमेकाकिनीयं श्रुतिर्मुक्तौ भेदसाधनायालमित्यतो बव्हीः श्रुतिस्मृतीरत्रोदाहरति एतमिति ।

अनु० — एतमानन्दमित्यन्या परमं साम्यमित्यपि ॥

'एतमानन्दमयमात्मानमुपसंक्रम्ये'त्यन्या श्रुतिर्मुक्तस्य परस्माद्भेदमाह । सामीप्यप्राप्तेरभिधानात् । न चेयमवान्तरमुक्तिः । 'अस्माल्लोकात्प्रेत्ये'ति विदेहत्ववचनात् । 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'त्यपि श्रुतिर्मुक्तौ जीवस्य ब्रह्मणो भेदमाचष्टे । साम्यस्य भेदसमानाश्रयत्वात् । पुण्यपापाञ्जनाख्याविद्याविधूननाभिधानादस्यापि परममुक्तिविषयत्वं ज्ञायते ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥

इदं ज्ञानमिति भगवद्वाक्येऽपि मम साधर्म्यमागता इति भेदो ज्ञायते । सर्गप्रलययोरप्युपजननव्यथाऽभावोक्त्या परममुक्तित्वं च ।

उपसम्पद्यते ज्योतिः स्वरूपेणाभिपद्यते ॥
तत्र पर्येति जक्षंश्च क्रीडन्नपि सदा सुखी ॥
आचक्ष्व मे परं मोक्षं धीरा यं प्रवदन्ति तम् ॥
इत्युक्त आह वाग्देवी परं मोक्षं प्रजापतेः ॥

उपसम्पद्यत इत्यनेन 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । स तत्र पर्येति जक्षन्क्रीडन्रममाण' इत्येतां श्रुतिमर्थतोनुवदति । अत्रापि सामीप्यप्राप्त्यादिना भेदोऽवगम्यते । 'अस्माच्छरीरात्समुत्थाय स्वेन रूपेणाभिनिष्पद्यत' इत्युक्त्या परममोक्षत्वं च ।

शाखां शाखां महानद्यः संयान्ति परितः स्रवाः ॥
धानापूपा मांसकामाः सदा पायसकर्दमाः ॥
यस्मिन्नग्निमुखा देवाः सेन्द्राः सहमरुद्गणाः ॥
ईजिरे क्रतुभिः श्रेष्ठैस्तदक्षरमुपासते ॥
प्रविशन्ति परं देवं मुक्तास्तत्रैव भोगिनः ॥
निर्गच्छन्ति यथाकामं परेशेनैव चोदिताः ॥

शाखां शाखामिति महाभारतवाक्ये भेदावभासः स्फुट एव । तस्य च परममोक्षविषयताप्रदर्शनार्थमाचक्ष्वेत्यादिपूर्ववाक्यार्थसंग्रहकथनम् । इत्युक्ते प्रजापतिनेति पृष्टे । तस्य

मध्ये वेतसः पुण्यगन्धः सहस्रशाखो विमलो विभाति । तस्य वेतसस्य शाखां शाखामाश्रित्य धानापूपवत्यः मांसकामवत्यः । अर्शआदिभ्योऽच् । पायसं कर्दमस्थानीयं यासां तास्तथोक्ताः । यस्मिन् लोके । ईजिरे यजन्ते च । तदक्षरं परमं ब्रह्म । तत्रैव परमेश्वरान्तर एव ।

भेददृष्ट्याभिमानेन निस्सङ्गेनापि कर्मणा ॥
कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥
स सङ्गत्य पुनः काले कालेनेश्वरमूर्तिना ॥
जाते गुणव्यतिकरे यथापूर्वं प्रजायते ॥

भेददृष्ट्येति भागवतवाक्यस्यायमर्थः । 'आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः । योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः' । स जीवेश्वरादिभेदज्ञानेनाभिमानेनेश्वरबहुमानेन निवृत्तकर्मणा च जगत्कर्तृत्वात्सार्वज्ञादिगुणोपेतं परमपुरुषाख्यं परं ब्रह्म सङ्गत्य मुक्तः सन्प्रविश्य पुनः कालाख्यपरमेश्वरमूर्त्या सृष्टिकाले जाते सत्यगुणव्यतिरेके सत्त्वादिगुणविक्रियाहीने विष्णुलोके पूर्ववत्सर्वमुक्ताधिपतिर्जायत इति । अत्र तु भेदः स्फुट एव । हिरण्यगर्भमुक्तित्वादेव परममुक्तित्वं च सिद्धम् ।

ऋचां त्वः पोषमास्ते च परेण प्रेरिताः सदा ॥

'ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्वरीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्व' इति मन्त्रस्यायमर्थः । मुक्तिस्थाने त्वः कश्चिद् ब्रह्मा ऋचां पोषं पुपुष्वानास्ते ऋचः पुष्टाः कुर्वन्नास्ते । त्वो ब्रह्मा शक्वरीषु ऋक्ष्वारूढं गायत्रं साम गायति । त्वो ब्रह्मा जातविद्यां पौरुषेयविद्यां वदति । त्वो ब्रह्मा यज्ञस्य विष्णोर्मात्रामंशमेव विमिमीते ध्यायतीति । अत्रापि भेदः स्फुट एवावभासते । ब्रह्मबाहुल्यश्रवणात्परममोक्षत्वं च । न चास्य ऋत्विग्विषयत्वम् । ब्रह्मणो जातविद्यावादित्वस्याप्रसिद्धत्वात् । चतुर्णामपि पादानां होत्रादिभिन्नविषयत्वे तृतीयपादे त्व इति च व्यर्थं स्यात् । चशब्दो वाक्यशेषसमुच्चये ।

परेण प्रेरिताः सदेत्यनेन 'स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसंपद्य ब्रह्मणा(ऽभि)पश्यती'त्यादिश्रुतीः । 'यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिता' इत्यादिस्मृतीश्चोपादत्ते ।

यत्कामस्तत्सृजत्यद्धैवात्मना तत्सृजत्यपि ॥

यत्काम इत्यनेन 'न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजत' इति श्रुतिरुपादीयते । मुक्तो यद्यत्कामयते तत्तद्वस्तु तत्कर्म सृजते । कथम् । यत्सृजते तदस्मादात्मन एव परमेश्वरानुग्रहद्वारैवेत्यर्थः । अद्धैवेति ह्येवशब्दार्थः । अत्रेश्वराज्जीवस्य भेदः स्पष्ट एव । कर्माक्षयवचनात्परममुक्तित्वं च ।

सहैव ब्रह्मणा कामान्भुंक्ते निस्तीर्णतद्गुणः ॥

सहैवेत्यनेन 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति श्रुतिमुपादत्ते । ब्रह्मणा ब्रह्मात्मकतया सर्वान्कामान्सह यौगपद्येन भुंक्त इति व्याख्यानं तु श्रौताक्षराननुगुणं तत्सिद्धान्ताननुगुणं च ॥ निस्तीर्णेत्यनेन 'तीर्णो हि तदा सर्वान्शोकान्हृदयस्य भवती'ति श्रुतिर्गृह्यते । तदा सर्वान् शोकांस्तीर्णो मुक्तो हृदयस्य ब्रह्मणः शेषभूतो भवतीत्यर्थः । हृद्यनत्वाद् हृदयं ब्रह्म । तद्गुणा हृद्गुणा दुःखाद्याः । अत्र सर्वशोकतरणात्परममुक्तित्वमवगम्यते ।

दुःखादींश्च परित्यज्य

दुःखादींश्च परित्यज्येत्यनेन 'ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः । भुञ्जते सुसुखान्येव न दुःखादीन्कदाचने'त्यादि(कं) ब्रह्मवैवर्तवाक्यं गृह्यते । अत्र बहुवचनेन भेदो दुःखाद्यभावेन परममुक्तित्वं चाव(सीयते)भासते ।

---

जगद्व्यापारवर्जितः ॥

भुंक्ते भोगान्सदैवोच्चान्

जगद्व्यापारेत्यनेन स्वाधिकानन्दसंप्राप्तौ सृष्ट्यादिव्यापृतिष्वपि । मुक्तानां नैव कामः स्यादन्यान्कामांस्तु भुञ्जत' इति वाराहवचनं गृह्यते । अत्र चैश्वर्यमर्यादया भेदो गम्यते ।

स्वपक्षसाधनमुपसंहरति इत्यादीति ।

इत्याद्यागममानतः ॥

मुक्तस्य भेदावगतेः कथमेव ह्यभिन्नता ॥

जीवेशयोः

मुक्तस्य परब्रह्मण इति शेषः ।

शे० — ननु 'एतमानन्दमित्यन्ये'त्याद्युत्तरवाक्यजातमनर्थकम् । न च मुक्तभेदसाधकश्रुतिस्मृत्युपन्यासार्थत्वान्न तदिति वाच्यम् । प्रज्ञानेत्रो लोक इति श्रुत्या तस्य पूर्वमेव साधितत्वेन भेदसाधकश्रुत्याद्युपन्यासस्याप्यनर्थकत्वात् । न च भेदसाधकश्रुत्यादेर्बाहुल्यज्ञापनार्थत्वान्न तदिति वाच्यम् । तज्ज्ञा-

पनस्याप्युपयोगप्रतिभासादित्यतः प्रज्ञानेत्रो लोक इति श्रुतेर्भेदसाधकत्वाभेदबाधकत्वानुपपत्तिशङ्कापरिहारार्थत्वान्न तदिति भावेन तदनुपपत्तिशङ्कामुत्थापयति **नन्विति** । ननूदाहृतश्रुतौ भेदस्याश्रवणान्न भेदाभिधायकता सम्भवतीत्यतो भेदाविनाभूतार्थाभिधायकतया भेदगमकत्वान्नानुपपत्तिरित्यभिप्रेत्य तदविनाभूतार्थाभिधायकतामाह **सामीप्येति** ॥ **पुण्यपापेति** । पुण्यपापे विधूयेति पुण्यपापविधूननस्य निरञ्जन इत्यञ्जनशब्दवाच्याविद्याविधूननस्य चाभिधानादित्यर्थः ।

**भेदो ज्ञायत इति** । भेदसमानाश्रयसाधर्म्याभिधायकतया भेदावगमकत्वादिति भावः । नन्वत्र परमात्मनोऽश्रवणात्कथमनेन मुक्तपरमात्मभेदसिद्धिरित्यतोऽत्र ममेत्यस्यैव भगवद्बोधकत्वान्नानुपपत्तिरिति भावेनोक्तं **भगवद्वाक्य इति** ॥ परममुक्तित्वं चेति । ज्ञायत इति पूर्वेण संबन्धः ।

उपसंपद्य तज्ज्योतिरित्यादेरेतमानन्दं परमं साम्यमित्यादेरिव स्वरूपतः श्रुत्यनुवादकत्वासंभवादाह **उपसम्पद्येत्यनेनेति** ॥ **सामीप्यप्राप्त्यादिनेति** । उपसंपद्येति सामीप्यकथनेन स्वेन रूपेणाभिनिष्पद्यत इति स्वरूपाविर्भावादिकथनेन चेत्यर्थः ।

आचक्षत्तेत्यादेरुदाहरिष्यमाणप्रमाणशेषत्वभ्रान्तिं परिहरन्नेव किमनेन प्रमाणमुच्यत इत्याशङ्कां परिहरति **शाखामिति** । तर्ह्याचक्षत्तेत्यादिवाक्यानर्थक्यमित्यतोऽस्योदाहरिष्यमाणभारतवाक्यात्पूर्ववाक्यार्थसंग्रहकथनार्थत्वान्न तदिति भावेन तत्कथनस्य प्रयोजनं दर्शयन्नेव तत्सार्थक्यमाह **तस्येति** । अत्र वाक्ये शाखाशब्दो न यत्किञ्चिद्वृक्षशाखापरः किन्तु वेतसवृक्षशाखापर एवेति भावेन वेतसस्य प्रकृततां दर्शयितुं तत्पूर्ववाक्यमुदाहरति **तस्येति** । यद्यपि वेतसशब्दो जम्बूवृक्षेऽनार्याणां प्रसिद्धस्तथाऽप्यार्यप्रसिद्ध्या वञ्जूलार्थ एवात्राश्रयणीयः । 'अप्सुजो वेतस' इति वाक्यशेषानुसारित्वेन प्रबलया आर्यप्रसिद्ध्याऽनार्यप्रसिद्धिबाधेन वञ्जूलार्थत्वस्य 'शास्त्रस्था वा तन्निमित्तत्वादि'त्यधिकरणे भाष्यकारेण समर्थितत्वादिति ध्येयम् । नदीनां धानापूपादिस्वरूपताया बाधितत्वात्तथोक्तिरयुक्तेत्यत आह **धानापूपवत्य इत्यादि** । तर्हि मत्वर्थसंबन्धबोधनाय तदर्थकप्रत्ययप्रयोगस्यावश्यकत्वात्तदप्रयोगो दोष इत्यत: शुक्लोऽस्यास्तीति शुक्ल इत्यादाविव धानापूपाद्या आसां सन्ति तास्तथोक्ता इति मत्वर्थीयाच्प्रत्ययान्ततयाऽत्र तदप्रयोगोऽसिद्ध इति भावेन मत्वर्थीयाच्प्रत्ययविधायकं सूत्रं पठति **अर्श आदिभ्योऽजिति** । तदक्षरमित्युक्तस्याक्षरस्य यस्मिन्नित्यनेन परामर्शभ्रमं वारयति **यस्मिन् लोक इति** ।

स सङ्गत्येति तच्छब्दो न यत्किञ्चित्परः किन्तु हिरण्यगर्भपर इति भावेन तस्य प्रकृततासाधकं पूर्ववाक्यमुदाहरति **आद्य इति** ।

ब्रह्मण इत्युपलक्षणं चैतत् । यज्ञे जातविद्योपयोगाभावाच्चेत्यपि द्रष्टव्यम् । किञ्च नास्य ऋत्विग्विषयत्वं कल्पयितुं शक्यम् । एकस्मिन्यज्ञेऽनेकेषां ब्रह्मणामभावेन ब्रह्मबाहुल्यश्रवणविरोधात् ।

न च चतुर्णामपि पादानां होत्रादिभिन्नविषयत्वाङ्गीकाराद्ब्रह्मबाहुल्यश्रवणासिद्धिरिति वाच्यम् । तथा सति तृतीयपादे ब्रह्मेति विशेष्यपदेनैव पूर्त्या त्व इत्यस्य वैयर्थ्यप्रसङ्गेन भिन्नविषयत्वस्य कल्पयितुमशक्यत्वादित्याशयवानाह **चतुर्णामपीति** ।

**श्रौताक्षरेति** । ब्रह्मणेति तृतीयया सहशब्दस्य साक्षात्संबन्धप्रतीत्या ब्रह्मसाहित्यस्यैव श्रौताक्षरानुगुणत्वेन ब्रह्मात्मकतायास्तदननुगुणत्वादित्यर्थः ॥ **तत्सिद्धान्तेति** । परेण निर्विशेषचैतन्यस्य भोक्तृत्वानङ्गीकारादिति भावः ।

**प० परस्मादिति** । आनन्दमयस्य पर इति ब्रह्म नामावेप्यानन्दमयोऽभ्यासादित्यधिकरणे पूर्वत्र ब्रह्मत्वसमर्थनादिति भावः ॥ **पुण्यपापञ्जनाख्याऽविद्येति** । **पुण्यं** अनिष्टं **पापं** कुकर्मेति प्रसिद्धमिति पुण्यपापशब्दार्थावनुक्त्वाञ्जनशब्दार्थमाह **अञ्जनाख्याऽविद्येति** । ममेत्येतदर्थज्ञापनाय स्मृतित्वद्योतनाय वाह **इति भगवद्वाक्येऽपीति** । इत्युक्त्येत्येतत् उत्थायेत्यतदुक्त्याऽप्यन्वेति । परंज्योतिरिति वाक्यात्पूर्ववाक्येऽस्माच्छरीरात्समुत्थायेत्यस्य श्रवणात् ॥ **तस्य मध्य इति** । भगवल्लोकस्य मध्ये वेतसो नाम कश्चिद्वृक्षविशेष इत्येके ॥ जम्बूवृक्ष इत्यन्ये ॥ **मांसकामवत्य इति** ॥ काम्यमानमांसवत्य इत्यर्थः । मत्वर्थेऽच्प्रत्ययान्तत्वे पञ्चमाध्यायद्वितीयपादीयसूत्रं मतुप्प्रकरणस्थं पठति **अर्श इति** । एवमादिभ्यः प्रातिपदिकेभ्योऽच्प्रत्ययो भवति मत्वर्थे इत्यच्प्रत्यये यस्येति चेति प्रातिपदिकाकारलोपे रूपमिति भावः । आकृतिगणश्चायम् । यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यमिति वृत्तवुक्तेः एतेपि शब्दास्तत्र ग्राह्या इत्येवमुक्तम् । स सङ्गत्येत्यत्र तच्छब्दपरामर्शविषयो हिरण्यगर्भ इति दर्शयितुं **पूर्ववाक्यमाह आद्य इति** । भाष्योपात्तवाक्यस्यार्थमाह **स जीवेश्वरेति** परं ब्रह्मपङ्गत्येत्यस्य फलितार्थः **मुक्तः सन्प्रविश्येति** । मूर्तिनेति छान्दसमुपेत्योक्तम **परमेश्वरमूर्त्येति** । ब्रह्मबाहुल्यश्रवणात्संसारदशायां तदभावादाह **मुक्तिस्थान इति** । त्व इतीत्यनुवादः । कश्चिदिति व्याख्या । पुष्वानित्यत्र प्रातिपदिकार्थो विवक्षित इत्युपेत्यार्थमाह **ऋचः पुष्टाः कुर्वन्निति** ॥ **शक्करीष्विति** । शक्करीछन्दस्कासु ऋक्ष्वित्यर्थः । यज्ञो वै विष्णुरिति श्रुतेराह **यज्ञस्य विष्णोरिति** । उशब्दार्थ एवेति ॥ **ब्रह्मण इति** । ब्रह्मरूपऋत्विज इत्यर्थः ॥ **होत्रादीति** । होतृउद्गातृब्रह्माध्वर्युरूपऋत्विक्चतुष्टयविषयत्वे सति ब्रह्मा त्व इति वाक्ये कश्चिदित्यर्थकस्त्व इति शब्दोऽर्थः । ब्रह्मऋत्विजबाहुल्यवक्त्वस्याभावादिति भावः ॥ **शेषभूत इति** । तद्दासभूत इत्यर्थः ॥ **हृदयनत्वाद् हृदयं ब्रह्मेति** । हृच्छब्दोपपदात् अयगताविति धातोरच्प्रत्यये हृदयेति रूपसिद्धेरिति भावः ।

**या० — पुण्यपापे इति** । पुण्यपापयोरञ्जनशब्दवाच्याविद्यायाश्च विधूननाभिधानादित्यर्थः । **वेतसो** जम्बूवृक्षः । आर्यप्रसिद्ध्या वेतसो जम्बूवृक्ष इति मीमांसकोक्तेः । धानापूपशब्दौ भक्ष्यवि-

शेषयोर्वाचकौ ॥ **मांसकामवत्य इति** । काम्यमांसवत्य इत्यर्थः ॥ **अर्शआदिभ्य इति** । अर्श इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्प्रत्ययो भवति मत्वर्थे इति सूत्रार्थः । अर्शोऽस्यास्तीत्यर्शसः । वैजयन्त इत्याद्युदाहरणम् । आकृतिगणोऽयम् । उक्तं च काशिकायाम् । आकृतिगणश्चायम् । यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यमिति । 'स सन्नत्ये'त्यत्र स इति परामर्शविषयं दर्शयितुं पूर्वश्लोकमुदाहरति **आद्य इति** ॥ **शक्वरीष्विति** । शक्वरीछन्दोबद्धास्वित्यर्थः ॥ **ब्रह्मण इति** । ब्रह्माख्यस्य ऋत्विज इत्यर्थः ॥ **होत्रादीति** । होतृद्गातृब्रह्माध्वर्युविषयत्व इत्यर्थः ॥ **व्यर्थं स्यादिति** । यद्यन्येऽपि त्रयो ब्रह्माणस्तदैव तत्सार्थकं भवति नान्यथेति भावः ॥

**श्री० — सिद्धान्ताननुगुणं चेति** । ब्रह्मात्मत्वं प्राप्तस्य जीवस्य त्वन्मते भोगानङ्गीकारादित्यर्थः । **शेषभूतो** भृत्यभूतः ।

**च० — वेतसो** जम्बूवृक्षः ।

**सु० — इदानीं परपक्षं निराकरिष्यन्यदुक्तं श्रुतिभिश्चानुमाबलादिति श्रुतिप्राचिन्येन अनुमानम्, तत्तावन्निराकर्तुमुपक्रमते** नानुमा चेति ।

**अनु० —** नानुमा च तदभेदं प्रमापयेत् ॥

**चशब्दः स्वपक्षसाधनपरपक्षनि(रसन)राससमुच्चयार्थः** । प्रमापयेत् **प्रमितं कुर्यात्** । **यद्वा जीवेश्वराभेदे परोपन्यस्तसमस्तप्रमाणनिरसनप्रतिज्ञेयम्** । **तथा च श्रुतिस्मृती चेति चार्थः** ।

**शे० — चशब्द इति** । स्वपक्षसाधनपरपक्षनिरसनयोर्मिलितयोरेव तत्त्वनिर्णयाङ्गत्वादिति भावः । अनुमा तदभेदं न प्रमापयेच्चेति भिन्नक्रमत्वमाश्रयणीयं भवतीत्यपरितोषाद्यथास्थितान्वयमाश्रित्यापि तदर्थमाह **यद्वेति** ।

**या० — समुच्चयार्थ इति** । तत्त्वनिर्णयरूपैकक्रियया सम्बद्धार्थ इत्यर्थः ॥

**सु० — तत्कथमित्यतोऽनुमानं तावदनुवदति** मिथ्यैवेति ।

**अनु० —** मिथ्यैव भेदो विमतो भेदत्वाच्चन्द्रभेदवत् ॥

इति चेत्

**भेदो मिथ्येत्येतावत्युक्ते चन्द्रभेदादिना सिद्धसाधनं स्यादित्यतो विमत इत्युक्तम्** । **जीवब्रह्मणोर्भेद इति यावत्** । **स्तम्भकुम्भादिभेदस्य पक्षतुल्यत्वान्न तत्र भेदत्वहेतोर्व्यभिचारः शङ्कनीय इति ज्ञापनार्थं वा** । **यावान्कश्चिद्विमतो भेदः स सर्वोऽपीति** । **भेदग्रहणं (वि)**

स्पष्टार्थम् । साध्यावधारणेनासिद्ध्याद्याभासोद्धारं सूचयति । भेदमिथ्यात्वसिद्धावभेद एव वास्तवः सिध्यतीति भावः ।

**शे०** — विमत इत्युक्तेः प्रयोजनान्तरमाह **स्तम्भेति** । 'ज्ञापनार्थं वे'त्यस्य विमत इत्युक्तमिति पूर्वेण सम्बन्धः । कथमनेन तज्ज्ञापनमित्यतस्तदनुकूलतया तद्व्याचष्टे **यावानिति** तर्हि विमत इत्यनेनैव जीवब्रह्मभेदलाभाद्भेदग्रहणमनर्थकमित्यत आह **भेदग्रहणमिति** । मिथ्यैवेति साध्यावधारणस्य वैयर्थ्यमाशङ्क्याह **साध्यावधारणेनेति** । यद्यपि, यद्याश्रयो भेदोऽसिद्धः स्यात्तदा किमाश्रयविमतिः स्यात् । यदि वा विशेषणं मिथ्यात्वमप्रसिद्धं स्यात्तदा किमुल्लेखिनी विमतिः स्यात् । यदि वा भेदे मिथ्यात्वं सिद्धं बाधितं वा भवेत्तदाऽप्यन्यतरपक्षनिश्चयान्न विमतिः स्यात् । अस्ति चेयं ततो नाश्रयासिद्ध्यादीति प्रतिज्ञाऽऽश्रयासिद्ध्याद्याभासोद्धारो विमतग्रहणेनैव सिद्धः, तथाऽपि तस्यैवैवकारेण स्पष्टीकरणाभिप्रायेणेयमुक्तिरिति ध्येयम् । यद्वा विमतिग्रहणेन प्रतिज्ञाऽऽश्रयदोषपरिहारसिद्धावपि हेत्वाश्रितदोषपरिहारासिद्धेस्तत्सिद्ध्यर्थमवधारणमित्यवधेयम् ॥

**स०**— **असिद्ध्याद्याभास इति** । भेदो मिथ्यैव नासन् । येनासिद्धिः । नापि सन् येन बाधः स्यादित्यर्थः ।

**प०**— **साध्यावधारणेनेति** । मिथ्यैवेतिसाध्यान्वितेनावधारणेनेत्यर्थः । तस्य प्रसिद्ध्यादिद्योतकत्वेन साध्याप्रसिद्ध्यादिहेतुकपक्षधर्मतसिद्धिव्याप्यत्वासिद्ध्यादेर्निरासलाभादिति भावः । यद्वाऽसिद्ध्यादौ सति मिथ्यैवेत्युक्त्ययुक्तेः तथैवोक्त्या तदुद्धारो लब्धः । तत्प्रकारश्च पराभिमत ऊह्य इति भावः ।

**या०**— **आभासोद्धारमिति** । यद्यत्रासिद्ध्याद्यन्यतम आभासः स्यात्तदा मिथ्यैवेत्यवधारणमनुपपन्नं स्यात् । अस्ति च तत् । तेन ज्ञायते न कोऽप्यत्राभास इति सूचयतीत्यर्थः ॥

**सु०** — **दूषयितुं पृच्छति** साध्येति ।

**अनु०**— साध्यधर्मोऽयं सन्नसन्वा न वोभयम् ॥

**अयं जीवब्रह्मभेदस्य मिथ्यात्वलक्षणः ।**

**सन्निति स्वमतानुसारेण । ननु मिथ्यात्वं सच्चेत्तद्यस्य तदपि सत्स्यात् । न हि संभवति नास्ति धर्मी धर्मश्चास्तीति । तथा च वैपरी(त्यमेव)त्यम् । मैवम् । मिथ्यात्वं खल्वत्यन्ताभावप्रतियोगित्वं तच्च बुद्धिद्वारेणैव । अत्यन्तासतोऽपि प्रतीतिरङ्गीक्रियते । तथा च मिथ्यात्वमस्तीत्यस्य तत्प्रतियोगिकोऽत्यन्ताभावः सन्नित्यर्थः । न चात्र कोऽपि विरोधः ।**

**असन्वेति माध्यमिकमतानुरोधेन । न हि प्रतिवादिन्याश्वासोऽस्ति । येनासौ स्वमत-मतिप(ती)त्य न वदेदिति निश्चिनुमः ।**

**उभयं न वेति प्रतिवादिमतानुसारेण । सदसद्विलक्षण इत्यर्थः ।**

**ननु सदसत्त्वमपि जैनादिरीत्या कुतो न विकल्पितम् । सदादिपक्षदूषणसाम्यादिति ब्रूमः ।**

**यद्वोभयं ( वेति ) चेति तृतीयः पक्षः । नेति चतुर्थः । उभयं न वेत्यर्थः ।**

शे०— **स्वमतानुसारेणेति** । तत्त्ववादिमते मिथ्यात्वस्य सत्त्वादिति भावः । स्वमते मिथ्यात्वस्य सत्त्वे तद्धर्मिणः शुक्तिरजतादेरपि सत्त्वप्रसङ्गान्न मिथ्यात्वस्य सत्यत्वमिति शिष्यः शङ्कते **नन्विति** । धर्मिणोऽसत्त्वेऽपि मिथ्यात्वस्य सत्त्वं किन्न स्यादित्यप्रयोजकत्वमाशङ्क्य परिहरति **न हीति** । अस्तु तर्हि तद्धर्मिणः शुक्तिरजतादेरपि सत्त्वमित्यतस्तर्हि सत्यत्वमिथ्यात्वयोरेकत्र विरुद्धत्वात्तन्मिथ्यात्वसिद्धान्तभङ्ग इत्याह **तथा चेति** । धर्म्यसत्त्वे धर्मासत्त्वनियमस्य धर्मिसत्तासापेक्षधर्मविषयत्वेन मिथ्यात्वस्य च तत्प्रतिकूलत्वेन रूपादिवत्तासत्तासापेक्षत्वाभावाच्छुक्तिरजतादेर्धर्मिणोऽसत्त्वेऽपि तद्धर्मस्य मिथ्यात्वस्य सत्त्वं नानुपपन्नमित्याशयवान्मिथ्यात्वस्य तत्प्रतिकूलतां दर्श(सूच)यितुं तत्स्वरूपमाह **मिथ्यात्वं हीति** । ननु प्रतियोगित्वमभावविरहत्वमभावावधित्वं वान्यस्यानिरूपणात्तदुभयमपि रूपादिवत्तद्धर्मिसत्तासापेक्षमेवेति कथं धर्मिणोऽसत्त्वे तत्सत्त्वमुपपद्यत इत्यतो नाभावविरहत्वं प्रतियोगित्वं सादृश्यपृथक्त्वादिप्रतियोगिन्यव्याप्तेः । नाप्यभावावधित्वं निरवधिकात्यन्ताभावप्रतियोगिन्यव्याप्तेः । किन्तु तज्ज्ञानहेतुज्ञानविशेषविषयत्वं । न च विषयत्वं तद्धर्मिसत्तासापेक्षमिति न तस्य धर्म्यसत्त्वे सत्त्वानुपपत्तिरित्याशयेनाह **तच्च बुद्धिद्वारेणैवेति** । नन्वसतोऽप्रतीतेः कथं तस्य तज्ज्ञानहेतुज्ञानविशेषविषयत्वमपीत्यत आह **असतोऽपीति**। असद्वैलक्षण्यज्ञानानुरोधेनासतोऽपि शशशृङ्गादेः परोक्षज्ञानादिविषयत्वस्य सर्वसम्मतत्वादित्यर्थः । ननु नासति शशशृङ्गादौ परोक्षज्ञानादिविषयत्वमभ्युपगम्यते किं तर्ह्यसद्विषयकज्ञाने तद्विषयकत्वस्य सत्त्वमेवेति कथं धर्म्यसत्त्वेऽपि मिथ्यात्वस्य सत्त्वसमर्थामित्यतस्तर्ह्यत्रापि नासति प्रतियोगित्वस्य सत्त्वमस्माकं सम्मतं किन्त्वत्यन्ताभावे तत्प्रतियोगिकत्वमेवेति भावेन मिथ्यात्वस्य सत्त्वोक्तेः पर्यवसितमर्थं दर्शयन्नुक्ताक्षेपपरिहारमुपसंहरति **तथा चेति** । यद्वा तच्च बुद्धिद्वारेणैवेत्यस्यायमर्थः । न प्रतियोगित्वं घटरूपादिवत्तत्तद्वस्तुहेतुकृतं नापि पाकजरूपादिवद्-बुद्धिहेतुभिन्नागन्तुकस्वहेतुकृतमभ्युपगच्छामो येन रूपादिवद्धर्मिसत्तासापेक्षं स्यात् । किन्तु बुद्धिहेतुकृतमेव । तथा च तादृशज्ञानसामग्र्यासादितायामत्यन्ताभावगोचरतत्प्रतियोगिकत्वप्रतीतौ प्रतियोगित्वेनोल्लिखितत्वमेव प्रतियोगित्वमिति न तस्य धर्मिसत्तासापेक्षतेति । प्रतीत्यगोचरस्यासतः कथं तत्प्रतियोगिकत्वप्रतीतौ

प्रतियोगित्वेनोल्लिखितत्वमपीत्यत आह **असत इति** । पर्यवसितं निगमयति **तथा चेति** ॥ **न चात्रेति** । धर्मसत्त्वस्य धर्मिसत्तापेक्षकत्ववदत्यन्ताभावसत्त्वस्य प्रतियोगिसत्त्वानपेक्षकत्वादिति भावः । **प्रतिवादिमतानुसारेण** मायिमतानुसारेण । सम्भावककथनेन विधान्तरस्यापि सम्भावितत्वमुपदर्शयन्विकल्प्य न्यूनतामाशङ्कते **नन्विति** । सदसत्पक्षदूषणेनैव दूषितत्वात्पृथगविकल्पनमिति समाधत्ते **सदादीति** । अङ्गीकृत्य चैतदुक्तं वस्तुतस्तु पृथगविकल्पनमेवासिद्धमिति भावेन तत्संग्राहकतया विकल्पवाक्यं योजयति **यद्वेति** ।

**प०— तथाच वैपरीत्यमेवेति** । धर्मसत्वेन धर्मिसत्वस्याऽऽवश्यकत्वे सति भेदमिथ्यात्वस्य सत्वं भेदस्य सत्वमेवापादयेत् अतो मिथ्यात्वं सदिति पक्षोऽनुपपन्न एवेत्यर्थः । इति चेन्नेति शेषः । क्वचित्तु वैपरीत्यं नैवमित्येव पाठः ॥ **बुद्धिद्वारेणेति** । ज्ञानविषयतासंबन्धेनासतोरप्येवेत्यर्थः । नन्वसतो ज्ञानमेव नेत्यत आह **अत्यन्तासतोऽपीति** ।

**या०— स्वमतानुसारेणेति** । स्वमते धर्माणां सत्त्वान्मिथ्यात्वस्यापि धर्मत्वादिति भावः ॥ **वैपरीत्यमिति** । मिथ्यात्वापेक्षया वैपरीत्यं धर्मिभूते भेदे सत्यत्वं प्राप्तम् । ततश्च विरोध इति भावः ॥ **बुद्धिद्वारेणेति** । वैज्ञानिकसंबन्धेनैव प्रतियोगित्वं तत्रास्ति, न वस्तुतः । प्रतियोगित्वस्य धर्मिसत्तानिरपेक्षत्वात् । अतो न विरोध इत्यर्थः । एवं प्रतियोगिप्राधान्यविवक्षया प्रयोगे प्रसक्तं विरोधं परिहृत्य निषेधप्राधान्यविवक्षया प्रयोगे विरोधप्रसक्तिरेव नास्तीत्याशयेनाह **तथा च मिथ्यात्वमिति** । अत्यन्तासतोऽपि प्रतीतिरङ्गीक्रियत इति वाक्यस्य पूर्वोत्तरवाक्याभ्यां संबन्धः । तेनात्र तथा चेति श्लिष्टमिति ज्ञातव्यम् । एवमव्याख्यायैकवाक्यतयैव व्याख्याने तच्च बुद्धिद्वारेणैवेत्यस्य न किञ्चित्कृत्यमस्तीति ज्ञातव्यम् ।

**श्री०** — नन्वत्यन्ताभावप्रतियोगिनोऽत्यन्तासत्त्वात्कथं तद्विषयिणी बुद्धिः, असतोऽप्रतीयमानत्वादतो बुद्धिद्वारा प्रतियोगित्वं कथं युक्तं स्यादित्यत आह **अत्यन्तासतोऽपीति** ॥ **अतिपत्य** अतिक्रम्य ।

**च०— अतिपत्य** अतिक्रम्य ।

**सु०— आद्यं दूषयति** यदीति ।

**अनु०— यदि सन्नपसिद्धान्तः**

यद्ययं साध्यधर्मः सन्नित्युच्यते तदा मायावादिनोऽपसिद्धान्तः स्यात् । न हि जीव-ब्रह्मणोर्भेदस्य मिथ्यात्वं ब्रह्म, येन तस्य सत्त्वेऽपि सदद्वैतवादिनो नापसिद्धान्तः स्यात् । ब्रह्मणो निर्विकल्पकत्वात् ।

द्वितीये दोषमाह स एवेति ।

स एवासन्नितीरिते ॥

अपसिद्धान्त एव । मिथ्यात्वस्यासत्त्वे ( अपि ) सत्त्वमेव जीवब्रह्मभेदस्य स्यात् । न चासत् प्रमाणविषय इति तेषां पक्षः । अनेन सदसत्त्वपक्षोऽपि निरस्तो वेदितव्यः । अन्तिममपाकरोति नोभयं चेदिति ।

नोभयं चेन्न सिद्धं तत्

तदुभयविलक्षणत्वं च जीवब्रह्मभेदमिथ्यात्वेऽन्यत्र वा क्वापि न सिद्धम् ।

शे० — ननु भेदमिथ्यात्वस्य कुतो न ब्रह्मस्वरूपत्वमित्यतस्तस्य सोपाधिकत्वात् भ्रमकाला-निश्चितत्वाद्‌ब्रह्मणश्च निरुपाधिकत्वाद्‌भ्रमकालनिश्चितत्वाच्च तयोर्विरुद्धस्वभावत्वान्नाभेदो युक्त इत्याश-यवान्विरुद्धस्वभावतामुपदर्शयितुमुपलक्षणत्वेन ब्रह्मणो निरुपाधिकतामाह ब्रह्मण इति ॥ सत्त्वमेव स्यादिति । परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात्सत्त्वमिथ्यात्वयोश्च परस्परविरुद्ध-त्वात्तन्मिथ्यात्वस्यासत्त्वे भेदस्य सत्त्वं स्यात्तथा च सदद्वैतभङ्गो भेदस्य सोपाधिकत्वेन भ्रमकालानिश्चित-त्वेन निरुपाधिकभ्रमकालनिश्चितब्रह्ममात्रत्वानुपपत्त्या तदतिरिक्तत्वावश्यम्भावादिति भावः । असतः प्रमाणाविषयत्वस्य स्वसिद्धान्तत्वान्मिथ्यात्वस्य प्रमाणविषयत्वेऽसतोऽपि प्रमाणविषयत्वापत्त्याऽपसिद्धान्त इति प्रकारान्तरेणाप्यपसिद्धान्तमुपपादयति न चेति ॥ अनेनेति । सत्त्वासत्त्वपक्षोक्तदूषणेनैवेत्यर्थः । अत एव पृथक् तद्दूषणमित्याशयः ।

स० — निर्विकल्पकत्वात् निरुपाधिकत्वादित्यर्थः ।

प० — ननु मिथ्यात्वस्य सत्यत्वेपि तस्य ब्रह्मरूपत्वान्नाद्वैतभङ्ग इत्यत आह न हीति ॥ जीवेति । कुतो नेत्यत आह ब्रह्मणो निर्विकल्पत्वादिति । अखण्डत्वान्निष्प्रतियोगिकत्वादिति यावत् । मिथ्यात्वं सप्रतियोगिकमित्युक्तमेवेति भावः । द्वितीयपक्षेऽपसिद्धान्तं द्वेधा व्यनक्ति मिथ्यात्वस्येति । न चासदिति च ॥ अनेनेति । अपसिद्धान्तदोषेणेत्यर्थः ।

**या०— निर्विकल्पकत्वादिति** । अत्र विकल्पशब्देनोपाधिरुच्यते । विविधकल्पनारूपत्वात् । तथा च ब्रह्म निरुपाधिकं मिथ्यात्वं तु सोपाधिकमतस्तयोरभेदो न युक्त इत्यर्थः । प्रकारान्तरेणाप्यपसिद्धान्तमुपपादयति **न चामदिति** ॥ **असत्** मिथ्यात्वं, **प्रमाणं** अनुमानं, **अनेन** अपसिद्धान्तेन । **पक्षे इति** । अत्र पक्षपदेन तदेकदेशो धर्मी लक्ष्यते । एवमग्रेऽपि । तथा च साध्यत्वाभावादित्यर्थः । **अन्यथेति** । व्यापककोटिनिविष्टस्य प्रसिद्धत्वाभावे, तन्निरूपितव्याप्तिग्रहणस्य सन्दिग्धसाध्यवत्वरूपपक्षत्वस्यासंभवादित्यर्थः ॥

**श्री०— निर्विकल्पकत्वादिति** । निर्धर्मकत्वादित्यर्थः । ब्रह्म निरुपाधिकं मिथ्यात्वं तु सोपाधिकम् । सोपाधिकनिरुपाधिकयोश्चैक्यं विरुद्धमिति भावः ।

**च०— निर्विकल्पकत्वात्** । निरुपाधित्वात् । तथाच सोपाधिकनिरुपाधिकयोरभेदो न सङ्गच्छत इति भावः ।

**सु०— नन्वनेन किमुक्तं स्यात् । अप्रसिद्धविशेषणत्वमिति चेन्न । सदसद्वैलक्षण्यस्य पक्षविशेषणत्वाभावात् । मिथ्यात्वमेव पक्षविशेषणमुपन्यस्तं तद्धर्म एव सदसद्वैलक्षण्यम् । न च विमतं बुद्धिमत्कर्तृपूर्वकमितिवद्विशेषणविशेषणेनापि प्रसिद्धेन भाव्यमिति वाच्यम् । वैषम्यात् । यद्धि व्यापककोटिनिविष्टं विवादपदं च तस्य प्रसिद्धताऽवश्यम्भाविनी । अन्यथा व्याप्तिग्रहणपक्ष(त्व)योरसंभवात् । अस्ति च बुद्धिमत्त्वस्यापि व्यापककोटि(टौ) निवेशादि न तु सदसद्वैलक्षण्यस्येति । उच्यते। यो ह्यर्थः प्रमाणसाध्यः स संभावितप्रकारेष्वन्यतमप्रकारवानुपलब्धः । इदं च जीवब्रह्मभेदस्य मिथ्यात्वं न सदादिप्रकारवदङ्गीकर्तुं शक्यं प्रकारत्रयस्यापसिद्धान्तपराहतत्वात् । चतुर्थस्याप्रामाणिकत्वात् । न ह्यप्रामाणिकेन प्रकारेण प्रकारवत्किञ्चिद्भवति । अतो व्यापकानुपलब्धिबाधितं जीवब्रह्मणोर्भेदस्य मिथ्यात्वं न साधयितुं शक्यमिति समुदायार्थो विवक्षित इति न काचिदनुपपत्तिः ॥ अनेनैवाभिप्रायेण टीकाऽपि नेतव्येति ।**

**शे० — पक्षविशेषणत्वाभावादिति** । अत्र पक्षशब्दस्तदेकदेशधर्मिपरो न तु साध्यधर्मविशिष्टधर्मिपरस्तथा सति मिथ्यात्वस्याश्रयकोटिनिविष्टत्वापत्त्या तस्य तद्विशिष्टधर्मिविशेषणत्वाभावेन सदसद्विलक्षणत्वस्य पक्षविशेषणविशेषणत्वाभावप्रसङ्गादिति ध्येयम् **व्याप्तीति** । व्याप्तेः ससंबन्धिकपदार्थतया संबन्धिज्ञानाधीनज्ञानत्वेनासति संबन्धिज्ञाने ज्ञातुमशक्यत्वात् । सन्देहघटितत्वात्पक्षतायाः प्रकृते च साध्याप्रसिद्धौ कोटिस्मृत्यसंभवेन सन्देहायोगादिति भावः ।

ननु व्यापकानुपलब्धिबाधितं जीवब्रह्मभेदमिथ्यात्वं न साधयितुं शक्यमित्यभिप्रायवर्णनमयुक्तम् । तथा सति सन्न्यायरत्नावलीविरोधापातात् । तत्र हि । यदेतद्विमतभेदस्य चन्द्रभेदवन्मिथ्यात्वं साध्यते तत्किं सत्, असत् सदसद्विलक्षणं वा । न प्रथमद्वितीयावपसिद्धान्तात् । उभयविलक्षणत्वं चेत्तस्याप्रसिद्धत्वेन पक्षोऽप्रसिद्धविशेषणः स्यादित्यादिना सदसद्वैलक्षण्यपक्षेऽप्रसिद्धविशेषणत्वस्यैवाभिधानादित्यत आह ॥ **अनेनैवाभिप्रायेणेति** । तस्योभयविलक्षणत्वस्याप्रसिद्धत्वादप्रामाणिकत्वेन साध्यस्याप्रामाणिकेनोभयविलक्षणत्वरूपप्रकारेण प्रकारवत्त्वासम्भवात्सत्त्वादिप्रकारस्य चापसिद्धान्तपराहतत्वासम्भावितप्रकारेष्वन्यतमप्रकारवत्त्वरूपव्यापकनिवृत्त्या मिथ्यात्वस्य साध्यत्वासम्भवेन पक्षोऽप्रसिद्धविशेषणः स्याद्बाधितविशेषणः स्यादित्यभिप्रायेणैवेत्यर्थः ।

स० — ननु व्यापकानुपलब्धिबाधितं जीवब्रह्मभेदस्य मिथ्यात्वं न साधयितुं शक्यमित्यर्थवर्णनमयुक्तं तथा सति सन्न्यायरत्नावलिविरोधात् । तत्र त्वयमर्थः । यदेतद्विमतभेदस्य चन्द्रभेदवन्मिथ्यात्वं साध्यते तत्किं सदसद्वोभयविलक्षणं वा न प्रथमद्वितीयपक्षावङ्गीकर्तुं शक्यौ अनिर्वचनीयवादिनः तस्यापसिद्धान्तापत्तेः । उभयविलक्षणत्वं चेत्तस्याप्रसिद्धत्वेन पक्षोऽप्रसिद्धविशेषणः स्यादित्यादिना सदसद्वैलक्षण्यपक्षेऽप्रसिद्धविशेषणत्वाभिधानादित्यत आह **अनेनैवाभिप्रायेण टीका नेतव्येति** । तत उभयविलक्षणत्वस्याप्रसिद्धत्वेन प्रामाणिकत्वेन साध्यस्याप्रामाणिकेनोभयविलक्षणत्वरूपप्रकारेण प्रकारवत्त्वासंभवात् सत्त्वादिप्रकारस्यापसिद्धान्तत्ववत् संभावितप्रकारेष्वन्यतमत्वरूपव्यापकनिवृत्त्या मिथ्यात्वस्य साध्यत्वासंभवेन पक्षोऽप्रसिद्धविशेषणः बाधितविशेषणः स्यादिति ।

प० — **पक्षविशेषणत्वाभावादिति** । साध्यधर्मविशिष्टस्य पक्षशब्दार्थत्वेऽपि इह तदेकदेशधर्मिमात्रपरतया धर्मिविशेषणत्वाभावादित्यर्थः ॥ **विमतमिति** । भूभूधरादिकमित्यर्थः ॥ **इतिवदिति** । इत्यत्र यथा विशेषणीभूतकर्तृविशेषणं बुद्धिमत्त्वं प्रसिद्धं तथा प्रसिद्धेन भाव्यमित्यर्थः । **व्याप्तिग्रहणपक्षतयोरिति** । पक्षत्वज्ञानयोरित्यर्थः । तयोः साध्यधर्मज्ञानाधीनत्वादिति भावः । निवेशादीत्यादिपदेन विवादास्पदत्वग्रहः ॥ **टीकापीति** । पक्षोऽप्रसिद्धविशेषणः स्यादिति सन्न्यायरत्नावलीग्रन्थोऽपि यो ह्यर्थ इत्यादिनोक्ताभिप्रायेण नेतव्य इत्यर्थः ।

या० — नन्वेवं टीकाविरोधः । तत्रोभयविलक्षणं चेत्तस्याप्रसिद्धत्वेन पक्षोऽप्रसिद्धविशेषणः स्यादित्यप्रसिद्धविशेषणत्वस्यैवोक्तत्वादित्यत आह **अनेनैवेति** । साध्यविशेषणस्य सदसद्वैलक्षण्यस्याप्रसिद्धावुक्तरीत्या व्यापकानुपलम्भबाध एवेत्यनेनैवाभिप्रायेणेत्यर्थः ।

च० — **व्यापकोटिनिविष्टम्** साध्यतावच्छेदकघटकम् । **टीकापि** । पक्षोऽप्रसिद्धविशेषणः स्यादित्यानुपूर्वीकसन्न्यायरत्नावलीग्रन्थोऽपि दर्शिततात्पर्यकोऽवसेय इति भावः ।

सु० **दूषणान्तरमाह** इति मानस्येति ।

**अनु०** — इति मानस्य दूषणम् ॥

**मीयत इति मानम् । कृत्यल्युटो बहुलमिति वचनात् । मिथ्याशब्दार्थं विकल्प्याप्येवं दूषणमभिधानीयमित्यर्थः । तथा हि । किं मिथ्येत्यसत्त्वमुच्यते । किंवाऽनिर्वाच्यत्वम् । आद्येऽपसिद्धान्तः । द्वितीयेऽप्रसिद्धविशेषणता पक्षस्येति । सत्त्वाभावो मिथ्यापदार्थ इति चेन्न । तस्यैवासत्त्व(शब्दार्थ)पदार्थत्वेनापसिद्धान्तानिस्तारादिति ।**

**शे०**— ननु ल्युट् च करणाधिकरणयोश्चेति भावे करणाधिकरणयोश्च ल्युड्विधानान्मीयत इति मानमिति कथं कर्मणि ल्युट् व्याख्यायत इत्यतः कर्तृकर्मादावपि ल्युटः स्मरणान्नानुपपत्तिरिति भावेन तत्र तद्विधायकं सूत्रं पठति ॥ **कृत्यल्युटो बहुलमिति वचनादिति ।** अत्र कृत्यल्युट इति वचनादित्येव वक्तव्यं सूत्रारम्भसामर्थ्यादेव यत्रार्थे भावकर्मणोः कृत्या विहिताः भावकरणाधिकरणेषु च ल्युड्विहितस्ततोऽन्यत्रापि कृत्यल्युटो भविष्यन्तीत्यस्यार्थस्य सिद्धत्वेन तदर्थं बहुलग्रहणस्याकर्तव्यत्वात् । तस्माद्बहुलमिति योगान्तरं तच्चान्येषामपि कृतां स्वस्वार्थव्यभिचारज्ञापनार्थमित्याकरे स्थितत्वादिति द्रष्टव्यम् ॥ **अपसिद्धान्त इति ।** भेदस्यासद्विलक्षणताया स्तत्सिद्धान्तत्वादिति भावः ॥ **अप्रसिद्धेति ।** एतदनुमानात्प्रागनिर्वचनीयत्वस्य क्वचिदप्यप्रसिद्धत्वादिति भावः ॥ **सत्त्वाभावेति ।** तथा च नाऽपसिद्धान्तः । शुक्तिरजत एवेव सत्त्वाभावस्य प्रसिद्धत्वात् नाप्रसिद्धविशेषणतेति भावः ॥ **तस्यैवेति ।** सत्त्वाभावस्यैवेत्यर्थः । शशशृङ्गादीनां निरुपाख्यपदेनैव ख्यायमानतया निरूपाख्यत्वस्य, नित्यातीन्द्रियसाधारण्यादपरोक्षतोऽप्रतीयमानत्वस्य, येन पुंसा शशशृङ्गाभावो न निश्चितस्तस्य गोशृङ्गमस्तीति वाक्यादिव शशशृङ्गमस्तीति वाक्यात्सत्त्वेन प्रतीत्या सत्त्वेनाप्रतीयमानत्वस्य, अनिर्वाच्यत्वस्यासत्त्वनिरूप्यत्वेनान्योन्याश्रयापत्त्या सदनिर्वाच्याभ्यामन्यत्वस्य, शुक्तिरूप्यादौ शुद्धब्रह्मणि च सत्त्वेनार्थक्रियासामर्थ्याभावस्य, मिथ्याभूतस्य स्वरूपेणैव त्रैकालिकनिषेध इति पक्षे तत्साधारणत्वेन निस्स्वरूपत्वस्य चासत्त्वस्यासंभवेन सत्त्वाभावस्यैवासत्त्वपदार्थतयाऽभ्युपगमनीयत्वादिति भावः ।

**प०**— मानपदमनुमानविषयीभूतसाध्यपरमिति भावेनाह **मीयत इति ।** ननु करणाधिकरणयोश्चेति सूत्रे भावकरणरूपार्थत्रय एव ल्युटो विधानात्कर्मणि कथं ल्युडित्यतः तृतीयाध्यायतृतीयपादस्थसूत्रांतरेण तत्सिद्धिरित्याह **कृत्येति ।** कृत्यसंज्ञकप्रत्ययाः ल्युट्प्रत्ययश्च बहुलं भवति । अनेकार्थेषु भवंतीत्युक्तत्वादिह च माङ्माने इत्यस्मात्कर्मणि ल्युटि हलन्त्यं लशक्वतद्धिते इति टकारलकारयोरपगमे युवोरनाकावित्यनादेशे सवर्णदीर्घे च मानमिति सिद्धेरिति भावः ॥ **पक्षस्येतीति ।** साध्यधर्मिण इत्यर्थः ।

या० — ननु भावे करणाधिकरणयोश्च ल्युटो विधानात्कथं स कर्मणि व्याख्यात इत्यत आह कृत्यल्युट इति । कृत्याः ल्युट् च बहुलमर्थेषु स्युरिति सूत्रार्थः ।

च० — कृत्या ल्युट इति । कृत्याः ल्युट् च बहुलमर्थेषु स्युरित्यर्थः । बहूनर्थान् लाति आदत्ते बहुलमिति व्युत्पत्तेः पाणिनीयैर्दर्शितत्वादिति भावः । पक्षस्येतीति । साध्यनिरूपितधर्मितो विशेषितस्येत्यर्थः ।

सु० — दोषान्तरमाह इतीति । मानस्य लिङ्गस्य । भेदत्वहेतुरपि सन्नसन्वा सदसन्वा अनिर्वाच्यो वेति विकल्प्याद्येऽद्वैतवादिनोऽसिद्धिः । दृष्टान्तश्च साधनविकलः । द्वितीयतृतीययोर्द्वयोरपि । चतुर्थे द्वैतवादिन इति दूषणमभिधातव्यमित्यर्थः । नच सदसदादौ भेदत्वसामान्यमस्ति । येन धूमवत्त्ववदयं हेतुः स्यात् ।

शे० — मीयतेऽनेनेति मानमिति करणसाधनतामाश्रित्याह मानस्य लिङ्गस्येति ॥ आद्येऽद्वैतवादिनोऽसिद्धिरिति । भेदत्वहेतोः सत्त्वाभ्युपगमेऽद्वैतहानिरिति भावेनाद्वैतवादिन इत्युक्तम् दृष्टान्तश्चेति । मतद्वयेऽपीति शेषः । मिथ्याभूतभेदस्यैव दृष्टान्तीकृतत्वेन तत्र सद्भेदत्वस्य वादिप्रतिवादिभ्यामनभ्युपगमादिति भावः ॥ द्वयोरपीति । वादिप्रतिवादिनोरित्यर्थः । असिद्धिर्दृष्टान्तश्च साधनविकल इति पूर्वेण सम्बन्धः । असद्भेदत्वस्य सदसद्भेदत्वस्य च पक्षे वादिप्रतिवाद्यसम्मतत्वादुभयरीत्याऽसिद्धिः । साधनवैकल्यं त्वसद्भेदत्वपक्षे वादिमत एव तेन दृष्टान्ते तदनङ्गीकारात् । न तु प्रतिवादिमतेऽपि । तद्भेदस्यासत्त्वेनासद्भेदत्वस्य तन्मते सत्त्वात्सद्भेदत्वपक्षे तु मतद्वयेऽपि साधनवैकल्यम् । वादिप्रतिवादिभ्यां दृष्टान्तीकृते भेदे तदनभ्युपगमादिति योजना द्रष्टव्या ॥ द्वैतवादिन इति । असिद्धिसाधनवैकल्ये इति पूर्ववत्सम्बन्धः । न ब्रूमो वयं सन् असत् सदसत् अनिर्वचनीयं वा भेदत्वं हेतुरिति येनोक्तरीत्याऽसिद्ध्यादिकं स्यात् । किन्तु भेदत्वसामान्यं तच्च भेदे वादिप्रतिवादिसम्मतमिति कथमसिद्ध्यादिकं भवेत् । साधारणप्रयुक्तहेतोश्च विशेषविकल्पेन निराकरणे च सर्वसाधनभङ्गप्रसङ्गः । तथा च धूमाद्धूमध्वजसाधनेऽपि किमनेतद्देशकालसंलग्नो धूमो हेतुः किं वैतद्देशकालसंलग्न इति विकल्प्यासिद्धिः आद्ये, द्वितीये साधनशून्यं निदर्शनमिति शक्यते वक्तुम् । तत्र चाविवक्षितविशेषं धूममात्रं हेतुरित्येव परिहारः । स च समः प्रकृत इत्याशङ्क्य स्यादयं धूमानुमाने परिहारः । धूमद्वयेपि धूमत्वसामान्यस्य वादिप्रतिवादिसम्मतत्वात् । न च सदसदादौ भेदत्वसामान्यं वादिप्रतिवादिसम्मतमित्याशयवानाह न चेति ।

स० — द्वयोरपीति । वादिप्रतिवादिनोरसिद्धिः दृष्टान्तसाधनवैकल्येत्यर्थ ॥ चतुर्थ इति । द्वैतवादिनोऽसिद्धिसाधनवैकल्य इत्यर्थः ।

**प०** — करणे ल्युडिति भावेन च **लिङ्गस्येति** । अद्वैतवादिन इति हेतुगर्भम् ॥ **द्वितीयतृतीययोर्द्वयोरपीति** । द्वितीयकल्पे तृतीयकल्पे च वादिप्रतिवादिनोः द्वयोरपि मते दृष्टान्तः साधनविकल इत्यर्थः । तन्मते चन्द्रभेदस्यानिर्वचनीयत्वात्सिद्धान्तेऽसत्त्वादिति भाव । चतुर्थे द्वैतवादिन इत्यत्र द्वैतवादिन इति पदच्छेदः । तन्मते क्वाप्यनिर्वचनीयभेदानङ्गीकारेण दृष्टान्तः साध्यविकल इत्यर्थः । ननु धूमवत्त्वादित्यत्र नीलानीलादिविकल्पेनासिद्ध्याद्यभिधाने सति नीलानीलादिसाधारणधूमवत्त्वादिसामान्योपेतधूमवत्त्वमात्रं यथा हेतुस्तथाऽत्रास्त्वित्यत आह **न च सदसदिति** ।

**या०** — **सामान्यमस्तीति** । व्यक्तेरेवाभावादिति भावः ।

**श्री०** — **द्वयोरपि** वादिप्रतिवादिनोरुभयोरपि पक्षेऽसिद्धिरित्यर्थः । **अद्वैतवादिनो** भेदवादिनः पक्षेऽसिद्धिः साधनविकलश्च दृष्टान्त इत्यर्थः ॥

**सु०** — **जीवो ब्रह्मणो न भिद्यते आत्मत्वाद्ब्रह्मवदित्यादावनुमानान्तरेऽप्येवमेव विकल्प्य दूषणान्तरमभिधातव्यमित्याह** इति मानस्येति । **यद्वाऽद्वैतवादिप्रयुक्तेषु विरुद्धविषयेषु सर्वेष्वपि अनुमानेष्वेवं साध्यं हेतुं च विकल्प्य दोषो** वक्तव्य **इत्यतिदिशति** इतीति ।

**शे०** — **एवमेव विकल्प्येति** । साध्यं हेतुं चेति शेषः । ब्रह्मभेदाभावः सन् किंवाऽसन् यद्वा सदसन्, आहोस्विन् अनिर्वचनीयः । नाद्यः । अपसिद्धान्तापातात् । न द्वितीयः । जीवब्रह्मभेदाभावस्यासत्त्वे जीवब्रह्मभेदस्य सत्त्वापत्त्याऽपसिद्धान्तापरिहारात् । अत एव न तृतीयः । सत्त्वासत्त्वपक्षोक्तदोषात् । न चतुर्थः । तस्याप्रामाणिकत्वेन प्रकारत्वायोगादिति साध्यं विकल्प्य दूषणम् । आत्मत्वं किं सत्किंवाऽसद्यद्वा सदसदाहोस्विदनिर्वचनीयम् । आद्ये सद्द्वैतभङ्गेन वादिमतेऽसिद्धिर्दृष्टान्तस्य साधनवैकल्यं च । द्वितीयतृतीययोर्द्वयोरप्यसिद्धिर्दृष्टान्तस्य साधनवैकल्यं च । चतुर्थे द्वैतवादिनोऽसिद्धिसाधनवैकल्ये स्यातामिति हेतुं विकल्प्य दूषणमभिधातव्यमित्यर्थः ॥ **विरुद्धविषयेषु सर्वेष्वप्यनुमानेष्विति** । विमतं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्छुक्तिरजतादिवदित्यादिष्वित्यर्थः ।

**प०** — **विरुद्धविषयेष्विति** । सिद्धान्तविरुद्धप्रमेयविषयेष्वित्यर्थः । मानस्येति जात्येकवचनमित्युपेत्योक्तं **सर्वेष्विति** ॥ **दोषो वक्तव्य इतीति** । स च विवृतो न्यायामृते ॥

**सु०** — **न सिद्धं तदित्ययुक्तम् । पक्षीकृते भेदे वा प्रपञ्चे वाऽविद्यायां वा शुक्तिरजतादौ वाऽनिर्वचनीयत्वस्य प्रमाणेन साधयितुं शक्यत्वादित्यत आह** न चेति ।

**अनु०** — न च मानान्तरेणैतच्छक्यं साधयितुं क्वचित् ॥

**यदा भेदमिथ्यात्वस्य सत्त्वादिविकल्पेन दूषणाभिधानं तदान्तरशब्दो विशेषवचनः । यदा तु मिथ्याशब्दा(र्थे)र्थविक(ल्प्य दू)ल्पेन दूषणाभिधानं तदाऽन्यन्मानं मानान्तरम् ।** एतत् **अनिर्वाच्यत्वम् ।** क्वचित् **इत्युक्तस्थलेषु ।**

शे० — **दूषणाभिधानमिति** । पूर्वग्रन्थार्थतया विवक्षितमिति शेषः । उक्तानुमानस्य भेदमिथ्यात्वसाधकत्वेन तदपेक्षया मानान्तरत्वसंभवेऽपि तस्य पूर्वानुमानसाध्यं यन्मिथ्यात्वं तद्धर्मभूतानिर्वचनीयत्वसाधकत्वाभावेन तदपेक्षयाऽन्यन्मानं मानान्तरत्वमित्यर्थस्यासंभवादाह **तदाऽन्तरशब्दो विशेषवचन इति ।। उक्तस्थलेष्विति** । भेदप्रपञ्चादिष्वित्यर्थः ।

स० — **विशेषवचन इति** । पूर्वानुमानस्य मिथ्यात्वनिष्ठानिर्वचनीयत्वे साधकत्वेनाव्यापारितत्वेनान्यत्वार्थकत्वासंभवादेतदुक्तम् **उक्तस्थलेषु** प्रपञ्चाद्युक्तस्थलेषु ।

प० — **तदा अन्तरशब्दो विशेषवचन इति** । साध्यधर्मोऽयं सन्नस(न्वानचो(वो)भयमित्या)-न्वेत्यादिना कृतमिथ्यात्वगतसत्वासत्वादिप्रकारविकल्पदूषणाभिधानोद्धारार्थं मानस्येत्यतः पूर्वमनुक्तत्वेनान्तरशब्दस्य वक्ष्यमाणार्थान्तरत्वायोगात् व्यतिरेकिहेत्वादिरूपमानविशेषपर इत्यर्थः ।। **यदा तु मिथ्याशब्दार्थेत्यादि** । इति मानस्य दूषणमिति वाक्ये कर्मव्युत्पत्त्या मानपदेन विवक्षितमिथ्याशब्दार्थविकल्पदूषणाभिधानमित्यर्थः ।। एतदित्यनुवादः ।। **उक्तेति** । पक्षीकृतभेद इत्यादिनोक्तस्थलेष्वित्यर्थः ।

या० — सत्त्वादिविकल्पानां दूषणाभिधानमित्यस्यान्तरं पूर्वग्रन्थार्थतया विवक्षितमिति शेषः ।। **विशेषवचन इति** । उक्तानुमानस्य भेदमिथ्यात्वसाधकत्वेऽपि मिथ्यात्वगतानिर्वचनीयत्वासाधकत्वादन्यस्य च तत्साधकप्रमाणस्य पूर्वमनुक्तत्वेनान्यन्मानं मानान्तरमित्यर्थस्यात्रासम्भवादिति भावः ।

सु० — **तत्कथमिति चेदित्थम् । कस्यचित्पदार्थस्यानिर्वाच्यत्वे प्रत्यक्षं वा प्रमाणमुच्यते अनुमानं वाऽऽगमो वाऽर्थापत्तिर्वोपमानं वाऽभावो वेति मनसि विकल्पान्निधाय पराङ्गीकारप्राचुर्यानुरोधेनानुमानं तावदपाकरोति** अनुमानेन चेदिति ।

अनु० अनुमानेन चेत्सैव ह्यनवस्था भविष्यति ।।

**विमतमनिर्वाच्यं बाध्यत्वादित्याद्यनुमानेन शुक्तिरजतादेरनिर्वाच्यत्वं साध्यते चेदनवस्था भविष्यति । कथम् ।** सैव हि **अप्रसिद्धविशेषणतापरिहारार्थानुमानपरंपराद्वारिका प्रसिद्धैवेत्यर्थः । यदत्र वक्तव्यं तत्प्रथमसूत्र एवास्माभिरभिहितम् ।**

शे० — **बाध्यत्वादित्याद्यनुमानेनेति** । आदिपदेन भ्रमविषयत्वादित्यादिव्यतिरेक्यन्तरपरिग्रहः । ननु सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वाद्रूपरसवदित्यनिर्धारितधर्मि-

निष्ठतया सामान्यतः सिद्धस्य सदसद्वैलक्षण्यस्य केवलव्यतिरेकिणा रजतधर्मिनिष्ठतयोपसंहारान्नाप्रसिद्धविशेषणत्वमित्यत आह **यदत्र वक्तव्यमिति** ॥ **प्रथमसूत्र एवेति** । अनिर्वचनीयख्यातिनिरासावसर इति शेषः ।

**प०— तत्कथमिति** । मानान्तरेणानिर्वाच्यत्वसाधनमशक्यमित्येतत्कथमित्यर्थः । सैव हीत्यनुवादः । प्रसिद्धैवेत्यन्तं व्याख्या । ननु सत्वासत्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसवदित्यादितोऽप्रसिद्धिपरिहारसंभवात । नेदं दूषणमित्यत आह **यदत्रेति** । जिज्ञासाधिकरणे 'वैलक्षण्यं सदसतोऽप्येतेन निषिध्यते' । इत्यादिव्याख्यानावसरे प्रमेयत्वादौ व्यभिचारादिदूषणं तस्याप्यनुमानस्योक्तमित्यर्थः । यद्वाऽनिर्वचनीयमित्यस्य सदसद्विलक्षणमित्यर्थः । तत्र च सिद्धसाधनत्वादिदूषणं **'वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिन' इत्यदिनोक्तमित्यर्थः** ।

**या०—** नन्वप्रसिद्धिपरिहारार्थं सत्त्वासत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी इत्येव साध्यते न पुनरनिर्वचनीयमित्यतो नानवस्थेत्यत आह **यदत्र वक्तव्यमिति** । तत्रापि प्रमेयत्वादौ व्यभिचारादिकं दूषणं जिज्ञासाधिकरण उक्तमित्यर्थः ॥

**च०— प्रथमसूत्रे** जिज्ञासान्ये ।

**सु०— आगममपाकरोति** न चेति ।

**अनु०—** न चागमस्तदर्थोऽस्ति

**तदर्थोऽनिर्वचनीयार्थः । अनुपलम्भादिति भावः । ननु कथं नास्ति । नासदासीन्नोसदासीत्तदानीमित्यागमस्य विद्यमानत्वादित्यत आह** नासदिति ।

नासदासीन्न तद्वदेत् ॥

**इत्यागम** इति **शेषः** । तत् **अनिर्वाच्यं वस्तु** । **अयं भावः** । **पदसमन्वयबलेन प्रतीतः पदार्थसंसर्गो हि वाक्यार्थो नापरः । अन्यथाऽर्थापत्त्यादेरप्यागमान्तर्भावप्रसङ्गात् । अत्र च प्रलये सदाद्यभावमात्रं वाक्यात्प्रतीयते न पुनरनिर्वाच्यं वस्तु । ततो नायमागमोऽनिर्वाच्यार्थ इति ॥ मा भूदयमागमोऽनिर्वचनीयार्थः । तथाऽप्येतद्वचनबलेनानिर्वचनीयार्थः सेत्स्यति । तथा हि । अत्र तावत्प्रलये सदसदभावः प्रतिपाद्यते । तत्सामर्थ्यात्तदा विद्यमानस्यार्थस्य सत्त्वासत्त्वप्रतिषेधावगतौ परिशेषादनिर्वाच्यत्वावगतेः । न च तदा वस्तुमात्राभावः । पुनः सृष्ट्यनुपपत्तेः । अभावस्याङ्गीकार्यत्वाच्च ।**

**शे०— पदसमन्वयबलेनेति** । पदवृत्तिबलेनेत्यर्थः ॥ **अपर इति** । सामर्थ्यलब्ध इत्यर्थः । 'यश्चार्थादर्थो न स चोदनार्थ' इत्युक्तेरिति भावः ॥ **अन्यथेति** । सामर्थ्यलब्धस्याप्यागमार्थत्व इत्यर्थः ।

श्रुतार्थापत्तिस्थले बहिर्भावस्य जीवंश्चैत्रो गृहे नास्तीति वाक्यस्थपदार्थसंसर्गरूपत्वाभावेऽपि सम्भवादिस्थले च पञ्चाशत्त्वादेः शतमस्यास्तीत्यादिवाक्यस्थपदार्थसंसर्गरूपत्वाभावेऽपि तत्तद्वाक्यसामर्थ्यलब्धत्वेन तत्तदागमार्थत्वस्यैव संभवादिति भावः ॥ **न पुनरिति** । वस्तु सदसद्विलक्षणमित्यप्रतीतेरिति भावः ॥ **आगमोऽनिर्वाच्यार्थ इति** । आगमतया नानिर्वाच्यप्रतिपादक इत्यर्थः । **सत्त्वासत्त्वप्रतिषेधावगतौ** प्रसक्तानां सत्त्वासत्त्वादिप्रकाराणां नासदासीदिति सदसदभावाभिधानेन प्रतिषेधावगतावित्यर्थः । सदसदभावाभिधानेन कथं सत्त्वासत्त्वाद्यभावसिद्धिरित्यत उक्तं **तत्सामर्थ्यादिति** ॥ **परिशेषादनिर्वाच्यत्वावगतेरिति** । अन्यत्राप्रसङ्गात्परिशिष्यमाणे वस्तुनोऽनिर्वाच्यत्वे एव बुद्धिरित्यर्थः ।

प० — तदित्यनुवादः । अनिर्वाच्यं वस्त्विति व्याख्या । ननु सदसन्निषेधान्यथानुपपत्त्या परिशेषाद्वा सदसद्विलक्षणरूपानिर्वाच्यं वस्तु श्रुत्या लभ्यत एवेत्यत आह **अयं भाव इति** ॥ **पदसमन्वयबलेनेति** । पदगतशक्त्यादिवृत्तितात्पर्यबलेनेत्यर्थः ॥ **नापर इति** । अनुपपत्तिलभ्य इत्यर्थः ।

**या० — पदसमन्वयबलेनेति** । पदवृत्तिबलेनेत्यर्थः । **अपरो** वाक्यार्थबललभ्यः ।

**सु० — परिशेषश्चार्थापत्तिरनुमानं वेत्याशङ्कते** परिशेषादिति ।

अनु० — परिशेषादनिर्वाच्यं यदि सिध्येत्

**परिशेषादनिर्वाच्यं वस्तु सिध्येदिति यद्युच्यत इति संबन्धः । अत्र ब्रूमः । भवेदिदं यद्यत्र सदसच्छब्दौ प्रतीतार्थौ स्याताम् । न चैवम् । प्रत्यक्षाप्रत्यक्षपञ्चमहाभूतपरत्वात् । 'न सत्तन्नासदुच्यत' इत्यादौ तत्र प्रयोगात् । कुत एतदिति चेत्प्रतीतार्थत्वेऽनिष्टप्रसङ्गादित्याशयवानाह** परात्मन इति ।

परात्मनः ॥

अनिर्वाच्यत्वमेव स्यात्

**तर्हि सत्त्वेनाङ्गीकृतस्य परमात्मन एवानिर्वाच्यत्वं स्यादित्यर्थः । कुत इत्यत आह** परिशिष्टो हीति ।

परिशिष्टो ह्यसौ तदा ॥

**सदसत्प्रतिषेधसामर्थ्यात्सर्वकार्य(प्र)लयेऽवशिष्टस्य खल्वनिर्वाच्यत्वमेवेष्टव्यम् । असौ परमात्मा यस्मात्तदा प्रलयवेलायामलीनतयाऽवशिष्टस्तस्मात्तस्यानिर्वाच्यत्वं भवेदिति ।**

**न च वाच्यं यद्यपि प्रलये परमात्मा विद्यत एव । तथाऽपि तम आसीदित्यादिसन्निहितवाक्यात्तमोऽविद्याख्यं बुद्धिसन्निहितमिति तदुपरक्तायां बुद्धौ परिशेषप्रमाणमपि तमस एव**

**अनिर्वाच्यतामाधास्यतीति । आनीदवातमिति वाक्येन ब्रह्मणोऽपि बुद्धिसन्निधानात् । सत्यं ज्ञानमिति तस्य सत्यत्वावगमादपवाद इति चेन्न । आसीदिति तमसोऽपि सत्त्वावगमादपवादः स्यात् । सांव्यावहारिकं सत्त्वं तदिति चेत् । ब्रह्मणोऽपि तथा किन्न स्यात् । किञ्चास्मिन्व्याख्याने तदानीमिति व्यर्थं सदा तमसोऽनिर्वाच्यत्वात् । अन्यपरं वाक्यमिति चेत् । तथाऽप्यसन्नासीदिति व्यर्थमेव । प्राप्त्यभावात् ।**

**शे०— प्रतीतार्थाविति** । विद्यमानाविद्यमानवाचकावित्यर्थः । ननु सदसच्छब्दयोः पारमार्थिकापारमार्थिकवाचकत्वात्तदर्थपरित्यागेन पञ्चमहाभूतपरत्वाश्रयणे तयोरमुख्यार्थत्वप्रसङ्गो दोष इत्यतः सदसच्छब्दयोर्भूतेषु योगरूढिरङ्गावान्न तेषाममुख्यार्थतेत्यभिप्रेत्य तत्कथमित्यतो योगव्युत्पादनाय सदसच्छब्दयौगिकार्थवत्तां दर्शयति **प्रत्यक्षाप्रत्यक्षेति** । रूढिव्युत्पादनायाखण्डशक्तौ प्रमाणं प्रयोगं दर्शयति **न सत्तन्नासदुच्यत इत्यादाविति** । 'मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते । मूर्तामूर्तेतरद् ब्रह्म न सत्तन्नासदुच्यते । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यत' इति श्रुतिस्मृत्योर्भूतेषु सदसच्छब्दप्रयोगादित्यर्थः । उपलक्षणं चैतत् । 'मूर्तं सदिति सम्प्रोक्तमि'ति 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत् सद्वायुरन्तरिक्षं चासदि'ति च सदसच्छब्दयोर्भूतपरतया व्याख्यानान्नासदासीदिति श्रौतसदसच्छब्दयोर्भूतवाचित्वनिश्चितप्रामाण्यव्याख्यानानुसारेणैव व्याख्येयस्य नेयत्वात् । 'उग्रं वचो अपावधीमि'त्यादिमन्त्रस्य 'अशनायापिपासे ह वा उग्रं वच' इत्यादिब्राह्मणानुसारेण सत्यमित्यादेश्च 'सदिति प्राणस्तीत्यन्नं यमित्यसावादित्य' इत्यादिव्याख्यानानुसारेणार्थविशेषनिष्ठताया दृष्टत्वादित्यपि द्रष्टव्यम् । अस्त्वेवं सदसच्छब्दयोर्भूतेष्वपि मुख्यत्वं तथाऽपि न चैवमिति पूर्ववाक्ये उक्तः सदसच्छब्दयोः परमार्थापरमार्थरूपबहुप्रयोगसिद्धसदसत्परत्वाभावः किन्निबन्धन इति पृच्छति **कुत एतदिति चेदिति** ॥ **सत्त्वेनाङ्गीकृतस्येति** । सत्त्वेनाङ्गीकृतस्यैव परमात्मन इति सम्बन्धः ॥ **तस्मादिति** । उभयोरपि परिशिष्टत्वेनावगततायामन्यतरस्मिन्नेव परिशेषेणानिर्वचनीयत्वपक्षपाते नियामकाभावादिति भावः ।

अस्ति तमस्येव परिशेषप्रमाणेनानिर्वचनीयतापक्षपाते नियामकं सन्निहितवाक्याद्बुद्धिसन्निधानमिति कथं तदभाव इत्याशङ्क्य निषेधति **न च वाच्यमिति** । अनेन यत्तम आसीत्तदानीं सन्नासीत्तदानीमसन्नासीदिति वाक्ययोजना सूचिता भवति ॥ **सन्निधानादिति** । तथा च पुनरविशेष एवेति भावः । अङ्गीकृत्य चैतदुक्तं वस्तुतस्तु तम आसीदिति वाक्यापेक्षया'ऽऽनीदवातमि'त्यस्य सन्निहितत्वात् अतिसन्निहितवाक्यादत्यन्तं बुद्धिसन्निहितत्वं ब्रह्मण एवेति तन्मात्रोपरक्तायां बुद्धौ परिशेषप्रमाणेन ब्रह्मण एवानिर्वाच्यत्वावधारणस्य न्याय्यत्वादित्यवधेयम् । सन्निहितत्वाविशेषेऽपि बाधितविषयत्वान्न परिशेषप्रमाणस्य तत्र प्रवृत्तिरित्याशङ्कते **सत्यमिति** । बाधितविषयत्वमप्यविशिष्टमित्याशयेनाह **आसीदितीति** ।

भिन्नविषयत्वान्न बाधितविषयतेति नाविशेष इत्याशङ्कते **सांव्यवहारिकेति** ॥ **तथेति** । तथा च ब्रह्मण्यपि बाधितविषयतेत्यविशेष एवेति भावः ॥ **अस्मिन्व्याख्यान इति** । तमस्तदानीं सन्नासीत्तदानीमसन्नासीदिति व्याख्यान इत्यर्थः । वैयर्थ्यमेवोपपादयति **सदेति** । ननु तम आसीदिति वाक्यात्तमोऽविद्याख्यं बुद्धिसन्निहितमिति नासदासीदिति तस्यैव तमसस्तदानीं सन्नासीदित्यादिरूपेण सत्त्वादिनिषेधात्परिशेषप्रमाणेनानिर्वचनीयत्वमिति न ब्रूमो, येन तमसः सदाऽनिर्वचनीयत्वात्तदानीमित्यस्य वैयर्थ्यं स्यात्किन्तु तदानीं सन्नासीदसन्नासीदिति सदसद्रूपधर्मिनिषेध एव क्रियते तम आसीदिति च तमसः प्रलयेऽवस्थानमुच्यते न चैतदुभयं संभवतीत्यतस्तदुभयान्यथाऽनुपपत्त्या तमसोऽनिर्वचनीयत्वसिद्धिरिति कथं तदानीमित्यस्य वैयर्थ्यमित्याशङ्कते **अन्यपरमिति** । प्रलये सदसदादिधर्मिनिषेधपरमित्यर्थः । यद्यप्यस्मिन्पक्षे तमस इव ब्रह्मणोऽपि प्रलयावस्थितत्वादुक्तान्यथाऽनुपपत्त्यैवानिर्वचनीयत्वं स्यादिति पूर्वं दोषाभिधानान्न पुनरियं शङ्कोन्मिषति तथाऽपि सत्येव तस्मिन्दोषे दोषान्तरं वक्तुं तदानीमिति व्यर्थमित्यव्यवहितपूर्वदोषपरिहारकतया पुनरुत्थानं कृतमिति द्रष्टव्यम् । उक्तयोजनायां घटादीनां सत्त्वस्य शशविषाणादीनामसत्त्वस्य च दृष्टत्वेन तमसि प्रसक्ततया तदुभयनिषेधसंभवेनासन्नासीदित्यस्य सार्थक्यसंभवेऽपि वाक्यस्य प्रलये सदसदादिधर्मिनिषेधपरत्वेन असतः सत्त्वस्याप्राप्तत्वेनानिषेध्यत्वादसन्नासीदित्यस्य वैयर्थ्यं स्यादिति समाधत्ते **तथाऽपीति** । न च 'तद्धैक आहुरसदेवेदमग्र आसीदि'ति श्रुत्याऽसतः सत्त्वप्राप्तेर्नाप्रसक्तप्रतिषेधतेति वाच्यम् । श्रुत्या प्राप्तस्य श्रुत्या निषेधायोगात् । अन्यथा न हिंस्यादित्यहिंसावाक्यस्याग्नीषोमीयं पशुमालभेतेत्यग्नीषोमीयहिंसानिषेधकत्वं, नातिरात्रे षोडशिनं गृह्णातीत्यग्रहणवाक्यस्यातिरात्रे षोडशिनं गृह्णातीति श्रुत्युक्तग्रहणनिषेधकत्वं सद्वेत्यादिवाक्यस्य सत्यं ज्ञानमिति श्रुत्युक्तब्रह्मसत्यत्वबाधकत्वं अभेदवाक्यस्याभेदनिषेधकत्वं, च स्यादित्यतिप्रसङ्गात् ।

**स०—न सत्तन्नासदुच्यत इत्यादाविति** । 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यत' इत्यर्थः । ननु तम आसीदित्यादि सन्निहितवाक्यात्तमोऽविद्याख्यं सन्निहितमिति नासदासीदिति तस्यैव सत्वासत्वनिषेधे तस्यैवानिर्वाच्यत्वं परिशेषप्रमाणेनेति न ब्रूमः । येन तमसः सदाऽनिर्वाच्यत्वात् तदानीमिति व्यर्थं स्यादित्युच्येत ॥ न चैवम् । किं नाम नासदासीदिति प्रलये सर्वनिषेधात् तम आसीदिति च तमसः सत्त्वावगमात् तदुभयान्यथानुपपत्त्या तमसोऽनिर्वाच्यतासिद्धेरभिधास्यमानत्वात् तत्कथं तदानीमित्यस्य वैयर्थ्यमुच्यते इत्यभिप्रायेण शङ्कते **अन्यपरमितीति** । तम आसीदिति वाक्यसन्निधायितं तम उद्दिश्य तस्य नासदासीदित्यादिना घटादीनां सत्वस्य शशविषाणादीनामसत्वस्य च दृष्टत्वेन प्राप्तत्वात् सत्वासत्वनिषेधोपपत्तावपि नासदासीदित्यनेन पृथगेव सदसन्निषेधाभिधानेऽसतोऽप्राप्तत्वादसदन्नासीदिति व्यर्थमित्याह **तथापीति** ।

**प०** — मूर्तामूर्तव्यतीतत्वान्न सन्नैवासदुच्यते । 'मूर्तं सदवगम्यत्वादज्ञेयत्वादसत्परम् । पुंसाम-थ्यादगम्यत्वात्सर्ववेदप्रसिद्धितः । विलक्षणं सदसतोर्भगवान्विष्णुरव्यय' इति तात्पर्योक्तस्मृतिं हृदि कृत्वा 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यत' इति त्रयोदशाध्यायस्थगीतादिवाक्ये प्रयोगं दर्शयति **इत्यादौ तत्र प्रयोगादिति ॥ तत्रेति ।** प्रत्यक्षाप्रत्यक्षपंचमहाभूतरूपवस्तुनीत्यर्थः ॥ **अन्यपरं वाक्यमिति ।** तदानीं प्रलयकाले यत्तम आसीत् तमो वर्तते । तन्नासदासीन्नोसदासीदित्यनुवादपरम् अतो न सत्वोक्ति-विरोधो नापि तदानीमिति व्यर्थमिति शंकाभिप्रायः ।

**या०** — ननु न तदानीमित्यस्यासदादिप्रतिषेधान्वयः । किन्तु तदानीं प्रलयकाले यत्तमोऽस्य मूलकारणमासीदवस्थितं तत्कदाऽपि नासदासीन्नो सदासीदिति व्याख्यानादधिकरणमात्रान्वयः । अतो नोक्तदोष इत्याशयेन शङ्कते **अन्यपरं वाक्यमितीति** । उक्तरीत्या सर्वदाऽपि सत्त्वासत्त्वप्रतिषेधपर-मित्यर्थः । तदानीमित्यस्य रजःप्रभृतिनिषेधान्वयः । न सदसन्निषेधेऽतो नोक्तदोष इत्यप्यत्राशयमाहुः । **प्राप्त्यभावादिति** । तमसि अहमज्ञोऽस्मीत्यादिप्रतीत्या यथा सत्त्वस्य प्राप्तिरस्ति तथाऽसत्त्वस्य तत्र कदाऽप्यप्रतीत्या न प्राप्तिरिति भावः । अत्र कश्चित् । नो सदासीदित्यनेन सद्भिन्नत्वे उक्तेऽसत्त्वस्य प्राप्तिरस्तीति । तत्तुच्छम् । श्रुत्या प्राप्तस्य श्रुत्या निषेधायोगात् । अन्यथा षोडशिग्रहणादिवाक्ये विकल्पाङ्गीकारो भ्रमः स्यादिति ।

---

**सु०**—**'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति । त इमे सत्याः कामा अनृता पिधाना' इत्याद्यागमस्तह्यज्ञानस्या-निर्वाच्यत्वे प्रमाणमित्यत** आह न चेति ।

**अनु०** — न चान्य आगमस्तत्र

**तत्रानिर्वाच्येऽर्थे मानमिति शेषः ।** **अन्यानृतशब्दाभ्यामनिर्वचनीयाज्ञानाभिधानात्कथं नेत्यतोऽनिर्वाच्यत्वं निर्वक्ति** सदसदिति ।

सदसत्प्रतियोगिनि ॥

**सदसती प्रतियोगिनी यस्य तत्तथोक्तम् । यन्न सन्नाप्यसत्तद्ध्यनिर्वाच्यम् । न चात्र तत्प्रतिपादकः शब्दोऽस्ति । अनृतादिशब्दस्य त्वन्यथा व्याख्यानादिति ।**

**शे०** — न तं विदाथेति मन्त्रस्यायमर्थः । हे नरा यूयं तमीश्वरं न विदाथ न जानीथ तस्मादीश्वरप्रतिपत्त्युपायं कुरुत । ईश्वरस्यासत्त्वादेवाप्रतिपत्तिर्नास्मदपराधादित्याशङ्क्याह **य इति** । इमाः प्रजा जनान जनितवानुत्पादितवान् । कार्यलिङ्गेनेश्वरसिद्धेर्न तदपलाप इति भावः । तर्हि परमा-

णुवद्योग्यत्वात्तद्ग्रहणमित्यत उक्तम् **अन्तरमिति** । युष्माकं ब्रह्मणश्चान्तरं व्यवधानं बभूव । ननु च तत्रात्यन्तमसदीश्वरतत्वावरकत्वात् । नापि सद्बोधमात्रनिवर्त्यत्वात्तत्कथं तेनाच्छादनमित्यत उक्तम् **अन्यदिति** । सदसद्भ्यामिति शेषः । सदसद्विलक्षणत्वादीश्वरतत्वावरकत्वं बोधनिवर्त्यत्वं चोपपन्नमिति भावः । किं तदन्तरं किञ्च तत्कृत्यमित्यत्रात्र **नीहारेणेति** आच्छादकत्वसाम्यान्नीहारशब्दोऽज्ञाने प्रयुक्तस्तेन प्रावृतत्वमाच्छादितपरिपूर्णस्वरूपत्वमतो विक्षेपविषया इत्याह **जल्प्या इति** । मनुष्यो ब्राह्मण इत्याद्यध्यासविषय इत्यर्थः । असून्प्राणानिन्द्रियाणि तर्पयन्तीत्यसुतृपः । उक्थशब्देन कर्माङ्गाभिधानद्वारा कर्मोपलक्षितम् । तस्मिन् शास्यन्ते विधिवाक्यैर्ये पुमांसस्ते तथोक्ताः । **चरन्ति** संसारचक्रे भ्रमन्तीत्यर्थ इति । अनृतशब्दवाच्यमिथ्याभूताज्ञानेनाच्छादितत्वमुत्तरवाक्यार्थः ॥ **अन्यथाव्याख्यानादीति** । ऋतं पिबन्तावित्यादौ सत्कर्मणि ऋतशब्दप्रयोगदर्शनात् 'ऋतं सत्यं तथा धर्म' इति स्मृतेश्चानृतशब्दो दुष्कर्मपरः । अनृतं परिणामत इति स्मृत्यनुसारात्परिणामिप्रधानपरो वेत्यनृतशब्दस्यान्यथाव्याख्यानात्सत्यस्यापि पापादेः सेतुदर्शनादिना निवृत्तेर्दर्शनेन सत्यस्याप्यन्तरस्य बोधनिवर्त्यत्वोपपत्तेर्न तस्य सदसद्वैलक्षण्यम् । अन्यत्वोक्तिस्तु बोधनिवर्त्यतया प्रसिद्धव्यवधायकमित्यादिवैलक्षण्यादित्येवंरूपतयाऽन्यशब्दस्य व्याख्येयत्वादित्यर्थः । अत एवानृतादिशब्दस्य त्वन्यथाव्याख्यानादित्युक्तिः सङ्गच्छते । उभयोरप्यन्यथाव्याख्यातत्वाभिप्राये तु अन्यानृतशब्दाभ्यामनिर्वचनीयाज्ञानाभिधानादिति पूर्वग्रन्थानुरोधादन्यादिशब्दस्य तु अन्यथाव्याख्यानादित्येवावक्ष्यत् । असदुक्ताभिप्राये तु तस्यान्यथाऽव्याख्यातत्व परिहारित्यागेनानृतादित्वेन निर्देश इति बोध्यम् ।

**प०** — 'न तं विदाथे'त्यष्टमाष्टकतृतीयाध्यायगतविश्वकर्मसूक्तस्थमन्त्रस्यायमर्थः । युष्माकमिति श्रवणात् हेजना इति लभ्यते । हेजनाः । यः विश्वकर्मा इमानि भुवनानि जजान जनयामास तं विश्वकर्माणं न विदाथ न जानीथ । कुतः । यस्मादन्यत सदसद्भ्यामन्यत् सदसद्विलक्षणम् । यत् युष्माकं अन्तरं व्यवधानं बभूव । तद्विवृणोति । नीहारेण हिमतुल्येनाज्ञानेन प्रावृताः । जल्प्याः मनुष्योऽहं देवोऽहमित्याद्यनृतजल्पनस्वभावाः । असुतृपः प्राणतर्पणपराः । उक्थशासः उक्थनामकस्तोत्रशंसकाः । यज्ञानुष्ठातारः चरन्तीति । 'सत्याः कामा' इति छान्दोग्याष्टमाध्यायस्थवाक्यस्यार्थस्तु । 'अज्ञानमनृतं प्रोक्तं ऋगताविति धातुतः ।' इति छान्दोग्यभाष्ये व्यक्तः ॥ **अन्यथाव्याख्यानादिति** । अज्ञानादिमात्रार्थतयेति भावः ।

**या०** — न तं विदाथेति मन्त्रस्यायमर्थः । हे नरा यो विश्वकर्मा इमानि भूतानि जजानोत्पादितवांस्तं विश्वकर्माणं न विदाथ न जानीथ । तत्र हेतुर्युष्माकमन्यत्सदसद्विलक्षणमन्तरं व्यवधानं बभूव

तदेवाह । **नीहारेण** नीहारसदृशेनाज्ञानेन प्रावृताः । किञ्च जल्प्या अहं मनुष्योऽहं देव इत्याद्यनृत-जल्पनशीलाः । असुतृपोऽसून्प्राणांस्तर्पयन्ति देहपोषणमात्रपराः । ऐहिकभोगपरा इति यावत् । उक्थ-शास उक्थशब्देन स्तोत्रशस्त्रादिकं लक्ष्यते । नानाविधयज्ञेषूक्थं शंसन्ति । आमुष्मिकभोगपरा इति याव-दिति । **अन्यथा व्याख्यानादिति** । ऋतशब्दस्य ऋतं पिबन्तावित्यादौ सत्कर्मणि प्रयोगादनृतशब्दस्य दुष्कर्मपरत्वेन 'ऋ गताविति धातोस्तु पूर्वावगतवत्सदा । स्थितेर्ब्रह्मर्तमित्युक्तमनृतं परिणामतः । प्रकृति-प्राकृतं प्रोक्त'मित्यागमात्प्रकृत्यादिपरत्वेन व्याख्यानात् । अन्यशब्दस्यापि प्रसिद्धशरीराद्यपेक्षयाऽन्य-द्विलक्षणम् । 'अजे द्वे प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते । स्वगुणाच्छादिका त्वेका परमाच्छादिका-ऽपरे'त्याद्यागमसिद्धं दुष्टप्रकृत्यादिरूपमिति व्याख्यानादित्यर्थः ।

**च० — न तं विदाथेति** । हे नरा इत्युपस्कार्य युष्माकमिति श्रवणात् । यः विश्वकर्मा इमानि भुवनानि जजान जनयाम स तं विश्वकर्माणं न विदाथ न जानीथ । कुतः । यस्मात् अन्यत् । सदसद्विलक्षणमन्तरं व्यवधानं बभूव । तत्प्रपञ्चयति । **नीहारेण** नीहारसदृशज्ञानेन प्रावृताः जल्प्यः मनुष्योऽहं देवोऽहमित्यादिजल्पनशीला असुतृप प्राणतर्पणपराः उक्थशासः नानायज्ञेषु स्तोत्रशस्त्रशंसन-कर्तार इति तदर्थो विवृतः ॥ **अन्यथाव्याख्यानादिति** । अज्ञानमात्रार्थतयेति भावः ।

सु० — **प्रत्यक्षं प्रतिक्षिपति** न चेति ।

---

अनु० — न च प्रत्यक्षमत्रास्ति

**न हीदमनिर्वाच्यमिति कश्चिल्लौकिकः परीक्षको वा चक्षुरादिनेक्षते । बाधोत्तरकालं मिथ्यैव रजतं प्रत्यभादित्यनुवादात्कथं नेक्षत इति चेन्न । मिथ्याशब्दस्यामदर्थत्वात् ।**

शे० — ननु नेदं रजतमिति चक्षुरादिव्यापारानन्तरं जायमानो बाधकप्रत्ययो लिङ्गाद्य-जन्यत्वात्प्रत्यक्षरूप इति तावदविप्रतिपन्नं सर्वेषाम् । न चायं भ्रम इति शक्यते वक्तुम् । विपरीत-प्रमाणानुपलम्भात् । स चायं बाधकप्रत्ययो रजतमिथ्यात्वविषयक इत्यवश्यं वाच्यम् । उक्तरूप-बाधकप्रत्ययसमनन्तरं मिथ्यैव रजतं प्रत्यभात् इत्याप्तवाक्यस्यानुवाददर्शनात्तस्य च रजतमिथ्यात्व-विषयकतया बाधकप्रत्ययस्य रजतमिथ्यात्वविषयकत्व एव सम्भवादन्यथाऽप्रतीतानुवादप्रसक्त्याऽऽप्तत्व-भङ्गापातात् । न चैतावता बाधकप्रत्ययस्य रजतमिथ्यात्वविषयकत्वसिद्धावपि रजतानिर्वचनीयत्व-विषयकत्वासिद्धिः । मिथ्यैव रजतं प्रत्यभादित्यनुवादस्य रजतानिर्वचनीयत्वविषयकत्वाभावादिति वाच्यम् । मिथ्याशब्दस्यानिर्वचनीयवाचकतयाऽनुवादस्यानिर्वचनीयविषयकत्वसिद्ध्या तदनुरोधेन बाधकप्रत्ययस्य तद्विषयत्वसंभवात् । अत एवाहुः 'यावदुक्तं भवत्यनिर्वचनीयमिति तावदुक्तं भवति

मिथ्ये'ति । तदेवं नेदं रजतमिति बाधकप्रत्ययस्यैव रजतानिर्वचनीयताविषयकस्य तदनिर्वचनीयत्वे प्रमाणत्वात्कथं प्रत्यक्षाभाव इति शङ्कते **बाधोत्तरकालमिति** । व्याकरणाभिधानादिप्रमाणाभावाद्वृद्धादिसमयमात्रस्य चातिप्रसङ्गेनानिश्चायकत्वेन मिथ्याशब्दस्यानिर्वचनीयवाचकत्वाभावेनासन्मात्रवाचित्वात्तदनुवादानुरोधेन बाधकप्रत्ययस्यानिर्वचनीयविषयकत्वासिद्धेर्न तेन शुक्तिरजतस्यानिर्वचनीयत्वसिद्धिरित्याशयेन समाधत्ते **मिथ्याशब्दस्यासदर्थत्वादिति** । मिथ्याशब्दस्यासदर्थत्वव्युत्पादनं च टीकाकारैरेव 'मिथ्याशब्दस्स्वभाववाची'त्येतद्वाक्यव्याख्यानावसरे कृतमवधेयम् ।

**या०** — **कथं नेक्षत इति** । (मिथ्यैव रजतं प्रत्यभात्) व्यवहारात् तादृशं (अनिर्वचनीयार्थविषयकं) प्रात्यक्षिकं ज्ञानमस्तीति कल्प्यते इत्यर्थः । यावदुक्तं भवत्यनिर्वचनीयमिति तावन्मिथ्येत्यनेनोच्यत इति भावः ॥

**सु०** — **अर्थापत्तिमपाकरोति** न चेति ।

**अनु०** — न चार्थापत्तिरिष्यते ॥

**अनुमानात्पृथक् प्रामाणिकैरिति शेषः । अनुमानं चाप्रसिद्धविशेषणतया निरस्तमिति भावः ।**

---

**किञ्च नास्त्यसावनुपपद्यमानोऽर्थो येन कस्यचिदर्थस्यानिर्वाच्यतापत्तिः स्यात् ।**

**शे०** — नन्वर्थापत्तेः प्रमाणतायाः सर्वसंमतत्वात्कथमर्थापत्तिर्नेष्यत इत्युच्यते । न चानुमानतया तत्प्रामाण्यसंमतावपि ततः पार्थक्येन तदसंमतेस्तदभिप्रायेणेयमुक्तिरिति वाच्यम् । पृथक् प्रामाण्यस्यापि प्राभाकरादिभिरङ्गीकृतत्वेन तन्निषेधायोगादित्यतोऽपेक्षितशेषपूरणेन वाक्यं योजयति **अनुमानात्पृथक् प्रामाणिकैरिति शेष इति** । अस्तु तर्ह्यनुमानतयैव प्रमाणमित्यत आह **अनुमानं चेति** । ननु च बाधाभावात्सत इत्यादिवाक्यजातमनर्थकम् । न चार्थापत्तिनिरासार्थं तदिति वाच्यम् । न चार्थापत्तिरिष्यत इत्यनेनैव तन्निरासस्य सिद्धत्वादित्यतोऽनुमानतया प्रामाण्यमङ्गीकृत्य पूर्वमर्थापत्तिनिरासः कृत उत्तरत्र पृथक् प्रामाण्यमङ्गीकृत्य तन्निरासः क्रियत इत्यतो न वैयर्थ्यमित्यभिप्रेत्य तत्परतयोत्तरग्रन्थं योजयितुं तदुपयोगितया न चार्थापत्तिरिष्यत इत्येतदेव वाक्यं प्रकृतेऽर्थापत्त्यभावपरतया योजयति **किञ्चेति** । अनेन नेत्यस्य योग्यतयाऽर्थपदेन संबन्धः । सति ह्यनुपपद्यमानार्थे तद्बलादापत्तिरनिर्वचनीयत्वापत्तिः स्यात्स एव नास्तीति नानिर्वचनीयतापत्तिरिति वाक्यं तात्पर्यतो व्याख्यातं भवति । चशब्दो मूले दूषणान्तरपर इत्यभिप्रेत्य किञ्चेत्युक्तम् ।

प० — अभ्युपेत्य चैतदुक्तम् । वस्तुतस्त्वर्थापत्त्यवतार एव नास्तीत्याह **किञ्च नास्तीति** । अनुपपद्यमानार्थदर्शनेन हि तदुपपादकं कल्प्यम् । न ह्यनिर्वाच्यत्वं विनानुपपद्यमानार्थोऽस्ति । येन तदुपपादकतयाऽनिर्वाच्यता सिद्ध्येदित्यर्थः ।

**सु० — अथ मतम् । यदि वियदादिविश्वं वा शुक्तिरजतादिकं वा सत्स्यात्तदा न बाध्येत । सतो बाधायोगात् । न हि ( संश्चिदात्मा ) सन्नात्मा बाध्यते । यदि वाऽसत्स्यात्तर्हि न प्रतीयेत । असतः प्रतीत्ययोगात् । न हि नरि शृङ्गं भाति गवीव । अतो बाधप्रतीत्योरनुपपत्त्याऽनिर्वाच्यत्वं गम्यत इत्यत आह** बाधेति ।

**अनु० —** बाधायोगात्सत इति

**अर्थापत्तिर्नेष्यत इति वर्तते । एकदेशोत्कीर्तनेनोक्तं सर्वमुपात्तं वेदितव्यम् । सतो बाधायोगादित्याद्युक्तार्थापत्तिर्नानिर्वाच्यत्वं गमयितुमलमित्यर्थः । वियदादेः सत्त्वे शुक्तिरजतादेश्चासत्त्वेऽनुपपत्त्यभावादिति भावः ।**

**ननु यदि वियदादिकं सत्स्यात्तदा बाधो न स्यादित्युक्तमित्यत आह** बाधाभावत इति ।

बाधाभावत एव हि ॥

इष्टापत्तिः

**वियदादेर्विश्वस्य बाधाभावत एव, सत्त्वे बाधो न स्यादितीष्टापादानमेतत् । नेह नानाऽस्तीति श्रौतनिषेधात्मा बाधोऽस्तीति चेन्न । तस्य प्रा(ङ्निषि)गेव निषिद्धत्वात् । तदिदमाह हिशब्देन । अनेनाक्षेपकासिद्धिश्चोक्ता भवति ।**

**शे० — वर्तत इति ।** अनुवर्तत इत्यर्थः । एकदेशोत्कीर्तनेन सर्वमुपात्तं वेदितव्यमित्युक्तमेव दर्शयन्वाक्यतात्पर्यमाह **सत इति** । आदिपदेनासतः प्रतीत्ययोगादित्यस्य परामर्शः ॥ **प्रागिति** । प्रथमसूत्रे 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याप्रतो भवेदि'त्यादिना प्रकृत्यधिकरणे च 'असत्त्वे त्वियमुक्तिश्च तदन्तःपातनान्न हीं'त्यादिनेत्यर्थः ॥ **अनेनेति** । इष्टापत्तिव्युत्पादनेनेत्यर्थः ॥ **आक्षेपकेति** । बाध्यत्वरूपेत्यर्थः ।

**स० — अनेनेति** । इष्टापत्तिप्रतिपादनेनेत्यर्थः ।

**प० —** बाधादिरूपमनुपपद्यमानार्थमाशङ्कते **अथेति** ॥ **उक्तं सर्वमिति** । न हि सन्नात्मेत्यादिना गम्यत इत्यन्तेनोक्तमित्यर्थः । तदेवाह **सतो बाधायोगादिति** । (इत्यस्योक्त)बाधप्रतीत्यन्यथानुपपत्तिरूपार्थापत्तीत्यर्थः ॥ **प्राङ्निषिद्धत्वादिति** । जिज्ञासाधिकरणे 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याप्रतो भवेदि'त्यादाविति भावः ॥ **अनेनेति** । इष्टापत्तिकथनेनेत्यर्थः ।

या० — प्रागिति । प्रथमाध्याये तद्वाक्यस्याग्रतो भवेदित्यत्रेत्यर्थः ॥

श्री० — आक्षेपकासिद्धिरिति । सत्त्वाभावादाक्षेपकस्य बाधस्यासिद्धिरित्यर्थः ॥

च० — प्राग्निषिद्धत्वादिति । 'मिथ्यात्वं यदि दुःखादे'रित्यादिना जिज्ञासानयेऽपहस्तितत्वा-दित्यर्थः ।

सु० — विमतं बाध्यं दृश्यत्वाद् भ्रान्तिवदिति वियदादौ बाधः प्रमित इत्यत आह न हीति ।

अनु० — न हि भ्रान्तावपि बाधोऽवगम्यते ॥

तस्माद् दृष्टान्तः साध्यविकल इत्यर्थः ।

कथमिति चेत् । वक्तव्यं (हि क ) तर्हि कस्य बाध इति । किं ज्ञानस्योत विषयस्य । नाद्यः । अधिष्ठानज्ञाननाश्यत्वलक्षणस्य पराभिमतस्य बाधस्य तत्र स्वभावभंगुरेऽभावात् । अन्यथा प्रमितेरपि तत्प्रसङ्गात् । परमते ज्ञानस्य साक्षित्वेन विनाशायोगाच्च । द्वितीयं प्रतिषेधति विषयस्येति ।

विषयस्य कुतो बाधो विद्यमानं हि बाध्यते ॥

न कुतोऽपीत्यर्थः । कुतो नेति चेत् । विषयः कोऽभिमतः किं शुक्त्यादिः किंवा रजतादिः । आद्ये हेतुमाह विद्यमानं हीति ।

न हि वन्ध्यासुतो बा(व)ध्यो यज्ञदत्तो हि बा(व)ध्यते ॥

'न हि भ्रान्तावित्य'तो मण्डूकप्लुत्या नेत्यनुवर्तते । विद्यमानं यथार्थज्ञानोदयानन्तर-मप्यनुवर्तमानं न हि बाध्यते । तथा सत्यात्मनोऽपि बाधप्रसङ्गादिति भावः । द्वितीये ( युक्तिमा ) हेतुमाह विद्यमानं हीति । यत्पूर्वं विद्यमानं तदेव केनचिन्नाश्यते ( न त्ववि ) नाविद्यमानम् । शुक्तिरजतादिकं चाविद्यमानमिति तस्य नाश्यत्वायोगात्तद्विषयो बाधः सुतरामयुक्त इति । असतो नाश्यत्वं नास्ति किन्तु विद्यमानस्यैवेत्यत्र दृष्टान्तावाह न हीति । अयमत्र प्रयोगः । शुक्तिरजतं न नाश्यमसत्त्वात् । यदसत्तन्न नाश्यं यथा वन्ध्यासुतः । यद्वा यन्नाश्यं न तदसद्यथा यज्ञदत्त इति ।

शे० — प्रमित इति । तथा च नेष्टापत्तिर्नाप्याक्षेपकासिद्धिरिति भावः ॥ किं ज्ञानस्येति । परैर्भ्रमस्यार्थज्ञानात्मकत्वाङ्गीकारेण भ्रान्तिशब्देनोभयस्य प्रसक्तत्वादस्यैव विकल्पावकाश इति ज्ञेयम् ।

अन्यथाविज्ञातस्य सम्यग्विज्ञानरूपसिद्धान्त्यभिमतबाधस्य स्वभावभङ्गुरेऽपि ज्ञाने सत्त्वात्कथं तदभाव इत्यत उक्तं **परामिमतस्येति** ॥ तस्यैव विवरणम् **अधिष्ठानेत्यादि** । ज्ञाने पराभिमतस्य बाधस्याभावे हेतुमाह **स्वभावभंगुर इति** । क्षणिकत्वेन बाधानवतारेऽपि व्यासङ्गादित एव नष्ट इत्यर्थः । अन्यथोत्तरक्षण एव बाधावतारनियमाभावात्तस्य क्षणिकत्वं न स्यादिति भावः । ज्ञाननाश्यतामात्रेण रजतज्ञानस्य भ्रान्तित्वे उत्तरज्ञाननाश्यस्य सम्यग्ज्ञानस्यापि भ्रान्तित्वं स्यात्तथा च भ्रान्तित्वव्यवहारः स्यादित्यतिप्रसङ्गमाह **अन्यथेति** । रजतज्ञानस्य विनाशायोगे हेत्वन्तरमाह **परमते ज्ञानस्य साक्षित्वेनेति** । इन्द्रियेणाधिकरणग्रहणं रजतग्रहणं च साक्षिणेति वदता परेण रजतज्ञानस्य साक्षित्वाङ्गीकारात्तस्य च शुद्धचैतन्यरूपत्वेन विनाशानुपपत्तेरिति भावः । न च रजताकाराविद्यावृत्तिप्रतिबिम्बितचैतन्यस्यैव रजतज्ञानत्वं न शुद्धचैतन्यस्येति वाच्यम् । तथा सति रजतस्य ज्ञातैकसत्त्वाभावापत्त्या शुद्धचैतन्यस्यैव रजतज्ञानताया अवश्यं वाच्यत्वादविद्यावृत्तिप्रतिबिम्बितचैतन्यस्यैव ज्ञानत्वेऽनवस्थापत्त्या तदप्रतिबिम्बितस्यैव तज्ज्ञानत्वावश्यम्भावेन लाघवेन रजतं प्रत्येव शुद्धचैतन्यस्य तज्ज्ञानत्वाभ्युपगमस्य युक्तत्वादित्याशयः । परिहारस्योत्तरत्राभावेन प्रश्नार्थत्वायोगादाक्षेपार्थतया व्याख्याति **नेति** । विषयस्य कुतो बाध इत्यत्राननुवृत्तस्य नेत्यस्य कथमस्मिन्वाक्येऽनुवृत्तिरित्यत उक्तं **मण्डूकप्लुत्येति** । मण्डूकप्लुतिन्यायेनेत्यर्थः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्त्यन्तरालं त्यजन्ति तद्वन्न हि भ्रान्तावित्यत्रत्यो नकारो विषयस्य कुतो बाध इत्यत्राननुवर्तमानोऽपि तदुत्तरवाक्येऽनुवर्तत इत्यर्थः ॥ **तथा सतीति** । बाधोत्तरकालमनुवर्तमानस्यापि बाध्यत्व इत्यर्थः । अविशेषादिति भावः । **तद्विशेषो** नाशविशेष इत्यर्थः । सामान्याभावे विशेषाभावस्य कैमुतिकन्यायसिद्धत्वादिति भावः । मूले वध्यत इति यद्यपि हन्तेर्वधादेशस्य लुङि लिङि च परत एव विहितत्वान्न लटि परतो वधादेशो युक्तः । तथाऽपि हलन्तो वधिः प्रकृत्यन्तरमस्ति तस्यायं प्रयोग इत्यदोषः । अत एव जनिवध्योश्चेति सूत्रव्याख्यावसरे काशिकायामुक्तं 'हलन्तो वधिः प्रकृत्यन्तरमस्ती'ति ॥ 'वध हिंसायामिति भुवादिपाठादि'ति पदमञ्जर्यांश्चोक्तमित्यवधेयम् ।

प० — कथमिति प्रश्नस्य विवेकेनोत्तरं वक्तुं पृच्छति **वक्तव्यं हीति** ॥ **स्वभावभंगुर इति** । स्वभावतो विनश्वर इत्यर्थः ॥ **साक्षित्वेनेति** । चिद्रूपत्वेनेत्यर्थः । विद्यमानमित्यनुवादः । याथार्थ्येत्यादि व्याख्या ॥ **न हि बाध्यत इति** । अधिष्ठानज्ञाने न हि नश्यत इत्यर्थः । बाधपदार्थमाह **नाश्यत इति** ।

**या० — ज्ञानस्य साक्षित्वेनेति** । भ्रमरूपज्ञानस्य अविद्यावृत्तिप्रतिबिम्बितचैतन्यरूपत्वेनेत्यर्थः । परेण हि प्रातिभासिकं सर्वमविद्यावृत्तिप्रतिबिम्बितचैतन्येनैव प्रतीयत इत्युच्यते तदेव च तन्मते साक्षीति

भावः । न चाविद्यावृत्तिप्रतिबिम्बितचैतन्यस्याप्यविद्यावृत्तिनाशेन नाशः सम्भवतीति वाच्यम् । अविद्यावृत्तेः स्वभावभङ्गुरत्वेनाधिष्ठानज्ञाननाश्यत्वाभावात् । शुद्धचैतन्यस्य च कदाऽप्यनाशादित्याशयात् ।

श्री० — **अन्यथेति** । स्वभावभंगुरस्यापि बाध्यत्व इत्यर्थः ।

च० — **स्वभावभंगुरे** । निसर्गनश्वरे ।

सु० — **स्यादेतत् । बाधानभ्युपगमे लौकिकवैदिकव्यवहारविरोधोऽपसिद्धान्तश्च स्यादित्यतः सर्वथाऽङ्गीकर्तव्ये बाधे तद्दृष्टान्तेन वियदादेरपि बाधायोगात्सत्त्वानुपपत्तिरित्यत आह** बाधेति ।

अनु० — बाधायोगात्सत इति व्याप्तिरेषा क दृश्यते ॥

**क्वेत्याक्षेपे । इदमुक्तं भवति । सत्यमङ्गीक्रियत एव बाधोऽस्माभिः । किन्त्वन्यथाविज्ञातस्य सम्यग्विज्ञानगोचरत्वलक्षणः । स तु भ्रान्ताविव वियदादावप्यस्त्येव । क्षणिकत्वब्रह्मपरिणामत्वादिरूपेण विज्ञातस्य स्थायित्वादिरूपेणावगमात् । अधिष्ठानयाथात्म्यज्ञाननाश्यत्वस्यैव प्राङ्निरस्तत्वात् । तत्साधने सिद्धसाधनता स्यात् । न च तेन वियदादौ सत्त्वप्रतिक्षेपः संभवति । यत्सत्तन्न बाध्यत इति व्याप्तेरनवगतत्वात् । स (तोऽप्या)त्यस्याप्यात्मनोऽन्याकारेण विदितस्य सम्यग्विज्ञानगोचरत्वस्योभयसिद्धत्वात् । न चार्थापत्तेः पृथक्प्रमाणत्वे किं व्याप्त्येति वाच्यम् । न हि वयमनुपपद्यमानस्यार्थस्योपपादकेनार्थेन व्याप्तेरभावं चोदयामः । किन्तु सत्त्वस्य बाधाभावेन बाधस्य वा सत्त्वाभावेन । न हि बाध एवानुपपद्यमानोऽर्थः । किन्तु प्रतीतत्वे सति बाधः । तस्य चान्यथाऽनुपपत्तिं व्युत्पादयता सर्वथाऽसत्त्वे बाधो न स्यादिति प्रसङ्गो वा बाधात्सन्न भवतीत्यनुमानं वा वाच्यम् । तदुभयं च व्याप्त्यपेक्षमेव । यदा तु प्रमाणद्वयविरोधोऽर्थापत्तिस्तदा स्पष्ट एव व्याप्त्यभावो दोष इति ॥ ननु बाधायोगादिति पञ्चमी किमर्था । उच्यते । सतो बाधायोगाद्बाध्यमानमिदं न सदित्यनुमाने व्याप्तिरेषा क दृश्यत इति व्याख्यायते । यद्वाऽस्मदभिमतबाधाभ्युपगमे बाधायोगात्सत इत्यादिकं नोपपद्यत इति नञोऽनुवृत्त्या व्याख्या । कुत इत्याशङ्कायां व्याप्तिरित्यादिकं व्याख्येयम् ।**

शे० — **बाधानभ्युपगम इति** । शुक्तिरजतादेरिति शेषः ॥ **गोचरत्वलक्षण इति** । यद्यप्यन्यथाविज्ञातस्य सम्यग्विज्ञानलक्षणो बाध इत्येव वक्तव्यम् । तथाऽपि तस्य वियदादिसंबन्धिताज्ञापनार्थं विज्ञानगोचरत्वलक्षण इत्युक्तमित्यवधेयम् । यदि भ्रान्तौ बाधोऽभ्युपेयते तर्हि न हि भ्रान्तावपि

बाधोऽपिगम्यत इति पूर्वग्रन्थविरोधः । तत्र भ्रान्तौ बाधाभावस्य समर्थितत्वादित्यत आह **अधिष्ठानेति** । तर्हि दृश्यत्वेन वियदादिप्रपञ्चस्यान्यथाविज्ञातस्य सम्यग्विज्ञानगोचरत्वलक्षणं बाध्यत्वमेव साध्यमस्तु तस्य भ्रान्तौ तत्रापि सम्मतत्वेन दृष्टान्ते साध्यवैकल्याभावादित्याशङ्कयाह **तत्साधन इति** ॥ **सिद्धसाधनतेति** । क्षणिकत्वादिना विज्ञातस्य स्थायित्वादिरूपेण सम्यग्ज्ञानगोचरताया मयाऽप्यङ्गीकारादिति भावः । व्यर्थं च तत्साधनं परस्येत्यभिप्रेत्य प्रकृतानुपयोगं दर्शयति **न चेति** । कुतो नोक्तरूपस्य बाध्यत्वस्य सत्त्वप्रतिक्षेपसाधकत्वमित्यतो व्याप्तिरूपसाधनाङ्गसामर्थ्याभावादित्याह **यत्सत्त्वेनेति** । व्याप्त्यनवगममेवोपपादयति **सतोऽपीति** ॥ **अनुपपद्यमानस्येति** । प्रतीतत्वे सति बाधरूपस्येत्यर्थः ॥ **उपपादकेनेति** । सदसद्वैलक्षण्येनेत्यर्थः । नन्वेवमनुपपद्यमानस्योपपादकेन व्याप्त्यभाव एव पर्यवसित इत्यत आह **न हीति** ॥ **तदुभयं चेति** । तथा चान्यथाऽनुपपत्तिव्युत्पादकप्रसङ्गानुमानयोरेव व्याप्त्यभावो दोषतयोच्यते न त्वर्थापत्तेरिति भावः । **यदा त्विति** । विरुद्धयोः प्रमाणयोर्विषयव्यवस्थयाऽविरोधापादनमर्थापत्तिरित्यस्मिन्पक्षे स्पष्ट एव व्याप्त्यभावो दोषः । द्वयोः प्रमाणयोर्विरोधः कस्मादिति प्रश्ने तदुपपादनाय सत्त्वे बाधो न स्यादित्यादिस्तर्को वाच्यः स च व्याप्तिसापेक्ष एवेत्याशयः । यद्वेदमसन्न प्रतीतत्वादिदं सन्न बाध्यत्वादित्यनुमानद्वयविरोधोऽर्थापत्तिरित्यस्मिन्पक्ष इत्यर्थः । अनुमानरूपप्रमाणद्वयस्य मूलभूतव्याप्तिसापेक्षत्वादिति भावः । 'व्याप्तिरेषा क दृश्यत' इत्युक्तार्थे बाधायोगादित्यस्य हेतुत्वासंभवात्पञ्चम्यनुपपत्तिरिति शङ्कते **नन्विति** ॥ **बाधायोगात्सत इत्यादिकमिति** । तथा च बाधायोगात्सत इति मूलं परकीयसम्मतानुमानप्रयोगोपलक्षकमिति भावः ॥ **नञोऽनुवृत्त्येति** । न हि वन्ध्यासुत इति पूर्ववाक्यादिति शेषः ।

स० — **तत्साधने** अन्यथाविज्ञातस्य सम्यग्विज्ञातत्वरूपबाधसाधन इत्यर्थः ।

प० — **बाधानभ्युपगम इति** । शुक्तिरजतादेरिति योज्यम् । 'विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतमि'ति प्रागुक्तं हृदि कृत्वाह **किन्त्वन्यथेति** । एवं तर्हि 'बाधाभावत एव ही'त्यादिना बाधनिरासविरोध इत्यत आह **अधिष्ठानेति** ॥ **तत्साधन इति** । अन्यथा विज्ञातस्येत्यादिनोक्तबाध्यत्वसाधन इत्यर्थः । इष्टासिद्धिश्च नेत्याह **न च तेनेति** । अनिर्वचनीयरूपोपादकेने(कत्वेने)त्यर्थः ॥ **तदुभयं चेति** । तर्कोनुमानं चेत्यर्थः ॥ **प्रमाणद्वयेति** । बाध्यमानत्वात्सन्न भवति । प्रतीयमानत्वादसन्नभवतीत्यनुमानद्वयविरोधो वा, सच्चेन्न बाध्येत असच्चेन्न प्रतीयेतेति तर्कद्वयविरोधो वा सदादिवैलक्षण्यसाधकत्वेनार्थापत्तित्वेनाभिमतः तदा सत्त्वबाधाभावासत्त्वप्रतीत्योः व्याप्त्यभावो दोषत्वेन वक्तव्य इत्यर्थः । अनुमानसूचनार्थेत्याह **सतो बाधायोगाद्बाध्यमानमिदमित्यादि** ।

या० — **बाधानभ्युपगमे इति** । भ्रमस्येति शेषः । **दृष्टान्तेन** भ्रमदृष्टान्तेन । बाधायोगादित्यनन्तरं अस्य च बाध्यत्वादिति शेषः । **पृथक्** अनुमानात् । व्यवहारे भट्टनय इत्यङ्गीकारादिति भावः । **अनुपपद्यमानस्येति** । प्रतीतत्वे सति बाधरूपस्येत्यर्थः ॥ **उपपादकेनेति** । सदसद्वैलक्षण्येनेत्यर्थः । **चोदयाम इति** । येन अर्थापत्तेः अनुमानात्पृथक्प्रमाणत्वे किं व्याप्त्येति शङ्का स्यादित्यर्थः । **सत्वस्येति** । प्रसङ्ग इत्यर्थः । **बाधस्य चेति** । विपर्ययपर्यवसानरूपानुमानेत्यर्थः ॥ नन्वेवं चेत् अनुपपद्यमानार्थस्योपपादकेन व्याप्तिरङ्गीकृतैवेत्यत आह **न हि बाध एवेति** । इदमुपलक्षणम् । न हि सत्वाभाव एवोपपादकः किन्तु सदसद्विलक्षणस्वरूपनिर्वचनीयत्वमिति ॥ **तदुभयं चेति** । तथा चान्यथाऽनुपपत्तिरुत्पादकप्रसङ्गविपर्ययपर्यवसानयोरेवादावेव व्याप्त्यभावो दोषतयोच्यते नार्थापत्ताविति भावः ॥ **प्रमाणद्वयेति** । इदमसन्न प्रतीतत्वादिदं सन्न बाध्यत्वादित्यनुमानद्वयविरोध इत्यर्थः ॥ **सत इत्यादिकमिति** । तथा च 'बाधायोगात्सत' इति मूलं तदीयसमग्रानुमानप्रयोगोपलक्षकमिति भावः ॥ **इत्यादिकं व्याख्येयमिति** । सत्यस्यात्मन इत्युक्तरीत्या आत्मनि व्यभिचारादिति भावः ।

श्री० — **तत्साधने** अन्यथाविज्ञातस्येत्युक्तबाध्यत्वसाधने ।

च० — **प्रमाणद्वयेति** । प्रतीतत्वादसन्नेति बाध्यत्वात्सन्नेति चानुमानद्वयविरोध इत्यर्थः । **स्वापेक्ष्यवैशसादिति** । स्वोपजीव्यविरोधादित्यर्थः ।

---

सु० — **एवं विनाशलक्षणं बाधं सिद्धवत्कृत्य शुक्तिरजतादौ वियदादौ च बाधस्यासिद्धिरभिहिता । इदानीं तामेव विवरितुं बाधस्वरूपं परं पृच्छति** कश्चेति ।

अनु० — कश्चायं बाध उद्दिष्टो

**योऽयं वियदादेः शुक्तिरजतादेश्च सत्त्वाभावसिद्ध्यर्थं बाध उद्दिष्टोऽयं कः । किं (वि)ज्ञानेन विनाशः किंवा निवृत्तिर्यद्वा नासीन्नास्ति न भविष्यतीति कालत्रयसत्तानिषेध इति भावः ।**

**ननु विनाशनिवृत्त्योः को भेदः ।** उच्यते ।

**केचित्खलु मायावादिनो वदन्ति । अधिष्ठानयाथात्म्यज्ञानेन सविलासाऽविद्या विनश्यति । यावन्ति ज्ञानानि तावत्यो ह्यविद्या इति । तन्मतरीत्या विनाश इत्युक्तम् ॥ अपरे त्वेकैवाविद्या तदवस्थाविशेषा एव रजताद्युपादानानि भवन्तीति मन्वाना अधिष्ठानतत्त्वज्ञानेन, सह कार्यैरविद्या तिरोधत्त इति । तत्समयानुसारेण निवृत्तिरिति ।**

**यद्वाऽविद्याया विद्यया विनाशो भवति । कार्यं तु रजतादिकमुपादानविनाशे स्वयमेव विलीयत इति परेषां मतम् । तदुभयानुसारेणेदं कल्पद्वयम् । अथवाऽलौकिकरजतोत्पाद-**

**वादिनां मतमनुसृत्य विनाश इति ।। मायावादिनां तु मतमनुरुध्य निवृत्तिरिति । यदि वा, विनाश इति मायावादिनां मतम् । विवेकाग्रहात्प्रवृत्तस्य विवेकग्रहे सति निवृत्तिरिति प्राभाकरमतमिति ।**

शे०— **केचिदिति** । इष्टसिद्धिकारा इत्यर्थः ॥ **सविलासेति** । कार्यसहितेत्यर्थः । ननु चैवं सति शुक्त्यधिष्ठानतत्त्वज्ञानेनैव सविलासाविद्याया निवृत्तत्वात्सद्यो मोक्षः स्यादित्यतः शुक्त्यज्ञानस्य तेन नाशेऽपि ब्रह्माज्ञानस्य तेनानाशान्न मोक्षप्रसङ्ग इत्याशयेन हेतुकथनपूर्वकमज्ञानानामनन्ततामाह **यावन्तीति** । विवरणकारमतमाह **अपरे त्विति ॥ एकैवेति** । आत्माश्रयमात्मविषयं चाज्ञानमन्तरेणा-न्यस्तु प्रतिविषयं भावरूपाज्ञानसद्भावे मानाभावादिति भावः । नन्वेवं शुक्तिज्ञानेनाज्ञाननिवृत्तौ सद्य एव मोक्षः स्यादनिवृत्तौ च रूप्यादेः सविलासाविद्यानिवृत्तिरूपबाधो न स्यादित्यतो भवेदेवं कथञ्चिद्यदि मूलाज्ञानमेवास्मिन्मते रजताद्युपादानं स्यान्न चैवं किन्तु मूलाज्ञानस्यावस्थाविशेषा एव रजताद्युपादानतया-ऽभ्युपगम्यन्ते । ते च शुक्तिज्ञानेन बाध्याः सन्निवर्तन्त इत्यतो न मोक्षप्रसङ्गः । मूलाज्ञानस्यानिवृत्त-त्वात् । नापि बाधानुपपत्तिः । अवस्थाविशेषाणां सकार्याणां निवृत्तत्वादित्याशयेनाह ॥ **तदवस्था-विशेषा एवेत्यादि** । ग्रीष्मवर्षादिषु नदीनामपचयोपचयरूपा अवस्थाविशेषाः कार्यविशेषकरा दृष्टा-स्तथाऽविद्याऽवस्थाविशेषा एव कार्यविशेषकरा इत्यर्थः ॥ **सह कार्यैरिति** । रजततदाकाराविद्या-वृत्त्यादिभिरित्यर्थः ॥ **अविद्या तिरोधत्त इति** । अविद्यावस्थाविशेषास्तिरोभावं प्राप्नुवन्तीत्यर्थः ॥ **तदुभयानुसारेणेति** । विज्ञानेन विनाशो विनाशः । उपादाननिवृत्तौ स्वयमेव विलयनं निवृत्तिरिति पक्षद्वयमित्यर्थः ॥ **अलौकिकरजतोत्पादवादिनामिति** । तत्रैव तात्कालिकमुत्पन्नं सद्विनश्यतीत्येवं वादिनां भास्करीयाणां मतमनुसृत्येत्यर्थः ॥ **मायावादिनामिति** । अपरे त्विति प्रागुपन्यस्ताना-मित्यर्थः ॥ **मायावादिमतमिति** । केचिदित्यादिना प्रागुदाहृतमायावादिमतमित्यर्थः ।

प०— **सविलासेति** । स्वकार्यसहितेत्यर्थः । तर्हि सद्यो मोक्ष इति शङ्कापनोदायोक्तम् **यावन्तीति ॥ मायावादिनां मतमिति** । तन्मते ज्ञानोदये सत्यज्ञानकार्यस्य रजतादेः स्वकारणे विलीनतोपगमात्तस्यैव निवृत्तिशब्दार्थ इति भावः । यदि वेति पक्षान्तरम् । यद्वेत्यर्थः ।

या०— **सविलासेति** । कार्यसहितेत्यर्थः ॥ नन्वेवं शुक्त्याद्यधिष्ठानतत्त्वज्ञानेनैवाविद्याया नष्टत्वान्मोक्षापत्तिरित्यत आह **यावन्ति ज्ञानानीति** । तथा च शुक्त्याद्यज्ञानानां नाशेऽपि ब्रह्मा-ज्ञानस्यानाशान्न मोक्षापत्तिरिति भावः ॥ **अवस्थाविशेषा एवेति** । यथा ग्रीष्मवर्षादिषु नदीनामपच-यरूपावस्थाविशेषाः कार्यविशेषाः दृष्टास्तथेत्यर्थः ॥ **अविद्येति** । अविद्यावस्थाविशेषा इत्यर्थः । **तत्समयानुसारेणेति** । तथा निवृत्तिस्तिरोधानमित्यर्थः ।

**तदुभयानुसारेणेति** । तथा च निवृत्तिशब्दस्य विनाशवाचकत्वेऽप्यविद्याविनाशो वा तत्कार्यविनाशो वेति विकल्पद्वयमत्र विवक्षितमिति भावः ॥ **अलौकिकरजतेति** । तत्रैव तात्कालिकमुत्पन्नं सद्विनश्यतीति वादिनां भास्करीयाणामित्यर्थः ॥ **मायावादिनां तु मतमिति** । शुक्त्यादितत्त्वज्ञानेनाविद्यकस्य रजतादेः प्रविलयः कारणात्मनाऽवस्थानमिति यावदिति मतमित्यर्थः । **निवृत्तिरिति** । पुरुषस्य परावृत्तिरित्यर्थः ।

सु० — **आद्यं दूषयति** न हीति ।

**अनु०** — न हि नाशोऽसतो भवेत् ॥

**असत इत्युपलक्षणम् । असदेव रजतं प्रत्यभादित्युत्तरानुभवबलादसदेव तावच्छुक्तिरजतम् । न चासतः शशविषाणवद्विनाशः संभवति । स्वरूपनिवृत्तिर्हि विनाशः । न चासतः स्वरूपमस्ति । व्याघातात् । नापि वियदादेर्विनाशः संभवति । नित्यत्वात् । घटादेरपि मुद्गराभिघातादिनैव विनाशो नाधिष्ठानतत्त्वज्ञानेनेति पूर्वोक्तं स्मारयितुमेतदुक्तमिति हिशब्दः ।**

शे० — **असत इत्युपलक्षणमिति** । वियदादेर्घटादेश्चेति शेषः । नन्वसतोऽपि शुक्तिरजतस्य विनाशोऽस्तु किं बाधकमित्यतस्तथा सत्यविशेषाच्छशविषाणादेरपि तत्प्रसङ्गात् न तस्य नाशः संभवतीत्याह **न चासत इति** । अस्तु तर्ह्यसतः शशविषाणादेरपि विनाश इत्यतस्तथा सति सस्वरूपत्वप्रसङ्गान्नैवमित्यभिप्रेत्याह **स्वरूपेति** । अस्तु तर्ह्यसतोऽपि सस्वरूपत्वमित्यत आह **न चेति** ॥ **व्याघातादिति** । असतोऽपि सस्वरूपत्वे निस्स्वरूपत्वरूपासत्त्वव्याघातादित्यर्थः ॥ **पूर्वोक्तं स्मारयितुमिति** । 'विद्यमानं हि बाध्यते । न हि वन्ध्यासुतो वध्यो यज्ञदत्तो हि वध्यत' इत्यव्यवहितग्रन्थेऽसतो विनाशाभावस्य वियदधिकरणे वियदादेः स्वरूपेण नित्यत्वोक्त्या विनाशाभावस्य जिज्ञासाधिकरणप्रकृत्यधिकरणयोर्विश्वसत्यत्वसमर्थनेन घटादेरप्यधिष्ठानज्ञाननाश्यत्वाभावस्योक्तत्वात्किं पुनस्तद्वचनेनेति न वाच्यम् उक्तस्यैव स्मारणेन पुनर्वचनस्यार्थवत्त्वादित्यर्थः ।

स० — **असत इत्युपलक्षणमिति** । वियदादेरिति शेषः ।

प० — **असत इत्युपलक्षणमिति** । कस्येत्याकाङ्क्षायां वियदादेः घटादेश्चेति भावेन तत्रोक्तविनाशाभावे हेतुमाह **वियदादेरिति** ॥ **इति पूर्वोक्तं स्मारयितुमिति** । 'विद्यमानं हि बाध्यते । न हि वन्ध्यासुतो बाध्य' इत्यत्रासतो विनाशो नेत्युक्तम् ।

या० — **असत इत्युपलक्षणमिति** । वियदादेर्घटादेश्चेति शेषः ॥ **व्याघातादिति** । निस्स्वरूपत्वलक्षणासत्वव्याघातादित्यर्थः ॥ 'विद्यमानं हि बाध्यते । न हि वन्ध्यासुतो वध्य' इत्यत्र

सतो नाशो नास्तीत्युक्तत्वात् । वियदधिकरणेऽव्याकृताकाशप्रकृतिपुरुषादेः स्वरूपेण नित्यत्वस्य कत्या तन्नाश.भावस्यापि तत्रोक्तत्वाज्जिज्ञासाधिकरणादौ च विश्वसत्यतायाः समर्थितत्वेन घटादेरधिष्ठानज्ञानानाश्यत्वस्योक्तत्वादत्र पुनस्तद्वचने पौनरुक्त्यमित्यत आह **पूर्वोक्तमिति** । एतेन रजताद्युपादानभूताविद्यानाश एव प्रथमकल्पे विवक्षित इति यद्व्रत्यत्रोक्तं तदपि निरस्तमिति ज्ञातव्यम् । पराभिप्रेताविद्याया अप्यप्रामाणिकतयाऽसत्त्वेन नाशायोगादिति ।

**सु०** — **द्वितीयं निराकरोति** निवृत्तिश्चेति ।

अनु० — निवृत्तिश्चाप्रवृत्तस्य कथमेवोपपद्यते ॥

**तिरोभावादिरूपा निवृत्तिः खल्वाविर्भावादिरूपप्रवृत्तिमतो भवेत् । सद्धर्मश्चाविर्भावः । शुक्तिरजतादिकं चासदित्युक्तम्** । अतः अप्रवृत्तस्य **तस्य निवृत्तिश्च कथमेवोपपद्यते । यद्वा अविद्यया प्रवृत्तस्य तदुपादानकस्य हि विद्यया निवृत्तिरुक्तरूपोपपद्यते । न च शुक्तिरजतादिकमविद्योपादानकम्** । असत्त्वात् । अतः अप्रवृत्तस्य **निवृत्तिश्च कथमेवोपपद्यते । एतेन वियदादावपि बाधासिद्धिरुक्ता वेदितव्या । प्राभाकरं प्रति रजतार्थिताऽभावादिनाऽप्रवृत्तस्य पुरुषस्य निवृत्तिर्नोपपद्यत इति तत्राव्याप्त्यैनेदं बाधलक्षणमिति व्याख्येयम्** ।

**शे०** — **अप्रवृत्तस्येति** । आविर्भावादिरूपप्रवृत्तिशून्यस्येत्यर्थः ॥ **निवृत्तिरिति** । ज्ञानप्रयोज्यतिरोभावादिरूपनिवृत्तिरित्यर्थः । अविद्यया प्रवृत्तस्येत्यस्यैव विवरणं **तदुपादानकस्येति** । अविद्योपादानकस्येत्यर्थः ॥ **उक्तरूपेति** । उपादाननाशप्रयुक्तविनाशलक्षणेत्यर्थः । **अप्रवृत्तस्य** अविद्याऽनुपादानकस्य । **निवृत्तिः** ज्ञानप्रयोज्यविनाशलक्षणेत्यर्थः ॥ **एतेनेति** । 'निवृत्तिश्चाप्रवृत्तस्ये'ति मूलग्रन्थेनेत्यर्थः । नित्यस्य वियदादेः सर्वदैकप्रकारत्वे नाविर्भावतिरोभावरूपयोर्वोत्पत्तिविनाशरूपयोर्वा प्रवृत्तिनिवृत्त्योरसम्भवात्सत्यस्य घटादेरुत्पत्त्यादिमत्त्वेऽप्यविद्ययोत्पत्तिर्विद्यया विनाश इत्येवंरूपयोः प्रवृत्तिनिवृत्त्योरसम्भवादिति भावः । रजताऽर्थिताभावादिनेत्यादिपदेन व्यासङ्गादिपरिग्रहः । तथा च यत्र रजतभ्रमानन्तरं रजतार्थिताऽभावेन वा व्यासङ्गादिना वा प्रवृत्तिरेव नोत्पन्ना तत्र प्रयत्नविरोधियत्नान्तररूपा निवृत्तिर्न सम्भवतीति तस्या एव बाधत्वे तत्राव्याप्तिरित्याशयः ।

**प०** — **शुक्तिरजतादिकं चासदिति** । 'अन्यथात्वमसत्त्वस्य भ्रांतावेव प्रतीयत' इति जिज्ञासाधिकरणे उक्तम् । वियदादेर्नित्यत्वं च वियदधिकरणे उक्तम् । घटादेः सत्यत्वं च प्रकृत्यधिकरणादौ तत्र तत्रोक्तमिति तत्सर्वं स्मारयितुं न हीति हिशब्दः प्रयुक्त इत्यर्थः ॥ तिरोभावादीति आविर्भावादीति चादिपदद्वयेन प्रागुक्तमतान्तराभिमतनिवृत्त्यादिशब्दार्थग्रहः । यद्वा अविद्यायाः

विद्ययेत्युक्तमतेऽथवेत्युक्तमते चाभिमतनिवृत्त्यभावोपपादनं मूलारूढं दर्शयति **यद्वाऽविद्यया प्रवृत्तस्येति ॥ उक्तरूपेति ।** विनाशरूपा विलीनतादिरूपा च ॥ **एतेनेति ।** शुक्तिरूप्यादौ उक्तरूपनिवृत्तिलक्षणबाधाभावोपपादेनेन नित्ये सत्यभूते च वियदादौ घटादौ च बाधस्यासिद्धिरुक्ता वेदितव्येत्यर्थः । यदि वेति पक्षाभिमतनिवृत्तिरूपबाधाभावमुपपादयति **प्राभाकरं प्रतीति ।**

**या०** — तिरोभावादिरूपेत्यत्रादिपदेन कार्यविनाशकारणात्मनाऽवस्थानयोर्ग्रहणम् । आविर्भावादिरूपेत्यत्रादिपदेनावशिष्टपक्षद्वये विवक्षिताविद्योपादानकरजतादिकार्योत्पत्तिरूपा प्रवृत्तिर्ग्राह्या ॥ **शुक्तिरजतादिकं चेति ।** तथा च कार्यैः सहाविद्या तिरोधत्त इत्युक्तमयुक्तमिति भावः । अवशिष्टपक्षद्वयेऽपि निवृत्त्यभावमुपपादयति **यद्वेति ।** तस्यैव विवरणं **तदुपादानकस्येति ॥ उक्तरूपेति ।** कार्यस्य विनाशरूपा वा प्रविलयरूपा वेत्यर्थः । **एतेनेति ।** 'निवृत्तिश्चाप्रवृत्तस्ये'त्यनेनेत्यर्थः । नित्यस्य वियदादेः सर्वदैकप्रकारत्वेनाविर्भावतिरोभावरूपयोर्वोत्पत्तिविनाशादिरूपयोर्वा प्रवृत्तिनिवृत्त्योरसंभवात्सत्यस्य घटादेरप्यविद्ययोत्पत्तिर्विद्यया विनाश इत्येवंरूपयोस्तयोरसंभवादिति भावः ॥ **रजतार्थिताऽभावादिनेति ।** आदिपदेन व्यासङ्गादिसंग्रहः । तथा च रजतादिभ्रमानन्तरं यत्र व्यासङ्गेन वा रजतादीच्छाभावेन वा करणापाटवादिना वा प्रवृत्तिरेव नोत्पन्ना तत्र प्रवृत्तिविरोधियत्नान्तररूपाया निवृत्तेरप्यसंभवेन तस्या बाधकत्वे तत्राव्याप्तिरित्यर्थः । **उपपद्यत इति ।** परावृत्तेः प्रवृत्तिसापेक्षत्वादित्याशयः ।

**श्री०** — **अप्रवृत्तस्य** आविर्भावादिरूपप्रवृत्तिशून्यस्य । **अप्रवृत्तस्य** असत्त्वेनाविद्यानुपादानकस्य ।

**सु०** — **तृतीयं दूषयितुमनुवदति** नासीदिति ।

**अनु०** — नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता ॥
यदि बाधः

**यदेतावन्तं कालं प्रत्यभात्तन्नासीन्नास्ति न भविष्यतीति त्रैकालिकसत्त्वनिषेधरूपज्ञानविषयता (यदि) बाध इत्यर्थः । यद्यप्येवंविधं ज्ञानं बाध इति वक्तव्यं तथाऽपि तस्य रजतादिसंबन्धिताज्ञापनार्थं ज्ञानमेयतेत्युक्तम् । दूषयति** तदेति ।

तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनः ॥

**यद्येवं त्रैकालिकसत्त्वनिषेधलक्षणो बाधो वियदादेः शुक्तिरजतादेश्चाङ्गीक्रियते । तदा असद्वैलक्षण्यमुररीकुर्वता तेनैव पुनरसत्त्वमङ्गीकृतं स्यात् । सत्ताविरहव्यतिरेकेण शशविषाणा-**

**दीनामप्यसत्त्वस्यानिरूपणात् । अपसिद्धान्तप्रसङ्गान्नायं बाधः परेणाङ्गीकर्तुं शक्यत इत्याशयः । असिद्धश्चायं बाधो वियदादाविति प्रागेवोक्तम् ।**

**शे० — प्रागेवेति ।** 'ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिनः' इत्यादिना जिज्ञासासूत्र इत्यर्थः ।

**प० — प्रागेवोक्तमिति ।** जिज्ञासासूत्रे 'ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन' इत्यादिनोक्तमित्यर्थः ।

**था० — प्रागेवेति ।** 'ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन' इत्यत्रैवेत्यर्थः ।

**सु० — (ननु) यदुक्तं शुक्तिरजतादेरसत्त्वान्न विनाशादिलक्षणो बाधः संभवतीति । तद(सत्)सिद्धम् । विमतं नासत् प्रतीयमानत्वात्, यत्प्रतीयते तन्नासद्यथा पटः, यच्चासन्न तत्प्रतीयते यथा शशविषाणमिति प्रमाणेनासत्त्वविरहस्य निश्चितत्वात् । अत एवासत्त्वेऽनुपपत्त्यभावादर्थापत्तेरन्यथैवोपपत्तिरित्यपि प्रत्युक्तम् । प्रतीतेरेवानुपपत्तेः ॥ यच्चोक्तं त्रैकालिकसत्त्वनिषेधेऽसत्त्वाङ्गीकारप्रसङ्ग इति तदप्यसत् । प्रतीतत्वेनासत्त्वानुपपत्तौ निषेधस्य सत्त्वोत्सारणमात्र एव पर्यवसानोपपत्तेः ॥ यदप्यत्रोक्तं सत्ताविरहव्यतिरेकेणासत्त्वं नाम दुर्निरूपमिति; तच्चायुक्तम् । निरुपाख्यत्वमसत्त्वमिति निरूपणात् इति चेन्न । असतः प्रतीत्यभावे खल्विदं सर्वं स्यात् । न चैवम् । असतः प्रतीतिं निराकुर्वता त्वयैव तस्या अङ्गीकार्यत्वादित्याशयवानाह प्रतीतिरिति ॥**

**अनु०** — प्रतीतिर्नासत इति वदन्नङ्गीकरोति ताम् ॥

**वदन्नित्युपलक्षणम् । जानन्नित्यपि द्रष्टव्यम् । असतः प्रतीतिर्नास्तीति निषेधं कुर्वता कुतोऽसतः प्रतीतिरङ्गीकार्येत्यत आह निषेधो हीति ।**

निषेधो ह्यप्रतीतस्य कथञ्चिन्नोपपद्यते ॥

**प्रतीतिर्नासत इति किमसतः प्रतीतिर्निषिध्यते किंवा प्रतीतेरसद्विषयत्वम् । आद्ये प्रतिषेधविषयतया, द्वितीये प्रतिषेध्यनिविष्टतयाऽवश्यमसतः प्रतीतिरङ्गीकरणीया । तस्मात्कथञ्चिदुक्तप्रकारद्वयेनाप्रतीतस्य संबन्धी निषेधो नोपपद्यते । न ह्यप्रतीते भूतले घटे वा भूतले घटो नास्तीति प्रतिषेधो दृष्टः । तदनेन विमतोऽसत्प्रतीतिमांस्तत्संबन्धिनिषेधकर्तृत्वात्तद्व्यवहर्तृत्वाद्वा संमतवदिति प्रमाणं सूचितं भवति । अवश्यं च प्रामाणिकं परीक्षकेणाभ्युपगन्तव्यम् । मनस्यभ्युपगमो वाचि निषेध इति स्वक्रियाविरोधो वाऽनेन सूचित इति ।**

शे०— 'निषेधो ह्यप्रतीतस्ये'त्युत्तरवाक्येऽसतः प्रतीतिर्नास्तीति ज्ञानस्यासंज्ञाने विनाऽनुपपन्न-तयाऽसत्प्रतीतिसाधकत्वकथनात्पूर्वत्र ज्ञानस्याविवक्षायां तदानर्थक्यप्रसङ्गात्तदनुरोधेन वदन्नित्येतत्तथाज्ञानोप-लक्षणमित्याह **वदन्नित्युपलक्षणमिति** । किमसतः प्रतीतिर्निषिध्यत इत्यस्य किमसति प्रतीतिविषयत्वं निषिध्यत इत्यर्थः । **आद्ये** असति प्रतीतिविषयत्वं निषिध्यत इति पक्षे ॥ **प्रतिषेधविषयतयेति** । प्रतिषेधधर्मितयेत्यर्थः ॥ **उक्तप्रकारद्वयेनेति** । असति प्रतीतिविषयत्वं नास्तीति प्रतीतावसद्विषयत्वं नास्तीत्युक्तप्रकारद्वयेनेत्यर्थः ॥ **अप्रतीतस्यार्थस्यासतः सम्बन्धीति** । आद्येऽसतोऽधिकरणत्वेन द्वितीये प्रतियोगिकोटिनिविष्टत्वेन निषेधसम्बन्धित्वादिति भावः । 'प्रतीतिर्नासत इति जानन्नि'ति मूलोक्तं हेतुमुक्त्वा 'प्रतीतिर्नासत इति वदन्' इति मूलोक्तं हेतुमाह **व्यवहर्तव्यत्वाद्वेति** । यो यत्सम्बन्धिप्रतिषेधकर्ता स तत्प्रतीतिमानिति सामान्यव्याप्तिमभिप्रेत्य तत्र दृष्टान्तमाह **सम्मतव-दिति** । भूतले घटो नास्तीति प्रतिषेधकर्तृवदित्यर्थः । दृष्टान्तव्युत्पादनं च न हीत्यादि-पूर्वग्रन्थे कृतमवधेयम् । ननु तथाऽप्यसतः प्रतीतिर्नास्तीति निषेधं कुर्वता कुतोऽसतः प्रतीति-रङ्गीकर्तव्येति शङ्कायाः कः परिहार इत्यत आह **अवश्यं चेति** । प्रामाणिकस्याप्यनभ्युपगमे परीक्षकत्वं न स्यादित्यनिष्टसूचनाय परीक्षकेणेत्युक्तम् । प्रमाणसूचकतया निषेधो हीति वाक्यं व्याख्याय स्वक्रियाविरोधसूचनपरतयाऽपि तद्योजयति **मनसीति** ॥ **स्वक्रियाविरोध इति** । यथा मूकोऽह-मिति वचनक्रियया मूकपदोक्तो वचननिषेधो विरुद्ध्यते । यथा वाऽऽत्मा पराधीनप्रकाशो नेत्यात्म-सम्बन्धित्वेन पराधीनप्रकाशत्वनिषेधकात्मविषयकज्ञानक्रियया नेतिपदोक्तस्तन्निषेधो विरुद्ध्यते तथाऽसतः प्रतीतिर्नास्तीत्यसत्सम्बन्धित्वेन प्रतीतिविषयत्वनिषेधकासद्विषयकज्ञानक्रियया नेतिपदोक्तस्तन्निषेधो विरु-द्ध्यत इत्यर्थ ।

स०— **प्रतिषेधविषयतयेति** । असन्न प्रतीयत इति प्रतिषेधधर्मितयेत्यर्थः ।

प०— **अत एवेति** । असत्त्वविरहस्य निश्चितत्वादेव प्रतीतिबाधान्यथानुपपत्त्या शुक्ति-रूप्यादिकं सदसद्विलक्षणमित्यर्थापत्तेः असत्त्वेनैवान्यथैवोपपत्तेरिति प्रत्युक्तमित्यर्थः ॥ **निषेधस्येति** । नासीन्नास्तीत्यादिनिषेधस्येत्यर्थः ॥ **निरुपाख्यत्वमिति** । निष्प्रतीतिकत्वमित्यर्थः ॥ **आद्य इति** । प्रतीतिस्वरूपनिषेधपक्षे । **द्वितीये** प्रतीतिगतधर्मनिषेधपक्षे इत्यर्थः ॥ **निविष्टतयेति** । **प्रतिषेध्य** प्रत्या-धारतयेत्यर्थः । न ह्यप्रतीते भूतले घटे वेत्यत्राप्रतीते घटे भूतले वेत्यर्थः । यद्वा प्रतीतिविषयत्वमसतो निषिध्यत इति आद्यपक्षे इत्यस्यार्थः । निषेधविषयतयेत्यस्य निषेधप्रत्याधारतयेत्यर्थः । निविष्टतयेत्यस्य यथान्यास एवार्थो ज्ञेयः ॥ **विमत इति** । पुमानिति योज्यम् ।

**या० — निषेधस्येति** । नास्ति नासीदितिरूपस्य निषेधस्येत्यर्थः । **किमसतः प्रतीति-रिति** । किमसति प्रतीतिविषयत्वमित्यर्थः ॥ **प्रतिषेधविषयतयेति** । प्रतिषेधधर्मितयेत्यर्थः । **अप्रतीतस्येति** । धर्मिणः प्रतियोगिनो वा संबन्धीत्यर्थः । 'द्वाभ्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यते' इति वचनादिति भावः । **भूतले** अधिकरणे । **घटे** प्रतियोगिनि । 'अङ्गीकरोति तामि'त्यंशस्याभि-प्रायमाह **अवश्यं चेति** ॥ **अनेनेति** । 'प्रतीतिर्नासत इति वदन्नङ्गीकरोति तामि'ति समग्रवाक्ये-नेत्यर्थः ।

**सु० — एवमर्थापत्तिं निरस्योपमानं च निरस्यति** न चेति ।

**अनु० —** न चोपमा भवेदत्र

अत्र **अनिर्वचनीयार्थसद्भावे** । **प्रमाणमिति शेषः** । **तस्याः सादृश्यादिनियतविषयत्वादिति भावः** ।

**शे० — सादृश्यादीति** । आदिपदेन संज्ञासंज्ञिसम्बन्धपरिग्रहः । शाबरोपमानस्य सादृश्य-मात्रविषयत्वेन नैयायिकोपमानस्य संज्ञासंज्ञिसम्बन्धमात्रविषयत्वेनोपमानस्य नियतविषयत्वान्नानिर्वच-नीयत्वे प्रमाणत्वसंभावनाऽपीत्याशयः ।

**प० — एवमर्थापत्तिमिति** । अनिर्वचनीये वस्तुनीति योज्यम् । प्रकृतमीमांसातार्किकादि-मतभेदेनाह **सादृश्यादीति** । आदिपदेन वाच्यत्वग्रहः ।

**या० —** सादृश्यादीत्यत्रादिपदेन वाच्यत्वपरिग्रहः । शाबरोपमानं सादृश्यमात्रविषयं, नैयायि-कोपमानं तु वाच्यत्वमात्रविषयमित्युपमानं नियतविषयमित्यर्थः ।

**सु० — अभावमपाकरोति** प्रत्यक्षादिति ।

**अनु० —** प्रत्यक्षात्सत्त्वमेव च ॥

**वियदादौ शुक्तिरजतादौ वा प्रत्यक्षेणानुपलम्भेन वा सत्त्वासत्त्वयोरभावसिद्धावनिर्वच-नीयार्थसिद्धिरिति वक्तव्यम् । न च तद्युक्तम् । यतो वियदादौ प्रत्यक्षात्सत्त्वमेव निश्चीयते । चशब्दाच्छुक्तिरजतादावसत्त्वं च निश्चीयत इति गृह्यते । प्रत्यक्षं विपरीतमनुपलम्भश्चासिद्ध इत्यर्थः ।**

**शे० —** अर्थापत्त्यादिवदवश्यं निरसनीयस्याभावस्यानिरासान्मूले न्यूनतामाशङ्क्य 'प्रत्यक्षा-त्सत्त्वमेव चे'त्यनेनैव तन्निरासान्न तदिति भावेनाभावनिरासपरतया तावत्तद्योजयति **अभावमपाकरो-तीति** । नन्वत्राभावनिरासो न प्रतीयते तत्कथमनेन तन्निराकरणमित्यतः किमभावस्यानुमानादिव-

त्साक्षादेवानिर्वचनीयत्वसाधकत्वमित्यभिमतं किंवा सत्त्वासत्त्वाभावसिद्धिद्वारा तत्सिद्धावुपायत्वमिति विकल्पद्वयम् । नाद्यः । उपमानवत्तस्याभावरूपनियतविषयतया साक्षादनिर्वचनीयत्वसाधकत्वासम्भवादिति प्रथमपक्षदूषणं च मनसि निधाय द्वितीयपक्षदूषणपरतया मूलं योजयितुं तमङ्गीकारयति **वियदादाविति** । स्वमतानुसारेणाह **प्रत्यक्षेणेति** । परमतानुसारेणाह **अनुपलम्भेन चेति** । व्यवहारे भट्टनय इति परेणाङ्गीकारादिति द्रष्टव्यम् । अस्तु तर्हि द्वितीय एवेत्यतस्तन्निषेधं प्रतिज्ञाय तदुपपादकतया मूलं योजयति **न च तद्युक्तमित्यादिना** ।

प० — अभावस्य प्रत्यक्षत्वानुपलब्धिलिङ्गकत्वमतभेदेनाह **प्रत्यक्षेणानुपलम्भेन वेति** ।

या० — यद्यप्यभावस्यापि नियतविषयत्वान्न साक्षादनिर्वचनीयार्थसाधकताप्रसक्तिस्तथाऽपि सत्त्वासत्त्वाभावसाधनद्वारा साऽस्तीति पराभिप्राय इत्याह **वियदादावित्यादिना** । स्वरीत्या प्रत्यक्षेणेति परीत्याऽनुपलम्भेन वेत्युक्तं व्यवहारे भट्टनय इति परेणाङ्गीकारादिति द्रष्टव्यम् ।

सु० — **एवमनुमानादीनां प्रत्येकं दूषणमभिधाय साधारणं दूषणमाह** प्रत्यक्षादिति । **प्रत्यक्षेण गगनादौ सत्त्वमेव शुक्तिरजतादौ त्वसत्त्वमेव निश्चीयते । सद्गगनम्, अस्ति मेऽज्ञानम्, असदेव रजतं प्रत्यभादिति सर्वलोकसाक्षिणः साक्षात्कारिप्रत्ययस्य दुरपह्नवत्वात् । अतस्तद्-निर्वाच्यतायामाशङ्क्यमानान्यनुमानादीनि प्रत्यक्षापहृतविषयाणीति 'नोभयं चेन्न सिद्धं तदि'ति युक्तम्** ।

यद्वा **जीवेश्वरयोर्भेदो मिथ्या भेदत्वादित्याद्यनुमानस्य दूषणान्तरमाह** प्रत्यक्षादिति । **जीवेश्वरभेदस्यावधार्यत इति शेषः । ततः प्रत्यक्षविरुद्धत्वेन कालात्ययापदिष्टत्वं जीवेश्वरभेद-मिथ्यात्वादिसाधकानुमानस्येति भावः** ।

शे० — गगनादावित्यादिपदेनाज्ञानादिपरिग्रहः । ननु गगनादे रजतादेश्च सत्त्वासत्त्वग्राहकं प्रत्यक्षमेव नास्ति । अस्तु वा तत्; तावताऽप्यनुमानादेः को दोषः । एतद्व्युत्पादनस्य च कोपयोग इत्याशङ्काः परिहरन्सत्त्वासत्त्वग्राहकं प्रत्यक्षमभिनयेन दर्शयति **सद्गगनमिति** । एतच्च पूर्वप्रतिज्ञात-वियदादिप्रपञ्चपक्षकानिर्वचनीयत्वसाधनस्य बाधोपदर्शनायोक्तम् । अविद्यापक्षकतत्साधनस्य तल्लाभायाह **अस्तीति** । अत्र टीकायामस्ति मेऽज्ञानमित्येव पाठो मूलकोशेषु दर्शनान्न त्वस्ति मेयज्ञानमित्येवं रूपः । मूलकोशेष्वदर्शनात् । रजतपक्षकतत्साधनस्य बाधलाभायाह **असदेवेति** ॥ **सर्वलोकसाक्षिण इति** । सर्वलोकानुभवसिद्धस्येत्यर्थः ।

प० — **सद्गगनमस्ति मेऽज्ञानमिति** साक्षिप्रत्यक्षोपन्यासः । तथाच गगनादिप्रपञ्चेऽविद्यायां शुक्तिरजते वा नानिर्वाच्यत्वमभावप्रमाणासिद्धयतीति भावः । अस्ति मे ज्ञानमिति वा

पदच्छेदः ॥ बाह्याभ्यन्तरप्रपञ्चसत्त्वे प्रत्यक्षोपन्यासः **सद्गगनमस्ति मे ज्ञानमिति** उत्तरवाक्यघटनाय योजनान्तरमाह **यद्वा जीवेश्वरयोरिति** । साद्ध्याप्रसिध्यादेः प्रागुक्तत्वादन्तरशब्दः ।

**या० — अस्ति मेऽज्ञानमिति** । पक्षीकृते भेदे वा प्रपञ्चे वाऽविद्यायां वेति पूर्वमुक्तत्वादविद्यां पक्षीकृत्य यदाऽनिर्वचनीयत्वं साध्यते तदा बाधोपपादनायेदमित्यवगन्तव्यम् ।

**सु० — स्यादेतत् । ईश्वरस्तावन्न प्रत्यक्षसिद्धः । शास्त्रयोनित्वस्याभ्युपगतत्वात । नापि सर्वे जीवाः । परात्मनां परात्मानं प्रति प्रत्यक्षत्वस्यानभ्युपगमात् । न चाप्रत्यक्षवस्तु-भेदः प्रत्यक्षसिद्धो दूरे तत्सत्यत्वमित्यत आह** शास्त्रेति ।

**अनु० —** शास्त्रगम्यपरेशानाद्भेदः स्वात्मन ईयते ॥

**ईयते प्रत्यक्षेणेति शेषः । उक्तं तावन्नैक एव भेदोऽनेकत्र व्यासज्य वर्तते किन्त्वेक-प्रतियोगिकोऽपरधर्मिक इति । तत्प्रत्यक्षतायां च धर्मिण एव प्रत्यक्षतोपयुज्यते । प्रतियोगिन-स्त्ववगममात्रं, तथा लोके दर्शनात् । तत्रेश्वरस्यात्मान्तराणां चाप्रत्यक्षत्वेन तद्धर्मिकस्य भेदस्य प्रत्यक्षेण ज्ञातुमशक्यत्वेऽपि परमेश्वरप्रतियोगिकः स्वात्मधर्मिको भेदः प्रत्यक्षेण ज्ञातुं शक्यत एव । स्वात्मनः प्रत्यक्षत्वात् । परेशानस्य च शास्त्रेणावगतत्वात् । यस्तु शास्त्रेणेश्वरं न जानाति तेन मा विज्ञायि तत्प्रतियोगिकः स्वात्मनो भेदः । शास्त्राद्विदितेश्वरस्यैव प्रत्यक्षं ततः स्वात्मनो भेदे प्रमाणमुक्तमिति ।**

**शे० — न चाप्रत्यक्षवस्तुभेद इति** । भेदो ह्यनेकसम्बन्धितयाऽनुभूयमानत्वादनेकाश्रितः । न चानेकाश्रितोऽपि सामान्यादिवत्प्रत्येकपरिसमाप्तः । तथा सत्येकगोव्यक्त्युपलम्भेऽपि गोत्वोपलम्भ-वद्घटपटान्यतरप्रतीतावेव भेदप्रतीतिप्रसङ्गात् । किन्तु द्वित्वादिवद्व्यासज्यवृत्तिरेव । तस्य च प्रत्यक्षतायां धर्मिप्रत्यक्ष नियामकं प्रकृते च तन्नास्तीति न भेदप्रत्यक्षं सम्भवतीत्यर्थः ।

ननु चोक्तरीत्याऽनेकधर्मस्य भेदस्य धर्म्यप्रत्यक्षतायां कथं प्रत्यक्षता स्यादित्यतो भवेदेतदेवं यदि भेदस्योभयधर्मत्वं स्यान्न चैतदस्तीत्याह **उक्तं तावदिति** । वैशेषिकपरीक्षायां 'संयोगश्च विभागश्च भेदश्चैव पृथक् पृथगि'त्यादिनेति शेषः । एकैकपर्यवसितत्वे घटत्वादिवदेकैकव्यक्त्युपलम्भेऽपि प्रतीतिः स्यादिति शङ्कते **किन्त्विति** । अनेकधर्मत्वाभावेऽप्यनेकसंबन्धित्वान्नैकैकज्ञानदशायां तत्प्रति-भास इत्याशयेन समाधत्ते ॥ **एकप्रतियोगिकोऽपरधर्मिक इति** । नन्वस्तु भेदस्यैकधर्मिकत्वमपर-प्रतियोगिकत्वं च तथाऽपि ससंबन्धिकपदार्थप्रत्यक्षे संबन्धितावच्छेदकप्रकारकसंबन्धिद्वयप्रत्यक्षस्य संयोगादिप्रत्यक्षे कारणत्वकल्पनाद्धर्मिप्रतियोगिप्रत्यक्षाभावे कथं भेदप्रत्यक्षं स्यादित्यतः संयोगादौ तथा दर्शनेऽपि न भेदप्रत्यक्षे तदुभयप्रत्यक्षापेक्षा । तथा सति स्तम्भः पिशाचो न भवतीति स्तम्भधर्मिकपिशा-

चप्रतियोगिकभेदस्याप्रत्यक्षत्वापातात् । किन्तु फलबलेन धर्मिप्रत्यक्षप्रतियोगिस्मरणयोरेव तत्र कारणत्वमिति तत्सद्भावाद्भवेदेव स्वात्मधर्मिकेश्वरप्रतियोगिकभेदप्रत्यक्षमित्याशयवानाह **प्रत्यक्षतायां त्विति** ।

**प० — परात्मनां** स्वान्यजीवानाम् ॥ **उक्तं तावदिति** । वैशेषिकाधिकरणे 'संयोगश्च विभागश्च भेदश्चैव पृथक्पृथक् । अन्योन्यप्रतियोगेन ह्युभयोरपि दृश्यत' इत्यादिनेति भावः । येन धर्मि(द्वयस्यापि) प्रत्यक्षमावश्यकं स्यादिति योज्यम् ॥ **तथा लोक इति** । स्तम्भः पिशाचो नेत्यादौ दर्शनादित्यर्थः ।

**या० —** ननु स्वात्मधर्मिकोऽपीश्वरभेदो न प्रत्यक्षः प्रत्यक्षाप्रत्यक्षधर्मत्वाद्वायुवनस्पतिसंयोगवदित्याशङ्कायामत्रासिद्धिमाह **उक्तं तावदिति** । 'संयोगश्च विभागश्च भेदश्चैव पृथक् पृथगि'त्यत्रेति शेषः । **व्यामज्य वर्तत इति** । येन प्रत्यक्षाप्रत्यक्षभेदस्य अप्रत्यक्षत्वं स्यादिति भावः ॥ **तथा लोक इति** । स्तम्भः पिशाचो न भवतीति स्तम्भधर्मिकपिशाचप्रतियोगिकभेदस्य प्रत्यक्षतादर्शनादित्यर्थः ।

**सु० — तथाऽपि कथमनुमानस्य कालात्ययापदिष्टत्वं भेदग्राहकस्य प्रत्यक्षस्य प्राबल्यानिरूपणादित्यत** आह अनुभूतीति ।

**अनु० —** अनुभूतिविरोधेन कथमेकत्वमुच्यते ॥

**अत्रानुभूतिशब्देन साक्षी गृह्यते** । उच्यते **अनुमीयते** । **परार्थानुमानप्रयोगस्य** वचनात्मकत्वादुच्यत **इत्युक्तम्** । **अनुमानेनेत्यध्याहारो वा** । **एतदुक्तं भवति** । **साक्षिप्रत्यक्षं खलु स्वात्मनः परमात्मभेदग्राहकमिष्टम्** । **तच्चानुमानतः प्रबलमेव** । **तत्स्वरूपप्रामाण्ययोर्धर्मिकोटिनिविष्टस्य जीवस्य च ग्राहकत्वेनोपजीव्यत्वात्** । **अतस्तद्विरोधेन कारणेन जीवब्रह्मणोरेकत्वं नानुमातुं शक्यत इति** ।

**शे० — प्राबल्यानिरूपादिति** । तदनिरूपणेऽपि प्रत्यक्षस्यानुमानादिबाधकतायामनुमानादिकमेव प्रत्यक्षबाधकं स्यादित्यतिप्रसङ्गादिति भावः । नन्वत्राप्यनुभवविरोधमात्रमुच्यते न तु प्रत्यक्षस्यानुमानादिबाधकत्वोपयोगिप्राबल्यमिति कथमनेनोक्तशङ्कापरिहार इत्यतोऽत्रानुभूतिशब्देन तत्सूचनान्नानुपपत्तिरित्यभिप्रेत्यानुभूतिशब्दं साक्षिपरतया व्याचष्टे **अनुभूतिशब्देनेति** । अनुभूतिशब्दस्य साक्षिपरत्वमात्रेण कथमुक्तशङ्कापरिहार इत्यत आह **एतदिति** ।

**सु० — अस्तु साक्षिप्रत्यक्षमनुमानात्प्रबलं तस्येश्वरात्स्वात्मनो भेदग्राहकत्वं तु कुतो निश्चितं येनानुमानं बाधितविषयं स्यादित्यत** आह किञ्चिदिति ।

**अनु० —** किञ्चित्कर्ता च दुःखीति सर्वैरेवानुभूयते ॥
सर्वज्ञो भगवान्विष्णुः सर्वशक्तिरिति श्रुतः ॥

उपलक्षणमेतत् । अल्पज्ञोऽल्पशक्तिश्चेत्यपि पूर्वार्धे ग्राह्यम् । तथा सर्वकर्ता निर्दुःख इत्यपरार्धे । अनुभूयते स्वात्मेति शेषः । श्रुतः 'यः सर्वज्ञः', 'पराऽस्य शक्तिः', 'स हि सर्वस्य कर्ता', 'निरनिष्ट', इत्यादाविति शेषः । अयमभिसन्धिः । यो हि यमर्थमव(धि)गम्य तद्विरुद्धधर्माणं यमध्यक्षीकरोति स तस्मात्तस्य भेदं प्रत्यक्षतः पश्यत्येवेति सर्वसाक्षिकम् । यद्यपि भेदः प्रत्यक्षसिद्धस्तथाऽपि प्रतियोगिनो वैधर्म्यदर्शनं प्रत्यक्षसाचिव्यमाचरतीति न दोषः । दृष्टं हि रत्नतत्त्वसाक्षात्कारे शास्त्रीयलक्षणज्ञानस्य साचिव्यम् । तदिहापि शास्त्रावगतसार्वज्ञादिमदीश्वरः पुरुषः स्वात्मानं तद्विरुद्धाल्पज्ञत्वादिधर्मवन्तं साक्षिणाऽनुभवंस्ततः स्वात्मनो भेदं कथं नाध्यक्षीकुर्यादिति । अस्त्वेकस्य जीवस्येश्वराद्भेदः साक्षिसिद्धः । तथाऽपि तं विहायान्यत्रेश्वराभेदानुमाने न प्रत्यक्षबाध इत्यत उक्तं सर्वैरेवेति । एकप्रत्यक्षबाधाभावेऽपि तत्तत्प्रत्यक्षबाधो दुष्परिहर इति भावः ।

शे० — सर्वज्ञो भगवान्विष्णुः सर्वशक्तिरित्युत्तरत्रामिधानात्किञ्चित्कर्तेत्युपलक्षणमित्याह **अल्पज्ञ इति** । किञ्चित्कर्तेत्यादिपूर्वग्रन्थानुसारेण सर्वज्ञ इत्यादिकमुपलक्षणमित्याह **तथेति** ।

प० — भेदग्राहकत्वे विवदमानं प्रति भेदग्राहकोपन्यासो विमत इत्यत आह **अयमभिसन्धिरिति** । प्रतियोगिन इति पञ्चमी ॥ **साचिव्यमिति** । सहायत्वमित्यर्थः ।

या० — **सर्वसाक्षिकमिति** । प्रत्यक्षे धर्मिणि, भेदकधर्मसाक्षात्कारस्य भेदसाक्षात्कारव्याप्तत्वादिति भावः । **प्रत्यक्षसिद्ध इति** । तथा च विरुद्धधर्माध्यक्षीकरणं व्यर्थमित्यर्थः । **वैधर्म्यदर्शनं** विरुद्धधर्मदर्शनम् । **साचिव्यमिति** । तत्कोटिव्याप्यदर्शनस्य तत्कोटिप्रत्यक्षसहकारित्वादिति भावः ।

श्री० **यद्यपि भेद इति** । तथा च विरुद्धधर्माध्यक्षीकरणं व्यर्थमित्यर्थः ।

सु० — ननु जीवं पक्षीकृत्येश्वराभेदसाधने भवेदयं प्रत्यक्षविरोधः । न चैवमनुमीयते । किन्त्वीश्वरं पक्षीकृत्य जीवाभेद इत्यत आह अनुभूताद्धीति ।

अनु० — अनुभूताद्धि भेदेन श्रुतिरेषा वदत्यमुम् ॥

ईश्वरं पक्षीकुर्वता हि तत्सिद्धिरवश्यं वक्तव्या । न च प्रत्यक्षादिना स सिध्यतीति श्रुतिरेव तद्ग्राहिका ग्राह्या । एषा ( हि) च धर्मिप्रमाणभूता 'यः सर्वज्ञ' इत्यादिका श्रुतिः अमुमीश्वरमल्पज्ञत्वादिनाऽनुभूताज्जीवाद्भेदेन वदति । तस्मात्प्रत्यक्षबाधाभावेऽप्युपजीव्यश्रुतिविरोधेन कालात्ययापदिष्टता दुष्परिहरैव । सदावगताल्पज्ञत्वादिमज्जीवस्वरूपं प्रति सार्वज्ञादिमदीश्वरस्वरूपं प्रतिपादयन्ती श्रुतिस्ततस्तं भिन्नमेव प्रतिपादयति । अनुभवस्यापलपितुमशक्यत्वात् । अनेनैवोभयपक्षीकारोऽपि परास्तः । उपजीव्यप्रत्यक्षश्रुतिबाधितत्वादिति ।

शे० — **न च प्रत्यक्षादिना स सिध्यतीति** । प्रत्यक्षस्यापाततस्तदभावावेदकत्वेनानुमानस्य च प्रत्यनुमानपराहतत्वेन तत्साधकत्वासंभवादिति भावः ।

प० — **उभयेति** । जीवेश्वरावभिन्नावित्यपि प्रयोगोऽपास्त इत्यर्थः । अनेनैवेत्युक्तं व्यनक्ति **उपजीव्येति** । एतत्प्रत्यक्षत्वश्रुत्योर्विशेषणम् ।

श्री० — **प्रत्यक्षश्रुतीति** । प्रत्यक्षं च श्रुतिश्च ताभ्यां जीवेश्वरग्राहकत्वेनोपजीव्याभ्यां बाधितत्वादित्यर्थः ।

सु० — **एवमनुमानं निराकृत्येदानीं तद्योऽहमित्यादिश्रुतिं निराकरोति** उपजीव्येति ।

अनु० — उपजीव्यविरुद्धं तु कथमैक्यं श्रुतिर्वदेत् ॥

**तुशब्दो विशेषार्थः । दुष्टं ह्यनुमानमप्रमा(णमेव भ)णं भवति । श्रुतेस्तु प्रतीतार्थप्रच्यावनमात्रमिति । ऐक्यं जीवेश्वरयोः । श्रुत्या हि यदि जीवमनूद्य तस्येश्वरैक्यं बोध्यते तदा जीवग्राहकं साक्षिप्रत्यक्षमुपजीव्यं स्यात् । तच्च भेदग्राहकमित्युक्तमित्युपजीव्यविरोधः । यदि चेश्वरानुवादेन तस्य जीवाभेदो विधीयते तदा यः सर्वज्ञ इत्यादिकं श्रुत्यन्तरमेवोपजीव्यं भवेत् । तच्च भेदग्राहकमित्युक्तत्वादुपजीव्यविरोध एव । यदि चोभयानुवादेनाभेदमात्रबोध्यं तदोभयमुपजीव्यमित्युपजीव्यप्रमाणविरोधः स्फुट एव । यद्यप्येतत्सर्वं प्रथमसूत्र एवोक्तम् । तथाऽपि प्रपञ्चनार्थं पुनरारभ्यत इत्यदोषः ।**

शे० — तुशब्दोक्तविशेषमेव दर्शयति **दुष्टमिति** ॥ **प्रथमसूत्र एवोक्तमिति** । 'सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः । न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चने'त्यादिनेति शेषः ॥ **प्रपञ्चनार्थमिति** । प्रपञ्चनं चात्र 'अप्रामाण्यं यदा भेदवाचकस्य भविष्यती'त्यादिनोपजीव्यस्यैव प्राबल्यसमर्थनादिनेत्यवधेयम् ।

प० — **प्रथमसूत्र एवेति** । जिज्ञासासूत्र एव 'सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः । न ब्रह्मतां वदेद्वेदो जीवस्य हि कथंचनेत्यादिनेति भावः ।

या० — **प्रथमसूत्र एवेति** । 'सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः । न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चने'त्यादिनेति शेषः ।

सु० — **ननूपजीव्यविरोधेनोपजीवकं बाध्यत इत्यत्र किं नियामकम् । येन प्रत्यक्षागमविरोधादनुमानागमयोरप्रामाण्यमुक्तम् । उच्यते । इह हि भेदाभेदविषययोरुपजीव्योपजीवकयोरुभयोरपि प्रामाण्यमेव वाऽप्रामाण्यमेव वा । एकस्य प्रामाण्यमपरस्याप्रामाण्यं वा ।**

तत्राप्युपजीवकस्य प्रामाण्यमुपजीव्यस्याप्रामाण्यं वा । उपजीव्यस्य प्रामाण्यमुपजीवकस्याप्रामाण्यमिति पक्षाः सम्भवन्ति । तत्र न तावत्प्रथमः । विरुद्धयोः प्रामाण्यानुपपत्तेः । उपपत्तौ वा वस्तुनो द्वरूप्यापत्तेः । भ्रान्तिबाधव्यवस्थाऽभावप्रसङ्गाच्च । न च भेदाभेदाभ्यामुपपत्तिः । निराकरिष्यमाणत्वात् । असार्वत्रिकत्वाच्च । न चानैकान्तवादेन निस्तारः । द्वयोरपि सावधारणत्वासम्भवात् । नापि द्वितीयः वस्तुनो निस्स्वभावत्वापत्तेः । न चानिर्वाच्यतास्वीकारेण निर्वाहः । ब्रह्मण्यपि सम्भवादिति पक्षद्वयमतिस्फुटदोषत्वादनिराकृत्य तृतीयं दूषयति अप्रामाण्यमिति ।

**अनु०**— अप्रामाण्यं यदा भेदवाचकस्य भविष्यति ॥
स एव धर्मिणो ग्राही तदभेदः कथं भवेत् ।

भेदवाचकस्यागमस्येत्युपलक्षणम् । भेदग्राहिणः प्रत्यक्षस्येत्यपि द्रष्टव्यम् । एवं तदा स एवेत्यत्रापि व्याख्यातव्यम् । धर्मिणो जीवस्येश्वरस्य च । इतिशब्दोऽध्याहार्यः । कथं बोध्य इति शेषः । इदमुक्तं भवति । यद्यज्ञानादिविशिष्टस्य जीवस्य सार्वज्ञादिविशिष्टस्य परमात्मनो ग्राहकं प्रत्यक्षमागमवाक्यं वाऽप्रमाणं स्यात् । तदा जीवेश्वरयोरसिद्धौ तत्त्वमस्याद्यागमैरनुमानैश्च तदभेदबोधनं न स्यात् । निर्विषयत्वात् । तथा च कस्य विरोधात्प्रत्यक्षादेरप्रामाण्यं स्यात् । ज्ञापकश्चायमर्थो न कारकः । अखण्डार्थबोधनमपि लौकिकवाक्यन्यायमनुसृत्य पश्चाल्लक्षणया परेणाभ्युपगतम् । न पुनरेवमेव । अलौकिकप्रकारस्य बोधानङ्गत्वात् । तस्मादुपजीवकविरोधेनोपजीव्यस्याप्रामाण्यायोगात्परिशेषतश्चतुर्थप्रकार एव च सिध्यतीति ।

**शे०**— **भ्रान्तीति** । तत्राप्युभयोः प्रामाण्यसंभवादिति भावः । ननु विरुद्धयोर्द्वयोः प्रामाण्ये वस्तुनो द्वैरूप्यापादानमिष्टमेव । मया जीवेश्वरयोर्भेदाभेदाङ्गीकारादित्याशङ्क्य निराकरोति **न च भेदाभेदाभ्यामिति** ॥ **निराकरिष्यमाणत्वादिति** । 'अत एव चोपमा सूर्यकादिवदि'त्यधिकरण इति शेषः । जीवब्रह्मणोर्भेदाभेदाङ्गीकारेण तद्विषयकयोरुभयोः प्रामाण्योपपत्तावप्युपजीव्योपजीवकयोरुभयोरपि सर्वत्र प्रामाण्यानुपपत्तिरेव सर्वत्रोपजीव्योपजीवकयोर्भेदाभेदविषयत्वस्यासंभवेन तदभ्युपगमेनोभयप्रामाण्योपपादनानुपपत्तेरित्याह **असार्वत्रिकाच्चेति** । यद्वा वह्न्यावुपजीव्योपजीवकप्रमाणविषययोर्गौण्यानौण्ययोरुभययोरङ्गीकर्तुमशक्यत्वेन तद्विषयतयोभयप्रामाण्योपपादनस्याशक्यत्वादित्यर्थः । ननु न तत्रोपजीव्योपजीवकयोर्भेदाभेदाभ्युपगमेन प्रामाण्योपपादनासंभवोऽनैकान्त्यवादे सर्वत्र भेदाभेदसत्त्वादित्याशङ्क्य निषेधति **न चेति** । भेदाभेदप्रमाणयोः सावधारणत्वादभेदभेदनिषेधकत्वेन भेदाभेदाङ्गीकारानुपपत्त्या न ताभ्यामुभयप्रामाण्यसिद्धिरित्याह ॥ **द्वयोरपीति** । ननूपजीव्योपजीवकयोरुभयोरप्रामाण्येऽपि

न वस्तुनो निस्स्वभावत्वमाद्यते । अनिर्वचनीयत्वेन सस्वभावत्वसंभवादित्याशङ्क्य निषेधति **न चेति ॥ ब्रह्मण्यपि संभवादिति ।** विरुद्धयोरुपजीव्योपजीवकप्रमाणयोरिति शेषः । तथा च ब्रह्म मिथ्या पदार्थत्व द्घटादिवदित्यनुमानस्य तत्सत्यमित्यादिरागमो धर्मिग्राहकत्वादुपजीव्यस्तन्मिथ्यात्वानुमानं तूपजीवकमिति तदुभयाप्रामाण्ये ब्रह्मणोऽपि सदसद्विलक्षणत्वमापद्येतेति भावः ।

**एवमिति ।** यथा भेदवाचकपदं नागममात्रपरं किन्तु भेदग्राहिप्रत्यक्षपरमपीति व्याख्यातं तथा 'स एव धर्मिणो ग्राही'त्यत्रापि स एवेत्येतन्न धर्मिग्राह्यागममात्रपरं किन्तु धर्मिभेदग्राहिप्रत्यक्षपरमपीत्येवं व्याख्यातव्यमित्यर्थः । पूर्वार्धे यदेत्युक्तत्वात्तस्य तदेत्यनेन सापेक्षत्वाच्चदुत्तरार्धे तदेत्यस्य लाभ इत्यभिप्रेत्य तदेत्यनूदितम् । ननु साधकस्य स्वप्रवृत्तेः पूर्वं निर्विषयत्वं गुण एव, अन्यथा स्वप्रवृत्तेः पूर्वमेव स्वविषयस्य सिद्धत्वात्स्वव्यापारवैयर्थ्यापत्तेः । एवञ्च पूर्वं जीवेश्वरासिद्धावप्यस्त्वागमादिना तदभेदबोधनम् । निर्विषयत्वस्याप्रयोजकत्वादित्यतः सत्यं, कारके स्वप्रवृत्तेः पूर्वं विषयासत्त्वं गुण इति न तु ज्ञापके । धर्मिणि धर्मविशेषबोधनाय प्रवृत्तस्य तस्य धर्मिस्वरूपासिद्धौ धर्मविशेषबोधनरूपस्वकार्यस्य कर्तुमशक्यतया तदसिद्धेः स्वकार्यविघातकत्वेन तत्र दोषत्वात् । प्रकृतागमानुमानयोश्च ज्ञापकत्वात्तत्र निर्विषयत्वं दोष एवेत्याह **ज्ञापकश्चायमर्थ इति ।** केचित्तु ननु 'तदभेदः कथं भवेदि'ति मूले धर्म्यभावेन तदभेदाभावस्यैवापादितत्वात्स एवापाद्योऽस्तु किं बोध्य इति शेषपूरणेनेत्यतो वस्तुतः कारक एव कारकत्वाभावस्यापाद्यत्वादभेदागमस्य च ज्ञापकत्वात्कारकत्वाभावेन ज्ञापकत्वाभावस्यैव तत्रापाद्यत्वायुक्तमेव बोध्य इति शेषपूरणेनाबोधकत्वापादनमित्याशयेनाह ज्ञापकश्चायमर्थ इतीत्याहुः । अन्ये तु धर्म्यादिसिद्ध्यभावेऽपि धर्म्यादीनां सत्तामात्रेणैवानुमानादिप्रवृत्त्युपपत्तिर्भविष्यतीत्याशङ्क्य जीवो ब्रह्मणो न भिद्यते आत्मत्वाद्ब्रह्मवदित्यनुमानरूपो वा तत्त्वमसीत्याद्यागमरूपो वाऽर्थो ज्ञापक एव न कारको ज्ञापकश्च किञ्चिदनूद्य किञ्चिद्विधत्तेऽनुवादश्च सिद्धस्यैव संभवति । तथा च कारकस्य सत्तामात्रेण कार्यजनकत्वेऽपि ज्ञापकस्यानुमानादेर्धर्म्यादिसिद्ध्यधीनत्वात्तत्सिद्ध्यभावे न प्रवृत्तिः संभवतीत्याह ज्ञापकश्चेतीत्याहुः । ननु वेदान्तानामखण्डचिन्मात्रबोधकत्वेन तदभेदाबोधकत्वादभेदबोधनं न स्यादितीष्टापादनमित्यत आह **अखण्डार्थेति ।** अखण्डार्थबोधनमपि पश्चादभेदबोधनेन भेदभ्रमनिरासानन्तरं मुख्यार्थानुपपत्त्यादिप्रतिसन्धाने सति लक्षणयाऽभ्युपगतमिति संबन्धः । तत्र नियामकमाह **लौकिकेति** । सोऽयं देवदत्त इति वाक्येऽभेदबोधनेन भेदभ्रमनिरासानन्तरं मुख्यार्थानुपपत्त्यादिप्रतिसन्धाने सति लक्षणया देवदत्तस्वरूपमात्रपरताया दृष्टत्वात्तदनुसारेणेत्यर्थः ॥ **न पुनरेवमेवेति ।** लौकिकन्यायमननुसृत्याखण्डार्थनिष्ठत्वं नाभ्युपगतमित्यर्थः । तत्र हेतुमाह **अलौकिकस्येति ।** ततश्च भेदबोधनस्य प्रथमं सर्वथाऽभ्युपगमनीयत्वान्नेष्टापत्तिरिति भावः ।

स० — ननु वस्तुनो द्वैरूप्यस्येष्टत्वादुभयप्रामाण्ये तदापादनमयुक्तम् । जीवब्रह्मणोर्भेदाभेदाङ्गीकारेण तद्विषयकसाक्षिप्रत्यक्षश्रुत्योः प्रामाण्यसंभव दित्यत आह **न चेति ॥ निराकरिष्यमाणत्वादिति** । 'अत एव चोपमे'त्यादिना भेदाभेदयं निराकरिष्यमाणत्वादित्यर्थः । जीवब्रह्मणोर्भेदाभेदाङ्गीकारेण तद्विषयकयोरुभयोः प्रामाण्योपपत्तावपि उपजीव्योपजीवकयोरुभयोः सर्वत्र प्रामाण्यानुपपत्तिरेव । सर्वत्र भेदाभेदविषयकत्वस्योपजीव्योपजीवकयोरभावेन तत्र भेदाभेदाभ्युपगमेन प्रामाण्योपपादनानुपपत्तेरित्याह **असार्वत्रिकत्वाच्चेति** । ननु तत्रोपजीव्योपजीवकयोर्भेदाभेदविषकत्वेन प्रामाण्यासंभवेप्यनैकान्तवादे नित्यत्वानित्यत्वविषयत्वस्य च सत्त्वाविषयकत्वस्य वा सत्त्वेन ताभ्यामेव प्रामाण्योपपत्तिरित्याशङ्कते **न चेति** । भेदप्रमाणस्य सावधारणत्वेनाभेदनिषेधकत्वादभेदप्रमाणस्यापि तथात्वेन भेदनिषेधकत्वेन भेदाभेदाङ्गीकारानुपपत्त्या न ताभ्यामुभयप्रामाण्यसिद्धिरित्याह **द्वयोरपीति ॥ एवमिति** । यथा भेदवाचकस्येत्यस्य भेदग्राहिप्रत्यक्षोपलक्षकत्वं तथा स एव धर्मिणो ग्राहीत्यत्रापि प्रत्यक्षोपलक्षणं द्रष्टव्यम । अत्र पूर्वार्धे यदेत्युक्तत्वात्तदेत्यध्याहारः । **निर्विषयकत्वात्** निधर्मिकत्वादित्यर्थः । ननूपजीवकविरोधेनोपजीव्यस्याप्रामाण्ये तेन धर्मिसिद्ध्युपजीवकीभूतागमस्याभेदबोधकत्वाभावापादनं किमर्थं वर्ण्यते 'तदभेदः कथं भवेत्' इति यथाश्रुतार्थेऽनुपपत्त्यभावेन बोध्य इति शेषपूरणे नियामकाभावादित्यतो वस्तुतः कारक एव कारकत्वाभावस्यापाद्यत्वादभेदागमस्य च ज्ञापकत्वेन कारकत्वाभावात् ज्ञापके च ज्ञापकत्वाभावस्यैवापाद्यत्वादबोधकत्वापादनं युक्तमेवेत्याह **ज्ञापकश्चायमर्थ इति** ।

प० — **निराकरिष्यमाणत्वादिति** । अत एव चोपमेत्येतद्व्याख्यावसरे 'न च चित्त्वादभिन्नत्वं जीवस्येशवदाप्यते' इत्यादाविति योज्यम् । तथा च भेदाभेदग्रहणे शास्त्रद्वयप्रामाण्यं नोपेतुं शक्यमित्यर्थः । **असार्वत्रिकत्वाच्चेति** । उपजीव्योपजीवकभावस्थले सर्वत्र भेदाभेदोपगादेरपगमेन द्वयोरुपजीव्योपजीवकयोः प्रामाण्याङ्गीकारस्यासंभवादित्यर्थः ॥ **अनेकान्तवादेनेति** । सर्वत्रोपजीव्योपजीवकमानद्वया(र्थात्मकत्वेने,र्थवत्त्वेनेत्यर्थः ॥ **निस्तार इति** । उपजीव्योपजीवकयोर्विरोधस्येति योज्यम् । **न चानिर्वाच्यतेति** । उपजीव्योपजीवकयोरपि अमानत्वे तदुभयबोध्यार्थद्वयवैलक्षण्यलाभाद्वस्तुनः तस्यैवानिर्वचनीयत्वशब्दितत्वादिति भावः ॥ **ब्रह्मण्यपीति** । उपजीव्योपजीवकभावापन्नविरुद्धमानद्वयस्य ब्रह्मण्यपि संभवात्तत्र द्वयोरमानत्वे ब्रह्मणोप्यनिर्वाच्यत्वापत्तेरिति भावः । यदेति श्रवणाल्लब्धस्य तदेत्यस्यानुवादः ॥ **एवं तदा स एवेत्यत्रापीति** । स एको भेदसाक्षात्कारो वा भेदवाचको वेति व्याख्येयमित्यर्थः । स एव धर्मिग्राहीत्युक्तस्य हेतुत्वं व्यक्तीकुर्वन्नभिप्रायमाह **इदमुक्तमिति** । तृतीयपादतात्पर्यम् **तदा जीवेश्वरयोरसिद्धाविति** । ननु तदभेदः कथं भवेदित्यस्य तदभेदः कथं बोध्यत इति कुतो व्याख्यायते यथान्यास (समे)एवास्त्वित्यत आह **ज्ञापकश्चायमर्थो न कारक इति** ।

'भेदवाचकस्ये'ति 'धर्मिणो ग्राही'त्याभ्यां शब्दाभ्यामुक्तो यः धर्मिग्राहिप्रत्यक्षादिरूपोऽर्थः स भेदादेर्ज्ञापक एव न तु कुलालादेरिवोत्पादकः । अतस्तदप्रामाण्ये निर्विषयत्वादभेदबोधनमागमादिना न स्यादित्येवं व्याख्येयम् । न तु तदप्रामाण्ये निराश्रयत्वादभेदो न स्यादिति । तस्मादभेदपदमभेदबोधनपर्यन्तं व्याख्यातमित्यर्थ इत्येके । अयं धर्मिरूपोऽर्थो ज्ञापक एवाभेदादेर्न तु कारक इत्यर्थ इत्यन्ये । अध्याहृतहेत्वर्थकेतिशब्दान्तेन तृतीयपादेनोक्तोयमर्थः (इत्यपरे) । ज्ञप्तावेव हेतुर्न कृताविति स एव धर्मिग्राहीति हेतोरभेदबोधनं तत्त्वमसीत्यादिवाक्यादिभिः कथमेवं स्यादिति व्याख्या कार्येत्यर्थ इत्यपरे । वस्तुतस्तु धर्मिग्राहिणोऽप्रामाण्ये धर्मिण एवाभावान्निराश्रयोऽभेदः कथमेवं भवेदित्येवं व्याख्यायतामित्यत आह **ज्ञापकश्चेति** । न हि धर्मिग्राहिणोऽप्रामाण्ये धर्मिस्वरूपानिष्पत्तिर्भवति । तस्य धर्मिस्वरूपानिष्पादकत्वात् । किन्तु धर्मिग्राहकत्वात्तदनध्यवसाय एव । धर्मिणोऽनध्यवसाये च तदभेदबोधनं वाक्यादिना कथमेव भवेदिति व्याकर्तव्यं इत्यर्थ इति भावः । यद्वा वृश्चिककर्कटादेः उपजीव्यस्योपमर्देऽप्युपजीवकस्य तदपत्यस्योत्थानं दृष्टमित्यत आह **ज्ञापकश्चेति** । **अयमर्थः** । उपजीव्यरूपोऽर्थः । येन वृश्चिकादिवदुपजीवकेन बाध्येतेति भावः । ननु यः सर्वज्ञ इत्यादिकं लक्षणया चिन्मात्रपरं सदभेदबोधकमित्यतो विरोध एव नास्तीत्यत आह **अखण्डार्थ इति** । गङ्गायां घोष इत्यादौ मुख्यार्थधीपूर्वकत्वदर्शनात् । लक्षणायास्तद्रीत्या पूर्वं सार्वज्ञादिप्रतीतेरावश्यकत्वेन भेदस्यावश्यं प्रत्येतव्यत्वादिति भावः ॥ **अलौकिकेति** । आदावेव लाक्षणिकबोधप्रकारस्येत्यर्थः ।

**या०** — ननु विरुद्धयोर्द्वयोः प्रामाण्ये वस्तुनो द्वैरूप्यापादनमिष्टमेव । जीवेश्वरयोर्मया भेदाभेदयोरुभयोरप्यङ्गीकारादित्याशङ्क्य निराकरोति **न च भेदाभेदाभ्यामिति** ॥ **निराकरिष्यमाणत्वादिति** । 'अत एव चोपमा सूर्यकादिवदि'त्यत्रेति शेषः । **असार्वत्रिकत्वाच्चेति** । वह्नावुपजीव्योपजीवकमानविषययोरौष्ण्यानौष्ण्ययोरुभयोरङ्गीकर्तुमशक्यत्वेन तत्रोभयप्रामाण्योपपादनस्यासंभवादित्यर्थः ॥ **ब्रह्मण्यपि संभवादितीति** । विरुद्धयोरुपजीव्योपजीवकप्रमाणयोरिति शेषः । तथा च ब्रह्म मिथ्या पदार्थत्वाद्वियदादिवदित्यत्र तत्सत्यमित्याद्यागमो धर्मिग्राहकत्वादुपजीव्यः । तन्मिथ्यात्वानुमानमुपजीवकम् । तयोश्चोभयोरप्रामाण्ये ब्रह्म सदसद्विलक्षणमापद्येतेति भावः । ननु तदभेदः कथं भवेदिति मूले धर्म्यभावेऽभेदाभावस्यैवापाद्यत्वेनोक्तत्वात्स एवापाद्योऽस्तु किं बोध्य इति शेषपूरणेनेत्यत आह **ज्ञापकश्चायमर्थ इति** । अयं धर्मिरूपोऽर्थोऽभेदज्ञापक एव न कारकः । अभेदस्य धर्मिस्वरूपत्वेन धर्मिणस्तज्जनकत्वासंभवात् । विषयतया अभेदबोधजनकत्वसंभवाच्च । तथा च बोध्य इति शेषपूरणेनैव मूलं व्याख्येयमिति भावः । स्वामिनस्तु ननु दण्डचक्रादिसामग्र्या घटस्य तद्गतधर्माणां च युगपत्सिद्धिदर्शनात्

साधकव्यापारात्पूर्वं धर्म्यसिद्धिर्न दूषणमित्यतश्चाह ज्ञापकश्चेति । कारकाणां युगपदेव धर्मिधर्म-साधकत्वेऽपि न ज्ञापकानां तथात्वम् । अज्ञाते धर्मिणि कस्य चिद्धर्मस्य विधातुं निषेद्धुं चाशक्यत्वेन पूर्वं धर्मिसिद्धेरावश्यकत्वादिति भाव इत्याहुः । नन्वेवं तदभेदबोधनं न स्यादित्यत्रेष्टापत्तिः । वेदान्तानामखण्डचिन्मात्रबोधकत्वेन तदभेदाबोधकताया इष्टत्वादित्यत आह अखण्डार्थेति ॥ लौकिकेति । सोऽयं देवदत्त इत्यादौ लौकिके वाक्ये यो न्यायः प्रकार आदावभेदबोधनं तेन भेदभ्रमव्युदास तदनन्तरं मुख्यार्थे बाधप्रतिसन्धानमित्यादिरूपः तमनुसृत्येत्यर्थः । तथा च प्रथममवान्तरतात्पर्यविषयतयाऽभेदोऽपि बोध्य एवेति नेष्टापत्तिरत्रेति भावः । यद्वा स एव भेदवाचक एवागमो धर्मिणो ग्राहीत्ययुक्तम् । अखण्डार्थपरादेवागमाच्चिन्मात्ररूपधर्मिग्रहसम्भवादित्यत आह अखण्डार्थेति । अयं भावः । यः सर्वज्ञ इत्याद्यागमात्प्रथमप्रतीतो विशिष्टाकाररूपो मुख्यार्थ एवाभेदबोधने धर्मितया स्वीकार्यः । न तु तल्लक्ष्यं चिन्मात्रं, तस्य प्रथममनुपस्थितत्वात् । अन्यथाऽन्योन्याश्रयत्वप्रसङ्गात् । अभेदप्रमाणप्रवृत्तौ तेन यः सर्वज्ञ इत्याद्यागमस्य मुख्यार्थे बाधिते लक्षणया चिन्मात्रबोधकत्वं, तस्मिंश्च सति निर्विषयत्वाभावेनाभेदप्रमाणप्रवृत्तिरिति । अतः स एव धर्मिणो ग्राहीत्युपपन्नमिति ।

श्री० — यदि विरुद्धयोरपि प्रामाण्यं तर्हीदं रजतं नेदं रजतमिति ज्ञानयोरपि प्रामाण्यं स्यात् । इष्टापत्तिरिति चेत्तत्राह भ्रान्तीति । ननु भेदाभेदविषययोरुभयोरपि ज्ञानयोः प्रामाण्यमिष्टमेव । तर्हि वस्तुनो द्वैरूप्यं स्यादिति चेत् । जीवब्रह्मणोर्भेदाभेदाङ्गीकारेण तद्विषयकज्ञानयोः प्रामाण्यसम्भवादित्यत आह न चेति । ननु पुनरुभयोरपि भेदाभेदज्ञानयोः प्रामाण्यं युक्तमेव । भेदाभेदाङ्गीकाराज्जीवब्रह्मणोः । न च वक्ष्यमाणरीत्याऽनुपपत्तिः । एकदैव भेदाभेदाङ्गीकारे हि दोषः स्यात् । न चैवम् । किं नाम क्रमानैकान्तवादिरीत्या कालभेदेन । तथा च भेदस्यापि सत्त्वाद्युक्तं विरुद्धयोरपि तज्ज्ञानयोः प्रामाण्यमित्यत आह न चेति ॥ द्वयोरपीति । तथा च भेदप्रमाणस्य सावधारणत्वेनाभेदनिषेधकत्वादभेदप्रमाणस्यापि तादृशत्वेन भेदनिषेधकत्वात्तद्रीत्याऽप्युभयाङ्गीकारोऽयुक्त इत्यर्थः । यदेति श्रवणात्तदेत्यध्याहृतम् । स एवेत्यत्राप्येवमेव व्याख्येयमित्यन्वयः । उपलक्षणया भेदग्राहि प्रत्यक्षं ग्राह्यमित्यर्थः । तथा च स एव आगमादिरेवेत्यर्थः ॥ अनिर्वाच्यतेति । प्रमाणाप्रमाणवैलक्षण्येनानिर्वाच्यतेत्यर्थः । तदिहाप्युचितमित्यन्वयः ।

**सु० — भवेदेवोपजीवकादुपजीव्यं बलवत्तद्विरोधे चोपजीवकस्याप्रामाण्यम् । किन्नामास्ति तत्र विशेषः। अनेकप्रकारो ह्युपजीव्योपजीवकभावः । क्वचिद्धर्मिग्राहक तयेति)त्वेन । क्वचित्साध्यग्राहकतया । क्वचित्तद्ग्रहणोपयुक्ततया । क्वापि स्वरूपग्रहणेन । कुत्रचित्प्रामाण्योपपादनेन ।**

कचिद्व्याप्त्याद्यङ्गप्रतिपादकत्वेनेति । तत्र सर्वत्रोपजीव्यविरुद्धमुपजीवकं बाध्यत एव । आश्रयादिहीनस्योत्थानविरहापत्तेः । यत्र पुनः प्रतिषेधकस्योपजीवकस्य प्रतिषेध्यसमर्पकमुपजीव्यं भवति । तदा नायं न्यायः । तत्र चोपजीवकेनैवोपजीव्यस्य बाधः । निषेधार्थमेव तेन तदुपजीवनात् । दृष्टं हीदं रजतमिति ज्ञानस्य नेदं रजतमिति ज्ञानेन बाध्यत्वम् । तदिहापि यदुक्तमभेदप्रमाणयोरनुमानागमयोरुपजीव्याभ्यां प्रत्यक्षागमाभ्यां विरोधादप्रामाण्यमिति तदयुक्तम् । प्रत्यक्षागमयोरनुमानागमौ प्रति निषेध्यसमर्पकतयोपजीव्यत्वात् । भेदनिषेधो हि न तत्प्राप्तिं विना सम्भवति । तेनात्रोपजीवकविरोधिनोरुपजीव्ययोः प्रत्यक्षागमयोरेवाप्रामाण्यमुचितमित्यतो यः सर्वज्ञ इत्यादेरागमस्य तावदप्रामाण्यमपाकरोति अप्रामाण्यमिति ।

भेदवाचकस्य भेदकसार्वज्ञादिविशिष्टपरमात्मप्रतिपादकस्यागमस्य । एतदुक्तं भवति । समुत्थानवता खल्वनुमानेनागमेन वा विरोधिना यः सर्वज्ञ इत्याद्यागमस्याप्रामाण्यमेष्टव्यम् । अस्याप्रामाण्ये त्वनुमानादेरुत्थानमेव दुर्लभम् । दूरे तद्बाधनम् । परमात्मलक्षणस्य धर्मिणस्तदेकगम्यत्वात् । निराश्रयस्यानुमानादेः प्रवृत्त्यनुपपत्तिरिति ।

नन्वेवं तर्हि नेदं रजतमिति ज्ञानविरोधेन इदं रजतमिति ज्ञानस्याप्रामाण्यं न स्यात् । न न स्यात् । न हि नेदं रजतमिति ज्ञानं रजतताविशिष्टं वस्तु धर्मीकृत्योत्पद्यते किन्तु स्वरूपमात्रम् । सर्वमपि हि, ज्ञानं धर्मिणि प्रमाणं प्रकारे तु विपर्ययः । ('धर्मिण्यभ्रान्तमखिलं ज्ञानमिच्छन्ति वादिनः । विपर्ययं प्रकारे तु वदन्ति रजतादिके' इति सायनशिक्षाभाष्ये वार्तिकसारवचनम् । अत्रापि तृतीयाध्याये चतुर्थपादे 'तथाऽन्येप्याहुः सर्वं ज्ञानं धर्मिणि प्रमाणं प्रकारे तु विपर्यय इति) । तदत्रापीदं रजतमिति ज्ञानमिदमंशे प्रमाणमिति तत्सिद्धमिदमाकारमाश्रित्य प्रवृत्तेन बाधकप्रत्ययेन विरोधाद्रजतांशे पूर्वज्ञानस्याप्रामाण्यं युज्यत एव ।

शे०—ननु यद्युपजीव्यमुपजीवकाद्बलवत्तद्विरोधे चोपजीवकस्याप्रामाण्यं चाभ्युपगम्यते तदा भेदप्रत्यक्षागमयोरभेदानुमानागमौ प्रत्युपजीव्यत्वात्तद्विरोधिनोरुपजीवकयोरभेदानुमानागमयोरप्यप्रामाण्यं स्यादिति मदिष्टसिद्धिरित्याशङ्कते किन्नामेति । अभेदानुमानागमयोर्भेदग्राहकप्रत्यक्षागमयोश्च सत्यप्युपजीव्योपजीवकभावे न बाध्यबाधकभावः । तत्प्रयोजकस्योपजीव्योपजीवकभावस्यात्राभावात् । अत्र विद्यमानस्य च तदप्रयोजकत्वादित्यभिप्रेत्य बाध्यबाधकभावप्रयोजकमुपजीव्योपजीवकभावं तदनेकत्वप्रतिज्ञापूर्वकं दर्शयति अस्ति तत्र विशेष इत्यादिना ॥ कचिद्धर्मिग्राहकत्वेनेति । घटो व्यापकः सत्त्वादित्यत्राक्षस्य धर्मिग्राहकत्वेनोपजीव्यत्वमित्यर्थः ॥ कचित् साध्येति । नरशिरःकपालं शुचि प्राण्यङ्गत्वाच्छङ्खवदित्यत्र शब्दस्य शुचित्वग्राहकत्वेनोपजीव्यत्वमित्यर्थः ॥ कचित्तद्ग्रहणेति । वन्हिरनुष्णःपदार्थत्वादित्यत्रा-

नौष्ण्यप्रतियोग्युष्णत्वग्राहकस्य साध्यग्रहणोपयोगित्वेनोपजीव्यत्वमित्यर्थः ॥ **स्वरूपग्रहणेनेति** । लिङ्गशब्दस्वरूपग्रहणेनेत्यर्थः । मनो विभु ज्ञानासमवाय्याधारत्वादित्यत्रानुमानस्य लिङ्गग्राहकत्वेन । श्रोत्रस्य, श्रुतिस्वरूपमर्थश्चेति वक्ष्यमाणरीत्या साक्षिणो वा शब्दस्वरूपग्राहकत्वेनोपजीव्यत्वम् । यद्वा लिङ्गशब्दजन्यानुमितिशाब्दधीस्वरूपग्राहकत्वेनेत्यर्थः । तादृशं च साक्षिप्रत्यक्षमिति ज्ञेयम् ॥ **प्रामाण्येति** । अनुमितिशाब्दधीप्रामाण्यग्राहकत्वेन साक्षिप्रत्यक्षस्योपजीव्यत्वमित्यर्थः ॥ **व्याप्त्याद्यङ्गेति** । अनुमित्यङ्गव्याप्त्यादिग्राहकत्वेनेत्यर्थः । व्याप्त्यादीत्यादिपदेन शाब्दधीहेतुभूतयोग्यतादिपरिग्रहः ॥ **तत्र सर्वत्रेति** । धर्म्यादिग्राहकतयोपजीव्योपजीवकभावस्थल इत्यर्थः । आश्रयादीत्यादिपदेन साध्यहेतुव्याप्त्यादिपरिग्रहः । एवं बाध्यबाधकभावप्रयोजकमुपजीव्योपजीवकभावमुदाहृत्य तदप्रयोजकं तमुदाहरति **यत्र त्विति** ॥ **तत्र नायं न्याय इति** । उपजीव्येनोपजीवकस्य न बाध इत्यर्थः । न केवलमुपजीव्येनोपजीवकस्य तत्र बाधो नेत्येव किन्तु विपरीत एव तत्र बाध्यबाधकभावः । अतः प्रत्यक्षागमयोरभेदानुमानागमबाधकत्वाभावेऽपि ताभ्यामबाधितत्वात्स्वार्थनिश्चायकत्वं स्यादिति न शङ्कनीयमित्याशयेनाह **तत्रोपजीवकेनेति** । तत्रैव युक्तिमाह **प्रतिषेधार्थमेवेति** । इदानीं प्रकृते सङ्गमयति **तदिहापीति** ।

मूले भिद्यतेऽनेनेति भेदशब्दः करणसाधन इति भावेनाह **भेदकसार्वज्ञादीति** ।

**नन्वेवं तर्हीति** । समुत्थानवता खलु विरोधिना नेदं रजतमिति ज्ञानेनेदं रजतमिति ज्ञानस्याप्रामाण्यमेष्टव्यम् । अस्याप्रामाण्ये तु नेदं रजतमिति ज्ञानस्योत्थानमेव दुर्लभं दूरे तद्बाधनम् । रजतत्वविशिष्टधर्मिणस्तदेकगम्यत्वादिति वक्तुं शक्यत्वादित्यर्थः ।

प० — शङ्कते **भवेदेवेति** ॥ **धर्मिग्राहकतयेति** । यथा घटो विभुः द्रव्यत्वादित्यनुमानं प्रति घटग्राहिप्रत्यक्षम् । परमाणुरवयवी द्रव्यत्वादित्यत्रानुमानम् । अग्निहोत्रं न सुखहेतुः क्रियात्वादित्यत्रागम इत्यादि ज्ञेयम् ॥ **साध्येति** । पृथिवी उष्णस्पर्शवती द्रव्यत्वात्तेजोवदित्यत्र प्रत्यक्षम् । तूलपिण्डं गुरु पार्थिवत्वाद्घटवदित्यत्रानुमानम् । ब्रह्महिंसा धर्मः हिंसात्वात् अग्नीषोमीयपशुहिंसावदित्यत्र धर्मपदार्थबोधक आगम इत्यादि ज्ञेयम् ॥ **तद्ग्रहणेति** । धर्मिग्रहणोपयुक्ततया साध्यग्रहणोपयुक्ततयोपजीव्यमित्यर्थः । यथा परमाण्वादिग्रहणोपयुक्तं द्व्यणुकादिमाधकं गुरुत्वग्रहणोपयुक्तानुमानोपयुक्ततया व्याप्त्यादिग्रहणमित्यादि बोध्यम् ॥ **स्वरूपेति** । शब्दादिस्वरूपग्राहकं श्रवणादिप्रत्यक्षं शब्दादेरुपजीव्यम् ॥ **प्रामाण्येति** । दूरे जलादिज्ञानेप्रामाणादेः प्रामाण्योपपादनेन युक्त्याद्यनुसन्धानरूपपरीक्षोपजीव्येत्यादि ज्ञेयम् ॥ **व्याप्त्याद्यङ्गेति** । पर्वतोऽग्निमानित्यादौ प्रत्यक्षादिकं ज्ञेयम् ॥ **आगमस्य तावदिति** । प्रत्यक्षस्य तु । 'न दुःखानुभवः क्वापी'त्यादौ निराकरिष्यत इति तावच्छब्दः । अस्फुटत्वादभिप्रायमाह

**एतदुक्तमिति** । अप्रामाण्यं न स्यादिति कृतचोद्यस्योत्तरमाह **न न स्यादिति** । अप्रामाण्यं न स्यादित्येतन्न स्यादित्यर्थः । उपपादयति **न हीत्यादिना** युज्यत इत्यन्तेन ।

या० — **क्वचित्साध्यग्राहकतयेति** । यथा नरशिरःकपालं शुचि प्राण्यङ्गत्वाच्छङ्खवदित्यनुमाने शङ्खे शुचित्वग्राहकागमस्य साध्यग्राहकतयोपजीव्यत्वम् ॥ **क्वचित्तद्ग्रहणेति** । यथाऽनौष्ण्यानुमाने औष्ण्यग्रहणस्य प्रतियोगिज्ञानतया साध्यग्रहणोपयुक्तत्वेनोपजीव्यत्वम् ॥ **स्वरूपग्रहणेनेति** । यथाऽद्वैतानुमितिस्वरूपग्राहकं साक्षिप्रत्यक्षम् । यथा वाऽद्वैतागमस्वरूपग्राहकं श्रावणप्रत्यक्षम् ॥ **प्रामाण्योपपादनेनेति** । यथाऽऽगमादेर्निर्दोषत्वाध्यवसाय आगमाद्यर्थनिर्णये उपजीव्यः ॥

श्री० — **प्रत्यक्षागमयोरिति** । भेदग्राहकयोरित्यर्थः । **अनुमानागमौ प्रति** । अभेदसाधकानुमानागमौ प्रतीत्यर्थः ॥ **निषेध्यसमर्पकतयेति** । निषेध्यभूतभेदसमर्पकतयेत्यर्थः । कुत इत्यतोऽभेदस्य भेदनिषेधरूपत्वादित्यभिप्रेत्योपपादयति **भेदनिषेधो हीति** ॥ **अनुमानेनागमेन वेति** । अभेदसाधकेनेत्यर्थः ॥ **नन्वेवं तर्हीति** । समुत्थानवता खलु नेदं रजतमिति ज्ञानेन विरोध इदं रजतमिति ज्ञानस्याप्रामाण्यमेष्टव्यम् । अस्याप्रामाण्ये नेदं रजतमिति ज्ञानस्योत्थानमेव दुर्लभं दूरे तद्बाधनमित्यर्थः । **रजतताविशिष्टं वस्त्विति** । रजतत्वविशिष्टमिदंपदार्थमित्यर्थः **युज्यत एवेति** । तथा च यदंशे उपजीव्यत्वं तदंशे नाप्रामाण्यं यदंशेऽप्रामाण्यं तदंशे नोपजीव्यत्वमिति भावः ।

सु० — **नन्वनेनैव न्यायेनाभेदानुमानागमविरोधेन यः सर्वज्ञ इत्यादिश्रुतेरप्रामाण्यं शक्योपपादनम् । इयमपि श्रुतिर्ब्रह्मस्वरूपमात्रे प्रमाणमिति तन्मात्रमुपजीव्यानुमानागमाभ्यां सार्वज्ञादिभेदकधर्मवैशिष्ट्यांशेऽप्रमाणीकरिष्यते । तथा च यद्धर्मिग्राहकं न तद्विरोधोऽनुमानादेः । यच्च विरोधि न तद्धर्मिप्रमाणमित्यत** आह यदिति ।

अनु० — यत्स्वरूपग्रहे मानं तद्धर्मे न कथं भवेत् ॥

**यच्छ्रुतिवाक्यं ब्रह्मस्वरूपग्रहणार्थं मानमङ्गीक्रियते । तद्धर्मे सार्वज्ञादिधर्मवैशिष्ट्याकारे कथं न मानं भवेत् ।**

**अयमभिसन्धिः । शुक्तिरजतादिज्ञानं हीदमंशे प्रमाणं रजतवैशिष्ट्यांशे त्वप्रमाणमिति युक्तम् । वैशिष्ट्यांशस्य बाधकप्रमाणविरुद्धत्वात् । इदमाकारस्योत्तरत्राप्यनुवृत्तेः । इदं न रजतमिति बाधकज्ञानमुत्पद्यते न पुनर्नेदं न रजतं चेति । न चायमत्र न्यायः । स्वरूपवद्विशिष्टांशेऽपि बाधकाभावात् । न चाभेदानुमानागमौ बाधकौ । अन्योन्याश्रयत्वात् । बाधितत्वेन श्रुतेरप्रामाण्ये सत्युपजीव्यविरोधरहितस्यानुमानादेर्बाधकत्वं सति च तस्मिंस्तद्विरोधिन्याः श्रुतेरप्रामाण्यमिति ।**

**कथं चानुमानादेः श्रुतिबाधकत्वम् । न तावद्विरोधित्वमात्रेण । वैपरीत्यस्यापि सुवचत्वात् । नापि विरोध्युत्तरज्ञानत्वेन शुक्तिरियमिति ज्ञानानन्तरं रजतमिदमिति ज्ञानस्य दर्शनात् । अनुत्तरविरोधिज्ञानं बाधकमिदं तु सोत्तरमित्यपि न । कदाचिदनुत्तरस्यापि रजतज्ञानस्य सम्भवात् । किन्तु यावच्छक्ति परीक्षितमुत्तरं विरोध्यपरीक्षितस्य पूर्वस्य बाधकं भवति । न चैवमत्रास्तीति ।**

**शे०**— ननु धर्म्यंशे प्रमाणस्यापीदं रजतमिति ज्ञानस्य रजतत्ववैशिष्ट्यांशेऽप्रमाणवत्वद्धर्म्यंशे प्रमाणस्यापि यः सर्वज्ञ इत्यादिवाक्यस्य सार्वज्ञादिवैशिष्ट्याकारेऽप्रामाण्यं भवेदेव । अन्यथेदं रजतमिति ज्ञानस्यापि तद्वैशिष्ट्यांशे प्रामाण्यं स्यादविशेषादित्यत आह **अयमभिसन्धिरिति ॥ उत्तरत्रेति ।** बाधोत्तरकालमित्यर्थः । उत्तरत्रानुवृत्तिमेव दर्शयति **इदमिति ।**

नन्वेवं यः सर्वज्ञ इत्यादिश्रुतेरप्यभेदानुमानादिबाधकत्वं न स्यात् । अबाधितत्वेन श्रुतेः प्रामाण्ये सत्युपजीव्यविरोधादभेदानुमानादेरप्रामाण्यं सति च तस्मिन्बाधाभावाच्छ्रुतेः प्रामाण्यमित्यन्योन्याश्रयस्य तुल्यत्वात् । किञ्चैवं नेदं रजतमिति ज्ञानस्यापीदं रजतमिति ज्ञानबाधकत्वं न स्यात् । सिद्धे हीदं रजतमिति ज्ञानस्य वैशिष्ट्यांशेऽप्रमाणत्वे बाधाभावान्नेदं रजतमिति ज्ञानस्य प्रामाण्यसिद्धिः । सति च तस्मिंस्तद्विरोधाद्वैशिष्ट्यांशे तज्ज्ञानस्याप्रामाण्यसिद्धिरित्यन्योन्याश्रयस्य तुल्यत्वात् इत्यतो यावच्छक्तिपरीक्षायामित्यादिना वक्ष्यमाणपरीक्षितत्वापरीक्षितत्वविभागस्य बाध्यबाधकभावप्रयोजकताया अत्राभिमतत्वान्नाविशेषसिद्धिरिति भावेन परिशेषेण तं दिदर्शयिषुरनुमानादेः श्रुतिबाधकतां निराकरोति ॥ **कथं चेत्यादिना ॥ अनुत्तरस्यापीति ।** असञ्जातबाधस्यापीत्यर्थः ॥ **न चैवमत्रास्तीति ।** अयं भावः । यः सर्वज्ञ इत्यादिश्रुतेरपौरुषेयत्वेन निर्दोषत्वात्परीक्षितत्वमिति न बाध्यता संभवति । न च परीक्षायामनाश्वासो बीजाभावात् । इत्थमेव च दोषाभावादिज्ञानरूपपरीक्षायामनाश्वासे वेदस्यापौरुषेयत्वेन तज्ज्ञाने, त्वदुक्तानुमाने च योग्यानुपलम्भादिना हेत्वाभासज्ञानराहित्यज्ञाने अनाश्वासः स्यादिति प्रामाण्यतदाभासव्यवस्था न स्यात् । रजतादिवैशिष्ट्यज्ञानांशे तु न तस्य परीक्षितत्वम् । तथा हि । सजातीयविजातीयसंवादविसंवादभावाभावौ हि परीक्षा । न चात्र विशेषदर्शनजन्यरूप्यसमानविषयकज्ञानान्तररूपः सजातीयसंवादो वा रूप्यार्थक्रियादिरूपो विजातीयसंवादो वाऽस्ति प्रत्युत तद्विसंवाद एव । दृश्यते चोत्तरस्यैव संवादादिकमिति युक्तस्तत्र नेदं रजतमिति ज्ञानेनेदं रजतमिति ज्ञानबाधः । न त्वभेदानुमानादिना परीक्षितायाः श्रुतेर्बाध इति ।

यद्वा बाधकतावच्छेदकधर्मानाक्रान्तत्वाच्च नानुमानादेर्बाधकत्वमिति भावेन प्रसक्तप्रतिषेधपूर्वकं तदनाक्रान्ततां दर्शयितुं प्रतिजानीते **कथं चेति ।** इतिशब्दस्येत्ययमभिसन्धिरिति पूर्वेणान्वयः ।

प० — अनेनैव न्यायेनेत्यादिना कृतचोद्यस्य नेदं वाक्यं परिहारक्षममित्यतो भावमाह **अयमभिसंधिरिति** । अनुत्तरविरोधिज्ञानमित्यत्र बहुव्रीहिः ॥ **अनुत्तरस्यापीति** । असञ्जातबाधस्थल इति भावः ॥ **न चैवमत्रास्तीति** । भेदाभेदस्थल इत्यर्थः ॥

या० — **अनुत्तरस्यापीति** । असञ्जातबाधस्यापीत्यर्थः ।

श्री० — **इयमपि श्रुतिः** । 'यः सर्वज्ञ' इति श्रुतिः । उपजीव्य प्रवृत्ताभ्यामिति शेषः । **अनुमानागमाभ्याम्** अभेदसाधकाभ्याम् । नन्वत्रापि सार्वज्ञ्यादिवैशिष्ट्यांशस्य बाधकप्रमाणविरुद्धत्वेन तदंशेऽप्रामाण्यं किन्न स्यादित्याशंक्य निराकरोति **न चायमत्रेति** । **बाधकौ** सार्वज्ञादिवैशिष्ट्यांशस्य । **बाधितत्वेन** अभेदानुमानादिनेति शेषः । **श्रुतेः** 'यः सर्वज्ञ' इत्यस्याः । **अनुमानादेः** अभेदानुमानादेः ॥ **कथञ्चेति** । अभेदानुमानादेः यः सर्वज्ञ इत्यादिश्रुतिबाधकत्वं कथं केन प्रकारेणेत्यर्थः ॥ **वैपरीत्यस्यापीति** । तथा च यः सर्वज्ञ इत्यादिश्रुतेरपि विरोधित्वात्तयैवानुमानबाधोऽस्त्वित्यर्थः ॥ **नापीति** । तथा च श्रुतेरुपजीव्यत्वेन तत्प्रवृत्त्यनन्तरमेवानुमानस्य प्रवर्तनाद्विरोधिरूपं यदनन्तरमुत्तरज्ञानमनुमानजं तदेव श्रुतिबाधकमिति न वैपरीत्यमित्यर्थः । **दर्शनात्** तथा चेदं रजतमित्यस्यापि विरोधिरूपोत्तरज्ञानत्वेन शुक्तिरियमिति ज्ञानबाधकत्वमपि स्यादित्यर्थः । **अनुत्तरं** उत्तरत्र केनापि ज्ञानेनानुत्पत्तव्यमित्यर्थः । इदं शुक्तिरियमित्यनन्तरं जायमानमिदं रजतमिति ज्ञानम् सोत्तरं, नेदं रजतमिति ज्ञानस्योत्तरत्र जननादित्यर्थः । **संभवात्** असञ्जातबाधकस्थल इत्यर्थः । तथा च शुक्तिरियमिति ज्ञानं बाधकं स्यादित्युक्तं दूषणं सुस्थमिति हृदयम् ॥ **न चैवमत्रास्तीति** । अभेदानुमानागमादेः परीक्षितत्वाभावादित्यर्थः ॥

सु० — **न केवलं बाधकाभावसाम्यादयं विभागो न युक्तः किं तर्हीत्यत** आह एकेति ।

अनु० — एकविज्ञानविज्ञप्त्या द्वयं मानं भविष्यति ॥
न चेदेकं प्रमाणं तद्द्वयमप्यत्र नो भवेत् ॥

**एकविधमेवेदं यः सर्वज्ञ इत्यादिश्रुतिजनितं विज्ञानं, न पुनः शुक्तिरजतादिज्ञानमिव स्वरूपमात्रे प्रमाणं विशिष्टाकारे त्वप्रमाणमित्यनेकविधमित्येवं परीक्षासहकृतसाक्षिरूपविज्ञप्त्याऽपीदं ज्ञानद्वयं धर्मधर्मिद्वयगर्भं विशिष्टाकारं प्रत्यपि मानं भवत्येव । वक्ष्यते चायमर्थः प्रपञ्चेन । यद्वा द्वयं प्रतीतिद्वयं स्वरूपवद्धर्मेऽपीति योज्यम् ।**

शे० — **बाधकाभावसाम्यादिति** । स्वरूपवद्विशिष्टांशे बाधाभावादित्यर्थः । **अयं विभागः** स्वरूपमात्रे प्रमाणं विशिष्टाकारे त्वप्रमाणमिति विभागः । अस्त्वेवं बाधाभावादिना विशिष्टांशे सार्वज्ञा-

दिवाक्यस्य प्रामाण्यं तथाऽपि विशिष्टाकारस्य धर्मित्वासिद्ध्या न प्रतिज्ञातस्योपजीव्यप्रमाणविरोधस्य सिद्धिरित्यतो यथा नेदं रजतमिति ज्ञानं पुरोवर्तिनः स्वरूपमात्रं धर्मीकृत्य प्रवर्तते न तु रजतत्वविशिष्टाकारं न तथा तत्त्वमस्यादिवाक्यं प्रवर्तितुमर्हति । तथा सति बोध्यस्य ब्रह्माहमस्मीति बोधानुपपत्तिप्रसङ्गात् । किन्नाम सर्वज्ञत्वादिविशिष्टं ब्रह्मस्वरूपं दुःखादिविशिष्टं जीवस्वरूपं धर्मीकृत्यैव । तथा च विशिष्टाकारस्यैव धर्मित्वाद्धर्मिग्राहकप्रमाणविरोधो दुष्परिहर एवेत्यर्थः । 'सर्वं तदुपजीव्यैव प्रमाणं वर्तते यतः । कथं ब्रह्मेति तज्ज्ञेयं सर्वज्ञत्वादिलक्षणमि'त्यादिना तृतीयस्य चतुर्थे पादे आचार्येणैव वक्ष्यत इत्याह ॥ **वक्ष्यते चेति** । 'धर्मिग्राहिविरोधस्तु तस्मान्मानस्य दूषणमि'त्यादिनाऽनुपदमपि सङ्क्षेपेणास्यार्थस्य वक्ष्यमाणत्वात्प्रपञ्चेनेत्युक्तम् । द्वयशब्दस्य विशेषणविशेष्यरूपद्वयगर्भविशिष्टाकारपरत्वादस्वारस्यमित्यपरितोषादाह **यद्वेति** ।

**स०— वक्ष्यते चेति** । तृतीयस्य चतुर्थ इति शेषः । **तं च वक्ष्याम इति** । 'यावच्छक्तिपरीक्षायामुपजीव्यस्य बाधने । दोषो नाशोधिते दोष उपजीव्यत्वमस्त्वलमि'त्यादिनेत्यर्थः ।

**प०— अयं विभाग इति** । धर्म्यंशे प्रमाणं धर्मांशे त्वप्रमाणमित्ययं विभाग इत्यर्थः । धर्म्यंशे मानं चेद्धर्मांशेपि मानं कुत इत्यत आह **वक्ष्यते चेति** । न चेदेकमित्युत्तरवाक्य इति भावः ।

**या०— ननु यः सर्वज्ञ** इत्यादिश्रुतिजनितं ज्ञानं स्वरूपांशे प्रमाणं चेत्कुतो विशिष्टांशेऽपि प्रमाणमित्यत आह **वक्ष्यते चेति** । बाधाभावादिसाम्यादनङ्गीकारेऽतिप्रसङ्गसाम्याच्चेत्यनुपदमेव वक्ष्यत इत्यर्थः ॥ यद्वा यःसर्वज्ञ इत्यादिश्रुतेः वैशिष्ट्यांशेऽपि तदा सुपरीक्षितत्वेन प्रामाण्याप्रामाण्यविभागः कर्तुमशक्य इति । 'न चैवं सुपरीक्षिते । सर्वं तदुपजीव्यैव प्रमाणं वर्तते यतः' इत्यादिना ज्ञानपादे वक्ष्यत इत्यर्थः ।

**श्री०— अयं विभाग इति** । तथा च त्वदुक्तो यद्धर्मिग्राहकं न तद्विरोधोऽनुमानादेर्यच्च विरोधि न तद्धर्मिप्रमाणमित्यर्थविभागो न युक्त इत्यर्थः । यत्सार्वज्ञादिधर्मग्राहकं तदेवोपजीव्यमस्तु स्वरूपवद्विशिष्टांशेऽपि बाधकाभावसाम्यात् ।

**सु०— अथवा यः सर्वज्ञ इत्यादिश्रुतेर्ब्रह्मस्वरूपमात्रे प्रामाण्यमप्रामाण्यं तु सार्वज्ञादिविशिष्टाकार इति बदतः कोऽभिप्रायः । किं शुक्तिरजतादिज्ञानमिवैकमेवेदं ज्ञानं विषयभेदेन प्रमाणमप्रमाणं चेति । किंवा ज्ञानद्वयमेतत् तत्रैकं प्रमाणमपरं चाप्रमाणमिति । आद्यं दूषयति यदिति । पूर्व एवाभिप्रायः । द्वितीयं निराकरोति** एकेति । **एकमेवेदं विज्ञानमिति साक्षि-**

**विज्ञप्त्या नानेकत्वं कल्प्यमिति** शेषः । अन्यथा स्तम्भोऽयमित्यादावपि ज्ञानद्वयकल्पनापत्तिः । तथा च सामानाधिकरण्यं न केनापि ज्ञायेत ।

शे० — **पूर्व एवाभिप्राय इति** । अयमभिसन्धिरित्यादिनोक्त एवेत्यर्थः ।

प० — **सामानाधिकरण्यमिति** । इदन्त्वस्य स्तम्भादिनेति वा घटो द्रव्यमित्यादौ घटत्वादेर्द्रव्यत्वादिनेति वाऽर्थः ।

श्री० — **विषयभेदेनेति** । स्वरूपप्रकाररूपविषयभेदेनेत्यर्थः ॥ **पूर्व एवाभिप्राय इति** । स्वरूपतद्विशिष्टांशेऽपि बाधाभावसाम्यादिति भावः ॥ **सामानाधिकरण्यमिति** । समभिव्याहृतपदार्थतावच्छेदकयोरेकाधिकरणसम्बन्ध इत्यर्थः ॥

सु० — अस्तु वेदं ज्ञानद्वयं तथापि नैकस्याप्रामाण्यं वक्तुं शक्यते । स्वरूपज्ञानस्येव धर्मज्ञानस्याप्यबाधितत्वादित्याह **द्वयमिति** । ज्ञानद्वयमपीत्यर्थः । धर्मज्ञानमपीति(च)वक्तव्ये द्वयमिति वचनं न्यायसाम्यसूचनार्थम् ।

शे० — **न्यायेति** । बाधाभावरूपन्यायेत्यर्थः ।

प० — **न्यायसाम्येति** । बाधाभावरूपन्यायसाम्येत्यर्थः ।

श्री० — **न्यायसाम्येति** । धर्मिस्वरूपज्ञानप्रामाण्ययोर्न्यायः प्रकारो बाधाभावादिस्तस्य धर्मज्ञानप्रामाण्येऽपि साम्यादिति भावः ।

सु० — एवं बाधाभावपरीक्षितत्वसाम्येऽपि श्रौतमेकं ज्ञानद्वयं वाऽङ्गीकृत्यांशतः प्रामाण्याप्रामाण्ये वदतोऽतिप्रसङ्गमाह **न चेदिति** । तच्छ्रौतं ज्ञानं द्वयं विशिष्टाकारं प्रति प्रमाणं न चेत्तदाऽत्र विषये एकं स्वरूपांशं प्रत्यपि प्रमाणं न भवेत् । अविशेषात् । तथा च पुनरनाश्रययोरनुमानागमयोरनुत्थानमेव । यद्वा तद्विज्ञानमत्र विषये एकं विशिष्टाकारं प्रति प्रमाणं न चेत्तदा द्वयं प्रत्यपि नो भवेत् । विशिष्टाकारवत्स्वरूपेऽपि प्रमाणं न भवेत् । अविशेषादिति यावत् । ज्ञानद्वयाङ्गीकारवादे त्वत्र ज्ञानद्वये तद्विशिष्टविषयं ज्ञानं प्रमाणं न चेत्तर्हि ज्ञानद्वयमपि प्रमाणं न भवेत् । विशिष्टज्ञानमिव स्वरूपज्ञानमप्यप्रमाणं स्यादविशेषादिति ।

शे० — एकविज्ञानविज्ञप्त्या द्वयं मानमित्यस्यान्वयोजनामाश्रित्य 'द्वयम्' इत्येतद्व्याख्याति **विशिष्टाकारं प्रतीति** । विशेषव्याप्तेरभावेऽप्यविशेषलक्षणसामान्यव्याप्तिमाश्रित्य तर्कप्रवृत्तिरविकलेत्याशयेन तां सूचयति **अविशेषादिति** । इष्टापत्तिमाशङ्क्याह **तथा चेति** । एकविज्ञानविज्ञप्त्येत्यस्य यद्वेत्युक्तयो-

जनानुमारेणैतन्मूलं योजयति **यद्वेति** । तत्तात्पर्यमाह ॥ **विशिष्टाकारवदिति** ॥ **ज्ञानद्वयाङ्गीकारवादे त्विति** । एकविज्ञानविज्ञप्त्येत्यस्याथवेत्यादिनोक्तयोजनायामित्यर्थः ।

**श्री०— साम्येऽपीति** । धर्मिज्ञानधर्मज्ञानप्रामाण्ययोरित्यर्थः ॥ **अंशत इति** । एकज्ञानपक्षे अंशतो विषयभेदेन प्रामाण्याप्रामाण्ये वदतो ज्ञानद्वयमङ्गीकृत्यैकं प्रमाणमपरमप्रमाणमिति वदतोऽतिप्रसङ्गमाहेत्यर्थः । विशिष्टाकारं प्रकारांशं प्रति । **विशिष्टज्ञानं** प्रकारविषयकं ज्ञानम् ॥ **अविशेषादिति** । ज्ञानत्वाविशेषादित्यर्थः । एवमुत्तरत्रापि व्याख्येयम् । **अनुमानागमयोः** अभेदसाधकयोः । एकमेव ज्ञानमिति पक्षे योजनान्तरमाह **यद्वेति** । द्व्येकशब्दयोरर्थभेदकथनेनैव यद्वेत्युक्तम् ॥

**सु०— एवमभेदानुमानागमौ प्रति यः सर्वज्ञ** इति **श्रुतेर्निषेध्यसमर्पकत्वेनोपजीव्यत्वं प्रत्युक्तम् । तथाऽपि नानुमानागमयोरुपजीव्यप्रमाणविरोधोऽस्ति । यः सर्वज्ञ इत्यादिश्रुतिसिद्धब्रह्मस्वरूपमात्राश्रयणेन प्रवृत्तत्वात् । न हि** सार्वज्ञादि**विशिष्टाकारमवलम्ब्यानुमानादिना प्रवर्तितव्यमित्यत्र नियामकमस्ति । ततो विरुद्धाकारस्यानुपयोगितयाऽनुपजीवनादुपजीव्यस्य च स्वरूपमात्रस्याविरोधित्वान्नोपजीव्यप्रमाणविरोधोऽनुमानादेः प्रमाणविरोधस्तु कथञ्चित्स्यादित्याशङ्कां परिहरन्नुपसंहरति** धर्मीति ।

**अनु०—** धर्मिग्राहिविरोधस्तु तस्मान्मानस्य दूषणम् ॥

**तुशब्दो विशेषार्थः, प्रमाणमात्रविरोधाद्व्यवच्छिनत्ति । धर्मिग्राहिण्या श्रुत्या विरोधः ।** मानस्य **अभेदप्रमाणस्यानुमानागमरूपस्य** । अयमाशयः । परमाणवः सावयवा इत्यादेरनु**मानस्य वाक्यस्य च कथमुपजीव्यविरोधः इति वक्तव्यम् । परमाणुग्राहकेण प्रमाणेन निरवयवतयैव तेषां सिद्धत्वादिति चेन्न । तत्रापि परमाणुत्वस्यानुपयोगिनोऽनुपजीव्यत्वं किन्तु स्वरूपमात्रस्येति वक्तुं शक्यत्वात् । नैवं युक्तम् । निरवयवत्वादिना विना परमाणोर्धर्मीकरणासम्भवात् । स्वरूपमात्रधर्मीकरणे सिद्धार्थतापत्तिरिति चेत् । समं प्रकृतेऽपि । न हि ब्रह्मापि सार्वज्ञादिना विना शक्यं धर्मीकर्तुम् । स्वरूपमात्रधर्मीकरणे सिद्धसाधनात् । आरोपितेन सार्वज्ञादिना व्यावृत्तस्य धर्मीकरणे को दोषः । योऽयं स्थाणुः स पुरुष इतिवदिति चेन्न । आरोपितेन निरवयवत्वादिना व्यावृत्तस्य तत्रापि धर्मीकरणसम्भवात् । निरवयवत्वादिग्राहकं प्रमाणतयाऽवधृतम् । नारोपितं इति चेत् । तुल्यमत्रापि । श्रुतेरपि प्रामाण्यनिश्चयात् । तदेवं प्रमाणसिद्धेन निरवयवत्वादिना विशिष्टस्यैव यथा धर्मीकरणं तथाऽत्रापि सार्वज्ञादिना पारमार्थिकेनैव विशिष्टस्यैव धर्मीकरणमित्यतो धर्मिग्राहिविरोधो-दुष्परिहर इति ।**

शे० — **प्रमाणविरोधस्त्विति** । प्रमाणबाध इत्यर्थः । प्राबल्यासिद्धेर्बाधो न संभवतीत्याशयेनाह **कथञ्चिदिति** ॥ **परमाणव इत्यादि** । परमाणवः सावयवा इत्यादेरनुमानस्य, परमाणवः सावयवा इत्यादेर्वाक्यस्य चेति योजना ॥ **निरवयवतयैवेति** । निरवयवत्वादिनेत्यर्थः ॥ **निरवयवत्वादिनेति** । 'निरवयवः क्रियावान्परमाणुः' इत्यादितल्लक्षणादिति भावः । **स्वरूपमात्रेति** । द्रव्यत्वादिमात्रेणेत्यर्थः ॥ **स्वरूपमात्रेति** । चेतनत्वादिमात्रेणेत्यर्थः । आरोपिताकारेण व्यावृत्तस्य धर्मीकरणे दृष्टान्तमाह **योऽयमिति** । यः स्थाणुत्वेनावगतः स पुरुष इत्यत्रैवेत्यर्थः ।

प० — धर्मांशे तात्पर्याभावमभिप्रेत्याह **प्रमाणविरोधस्तु कथञ्चित्स्यादिति** ॥ **योऽयं स्थाणुरिति** । स्थाणुत्वेनावगतः स पुरुष इत्यर्थः ।

या० — **प्रमाणविरोधस्त्विति** । प्रमाणबाध इत्यर्थः । प्राबल्याभावे बाधो न सम्भवतीत्याशयेन कथञ्चिदित्युक्तम् ॥ **निरवयवत्वादिना विनेति** । 'निरवयवः क्रियावान्परमाणुरि'ति तल्लक्षणादिति भावः ॥ **स्वरूपमात्रधर्मीकरण इति** । द्रव्यत्वादिमात्रेणेत्यर्थः ॥ **स्वरूपमात्रेति** । चेतनत्वादिमात्रेणेत्यर्थः ॥ **योऽयं स्थाणुरिति** । योऽयं स्थाणुत्वेन ज्ञात इत्यर्थः ।

श्री० — **परमाणुत्वस्येति** । निरवयवत्वस्येत्यर्थः ॥ **स्वरूपेति** । परमाणुसावयवत्वसाधकानुमानं स्वरूपमात्रं चेद्धर्मीकृत्य प्रवर्तेत तर्हि द्व्यणुकादिस्वरूपमादाय सिद्धसाधनता स्यात् । तस्मात्परमाणुस्वरूपं पक्षीकृत्यैव प्रवर्तेत इति वाच्यम् । तथा च निरवयवत्वस्यैव परमाणुत्वात्सावयव इति साधने धर्मिग्राहकबाध एवेत्यर्थः ॥ **स्वरूपेति** । अत्रापि चिन्मात्रस्य सिद्धत्वाच्चिद्भिन्नेति साधने सिद्धार्थतैव । अतः सार्वज्ञ्यादिविशिष्टस्यैव धर्मीकार्यत्वेऽत्रापि धर्मिग्राहकमानबाध इत्यर्थः ।

**सु० — स्यादेतत् । यथा खल्वभेदप्रमाणयोरनुमानागमयोरुपजीव्यविरोधान्नाभेदसाधकत्वं तथोदाहृताया भिन्नोऽचिन्त्य इत्यादिभेदश्रुतेरप्युपजीव्यविरोधान्न भेदसाधकत्वं सम्भवति । तादात्म्यप्रतियोगिकः प्रतिषेधो हि भेदो नाम । न चाप्राप्ते तादात्म्ये तत्प्रतिषेधबोधनं युक्तमित्यभेदप्रापकं प्रमाणमुपजीव्य प्रवृत्ता भेदश्रुतिः कथं नोपजीव्यविरुद्धा । किञ्च निर्भेदं स्वरूपमाश्रित्य तस्य भेदो बोधनीयः । तथा च कथं नोपजीव्यविरोधः । यथोक्तम् 'अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा । तथा चाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्यवैशमादि'त्यत आह नेति ।**

**अनु० — नोपजीव्यो ह्यभेदोऽत्र कचिद्भेदश्रुतेर्बलात् ॥**

**हिशब्दो युक्तिसूचकः । अभेद इति तद्ग्राहकम् ।** अत्र क्वचिदिति । **धर्मित्वादा-दित्यर्थः । तदयमर्थः । भेदश्रुतेर्हि न धर्मिसमर्पकत्वेनाभेदज्ञानोपजीवकत्वं तावत् । जीवेश्वर-स्वरूपस्यैव धर्मित्वात् । नापि स्वरूपप्रामाण्यग्राहकत्वेन । प्रत्यक्षेणैव तत्सिद्धेः । अतो निषेध्य-प्रापकतयैवेति वक्तव्यम् । न च तद्विरोधोऽप्रामाण्यमावहति । निषेधशास्त्रापलापप्रसङ्गात् । न च प्रमाणप्राप्तस्यायं प्रतिषेधः । किन्तु तत्त्वमस्यादिश्रुतितात्पर्यापरिज्ञानप्राप्तस्यैव । यदपि निर्भेदं स्वरूपमादाय भेदो बोद्धव्य इति तत्रापि न ययोर्भेदो बोधनीयस्तयोरभेद आश्रयणीयः । किन्तु स्वगताभेदं वस्तु धर्मितयोपादाय तस्यान्यतो भेदो बोध्यते । अतो जीवेशभेदश्रुतेस्तद-भेदोपजीवनाभावादनपेक्षत्वलक्षणाद्बलाद्युक्तं भेदसाधकत्वमिति शेषः ।**

**शे०**— अभेदप्रमाणस्य भेदश्रुतिं प्रति प्रतिषेध्यसमर्पकतयोपजीव्यत्वेऽपि न तस्य भेदश्रुति-बाधकत्वमनेन रूपेणोपजीव्यत्वस्य प्राबल्याहेतुतायाः पूर्वं समर्थितत्वादित्यतो धर्मिग्राहकतयाऽप्युपजीव्य-तामाह **किञ्चेति ॥ निर्भेदमिति** । भेदाभावविशिष्टस्वरूपमित्यर्थः । अन्यथा सिद्धसाधनतापत्तेरिति भावः । अभेदप्रमाणस्य भेदप्रमाणं प्रति धर्मिग्राहकतयोपजीव्यत्वात्तद्विरुद्धं भेदप्रमाणं न प्रमाणमित्यत्रार्थे खण्डनसम्मतिमाह **यथेति** । तद्वाक्यमुदाहरति **अभेदमिति** । अभेदमुल्लिखन्ती न सती धीर्भेदो-ल्लेखनक्षमा न भवति । तथा हि । स्वरूपभेदवादे धर्मिप्रतियोगिविशिष्टस्यैव भेदस्य वस्तुस्वभावत्वं वाच्यम् । ततश्च धर्मिप्रतियोगिनोरपि विशिष्टान्तर्भावः । विशेषणादिव्यतिरिक्तविशिष्टपदार्थानङ्गी-कारात् । न च प्रतियोग्युपलक्षितस्य भेदस्य धर्मिस्वरूपताया धर्म्युपलक्षितस्य च तस्य प्रतियोगि-स्वरूपताया अङ्गीकारान्न तयोर्भेदान्तर्भावप्रसङ्ग इति वाच्यम् । तथा सति तत्प्रतीतिमन्तरेणापि भेद-प्रतीतिप्रसङ्गात् । काकविगमेऽपि देवदत्तगृहप्रतीतिदर्शनात् । न चैवं प्रकृतेऽस्ति । अवश्यं चैतदेवम् । धर्मिप्रतियोगिविशिष्टस्यैव भेदत्वात् । ततोऽन्यस्य वस्तुस्वभावत्वाभ्युपगमे स्वरूपस्यैव नामान्तरकरण-प्रसङ्गात् । तस्माद्धर्मिप्रतियोगिविशिष्टस्य भेदस्य भावस्वभावत्वमभ्युपगन्तव्यम् । यदा च घटाद्भेदः पटस्येत्येतावानर्थः पटादेः स्वरूपं प्रत्यक्षेण गृह्यते तदा पटोऽपि घटात्मन्येव प्रविष्ट इति घटपटयोरैका-त्म्यमेव भेदग्राहिणा प्रत्यक्षेणावगतमिति विपरीतमापद्यते । ननु च विशिष्टभेदस्य वस्तुस्वरूपाभेदे तदन्तर्गतस्य विशेषणस्य धर्मिस्वरूपत्वमापद्यते विशेषणाद्यनतिरेकाद्विशिष्टस्येति युक्त्या विशिष्टभेदस्य स्वभावत्वे प्रत्यक्षमभेदोल्लेखीति यथाऽऽपाद्यते तथा भेदोल्लेखिताया अपि युक्त्याऽऽपादयितुं शक्यत्वान्न वैपरीत्यम् । न चाभेदोल्लेखस्य यौक्तिकत्वे तद्विरुद्धभेदोल्लेखनस्य न यौक्तिकत्वमिति वाच्यम् । अभेदे हि घट इत्येव वा पट इत्येव वा बुद्धिः स्यान्न तु घटाद्भिन्नः पट इति । तथा च घट इति पटादिति च विलक्षणाकारविषयतया सिद्धं भेदोल्लेखनमिति चेन्न । परमार्थतश्चन्द्रैक्येऽपि जलचन्द्राद्भिन्नः

खस्थश्चन्द्र इतिवत्पटाभेदस्य पारमार्थिकत्वेऽप्याविद्यकभेदबलाद्विलक्षणप्रतीतिविषयत्वसंभवात् । अस्त्व-भेदप्रतीतिपुरःसरा भेदप्रतीतिः । ततः किमित्यत आह **तथा चेति** । सा धीराद्येऽभेदे प्रमा स्यादन्त्ये भेदे प्रमा न स्यादित्यर्थः । ननु दूरस्थतरुगिर्योरभेदावभासे सत्यपि भेदः पारमार्थिको दृष्टः । तथा चात्राभेदः पारमार्थिको न भेद इति कुतः । विपरीतमेव किन्न स्यादित्यत्राह **स्वापेक्ष्येति** । स्वापेक्ष्यस्योपजीव्याभेदस्य वैशसाद्बाधप्रसङ्गात् । न चैतद्युक्तम् । उपजीव्याभेदप्रतीतेरुपजीवकभेदप्रतीत्यपेक्षया प्राबल्यादित्यर्थः ।

**युक्तिसूचक इति** । अभेदप्रमाणस्य भेदश्रुतिं प्रति धर्म्यादिग्राहकत्वेनोपजीव्यत्वाभावरूपप्रति-ज्ञातार्थे तदयमर्थ इत्यादिना वक्ष्यमाणयुक्तिसूचक इत्यर्थः । ततश्च हिशब्देनैव युक्तेः सूचनान्नायं 'प्रतिज्ञामात्रस्यासाधकत्वादि'ति न्यायस्य विषय इति भावः । नन्वभेदप्रमाणस्य भेदश्रुतिं प्रत्युपजीव्यत्वं शङ्कितं न त्वभेदस्य । ततश्चासदनुवादोऽयमित्याशङ्क्य मूलेऽभेदशब्देन तत्प्रमाणोपलक्षणादभेदशब्दस्या-भेदप्रमाणपरत्वेनाभेदपरत्वाभावान्नानुपपत्तिरिति भावेनाह **अभेद इति** ॥ **तद्ग्राहकमिति** । टीकायां धर्म्यादावित्येव पाठो मूलकोशेषु दर्शनान्न तु धर्मित्वादाविति । आदिपदेन स्वरूपप्रामाण्यादिपरिग्रहः । हिशब्दसूचितां युक्तिमेवाह **तदयमर्थ इति** ॥ **जीवेश्वरस्वरूपस्यैवेति** । ततश्च जीवस्य साक्षिप्रत्य-क्षेणेश्वरस्य च सार्वज्ञादिवाक्येन सिद्धत्वान्नाभेदश्रुतेर्जीवेश्वररूपधर्मिग्राहकत्वमिति भावः ॥ **स्वरूप-प्रामाण्येति** । श्रुतिस्वरूपतज्जन्यज्ञानतत्प्रामाण्यग्राहकत्वेनेत्यर्थः ॥ **प्रत्यक्षेणैवेति** । श्रुतिस्वरूपस्य श्रोत्रेण तज्जन्यज्ञानतत्प्रामाण्ययोश्च साक्षिप्रत्यक्षेणैव सिद्धेरित्यर्थः । यद्वा श्रुतिस्वरूपस्य श्रोत्रवेद्यत्वेऽपि श्रोत्रजनित-तद्वृत्तिप्रामाण्यं यावन्न साक्षिणा गृह्यते तावत्पर्यन्तं तदसिद्ध्या श्रुतिस्वरूपाध्यवसायस्यापि साक्ष्यायत्तत्वा-त्साक्षिप्रत्यक्षेणैव श्रुतिस्वरूपतज्जनितज्ञानतत्प्रामाण्यानां सिद्धिरित्यर्थः ॥ **न च तद्विरोध इति** । प्रतिषेध्य-समर्पकतयोपजीव्यप्रमाणविरोधो नोपजीवकशास्त्राप्रामाण्यसम्पादक इत्यर्थः । तत्र हेतुमाह **निषेधेति** । निषेध्यसमर्पकतयोपजीव्यप्रमाणविरोधस्यत त्राप्यविशिष्टत्वादिति भावः । अङ्गीकृत्यैव चाभेदश्रुतेः प्रतिषे-ध्याभेदसमर्पकतया भेदश्रुतिं प्रत्युपजीव्यत्वम् तद्विरोधस्योपजीवकभेदश्रुत्यप्रामाण्यानापादकत्वमुक्तम् । वस्तुतस्त्वभेदश्रुतेर्न प्रतिषेध्यसमर्पकत्वमिति न तद्विरोधस्योपजीव्यविरोधत्वमपीत्याशयेनाह **न चेति** । नापीत्यर्थः । श्रुतिप्राप्तस्य श्रुत्या निषेधे ग्रहणशास्त्रप्राप्तस्याग्रहणशास्त्रेण निषेधापत्त्या विकल्पाभावप्र सङ्गादिति भावः । तर्ह्यैक्यस्याप्राप्तत्वात्कथं तत्प्रतिषेध इति पृच्छति **किन्त्विति** । अस्ति प्रकारान्तरेण तत्प्राप्तिरिति भावेन श्रुतितात्पर्यापरिज्ञानप्राप्तं चेति तत्त्वनिर्णयानुसारेण तत्प्राप्तिमुपदर्शयति **तत्त्वमस्या-दिश्रुतीति** । तात्पर्यापरिज्ञानादीत्यादिपदेन वादिप्रसिद्ध्यादिपरिग्रहः ।

किञ्चान्युक्तदूषणमनूद्य तत्परिहारकतयाऽपि मूलं योजयति **यदपीति** ॥ **आश्रयणीय इति** । धर्मितावच्छेदकतयेति शेषः ॥ **स्वगताभेदमिति** । स्वगुणादिप्रतियोगिकभेदाभावविशिष्टमित्यर्थः ।

स०— 'अभेदं नोल्लिखन्ती धीरि'त्यादिकारिकाग्रन्थस्यायमर्थः । अभेदमुल्लिखन्ती न सती, धी-र्भेदोल्लेखनक्षमा न भवति धर्मिप्रतियोगिनोरेकैकस्य रूपं प्रतीत्यैव भेदस्य प्रत्येतव्यत्वात् । अस्त्वभेदप्रतीति-पुरःसरा भेदप्रतीतिः ततः किमित्यत आह **तथा चेति** । सा धीः आद्येऽभेदे प्रमा स्यात् । अन्त्ये भेदे प्रमा न स्यात् । हेतुमाह **स्वापेक्ष्यवैशसात्** । स्वापेक्ष्यस्योपजीव्याभेदस्य वैशसात् बाधप्रसङ्गात् । न च तद्युक्तं उपजीव्याभेदप्रतीतेरुपजीवकभेदप्रतीत्यपेक्षया प्राबल्यादित्यर्थः ।

प०— प्राप्तिसंपादकत्वेनोपजीव्यत्वं न प्राबल्यबीजमित्यतो धर्मिग्राहकतयापि तदाह **किंच निर्भेदं स्वरूपमाश्रित्येति** । निर्भेदं भेदहीनम् । अन्यथाऽऽत्माश्रयापत्तेरिति भावः । आद्यपक्षे संमतिः । **यथोक्तमिति** । खण्डनकृतोक्तमित्यर्थः । अभेदमविषयीकुर्वन्ती प्रतीतिर्भेदं विषयीकर्तुं न समर्था । तादात्म्यरूपाभेदनिषेधरूपत्वात् भेदस्य । तथाच भेदबुद्धेर्भेदभेदोभयविषयकत्वे सति । आद्येऽभेदविषये प्रमा भवति । (अन्त्ये)भेदविषये तु न प्रमा । कुतः । स्वापेक्ष्यवैशसात्स्वापेक्ष्येण स्वोपजीव्येन विरोधादित्यर्थः ॥ **जीवेश्वरस्वरूपस्यैवेति** । तयोश्चाल्पज्ञत्वादिग्राहकसाक्षिणा यः सर्वज्ञ इत्यादिश्रुत्या च सिद्धेरिति भावः ॥ **प्रत्यक्षेणैवेति** । श्रावणादिप्रत्यक्षेणेत्यर्थः । हिशब्दः युक्तिसूचक इत्युक्तमाह **निषेधेति** । 'न हिंस्यात्सर्वा भूतानी'त्यादिशास्त्रस्यापि निषेध्यार्पकमानसापेक्षत्वावश्यंभावेन तत्राप्युप-जीव्यविरोधानिस्तारादिति भावः । ननु तत्र मानाभासेन रागादिना वा प्राप्तस्य निषेधः अत्र तु प्रमाणप्राप्तस्यैव अतो वैषम्यमित्यत आह **न च प्रमाणेति** ॥ **स्वगताभेदमिति** । स्वप्रतियोगिक-स्वगतभेदहीनमित्यर्थः । गुणादिप्रतियोगिकभेदहीनमित्यर्थ इत्येके ।

या०— प्रतिषेध्यसमर्पकतयाऽभेदप्रमाणस्य भेदश्रुत्युपजीव्यत्वमुक्त्वेदानीं धर्मिग्राहकतयाऽपि तदाह **किंच निर्भेदस्वरूपमिति** । भेदाभावविशिष्टस्वरूपमित्यर्थः । अन्यथा सिद्धसाधनतापत्तेरिति भावः । अभेदप्रमाणस्य प्रतिषेध्यसमर्पकतया भेदप्रमाणोपजीव्यत्वात्तद्विरुद्धं भेदप्रमाणं स्वार्थे न प्रमाणमित्युक्तार्थे खण्डनसम्मतिमाह **यथोक्तमिति** । अभेदं गृह्णदेव ज्ञानं भेदं गृह्णाति । भेदस्याभेदप्रतिक्षेपरूपत्वात् । एवं चाद्येऽभेदांशे सा भेदधीः प्रमा स्यादन्त्ये भेदे न प्रमा स्यात् । कुतः स्वापेक्ष्यवैशसात् । स्वोपजीव्यस्य नाश-नप्रसङ्गादिति कारिकार्थः । हिशब्दसूचितां युक्तिमाह ॥ **निषेधशास्त्रेति** । न सुरां पिबेत्यादिकमप्युक्तरीत्या सुरापानादिप्रतिषेध्यांश एव प्रमाणं स्यादित्यर्थः । नन्वत्र रागादिना प्राप्तं सुरापानादिकमनूद्य प्रतिषि-ध्यते न प्रमाणप्राप्तम् । अभेदस्तु तत्त्वमसीत्यादिप्रमाणत एव प्राप्तोऽतस्तद्विरोधोऽत्र कथं नाप्रामाण्य-मावहतीत्यत आह **न च प्रमाणप्राप्तस्येति** ॥ **आश्रयणीय इति** । धर्मितावच्छेदकतयेति शेषः ॥ **स्वगताभेदमिति** । स्वगुणादिप्रतियोगिकभेदाभावविशिष्टमित्यर्थः । एतच्च धर्मितावच्छे-

दकमवश्यमुपादेयम् । अन्यथा भेदबोधकप्रमाणस्य स्वगतभेदबोधकत्वेनाप्युपपत्तावभिलषितस्यासिद्ध्याऽर्थान्तरताप्रसङ्गादिति द्रष्टव्यम् ॥

श्री० — **धर्मित्वादिति** । अभेदज्ञानं न जीवेश्वरस्वरूपविषयं किन्त्वभेदविषयकमेवेति भावः ॥ **स्वरूपेति** । भेदश्रुतिस्वरूपेत्यर्थः ॥ **प्रत्यक्षेणैवेति** । श्रुतिस्वरूपं श्रवणेन सिद्धं तज्जन्यज्ञानप्रामाण्यं साक्षिप्रत्यक्षेणेत्यर्थः । यदि प्रतिषेध्यसमर्पकज्ञानविरोधोऽप्युत्तरज्ञानस्याप्रामाण्यमावहति तर्हि को दोष इति चेत् । तर्हि प्रतिषेध्यरजतसमर्पकेदं रजतमिति ज्ञानविरोधेन नेदं रजतमिति निषेधशास्त्रस्याप्रामाण्यं स्यादित्याह **निषेधेति** । ननु नेदं रजतमित्यादिनिषेधशास्त्रस्य नाप्रामाण्यम् । अप्रमाणप्राप्तप्रतिषेधरूपनिषेधशास्त्रस्यैव प्रामाण्याभ्युपगमात् । प्रकृते चाभेदस्य प्रमाणप्राप्तत्वेनाप्रमाणप्राप्तत्वाभावात् । ततश्च भेदप्रमाणस्य प्रमाणप्राप्तप्रतिषेधरूपत्वेन स्वयमेव तद्विरुद्धत्वादप्रमाणं भविष्यतीत्याशङ्क्य निषेधति **न चेति** । प्रतिषेधो येन तद्विरुद्धत्वात्प्रतिषेधकं भेदप्रतिपादकं वाक्यं प्रमाणं स्यादिति वाक्यशेषः ।

सु० — **किञ्च तिष्ठतु तावद्यः सर्वज्ञ इत्यादिश्रुतेरुपजीव्यत्वम् । तथाऽप्यभेदानुमानागमबाधकत्वं भवेदेव । इयं खलु श्रुतिः सार्वज्ञादिविशिष्टमीश्वरं प्रतिपादयन्ती न किञ्चिदपेक्षते । अनुमानागमौ तु सापेक्षौ । सापेक्षनिरपेक्षयोश्च निरपेक्षस्य प्राबल्यादित्याशयवानाह** नोपजीव्यो हीति ।

अत्र **भेदाभेदप्रमाणयोर्मध्ये** । भेदश्रुतेः **भेदकधर्मविशिष्टधर्मिश्रुतेः** । अभेद **इत्यभेदप्रमाणम्** । **अनपेक्षत्वोपलक्षणमेतत्** । **अतो बलादभेदप्रमाणबाधकत्वमिति शेषः** ।

शे० — एवं सार्वज्ञादिना विना ब्रह्मणो धर्मीकर्तुमशक्यत्वेन यः सर्वज्ञ इत्यादिश्रुतिसिद्धब्रह्मस्वरूपमात्राश्रयणेनाभेदानुमानागमप्रवृत्त्यसम्भवात्तौ प्रति तदपेक्षितविशिष्टाकारग्राहकतया यः सर्वज्ञ इत्यादिश्रुतेरुपजीव्यत्वादुपजीव्यप्रमाणबाधितत्वमभेदानुमानादेरित्युपपादितम् । इदानीं त्वस्तु स्वरूपमात्राश्रयणेनानुमानादिप्रवृत्त्या यः सर्वज्ञ इत्यादेर्विशिष्टार्थप्रतिपादकस्यानुपजीव्यत्वं तथाऽपि तस्यानुमानादिबाधकत्वं स्यादेव । न ह्युपजीव्यत्वमेव प्राबल्यहेतुरिति नियमः । किन्तु तदपीत्येव । ततश्च निमित्तान्तरेण प्रबलाया यः सर्वज्ञ इत्यादिश्रुतेः कथं न बाधकतेत्यर्थप्रतिपादकतया 'धर्मिग्राहिविरोधस्तु तस्मान्मानस्ये'त्यादिपूर्वग्रन्थसङ्गतत्वेनापि नोपजीव्य इत्येतं ग्रन्थं योजयति **किञ्चेति** । टीकायां श्रुतेरनुपजीव्यत्वमिति पाठे तिष्ठतु तावदित्यस्यास्तु तावदित्यर्थः। उपजीव्यत्वमिति पाठे तु माऽस्तु तावदित्यर्थः ॥

**सापेक्षाविति** । यः सर्वज्ञ इत्यादिश्रुतिसिद्धब्रह्मस्वरूपमात्राश्रयणेन प्रवृत्तत्वात्सापेक्षावित्यर्थः । भेदश्रुतेरप्यभेदश्रुतिवद्धर्मिग्राहिप्रमाणसापेक्षत्वात्कथमनपेक्षत्वमित्यत आह **भेदकधर्मेति** । अभेदस्य भेदाभेदप्रमाणयोर्मध्येऽन्यतरत्वासम्भवादाह **अभेद इतीति** ।

प० — **अनुमानागमाविति** । अभेदानुमानागमौ धर्म्यादिसापेक्षावित्यर्थः ।

या० — **सापेक्षाविति** । प्रतिषेध्यज्ञानादिसापेक्षावित्यर्थः ॥

श्री० — 'नोपजीव्यो ह्यभेदोऽत्रे'त्यस्य तात्पर्यमाह **अनपेक्षत्वोपलक्षणमेतदिति** ।

सु० — **स्यादेतत्** । यः सर्वज्ञ इत्यादिश्रुतिर्न जीवभेदकधर्मविशिष्टं ब्रह्म प्रतिपादयति । किन्त्वनुवदत्येव । अतो नानुमानादेस्तद्बाध इत्यत आह न चेति ।

अनु० — न च मानान्तरोपेयं ब्रह्म तद्भवति क्वचित् ॥

उपेयं ज्ञेयम् । **तदिति** सार्वज्ञाद्युपेतम् । **क्वचिदिति** भ्रान्तिप्रतिपन्नमपि न भवतीति सूचयति । न तावत्सार्वज्ञादिविशिष्टं ब्रह्म श्रुतिव्यतिरिक्तप्रमाणगम्यम् । शास्त्रैकयोनित्वस्य समर्थितत्वात् । नापि भ्रान्तिप्रतिपन्नम् । क्वचित्प्रमितस्यैवान्यत्रारोपात् । न च प्रमाणेन भ्रान्त्या वाऽप्राप्तस्यानुवादः संभवति । अतो नेयं श्रुतिरनुवादिनी । किन्नाम प्रतिपादयत्येवोक्तरूपं ब्रह्मेति ।

---

ननु तथाऽपि नोपजीव्यप्रमाणविरोधोऽनुमानादेः । श्रुत्युपजीवने हि सः स्यात् । न चैवम् । तद्व्यतिरिक्तप्रमाणोपजीवनादित्यत आह न चेति । वस्तुव्यवहितो वह्निरधूमस्थले प्रत्यक्षाद्यवेद्योऽपि क्वचिद्देशे प्रत्यक्षेणानुमानेन वाऽवगम्यते । प्राक् पतनोत्पत्तेरगम्यमपि गुरुत्वं क्वचित्कालेऽनुमानेन गम्यते । न चैवं ब्रह्म क्वचिन्मानान्तरोपेयम् । येन तदुपजीव्यानुमानादिप्रवृत्तिः स्यात् ।

शे० — **क्वचित्प्रमितस्यैवेति** । एतच्च न्यायमतमाश्रित्योक्तमिति ज्ञातव्यम् । सर्वकर्त्राद्यनुमानोपलक्षणत्वे सार्वज्ञानुमयैवेत्यवधारणविरोधः स्यादित्यतोऽनभिमतव्यवच्छेदकत्वात्तस्य न तद्विरोध इत्यभिप्रेत्य तद्व्यवच्छेदं दर्शयति **एवेतीति** ।

प० — **समर्थितत्वादिति** । शास्त्रयोनिसूत्र इति भावः ॥ **क्वचित्प्रमितस्यैवेति** । आरोपस्याधिष्ठानप्रधानसापेक्षत्वात् प्रधानसत्त्वमनेनाभिप्रेतम् । प्रधानानुभवजन्यसंस्कारादिसचिवं खलु चक्षुरादिकं प्रधानसदृशमधिष्ठानमसत्यान्याकारेणावभासयतीत्येवमुक्तमिति ज्ञेयम् । तदेव मूलमन्यथाप्यवतार्य व्याचष्टे **ननु तथापीति** ।

**या०** — **क्वचित्प्रमितस्यैवेति** । एतच्चान्यथाख्यातिवादिमतमाश्रित्योक्तम् । स्वमते तु क्वचित्प्रमितसदृशस्यैवेति द्रष्टव्यम् । आरोप्यस्यासत्त्वेऽपि तत्र प्रधानसादृश्यं वैज्ञानिकसंबन्धेनैवास्ति न वस्तुत इति न काऽप्यनुपपत्तिरिति संप्रदायः ।

**सु०** — **अस्तु वा ब्रह्म प्रमाणान्तरवेद्यम् । तथाऽप्यभेदानुमानादेरुपजीव्यप्रमाणविरोधो दुष्परिहरः । श्रुतिवत्तस्यापि प्रमाणस्य भेदप्रत्यायकत्वादित्यभिप्रायवानाह** येनेति ।

अनु० येन मानेन चोपेयं भेदस्तेनावगम्यते ॥

**उपेयं ब्रह्मेति शेषः ।**

**तत्कथमित्यत आह** स(सा)र्वज्ञेति ।

सर्वज्ञानुमयेशो यद्युपेयः कथञ्चन ॥
सर्वज्ञत्वगुणेनैव तया भेदोऽवगम्यते ॥

**धर्मादिकं कस्यचित्प्रत्यक्षं प्रमेयत्वाद्घटवदित्यादिकया सा(स)र्वज्ञसाधकयाऽनुमया । सर्वकर्तृत्वाद्यनुमानोपलक्षणं चैतत् । एवेति प्रत्यक्षं व्यावर्तयति । कथञ्चनेत्यभ्युपगमवादोऽयमिति सूचयति । सर्वज्ञत्वेत्युपलक्षणम् । तयैवेत्यन्वयः । ईश्वरे तावत्प्रत्यक्षं शङ्कार्हमेव न भवति । अतोऽनुमानमेव वक्तव्यम् । प्रतिपक्षादिना पराहतस्यापि तस्य कथञ्चिच्छङ्कार्हत्वात् । अनुमानं च किञ्चित्केनचिद्विशिष्टमेव प्रतिपादयति । न तु निष्कृष्टं वस्तु । न च जीवादिसाधारणधर्मविशिष्टार्थसिद्धावीश्वरः सिध्यति । तस्माद्भेदकधर्मवैशिष्ट्येनैव तत्सिद्धिर्वक्तव्या । तथा चानुमानादेरुपजीव्यविरोधो वज्रलेपायितः । यद्यप्यनुमानं स्वतः श्रुतितो दुर्बलं तथाऽपि उपजीव्यत्वात् बाधकं भवत्येवेति ।**

**शे०** — **अभ्युपगमवादोऽयमिति** । सिद्धान्ते ब्रह्मणः केवलानुमानगोचरत्वाभावादिति भावः ॥ **सर्वज्ञत्वेत्युपलक्षणमिति** । सर्वकर्तृत्वाद्युपलक्षणमित्यर्थः । सर्वज्ञत्वस्येव सर्वकर्तृत्वादेरपि जीवभेदकत्वेन सर्वज्ञत्वमात्रग्रहणे निमित्ताभावः । तर्हि सर्वज्ञत्वगुणेनैवेत्येवकारविरोधः स्यादित्यतो भिन्नक्रमत्वान्नैवमित्याह **तयैवेत्यन्वय इति** ॥ **शङ्कार्हमेव नेति** । तस्यापाततस्तदभावावेदकत्वादिति भावः । कथञ्चिदित्युक्तमेवोपपादयति **प्रतिपक्षादिना पराहतस्यापीति** ॥ **निष्कृष्टमिति** । अविशिष्टमित्यर्थः । अनुमितेर्व्यापकतावच्छेदकधर्मप्रकारकत्वनियमादिति भावः ॥

**प०** — **अभ्युपगमवादोऽयमिति** । अन्यथा शास्त्रयोनिसूत्रभाष्यविरोध इति भावेन तत्रोक्तं स्मारयति **प्रतिपक्षादिना पराहतस्यापीति** ॥ **निष्कृष्टमिति** । केनापि धर्मेण हीनमित्यर्थः ॥ **यः सर्वज्ञ इत्यादिधर्मिग्राहकश्रुतेः प्रामाण्यसमर्थनम्** ॥

या० — **अभ्युपगमवादोऽयमिति** । सिद्धान्ते ब्रह्मणः केवलानुमानागोचरत्वादिति भावः । **निष्कृष्टं** शुद्धं केवलमिति यावत् । अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमादिति भावः ।

श्री० — **उपजीव्यविरोधः** उपजीव्यानुमानविरोधः ।

सु० — तदनेनेश्वरग्राहिकायाः श्रुतेर्भेदकधर्मविशिष्टे तस्मिन्प्रामाण्यमुपपादितम् । इदानीं जीवग्राहकस्य प्रत्यक्षस्येश्वरभेदक(वि)धर्मिणि जीवे प्रामाण्यं समर्थ्यते । तथा हि । भवतु श्रुतिरदुःखित्वसार्वज्ञादिमदीश्वरे प्रमाणम् । तथाऽपि नाभेदानुमानागमयोरुपजीव्यप्रमाणविरोधेनाप्रामाण्यम् । दुःखित्वादिरूपे हि जीवस्य तात्त्विके सति तथा स्यान्न चैवम् । अहं दुःखीत्यादेरनुभवस्य मिथ्यानुभवत्वात् । अन्तःकरणगतो हि दुःखादिरनर्थः स्वरूपतो मिथ्याभूतो जपाकुसुमारुणिमेव स्फटिके चैतन्ये चकास्ति । न च भ्रान्तिप्रतिपन्नेन(न्नभे)भेदकेन वस्तु भिद्यते इति अत आह नेति ।

अनु० — न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेत् ॥

क्वापीति । सर्वथेत्यर्थः । भवेदेतद्यद्यहं दुःखीत्याद्यनुभवो मिथ्यानुभवः स्यान्न च तथा । अपि तु प्रमाणमेव । यद्यपि दुःखादिकमन्तःकरणगतं, तथाऽपि स्वरूपेण सदेव । जीवात्मनश्च तद्भोक्तृत्वेन तद्वत्त्वं तात्त्विकमेव । अल्पशक्तित्वपारतन्त्र्यादिकं तु स्वरूपगतमेवेत्याशयः ।

शे० — **ईश्वरभेदकविधर्मिणीति** । ईश्वरधर्मविरुद्धधर्मवतीत्यर्थः । दुःखित्वादिरूपस्यापि जीवे तात्त्विकत्वादुपजीव्यप्रमाविरोधेनाभेदानुमानादेरप्रामाण्यं स्यादेवेत्यतो मानाभावान्न दुःखित्वादिरूपस्य जीवे तात्त्विकत्वं सम्भवतीत्याह **न चैवमिति** । अहं दुःखीत्यादेरेव तत्र प्रमाणत्वात्कथं तदभाव इत्यत आह **अहं दुःखीत्यादेरिति** । कुतोऽस्य मिथ्यानुभवत्वमित्यतः स्वरूपेणात्मसम्बन्धित्वेन च दुःखादेर्मिथ्यात्वात्तत्सिद्धिरित्याह **अन्तःकरणगतो हीति** । अत्रान्तःकरणगतो दुःखादिरनर्थो, जपाकुसुमारुणिमेव स्फटिके, चैतन्ये चकास्तीत्यनेनात्मसम्बन्धित्वेन दुःखादेर्मिथ्यात्वमुक्तं भवति । तत्किं जपाकुसुमारुणिमा जपाकुसुम इव दुःखादिरनर्थोऽप्यन्तःकरणे सत्य इत्यत उक्तं **स्वरूपतोऽपीति** ॥ **स्वरूपेणेति** । स्वरूपत इत्याद्यादिभ्य उपसंख्यानात्तृतीयान्तात्तसिः स्वरूपेणान्तःकरणेऽध्यस्त इत्यर्थः ॥ **न च भ्रान्तिप्रतिपन्नेनेति** । भ्रान्तिप्रतिपन्नस्य भेदकस्य तात्त्विकभेदसिद्ध्यङ्गत्वं नास्तीत्यर्थः । अन्यथा तस्य सम्प्रतिपन्नैकात्मन्यपि सुवचत्वेन तात्त्विकभेदसाधकत्वप्रसङ्गादिति भावः ॥ **स्वरूपेण सदेवेति** । अन्तःकरण इति शेषः । दुःखादेरन्तःकरणे स्वरूपेणानध्यस्तत्वमुक्त्वाऽऽत्मसम्बन्धित्वेनापि तदाह

जीवात्मन इति ॥ तद्भोक्तृत्वेनेति । प्रकारे तृतीया भोक्तृत्वरूपं तद्वत्त्वमित्यर्थः । परमेश्वराय-त्तमिति पूरणीयम् । जिज्ञासासूत्रीयग्रन्थानुरोधादिति द्रष्टव्यम् ।

प० — तद्भोक्तृत्वेनेति । तदनुभवकृतनीचोच्चतारूपभोगवत्त्वेन ईश्वरायत्तस्वामितारूप-संबन्धेन धनित्ववत्तद्वत्त्वमस्तीत्यर्थः ।

या० — तद्वत्त्वमिति । तत्स्वामित्वमित्यर्थः ।

श्री० — ईश्वरभेदकधर्मिणि । ईश्वरोद्भेदकधर्मोपेत इत्यर्थः ।

सु० — कुत इत्यत आह न हीति ।

अनु० — न हि बाधः क्वचिद् दृष्टो दुःखाद्यनुभवस्य तु ॥

तुशब्दोऽवधारणे नैवेति संबन्धः । असञ्जातबाधभ्रमेषु व्यभिचारपरिहाराय क्वचिदि-त्युक्तम् । न हि कदाचित्कुत्रचित्कश्चिन्नाहं दुःखी किन्त्वन्तःकरणगतेनैव मिथ्यादुःखेन दुःखितयाऽऽत्मानममनि(षी)षमिति बाधकप्रत्ययवान्दृश्यत इत्यर्थः । ननु 'विमुक्तश्च विमु-च्यते' 'तत्त्वमसी'त्यादिश्रुतिरेवास्यानुभवस्य बाधिकाऽस्तीति कथं न दुःखानुभूतिर्भ्रान्तिः । अत्र हि दुःखाद्युपप्लवरहितमेवास्यात्मनस्तात्त्विकं रूपमिति प्रतिपाद्यत इत्यत आह यदीति ।

यदि दुःखानुभूतिश्च भ्रान्तिरित्यवसीयते ॥
अदुःखिताश्रुतिः केन न भ्रान्तिरिति गम्यते ॥

---

अवसीयते श्रुतिमाश्रित्येति शेषः । केन कारणेन । भ्रान्तिः स्वरूपतोऽर्थतश्च । गम्यते अभ्युपगम्यते । अनुभवमाश्रित्येति शेषः । इदमुक्तं भवति । भवेदेषा श्रुतिरस्यानुभवस्य बाधिका । यदि निश्चितप्रमाणभावा भवेत् । न च तथा । धर्मिग्राहकानुभवविरोधेनास्माभिः तदप्रामाण्यस्य प्रतिपाद्यमानत्वात् । परस्य च तत्परिहारायाद्यापि समुद्यतत्वात् । तथा च सति श्रुतिप्रामाण्यनिश्चयेऽनुभवस्य भ्रान्तित्वं तस्मिंश्च सति श्रुतिप्रामाण्यनिश्चय इति परस्पराश्रयत्व-प्रसङ्गः । नन्वनुभवविरोधेन श्रुत्यप्रामाण्याभिधानेऽपि समानमेतत् । न समानम् । अनुभव-स्यानपेक्षत्वात् श्रुतेस्तदपेक्षत्वात् । अन्यथा सर्वत्र धर्मिग्राहकविरोधोच्छेदाप(त्ते)त्तिरिति ।

ननु तर्हि नेदं रजतमित्यस्यापि रजतमिदमिति ज्ञानं प्रति बाधकत्वमयुक्तं स्यात् । न स्यात् । नेदं रजतमिति ज्ञानप्रामाण्यस्य साक्षिणा परीक्षया निश्चितत्वात् । इदं रजतमिति ज्ञानस्य तदभावात् । परीक्षितप्रामाण्येनोपजीवकेनोपजीव्यस्यातथाभूतस्य बाधोपगमात् । उपजीव्योपजीवकन्यायस्य तदन्यविषयत्वात् । प्रामाण्यसन्देहे खलु न्यायानुसरणम् । निश्चिते तु प्रामाण्ये किमनेन । वक्ष्यति चैतदाचार्यः ।

शे० — **क्वचिदित्युक्तमिति** । असञ्जातबाधभ्रमेषु भ्रान्तस्य बाधज्ञानानुदयेऽप्यन्येषां तदस्त्येवेति भावः । अत्र च बाधपदं विपरीतप्रमाणपरम् । न तु बाधपरम् । तस्यान्यथाप्रतिपत्तिपूर्वकं तदुन्मूलनेन सम्यग्बोधरूपत्वाद्भ्रान्तिसमानाधिकरणत्वनियमेन व्यधिकरणस्य सम्यग्बोधस्य बाधकत्वाभावादिति बोध्यम् । अन्तःकरणगतेनैवेत्यात्मीयत्वेन मिथ्यात्वस्योपपादकम् । मिथ्याभूतेनैवेत्यन्तःकरणेऽपि स्वरूपेणाध्यस्तत्वस्योपपादनम् ॥ **अनपेक्षत्वादिति** । ततश्च श्रुत्यपेक्षयाऽनुभवस्यानपेक्षत्वेन प्राबल्यात्प्रबलस्य च दुर्बलविरोधपरिहारमनपेक्ष्यैव प्रामाण्यस्य स्थितत्वान्नानुभवविरोधेन श्रुत्यप्रामाण्याभिधानेऽन्योन्याश्रयत्वम् । श्रुतेस्तु सापेक्षत्वेनानुभवापेक्षया दुर्बलत्वाद्दुर्बलस्य च प्रबलविरोधपरिहारमपेक्ष्यैव प्रामाण्यस्य स्थितत्वेन श्रुतिविरोधेनानुभवाप्रामाण्याभिधानेऽन्योन्याश्रयत्वमिति भावः । कुत इयं व्यवस्थाऽऽस्थीयत इत्यत आह **अन्यथेति** ॥ **सर्वत्रेति** । घटो व्यापकः सत्त्वादित्यादावित्यर्थः । तत्राप्यनुमानविरोधेनैव धर्मिग्राहकाप्रामाण्यस्य वक्तुं शक्यत्वादित्यर्थः ।

**तर्हीति** । सापेक्षस्याबाधकत्व इत्यर्थः । तस्यापि सापेक्षत्वादिति भावः ॥ **साक्षिणा परीक्षयेति** । यद्यपि साक्ष्येव प्रामाण्यनिश्चायकस्तथाऽपि दोषाभावनिश्चयार्थं परीक्षापेक्षाभिप्रायेणेयमुक्तिः । ततश्च परीक्षया दोषाभावं निश्चित्य साक्षिणा प्रामाण्यग्रहणादित्यर्थः ॥ **अतथाभूतस्येति** । अपरीक्षितप्रामाण्यस्येत्यर्थः । यदि परीक्षितप्रामाण्येनोपजीवकेनातथाभूतस्योपजीव्यस्य बाधस्तदोपजीवकं नोपजीव्यबाधकमिति न्यायभङ्ग इत्यत आह **उपजीव्येति** ॥ **तदन्यविषयत्वादिति** । यत्र विरुद्धयोर्द्वयोर्ज्ञानयोः परीक्षयाऽन्यतरप्रामाण्यस्य न निश्चयस्तद्विषयत्वादित्यर्थः । कुतोऽस्य न्यायस्य संकुचितविषयत्वकल्पनमित्यतोऽन्यथा न्यायत्वभङ्गप्रसङ्गादित्यभिप्रेत्य न्यायप्रवृत्तिविषयमुपदर्शयति **प्रामाण्यसन्देह इति** । 'नानुपलब्धेन निर्णीतेऽर्थे न्यायः प्रवर्ततेऽपि तु सन्दिग्धेऽर्थे' इति न्यायभाष्यकृद्वचनादिति भावः ॥ **निश्चिते त्विति** । परीक्षयाऽन्यतरप्रामाण्ये निश्चिते सतीत्यर्थः । ननु परीक्षितप्रामाण्येनोपजीवकेनोपजीव्यस्य बाधाभ्युपगमादित्युक्तम् । तत्र कुतस्तदभ्युपगमसिद्धिराचार्यस्येत्यतस्तद्वाक्यादेवेत्याह **वक्ष्यति चैतदिति** । ज्ञानपादे 'यावच्छक्ति परीक्षायामुपजीव्यस्य बाधने । दोषो नाशोधिते दोष उपजीव्यत्वमस्त्वलमि'त्यादिनेति शेषः ।

प० — **अमनि(षीति)षमिति** । मनु अवबोधने लुङ् । उत्तमपुरुषैकवचनम् । अज्ञासिषमित्यर्थः । सापेक्षत्वमात्रेणाबाधकत्वे बाधकमाशङ्कते **ननु तर्हीति** । वैषम्यमाह **नेदं रजतमिति** ॥ **परीक्षयेति** । निर्दोषकरणजन्यत्वादिकयेत्यर्थः । **तदन्यविषयत्वादिति** । अपरीक्षितप्रामाण्यविषयत्वादित्यर्थः ॥ **निश्चिते त्विति** । द्वयोरन्यतरस्येति भावः । कुत एषा कल्पनेत्यत आह **वक्ष्यति**

चैतदिति । 'यावच्छक्तिपरीक्षायामुपजीव्यस्य बाधने । दोषो नाशोधिते दोष उपजीव्यत्वमस्त्वलमि'त्यादिना ज्ञानपादे वक्ष्यतीत्यर्थः । विवृतमेतन्न्यायामृते प्रत्यक्षप्राबल्योक्तिप्रस्तावे ।

या०— व्यभिचारेति । दुःखानुभवो न मिथ्या, अदृष्टबाधात् इत्यनुमानव्यभिचारपरिहारायेत्यर्थः । **न हि कदाचिदित्यादि ।** असञ्जातबाधभ्रमेष्वस्मदादीनां बाधकज्ञानानुदयेऽपि योगिनां तदस्तीति न व्यभिचार इति भावः ॥ **तर्हीति ।** सापेक्षस्याबाधकत्व इत्यर्थः ॥ **तदन्यविषयत्वादिति ।** यत्र विरुद्धयोर्ज्ञानयोः परीक्षयाऽन्यतरप्रामाण्यस्य न निश्चयस्तद्विषयत्वादित्यर्थः । एतदेव विशदयति **प्रामाण्यसन्देह इति ॥ निश्चिते त्विति ।** अन्यतरस्यात्यन्तिकपरीक्षयेति शेषः । ननु यत्र विरोधिज्ञानयोरन्यतरप्रामाण्यस्य न परीक्षया निश्चयः किन्तु सन्देहस्तत्रापि बाधकत्वे किमुपजीव्यत्वमात्रं प्रयोजकमुत परीक्षितत्वविशिष्टम् । नाद्यः । व्यभिचारात् । नान्त्यः । परीक्षितत्वेनैव बाधकत्वोपपत्तावुपजीव्यत्वस्य व्यर्थत्वादित्यत आह **वक्ष्यति चैतदिति ।** ज्ञानपाद इति शेषः । तत्र हि 'यावच्छक्ति परीक्षायामुपजीव्यस्य बाधने । दोषो नाशोधिते दोष उपजीव्यत्वमस्त्वलमि'त्यत्र भवेदेवं यद्यात्यन्तिकीं परीक्षामत्राङ्गीकुर्मः । न चैवं किन्तु यावच्छक्ति परीक्षामेव । न च तावन्मात्रस्य बाधकत्वनियमोऽस्ति । यावच्छक्ति परीक्षितस्यापि बाधदर्शनात् । अतो युक्तं विशिष्टस्योपादानमिति वक्ष्यतीत्यर्थः । यद्वा 'उपजीव्यप्रमाणं तद्वद्ग्राहकमेव हि' इति मूले उपजीव्यत्वस्यैव बाधकत्वे उपजीवकत्वस्यैव बाध्यत्वे प्रयोजकताया वक्ष्यमाणत्वात् तद्विरोध इत्यत आह **वक्ष्यति चैतदिति ।** आचार्यश्चेत्यन्वयः । यावच्छक्ति परीक्षायामिति ज्ञानपादीयानुव्याख्याने नाशोधिते दोष इति प्रसिद्धभ्रमस्थलव्यावर्तकं विशेषणं आचार्यश्च वक्ष्यतीत्यर्थः ।

श्री०— **समानमेतदिति ।** तथा चानुभवप्रामाण्यनिश्चये सति तद्विरोधेन श्रुतेरप्रामाण्यम् । तस्मिंश्च तद्विरोधाभावादनुभवप्रामाण्यनिश्चय इत्यन्योन्याश्रयत्वं समानमित्यर्थः ॥ **अनुभवस्येति ।** तथा च यथा श्रुत्यप्रामाण्यं निश्चितप्रामाण्यकानुभवविरोधसापेक्षं न तथाऽनुभवप्रामाण्यमप्रमाणभूतश्रुतिविरोधाभावसापेक्षम् । अनुभवस्य साक्षिरूपत्वेन स्वत एव तत्प्रामाण्यस्य सिद्धत्वादिति नास्मत्पक्षेऽन्योन्याश्रय इत्यर्थः । नन्वेवं तर्हि मत्पक्षेऽपि नान्योन्याश्रयः । श्रुतिप्रामाण्यनिश्चयस्यानुभवविरोधाभावापेक्षत्वादत आह **श्रुतेरिति ।** श्रुत्यपेक्षया साक्षिरूपानुभवस्य प्रबलत्वेन श्रुतिप्रामाण्यनिश्चयस्यानुभवविरोधाभावापेक्षत्वं वाच्यमेवेति स्यादेव त्वत्पक्षेऽन्योन्याश्रय इत्यर्थः ॥ **अन्यथेति ।** अनुभवस्योपजीव्यभूतस्य प्रबलत्वात्तत्प्रामाण्यमुपजीवकश्रुतिविरोधाभावसापेक्षं न भवतीत्यनङ्गीकृत्य यद्यस्माकमन्योन्याश्रयो दीयत इत्यर्थः । **धर्मीति ।** परमाणुः सावयव इत्यादौ यत्र धर्मिग्राहकविरोधो दीयते तत्र

सर्वत्रापि धर्मिग्राहकस्यानुभवस्य प्रामाण्ये सिद्धे तद्विरोधादनुमानादेरप्रामाण्यं सति तस्मिंश्च तद्विरोधाभावाद्धर्मिग्राहकस्य प्रामाण्यमित्यन्योन्याश्रयस्य वक्तुमशक्यत्वात् । तस्मात्तत्र धर्मिग्राहकानुभवस्योपजीव्यतया बलवत्त्वेन तत्प्रामाण्यमुपजीवकानुमानविरोधाभावापेक्षं न भवतीत्येव समाधिर्वाच्यः । स च समः प्रकृतेऽपीति । तर्हि यद्युपजीव्येनोपजीवकस्य बाध इत्यर्थः ॥ अयुक्तं स्यादिति । इदं रजतमिति ज्ञानं विना नेदं रजतमिति ज्ञानस्योत्थानासंभवेनेदं रजतमिति ज्ञानस्यापि नेदं रजतमिति ज्ञानं प्रत्युपजीव्यत्वादित्यर्थः ॥ उपजीव्येति । उपजीव्येनोपजीवकं बाध्यत इति न्यायस्येत्यर्थः ॥ तदन्येति । यत्रोपजीवकं परीक्षितं न भवति । उपजीव्यं च परीक्षितं तद्विषयत्वादित्यर्थः ॥ किमनेनेति । उपजीव्योपजीवकभावेनेत्यर्थः । तथा च प्रकृते नेदं रजतमिति ज्ञानप्रामाण्यं निश्चितमस्तीति भावः ।

**सु० — एवं तर्हि श्रुतेरपि प्रामाण्यं परीक्षासहकृतेन साक्षिणा निश्चितमित्यनुभवबाधकत्वमुपपत्स्यत इत्याशयवानाशङ्कते** श्रुतीति ।

**अनु०** — श्रुतिस्वरूपमर्थश्च मानेनैवावसीयते ॥

**स्वरूपमर्थश्चेति विवक्षाभेदेन प्रामाण्यमेवोक्तम्** । जीवस्य निर्दुःखब्रह्मात्मताप्रतिपादकश्रुतिस्वरूपमस्याः श्रुतेः सोऽर्थ इत्युभयत्र **फलतोऽर्थभेदाभावात् । एतदेव हि प्रामाण्यमपि । मानेन साक्षिणा । परिहरति** तच्चेदिति ।

तच्चेन्मानं गृहीतं ते किं दुःखानुभवे भ्रमः ॥

**त इत्यव्ययं तृतीयार्थे । ते मत इत्यध्याहारो वा । किं किंनिमित्तम्** । दुःखानुभवे **भ्रम इति । दुःखानुभवस्य भ्रमत्वमिति (इति) यावत् । अङ्गीक्रियत इति शेषः** । तत् साक्षिलक्षणं **मानं दुःखानुभवविषये भ्रमः कुतोऽङ्गीक्रियत इति वा । एतदुक्तं भवति । साक्षिणा श्रुतिप्रामाण्यं निश्चितमिति न परेणाङ्गीकर्तुं शक्यते । तथा सति तत्प्रामाण्यस्याङ्गीकर्तव्यत्वप्रसङ्गात् । इष्यते तदिति चेन्न । तथा सत्यहं दुःखीति दुःखादिविषयोऽपि स एवेति तत्रापि तस्य प्रामाण्यमेव ग्राह्यं स्यान्न भ्रमत्वम् । न चेत् श्रुतिप्रामाण्यग्रहणेऽपि भ्रमः स्यादिति** ।

**शे० — तर्हीति** । निश्चितप्रामाण्यस्योपजीवकस्याप्युपजीव्यबाधकत्व इत्यर्थः । नन्वत्र श्रुतिस्वरूपस्य तदर्थस्य च साक्षिणा निश्चितत्वमुच्यते न तु प्रामाण्यस्य । अत्र तत्प्रापकपदाभावात् । ततश्चानेनोपजीवकश्रुतेः साक्षिणा निश्चितप्रामाण्यत्वासिद्धेर्न तदुपजीवनेनोक्तशङ्कावकाश इत्यतोऽत्र वाक्ये श्रुतिस्वरूपशब्देनार्थशब्देन च प्रामाण्यस्योक्तत्वाद्युक्तस्तत्प्रामाण्यस्य साक्षिणा निश्चितत्वलाभ इत्याशयवानाह **स्वरूपमिति ॥ विवक्षाभेदेनेति** । एका विषयिप्राधान्यविवक्षाऽपरा विषयप्राधान्यवि-

वक्षा चेत्येवं विवक्षाभेदेनेत्यर्थः । श्रुतेर्विषयित्वात्तत्स्वरूपप्राधान्यविवक्षाऽऽद्या । अर्थस्य विषयत्वात्तत्प्राधान्यविवक्षा द्वितीयेति द्रष्टव्यम् । ननु श्रुतिस्वरूपशब्दस्य श्रुतिस्वरूपमात्रार्थत्वादर्थशब्दस्याप्यर्थमात्रार्थत्वादुभयोरपि भिन्नार्थत्वेन कथं प्रामाण्यरूपैकार्थप्रत्यायकतोभयोः स्यादित्यतोऽत्र श्रुतिस्वरूपशब्दस्य विशिष्टश्रुतिस्वरूपपरत्वादर्थशब्दस्यापि विशिष्टार्थपरत्वादुभयोरप्येकार्थत्वान्नानुपपत्तिरित्यभिप्रेत्य तयोर्विशिष्टार्थत्वोपदर्शनपूर्वकमेकार्थतामाह **जीवस्येति** । ननु विशेषणविशेष्यभेदेन विशिष्टार्थयोरपि भेदान्न तयोरेकार्थत्वं सम्भवतीत्यतो न स्वरूपेण तयोरेकार्थत्वमभिमतं किन्तु फलत एव तच्च विशेषणादिभेदेन विशिष्टार्थभेदेऽप्यविकलमेवेत्याशयेनोक्तं **फलत इति** । ननु चोक्तरूपयोर्विशिष्टार्थयोर्न प्रामाण्यरूपतेति कथं श्रुतिस्वरूपशब्दस्यार्थशब्दस्य च तत्प्रत्यायकत्वमित्यत उक्तरूपयोर्विशिष्टार्थयोः प्रामाण्यरूपत्वाभावेऽपि तदन्तर्भूतस्य विशिष्टार्थप्रतिपादकत्वस्य प्रामाण्यरूपत्वाद्विशिष्टार्थप्रतिपादकत्वस्य श्रुतिस्वरूपशब्दस्यार्थशब्दस्य च युक्तमेव विशिष्टार्थप्रतिपादकत्वरूपप्रामाण्यप्रत्यायकत्वमित्याशयवानाह **एतदेव हि प्रामाण्यमपीति** ।

ननु कर्तृकरणयोस्तृतीयेति प्राप्तां तृतीयां बाधित्वा कर्तृकर्मणोः कृतीति प्राप्तायाः षष्ठ्या न लोकाव्ययनिष्ठेति पुनः प्रतिषेधेऽपवादाभावे पुनरुत्सर्गस्य स्थितिरि'ति न्यायेन देवदत्तेन भुक्तमितिवत्त्वया गृहीतमिति तृतीयया भवितव्यं ते गृहीतमिति षष्ठी तु कथमित्यतस्त इत्यस्य तृतीयार्थत्वेन षष्ठीत्वाभावान्नानुपपत्तिरित्याशयेनाह **त इति तृतीयार्थ इति** । ननु च तेमयावेकवचनस्येति षष्ठ्येकवचनान्तस्य युष्मच्छब्दस्य त इत्यादेशविधानेन त इत्यस्य षष्ठीत्वात्कथं तृतीयार्थतेत्यतो नायं षष्ठ्येकवचनान्तस्य युष्मच्छब्दस्यादेशस्तेशब्दः किन्तु तत्प्रतिरूपकमव्ययमेवेति युक्तं तृतीयार्थत्वमित्याशयेनोक्तं **अव्ययमिति** । तेशब्दप्रतिरूपकस्य त इत्यव्ययस्याप्रसिद्धत्वान्न तदाश्रयणं युक्तमित्यपरितोषात् षष्ठ्येकवचनान्ततामेव तस्याङ्गीकृत्य मतशब्देन संबन्धेन निष्ठान्तेन गृहीतशब्देनासम्बन्धेनोक्तप्रतिषेधाप्राप्तेर्युक्तैव त इति षष्ठीत्याशयेन मतशब्दमध्याहरति **ते मत इतीति** । न च मतशब्दस्यापि निष्ठान्तत्वेनोक्तनिषेधतादवस्थ्यान्न षष्ठीनिर्वाह इति वाच्यम् । रूढ्या सिद्धान्तार्थकमतशब्दस्याव्युत्पन्नप्रातिपदिकतया निष्ठान्तत्वाभावेन तद्योगाभावादुक्तनिषेधाप्रसङ्गात् । मत इत्यत्र मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्तः । ततश्च क्तस्य च वर्तमान इति वर्तमानार्थकक्तयोगे न लोकेति प्रतिषेधबाधकत्वेन षष्ठीविधानाद्देवदत्तस्येष्टमितिवत्तदुपपत्तेरित्यप्याहुः । इदं च समाधानद्वयं लोकेति निषेधस्य षष्ठीमात्रनिषेधकत्वं नित्यत्वं चाभ्युपगम्यैव कृतम् । कारकषष्ठीमात्रनिषेधकत्वमेव तस्य न शेषषष्ठीनिषेधकत्वमिति पक्षेऽनित्यत्वपक्षे च त इति यथास्थितषष्ठ्युपपत्तावुक्तप्रकारद्वयकल्पनया तदुपपादनक्लेशवैयर्थ्यादिति द्रष्टव्यम् । अत्र पक्षे दुःखानुभव इति

सप्तम्याः षष्ठ्यन्तत्वं भ्रम इत्यस्य भावप्रधानत्वं चाश्रयणीयं भवतीत्यपरितोषात्प्रकारान्तरेण योजयति **तत्साक्षिलक्षणमित्यादि** ॥ **दुःखानुभवविषय इति** । दुःखानुभवस्य यो विषयो दुःखरूपस्तत्रेत्यर्थः । अत एव दुःखादिविषयोऽपि स एवेत्युत्तरग्रन्थः । यद्वा दुःखानुभवरूपो विषयोऽशस्तत्रेत्यर्थः । दुःखानुभवो भ्रमः कुतोऽङ्गीक्रियत इति यावत् । अत एव श्रुतिप्रामाण्यग्रहणेऽपीत्युत्तरग्रन्थः ॥ **तत्रापीति** । दुःखादावपीत्यर्थः ॥ **प्रामाण्यमेव ग्राह्यमिति** । प्रामाण्यमेवाङ्गीकर्तव्यमित्यर्थः ॥

**प०— विवक्षाभेदेनेति** । अर्थप्रतिपादकस्वरूपविवक्षा तत्प्रतिपादितार्थतत्त्वविवक्षेति विवक्षाभेदेन । प्रामाण्यमेव पदद्वयेनोक्तमित्येतद्व्यनक्ति **जीवस्येति** । शङ्काग्रन्थत्वाज्जीवस्य निर्दुःखब्रह्मात्मतेत्याद्युक्तम् ॥ **सोर्थ इति** । ब्रह्मात्मभवरूपोर्थः ॥ **एतदेव हीति** । विषयतासंबन्धेन करणार्थयोरेव प्रामाण्यशरीरत्वादिति भावः । गृहीतमित्यस्य कर्मार्थकनिष्ठान्तस्य तृतीयाकाङ्क्षायामाह **त इत्यव्ययं तृतीयार्थ इति** । एतेन न लोकाव्ययनिष्ठेति निषेधात् इति षष्ठी न युक्तेति निरस्तम् ॥ **तेनेत्यध्याहारो वेति** । स च प्राङ्मानपदोक्तसाक्षिपरामर्शितेन त्वदीयेन साक्षिणेति योजनेति भावेन तेनेत्यस्यार्थमाह **साक्षिणेति** ॥ **तन्मानमिति** । भावप्रधानमित्युपेत्यार्थोक्तिः **श्रुतिप्रामाण्यमिति** । गृहीतमित्यस्यार्थः **निश्चितमिति** । यद्वा तेनेत्यस्य परेणेत्यर्थः ॥ इष्यते **तदिति चेदिति** । साक्षिप्रामाण्यमित्यनुषङ्गः । तन्मानं गृहीतमित्यस्यार्थः **तथा सतीति** । साक्षिप्रामाण्यस्याङ्गीकारे सतीत्यर्थः ।

**या०— विवक्षाभेदेनेति** । अत्र सर्वत्र श्रुतिशब्देन तज्जनितज्ञानमेवाभिप्रेतम् । तथा च विषयिविषययोः प्राधान्यविवक्षाभेदेनेत्यर्थः । लोके विषयिविषययोर्मध्येऽन्यतरप्राधान्यविवक्षया प्रामाण्योक्तिर्द्विधाऽस्तीति वस्तुस्थितिप्रदर्शनायैवमुक्तमिति ज्ञातव्यम् । एतदेव दर्शयति **जीवस्येत्यादिना** । जीवस्य निर्दुःखब्रह्मात्मताप्रतिपादकेत्युक्तिः पररीत्येति द्रष्टव्यम् । ननु विशेषणविशेष्यभावभेदेन वाक्यार्थभेदाभाव इत्यत उक्तं **फलत इति** । विषयविषयितत्संबन्धानां प्रतिपादनं हि फलम् । तदुभयत्र सममेवेत्यर्थः । नन्वेवमुभयत्र विषयविषयितत्संबन्धानामेवोक्तिः प्राप्ता न प्रामाण्यस्यातः कथं प्रामाण्यमेवोक्तमित्युक्तमित्यत आह **एतदेव हीति** । ज्ञानविषयतत्संबन्धघटितमेव हि प्रामाण्यशरीरमपीत्यर्थः । यथावस्थितज्ञेयविषयीकारिज्ञानत्वस्यैव प्रामाण्यरूपत्वादिति भावः । यद्यपि जीवस्य निर्दुःखब्रह्मात्मताज्ञानं न वस्तुतो यथावस्थितज्ञेयविषयिकारि । तथाऽपि परमते जीवस्य निर्दुःखब्रह्मात्मतायाः सत्यत्वात्तदभिप्रेतं प्रामाण्यमेतदेवेत्यर्थः । अत एव ते मते इत्यध्याहारो वेति वक्ष्यति । ननु गृहीतशब्दस्य निष्ठान्तत्वात्तद्योगे न लोकाव्ययनिष्ठेति षष्ठ्याः प्रतिषिद्धत्वात्कथं ते गृहीतमिति

प्रयोग इत्यत आह **त इत्यव्ययमिति** । त इत्यस्य षष्ठ्यन्तत्वमभ्युपेत्यापि समाधत्ते **ते मत इतीति** । तथा च निष्ठान्तेन योगाभावान्नोक्तप्रतिषेधप्राप्तिरिति भावः । मूले गृहीतमित्यस्य स्वीकृतमित्यर्थो बोध्यः ॥ **दुःखानुभवविषय इति** । दुःखानुभवस्य विषयो दुःखरूपस्तत्रेत्यर्थः । तथा च मूले दुःखस्यानुभवो यस्य विषयस्य स तथोक्त इति बहुव्रीहिरभिप्रेत इति भावः ।

श्री० — **एवं तर्हीति** । परीक्षितप्रामाण्येनोपजीवकेनोपजीव्यस्यातथाभूतस्य बाधो यद्यभ्युपगम्यत इत्यर्थः ।

सु० — नन्वेकत्र प्रामाण्ये विषयान्तरेऽपि प्रामाण्येन भाव्यं तत्राप्रामाण्ये चान्यत्रापि अप्रामाण्येन भवितव्यमिति कुत एतत् । मा हि भूदेकस्य चक्षुरादेरयं नियम इत्यत आह न चेति ।

अनु० — न च बाधविशेषोऽस्ति यदबाधितमेव तत् ॥

भवेदेवैकस्यापि क्वचित्प्रामाण्ये परत्राप्रामाण्यम् । कारणविशेषात् । स चोत्पत्तौ दोषो ज्ञप्तौ बाधः । दोषोऽपि बाधोन्नेय एव । यथोक्तम् । 'बलवत्प्रमाणतश्चैव ज्ञेया दोषा न चान्यथे'ति । ततो बाध एव विशेषः । न च दुःखादिविषयस्य साक्ष्यनुभवस्य बाधरूपो विशेषोऽस्ति । येनासौ श्रुतिप्रामाण्ये प्रमाणभूतोऽपि दुःखादौ भ्रमः स्यात् । यत् यस्मादेवं तत तस्मात् श्रुतिप्रामाण्यमिव तत् आत्मनो दुःखित्वादिकमप्यबाधितमेव सत्यमेवाङ्गीकार्यमिति । यद्वा यद्यस्मादेवं त(त्)स्मात्किं दुःखानुभवे भ्रम इति पूर्वे(र्वे)ण संबन्धः ।

शे० **मा हि भूदिति** । न भवति हीत्यर्थः । अन्यथा चक्षुरादेरपि रूपादौ प्रामाण्ये रसादावपि प्रामाण्यं तत्राप्रामाण्ये च रूपादावप्रामाण्यं स्यादित्यतिप्रसङ्ग इति भावः ॥ **भवेदेवेति** । चक्षुरादेः क्वचित्प्रामाण्येऽप्यन्यत्राप्रामाण्यं भवेदेवेत्यर्थः ॥ **दोषोऽपीति** । यद्यपि स्वरूपासिद्ध्यादयोऽनुमानादिदोषाः प्रत्यक्षादिसिद्धास्तथाऽपीन्द्रियदोषमपेक्ष्यायं नियम इत्यवधेयम् । इन्द्रियदोषस्य बाधैकोन्नेयत्वे किं मानमित्यतस्तत्र ब्रह्मतर्कवाक्यमुदाहरति **यथोक्तमिति** । यथा च नान्यथा ज्ञेयास्तथोपपादनप्रकारस्तु स्वनिर्णयटीकानुसारेणानुसन्धेयः । तर्हि चक्षुरादेः क्वचित्प्रामाण्येऽप्यन्यत्राप्रामाण्यवच्छ्रुतिप्रामाण्ये प्रमाणभूतस्यापि साक्षिणो दुःखादिविषयेऽप्रमाणत्वमस्त्वित्यत आह **न चेति** । एवं तर्हीत्युत्थापिताकाङ्क्षायाः किं दुःखानुभवे भ्रम इति पूर्वानुवृत्त्यैव परिपूर्तिसम्भवादबाधितमेवेत्यस्य न तत्पूरकत्वेन योजना युक्तेत्यरुचिं मनसि निधाय पूर्वग्रन्थैकवाक्यतया योजयति **यद्वेति** ।

प० — **कुत एतदिति** । कुतो नियामकादेतत्कल्प्यत इत्यर्थः । न केवलं नियामकाभावः । अतिप्रसङ्गश्चैवं सति प्राप्नोतीति भावेन विपर्ययपर्यवसानमुखेनातिप्रसङ्गमाह **मा हि भूदिति** । एकस्य चक्षुषः श्रोत्रादेर्वा क्वचित्प्रामाण्ये शुक्तिरूप्याद्यंशेपि प्रामाण्यं तत्राप्रामाण्यं चेत्सत्यरजतांशेप्यप्रामाण्यमित्येष नियमो मा हि भूदित्येतदर्थं नैवं कल्प्यम् । अन्यथा तस्यैवं स्यात् । तथाच प्रमाभ्रमव्यवस्थाऽभावः स्यादिति भावः ॥ **यथोक्तमिति** । विष्णुतत्वनिर्णय इति योज्यम् ।

सु० — **नन्वेतत् श्रुतिप्रामाण्यं दुःखादिकं च साक्षिगृहीतमेव । न चोभयत्र प्रामाण्यं साक्षिणो युक्तम् । परस्परविरोधात् । तत एकत्राप्रामाण्यावश्यम्भावे दुःखादावेव तदिति ग्राह्यम् । श्रुतिप्रामाण्यस्यापौरुषेयत्वादिपरीक्षासहकृतेन गृहीतत्वात् । अतो मिथ्यैव दुःखित्वादिकमिति चेन्न । दुःखादावपि सजातीयविजातीयसंवादरूपपरीक्षासद्भावात् । एवं तर्हि सन्देहान्न दुःखादिसत्यतानिश्चयो भवतां युक्त इति न श्रुतेरनुभवबाधो वक्तुं शक्यत इत्यत आह** अबाधितमेवेति ।

**तद् दुःखं सत्यमेवेत्यवधारयतोऽयमभिसन्धिः । सत्यम् । श्रुतिप्रामाण्यं दुःखादिकं च साक्षिगृहीतमेव । न चैकत्रापि बाधकमस्तीत्युभयत्रापि प्रमाणं साक्षी । न च विरोधः । अद्वैतसत्तामन्तरेणापि श्रुतिप्रामाण्यसत्तायाः संभवात् । न ह्यपौरुषेयत्वादियुक्तयो विषयविशेषनियतप्रामाण्यनिश्चये (साक्षिणः) साचिव्यमाचरन्ति । किन्तु प्रामाण्यमात्रनिश्चये । उपक्रमाद्यास्तु तत्र तत्राभासीकृता एव । न च दुःखसत्तामन्तरेण तत्र प्रामाण्यस्य संभवोऽस्ति । न च दुःखसत्तया श्रुतिप्रामाण्यमात्रस्य विरोधोऽस्ति । विषयान्तरेऽपि तस्य संभवात् । अतः सत्यमेव दुःखादिकमिति ।**

शे० — तर्ह्यबाधितमेवेति कारिकाखण्डवैयर्थ्यमित्याशङ्क्य शङ्कान्तरपरिहारकत्वात्तस्य न तदपीत्यभिप्रेत्य तन्निवर्त्यां शङ्कामुत्थापयति **नन्वेतदित्यादिना** । ननूक्तशङ्कोपमर्दकस्यात्र ग्रन्थेऽप्रतिभासान्नानेन ग्रन्थेन तत्परिहार इत्यत आह **तद्दुःखादिकं सत्यमेवेत्यवधारयतोऽयमभिसन्धिरिति** ॥ **विषयान्तरेऽपीति** ॥ तद्गुणसारत्वादित्युत्तरत्र वक्ष्यमाणसादृश्यादिरूपविषयान्तरेऽपीत्यर्थः । इतीत्यस्येत्ययमिति सम्बन्धः ।

प० — अद्वैतपरोपक्रमादयस्तु श्रुतेरद्वैतविषयप्रामाण्यनिश्चये साक्षिणः साचिव्यमाचरन्त्वित्यत आह **उपक्रमाद्यास्त्विति** ॥ **तत्र तत्रेति** । तत्वनिर्णयबृहद्भाष्यादावित्यर्थः ॥ **विषयान्तरेपीति** ।

जीवस्य निर्दुःखब्रह्मतारूपविषयापेक्षया ज्ञानानन्दाद्यात्मकत्वरूपब्रह्मसादृश्यरूपार्थान्तरेऽपीत्यर्थः ॥
**धर्मिग्राहकतया प्राबल्येनाद्वैतश्रुतेः प्रत्यक्षबाध्यत्वोक्तिः ॥**

**या०— विषयान्तरेऽपीति ।** तद्गुणसारत्वादित्यत्र वक्ष्यमाणे सादृश्यादिरूपे अर्थान्तरेऽपि अद्वैतश्रुतिप्रामाण्यसंभवादित्यर्थः ।

**श्री०—** नन्वेवमेव दुःखादिसत्तामन्तरेणानुभवस्याप्यर्थान्तरे प्रामाण्यमस्त्वित्यत आह **न च दुःखसत्तामिति ।** एवं च तद्विरोधो नास्तीत्याह **न चेति ।**

**सु०— श्रुतिरनुभवस्य बाधिका न भवति । किन्तु धर्मिग्राहकतया प्रबलेनानुभवेनैव बाध्यत इत्युक्तम् । न केवलं धर्मिग्राहकतयाऽनुभव(स्य प्राबल्यम् । किन्नाम श्रुतिस्वरूप-प्रामाण्यग्राहकत्वेनापीत्याशयवानाह श्रुतीति । अर्थ इत्यर्थवत्त्वं प्रामाण्यमिति यावत् । स्वरूपतः प्रामाण्यतश्चावसिता हि श्रुतिरभिप्रेतसिद्धये प्रयोक्तव्या नान्यथा । श्रुतिस्वरूपं तत्प्रामाण्यं च मानेनैव साक्षिलक्षणेनावसीयते नान्येन । यद्यपि श्रुतिस्वरूपं श्रोत्रवेद्यं तथाऽपि श्रोत्रजनित-तद्वृत्तिप्रामाण्यं यावन्न साक्षिणा गृह्यते तावन्न तत् सिध्यतीत्यतः श्रुतिस्वरूपावसायोऽपि साक्षिण्येवायतते ।**

---

**यद्वा श्रुतिशब्दे(नै)न तज्जनितं ज्ञानमुच्यते । तत्र पृच्छामः । तस्य साक्षिणः प्रामाण्यं भवताऽभ्युपगतं न वेति । नेति पक्षे श्रुतिस्वरूपाद्यसिद्धेर्न तद्विरोधेन दुःखाद्यनुभवस्य भ्रमत्वं वक्तुं युक्तम् । आद्यं दूषयति तच्चेदिति । तत् साक्षि(स्व)रूपं प्रमाणं त्वया गृहीतं चेत्तदा दुःखानुभवस्य भ्रमत्वं किं (कथं) न कथञ्चित् । श्रुतिविरोधेन खलु तदुच्यते । सा तु स्वरूपप्रामाण्यग्राहकतयोपजीव्येनानुभवेन बाधिता कथं तद्बाधनाय प्रभवतीति ।**

**स्यादेतत् । श्रुतिस्वरूपप्रामाण्ययोः साक्षिणः प्रामाण्यमङ्गीक्रियते । दुःखादौ तु विषयान्तरे श्रुतिविरोधेनाप्रामाण्यमाश्रीयते । तत्कथमुक्तदोष इत्यत आह न चेति । बाधस्य बाधकत्वेन अभिमतायाः श्रुतेः विशेषो बाध्यतयाऽभिमतात्साक्षिणोऽतिशयो नास्ति । अस्ति चोक्तवक्ष्यमाणरीत्या साक्षिण एव विशेष इति । शिष्टं स्पष्टम् ।**

**शे०—** शङ्कापरिहारत्वज्ञापकाभावात्तत्परत्वेन पूर्वोत्तरग्रन्थव्याख्यानं क्लिष्टमित्यभिप्रेत्य सिद्धा-न्तग्रन्थतयैव पूर्वग्रन्थसङ्गततया वाक्यद्वयं योजयितुं पूर्वग्रन्थार्थमनुवदति **श्रुतिरिति ॥ उक्तमिति ।** उपजीव्यविरुद्धत्वित्यादिनेति शेषः । ननु श्रुतिस्वरूपप्रामाण्यनिश्चयेनापि किं प्रयोजनं येन तन्निश्चायकत-

थाऽनुभवस्य प्राबल्यं स्यादित्यतस्तत्प्रयोजनकथनेन तस्यावश्यकतां प्रथममुपपादयति **स्वरूपत इति** ॥ **शिष्टमिति** । 'अबाधितमेव तदि'त्येतत्पूर्वोक्तरीत्या व्याख्यातव्यमित्यर्थः ।

**प०** — श्रुतिस्वरूपमित्यादिकं प्रकारान्तरेण योजयितुमाह **न केवलमित्यादिना** ॥ **साक्षिण्येवायतत इति** साक्ष्यधीनो वर्तत इत्यर्थः ॥ **ज्ञानमुच्यत इति** । श्रुतिजन्यज्ञानस्वरूपमित्युक्तौ न काप्यनुपपत्तिः । तस्य साक्षिवेद्यत्वादिति भावः ।

**या०** — प्रामाण्योक्तेरेकेनैव पदेन सम्भवात्तदर्थं पदद्वयं व्यर्थमित्यस्वरसान्मूलं प्रकारान्तरेण व्याख्यातुमाह **न केवलमित्यादि** । **तद्वृत्तीति** श्रुतिस्वरूपविषयकज्ञानेत्यर्थः । तत् याथार्थ्यरूपं श्रुतिप्रामाण्यम् । अत्र (प्रथम)द्वितीयकल्पदूषणस्य बहिरेव वक्तव्यत्वेनारुच्या तदेव मूलं प्रकारान्तरेण व्याख्यातुमाह **किञ्चेत्यादि** ।

**श्री०** — **श्रुतीति** । अद्वैतश्रुतीत्यर्थः ॥ **तद्वृत्तीति** । श्रुतिविषयकवृत्तिज्ञानेत्यर्थः । **शिष्टम्** अबाधितमेव तदित्यस्य व्याख्यानमित्यर्थः ।

**सु०** — **किञ्चाहं दुःखीत्यादिसाक्षिणो भ्रमत्वं वदन्प्रष्टव्यः । किं सर्वत्रापि साक्षिणो भ्रमत्वमङ्गीक्रियते । उत क्वचित्प्रामाण्यमपि । आद्ये दोषमाह** श्रुतिस्वरूपमिति ।

मानेन **साक्षिणैव । तथा च तस्य** भ्रान्तित्वे तन्न **सिध्येदिति** भावः । **परमार्थतो मा सैत्सीदिति च न** वाच्यम् । तत्त्ववेदकत्वस्याङ्गीकृतत्वात् । अथ **श्रुतिस्वरूपादिविषये तन्मानत्वं स्वीक्रियत इति द्वितीयमनूद्योत्तरमाह** तच्चेदिति । **एकत्र प्रामाण्ये परत्रापि प्रामाण्यमङ्गीकर्तव्यमित्येतत्कुत इत्यतोऽविशेषादित्याह** न चेति । **पूर्ववद्व्याख्यानम्** ।

**शे०** — अत्रापि पक्षे नेति पक्षदूषणं बहिरेव वक्तव्यं भवतीत्यपरितोषात्प्रकारान्तरेणापि व्याख्यातुं विकल्पयति **किञ्चेति** ॥ **पूर्ववद्व्याख्यानमिति** । शङ्कासमाधानतयैतद्ग्रन्थयोजनायामिवास्यामपि योजनायां न चेत्यादिवाक्यव्याख्यानं द्रष्टव्यमित्यर्थः ।

**प०** — तदेव प्रकारान्तरेण योजयति **किञ्चाहमिति** ॥ **पूर्ववद्व्याख्यानमिति** । श्रुति-(स्मृति)स्वरूप इव दुःखादिविषये बाधरूपविशेषो नास्ति । यद्यस्मात्तद्दुःखादिकमबाधितं सत्यं तस्मादिति व्याख्येयमित्यर्थः ।

सु०— एवं साक्षिणः प्रमाणान्तरसाधारणरूपता(त्व)मुपेत्य बाधकाभावेनाहं दुःखी-त्यादेर्भ्रमत्वं नोपपद्यत इत्युक्तम् । इदानीं साक्षिणो यथार्थत्वनियमाच्च न दुःखादिविषये भ्रमत्वशङ्कोपपद्यते । किं बाधकगवेषणादिनेत्याशयवान्साक्षिणो यथार्थत्वनियमं विपक्षे बाधकेन समर्थयते बाध इति ।

अनु०— बाधो यद्यनुभूतेऽर्थे कथं निर्णय ईयते ॥

अनुभूते साक्षिप्रतीतेऽर्थे यदि बाधः प्रवर्तेत साक्षी यदि कुत्रचिदयथार्थः स्यादिति यावत् । अयथात्वर्थस्य बाधोन्नेयत्वादेवमुक्तम् । तदा कथं स्तम्भोऽयं कुम्भोऽयमिति पदार्थानां निर्णय ईयते उपेयते ।

एतदेव प्रपञ्चयति कोऽपीति ।

कोऽपि ह्यर्थो न निश्चेतुं शक्यते भ्रमवादिना ॥

भ्रमवादिना साक्षिणः क्वचिद्भ्रमत्वं वदता । (यदि) साक्षी क्वचिदयथार्थः स्यात्तदा पदार्थनिर्णयो न स्यादित्यर्थः । यथाऽऽहुरन्येऽपि । 'ज्ञानस्य व्यभिचारित्वे विश्वासः किन्निबन्धन' इति ।

शे०— साक्षिसिद्धस्य बाध्यताया एवापादकत्वमिति प्रतीतिनिरासायाह साक्षीति । तर्हि साक्षी यद्ययथार्थः स्यादित्येव वक्तव्यम् । किं साक्षिगृहीतस्य बाध्यत्वकथनेनेत्यतोऽयथार्थत्वस्य बाधोन्नेयत्वात्तदुन्नायकतया बाध्यत्वकथनमित्याह अयथार्थत्वस्येति । ज्ञानस्य क्वचिदयथार्थत्वे पदार्थनिर्णयो न स्यादित्येतत्प्राभाकरसम्मतं चेत्याह यथाऽऽहुरिति । तद्वाक्यं पठति ज्ञानस्येति । अयमर्थः । प्रदर्शिताकारव्यभिचारे प्रत्ययस्य सर्वत्र ज्ञाने व्यभिचारशङ्का दुर्वारा स्यात् । तथा च न बाह्यार्थनिह्नवो निराकर्तुं शक्यः । तथा हि । ज्ञानमेव खलु सर्वत्र वस्तुव्यवस्थापकं नान्यत् । तच्चेत्क्वचिद्व्यभिचरति तदा सर्वत्र शङ्कितव्यभिचारमेव । न च तच्छङ्कापङ्कसङ्क्षालनक्षमं किञ्चिदन्यद्विज्ञानात् । तच्च सकलमपि शङ्काकलङ्कसङ्कोचितप्रभावं न प्रभवति । ततश्च कुतो बाह्यार्थप्रत्याशा । न च यथा पटादेः पार्थिवस्य वन्हिव्यभिचारेऽपि न धूमस्यापि तद्व्यभिचारःशङ्क्यते । एवमेकज्ञानस्यार्थव्यभिचारेऽपि न सर्वत्र व्यभिचारशङ्केति वाच्यम् । वैषम्यात् । अस्ति हि तत्र पार्थिवत्वाविशेषेऽप्यव्यभिचारनिश्चयोपायो धूमत्वादिरवान्तरो विशेषस्तेन तत्रोपपद्यते आश्वासः । प्रकृते तु न ज्ञानत्वावान्तरविशेषमनाश्वासनिरसनदक्षमीक्षामहे । न च बाधकभावाभावरूपविशेषाद्व्यवस्थेति वाच्यम् । बाधकस्यापि ज्ञानत्वेन शङ्कास्पदत्वात् । संवादभावाभावाभ्यां विशेष इत्यपि न । संवादकस्यापि ज्ञानत्वेन शङ्कास्पदत्वात् । तत्रापि संवादकान्तरान्वेषणेऽनवस्था कुतो न भवेत् । नापि ज्ञानजन्यव्यवहारविसंवादाविसंवादकृतो विशेषः । तद्विशेषग्राहिण्यप्याश्वासकारणाभावादिति ।

यद्यप्यर्थतथात्वाश्वासप्रयोजकतया ज्ञानयाथार्थ्यमभ्युपगम्य तदयाथार्थ्यं परैर्निराकृतमस्माभिस्तु ज्ञान-प्रामाण्यग्राहकस्य साक्षिण एव याथार्थ्यमभ्युपगम्य तदयाथार्थ्यं निराकृतमिति वैषम्यं, तथाऽप्यर्थग्राहित्वतज्ज्ञानप्रामाण्यग्राहित्वरूपावान्तरविशेषमविवक्ष्य ज्ञानायाथार्थ्येऽर्थतथात्वाश्वासाभावरूपमापाद्यं तेषामस्माकं सम्मतमेवेति भावेनेयं सम्मतिरुक्तेति द्रष्टव्यम् ।

प० — अन्येपीति । प्राभाकरा इत्यर्थः । विश्वासो नामार्थतथात्वाश्वासो मनोवृत्तिविशेषः । 'अहो बत महानेष प्रमादो धीमतामपी'ति पूर्वार्धं ध्येयम् ।

पा० — अन्ये प्राभाकराः । विश्वासो निश्शङ्कप्रवृत्तिहेतुरर्थतथात्वाश्वासः । इदमित्थमेवेत्यर्थतत्त्वनिश्चय इति यावत् । यद्यप्यर्थतथात्वाश्वासाय प्राभाकरैर्ज्ञानस्यायाथार्थ्यं क्वापि न स्वीकृतम् । अस्माभिस्तु ज्ञानप्रामाण्यग्राहिणः साक्षिण एवेति वैषम्यं तथाऽप्यर्थतथात्वाश्वासाभावरूपमापाद्यं तेषामस्माकं च सममेवेति तदंशे सम्मतिरियमिति द्रष्टव्यम् ।

सु० — ननु च निर्णयो निश्चय इति चावधारणात्मकं ज्ञानमुच्यते । तच्च स्तम्भकुम्भादिष्वर्थेषु तत्तत्कारणसामग्रीवशादेवोत्पद्यते । निर्णायकाभावसहकृतसमानधर्मदर्शनादिना ह्यनवधारणात्मकं ज्ञानं संशयपदवेदनीयं जन्यते । तद्विलक्षणया च सामग्र्या अवधारणज्ञानम् । तत्र कः साक्षिणो याथार्थ्यनियमस्योपयोगः । किञ्च तदभावेनापनेष्यते । उच्यते । न स्तम्भोऽयमित्येकाकारप्रतिनियतं ज्ञानं इह (हि) निर्णयादिशब्दैरभिधीयते । अपि तर्हि तदनन्तरभावी वस्तुतथात्वाश्वासः । तथा हि । वक्तारो भवन्ति । स्तम्भ इति (च) प्रतीयते भवति चायं स्तम्भ इति वा वस्तुतत्त्वं तु न विद्म इति वेति । तत्कस्य हेतोः । एकाकारप्रतिनियतेष्वपि ज्ञानेषु केषाञ्चिद्भ्रमत्वस्य केषाञ्चिदभ्रमत्वस्य बहुलमुपलब्धत्वेनेदानीं जायमानेष्ये(ष्वे)काकारनियते ज्ञाने वस्तुतथात्वविश्वासायोगात् ।

शे० — साक्षियाथार्थ्यस्यावधारणज्ञानसामग्रीकोटावनिवेशात्साक्षिणोऽयथार्थत्वेऽप्यवधारणज्ञानसामग्रीमात्रेणावधारणज्ञानोपपत्तेरप्रयोजकत्वेनापाद्यापादकयोर्व्याप्तेरेवाभावान्न तदयाथार्थ्येन पदार्थानिर्णयाभावापादनं संभवतीत्यभिप्रेत्य शङ्कते ननु चेति । निर्णयादीत्यादिपदेन निश्चयपरिग्रहः । एकाकारनियतज्ञानानन्तरभाव्यर्थतथात्वाश्वासरूपं सप्रमाणकमभिनयेन दर्शयति तथा हीति । यद्यप्यत्रायं स्तम्भ इति ज्ञानानन्तरं भवति चायं स्तम्भ इति प्रतीतेरनुभूयमानत्वादित्येव वक्तुं युक्तं तथाऽपि तथानुभवे विप्रतिपद्यमानं प्रति किं तत्समर्थनायासेनेत्यभिप्रेत्य तत्कार्यव्यवहारानुसरणं कृतमिति

द्रष्टव्यम् । निर्णयोत्तरभाविनमर्थतथात्वानध्यवसायमपि सप्रमाणकमभिनयेन दर्शयति वस्तुतत्त्वं न विद्म इति वेति । स्तम्भ इति प्रतीयते, वस्तुतत्त्वं न विद्म इति प्रतिवक्तारो भवन्तीति पूर्वेणान्वयः । ततश्च यदि प्राथमिकमेकाकारनियतं ज्ञानमेवार्थतथात्वाश्वासरूपं स्यात्तर्ह्ययमर्थसंशयो न स्यादस्ति चायं तस्मादेकाकारनियतं ज्ञानमेव न निर्णयः किन्त्वतिरिक्तमेवेत्युक्तं भवति । ननु निश्चिते कथं संशय इति पृच्छति तत्कस्य हेतोरिति । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'ति कात्यायनस्मरणात्कस्येति षष्ठीति द्रष्टव्यम्। कस्माद्धेतोरित्यर्थः। ज्ञानत्वादिसाधारणधर्मदर्शनजनिततज्ज्ञानप्रामाण्यसंशयान्निश्चितेऽप्यर्थे संशय इति परिहरति एकाकारेति । वस्तुतथात्वशब्देन प्रामाण्यं ग्राह्यम् । तथा च प्रामाण्यनिश्चया-योगादित्यर्थः । प्रामाण्यसंशयादिति यावत् ।

**प०**— निर्णय इति निश्चेतुमिति पदद्वयोक्तस्यानुवादो **निर्णयो निश्चय इतीति** । निर्णय-सामग्री एकेत्यतस्तां वक्तुं संशयसामग्रीमाह **निर्णायकाभावेति** ॥ **किंचेति** । तदभावेनापनेष्यते च किमित्यर्थः । सिद्धान्तयति **उच्यत इति** । अनन्तरभावी वस्तुतथात्वाश्वास इत्येतल्लौकिकवचन-संवादेन व्यनक्ति **तथा हीत्यादिना** । ज्ञाने प्रमात्वनिश्चयाधीनोऽयमाश्वासो नान्यथेति भावेन प्रश्नोत्तरे वक्ति **तत्कस्य हेतोरिति** ।

---

**या०**— प्राथमिकनिर्णयानन्तरभावी वस्तुतथात्वाश्वास इत्येतदुपपादयति **तथा हीत्यादिना ॥ भवति चायं स्तंभ इति वेति** । तथा च प्राथमिकनिर्णयानन्तरभावी वस्तुतथात्वाश्वास इत्यत्रैतादृशलौकिकवचनमेव प्रमाणमित्याशयः । विपक्षे बाधकमप्यस्तीत्याशयेनोक्तं **वस्तुतत्त्वं न विद्म इति** । स्तम्भ इति प्रतीयत इत्येतदनुवर्तते । तथा चानभ्यासदशायामेतादृशेन लौकिकानां वचनेन निर्णयानन्तरमप्यर्थे संशयोऽस्तीति ज्ञायते । तेन यदि प्राथमिको निर्णय एवार्थतथात्वाश्वासरूपस्तर्हि तदनन्तरमयमर्थे संशयो न स्यादिति बाधकमुक्तं भवतीति ज्ञातव्यम् । यद्वा एकाकारनियतज्ञानरूप-निश्चयस्य उभयत्र सत्त्वेऽपि निर्णयस्य क्वचित्सत्वात् क्वचिदसत्वात् ततो भेदस्सिद्ध्यतीति भावः । भवति चायं स्तंभ इति निर्णयसत्वव्यवहारः, 'वस्तुतत्वं न विद्महे' इति वेति अनिर्णयव्यवहार इति विवेकः ॥ **अतिप्रसंगादिति** । ननु निश्चिते कथमयं संशय इत्याशयेन पृच्छति **तत्कस्येति** । ज्ञान-त्वादिसाधारणधर्मदर्शनजनितात्प्रामाण्यसंशयादित्याह **एकाकारप्रतिनियतेष्वपीत्यादिना ॥ वस्तुतथा-त्वेति** । तत्र वस्तुतथात्वशब्देन प्रामाण्यमुच्यते । तथा च प्रामाण्यनिश्चयायोगादित्यर्थः । तत्सं-शयादिति यावत् ।

सु०— भवतु वस्तुतथात्वाश्वासो वस्तुदर्शनपृष्ठभावी निर्णयः । सोऽपि तस्य दर्शनस्य भ्रमत्वाभ्रमत्वनिर्णयमेवापेक्षते । यदि ज्ञानं भ्रमः स्यात्तदा वस्त्वतथाभूतमित्यवसीयते । यदि त्वभ्रमस्तदा तथाभूतमिति । एवञ्च किं साक्षिणो याथार्थ्यनियमेनोपनीयते, किञ्च तस्य भ्रमत्वेनापनीयत इत्यत आह भ्रमत्वमिति ।

अनु०— भ्रमत्वमभ्रमत्वं च यदैवानुभवोपगम् ॥
एकस्य भ्रमता तत्र परस्याभ्रमता कुतः ॥

सत्यं प्रत्ययानां भ्रमत्वाभ्रमत्वनिर्णयायत्तो वस्तुनिर्णय इति । सैव तत्र प्रत्ययेष्वेकस्य स्तम्भादौ पुरुषादिप्रत्ययस्य भ्रमताऽपरस्य स्तम्भादिप्रत्ययस्याभ्रमता च कुतो निर्णेतव्या न कुतोऽपि । कुतो यदा यतः । प्रत्ययानां भ्रमत्वमभ्रमत्वं च अनुभवोपगं साक्षिणैवाध्यवसेयमिति ।

शे०— शङ्कते भवत्विति ॥ वस्तुनिर्णय इति । वस्तुनस्तथाभूतत्वातथाभूतत्वनिर्णय इत्यर्थः । 'यदाशब्दस्तु हेत्वर्थे कालार्थे चापि भण्यते' इति वचनात् 'यदा ददाहे'त्यादाविव हेत्वर्थे यदाशब्द इत्याशयेनाह यदा यत इति ॥ साक्षिणैवाध्यवसेयमिति । तथा च साक्षिणः क्वचिद्-यथार्थत्वे साक्षिरूपस्य भ्रमत्वाभ्रमत्वनिश्चयस्याप्ययथार्थत्वापत्त्या तेनोक्तरूपवस्तुनिर्णयायोगात्तदुपपत्त्यर्थं नायथार्थत्वं तस्याङ्गीकार्यमिति भावः ।

प०— शङ्कते भवत्विति ॥ भ्रमत्वाभ्रमत्वनिर्णयमेवेति । न तु साक्षिणमित्येवकारार्थः । कुतोऽपेक्षत इत्यतो व्यनक्ति यदीति ॥ निर्णयायत्त इति । निर्णयाधीन इत्यर्थः ।

सु०— स्यादेतत् । करणदोषबाधकप्रत्ययाधीनं प्रत्ययानां भ्रमत्वमभ्रमत्वं च संवादा-यत्तं भविष्यति । तत्कथं तदनवधारणमित्याशङ्कां परिहरन्नुक्तमर्थं स्पष्टमाचष्टे भ्रमत्वमिति ।

अनु०— भ्रमत्वमभ्रमत्वं च सर्वं वेद्यं हि साक्षिणा ॥
स चेत्साक्षी क्वचिद्दुष्टः कथं निर्णय ईयते ॥

प्रत्ययानां भ्रमत्वमभ्रमत्वं तदवधारणोपयुक्तं च सर्वं करणदोषादिकं साक्षिणा निश्चेयम् । अनिश्चितस्य भ्रमत्वाद्यवधारणाप्रसङ्गात् । स चेत्साक्षी क्वचित् विषये दुष्टः अयथार्थः स्यात्तदा कथं कारणदोषादेर्भ्रमत्वादेर्वस्तुतथात्वादेर्वा निर्णय ईयते । एतदुक्तं भवति । प्रत्ययानां भ्रम-त्वावधारणं का(क)रणदोषाद्यायत्तं तथाऽपि साक्षिणो याथार्थ्यनियमाभावे न सिद्ध्येत् । न हि तत्स्वरूपेणोपयुक्तम् । अतिप्रसङ्गात् । किन्तु निश्चितमेव तन्निश्चयश्च साक्षात्परम्परया वा साक्षि-ण्यायतते । स हि का(क)रणदोषादिकं स्वयमेव (वा) तद्ग्राहकप्रामाण्यग्रहणेन वा निश्चित्य भ्रमत्वं निश्चिनोति । ततश्च तस्य क्वचिदयथार्थत्वेऽविश्वसनीयत्वापत्त्या न निर्णयः स्यात् ।

अभ्रमत्वनिश्चयस्तु न संवादाधीनः । तथा सत्यनवस्थादिदोषाः प्रादुष्युरित्युक्तम् । किन्तु केवलसाक्षिण्यायत्तः । विपर्ययशङ्कानिरासे तु संवादस्यानुप्रवेशः । न च संवादोऽप्यनिश्चितोऽङ्गम् । तन्निश्चयश्च साक्ष्यधीन एव । तस्य च क्वचिदयथार्थत्वे तदुभयनिर्णयोऽपि न भवेदिति ।

**शे०— स्यादेतदिति** । भ्रमत्वाभ्रमत्वनिश्चयस्यान्यथाऽनुपपत्तेर्न साक्षियाथार्थ्यस्योपयोग इत्याशयः । सर्वस्य साक्षिणा निश्चितत्वोक्तेः प्रकृतानुपयोगात्प्रकृतोपयोगिसर्वपर एव सर्वशब्द इत्याह **सर्वं कारणदोषादिकमिति** ॥ आदिशब्दसंग्राह्यतावच्छेदककथनं **तदवधारणोपयुक्तं चेति** । भ्रमत्वाभ्रमत्वावधारणोपयुक्तमित्यर्थः । आदिशब्देन बाधकस्य संवादकस्य च परिग्रहः । **वेद्यं हीति** । मूले हिशब्दवैयर्थ्यमाशङ्क्य भिन्नक्रमतामाह **साक्षिणा हीति** । ततश्च भ्रमत्वादेः साक्षिणैव निश्चेयत्वेऽपेक्षितहेतुसूचनार्थत्वाद्धिशब्दस्य न वैयर्थ्यमिति भावः ॥ **निर्णय ईयत इति** । निर्णयोपक्रमाद्वेद्यशब्दस्तत्पर इत्याशयेनाह **निश्चेयमिति** । ननु कारणदोषादेः स्वरूपेणैव भ्रमत्वाद्यवधारकत्वसम्भवात्किं तन्निश्चयेनेत्यत आह **अनिश्चितस्येति** । अन्यथाऽतिप्रसङ्गादिति भावः । कारणदोषादेरित्यादिपदेन संवादकपरिग्रहः । भ्रमत्वादेरित्यादिपदेनाभ्रमत्वपरिग्रहः । वस्तुतथात्वादेरित्यादिपदेन वस्त्वतथात्वपरिग्रहः । हिशब्दसूचितां युक्तिमुपदर्शयितुमाह **एतदिति** ॥ **अतिप्रसङ्गादिति** । तथा सति भ्रमस्थले सर्वत्र कारणदोषस्य सत्त्वेन भ्रमत्वावधारणापत्त्या ततः निश्शङ्कप्रवृत्त्यभावापत्तेरित्यतिप्रसङ्गादित्यर्थः ॥ **साक्षादिति** । क्वचित्साक्षादेव क्वचित्परम्परयैवेत्येवं व्यवस्थितविकल्प एवात्राभिमत इति बोध्यम् ॥ **साक्षिण्यायतत इति** । अन्यस्य निश्चायकस्याभावादिति भावः । साक्षिणः साक्षात्परम्परया वा तन्निश्चायकत्वमित्युक्तमेवोपपादयति **स हीति** ॥ **स्वयमेवेति** । एतच्च दुष्टस्य मनसो लिङ्गज्ञानादेर्वा साक्षात्साक्षिविषयस्य यत्र कारणत्वं तदभिप्रायेणोक्तम् । तत्र दोषनिश्चये द्वारानपेक्षणादिति द्रष्टव्यम् ॥ **तद्ग्राहकेति** । एतच्च यत्र कारणस्य न साक्षात्साक्षिविषयता तदभिप्रायेण । तत्र दोषनिश्चये दोषग्राहकप्रामाण्यनिश्चयस्य द्वारत्वेनापेक्षणादिति द्रष्टव्यम् ॥ **न निर्णय इति** । कारणदोषादेर्भ्रमत्वस्य चेति शेषः । ननु प्रामाण्यस्य स्वतस्त्वेन संवादागम्यत्वात्प्रामाण्यावधारकसंवादनिश्चायकतया साक्षिणो नियतयाथार्थ्योपपादने कथं न सिद्धान्तविरोध इत्यतोऽङ्गीकृत्य प्रामाण्यस्य संवादगम्यत्वं तन्निश्चायकतया साक्षिण उक्तनियमसमर्थनादत्र न सिद्धान्तविरोध इत्यभिप्रेत्याङ्गीकारवादतया ग्रन्थतात्पर्यं वक्तुं वस्तुस्थितिं तावदाह **अभ्रमत्वनिश्चयस्त्विति** ॥ **अनवस्थादीति** । संवादकस्यापि ज्ञानत्वेनोक्तशङ्काकलङ्कितत्वेन तत्प्रामाण्यावधारणाय संवादकान्तरस्यापेक्षणादित्यर्थः । आदिपदेन व्यभिचारपरिग्रहः । धारावाहिकभ्रमे सत्यप्यन्योन्यसंवादे प्रामाण्यानवधारणादिति भावः ॥ **उक्तमिति** । अख्यातिवाद-

पूर्वपक्ष इति शेषः । ननु संवादान्वयव्यतिरेकानुविधायित्वात्प्रामाण्यज्ञानस्य संवादजन्यत्वसिद्धेः कथं केवलसाक्षिनिश्चेयत्वं प्रामाण्यस्येत्यतः संवादस्याप्रामाण्यशङ्कानिरासोपक्षीणत्वेनान्यथासिद्धतया कारणताग्राहकयोरन्यत्रानुपक्षीणकारणान्वयव्यतिरेकयोरभावेन प्रामाण्यज्ञानस्य संवादकार्यत्वाभावोपपत्तेर्नानुपपत्तिरित्यभिप्रेत्य संवादस्यान्यथासिद्धतामाह विपर्ययेति । एवं वस्तुस्थितिमुक्त्वाऽङ्गीकृत्य प्रामाण्यस्य संवादगम्यत्वं संवादनिश्चायकतया साक्षिणो नियततयाथार्थ्यत्वमुपपादयितुं स्वरूपेण संवादस्य प्रामाण्यावधारकत्वान्न तन्निश्चयापेक्षेत्यतस्तन्निश्चयस्यावश्यकतां तावद् व्युत्पादयति न चेति । नापीत्यर्थः । अन्यथाऽतिप्रसङ्गादिति भावः । अस्तु संवादस्य प्रमाणतया निश्चितस्य प्रामाण्यावधारकत्वं तन्निश्चयस्तु संवादकान्तरेणैव भविष्यतीत्यतोऽनवस्थापत्त्या संवादप्रामाण्यनिश्चयः साक्ष्यधीन एव वाच्य इत्याशयेनाह तन्निश्चयश्चेति ॥ तदुभयेति । अभ्रमत्वसंवादरूपोभयेत्यर्थः । संवादनिश्चयस्याप्ययथार्थत्वशङ्काकलङ्कितत्वेन तेनाभ्रमत्वनिश्चयासम्भवादिति भावः ।

प०— करणदोषाद्यायत्तमिति । आदिपदेन संवादग्रहः । न हि तदिति । करणदोषादिकमित्यर्थः ॥ अतिप्रसङ्गादिति । दुष्टकरणजन्यत्वाज्ज्ञानिनोपि भ्रमत्वाध्यवसायापत्तेरिति भावः ॥ साक्षिण्यायत्त इति । साक्ष्यधीन इत्यर्थः । साक्षात्परंपरये येतद्व्यक्ति सहीति । मनोरूपकरणगतरागादिदोषाभिप्रायेण स्वयमेव चेत्युक्तम् ॥ तद्ग्राहकेति । दोषग्राहके प्रामाण्यग्रहणेन वेत्यर्थः ॥ अनवस्थादिदोषा इति । तद्ग्रयात्कं प्रामाण्यग्रहणे निःशङ्कप्रवृत्त्यभावादिरादिपदार्थः ॥ उक्तमिति । 'प्रत्यक्षं च प्रामाण्यं स्वत एवागमस्य हि । अनवस्थाऽन्यथा हि स्यादि'त्येतद्व्याख्यावसरे जिज्ञासाधिकरणे उक्तमित्यर्थः । तर्हि संवादस्य क्वोपयोग इत्यत आह विपर्ययशङ्केति । भ्रमत्वदोषजन्मत्वशङ्केत्यर्थः । तदुभयेति । अभ्रमत्वनिर्णयसंवादनिर्णयरूपोभयनिर्णयोपीत्यर्थः ।

या०— स्वयमेव वेति । एतच्च यदा दुष्टं मनो वा लिङ्गज्ञानादिकं वा करणं तदा बोध्यम् । अनवस्थादिदोष इत्यत्रादिपदेनादुष्टबुद्धीनां प्रामाण्यस्य संवादाभावेऽपि सिद्ध्या व्यभिचार इत्यस्य दोषस्य ग्रहणम् । उक्तमिति । प्रथमाध्याय इति शेषः । नन्वेवं संवादवैयर्थ्यमित्यत आह विपर्ययशङ्केति । अप्रामाण्यशङ्कानिरास इत्यर्थः ॥ तदुभयेति । अभ्रमत्वसंवादरूपोभयनिर्णयोऽपि न भवेत् । संवादस्वरूपस्यैवानिश्चये तेनाभ्रमत्वस्य निर्णेतुमशक्यत्वादिति भावः ॥

श्री०— अतिप्रसङ्गादिति । यद्यप्यप्रामाण्योत्पत्तौ दोषः स्वरूपसन्नेवोपयुज्यते । तथाऽपीदमप्रमाणं दोषजन्यत्वादिति यदाऽप्रामाण्यं ज्ञायते तदा दोषोऽवश्यं ज्ञातव्य एव । अन्यथाऽज्ञातदोषेणापि पुंसेदं दोषजन्यत्वेनाप्रमाणमित्यप्रामाण्यं विज्ञायेतेत्यतिप्रसङ्गः स्यादिति भावः ॥ तद्ग्राहकेति । करणदोषादिविषयकज्ञानेत्यर्थः ।

सु० – ननु साक्षिणो यथार्थत्वनियमेऽपि प्रत्ययानां भ्रमत्वाभ्रमत्वनिर्णयो नोपपद्यते। न हि याथार्थ्यं स्वरूपेणैवोपयुक्तम्। अतिप्रसङ्गात्। किन्तु निश्चितमेव। न च तन्निश्चयोपायोऽस्ति। अतस्तदनिश्चयात्का(क)रणदोषादेर्भ्रमत्वादेः स्तम्भत्वादेरनिश्चय एवेत्यत आह विशेषा इति।

अनु० — विशेषाः सर्व एवैते साक्षिप्रत्यक्षगोचराः ॥

विशिष्यन्ते एतैरिति विशेषाः का(क)रणदोषादयः। साक्षिप्रत्यक्षगोचरा एवेति संबन्धः। साक्षियाथार्थ्यस्य साक्षिणैव उ(निश्चयो)पपत्तेः। अस्यार्थस्य च वक्ष्यमाणव्यवहारान्यथाऽनुपपत्तिसिद्धत्वादिति भावः।

शे० — कुतः साक्षियाथार्थ्यस्य साक्षिणैव निश्चयसिद्धिरित्यत आह अस्यार्थस्येति ॥ वक्ष्यमाणेति। 'ऊरीकृत्य च तान्सर्वानि'त्युत्तरवाक्य एव वक्ष्यमाणेत्यर्थः।

प० — न केवलं भ्रमत्वादिनिर्णय इत्यपेरर्थः। किमत्र मानमित्यत आह अस्यार्थस्येति। साक्षिप्रामाण्यादिकं साक्षिणैव गृह्यते इत्युक्तार्थस्योरीकृत्य चेत्युत्तरग्रन्थे वक्ष्यमाणहानोपादानादिना व्यवहारान्यथानुपपत्त्या सिद्धत्वादित्यर्थः।

या० – याथार्थ्यम् साक्षिनिष्ठं याथार्थ्यम्। अतिप्रसंगादिति। स्वरूपसद्याथार्थ्यस्य कार्यकारित्वे अज्ञातप्रामाण्यस्यापि पुंसः ज्योतिष्टोमादिवाक्यश्रवणे प्रवृत्तिस्स्यादित्यर्थः। तदनिश्चयादिति। साक्षिगतयाथार्थ्यनिश्चयोपायाभावादित्यर्थः। वक्ष्यमाणेति अनुपदमेवेति शेषः ॥

सु० यदि साक्षी व्यभिचरेत्तदा तेनाविश्वसनीयेन का(क)रणदोषादिनिश्चयो न स्यात्। तदभावे च प्रत्ययानां भ्रमत्वादि न निश्चीयेत। तथा च वस्तुनिर्णयो न स्यात्। कारणाभावे कार्या(कार्योदया)योगादित्युक्तम्। तत्र मा भूदेतत्सर्वमिति चेन्न। तथा सति हानोपादानादिसर्वव्यवहारविलोपप्रसङ्गात्। कथम्। सर्वव्यवहाराणामेतत्कार्यत्वादित्याह ऊरीकृत्य चेति।

अनु० — ऊरीकृत्य च तान्सर्वान्व्यवहारः प्रवर्तते ॥

निश्चित्येत्यर्थः। चोऽवधारणे। तान्सर्वान्का(क)रणदोषा(दी)न् ऊरीकृत्य व्यवहार प्रवर्तत इति गौणं समानकर्तृकत्वम्। यद्वोरीकृत्य कारणतयोपादाय कारणीकृत्वेति व्याख्येयम्। तथा हि। इदं रजतमिति भ्रान्त्या प्रवृत्तः का(क)रणदोषं बाधकप्रत्ययं (चा)वावधार्य तस्य ज्ञानस्य भ्रमत्वं निश्चित्य नेदं रजतं किन्तु शुक्तिरेवेति वस्तु व्यवस्थाप्य जहाति। तथा

**जलमेतदिति प्रतीत्य तस्य प्रत्यक्षस्याप्रामाण्यशङ्कायां संवादं निरीक्ष्य तत्स्वरूपप्रामाण्ये गृहीत्वा (च) अभ्रमत्वं निश्चित्य जलमेतद्भवत्येवेत्यवधार्य तदुपादत्त इति ।**

**शे०** — ननु समानकर्तृकयोः पूर्वकाल इति क्रिययोः समानकर्तृकत्व एव क्त्वाप्रत्ययविधानादत्र निश्चयरूपोररीकरणक्रियायाश्चेतनकर्तृकत्वेन प्रवर्तनक्रियायाश्च व्यवहारकर्तृकत्वेन क्रिययोरसमानकर्तृकत्वेन क्त्वाप्रत्ययस्यैवानुपपत्त्या तदादेशल्यपोऽप्यसम्भवादूरीकृत्येत्यनुपपन्नमित्यत आह **गौणं समानकर्तृत्वमिति** । उररीकरणक्रियास्वातन्त्र्यरूपस्य तत्क्रियाकर्तृधर्मस्य वैवक्षिकस्य व्यवहारेऽपि सम्भवादिति भावः । इदं च क्रिययोः समानकर्तृकत्व एव क्त्वाप्रत्यय इति नियमभङ्गभङ्ग्योक्तम् । वस्तुतस्तु 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते' इत्यादिप्रयोगदर्शनेन क्रिययोरसमानकर्तृकत्वेऽपि क्त्वाप्रत्ययदर्शनेन क्रिययोः समानकर्तृकत्वस्य प्रायिकत्वस्थित्या तन्नियमाभावेन गौणसमानकर्तृकत्वाश्रयणे निमित्ताभावादिति द्रष्टव्यम् । गौणसमानकर्तृकत्वाश्रयणेऽपरितोषादाह **यद्वेति** । ततश्च कारणीकरणक्रियायां प्रवर्तनक्रियायां च व्यवहारस्यैव कर्तृत्वेन क्रियाद्वयस्य मुख्यमेव समानकर्तृकत्वमिति भावः ।

**प०**— व्यवहारस्य जडत्वान्निश्चित्य प्रवर्तते इत्युक्तिः कथमित्यत आह **गौणमिति** । चेतनो निश्चयानंतरं यथा प्रवर्तते तथा व्यवहारोऽपि जायत इत्येतावता निश्चित्य प्रवर्तते इत्युक्तमित्यर्थः । ऊरीकृत्येति मूलोक्तं कार्यकारणभावं व्यनक्ति **तथा हीत्यादिनोपादत्त** इत्यन्तेन ।

**या०** — प्रवर्तत इत्यस्य प्रकर्षेण वर्तत इत्यर्थः । ऊरीकरणक्रियायाश्चेतनकर्तृकत्वेन मुख्यस्य समानकर्तृत्वस्यासम्भवादाह **गौणमिति** । ऊरीकरणक्रियास्वातन्त्र्यरूपस्य तत्क्रियाकर्तृधर्मस्य वैवक्षिकस्य व्यवहारेऽपि सम्भवादिति भावः ॥ **न हि याथार्थ्यमिति** । साक्षिगतमिति शेषः ॥

**श्री०** — ऊरीकृत्य च तान्सर्वान्व्यवहारः प्रवर्तत इत्यत्र कथमूरीकरणप्रवृत्तिरूपक्रिययोर्व्यवहाररूपैककर्तृकत्वम् । वस्तुगत्योरीकरणे पुरुषस्यैव कर्तृत्वात् । प्रवृत्तौ व्यवहारस्य कर्तृत्वादित्यत आह **गौणमिति** । अत एवास्वरसादाह **यद्वेति** । कारणीकरणरूपक्रियायां च व्यवहारस्यैव कर्तृत्वमिति न कोऽपि दोषः ।

**सु० — ननु नायमस्ति नियमो यदुक्तरीत्याऽर्थतथात्वाध्यवसायपूर्वक एव व्यवहार इति । तत्सन्देहादिनाऽपि(दपि) व्यवहारदर्शनादित्यत आह** साक्षिण इति ।

**अनु०**— साक्षिणो व्यवसायी तु व्यवहारोऽभिधीयते ॥

**व्यवसायी निश्शङ्कोऽविसंवा(दिव्य)दी च व्यवहारोऽस्माभिरुक्तरीत्या साक्षिणः कार्योऽभिधीयते न तु व्यवहारमात्रम् । न च विशिष्टो व्यवहारोऽर्थतथात्वाध्यवसाय-**

पूर्वक्तर्ा व्यभिचरतीति । अस्तु व्यवहारविलोपः किन्नश्छिन्नमित्याशङ्कां परिहरन्नुक्तप्रसङ्गानां विपर्ययपर्यवसानमाह तस्मादिति ।

तस्मात्सर्वप्रसिद्धस्य व्यवहारस्य सिद्धये ॥
साक्षी निर्दोष एवैकस्सदाऽङ्गीकार्य एव नः ॥

यस्मात्साक्षिणः कचिदयथार्थत्वेऽविश्वसनीयत्वापत्त्या का(क)रणदोषाद्यनिश्चयप्रसङ्गेन ज्ञानानां भ्रमत्वाभ्रमत्वनिर्धारणाभावप्रसक्त्याऽर्थतथात्वातथात्वनिर्णयाभावानुषङ्गेण निश्शङ्कोऽविसंवादी व्यवहारो लुप्येत । न च तल्लोपोऽङ्गीकर्तुं शक्यः । सर्वलोकप्रसिद्धत्वात् । तथाविधस्य (च) लौकिकैः परीक्षकैश्चोल्लङ्घनायोगात् । प्रमितार्थाननुमतावुन्मत्तत्वप्रसङ्गात् । तस्मात्सर्वलोकप्रसिद्धस्य निश्शङ्कस्याविसंवादिनो व्यवहारस्य कार्यभूतस्य सिद्धये वस्तुतथात्वातथात्वनिश्चयः कारण(करणी)भूतोऽङ्गीकार्यः । तत्सिद्धये का(क)रणदोषादिनिश्चयद्वारा साक्षिणा ज्ञानानां भ्रमत्वाभ्रमत्वनिर्णयोऽङ्गीकार्यः । तत्सिद्धये (च) साक्षिणो विश्वसनीयत्वं तत्सिद्धये च साक्षी सदा निर्दोषो यथार्थ एव नः परीक्षकाणामङ्गीकार्य इति । नन्वेवं तर्हि प्राभाकरादिदिशा सर्वेषामपि प्रत्ययानां यथार्थत्वनियमोऽस्त्वित्यत आह एक एवेति । एकस्यैव याथार्थ्यनियमेन सर्वस्योपपत्तौ किमप्रामाणिकेन प्रमाणविरुद्धेन सर्वप्रत्यययाथार्थ्यनियमेनेति भावः ।

किमतो यद्येवं साक्षी नियमेनार्थाव्यभिचारीत्यत आह शुद्ध इति ।

शुद्धः साक्षी यदा सिद्धो दुःखित्वं बाधते कथम् ॥

दुःखित्वं तेन प्रतीतं जीवस्येति शेषः । ततश्च किमित्यत आह उपजीव्येति ।

उपजीव्यप्रमाणं तद्भेदग्राहकमेव हि ॥

श्रुत्यनुमानयोरुपजीव्यप्रमाणं तत् तस्मात् भेदग्राहकं भेदप्रमापकम् । तथा चोपजीव्यविरोधादभेदश्रुत्यादेरप्रामाण्यमिति भावः । ततोऽपि किमित्यतः सूत्रार्थमुपसंहरति अत इति ।

अतो जीवेशयोर्भेदः श्रुतिसामर्थ्यसुस्थिरः ॥

श्रुतिः 'भिन्नोऽचिन्त्य' इत्यादिका । सामर्थ्यमप्रति(सत्प्रति)पक्षत्वम् ।

प० — विशिष्टो व्यवहार इति । निःशंकोऽविसंवादी व्यवहार इत्यर्थः ॥ अप्रामाणिकेनेति । सर्वप्रत्ययानां याथार्थ्ये कस्याप्यमानस्याभावात् । अर्थतथात्वाध्यवसायरूपविश्वासस्य साक्षिणैवो-

पत्तादितत्व.दिति भावः ॥ **प्रमाणविरुद्धेति** । इदं ज्ञानमयथार्थं विसंवादिप्रवृत्तिजनकत्वादिति प्रमाणेन साक्षिरूपप्रमाणेन वा विरुद्धेनेत्यर्थः ॥ **सूत्रार्थमिति** । पृथगुपदेशादिति सूत्रम् ।

सु० — ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥ **यद्येवं जीवेश्वरयोर्भेद एव पारमार्थिको व्यवस्थितस्तदा तत्त्वमसीत्याद्यद्वैतश्रुतीनामहं हरिरित्यादिस्मृतीनां च का गतिः । न हि तासामनुमानवत्सर्वथाऽप्रामाण्यं युक्तम् । अपौरुषेयत्वेनाप्तोक्तत्वेन च तत्कारणाभावादित्याशङ्कापरिहाराय सूत्रम्** तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदिति । **तद्व्याचष्टे** तथाऽपीति ।

**अनु० — ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥**

तथाऽपि तु चिदानन्दपूर्वास्तत्सदृशा गुणाः ॥
सारस्स्वरूपमस्यापि मुक्तावप्यवशिष्यते ॥
अतोऽभेदवदेवैताः श्रुतयः प्रवदन्ति हि ॥
पौराणानि च वाक्यानि सादृश्याभेदसंश्रयात् ॥

**यद्यपि जीवब्रह्मणोर्भेद एव तथाऽप्यभेदवदिति संबन्धः । तुशब्दो विशेषार्थः । तं च वक्ष्यामः** । तत्सदृशाः **परमात्मगुणसदृशाः । सार इत्यनुवादेन स्वरूपमिति व्याख्यानम्** । अस्य **जीवस्य । कुतः । मुक्तावपि कैवल्येऽप्यवशिष्यते यतः** । अभेदवत् **अभेदमिव 'तत्र तस्येव' इत्यत्रोपसंख्येयमेतत् । शिष्टप्रयोगात् । यद्वाऽभेद इति तत्प्रतिपादकमुपलक्ष्यते । अत एवेति संबन्धः** । एताः **परोदाहृताः । हीति मुख्ये बाधकं सूचयति** ।

**अत एवेत्यस्यैव विवरणं** सादृश्येति । **सादृश्यमेवाभेदः सादृश्याभेदः । सिंहो देवदत्त इत्यादिवद्गौणोऽयं व्यपदेश इति वाक्यार्थः । अद्वैतवादिभिः खलु तत्त्वंपदयोर्विरुद्धस्वार्थैकदेशत्यागेनैकदेशलक्षणया सामानाधिकरण्यमात्रं मुख्यमङ्गीकृतम् । ततो वरं पदद्वयस्य मुख्यार्थत्वमभ्युपगम्य सामानाधिकरण्यमात्रस्य गौणत्वमभ्युपगन्तुम् । तात्पर्यलिङ्गानि च तत्र तत्रान्यथा नीतानि** ।

**शे० — ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ** । कोऽसौ विशेषो यदर्थस्तुशब्द इत्यत **आह तं चेति** । चिदानन्दपूर्वभगवद्गुणसदृशगुणानां न सर्वजीवस्वरूपत्वं किन्तु सज्जीवस्वरूपत्वमित्येवंरूपं विशेषं 'सादृश्यं च विशेषेण जडानां द्वयमेव तु । भवेत्सादृश्यमत्यल्पं तृतीयं परमात्मने'त्येतद्व्याख्यानावसर इति शेषः ॥ **व्याख्यानमिति** । तेन नान्यतरवैयर्थ्यमिति भावः ।

ननु द्वितीयान्ताद्वतिविधायके 'तदर्हमि'ति सूत्रेऽर्हार्थ एव तद्विधानेन इवार्थे तदविधानादिवार्थे तद्विधायके च 'तत्र तस्येवे'ति सूत्रे षष्ठीसप्तमीसमर्थयोरेव तद्विधानेन द्वितीयान्तात्तदविधानात्कथमभेदमिवेति द्वितीयान्ताद्वतिर्व्याख्यायत इत्यतोऽस्य योगस्याभियुक्तैः प्रायिकत्वेन व्याख्यातत्वात्प्रथमासमर्थादिव द्वितीयासमर्थादपि युक्त एवानेन वतिरिति सत्येव समाधाने विभवात्समाधानान्तरमाह **तत्र तस्येवेत्यत्रेति** । उपसंख्याने निमित्तमाह **शिष्टेति** । उक्तप्रयोगस्य शिष्टप्रयोगत्वे विप्रतिपद्यमानं प्रति समाध्यन्तरमाह **यद्वेति** । तत्रश्चाभेदप्रतिपादकैस्तुल्यं वर्तत इति प्रतिपादनक्रियातौल्यविवक्षया 'तेन तुल्यं क्रिया चेद्वतिरि'त्यनेनैवात्र वतिर्न तु तत्र तस्येवेत्यनेनेत्युक्तं भवति **अत एवेति सम्बन्ध इति** । एवकारस्य यथाश्रुतान्वये व्यर्थत्वविरुद्धार्थत्वयोः प्रसङ्गाद्भिन्नक्रमत्वं तत्र चानभिमतव्यावर्तकतयाऽर्थवत्त्वान्नोक्तदोष इति भावः ।

एवं तर्हि त्वयाऽप्यमुख्यवृत्त्याश्रयणेन न मद्व्याख्यानापेक्षया त्वद्व्याख्यानस्य कश्चिद्विशेष इति कुतो मदुक्तार्थपरित्यागेन त्वदुक्तस्यैवोपादेयतेत्याशङ्क्यामुख्यवृत्त्याश्रयणेन मतद्वयस्य साम्येऽप्यवान्तरानेकवैलक्षण्यादेव तत्सिद्धिरित्याशयेनानेकवैलक्षण्योक्त्याऽविशेषं परिहरन्स्वव्याख्यानस्य समीचीनतामुपपादयति **अद्वैतवादिभिरिति** ॥ **सामानाधिकरण्यमात्रस्य गौणत्वमिति** । विशेष्यविभक्तिसजातीयविशेषणविभक्तिमात्रस्येत्यर्थः । नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थत्वेन तत्परित्यागेन सादृश्यार्थोपादाने तस्या एव मुख्यार्थपरित्यागेन गौणत्वप्राप्तेः । एवञ्च सामानाधिकरण्यस्य गौणत्वेऽपि विभक्तिद्वयबाधेनानेकबाधादत्र मात्रेति पूर्वत्र पदद्वयस्येति चोक्तिरयुक्तेति निरस्तं भवति । अत्र च मात्रस्येति द्वयस्येति चैकवाक्यत्वानेकवाक्यत्वरूपवैलक्षण्योक्तिः । पदद्वयस्येति मात्रस्येति च प्रकृतिविशेषणविभक्तिरूपप्राधान्यरूपतदुक्तिः । पदद्वयस्येत्यत्र पदशब्दस्य प्रकृत्यर्थकत्वात्सामानाधिकरण्यशब्दस्य च विशेषणविभक्त्यर्थकत्वात् । अमुख्यवृत्तिरित्येवोभयत्र वक्तव्ये गौणं लक्षणयेत्युक्तिर्गौण्यां सादृश्यस्यान्तर्गणिकभेदे सत्यपि सादृश्यत्वरूपेणानुगते तात्पर्यमित्येकार्थघटादिशब्दवत्तात्पर्यविषये द्राग्धीः । लक्षणायां तु क्वचित्सम्बन्धे तात्पर्यं क्वचित्तद्द्वारा पूतत्वे क्वचिच्छीतलत्वादाविति वैरूप्यान्नानार्थाक्षादिशब्दवद्विलम्बेन तद्धीरिति गौण्यपेक्षया लक्षणाया जघन्यत्वसूचनाय । परोक्तजहदजहल्लक्षणार्थकथनपरतत्त्वंपदयोः विरुद्धस्वार्थैकदेशत्यागेनैकदेशलक्षणयेत्युक्त्या च प्राक् त्यक्तस्य स्वीकारः त्वदुक्तलक्षणायां गौणीपक्षे त्वत्यक्तस्य स इति तत्सूचयति । यद्यपि सिंहस्याध्ययनमित्यादौ सिंहप्रातिपदिकस्यैव तत्सादृश्यरूपामुख्यार्थत्वं, तथाऽपि समानाधिकरणविशेष्यान्तराभावेनानन्यया गत्या तत्र तथात्वेऽपि प्रकृतेऽप्रधानविशेषणविभक्तेरेवामुख्यार्थत्वोपपत्तौ प्रधानामुख्यतास्वीकारस्यानुचितत्वादिति प्रकृताभिप्रायेणैतद्ग्रन्थप्रवर्तनात् । तत्राप्यस्येति विशेष्याध्याहारे चेयमेव गतिः । अत एव सिंहो देवदत्त

इत्यादिवदित्युक्तम् । न चाभेदस्यान्वयतया भानान्न विशेषणविभक्त्यर्थत्वमिति वाच्यम् । विशेषण-विभक्तेः साधुत्वार्थमङ्गीकृत्यान्वयतयाऽभेदभानाभ्युपगमानौचित्यात् । अन्यथा राज्ञ पुरुष इत्यत्रापि षष्ठ्याः साधुत्वार्थकत्वापत्त्याऽन्वयतयैव सम्बन्धो भासत इत्यपि स्यादिति गुरवः ( स्वामिनः ) । यद्वाऽत्र टीकायां सामानाधिकरण्यस्य गौणत्वोक्तेस्तत्पदं सर्वकर्तृत्वादिविशिष्टब्रह्मपरमेव; तत्त्वंपदयोः सामानाधिकरण्यं तु नाभेदपरं किन्तु सादृश्यपरमिति नाभिप्रायः । सिंहस्याध्ययनमित्यादौ सामाना-धिकरण्याभावेऽपि सिंहप्रातिपदिकस्यैव सदृशे गौणत्वात् । सन्न्यायरत्नावल्यां तत्त्वमसीत्यत्र जगत्स्रष्टृ-परामर्शिनस्तच्छब्दस्यैव त्वंशब्दवाच्ये जीवे गुणवृत्त्याश्रयणेन तत्त्वंपदयोरपि लक्षणाश्रयणस्य पराहत-त्वादित्युक्तत्वाच्च । अपि तु तत्पदेनैव गुणवृत्त्या सादृश्ये लब्धे परस्परान्वितानेकप्रकृतिनिष्ठैकविभक्ति-रूपसामानाधिकरण्यार्थस्य मुख्यस्य तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण ब्रह्माभेदस्य जीवेऽसत्त्वेऽप्य-मुख्यस्य चेतनत्वादिरूपेणाभेदस्य सत्त्वात्सामानाधिकरण्येनामुख्यस्याभेदस्य लाभ इत्येवाभिप्रायः । अस्ति हि सिंहश्चैत्र इत्यत्रापि चैत्रे सिंहत्वेन रूपेणाभेदाभावेऽपि शूरत्वेन तदभेदः । यद्यपि च तच्छब्दस्य तत्सादृश्येऽर्थे सति तस्य गौणार्थतावच्छेदकेनैव रूपेण त्वंपदार्थजीवाभेदो मुख्य एव सम्भवति । तथाऽपि शक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण नाभेदो मुख्य इत्यभिप्रायेणायं ग्रन्थ इति द्रष्टव्यम् ।

---

ननु तत्त्वमसीत्यस्योपक्रमादितात्पर्यलिङ्गैरभेदपरत्वनिर्णयान्न भेदपरत्वम् । अन्यथा तात्पर्यग्राह-कलिङ्गविरोधापातादित्यत एकविज्ञाने सर्वविज्ञानप्रतिज्ञारूपस्यैकमेवाद्वितीयमित्यादिरूपस्य चोपक्रमस्य स्वपरपक्षानुगुण्यानानुगुण्ययोः प्रकृत्यधिकरणे निपुणतरं प्रतिपादितत्वादैतदात्म्यमित्युपसंहारस्य तत्त्वमसी-त्येतत्तुल्ययोगक्षेमत्वात् । तत्त्वमसि तत्त्वमसीत्यभ्यासस्य च सत्यत्वात्तेनेत्यादिना जिज्ञासासूत्रेऽत्र चाधिकरणे तयोः प्रतिपादितत्वादपूर्वतायाश्च पूर्वत्रात्र चाधिकरणे 'न च मानान्तरोपेयमि'त्यादिना तयोः प्रतिपादना'त्सम्पत्स्यत' इति 'तस्य तावदेव चिरमि'ति फलार्थवादयोश्च भेद एव स्वारस्यस्य स्पष्टत्वात्तत्त्व-मसीत्यस्य परोक्तार्थे उपपत्तिविरोधस्य स्वोक्तार्थे तदानुगुण्यस्य चानेकेषु स्थलेषु व्युत्पादनान्न तात्पर्यलिङ्गबलादपि तत्त्वमसीत्यस्याभेदपरत्वमित्याह ॥ **तात्पर्यलिङ्गानीति** ।

प० — ॥ ॐ **तद्गुणसारत्वात्** ॐ ॥ स्मृत्यभिप्रायेणाह **आप्तोक्तत्वेन चेति तं च वक्ष्याम इति** । 'भवेत्सादृश्यमत्यल्पं तृतीयं परमात्मने'त्येतद्व्याख्यावसरे भगवद्गुणसदृशगुणस्वरूपत्वं मुक्तियोग्यानामेव नान्येषामिति वक्ष्याम इत्यर्थः । यद्वा इदानीमनभिव्यक्तमपि मुक्तौ व्यक्तमिति 'सादृश्यं चे'त्यत्र वक्ष्याम इत्यर्थः । यद्वा 'प्रधानत्वात्स्वात-न्त्र्यादपि चाभिदामि'त्यदिना प्राधान्याद्यर्थान्तररूपविशेषं वक्ष्याम इत्यर्थः । अस्येत्यनुवादः ।

जीवस्येति व्याख्या । कुत इति प्रश्नप्रत्युत्तरत्वेन मूलं योजयति **मुक्तावपीति** । कैवल्येपीति व्याख्या । यतो देहेन्द्रियादिशून्यतारूपकैवल्येप्यवशिष्यते अतो भगवद्गुणसदृशगुणस्वरूपत्वं जीवस्येति भावः । नन्वभेदवदित्यस्याभेदमिवेति व्याख्या न युक्ता । तत्र तस्येवेति सूत्रे सप्तम्यन्तात्षष्ठ्यन्ताच्चेवार्थे वतिप्रत्ययविधानेन द्वितीयान्ताद्वतिप्रत्ययाप्राप्तेरित्यतः महाकविप्रयोगात्तन्निर्वाहाय द्वितीयान्तादपि वतिप्रत्ययो वक्तव्य इति वार्तिकमत्र कर्तव्यमिति भावेनाह **तत्र तस्येवेत्यत्रोपसंख्येयमिति** । संग्राह्यमित्यर्थः । तत्र हेतुः **शिष्टप्रयोगादिति** ॥ **यद्वेति** । अस्मिन्पक्षेऽभेदवाक्येन तुल्यं वर्तत इत्यभेदवाक्यवदिति । 'तेन तुल्यं क्रिया चेद्वतिरि'ति सूत्रेण वतिप्रत्ययः । प्रतिपादनक्रियातौल्यस्य संभवादिति भावः । अतःशब्दैवशब्दयोरन्वयमाह **अत एवेति संबन्ध इति** ॥ **वाक्यार्थे इति** । तथाऽपि त्वित्यादिमूलवाक्यस्यार्थ इत्यर्थः । गौणार्थत्वं दोष इत्यत आह **अद्वैतवादिभिरिति** ॥ **विरुद्धस्वार्थैकदेशेति** । विरुद्धः स्वार्थैकदेशः सार्वज्ञाल्पज्ञत्वादिरूपः तत्त्यागेनेत्यर्थः । **एकदेशलक्षणया** चिन्मात्रलक्षणया ॥ **सामानाधिकरण्यमिति** । तत्त्वंपदगतैकविभक्तिबोध्यमैक्यमित्यर्थः ॥ **गौणत्वमिति** । पदद्वयस्य मुख्यार्थत्वं सामानाधिकरण्यमात्रस्य गौणत्वमित्यनयोरभिप्रायः चन्द्रिकायां व्यक्तः । नन्वैक्यार्थत्वे तात्पर्यलिङ्गानि सन्तीत्यत आह **तात्पर्येति** ॥ **तत्र तत्रेति** । तत्त्वनिर्णयादावित्यर्थः ।

**या० — तं च वक्ष्याम इति** । चिदानन्दपूर्वेषु भगवद्गुणसदृशेषु गुणेषु न सर्वजीवस्वरूपत्वं किन्तु मोक्षयोग्यजीवस्वरूपत्वमेवेति विशेषं 'भवेत्सादृश्यमत्यल्पत्वमि'त्येतद्व्याख्यानावसरे वक्ष्याम इत्यर्थः ॥ **तत्र तस्येवेत्यत्रेति** । द्वितीयान्तात् इवार्थे वतेरविधानादिति भावः ॥ **तत्प्रतिपादकमुपलक्ष्यत इति** । तथा चाभेदप्रतिपादकैस्तुल्यं वर्तत इति प्रतिपादनक्रियातौल्यस्य विवक्षितत्वात्तेन तुल्यं क्रिया चेद्वतिरित्यनेनैवात्र वतिर्भविष्यतीति भावः । अमुख्यवृत्त्यङ्गीकारेऽप्यस्मदीयमेव व्याख्यानं वरमित्याह **अद्वैतवादिभिरित्यादिना** ॥ **सामानाधिकरण्यमात्रमिति** । प्रातिपदिकद्वयसमभिव्याहृतैकविभक्तिमात्रमित्यर्थः ॥ **ततो वरमिति** । विभक्त्यपेक्षया प्रधानयोरनेकयोश्च प्रातिपदिकयोरत्र बाधाभावादिति भावः । प्रातिपदिकप्राधान्यं च प्रयाजशेषेणेत्यादौ प्रसिद्धम् ॥ **पदद्वयस्येति** । प्रातिपदिकद्वयस्येत्यर्थः । एतेन सामानाधिकरण्यस्यापि पदद्वयसमभिव्याहृतविभक्तिद्वयरूपतया साम्यमेव न वरत्वमिति शङ्का निरस्ता ज्ञातव्या । समानाधिकरण्यप्रयोगे प्रातिपदिकयोरनेकत्वेऽपि तत्परतो विधीयमानाया विभक्तेरेकत्वात् । न चैवं सिंहादिपदानां गौणत्वप्रसिद्धिविरोधः । सिंहस्याध्ययनमित्यादिव्यधिकरणप्रयोगे तस्याः सावकाशत्वात् । न चैकविभक्तेः सामानाधिकरण्यरूपत्वे सिंह इत्याद्येकपदमात्रप्रयोगेऽपि सादृश्याभेदप्रतीतिप्रसङ्गः । उभयपदगतत्वेन ज्ञाताया एव एकविभक्तेः सामानाधिकरण्यरूपत्वाङ्गी-

कारात् । यथाऽऽहुः । 'नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः । ऐक्यदृष्टिरि'ति । न चैवं 'तत्त्वमसीत्यत्र जगत्स्रष्टृपरामर्शिनस्तच्छब्दस्यैव त्वंशब्दवाच्ये जीवे गौणवृत्त्याश्रयणेन तत्त्वंपदयोरुभयोरपि लक्षणाश्रयणस्य पराहतत्वादि'ति सन्न्यायरत्नावलीविरोधः । तत्रापि फलतः सादृश्यस्यैव वाक्यार्थतयाऽभिप्रेतत्वेन विभक्तेरेव गौणत्वस्याभिप्रेतत्वात् । तथा हि । अप्रधानाया विभक्तेरेव मुख्यार्थत्वकल्पनं न्याय्यं, न तु प्रधानयोः प्रातिपदिकयोः । यदि च मीमांसारीतिमुल्लङ्घ्य प्रधानयोरपि तत्कल्पनं तद्वत्सिद्धेरेव तच्छब्दे तदस्त्वित्यभ्युच्चयवादेनैव सन्न्यायरत्नावल्याः प्रवृत्तत्वात् । एतेन यत्तत्त्वप्रकाशिकायामसिपदमात्रस्य गौणार्थवर्णनं वरमित्युक्तं तदपि न विरोधीति ज्ञातव्यम् । असिपदस्य तत्त्वंपदसामानाधिकरण्यस्योक्तरीत्या गौणार्थत्वे तदनुवादकस्यासिपदस्यापि गौणार्थत्वमित्यभिप्रायात् । चन्द्रिकायां तु सुधादौ सामानाधिकरण्यस्य गौणत्वोक्तेस्तत्त्वंपदयोर्मुख्यार्थत्वमेव, तयोः सामानाधिकरण्यं तु नाभेदपरं, किन्तु सादृश्यमात्रपरमिति नाभिप्रायः । सिंहस्याध्ययनमित्यादौ सामानाधिकरण्याभावेऽपि सिंहप्रातिपदिकस्यैव सदृशे गौणत्वात् । उदाहृतसन्न्यायरत्नावलीविरोधाच्च । अपि तु तत्पदेनैव गौण्या वृत्त्या सादृश्ये लब्धे परस्परान्वितानेकप्रकृतिनिष्ठैकविभक्तिरूपसामानाधिकरण्यार्थस्य मुख्यस्य तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण ब्रह्माभेदस्य जीवेऽसत्त्वेऽप्यमुख्यस्य चेतनत्वादिरूपेणाभेदस्य सत्त्वात्सामानाधिकरण्येनामुख्याभेदलाभ इत्येवाभिप्रायः । अस्ति हि सिंहश्चैत्र इत्यत्रापि चैत्रे सिंहत्वेन रूपेण सिंहाभेदाभावेऽपि शूरत्वेन तदभेदः । एतदेवाभिप्रेत्यानुव्याख्याने 'सादृश्याभेदसंश्रयादि'ति । 'चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते । अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचिदि'ति चोक्तम् । यद्यपि तच्छब्दस्य तत्सदृशेऽर्थे सति तस्य गौणार्थतावच्छेदकेन सादृश्येनैव रूपेण त्वंपदार्थजीवाभेदो मुख्य एव । तथाऽपि शक्यतावच्छेदकेन ब्रह्मत्वेन रूपेणाभेदो न मुख्य इति सुधाभिप्राय उक्तः ॥ **गौणत्वमिति** । सादृश्यरूपामुख्याभेदप्रतिपादकत्वमित्यर्थः ।

**श्री०** — अस्यापीत्यत्र स्योऽपिशब्दो यद्यपीत्यर्थे इत्याह **यद्यपीति** ।

**च०** — ॐ **तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्** ॐ ॥ **उपसंख्येयमिति** । द्वितीयान्तादिवार्थे वतेरविधानादिति भावः । **तत्प्रतिपादकमिति** । तथाचाभेदप्रतिपादकैस्तुल्यं वर्तत इति प्रतिपादनक्रियतातौल्यस्य विवक्षिततया 'तेन तुल्यं क्रिया चेद्वतिरि'त्यनेनैवात्र वतिर्भविष्यतीति भावः । अत्र व्याकर्तारः । अमुख्यवृत्त्यङ्गीकारेऽप्यस्मदीयमेव व्याख्यानं वरमित्याह **अद्वैतवादिभिरित्यादिना** ॥ **सामानाधिकरण्यमात्रमिति** । प्रातिपदिकद्वयसमभिव्याहृतैकविभक्तिमात्रमित्यर्थः । **ततो वरमिति** । विभक्त्यपेक्षया प्रधानयोरनेकयोश्च प्रातिपदिकयोरत्र बाधाभावादिति भावः । प्रातिपदिकप्राधान्यं च

प्रयाजशेषेणेत्यादौ प्रसिद्धम् ॥ **पदद्वयस्येति** । प्रातिपदिकद्वयस्येत्यर्थः । एतेन सामानाधिकरण्यस्यापि पदद्वयसमभिव्याहृतविभक्तिद्वयरूपतया साम्यमेव न वरत्वमिति शङ्का निरस्ता ज्ञातव्या । सामानाधिकरण्यप्रयोगे प्रातिपदिकयोरनेकत्वेपि तत्परतो विधीयमानाया विभक्तेरेकत्वात् । न चैवं सिंहादिपदानां गौणत्वप्रसिद्धिविरोधः सिंहस्याध्ययनमित्यादिव्यधिकरणप्रयोगे तस्याः सावकाशत्वात् । न चैकविभक्तेः सामानाधिकरण्यरूपत्वे सिंह इत्याद्येकपदमात्रप्रयोगेपि सादृश्याभेदप्रतीतिप्रसङ्गः । उभयपदगतत्वेन ज्ञाताया एवैकविभक्तेः सामानाधिकरण्यरूपत्वाङ्गीकारात् । यथाहुः 'नामादिप्राणपर्यन्तमुभयोः प्रथमान्वितः । ऐक्यदृष्टिः' इति । न चैवं तत्वमसीत्यत्र जगत्स्रष्टृपरामर्शिनस्तच्छब्दस्यैव त्वंशब्दवाच्यजीवे गौणवृत्त्याश्रयणेन तत्वंपदयोरुभयोरपि लक्षणस्य पराहतत्वादिति सन्न्यायरत्नावलीविरोधः तत्रापि फलतः सादृश्यस्यैव वाक्यार्थतयाभिप्रेतत्वेन विभक्तेरेव गौणत्वस्याभिप्रेतत्वात् । तथा हि । अप्रधानाया विभक्तेरेवामुख्यार्थत्वकल्पनं न्याय्यम् । न तु प्रधानयोः प्रातिपदिकयोः । यदि च मीमांसारीतिमुलङ्घ्य प्रधानयोरपि तत्कल्पनं तर्ह्येकस्मिन्नेव तच्छब्दे तदस्त्वित्यभ्युच्चयवादेनैव सन्न्यायरत्नावल्याः प्रवृत्तत्वात् । एतेन तत्वप्रकाशिकायामसिपदमात्रस्य गौणार्थवर्णनं वरमित्युक्तम्, तदपि न विरोधीति ज्ञातव्यम् । असिपदस्य तत्वंपदसामानाधिकरण्यलब्धार्थानुवादकतया सामानाधिकरण्यस्योक्तरीत्या गौणार्थत्वे तदनुवादकस्यासिपदस्य गौणार्थत्वमित्यभिप्रायात् । चन्द्रिकायां तु सुधायां सामानाधिकरण्यस्य गौणत्वोक्तेस्तत्त्वंपदयोर्मुख्यार्थत्वमेव, तयोः सामानाधिकरण्यं तु नाभेदपरं किन्तु सादृश्यमात्रपरमिति नाभिप्रायः सिंहस्याध्ययनमित्यादौ सामानाधिकरण्याभावेपि सिंहप्रातिपदिकस्यैव सदृशे गौणत्वात् उदाहृतसन्न्यायरत्नावलीविरोधाच्च । अपि तु तत्पदेनैव गौण्या वृत्त्या सादृश्ये लब्धे परस्परान्वितानेकप्रकृतिनिष्ठैकविभक्तिरूपसामानाधिकरण्यार्थस्य मुख्यस्य तत्पदशक्यतावच्छेदकेन ब्रह्मत्वेन रूपेण ब्रह्माभेदस्य जीवे असत्त्वेऽपि अमुख्यस्य चेतनत्वादिरूपेणाभेदस्य सत्त्वात् सामानाधिकरण्येनामुख्यभेदलाभ इत्येवाभिप्रायः । अस्ति हि सिंहश्चैत्र इत्यत्रापि सिंहे चैत्रत्वेन रूपेण सिंहाभेदाभावेपि शूरत्वेन तदभेदः । एतदेवाभिप्रेत्यानुव्याख्याने 'सादृश्याभेदसंश्रयादि'ति, 'चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते । अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचिदि'ति चोक्तम् । यद्यपि तत्सदृशेऽर्थे सति तस्य गौणार्थतावच्छेदकेन सादृश्येन रूपेण त्वंपदार्थजीवाभेदस्तथापि शक्यतावच्छेदकेन ब्रह्मत्वेन रूपेणाभेदो न मुख्य इत्यभिप्रायः । **गौणत्वमिति** । सादृश्यरूपामुख्यभेदप्रतिपादकत्वमित्यर्थ इति व्याचक्रिरे ।

उदाहरिष्यमाणतर्कताण्डवग्रन्थोक्तभङ्गीं जन्मादिनये वाक्यार्थचन्द्रिकाकृदभिहितां च तामनुरुन्धानाः गुरुपादाः सुधासन्न्यायरत्नावल्योरन्योन्यानुपमर्देनैव द्वयोः स्वरसवाहितां व्ययीभवन्निति तदुक्तदिशैव सौधाक्षराणि व्याख्यास्यामः । पूर्वोत्तरवादिनोर्जघन्यवृत्त्याश्रयणेनान्वयबोधोपगन्तृत्वा-

वैशेष्येपि पूर्ववादिनये पदद्वय र्मिकलक्षणाप्रतिसंहितिनिबन्धनत्वमन्वयबुद्धेरिति **गौरवम्** । उत्तरवादिन्ते च तदेकधर्मिकतत्प्रतिसन्धाननियन्त्रितत्वं तस्या इति लाघवमतस्तदेव स्वव्याख्या वरत्वे बीजमित्याशयेनाभिधत्ते **अद्वैतवादिभिरिति** । स्वार्थैकदेशत्यागेन । तत्त्वंपदशक्यतावच्छेदकीभूतसार्वज्ञ्याल्पज्ञतादिविवक्षाऽभावेन । **लक्षणया** चिन्मात्रलक्षणया । **सामानाधिकरण्यमत्रमिति** । विशेष्यवाचकप्रकृतिकविभक्तिसजातीयविशेषणवाचकप्रकृतिकविभक्तिरित्यर्थः । नीलं घटमानयेत्यादौ विशेष्यपदोत्तरविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थकत्वेन तत्परित्यागेन सादृश्यार्थोपादाने तस्या एव मुख्यार्थत्यागे गौणत्वप्रसक्तेरिति भावः । एतेन सामानाधिकरण्यस्य गौणत्वेपि विशेष्यविशेषणवाचकपदोत्तरविभक्तिद्वयबाधेनानेकबाधादत्र मात्रेति पूर्वत्र पदद्वयस्येति चाभिहितिर्न सङ्गच्छत इत्यपहस्तितं भवति । **ततो वरमिति** । तत्त्वंपदयोर्लक्षणाप्रतिसन्धानद्वयहेतुताकल्पनापेक्षयोक्तरूपैकविभक्तिप्रतिसंहितिहेतुताकल्पनायाः लघुत्वादित्यर्थः । **पदद्वयस्येति** । शक्तं पदमिति मतमनुरुध्येदम् । पाणिनीयमताश्रयणे तु प्रातिपदिकद्वयस्येत्यर्थः ।

प्रकृतसुधाग्रन्थस्य जगत्स्रष्टृपरामर्शिनस्तच्छब्दस्यैव त्वंशब्दवाच्ये जीवे गौणवृत्त्याश्रयणेन तत्त्वंपदयोरुभयोरपि लक्षणाश्रयणस्य पराहतत्वादिति सन्न्यायरत्नावलीविरोध इति शङ्काङ्कुरमपि नोत्पत्तुमलम् । न हि सुधाकृत्पादाः सर्वथा प्रातिपदिकस्य लक्षणां नाभ्यधुः । किन्तु द्वये न साभ्युपेयैकस्यैव साभ्युपेयेति । अत्रैव तेषां निर्भरः । अमुख्यवृत्तिकत्वेनाभ्युपगम्यमानमेकं च प्रातिपदिकं चोक्तरूपं सामानाधिकरण्यं वासिपदं वा अनियमेन किञ्चिदुपादेयं न तु नियतमीदृगेवेत्यभिनिवेश इति ध्वनयितुमेव टीकायामसिपदमात्रं गौणमिति । सुधायां च सामानाधिकरण्यमात्रमिति । तत्रैव तच्छब्देन तदीये स्वातन्त्र्यपारतन्त्र्ये लक्ष्येते इति चाभिहितम् । तत्तु सन्न्यायरत्नावलीकृतामप्रतीपमेव । न हि सन्न्यायरत्नावलीकारा असिपदस्य सामानाधिकरण्यस्य वा गौणतां प्रत्याचख्युः । एवं च तत्त्वप्रकाशिकासन्न्यायरत्नावलीग्रन्थयोरशयोपवर्णनायासोऽनाश्रयणीय इति ध्येयम् । अत एव तर्कताण्डवे एवमेव सुधाभिप्रायवर्णनं स्थितमिति टीकोक्तमात्रादिपदास्वारस्यं सोढ्वैव चन्द्रिकार्थापनमिति वाक्यार्थचन्द्रिकायामेव जन्मादिनयेऽभिहितमिति न तद्विरोधशङ्कावकाशः । तथाहि तर्कताण्डवे 'अतोऽभेदवदेवैताः श्रुतयः प्रवदन्ति हि । पौराणानि च वाक्यानि सादृश्याभेदसंश्रयादि'त्यनुव्याख्यानव्याख्यावसरे तत्त्वमसीत्यत्र गौणी चेत् प्रधानं पदद्वयं मुख्यार्थं सामानाधिकरण्यमात्रं सादृश्ये जघन्यम् । पररीत्या लक्षणा चेत्पदद्वयममुख्यार्थं सामानाधिकरण्यमात्रं मुख्यमिति प्रधानबाधादनेकबाधाच्च लक्षणा जघन्येति । अयं च न्यायो यद्यपि तत्त्वमसीति वाक्य एव सिंहश्चैत्र इत्यत्र सिंहसंबन्धिनि सिंहसदृशे चैत्रे लक्षणा चेत्सिंहप्रातिपदिकस्यैव बाधेनानेकबाधाभावात् । तथाप्येकस्यापि प्रधानस्य बाधस्तत्रापि लक्षणा जघन्येति ज्ञेयम् । न च सामानाधिकरण्यबाधेप्यनेक-

विभक्तिबाध इति वाच्यम् । नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषण-विभक्तेरेवाभेदार्थकत्वेन तन्मात्रबाधात् । बहुत्वप्रयुक्तबलादपि स्वभावप्रयुक्तबलस्य बलवत्त्वाच्च । प्राति-पदिकप्राधान्यं च प्रयाजशेषेणेत्यादौ सिद्धम् । न च लक्षणायामपि गङ्गापदं मुख्यार्थमेव सप्तम्येव प्रवाहस्य परंपरया घोषाधारतायाममुख्येति वाच्यम् । प्रवाहस्य परंपरयाप्यनाधारत्वात् । तीराधारताया एवभिप्रेतत्वाच्चेत्यादिना सति सामानाधिकरण्ये तस्यैव गौणीवृत्तिस्तदभावस्थले च प्रातिपदिकस्येति सिद्धान्तं प्रातिष्ठिपन्नित्यलं प्रपञ्चेन ।

सु० — उपलक्षणं चैतत् सौत्रमभेदागमव्याख्यानमित्याशयवानुक्तानुवादेनार्थान्तरम-प्याह सादृश्याच्चेति ।

अनु० — सादृश्याच्च प्रधानत्वात्स्वातन्त्र्यादपि चाभिदाम् ॥
आहुरीशेन जीवस्य

प्रधानत्वादपीत्यन्वयः । आहुः श्रुतयः । पौराणानि (च) वाक्यानीति वर्तते । उक्ता-नुवादः प्रतिपत्तिसौकर्यार्थः । प्रधानत्वं वैशिष्ट्यम् । तत्त्वमसीत्यादिव्यपदेशः सादृश्याद्गौण इत्युक्तम् । नान्योऽतोऽस्ति द्रष्टेत्यादि निर्देशस्तु स्वातन्त्र्यप्राधान्याभ्यां लाक्षणिकः । द्रष्टृपदेन तत्रारोपितवैशिष्ट्यं स्वातन्त्र्यं चोपलक्ष्यते । तथा च द्रष्टा विशिष्टः स्वतन्त्रश्चान्यो नास्ति इत्यर्थः संपद्यते । यद्वा तत्त्वमसीत्यादिनिर्देशोऽपि प्राधान्यस्वातन्त्र्याभ्यां लाक्षणिको व्याख्यायते । तथा हि । तच्छब्देन तदीये स्वातन्त्र्यप्राधान्ये लक्ष्येते । पुनस्ताभ्यां तद्विष-यता लक्ष्यते । ततश्च तत्प्रधानकस्तत्तन्त्रश्चेति वाक्यार्थो भवति । एतदप्युपलक्षणम् । अतत्त्व-मसीत्यादिव्याख्यानान्तरमप्यत्र द्रष्टव्यम् ।

स्यादेतत् । तुशब्दो हि सौत्रोऽवधारणार्थस्तेन च सादृश्यातिरिक्तोऽर्थो निवर्त्यते । तत्कथमर्थान्तरवर्णनमित्यतोऽन्यथा व्याचष्टे नेति ।

न स्वरूपाभिदां क्वचित् ॥

क्वचित् प्रदेशे । स्वरूपाभिदां नाहुरिति तुशब्दार्थः न तु प्राधान्यादिनिवृत्तिरिति । अस्त्वेवं जीवस्य ब्रह्मैक्यं मुक्तस्य तत्कथं व्याख्येयम् । न च तदप्युक्तन्यायेनेति युक्तम् । तथा सति यत्र त्वस्येत्यादिविशेषोक्त्यनुपपत्तेरित्यत आह स्थानैक्यमिति ।

स्थानैक्यमैकमत्यं च मुक्तस्य तु विशिष्यते ॥

ईशेनेति वर्तते । न केवलमुक्तनिमित्तत्रयं किन्नामैतन्निमित्तद्वयं विशिष्यते । अतो विशेषेणाभेदोक्तिरुपपद्यते । तत्र स्थानैक्येनैक्यव्यपदेशो लाक्षणिकः । स्थानगतस्यैकस्य

**स्थानिषु प्रयोगात् । ऐकमत्यनिमित्ते तु प्रयोगे लक्षितलक्षणा । विषयैक्यान्मत्यैक्यं ततश्च मतिमतामिति ।**

**शे०**— स्वातन्त्र्यादपि चेत्यत्र चापिशब्दयोरन्यतरेणैव समुच्चयसिद्ध्याऽन्यतरवैयर्थ्यमित्याशङ्क्य भिन्नक्रमतया सार्थक्यमाह **प्रधानत्वादपीत्यन्वय इति ॥ प्रतिपत्तीति ।** सर्वेषामर्थानामनायासेन प्रतिपत्त्यर्थमित्यर्थः । एकत्र सङ्कलय्य कथन एव च तस्याः सम्भवात्तदर्थतया सङ्कलय्य कथनमिति भावः । प्रधानत्वं किमत्र विवक्षितमित्यतः 'स्वातन्त्र्ये च विशिष्टत्व' इति जिज्ञासासूत्रीयपूर्वग्रन्थानुसारेण तद्व्याख्याति **प्रधानत्वं वैशिष्ट्यमिति ।** अद्वैतवाक्यमात्रस्य सादृश्यादिसर्वोपादानेन प्रवृत्तिरिति यत्किञ्चिदद्वैतश्रुतेः सादृश्यादिषु यत्किञ्चिदेकोपादानेन प्रवृत्तिर्न तु नियम इति च भ्रमनिरासाय नियममुपदर्शयन् सादृश्यनिमित्तत्वे का वृत्तिः प्राधान्यादिनिमित्तत्वे च केत्यतो वृत्तिचिन्तां च तत्रैव करिष्याम इति स्वकीयपूर्वप्रतिज्ञानुरोधेन वृत्तिनियममुपदर्शयति **तत्त्वमसीत्यादीति ।** कस्तदा भवति वाक्यार्थ इत्यतस्तमाह **तथा चेति ।** लाक्षणिकत्वेऽप्यस्य न पूर्वस्यास्य चैकप्रकारत्वं प्रतिपत्तव्यम् । तत्र लक्षणामात्रस्यात्र च लक्षितलक्षणायाः सत्त्वादित्याशयेन तामुपदर्शयितुं प्रतिजानीते **तथा हीति ।** तदीये इति लक्षणाबीजसम्बन्धकथनम् ॥ **पुनस्ताभ्यामिति ।** अत्र प्राधान्यस्वातन्त्र्याभ्यां तद्विषयत्वं लक्ष्यत इति नाभिप्रायः । लक्षितलक्षणाया: शक्तिवत्पदवृत्तित्वेनार्थनिष्ठत्वाभावात्किन्त्वन्तरङ्गशक्यसम्बन्धलाभात्प्रथमतस्तच्छब्देन स्वातन्त्र्यप्राधान्ये लक्ष्येते । ततः पुनरपि मुख्यार्थस्येव लक्ष्यार्थस्याप्यनुपपत्त्या तत्सम्बन्ध्यर्थान्तरमपि तत्पदेनैव लक्ष्यत इत्येवेत्यविरोध इत्यवधेयम् ॥ **एतदपीति ।** न केवलं सौत्रमभेदागमव्याख्यानमुपलक्षणमित्येव, किन्नाम, भाष्यकारीयं सादृश्याच्चेत्याद्यभेदागमव्याख्यानमपीत्यपिशब्दार्थः ।

**न त्विति ।** अनेन 'नरं च नारायणमेव चादावि'त्यादाविवानभिमतव्यावृत्तिरेवावधारणार्थ इत्युक्तं भवति । **विशेषोक्त्यनुपपत्तेः** विशेषतोऽभेदोक्त्यनुपपत्तेरित्यर्थः ॥ **स्थानैक्येनैक्यव्यपदेशो लाक्षणिक इति ।** अनेके एके सम्पद्यन्ते एकीभवन्तीति खल्वेकीभवन्तीत्यस्यार्थः । अभूततद्भावार्थकच्विप्रत्ययश्रवणात् । ततश्चात्र यथा गङ्गायां घोष इत्यत्र गङ्गापदस्य प्रवाहरूपमुख्यार्थेन नार्थवत्त्वम् । तथा सति प्रवाहस्य घोषानाधारत्वेन बाधितार्थत्वप्रसङ्गात्तथैकशब्दस्य नैकत्वविशिष्टरूपमुख्यार्थेनार्थवत्त्वं सम्भवति । मुक्तेः पूर्वमिवानन्तरमप्येकत्वविशिष्टत्वसम्पत्त्यभावेनानेके एके सम्पद्यन्त इत्यभूततद्भावार्थकच्विप्रत्ययार्थस्य बाधितत्वात् । किन्तु यथा तत्र गङ्गापदस्य तीररूपलक्ष्यार्थेनार्थवत्त्वं तीरस्य घोषाधिकरणत्वसम्भवेन बाधाभावात्, तथैकशब्दस्यापि मुख्यार्थभूतैकत्वविशिष्टस्थानसम्बन्धिनिवासरूपलक्ष्यार्थेनार्थवत्त्वं व्यक्तिस्थानापेक्षया मुक्तेः प्रागितस्ततः स्थितानां तेषां मुक्त्यनन्तरं भगव-

व्यक्तिस्थाननिवाससद्भावेनानेके एके सम्पद्यन्त इत्यभूततद्भावरूपच्विप्रत्ययस्याबाधादित्यर्थः । अस्वतन्त्रप्रयोगत्वेन प्रयोजनानपेक्षत्वान्न स्वायत्तन्यायविरोध इत्याशयेनाह **स्थानेति** । एकत्वविशिष्टस्थानवाचकेनैकशब्देन तत्र स्थितिर्लक्ष्यत इत्यर्थः ॥ **प्रयोग इति** । एकीभवन्तीत्यस्मिन्प्रयोग इत्यर्थ ॥ **लक्षितलक्षणेति** । मुख्यार्थानुपपत्त्या तत्सम्बन्ध्यर्थान्तरस्येव लक्ष्यार्थस्याप्यनुपपत्त्या तत्सम्बन्ध्यर्थान्तरस्यैकशब्देन लक्ष्यमाणत्वाल्लक्षितलक्षणेत्यर्थः । कोऽसौ मुख्यार्थः, कश्च तत्सम्बन्धी लक्ष्योऽर्थः, किं च तल्लक्ष्यसम्बन्ध्यर्थान्तरमित्यतस्तत्सूचयन्नेव लक्षितलक्षणामेव दर्शयति **विषयैक्यादिति** । एकत्वविशिष्टवस्तुवाचकेनैकशब्देन मुख्यार्थानुपपत्त्या तत्सम्बन्धी मतिरूपोऽर्थो लक्ष्यते ततो लक्ष्यार्थस्याप्यनुपपत्त्या तत्सम्बन्धी तद्वद्रूपोऽर्थोऽप्येकशब्देन लक्ष्यत इत्यर्थः । अयं भावः । यथा ह्यत्रैकशब्दो न मुख्यार्थेन नार्थवान्पूर्वमनेकेषां मुक्त्यनन्तरमेकत्वविशिष्टत्वसम्पत्त्यभावेनाभूततद्भावरूपच्विप्रत्ययार्थबाधात्तथोक्तरूपमुख्यार्थसम्बन्धिना मतिरूपलक्ष्यार्थेनापि नार्थवान् । मुक्तेः पूर्वमेकविषयमत्यरूपाणां तेषां मुक्त्यनन्तरमप्येकविषयमतित्वसम्पत्त्यभावेनाभूततद्भावरूपच्विप्रत्ययार्थबाधात् । किन्तु लक्ष्यार्थभूतमतिसम्बन्धी मतिमद्रूपो योऽर्थस्तेनैव । मुक्तेः पूर्वं भगवता भिन्नविषयमतिमतां तेषां मुक्त्यनन्तरं भगवतैकविषयमतिमत्त्वसम्पत्तिसद्भावेनाभूततद्भावार्थच्विप्रत्ययस्वारस्यादिति । यद्यपि चात्रैकशब्देन मतिमन्मात्रलक्षणयाऽपि च्विप्रत्ययोक्ताभूततद्भावलाभान्न लक्षणाद्वयस्य प्रयोजनं किञ्चिदिति, तदाश्रयणमनर्थकं तथाऽप्येकपदमुख्यार्थस्य मतिमद्भिर्मत्यद्वारकसम्बन्धानिरूपणादन्तरङ्गसम्बन्धलिप्सया लक्षणाद्वयमाश्रयणीयमिति द्रष्टव्यम् ।

प० — **उपलक्षणं चैतदिति** । व्याख्यानमित्यर्थः । आहुरित्यस्य कर्त्राकाङ्क्षायां तदनुवादपूर्वमाह **आहुः श्रुतय इति** ॥ **प्रतिपत्तिसौकर्यार्थ इति** । एतावन्तोऽर्था इति सुबोधायेत्यर्थः । नन्वेवममुख्यार्थस्यैव ग्रहणे 'रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेदि'ति कर्मनिर्णयोक्तवचनविरोध इत्यतो मुख्यार्थं च तत्त्वनिर्णयाद्युक्तमाह **एतदप्युपलक्षणमिति** । बृहद्भाष्यादौ 'सप्तसु प्रथमा यस्मादि'त्यादिवचनात्तच्छब्दस्य द्वितीयादिविभक्त्यन्तत्वं चोपेत्य तं प्रति त्वमसि तस्मिन्त्वमसीत्यर्थ उक्तः । स सर्वोऽप्यत्रादिपदग्राह्यः । **सौत्र इति** । तद्गुणसारत्वात्त्वितिसूत्रोपात्त इत्यर्थः । **यत्र त्वस्येति** । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदि'ति विशिष्याभेदोक्त्यनुपपत्तेरित्यर्थः ।

या० — **प्रतिपत्तिसौकर्यार्थ इति** । सर्वेषामर्थानामनायासेन प्रतिपत्त्यर्थमित्यर्थः । एकत्र सङ्कलय्य कथने हि सा भवतीति भावः ॥ **पुनस्ताभ्यामिति** । द्वारभूताभ्यामित्यर्थः । तथा च यत्र शब्दस्य साक्षाच्छक्यार्थसम्बन्धो वृत्तौ नियामकस्तत्र लक्षणा । यत्र तु लक्ष्यार्थद्वारा स तथा तत्र

लक्षितलक्षणेति भाव: । एतेन लक्षणाया: पदवृत्तित्वात्कथं ताभ्यां लक्ष्यत इत्युक्तिरिति शङ्कानवकाश इति ज्ञातव्यम् ॥ **विषयैक्यादिति** । विषयैक्यान्निमित्तान्मत्यैक्यं व्यपदिश्यते । तेन च मतिमता-मैक्यं व्यपदिश्यत इति व्यपदेशे निमित्तकथनमेतत् ।

**श्री० — तद्विषयतेति** । भगवत्स्वातन्त्र्यप्राधान्यविषयतेत्यर्थ: । यत्र त्वस्येत्यादिपदेन 'परेऽव्यये सर्व एकीभवन्ती'त्यादिवाक्यं ग्राह्यम् **विशेषोक्तीति** । विशिष्य मुक्तेनाभेदोक्तीत्यर्थ: ॥

**सु० — किञ्च यत्सादृश्यं सज्जीवमात्रसाधारणतयोक्तं तत्संसारिण्यनभिव्यक्तं मुक्ते तु व्यक्तमिति तदभिप्रायेणापि विशेषतोऽभेदोक्तिर्युक्तेत्याशयवानाह** सादृश्यं चेति ।

अनु० — सादृश्यं च विशेषेण

**मुक्तस्येशेनेति वर्तते । ननु सादृश्यादिकं जडेष्वपि विद्यते । तत्कथं तेषां 'सर्वं खल्विदं ब्रह्म' । 'भूतानि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च'त्यादौ क्वचिदेव परमात्मैक्यव्यपदेशो न पुनर्जीववत्प्राचुर्येणेत्यत आह** जडानामिति ।

जडानां द्वयमेव तु ॥

**तत्प्रधानकं तत्तन्त्रत्वमेव । जडानां त्विति संबन्ध: । सादृश्यस्यापि तृतीयस्य विद्य-मानत्वात्कथं द्वयमेवेत्यत आह** भवेदिति ।

भवेत्सादृश्यमत्यल्पं तृतीयं परमात्मना ॥

**जडानामिति वर्तते । सत्यमस्ति सादृश्यं किन्तु तत्सत्त्वा(त्ता)दिनैव । न तु जीववदा-नन्दादिना । अतो द्वयस्यैव सत्त्वादुपपन्नाऽप्रचुरोक्ति: । नन्वानन्दादिना सादृश्यं जीवेष्वपि नास्ति । केषाञ्चिज्जीवानामतद्रूपताभ्युपगमादिति चेन्मा भूत् । न हि जीवमात्रं प्रति तत्त्व-मसीत्युच्यते । तस्य वेदानधिकारित्वात् । किन्तु मोक्षयोग्यं प्रतीत्यदोष: । अत्र स्थानैक्यं च क्षीराब्ध्यादिस्थितभगवद्रूपापेक्षयोक्तमिति न जीवजडसाधारणम् । जडाभेदव्याख्यानेन प्राज्ञवदिति दृष्टान्तोऽपि व्याख्यातो भवति ।**

**श्री० — सादृश्यादिकं जडेष्वपि विद्यत इति** । यद्यपि प्रयोगानुसारेण निमित्तकल्पनं, न तु निमित्तानुरोधेन प्रयोगोऽपीति निर्दलेयमाशङ्का, तथाऽपि यत्र निमित्तं सामग्री तत्र निमित्तानुरोधेन प्रयोगस्याप्यङ्गीकारात्सादृश्यादेस्तत्सामग्रीत्वाभिप्रायेणेयमाशङ्केति ध्येयम् । जडानां द्वयमेवेत्येतावता पूर्त्या तुशब्दस्यानर्थक्यमित्यतो भिन्नक्रममाश्रित्य तत्सार्थकतामाह **जडानां त्विति सम्बन्ध इति** ॥ **द्वयस्यैव सत्त्वादिति** । सत्त्वादिना सतोऽपि सादृश्यस्याल्पत्वादल्पत्वे निःस्वप्रयोगदर्शनाद्युक्तमव-

धारणमिति भावः ॥ **न दोष इति** । तस्यानन्दादिना भगवत्सादृश्यसद्भावादिति भावः । नन्वीश्वरस्य सर्वगतत्वात्तैकस्थाननिवासस्य मुक्तानामिव तदन्येषामपि जीवानां जडस्य च सद्भावात्कथमेतद्विशेषेणाभेदाभिधाने निमित्तं स्यादित्यतः 'क्षीराब्ध्यादिस्थितभगवद्रूपापेक्षयैकस्थानस्थत्वं चे'त्याचार्योक्तिं मनसि निधाय तस्यासाधारण्यमुपदर्शयति **अत्रेति** । ननु जीवाभेदवादिमतनिरासकेऽस्मिन्नधिकरणे तदभेदवाक्यानामेव गतिकथनमुचितम् । तत्किमर्थं जडाभेदवाक्यगतिनिरूपणमित्यत आह **जडाभेद इति** ॥ **दृष्टान्तोऽपीति** । न केवलं जडाभेदवाक्यमित्यपिशब्दः । ततश्च दृष्टान्ताव्याख्यानान्न भाष्ये न्यूनतेत्युक्तं भवति ।

प० — **जीवजडसाधारणमिति** । सर्वत्र व्याप्तेन ब्रह्मणा स्थानैक्यस्य जीवजडयोरपि सत्त्वादिति भावः ।

**या० — जीवजडसाधारणमिति** । व्याप्तभगवद्रूपेण जीवजडयोरपि स्थानैक्यसद्भावादिति भावः ।

**श्री० — तत्संसारिणीति** । ज्ञानादिना सादृश्यम् ॥

**सु० — सूत्रे प्राज्ञवदित्युक्तम्** । तस्या(यम)र्थः । **प्राज्ञे यथाऽभेदव्यपदेशोऽमुख्यस्तथेति** । तत्र प्रतियोगिविशेषानुक्तेर्विज्ञानमानन्दं ब्रह्मेत्यादिरखिलोऽप्यभेदव्यपदेशो नित्यत्वादिसादृश्येनामुख्य इति ज्ञायेत । तन्मा विज्ञायीत्याशयवानाह ईशेति ।

अनु० — ईशरूपक्रियाणां च गुणानामपि सर्वशः ॥
तथैवावयवानां तत्स्वरूपैक्यं तु मुख्यतः ॥

**रूपाणि मत्स्यादीनि** । **क्रियाः सृष्ट्याद्याः** । **गुणा ज्ञानादयः** । **सर्वश इति प्रत्येकं संबन्धः** । तथाशब्दः **समुच्चये** । **एवशब्दस्य मुख्यत इत्यनेनान्वयः** । **अवयवा हस्ताद्याः** । तत्स्वरूपैक्यम् **ईश्वरस्वरूपेणै(पै)क्यं तत्प्रतिपादकं वाक्यमिति यावत्** । **मुख्यत एव व्याख्येयमिति शेषः** । **तुशब्दो जडव्यावृत्त्यर्थः** । **तथा च जडविशेष एवायं दृष्टान्त इति भावः** । **न चैवं साध्यसमत्वदोषः** । **जीवमात्राभेदवादिनं प्रत्यस्याधिकरणस्यारब्धत्वादिति** । **कुत एतदिति चेत् (न)** । **तत्र भेददर्शने प्रत्यवायस्योक्तत्वादित्याह** यथेति ।

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ॥
एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥
इति श्रुतेः

**पर्वतेषु दुर्गे शिखरे वृष्टमुदकं यथाऽधो (वि)धावत्येवं पारमेश्वरान्धर्मांस्ततः पृथक् पश्यंस्तानेव तद्दर्शनमन्वेवाविलम्बेन नरकं विधावतीत्यर्थः ।**

**शे०—** गुणग्रहणेन रूपलाभाद्रूपशब्देन पृथक् तदभिधाने पौनरुक्त्यमित्यत आह **रूपाणि मत्स्यादीनीति ॥ सर्वश इति ।** 'बाहुल्यार्थाच्छस्कारकादन्यतरस्यामि'त्यर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च भवतीत्यर्थाश्रयणाद्भूरिश इत्यादाविव बहुशब्दपर्यायसर्वशब्दाच्छस्प्रत्ययः । यद्यपि कारकादेव स विहित इति बहूनां स्वामीतिवन्न शेषषष्ठ्यन्तायुक्तस्तथाऽपि सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनादकारकादपि शस् इति द्रष्टव्यम् ॥ **प्रत्येकं संबन्ध इति ।** न तु यत्र श्रवणं तत्रैव । सन्निधानापेक्षया योग्यताया बलवत्त्वादिति भावः । तर्ह्येवशब्दस्य वैयर्थ्यमित्यतस्तस्य भिन्नक्रमतामाह **एवेति ।** नन्वत्र तत्स्वरूपैक्यस्य मुख्यत्वमुच्यते न तु तत्प्रतिपादकस्य प्रमाणस्य मुख्याभेदव्यपदेशत्वमिति कथमनेनोक्तप्रतीतिनिरास इत्यत आह **तत्प्रतिपादकमित्यादिना ॥ साध्यसमत्वेति ।** सर्वाद्वैतवादिनं प्रति जडभेदस्यासिद्धत्वेन पक्षसमत्वान्न दृष्टान्ततेत्यर्थः । ननु प्राज्ञवदिति दृष्टान्तस्य प्राज्ञे यथा जडाभेदव्यपदेशोऽमुख्यस्तथेत्यर्थत्वं कुतः । प्रतियोगिविशेषानुक्तेः । 'विज्ञानमानन्दं ब्रह्मे'त्यादिरखिलोऽप्यभेदव्यपदेशो नित्यत्वादिसादृश्येन यथाऽमुख्यस्तथेत्यर्थ इत्येव किन्न स्यादिति शङ्कते **कुत इति ।** असंकुचितवृत्तित्वसम्भवे तत्परित्यागेन संकुचितवृत्तित्वाश्रयणमन्याय्यमिति भावः ।

---

**स०— कुत एतदिति चेदिति ।** प्राज्ञवदिति दृष्टान्तस्य प्राज्ञे परमात्मनि यथा जडाभेदव्यपदेशस्यामुख्यत्वमित्यर्थत्वं कुतः प्रतियोगिविशेषानुक्तेः विज्ञानमानन्दं ब्रह्मेत्यादिरखिलोऽप्यभेदव्यपदेशो नित्यत्वादिसादृश्येनामुख्य इत्यर्थकत्वमेव किं न स्यादित्यर्थः ।

**प०— दृष्टान्त इति ।** प्राज्ञवदिति सौत्रदृष्टांत इत्यर्थः । प्राज्ञस्य जीवजडैक्यवादी शंकते **न चैवमिति ॥ साध्यसमत्वमिति ।** यथा साध्यं संदिग्धं तथा प्राज्ञे जडाभेदो गौण इति विप्रतिपन्न इति दोष इत्यर्थः ॥ **कुत एतदिति ।** जडविषयाभेदव्यपदेशः दृष्टांतो न पुनर्गुणकर्मादिविषय इत्येतदित्यर्थः ॥

**या०— साध्यसमत्वेति ।** सर्वाद्वैतवादिनं प्रति दृष्टान्तस्य पक्षसमत्वात्स्यो दोष इत्यर्थः । **आरब्धत्वादिति ।** तथा च तं प्रति जडाभेदस्यामुख्यतायास्सिद्धत्वात् युक्तं दृष्टान्तत्वमिति ।

**श्री०— अनुक्तेरिति ।** अमुक्तप्रतियोगिको भेद इति प्रतियोगिविशेषानुक्तेरित्यर्थः ॥ **नित्यत्वादिति ।** भगवतस्तद्विज्ञानादेश्चेत्युभयोरपि नित्यत्वात्तत्सादृश्ये न निमित्तेन विज्ञानं ब्रह्मेत्यादिव्यपदेशोऽमुख्य इत्यर्थः ॥

सु० — नन्वीश्वरधर्माणां भेदाभेदौ भवताम् । तथा चात्यन्ताभेदोक्तिरमुख्येति सौत्रो दृष्टान्तोऽसंकुचितवृत्तिर्भविष्यति । इयं च श्रुतिरत्यन्तभेददर्शननिन्दापरा भवत्वित्यत आह नोभयं चेति ।

अनु० — नोभयं च भेदाभेदाख्यमिष्यते ॥

इष्यते सूत्रकृतेति शेषः । भेदाभेदौ नेष्यते इति वक्तव्ये भेदाभेदाख्यमुभयमिति वचनं वक्ष्यमाणश्रुतिव्याख्यानानुसारेणेति ज्ञातव्यम् । कुतो नेष्यत इत्यत आह एकमेवेति ।

एकमेवाद्वितीयं तन्नेह नानाऽस्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥
इति श्रुताविवेत्यस्माद्भेदाभेदनिराकृतिः ॥

एकम् अभिन्नम् । एकमपि घटादिकमवयवभेदवदुपलब्धमत एवेत्युक्तम् । अद्वितीयं समाधिकरहितम् । इह ब्रह्मणि किञ्चन गुणादिकमिति नानाभूतं नास्ति । यस्त्विह ब्रह्मणि विद्यमानं गुणादिकं नाना भिन्नं, इव शब्दादभिन्नं च पश्यति । स मृत्योरनन्तरं मृत्युं नरकमाप्नोति । इति श्रुताविवेत्यस्माच्छब्दात् । उपलक्षणं चैतत् । एवशब्दाच्च भेदाभेदनिराकृतिः कृता ज्ञायते । अतो नेष्यत इति योजना । इवशब्दप्रयोगात्कथमेतल्लभ्यत इत्यत आह इवेति ।

इवोभये च सादृश्य इति वाक् शब्दनिर्णये ॥ २-३-१४ ॥

उभये यदुक्तं पूर्वपदेन तत्प्रतियोगिनि द्वितीये वर्तत इत्यर्थः । अत्र च नानो(क्त्वा)-क्त्या प्रयुक्त इवशब्दोऽनाना (सं)गृह्णातीति भेदाभेदाख्यमुभयं निराकृतं भवति । वागस्तीति शेषः । शब्दनिर्णयो नाम ग्रन्थविशेषः ॥ २-३-१४ ॥

शे० — इयं चेति । 'एवं धर्मानि'ति श्रुतिश्चेत्यर्थः ॥ वक्ष्यमाणश्रुतीति । नानेवेति श्रुते'रिवोभये च सादृश्य' इति प्रमाणबलाद्वक्ष्यमाणं यद्व्याख्यानं भेदाभेदनिराकृतिरित्येवंरूपं तदनुसारेणेत्यर्थः ॥ पूर्वपदेनेति । इवशब्दापेक्षया पूर्वपदेनेत्यर्थः । अतिरोहितार्थमन्यत् ॥ २-३-१४ ॥

प० इयं चेति । यथोक्तमिति श्रुतिरित्यर्थः ॥ वक्ष्यमाणेति । 'इवोभये च सादृश्य' इति वक्ष्यमाणेवशब्दव्याख्यानानुसारेणेत्यर्थः । तत्रोभयशब्दप्रयोगादिति भावः ॥ २-३-१४ ॥

या० — वक्ष्यमाणेति । नानेव पश्यतीति श्रुतेः 'इवोभये च सादृश्ये इति वाक् शब्दनिर्णये' इति प्रमाणबलाद्वक्ष्यमाणं व्याख्यानं भेदाभेदनिराकृतिरिति तदनुसारेणेत्यर्थः । प्रमाणे

उभय इत्युक्तत्वात्प्रकृते इवशब्दशिरस्केन नानाशब्देन भेदाभेदाख्यमुभयं लभ्यत इति प्रदर्शयितुमिदमुक्तमिति यावत् । अत एव वक्ष्यति, 'अत्र च नानोक्त्वेत्यादि ॥ **पूर्वपदेनेति** । इवशब्दापेक्षया पूर्वपदेनेत्यर्थः ॥ २–३–१४ ॥

**श्री०— अत्यन्ताभेदोक्तिरिति** । प्राज्ञे विज्ञानादिभिरित्यर्थः । **असंकुचितवृत्तिरिति** । तथा च भेदाभेदाङ्गीकारेण प्राज्ञवदित्यस्य प्राज्ञे भगवति यथा विज्ञानादिभिरभेदव्यपदेशोऽत्यन्ताभेदव्यपदेशोऽमुख्यस्तद्वदित्येव सूत्रार्थोऽस्तु । तथा च न जडविषय एवायं दृष्टान्तः किन्तु विज्ञानादिविषयकोऽप्यस्त्विति भावः ॥ २–३–१४ ॥

॥ इति पृथगुपदेशाधिकरणम् ॥



## ॥ अथ अंशाधिकरणम् ॥

सु० — ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥ केचिदिदमेवं व्याचक्षते । जीवः परमात्मनोंऽशः । अंशत्वं च नारम्भकत्वम् । परमात्मनोऽनारब्धत्वात् । नापि खण्डत्वम् । अच्छेद्यत्वात् । न च प्रदेशत्वम् । प(घ टादिवदनित्यत्वप्रसङ्गात् । किन्नाम भिन्न भिन्नत्वम् । अत्र भेद औपाधिकोऽभेदस्तु स्वाभाविकः । उपाधिश्च अनाद्यनिर्वाच्याऽविद्येत्येके । अन्ये तु सत्यमेवान्तःकरणादिकमिति । कुत एतत् । 'द्वा सुपर्णा' 'नित्यो नित्यानामि'त्यादिनानाव्यपदेशात् । अन्यथा चापि 'तत्त्वमसि''अहं ब्रह्मास्मी'त्याद्यभेदव्यपदेशात् । न चैकस्यैव जीवस्य ब्रह्मणा भेदाभेदौ किन्तु सर्वेषाम् । यतो ब्रह्मदाशा ब्रह्मकितवा इत्येके ब्रह्मणो दाशकितवादित्वमधीयत इत्यादि ।

तदिदमयुक्तम् । तथा हि । कोयमभेदः । किं मुख्य एवोतामुख्यः सादृश्यादिलक्षणः । आद्यं निराकरोति भेदस्येति ।

अनु० — ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥

भेदस्य मुक्तौ वचनादपि तत्पक्षनिग्रहः ॥

मुक्तावपीति संबन्धः । तत्पक्षो मुख्याभेदपक्षः । जीवस्यौपाधिक एव परमात्मनो भेदः । अभेदस्तु स्वाभाविक इति वदता मुक्तौ भेदाभावो (वाच्यः) । तत्राविद्याया अन्तःकरणादेश्चाभावात् । न च तद्युज्यते । मुक्तावपि जीवब्रह्मभे(णोर्भे)दस्य प्रागुदाहृताभिः श्रुतिस्मृतिभिरभिहितत्वात् । अतः प्रमाणविरुद्धत्वादस्य पक्षस्य हेयत्वमेव । द्वितीयं निराचष्टे चेतनत्वादीति ।

चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते ॥
अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचित् ॥

सादृश्यमित्युपलक्षणम् । तत्प्रधान(क)त्वाद्यपीति द्रष्टव्यम् । अभेदोऽङ्गीकृतश्चेत्कथं तत्पक्षनिग्रह इत्युक्तमित्यत(मत) आह नेति । क्वचिदिति संसारे मुक्तौ वे(चे)त्यर्थः ।

शे० — ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥ 'भेदस्य मुक्तौ वचनादि'त्युत्तरभाष्यस्य असूत्रार्थव्याख्यानरूपत्वादानर्थक्यमित्याशङ्क्य करिष्यमाणस्वकीयसूत्रव्याख्यानदार्ढ्यायोपोद्घातसङ्गत्या तदपव्याख्याननिरासार्थत्वान्न तदिति भावेन सूत्रापव्याख्यान-

निरासपरतयोत्तरग्रन्थं योजयितुं तदनुवदति **केचिदिति** । अद्वैतवादिन इत्यर्थः । किं तज्जीवस्य परमात्मानं प्रत्यंशत्वमित्यतः प्रसक्तानभिमतांशत्वनिरासपूर्वकं स्वाभिमतमंशत्वं निर्वक्ति **अंशत्वं चेति** । अत्रारम्भकादिषु लोकेऽशत्वप्रसिद्धिः पक्षप्रसञ्जिकेति द्रष्टव्यम् । **खण्डत्वं** छिन्नभागत्वम् ॥ **पटादिवदिति** । न च गगनादौ सत्यपि सप्रदेशत्वेऽनित्यत्वाभावाद्व्यभिचार इति वाच्यम् । परमते गगनादिनित्यताया बहुकालावस्थायितामात्ररूपत्वेन वस्तुतस्तन्नित्यताया अभावादित्याशयात् । नाप्यत्यन्ताभिन्नत्वम् । पटाद्भिन्नेऽप्येकस्मिंस्तन्तौ पटांशत्वव्यवहारादिति भावेन परिशिष्टं दर्शयति **किन्नामेत्यादिना** । नन्वेवमद्वैतवादविरोधो भेदाभेदयोः परस्परविरोधित्वादेकत्रासम्भवश्च जीवब्रह्मणोः सुखदुःखादिव्यवस्थाऽनुपपत्तिश्चेत्यतो भेदस्यौपाधिकत्वेन स्वाभाविकभेदानङ्गीकारान्नाद्वैतवादविरोधः । उभयोः स्वाभाविकत्वस्यौपाधिकत्वस्य वाऽनभ्युपगमान्नैकत्रासम्भवोऽपि । जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावाभ्युपगमान्मुखप्रतिमुखयोः श्यामतावदातत्वादिव्यवस्थावत्सुखदुःखादिव्यवस्थाऽत्रोपपद्यते उपाधेः प्रतिबिम्बपक्षपातित्वादित्याशयेन भेदाभेदयोरौपाधिकत्वस्वाभाविकत्वे आह **तत्रेति** । **एके** मायावादिनः । **अन्ये** भास्करादयः । भवेज्जीवस्य भिन्नाभिन्नत्वरूपमंशत्वं यदि जीवस्य परमात्मना भिन्नाभिन्नत्वमेव सिद्धं स्यात्तदेव कुत इति पृच्छति **कुत एतदिति** । परमात्मनाऽत्यन्ताभिन्नत्वस्यैव वा तदत्यन्तभिन्नत्वस्यैव वा सम्भवेन भेदाभेदपर्यन्तधावने निमित्ताभावादिति भावः । **नानाव्यपदेशान्नानात्वव्यपदेशात्** । भेदव्यपदेशादित्यर्थः । असति भेदे भेदनिर्देशानुपपत्तेर्नात्यन्ताभेद इति भावः ॥ **किन्तु सर्वेषामिति** । एतच्चोदाह्रियमाणप्रमाणे हीनजन्तूदाहरणात्सिद्धमिति द्रष्टव्यम् । ब्रह्मदाशा इत्यादौ दाशा ब्रह्म, कितवा ब्रह्मेत्यादियोजना द्रष्टव्या । ब्रह्मणो दाशकितवादित्वमधीयत इत्यस्योक्तप्रतिज्ञानुरोधेन दाशादीनां ब्रह्मत्वमधीयत इत्यर्थः ।

नन्वेवं भेदाभेदयोरुभयोरपि प्रामाणिकत्वाविशेषादभेदः स्वाभाविकः, भेदस्त्वौपाधिक इति कुतः । वैपरीत्यस्यापि सुवचत्वादिति चेदुच्यते । अनधिगतार्थावबोधकान्येव खलु सर्वाणि प्रमाणानि । अनधिगतार्थगन्तृ प्रमाणमिति तल्लक्षणात् । विशेषतस्तु शब्दः । तस्य परार्थत्वात् । ततश्च भेदो लोकसिद्धत्वान्न शब्देन प्रतिपाद्यः । अभेदस्त्वनधिगतत्वादधिगतभेदानुवादेन प्रतिपादनमर्हति । येन च वाक्यमुपक्रम्यते मध्ये च परामृश्यतेऽन्ते चोपसंह्रियते तत्रैव तस्य तात्पर्यम् । उपनिषदश्चाद्वैतोपक्रमतत्परामर्शतदुपसंहारा अद्वैतपरा एव युज्यन्ते । न च यत्परास्तदौपचारिकमन्यच्च स्वाभाविकमिति युज्यत इत्यभेद एव स्वाभाविको न भेद इत्याशयात् ।

अभेदस्य सादृश्यादिरूपत्वे भेदस्येत्युत्तरभाष्यस्य मुख्याभेदत्वे च चेतनत्वादीत्युत्तरभाष्यस्यासङ्गतिमाशङ्क्य सम्भावितविकल्पप्रदर्शनपूर्वकं तत्तत्पक्षदूषणपरत्वेनोत्तरभाष्यं योजयितुमपव्याख्यानस्य

दुष्टतां प्रतिजानीते **तदिदमिति**। यथास्थितान्वये वैयर्थ्यप्रसङ्गादपिशब्दस्य भिन्नक्रमतामाह **मुक्तावपीति सम्बन्ध इति**। मायावादिमतानुसारेणाह **अविद्याया इति**। भास्करादिमतेनाह **अन्तःकरणादेश्चेति**। तत्प्रधानत्वादीत्यादिपदेन तत्तन्त्रत्वादिपरिग्रहः **कथमिति**। अभेदाङ्गीकारतत्पक्षनिग्रहयोर्विरुद्धत्वादिति भावः।

प० — ॐ **अंशो नानाव्यपदेशात्** ॐ ॥ सौत्रहेतुमवतार्य परोक्तार्थमनुवदति **कुत एतदित्यादिना इत्यादीत्यन्तेन**।

या० — ॐ **अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके** ॐ ॥ **नापि खण्डत्वमिति**। खण्डितपटवदित्यर्थः।

श्री० — ॐ **अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके** ॐ ॥ किन्तु सर्वेषामित्यनन्तरमित्याहेति शेषः। हेयत्वमेवेति निग्रहशब्दार्थः।

च० — ॥ ॐ **अंशो नाना** ॐ ॥ …… ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणश्रीमत्सत्यप्रियतीर्थपूज्यपादतनूजसर्वतन्त्रस्वतन्त्रगालवपुरीश्रीनिवासार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां चषकनाम्न्यां कार्ष्ण्यां समासतः सुधाया व्याख्यायां द्वितीयाध्यायस्य तृतीय पादः ॥

---

सु० — **न केवलं युक्तिविरुद्धो जीवब्रह्मणोर्भेदाभेदाङ्गीकारः किं तर्हि श्रुतिविरुद्धोऽपीत्याह** न केनचिदिति।

**अनु०** — न केनचिदभेदोऽस्ति भेदाभेदोऽपि वा क्वचित् ॥
समुदायमृते विष्णोः स्वगुणादीन्विनाऽपि वा ॥
इति श्रुतेर्न तस्यास्ति भेदाभेदोऽपि केनचित् ॥

**भेदेन सहितोऽभेदो भेदाभेदः। क्वचिदपीति संबन्धः। वाशब्दः समुच्चये। ऋतेयोगे द्वितीयाऽप्युपसंख्यातव्या। श्रौतप्रयोगात्। अपिशब्दः समुच्चये। वाशब्दो विकल्पार्थः। स च व्यवस्थितो विकल्पः। समुदायमृते(न) केनचिद्भेदाभेदो(दोऽस्ति) नास्ति। स्वगुणादीन्विनाऽभेदो नास्तीति। केनचिदपीत्यन्वयः। एतेन जीवब्रह्मणोर्भेदाभेदौ द्वावपि स्वाभाविकौ। न तु भेदोऽविद्याद्युपाधिनिबन्धनः। अतो मुक्तावपि भेदसद्भावान्नास्माकं मुक्तभेदवचनविरोध इति वदन्यादवप्रकाशोऽपि निरस्तः। क्वचित्केनचिदिति विशेषश्रुतिविरोधादिति।**

शे० — ननु भेदाभेद इति नेतरेतरद्वन्द्वः। तथा सति भेदाभेदाविति द्विवचनापत्त्यैकवचनानुपपत्तेः। नापि समाहारद्वन्द्वः। तथा सति समाहारस्यैकत्वादेकवचनं क्लीबता चेति नपुंसकत्वापत्त्या पुल्लिङ्गत्वानुपपत्तिरित्याशङ्क्य शाकपार्थिवादित्वान्मध्यमपदलोपी समासोऽयमित्याशयेनाह **भेदेनेति**। अपि वेत्यत्रान्यतरेणैव, 'न केवलं न केनचिदभेदो नास्तीत्येव, किन्तु केनचिद्भेदाभेदोऽपि नास्ती'ति समुच्चयस्य सिद्ध्याऽन्तरवैयर्थ्यमित्याशङ्क्य वाशब्दस्योक्तरीत्या समुच्चयार्थत्वस्यापिशब्दस्य क्वचिदपीति भिन्नक्रमताया आश्रयणादुभयोरपि सार्थक्यमित्याह **क्वचिदपीति संबन्ध इत्यादिना**। ननु 'अन्याराद्दितरर्ते' इति ऋतेशब्दयोगे पञ्चमीविधानादृते कृष्णादितिवत्समुदायादृत इति पञ्चम्या भवितव्यं समुदायमृत इति द्वितीया तु कथम्। न च 'उभयसर्वतसोरि'त्युपपदविभक्तिविधौ ततोऽन्यत्रापि दृश्यत इत्यनेनोपपदान्तरयोगेऽपि द्वितीयाविधानादृतेशब्दयोगेऽपि द्वितीयोपपत्तिरिति वाच्यम्। अन्यत्रापि दृश्यत इत्युक्त्या प्राप्तोपपदानियमपरिहारार्थं 'वाभितः परितः समयानिकषाहाप्रतियोगेष्वि'त्यन्यत्रापीत्युक्तान्येषां परिगणनेन तेनात्र द्वितीयाया अनिर्वाहादित्यतो विनाऽर्थस्य ऋतेशब्दस्यान्यत्रापीत्युक्तान्यपरिगणनायां वृत्त्यादावपरिगणितत्वेऽपि दृशिग्रहणस्य प्रयोगानुसारार्थत्वाच्चैत्र यावच्छीतमित्यादेरिव समुदायमृत इति श्रौतप्रयोग'स्यात्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययमि'त्यार्षप्रयोगस्यान्यत्रापि पुरुषाराधनमृत इत्यादिप्रयोगस्य च दर्शनादन्यपरिगणनवाक्ये ऋतेशब्दस्यापि परिगणनीयत्वाद्युक्तोऽनेन ऋतेशब्दयोगेऽपि द्वितीयाविधिरत एव कौमुद्यामाचार्यीयमृतेशब्दस्यापि तत्र परिगणनं ऋते द्वितीया चेति चान्द्रं सूत्रं च सङ्गच्छत इत्याशयेनाह **ऋतेयोगेऽपीत्यादिना**। स्वगुणादीन्विनाऽपि वेत्यत्रापिशब्दवाशब्दयोरन्यतरेणैव, न केवलं समुदायमृत इत्येव किन्तु स्वगुणादीन्विनाऽपीति समुच्चयस्य सिद्धिसंभवादन्यतरवैयर्थ्यमित्याशङ्क्योभयोरर्थभेदमाह **अपिशब्दः समुच्चय इत्यादिना**। तर्हि समुदायमृते वा स्वगुणादीन्विना वा केनचिदभेदो नास्ति समुदायमृते वा स्वगुणादीन्विना वा केनचिद्भेदाभेदो नास्तीत्युक्तं स्यात्। ततश्च स्वगुणादिभिरभेदस्येव भेदाभेदयोरनेकत्वरूपसमुदायेन भेदाभेदयोरिवात्यन्ताभेदस्य च प्रसङ्गाद्बहुविप्लवापत्तिरित्यतो भवेदेवं यद्यत्र वाशब्दोऽव्यवस्थितविकल्पार्थः स्यान्न चैतदस्तीत्याह **स चेति**। व्यवस्थितविकल्पमेव दर्शयति **समुदायमृत इत्यादिना**। इतीत्यस्य इति व्यवस्थित इति पूर्वेण संबन्धः॥ **केनचिदपीत्यन्वय इति**। यद्यप्युदाहृतश्रुत्या समुदायमृतेऽन्येन केनचिद्भेदाभेदाभावस्येव स्वगुणादीन्विनाऽभेदाभावस्याप्यभिधानात्तदनुसारेण तस्य केनचिद्भेदाभेदोऽभेदश्च नास्तीत्यभेदसमुच्चयार्थतयाऽपि भेदाभेदोऽपि केनचिदित्यपिशब्दो योजयितुं शक्यते तथाऽपि जीवब्रह्मणोर्भेदाभेदाङ्गीकारस्य श्रुतिविरुद्धत्वोपदर्शनायोदाहृतश्रुतितात्पर्यकथनपरे आचार्यवाक्ये तदभेदस्य श्रुतिविरुद्धत्व-

कथनस्य प्रक्रमाप्रसङ्गतत्वात्समुदायमृते केनचिदपि भेदाभेदो नास्तीति योजनायामर्थपुष्टिलाभाच्च भिन्न-क्रमत्वाश्रयणमिति ध्येयम् । एतेनेयुक्तमेव विशदयति **क्वचिदित्यादि** ।

**प०— न केवलं युक्तिविरुद्ध इति** । मुक्तौ भेदोक्त्यन्यथानुपपत्तिरूपयुक्तिविरुद्ध इत्यर्थः । ननु भेदाभेद इति कथं इतरेतरयोगद्वन्द्वे भेदाभेदाविति । समाहारद्वन्द्वे भेदाभेदमिति भाव्यत्वा-दित्यत आह **भेदेन सहित इति** ।। **वाशब्द इति** । क्वचिदित्यतः पूर्वतनो वाशब्द इत्यर्थः । भेदाभेदोऽपीति समुच्चयार्थ इति भावः । ननु समुदायमृते इति कथम् । 'अन्यारादितरर्तेदिक्शब्दा-ञ्चूत्तरपदाजाहियुक्ते' इति ऋतेशब्दयोगे पञ्चम्या भाव्यत्वादित्यत आह **ऋतेयोग इति** ।। **अपिशब्द इति** । विनेत्यतोऽग्रेतनापिशब्द इत्यर्थः । **वाशब्दो विकल्पार्थ इति** । अन्तिम इति भावः ।। **समुदायमिति** । द्वित्वत्रित्वादिधर्ममित्यर्थः ।

**या०— भेदेन सहित इति** । द्वन्द्वतायामेकवचनानुपपत्तिरेकवद्भावे च पुलिङ्गानुपपत्तिरतोऽयं मध्यमपदलोपी समास इति भावः ।। **द्वितीयाऽप्युपसंख्यातव्येति** । अन्यथा'ऽन्यारादितरर्ते' इत्यनेन पञ्चम्या भाव्यमिति भावः । **समुदायं** द्वित्वबहुत्वादिरूपम् ।

**श्री०— भेदसद्भावादिति** । भेदस्यापि सद्भावादित्यर्थः ।। **क्वचिदिति** । कस्यामप्यव-स्थायाम् ।। **विशेषेति** । भेदाभेदनिषेधकेत्यर्थः ।

**सु०— यद्येवं जीवब्रह्मणोर्न भेदाभेदौ कथं तर्हि सौत्रं भेदाभेदश्रुत्युदाहरणमित्यतः स्वमतेन सूत्रतात्पर्यमाह** अभेदेति ।

**अनु०**— अभेदश्रुतयोंऽशत्वात्

**उपलक्षणमेतत्** । **भेदश्रुतयश्चेत्यपि द्रष्टव्यम्** । **अंशत्वादेव हि उपपद्यन्त इति शेषः** ।

**अयमर्थः** । **जीवः परमात्मनोंऽश इति प्रतिज्ञातार्थे नानाव्यपदेशादिति पुत्रभ्रातृत्वा-दिनानाविधसंबन्धव्यपदेशहेतुमभिधायान्यथा चापीत्यादिनाऽर्थापत्तिरप्युच्यते । तथा हि । जीवब्रह्मणोर्भेदमभेदं च वदन्त्यः श्रुतयस्तावद्विद्यन्ते । ताश्च जीवस्य ब्रह्मांशत्वादेव हि उपपद्यन्ते नान्यथा । यदि जीवो ब्रह्मणो घट इव पटादत्यन्तभिन्नः स्यात्तदाऽभेदश्रुतय उपरुध्येरन् । यदि वा ब्रह्माभिन्नः स्यात्तर्हि भेदश्रुतयो बाध्येरन् । न च भेदाभेदाश्रयणेन श्रुतिद्वयसामञ्जस्यं वाच्यम् । न केनचिदित्युदाहृतश्रुतिविरोधात् । अतो भेदाभेदश्रुत्यन्यथाऽनुपपत्त्या जीवो ब्रह्मां(णो)शोऽङ्गीकार्य इत्येव सूत्रार्थ इति । एतदर्थं च न केनचिदित्याद्येकवाक्यतया च**

योज्यम् । यथोक्तम् । 'यतो भेदेन तस्यायमभेदेन च गीयते । अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यत' इति ।

शे०— नन्वत्राभेदश्रुतीनामंशत्वादुपपत्तिकथनेऽपि भेदश्रुतीनां तदकथनान्न सौत्रभेदाभेदश्रुतिगतिकथनपरता भाष्यस्य युज्यत इत्यत उपलक्षणतया भाष्यं व्याचष्टे उपलक्षणमेतदिति । भेदाभेदश्रुत्यन्यथाऽनुपपत्त्यांऽशत्वसिद्धेर्भाष्यारूढतासिद्ध्यर्थमनुरूपं शेषं सम्पूर्य साकाङ्क्षतया प्रसक्तां वाक्याभासतां परिहरति एव ह्युपपद्यन्त इति शेष इति ॥ एतदर्थं चेति । अन्यथा चापीति सूत्रखण्डोक्तभेदाभेदश्रुत्यन्यथाऽनुपपत्तेर्भेदाभेदाभ्यामन्यथोपपत्तिनिरासस‍िद्ध्यर्थं चेत्यर्थः ॥ एकवाक्यतया वेति । अन्यथा भेदाभेदश्रुत्यन्यथाऽनुपपत्त्यसिद्ध्या तथा जीवस्यांशत्वसिद्ध्ययोगादिति भावः । भेदाभेदश्रुत्यन्यथाऽनुपपत्त्यांऽशो जीव इत्यत्र भाष्योदाहृतं प्रमाणवाक्यं सम्मतित्वेनाह यथोक्तमिति । वाराहपुराण इति शेषः ।

प०— यथोक्तमिति । भाष्ये ।

श्री०— एतदर्थमिति । भेदाभेदाङ्गीकारेण सूत्रोदाहृतश्रुतिद्वयसामञ्जस्यमस्त्विति शङ्कापरिहारार्थत्वेनेत्यर्थः । पूर्वं न केनचिदित्यारभ्य केनचिदित्यन्तमेकं वाक्यं कृत्वाऽभेदश्रुतयोंऽशत्वादित्यपरं वाक्यं कृत्वा योजितम् । इदानीमभेदश्रुतयोंऽशत्वादुपपद्यन्त इत्युक्तौ भेदाभेदाश्रयणेनेत्युक्तशङ्कोत्तरत्वेन न केनचिदिति श्रुतेर्भेदाभावादित्येकवाक्यतया योज्यमित्यर्थः ।

सु०— परमात्मांशत्वं चेदुपगतं जीवस्य कथं तर्हि न भेदाभेदाङ्गीकारः । प्रकारान्तरेणांशत्वस्य निर्वक्तुमशक्यत्वात् । मत्स्यादिषु परमेश्वरांशेष्वभेदस्याङ्गीकृतत्वाच्चेत्यत आह सादृश्यं चेति ।

अनु०— सादृश्यं चांशताऽस्य तु ॥

अस्य जीवस्य परमेश्वरांशता तु तत्सादृश्यम् । चशब्दात्तदधीनसत्तादिमत्त्वं चेत्यर्थः । एतेन पुंस्त्वादिवदित्यनेनैवेदं गतार्थमधिकरणमित्यपि निरस्तम् । यद्वा चशब्दोऽवधारणार्थः । सत्यम् । मत्स्यादिष्वभेदनिमित्तकोंऽशशब्दः । तथाऽपि मुख्यांशसादृश्यं तत्सत्तयैव सत्तावत्त्वलक्षणमेव जीवस्यांशत्वं गौणोऽयमंशशब्द इति यावत् । अंशशब्दस्यानेकार्थत्वं तत्र मत्स्याद्याः स्वरूपांशा एव जीवाः भिन्नांशा एवेत्यत्र असंभावनानिरासाय ( दीनां स्वरूपांशत्वं जीवानां त्वतथाभूतांशत्वमित्येतत्कुत इत्यतोऽत्र ) आगमवाक्यं पठति अंशस्त्विति ।

अंशस्तु द्विविधो ज्ञेयः स्वरूपांशोऽन्य एव च ॥
विभिन्नांशोऽल्पशक्तिः स्यात्किञ्चित्सादृश्यमात्रयुक् ॥
अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथा स्थितिः ॥
स एव चेत्स्वरूपांशः प्रादुर्भावा हरेर्यथा ॥

**द्विविध एव न त्वेकविध एवेत्यन्वयः । किञ्चित्सादृश्यमात्रयुगिति पुरेवदुभयथा व्याख्येयम् ।** सामर्थ्यं **सृष्ट्यादिकर्तृत्वादिलक्षणम् ।** स्वरूपं **पूर्णानन्दादिकम् ।** स्थितिः **सर्वगतत्वादिपरिमाणम् ।** स एव चेत् **तत्सामर्थ्यादियुक्तश्चेदंशस्तदासौ तत्स्वरूपांशो ज्ञातव्यः । प्रादुर्भावा इति तस्यैवोदाहरणम् । एवं जीवा यथेत्याद्यस्याप्युदाहरणं द्रष्टव्यम् । अनेन प्रकाशादिवन्नैवं पर इत्यस्य तात्पर्यमुक्तं भवति ।**

**शे०** — ननु 'सादृश्यं चांशताऽस्य त्वि'त्युत्तरभाष्यमनर्थकमित्याशङ्क्यांशत्वाङ्गीकारप्रसक्तभेदाभेदाङ्गीकारपरिहाराय प्रकारान्तरेणांशत्वनिर्वचनपरत्वात्तस्य नानर्थक्यमित्यभिप्रायेणांशत्वाङ्गीकारप्रयुक्तभेदाभेदाङ्गीकारशङ्कामुत्थापयति ॥ **परमात्मांशत्व चेदिति ।** परमात्मांशत्वाङ्गीकारेण कथं भेदाभेदाङ्गीकारप्राप्तिरित्यतः परमात्मनोऽनारब्धत्वेन तदारम्भकत्वरूपस्य, अच्छेद्यत्वेन खण्डत्वरूपस्य, पटादिवदनित्यत्वप्रसक्त्या प्रदेशत्वरूपस्य चांशत्वस्यासम्भवेन जीवे भिन्नाभिन्नत्वरूपस्यैव तस्य वाच्यत्वेन युक्तैव परमात्मांशत्वाङ्गीकारेण परमात्मना भेदाभेदाङ्गीकारप्राप्तिरित्याह **प्रकारान्तरेणेति ।** उत्तरग्रन्थस्य जीवेंऽशशब्दप्रवृत्तौ सादृश्यरूपनिमित्ताभिधानमुखेनांशशब्दस्य गौणत्वव्युत्पादनाभिप्रायकत्वाच्च नानर्थक्यमिति भावेन किं तद्व्युत्पादनेनापीत्यतो मत्स्यादिवदभेदनिमित्तकांशशब्दवाच्यत्वेन प्रसक्तस्य परमात्माभेदस्य परिहारार्थत्वान्न तदिति भावेन तत्परतयाऽप्युत्तरग्रन्थं सङ्गमयितुमंशशब्दवाच्यत्वेन जीवस्य परमात्माभेदसिद्धिं मनसि निधाय दृष्टान्तासिद्धिं परिहरति **मत्स्यादिष्विति ।** अङ्गीकृतत्वादित्यत्रांशशब्दप्रवृत्तिनिमित्तत्वेनेति शेषः । नन्वत्र सादृश्यस्यांशतात्वमुच्यते न त्वंशत्वस्य सादृश्यरूपत्वं तत्कथमनेनोक्तशङ्कापरिहार इत्यतो यथेदमंशत्वनिर्वचनपरं स्यात्तथा योजयति **अस्येत्यादिना ।** तर्ह्यस्य जीवस्य परमात्मांशता तत्सादृश्यमित्येतावतैवांशत्वनिर्वचनसिद्ध्या भाष्ये चशब्दवैयर्थ्यमित्याशङ्क्य नैतावन्मात्रमंशत्वं किन्त्वधिकमपि ततश्च तत्संग्राहकत्वाच्चशब्दस्य न वैयर्थ्यमित्यभिप्रेत्य चशब्दसंगृहीतमर्थं दर्शयति **चशब्दादिति ।** ननु तत्सादृश्यमेवांशत्वमत्रांशशब्देन विवक्षितमस्तु. किमंशत्वकोटावधिकविशेषणप्रक्षेपेणेत्यत आह **एतेनेति ।** अधिकविशेषणप्रक्षेपेणेत्यर्थः ॥ **गतार्थमिति ।** एतदधिकरणव्युत्पाद्यस्य ज्ञानानन्दादिना जीवे परमात्मसादृश्यस्य तद्गुणसारत्वोपपादकेन पुंस्त्वादिवदित्यधिकरणेनैव सिद्धत्वादिति भावः । विशिष्टस्यांशपदार्थत्वे तु तस्य पूर्वमविचारितत्वान्न तदिति द्रष्टव्यम् ।

द्वितीयशङ्कापरिहारकत्वेनापि मूलं योजयति **यद्वेति** । सादृश्यनिमित्तकत्वमात्रेण जीवेंऽशशब्दस्य गौणत्वसिद्धेर्विशेषणान्तरस्यानपेक्षितत्वात्तत्समुच्चायकचशब्दवैयर्थ्यमित्यतो जीवेंऽशशब्दप्रवृत्तौ सादृश्यमेव निमित्तम् । न तु मत्स्यादिष्विवाभेद इत्यभेदव्यावर्तनार्थत्वान्न तदिति भावेन चशब्दमवधारणार्थतया व्याचष्टे **चशब्द इति** ॥ **तथापीति** । अत्र मुख्यांशसादृश्यमेव जीवस्यांशत्वमंशपदवाच्यताया निमित्तं न त्वभेद इति अंशशब्दवाच्यत्वेन मुख्यांशसादृश्यसिद्धावपि नाभेदसिद्धिरित्येतावतोक्ताक्षेपपरिहारः, इतरस्तु किं तन्मुख्यार्थसादृश्यमित्याशङ्कापरिहाराय तत्स्वरूपनिरूपणपरमित्यवधेयम् । मूले सादृश्यस्य निमित्तत्वोक्तेस्तात्पर्यमाह **गौणोऽयमंशशब्द इति यावदिति** । यद्यपि मुख्यांशे मत्स्यादावैक्यात्सत्तयोः स्वसत्तयैव सत्तावत्त्वं, जीवे च तत्सत्ताधीनसत्तावत्त्वमित्यस्ति वैषम्यं, तथाऽपि मुख्यांशे मत्स्यादावमुख्ये जीवे च भगवत्सत्तया सत्तावत्त्वं सामान्यमक्षतमेवेत्यभिप्रायेणैवमुक्तमिति ज्ञेयम् । **अनेकार्थत्वमिति** । अभेदमुख्यांशसादृश्यरूपप्रवृत्तिनिमित्तभेदादिति भावः ॥ **पुरोवदिति** । 'सादृश्यं चांशताऽस्य त्वि'ति पुरोवदित्यर्थः ॥ **उभयथेति** । अंशिभूतपरमेश्वरेण किञ्चित्सादृश्यमात्रयुगित्यंशशब्दमुख्यार्थेन मत्स्यादिना यत्किञ्चित्सादृश्यं तत्सत्तयैव सत्तावत्त्वरूपं तन्मात्रयुगित्युभयथेत्यर्थः ।

**प०**— तदधीनसत्तादिकं, सत्ताप्रतीतिप्रवृत्तिकत्वमित्यर्थः ॥ **एतेनेति** । तदधीनसत्तादिकत्वसंग्राहकचशब्दप्रयोगेणेत्यर्थः । तत्र हि जीवो न ज्ञानसुखादिरूपोऽधुनाऽनुपलंभादिति प्राप्ते अपत्योत्पादकत्वरूपं पुंस्त्वं स्त्रीत्वं सदपि बाल्येऽनुपलभ्यमानं यौवनेऽभिव्यज्यते तद्वत् संसारदशायां सतोपि ज्ञानाद्यात्मकत्वरूपभगवत्सादृश्यस्य मुक्तावभिव्यक्तिसंभवात् ज्ञानानन्दाद्यात्मकत्वरूपभगवत्सादृश्यवानिति प्रतिपादनाद्गतार्थमिति शङ्का निरस्ता । तदधीनसत्तादिकत्वे सति तत्सदृशत्वमंशत्वमित्यस्यान्यत्रासिद्धेरिति भावः ॥ **मुख्यांशसादृश्यमिति** । मुख्यांशः मत्स्यादिर्यथा तत्सत्तयैव सत्तावान् । तथा जीवोपि सत्तावानिति सत्तावत्त्वं मुख्यांशे मत्स्यादौ जीवेषु चास्तीत्यंश इवांश इति गौणोऽयमंश इत्यर्थः ॥ **पुरोवदुभयथेति** । ज्ञानानन्दाद्यात्मकत्वरूपकिंचिद्भगवत्सादृश्ययुगिति वा मत्स्यादिरूपमुख्यांशो यथा सत्तावान् तथा जीवोपीति सत्तया मुख्यांशसादृश्ययुगिति वेति व्याख्येयमित्यर्थः । स एव चेदित्यनुवादः । सामर्थ्यादियुक्तश्चेति व्याख्या ॥ **एवं जीवा यथेति** । 'किंचित्सादृश्यमात्रयुगि'ति वाक्यानन्तरं जीवा यथेति द्रष्टव्यमित्यर्थः ॥ **अनेनेति** । अंशस्त्वित्यादिवाक्यकथनेनेत्यर्थः ॥ **इत्यस्य तात्पर्यमिति** एतत्सूत्रार्थस्तु तन्त्रदीपिकायां व्यक्तः ।

**या०** — **एतेन पुंस्त्वादित्यनेनेति** । तत्र ह्यस्येति तद्गुणसारत्वं प्रकृतं परामृश्यत इति तत्त्वप्रकाशिकायामुक्तत्वाज्जीवस्य ज्ञानानन्दादिसादृश्यमुपपाद्यतयाऽभिप्रेतम् । उक्तं च चन्द्रिकायाम् ।

इह तु पृथगधिकरणीयद्वितीयसूत्रोक्तं तद्गुणसारत्वमुपपाद्यत इति सङ्गतिरिति । ततश्च तन्मात्रं चेदंश-शब्देनात्र विवक्षितं स्यात्तदा तेनेदं गतार्थं स्यात् । न चैवं किन्तु तदधीनसत्तादित्वमप्यंशशब्दार्थ-तयाऽत्र विवक्षितमतो विशिष्टस्य पूर्वमविचारितत्वेन न गतार्थताशङ्केति भावः । एतेन 'परात्तु तच्छ्रुतेरित्यत्र तदधीनसत्तादित्वस्याप्युक्तत्वात्तेनास्य गतार्थतेति शङ्काऽपि निरस्ता । विशिष्टस्य पूर्वमेकत्रा-विचारितत्वात् ॥ **तत्सत्तयैवेति** । अत्र तच्छब्देनांशप्रसङ्गसन्निधापितोंऽशी विवक्षितः । तथा चांशिसत्तया सत्तावत्त्वमंश्यभिन्ने मत्स्यादौ तद्भिन्ने जीवे चास्तीति मुख्यांशसादृश्यं जीवानामित्यर्थः । ननु तत्सत्तया सत्तावत्त्वं सत्ताया एकत्वे मुख्यं न भेद इत्यत आह **गौणोऽयमिति** ।। ॐ **प्रकाशादिवन्नैवं परः** ॐ ।। **पुरोवदुभयेति** । अंशिभूतपरमेश्वरेण किञ्चित्सादृश्यमात्रयुगिति वांऽशशब्दमुख्यार्थेन मत्स्यादिना यत्किञ्चित्सादृश्यं तत्सत्तयैव सत्तावत्त्वरूपं तन्मात्रयुगिति वा 'सादृश्यं चांशताऽस्य तु' इतिवत् उभयथा इति वा व्याख्येयमित्यर्थः ॥

श्री० — जीवेषु भिन्नत्वेऽप्यंशत्वमङ्गीकृतं यथा तथाऽभेदेऽप्यंशत्वस्य दृष्टत्वादभेदोऽप्यङ्गीकार्य इत्याह **मत्स्यादिष्विति** ।। इत्याद्यन्यस्येति । आदिपदेन जडं यथेत्यस्य संग्रहः । **अन्यस्य** भिन्नांशस्य ।

---

सु० — मत्स्यादीनां जीवानां च परमेश्वरांशत्वसाम्येऽपि नैकप्रकारता किन्तु मत्स्याद्याः स्वरूपांशा एव जीवा विभिन्नांशा एवेत्यत्रासंभावनानिरासाय प्रकाशवदिति सूत्रकृता दृष्टान्ता दत्ताः । ते चायुक्ता इव प्रतीयन्ते उभयत्र भेदाभेदसाम्या(मद्भावा)दित्याशङ्कानिरासा(य)र्थं भाष्यम् 'अभिमानिदेवतापेक्षयैतदि'ति । तदविस्पष्टमित्यतः सौत्रान्दृष्टान्तान्स्पष्टयति सूर्येति ।

अनु० --- सूर्यमण्डलमान्येकस्तत्प्रकाशाभिमानवान् ॥
सूर्योऽथ सप्तमाब्धेश्च बाह्योदस्य च वारिपः ॥
कठिनत्वेन मेर्वादेः पृथिव्या अपि देवता ॥
धरादेवी

सूर्यमण्डलमान्यंशी सूर्यस्तत्प्रकाशाभिमानवांस्तदंशश्चैक एव । यथेति सर्वत्रान्वीयते । अथशब्दः समुच्चये । बाह्योदस्याभिमान्यंशी वारिपः सप्तमाब्धेरभिमानी तदंशश्चैक एव । पृथिव्याः पञ्चाशत्कोटिविस्तीर्णाया अभिमानिन्यंशिभूता (देवता) धरादेवी मेर्वा(देर)द्यभिमा-निनी देवताऽप्यंशरूपैकैव । मेरुहिमवदादेः पुरुषा अभिमानिनः पुराणेषु (प्र)सिद्धा इत्यत

उक्तं कठिनत्वेनेति । यत्कठिनं(णं) सा पृथिवीति श्रुतेर्धरादेव्येव सर्वस्याः पृथिव्या अभिमानिनी । अवान्तराभिमानिनस्त्वन्ये इति । अनेन स्वरूपांशो निदर्शितः । दार्ष्टान्तिकं दर्शयति एवमेवेति ।

एवमेवैको भगवान्विष्णुरव्ययः ॥
नानावताररूपेण स्थितः पूर्णगुणः सदा ॥

भगवान्विष्णुरंशी नानावताररूपेण स्थितोऽंशश्चैक एवेति योजना । अव्ययः सदा पूर्णगुण इत्यागामिसूत्रानुसारेणाभेदोपपादनम् । विभिन्नांशदृष्टान्तविवरणपूर्वकं दार्ष्टान्तिकं विवृणोति विण्मूत्रेति ।

विण्मूत्राद्यभिमानिन्यो यथाऽपश्रष्टदेवताः ॥
सूर्यादिभ्यस्तथैवायं संसारी परमात्पृथक् ॥

**शे०— अयुक्ता इति** । प्रकृतासङ्गता इत्यर्थः ॥ **उभयत्रेति** । कालाग्न्यमृताब्धिमेरुषु खद्योतमूत्रविष्ठासु चेत्येवमुभयत्रेत्यर्थः ॥ **भेदाभेदेति** । कालाग्निखद्योतादीनां तेजःप्रभृतिभूतकार्यतयांऽशिभूतैस्तेजआदिभिर्भेदाभेदसाम्यादित्यर्थः । ततश्च न तद्दृष्टान्तेन मत्स्यादीनां जीवानां च स्वरूपांशत्वभिन्नांशत्वव्यवस्था सिध्यतीति भावः । **यथेति सर्वत्रान्वीयत इति** । अनेन प्रादुर्भावा हरेर्यथेति पूर्ववाक्यात् यथेतिपदस्यात्र सर्वत्रानुवृत्तिरित्युक्तं भवति ॥ **अन्य इति** । पुरुषा इत्यर्थः ॥ **आगामिसूत्रानुसारेणेति** । न स्थानतोऽपीत्यभेदोपपादकागामिसूत्रानुसारेणैवेत्युक्तं भवति न तु तदेतदधिकरणप्रमेयम् । स्वरूपांशभिन्नांशयोर्वैलक्षण्यमात्रोपपादकतया अस्य तदभेदोपपादकत्वाभावादिति द्रष्टव्यम् ।

**प०— नैवं पर इति** सूत्रांशस्य तात्पर्यं व्यनक्ति **मत्स्यादीनामित्यादिना इत्यत्रेत्यन्तेन** ॥ **उभयत्रेति** । स्वरूपांशत्वभिन्नांशत्वाभिमतयोः सौरप्रकाशाक्ष्णोरुभयत्र तथाऽमृतसमुद्रमूत्रयोरुभयत्र तथा मेरुविष्ठयोरुभयत्रांशभूततेजोमण्डलादिना भेदाभेदसाम्यादित्यर्थः । द्वयोर्जडत्वेनांशिविकारतयांऽशिना भेदाभेदवत्त्वादिति भावः । **आगामिसूत्रेति** 'अनुज्ञापरिहारौ' 'देहसंबन्धाज्ज्योतिरादिवदि'ति सूत्रानुसारेणाव्यय इत्युक्तिः । तत्र देहसंबन्धशून्यतयाऽज्ञानाद्यभावोक्त्याऽव्ययत्वस्य प्राप्तेरसंततेश्चाव्यतिकर इति सूत्रे शक्त्यादिभिः सं(भृ)हृतत्वस्यास्मदभिप्रेततया पूर्णगुणत्वस्य प्राप्तत्वात्तदनुसारेणेत्युक्तम् ॥ **अभेदोपपादनमिति** । मत्स्याद्यंशानामंशिना साकमव्ययत्वपूर्णगुणत्वाभ्यां अभेदोपपादनस्य तत्र सूत्रद्वयेऽभिमतत्वादिति भावः ।

**या०— अयुक्ता इवेति** । प्रकृतासङ्गता इवेत्यर्थः ॥ **उभयत्रेति** । अत्रोभयत्रेत्यनेन जडरूपयोः कालाग्निखद्योतयोरमृतसमुद्रमूत्रयोर्मेरुविष्ठयोश्च ग्रहणम् । तत्र चांशिप्रतियोगिकभेदाभेदसाम्यादित्यर्थः ॥ **आगामिसूत्रानुसारेणेति** । आगामीनि यान्येतदधिकरणीयानि 'स्मरन्ति च'त्यादीनि सूत्राणि तदनुसारेणेत्यर्थः । तेषु मत्स्यादीनां गुणपूर्णत्वादिनाऽभेदस्यापि भाष्यादावुक्तत्वादिदमुपपादनं तदनुसारीति ज्ञातव्यम् ॥

**श्री०— सर्वस्याः पृथिव्या इति** । कठिनभूतमेरुहिमवदादिसहितायाः सर्वस्या अपि पृथिव्या इत्यर्थः ।

**सु०— अपभ्रष्टनामका देवता अंशरूपाः सूर्यादिभ्यः सूर्यवरुणपृथिवीभ्योंऽशिभ्यो व्युत्क्रमेण यथा पृथक् । जीवांशानामंशिनः परमेश्वरात्पृथक्त्वं युक्तितः समर्थयितुं सूत्रम्** अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवदिति । **अत्रापि दृष्टान्तानामसङ्गतिमाशङ्क्याभिमानिविषयतया व्याख्याति** देहेति ।

अनु०— ॐ **अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत्** ॐ ॥

देहदोषैश्च दुष्टत्वादपभ्रष्टाख्यदेवताः ॥
अन्यास्सूर्यादिदेवेभ्यो ह्यनुग्राह्याश्च तैस्सदा ॥
एवमेव पराद्विष्णोः पृथक् संसारिणो मताः ॥
अनुग्राह्याश्च तेनैव तत्प्रसादाच्च मोक्षिणः ॥
न तु मत्स्यादिरूपाणामनुग्राह्यत्वमिष्यते ॥

**परदेहगतदोषैः । देवतात्वं त्वन्तर्धानादिशक्तियोगः । चश(ब्दौ)ब्दो हेत्वोः समुच्चये । हि यस्मादनुग्राह्याश्च तैः सूर्यादिभिस्तत्प्रसादायत्तप्रतिबन्धनिवृत्तित्वाच्चेत्यपि द्रष्टव्यम् । अनुग्राह्याश्चेत्यादौ यत इति शेषः । देहदोषलिप्तत्वादित्यपि ग्राह्यम् ।**

**नन्वनुज्ञादिहेतुत्रयं स्वरूपांशेषु मत्स्यादिष्वस्तीत्यनैकान्तिकं न जीवांशानां परमेश्वराद्भेदं साधयितुमलमित्यत आह न त्विति ।**

**अनुग्राह्यत्वमित्युपलक्षणम् । नेष्यते 'नैव ते जायन्ते' इत्यादिश्रुतिबलेनेति शेषः ।**

**शे०— ॐ अनुज्ञापरिहारौ देहसबन्धाज्ज्योतिरादिवत् ॐ । व्युत्क्रमेणेति** । पृथिवीवरुणसूर्येभ्य इति व्युत्क्रमेणेत्यर्थः । विण्मूत्राक्ष्यभिमान्यपभ्रष्टदेवानां सूर्यवरुणपृथिवीभ्य इति निर्देशक्रमेण सूर्यादिभिन्नांशत्वस्य बाधितत्वादिति भावः ॥ **असङ्गतिमिति** । अनुज्ञापरिहारादेर्भाष्योक्ता-

क्ष्यादिजडेष्वसंभवादिति भावः । सूर्यादिदेहदोषैर्दुष्टत्वस्य तत्स्वरूपांशेषु प्रकाशाद्यभिमानिषु सत्त्वादनैकान्तिकत्वमाशङ्क्याह **परदेहेति** । परदेहदुष्टत्वं च न देवानामस्ति । 'प्रेरका अपि पापानां न देवाः पापमाप्नुयुरि'त्युत्तरत्र वक्ष्यमाणत्वादिति भावः । ननु परदेहदोषलिप्तानामपभ्रष्टानां कथं देवतात्वमित्यत आह **देवतात्वं त्विति** । देहदोषदुष्टत्वस्योक्तप्रतिज्ञायां हेतुत्वावगमकपञ्चमीविभक्तेरिव तैः सदाऽनुग्राह्यत्वस्य तदवगमकविभक्तेरश्रवणात्कथं हेतुत्वसिद्धिरित्यतो हिशब्दबलात्तत्सिद्धिरित्यभिप्रेत्य हिशब्दं हेत्वर्थतया व्याचष्टे **हि यस्मादिति** । दार्ष्टान्तिके 'तत्प्रसादाच्च मोक्षिण' इति श्रवणादाह **तत्प्रसादेति** । अक्ष्यभिमानिनोऽपभ्रष्टदेवस्य प्रतिबन्धकस्तमोऽभिमानी, श्लेष्माभिमानिनस्तु प्रतिबन्धकः पित्तधात्वभिमानी, विष्ठाभिमानिनश्च प्रतिबन्धको रोगाभिमानी । एतन्निवृत्तिश्च तेषां स्वांशिप्रसादायत्तेत्यर्थः । अनुग्राह्याश्च तेनैवेत्यादिनोक्तस्य तेनैवानुग्राह्यत्वस्य तत्प्रसादान्मोक्षित्वस्य चोक्तप्रतिज्ञायां हेतुत्वलाभायापेक्षितं शेषमाह **अनुग्राह्याश्चेत्यादाविति** । 'देहदोषैश्च दुष्टत्वादि'ति दृष्टान्ते श्रवणादाह **देहेति** ।

**हेतुत्रयमिति** । तदनुग्राह्यत्वतत्प्रसादायत्तप्रतिबन्धनिवृत्तित्वदेहदोषलिप्तत्वरूपमित्यर्थः । नन्वनेनानुग्राह्यत्वस्य व्यभिचारपरिहारेऽपीतरहेतुद्वयस्य न तत्परिहारसिद्धिरित्यतोऽत्र मूलेऽनुग्राह्यत्वमित्यस्येतरहेतुद्वयोपलक्षणत्वेनानुग्राह्यत्वमात्रपरत्वाभावाद्व्यभिचारपरिहारसिद्धिरविकलैवेत्याशयेन हेतुद्वयोपलक्षणतया तद्व्याचष्टे ॥ **अनुग्राह्यत्वमित्युपलक्षणमिति** । नन्वेवं जीवानामपि तन्नेष्यत इति परेण वक्तुं शक्यत्वेन पक्षे हेत्वसिद्ध्या न तैर्भेदसाधनमपि स्यादित्यतोऽत्रेष्टिमूलभूतप्रमाणभावाभावाभ्यां विशेषाददोष इति भावेनानुरूपं शेषं पूरयति **नेष्यत इत्यादिना** ।

प॰— **असंगतिमिति** । ज्योतिरादिवदित्युक्तज्योतिरादिरादिदृष्टांतानां जडत्वे प्रकृतासंगतिमाशंक्येत्यर्थः । दोषदुष्टानां कथं देवतात्वम् । पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छतीतिश्रुतौ देवानां पापालेपोक्तेरित्यत आह **देवतात्वं त्विति** ॥ **हेत्वोरिति** । दोषदुष्टत्वानुग्राह्यत्वहेत्वोरित्यर्थः ॥

या॰— ॐ **अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्** ॐ ॥ **असङ्गतिमाशङ्क्येति** । अनुज्ञापरिहारादेरत्यन्तभेदस्य च भाष्योक्तजडेष्वसङ्गतिमाशङ्क्येत्यर्थः । देहदोषैर्दुष्टत्वमात्रं सूर्यादिदेहदोषैर्दुष्टेषु तत्स्वरूपांशेषु प्रकाशाद्यभिमानिष्वनैकान्तिकमत आह **परदेहगतदोषैरिति** । परदेहदोषदुष्टत्वं च न देवानाम् । 'प्रेरका अपि पापानां न देवाः पापमाप्नुयुरि'ति वचनादिति भावः । नन्वपभ्रष्टेषु कथं देवतात्वमित्यत आह **देवतात्वं त्विति** ॥ **तत्प्रसादायत्तप्रतिबन्धेति** । अक्ष्यभिमानिनोऽपभ्रष्टदेवस्य प्रतिबन्धकस्तमोऽभिमानी । श्लेष्माभिमानिनस्तु प्रतिबन्धकः पित्तधात्वभिमानी । विष्ठाभिमानिनश्च प्रतिबन्धकः अर्शआदिरोगाभिमानी । एतन्निवृत्तिश्च तेषां स्वांशिप्रसादायत्तेत्यर्थः ।

श्री० — ॐ अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॐ ॥ हेत्वोरिति । देह-दोषदुष्टत्वानुग्राह्यत्वरूपहेत्वोरित्यर्थः ॥ अनुग्राह्य श्चेत्यादाविति । यतोऽनुग्राह्या यतश्च तत्प्रसादान्मोक्षिणोऽतः पृथगित्यन्वयः ॥ देहदोषेति । देहदोषलिप्तत्वाच्च विष्णोः संसारिणः पृथगित्यर्थः । उपलक्षणं तत्प्रसादायत्तप्रतिबन्धनिवृत्तेर्देहदोषलिप्तत्वस्य चेत्यर्थः ।

सु० — अत्रैव सूत्रम् 'असन्ततेश्चाव्यतिकर' इति । तज्जीवांशानां परमेश्वराद्भेदमेव साधयत्प्रतीयते । न तु मत्स्यादीनामभेदमपि । अत उ(तदु)पलक्षणत्वेन व्याचष्टे गुणैरिति ।

अनु० — ॐ असन्ततेश्चाव्यतिकरः ॐ ॥

गुणैरशेषैः पूर्णत्वान्मुख्याभेदोऽपरैर्न च ॥

मत्स्यादिरूपाणामिति वर्तते । मुख्याभेदोंऽशिना । अपरैर्जीवैरीश्वरस्याभेदो न च तेषामपरिपूर्णगुणत्वाच्चेति । अनुज्ञापरिहारावित्येतदप्येवमुपलक्षणतया व्याख्येयम् । तदर्थं वा न तु मत्स्यादिरूपाणामिति वाक्यं योज्यम् ।

शे० — ॐ असन्ततेश्चाव्यतिकरः ॐ ॥ एवमुपलक्षणतया व्याख्येयमिति । मत्स्यादीनामनुज्ञादिरहितत्वादित्यपि द्रष्टव्यमिति व्याख्येयमित्यर्थः । अन्यथा तेन जीवांशानां परमेश्वराद्भेदसिद्धावपि मत्स्यादीनामभेदासिद्धिप्रसङ्गादिति द्रष्टव्यम् । तदर्थं वेति । उपलक्षणतया व्याख्यानार्थं वेत्यर्थः ।

या० — ॐ असन्ततेश्चाव्यतिकरः ॐ ॥

श्री० — ॐ असन्ततेश्चाव्यतिकरः ॐ ॥ एवमिति । असन्ततेरिति सूत्रवदेवेत्यर्थः । तत्प्रकारस्त्वनुज्ञापरिहाराविति सूत्रम् । तज्जीवानां परमेश्वराद्भेदमेव साधयत्प्रतीयते न तु मत्स्यादीनामभेदमपीत्याशङ्कायां मत्स्यादिरूपाणामनुज्ञापरिहारौ न स्तः । अतोऽभेद इत्युपलक्षणया योज्यमित्यर्थः । तदर्थम् उक्तशङ्कापरिहारार्थम् ।

सु० — ॐ आभास एव च ॐ ॥ एवमंशस्यापि जीवस्येश्वराद्भेदः प्रमाणैस्समर्थितः । यस्त्वंशत्वादभेदं साधयेत्तस्यांशशब्दवाच्यत्वमात्रत्वं चेद्धेतुस्तदाऽनैकान्तिकत्वमुक्तमेव । मुख्यांशत्वं चेद्धेतुस्तदाऽसिद्धिरिति प्रतिपादयदाभास एव चेति सूत्रं व्याचष्टे अंशेति ।

अनु० — ॐ आभास एव च ॐ ॥

अंशाभासाश्च सर्वेऽपि परस्यांशा न मुख्यतः ॥

सर्वेऽपि जीवाः । जीवानामंशाभासत्वं श्रुत्यन्तरेण द्रढयति यथेति ।

यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम् ॥

तथैतस्मिन्पुरुषोत्तमे एतज्जीवजातमाततमेतदेवास्य तदंशत्वमिति भावः । नन्वेतत् श्रुतिविरुद्धं 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी'त्यस्मिन्मन्त्रेऽनन्तासनश्वेतद्वीपवैकुण्ठेषु द्युशब्दवाच्येष्ववस्थितरूपत्रयवद्भूतशब्दवाच्यानां जीवानामपि परमपुरुषपादत्वाभिधानात् इत्याशङ्क्य विशेषश्रुतिबलेन पादशब्दस्यानेकार्थत्वकल्पनं न्याय्यमित्याशयवानाह न त्विति ।

न तु पुंपादवत्पादा जीवा एते परात्मनः ॥
पूर्णास्तस्य गुणा एव प्रादुर्भावतया स्थिताः ॥
एवं जगाद परमा श्रुतिर्नारायणं परम् ॥

पुंपादवत् पुरुषस्यामृतपादत्रयमिव । कुतः । पूर्णाः । नारायणं प्रादुर्भावरूपम् । जीवांशेभ्यः परं विलक्षणम् । जगाद ।

शे० — ॐ आभास एव च ॐ ॥ अनैकान्तिकत्वमिति । अक्ष्याद्यभिमानिष्वपभ्रष्टेष्विति शेषः । उक्तमेव उक्तप्रायमेवेत्यर्थः । परस्यांशाः सर्वेऽप्यंशाभासा इत्युक्त्या प्राप्तां मत्स्यादीनामप्यंशाभासत्वभ्रान्तिं परिहरति सर्वेऽपि जीवा इति । अमृतपादत्रयमिवेत्युक्त्या पुंपादवदिति प्रथमान्ताद्वतिः नियामकं तूक्तमेवात्राप्यनुसन्धेयमित्युक्तं भवति । कुत इत्यतः परमित्यत आहेति पूर्णा इत्यतः परमितीति च शेषः । मत्स्याद्यवताराणां जीवापेक्षया वैलक्षण्यप्रतिपादकश्रुत्यभिप्रायकथनरूपस्य स्ववाक्यस्य श्रुतिविसंवादप्रसक्त्या, यथाश्रुतार्थत्वासंभवाच्छ्रुत्यनुसारेण भाष्यमप्यवताराणां जीववैलक्षण्यपरतया व्याचष्टे नारायणमित्यादिना ।

प० — अनैकान्तिकत्वमुक्तमेवेति । विष्ठामूत्राद्यभिमान्यपभ्रष्टदेवेष्वंशत्वेप्यभेदाभावस्योक्तत्वादिति भावः । यथेति श्रवणादाह तथेति । एतस्मिन्नित्यनुवादः पुरुषोत्तम इति व्याख्या । आततमित्यस्य तदधीनतया वर्तमानमित्यर्थः ॥ एतदेवेति । तदधीनतया वर्तमानत्वमेवेत्यर्थः ॥ नन्वेतदिति । जीवानां मुख्यांशत्वं नेत्येतदित्यर्थः । कुतः पूर्णा इति प्रश्नस्योत्तरं नारायणमित्यादि ।

या० — उक्तमेवेति । सूर्यादीनां भिन्नांशेष्वक्ष्याद्यभिमानिष्वपभ्रष्टेष्वनैकान्तिकत्वमुक्तप्रायमेवेत्यर्थः ।

सु०— अधिदैवादिस्वरूपनिर्णयाय पादोऽयमारब्ध इत्युक्तम् । तत्र कीदृशोऽत्र निर्णयो जात इत्यतस्तं बुद्ध्यारोहाय पिण्डीकृत्याह अक्षय इति ।

अनु०— अक्षयो भगवान्विष्णुर्लक्ष्म्यावासो लये स्थितः ॥

देहादिक्षयरहित एव प्रलये स्थितः । अनेन 'असंभवस्तु सतोऽनुपपत्तेः', 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इत्यधिकरणतात्पर्यमुक्तं भवति । लक्ष्म्यावास इति । देव्या अपि प्रलयेऽवस्थानोक्त्या वियत्प(देनोप)दोपलक्षितायास्तस्या न जीववज्जननमिति । वियदादिपदोपादानेन तदभिमानित्वदशायामेव ब्रह्मादीनां देहाद्युत्पत्तिर्न मुक्ताविति सूचितम् । तत्सूचयति मुक्तैरिति ।

मुक्तैस्सदा चिन्त्यमानो ब्रह्माद्यैस्तारतम्यगैः ॥

तथाऽपि सृष्टि(प्र)लयक्रमसमर्थनेन सूचितं तारतम्यं तु तत्रापि नापैतीत्याशयेनोक्तं तारतम्यगैरिति । विपर्ययेण तु क्रमोऽत इति सृष्टिक्रमविपर्ययेण (प्र)लये क्रमोऽभिहितः । तत्र कः सृष्टौ क्रम इत्यतस्तं दर्शयन्वियदधिकरणतात्पर्यमाह प्रकृतिरिति ।

प्रकृतिः पुरुषः कालो वेदाश्चेति चतुष्टयम् ॥

नित्यं स्वरूपतो विष्णोर्विशेषावाप्तिमात्रतः ॥

उत्पत्तिमदिति प्रोक्तं लक्ष्मीस्तदभिमानिनी ॥

ततो जातः पुमान्नाम ब्रह्माऽस्यां वासुदेवतः ॥

सूत्रात्मा प्राणनामा च देव्यौ प्रकृतिमानिनी ॥

ततो रूपं महन्नाम ब्रह्मणोऽहंकृतिः शिवः ॥

ब्रह्मणो बुद्धिनाम्नोभा तत इन्द्रो मनोभिधः ॥

स्कन्दश्च तत एवान्ये सर्वे देवाः प्रजज्ञिरे ॥

तदभिमानिनी लक्ष्मीश्चैवमित्यर्थः । ततः तदनन्तरम् । प्राणनामा सङ्कर्षणात् । देव्यौ सरस्वतीभारत्यौ । प्रकृतिमानिनी प्रकृतिमानिन्यौ । सुपां सुलुगिति पूर्वसवर्णेति पूर्वसवर्णः । ततः प्रकृतिपुरुषाभ्याम् । ब्रह्मणो महत्तत्त्वरूपात् । ततः अहङ्कारात् । तत एव इन्द्रस्कन्दाभ्याम् । अन्ये तत्त्वाभिमानिनः । अत्रोपलक्षितानामप्यधिकाशङ्कानिरासाय 'तथा प्राणः' इत्यादिना निर्णयः करिष्यत इत्यदोषः । सृष्टिप्रलययोः क्रमविपर्ययसमर्थनस्य तात्पर्यमाह तत्रेति ।

तत्र पूर्वतनः श्रेयान्गुणैस्सर्वैस्समस्तशः ॥

समस्तशः समस्तेषु । 'तेजोऽतः', 'तदभिध्यानादि'त्यादेस्तात्पर्यमाह तेभ्यश्चेति ।

तेभ्यश्च भगवान्विष्णुः

श्रेयानिति वर्तते । समस्तश इति पञ्चम्यन्तमत्र वा संबध्यते । सर्वस्य जन्मलयौ परमेश्वरायत्तावित्युक्तम् । 'परात्तु तच्छ्रुतेरि'त्यादिना प्रवृत्तिश्च । तत्तात्पर्यमाह तदधीना इति ।

तदधीना इमे सदा ॥

जन्मस्थितिलयाज्ञाननियतिज्ञानसंसृतिः ॥

मोक्षश्च

इमे जन्माद्या मोक्षान्ता भावाः । एतेषामिति वक्ष्यमाणमत्रापि संबध्यते । द्वन्द्वैकवद्भावेऽपि नपुंसकत्वाभावश्छान्दसः । युवोरनाकाविति यथा । मुक्तौ जन्माभावेऽपि स्थित्यादौ भगवदधीनत्वमस्त्येवेत्याह तदधीनत्वमिति ।

तदधीनत्वमेतेषां नैव हीयते ॥

मुक्तावपि

एतेषां ब्रह्मादीनाम् । परमप्रमेयमाह स एवेति ।

स एवैकः स्वतन्त्रः पूर्णसद्गुणः ॥

उपसंहरति इतीति ॥ २-३-१८ ॥

इति श्रुत्युपपत्तिभ्यां पादेऽस्मिन्प्रभुणोदितम् ॥ २-३-१८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने

द्वितीयाध्यायस्य तृतीयः पादः ॥ २-३ ॥

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना । कृतायां टीकायां विषमपदवाक्यार्थविवृतौ द्वितीयेऽध्यायेऽस्मिन्गगनचरणः पर्यवसितः ॥२-३॥

शे०— उक्तमिति । एतत्पादारम्भसमर्थनावसर इति शेषः । स्वरूपेणाक्षयत्वस्य सर्वचेतनसाधारणत्वाद्देहादीत्युक्तम् ॥ अनेनेति । यद्यप्यत्र 'नात्मा श्रुतेरि'त्येतदेवोदाहरणीयं तत्रैव देहाक्षयत्वसमर्थनात् तथाऽप्यसंभवसूत्रस्य स्वातन्त्र्येण हेतुना परमात्मनो देहानुत्पत्तिकथनद्वारा तल्लयाभावोपपादकत्वमप्यस्तीत्यभिप्रेत्य तदप्युदाहृतमिति द्रष्टव्यम् । यद्वा लये स्थित इत्यसंभवसूत्रसाध्यं देहादिक्षयरहित इति नात्मा श्रुतेरितिसूत्रसाध्यमित्यनेन प्रकारेण देहादिक्षयरहितस्यैव लयेऽवस्थितत्वरूपविशिष्टमधिकरणद्वयसाध्यमित्यभिप्रायेण सूत्रद्वयोपादानमित्यवधेयम् ॥ जीववज्जननमिति । सूचितमिति शेषः ॥ वियदादिपदोपादानेनेति । सौत्रवियदादिपदैर्ब्रह्मादीनामुपादानं तेनेत्यर्थः ॥ सृष्टिलयक्रमसमर्थ-

नेनेति । 'विपर्ययेण तु क्रमोऽत उपपद्यते च' । 'अन्तरा विज्ञानमनसी क्रमेणे'त्यादिना सृष्टिलययोर्यः क्रमोऽनुरूपप्रतिरूपलक्षणस्तस्य समर्थनेनेत्यर्थः ॥ लक्ष्मीश्चैवमिति । विशेषावाप्तिमात्रेणोत्पत्तिमती प्रोक्तेत्येवमित्यर्थः । मूले वासुदेवत इत्युक्तत्वात्तत इत्यस्याऽऽनर्थक्यमाशङ्क्याह ततस्तदनन्तरमिति । सूत्रात्मा प्राणनामा चास्यां वासुदेवत एव जात इत्यन्यथाप्रतीतिनिरासायाह सङ्कर्षणादिति ॥ पूर्वसवर्ण इति । प्रथमाद्विवचनस्यौकारस्य पूर्वेण प्रकृतिमानिनी इति ईकारेण सवर्णे ईकारे जाते'ऽकः सवर्णे दीर्घ' इति सवर्णदीर्घतायां सत्यां प्रकृतिमानिनी इति प्रथमाद्विवचननिष्पत्तिरिति भावः । नन्वेवं सर्वेषां तत्त्वाभिमानिनामत्रैवोत्पत्तिनिर्णयादिन्द्रियरूपतत्त्वाभिमान्युत्पत्तिनिर्णयस्याप्यत्रैव सिद्धत्वात्तत्प्रतिपादकानां 'तथा प्राणा' इत्याद्यधिकरणानामानर्थक्यं स्यादित्यत आह अत्रेति । अभ्यधिकाशङ्कानिरासायेति । आगमगृहीतव्याप्त्यादिमत्त्वेनासिद्ध्यादिशङ्काविषयत्वशून्यतया प्रबलयुक्त्यनुगृहीतत्वेन स्पष्टार्थत्वादिना निरवकाशतया च प्रबलत्वादनादित्वश्रुत्यवष्टम्भेनानादित्वमेव प्राणानामित्यधिकाशङ्कानिरासायेत्यर्थः । क्रमविपर्ययसमर्थनस्येत्यस्यानुरूपक्रमतद्विपर्ययसमर्थनस्येत्यर्थः । समस्तश इत्यस्य पञ्चम्यन्तत्वे सप्तम्यन्तेन तत्रेत्यनेन सामानाधिकरण्येनान्वयायोगात्सप्तम्यन्ततया व्याख्याति समस्तेष्विति । बाहुल्यार्थाच्छस्कारकादन्यतरस्यामित्यर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च भवतीत्यर्थाश्रयणात् भूरिश इत्यादाविव बहुशब्दपर्यायसमस्तशब्दात्सप्तमीकारकाच्छस्प्रत्ययः । ततश्च तेषु समस्तेष्विति योजना सूचिता भवति ॥ तेजोऽतस्तदभिध्यानादीति आद्ये स्वातन्त्र्येण तेजआदिस्रष्टृत्वस्य द्वितीये च स्वातन्त्र्येण तत्संहर्तृत्वस्य च समर्थनेन सर्वेभ्यो देवेभ्य उत्तमतायाः समर्थितत्वादिति भावः ॥ संबध्यत इति । अन्यथा सर्वोत्तमत्वालाभादिति भावः । सप्तम्यन्ततया व्याख्यातस्य तस्य पञ्चम्यन्तेन तेभ्य इत्यनेन सामानाधिकरण्येनान्वयः कथमित्यत उक्तं पञ्चम्यन्तमिति ॥ उक्तमिति । 'तेजोऽतः' 'तदभिध्यानादि'त्यादिनेति शेषः ॥ प्रवृत्तिश्चेति । परमेश्वरायत्तेत्युक्तमिति संबन्धः ॥ इमे जन्माद्या इति अनेन मोक्षश्चेत्यनन्तरमितिशब्दोऽध्याहार्यः । ततश्चेतीम इत्यन्वय इति मूलयोजना सूचिता भवति । ननु जन्मस्थितिलयाज्ञाननियतिज्ञानसंसृतिरिति नेतरेतरयोगद्वन्द्वः । तथा सति बहुवचनप्रसक्त्यैकवचनानुपपत्तेः । नापि समाहारद्वन्द्वः । तथा सति स नपुंसकमिति तस्य नपुंसकलिङ्गप्रसक्त्या संसृतिरिति स्त्रीलिङ्गानुपपत्तिप्रसङ्गादित्यत आह द्वन्द्वैकवद्भावेऽपीति । अत्रैवानुरूपं दृष्टान्तमाह युवोरनाकाविति यथेति । युवोरित्यत्र यथा द्वन्द्वैकवद्भावेऽपि नपुंसकत्वाभावश्छान्दसस्तथाऽत्रापीत्यर्थः । अयमर्थः । युवोरिति नेतरेतरद्वन्द्व आश्रयितुं शक्यस्तथा सति द्विवचने यणादेशे च सति द्वयोर्वकारयोः प्रश्लिष्टयोरुच्चारणप्रसङ्गात् । न च 'लोपो व्योर्वली'ति पूर्ववकारलोपान्न तत्प्रसङ्ग इति वाच्यम् । अचः परस्मिन्पूर्वविधाविति यणः स्थानिवद्भावेन वलोपाप्राप्त्या वकारद्वयोच्चारणप्रसङ्गस्यावर्जनीयत्वात् ।

समाहारद्वन्द्वश्चेत्स नपुंसकमिति नपुंसकत्वे सति गुणवृद्धितृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषेधेनेति वचनात् घेर्ङितीति गुणं बाधित्वा नुमि सति युवन इति निर्देशप्रसङ्गात् । ततश्च युवोरिति पुलिङ्गैकवचनानुपपत्तिरिति शङ्का द्वन्द्वैकवद्भावेऽपि नपुंसकत्वाभावस्य छान्दसत्वेन यथा परैः समाधीयते तथेति ॥ **परमप्रमेयमिति** । अधिदैवादिविषयवाक्यानां परस्परविरोधपरिहारस्य न प्रामाण्यनिश्चयार्थत्वम् । तथा सत्यस्य तर्कशास्त्रत्वप्रसङ्गेन मीमांसात्वव्याघातापातात् । किन्त्वधिदैवादिवस्तुस्वरूपावधारणद्वारा ब्रह्मणो जगत्कारणत्वनिश्चयार्थत्वमेवेति तदेव मुख्यं प्रमेयं न तु प्रामाण्यमिति भावेन प्रमेयं परमतया विशेषितमित्यशेषमतिमङ्गलम् ॥ २–३–१८ ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥ अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥
इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशपूज्यपादानां निजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां द्वितीयाध्यायस्य तृतीयः पादः ॥

**स०— युवोरनाकाविति ॥ यथेति** । अत्र यथा युवेरिति निर्देशे द्वन्द्वैकवद्भावपक्षोऽनित्यमागमशासनमिति नुम् न भवति नपुंसकत्वं वा लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति न भवति । तथा प्रकृतेपि नपुंसकत्वाभावः छांदस इत्यर्थः । उपलक्षणं चैतत् इतरेतरयोगपक्षेऽपि छान्दसो वर्णलोपो द्रष्टव्यः ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितानुव्याख्यानस्य श्रीमज्जयतीर्थविरचितायाः सुधायाः श्रीमत्सत्यव्रततीर्थविरचितायां टिप्पण्यां द्वितीयाध्यायस्य तृतीयः पादः ॥

**प०— इत्यधिकरणेति** । तदधिकरणद्वयशरीरं न्यायमुक्तावल्यां व्यक्तम् । **वियत्पदेनेति** । न वियदिति सौत्रवियत्पदेनेत्यर्थः ॥ **वियदादिपदोपादानेनेति** । सूत्रे वियन्मातरिश्वतेजोप्पृथिवीपदानामुपादानेनेत्यर्थः ॥ **सृष्टिप्रलयक्रमेति** ॥ वियदादिपृथिव्यन्तपदानां क्रमेण सूत्रे कथनेन सृष्टिक्रमोप्येवमेवेति सूचनात्सृष्टिक्रमेत्युक्तम् । 'विपर्ययेण तु क्रमोत उपपद्यते चे'त्यत्र लयक्रमो व्यक्तमुक्त एव ॥ **तत्रापीति** । मुक्तावपीत्यर्थः ॥ **एवमिति** । पराधीनविशेषावाप्तिरूपोत्पत्तिमतीत्यर्थः । प्राणनामा कदा कस्माज्जात इत्यतः तत इति पदमनुवृत्य द्वेधार्थमाह **ततस्तदनन्तरमिति** । **सङ्कर्षणादितिच ॥ सुपां सुलुगिति** । सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल इति सप्तमाद्यपादे सूत्रं । तस्यार्थः । क्त्वा छन्दसीति वर्तते । छन्दोविषये सुपां सप्तविभक्तीनां स्थाने सु इति प्रथमैकवचनं भवति । लुग्भवति । पूर्वसवर्णः क्वचिदाकारादेशः क्वचिदादित्यादेशः क्वचित् शे इति । क्वचिद्या इति ।

क्वचिड्डाड्या इति । क्वचित्तु याच् इति । क्वचिदाल् इत्येते आदेशा भवन्तीति । तथा चात्र द्विवचनस्य पूर्वसवर्णः । ईकारे सति । 'अकः सवर्णे दीर्घ' इति ईकारद्वयस्याप्येक ईकार इति भावः । अत्रैव सूत्रे पदानामुपलक्षणत्वमुपेत्य सर्वेषामित्युक्ते उत्तरपादवैयर्थ्यमित्यत आह **अत्रोपलक्षितानीति** ।

**तेजोऽत इति** । 'तेजोतस्तथा ह्याहे'त्यत्र तेजः प्रभृतेः सर्वस्योत्पत्तिरीश्वरायत्तेति । 'तदभिध्यानादेव तु तल्लिङ्गात्स' इत्यत्र सर्वस्य लयो भगवदधीन इत्युक्त्या सर्वेभ्यः श्रेयस्त्वलाभादिति भावः । **पञ्चम्यन्तमिति** । पञ्चम्यर्थशसूप्रत्ययान्त इति भावः ॥ **इत्युक्तमिति** । 'तेजोतः' 'तदभिध्यानादि'त्युदाहृताधिकरणद्वये उक्तमित्यर्थः । **प्रवृत्तिश्चेति** । परमेश्वरायत्तेत्यनुकर्षः । इमे इत्यस्य विशेष्याकाङ्क्षायां भावा इति पदमध्याहार्यम् । मोक्षश्चेत्यनन्तरमिति शब्दश्चाध्याहार्य इति भावेनार्थमाह **इतीमे जन्माद्या इति** ॥ **एतेषामितीति** । ब्रह्मदीनामित्यर्थः । नन्वत्र संसृतय इति बहुवचनेन भाव्यम् । कथं संसृतिरित्येकवचनम् । यदि च सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावादेकवचनं तर्हि स नपुंसकमिति नपुंसकत्वे इकोयण् अचि विभक्ताविति नुमागमे युवन इति भाव्यमिति शङ्कित्वोक्तं वृत्तावनित्यमागमशासनमिति कृत्वा न भवति नपुंसकलिङ्गता न भवतीति । तथाच यत्र यथा तत्र तथेत्यर्थः । एषामित्यनुवादः ब्रह्मादीनामिति व्याख्या **परमप्रमेयमिति** । परस्परश्रुतिविरोधपरिहारेण लब्धं प्रधानप्रमेयमित्यर्थः ॥ २-३-१८ ॥

इति श्रीमन्न्यायसुधाटिप्पण्यां श्रीमद्राघवेन्द्रयतिविरचितायां परिमळाभिधेयायां द्वितीयाध्यायस्य तृतीयः पादः ॥

या०—**सुपां सुलुगिति** । 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' । सुश्च लुक्च पूर्वसवर्णश्चाचात् च शे च या च डाड्या च याच्चालच ते तथेतीतरेतरयोगे द्वन्द्वः । सुपां स्थाने एते आदेशाः स्युरिति सूत्रार्थः । उदाहरणं तु ऋजवः सन्तु पन्था इत्यादि द्रष्टव्यम् । प्रकृते तु औ इति द्विवचनरूपस्य सुपः स्थाने पूर्वसवर्णदीर्घेऽकारादेशेऽकः सवर्ण इति सवर्णदीर्घे एकादेशे च सति मानिनीति द्विवचने रूपमिति द्रष्टव्यम् । नन्वेवं सति सर्वेषां तत्त्वाभिमानिनामत्रैवोत्पत्तिनिर्णये इन्द्रियरूपतत्त्वाभिमान्युत्पत्तिनिर्णयस्याप्यत्रैव जातत्वात्तत्प्रतिपादकस्योत्तरपादस्य वैयर्थ्यापात इत्यत आह **अत्रोपलक्षितानामिति** ॥ **तेजोऽतस्तदभिध्यानादित्यादेरिति** । अत्र हि विष्णोः स्वातन्त्र्येण तेजःप्रभृतिसृष्टिकारणत्वस्य तत्संहर्तृत्वस्य च समर्थनेन तस्य सर्वदेवश्रेष्ठत्वस्यापि सिद्धेरिति भावः ॥ **पञ्चम्यन्तमिति** । सप्तम्यन्तं सत् पूर्वत्र न सम्बध्यत इत्याशयः । समस्तेभ्य इत्यन्वयो द्रष्टव्यः ॥ **इमे जन्माद्या इति** । अनेन मोक्षश्चेत्यनन्तरमितिशब्दोऽध्याहार्यः । ततश्चेतीम इत्यन्वय इति मूलयोजना सूचितेति ज्ञातव्यम् ॥ **द्वन्द्वैकवद्भावेति** । इतरेतरयोगाश्रयणे तु बहुवचनाभावादेव न

युक्त इति भावः ॥ **नपुंसकत्वाभावश्छान्दस इति** । अन्यथा स नपुंसकमित्यनेन नपुंसकत्वेन भाव्यमिति भावः ॥ **युवोरनाकाविति यथेति** । अत्र युश्च वुश्चेति द्वन्द्वो यदीतरेतरयोगो विवक्षितस्तदा युव्वोरिति द्विवचनस्य निर्देशः स्यात् । न च लोपो व्योर्वलीत्यनेन पूर्ववकारलोपे युवोरिति द्विवचनस्यैव रूपमिति वाच्यम् । उकारस्थाने जातस्य वकारस्याचः परस्मिन्पूर्वविधावित्यनेन स्थानिवत्त्वादुक्तलोपाप्राप्त्या षष्ठीद्विवचने वकारद्वयनिर्देशस्यावश्यकत्वात् । यदि चायमेकवद्भावे द्वन्द्वस्तदा न स नपुंसकमिति नपुंसकत्वप्राप्त्या युवुन इति निर्देशः स्यात् । सर्वथा युवोरिति पुल्लिङ्गैकवचनानुपपत्तिरित्याशङ्क्यैकवद्भावेऽपि नपुंसकलिङ्गता न भवति । अस्य निर्देशस्य छान्दसत्वात् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति वचनादिति यथा वैयाकरणैः समाहितं तथाऽस्यापि निर्देशस्य छान्दसत्वादेकवद्भावेऽपि नपुंसकत्वाभाव इत्यर्थः ॥ **परमप्रमेयमिति** । अधिदेवादिविषयकश्रुतीनां परस्परविरोधे परिहृते सति यत्सिद्धं प्रमेयं तदाहेत्यर्थः ॥ २-३-१८ ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्येण यदुपतिना विरचितायां सुधाटिप्पण्यां द्वितीयाध्यायस्य तृतीयः पादः ॥

श्री०— **तदनन्तरमिति** । लयानन्तरमित्यर्थः । सृष्टिकाल इति यावत ॥ **सङ्कर्षणादिति** । 'सङ्कर्षणाच्चापि जयातनूजो बभूव साक्षाद्बलसंविदात्मा । सूत्रं च वायुरि'ति वचनादित्यर्थः ॥ **सरस्वतीभारत्याविति** । प्रद्युम्नत इति शेषः । 'प्रद्युम्नतश्चाथ कृतौ स्त्रियौ द्वे प्रजज्ञतुर्यमले तत्र पूर्वा । प्रधानसंज्ञा प्रकृतिर्जनित्री श्रद्धा द्वितीये'ति ॥ **प्रकृतिमानिन्याविति** । तदनन्तरमानिन्यावित्यर्थः ॥ **प्रकृतिपुरुषाभ्यामिति** । अनिरुद्धशान्तिभ्यामित्यर्थः । महत्तत्त्वाभिमानिपुन्नामकब्रह्मणो वासुदेवान्मायादेव्यां सूक्ष्मरूपेणोत्पन्नत्वात्पुनर्महत्तत्त्वाभिमानिब्रह्मण उत्पत्तिकथनं स्थूलरूपेणेति ज्ञातव्यम् । **यथोक्तम्** । 'देवांश्चतुर्वर्णगतान्सत्त्वान् संगृह्य बीजात्मतयाऽनिरुद्धः । न्यधत्त शान्त्यां त्रिगुणात्मिकायाम् ततो महत्तत्त्वतनुर्विरिञ्चः । स्थूलात्मनैवाजनी'ति ॥ **पञ्चम्यन्तमिति** ॥ तथा च पञ्चम्यन्तं सत् न पूर्वत्र संबध्यत इति ज्ञातव्यम् । ननु ज्ञानसंसृतिरिति कथम् । न चैकवद्भावेनोपपत्तिः । अथापि स नपुंसकमिति नपुंसकत्वप्राप्त्या ज्ञानसंसृतीति स्यादत आह **द्वन्द्वेति** । ततश्च छन्दस्त्वाद्द्वन्द्वैकवद्भावेऽपि पुल्लिङ्ग एव जातः । अतो ज्ञानसंसृतिरिति युक्तम् । द्वन्द्वैकवद्भावेऽपि छान्दसो नपुंसकत्वाभाव इत्यत्र प्रयोगं दर्शयति **युवोरिति** । अत्र हि विष्णुशब्दवद्युवुशब्दः । यथा षष्ठीद्विवचने विष्णु ओस् इति स्थिते उकारस्य वकारे विष्ण्वोरिति षष्ठीद्विवचनं भवति । तथा युवु ओस् इति स्थिते उकारस्य वकारे युव्वोरिति षष्ठीद्विवचनं भवतीति स्थितिः । एवं च सूत्रे युवोरित्यनुपपन्नम् । युश्च वुश्च युवू तयोर्युव्वोरिति

षष्ठीद्विवचनमपेक्षितं विष्णवोरितिवत् । युवोरिति षष्ठ्येकवचनं कथम् । न च द्वन्द्वैकवद्भावोऽत एकवचनं युक्तमिति वाच्यम् । एकवद्भावेऽपि नपुंसकत्वप्राप्त्या युश्च वुश्च युवु इति प्रथमैकवचनं स्यान्मधु इतिवत् । तथा युवुन इति षष्ठ्येकवचनं स्यान्मधुन इतिवत् । ततश्च सूत्रे युवोरित्यनुपपन्नमिति शङ्कायां तत्र यथा द्वन्द्वैकवद्भावेऽपि नपुंसकत्वं छन्दःकल्पत्वादनाश्रित्य प्रत्युत युवुशब्दस्योकारान्तपुल्लिङ्गता-मेवाश्रित्य युश्च वुश्च युवुस्तस्य युवोरिति षष्ठ्येकवचनं प्रत्युक्तमिति समाधीयते काशिकाकारादिभिस्त-थाऽत्रापि समाधानं द्रष्टव्यमित्यर्थः ॥ स्थित्यादीति । मुक्तानां स्वतादावित्यर्थः ॥ २-३-१८ ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते
श्रीमन्न्यायसुधाटीकाऽनुद्दीतवाक्यार्थविवरणे द्वितीयाध्यायस्य तृतीयः पादः ॥

इति द्वितीयाध्यायस्य तृतीयः पादः ॥

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

सु० यद्यपि चतुर्थपादेऽपि श्रुतिवचनानां परस्परविरोध एव परिह्रियते । तथाऽप्यध्यात्मविषयत्वेन भेदसिद्धिरिति प्रागेव सूचितम् । प्रकारान्तरेण पादभेदं दर्शयितुमाह श्रुत्यर्थ इति ।

अनु०— श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते ॥
यत्र तन्निर्णयं देवः सुविशिष्टोपपत्तिभिः ॥
करोत्यनेन पादेन

यद्यपि श्रुतिरित्येवोक्तेऽपि सिद्ध्यत्यर्थ इति । वाक्यानामर्थद्वारैव विरोधस्थितेः । तथाऽप्यर्थनिर्णयायैव पादारम्भो न प्रामाण्यनिर्णयायातो न मीमांसात्वहानिरिति दर्शयितुमर्थ इत्युक्तम् । यद्यपि युक्तयः पूर्वपादेऽपि सन्ति तथाऽप्यागमगृहीतव्याप्त्यादिमत्त्वेनात्र प्रबला इति विशेषः । परमार्थिके विरोधे निर्णयो दुष्कर इत्यत इवेत्युक्तम् । यत्र प्राणादिविषये । श्रुत्यर्थो जन्मादिः । युक्त्युपगर्जनाभिः श्रुतिभिर्विरुद्ध इव दृश्यते । तन्निर्णयमिति योजना । युक्तिसहितश्रुतिभिः पूर्वपक्षिते कथं श्रुतिमात्रेण तद्विपरीतार्थनिर्णय इत्यत उक्तं सुविशिष्टेति । अनेन बुद्धिसन्निहितेन ।

तथा प्राणा इत्यादीनां सूत्राणां भाष्य एवार्थो विस्पष्ट इत्यतः पूर्वोत्तरप(क्षीययु)क्ष-युक्तीः संगृह्याह तत्रेति ।

तत्र स्पष्टार्थवच्छ्रुतिः ॥
विशेषश्रुतिर्वैरूप्यं माहात्म्यं व्यक्तसद्गुणः ॥
दृष्टा युक्तिः समानत्वं कर्तृशक्तिर्विमिश्रिता ॥
युक्तयः पूर्वपक्षेषु सुनिर्णीतास्तु तादृशाः ॥
युक्तयो निर्णयस्यैव स्वयं भगवतोदिताः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
द्वितीयाध्यायस्य चतुर्थः पादः ॥ २-४ ॥

तत्र चतुर्थपादे । तादृशाः तच्छब्दवाच्याः । निर्णयस्य सिद्धान्तस्य । तादृशाश्चेत्कथं निर्णयं कुर्युरित्यत उक्तं सुनिर्णीतास्त्विति । तादृशार्था इति शेषः । कुत एतदित्यत उक्तं स्वयमिति । स्वयमेवेति संबन्धः ।

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना । कृतायां टीकायां विषमपदवाक्यार्थविवृतौ द्वितीयेऽध्यायेऽस्मिंश्चरमचरणः पर्यवसितः ॥ २-४ ।

इति श्रीमन्न्यायसुधायां द्वितीयाध्यायस्य चतुर्थः पादः संपूर्णः ॥

शे० — ननु 'श्रुत्यर्थः श्रुतियुक्तिभ्यामि'त्यादिभाष्यमनर्थकम् । न च श्रुतिविरोधपरिहारकत्वेऽस्य पादस्य तृतीयपादाद्भेदो न स्यात्तत्रापि श्रुतीनां परस्परविरोधस्यापाकरणादिति पादभेदानुपपत्तिशङ्कापरिहारार्थं पादभेदकथनार्थत्वान्नानर्थक्यमिति वाच्यम् । 'अथाशेषसमाम्नायविरोधापाकृतिं प्रभुः । करिष्यन्नधिदैवाधिभूतजीवपरात्मनामि'त्यादिना पूर्वपाद एव पादद्वये श्रुतीनां परस्परविरोधस्यैव परिहारेऽपि तृतीयेऽध्यात्मेतरविषयश्रुतिविरोधस्यात्र चाध्यात्मविषयश्रुतिविरोधस्य परिहारात्पादभेदस्य समर्थितत्वादित्यतः सत्येव तस्मिन्प्रकारे प्रकारान्तरेण पादभेदसमर्थनार्थत्वान्नानर्थक्यमिति भावेन प्रकारान्तरेण पादभेदाभिधायकतयैतद्भाष्यं योजयितुं पादभेदानुपपत्तिशङ्कोत्थापनपूर्वकं प्रागुक्तं परिहारं तावत्स्मारयति यद्यपीत्यादिना ॥ युक्तय इति । वियदनुत्पत्तिमद्विभुत्वादित्याद्या इत्यर्थः । अत्र टीकायां 'प्रबला इति विशेष' इत्येव पाठः । मूलकोशेषु दर्शनात् ।

विस्पष्ट इत्यत इति । विस्पष्ट इत्यतः परमतो न तत्र वक्तव्यमस्ति परमाख्यविद्याव्याख्यां करोमीति च प्रतिज्ञातमिति शेषः । इत्यत इत्यस्य तदुभयसिद्ध्यर्थमित्यर्थः । तादृशार्था इति विशेष इत्येव पाठः । सुनिर्णीतार्था इत्यर्थः । अतो हेतोर्युक्तं तासां निर्णयकारित्वमित्याशयः । एतत्सिद्धान्तयुक्तीनां सुनिर्णीतार्थत्वमित्यर्थः । निर्णयस्यैवेत्येवशब्दस्य वैयर्थ्येन यथाश्रुतान्वयासंभवाद्भिन्नक्रमतामाह स्वयमेवेति संबन्ध इति । ततश्च स्वयमेव भगवता न तु परोपदेशमपेक्ष्य येन स्वतः सर्वज्ञत्वं न स्यादिति सूत्रकारस्य स्वतः सार्वज्ञ्यरूपविशेषसूचनद्वारा तदुपन्यस्तयुक्तीनां भ्रान्त्यादिमूलत्वाभावसूचनार्थत्वान्नैवशब्दवैयर्थ्यमित्याशय इत्यशेषमतिमङ्गलम् ।

सर्वाभीष्टप्रदं रामं सर्वानिष्टनिवारकम् ॥ जानकीजानिमनिशं वन्दे सद्गुरुवन्दितम् ॥

विद्वन्मत्तेभकुम्भाद्रिविपाटनविचक्षणः ॥ विद्याधीशनृसिंहो मे गुरुर्नित्यं भवेन्मुदे ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥

अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥ २-४ ॥

प० — पादार्थोक्तेर्बीजं वदन् प्रागुक्तमपि स्मारयति **यद्यपीत्यादिना** ॥ **प्रागेवेति** । पूर्वपादोपक्रमे अधिदैवाधिभूतजीवपरात्मनां स्वरूपनिर्णयायेत्युक्त्या अस्य पादस्य अध्यात्मविषयत्वसूचनादिति भावः ॥ **न मीमांसात्वहानिरिति** । प्रामाण्यनिर्णयार्थत्वे हि अस्य तर्कशास्त्रत्वापत्त्या मीमांसाशास्त्रत्वभङ्गः स्यादिति भावः ॥ **पूर्वोत्तरपक्षीययुक्तीरिति** । अयमत्र विवेकः । तथा प्राणाः । स्पष्टार्थवच्छ्रुतिः पूर्वपक्षयुक्तिः । इयमेव निरवकाशा सिद्धान्तयुक्तिः । एवमग्रेपि । तत्प्राक्छ्रुतेश्च । विशेषश्रुतिवैरूप्यम् । सप्तगतेर्विशेषितत्वाच्च विशेषश्रुतिवैरूप्यम् । अणवश्च विशेषश्रुतिवैरूप्यम् । श्रेष्ठश्च माहात्म्यम् । चक्षुरादिवत् माहात्म्यम् । ततोपि माहात्म्यम् सिद्धान्तयुक्तिः पञ्चवृत्तिः । व्यक्तसद्गुणः अणुश्च दृष्टा युक्तिः । त इन्द्रियाणि समानत्वम् । संज्ञामूर्तिक्लृप्तिः कर्तृशक्तिः । मांसादिभौमं विमिश्रतेति । **तादृशार्था इति** । सुनिश्चितार्था इत्यर्थः । ननु युक्तिविशेषणत्वे तादृश्य इति स्यादित्यतोऽर्थपदसंयोजनेन बहुव्रीह्याश्रयणे सति न दोष इति भावेन तादृशा इत्यनूद्यार्थपदसंयोजनमाह **तादृशार्था इति शेष इति** । एतदिति । सुनिर्णीतार्थत्वमित्यर्थः ॥

---

इति श्रीमन्न्यायसुधाटिप्पण्यां सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृतायां परिमळाभिधेयायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

या० — **प्रागेव सूचितमिति** । 'अथाशेषसमाम्नायाविरोधापाकृतिं प्रभुः । करिष्यन्नधिदैवाधिभूतजीवपरात्मनाम् । स्वरूपनिर्णयायैवे'त्यनेनाध्यात्मभिन्नानामेव पूर्वपादप्रतिपाद्यतयोक्तत्वेनास्य पादस्याध्यात्मविषयकत्वं सूचितमिति भावः ॥ **तादृशार्था इति** । सुनिर्णीतार्था इत्यर्थः । अत्रार्था इत्येव शेषो ज्ञातव्यः ॥ **स्वयमेवेति** । न परोपदेशमपेक्ष्य येन भ्रान्त्यादिकं सम्भावितं स्यादिति भाव इत्यशेषमतिमङ्गलम् ।

वेदेशगुरुभिः प्रोक्तो भावो जयमुनेरयम् ॥ सुधाऽविरोधाध्यायद्वितीयपादे(?)स्थवाचां प्रदर्शितः ॥ १ ॥

विदोषभाश्चिन्तितसन्मनोरथप्रदः सुधीमण्डलमण्डनायितः ॥
सदा ममाज्ञानतमोविनाशकः श्रुतीशचिन्तामणिरस्तु भूतिदः ॥ २ ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्ययदुपतिविरचितायां श्रीमन्न्यायसुधाटिप्पण्यां द्वितीयाध्यायस्य चतुर्थः पादः ॥

श्री० — श्रुतियुक्तिभ्यां श्रुतेर्विरोध इत्युक्ते श्रुत्यर्थस्यैव विरोध इति सिध्यतीत्येतत्कुत इत्यत आह वाक्यानामिति ॥ अर्थद्वारैवेति । विरोधस्य स्वतोऽर्थदोषत्वादिति भावः ॥ न प्रामाण्यनिर्णयायेति । अन्यथा तर्कशास्त्रत्वप्रसङ्ग इति ज्ञेयम् ॥ हानिरिति । 'मीमांसा मेयशोधनमि'त्युक्तत्वादिति ज्ञेयम् ॥ तादृगर्थेति । स्पष्टार्थवच्छ्रुतिरित्यादिशब्दवाच्यास्ताः पूर्वपक्षीया एव युक्तयः सिद्धान्तेऽपि यदि स्युरित्यर्थः । निर्णयं सिद्धान्तस्य ।

इति श्रीयदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते श्रीमन्न्यायसुधाटीकाऽगृहीतवाक्यार्थविवरणे द्वितीयाध्यायस्य चतुर्थः पादः ॥

च० — तादृशार्था इति । सुनिर्णीतार्था इत्यर्थः । स्वयमेवेति । न परोपदेशमपेक्ष्य येन भ्रान्त्यादिकं संभावितं स्यादित्याशयः ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणश्रीमत्सत्यप्रियतीर्थपूज्यपादतनूज-सर्वतन्त्रस्वतन्त्रगालवपुरीश्रीनिवासाचार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां चषकनाम्न्यां काव्यां समासतः सुधाव्याख्यायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

इति द्वितीयाध्यायस्य चतुर्थः पादः ॥

## इति द्वितीयाध्यायः ॥

श्रीकृष्णार्पणमस्तु ॥



॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

सु०— कुपिताहिफणच्छायाममीकृत्यापरं सुखम् ।
सेवन्ते यत्पदं धीरास्तं भजे वल्लभं श्रियः ॥

साधनविचारोऽयमध्यायः । वैराग्यार्थे गत्यादिनिरूपणा प्रथमपाद इत्यध्यायपाद-प्रतिपाद्यं भाष्य एव स्फुटम् । सङ्गतिं तु लाघवायैकीकृत्योपरि वक्ष्याम इत्याशयवांस्तृतीया-(ध्याय)द्यपादाधिकरणपूर्वपक्षसिद्धान्तयुक्तीः संग्रहेणाह स्वाभाविकेति ।

अनु०— स्वाभाविकान्यथानाम सहभावान्यथोक्तयः ॥
अविशेषविशेषौ च सहभावो विमिश्रता ॥
निरुद्धोक्तिः सहस्थानं वैदर्थ्यं चान्यथागतिः ॥
युक्तयः पूर्वपक्षस्य गुणाधिक्यार्थतोभवौ ॥
उपपत्तिर्द्विरूपत्वमाधिक्यमनुरूपता ॥
योग्यता बलवत्त्वं च विभागः कारणाभवः ॥
क्लृप्तिरन्या गतिश्चैव सिद्धान्तस्यैव साधकाः ॥

---

साधका इति वक्ष्यमाणं पूर्वपक्षस्येत्यत्रापि संबध्यते । पूर्वपक्षस्य सिद्धान्तस्येति जातावे-कवचनम् । साधका इति छान्दसो निर्देशः । यद्वा युक्तयः पूर्वपक्षस्येत्यत्र साधका इति नाकृष्यते । पूर्वपक्षसंबन्धिन्यो युक्तय इत्येवार्थः । सिद्धान्तस्यैव साधका इत्यत्र तु न्याया इति शेषः ।

शे०— सर्वाभीष्टप्रदं रामं सर्वानिष्टनिवारकम् ॥ जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥१॥
वेदव्यासं तथाऽऽनन्दतीर्थं जयमुनिं गुरुम् ॥ व्यासतीर्थं गुरून्सर्वानभिवन्द्य यथामति ॥२॥
सुधाया भावगूढायास्तृतीयाध्यायपञ्जिका ॥ प्रकाश्यते केशवेन गुरुराजोक्तमार्गतः ॥३॥
विद्वन्मत्तेभकुम्भाद्रिविपाटनविचक्षणः ॥ विद्याधीशनृसिंहो मे गुरुर्नित्यं भवेन्मुदे ॥४॥
यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥ अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥५॥

एतदध्यायगतपादचतुष्टयप्रतिपाद्यगुणविशिष्टतयेष्टदेवतास्तुतिपूर्वकं तत्सेवारूपं मङ्गलमादावा-चरति कुपितेति । अत्रापरं विषयजन्यं सुखम् । 'कुपिताहिफणच्छायासमीकृत्ये'त्यनेन वैराग्यरूपं पूर्वपा-

दार्थः । भजन्त इत्यर्थकसेवन्तइत्यनेन द्वितीयपादार्थः । समीकृत्येति क्त्वादेशल्यप्प्रत्ययेन पूर्वपादार्थस्य द्वितीयपादार्थेन हेतुहेतुमद्भावः । उपासार्थकसेवन्त इत्यनेनैव तृतीयपादार्थः । धिया रमन्ते ते धीरा इत्यर्थकधीरा इति विशेषणेन च ज्ञानमात्रेणापेक्षितपुरुषार्थप्राप्तिसूचनाच्चतुर्थपादार्थश्च दर्शित इति द्रष्टव्यम् । यद्यपि पूर्वपदार्थबाहुल्ये गम्यमाने छायान्तस्य तत्पुरुषस्य 'छायाबाहुल्य' इति नपुंसकत्वविधानात् ह्रस्वो नपुंसक इति ह्रस्वतायां च सत्यां इक्षूणां छायेक्षुच्छायमितिवत्फणानां छाया फणच्छायमिति नपुंसकत्वह्रस्वत्वयोः सतोः फणच्छायं समीकृत्येति भवितव्यम् । तथाऽपीक्षुच्छ यानिषादिन्य इत्यादावासमन्तान्निषादिन्य इत्याङ्प्रश्लेषवदिहाप्याङ्प्रश्लेषाश्रयणाच्छायासमीकृत्येत्यस्य साधुत्वमित्यवधेयम् । केचित्तु फणस्य छायेति विग्रहाश्रयणेन पूर्वपदार्थबाहुल्यस्यागम्यमानतया नपुंसकत्वाद्यप्राप्तेः छायासमीकृत्येत्यस्य साधुत्वमित्याहुः ।

एकवाक्यत्वादिसिद्ध्यर्थतयाऽवश्यवक्तव्यानामध्यायपादप्रतिपाद्यसङ्गतीनामनुक्त्या प्रसक्तामनुव्याख्याने न्यूनतां तन्निमित्तकथनेन परिहरन्नेवोत्तरग्रन्थवैयर्थ्यमाशङ्क्य तत्प्रयोजनमाह **साधनेति** । **उपरि** उपासनापादे ॥ **वक्ष्याम इति** । 'वैराग्यतो भक्तिदार्ढ्यमि'त्यादिनेति शेषः ॥ **संग्रहेणेति** । एतत्पादीयसूत्राणां भाष्य एव स्पष्टार्थतया तत्र वक्तव्यविशेषाभावात्सङ्ग्रहः । परमाख्यविद्याव्याख्यां करोमीति प्रतिज्ञासिध्यर्थत्वाच्च कथनमिति भावः ॥ **पूर्वपक्षस्येत्यत्रापीति** । उपलक्षणं चैतत् । युक्तय इत्येतदपि सिद्धान्तस्यैव साधका इत्यत्रापि सम्बध्यत इत्यपि द्रष्टव्यम् । ततश्च नोभयत्रापि साकांक्षत्वप्रयुक्तवाक्याभासतेति भावः । पूर्वपक्षव्यक्तीनां सिद्धान्तव्यक्तीनां च बहुत्वा'द्बहुषु बहुवचनमि'ति पूर्वपक्षाणां सिद्धान्तानां चेति बहुवचनेन भवितव्यम् । पूर्वपक्षस्येत्याद्येकवचनं तु कथमित्यतो व्यक्तीनां बहुत्वेऽपि जातिरूपार्थस्यैकत्वात्तद्विवक्षया 'द्व्येकयोर्द्विवचनैकवचने' इत्यनेनैकवचनप्राप्तेर्नानुपपत्तिरित्याशयेनाह **जाताविति** । यद्वा जातिपदं जातिव्यङ्ग्यसादृश्यपरम् । सिद्धान्ते व्यक्तिवज्जातेरप्यनेकत्वेन तद्विवक्षयाऽप्येकवचनानिर्वाहात् । यद्यपि च स्वमते जातिवत्सादृश्यमप्यनेकमेवेति न तदैक्यमपि विवक्षितुं शक्यम् । तथाऽपि त्रिविक्रम एकेन पादेनोर्ध्वलोकमन्येन चाधोलोकमिव सादृश्यं प्रतियोगित्वरूपसम्बन्धेन धर्मित्वरूपसम्बन्धेन च सर्वसम्बन्धीत्यनुगततुल्यमेवेति युक्तमेव तदेकत्वविवक्षयैकवचनमिति द्रष्टव्यम् । ननु प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप इति प्रत्ययस्थककारात्पूर्वस्याकारस्य आपि परत इकारविधानादिकारे सति साधिका इति भवितव्यम् । तत्कथं साधका इति निर्देश इत्यतश्छन्दसि सर्वे विधयो विकल्प्यन्त इति सर्वविधीनां छन्दसि वैकल्पिकत्वस्याभ्यनुज्ञानादाचार्यवाक्यस्यापि परमर्षिवाक्यत्वेन छन्दस्तुल्यत्वादिकाराभावपक्षे साधका इति निर्देशोऽप्युपपन्न एवेत्याशयेनाह **साधका इति छान्दसो निर्देश इति** । आचार्यवाक्यस्य छन्दस्तुल्यत्वे विप्रतिपद्यमानं प्रति प्रकारान्तरमाह **यद्वेति** ।

उपलक्षणं चैतत् । सिद्धान्तस्य साधका इत्यत्र युक्तय इत्यपि नानुवर्तत इति द्रष्टव्यम् । तर्हि साकाङ्क्षत्वाद्वाक्यद्वयस्याप्याभासता स्यादित्यतस्तां परिहरति **पूर्वपक्षेत्यादिना** ।

स०— **उपरि वक्ष्याम इति** । उपासनापादे 'वैराग्यतो भक्तिदार्ढ्यमि'त्यादिनेति शेषः । ननु 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप' इति साधिका इति भवितव्यं साधका इति तु कथमित्यत आह **साधका इतीति** ।

प०— एतदध्याये निरूपयिष्यमाणसाधनस्वरूपं सूचयन् मङ्गलमाचरति **कुदितेति** । **अपरं** विषयजन्यम् । **सेवन्ते** भक्तिश्रवणमननध्यानज्ञानैर्विषयीकुर्वन्ति । **यत्पदं** यस्य स्वरूपम् । समीकृत्येति ल्यबन्तप्रयोगेण आद्यपादार्थस्य वैराग्यस्य भक्त्यादौ हेतुत्वात्तस्य प्राथम्यमुचितमिति सूचितम् । **धीराः** ज्ञानिनः धैर्योपपन्ना वा । नन्वत्र 'छायाबाहुल्ये' इति छायाशब्दे ह्रस्वत्वं कुतो न भवति । इक्षुच्छायमित्यादाविवेति चेदुच्यते । छायानिरूपकबाहुल्ये विवक्षिते हि तत् । न त्वत्रेक्षूणामिव फणस्य बाहुल्यं विवक्षितम् । अतो न दोषः । अत एव द्वितीयस्य तृतीयपादे छायाबाहुल्ये इति सूत्रवृत्तौ बाहुल्यं पूर्वपदार्थस्य धर्म इत्युक्तम् । 'विभाषासेनासुराच्छाये'ति विकल्पितत्वान्न दोष इत्येके **उपरीति** । उपासनापादे **पूर्वपक्षसिद्धान्तयुक्तीः संग्रहेणाहेति** ॥ तत्रायं विवेकः ॥ तदन्तरप्रतिपत्तौ । स्वाभाविकं पूर्वपक्षस्य युक्तिः, गुणाधिक्यं सिद्धान्तयुक्तिः ॥ त्र्यात्मकत्वात् । अन्यथानाम, अर्थतोभवः ॥ प्राणगतेश्च । सहभावः, उपपत्तिः ॥ अग्न्यादिगतिश्रुतेः । अन्यथोक्तिः, द्विरूपत्वम् ॥ प्रथमे श्रवणादिति चेत् । अविशेषः, आधिक्यम् ॥ अश्रुतत्वादिति चेत् । अविशेषः, अनुरूपता ॥ भाक्तं वाऽनात्मवित्त्वात् । विशेषः, योग्यता ॥ कृतात्ययेऽनुशयवान् । सहभावः, योग्यता ॥ यथेतमनेवं च । सहभावः, योग्यता ॥ चरणादिति चेत् । सहभावः, योग्यता ॥ अनिष्टादिकारिणामपि च श्रुतम् । विमिश्रता, बलवत्त्वं च ॥ अपि सप्त । विरुद्धोक्तिः, विभागः ॥ तत्रापि च तद्व्यापारात् । सहस्थानं, कारणाभवः ॥ विद्याकर्मणोरिति तु । सहस्थानं, कारणाभवः । न तृतीये तथोपलब्धेः सहस्थानं कारणाभावः । तत्स्वाभाव्यापत्तिः सहस्थानं कारणाभावः । नातिचिरेण सहस्थानं कारणाभावः । अन्याधिष्ठिते सहस्थानं कारणाभावः । रेतस्सिग्योगोऽथ वैयर्थ्य (ईश)क्लृप्तिः । योनेः शरीरं अन्यथा गतिः अन्या गतिः । ननु साधका इति कथम् । युक्तिविशेषणत्वेन स्त्रीलिङ्गत्वापत्त्या प्रत्ययस्थात्कात्पूर्वस्यात 'इदाप्यसुप' इति सूत्रेण साधिका इति भाव्यं इत्यत आह **साधका इति च्छान्दसो निर्देश इति** ।

या० — विषयविरतिजातस्नेहमाहात्म्यबुद्धिप्रचयजनितयोग्यध्यानतो यस्य सन्तः ॥
निजमनसि विलोक्य प्राप्नुवन्ति प्रसादं निजसुखततिहेतुं श्रीपतिं तं नमामि ॥ १ ॥
व्यासपादाम्बुजे ध्यात्वा मध्वमानससंस्थिते ॥ व्याकरिष्ये सुधाऽस्पष्टतृतीयाध्यायफक्किकाः ॥ २ ॥

**अपरं** विषयोत्थम् ॥ **सेवन्त इति** । उपासते जानन्ति चेत्यर्थः । **धीरा** भक्तिदार्ढ्यवन्तः । तेनैतदध्यायीयपादचतुष्टयार्थोऽत्र सङ्क्षेपतः सूचितो भवतीति ज्ञातव्यम् । **उपरि** उपासनापादे ॥ **छान्दस इति** । अन्यथा प्रत्ययस्थात्कात्पूर्वस्यात 'इदाप्यसुप' इत्यनेनेकारे सति साधिका इति स्यादिति भावः ॥

श्री० — ननु फणच्छायासमीकृत्येति कथम् । फणानां छाया फणच्छायमिति भवति । तथा च समासे फणच्छायसमीकृत्येति भवेत् । छायाबाहुल्ये बाहुल्यं । तच्चेत्पूर्वपदार्थस्य विवक्षितं तर्हि छायान्तस्तत्पुरुषो नपुंसकं स्यादित्युक्तेः । अत्र च षष्ठीतत्पुरुषस्य विवक्षितत्वात् । अत एवेक्षुच्छाय-निषादिन्य इति रघुवंशे प्रयोग इति चेत् । सत्यम् । तत्र हीक्षूणां बहुत्वं यथा विवक्षितं तद्वदत्र न फणानां बहुत्वं विवक्षितम् । किन्त्वहिफणस्यैकत्वमेव । तथा चाहिफणस्य छायेत्येव विग्रह इति नोक्तदोष इति ध्येयम् ॥ **नाकृष्यत इति** । येन युक्तिविशेषणत्वप्राप्त्या छान्दसो निर्देश इति समा-धेयं स्यादिति शेष इति ।

च० — श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः । सुनन्दतात्सेवया मे भक्त्यलंकृतयानया ॥ १ ॥
प्रकृतलक्षणीयचरणचतुष्टयीप्रतिपाद्यं ध्वनयन्मध्ये मङ्गलमाचरति **कुपितेति** । **अपरं** विषय-जनितम् । ल्यबन्तेनाद्यपदार्थः । सेवन्त इत्यत्र प्रकृत्यंशस्य भजनार्थकत्वोपगमेन द्वितीयपादार्थ इत्यवसेयः । अत्र व्याचक्षाणाः छायाबाहुल्य इति समासघटकपूर्वपदार्थबहुत्वविवक्षायां छायान्तस्य क्लीबत्वविधानात् ह्रस्वान्तनिर्देशेन भवितव्यतया कथमयं विन्यासः सङ्गच्छत इत्याशङ्कमानाः इक्षुच्छाया-निषादिन्य इत्यादिवदाकारप्रश्लेषाद्बहुत्वाविवक्षातो विभाषासेनासुराच्छायाशालानिशानामिति क्लीबत्वस्य वैकल्पिकत्वाद्वा तत्सामञ्जस्यमिति समादधति । **उपरि** उपासनापादे । **छान्दस इति** । तेन 'प्रत्यय स्थाकात्पूर्वस्यात 'इदप्यसुपः' इत्यनेनेत्वे साधिका इति न्यासापत्तिशङ्कानवकाशः ।

इति श्रीमत्सत्यप्रियतीर्थपूज्यपादतनूजसर्वतन्त्रस्वतन्त्रगालवपुरीश्रीनिवासाचार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां तृतीयाध्यायकतिपयसुधाफक्किकाव्याख्यायां चषकनाम्न्यां कार्ष्ण्यां प्रथमः पादः ॥

सु० — अत्र सूत्रम् योनेः शरीरमिति । तद्व्याख्यातं भाष्ये । स्वर्गादवागतो जीवो वृष्टिद्वारा व्रीह्यादिबीजेषु संक्रान्तो रेतस्सि(चपु)क्पुरुषं प्रविश्य सह रेतसा मातृयोनिद्वारेण जठरं प्रविष्टः कललबुद्बुदादिक्रमेणोत्पन्नं शरीरमाप्नोतीति प्रसिद्धम् । तत्किं तथ्यमुतातथ्य मिति सन्देहः । न तथ्यमिति पूर्वः पक्षः । कुतः । 'देहं गर्भस्थितं क्वापि प्रविशेत्स्वर्गतो गत' इत्यादिवचनात् । मान्धातृद्रोणद्रुपदकृपशुकादीनामितिहासपुराणेषु विनैव बीजादिसंबन्धेन जननदर्शनाच्च । अन्यथासिद्धे चार्थे न बहुकल्पना युक्ता । अतस्ते वैराग्यजनन (यैश्र)र्थमेवाध्यात्मविदां वादा' इति । तथ्यमिति सिद्धान्तः । कस्मात् । 'मेमेघो भूत्वा वर्षति । त(द्य) इह व्रीहियवा ओष(धिवनस्पतय)धयस्तिलामाषा इति जायन्ते । यो यो ह्यन्नमत्ति । यो वा रेतः सिञ्चति तद्रूपाद्भूय एव भवति । तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते' इत्यादिश्रुतेः । न चादृष्टेऽर्थेऽन्यथासिद्धिरवकाशवती । न च वचनान्तरलिङ्गदर्शनविरोधः । क्वचिद् बीजादिसंबन्धाभावस्यापि विद्यमानत्वेन तद्विषयत्वात् । यथोक्तम् । 'दिवः स्यास्नून् गच्छति' । 'स्थावराणि दिवः प्राप्त' इति श्रुतिस्मृतिभ्यामिति ।

तदिदमयुक्तं व्याख्यानम् । उत्सूत्रत्वात् । यद्यप्यत्र योनिशब्दो बीजाद्युपलक्षणः शक्यो व्याख्यातुं तथाऽपि तत्संबन्धनियम एव सूत्रे प्रतीयते । न तु क्वाचित्कस्तदभावोऽपि । यदि च क्वचिद् बीजादिसंबन्धाभावः स्यात्तदाऽऽकस्मिकत्वं स्यादित्यत आह बीजेति ।

अनु० — ॐ योनेः शरीरम् ॐ ॥

बीजपूरुषयोनीनां सङ्गातिनियमोज्झितिम् ॥

अथशब्देन भगवानाह

बीजशब्देन व्रीह्यादिकं रेतश्चोच्यते । सङ्गातिनियमोज्झितिं संबन्धातिनियमाभावम् । अयमर्थः । रेतःसिग्योगोऽथेति पूर्वसूत्रादथशब्दोऽत्राप्यनुवर्तते । स च प्रकृतादर्थादर्थान्तरे वर्तते । तथा च योनेः शरीरमापद्यते । क्वचित्तदभावेनापीत्यथशब्देन भगवान्सूत्रकारो बीजादिसम्बन्धे नि)न्धनियमाभावं सूत्रितवानित्यतो नोत्सूत्रत्वपर्यनुयोगो युक्त इति ।

यदुक्तमेवं सत्याकस्मिकत्वप्रसङ्ग इति तत्परिहरति कारणतश्चेति ।

कारणतश्च ताम् ॥ ३-१-२० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने

तृतीयाध्यायस्य प्रथमः पादः ॥ ३-१ ॥

**तां च बीजादिसंबन्धनियमोज्झितिं कारणत आह । एतदुक्तं भवति । जन्मकारणादृष्टाकृष्टो जन्तुर्बीजादिसंबन्धेन शरीरमापद्यत इत्युत्सर्गः । स च क्वचिज्ज्ञानतपोयोगाद्यतिशयलक्षणेन कारणविशेषेणापोद्यते । यथा क्षुद्रजन्तुयातनाशरीरोत्पत्तावपवाद इति । तथा चोक्तम् । 'विशेषकारणादेव विशेषाज्जनिरिष्यते । सामान्यजननं चैव नृणां सामान्यहेतुत' इति । अतो युक्तमेतद्व्याख्यानमिति ॥ ३-१-२० ॥**

**इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ॥ कृतायां टीकायां विषमपदवाक्यार्थविवृतौ तृतीयेऽध्यायेऽयं प्रथमचरणः पर्यवसितः ॥ ३-१ ॥**

शे०— ननु बीजपुरुषयोनीनामित्याद्युत्तरभाष्यमनर्थकम् । न च बीजादिसम्बन्धनियमाभावस्याथशब्दोक्तत्वकथनार्थमेतदिति वाच्यम् । तत्कथनस्याप्यानर्थक्यादित्यतो योनेः शरीरमित्येतत्सूत्रीयभाष्यव्याख्यानसमर्थनार्थत्वाचस्या नानर्थक्यमित्यभिप्रेत्यैतत्सूत्रोपन्यासपुरःसरं तद्भाष्यव्याख्यानमनूद्य तत्रानुपपत्तिं चाशङ्क्य तत्परिहारेण भाष्यव्याख्यानसमर्थनपरतयोत्तरवाक्यं योजयति **अत्र सूत्रमित्यादिना ॥ कललबुद्बुदादिक्रमेणेति** । आदौ कललमनन्तरं बुद्बुदमनन्तरं कर्कन्धुरनन्तरं पेश्यण्डमित्यादिक्रमेणेत्यर्थः । 'कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् । दशाहेन च कर्कन्धुः पेश्यण्डं च ततः परम् । मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः । नखलोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः । चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडादय' इति वचनादिति भावः ॥ **न च वचनान्तरेति** । 'देहं गर्भस्थितं क्वापि प्रविशेदि'त्युदाहृतवचनम् । मान्धात्रादीनां विनैव बीजसंबन्धेन जननदर्शनं च लिङ्गदर्शनम् । एतदुभयविरोध इति च न वाच्यमित्यर्थः ॥ **आकस्मिकत्वं स्यादिति** । अत्र तज्जनेरिति शेषः । नन्वत्र सूत्रेऽथशब्द एव नास्ति । सद्भावेऽपि वा तेन कथमुक्तार्थस्य लाभः । येनोत्सूत्रितत्वशङ्कापरिहार इत्यत आह **अयमर्थ इति ॥ प्रकृतादर्थादर्थान्तरे वर्तत इति** । न च तत्र मानाभावः । यत्रार्थान्तरेऽभिहितेऽर्थान्तरविवक्षया ब्रवीत्यथैवं मन्यस इति तत्रार्थान्तरविवक्षयाऽप्यथशब्दप्रयोगस्यैव तत्र मानत्वादिति भावः ।

ननु यद्युक्तनियमस्तदा **कारणतोऽपि** न तस्योज्झितिः सम्भवति । तत्सम्भवे च न नियमत्वमित्यतो नियमस्वरूपं कारणविशेषस्वरूपं चोपदर्शयन्नेव तत्सम्भावकमप्याह **एतदुक्तं भवतीति ॥ क्वचिदिति** । मान्धातृद्रुपदादिष्वित्यर्थः ॥ **यथेति** । क्षुद्रजन्तवश्च यातनाशरीराणि तेषामुत्पत्ताविति विग्रहः । अत्र च क्षुद्रजन्तुपदं मशकादिशरीरपरम् । यातनाशरीरपदं च नारकिणामिति शेषपूरणेन नारकीययातनाशरीरपरम् । ततश्च मशकादिशरीरोत्पत्तौ यातनाशरीरोत्पत्तौ चोक्तविधस्य चोत्सर्गस्याधर्मविशेषलक्षणेन कारणविशेषेणापवादो यथेत्यर्थः । न च यातनाशरीराणामपि बीजादिसम्बन्धापेक्षत्वा-

नाधर्मविशेषसाध्यत्वमिति वाच्यम् । तत्सापेक्षशरीराणामाकल्पमथ कुम्भीपाकक्रकचदारणादिदुःखसहनाक्षमत्वेन नारकिशरीराणामपि तत्सहनाक्षमत्वप्रसङ्गात् ॥ **तथा चोक्तमिति** । न्यायविवरण इति शेषः ॥

॥ ३-१-२० ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां निजशिष्यस्य केशवस्य कृतौ
श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां
तृतीयाध्यायस्य प्रथमः पादः ॥

स०— **न च वचनान्तरेति** । 'देहं गर्भस्थितं क्वापि' इत्युदाहृतवचनं मान्धात्रादीनां विनैव बीजादिसंबन्धं जननदर्शनं लिङ्गदर्शनं एतदुभयविरोधेनेत्यर्थः ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितानुव्याख्यानस्य श्रीमज्जयतीर्थविरचितायाः सुधायाः
श्रीमत्सत्यव्रततीर्थविरचितायां टिप्पण्यां तृतीयाध्यायस्य प्रथमपादः ॥

प०— **अत्रेति** । तदन्तरपादे इत्यर्थः ॥ **सूत्रमिति** । अन्तिमसूत्रमिति ज्ञेयम् । एतत्सूत्रस्यानुव्याख्यानप्रवृत्तौ बीजं 'एतदयुक्तमि'त्यादिनावक्तुं भाष्योक्तव्याख्यानं 'तद्धि तथ्यमुतातथ्यमि'त्यादिनाऽनुवदितुं तदुपयुक्तमाह **स्वर्गादिति** ॥ **रेतःसिचमिति** । एतेन 'रेतःसिग्योगोऽथे'ति सूत्रार्थोऽनूदितो भवति ॥ **इति प्रसिद्धमिति** । 'कर्मणा दैवतन्त्रेण जन्तुर्देहोपपत्तये । स्त्रियः प्रविष्ट उदरं पुंसो रेतःकणाश्रयः । कललं त्वेकरात्रेणेत्यादिना तृतीयस्कन्धे द्वात्रिंशाध्याये प्रसिद्धमित्यर्थः । तत्र तत्र प्रमाणेषु च प्रसिद्धमित्यर्थः ॥ **बहुकल्पनेति** । स्वर्गादित्यादिनोक्तेत्यर्थः । धूमो भूत्वेति श्रुतिर्व्याख्याता 'न स्वाभाव्यापत्तिरुपपत्तेरि'ति सूत्रभाष्यादौ । **अभ्याशः** शीघ्रम् ॥ **यथोक्तमिति** । भाष्ये उक्तमित्यर्थः ॥ **आकस्मिकत्वमिति** । निष्कारणत्वं स्यात् जन्मन इति योज्यम् ॥ **ज्ञानतपोयोगादिति** । **ज्ञानम्** अपरोक्षज्ञानम् । **तपः** कायशोषणादि । **योगः** समाधिः । आदिपदेन सत्कर्मानुष्ठानादिग्रहः ॥ **क्षुद्रजन्त्विति** । पिपीलिकादिरूपक्षुद्रजन्तूनां शरीरोत्पत्तौ, (प्राणि)पापिनां यातनाशरीरोत्पत्तौ च यथा बीजादिसंबन्धनियमो नास्ति तथेत्यर्थः ॥ **तथाचोक्तमिति** । न्यायविवरण इति योज्यम् ॥ ३-१ ॥

इति श्रीमत्सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते श्रीमन्न्यायसुधापरिमळाख्याने
तृतीयाध्यायस्य प्रथमः पादः ॥

या०— ॐ **योनेः शरीरम्** ॐ ॥ **कललबुद्बुदादिक्रमेणेति** । 'कललं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् । दशाहेन तु कर्कन्धुः पेश्यण्डं च ततः परम् । मासेन तु शिरो द्वाभ्यां बाह्वङ्घ्र्याद्यङ्गविग्रहः । नखरोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभिः । चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडादयः' इति क्रमेणेत्यर्थः । मेघो भूत्वेत्यादिश्रुत्यर्थस्तु मेघो भूत्वा मेघस्थो भूत्वा प्रवर्षति वर्षान्तर्गतो भवति । ते

कर्मिण इह लोके केचिद्व्रीहियवाः केचिदोषधिवनस्पतयः केचित्तिलामाषाः । इतिशब्दोऽन्योपलक्षणार्थः । जायन्तेऽन्याधिष्ठिते व्रीह्यादिशरीरे प्रविशन्ति न तु तदभिमानिनो भवन्ति । यथोक्तम् । 'अन्याधिष्ठिते पूर्ववदभिलापादिति । यो यः पुरुषो ह्यन्नमत्ति यश्च रेतस्सिञ्चति तद्भूय एव भवति तमेवानुप्रविशति तत्तत्र कर्मिषु ये रमणीयचरणाः साधुयज्ञादिमन्तस्त इह भूमौ रमणीयां योनिमापद्येरन् । आपद्येरन्निति यत् तच्चाभ्याशः कालसामीप्येन वत्सरात्पूर्वमेवेत्यर्थ इति । 'कारणतश्च तामि'ति मूलं स्थापयितुमाह **यदि च क्वचिदिति** । आकस्मिकत्वं स्यात्तज्जनेरिति शेषः । योगादीत्यत्रादिपदेन पापसंग्रहः । अत एवाह **यथा क्षुद्रजन्त्विति** अत्र क्षुद्रजन्तुशब्देन मशकादिकं विवक्षितम् । तदनन्तरं नारकीति शेषः । तथाच क्षुद्रजन्तूनां नारकिणां यातनाशरीरोत्पत्तौ चोक्तनियमस्य प्रकृष्टपापलक्षणेन कारणविशेषेणापवादो यथेत्यर्थः । क्षुद्रजन्तूनां नारकिणां च शरीराणीति संस्थानिसंस्थानभेदविवक्षया भोक्तृभोगायतनभेदविवक्षया वा षष्ठीति ज्ञातव्य । यातना नरकपीडा तस्यै शरीराणि-यातनाशरीराणि तेषामुत्पत्तावित्यर्थः । एतच्च किरणावलीरीत्या व्याख्यातम् । वस्तुतस्तु क्षुद्रजन्तवो नीचजीवास्तेषां यानि नरकस्थानि यातनाशरीराणि तेषामुत्पत्तावित्यर्थोऽवगन्तव्यः ॥ ३-१-२० ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्ययदुपतिविरचितायां श्रीमन्न्यायसुधाटिप्पण्यां तृतीयाध्यायस्य प्रथमः पादः ॥

**श्री०—ॐ योनेः शरीरम् ॐ ॥ बहुकल्पनेति** । 'स्वर्गादर्वागगत इत्यादिनोक्तेत्यर्थः । **ते** वादाः । स्वर्गादवागगतो देही व्रीह्यादीतरदेहगः' इत्याद्या वादा इत्यर्थः । **अन्यथासिद्धिः** देहं गर्भस्थितं' 'मान्धात्रि'त्यादिनोक्तान्यथासिद्धिरित्यर्थः । **वचनान्तरं** देहं गर्भस्थितमित्येवंरूपम् । **लिङ्गदर्शनं** मान्धात्रादीनां विनैव बीजादिसंबन्धेन जननदर्शनरूपम् ॥ **व्याख्यातुमिति** । तथा च बीजादिद्वारा प्राप्तयोनेः सकाशाच्छरीरमाप्नोतीति व्याख्याने उक्तार्थलाभान्नोत्सूत्रितत्वशङ्केत्यर्थः ॥ **तत्संबन्धेति** ! बीजादिद्वारा योनिसंबन्धेत्यर्थः । **क्वाचित्को** मान्धात्रादौ दृष्टः । **तदभावो** योन्यादिसंबन्धेन जननाभावोऽपि न प्रतीयते सूत्र इत्यर्थः । **क्वचित्** मान्धात्रादौ । तदेवेत्यनन्तरं मान्धात्रादिजनेरित्यर्थः । **अपवाद इति** । तत्र यथा पापेनापवादस्तथाऽत्रापि क्वचिन्मान्धात्रादौ पुण्यविशेषेणापवाद इत्यर्थः । ॥ ३-१-२० ॥ इति वैराग्यपादः समाप्तः ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽगृहीतसुधावाक्यार्थविवरणे तृतीयाध्यायस्य प्रथमः पादः ॥ ३-१ ॥

## ॥ इति तृतीयाध्यायस्य प्रथमः पादः ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

सु०— 'भक्तिरस्मिन्पाद उच्यते । भक्त्यर्थं हि भगवन्महिमोक्तिरि'ति पादप्रतिपाद्यं भाष्य एव स्फुटम् । सङ्गतिं तूत्तरत्र वक्ष्याम इत्याशयवानेतत्पादाधिकरणेषु **पूर्वपक्षसिद्धान्त-युक्तीः** संग्रहेणाह पश्चादिति ।

अनु०— पश्चाददृष्टयविज्ञानकालदुःखपृथग्भवाः ॥
स्थानभेदो विरुद्धत्वं न्यायसाम्यं स्वतो भवः ॥
गुणसाम्यमयोगश्च तर्कबाधो विलोमता ॥
नानाभावः प्रलोभश्च युक्तयः पूर्वपक्षगाः ।
अशक्यकर्तृताशक्तिः स्वतो बोधस्तथैव च ॥
अमानक्लृप्तिसन्मानव्यवस्थाऽत्यल्पता भवाः ॥
विशेषदृष्टिवाक्ये च पुंशक्तिः सुनिदर्शनम् ॥
अलौकिकत्वमाधिक्यं स्वातन्त्र्यं निर्णयप्रमाः ॥

पूर्वपक्षगाः **पूर्वपक्षसंबन्धिन्यः** । निर्णयप्रमाः **सिद्धान्तनिर्णयार्थानि प्रमाणानि** ।

---

शे०— यद्विद्याधिशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥

एकवाक्यत्वादिसिद्ध्यर्थतयाऽवश्यवक्तव्यपादप्रतिपाद्यसङ्गत्योरकथनेन प्रसक्तामनुव्याख्याने न्यूनतां तदनुक्तौ निमित्तकथनेन परिहरन्नेव पश्चाददृष्टीत्युत्तरग्रन्थानर्थक्यमाशङ्क्य परिहरति **भक्तिरि-त्यादिना** । **उत्तरत्र** तृतीयपादे ॥ **वक्ष्याम इति** । 'वैराग्यतो भक्तिदार्ढ्यमि'त्यादिनेति शेषः ॥ **संग्र-हेणेति** । भाष्य एव सूत्राणां स्पष्टार्थतया सर्वत्र वक्तव्यविशेषाभावात्सङ्ग्रहः । परमाख्यविद्याव्याख्यां करोमीति प्रतिज्ञासिद्ध्यर्थत्वाच्च वचनमिति भावः । अमूर्तानां युक्तीनां पूर्वपक्षं प्रति गमनानुपपत्तेराह **पूर्वपक्षसम्बन्धिन्य इति** । प्रमाया निर्णयत्वाव्यभिचारान्निर्णयपदानर्थक्यं युक्तीनामप्रमितिरूपत्वात्प्रमा-शब्दस्य प्रमितिपरत्वानुपपत्तिश्चेत्यतोऽत्र निर्णयशब्दस्य सिद्धान्तनिर्णयपरत्वं प्रमाशब्दस्य प्रमाणपरत्वं शाकपार्थिवादित्वं चाभिप्रेत्य व्याख्याति **सिद्धान्तेत्यादि** ।

स०— **संध्ये** ॥ पादप्रतिपाद्यसङ्गत्योरवचनेन न्यूनत्वं परिहरति **भक्तिरित्यादिना** ॥ **उत्तर-त्रेति** । उपासनापाद इत्यर्थः । अमूर्तानां युक्तीनां पूर्वपक्षं प्रति गमनासंभवादाह **पूर्वपक्षसंबन्धिन्य इति** ।

प्रमितिः प्रमेति भावव्युत्पत्तेः सुप्रसिद्धत्वेन युक्तीनां प्रमत्वाभावात् निर्णयप्रमात्वानुपपत्तिः । निर्णयपद-वैयर्थ्यं चेत्यतः करणव्युत्पत्त्या प्रमासाधनत्वं निर्णयप्रमा इत्यत्र चतुर्थीसमासं मनसि निधायाह **निर्णयार्थानीति** ।

**प०** — आदावेव न्यायसंग्रहोक्तेरनवसरदुःस्थत्वमाशक्याह **भक्तिरिति** ॥ **उत्तरत्रेति** । उपरितनपाद इत्यर्थः ॥ संग्रहेणाह **पश्चादितीति** । अत्रायं विवेकः । संध्ये सृष्टिराह हि । पश्चाददृष्टिः, अशक्यकर्तृताशक्तिः ॥ पराभिध्यानात् । अविज्ञानं, स्वतो बोधः ॥ देहयोगाद्वासोपि । कालः तथै(दे)व चेति अस्वातन्त्र्यादिनिबन्धनः स्वतो बोध एवात्रापि मानमित्यर्थः ॥ तदभावो नाडीषु । दुःखं, अमानक्लृप्तिः ॥ अतः प्रबोधोऽस्मात् । पृथग्भवः, सन्मानम् ॥ मुग्धेऽर्धसंपत्तिः । पृथग्भवः, सन्मानम् ॥ न स्थानतोपि । स्थानभेदः, व्यवस्था ॥ अरूपवदेव हि । विरुद्धत्वं, व्यवस्था ॥ अत एव चोपमा । न्यायसाम्यं, अत्यल्पता ॥ अंबुवद्ग्रहणात् । स्वतो भवः, भवः ॥ वृद्धिह्रासभाक्त्वं । गुणसाम्यं, विशेषदृष्टिः ॥ प्रकृतैतावत्त्वं हि । अयोगः, विशेषवाक्यं, चकारादन्नदानाद्युपपत्तिश्च ॥ तदव्यक्तमाह हि । तर्कबाधः, पुंशक्तिः ॥ उभयव्यपदेशात् । विलोमता, सुनिदर्शनं ॥ परमतः । विलोमता, अलौकिकत्वम् ॥ स्थानविशेषात् । नानाभावः आधिक्यम् ॥ तथान्यत् । नानाभावः, आधिक्यं ॥ अनेन सर्वगतत्वं । नानाभावः, स्वातन्त्र्यं ॥ फलमत उपपत्तेः । प्रलोभः, स्वातन्त्र्यमिति । अकर्तरि च कारके संज्ञायामिति करणे घञ्प्रत्ययः, माङ्माने इति धातुरिति भावेनाह **सिद्धांतनिर्णयार्थानीति** ।

---

**या०** — **उत्तरत्रेति** । उपासनापाद इत्यर्थः ।

**च०** — श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः ॥ सुनन्दतात्सेवया मे भक्त्यलंकृतयाऽनया ॥

एकवाक्यत्वपूर्वोत्तरपादभेदापरक्ताधिगतिफलकप्रकृतपादप्रतिपाद्यसङ्गत्यनभिहितिनियन्त्रितां मौलन्यूनतां तद्बीजसङ्कीर्तनेन प्रतिविदधानः पश्चादित्याद्यानुपूर्वीकोत्तरप्रतीकानर्थक्यशङ्कां प्रतिविधत्ते **भक्तिरित्यादिना । उत्तरत्रोपासनाचरणे । वक्ष्यामः** 'वैराग्यतो भक्तिदार्ढ्यमि'त्यादिनाऽभिधास्यामः । आदावेव न्यायसंग्रहोक्तेरनवसरदुःस्थत्वमाशङ्क्याह भक्तिरितीत्यप्यवतारयन्ति । गमेरप्ययं डो वक्तव्य इति भाष्यभाषितकर्तृसाधनडप्रत्ययान्तमौलपदेन पूर्वपक्षकर्मकगमनकर्तृता विशेषिता इतिसमभिव्याहृतपदोपस्थाप्यामूर्तयुक्त्यनन्वितो भायात् । तथा मा भूदिति प्रकृतौपयिकार्थमभिधत्ते **पूर्वपक्षेति** । प्रमायां नैसर्गिकनिर्णयत्वप्रत्यायनफलवैधुर्येण प्रमापदसमानविभक्तिकपदोपस्थाप्ययुक्तिषु तत्तादात्म्यबाधेन च तादृङ्न्यासस्य दुस्सङ्गमतेत्यतः समासघटकनिर्णयपदस्योत्तरवाद्यभिमतार्थगोचरनिर्णयत्वावच्छिन्नलक्षकतां प्रोपसृष्टप्रकृत्यंशस्य 'अकर्तरि च कारके' इत्यनुशिष्टकर्तृभिन्नकारकसामान्यान्तर्गतकरणसाधनघञन्ततां समानाधिकरणाधिकारे शाकपार्थिवादीनां वोत्तरपदलोपो वक्तव्य इति कात्यायनवचनं च प्रतिसन्दधानस्तदभिप्रेतार्थं व्यनक्ति **सिद्धान्तेति** ।

सु०— ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ योनेः शरीरमित्येतदवसानैः सूत्रैर्जीवस्य जन्मावगतम्। जातस्य च स्वप्नाद्यवस्थासंबन्धः प्रसिद्धः। तत्र स्वप्नावस्थाप्रवर्तकत्वलक्षणो महिमा भगवतोऽत्राधिकरणे निर्णीयते। तथा हि। स्वप्नो नामार्थज्ञानात्मकः। तत्र तावत्स्वाप्नार्थानां करितुरगादीनां परमेश्वरायत्तता नोपपद्यते। असत्यत्वात्। न तावदिमेऽनादिनित्याः। स्वप्नावस्थातः प्रागूर्ध्वं चोपलब्धिप्रसङ्गात्। न हि विद्यमाना अप्युपलब्धिसाधनेषु चक्षुरादिष्वनुपरतेषु नोपलभ्यन्ते, उपलभ्यन्ते चोपरतेष्विति संभवति। न चान्यत्र गताः। अन्यैरप्यनुपलम्भात्। मध्यमपरिमाणाश्चैते दृश्यन्ते। न च तथाविधमनादिनित्यं किमपि दृष्टम्। नाप्युत्पत्तिनाशवन्तः। तथात्वेऽपि प्रागूर्ध्वमुपलम्भप्रसक्तेः। न च वाच्यं विद्युदादिवत्तदैवोत्पत्तिर्विनाशश्चेति। इत्थंभावे प्रमाणाभावात्। प्राङ्मृदादीनामूर्ध्वं कपालादीनां चोपलम्भादर्शनाच्च। न चैतेषां (तात्कालिक)तत्कालीनजन्मन्युपादानं निमित्तं च पश्यामः। कर्ता च न तावज्जीवात्मा। द्रष्टुर्निर्व्यापारत्वात्। अपरस्य चादर्शनात्। नापीश्वरः। प्रमाणाभावात्। भ्रान्तित्वं चैतेषाम्, 'स्वप्नमायासरूपे'ति 'स्वप्नमनोरथो यथे'त्यादिश्रुतिस्मृतिभ्यामावेद्यते। शिष्टमपव्याख्यानानुवादे वक्ष्यामः। तदेवं न स्वाप्नानामर्थानामीश्वराधीनत्वम्। नापि तज्ज्ञानस्य। तस्यापि निमित्ताभावेनापरमार्थत्वात्। न तावच्चक्षुरादीनां त(त्र निमि)न्निमित्तत्वम्। तेषामुपरतत्वात्। नापि मनसः। रूपादिमत्यर्थे स्वातन्त्र्याभावात्। अत एव न साक्षिणः। इन्द्रियाप्रवृत्तौ लिङ्गशब्दयोरपि नावकाशः। अपरोक्षाकारं चेदमवभासते। अतोऽर्थज्ञानरूपा स्वप्नावस्था नेश्वराधीनेति प्राप्ते तत्प्रतिविधानायोपोद्घातमाह वासना इति।

अनु०— ॐ सन्ध्ये सृष्टिराह हि ॐ ॥
ॐ निर्मातारं चैके पुत्रादयश्च ॐ ॥
ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ ॥
वासनाः सर्ववस्तूनामनाद्यनुभवागताः ॥
सन्त्येवाशेषजीवानामनादिमनसि स्थिताः ॥

भावनाऽपरनामकाः संस्काराः। सर्वग्रहणप्रयोजनमुत्तरत्र भविष्यति। ननु भावनाख्यसंस्कारोऽनुभवजन्यः। न च सर्वजीवानां सर्ववस्त्वनुभवोऽस्ति। तत्कथमशेषजीवानां सर्ववस्तुवासनाः सन्त्येवेत्यत उक्तम् अनादीति। अनाद्यनुभवप्रवाहोत्पन्नाः। वासनानामात्मसमवेतत्वं वैशेषिकादिभिरभ्युपगतम्। तन्निरासार्थमुक्तं मनसि स्थिता इति। जातावेकवचनम्। सादिनो मनसः कथमनादिवासनासंबन्ध इत्यत उक्तम् अनादीति।

शे०— ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ ननु जीवस्य स्वप्नाद्यवस्थासंबन्ध एव तावदसिद्ध इति न तस्य भगवदधीनत्वनिरूपणावसर इत्यतस्तत्सिद्धिमुपपादयति **योनेरित्यादिना** । जातस्येत्यतः-परं जीवस्येत्यनुवृत्तेर्न घटादौ व्यभिचार इति ध्येयम् । पूर्वपक्षाभिधानं प्रतिजानीते **तथा हीति** । स्वप्नस्यार्थज्ञानात्मकत्वं विनाऽर्थज्ञानयोरसत्यत्वेन भगवदनधीनत्वेन च स्वप्नस्यासत्यत्वभगवदनधीनत्वयोर-सिद्धेस्तत्सिद्ध्यर्थं स्वप्नस्यार्थज्ञानात्मकतां तावदाह **स्वप्नो नामेति** ॥ **तत्रेति** । अर्थज्ञानात्मके स्वप्न इत्यर्थः । असत्यत्वमेव कुतस्तेषामित्यतः सत्यत्वे संभावितप्रकारयोरन्यतरस्याप्यसंभवादेव तत्सिद्धिरित्य-भिप्रेत्य तत्कथमित्यतः किं तेऽनादिनित्या उतोत्पत्तिविनाशवन्त इति विकल्पं मनसि निधायाद्यं पक्षं प्रतिक्षिपति **न तावदिति** । कुतो नेत्यतः किमत्र पक्षे तेऽतीन्द्रियाःकिंवा इन्द्रिययोग्याः । नाद्यः । स्वप्नकालेऽप्यनुपलम्भप्रसङ्गात् । द्वितीयेऽपि किं यत्र प्रतीयन्ते तत्रैव सन्तीत्यभिमतं किंवाऽन्यत्र गता इति विकल्पं मनसि निधायाद्यं दूषयति **स्वप्नावस्थात इति** । अप्रयोजकत्वं परिहरति **न हीति** । द्वितीयमाशङ्क्य निषेधति **न चान्यत्रेति** । पक्षद्वयमनुमानविरोधेनापि दूषयति **मध्यमेति** । आद्यद्वि-तीयमाशङ्क्य निषेधति **नापीति** । तत्कुत इत्यतः किमत्र तदैवोत्पत्तिविनाशवन्त इत्यभिमतमुत नेति विकल्पद्वयं मनसि निधाय द्वितीयं दूषयति **तथात्वेऽपीति** । प्रागूर्ध्वमित्यत्र स्वप्नावस्थात इति शेषः । आद्यमाशङ्क्य निषेधति **न चेति** ॥ **इत्थम्भावे** तदैवोत्पत्तिविनाशत्वे । अङ्गीकृत्यापि तदैवोत्पत्ति-विनाशवत्त्वं किं ते प्रसिद्धमृदाद्युपादाननिमित्तकाः किंवा तद्विलक्षणोपादाननिमित्तका इति विकल्पद्वयं मनसि निधायाद्यं दूषयति **प्राङ्मृदादीनामिति** । द्वितीयं प्रमाणाभावेन दूषयति **न चैषामिति** । कर्त्रभावाच्च न तत्कालीनं जन्म संभवतीत्यभिप्रेत्य तत्कथमित्यतः स किं जीवात्मा ईश्वरात्मा वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **कर्ता चेति** । एषां तत्कालीने जन्मनीत्यनुवर्तते । कुतो नेत्यतः किमत्र स स्वात्मेत्यभिमतं परात्मा वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **द्रष्टुरिति** । व्यापारवतः कारणस्यैव करणत्वान्न निर्व्यापारस्य द्रष्टुः कर्तृत्वम् । अन्यथाऽतिप्रसङ्गादिति भावः । द्वितीयं दूषयति **अपरस्य चेति** । आद्ये द्वितीयं दूषयति **नापीति** । अस्त्वेवं स्वाप्नानां करितुरगादीनां सत्यत्वे संभावि-तप्रकारानुपपत्त्या सत्यत्वासंभवः । तथाऽपि नासत्यत्वं प्रमाणाभावादित्यतः श्रुतिस्मृतिभ्यां तत्साधयति **भ्रान्तित्वं चेति** । भ्रान्तिकल्पितत्वं चेत्यर्थः । न केवलं तात्कालीने जन्मन्युपादाननिमित्तकर्तृणाम-भावात्करितुरगादीनामसत्यत्वं किन्तूचितदेशकालसंपत्त्यभावाच्चेत्याशयेनाह **शिष्टमिति** । कथं तन्नि-मित्ताभाव इत्यतस्तद्धि भवत्किमिन्द्रियं लिङ्गं शब्दो वा । आद्येऽपि प्राकृतमप्राकृतं वा । प्राकृतत्वेऽपि बाह्यमान्तरं वेति विकल्पान्मनसि निधाय क्रमेण दूषयति **न तावदित्यादिना** । **उपरतत्वात्** निर्व्यापा-रत्वादित्यर्थः । निर्व्यापारस्यापि कारणतायामतिप्रसङ्गादिति भावः ॥ **अत एवेति** । रूपा-

दिमत्यर्थे तस्य स्वातन्त्र्याभावादेवेत्यर्थः ॥ **इन्द्रियाप्रवृत्ताविति** । प्रत्यक्षस्यानुमितिकारणपक्षसाध्यहेतुव्याप्त्यादिग्राहकतया शाब्दधीहेतुशब्दस्वरूपतद्धर्मयोग्यतादिग्राहकतया च लिङ्गशब्दौ प्रत्युपजीव्यत्वादिन्द्रियाप्रवृत्तावनुमितिशाब्दधीहेतुभूतलिङ्गशाब्दादिग्रहाभावादिति भावः । स्वाप्नपदार्थज्ञानस्यापरोक्षत्वाच्च न लिङ्गशब्दजन्यतेत्याशयेन तस्यापरोक्षाकारतां प्रमाणेनोपपादयति **अपरोक्षेति** ॥ **तत्प्रतिविधानायेति** । 'संस्कारैर्भगवानेवे'त्यादिनेति शेषः ।

वासनाशब्दस्य भगवदिच्छार्थकत्वेऽपि तस्यापि निमित्तमात्रत्वेनोपादानत्वाभावेन तत्परत्वानुपपत्तेः संस्कारमात्रपरत्वेऽपि वेगादिपरत्वानुपपत्तेरुपादानीभूतभावनारूपसंस्कारमात्रपरतया तं व्याचष्टे **भावनेति** । **उत्तरत्रेति** । **'अदृष्टे चाश्रुते भावे'** इत्युत्तरत्रेत्यर्थः । अनुभवस्यानादित्वाभावेनानादित्वस्य तद्विशेषणताया बाधितत्वादाह **अनाद्यनुभवप्रवाहोत्पन्न इति** । मनोव्यक्तीनां बहुत्वेन मनसीत्येकवचनस्य व्यक्तिरूपार्थैवयविवक्षाधीनत्वानुपपत्तेराह **जाताविति** । जातिरूपार्थैवयविवक्षायामित्यर्थः । **अनादिवासनेति** । यद्यपि न वासनानामनादित्वमस्ति तथाप्यनुभवप्रवाहस्यानादित्वात्तज्जन्यवासनानामपि प्रवाहतोऽनादित्वमवर्जनीयमित्याशयेनैतदुक्तमिति ध्येयम् ।

स०— **जातस्य चेति** । चेतनस्येति विशेषणान्न घटादौ व्यभिचारः । सिद्धान्त्यभिप्रेतं स्वाप्नपदार्थसत्यत्वमसहमान आह **तत्रेति** । सिद्धान्तिना सत्यत्वेनाङ्गीकृतानां पदार्थानां केषाञ्चिदनादिनित्यत्वेनोत्पत्तिविनाशवत्त्वेन च दृष्टत्वात् स्वप्नार्थानामप्यनादिनित्यत्वं वोत्पत्तिविनाशवत्त्वं वाऽभ्युपेयमिति भावेनानादिनित्यत्वेऽपि यत्र प्रतीयन्ते तत्रैव तिष्ठन्ति किमन्यत्र गता इति विकल्पं मनसि निधायाद्यं दूषयति **न तावदित्यादिना** । **अत्र** तत्रैव सन्तीति शेषः । अप्रयोजकत्वं परिहरति **न हीति** । द्वितीयमनूद्य दूषयति **न चान्यत्रेति** । पक्षद्वयमपि साधारणदोषेणापि दूषयति **मध्यमेति** । द्वितीयेपि किं प्रसिद्धमृदाद्युपादानकाः किं वाऽप्रसिद्धतदुपादानका इति विकल्पं मनसि निधायाद्यं दूषयति **नापीति** । **इत्थंभावे** विद्युदादिवत् तदैवोत्पत्तिविनाशवत्त्वे । द्वितीयं निराह **न च तेषामिति** । कर्तापि किं जीव उच्यते, उतेश्वरः, अन्यो वेति मनसि निधाय क्रमेण दूषयति **द्रष्टुरित्यादिना** ॥ **प्रमाणाभावादिति** । ईश्वरस्य स्वाप्नकर्तृत्व इति शेषः । साधकाभावमुक्त्वा बाधकं चाह **भ्रान्तित्वं चेति** । **शिष्टमिति** । अन्तर्वा तद्दर्शनं बहिर्वेत्यादिकं इत्यर्थः । **अत एव चेति** । रूपादिमत्यर्थे तस्य सामर्थ्याभावादेवेत्यर्थः । साक्षिणस्तत्र निमित्तत्वमिति शेषः ॥ **इन्द्रियाप्रवृत्ताविति** । धर्मिलिङ्गव्याप्त्यादिग्राहकत्वात्प्रत्यक्षस्य तदप्रवृत्तौ नानुमाप्रवृत्तिः । श्रुतस्य शब्दस्य गमकत्वात्प्रत्यक्षाप्रवृत्तौ श्रवणाभावेन नागमस्यापि प्रवृत्तिरित्याशयः । स्वाप्नपदार्थज्ञानस्यापरोक्षतया प्रतीयमानत्वाच्च न लिङ्गजन्यतेत्याह **अपरोक्षेति** । वासनाशब्दस्य भगवदिच्छार्थकत्वस्य वक्ष्यमाणत्वात्तस्याश्च निमित्तमात्रत्वेनोपादानत्वासंभवात्संस्कारपरो वासना

शब्द इत्याह **भावनेति** ॥ **उत्तरत्रेति** । 'अदृष्टे चाश्रुते भावे' इत्यत्रेत्यर्थः । **जातावेकवचनमिति** । धर्म इत्यर्थः । ननु धर्मोपि नैयायिकवन्नैकस्तत्कथमेकवचनम् । यदि सादृश्यादैक्याभिप्रायेण तदिति मन्यसे तर्हि धर्मिण्येव तदभिप्रायं तदस्त्विति चेन्न । अनेकत्वेपि धर्माणामिव न धर्मिणां अनुगत-व्यवहारजनकत्वं दृष्टमिति । तद्वदेकवचननिर्वाहकत्वमपि संभवितमित्यभिप्रेत्येयमुक्तिः ।

प० — **संध्ये सृष्टिराह हि** । संगत्यर्थं वृत्तानुवादपूर्वकं प्रतिपाद्यमाह **एवमिति** ॥ **एत-दवसानैः सूत्रैरिति** । 'तदन्तरप्रतिपत्तावि'त्यादिसूत्रेष्वपि जन्मसूचना(देवमु)दिकमुक्तम् । कुतः असत्यत्वं स्वाप्नानामित्यतः सत्यत्वे बाधकभावेन, श्रुतिस्मृतिभिश्चासत्यत्वं साधयति **न तावदित्यादिना वेद्यते इत्यन्तेन** ॥ **उपरतेष्विति** । निर्व्यापारेष्वित्यर्थः । **भ्रांतित्वं** शुक्तिरूप्यादेरिव भ्रांतिसिद्धत्वमित्यर्थः ॥ **'स्वप्नमायासरूपेति सृष्टिरन्यैः विकल्पिते'ति माण्डूकश्रुतिः । 'अविद्यमानो ह्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथो यथे'ति** भागवतस्मृतिः ॥ **शिष्टमिति** । रथादीनां स्वप्ने दृश्यमानानां संवृतदेशेऽवस्थानायोग इत्यादिबाधकं तु मायामात्रं त्विति सूत्रव्याख्यानानुवादप्रस्तावे वक्ष्याम इत्यर्थः ॥ **इंद्रियाप्रवृत्ताविति** । तत्प्रवृत्तावेव हि पक्षादिग्रहण(स्य)शक्तिवि(यदादिप)षयपदार्थादि-ज्ञानस्य च संभवेन अनुमानादिप्रवृत्तिः संभवतीति भावः । इन्द्रियाविषयेपि क्वचिल्लिङ्गादिप्रवृत्तिसंभवा-द्दोषान्तरमाह **अपरोक्षेति** ॥ **उत्तरत्रेति** । 'अदृष्टे चाश्रुते भावे न भाव उपजायते' इत्यत्र स्वशि-रश्छेदादेरुपलंभोपपादनं सर्ववस्तूनामित्यत्र उक्तसर्वग्रहणप्रयोजनं भविष्यतीत्यर्थः ॥ **अनादिवासनेति** । वासानानामनादित्वं प्रवाहतो ज्ञेयम् । तज्जनकानुभवानामपि तथैवानादित्वात्तदात्मनोपि तत्समानमिति । तथा च तेनैव सिद्धतापत्त्या मनस्सिद्धिर्न स्यादिति भावः ॥

या० — **ॐ सन्ध्ये सृष्टिराह हि ॐ** ॥ **ॐ निर्मातारं चैके पुत्रादयश्च ॐ** ॥ **ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ** ॥ **स्वप्नो नामेति** । स्वापज्ञो नामेत्यर्थः । असत्यत्वादित्यस्यानन्तरं सत्यत्वे चेति शेषः । ननु 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथा-न्रथयोगान्पथः सृजत' इत्यादिश्रुत्या स्वाप्नार्थानां सृष्टिस्तावदवगम्यते । 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण' इत्यादिश्रुत्या प्राज्ञस्य तत्कर्तृत्वमप्यवगम्यते । तथा च कथमसत्यत्वं तेषामुच्यत इत्यत आह **शिष्टमिति** । सृष्टिप्रतिपादकश्रुतिरुक्तबाधकैर्भाक्ततया व्याख्येया । सुप्तो हि स्वप्नदर्शननिमित्त-सुकृतदुष्कृतजनकर्तृत्वाद्रथादीनां कर्तोच्यते । निर्माणश्रुतिरप्येवं भाक्ता व्याख्येयेति । शिष्टं अवशिष्टं पूर्वप-क्षाभिप्रेतमपव्याख्यानानुवादसमये दर्शयिष्याम इत्यर्थः । तथा चापव्याख्यानकर्तैवात्र पूर्वपक्षीति भावः ॥ **इन्द्रियाप्रवृत्ताविति** । स्वाप्नार्थेष्विन्द्रियाप्रवृत्तौ सम्बन्धिग्रहणाभावेन व्याप्तिशक्तिरूपसम्बन्धयोर्ग्रहीतुमश-क्यत्वादिति भावः । नन्वेवमतीन्द्रियं स्वर्गनरकादिकमप्रामाणिकं स्यात् । न च तस्य लिङ्गेन पक्ष-

धर्मताबलाच्छब्देन च वाक्यार्थरूपतयाऽपूर्वस्यैव सिद्धिसम्भव इति वाच्यम्। प्रकृतेऽपि तथा वक्तुं शक्यत्वादित्यस्वरसादाह **अपरोक्षाकारं चेति**॥ **उत्तरत्रेति**। अदृष्टे चाश्रुते भाव इत्यत्रेत्यर्थः॥ **अनादिवासनेति**। अनुभवप्रवाहस्यानादिनित्यत्वात्तज्जन्यवासनानामपि प्रवाहतोऽनादित्वमिति भावः।

श्री०— ॐ **सन्ध्ये सृष्टिराह हि** ॐ॥ ॐ **निर्मातारं चैके पुत्रादयश्च** ॐ॥ ॐ **मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** ॐ॥ **लिङ्गशब्दयोरिति**। पक्षादिग्रहणायेन्द्रियस्यापेक्षितत्वात्तस्य चोपरतत्वात्। श्रोत्रस्य वाचश्चोपरतत्वेन शब्दस्याप्यनवकाशः। लिङ्गशब्दयोरनवकाशे हेत्वन्तरमाह **अपरोक्षेति**॥ **भविष्यतीति**। 'अदृष्टे चाश्रुते भावे न भाव उपजायते' इत्यत्र भविष्यतीत्यर्थः।

**च०— स्वप्नो नामेति**। तत्पदप्रतिपाद्यो नामेत्यर्थः। **अर्थज्ञानात्मक इति**। तत्समुदायात्मक इत्यर्थः। **तत्रेति**। प्रकृत्यंशेन सर्वनाम्ना तत्समुदायात्मकः स्वप्न सप्तम्या च समभिव्याहृतषष्ठ्यन्तार्थान्वयिनी घटकतोपस्थाप्यते। ज्ञानस्येश्वराधीनत्वप्रत्याख्यानावधिकप्राथम्यद्योतनार्थस्तावच्छब्दः। **शिष्टमिति**। स्वप्ने प्रतीयमानपदार्थसर्जनप्रतिपादकश्रुत्यादीनां भाक्तार्थकत्वं तादृशरथादीनां संवृतदेशेऽनवस्थानमित्यादिकं मायामात्रमितिसूत्रीयापव्याख्यानुवादप्रस्तावेऽभिधास्याम इत्यर्थः। **उपरतत्वात्** निर्व्यापारत्वात। **अत एव**। रूपादिमत्यर्थे स्वातन्त्र्याभावादेव। **इन्द्रियाप्रवृत्तेरिति**। इन्द्रियासन्निकृष्टपक्षीकृतस्वाप्नकरितुरगादिग्रहणाभावात् हेतोः पक्षधर्मतायाः, तादृशशक्तिनिरूपकार्थज्ञानविरहेण तन्निरूपितपदनिष्ठशक्तेश्च दुर्ग्रहत्वादिति भावः। अतीन्द्रियधर्माधर्मादिगोचरानुमितिहेतुभूतलिङ्गस्य, वाक्यार्थरूपतया शक्तिग्रहाविषयीभूततादृशार्थगोचरशाब्दधीजनकशब्दस्य च परीक्षकैरुपगततया निर्दलेयमुक्तिरित्यत आह **अपरोक्षाकारं चेति**। स्वाप्नपदार्थज्ञानस्यापरोक्षत्वाच्च न लिङ्गशब्दजन्यतेत्याशयेन तस्यापरोक्षाकारतां प्रमाणेनोपपादयति अपरोक्षेतीत्यप्यवतारयन्ति। **उत्तरत्रेति**। 'अदृष्टे चाश्रुते' इत्यत्रेत्यर्थः।

**सु०— एतदेव प्रपञ्चयति** त्रिगुणात्मकमिति।

**अनु०—** त्रिगुणात्मकं मनोऽस्त्येव यावन्मुक्तिस्सदातनम्॥
तत्रैवाशेषसंस्काराः सञ्चीयन्ते सदैव च॥

**मनस एव संस्काराश्रयत्वं नात्मन इत्यत्रोपपत्तिसूचनाय त्रिगुणात्मकमित्युक्तम्। गुणात्मकमित्येवोक्ते परिमाणादिगुणात्मकमित्यपि प्रतीतिः स्यात्। तदात्मनोऽपि समानमित्यत स्त्रिग्रहणम्। तथा च जीवात्मा न भावनाश्रयः सत्त्वादिगुणानात्मकत्वादीश्वरवत्। भावना वा सत्त्वादिगुणात्मकद्रव्याश्रया संस्कारत्वाद्वेगादिवत्। तच्च परिशेषान्मन एवेत्युक्तं भवति। सत्त्वादिगुणानभ्युपगन्तारं प्रति तु तत्स्थानेऽचेतनपदं प्रयोक्तव्यम्। त्रिगुणात्मकग्रहणं**

(च)स्वरूपकथनम् । अस्त्येव सर्वं दैवेति)देति शेषः । तथा सति मोक्षेऽपि सत्त्वात्स्वप्नाद्यवस्था-पत्तिरित्यत उक्तं विवृणोति यावदिति । यद्यपि मनः स्वरूपेण नित्यमेव तथाऽपि जीवसंबन्ध-स्तस्य मोक्षावधिरित्यत इदमुक्तम् । (तद्वै देवं) तद्वै जैवं मनो येनानन्द्येव भवतीति मुक्तावप्या-त्मनो मनःसंबन्धश्रवणात्कथं यावन्मुक्तिरित्युक्तमित्यतो वा त्रिगुणात्मकमित्युक्तम् । आत्म-स्वरूपमनसो मुक्तौ सत्त्वेऽपि जडमनोऽभिप्रेत्यायमवधिरुक्त इति । चस्तस्मादित्यर्थे । तत्रैव न त्वात्मनि ।

शे० — त्रिगुणात्मकमित्यनेन सूचितामुपपत्तिमेवाह तथा चेति । असिद्धिसाधनवैकल्यप-रिहाराय सत्त्वादित्वेन गुणविशेषणं कृतमिति ध्येयम् । आत्मनः संस्काराश्रयत्वाभावे उपपत्तिमभिधाय मनस एव तदाश्रयत्वेऽपि तामाह भावना चेति । आत्मवृत्तित्वेन साध्योपपत्तेरर्थान्तरतावारणाय सत्त्वादीति साध्ये गुणविशेषणम् । तावता सत्त्वादिगुणात्मकद्रव्याश्रयत्वसिद्धावपि कथं मनआश्रितत्व-सिद्धिरित्यत आह तच्चेति ॥ अचेतनपदमिति । तथा च न हेतुसाध्ययोरसिद्ध्यप्रसिद्धी इति भावः । तर्हि किं त्रिगुणात्मकेति मूले विशेषणेनेत्यत आह त्रिगुणात्मकेति । अनादिमनमीत्यु-क्तप्रपञ्चरूपत्वलाभायापेक्षितशेषं पूरयति सर्वदेति शेष इति ॥ स्वरूपेणेति । प्रकृतिरूपेणेत्यर्थः । इदमुक्तमिति । यावन्मुक्तिरित्युक्तमित्यर्थः । त्रिगुणात्मकमित्यस्य प्रयोजनान्तरमप्याह तद्वा इति ।

प० — अनादित्वसिद्ध्यर्थमाह सर्वदैवेति । तत्रैवेत्यनूद्यैवकारेण व्यावर्त्यमाह न त्वात्म-नीति ॥

या० — अनादिमनसीत्युक्तप्रपञ्चरूपत्वलाभायाह सर्वदेति शेष इति ॥ स्वरूपेणेति । प्रकृतिरूपेणेत्यर्थः ॥

श्री० — तर्हि तं प्रति त्रिगुणात्मकमिति विशेषणं व्यर्थमिति चेत्सत्यमित्याह त्रिगुणात्म-केति ॥ अयमवधिरुक्त इति । यावन्मुक्तिरिति मुक्तिरूपोऽवधिरुक्त इत्यर्थः ।

च० — स्वरूपेण प्रकृतिरूपेण । नित्यमेव ध्वंसाप्रतियोग्येव ।

सु० — 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च'ेति मनसो जन्मश्रवणात्कथमना-दित्वमुच्यत इत्यत आह सूक्ष्मत्वेनेति ।

अनु० — सूक्ष्मत्वेन लये सच्च प्राकृतैरुपचीयते ॥
सृष्टिकाले, यदा तन्न कुतः संसारसंस्थितिः ॥

चशब्द एवार्थे । प्राकृतैः अहङ्काराद्यैः । मन इति वर्तते । प्रलये सतोऽप्युपचया-पेक्षया जन्मश्रुतिरिति भावः । कुत एषा कल्पना । मुख्यार्थे बाधकसद्भावादित्याह यदेति ।

**यदि मनो मुख्यत एव जनिमत्स्यात्तदा प्रलये तन्न स्यात् । यदि च प्रलये तन्न स्यात्तदाऽऽत्मनः संसारावस्थानं न स्यात् । न च मा भूत्प्रलये संसारावस्थानमिति युक्तम् । मुक्तानां पुनः संसारानुपपत्त्या सृष्ट्यनुपपत्तिप्रसङ्गात् । अविद्याकामकर्माद्यधीनः संसार इति चेन्न । अविद्यादेरेव संसारत्वात्, 'मनः परं कारणमामनन्ती'त्यादिस्मृतिविरोधाच्च । तथा च श्रुतिः । 'नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठती'ति । पुमान्संसारीत्यर्थः ।**

**शे०** — 'वैकारिकान्मनो जज्ञे' इति प्रमाणेन मनसो वैकारिकाहङ्कारकार्यत्वस्य 'तेषां भूतैरुपचयः सृष्टिकाले विधीयते' इति भूतकार्यत्वस्य च सिद्धेस्तदुभयपरतया प्राकृतपदं व्याचष्टे **अहङ्काराद्यैरिति** । वैकारिकाहङ्काराद्यैरित्यर्थः । आद्यपदेन भूतपरिग्रहः । ननु मनसोऽनादित्वाभावेऽपि न संसारावस्थानानुपपत्तिः । अविद्यादेः प्रलयेऽवस्थानेन तदधीनस्य संसारस्यापि तदाऽवस्थानसंम्भवादित्याशङ्कते **अविद्येति** । मनसोऽनादित्वाभावे संसारावस्थानं न स्यादिति संसारावस्थानाभावप्रतियोगित्वेनाभिमतमविद्यादिकमेवेत्याशयेनाह **अविद्यादेरेवेति** । ततश्च मनसोऽभावेऽविद्यादेरेवावस्थानं न स्यादिति प्रसङ्गस्वरूपमुक्तं भवति ॥ **मन इति** । यद्यपि श्रुतिस्मृत्योः श्रुतेः प्राबल्यात्तस्या एवादावुदाहरणमुचितं तथाऽपि स्पष्टार्थत्वाच्छ्रुतिव्याख्यानरूपत्वाद्वा प्राबल्यमाश्रित्यादौ स्मृत्युदाहरणं कृतमिति ध्येयम् । श्रुतौ मनसः संसारकारणत्वाप्रतीतेः कथं तदुदाहरणमित्यतः प्रकृतोपयोगितया व्याचष्टे **पुमान्संसारीत्यर्थ इति** ।

**स०** — 'वैकारिकान्मनो जज्ञे' इत्यादिस्मरणान्मनसो वैकारिकाहङ्कारकार्यत्वात्साक्षात्प्रकृतिकार्यत्वाभाव स्कथं तदुक्तिरित्यतो व्याचष्टे **अहङ्काराद्यैरिति** । मनसोऽनादित्वाभावेपि न संसारानुपपत्तिः अविद्याधीनत्वात्तस्येत्यादि शङ्कते **अविद्येति** । मनसोऽनादित्वाभावेपि न संसारावस्थानं स्यादिति संसारावस्थानाभावप्रतियोगित्वेनाभिमतमविद्यादिकमेवेति परिहरति **अविद्यादेरेवेति** । मनसो अभावेऽविद्याया एवावस्थानं न स्यादित्यर्थः ॥ **मन इति** । स्पष्टार्थकत्वाद्वा श्रुतिव्याख्यानरूपत्वाद्वाऽत्र स्मृत्युदाहरणमादाविति बोध्यम् । उदाहृतश्रुतौ मनसः संस्कारकारणत्वाप्रतीतेस्तदुदाहरणमयुक्तमित्यतो व्याचष्टे **पुमान्संसारीत्यर्थ इति** ।

**प०** — **अहंकाराद्यैः** वैकारिकाहंकारांशपंचमहाभूतांशैरित्यर्थः । यावन्मुक्तिरित्युक्तार्थाविरोधायाह **पुमान्संसारीत्यर्थ इति** ॥

**या०** — **अहङ्काराद्यैरिति** । वैकारिकाहङ्काराद्यैरित्यर्थः । अत्राद्यपदेन भूतानां ग्रहणम् ।

**श्री०** — **तदाऽऽत्मन इति** । प्रलये इत्यर्थः । ननु कथमेतत् । मुक्तस्यैवात्मनः सत्त्वादित्यत आह **पुमानिति** ॥

**च०** — **अहंकाराद्यैः** वैकारिकाहङ्कारांशपञ्चमहाभूतांशैः ।

सु०— किमतो यद्येवं सर्ववस्त्वनुभवादितसंस्कारसद्भाव इत्यत आह संस्कारैरिति ।

अनु०— संस्कारैर्भगवानेव सृष्ट्वा नानाविधं जगत् ॥
स्वप्नकाले दर्शयति

अत्र सृष्ट्वेत्यनेनानादिनित्यत्वपक्षदोषा अनभ्युपगमेनैव निरस्ताः । स्वप्नकाल एव सृष्ट्वेत्यनेन प्रागूर्ध्वं चोपलम्भप्रसङ्गो निराकृतः । सृष्टेः संहारोपलक्षणत्वात् । संस्कारैरित्युपादानकीर्तनम् । न च तेषां गुणत्वेनोपादानत्वानुपपत्तिः । मनोवृत्तित्वेन द्रव्यत्वात् । संस्काराणां चातीन्द्रियत्वेन द्व्यणुकजन्मविनाशयोरिव प्रागूर्ध्वं चानुपलम्भो न दोषाय । भगवानिति कर्तृनिर्देशः । तदैव सृष्टिसंहारकरणमसंभावितमित्यतोऽशक्यकर्तृताशक्तिसूचनाय भगवानित्युक्तम् । एवं च सत्यदृष्टादिनिमित्तं प्रसिद्धमेव । न केवलमेवमर्थानां सत्यत्वसंभवेन भगवदधीनत्वम्, अपि तु तज्ज्ञानस्यापीत्युक्तं दर्शयतीति । जीवायेति शेषः । दर्शनसाधनं च मन एवेति वक्ष्यति । दर्शनं चानुभवो विवक्षितः । तेन स्मरणमेवैतदिति मतं निरस्तं भवति ।

स्मरणत्वं खल्वस्य तच्चिह्नस्य तदित्युल्लेखस्य सद्भावाद्वा कल्प्यते । असन्निहितगोचरत्वाद्वा संस्कारप्रभवत्वाद्वा । नाद्यः । इदमित्युल्लेखेन तदभावात् । अत एव स्मृतिविपर्यासोऽयमिति चेन्न । स्मृतित्वस्यैवासिद्धेः । न द्वितीयः । विषयसान्निध्यस्योपपादितत्वात् । न तृतीयः । पदार्थजन्मनि संस्कारस्योपक्षीणत्वेनासिद्धेः । तस्माद्यथा मनोरथे ध्याने वा संस्कारयोनीनर्थान्मनसाऽनुभवत्येवं स्वप्नेऽपीति किमनुपपन्नम् । इयांस्तु विशेषः । मनोरथादौ प्रयत्नपूर्विका पदार्थसृष्टिः । स्वप्ने पुनरीश्व(रेच्छाधी )राधीनैवेति ।

टी०— ननु स्वप्नकाल एव सृष्ट्वेत्यनेन कथं प्रागूर्ध्वं चोपलम्भप्रसङ्गनिरासस्तत्काल एव सृष्ट्युक्त्या प्रागनुपलम्भसमर्थनेऽप्यत्र तत्काल एव विनाशानभिधानेनोर्ध्वमुपलम्भप्रसङ्गतादवस्थ्यमित्यतोऽत्र सृष्टिशब्दस्य संहारोपलक्षणत्वेन सृष्टिमात्रपरत्वाभावाद्युक्तस्तन्निरास इत्याशयेनाह सृष्टेरिति । यद्यपि गुणत्वमुपादानत्वसमाधिकरणं सत्तासाक्षाद्व्याप्यजातित्वात् द्रव्यत्ववत् । कर्मत्वस्य पक्षतुल्यत्वान्न व्यभिचार इत्यनुमानाद्गुणस्याप्युपादानत्वसिद्धेस्तत्त्वेऽपि संस्काराणां नोपादानत्वानुपपत्तिरिति शक्यते समाधातुम् । तथाप्यङ्गीकृत्य गुणस्योपादानत्वानुपपत्तिं वस्तुस्थितिमेवाह मनोवृत्तित्वेनेति । मनःपरिणामत्वेनेत्यर्थः । ननु मृदाद्युपादानकत्वे प्राङ्मृदादीनामूर्ध्वं च कपालादीनामिव संस्कारोपाद-

नकत्वेऽपि प्रागूर्ध्वं च संस्काराणामुपलम्भः स्यादित्यतस्त्र्यणुकजन्मनः प्राक् तद्विनाशानन्तरं च तदुपादानभूतद्व्यणुकानामतीन्द्रियत्वेनानुपलम्भवत्संस्काराणामप्यतीन्द्रियत्वान्न प्रागूर्ध्वं च तदनुपलम्भो दोषायेत्याह **संस्काराणां चेति** । एवञ्च **सति** कर्त्रुपादानयोः सत्त्वे सति ॥ **वक्ष्यतीति** । 'चिदचिन्मिश्रमेवैतन्मनो यावच्च संसृतिः ।' तेनावस्था इमाः सर्वा जीवः पश्यति सर्वदे'त्यादिनेति शेषः ॥ **स्मरणत्वं खल्वित्यादि** । अत्र स्वप्नपदार्थज्ञानस्य स्मरणत्वमभ्युपगच्छता तद्व्यापकतया प्रसिद्धं यत्तत्तोल्लेखादित्रितयं तदन्यतमस्य प्रकृते सत्त्वादेव स्मरणत्वमित्यङ्गीकार्यम् । व्यापकाभावे व्याप्याभावनियमात् । प्रकृते च स्मरणत्वव्यापकस्य तत्तोल्लेखादेरभावान्न तद्व्याप्यं स्मरणत्वं सम्भवतीत्यभिप्रेतम् । न तु तत्तोल्लेखादेः स्मरणत्वव्याप्यत्वाभिप्रायोऽयं ग्रन्थः प्रत्यभिज्ञायां व्यभिचारात् । न च तत्तामात्रोल्लेखित्वं हेतुः । तथा सत्यसन्निहितमात्रविषयत्वमेवोक्तदोषपरिहारायोक्तन्यायेन वाच्यं स्यात् । न च तत्सम्भवति । नीलपर्वतस्तदानीं वन्हिमांस्तदानीं धूमवत्त्वादित्यसन्निहितमात्रविषयकानुमानविशेषे व्यभिचारापरिहारादिति द्रष्टव्यम् ॥ **अत एवेति** । इदमित्युल्लेखेन तत्र तत्तानुल्लेखादेवेत्यर्थः ॥ **स्मृतित्वस्यैवेति** । तथा चान्योन्याश्रय इति भावः । **स्मृतिविपर्यासो** वैपरीत्येन स्मरणं जायत इत्यर्थः ॥ **असिद्धेरिति** । स्मृतित्वे सिद्धे तद्विपर्यासोऽयमिति कल्प्येतेति भावः । **उपपादितत्वात्** मनोवृत्तिसंस्कारोपादानकत्वोपपादनेनेति शेषः । (संस्कारैर्भगवानेवेत्यनेन) ॥ ननु तथाऽपि वासनोपादानकपदार्थानां मनसा स्वप्नावस्थायामनुभव इत्येतदसम्भावितं कथमङ्गीकार्यमित्यसम्भावनाशङ्कां परिहरन्नेवोक्तप्रमेयमुपसंहरति ॥ **तस्माद्यथेति** । नन्वेवं स्वप्नमनोरथयोर्भेदो न स्यात्संस्कारोपादानकपदार्थानां मनसाऽनुभवस्योभयत्राविशिष्टत्वादित्यत आह **इयांस्त्विति** ॥ **प्रयत्नेति** । पुरुषप्रयत्नेत्यर्थः ।

स०— ननु स्वप्नकाल एव सृष्ट्वेत्यनेन कथं प्रागूर्ध्वं चोपलम्भप्रसङ्गनिराकरणं तत्काल एव सृष्ट्या प्रागनुपलम्भसंभवेपि तत्काल एव विनाशानुक्त्योर्ध्वमनुपलम्भासंभवादित्यत आह **सृष्टेरिति** । ननु संस्कारोपादानकत्वेपि प्राक् मृदादीनामूर्ध्वं च कपालादीनामिव संस्कारोपलम्भापत्तिरित्यत आह **संस्काराणां चेति** ॥ **एवं सति** कर्त्रुपादानयोः सत्त्वे । **वक्ष्यतीति** । 'चिदचिन्मिश्रमेवैतन्मनो यावच्च संसृतिः । तेनावस्था इमाः सर्वा जीवः पश्यति सर्वदे'त्यादिनेति शेषः । **अत एवेति** । इदमित्युल्लेखादेवेत्यर्थः । **स्मृतित्वस्यैवासिद्धेरिति** । तथा च स्मरणत्वसिद्धौ प्रमुष्टतत्ताकत्वेन तदित्यनुल्लेखस्य बाधकत्वाभावसिद्धिः तत्सिद्धौ चेदमित्युल्लेखस्यान्यथासिद्धत्वेन स्मरणत्वसिद्धिरित्यन्योन्याश्रयः स्यादिति भावः ।

प०— **अनभ्युपगमेनेति** । अनादित्वपक्षानभ्युपगमेनेत्यर्थः ॥ भगवानेवेत्येवशब्दस्य स्वप्नकाल इत्यत्रान्वयमुपेत्य तत्कृत्यमाह **स्वप्नकाल एवेति** । ऊर्ध्वं चेत्युक्तस्य मूलारूढत्वायाह **सृष्टेः**

**संहारोपलक्षणत्वादिति** । सृष्ट्वेत्युक्तेः, सृष्ट्वा प्रदर्श्य संहरतीत्युपलक्षणत्वं ज्ञेयमित्यर्थः ॥ **मनोवृत्तित्वेनेति** । मनःपरिणामत्वेनेत्यर्थः ॥ **त्र्यणुकजन्मेति** । त्र्यणुकस्य जन्मविनाशयोः सतोरपि त्र्यणुकोपादानस्य द्व्यणुकस्य यथाऽनुपलंभस्तथेत्यर्थः ॥ **इत्युक्तमिति** । समग्रैश्वर्या(देस्तदर्थ,)र्थत्वादिति भावः **वक्ष्यतीति** । 'चिदचिन्मिश्रमेवैतन्मनो यावच्च संसृतिः । तेनावस्था इमास्सर्वा जीवः पश्यति सर्वदे'त्यधिकरणांत्यभागे वक्ष्यतीत्यर्थः ॥ **उपपादितत्वादिति** । 'संस्कारैर्भगवानेवे'त्यादिनेति भावः ॥ **असिद्धेरिति** । स्वाप्नपदार्थदर्शनस्य संस्कारप्रभवत्वासिद्धेरित्यर्थः ।

या० — **सृष्टेरिति** । इदं च 'आर्थगतैव लक्षणा, शब्द आरोप्यते' इति मतमाश्रित्योक्तम् । वस्तुतस्तु सृष्ट्वेत्यत्रत्यसृष्टिशब्दस्येत्यर्थः । न चैवं क्त्वाप्रत्ययात्संहारस्यापि दर्शनपूर्वकालीनत्वापत्तिः । सृष्टिगतस्य दर्शनपूर्वकालीनत्वस्य संहारे छत्रिन्यायेनोपपत्तेः ॥ **मनोवृत्तित्वेनेति** । मनःपरिणामत्वेनेत्यर्थः ॥ **त्र्यणुकजन्मेति** । यथा त्र्यणुकजन्मनः प्राक् तद्विनाशानन्तरं च तदुपादानभूतद्व्यणुकानामतीन्द्रियत्वेनानुपलम्भस्तथेत्यर्थः ॥ **वक्ष्यतीति** । 'चिदचिन्मिश्रमेवैतन्मनो यावच्च संसृतिः । तेनावस्था इमाः सर्वा जीवः पश्यति सर्वदे'त्यत्रेति शेषः ।

श्री० — **प्रसङ्ग इति** । नाप्युत्पत्तिविनाशवन्तः, तथात्वे प्रागूर्ध्वमुपलम्भप्रसक्तेरित्यनेनोक्तः । ननु कथमेतत् । स्वप्नकाल एव सृष्ट्वेत्यनेन स्वप्नावस्थातः प्रागुपलम्भप्रसङ्ग इत्येतद्दोषपरिहारेऽपि स्वप्नावस्थात ऊर्ध्वमुपलब्धिप्रसङ्ग इत्युक्तदोषपरिहारः कथमित्यत आह **सृष्टेरिति** । तथा च स्वप्नकाल एव सृष्ट्वा दर्शयति । दर्शयित्वा च तत्काल एव नाशयतीत्यपि ग्राह्यम् । तथा चोक्तदोषपरिहार इति भावः । संस्काराणां प्रात्यक्षिकार्थोपादानत्वे तेषामुपलम्भः कुतो नेत्यत आह **संस्काराणां चेति** ॥ **दर्शयतीति** । दर्शनं जनयतीत्यर्थः । **तच्चिह्नस्य** स्मरणादिचिह्नस्य ॥ **अत एवेति** । इदमित्युल्लेखेन स्मृतिचिह्नस्य तदित्युल्लेखस्याभावादेव । **स्मृतिविपर्यासः** विपरीतं स्मरणं वैपरीत्येन स्मरणं जायत इत्यर्थः ॥ **असिद्धेरिति** । स्मृतित्वे सिद्धे तद्विपर्यासोऽयमिति कल्प्येतेति भावः ॥ **उपपादितत्वादिति** । संस्कारैर्भगवानेवेत्यनेनान्तरेव स्वाप्नपदार्थानामुत्पत्तेरुक्तत्वाज्ज्ञानस्याप्यान्तरत्वेन विषयसान्निध्यादसन्निहितगोचरत्वमसिद्धमित्यर्थः । **असिद्धेः** इदं स्मरणं संस्कारप्रभवत्वादित्यनुमान इत्यर्थः । तथा च प्रकृते संस्कारस्यान्यथासिद्धत्वान्न दर्शनजनकतेति भावः ।

च० — **सृष्टेरिति** । इदं चार्थगतैव लक्षणा शब्दे आरोप्यत इति मतमाश्रित्योक्तम् । वस्तुतस्तु । सृष्ट्वेत्यत्र सृष्टिशब्दस्येत्यर्थः । न चैवं क्त्वाप्रत्ययात्संहारस्यापि दर्शनपूर्वकालीनत्वापत्तिः सृष्टिगतस्य दर्शनपूर्वकालीनत्वस्य संहारे छत्रिन्यायेनोपपत्तेरिति व्याकुर्वते । सृष्ट्वेत्युक्तेः सृष्ट्वा प्रदर्श्य संहरतीत्युपलक्षणत्वं ज्ञेयमिति भावः इत्यप्याशयमाविर्भावयन्ति । **मनोवृत्तित्वेन** मनःपरिणामत्वेन ।

द्व्यणुकज-मेति । द्व्यणुकोत्पत्तेः पूर्वं ध्वंसानन्तरं च तदुपादानभूतद्व्यणुकानामतीन्द्रियत्वनियन्त्रिता यथाऽनुपलब्धिस्तद्वदित्यर्थः । वक्ष्यतीति । 'चिदचिन्मिश्रमेवैतन्मनो यावच्च संसृतिः । तेनावस्था इमाः सर्वा जीवः पश्यति सर्वदा' इत्यत्रेति पूरणीयम् ।

**सु०— अपरे तु भवत्येवायमनुभवः । किन्तु जागरानुभूतस्मर्तव्यार्थ एवेति मन्यन्ते । तदप्यसत् । तथा हि । किमयमनुभवो यथार्थ उतायथार्थः । नाद्यः । बाह्यार्थानां देशकालविप्रकृष्टत्वेन तदनुपपत्तेः । द्वितीये वक्तव्यं किमयमगजे गजत्वोल्लेखीत्ययमयथार्थः, किंवा गज एवासन्निकृष्टे सन्निकृष्टत्वोल्लेखीत्ययथार्थः । आद्ये नायं गजः किन्तु गवय एवेति बाधोदयः स्यात् । द्वितीये नायं सन्निकृष्टः किन्नाम विप्रकृष्ट इति बाधो भवेत् । न चैतदस्ति । तस्मात्संस्कारप्रभवसन्निकृष्टसत्यार्थप्रमितिरेवेयमिति युक्तम् । कथं तर्हि श्रुतिस्मृतिषु स्वप्नप्रतीतेर्भ्रान्तित्वमुच्यत इत्यत आह भ्रान्तिरिति ।**

**अनु०—** भ्रान्तिर्जाग्रत्त्वमेव हि ॥

**जाग्रत्त्वमिति** तत्प्रतीतिमुपलक्षयति । एवेति पदार्थस्वरूपं व्यावर्तयति । जाग्रत्त्वं जागरानुभूतपदार्थैरेकत्वम् । स्वप्ने हि तात्कालिकतयाऽदृष्टचरानेव तनयादीन्दृष्टचरतयाऽनुसन्धत्ते । यद्वा जाग्रत्त्वं नाम गगनादीनां नित्यत्वादिकम् । घटादीनां मृदाद्युपादानकत्वं बाह्यार्थक्रियाक्षमत्वमित्यादि ग्राह्यम् । जाग्रत्त्वप्रतीतेर्भ्रान्तित्वात्तद्विषयं श्रुत्यादिवमिति भावः ।

स्यादेतत् । जाग्रत्त्वस्यापि संस्कारोऽस्त्येवेति सोपादानत्वसंभवात्कथं तत्प्रतीतिः भ्रान्तिरित्युच्यते । अन्यथाऽर्थप्रतीतिरपि भ्रान्तिः स्यादविशेषादिति । मैवम् । न हि वयं कारणसामग्रीसम्पादनसंभवमात्रेणार्थानां सत्यतामातिष्ठामहे । किन्तु बाधाभावेनेति वक्ष्यामः । सामग्र्यभावेनासत्यत्वं ब्रुवाणं प्रति तु तदसिद्धि(रा)रेवावेदिता । अस्ति च जाग्रत्ता(त्त्व)प्रतीतेर्बाधः । स्वाप्न एवायं न जागरानुभूत इत्याद्युदयात् । तदिदमुक्तं हिशब्देन ।

शे०— ननु दर्शनपदेनानुभवविवक्षया स्मरणमेवैतदिति मतनिरासासिद्धावपि न वैशेषिकादिमतनिरासासिद्धिः । तैस्तस्य मानसानुभवत्वस्वीकारादित्यभिप्रेत्य तन्मतमुत्थापयति **अपरे त्विति ।** ननु स्वाप्नकरितुरगादिदर्शनस्य मानसानुभवत्वेऽस्मदिष्टसिद्धिः । पर्यवसितं विवादेनेति पृच्छति **किन्त्विति ।** विप्रतिपत्तिविषयान्तरसद्भावान्न सिद्धान्तिमतप्रवेश इत्यभिप्रेत्य तमुपदर्शयति **जागरेति ।** जागरावस्थायामनुभूता अत एव स्मरणयोग्या ये बाह्याः करितुरगादयस्तद्विषयक एवायं मानसोऽनुभवः । न संस्कारोपादानकतद्विषय इत्यस्त्येव विप्रतिपत्तिविषय इति भावः । दर्शयतीत्युक्तदर्शनस्य प्रमा-

रूपानुभवरूपतया मूले इष्टत्वाद्युक्तोऽस्यापि मतस्य दर्शयतीत्यनेन निराम इत्यभिप्रेत्य दूषयति **तदप्यस-दिति** । उभयत्रापीष्टापत्तिं परिहरति **न चैतदस्तीति** । ननु जाग्रत्पदार्थैक्यरूपस्य जाग्रत्त्वस्य भ्रान्ति-विषयत्वेऽपि भ्रान्तित्वाभावान्न तद्भ्रान्तित्वोक्तिर्युक्तेत्यतोऽत्र जाग्रत्त्वपदस्य लक्षणया जाग्रत्त्वप्रतीतिपरत्वेन जाग्रत्पदार्थैक्यपरत्वाभावान्नानुपपत्तिरित्याह **जाग्रत्त्वमिति** । तत्प्रतीतिमिति लक्षणाबीजशक्यसम्बन्ध-कथनम् । ननु शशत्वविषाणित्वसामानाधिकरण्यज्ञानस्य शशविषाणादिसम्बन्धविशेषज्ञानस्य च भ्रमरूप-तायाः 'समानाधिकरणं दृश्यतेऽत्र च स भ्रमः' इत्यादिना वक्ष्यमाणत्वात् । कथं भ्रान्तिर्जाग्रत्त्वमेवेत्यव-धारणमित्यतोऽनभिमतव्यावृत्त्यर्थत्वादवधारणस्य नानुपपत्तिरित्यभिप्रेत्य तद्दर्शयति **एवेतीति** । नन्वत्र जागरावस्थाया मिथ्यात्वमुच्यते। जाग्रतो भावो जाग्रत्त्वमिति जाग्रत्त्वशब्दस्य जागरावस्थापरत्वात् तच्चा-सङ्गतम् । तथा सति स्वाप्नानां पदार्थानां सत्यत्वे बाधकत्वेनोपन्यस्ततन्मिथ्यात्वोक्तेर्गत्यकथनप्रसङ्गादित्यतो लक्षणया जाग्रच्छब्दार्थकथनपूर्वकं त्वप्रत्ययार्थमाह **जाग्रत्त्वं जागारानुभूतपदार्थैरेकत्वमिति** । ननु च जागरानुभूतपदार्थैरेकत्वप्रतीतिरेव नास्ति । तत्कथं तस्या भ्रान्तित्वमुच्यत इत्यतस्तदसिद्धिं परिहरति **स्वप्ने हीति** । तात्कालिकत्वमदृष्टचरत्वे हेतुः । **दृष्टचरतया** जागरानुभूतपदार्थतया । एवं तादात्म्यारोपम-भ्युपेत्य व्याख्यातम् । जागरानुभूतपदार्थगतधर्मारोपमाश्रित्यापि तद्व्याचष्टे **यद्वेति** । सोपादानत्वमेव स्वाप्नपदार्थानां सत्यतायां प्रयोजकतया सिद्धान्त्यभिमतमिति भ्रान्त्या शङ्कते **स्यादेतदिति** । उत्तरवादी स्वाशयमुद्घाटयति **मैवमिति** ॥ **वक्ष्याम इति** । 'स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचित्' इत्यादिनैतदधिकरणान्त इति शेषः । तर्हि बाधाभावेनैव स्वाप्नपदार्थसत्यत्वसिद्धेस्तत्सामग्रीव्युत्पादनान-र्थक्यमित्यतस्तस्यान्यथासिद्धिमुपपादयति **सामग्रीति** । स्यादेतदित्यादिनोक्तशङ्कापरिहारस्योद्घाष्यत्वं परिहरति **तदिदमिति** ।

**म०**— ननु जाग्रत्पदार्थैक्यरूपजाग्रत्त्वस्य भ्रान्तिविषयत्वेपि भ्रान्तित्वाभावात्कथं भ्रान्तिरि-त्युच्यत इत्यत आह **जाग्रत्त्वमितीति** । तत्प्रतीतिमिति शक्यसंबन्धोक्तिः । ननु शशत्वविषाणि-त्वसामानाधिकरण्यज्ञानस्य शशविषाणादिसंबन्धविशेषज्ञानस्य च भ्रमरूपत्वस्य 'समानाधिकरणं दृश्यतेऽत्र स च भ्रमः' इति वक्ष्यमाणत्वात्कथं जाग्रत्त्वमेवेत्यवधारणमित्यत आह **एवेति** ॥ **पदार्थस्वरूपमिति** । सोपादानत्वं सत्यत्वे (भ्रान्तित्वे) प्रयोजकमिति भ्रान्त्या शङ्कते **स्यादेतदिति** ॥ स्वाशयमुद्घाटयति **मैव-मिति** ॥ **वक्ष्याम इति** । 'स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचिदि'त्यादिनेति शेषः ।

**प०**— **जागरानुभूतेति** । जाग्रदवस्थायामनुभूता ये पदार्थाः ते इदानीं स्मरणार्हाः भवंते त(तए) एव स्वप्ने भान्ति न तु वासनोपादानका इत्याहुरित्यर्थः ॥ **देशकालेति** । काश्यां सुप्तो मधुरां पश्यति, हेमंते सुप्तो वसंतं पश्यतीत्येवमादिरूपेण देशादिविप्रकृष्टत्वेनेत्यर्थः ॥ **श्रुतिस्मृतिष्विति** ।

स्वप्नमायामरूपेत्यादिप्रागुक्तास्विति भावः, । पदार्थस्वरूपमित्यस्य पदार्थस्वरूपबुद्धिमित्यर्थो ज्ञेयः । जाग्रत्त्वमित्यस्य तत्प्रतीतिपर्यन्तत्वेनोक्तत्वात् । अदृष्टचरानिति विभागः । अननुभूतानित्यर्थः । तत्र हेतुः तात्कालिकतयेति । तत्कालोत्पन्नत्वहेतुनेत्यर्थः । दृष्टचरतया जाग्रदवस्थानुभूततयेत्यर्थः । तादात्म्यारोपमाश्रित्योक्तं प्राक् । अधुना तु धर्मारोपमाश्रित्याह यद्वा जाग्रत्त्वमिति ॥ इति वक्ष्याम इति । 'स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचिदि'त्यत्रेति भावः ॥

**या०— किन्तु जागरानुभूतेति** । जाग्रदवस्थायामनुभूता अत एव स्मरणयोग्या ये बाह्या गजादयस्तद्विषयक एवायमनुभवो न संस्कारप्रभवगजादिविषय इत्याहुरित्यर्थः ॥ **पदार्थस्वरूपमिति** । पदार्थस्वरूपप्रतीतिमित्यर्थः ॥ **दृष्टचरतयेति** । जागरानुभूतपदार्थतयेत्यर्थः । जागरानुभूतपदार्थगतधर्मारोपमाश्रित्याह **यद्वा जाग्रत्त्वं नामेति** ॥ **वक्ष्याम इति** । 'स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचिदि'त्यत्रेति शेषः ॥

**श्री०— तदनुपपत्तेः** तद्विषयकानुभवस्य यथार्थत्वानुपपत्तेरित्यर्थः । संस्कारप्रभवत्वं सत्यार्थस्य विशेषणं बोध्यम् । **जाग्रत्त्वस्यापीति** । न केवलमर्थानामित्यर्थः ॥ **अन्यथेति** । सोपादानत्वसम्भवेऽपि तत्प्रतीतेर्भ्रान्तित्वोक्तावित्यर्थः ॥ **अर्थेति** । गजादिरूपार्थेत्यर्थः ॥ **अविशेषादिति** । जाग्रत्त्वस्य गजादिरूपार्थानां च सोपादानत्वाविशेषादित्यर्थः । जाग्रत्त्वस्य सोपादानत्वमसिद्धमेव । अभ्युपगम्यापि समाधत्ते **न हीत्यादिना** ॥ **कारणेत्यादि** । वासनादिरूपेत्यर्थः । ननु यदि बाधकाभावेनैवार्थानां सत्यत्वोच्यते तर्हि तदभाव एव वाच्यः । 'वासनाः सर्ववस्तूनामि'त्यादिना तत्कारणं किमर्थं निरूपितम् । तेन ज्ञायते कारणसम्भवमात्रेणैवार्थानां सत्यताऽभिप्रेतेति । ततश्च जाग्रत्त्वस्यापि संस्कारोऽस्त्येवेति सोपादानत्वसम्भवेन सत्यतायाः सम्भवात् । भ्रान्तिर्जाग्रत्त्वमिति कथमुक्तमित्यत आह **सामग्रीति** । **असत्त्वं** स्वाप्नार्थस्य । **तदसिद्धिः** सामग्र्यभावस्यासिद्धिः । बाध इत्यनन्तरं नार्थप्रतीतेरिति शेषः । कुत इत्यत आह **स्वाप्नेति** ॥

**च०— जागरेति** । जाग्रदवस्थाधिकरणकानुभवविषयीभूता अत एव स्मृतिविषयत्वौचितीशालिनो ये बाह्यकरितुरगादयस्तदवगाह्येवायमनुभवो न वासनोपादानकतद्गोचर इत्याहुरित्यर्थः । **दृष्टचरतया** । जाग्रदवस्थानुभूतपदार्थतादात्म्येन । तादात्म्यान्यसंसर्गेण तादृशार्थगतधर्मारोपमभिप्रेयिवान् कल्पान्तरमाश्रयते **यद्वेति** ॥ **आतिष्ठामहे** । प्रतिजानीमहे 'आङः स्थः प्रतिज्ञाने' इति स्मृतेः । **वक्ष्याम इति** । 'स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचिदि'त्यत्रेत्युपस्कर्तव्यम् ।

सु० — जाग्रत्त्वप्रतीतिरेव भ्रान्तिरित्ययुक्तम् । अर्थानामपि केषाञ्चिदसत्त्वेन तत्प्रतीतेरपि भ्रान्तित्वात् । स्वप्नेऽपि स्वशिरश्छेदादयोऽपि प्रतीयन्ते । न च तदुत्पत्तावुपादानमस्ति । अननुभूतत्वेन संस्कारोदयायोगात् । अननुभूतेऽपि संस्कारोदयाभ्युपगमे 'अदृष्टे चाश्रुते' इत्यादिश्रुतिस्मृतिविरोधः स्यात् । कदाचिदननुभूतार्थस्मृतिरप्यापद्येत । ततो यद्यपि साक्षात्स्वशिरश्छेदादेर्बाधो नास्ति तथाऽपि कारणानुपपत्त्याऽसत्त्वमङ्गीकार्यमेवेत्यत आह अदृष्टे चेति ।

अनु० — 'अदृष्टे चाश्रुते भावे न भाव उपजायते' ॥
'अदृष्टादश्रुताद्भावान्न भाव उपजायते' ॥
इति श्रुतिपुराणोक्तिरनादित्वात्तु युज्यते ॥

भावे पदार्थे । भावो वासना । पञ्चमी सप्तम्यर्थे । उक्तिरित्यतः परस्तुशब्दो बोद्धव्यः । अनादित्वात् संसारस्येति शेषः । संसारस्यानादित्वात्क्वचिज्जन्मनि स्वशिरश्छेदादेरप्यनुभवसंभवेन संस्कारोपपत्तेः । सत्यत्वेऽपि श्रुतिपुराणोक्तिर्युज्यत एव, न तु विरुध्यते । विनाप्यनुभवेन संस्कारोदयाभ्युपगमे हि सा विरुध्येतेति । अत्राश्रुतग्रहणेनात्रापि जन्मनि श्रवणजनितसंस्कारः संभवतीति सूच्यते । यत्र तु श्रवणाद्यपि नास्ति तत्रानादित्वं निवेशितम् । अनेन यत्पूर्वं सर्वग्रहणं कृतं तदुपपत्तये वाऽनाद्यनुभवपरम्परोक्ता तस्य सर्वस्योपयोगः कथितो भवति ।

शे० — न बाधाभावतत्सद्भावौ स्वाप्नपदार्थसत्यत्वासत्यत्वप्रयोजकौ किन्तु सामग्रीसद्भावासद्भावावेव । ततश्च सोपादानत्वाज्जाग्रत्त्वस्य न तत्प्रतीतेर्भ्रान्तित्वं संभवतीति न तद्विषयत्वं श्रुत्यादेरित्याशयेन शङ्कते जाग्रत्त्वप्रतीतिरेवेति । अननुभूते भाव इवाभावेऽपि संस्कारानुदयस्य तुल्यत्वेन भावशब्दस्य विधिरूपप्रसिद्धार्थपरत्वानुपपत्तेर्भावाभावसाधारणपदार्थमात्रपरतया तं व्याचष्टे भावे पदार्थ इति । नन्वत्राननुभूते भावे भावानुत्पत्तिरुच्यते । न तु संस्कारस्येति कथमस्य विरोधितयोपन्यास इत्यतोऽत्र भावशब्दस्य वासनापरपर्यायसंस्कारपरत्वाद्युक्तोऽननुभूते संस्कारोदयाभ्युपगमे विरोधितयाऽस्योपन्यास इत्यभिप्रायेण भावशब्दार्थमाह भावो वासनेति । श्रुतिपुराणयोरेकार्थतालाभायाह पञ्चमी सप्तम्यर्थ इति । श्रुतेरनादित्वकथनस्य प्रसक्तशङ्कापरिहाराक्षमत्वेन वैयर्थ्यादपेक्षितशेषं पूरयति अनादित्वात्संसारस्येति शेष इति । कथमनेन शङ्कापरिहार इत्यत आह संसारस्येति । ननु श्रुतिस्मृतिविरोधेनाननुभूते संस्कारोदयो न युक्त इत्यनुपपन्नतया शङ्कितस्य संस्कारोदयस्यैवोपपन्नत्वं वर्णनीयं न तु श्रुतिस्मृत्योस्तदनुपपन्नत्वस्यानाशङ्कितत्वादित्यतस्तदुक्तेस्तात्पर्यमाह युज्यत एव न तु

**विरुध्यत इति** । तद्दर्शनादित्वानुसरणमनर्थकम् । एतज्जन्मनि श्रवणादिजनितसंस्कारेणैव सर्वनिर्वाहादित्यत आह **यत्र त्विति** ॥ **पूर्वमिति** । 'वासनाः सर्ववस्तूनामि'त्यत्रेत्यर्थः ।

स०— बाधाभावभवौ न सत्यत्वासत्यत्वप्रयोजकौ किन्तु कारणसत्त्वासत्त्वे एवेति जाग्रत्त्वप्रतीतिरपि न भ्रान्तिरिति ङ्कते **जाग्रत्त्वप्रतीतिरेवेति** । श्रुतिस्मृत्योरेकविषयत्वायाह **पञ्चमी सप्तम्यर्थ इति** । 'वासनाः सर्ववस्तूनामि'त्यत्रेत्यर्थः ।

प०— **यत्सर्वग्रहणमिति** । सर्ववस्तूनामिति सर्वग्रहणमित्यर्थः ॥ **उक्तेति** । अनाद्यनुभवागता इत्यादिनोक्तेत्यर्थः ।

श्री०— **नास्तीति** । तथा च बाधाभावरूपहेतुना सत्त्वं युक्तमित्यर्थः ॥ **श्रवणेति** । त्वदीयं शिरश्छिन्नं भवत्विति कस्यचिद्वचनश्रवणेत्यर्थः । **अनादित्वं** संसारस्य ।

**सु०— ननु ( च ) शशविषाणादिप्रतीतौ कथं । न हि भवान्तरेऽपि तदनुभवः** संभवति । **यथापूर्वमिति सर्वकल्पानामेकविधत्वश्रवणात् । मैवं । शशविषाणादिप्रमाऽभावेऽपि शब्दादिना भ्रान्तिसंभवेन संस्कारोपपत्तेः । येन तु शशविषाणादिकं भ्रान्त्याऽपि न प्रतिपन्नं तस्य कथं । न हि (सर्वोऽपि)सर्वत्र भ्राम्यतीति नियमोऽस्ति । नापि स्वप्ने न तत्पश्यतीति नियन्तुं शक्यते । उच्यते । किमत्र शशादीनां विषाणादीनां चोपादानासंभवेनासत्त्वमुच्यते । उत शशत्वादिविषाणित्वादिसामानाधिकरण्यादेः ।**

**आद्यं निराकरोति** कदाचिदिति ।

अनु०— कदाचिद्दर्शनायोग्यं यत्तत्रापि विभागतः ॥
दृष्टं

**यत्स्वप्ने दृश्यत इति शेषः ।** विभागतः **सामानाधिकरण्येन विना दृष्टं जागरे । यद्यपि शशत्वविषाणित्वादीनां सामानाधिकरण्यं शशविषाणादिसंबन्धविशेषो वा जागरे नानुभूतस्तथाऽपि विविक्तं शशत्वादिकमनुभूतमेवेति** तत्संस्कारसंभवे(न) न **शशादीनामसत्त्वं वाच्यमिति ।**

**द्वितीये सम्प्रतिपत्तिमुत्तरमाह** समेति ।

समाधिकरणं दृश्यतेऽत्र स च भ्रमः ॥

**भावप्रधानो निर्देशः । उपलक्षणं चैतत् ॥ दृश्यत इत्यत्र प्रकृत्यर्थे स इति परामृशति । यदित्यनुवर्तते । अत्र स्वप्ने न केवलं जाग्रत्त्वमिति चार्थः ।** यस्योपादानं संभवति **बाधश्च नास्ति । तदेव हि प्रागेवशब्देन व्यवच्छिन्नमिति भावः ।**

शे० — गूढाभिसन्धिः शङ्कते **नन्विति** । उत्तरवाद्यपि गूढाभिसन्धिरेव परिहरति **मैवमिति** । पूर्ववादी स्वाशयमुद्घाटयति **येन त्विति** । सामानाधिकरण्यादेरित्यत्रादिपदेन शशविषाणादिसम्बन्धविशेषपरिग्रहः । ननु तर्हि समानाधिकरणत्वमिति वक्तव्यम् । समानाधिकरणमिति तु कथमित्यतोऽत्र समानाधिकरणपदस्य लक्षणया सामानाधिकरण्यार्थकत्वेन यथाश्रुतार्थत्वाभावान्नानुपपत्तिरित्याह **भावेति** ॥ **उपलक्षणं चैतदिति** । समानाधिकरणमित्येतच्छशविषाणादिसम्बन्धविशेषस्योपलक्षणमित्यर्थः । समानाधिकरणत्वस्य भ्रमत्वाभावेन स इत्यस्य तत्परामर्शकत्वासम्भवादाह **प्रकृत्यर्थमिति** । (दृश् धात्वर्थभूतं प्रत्ययम्) दर्शनरूपमित्यर्थः । स इति यच्छब्दसापेक्षतच्छब्दश्रवणादाह **यदितीति** । सामानाधिकरण्यज्ञानस्यापि भ्रमत्वे 'भ्रान्तिर्जाग्रत्त्वमेव ही'ति सावधारणपूर्वग्रन्थविरोध इत्यत आह **यस्येति** ॥ **प्रागिति** । भ्रान्तिर्जाग्रत्त्वमेवेत्यर्थः ।

म० — सामानाधिकरण्यादेरित्यत्रादिपदेन शशविषाणादिसंबन्धविशेषसंग्रहः । **उपलक्षणं चैतदिति** । शशत्वविषाणित्वादिसामानाधिकरण्यज्ञानं भ्रम इत्युपलक्षणम् । शशविषाणादिसंबन्धविशेषज्ञानं भ्रम इत्यपि द्रष्टव्यमित्यर्थः ॥ **प्रकृत्यर्थमिति** । दर्शनरूपमित्यर्थः । शशत्वविषाणित्वादिसामानाधिकरण्यादिज्ञानस्य भ्रमत्वे 'भ्रान्तिर्जाग्रत्त्वमेव ही'तिपूर्वविरोध इत्यत आह **यस्येति** । प्राक् 'भ्रान्तिर्जाग्रत्त्वमेवे'त्यत्र वासनोपादानत्वादावित्यत्रादिपदेन भगवत्कर्तृत्वतात्त्विकोत्पत्तिविनाशवत्त्वसंग्रहः ।

---

प० — **उपलक्षणं चैतदिति** । यस्योपादानं न संभवति बाधश्चास्ति तस्य सर्वस्योपलक्षणमित्यर्थः । कथं तर्हि भ्रान्तिर्जाग्रत्त्वमेवेति सावधारणमुक्तं प्रागित्यत आह **यस्योपादानमित्यादि** ।

या० — **उपलक्षणं चैतदिति** । शशविषाणादिसम्बन्धविशेषस्येति शेषः ।

श्री० — ननु कस्मिंश्चित्कल्पे शशविषाणोत्पत्तिसम्भवेनानुभवो युक्त इत्यत आह **यथेति** । यथापूर्वमकल्पयदिति श्रुत्येत्यर्थः । शङ्कते **येनेति** ॥ **कथमिति** । तथा च तत्संस्कारो न युक्त इति भावः । भ्रान्त्या तेन तज्ज्ञातमेवेति चेत्तत्राह **न हीति** । तथा च येन तद्भ्रान्त्याऽपि न ज्ञातं तस्य स्वप्ने शशविषाणप्रतीतौ कथमित्यर्थः । ननु येन भ्रान्त्या जाग्रदवस्थायां शशविषाणं न ज्ञातं स स्वप्ने तच्छशविषाणं न पश्यत्येवेति किमर्थं तत्संस्कारो वाच्य इति चेत्तत्राह **नापीति** । तथा च जाग्रति भ्रान्त्याऽज्ञातशशविषाणस्य पुंसः स्वप्ने तत्प्रतीतिसम्भवेन तत्र कथं संस्कार उपपादनीय इत्यर्थः ॥ **शशादीनां विषाणादीनां चेति** । विशकलितानामिति शेषः । सामानाधिकरण्यादेरुपादानासम्भवेनासत्त्वमुच्यत इत्यनुवर्तते । **सम्बन्धविशेषस्य** समवायस्य । शशविषाणयोरवयव्यवयवरूप-

त्वात् । **उपलक्षणं** सम्बन्धविशेषस्येत्यर्थः । **प्रकृत्यर्थे** दृशूधात्वर्थभूतं प्रत्ययम् । ननु यदि शशत्वविषाणित्वसामानाधिकरण्यस्य तत्सम्बन्धविशेषस्य वा भ्रान्तित्वं तर्हि 'भ्रान्तिर्जाग्रत्स्वमेव ही'ति जाग्रत्स्वमात्रस्यैव भ्रान्तित्वं न तु स्वाप्नार्थस्येति जाग्रत्स्वातिरिक्तार्थस्य सत्त्वोक्तिरयुक्ता स्यात्सामानाधिकरण्यादेरपि जाग्रत्स्वातिरिक्तत्वादतो विरोध इत्यत आह **यस्येति** ॥ **तदेवेति** । स्वाप्नगजादिकमेव न तु यस्योपादानं न सम्भवति बाधश्चास्ति सोऽर्थो व्यवच्छिन्न इत्यर्थः । तथा च प्रकृते सामानाधिकरण्यादेरप्युपादानाभावाद्बाधस्य च सत्त्वेन जाग्रत्स्वतुल्यत्वाद्युक्तं भ्रान्तित्वकथनमिति न विरोध इति भावः ।

**सु० — भवेदेतत्सर्वं यदि स्वाप्नार्थानां वासनोपादानत्वादौ प्रमाणं स्यात् (भवेत्) । न चैतत्पश्याम इत्यत आह** वासनेति ।

अनु० — वासनामात्रमूलत्वाज्जाग्रद्वत्स्पष्टता न च ॥

**वासनामात्रोपादानत्वादेव हि स्वाप्नार्थानां जागरोपलब्धानामिव स्पष्टता बाह्यार्थक्रियासामर्थ्यलक्षणा नास्ति । अन्यथा सा स्यादित्यर्थः ।**

**अयमभिसन्धिः । स्वाप्नास्तावद्घटादयो नासन्तो बाधाभावात् । नाप्यनादिनित्याः । पूर्वोत्तरमनुपलम्भात् । न (च) निरुपादानोत्पत्तिरुपपन्ना । ततोऽवश्यमुपादानेऽनुसरणीये । न तावद्वाह्य(त्ते बाह्य)मृदाद्युपादानाः । बाह्यार्थक्रियासामर्थ्यरहितत्वात् । विमतो घटो न बाह्यमृदाद्युपादानको बाह्यमृदाद्युपादानकार्यक्रियारहितत्वात् (पटवत्)इति प्रयोगात् । अन्यथा तत्प्रसङ्गात् । न चोपादानान्तरमस्ति । ततः परिशेषाद्वासनोपादानका एवेति । चशब्देन भगवत्कर्तृकत्वे तात्कालिकोत्पत्तिविनाशित्वे च परिशेषम् 'य एष सुप्तेषु जागर्ति' 'एतस्माद्ध्येव पुत्रो जायते' 'न तत्र रथा' इत्यादिश्रुतिं च प्रमाणं समुच्चिनोति ।**

**तदनेन प्रबन्धेन सन्ध्ये सृष्टिराह हि । निर्मातारं चैके पुत्रादयश्च । मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति त्रिसूत्री व्याख्याता भवति ।**

टी० — वासनोपादानकत्वादावित्यत्रादिपदेन भगवत्कर्तृकत्वतात्कालिकोत्पत्तिविनाशवत्त्वपरिग्रहः । ननु 'जाग्रद्वत्स्पष्टता न चे'त्यनेन बाह्यार्थक्रियासामर्थ्यरहितत्वोक्त्या बाह्यमृदाद्युपादानकत्वाभावसिद्धावपि न वासनामात्रोपादानकत्वसिद्धिरित्यतोऽत्र भाष्ये स्वाप्नाः पदार्था वासनोपादानकाः सोपादानकत्वे सति वासनेतरानुपादानकत्वात्सम्मतवदिति परिशेषस्यैव तत्साधकतयाऽभिप्रेतत्वात्तत्सिद्धिरित्यभिप्रेतपरिशेषानुमाने विशेषणासिद्धिविशेष्यासिद्धी परिहरन्नेव फलितमाह **अयमभिसन्धिरिति** । पूर्वप्रयोगे व्यतिरेकव्याप्तिरनुसरणीया भवतीत्यतोऽन्वयव्याप्तिमूलकमनुमानान्तरं दर्शयति **विमत**

**इति** । नन्वेतावता वासनोपादानकत्वस्य प्रामाणिकताया भाष्यात्सिद्धावपि तत्रादिपदोपात्तस्य भगवत्कर्तृकत्वादेः प्रामाणिकतायाः भाष्यादसिद्धेर्न प्रागुक्तशेषाक्षेपपरिहारकत्वमस्य भाष्यस्येत्यतोऽत्र चशब्दसूचितपरिशेषादिप्रमाणबलेन तत्सिद्धेरपि सम्भवान्नानुपपत्तिरित्यभिप्रेत्य चशब्दार्थमाह **चशब्देनेति** ॥ **परिशेषमिति** । कर्तृरहितोत्पत्तेरयोगादवश्यं कर्तर्यनुसरणीये द्रष्टुर्निर्व्यापारत्वादन्यस्य चादर्शनाज्जीवात्मनः कर्तृत्वायोगादीश्वरस्यैव कर्तृत्वमुक्तरीत्याऽनादिनित्यत्वायोगादुत्पत्तिविनाशवत्त्वे सिद्धे प्रागूर्ध्वं चानुपलम्भात्तदानीमेवोत्पत्तिविनाशवत्त्वमिति परिशेषमित्यर्थः । 'वासनाः सर्ववस्तूनामि'त्यादेरुत्सूत्रार्थप्रतिपादकत्वादभाष्यत्वशङ्कां परिहरति **तदनेनेति** ।

स० — ननु चासत्त्वादेव न जाग्रत्पदार्थानामतिस्पष्टतेत्यन्यथोपपत्तिरित्यत्राह **अयमभिसन्धिरिति** ।

प० — वासनोपादानकत्वे प्रमाणं पृच्छन्तं प्रति किमनेनोत्तरं लब्धमित्यत आह **अयमभिसन्धिरिति** ॥ **तदनेनेति** । 'संस्कारैर्भगवानेवे'त्यादिना प्रबन्धेनेत्यर्थः । ततः प्राचीनस्य 'वासनाः सर्वे'त्यादेरुपोद्घातत्वात् । यद्वा सोपोद्घातेन पूर्वेण सर्वग्रन्थेनेत्यर्थः ।

श्री० — 'तत्र तस्येवे'ति षष्ठ्यर्थे वतिमभिप्रेत्याह **जागरोपलब्धानामिवेति** ॥ **अन्यथेति** । वासनामात्रमूलकत्वाभावे बाह्यमृदाद्युपादानकत्वे च सति सा बाह्यार्थक्रिया स्यादित्यर्थः । अप्रयोजकतां परिहरति **अन्यथेति** । तथा च हेतूच्छित्तिरेव बाधिकेत्यर्थः ।

च० — **त्रिसूत्रीति** । द्विगोरिति ङीप् ।

सु० — **अन्ये पुनरन्यथैतानि सूत्राणि व्याचक्षते ॥**

तथा हि । **'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजत'** इत्यादि श्रूयते । तत्र संशयः । किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन्मायामयीति ॥ तत्र तावत्प्रतिपद्यन्ते । **सन्ध्ये सृष्टिराह हि** । प्रबोध ( स्वापस्थान ) सम्प्रसाद(योः सं)-स्थानयोः सन्धौ, भवतीति सन्ध्यं स्वाप्नस्थानम् । तत्र तथारूपैव सृष्टिः । कुतः । यतः प्रमाणभूता श्रुतिरेवमाह । 'अथ रथान्रथयोगान्पथः सृजत' इत्यादि ।

**निर्मातारं चैके पुत्रादयश्च** । अपि चैके शाखिनः सन्ध्ये कामानां निर्मातारमात्मानमामनन्ति । 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण' इति । पुत्रादयश्च तत्र कामा अभिप्रेयन्ते काम्यन्त इति, न पुनरिच्छाविशेषाः । 'शतायुषः पुत्रपौत्रान्वृणीष्वे'ति प्रकृतेषु पुत्रादिषु 'कामानां त्वा कामभाजं करोमी'ति कामशब्दस्य प्रयुक्तत्वात् ।

प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः । 'अन्यत्र धर्मादन्यत्राधर्मादि'त्यादेः प्राज्ञस्य हीदं प्रकरणम् । वाक्यशेषोऽपि 'तदेव शुक्रं तद्ब्रह्मे'त्यादिः । प्राज्ञकर्तृका च सृष्टि(स्तथाभूता )र्यथारूपा समधिगता जागरिताश्रया तथा स्व(स्वा)प्नाश्रयाऽपि भवितुमर्हति । तस्मात्तथाभूतैव सन्ध्ये सृष्टिरिति ।

एवं प्राप्ते प्रत्याह मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् । तुशब्दः पक्षं व्यावर्तयति । मायेत्यनादिरनिर्वाच्याऽविद्योच्यते । मायैव सन्ध्ये सृष्टिर्न परमार्थगन्धोऽप्यस्ति । कुतः । कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् । देशकालनिमित्तसम्पत्तिरबाधश्च कात्स्न्र्यं तेनाभिव्यक्तस्वरूपत्वाभावात् ।

तथा हि । न तावत्स्वप्ने रथादीनामुचितो देशः संभवति । न हि संवृते देहदेशे रथादयोऽवकाशं लभेरन् ॥ न च वाच्यं 'बहिः कुलायादमृतश्चरित्वे'ति श्रुतेः स्थितिगतिप्रत्ययभेदाच्च बहिर्देहात्स्वप्नं पश्यतीति ॥ सुप्तस्य जन्तोर्योजनशतान्तरितं देशं क्षणमात्रेण पर्येतुं विपर्येतुं च ततः(सर्वतः)सामर्थ्या(भावा) संभवात् । क्वचिच्च प्रत्यागमनवर्जितः स्वप्नो भवति । कुरुष्वहमद्य शयानः स्वप्ने पाञ्चालानधिगतश्च प्रतिबुद्धश्चेति । देहाच्चेदपेयात्पाञ्चालेषु प्रतिबुध्येत । कुरुष्वेव तु प्रतिबुध्यते । येन चायं देहेन देशान्तरमश्नुवानो मन्यते तं अस्माभ्याऽऽस्थाः शयनदेश एव पश्यन्ति । यथाभूतानि चायं देशान्तराणि स्वप्ने पश्यति, न तानि तथाभूतान्येव भवन्ति । परिधावंश्चेत्पश्येज्जाग्रद्वद्भूतमर्थमाकलयेत । दर्शयति च श्रुतिरन्तरेव स्वप्नं 'स्वे शरीरे यथाकामं परिवर्तत' इति । अतश्च श्रुत्युपपत्तिविरोधाद्बहिःश्रुतिरनुपकारित्वसाम्याद्गौणी व्याख्येया ॥ स्थितिगतिप्रत्ययभेदश्च भ्रान्तोऽभ्युपेयः ।

कालविसंवादोऽपि स्वप्ने भवति । रजन्यां सुप्तो हि वासरं भारते वर्षे मन्यते । तथा मुहूर्तमात्रमपि वर्षम् । निमित्तान्यपि (च) स्वप्ने न बुद्धये कर्मणे वोचि(चोचि)तानि विद्यन्ते । बाध्यन्ते चैते रथादयः स्वप्ने दृष्टाः प्रबोधे । स्वप्ने एव चैते सुलभबाधा भवन्ति । आद्यन्तयोर्व्यभिचारदर्शनात् । रथोऽयमिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यते । मनुष्योऽयमिति निर्धारितः क्षणेन वृक्षः ।

स्पष्टं चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रम् । 'न तत्र रथा न रथयोगा न पन्थानो भवन्ती'त्यादि । तस्मान्मायामात्रं स्वप्नदर्शनम् ।

शे० — भेद इत्याद्युत्तरभाष्यस्य सूत्रार्थकथनरूपत्वाभावात्तदुपयुक्तार्थप्रतिपादकत्वाभावाच्चानर्थक्यमाशङ्क्य स्वकीयसूत्रव्याख्यानदार्ढ्याय तदपव्याख्याननिरासार्थत्वान्नानर्थक्यमित्यभिप्रेत्यापव्याख्या-

नानिरासपरतयोत्तरग्रन्थं सङ्गमयितुं तदनुवदति **अन्ये पुनरिति**। आरम्भणाधिकरणे स्वप्नस्य मायामयत्वं सिद्धवत्कृत्य जाग्रदवस्थाया मायामयत्वं निरूपितम्। इदानीं तदेव स्वप्नस्य मायामयत्वं प्रकटयितुं तद्विषयं वाक्यमुदाहरति **न तत्रेति**। अत्र 'स यत्र प्रस्वपिती'त्युपक्रम्येति पूरणीयम्‌ **किं प्रबोध इवेति**। अत्र च पारमार्थिकत्वमर्थक्रियासमर्थत्वमित्यभिप्रेत्यैव प्रबोध इवेत्युदाहरणम्। न तु वास्तवत्वमित्यभिप्रेत्य। तथा सत्यारम्भणाधिकरणे सर्वविकारमिथ्यात्वसमर्थनेन वास्तव्याः सृष्टेस्तत्राप्यसत्वे दृष्टान्तस्य साध्यवैकल्यापातात्। मायामयत्वं च प्रातीतिकसत्तामात्रोपेतत्वमित्यवधेयम्।

पूर्वपक्षमाह **तत्रेति**। प्रतिज्ञां विवृण्वन्सन्ध्यपदार्थमाह॥ **प्रबोधेति**। **प्रबोधो** जाग्रत्। सम्प्रसीदत्यत्रेति सम्प्रसादः सुप्तिः। स्थानशब्दोऽवस्थावाचीति द्रष्टव्यम्। यद्यपि सन्ध्यं तृतीयं स्वप्नस्थानमिति' वैदिकप्रयोगदर्शनादेव सन्ध्यशब्दस्य स्वप्नस्थानपरत्वं व्युत्पादयितुं शक्यत इत्युक्तविधयोगाश्रयणमनर्थकमित्याभाति। तथाऽपि वैदिकप्रयोगस्य प्रथमप्रयोगमूलकतया तदभावे तदसिद्ध्या तेन कथं तत्सिद्धिरित्याशङ्कायां यौगिकत्वात्सन्ध्यशब्दस्य न तदपेक्षत्वमिति दर्शयितुं योगवृत्त्याश्रयणं कृतमित्यवधेयम्। पदार्थमुक्त्वा प्रतिज्ञां पूरयति **तत्रेति**॥ **तथारूपैवेति**। अर्थक्रियासमर्थैवेत्यर्थः। मानाभावात्स्वप्नसृष्टेर्न सत्यत्वमित्याशङ्कते **कुत इति**॥ श्रुतिं प्रमाणयन्नुत्तरमाह **यत इति**। बाह्यरथाभावेऽपीत्यथशब्दार्थः।

किञ्च विमता रथादयः सत्या निर्मितत्वाज्जाग्रन्निर्मितरथादिवदित्यनुमानमपि स्वप्नसृष्टेः सत्यत्वे प्रमाणमित्याह **निर्मातारमिति**। तद्व्याकरोति **अपि चेति**। सुप्तेषु करणेषु निर्व्यापारेष्विति यावत्। कामशब्दस्य रूढ्येच्छावाचित्वात्कथं पुत्रादिपरत्वमित्यतो योगेन तदुपपादयति **काम्यन्त इतीति**। ननु च तस्य रूढ्येच्छापरत्वमेव किन्न स्यादित्यत आह **नेति**। तर्हि रूढिर्योगमपहरतीति न्यायविरोध इत्यतः प्रकरणविरोधान्नात्र रूढिराश्रयणीयेत्याह **शतायुष इति**। य एष इत्यादिश्रुतिप्रकरण इति शेषः। अन्यथा 'कामं कामं पुरुषो निर्ममाण' इत्येतद्वाक्यगतकामशब्दस्य पुत्राद्यर्थत्वासिद्धिप्रसङ्गात्। अत एव परभाष्ये तत्राप्युक्तमिति ज्ञेयम्।

प्राज्ञकर्तृकत्वादपि सत्यैव स्वप्नसृष्टिः सम्प्रतिपन्नवदित्याह **प्राज्ञं चेति**। तद्विषयं प्रकरणमेव प्रकटयति **अन्यत्रेति**। तद्विषयं वाक्यशेषमप्युदाहरति **वाक्येति**। आदिपदेन 'तदेवामृतमुच्यते। तस्मिंल्लोकाश्रिताः सर्वे तदु नात्येति कश्चने'त्युत्तरवाक्यपरिग्रहः। दृष्टान्तस्य साध्यविकलतां परिहरति **प्राज्ञेति**। स्वयं विहत्य स्वयं निर्मातीति जीवकर्तृकत्वश्रवणाद्धेत्वसिद्धिमाशङ्क्य जीवस्य प्राज्ञाभेदात्प्राज्ञकर्तृकत्वमविरुद्धमित्यभिप्रेत्य दार्ष्टान्तिकमाह **तथेति**। केचित्तूपनयनिगमने दर्शयति **तथेति**। यतः स्वप्नाश्रयाऽपि सृष्टिस्तथा प्राज्ञकर्तृकाऽतस्तथा सत्यरूपेत्यावृत्त्या योज्यमित्याहुः। बाध्यत्वेन

मिथ्यात्वमाशङ्क्य जागरितसृष्टेः श्रुत्या बाध्यत्वेऽपि तत्त्वसाक्षात्कारात्प्रागनिवृत्तेः सत्यत्ववत्स्वप्नसृष्टेरपि सत्यतेत्याशयेनोपसंहरति **तस्मादिति** ।

पूर्वपक्षानुवादेन सिद्धान्तं सूत्रयति **एवमिति** । अक्षरव्याख्यानमारभते **तुशब्द इति** ॥ **पक्षमिति** । पूर्वपक्षमित्यर्थः । यदुक्तं सन्ध्ये सृष्टिः पारमार्थिकीति नैतदस्तीत्येवं पक्षं व्यावर्तयतीति यावत् । ननु स्वाप्नार्थानामाविद्यकत्वान्न मायोपादानकत्वम् । अन्यथा वियदादिवद्व्यावहारिकत्वप्रसङ्गादित्यत आह **मायेत्यनादिरिति** । उत्तरपक्षप्रतिज्ञापूर्वकं पूर्वपक्षप्रतिषेधं प्रतिजानीते **मायैवेति** । सूत्रे मायाशब्दोपादानं तु मायाऽविद्ययोरनतिभेदज्ञापनार्थम् । मात्रशब्देन सति मातरि बाध्यत्वं नाम श्रुतिसिद्धत्वं स्वप्नस्य जाग्रद्वैलक्षण्यमिति दर्शितम् । स्वाप्नसृष्टेः सत्यत्वश्रवणान्न तन्मिथ्यात्वप्रतिज्ञा युक्तेत्याशङ्कते **कुत इति** । परमार्थत्वव्यापकत्वेनावधारितस्य कार्त्स्न्यस्य स्वाप्नाद्व्यावृत्त्या तद्व्याप्यस्य परमार्थत्वस्यापि व्यावृत्तिसिद्धेर्नानुपपत्तिरित्याशयेन सौत्रहेतुं व्यापारयति **कार्त्स्न्येनेति** । व्याप्यव्यापकभावस्फोरणायाभिमतं कार्त्स्न्यं व्याचष्टे **देशेति** ।

ननु स्वप्नेऽप्युक्तरूपकार्त्स्न्यसद्भावान्न व्यापकनिवृत्तिरित्यतो विवक्षितकार्त्स्न्याभावोपपादनं प्रतिजानीते **तथा हीति** । तत्कथमित्यत स्वप्ने योग्यदेशायोगं तावद्विवृणोति **न तावदिति** । यत्र स्वप्नो दृश्यते स एव रथादीनां योग्यो देशः स्यादित्याशङ्क्य स किं देहान्तर्बहिर्वेति विकल्प्याद्यं प्रत्याह **न हीति** । संवृत इति हेतुगर्भविशेषणम् । द्वितीयमाशङ्क्य निषेधति **न चेति** । देहाद्बहिरेव स्वाप्नं पश्यतीत्यत्र श्रुतिं प्रमाणयति **बहिरिति** । तत्रैव युक्तिमप्याह **स्थितीति** । स्वाप्नार्थसम्बन्धिस्थितिगतिप्रत्ययस्य देहान्तःस्थितपदार्थसम्बन्धिस्थितिगतिप्रत्ययापेक्षया भिन्नत्वादित्यर्थः । देहान्तःस्थितपदार्थानां संवृत एव देहदेशे स्थितिप्रतीतौ देहेन सहैव गतिप्रतीतावपि स्वाप्नार्थानामसंवृते देशे स्थितिप्रतीतेर्देहगत्यभावेऽपि गतिप्रतीतेश्च सत्त्वादिति भावः ।

कुतो नेत्यत आह **सुप्तस्येति** । तथा चान्तरेव स्वप्नं पश्यतीति वाच्यमिति भावः । बहिर्गतस्याऽऽगत्यनियमात्तत्रैव प्रबोधप्रसङ्गादपि न स्वप्नो बहिरित्याह **क्वचिच्चेति** । प्रत्यागमनवर्जितत्वं स्वप्नस्य कुत इत्यतः स्वप्नोत्थितस्य पार्श्वस्थान्प्रति तथा श्रावणमेव तत्र नियामकमित्याह **कुरुष्विति** । प्रतिबुद्धश्चेत्यत्र कुरुष्वित्यनुवर्तते । इति पार्श्वस्थान् श्रावयतीति शेषः । उक्तमेवार्थं व्यतिरेकद्वारा स्फोरयति **देहाच्चेदिति** । स्वप्ने पाञ्चालान्प्रति गतत्वादिति भावः । इष्टापत्तिं परिहरति **कुरुष्वेवेति** । इतश्च न देहाद्बहिर्देशान्तरं गत्वा स्वप्नधीरित्याह **येन चेति** । न स्वप्नो देहाद्देशान्तरगतस्येत्यत्रैव हेत्वन्तरमाह **यथेति** । तदेव व्यतिरेकद्वारेण स्फोरयति **परिधावंश्चेदिति** । **अयं प्रसङ्गार्थः** । यदि जीवो देहाद्देशान्तरं गत्वा तत्पश्येत्तर्हि यद्यथाभूतमाकलयेत्तत्तथाभूतं स्याज्जाग्र-

दृशायां देशान्तरं गत्वा यद्यत्तथाभूतं दृष्टं तस्य तथाभूतत्वदर्शनात् । न चेष्टापत्तिः । तस्य तथाभूतत्वाभावस्य पूर्वत्र व्युत्पादितत्वेन तदनवकाशात् । अतो न देशाद्देशान्तरं गत्वा तद्दर्शनमिति । केचित्त प्रसङ्गान्तरं वक्तुं कर्तव्यप्रसङ्गस्यानिष्टतां तावदुपोद्घातेनाह **यथेति** । इदानीं प्रसङ्गमाह **परिधावंश्चेति** । वाक्यद्वयं व्याचष्टे । न केवलं स्वप्नोऽन्तरेणेत्युपपत्तिमात्रसिद्धोऽयमर्थः किन्तु श्रुतिसिद्धश्चेत्याह **दर्शयति चेति** ॥ **स्वे शरीर इति** । अत्र 'स्वप्नायाचरतीत्युपक्रम्ये'त्यत्र शेषपूरणाद्विवक्षितसिद्धिरिति ज्ञेयम् । कथं तर्हि बहिष्कुलायश्रुतिरित्यत आह **अतश्चेति** ॥ **अनुपकारित्वसाम्यादिति** । यो हि देहं परित्यज्य बहिर्गच्छति तस्य देहो यथा नोपकारी तथा स्वप्नावस्थायां देहे वसतोऽपि जन्तोर्देहो नोपकारीत्यनुपकारित्वसाम्यात्कुलायाद्देहाद्बहिरिव चरित्वेति गौणी व्याख्येयेत्यर्थः ।

यदप्युक्तं स्थितिगतिप्रत्ययभेदसामञ्जस्याय स्वप्नो बहिरेवेति तत्रोत्तरमाह **स्थितीति** । श्रुतियुक्तिभ्यामन्तरेव स्वप्नसिद्धेरिति भावः ।

योग्यदेशायोगं स्वप्नस्योक्त्वा तादृक्कालायोगं स्पष्टयति **कालेति** ॥ **रजन्यामिति** । भारते वर्षे या रजनी तस्यां सुप्तोऽपि वासरं भारते वर्षे मन्यत इति योजना । यद्यपि रजन्यां वासरस्याभावात्तत्र तद्दर्शनमेव कालविसंवादिस्वप्नदर्शनोदाहरणत्वेन वक्तुमुचितं तथाऽपि भारते वर्षे रजनीसमयेऽपि केतुमालादौ वर्षान्तरे वासरस्य सद्भावेन तत्र तद्दर्शनस्य कालविसंवादिस्वाप्नदर्शनोदाहरणत्वानुपपत्तेर्भारते वर्षे इत्युक्तम् । अयमाशयः । लक्षयोजनविस्तृतवर्तुलाकारलवणार्णवपरिवृतस्य लक्षयोजनविस्तृतस्य जम्बूद्वीपस्य मध्यभूतकमलकर्णिकाकृतेलावृताख्यमध्यमासीनस्य मेरोर्दक्षिणतो हरितकिम्पुरुषभारताख्यानि त्रीणि वर्षाणि, उत्तरतो रम्यकहिरण्मयोत्तरकुरुसंज्ञानि त्रीणि, पश्चिमतः केतुमालाख्यमेकं, पूर्वतो भद्राश्वसंज्ञकमेकम् । वसन्ति रमन्ति चैतेषु प्राणिन इति मर्यादापर्वतान्तरिताः प्राणिनिवासस्थानभूता भूप्रदेशा वर्षाण्युच्यन्ते । तेषु मेरुं प्रदक्षिणीकुर्वाणस्यादित्यस्य रश्मयो यदा यावत्पर्यन्तं प्राप्नुवन्ति तदा तावत्पर्यन्तं दिवसोऽन्यत्र रजनीति व्यवस्था । एवञ्च भारते वर्षे सूर्यास्तमयानन्तरं केतुमाले मेरुव्यवधानाभावात्सूर्यप्रकाशोऽस्तीति दिवसो भवति । अतो रजन्यां दिवसो न विरुद्ध इति शङ्कानिवारणाय भारते वर्षे रजन्यां सुप्तस्य तत्रैव स्वाप्नं दिवसदर्शनमुदाहृतमिति । विधान्तरेणापि कालविसंवादमाह **तथेति** । मन्यत इत्यनुवर्तते । योग्यकालायोगमुक्त्वा तादृङ्निमित्तायोगमाह **निमित्तान्यपीति** । न रथादीनां बुद्ध्ये ग्रहणाय निमित्तानि सन्ति तदुचितानां चक्षुरादीनां तदोपरतत्वात् । नापि तेषां जननाय । तदुचितानां दार्वादीनां तत्रासत्त्वात् । क्षणमात्रेण चास्य रथादिनिर्वर्तने सामर्थ्याभावाच्चेति भावः । अबाधासम्भवं विभजते **बाध्यन्ते चेति** । न केवलं प्रबोधे बाध्यत्वं किन्तु स्वप्नेऽपीत्याह **स्वप्न**

**एव चेति** । आदावन्ते च व्यभिचारधीर्जागरेऽपि तुल्येत्याशङ्क्य विशेषमाह **रथोऽयमिति** । न केवलमध्यक्षं स्वाप्नरथादीनां बाध्यत्वं किन्तु श्रुतमपीत्याह **स्पष्टं चेति** । योग्यदेशाद्यभावेन सिद्धमर्थमुपसंहरति **तस्मादिति** ।

स०— आरंभणाधिकरणे स्वप्नस्य मायामयत्वं सिद्धवत्कृत्य जाग्रदवस्थायां मायामयत्वं निरूपितं तदेव स्वप्नस्य मायामयत्वं प्रकटयितुं तद्विषयवाक्यमुदाहरति **तथा हि न तत्रेत्यादिना** । तस्मिन् वाक्ये स्वाप्नीं सृष्टिमधिकृत्य तत्रापि सर्गाश्रवणाच्च संशयमाह **तत्रेति** । पारमार्थिकत्वमर्थक्रियासमर्थत्वमित्यभिप्रेत्य प्रबोध इवेत्युदाहरणम् । अन्यथा तत्रापि वास्तव्याः सृष्टेरनिष्टत्वेन साध्यवैकल्यात् । मायामयत्वं प्रातीतिकसत्तोपेतत्वम् । अत्र च त्वमर्थस्य स्वप्नावस्थानिरूपणेन ततो निष्कृष्टस्य स्वयंज्योतिषः शुद्धतया वाक्यार्थान्वयित्वेन तद्धेतुत्वमस्तीति तत्प्रतिपादनात् पादादिसङ्गतयः । पूर्वपक्षे स्वप्नस्य सत्यतया ततो निष्कर्षायोगात् अशुद्धस्यास्वयंज्योतिषो वाक्यार्थान्वयसिद्धिः । सिद्धान्ते तस्य मिथ्यात्वात् ततो निष्कृष्टस्य स्वयंज्योतिषः तदन्वयेन तद्धेतुत्वमिति मत्वा पूर्वपक्षमुपादत्ते **तत्रेति** । प्रतिज्ञां विवृण्वन्नादौ संध्यशब्दार्थमाह **संध्यमितीति** । तत्र मानमाह **वेद इति** । प्रथमप्रयोगाभावे कथं वैदिकप्रयोगसिद्धिरित्याशङ्क्य यौगिकत्वान्न दोष इत्याह **द्वयोरिति** ॥ ऐहिकामुष्मिकं च यदा ऐन्द्रियकं रूपादिज्ञानं तस्याभावादनुदयाच्च स्वप्नस्थानं तयोः संध्यमुक्तम् । स्थूलदर्शनस्य चाभावात् वासनाज्ञानस्य तत्रभावात् प्रबोधप्रमादयोर्वा संध्यं स्वप्नस्थानमिति विवेक्तव्यम् । पदार्थमुक्त्वा प्रतिज्ञां पूरयति **तस्मिन्निति** । स्वप्नसृष्टेर्न सत्यत्वं मानाभावादित्याह **कुत इति** । श्रुतिं प्रमाणयन्नुत्तरमाह **यत इति** । बाह्यार्थाभावेपीत्यथशब्दः । न केवलं सृष्टिश्रुत्या स्वप्नसृष्टेः सत्यत्वं सकर्तृत्वादपि तस्माज्जागरितसृष्टिवदर्थक्रियासामर्थ्यरूपसत्यत्वमेष्टव्यमित्याह **स हीति** । किञ्च विमताः सत्याः निर्मितत्वात् जाग्रन्निर्मितरथवदित्याह **निर्मातारमिति** । निर्मितान् कामान् विशिनष्टि **पुत्रादयश्चेति** । निर्मातारं चेत्यादि व्याकरोति **अपि चेति** । सुप्तेषु करणेषु निर्व्यापारेष्विति यावत् । स त्वया पृष्ट आत्मेति शेषः । कामशब्दस्य यौगिकार्थमाह **पुत्रादयश्चेति** । रूढिर्योगमपहरतीति न्यायेन शङ्कते **नन्विति** । प्रकरणविरोधान्नात्र रूढिरित्याह **नेत्यादिना** ॥ **तत्रेति** । य एष इत्यादि यत्र श्रुतं तत्रैव प्रकरण इति यावत् । परकर्तृकत्वादपि सत्यैव स्वप्नसृष्टिः संप्रतिपन्नवदित्याह **प्राज्ञं चेति** । तद्विषयं प्रकरणं प्रकटयति **प्राज्ञस्येति** । तद्विषयवाक्यशेषमपि विशदयति **तदिति** । दृष्टान्तस्य साध्यविकलतां प्रत्याह **प्राज्ञेति** । हेत्वसिद्धिमाशङ्क्य क्वचिज्जीवकर्तृत्वश्रवणेपि प्राज्ञाभेदाय ब्रह्मगस्तद्भावात् प्राज्ञकर्तृकतेति मत्वा दार्ष्टान्तिकमाह **तथेति** । स्वाप्नजागरितयो-

स्तुल्यदेशत्वश्रवणादपि स्वप्नस्य सत्यतेत्याह **तथा चेति** । स्वप्नजाग्रद्वियोरेकार्थत्वश्रुत्यापि स्वप्नसृष्टेः सत्यतेत्याह **यानीति** । उक्तश्रुतेस्तात्पर्यमाह **स्वप्नेति** । बाध्यत्वेन मिथ्यात्वमाशङ्क्य जागरितसृष्टेः श्रुत्या बाध्यत्वेपि तत्वसाक्षात्कारात्प्रागनुत्पत्तेः, सत्यत्ववदस्यापि स्वप्नस्य सत्यतेत्याह **तस्मादिति** । स्वप्नसृष्टेः सत्यत्वे तद्विशिष्टात्मनोऽशुद्धेर्न वाक्यार्थान्वयितेत्युपसंहर्तुमिनीत्युक्तम् पूर्वपक्षानुवादेन सिद्धान्तयति **एवमिति** । अक्षरव्याख्यामारभते **तुशब्द इति** पक्षव्यावृत्तिं व्यावर्त्यानुवादेन व्यनक्ति **नैतदिति** । पूर्वपक्षनिषेधं प्रतिज्ञायोत्तरपक्षं प्रतिजानीते **मात्रेति** । मायाऽविद्ययोर्भेदो नेति वक्तुं सूत्रभाष्ययोर्मायाशब्दः । सूत्रे मात्रशब्देन सति मातरि बाध्यत्वं नाम भ्रान्तिसिद्धत्वं स्वप्नस्य जाग्रद्वैलक्षण्यं विवक्षितम् । श्रुतियुक्तिभ्यो स्वाप्नसृष्टेः सत्यत्वोक्तेः **नेयं** प्रतिज्ञेति शङ्कते **कुत इति** । न पारमार्थिकत्वं मत्वा हेतुं कार्त्स्न्यं व्याकरोति **कार्त्स्न्येनेति** । परमार्थवस्तुधर्मो योग्यदेशलक्षणत्वं स्वकार्त्स्न्येन व्याप्तत्वात् तथा व्यक्त्यभावे तद्व्याप्यं वस्तुत्वमपि व्यावर्तत इत्यर्थः । एकस्यापि सर्वात्मताऽनभिव्यक्तेः सर्वत्र वस्तुत्वव्यावृत्तिरित्याक्षिपति **किमिति** । अतिप्रसङ्गं व्याख्यातुं इष्टं कार्त्स्न्यं व्याकरोति **देशेति** । स्वप्नेपि तत्सिद्धिमाशङ्क्याह **नेत्यादिना** । तत्र योग्यदेशायोगं विवृणोति **न तावदिति** । यत्र स्वप्नो दृश्यते स एव रथादीनां योग्यो देशः स्यादित्याशङ्क्य स किं देहान्तर्वा बहिर्वा इति विकल्प्याद्यं दूषयति **न हीति** । द्वितीयं शङ्कते **स्यादिति** । तत्रोपपत्तिमाह **देशेति** तत्रैव श्रुतिमाह **दर्शयतीति** । देहाद्बहिरेव स्वप्नधीरित्यत्र युक्त्यंतरमाह **स्थिरेति** । देहान्तरेव स्वप्नदर्शने एकस्तिष्ठति एको गच्छतीति स्थित्यादिप्रत्ययानुपपत्तिः । देहदेशस्य संवृतत्वेन तत्रैकस्यावस्थानं अपरस्य गमनमित्यस्यानुपपन्नत्वादित्यर्थ इत्येके । स्वावस्थियवच्छिन्नदेशावच्छेदेन जायमानजाग्रत्कालीनस्थितिगतिप्रत्ययापेक्षया स्वावस्थित्यनवच्छिन्नप्रदेशावच्छेदेन जायमानस्थितिगतिप्रत्ययस्य वैलक्षण्यादित्यर्थः । अंतरेव स्वप्नो न बहिरित्याह **नेतीति** । बहिर्गतस्यागत्यनियमात् तत्रैव बोधप्रसङ्गादपि न स्वप्नो बहिरित्याह **कचिच्चेति** । श्रावयति स्वप्नद्रष्टा प्रबुद्धः सन् पार्श्वस्थानिति शेषः । उक्तमर्थं व्यतिरेकद्वारा स्फोरयति **देहादिति** । इतश्च न देहाद्बहिर्देशान्तरं गत्वा स्वप्नधीरित्याह **येनेति** । न स्वप्नो देशान्तरं गतस्येत्यत्रैव हेत्वंतरमाह **यथेति** । तदेव व्यतिरेकेणोपपादयति **परिधावन्निति** । देहाद्देशान्तरं गच्छन्निति यावत् । न केवलं स्वप्नोंतरेवेत्युपपन्नं किन्तु श्रौतश्चेत्याह दर्शयतीति **अंतरिति** । अंतरिति स्वप्नवाचिक्रियाविशेषणम् । स्वेइति वृत्तिर्विशेष्यते । अंतरेव स्वप्नश्चेत्कथं तर्हि बहिष्कुलायश्रुतिस्तत्राह **अंतश्चेति** । कथं शरीरे वसतो बहिरित्युक्तिरित्याशङ्क्य उपचारनिमित्तमाह **बहिरिति** । यत्तु स्थितिगतिप्रत्ययभेदसामञ्जस्याय स्वप्नो बहिरिति तत्राह **स्थितीति** ॥ **एवं सतीति** । श्रुतियुक्तिभ्यामन्तरेव स्वप्ने सिद्धे सतीत्यर्थः । विप्रलम्भो विभ्रमः । योग्यदेशायोगं स्वप्नस्योक्त्वा

तादृक्कालायोगं स्पष्टयति **कालेति** । अत्र रात्रिसमयेपि केतुमालादौ वर्षान्तरे वासरो भवतीति भारत इत्युक्तम् । विधान्तरेण कालविसंवादमाह **तथेति** । योग्यकालायोगमुक्त्वा तादृङ्निमित्तायोगमाह **निमित्तान्यपीति** । बोधार्थं योग्यनिमित्तायोगं साधयति **कर्मणेति** । अस्येति स्वप्नद्रष्टुरित्युक्तिः । कर्मार्थं योग्यनिमित्तायोगमाह **रथादीति** । अबाधासंभव विभजते **बाध्यते इति** । न केवलं प्रबोधे बाध्यत्वं किं तु स्वप्नेपीत्याह **स्वप्न इति** । आदावन्तेपि व्यभिचारधीर्जागरितेपि तुल्येत्याशङ्क्य विशेषमाह **रथोयमिति** । न केवलमध्यक्ष स्वप्नरथादीनां बाध्यत्वं तु श्रौतमपीत्याह **स्पष्टं चेति** । योग्यदेशाद्यभावेन सिद्धमर्थमुपसहरति **तस्मादिति** ।

**प०** — अन्यमते हि सन्ध्य इत्यारभ्य देहयोगादित्यन्तषट्सूत्राण्येकाधिकरणम् । तत्र पूर्वपक्षसूत्रद्वयार्थं वक्तुमाह **स्वप्नेऽपीति** । न तत्र रथा इति श्रुतौ उपक्रमे स यत्र स्वपितीति श्रवणात्स्वप्न इत्युक्तम् ॥ पूर्वपक्षसूत्रद्वयार्थमनुवदति **तत्र तावदिति** । **प्रबोधसंप्रसादयोः** जाग्रत्सुषुप्त्योरित्यर्थः । संधिशब्दाद्भावार्थे यत्प्रत्यय इत्युक्तं भवति । सिद्धान्तसूत्रद्वयार्थमनुवदति **प्रत्याहेति** ॥ **पक्षमिति** । पूर्वसूत्रद्वयोक्तसत्यसृष्टिपक्षमित्यर्थः । मात्रपदार्थो **माययेति** । तद्व्यावर्त्यमाह **न परमार्थेति** ॥ **तेनाभिव्यक्तेति** । देशकालादिसंपत्तियुक्ततया प्रतीतेरभावादित्यर्थः । **संवृत इति** ॥ अविरल इत्यर्थः ॥ बहिर्देशे पश्यतीत्यत्र युक्तिं चाह **स्थितिगतिप्रत्ययभेदाच्चेति** । देहस्थपदार्थसंबन्धिभ्यः स्थितिगतिप्रत्ययेभ्यः स्वप्ने दृश्यमानपदार्थसंबन्धिस्थितिगतिप्रत्ययानां भेदादित्यर्थः । देहस्थवस्तूनां देह एव स्थितिः । तेनैव सहगतिः देहस्थत्वयैव प्रतीतिः । स्वप्नदृष्टानां तु विशालदेशे स्थितिः गतिश्चोपलभ्यते । बहिष्ठतया प्रत्ययश्च अतो बहिरेव पश्यतीति शङ्कार्थः ॥ **प्रतिबुद्धश्चेति** । पाञ्चालेभ्यः प्रत्यागतिमपश्यन्नेव प्रतिबुध्यत इत्यर्थः ॥ **अनुपकारित्वसाम्यादिति** । देहान्निर्गतस्य देहो यथाऽनुपकारी तथा स्वप्नद्रष्टुः सन्नपि देहोऽनुपकारी बाह्यभोगाहेतुत्वादिति । तदभिप्राया 'बहिःकुलायादि'ति श्रुतिर्व्याख्येयेत्यर्थः । **वासरमिति** । वासरशब्देनाहरुच्यते । भारतखण्डे रजनी चेदपि सूर्यसंचरणदेशान्तरे अहर्भवत्येवेत्यत उक्तं **भारते वर्ष इति** ॥ **न बुद्धये कर्मणे चेति** । रथादीनां स्वाप्नार्थानां बुद्धये प्रतीत्यर्थं चक्षुरादिनिमित्तानि न सन्ति । तदा तेषामुपरतत्वात् । कर्मणे रथादिकृतौ उपादानकारणानि च न सन्तीत्यर्थः ॥ **आद्यन्तयोरिति** । प्रथमप्रतीतस्य चार्थस्यान्याकारत्वदर्शनात् प्रतीतेरप्यत एवार्थव्यभिचारदर्शनादित्यर्थः । आद्यस्य व्यभिचारेप्यन्त्यस्य स्थिरत्वमबाधश्च भविष्यतीत्यतः तस्यापि ग्रहणं कृतम् । तदेव व्यनक्ति **रथोयमिति** ।

**या०** — तथा हीत्यनन्तरं स यत्र प्रस्वपितीत्युपक्रम्येति ग्राह्यम् ॥ **आहोस्विन्मायामयीति** । यद्यपि ब्रह्मणोऽन्यस्यानिर्वाच्यतया जाग्रत्स्वप्नगतयोरुभयोरपि सर्गयोर्मायामात्रत्वमेव । तथाऽपि यथा

जाग्रत्सृष्टिर्ब्रह्मात्मभावसाक्षात्कारात्प्रागनुवर्तते ब्रह्मात्मभावसाक्षात्कारात्तु निवर्तते । एवं किं स्वप्नसृष्टिः, आहोस्वित्प्रतिदिनमेव निवर्तत इति विमर्शार्थो ज्ञातव्यः ॥ **प्रबोधसम्प्रसादेत्यादि** । प्रबोधो जागरणं सम्यक् प्रसीदत्यत्रेतिसम्प्रसादः सुप्तिः । स्थानशब्दार्थस्त्ववस्था ॥ **तथारूपैवेति** । ब्रह्मात्मभावसाक्षात्कारेतराबाध्यैवेत्यर्थः ॥ **प्राज्ञकर्तृका च सृष्टिरिति** । वियदादिसृष्टिरित्यर्थः । **पक्षमिति** । पूर्वपक्षमित्यर्थः । ननु प्रातिभासिकानां स्वाप्नार्थानामविद्योपादानकत्वात्कथं मायामात्रत्वमुच्यते । मायाया व्यावहारिकोपादानत्वादित्यत आह **मायेत्यनादिरिति ॥ परमार्थेति** । ब्रह्मात्मभावसाक्षात्कारेतराबाध्येत्यर्थः ॥ **तेनाभिव्यक्तेति** । उक्तकात्स्र्न्यविशिष्टतया प्रतीयमानत्वाभावादित्यर्थः । **संवृते** सङ्कुचिते ॥ **स्थितिगतिप्रत्ययभेदादिति** । स्वाप्नार्थसम्बन्धिस्थितिगतिप्रत्ययानां देहान्तःस्थितपदार्थसम्बन्धिस्थितिगतिप्रत्ययापेक्षया भिन्नत्वादित्यर्थः । देहान्तःस्थितपदार्थानां हि संवृत एव देहदेशे स्थितिर्देहेन सहैव गतिः प्रत्यक्तया प्रत्ययश्चानुभूयते । स्वाप्नार्थानां तु नैवम् । किन्त्वसंवृतेऽपि देशे स्थितिर्देहगत्यभावेऽपि गतिः पराक्त्वेन प्रत्ययश्चानुभूयत इति । इतश्च स्वप्नो न बहिरित्याह **क्वचिच्चेति** । प्रतिबुद्धश्चेतीत्यनन्तरं स्वप्नोत्थितवचनादिति शेषः । ननु जाग्रदवस्थायां जन्तोः क्षणमात्रेण योजनशतान्तरितदेशगमनागमनयोरसम्भवेऽपि स्वप्नावस्थायां परिधावतस्तस्य ते सम्भवत इति शङ्कायां बाधकं वक्तुं वस्तुस्थितिं तावदाह **यथाभूतानि चेति** । इदानीं बाधकमाह **परिधावंश्चेदिति** । कुरुषु सुप्तः परिधावन्पाञ्चालान्प्राप्यैव यदि पश्येदित्यर्थः । **जाग्रद्वृत्तं** जाग्रदवस्थायामिव स्थितम् । यथाऽस्ति तथा भूतमिति यावत् । अत्रेष्टापत्तिपरिहाराय पूर्वं वस्तुस्थितिः कथितेति ज्ञातव्यम् ॥ **अनुपकारित्वेति** । यो हि देहं परित्यज्य बहिर्गच्छति तस्य यथा देहोऽनुपकारी तथा स्वप्नावस्थायां देहे वसतोऽपि जन्तोर्देहोऽनुपकारीत्यनुपकारित्वसाम्यात्कुलायाद्देहाद्बहिरिव चरित्वेति श्रुतिर्गौणी व्याख्येया । यो हि देहे वसन्नपि न तेन प्रयोजनं सम्पादयति स बहिरिव शरीराद्भवतीत्यर्थः । वासरशब्देन दिवोच्यते । नन्वस्माकं रजनी केतुमालादिखण्डान्तरस्थानां दिवा भवत्येवेत्यत आह **भारते वर्ष इति ॥ न बुद्धय इत्यादि** । न रथादीनां बुद्धये ग्रहणाय निमित्तानि सन्ति । तदुचितानां चक्षुरादीनां तदोपरतत्वात् । नापि तेषां कर्मणे जननाय तदुचितानां दार्वादीनां तत्राभावादित्यर्थः ॥ **आद्यन्तयोरिति** । पूर्वोत्तरज्ञानयोरुभयोरपि बाधदर्शनादित्यर्थः । एतदेव दर्शयति रथोऽयमित्यादिना ।

श्री० — पर्येतुं गन्तुम् । **विपर्येतुम्** आगन्तुम् ।

च० — **संवृते** संकुचिते । **कुलायात्** देहात् । **स्थितिगतिप्रत्ययेति** । स्वाप्नार्थसंबन्धिस्थितिगतिगोचरप्रत्यययोर्देहान्तस्थितपदार्थसंबन्धिस्थितिगतिविषयकप्रत्ययप्रतियोगिकभेदानुयोगित्वादित्यर्थः

देहान्तःस्थितपदार्थानां संवृते देहदेशे स्थितिप्रतीतौ देहेन सह गतिप्रतीतावपि स्वाप्नार्थानामसंवृतदेशे स्थितिप्रतीतेर्देहगत्यभावेऽपि गतिप्रतीतेश्च सत्त्वादिति भावः। दर्शितदिशा स्थितिभेदाद्गतिभेदात्प्रत्यक्त्व-पराक्त्वाभ्यां प्रत्ययभेदाच्चेत्यर्थ इत्यपि स्थितम्। **पर्येतुं** गन्तुम्। **विपर्येतुं** प्रत्यागन्तुम्। **अधिगतः** प्राप्तः। **अभ्याशस्थाः** समीपस्थाः। **जाग्रद्भूतं** अर्थतादवस्थ्यापन्नम्। **भ्रान्तो** विपर्यस्तः। **वासरे** दिवा। **भारते वर्षे** भरतखण्डे। अस्माकं रजन्याः केतुमालादिखण्डान्तरस्थानां दिवावेनेदं पदमुपात्तम्। **निमित्तान्यपि** चक्षुरादिकरनान्यपि। दार्वादिकारणान्यपि। **बुद्धये** रथादिग्रहणाय। **कर्मणे** रथाद्युत्पादनाय च। **सुलभबाधा इति**। बहुव्रीहिः। **आद्यन्तयोः** पूर्वोत्तरज्ञानयोः। **व्यभिचारदर्शनात्** बाधदर्शनात्। तदेवोपपादयति **रथोऽयमित्यादिना**।

सु० — अपर आह कार्त्स्न्येनानभिव्यक्तस्वरूपत्वाद् **द्रष्टुर्भिन्नत्वादिना निर्वक्तुमशक्यत्वात्। तथा हि। स्वाप्नानां रथादीनां द्रष्टुर्भेदोऽभेदो भेदाभेदो वा। न तावद्भेदः। पार्श्वस्थानामपि तदुपलम्भप्रसङ्गात्। अन्तरत्वस्य चानुचितत्वात्। नाप्यभेदः। एकस्याविचित्रस्य विचित्रानेकात्मकताया विना भ्रान्तिमनुपपत्तेः। भेदप्रत्ययविरोधाच्च। न च भेदाभेदौ। व्याघातात्। अतोऽनिर्वाच्याविद्याविलास एवायमिति।**

सूचकश्च हि श्रुतेराचक्षते च तद्विदः। **मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्ध इति नेत्युच्यते। सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। कुतः। यदा कर्मस्वित्यादिश्रुतेः। आचक्षते च स्वप्नाध्यायविदः। तत्र भवतु सूच्यमानस्य सत्यत्वम्। सूचकस्य तु** वैतथ्यमेवेति भावः।

यदुक्तम् 'आह ही'ति। **तदेवं सति भाक्तं व्याख्येयम्। सुप्तौ हि स्वप्नदर्शननिमित्त-सुकृतदुष्कृतकर्तृत्वाद्रथादीनां कर्तेत्युच्यते। निर्माणश्रुतिरप्येवं** भाक्ता व्याख्येया।

**यदप्युक्तं प्राज्ञमेनं निर्मातारमामनन्तीति तदप्यसत्। श्रुत्यन्तरे** 'स्वयं विहत्य स्वयं **निर्माये'ति** जीवव्यापारश्रवणात्।

अपरस्त्वेतदर्थमेव सूचकश्चेति सूत्रं व्याख्यातवान्। **शुभाशुभसूचको हि स्वप्नः। न हि** प्राज्ञस्य शुभाशुभयोगोऽवकल्पत इति। जीवस्यैव तदेव शुक्रमिति वाक्यशेषे जीवभावं व्यावर्त्य **ब्रह्मभाव उपदिश्यते तत्त्वमसीत्यादिवदिति न ब्रह्मप्रकरणं विरुद्ध्य(तो)ते**। अस्तु वा स्वप्नेऽपि **प्राज्ञव्यापारः। न (च) तावता वियदादिवत्स्वप्नस्य सत्यत्वम्। वैषम्यस्योक्तत्वात्। वियदा-**

दिप्रपञ्चोऽप्यसत्य एवेत्युपपादितं चारम्भणाधिकरणे । ब्रह्मात्मत्वदर्शनाद्वियदादिप्रपञ्चो बाध्यते । सन्ध्याश्रयस्तु प्रतिदिनमित्यतो वैशेषिकमिदं सन्ध्यस्य मायामात्रत्वमु(पपा)दितम् ।

परामिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ । नन्वग्नेरंशस्य विष्फुलिङ्गस्य यथा दहन-प्रकाशनशक्ती भवतस्तथेश्वरांशस्य जीवस्यापि ज्ञानैश्वर्यशक्तिभ्यां भाव्यम् । ततश्च साङ्कल्पिकी सृष्टिः स्यादित्यस्येदमुत्तरम् । सत्यमस्त्येवेश्वरसाधर्म्यं जीवस्य किन्तु तिरोहितम् । तत्तु परमेश्वराभिध्यानादेवाविर्भवति । कुतः । ततो हीश्वराद्धेतोरस्य जीवस्य बन्धमोक्षौ भवतः । देह-योगाद्वा सोऽपि । कस्माज्जीवस्य ज्ञानैश्वर्यतिरस्कारो भवति । विष्फुलिङ्गवदतिरस्कारो हि युक्त इत्यत्रेदमुत्तरम् । सोऽपि तिरस्कारो जीवस्य देहयोगात् । अविद्याप्रत्युपस्थापितनामरूपकृतदेहे-न्द्रियमनोबुद्धिविषयवेदनाद्युपाधियोगात्तदविवेकभ्रमकृतो भवति । यथाऽरणियोगादग्नेः । किमनया कल्पनया । अन्य एवास्तु जीवः परमेश्वरादित्येतद्वाशब्देन । व्यवच्छिनत्ति । मैवम् । तत्त्वमस्यादिश्रुतिविरोधादिति ।

शे०— आद्येऽपि किं ते देहाद्बहिः सन्तीत्यभिमतं किंवाऽन्तरिति विकल्पद्वयं मनसि निधायाद्यं दूषयति पार्श्वेति । द्वितीयं दूषयति । आन्तरत्वस्य चेति । संवृतत्वाद्देहदेशस्य तत्र रथादीनामवस्थान-स्यासम्भवित्वादिति भावः । एकस्यानेकेत्यविचित्रस्य विचित्रेति चाभेदाभावोपपादनमित्यवगन्तव्यम् ॥ यदा कर्मस्विति । 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति । समृद्धिं तत्र जानीयादिति' श्रुति-प्रतीकोपादानम् । आदिपदेन'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्तीति' श्रुतिपरिग्रहः ॥ आच-क्षते चेति । कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरारोहणादीनि स्वप्नेऽधन्यानीत्याचक्षत इत्यर्थः ॥ सूच-कस्य तु वैतथ्यमेवेति । ननु यदि सूचकत्वं स्वप्नस्योपेयं तर्हि अर्थक्रियाकारित्वरूपसत्त्वयोगात्कल्पित-जाग्रद्वद्ब्रह्मसाक्षात्कारादर्वागबाधः स्यात् । तत्कथं मिथ्यात्वमिति चेत् । उच्यते । अस्ति हि मिथ्या-भूतस्त्रियाद्युपहितस्यापि स्वप्नदर्शनस्य व्यावहारिकत्वम् । अत एवाद्राक्षं स्वप्नमहमिति मिथ्यार्थोपहितं स्वप्नदर्शनमनुमन्यते । युक्त्या तु तस्य मिथ्यार्थोपहितत्वान्मिथ्यात्वमुच्यते । अर्थस्तु स्वाप्नो मिथ्या । न च व्यावहारिकमपि सत्त्वं तस्यास्तीति न कश्चिद्दोषः । भाक्तव्याख्यानमेवोपदर्शयति सुप्तौ हीति । स्वाप्नरथा-दिप्रतिभासनेन मोदत्रासदर्शनात्तद्धेतुभूतस्य स्वप्नदर्शनस्य निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वादित्यर्थः । साक्षान्निमित्तत्वाभावेऽपि परम्परया निमित्तत्वाल्लाङ्गलं गवादीनुद्वयतीत्युक्तिवदिति भावः ॥ एवं भाक्तेति । मोदत्रासहेतुस्वाप्नपुत्रादिदर्शननिमित्तसुकृतदुष्कृतकर्तृत्वान्निर्मातोच्यते इत्येवमित्यर्थः ॥ श्रुत्यन्तरे इति । बृहदारण्यके 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती'ति जीवव्यापारश्रवणात्क-ठवल्यामपि 'य एष सुप्तेषु जागर्ती'ति प्रसिद्धयनुवादाज्जीवस्यैव कामनिमित्तत्वात्प्राज्ञकर्तृकत्वमसिद्धमिति भावः ।

**एतदर्थमेवेति** । प्राज्ञस्य निर्मातृत्वनिषेधार्थमेवेत्यर्थः । कथमनेन तन्निरास इत्यतस्तं दर्शयति **शुभेति** । नन्वेवं प्राज्ञकर्तृकत्वाभावे स्वप्नस्य वाक्यशेषप्रकरणाभ्यां विरोधः स्यादित्यतस्तयोरुपपत्तिमाह **जीवस्यैवेति** । **जीवभावं व्यावर्त्य**, जीवत्वमविवक्षया परित्यज्येत्यर्थः ।

जीवस्यैव कामादिनिर्मातृत्वेऽपि प्राज्ञाभेदात्तस्य प्राज्ञकर्तृकत्वमवर्जनीयमित्यतोऽभ्युपगम्यापि दूषयति **अस्तु वेति** ॥ **वैषम्यस्येति** । देशकालनिमित्ताबाधसम्पत्तिसद्भावरूपस्येत्यर्थः । देशादिसम्पत्तिसद्भावाद्वियदादेः **सत्त्वेऽपि स्वाप्नार्थानां तदभावान्न सत्यतेति** सोपाधिकत्वेनाभासत्वान्नोक्तानुमानेन सत्यत्वसिद्धिरिति भावः । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु न वियदादेरपि सत्यत्वमिति दृष्टान्तस्य साध्यवैकल्यान्न तद्दृष्टान्तेन स्वप्नस्य सत्यत्वसाधनं सम्भवतीत्याशयेनाह **वियदादीति** । नन्वेवं वियदादिप्रपञ्चासत्यत्वप्रतिपादकारम्भणाधिकरणेनैव गतार्थमेतदित्यत आह **ब्रह्मात्मकत्वदर्शनादिति** । **वैशेषिकं** वियदादिनिष्ठमायामात्रत्वं ब्रह्मात्मदर्शनाद्बाध्यत्वप्रयुक्तम् स्वप्ननिष्ठं तु प्रतिदिनबाध्यत्वप्रयुक्तमिति विशेषोपेतमित्यर्थः । जीवस्य ज्ञानैश्वर्यशक्तिमत्त्वेऽपि किमायातमित्यत आह **ततश्चेति** ॥ **साङ्कल्पिकी सृष्टिरिति** । जीवादेरैश्वर्यवशात्स्वप्ने साङ्कल्पिकी रथादिसृष्टिर्भविष्यतीत्यर्थः । कथं तर्हि प्रात्यक्षिक एवेश्वरधर्मविपरीतधर्मवत्त्वोपलम्भ इति भावेन पृच्छति **किन्त्विति** । उत्तरमाह **तिरोहितमिति** ॥ अविद्यादिव्यवधानादिति शेषः ॥ **अभिध्यानादेवेति** । तत एवाविद्याद्यावरणनिवृत्तेरिति भावः । **बन्धमोक्षाविति** । ईश्वरस्वरूपाज्ञानाद्बन्धस्तत्स्वरूपपरिज्ञानाच्च मोक्ष इत्यर्थः ॥ **नामरूपकृतेति** । नामरूपात्मकपञ्चमहाभूतकृतेत्यर्थः ॥ **अरणियोगादिति** । यथा दहनप्रकाशनसमर्थस्याप्यग्नेररणियोगाद्दहनप्रकाशनशक्तेस्तिरस्कार इत्यर्थः ॥ **किमनयेत्यादि** । देहयोगाज्ज्ञानैश्वर्यशक्तितिरस्कारकल्पनया किं तिरस्कृतज्ञानैश्वर्यशक्तित्वादन्य एव जीव ईश्वरादस्त्विति योजना । व्यवच्छेदप्रकारमेव दर्शयति **मैवं तत्त्वमस्यादीति** । अन्य एव जीवः परमेश्वरादित्येवं मा । कुतस्तत्त्वमस्यादिश्रुतिविरोधादिति योजना । इतीत्यस्येति व्यवच्छिनत्तीति पूर्वेणान्वयः ।

**स० — सूचकस्य तु वैयर्थ्यमेवेति** । ननु यदि सूचकं स्वप्नस्योपेयं तर्ह्यर्थक्रियाकारित्वरूपसत्त्वयोगात् कल्पितजाग्रद्वत् ब्रह्मसाक्षात्कारादर्वागबाधः स्यात्तत्कथं मिथ्यात्वमिति चेत् न । अस्ति हि मिथ्याभूतस्त्र्याद्युपहितस्यापि स्वप्नदर्शनस्य व्यावहारिकसत्त्वम्। अद्राक्षं स्वप्नमहमिति मिथ्यार्थोपहितं स्वप्नदर्शनमनुमन्यते । युक्त्या तु तस्य मिथ्यार्थोपहितत्वात् मिथ्यात्वमुच्यते । अर्थस्तु स्वाप्नो मिथ्या । न च व्यावहारिकमपि सत्त्वं तस्यास्तीति न कश्चिद्दोषः ॥ **वैषम्यस्येति** । देशकालनिमित्ताबाधसंपत्तिसद्भावाद्वियदादेः सत्यत्वेऽपि स्वाप्नार्थानां तदभावान्न सत्यत्वमिति भावः । नन्वेवं वियदादिप्रपञ्चासत्यत्वप्रतिपादकारम्भणाधिकरणेन गतार्थत्वमित्यत आह **ब्रह्मात्मत्वदर्शनादिति** । व्यवच्छेदमेव दर्शयति

**मैवमिति** । अन्य एकजीवः परमेश्वरादित्येवं मा कुरु ॥ **तत्त्वमस्यादिश्रुतिविरोधादिति** । व्यवच्छिनत्तीत्यन्वयः ।

**प०**— प्रकारान्तरेण तदीयसूत्रांशार्थमनुवदति **अपर आहेत्यादि** ॥ **श्रुतिरिति** । 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति । समृद्धिं तत्र जानीयादि'ति । 'कृष्णं कृष्णदन्तं पश्यति' मर्कट एनमास्कन्दयती'त्यादिश्रुतेरित्यर्थः । पूर्वपक्षसूत्रोपात्तश्रुतिगतिमाह **यदुक्तमित्यादिना** ॥ **भाक्तेति** । गौण्या वृत्त्या व्याख्येयेत्यर्थः । ब्रह्मप्रकरणविरोध इत्यत आह **जीवस्यैवेति** । ब्रह्मभाव उपदिश्यत इत्यन्वयः ॥ **वैषम्यस्येति** । ब्रह्मज्ञानेतरबाध्यत्वनिमित्तहीनत्वादिरूपस्य प्राज्ञसृष्टवियदादि-वैषम्यस्योक्तत्वादित्यर्थः ॥ **आरंभणेति** । तदनन्यत्वमारम्भणशब्दादिभ्य इत्यधिकरण इत्यर्थः । तर्ह्येतदधिकरणं व्यर्थम् । स्वाप्नार्थस्यापि प्रपञ्चान्तःपातित्वात् । तेनैवाधिकरणेनामत्यत्वलाभादित्यत आह **ब्रह्मात्मत्वेति** । **वैशेषिकं** विशेषस्वाप्नार्थसंबन्धीत्यर्थः । **साङ्कल्पिकीति** । जीवसङ्कल्पमात्रा-धीनेत्यर्थः ॥ **नामरूपकृतेति** । त्रिवृद्भू(द्रुतते गो)ततेजोबन्नकृतेत्यर्थः ॥ **अरणियोगादग्नेरिति** । यथ ग्नेररणिसंबन्धात्तिरोभावो मथनेनाभिव्यक्त्या ज्ञायते तथा तिरोभावोऽज्ञानादिशक्त्येत्यर्थः । इत्येत-द्वाशब्देन व्यवच्छिनत्तीत्येतद्व्यनक्ति **मैवमित्यादिना** ।

**या०**— नन्वेवं वाक्यशेषविरोध इत्यत आह **जीवस्यैवेति** ॥ **जीवभावं व्यावर्त्येति** । जीवत्वमविवक्षया परित्यज्येत्यर्थः ॥ **वैषम्यस्येति** । उचितदेशकालादिसम्पत्तिभावाभावरूपस्येत्यर्थः । तथा च स्वाप्नोऽर्थः सत्यः प्राज्ञसृष्टत्वाद्वियदादिवदित्यनुमाने उचितदेशकालादिसम्पत्तिरुपाधिरिति भावः । दृष्टान्ते साध्यवैकल्यमप्याह **वियदादिप्रपञ्च इति** । ननु तर्हि तेनैवेदं गतार्थमधिकरणमि-त्यत आह **ब्रह्मात्मत्वेति** ॥ **साङ्कल्पिकी सृष्टिरिति** । जीवादेव स्वप्ने रथादिसृष्टिः साङ्कल्पिकी भविष्यतीत्यर्थः । **नामरूपकृतेति** । नामरूपात्मकपञ्चमहाभूतकृतेत्यर्थः । यथाऽरणियोगादग्नेरि-त्यत्र तिरस्कार इत्यनुवर्तते ।

**श्री०**— आन्तरत्वान्न पार्श्वस्थैरुपलभ्यन्त इति चेत्तत्राह **आन्तरत्वस्येति** ॥ **अनुचित-त्वादिति** । बाह्योपादानादिभिन्नोपादानादर्शनात्संवृते देशेऽवस्थानासम्भवाच्चेति भावः ॥ **एतदर्थमे-वेति** । यदप्युक्तमिति शङ्कापरिहारार्थमेवेत्यर्थः ॥ **प्राज्ञस्येति** । स्वप्ननिर्मातुरित्यर्थः । **वैशेषिकं** वियदादिनिष्ठमायामात्रत्वं ब्रह्मात्मदर्शनाद्बाध्यत्वप्रयुक्तं स्वप्ननिष्ठं तु प्रतिदिनं बाध्यत्वप्रयुक्तमिति विशे-षोपेतमित्यर्थः ।

**च०**— **वैतथ्यम्** मिथ्यात्वम् । **अवकल्पते** सङ्गच्छते । जीवतात्पर्यकतायां वाक्यशेषविरोध-मपनयति **जीवस्येति** ॥ **जीवभावमिति** । जीवत्वविवक्षापरित्याग एव जीवत्वपरित्याग इति भावः ।

**वैषम्यस्येति** । देशकालनिबन्धनबाधवैधुर्यसंपत्तिसदसद्भावरूपस्येत्यर्थः । तादृशसंपत्तिविशेषित**वियदादीनां** सत्त्वेऽपि स्वाप्नार्थानां तद्राहित्यान्न सत्यतेति सोपाधिकत्वनियन्त्रिताभासत्वान्नोक्तानुमानेन सत्यत्वसिद्धिरिति भावः । अभ्युपगमवादेनोक्तदिशाभिधानेऽपि वस्तुतो वियदादिरूपनिदर्शनस्य साध्यवैकल्यान्न तन्निदर्शनेन स्वाप्नसत्यतासाधनं सङ्गच्छत इत्याशयेनाह **वियदादीति** ॥ **वैशेषिकमिति** । अतो न तेनैतद्गतार्थमिति भावः । **साङ्कल्पिकीति** । स्वाप्नरथादिसृष्टिर्जीवादेव साङ्कल्पिकी भविष्यतीत्यर्थः ।

**सु०— तदिदमनुपपन्नं व्याख्यानम् । तथा हि । यत्तावत्स्वप्नसृष्टेः पारमार्थिकत्वप्रतिपादकं सूत्रद्वयं पूर्वपक्षानुवादपरमिति तत्तदा प्रतीमो यदि मायामात्रमित्यनिर्वाच्यत्वप्रतिज्ञा स्यात् । न चैवम् । तत्प्रतिपादकप्रमाणाभावात् ।**

**ननूक्तं कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति देशकालनिमित्तसम्पत्त्यबाधराहित्यं तथा भिन्नत्वादिना निरूपयितुमशक्यत्वं च । मैवम् । तस्यानुपपन्नत्वात् । तत्र यद्देशादिराहित्यमुपपादितम् । तत्सूत्रार्थस्पष्टीकरणेनैवाभासीभविष्यतीत्याशयवान् भेदादिविकल्पप्रश्नेन यत् दूषणमुक्तं तत्र प्रश्न एवासावनुपपन्नो दूरे दूषणाभिधानमित्याह** भेद इति ।

अनु०— भेदोऽभेदोऽथवा द्वन्द्वमिति प्रश्नो न युज्यते ॥

द्रष्टुः स्वप्नस्य

---

**द्रष्टुर्देवदत्तात्स्वप्नस्य स्वप्नोपलभ्यस्य रथादेः किं भेदोऽथाभेदो द्वन्द्वं भेदाभेदौ वेति विकल्प(ल्प्य) प्रश्नो न युज्यते ।**

**कुत इत्यत आह** दृष्टत्वादिति ।

दृष्टत्वाद्भेदस्यैवाखिलैर्जनैः ॥

**द्रष्टुः स्वप्नस्येत्यनुवर्तते । सन्देहमूलो हि विकल्पप्रश्नः । न च प्रकृते सन्देहः संभवति । स्वप्नतद्द्रष्ट्रोर्भेदस्यैवाखिलैर्जनैर्दृष्टत्वेन विप्रतिपत्तेरभावात् ।**

**शे०—** ननु पूर्ववादिनोक्तायाः स्वानभिमतायाः सूत्रद्वयस्य पूर्वपक्षानुवादपरतायास्तथा मायामात्रमित्यस्य स्वप्नसृष्टेरनिर्वाच्यताप्रतिज्ञापरतायास्तत्र प्रमाणपरतया परेणोक्तस्वापव्याख्यानद्वयरीत्या लब्धस्य कार्त्स्न्येनानभिव्यक्तस्वरूपत्वस्य चानिरासात्तापव्याख्याननिरासपरत्वमस्य भाष्यस्येत्यतस्तत्र तत्रार्थे हेतुं कथयन्नेव भाष्यं योजयति **तदिदमित्यादिना** । मायामात्रमित्याद्युत्तरसूत्राणामिवाद्यद्वितीययोरपि सिद्धान्तसूत्रत्वेऽस्मद्रीत्या सम्भवति सति न सन्ध्ये सृष्टिरित्यादिपूर्वसूत्रद्वयस्य पूर्वपक्षत्वमुचितम् । यदि च तुशब्दयुक्तत्वात्तृतीयसूत्रस्य सिद्धान्तसूत्रत्वावधारणात्तत्पूर्वसूत्रद्वयस्य पूर्वपक्ष-

त्वमिति मन्यसे तर्हि **'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'** 'असम्भवस्तु सतोऽनुपपत्तेरि'-त्यादावपि तुशब्दश्रवणात्ततः पूर्वसूत्राणां पूर्वपक्षत्वं स्यात् । यद्यपि पूर्वमीमांसादौ पूर्वपक्षसूत्राणि सन्ति तथाऽपि तत्राद्याध्यायाद्यपाद एव पूर्वपक्षसूत्रसद्भावात् । इह च त्वन्मतेऽपि प्रथमाध्यायेत दभावेनान्यत्रापि सूत्रकृतः पूर्वपक्षत्वसूचकजैमिन्यादिग्रहणाभावे व्याकरणकल्पसूत्रादाविव तदकारणशैलीनिश्चये सति किमि-त्यत्रान्यथाभावः कल्प्यते । अन्यथैकः पद पूर्वः पक्षः पादान्तरं सिद्धान्त इत्यपि स्यादित्याशयेनोक्तं **पूर्वपक्षानुवादपरमितीति ॥ स्पष्टीकरणेनैवेति ।** 'मनोविकारविषयाः स्वाप्ने यद्यपि वन्न ते । स्थूला भवन्त्यतस्तेषां स्पष्टता न तथा क्वचित् । क्वचित्स्पष्टा अपि स्युष्टे वासना मानसीत्यादिनैतदधिकरणान्त इति शेषः । मूले भेदावध्यनुक्तिप्रसक्त्या द्रष्टुरित्यस्य षष्ठ्यन्तत्वानुपपत्तिं मनसि निधायाह **द्रष्टुर्देवदत्ता-दिति** । भेदोऽभेदेऽथवेत्यादिप्रश्नस्य तन्मूलकदोषाणां चार्थमात्रनिष्ठत्वेन स्वप्नशब्दस्यार्थज्ञानात्मकोभय-परताया अत्राप्यनुपपत्तेरर्थमात्रपरतया तं व्याचष्टे **स्वप्नस्येति ॥ विकल्पप्रश्न इति ।** विरुद्धानेक-कोटिकप्रश्न इत्यर्थः ।

**स०** — द्रष्टुरित्यस्य समानाधिकरणषष्ठीत्वं वारयति **द्रष्टुरिति** । अज्ञानमूलकप्रश्नव्यावृत्त्यर्थं विकल्पेत्युक्तं अनेककोट्यवलम्बीत्यर्थः । अनेककोट्यवलम्बिप्रश्नस्यैव सन्देहमूलकत्वस्यास्तु वेत्यादिना तत्त्वोद्योत उक्तत्वादित्यर्थः ।

---

**प०** — अनूदितं निराह **तदिदमिति** ।

**या०** — ननु देवदत्त कियन्तस्तव तनयाः, गिरिदर्यां किमप्यद्राक्षमिति केनचिदुक्ते तत्किमि-त्यादिप्रश्नाः सन्देहाभावेऽपि दृश्यन्त इत्यत उक्तं **विकल्पप्रश्न इति** । विरुद्धनानाकोटिकप्रश्न इत्यर्थः । अनूक्तप्रश्ना आपातत एककोटिकतयाऽवभासमाना न सन्देहमूला इति । प्रकृतस्त्वनेककोट्य-वलम्बी प्रश्नः सन्देहाभावे भवितुं न युक्तः । तादृशप्रश्नानां संशयाव्यभिचारादिति भावः । अत एव तत्त्वोद्योतटीकायां 'अस्तु वाऽन्यत्र प्रश्नो यथातथाऽनेककोट्यवलम्बी प्रकृतस्तु वस्सन्देहमूल एवाङ्गी-कार्य' इत्युक्तम् । एतेन लोकानुग्रहाय योगिभिः कृतेषु 'स्थितप्रज्ञस्य का भाषे'त्यादिप्रश्नेषु कथं सन्देहमूलकत्वम् । न च तत्र ज्ञीप्सापूर्वकत्वाभावात्प्रश्न एव न सम्भवतीति वाच्यम् । प्रयोजने सति सिद्धेऽपि सिषाधयिषावल्लोकानुग्रहाय ज्ञातेऽपि ज्ञीप्सायास्तत्र कल्पनादतो व्यभिचार इति निरस्तम् । विकल्परूपत्वाभावात् । न चैवमपि योगिकृतेषु 'सत्त्वमाहो रजस्तम' इत्यादिविकल्पप्रश्नेषु व्यभिचार इति वाच्यम् । तत्रापि संशयस्यावश्यं मूलतया कल्पनीयत्वात् । अन्यथा प्रश्नानां विरुद्धनानाकोटिकत्वासंभ-वात् । व्यवहर्तव्यज्ञानसमानाकारो हि व्यवहारः । इयांस्तु विशेषः । योगिभिः क्रियमाणे विकल्पप्रश्ने

मूलभूतः संशयो आहार्यः, अन्यैः क्रियमाणे त्वनाहार्य इति । प्रश्नो न युज्यत इत्येतत्प्रकारान्तरेण योजयति **न च प्रकृत इति** । तथा चात्र प्रश्नशब्देन तन्मूलभूतः संशयो लक्ष्यत इति भावः ॥ अखिलैरित्यनेन लब्धमर्थं दर्शयति **विप्रतिपत्तेरिति** ।

च० — **प्रतीमो** जानीमः ।

सु० — स्यादेतत् । मा भूद्विप्रतिपत्तिमूलोऽयं संशयः । समानधर्मजस्तु भविष्यति । किञ्चिद्वस्तु द्रष्टुर्भिन्नं भवति किञ्चिदभिन्नं किञ्चिद्भिन्नाभिन्नम् । वस्तु चेदमतो भिन्नमभिन्नं वेत्यादिसंशयो भवेदिति । मैवम् । संशयो हि किं समानधर्मदर्शनमात्राद्भवति । उत निर्णायकाभावमहकृतात् । नाद्यः । सर्वत्र सन्देहोत्पादप्रसङ्गात् । अस्ति हि सर्वत्र किञ्चित् साधर्म्यम् । तदनिवृत्तिप्रसङ्गाच्च । न हि समानो धर्मः कदाऽपि निवर्तते । द्वितीये तु कथमत्र सन्देहः । भेदस्यैवाखिलैर्जनैर्दृष्टत्वेन निर्णायकाभावस्यैवासिद्धेः ।

शे० — भेददर्शनेऽपि प्रश्नः कुतो न सम्भवतीत्यप्रयोजकत्वमाशङ्क्य परिहरति **सन्देहमूलको हीति** । देवदत्त कियन्तस्तव तनया इत्यज्ञानमूलकप्रश्नस्यापि सद्भावान्न तस्य सन्देहमूलकत्वनियम इत्यतोऽत्र प्रश्नपदस्य विरुद्धनानाकोट्यवलम्बिप्रश्नपरत्वेन प्रश्नमात्रपरत्वाभावादेककोट्यवलम्बिप्रश्नानामज्ञानमूलकत्वेऽपि नानुपपत्तिरित्याशयेनाह **विकल्पप्रश्न इति** ।

यद्यपि देवदत्त कियन्तस्तव तनया इत्यादिप्रश्नानामपि तत्त्वोद्योतटीकोक्तरीत्या सन्देहमूलस्थितत्वान्नाज्ञानमूलत्वमस्तीति न विकल्पपदव्यावर्त्यत्वं सम्भवति । तथाऽपि भेदोऽभेदोऽथवा द्वन्द्वमिति प्रश्नस्यानेककोट्यवलम्बित्वात्तादृशप्रश्नस्य सन्देहमूलत्वनियमाश्रयणमात्रेण प्रकृतनिर्वाहादेककोट्यवलम्बितया प्रतीयमानोदाहृतप्रश्नस्य सन्देहमूलत्वाभावेऽपि न काचिदस्माकं क्षतिः । तत्त्वोद्योतटीकायां सन्देहमूलकत्वव्युत्पादनं तु वस्तुस्थितिकथनमात्रमित्येककोट्यवलम्बिप्रश्नानामज्ञानमूलकत्वाभ्युपगमवादेनैवैतद्ग्रन्थप्रवृत्तेर्दोषः । अत एव देवदत्त कियन्तस्तव तनया इत्यादे'रस्तु वाऽन्यत्र यथातथे'त्यज्ञानमूलत्वमभ्युपगम्यानेककोट्यवलम्बिप्रकृतप्रश्नस्तावदि'त्यादिनाऽनेककोट्यवलम्बिप्रकृतप्रश्नाभिप्रायेण सन्देहमूलकत्वनियमकथनं टीकायामिति द्रष्टव्यम् ॥

ननु च लोकानुग्रहाय परपरीक्षाद्यर्थं विदिततत्त्वेन पुरुषेण कृतस्य प्रश्नस्य सन्देहमूलत्वाभावात्तत्र व्यभिचारः । न च ज्ञाते जीप्सादिविरहाद्विदिततत्त्वकृतप्रश्नस्य जीप्सापूर्वकवचनत्वाभावान्न प्रश्नत्वमिति वाच्यम् । सति प्रयोजने सिद्धेऽपि सिषाधयिषावज्ज्ञातेऽपि जीप्सायाः कल्प्यतया जीप्सापूर्वकवचनत्वरूपप्रश्नत्वाव्याघातादिति चेत् ॥ अत्र गुरवः । विदिततत्त्वेन पुरुषेण कृतस्य प्रश्नस्यैककोट्यवलम्बित्वेऽपि टीकोक्तरीत्या सन्देहमूलत्वस्यैव सूपपादनत्वेनासन्देहमूलप्रश्नस्यैवाभावात् । भावेऽपि

वाऽनेककोटयवलम्बिप्रश्नस्यैव सन्देहमूलत्वनियमाश्रयणेनातादृग्रूपप्रश्नस्याप्यसन्देहमूलत्वेऽप्यक्षतेः । अनेककोटयवलम्बित्वे च व्यवहारस्य व्यवहर्तव्यज्ञानसमानाकारत्वनियमस्थित्यककोटयवलम्बिज्ञानेनानेककोटयवलम्बिव्यवहारानुदयात् । अनेककोटयवलम्बिज्ञानस्य मूलत्वेन कल्प्यतया सत्त्वेनाव्यभिचारात् । न चावगतविशेषत्वान्न तस्य सन्देहः कल्पयितुं शक्यत इति वाच्यम् । सूत्रकृत इव तस्यापि परकीयसम्भावितसंशयस्य स्वस्मिन्नाहरणोपपत्त्या तन्मूलकत्वाविरोधादिति ॥ तातचरणास्तु । परेण स्वग्रन्थे स्वाप्नार्थानां द्रष्टुर्भेदोऽभेदो वेत्यादि विकल्प्य दूषणस्यैव कृतत्वाद्विकल्पो न युज्यत इत्येव वक्तव्यम् इति प्रश्नो न युज्यत इति तु कथम् । परेण प्रश्नस्याकरणादित्यतो विकल्पस्यापि प्रश्नविशेषत्वान्नोक्तदोष इत्याशयेन विकल्पप्रश्न इत्युक्तमिति व्याचक्षते ।

अस्तु प्रश्नस्य सन्देहमूलत्वं तथाऽपि कुतो न युज्यत इत्यत आह **न चेति** । अनेन प्रश्नमूलभूतसन्देहस्य लक्षणया प्रश्नशब्दार्थत्वमङ्गीकृत्य 'इति प्रश्नो न युज्यत' इत्येतदुक्तरूपः सन्देहो न युज्यते इति प्रकारान्तरेण व्याख्यातं भवति । ननु चोक्तरूपः सन्देहोऽपि कुतो न सम्भवतीत्यतः किमयं विप्रतिपत्तिमूलोऽभिमतः किंवा साधारणधर्मदर्शनादिजन्य इति विकल्पद्वयं मनसि निधायाद्यपक्षदूषणपरतया दृष्टत्वादिति मूलं योजयति **स्वप्नतद्द्रष्ट्रोरिति** ।

द्वितीयमुत्थापयति **स्यादेतदिति** । नन्वत्र स्वप्नद्रष्ट्रोर्भेदस्य दृष्टत्वमुच्यते न तु साधारणधर्मदर्शनस्य संशयकारणत्वे बाधकं किञ्चिदस्तीति कथमनेन द्वितीयपक्षनिरासः । न च निर्णायकसद्भावव्युत्पादकस्यास्य तद्द्वारा निर्णायकाभावसहकृतसाधारणधर्मदर्शनादिरूपसंशयसामग्र्यभावव्युत्पादनपर्यन्तत्वाद्युक्तोऽनेन द्वितीयपक्षनिरास इति वाच्यम् । साधारणधर्मदर्शनमात्रस्यैव संशयकारणत्वाभ्युपगमेन तदयोगादित्यतोऽत्र पक्षे सम्भावितविकल्पद्वयप्रदर्शनपूर्वकमाद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतया मूलं योजयति **संशयो हीत्यादिना** ॥ **सर्वत्रेति** । विशेषदर्शनस्थल इत्यर्थः । तत्सामग्र्या असार्वत्रिकत्वान्न सर्वत्र संशय इत्यत आह **अस्ति हीति** । इष्टापत्तिं मन्वानस्य दूषणान्तरमाह **तदिति** । ननु विशेषदर्शनादेव तन्निवृत्तिर्भविष्यतीति नोक्तप्रसङ्ग इत्यतो विशेषादर्शनसहकृतसमानधर्मदर्शनस्य संशयकारणत्वपक्षे विशेषदर्शनस्य सामग्रीविघटकत्वात्तन्निवर्तकत्वसम्भवेऽपि समानधर्मदर्शनमात्रस्य तत्सामग्रीत्वपक्षे तदविघटकत्वमित्याशयेनाह **न हीति** ॥ **कदाऽपीति** । विशेषदर्शनकालेऽपीत्यर्थः ।

स० — **कदापीति** । विशेषदर्शनकालेऽपीत्यर्थः ।

प० — **विकल्पप्रश्नेति** । विविधकोटिविषयप्रश्न इत्यर्थः ।

या० — भेदस्य दृष्टत्वादित्यस्य कृत्यं वक्तुमाह **स्यादेतदित्यादि** ॥ **भेदस्यैवेति** । अनेन निर्णायकसद्भावकथनाय भेदस्य दृष्टत्वादित्ययमंश इत्युक्तं भवतीति ज्ञातव्यम् ।

च० — **विकल्पप्रश्न इति**। विरुद्धनानाकोट्यवलम्बी प्रश्न इत्यर्थः। तेनानीदृशानां देवदत्त-कियन्तस्तव तनयाः गिरिदर्थी किमप्यद्राक्षमित्युक्तिपूर्वकतत्किमित्यादिप्रश्नानां संदेहमन्तरेणोत्पादेपि न क्षतिः। प्रपञ्चितं चैतदन्यत्र। **विप्रतिपत्तिमूलः** विरुद्धार्थबोधकवाक्यद्वयजन्मा। **समानधर्मजः** प्रकृतभिन्नत्वाभिन्नत्वरूपकोटिद्वयसाहचर्यावच्छिन्नवस्तुत्वनिष्ठप्रकारतानिरूपितप्रकृतभेदरूपधर्मिनिष्ठविशेष्यताशालिप्रतिसंधानाधीनः। **निर्णायकाभावसहकृतात्** स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्वसामानाधिकरण्योभयसंबन्धेन विषयिताविशिष्टविषयिताशालिज्ञानभिन्नज्ञानजनकासमवधानप्रयोज्यस्वसमवहितिकालीनफलानुत्पादकात्। **सर्वत्र** निर्णायकसमवधानस्थलेपि।

**सु० — अथ मतम्। भेदो हि कश्चित्परमार्थो दृष्टो यथा स्तम्भकुम्भयोः। कश्चि-(चाप)दपरमार्थो यथा चन्द्रमसोः। दृश्यते चायं भेदस्ततो भवेदेव सन्देह इति। एत-दपि न। तथा सति यथासंशयं विकल्पप्रश्नस्य कार्यत्वात्। स एवानया वाचोभङ्ग्या क्रियत इति चेन्न। प्रतीतिरपि हि न केवला संशयहेतुर्भवति। सर्वत्र (संशय)प्रसङ्गात्। तदनिवृत्तिप्रसङ्गाच्च। विशेषप्रतीत्या हि तन्निवृत्तिरेष्टव्या। तत्रापि च सन्देहोऽवस्कन्दत एव। किन्तु विप्रतिपत्त्यादिकलुषिता। न चात्र तदस्तीत्युक्तम्। औत्सर्गिकं हि प्रतीतीनां याथार्थ्यम्। अन्यथात्वं त्वपवादात्। तदेवं सिद्धविषयत्वात्प्रश्न एवायमनुपपन्नः।**

शे० — नन्वखिलेभेदस्य दृष्टत्वादुक्तरीत्या तत्र सन्देहानुपपत्तावपि परमार्थत्वापरमार्थत्वरूपकोटिद्वयसहचरितप्रतीतिविषयत्वरूपसमानधर्मदर्शनाद्भेदे पारमार्थिकत्वापारमार्थिकत्वकोटिकः सन्देहः स्यादेवेत्याशङ्कते **अथ मतमिति**। एवं तर्हि भेदः किं परमार्थ उतापरमार्थ इति संशयानुसारेण तन्मूलकपरमार्थत्वापरमार्थत्वकोटिकप्रश्नस्यैव कर्तव्यत्वाद्भेदे ऽभेदो वेत्यादिप्रश्नकरणमसङ्गतमित्याशयेनाह **तथा सतीति** ॥ **स एवेति**। स्वाप्नार्थानां द्रष्टुर्भिन्नत्वपक्षे भेदपारमार्थिकत्वस्याभेदे त्वपारमार्थिकत्वस्य भेदाभेदपक्षेऽपि विरुद्धत्वेनोभयोरपि पारमार्थिकत्वस्यापारमार्थिकत्वस्य चानुपपत्त्या कस्यचित्परमार्थत्वस्य कस्यचिदपरमार्थत्वस्य चावश्यं वाच्यत्वात्तत्रापि भेदस्य पारमार्थिकत्वपक्षे प्रथमपक्षाबहिर्भावस्याभेदस्य परमार्थत्वे च द्वितीयपक्षाबहिर्भावस्य प्रसङ्गाद्भेदादिविकल्पप्रश्नस्य भेदपारमार्थिकत्वापारमार्थिकत्व एव पर्यवसन्नत्वादिति भावः। अत्रापि किं संशयः प्रतीतिरूपसाधारणधर्मदर्शनमात्राद्भवति किंवा निर्णायकाभावसहकृतादिति विकल्पं मनसि निधायाद्यं दूषयति **प्रतीतिरिति**। विषयतासम्बन्धेन प्रतीतिरित्यर्थः। **सर्वत्रेति**। विशेषदर्शनस्थलेऽपीत्यर्थः। नन्वेवं सति प्रतीतिमात्रेण सन्देहः क्वापि न स्यादिति पृच्छति **किन्त्विति**। निर्णायकाभावसहकृतप्रतीतेरेव तद्धेतुत्वाभ्युपगमान्न तन्मात्रस्याहेतुत्वमनिष्टमि-

त्याशयेन परिहरति **विप्रतिपत्त्यादीति** । अस्तु तर्हि तादृशप्रतीतिरेव सन्देहहेतुरिति द्वितीयः पक्षो निरवद्यत्वादित्यत आह **न चेति** ॥ **उक्तमिति** । भेदस्यैव दृष्टत्वादित्यनेनेति शेषः । ननु भेदस्य दृष्टत्वेऽपि परमार्थत्वरूपकोट्यनवधारणान्न निर्णायकाभावाभावसिद्धिरित्यतः प्रामाण्यस्वतस्त्वस्यौत्सर्गिकत्वेनासत्यपवादे भेदप्रतीतेः प्रमात्वनिश्चयेन तयैव भेदपरमार्थत्वसिद्ध्याऽन्यतरकोटिनिश्चयान्नानुपपत्तिरित्याशयेनाह **औत्सर्गिकं हीति** ।

यद्वा ननु भेदस्य दृष्टत्वेऽपि तद्दर्शनयाथार्थ्यसंशये बाधकाभावात्तदाहितार्थसंशयो नानुपपन्न इति गूढाभिसन्धिराशङ्कते **अथेति** ॥ **भेदो हि कश्चिदिति** । भेददर्शनं किञ्चिद्यथार्थं दृष्टमित्यर्थः । **कश्चिच्चेति** । किञ्चिद्भेददर्शनमयथार्थं दृष्टमिति भावः ॥ **दृश्यते चायमिति** । इदं च भेददर्शनमित्यर्थः ॥ **तत इति** । यथार्थत्वायथार्थत्वरूपकोटिद्वयसहचरितभेददर्शनत्वरूपसाधारणधर्मदर्शनादित्यर्थः ॥ **एवमिति** । भेददर्शनं यथार्थमयथार्थं वेत्येवमित्यर्थः । तथा सत्युक्तसंशयानुसारेण तन्मूलकप्रश्नस्यापि भेददर्शनं **यथार्थमयथार्थं** वेत्येवंरूपेण कर्तव्यत्वाद्भेदोऽभेदो वेत्यादितत्करणमसङ्गतमित्याशयेन यथाश्रुतं दूषयति **तथा सतीति** । भेददर्शनयाथार्थ्यायाथार्थ्यसंशयस्य तदाहितभेदादिरूपार्थसंशयपर्यवसन्नत्वेन स्वमात्रपर्यवसन्नत्वाभावान्न मूलोक्तभेदादिविकल्पप्रश्नासङ्गतिरिति पूर्ववादी स्वाशयमुद्घाटयति **स एवेति** ॥ **प्रतीतिरिति** । भेददर्शनत्वरूपसाधारणधर्मप्रतीतिरित्यर्थः ॥ **सर्वत्रेति** । प्रमात्वदर्शनस्थलेऽपीत्यर्थः ॥ **विशेषप्रतीत्येति** । प्रमात्वप्रतीत्येत्यर्थः ॥ **तत्रापीति** । प्रमात्वरूपविशेषप्रतीतौ सत्यामपीत्यर्थः । उक्तसन्देहकारणस्य तत्राप्यविकलत्वादिति भावः ॥ **विप्रतिपत्त्यादीति** । निर्णायकाभावसहकृता भेददर्शनत्वरूपसाधारणधर्मप्रतीतिरेव संशयहेतुरित्यर्थः । अस्तु तर्हि प्रकृतेऽप्येवमेवेत्यत आह **न चेति** । भेदस्य दृष्टत्वादित्यनेन निर्णायकाभावाभावस्योक्तत्वादिति भावः । ननु तेन भेददर्शनमात्रस्य सिद्धत्वलाभेऽपि तत्प्रमात्वालाभान्न निर्णायकाभावाभावसिद्धिरित्यतो ज्ञानप्रामाण्यस्वतस्त्वस्यौत्सर्गिकत्वात्प्रकृते चाखिलैर्भेदस्यैव दृष्टत्वेन तद्याथार्थ्यनिश्चयसिद्ध्या तत्प्रमात्वलाभात्तत्सिद्धिरित्याशयेनाह **औत्सर्गिकं हीति** । ततश्च भेददर्शने प्रामाण्याप्रामाण्यसंशयस्यैवासंभवान्न तदाहितार्थसंशयमादायाप्युक्तविकल्पप्रश्नसमर्थनमिति भावः ।

**स०** — स्वारसिकसंदेहासंभवेपि तज्ज्ञानप्रामाण्यसंदेहाहितोऽर्थसंदेहः संभवतीत्यभिप्रायेण शङ्कते **अथ मतमिति** ॥ **यथासंशयमिति** । भेदः पारमार्थिक उतापारमार्थिक इत्यर्थः ।

**प०** — **यथासंशयं विकल्पप्रश्नस्य कार्यत्वादिति** । दृश्यमानो यो भेदः किं परमार्थोऽथ नेत्येवं कार्यत्वादित्यर्थः ॥ **स एवेति** । अभेदरूपकोट्यन्तरोत्थापने सति भेदकोटेरस(त्य)त्वस्य सूचनात् । भेद इत्युक्त्या सत्त्वकोटेश्च सूचनादिति भावः ॥ **वाचोभंग्येति** । वचनविन्यासेत्यर्थः ।

**प्रतीतिरपीति** । विरुद्धकोटिद्वयधीसहकृता वस्तुप्रतीतिरपीत्यर्थः ॥ **केवलेति** । विप्रतिपत्त्यपवाद-शङ्काद्यनास्कन्दितेत्यर्थः ॥ **विशेषप्रतीत्या हीति** । प्रतीतेः संशयहेतुत्वे विशेषधर्मप्रतीतेरपि प्रतीति-त्वात् तत्रापि संशयः स्यादेवेति तया तन्निवृत्तिर्न स्यादिति भावः । विप्रतिपत्त्यादीत्यादिपदेनापवाद-शङ्कादिग्रहः । प्रतीतत्वरूपधर्ममात्रेण परमार्थत्वापरमार्थत्वकोटिकसंदेहः कुतो नेत्यतः प्रामाण्यस्वतस्त्वेन प्रतीतेः ज्ञा(नै)तैकसत्त्वेन प्रमाणत्वेनोत्सर्गतो निर्णयादिति भावेनाह **औत्सर्गिकमिति** ।

**या०** — अवधारणकृत्यं दर्शयितुमाह **अथेति** । तथा च भेददर्शनं निर्णायकमेव न भवति, प्रत्युत साधारणधर्मतया सांशयिकमेवेति शङ्कितुरभिप्रायः ॥ **यथासंशयमिति** । भेदः किं परमार्थ उतापरमार्थ इति संशयानुसारेण परमार्थापरमार्थकोटिकस्यैव प्रश्नस्य कार्यत्वादित्यर्थः ॥ **स एवेति** । द्रष्टुर्भिन्न इति कल्पे भेदपारमार्थ्यस्याभिन्न इत्यादिकल्पे तदपारमार्थ्यस्य च लाभादिति भावः । विप्रतिपत्त्यादीत्यत्रादिपदेनापवादादिशङ्कासंग्रहः ॥ **न चात्रेति** । अवधारणेनापवादादिशङ्काभावस्या-प्युक्तत्वादिति भावः । अनेनावधारणकृत्यं दर्शितमिति ज्ञातव्यम् । अपवादाद्यभावे च भेददर्शनं निर्णायकमेव प्रतीतिस्वाभाव्यादित्याशयेनाह **औत्सर्गिकमिति** । **याथार्थ्यम्** अर्थसत्ताऽव्यभिचारित्वम् ॥ **अन्यथात्वं** चन्द्रभेदादिप्रतीतीनामिति शेषः ।

**श्री०** — **यथासंशयमिति** । भेददर्शनं प्रमाणं न वेति सन्देहानुसारेण भेदः परमार्थो न वेति प्रश्नः कार्यो न तु भेदोऽभेदोऽथवा द्वन्द्वमिति प्रश्न इत्यर्थः । भेददर्शनं प्रमाणं न वेति सन्देहानु-सारेण भेदः परमार्थो न वेति प्रश्न एव भेदोऽभेदोऽथवेति वाचोभङ्ग्या क्रियत इत्याशङ्कते **स एवेति** । भेदो हि कश्चित्परमार्थो दृष्ट इत्यादिनोक्तभेददर्शनं प्रमाणं न वेति संशय एवादौ न युज्यत इत्याह **प्रतीतिरपीति** । **विशेषो** व्यावर्तकधर्मः । **तत्रापि** व्यावर्तकधर्मप्रतीतावपि । **अवस्कन्दत एव** प्रतीतित्वसाम्यादिति भावः । कलुषिता प्रतीतिरेव संशयहेतुरित्यन्वयः । **तत्** भेदप्रतीतेर्विप्रतिपत्त्यादि-कलुषितत्वम् । **इत्युक्तं** 'द्रष्टुः स्वप्नस्य दृष्टत्वाद्भेदस्यैवे'त्यनेनेत्यर्थः । नन्वेतद्भेददर्शनमप्रमाणं किं न स्यादित्यत आह **औत्सर्गिकं हीति** । प्रकृते चापवादकं भेददर्शनस्य नास्तीत्यर्थः ॥

**च०** **यथासंशयमिति** । स्वजनकपारमार्थ्यापारमार्थ्यकोटिकसंशयसमानाकारप्रश्नस्यैव कार्यत्वादित्यर्थः । **वाचोभंग्या** वाग्विन्यासेन । **विशेषप्रतीत्या** निर्णायकप्रतीत्या ।

**सु०** — ननु च भेदपक्षमेवाङ्गीकृत्य तत्रोक्तो दोषः शक्यत एव परिहर्तुम् । मनोयो-नित्वेन सुखादिवत्पार्श्वस्थानुपलम्भसंभवात् । तत्किमनेन प्रश्नखण्डनेन । सत्यम् । तथाऽपि प्रतिज्ञादिस्खलितं नोपेक्षामर्हतीति शिष्यांच्छिक्षयितुमेतत् । तथा च वक्ष्यति । युक्तिपाद-

व्युत्पादितन्यायशेषं प्रसङ्गेन व्युत्पादयितुं च। इह च तद्व्युत्पादनस्योपयोगं लेशतो दर्शयिष्यामः।

**शे०** — किमत्र प्रश्नखण्डनस्य निष्प्रयोजनतयाऽकर्तव्यतायामेव तात्पर्यं किंवा तथा समाधानस्यापि कर्तव्यतायामिति विकल्पद्वयं मनसि निधायाद्यं निष्प्रयोजनत्वासिद्ध्या परिहरति **तथाऽपीति**। द्वितीयमिष्टापत्त्या परिहरति **तथा चेति**। मनोयोनित्वेन सुखादिवत्पार्श्वस्थानामनुपलम्भसंभवात्स्वाप्नार्थानां द्रष्टुर्भेद इत्यपि। 'मनोविकारा विषयाः स्वाप्ना यद्वद्भवन्न तु' इत्यादिना वक्ष्यतीत्यर्थः। प्रश्नखण्डनस्य प्रयोजनान्तरमप्याह **युक्तिपदेति**॥ **न्यायशेषमिति**। आश्रयासिद्ध्यादेरदूषणत्वं व्यर्थविशेषणत्वादेर्दूषणत्वं तर्कार्थापत्त्यादेरुपक्रमादेश्चानुमानत्वमित्येवंरूपमित्यर्थः। तदपि युक्तिपाद एव किमिति न व्युत्पादितमित्यत आह **इह चेति**॥ **दर्शयिष्याम इति**। 'एवं संशोधितन्यायसदागमविरोधतः' इत्यादिनेति शेषः॥

**स०** — तर्हि किं प्रश्नखण्डनेनेत्यत आह **तथापीति**॥ **तथाच वक्ष्यतीति**। मनोयोनित्वेन सुखादिवत् पार्श्वस्थानुपलम्भसंभवेन स्वाप्नार्थानां द्रष्टुर्भेद इत्यपि वक्ष्यतीत्यर्थः। अस्मिन् पक्षेऽसङ्गतिमरुचिं मनसि निधायाह **युक्तिपादेति**। तत्रैव किं न कृतमित्यत आह **इह चेति**। 'एवं संशोधितन्यायसदागमविरोधतः' इत्यादिनेति शेषः।

**प०** — **तथा च वक्ष्यतीति**। 'तत्वनिर्णयवैलोम्यं स्याद्वादेपि हि निग्रहः। उद्भावनीयमेव स्यादि'त्यादौ प्रतिवादिस्खलितं व्याहत्यादिकं वादकथायामपि नोपेक्ष्यं इत्येतत्प्रमेयं वक्ष्यतीत्यर्थः। तद्व्याख्यानेन विवरिष्याम इति भावः॥ **दर्शयिष्याम इति**। एवं संशोधितन्यायेत्यत्रेति भावः।

**या०** — **तथा च वक्ष्यतीति**। मनोविकारविषया इत्यादिना स्वाप्नानां विषयाणां मनोयोनित्वेन पार्श्वस्थोपलम्भादिरूपबाह्यार्थक्रियाऽभावमपि सामान्याकारेण वक्ष्यतीत्यर्थः॥ **न्यायशेषमिति**। आश्रयासिद्ध्यादीनामदूषणत्वं व्यर्थविशेषणत्वादेर्दूषणत्वं तर्कार्थापत्त्यादेरुपक्रमादेश्चानुमानत्वमित्यादि शेषशब्दार्थतयाऽत्र ज्ञातव्यम्॥

**श्री०** — **मनोयोनित्वेनेति**। मनोनिष्ठत्वात्मनोपादानकत्वेनेत्यर्थः।

**च०** — **वक्ष्यतीति**। मनोविकारा विषया इत्यादिना मनोमयत्वेन पार्श्वस्थोपलब्ध्ययोग्यतामभिधास्यतीत्यर्थः।

सु० — सिद्धेऽर्थे संशयो न युज्यते । ततो विकल्पप्रश्नोऽपीत्युक्तम् । तत्र न युज्यत इति कोऽर्थः । न तावन्नोत्पद्यत इति । संशयविकल्पप्रश्नोत्पत्तेः प्रमितत्वात् । न चोत्पन्नोऽपि निष्कारण इति । अकारणकार्योत्पत्तेः प्रमाणविरुद्धत्वात् । नाप्यतत्कारणादुत्पन्न इति । यत उत्पन्नस्तस्यैव कारणत्वेन व्याहतत्वात् । न चान्यदनुपपन्नत्वमस्तीत्यत आह प्रश्नेति ।

अनु० — प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः ॥
सिद्धार्थता च वैफल्यं

विकल्पप्रश्नदोषाः । प्रमाणव्याहतिः सिद्धार्थतैवेति न पृथगुक्तः । स्वव्याहतिर्यथा । वन्ध्या किं पुत्रवती न वेति । असङ्गतिर्यथा । ईश्वरः सुखीत्युक्ते प्रपञ्चस्य क्षणिकत्वे किं प्रत्यक्षं प्रमाणमुतानुमितिरिति । सिद्धार्थता तु प्रकृतैव । वैफल्यं यथा । काकस्याष्टौ दश वा दन्ता इति । वैफल्यमित्यतःपरमितिशब्दोऽध्याहार्यः ।

शे० — स्वव्याहत्यादिप्रतिबन्द्या अत्रोपपादयिष्यमाणस्याप्रतिपत्तिविप्रतिपत्तिरूपोभयलिङ्गत्वेन सिद्धार्थतायाः प्रश्नदूषणत्वस्यानेककोटयवलम्बितया सन्देहमूलके 'भेदोऽभेदोऽथवा द्वन्द्वमि'त्यादिप्रश्ने सम्भवेऽप्यज्ञानमूलकेषु देवदत्त कियन्तस्तव तनया इत्याद्येककोटयवलम्बिप्रश्नेषु तेषामज्ञानमूलकतया सिद्धार्थताया अप्रतिपत्तिलिङ्गतया दूषणत्वसम्भवेऽपि संशयमूलकत्वेन वक्ष्यमाणरीत्या विप्रतिपत्तिलिङ्गत्वेन दूषणत्वस्यासम्भवादनुपपत्त्या प्रश्नशब्दस्य प्रश्नमात्रपरत्वासम्भवात्संशयमूलकप्रश्नपरत्वमेव तस्येत्यभिप्रेत्य प्रश्नदोषपदं व्याचष्टे विकल्पप्रश्नदोषा इति । यद्यपि तत्त्वोद्योतटीकोक्तरीत्या देवदत्त कियन्तस्तव तनया इत्यादिप्रश्नानामपि सन्देहमूलकत्वादज्ञानमूलकत्वाभावेन सिद्धार्थतायाः प्रश्नमात्रेऽप्रतिपत्तिविप्रतिपत्तिलिङ्गत्वेनैव दूषणत्वसम्भवात्प्रश्नपदस्य विशेषपरत्वाश्रयणमनर्थकमित्याभाति । तथाऽपि भेदोऽभेदोऽथवा द्वन्द्वमित्यनेककोटयवलम्बिप्रकृतप्रश्नस्य सन्देहमूलताया उभयवादिसिद्धत्वेन तत्र सिद्धार्थतया अप्रतिपत्तिविप्रतिपत्तिलिङ्गत्वेन दूषणतासमर्थनमात्रेणैव प्रकृतप्रश्नानुपपत्तिसमर्थनसिद्धौ प्रश्नमात्रे सन्देहमूलकत्वव्युत्पादनपूर्वकं सिद्धार्थताया अप्रतिपत्त्यादिलिङ्गत्वेन दूषणत्वोपपादनेन न किञ्चित्प्रयोजनमित्यङ्गीकृत्याज्ञानमूलकत्वं देवदत्त कियन्तस्तव तनया इत्यादिप्रश्नानामेतद्ग्रन्थप्रवृत्तेरदोषः । अत एव 'अस्तु वाऽन्यत्र यथा तथा । अनेककोटयवलम्बी प्रकृतः प्रश्नस्तावत्सन्देहमूल एवाङ्गीकरणीय' इत्यादिनोदाहृतप्रश्नानामज्ञानमूलकत्वमभ्युपेत्यानेककोटयवलम्बिप्रश्नत्वावच्छेदेनैव सन्देहमूलत्वनियमवर्णनं टीकाकाराणामिति द्रष्टव्यम् । तातचरणास्तु । विदिततत्त्वेन पुरुषेण परपरीक्षार्थं कृते प्रश्ने सिद्धार्थताया दूषणत्वप्रसङ्गपरिहाराय विकल्प-

पदम् । न चैवमपि तेनैव कृतेऽनेककोट्यवलम्बिप्रश्ने तस्यादोषत्वप्रसङ्गतादवस्थ्यं । विकल्पपदोपादानमहिम्ना प्रश्नपदस्य संशयमूलकप्रश्नपरत्वलाभेन तदप्रसङ्गादित्यभिप्रायमाहुः । स्वव्याहत्यादिवत्प्रश्नदोषत्वेन क्लृप्ततयाऽवश्यं वक्तव्यायाः प्रमाणव्याहतेरनभिधानाद्विभागन्यूनतामाशङ्क्य परिहरति **प्रमाणेति ॥ सिद्धार्थतैवेति** । घटस्य मृन्मयत्वे प्रमाणसिद्धे सति घटः किं मृन्मयोऽथामृन्मय इति विकल्पप्रश्नस्य द्वितीयकोट्यंशे प्रमाणव्याहत्या सिद्धार्थतायामन्तर्भावान्न पृथगुक्तिरित्यर्थः ॥ **इतिशब्दोऽध्याहार्य इति** । अन्यथा स्वव्याहत्यादेः प्रत्येकं चतुष्टयरूपताभ्रान्तिः स्यादिति भावः ।

**म०** — प्रश्नदोषाः चत्वार इति सिद्धार्थत्वादेर्दूषणत्वाभावादतो व्याख्याति **विकल्पप्रश्नदोषा इति** । ननु गृहीतेपि विकल्पपदे न दोषपरिहारः । यदा विदिततत्त्व एव परपरीक्षार्थं तत्र विकल्पप्रश्नमेव करोति तत्र सिद्धार्थत्वादेरदूषणत्वादिति चेत् न । विकल्पपदसामर्थ्येन सन्देहमूलकप्रश्नस्यैव लाभेन विदिततत्वस्य संदेहाभावेन तत्र प्रश्नस्य संदेहमूलकत्वाभावेन तत्र सिद्धार्थत्वादेरदूषणत्वेपि संदेहमूलकप्रश्नदूषणत्वोपपत्तेः । नन्वेवं ज्ञीप्सापूर्वकवचनस्यैव प्रश्नत्वेन परज्ञीप्साया अपि ज्ञीप्सात्वे स्वेन ज्ञातेपि परज्ञीप्सायाः संभवेन न हि ज्ञाते ज्ञीप्सा संभवतीत्युत्तरग्रन्थविरोधापत्त्या तात्पर्यालोचनया स्वज्ञीप्साया एव विवक्षणीयत्वेन विदिततत्वस्य विदिततत्वत्वेन स्वज्ञीप्साया असंभवेन तत्कृतप्रश्नस्य ज्ञीप्सापूर्वकवचनत्वाभावेन प्रश्नपदेनैव तद्व्यावृत्तौ विकल्पपदं व्यर्थमिति चेन्न । अत्र प्रश्नदोषाणामुक्त्या प्रश्नशब्दस्य मुख्यामुख्यसाधारणत्वेन प्रश्नशब्देनामुख्यप्रश्नस्यापि प्राप्तौ तत्परिहारार्थकत्वेन सार्थक्यात् । ननु तथापि संदेहवत्, अज्ञानमूलकप्रश्नस्यापि सद्भावात् तत्र च सिद्धार्थत्वादेरपि संदेहमूलकप्रश्न इवाप्रतिपत्तिविप्रतिपत्तिलिङ्गत्वेन दूषणत्वसंभवेन तस्यापि संभाव्यत्वात्कथं विकल्पपदेन तद्व्यावृत्तिरिति चेन्न देवदत्त कियन्तस्तनया इत्यादाविव तत्वोद्योतोदितप्रकारेण सर्वत्र संदेहमूलकत्वस्यैवोपपादयितुं शक्यत्वेनाज्ञानमूलकप्रश्नस्यैवाभावात् । भावे वा प्रकृतप्रश्नस्य संदेहमूलकत्वेन तदभिप्रायेण विकल्पपदोपपादनम् । अत एव तत्वोद्योतटीकायां सर्वस्य प्रश्नस्य संदेहमूलकत्वं व्युत्पाद्यास्तु वेत्यादिनान्यप्रश्नस्याज्ञानमूलकत्वमभ्युपेत्य प्रकृताभिप्रायेण संदेहमूलकत्वनियम इत्युक्तमिति ज्ञेयम् ।

**प०** — ननु चत्वार इति कथम् । पञ्चेति वक्तव्यम् । प्रमाणव्याहतिरूपदोषस्यापि सत्त्वादित्यतोऽन्तर्भावं परिगणितेष्वाह **प्रमाणव्याहतिस्सिद्धार्थतैवेतीति** । घटस्य मृण्मयत्वे प्रमाणसिद्धे सति घटः किं मृण्मयोऽथामृण्मय इति विकल्पप्रश्नस्य द्वितीयकोट्यंशे प्रमाणव्याहत्यादिसिद्धार्थतायामन्तर्भावान्न पृथगुक्तेत्यर्थः ।

**या०** — **विकल्पप्रश्नदोषा इति** । अत्र विकल्पपदं प्रकृतप्रश्नाभिप्रायेण । प्रकृतप्रश्ने हि सिद्धार्थतायाः, व्याहत्यादिदृष्टान्तेनाप्रतिपत्तिविप्रतिपत्तिरूपोभयलिङ्गत्वेन दूषणत्वमुपपाद्यते । तच्च

नाज्ञानमात्रमूलकेष्वविकल्परूपेषु 'देवदत्त कियन्तस्तव तनया' इत्यादिप्रश्नेषु सम्भवति । तत्र सिद्धार्थताया अप्रतिपत्तिलिङ्गत्वेन दूषणत्वसम्भवेऽपि प्रश्नस्य संशयमूलकत्वाभावेन वक्ष्यमाणरीत्या विप्रतिपत्तिलिङ्गत्वेन दूषणत्वस्यासम्भवात् । यत्तु तत्त्वोद्योतटीकायां तत्रापि कथञ्चित्संशयमूलकत्वमुपपादितं तदभ्युच्चयवादेनैव न वस्तुतः । अत एव तत्रैव 'अस्तु वाऽन्यत्र प्रश्ने यथातथे'त्यग्रे उक्तम् । अत उभयलिङ्गत्वेन प्रकृतप्रश्ने सिद्धार्थत्वस्य दूषणत्वमुपपादयितुं विकल्पपदम् । तदप्ययोगिकृतविकल्पप्रश्नपरम् । तेन योगिकृतेषु विकल्पप्रश्नेषु सिद्धार्थताया दोषत्वाभावात्कथमेतदिति शङ्काऽनवकाश इति ध्येयम् ॥ **सिद्धार्थतैवेतीति** । अन्यतरकोटेर्निर्णयादिति भावः ।

श्री० — **सिद्धार्थतैवेति** । इदं भवति न वेति नानाकोटिकप्रश्ने एककोटौ यदि प्रमाणव्याहृतिः प्राप्ता तदाऽपरकोटेः सिद्धत्वप्राप्त्या स प्रश्नः सिद्धविषयको जात इत्यर्थः । नानाकोटिकप्रश्न एव यदि प्रमाणव्याहतिस्तदैवोक्तरीत्या सिद्धार्थत्वं न तु सर्वत्रापि प्रमाणबाधे सति सिद्धार्थत्वमिति ध्येयम् ।

**सु० — अयमभिसन्धिः । स्वव्याहत्यादिकं तावत्त्रयं प्रश्नदूषणं भवत्येव । प्रतिज्ञाविरोधार्थान्तरादेर्निग्रहस्थानत्वेन प्रामाणिकैः परिगणितत्वात् । तस्यानुपपन्नता कीदृशी येन दूषणत्वमिति वक्तव्यम् ।**

**अथ मन्येत । अव्या(घातादि)हत्यादिकमर्थप्रत्ययनाङ्गम् । व्याहतादिकं च ब्रुवाणस्तन्न प्रत्येति विपरीतं च प्रत्येतीत्यनुमीयते । अतोऽप्रतिपत्तिविप्रतिपत्तिलिङ्गत्वादनुपपन्नमिति । एवं तर्हि सिद्धार्थताऽप्येवमेवेति कथं न दोषः । विकल्पप्रश्नो हि सन्देहमूलः । सन्देहश्च समानधर्मदर्शनादिना निर्णायकाभावसहकृतेन भवति । समानधर्माद्यभावे वा निर्णायकसद्भावेऽपि वा यः सन्दिग्धे विकल्पांश्च पृच्छति स नूनमविद्यमानमेव समानधर्मादिकं प्रतिपन्नो न प्रतिपन्नश्च निर्णायकसद्भावमित्यनुमीयते । न च कार्यमकारणं भवितुमर्हति । दृश्यते हि सर्पभ्रमादिनाऽपि भयकम्पादिकार्योत्पाद इति ।**

शे० — नन्वनुपपन्नत्वानिरुक्त्या सिद्धार्थतायाः प्रश्नदूषणत्वे खण्डिते तन्निर्वचनपूर्वकं तस्याः प्रश्नदूषणत्वमेव समर्थनीयम् । स्वव्याहत्यादेस्तद्दूषणत्वकथनस्य तु नोपयोगं पश्याम इत्यतोऽत्र स्वव्याहत्यादिग्रहणस्य सिद्धार्थतायाः परमुखेनैवानुपपन्नत्वनिर्वचनेन दूषणत्वसमर्थनार्थत्वान्न तदानर्थक्यमित्यभिप्रेत्य स्वव्याहत्यादेर्दूषणत्वमेवासिद्धमिति मन्वानं प्रति तद्दोषत्वव्युत्पादनपूर्वकं तत्प्रतिबन्द्या सिद्धार्थताया दोषत्वमुपपादयितुमाह **अयमभिसन्धिरिति** । अर्थान्तरादेरित्यादिपदेन निरर्थकादिप-

रिग्रहः । ( प्रतिज्ञाविरोधे स्वव्याहतिः । अर्थान्तरेऽसङ्गतिः । निरर्थकादौ च वैफल्यं प्रसिद्धमेवेति तेषां दूषणत्वे स्वव्याहत्यादीनां दूषणत्वं प्राप्तमिति भावः ) ।

ननु समानधर्मादिकार्यस्य संशयस्य कथं तदभावेऽपि भ्रमरूपतज्ज्ञानमात्रेणोत्पादः स्यादित्यतः सत्यपि समानधर्मादौ तदज्ञाने संशयानुदयादसत्यपि तस्मिन् तज्ज्ञानमात्रेण संशयोदयादन्वयव्यतिरेकाभ्यां समानधर्मादिज्ञानस्यैव तत्कारणत्वावधारणेन समानधर्मादेः संशयकारणत्वाभावात्तस्य च प्रमाभ्रमसाधारणत्वात्साधारणधर्मादिप्रमयेव तद्भ्रमेणापि संशयोत्पादो न विरुद्ध इत्यभिप्रेत्य तत्रानुरूपं दृष्टान्तमाह **दृश्यते हीति** । सत्यपि सर्पे तदज्ञानदशायां भयकम्पानुदयादसत्यपि तस्मिंस्तज्ज्ञाने च तदुदयादन्वयव्यतिरेकाभ्यां तज्ज्ञानमात्रस्यैव भयकम्पादिजनकत्वावधारणात्तत्तज्ज्ञानमात्रस्य च भ्रमप्रमासाधारणत्वात्सर्पप्रमयेव तद्भ्रमादिनाऽपि भयकम्पादिकार्योत्पादो दृश्यत इत्यर्थः ।

प० — **अर्थान्तरादेः** अर्थान्तरनिरर्थकादेरित्यादिपदार्थः । प्रतिज्ञाविरोधादेः स्वव्याहत्यसाङ्गत्यवैकल्यादिरूपस्याप्रतिपत्त्यादिलिङ्गत्वात् दोषत्वं त्वया वाच्यं तथाऽत्रापीति तन्मुखेनैव समाधिं वाचयितुमाह **अथ मन्येतेति** । अप्रतिपत्तिविप्रतिपत्तिलिङ्गं वा निग्रहस्थानमिति लक्षणान्तरानुरोधादाह **अतोऽप्रतिपत्तीति** । नन्वविद्यमानसमानधर्मादिज्ञानस्य भ्रमत्वात् भ्रमेण कथं प्रश्नमूलसंशयरूपकार्योत्पादोऽदृष्टत्वादित्यत आह **दृश्यते हीति** ।

या० — अर्थान्तरादेरित्यत्रादिपदेन निरर्थकापार्थकाविज्ञातार्थादेर्ग्रहणम् । प्रतिज्ञाविरोधे स्वव्याहतिः अर्थान्तरेऽसङ्गतिः । निरर्थकादौ च वैफल्यं, प्रसिद्धमेवेति तेषां दूषणत्वे स्वव्याहत्यादीनां दूषणत्वं प्राप्तमेवेति भावः । ननु समानधर्माद्यभावे कथं भ्रमरूपेण तत्प्रत्ययेन संशयरूपकार्योत्पाद इत्यत आह **दृश्यते हीति** । तथा च ज्ञानजन्येषु कार्येषु भ्रमस्यापि कारणत्वं न विरुद्धमिति भावः । अपसिद्धान्तादेरित्यत्रादिपदेन न्यूनाधिकसंग्रहः ।

श्री० — **तस्य** स्वव्याहत्यादित्रयस्य । **एवमेव** अप्रतिपत्त्यादिहेतुभूतेत्यर्थः । तदुपपादनं **विकल्पेत्यादि** । स नूनमित्यादिना विप्रतिपत्तिहेतुत्वम्, न प्रतिपन्न इत्यादिनाऽप्रतिपत्तिहेतुत्वमुपपादितमिति मन्तव्यम् ।

सु० — **ननु ग्रन्थास्तावदिमे** वादकथाप्रक्रियया प्रवृत्ताः । न च वादे निग्रहस्थानमस्ति । तस्य तत्त्वनिर्णयावसानत्वात् । न हि वादिप्रतिवादिनोरन्यतरस्मिन्प्रतिज्ञाहान्यादिननिगृहीते सत्यन्यतरपक्षनिर्णयः सिध्यति । पुनः सम्यक् प्रतिपद्य प्रत्यवस्थानसंभवात् । यत्तु वादसूत्रे 'सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न' इत्यपसिद्धान्तादेर्निग्रहस्थानत्वं सूचितम् । तदपि

ास्यान्यतरपक्षनिर्णयावसानत्वविरोधादनुपपन्नम् । यदि च वादेऽपसिद्धान्तादीनि कानिचि-
ग्रहस्थानानि स्युस्तदापराण्यपि कस्मान्न स्युः । तत्त्वनिर्णयावसानत्वविरो(धित्वस्यो)भयो-
ात्र साम्यात् । प्रतिज्ञाहान्यादिना निग्रहे वीतरागत्वहा(निरिति)निः स्यादिति चेत् । सम-
ासिद्धान्तादावपीति । अतो वादे निग्रहस्थानाभावात्कथं प्रश्नदोषोद्भावनमित्यत आह
तैरिति ।

**अनु०—** न तैः स्यात्तत्त्वनिर्णयः ॥

**तैः स्वव्याहतादिप्रश्नैः । स्वव्याहतादिप्रश्नास्तत्त्वनिर्णयविरोधिन इत्यर्थः । न हि
द्धेऽप्यर्थे सन्दिहानः शतेनापि प्रमाणानां तत्त्वं प्रतिपादयितुं शक्यते । (तत्र) तत्रापि सन्दे-
निवारणात् ।**

**शे०—** ननु 'न तैः स्यात्तत्त्वनिर्णयः' इत्युत्तरभाष्यमनर्थकम् । न च सिद्धार्थादिप्रश्नानां
वनिर्णयविरोधित्वकथनार्थं तदिति वाच्यम् । तत्कथनस्याप्यनर्थकत्वात् । न च वादे निग्रहस्थाना-
वेन सिद्धार्थत्वादेः प्रश्नदूषणत्वासिद्ध्या तेन प्रश्नखण्डनानुपपत्तिशङ्कापरिहारार्थत्वात्तत्कथनस्य न
इति वाच्यम् । निग्रहस्थानाभावे नियामकाभावेन तद्भावे नियामकसद्भावेन च वादे निग्रहस्थानाभा-
यैवासिद्धेः । सिद्धौ वा तेन वादे सिद्धार्थत्वादेरदूषणत्वप्राप्त्या तेन प्रश्नखण्डनानुपपत्तिप्रसक्तावपि
थस्य वादभिन्नत्वात्तत्र सिद्धार्थत्वादेरदूषणत्वासिद्ध्या तेन प्रश्नखण्डनसम्भवेन तदनुपपत्तिशङ्काया एवा-
येन तत्परिहारार्थत्वासम्भवादित्यत उक्तानुपपत्तिशङ्कापरिहारकतयोत्तरग्रन्थं सङ्गमयितुं ग्रन्थस्य वादा-
शिष्टत्वं वादे निग्रहस्थानाभावं चोपपादयन्नेव सिद्धार्थत्वेन प्रश्नखण्डनानुपपत्तिशङ्कामुत्थापयति **नन्विति**॥
दप्रक्रियेति । 'पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धय' इत्यादिनोपदर्शितवादप्रवृत्ति-
ारेणेत्यर्थः । शिष्यानुकम्पया प्रवर्तनादिति भावः ॥ **वादसूत्र इति** । 'प्रमाणतर्कसाधनोपलम्भः
द्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद' इति गौतमीयवादसूत्र इत्यर्थः । अपसि-
न्तादेरित्यादिपदेन न्यूनपरिग्रहः ॥ **सूचितमिति** । विशेषणद्वयव्यावर्त्यतयेति शेषः । ननु न
रेत्यादिना स्वव्याहतादिप्रश्नानां तत्त्वनिर्णयसाधनत्वाभावमात्रमुच्यते न तु तत्प्रतिबन्धकत्वमिति
थमनेनोक्तशङ्कापरिहार इत्यतस्तत्तात्पर्यमाह **स्वव्याहतादिप्रश्ना इति** । कथमेतेषां तत्त्वनिर्णयविरोधि-
मित्यतः प्रकृतत्वात्सिद्धार्थतायास्तद्विरोधित्वमुपलक्षणत्वेन दर्शयति **न हीति** ॥ **तत्र तत्रेति** ।
स्मिंस्तस्मिन्प्रमाणेऽपीत्यर्थः ।

**प०—** वादसूत्र इति । गौतमीये वादलक्षणसूत्र इत्यर्थः । तदेवाह **अपसिद्धान्तादे-
ति** । न्यूनाधिके आदिपदार्थः ।

**या० — सूचितमिति ।** विशेषणद्वयोपादानेन तद्यावर्त्यानामेतेषां निग्रहस्थानत्वं सूचितमित्यर्थः ।

**श्री० — प्रवृत्ता इति ।** शिष्यानुकम्पया हितार्थत्वादिति भावः । **अनुपपन्नमिति ।** अन्यथा निग्रहस्थानप्राप्तौ कथाविच्छेदप्रसङ्गेन तत्वनिर्णयो न स्यादिति भावः । **अपराणि** प्रतिज्ञाहान्यादीनि । **उभयत्र** अपसिद्धान्तादौ । अपरेषु च ।

**च० — संदिहानः** संदेहवान् ।

**सु० — ततः किमित्यत** आह तत्त्वेति ।

अनु० — तत्त्वनिर्णयवैलोम्यं स्याद्वादेऽपि हि निग्रहः ।

**न केवलं जल्पवितण्डयोरेव निग्रहस्थानसद्भावः किन्तु वादेऽपि । निगृह्यतेऽनेनेति निग्रहो निग्रहस्थानं स्यादेव । अयं तु विशेषः । न जल्पवितण्डयोरिव समस्तम् । अपि तु यावत्तत्त्वनिर्णयविरोधि तावदेव । सिद्धप्रश्नादिकं च तत्त्वनिर्णयविरोधीत्युक्तम् , तत्कुतो वादे न निग्रहस्थानमिति । यो हि यदर्थं प्रवर्तते स तद्विरुद्धमाचरन्कथं नापराधी स्यादिति हिशब्दार्थः । निग्रहनिमित्तनिष्कर्षार्थं वैलोम्यमिति भावप्रत्ययः ।**

**शे० —** तत्त्वनिर्णयवैलोम्यस्य जल्पवितण्डयोरदूषणत्वेन न केवलं तत्त्वनिर्णयवैलोम्यं जल्पवितण्डयोर्निग्रहस्थानं किन्नाम वादेऽपि तन्निग्रहस्थानमित्येकवाक्यतया योजयितुमशक्यत्वा 'त्तत्त्वनिर्णयवैलोम्यमि'त्येको योगः, 'स्याद्वादेऽपि निग्रह इत्यपर' इति वाक्यभेदमाश्रित्यात्रोक्तशङ्कापरिहारकतया 'स्याद्वादेऽपी'ति वाक्यं योजयति **न केवलमिति ।** अपसिद्धान्तादेरभिमानखण्डनरूपनिग्रहत्वाभावेन निग्रहपदस्य तत्परत्वानुपपत्तेर्निग्रहस्थानपरतया तद्याचष्टे **निगृह्यतेऽनेनेति ।** तर्हि तावतैवोक्तशङ्कापरिहारात्तत्त्वनिर्णयेत्याद्यवाक्यवैयर्थ्यमित्यतोऽत्र प्राप्तातिप्रसङ्गपरिहारायोक्तविवरणरूपत्वान्न तदित्याशयेन तथा तद्योजयति **अयं त्विति ।** अस्तु तर्हि तत्त्वनिर्णयविरोधिनो निग्रहहेतुत्वं सिद्धार्थत्वादेस्तु किमायातमित्यत आह **सिद्धेति ॥ उक्तमिति ।** 'न हि सिद्धेऽप्यर्थे सन्दिहान इत्यादिनेति शेषः । ननु तत्त्वनिर्णयविरोधि वादे निग्रहस्थानमित्येव वक्तव्यम् । तर्त्किं वैलोम्यमिति भावप्रत्ययेनेत्यतोऽपसिद्धान्तादेर्वादे निग्रहस्थानतायां नापसिद्धान्तत्वादिकं निमित्तं येनातिप्रसङ्गः किन्तु तत्त्वनिर्णयविरोधित्वमेव । अतो नातिप्रसङ्ग इत्यतो वादोद्भाव्यनिग्रहस्थानतावच्छेदकानुगतधर्मनिरूपणार्थं भावप्रत्ययोपादानम् । अन्यथेन्द्रः पुरन्दर इतिवत्स्यादित्याशयेनाह **निग्रहेति ।**

**स० — निग्रहनिमित्तनिष्कर्षार्थमिति ।** अन्यथा इन्द्रपुरन्दरवत्स्यादिति भावः ।

प० — **निग्रहनिमित्तनिष्कर्षार्थमिति** । अन्यतरपराजयहेतुताकोडीकारकधर्मस्य तत्वनिर्णय-विरोधित्वरूपस्य प्रदर्शनार्थमित्यर्थः ।

या०—**निग्रहनिमित्तनिष्कर्षार्थमिति** । वादोद्भाव्यनिग्रहस्थानतावच्छेदकनिरूपणार्थमित्यर्थः । तथा च यावति तत्त्वनिर्णयवैलोम्यं तावन्निग्रहो वादेऽपि स्यादिति मूलं योजनीयमिति भावः ।

श्री० — **निगृह्यते** पराजीयते ॥ **इत्युक्तमिति** । 'न हि सिद्धेऽप्यर्थे सन्दिहानः शतेनापी'-त्यादिनेति शेषः ॥ **यो हीति** । तथा च तत्त्वनिर्णयाय प्रयतमानस्तद्विरुद्धप्रश्नादिकरणे स्यादेवापराधी-त्यर्थः ।

**सु० — नन्वेवं तर्हि वादस्य तत्त्वनिर्णयार्थत्वं व्याह(न्येत)न्यते । तथा च विजयार्थत्वेन जल्पादितो व्यावृत्तिश्च न स्यात् । तद्वदेव सर्वनिग्रहस्थानसद्भावोऽपि स्यादित्यत आह उद्भाव-नीयमेवेति ।**

**अनु०** — उद्भावनीयमेव स्यान्न कथावसितिर्भवेत् ॥
विजिगीषुकथायां तु कथावसितिकारणम् ॥

**तत्त्वनिर्णयवैलोम्यं वाद इत्यनुवर्तते । अवसीयतेऽनेनेत्यवसितिः ।** विजगीषुकथाय **जल्पवितण्डालक्षणायाम् ।** कथावसितिकारणं **सर्वमपि निग्रहस्थानमिति शेषः ।**

**शे० — एवं तर्हीति** । वादेऽपि निग्रहस्थानसद्भाव इत्यर्थः ॥ **व्याहन्येतेति** । वादिप्रति-वादिनोरन्यतरस्मिन्प्रतिज्ञाहान्यादिना निगृहीतेऽप्यन्यतरपक्षनिर्णयासिद्धिरिति भावः । न केवलं वादे निग्रहस्थानाभ्युपगमे तस्य तत्त्वनिर्णयार्थत्वव्याहतिरेव दोषः किन्तु विजयार्थत्वप्रसङ्गश्चेत्यभिप्रेत्य तत्रा-पीष्टापत्तिं वदन्तं प्रत्यनिष्टान्तरमाह **तथा चेति** । फलभेदाभावादिति भावः । जल्पादितोऽव्यावृ-त्तिरिष्टैवेति वदन्तं प्रत्यनिष्टान्तरमाह **तद्वदेवेति** । तथा च 'यावत्तत्वनिर्णयविरोधि तावदेव निग्रह-स्थानं न समस्तमि'ति यत्प्रागुक्तं तद्भग्नमिति भावः ।

प०— **अवसीयते अनेनेति** । तथाच तत्त्वनिर्णयवैलोम्यं यत् तत् कथावसितिकारणं चेत्यर्थः । भावप्रत्ययस्यान्यार्थत्वेन प्रयुक्तत्वाद्विलोमेत्यस्य विरोधीत्यर्थः ।

या०— **विजयार्थत्वेनेति** । विजयार्थत्वप्रसङ्गेनेत्यर्थः ॥ **तत्त्वनिर्णयवैलोम्यमिति** अत्रापि यत्र तत्त्वनिर्णयवैलोम्यं तन्निग्रहस्थानं वादे उद्भावनीयमेव स्यादिति मूलयोजना द्रष्टव्या ।

श्री० — एवं तर्हि वादेऽपि यदि निग्रहस्थानं स्यादित्यर्थः । व्याहन्यत इत्यनन्तरं जल्पादि-वद्विजयार्थत्वं च स्यादिति शेषः ॥ **अनुवर्तत इति** । तथा च वादे तत्त्वनिर्णयवैलोम्यं तत्त्वनिर्णय-विरोधिभूतं निग्रहस्थानमुद्भावनीयमेव न कथावसितिकारणं भवतीति मूलयोजना ।

सु॰— एतदुक्तं भवति । वादे(ऽपि) किञ्चिदसंभावितमेव । यथा विक्षेपादि । तस्याज्ञानसंगूहनाद्यर्थत्वात् । तत्त्वनिर्णिनीषोश्च तत्रानर्थित्वात् । किञ्चित्संभावितमप्यनुद्भाव्यम् । यथाऽननुभाषणादि । तस्योभयाभिलषिततत्त्वनिर्णयाविरोधित्वेन तदुद्भावनस्य व्यर्थत्वात् । किञ्चिदुद्भाव्यमात्रं यथा प्रतिज्ञाविरोधादिकं प्रकृतम् । तस्य तत्त्वनिर्णयविरोधित्वेन तदुद्भावनस्य त्याजनेन तत्त्वनिर्णयाङ्गत्वात् । वादावसानं त्वन्यतरस्य साधनदूषणयोः स्थितयोरन्य-(तर)स्मिंश्च निस्साधनदूषणे सति भवति । स एव हि तत्त्वनिर्णय इति । जल्पवितण्डयोस्तु सर्वमपि निग्रहस्थानं संभावितं चोद्भाव्यं च । उद्भावितं च कथां चावसाययति । तयोर्विजयार्थत्वात् । सर्वस्य विजयसाधनत्वात् । अतो न कश्चिद्दोष इति ।

शे॰— ननु कुतो वादे तत्त्वनिर्णयवैलोम्यस्यैवोद्भाव्यत्वं कुतश्च कथावसित्यकारणत्वं कुतश्चैवं सति वादकथावसानमवसानकारणान्तरानिरूपणादित्यतस्तत्त्वनिर्णयवैलोम्यं वादे उद्भावनीयमेवेत्युक्त्या सूचितं तत्त्वनिर्णयवैलोम्येतरस्य कस्यचिदसम्भावितत्वं सम्भवतोऽपि कस्यचिदनुद्भाव्यत्वं च तत्र तत्र हेतूक्त्योपपादयन्नेव तत्त्वनिर्णयवैलोम्यस्याप्युद्भाव्यमात्रत्वं तत्र हेतुकथनेनोपपादयन्नेवैवं 'तत्त्वनिर्णयपर्यन्तं वादे सुबहवोऽपि हि घटेयुश्चिरकालं चे'ति कथालक्षणीयाचार्योक्तिं मनसि निधाय तत्पर्यवसानकारणनिरूपणेनैवोदयनाद्युक्तवादनिग्रहस्थानचातुर्विध्यनिरासं च सूचयन्नेव स्वाभिमतं वादनिग्रहस्थानानेकविधत्वं दर्शयन्नेव वाक्यतात्पर्यमाह इदमुक्तं भवतीति ।

प्रतिज्ञाहानिः प्रतिज्ञासंन्यासो निरर्थकमर्थान्तरमविज्ञातार्थमपार्थकमिति षट्कमेवासम्भावितमित्याहोदयनः । तदसत् । विक्षेपस्याज्ञानसंगूहनार्थत्वेनासम्भावितेष्वेव परिगणनीयत्वादिति भावेन स्वयं विक्षेपादित्वेनैव तदुदाहरति किञ्चिदसम्भावितमेव यथा विक्षेपादीति । आदिपदेन परोक्तस्य प्रतिज्ञाहान्यादिषट्कस्य परिग्रहः । असम्भावितत्वे हेतुमाह तस्येति । विक्षेपादिसप्तकस्येत्यर्थः । विक्षेपप्रतिज्ञाहानिसन्न्यासार्थान्तराणां चतुर्णां स्वाज्ञानसंगूहनार्थत्वेऽपि निरर्थकाविज्ञातार्थापार्थकानां पराज्ञानप्रकाशनार्थत्वादादिपदेनोपादानम् । तथा च स्वाशक्तिसङ्गूहनपराशक्तिप्रकाशनार्थत्वाद्विक्षेपादेर्न वादे तत्सम्भवतीति भावः । अस्तु स्वाशक्तिसंगूहनाद्यर्थत्वं सप्तकस्य तथाऽपि कुतो वादेऽसम्भावितत्वमज्ञानसंगूहनार्थत्वमेव तत्सम्भवादित्यत आह तत्त्वेति । तत्रानर्थित्वात् स्वाशक्तिसंगूहनपराशक्तिप्रकाशनानपेक्षत्वादित्यर्थः । न च परोक्तदोषभयेनासम्भवेनावपि प्रतिज्ञाहानिसन्न्यासावनुक्तत्वभ्रमात्प्रमादाद्वा सम्भवत एव । तथा वाचकत्वभ्रमान्निरर्थकत्वमुपयुक्तत्वभ्रमादर्थान्तरं स्पष्टार्थत्वभ्रमादविज्ञातार्थं पूर्वोत्तरान्वयभ्रमादपार्थकं च सम्भवतीति कथमसम्भावितमेवेत्यवधारणमिति वाच्यम् ।

प्रतिज्ञाविरोधादिवदबुद्धिपूर्वं सम्भवासम्भवस्याभिप्रेतत्वादबुद्धिपूर्वं संभवतश्चोद्भाव्यमात्रत्वरूपतृतीयकोटावेव निवेशोपपत्तेः । ननु च समीचीनमेव साधनं त्वयोपन्यस्तं मया च तत्रासदेव दूषणं दत्तम् । तद्वयं किमर्थं त्वं साधनं त्यजसि अपलपसि वेत्येवं सद्विषययोः प्रतिज्ञाहानिसंन्यासयोरुद्भावनीयत्वाद्वादे कथं हान्यादेरसम्भावितत्वकोटौ निवेशः प्रतिज्ञाविरोधादिवत्तृतीयकोटावेव निवेशस्योचितत्वादिति चेत् । सत्यम् । निग्रहस्थानत्वसाक्षाद्व्याप्यधर्मावच्छेदेनानुद्भाव्यत्वादेरभिधानात्सद्विषयप्रतिज्ञाहानित्वस्य च निग्रहस्थानत्वव्याप्यप्रतिज्ञाहानित्वव्याप्यत्वेन तत्साक्षाद्व्याप्यत्वाभावाददोष इत्याशयात् ।

प्रतिज्ञान्तरं हेत्वन्तरमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमिति सप्तकं सम्भवदप्यनुद्भाव्यमित्याहोदयनः । तदसत् । विक्षेपस्याज्ञानसंगृहीतार्थस्य वादेऽसम्भवस्योपपादितत्वेनापरिगणनीयस्य परिगणनादननुभाषणे यत्तदित्याद्यनुवादादित्रयस्य न्यूनादन्यूनतयोद्भाव्यमात्रकोटिनिविष्टत्वेऽप्यन्यथाऽनुवादस्य च प्रकृतानुपयोगित्वेनार्थान्तरतुल्यतया सम्भावितपक्ष एव निक्षेपेऽपि तूष्णीम्भावस्याज्ञानादितुल्यतयासम्भविनोऽनुद्भाव्यकोटिनिविष्टत्वेन तथा परिगणनीयस्यापरिगणनाच्चेति भावेनाह **किञ्चित्सम्भावितमप्यनुद्भाव्यं यथाऽननुभाषणादीति** । अत्रादिपदेन विक्षेपव्यतिरिक्तानां प्रतिज्ञान्तरादीनां षण्णां संग्रहः । सम्भवतोऽप्यनुद्भाव्यत्वे हेतुमाह **तस्येति** । अननुभाषणादेरित्यर्थः ॥ **तत्त्वनिर्णयाविरोधित्वेनेति** । तेषां पुरुषवचनदोषत्वेन तत्त्वनिर्णयापरिपन्थित्वादिति भावः । ननु साधनविशेषाधीनसाध्यविशेषसिद्धये प्रतिज्ञान्तरहेत्वन्तरे अवश्योद्भाव्ये । अन्यथा तत्त्वधीव्याघातादिति चेन्न । साधनविशेषाधीनसाध्यविशेषनिर्णयोद्देश्यकविचारेतरतत्त्वविचारे तदनुद्भाव्यत्वस्य विवक्षितत्वात् । न चैवमपि मतानुज्ञोद्भावनमस्तु । प्रसङ्गाभासात्मकत्वेनासाधकताभ्रमजनकतया तस्यास्तत्त्वधीव्याघातकत्वादिति वाच्यम् । मतानुज्ञायाः प्रसङ्गाभासात्मकत्वाभावेन तत्त्वनिर्णयापरिपन्थित्वादित्याशयात् । ननु तथाऽपि पर्यनुयोज्योपेक्षणमुद्भाव्यमेव । न चैवं स्वकौपीनविवरणापत्तिः । वादकथायां तस्यादोषत्वादिति चेन्न । तस्य प्राश्निकोद्भाव्यत्वेनैव सामयिकत्वात् ।

**किञ्चिदुद्भाव्यमात्रमिति** । उद्भाव्यमपि न कथाऽवसानिकमित्यर्थः ॥ **यथा प्रतिज्ञाविरोधादिकमिति** । अत्रादिपदेनाप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमपसिद्धान्त इति परोक्तस्य षट्कस्य संग्रहः । यत्त्वत्राननुभाषणस्य तत्त्वनिर्णयाविरोधितयाऽनुद्भाव्यनिग्रहनिविष्टस्य नोद्भाव्यमात्रकोटिनिविष्टत्वमिति पञ्चकस्यैवादिपदेन संग्रहो न तूदयनरीत्या षट्कस्येति प्राचां व्युत्पादनम् । तदसत् । तथा सत्यन्यथाऽनुवादस्यार्थान्तरतुल्यत्वेनाननुभाषणस्यासम्भावितपक्षनिक्षिप्तस्य सम्भावितानुद्भाव्यकोटिनिविष्टत्वाभावप्रसङ्गेन तथा परिगणनरूपपूर्वग्रन्थविरोधापातात् । यदि च तूष्णीम्भावरूपस्य तस्याज्ञानादितुल्यतयाऽसम्भावितानुद्भाव्यकोटिनिविष्टत्वाभिप्रायकत्वान्न पूर्वग्रन्थविरोध इति मन्यसे

तर्हि उक्तरूपस्य तस्य सम्भावितानुद्भाव्यकोटिनिविष्टत्वेपि यत्तदित्याद्यनुवादादिरूपस्य तस्य न्यूनादन्यूनतयोद्भाव्यमात्रकोटिनिवेशोपपत्तेः किमिति तत्परित्यागः । अथैकदेशस्योद्भाव्यमात्रकोटिनिविष्टत्वेऽपि न सर्वस्य तदस्तीति तत्परित्यागस्तर्हि तदेकदेशस्य तूष्णीम्भावस्य सम्भावितानुद्भाव्यकोटिनिविष्टत्वेऽपि सर्वस्य तदभावात्तथापरिगणनानुपपत्तिरेव । असम्भावितकोट्यावुक्तलक्षणत्वेनाननुभाषणमभिप्रेतमेवेति न कश्चित्क्षुद्रोपद्रव इत्यास्तां तावत् ॥ **तस्येति** । प्रतिज्ञाविरोधादेरित्यर्थः ॥ **तत्त्वनिर्णयविरोधित्वेनेति** । प्रतिज्ञाविरोधादीनां फलोपहिततत्त्वनिर्णयसामग्रीप्रतिबन्धकत्वेन परम्परया तत्त्वनिर्णयप्रतिबन्धकत्वादित्यर्थः । अयमाशयः । आकाङ्क्षायोग्यतासन्निधिमत्तया प्रतिसंहितं प्रमाणाप्रतिहतं च वाक्यं खलु तत्त्वनिर्णयाङ्गं नान्यत् । तत्र प्रतिज्ञाविरोधे योग्यताविरोधः । अप्राप्तकाले त्वाकाङ्क्षाविरहः । न्यूने त्वाकाङ्क्षितासमभिव्याहारेण सन्निधिविरहविशेषः । अधिकपुनरुक्तयोरनाकाङ्क्षितासत्तिः । तयोश्च ग्राह्याभावेऽप्यस्थापनेनाविशिष्टवाक्यप्रतिसन्धानाविघटकत्वेऽप्यनाकाङ्क्षितासत्त्या तत्प्रयोजनानुसन्धानेन व्यग्रः प्रतिपत्ता नानुसन्धातुर्महति वाक्यमाकाङ्क्षादिमत्तयेति व्यासङ्गजननेन प्रतिबन्धकत्वमेव । अननुभाषणे चोक्ताप्रतिसन्धानम् । अपसिद्धान्ते तु सम्मुखप्रमाणबाधोत्क्रान्तिर्भवति । एतादृशं च वाक्यं न तत्त्वनिर्णयाङ्गम् । ननु यत्र हेत्ववयवेनैव न्यूनत्वं हेत्वन्तरस्य चापरिस्फूर्तिस्तदा तत्त्वनिर्णायकाभावात्तत्त्वधीव्याघात इत्यवश्यं कथावसानमिति कथमुद्भाव्यमात्रत्वमस्येति चेत् । सत्यम् । हेत्ववयवन्यूनत्वं कथावसानिकं न्यूनान्तरं तु न तथेत्यभिप्रायेणेदमिति भावः । वस्तुतस्तु न हेतुमात्रं तत्त्वनिर्णायकं किन्तु व्याप्तिपक्षधर्मताविशिष्टतया बोधितम् । तथा च यत्रोदाहरणावयवादिनोपनयावयवादिना वा न्यूनता तत्राप्यवश्यं हेत्वन्तरन्यूनत्ववत्कथावसानमिति ध्येयम् । नन्वधिकेन शाब्दधीर्यदि न प्रतिबद्ध्यते तर्हि तदुद्भावनमनर्थकम् । अथ सा प्रतिबद्ध्यते तर्हि कथाविच्छेदः स्यादेवेति कथं तस्योद्भाव्यमात्रत्वमिति चेन्न । हेतुद्वयस्य व्याप्तिपक्षधर्मतासाचिव्यचिन्ताव्यग्रस्य प्रतिपत्तुरेको हेतुस्तत्त्वनिर्णयाय पर्याप्त इत्यधिकं न शाब्दज्ञानाङ्गमिति ज्ञापनार्थं तदुद्भाव्यान्यतरहेतुं त्याजयित्वा कथायाः प्रवर्तनीयत्वे तदुद्भावनस्यावश्यकत्वात्कथानवसायिकत्वाच्चोद्भाव्यमात्रत्वसंभवादिति । व्यभिचाराद्यनुद्भावने हि न व्यभिचारादिमता हेतुना तत्त्वनिर्णयो भवति । भवति च तत्त्वनिर्णयस्य साक्षाद्विरुद्धा विपरीतप्रतिपत्तिः । अतो हेत्वाभासोद्भावनेन साधनस्य भङ्गे सति साधनान्तरोपादाने कथान्तरारम्भेण पूर्वोपक्रान्तकथानिवृत्तिरावश्यकी । हेत्वन्तरानुपादाने च तदप्रतिबद्धेन प्रतिहेतुनैव तत्त्वनिर्णयात्कथानिवृत्तिरावश्यकी । तथा निरनुयोज्यानुयोगाद्यनुद्भावने छलाद्यसद्दूषणदूषितेन साधनेन तत्त्वनिर्णयायोगात्तदुद्भावनेनासद्दूषणभङ्गे सति दूषणान्तरोपादाने पूर्वोपक्रान्तकथानिवृत्तिरावश्यकी ।

हेत्वाभासो निरनुयोज्यानुयोगश्चेति द्वयं कथावसानकारणमित्याहोदयनः । तदसत् । पूर्वोपक्रान्तकथानिवृत्तेरेवाशक्यत्वात् । तथा हि । किं पूर्वोपक्रान्ता कथा तत्त्वनिर्णयमुत्पाद्य निवृत्ताऽनुत्पाद्यैव वा । नाद्यः । व्यभिचाराद्युद्भावितदोषभिया हेत्वाभासं परित्यज्य पुनस्तत्कालोपस्थितसद्धेतूपादाने तत्प्रतिरुद्धेन वा निरनुयोज्यानुयोगदूषितं छलादिकमपहाय तत्कालोपस्थितसद्दूषणोपन्यासे तद्दूषितेन वा, साधनेन तत्त्वनिर्णयायोगात् । नान्त्यः । अन्यतरपराजयेऽपि तत्त्वनिर्णयोद्देश्यकाया अनुत्पादिततत्त्वनिर्णयायाः षण्ढसम्भोगसमानाया वादकथात्वायोगात् । न ह्यनुत्पादितजयपराजयव्यवस्था कथा जल्पो वा वितण्डा वा भवति । अन्यथा तत्त्वधीसामग्रीविरोधकस्यावश्योद्भाव्यतयोक्तस्य प्रतिज्ञाविरोधादिसप्तकस्यापि कथावसायित्वप्रसङ्गाज्जल्पवितण्डयोरिव वादेऽपि हेत्वाभासनिरनुयोज्यानुयोगयोरिव पराजयहेतुत्वात् । अथ न पराजयहेतुत्वेऽपि विरोधादीनामुद्भावनेनान्यतरजयमात्रेणावसानं वादस्य तत्त्वनिर्णयार्थत्वात् तत्त्वनिर्णयसामग्रीविघटकत्वाद्विरोधादीनामुद्भाव्यं त्याजयित्वा अन्यथाभिधानं स्वयमेव सम्पाद्य च सम्यगभिधानं तत्त्वनिर्णयाय वादकथा प्रवर्तनीयेति चेत् । हन्तैवं हेत्वाभासनिरनुयोज्यानुयोगाभ्यामुद्भाविताभ्यां पराजितस्यापि तस्यैव तदैव साधनान्तरस्य दूषणान्तरस्य वा स्फुरणे सन्देहावस्कन्दनेन तत्त्वनिर्णयासम्भवात्सुतरां तत्त्वनिर्णयाय कथा प्रवर्तनीयेति कथं कथाविच्छेदः । न हि तत्त्वनिर्णयानुत्पादाविशेषेऽपि विरोधाद्युद्भावनेन न वादावसानं हेत्वाभासाद्युद्भावनेन च तदवसानमिति विनिगन्तुं शक्यमित्याशयवान्स्वमते वादावसानमुपपादयति **वादावसानं त्विति** । आत्यन्तिकसाधनदूषणनिवृत्तावेव वादावसानमिति भावः ।

**जल्पवितण्डयोस्त्विति** । इहोद्भावनकालभेदेन त्रिविधानि निग्रहस्थानान्यनुक्तग्राह्याणि उच्यमानग्राह्याण्युक्तग्राह्याणि चेति । तत्राननुभाषणमज्ञानमप्रतिभेति त्रीण्यनुक्तग्राह्याणि । अर्थान्तरं निरर्थकमपार्थकमप्राप्तकालमिति चत्वार्युच्यमानग्राह्याणि । शेषाणि त्रयोदशोक्तग्राह्याणि । तान्यपि द्विविधानि । आभासव्यतिरिक्तानि हेत्वाभासाश्चेति विंशतिरेव । प्रतिज्ञान्तरहेत्वन्तरयोरनिग्रहस्थानत्वस्यान्यत्र समर्थितत्वात् । तत्रानुक्तग्राह्यत्रिकस्य प्रथमकक्ष्यायामसंभावितत्वेऽप्युत्तरकक्ष्यासु संभावितत्वादुच्यमानग्राह्यचतुष्कस्य च प्रथमकक्ष्यायामपि संभावितत्वादुक्तग्राह्येष्वपि प्रतिज्ञाहानिः प्रतिज्ञासन्न्यासो मतानुज्ञेति त्रिकस्य प्रथमद्वितीयकक्ष्ययोरसंभावितत्वेऽपि तृतीयकक्ष्यायां संभावितत्वात् निरनुयोज्यानुयोगस्य च प्रथमकक्ष्यायामसंभावितत्वेऽपि द्वितीयादिकक्ष्यासु संभावितत्वादवशिष्टस्य च प्रतिज्ञाविरोधोऽविज्ञातार्थं न्यूनमाधिकं पुनरुक्तं विक्षेपोऽपसिद्धान्तो हेत्वाभासा इत्यष्टकस्य प्रथमकक्ष्यासु संभावितत्वात्सर्वमपि निग्रहस्थानं जल्पवितण्डयोः कक्ष्याभेदेन संभावितमेवेत्यर्थः ॥ **उद्भाव्यं चेति** । सर्वमित्यनुवर्तते । अनुक्तग्राह्यत्रिकस्य प्रथमकक्ष्यायामसंभावितत्वेन द्वितीयकक्ष्यायामनुद्भाव्यत्वेऽपि

द्वितीयादिकक्ष्यायां संभावितस्य तृतीयादिकक्ष्यायामुद्भाव्यत्वमुच्यमानग्राह्यचतुष्कस्य तु प्रथमकक्ष्यायामपि संभावितस्य द्वितीयादिकक्ष्यासूद्भाव्यत्वमुक्तम् ह्येष्वपि प्रतिज्ञाहानिः सन्न्यासो मतानुज्ञेति त्रिकस्य तृतीयादिकक्ष्यापतितस्य चतुर्थादिकक्ष्यासूद्भाव्यत्वं निरनुयोज्यानुयोगस्य द्वितीयादिकक्ष्यापतितस्य तृतीयादिकक्ष्यासूद्भाव्यत्वमवशिष्टस्य प्रतिज्ञाविरोधादिसप्तकस्य हेत्वाभासानां च प्रथमादिकक्ष्यासु सम्भावितत्वेन द्वितीयादिकक्ष्यासूद्भाव्यत्वमिति कक्ष्यादिभेदेनैव सर्वमपि निग्रहस्थानमुद्भाव्यमित्यर्थः ॥ **अतो न कश्चिद्दोष इति** । तत्त्वनिर्णयार्थत्वाव्याघातो जल्पादितोऽव्यावृत्तिस्तद्वदेव सर्वनिग्रहस्थानसद्भावप्रसङ्गश्चेत्येवं कश्चिदपि नेत्यर्थः ।

**प०— विक्षेपादीति** । विक्षेपार्थान्तराविज्ञातार्थप्रतिज्ञाहानिप्रतिज्ञासन्न्यासनिरर्थकापार्थकरूपसप्तकमित्यर्थः ॥ **अननुभाषणादीति** । अननुभाषणप्रतिज्ञान्तरहेत्वन्तराज्ञानाप्रतिभामतानुज्ञापर्यनुयोज्योपेक्षणमिति सप्तकमित्यर्थः ॥ **उद्भाव्यमात्रमिति** । न तु कथावसितिहेतुरिति मात्रपदार्थः ॥ **प्रतिज्ञाविरोधादिकमिति** । प्रतिज्ञाविरोधार्थान्तरपुनरुक्तिन्यूनाधिकापसिद्धान्तादिकमित्यर्थः ॥ **प्रकृतमिति** । सिद्धार्थत्वमित्यर्थः ॥ प्रतिज्ञा(हानि)विरोधासङ्गत्यादेः प्रतिज्ञाविरोधार्थान्तरादेः भेदाभावादित्थमुक्तम् । केन तर्हि विवादावसितिरित्यत आह **वादावसानं त्विति** ॥ **अन्यतरस्येति** । वादिप्रतिवादिनोर्मध्य इति योज्यम् ।

---

**या०— यथा विक्षेपादीति** । अत्रादिपदेनार्थान्तरमविज्ञातार्थं प्रतिज्ञाहानिः प्रतिज्ञासन्न्यासो निरर्थकमपार्थकं चेति षण्णां ग्रहणम् । अनेनार्थान्तरादिषट्कमेव वादे सम्भवतीति यत्परेणोक्तं तदपि निरस्तमिति ज्ञातव्यम् । विक्षेपस्याप्यज्ञानसंगूहनार्थत्वेन तत्रासंभावितत्वात् संगूहनाद्यर्थत्वादित्यत्रादिपदेन पराज्ञानप्रकाशनार्थत्वस्य ग्रहणम् । यथाऽननुभाषणादीत्यत्रादिपदेन प्रतिज्ञान्तरं हेत्वन्तरमज्ञानमप्रतिभा मतानुज्ञा पर्यनुयोज्योपेक्षणमिति षट्कं ग्राह्यम् । एतेन प्रतिज्ञान्तरादिषु विक्षेपापवापेनाननुभाषणोद्वापेन सप्तकं वादे सम्भावितमपि नोद्भाव्यमिति परोक्तं निराकृतमिति ज्ञातव्यम् । अज्ञानसंगूहनार्थे विक्षेपेऽत्रासम्भावितत्वस्योक्तत्वात् । अननुभाषणेऽपि अप्रतिभादिवदत्र सम्भावितत्वस्य सद्भावाच्च ॥ **उद्भाव्यमात्रमिति** । न कथावसितिकारणमिति शेषः । प्रतिज्ञाविरोधादिकमित्यत्र दिपदेनाप्राप्तकालं न्यूनमधिकं पुनरुक्तमपसिद्धान्त इत्येतेषां ग्रहणम् । अत्र परेणाननुभाषणमपि परिगणितम् । तत्तुच्छम् । तत्त्वनिर्णयाविरोधिनस्तस्यानुद्भाव्यनिग्रहत्वस्योक्तत्वात् । यद्यपि स्वव्याहत्यादिकमेव प्रकृतं न प्रतिज्ञाविरोधादिकम् । तथाऽपि प्रतिज्ञाविरोधे सति स्वव्याहतिरप्राप्तकालेऽसङ्गतिः पुनरुक्तौ सिद्धार्थताऽऽधिक्ये वैफल्यं भवत्येवेत्यभेदाभिप्रायेणैवमुक्तमिति ज्ञातव्यम् ।

श्री० — **तत्रेति** । अज्ञानसंगूहनादावित्यर्थः ॥ **अविरोधित्वेनेति** । अप्रतिबन्धकत्वेनेत्यर्थः । 'ज्ञातेऽपि वादिवाक्यार्थे प्राश्निकैस्तत्र चेत्पुनः । योऽनुद्भाव्य स्वमज्ञानं तस्यैवाननुभाषणमि'ति तल्लक्षणम् । यदि वादी स्वकीयमज्ञानं संगूह्य यदपि यत्तदित्याद्यनुवादमात्रं करोति तदा तद्रूपमननुभाषणं तत्त्वनिर्णयविरोधि प्रतिबन्धकं न भवति ॥ **अन्यतरस्येति** । वादिप्रतिवादिनोर्मध्येऽन्यतरस्येत्यर्थः ॥ **सर्वस्य चेति** । निग्रहस्थानस्येत्यर्थः ।

च० — **निर्णिनीषोः** निर्णेतुमिच्छोः ।

**सु० — एवं सिद्धार्थविषयत्वं प्रश्नस्य दूषणमुद्भाव्यं चेत्युपपाद्य तद्दूषणत्वानभ्युपगमेऽतिप्रसङ्गं सूचयितुमाह** परिहारेऽपीति ।

अनु० — परिहारेऽपि सिद्धत्वं दूषणं प्रतिवादिनः ॥
प्रतिज्ञायां

**न केवलं सिद्धविषयत्वं प्रश्नदूषणं किन्नाम परिहारेऽप्युत्तरेऽप्यर्थस्य सिद्धत्वं दूषणम् । इयांस्तु विशेषः प्रश्ने तु पृच्छ्यमानार्थस्य प्रष्टुः सिद्धत्वं दूषणम् । प्रतियोगिनस्तु सिद्धत्वं न्याय्यमेव । अन्यथा प्रतिपादकत्वानुपपत्तेरिति । तत्किमुत्तरवाक्यार्थस्य सर्वस्यापि प्रतिवादिसिद्धत्वं दूषणम् । नेति ब्रूमः । किन्तु प्रतिज्ञार्थस्यैव, परिहारेऽपि प्रतिज्ञायामर्थस्य प्रतिवादिनः सिद्धत्वं दूषणमिति संबन्धः । इदमुक्तं भवति । यदि स्वसिद्धार्थे प्रार्थप्रश्नकरणं न दूषणं स्यात् । तदा प्रतिवादिसिद्धार्थप्रतिज्ञाऽपि न दूषणं स्यादविशेषात् ।**

शे० — ननु सिद्धार्थतया दूषणत्वस्य पूर्वमुक्तस्यैव परिहारेऽपीत्यादिनाऽभिधानात्पौनरुक्त्यम् । न च पूर्वं प्रश्ने सिद्धार्थत्वस्य दूषणत्वमुक्तमत्र पुनः परिहार इत्यपौनरुक्त्यमिति वाच्यम् । प्रश्ने सिद्धार्थत्वस्य दूषणत्वोक्तिमात्रेण सिद्धार्थत्वेन प्रश्नखण्डननिर्वाहसिद्धौ परिहारे तद्दूषणत्वव्युत्पादनस्य प्रकृतानुपयुक्तत्वादित्यत उक्तस्य सिद्धार्थतायाः प्रश्नदूषणत्वस्य तदनभ्युपगमेऽतिप्रसङ्गसूचनेन प्रतिबन्द्या समर्थनं ग्रन्थात्र तद्वैयर्थ्यमित्यभिप्रेत्य तत्परतयोत्तरग्रन्थं सङ्गमयति **एवमिति** । ननु सिद्धार्थत्वस्य प्रश्नदूषणत्वाभावे परिहारेऽपि दूषणत्वं न स्यादित्यापादनमयुक्तम् । प्रतिपादकत्वानुरोधेन वादिनः सिद्धार्थत्वस्य भूषणतया दूषणत्वाभावेनेष्टापादनत्वात् । प्रश्नेऽपि सिद्धार्थत्वं दूषणमिति विपर्ययपर्यवसाने बाधश्च । प्रश्नेऽपि परिहर्तुः सिद्धार्थताया दूषणत्वाभावस्य प्रमाणसिद्धत्वादित्यतो नैतावदेवात्रापादनशरीरमभिमतम् । किन्नाम प्रश्ने सिद्धार्थत्वस्य प्रश्नदूषणत्वाभावे परिहारे सिद्धार्थत्वस्य प्रतिवादिदूषणत्वं न स्यादित्येवेति नोक्तदोष इति भावेन प्रतिवादिन इत्यस्य प्रयोजनमाह **इयांस्त्विति** ॥ **प्रतियोगिन इति** ।

प्रतिवक्तुरित्यर्थः ॥ **तत्किमिति** । तथा सति हेत्वाद्यर्थस्यापि सिद्धतायां दूषणत्वापातादिति भावः । ननु दृष्टान्ताभावेनापाद्यापादकयोर्व्याप्तिवैकल्यात्तर्काभासोऽयमित्याशङ्क्य विशेषव्याप्त्यभावेऽप्यविशेषलक्षणसामान्यव्याप्तिसद्भावान्नोक्तदोष इत्याशयेनापादनप्रकारप्रदर्शनपूर्वकं तामाह **इदमुक्तं भवतीति** ।

**प०— प्रतियोगिनस्त्विति** । प्रश्नपरिहारकर्तुरित्यर्थः ॥ **प्रतिवादिन इति** । प्रष्टुरित्यर्थः ॥ **प्रतिपादकत्वेति** । प्रतिवक्तृत्वानुपपत्तेरित्यर्थः ।

**या०— प्रतियोगिन इति** । प्रतिवक्तुरित्यर्थः ॥

**श्री०**— पृच्छ्यमानार्थस्य सिद्धत्वमित्यन्वयः । **प्रष्टुः** प्रश्नकर्तुः । प्रतिवादिनो दूषणमित्यन्वयः । **प्रतियोगिनो** वादिनः । प्रष्टव्यार्थस्य सिद्धत्वमेव न्यायम् । प्रतिवादिना पृच्छ्यमानार्थनिश्चयो वादिनोऽपेक्षित इत्यर्थः । कुतः प्रतिवादिप्रष्टव्यार्थनिश्चयो वादिनोऽपेक्षित इत्यत आह **अन्यथेति** । वादिनः प्रतिवादिप्रष्टव्यार्थज्ञानाभावे, **तं प्रति** वादिनं प्रति ॥ **प्रश्नेति** । प्रतिवादिना क्रियमाणेत्यर्थः । **तदर्थस्य उत्तरवचनार्थस्य** प्रतिवादिनः सिद्धत्वं वादिनो दूषणमित्यर्थः । प्रतिवादिसिद्धार्थप्रयोगो वादिना न कार्य इति भावः । वादिनस्तु सिद्धत्वमित्यत्र तदर्थस्येति वर्तते । कुत इत्यत आह **अन्यथेति** । वादिनो यदि स्वप्रयुज्यमानोत्तरवाक्यार्थः सिद्धो न स्यात्तदा प्रतिवादिनं प्रति कथं प्रतिपादकः स्यादित्यर्थः । **प्रतिवादिसिद्धत्वं दूषणमिति** । प्रतिवादिसिद्धार्थप्रयोगो वादिनो दूषणमित्यर्थः । एतदर्थप्रतिपादनाय मूलं योजयति **परिहारेऽपीति** । उत्तरवाक्येऽपीत्यर्थः । **दूषणं** वादिनः । अनेन कथमतिप्रसङ्गः सूचित इत्यत आह **इदमुक्तं भवतीति** । **न दूषणं स्यात्** वादिनः । **अविशेषात्** सिद्धार्थविषयकत्वाविशेषात् ।

**सु०— ननु परं प्रति साधनाय पक्षवचनं प्रतिज्ञा । न च सिद्धं साधनमर्हति । अतः प्रतिज्ञात्वव्याघातात् । प्रतिवादिसिद्धार्थत्वं दूषणमेवेति** । एवं तर्हि **ज्ञीप्सापूर्वकं वाक्यं प्रश्नः । न च ज्ञाते ज्ञीप्सा संभवति । अतः प्रश्नत्वव्याघातात्स्वसिद्धार्थविषयत्वं कथं न दूषणमिति । अथ किमर्थं प्रतिज्ञायामित्युच्यत इत्यत आह** तदन्यस्येति ।

**अनु०—** तदन्यस्य सिद्धतैव हि साधिका ॥

**व्यापकधर्मस्य साध्यधर्मिणा सम्बन्धस्तदपर्यवसानलभ्यश्चार्थः प्रतिज्ञा(ता)र्थः । तदन्यस्य हेत्वाद्यर्थस्य सिद्धतैव हि साध्यसाधिका भवति । असिद्धस्य लिङ्गादेः साध्यसाधकत्वेऽतिप्रसङ्गात् । अतः प्रतिज्ञायामित्युक्तम् । प्रतिज्ञातार्थव्यतिरिक्तस्योत्तरवाक्यार्थस्य सिद्धतैव साधिकेत्यनेन तदसिद्धेर्दूषणत्वं लब्धम् । सा चानेकप्रकारा । तथा हि । साध्यधर्मिणोऽसिद्धिरा-**

श्रयासिद्धिः । यथा नृ(शश)शृङ्गमस्ति शृङ्गत्वाद्गोशृङ्गवदिति । साध्यधर्मासिद्धिरप्रसिद्धवि-शेषणताऽपरसंज्ञा । यथा शुक्तिरजतादिकं सदसद्विलक्षणं बाध्यत्वादिति । लिङ्गासिद्धिः । यथा विमतमचेतनं सदसद्विलक्षणत्वादिति । लिङ्गस्य पक्षधर्मताऽसिद्धिः । यथा शब्दो नित्यश्चाक्षुषत्वादिति । व्यधिकरणासिद्धिः । यथा शब्दोऽनित्यो घटस्य कृतकत्वादिति । व्याप्त्यसिद्धिः । यथा यत्सत्तत्क्षणिकं यथा प्रदीपः; संश्च प्रपश्च इति । एवं विशेषणासि-द्ध्यादयोऽपि द्रष्टव्याः ।

शे० — न च ज्ञात इति । न च लोकानुग्रहादिरूपप्रयोजनवशात्सिद्धेऽपि सिषाधयिषाव-ज्ज्ञातेऽपि ज्ञीप्सा स्यादिति वाच्यम् । प्रयोजनाभावे तदसम्भवस्यात्राभिप्रेतत्वात् । न चात्राप्यनिर्व-चनीयत्वस्थापनस्यैव प्रयोजनत्वात्तदभावोऽसिद्धः । भेदेनैव तदुपपत्त्या तत्स्थापनासम्भवादित्याशयात् । तदपर्यवसानेति । तदनुपपत्तिरित्यर्थः । न केवलं व्यापकधर्मस्य साध्यधर्मिणा सम्बन्धः प्रतिज्ञार्थः किन्तु स यावता विना न पर्यवस्यति स सर्वोऽपीत्यर्थः । तादृशश्चार्थः क्षित्यादेः सकर्तृकत्वानुमाने ज्ञाननित्यत्वादिकमेवेति बोध्यम् । नन्वाश्रयत्वाश्रयासिद्धी इत्याद्युत्तरग्रन्थोऽनर्थकः । न चाश्रयासिद्ध्या-दीनां दूषणत्वप्रतिषेधार्थत्वान्न तस्यानर्थक्यमिति वाच्यम् । तद्दूषणतायाः प्रागप्रसक्ततया तत्प्रतिषे-धकत्वासम्भवात् । न चाश्रयासिद्ध्यादेर्विशिष्य दोषत्वाप्रसक्तावप्यस्त्येव सामान्यतः प्रसक्तिः । प्रति-ज्ञातार्थव्यतिरिक्तपरिहारवाक्यार्थासिद्धेर्दोषतायाः प्रस्तुतत्वादाश्रयासिद्ध्यादेरपि तद्रूपत्वादिति वाच्यम् । तद्दोषताया अपि प्रागनुक्तत्वादसिद्ध्या सामान्यतोऽपि तत्प्रसक्तेरयोगात् । तद्दोषत्वस्योक्तिं विना कथ-ञ्चित्सिद्धावप्याश्रयासिद्ध्यादिव्यतिरिक्तपरिहारवाक्यार्थासिद्धेरभावेन तदसिद्धेर्निर्विषयत्वप्रसङ्गश्चेत्यत: अत्रोक्तिं विनाऽपि तत्सामर्थ्येनैव प्रतिज्ञार्थव्यतिरिक्तपरिहारवाक्यार्थासिद्धेर्दूषणत्वलाभादस्त्येवाश्रयासि-द्ध्यादेर्दूषणत्वप्रसक्तिः । तदसिद्धेश्चानेकविधत्वादपवादविषयाश्रयासिद्ध्यादिव्यतिरिक्तासिद्ध्यादिविषयत्वेन सविषयत्वोपपत्तेर्न निर्विषयत्वप्रसङ्गश्चेत्यभिप्रेत्य युक्त्यापादव्युत्पादितस्य न्यायशेषस्य प्रसङ्गेनोपपादनार्थं तदसिद्धेरुक्तिं विनाऽपि दूषणत्वलाभमनेकप्रकारत्वं चोपदर्शयन्नेवाश्रयासिद्ध्यादेः प्रसक्तदूषणत्वापवादक-तयोत्तरग्रन्थं सङ्गमयति प्रतिज्ञार्थव्यतिरिक्तस्येति । विशेषणासिद्ध्यादय इत्यत्रादिपदेन विशेष्या-सिद्धिभागासिद्ध्योः परिग्रहः । तत्र शब्दो नित्यश्चाक्षुषत्वे सति सामान्यवत्त्वादिति विशेषणासिद्धिः । सामान्यवत्त्वे सति चाक्षुषत्वादिति विशेष्यासिद्धिः । प्रयत्नानन्तरीयकत्वादिति भागासिद्धिरिति द्रष्ट-व्यम् ।

प० — दूषकताबीजं वाचयित्वा प्रकृतेपि सममित्याह नन्वित्यादिना ॥ ज्ञीप्सेति । ज्ञातुमिच्छा ज्ञीप्सा तत्पूर्वकमित्यर्थः । यत्तु पुराणादौ लोकानुग्रहार्थं महात्मनां प्रश्नः सोपि परकी-

यसंदेहज्ञीप्साद्याहरणेनेति भावः । प्रतिज्ञापदेन तदर्थो ग्राह्य इत्याह व्यापकेति ।। तदपर्यवसानेति । स च यावता विना न पर्यवस्यति स तावान्प्रतिज्ञार्थ इत्यर्थः । उत्तरमूलग्रन्थं संगमयितुं पूर्वोक्तं निष्कृष्यानुवदन् लब्धमर्थमाह प्रतिज्ञार्थेत्यादिना ।। एवं विशेषणासिध्याद्योपीति । एते च प्रमाणलक्षणटीकायां व्यक्ताः । शब्दो नित्यश्चाक्षुषत्वे सति कृतकत्वादित्यादयः ।

**या० — न च ज्ञाते ज्ञीप्सेति** । लोकानुग्रहादिरूपप्रयोजनाभाव इति शेषः । तेन प्रयोजनावशात्सिद्धे सिषाधयिषावज्ज्ञातेऽपि ज्ञीप्सा किन्न स्यादिति शङ्काऽनवकाश इति ध्येयम् । न चात्रानिर्वाच्यत्वस्थापनं प्रयोजनमस्तीति वाच्यम् । भेदेनैवोपपत्त्या तत्स्थापनासम्भवादित्याशयात् ॥ **तदपर्यवसानेति** । तदनुपपत्तिलभ्य इत्यर्थः । स यावता विना न पर्यवस्यति स सर्वोऽपि प्रतिज्ञार्थ इति यावत् । **तदसिद्धेर्दूषणत्वमिति** । अनेन तद्व्युत्पादनस्योपयोगं लेशतो दर्शयिष्याम इति यदुक्तं तद्दर्शितमिति ज्ञातव्यम् ॥

**श्री० — दूषणमेव** वादिनः । **साध्यधर्मिणा** पक्षेण । एवमुत्तरत्र ॥ **तदिति** । तत्साध्यं यावता विना न पर्यवस्यति तावान्सर्वोऽप्यर्थस्तदपर्यवसानलभ्योऽर्थ उच्यते । हेतोः पक्षधर्मताबललभ्यार्थ इति यावत् । यथा क्षित्यादिकं सकर्तृकमित्यत्र सार्वज्ञ्यम् ।

---

**च० — ज्ञीप्सेति** । ज्ञातुमिच्छेत्यर्थः ।

**सु० —** तत्र सर्वासामप्यसिद्धीनां दूषणत्वे प्राप्तेऽपवादमाह आश्रयेति ।

**अनु० —** आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम् ॥
केषाञ्चित्

आश्रयासिद्धिर्व्यधिकरणासिद्धिः साध्यासिद्धिश्च यद्यपि केषाञ्चिन्नैय्यायिकादीनां मते दूषणम् । तथाऽपि तत्त्वतो न च ते दोषाः । आश्रयासिद्धिरनेकप्रकारा । असदाश्रयत्वमभावाश्रयत्वमप्रतीताश्रयत्वं पक्षीकृताकारेणासत्त्वं सिद्धसाध(कत्वं)नत्वं चेति तत्राद्ययोर्द्वयोरदोषत्वं प्रतिजानीते न चेति ।

न च ते दोषा व्याप्तौ सत्यां कथञ्चन ।

अप्रतीताश्रयत्वादेर्दोषत्वस्य सिद्धत्वात् । अत एवोक्तमन्यत्र 'असदाश्रयस्ये'त्यादि । 'न चात्यन्ताभावोऽपी'ति । एवमुत्तरत्रापि ज्ञातव्यम् । आश्रयासिद्धिशब्देन दृष्टान्तस्याश्रयहीन-

ताऽपि संग्राह्या। कुतस्ते न दोषा इति चेत्। किं व्याप्त्यादिभङ्गहेतुत्वेन दोषत्वमुत सत्येव व्याप्त्यादौ प्रकारान्तरेण। नाद्यः। आश्रयासिद्ध्यादावपि व्याप्त्यादेः सत्त्वात्। द्वितीये त्विदमुपतिष्ठते। व्याप्तौ सत्यां कथञ्चन केनापि प्रकारेण न दोषा इति। व्याप्तिग्रहणमबाधित-विषयत्वाद्युपलक्षणम्। वस्तुतो व्याप्तावेव तस्योपयोगान्न पृथगुक्तम्। अस्यैवार्थस्य प्रपञ्चा-र्थमुत्तरः प्रबन्धः।

शे० — मूले केषाञ्चिदित्यस्य वैयर्थ्यमाशङ्क्य दोषाणामदोषत्वप्रतिज्ञाया व्याहतत्वशङ्कापरिहा-रार्थत्वात्तस्य न तदिति भावेन तत्पदोपादानेन सूचितं व्याहतिपरिहारं दर्शयंस्तद्वाक्यं योजयति आश्र-येत्यादिना। आश्रयासिद्धिशब्दस्याश्रयासिद्धिमात्रपरत्वप्रतीतिनिरासाय विशेषपरतया तं व्यवस्थाप-यितुं तस्या अनेकप्रकारतां तावद्दर्शयति आश्रयासिद्धिरनेकप्रकारेत्यादिना। असिद्धाश्रयत्वमि-त्यर्थः॥ असदाश्रयत्वमिति। यथा वन्ध्यासुतो न वक्ताऽचेतनत्वादित्यादि॥ अभावाश्रयत्वमिति। अत्यन्ताभावाश्रयत्वमित्यर्थः। तस्य निर्धर्मिकत्वादप्रामणिकप्रतियोगिकत्वेनाप्रामाणिकत्वाच्चेति भावः॥ अप्रतीताश्रयत्वमिति। यथेदानीमिहाकाशे परमाणुः कदाचिद्द्व्यारम्भकः परमाणुत्वादित्यादि॥ पक्षी-कृताकारेणेति। यथा स्वर्णमयोऽद्रिरग्निमानित्यादि। तत्र विशेष्यस्य सत्त्वेऽपि विशेषणाभावेन पक्षीकृतविशिष्टाकारस्यासत्त्वादिति भावः। सिद्धसाधकत्वं चेति। यथाऽनित्यो घटः कार्यत्वात्पटव-दित्यादि। तत्र साध्यस्य निश्चितत्वेन सन्देहगर्भितपक्षत्वाभावेन पक्षरूपाश्रयाभावादिति भावः। नन्वाश्रयासिद्धिमात्रपरत्वाश्रयणेन तन्मात्रस्यादोषत्वप्रतिज्ञैवेयमिति किन्न व्याख्यायत इत्यत आश्रयाप्रतीतौ हेतोः पक्षधर्मताज्ञानासम्भवेनाज्ञानासिद्धतया, पक्षीकृताकारेणासति साध्ये पक्षतावच्छेदकधर्मसामानाधिकर-ण्यस्य बाधितत्वेन, सिद्धसाधकत्वस्य चासङ्गतत्वेन, दूषणताया अन्यत्र सिद्धत्वान्न तथा व्याख्यानं युक्त-मित्याशयेनाह अप्रतीताश्रयत्वादेरिति। असदाश्रयत्वाभावाश्रयत्वयोरदूषणत्वे मानलक्षणसम्मतिमाह अत एवेति। अत्र चाद्येन वाक्येनासदाश्रयत्वरूपाश्रयासिद्धेरदोषत्वं द्वितीयेन चाभावाश्रयत्वरूपाया-स्तस्या अदोषत्वमुक्तमित्यर्थः। उक्तन्यायमन्यत्राप्यतिदिशति एवमिति। आश्रयशून्यत्वं न दृष्टान्तदोष इत्युत्तरत्रापीत्यर्थः। आश्रयशून्यत्वं न दृष्टान्तदोष इत्युक्तिरप्यसदाश्रयत्वाभावाश्रयत्वरूपतद्विशेषस्यादोष-त्वाभिप्रायेणैव न त्वप्रतीताश्रयत्वादिसाधारणाश्रयशून्यत्वस्यादोषत्वाभिप्रायेण। अप्रतीताश्रयत्वादेर्दोष-त्वस्य स्थितत्वादिति भावः।

नन्वाश्रयशून्यत्वं न दृष्टान्तदोष इत्युक्तिरेव नास्ति तत्कथं तस्या असदाश्रयत्वादिविशेषविषयक-त्वातिदेश इत्यतोऽत्र वाक्ये आश्रयासिद्धिशब्देन दृष्टान्तस्याश्रयशून्यताया अपि सङ्गृहीतत्वेनैतदुक्तेरेव तदुक्तित्वाद्युक्त एव विशेषविषयकत्वातिदेश इत्याशयेनाह आश्रयासिद्धिशब्देनेति। यद्यपि सिद्धे

सत्यारम्भस्य नियमार्थत्वात्साध्यसाधनवैकल्यं दृष्टान्तस्येत्युक्तेरेवाश्रयशून्यत्वस्य दृष्टान्तदोषत्व एव पर्यवसितत्वेन, पर्यवसितोक्तिवादाय विशेषविषयकत्वातिदेशनिर्वाहसंभवादाश्रयासिद्धिशब्देनाश्रयशून्यतायाः संग्रहकथनमनर्थकमित्याभाति । तथाऽप्यत्रत्यं तददोषत्वव्युत्पादनप्रकारं तत्र सूचयितुं तत्कथनमित्यवधेयम् । दृष्टान्तस्येत्यतःपरं तद्दोषतया परिगृहीतेति शेषः । तथाऽपि व्याप्तौ सत्यामित्यादिकमनर्थकमित्याशङ्कयोक्तप्रतिज्ञाया हेतुकथनार्थत्वात्तस्य न तदिति भावेन हेतुकथनपरतयोत्तरग्रन्थं सङ्गमयितुं तदाकाङ्क्षामुत्थापयति **कुत इति** । ननु चाश्रयासिद्ध्यादीनां व्याप्त्यादिभङ्गहेतुत्वेनापि दोषत्वस्य परेण वक्तुं शक्यत्वात्कथमनेन तेषामदोषत्वसिद्धिरित्यतोऽत्र विकल्पं, बहिरेवाद्यपक्षदूषणं चाभिप्रेत्य द्वितीयपक्षमात्रनिरासायोत्तरग्रन्थप्रवृत्तेर्नानुपपत्तिरित्यभिप्रेत्य संभावितं विकल्पमाद्यपक्षदूषणं च बहिरेव दर्शयन्द्वितीयपक्षनिरासपरतयोत्तरग्रन्थं योजयति **किं व्याप्त्यादिभङ्गहेतुत्वेनेत्यादिना** ॥ **व्याप्त्यादेः सत्त्वादिति** । वक्ष्यमाणरीत्येति शेषः । नन्वनेन ग्रन्थेन व्यभिचारासङ्कीर्णोदाहरणाभावादाश्रयासिद्ध्यादेरदोषत्वमित्यायातम् । तच्च न संभवति । नृशङ्गं वन्हिमद्धूमवत्त्वादित्यादेरेव व्यभिचारासङ्कीर्णतदुदाहरणस्य सत्त्वादित्यतो भवेदेतदेवं यद्यत्र ग्रन्थे व्यभिचारासङ्कीर्णोदाहरणाभाव एव तेषामदोषत्वे नियामकत्वेनाभिमतः स्यान्न चैवं किन्नाम दोषान्तरासङ्कीर्णोदाहरणाभाव एव तत्त्वेनाभिमत इति भावेन व्याप्तिपदं दोषान्तराभावसंग्राहकतया व्याचष्टे **व्याप्तिग्रहणमिति** । अबाधितविषयत्वादेरप्यत्राभिप्रेतत्वे व्याप्तेरिव तस्य स्वशब्देनैव ग्राह्यत्वादुपलक्षणतया व्याप्तिशब्देन तद्ग्रहणे किन्निमित्तमित्यत आह **वस्तुतो व्याप्तावेवेति** । अबाधितत्वाद्यभावे पक्ष एव व्यभिचारेण व्याप्तेरसंभवादिति भावः । एतच्च पक्षतायाः सन्देहघटितत्वाभावमभिप्रेत्योक्तम् । सन्देहघटितत्वे तु पक्षताया बाधायां व्यभिचारवदपक्षधर्मत्वस्यापि प्राप्त्याऽबाधितविषयत्वेन व्याप्तेरिव पक्षधर्मत्वस्याप्युपपादनात् व्याप्तावेवोपयोग इत्यवधारणस्यासामञ्जस्यप्रसङ्गादिति ध्येयम् । आश्रयव्याश्रयासिद्धी इत्यादिनैवाश्रयासिद्ध्यादेरदोषत्वस्योक्तत्वात्तत्कथनपरस्य दोषो व्याहतिरेवेत्याद्युत्तरग्रन्थस्यानर्थक्यमाशङ्क्य परिहरति **अस्यैवेति** । प्रपञ्चनं च तद्दोषत्वे परोत्प्रेक्षिततत्तत्प्रकारविशेषनिरासेनेति द्रष्टव्यम् ।

प०— **पक्षीकृताकारेणेति** । यथा काञ्चनमयोद्रिः अग्निमानित्येवमादिर्ध्येयः ॥ **दोषत्वस्य सिद्धत्वादिति** । धर्मिण अप्रतीतौ तत्र साध्यादिसंबन्धबोधनायोगात् । पक्षीकृताकारासत्त्वे तत्सामानाधिकरण्येन साध्यसंबन्धबोधस्यानुमानफलस्यासिद्धेः । सिद्धसाधनत्वस्यानाकांक्षितत्वेनासंगतत्वात् दोषत्वं तेषामिति भावः ॥ **अन्यत्रेति** । प्रमाणलक्षणे । असदाश्रयस्य साधकत्वं नेत्यपि व्याप्तिं विना कथं निवार्येत इत्युक्तमित्यर्थः । 'न चात्यंताभावोपि सर्वधर्मरहित' इति चोक्तमित्यर्थः ॥ **एवमुत्तरत्रापीति** । व्याश्रयासिद्धोऽपि द्विविधः । अव्याप्यो व्याप्यश्चेति । तत्राद्यस्य दोषत्वेपि अंत्यस्येयमदोषत्व-

प्रतिज्ञा । तथा साध्यासिद्धिरपि न सर्वाप्यदुष्टा किंतु व्याप्तिमत्येव न त्वन्येत्येवं ज्ञातव्यमित्यर्थः । यद्वा व्याप्त्यादेः सत्त्वादित्युत्तरवाक्ये तत एवोक्तमन्यत्र 'असत्यपि व्याप्तिरस्त्येव प्रयोजिका चे'त्युपष्टंभकं ज्ञेयमित्यर्थः ॥ **दृष्टान्तस्याश्रयहीनतेति** । व्याप्तिग्रहस्थलरूपाश्रयहीनताप्राप्तेत्यर्थः ॥ **व्याप्तावेवेति** । बाधितत्वे सिद्धे पक्षीयहेतोस्साध्याभावसंबन्धज्ञानेन व्याप्त्यसिद्धेरिति भावः ॥ **अस्यैवार्थस्येति** । 'व्याप्तौ सत्यां कथंचन न दोषा' इत्युक्तार्थस्येत्यर्थः ।

**या० — पक्षीकृताकारेणेति** । विशेष्यसत्त्वेऽपि विशेषणस्यासत्त्वेन विशिष्टस्य पक्षीकृताकारस्यासत्त्वमित्यर्थः । यथा सुवर्णमयोऽद्रिरग्निमान्धूमवत्त्वादित्यादौ सुवर्णमयत्वादिविशेषणासिद्धयाऽऽश्रयासिद्धिः । यथाऽऽह गङ्गेशः । 'आश्रयविशेषणासिद्धया चाश्रयासिद्धिरसङ्कीर्णा । व्योमकमलमिति तु निश्चितानन्वयत्वेनापार्थकमि'ति ॥ **दोषत्वस्य सिद्धत्वादिति** । आश्रयाप्रतीतौ हेतोः पक्षधर्मत्वज्ञानासम्भवेनासिद्धतया, पक्षीकृताकारेणासति साध्ये पक्षतावच्छेदकसामानाधिकरण्यस्य ज्ञातुमशक्यत्वाद्बाधितत्वेन, सिद्धसाधकत्वस्य चासङ्गत्वेन, दोषत्वस्य सिद्धत्वादित्यर्थः ॥ **अन्यत्रेति** । प्रमाणलक्षण इत्यर्थः । तत्र ह्याद्यवाक्येनासदाश्रयासिद्धेर्द्वितीयवाक्येनाभावाश्रयत्वरूपाश्रयासिद्धेरदोषत्वमुपपादितमिति भावः । **एवमुत्तरत्रापीति** । अत्र प्रतिज्ञावाक्य इवोत्तरत्रोपपादकवाक्येऽपि आश्रयासिद्धिशब्दोऽसदाश्रयत्वाभावाश्रयत्वमात्रपर इति ज्ञातव्यमिति नार्थः । उत्तरत्राश्रयासिद्धिशब्दाभावेनातिदेशासम्भवात् । किन्तु यथा प्रतिज्ञावाक्यव्याख्याने प्रमाणलक्षणवाक्यसम्मतिरस्त्येवमुत्तरत्रापि करिष्यमाणे 'व्याप्तौ सत्यां कथञ्चने'त्याद्युपपादकवाक्यव्याख्यानेऽपि 'व्याप्तिरेव प्रयोजिका । असत्यपि व्याप्तिरस्त्येव । अतिप्रसङ्गाभावात् । अतिप्रसङ्गेन हि दोषादोषत्वे कल्प्ये' इति प्रमाणलक्षणवाक्यसम्मतिरस्तीति ज्ञातव्यमित्यर्थः । यद्वा यथा प्रमाणलक्षणे इदमुक्तं एवमुत्तरत्रापि 'दोषो व्याहतिरेवास्ती'त्याद्युत्तरवाक्येऽपि वक्ष्यतीत्यर्थः । नृशृङ्गास्तित्वसाधन इति वक्ष्यमाणत्वात् तथा च प्रतिज्ञावाक्यमपि तद्बलादुक्ताभिप्रायकमिति भावः ॥ **दृष्टान्तस्येति** । अत्र दृष्टान्तशब्देन तदर्थैकदेशरूपं व्याप्तिग्रहणं लक्ष्यते । तेनात्र दृष्टान्तधर्मिण आश्रयहीनताप्रसक्त्याऽसङ्गतिरिति शङ्काऽनवकाशः ॥ **वस्तुतो व्याप्तावेवेति** । अबाधितत्वाभावे पक्ष एव व्यभिचारेण व्याप्तेरसम्भवादिति भावः ।

**श्री०— प्रतिजानीते** आश्रयव्याश्रयेति मूलेनेति शेषः । इतरत्रयाणां का गतिरित्यत आह **अप्रतीतेति** ॥ **एवमिति** । यत्राश्रयासिद्ध्यादेरदोषत्वव्यवहारः सः, एतदुभयविषयको यत्र तद्दोषत्वव्यवहारः स एतदुभयव्यतिरिक्ताप्रतीताश्रयत्वादिविषयः प्रतिपत्तव्य इत्यर्थ इत्याहुः ।

सु० — तत्र भाववदभावस्यापि प्रामाणिकत्वं सधर्मकत्वं च प्रागेव साधितम् । असदाश्रयस्य तु कुतो दुष्टत्वमिति वाच्यम् । किन्नरविषाणमस्ति विषाणत्वादित्यादेरपि साधनत्वप्रसङ्गात् । उतासतो निर्धर्मकत्वेन साध्यधर्माश्रयत्वानुपपत्त्या बाधितविषयत्वेन । अथ साधनधर्माश्रयत्वानुपपत्त्या स्वरूपासिद्धत्वेन । यद्वाऽसतः सकलव्यवहाराभाजनत्वेन । यदि वाऽप्रामाणिकस्य प्रमाणाङ्गताऽसंभवेन । अथवाऽसदाश्रयस्य व्याप्त्यनुपपत्त्येति । आद्यं निराकरोति दोष इति ।

अनु० — दोषो व्याहतिरेवास्ति नृशृङ्गास्तित्वसाधने ॥

व्याहतिः प्रमाणविरोधः । शृङ्गशब्दो हि महतः शिरस्संयुक्तस्य रूपवतोऽवयवविशेषस्य वाचकोऽभिप्रेतः स्यात् । अतीन्द्रियस्य वा कस्यचित् । आद्ये प्रत्यक्षेण तस्य नास्तिताऽवधारणात् । प्रमाणबाधितत्वेनैव विषाणत्वस्यासाधनत्वान्नातिप्रसङ्गः । द्वितीये त्विष्टापादनमिति ।

शे० — नन्वसदाश्रयत्वस्येवाभावाश्रयत्वस्याप्यदोषतया अवश्यं साधनीयाया उत्तरत्रासाधनान्न प्रतिज्ञावाक्यस्यासदाश्रयत्वाभावाश्रयत्वयोरदोषत्वविषयतया तात्पर्यवर्णनं युक्तमित्याशङ्कां तदसाधननिमित्तकथनेन परिहरति तत्रेति ॥ प्रागेवेति । असदधिकरणवैशेषिकाधिकरणयोरित्यर्थः । उपलक्षणं चैतत् । अत्यन्ताभावप्रतियोगिनस्तुच्छत्वेऽपि तस्यातुच्छत्वात् अभावत्वाप्रामाणिकप्रतियोगित्वादिधर्माश्रयत्वान्नात्यन्ताभावस्य निर्धर्मिकत्वमप्रामाणिकत्वस्य प्रामाणिकात्यन्ताभावप्रतियोगित्वरूपत्वेन प्रतियोग्यप्रामाणिकत्वस्य तदत्यन्ताभावप्रामाणिकत्वसाधकतया हेतोर्विरुद्धत्वं चेत्यपि द्रष्टव्यम् ॥ किमिति । तददोषत्व इति शेषः ॥ अथ साधनेति । अत्रापि निर्धर्मकत्वेनेति प्रागुक्त एव हेतुरनुसन्धेयः ॥ सकलेति । विधिनिषेधरूपसकलेत्यर्थः । तच्च प्रतीत्यविषयत्वहेतुसिद्धमिति भावः ॥ व्याप्त्यनुपपत्त्येति । निरधिकरणयोर्धर्मयोर्नियतसामानाधिकरण्यरूपव्याप्त्यनुपपत्त्येत्यर्थः । स्वव्याहतेरत्राप्रसङ्गेन व्याहतिशब्दस्य सामान्यपरत्वासंभवात् 'मानबाधे न तद्भवेदि'त्युत्तरग्रन्थानुरोधेन विशेषपरतया तमनूद्य व्याचष्टे व्याहतिः प्रमाणविरोध इति । प्रत्यक्षप्रमाणबाध इत्यर्थः । ननु शृङ्गशब्दस्यातीन्द्रियवस्तुवाचकत्वाभ्युपगमेन प्रतियोग्ययोग्यतया तदभावस्याप्रत्यक्षत्वात्कथमत्र प्रत्यक्षबाध इत्यतोऽत्र शृङ्गशब्दस्य प्रसिद्धावयववाचकत्वपक्ष एवैतद्दोषाभिधानान्नानुपपत्तिरित्यभिप्रेत्य संभावितविकल्पप्रदर्शनपूर्वकं द्वितीयपक्षं बहिरेव प्रदूष्य प्रथमपक्षनिरासपरतया ग्रन्थं योजयति शृङ्गशब्दो हीत्यादिना ।

प० — किमभावस्य स्वरूपमेव नेत्युच्यते उत धर्मो नेति न द्वयमपीत्याह अभावस्यापीति ॥ प्रागेवेति । 'अभावस्य च भावोपि धर्मोऽथापि हि धर्मिणि' इति 'प्रथमप्रतिपत्तिषु निषेधविधिरूपत्वं

भावाभावत्वमत्र ही' ति युक्तिपादीयचतुर्थाधिकरणे। तथा वैशेषिकाधिकरणे अभावस्य च धर्माः स्युर्भावास्तेषां च तेऽखिला' इति 'तथापि प्रथमं बुद्धेर्यो निषेधस्य गोचरः। सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमं पर' इति च सधर्मकत्वं प्रामाणिकत्वं चोक्तमित्यर्थः ॥ **इष्टापादनमिति**। गुरुत्वादेरतीन्द्रियधर्मस्य सत्वादिति भावः।

**या०**— अभावाश्रयस्य दोषत्वं किमभावस्याप्रामाणिकत्वेनोत तस्य निर्धर्मकत्वेनेति विकल्पं मनसि निधायाह **तत्र भाववदिति** ॥ **प्रागेवेति**। 'तथाऽपि प्रथमं बुद्धेर्यो निषेधस्य गोचरः। सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमं पर' इत्यादौ अभावस्य प्रामाणिकत्वम् 'अभावस्य च धर्माः स्युर्भावा' इत्यादौ तस्य सधर्मकत्वं च साधितमित्यर्थः।

**सु०**— स्यादेतत्। **शृङ्गत्वं तावदसाधनमित्यविवादम्। अस्ति च तत्र बाधितविषयत्वमसदाश्रयत्वं च। तत्र बाधितविषयत्वमेव तदीयासाधनत्वे प्रयोजकं नासदाश्रयत्वमिति कुतो नियम्यत** इत्यत आह यत्रेति।

अनु० यत्र व्याहतता नास्ति कोऽतिसङ्गोऽस्य साधने।

यस्मिन्साध्ये व्याहतता प्रमाणबाधो नास्ति। **अस्य साधनेऽसदाश्रयेणापि हेतुना क्रियमाणे कोऽतिप्रसङ्गः। न कोऽपि दोषः।** व्याहततेत्युपलक्षणम्। व्यभिचारादिकं चेत्यपि द्रष्टव्यम्।

**एतदुक्तं भवति। अस्ति तावद्बाधितविषयत्वस्य दूषणत्वे कृशानुशैत्यादिसाधनं कृतकत्वादिकं दोषांतरासङ्कीर्णमुदाहरणम्। तेन। तस्य दूषणत्व निश्चिनुमः। न चासदाश्रयत्वस्य दोषत्वेबाधितविषयत्वाद्यसङ्कीर्णमुदाहरणमस्ति। येन तस्य दोषत्वं प्रतीमः। बाधितविषयत्वादिदोषान्तराभावे केवलासदाश्रयस्य हेतुत्वे बाधकाभावात्। दृश्यते च तथाविधस्य हेतुत्वम्। यथा वन्ध्यासुतो न वक्ताऽचेतनत्वात्पाषाणवदिति। अतो बाधितविषयत्वेनैव शृङ्गत्वमसाधनं नासदाश्रयत्वेनेति निश्चीयते।**

**शे०**— ननु 'यत्र व्याहतता नास्ती'त्युत्तरवाक्यमनर्थकम्। न च प्रमाणबाधाभावेऽसदाश्रयस्यापि हेतोः साधकत्वे बाधकाभावप्रतिपादनार्थत्वान्न तदिति वाच्यम्। तत्प्रतिपादनस्याप्यनर्थकत्वादित्याशङ्क्य पूर्ववाक्योक्तस्य शृङ्गत्वहेतौ प्रमाणव्याहतेः प्रयोजकत्वस्य तत्र नियामकत्वोक्त्या तदप्रयोजकताशङ्कानिरासेन समर्थनार्थत्वात्तस्य नानर्थक्यमिति भावेन नियामकोपदर्शकतयोत्तरग्रन्थं योजयितुं प्रसञ्जक

प्रदर्शनपूर्वकं तदप्रयोजकत्वशङ्कामुत्थापयति **स्यादेतदिति ॥ कुतो नियम्यत इति** । नियामकाभावान्नैवं निश्चेतुं शक्यम् । अन्यथा तदीयासाधकतायामसदाश्रयत्वमेव प्रयोजकं न तु बाधितविषयत्वमिति विपरीतनियमस्यापि प्रसङ्गादिति भावः । ननु बाधितविषयत्वमेव शृङ्गत्वस्यासाधनत्वे प्रयोजकं नासदाश्रयत्वमिति कुतो नियम्यत इति शङ्कया नानेन वाक्येन परिहारोऽत्र नियामकस्यानुक्तेरित्यत-स्तदभिप्रायमाह **एतदुक्तं भवतीति ॥ अत इति** । बाधितविषयत्वस्यान्यत्र दूषणत्वेन निश्चिततायाः असदाश्रयत्वस्य तत्त्वेनानिश्चिततायाश्चात इत्यनेन परामर्शः ।

**श्री०— तथाविधस्येति** । बाधितविषयत्वाद्यसङ्कीर्णस्य केवलासदाश्रयस्येत्यर्थः । तदुदाह-रति **यथेति ॥**

**सु०— अथ मतम् । वन्ध्यासुतो वक्ता सुतत्वात्सम्मतवदिति सत्प्रतिपक्षमेतत्किन्न स्यात् । असदाश्रयतामयस्य भवतैव त्याजितत्वादिति । मैवम् । तदीयवक्तृताकार्यस्य कदाऽपि केनाप्यनुपलब्धत्वेन बाधितविषयतया दुर्बलस्याप्रतिपक्षत्वात् । न हि भवति तरक्षोः प्रतिपक्षो हरिणशावः । अवक्तृत्वमपि वचनेतरक्रियाकर्तृत्वमित्यतोऽचेतनत्वमपि बाधितविषयमिति चेन्न । वक्तृत्वाभावमात्रस्य साध्यत्वात् ।**

**शे०—** वन्ध्यासुतो वक्ता सुतत्वादित्यादेरपि साधकत्वप्रसङ्गस्यैव बाधकत्वा'द्वाधितविषयत्वा-दिदोषान्तराभावे केवलासदाश्रयस्यापि साधकत्वे बाधकाभावादि'त्ययुक्तमित्यभिप्रायेण शङ्कते **अथ मतमिति** । यद्वा दृश्यते चेत्याद्युक्तमसत् । सत्प्रतिपक्ष(क्षित)त्वेन तस्यासाधकत्वादिति शङ्कते **अथेति** । नञः पर्युदासार्थत्वमभिप्रेत्य साम्यमाशङ्कते **अवक्तृत्वमपीति** । ततश्च प्रतिपक्षत्वं नानुपपन्नमिति भावः । प्रसज्यप्रतिषेधार्थत्वमाश्रित्य परिहरति **वक्तृत्वाभावमात्रस्येति** । तथा च तस्य बाधितत्वेन दुर्बलत्वादप्रतिपक्षत्वमेवेति भावः ।

**सु०— नन्वभावोऽप्यसति कथं, तस्य धर्माभावादिति चेन्न । धर्माणामनेकविध-त्वात् । केचिद्धि धर्मिसमवेता भवन्ति । यथा रूपादयः । केचिदन्यसमवेता अप्यन्य-मुपरञ्जयन्ति । यथा ज्ञानादयो घटादीनाम् । केचिदाश्रयसमवायमपि नापेक्षन्ते केवलं केनचिन्निरूप्यन्ते । यथाऽभावः । न च वाच्यमभावोऽपि सद्धर्मो निरूपणीय इति । प्रागभावाद्यनिरूपणप्रसङ्गात् । घटादेः कदाचित्सत्त्वान्नैवमिति चेन्न । तस्य निरूपणसमयेऽनु-पयोगात् । प्रतीत्या निरूपकत्वमिति चेत् । समं प्रकृतेऽपि । शब्दाभासादिना वन्ध्यासु-तस्यापि प्रतीतिसंभवात् ।**

शे०— ननु भाववदभावस्यापि सद्धर्मत्वदर्शनेनासतो भावधर्मं प्रतीवाभावधर्मं प्रत्यप्यनाश्रयत्वसिद्ध्या वन्ध्यासुते वक्तृत्वाभावोऽपि वक्तृत्ववद्बाधित एवेति तुल्यबलत्वाद्युक्तः प्रतिपक्ष इति भावेन शङ्कते **नन्वभावोऽपीति** ॥ **धर्मिसमवेता इति** । धर्म्याश्रिता इत्यर्थः ॥ **अन्यसमवेता इति** । अन्याश्रिता इत्यर्थ । **अन्यमुपरञ्जयन्ति** । अन्यस्योपरञ्जकाः (व्यावर्तकाः) । उपरञ्जकत्वं च स्वोपरक्तबुद्धिजनकत्वं ज्ञेयम् । तानुदाहरति **यथेति** ॥ **आश्रयसमवायम्** आश्रयसत्त्वमपि नापेक्षन्तेऽनाश्रिता एवेत्यर्थः । **केवलम्** आश्रयसत्त्वं विना । **केनचिद्** अधिकरणेनेत्यर्थः । तानेवोदाहरति **यथाऽभाव इति** । सत्त्वाभावादय इत्यर्थः । तथा च वन्ध्यासुतस्यासत्त्वेऽपि निरूपकत्वात्तत्र सत्त्वाभाववद्वक्तृत्वाभावस्याप्युपपत्तेर्न बाध इति भावः ॥ **सद्भ्यामिति** । अधिकरणप्रतियोगिभ्यामित्यर्थः । तथा चाभावस्य सत्प्रतियोगिनिरूप्यत्ववत्सदधिकरणनिरूप्यत्वस्यापि नियमादसतो वन्ध्यासुतस्य न वक्तृत्वाभावनिरूपकत्वमिति भावः । असत्त्वाद्वन्ध्यासुतस्य न वक्तृत्वाभावनिरूपकत्वमिति वदतः कोऽभिप्रायः । किन्निरूपणदशायां सत्त्वस्य निरूपकत्वे प्रयोजनकत्वाद्वन्ध्यासुतस्य चात्यन्तासतस्तदभावान्न तन्निरूपकत्वमिति किंवा कदाचिदपि सत्त्वस्य निरूपकत्वप्रयोजकत्वादत्यन्तासतो वन्ध्यासुतस्य तदभावान्न निरूपकत्वमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **प्रागभावादीति** । तद्दशायां घटादेरसत्त्वेन निरूपकत्वासम्भवादित्यर्थः । द्वितीयमाशङ्कते **घटादेरिति** । प्रागभावादिदशायां घटादेरसत्त्वेऽपि कदाचित्सत्त्वात्तन्निरूपकत्वसम्भवेऽपि वन्ध्यासुतस्य न वक्तृत्वाभावनिरूपकत्वं तस्य कदाऽप्यसत्त्वादिति भावः । तर्हि किं यदाकदाचित्सतः कारणत्वं पूर्वक्षणे सतो वा । नाद्योऽतिप्रसङ्गादित्यभिप्रेत्य द्वितीयं दूषयति **तस्येति** । ननु घटादेस्तत्प्रागभावादिप्रतियोगित्वं न घटरूपादिवत्तत्वद्वस्तुहेतुकृतम् । नापि पाकजरूपादिवद्बुद्धिहेतुभिन्नागन्तुकत्वहेतुकृतमभ्युपगच्छामो येन रूपादिवद्धर्मिसत्तासापेक्षं स्यात् । किन्तु बुद्धिहेतुकृतमेव । तथा च तादृशज्ञानसामग्र्यासादितायां प्रागभावादिगोचरतत्प्रतियोगिकत्वप्रतीतौ प्रतियोगित्वेनोल्लिखितत्वमेव प्रतियोगित्वमिति न तस्य धर्मिसापेक्षत्वमित्याशङ्कते **प्रतीत्यानिरूपकत्वमिति चेदिति** । तर्ह्यधिकरणत्वमपि वन्ध्यासुतस्य न वस्तुहेतुकृतं किन्तु बुद्धिहेतुकृतमेव । तथा च तादृशज्ञानसामग्र्यासादितायां वक्तृत्वाभावगोचरवन्ध्यासुताधिकरणकत्वप्रतीतावधिकरणत्वेनोल्लिख्यमानत्वमेवाधिकरणत्वमिति तस्य धर्मिसत्तासापेक्षत्वाभावान्न तत्र तदभावो बाधित इति दुर्बलत्वान्न प्रतिपक्षत्वमित्याशयेन परिहरति **समं प्रकृतेऽपीति** । ननु प्रतीत्यगोचरत्वादसतो वन्ध्यासुतस्य न वक्तृत्वाभावगोचरतदधिकरणकत्वप्रतीतावधिकरणत्वेनोल्लिखितत्वमपीत्यत आह **शब्देति** ।

स०— **केनचिदिति** । प्रतियोगिनेत्यर्थः ॥ **सद्भ्यामिति** । अधिकरणप्रतियोगिभ्यामित्यर्थः । तथा च प्रकृतेऽधिकरणस्यासत्वादभावनिरूपणं न युज्यत इत्यर्थः । **प्रागभावादिति** । अत एव प्रतियोगिनोऽभावादिति भावः ।

प०— नन्वभावोऽपीति कृतप्रश्नस्य धर्मस्वभाव एव तादृश इति परिहारं विवक्षुर्धर्माणां स्वभावं विवेचयति **धर्माणामनेकविधत्वादिति** ॥ **अन्यसमवेता अपीति** । आत्मनि मनसि वेत्यर्थः । **उपरञ्जयन्तीति** । विषयतास्वरूपसंबन्धयुक्ता भवंतीत्यर्थः ॥ **सद्भ्यामिति** । विद्यमानाभ्यामधिकरणप्रतियोगिभ्यामित्यर्थः ॥

श्री०— **अभावोऽपीति** । वक्तृत्वाभावरूपं साध्यमित्यर्थः । **तस्यासतो** वन्ध्यासुतस्य । **उपरञ्जयति** व्यावर्तयति ॥ **यथाभाव इति** । तथा च प्रकृतेऽभावरूपमवक्तृत्वमाश्रयभूतवन्ध्यासुते स्वसमवायं नापेक्षते । किन्नाम वन्ध्यासुतरूपाधिकरणेन **निरूप्यते** तत्रास्तीति ज्ञायत इत्यर्थः । **सद्भ्यां** अधिकरणप्रतियोगिभ्याम् । तथा चाधिकरणस्य वन्ध्यासुतस्यैवासत्त्वेन तत्र वक्तृत्वाभावनिरूपणं न सम्भवतीत्यर्थः ॥ **प्रागभावेति** । घटप्रागभावदशायां प्रतियोगिनी घटस्याभावात्प्रागभावनिरूपणं न स्यादित्यर्थः । **तस्य** कदाचिदुत्तरकाले सत्त्वस्य ॥ **अनुपयोगादिति** । न हि कदाचित्सत्त्वमिदानीं प्रतीतेरुपकारीत्यर्थः । **प्रतीत्या** कदाचित्सतोऽपि घटरूपप्रतियोगिन इत्यर्थः । **निरूपकत्वं** प्रागभावं प्रति । वन्ध्यासुतस्याप्यधिकरणभूतस्येति शेषः । **सम्भवात्** तथा च वक्तृत्वाभावनिरूपकत्वं युक्तम् । वक्तृत्वाभावो वन्ध्यासुते ज्ञातुं शक्यत इति यावदिति भावः ।

**सु०— असिद्धं च सुतत्वं वन्ध्यासुतस्य । न चैवं स्ववचनव्याघातः । काल्पनिकानुवादेन वास्तवनिराकरणात् । काल्पनिकस्य कथं पक्षत्वमिति चेन्न । निषेधं प्रति पक्षत्वे बाधकाभावात् । अन्यथा परपक्षप्रतिक्षेपायोगात् । अथाचेतनत्वमप्यसिद्धम् । तस्य चेतनातिरिक्तस्वभावत्वादिति चेन्न । चैतन्यव्यावृत्तिमात्रस्य हेतुत्वात् । अभावस्य चासतो(ता)ऽपि निरूपणमुपपद्यत इत्युक्तम् ।**

शे०— एवं बाधितविषयत्वेन दुर्बलतयाऽप्रतिपक्षत्वमुपपाद्यासिद्धत्वेन दुर्बलतयाऽपि तदुपपादयति **असिद्धं चेति** ॥ **स्ववचनेति** । वन्ध्यासुत इत्यनुवादबलेनैव सुतत्वलाभादिति भावः । काल्पनिकवास्तवसुतत्वविषयत्वेन भिन्नविषयत्वादनुवादनिषेधयोर्न स्वचनव्याघात इत्याह **काल्पनिकेति** ॥ **कथमिति** । अप्रामाणिकस्य प्रमाणानङ्गत्वादिति भावः । यद्वा काल्पनिकस्य साध्यसाधनाश्रयत्वानुपपत्तेरिति भावः । काल्पनिकस्य न प्रमाणाङ्गत्वमप्रामाणिकत्वादिति प्रमाणाङ्गत्ववत्तादृशसाध्यसाधनाश्र-

यत्ववच्च न वक्ताऽचेतनत्वादिति प्रमाणाङ्गत्वस्य तादृशसाध्यसाधनाश्रयत्वस्य च सम्भवान्नानुपपत्तिरिति भावेन परिहरति **निषेधं प्रतीति** । सुतत्ववदचेतनत्वस्याप्यसिद्धत्वात्तुल्यबलत्वमेवेति न प्रतिपक्षत्वभङ्ग इत्याशयेन शङ्कते **अथेति** ॥ **तस्येति** । अचेतनत्वस्येत्यर्थः । नञः पर्युदासार्थत्वादिति भावः । प्रसज्यप्रतिषेधार्थत्वमङ्गीकृत्य परिहरति **चैतन्यव्यावृत्तिमात्रस्येति** । भाववदभावस्यापि सद्धर्मत्वात्कथमसतो वन्ध्यासुतस्य चैतन्यव्यावृत्त्याश्रयत्वमपि स्यादित्यतः प्रागुक्तं परिहारं स्मारयति **अभावस्येति** ॥ **उक्तमिति** । धर्माणामनेकविधत्वादित्यादिनेति शेषः ।

**प०— वचनव्याघात इति** । वन्ध्यासुतस्येत्यनुवादेनैव सुतत्वाङ्गीकारप्राप्तेरिति भावः ॥ **पक्षत्वमिति** । वन्ध्यासुतो न वक्तेत्यत्र पक्षत्वमित्यर्थः । शङ्कते **अथेति** ।

**या०— न चैवं स्ववचनव्याघात इति** । वन्ध्यासुत इत्यनुवादबलेनैव तत्र सुतत्वलाभादिति भावः ।

**श्री०—** एवं वन्ध्यासुतस्य सुतत्वं नेत्युक्ते ॥ **काल्पनिकेति** । कल्पितवन्ध्यासुते वास्तवं सुतत्वं नेत्युच्यत इत्यर्थः । उभयोरपि वास्तवत्वे किल व्याघातः स्यात् । न चैवं प्रकृत इति भावः । **पक्षत्वम्** अवक्तृत्वानुमाने ॥ **निषेधं प्रतीति** । यदि विधिरूपो धर्मः साध्यः स्यात्तदैवासतस्तं प्रति पक्षत्वं न स्यात् । निषेधरूपधर्मसाधने तु युक्तं पक्षत्वमित्यर्थः ॥ **अन्यथेति** । निषेधं प्रत्यसतः पक्षत्वानङ्गीकार इत्यर्थः । इति यदि नाङ्गीक्रियत इति भावः ॥ **परपक्षेति** । परपक्षोऽसाधुरिति यदा साध्यते तदा तत्र परकीयपक्षस्यासतः कथमसाधुत्वे धर्मित्वमिति शङ्कायां निषेधं प्रति पक्षत्वे बाधकाभावादित्येव वाच्यमिति भावः ॥ **स्वभावत्वादिति** । वन्ध्यासुतस्य च निस्वभावत्वादिति भावः । नन्वसति वन्ध्यासुते चैतन्यव्यावृत्तिरूपोऽभावोऽपि हेतुभूतः कथं । तस्य धर्माभावादिति चेत्तत्राह **अभावस्येति** । **असता** अधिकरणेन प्रतियोगिना च । प्रकृते चासता वन्ध्यासुतरूपाधिकरणेन प्रतीतत्वमात्रेण निरूपणमचेतनत्वरूपहेतोर्युक्तमिति भावः । **इत्युक्तं** 'धर्माणामनेकविधत्वादि'त्यादिनेत्यर्थः ॥

**सु०— मूकेऽनैकान्तिकश्च सुतत्वहेतुः । अमूकत्वेन विशेषणे तस्य वक्तृत्वानतिरिक्तत्वेन साध्याविशिष्टता स्यात् । एतेन विकल्पिताः पक्षाः समस्ता अपि निरस्ता भवन्तीत्यास्तां विस्तरः ।**

**शे०— अनैकान्तिकश्चेति** । अतोऽप्यतुल्यबलत्वान्न प्रतिपक्षत्वमित्याशयः ॥ **एतेनेति** । वन्ध्यासुतो न वक्ताऽचेतनत्वात्पाषाणवदित्यनुमानेऽसतोऽपि वन्ध्यासुतस्य वक्तृत्वाभावरूपसाध्याश्रयत्वसमर्थनेनासतो निर्धर्मकत्वेन साध्यधर्माश्रयत्वानुपपत्त्या बाधितविषयत्वेनेति द्वितीयः । चैतन्यव्या-

त्रिरूपसाधनस्यासिद्धिनिरासेन साधनधर्माश्रयत्वानुपपत्त्या स्वरूपासिद्धत्वेनेति तृतीयः । असतोऽपि वन्ध्यासुतस्य शब्दाभासादिना प्रतीतिविषयत्वोपपादनेन तदविषयत्वनिबन्धनसकलव्यवहाराभाजनत्वेनेति चतुर्थः । काल्पनिकस्यापि निषेधं प्रति पक्षत्वसमर्थनेनाप्रामाणिकस्य प्रमाणाङ्गत्वासंभवेनेति पञ्चमः । सुतत्वहेतोर्मूके व्यभिचारकथनेनावक्तृत्वाचेतनत्वयोर्व्यभिचारादर्शनसूचनद्वाराऽविनाभावरूपव्याप्तेः सद्भावसूचनादसदाश्रयस्य व्याप्त्यनुपपत्त्येति षष्ठ इत्येवं समस्ताः पक्षा निरस्ता इत्यर्थः । नन्वविनाभावरूपव्याप्तिसद्भावेऽपि नियतसामानाधिकरण्यरूपव्याप्त्यनुपपत्तिरसदाश्रयस्य तदवस्थैवेत्यतोऽविनाभावमात्रस्यैव व्याप्तितया उपपादयिष्यमाणत्वेन नियतसामानाधिकरण्यस्य व्याप्तित्वाभावसिद्धेर्व्याप्तित्वेऽपि वाऽवक्तृत्वाचेतनत्वयोरपि घटादौ सामानाधिकरण्यदर्शनाच्च नानुपपत्तिरित्याशयेनाह **आस्तां विस्तर इति** । यद्वाऽसदाश्रयस्य साधकत्वं नेत्यपि केनचिल्लिङ्गेन साधनीयम् । तत्र चासन्नाश्रय एवन्त्वादित्यसत्त्वा पक्षीकर्तव्यः । असदाश्रयो हेतुर्न साधकः एवन्त्वादित्यसदाश्रयो हेतुर्वोभयथाऽपि स हेतुरसदाश्रय एव । असति सद्धर्मानङ्गीकारात् । तच्च लिङ्गं व्याप्त्यभावे साधकं न स्यादिति कथमसदाश्रययोर्व्याप्त्यभाव इत्यादि भगवत्पादोक्तदोषं मनसि निधायाह **आस्तां विस्तर इति** ।

**स० — एतेन विकल्पिता इति** । तथाहि न द्वितीयतृतीयौ । असति त्वदुक्तयोः साध्यसाधनधर्मानाधारत्वरूपयोः साध्ययोः निर्धर्मकत्वरूपसाधनस्य च तवापि बाधादिप्रसङ्गात् । नापि चतुर्थः । असत् प्रतीत्यविषय इति प्रतीतिविषयत्ववत्सकलव्यवहाराभाजनमिति व्यवहारविषयत्ववच्च वक्तृत्वादिप्रतीतिविषयत्वव्यवहारभाजनत्वयोरपि संभवात् । किञ्च सकलव्यवहाराविषयत्वे तव मौनं स्यात् । न पञ्चमः । असन्न प्रमाणाङ्गम् । अप्रामाणिकत्वादिति प्रमाणाङ्गत्ववन्न वक्ताऽचेतनत्वादिति प्रमाणाङ्गत्वस्यापि संभवात् । न षष्ठः । सदाश्रयत्वेऽपि प्रमेयत्वानित्यत्वादौ व्याप्त्यदृष्ट्याऽसदाश्रयत्वेऽपि प्रामाणिकत्वासत्त्वयोर्व्याप्तिदृष्ट्या तद्वदवक्तृत्वाचेतनत्वयोरपि व्यभिचाराद्यदर्शनेनाविनाऽभावरूपव्याप्तिसंभवादिति ।

**प० — एतेनेति** । वन्ध्यासुतो न वक्तेत्यनुमानस्य निर्दोषतासमर्थनेनेत्यर्थः ।

**या० — एतेनेति** । वन्ध्यासुतो न वक्ताऽचेतनत्वादित्याद्यसदाश्रयानुमानानां साधकत्वदर्शनेनेत्यर्थः ॥

**श्री० — साध्येति** । साध्यस्य हेतुमध्ये पतितत्वेन साध्यवद्धेतोरपि सन्दिग्धत्वादिति भावः ॥ **निरस्ता इति** । अभावरूपसाध्यधर्माश्रयत्वस्य तादृशसाधनधर्माश्रयत्वस्य । असत् अभावरूपधर्माधिकरणमिति व्यवहारभाजनत्वस्य । अभावसाधकप्रमाणाङ्गत्वस्य । आश्रयाभावेऽपि हेतुसाध्ययोर्व्याप्तेश्च सम्भवे 'उतासत' इत्यादिना विकल्पिताः सर्वे पक्षा निरस्ता ज्ञेया इत्यर्थः ।

सु०— प्रमाण(बाधे)विरोधेन शृङ्गत्वहेतुराभास इत्युक्तम् । अथ प्रमाणविरोधस्यापि कुतो दूषणत्वम् । व्याप्त्याद्यङ्गसाकल्ये साध्यसिद्धेरावश्यकत्वात् । तदभावे तत एवाभासत्वम् । किं प्रमाणबाधेनेत्यत आह प्रत्यक्षेति ।

अनु० — प्रत्यक्षागममूलास्तु न्यायास्सर्वे भवन्ति हि ॥
न्यायाभासा अमूलास्स्युः

तुशब्दोऽवधारणे हिशब्दः प्रसिद्धौ । यस्मादित्यर्थे च । यद्यपि निषेधकहेतोर्निषेधात्मनोऽप्रामाणिकमप्याश्रयो दृष्टान्तधर्मी च क्वचिद्भवतीत्युक्तम् । तथाऽपि विधायकानां विधिरूपाणां चाश्रयेणावश्यं प्रत्यक्षागमगृहीतेन भाव्यम् । क्वचिन्निषेधकस्य निषेधात्मनश्च निषेधे साध्ये क्वचित्प्रतियोगिना प्रत्यक्षादिगृहीतेन भवितव्यम् । लिङ्गं च न स्वरूपेण साध्यप्रमितिमुपजनयितुमलम् । किन्तु प्रत्यक्षागमाभ्यां निश्चितस्वरूपव्याप्तिकम् । इत्येवमनेकधा सर्वेऽपि न्यायाः प्रत्यक्षागममूला एव भवन्तीति तावत्प्रसिद्धम् ।

यत एवं, तस्मादमूलाः स्वमूलभूतप्रत्यक्षागमविरुद्धा न्यायाभासा एव स्युः । यथा (खलु) नैशत्यादिसम्पन्नोऽपि परशुरविषये गगनादौ न छिदां जनयति एवमनुमानान्यप्युपजीव्यत्वादिना प्रबलाभ्यां प्रत्यक्षागमाभ्यां बाधितत्वेनाविषये न प्रमामुपजनयितुमलमित्याभासभूतान्येवेति ।

शे०— ननु प्रत्यक्षेत्याद्युत्तरभाष्यमनर्थकम् । न च प्रत्यक्षागममूलानामेव न्यायत्वादुपजीव्यप्रत्यक्षागमविरुद्धानां न्यायाभासत्वप्रतिपादनार्थत्वान्नानर्थक्यं तस्येति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वादित्यतः प्रागुक्तस्य प्रमाणविरोधेन शृङ्गत्वहेतोरसाधकत्वस्य पृथक् तद्दूषणत्वव्युत्पादनेन समर्थनार्थत्वान्न तदानर्थक्यमित्यभिप्रेत्य तद्दूषणत्वव्युत्पादकतयोत्तरग्रन्थं योजयितुं सङ्गतिप्रदर्शनपूर्वकं तस्यादूषणत्वशङ्कामुत्थापयति प्रमाणविरोधेनेति । तथा च दोषान्तरासङ्कीर्णोदाहरणाभावादसदाश्रयत्वस्यादोषत्वे तत एव बाधस्याप्यदोषत्वप्रसक्त्या तद्दोषत्ववादिनाऽसङ्कीर्णोदाहरणाभावेऽपि तद्दोषताया वक्तव्यत्वात्तद्वदेवासदाश्रयत्वमपि दोष एवेत्याशयः । प्रत्यक्षादिमूलानामेव न्यायत्वमित्यस्यार्थस्य मूलाल्लाभसिद्ध्यर्थं तुशब्दमवधारणार्थतया व्याचष्टे तुशब्द इति । पूर्ववाक्यार्थस्योत्तरवाक्यार्थं प्रति हेतुत्वसिद्ध्यर्थं हिशब्दं तदर्थतयाऽपि व्याचष्टे यस्मादित्यर्थे चेति । ननु वन्ध्यासुतो न वक्ताऽचेतनत्वान्नृशृङ्गवदित्यादावाश्रयस्य दृष्टान्तधर्मिणश्चाप्रामाणिकत्वेन प्रत्यक्षादिगृहीताश्रयादिमत्स्वरूपस्य तन्मूलत्वस्याभावान्न सर्वन्यायानां प्रत्यक्षागममूलत्वं संभवतीति सर्वशब्दानुपपत्तिरित्याशयेन शङ्कते यद्यपीति । निषेधकहेतोः

निषेधसाधकहेतोरित्यर्थः । **निषेधात्मनो** निषेधरूपस्येत्यर्थः ( स्वयं वन्ध्यासुतो न वक्ताऽचेतनत्वादित्यादिहेतोरित्यर्थः )॥ **उक्तमिति** । यद्यपि 'यत्र व्याहतता ने'त्यादिनाऽप्रामाणिकस्य पक्षत्वमेवोक्तं न तु दृष्टान्तधर्मित्वमपि तथाऽपि तदुक्तौ समानन्यायतया तदप्युक्तप्रायमेवेत्यभिप्रेत्योक्तमित्युक्तमित्यवधेयम् । न सर्वन्यायानां प्रत्यक्षादिगृहीताश्रयादिमत्त्वमेव तन्मूलकत्वमत्राभिप्रेतं येनोक्तदोषः स्यात् । किन्नाम कचित्तद्गृहीताश्रयादिमत्त्वं कचिच्च प्रकारान्तरेणैवेति नानाप्रकारमेवेत्यतो नानुपपत्तिरित्यभिप्रेत्य प्रत्यक्षादिगृहीताश्रयादिमत्त्वेन तन्मूलकतां तावदुपपादयति **तथाऽपीति** । **विधायकानां** विधिसाधकानाम् । **तत्किं** पर्वतोऽग्निमान् धूमवत्त्वान्महानसवदित्यादिन्यायानामेवोक्तरूपं प्रत्यक्षादिमूलत्वमित्यतो वन्ध्यासुतो न वक्ताऽचेतनत्वान्नृशृङ्गवदित्यादेर्निषेधकहेतोस्तादृशप्रत्यक्षादिमूलत्वासंभवेऽपि **यत्र निषेधकहेतोः** प्रामाणिक एवाश्रयो यथा घटो न वक्ताऽचेतनत्वाद्वन्ध्यासुतवदिति । यत्र वा दृष्टान्तधर्मी प्रामाणिको यथा वन्ध्यासुतो न वक्ताऽचेतनत्वाद्घटवदिति । तत्राश्रयदृष्टान्तधर्मिणोः प्रत्यक्षादिगृहीतत्वादुक्तरूपमपि तन्मूलकमस्त्येवेत्याह **कचिदिति** । कचिन्निषेधकस्य निषेधात्मनश्चेत्येतावदेव भिन्नं वाक्यम् । आश्रयेण दृष्टान्तधर्मिणा च प्रत्यक्षागमगृहीतेन भाव्यमिति पूर्वानुवृत्त्या नैराकाङ्क्ष्यसंभवादित्यवधेयम् । अस्त्वेवं निषेधकहेतोरुदाहृतस्थले प्रत्यक्षादिगृहीताश्रयादिमत्त्वात्तन्मूलत्वं तथाऽपि यत्राप्रामाणिक एवाश्रयो दृष्टान्तधर्मी च तत्र निषेधकहेतोः कथं प्रत्यक्षादिमूलत्वमित्यतस्तत्र प्रकारान्तरेण तन्मूलतां दर्शयति **निषेधे साध्य इति** । कचिन्निषेधरूपेण हेतुनेति शेषः । यद्यप्यतिप्रसङ्गान्न प्रतियोगिग्राहकत्वेनोपजीव्यत्वस्य बाधकत्वे तन्त्रत्वमस्ति तथाऽप्यङ्गीकृत्य तस्य तत्र प्रयोजकत्वमेतदुक्तमित्यवधेयम् । यद्वैतदनुशयादेव तत्र प्रकारान्तरेण तन्मूलकतामुपपादयति **लिङ्गं चेति** । यद्यप्येतद्विधिसाधकहेतावपि तुल्यं तथाऽपि तत्र प्रकारान्तरेणैव तन्मूलकत्वसिद्धेस्तत्र सतोऽप्यस्याविवक्षया निषेधहेतावसाधारण्येनोक्तिरित्यवधेयम् । यद्वाऽसाधारण्येन विधायकानां ( विधिरूपसाध्यसाधकानां ) निषेधकानां च न्यायानां प्रत्यक्षादिमूलकतामुपदर्श्य विधिनिषेधसाधारण्येनापि तामुपदर्शयति **लिङ्गं चेति** ॥ **अलमिति** । तथा सति पर्वतवृत्तिधूमेन गेहान्तर्वर्तिपुरुषस्यापि वन्ह्यनुमितिप्रसक्तेरिति भावः ॥ **किन्त्विति** । यद्यपि लिङ्गस्य प्रत्यक्षादिना निश्चितस्वरूपत्वोक्तिमात्रेणैवोक्तातिप्रसङ्गपरिहारः सिध्यति । तथाऽपि नारिकेलद्वीपवासिनो धूमदर्शनेन वन्हिप्रमोत्पत्तिप्रसङ्गपरिहाराय निश्चितव्याप्तिकत्वकीर्तनमित्यवधेयम् । तुशब्दस्यावधारणार्थत्वादाह **एवेति** । हिशब्दस्य प्रसिद्धार्थत्वादाह **प्रसिद्धमिति** ।

यस्मादित्यर्थकत्वस्यापि स्वीकारादाह **यत एवमिति** । प्रमाणविरुद्धत्वस्य दुष्टत्वप्रयोजकत्वज्ञाभाव 'न्यायाभासा अमूलाः स्युरि'त्येतदुद्देश्यनिर्देशभावव्यत्यासेन योजयति **अमूला इत्यादि** ।

तथाऽपि प्रमाणबाधो यत्र दोषस्तत्र व्याप्त्याद्यङ्गसाकल्यमस्ति न वेति प्राग्विकल्पितपक्षयोः कस्य स्वीकारः कथं च तत्रोक्तदोषपरिहार इत्यतः सत्त्वपक्षमङ्गीकृत्य तत्रोक्तं दोषं परिहरति **यथेति** ।

**प०— निषेधकेति ।** निषेधसाधकस्य स्वयं निषेधरूपस्य च हेतोरित्यर्थः । **दृष्टान्तधर्मी च क्वचिदिति ।** वन्ध्यासुतो नीरूपः अलीकत्वाच्छशशृङ्गवदित्यादाविति भावः । सर्वपदार्थस्वारस्यार्थमाह **क्वचिन्निषेधकस्येति ।** वन्ध्यासुतो न वक्तेत्यादौ वक्तृत्वादिना प्रतियोगिनेत्यर्थः । अमूला इत्यत्र नञ्विरुद्धार्थ इत्युपेत्य व्याचष्टे **अमूला इति ।**

**या०— निषेधकहेतोरिति ।** निषेधसाधकस्य स्वयमपि निषेधरूपस्य हेतोरित्यर्थः । वन्ध्यासुतो न वक्ताऽचेतनत्वादित्यादिहेतोरिति यावत् ॥ **दृष्टान्तधर्मी चेति ।** घटो न वक्ताऽचेतनत्वाद्वन्ध्यासुतवदित्यत्रेत्यर्थः । ततश्चाद्यानुमाने पक्षरूपाश्रयग्राहकतया द्वितीयानुमाने दृष्टान्तरूपाश्रयग्राहकतया प्रत्यक्षादिकं यद्यपि नोपजीव्यमिति भावः ॥ **क्वचिन्निषेधकस्येति ।** क्वचिदेव निषेधसाधकस्येत्यर्थः । सार्वत्रिकनिषेधसाधने तत्प्रतियोगिनोऽप्रामाणिकतया प्रत्यक्षादिना क्वचिद् ग्रहणासम्भवादिति भावः । अत्रापि वन्ध्यासुतो न वक्ताऽचेतनत्वादित्यादिकमेवोदाहरणम् । वन्ध्यासुतसम्बन्धितया निषेध्ययोर्वक्तृत्वचेतनत्वयोरस्मदादौ प्रत्यक्षादिना ग्रहणात् । इदं च पररीत्यैवोक्तम् । अस्मन्मते तु यदस्मदादौ प्रत्यक्षादिगृहीतं वक्तृत्वादिकं तत्प्रामाणिकत्वान्न निषेधप्रतियोगि यच्च वन्ध्यासुतसम्बन्धि निषेधप्रतियोगि न तत्प्रत्यक्षादिगृहीतमिति न प्रत्यक्षादेः प्रतियोगिग्राहकतयोपजीव्यत्वस्येदमुदाहरणं सम्भवतीति ज्ञातव्यम् । तन्तवः पटप्रागभाववन्तस्तत्सामग्रीप्रागभाववत्त्वादित्यादिकमस्मद्रीत्योदाहरणमत्र ज्ञातव्यम् ।

**श्री० — तदभावे** व्याप्त्याद्यङ्गसाकल्याभावे । **तत एव** व्याप्त्याद्यङ्गवैकल्यादेव ॥ **इत्युक्तमिति ।** तथा च तत्राश्रयग्रहणं प्रत्यक्षागमाभ्यां न सम्भवतीति भावः ॥ **विधायकानां** विधिरूपसाध्यसाधकानाम् । प्रत्यक्षागमरूपप्रमाणबाधितस्याविषयवृत्तित्वेन स्वानन्त्येणैव दोषत्वमित्यत्र दृष्टान्तमाह **यथा खल्विति ।**

**सु० — नन्वनुमानमूलोऽपि न्यायोस्ति । यथा चक्षुरादिपक्षीकारेण प्रवृत्तः । तत्कथं प्रत्यक्षागममूलाः स्युरित्युक्तमित्यत आह** न्यायस्येति ।

अनु०— न्यायस्यान्यस्य तौ पुनः ॥

**प्रत्यक्षागममूलान्न्यायादन्यस्यापि न्यायस्य तौ प्रत्यक्षागमावेव मूलम् । कथम् । यतो मूलभूतस्याप्यन्यस्य न्यायस्य तौ पुनर्मूलमित्यन्ततः सर्वथा प्रत्यक्षागमानतिक्रमात्तथोक्तमिति ।**

**यद्यप्यागमोऽपि प्रत्यक्षमूलस्तथाऽपि क्वचित्प्रत्यक्षस्यापि मूलं भवतीत्यतो द्वयोर्ग्रहणम् । अनुमानस्यापि क्वचित्तन्मूलत्वेऽपि न स्वतन्त्रस्येत्यतस्तत्परित्यागः ।**

**शे० — यथेति ।** चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैव ग्राहकत्वादित्यादिरूपश्चक्षुरादिपक्षीकारेण प्रकृतो न्यायो, रूपाद्युपलब्धिः सकरणिका क्रियात्वादिति चक्षुरादिरूपाश्रयसाधकानुमानमूलक इत्यर्थः ॥ **प्रत्यक्षमूल इति ।** प्रत्यक्षं मूलं यस्य स तथोक्तः । तत्र श्रोत्रस्य श्रुतिस्वरूपग्राहकत्वेन साक्षिप्रत्यक्षस्य च तज्जनितज्ञानतत्प्रामाण्यग्राहकत्वेनागमं प्रत्युपजीव्यत्वं बोध्यम् । तथा **चागमग्रहणमपि न पृथक्कार्यमिति भावः ॥ क्वचित्प्रत्यक्षस्यापीति ।** योगिप्रत्यक्षस्येत्यर्थः । तथा च प्रत्यक्षागमयोर्मूलमूलिभावसाम्येन विनिगमकाभावाद्युक्तं द्वयोर्ग्रहणमिति भावः । नन्वेवमनुमानस्याप्यत्र पृथग्ग्रहणं प्रसज्यते । मननरूपस्य तस्य योगिप्रत्यक्षं प्रति, त्रसरेणुः सावयवावयवारब्धो जन्यमहत्वाधिकरणत्वादिति परमाणुसाधकानुमानस्य परमाणुमहं जानामीति मानसप्रत्यक्षं प्रति मूलत्वेन मूलमूलिभावसाम्यादित्यत आह **अनुमानस्यापीति ॥ न स्वतन्त्रस्येति ।** 'प्रत्यक्षशब्दानुसारादनुमेति प्रकीर्तिते'ति तन्निर्वचनादिति भावः ।

**स० — प्रत्यक्षमूल इति ।** प्रत्यक्षं मूलं यस्येति स तथोक्तः । स्वरूपप्रामाण्यग्राहकत्वेन प्रत्यक्षस्यागमं प्रत्युपजीव्यत्वं ज्ञातव्यम् ॥ **तथापीति ।** आगमेन भगवतः श्रवणादौ सति पश्चात्प्रत्यक्षमुत्पद्यत इत्यागमस्य प्रत्यक्षमूलत्वमवगन्तव्यम् । ननु परमाणोरनुमानेन सिद्धौ सत्यां पश्चात्परमाणुमहं जानामीति प्रत्यक्षं जायते तथा चानुमानस्यापि प्रत्यक्षमूलत्वाद्ग्रहणं गणनीयमित्यत आह **अनुमानस्यापीति ।** अनुमानस्य परमाणुमहं जानामीति प्रत्यक्षं प्रतिमूलत्वेपीत्यर्थः ।

**प० — यथा चक्षुरादीति ।** चक्षुस्तैजसम् रूपादिषु पञ्चसु मध्ये रूपस्यैव ग्राहकत्वादालोकवदित्यादिकमित्यर्थः ॥ **आगमोऽपि प्रत्यक्षमूल इति ।** शब्दस्वरूपतद्योग्यतादेस्तज्ज्ञानतत्प्रामाण्यादेः श्रोत्रादिप्रत्यक्षग्राह्यत्वादिति भावः ॥ **क्वचित्प्रत्यक्षस्यापीति ।** रामकृष्णाद्यवतारेषु विष्णुत्वप्रत्यक्षस्येत्यर्थः ॥ **तन्मूलत्वेऽपीति ।** प्रत्यक्षागममूलत्वेऽपीत्यर्थः ॥ पर्वते वह्निमनुमिनोमीति प्रत्यक्षस्य अथातो धर्मजिज्ञासेत्याद्यागमस्य च न्यायमूलत्वादिति भावः ॥ **न स्वतन्त्रस्येति ।** प्रत्यक्षागमान्यतरमूलकत्वरहितस्येत्यर्थः ।

**या० — यथा चक्षुरादिपक्षीकारेणेति ।** चक्षुरादिकमतीन्द्रियमिन्द्रियत्वाच्छ्रोत्रवदित्यादिरूप इत्यर्थः ॥ **प्रत्यक्षमूल इति ।** श्रोत्रेण गृहीतस्यैवागमस्य बोधकत्वादिति भावः । तथा चानुमानवदागमोऽपि परित्याज्यः । सर्वोपजीव्यं प्रत्यक्षमेकमेव वक्तव्यमिति शङ्काभिप्रायः ॥ **क्वचित्प्रत्यक्षस्या-**

**पीति** । योगिप्रत्यक्षस्येत्यर्थः । तथा च साम्येन विनिगमकाभावाद्द्वयोर्ग्रहणमिति भावः । नन्वेवमनुमानमप्यत्र ग्राह्यं तस्यापि मननरूपस्य योगिप्रत्यक्षमूलत्वादित्यत आह **अनुमानस्यापीति** ॥ **न स्वतन्त्रस्येति** । अनुसृत्य मानमनुमानमिति तन्निर्वचनादिति भावः ॥

**श्री०— चक्षुरादीति** । तत्र रूपज्ञत्वलिङ्गेन चक्षुरनुमेयमिति भावः । **अन्यस्य** अनुमानमूलकस्य । **अस्य न्यायस्य** प्रत्यक्षागममूलकन्यायस्य । **प्रत्यक्षमूलः** प्रत्यक्षमूलकः । प्रत्यक्षेण सम्बन्धिनि गृहीते तत्र शक्तिग्रहानन्तरं तत्स्मरणसापेक्षः शब्दोऽर्थबोधको भवतीत्यागमस्य प्रत्यक्षमूलकत्वम् ॥

**सु०— एवं व्याप्तिभङ्गाद्यनपेक्षमेवाविषयवृत्तित्वेन बाधितस्य दुष्टत्वमुपपादितम् । प्रकारान्तरमप्याह** अदृष्ट इति ।

**अनु०—** अदृष्टे व्यभिचारे तु साधकं तदिति स्फुटम् ॥
ज्ञायते साक्षिणैवाद्धा

**तुशब्दोऽवधारणे । तल्लिङ्गं धूमादिकं दहनादिसाध्यव्यभिचारेऽद्धा सर्वथाऽप्यदृष्ट एव सति तस्य साधकं न तु व्यभिचारदर्शन इति तावत्साक्षिणैव स्फुटं ज्ञायते ।**

**शे०—** अद्धेत्यस्य स्फुटमित्यनेनापौनरुक्त्यायार्थभेदमाह **अद्धेति** ॥ **साक्षिणैवेति** । यद्यपि प्रमाकरणत्वरूपसाधकत्वलक्षणतत्प्रामाण्यस्य तदीयज्ञानसाधनत्वग्राहकान्वयव्यतिरेकरूपानुमानगम्यत्वेन साक्षिसिद्धत्वाभावस्यान्यत्र स्थितत्वान्न साक्षिज्ञेयत्वमिति तथोक्तिरनुपपन्नेत्याभाति तथापि लिङ्गे व्यभिचारादिदोषाभावे निश्चिते तज्जन्यानुमितेः प्रामाण्यं साक्षिणा ज्ञायत इत्यत्र तात्पर्याददोषः ।

**या०— साक्षिणैवेति** । लिङ्गे व्यभिचारादिदोषाभावनिश्चये तज्जन्यानुमितेः प्रामाण्यं साक्षिणैव ज्ञायत इत्यर्थः । एवमदृष्टव्यभिचारस्येत्युत्तरवाक्यस्यापि व्यभिचारादिदोषाभाववत्तया निश्चितलिङ्गजन्यानुमितिप्रामाण्यं साक्षिसिद्धमित्यत्रैव तात्पर्यं न तु यथाश्रुतार्थे । साधकत्वरूपप्रमाकरणत्वलक्षणप्रामाण्यस्यान्वयव्यतिरेकरूपानुमानगम्यतया साक्षिसिद्धत्वाभावस्य पद्धत्यादावुक्तत्वात् । अत एव तस्मादनुमानस्यापीत्यग्रेतनमनुमानपदं भावसाधनमिति ज्ञातव्यम् ।

**श्री०— व्याप्तिभङ्गाद्यनपेक्षमेवेति** । व्याप्तिभङ्गहेतुत्वं विना स्वातन्त्र्येणैवेत्यर्थः ।

**सु०— किमतो यद्यदृष्टव्यभिचारस्यैव लिङ्गस्य साध्यसाधकत्वं साक्षिसिद्धमित्यत आह** मानेति ।

**अनु०—** मानबाधे न तद्भवेत् ॥
यत्साक्षिणैव मानत्वं मानानामवसीयते ॥

प्रमाणबाधे सति तददृष्टव्यभिचारित्वं न भवेत् । प्रमाणबाधेनाग्न्यादेः शैत्याद्यपहारे सति तत्रैव लिङ्गस्य कृतकत्वादेः साध्यव्यभिचारदर्शनात् । तदनेन व्याप्तिभङ्गहेतुतया बाधस्य दूषणत्वमित्युक्तं भवति । तत्रायं विवेकः । परार्थप्रयोगोत्तरकालमविषयवृत्तित्वमेवोद्भाव्यम् । न व्याप्तिभङ्गः । व्याप्तिभङ्गोपपादनायोपजीव्येनाविषयवृत्तित्वेनैवानुमानस्य दुष्टत्वे जघन्यप्रतिपत्तिकस्य व्याप्तिभंगस्यानुसरणस्यान्याय्यत्वात् । व्याप्तिग्रहणसमये तु तद्भङ्गहेतुत्वेनैव । तदानीं विषयस्य बुद्ध्यावनारूढत्वात् । व्याप्तिभङ्गस्यैव पुरस्फूर्तिकत्वाच्चेति साक्षिणैवेत्युक्तम् । तत्प्रसङ्गादुपपादयति यदिति ।

यस्मात्सर्वेषां मानानां ज्ञानानां मानत्वं साक्षिणैवावसीयते । अन्यथाऽनवस्थादिप्रसङ्गात् । तस्मादनुमानस्यापि प्रामाण्यं तेनैव ज्ञायत इत्युक्तमेव ।

शे० — अदृष्टव्यभिचारस्येति । अत्रापि व्यभिचारादिदोषाभाववत्तया निश्चितलिङ्गजन्यानुमितिप्रामाण्यं साक्षिणा गृह्यत इत्यत्रैव तात्पर्यम् । ननु प्रागुक्तव्याप्तिभङ्गानपेक्षमेवाविषयवृत्तित्वेन बाधितस्य दुष्टत्वं किमुपपन्नं न वा । नेति पक्षे तदुक्तेरानर्थक्यम् । आद्ये तेनैव दुष्टत्वोपपत्तौ व्यभिचारहेतुतया बाधस्य दूषणत्वाभिधानमनर्थकमित्यत उपपन्नत्वान्न तदुक्तेरानर्थक्यमनुपपन्नत्वाच्च न व्यभिचारहेतुतया बाधस्य दूषणत्वाभिधानानर्थक्यमपीत्यभिप्रेत्य कथमेकस्यैवोपपन्नत्वमनुपपन्नत्वं च विरुद्धं सङ्गच्छत इत्यतो दशाभेदेन तदुभयमुपपादयति तत्रायं विवेक इति । अविषयवृत्तित्वस्यैव कुतो दुष्टत्वप्रयोजकत्वमित्यतस्तस्य व्याप्तिभङ्गोपपादकतयोपजीव्यत्वेन प्रथमोपस्थितत्वादिति भावेनोक्तं व्याप्तिभङ्गेति । व्याप्तिभङ्गस्य दुष्टत्वाप्रयोजकत्वे हेतुमाह जघन्येति । ननु व्याप्तिग्रहणसमयेऽप्यविषयवृत्तित्वसंपादकत्वेनैव बाधस्य दूषणत्वं किन्न स्यादित्यत आह तदानीमिति ॥ विषयस्येति । पक्षस्येत्यर्थः ॥ अनुमानस्यापीति । अनुमानजन्यानुमितेरपीत्यर्थः ।

प० — नन्वेवं बाधस्य स्वातन्त्र्येण प्रतिज्ञादोषत्वाङ्गीकारविरोध इत्यत आह तत्रायं विवेक इति । अनुप्रमाणं भ्रान्तिं निराह मानानां ज्ञानानामिति । करणनिष्ठप्रमाजननशक्तेः साक्ष्यविषयत्वादेवमुक्तम् ॥ अनुमानस्यापीति । अनुमितेरपीत्यर्थः । अनुमितिप्रामाण्यग्रहणे तज्जनकस्य प्रामाण्यं गृहीतप्रायमेवेत्युक्तम् ।

या० — विषयस्येति । पक्षस्येत्यर्थः ।

सु० — यदि तर्हि प्रामाण्यं साक्षिवेद्यं साक्षिणः प्रागुपपादितो याथार्थ्यनियमो भज्येत । कदाचिदमानस्यापि हि मानत्वं गृह्यते । अन्यथा विपर्ययादविशङ्का प्रवृत्तिर्न स्यात् । तस्य चायथार्थत्वं बाधेनावेद्यते इत्यत आह अमानस्येति ।

अनु० — अमानस्य तु मानत्वं मानसत्वाच्चलं भवेत् ।

मानत्वं मानत्वग्रहणं चलं बाधितम् । अमानस्य तु यन्मानत्वं गृह्यते तन्मनसैव । न साक्षिणा । अतस्तस्य बाध्यत्वं न दोषमावहतीति ।

अत्रैषा प्रक्रिया । सर्वमपि ज्ञानं साक्षी गृण्हाति । यद्यस्य बाधो भविष्यति तदाऽप्रमाणं न चेत्प्रमाणमेवेति तत्प्रामाण्यमपि गृह्णाति । सति प्रयोजने प्रामाण्यादिजिज्ञासायां परीक्षामनुसृत्य प्रामाण्यमप्रामाण्यं वा व्यवस्थापयति । अलाभे तु परीक्षाया विशेषावधारणादुदास्ते ।

अस्यामवस्थायां रागादिकलुषितं मनः परीक्षाऽऽभाससहायं प्रामाण्यादिकमवधारयति । तच्च कदाचिद्बाध्यते कदाचिन्नेति । कुत एषा कल्पनेति चेत्साक्षिणो याथार्थ्यनियमस्यैवोपपादितत्वात् । वक्ष्यते चैतदिति ।

शे० — प्रागिति । पृथगधिकरणे 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेदित्यादिनोपपादित इत्यर्थः । तत्र हेतुमाह अमानस्यापीति । शुक्तिरजतादिज्ञानस्यापीत्यर्थः । ननु साक्षिणाऽमानस्य मानत्वं नैव गृह्यत इति कथं तस्य याथार्थ्यनियमभङ्ग इत्यत आह अन्यथेति । निश्शङ्कप्रवृत्तेः प्रामाण्यनिश्चयसाध्यत्वेन कारणीभूतप्रामाण्यनिश्चयाभावे तदयोगात्तादृशप्रवृत्त्यैवामानस्यापि मानत्वग्रहणसिद्धिरिति भावः । अस्त्वमानस्यापि मानत्वेन ग्रहणम् । तथाऽपि तस्य यथार्थत्वान्न साक्षिणो याथार्थ्यनियमभङ्ग इत्यत आह तस्य चेति । मानत्वग्रहणस्येत्यर्थः । मानत्वस्य मानसताया बाधितत्वात्तत्पदं तत्र ग्रहणपरतया व्याचष्टे मानत्वमिति ॥ तस्येति । मानसस्य मानत्वग्रहणस्येत्यर्थः । दोषमिति । साक्षिणो याथार्थ्यनियमभङ्गरूपमित्यर्थः । साक्षिणा यदमानस्य मानत्वग्रहणं तद्बाध्यताया एव तद्याथार्थ्यनियमभञ्जकत्वेन मनसा यदमानस्य मानत्वग्रहणं तद्बाध्यतायास्तदभञ्जकत्वादिति भावः ।

नन्वमानस्य मानत्वं मनसैव गृह्यते न साक्षिणेति वदता तत्र भ्रमरूपं ज्ञानमपि मनसैव गृह्यते न साक्षिणेति तावन्न वक्तुं युक्तम् । ज्ञानमात्रस्य साक्षिवेद्यताया अन्यत्र स्थितत्वेन भ्रमस्य साक्ष्यवेद्यत्वेऽसिद्धान्तापातात् । नापि तत्र ज्ञानस्य साक्षिणा ग्रहणेऽपि प्रामाण्यं न गृह्यत इति वक्तुं युक्तम् । प्रामाण्यस्य स्वतस्त्वेन ज्ञानग्राहकस्य साक्षिणः प्रामाण्यग्रहणस्वभावत्वस्थित्या ज्ञानं गृहीत्वा तत्प्रामाण्या-

ग्रहणे स्वभावहानिप्रसङ्गात् । ततश्च भ्रमस्थले ज्ञानवत्तत्प्रामाण्यस्यापि साक्षिणैव ग्राह्यत्वात्कथं प्रामाण्यावधारणस्य मानमत्वं कथञ्चैवं सति साक्षिणो याथार्थ्यनियम इत्यत आह **अत्रेति** ॥ **सर्वमपीति** । प्रमारूपमिव भ्रमरूपमपीत्यर्थः । तथा च नापसिद्धान्त इति भावः । नापि स्वभावहानिप्रसङ्गः । स हि तदा भवेद्यदि ज्ञानमेव साक्षिवेद्यं न तत्प्रामाण्यमिति स्यात् । न चैतदस्ति । ज्ञानवत्तत्प्रामाण्यस्यापि साक्षिवेद्यत्वाभ्युपगमात् । नापि याथार्थ्यनियमभङ्गः । ज्ञानं गृह्णता साक्षिणा प्रमाणमेवैतदिति प्रामाण्यग्रहणानभ्युपगमादिति भावेन ज्ञानग्राहकत्वप्रयुक्तं साक्षिणा प्रामाण्यग्रहणमभिनयेन दर्शयति **यदीति** । नन्वेवंविधया प्रामाण्यग्रहणस्य निष्कम्पप्रवृत्त्यहेतुत्वात्तद्धेतुभूतस्य चेदं ज्ञानं प्रमाणमेवेत्यवधारणस्याभावान्न निष्कम्पप्रवृत्तिः क्वापि स्यादित्यतो न साक्षिणा सर्वप्रामाण्यग्रहणमेवंरूपमेवाभिमतम् । किन्तु प्राथमिकप्रामाण्यग्रहणमेव । अनन्तरन्तु प्रमाणमेवैतदित्यपि प्रामाण्यग्रहणं साक्षिणाऽभ्युपगम्यते । ततश्च न निष्कम्पप्रवृत्त्यनुपपत्तिरपीत्यभिप्रेत्य कुतः पूर्वं सम्मुग्धप्रामाण्यग्रहणं पश्चाच्चोक्तविधमवधारणमित्यतस्तादृशावधारणसामग्र्याः कादाचित्कत्वान्न सर्वदा तथाऽवधारणमिति मनसि निधाय तत्सामग्रीप्रदर्शनपूर्वकं साक्षिणा प्रामाण्यावधारणमुपपादयति **सति प्रयोजन इति** ॥ **प्रामाण्यादीति** । प्रामाण्याप्रामाण्ययोरन्यतरजिज्ञासायामित्यर्थः ॥ **परीक्षामनुसृत्येति** । सजातीयविजातीयसंवादभावाभावलक्षणपरीक्षया दोषाभावं निश्चित्य प्रामाण्यं व्यवस्थापयति । दोषदर्शने त्वप्रामाण्यं व्यवस्थापयतीति योजना ॥ **उदास्त इति** । न सम्मुग्धप्रामाण्यग्रहणानन्तरं प्रामाण्यमप्रामाण्यं वा व्यवस्थापयतीत्यर्थः ।

तर्हि तादृशस्थले प्रामाण्यावधारणाभावात्तत्साध्यनिष्कम्पप्रवृत्तिर्न स्यादित्यतस्तत्र साक्षिरूपप्रामाण्यावधारणाभावेऽपि मानमस्य तदवधारणस्य सद्भावान्न तदनुपपत्तिरित्यभिप्रेत्य मनसा तदवधारणमाह **अस्यामवस्थायामिति** । साक्षिणः प्रामाण्यावधारणादुदासीनतावस्थायामित्यर्थः । ननु यथार्थज्ञानजनकशक्तिमत्त्वात्कथं मनसाऽपि तत्र प्रामाण्यग्रहः स्यादित्यतः सहकारिणा सहजशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकत्वस्य बहुलमुपलम्भात्तद्वशात्तदुपपत्तिरिति भावेनोक्तं **रागादिदोषकलुषितमिति** । अस्त्वेवं मनसाऽमानस्य प्रामाण्यग्रहणं तस्य मूलोक्तं चलत्वं तु कथमित्यतस्तदुपपादयति **तच्चेति** । इतिशब्दस्येत्येषा प्रक्रियेति पूर्वेणान्वयः ॥ **कुत इति** । कल्पकाभावान्नैषा कल्पना संभवतीत्यर्थः । किमत्र मानत्वावधारणस्य साक्षिरूपत्वसम्भवे तत्परित्यागेन मानसत्वकल्पनायां न निमित्तं किञ्चिदित्यभिप्रेतं किंवा ज्ञानग्राहकस्य साक्षिणः सम्मुग्धप्रामाण्यग्रहणपूर्वकं प्रामाण्यावधारकत्वकल्पनं कल्पकशून्यमिति विकल्पं मनसि निधायाद्यं निराचष्टे **साक्षिण इति** ॥ **उपपादितत्वादिति** । पृथगधिकरणे 'न दुःखानुभवः क्वापी'त्यादिनेति शेषः । द्वितीयं प्रत्याह **वक्ष्यते चैतदिति** । ज्ञानपादे 'अतो न सर्व-

मानानां प्रामाण्यं निश्चितं भवेत् । साक्षिणा निश्चितं यत्र तत्प्रामाण्यं स्वलक्षणमि'त्यत्र । 'स्यादेवं यदीयं प्रक्रिया प्रमाणवती स्यात् । न च तदस्ती'त्युक्तप्रक्रियाया अप्रामाणिकत्वमाशङ्क्य 'यदि साक्षी दोषाभावे प्रमाणमेतदिति प्रथमं सम्मुग्धं प्रामाण्यं गृहीत्वा पश्चात्प्रामाण्यादिजिज्ञासायां परीक्षया दोषाभावं निश्चित्य प्रमाणमेवेत्यवधारयतीत्येषा प्रक्रिया नाङ्गीक्रियेततदाऽनभ्यस्तविषयाणां शब्दादिना जातानां सर्वेषामपि ज्ञानानां प्रथममेव प्रामाण्यमवधार्येत । न चैतदस्ति । तेन जानीमोऽस्तीयं प्रक्रिये'ति तत्कल्पकमपि वक्ष्यत इत्यर्थः ।

प०— **प्रागुपपादित इति** । वियत्पादे पृथगुपदेशादित्यधिकरणे 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेदि'त्यादिना । 'साक्षी निर्दोष एवैकः सदांगीकार्य एव न' इत्यंतेन ग्रन्थेनोपपादित इत्यर्थः ॥ **अन्यथेति** । भ्रमप्रामाण्याग्रहण इत्यर्थः । प्रामाण्यज्ञानमेव प्रवृत्तिहेतुरिति भावः । **विपर्ययात्** भ्रमज्ञानादित्यर्थः । ननु प्रामाण्यस्य मानसत्वे ज्ञानग्राह साक्षिवेद्यत्वाभावात् स्वतस्त्वभङ्गः । साक्षिवेद्ये च कथं मनसः सामर्थ्यमित्यत आह **अत्रैषा प्रक्रियेति** । प्रामाण्यविषय इत्यर्थः ॥ **कदाचिद्बाध्यते कदाचिन्नेतीति** । मानसं चेत् तद्बाध्यते साक्षिसिद्धं चेत् न बाध्यत इत्यर्थः ॥ **उपपादितत्वादिति** । पृथगुपदेशादित्यधिकरण इति भावः ॥ **वक्ष्यते चैतदिति** । ज्ञानपादे 'यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदि'त्यादिग्रन्थेन साक्षिसिद्धं न बाध्यते मानसं तु बाध्यत इत्येतत्प्रमेयं वक्ष्यत इत्यर्थः ।

---

या०— **प्रागुपपादित इति** । वियत्पादे 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेदि'त्यादिना ग्रन्थेनोपपादित इत्यर्थः । 'तन्मनसैव न साक्षिणे'त्येतदुपपादयितुमाह **अत्रैषा प्रक्रियेति** ॥ **तत्प्रामाण्यमपीति** । सम्मुग्धमिति शेषः । यथा चैतत्तथैवोपपादितं प्रथमाध्यायस्य चतुर्थपादे तत्रैवानुसन्धेयम् । चलमित्यस्याभिप्रायमाह **कदाचिद्बाध्यते कदाचिन्नेतीति** । ननु साक्षिणो याथार्थ्यनियमान्यथाऽनुपपत्त्याऽस्यामवस्थायामित्यादिनोक्तमेवावश्यं कल्पनीयमित्यायाति । न तत्पूर्वभागेनोक्तं प्रथमं सम्मुग्धप्रामाण्यग्रहणादिकमित्यत आह **वक्ष्यते चैतदिति** । ज्ञानपादे 'अतो न सर्वमानानां प्रामाण्यं निश्चितं भवेत् । साक्षिणा निश्चितं यत्र तत्प्रामाण्यं स्वलक्षणमि'त्यत्र यदि साक्षी दोषाभावे प्रमाणमेतदिति प्रथमं सम्मुग्धं प्रामाण्यं गृहीत्वा पश्चाज्जिज्ञासायां सत्यां परीक्षया प्रमाणमेवेत्यवधारयतीत्येषा प्रक्रिया नाङ्गीक्रियेत तदाऽनभ्यस्तविषयाणां शब्दादिना जातानां प्रथममेव प्रामाण्यमवधार्येत न चैतदस्ति तेन जानीमोऽस्तीयं प्रक्रिये'ति तत्कल्पकमपि वक्ष्यत इत्यर्थः ।

श्री०— **कदाचिन्नेति** । असञ्जातबाधस्थल इत्यर्थः ।

सु०— अदृष्टे व्यभिचार इति साध्यव्यभिचारिलिङ्गमप्रमाणमित्युक्तम् । तत्र दृष्टव्य-भिचारिलिङ्गमप्रमाणमित्युक्तं (भवति) । तत्र विशेषमाह उत्सर्गतोऽपीति ।

अनु०— उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् ॥
व्यभिचार्यपवादेन मानमेव भविष्यति ॥

यल्लिङ्गमुत्सर्गतः स्वभावेनापवादविवर्जितं साध्यव्यभिचारवर्जितं प्राप्तं निश्चितमप्यपवादेन कारणविशेषेणैव व्यभिचारि तन्मानमेव भविष्यति । एतदुक्तं भवति । यथा साधनस्य साध्य-साहित्यमात्रं न प्रामाण्योपयोगि । किन्तु निरुपाधिकमेव । अन्यथा सोपाधिकसाध्यसम्बन्धस्य मैत्रीतनयत्वादेरपि श्यामतासाधनत्वप्रसङ्गात् । तथा व्यभिचारोऽपि निरुपाधिक एवासा(कोऽसा)धनत्वे हेतुः । यथा प्रमेयत्वस्य नित्यत्वेन । न हि प्रमेयत्वं स्वभावेन नित्यत्वाव्यभिचारि, व्यभिचारि तु निमित्तान्तरेणेत्यत्र नियामकं पश्यामः । यस्तु स्वभावेन साध्याव्यभिचारिणोऽपि साधनस्यौपाधिको व्यभिचारो नासावप्रामाण्यकारणमिति ।

शे०— ननूत्सर्गतोऽपीत्युत्तरवाक्यमनर्थकम् । न च निरुपाधिकसाध्यव्यभिचार एव लिङ्गस्या-साधकत्वप्रयोजको न तु सोपाधिक इति प्रतिपादनार्थत्वान्न तदिति वाच्यम् । एतत्प्रतिपादनस्य प्रकृतासङ्गतत्वेन तदर्थत्वायोगादित्यतः अमानस्त्वि'त्याद्यव्यवहितपूर्वग्रन्थेन तथा प्रतिपादनस्य सङ्गत्य-भावेपि 'अदृष्टे व्यभिचारे त्वि'ति व्यवहितपूर्वग्रन्थोक्तायाः साध्यव्यभिचारे लिङ्गासाधनत्वहेतुताया सोपाधिकनिरुपाधिकसाधारणव्यभिचारमात्रस्यैव तत्प्रसङ्गवारणाय निरुपाधिकसाध्यव्यभिचाररूपतद्विशेष-पर्यवसानकथनेन प्रपञ्चनार्थतया तत्सङ्गतत्वात्नानुपपत्तिरित्यभिप्रेत्य तत्सङ्गततयोत्तरग्रन्थं योजयति अदृष्ट इति । ननु सोपाधिकसाधारणव्यभिचारमात्रस्यैव लिङ्गासाधनत्वप्रयोजकत्वे बाधकाभावान्न तद्विशेषस्य प्रयोजकत्वकल्पनायाः प्रयोजनं किञ्चिदित्यतो विशेषस्य प्रयोजकतां प्रतिबन्द्योपपादयति एतदुक्तं भवतीति । निरुपाधिक एव व्यभिचारोऽसाधनत्वे हेतुरित्युक्तम् । कस्तर्हि तत्र हेतुर्भवतीत्यत आह यस्त्विति ।

प०— प्रथमापवादशब्दः साध्यव्यभिचारपरोऽन्त्यः(न्यः)कारणविशेषपरः । उत्सर्गत इत्येतद-पवादविवर्जितमित्यस्य विशेषणमित्युपेत्य व्याचष्टे यल्लिङ्गमित्यादिना ।

सु०— कुत एतदित्यत आह अतो हीति ।

अनु०— अतो हि भोजनादीनामिष्टसाधनताऽनुमा ॥
मानं व्यवहृतौ नित्यं

एवशब्दोऽत्राध्याहार्यः । सोपाधिक(स्य)व्यभिचारस्याप्रामाण्यकारणत्वाभावादेव ह्यागामिभोजनादीनामिष्टसाधनतानुमानम् । यदि सोपाधिकोऽपि व्यभिचारोऽप्रामाण्यहेतुः । स्यात्तदा विमतं भोजनमिष्टसाधनं भोजनत्वात् ह्यस्तनभोजनवदित्यनुमानममानं प्रसज्येतेति । अप्रमाणमेव तदस्त्वित्यत आह व्यवहृताविति । कारणमिति शेषः । यदि व्यभिचारेणेदममानं स्यात्तदा प्रमेयत्वमिव व्यवहर्तृभिरमानतया निश्चीयेतापि । तथा च ततो भोजने प्रेक्षावतां प्रवृत्तिर्न स्यात् । ननु व्यभिचारिसाधनं सन्देहमावहति । सन्देहोऽपि भवति प्रवृत्तिहेतुरिति । सत्यम् । सन्देहः साशङ्कां प्रवृत्तिमुपजनयति न निरङ्कुशाम् । इयं तु निरङ्कुशा सर्वानुभवसिद्धेति । तदिदमुक्तं नित्यमिति । पूर्वेणैव संबन्धः ।

शे० — ननु सोपाधिकसाध्यव्यभिचारस्यासाधनत्वेऽतिप्रसङ्गकथनपरमुत्तरवाक्यमनर्थकमित्याशङ्क्याविशेषप्रतिपादनेन प्रागभिप्रेतप्रतिबन्दीसमर्थनार्थत्वान्न तदिति भावेनाविशेषसमर्थपरतयोत्तरग्रन्थं योजयितुं विशेषात्प्रतिबन्द्यनुपपत्तिशङ्कामुत्थापयति कुत इति । साध्यसाहित्यमात्रस्यानुमानप्रामाण्यप्रयोजकत्वे बाधकसद्भावान्निरुपाधिकसाहित्यस्यैव तत्प्रयोजकत्वेऽपि व्यभिचारमात्रस्यैवासाधनत्वप्रयोजकत्वे बाधकाभावान्न निरुपाधिकसाहित्यप्रतिबन्द्या निरुपाधिकव्यभिचारस्य तत्प्रयोजकत्वमित्यर्थः । नन्वत्र भोजनादीनामिष्टसाधनतानुमानस्य मानत्वमुच्यते । न तु सोपाधिकव्यभिचारस्यासाधनत्वप्रयोजकत्वे किञ्चिद्बाधकमिति । कथमनेनोक्तशङ्कापरिहार इत्यतोऽपेक्षितपूरणेन बाधकसमर्थनपरतया तद्योजयति एवशब्द इत्यादिना । तथाऽपि 'व्यवहृतावि'त्यनुमानस्य व्यवहृतिकारणत्वप्रतिपादनमनर्थकमित्याशङ्क्यामानत्वस्यानिष्टत्वोपपादनेन तदापादनस्येष्टापादनतयाऽऽभासत्वशङ्कापरिहारार्थत्वान्न तदिति भावेन तच्छङ्कापरिहारतया तद्योजयति अप्रमाणमेवेति । नन्वत्र व्यवहृतिकारणत्वानुक्तेः कथमनेनानिष्टत्वसमर्पणमित्यतोऽपेक्षितपूरणेन तद्योजयति ॥ कारणमिति शेष इति । नन्वमानत्वेऽपि तत्त्वेनानिश्चितत्वात्तता भोजनादौ प्रवृत्तिसम्भवान्न प्रवृत्तिकारणत्वेनानिष्टत्वसिद्धिरित्यतो नात्रामानत्वेन ततो भोजनादावप्रवृत्तिः साक्षादापाद्यते येनाप्रयोजकत्वं स्यात् । किन्नाम यदिदममानं स्यात्तदा तत्त्वेन प्रमेयत्वादिवन्निश्चीयेतेति तन्निश्चयापादनद्वारैवेति नाप्रयोजकत्वमित्याशयेन योजयति यदीति । तथाऽपि 'नित्यमि'ति प्रवृत्तेर्निश्शङ्कत्वप्रतिपादनमनर्थकमित्याशङ्क्य सन्देहजन्यत्वनिरासेन प्रवृत्तेरन्यथोपपत्तिशङ्कापरिहारार्थत्वान्न तदिति भावेनान्यथोपपत्तिशङ्कानिरासपरतया तद्योजयितुं तां शङ्कामुत्थापयति नन्विति ॥ पूर्वेणेति । व्यवहृतौ कारणमित्यनेनेत्यर्थः ।

श्री० — ततः अनुमानत्वनिश्चयात् ।

सु० — भवतीदमनुमानं प्रमाणं किन्तु व्यभिचाराभावादेवेत्यत आह व्यभिचारो हीति ।

अनु० — व्यभिचारो हि तत्र च ॥

तत्र भोजनत्वादौ साधने साध्येष्टसाधनत्वव्यभिचारः स्फुट एव । क्वचिद-निष्टसाधनत्वस्याप्युपलम्भात् । किन्त्वपथ्यत्वाद्युपाधिनिबन्धन एव । न च पथ्यत्वादिविशिष्टमेव भोजनत्वादिकं साधनमिति वाच्यम् । तस्य प्रवृत्त्युत्तरकालं फलानुमेयस्य प्रागसिद्धेः । न खलु फलमूलादीनां विषपत्रिकाद्यनुपहतत्वमस्मदादिभिरवधारयितुं शक्यते । तस्मान्निरुपाधिक एव व्यभिचारोऽसाधनत्वहेतुरिति । तदेवं प्रमाणबाधस्य दूषणत्वे प्रकारसंभवान्नासदाश्रयत्वस्यादूषणत्वे तत्प्रतिबन्दी युक्तेति ।

शे० — तथाऽपि 'व्यभिचारो हि तत्र चे'ति भोजनत्वस्येष्टसाधनत्वेन व्यभिचारप्रदर्शनमनर्थकमित्याशङ्क्यातो हीत्युक्ताया इष्टसाधनतानुमानप्रामाण्ये सोपाधिकव्यभिचारस्याप्रामाण्यकारणत्वाभावमात्रनिबन्धनताया अनुमानप्रामाण्यस्यान्यथोपपत्तिनिरासेन समर्थनार्थत्वान्न तत्प्रदर्शनमनर्थकमित्याशयेनानुमानप्रामाण्यस्यान्यथोपपत्तिशङ्कानिरासपरतया तत्सङ्गमयितुं तां शङ्कामुत्थापयति भवतीत्यादिना । प्रकृतमुपसंहरति तस्मादिति । परमप्रमेयमुपसंहरति तदेवमिति ॥ प्रकारसंभवादिति । पक्षादिप्रविभागोत्तरकालमविषयवृत्तित्वसंपादकत्वं व्याप्तिग्रहणसमये हेतौ व्याप्तिभङ्गहेतुत्वमित्येवंरूपप्रकारसंभवादित्यर्थः ।

---

प० — 'प्रत्यक्षागममूलाः स्युरि'त्यादेः प्रकृतोपयोगं दर्शयन्नुपसंहरति तदेवं प्रमाणबाधस्येति । आश्रयासिद्धेरदोषत्वम् ।

श्री० — स व्यभिचार औपाधिक इत्याह किन्त्विति ।

सु० — एवमसदाश्रयत्वस्य हेतुदूषणत्वं निराकृत्य व्यधिकरणत्वस्यापि तन्निराकुर्वाणो यदि व्यधिकरणोऽपि हेतुः स्यात्तदाऽऽत्मा(ऽनि)नित्यः काकस्य कार्ष्ण्यादित्ययमपि हेतुः स्यादित्यतिप्रसङ्गाद्वा व्यधिकरणत्वस्य हेतुदूषणत्वमङ्गीकर्तव्यम् व्याप्त्यभावाद्वा पक्षधर्मताऽभावाद्वेति विकल्पं मनसि निधायाद्यं निराचष्टे व्याप्तत्व इति ।

अनु० — व्याप्तत्वे व्याश्रयत्वं तु कथमेव हि दूषणम् ।

साधनस्य साध्येन व्याप्तत्वे सति तेन विभिन्नाश्रयत्वं कथमेव हि दूषणम् । न कथञ्चित् । इदमुक्तं भवति । काकस्य कार्ष्ण्यं व्याप्त्यभावादेव हि नित्यत्वासाधकं न पुनर्व्यधिकरणत्वात् । अतो नातिप्रसङ्गः । कुत एतत् । व्याप्त्याद्यङ्गसाकल्ये व्यधिकरणत्वमात्रेणासाधक-

**त्वस्य क्वाप्यनुपलम्भात् । घटस्य कृतकत्वात् शब्दोऽनित्य इत्यादौ दृष्टमिति चेत् । घटस्येत्येतद्धेतुविशेषणं न वा । आद्ये वैयर्थ्यम् । द्वितीये कथमसाधकत्वम् । (अथ) अनित्यत्वव्याप्तमपि कृतकत्व घटवृत्ति न शब्देऽनित्यत्वं साधयतीति चेन्न । व्याप्त्यभावात् । तथा च वक्ष्यामः ।**

**शे०**— ननु 'व्याप्तत्वे व्याश्रयत्वं त्वि'त्युक्तग्रन्थेन व्याप्त्याद्यङ्गसाकल्ये वैयधिकरण्यमात्रेणासाधकत्वस्य क्वाप्यनुपलम्भात्काकस्य कार्ष्ण्येऽव्याप्तत्वमेवासाधकत्वे प्रयोजकं न तु व्याश्रयत्वमित्युच्यते तदनर्थकम् । न च काकस्य कार्ष्ण्येऽव्याप्तत्वव्याश्रयत्वयोरुभयोरपि सद्भावे तदीयासाधनतायामव्याप्तत्वमेव प्रयोजकं न तु व्याश्रयत्वमिति कुतो नियम्यत इत्याशङ्कापरिहारार्थत्वात्तत्प्रयोजकत्वव्युत्पादनस्य नानर्थक्यमिति वाच्यम् । तथा सति व्यधिकरणत्वस्यादोषत्वे आत्मा नित्यः काकस्य कार्ष्ण्यादित्यस्यापि साधकत्वं स्यादित्यतिप्रसङ्गस्थलेऽव्याप्तत्वादेवासाधकत्वं न तु व्यधिकरणत्वादतो नातिप्रसङ्ग इति भाष्यकारीयोक्तिं विना तादृशशङ्काऽनुदयेन तदुत्थापनाय काकस्य कार्ष्ण्येऽव्याप्तत्वस्य तदसाधकत्वप्रयोजकत्वेन भाष्यकारैरेवावश्यवक्तव्यतया तदवचनाद्भाष्ये न्यूनत्वापातादित्यतोऽत्रोक्तरूपस्यातिप्रसङ्गपरिहारांशस्य स्पष्टतया शिष्यैरेव ज्ञातुं शक्यत्वान्न तदनुक्तिर्भाष्ये न्यूनत्वापादिकेत्यभिप्रेत्य स्वयं तदंशपूरणपूर्वकमुक्तामनियमशङ्कामुत्थाप्य तत्परिहाराय तत्र नियामकसमर्पकतयोक्तभाष्यं योजयितुमाह **इदमुक्तं भवतीति** ॥ **वैयर्थ्यमिति** । (तथा च व्यर्थविशेषणत्वेनैव दुष्टत्वं न व्यधिकरणत्वेनेति भावः) कृतकत्वमात्रस्यानित्यत्वाव्यभिचारित्वादिति भावः । तथा च न विशिष्टे वक्ष्यमाणरीत्या व्याप्तिरिति हृदयम् ॥ **कथमसाधकत्वमिति** । व्याप्त्याद्यङ्गसाकल्याद्वैयधिकरण्याभावाच्चेति भावः ॥ **घटवृत्तीति** । वस्तुतो घटवृत्तीत्यर्थः । **शब्देऽनित्यत्वं** वस्तुतः शब्दवृत्ति यदनित्यत्वं तदित्यर्थः ॥ **व्याप्त्यभावादिति** । वस्तुतो घटगतस्य कृतकत्वस्य वस्तुतः शब्दगतं यदनित्यत्वं तेन व्यधिकरणतया व्याप्त्यभावादित्यर्थः । नन्वविनाभाव एव व्याप्तिर्न तु संबन्धविशेषः । तथा च व्याश्रययोः संबन्धविशेषरूपव्याप्त्यसंभवेऽप्यविनाभावरूपव्याप्तेरविकलत्वात्कथमत्र व्याप्त्यभाव इत्यतोऽविनाभावमात्रस्यैव व्याप्तित्वेपि कृतकत्वेऽनित्यत्वाविनाभावस्य यत्र कृतकत्वं तत्रानित्यत्वमिति सामानाधिकरण्यगर्भितत्वस्य 'स्यादेव व्याप्तिस्तावदनुमानाङ्गमि'त्यादिना ग्रन्थेनानुपदमेव शङ्कासमाधानाभ्यां वक्ष्यमाणत्वान्न घटगतकृतकत्वस्य शब्दगतानित्यत्वेनाविनाभावोऽपि संभवतीत्याह **तथा च वक्ष्याम इति** ।

**स०** **तथा च वक्ष्याम इति** । 'अविनाभावमात्रस्य व्याप्तित्वात् । स च क्वचिदेकाश्रयतामन्तर्भाव्य भवति । यथा कृतकस्यानित्यत्वेन । अत एवान्यगतेन तेन नान्यत्र नित्यत्वसिद्धिरि'त्यादिना वक्ष्याम इत्यर्थः ।

प०— **इत्यादौ दृष्टमिति** । असाधकत्वमित्यनुषङ्गः । **तथा च वक्ष्याम इति** । घटगतकृतकत्वं शब्दनिष्ठानित्यत्वव्याप्यं नेत्येतन्न ह्याशैवात्र साधिकेत्येतद्व्याख्यानावसरे अविनाभावः क्वचिदेकाश्रयतामन्तर्भाव्य भवति । यथा कृतकत्वस्यानित्यत्वेनेति वक्ष्याम इत्यर्थः ।

या०— ननु विभिन्नाश्रययोरपि धूमाग्न्योर्व्याप्तिसद्भावात्कथमत्र व्याप्त्यभाव इत्यत आह **तथा च वक्ष्याम इति** । कृतकत्वानित्यत्वयोरेकाश्रयतामन्तर्भाव्यैवाविनाभावो न धूमाग्न्योरिव भिन्नाश्रयताम् । धर्मस्वाभाव्यात् अत एवान्यगतेन तेन नान्यत्रनित्यतासिद्धिरित्यनुपदमेव वक्ष्याम इत्यर्थः ।

श्री०— **वैयर्थ्यमिति** । तथा च व्यर्थविशेषणत्वेनैव दुष्टत्वं न व्यधिकरणत्वेनेति भावः ।

सु० — **न केवलं व्याप्त्याद्यङ्गसाकल्ये व्यधिकरणत्वमात्रेण दुष्टत्वं न दृष्टम्** । **किन्तु दृष्टं च व्यधिकरणस्यापि व्याप्त्यादिसम्पत्तिमतः साधकत्वमित्याह** रोहिणीति ।

अनु०— रोहिण्युदय आसन्नः कृत्तिकाऽभ्युदिता यतः ॥

इत्युक्ते साधनं नो किं ।

**नदीपूरदर्शनेनोत्तरदेशे वृष्ट्यनुमानं प्रत्यग्रशरावचक्रभ्रमदर्शनेन कुलालासत्त्यनुमानं चाशङ्क्य केनचिदुक्तं नोत्तरदेशोऽत्र पक्षः किन्नाम नदी । तद्धर्मेणैव पूरेण तद्धर्मस्यैव वृष्टिमदुत्तरदेशसम्बन्धस्य साध्यत्वम् । एवं शरावचक्रधर्माभ्यां प्रत्यग्रत्वभ्रमाभ्यां तद्धर्मस्यैव कुलालासत्तेरनुमानमिति । अत इदमुदाहरणान्तरमुदितम् । न हि त(थेहरो)त्रेवेह रोहिण्याः कृत्तिकाया वा द्वौ धर्मौ सम्पादयितुं शक्यौ ।**

**नन्विहापि कालं पक्षीकृत्य प्रयोक्तव्यम् । विमतः कालो रोहिण्युदयासत्तिमान्कृत्तिकोदयवत्कालत्वादतीतकालवदिति । ( मैवम् ) एवं सति देशं कालं वाऽऽदाय सामानाधिकरण्यस्य सर्वत्र सत्त्वाद्व्यधिकरणासिद्ध एव न स्यादिति व्यर्थं तत्परिसङ्ख्यानम् । एवमप्रयोगे व्यधिकरणत्वं सावकाशमिति चेन्न । तथा सत्यसिद्धरुक्तिदोषत्वाभावप्रसङ्गात् । न चोक्तिदोषत्वमपि । व्यधिकरणतयोक्तेरपि साध्यसिध्यङ्गत्वानुभवात् । एवमेव हि लौकिकानामुक्तयः । परीक्षका अपि हि 'तत्प्रामाण्यमाप्तप्रामाण्यादि'त्यादि प्रयुञ्जते । तदिदमुक्तम्** इति **व्यधिकरणतया** उक्तेऽप्येतद्वाक्यं, साधनं साध्यसिध्यङ्गं नो किं भवत्येवेति ।

शे०—ऊर्ध्वदेशो वृष्टिमानधोदेशे नदीपूरादित्यादिप्रसिद्धव्यधिकरणोदाहरणपरित्यागेन अप्रसिद्धतदुदाहरणेन प्रसक्तां भाष्यकाराणामचातुरीं तदुदाहरणे प्रयोजनकथनेन परिहरति **नदीपूरदर्शनेनेति** । अधोदेश इति शेषः ॥ **प्रत्यग्रेति** । प्रत्यग्रशरावश्च चक्रभ्रमश्च तयोर्दर्शनेनेत्यर्थः ॥ **किन्नामेति** ।

इयं नदी वृष्टिमदूर्ध्वदेशसंबद्धा पूरवधोदेशसंबद्धत्वात्संमतवदित्यनुमानप्रकारोऽत्र बोध्यः ॥ **तद्धर्मस्यैवेति** । शरावचक्रधर्मस्यैवेत्यर्थः । शरावः कुलालासत्तिमान्प्रत्यग्रत्वात् चक्रं कुलालासत्तिमभ्रमणवत्त्वादित्यनुमानप्रकारोऽत्र विवक्षितो न त्वयं देशः कुलालासत्तिमानिति । येन वैयधिकरण्यं स्यादिति भावः ॥ **द्वौ धर्माविति** । साध्यसाधनभूताविति शेषः । ततश्च रोहिण्युदयासत्तेः कालगतत्वात्कृत्तिकोदयस्य च कृत्तिकागतत्वादत्र वैयधिकरण्यमपरिहार्यमेवेति भावः ।

नन्वत्र 'रोहिण्युदय आसन्नः कृत्तिकाभ्युदिता यतः इति साधनं नो किमि'त्येतावतैव व्याप्त्यादिमतो व्यधिकरणस्य साध्यसिद्ध्यङ्गतोपदर्शनेन तददूषणत्वसिद्धे'रित्युक्ते साधनं नो किमि'त्यत्र मूले उक्तपदानर्थक्यम् । न च व्यधिकरणतयोक्तेरपि साध्यसिद्ध्यङ्गत्वोपदर्शनार्थं तदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न च व्यधिकरणत्वस्योक्तिदूषणत्वाभावप्रतिपादनार्थत्वान्न तदिति वाच्यम् । तत्प्रतिपादनस्यापि प्रयोजनाप्रतीतेः । न चोक्तिदोषत्वशङ्कापरिहारार्थं तदिति वाच्यम् । अर्थदोषत्वसंभवे तत्परित्यागेनोक्तिदोषत्वशङ्काया एवानुदयेन तत्परिहारार्थत्वायोगात् । न चार्थस्य साध्यसिद्ध्यङ्गत्वोपपादनेन व्यधिकरणताया अर्थदोषत्वाभावस्य सिद्धान्तिनोपपादितत्वाद्युक्तः पूर्वपक्षिणस्तत्परित्यागेनोक्तिदोषत्वाङ्गीकार इति वाच्यम् । प्रयोगविपरिणामेन तस्य समानाधिकरणत्वसिद्ध्या व्यधिकरणोदाहरणत्वस्यैव पूर्वपक्षिणं प्रत्यसम्मतत्वेन भाष्यकारेण तदीयसाध्यसिद्ध्यङ्गत्वोपवर्णनेन व्यधिकरणतायास्तत्त्वेन परसम्प्रतिपन्नपद्मविकासाद्युदाहरणेष्वदोषत्वस्यालाभेन तत्परित्यागस्यैवायोगेनोक्तिदोषत्वशङ्काया एवानुत्थानात् । कथञ्चित्तदुदयेऽपि तस्याः स्पष्टदूषणत्वेन तत्परिहाराय तथोक्तेः साध्यसिद्ध्यङ्गत्वकथनपर्यन्तत्वस्य भाष्यकारीययत्नस्यानर्थक्याच्चेत्याशङ्क्य रोहिण्युदय आसन्नः कृत्तिकाया उदितत्वादिति व्यधिकरणस्य सिद्धान्तिनोपवर्णितायाः साध्यसिद्ध्यङ्गताया भञ्जकत्वेन पूर्वपक्ष्युपन्यस्तस्य प्रयोगविपरिणामेन समानाधिकरणत्वस्य समानन्यायतया व्यधिकरणतया परसम्प्रतिपन्नेषु पद्मविकासादिष्वपि सिद्धान्तिनोपवर्णयितुं शक्यत्वेन पूर्वपक्षिणं प्रति तद्दोषत्वपरिसंख्यानवैयर्थ्यस्योद्भावयितुं शक्यत्वात्तत्परिहाराय युक्त एव पूर्वपक्षिण उक्तिदोषत्वाभ्युपगमो व्यधिकरणत्वस्य । यद्यपि तत्परिहारो वक्ष्यमाणरीत्या प्रकारान्तरेणापि संभवति । तथाऽपि वस्तुतत्त्वकथनाय साध्यसिद्ध्यङ्गत्वोपवर्णनेन तददोषत्वस्यावश्यवक्तव्यत्वान्न तदर्थकोक्तपदवैयर्थ्यमित्यभिप्रेत्य तत्परतयोक्तिपदसार्थक्यं वर्णयितुं सिद्धान्तिनोद्भाव्यस्य व्यधिकरणपरिसंख्यानवैयर्थ्यप्रसङ्गस्योत्थापनाय प्रकृतोदाहरणस्य समानाधिकरणत्वशङ्कामुत्थापयति **नन्विहापीति** ॥ **सर्वत्र सत्त्वादिति** । व्यधिकरणतया परसम्प्रतिपन्नपद्मविकाससमुद्रवृद्धिघटगतकृतकत्वादिना सूर्यचन्द्रोदयशब्दानित्यत्वाद्यनुमानस्थलेऽपि अयं कालः सूर्योदयवान् पद्मविकासवत्कालत्वात् सम्मतवत् अयं कालश्चन्द्रोदयवान् समुद्रवृद्धिमत्कालत्वात्सम्मतवदित्यादिप्रकारेणेति शेषः ॥ **उक्तिदोषत्वेनेति** । तद्दोषत्व-

प्रसङ्गेनेत्यर्थः । यद्यप्यर्थदोषस्यापि तद्द्वारा वचनदोषत्वस्य व्यवस्थापितत्वान्नोक्तिदोषत्वमनिष्टम् । तथाऽपि साक्षात्तद्दूषणत्वप्रसङ्गे तात्पर्यान्नानुपपत्तिरिति भावः ॥ **अर्थेति** । अत्रापि साक्षादर्थदोषत्वं न स्यादित्यत्र तात्पर्यम् । अतो वचनदोषस्यापि तद्द्वाराऽर्थदोषत्वसंभवादप्रयोजकत्वान्न तदापादनं युक्तमिति शङ्काऽनवकाश इति ध्येयम् । अङ्गीकृत्यैव चोक्तिदोषत्वमसिद्धेरर्थदोषत्वाभावप्रसञ्जनं कृतम् । वस्तुतस्तु नोक्तिदोषत्वमपीत्याह **न चेति** । नापीत्यर्थः । तत्र हेतुमाह **व्यधिकरणतयेति** ॥ **साध्येति** । रोहिण्युदय आसन्नः कृत्तिकाया उदितत्वादित्युक्तावपि श्रोतॄणामनुमित्युत्पत्तेरिति भावः । ननु च व्यधिकरणतयोक्तिरेवासिद्धेत्यतः किं लौकिकानां तथोक्तिर्नास्तीत्यभिमतं किं वा परीक्षकाणामिति विकल्पं मनसि निधायाद्यं प्रत्याचष्टे **एवमेवेति** । रोहिण्युदय आसन्नः कृत्तिकाया उदितत्वादित्येवमेवेत्यर्थः । द्वितीयं न्यायसूत्रकारीयव्यधिकरणप्रयोगोपदर्शनेन निराचष्टे **परीक्षका अपीति** । नन्वत्र भाष्ये तथोक्तेः साध्यसाधकत्वस्यानुक्तेः कथमनेनोक्तिदोषत्वनिरास इत्यत उक्तमर्थं मूलारूढं करोति **तदिदमिति** ।

प० — **नदी तद्धर्मेणेति** । नदी पक्षः । वृष्टिमदुत्तरदेशसंबद्धा पूरवत्त्वात्संमतवत् । शरावः कुलालासत्तिमान् प्रत्यग्रत्वात् । चक्रभ्रमः कुलालासत्तिमान् चक्रभ्रमत्वात्संमतवदित्यनुमानमित्यर्थः ॥ **द्वौ धर्माविति** । साध्यसाधनरूपावित्यर्थः ॥ **सर्वत्र सत्त्वादिति** । कालः शब्दानित्यत्ववान् घटीयकृतकत्ववत्त्वात् इत्यादिरूपेण सत्त्वादित्यर्थः ॥ **एवमेव हीति** । ऊर्ध्वदेशो वृष्टिमान् अधोदेशे नदीपूरात् । रोहिण्युदयः आसन्नः कृत्तिकाया उदितत्वादित्येवमेव हीत्यर्थः ॥ **परीक्षका अपीति** । तार्किकादय इत्यर्थः । **तत्प्रामाण्यं** वेदप्रामाण्यम् । आप्तस्येश्वरस्य प्रमाणत्वादिति गौतमसूत्रस्यार्थः । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि'ति जैमिनिसूत्रादिरादिपदार्थः ।

या० — **प्रत्यग्रेति** । प्रत्यग्रशरावश्च चक्रभ्रमश्च तयोर्दर्शनेनेत्यर्थः ॥ **तद्धर्मस्यैवेति** । तथा च शरावं चक्रं वा पक्षीकृत्य कुलालासत्तिमदित्येवानुमानमभिमतं । न त्वयं देशः कुलालासत्तिमानिति । येन वैयधिकरण्यं स्यादिति भावः ॥ **द्वौ धर्माविति** । साध्यसाधनभूतावित्यर्थः । रोहिण्युदयासत्तेः कालगतत्वात्कृत्तिकाभ्युदयस्य च कृत्तिकागतत्वादिति भावः ॥ **सर्वत्र सत्त्वादिति** । घटीयकृतकत्वशब्दानित्यत्वयोः कालमादाय नदीपूरवृष्ट्योश्च स्थूलदेशमादाय सामानाधिकरण्यस्य सत्त्वादित्यर्थः ॥ **एवमेव हीति** । 'रोहिण्युदय आसन्नः कृत्तिकाभ्युदिता यत' इत्येवमेव हीत्यर्थः ।

श्री० — तद्धर्मेण नदीधर्मेण । **तद्धर्मस्य** नदीधर्मस्य । तथा च नदी वृष्टिमदूर्ध्वदेशसम्बद्धा पूरवदधोदेशसम्बन्धत्वादित्यनुमानं ज्ञेयम् । **तद्धर्मस्य** शरावादिधर्मस्य । **कुलालासत्तेः** कुलालासत्तिमद्देशसम्बन्धस्य । तथा च शरावं कुलालासत्तिमद्देशसम्बद्धं प्रत्यग्रत्वात् । चक्रं कुलालासत्ति-

मद्देशसम्बद्धं भ्रमवत्त्वादित्यनुमानं द्रष्टव्यम् । **असिद्धेः** व्यधिकरणासिद्धेः । तर्हि उक्तिदोषत्वमेवास्तु । वचनद्वारा अर्थदोषोपपत्तेरित्यत आह **न चेति** ।

**च०** - **प्रत्यग्रशरावेति** । नवीनशरावेत्यर्थः । 'प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नव' इति कोशात् । तादृशशरावस्य चक्रभ्रमस्य च दर्शनेनेत्यर्थः ।

**सु०— किञ्च कालादिकमादाय प्रयोगविपरिणामः कार्य इत्यत्र (किं) नैयायिकादिसमयो नियामकः, किंवा(त्र) प्रमाणमस्ति । आद्यं दूषयति** न हीति ।

**अनु०—** न ह्याज्ञैवात्र साधिका ॥

अत्र **उपपत्ति(सिद्ध्य)ऽर्थे) साध्येऽर्थे** । आज्ञैव **समयमात्रम् । तथा सति सर्वं वाङ्मात्रेणैवोपदेष्टव्यम् । न पुनः क्वापि प्रमाणं वाच्यम् । विपरीताज्ञया सत्प्रतिपक्षता च स्यादिति** हि शब्दार्थः । **आज्ञा खलु प्रमाणान्तराविषये धर्मादौ भवति । सा चावगताप्तभावानाम् । नापि द्वितीयः । तदनुपलम्भात्** ।

**शे०—** तथाऽपि न हीत्यादिभाष्यखण्डवैयर्थ्यमित्याशङ्क्य प्रयोगविपरिणामे दूषणान्तरकथनपरत्वान्न तदिति भावेन तत्परतया तं योजयति **किञ्चेति** ॥ **समय इति** । तदभिमतसाध्यसाधनसामानाधिकरण्यनियमप्रतिपादकमाज्ञारूपं वाक्यमित्यर्थः । नन्वाज्ञामात्रस्यापि क्वचित्साधकत्वात्कथं तस्य तन्निषेध इत्यतो मूलेऽत्रेत्युक्तम् । तदयुक्तम् । अविशेषेणान्यत्रेवात्रापि तन्मात्रस्य साधकत्वसंभवादित्यतो यथेदं विशेषसमर्पकं स्यात्तथा व्याचष्टे **अत्रेत्यादि** । नन्वत्राज्ञामात्रस्य साधकत्वं निषिध्यते । न तु समयस्येति कथमस्य मूलस्य, समयस्य साधकत्वनिरासकतया व्यापार इत्यतोऽत्राज्ञापदस्य समयपरत्वान्नानुपपत्तिरित्यभिप्रेत्य तत्परतया तद्व्याचष्टे **आज्ञैवेति** । तथाऽपि मूले हिशब्दोऽनर्थक इत्याशङ्क्य समयमात्रस्य साधकत्वे बाधककथनार्थत्वान्न तदिति भावेन तत्सूचितबाधकमुपदर्शयति **तथा सतीति** । क्व तर्ह्याज्ञायाः साधकत्वमित्यत आह **आज्ञेति** । तथा सति धर्मादेर्बाहुरूप्यप्रसङ्गः । तत्साधकसमयानां बहुविधत्वात् । न चैकस्य वस्तुनो बाहुविध्यं संभवतीत्यत आह **सा चेति** ।

**प०—** अत्रेत्यनुवादः उपपत्तिसिद्धेऽर्थे इति व्याख्या । कथं तर्हि मन्वाद्याज्ञामात्रेण तदुक्तानुष्ठानमित्यत आह **आज्ञा खल्विति** ।

**श्री०— धर्मादौ भवतीति** । अयं चोपपत्तिसाध्योऽर्थ इति न प्रमाणान्तराविषय इति भावः । **सा च** आज्ञाऽपि । तथा च त्वय्याप्तिरस्माकं न निश्चितेति त्वत्समयोऽप्रयोजक **इत्यर्थः** ।

**सु०**— स्यादेतत् । व्याप्तिस्तावदनुमानाङ्गम् । संबन्धविशेषश्च व्याप्तिः । न च व्याश्रययोः संबन्धो युज्यते । अतो व्याश्रयत्वस्य दोषत्वात्सम्म(तवि)ते विषये विपरिणाम इति । मैवम् । अविनाभावमात्रस्य व्याप्तित्वात् । अविनाभावश्च क्वचिदेकाश्रयतामन्तर्भाव्य भवति । यथा कृतकत्वस्यानित्यत्वेन । अत एवान्यगतेन तेन नान्यत्रानित्यतासिद्धिः । क्वचिद्विभिन्नाश्रययोरेव । यथा धूमस्याग्निना । धूमाग्नी खलु न समवायवृत्त्या समानाश्रयौ । नापि संयोगवृत्त्या । ऊर्ध्वाधोदेशसंयोगित्वात् । (धूमस्याधोदेशसंयोगस्य सिद्धत्वात्) । तथाऽप्येकपर्वतसंयोगिता द्वयोरस्तीति चेन्न । तथा सत्यग्न्यर्थिनो नियमेन प्रदेशविशेषे प्रवृत्त्यनुपपत्तेः । धूम एव धूमत्वेन मूलेऽग्निमान्साध्यत इति चेत् । किमेषा लौकिकी प्रतीतिः । आहोस्वित्समयसिद्धये विपरिणामः क्रियते । न प्रथमः । लौकिका ह्यूर्ध्वदेशं धूमवन्तमवलोक्याधोदेशं वन्हिमन्तमवगच्छन्ति । न द्वितीयः । निर्मूलत्वात् । अपि च देहादीनां तावत्परेण क्षणिकता स्वीक्रिय(ऽऽस्थीय)ते । तत्र पतनकर्मणा गुरुत्वानुमानं दुर्घटं स्यात् । न हि तयोः कालतः सामानाधिकरण्यम् । कार्यकारणभावात् । नापि देशतः । विभिन्नद्रव्याश्रयत्वात् । अतः कस्यचिद्विभिन्नाश्रयेणैवाविनाभावः ।

**शे०**— व्याप्त्यभावाद्वेति प्राग्विकल्पितद्वितीयपक्षस्य पृथगनिरासान्मूले न्यूनतामाशङ्क्य 'व्याप्तत्वे व्याश्रयत्वं त्वि'ति पूर्वग्रन्थेनैव निरस्तत्वात्पृथगनिरासो न दोषायेत्यभिप्रेत्य तत्पक्षनिरासकतयाऽपि तमेव ग्रन्थं योजयितुं प्राग्विकल्पितं द्वितीयपक्षमुत्थापयन्नेव प्रमाणोपदर्शनेन प्रागुक्तं प्रयोगविपरिणामं चोपपादयति **स्यादेतदिति** । व्याप्तत्वेऽविनाभावमात्रस्यैवानुमितिहेतुसंबन्धव्याप्तित्वे सति व्याश्रयत्वं सामानाधिकरण्यरूपसम्बन्धविशेषाभावः कथमेव दूषणं न कथमपि । ततश्च व्याश्रययोः सम्बन्धरूपविशेषरूपव्याप्त्यसम्भवेऽप्यनुमितिहेतुभूतोक्तरूपव्याप्तिसद्भावान्न व्याप्त्यनुपपत्तिः । नापि तथा सम्मते विषये प्रयोगविपरिणामस्य कर्तव्यत्वसिद्धिरिति ग्रन्थयोजनामभिप्रेत्य समाधत्ते **मैवमिति** । ननु विभिन्नाश्रययोरप्युक्तरूपव्याप्तिसत्त्वे कृत्तिकागतेनोदयेन रोहिण्युदयासत्तेरिव घटगतकृतत्वेन शब्दगतानित्यत्वस्यापि सिद्धिः स्यादित्यतोऽविनाभावस्य सर्वत्रैकरूप्याभावेन घटगतकृतकत्वस्य शब्दगतानित्यत्वेनाविनाभावाभावान्नातिप्रसङ्ग इत्यभिप्रेत्य तस्य नानारूपतामाह **अविनाभावश्चेति** ॥ **अत एवेति** । अत्राविनाभावस्य यत्कृतकं तदनित्यमिति सामानाधिकरण्यगर्भितत्वादेवेत्यर्थः । ननु धूमाग्न्योः सामानाधिकरण्यस्य सर्वसम्प्रतिपन्नत्वात्कथं तद्व्याप्तेर्विभिन्नाश्रययोरविनाभावत्वेनोदाहरणमित्यतः सामानाधिकरण्यघटकः सम्बन्धः **किं** समवायोऽभिमतः संयोगो वा । द्वितीयेऽपि किमवान्तरदेशमादाय सोऽभिमतः स्थूलदेशमादाय वेति विकल्पान्मनसि निधायाद्यौ क्रमेण दूषयति **धूमाग्नी खल्विति** । स्वस्वावयवसमवेतत्वान्न

तयोरेकत्र समवाय इति भावः । द्वितीये द्वितीयमाशङ्कते **तथाऽपीति** ॥ **धूम इति** । ततश्च धूमो मूलेऽग्निमान्धूमत्वादित्यनुमानं द्रष्टव्यम् ॥ **लौकिका इति** । तथा च त्वदुक्तकुसृष्टिमजानतामपि लौकिकानामूर्ध्वदेशे धूमदर्शनेनाधोदेशे वह्निविषयस्वार्थानुमितेः तदनुसारिपरार्थानुमितेश्च दर्शनान्नैवं लौकिकप्रतीतिरिति भावः ॥ **निर्मूलत्वादिति** । तथा चान्योन्याश्रय इति भावः ॥ **आस्थीयत इति** । अन्यथा परिमाणभेदानुपपत्तेरिति भावः ॥ **कार्येति** । तथा च पतनरूपकार्योत्पत्तिकाले गुरुत्वं नास्ति । एतदुपपादनायैव प्राग्देहादीनामिति वाक्यं प्रवृत्तम् ॥ **विभिन्नद्रव्याश्रयत्वादिति** । क्षणिकत्वेनैकत्र पतनगुरुत्वयोरभावादिति भावः ॥ **अतः कस्यचिदिति** । किमर्थं तर्हि विमतो गौर्गवयसदृशो गवयगतसादृश्यप्रतियोगित्वादिति प्रमाणलक्षणटीकायां साध्यसाधनयोः सामानाधिकरण्यसंपादनमिति चेन्न । तस्य परमतमाश्रित्य प्रवृत्तत्वात् । अत एव तत्रैव 'इति प्रयोगसंभवादि'त्युक्तम् । पद्धतौ 'चासौ गौरेतद्गवयसदृशोऽस्य गवयस्य तत्सदृशत्वादि'ति वैयधिकरण्येनैव प्रयोगो दर्शित इत्यवधेयम् ।

स० — **विभिन्नद्रव्याश्रयत्वादिति** । क्षणिकत्वेनैकत्र पतनगुरुत्वयोरभावादित्यर्थः ।

प० — व्याप्त्यभावाद्वेति प्राग्विकल्पितद्वितीयपक्षं विवरणपूर्वं शङ्कित्वा निराह **स्यादेतदित्यादिना ननु व्यधिकरणस्येत्यतः प्राक्तनग्रन्थेन** ॥ **सम्मतविषय इति** । रोहिण्युदय आसन्न इत्यादौ तत्प्रामाण्यमाप्तप्रामाण्यादित्यादौ च विमतः काल इति प्रागुक्तरीत्या विपरिणाम इत्यर्थः ॥ **अत एवेति** । एतद्व्याप्तेरेकाश्र(यघटितत्वा)यावृत्तित्वादेवेत्यर्थः । एतेन तथा च वक्ष्याम इति प्रागुक्तं स्पष्टीकृतं भवति ॥ **विभिन्नद्रव्याश्रयत्वादिति** । प्रतिक्षणपरिणामे भेदोपलम्भेन देहलताफलादीनां क्षणिकत्वमिति पक्षे यत्र पतनं तत्रत्यं गुरुत्वं न तस्य कारणं नैककालीनत्वात् । किन्तु पूर्वपूर्वक्षणिकद्रव्यगतमेव गुरुत्वं उत्तरोत्तरदेहादिद्रव्यगतपतनहेतुरिति वाच्यम् । तथाच हेतुसाध्ययोर्वैयधिकरण्यमिति भावः ।

या० — **अविनाभावमात्रस्येति** । अनेन व्याप्तत्वेऽविनाभावरूपव्याप्त्याश्रयत्वं सामानाधिकरण्यरूपसंबन्धविशेषाभावः कथं दूषणमिति द्वितीयपक्षोत्तरत्वेनापि मूलं योजितमित्यवगन्तव्यम् ।

श्री० **धूम इति** । ततश्च धूमो मूलेऽग्निमान्धूमत्वादित्यनुमानं द्रष्टव्यम् । **आस्थीयते** परिमाणभेदेनावयवोपचयाभ्यां वेति शेषः ॥ **कार्येति** । तथा च पतनरूपकार्योत्पत्तिकाले गुरुत्वं नास्ति । एतदुपपादनायैव प्राक् 'देहादीनामि'ति वाक्यं प्रवृत्तम् । **विभिन्नेति** । देहादीनां क्षणिकतापक्षे कारणीभूतगुरुत्वाश्रयकार्यभूतपतनाश्रयदेहयोर्भिन्नत्वादिति भावः ।

**सु०— ननु व्यधिकरणस्य पक्षधर्मता नास्तीति चेन्मा भूत् । तन्नियमस्य निर्निबन्धनत्वात् । तथा सति साध्य(स्य) नियतदेशता कथं सिद्ध्येदिति चेद्व्याप्तिस्वभावादिति ब्रूमः । यथा हि । यत्कृतकं तदनित्यमिति सामानाधिकरण्यमन्तर्भाव्य व्याप्तेः कृतकत्वं स्वाश्रय एवानित्यत्वं गमयति । तथा कृत्तिकोदयो व्यधिकरणयैव रोहिण्युदयासत्त्या व्याप्त इति तां तथैव गमयति । यथा च सामानाधिकरण्येऽप्यस्ति प्रदेशादिनियमस्तथा वैयधिकरण्येऽपीति को दोषः । तस्माद्यत्रेदं तत्रेदमितिवद्यदेदं तदेदमितिवत् यदेवं तदेवमितिवच्च यदीदं तर्हीदमिति व्याप्तिसंभवात् । व्याप्त्यनुरोधेनैव हेतुसिद्धेरावश्यकतया पक्षधर्मतानावश्यकत्वाद्युक्तं व्यधिकरणस्यापि हेतुत्वमिति ।**

शे०— तृतीयपक्षोत्तरत्वेनाप्येतदेव मूलं योजयितुं तमुत्थापयति **नन्विति** । व्याप्तत्वे साध्यस्य नियतदेशतासाधकव्याप्तिस्वभावत्वे । व्याश्रयत्वं विगताश्रयत्वमपक्षधर्मत्वमिति यावत् । **कथमेव हि दूषणं** न कथमपीति वाक्ययोजनामभिप्रेत्य दूषयति **मा भूदिति** ॥ **तथा सतीति** । हेतोरपक्षधर्मत्व इत्यर्थः । साध्यस्य नियतदेशतासिद्धेः पक्षधर्मतासाध्यत्वेन तदभावे तदयोगादिति भावः । साध्यस्य नियतदेशतासाधकव्याप्तिस्वभावमुपदर्शयन्नेव तेन देशनियमसिद्धिमुपपादयति **यथा हीति** । साध्यस्य देशनियमसाधकव्याप्तिप्रकारसूचनेन देशनियमसिद्धिमुपपाद्य तत्रैव प्रदेशनियमसाधकव्याप्तिप्रकारसूचनेन तन्नियमसिद्धिमुपपादयति **यथा चेति** । अयमर्थः । यथा सामानाधिकरण्येऽपि, धूमेन तदधोभाग एव वन्हेः, तुलोन्नमनेन भागान्तर एवावनमनस्य, व्याप्यवृत्तिना द्रव्यत्वेनाव्याप्यवृत्तेः संयोगस्य अव्याप्यवृत्तिना संयोगेन व्याप्यवृत्तेर्द्रव्यत्वस्य च सिद्धिरिति पक्ष एव प्रदेशनियमः, समानकालत्वेऽपि, कादाचित्केन पतनेन स्थायिगुरुत्वस्य, स्थायिना शररत्नेन कादाचित्कनाशस्य च सिद्धिरिति कालनियमश्च परेण व्याप्तिस्वाभाव्यादुपपद्यते । तथा, यत्र यदा रसस्तत्र तदा रूपमिति समानदेशकालत्वेनेव, यत्र पाकजरूपं तत्र पाक इति समानदेशत्वमात्रेण, यदा कृत्तिकोदयस्तदा रोहिण्युदयासत्तिरिति समानकालत्वमात्रेणेव, च यदा यत्र नदीपूरस्तत्पूर्वकाले तदूर्ध्वदेशे वृष्टिरिति भिन्नदेशकालत्वेनैव व्याप्तिग्रहात्तत्स्वाभाव्यादेव वैयधिकरण्येऽपि प्रदेशादिनियमो मयाऽपि व्युत्पादयितुं शक्यत इति न काऽप्यनुपपत्तिरिति । ननु देशकालवैयधिकरण्ये कथं व्याप्तिग्रहः । यत्रेदं तत्रेदमिति वा यदेदं तदेदमिति वा देशतः कालतो वा सामानाधिकरण्येनैव व्याप्तेर्ग्राह्यत्वादित्याशङ्कामनुपपत्तिरूपव्याप्तिग्रहप्रकारोपदर्शनेन परिहरन्नुपसंहरति **तस्मादिति** ॥ **यदेवं तदेवमिति** । दैशिककालिकसामानाधिकरण्यग्रहणस्थलेऽपि यत्र यदेत्यादिरूपेण देशकालावनन्तर्भाव्य यत्साधनवत्तत्साध्यवदिति व्याप्तिग्रहवच्चेत्यर्थः ॥ **व्याप्ति-**

**सम्भवादिति** । अनुपपत्तिरूपव्याप्तिग्रहसम्भवादित्यर्थः ॥ **व्याप्त्यनुरोधेनेति** । व्याप्तिग्रहण-प्रकारानुरोधेनेत्यर्थः ॥ **हेतुसिद्धेरिति** । समुचितदेशादाविति शेषः ।

स०— **यदेवं तदेवमिति** । देशकालावनन्तर्भाय साध्यसाधनवत्तामात्रेण व्याप्तिबदित्यर्थः ।

प०— पक्षधर्मताभावाद्वेति पक्षं शङ्कते **नन्विति** ॥ **यत्रेदं तत्रेदमिति** । कृतकत्वानित्यत्वा-दिरिदंशब्दार्थः ॥ **यदेदमिति** । विशिष्टमेघोन्नतिः सुवृष्ट्यादिरिदंशब्दार्थः । **यदेवमिति** । द्रव्यत्व-गुणाश्रयत्वोपेतत्वादिरेवंशब्दार्थः ॥ **यदीदमिति** । कृत्तिकोदयरोहिण्युदयासत्यादिरिदंशब्दार्थः ॥ **व्यधिकरणासिद्धेरदोषत्ववादः ॥**

या०— **व्याप्तिस्वभावादिति** । अत्रापि **व्याप्तत्वे** व्याप्तिस्वभावसत्त्वे **व्याश्रयत्वं** विगताश्रयत्वं हेतोरपक्षधर्मत्वमिति यावत् । **कथं दूषणमिति** मूलं तृतीयपक्षदूषणपरतया योजितमिति ध्येयम् । तेन द्वितीयतृतीयपक्षयोर्दूषणं न प्रकृतमिति शङ्का नेति ध्येयम् ।

श्री०— यदि रोहिण्युदयासत्त्या व्यधिकरणतयैव कृत्तिकोदयो व्याप्त इति व्यधिकरणस्थल एव रोहिण्युदयासत्तिं गमयति तर्हि व्यधिकरणत्वाविशेषाद्भूम्यादिस्थले कस्मान्न गमयति । अन्तरिक्षे प्रदेशविशेष एव कस्माद्गमयतीत्यत आह **यथा चेति** । धूमाग्न्योः सामानाधिकरण्यमन्तर्भाव्य व्याप्तेः सत्त्वेऽपि पर्वत एव यत्र कुत्रचित्प्रदेशेऽग्न्यर्थी न प्रवर्तते । किन्तु प्रदेशविशेष एव तद्वदित्यर्थः । **हेतुसिद्धेरिति** । हेतुना साध्यसिद्धेरित्यर्थः ।

---

सु० **तथा साध्यविशेषणस्याप्रसिद्धावपि । तथा हि । साध्यविशेषणाप्रसिद्धेः कुतो दूषणत्वम् । किं विश्वं सदसद्विलक्षणं बाध्यत्वादित्यादेरपि प्रामाण्यप्रसङ्गात् । उत साध्यवि-शेषणाप्रसिद्धौ तत्सन्देहानुपपत्तौ पक्षत्वानुपपत्तेर्हेतोः पक्षधर्मत्वानुपपत्तिप्रसक्तेः । अथवा साध्यविशेषणाप्रसिद्धौ तेन साधनस्य व्याप्तिप्रतीत्यनुपपत्तिप्रसङ्गात् । यद्वा प्रतिज्ञावाक्यस्या-प्रतीतपदार्थकत्वेनाबोधकत्वापत्तेः । आद्यं दूषयति** अन्यदिति ।

अनु० अन्यत्सदसतोर्विश्वमिति च व्याहतेरमा ॥

**सन्न भवतीत्युक्तेऽसत्त्वमुक्तं भवेत् (स्यात्)सत्त्वप्रतिक्षेपरूपत्वादसत्त्वस्य । पुनरसन्न भव-तीत्युक्ते स्ववचनव्याहतिः । एवमसन्न भवतीत्युक्त्या द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति सत्त्वं लभ्यते । पुनः सन्न भवतीत्युक्ते स्वव्याहतिरेव । तदेवं विश्वं सदसतोः सकाशादन्यत् सदसच्च न भवतीत्येषा प्रतिज्ञा स्वव्याहतेरेव अमा(ऽप्रमा) साधनाङ्गं न भवति । न तु विशेष-णस्य सदसद्वैलक्षण्यलक्षणस्याप्रसिद्धत्वेन । कुतः । स्वव्याहतिर्हि मे माता वन्ध्येत्यादौ दूषण-**

**त्वेन संप्रतिपन्ना । स्ववचनस्वन्यायस्वक्रियास्वसिद्धान्तप्रमाणान्तराप्रतिहताया एवोक्तेः साधन-दूषणाङ्गत्वात् । न हि स्वविषविमूर्छिता भुजङ्गी परं दशति । न च दोषान्तरासङ्कीर्णं साध्य-विशेषणासिद्धेरुदाहरणं पश्यामो येन दोषत्वं प्रतीमः । कस्यचिदसाधारणधर्मेण शशविषा-णादिमत्त्वसाधनमपि प्रमाणं किन्न स्यादिति चेन्न । तत्रापि दृश्यानुपलम्भबाधस्य विद्यमान-त्वात् । अतीन्द्रियसंसर्गसाधने न कोऽपि दोष इति चेन्न । ईश्वरादिसंसर्गेण सिद्धसाधनत्वात् । एवमन्यत्रापि संप्रतिपन्नाप्रामाण्ये दोषान्तरमन्वेषणीयम् । तदिदमुक्तं चशब्देन । अत एव व्याहतेरित्युपलक्षणम् ।**

**शे० — तथेति ।** साध्यरूपविशेषणस्याप्रसिद्धावपि हेतुत्वं युक्तमित्यर्थः ॥ **पक्षत्वानुपपत्ते-रिति ।** सन्देहघटितत्वात्पक्षत्वस्य तदनुपपत्तावनुपपत्तिरिति भावः । असन्न भवतीत्युक्तावपि कुतः सत्त्वस्य लाभ इत्यतोऽसन्न भवतीत्युक्ते च 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति सदेव भवतीति कर्मनिर्णयं मनसि निधाय तमुपपादयति **द्वौ नञाविति ।** अयमाशयः । असदिति हि नञर्थेन निषेधेन विशिष्टं सदुच्यते । तद्विषयश्च द्वितीयो निषेधो विशेषणीभूतेन निषेधेनैव सम्बध्यते । विशिष्ट-विषययोर्विधिनिषेधयोर्लाघवेन विशेषणोपसंक्रामकताया 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति । न जीर्णम-लवद्वासाः स्नातकः स्यादि'त्यादौ प्रसिद्धत्वात् । क्वचिदेव सोमेन यजेत । अपरपक्षे श्राद्धं कुर्वीत । न हिंस्यात्सर्वभूतानीत्यादौ विशिष्टविषयकत्वस्यागतिकगतित्वात् । ततश्चासन्न भवतीति विशेषणी-भूतनिषेधस्य निषेधात्सत्त्वविधिलाभः । न च यदि द्वौ नञौ प्रकृतमेवार्थं गमयतस्तदा तत्प्रयोगवैयर्थ्यं स्यादिति वाच्यम् । प्रतिषेधप्रतिषेधेनातिशयलाभार्थत्वात् । अत एव 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इत्याहुरिति । मूले व्याहतिपदं स्वव्याहतिपरं चशब्दोऽवधारणार्थो भिन्नक्रम इत्यभिप्रेत्योक्तं **स्वव्याहतेरेवेति ।** स्ववचनविरोधरूपस्वव्याहतेरेवेत्यर्थः । ननु स्ववचनविरोधाप्रसिद्धविशेषणत्वयो-रुभयोरपि सत्त्वात्तदीयसाधनानङ्गतायां व्याहतिरेव प्रयोजिका नाप्रसिद्धविशेषणत्वमिति न नियन्तुं शक्यं विनिगमकाभावात् । अन्यथा वैपरीत्यस्यापि प्रसङ्गादित्याशयेनाक्षिपति कुत इति । असङ्कीर्णो-दाहरणभावाभावयोरेव विनिगमकत्वाद्युक्तं नियमनमित्यभिप्रेत्य व्याहतेः साधनानङ्गतायाः क्लृप्ततां तावदाह **स्वव्याहतिर्हीति ।** मे माता वन्ध्येत्यत्र विभक्तिप्रतिरूपकं म इत्यव्ययमभिप्रेतमिति न कश्चित्क्षुद्रोपद्रवः । मे माता वन्ध्येत्यादौ स्वव्याहतेर्दूषणत्वे विप्रतिपद्यमानं प्रति तदुपपादयति **स्ववचनेति ।** अप्रसिद्धविशेषणत्वस्य तदभावमुपपादयति **न चेति ।** नन्वियं भूः शशशृङ्गवती एतद्भूत्वादित्येतदेव तदुदाहरणमिति कथं तदभाव इति शङ्कते **कस्यचिदिति ।** किमत्र योग्यशृङ्ग-साधनत्वमभिमतमयोग्यसाधकत्वं वेति विकल्पं मनसि निधायाद्यं योग्यानुपलम्भबाधेन दूषयति

**तत्रापीति** । तथा च दोषान्तरेण दुष्टत्वान्नास्यासङ्कीर्णतदुदाहरणत्वमिति भावः । द्वितीयमाशङ्कते **अतीन्द्रियेति** ॥ **सिद्धसाधनादिति** । तथा च सिद्धसाधनत्वरूपदोषेणैव दुष्टत्वान्न तादृशोदाहरणत्वमस्येति भावः । ननु च जीवच्छरीरं सात्मकं प्राणादिमत्त्वाच्छरीरत्वादित्यादिकमेव दोषान्तरासङ्कीर्णमप्रसिद्धविशेषोदाहरणमस्तीति कथं तदभाव इत्यतोऽत्र यद्दोषान्तररहितत्वेन सम्मतं प्राणादिमत्त्वं तस्य साधुत्वादप्रमाणत्वेन सम्मतस्य च शरीरत्वस्य व्यभिचारादिदोषान्तरसङ्कीर्णत्वान्न तदुदाहरणत्वमित्याशयेनाह **एवमन्यत्रापीति** । मूले चशब्दस्य यथाश्रुतसंबन्धं समुच्चयार्थत्वं चाङ्गीकृत्येयं भूः शशशृङ्गवतीत्याद्युदाहरणस्यापि मूलारूढतां दर्शयति **तदिदमुक्तं चशब्देनेति** । तर्हि तदुदाहरणे स्वव्याहतेरप्रसरात्स्वव्याहतेरेवेत्युत्तरमूलस्याश्लिष्टत्वप्रसङ्ग इत्यत आह **अत एवेति** । चशब्देनोदाहरणान्तरस्यापि मूले संगृहीतत्वादेवेत्यर्थः ॥ **उपलक्षणमिति** । योग्यानुपलम्भबाधाद्युपलक्षणमित्यर्थः ।

प० — **साध्यविशेषणस्येति** । साध्यरूपविशेषणस्येत्यर्थः अदोषत्वमिति योज्यम् । **चतुर्धा विकल्पयति किं विश्वमित्यादिना** । पञ्चम्यन्तचतुष्टयस्यापि साध्याप्रसिद्धेर्दूषणत्वमित्यनेनान्वयः । सदसतोरिति मूलपदं षष्ठीद्विवचनान्तमित्युपेत्याह **सदसतोः सकाशादिति** । तेन 'अन्याराादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्त' इति अन्यत्वप्रतियोगिनि पञ्चम्या भाव्यमिति न शङ्क्यम् । सकाशादित्यध्याहारात् । अप्रसिद्धिर्न दोषोऽत्र किन्तु व्याहतिरेवेत्यत्र किं नियामकमिति पृच्छति **कुत इति** । क्लृप्तत्वादित्याह **स्वव्याहतिर्हीति** । व्याहतिशब्दः पञ्चकपर इति भावेन दोषत्वं तस्याः व्यनक्ति **स्ववचनेति** । पर्वतोऽग्निमाननग्निकश्चेति स्ववचनव्याहतोक्तिः । त्वं चोरः पुरुषत्वादिति स्वन्यायव्याहतोक्तिः । आत्मनोऽपि नोग्यत्वप्राप्तेः । मूकोऽहमिति स्वक्रियाव्याहतिः ॥ **कस्यचिदसाधारणधर्मेणेति** । भूः शशशृङ्गवती भूत्वादित्यादिकमित्यर्थः । शृङ्गपदेन महत्त्ववद्रूपं विवक्षितमतीन्द्रियं किञ्चित आद्ये आह **दृश्यानुपलम्भबाधस्येति** । योग्यानुपलम्भबाधस्येत्यर्थः । द्वितीयं शङ्कते **अतीन्द्रियेति** ॥ **सम्प्रतिपन्नाप्रामाण्य इति** । भूरितरभिन्ना प्रमेयत्वात्, जीवच्छरीरजातं सात्मकं शरीरत्वादित्यादौ व्यभिचारादिदोषान्तरमित्यर्थः ॥

या० — **साध्यविशेषणस्येति** । साध्यरूपविशेषणस्येत्यर्थः । एवमग्रे च ॥ **स्ववचनस्वन्यायेत्यादि** । अनेन मूले व्याहतिपदं स्ववचनस्वन्यायस्वक्रियास्वसिद्धान्तप्रमाणान्तरव्याहतिपरमिति दर्शितमिति ज्ञातव्यम् ॥ **कस्यचिदसाधारणेति** । भूः शशविषाणवती भूत्वादित्यादिकमपीत्यर्थः ॥ **दृश्यानुपलम्भेति** । योग्यानुपलम्भबाधपरस्येत्यर्थः ॥ **एवमन्यत्रापीति** । जीवच्छरीरं सात्मकं

शरीरत्वादित्याद्यप्रसिद्धसाध्यके व्यभिचारादिकमेव दूषणमन्वेषणीयमित्यर्थः ॥ **तदिदमुक्तमिति ।** भूः शशविषाणवती, जीवच्छरीरं सात्मकम्, इत्याद्युदाहरणं चशब्देनोक्तमित्यर्थः । नन्वत्र व्याहतेरित्युक्तदोषो न सम्भवतीत्यत आह **अत एवेति ।** चशब्देनोदाहरणान्तरस्य गृहीतत्वादेवेत्यर्थः ॥

**श्री॰— साध्यविशेषणस्येति ।** साध्यरूपविशेषणस्येत्यर्थः ॥ **दंशतीति ।** एवं च स्वव्याहत्यैव दुष्टमिदं न साध्यसाधकमिति भावः । **कस्यचित्** भूम्यादेः शशविषाणादिमत्त्वेत्यन्वयः । **असाधारणधर्मेण** भूत्वेन । **दृश्येति ।** दर्शनयोग्येत्यर्थः ॥ **अतीन्द्रियेति ।** अतीन्द्रियस्येत्यर्थः । तथा च शशविषाणपदेन किञ्चिदतीन्द्रियं विवक्षितमिति तस्यातीन्द्रियतयाऽभावग्राहकयोग्यानुपलब्धिर्नास्तीत्यर्थः ।

**सु॰— द्वितीयं पराचष्टे** असिद्धेति ।

अनु॰— असिद्धसाधने दोषः को व्याप्तिर्यदि विद्यते ॥

**साध्याप्रसिद्ध्या यत्र पक्षधर्मत्वासिद्धिरुच्यते(हेतौ) तत्र व्याप्त्यादीतराङ्गसाकल्यमस्ति न वा । न चेत्तत एवानुमानं दुष्टं किं साध्यविशेषणाप्रसिद्ध्या । यदि व्याप्त्यादिकं विद्यते तदाऽसिद्धसाधने को दोषः । न कोऽपि । अयमभिसन्धिः । हेतोर्हि पक्षधर्मत्वासिद्धिस्तदा स्यात् । यदि धर्मी वा हेतोस्तद्धर्मत्वं वा न स्यात् । सन्देहाभावेन पक्षत्वानुपपत्त्या पक्षधर्म(त्व)ताभावे तु स्वार्थानुमानविशेषविलोपः स्यात् । यदा हि यो धूमवानसावाग्निमानिति गृहीतव्याप्तिको गिरिशिखरे धूमं सहसैव पश्यन्व्याप्तिं स्मरति । तदोत्पद्यत एवास्यानुमितिः । न च तस्याग्निसन्देहोऽस्ति । यदा चाप्तवचनाद्विनिश्चितपर्वताग्निसंबन्धः पर्वतं प्रत्यासीदन्धूममवलोकयति । तदाऽपि तस्य विना सन्देहेनाग्न्यनुमितिर्भवत्येव । न हि सामग्री बुद्धिमती । येन यन्मया कर्तव्यं तदन्येन कृतमिति पर्यालोच्योदासीत । नापि छिन्न छिदाया इव परिच्छिन्ने परिच्छेदान्तरोत्पादोऽयुक्तः(वक्तुं न शक्यः) । नापि परार्थानुमाने सन्देहनियमः । विपर्यस्तस्यापि प्रतिवादित्वोपपत्तेः । अत एव सिद्धसाधकोऽसङ्गत एव नाश्रयासिद्ध इत्युक्तम् ।**

**किञ्च विदिततत्त्वोऽपि यदा परपरीक्षार्थं (ग्रर्थे) तत्र प्रमाणं पृच्छति । तदा प्रयुक्तमनुमानममानं स्यात् । सन्देहाभावात । तस्मात्सन्दिग्धसाध्यः पक्ष इत्याद्याः प्राचां वाचः संभावनाभिप्रायाः । परमार्थतस्त्वनुमितिविषय एव पक्षः । अतः सन्देहाभावे पक्षत्वानुपपत्त्यभावान्नाप्रसिद्धसाधने पक्षधर्मत्वासिद्धिरूपो दोष इति ।**

**शे०** — ननु सन्देहाभावेन पक्षताऽनुपपत्त्या हेतोः पक्षधर्मताऽसिद्धिरेव तत्र दोषोऽस्तीति कथं 'न कोऽपी'ति तदभावोक्तिरित्याशङ्क्य भवेदेतदेवं यदि सन्देहाभावस्य पक्षधर्मताऽसिद्धौ प्रयोजकत्वं स्यात् । न चैतदस्तीत्यभिप्रेत्य स्वयं पक्षधर्मताऽसिद्धेः प्रयोजकान्तरं तावदाह **अयमिति** । ननु धर्म्याद्यभाववत्सन्देहानुपपत्तिरपि तत्प्रयोजिका किन्न स्यादित्यतः किन्तस्याः स्वार्थपरार्थसाधारण्येनानुमानमात्रे पक्षधर्मताऽसिद्धिप्रयोजकत्वमभिमतं किंवा परार्थानुमान इति विकल्पं मनसि निधायाद्यं दूषयति **सन्देहाभावेनेति** । प्रायेण स्वार्थानुमानस्यापि सन्देहपूर्वकत्वान्न सन्देहानुपपत्त्या तत्र पक्षधर्मत्वासिद्धिरिति कथं तद्विलोपापादनमित्यत उक्तं **विशेषेति** । तमेव स्वार्थानुमानविशेषमुदाहरति **यदा हीति** ॥ **उत्पद्यत एवेति** । सामग्र्याः कार्याव्यभिचारादिति भावः । तद्विशेषान्तरं चोदाहरति **यदा चेति** । ननु तत्रानुमितिसामग्रीसत्त्वेऽपि न तयाऽनुमितिर्भवति । प्रकारान्तरेण पर्वते वह्नेः सिद्धत्वेन तत्पर्यालोचनया तस्यास्तत्रोदासीनत्वादित्यतो भवेदेतदेवं यदि तस्या उक्तप्रकारा पर्यालोचनोपपन्ना स्यान्न च सोपपद्यतेऽचेतनत्वादित्याशयेनाह **न हीति** । ननु तत्रानुमितिसामग्र्यां छिन्ने छिदाया इव निश्चिते निश्चयोत्पादस्याशक्यत्वादेव न तत्रानुमितिरित्याशङ्क्य भवेदेवं यदि तत्र तदुत्पादस्याशक्यत्वं स्यान्न च तदस्ति । चैत्रेण ज्ञातेऽर्थे मैत्रस्य, चैत्रस्यैव कालान्तरे ज्ञानान्तरस्य, तदानीमपि प्रत्यक्षसिद्धे शाब्दज्ञानान्तरस्य, प्रत्यक्षधारावाहिकज्ञानान्तरस्य, शब्दलिङ्गाभ्यां निश्चितेऽप्यर्थे सामग्रीवशाच्छाब्दलैङ्गिकज्ञानान्तरस्य च दर्शनादित्याशयेनाह **नापीति** । अस्तु तर्हि द्वितीयो निरवद्यत्वादित्यत आह **नापीति** । तत्कुत इत्यतस्तथा सति परार्थानुमानविशेषविलोपः स्यादित्याशयेनाह **विपर्यस्तस्यापीति** ॥ **अत एवेति** । सन्देहस्य पक्षतायामनुपयोगेन तदनुपपत्तेः पक्षधर्मत्वाभावसाधकत्वाभावादेवेत्यर्थः । **उक्तमिति** । प्रमाणलक्षण इति शेषः ।

प्रकारान्तरेणापि परार्थानुमानविशेषविलोपमाह **किञ्चेति** ॥ **तस्मादिति** । उक्तरीत्या स्वार्थानुमानपरार्थानुमानमात्रे सन्देहनियमानुपपत्तेरित्यर्थः ॥ **अनुमितिविषय एवेति** । नन्वेवं सति परामर्शस्य पक्षधर्मताविषयकत्वं न स्यात् । अनुमितिविषयत्वरूपपक्षताया अनुमितिकालमात्रवृत्तितया ततः प्रागसत्त्वादिति चेन्न लिङ्गाभिमतस्य तत्र तदा तद्धीजननानुकूलसहकारिसम्पत्तिरूपानुमितिविषयत्वयोग्यताया एव विषयपदेनात्राभिमतत्वेनानुमितिविषयत्वमात्रस्यानभिमततया तस्यानुमितितः प्रागसत्त्वेऽप्यभिमतायास्ततः पूर्वमपि सत्त्वेन परामर्शस्य तद्विषयकत्वोपपत्तेः । ननु चोक्तसहकारिसम्पत्तिरूपतद्योग्यताया अपि परामर्शदशायामेव सत्त्वेन ततः पूर्वमसत्त्वात्कथं परामर्शस्य तद्विषयकत्वं स्यादिति चेत्काऽत्र कथन्ता । लिङ्गपरामर्शस्य तद्विषयकत्वं हि न स्वपूर्वकाले विद्यमाना या पक्षता तदाश्रये व्याप्यवत्त्वविषयकत्वं गौरवात् । किन्तु स्वकाले विद्यमाना या पक्षता तदाश्रये व्याप्यवत्त्वविषयकत्वम् । लिङ्गपरामर्शकाले

च पक्षताऽस्त्येवेति काऽत्रानुपपत्तिः । यद्वा व्यापकवत्त्वेनानुमितिविषयत्वं पक्षत्वमित्यर्थः । व्यापकवत्त्वेनेति विशेषणाच्च न व्यापकतावच्छेदकादावतिप्रसङ्गः । न चैवमनुमितिदशायामेव तद्विषयत्वरूपपक्षता स्यान्न तु परामर्शदशायामिति वाच्यम् । तद्दशायां पक्षताया असत्त्वेन बाधकाभावेनेष्टापादनत्वात् । न च पक्षताया अनुमित्यजनकत्वप्रसङ्गो बाधकः । तस्यास्तदजनकत्वस्यैव मन्मतत्वेन तदप्रसङ्गात् । नापि परामर्शस्य पक्षधर्मताविषयकत्वानुपपत्तिर्बाधिका न हि परामर्शस्य तद्विषयकत्वं नाम स्वकाले विद्यमाना या पक्षता तदाश्रये व्याप्यवत्त्वविषयकत्वम् । गौरवात् । किन्तु वस्तुगत्या विद्यमाना या पक्षता तदाश्रये व्याप्यवत्त्वविषयकत्वम् । ततश्च परामर्शकाले पक्षताया असत्त्वेऽपि स्वजन्यानुमितिकाले तत्सत्त्वादुपपन्नमेव परामर्शस्य स्वजन्यफलसमानकालीनपक्षताश्रये व्याप्यवत्त्वविषयकत्वमिति न तदनुपपत्तिः । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः ।

स० — **अनुमितिविषय एवेति** । विशेष्यत्वेनेति शेषः ।

प० — **द्वितीयमिति** । उत साध्येति प्राग्विकल्पितद्वितीयपक्षमित्यर्थः । स्वार्थानुमानविशेषविलोपः स्यादित्युक्तं व्यनक्ति **यदा हीति** ॥ **अन्येन कृतमिति** । आप्तवाक्यादिनेत्यर्थः । **विपर्यस्तस्यापीति** । विपरीतनिश्चयवतोपीत्यर्थः ॥ **अत एवेति** । सन्देहस्य पक्षतानुपयोगादेवेत्यर्थः ॥ **इत्युक्तमिति** । प्रमाणलक्षणे उक्तमित्यर्थः । 'तत्रैवकारव्यावर्त्योक्तिर्नाश्रये'ति । न पक्षताऽसिद्ध्यन्तर्भाव' इत्युक्तमित्यर्थः ॥ **अनुमितिविषय एवेति** । साध्यधर्मविशिष्टस्यैवानुमितिविषयत्वात् साध्यधर्मविशिष्टः पक्ष इत्यन्यत्राचार्योक्तलक्षणाविरोध इति भावः ।

या० — **अत एवेति** । सन्देहस्य पक्षतायामनुपयोगादेवेत्यर्थः ॥ **उक्तमिति** । युक्तिपाद इति शेषः ॥ **अनुमितिविषय इति** । अत्रानुमितेर्विषयो यस्येति बहुव्रीहिणाऽनुमितिविषयीभूतसाध्यधर्मविशिष्टः पक्ष इत्यर्थलाभात् 'साध्यधर्मविशिष्टः पक्षः । यत्प्रतीतिर्लिङ्गेन जनयितव्या स साध्यधर्म' इति मिथ्यात्वानुमानखण्डनटीकयैकवाक्यतेति ध्येयम् । अत्र च व्यापकत्वेनानुमितिविषयो यस्तद्वैशिष्ट्यं विवक्षितम् । अतो व्यापकतावच्छेदकानामप्यनुमितिविषयत्वेन तद्वैशिष्ट्यमादाय साध्यादौ नातिव्याप्तिरित्यवधेयम् । नन्वेवमनुमितिकाल एव पक्षता प्राप्ता न लिङ्गपरामर्शकाले । ततश्च लिङ्गपरामर्शः कथं पक्षधर्मताविषयकः स्यादिति चेन्न । लिङ्गपरामर्शस्य पक्षधर्मताविषयकत्वं नाम स्वजन्यानुमितिसमानकालीनपक्षताश्रये व्याप्यवत्त्वविषयकत्वमेवेति विवक्षितत्वात् । न चैवं पक्षताया अनुमितिजनकत्वानुपपत्तिः । मन्मते तस्यास्तदजनकत्वात् ।

**श्री०—** नन्वाप्तवचनात्पर्वतेऽग्निसंबन्धस्य निश्चितत्वात्कथं पुनस्तत्रानुमानप्रवृत्तिः । प्रवृत्तौ वा ज्ञाते पुनः कथं तत्र ज्ञानान्तरोत्पाद इत्यत आह **न हि सामग्रीति ॥ अत एव** परार्थानुमाने सन्देहनियमाभावादेव । यस्माप्तवचनादिना साध्यनिश्चयोऽस्ति तं प्रत्यपिवाक्यप्रयोगेऽनुमितिर्जायत इति सिद्धसाधकोऽनाकाङ्क्षिताभिधानरूपत्वात् असन्मतेऽसङ्गत एव न त्वाश्रयासिद्धता हेतोः । सिद्धधर्मस्य साधने 'पक्षो हि संश्रयस्तस्य स च साध्यान्वितो यत' इति परोक्तरीत्याऽऽश्रयासिद्ध इत्यर्थः । पक्षलक्षणे विषयपदं विशेष्यपरम् । अन्यथा साध्येऽतिव्याप्तेरिति ध्येयम् ।

**च०— परिच्छिन्ने** ज्ञाते । **परिच्छेदान्तरेति** । ज्ञानान्तरेत्यर्थः ।

**सु०— तृतीयं निराकरोति** व्याप्तिश्चेति ।

अनु० – व्याप्तिश्च व्यतिरेकेण तत्र तैश्चावगम्यते ॥

तत्र जीवच्छरीरजातं सात्मकं प्राणादिमत्त्वात्, भूरितरेभ्यो भिद्यते गन्धवत्त्वात्, ईश्वरः सर्वज्ञः सर्वकर्तृत्वादित्यादौ केवलव्यतिरेकिणि साधनसमूहे । तैः अप्रसिद्धैरपि सात्मकत्वादिभिः साध्यैः । व्याप्तिश्चास्ति । न केवलं पक्षधर्मता । व्यतिरेकेण साध्याभावस्य साधनाभावव्याप्तत्वेन लिङ्गेनावगम्यते च सा ।

इदमुक्तं भवति । साध्यविशेषणाप्रसिद्ध्या व्याप्तिप्रतीत्यभावं प्रसञ्जयतो व्याप्त्यभावः । तथा हि । केवलव्यतिरेक्यनुमानं प्रमाणं न वा । नेति पक्षे वक्ष्यामः । आद्ये तस्य व्याप्तिसद्भावो व्याप्त्यवगम(श्चावश्यमङ्गी)श्चाङ्गीकार्यः । अन्यथाऽनुमानत्वव्याघातात् । न च केवलव्यतिरेकिणि साध्यं प्रसिद्धम् । पक्षे प्रसिद्धौ सिद्धसाधनत्वात् । अन्यत्र प्रसिद्धौ तत्र हेतोर्वृत्तौ केवलव्यतिरेकित्वानुपपत्तेः । अवृत्तावसाधारण्यप्रसङ्गात् । अतः (प्र)शिथिलमूलः प्रसङ्गः । व्यतिरेकिणः क्व व्याप्तिः केन चावगम्यत इति चेत् । पक्ष एव व्यतिरेकेणावगम्यत इति ब्रूमः । पक्षादिप्रविभागात्प्रागवगता तत्रैव विप्रतिपत्त्योपदर्शयितुमशक्या व्यतिरेकेणोपपाद्यत इति । तैरिति बहुवचनेनातिप्रसिद्धतां प्रसङ्गव्याप्तिभङ्गस्य सूचयति ।

शे० – इत्यादावित्यादिपदेन, शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति गुणत्वादित्यादेः संग्रहः ।

ननु व्याप्तिश्चेत्यादिग्रन्थेन व्यतिरेकिणि व्याप्तिस्तदवगमश्चास्तीति प्रतिपाद्यते । तदनर्थकम् । न च व्यतिरेकिणि व्यभिचारप्रदर्शनेन यत्राप्रसिद्धविशेषणत्वं तत्र व्याप्त्यप्रतीतिरिति अप्रसिद्ध-

विशेषणत्वे व्याप्त्यप्रतीतिप्रसञ्जनमूलभूतव्याप्त्यभावोपपादनार्थत्वान्न तदिति वाच्यम् । व्याप्त्यभावस्य प्रागनुद्भावितत्वेनोक्तभाष्यस्य तदुपपादनाय व्यभिचारप्रदर्शनपरत्वासम्भवात् । तस्यापि वक्तव्यत्वाभिप्राये चावश्यवक्तव्यस्य तस्यानुक्त्या भाष्ये न्यूनत्वापातादित्याशङ्क्य स्पष्टत्वान्न तदनुक्तिर्भाष्ये न्यूनत्वापादिके- त्यभिप्रेत्य स्वयं व्याप्त्यभावमुद्भाव्य तदुपपादनाय व्याप्तिव्यभिचारोपदर्शनपरतया ग्रन्थं योजयितुमाह **इदमुक्तं भवतीति** । ननु व्यतिरेकिणोऽननुमानत्वादनुमानत्वेऽपि वा व्याप्तितदवगमयोरनावश्यकत्वात् आवश्यकत्वे वा तत्राप्रसिद्धविशेषणत्वस्यैवाभावान्न तत्र व्यभिचार इति न तत्प्रदर्शनपरत्वमस्य ग्रन्थस्येत्य- तस्तदुपपादयितुं प्रतिजानीते **तथा हीति** ॥ **वक्ष्याम इति** । 'परिशेषो मिथः सिद्धिश्चक्रकः स्वाश्रया- दयः' इत्यादिनेति शेषः ।

एवमापाद्याभावमुपपाद्य तत्रापादकसद्भावमुपपादयति **न चेति** । किमत्र साध्यप्रसिद्धिः पक्षेऽभिमता ततोऽन्यत्र वा । द्वितीयेऽपि तत्र हेतुरस्ति न वेति विकल्पान्मनसि निधाय क्रमेण दूषयति **पक्ष इत्यादिना** । **केवलेति** । सपक्षवृत्तित्वादिति भावः ॥ **अवृत्ताविति** । सति सपक्षे तत्राप्रवेशित्वादिति भावः । व्यतिरेकिणः किं पक्ष एव व्याप्तिरभिमता पक्षादन्यत्र वा । न तावद्द्वितीयः । पक्षादन्यस्य प्राणादिमतः सात्मकस्याभावेन तदयोगात् । आद्येऽपि तदवगमः किं प्रत्यक्षेणोतानुमानेन । नाद्यः । तथा सति सिद्धसाधनत्वाद्यापातात् व्यतिरेकोपन्यासवैयर्थ्याच्च । नान्त्यः । तत्प्रतिबद्धलिङ्गाभावादिति गूढाभिसन्धिः **शङ्कते व्यतिरेकिण इति** । पक्ष एव व्याप्तिः प्रत्यक्षादिना च तदवगम इति गूढाभिसन्धिरेव परिहरति **पक्ष एवेति** । तत्कथमित्यतः किमत्र स्वार्थानुमितौ तदसम्भवोऽ- भिप्रेयत उत परार्थानुमितौ । नाद्यः । स्वशरीरे प्रत्यक्षेण परशरीरे चाप्तोपदेशादिनाऽवगतसा- त्मकत्वस्य पुंसो भूयोदर्शनादिरूपव्याप्तिधीसामग्रीसत्त्वात् धूमाग्न्योरिव प्राणादिमत्त्वसात्मकत्वयोरप्यन्वय- व्याप्तिग्रहस्य स्वार्थानुमितौ सम्भवात् । न च जीवच्छरीरमात्रस्य पक्षीकरणादन्वयदृष्टान्ताभावः । अभेदसाधकानुमान इवानुमित्सादिना पक्षस्यापि स्वशरीरस्य निश्चितसाध्यकतया दृष्टान्तत्वस्यापि सम्भ- वात् । न चैवं सिद्धसाधनम् । स्वार्थानुमाने तस्यादोषत्वात् । उद्देश्यतायाः शरीरत्वावच्छेदेन साध्यप्र- तीतेः प्रागसिद्धेश्च । न च पक्षस्य पक्षैकदेशस्य वा दृष्टान्तत्वे सत्सपक्षत्वेन व्यतिरेकित्वभङ्गप्रसङ्ग इति वाच्यम् । तस्य व्यतिरेकवादिनस्तवेव तदभाववादिनो ममानिष्टत्वाभावात् । न द्वितीयः । स्वेन गृहीतायाः स्वशरीरादौ व्याप्तेर्व्याप्तिग्रहणस्थलस्य विप्रतिपत्त्या प्रतिरुद्धत्वेन परं प्रति प्रदर्शयितुमशक्य- त्वेऽपि जीवच्छरीरजातं सात्मकं प्राणादिमत्त्वाद्यत्कार्यवत्तत्कारणवद्यथाऽङ्कुरवती भूमिर्बीजगर्भेति वक्ष्यमा- णरीत्या सामान्यव्याप्तिप्रदर्शनस्य वा प्राणादिमत्त्वं सात्मकत्वेन व्याप्तं तदभावव्यापकाभावप्रतियोगित्वात् । यद्यदभावव्यापकाभावप्रतियोगि तत्तेन व्याप्तं यथा धूमो वह्निनेति व्यतिरेकव्याप्त्या विशिष्यान्वयव्या-

प्तिप्रसाधनस्य वा परार्थानुमितावपि संभवात् । अत एव न व्यतिरेकोपन्यासवैयर्थ्यमपीत्याशयेनाह **पक्षादिप्रविभागादित्यादिना** । इतीत्यस्येतीदमुक्तं भवतीति पूर्वेणान्वयः ।

स० — **नेति पक्षे वक्ष्याम इति** । 'परिशेषो मिथः सिद्धिश्चकक: स्वाश्रयादय' इत्यादिना वक्ष्याम इत्यर्थः ।

प० — **तृतीयमिति** । अथवेति प्राग्विकल्पितमित्यर्थः । तत्रेत्यनुवादेनार्थमाह **इत्यादौ केवलव्यतिरेकिणि साधनसमूह इति** । द्वितीयचशब्दान्वयमाह **अवगम्यते चेति** । सेति शेषोक्तिः । **प्रसञ्जयत इति** । साध्याप्रसिद्धौ तन्निरूपितव्याप्तिः साधनस्य न स्यात् व्याप्त्यवगमश्च न स्यादिति तर्करूपेणापादयत इत्यर्थः । **वक्ष्याम इति** । 'परिशेषो मिथस्सिद्धिश्चकके'त्यत्र व्यतिरेकानुमानं प्रमाणमिति वक्ष्याम इत्यर्थः । **प्रशिथिलमूल इति** । अपगतव्याप्तिकः प्रागुक्तस्तर्करूपप्रसङ्ग इत्यर्थः । **व्यतिरेकेणेति** । साध्याभावस्य साधनाभावव्याप्तत्वेन लिङ्गेनेत्यर्थः ॥ **प्रागवगतेति** । घटादौ सात्मकत्वाभावप्राणादिमत्त्वाभावयो व्याप्तिबलेन वा आप्तोपदेशेन वा जीवच्छरीरे सात्मकत्वप्राणादिमत्त्वयोरवगता व्याप्तिः यत् प्राणादिमत्तत्सात्मकं यथा जीवच्छरीरमिति विप्रतिपन्नं परं प्रति नोपदर्शयितुं शक्येति प्राणादिमत्त्वं सात्मकत्वेन व्याप्तं सात्मकत्वाभावस्य प्राणादिमत्त्वाभावव्याप्तत्वाद्धूमानुमानवदित्युपपाद्यत इत्यर्थः न च हेतुसाध्ययोर्वैयधिकरण्यम् । तददोषताया उपपादनात् । सामानाधिकरण्यस्य सुसंपादत्वाच्चेति भावः ॥ **प्रसङ्गव्याप्तिभङ्गस्येति** । साध्याप्रसिद्धौ व्याप्तिर्न स्यात् तदवगमश्च न स्यादिति प्रसङ्गे या व्याप्तिः तद्भङ्गस्येत्यर्थः ।

या० **वक्ष्याम इति** । 'परिशेषो मिथः सिद्धिरि'त्यत्रेति शेषः ॥ **प्रागवगतेति** । स्वशरीरे प्रत्यक्षेणान्यत्र चोपदेशादिनाऽवगतसात्मकत्वेन पुंसा भूयोदर्शनादिना धूमाग्न्योरिव प्राणादिमत्त्वसात्मकत्वयोरपि जीवच्छरीरेष्ववगताऽपि व्याप्तिः सात्मकत्वे विप्रतिपन्नं परं प्रति नोपदर्शयितुं शक्येत्यर्थः ।

श्री० — **अन्यथेति** । व्याप्तेः सत्त्वस्य तदवगमस्य वाऽभावे ॥ **अनुमानत्वेति** । व्याप्तिप्रमितिसापेक्षं प्रमितेः साधनेऽनुमानमिति तल्लक्षणादित्यर्थः ।

च० — **व्यतिरेकेणावगम्यत इति** । प्राणादिमत्त्वं सात्मकत्वेन व्याप्तं सात्मकत्वाभावव्यापकाभावप्रतियोगित्वादिति दिशाऽनुमीयत इत्यर्थः ।

**सु० — न केवलं केवलव्यतिरेकिसाधनस्य साध्येन व्याप्तिर्व्यतिरेकेण तदवगमश्चास्माभिरेवाङ्गीक्रियते । किन्त्वप्रसिद्धविशेषणत्वदूषणत्ववादिभिरपि कैश्चिदित्याह** तैश्चेति । अवगम्यते अभ्युपगम्यते । **यथाऽऽहुः । यदि साध्येनास्य क्वचिदप्यन्वयो नास्ति तदा विरुद्ध एवायमित्याशङ्क्य नोपेयत्वमन्वयस्य व्यासेधामोऽपि तूपा(यमि)यत्वमित्यादि ॥ तथा, यथा च व्यतिरेकबलादन्वयसिद्धिस्तथा वैशेषिकैरप्युपपादनीयम् । अन्यथा साध्यसाधनयोरव्याप्तौ व्यतिरेकिणो गमकत्वभङ्गादित्यादि । तथा चाप्रसिद्धविशेषणस्यापि केवलव्यतिरेकिणो व्याप्त्युपपादनमप्रसिद्धविशेषणत्वे व्याप्त्यप्रतीतिप्रसञ्जनं च कथं न व्याहतमिति** भावः ।

**शे० — कैश्चिदिति ।** तात्पर्यपरिशुद्धिकारादिभिरित्यर्थः । पराभ्युपगमस्य परं प्रत्यप्रत्यक्षत्वात्कुतस्तत्सिद्धिरित्यतस्तद्वाक्यादेवेत्यभिप्रेत्य तत्पठति **यथाऽऽहुरिति ।** व्यतिरेकमुखेनापि प्राणादेः सात्मकत्वेनान्वयसिद्धौ न केवलव्यतिरेकीति चेदिति न्यायवार्तिकतात्पर्यटीकास्थशङ्काग्रन्थस्य विवरणरूपं न्यायनिबन्धनवाक्यमनुवदति **यदीत्यादिनाऽऽशङ्क्येत्यन्तेन ।** न स्वाभाविकं साध्येन प्रतिबन्धमन्वयं व्यतिरेकिणि व्यासेधामः । किन्तु सपक्षाभावेन विधिमुखेनास्य प्रतिबन्धं निराकुर्म इति तत्स्थपरिहारग्रन्थविवरणरूपं 'न वयमस्योपेयमन्वयं व्यासेधामोऽपि तूपायमि'ति न्यायनिबन्धनवाक्यमेव पठति । **नेति ।** अत्र च टीकायां 'नोपेयमन्वयमस्य व्यासेधामः (निराकुर्मः) । अपि तूपायमि'त्यादीत्येव पाठः । मूलकोशेषु परग्रन्थेषु च तथैव दर्शनात् । स्वरसश्च तथापाठ एव । अनेन ग्रन्थेनोपेयस्यान्वयस्यानिरासलाभेन व्यतिरेकिण्यन्वयसत्ताया व्यतिरेकिणा तदवगमस्य च सिद्ध्या तयोः परकीयाभ्युपगमावेदकतयाऽस्य ग्रन्थस्य 'न केवलं व्यतिरेकिसाधनस्य साध्येन व्याप्तिर्व्यतिरेकेण तदवगमश्चास्माभिरेवाभ्युपगम्यते किन्त्वप्रसिद्धविशेषणत्ववादिभिरपी'ति प्रतिज्ञातार्थोपपादकत्वस्य, उपेयभूतान्वयसद्भाववर्णनेन विरुद्धत्वप्रसञ्जकतयोक्तस्य सर्वथाऽनन्वयस्यासिद्धिलाभेन तत्प्रयुक्तविरुद्धत्वशङ्कापरिहारस्य च संभवात् । 'नोपेयत्वमन्वयस्य व्यासेधामः किन्तूपायत्वमि'ति सार्वत्रिकपुस्तकपाठे त्वनेन ग्रन्थेनान्वयस्योपेयत्वमात्रप्राप्तावपि तत्सत्ताया अलाभात्तस्य ग्रन्थस्य तदुभयाभ्युपगमानावेदकत्वेन प्रतिज्ञातप्रमेयानुपपादकत्वस्य सर्वथाऽनन्वयप्रयुक्तविरुद्धताया अन्वयसद्भावोक्तिमात्रनिवर्त्यत्वेन तदवगमोक्त्याऽनिरस्यतया प्रकृतग्रन्थेनान्वयसद्भावस्यानभिधानेन अनन्वयप्रयुक्तविरुद्धत्वशङ्कापरिहारकत्वाभावस्य च प्रसङ्गात् । तस्मादयमस्यार्थः । द्विविधोऽन्वयः । उपेय उपायश्चेति । व्यतिरेकिसाधनस्य साध्येन प्रतिबन्ध उपेयोऽन्वयः । साधनस्य साध्येन सहचारस्तु साधननिष्ठसाध्यनिरूपितप्रतिबन्धरूपान्वयावगतिसाधनत्वादुपायभूतोऽन्वयः । तत्र व्यतिरेकिसाधनस्य साध्येन सहचाररूपोपायभूतान्वयस्य सपक्षाभावादसत्त्वेऽपि साधनस्य साध्येन सह प्रतिबन्धरूपोपेयान्वयसद्भावेन द्विविधान्वयशून्यत्वाभावान्न सर्वथाऽनन्वय इति न

तत्प्रयुक्तं विरुद्धत्वमिति । न चैवमस्य विरुद्धत्वपरिहारेऽपि नान्वयिनो भेदः सिध्यति । उपेयभूता-न्वयसद्भावेनान्वयित्वादिति वाच्यम् । उपायभूतान्वयवत्त्वस्यैवान्वयित्वे प्रयोजकत्वेन तच्छून्यत्वमात्रे-णैवानन्वयित्वसंभवात् । अत एवोक्तं न्यायवार्तिकटीकायां तात्पर्यपरिशुद्धौ, 'एतावतैव चान्वयिनो भिद्यत' इति । एतद्ग्रन्थसंग्रहायैव चेह टीकायामपीत्यादीत्यादिपदं प्रयुक्तमिति ध्येयम् ॥ गमकत्व-भङ्गादिति । व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपलिङ्गपरामर्शस्यानुमितिमात्रहेतुत्वाद्व्यतिरेकिणि च साधने व्याप्तिपक्षधर्मतयोर्वैयधिकरण्येन तदसंभवान्न तस्य गमकतेत्यर्थः । न चान्वयिनि लिङ्गपरामर्शः, व्यति-रेकिणि च साध्याभावव्यापकाभावप्रतियोगित्वज्ञानमनुमितिमात्रे तु पक्षधर्मताधीरेव हेतुरिति युक्तमस्य गमकत्वमिति वाच्यम् । तृणारणिमणिजन्यवन्हिष्विव लिङ्गपरामर्शादिरूपोक्तकारणद्वयजन्यानुमितिष्वि-वावान्तरविशेषस्याननुभवेन तत्कल्पने चान्योन्याश्रयेण योग्यानुपलब्धिबाधेन चायुक्ततयोक्तप्रकारस्या-संभवदुक्तिकत्वादित्याशयात् । केचित्तु धूमगतवन्हिव्याप्त्या कृतकत्वस्यानित्यत्वावगमकत्वापत्त्या व्याप्तिमात्रस्य लिङ्गगमकताप्रयोजकत्वाभावेन तन्निष्ठव्याप्तेरेव तद्गमकताप्रयोजकत्वेन व्यतिरेकव्याप्तेश्च साध्याभावगतत्वाल्लिङ्गनिष्ठत्वाभावेन गमकताप्रयोजकशून्यत्वान्न तस्य गमकत्वमित्यर्थ इत्याहुः । व्यतिरेकिण्यन्वयव्याप्तेर्व्यतिरेकिणा तदवगमस्य च पराभ्युपगमत्वसिद्धावपि किमायातं प्रकृत इत्यत आह तथा चेति ।

स० – नोपेयत्वमिति । साध्यसाधनसहचारस्य व्यतिरेकसहचारेण ज्ञेयत्वं न निषेधाम इत्यर्थः ॥ किं तूपायत्वमिति । साध्यसाधनोपयुक्तत्वमित्यर्थः ।

प० – अस्येति । साधनस्येत्यर्थः । विरुद्ध इति । साध्यासंबन्धो विरुद्ध इत्युपेत्येय-मुक्तिः ॥ नोपेयत्वमिति । प्राणादिमत्त्वसात्मकत्वयोरन्वयव्याप्तेः व्यतिरेकव्याप्त्याऽनुमेयत्वं न निषेधाम इत्यर्थः ॥ उपायत्वमिति । अनुमितिजननोपयोगित्वं निषेधाम इत्यर्थः । तत्र व्यतिरेकव्याप्ति-रेवानुमित्युपयोगिनीति भावः । यथाहुरित्युक्तानामेव वाक्यान्तरं च संवादयति तथेति ॥ गमकत्व-भङ्गादिति । व्याप्तिविशिष्टपक्षधर्मताया एव गमकतोपयोगादिति भावः ।

या० – विरुद्ध एवायमिति । साधने साध्यसाधने साध्यसामानाधिकरण्याग्रहादिति भावः । उपेयत्वमिति । व्यतिरेकिण्यन्वयस्योपेयत्वमिति साध्यत्वमनुमितिविषयत्वमिति यावत् । तन्न निराकुर्म इत्यर्थः । उपायत्वं अनुमितिजनकज्ञानविषयत्वम् । ततश्च व्यतिरेकिणि विरुद्धताशङ्कापरिहाराय नियत-सामानाधिकरण्यरूपोऽन्वयः परमनुमीयते न तु तज्ज्ञानस्य तत्रानुमितिजनकत्वम् । व्यतिरेकव्याप्तिज्ञा-नस्यैव तत्र तथात्वादिति भावः ॥ गमकत्वभङ्गादिति । अन्वयव्याप्त्यभावे पक्षधर्मे व्याप्तिवैशिष्ट्य-स्याभावेन गमकतौपयिकस्य व्याप्तिविशिष्टपक्षधर्मताज्ञानस्य तत्रासम्भवाद्गमकत्वभङ्गप्रसङ्गादित्यर्थः ।

साध्याभावव्यापकाभावप्रतियोगित्वज्ञानस्यान्वयिन्यभावेनागमकत्वात् । व्यतिरेकिण्येव तस्य गमकत्वेनाननुगमप्रसङ्गात् । अनुमितौ वैजात्यस्याप्रामाणिकत्वेन तृणारणिमणिन्यायासम्भवाच्चेत्याशयः ।

श्री० — **उपेयत्वं** साध्यत्वमनुमेयत्वमित्यर्थः । **व्यासेधामो** निराकुर्मः । **उपायत्वं** साधकत्वम् ।

च० — **विरुद्ध एवायमिति** । साध्यासामानाधिकरण्यरूपविरुद्धलक्षणलक्षितत्वादिति भावः । **उपेयत्वमिति** । साध्याभावव्यापकाभावप्रतियोगित्वलिङ्गकानुमिति विषयत्वमन्वयव्याप्तेर्व्यतिरेकिणि विरुद्धताशङ्कामपहस्तयितुमुपेयत इत्यर्थः ॥ **उपायत्वमिति** । अनुमित्युत्पादौपयिकज्ञानविषयत्वमित्यर्थः । तथा च तादृशस्थलीयानुमितिजनकत्वं व्यतिरेकव्याप्तिज्ञानस्यैवोपेयते न त्वन्वयव्याप्तिज्ञानस्येति भावः । **अन्यथेत्यादि** । दर्शितदिशान्वयव्याप्त्यनुमित्यनादरे साध्यनिरूपितसाधननिष्ठव्याप्तिप्रतिसन्धानाभावेन साध्याभावव्यापकाभावप्रतियोगित्वज्ञानस्य चान्वयिन्यनवधृतसामर्थ्यतयाऽनुमितित्वावच्छेदेन हेतुत्वासंभवेन व्यतिरेकिस्थलीयानुमितिमात्रवृत्तितदीयजन्यतावच्छेदकाभिमतधर्मस्य निष्प्रमाणतया तृणारणिमणिन्न्यायेनापि तद्धेतुत्वस्य दुरुपपादतया व्यतिरेकिणोननुमापकत्वप्रसङ्ग इति भावः ।

सु० — **यदुक्तं केवलव्यतिरेकिणो व्याप्त्यवगमात्परैरभ्युपगमाच्च नाप्रसिद्धविशेषणत्वेऽपि व्याप्त्यनवगतिरिति । तदयुक्तम् । यतः केवलव्यतिरेकिण्यन्यैव गतिः । ये हि सम्प्रतिपन्नप्रमाणभावाः केवलव्यतिरेकिणस्तेषु सामान्यतोऽन्वयव्याप्तिरेवाभिधातव्या । तथा हि । प्राणादिमत्त्वेन जीवच्छरीरस्य सात्मकत्वे साध्ये यद्यत्कार्यवत्तत्तत्कारणवद्यथाऽङ्कुरवती भूमिर्बीजगर्भेति । (य)तथा गन्धवत्त्वेन भुवोऽन्यभेदसाधने यद्यदसाधारणधर्मवत्तत्ततो भिद्यते यथा अबादीति । एवमीश्वरस्य सर्वकर्तृत्वेन सार्वज्ञसाधने यो यस्य कर्ता स तस्य कारणं प्रयोजनं च जानाति । यथा कुलाल इति । एवं शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः पृथिव्यादिवृत्तौ बाधकोपपन्नत्वे सति गुणत्वादित्यादौ यो यद्वृत्तौ बाधकोपपन्नत्वे सति गुणः स ततोऽन्यद्रव्यवृत्तिर्यथा गन्ध इत्यादिरूपेण सामान्यतो व्याप्तिरभिधातव्या ।**

**यद्वा सामान्यतो विशेषणप्रसिद्धिं विधाय केवलव्यतिरेकी प्रयोक्तव्यः । यथा ज्ञानतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वादित्यनेन सामान्यतः सार्वज्ञसिद्धौ तस्येश्वरसंबन्धः केवलव्यतिरेकिणा साध्यते । तथेच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपवत् । यश्चेच्छादीनामाश्रयः स एवात्मेति सामान्येनात्मसिद्धौ तत्सम्बन्धो जीवच्छरीरस्य केवलव्यतिरेकिणा साध्यते । एवमन्यत्रापि यथासम्भवमूह्यम् ।**

**क्वचित्पक्षैकदेश एव विशेषणप्रसिद्धिमाश्रित्य केवलव्यतिरेकी प्रवर्तते । यथा पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वात्र यदेवं न तदेवं यथा जलादीत्यत्र घटादावेव विशेषणप्रसिद्धेर्नाप्रसिद्धविशेषणता । न चैवं सपक्षसम्भवेन केवलव्यतिरेकित्वभङ्गः । घटादेः पक्षैकदेशत्वात् । न चांशे सिद्धसाधनता । एकैकत्र प्रसिद्धावप्यापरमाणोः आ च भूगोलकादसिद्धेरिति ।**

**अभावो वा केवलव्यतिरेकिणा साध्यः । भावे हि प्रतिपाद्ये व्यतिरेकव्याप्तौ तदभावस्य प्रतियोगिप्रतीतिसापेक्षतया विशेषणप्रसिद्ध्यपेक्षा । अभावे तु साध्ये नायं दोषः । अभावाभावस्य भावत्वेन प्रतियोगिनिरपेक्षत्वात् । एवमन्येऽप्युक्तिविशेषप्रकारा द्रष्टव्याः ।**

**शे० — यद्यदसाधारणधर्मवदिति ।** यद्यद्व्यावृत्तधर्मवदित्यर्थः ।

**एवमन्यत्रापि यथासम्भवमिति ।** जलं तेजःप्रभृतिद्वादशभिन्ननिष्ठभेदप्रतियोगि द्रव्यत्वात्तेजोवदित्यनुमानेन व्याघातदण्डभयेन वा सामान्यतः सिद्धस्य त्रयोदशभिन्नत्वस्य पृथिवीतरभेदानुमाने साधनान्नाप्रसिद्धविशेषणत्वम् । शब्दः क्वचिदाश्रितो गुणत्वाद्रूपवद्यश्च शब्दाश्रयः स एवाकाश इति सामान्येनाकाशसिद्धौ तत्सम्बन्धस्य शब्दे केवलव्यतिरेकिणा साधनान्नाप्रसिद्धविशेषणत्वमिति यथासंभवमूह्यमित्यर्थः ।

**क्वचित्पक्षैकदेश एवेति ।** पृथिवीतरभिन्नेत्यादौ पक्षस्यैकदेशसद्भावेन तत्र विशेषणप्रसिद्धिमाश्रित्य केवलव्यतिरेकिप्रवृत्त्युपपत्तावपि, यत्र न पक्षैकदेशोऽस्ति, गगनमितरेभ्यो भिद्यत, इत्यादौ तत्रैकदेशविशेषणप्रसिद्ध्याश्रयणेन न व्यतिरेकिप्रवृत्तिरुपपादयितुं शक्येत्यभिप्रेत्य क्वचिदित्युक्तमिति ध्येयम् ॥ **एकैकत्रेति ।** घटत्वाद्यवच्छेदेन कुत्रचिदेव घटादिरूपे धर्मिणि साध्यसिद्धावप्युद्देश्याया: पृथिवीत्वरूपपक्षतावच्छेदकधर्मावच्छेदेन तत्सिद्धेरभावादिति भावः ।

**अभाव इति ।** निरात्मकत्वाद्यभाव इत्यर्थः । अयमाशयः । अप्रसिद्धविशेषणत्वं हि व्याप्तिग्रहप्रतिबन्धकत्वेन दूषणमभिमतम् । तच्च, यत्र भावः केवलव्यतिरेकिणा साध्यते तत्रैव संभवति । तत्र साध्याभावस्याभावतया भावरूपसाध्यात्मकप्रतियोगिज्ञानाधीनज्ञानत्वेन, साध्याप्रसिद्धौ भावरूपसाध्यात्मकप्रतियोगिज्ञानाभावेन दुर्ज्ञानतया, तदज्ञाने च संबन्धिज्ञानाभावेन ससंबन्धिकपदार्थरूपव्यतिरेकव्याप्तेर्दुर्ग्रहत्वात् । न तु यत्राभावः केवलव्यतिरेकिणा साध्यस्तत्रापि । तत्राभावरूपं यत्साध्यं तदभावरूपस्य भावस्यैव व्यतिरेकव्याप्तिं प्रति संबन्धित्वेन ज्ञातव्यतया तद्ग्रहेऽभावरूपसाध्यात्मकप्रतियोगिज्ञानानपेक्षणेन साध्याप्रसिद्धावपि तज्ज्ञानसंभवेन व्याप्तिग्रहस्य सुग्रहकत्वात् । तथा चाप्रसिद्धस्य भावस्य व्यतिरेकिणा साधनासंभवेऽपि तादृशाभावस्य साधनमविकलम् । यस्य भावस्य व्यापकतया हेत्वभावो गृहीतस्तदभावस्य व्यापकाभावाभावरूपेण हेतुना पक्षे सिद्धिसंभवात् ।

व्यापकाभाववत्तया ज्ञाते व्याप्याभावज्ञानावश्यम्भावात् । तथा हि । पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यत्रेतरस्य जलादेर्व्यापकः पृथिवीत्वाभावो गृहीत इति पृथिवीत्वाभावाभावरूपेण पृथिवीत्वेन पृथिव्यामितरान्योन्याभावोऽप्रसिद्ध एव सिध्यति प्रतियोगिज्ञानस्य वृत्तत्वात् प्रत्यक्षेण भूतले घटाभाववत् । न च विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्य साध्याप्रसिद्धौ कथं तद्विशिष्टज्ञानमिति वाच्यम् । भूतले घटाभाव इति घटाभावविशेष्यकप्रत्ययानन्तरं घटाभाववद्भूतलमिति तद्विशेषणकप्रत्ययवत् पक्षविशेषणकसाध्यविशेष्यकप्रतीत्यनन्तरं साध्यविशेषणकपक्षविशेष्यकप्रत्ययस्योपपन्नत्वात् । ननु साध्याभावव्यापकाभावाभावरूपहेतुमत्तया पक्षज्ञानस्य व्यतिरेकिणि गमकतौपयिकत्वसाध्यप्रसिद्धिं विना च तादृशप्रतिसन्धानासंभवान्न तत्राप्रसिद्धसाध्यसिद्धिः । वस्तुगत्या यः साध्याभावस्तद्व्यापकाभावप्रतियोगिमत्तया ज्ञानस्यैव तद्गमकतौपयिकत्वे च व्यतिरेक्याभासानुपपत्तिरिति चेन्न । योऽभावो यस्य भावस्य व्यापकत्वेन गृहीतस्तदभावाभावेन तस्य व्याप्यस्याभावः पक्षे साध्यत इत्यनुगतानतिप्रसक्तस्य गमकतौपयिकत्वादिति दिक् ।

**एवमन्येऽपीति** । पृथिव्या इतरभेदानुमाने पृथिवी तेजोभिन्ना न वेति संशयेन तेजोभिन्नत्वेऽवगते तेजोभिन्ना पृथिवी जलादिद्वादशभिन्ना न वेति तेजोभिन्नपृथिवीधर्मिकजलादिद्वादशभिन्नत्वकोटिकसंशयेनार्थात्त्रयोदशभिन्नत्वं प्रसिद्धं तदेव च साध्यम् । एकविशेषणविशिष्टे विशेषणान्तरबुद्धेरेव विशिष्टवैशिष्ट्यज्ञानत्वात् । एवञ्च संशयप्रसिद्धं साध्यमादाय व्यतिरेकादिनिरूपणमुपपन्नमिति । पृथिवी जलादिभिन्ना न वेत्यादिप्रत्येकं त्रयोदशसंशयविषयाणां त्रयोदशान्योन्याभावानां समुदायः पृथिव्यामवगतो व्यतिरेकादिनिरूपकः । न चैवं पृथिव्यामेव साध्यसिद्धेर्व्यतिरेकिवैयर्थ्यम् । तस्य तन्निश्चयार्थत्वात् । न चासाधारण्यम् । समुदितान्योन्याभावानां साध्यत्वेन सपक्षविरहादिति वा, पृथिवी जलादिभ्यो भिन्ना न वेति विप्रतिपत्तिवाक्यादाकाङ्क्षादिमतोऽर्थप्रतिपादकात्प्रसिद्धसाध्यमादाय व्यतिरेकादिनिरूपणमिति वा इतरे तावत्प्रसिद्धा एव ते तु किञ्चिन्निष्ठभेदप्रतियोगिनो मेयत्वादितीतरभेदस्य सुग्रहत्वान्नाप्रसिद्धत्वमिति वेत्येवमादयः । उपन्यस्तप्रकारापेक्षयाऽन्येऽपि साध्यप्रसिद्धिसंपादकोक्तिविशेषप्रकारा द्रष्टव्या इत्यर्थः ।

प० — **यद्यत्कार्यवदिति** । प्राणादिकं चात्मकार्यमिति इत्थं व्याप्त्युक्तिर्नासङ्गतेति भावः । **यद्यदसाधारणेति** । यद्वस्तुभ्यो व्यावृत्तिधर्मवत् तेभ्यो भिद्यत इत्यर्थः ॥ अबादिकं चाप्त्वादियोगात् पृथिव्यादिभ्यः भिद्यत इति भावः ॥ **एवमन्यत्रापीति** । पृथिवीतरेभ्यो भिद्यते इत्यादावपि त्रयोदशान्योन्याभावाः क्वचिद्धर्मिणि स्थिताः धर्मत्वाद्रूपवदि'त्यादिरूपेणोह्यमित्यर्थः ॥ **अभावो वेति** । पृथिवी इतरान्योन्याभाववतीत्यादिरूपेणेत्यर्थ ॥ **अभावाभावस्य भावत्वेनेति** । इतरान्योन्याभावाभाव इतरत्वं

यत्रेतरत्वं तत्र गंधवत्त्वाभावो यथा अबादाविति‌व्याप्तिनिरूपणसंभवादिति भावः ॥ **एवमन्येप्युक्तिवि-शेषप्रकारा इति** । साध्याप्रसिद्धिनिरासकोक्तिविशेषप्रकारा इत्यर्थः । ज्ञानं क्वचित्समवेतं गुणत्वात्, शब्दः क्वचिदाश्रितः **गुणत्वाद्रूपवदिति** ज्ञानाद्याश्रयस्य सामान्यतः सिद्धौ तस्य परिशेषतोऽष्टद्रव्यान्यत्वे सिद्धे जीवच्छरीरं सात्मकमिति साध्यं तथा भूरितरभिन्नेत्यादौ त्रयोदशान्योन्याभावानांत्र योदशस्वधिक-रणेषु प्रसिद्धिमादाय पृथिव्यां साधनीया(स्त)इत्यादि(प्रमाण)प्रकारा इत्यर्थः । अन्ये च चिंतामण्याद्यु-क्तप्रकारा ज्ञेयाः ।

**या०— यद्यदसाधारणधर्मवदिति** । यद्व्यावृत्तधर्मवदित्यर्थः । तेन द्वितीययच्छब्देनाबादेः प्राप्त्या द्वितीयतच्छब्देन तस्य परामर्शः सम्भवति । अन्यथा द्वितीययच्छब्देनासाधारणधर्मस्यैव प्राप्तावस-ङ्गतिप्रसङ्ग इति ध्येयम् ॥ **एवमन्यत्रापीति** । पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् । शब्दः पृथिव्याद्य-ष्टद्रव्यातिरिक्तद्रव्याश्रितः पृथिव्यादिवृत्तौ बाधकोपपन्नत्वे सति गुणत्वादित्यादावित्यर्थः । नन्वत्रोक्तरीत्या न सामान्यतः साध्यप्रसिद्धिर्वक्तुं शक्या तत्कथमतिदेश इत्यत उक्तं **यथासम्भवमिति** । उक्तप्रका-राभ्यां तत्र सामान्यतः साध्यप्रसिद्ध्यसम्भवेऽपि येन प्रकारेण सा सम्भवति तथोह्यमित्यर्थः । अतिदेशश्च सामान्यतः साध्यप्रसिद्धिसद्भावमात्रनिबन्धन इति भावः । कथमत्रोभयत्र सामान्यतः साध्यप्रसिद्धि-सम्भव इति चेदुच्यते । पृथिव्यामितरभेदानुमाने जलं तेजःप्रभृतिद्वादशभिन्नभिन्नं द्रव्यत्वात्तेजोव-दिति सामान्यतस्त्रयोदशभिन्नस्य सिद्धौ पृथिव्यां त्रयोदशभिन्नत्वं साध्यम् । शब्दस्य पृथिव्याद्यष्टद्रव्यातिरि-क्तद्रव्याश्रितत्वसाधकानुमाने तु गुणत्वेन शब्दाश्रयद्रव्यसिद्धौ पृथिव्यादौ शब्दाधारताबाधे तद्द्रव्यं पृथिव्या-द्यष्टद्रव्यभिन्नमष्टद्रव्यावृत्तिधर्मवत्त्वात् । पृथिव्यादित्वे बाधकसद्भावाद्वित्यष्टद्रव्यातिरिक्तद्रव्यसिद्धौ शब्देऽ-ष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं साध्यमिति ॥ **एकैकत्रेति** । घटत्वपटत्वावच्छेदेन कुत्रचिदेव घटपटादिरूपे धर्मिणि साध्यसिद्धावपि न पक्षतावच्छेदकीभूतपृथिवीत्वावच्छेदेन सर्वत्र तत्सिद्धिरुद्देश्यभूता जातेति भावः ॥ **एवमन्येऽपीति** । साध्यप्रसिद्धिसंपादकोक्तिविशेषप्रकारा अन्येऽपि द्रष्टव्या इत्यर्थः । तथा हि । पृथिव्यामितरभेदानुमाने पृथिवी तेजोभिन्ना न वेति संशयेन तेजोभिन्नत्वेऽवगते पृथिवी तेजोभिन्ना सती जलादिद्वादशभिन्ना न वेति संशयेन तेजोभिन्नत्वे सति जलादिद्वादशभिन्नत्वं प्रसिद्धं तदेव साध्यम् । एवं च संशयप्रसिद्धं साध्यमादाय व्यतिरेकादिनिरूपणम् । यद्वा पृथिवी जला-दिभ्यो भिन्नेति विप्रतिपत्तिरूपवादिवाक्यादाकाङ्क्षादिमतोऽपूर्वार्थप्रतिपादकात्साध्यप्रसिद्धिः । अथवा जलादीनां त्रयोदशान्योन्याभावास्त्रयोदशसु प्रसिद्धाः पृथिव्यां साध्यन्ते । अत्र समुदितानामेकत्रा-प्रसिद्ध्या नान्वयित्वासाधारण्ये । यद्वेतरे तावत्प्रसिद्धा एव । ते तु किञ्चिन्निष्ठभेदप्रतियोगिनो मेयत्वा-

दितीततरभेदोऽपि सुग्रह एव । किंबहुना व्याघातदण्डभयेनैव सामान्यतः प्रसिद्धं साध्यं व्यतिरेकिणा साध्यत इति ।

**श्री० — एकैकत्रेति ।** अयमर्थः । यदि पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्या स्यात्तदैवांशे सिद्धसाधनतादोषः स्यात् । न चैवम् । किं नाम पक्षतावच्छेदकावच्छिन्ने सर्वत्र साध्यसिद्धिरुद्देश्या । तथा चोद्देश्यसिद्धेरजातत्वान्नांशे सिद्धसाधनता दोष इत्यर्थः । **आपरमाणोरिति ।** परमाणुमारभ्य भूगोलपर्यन्तमित्यर्थः । **प्रतिपाद्ये** साध्ये । ननु नेदं निरात्मकमित्यभावस्य साध्यत्वेऽपि यत्र निरात्मकत्वाभावाभाव इत्यादिव्यतिरेकव्याप्तिर्ग्राह्या । तत्र निरात्मकत्वाभावरूपप्रतियोगिप्रसिद्ध्या भाव्यमित्यत आह **अभावे त्विति ।** अभावज्ञाने हि प्रतियोगिज्ञानमपेक्षितं न तु भावज्ञाने । निरात्मकत्वाभावाभावश्च नाभावरूपः । किन्तु भावरूपो विवक्षितः । अभावरूपस्य साध्यस्य योऽभावस्तस्य न प्रतियोगिज्ञानानपेक्षत्वादिति भावः ।

**च० — यद्यदसाधारणेति ।** यद्यदवृत्तिधर्मवत् तत्तत्प्रतियोगिकभेदानुयोगीत्यर्थः । **अभावो वेति ।** पृथिव्यान्यत्वप्रकारकप्रमाविशेष्यत्वरूपसाध्याभावप्रतीतेः साध्यात्मकप्रतियोगिप्रतीतिनियंत्रितत्वेपि तादृशविशेष्यत्वत्वरूपव्याप्तिशरीरघटकतावच्छेदकरूपेण तादृशविशेष्यत्वप्रतीतेः साध्यात्मकप्रतियोगिप्रतिपत्तिनिबन्धनत्वाभावादिति भावः । **एवमन्य इति ।** साध्यप्रसिद्धिव्युदासकभङ्गी विशेषो इत्यर्थः । ज्ञानं क्वचित्समवेतं गुणत्वात् । शब्दः क्वचिदाश्रितः गुणत्वाद्रूपवदिति ज्ञानाद्याश्रयस्य सामान्यतः सिद्धौ जीवच्छरीरं सात्मकमिति साध्यम् । तथा भूरितरभिन्नेत्यादौ त्रयोदशान्योन्याभावानां त्रयोदशस्वधिकरणेषु प्रसिद्धिमादाय पृथिव्यां साधनीया इत्यादयश्चिन्तामणिकाराद्यभिहिता विधा विशेषनिबन्धातरदिशावसेयाः ।

**सु० — एतेष्वन्यतमस्याप्यभावेऽप्रसिद्धविशेषणता दूषणमेव । अतो न केवलव्यतिरेकिप्रामाण्यमवलम्ब्याप्रसिद्धविशेषणतादूषणत्वं निरसनीयमित्यत आह** अप्रसिद्धस्येति ।

**अनु० —** अप्रसिद्धस्य साध्यस्य साधकत्वं यदेष्यते ॥
लिङ्गस्योक्तौ विशेषोऽयं केन मानेन गम्यते ॥

**साध्यस्येति कर्मणि षष्ठी लिङ्गस्येति कर्तरि । अयमिति बुद्धिस्थपरामर्शः । भवेदेतद्यद्ययं केवलव्यतिरेकिण्युक्तिविशेषः कार्य इत्यत्र नियामकं स्यात् । न चैतदस्ति । तथा हि । किमनेनोक्तिविशेषेण केवलव्यतिरेकिसाध्यमन्वयितां नीयत उत नेति वक्तव्यम् । नाद्यः । उक्तेरर्थतथात्वपरिवर्तकत्वासम्भवात् । न हि सहस्रेणाप्युक्तीनां नरो वानरीकर्तुं शक्यते । शक्यत्वे वा केवलव्यतिरेकिप्रामाण्यं त्यक्तं स्यात् । द्वितीयस्येदमुत्तरम् । यदा लिङ्गस्याप्रसिद्धस्य साध्यस्य**

**साधकत्वमिष्यते । यद्युक्तिविशेषेणापि लिङ्गं केवलव्यतिरेकिसाध्यसाधकमेव नान्वयितामापद्यत इतीष्यत इति यावत् । तदाऽयमुक्तौ विशेषः केन मानेन कर्तव्यतया ज्ञायते न केनापि । अतोऽप्रसिद्धविशेषण एव केवलव्यतिरेकी साधकश्चेति नाप्रसिद्धविशेषणत्वस्य दोषत्वमिति ।**

**शे०** — साध्यस्य सिद्धिकर्मत्वेन कर्तृत्वासम्भवादाह **कर्मणीति ॥ कर्तरीति** । यद्यपि लिङ्गस्य करणत्वान्न कर्तृत्वं तथाऽपि करणे कर्तृत्वोपचाराभिप्रायेणेदमुक्तमित्याहुः । अवान्तरव्यापारवत एव करणस्य कारकत्वात् । लिङ्गकरणतापक्षमाश्रित्य प्रधानक्रियां प्रति करणस्यापि लिङ्गस्य स्वव्यापारं प्रति कर्तृत्वस्यापि सत्त्वात्तदभिप्रायेणेदमुक्तमित्याहुः । ननु चोक्तिविशेषप्रकारस्य पूर्वत्राप्रकृतत्वात्कथमयमिति प्रकृतपरामर्शकेनेदंशब्देन तस्य परामर्श इत्यतो न ग्रन्थोक्तत्वमेव प्रकृतत्वं किन्तु बुद्धिस्थत्वमेव । ग्रन्थोक्तत्वं तु तल्लिङ्गतयैव तथेति युक्तो बुद्धिस्थत्वादस्य विशेषस्येदंशब्देन परामर्श इत्याशयेनाह **अयमितीति** ।

**श्री०** — **त्यक्तमिति** । त्वदीयोक्तिविशेषेणान्वयित्वमेव प्राप्तमित्यर्थः ।

**च०** — **कर्मणि षष्ठीति** । कर्तृकर्मणोः कृतीत्यनुशासनात्कृत्संज्ञकण्वुल्समभिव्याहाराधीना कर्मणि कर्तरि षष्ठीति भावः ।

**सु०** — **अस्त्येवोक्तिविशेषस्य कर्तव्यतायां नियामकम् । तथा हि । यद्यप्युक्तिविशेषो न व्यतिरेकिणमन्वयिनं करोति । तथाऽपि लिङ्गस्य साध्येन व्याप्तिरतावदवश्यम्भाविनी । न च सा केवलव्यतिरेकिणि साक्षादुपदर्शयितुं शक्या । अन्वयग्रहणस्थलस्य विप्रतिपत्त्या प्रतिरुद्धत्वात् । अतः साध्यव्यतिरेकस्य साधनव्यतिरेकेण विपक्षे व्याप्तिं प्रदर्श्योपपादनीया ।**

**शे०** — ननु व्यतिरेकिणोऽन्वयित्वसम्पादकतयैवोक्तिविशेषस्य कर्तव्यतासिद्धेः कथं तत्र मानाभाव इत्यतोऽत्र सम्भावितविकल्पद्वयं बहिरेवाद्यपक्षदूषणं चाभिप्रेत्य द्वितीयपक्षदूषणपरतया ग्रन्थं योजयति **तथा हीत्यादिना ॥ अवश्यम्भाविनीति** । व्याप्तिविशिष्टपक्षधर्मताज्ञानस्यैव सर्वत्रानुमितौ हेतुत्वादिति भाव ।

**प०** — शङ्कते **अस्त्येवोक्तिविशेषस्येति** । **विपक्ष इति** । साध्यसाधनाभाववति स्थल इत्यर्थः ।

**या०** — **अवश्यम्भाविनीति** । व्याप्तिविशिष्टपक्षधर्मताज्ञानस्यैव सर्वत्रानुमितौ हेतुत्वादिति भावः ।

**च०** — **अवश्यम्भाविनीति** । व्याप्त्यवच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिपरामर्शस्यैवानुमितिसामान्यहेतुत्वादिति भावः ।

**सु०—** **यदि वा व्यतिरेकव्याप्तिरेव साध्यसिद्धेरङ्गम् । तथाऽपि तद्ग्रहोऽवश्यम्भावी । व्यतिरेकश्च प्रतियोगिप्रतीत्यधीनप्रतीतिक एव । प्रतियोगिनौ च लिङ्गसाध्यधर्मौ । तत्र लिङ्गं पक्षे प्रतीतमेव । साध्यधर्मश्च न पक्षे प्रतीतो नाप्यन्यत्र । तत्कथं व्यतिरेकयोगपि व्याप्तिर्गृह्यताम् । एतैस्तूक्तिविशेषैः कथञ्चित्प्रतियोगिनः साध्यधर्मस्य बुद्धिस्थतायां सुकरो व्याप्तिग्रहः स्यात् ।**

**शे०—** ननु साध्याभावव्यापकाभावाभावरूपहेतुमत्तया पक्षज्ञानमेव व्यतिरेकिणि गमकताप्रयोजकं न तु व्याप्तिविशिष्टपक्षधर्मताज्ञानं तत्कथं लिङ्गस्य साध्येन व्याप्तेरावश्यम्भावित्वमित्यत आह **यदि वेति ॥ अवश्यमिति ।** अतिप्रसङ्गेन स्वरूपसत्यास्तस्या अगमकत्वादिति भावः । **न पक्ष इति ।** तथा सति सिद्धसाधनताप्रसङ्गादिति भावः ॥ **नाप्यन्यत्रेति ।** तथा सत्यन्यत्र हेतोरपि वृत्तावन्वयित्वेन केवलव्यतिरेकित्वभङ्गस्यावृत्तावसाधारण्यस्य च प्रसङ्गादिति भावः । व्यापकतावच्छेदकावच्छिन्नसाध्यस्याप्रसिद्धत्वादाह **कथञ्चिदिति ।** सामान्यत इत्यर्थः ।

**या०—** अन्वयिनीव न ऋजुमार्गेणेत्याशयेनोक्तं **कथञ्चिदिति ।**

**श्री०** – सात्मकत्वरूपेणोपस्थित्यभावात्कथञ्चिदित्युक्तम् ।

---

**सु०—** **प्रतिज्ञावाक्यं चैवमविदितपदार्थकं न प्रसज्यत इत्यत आह** साधनमिति ।

**अनु०—** साधनं परमाण्वादेर्यद्यसिद्धस्य चेष्यते ॥
यथानुभवमेवैतन्नाङ्गीकार्यं कुतस्तदा ।

**परमाणुकारणकतां कार्याणामभ्युपगच्छता वैशेषिकादिना परमाणुसद्भावः साध्यते । तथा प्रधानोपादानतां वदता साङ्ख्येन प्रधानसद्भावः । एवमन्यदपि समवायादिकं तदङ्गीकारिभिः समर्थ्यते । तत्र पृच्छामः । यः परमाण्वादिकमभ्युपैति तं प्रति तत्सद्भावः साध्यते, उत न सन्ति परमाणव इति तदभावमभ्युपगच्छन्तं प्रति । नाद्यः । सिद्धस्य साधनायोगात् । द्वितीये त्वबुद्ध्यारूढस्य परमाण्वादेः साधनाय कथं वादिनः प्रयत्नः कथं च तदभावं परो मन्येत । प्रतियोगिनोऽविदितत्वात् ।**

**अथ मन्यसे कणादाद्युपदेशेन, सामान्यतो दृष्टस्वार्थानुमानेन वा स्वयमवगतं परमाण्वादिकं वादिना शक्यत एव साधयितुम् । वादिवाक्येन च प्रतियोगिनः परमाण्वादेरवगमे तदभावा(नुम)मितिः प्रतिवादिनो युक्तैव । न हि प्रमाणेनैव प्रतियोगी ज्ञातव्य इति नियमोऽस्ति शशविषाणाद्यभावप्रतीत्यनुपपत्तिप्रसङ्गादिति ।**

यद्येवमत्यन्ताप्रसिद्धस्यापि परमाण्वादेरनुभवमार्गमनतिक्रम्य साधनमिष्यते । तदेतद्व्यतिरेकिसाध्यसाधनमप्यनुभवानुसारेणैव कुतो नाङ्गीकार्यम् । तथा हि । प्रत्यक्षेणोपदेशेन वाऽसाधार(णध)र्णौ धर्मावेकत्रोपलब्धवतस्ततोऽन्यत्र सर्वत्रापि तदभावोपलम्भसंभवे व्यतिरेकव्याप्तिग्रहस्तावद्वादिनः सुकर एव । प्रतिवादिनोऽपि वादिवाक्यावगतप्रतियोगिनस्तदभावावगमसंभवात् । व्यतिरेकव्याप्तिग्रहः संभवत्येव । तथा च प्रागुक्तरीत्याऽन्वयसमर्थनेन अप्रसिद्धसाध्यसाधने संभवति किमेत भिः क्लिष्टकल्पनाभिः । एवञ्च न प्रतिज्ञावाक्यस्याविदितपदार्थकत्वप्रसङ्गः । वादिना तदर्थस्य व्युत्पादितत्वा(द्यत्वा)दिति ।

शे०— समवायादिकमित्यादिपदेन ज्ञाततादिपरिग्रहः । कणादादीत्यादिपदेन सांख्यादिपरिग्रहः ॥ सामान्यतो दृष्टेति । अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् परममहत्परिमाणतारतम्यवदिति । महदादिकं सुखदुःखमोहस्वभावाव्यक्तकं सुखदुःखमोहसमन्वितकार्यत्वात् । यद्यद्रूपमनुगतं तत्तत्स्वभावाव्यक्तकं यथा मृद्धेमरूपमनुगतं घटमुकुटादि मृद्धेमपिण्डाव्यक्तकमिति । जात्यादिगोचरो विशिष्टव्यवहारः संबन्धनियतो भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात्सघटं भूतलमिति व्यवहारवदिति । ज्ञानं स्वविषये किञ्चित्करोति क्रियात्वाद्गमनवदिति च सामान्यतोदृष्टस्वार्थानुमानेनेत्यर्थः । ननु वादिप्रतिवदिनोरन्योन्यमनाश्वासेनानाप्तवाक्यतयाऽप्रमाणत्वाद्वादिवाक्यस्य न तेन प्रतिवादिनः प्रतियोग्यवगमः संभवतीत्यत आह न हीति ॥ प्रागुक्तरीत्येति । पक्षादिप्रविभागात्प्रागवगताऽप्यन्वयव्याप्तिर्न व्यतिरेकिणि साक्षादुपदर्शयितुं शक्यते । अन्वयग्रहणस्थलस्य विप्रतिपत्त्या प्रतिरुद्धत्वादतः साध्यव्यतिरेकस्य साधनव्यतिरेकव्याप्तत्वलिङ्गेन सोपपादनीयेति प्रागुक्तरीत्येत्यर्थः ॥ किमेताभिः क्लिष्टकल्पनाभिरिति । इदं च परेण व्यतिरेकिणि सामान्येन व्याप्त्यादिके शङ्किते तं प्रति क्लिष्टकल्पनत्वोक्तिर्व्यतिरेकवादिनः परस्यान्वयव्याप्त्युक्तिर्व्यतिरेकित्वहान्यापादकत्वात्क्लिष्टेत्यभिप्रायेणैव न तु स्वमतेऽपि क्लिष्टेत्यभिप्रायेण । सिद्धान्तेऽपि सामान्यव्याप्त्यादेस्तत्र तत्र स्वीकारादित्यवधेयम् ।

प०— प्रतियोगिधीरावश्यकेति प्रदर्शनाय तदभावाभ्युपगमनीयं दर्शयति न सन्ति परमाणव इतीति ॥ सामान्यतो दृष्टस्वार्थानुमानेनेति । द्व्यणुकं सोपादानकं कार्यद्रव्यत्वाद्घटवदिति सामान्यतो दृष्टानुमानेन द्व्यणुकाद्युत्पादानत्वेन परिशेषसहकृतेनावगतं परमाणुप्रधानादिकमित्यर्थः ॥ असाधारणधर्माविति । सात्मकत्वप्राणादिमत्त्वादिरूपावित्यर्थः ॥ प्रागुक्तरीत्येति । 'व्याप्तिश्च व्यतिरेकेण तत्र तैश्चावगम्यत' इति प्रागुक्तरीत्येत्यर्थः ।

या०— समवायादिकमित्यत्रादिपदेन ज्ञाततादिपरिग्रहः ॥ सामान्यतो दृष्टेति । इतरबाधेविशेषपर्यवसायिना सामान्यतः साध्यसाधकेनेत्यर्थः । अत्र च व्यापकतावच्छेदकावच्छिन्नस्य साध्यस्य

प्रसिद्धिरस्त्येव । इतरबाधप्रतिसन्धानरूपसहकारिसामर्थ्यादभिलषितसाध्यविशेषस्याप्रसिद्धस्यैव सिद्धिरित्याशयः । यथा द्व्यणुकं स्वापेक्षया स्वल्पपरिमाणद्रव्यारब्धं कार्यद्रव्यत्वात्पटवदिति द्व्यणुकारम्भकं सामान्यतः सिद्ध्यदन्यत्र सम्भवतीति परमाणुमादायैव सिध्यतीति वैशेषिकादयः । सुखदुःखमोहात्मकमादिकार्यं स्वसदृशकारणजन्यं कार्यत्वाद्घटवदित्यादिकार्यसदृशकारणं सामान्यतः सिद्ध्यदन्यत्र सम्भवतीति सत्त्वरजस्तमोरूपं प्रधानमादायैव सिध्यतीति साङ्ख्याः । इह गवि गोत्वमित्यादिप्रत्ययो विशेषणसम्बन्धपूर्वकः अबाधितेहप्रत्ययत्वादिह कुण्डे बदराणीति प्रत्ययवदिति सामान्यसिद्ध्येतरबाधसहकृतया समवायसिद्धिः । ज्ञानं स्वकर्मणि किञ्चित्करोति क्रियात्वाच्छिदिक्रियावदिति सामान्यतो दृष्टेन ज्ञाततासिद्धिरित्याद्यूह्यम् ॥ **प्रागुक्तरीत्येति** । अतः साध्यव्यतिरेकस्य साधनव्यतिरेकेण विपक्षे व्याप्तिं प्रदर्श्योपपादनीयेत्युक्तरीत्येत्यर्थः ।

**श्री०— मन्येतेति** । न सन्ति परमाणव इति तदभावमभ्युपगच्छन्तं प्रत्येव त्वया साधनात्वस्य प्रतिवादिनस्तदभावज्ञानं कथमित्यर्थः । **धर्मौ** प्राणादिमत्त्वसात्मकत्वरूपौ । एकत्र जीवच्छरीरे । **अन्यत्र** लोष्ठादौ ॥ **संभवत्येवेति** । ततश्च क्वचिद्दृष्टान्ते तत्प्रसिद्धिरनपेक्षितेत्यर्थः ।

**च०— असाधारणधर्माविति** । सात्मकत्वप्राणादिमत्त्वरूपावित्यर्थः ।

**सु०— उपसंहरति** यत्रेति ।

अनु०— यत्र नातिप्रसङ्गोऽस्ति मान न च विपर्यये ॥
क्लिष्टकल्पनयैवात्र साध्यमित्यतिदुर्वचः ॥

यत्र **विषये केवलव्यतिरेकिणि । एवं सामान्यान्व(वमन्व)याभिधानादिना साधनं कार्यमिति** नियामकं **(मानं ना) नास्ति । व्याप्तिप्रतीत्यादेरन्यथासिद्धत्वात् । ऋजुनाऽनुभवानुसारिणा मार्गेण सिध्यतोऽर्थस्य वक्रेणाननुभाविकेन साधनायोगात् ।** विपर्यये **तथा साधनाकरणे, अतिप्रसङ्गश्च नास्ति । स्वव्याहत्यादिनैवापरस्याभासत्वात् । अत्र क्लिष्टकल्पनयैव साध्यसाधनं कार्यमित्यतिदुष्टं वाक्यमिति । अनेन विशिष्टव्यतिरेकमाश्रित्य या महाऽविद्यादिवक्ररीतिः साऽप्यपास्ता वेदितव्या ।**

**भवेदेतद्यदि केवलव्यतिरेक्यनुमानं भवेत् । न चैवम् । पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति पञ्चरूपोपपन्नं खल्वनुमानं भवति । न च केवलव्यतिरेकिणस्तदस्ति । सपक्षाभावेन सपक्षे सत्त्वाभावात् । न चैवं केवलान्वयिनोऽपि विपक्षाभावेन विपक्षाद्व्यावृत्तेरभावादननुमानत्वप्रसङ्ग इति वाच्यम् । अन्वयव्यतिरेकवत एवानुमानत्वेनानिष्टाभावादिति ।**

शे०— ननु व्यतिरेकव्याप्तिग्रहान्यथाऽनुपपत्तिरेव तत्र नियामिकाऽस्तीति कथं तदभाव इत्यत आह **व्याप्तीति ॥ अन्यथेति ।** तथा हि । प्रत्यक्षेणोपदेशेन वेत्यादिप्रागुक्तरीत्येत्यर्थः । ननु चात्रान्यत्सदसतोर्विश्वमित्यस्य भूरियं शशविषाणोल्लिखितेत्यादेर्वा साधकत्वप्रसङ्गस्यैव बाधकत्वात्कथं तदभाव इत्यत आह **स्वव्याहत्यादिनैवेति ।** आदिपदेन योग्यानुपलम्भबाधादिपरिग्रहः ॥ **अनेनेति ।** अप्रसिद्धविशेषणत्वस्य दूषणत्वनिराकरणेनेत्यर्थः ॥ **विशिष्टव्यतिरेकमाश्रित्येति ।** अप्रसिद्धविशेषणत्वनिरासायेति शेषः । **अनेन** प्रसिद्धविशेषणत्वव्युत्पादनेन ।**महाविद्यादीति ।** महाविद्यादिसाधिकावक्रीतिर्महाविद्यादिवक्रीतिः । आदिपदेन वेदपौरुषेयत्वसमवायस्वप्रकाशत्वादिपरिग्रहः । तत्र चैत्रप्रमा चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्तिका प्रमात्वान्मैत्रप्रमावत् । विगीतो भ्रम एतज्जनकाबाध्यातिरिक्तोपादानको विभ्रमत्वात्सम्मतवदिति मूलाविद्यासाधिका । अयं कालो वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवान्कालत्वादन्यकालवदित्यादिका वेदपौरुषेयत्वसाधिका । इह तन्तुषु पट इत्यादिप्रत्यय एतज्जनकसंयोगत्वरहितसम्बन्धजन्य इहेति प्रत्ययत्वादिह कुण्डे बदराणीति प्रत्ययवदित्यादिका समवायसाधिका । अयं घट एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्यः पदार्थत्वात्पटवदित्यादिका स्वप्रकाशत्वसाधिका वक्रीतिः । तत्राद्ये प्रमाप्रागभावातिरिक्तस्यानादेः प्रमानिवर्त्यस्यानङ्गीकारादप्रसिद्धविशेषणत्ववारणाय चैत्रगतेत्युक्तम् । तथा च चैत्रगतत्वरूपविशेषणाभावप्रयुक्तचैत्रगतत्वविशिष्टप्रमाप्रागभावत्वरूपविशिष्टाभावाधिकरणमैत्रप्रमाप्रागभावनिवर्तकत्वस्य मैत्रप्रमायां प्रसिद्धत्वान्नाप्रसिद्धिः । द्वितीयेऽपि सर्वत्रोपादानकारणस्य परैरबाध्यतास्वीकारादबाध्यत्वानधिकरणोपादानकत्वस्याप्रसिद्धेस्तद्वारणायैतज्जनकेत्युक्तम् । तथा चैतज्जनकत्वरूपविशेषणाभावप्रयुक्तस्यैतज्जनकाबाध्यत्वरूपविशिष्टाभावस्य भ्रमान्तरोपादाने सत्त्वान्नाप्रसिद्धिः । तृतीयेऽपि वेदव्यतिरिक्तत्वरहितपौरुषेयत्वं न प्रसिद्धम् । कालान्तरीयपौरुषेयस्य वेदव्यतिरिक्तत्वेन तद्रहितत्वाभावादत इदानीन्तनेत्युक्तम् । तथा च कालान्तरवर्तिपौरुषेयस्येदानीन्तनत्वरूपविशेष्याभावप्रयुक्तवेदव्यतिरिक्तेदानीन्तनत्वरूपविशिष्टाभावाधिकरणत्वेन तादृशपौरुषेयवत्त्वस्य कालान्तरे प्रसिद्धत्वान्नाप्रसिद्धिः । चतुर्थेऽपीह कुण्डे बदराणीति प्रत्ययहेतोः कुण्डबदरसंबन्धस्य संयोगत्वेन तद्रहितत्वाभावेन संयोगत्वरहितसंबन्धाप्रसिद्ध्या तज्जन्यत्वस्याप्रसिद्धत्वादप्रसिद्धविशेषणतापरिहारायैतज्जनकेत्युक्तम् । ततश्च कुण्डबदरसंयोगस्येह तन्तुषु पट इति प्रत्ययजनकत्वाभावेनैतज्जनकत्वरूपविशेषणाभावप्रयुक्तैतज्जनकत्वविशिष्टसंयोगत्वरूपविशिष्टाभावाधिकरणरूपत्वेन तादृशसंयोगजन्यत्वस्य दृष्टान्ते प्रसिद्धत्वान्नाप्रसिद्धविशेषणत्वम् । पञ्चमेऽप्ययं घटो वेद्यत्वानधिकरणान्य इत्युक्तावप्रसिद्धविशेषणता सर्ववेद्यत्ववादिनोऽनुमानात्पुरस्तात्तदनधिकरणाप्रसिद्धेरत उक्तमेतद्घटान्यत्वे सतीति । तथा चैतद्घटान्यत्वे

सति वेद्यत्वानधिकरणमयं घट एतस्य वेद्यत्वाधिकरणत्वेऽप्येतद्धटान्यत्वाभावेनैतद्धटान्यत्वरूपविशेषणाभाव-प्रयुक्तोक्तविशिष्टाभावस्याप्रत्यूहत्वात् । तादृगन्यत्वं च पटादावस्तीति न साध्याप्रसिद्धिः । पक्षे त्वेतद्धटस्यै-तद्धटान्यत्वे सति वेद्यत्वानधिकरणान्यत्वमेतद्धटान्यत्वानधिकरणान्यत्वेन वा वेद्यत्वानधिकरणान्यत्वेन वा स्यात् । आद्ये व्याहतिः । एतस्यैव घटस्यैतद्धटान्यत्वायोगात् । अतो हेतोः पक्षधर्मताबलादेतद्धटान्यत्वे सति वेद्यत्वानधिकरणमन्यत्किञ्चिदादाय तदन्यत्वसिद्धिरित्यवेद्यत्वसिद्धिः । एवमेव पूर्वत्रापि यथासंभवं पक्षे साध्यपर्यवसानं द्रष्टव्यम् । सेयमप्रसिद्धविशेषत्वनिरासाय विशिष्टव्यतिरेकमाश्रित्य तैस्तैर्वादिभिः समाश्रिता महाविद्यादिसाधिका वक्रीतिरप्रसिद्धविशेषणत्वस्य दूषणत्वनिरासेन व्यर्थत्वान्निरस्ता वेदित-व्येति संबन्धः ।

स० — **अनेनेति** । ऋजुनानुसारिणा मार्गेण सिध्यतोर्थस्य वक्रेण साधनमयुक्तमिति कथने-नेत्यर्थः ॥ **महाविद्यादिवक्रीतिरिति** । महाविद्यासाधिका वक्रीतिरित्यर्थः । सा चेत्थं विगीतो भ्रमः एतज्जनकाबाध्यातिरिक्तोपादानकः भ्रमत्वात् संमतवत् अत्र जगद्भ्रमस्य पक्षत्वं एतज्जनकं यदबाध्यं तद-तिरिक्तं यदुपादानं तद्युक्त इति साध्यार्थः अत्रैतज्जनकाबाध्यत्वरूपविशिष्टाभावः दृष्टान्त एतज्जनकत्वरूप-विशेषणाभावायत्तः पक्षे चाबाध्यत्वरूपविशेष्याभावायत्त इति द्रष्टव्यमित्यर्थ इति केचित् । वस्तुतस्तु अप्रसिद्धविशेषणत्वस्य दूषणत्वनिराकरणेनेत्यर्थः । **महाविद्यादिवक्रीतिरिति** । विशिष्टव्यतिरेकिणो महाविद्येति संज्ञा । अनेनैव न्यायेन स्वप्रकाशत्वरूपसाध्यस्य सामान्यतः प्रसिद्ध्यर्थमुपन्यस्तं यन्महा-विद्यानुमानं तत्त्वप्रदीपिकोक्तं तन्निराकृतमित्यर्थः । तदुक्तं अनुभूतिः स्वप्रकाशा अनुभूतित्वात् यन्नैवं तन्नैवं यथा घट इत्यनुमानमनुभूतेः स्वप्रकाशत्वे प्रमाणं न चाप्रसिद्धविशेषणत्वम् । अयं घटः एतद्धटान्यत्वे सति वेद्यत्वानधिकरणम् । अयं घटः तदन्यत्वमादाय घटादिसाध्यसिद्धिः पक्षत्वे तद्धटस्य एतद्धटान्यत्वे सति वेद्यत्वानधिकरणान्यत्वं एतद्धटान्यत्वानधिकरणान्यत्वेन वा वेद्यत्वानधिकरणान्यत्वेन वा । आद्ये व्याहतिः । एतस्यैव एतद्धटान्यत्वायोगात् अत एव तद्धटान्यत्वे सति वेद्यत्वानधिकरणं किञ्चिदादाय तदन्यसिद्धिरित्यवेद्यत्वसिद्धिः आदिग्रहणेन वेद्यत्वं स्वस्येतरावृत्तित्वानधिकरणात्यन्ताभाव-प्रतियोगिवृत्तिधर्माधिकरणं मेयत्वादित्यादि संगृहीतम् ।

प० — ननु कथं नास्ति विमतं सदसद्विलक्षणमित्यादेरपि साधुत्वप्रसङ्गोऽस्तीत्यत आह **स्वव्याहत्यादिनेति** । आदिपदेन बाधव्यभिचारग्रहः ॥ **अपरस्येति** । सदसद्वैलक्षण्यादिसाधन-स्येत्यर्थः ॥ **अनेनेति** । साध्याप्रसिद्धेरदोषत्वसमर्थनेनेत्यर्थः ॥ **विशिष्टव्यतिरेकमिति** । विशिष्टस्य व्यतिरेको विशिष्टव्यतिरेकस्तमित्यर्थः । यथा जिज्ञासानये प्रत्यक्षः कस्यचिद्धर्म इत्यादौ वेदापौरुषेय-त्ववादव्याख्यावसरे समवायनिरासप्रस्तावे च तत्र तत्रोक्तानुमानेषु अयं कालो वेदव्यतिरिक्तेदानींतन-

त्वरहितपौरुषेयवान् कालत्वादन्यकालवदित्यादौ वेदरूपपौरुषेयवानित्याद्युक्तौ साध्याप्रसिद्धिदोषोऽस्ति । अतः वेदव्यतिरिक्तत्वविशिष्टं यदिदानीन्तनत्वं तद्रहितपौरुषेयवानिति विशिष्टव्यतिरेकरहितपटादीन्याश्रित्य महाविद्यो नाम कश्चित्तदादिभिः कैश्चिद्वादिभिः कल्पिता वक्ररीतिः परास्तेत्यर्थः ॥ **साध्याप्रसिद्धेर-दोषत्वम् ।**

**या०— अपरस्येति** । विश्वं सदसद्विलक्षणमित्यादिरूपस्येत्यर्थः ॥ **महाऽविद्यादिवक्ररीतिरिति** । महाऽविद्यादिविषये वक्रानुमानप्रकार इत्यर्थः । यथा देवदत्तप्रमा तत्स्थप्रमाप्रागभावातिरेकिणः अनादेर्ध्वंसिका प्रमात्वादविगीतप्रमा यथेति विशिष्टव्यतिरेकि महाऽविद्यानुमानम् । अत्र हि साध्याप्रसिद्धिवारणाय तत्स्थेति विशेषणं प्रक्षिप्य विशेषणाभावप्रयुक्तविशिष्टाभावमादाय साध्यप्रसिद्धिरुपपाद्यते । सेयं वक्ररीतिः साध्याप्रसिद्धेरदूषणत्वसमर्थनेनापास्ता वेदितव्येत्यर्थः । आदिपदेनेयं क्रिया स्वान्यावयविकालीनत्वानधिकरणकिञ्चित्कालीनक्रियाऽन्या क्रियात्वादन्यकालीनक्रियावत् । इह तन्तुषु पट इत्यादिप्रत्यय एतज्जनकसंयोगत्वरहितसम्बन्धजन्य इहेति प्रत्ययत्वादिह कुण्डे बदराणीति प्रत्ययवदित्यादिप्रलयसमवायसाधकवक्ररीतिसङ्ग्रहः । यद्यपि महाऽविद्येति विशिष्टव्यतिरेकिणः संज्ञा परग्रन्थेषु तथा प्रयोगात् । तथाऽपीह न महाऽविद्याशब्दो विशिष्टव्यतिरेकिपरः । विशिष्टव्यतिरेकमाश्रित्येति पृथगभिधानात् । आदिपदानुपपत्तेश्च । किन्तूक्तरीत्याऽनाद्यविद्यापर एवेति मन्तव्यम् ।

---

**श्री०**— व्याप्तिप्रतीतेरन्यथाऽनुपपन्नत्वमेव नियामकमित्यत आह **व्याप्तीति** । तथा हि । प्रत्यक्षेणोपदेशेन वेत्युक्तरीत्याऽन्यथासिद्धत्वादित्यर्थः । ननु कथमतिप्रसङ्गो नास्ति । यदि तथा साधनमकृत्वा साध्यप्रसिद्धिर्न सम्पाद्यते तर्हि विश्वं सदसद्विलक्षणमित्यस्याप्यप्रसिद्धविशेषणस्य साधकत्वप्रसङ्गादित्यत आह **स्वव्याहत्यादिनेति** । **अनेन** अप्रसिद्धविशेषणत्वस्यादूषणत्वव्युत्पादनेन तत्र ह्यप्रसिद्धविशेषणतापरिहाराय विशेषणं दीयत इति भावः ।

**च०— विशिष्टव्यतिरेकमिति** । महाविद्यादिविषये वक्रानुमानप्रकार इत्यर्थः । यथा देवदत्तप्रमा तत्स्थप्रागभावातिरेकिणः अनादेर्ध्वंसिकाप्रमात्वादविगीतप्रमा यथेति **विशिष्टव्यतिरेकिमहा-**विद्यानुमानं अत्र हि साध्याप्रसिद्धिवारणाय तत्स्थेति विशेषं प्रक्षिप्य विशेषणाभावप्रयुक्तविशिष्टाभावमादाय साध्यप्रसिद्धिरापाद्यते सेयं वक्ररीतिरुपास्तेत्यर्थ इति व्याकर्तारो व्याचक्रिरे । जिज्ञासानये वेदापौरुषेयत्ववादव्याख्यावसरे अयं कालो वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवान्कालत्वादित्यादिरूपा महाविद्यादिनामकवादिविशेषदर्शिता वक्ररीतिरप्यपास्तेत्यर्थ इत्यपि स्थितम् ॥ **साध्याप्रसिद्धेरदोषत्व-समर्थनम् ।**

सु० — द्वितीयमाशङ्क्याह परिशेष इति ।

अनु० — परिशेषो मिथस्सिद्धिश्चक्रकस्वाश्रयादयः ॥

असिद्धसाधकत्वेन पञ्चावयवतां विना ॥

अङ्गीकार्याः समस्तैः

प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिः परिशेषः । द्वयोः परस्परापेक्षयोत्पत्तिर्ज्ञप्तिर्वा मिथःसिद्धिः । बहूनां चक्रवदितरेतरापेक्षयोत्पत्त्यादिकं चक्रकम् । स्वापेक्षं स्वोत्पत्त्यादि स्वाश्रयः । आदिपदेनानवस्था । सा चानवस्थितासिद्धोत्पादकादिपरम्परापेक्षा । असिद्धसाधकत्वेन हेतुना । पञ्चावयवतां पञ्चरूपोपपन्नताम् । अङ्गीकार्याः अनुमानत्वेन समस्तैर्वादिभिः । न खलु कोऽपि वादी परिशेषादीननादृत्य परीक्षायां प्रवृत्तोऽस्ति ।

एतदुक्तं भवति । परिशेषादीनि तावदनुमानानि, व्याप्यज्ञानाद्व्यापकज्ञानमिति तल्लक्षणाक्रान्तत्वात् । प्रमाणप्रपञ्चरुचिभिरप्यनुमानाद्बहिर्भावेन तत्प्रामाण्यस्यानभ्युपगतत्वाच्च । तानि चासिद्धस्यैव साध्यस्य साधकानि । शब्दस्य हि पृथिव्याद्यष्टसंसर्गे प्रतिषिद्धे परिशेषात्तदतिरिक्तद्रव्याश्रितत्वं सिध्यति । न च प्रागाकाशसिद्धेः पृथिव्याद्यतिरिक्तं द्रव्यं सिद्धम् । येन तदाश्रितत्वं क्वचित्प्रसिद्धं स्यात् । यत् यस्य कार्यं प्रमितं परेणाङ्गीकृतं वा तस्य तत्कार्यतामङ्गीकुर्वाणं प्रति मिथःसिद्धिरुच्यते । न च सा क्वचित्प्रसिद्धा । द्वयोरपि परस्परापेक्षया पूर्वभावित्वं (से त्वे) सेति पक्षेऽपि तथा । एतेन चक्रकं व्याख्यातम् । अस्यैव घटस्यैतत्कार्यत्वमभ्युप(मुप)गच्छन्तं प्रति स्वाश्रयत्वमभिधीयते । (नचच) स्वस्यैव स्वापेक्षया पूर्वभावित्वं पश्चाद्भावित्वं चाप्रसिद्धमेव । असिद्धस्यैव कारणतां ब्रुवाणं प्रत्यनवस्थोच्यते । न च क्वचित्कार्येऽनवस्थितासिद्धकारणपरम्परा सिद्धा । सामान्यतः प्रसिद्धिस्तु केवलव्यतिरेकिण्यपि समाना । असिद्धसाधकत्वेन चैषां पञ्चरूपोपपन्नता नास्ति । तथा चानुमानानामप्येषां पञ्चरूपोपपन्नत्वाभावात् । व्यतिरेकि नानुमानं पञ्चरू(पोपपन्नता)पतावैधुर्यादित्यनैकान्तिकमिति ।

शे० — द्वितीयमिति । केवलव्यतिरेकि प्रमाणं न वेति विकल्पितम् ॥ प्रसक्तेति । अत्र प्रसक्तयोरन्यतरव्यावृत्तिप्रतीतौ सत्यामिति करणांशाभिधानपूर्वकं परिशिष्यमाणप्रमेति फलांशकीर्तनम् । ततश्च परिशिष्यमाणप्रमासाधनं प्रसक्तव्यावृत्तिप्रतीतिः परिशेष इत्युक्तं भवति द्वयोरित्यादि । इदं च फलीभूतमिथःसिद्ध्यादिस्वरूपकथनमात्रं न त्वेतदेव मिथःसिद्ध्यादेरिह टीकायां लक्षणमभिहितम् ।

तथा सति द्वयोः परस्परापेक्षयोरुत्पत्त्यादिरूपस्य मिथःसिद्धयादेरापाद्यतयाऽननुमानत्वेन 'एतदुक्तं भवती'-त्युत्तरग्रन्थे वक्ष्यमाणाया अनुमानतायाः स्वयमप्रसिद्धसाध्यरूपतयाऽसाधकत्वेन अप्रसिद्धसाध्यसाधकतायाश्च सम्भवदुक्तिकत्वप्रसङ्गात् । किन्तूक्तरूपमिथःसिद्ध्याऽऽपादकतर्कत्वमेवेह तथाऽभिमतम् । तस्य व्याप्यरूपतयाऽनुमानताया उक्तरूपमिथःसिद्ध्याद्यप्रसिद्धसाध्यसाधकतायाश्च सम्भवात् । यद्यप्यनवस्थितासिद्धकारणापेक्षायां मूलक्षयापरनामकप्रतीतकार्यविलोपलक्षणाऽनवस्थाऽऽपाद्या इत्यादिपद्धतिग्रन्थादनवस्थितासिद्धकारणापेक्षायाः करणांशत्वं प्रतीतकार्यविलोपस्य च फलांशत्वं प्रतीयते । तथाऽपीह टीकायां पक्षान्तरमेतदुपदर्शितमित्यदोषः । अत एव 'द्वयोरपि परस्परापेक्षया पूर्वभावित्वे सेति पक्षेऽपी'त्युत्तरग्रन्थे पक्षभेदोपदर्शकपक्षपदप्रयोगः । अत एव चानवस्थाया अप्रसिद्धसाध्यसाधकत्वव्युत्पादनावसरेऽप्रसिद्धस्ये-त्यादिकं करणांशोपदर्शनं च सार्थकं भवति । टीकायां करणांशस्यात्रानुक्तिस्तु 'यद्यस्य कार्यं प्रमितं परेणाङ्गीकृतं वे'त्युत्तरग्रन्थपर्यालोचनया तल्लाभाभिप्रायेण वा फलांशोक्तौ तत्तदापादकतर्करूपकरणांशस्य सुज्ञानत्वाभिप्रायेण वेति द्रष्टव्यम् । पञ्चावयवतां विनेति मूलात्परिशेषादिषु पञ्चावयवोपपन्नत्वाभावलाभेऽपि हेतूक्तस्य पञ्चरूपत्रैविध्यस्य तत्रालाभान्न व्यभिचारसूचकत्वमस्य वाक्यस्येत्यतस्तल्लाभाय व्याचष्टे पञ्चावयवतामिति । मूलादुक्तहेतोः परिशेषादिषु लाभेऽप्यनुमानत्वाभावरूपसाध्याभावस्य तत्रालाभान्न व्यभिचारसमर्पकत्वमित्यतः तल्लाभायापेक्षितं शेषमाह अनुमानत्वेनेति । समस्तैरनुमानत्वेनाङ्गीकर्तव्यताया निर्निमित्तकत्वाद्विशेषपरतया समस्तपदं व्याचष्टे समस्तैरिति । ननु च वादिभिरपि कुतोऽङ्गीकर्तव्या इत्यतोऽन्यथा वादित्वमेव न स्यादित्यभिप्रेत्य तदुपपादयति नेति । ननु परिशेषादीनामनुमानत्वमेव कुतः । तथात्वे वा कुतोऽप्रसिद्धसाध्यकत्वम् । तत्त्वेऽपि वा पूर्वानुमानस्य किमनेन दूषणमुक्तं भवतीत्यत आह एतदुक्तं भवतीति ॥ व्याप्येति । व्यापकज्ञानजनकं व्याप्यज्ञानमिति तल्लक्षणाक्रान्तत्वादिति योजना ॥ तल्लक्षणेति । अन्यथा तल्लक्षणस्यातिव्याप्तिप्रसङ्गादिति भावः ॥ तथेति । द्वयोः परस्परापेक्षयोरुत्पत्त्यादिवद्द्वयोरपि परस्परापेक्षया पूर्वभावित्वरूपमिथःसिद्धिरपि न क्वचित्प्रसिद्धेत्यर्थः ॥ एतेनेति । बहुषु परस्परापेक्षासाम्येनेत्यर्थः ॥ अनवस्थितेति । अपर्यवसितेत्यर्थः । नन्वत्रापि शब्दः क्वचिदाश्रितो गुणत्वादित्यनुमानेन वा व्याघातदण्डभयेन वा साध्यस्य सामान्यतः प्रसिद्धिसम्भवान्नाप्रसिद्धसाध्यसाधकत्वं परिशेषाद्यनुमानानामित्यत आह सामान्यतः प्रसिद्धिस्त्विति ॥ समानेति । व्याघातदण्डभयादिना साध्यप्रसिद्धेर्व्यतिरेकिण्यपि सम्भवान्न तस्याप्यप्रसिद्धसाध्यकत्वमित्यर्थः ॥ तथा चेति । इदं च व्यतिरेकिणोऽननुमानत्वनिराकरणं न वस्तुतः । तथा सति 'व्यतिरेकव्याप्तेरनुमानानङ्गत्वा'दित्यादिस्ववाक्यविरोधापातात् । किन्त्वप्रसिद्धविशेषणत्वस्य दोषत्वे व्यतिरेकिप्रामाण्यं न स्यादिति परं प्रत्यापादनस्येह टीकायां पूर्वत्र प्रस्तुतत्वात्पररीतिमाश्रित्येति द्रष्टव्यम् । यद्वा यथा उपाधिसिद्धसाधनसा-

ध्यवैकल्यादेरनुमानदूषकव्यभिचारादिसाधकतयोपन्यासो न तु साक्षाद्दूषकतया । यथा वा दृष्टान्तस्यानुमानाङ्गव्याप्तिप्रदर्शकतयोपन्यासो न तु साक्षादङ्गतया । तथा व्यतिरेकव्याप्तिरप्यनुमानाङ्गान्वयव्याप्तिसाधकतयोपयुज्यते न तु साक्षादङ्गतयेत्यभिप्रेत्य । यद्यप्यन्वयव्यतिरेकिणि व्यतिरेकव्याप्तिर्नान्वयव्याप्तिसाधिका । तत्रान्वयव्याप्तेरन्यत एव सिद्धत्वात् । तथाऽपि स्पष्टव्यभिचारेऽप्यनुमाने उपाधिवन्मूकीभूता वाऽन्वयव्याप्तेरेव व्यभिचारशङ्कां निराकुर्वन्ती वा तिष्ठतीति ज्ञेयम् । अथवा न पञ्चरूपतावैधुर्याद्व्यतिरेकिणोऽननुमानत्वं किन्तु व्याप्तिपक्षधर्मतयोर्वैयधिकरण्यादेवेत्यभिप्रेत्येदमुक्तमिति न किञ्चिदनुपपन्नम् ।

प० — **द्वितीयमिति** । केवलव्यतिरेकिप्रमाणं नेति पक्षमित्यर्थः ॥ **उत्पत्त्यादिकमिति** । ज्ञप्तिः आदिपदार्थः । उत्पादकादीत्यत्र ज्ञापक आदिपदार्थः । हेतुनेति शेषोक्तिः । हेत्वर्थकतृतीयान्तानां प्रतिज्ञादिपञ्चावयवभ्रान्तिं निराह **पञ्चरूपोपपन्नतामिति** । अङ्गीकार्या इत्यत्रापेक्षितं पूरयति **अनुमानत्वेनेति** । परिशेषादिषु हेतोः सपक्षवृत्तित्वं नास्तीति प्रदर्शनाय प्रागसमसिद्धसाधकत्वेनेति पदमिति भावेनाह **तानि चासिद्धस्यैव साध्यस्य साधकानीति** । तद्व्यनक्ति **शब्दस्येत्यादिना** ॥ **सामान्यतः प्रसिद्धिस्त्विति** । शब्दः क्वचिदाश्रितः गुणत्वात् विमतं कार्यं सकारणकं कार्यत्वादित्यादिरूपेति भावः ॥ **समानेति** । प्राक् प्रदर्शितप्रकारेणेति भावः ।

या० — उत्पादकादीत्यत्रादिपदेन ज्ञापकसङ्ग्रहः ॥ **सामान्यतः प्रसिद्धिस्त्विति** । व्याघातदण्डभयादिनेति शेषः ।

श्री० — **द्वितीयमिति** । केवलव्यतिरेकि प्रमाणं न वेत्यत्र विकल्पितं द्वितीयपक्षमित्यर्थः । तथा च नेति पक्षे वक्ष्याम इति यदुक्तं तदनेनोच्यत इति ज्ञातव्यम् ॥ **द्वयोरपीति** । पूर्वं यद्यस्य कार्यं प्रमितं तस्य तत्कार्यतामित्यादिना परस्परकार्यत्वाङ्गीकार एव मिथःसिद्धिरिति कस्यचित्पक्षः । द्वयोरपि परस्परपूर्वभावित्वरूपकारणत्वाङ्गीकार एव सा मिथःसिद्धिरिति कस्यचित्पक्षः । अतस्तदनुसारेणेदमुक्तम् । पक्षद्वयेऽपि फलतस्त्वेक एवार्थः । शब्दभेदमात्रमेवेति ज्ञेयम् । सा मिथःसिद्धिः ॥ **एतेनेति** । बहुष्वपि परस्परापेक्षासाम्येनेत्यर्थः ॥ **सामान्यत इति** । अमिथःसिद्धिः किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिनीत्यादिरूपेणेत्यर्थः ॥ **समानेति** । तथा च तदप्रामाण्याङ्गीकारो न युक्त इति भावः ॥ **नास्तीति** । सपक्षे सत्त्वाभावादिति भावः ।

च० — **द्वितीयमिति** । केवलव्यतिरेकिप्रमाणं नेति कल्पमित्यर्थः ।

सु०— दूषणान्तरमप्याह तन्नियम इति ।

अनु० — तन्नियमः किंनिबन्धनः ॥

अनुमाने पञ्चरूपोपपन्नतानियमस्य निर्निबन्धनत्वादतादृशस्याप्यनुमानत्वे बाधकाभावाच्चाप्रयोजकोऽयं हेत्वाभासः । नन्वेषां रूपाणां व्याप्तिपक्षधर्मतौपयिकत्वादसिद्ध्यादिहेत्वाभासपञ्चक(स्य)व्युदासार्थत्वाच्च कथं निर्निबन्धन(त्वं)ता । कथं च विपक्षे बाधकाभावः । उक्तप्रयोजनासिद्धेरेव बाधकत्वात् । सपक्षे सत्त्वं विनाऽप्यनुमानत्वे भूर्नित्या गन्धवत्त्वादित्यादेरसाधारणस्याप्यनुमानत्वं स्यादिति चेन्न । सपक्षहीनस्य विपक्षव्यावृत्तिमात्रेण व्याप्त्यादिसिद्धेः । असाधारणस्याभासत्वासम्मतेः । सम्मतौ वा सपक्षसद्भावासद्भावाभ्यां भेदसिद्धेरिति ।

शे० — एकवाक्यतया योजनायां पूर्वेणैवानेकान्तिकत्वोपपादनात्तन्नियम इत्युत्तरखण्डवैयर्थ्यं भवतीत्यतो दूषणान्तरपरतया तद्योजयति दूषणान्तरमप्याहेति । किमनेन दूषणमुक्तं भवतीत्यतस्तदाह अनुमान इति ॥ उक्तप्रयोजनेति । व्याप्तिपक्षधर्मतासिद्ध्यादिहेत्वाभासपञ्चकव्युदासरूपेत्यर्थः । बाधकान्तरमप्याह सपक्षे सत्त्वं विनेति । आद्यबाधकं परिहरति सपक्षहीनस्येति । द्वितीयं परिहरति असाधारण०स्येति । अनित्यदोषत्वादसाधारणस्यानुकूलतर्कावतारदशायामसाधारणादुत्तीर्णत्वान्न हेत्वाभासत्वमिति भावः । ननु तथाऽप्यसाधारण्यस्यानुकूलतर्कानवतारदशायां तर्काभावादेव सन्दिग्धव्याप्तिकत्वेनासाधारणः सर्वसाध्यवद्व्यावृत्त्या साध्याभावव्याप्तो वा सर्वसाध्याभाववद्व्यावृत्त्या साध्यव्याप्तो वेति सन्देहेन वाऽव्याप्तावन्तर्भूतत्वादस्येव तस्याभासत्वम् । यद्वाऽसाधारणस्य पक्षमात्रवृत्तित्वेन नान्वयव्याप्तिधीर्नापि व्यतिरेकव्याप्तिधीः । यत्रानित्यत्वाभावस्तत्र शब्दत्वाभाव इति व्यतिरेकव्याप्तेर्यत्र नित्यत्वाभावस्तत्र शब्दत्वाभाव इति प्रतिकूलया व्यतिरेकव्याप्त्या प्रतिरुद्धत्वात् । तस्माद्व्याप्तिप्रमित्यसिद्धावन्तर्भावादाभासत्वमसाधारणस्य । तदुक्तं प्रमाणलक्षणटीकायाम् । 'पक्ष एव वर्तमानत्वेन व्याप्तेरग्रहणादि'ति । अथवाऽसाधारणः पक्षे साध्यसन्देहात्सन्दिग्धाव्याप्तः । दृष्टं च पक्ष एव व्यभिचारसन्देहस्य दोषत्वम् । स श्यामो मित्रातनयत्वादित्यादौ । तनयान्तरे श्यामत्वनिश्चयात् । ननु तत्र संशय उपाध्याहितः स एव च संशयोऽनुमितिप्रतिबन्धकः । फलबलेन तथैव कल्पनात् । न त्वन्यः । तस्यानुमानाङ्गत्वात् । सदनुमाने तु संशयो नोपाध्याहित इति नानुमानमात्रोच्छेद इति चेत्तर्हीहापि सर्वसपक्षविपक्षव्यावृत्त्याहितः स एव च संशयोऽनुमितिप्रतिबन्धकः । फलबलेन तथैव कल्पनात् । सदनुमाने तु संशयो न तदाहित इति कथं नातिप्रसङ्गः । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः । तस्मादसाधारणोऽव्याप्तावन्तर्भूत एव । तदेतदभिप्रेत्योक्तं पद्धतावसाधारणप्रस्तावे 'सर्वथाऽव्याप्तावन्तर्भूत' इति । तत्कथं तस्यानाभासत्वमुच्यत इत्यतोऽङ्गीकृत्याभासत्वं समाधानमाह संमतौ वेति । यद्यपि

सपक्षे सत्त्वाभावोऽसाधारणे हेत्वाभासे केवलव्यतिरेकिणि च समः । तथाऽपि सति सपक्षे तत्रासत्त्वम-साधारणस्य केवलव्यतिरेकिणस्तु सपक्षाभावादेव तत्रासत्त्वमिति वैषम्यात् । तर्कमूलभूताविशेषस्यासिद्धे-र्नासाधारणस्यानुमानत्वमापादयितुं शक्यमिति भावः । इतिशब्दोऽप्रसिद्धविशेषणतया अदूषणत्वव्युत्पादन-समाप्तिद्योतकः ।

स० — **उक्तप्रयोजनेति** । व्याप्तिपक्षधर्मतासिद्धिरूपेत्यर्थः । नन्वनुकूलतर्काभावदशायां शब्दः नित्यः शब्दत्वादित्यादिस्थलेऽसाधारण्यस्य दोषत्वाङ्गीकारात् कथं दोषत्वासंमतेरित्युच्यत इत्यत आह **संमतौ वेति** । यद्यपि सपक्षे सत्वाभावः असाधारणहेत्वाभासे केवलव्यतिरेकिणि च समः तथापि सति सपक्षे तत्रासत्वमसाधारणे वर्तते । केवलव्यतिरेकिणि च सपक्षाभावादेव सपक्षे सत्वा-भावस्य विद्यमानत्वे न केवलव्यतिरेकिणोऽसाधारणाद्भेद इति भावः ।

प० — **अप्रयोजकोऽयमिति** । पञ्चरूपोपपन्नत्वविधुर्यादित्ययमित्यर्थः ॥ **व्याप्तिपक्षधर्म-तौपयिकत्वादिति** । सपक्षसत्वस्य साध्यसहचारं प्रति विपक्षात् व्यावृत्त्यादिरूपत्रयस्याव्यभिचारं प्रत्युपयुक्तत्वात् रूपचतुष्टयं व्याप्त्युपयोगि पक्षधर्मतोपयोगित्वमन्यस्य व्यक्तम् ॥ **असिद्धादीति** । असिद्धविरुद्धानेकान्तिकत्वबाधप्रतिपक्षरूपहेत्वाभासपञ्चकेत्यर्थः । कथं विपक्षे बाधकाभाव इत्युक्तं बाधकद्वयं प्रदर्शनेन व्यनक्ति **उक्तप्रयोजनेति** ॥ **सपक्षे सत्वं विनेति** ॥ **आभासत्वासंमतेरिति** । व्याप्तौ सत्यां तस्याबाधकत्वादिति भावः ॥ **भेदसिद्धेरिति** । आभासानाभासयोरिति योज्यम् । सति सपक्षे पक्षमात्रवृत्तिर्हेतुराभासः सपक्षाभावे तु नाभास इत्युक्तावतिप्रसङ्गाभावादिति भावः ।

या० — बाधकान्तरमप्याह **सपक्षे सत्त्वं विनेति** । **आभासत्वासम्मतेरिति** । असाधारणस्य ह्युभयपरामर्शकोत्थापकतया सत्प्रतिपक्षत्वेनाभासत्वं वाच्यम् । एकत्रानुकूलतर्कावतारे तु तन्न सम्भवती-त्यभिप्रायेणैवमुक्तमिति मन्तव्यम् । अनुकूलतर्कानवतारे तस्योक्तरीत्याऽऽभासत्वं सम्मतमेवेत्याशयेनाह **सम्मतौ वेति** ।

श्री० — **उक्तेति** । व्याप्त्याद्यौपयिकत्वासिद्ध्यादिव्युदासार्थत्वरूप इत्यर्थः ॥ **अनुमानत्व इति** । अप्रसिद्धविशेषणत्वस्यादूषणत्वे सपक्षे सत्त्वं विनाऽप्यनुमानत्वं प्राप्तमित्यर्थः ॥ **सपक्षहीनस्येति** । तत्र सत्त्वहीनस्येत्यर्थः । तर्हि उक्तासाधारणस्याप्यनुमानत्वं स्यादिति चेत्तत्राह **असाधारण्यस्येति** । नित्यव्यावृत्तगन्धवत्त्वाद्भूः किमनित्या वोतानित्यव्यावृत्ततद्वत्त्वात्किं नित्या वेति विरुद्धोभयपरामर्शरूपत्वेन सन्देहापादकतया साध्यप्रमितिजनकत्वाभावेन दूषणत्वं तस्य वाच्यम् । तदयुक्तम् । एकस्मिन्परामर्शे-ऽनुकूलतर्कादिरूपविशेषदर्शनावतारदशायामवश्यमनुमितिर्भविष्यत्येवेति दूषणत्वं न सम्मतमित्यर्थः ।

तदनवतारदशायां दोषत्वमेवेति चेत्तत्राह **सम्मतौ वेति** । तथा च यत्र सपक्षे सत्यपि तत्र हेतुर्नास्ति तत्रैवासाधारण्यस्य दोषत्वम् । 'सपक्षे सति चाभासः स्यादसाधारणस्त्वसावि'त्युक्तेः । भूर्नित्येत्यस्य च तादृशत्वाद्दोषत्वमेव । यत्र पुनः सपक्षस्यैवाभावेन हेतोः सपक्षसत्त्वं नास्ति तत्रादोषत्वमेवेति व्यवस्थाश्रयणात् केवलव्यतिरेकिणश्चैतादृशत्वान्न दोष इति वाच्यम् ॥ **भेदसिद्धेरिति** । केवलव्यतिरेकिहेतोरसाधारणाद्गन्धवत्त्वाद्भेदसिद्धेरित्यर्थः ।

**च० — व्याप्तिपक्षधर्मतौपयिकत्वादिति** । आद्यस्य पक्षधर्मतौपयिकत्वं व्यक्तं अव्यभिचारितसाध्यसामानाधिकरण्यरूपव्याप्तिशरीरघटकविशेष्यदलप्रत्यायकत्वं सपक्षे सत्त्वस्य शिष्टत्रिकस्य विशेषणदलावगमकत्वमित्यर्थः । **असिद्धादीति** तद्गुणसंविज्ञानः । बाधकान्तरमप्यभिधत्ते । **सपक्षे सत्त्वं विनेति** ॥ **आभासत्वात्सम्मतेरिति** । एकत्रानुकूलतर्कावतारदशायामसाधारणस्याभासत्वानङ्गीकारादिति भावः । तदनवतारदशायां तस्य तदुपगमादाह **सम्मतौ वेति** ॥ **भेदसिद्धेरिति** । आभासनाभासयोरित्यादिः सति सपक्षे तदवृत्तित्वमाभासतायां तत्र नासतीति भावः ।

**सु० — एवम् अयासिद्ध्यादेरदूषणत्वमुपपाद्य यदुक्तं 'परिहारेऽपि सिद्धत्वं दूषणमि'ति तदयुक्तम्** । **वादे निग्रहस्थानाभावस्योक्तत्वादित्यशङ्कां परिहरति** सिद्धेति ।

अनु० — सिद्धसाधनतायां च न कथावसितिर्भवेत् ॥

---

**यथा सिद्धप्रश्नादौ न वादकथावसितिर्भवेत् किन्तु तत्त्वनिर्णयविरोधित्वादुद्भाव्य त्याजनीयमेव । एवं सिद्धसाधनतायां चेत्यर्थः । 'तदन्यस्य सिद्धतैव हि साधिके'त्यनेन हेतोर्व्याप्त्यसिद्धिः स्वरूपासिद्धिश्च दूषणमिति सूचितम् ।**

**शे० —** सिद्धसाधनतायां चेत्युत्तरग्रन्थस्य प्रकृतप्रमेयानुपपादकत्वेनासङ्गतत्वादानर्थक्यमाशङ्क्य निरन्तराव्यवहितार्थोपपादकत्वाभावेन तत्सङ्गत्यभावेऽपि व्यवहितार्थोपपादकत्वेन तत्सङ्गतत्वान्नानर्थक्यमिति भावेन वृत्तानुवादेन प्रकरणभेदं सूचयन्नेव व्यवहितेन ग्रन्थेन सङ्गतिमाह **एवमित्यादिना** । ननु व्यभिचारो हेत्वसिद्धिरिति ग्रन्थस्याव्यवहितार्थानुपपादकत्वान्न तत्सङ्गतिरिति स्पष्टमेव । नापि व्यवहितसङ्गतिः । पूर्वं व्याप्यत्वासिद्धिस्वरूपासिद्ध्योर्दूषणताया अनुक्तत्वेन तदनुपपादकत्वादित्यतोऽनुक्तत्वेऽपि पूर्वं तद्दूषणत्वस्य सूचितत्वेन तदुपपादकत्वेन तत्सङ्गतिसम्भवान्नानर्थक्यमिति भावेन व्याप्त्यसिद्धिस्वरूपासिद्ध्योर्दूषणत्वस्य सूचिततां तावद्दर्शयति **तदन्यस्येति** ।

**श्री० — सिद्धत्वं दूषणमिति** । प्रतिज्ञार्थस्य प्रतिवादिसिद्धत्वं वादिनो दूषणमित्यर्थः ॥ **त्याजनीयं** गुरुणा ॥ **एवमिति** । एवमेव सिद्धसाधनतायां च न वादकथावसितिर्भवेत् । किन्तु तत्त्वनिर्णयविरोधित्वात् गुरुं प्रति शिष्येणोद्भाव्य त्याजनीयमित्यर्थः ।

सु० — तत्र केचिदाचक्षते। द्विविधं व्याप्त्यभावादिकम्। वादिप्रतिवादिनोरन्यतरमतेनोभयमतेन चेति। अन्ये तु मन्यन्ते। अन्यतराव्याप्त्यादिकं नाम नास्त्येव। वस्तुनि विकल्पासंभवादिति। तत्र किन्तरामित्याकाङ्क्षायामाह व्यभिचार इति।

अनु० — व्यभिचारो हेत्वसिद्धिरेकपक्षेऽपि दूषणम् ॥

अत्र व्यभिचार इत्यव्याप्तिमात्रोपलक्षणम्। न केवलमुभयपक्षे किन्तु वादिप्रतिवादिनोरेकस्य पक्षेऽपि व्यभिचारो हेत्वसिद्धिश्च हेतोर्दूषणमेव। यद्यपि वस्तुतोऽन्यतरव्यभिचारादिकं न संभवति तथाऽपि प्राग्वस्तुतत्त्वावधारणादाभिमानिकं संभवत्येव। तथा च हेतुसामर्थ्यसन्देहेऽप्यहेतुत्वमावश्यकमेव। व्याप्त्यादिमत्तया निश्चितस्यैव हेतुत्वादिति। तदन्यस्येत्यनेन दृष्टान्तस्यापि साध्यादिमत्त्वेनासिद्धिर्दूषणमिति सूचितम्।

शे० — ननु तथाऽपि व्यभिचारो हेत्वसिद्धिर्दूषणमित्येतावतैव विवक्षितसिद्धेरेकपक्षेऽपीत्यंशस्य वैयर्थ्यमेव। न च न केवलमुभयरीत्या दूषणं किन्त्वन्यतररीत्याऽपीत्युपपादनार्थत्वात्तदंशस्य न वैयर्थ्यमिति वाच्यम्। बीजाभावात्तद्दूषणत्वशङ्काया एवानुदयेनास्यार्थस्य सर्वसम्मततयाऽनुपपाद्यत्वादित्यतो बीजोपदर्शनपूर्वकं तद्दूषणत्वे विप्रतिपत्तिं दर्शयन्नेव तदुपपादकतयोत्तरग्रन्थं योजयति **तत्रेत्यादिना**। नन्वत्र ग्रन्थे व्यभिचारस्यान्यतररीत्याऽपि दूषणत्वमित्युच्यते न त्वव्याप्तेः। तत्कथमन्यतराव्याप्त्यादिकं नाम नास्त्येवेत्याक्षेपस्य परिहार इत्यतोऽत्र लिङ्गस्य साध्येन तदभावेन च संबन्धरूपाव्याप्तिविशेषवाचकस्य व्यभिचारपदस्य न तन्मात्रपरत्वं किन्तु लक्षणया स्वाभिमतत्रिविधाव्याप्तिपरत्वमित्यतो नानुपपत्तिरित्याशयेनाह **अत्रेति** ॥ **वस्तुतोऽन्यतरेति**। वस्तुनि विकल्पासंभवादिति प्रागुक्तयुक्तेरिति भावः ॥ **हेतुसामर्थ्येति**। व्याप्तिपक्षधर्मतारूपहेतुसामर्थ्येत्यर्थः। दृष्टान्तस्य साध्यादिमत्त्वेनासिद्धेर्दूषणताया अनुक्तत्वात् अविप्रतिपन्नत्वाच्चानुपपाद्यत्वात्तदुपपादकोत्तरग्रन्थवैयर्थ्यमित्याशङ्क्यानुक्तत्वेऽपि सूचितत्वाद्विप्रतिपन्नत्वाच्च अस्त्येवोपपादनापेक्षेत्यभिप्रेत्य तदुभयं दर्शयन्नेव तदुपपादकतयोत्तरवाक्यं सङ्गमयति **तदन्यस्येत्यादिना**।

प० — **वस्तुनि विकल्पेति**। एकस्य लिङ्गस्य व्याप्यत्वाव्याप्यत्वरूपविरुद्धस्वभावत्वायोगादित्यर्थः ॥ **अव्याप्तिमात्रेति**। व्याप्त्यभावमात्रोपलक्षणमित्यर्थः। तथाच विरुद्धत्वादिहेत्वाभासचतुष्टयस्यापि संग्रहः कृतो भवति। तत्र सर्वत्रापि व्याप्त्यभावसत्त्वात्। तावता कथमहेतुत्वं समीचीनस्येत्यत आह **हेतुसामर्थ्यसन्देह इति**। व्याप्तिपक्षधर्मतारूपसामर्थ्यसन्देह इत्यर्थः।

या० — **अव्याप्तिमात्रोपलक्षणमिति**। अस्मन्मतेऽव्याप्तिस्त्रिविधा। लिङ्गस्य साध्येन तदभावेन च संबन्धः। साध्यसंबन्धाभावे सति तदभावेनैव संबन्धः। उभयसंबन्धाभावश्चेति।

तत्राद्याव्याप्तिमात्रवाचकेन व्यभिचारपदेनाजहत्स्वार्थलक्षणया त्रिविधानामप्यव्याप्तीनां ग्रहणमित्यर्थः । तेन व्यभिचारविरुद्धत्वासाधारणत्वानामत्र ग्रहणं कृतं भवतीति द्रष्टव्यम् ॥ **हेतुसामर्थ्येति** । अनुमानस्य द्वयं सामर्थ्यं व्याप्तिः पक्षधर्मता चेत्युक्तेर्व्याप्तिपक्षधर्मतारूपे सामर्थ्येत्यर्थः ।

**श्री०— अव्याप्त्यादिकं** व्याप्यत्वासिद्ध्यादिकम् । **आह** अन्यतरमतेनापि दूषणमित्याहेत्यर्थः । **न संभवति** वस्तुविकल्पप्रसङ्गादिति भावः ।

**च०— वस्तुनि विकल्पेति** । एकस्यां व्यक्तौ साध्यनिरूपितव्याप्यत्वतदभावयोः समावेशायोगादिति भावः ॥ **अव्याप्तिमात्रोपलक्षणमिति** । साध्यतदभावोभयसामानाधिकरण्यं साध्याभावमात्रसामानाधिकरण्यं तदुभयसामानाधिकरण्याभावश्चेति त्रिविधाऽव्याप्तिः । तत्राद्यविधाऽभिधायकव्यभिचारपदस्य त्रितयसाधारणाव्याप्तित्वावच्छिन्नेऽजहल्लक्षणेत्यर्थः । तेन व्यभिचारविरोधासाधारण्यानत्रयाणां परिगृहीतिरवसेया । **हेतुसामर्थ्येति** । व्याप्तिपक्षधर्मतारूपसामर्थ्येत्यर्थः ।

**सु०— केचिदाचक्षते । दृष्टान्तदोषा नाम न सन्ति तेषां यथायोगं हेतुदोषेष्वेवान्तर्भूतत्वादिति** । **तान्प्रत्याह** साध्येति ।

अनु०— साध्यसाधनवैकल्यं दृष्टान्तस्य

**दूषणमिति वर्तते । साध्यवैकल्यादेर्हेत्वाभासान्तर्भावेऽपि दृष्टान्ताश्रयतया स्पष्टप्रतिभासत्वात् । प्रतिभासानुसारेणैवोद्भाव्यत्वादुद्भावनार्थत्वाच्च व्युत्पादनस्य दृष्टान्तदोषत्वं युक्तमिति भावः ।**

**दृष्टान्तदोषांश्च केचिदष्टावाचक्षते** । साध्यवैकल्यं साधनवैकल्यमुभयवैकल्यमाश्रयहीनत्वमिति चत्वारः साधर्म्यदृष्टान्तदोषाः । साध्याव्यावृत्तिः साधनाव्यावृत्तिरुभयाव्यावृत्तिराश्रयहीनत्वमिति चत्वारो वैधर्म्यदृष्टान्तदोषा इति । तन्नेत्याह साध्येति । सिद्धे सत्यारम्भो नियमार्थः । साध्यसाधनवैकल्यमेव दृष्टान्तस्य दूषणं नापरमित्यर्थः । तथा हि । उभयवैकल्यं तावत्पृथङ् न वाच्यम् । एकैकवैकल्येनैव दृष्टान्तस्य दुष्टत्वे समुदितकल्पनावैयर्थ्यात् । अन्यथैकैकवैकल्यस्य दूषणत्वाङ्गीकारभङ्गात् । संभवमात्रेण पृथग्वचनेऽनैकान्तिककालातीतत्वं नाम हेत्वाभासान्तरं वाच्यं स्यात् । आश्रयहीनत्वं चाश्रयासिद्धिसमानम् । वैधर्म्यदृष्टान्तो नाम नास्त्येवेति प्रागेव प्रपञ्चितमिति ।

यद्वा दृष्टान्तस्य साध्यसाधनवैकल्यमपि व्यभिचारादिवदुभयान्यतररीत्या द्विविधं प्रतिपत्तव्य न पुनरेकविधमेव । अभिमानतो द्वैविध्यस्यापि संभवादित्याह साध्येति । एकपक्षेऽपि दूषणमित्यनुवर्तते ।

**शे०— तेषां यथायोगं हेतुदोषेष्वेवान्तर्भूतत्वादिति**। साध्यविकलो दृष्टान्तो विपक्ष एवेति तत्र वर्तमानो हेतुः सपक्षान्तरवृत्तौ सत्यां पक्षादित्रयवृत्तित्वात्साधारणानैकान्तिक । असत्यां तु सपक्षावृत्तौ पक्षविपक्षयोरेव वर्तमानत्वाद्विरुद्ध । साध्यधर्मवति दृष्टान्ते साधनविकले, सपक्षादपि व्यावृत्तेरसाधारणानैकान्तिकः । दृष्टान्तस्य धर्मिण एवाभावे, तस्मिन्सत्यपि तत्र साध्यसाधनयोर्द्वयोरप्यभावे वा व्याप्यत्वासिद्धः । एवं वैधर्म्यदृष्टान्ते साध्याव्यावृत्तोऽसाधारणः, साधनाव्यावृत्तो विरुद्धः, साधारणानैकान्तिको वा, उभयाव्यावृत्तो व्याप्यत्वासिद्धः। आश्रयाभावेऽपि व्याप्यत्वासिद्ध एवेति **यथायोगं** दृष्टान्तदोषाणां **हेतुदोषेष्वन्तर्भूतत्वादित्यर्थः** । तदुक्तम् । 'साधारणो विरुद्धो वा दृष्टान्ते साध्यवर्जिते । असाधारणता हेतोस्तस्मिन्साधनवर्जिते । व्याप्त्यसिद्धिरभावे स्यादाश्रयस्य तयोरपीति' एवं सति बाधे पक्षस्यैव विपक्षत्वाद्बाधोऽपि व्यभिचारेऽन्तर्भूतः स्यात् । व्यभिचारविरुद्धौ च व्याप्तिहीनत्वाद्व्याप्यत्वासिद्धावन्तर्भूतौ स्याताम् । असाधारणे च सपक्षस्य साधनवैकल्यावश्यम्भावात्सोऽपि साधनवैकल्येऽन्तर्भूतः स्यात् । अनुपसंहारिणि च दृष्टान्ताभाव आवश्यक इति सोऽपि दृष्टान्ताभावेऽन्तर्भूतः स्यात् । यदि च बाधादेः पक्षाश्रिततयैवाव्याप्त्यादेर्हेत्वाश्रिततयैव स्पष्टप्रतिभासात्पक्षहेतुदोषत्वं तदा साध्यवैकल्यादेरपि दृष्टान्ताश्रयतयैव प्रतिभासात्तद्दोषत्वमेवैष्टव्यमित्याशयेनाभिप्रायमाह **साध्यवैकल्यादेरित्यादिना** ।

---

ननु साध्यसाधनवैकल्यस्य दृष्टान्तदूषणत्वमत्र प्रतिपाद्यते न त्वन्यस्यादूषणत्वमिति कथमनेन तन्मतनिरास इत्यत आह **सिद्धे सत्यारम्भ इति** । नियममेव दर्शयति **साध्येति** । **अन्यथा** एकैकवैकल्येन दृष्टान्तस्यादुष्टत्वे । अनैकान्तिककालातीतत्वमित्युपलक्षणम् । असिद्धकालातीतत्वमित्याद्यपीत्यपि द्रष्टव्यम् । नन्वेवं साध्यस्य साधनस्य वाऽननुगमो दृष्टान्तविरोध इति प्रमाणलक्षणव्याख्यानरूपया 'उभयोर्वेत्यादि ग्राह्यमि'ति टीकया विरोधः । तस्या यथा मनोऽनित्यं मूर्तत्वात्परमाणुवत्कर्मवदित्यत्र क्रमेण साध्यवैकल्यं साधनवैकल्यं च दोषः तथा गगनवदित्यादावुभयवैकल्याख्यौ दोषौ स्त इत्येतावन्मात्राभिप्रायकत्वेनोभयवैकल्यरूपदूषणस्य पृथग्दूषणत्वानभिधायकत्वात् । अन्यथा 'एकैकवैकल्येने'ति प्रकृतटीकया 'उभयवैकल्यं च न पृथग्गणनीयमि'ति पद्धत्या च विरोधप्रसङ्गादिति द्रष्टव्यम् ॥ **आश्रयासिद्धिसमानमिति** । आश्रयासिद्धिवद्दूषणमित्यर्थः ॥ **प्रागेवेति** । नविलक्षणत्वाभिकरण एवेत्यर्थः । तथा च साध्याव्यावृत्त्यादितद्दोषचतुष्टयस्य गणनमप्ययुक्तमिति भावः ॥ **न पुनरेकविधमेवेति** । उभयरीत्यैव दूषणं न पुनरन्यतररीत्या वस्तुनि विकल्पानुपपत्तेरिति नेत्यर्थः ॥ **अभिमानत इति** । यद्यपि वस्तुतोऽन्यतरवैकल्यं न संभवति तथाऽपि प्राग्वस्तुतत्त्वावधारणादाभिमानिकं संभवत्येवेत्यर्थः ।

प० — **सिद्धे सत्यारम्भो नियमार्थ इति** । साध्यवैकल्यसाधनवैकल्ययोर्दूषणत्वे सर्वजन-सम्मतेपि पुनरिह तद्वचनं नियमार्थम् । यथा व्रीहीनवहन्तीति वचनम । अवघातेनैव तुषवियुक्तान् कुर्यादिति नियमार्थं तथेति भावः ॥ **प्रागेवेति** । युक्तिपादीयेऽधिकरणे 'व्याप्तिरेव यदोदिते'त्येतद्व्याख्यावसरे प्रपञ्चितमित्यर्थः ।

या० — **तेषां यथायोगमिति** । 'साधारणो विरुद्धो वा दृष्टान्ते साध्यवर्जिते । असाधारणता हेतोस्तस्मिन्साधनवर्जिते । व्याप्त्यसिद्धिरभावे स्यादाश्रयस्य तयोरपी'ति तदुक्तेरिति भावः ॥ **प्रागेवेति** । विलक्षणाधिकरण एवेत्यर्थः ।

श्री० — **सिद्धे सतीति** । तथा च प्रकृते दृष्टान्तदोषाष्टकत्ववादिनः साध्यसाधनवैकल्ययोर्दूषणत्वस्य सिद्धत्वात्पुनस्तद्दोषत्ववचनं नियमार्थमित्यर्थः । तमेव नियमं दर्शयति **साध्येति** ॥ **अन्यथेति** । उभयवैकल्यस्यैव दोषत्वे ॥ **प्रपञ्चितमिति** । प्रयोगान्तरे तस्यान्वयदृष्टान्तत्वाभावादिति भावः । नन्वन्यतररीत्या साध्यादिवैकल्यं नास्त्येव । वस्तुनि विकल्पाभावादिति चेत्तत्राह **अभिमानत इति** ।

च० — **यथायोगमिति** । 'साधारणो विरुद्धो वा दृष्टान्ते साध्यवर्जिते । असाधारणता हेतोस्तस्मिन् साधनवर्जिते । व्याप्त्यसिद्धिरभावे स्यादाश्रयस्य तयोरपी'ति तद्वचनादिति भावः । 'अर्थवदधातुरि'तियोगेनैव समासस्यार्थवत्तानियन्त्रिता प्रातिपदिकताऽसैत्सीदिति कृत्तद्धितेत्युत्तरयोगे समासग्रहणं मन्दप्रयोजनं सद्यत्र संघाते पूर्वभागः पदं तस्य चेद्भवति तर्हि समासस्यैव न तु वाक्यस्येति नियमं ज्ञापयतीति परिभाषा पाणिनीयैरङ्गीकृतेति भावः । **अनैकान्तिककालातीतत्वं नामेति** । यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वं हेत्वाभाससामान्यलक्षणे विशिष्टान्तराघटितत्वं यद्रूपावच्छिन्नविषयकत्वप्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तादृशं यत्त्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तदवच्छिन्नविषयकप्रतीतिविषयतावच्छेदकं यत्त्वं तद्रूपवत्वलक्षणं निवेश्य बाधविशिष्टव्यभिचारादेर्हेत्वाभासत्वस्य दीधितिकारादिभिरपहस्तितत्वादिति भावः । **प्रागेव** न विलक्षणत्वादिति नय एव ।

सु० — **हेतोर्व्यर्थविशेषणत्वं व्यर्थविशेष्यत्वं च न दूषणम्** । व्याप्तिपक्षधर्मतयोरप्रतिहतेरिति केचित् । तान्प्रत्याह विशेषण इति । **विशेषणे दत्ते सति यद्वैयर्थ्यं विशेष्यस्य विशेषणस्य वा तदपि हेतोर्दूषणमेव । व्याप्त्युपयोगितया हि हेतौ विशेषणमुपादीयते । वैयर्थ्ये तु विशिष्टस्य व्याप्यत्वाभावाद्युक्तं (तस्य) हेतुदोषत्वमिति** ।

यद्वा सिद्धप्रश्नादिकमिति वक्ष्यमाणत्वादाधिक्यान्तर्गतमेतत् । सर्वथा हेतुदोषत्वं सि(द्धमिति)द्धम् । व्यर्थविशेषणत्वादिकमप्युभयान्यतररीत्या द्विविधं प्रतिपत्तव्यम् । न पुनरेकविधमेवेत्याह विशेषण इति ।

अनु० — विशेषणे ॥

वैयर्थ्यम्

एकपक्षेऽपि दूषणमिति वर्तते ।

शे० — व्याप्तिपक्षधर्मतयोरिति । व्यर्थविशेषणे नीलधूमादौ न तावदव्यभिचरितसामानाधिकरण्यरूपा व्याप्तिरेव नास्तीति वक्तुं युक्तम् । व्यभिचारोपाध्योस्तत्राभावेन तस्यावश्यकत्वात् । नापि व्यभिचारवारकविशेषणवत्त्वेनाज्ञात एव व्याप्तिग्रहात्तद्वत्त्वेन ज्ञाते व्याप्तिप्रमाविरह इति युक्तम् । सहचारदर्शने व्यभिचारादर्शने च सति द्रव्यत्वादिमत्तया ज्ञातेऽपि धूमेऽव्यभिचारादिरूपव्याप्तिग्रहदर्शनेन तदसंभवादिति भावः ॥ व्याप्यत्वाभावादिति । अयमाशयः । अनुमितिप्रयोजकव्याप्तिविरहो हि व्याप्यत्वासिद्धिः । तत्प्रयोजिका च व्याप्तिः साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वलक्षणा न त्वव्यभिचाररूपा वाऽनौपाधिकत्वरूपा वा गौरवात् । तद्विरहश्च सामानाधिकरण्याभावेन । यथा निरधिकरणे वस्तुनि । सत्यपि तस्मिंस्तस्य साध्यनिरूपितत्वाभावाद्वा । यथा विरुद्धे । सतोरपि तयोर्धर्मस्यावच्छेदकत्वविरहाद्वा । यथेयं पृथिवी द्रव्यत्वादित्यत्र द्रव्यत्वे । व्यर्थविशेषणे च नीलधूमादौ सामानाधिकरण्ये तस्य साध्यनिरूपितत्वे च सत्यपि नीलधूमत्वस्य वन्हिनिरूपितसामानाधिकरण्यावच्छेदकत्वविरहाद्व्याप्तिविरहः । नन्वत्रावच्छेदकत्वं न तावदवच्छित्तिप्रत्ययजनकत्वम् । आत्माश्रयात् । नाप्यवच्छेद्यान्यूनानधिकवृत्तित्वम् । वन्हिसामानाधिकरण्यवत्यालोकादावविद्यमानतया धूमत्वादौ तदभावप्रसङ्गात् । किन्त्वनतिरिक्तदेशत्वम् । तच्च नीलधूमत्वेऽप्यस्त्येव । न च तत्रातिप्रसङ्गवारणायावच्छेद्यानतिरिक्तदेशकधर्मान्तराघटितत्वे सतीति विशिष्यते । नीलधूमत्वस्य च धूमत्वरूपतादृशधर्मान्तरघटितत्वान्न तदवच्छेदकतेति वाच्यम् । एवं सति व्याप्तिशरीरस्याभावत्रितयघटितत्वेनातिगौरवापातादिति चेन्न । अवच्छेदकत्वं हि विशेषणताविशेषरूपः स्वरूपसंबन्धः । स च संबन्धो लघुनि धूमत्व एव कल्प्यते न तु गुरुणि नीलधूमत्व इति नीलधूमे न व्याप्तिः । न च लघुधूमत्वमपि नीलधूमेऽस्तीति वाच्यम् । हेतुतावच्छेदकस्यैव हि सामानाधिकरण्यावच्छेदकता वाच्या । उपस्थितत्वात् । धर्मान्तरकल्पने गौरवाच्च । इह च हेतुतावच्छेदकत्वेनोपात्तस्य नीलधूमत्वस्य सामानाधिकरण्यानवच्छेदकत्वाद्व्याप्यत्वासिद्धिरित्यन्यत्र विस्तरः ।

ननु व्यभिचारज्ञानस्य तावदनुमितिप्रतिबन्धकत्वमनुभवसिद्धम् । त्वदनुमतं च । तच्च न बाधादिवत्साक्षात्संभवति । साध्यविरुद्धाविषयत्वात् । किन्तु करणीभूतव्याप्तिज्ञानविघटनद्वारा । तच्च

व्याप्तेस्त्वदुक्तसाध्यसामानाधिकरण्यावच्छेदकत्वरूपत्वस्य विपरीतव्यभिचाराभावविशिष्टसहचाररूपत्व एव युक्तम् । विरुद्धवत्सहचाररूपविशेष्यांशेनाविरोधेऽपि व्यभिचाराभावरूपविशेषणांशेन सह वैषयिकविरोधात् । न तु साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वात्मकत्वे तद्युक्तम् । परस्परविरहानात्मकत्वेन साक्षादविरोधात् । न च व्यभिचारेण हेतुतावच्छेदकत्वस्य साध्यसामानाधिकरण्यानवच्छेदकत्वानुमानात् परम्परया विरोधः । व्यभिचारज्ञानानन्तरमेव व्याप्तिविरहज्ञानानुभवेन परम्पराकल्पनेऽनुभवविरोधात् । बाधादिवत्साक्षादनुमितिप्रतिबन्धकत्वस्यासिद्ध्यादिवत्परामर्शविषयाभावत्वस्य चाभावेनोपाधिवद्धेत्वाभासोपाधित्वाभावाच्च । तथा च व्यभिचाराभावविशिष्टसहचाररूपा व्याप्तिर्नीलधूमेऽस्तीति कथं तस्मिन्व्याप्यत्वासिद्धिः । तस्माद्व्यर्थविशेषणस्य व्याप्यत्वासिद्धत्वेन दूषणत्वकथनमयुक्तमिति पूर्वत्रापरितोषादाह **यद्वेति** ॥ **आधिक्यान्तर्गतमेतदिति** । अधिकत्वेन दूषणत्वकथनं च विशिष्टस्य हेतुत्वेन प्रयोगमभिप्रेत्य । हेतुद्वयोक्तौ द्वितीयेन प्रथमे कृतकार्यत्वस्येव, विशिष्टेऽपि विशेष्येण कृतकार्यत्वरूपस्य तद्दुष्टत्वबीजस्य सत्त्वात् । विशेष्यस्यैव हेतुत्वाभिप्राये त्वर्थान्तरत्वेनैव तस्य दूषणत्वमित्यवधेयम् ।

प० — **अप्रतिहतेरिति** । शब्दोऽनित्यस्सामान्यवत्त्वे सति कृतकत्वादित्यादौ तयोरुपलम्भादिति भावः ॥ **व्या(प्र)प्यत्वाभावादिति** । व्यर्थविशेषणावच्छेदव्याप्तिग्राहकप्रमाणस्याप्रसंगादित्यर्थः । यत्तु तत्वनिर्णयटीकादौ विमतमकर्तृकं शरी(रा)र्यजन्यत्वादित्यत्र हेतोर्व्याप्यत्वमुपेतं तत् अखण्डाभावेनावैयर्थ्यमुपेत्य वाऽसिद्धिवारकत्वेन सार्थक्यमुपेत्य वेति ध्येयम् । प्रपञ्चितमेतत्तर्कताण्डवे ।

या० — **अप्रतिहतेरिति** । नीलधूमत्त्वादित्यादावुभयोः सत्त्वदर्शनादिति भावः ॥ **व्याप्यत्वाभावादिति** । गुरुभूतो नीलधूमत्वादिर्न व्याप्यतावच्छेदकः । ततश्च तदवच्छेदेन व्याप्यत्वाभावादित्यर्थः ।

श्री० — **व्याप्त्युपयोगितया** व्याप्तिग्रहोपयोगितया । ननु **व्याप्यत्वाभावादिति** कथम् । नीलत्वविशिष्टे धूमे व्याप्त्यनपगमादिति चेन्न । व्याप्यत्वाभावादित्यस्य व्याप्यत्वग्रहाभावादित्यर्थः । तथा चैकस्मिन्धर्मिणि लघुगुरुधर्मद्वयसमावेशे लघुना व्याप्त्यवच्छेदे सति गुरोरनावश्यकतेति व्यर्थविशेषणताबीजमत्रास्तीति ज्ञेयम् ॥ **वक्ष्यमाणत्वादिति** । तत्रादिपदसद्भावादिति भावः ।

प० — **अप्रतिहतेरिति** । नीलधूमत्वावच्छिन्नेपि वन्हिनिरूपितव्याप्तेः पक्षधर्मतायाश्च सत्त्वादिति भावः । **व्याप्यत्वाभावादिति** । स्वसमानाधिकरणव्याप्यतावच्छेदकान्तराघटितस्यैव व्याप्यतावच्छेदकत्वोपगमेनालादृशनीलधूमत्वादेर्वन्हिनिरूपितव्याप्यतानवच्छेदकतया तदवच्छेदेन

तन्निरूपितस्वरूपसंबन्धरूपावच्छेदकत्वतद्व्याप्यतानिरूपिततादृशावच्छेदकत्वस्याप्युपगमेन व्यर्थविशेषणतास्थलेपि व्याप्तिरस्त्येव परन्तु तथा प्रयुञ्जान आधिक्येन निगृह्यत इति न तादृशप्रयोगस्य सामञ्जस्यमित्युपेयुषां नव्यानां दिशमनुरुन्धानः कल्पान्तरमाश्रयते **यद्वेति** ॥ एतत् व्यर्थविशेषणत्वम् ।

**सु० — विशेषणासिद्धिर्विशेष्यासिद्धिश्च हेतुदोषो न भवति । न हि विशेषणमात्रं विशेष्यमात्रं वा हेतुर्येन तदसिद्धिर्हेतोर्दूषणं स्यादित्येके । तान्प्रत्याह** एकासिद्धौ चेति ।

**अनु० —** एकासिद्धौ च विशिष्टासिद्धिरेव हि ॥

**विशिष्टो(हि)हेतुर्न विशेषणादिमात्रम् । विशेषणविशेष्ययोरेकस्यासिद्धावपि विशिष्टस्यासिद्धिरेव प्रसिद्धा । दण्डमात्राभावे पुरुषमात्राभावे वा दण्डिनोऽभावदर्शनात् । अतो विशेषणासिद्ध्यादावपि विशिष्टहेत्वसिद्धेरवर्जनीयत्वाद्युक्तं तस्य हेतुदोषत्वम् । तच्चोभयान्यतरीत्या द्विविधमिति पूर्वत्रसिद्धमेवेति । एकाभावे चेत्याद्यनुक्त्वैकासिद्धौ चेति वचनमसिद्धिश्च द्विविधा स्वरूपतोऽज्ञानतश्चेति सूचनार्थम् । तदेवं व्यर्थविशेषणासिद्ध्यादेर्हेतुदोषत्वाद्युक्तं परपरिगणितासिद्धिभेदेष्वाश्रयासिद्ध्यादित्रयस्यैवादोषत्वकथनमिति ।**

**शे० — न हि विशेषणमात्रमिति ।** विशेषणासिद्धावपि न हेत्वसिद्धिः । विशेष्यस्यापि हेतुताऽङ्गीकारेण विशेषणमात्रस्य हेतुनाभावात् । विशेष्यस्य चासिद्धत्वाभावात् । एवं विशेष्यासिद्धावपि न हेत्वसिद्धिः । विशेषणस्यापि हेतुताङ्गीकारेण विशेष्यमात्रस्यातथात्वात् । विशेषणस्य चासिद्धत्वाभावादिति भावः ॥ **सिद्धमेवेति** । अतस्तदनुक्तिर्न दोष इति भावः ॥ **परपरगणितासिद्धिभेदेष्विति** । आश्रयासिद्धिसाध्यासिद्धिलिङ्गासिद्धितत्पक्षधर्मत्वासिद्धिव्यधिकरणासिद्धिव्याप्त्यसिद्धिविशेषणासिद्ध्यादिरूपेष्वित्यर्थः ।

**प० — इति सूचनार्थमिति ।** अप्रसिद्धिशब्देनाज्ञानस्यापि प्रतीतेरिति भावः ।

**श्री० — पूर्वत्रेति ।** अभिमानतो द्वैविध्यस्य सम्भवादिति पूर्ववत् । इत्याद्यनुक्त्वेत्यत्रादिपदेन विशिष्टाभाव एव हीत्यप्यनुक्त्वेति ग्राह्यम् ।

**सु० — यदुक्तं प्रश्नदोषाश्चत्वार इति तत्र वैफल्यस्यासङ्गतेश्च दोषत्वमयुक्तम् । अशक्योद्भावनत्वात् । तथा हि शब्दोऽनित्योऽस्मदादिबाह्येन्द्रियग्राह्यत्वादिति प्रयुक्ते परः पृच्छति सामान्यं नित्यमनित्यं वेति । तत्र वैफल्योद्भावने निरनुयोज्यानुयोगेन परो निगृह्णीयात् । सामान्यनित्यत्वमुभयसंमतं कृत्वा तत्रानैकान्तिकत्वोद्भावनस्य प्रयोजनस्य परेणाभिसन्धातुमप्यु-**

चितत्वात् । तत्रैव प्रयोगे परः पृच्छति सामान्यमनुगतं न वेति । तत्रासङ्गत्युद्भावने निरनुयोज्यानुयोगः स्यात् । अनुगतत्वेन नित्यत्वं प्रसाध्य तत्रानैकान्तिकत्वं वक्ष्यामीत्येवमुपोद्घातलक्षणायाः सङ्गतेरपि परेणाभिप्रेतुमुचितत्वात् । न चाशक्योद्भावनं दूषणं नामेत्यत आह अप्रयोजनतेति ।

अनु० — अप्रयोजनता तत्र प्रथमप्रश्नदूषणम् ॥

तत्र प्रश्नदोषेष्वप्रयोजनता यद्यप्यु(त्तरो)त्तरप्रश्नेष्ववधारयितुमशक्या । तथाऽपि प्रथमप्रश्ने संभाविता दूषणत्वेनोद्भावयितुं शक्यत एव । न हि कथोपक्रमे प्रधानप्रमेयप्रश्नमपहायैवंविधः प्रश्नः संभवतीति । अनेनैव न्यायेनासङ्गतिरपि सर्वथा सङ्गत्यनुपलम्भ एवोद्भाव्येति द्रष्टव्यम् ।

शे० — नन्वप्रयोजनता तत्रेत्युत्तरवाक्यमनर्थकम् । न च वैफल्यादेः प्रथमप्रश्नदूषणत्वप्रतिपादकत्वान्न तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । प्रकृतासङ्गतत्वाच्चेत्यतोऽशक्योद्भावनत्वप्रयुक्तादूषणत्वशङ्कापरिहारेण प्रागुक्तप्रश्नदोषत्वसमर्थनार्थत्वान्नानर्थक्यम् । अव्यवहितग्रन्थेन तत्प्रतिपादनस्य सङ्गत्यभावेऽपि व्यवहितेन तेन सङ्गतिसद्भावान्नासङ्गतिरपीति भावेन तत्सङ्गतिप्रदर्शनपूर्वकमशक्योद्भावनत्वोपपादनेन तददूषणत्वशङ्कामुत्थापयति यदुक्तमित्यादिना । ननु तथाऽपि नासङ्गतेः प्रश्नदूषणत्वानुपपत्तिपरिहार इत्यत आह अनेनैवेति ॥ सर्वथेति । उपोद्घातरूपसङ्गतेरप्यनुलम्भ इत्यर्थः ।

प० — इत्युक्त इति । नैयायिकेन शब्दानित्यत्वार्थमित्यनुमाने कथिते सतीत्यर्थः । परः शब्दनित्यत्ववादी सामान्यनित्य(त्ववादि)त्वादिविषयप्रश्नकर्तेत्यर्थः । ननु अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनं निरनुयोज्यानुयोगः । तथा चेह वै(क)फल्यस्याप्राप्तौ तस्योद्भावने हि निरनुयोज्यानुयोगेन निग्रहस्थानेन शब्दनित्यत्ववादी नैयायिकं निगृह्णीयात् । पराजये कथं वै(क)फल्यस्याप्राप्तिरित्यत आह सामान्येति । परेण प्रश्नकर्त्रेत्यर्थः ॥ तत्रैव प्रयोग इति । शब्दानित्यत्वप्रयोग इत्यर्थः ॥ अनेनैव न्यायेनेति । यद्यपीत्यादिनोक्तेन वै(क)फल्योद्भावनस्य समर्थनन्यायेनेत्यर्थः ॥ सर्वथेति । उपोद्घातबुद्ध्या प्रकृतान्वयानुपलम्भ इत्यर्थः ।

या० — अनेनैव न्यायेनेति । यद्यप्युत्तरोत्तरप्रश्नेष्वित्युक्तन्यायेनेत्यर्थः । अनेन मूलेऽनुक्ताऽप्यसङ्गतिर्न्यायसाम्याद्गृहीतेति सूचयति सर्वथेति । उपोद्घातरूपसङ्गतेरप्यनुपलम्भ इत्यर्थः ।

श्री० — दूषणं नामेति । तथा चोद्भावयितुमशक्यं किल तद्दूषणं नाम कथं स्यादित्यर्थः ।

सु०— नन्वेवं सति षडेव निग्रहस्थानानीति नियमो भज्येत। स्वव्याहत्यसङ्गत्यो-विरोधासङ्गत्यन्तर्भावेऽपि सिद्धार्थतावैफल्ययोरतिरिक्तत्वादित्यत आह सिद्धेति।

अनु०— सिद्धप्रश्नादिकं यत्तदाधिक्यान्तर्गतं भवेत्।

श्री०— एवं सतीति। चतुर्णां प्रश्नदोषसत्वे।

सु०— दूषणान्तर्भावकथनप्रसङ्गेन प्रागुक्तप्रमाणत्रित्वनियमसिद्धये परैः पृथक्प्रमाण-त्वेनाङ्गीकृतानामर्थापत्त्यादीनामुक्तान्तर्भावमाह अर्थापत्तीति।

अनु०— अर्थापत्त्युपमाऽभावा अनुमानान्तर्गताः

अनुपपद्यमानदर्शनादुपपादके बुद्धिरर्थापत्तिः। यथा जीवतो गृहाभावदर्शनाद्बहि-र्भावबुद्धिः। तत्र जीवतो गृहाभावस्यानुपपद्यमानता नाम किं सर्वथाऽसंभवः किं वा बहिर्भावेन विनाऽनवस्थानम्। आद्ये दहनशैत्यमप्यनुमानाभासात्प्रतीतं किं कमप्यर्थं न बोधयेत्। तत्प्रतीतिर्भ्रान्तिरिति चेत्। सर्वथाऽसंभवतो गृहाभावस्यापि प्रतीतिः कथं न भ्रान्तिः। दहनशैत्यस्योपपादकं नास्तीति चेन्न। सर्वथाऽप्यसंभवतो गृहाभावस्यापि तदनुपपत्तेः। द्वितीये व्याप्तिरेव सेति व्याप्यदर्शनाद्व्यापकबुद्धिरर्थापत्तिरनुमानमेव। प्रमाणद्वयविरोधोऽनु-पपत्तिरिति चेन्न। प्रकृतोदाहरणे तदभावात्। विरोधो हि तदा स्याद्यदि जीवतीत्यस्य गृहेऽस्तीत्यर्थः स्यात्। यदि वा गृहे नास्तीत्यस्य न जीवतीत्यर्थः स्यात्। न च तदस्ति। स्वस्मिन्नेवान्यथाभावदर्शनात्। यो हि मातापितृभ्यां सु(रक्षी)शिक्षितो न जातु गृहान्नि-र्गच्छति सोऽन्यानपि तथा मन्यमानो जीवनप्रमाणस्य गृहे सत्त्वमेवार्थं प्रतिपद्यत इति। एवं तर्हि सन्दिहानोऽवतिष्ठेत न तु बहिर्भावं निश्चिनुयात्। अन्यथा प्रकरणसमेनापि किञ्चिद-वधारयेत्।

एतेनैतदपि निरस्तम्। यदाहुः। अनुमानत्वपक्षे किं बहिर्भावे जीवनमात्रं लिङ्गमुत गृहाभावमात्रम् अथवा विशिष्टम्। न प्रथमद्वितीयौ। व्यभिचारात्। न तृतीयः। विरुद्धयोर्विशेषणविशेष्यभावानुपपत्तेः। अविरोधप्रतीतेश्च बहिर्भावकल्पनोत्तरकालीनत्वेनेतरे-तराश्रयापत्तेरिति। जीवनगृहाभावयोर्विरोधस्य अभावात्। भावे वाऽर्थापत्तेरप्यनुपपत्तेः। अतोऽविनाभावबलेनार्थप्रतीतिहेतुत्वादर्थापत्तिरनुमानमेव।

एतेन केवलव्यतिरेकी परिशेषश्चार्थापत्तिरेव नानुमानमित्यपि निरस्तम्।

**शे॰** — अर्थापत्त्यादेरनुमानत्वकथनं प्रकृतासङ्गतत्वादनर्थकत्वाच्चायुक्तमित्याशङ्क्य सङ्गतिप्रदर्शनपूर्वकं सप्रयोजनत्वं दर्शयन्नेव तत्कथनपरतयोत्तरग्रन्थं सङ्गमयति **दूषणान्तर्भावेति** । अनेन प्रसङ्गलक्षणा सङ्गतिरित्युक्तं भवति **प्रागुक्तेति** । युक्तिपादोक्तेत्यर्थः । अर्थापत्तेरनुमानान्तर्भावं वक्तुं करणफलसाधारण्येन तत्स्वरूपमाह **अनुपपद्यमानेति** । स्वोपपादकप्रमितिसाधनमनुपपद्यमानार्थदर्शनमर्थापत्तिरित्यर्थः । उपपादकविषयकप्रमितिसाधनप्रत्यक्षादिव्यवच्छेदार्थं अनुपपद्यमानार्थदर्शनमित्युक्तम् । सविकल्पकस्य तत्सदृशस्मरणस्य वा साधनमनुपपद्यमानविषयकनिर्विकल्पकरूपदर्शनं व्यवच्छेत्तुमुपपादकांशोपादानम् । अन्तर्भावस्फोरणाय तामुदाहरति **यथेति** । अत्र हि जीवतो देवदत्तस्य बहिरवस्थानं विनाऽनुपपद्यमानस्य गृहाभावस्य दर्शनात्तदुपपादकबहिरवस्थानज्ञानमर्थापत्तिरित्यर्थः । अनुपपत्तिस्वरूपपर्यालोचनयाऽर्थापत्तिरनुमानतया पर्यवस्यतीति मन्वानोऽनुपपत्तिशब्दार्थमेव प्रथमं पृच्छति **तत्रेति** ॥ **सर्वथाऽसम्भव इति** । सर्वथाऽनवस्थानमित्यर्थः । अत्यन्तासत्त्वमिति यावत् । अत्यन्तासतो गृहाभावस्यार्थान्तरगमकत्वे तादृशस्य दहनशैत्यादेरपि तत्स्यादविशेषादित्यभिप्रेत्य प्रतीतत्वाप्रतीतत्वाभ्यां विशेषादविशेषासिद्धेर्नायं प्रसङ्ग इत्यतः प्रतीतत्वोपपादनेनाविशेषं सूचयन्नेव प्रसङ्गमाह **आद्य इति** । **तत्प्रतीतिरिति** । तथा च प्रमितत्वाप्रमितत्वाभ्यां विशेषादविशेषासिद्धेर्नोक्तातिप्रसङ्ग इति भावः । **सर्वथेति** । तथा च पुनरविशेष एवेति भावः । उपपादकभावाभावाभ्यां विशेषान्नोक्तातिप्रसङ्ग इत्याशयेन शङ्कते **दहनेति** ॥ **तदनुपपत्तेरिति** । उपपादकानुपपत्तेरित्यर्थः । तथा च पुनरविशेष एवेति स्यादेवोक्तातिप्रसङ्ग इति भावः ॥ **द्वितीय इति** । गृहाभावस्य बहिर्भावेन विनाऽनवस्थानस्यैवानुपपत्तिरूपत्वेऽनुपपत्तिर्व्याप्तिरेव स्यात् । गम्येन विना गमकस्यानवस्थितेरेवाविनाभावत्वादित्यर्थः । अस्त्वनुपपत्तिर्व्याप्तिः किमेतावतेत्यत आह **व्याप्त्येति** । अनुमानमेवेत्यनुमानशब्दो भावसाधन इत्यर्थः । अनुमितिरेवेत्यर्थः । प्रकारान्तरेणानुपपत्तिस्वरूपं शङ्कते **प्रमाणेति** । (गृहाभावग्राहकप्रत्यक्षस्य जीवनग्राहकप्रमाणस्य च विरोध इत्यर्थः) । जीवति देवदत्त इत्याप्तवाक्यं सामान्येन देवदत्तसत्त्वं प्रमापयति । गृहेऽनुपलब्धिस्तदसत्त्वमिति जीवनगृहाभावग्राहकप्रमाणयोर्विरोधः सोऽनुपपत्तिशब्दार्थः । तत्रानवकाशस्यानुपपत्तिमुखेन सावकाशस्य जीवनग्राहकप्रमाणस्य बहिःसद्भावलक्षणविषयान्तरकल्पनमर्थापत्तिः । सा च व्याप्तिस्मरणसहकृतलिङ्गदर्शनानन्तरभाविनोऽनुमानाद्भिद्यत इति भावः ॥ **प्रकृतोदाहरण इति** । जीवनगृहाभावग्राहकप्रमाणयोर्विरोधस्यैवाभावादित्यर्थः । ननु जीवनग्राहकप्रमाणस्य गृहेऽस्तित्वग्राहकत्वात्कथं गृहाभावग्राहकप्रमाणेन न विरोधः । यद्वा गृहाभावप्रमाणस्य जीवनाभावग्राहकत्वाज्जीवनग्राहकप्रमाणेन विरोध एवेति कथं न तयोर्विरोध इत्यतो भवेदेतदेवं यदि जीवनगृहाभावप्रमाणयोर्गृहास्तित्वजीवनाभावग्राहकत्वं स्यात् । न चैतदस्तीत्याह **विरोधो हीति** । कुत

एतदित्याशङ्क्य प्रमाणद्वयविषययोर्जीवनगृहाभावयोः समावेशस्य स्वात्मन्येव दर्शनादित्याह **स्वस्मिन्नेवेति** ॥ **एवं तर्हीति** ' तुल्यबलत्वेन ज्ञातप्रमाणद्वयविप्रतिपत्त्या संशयस्यावश्यकत्वेन ( प्रत्यक्षेणानुपलम्भाद्गृहे नास्ति वा जीवित्वाद्गृहेऽस्ति वेति संशयस्य ) बहिर्भावनिश्चयरूपार्थापत्त्यनुदयप्रसङ्गादित्यर्थः ॥ **अन्यथेति** । परस्परविरुद्धप्रमाणद्वयोपनिपातेऽपि सन्देहानभ्युपगम इत्यर्थः ।

**व्यभिचारादिति** । आद्यस्य गृहस्थिते, द्वितीयस्य मृतादाविति शेषः । ननु बहिस्सत्त्वेनापि जीवनोपपत्त्याऽविरोधसंभवान्न विशेषणविशेष्यभावानुपपत्तिरित्यत आह **अविरोधेति** । एतेनेत्यतिदिष्टं हेतुमाह **जीवनेति** । सामान्यविशेषयोरविरोधस्य स्वस्मिन्नेव दृष्टत्वादिति भावः । ननु न जीवनगृहाभावयोः सामान्यविशेषभावोऽभ्युपगन्तुं शक्यते । यो हि मातापितृभ्यां सुशिक्षितो न जातु गृहान्निर्गच्छति । सोऽन्यानपि तथा मन्यमानो जीवनप्रमाणस्य गृहे सत्त्वमेवार्थं प्रतिपद्यते । तं प्रति प्रमाणद्वयस्यापि विशेषविषयत्वात् । तथा च विरोधोऽवर्जनीय एवेत्यतस्तथा सति तुल्यबलत्वेन ज्ञातप्रमाणद्वयविप्रतिपत्त्या प्रकरणसम इव संशयस्यावश्यकत्वेऽर्थापत्त्यनुदयप्रसङ्गादिति भावेनाह **भावे वेति** ॥ **एतेनेति** । अर्थापत्तेरनुमानत्वसमर्थनेनेत्यर्थः ॥ **इतरेतरेति** । साध्यरूपे बहिस्सत्त्वसिद्धे विरोधाभावेन विशेषणविशेष्यभावोपपत्त्या हेतुसिद्धिः तत्सिद्धौ तेन हेतुना बहिस्सत्त्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः । एतेनेत्युक्तं विशदयति **जीवनेति** ।

~~**प०— प्रागुक्तेति** । युक्तिपादीयोद्ग्रन्थे 'अनुप्रमाणमेतानि त्वक्षयुक्तिवचांस्यत' इत्युक्तेत्यर्थः ॥~~

**सर्वथाऽसंभव इति** । गृहेऽस्थितस्य भावस्यैवासत्वमित्यर्थः ॥ **व्याप्तिरेव सेति** । अविनाभावो व्याप्तिरिति प्रागुक्तानुपपत्ति(व्याप्ति)र्व्याप्तिरेवेत्यर्थः ॥ **प्रमाणद्वयविरोध इति** । तथा च नानुपपत्तिरूपा व्याप्तिरर्थापत्तिरिति भावः । यथा मृदब्रवीदित्यादिकं प्रमाणं, मृन्न वक्त्री जडत्वादित्यनुमानमपरं, तयोर्विरोधशांत्युपपादकं देवतारूपं वस्तु कल्प्यत इति, यथा वा यजेत स्वर्गकाम इत्येकं प्रमाणं, यागो न कालांतरभाविस्वर्गहेतुः आशुविनाशित्वात् संमनवदित्यपरं, तयोरविरोधोपपादकमपूर्वं कल्प्यत इत्याद्युदाहरणं ज्ञेयम् ॥ **अन्यथाभावेति** । प्रागुक्तान्यथाभावस्य जीवतोपि गृहे असतोपि स्वस्य जीवनस्य दर्शनादित्यर्थ इति योज्यम् । प्रकृतेप्यस्ति प्रमाणद्वयविरोध इति भावेन शंकते **यो हीति** । सत्त्वमेवार्थमित्यनंतरं गृहे नास्तीत्यस्य न जीवतीति चार्थ इति योज्यम् । **संदिहान इति** । जीवंश्चैत्रो गृहे नास्तीति वाक्यद्वयदर्शना(दिनासं)त्संदिहान इत्यर्थः ॥ **अन्यथेति** । विरुद्धतयाऽवगतप्रमाणद्वयेनापि निश्चये सति प्रकरणसमशब्दितसत्प्रतिपक्षहेतुद्वयेनापि किंचित्प्रमेयमवधारयेदित्यर्थः ॥ **व्यभिचारादिति** । गृहे स्थिते मृते च यथाक्रमं हेतुसत्वेपि साध्याभावादिति भावः ॥ **एतेनेति** । अर्थापत्तेरनुमानत्वसमर्थनेनेत्यर्थः ।

या० — **प्रागुक्तप्रमाणेति** । युक्तिपादोक्तप्रमाणत्रित्वनियमसिद्ध्य इत्यर्थः ॥ **सर्वथाऽसम्भव इति** । सर्वथाऽसत्त्वमित्यर्थः ॥ **अन्यथाभावदर्शनादिति** । जीवनवत्यपि स्वस्मिन्गृहेऽभावदर्शनादित्यर्थः । **सन्दिहान इति** । द्वयोः प्रमाणयोस्तुल्यबलत्वेन ज्ञानादिति भावः ॥ **व्यभिचारादिति** । प्रथमे गृहस्थिते द्वितीये च मृते व्यभिचारादित्यर्थः ।

श्री० — **किमिति** । कस्मादित्यर्थः । स्वोपपादकं कस्मान्नाक्षिपतीत्यर्थः । तथा च जीवतो गृहेऽसत्त्वं सर्वथाऽसम्भविशशविषाणायितमपि प्रत्यक्षाभासात्प्रतीतं बहिःसत्त्वं बोधयति । तर्ह्यनुमानाभासात्प्रतीतं सर्वथाऽसम्भवि दहनशैत्यमपि कञ्चिदर्थं किं कस्मान्न बोधयेत् । सर्वथाऽसत्त्वाविशेषादिति भावः । तथा च सर्वथाऽसम्भवित्वे तदुपपादककल्पनं न युक्तमिति भावः ॥ **तत्प्रतीतिः** अनुमानाभासजन्या दहनशैत्यप्रतीतिः । अतो न तत्कमप्यर्थं बोधयतीति भावः ।

**नास्तीति** । अतः प्रतीतमपि दहनशैत्यं कस्योपपादकं स्यात् । प्रकृते तु बहिःसत्त्वरूपमुपपादकमस्तीति तद्बोधकत्वं गृहासत्त्वस्य युक्तमित्यर्थः ॥ **तदनुपपत्तेरिति** । उपपादकानुपपत्तेरित्यर्थः ॥ **सेति** बहिर्भावं विनाऽनवस्थितिः । अविनाभावरूपत्वादिति भावः ॥ **प्रमाणद्वयेति** । गृहाभावग्राहकप्रत्यक्षस्य जीवनग्राहकप्रमाणस्य च विरोध इत्यर्थः ॥ **सन्दिहान इति** । प्रत्यक्षेणानुपलम्भाद्गृहे नास्ति वा जीवित्वाद्गृहेऽस्ति वेति सन्दिहान इत्यर्थः ॥ **अन्यथेति** । द्वयोः प्रमाणयोस्तुल्यबलत्वेन सन्देहदशायामपि चेत्किञ्चिदर्थं निश्चिनुयादित्यर्थः ॥ **इतरेतरेति** । साध्यरूपे बहिः सत्त्वे सिद्धे विरोधाभावेन विशेषणविशेष्यभावोपपत्त्या हेतुसिद्धिस्तत्सिद्धौ तेन हेतुना बहिःसत्त्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः । एतेनेत्युक्तं विशदयति **जीवनेति** ॥ **भावे वेति** । सर्वथा विरोधस्यैव सत्त्व इत्यर्थः । तथा च बहिःसत्त्वेन तदुपपादनमसंभवीत्यर्थः । **एतेन** अर्थापत्तेरनुमानेऽन्तर्भावकथनेन ।

च० — **सर्वथाऽसंभव इति** । सकलदेशकालासत्त्वमित्यर्थः । **प्रमाणद्वयविरोधः** जीवनग्राहकप्रमाणस्य गृहेऽभावग्राहकस्य च विरोधः । **प्रकरणसमेन** सत्प्रतिपक्षेण ।

**सु० — गृह्यमाणे वस्तुनि स्मर्यमाणप्रतियोगिकसादृश्यदर्शनात् स्मर्यमाणे गृह्यमाणप्रतियोगिकसादृश्यप्रतीतिरुपमानम् । यथा गामनुभूय वनं गतो गवये गोसादृश्यमुपलभ्य गवि गवयसादृश्यं प्रत्येति । यद्यपि नैतत्स्मरणम् । प्रतियोगिनो गवयस्य प्रागननुभूतत्वेन गोगतसादृश्यस्याननुभूतत्वात् । न हि सामग्र्यभावे योग्येन्द्रियसन्निकर्षसद्भावमात्रेणानुभवः शक्योऽङ्गीकर्तुम् । प्रतियोगिज्ञानस्यान्वयव्यतिरेकाभ्यां सादृश्यप्रतीतौ हेतुत्वमवधृतमेव ।**

**निर्विकल्पकप्रतीत्यभ्युपगमस्त्वप्रामाणिक एव । तथाऽपि यो यत्सदृशः स तत्सदृश इति व्याप्तिबलेन गमकत्वादनुमानमेव । व्यधिकरणत्वान्नेति चेत्तस्यादोषतया निरूपितत्वात् । एकाधिकरणतायाः शक्यसंपादनत्वाच्च । तस्माद्वैसादृश्यदर्शनवत्सादृश्यदर्शनमपि न पृथक् प्रमाणम् ।**

**शे०** — सदृशदर्शनादसन्निकृष्टार्थज्ञानमुपमानमिति मीमांसकोदीरितस्यानुमानान्तर्भावं वक्तुं तत्सोपपादनमनुवदति **गृह्यमाण इत्यादिना ।** इदं च करणफलसाधारण्येनोपमानस्वरूपनिरूपणमात्रम् । लक्षणं तु स्मर्यमाणे गृह्यमाणप्रतियोगिकसादृश्यप्रतीतिसाधनं गृह्यमाणे वस्तुनि स्मर्यमाणप्रतियोगिकसादृश्यदर्शनमुपमानमिति द्रष्टव्यम् । गवयनिष्ठस्मर्यमाणगोप्रतियोगिकसादृश्यज्ञानं करणम् । फलं पुनरेतत्सदृशः स गौरिति गवयप्रतियोगिकगोनिष्ठसादृश्यज्ञानमित्यभिप्रेत्योक्तमर्थं विशेषनिष्ठतया दर्शयति **यथेत्यादिना ।** ननु नगर एव यदा गोपिण्डोऽनुभूयते तदा गवयसादृश्यविशिष्टतयाऽप्यनुभूतं एव सः । गवयसादृश्यस्य गोगतस्येन्द्रियसन्निकृष्टतयाऽनुभवितुं शक्यत्वादरण्यस्थले च तस्य तत्र स्मृतिरेव परमुदेति, न प्रमितिरिति तत्करणं किञ्चित्प्रमाणमतिरिक्तमभ्युपेयमित्याशङ्का परिहरन्नेवानुमानान्तर्भावमाह **यद्यपीत्यादिना ।** यद्यपि सादृश्यमस्ति गोपिण्डे तथाऽपि प्रतियोगिज्ञानाधीनज्ञानतया प्रतियोग्यनवगमान्न तत्पूर्वमनुभूयते तेन नारण्यस्थले तस्य स्मृतिरित्यर्थः ।

ननु सादृश्यस्य प्रतियोगिज्ञानाधीनज्ञानत्वेऽपि न प्रतियोगिज्ञानस्य सादृश्यप्रतीतिमात्रे कारणत्वं किन्तु तत्सविकल्पकरूपप्रतीतावेव । तथा च निर्विकल्पकरूपसादृश्यज्ञानस्य प्रतियोगिज्ञानाधीनत्वाभावेन तदभावेऽपि संभवात् । गोगतसादृश्यस्यापि नगरेऽनुभवसंभवात् । अरण्यस्थले तज्ज्ञानं स्मरणमेव किन्न स्यादित्यतोऽनुभवस्मरणयोः समानप्रकारकयोरेव कार्यकारणभावाङ्गीकारान्न पूर्वं निर्विकल्पकरूपसादृश्यज्ञानेन पश्चादरण्यस्थले सविकल्पकरूपं गोगतसादृश्यस्मरणं संभवतीति सत्येव दोषे वस्तुस्थितिमाह **निर्विकल्पकेति ।** नन्वनुभूयमानगतत्वेन प्रतीयमानं सादृश्यं करणं स्मर्यमाणगतं तु तत्प्रमेयं तत्कथमनयोर्व्यधिकरणयोर्लिङ्गलिङ्गिभाव इत्याशङ्कते **व्यधिकरणत्वादिति ॥ तस्येति ।** स गौरेतद्गवयसदृशोऽस्य गवयस्य तद्गोसदृशत्वात् । यो यत्सदृशः स तत्सदृशो यथा यमो यमान्तरेणेति व्याप्तिसत्त्वेन व्यधिकरणत्वस्यादोषतया 'न च ते दोषा व्याप्तौ सत्यां कथञ्चने'त्यादिना पूर्वत्र निरूपितत्वादित्यर्थः ॥ **एकाधिकरणताया इति ।** विमतो गौर्गवयसदृशो गवयगतसादृश्यप्रतियोगित्वात् । यो यद्गतसादृश्यप्रतियोगी स तत्सदृशो, यथा यमो यमान्तरेणेति साध्यसाधनयोः सामानाधिकरण्यस्य शक्यसंपादनत्वाच्चेत्यर्थः । इदं च हेतुसाध्यसामानाधिकरण्यसंपादनं पररीतिमाश्रित्यैव कृतम् । अत एवेह टीकायां 'रोहिण्युदय आसन्नः कृत्तिकाभ्युदिता यत' इति मूलोक्तव्यधिकरणप्रयोगे कालादिपक्षी-

कारेणैकाधिकरण्यमाशङ्क्यैवं प्रयोगविपरिणामे प्रमाणं नेति पूर्वमुक्तम् । पद्धतौ चासौ गौरेतत्सदृशोऽस्य गवयस्य तत्सदृशत्वादिति वैयधिकरण्येनैव प्रयुक्तम् । इह टीकायां शक्यसम्पादनत्वादिति, लक्षणटीकायां च प्रयोगसंभवादिति नोक्तमिति ध्येयम । सादृश्यज्ञानस्य पृथक् प्रमाणत्वेऽनिष्टं कथयन्नेत्र प्रागुपपादितं पृथक् प्रमाणत्वाभावमुपसंहरति **तस्मादिति** ॥ **वैसादृश्यदर्शनवदिति** । सादृश्यज्ञानस्य प्रत्यक्षादिभ्यः पृथक् प्रमाणत्वे वैधर्म्यज्ञानमपि तेभ्यः पृथक् प्रमाणं स्यात् । तथा हि । यत्र परोक्षादपरोक्षे भवति वैधर्म्यादिमतिस्तस्मादयमन्यथेति, भवति चास्मादप्यन्यथा स इत्यपि तत्र मतिः । न च तत्र, स्मर्यमाणगते सादृश्यप्रतीतिः प्रमितिरिति तत्करणं स्मर्यमाणप्रतियोगिकगृह्यमाणगतसादृश्यप्रतीतिः प्रमाणम् । स्मर्यमाणगतवैसादृश्यप्रतीतिरप्रमितिरिति तत्करणं स्मर्यमाणप्रतियोगिकगृह्यमाणगतवैसादृश्यप्रतीतिरप्रमाणमिति नियन्तुं शक्यम् । विशेषनियामकाभावात् । साऽर्थापत्तिरिति यदि मन्यसे तर्हीयमप्यर्थापत्तिरेवेति न सादृश्यज्ञानस्य पृथक् प्रमाणत्वसिद्धिः । 'साधर्म्यमिव वैधर्म्यं मानमेव प्रसज्यते । अर्थापत्तिरसौ व्यक्तमिति चेत्प्रकृतेन किमि'ति कुसुमाञ्जलावुदयनोक्तेरिति भावः ।

प० — प्राक्सन्निकर्षदशायां अपरोक्षानुभव एवायं भवत्वित्यत आह **न हि सामग्र्यभाव इति** । तमेव व्यनक्ति **प्रतियोगीति** । अवधृतमेवेत्यनन्तरं तज्ज्ञानं प्रकृते नास्तीत्युक्तमिति योज्यम् । ननु संनिकृष्टगोपिण्डविषयकनिर्विकल्पकज्ञानं सादृश्यविषयकमस्तु । तत्र प्रतियोगिज्ञानानपेक्षणादित्यत आह **निर्विकल्पकेति** ॥ **तथापीति** । स्मृतित्वापरोक्षानुभवत्वयोरयोगेऽपीत्यर्थः । विमता गौर्गवयसदृशी गवयस्य गोसदृशत्वादिति प्रयोगं हृदि कृत्वाऽऽह **यो यत्सदृश इति** ॥ **शक्यसंपादनत्वादिति** । गवयनिष्ठसादृश्यप्रतियोगित्वादित्येवंरूपेणेति भावः ॥ **वैसादृश्येति** । गवादौ महिष्यादिवैसादृश्यदर्शनं यथा न पृथक्प्रमाणं तथेत्यर्थः ।

या० — शाबरोपमानं स्मरणरूपमेवातो न प्रमाणमिति मतमपाकुर्वन्ननुमानान्तर्भावमुपपादयति **यद्यपीत्यादिना** । ननु गवि गोत्वमिव गवयसादृश्यमपि योग्यत्वादनुभूतमेवेत्यत आह **न हि सामग्र्यभाव इति** । ननु सविकल्पक एव सादृश्यानुभवे प्रतियोगिज्ञानं हेतुतयाऽवधृतं न निर्विकल्पक इत्यतः प्रतियोगिनो गवयस्याज्ञानेऽपि योग्येन्द्रियसन्निकर्षसद्भावेन च निर्विकल्पकः सादृश्यानुभवोऽङ्गीकर्तुं शक्यत एवेत्यत आह **निर्विकल्पकप्रतीतीति** ॥ **अप्रामाणिक इति** । न प्रमाणमूलक इत्यर्थः । इदं च वस्तुस्थितिमाश्रित्योक्तम् । निर्विकल्पकाभ्युपगमेऽपि तस्य संस्काराजनकत्वान्न तेन स्मृतिः सम्भवतीत्यवधेयम् ॥ **एकाधिकरणताया इति** । विमता गौर्गवयसदृशी गवयगतसादृश्यप्रतियोगित्वात् । यो यद्गतसादृश्यप्रतियोगी स तत्सदृशो यथा यमो यमान्तरेणेत्येकाधिकरणतायाः शक्यसम्पादनत्वाच्चेत्यर्थः ।

च०— शक्यसंपादनत्वादिति ॥ विमता गौर्गवयसदृशी गवयगतसादृश्यप्रतियोगित्वात् यथा यमो यमान्तरेणेति साध्यसाधनयोः सामानाधिकरण्यस्य सुसंपादत्वादित्यर्थः ।

सु०— अन्ये तु संज्ञासंज्ञिसंबन्धप्रमितिफलमनधिगतसङ्गतिसंज्ञास्मरणसहायं तत्समभिव्याहृतातिदेशवाक्यार्थप्रत्यभिज्ञानमुपमानम् । अतिदेशवाक्यार्थश्च क्वचित्साधर्म्यं क्वचिद्वैधर्म्यं क्वचिद्धर्ममात्रमिति त्रिविधो भवति । यथाऽव्युत्पन्नगवयपदार्थो गोसदृशो गवय इत्यतिदेशवाक्यानुभूतमर्थं प्रत्यक्षे(ण) गवये प्रत्यभिज्ञानन् गवयपदं स्मरन् गवयपदस्य गवये सङ्गतिमवगच्छति । तदिदं साधर्म्योपमानम् । वैधर्म्योपमानं तु गवादिवद्द्विशफो न भवत्यश्व इति वाक्यार्थप्रत्यभिज्ञानादश्वेऽश्वपदसङ्गतिग्रहणम् । धर्ममात्रोपमानमपि दीर्घग्रीवत्वादिधर्मवान्पशुरुष्ट्र इति वाक्यार्थप्रत्यभिज्ञानादुष्ट्रपदव्युत्पत्तिरिति मन्यन्ते । तत्र यद्यपि संज्ञासंज्ञिसंबन्धप्रतिपत्तिः प्राग्गवयादिदर्शनादतिदेशवाक्येन प्रयोगादिना लिङ्गेन वा भवितुं नार्हति । संबन्धिनोऽनवगमे संबन्धस्यावगन्तुमशक्यत्वात् । तथाऽपि गवयादिदर्शनोत्तरकालं साधर्म्यादिना लिङ्गेनैव भविष्यति । एतस्यां दशायामतिदेशवाक्यं व्याप्तिग्राहकत्वेनोपयुज्यते । यथा हि पृथिवीत्वाभिसंबन्धात्पृथिवीति व्यवहर्तव्येति लक्षणवाक्यं श्रुतवतः पृथिवीत्वाभिसंबन्धं क्वचिद्द्रव्ये पश्यतोऽनुमानेनैव संज्ञासंज्ञिसंबन्धप्रतिपत्तिरभ्युपगता । तथा प्रकृतेऽपीति कथमिदं पृथक् प्रमाणं स्यादिति ।

---

शे० — नैयायिकोदीरितोपमानस्याप्यनुमानतामुपदर्शयितुमकृतसमयसंज्ञास्मरणसहायं तत्समभिव्याहृतवाक्यार्थप्रत्यभिज्ञाप्रत्यक्षमुपमानमिति न्यायाचार्योक्तमुपमानलक्षणं विवृण्वन्नेवोपमानलक्षणमाह अन्ये त्वित्यादीना । संज्ञासंज्ञिसम्बन्ध(वाच्यवाचकभावसम्बन्ध प्रमितिः फलं यस्य तत्तथोक्तम् । वादिविप्रतिपत्तेरुपमानस्य प्रमेयं फलं च दर्शयितुमिदमुक्तम् । अनेन च संज्ञासंज्ञिसम्बन्ध उपमानस्य प्रमेयं तत्प्रतीतिश्च फलमित्युक्तं भवति । अनधिगता सङ्गतिः स्वार्थेन वाच्यवाचकभावो यस्याः संज्ञायाः सा तथोक्ता तस्या यत्स्मरणं तत्सहायो यस्य तत्तथोक्तम् । इदं चावान्तरव्यापारप्रदर्शनायोक्तम् । तत्समभिव्याहृतेत्यत्र तच्छब्देनानधिगतसङ्गतिसंज्ञापरिग्रहः । तया समभिव्याहृतं सहोच्चारितं यदतिदेशवाक्यम् । अतिदिश्यते प्रतिपाद्यते साधर्म्यादिकमनेनेत्यतिदेशः स चासौ वाक्यं चेति सामानाधिकरण्यसमासः । अविज्ञातं गवयादिकं जिज्ञासमानं प्रति प्रसिद्धगवादिसादृश्यद्वारेण तद्बोधकं वाक्यमतिदेशवाक्यमित्यर्थः । तस्य योऽर्थः साधर्म्यादिलक्षणस्तस्य संज्ञिनि गवयादौ प्रत्यक्षेण प्रत्यभिज्ञानमुपमानमित्यर्थः । एतच्च करणांशनिरूपणम् । अत्र च शाब्दप्रमितिव्यवच्छेदाय अनवगतसङ्गतिसंज्ञासमभिव्याहृतेत्युक्तम् । प्रत्यक्षानुमित्योर्व्यावृत्त्यै वाक्यार्थग्रहणम् । उपमानस्य त्रैविध्यलाभायातिदेशवाक्यार्थस्य

त्रैविध्यमाह **अतिदेशेति** । ततश्च तद्भेदात्तत्प्रतिसन्धानात्मकमुपमानमपि त्रिविधमिति भावः । उपमानत्रयमपि क्रमेणोदाहरति **यथेत्यादिना** । अत्र प्रत्यभिजानन्प्रत्यभिज्ञानादित्यन्तेन करणशरीरमुक्तं, शेषेण फलमिति च ज्ञेयम् ॥ **प्रयोगादिना लिङ्गेनेति** । गवयशब्दो गवयस्य वाचकः असति वृत्त्यन्तरे वृद्धैः प्रयुज्यमानत्वात् । यो यत्रासति वृत्त्यन्तरे वृद्धैः प्रयुज्यते, स तस्य वाचको यथा गोशब्दो गोत्वस्य, प्रयुज्यते चायमसति वृत्त्यन्तरे गवयशब्दः पुरोवर्तिनि, तस्मात्तस्य वाचक इत्यनुमानेनेत्यर्थः । आदिपदेन साधर्म्यादिपरिग्रहः ॥ **साधर्म्यादिना लिङ्गेनेति** । यद्यपि गवयादिदर्शनोत्तरकालं प्रयोगस्याप्युक्तरीत्या तदनुमापकत्वं संभवत्येवेति न तत्परित्यागो युक्तस्तथाऽप्यसति वृत्त्यन्तर इति हेतुविशेषणस्य दुर्ज्ञानत्वेन विशेषणासिद्धिशङ्काकलङ्कितत्वात्तत्परित्यागः । यद्यप्ययं गवयशब्दवाच्यो गोसदृशत्वादित्यपि नानुमातुं शक्यं गोसादृश्यमात्रस्य गव्यपि सत्त्वेन विपक्षवृत्तित्वात् । तथाऽप्यगोत्वे सति गोसादृश्यात्तदनुमानमप्रत्यूहमिति हृदयम् । एवं तर्ह्यतिदेशवाक्यानर्थक्यमित्यत आह **एतस्यां दशायामिति** । गवयादिदर्शनोत्तरकालमित्यर्थः । अनुमानस्य संज्ञासंज्ञिसंबन्धनिश्चायकत्वं परस्यापि क्वचित्सम्मतमिति तदनभ्युपगमे तदपि न स्यादिति भावेन दृष्टान्तोपदर्शनपूर्वकं प्रकृतमर्थमुपसंहरति **यथा हीत्यादिना** ।

प० — मीमांसकोपमानमन्तर्भाव्य तार्किकोपमानमप्यनूद्य अन्तर्भावयति **अन्ये त्विति** ॥ **संज्ञासंज्ञीति** । वाचकवाच्यसंबन्धप्रमितिफलकमव्यु(त्पन्नवा)त्पादनवाचकपदस्मरणोपेतं गोसदृशो गवय इत्यादिरूपातिदेशवाक्यार्थप्रत्यभिज्ञानं गोसदृशोऽयं गवय इत्येवं रूपमित्यर्थः ॥ **प्रयोगादिना लिंगेन वेति** । गवयशब्दः अस्य पिंडस्य वाचकः वृद्धैस्तत्र प्रयोगादिति प्रयोगरूपलिंगेन गवयपदात् झटिति प्रतीयमानत्वादिलिंगेनापि आदिपदोपात्तेनेत्यर्थः ॥ **साधर्म्यादिनेति** । वैधर्म्यादिरादिपदार्थः ॥ **भविष्यतीति** । संज्ञासंज्ञिसंबन्धप्रतीतिरित्यनुषङ्गः ॥ **एतस्यां दशायामिति** । गवयादिदर्शनोत्तरकाल इत्यर्थः । अयं गवयपदवाच्यः गोसदृशत्वादिति प्रयोगवेलायां वेत्यर्थः । यो गोसदृशः स गवयसंज्ञिको यथा अमुक इति दृष्टांताभावेपि अतिदेशवाक्यमाप्तवाक्यतया ब्राह्मणो न हन्तव्य इति वाक्यमिव ग्राहकत्वेनोपयुज्यत इत्यर्थः । धर्ममात्रपरातिदेशवाक्यं व्याप्तिग्राहकमित्येतद्दृष्टान्तेन व्यनक्ति **यथा हीति** । वाक्यत्रयपक्षेपि तथाहीत्यादिदृष्टान्तोपपादनमित्यप्याहुः ॥

या० — **प्रयोगादिना लिङ्गेनेति** । गवयशब्दो गवयवाचकः । असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वादिति लिङ्गेनेत्यर्थः । एतदनुमानात्प्रागसति वृत्त्यन्तर इत्यस्यासिद्धत्वेनान्योन्याश्रयत्वप्रसङ्गभीत्या तत्परित्यज्यादिशब्दोक्तं लिङ्गान्तरमाह **साधर्म्यादिनेति** । अत्रादिपदेन वैधर्म्यधर्ममात्रयोर्ग्रहणम् । एतस्यां दशायामित्यत्रैतच्छब्देन प्रागवयादिदर्शनादित्युक्तकालपरामर्शः ।

**श्री०— संज्ञासंज्ञिसम्बन्धो** वाच्यवाचकभावसंबन्धः ॥ **साधर्म्यादिनेति** । अयं गवयशब्दवाच्यो भवितुमर्हति गोसदृशत्वादित्याद्यनुमानेनेत्यर्थः ।

**च०—** मीमांसकाभिमतोपमानस्वरूपमन्तर्भाव्य नैयायिकाभिमतोपमानस्वरूपमन्तर्विर्भावविषया-नुवदति **अन्ये त्वित्यादिना मन्यन्ते इत्यन्तेन** । वाच्यवाचकभावसंबन्धप्रमितिफलकमप्रतिसंहित-शक्तिकपदस्मृतिसहकृतगोसदृशो गवय इत्याद्यानुपूर्वीकातिदेशशक्यार्थप्रत्यभिज्ञानं गोसदृशोयं गवय इत्येव-माकारमुपमानमित्यर्थः । **अव्युत्पन्नेति** । अनधिगतशक्तिकेत्यर्थः । **साधर्म्यादिनेति** । अत्रत्यादिपदं वैधर्म्यधर्ममात्रपरिग्राहकम् ।

**सु०— घटादिप्रत्यक्षयोग्यार्थप्रतियोगिकाभावप्रतीतिसाधनं प्रमाणमभावः । तच्चा-नुपलब्धिलक्षणं लिङ्गमेवेत्यभावोऽपि नानुमानाद्भिद्यते । अतो युक्तं त्रीण्येव प्रमाणानीति । तत्किमभावो नियमेनानुमानान्तर्गत इत्यत आह** क्वचिदिति ।

**अनु०—** क्वचित् ॥

प्रत्यक्षान्तर्गतोऽभावः ।

**कदाचिद्घटाद्यभावग्राहकं प्रत्यक्षमपि भवतीत्यर्थः । किं तर्हि प्रत्यक्षयोग्यार्थानां सर्वेषामप्यभावः प्रमाणद्वयवेद्य इत्यत आह** सुखादेरिति ।

सुखादेर्नियमेन च ॥

**चस्त्वर्थः । सुखादेरान्तरस्य साक्षिवेद्यस्याभावस्तु नियमेन साक्षिप्रत्यक्षेणैव ग्राह्य इत्यर्थः । यद्वाऽभाव इति प्रमाणमेवोच्यते । तस्य सुखादेरिति परम्परया संबन्धः । नियमेन प्रत्यक्षान्तर्गत इति संबन्धः । अनेन बाह्यानां प्रत्यक्षयोग्यानां घटादीनामभावः प्रत्यक्षानुमानवेद्य इत्युक्तम् । तदयुक्तम् । एकस्यैव ज्ञानस्य स्वतन्त्रकारणद्वयजन्यत्वानुपपत्तेः । परस्परविरुद्धपरोक्षापरोक्षत्वलक्षणाकारद्वयप्राप्तेश्चेत्यत उक्तं क्वचिदिति** ।

**शे०—** अभावस्यानुमानान्तर्भावं वक्तुं लक्षणमाह **प्रत्यक्षेति** । यद्यपि त्रिविधाभावप्रमाण-संग्रहायाभावप्रतीतिसाधनं प्रमाणमभाव इत्येव तल्लक्षणं वक्तव्यं तथाऽप्यानुमानिकार्थप्रतियोगिकाभाव-प्रमाणस्यानुमानतायामागमिकार्थप्रतियोगिकाभावप्रमाणस्य चागमतायां वादिनामविप्रतिपत्तेरनुमानत्वा-दिना वादिविप्रतिपत्तिविषयत्वात्प्रत्यक्षयोग्यार्थप्रतियोगिकाभावप्रमाणस्यैवाभावप्रमाणत्वेनोपन्यास इत्यव-धेयम् ॥ **तच्चेति** । घटोऽत्र नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वाद्गजवदिति प्रयोगसंभवादिति भावः । **तत्किमिति** । तथा सति घटाद्यभावस्याप्रत्यक्षत्वप्रसङ्गादिति भावः ॥ **किन्तर्हीति** । तथा सति

सुखाद्यभावस्यापि प्रमाणद्वयवेद्यत्वप्रसङ्गादिति भावः । 'प्रत्यक्षान्तर्गतोऽभाव' इत्यादिना पूर्वग्रन्थेऽभाव-शब्देनाभावाख्यप्रमाणस्यैव प्रस्तुतत्वादभावस्यैव ग्रहणे तद्विरोध इत्यपरितोषादाह **यद्वेति** ॥ **परम्पर-येति** । सुखादेः स्वाभावेन सह प्रतियोग्यनुयोगिभावरूपसाक्षात्संबन्धस्तद्द्वाराऽभावप्रमाणेनेति परम्परया संबन्ध इत्यर्थः । तथा च सुखाद्यभावग्राहकमभावाख्यं प्रमाणमिति लभ्यत इति भावः । चक्षुरादि-जन्यस्य रूपादिज्ञानस्यापि मनःकारणत्वादाह **स्वतन्त्रेति** । स्वतन्त्रत्वमसाधारणत्वं मनसश्च ज्ञानमात्रे साधारणत्वान्न स्वतन्त्रत्वमित्युक्तमिति भावः ॥ **इत्यत उक्तं क्वचिदितीति** । तथा चाभावविषयकैक-ज्ञानस्य स्वतन्त्रकारणद्वयजन्यत्वानङ्गीकारान्न विरोध इति भावः ।

प० — **अनुपलब्धिलक्षणमिति** । (नोप)योग्योपलब्ध्यभावरूपमित्यर्थः । इह घटो नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वात् संमतवदिति ॥ **अभावोऽपीति** । उपलब्ध्यभावरूपमभावप्रमाणमपीत्यर्थः । सुखादेरभाव इत्यभावपदस्य विषयपरत्वेऽध्याहारेण योजनामाह **साक्षिप्रत्यक्षेणैव ग्राह्य इति** । प्रत्यक्षां-तर्गत इत्यनेनान्वयार्थमाह **यद्वेति** । उपलब्ध्यभावरूपप्रमाणमित्यर्थः ॥ **परंपरयेति** । सुखादेरुपलब्ध्य-भाव इति वा सुखादेरभावग्राहकोऽभाव इति वा परंपरयेत्यर्थः ॥ **स्वतन्त्रेति** । परस्परनिरपेक्षं यत्करण-द्वयं प्रत्यक्षानुमानादिरूपं तादृशद्वयेन जन्यत्वायोगादित्यर्थः । मनोरूपं करणं तु सर्वत्र सहकारित्वान्न स्वतंत्रमिति सर्वस्य करणद्वयजन्यत्वेपि न स्वतन्त्रकारणद्वयजन्यत्वमिति भावः ।

या० — नन्वभावशब्देनाभावग्रहणे प्रायपाठविरोधः । पूर्वमभावशब्देनाभावाख्यप्रमाणस्यैव गृहीतत्वादित्यरुच्याऽऽह **यद्वेति** ॥ **परम्परयेति** । अभावद्वारेत्यर्थः । तथा च सुखाद्यभावग्राहकम-भावाख्यं प्रमाणमिति लभ्यत इति भावः । चाक्षुषादीनां रूपादिज्ञानानां मनोजन्यत्वादाह **स्वतन्त्रेति** । अत्र स्वातन्त्र्यमसाधारणकारणान्तरानपेक्षत्वम् । मनश्च रूपादिज्ञानजनने तादृशं चक्षुराद्यपेक्षतेऽतो न तत्र स्वतन्त्रमिति भावः ।

श्री० — **अनेनेति** । आन्तरस्य सुखादेः साक्षिवेद्यस्याभावो नियमेन साक्षिणा गृह्यत इति कथनेनेत्यर्थः ॥ **क्वचिदितीति** । तथा चैकस्यैव ज्ञानस्य कारणद्वयजन्यत्वानभ्युपगमान्नोक्तदोष इति भावः ।

सु० — **तथाऽप्यनुपपत्तिरेव; प्रत्यक्षग्राह्येऽर्थेऽनुमानानवकाशादित्यत आह** अन्यत्रेति ।

अनु० — अन्यत्र झटिति प्राप्तः

**सुखादेरन्यत्र घटादौ प्रतियोगिनि सति, योऽभावोऽभावप्रमाणं झडिति प्राप्नोति, तत्प्रत्य-क्षम् । यत्तु विलम्बेन जायते तदनुमानमिति । एतदुक्तं भवति । घटाद्यभावग्राहकं योग्यानुपलब्धिरूपं प्रमाणं पृथगेवेति मीमांसकाः । अनुपलब्धिलिङ्गकमनुमानमेव तदिति**

सौगताः । तदुभयमप्यनुपपन्नम् । प्रतियोगिस्मरणवतः पुरोवर्तिनि भूतले घटाद्यभावस्य प्रत्यक्षेणैव(चाव)गम्यमानत्वात् । इन्द्रियान्वयव्यतिरेकानुविधायिनोऽभावप्रत्ययस्याप्रत्यक्षफलत्वानुपपत्तेः । अपरोक्षाकारत्वस्यानुभवसिद्धत्वात् । बाधकाभावाच्चान्यत्रोपक्षयकल्पनानुपपत्तेः । अन्यथा रूपादिज्ञानेऽपि प्रमाणान्तरकल्पनाप्रसङ्गात् । लिङ्गदर्शनव्याप्तिस्मरणादिविलम्बेन विना झडिति जायमानस्यानुमानफलत्वानुपपत्तेः । लिङ्गस्य ज्ञातस्यैव करणत्वादनुपलब्धेरप्यभावत्वेनानुपलब्ध्यन्तरापेक्षायामनवस्थाप्रसङ्गाच्च ।

शे० — झडितीति । विना विमर्शेन चक्षुर्व्यापारानन्तरमेवेत्यर्थः ॥ **विलम्बेनेति ।** पक्षदर्शनलिङ्गज्ञानव्याप्तिस्मरणलिङ्गानुसंन्धानरूपविलम्बेनेत्यर्थः । ननु झडिति प्रवर्तमानं घटादिप्रतियोगिकाभावग्राहकं प्रमाणं प्रत्यक्षं परामर्शपूर्वकं प्रवर्तमानं तु तदनुमानमिति भाष्यकारीयं घटादिप्रतियोगिकाभावस्य प्रत्यक्षत्वानुमानत्वव्यवस्थाश्रयणमनर्थकम् । मीमांसकरीत्याऽनुपलब्धिरूपषष्ठप्रमाणगम्यताया एव सौगतरीत्याऽनुपलब्धिरूपलिङ्गगम्यताया एव वा वक्तुं शक्यत्वादित्यतः पक्षद्वयेऽप्यनुपपत्तिव्युत्पादनपूर्वकं भाष्यकारीयव्यवस्थाश्रयणमुपपादयितुमाह **एतदुक्तं भवतीति** । नन्विन्द्रियाजन्यत्वे बाधकाभावाद्भूतले घटाभावप्रतीतिरपि षष्ठप्रमाणजन्यैवेत्यतः, इह भूतले घटो नास्तीति प्रतीतिरिन्द्रियजन्या, इन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वात् रूपादिप्रतीतिवदित्यनुमानेनेन्द्रियजन्यत्वसिध्या तद्विरोधान्न प्रमाणान्तरजन्यत्वं तस्या युक्तमित्याशयेनाह **इन्द्रियेति** । नन्विन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वमात्रं नेन्द्रियजन्यत्वनियामकम् । तथा सत्यनुमितेरपि तत्प्रसङ्गात् । किन्त्वन्यत्रानुपक्षीणेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वम् । तत्प्रकृते नास्ति । इन्द्रियव्यापारान्वयव्यतिरेकयोरनुमानवदधिकरणग्रहणे उपक्षीणत्वादित्यतोऽत्राधिकरणग्रहे उपक्षयः किं तत्प्रतीतेरपरोक्षत्वे साधकाभावात्कल्प्यते किंवा तत्त्वे बाधकसद्भावादिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **अपरोक्षेति** । न चापरोक्षाधिकरणानुभवसन्निधानादपरोक्षत्वाभिमान इति वाच्यम् । धूमानुमानेऽपि तत्प्रसङ्गादित्याशयात् । द्वितीयं दूषयति **बाधकेति** । अभावस्य तुच्छत्वेन साक्षात्कारविषयत्वानुपपत्तिर्बाधकमिति चेन्न । तथा सति शशविषाणवन्मानान्तरविषयत्वस्याप्यभावापातात् । अभावस्येन्द्रियेण सन्निकर्षानुपपत्तिस्तथेति चेत् । संयोगस्यैव संभवाद्द्रव्ययोरेव संयोग इति वैशेषिकादिप्रक्रियाया अप्रामाणिकत्वात् । अभावप्रतीतेरपरोक्षाकारत्वस्यानुभवसिद्धत्वे बाधकाभावे च सत्यपि तत्रेन्द्रियव्यापारान्वयव्यतिरेकयोरधिकरणग्रहोपक्षयकल्पने बाधकमाह **अन्यथेति**। इन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वमात्रस्यासाधकत्वादधिकरणग्रहणे उपक्षीणत्वेन अन्यत्रानुपक्षीणेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वस्यासत्त्वेन तेन तदसिद्ध्या रूपादिप्रतीतेरपि

नेन्द्रियजन्यत्वम् किन्तु प्रमाणान्तरजन्यत्वमित्यतिप्रसङ्ग इत्यर्थः । सौगतमतं दूषयति **लिङ्गदर्शनेति** । न चाभ्यासपाटवाद्विलम्बानुपलब्धिर्न तु व्यवधानानुपपत्तिरित्यनुमानफलत्वमेवेति वाच्यम् । तथा सति रूपादिज्ञानस्यापि तत्त्वापातादित्याशयात् ।

**प०— अन्यत्रेति** । अधिकरणज्ञाने इत्यर्थः । इन्द्रियान्वयव्यतिरेकानुविधानस्येति योज्यम् ॥ **अन्यथेति** । इंद्रियान्वयानुविधानस्यान्यत्रोपक्षयकल्पनयाऽनुपलब्धिरूपमानान्तरकल्पन इत्यर्थः ॥

**या०— अन्यत्रेति** । अधिकरणज्ञान इत्यर्थः । इन्द्रियान्वयव्यतिरेकयोरिति शेषः ॥

**श्री०—इन्द्रियेति** । अनन्यथासिद्धेति पूरणीयम् । अत एवैतद्विशेषणस्यासिद्धिं परिहरति **बाधकेति** । **अन्यत्र** अधिकरणग्रहणे । **अन्यथा** बाधकाभावेऽपीन्द्रियान्वयव्यतिरेकयोरन्यत्रोपक्षयकल्पने । **रूपादीति** । तत्रापीन्द्रियस्याधिष्ठानभूतघटादिग्रहणे उपक्षयस्य वक्तुं सुवचत्वादिति भावः । **प्रमाणान्तरेति** । प्रत्यक्षभिन्नेत्यर्थः ॥ **जायमानस्येति** । प्रतियोगिस्मरणवतः पुरोवर्तिनि भूतले जायमानस्य घटाभावज्ञानस्येत्यर्थः ।

**च०— योग्यानुपलब्धिरूपमिति** । प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोग्युपलम्भकत्वरूपयोग्यताविशेषितानुपलब्धिरूपमित्यर्थः ।

**सु०— ननु च प्रातश्चत्वरादौ प्रतियोगिस्मरणाभावेन गजाद्यभावमननुभूय देशान्तरं गतो गजस्मृतिमान्प्रातश्चत्वरे गजो नासीदिति प्रतिपद्यते । न तत्र प्रत्यक्षस्यावकाश इत्यनुपलब्धिलक्षणं पृथक् प्रमाणं तत्राङ्गीकार्यमिति । मैवम् । तत्राभावस्याप्रत्यक्षत्वेऽप्यनुपलब्धिलिङ्गकानुमानवेद्यताऽभ्युपगमात् । अनुपलब्धेश्च स्मरणाभावलिङ्गानुमेयत्वात् । अत एव तत्र क्षणं ध्यात्वा नासीच्चत्वरे गज इति प्रतिपद्यते । स्मरणाभावोऽप्यनुपलब्ध्यन्तरानुमेय इत्यनवस्थेत्यपि नास्ति । साक्षिग्राह्याणां बुद्धिसुखादीनामभावस्य नियमेन साक्षि(प्रत्यक्ष)वेद्यत्वादिति ।**

**शे०— न तत्रेति** । अधिकरणस्येन्द्रियासन्निकृष्टत्वेन संयुक्तविशेषणतारूपतत्सामग्रीविरहादिति भावः ॥ **अनुपलब्धिलिङ्गकानुमानेति** । विप्रतिपन्नो गजः प्रातश्चत्वरे नासीद्योग्यत्वे सति तदा तत्राननुभूतत्वात्सम्मतवदित्यनुमानवेद्यत्वाभ्युपगमादित्यर्थः । नन्वयं स्वरूपासिद्धो हेतुरित्यत आह **अनुपलब्धेश्चेति** । विप्रतिपन्नो गजस्तदा तत्र नानुभूतः स्मरणयोग्यत्वे सत्यस्मर्यमाणत्वात्सम्मतवदित्यनुमानादेवाननुभूतत्वसिद्धिसम्भवान्नोक्तदोष इति भावः । यद्यप्यनुपलब्धेः साक्षिवेद्यत्वान्न स्मरणाभावलिङ्गानुमेयत्वं स्वमतेऽस्ति । यद्वक्ष्यति 'साक्षिग्राह्याणां बुद्धिसुखादीनामभावस्य नियमेन साक्षिप्रत्यक्षवेद्यत्वादिती'ति । तथाऽपि पररीतिमाश्रित्यैतदुक्तमिति मन्तव्यम् ॥ **अत एवेति** । प्रातर्गजाद्यभावस्यानुमानि-

कत्वादेवेत्यर्थः । बुद्धिसुखादीनामित्यत्र सुखादिग्रहणं दृष्टान्तार्थमिति मन्तव्यम् ॥ **नियमेनेति** । अभावस्य प्रतियोगिग्राहकेन्द्रियग्राह्यत्वनियमादिति भावः ।

पं० — **न तत्र प्रत्यक्षस्येति** । सन्निकर्षाभावादिति भावः ॥ **अनुपलब्धिलिङ्गकेति** । प्रातस्तत्र गजो नासीदननुभूतत्वादित्यादिलिङ्गकेत्यर्थः । **अर्थापत्त्युपमानाभावानां यथायोगं प्रत्यक्षादिष्वन्तर्भावः** ॥

या० — **न तत्र प्रत्यक्षस्येति** । अधिकरणस्येन्द्रियासन्निकृष्टत्वेन संयुक्तविशेषणताया असम्भवादिति भावः ॥ **अनुपलब्धिलिङ्गकानुमानेति** । अत्रानुपलब्धिशब्देनानुभवाभावो विवक्षितः । तथा च विप्रतिपन्नो गजः प्रातश्चत्वरे नासीत् । योग्यत्वे सति तदा तत्र मयाऽननुभूतत्वादित्यनुमानवेद्यत्वाभ्युपगमादित्यर्थः । नन्वत्र स्वरूपासिद्धिरित्यत आह **अनुपलब्धेश्चेति** । अननुभवस्येत्यर्थः । विप्रतिपन्नो गजस्तदा तत्र मयाऽननुभूतः । स्मरणयोग्यत्वे सति तन्निष्ठतयेदानीमस्मर्यमाणत्वाद्व्यतिरेकेण तन्निष्ठपाषाणादिवदिति स्मरणाभावलिङ्गानुमेयत्वं द्रष्टव्यम् । बुद्धिसुखादीनामित्यत्र सुखादिग्रहणं दृष्टान्तार्थमिति ज्ञातव्यम् ।

सु० — तथाऽप्युपक्रमोपसंहारावभ्यासापूर्वताफलार्थवादाः प्रमाणानि सन्तीति कथं तत्त्रित्वनियम इत्यत आह प्रारम्भाद्याश्चेति ।

---

अनु० — प्रारम्भाद्याश्च युक्तयः ।

युक्तयः अनुमानानि ॥ कुत इत्यत आह आगमेति ।

आगमार्थावसित्यर्था नियतव्याप्तयोऽखिलाः ॥

यतोऽखिलाः प्रारम्भाद्या नियतव्याप्तयो, यो यत्र प्रारभ्यते स तत्र प्रतिपाद्य इत्यादिरूपां व्याप्तिमपेक्षमाणा एवागमार्थावसित्यर्था भवन्त्यतो युक्तय एवेत्यर्थः । एतेनागमान्तर्भावोऽपि निरस्तः । उपक्रमाद्या आगमविषया एव न चार्थापत्त्युपमाभावा इति योगविभागः ।

शे० — अर्थापत्त्युपमाभावा अनुमानान्तर्गता, इतिवत्प्रारम्भाद्या अप्यनुमानान्तर्गता इति वक्तव्ये तथाऽनुक्त्वा युक्तय इति शब्दान्तरप्रयोगादन्यत्रान्तर्भावोऽमीषां प्रतिपाद्यत इति भ्रान्तिपरिहाराय युक्तय इत्येतद्व्याचष्टे **युक्तयोऽनुमानानीति** । 'स तत्र प्रतिपाद्यत' इत्यत्रापवादाभावे सतीति पूरणान्नातिप्रसङ्गः । निर्दोषशब्दत्वरूपागमलक्षणाक्रान्तत्वादेतेषामागम एवान्तर्भावः किन्न स्यादित्यत आह **एतेनेति** । व्याप्तिमपेक्ष्यैवार्थावसितिकारणत्वेनेत्यर्थः । न चैवमुपक्रमादिष्वागमलक्षणस्यातिव्याप्तिः स्यादिति वाच्यम् । विप्रतिपन्नार्थे तेषामनुमानत्वेऽपि स्वार्थे आगमत्वस्यापि सत्त्वेन लक्ष्यतया

तदनवकाशात् । **योगविभाग इति ।** अन्तर्भावव्युत्पादनपरे वाक्यभेद इत्यर्थः । अन्यथाऽर्थापत्त्युपमाभावप्रारम्भाद्याश्च युक्तय इत्येव ब्रूयादिति भावः ।

**प०—** यो यत्रेति । व्याप्तिवाक्ये अबाधे सति तत्र प्रतिपाद्य इति योज्यम् । 'तेन ह्याग्म्यग्निं प्रथमं स्वस्तय इति सावित्रसूक्ते अग्निप्रारम्भेपि तस्याप्रतिपाद्यत्वात् व्यभिचार इति न शङ्क्यम् ॥ **एतेनेति** । व्याप्तिसापेक्षत्वकथनेनेत्यर्थः ॥ **योगविभाग इति ।** अन्तर्भावव्युत्पादनपरो वाक्यभेद इत्यर्थः । अन्यथा अर्थापत्त्युपमाऽभावाः प्रारम्भाद्याश्च युक्तय इत्येव ब्रूयादिति भावः ।

**या० —** स तत्र प्रतिपाद्य इत्यत्रापवादाभाव इति विशेषणीयम् । अतो न कश्चित्क्षुद्रोपद्रव इति ज्ञातव्यम् । निर्दोषशब्दत्वरूपागमलक्षणाक्रान्तत्वादेतेषामागम एवान्तर्भाव इति मतमतिदेशेन दूषयति **एतेनेति** । व्याप्तिमपेक्ष्यैवार्थावसितिकरणत्वेनेत्यर्थः । नन्वेवमुपक्रमादिष्वागमलक्षणमतिव्याप्तं स्यादिति चेन्न । विप्रतिपन्नार्थे तेषामनुमानत्वेऽपि स्वार्थे आगमत्वस्यापि सत्त्वेन लक्ष्यत्वमित्याशयात् ॥

**श्री० — एतेन** व्याप्त्यपेक्षयाऽर्थबोधकत्वकथनेन ।

**सु० — वाक्यादीनामपि प्रमाणानामनुमानान्तर्भावमाह** वाक्यमिति ।

**अनु० —** वाक्यं प्रकरणं स्थानं समाख्या च तथाविधाः ॥

**यतो वाक्यादयोऽपि** तथाविधा **व्याप्तिमपेक्ष्यैवागमार्थावसित्यर्थास्ततस्तथाविधा युक्तय एवेत्यर्थः । उपक्रमादीनामुत्तरोत्तरं प्राबल्यं वाक्यादीनां तु पूर्वपूर्वमिति ज्ञापनाय योगविभागः ।**

**यद्युपक्रमादयो वाक्यादयश्चानुमानेऽन्तर्भवन्ति तर्हि कथम् 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इत्युपक्रमादीनामनुमानापरपर्या-(याया उप)योपपत्तेः पृथक्त्वेनोक्तिः । तथा 'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथे'ति वाक्यादीनां लिङ्गादित्यत आह** कुरुपाण्डववदिति ।

कुरुपाण्डववत्तेषामुपपत्तेः पृथग्वचः ॥

**यथा पाण्डवानां कुरु(विशेष)त्वेऽपि सामान्यविशेषापेक्षया 'सन्तानबीजं कुरुपाण्डवानामि'त्यादौ कुरुभ्यः पृथग्वचनं तथा तेषामुपक्रमादीनां वाक्यादीनां चानुमानत्वेऽप्युपपत्तेर्लिङ्गाच्च पृथग्वचनं युक्तमित्यर्थः ।**

**शे० —** अत्र वाक्ये प्रकरणमित्यादिमूलतद्व्याख्यानयोः श्रुतेः स्वनिर्णये श्रुतित्वेनैव निर्णायकत्वेन वाक्यादिवदनुमानत्वेन निर्णायकत्वाभावाल्लिङ्गत्वानुक्तिः । 'श्रुतिर्लिङ्गं समाख्या चे'त्युक्तानां

श्रुत्यादीनां लिङ्गग्रहणेनैव गृहीतत्वादिति युक्तिपादीयटीकायां श्रुतेर्लिङ्गतालाभात्तद्विरोध इति भाति । अतद्गुणसंविज्ञानबहुव्रीहिणा वाक्यादीनामेव तत्र ग्रहणेन श्रुतेस्तदलाभान्न तद्विरोध इत्यन्ये ॥ इत्यादावित्यादिपदेन कुरुपाण्डवपदोपेतवाक्यान्तरपरिग्रहः ।

प०— **इत्यादाविति** । दशमस्कन्धादिवाक्य इत्यर्थः ।

**या०— सन्तानबीजमिति** । 'द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानामि'ति भागवतवाक्यस्य 'जुगोप कुक्षिं गत आत्तचक्र' इत्युत्तरार्धेनान्वयः । आदिपदेन गोबलीवर्दादिशब्द-समभिव्याहृतवाक्यग्रहणम् ॥

**सु०— ननु तथाऽपि शाकुनलिप्यक्षरचेष्टासंभवैतिह्यपरिशेषाः पृथक् प्रमाणानि सन्तीति चेत् (न) । शाकुनलिप्यक्षरचेष्टानामन्तर्भावस्य न विलक्षणाधिकरणे सूचितत्वात् । संभवैति-ह्ययोरनुमानागमान्तर्भावस्य सर्ववादिसंप्रतिपन्नत्वात् । परिशेषस्य च 'परिशेषो मिथःसिद्धि-रि'त्यनेनैवानुमानत्वस्य स्थितत्वात् ।**

**शे०**— शाकुनेत्यादौ शाकुनं च लिप्यक्षरं च चेष्टा चेत्यादिरूपेण द्वन्द्वः ॥ **अन्तर्भाव-स्येति** । अनुमानप्रत्यक्षयोरिति शेषः ॥ **सूचितत्वादिति** । शाकुनस्य 'यथा द्रौणेरुलूकेने'त्यादिना अनुमाने लिप्यक्षरस्य 'पिपीलिकालिपिश्चे'त्यादिना वर्णस्मृतिहेतुतया मानसप्रत्यक्षे, चेष्टायाश्च शाकुन-समानयोगक्षेमतया यथा द्रौणेरित्यादिनाऽनुमानेऽन्तर्भावस्य सूचितत्वादिति भावः ।

प०— लिप्यक्षरेत्येकं रेखारूपाक्षरेत्यर्थः । **चेष्टेति** । करनेत्रादिचेष्टेत्यर्थः । **न विलक्षणा-धिकरण इति** । 'यथा द्रौणेरुलूकेन कृतमभ्यास बोधकमि'त्यादाविति भावः ।

**या०— अक्षरचेष्टेति** । अक्षरत्वेन सङ्केतिता चेष्टेत्यर्थः ॥ **विलक्षणाधिकरण इति** । शाकु-नस्य 'यथा द्रौणेरुलूकेन कृतमभ्यास बोधकमि'त्यत्रानुमानान्तर्भावस्य सूचितत्वात् । तत्र हि द्रौणिरेक एवाहं सर्वान्वैरिणो हनिष्यामि तत्सूचकशाकुनवत्त्वात् । यो यत्सूचकशाकुनवान्स तत्कार्यसिद्धिमान् यथा सम्प्रतिपन्न इत्यनुमाय प्रवृत्त इत्यवगम्यते । लिपेश्च वर्णस्मरणहेतुत्वेन मानसप्रत्यक्षान्तर्भावस्य 'पिपीलिकालिपिश्चापि प्रमाणमविरोधत' इत्यत्र सूचितत्वात् । अक्षरचेष्टाया अपि लिपिसमानयोगक्षेमतया तत्रैवान्तर्भाव इत्यस्यापि तेनैव ग्रन्थेन सूचितत्वादिति ॥

सु० ननु तथाऽपि जैनास्तर्कं पृथक् प्रमाणमाहुः। सत्यम्। मिथस्सिद्धिरित्यादिना सोऽप्यनुमानान्तर्गत इति सूचितमेव।

अत्राह तर्कः प्रमाणमेव न भवति। कुतोऽनुमानम्। तथा हि। अनिष्टप्रसञ्जनं तर्कः। अनिष्टं च द्विविधं (धा) प्रामाणिकपरित्यागोऽप्रामाणिकस्वीकारश्चेति। स पञ्चविधः। आत्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थप्रसङ्गभेदात्। तत्र प्रसङ्गो नाम व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनम्।

शे०— आहुरिति। ततश्चानुप्रमाणत्रैविध्यमनुपपन्नमिति भावः।

तात्पर्यपरिशुद्धिकारमतमुत्थापयति अत्राहेति। प्रतिज्ञाते अप्रामाण्याननुमानत्वे उपपादयितुं प्रतिजानीते तथा हीति। अविज्ञाततत्त्वेऽर्थ इति तर्कसूत्रीयन्यायनिबन्धोक्तं तर्कलक्षणमाह अनिष्टेति। प्रसज्यतेऽनेनेति प्रसञ्जनं प्रसञ्जकमित्यर्थः। जलह्रदे निर्धूमत्वापादकव्यावृत्त्यर्थमनिष्टपदम्। लक्षणप्रविष्टमनिष्टं विभजते अनिष्टं चेति। तथा च प्रामणिकपरित्यागाप्रामाणिकस्वीकारयोरन्यतरप्रसञ्जकस्तर्क इत्युक्तं भवति। तर्कविभागमाह स इति। पञ्चविधत्वमेव दर्शयति आत्माश्रयेति। अत्र टीकायामात्माश्रयान्योन्याश्रयचक्रकानवस्थाप्रमाणबाधितार्थप्रसङ्गभेदादित्येव पाठः साधुः। तथैव मूलकोशेषु न्यायनिबन्धादिषु पाठदर्शनात्। अनवस्थाप्रसङ्गभेदादिति क्वचित्कः पाठः। तत्रापि प्रमाणबाधितार्थत्वस्यानुपलक्षणे प्रतिज्ञाततर्कपाञ्चविध्यानिर्वाहात्तस्य वा पद्धत्यनुसारेण केवलानिष्टस्य वा संग्राह्यत्वात् प्रतिज्ञाततर्कपाञ्चविध्यसिद्धेः, नात्माश्रयादिशब्दानां तत्प्रसङ्गोपलक्षणत्वं प्रसङ्गशब्दस्य च प्रसिद्धार्थत्यागेन केवलानिष्टपरत्वं वा कल्पनीयमिति ध्येयम् ॥ प्रसङ्गभेदादिति। प्रसञ्जकभेदादित्यर्थः। नन्वन्योन्याश्रयचक्रकयोरात्माश्रयासङ्कीर्णोदाहरणाभावात् आत्माश्रयानवस्थाप्रमाणबाधितार्थप्रसङ्गभेदेन तत्त्रैविध्यमेवेति कथं पाञ्चविध्यमिति चेन्न। अपेक्ष्यापेक्षितत्वस्यान्योन्याश्रये स्वापेक्ष्यापेक्ष्यापेक्षितत्वस्य चक्रके उपाधित्वात्। आत्माश्रये च साक्षात्स्वापेक्षितत्वस्यैवोपाधितयोपाधिभेदात्। 'यद्ययमेतज्जन्यजन्यः स्यादि'त्यादिमणिकण्ठोपदर्शितापादनप्रकारभेदाच्चान्योन्याश्रयचक्रकयोरात्माश्रयात्पृथक्त्वविवक्षया पाञ्चविध्यकथनमिति द्रष्टव्यम्। नन्वनिष्टप्रसङ्गस्तर्क इत्ययुक्तम्। तथा सति शब्दो यद्यनित्यः स्यात्तर्हि सावयवः स्यादित्यादेरप्यनिष्टापादनतया तर्कत्वप्रसङ्गादित्यतोऽत्र लक्षणवाक्यस्थस्यानिष्टप्रसङ्गशब्दस्य व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसङ्गपरत्वेनानिष्टप्रसङ्गमात्रपरत्वाभावान्न दोष इति भावेन परिष्कृततल्लक्षणमाह तत्र प्रसङ्गो नामेति। अनिष्टस्य वन्ह्यभावव्यापकस्य धूमाभावादेः प्रसञ्जको व्याप्याङ्गीकारस्तर्क इत्यर्थः। अत्र व्यापकारोपहेतुर्व्याप्यारोपस्तर्क इत्युक्ते भ्रमरूपवन्ह्यनुमितिहेतौ

बाष्पारोपितधूमेऽतिव्याप्तिः । तत्रैव प्रवृत्ते यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति तर्केऽव्याप्तिश्च । तत्र निरग्निकत्वनिर्धूमत्वयोः सत्त्वेन व्याप्यव्यापकयोरारोपस्याभावादिति तत्परिहारायारोपपदं विहायाङ्गीकार इत्युक्तमिति ध्येयम् ।

या० — **अनिष्टप्रसञ्जनमिति** । व्याप्तिमाश्रित्येति शेषः । ततश्च व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनं तर्क इति लक्षणार्थः । अतो नातिप्रसङ्गः । **सः तर्कः** । आत्माश्रयादिशब्दास्तत्प्रसञ्जनोपलक्षकाः । प्रसङ्गशब्दश्च केवलानिष्टप्रसङ्गपरः । तत्र यत्किञ्चिदनिष्टप्रसङ्गस्य तर्कत्वाभावादाह **प्रसङ्गो नामेति** । यद्यप्यात्माश्रयादिप्रसङ्गोऽपि व्याप्याङ्गीकारे व्यापकप्रसङ्गरूप एव । आत्माश्रयादेरप्यनिष्टत्वात् । अन्यथोक्ततर्कसामान्यलक्षणस्य तत्राव्याप्तिप्रसङ्गात् । तथाऽपि गोबलीवर्दन्यायेन पृथगुक्तिः । कथमन्यथा व्याप्त्यभावनिबन्धनानामनैकान्तिकविरुद्धादीनां व्याप्यत्वासिद्धिपर्यवसानेऽपि तदपेक्षया पृथगाभासत्ववचनम् ।

**सु० — सोऽयं तर्कः प्रमाणानामनुग्राहकः । अनुग्रहश्च प्रमाणविषयसंभावनादिरूपः । तथा हि । भूतले घटः किन्न स्यादिति विपरीतशङ्कया कुण्ठितशक्तिकं प्रत्यक्षं न तावद्घटाभावं निश्चिनुयाद्यावद्यद्यत्र घटोऽभविष्यत्तदा भूतलमिवाद्रक्ष्यत तत्तुल्यदर्शनसामग्रीकत्वादिति तर्केण विपरीतशङ्का नापनीयते । तर्को हि दुर्जन इव पराभिलषितं वि(व्यत्र)च्छिद्य घटाभावं संभावयति । अथेदानीं प्रत्यक्षं सुजन इव स्वप्रमेयं निश्चिनोति ।**

**एवं क्वचिद्व्यभिचारशङ्कयोपाधिशङ्कया वा धूमवानपि पर्वतोऽग्निमान्मा भूदिति पक्षे विपक्षशङ्कयाऽनुमाने कुण्ठिते यदि निरग्निकः स्यात्पर्वतस्तदा निर्धूमोऽपि स्यादित्यादिरूपस्तर्कः प्रवर्तते । स सोपाधिकोटौ तदायत्तव्यभिचारकोटौ वाऽनिष्टमुपजनयन्विपरीतेच्छां विच्छिनत्ति । ततश्च निश्चिताविनाभावमनुमानं निष्कम्पमेवाग्निमत्त्वं निश्चाययति ।**

**तथा स्वर्गकामो यजेतेत्यत्र लिङा प्रतीयमानाया भावनाया भाव्यापेक्षायां, किं भाव्यो धात्वर्थो भवतु, भवतु वा स्वर्ग, इति सन्देहे समानपदोपात्तत्वाद्धात्वर्थ एव भाव्य इति शङ्कया कुण्ठितशक्तिः शब्दो जोषमेवास्ते । यदि धात्वर्थो भाव्यः स्यात्तदा विधेरिष्टाभ्युपायत्वं शास्त्रस्य च तद्बोधकत्वं तत्प्रणेतुश्चाप्तत्वं प्रेक्षावतां प्रवृत्तिश्चेत्येतत्सर्वं न स्यादिति तर्केणापनीतायां शङ्कायां शब्दः स्वर्गमेव भाव्यतयाऽवधारयति ।**

**एवं नानाविधस्तर्कसाध्योऽनुग्रहः स्वयमेव बोद्धव्यः ।**

शे० — ननु तर्कस्याप्रमाणत्वे शास्त्रे तन्निरूपणमनर्थकं स्यादित्यतोऽप्रमाणत्वेऽपि तस्य प्रमाणानुग्राहकत्वेन तदितिकर्तव्यतारूपतयाऽऽवश्यकत्वाद्युक्तं तन्निरूपणमिति भावेन तस्य तदितिकर्त-

व्यरूपतामाह **सोऽयमिति ॥ प्रमाणविषयसम्भावनादीति ।** संभावना च प्रमाणविषयाभ्यनुज्ञानम् । आदिपदेन तदुपयोगिविपरीतशङ्कानिरसनपरिग्रहः । ततश्च प्रमाणविषयः साध्यधर्मस्तस्याभ्यनुज्ञानं नाम कोटयन्तरन्यक्कारेण साधनार्हत्वबोधनमित्यर्थः । प्रतिज्ञातं प्रमाणानुग्राहकत्वं तर्कस्योपपादयितुं प्रतिजानीते **तथा हीति ।** सर्वप्रमाणज्यैष्ठ्यात्प्रत्यक्षस्य प्रथमतस्तद्विषय एव विपरीतशङ्कोत्थापनप्रकारं तर्केण तन्निवृत्तिप्रकारं च दर्शयति **भूतल इत्यादिना ।** चक्षुर्व्यापारान्वयव्यतिरेकानुविधायितया घटाभावस्य प्रत्यक्षत्वमित्यत्र दृष्टान्तार्थं भूतलमिवेत्युक्तम् । न त्वभावप्रत्यक्षोपयोगिताभिप्रायेण । शान्तः कोलाहल इत्यादावधिकरणप्रत्यक्षमन्तरेणाप्यभावग्रहणादिति ध्येयम् ॥ **तत्तुल्येति ।** चक्षुर्व्यापारान्वयव्यतिरेकानुविधायिप्रतीतिविषयतया भूतलेन सह तुल्ययोगक्षेमत्वादित्यर्थः ।

अनुमानं प्रत्यपि तर्कस्यानुग्राहकतामुपपादयति **एवमिति ॥ क्वचिदिति ।** हिंसात्वादौ तदुभयदर्शनान्निरुपाधिकेऽव्यभिचारिणि च धूमादौ तच्छङ्केति भावः ॥ **व्यभिचारशङ्कयेति ।** स्वारसिकव्यभिचारशङ्कयेत्यर्थः ॥ **उपाधिशङ्कयेति ।** तदाहितव्यभिचारशङ्कयेत्यर्थः । विपरीतजिज्ञासामभिनयेन दर्शयति **धूमवानिति ॥ विपक्षशङ्कया** साध्यराहित्यशङ्कया । तर्कस्वरूपमभिनयेन दर्शयति **यदीति ।** कथं तर्कस्य विपक्षजिज्ञासाविच्छेदकत्वमित्यत आह **स हीति ।** अत्र कोटिशब्दः स्वरूपवचनः । तदायत्तव्यभिचारकोटावित्युपलक्षणम् । तदनायत्तव्यभिचारकोटावित्यपि द्रष्टव्यम् । उपाधिव्यभिचारयोः अन्यतरबाधस्येतरबाधनान्तरीयकत्वात्तस्यानिष्टप्रसञ्जनद्वारेण तर्कस्तौ निराकुर्वन्पक्षस्य विपक्षत्वशङ्कां निवारयतीत्यर्थः । तर्कस्य विपक्षजिज्ञासाविच्छेदकत्वेन अनुमानविषयविपरीतशङ्काविधूननरूपप्रमाणान्तरसाधारणानुग्राहकत्वं प्रदर्श्यानुमानापेक्षितव्याप्तिनिश्चायकत्वेनापि तदुपयोगितामाह **ततश्चेति ।** तर्कसनाथेन भूयोदर्शनेन निश्चिताविनाभावमित्यर्थः । 'अन्वयव्यतिरेकविषये भूयोदर्शनसाहाय्यमाचरन्ननुग्राहकस्तर्क' इत्यास्मतत्त्वविवेकवचनादिति भावः ।

शब्दप्रमाणं प्रत्यपि तर्कस्यानुग्राहकतामुपपादयति **तथेति ।** ननु व्युत्पन्नस्याकाङ्क्षायोग्यतासन्निधिमत्पदकदम्बश्रवणसमनन्तरमेव निर्विचिकित्सकवाक्यार्थप्रतिपत्तौ कस्तर्कस्यावकाश इत्यतः स्वर्गकामाधिकरणपूर्वपक्षन्यायेन तदवकाशं दर्शयति **स्वर्गकाम इत्यादिना । लिङा प्रतीयमानाया इति ।** 'भावनैव हि यत्नात्मा सर्वत्राख्यातगोचर' इत्यभियुक्तवचनात्तस्या लिङ्वाच्यत्वात्तेन तत्प्रतीतिरिति भावः । **भाव्येति ।** साध्येत्यर्थः । **धात्वर्थो** यागः । तस्यैव भाव्यत्वे हेतुमाह **समानपदोपात्तत्वादिति ।** यजेतेतिपदेनैव प्रत्ययांशेन भावनाया इव प्रकृत्यंशेन यागस्यापि बोधितत्वेनैकपदरूपश्रुतिगम्यत्वादित्यर्थः । पदान्तरोपात्ततया वाक्येन गम्यमानात्स्वर्गादप्येकपदश्रुतिगम्यस्य यागस्य प्राबल्यात्तस्यैव भावनासाध्यत्वेन ग्रहणं युक्तमिति भावः । **जोषमेवास्त इति ।** यागस्य स्वर्गसाधनत्वमबोधयित्वैवास्त इत्यर्थः ।

उक्तशङ्कानिरासकतया शब्दरूपप्रमाणस्यानुग्राहकांस्तर्कानाह **यदिति** ॥ **विधेरिति** । लिङाद्यर्थस्येत्यर्थः । इष्टाभ्युपायत्वमिष्टसाधनतारूपत्वं न स्यात् । यागस्य स्वयं क्लेशरूपत्वादिति भावः । अत्रेष्टापत्तिपरिहारायाह **शास्त्रस्य चेति** । लिङादिरूपस्येत्यर्थः । यदि लिङादिशास्त्रं क्लेशहेतुं यागं साध्यत्वेनोपदिशेत्तदेष्टसाधनबोधकं न स्यात् । विप्रलम्भकवाक्यवदिति भावः ॥ **तत्प्रणेतुश्चेति** । तदुपदेष्टुरित्यर्थः । यदीश्वरः स्वयंक्लेशात्मकत्वेनानिष्टसाधनमपीष्टसाधनतयोपदिशेत्तर्हि विप्रलम्भकवदनाप्तः स्यादित्यर्थः ॥ **प्रेक्षावतामिति** । यदि क्लेशात्मको यागः साध्यः स्यात्तदा प्रेक्षावत्प्रवृत्तिविषयो न स्याद्विषभक्षणादिवदिति भावः । तर्केणेति जात्यभिप्रायकमेकवचनम् ।

**एवं नानाविध इति** । संज्ञासंज्ञिसम्बन्धप्रतिपत्तेः । प्रमाणान्तरजन्यत्वशङ्काव्युदासेन चतुर्थप्रमाणविषयत्वाभ्यनुज्ञानमुपमानस्य तर्ककृतोऽनुग्रहः । तथा हि । अतिदेशवाक्यश्रवणदशायामप्रतीते गवये सङ्गतिग्रहणस्यातिप्रसङ्गापादकत्वात्प्रतीतस्य सादृश्यस्य प्रवृत्तिनिमित्तत्वे गवयशब्दस्य गोत्वतदुपलक्षितव्यक्तितत्सादृश्यलक्षणानेकार्थत्वदोषप्रसङ्गात् कदाचिदप्रतीतगूनामारण्यकानां सादृश्यस्याप्रतीततया गवयशब्दप्रयोगाभावप्रसङ्गाच्च । शब्दस्य गवयशब्दप्रवृत्तिनिमित्तोपलक्षणभूतसादृश्यप्रतिपादनमात्रपरत्वे व्यवस्थिते सति, सम्बन्धस्य शब्दजन्यप्रतीतिविषयत्वशङ्कानिरासे वाक्यश्रवणमन्तरेणापि सम्भवप्रसङ्गात् प्रत्यक्षविषयत्वनिरासे पूर्वं गवयप्रतीत्युपायाभावेन व्याप्तेरगृहीतत्वादनुमितिविषयत्वशङ्कानिरासे सति प्रमाणान्तरविषयत्वाभ्यनुज्ञानरूपः । तथा यद्ययं गवयशब्दवाच्यो न स्यात्तदा तथोपदेष्टुरारण्यकस्य प्रसिद्धमाप्तत्वं व्याहन्येतेत्युपमानविषयविपरीतशङ्काविघटनरूपो वा तर्कसाध्योऽनुग्रहः । एवमागमप्रामाण्येऽपि तत्फलस्यानुमानेनान्यथासिद्धिशङ्कानिरासः, आगम एव च तत्र तत्र वाक्येष्वन्यार्थत्वादिशङ्कानिरासो वाऽऽगमाप्रामाण्यशङ्कानिरासरूपो वा तर्कसाध्योऽनुग्रहो बोद्धव्य इत्यर्थः ।

प० — **प्रमाणविषयेति** । प्रमाणस्य यो विषयस्तस्येत्यर्थः ॥ **संभावनादीति** । विपरीतशङ्काव्यभिचारशङ्कादिनिवृत्तिरादिपदार्थः । प्रत्यक्षानुमानागमरूपप्रमाणानुग्राहकत्वं क्रमेण तस्य व्यनक्ति **भूतले घट इति** ॥ **एवं क्वचिद्व्यभिचारशङ्केति** । स्वर्गकामो यजेतेत्यत्रैव प्रकारत्रयेण भट्टादिरीत्योपपादयति **प्रतीयमानाया इति** । भावना नाम: उत्पादनप्रयत्नविशेषः । सा च सकर्मिका **भाव्यापेक्षायां** (तस्य)स्वस्य कर्मकारकाकांक्षायामित्यर्थः ॥ **किं भाव्य इति** । या(गम्भावये)गमुत्पादयेदित्यर्थः अथवा स्वर्गं भावये(त्स्वर्गमुत्पादये)दिति **सन्देह** इत्यर्थः ॥ **समानेति** । लिङ्प्रत्ययोपात्तभावनां प्रति प्रकृतिप्रापितो यागः प्रकृतिप्रत्ययसमभिव्याहाररूपेणैकेन पदेनोपात्तत्वात् भावनां प्रति कर्मत्वेनान्वेति । स्वर्गस्तु पदान्तरोपात्तत्वात्पदान्तरसमभिव्याहाररूपवाक्यार्थतो बहिरङ्गत्वाद्विलम्बित इति भाव्यत्वेन नान्वेति । इति षष्ठाद्यसूत्रस्वर्गकामाधिकरणपूर्वपक्षानुवादः ॥ **शब्द इति** ॥ यजेतेति

लिङ्शब्दः स्वर्गं भाव्यत्वेनाबोधयित्वा तूष्णीमास्त इत्यर्थः । **विधेरिति** । लिङाद्यर्थभूतभावनाया इत्यर्थः । **तद्बोधकत्वमिति** । यजेतेति भावनाया इष्टाभ्युपायत्वबोधकत्वं इत्यर्थः ॥ **एवं नानाविध इति** । तत्र तत्रागमवाक्येषु विपरीतार्थकत्वशङ्कानिवर्तकस्तत्तद्वाक्यतात्पर्यार्थानुकूलो मीमांसाधिकरणेषूक्तरीत्या बोद्धव्य इत्यर्थः । विश्वजिता यजेतेत्यादौ स्वर्गकाम इति फलपदाध्याहारो (यदि) न स्यात्तदा लिङ्शब्दोक्तभावनाया यष्टुर्भा(भाव्यंन)व्यत्वं न स्यात् । उद्भिदा यजेतेत्यादौ उद्भिच्छब्दो यागनामधेयो यदि न स्यात् । तदोद्भि(द्व,ता यागेन भावयेदित्यर्थो न स्यादित्यादिरूपं आगमे, प्रत्यक्षे च घटो यदि द्रव्यं न स्यात् तदा गुणाश्रयो न स्यादित्यादितर्केणाद्रव्यत्वशङ्कापगमे प्रत्यक्षेण द्रव्यत्वधीरित्यादिरूपो ध्येय इति भावः ।

या० — सम्भावनादिरूप इत्यत्रादिपदेन विपरीतशङ्कापनयनं ग्राह्यम् । सम्भावना च प्रमाणविषयाभ्यनुज्ञानम् । तस्य साधनार्हत्वबोधनमिति यावत् ॥ **उपाधिकोटाविति** । संशयकोटिभूतोपाधावित्यर्थः । एवं व्यभिचारकोटाविरयेतदपि व्याख्येयम् । उपाधिव्यभिचारयोरन्यतराभावस्यान्यतराभावनान्तरीयकत्वाद्वाशब्दः ॥ **अनिष्टमुपजनयन्निति** । पक्षे साध्यसद्भावमुपपादयन्नित्यर्थः । पक्षे साध्यसद्भावोपपादने हि व्यभिचारशङ्का तत्रैव साध्याव्यापकतयोपाधिशङ्का चापनीयत इति भावः ॥ **लिङा प्रतीयमानाया इति** । 'भावनैव प्रयत्नात्मा सर्वत्राख्यातगोचर' इति वचनादिति भावः ॥ **भाव्येति** । साध्यापेक्षायामित्यर्थः । धात्वर्थो यागः ॥ **समानपदेति** । यजेतेत्येकेनैव पदेन बोधितत्वादित्यर्थः । तत्र हि प्रकृत्या भाव्यो याग उच्यते प्रत्ययेन च भावना । एवं च यागो भाव्य इति कल्पने लाघवमिति भावः ॥ **जोषमेवास्त इति** । यागस्य स्वर्गसाधनत्वं बोधयितुं न क्षमत इत्यर्थः । एतच्छङ्कापरिहाराय शब्दरूपप्रमाणानुग्राहकं तर्कमाह **यदि धात्वर्थ इति** ॥ **विधेरिति** । लिङाद्यर्थस्येत्यर्थः । **इष्टाभ्युपायत्वमि**ष्टसाधनतारूपत्वं न स्याद्यागस्य क्लेशरूपत्वादिति भावः । अत्रेष्टापत्तिपरिहारायाह **शास्त्रस्य चेति** । लिङादिरूपस्येत्यर्थः । अत्र तथात्व इत्यापादकं पूरणीयम् । एवमग्रेऽपि । अत्रापीष्टापत्तिपरिहारायाह **तत्प्रणेतुरिति** अनिष्टसाधनमिष्टसाधनतयोपदिशत ईश्वरस्य विप्रलम्भकत्वैव स्यान्नाप्तत्वमित्यर्थः । अत्रापीष्टापत्तिं परिहरति **प्रेक्षावतामिति** । अनाप्तवचने प्रेक्षावतां प्रवृत्तेरयोगादिति भावः ॥ **एवं नानाविध इति** । आगम एव तत्र तत्र वाक्येष्वन्यार्थत्वादिशङ्कानिरासरूपो वाऽऽगमाप्रामाण्यशङ्कानिरासरूपो वा । आगमस्य प्रामाण्येऽपि तत्फलस्यानुमानेनान्यथासिद्धिशङ्कानिरासरूपो वा । उपमानफलस्य प्रमाणान्तरेणान्यथासिद्धिशङ्कानिरासो वा तर्कसाध्योऽनुग्रहो बोद्धव्य इत्यर्थः ।

च० — प्रत्यक्षानुमानागमरूपप्रमाणत्रितयानुग्राहकत्वमानुपूर्व्या स्फुटीकरोति । **भूतले घट इति ॥ लिङा प्रतीयमानाया इति** । 'भावेनैव प्रयत्नात्मा सर्वत्राख्यातगोचर' इति वचनात् लिङभिधेयतया तत्प्रतिसन्धानाधीनान्वयधीविषयतापन्नायाः प्रवर्तनालक्षणायाः भावनाया इत्यर्थः । **भाव्याकाङ्क्षायां** साध्याकांक्षायां । **धात्वर्थः** धातुशक्तिग्रहाधीनोपस्थितिविषयीभूतो यागः । **समानपदोपात्तत्वात्** स्वाभिधायकप्रत्ययांशघटितपदघटकप्रकृत्यंशभूतयजिबोध्यत्वेनैकपदरूपश्रुतिगम्यत्वात् पदान्तरोपात्ततया वाक्येन गम्यमानस्वर्गादपि एकपदश्रुतिगम्ययागस्य प्राबल्यात्तस्यैव भावनाभाव्यत्वेन ग्रहणं युक्तमिति भावः। **जोषमेवास्त इति** । यागस्य स्वर्गसाधनतामप्रत्याययन्नेवास्त इत्यर्थः । विधेर्लिङाद्यर्थस्य इष्टाभ्युपायत्वं इष्टसाधनत्वं न स्यादिति । यागस्य स्वयं क्लेशरूपत्वादिति भावः । **शास्त्रस्य** लिङादिरूपस्य ।

सु० — **सोऽयं प्रमारूपं वा प्रमाणं स्याल्लिङ्गदर्शनवदप्रमारूपं वेन्द्रियादिवत् । न तावदाद्यः । त(र्क)स्याहार्यरूपत्वात् । न तत्करणमपि प्रमाणम् । प्रमाफलत्वाभावात् । न द्वितीयः । आरोपितविषयत्वात् ॥ विपर्ययप्रामाण्योपगतौ तु तेनास्य नियामकः सम्बन्धो नास्ति । असम्बद्धस्य गमकत्वे चातिप्रसङ्गः ॥ अनुमानत्वे चास्यापादकं लिङ्गमापाद्यं साध्यमिति वक्तव्यम् । न च तद्युक्तम् । आपादकस्याहार्यत्वेनान्यतरासिद्धत्वात् । आपाद्यस्य चानिष्टत्वेन बाधितत्वात् । न ह्यसिद्धं लिङ्गं भवति । नापि बाधितं साध्यम् ॥ सति चाश्रयेऽनुमानं भवति । न (हि) च भूतले घटोऽस्ति यः साध्यसाधनयोराश्रयः स्यात् । व्यधिकरणता चापाद्यापादकयोर्बहुलमुपलभ्यते ॥ आपाद्यस्य साध्यत्वेऽपसिद्धान्तश्च स्यात् । धूमसद्भावस्य स्वयमभ्युपगतत्वात् ॥ तस्माद्विपर्ययपरतन्त्रत्वादप्रमाणमेव प्रमाणानामनुग्राहकस्तर्क इति कुतोऽस्यानुमानेऽन्तर्भाव इत्यत आह** स्वन्यायैरिति ।

**अनु०** — स्वन्यायैः साधनं कार्यं परन्यायैस्तु दूषणम् ॥
स्वन्यायैर्दूषणं च स्यात्साधितैः प्रतिवादिनः ॥

**न्यायशब्देन धर्मिलिङ्गव्याप्तिदृष्टान्ता उच्यन्ते । न केवलं परस्य किन्तु स्वस्यापि ये सिद्धा न्यायास्ते स्वन्यायाः । साधनमिति दूषणस्याप्युपलक्षणम् । परस्यैव सिद्धा न्यायाः परन्यायाः स्वस्यैव सिद्धा न्यायाः स्वन्यायाः । चशब्देन साधनं च प्रतिवादिनः प्रति ।**

शे० — नन्वस्त्वेवं प्रमाणानुग्राहकत्वं तर्कस्य तदपि प्रमाणस्यैव सतस्तर्कस्य भविष्यति किन्तदप्रामाण्यकल्पनयेत्यतः प्राक् प्रतिज्ञातमप्रामाण्यमुपपादयितुं तावद्विकल्पयति **सोऽयं तर्क इत्यादिना** । यथा लिङ्गज्ञानं स्वयं प्रमारूपं सदेव प्रमितिकरणत्वात्प्रमाणं तथा तर्कोऽपि स्वयं प्रमारूपः सन्नेव

प्रमितिकरणत्वात्प्रमाणमित्यभिप्रेतं किंवा यथा चक्षुरादिकं प्रमारूपमसदपि प्रमितिकरणत्वमात्रेण प्रमाणं तथा तर्कोऽपि प्रमारूपोऽसन्नपि प्रमितिकरणत्वमात्रेण प्रमाणमिति विकल्पाभिप्रायः ॥ **तस्येति** । निर्वन्हित्वाद्यापादकज्ञानस्येत्यर्थः । ततश्च न तस्य लिङ्गज्ञानवत्प्रमारूपत्वं सम्भवतीति भावः ॥ **न तत्करणमपि प्रमाणमिति** । तत्करणं प्रमितिकरणमिति कृत्वाऽपि प्रमाणमिति नेत्यर्थः । तत्र हेतुमाह **प्रमाफलत्वाभावादिति** । निर्धूमत्वज्ञानस्याप्रमात्वान्न प्रमितिकरणत्वमपि निर्वन्हित्वज्ञानस्यास्तीत्यर्थः । तर्कज्ञानस्यापाद्यापादकांशयोराहार्यरूपत्वान्न प्रमारूपत्वं नापि प्रमितिकरणत्वमिति समुदायार्थः । अस्तु तर्हीन्द्रियादिवदेवाप्रमारूप एव प्रमितिकरणत्वात्प्रमाणमिति द्वितीय इत्यत आह **नेति** । तत्र हेतुमाह **आरोपितेति** । निर्वन्हित्वज्ञानविषयस्य निर्धूमत्वस्यारोपितत्वेन तज्ज्ञानस्याप्रमात्वान्नेन्द्रियादिवन्निर्वन्हित्वज्ञानस्य प्रमितिकरणत्वमित्यर्थः । ननु नायमारोपः । आपाद्यापादकस्वरूपे तस्य तात्त्विकत्वात् । नापि तयोः संसर्गे तस्याप्यबाधनात् । न हि यदि निर्वन्हिरयं तदा निर्धूम इति धीः कदाऽपि बाध्या । तथात्वे वा तर्काभासादविशेषप्रसङ्गात् । वितृष्णगृहे यद्यतिथिरागतः स्याद्भोजितः स्यादित्यत्रातिथिरायाति भोज्यते चेति न तत्र तर्कस्याहार्यारोपरूपत्वमिति । मैवम् । तर्को हि निर्वन्हिरयं निर्धूम इति निर्वन्हित्वादिना निर्धूमत्वस्य सामानाधिकरण्यमुल्लिखति । एतन्मूलकमभिधानमपि तत्सामानाधिकरण्यविषयकम् । न च तदस्ति वास्तवमिति कथं न तस्याहार्यारोपरूपत्वम् । अथ निर्वन्हिरयं निर्धूम इत्यतो विलक्षणविषयकस्तर्कोऽनुभूयते । यद्यर्थस्यादर्थयोरत्र विषयत्वादिति मतम् । तन्न । तथाऽपि तर्कस्यारोपिताव्यवस्थितसत्त्वोपाधिकसत्त्वविषयत्वेनानिश्चायकतया प्रमारूपत्वाभावात् । तथा च 'संशयात्प्रच्युतो निर्णयं चाप्राप्तस्तर्क' इत्याहुरन्यत्रोदयनाचार्याः । संशयो हि डोलायितानेककोटिकः । तर्कस्तु नियतां कोटिमवलम्बते । तर्के समीचीनज्ञानत्वव्यवहारस्तु तर्कप्रवृत्तिहेतुव्याप्त्यादिज्ञानस्य सम्यक्त्वात् । अत एव न तर्काभासादविशेषप्रसङ्गः । सम्भावनात्मा च प्रसङ्गो न तर्कः । तस्यानिष्टप्रसञ्जनत्वादस्य तदभावादिति ध्येयम् ।

ननु न तर्कस्य निर्धूमत्वादौ प्रामाण्यमुच्यते येनारोपितविषयत्वेन तन्न स्यात्किन्तु स्वविषयव्याप्यविपर्यये । स्व 'यदि निर्वन्हिः स्यात्तर्हि निर्धूमोऽपि स्यादि'ति तर्कः । तद्विषयो निर्धूमत्वम् । तद्व्याप्यं निर्वन्हित्वं तद्विपर्ययो वन्हिमत्त्वम् । तच्च वास्तवमेवेति तत्प्रमितित्वात्तर्कस्य प्रामाण्यं युक्तमित्यत आह **विपर्यय इति** । स्वविषयव्याप्यविपर्यय इत्यर्थः ॥ **तेनेति** । तेन वन्हिमत्त्वेन निर्धूमः स्यादिति तर्कस्य गमकतानियामकः सम्बन्धो नास्ति । अन्यस्यान्यगमकतायां सम्बन्धस्यैव नियामकत्वादित्यर्थः । असम्बद्धस्यैव तर्कस्य वन्हिगमकत्वं किन्न स्यादित्यत आह **असम्बद्धस्येति** । नन्वेवं न निर्धूमत्वविपर्ययस्य निर्वन्हित्वविपर्ययगमकत्वं स्यात् । धूमस्य वन्हिना सम्बन्धाभावादिति चेत् । न ब्रूमो वयं संयोगा-

दिरेव सम्बन्ध इति । किन्त्वतिप्रसङ्गभञ्जकप्रत्यासत्तिमात्रम् । तदिह धूमस्य वन्हिना संयोगाद्यभावेऽपि तद्व्याप्तिरूपसम्बन्धस्य सत्त्वाद्युक्तं तद्गमकत्वम् । न चैवं तर्कस्य वन्हिमत्त्वेन साक्षात्सम्बन्धाभावेऽप्येतत्तर्कानुग्राह्यप्रमाणविषयत्वाभिमताभावव्यापकीभूतधूमाभावविषयकत्वमेव नियामकः सम्बन्धो भविष्यति । साक्षात्सम्बन्धस्येव परम्परासम्बन्धस्यापि नियामकत्वात् । ततश्च न वन्हिविषयत्वानुपपत्तिरिति वाच्यम् । तथा सत्यापाद्यविपर्ययपर्यवसानं विनाऽपि तर्कस्य साधकत्वप्रसक्त्या तद्वैयर्थ्यप्रसङ्गात् न च सहकारित्वात्तदप्यावश्यकमिति वाच्यम् । एवं तर्हि विपर्ययानुमानादेव साध्यानुमित्युपपत्तौ तर्कस्य प्रमाणत्वे मानाभावात्तदितिकर्तव्यतात्वमेव स्यादित्यन्यत्र विस्तरः ।

एवं प्रतिज्ञातं तर्कस्याप्रामाण्यमुपपाद्य नुमानत्वमपि निराकरोति **अनुमानत्वे चेति** ॥ **वक्तव्यमिति** । तदन्यस्यानिरूपणादिति भावः ॥ **अनिष्टत्वेनेति** । प्रामाणिकहानादिरूपत्वेनेत्यर्थः ॥

**व्यधिकरणता चेति** । यदि धात्वर्थो भाव्यः स्यात्तदा विधेरिष्टाभ्युपायत्वं न स्यात् । शास्त्रस्य तद्बोधकत्वं न स्यात् । उपदेष्टुराप्तत्वं न स्यात् । प्रेक्षावतां प्रवृत्तिश्च न स्यादित्यादितर्केष्वित्यर्थः ॥

**तस्माद्विपर्ययपरतन्त्रत्वादिति** । आरोपितव्याप्यसमुत्थत्वेनारोपत्वान्न तर्कः स्वविषये निर्धूमत्वे प्रमाणम् । नापि स्वविषयव्याप्यविपर्ययरूपेऽग्निमत्त्वे । तेन सहास्य नियामकसम्बन्धाभावात् । नियतसम्बन्धस्वविषयविपर्ययापेक्षितत्वे तु विपर्ययानुमानमूलभूतव्याप्तिनिश्चयोपजीवनेन पारतन्त्र्यान्न प्रमाणं तर्क इत्यर्थः । तर्हि क्वास्योपयोग इत्यतो निश्चयाय प्रवर्तमानानां प्रमाणानां तत्तद्विषयविवेकेनोक्तरीत्याऽनुग्राहकत्वात्तदितिकर्तव्यतात्वेन तर्कस्योपयोग इत्याशयेनाह **प्रमाणानामनुग्राहक इति** । केचित्त्वप्रमाणस्य तर्कस्य प्रमाणानुग्राहकत्वं केन प्रकारेणेत्यत उक्तं **विपर्ययपरतन्त्रत्वादिति** । विपर्ययपर्यवसानाधीनफलकत्वादित्यर्थः । ततश्च विपर्ययपर्यवसानद्वाराऽप्रमाणेनापि तेन पक्षे विपक्षजिज्ञासाविच्छेदरूपानुग्रहकरणाद्युक्तं तदनुग्राहकत्वमिति भाव इत्याहुः ।

न्यायशब्दस्य लिङ्गमात्रपरत्वे व्याप्त्यादीनां स्वसिद्धताया अलाभप्रसङ्गात्तल्लाभाय न्यायशब्दमपेक्षिताशेषार्थसमर्पकतया व्याचष्टे **न्यायशब्देनेति** । स्वन्यायैरित्यस्यात्र वाक्ये द्विःश्रवणात्पूर्वेणोत्तरस्योत्तरेण पूर्वस्य वा गतार्थतापरिहारायार्थभेदमाह **केवलमित्यादिना** । साधनस्येव दूषणस्यापि स्वपरसिद्धन्यायकर्तव्यतायाः सत्त्वान्न विशिष्य साधनग्रहणं युक्तमित्यतस्तदुपलक्षणतया व्याचष्टे **साधनमितीति** । स्वसिद्धैरित्यनेन स्वपरसिद्धन्यायैर्दूषणकर्तव्यताया उक्तत्वात्तदगतार्थत्वाय परसिद्धैरित्यस्यार्थमाह **परस्यैवेति** ।

स० — **सोऽयमिति** । यथानुमानं स्वयं प्रमारूपं सत् प्रमाणमेवं तर्कोपि स्वयं प्रमारूपः सन् प्रमितिकरणत्वात्प्रमाणं वा अप्रमारूपमेवेन्द्रियं प्रमितिकरणत्वात्प्रमाणमितिवत् तर्कोपि अप्रमारूपः सन्

प्रमितिकरणत्वेन प्रमाणं वेति प्रश्नाशयः । **तस्येति** । अनेन प्रमारूपत्वं निराकृतं भवति । न तत्करणमपि प्रमाणकम् । फलप्रमारूपत्वाभावेन प्रमाणतत्करणं प्रमाकरणमित्यपि प्रमाणं नेत्यर्थः । कुत इत्यत आह **प्रमाफलत्वाभावादिति** । ननु धूमाभावस्यारोपितत्वेन तत्र तर्कस्य प्रामाण्याभावेपि वन्ह्यभावविपर्ययरूपे वन्हौ प्रामाण्यं स्यादित्याशङ्क्याह **विपर्ययेति ॥ तस्माद्विपर्यय इति** । प्रमाणानामनुग्राहकत्वे यं हेतुवन्ह्यभावविपर्ययरूपे वन्हौ तर्कस्यानुमानाधीनत्वेन स्वतन्त्रकारणत्वाभावादित्यर्थः ।

**प० — तस्येति** । आपादकज्ञानस्येत्यर्थः ॥ **न तत्करणमिति** । आपादकज्ञानकरणमित्यर्थः । प्रमाफलत्वेति आरोपितविषयत्वादिति च बहुव्रीहिः । वह्न्यभावधूमाभावादेरस(त्य)त्वेनारोपिततया तद्विषयकत्वादापाद्यापादकयोः प्रसञ्जनाङ्गीकारयोरित्यर्थः । तथा च स्वार्थस्यारोपितत्वात् तद्विषये कथं प्रमाणं स्यादिति भावः । नन्वस्ति च धूमः अतोऽग्निमानित्यापादकविपरीतार्थे प्रमाणमस्त्वित्यत आह **विपर्यय इति ॥ तेनास्येति** । अन्यविषयकापादनेनास्य विपर्ययस्येत्यर्थः । ननु यद्यग्निर्न स्यादित्यादौ प्रतियोग्यनुयोगितासंबन्धो नियामक इत्यत उक्तं **नियामक इति** । यदि धात्वर्थो भाव्यः स्यादित्यादौ तदभावेन तस्यानियामकत्वादिति भावः ॥ **अतिप्रसङ्ग इति** । धूमवत्त्वमपि शब्दानित्यत्वं गमयेदित्यर्थः । सिद्धान्त्यभिमतानुमानान्तर्भावे बाधकान्याह **अनुमानवत्त्वे चेति ॥ बाधितत्वादिति** । अविद्यमानस्यैवापाद्यत्वेन असतः साध्यत्वस्य बाधितत्वादित्यर्थः ॥ **बहुलमिति** । यद्यूर्ध्वदेशे वृष्टिः स्यात् तर्ह्यधोदेशे नदीपूरः स्यात । यदि सूर्योदयः स्यात्तर्हि कमलविकासः स्यात् यदि धात्वर्थो भाव्यः स्यादित्यादावुपलभ्येत इत्यर्थः । **विपर्ययेति** । विपर्ययपर्यवसानाधीनत्वादिति भावः । किमर्थं तर्हि शास्त्रे तर्कव्युत्पादनमित्यत आह **प्रमाणानामनुग्राहक इति** ।

**या० — तस्येति** आपाद्यज्ञानस्येत्यर्थः । ननु नापाद्यज्ञानं प्रमाणतयोच्यते येनोक्तदोषः, किन्तु तत्करणमापादकज्ञानमेवेत्यत आह **न तत्करणमपीति** । नन्वापाद्यस्य धूमाभावादेर्ज्ञानं न स्वविषये प्रमाणं येनोक्तदोषः किन्तु स्वापादकविपर्यये । धूमाभावादिप्रसञ्जनेन वन्ह्यादिप्रमाया जायमानत्वात् । अतः साक्षादारोपितविषयत्वेऽप्यनारोपितवन्ह्यादिविषयकप्रमाकरणत्वात् तत्प्रामाण्यमुपपद्यत इत्यत आह **विपर्ययेति** । एवं सामान्यतस्तर्कस्य प्रमाकरणत्वं निराकृत्य तस्यानुमानत्वमपि निराकरोति **अनुमानत्वे चेति ॥ अनिष्टत्वेनेति** । अप्रामाणिकादिरूपत्वेनेत्यर्थः ॥ **व्यधिकरणता चेति** । यदि धात्वर्थो भाव्यः स्यादित्याद्युक्ततर्केष्वित्यर्थः । **विपर्ययपरतन्त्रत्वादिति** । विपर्ययपर्यवसानाधीनफलकत्वादित्यर्थः । नन्वप्रमाणत्वे किमिति तदुपन्यासः कथायामित्यत आह **प्रमाणानामनुग्राहक इति** ।

च० — तर्कपदाभिधेयानिष्टप्रसञ्जनात्मकबाधज्ञानस्य स्वयं प्रमारूपस्यैव लिङ्गदर्शनवत्प्रामाण्यमिन्द्रियादिवदप्रमारूपस्य वेति कल्पद्वयीमभिसन्दधान आद्यमपहस्तयते **न तावदिति** ॥ **तस्येति** । उक्तरूपापाद्यज्ञानस्येत्यर्थः ॥ **आहार्यरूपवत्त्वादिति** । यद्यपि बाधकालीनमिच्छाजन्यं ज्ञानमाहार्यमिति प्रकृतज्ञानस्येच्छाजन्यताविरहेणाहार्यरूपता दुरुपपादा तथापि तर्के आपाद्यव्यतिरेकनिर्णयस्य हेतुतया बाधकालीनतामात्रेणैवाहार्यतोक्तिरित्यवसेयम् । उक्तदिशाऽऽपाद्यज्ञानस्याप्रमात्वादेव तद्धेतुभूतापादकज्ञानस्यापि प्रामाण्यं न सङ्गच्छत इत्याह **तत्करणमपीति** । आपाद्यज्ञानोत्पादौपयिकज्ञानमित्यर्थः । द्वितीयकल्पमपि प्रतिविधत्ते **न द्वितीय इति** ॥ **आरोपितविषयत्वादिति** । आपाद्यज्ञानस्य विपर्यासरूपत्वादिति भावः । ननु निर्धूमत्वादिरूपापाद्यांशे ज्ञानस्य प्रामाण्यं नोपेयते किन्तु स्वविषयीकृतनिर्धूमत्वाद्यापाद्यस्य यदापादकं निर्वह्निविषयकप्रमित्युत्पादनानुकूलसिद्धान्त्यभिमतानुमानान्तर्भावबाधकान्यभिधत्ते **अनुमानत्वे चेति** ॥ **अन्यतरासिद्धत्वादिति** । धूमेन वह्निसाधने हेतोरप्रयोजकतामाशङ्कमानस्य दिशाऽसिद्धिविरहादन्यतरपदोपादानं **बहुलमिति** । यदि धात्वर्थो भाव्यः स्यादित्याद्युक्ततर्केष्वित्यर्थः ॥ **विपर्ययपरतन्त्रत्वादिति** । विपर्यये तत्कोटिमात्रपर्यवसायिन एव तर्कस्य तदभावकोटिकशङ्कानिवृत्तिफलकत्वादित्यर्थः । तत्कोटितावच्छेदकावच्छिन्नसाधकविपर्ययप्रतियोगितावच्छेदकावच्छिन्नापाद्यकस्तर्कस्तत्कोटितावच्छेदकावच्छिन्नशङ्कानिवृत्तिफलक इत्याशयः ।

सु० — एतदुक्तं भवति । द्विविधं हि कार्यं कथकस्य, स्वपक्षसाधनं परपक्षदूषणं चेति । तत्र साधनं स्वपरसम्मतैरेव न्यायैः कार्यं नान्यतरमात्रसिद्धैः । यथा पर्वतोऽग्निमान्धूमवत्त्वाद्यो यो धूमवानसावग्निमान्यथा महानस इति । क्वचित्पुनः साधनं स्वमात्रसिद्धैरेव न्यायैः क्रियते । तत्र च परेणान्यतरासिद्ध्याद्युदाहृते तं प्रति तत्साधनं क्रियते । यथा शब्दोऽनित्यः कार्यत्वात् । कार्यश्चासावव्यञ्जकप्रयत्नानन्तरोपलब्धेरित्यादि । सर्वथा साधनमुभयसिद्धन्यायसाध्यम् । दूषणं तु द्विविधम् । इदमित्थं न भवतीति वाऽनिष्टोपदर्शनेन वा । तत्राद्यमुभयसिद्धन्यायैरेव कार्यम् । यथा शब्दो न द्रव्यं श्रोत्रग्राह्यत्वात्सामान्यवदिति । क्वचित्पुनः स्वमात्रसिद्धन्यायैः साधनमिव दूषणमपि कृत्वा परं प्रति तत्साधनं क्रियते । यथा तत्रैव प्रयोगे कालेनानैकान्त्योद्भावने तस्यातीन्द्रियत्वसाधनमित्यादि । सर्वथाऽऽद्यं दूषणमुभयसिद्धन्यायसंपाद्यमेव । द्वितीयं तु परसिद्धैरेव न्यायैः कार्यम् । यथा यदि पर्वतो निरग्निकस्तदा निर्धूमः स्यादिति । अत्र ह्यापादकस्य परसिद्धत्वमेव भाव्यं न स्वसिद्धत्वम् । तदतिरिक्ताङ्गानां तु स्वसिद्धिः सती असती वा न विवक्षिता परसिद्धिरेवोपयुज्यते । तदेव च तर्क इति व्यवह्रियते । तेन तत्राश्रयासिद्ध्यन्यतरासिद्धी भूषणे एव न दूषणे ।

शे०— ननु साधनदूषणयोः स्वपरसम्प्रतिपन्नन्यायसाध्यत्वं स्वपरमात्रसंप्रतिपन्नन्यायसाध्यत्वं च विरुद्धं कथमङ्गीक्रियत इत्यतः साधने दूषणे चावान्तरभेदात्तदुपपत्तिरित्याशयेनाह **एतदुक्तं भवतीति** । ( व्यञ्जकप्रयत्नानन्तरमुपलभ्यमानेष्वीश्वरादिषु व्यभिचारवारणाय अव्यञ्जकेति ) ॥ **उद्भावन इति** । इदानीं शब्द इति प्रतीतिमनुरुध्य कालस्य षडिन्द्रियवेद्यत्वमङ्गीकृत्योद्भावने सतीति योज्यम् ॥ **तदतिरिक्ताङ्गानामिति** । व्याप्त्यादीनामित्यर्थः । नन्वेवं दूषणानुमानविशेषेऽसिद्ध्यादेरदूषणत्वप्राप्तावपि तर्के किमायातमित्यत आह **तदेव चेति** । अनिष्टोपदर्शनेन यद्दूषणं तदेवेत्यर्थः ॥ **आश्रयासिद्धीति** । यद्यत्र घटोऽभविष्यदित्यादितर्कविशेष एवेदं न तु सर्वत्रेति द्रष्टव्यम् ।

प०— **द्विविधं हि कार्यं कथकस्येति** । वैतंडिकव्यतिरिक्तकथकाभिप्रायमेतत् । व्यंजकप्रयत्नान्त मुपलभ्यमानवस्तुन्यव्यभिचाराय अव्यंजकप्रयत्नानन्तरमुपलब्धेरित्युक्तम् । **उद्भावन इति** । इदानीं शब्द इत्यादिप्रतीतिमनुरुध्य कालस्य षडिंद्रियवेद्यत्वमंगीकृत्योद्भावने कृत सतीति योज्यम् ॥ **तस्यातींद्रियत्वसाधनमिति** । शब्दद्रव्यत्ववादिना तस्या(पी)प्यतींद्रियत्वोक्तौ श्रोत्रादींद्रियवेद्यत्वसाधनमित्यर्थः । एवं हि स्वमात्रसिद्धेत्यादिपूर्ववाक्यं समञ्जसं ध्येयम् ॥ **तदतिरिक्तांगानामिति** । व्याप्ति-तर्काप्रतिहत्यादीनामित्यर्थः ।

या०— **अव्यञ्जकेति** । व्यञ्जकप्रयत्नानन्तरमुपलभ्यमानेष्वीश्वरादिषु (वर्णेषु व्यभिचारवारणायेदमिति मन्तव्यम् ॥ **एतदतिरिक्ताङ्गानामिति** । व्याप्त्यादीनामित्यर्थः ॥ **आश्रयासिद्धीति** । यद्यत्र घटोऽभविष्यदित्यादितर्कविशेष एवेदं न सर्वत्रेति द्रष्टव्यम् ।

श्री०— स्वन्यायैः साधनं कार्यमित्युक्तमुपपादयति **तत्र साधनं स्वपरेति** । स्वन्यायैर्दूषणं चेत्यत्र चशब्देन साधनं स्वमात्रसिद्धन्यायेनापि कार्यमित्युक्तं तदुपपादयति **क्वचिदिति** । अव्यञ्जकत्वं प्रयत्नस्य विशेषणम् । दीपाद्यानयनरूपप्रयत्नानन्तरं दृश्यमाने घटत्वादौ कार्यत्वाभावेन व्यभिचारवारणायाव्यञ्जकेत्युक्तम् । तत्र स प्रयत्नो घटत्वादेर्व्यञ्जक एव नत्वव्यञ्जक इत्यर्थः ॥ **उभयसिद्धेति** । 'स्वन्यायैः साधनं कार्यमि'ति साधनमुभयसिद्धन्यायेन कार्यमित्युक्तमेव । यदा तु स्वमात्रसिद्धन्यायेनापि साधनं कृत्वा परं प्रति तत्साधनं क्रियते तदा सोऽपि न्याय उभयसिद्ध एव जात इत्यर्थः । स्वन्यायैः साधनं कार्यमित्यत्रोपलक्षणया दूषणमप्युभयसिद्धन्यायेन कार्यमित्युक्तं तदुपपादयति **तत्राद्यमिति** । **सामान्यवत्** शब्दत्ववत् । 'स्वन्यायैर्दूषणमि'ति दूषणं स्वमात्रसिद्धन्यायेनापि कार्यमित्युक्तं तदुपपादयति **क्वचिदिति** । **प्रयोगे** शब्दो न द्रव्यमित्यत्रैव ॥ **कालेनेति** । षडिन्द्रियवेद्यः काल इति पक्षे श्रोत्रग्राह्यत्वं तत्रास्त्येवेति ज्ञेयम् । **आद्यं** इदमित्थं न भवतीत्येवंरूपम् ॥ **उभयेति** । स्वन्यायैः साधनमिति

उपलक्षणया दूषणमुभयसिद्धन्यायेन कार्यमित्युक्तमेव । यदा स्वमात्रसिद्धन्यायेनापि दूषणं कृत्वा परं प्रति तत्साध्यते तदा सोऽपि न्याय उभयसिद्धो जात इत्यर्थः । परन्यायैस्तु दूषणमित्युक्तमुपपादयति **द्वितीयमिति** । अनिष्टोपदर्शनेन यद्दूषणं तदित्यर्थः ।

च० **अन्यङ्गकेति** । व्यञ्जकप्रपातानन्तरमुपलभ्यमानेश्वरादावनैकान्त्यव्युदसनायेदमिति मन्तव्यम् ॥ **तदतिरिक्ताङ्गानां** व्याप्त्यादीनाम् ।

**सु०— व्यधिकरणत्वं तु न क्वापि दूषणमित्युक्तम् । शक्यसंपादनं च तर्केऽपि सामानाधिकरण्यम् । अवश्यं चैतदेवम् । अन्यथा केवलान्वयिधर्मस्य केवलव्यतिरेकिण्यभावात् तस्याननुमानत्वापत्तेः । सामान्यलक्षणसद्भावात् , विशेषलक्षणाभावेऽपि न दोष इति चेत्समं प्रकृतेऽपि । व्याप्त्यपेक्षया गमकत्वस्य तर्केऽपि विद्यमानत्वात् । विद्यमान एवाश्रये विद्यमानस्यैवेत्यपि सामान्यलक्षणे निवेश्यत इति चेत् । तर्हि विपक्षाभावो वा सप(क्षे स)पक्षसद्भावोऽपि वा निवेश्यताम् । प्रयोजनाभावान्नेति चेन्न । प्रकृतेऽपि समत्वात् । तर्कनिरासः प्रयोजनमिति चेत्तत्रापि केवलव्यतिरेकिनिरासः प्रयोजनं भविष्यति । निर्निबन्धनोऽसाविति चेत् । समं प्रकृतेऽपि । साधनेऽप्यसिद्धस्यानुमानत्वं स्यादिति चेत्तर्हि विपक्षवतः सपक्षेऽसतोऽपि केवलान्वयित्वं स्यात् । तद्विशेषलक्षण एव निक्षेप्यमिति चेत्समानमत्रापि । अत एव स्वन्यायैः साधनमित्यादिना व्यवस्था दर्शितेति ।**

शे०—**उक्तमिति** । 'न च ते दोषा व्याप्तौ सत्यां कथञ्चने'त्यादिनेति शेषः ॥ **शक्यसंपादनं चेति** । विधिर्यदि धात्वर्थभावकः स्यात्तदिष्टसाधनरूपो न स्यात् । यदि विधिरिष्टसाधनरूपो न स्यात्तर्हि तद्बोधकलिङादिशास्त्रबोध्यो न स्यात् । आप्तोपदेश्यो न स्यात् । प्रेक्षावत्प्रवृत्तिविषयो न स्यादित्यादिरूपेण सामानाधिकरण्यं शक्यसंपादनं चेत्यर्थः ॥ **अवश्यं चेति** । सत्यप्यन्यतरासिद्ध्यादावेवमुक्तप्रकारेणैतत्तर्कस्यानुमानतया प्रामाण्यमवश्यं स्वीकर्तव्यमित्यर्थः ॥ **अन्यथेति** । साधनानुमानवत् अन्यतरासिद्ध्यादिशून्यत्वाभावात्तस्यानुमानत्वाभावाङ्गीकार इत्यर्थः । **केवलान्वयिधर्मस्य** विपक्षशून्यत्वस्य । **व्यतिरेकिणीति** । तस्य विपक्षाद्व्यावृत्तत्वाद्विपक्षवत्त्वेन तच्छून्यत्वाभावादिति भावः । ननु विपक्षशून्यत्वं नानुमानसामान्यलक्षणं किन्तु तद्विशेषकेवलान्वय्यनुमानस्यैव । ततश्च व्यतिरेकिणो विपक्षशून्यत्वरूपानुमानविशेषकेवलान्वय्यनुमानलक्षणानाक्रान्तत्वेन केवलान्वय्यनुमानत्वासंभवेऽपि व्याप्त्यपेक्षया गमकत्वरूपानुमानसामान्यलक्षणाक्रान्तत्वेनानुमानत्वसंभवान्नाननुमानत्वप्रसङ्ग इत्याशङ्कते **सामान्यलक्षणेति** । एवं तर्ह्यन्यतरासिद्ध्यादिशून्यत्वमपि नानुमानसामान्यलक्षणं किन्तु तद्विशेषसाधनानुमानस्यैव । ततश्च

तदनाक्रान्ततया तर्कस्य साधनानुमानत्वाभावप्राप्तावपि व्याप्त्यपेक्षया गमकत्वरूपानुमानसामान्यलक्षणाक्रान्तत्वादनुमानत्वोपपत्तेः कथमननुमानत्वमिति प्रतिबन्द्या समाधत्ते **समं प्रकृतेऽपीति** ।

**सामान्यलक्षणे निवेश्यत इतीति** । तथा च व्याप्त्यपेक्षया गमकत्वेऽपि तर्कस्य विद्यमान एव आश्रय इत्यादिविशेषणविशिष्टानुमानसामान्यलक्षणानाक्रान्तत्वान्नानुमानत्वमिति भावः । एवं तर्हि विपक्षाभावादेरप्यनुमानसामान्यलक्षणे निवेशेन व्याप्त्यपेक्षया गमकत्वमात्रस्य तल्लक्षणत्वाभावाद्व्यतिरेकिणोऽपि सामान्यलक्षणानाक्रान्ततयाऽननुमानत्वमिति तुल्यमेवेति परिहरति **तर्हीति** । प्रयोजनाभावेन विपक्षाभावादेः सामान्यलक्षणान्तर्भावासिद्धेर्न व्यतिरेकिणः सामान्यलक्षणानाक्रान्ततयाऽननुमानत्वमित्याशयेन शङ्कते **प्रयोजनेति** । एवं तर्हि प्रयोजनाभावादेव विद्यमानाश्रयत्वादिविशेषणानामपि सामान्यलक्षणान्तर्भावासिद्धेर्न तर्कस्यापि सामान्यलक्षणानाक्रान्तत्वमिति कथमननुमानत्वमिति परिहरति **प्रकृतेऽपीति** । तर्कनिरासस्य प्रयोजनत्वेन प्रयोजनाभावासिद्ध्या 'विद्यमान एवाश्रय' इत्यादिविशेषणानामनुमानसामान्यलक्षणान्तर्भावसिद्धेर्विशिष्टलक्षणानाक्रान्तत्वान्न तर्कस्यानुमानत्वमित्याशयेन शङ्कते **तर्कनिरास इति** । एवं तर्हि केवलव्यतिरेकिनिरासस्यैव तत्प्रयोजनत्वेन प्रयोजनाभावस्यासिद्ध्या विपक्षाभावादेरपि अनुमानसामान्यलक्षणान्तर्भावसिद्धेर्विशिष्टलक्षणानाक्रान्तत्वाद्व्यतिरेकिणोऽपि कथमनुमानत्वमित्याशयेन समाधत्ते **तत्रापीति** । व्यतिरेकिणोऽनुमानतायां बाधकाभावेन तन्निरासस्य प्रयोजनत्वासंभवात्प्रयोजनाभावसिद्धेर्न विपक्षाभावादेरनुमानसामान्यलक्षणान्तर्भाव इति न तदानाक्रान्तत्वाद्व्यतिरेकिणोऽननुमानत्वमित्याशङ्कते **निर्निबन्धन इति** । एवं तर्हि तर्कस्याप्यनुमानत्वे बाधकाभावेन तन्निरासस्य प्रयोजनत्वानुपपत्त्या प्रयोजनाभावसिद्धेर्न विद्यमानाश्रयत्वादिविशेषणानामप्यनुमानसामान्यलक्षणेऽन्तर्भाव इति कथं विशिष्टलक्षणानाक्रान्ततया तर्कस्याननुमानत्वमित्याशयेन समाधत्ते **समं प्रकृतेऽपीति** ।

तर्केऽसिद्ध्यादेरदूषणत्वे साधनेऽप्यदूषणत्वं स्यादित्यतिप्रसङ्गनिरासार्थत्वान्न तर्कनिरासो व्यर्थ इति तस्य प्रयोजनत्वोपपत्त्या विद्यमानाश्रयत्वादिविशेषणानां सामान्यलक्षणे प्रवेशसिद्ध्या तदनाक्रान्तत्वान्न तर्कस्यानुमानत्वमित्याशयेन शङ्कते **साधनेऽपीति** । एवं तर्हि विपक्षवत्त्वस्य सपक्षेऽसत्त्वस्य च व्यतिरेकिण्यदूषणत्वे केवलान्वयिन्यपि तददूषणत्वप्राप्त्या विपक्षवतः सपक्षेऽसतोऽपि केवलान्वयित्वं स्यादित्यतिप्रसङ्गपरिहारार्थत्वान्न व्यतिरेकिनिरासो व्यर्थ इति तस्यैव प्रयोजनत्वोपपत्त्या विपक्षाभावादिविशेषणानामपि सामान्यलक्षणान्तर्भावसिद्ध्या विशिष्टलक्षणानाक्रान्तत्वाद्व्यतिरेकिणोऽपि नानुमानत्वमित्याशयेन समाधत्ते **तर्हीति** । अविद्यमानविपक्षत्वस्य सामान्यलक्षणेऽनिवेशेऽपि केवलान्वय्यनुमानरूपानुमानविशेषलक्षणे निवेशमात्रेण विपक्षवतः सपक्षेऽसतश्च व्यतिरेकिणः केवलान्वयित्वानापत्त्या अतिप्रसङ्गपरिहारार्थत्वाभावेन व्यतिरेकिनिरासस्य व्यर्थत्वात्प्रयोजनानुपपत्त्या विपक्षशून्यत्वादेः सामान्य-

लक्षणान्तर्भावानुपपत्त्या न तदनाक्रान्तत्वाद्व्यतिरेकिणोऽननुमानत्वमित्याशङ्कते **तद्विशेषलक्षण एवेति** । एवं तर्ह्यसिद्ध्यादिशून्यत्वस्यानुमानसामान्यलक्षणेऽनिवेशेऽपि साधनानुमानरूपानुमानविशेषे तन्निवेशमात्रेणासिद्धस्य साधनत्वानापत्त्याऽतिप्रसङ्गपरिहारार्थत्वाभावेन तर्कनिरासस्य प्रयोजनत्वासम्भवेन निष्प्रयोजनतयाऽसिद्ध्यादिशून्यत्वस्य सामान्यलक्षणान्तर्भावानुपपत्तेर्न तदनाक्रान्ततया तर्कस्याननुमानत्वमिति तुल्यमेवेत्याशयेन समाधत्ते **समानमत्रापीति । अत एवेति** । असिद्ध्यादिशून्यत्वस्य साधनानुमानरूपानुमानविशेषलक्षणे निवेशस्याभिप्रेतत्वादेवेत्यर्थः । इदं चापाद्यापादकयोर्लिङ्गसाध्यभावमङ्गीकृत्य केवलव्यतिरेकिप्रतिबन्धाऽऽपादकासिद्ध्यादेरदोषत्वव्युत्पादनं न वास्तवं किन्तु प्रौढिवादेनैवेति द्रष्टव्यम् । इहैव टीकायां 'अस्मिन्परिहारे सति पूर्वोक्तव्यवस्थाश्रयणेऽपि न कश्चिदतिप्रसङ्ग' इत्यनुपदमेवोक्तत्वादिति बहवः । तत्र सार्वदेशिकचिरन्तनमूलकोशस्थपाठविरुद्धपाठकल्पनापत्तिर्दोषोऽपि इति चिन्त्यम् ।

स० — **शक्यसंपादनं चेति** । यद्यपि यदि भूतले घटोऽभविष्यत् तर्हि भूतलमिवाद्रक्ष्यदित्यत्र सत्त्वस्य घटनिष्ठत्व दर्शनस्यात्मनिष्ठत्वाद्वैयधिकरण्यं, तथापि यदि भूतले घटः सन् स्यात् तर्हि दर्शनविषयः स्यादित्येवंरूपेण सामानाधिकरण्यं संभवतीति भावः ।

प० — **शक्यसंपादनमिति** । देशकालादिप्रवेशेनेति भावः । अनुमान(मर्यादा)वैलक्षण्यात्कथं तर्कस्यानुमानत्वमित्यत आह **अवश्यं चेत्यादिति** ॥ इत्यपि **सामान्यलक्षणे निवेश्यमिति** । तथाच नानुमानसामान्यलक्षणं तर्क इति भावः ॥ **निवेश्यतामिति** । अनुमानसामान्यलक्षण इति योज्यम् । तथाच केवलान्वयिनः केवलव्यतिरेकिणो वा नानुमानत्वं स्यादिति भावः ॥ **प्रकृतेपीति** । विद्यमान इत्यादिविशेषणप्रक्षेपेपीति भावः ॥ **समं प्रकृतेपीति** । तर्कनिरासोपि निर्निबन्धन इत्यर्थः । अतिप्रसङ्गरूपनिबन्धनमाशङ्कते **साधनेपीति । तद्विशेषलक्षण एवेति** । विपक्षवत्त्वे सपक्षसत्त्वं अन्वयव्यतिरेकिलक्षणम् । विपक्षहीनत्वं केवलान्वयिलक्षणम् । व्याप्त्यपेक्षया गमकत्वरूपसामान्यलक्षणस्योभयत्र सत्त्वेऽपि विशेषलक्षणस्य व्यवस्थितत्वान्न सांकर्यमिति भावः ॥ **समानमत्रापीति** । व्याप्त्यपेक्षया गमकत्वस्य साधनदूषणानुमानयोः समत्वेऽपि असिद्धं सत् साधकत्वरूपं (तर्करूप)दूषणानुमानलक्षणं न सिद्धं सत् साधकमिति साधकानुमानलक्षणमिति विशेषलक्षण एव विशेषणं प्रक्षेप्तव्यमित्येतत्समाधासमानमित्यर्थः ॥ **अत एवेति** । अतिप्रसङ्गनिरासार्थत्वादेव स्वन्यायैः स्वस्यापि सिद्धेः पक्षलिङ्गादिभिः साधनं कार्यं, परन्यायैः परमात्रसिद्धेः लिङ्गादिभिस्तर्करूपदूषणानुमानं कार्यमिति व्यवस्था दर्शितेत्यर्थः ।

या० — **शक्यसंपादनं चेति** । यदि विधिर्भावत्वर्थभाव्यकः स्यात्तदेष्टसाधनरूपो न स्यात् । यदि विधिरिष्टसाधनरूपो न स्यात्तर्हि तद्बोधकशास्त्रबोध्यो न स्यात् । यदि च शास्त्रं नेष्टसाधनबोधकं

तदाऽनाप्तप्रणीतं स्यात् । यदि च शास्त्रमनाप्तप्रणीतं स्यात्तर्हि प्रेक्षावत्प्रवृत्तिविषयो न स्यादित्यादिरूपेण सामानाधिकरण्यं शक्यसम्पादनं चेत्यर्थः । **केवलान्वयित्वं** अविद्यमानविपक्षत्वम् ॥ **तद्विशेषलक्षण एवेति** । अविद्यमानविपक्षत्वं केवलान्वय्यनुमानविशेषलक्षण एव निक्षेप्यं नानुमानसामान्यलक्षणेऽतो नान्वयव्यतिरेकिणस्तद्रूपत्वमित्यर्थः ॥ **समानमत्रापीति** । अन्यतरासिद्धत्वं तर्करूपानुमानविशेषस्य यल्लक्षणमन्यतरासिद्धत्वे सति दुष्टिप्रमितिसाधनत्वरूपं तत्रैव निक्षेप्यं नानुमानसामान्यलक्षणेऽतो न साधनानुमानेऽपि तत्प्रसङ्ग इत्यर्थः ॥ **अत एवेति** । साधनेऽप्यसिद्धस्यानुमानत्वं स्यादित्युक्तातिप्रसङ्गपरिहारस्योक्तरीत्या सूचनार्थमेवेत्यर्थः ॥

श्री० — **एतदेवं** द्वितीये दूषणेऽन्यतरासिद्ध्यादेरदोषत्वमेव वाच्यमित्यर्थः ॥ **अन्यथेति** । साधने, आद्ये दूषणे चान्यतरासिद्ध्यादेर्दोषत्वाद्द्वितीये दूषणेऽपि चेद्दोषत्वमुच्यत इत्यर्थः ॥ **केवलान्वयिधर्मस्येति** । अविद्यमानविपक्षत्वस्य विद्यमानसपक्षत्वस्य चेत्यर्थः ॥ **सामान्यलक्षणेति** । व्याप्त्यपेक्षया गमकत्वरूपानुमानसामान्यलक्षणेत्यर्थः ॥ **विद्यमान एवेति** । तथा च विद्यमान एवाश्रये विद्यमानस्यैव हेतोर्व्याप्त्यपेक्षया गमकत्वमनुमानसामान्यलक्षणे विवक्षितम् । अस्ति चैतल्लक्षणं व्यतिरेकिणि । न तर्के । यद्यत्र घट इत्यत्राश्रयाभावात् । यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादित्यत्रान्यतरासिद्ध्या हेतोर्विद्यमानत्वादिति भावः । **निवेश्यता** अनुमानसामान्यलक्षणे ॥ **समं प्रकृतेऽपीति** । एवं चान्यतरासिद्ध्यादेस्तर्केऽदोषत्वमिति भावः । यदि तर्केऽन्यतरासिद्ध्यादेरदोषत्वं स्यात्तर्हि साधनानुमानेऽप्यदोषत्वं स्यादित्याशङ्कते **साधनेऽपीति** । विद्यमानविपक्षत्वे सत्यविद्यमानसपक्षत्वं व्यतिरेकिधर्मो दृष्टः । स धर्मः केवलान्वयिनोऽपि स्यात् । ननु विपक्षोपेतत्वमविद्यमानसपक्षत्वं च केवलव्यतिरेकिधर्मः । स कथं केवलान्वयिनः स्यात् एकस्वभावस्यापरत्रायोगादित्याशङ्कते **तदिति** । तर्केऽसिद्ध्यादेर्दूषणानुमान एवादोषत्वं स्वभाव इति स कथं साधनानुमाने स्यादित्याह **सममिति** । **अत एव** दूषणानुमानेऽसिद्ध्यादेर्न दोषत्वं किन्तु साधनानुमान एवेति सूचनायैव साधनमुभयसिद्धन्यायेन कार्यमित्युक्त्या साधनेऽसिद्धिर्दोष इति सूचितम् । परन्यायैस्तु दूषणमिति परस्यैव सिद्धैर्न्यायैर्दूषणं कार्यमित्युक्त्या स्वसिद्धिर्नापेक्षिता । परसिद्धिरेवापेक्षितेत्युक्तत्वेनान्यतरासिद्धिदूषणे न दोष इति सूचितमिति ध्येयम् । **अत्र तर्के** ।

च० — **शक्यसंपादनं चेति** । यदि विधिर्धात्वर्थभाव्यकः स्यात्तदेष्टसाधनरूपो न स्यात् यदि इष्टसाधनरूपो न स्यात्तर्हि तद्बोधकलिङादिशास्त्रबोध्यो न स्यादित्यादिदिशा सामानाधिकरण्यं शक्यसंपादनमित्यर्थः । **केवलान्वयित्वं** अत्यन्ताभावाप्रतियोगिसाध्यकत्वम् । **तद्विशेषलक्षण एवेति** । केवलान्वयिसाध्यकानुमानरूपविशेषलक्षण एव अत्यन्ताभावाप्रतियोगिसाध्यकत्वविशेषणं निवेश्यं

नानुमानसामान्यलक्षणेऽतो नान्वयव्यतिरेकिणस्तद्रूपत्वमित्यर्थः । **समानमत्रापीति** । अन्यतरादिशा सिद्धत्वे सति इति दुष्टत्वप्रमितिसाधनत्वरूपदूषणानुमानलक्षण एव तादृशमत्यन्तं निवेश्यं न त्वनुमानसामान्यलक्षणेऽतो न साधनानुमानेऽपि तत्प्रसङ्ग इत्यर्थः । **अत एवेति** । साधनदशायामप्यसिद्धेरदूषणत्वं प्रसज्येतेति क्षतिव्युदसनमुक्तदिशा ध्वनयितुमेवेत्यर्थः ।

**सु०— माभूदाश्रयासिद्ध्यन्यतरासिद्ध्योरत्र दूषणत्वम् । तथाऽपि बाधापसिद्धान्तसद्भावान्न तर्कस्यानुमानत्वमिति चेत् न । तयोरप्यसिद्धिवत्साधनदूषणविशेषयोरेव दूषणत्वेन प्रसङ्गानुमाने तदभावादिति पूर्ववत्परिहारः सिद्ध एव । तथापि, साधनेऽप्यवान्तरभेदकल्पनया तर्हि बाधादेरदूषणत्वं कल्प्यतामित्यतिप्रसङ्गनिरासाय परिहारान्तरमाह** प्रसङ्गेति ।

अनु०— प्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्य दूष[illegible]ः ॥

प्रसङ्गः आपादनं, तदर्थतया तद्विषयतया प्रसञ्जनीयतयेति यावत् । प्रोक्ताः **निर्धूमत्वादयोऽर्थाः । न सिद्धान्तस्य दूषका इत्युपलक्षणम् । न बाधिता इत्यपि द्रष्टव्यम् ।**

एतदुक्तं भवति । किमापाद्यतोपेतस्य निर्धूमत्वादेर्बाध्यत्वं तत्प्रोक्तौ चापसिद्धान्त उच्यते, उत केवलस्य । नाद्यः । यत आपादानं नामाङ्गीकर्तव्यताज्ञापनम् । न पुनः सद्भावप्रतिपादनम् । न च तत्प्रमाणादिविरुद्धम् । यदि विषं भक्षयिष्यसि तर्हि मरिष्यसीति यथा । द्वितीये तु स्यादेव बाधादि । न च तदत्रोच्यते । तथा सति (तर्हि) स्यादिति, न स्यादिति ।

असिद्धिरप्येवमेव परिहर्तव्या । तथा हि । किं यद्यलंकृतस्य निरग्निकत्वादेरसिद्धत्वमुच्यते । किंवा केवलस्य । न प्रथमः । असिद्धेः । यदि निरग्निकः स्यादित्य(स्य हि य)पि यदि निरग्निकत्वेनाङ्गीक्रियेतेत्यर्थः । न चायमसिद्धः । तथा सति तर्कस्याप्यनुत्थानापत्तेः । अत एव भगवानाचार्यो 'यदि विद्येत' इत्येतत 'विद्यत इत्यङ्गीकारो भवेद्यदी'ति व्याख्यातवान् । न द्वितीयः । तस्यात्रानुपादानात् । तथात्वे (हि) यदीति न स्यादिति ।

शे०— **अत्रेति** । तर्क इत्यर्थः ॥ **तदभावादिति** । दूषणत्वाभावादित्यर्थः । नन्वेवमाश्रयासिद्धिः अन्यतरासिद्धिबाधापसिद्धान्तपरिहारेण तर्कस्यानुमानताया व्यवस्थाप्रदर्शनपरेण स्वन्यायैरिति पूर्ववाक्येनैव प्रतिपादितत्वादपसिद्धान्ताद्यभावप्रतिपादकोत्तरवाक्यानर्थक्यमित्यतोऽङ्गीकृत्य बाधादिकं तददूषणत्वव्युत्पादनेन तर्कस्यानुमानत्वं पूर्वत्र समर्थितम् । उत्तरग्रन्थे तु बाधादिप्रसक्तेरेवाभावात्तस्यानुमानत्वमिति परिहारान्तरकथनान्न तस्यानर्थक्यमिति भावेन परिहारान्तरोक्तौ निमित्तप्रदर्शनपूर्वकं तत्पर-

तया ग्रन्थमवतारयति **तथाऽपीति** । प्रसङ्गशब्दस्य प्रसञ्जकपरतायां 'न सिद्धान्तस्य दूषकाः' इत्युत्तर-ग्रन्थस्याश्लिष्टत्वप्रसङ्गात्तदनुगुणतया प्रसङ्गशब्दं व्याचष्टे **प्रसङ्ग आपादनमिति** । अर्थशब्दस्य प्रयोजनाद्यर्थताभ्रान्तिनिरासाय विवक्षितमाह **तदर्थतयेति** ।

ननु यदि निर्वह्निः स्यात्तर्हि निर्धूमः स्यादित्यत्र निर्धूमत्वमापाद्यं निरग्निकत्वमात्रं चापादकं न त्वधिकं किञ्चित्तज्ज्ञापकाभावात् । तच्च बाधितमसिद्धं चेति कथं बाधाद्यप्रसक्तिरित्यत आह **इदमुक्तं भवतीति** । **आपाद्यतोपेतस्येति** । तर्हि स्यादितिशब्दद्वयार्थालङ्कृतस्येत्यर्थः ॥ **न च तदिति** । निर्धूमत्वाद्यङ्गीकारस्य प्रमाणादिविरुद्धत्वेऽपि पर्वतादौ तद्विषयत्वयोग्यतायास्तद्विरुद्धत्वाभावादित्यर्थः । **स्यादिति न स्यादिति** । उपलक्षणं चैतत् । तर्हीति न स्यादित्यपि द्रष्टव्यम् । इतीत्यस्येदमिति संबन्धः बाधापसिद्धान्तयोः परिहारस्य मूलाल्लाभेऽप्यन्यतरासिद्धिपरिहारालाभान्न्यूनतेत्याशङ्क्योक्तन्यायेनैव तत्परिहारस्याप्यत्र सूचितत्वान्न न्यूनतेत्यभिप्रेत्योक्तन्यायातिदेशेन स्वयमसिद्धिं परिहरति **असिद्धिरपीति** । **यद्यलङ्कृतस्येति** । यद्यर्थालङ्कृतस्येत्यर्थः । उपलक्षणं चैतत् । स्यादर्थालङ्कृतस्येत्यपि द्रष्टव्यम् । यदीति न स्यादित्युपलक्षणम् । स्यादिति न स्यादित्यपि द्रष्टव्यम् ।

प० — **अत्रेति** । तर्के दूषणत्वं मा भूदित्यर्थः ॥ **साधनदूषणविशेषयोरिति** । साधनं च दूषणविशेषश्च तयोरित्यर्थः । पूर्वमनूद्य परिहारान्तरमिति भ्रमनिरासायाह **इत्यतिप्रसङ्गनिरासाय परिहारान्तरमाहेति** ॥ **यद्यलंकृतस्येति** । यदिशब्दोपेतस्येत्यर्थः ॥ **इति व्याख्यातवानिति** । माण्डूकभाष्य इति योज्यम् । विवृतमेतत्तर्कताण्डवे ।

या० — **न च तत्प्रमाणादिविरुद्धमिति** । निर्धूमत्वाद्यङ्गीकारस्य प्रमाणादिविरुद्धत्वेऽपि पर्वतादौ तद्विषयत्वयोग्यतायास्तद्विरुद्धत्वाभावादित्यर्थः । एवं चात्र पर्वतो निरग्निकत्वेनाङ्गीकर्तव्यः निर्धूमत्वेनाङ्गीकृतत्वाद् ह्रदवदित्यनुमानमेव तर्क इति साधनानुमान इव तर्केऽप्यसिद्ध्यादिकं दोष एवेति न तर्कस्य साधनानुमानवैषम्यमिति भावः ।

श्री० — **तयोः** बाधापसिद्धान्तयोः ॥ **साधनेति** । साधनं च, इदमित्थं न भवतीत्येवंरूपो दूषणविशेषश्च, तयोश्चेत्यर्थः । **प्रसङ्गानुमाने** अनिष्टोपदर्शनरूपदूषणानुमाने ॥ **साधनेऽपीति** । दूषणं द्विविधम् । इदमित्थं न भवतीति वाऽनिष्टोपदर्शनेन वेतिदूषणेऽवान्तरभेदं प्रकल्प्याद्यदूषणे बाधादेर्दोषत्वं द्वितीये त्वदोषत्वमिति यथा कल्प्यते तद्वत्साधनानुमानेऽप्यवान्तरभेदं प्रकल्प्य कस्मिंश्चित्साधनानुमाने बाधादिर्दोषः कस्मिंश्चिन्नेत्यवान्तरभेदं प्रकल्प्य बाधादेरदूषणत्वं कल्प्यतामित्यर्थः ॥ **परिहारान्तरमाहेति** । 'तथाऽपि बाधापसिद्धान्तसद्भावान्न तर्कस्यानुमानत्वमि'ति शङ्काया इति शेषः । **न सिद्धान्तस्य दूषकाः** अपसिद्धान्तापादकाः नेत्यर्थः ॥ **आपाद्यतोपेतस्येति** । आपाद्यत्वोपयुक्ततर्हि-

लिङ्गादिशब्दयुक्तस्येत्यर्थः ॥ **सद्भावेति** । येनापसिद्धान्तः स्यादित्यर्थः । **तत्** अङ्गीकर्तव्यताज्ञापनम् ॥ **असिद्धेरिति** । यद्यलङ्कृतस्य निरग्निकत्वादेरसिद्धत्वस्य **असिद्धेः** अभावादित्यर्थः । तदुपपादयति **यदीत्यादिना** ॥ **तथा सति तर्कस्यापीति** । यदि निरग्निकत्वाङ्गीकारोऽसिद्धः स्यादित्यर्थः । धूमोऽस्तु वन्हिर्माऽस्त्वित्येवं निरग्निकत्वे परेणाङ्गीकृते सत्ययं तर्कः प्रवर्तते । यदि सोऽसिद्धः स्यात्तर्हि तर्कोत्थानं न स्यादित्यर्थः ।

**च०— न च तत्प्रमाणादिविरुद्धमिति** । निर्धूमत्वोपगतेः प्रमाणविरुद्धार्थोपगमरूपत्वेऽपि पर्वतादौ तादृशोपगतिविषयत्वयोग्यतायास्तद्विरुद्धत्वाभावादित्यर्थः । इत्थं चात्र पर्वतपक्षकं निर्धूमत्वोपरक्ताङ्गीकृतिविषयतावच्छेदकधर्मावच्छिन्नत्वसाध्यकं निर्वन्हित्वोपरक्तोपगतिविषयतावच्छेदकधर्मावच्छिन्नत्वहेतुकं ह्रदनिदर्शनकमनुमानमेव तर्क इति साधनानुमानवत् तर्केऽप्यसिद्ध्यादिकं क्षतिरेवेति न तर्कस्य साधनानुमानावधिकवैलक्षण्यमिति भावः । **यद्यलंकृतस्य** यदिशब्दसमभिव्याहृतपदोपस्थाप्यस्य । **केवलस्य** तच्छब्दसमभिव्याहृतपदानुपस्थाप्यस्य ।

**सु०— अस्मिन्परिहारे सति पूर्वोक्तव्यवस्थाश्रयणेऽपि न कश्चिदतिप्रसङ्गः ।**

**शे०—** किन्तर्हि शङ्किताऽतिप्रसङ्गग्रस्तत्वादुक्तव्यवस्था न युक्तैवेत्यत आह **अस्मिन्परिहारे सतीति** । अङ्गीकारस्यैव सिद्धिपदार्थत्वेनासिद्ध्यादिपरिहारे सतीत्यर्थ ॥ **पूर्वोक्तेति** । साधनानुमान एवासिद्ध्यादेर्दूषणत्वं न दूषणानुमान इति पूर्वोक्तव्यवस्थाश्रयणेऽपीत्यर्थः ॥ **नेति** । साधनेऽप्येवमवान्तरभेदकल्पनया बाधादेर्दूषणत्वं न स्यादित्यतिप्रसङ्गो नेत्यर्थः । तथा हि । साधनरूपस्यैव लिंगस्यासिद्धिर्दोषः । न त्वापादकरूपस्य । आपादकत्वव्याघातात् । तस्य पराभ्युपगतत्वनियमात् । न चात्र निरग्निकत्वं साधनत्वेनोपात्तम् । तथात्वे हि यदीति स्यादिति च न स्यात् । किन्तु निरग्निकत्वादित्येव स्यात् । किन्त्वापादकतयैव । यदियुक्तेन स्याच्छब्देन तथा बोधनात् । एवं साध्यरूपस्यैव लिङ्गिनो बाधो दोषः । न त्वापाद्यरूपस्यापि तस्य । आपाद्यत्वव्याघातात् । तस्य प्रमाणबाधितत्वनियमात् । न चात्र निर्धूमत्वं साध्यतयोपात्तम् । तथात्वे हि तर्हीति स्यादिति च न स्यात् । किन्तु निर्धूमोऽयमित्येव स्यात् । न च निर्धूमोऽयमिति ज्ञानस्य यावान्विषयस्तावानेव तर्हि निर्धूमः स्यादित्यस्यापि विषयः । अधिकस्य तर्हि स्याच्छब्दयोरर्थस्याप्युल्लेखात् । न चासौ बाधितः । अत एव नापसिद्धान्तोऽपि । स हि सिद्धान्तविरुद्धस्य साधने न त्वापादने । तस्मात्प्रसङ्गरूपानुमानेऽसिद्धिबाधाद्यदूषणमिति शक्यते कल्पयितुं न तु साधनानुमानेऽपि । तत्र यदि तर्ह्यादिरूपस्य बाधाद्यदोषतोपपादकस्य कस्यचिदनुपलम्भादित्यनेन प्रकारान्तरेण

व्यवस्थाश्रयणे प्रसक्तातिप्रसङ्गपरिहारस्याप्यनेन परिहारेण सूचनान्नातिप्रसङ्ग इति भावः। यद्यप्युक्ताति-प्रसङ्गपरिहारायोक्तव्यवस्थोपपादकतयैवायं ग्रन्थो योजयितुं शक्यत इति न परिहारान्तरपरत्वाश्रयणमुचितं तथाऽप्यत्र वाक्ये प्राप्तस्यापसिद्धान्तादेरदूषणत्वस्यानुवृत्त्या तदभावमात्रप्रतिपादकस्य न सिद्धान्तस्य दूषका इत्यस्यास्वारस्यप्रसङ्गात्तत्स्वारस्याय परिहारान्तरपरतया योजितमिति द्रष्टव्यम्।

ननु च तर्के बाधादेरेवमदोषत्वेऽपि न तस्य प्रामाण्यं युक्तम्। स्वयमाहार्यारोपरूपत्वात्। आरोपित-विषयत्वेन प्रमाकरणत्वस्याप्यभावात्। विपर्ययप्रामाण्योपपत्तौ च नियामकसंबन्धाभावेनातिप्रसङ्गादिति चेत्। उच्यते। सधूमोऽपि गिरिर्निरग्निकोऽस्त्विति शङ्का हि द्वेधा संभवति। निरग्निकत्वं प्रति निर्धूमत्वे व्यापकत्वस्यैवाभावेन, सत्यपि व्यापकत्वे पक्षे निर्धूमत्वस्यापि सत्त्वेन वा। तत्राद्यो निर्धूमत्वस्य व्यापक-त्वप्रदर्शकेन यदि निरग्निकस्तर्हि निर्धूम इत्यनेन निरस्यते। यदि गवयो गोसदृशस्तर्हि गौरपि गवयस-दृशो, यदि जीवन् गृहे नास्ति तर्हि बहिरस्ति, यदि धूमस्तर्हि वन्हिरित्यादौ यदितर्ह्योः स्वसमभिव्याहृ-तपदार्थेऽन्यथाऽनुपपत्तिरूपव्याप्तिबोधकत्वस्य व्युत्पत्तिसिद्धत्वात्। अत एवेह टीकायां यदीदं तर्हीदमित्येव व्याप्तिग्रहः पूर्वमुक्तः। यदियुक्तेन स्याच्छब्देन तु स्वसमभिव्याहृतस्य निरग्निकत्वस्य पक्षे पराभ्युपगम-मात्रं बोध्यते। तर्हियुक्तेनापि स्याच्छब्देन निर्धूमत्वस्य पक्षनिष्ठत्वं बोध्यते। विपर्ययपर्यवसानपर्यन्ते तर्के तथैव व्युत्पत्तेः। अनेनैव द्वितीयशङ्काऽपि निरस्ता भवति। एवञ्चात्र निरग्निकत्वं प्रति निर्धूमत्वस्य व्यापकत्वं लिङ्गं तज्ज्ञानं करणम्। निरग्निकत्वाभावं प्रति निर्धूमत्वाभावस्य व्याप्यत्वं लिङ्गि तज्ज्ञानं च फलं द्वयमपि चेदं प्रमारूपमेव। कारणाभावे कार्याभावनियमात्। व्यापकाभावस्य व्याप्या-भावं प्रति व्याप्यत्वाच्च। अत एव प्रसङ्गांशेनैव निर्धूमत्वाभावस्य निरग्निकत्वाभावेन व्याप्तेः सिद्धत्वादेव। न चायं निर्धूम इत्यनेन तस्य पक्षधर्मतामात्रं प्रदर्श्य तस्मान्न निरग्निक इत्यनेन साध्यमुक्तम्। न तु त्वया शङ्कितं पक्षे निरग्निकत्वज्ञानं करणम्। नापि पक्षे निर्धूमत्वज्ञानं फलम्। येन द्वयोरप्रमात्वं स्यात्। इह टीकायामसिद्धयाद्युक्तिस्तु निरग्निकत्वं प्रति निर्धूमत्वस्य व्यापकत्व-प्रदर्शनार्थं तर्कवाक्येनोपात्ते ये निरग्निकत्वनिर्धूमत्वरूपे व्याप्यव्यापके तदभिप्राया। तस्माद्यथा-यथालिङ्गितस्यार्थस्याबाधान्न तर्कस्याप्रामाण्यम्। एतदेवाभिप्रेत्योक्तमिह टीकायाम् यद्यलंकृतस्य निरग्निकत्व देशसिद्धत्वं नास्तीति। तथा सति यदीति न स्यादिति च। अयं च पक्षः 'प्रसङ्गानुमाने बाधापसिद्धान्तयोरदूषणत्वादि'ति टीकायामेव पूर्वमुक्त इति न किञ्चिदनुपपन्नम्।

यद्वा सधूमोऽपि निरग्निकः किन्न स्यादिति शङ्कानिरासाय हीदं धूमाभावापादनरूपमनु-मानं प्रवर्तते। इदं च नायं निर्धूम इति विपर्ययपर्यवसानसहितं पराभ्युपगतनिरग्निकत्वस्याभावप्रमां जनयति। उक्तं च पद्धतौ। 'अनिष्टापादनं विपर्ययपर्यवसानं चोभयं मिलितमेवानुमितिसाधनं

भवती'ति । एवञ्चात्र पक्षे निरग्निकत्वादेरापादकत्वेन ज्ञानं करणं तस्य निर्धूमत्वादेरापाद्यत्वेन ज्ञानमवान्तरफलं । तदुभयं प्रमारूपमेव । विपर्ययपर्यवसानबलात्पराभ्युपगतनिरग्निकत्वाद्यभावप्रमितिस्तु मुख्यं फलमिति विवेकः । न च विपर्ययप्रामाण्योपगतावतिप्रसङ्गः । पराभ्युपगमनिमित्तकज्ञानविषयव्यतिरेकभङ्गनीयत्वस्यैवापादकत्वशब्दार्थत्वात् । भज्यते हि निरग्निकत्वं स्वाभ्युपगमनिमित्तकज्ञानं प्रति विषयस्य निर्धूमत्वस्य व्यतिरेकज्ञानेन । कथमन्यथा 'न चायं निर्धूमस्तस्मान्न निरग्निक' इति विपर्ययपर्यवसानम् । तदभावे तर्क एवाभासः स्यात् । एवञ्च निरग्निकत्वादेरुक्तरूपापादकत्वस्यैवातिप्रसङ्गभञ्जकत्वान्नातिप्रसङ्गः । न च विपर्ययपरतन्त्रत्वादप्रामाण्यं तर्कस्येति वाच्यम् । तथा सति व्यतिरेकिविलयापातात् । साधनानुमानस्यापि पक्षधर्मत्वादिपरतन्त्रत्वेनाप्रामाण्यापाताच्च । पक्षधर्मत्वादिकं तदङ्गमिति चेत् । विपर्ययपर्यवसानमपि तथेति तुल्यमिति युक्तमेव तस्य व्यवस्थाश्रयणपक्षे प्रामाण्यम् । तथा परिहारान्तरपक्षेऽपि ।

इह टीकायां पक्षद्वयमभिमतम् । निरग्निकत्वमेव लिङ्गमभ्युपगमस्तु तस्य पक्षेण सम्बन्ध इत्येकः पक्षः । अभ्युपगम एव लिङ्गमिति द्वितीयः । तत्राद्ये न प्रामाण्यानुपपत्तिः । आपादकरूपलिङ्गस्य निरग्निकत्वस्य पक्षे पराभ्युपगतत्वमेव पक्षसंबन्ध इति नासिद्धिः । युक्तं चैतत् । यक्षानुरूपबलिन्यायेन लिङ्गिनो निर्धूमत्वस्यापि पक्षेऽभ्युपगमनीयत्वस्यैव पक्षसंबन्धत्वात् । धूमरसादेः पक्षे संयुक्तसमवेतत्वादिना ज्ञातस्यैवाग्निरूपादिसाधकतया तत्र संयोगसमवायादेरिव निरग्निकत्वस्यापि पक्षे पराभ्युपगतत्वेन ज्ञातस्यैवापादकतया पराभ्युपगतत्वसंबन्धताया उचितत्वात् । कृत्तिकोदयाधोदेशे नदीपूरादिरूपसाधनानुमानस्यापि रोहिण्युदयोर्ध्वदेशादिरूपपक्षेऽभावेऽपि पक्षनिष्ठसाध्यसमानकालीनत्वपक्षनिरूप्याधोदेशस्थत्वादेस्त्वन्मते च ज्ञानत्वादिरूपप्रमेयत्वादेरपि पक्षीभूतशब्देन स्वरूपप्रत्यासन्नज्ञानसमवेतत्वादेश्च परम्परासंबन्धस्य दृष्टत्वाच्च । अस्मिंश्च पक्षे निरग्निकत्वनिर्धूमत्वयोः पक्षेऽभ्युपगतत्वाभ्युपगमनीयत्वरूपेण सत्त्वात्तेन रूपेण तद्विषययोर्निरग्निकत्वनिर्धूमत्वज्ञानरूपयोः करणफलयोः प्रमाणत्वाद्युक्तं तर्कस्य प्रामाण्यम् । यद्यप्ययं पक्षः साक्षादिह टीकायां नोक्तस्तथाऽपि 'पराभ्युपगममात्रस्य सिद्धिवदार्थत्वादि'ति पद्धत्यनुसारात् । 'स्यादेतत् । तर्को न तावत्साधनानुमानमि'ति टीकानुसाराच्चेह टीकायामभिमत एवेत्यवधेयम् । अन्त्ये त्वयं निरग्निकत्वेनाङ्गीकर्तव्यो निर्धूमत्वेनाङ्गीकृतत्वाद्ध्रदवदित्यनुमानमेव तर्क इति साधनानुमान इव तर्केऽप्यसिद्ध्यादिकं दोष एवेति न तर्कस्य साधनानुमानाद्वैषम्यमिति न किञ्चिदेतत् । न चास्मिन्पक्षे प्रसङ्गानुमानस्य साधनानुमानाद्वैषम्याभावा'त्त्वन्याये साधनं कार्यमि'त्यादिनोक्तसाधनदूषणानुमानव्यवस्थाऽनुपपत्तिरिति वाच्यम् । आद्योक्ताया असिद्ध्याद्यदोषताया

द्वितीयोक्ताया अभ्युपगमस्यैव सिद्धितायाश्च साधनानुमाने काप्यदर्शनेनाद्यद्वितीयपक्षमात्रविषयतया तृतीयपक्षविषयत्वानभ्युपगमात् । यद्वा तृतीयोक्ताया अभ्युपगमायोग्याभ्युपगमस्य लिङ्गताया अपि साधनानुमाने काप्यदर्शनाद्व्यवस्थोक्तिः पक्षत्रयसाधारण्येवेति ध्येयम् ।

नन्वेवमपि विपर्ययपर्यवसाननिरपेक्षस्यैव प्रसङ्गस्य प्रामाण्योपपादना'दनिष्टापादनं विपर्ययपर्यवसानं चोभयं मिलितमेवानुमितिसाधनं भवती'ति विपर्ययपर्यवसानसापेक्षस्य तर्कस्य प्रामाण्योपपादकपद्धतिग्रन्थविरोधः स्यादिति वाच्यम् । निर्धूमतयाऽङ्गीकर्तव्यतासाधनस्य सिद्धसाधनताशङ्कानिरासार्थं स्यादित्यनेन बोधितप्रमाणविरोधोपपादनार्थं च तर्काङ्गभूतविपर्ययपर्यवसानसापेक्षत्वाभिप्रायकत्वेन धूमस्य वन्हिव्याप्तिप्रमायामङ्गीकर्तव्यताप्रमायां च निरपेक्षत्वेऽपि तदुद्देश्यायां न निरग्निक इति प्रमायां तत्सापेक्षताभिप्रायकत्वेन वोपपन्नत्वेन तस्याविरोधित्वात् । तस्मात्तर्कस्यानुमानत्वं प्रामाण्यं चोपपन्नमिति न किञ्चिदनुपपन्नम् । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः ।

स० — तस्मिन् पक्षे तर्केऽसिद्ध्यादिदूषणप्राप्तेरेवाभावात् स्वन्यायैः साधनं कार्यमित्युक्तं स्यादित्याह **अस्मिन्परिहारे सतीति** । अस्मिन्पक्षे व्यवस्थाया अङ्गीकर्तुमशक्यत्वेऽपि पक्षान्तरेऽसिद्ध्यादीनां दूषणत्वसंभवेन पूर्वोक्तव्यवस्थाश्रयणे न कश्चिदप्यतिप्रसङ्ग इत्यर्थः । न चैवमपि कथं पूर्वोक्तातिप्रसङ्गनिवृत्तिरिति वाच्यम् । दूषणानुमानेऽवान्तरभेदकोपाधिवत् साधने अवान्तरभेदकल्पकाभावात् । किञ्च साधने बाधादीनां दूषणत्वस्य प्रमितत्वेन दूषणानुमानेऽसिद्ध्यादीनां अदूषणत्वस्यैव प्रमितत्वेनातिप्रसङ्गाभावात् ।

प० — एतत्परिहारोक्तेरतिशयमाह । **अस्मिन्परिहारे सतीति** ॥ **पूर्वोक्तेति** । 'परन्यायैस्तु-दूषणमि'त्यादिनोक्तेत्यर्थः ।

**या०** — ननु तर्हि किं पूर्वोक्तव्यवस्थाश्रयणं 'साधनेऽप्यवान्तरभेदकल्पनये'त्यादिनोक्तातिप्रसङ्गदुष्टत्वादयुक्तमेव । नेत्याह **अस्मिन्परिहारे सतीति** । एतत्परिहारोपपादनाय हि निरग्निकत्वादेर्न साधनतयोपादानं किन्त्वापादकतयैव यदियुक्तेन स्याच्छब्देन तस्यापादकतया बोधितत्वात् । एवं निर्धूमत्वादिकं न साध्यं किन्त्वापाद्यमेव । तर्हियुक्तेन स्याच्छब्देन तथा बोधनादिति प्रतिपाद्यते । तेन यदापादकं तत्परसिद्धमेव वाच्यमित्यन्यतरासिद्धिस्तत्र न दूषणं प्रत्युत भूषणमेवेत्यर्थाल्लभ्यते । आपाद्यं च प्रमाणादिविरुद्धमेव वाच्यमिति बाधादिरपि तत्र भूषणमेवेति प्राप्नोति । साधनानुमाने त्वत्र यदितर्हीत्यादिकमिव बाधाद्यदोषतोपपादकं, न हि किञ्चिदस्तीत्युक्तव्यवस्थाश्रयणेऽतिप्रसङ्गपरिहारस्याप्यनेन परिहारेण सूचनादिति भावः । यद्यप्युक्तातिप्रसङ्गपरिहारा-

योक्तव्यवस्थोपपादकतयैवेदं मूलं व्याख्येयम् । तथाऽपि न सिद्धान्तस्य दूषका इत्यस्य स्वारस्याय परिहारान्तरपरतया व्याख्यातमिति द्रष्टव्यम् । अत्र ह्यपसिद्धान्तादेरभाव एव उच्यते । उक्तव्यवस्थोपपादनमात्रपरत्वे तु प्राप्तस्याप्यपसिद्धान्तादेर्न दोषत्वमित्येव वक्तव्यमिति उक्तरीत्याऽतिप्रसङ्गपरिहारेणोक्तव्यवस्थोपपादनमप्यनेन लभ्यत इत्यतिप्रसङ्गनिरासाय परिहारान्तरमाहेत्यवतारिका, अस्मिन्परिहारे सतीत्युक्तिश्च श्लिष्टेति न किञ्चिदत्रानुपपन्नम् । एतेनोक्तव्यवस्थाश्रयणेन परिहारे प्रसक्तमपि बाधादिकं न दोष इत्यभिप्रेतम् । अत्र तु बाधादिप्रसक्तिरेव नेति । अतो विरुद्धत्वात्कथमस्य परिहारस्योक्तव्यवस्थोपपादकत्वमस्मिन्परिहारे सतीत्यनेनोच्यत इति शङ्का निरस्तेति ज्ञातव्यम् । एतत्परिहारस्य साक्षादुक्तव्यवस्थोपपादकत्वाभावेऽप्येतदुपपादनन्यायेनोक्तव्यवस्थोपपादनस्यापि लाभादित्याशयात् । अत एव पूर्वकल्पे यदितर्हिस्याच्छब्दानां वैयर्थ्यादिति दूषणानवकाशः । तत्र प्रसक्तासिद्धिबाधाद्यदोषतोपपादकतया तेषां सार्थक्यादिति । अस्मिन्परिहारेऽस्तीति व्याख्यानं त्वतिप्रसङ्गनिरासाय परिहारान्तरमाहेत्यवतारिकाविरुद्धमित्युपेक्षणीयम् । न च दूषणानुमाने साधनानुमानवैषम्योपपादकेन पूर्वपरिहारेणास्य परिहारस्य विरोधः । अत्र तद्वैषम्याभावस्योक्तत्वादिति वाच्यम् । अत्र ह्यभ्युपगमायोग्याभ्युपगमस्य लिङ्गताऽभिप्रेता । सा च न कुत्रापि साधनानुमाने दृष्टेत्येतावन्मात्रेणात्र साधनानुमानवैषम्यस्याभिप्रेतत्वेन विरोधाभावादिति तर्कताण्डवे प्रतिपादितत्वात् । नन्वेवमप्याद्यपक्षे तर्कस्य स्वयमाहार्यभ्रमरूपत्वात् प्रमाकरणत्वस्याप्यभावाद्विपर्ययप्रामाण्योपगतावतिप्रसङ्गाच्च कथं प्रामाण्यमिति शङ्का कथं परिहरणीयेति चेदुच्यते । सधूमोऽपि निरग्निः किन्न स्यादिति परेणाशङ्किते तन्निरासार्थं हीदं धूमाभावापादनरूपमनुमानं प्रवर्तते । इदं च न चायं निधूम इति विपर्ययपर्यवसानसहितं पराभ्युपगतनिरग्निकत्वस्याभावप्रमां जनयति । अत एव परपक्षाभावरूपदुष्टिप्रमितिसाधनत्वाद्दूषणानुमानत्वमस्योक्तम् । उक्तं च पद्धतौ । अनिष्टापादनं विपर्यये पर्यवसानं चोभयं मिलितमेवानुमितिसाधनं भवतीति । एवं चाद्यपक्षे निरग्निकत्वादेरापादकत्वेन ज्ञानं करणं, तस्य निर्धूमत्वादेरापाद्यत्वेन ज्ञानमवान्तरफलम् । तदुभयं प्रमारूपमेव । विपर्ययपर्यवसानबलात्पराभ्युपगतनिरग्निकत्वाद्यभावप्रमितिस्तु मुख्यं फलमिति ज्ञातव्यम् । न च विपर्ययप्रामाण्योपगतावतिप्रसङ्गः । स्वाभ्युपगमनिमित्तकज्ञानविषयव्यतिरेकज्ञानभञ्जनीयत्वस्यैवापादकत्वरूपत्वात् । भज्यते हि निरग्निकत्वं स्वाभ्युपगमनिमित्तकज्ञानविषयस्य निर्धूमत्वस्य व्यतिरेकज्ञानेन । कथमन्यथा न चायं निधूमस्तस्मान्न निरग्निरिति विपर्यये पर्यवसानमिति । एवं च निरग्निकत्वादेरुक्तरूपमापादकत्वमेवातिप्रसङ्गभञ्जकं भविष्यति । न च विपर्ययपरतन्त्रत्वादप्रामाण्यं तर्कस्येति वाच्यम् । व्यतिरेकिविलयापत्तेः । साधनानुमानस्यापि पक्षधर्मत्वादिपरतन्त्रत्वेनाप्रामाण्यापत्तेश्च । पक्षधर्मत्वादिकं तत्राङ्गमिति चेत् । विपर्ययपर्यवसानस्यापि

तर्काङ्गत्वात् । यथाऽऽहुः । 'व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये । अनिष्टाननुकूलत्व इति तर्काङ्ग-पञ्चकमि'ति । द्वितीयपक्षे तु प्रामाण्योपपादनं सुगममेवेति सर्वमवदातम् । तर्कताण्डवे तु सधूमोऽपि निरग्निकोऽस्त्विति शङ्का हि निरग्निकत्वं प्रति निधूमत्वे व्यापकत्वाभावेनैव भवति । अतो निर्धूमत्वस्य व्यापकत्वप्रदर्शकेन यदि निरग्निस्तर्हि निर्धूम इत्यनेन निरस्यते । यदि गवयो गोसदृशस्तर्हि गौरपि गवयसदृशी, यदि धूमस्तर्हि वन्हिरित्यादौ यदितर्ह्योः स्वसमभिव्याहृतपदार्थेऽन्यथाऽनुपपत्तिरूपव्याप्ति-बोधकत्वस्य व्युत्पत्तिसिद्धत्वात् । एवं चात्र निरग्निकत्वं प्रति निर्धूमत्वस्य व्यापकत्वं लिङ्गं तज्ज्ञानं करणं निरग्निकत्वाभावं प्रति निर्धूमत्वाभावस्य व्याप्यत्वं लिङ्गि तज्ज्ञानं फलं, द्वयमपि प्रमारूपमेवेति पूर्वकल्पे प्रामाण्योपपादनं कृतम् । अत्रासिद्ध्याद्युक्तिर्निरग्निकत्वं प्रति निर्धूमत्वस्य व्यापकताप्रदर्शनार्थं तर्कवाक्येनोपात्ते ये निरग्निकत्वनिर्धूमत्वरूपे व्याप्यव्यापके तदभिप्रायैव न तर्करूपानुमानाभिप्रायेति कल्पनीयम् । अस्मदुक्तप्रकारे त्वसिद्ध्याद्युक्तिः तर्करूपानुमानाभिप्रायैव । अतस्तत्रासिद्ध्यादिकं दूषणा-नुमाने न दोषावहं किन्तु भूषणमेवेति भगवत्पादादिभिरुक्तं श्लिष्टतरं भवतीति ज्ञातव्यम् । अत्रापाद-कज्ञानं तर्क्यतेऽनेनेति व्युत्पत्त्या तर्कशब्दवाच्यम् । आपाद्यज्ञानं पराङ्गीकृतापादकाभावज्ञानं च तर्कणं तर्क इति भावव्युत्पत्त्येति विवेकः । शिष्टमस्मदाराध्यश्रीवेदेशगुरुकृतायां पद्धतिटीकायां द्रष्टव्यम् ।

श्री०—'तथाऽपि साधनेऽप्यवान्तरभेदकल्पनया तर्हि बाधादेरदूषणत्वं कल्प्यतामि'त्यतिप्रस-ङ्गनिरासायोक्तम् । कथमेतेनैतदतिप्रसङ्गनिरासो जात इत्यत आह **अस्मिन्निति** । बाधादेरदूषणत्वोपपा-दके प्रसङ्गार्थतयेत्यनेनोक्ते परिहारे सति ॥ **पूर्वोक्तेति** । दूषणेऽवान्तरभेदकल्पनया बाधादेरदूषणत्वं, न साधन इत्युक्तव्यवस्थाऽऽश्रयणेपीत्यर्थः । **कश्चिदतिप्रसङ्गः** । तथाऽपि साधनेऽपी'त्युक्तः । अयमर्थः । यदि निरग्निकत्वाङ्गीकारः तर्हि निर्धूमत्वाङ्गीकारः स्यादित्यत्र न बाधादिदोष इत्येतत्परिहारकथनेन दूषणा-नुमानरूपे तर्के यदिस्यादित्याद्या अधिकाः शब्दाः सन्तीति सूचितम् । तथा चानिष्टोपदर्शनरूप-दूषणात्मके तर्के यद्यादिशब्दानां सत्त्वात्तत्र बाधादिर्न दोषः । इदमित्थं नेत्येवंरूपे दूषणे यद्यादि-शब्दानामभावात्तत्र बाधादिर्दोषः इति व्यवस्थाऽऽश्रीयते । न ह्येवं साधनेऽस्ति । यदि साधने बाधादेरदूषणत्वोपपादकं किञ्चित्स्यात्तर्हि तस्मिन्साधने बाधादिर्न दोषः तदितरस्मिन् बाधादेरदूषण-त्वोपपादकशून्ये साधनविशेषे बाधादिर्दोष इति, साधनेऽवान्तरभेदं प्रकल्प्य बाधादेरदूषणत्वं वाच्यं स्यात् । न चैवं क्वचित्साधने बाधाद्यदूषणत्वोपपादकं किञ्चिदस्त्यतो न साधनेऽवान्तरभेदः कल्पनीय इत्यतिप्रसङ्गपरिहारो जात इति ज्ञेयम् ।

च०— नन्वेवं साधनानुमान एवासिध्यादेर्दूषणत्वं न दूषणानुमान इति व्यवस्थाश्रयणेन प्राक्तनी समाहितिः साधनेप्येवमेवावान्तरभेदकल्पनया बाधेदरदूषणत्वं स्यादित्यत्यतिप्रसङ्गेनासमञ्जसैवा-

पद्यत इत्यत आह **अस्मिन्परिहार इति**। यदिशब्दस्याच्छब्दसमभिव्याहारेणापादकस्य परसिद्धत्वमेव ध्वनितमिति तत्रान्यतरासिद्धिर्न दूषणम्, एवं तर्हिशब्दस्याच्छब्दसमभिव्याहारेणापाद्यस्य प्रमाणविरुद्धत्वमपि तथेति तत्र बाधो न दोष इति प्रकृतसमाहित्यैवासैत्सीदिति भावः।

सु० — **स्यादेतत्। द्विविधमेवानुमानं साधनं दूषणं च। तत्र तर्को न साधनमिति तावद्भवतामपि संमतम्। नापि दूषणम्। दुष्टिप्रमाजनकं हि दूषणं नाम। न च तर्कस्य तत्संभवति। परसिद्धेन हि न्यायेन परस्य तत्र दुष्टिर्ज्ञापनीया। न चासौ साधुः। तथात्वे हि परसिद्ध इत्येव न स्यात्। असाधुना च ज्ञाप्यमाना दुष्टिराभासभूतैवेति कथं तर्कोऽनुमानमित्यतः छलजात्योर्दुष्टत्वमूलव्युत्पादनेनैवैतत्समानयोगक्षेममित्याशयवांस्तत्स्वरूपं निरूपयति** छलमिति।

**अनु०** — छलं जातिरिति द्वेधा व्याहत्यन्तरमिष्यते ॥

व्याहत्यन्तरं **व्याहतिप्रभेदः। इष्यते प्रामाणिकैः। यद्वा व्याहतिर्विरोधः। अन्यदसङ्गतं चेति व्याहत्यन्तरम्।** छलमसङ्गतं जातिर्विरोध इत्यर्थः।

**शे०** — ननु छलं जातिरित्युक्तवाक्यमनर्थकम्। न चैतच्छलजातिस्वरूपनिर्णयार्थमिति वाच्यम्। तत्स्वरूपनिरूपणस्याप्यनर्थकत्वात्। न च छलादेर्दुष्टिमूलत्वव्युत्पादनाभिप्रायकत्वान्न तदिति वाच्यम्। तद्व्युत्पादनस्यापि प्रकृतासङ्गतत्वात्। न च तर्कस्य दुष्टिमूलत्वव्युत्पादनार्थत्वात्तस्य नासङ्गतिरिति वाच्यम्। तद्व्युत्पादनस्यापि प्रयोजनाप्रतिभासेनानर्थक्यात्। न च दूषणानुमानत्वसमर्थनार्थत्वान्न तदिति वाच्यम् दूषणानुमानत्वेऽनुपपत्तेरप्रतिभासेन तत्समर्थनस्यानर्थक्यात्। सद्भावेऽपि साधनानुमानत्वस्यैव सम्भवात्तदसम्भवेऽपि वा विधान्तरस्यैव सम्भवादित्यतोऽनुमानत्वसमर्थनपरतयोक्तग्रन्थं सङ्गमयितुं तस्य विधान्तरत्वसाधनानुमानत्वयोरनुपपत्तिं दर्शयन्नेव दूषणानुमानत्वानुपपत्तिशङ्कामुत्थापयति **स्यादेतदित्यादिना ॥ न साधनमितीति**। यद्यप्यङ्गीकारस्यैवापादकत्वमिति प्रागुक्तपक्षे साधनत्वमपि तस्य सम्मतमेवेति न तन्निषेधो युक्तः। तथाऽपि प्रागुक्तव्यवस्थापक्षमभ्युपगमस्य सम्बन्धत्वपक्षं चावलम्ब्यायं साधनानुमानत्वप्रतिषेध इत्याहुः। वस्तुतस्तु साधनानुमाने असिद्ध्यादेरदोषताया अभ्युपगमस्य सिद्धिताया इव चभ्युपगमायोग्याभ्युपगमस्य लिङ्गताया अपि तत्रादर्शनेन, साधनानुमानाद्वैषम्यात्, असाधनत्वोक्तिः पक्षत्रयसाधारण्येनैवेति ज्ञेयम् ॥ **दुष्टीति**। परपक्षासाधुत्वप्रमेत्यर्थः ॥ **असाविति**। न्याय इत्यर्थः। **तथात्वे** साधुत्वे। साधुत्वे सर्वसिद्धत्वस्यैव प्राप्त्या परसिद्धत्वायोगादिति भावः ॥ **दुष्टत्वमूलेति**। **दुष्टिप्रमासाधनत्वे मूलव्युत्पादनेनेत्यर्थः। एतत् तर्कस्य दुष्टिप्रमा**साधनत्वे मूलमित्यर्थः। अन्तरशब्दस्यानेकार्थत्वाद्विवक्षितमर्थमाह ॥ **व्याहतिप्रभेद इति**। अभिप्रेततर्के छलादेर्दुष्टत्वं न स्यादित्यापाद्यस्यानिष्टत्वसूचनाय छलजात्योर्व्याहतिप्रभेदत्वस्य प्रामाणिकताया आवश्यकत्वात्तल्लाभाय तदनुरूपं शेषमाह

**इष्यते प्रामाणिकैरिति** । छलमसङ्गतमिति मानलक्षणीयाचार्योक्तिं मनसि निधाय पक्षान्तरमाह ॥ **यद्वेति** । अन्तरशब्दस्य व्याख्यानं **अन्यदिति** । तत्किमित्यतः शृङ्गिग्राहकतया तद्दर्शयति ॥ **असङ्गतं चेतीति** । छलं व्याहतिर्जातिरसङ्गतमिति यथाक्रममन्वयभ्रमं वारयति ॥ **जातिरिति** ।

प० — **दुष्टिप्रमाजनकमिति** । दोषयुक्तत्वप्रमाजनकमित्यर्थः ॥ **दुष्टत्वमूलेति** । दुष्टिप्रमाजनकत्वबीजव्युत्पादनेनेत्यर्थः । व्याहतिशब्दान्तरशब्दाभ्यां विरोधासङ्गती ग्राह्ये इत्याह **यद्वेति** । अन्तरशब्दस्यान्यपदार्थेपि प्रयोगादन्तरमित्यस्य प्रतिपदम् **अन्यदिति** । तस्यार्थोक्तिः **असङ्गतं चेति** । व्याहतिश्चान्तरं च व्याहत्यन्तरं इत्येकवद्भाव इति भावः । यथायोगमन्वयो न यथाक्रममित्याह छलमसङ्गत**मिति** ।

या० — **दुष्टिप्रमेति** । परपक्षासाधुत्वप्रमेत्यर्थः । परपक्षाभावप्रमेति यावत् ॥ **दुष्टत्वमूलेति** । दुष्टिप्रमासाधनत्वे मूलव्युत्पादनेनेत्यर्थः । अन्तरमित्यस्य व्याख्यानं **अन्यदिति** । तद्दर्शयति **असङ्गतं चेतीति** ।

श्री० — **तत्र** तर्के । **असौ** परन्यायः । **तथात्वे** परन्यायस्य साधुत्वे । तथा च साधुत्वे स्वेनाप्यङ्गीकार्यत्वापत्त्योभयसिद्धत्वेन परसिद्धत्वं न स्यादित्यर्थः । असाधुना परन्यायेन ॥ **कथमिति** । दुष्टिप्रमितिसाधनत्वाभावादित्यर्थः । अन्तरशब्दार्थः **अन्यदिति** । तस्याप्यर्थः **असङ्गतं चेति** । तद्विवेचयति **छलमिति** ।

---

सु० — **तत्र जातेर्लक्षणमाह** जातिरिति ।

अनु० — जातिः स्वव्याहतिर्ज्ञेया

**ज्ञेयेत्यनेनोत्तरत्वविशेषणं न कार्यम् । साधनेऽपि स्वव्याहतेः संभवात् । वृथा प्रभेदकल्पनस्याप्रामाणिकत्वात् । स्वव्याहतिश्च स्ववचनविरोधस्वक्रियाविरोधस्वन्यायविरोधभेदेन त्रिविधेति । छललक्षणमाह** छलमिति ।

छलमर्थान्तरोत्तरम् ॥

**परोक्तस्यार्थान्तरं परिकल्प्य तस्यार्थान्तरस्योत्तरमित्यर्थः** ।

शे० — **जातेर्लक्षणमाहेति** । तेन विना जातेर्व्याहतत्वस्य ज्ञातुमशक्यत्वादिति भावः । मूले ज्ञेयेत्यस्य वैयर्थ्यमाशङ्क्य स्वव्याहतमुत्तरं जातिरिति परकीयलक्षणानुसारेणात्राप्युत्तरत्वविशेषणस्य ग्राह्यत्वात्किमिति तस्याग्रहणमिति शङ्कानिवृत्त्यर्थत्वात्तस्य न वैयर्थ्यमिति भावेनाह ॥ **ज्ञेयेत्यनेनेति** । इति सूचयतीति शेषः । तत्कुत इत्यतो जातिलक्षणे उत्तरत्वविशेषणं गृह्णतः किं साधने स्वव्याहतिरेव

नास्तीत्यभिमतं किं वा तत्सत्त्वेऽपि सा प्रतिज्ञाविरोध एव, न जातिः, किन्तूत्तर एव स्वव्याहतिर्जातिरिति विकल्पद्वयं मनसि निधायाद्यं दूषयति ॥ **साधनेऽपीति** । स्थापनायामित्यर्थः । द्वितीयं दूषयति । **वृथेति** । अन्यथा वैपरीत्यापात दिति भावः । जातेर्जातित्वेनोद्भावनाभावात्स्ववचनविरोधित्वादिनैवोद्भाव्यत्वात्तदुपपादनाय जातेर्विभागमाह ॥ **स्वव्याहतिश्चेति** । अर्थान्तरं परिकल्प्येत्यत्रार्थशब्देनाभिधेयस्यौपचारिकस्य तात्पर्यविषयस्य च विवक्षितत्वात्त्रिविधछलसंग्रहसिद्धिरिति ज्ञेयम् ।

स० — ननु स्वव्याहतमुत्तरं जातिरिति उत्तरत्वविशेषणं कुतो नोक्तमित्यत आह **ज्ञेयेत्यनेनेति** । उत्तरत्वविशेषणोक्तौ वचनदोषत्वमेव स्यात साधनरूपार्थदूषणत्वं न स्यात् । अस्ति चैतत् । अतो नोत्तरत्वविशेषणमित्याह **साधनेति** । विरोधस्यैव साधनदोषत्वं उत्तरत्वविशेषितव्याहतिरूपजातेश्च वचनदोषत्वमेवेति भेदः किं न स्यात्तत्राह **वृथेति** ।

प० — **उत्तरत्वविशेषणमिति** । स्वव्याहतिर्जातिरित्येव जातिलक्षणम् । न तु स्वव्याघातमुत्तरं जातिरिति परोक्तरीत्या उत्तरत्वविशेषणं **देयमित्यर्थः** । कुत इत्यतस्तथात्वेऽव्याप्त्यापत्तेर्लक्षणस्येत्याह **साधनेपीति** । प्रत्युक्तेः प्रागेव वादिनोक्तमुत्तरं स्थापनानुमानेपीत्यर्थः । ननु स्वव्याघातकं जातिःस्वव्याघातकं साधनं तु अन्यदिति प्रभेदः परिकल्प्यतां इत्यत आह **वृथाप्रभेदेति** । त्रिविधेतिवाक्यस्यानन्तरं सूचयतीति योज्यम् ।

या० — **उत्तरत्वविशेषणमिति** । स्वव्याघातकमुत्तरं जातिरिति परेणोक्तमुत्तरत्वविशेषणं नात्रोपादेयमित्यर्थः ॥ **साधनेऽपीति** । स्थापनाहेतावपीत्यर्थः । ननु स्थापनायां प्राप्ता स्वव्याहतिः प्रतिज्ञाविरोधरूपं निग्रहस्थानं, उत्तरे प्राप्ता सा जातिरतस्तत्रातिव्याप्तिपरिहाराय जातिलक्षणे उत्तरत्वविशेषणमावश्यकमित्यत आह **वृथाप्रभेदेति** ।

श्री० — **परोक्तस्य** गृष्टिविवक्षयोक्तस्य गामानयेत्यस्य । **अर्थान्तरं** पृथिवीरूपम् । **उत्तरं** गवानयनं पृथिव्यानयनमशक्यमित्युत्तरमित्यर्थः ।

**सु० — अयं भावः । अस्ति तावत्स्वव्याहतिलक्षणा जातिः, अर्थान्तरोत्तरलक्षणं छलं चेति द्विविधं निग्रहस्थानम् । न च तदङ्गीकारे षडेव निग्रहस्थानानीति नियमभङ्गः । जातेर्विरोधभेदत्वाच्छलस्यासङ्गतिप्रभेदत्वाद्द्वयोरपि वा विरोध एवान्तर्भावयितुं शक्यत्वात् । तत्र जातिं वा छलं वा प्रयुञ्जानो दुष्टमेतदिति कथं प्रतिपादनीय इति वाच्यम् । जातौ तावद्युक्ताङ्गहीनत्वादयुक्ताङ्गाधिकत्वादविषयवृत्तित्वा(द्वा)द् दुष्टमेतदिति । छले च मदविवक्षितदूषणेनासङ्गतत्वादित्येवमिति चेत् । तत्र जातिवादी नेदमयुक्ताङ्गमिति वा नेदमयुक्तमिति वा नायमविषय इति**

**वा नेदमयुक्तमिति वा (प्रति)ब्रूयादेव । छलवादी च किं त्वद्विवक्षया, त्वद्वचनेन प्रतीतोऽर्थो मया दूषणीय इति । तौ कथं दुष्टत्वं प्रतिबोधनीयौ ।**

**शे०** — नन्वत्रेष्यत इति भाष्यखण्डवैयर्थ्यम् । न च छलजात्योर्व्याहतिप्रभेदत्वस्य प्रामाणिकत्वज्ञापनार्थत्वात्तस्य न तदिति वाच्यम् । तथा सति तयोर्निग्रहस्थानत्वस्यैवासिद्ध्या व्याहत्याद्यन्तर्भावस्यासम्भवदुक्तिकत्वात् । तन्सिद्धावपि वा बाधकाभावेन पृथङ्निग्रहस्थानताया एव सम्भवेनान्तर्भावस्यावक्तव्यत्वात् । बाधकसद्भावेनान्तर्भावस्य वक्तव्यत्वेऽपि भाष्ये तल्लक्षणोक्तेर्निष्प्रयोजनत्वात् । जातौ युक्ताङ्गहीनत्वादिना छले चासङ्गतत्वादिना दुष्टतायाः प्रतिपादयितुं शक्यत्वेन स्वव्याहत्यैव परो दुष्टिं बोधनीय इति तन्नियमाभावेन लक्षणोक्तेः स्वव्याहतिरूपदुष्टत्वमूलज्ञापकत्वस्याप्यप्रयोजकत्वात् । छलजात्योरुक्तरीत्या दुष्टतायाः प्रतिपादनानुपपत्त्या स्वव्याहत्यैव तत्प्रतिपादनस्यावश्यकत्वेऽपि स्वव्याहत्यैव तत्र दुष्टिबोधनेन परसिद्धन्यायेन तत्र दुष्टिबोधनाप्राप्तेः । तत्प्राप्तावपि वा तर्के परसिद्धन्यायेन ज्ञाप्यमानायां दुष्टेराभासत्ववादिनं प्रत्यनिष्टत्वाभावात् । तत्सद्भावेऽपि वा तत्र परसिद्धन्यायोक्तेरभिप्रायान्तरकत्वेन न्यायस्य प्रमाणतयोपन्यासाभावेन तज्ज्ञाप्याया दुष्टेरनाभासत्वोपपत्त्या दुष्टिमूलज्ञापकत्वेऽपि प्रकृते प्रमाणतयोपन्यस्तपरन्यायस्यासाधुत्वेन तज्ज्ञाप्याया दुष्टेराभासत्वेन दुष्टिमूलकत्वासंभवात्तद्वदेव तर्केऽपि तदुक्तेस्तथाऽभिप्रायकत्वकल्पनेऽपि तत्रेवात्रापि स्वव्याहतिरूपपरसिद्धन्यायाभावान्न दुष्टत्वमूलव्युत्पादनसमानयोगक्षेमत्वमित्यनोऽभिप्रायमाह **अयं भाव इति** ॥ **षडेवेति** । विरोधासङ्गतिन्यूनाधिक्यसंवादानुक्तिभेदादित्यर्थः । द्वितीयव्याख्यानमाश्रित्याह **जातेरिति** ॥ **विरोधभेदत्वादिति** । विरोधप्रभेदत्वं च विरोधप्रभेदमानविरोधप्रभेदत्वं विरोधप्रभेदमानविरोधरूपत्वं चेत्युभयमप्यत्र द्रष्टव्यम् ॥ **असङ्गतिप्रभेदत्वादिति** । परोक्तदूषणस्यैव सङ्गतत्वेनानुक्तारोपितदूषणरूपछलस्यासङ्गतिप्रभेदत्वादित्यर्थः । प्रथमव्याख्यानमप्याश्रित्याह **द्वयोरपीति** । गवानयनं न विधेयमशक्यत्वादित्यादिछलवाक्येऽपि गवा नयनमित्ययुक्तम् । अनन्वितत्वादित्यादेश्छलस्य संभवेन तस्यापि स्वन्यायविरोधेऽन्तर्भाव इत्यर्थः । तत्प्रतिपादनप्रकारमाशङ्कते **जातौ तावदिति** ।

**स०** — दुष्टिप्रतिपादमप्रकारं शङ्कते **जातौ तावदिति** ।

**प०** —एतत्समानयोगक्षेममित्युक्तं व्यनक्ति **अयं भाव इति** ॥ **द्वयोरपीति** । छलजात्योरपीत्यर्थः । अत एव(स्व)व्याहत्यन्तरमित्यस्य व्याहतिप्रभेद इत्यपि व्याख्यानं कृतम् । पर्वतोऽग्निमानित्युक्ते धूलिकाभिप्रायेण नास्ति पर्वतेऽग्निरिति छलोत्तरेऽपि ना पुमानस्ति पर्वते अग्निरिति असङ्गतमिति छलवाक्येऽप्यर्थान्तरकल्पनेन दूषणोक्तिसंभवेन स्वन्यायविरोधे छलस्यान्तर्भावसंभवादिति भावः । विवृतमेतत्प्रमाणलक्षणटीकायां गृष्टिविवक्षयेत्यत्र ॥ **प्रयुञ्जान इति** । स्थापनावादिनं प्रति जात्युत्तरं वदन् प्रतिवादी कथं प्रतिपाद-

नीयः । त्वयोच्यमानमुत्तरमसमीचीनमिति कथं बोधनीय इत्यर्थः । दूषणीय इत्यनन्तरं प्रतिब्रूयादेवेति योज्यम् ॥ **ताविति** । जातिवादी छलवादी चेत्यर्थः । **दुष्टत्वं** तदुक्तोत्तरस्येति योज्यम् ।

**या०**— स्वव्याहत्यनन्तरं व्याहतिप्रभेदः इति प्रथमव्याख्यानमनुसृत्याह ॥ **द्वयोरपीति** । गृष्टिविवक्षया गामानयेत्युक्ते पृथिवीविवक्षया गवानयनमशक्यमिति छलवादिवाक्यस्याप्यर्थान्तरं परिकल्प्य गवा नयनमित्यनन्वितमिति दूषणसम्भवेन छलस्यापि स्वन्यायविरोधेऽन्तर्भावयितुं शक्यत्वादिति भावः ।

**श्री०**— यद्वेत्युक्तव्याख्यानमुपपादयति ॥ **जातेरिति** । युक्ताङ्गं व्याप्त्यादि ।

**सु०— अथ मन्यसे । द्विविधं दुष्टत्वमूलं साधारणमसाधारणं च (चेति । तत्रासाधारणं युक्ताङ्गत्यागादिकम् । साधारणं तु स्वव्याहतिः । तत्रासाधारणदूषणोपन्यासेऽपि पुनश्शङ्कमानः स्वव्याहत्या बोधनीयः । यदि व्याप्त्याद्यङ्गमनपे(क्ष्यैव)क्ष्य प्रसङ्गस्तदा जातिवाक्यार्थोऽपि तथा दूषयितुं शक्यत इत्यादि । यदि (च) वक्तुर्विवक्षामनपेक्ष्यैव शब्दप्रतीतत्वमात्रेण दूषणं तदा छलवाक्येऽपि तथा शक्यमिति । एवं तर्हि परसिद्धेनैव न्यायेन परस्छलजात्योर्दुष्टिं बोधनीयः । ततःपरं तु न शक्यत एव । व्याघातावधित्वादाशङ्काया इत्युक्तं भवति । तथा च परन्यायस्तावदसाधुः । तेन बोध्यमाना दुष्टिराभासभूतैवेति छलादेर्वास्तवमदुष्टत्वं स्यात् । न स्यात् । न ह्यत्र परन्यायः प्रमाणत्वेनोपन्यस्यते किन्त्वसाधुरयं त्वदीयो न्यायो यतः स्वात्मानमपि व्याहन्तीत्यभिप्राय इति चेत्तुल्यमेतत्प्रकृतेऽपि । न ह्यत्रापि निरग्निकत्वं प्रमाणतयोपन्यस्यतेऽपि तु असाधुरयं त्वदीयो निरग्निकत्वाङ्गीकारो यतः प्रमाणविरुद्धं निर्धूमत्वमप्यङ्गीकारयतीत्यभिप्राय इति । जात्यादौ स्वविरु(द्धताप)द्धापत्तिस्तर्के तु प्रमाणविरुद्धापत्तिरिति वैलक्षण्यमात्रम् । अस्ति च स्वविरुद्धापत्तिरन्ततस्तर्केऽपि । यथोक्तम् । 'व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मत' इति । तदेवं तर्कस्य दूषणानुमानेऽन्तर्भावायुक्तमुक्तमिति ।**

**शे०**— ननु साधारणदूषणोपन्यासेऽपि शङ्का चेत्तर्हि दुष्टत्वबोधनमशक्यमेव स्यादित्यत आह **ततःपरमिति** । तत्र हेतुमाह **व्याघातेति** ॥ **असाधुरिति** । अन्यथा परसिद्ध इत्येव न स्यादिति भावः ॥ **तेनेति** । असाधुनेत्यर्थः ॥ **प्रमाणत्वेनेति** । साधनानुमानतयेत्यर्थः । **स्वात्मानमपि व्याहन्तीति** । स्वव्याहतिमापादयतीत्यर्थः ॥ **प्रमाणतयेति** । साधनानुमानतयेत्यर्थः । **वैलक्षण्यमात्रमिति** । ज्ञाप्याया दुष्टेराभासत्वेनानाभासत्वसम्पादकत्वाभावादिति भावः । असिद्धं च तदित्याह **अस्ति चेति** । अत्रैव सम्मतिमाह **यथोक्तमिति** । अत्र तर्कस्य शङ्कानिवर्तकतायाः शङ्कायाश्च

व्याघातावधित्वस्य चोक्तत्वात्तर्केऽपि स्वव्याहतिर्लभ्यते । अन्यथा तर्केऽपि शङ्कावश्यम्भावात्तर्कस्य तन्निवर्तकत्वोक्त्ययोगादिति भावः ॥ **युक्तमुक्तमिति** । त्रीण्येव प्रमाणानीत्युक्तं युक्तमित्यर्थः ।

प० — **दुष्टिं बोधनीय इति** । दुष्टत्वं बोधनीयस्तद्वादी स्थापनवादिनेत्यर्थः । ततोऽपि **शङ्कायां** किं कार्यमित्यत आह **ततःपरंत्विति** ॥ **प्रमाणत्वेनेति** । स्वाभिमतप्रमेयसाधनत्वेनेत्यर्थः ॥ **प्रकृतेपीति** । तर्केऽपीत्यर्थः । **प्रमाणतया** निर्धूमत्वसाधकतयेत्यर्थः ॥ **स्वविरुद्धतापत्तिरिति** । धूममङ्गीकृत्याऽग्न्यनङ्गीकारे स्वक्रियाविरुद्धता स्यादेव कार्योद्देशेन कारण एव स्वस्य प्रवृत्तिदर्शनात्, धूमवन्ह्योश्च कार्यकारणभावभावादिति भावः । तत इत्युक्तेः तार्किकोक्तिं संवादयति **यथोक्तमिति** । यस्मिन् शङ्क्यमाने व्याघातो भवति तच्छङ्का न कार्येति व्याघातावधिरित्यर्थः । यावत्पर्यन्तं शङ्का तावत्तर्कानुसन्धानमिति शङ्कावधिस्तर्कः । शङ्का च व्याघातावधिरित्यर्थः ॥ ततः स्वविरुद्धेत्युक्तमिति ज्ञेयम् ।

या० — **दुष्टिं बोधनीय इति** । दुष्टत्वं बोधनीय इत्यर्थः । ननु असाधारणदूषणोपन्यासेऽपि पुनः शङ्केव साधारणदूषणोपन्यासेऽपि पुनः शङ्का चेद्दुष्टत्वबोधनमशक्यमित्यत आह **ततः परन्त्विति** ॥ **प्रमाणतयेति** । साधनानुमानतयेत्यर्थः । **यतः स्वात्मानमपीति** । स्वव्याहतिमापादयतीत्यर्थः । आपादनं च परसिद्धन्यायेनैव कार्यमित्यभिप्राय इत्यर्थः । अत एव पूर्वं 'यदि व्याप्त्याद्यङ्गमपेक्ष्यैव प्रसङ्ग' इत्यादिनाऽऽपादनमेवोक्तम् । वक्ष्यति च 'जात्यादौ स्वविरुद्धार्थापत्तिरि'ति । एवं प्रमाणतयोपन्यस्यत इत्यत्रापि साधनानुमानतयेत्यर्थः । अतस्तर्कस्यापि प्रमाणत्वात्कथमेतदिति शङ्काऽनवकाश ॥ **अङ्गीकारयतीति** । आपादयतीत्यर्थः ।

श्री० — **तथा** स्वव्याहत्या । यथा मेयं मानापेक्षमिति केनचिदुक्ते मेयं मानापेक्षं न भवतीति जातिवादिना दूषिते मेयं मानापेक्षं न भवतीत्यस्यैव प्रमेयस्य प्रमाणापेक्षत्वात्स्वव्याहतिर्जातौ द्रष्टव्या । तथा वक्तुर्विवक्षामनपेक्ष्य शाब्दप्रतीतत्वमात्रेण यदि दोषत्वं तर्हि गृष्टिविवक्षया गामानयेत्युक्ते पृथिवीविवक्षया गवा नयनमशक्यमिति छलवादिना दूषिते तद्वाक्यमपि गवा नयनमशक्यमित्येवं छलवाक्येपि दूषणं कर्तुं शक्यमिति ज्ञातव्यम् । **ततःपरं** जात्यादिवादिनः स्वव्याघातप्राप्त्यनन्तरम् । **न शङ्क्यते** जात्यादिवादिना । तत्र छलजातिवादिनोरनेन प्रतिवादिना दुष्टत्वे ज्ञापनीये यः परन्यायः छलजातिवादिनोर्न्यायः प्रतिवादिना दूषयितुमाद्रियते सोऽसाधुरित्यर्थः । **तेन** असाधुना परन्यायेन ॥ **वास्तवमदुष्टत्वमिति** । दुष्टिप्रमाजनकत्वाभावः स्यादित्यर्थः ॥ **न स्यादिति** । दुष्टिप्रमाजनकत्वाभावो न स्यात्। दुष्टिप्रमाजनकत्वमेव स्यादिति यावत् ॥ **इत्यभिप्राय इति** । तथा चासाधुः परन्यायो नास्माभिरुपा-

दीयते । किं नाम तादृशेन परन्यायेन परस्यैव दुष्टिप्रमोत्पत्तिः स्यादित्युच्यत इत्यर्थः । तदुपपादयति **न ह्यत्रेति** । एवं सति तर्केणापि दुष्टिप्रमोत्पत्तिः परस्योच्यमाना युक्तैव । न चैवं दुष्टस्य न्यायस्य कथं प्रमोत्पादकत्वमिति वाच्यम् । कूटलिङ्गे भ्रान्तप्रतारकवाक्ये च दर्शनात् । अस्मन्मतेऽपि स्वयमसाधोरपि तर्कस्य विपर्ययपरतन्त्रत्वाद्युक्तं प्रामाण्यमित्यादिकमस्मदाचार्यकृतटीकायां स्पष्टमुपपादितं द्रष्टव्यम् ॥ **तर्कः शङ्कावधिरिति** । धूमोऽस्तु वन्हिर्माऽस्त्विति शङ्कायां यद्यग्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति तर्कः प्रवर्तत इत्ययं तर्कः शङ्कावधिर्मतः । तत्रापि निरग्निकत्वमस्तु निर्धूमत्वं माऽस्त्वित्यप्रयोजकताशङ्कायां कार्यभूतो धूमो यदाऽङ्गीकृतस्तदा कारणीभूताग्निरप्यङ्गीकृत एव । कारणं विना कार्यायोगात् । अन्यथाऽकारणकार्योत्पत्तिप्रसङ्गात् । तथा धूमार्थं वन्हिमुपादत्ते । तत्कारणं च नेति ब्रूते इति स्वक्रियाव्याहतिरिति । व्याघातावधिराशङ्केत्यर्थः । **उक्तं** प्रमाणत्रित्वम् ।

**च०** — अतस्तर्केऽपीत्युक्तेर्थे नैयायिकवचनं प्रमाणमिति **यथोक्तमिति** । अस्यां कारिकायां तर्कस्य शङ्कानिवृत्त्यौपयिकतायाः, व्याघातस्य च तर्कानुदयप्रयोजकतायाः, अभिहितत्वात् यस्मिन्नाशङ्क्यमाने व्याहतिर्भवति तच्छङ्क्यं नैव कार्येत्यस्य यावच्छङ्का तावत्तर्कानुसन्धानमित्यस्य चालाभादुक्तार्थाधिगतिरित्यवसेयम् ।

---

**सु० — तदनेन प्रबन्धेनोक्तार्थस्य प्रकृतोपयोगं दर्शयन्नपव्याख्यानस्य दूषणान्तरमाह** एवमिति ।

अनु० — एवं संशोधितन्यायसदागमविरोधतः ॥
नानिर्वाच्यमिदं प्रोक्तं मायामात्रपदेन हि ॥

संशोधितः आभासात्सम्यग्विवेचितः । न्यायोऽनुमानम् । **निर्दोषत्वस्यागमपदेनैव लब्धत्वात्सच्छब्देन निरवकाशत्वमुच्यते** । इह सूत्रे । प्रोक्तं **सन्ध्यमिति शेषः** । **तत्र न्यायविरोधोऽनुपदमेव प्रदर्शयिष्यते** । **स्वप्नस्य सत्यतां प्रतिपादयन्सदागमस्तु** भाष्यादावुदाहृतः **प्रसिद्ध एवेति हिशब्देनाह** । **न केवलं प्रमाणाभावान्मायामात्रमितीयं न स्वप्नस्यानिर्वाच्यताप्रतिज्ञा किन्नाम प्रमाणविरोधादपीत्यर्थः** ।

**शे० — प्रकृतोपयोगं दर्शयन्निति** । अनेनेह च तद्व्युत्पादनप्रसङ्गस्योपयोगं लेशतो दर्शयिष्याम इति पूर्वोक्तं विवृतं भवति ॥ **दूषणान्तरमिति** । प्रागुक्तप्रमाणाभावापेक्षया प्रमाणविरोधलक्षणमित्यर्थः । अत एव न केवलमित्यादिना तथैव विभावयिष्यतीति ध्येयम् । 'स्वन्यायैः साधनं कार्यमि'त्यत्रेवात्र न्यायशब्दस्य धर्मिलिङ्गव्याप्तिदृष्टान्तपरतायाः प्रकृते धर्म्यादिविरोधासंभवेनानु-

पपत्तेर्विवक्षितमर्थमाह **न्यायोऽनुमानमिति** ॥ **प्रदर्शयिष्यत इति** । 'विलक्षणं सदसतोरि'त्यादिनेति शेषः ॥ **भाष्यादाविति** । 'मनोगतांश्च संस्कारान्स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयते । यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृतेति' भाष्योदाहृतः । आदिपदेना'नित्यत्व-विकारित्वपारतन्त्र्यादिरूपतः । स्वप्नादिसाम्यं जगतो न तु बोधनिवर्त्यते'ति तत्त्वनिर्णयोदाहृतश्चेत्यर्थः ।

स०— 'स्वन्यायैः साधनं कार्यमि'ति पूर्ववाक्ये न्यायशब्देन लिङ्गधर्मिव्याप्तिदृष्टान्तानां ग्रहणात् । 'एवं संशोधितन्यायसदागमविरोधत' इत्यत्रापि न्यायशब्देन सर्वेषां ग्रहणं प्रतीयते । तदयुक्तम् । धर्मिलिङ्गविरोधादेरभावादित्यत आह **न्यायोनुमानमिति** ।

प०— **भाष्यादाविति** । 'अथ रथान् रथयोगान्पथः सृजते । मनोगतांस्तु संस्कारान्स्वेच्छया परमेश्वर ' इत्यादिरूप उदाहृत इत्यर्थः । आदिपदेन तत्त्वनिर्णयभागवततात्पर्यादिग्रहः । 'अनित्यत्व-विकारित्वपारतन्त्र्यादिरूपतः । स्वप्नादिसाम्यं जगतो न तु बोधनिवर्त्यता' इत्याद्युक्तेरिति ज्ञेयम् ।

या०— **भाष्यादाविति** । 'मनोगतांश्च संस्कारान्स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयते । यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता । अनभिव्यक्तरूपत्वान्नान्य-साधनजं भवेदि'त्यादिर्भाष्योदाहृतः । आदिपदेन 'अनित्यत्वविकारित्वपारतन्त्र्यादिरूपतः । स्वप्नादि-साम्यं जगतो न तु बोधनिवर्त्यता' इत्यादिर्विष्णुतत्त्वनिर्णयादावुदाहृतो ग्राह्यः ।

च०— **भाष्यादाविति** । 'अथ रथान् रथयोगान् पथः सृजते' 'मनोगतांश्च संस्कारानिति श्रुतिस्मृत्यादिरूप इत्यर्थः ।

सु०— **न केवलं प्रमाणव्याहतेयं प्रतिज्ञाऽपि तर्हि स्वव्याहताऽपीत्याह** विलक्षणमिति ।

अनु० — विलक्षणं सदसतोरिति हि व्याहतं स्वतः ।

**अनिर्वाच्यमिति न वाच्यताविरहः परस्याभिमतः स्वक्रियाविरोधापत्तेः । किन्तु सदसतोः सकाशाद्विलक्षणमिति प्रतिज्ञानं च स्वव्याहतम् । सन्न भवतीत्युक्तेऽसत्त्वमेव लब्धम् । पुनरसन्न भवतीत्यभिधाने कथं न स्वव्याहतिः । एवमसन्न भवतीत्यभिहिते सति सत्त्वमेवाभिहि-तम् । पुनः सन्न भवतीत्युक्तौ कुतो न स्वव्याहतिरिति हिशब्दार्थः । तृतीयप्रकाराङ्गीकारिणां न स्वव्याहतिरिति चेन्न । अस्यां प्रतिज्ञायां सिद्धायां तृतीयप्रकारसिद्धिस्तत्सिद्धौ च प्रति-ज्ञासिद्धिरिति परस्पराश्रयदोषात् । सदादिप्रका(र)रैःदुर्निरूपतामात्रं प्रतिज्ञायते न पुनरसदा-**

**दिप्रकारो विधीयतेऽतो न स्वव्याहतिरिति चेन्न। सदादिप्रकारप्रतिषेधोऽसदादिप्रकारविधि-रित्येतयोरनर्थान्तरभावस्योक्तत्वात्। अन्यथैवं मम माता वन्ध्येत्यादावपि स्वव्याहतिः समा-हिता स्यात्।**

शे० — दूषणान्तरपरत्वज्ञापकचशब्दादेरभावान्न तत्परत्वमस्येत्यतोऽपिशब्दाध्याहारं मनसि निधाय तत्परतया व्याचष्टे **न केवलमिति**। एवं न केवलमित्युत्तरग्रन्थस्यापि तात्पर्यं द्रष्टव्यम्॥ **स्वक्रियेति**। (वाच्यताविरहस्यैव वाच्यत्वात्) मूकोऽहमिति वचनप्रतिपाद्यस्य वचननिषेधस्य मूकोऽहमिति वचनक्रियया विरोधवदनिर्वचनीयमिति वचनप्रतिपाद्यस्य निर्वचनविरहस्यानिर्वचनीय-मित्यादिनिरुक्तिक्रियया विरोधादिति भावः। सदसद्वैलक्षण्यमपि न सदसद्रूपयत्किञ्चिद्वस्तुविलक्षणत्वं परस्याभिमतम्। तस्य सदेकस्वभावे जगति तत्त्ववादिनाऽप्यङ्गीकारेण तत्साधने सिद्धसाधनता-प्रसङ्गात्। किन्तु सद्वैलक्षण्यमसद्वैलक्षण्यं चेति धर्मद्वयं वा सद्विलक्षणत्वे सत्यसद्विलक्षणत्वरूपं विशिष्टमेव वा तत्त्वेनाभिसंहितं परस्येत्यभिप्रेत्य तदुभयविषयतया व्याहतत्वप्रतिज्ञां योजयति **सन्ध्यमिति**। मूले हिशब्दस्य वैयर्थ्यमाशङ्क्य प्रतिज्ञातस्य स्वव्याहतत्वस्य मूलेऽनुपपादनप्रसक्तन्यूनता-शङ्कापरिहारार्थत्वात्तस्य न वैयर्थ्यमित्यभिप्रेत्य तत्प्रकारसमर्पकतया हिशब्दं योजयति **सन्न भवतीत्युक्त इति। असत्त्वमेव लब्धं** सन्ध्यमसदित्येव लब्धमित्यर्थः। तत्प्रतिक्षेपरूपस्य तन्निष्ठासाधारण-धर्मानधिकरणतायाः प्रसिद्धत्वादिति भावः। सन्न भवतीत्यस्यासदर्थकत्वोपपादनमात्रेण न व्याहत्यु-पपादनमित्यत आह **पुनरिति॥ सत्त्वमेवाभिहितमिति**। सदित्येवाभिहितमित्यर्थः। अयमाशयः। असन्न भवतीति निषेधविशिष्टसन्निषेधस्य विशेषणीभूतनिषेधविषयकत्वस्य लाघवमूलकसविशेषणेहीति-न्यायसिद्धत्वान्निषेधनिषेधरूपातिशयलाभाय च नञ्द्वयसार्थक्यसंभवान्निषेधनिषेधे सत्त्वविधिरेव सिद्धो भवति। तथा चायं प्रयोगः। सत्, असन्न भवतीति वाक्यलभ्यम्। एकेन नञर्थेन विशिष्टतया तद्वाक्यप्रतिपाद्यत्वे सति नञर्थविशिष्टान्वयितद्वाक्यप्रतिपाद्यनञर्थान्तरवत्त्वात्। यद्वस्तुस्वरूपमेकेन नञर्थेन विशिष्टतया तद्वाक्यप्रतिपाद्यत्वे सति नञर्थविशिष्टान्वयितद्वाक्यप्रतिपाद्यनञर्थान्तरवत् तत्त-ल्लभ्यम्। यथाऽघटो न भवतीति वाक्यलभ्यो घटः। तत्र ह्यघट इति, नञर्थेन निषेधेन विशिष्टो घट एवोच्यते। तद्विषयश्च द्वितीयो निषेधो विशेषणीभूतेन निषेधेनैव संबध्यते विशिष्टविषययो-र्विधिनिषेधयोर्विशेषणोपसंक्रामकत्वस्य 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति,' 'न जीर्णमलवद्वासाः स्नातकः स्यादि'त्यादौ प्रसिद्धत्वात्। ततश्च निषेधनिषेधे घट एवोक्तो भवतीति। असन्न भवतीत्यस्य सदर्थकत्वोपपादनमात्रेण व्याहतेरनुपपादनादाह **पुनरिति**। **तृतीयप्रकारेति**। सदसद्विलक्षणत्वरूप-तृतीयप्रकारेत्यर्थः॥ **अन्यथेति**। मातेत्यस्य पुत्रवत्त्वाभावनिषेधे तात्पर्यम्। न तु पुत्रवत्त्वविधौ।

अतो न पुत्रवत्त्वस्य वन्ध्येत्यनेन निषेधेऽपि स्वव्याहतिः । एवं मूकोऽहमित्यस्यापि वक्तृत्वनिरास एव तात्पर्यम् । न चैतद्वचनकर्तृत्व इति न तत्रापि व्याहतिरिति व्याहतिवार्तावोच्छिद्येतेत्यर्थः ।

स०— **तृतीयप्रकारेति** । सदसद्विलक्षणत्वरूपतृतीयप्रकाराङ्गीकारिणां न स्वाव्याहतिरित्यर्थः ॥ **अस्यां प्रतिज्ञायामिति** ॥ **सदसद्विलक्षणमिति** । सिद्धायां प्रतिज्ञायां सदसद्वैलक्षण्यसिद्धिः तत्सिद्धौ च तादृशतृतीयप्रकाराङ्गीकारेण प्रतिज्ञासिद्धिरित्यन्योन्याश्रयादित्यर्थः ॥ **स्वव्याहतिरिति** । मातेत्यनेन पुत्रवत्वाभावो निषिध्यते, वन्ध्येत्यनेन पुत्रवत्त्वं निषिध्यत इति वक्तुं शक्यमिति मम माता वन्ध्येत्यत्रापि व्याहतिर्न स्यादित्यर्थः ।

प०— ननु परेण स्वप्नस्य मायामात्रमित्यनिर्वाच्यत्वमेव प्रतिज्ञातं न सदसद्वैलक्षण्यम् । अतो न स्वव्याहतेयं प्रतिज्ञेति चेत् । सत्यम् । अनिर्वाच्यशब्देन सदसद्वैलक्षण्यस्यैवाभिप्रेतत्वादिति भावेनाह **अनिर्वाच्यमिति** । स्वक्रियाविरोधापत्तेरित्यर्थः ॥ **तृतीयेति** । सत्त्वमेकःप्रकारः । असत्त्वमपरः । तदुभयवैलक्षण्यं तृतीयः प्रकार इत्युपेत्योक्तं तृतीयप्रकाराङ्गीकारिणामिति ॥ **अनर्थान्तरभावस्योक्तत्वादिति** । 'अन्यत्सदसतोर्विश्वमिति च व्याहतेरमेन्ये'तद्व्याख्यावसरे उक्तत्वादित्यर्थः ॥ **अन्यथेति** । तृतीयप्रकाराङ्गीकारेण समाधाने सति, वन्ध्यात्वप्रतिक्षेपरूपं न मातृत्वं नापि जनकस्त्रीप्रतिक्षेपरूपं वन्ध्यात्वं किन्तु तयोः प्रतिषेधस्तृतीयः प्रकार इत्युपेत्य व्याहतिः समाहिता स्यादित्यर्थः ।

श्री०— **स्वक्रियेति** । वाच्यताविरहस्यैव वाच्यत्वादित्यर्थः ॥ **तत्सिद्धौ चेति** । व्याहत्यभावादिति भावः ॥ **अन्यथेति** । सदादिप्रकारप्रतिषेध एव तात्पर्यं न त्वसदादिविधावित्यङ्गीकृत्य व्याहतिपरिहारे । **मातृत्वम्** अपुत्रत्वाभावः । तथा च मातेत्यस्यापुत्रत्वप्रतिषेध एव तात्पर्यं न तु पुत्रवत्त्वविधौ । अतः पुत्राभावार्थकवन्ध्येत्येनेन न विरोध इति तत्रापि वक्तुं सुवचत्वादिति भावः ।

च०— **वाच्यताविरह इति** । उपसर्गस्य क्रियाविशेषकत्वान्नञः प्रसज्यप्रतिषेधार्थकत्वादिति भावः ॥ **सदसद्वैलक्षण्यमिति** । तत्पदस्य तत्र पारिभाषिकत्वादिति भावः ॥ **अनर्थान्तरस्य** । अर्थान्तराभावस्य ।

सु०— किञ्च सदसद्विलक्षणमित्यत्र सच्छदेन किमबाध्यमभिधीयते उत ब्रह्मस्वरूपम् । वैलक्षण्यमपि तद्धर्मविपरीतधर्म(व)त्त्वं वा तत्प्रतियोगिकान्योन्याभावो वा तत्त्वानधिकरणत्वं वा । सर्वेष्वपि दूषणान्याह प्रतियोगित्वमपीति ।

अनु०— प्रतियोगित्वमप्यस्य ब्रह्मणोऽङ्गीकृतं भवेत् ।

अस्य स्वाप्नप्रपञ्चस्य । स्वाप्नप्रपञ्चं प्रतीति यावत् । अपिपदं दोषान्तरसमुच्चयार्थम् । अस्य निराकारतयाऽङ्गीकृतस्यापि ब्रह्मण इति वा । सदसद्विलक्षणं सन्ध्यमिति प्रतिजानतेति वाक्यशेषः ।

ततश्चायमर्थः । सच्छब्देनाबाध्यमङ्गीकृत्य वैलक्षण्यमपि तद्धर्मविपरीतधर्मत्वमङ्गीक्रियते चेत्तदाऽबाध्यस्यापि धर्मवत्त्वमङ्गीकृतं स्यात् । अबाध्यं च न ब्रह्मणोऽन्यदस्तीति ब्रह्मैव सधर्मकमु(मित्यु)क्तं स्यात् । तथा चापसिद्धान्तः । एतेन सच्छब्दस्य ब्रह्मार्थो, वैलक्षण्यं च तद्धर्मविपर्यय इति पक्षोऽप्यपास्तः ।

अथाबाध्यं सत्, वैलक्षण्यं च तत्प्रतियोगिकोऽन्योन्याभाव इति मतम् । तदा ब्रह्मातिरिक्तस्याबाध्यस्याभावाद्ब्रह्मणः प्रपञ्चं प्रति प्रतियोगित्वलक्षणो धर्मः स्वीकृतो भवेत् । अनेन सच्छब्दो ब्रह्मार्थ इति (इत्यपि) प्रत्युक्तम् ।

अथ सच्छब्दोऽबाध्यार्थो, वैलक्षण्यं च तत्त्वानधिकरणत्वं तर्हि बाध्यमिति प्रतिज्ञार्थः स्यात् । कात्स्न्र्येनानभिव्यक्तत्वं च तदेवेति साध्यहेत्वोर्भेदो न भवेत् । अबाध्यस्य धर्मित्वं चाभ्युपेतं स्यात् । अन्यथा त्वप्रत्ययवैयर्थ्यात् । एतेन ब्रह्मपक्षोऽप्यपोढः ।

न च वाच्यं सकलमप्येतदयुक्तम् । यतोऽत्र मायामात्रत्वमेव प्रतिज्ञातं न तु सदसद्वैलक्षण्यमिति । मायामात्रपदस्य सदसद्वैलक्षण्यार्थतयैव परस्याभिमतत्वात् । तच्च 'किं स्वप्ने पारमार्थिकी सृष्टिराहोस्विन्मायामयी'तिसंशयोपपादनेन 'सन्ध्ये तथारूपैव सृष्टिरि'ति पूर्वपक्षोत्थापनेन 'न परमार्थगन्धोऽप्यस्ती'ति सिद्धान्तोपक्रमेण चावगम्यते न ह्यसत्त्वं स्वीक्रियत इति ।

शे० — **किंश्चेति** । अत्र सर्ववादिसंमत्या सदबाध्यमिति प्रथमस्य, वादिरीत्या च ब्रह्मस्वरूपमिति द्वितीयस्य कल्पस्य प्रसक्तिरिति मन्तव्यम् ॥ **वैलक्षण्यमपीति** । विशब्दस्य विपरीतार्थत्वमाश्रित्य प्रथमस्य, स्वशब्दानुसाराद्द्वितीयस्य, ऋद्धेरभावो व्यृद्धिरित्यत्रेव विशब्दस्याभावार्थत्वाभिप्रायेण तृतीयस्य च प्रसक्तिरिति द्रष्टव्यम् । ब्रह्मण इत्येतावतैव प्रकृतप्रसङ्गसिद्धेरस्येत्यस्य वैयर्थ्यमित्याशङ्क्य ब्रह्मप्रतियोगिकभेदाधिकरणस्य सन्ध्यस्य कथनार्थत्वान्न तदिति भावेन तत्परतयाऽस्येत्येतद्व्याचष्टे ॥ **अस्य स्वाप्नप्रपञ्चस्येति** । नन्वनेन स्वाप्नप्रपञ्चस्य भेदप्रतियोगित्वलाभान्नब्रह्मप्रतियोगिकभेदाधिकरणसमर्पकत्वमस्य संभवतीत्यतस्तत्तात्पर्यमाह **स्वाप्नप्रपञ्चं प्रतीति यावदिति** । स्वाप्नप्रपञ्चनिष्ठभेदं प्रतीति यावदित्यर्थः । तर्ह्यपिपदवैयर्थ्यमित्यत आह **अपिपदमिति** । धर्मवत्त्वलक्षणवस्त्वरूपदोषान्तरोपलक्षणमित्यर्थः । ब्रह्मणः प्रतियोगित्वापादनमात्रेण चारितार्थ्यान्न धर्मिसमर्पणस्यावश्यकतेति पूर्वत्रापरितोषादस्यापि ब्रह्मण इत्यन्व-

मङ्गीकृत्यापेक्षितार्थसमर्पकतया तस्यार्थमाह ॥ **अस्य निराकारतयेति** । साकाङ्क्षताप्रयुक्तवाक्याभासतापरिहारायापेक्षितं शेषमाह ॥ **सदसद्विलक्षणमिति** ।

**ननु** सन्ध्यं सदसद्विलक्षणमिति प्रतिज्ञायां ब्रह्मणः सच्छब्दार्थत्वपक्षे तस्य प्रतियोगित्वप्राप्तावप्यबाध्यस्य तदर्थत्वे तस्यैव प्रतियोगित्वप्राप्त्या ब्रह्मणस्तदप्राप्तेः कथं तदापादनम् । अस्तु वा तत्रापि कथञ्चित्तत्प्राप्तिः । तथाऽपि न तदापादनं संभवति । तस्य प्रतियोगिताया इष्टत्वेनेष्टापादनत्वादित्यतस्तस्यानिष्टापादनत्वमपिशब्दोपलक्षितं दोषान्तरं च दर्शयन्नेव सर्वपक्षदूषणसमर्पकतया वाक्यं योजयति **ततश्चायमिति** ॥ **एतेनेति** । सधर्मत्वप्रयुक्तापसिद्धान्तेनेत्यर्थः ॥ **तद्धर्मविपर्यय इति** । तद्धर्मविपरीतधर्मवत्त्वमित्यर्थः ॥ **प्रपञ्चं प्रतीति** । स्वाप्नप्रपञ्चनिष्ठमेदं प्रतीत्यर्थः ॥ **अनेनेति** । ब्रह्मणः प्रतियोगित्वप्रसङ्गेनेत्यर्थः । सच्छब्दो ब्रह्मार्थ इत्युपलक्षणम् । वैलक्षण्यं तत्प्रतियोगिकोऽन्योन्याभाव इत्यपि द्रष्टव्यम् ॥ **तत्त्वानधिकरणत्वमिति** । अबाध्यत्वानधिकरणत्वमित्यर्थः ॥ **तदेवेति** । देशकालनिमित्तसंपत्तिरबाधश्च कात्स्न्र्यमिति व्याचक्षाणेनाबाधस्य कात्स्न्र्यान्तर्भावाभ्युपगमाद्बाध्यतायां हेतूकृतकात्स्न्र्येनानभिव्यक्तस्वरूपत्वसिद्धिरिति भावः ॥ **धर्मित्वं चेति** । अबाध्यत्वरूपधर्मं प्रतीति शेषः ॥ **अन्यथेति** । अबाध्यत्वं प्रति तस्य धर्मित्वाभाव इत्यर्थः ॥ **त्वप्रत्ययेति** । अबाध्यत्वेतित्वप्रत्यय इत्यर्थः ॥ **एतेनेति** । त्वप्रत्ययवैयर्थ्यान्यथाऽनुपपत्तिप्रयुक्तधर्मित्वापत्तिरूपतृतीयपक्षद्वितीयदूषणनेत्यर्थः ॥ **ब्रह्मपक्ष इति** । सच्छब्दो ब्रह्मार्थ इति पक्ष इत्यर्थः । उपलक्षणमेतत् । वैलक्षण्यं च ब्रह्मत्वानधिकरणत्वमित्यपि द्रष्टव्यम् ।

स० — **अबाध्यस्येति** । अबाध्यत्वं प्रतीति शेषः ॥ **अन्यथेति** । तत्त्वमित्यत्रेति शेषः ।

प० — **दोषान्तरेति** । प्रागुक्तव्याहतितोऽपसिद्धान्तादिरूपदोषान्तरेत्यर्थः । **साध्यहेत्वोरिति** । मायामात्रमिति सिद्धान्तसूत्रे सन्ध्यं मायामात्रं बाध्यमिति साध्यम् । कात्स्न्र्येनानभिव्यक्तस्वरूपत्वादिति हेतुः । देशकालसंपत्तिरबाधः कात्स्न्र्यशब्दार्थः । तेन अनभिव्यक्तस्वरूपत्वात् तदधीनत्वादित्यत्रोक्तेः उभयोर्भेदो न स्यादित्यर्थः ॥ **ब्रह्मपक्षोऽपीति** । सच्छब्दार्थो ब्रह्म वैलक्षण्यं च ब्रह्मत्वानधिकरणत्वं इति पक्षोपीत्यर्थः । निर्धर्मकस्य ब्रह्मत्वरूपधर्माङ्गीकारप्रसक्तेरिति भावः । असत्त्वमेव सिद्धान्त्यभिमतमिति किं न स्यादित्यत आह **न ह्यसत्त्वमिति** । बाध्यत्वादिधर्मान्तरं स्वाप्नस्येति योज्यम् ।

या० **तद्धर्मविपर्यय इति** । तद्धर्मविपरीतधर्मवत्त्वमित्यर्थः ॥ **तदेवेति** । देशकालनिमित्तसम्पत्तिरबाधश्च कात्स्न्र्यं तेनाभिव्यक्तस्वरूपत्वाभावादिति परेण व्याख्यातत्वादिति भावः ॥ **संशयो-**

**पपादनेनेत्यादि** । मायामयशब्दस्य हि पारमार्थिकत्वरूपापरकोटिविरुद्धार्थकत्वं वाच्यम् । अन्यथा तस्य संशयकोटित्वस्यैवासंम्भवात् । एवं च मायामयशब्दार्थे पारमार्थिकत्वरूपसत्त्वानधिकरणत्वं प्राप्तमित्यर्थः । एवं 'तथारूपैव सृष्टिरि'ति पूर्वपक्षोत्थापने सिद्धान्ते मायामयशब्दस्य तद्विरुद्धार्थत्वमावश्यकं 'न परमार्थगन्धोऽपी'ति सिद्धान्तोपक्रमे तु स्पष्टमेव पारमार्थिकत्वरूपसत्त्वानधिकरणत्वमवगम्यत इत्यर्थः । नन्वेतावता सत्त्वानधिकरणत्वरूपं सद्वैलक्षण्यमेव प्राप्तं नासद्वैलक्षण्यमित्यत आह **न ह्यसत्त्वमिति** ॥

**श्री०— निराकारतया** । निर्धर्मकतया ॥ **एतेनेति** । ब्रह्मणः सधर्मकत्वप्राप्त्याऽपसिद्धान्तप्रसङ्गेनेत्यर्थः । **अनेन** ब्रह्मणः प्रतियोगित्वप्राप्त्याऽपसिद्धान्तेन । ब्रह्मार्थ इत्यनन्तरं वैलक्षण्यं च तत्प्रतियोगिकान्योन्याभाव इति शेषः । **धर्मित्वं** धर्मवत्त्वम् । **त्वप्रत्ययेति** । 'तस्य भावस्त्वतलावि'ति भावे त्वप्रत्ययस्मरणादित्यर्थः ॥ **एतेनेति** । ब्रह्मत्वानधिकरणमित्युक्ते निर्धर्मकस्यापि ब्रह्मणो धर्मित्वं धर्मवत्त्वमङ्गीकृतं स्यात् । अन्यथा त्वप्रत्ययवैयर्थ्यादित्यर्थः ॥ **ब्रह्मपक्ष इति** । सच्छब्दो ब्रह्मार्थस्तद्वैलक्षण्यं नाम तत्त्वानधिकरणत्वमिति पक्ष इत्यर्थः ।

**च०— त्वप्रत्ययेति** । 'तस्यभावस्त्वतलावि'ति प्रकृतिजन्यबोधे प्रकारीभूय भासमानार्थे त्वप्रत्ययविधानादिति भावः । **अपोढ इति** । अपोपसृष्टस्य वहेर्निष्ठायां संप्रसारणे ढत्वधत्वष्टुत्वढलोपेषु च निष्पन्नोयं शब्द इति प्रत्याख्यात इत्यर्थः । **गन्धेऽपीति** । 'गन्धो गन्धक आमोदे संबन्धलेशगर्वयोरि'तिवचनाद्गन्धशब्दो लेशवचनः ।

**सु०— स्यादेतत्** । **ब्रह्मणः प्रतियोगित्वाद्यङ्गीकारेऽपि नापसिद्धान्तः । परमार्थतो हि ब्रह्म निर्धर्मकं ब्रूमः । प्रतियोगित्वादिकं चाङ्गीक्रियमाणं मिथ्यैव । न ह्यारोपितेन नीलिम्ना नभसो नीरूपत्वं व्याहन्यत इत्याशंक्याह** मिथ्या चेदिति ।

अनु०— मिथ्या चेत्प्रतियोगित्वं वैलक्षण्यं ततो न हि ।

**प्रतियोगित्वमित्युपलक्षणम् । ब्रह्मणः प्रतियोगित्वादि यदि मिथ्या स्यात्तर्हि** ततो **ब्रह्मणः स्वाप्नप्रपञ्चस्य वैलक्षण्यमुक्तविधं न स्यात् । यस्य यदपेक्षया न प्रतियोगित्वं न ततस्तस्य वैलक्षण्यमपि । यथा तत एव घटात्तस्यैव घटस्येति व्याप्तिसूचनार्थो हिशब्दः । मिथ्याशब्दोऽनिर्वचनीयवचनो नासद्वचन इति तु प्रागनिर्वचनीयसिद्धिदुर्वचनम् ।**

शे०— ननु च पारमर्थिकी सृष्टिरुत मायामयीति संशयोपादानादेस्तन्मिथ्यात्वमात्रविषयकत्वात् । तस्य चासत्त्वादिरूपस्यापि संभवात्कथं मायामात्रपदस्य सदसद्विलक्षणपरत्वमित्यत आह

**न हीति** । अपसिद्धान्तप्रसक्ततयाऽसत्त्वरूपत्वानुपपत्तेर्मायामात्रपदस्य सदसद्विलक्षणत्वरूपमिथ्यात्वपरत्वमेवेति भावः ॥ **उपलक्षणमिति** । लक्षणवत्त्वधर्मित्वयोरुपलक्षणमित्यर्थः ॥ **उक्तविधमिति** । तद्धर्मविपरीतधर्मवत्त्वतत्प्रतियोगिकान्योन्याभाववत्त्वतत्त्वानधिकरणत्वरूपमित्यर्थः । दृष्टान्ताभावेन व्याप्त्यभावात्तर्काभासोऽयमित्याशङ्क्य विशेषव्याप्त्यभावेऽपि सामान्यव्याप्तिसत्त्वान्न तत्प्रसङ्ग इति भावेन हिशब्दार्थमाह **यस्येत्यादिना** । ननु प्रतियोगित्वं मिथ्येति नासत्त्वमभिमतम् । येनाविलक्षणत्वस्य सत्यत्वमापद्येत । किन्नामानिर्वचनीयमित्येव । तत्कथमुक्तप्रसङ्ग इत्यत आह **मिथ्याशब्द इति** ॥ **प्रागनिर्वचनीयसिद्धेरिति** । अन्यथाऽन्योन्याश्रयप्रसक्तेरिति भावः ।

**प०** – तत इत्यनुवादो ब्रह्मण इति व्याख्या ॥ **उक्तविधमिति** । तद्धर्मविपरीतधर्मवत्त्वादिरूपमित्यर्थः । ननु मिथ्या चेत्प्रतियोगित्वमित्यत्र मिथ्याशब्दस्यासत्त्वमर्थो न भवति किंत्वनिर्वचनीयत्वम् । अतो नोक्तदोष इत्यत आह **मिथ्याशब्दोऽनिर्वचनीयवचन इति** ।

**श्री०** — **उक्तविधं** तत्प्रतियोगिकान्योन्याभावादिरूपम् । **यस्य** ब्रह्मणः । **यदपेक्षया** स्वाप्नप्रपञ्चापेक्षया । **ततो** ब्रह्मणः । **तस्य** स्वाप्नप्रपञ्चस्य ।

**सु०— ननु च वैलक्षण्यं न स्यादितीदमिष्टापादनम् । मया तस्यापि मिथ्यात्वाङ्गीकारादित्यत आह** अविलक्षणत्वमिति ।

अनु०— अविलक्षणत्वं सत्यं स्यात्

**यदि स्वाप्नप्रपञ्चस्य ब्रह्मवैलक्षण्यं मृषा स्यात्तदा तदविलक्षणत्वं सत्यं स्यात् । घटादौ तथा दर्शनात् ।**

**यद्यप्यत्र न परेण तथाऽस्त्विति वक्तुं (न) शक्यम् । अपसिद्धान्तापत्तेः स्फुटत्वात् । तथाऽप्यधिकं विवक्षुराह** मिथ्यात्वमिति ।

मिथ्यात्वं ब्रह्मणस्ततः ॥

अनिर्वाच्यस्य सत्त्वं वा

**ततो ब्रह्मस्वप्नयोरवैलक्षण्यस्य सत्यत्वात् । अनिर्वाच्यस्य अनिर्वाच्यतयाऽङ्गीकृतस्य स्वप्नस्य । सत्त्वं, भवेदित्यनुवर्तते । प्रसङ्गस्यानिष्टता(प्र)दर्शनाय स्वप्नस्येति वक्तव्येऽनिर्वाच्यस्येत्युक्तम् । एवं ब्रह्मणः सत्यस्येत्यपि ग्राह्यम् । ब्रह्मस्वप्नयोरवैलक्षण्यस्य सत्यत्वेऽपि कुतो मिथ्यात्वादिप्रसङ्ग इत्यतो वेदमुदितम् । उपलब्धं हि घटस्य घटान्तरेण सालक्षण्यसद्भावे पार्थिवत्वादिसाम्यम् । अत्र सामान्येन विशेषापादनान्नापाद्यापादकयोरभेदः शङ्कनीयः । भावत्वे द्रव्या-**

ग्न्यतमत्वापत्तिरिति यथा । ब्रह्मप्रतियोगिकं स्वप्नस्य सालक्षण्यं सत्यं चेद्ब्रह्मणोऽपि मिथ्यात्वं स्यादित्यसङ्गतम् व्यधिकरणत्वादिति न वाच्यम् । यत्प्रतियोगिकं यत्र सालक्षण्यं स तद्धर्मेति व्याप्तेः सुग्रहत्वात् । यस्तु मन्दमतिस्तं प्रति समानाधिकरणमप्यनिष्टं सुवचनमिति प्रसङ्गान्तरमभिहितम् ।

शे० — **घटादाविति** । यद्यपि यत्र ब्रह्मवैलक्षण्यं मृषा तत्र तद्वैलक्षण्यं सत्यमिति विशेषव्याप्तौ ब्रह्मण एव दृष्टान्तत्वस्य सम्भवान्न सामान्यव्याप्त्याश्रयणं युक्तम् । तथाऽपि धर्मवस्वलक्षणस्य तद्वैलक्षण्यस्य निर्धर्मके ब्रह्मणि परस्यासम्प्रतिपत्त्या ब्रह्मणो दृष्टान्तत्वस्यासम्भवात् । यत्र यद्वैलक्षण्यं मिथ्या तत्र तद्वैलक्षण्यं सत्यमिति सामान्यव्याप्तिमाश्रित्य घटादेर्दृष्टान्तत्वसङ्कीर्तनमित्यवधेयम् । **ग्राह्यमिति** । अग्रहणे यथाश्रुते प्रसङ्गस्यानिष्टता न प्रदर्शिता स्यादिति भावः । ब्रह्मस्वप्नयोः सत्यत्वानिर्वचनीयत्वविशेषणस्य प्रयोजनान्तरमाह **ब्रह्मस्वप्नयोरिति** ॥ **मिथ्यात्वादीति** । ब्रह्मणो मिथ्यात्वप्रसङ्गः स्वप्नस्य सत्यत्वप्रसङ्गश्च कुत इत्यर्थः ॥ **इदमुदितमिति** । अनिर्वाच्यस्येति स्वाप्नानिर्वाच्यत्वं, सत्यस्येति ब्रह्मसत्यत्वं चोदितमित्यर्थः । ततश्च स्वाप्नप्रपञ्चसालक्षण्ये ब्रह्मणो मिथ्यात्वं स्यादित्यत्र स्वाप्नप्रपञ्चस्यानिर्वाच्यत्वं हेतुः । एवं ब्रह्मसालक्षण्ये स्वाप्नप्रपञ्चस्य सत्यत्वं स्यादित्यत्रापि ब्रह्मणः सत्यत्वं हेतुरिति हेतुगर्भमिदं विशेषणद्वयमिदमिति भावः । ननु ब्रह्मस्वप्नयोः सलक्षणत्वेन मिथ्यात्वसत्यत्वापादानमिदमयुक्तम् । सत्यत्वमिथ्यात्वयोरपि तल्लक्षणतयाऽऽपाद्यापादकयोरभेदादित्यतः सालक्षण्यस्य सामान्यत्वात्सत्यत्वादेश्च तद्विशेषत्वात्सामान्यविशेषभावेनापाद्यापादकभावो युक्त इत्याह **अत्रेति** । सामान्यविशेषयोरपाद्यापादकभावे दृष्टान्तमाह **भावत्व इति** । अन्धकारादेरिति शेषः । नन्वनिर्वाच्यस्य सत्त्वं वेत्यतिप्रसङ्गान्तरकथनमनर्थकम् । ब्रह्मणो मिथ्यात्वप्रसङ्गेनैव चारितार्थ्यादित्यतः पूर्वप्रसङ्गसमर्थनपूर्वकं प्रसङ्गान्तरोक्तेः प्रयोजनमाह **ब्रह्मेति** ॥ **प्रसङ्गान्तरमिति** । अनिर्वाच्यस्य सत्त्वं वेत्येवंरूपमित्यर्थः ।

स० — नन्वत्र ब्रह्मस्वप्नयोः यद्यवैलक्षण्यं स्यात्तर्हि ब्रह्मणो मिथ्यात्वं स्यादित्यापादनमयुक्तं अवैलक्ष्यण्यस्य मिथ्यात्वरूपत्वेनापाद्यापादकयोरभेदादित्यत आह **अत्र सामान्येनेति** । वैलक्षण्यं सामान्यम् । मिथ्यात्वं विशेषः ॥ **प्रसङ्गान्तरमिति** । अनिर्वाच्यस्य सत्वे वेति प्रसङ्गान्तरमित्यर्थः ।

प० — नन्वविलक्षणत्वं नाम सालक्षण्यम् । तस्य सत्यत्वे तन्निष्ठमिथ्यात्वसत्यत्वरूपधर्मातरसाम्येनापि भाव्यमिति कुत इत्यतो व्याप्तिबलेनेति भावेना(तामाह,)ह **उपलब्धं हीति** । ननु ब्रह्मस्वप्नयोर्वैलक्षण्यस्य मिथ्यात्वेन अविलक्षणत्वं स्यात् सालक्षण्यं स्यादिति यावत् इति वा, सत्यत्वेन

सालक्षण्यं स्यादिति वाऽऽपादने आपाद्यापादकयोरविशेष इत्यत आह **सामान्येनेति** । सालक्षण्यसामान्येन सत्यत्वमिथ्यात्वरूपसालक्षण्यविशेषापादनादित्यर्थः । यद्वा व्याप्यधर्मसालक्षण्ये तद्व्यापकसत्त्वादिधर्मसाम्यापादनादित्यर्थः । घटस्य घटत्वादिना घटान्तरसालक्षण्ये पार्थिवत्वादिसाम्यस्य दृष्टत्वादिति ज्ञेयम् । अत एवाह **भावत्वे द्रव्याद्यन्यतमत्वापत्तिरिति यथेति** । इति **व्याप्तेः सुग्रहत्वादिति** । यथा घटो घटान्तरेण पार्थिवत्वादिसधर्मेति दृष्टान्तसंभवादिति भावः ॥ **प्रसङ्गान्तरमिति** । अनिर्वाच्यस्य सत्त्वं वेति प्रसङ्गान्तरमित्यर्थः ।

या० — **घटादाविति** । घटे घटविलक्षणत्वस्य मिथ्यात्वे तदविलक्षणत्वस्य सत्यत्वदर्शनादित्यर्थः ॥ **इदमुदितमिति** । स्वाप्नस्यानिर्वाच्यत्वं ब्रह्मणश्च सत्यत्वमुदितमित्यर्थः । तथा च स्वाप्नप्रपञ्चसालक्षण्ये ब्रह्मणो मिथ्यात्वं स्यादित्यत्र स्वाप्नप्रपञ्चस्यानिर्वाच्यत्वं हेतुः । एवं ब्रह्मसालक्षण्ये स्वाप्नप्रपञ्चस्य सत्यत्वं स्यादित्यत्रापि ब्रह्मणः सत्यत्वं हेतुरिति हेतुगर्भविशेषणद्वयमिति भावः । ननु स्वप्नो यदि ब्रह्मसलक्षणः स्यात्तर्हि ब्रह्मधर्मभूतसत्त्ववान्स्यात्, ब्रह्म वा यदि स्वाप्नसलक्षणं तर्हि तद्धर्मभूतानिर्वाच्यत्ववत्स्यादित्यत्रापाद्यापादकयोरभेदः । सत्त्वादेरपि लक्षणत्वादित्यत आह ॥ **अत्र सामान्येनेति** । **विशेषापादनादिति** । अनिर्धारितैकविशेषापादनादित्यर्थः । तेन सामान्येन विशेषापादने कृते सति व्यभिचार इति शङ्काऽनवकाशः । तथा च मिथ्यात्वं ब्रह्मण इत्यादिकं मिथ्यात्वादितल्लक्षणविशेषान्यतमं स्यादिति व्याख्येयमिति भावः । सामान्येनानिर्धारितैकविशेषापादने न कोऽपि दोष इत्यत्र दृष्टान्तमाह । **भावत्व इति** । अन्धकारादेरिति शेषः ॥ **प्रसङ्गान्तरमिति** । 'अनिर्वाच्यस्य सत्त्वं वे'त्येवंरूपमित्यर्थः ।

श्री० — नन्वविलक्षणत्वं सत्यं स्यादित्यत्रेष्टापत्तौ चोदितायां मिथ्यात्वं ब्रह्मण इति दूषणं वाच्यम् । न हि परेणात्रेष्टापत्तिः कर्तुं शक्यते । अत इदं व्यर्थमित्यत आह **अधिकमिति** । अपसिद्धान्तातिरिक्तं स्वप्नस्य ब्रह्मप्रतियोगिकं सालक्षण्यं सत्यं चेद्ब्रह्मणो मिथ्यात्वं स्यादित्यधिकदूषणमित्यर्थः ।

**सु० — स्यादेतत् । ब्रह्मणः प्रतियोगित्वाभावेऽनुयोगित्वं स्यात् । तथा च स्वप्नस्य ततो वैलक्षण्यं न स्यात् । तदभावे च सालक्षण्यापत्त्या ब्रह्मस्वप्नयोर्मिथ्यात्वादि प्रसज्येतेत्युक्तमयुक्तम् । सधर्मके हि वस्तुन्येकस्य धर्मस्याभावेन तद्विरुद्धस्य धर्मस्य भावो भावेन चाभावो(न्यस्य भावो) वक्तुं शक्यते । यथा परिमाणवत्त्वाद्द्रव्यस्य महत्त्वाभावेऽणुत्वस्य अणुत्वभावे वा महत्त्वाभावस्यापादनम् । यथा (वा) वक्तुर्मन्दवचनाभावे तीव्रवचनम् । तद्भावे वा तदभावः शक्यापादनः । ब्रह्म तु सकलधर्मविकलमिति कथं तत्रापादनं प्रतियोगित्वादेरिवा-**

**योगित्वादेरप्यभावात् । न हि परिमाणरहिते गुणादौ वक्तृत्वशून्ये काष्ठे चोक्तप्रसङ्गाव-काशोऽस्ति । तथा स्वप्नेऽपि नोक्तप्रसङ्गावकाशः । स्वयमसत्यस्य वैलक्षण्यवदवैलक्षण्यस्याप्य-भावात् । न हि भ्रान्तसर्पविसर्पणादयः सत्या भवेयुरित्याशङ्क्य ब्रह्मणो निर्धर्मकत्वं दूषयति** यदीत्यादिना ईशतज्ज्ञानेत्यतः **प्राक्तनेन प्रकरणेन ।**

अनु०— यदि धर्मा न केचन ॥
ब्रह्मणो नैव जिज्ञास्यं

**यदि ब्रह्मणः केऽपि धर्मा न स्युस्तर्हि तज्जिज्ञास्यं नैव स्यात् । भवति हि (च) जिज्ञास्यम् । अथातो ब्रह्मजिज्ञासेति वचनात् । अतो न तन्निर्धर्मकमिति ।**

**शे०— ब्रह्मणः प्रतियोगित्वाभाव इति** । यद्यपि 'मिथ्या चेत्प्रतियोगित्वं वैलक्षण्यं ततो न ही'त्यादिना ब्रह्मणः प्रतियोगित्वाभावे स्वप्नस्य ब्रह्मणः सकाशाद्वैलक्षण्यं न स्यादित्येव पूर्वमुक्तम् । न त्वनुयोगित्वापादनद्वारेति नैवमनुवादो युक्तः । तथाऽपि यथाश्रुतेऽप्रयोजकतापरिहारायानुयोगि-त्वापादनस्य मध्ये निवेशो दर्शितः । न चानुयोगित्वापादनेऽप्यप्रयोजकत्वमिति वाच्यम् । स्वप्ननिष्ठ-वैलक्षण्यप्रतियोगित्वानुयोगित्वयोः परस्परविरुद्धत्वेनान्यतरनिषेधस्यान्यतरविधिनान्तरीयकतया ब्रह्मणः प्रति-योगित्वाभावे अनुयोगित्वस्यावश्यकत्वेन तदप्रसङ्गात् ॥ **तथा चेति** । ब्रह्मणोऽनुयोगित्व इत्यर्थः । **ततः** अनु-योगिनो ब्रह्मणः अन्यथा वैलक्षण्यानुयोगिनः स्वप्नस्यापि स्वप्नवैलक्षण्यापातादिति भावः ॥ **भावेन चाभाव इति** । एकस्य धर्मस्य भावेन तद्विरुद्धधर्मस्याभाव इत्यर्थः ॥ **उक्तप्रसङ्गेति** । महत्त्वाभावेऽणुत्वं स्यान्मन्द-वचनाभावे तीव्रवचनं स्यादित्युक्तप्रसङ्गेत्यर्थः ॥ **नोक्तप्रसङ्गेति** । 'अनिर्वाच्यस्य सत्त्वं वे'त्युक्त-प्रसङ्गावकाशो नेत्यर्थः । ननु परस्परविरुद्धयोरेकस्याभावेऽन्यस्य सत्त्वनियमात्कथं परस्परविरुद्धयो-वैलक्षण्यावैलक्षण्ययोरेकत्राभावः स्यादित्यतोऽस्य नियमस्य यत्र धर्मी सत्यस्तत्रैव प्रवृत्तिसिद्ध्या प्रकृते च धर्मिणः स्वप्नस्यासत्त्वान्नात्रोक्तनियमप्रवृत्तिरिति भावेनोक्तं **स्वयमसत्यस्येति** । अत्रैवानुरूपं दृष्टान्तमाह **न हीति** ।

प०— उत्तरमूलग्रन्थं सङ्गमयितुमाह **स्यादेतदित्यादि** । 'मिथ्या चेत्प्रतियोगित्वं वैलक्षण्यं ततो न ह्री'त्युक्त प्रसङ्ग परिष्कृत्यानुवदति **ब्रह्मण इति** । स्वाप्ननिष्ठं वैलक्षण्यं प्रति ब्रह्म । प्रतियोगि । स्वाप्नस्तु अनुयोगी । तत्र वैलक्षण्यं प्रति ब्रह्मणः प्रतियोगित्वाभावे स्वाप्नस्यैवानुयोगित्वं स्यात् । प्रसक्तयोः प्रतियोगित्वानुयोगित्वयोरन्यतराभावेऽन्यतरावश्यंभावादिति भावः । अनुयोगित्वपर्यन्तोपादानं चानु-योगिनः स्वाप्नस्य स्वाप्नाद्वैलक्षण्यं यथा नास्ति तथेति व्याप्तिसूचनायेति भावेनाह **तथा चेति** । अनुयोगित्वे सतीत्यर्थः । स्वाप्नाद्यथा नास्ति तथा **ततो** ब्रह्मतो वैलक्षण्यं न स्यादित्यर्थः ।

या० — 'मिथ्या चेत्प्रतियोगित्वं वैलक्षण्यं ततो न ही'ति यथाश्रुतेऽप्रयोजकताशङ्का-परिहारायाह **अनुयोगित्वमिति** । अत्रानुयोगित्वमधिकरणत्वमेव विवक्षितम् । भासमानवैशिष्ट्यानु-योगित्वं देवदत्तौ इत्यधिकरणेऽपि तत्पदप्रयोगात् । तथा च वैलक्षण्यप्रतियोगित्वानुयोगित्वयोः परस्परविरुद्धत्वेनान्यतरनिषेधस्यान्यतर इधिनान्तरीयकत्वान्नाप्रयोजकतेति भावः ।

च० — तत्रापादनम् अनुयोगित्वापादनम् ।

सु० — निर्धर्मकत्वेऽपि ब्रह्मणः कुतो न जिज्ञास्यतेत्यत आह जिज्ञासेति ।

अनु० — जिज्ञासा धर्मनिर्णयः ।

**विचारो हि जिज्ञासा नाम । स च धर्मस्य निर्णयो धर्मनिर्णयः । व्याप्यधर्मदर्शन-मिति यावत् । शशविषाणवन्निर्धर्मके कथमसौ स्यात् । अङ्गीकारे च व्याघातः कथं न स्यात् ।**

**इतोऽपि न निर्धर्मकस्य जिज्ञास्यतेत्याह** इदमित्थमिति ।

इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनम् ।

**न खल्वनुमानविचारापरपर्यायायाः जिज्ञासाया वस्तुस्वरूपमात्रज्ञानं प्रयोजनम् । तस्य प्रागेव सिद्धत्वात् । असिद्धौ वा(चा)ऽऽश्रयासिद्धस्यानुमानस्यानुत्थानात् । किन्नामेदमिति स्वरूपानुवादेनेत्थमिति व्यापकधर्मविशिष्टधर्मिज्ञानम् । धूमानुमानादौ तथा दर्शनात् । तथा च कथं निर्धर्मकस्य जिज्ञास्यतेति । एतेन स्वप्नेऽपि प्रसङ्गानवकाशो(ऽपि) निरस्तः । तथा सति मायामात्रमित्यनुमानासम्भवात । आरोपिताभ्यां व्याप्यव्यापकाभ्यां तत्सम्भवं इति चेन्न । स्वरूपासिद्धिबाधप्रसङ्गादिति ।**

शे० — **अङ्गीकारे चेति** । निर्धर्मकस्यापि जिज्ञासाङ्गीकार इत्यर्थः । निर्धर्मके धर्मनिर्ण-यरूपविचारस्य व्याहतत्वादिति भावः ॥ **प्रागेवेति** । जिज्ञासातः प्रागेवेत्यर्थः ॥ **एतेनेति** । ब्रह्म तु सकलधर्मविकलमिति कथं तत्रापादनमिति ब्रह्मणि मिथ्यात्वापादनानवकाशनिरासेन स्वप्नेऽपि नोक्तप्रस-ङ्गानवकाश इति प्रागुक्तप्रसङ्गानवकाशो निरस्त इत्यर्थः । **स्वरूपासिद्धीति** । व्याप्यस्यारोपितत्वा-त्स्वरूपासिद्धेर्व्यापकस्यारोपितत्वाद्बाधस्य च प्रसङ्गादित्यर्थः ।

प० — असाविति । जिज्ञासेत्यर्थः ॥ **अंगीकारे चेति** । निर्धर्मके ब्रह्मणि व्याप्यधर्मद-र्शनरूपजिज्ञासांगीकारे चेत्यर्थः ॥ **वस्तुस्वरूपमात्रज्ञानमिति** धर्मिस्वरूपमात्रज्ञानमित्यर्थः **प्रागेवेति** । व्याप्यदर्शनात्प्रागित्यर्थः ॥ **असिद्धौ (वेति) चेति** । उक्तरूपज्ञानस्येति योज्यम् ॥ **एतेनेति** ।

ब्रह्म तु सकलधर्मविकलमिति कथं तत्रापादनमिति ब्रह्मणि मिथ्यात्वापादनानवकाशनिरासेन स्वप्नेपि नोक्तप्रसङ्गावकाश इति प्रागुक्तप्रसङ्गानवकाशो निरस्त इत्यर्थः । ननु जिज्ञास्यतान्यथानुपपत्त्या ब्रह्मणः सधर्मत्वमुपपादितम् । स्वप्नस्य सधर्मत्वे का युक्तिरित्यतः सौत्रप्रतिज्ञाहेत्वोरुक्त्यन्यथानुपपत्तिरेवेति भावेनाह **तथा सतीति** । स्वाप्नस्य निर्धर्मत्व इत्यर्थः ।

श्री० — **असौ** धर्मविचारः । **अङ्गीकारे** निर्धर्मकेऽपि धर्मविचारात्मकजिज्ञासाङ्गीकारे । **स्वप्न इति** । तथा स्वप्नेऽपित्यनेनोक्तः । एतेनेत्युक्तं विशदयति ॥ **तथा सतीति** ।

**च० — शशविषाणवदिति** । 'तत्र तस्येवे'त्यनुशासनात्सप्तम्यन्ताद्वतिः । उपमेये सप्तमीदर्शनात् ।

**सु० — यद्यपि न ब्रह्मनिष्ठेन केनचिद्धर्मेण तत्र धर्मान्तरं विधित्सितं तथाऽपि कस्यचिद्धर्मस्य निवृत्त्या धर्मान्तरस्य भ्रान्तिप्रसक्तस्यान्यत्र सतो निवृत्तिर्ज्ञाप्यते । यथोक्तम् । सिद्धं तु निवर्तकत्वादिति । एवञ्च निर्धर्मकस्य कथं जिज्ञास्यताऽनुपपत्तिरित्यत आह** इत्थम्भावो हीति ।

अनु० — इत्थम्भावो हि धर्मोऽस्य न चेन्न प्रतियोगिता ॥

**अस्य ब्रह्मणः प्रतियोगिता विरोधिता । प्रपञ्चधर्मव्यावृत्तिमत्तेति यावत् । न खलु निराधारया कस्यचिद्धर्मस्य निवृत्त्या निराधारैव धर्मान्तरव्यावृत्तिरनुमातुं शक्या । एवंविधानुमानप्रवृत्तेरलौकिकत्वात् । अतो ब्रह्मनिष्ठयैव ब्रह्मनिष्ठेति वाच्यम् । यदि चास्य धर्मो न स्यान्न तर्हि व्यावृत्तिमत्ताऽपि स्यादिति । इत्थमिति ज्ञानं जिज्ञासाफलं चेद्ब्रह्मणीत्थम्भाव एव स्वीकार्यः स्यात् । तत् किं धर्मेणेति मन्दाशङ्कानिरासा'येत्थम्भावो हि धर्मोऽस्ये'त्यनुवादेन परिहारोऽभिहितः । यद्वाऽस्तु व्यावृत्तिमत्ता ब्रह्मणः किं धर्मेणेत्यत इदमुक्तं । न विधिरूप एव धर्मः किन्नामेत्थम्भावमात्रं प्रकृतमिति । तदनेन ब्रह्म न निर्धर्मकं जिज्ञास्यत्वात्पर्वतवदित्यनुमानं (च) सूचितं भवति ।**

**शे० — कस्यचिद्धर्मस्येति** । व्यापकत्वेनाभिमतस्येत्यर्थः । अन्यत्र सत इत्येतदत्रापि विशेषणतयाऽभिमतम् ॥ **धर्मान्तरस्येति** । व्याप्यतयाऽभिमतस्येत्यर्थः ॥ तथा च व्यापकीभूतस्यान्यधर्मस्य व्यावृत्त्या व्याप्यभूतस्यान्यधर्मस्य निवृत्तिमात्रं बोध्यते । न पुनस्तत्र कोऽपि धर्मो विधीयत इति न व्याघात इति भावः ॥ **सिद्धं त्विति** । मीमांसाशास्त्रस्य ब्रह्मप्रतिपादकत्वं सिद्धम् । तत्र भ्रान्तिप्रसक्तान्यधर्मनिवृत्तिबोधकत्वादित्यर्थः ॥ **इदमुक्तमिति** । 'इत्थम्भावो हि धर्म' इतीदमुक्तमित्यर्थः ॥ **तदनेनेति** । 'यदि धर्मा न केचने'त्यादिनेत्यर्थः ॥ **अनुमानं चेति** ।

प्रमाणान्तरानुग्राहकोऽपि भवतीति पद्धतिस्थापिशब्दबलात्साधनानुमानं विनाऽपि तर्कस्य स्वातन्त्र्येण विप्रतिपन्नप्रमेयसाधकत्वस्य सिद्धत्वात् । प्रकृतेऽपि यदि ब्रह्म निर्धर्मकं स्यात्तर्हि जिज्ञास्यं न स्यादिति प्रागुक्ततर्कमात्रस्यापि विप्रतिपन्नप्रमेयसाधकत्वमित्याशयेनेह टीकायां तत्समुच्चायकश्चशब्दः । क्वचिच्च-शब्दरहित एव पाठः । तत्रानुग्राहकतर्कसमर्थनेनानुग्राह्यमनुमानं सूचितमित्यर्थोऽवधेयः ।

प० — **शंकते यद्यपीति** । व्याप्यदर्शनरूपजिज्ञासाया व्यापकधर्मविधानमिव व्यापकधर्म-निवृत्तिदर्शनेन व्याप्यनिवृत्तिबोधनमपि जिज्ञासाफलम् । तत्राद्यस्यासंभवेपि अन्त्यस्य संभवात् जिज्ञास्यता युक्तेति शंकार्थः ॥ **ज्ञाप्यत इति** । जिज्ञासयेतियोज्यम् ॥ **सिद्धं त्विति** । जिज्ञासायाः निवर्तक-त्वात् धर्मांतरनिवृत्तिबोधकत्वादेव ब्रह्माखंडं सिद्धमेवेत्यर्थः ॥ **अलौकिकत्वादिति** । अव्युत्पन्न-त्वादित्यर्थः । **ब्रह्मनिष्ठयेति** । व्यावृत्त्येत्यनुषज्यते । व्यावृत्तिरिति ज्ञोत्तरत्रेति ज्ञेयम् । 'धर्मोस्य न चेन्न प्रतियोगिते'त्येव वाच्ये 'इत्थंभावोहिधर्म' इति इत्थंभावपदानुवादेन धर्म इति व्याख्यानबी-जमाह **इत्थमिति ज्ञानमिति ॥ इदमुक्तमिति** । इत्थंभावो हीतीदमनूदितमित्यर्थः । तस्य तात्प-र्यमाह **न विधीति** । तथाच व्यावृत्तिमत्ताऽपीत्थंभाव इति भावः ॥ **जिज्ञास्यत्वादिति** । व्याप्य-धर्मधीजन्यव्यापकधर्मधीविषयत्वादित्यर्थः ।

या० — **कस्यचिद्धर्मस्येति** । व्यापकतयाऽभिमतस्येत्यर्थः । अन्यत्र सत इत्येतदत्रापि विशे-षणतया विवक्षितम् ॥ **धर्मान्तरस्येति** । व्याप्यतयाऽभिमतस्येत्यर्थः । अन्यत्र सत इत्युभयत्रोक्त्या नानयोर्धर्मयोर्ब्रह्मनिष्ठत्वं येन तस्य निर्धर्मकत्वापाय इति सूचयति । तथा च व्यापकीभूतस्यान्यधर्मस्य निवृत्त्या व्याप्यभूतस्यान्यधर्मस्य निवृत्तिमात्रं ब्रह्मणि बोध्यते, न तु तत्र कोऽपि धर्मो विधीयत इति भावः ॥ **सिद्धं त्विति** । मीमांसाशास्त्रस्य ब्रह्मप्रतिपादकत्वं सिद्धम् । तत्र भ्रान्तिप्रसक्तान्यधर्मनिवृत्ति-बोधकत्वादित्यर्थः । 'इत्थम्भावो ही'त्येतद्विहाय 'धर्मोऽस्य न चेदि'त्यादिकमेव तावद्व्याख्यातुमाह । **न खल्वित्यादिना** ।

श्री० — **ब्रह्मनिष्ठया** व्यावृत्त्या ब्रह्मनिष्ठैव व्यावृत्तिर्ज्ञापनीयेत्यर्थः ।

च० — **विधित्सितमिति** । विपूर्वस्य दधातेर्विधानार्थत्वात्सनस्तद्विशेषितेच्छार्थकत्वान्निष्ठायाश्च कर्मसाधनत्वाद्विधातुमिच्छाविषयीभूतमित्यर्थः । **यथोक्तमिति** । ब्रह्मणि विपर्यस्यमानान्यधर्मप्रति-योगिकनिवृत्तिप्रत्यायकत्वाद्ब्रह्मप्रतिपादकत्वं सिद्धमित्यर्थः । **निर्धर्मकस्येति** । निरादयः क्रान्ताद्यर्थ इति कात्यायनवचनाद्धर्मापादानकनिष्क्रान्तिविशेषितस्येत्यर्थः । **अलौकिकत्वात्** । परीक्षकपथमतिशयान-त्वात् । **इत्थंभाव एवेति** । 'प्रकारवचने थालि'त्यनुशासनात्प्रकारार्थकथालप्रत्ययादेशभूते'नेदमःस्थ-मि'त्यनुशिष्टधर्मापि प्रकारबोधनादेतादृशप्रकाररूपो धर्म एवेत्यर्थः ।

सु० — इतोऽपि न निर्धर्मकं ब्रह्मेत्याह इत्थम्भावात्मकानिति ।

अनु० — इत्थम्भावात्मकान्धर्मानाहुश्च श्रुतयोखिलाः ।

श्रुतयश्चेति संबन्धः । भव(न्तु स)न्ति सत्यकाम इत्याद्याः श्रुतयो धर्मवादिन्यो न त्वपहतपाप्मेत्याद्यास्तत्कथमखिला इत्युच्यत इत्यत उक्तमित्थम्भावात्मकानिति । अखण्डनिष्ठता तु प्रागेव निराकृता निराकरिष्यते चेति । न केवलं श्रुत्यनुमानविरुद्धं ब्रह्मणो निर्धर्मकत्वं किन्तु सूत्रविरुद्धं चेत्याह अदृश्यत्वादयोऽपीति ।

अदृश्यत्वादयोऽप्यस्य गुणा हि प्रभुणोदिताः ।

प्रभुणाऽपीति संबन्धः । 'अदृश्यत्वादिगुणको धर्मोक्तेरि'त्यादिनेति शेषः । यद्वा न विधिरूप एव धर्मः किन्नामेत्थम्भावमात्रमित्यत्र प्रयोगमनेन प्रमाणयति । अत्रचापिशब्दो न भिन्नक्रमः । गुणशब्दश्च धर्मवचनो न पारिभाषिकवचनः । अदृश्यत्वादीनां तदभावात् ।

नन्वस्माभिर्भावरूपा एव धर्मा ब्रह्मणो नाङ्गीक्रियन्तेऽभावात्मकास्तु स्वीक्रियन्त एव । अतो न सूत्रविरोध इत्यत आह यदीति ।

यदि स्युस्तादृशा धर्माः सर्वज्ञत्वादयो न किम् ।

तादृशा अभावात्मकाः । यथाऽदृश्यत्वाद्याः प्रमाणावगतास्तथा सर्वज्ञत्वादयो भावरूपा अपि यः सर्वज्ञ इत्यादिश्रुतिसिद्धा इति तेऽप्यङ्गीकार्याः । अथ तदङ्गीकारे नेह नानाऽस्तीत्यादिश्रुतिविरोध इत्युच्यते सोऽदृश्यत्वाद्यङ्गीकारेऽपि समानः । अतोऽर्धचर(जर)तीयस्याप्रामाणिकत्वात्सर्वज्ञत्वादयोऽपि स्वीकार्याः । अदृश्यत्वादयोऽपि वा त्याज्या इति ।

शे० — प्रागेवेति । 'न व्यावृत्त्या प्रयोजनमि'त्यादिना जन्माधिकरण इति शेषः ॥ निराकरिष्यते चेति । 'सच्चिदादेरपर्यायसिद्ध्यर्थं मायिनाऽपि ही'त्यादिनाऽहिकुण्डलाधिकरण इति शेषः ॥ तदभावादिति । सामान्यवानसमवायिकारणमित्यादिपारिभाषिकगुणत्वाभावादित्यर्थः ॥ अर्धजरतीयस्येति । केनचित्पाशुपतेन सर्वजरत्या योषितोऽनुपभोग्यत्वात्सर्वतरुण्याश्च वृद्धे मय्यरुचिप्रसङ्गादर्धजरत्यानयने दूतः प्रेषित इति लोकप्रवादोऽर्धजरतीयशब्देनोपमानोच्यते । छप्रत्ययेनोपमेयभावरूपसंबन्ध उच्यते । तथा च तत्प्रवादतुल्यप्रवादोऽर्धजरतीयं तस्येत्यर्थः ।

प० — इत्यत उक्तमिति । सत्यकामस्सत्यसंकल्प इत्यादिश्रुतीनां विधिरूपधर्मवादित्ववत् स आत्मापहतपाप्मा विजरो विमृत्युरित्यादिश्रुतीनामपि निषेधरूपधर्मवादित्वमस्तीति वक्तुं विधिनिषेधरूपधर्मसाधारण्येनेत्थंभावात्मकानित्यवादीत्यर्थः ॥ अखण्डनिष्ठता त्विति । श्रुतीनां लक्षणया निर्धर्मक-

ब्रह्मपरत्वं तु प्रथमाध्याये 'सत्यज्ञानादिकेष्वेवमि'त्यादिना जन्माधिकरणे ईक्षत्यधिकरणादौ तत्र तत्र पूर्वाध्याये च पृथगुपदेशादित्यत्र निराकृता । निराकरिष्यते चोभयव्यपदेशादित्यत्रेत्यर्थः ॥ **इत्थंभावमात्रमिति** । भावाभाव (मात्र) साधारणधर्ममात्रमित्यर्थः । रूपादिचतुर्विंशतिगुणेषु प्रसिद्धगुणपदप्रयोगात् कथमयं प्रयोग इत्थंभावमात्रे प्रमाणमित्यत आह **गुणशब्दश्चेति** । तार्किकपरिभाषितरूपादिधर्मवचनो नेत्यर्थः ॥ **अर्धजरतीयस्येति** । एतदर्थो जिज्ञासानये विवृतः ।

**या० — प्रागेवेति** । जन्माधिकरण इत्यर्थः ॥ **निराकरिष्यत इति** । अहिकुण्डलाधिकरण इति शेषः ।

**श्री० —** ननु ब्रह्मणः सधर्मत्वाङ्गीकारे श्रुतीनामखण्डार्थनिष्ठत्वहानिरित्यत आह ॥ **अखण्डेति** । अदृश्यत्वादेरभावरूपतया तार्किकाद्यभिमतगुणत्वाभावादित्यर्थः ।

**च० — अखण्डार्थनिष्ठता** । निर्विशेषार्थतात्पर्यकता । **प्रागेव** । जन्मादिनय एव । **निराकरिष्यत इति** 'सच्चिदादेरपर्यायसिद्ध्यर्थं मायिनापि ही'त्यादिना । अहिकुण्डलनये प्रतिविधास्यत इत्यर्थः ।

**सु० — स्यादेतत् । सर्वज्ञत्वादयः सर्वनिरूप्यत्वात्सर्वापेक्षाः । वियदादिकं च सर्वं भ्रान्तिसिद्धमसत्यमेव । असत्यसापेक्षास्तु कथं परमार्थतो ब्रह्मधर्मतया स्वीकर्तुं शक्यन्त इत्यत आह** अन्येति ।

**अनु० —** अन्यापेक्षा यदि स्युष्टे

**ते सर्वज्ञत्वादयोऽन्यापेक्षा इति यदि नाङ्गीक्रियन्ते तर्हि तेऽदृश्यत्वादयोऽपि न दृश्यमदृश्यमित्येवमन्यापेक्षास्स्युरिति नाङ्गीकार्या एव । तथा च सूत्रविरोधस्तदवस्थ एव । विषयतयाऽन्यापेक्षत्वं प्रतियोगितयाऽन्यापेक्षत्वमिति (तु) वैषम्यमात्रम् । स्युष्ट इति सुषामादिषु द्रष्टव्यम् ।**

**शे० --** नन्वदृश्यत्वादीनां प्रतियोगितयाऽन्यापेक्षत्वेऽपि विषयतयाऽन्यापेक्षत्वाभावेनानपेक्षत्वसंभवाद्युक्तस्तेषां ब्रह्मधर्मतयाऽङ्गीकार इति चेत् । न ! हन्तैवं सर्वज्ञत्वादीनां विषयतयाऽन्यापेक्षत्वेऽपि प्रतियोगितयाऽन्यानपेक्षत्वेनानपेक्षत्वसंभवात्तेषामपि ब्रह्मधर्मतयाऽङ्गीकर्तव्यतापातात् । न हि नियामकविशेषाभावेऽपि विषयतयाऽन्यापेक्षैवानपेक्षत्वविरोधिनी न पुनः प्रतियोगितयाऽन्यापेक्षाऽपीति नियन्तुं शक्यम् । तथा सति प्रतियोगितयाऽन्यापेक्षैवानपेक्षत्वविरोधिनी न तु विषयतयाऽन्यापेक्षाऽपीति वैपरीत्यापातादित्याशयेनाह **विषयतयेति** । ननु स्युस् इति सकारस्य पदान्ततया नात्रादेशप्रत्यययो-

रित्यनेन षत्वं संभवति । अपदान्तस्य मूर्धन्य इत्यधिकारात् । तेन इण्कवर्गाभ्यां परस्यादेशप्रत्यययोरपदान्तस्यैव सस्य षत्वविधानादित्यतोऽविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्य इति वृत्तिकृतोक्तत्वादस्य सुषामादित्वेन सुषामादिषु सकारस्य षत्वविधायकेन सुषामादिषु चेत्यनेनैव षत्वसिद्धेर्नानुपपत्तिरित्याह **स्युष्ट इतीति** ।

**प०**— ननु विषयतया येऽन्यानपेक्षन्ते त एवान्यापेक्षा इति विवक्षितं नान्ये इत्यत आह **विषयतयेति** । निर्निबंधनमेतद्वैषम्यमिति भावः । ननु स्युष्ट इति कथम् । न च विसर्जनीयस्य स इत्यादेशसकारत्वेनादेशप्रत्यययोः इण्कवर्गाभ्यां परस्यादेशसकारस्य प्रत्ययसकारस्य च षत्वं भवतीति सकारस्य षत्वे ष्टुना ष्टुरिति ष्टुत्वे स्युष्ट इति सिद्धमिति वाच्यम् । अष्टमस्य तृतीयपादे 'अपदान्तस्य मूर्धन्य' इत्यधिकृत्य 'इण्कोः नुम् विसर्जनीयशर्व्यवायेपि आदेशप्रत्यययोरि'ति सूत्रणात् अस्य च पदान्तत्वादित्यत आह **स्युष्ट इति सुषामादिषु द्रष्टव्यमिति** । तत्रैव षत्वप्रकरणे 'सुषामादिषु चे'ति सूत्रे सुषामादिषु शब्देषु सकारस्य मूर्धन्यादेशो भवतीति शोभनं समयस्यासौ सुषामा दुःषामेत्याद्युक्त्वा अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्य इति वृत्त्यादावुक्तत्वात् अयमपि शब्दस्तेन सूत्रेण षत्वं प्राप्तः साधुरेवेति भावः ॥

---

**या०**— नन्वपदान्तस्य मूर्धन्य इत्यधिकारात्स्युष्ट इत्यत्र कथं पदान्तस्य सस्य मूर्धन्यादेश इत्यत आह ॥ **सुषामादिष्विति** । तथा च सुषामादिषु चेति सूत्रोपात्तेषु सुषामादिशब्देष्वयमपि शब्दो विवक्षणीयः । अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्य इति काशिकायामुक्तत्वादिति भावः ।

**श्री०**— **द्रष्टव्यमिति** । तथा च स्युस्त इत्यत्र विसर्जनीयस्य स इति सकारे सस्य षत्वे ष्टुत्वे च सति स्युष्ट इति भवतीति भावः ।

**च०**— **सर्वनिरूप्यत्वात्** सर्वप्रतिपत्त्यधीनप्रतिपत्तिकत्वात् । ननु स्युष्ट इत्यत्र षत्वं दुरुपपादं विसर्जनीयादेशसकारस्य पदान्ततयाष्टमे अपदान्तस्य मूर्धन्य इण्कोरित्यधिकृत्य नुम्विसर्जनीयशर्व्यवायेपि आदेशप्रत्यययोरिति सूत्रविहितषत्वाप्राप्त्ये इग्विन्यासासाङ्गत्यादित्यत आह **स्युष्ट इति** । अविहितलक्षणो मूर्धन्यः सुषामादिषु द्रष्टव्य इति वामनः काशिकायामभ्यधादिति तद्दिशा प्रकृतशब्दस्यापि तद्गणगणितत्वोपगमेन मूर्धन्यस्यादेश सूपपादत्वादिति भावः ।

सु० — किञ्च परापेक्षतया सर्वज्ञत्वादिकं ब्रह्मणोऽनङ्गीकुर्वाणेन सत्ताऽपि नाङ्गीकरणीया । यतः सत्ताऽप्येवं परापेक्षेत्याह सत्त्वैवमिति ।

अनु० — सत्त्वैवं

नास्त्येव स्वरूपातिरिक्ता सत्तेति चेत्स्वरूपसत्ताऽपि न स्यात् । न हि मिथ्याभूतपरापेक्षं सत्यस्वरूपं भवितुमर्हतीति त्वदीयन्यायप्राप्तत्वात् । तथा च सदेव सोम्येत्यादिश्रुतिविरोधः ।

कथं सत्ता परापेक्षेत्यत आह देशेति ।

देशकालगा ।

यतस्तस्मात्सत्त्वैवमिति संबन्धः । ननु देशकालगेति कोऽर्थः । देशकालसम्बद्धेति वा देशकालजन्येति वा । नाद्यः । तावता परापेक्षाऽसिद्धेः । न हि गगनं घटेन संयुक्तमित्येतावता तदपेक्षम् । न द्वितीयः । अनादिनित्यत्वादिति चेदेवं तर्हि सार्वज्ञादेरपि नान्यापे-(क्षा)क्षता । न हि सर्वेण सह विषयविषयिभावमात्रेण सर्वापेक्षत्वं सौरप्रकाशस्यापि घटापेक्षताप्रसङ्गात् । न (हि स) च सर्वेण जन्यत्वम् । नित्यसिद्धत्वात् ।

शे० — त्वदीयन्यायेति । सर्वज्ञत्वादौ व्युत्पादितत्वदीयन्यायेत्यर्थः । इष्टापत्तिं परिहरति । तथा चेति ॥ तावतेति । देशकालरूपपरसम्बन्धमात्रेणेत्यर्थः । परसम्बन्धमात्रेणैव परापेक्षत्वमस्त्वित्यतोऽतिप्रसङ्गान्नैवमित्यभिप्रायेण तमाह न हीति ।

प० — स्वरूपसत्तापि न स्यादिति । देशकालरूपान्यापेक्षत्वादिति भावः । अन्यापेक्षत्वेऽपि स्वरूपसत्ताया अभाव एव कुत इत्यत आह न हि मिथ्याभूतेति ।

सु० — ननूत्पत्तौ सार्वज्ञादेः सर्वात्मापेक्षताभावेऽपि ज्ञप्तौ साऽस्त्येव । विदित एव सर्वस्मिन्सार्वज्ञादि विज्ञायते नाविदित इति । एवं तर्हि सत्ताऽपि मा भूदुत्पत्तौ परापेक्षा । ज्ञप्तौ तु भवत्येवेत्याह देशेति ।

अनु० — देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते ।

देशकालानपेक्षा देशकालप्रतीत्यनपेक्षा । देशकालप्रतीत्यपेक्षैव दृश्यत इत्यन्वयोऽपि द्रष्टव्यः । यदि कश्चिद्वैयात्यात्क्वचिद्देशकालप्रतीत्यनपेक्षाऽपि सत्ता दृश्यत इति ब्रूयात्तदा व्याघातः स्यात् । देशकालव्यतिरेकेण (क्वचित्सत्ताश) किंशब्दार्थानिर्वचनात् । सत्ताप्रतीतावर्जनीयतया देशकालौ दृश्येते न तु तदपेक्षेति चेन्न । अभूद्भवति भविष्यतीत्यादिप्रतीतिमनधूय

**सत्ताया अप्रतिभासात् । नियतविशिष्टप्रतीतिकेऽ(तदन)नपेक्षायां न कुत्राप्यपेक्षा स्यात् । तदिदमुक्तं** क्वापीति ।

**शे०— अन्वयोऽपीति ।** व्यतिरेकवदन्वयस्यापि कारणताग्राहकत्वादिति भावः । टीकायां किंशब्दार्थानिर्वचनादिति पाठः स्वरसः । किंशब्दप्रकृतिककचिच्छब्दार्थानिर्वचनादित्यर्थः । सत्ताशब्दार्थानिर्वचनादिति क्वाचित्कपाठेऽप्ययमेवार्थो विवक्षितः ॥ **नियतविशिष्टेति ।** नियमतो देशकालादिविशिष्टप्रतीतिके सत्तारूपे वस्तुनि देशाद्यनपेक्षत्वाङ्गीकार इत्यर्थः ॥ **न कुत्रापीति ।** सर्वज्ञत्वादिप्रतीतावपि सर्वापेक्षा न स्यात् । तथा चानपेक्षत्वात्सर्वज्ञत्वादीनां ब्रह्मधर्मता स्यादिति भावः ।

**स०— किंशब्दार्थेति ।** कचिदपि शब्दार्थ इत्यर्थः ॥ **नियतविशिष्टप्रतीतिक इति ।** नियतदेशकालानुगता विशिष्टा प्रतीतिर्यस्य एवंभूतसत्तादिरूपे वस्तुनि देशाद्यनपेक्षाङ्गीकारे कुत्रापि देशाद्यपेक्षा न स्यादित्यर्थः ।

**प०— देशकालव्यतिरेकेण(सच्छ)तच्छब्दार्थानिर्वचनादिति ।** त्रिकालसर्वदेशीयनिषेधाप्रतियोगित्वरूपत्वात्सत्ताया इति भावः ॥ **ब्रह्मणो निर्धर्मकत्वे जिज्ञास्यत्वाभावोक्तिः ॥**

**या०— किंशब्दार्थानिर्वचनादिति ।** किंशब्दप्रकृतिककचिच्छब्दार्थानिर्वचनादित्यर्थः ।

**श्री०— प्रतीतिं** कालसंबद्धाम् ॥ **अप्रतिभासादिति ।** सत्तेत्येवंरूपेणेत्यर्थः ।

**च०— किंशब्दार्थानिर्वचनादिति ।** किमः क्वेत्यनुशिष्टकिंशब्दप्रकृतिककचिच्छब्दार्थानिर्वचनादित्यर्थः ।

**सु०— न केवलं ब्रह्मणो निर्धर्मकत्वे मीमांसाविषयत्वानुपपत्तिः किन्नाम शास्त्रयोनित्वादित्युक्तं शास्त्रविषयत्वमप्यनुपपन्नं स्यादित्याह** सर्वेति ।

**अनु०—** सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते ।

**किमाक्षेपे । स्वरूपं तावत्स्वप्रकाशत्वान्न शास्त्रप्रतिपाद्यम् । संसर्गभेदयोरेव वाक्यार्थत्वाच्च । धर्मास्तु न सन्ति । येन संसर्गभेदौ शास्त्रविषयौ स्याताम् । तस्मादस्य ब्रह्मणः किं शास्त्रेणाधिगम्यते न स्वरूपं नापि धर्मसंसर्गादीति ।**

**शे०— किमाक्षेप इति ।** न किमपीत्यर्थः । ननु सर्वधर्मोज्झितत्वाद्ब्रह्मणो धर्मसंसर्गमात्रस्य शास्त्रविषयत्वासंभवेऽपि स्वरूपस्यैव तद्विषयत्वोपपत्तेः कथमाक्षेप इत्यतोऽत्र किं स्वरूपमात्रं शास्त्रप्रतिपाद्यतया परस्याभिमतं किंवा धर्मसंसर्गादीति विकल्प्य बहिरेवाद्यपक्षदूषणं चाभिप्रेत्य द्वितीय-

पक्षदूषणपरतया मूलस्य प्रवृत्तत्वान्नानुपपत्तिरित्यभिप्रेत्य किंशब्दोक्तमाक्षेपं तावदुपपादयति **स्वरूपं तावदिति ।** प्रकाशमानार्थप्रतिपादकत्वे शास्त्रस्याशास्त्रत्वापत्तेरिति भावः । यद्वा स्वप्रकाशत्वमवेद्यत्वं परस्याभिमतम् । तथा चावेद्यस्य शास्त्रप्रतिपाद्यत्ववचनं स्वव्याहतम् । न च फलाव्याप्यत्वमवेद्यत्वं न तु वृत्त्यव्याप्यत्वमिति न व्याघात इति वाच्यम् । त्वदभ्युपेतफलस्याप्रामाणिकत्वेन घटादेरप्येवं सति तत्त्वापातादित्याशयात् ॥ **संसर्गभेदयोरेवेति** । तदन्यतरस्यैवेत्यर्थः । अत्र भेदशब्दो व्यवच्छेद-परः । व्यवच्छेदवाक्यार्थरुचीनामित्यन्यत्र टीकाकारीयव्यवहारात् । ननु सर्वत्र वाक्ये पदार्थानां संसर्गस्यैवोत्सर्गतः प्रतीयमानत्वादस्तु तस्य वाक्यार्थत्वम् । न तु व्यवच्छेदात्मनो भेदस्य तत्संभवति । तस्य सर्वत्र वाक्ये उत्सर्गतः प्रतीत्यसिद्धेः । किन्तु क्वचिदेव सामान्यश्रुतौ विशेषणवशाद्व्यवच्छेदः प्रतीयते । यथेन्द्रियार्थसन्निकर्षोत्पन्नज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणेऽसति ज्ञानग्रहणे सामान्यश्रुतित्वा-ज्ज्ञानस्य सुखादेश्च प्राप्तौ क्रियमाणस्य ज्ञानग्रहणस्य प्राप्तज्ञानविधायकत्वानुपपत्त्या तेन सुखादि-व्यवच्छेदमात्रप्रतीतिस्तत्रापि चार्थाद्गम्यमानतया न व्यवच्छेदस्य वाक्यार्थत्वं यश्चार्थादर्थो न स चोदनार्थ इति न्यायात् । अतः संसर्गस्यैव वाक्यार्थत्वाद्भेदग्रहणमनर्थकम् । अत एव न्यायामृते । असंसर्गत्वा-दित्येव हेतूकृतमिति चेत् । सत्यमेवं वस्तुगतिः । तथाऽपि दिङ्नागप्रभृतिभिर्वादिभिस्तादृशस्यापि भेदस्य वाक्यार्थतयाऽभ्युपगमात् । तन्मतमाश्रित्येह टीकायां भेदग्रहणं कृतमित्यदोषः । एतच्च दिङ्नागमतं 'साध्यनिर्देशः प्रतिज्ञे'ति न्यायसूत्रीयवार्तिकन्यायवाचस्पतितत्त्वबोधादिषु स्पष्टमुपन्य-स्योक्तरीत्या निराकृतम् । गुरवस्तु संसर्गवद्भेदस्यापि वाक्यार्थत्वं स्वसिद्धान्त एव । तथा हि । भेद एव तावत्सर्ववेदार्थः । 'सर्वे वेदा हरेर्भेदं सर्वस्माज्ज्ञापयन्तीति' वचनात् । तथाऽप्यस्त्यत्र विशेषः । भेदशब्दो भावसाधनः करणसाधनश्च । तत्र भेदनं भेद इति भावसाधनेनान्योन्याभावो व्यावृत्तिरूपोऽभिधीयते । भिद्यतेऽनेनेति करणसाधनेन तु स्वातन्त्र्यादिरूपोऽसाधारणधर्मः कथ्यते । ततश्च स्वातन्त्र्यादिरूपासाधारणधर्मप्रतिपादको वेदभागो धर्मधर्मिसंसर्गं प्रतिपादयतीति तत्र संसर्ग एव वाक्यार्थः । अपरस्तु नेति नेतीत्यादिर्वेदभागो व्यावृत्तिं प्रतिपादयतीति तत्र व्यावृत्तिरूपोऽन्योन्या-भाव एव वाक्यार्थः । 'सर्वव्यावृत्ततामेव नेति नेत्यादिका श्रुतिः । विष्णोरतो वदेदन्या अपि सर्वा न संशय' इत्यादिप्रमाणानुसारेणोक्तार्थस्यान्यत्र व्यवस्थापितत्वात । तेन वेदार्थस्य संसर्ग-भेदान्यतरत्वनियमस्थित्या ब्रह्मणो वेदवाक्यार्थत्वं वदता परेण संसर्गभेदान्यतरत्वं वक्तव्यम् । न च तद्वक्तुं शक्यम् । तस्य संसर्गरूपताया वा व्यावृत्तिरूपताया वा परेणानभ्युपगमात् । अतो न तस्य वेदवाक्यार्थत्वमिति प्रकृतवेदवाक्यार्थत्वाभिप्रायेण संसर्गभेदयोरुभयोरप्युपादानमिह टीकायां कृतम् । न्यायामृते तु संसर्गग्रहणस्य भेदोपलक्षणताया अभिप्रेतत्वादविरोध इति वर्णयाम्बभूवुः । प्राञ्चस्तु

वाक्यार्थः संसर्गो, भेदो भेदसंसर्गो वा । तत्र राज्ञः पुरुष इत्यनेन स्वविशेषस्य स्वामिविशेषेण स्वामिविशेषस्य वा स्वविशेषेण यः संबन्धः स उच्यते । स्वान्तरेभ्यः स्वामिविशेषस्य वा स्वाम्यन्तरेभ्यः स्वविशेषस्य वा या व्यावृत्तिः साऽर्थसिद्धैव । न ह्यव्यावर्तमानयोः संबन्ध्यन्तरेभ्यः संसर्गो घटत इति संसर्गं वाक्यार्थं मन्यमानानां मतम् । भेदं वाक्यार्थं मन्यमानानां तूक्तरूपा व्यावृत्तिरेव सर्वत्रोच्यते । संसर्गस्त्वर्थतः सिध्यति । न ह्यन्यस्माद्व्यावृत्तस्य संबन्ध्यन्तरेणासंबद्धस्यावस्थानं संभवतीति मतम् । उभयं वाक्यार्थं मन्यमानानां तु संसर्गभेदावुभावपि सर्वत्राभिधीयेते इति मतम् । तदेतस्य मतत्रयस्यानुवादोऽयं टीकायां **संसर्गभेदयोरेवेति** । अत्र च प्रत्येकविवक्षया विशकलितयोर्द्वयोरिव, समुदायैकविवक्षया मिलितयोर्द्वयोरपि ग्रहणं भवति । उपक्रमोपसंहारावित्यत्र प्रत्येकविवक्षया विशकलितयोर्द्वयोरिव, समुदायविवक्षया तदैकरूप्यस्यापि ग्रहणदर्शनादित्यभिप्राय इत्याहुः । अस्तु तर्हि धर्मसंसर्गादिकमेव शास्त्रप्रतिपाद्यमिति द्वितीयः पक्षः । तस्यास्वप्रकाशत्वेन संसर्गभेदयोरन्यतरत्वेन च शास्त्रप्रतिपाद्यत्वसंभवादित्यतः सत्सु धर्मेषु तत्संसर्गप्रतिपादकत्वं शास्त्रस्य स्यात् । न च ब्रह्मणो धर्माः सन्ति तत्कथं शास्त्रस्य धर्मसंसर्गप्रतिपादकत्वमित्याह **धर्मास्त्विति** ।

**प०— संसर्गभेदयोरेवेति** । प्रकृष्टप्रकाशश्चन्द्रमा इत्यादिवाक्येषु प्रकृष्टप्रकाशत्वाद्यसाधारणधर्मसंसर्गो नक्षत्राद्यप्रकृष्टप्रकाशतो व्यावृत्तिरूपो भेदो बोध्यते यथा तथा 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यतो वा इमानि भूतानि जायन्त' इत्यादावपि तावेवार्थौ वक्तव्याविति तयोरभावे किं शास्त्रेण बोध्यमित्यर्थः ।

**या०— संसर्गभेदयोरेवेति** । पदार्थयोर्गुणप्रधानभावेन संबन्धः संसर्गः । अतद्व्यावृत्तिर्भेदः । अत्र हि मतत्रयमस्ति । संसर्ग एव हि वाक्यार्थः । अतद्व्यावृत्तिरर्थलभ्येति कस्यचिन्मतम् । अतद्व्यावृत्तिरेव सर्वत्र वाक्यार्थः । संसर्गस्त्वार्थिक इत्यपरस्य । संसर्गभेदावुभावपि वाक्यार्थभूतावित्यन्यस्येति । तत्र तृतीयं पक्षमाश्रित्येदमुदितमिति ज्ञातव्यम् ॥ **येनेति** । धर्मसद्भावे हि तन्निरूपितसंसर्गस्तद्वदितरभेदश्च वाक्यप्रतिपाद्यौ स्यातामित्यर्थः ।

**च०— स्वप्रकाशत्वात्** परावेद्यत्वात् । **संसर्गभेदयोरेवेति** । अत्र व्याचक्षाणाः शब्दबोधे समभिव्याहृतैकपदार्थे तादृशापरपदार्थसंसर्गस्य संसर्गमर्यादया भाननियमवद्भेदपदाभिधेयव्यवच्छेदभाननियमाभावेनेन्द्रियार्थसन्निकर्षजन्यज्ञानं प्रत्यक्षमिति लक्षणवाक्ये तादृशजन्यत्वरूपसामान्यधर्मावच्छिन्नबोधकपदघटिते ज्ञानपदानुपादाने ज्ञानसुखादीनां तद्धर्मावच्छिन्नानां प्राप्तौ ज्ञानपदोपादानस्य प्राप्तज्ञानविधायकत्वानुपपत्त्या सुखादिव्यवच्छेदमात्रप्रतीतेश्च क्वाचित्कातद्व्यावर्तकज्ञानत्वान्वयबोधोदीच्याया ज्ञानपदाधीनत्वायोगेन भेदस्य वाक्यार्थताविरहात्संसर्गपदमेवोपादेयमिति पदान्तरोपादानमनर्थ-

कमित्याशङ्कमानाः करणसाधनघञन्तभेदपदे शब्दोपस्थाप्यस्वातन्त्र्यादिधर्मप्रत्यायकत्वेन संसर्गस्यैव वाक्यार्थत्वेपि भावसाधनघञन्तभेदपदोपस्थाप्यव्यावृत्तेरपि स एष नेति नेतीत्यादिवेदभागबोध्यत्वात् 'सर्वव्यावृत्तनामेव नेति नेत्यादिका श्रुतिरि'ति स्मृतेरिति समादधति। प्रकृष्टप्रकाशश्चन्द्र इत्यादि वाक्येषु प्रकृष्टप्रकाशत्वाद्यसाधारणधर्मसंसर्गो नक्षत्राद्यप्रकृष्टतो व्यावृत्तिरूपो भेदो बोध्यते यथा तथा 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यतो वा इमानि भूतानि जायन्त' इत्यादावपि तावेवार्थौ वक्तव्याविति तयोरभावे किं शास्त्रेण बोध्यमित्यर्थ इत्यपि निबन्धान्तरीयो विन्यासः। अत्र हि मतत्रयमस्ति संसर्ग एव वाक्यार्थो तद्व्यावृत्तिरर्थलभ्येति कस्यचिन्मतम्। अतद्व्यावृत्तिरेव सर्वत्र वाक्यार्थः संसर्गस्त्वार्थिक इत्यपरस्य। संसर्गभेदा उभावपि वाक्यार्थभूतावित्यन्यस्येति। तत्र तृतीयं पक्षमाश्रित्येदमुदितमिति ज्ञातव्यमित्यपि न्यभांत्सुः। भेदशब्दस्य कर्मसाधनघञन्ततया विशेषपदपर्यायतया संसर्गभेदयोः संसर्गविशेषयोरभेदसंसर्गभेदसंसर्गरूपयोरेव वाक्यार्थत्वादित्यर्थः। अभेदः प्रातिपदिकार्थे स्वसमान-विभक्तिकेन स्वाव्यवहितं पूर्ववर्तिना वा पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते। तदतिरिक्ताधाराधेय-प्रतियोग्यनुयोगिविषयविषयिभावादिरूपभेदसंसर्गस्तु राज्ञः पुरुषो ग्रामं गच्छतीत्यादावसमानविभक्तिक-विशेष्यविशेषणवाचकपदसमभिव्याहारस्थले विभक्त्यर्थस्वामिताकर्मत्वादेः पुरुषग्रामादौ अत एव संसर्गस्यैव वाक्यार्थत्वादितिस्थानान्तरीयसौधवचनैककण्ठ्य, असंसर्गरूपत्वादिति न्यायामृते हेतूकरणं च सङ्गच्छत इत्यपि कतिपयेषामर्थापनं विभावनीयम्।

**सु० — इत्थम्भावात्मकानिति ब्रह्मणो निर्धर्मकत्वे श्रुतिविरोधोऽभिहितः। साम्प्रतं तु श्रुतीनां निर्विषयत्वापत्त्यादिकमिति महान्भेदः। ब्रह्मणि परमार्थतो धर्माभावेऽपि मिथ्याभूता धर्माः शास्त्रस्य विषया भविष्यन्तीत्यत आह** मिथ्येति।

**अनु०** — मिथ्याधर्मविधातुश्च वेदस्यैवाप्रमाणता।

**चस्त्वर्थः। अप्रमाणतैवेति संबन्धः। वेदान्तानां(दानां) विषयाभावेन प्रसक्तम-बोधकत्वलक्षणमप्रामाण्यं परिहर्तुमङ्गीकृतं मिथ्याधर्मप्रतिपादकत्वं विपरीतबोधकत्वलक्षणमप्रामा-ण्यमेवापादयति। इयांस्तु विशेषः। अबोधकानामुपेक्षणीयतैव केवलं विपरीतबोधकानां तु हेयता स्यादिति।**

**शे०** — निर्विषयत्वापत्त्यादिकमित्यादिपदेनाबोधकत्वोपेक्षणीयत्वयोः सङ्ग्रहः। अप्रमाणतैवे-त्येवशब्दार्थमाह **वेदान्तानामिति** ॥ **इयांस्त्विति**। अनेन मूले तुशब्दो विशेषार्थ इत्युक्तं भवति।

प० — साम्प्रतमित्यनन्तरं ब्रह्मणो निर्धर्मकत्व इत्यनुषज्यते **निर्विषयत्वापत्त्यादिकमिति** । आदिपदेन वक्ष्यमाणविपरीतबोधकत्वादिग्रहः । अतो न पूर्वोत्तरग्रन्थयोः पौनरुक्त्यमिति भावः । एवशब्दान्वयमाह **अप्रमाणतैवेति संबन्ध इति** ।

**या०** — ननु सर्वधर्मोज्झितस्येत्यत्र विपर्ययपर्यवसाने सधर्मकमेव शास्त्रप्रतिपाद्यमित्यायातम् । इदं 'चेत्थम्भावात्मकान्धर्मानि'त्यत्रैवोक्तमिति पौनरुक्त्यमित्यत आह **इत्थम्भावात्मकानितीत्यादिना** । पूर्वं श्रुतिविरोधे तात्पर्यम् । अत्र तु प्रतिकूलतर्कपराहताविति महान्भेदोऽतो न पौनरुक्त्यमित्यर्थः । आदिपदेनाबोधकत्वोपेक्षणीयत्वयोः संग्रहः ।

च० — **साम्प्रतम्** इत्यतः परं निर्धर्मकत्व इत्यनुषञ्जनीयम् ।

सु० — **भवेदप्रमाणं वेदो यदि मिथ्याधर्मान्प्रतिपाद्यैवोपरमेत् । न चैवं किन्नाम नेह नानाऽस्तीत्यादिना (तु तत्प्रति) प्रतिषेधति चेत्यत आह** आप्राप्तामिति ।

**अनु०** — आप्राप्तां भ्रान्तिमापाद्य किं वेदो मानतां व्रजेत् ।

**आपाद्येत्यतःपरं निषेधं कुर्वन्निति शेषः । 'यः सर्वज्ञः सर्ववित्' । 'य आत्माऽपहतपाप्मे'त्यादिना वेदो यदि भ्रान्तिं ब्रह्मणि मिथ्याभूतसार्वज्ञ्यादिप्रतीतिमुत्पाद्य स्वयमेव नेह नानाऽस्तीत्यादिना तत्प्रतिषेधं कुर्यात्तदा मानतां व्रजेत्किं । परस्परविरुद्धत्वेनोन्मत्तवचनवदप्रामाण्य(प्रमाण)मेव स्यात् । नन्वेतदनाकलितपराभिसन्धेरसदनुवादेनोक्तम् । न हि वयं वेदो धर्मान्विधाय स्वयमेव निषेधतीति ब्रूमः । किन्त्वनूद्य निषेधतीति । तथा च कथमप्रामाण्यापत्तिरित्यत उक्तं** आप्राप्तामिति । **अनुवादो ह्यन्यतः प्राप्तस्य भवति । न च ब्रह्मणि मिथ्याभूतधर्मप्रतीतिः केनचित्प्राप्ता । ततोऽनुवादासम्भवात् विधायैव प्रतिषेधतीति वक्तव्ये पूर्वोक्तो दोष इति ।**

**शे०** — **पूर्वोक्तो दोष इति** । परस्परविरुद्धत्वेनोन्मत्तवचनवदप्रमाणमेव स्यादिति पूर्वोक्तो दोष इत्यर्थः ।

प० — शङ्कते भवेदिति ॥ **पूर्वोक्त इति** । परस्परविरुद्धत्वेनेत्यादिनोक्तो दोष इत्यर्थः ।

**श्री०** — **विधायेत्यादि** । येनोन्मत्तवचनवदप्रमाणं स्यादित्यर्थः ।

**च०** — **अनाकलितपराभिसन्धेः** अनभिगतपराऽऽशयस्य ।

**सु०— कथमप्राप्तिर्ब्रह्मधर्माणामित्यत आह न हीति ।**

अनु०— न हि वेदं विना ब्रह्म वेद्यं धर्माश्च तद्गताः ।

**वेदेन विना ब्रह्म न वेद्यमिति तावत्समर्थितं प्रथमाध्याये । तथा च कथं तद्गतत्वेन सार्वज्ञ्यादयोऽन्यतो वेद्या भवेयुः । वेदविदितेऽपि ब्रह्मण्यनुमानेन सार्वज्ञ्यादिप्रतीतिरिति चेन्न । तस्या विनाऽपि वैदिकेन प्रतिषेधेन प्रत्यनुमाने(नादि)नैवापास्तत्वात् । अन्यथाऽतिप्रसङ्गात् ।**

**शे०— प्रथमाध्याय इति ।** शास्त्रयोनित्वादित्यादिसूत्रेष्वित्यर्थः ॥ **अनुमानेनेति ।** क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदित्याद्यनुमानेनेत्यर्थः । तदुपादानादिगोचरापरोक्षज्ञानचिकीर्षाकृतिमत एव कर्तृत्वेन सार्वज्ञ्यादेः कर्तृशरीरान्तर्भूतत्वादिति भावः । विमतं विकर्तृकमस्मत्सम्मतकर्तृरहितत्वादित्याद्यनुमानेनैवानुमानप्राप्तसार्वज्ञ्यादिनिषेधसिद्धेर्वैदिकनिषेधवैयर्थ्यमपरिहार्यमिति समाधत्ते **तस्या इति । अन्यथेति ।** यः सर्वज्ञ इत्यादिश्रुतेर्नेह नानाऽस्ति किञ्चनेति निषेधायानुमानप्राप्तसार्वज्ञ्यानुवादकत्वे तत्सत्यमित्यादिश्रुतेरप्यसदेवेदमग्र आसीदिति प्रतिषेधायारोपाधिष्ठानत्वाद्यनुमानप्राप्तब्रह्मसत्त्वानुवादित्वमित्यपि स्यादित्यतिप्रसङ्गादित्यर्थः ।

**प०— प्रथमाध्याय इति ।** शास्त्रयोनिसूत्रसमन्वयसूत्रयोः समर्थनेपि तत्प्रपंचत्वात् प्रथमाध्याय इत्युक्तम् ॥ **विनापि वैदिकेनेति । तस्या** आनुमानिकप्रतीतेरित्यर्थः । नेह नानास्तीत्यादि वेदबोध्यनिषेधेन विनैव शास्त्रयोनिसूत्रानुव्याख्याने प्रदर्शितप्रत्यनुमानातिप्रसंगानुमानादिनैवाऽपास्तत्वादित्यर्थः । तथा 'प्रत्यक्षः कस्यचिद्धर्मो वस्तुत्वादिति चोदिते । न बुद्धो धर्मदर्शी स्यात्पुंस्त्वादित्यनुमाहतिरि'ति जिज्ञासानये वेदापौरुषेयत्ववादेऽपास्तत्वादिति भावः ॥ **अन्यथेति ।** अनुमानप्राप्तस्य वेदेनैव निषेधनियमे सति मीमांसायां प्रत्यधिकरणं पूर्वपक्ष्यभिमतयुक्तिप्राप्तानां सिद्धांते युक्तिभिरपाकरणं न स्यादिति मीमांसाभङ्गप्रसंगादित्यर्थः ।

**या०— विना वैदिकेनेति ।** अनुमानप्राप्तसार्वज्ञ्यनिषेधाय प्रत्यनुमानमेवालं तदर्थे नेह नानेति वैदिकनिषेधो व्यर्थ इति भावः ॥ **अन्यथेति ।** यः सर्वज्ञ इत्यादिश्रुतेर्नेह नानेति निषेधायानुमानप्राप्तसार्वज्ञ्यानुवादित्वे तत्सत्यमित्यादिश्रुतेरप्यसदेवेदमग्र आसीदित्यादिप्रतिषेधायारोपाधिष्ठानत्वादिलिङ्गप्राप्तब्रह्मसत्त्वानुवादित्वमित्यपि स्यादित्यतिप्रसङ्गादित्यर्थः । यद्वाऽन्यथाऽनुमानप्राप्तप्रतीत्यपाकरणाय वैदिक एव प्रतिषेधो वक्तव्य इति कल्पने प्रत्यनुमानेन पराहतिः क्वापि न स्यादिति सत्प्रतिपक्षोच्छेदरूपातिप्रसङ्गादित्यर्थः ।

सु० — अथ मतम् । मिथ्याधर्मविधातुश्च वेदस्यैवाप्रमाणतेति यदुक्तं तन्नानिष्टम् । द्विविधो (हि) वेदभागः । तत्त्वावेदकोऽतत्त्वावेदकश्च । तत्र जीवेश्वरयो(वब्रह्मणो)रैक्यं प्रतिपादयंस्तत्त्वावेदकोऽपरोऽतत्त्वावेदक इत्यस्माभिरङ्गीकृतत्वादित्यत आह वेदेति ।

अनु० — वेदवेद्यस्य मिथ्यात्वं यदि नैक्यस्य तत्कथम् ।

तत् तर्हि तन्मिथ्यात्वमिति वा । सत्यमेव त्वयाङ्गीकृतमिति । न च तदुपपद्यते(ह्युज्यते) ।

सर्वोऽपि हि वेदोऽपौरुषेयः स्वतःप्रमा(णं च)णभूतश्च । तत्र चैकस्य भागस्याप्रामाण्ये परस्यापि तत्स्यात् तस्य प्रामाण्येऽस्यापि कथं तन्न स्यात् । तात्पर्यलिङ्गभावाभावाभ्यां व्यवस्थेति चासङ्गतम् । तथात्वे ह्यस्य भागस्यान्यत्र तात्पर्यं वाच्यं स्यात् । न च निषेधायानुवाद इत्युपपादितम् ॥ अहिंसादिश्येनादिविधिवद्विद्वदविद्वद्विषयतया व्यवस्थाऽस्त्विति चेन्न । वैषम्यात् । न हि श्येनादिविधयोऽप्रमाणभूताः । तात्कालिकेष्टसाधनत्वस्य सत्त्वात् । आत्यन्तिकेष्टसाधनत्वस्य चानभिधानात् । अथैक्यं प्रतिपादयितुं बुद्धिशुद्धये सार्वज्ञाद्यविद्यमानपि प्रतिपाद्यते । सर्वत्र प्रसृता हि बुद्धिः सगुणे ब्रह्मणि दत्तपदा क्रमेणैक्ये प्रविशतीति चेन्न । प्रतिकूलत्वात् । सार्वज्ञादिप्रतिपादनेन हि भेदवासनैव दृढनिरूढा स्यादित्येषा दिक् ।

---

शे० — अतिप्रसङ्गेनोक्तव्यवस्थां दूषयितुं तन्मूलभूताविशेषसिद्ध्यर्थं पराभिमतमुक्तव्यवस्थानियामकं निराकुर्वाणः किमप्रामाण्यनिरासकभावाभावाभ्यामुक्तव्यवस्थाऽऽश्रीयते किंवा प्रामाण्योपपादकभावाभावाभ्यामाहोस्विदन्येन प्रकारेण वेति विकल्पान्मनसि निधायाद्यं दूषयति सर्वोऽपि हीति । ततश्चाप्रामाण्यनिरासकस्यापौरुषेयत्वस्य तत्त्वमस्याद्यागम इव सार्वज्ञ्यादिप्रतिपादकागमेऽपि सत्त्वान्नाप्रामाण्यनिरासकभावाभावाभ्यामैक्यप्रतिपादको वेदभागस्तत्त्वावेदकः सार्वज्ञ्यादिप्रतिपादकस्त्वतत्त्वावेदक इत्युक्तव्यवस्था सम्भवतीति भावः । द्वितीयं दूषयति स्वतःप्रमाणभूतश्चेति । प्रामाण्यस्योत्पत्तिज्ञप्त्योः स्वतस्त्वस्यैव वेदप्रामाण्योपपादकत्वात्तस्य चोक्तद्विविधागमसाधारणत्वान्न तद्रूपनियामकभावाभावाभ्यामप्युक्तव्यवस्था सिध्यतीति भावः । एवमविशेषमतिप्रसङ्गाङ्गमुपपाद्य तेनोक्तव्यवस्थां दूषयति तत्रेति ।

अस्तु तर्हि प्रकारान्तरेणेति तृतीयः पक्ष इत्यतस्तद्धि भवत्तात्पर्यलिङ्गभावाभावरूपं वा विद्वदविद्वदधिकारिकत्वरूपं वा प्रधानाङ्गभावरूपं वेति विकल्पान्मनसि निधायाद्यमाशङ्क्य निराकरोति तात्पर्येति । एकमेवाद्वितीयमित्युपक्रमस्य तत्त्वमसीत्युपसंहारस्य तत्त्वमसीति नवकृत्वोऽभ्यासस्य जीवब्रह्मैक्यस्य मानान्तराप्राप्तत्वादपूर्वत्वस्याथ सम्पत्स्यत इति फलस्य येनाश्रुतं श्रुतं भवतीत्याद्यर्थवादस्य मृत्पिण्डादिदृष्टान्तैरुपपादनादुपपत्तेश्च सत्त्वात् । षड्विधतात्पर्यलिङ्गसत्त्वेन तत्त्वमस्याद्यागमस्य प्रामाण्यं

सार्वज्ञ्यादिप्रतिपादकागमस्य च तच्छून्यत्वादप्रामाण्यमिति तात्पर्यलिङ्गभावाभावाभ्यां प्रामाण्याप्रामाण्यव्यवस्थेत्येतत्कुरूपां शूरं चोद्दिश्य शतकृत्वः प्रयुक्तस्याप्यहो दर्शनीयेत्यादेः शूर इत्यादेश्चार्थतथात्वनिश्चायकत्वप्रसङ्गभीत्योपक्रमादिलिङ्गानां तात्पर्यमात्रज्ञापकत्वस्थित्या तैस्तत्त्वमस्याद्यागमस्यैक्ये तात्पर्यावगत्याऽन्यपरतानिरासरिद्धावपि तेषामर्थतथात्वाव्यवस्थापकत्वेन प्रामाण्यानिश्चायकत्वेन तद्भावाभावयोरुक्तव्यवस्थोपपादकतयोपन्यासायोगादसङ्गतमित्यर्थः । ननु न ब्रूमो वयं लिङ्गानां तात्पर्यमात्रनिश्चायकत्वमिति किन्त्वसति बाधके तेषामेवोक्तवस्तुव्यवस्थापकत्वमिति । उदाहृतस्थले च प्रमाणबाधान्न तेषां वस्तुव्यवस्थापकत्वप्रसक्तिरित्यत आह **तथात्वे हीति** । लिङ्गानां तात्पर्यनिश्चयद्वाराऽर्थतथात्वनिश्चायकत्वे उपक्रमादिलिङ्गोपेततया तत्त्वमस्यादिवाक्यानां स्वार्थे प्रामाण्यनिश्चयस्य सार्वज्ञ्यादिवाक्यानां च तद्रहिततया स्वार्थे तदनिश्चयस्य प्राप्तावप्यपौरुषेयस्य स्वतःप्रमाणस्य सार्वज्ञ्यादिवाक्यस्य सर्वथाऽप्रामाण्यानुपपत्त्या निश्चितप्रामाण्याद्वैतवाक्यैकवाक्यतयाऽद्वैत एव तात्पर्यप्रामाण्ययोर्वक्तव्यत्वेन द्वयोरपि प्रामाण्यान्नोक्तव्यवस्थासिद्धिरिति भावः । ननु च निषेधाय अनुवाद इति वदता मया सार्वज्ञ्यादिवाक्यस्याद्वैते तात्पर्यप्रामाण्ययोरभ्युपगमादिष्टापादनमेतत्प्रतीतसार्वज्ञ्यादौ प्रामाण्याभावाच्च नोक्तव्यवस्थाभङ्गोऽपीत्यत आह **न चेति ॥ उपपादितमिति** । अन्यतोऽप्राप्तत्वान्नायमनुवाद इत्यप्राप्तां भ्रान्तिमापाद्येत्यादिनोपपादितमित्यर्थः । उपलक्षणं चैतत् । यत्तन्नेत्यादिनिषेधानुवादलिङ्गाभावात्तदभावेऽपि तत्त्वे वैपरीत्यप्रसङ्गाच्चेत्यपि द्रष्टव्यम् । ततश्चाद्वैततात्पर्यादेरनुपपत्तेरुक्तरीत्या सर्वथाऽप्रामाण्यायोगात्सार्वज्ञ्यादावेव प्रामाण्यस्याभ्युपगमनीयत्वान्नोक्तव्यवस्थेति भावः ।

ननु यथा न हिंस्यात्सर्वा भूतानीत्यादिरहिंसादिविधिर्विद्वदधिकारिकस्तथैक्यागमोऽपि विद्वदधिकारिक एव । यथा च श्येनेनाभिचरन्यजेतेत्यादिश्येनयागादिविधिरविद्वदधिकारिकस्तथा सार्वज्ञ्यादिप्रतिपादकागमोऽप्यविद्वदधिकारिकः । ततश्च विद्वदविद्वदधिकारिकत्वाभ्यां वाक्यद्वयवैषम्यादहिंसादिश्येनादिवाक्यद्वयवत्प्रामाण्याप्रामाण्यव्यवस्था भवत्विति द्वितीयं शङ्कते **अहिंसादीति** । भवेद्विद्वदविद्वद्विषयतया प्रामाण्यादिव्यवस्थापनमहिंसादिविधिदृष्टान्तेन तत्त्वमस्याद्यागमानां(दिवाक्यानां) यद्यहिंसादिश्येनादिवाक्ययोः प्रामाण्याप्रामाण्ये सिद्धे स्याताम् । न च ते तयोः स्तः । अहिंसादिवाक्यवच्छ्येनादिवाक्यस्यापि प्रमाणत्वेन दृष्टान्तासिद्ध्या दार्ष्टान्तिकस्याप्यसिद्धिरित्याशयेनाह **वैषम्यादिति** ॥ **तात्कालिकेति** । इष्टसाधनत्वमात्रस्येत्यर्थः । तस्यैव लिङर्थत्वादिति भावः ।

नन्वेवं करणत्वस्य विध्यर्थत्वेन लिङाभिहितत्वेनोद्भिदा यजेतेत्यादावनभिहिताधिकारविहिततृतीयाऽनुपपत्तिरिति चेन्न । साधनत्वेऽभिहितेऽपि तद्विशेषस्य करणत्वस्यानभिधानात् । लिङाऽन्तरङ्ग-

स्वप्रकृतियज्यर्थमात्रगतेष्टसाधनत्वेऽभिहितेऽपि यागविशेषरूपोद्भित्प्रातिपदिकार्थगतस्य तस्यानभिधानेनोद्भित्प्रातिपदिकात्परस्यास्तृतीयायाः संभवाच्चेत्याशयात् । ननु नेष्टसाधनत्वमात्रं लिङर्थः । तथा सत्यशक्ये तक्षकचूडामण्याहरणादौ तात्कालिकेष्टसाधनविषसंपृक्तमधुभक्षणे निषिद्धकर्मणि च प्रवृत्तिप्रसङ्गात् किन्त्वात्यन्तिकेष्टसाधनत्वमेव । आत्यन्तिकत्वं च तस्य कृतिसाध्यत्वे सति बलवदनिष्टाननुबन्धित्वं तच्चेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं वेष्टोत्पत्त्यनान्तरीयकदुःखाजनकत्वं वा विवक्षितम् । तच्च न श्येनादिविधीनामिति कथं नाप्रामाण्यमित्यतोऽत्र प्रवर्तकत्वेनाभिमतमिष्टसाधनत्वज्ञानं हि नेष्टसाधनमिति ज्ञानम् । परेष्टसाधनमिति ज्ञानादपि प्रवृत्तिप्रसङ्गात् । नापि स्वेष्टसाधनमिति ज्ञानमिष्टसामान्यसाधनत्वज्ञानेनेष्टविशेषस्वर्गादिसाधनयागादावपि प्रवृत्तिप्रसङ्गात् । इच्छायाः स्वरूपसत्य एव प्रवर्तकत्वेन तज्ज्ञानानपेक्षणाच्च । किन्तु स्वर्गो मेऽस्त्वितीच्छाप्रकारीभूतस्वर्गत्वविशिष्टं प्रति साधनत्वेन ज्ञानम् । न चैवं प्रवर्तकज्ञानस्याननुगमः । स्वरूपसदिच्छाविषयसाधनत्वज्ञानत्वेनानुगमात् । तदपि न फलेच्छारहितं प्रवृत्तिं जनयति । किन्तु कृत्या स्वर्गं साधयिष्यामीति फलेच्छासहितमेव । उक्तायामिच्छायां स्वरूपेण सत्यामिदं स्वर्गसाधनमिति ज्ञानेनैव प्रवृत्तेर्दर्शनात् । न हि फलरागे इदं फलसाधनमिति ज्ञाने च सत्यनिष्टाननुबन्धित्वाज्ञानेन प्रवृत्तिविलम्बः । न चैवम्, यत्प्रवर्तकमिष्टविशेषसाधनत्वेन ज्ञानं तन्न विधिप्रत्ययजन्यम्, यच्च विधिप्रत्ययजन्यमिष्टसामान्यसाधनत्वेन ज्ञानं तन्न प्रवर्तकमिति कथं विधिप्रत्ययस्य प्रवृत्तिहेतुभूतज्ञानजनकत्वमिति वाच्यम् । विधिप्रत्ययेनेष्टसाधनमित्येव बोधितेऽपि स्वर्गकामो यजेतेति वाक्यजन्यस्य स्वर्गसाधनमिति ज्ञानस्य प्रवर्तकत्वेन विधिप्रत्ययस्य प्रवृत्तिपरत्वाहानेः । एवञ्च विषसंपृक्तमधुभोजनादिफले दुःखे उत्कटद्वेषदशायां तत्फले सुखे उक्तेच्छा नेति न तत्र प्रवृत्तिः । सुखत्वप्रयुक्ताया अप्यौत्सर्गिकफलेच्छाया दुःखविषयकोत्कटद्वेषेणापोदितत्वात् । अन्यथा साधने बलवदनिष्टाननुबन्धित्वेन ज्ञातेऽपि सुखसाधनत्वप्रयुक्तेच्छा स्यात् ।

एवञ्च बलवदनिष्टाननुबन्धित्वादिविशेषणफलस्यातिप्रसङ्गनिवारणस्येष्टसाधनताघटकत्वेन प्रवृत्ताववश्यापेक्षितायाः फलेच्छाया अभावेनैव सिद्धेरिष्टसाधनत्वं न त्रेधा विशेषणीयम् । उक्तायां फलेच्छायामसत्यां त्वदुक्तविशेषणविशिष्टस्वर्गसाधनत्वज्ञाने सत्यप्यलसस्यान्यत्राऽऽसक्तस्य च पुरुषस्य यागादौ प्रवृत्त्यदर्शनेनान्वयव्यभिचारात् । न च तत्र साधनविषयकचिकीर्षाभावादेवाप्रवृत्तिरिति वाच्यम् । सामग्रीसत्त्वेन चिकीर्षाया एवापाद्यमानत्वात् । बलवदनिष्टानुबन्धित्वादिज्ञाने सत्यपि निषिद्धकर्मजन्ये दुःखे उत्कटद्वेषरूपापवादकाभावदशायां तज्जन्यसुखविषयकरागौत्कट्येन निषिद्धकर्मणि प्रवृत्तिदर्शनेन व्यतिरेकव्यभिचाराच्च । न च साधने चिकीर्षया तत्र प्रवृत्तिः । सामग्र्यभावेन चिकीर्षाभावस्यैवा-

पाद्यमानत्वात् । ततश्च शुद्धस्येष्टसाधनत्वमात्रस्यैव प्रवर्तकत्वात्तस्य च श्येनादिविधिष्वप्यविशेषात्प्रामाण्यमेव तेषामित्याशयवानाह **आत्यन्तिकेष्टसाधनत्वस्य चानभिधानादिति** ।

तृतीयं शङ्कते **अथेति** । 'निर्विशेषं परंब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैरि'त्यभियुक्तवचनादिति भावः । सार्वज्ञ्यादिप्रतिपादनस्यैक्यज्ञानविरोधित्वान्न तयोरङ्गप्रधानभाव इत्याह **प्रतिकूलत्वादिति** । ननु च भेदज्ञानस्यैक्यज्ञानविरोधित्वं प्रसिद्धम् । तत्कथं सार्वज्ञ्यादिप्रतिपादनस्याभ्युपेत्य तत्प्रतिकूलत्वं स्यादित्यतो न साक्षात्तस्य तद्विरोधित्वमत्राभिमतं किन्तु भेदज्ञानद्वारैवेति नानुपपत्तिरिति भावेन तस्य तदर्थतामुपदर्शयति **सार्वज्ञ्यादीति ॥ भेदवासनैवेति** । तथा चाद्वैतसाक्षात्काराभावप्रसङ्गेन निवर्तकाभावान्न कदाचिदपि भेदनिवृत्तिः स्यादिति भावः । ननु मोक्षश्रुतिप्रामाण्याद्दृढनिरूढाया अपि भेदवासनायाः परिक्षयोऽद्वैतसाक्षात्कारश्च भविष्यतीति नोक्तप्रसङ्ग इत्यतस्तस्यान्यथोपपन्नत्वान्न तत्कल्पकत्वमित्याशयेनाह **दिगिति** ।

प०— तदित्यस्यार्थद्वयमाह **तत् तर्हीति ॥ तत् मिथ्यात्वमिति वेति ॥ इत्युपपादितमिति** । पूर्वश्लोकव्याख्याने उपपादितमित्यर्थः ॥ **अहिंसादिश्येनादिविधिवदिति** । न हिंस्यात्सर्वा भूतानि न कलंजं भक्षयेदित्यादिविधिः विद्वद्विषयः । श्येनेनाभिचरन् यजेत अभिचरन् अभिचरितुं शत्रुं हंतुं 'लक्षणहेत्वोः क्रियायाः' इति शतृप्रत्ययः । श्येननामको यागः शत्रुहिंसारूपेष्टसाधनमित्याद्यर्थकः श्येनेनाभिचरन्यजेतेत्यादिविधिरविद्वद्विषय इत्यादिव्यवस्थावत् तत्त्वावेदकातत्त्वावेदकयोर्विद्वदविद्वद्विषयतया व्यवस्थास्त्वित्यर्थः । ननु नरकाद्यनर्थहेतौ यागे इष्टोपायत्वबोधकः श्येनादिविधिः कथमत्र प्रमाणमित्यत आह **तात्कालिकेति** ॥ **आत्यन्तिकेति** । नरकाद्यनिष्टासंभिन्नेत्यर्थः ॥ ननु सार्वज्ञादेः प्रातिभासिकत्वे हि तद्बोधकवेदस्याप्रामाण्यम् । व्यावहारिकसत्यत्वोपगमात् नाप्रामाण्यमिति चेन्न । सत्तात्रैविध्ये मानाभावात् । व्यावहारिकसत्यस्यापि बाध्यतया तत्प्रतिपादनस्य तत्त्वजिज्ञासुं प्रति व्यर्थत्वादानुवादलिंगाभावेपि निषेधायानुवादे नेह नानेत्यादिवाक्यमेव सार्वज्ञादिधर्मविधानार्थं निर्धर्मकत्वानुवाद इति स्यात् । निर्धर्मकत्वस्याप्राप्तत्वे सार्वज्ञादिरप्यप्राप्त एवेत्याद्यभिप्रेत्याह **एषा दिगिति** । विवृतमेतन्न्यायामृते । ( ननु ब्रह्मणि धर्मभ्रांतिस्तदा भवेत् यदि ब्रह्मरूपधर्मिज्ञानं भवेत् । न च तत्संभवति । तस्यागमैकगम्यत्वात् । तथाच धर्मिज्ञानाभावात् । तत्र भ्रांत्या प्राप्तस्य धर्मस्यानुवादेनायं वैदिको निषेध इति न युक्तमित्यत आह)

या०— **विद्वदविद्वद्विषयतयेति** । 'न हिंस्यात्सर्वा भूतानी'त्यहिंसाविधिर्विद्वद्विषयः । विद्वदधिकारिक इति यावत् । 'श्येनेनाभिचरन्यजेते'ति श्येनयागविधिरविद्वद्विषय इति व्यवस्था

ऽस्त्वित्यर्थः । आद्येनादिपदेन सन्ध्यावन्दनादिकं ग्राह्यम् । द्वितीयेन च सर्वपहोमादिकमिति ज्ञातव्यम् ॥ **आत्यन्तिकेति** । बलवदनिष्टाननुबन्धीष्टसाधनत्वस्य लिङादिविधिप्रत्ययेनानभिधानादित्यर्थः । इष्टसाधनत्वमात्रस्य सर्वत्र लिङाद्यर्थत्वादिति भावः ।

**सु०— यदुक्तं ब्रह्मणि धर्माणामप्राप्तिरिति तन्न । प्रमाणतोऽप्राप्तावप्यारोपतस्त-त्संभवात् । आत्मैव हि ब्रह्म स च स्वप्रकाशतयाऽवभासत एवेति तस्मिन्धर्मारोपो नानुपपन्नः । ततश्चारोपितधर्मानुवादेन प्रतिषेधो युज्यत इति चेत् । स्यादप्येवं यदि ब्रह्मणि धर्मारोपो युज्येत । न चैवम् । तस्य सर्वधर्मरहितत्वात् । प्रधानाभावाच्च । अथ धर्मरहितत्वा-दावपि कुतो नारोप इत्यतो व्यतिरेकव्याप्तिं दर्शयति** धर्मेति ।

**अनु०** — धर्मारोपोऽपि सामान्यधर्मादीनां हि दर्शने ।

**न केवलं प्रमाणतः प्राप्त्यभावः किन्तु धर्मारोपोऽपि नोपपद्यत इत्यपिशब्दः । सामान्यं चासौ धर्मश्च सामान्यधर्मः । आदिपदेन प्रधानदर्शनम् । दृष्ट इति शेषः ।**

**शे०** — नन्वधिष्ठानीभूतस्य ब्रह्मणो वेदेतरप्रमाणागोचरत्वेन तदनवभासात्कथं तत्र धर्मारोपोऽपि स्यादित्यतः स्वप्रकाशात्माभिन्नत्वेन ब्रह्मणोऽपि भानसद्भावान्न तदनुपपत्तिरित्याह **आत्मैव हीति** ॥ **यदि ब्रह्मणीति** । ब्रह्माधिष्ठानको धर्मारोपो यदि स्यादित्यर्थः । धर्मारोपे ब्रह्म यद्यधिष्ठानं स्यादिति यावत् ॥ **न चैवमिति** । धर्मारोपे न ब्रह्मणोऽधिष्ठानत्वं संभवतीत्यर्थः । तत्कुत इत्यतोऽधिष्ठानत्वे व्यापकस्य सधर्मकत्वस्य ब्रह्मण्यभावान्न तद्व्याप्यमधिष्ठानत्वं तस्येत्याह **तस्य सर्वधर्मेति** । आरोपस्य साधिष्ठानत्वनियमवत्सप्रधानत्वस्यापि नियमात् प्रकृते च सर्वज्ञत्वादीनां क्वचिदप्यसत्त्वात्प्रधानाभावेन न ब्रह्मणि धर्मारोपः संभवतीत्याह **प्रधानाभावाच्चेति** । **धर्मरहितत्वादावपि** धर्मरहितत्वादौ सत्यपीत्यर्थः । आदिपदेन प्रधानाभावपरिग्रहः । तथा च धर्मवत्त्वादेरधिष्ठानत्वव्यापकत्वासिद्धेर्नात्मा आरोपाधिष्ठानं निर्धर्मकत्वान्निष्प्रधानकत्वाच्चेत्यनुमानद्वयमप्यप्रयोजकमिति भावः ॥ **व्यतिरेकव्या-प्तिमिति** । यदारोपाधिष्ठानं तत्सधर्मकं सप्रधानं चेति व्यतिरेकव्याप्तिमित्यर्थः । धर्मारोपोऽपीत्य-पिशब्दो न धर्म्यारोपसमुच्चयार्थः । तस्येहाप्रस्तुतत्वादसंभवाच्चेति भावेनापिशब्दार्थमाह **न केवलमिति**। आरोपस्य साधारणधर्मदर्शनजन्यत्वेऽपि साधारणधर्मरूपोभयजन्यतायाः सामान्यसंबन्धिधर्मदर्शनजन्य-तायाश्चाभावेन द्वन्द्वादेरसंभवाद्विवक्षितसमासमाह **सामान्यं चासाविति** ॥ **आदिपदेन प्रधानदर्शन-मिति** । यद्यप्यादिपदेन प्रधानमित्येव वक्तुं युक्तम् । दर्शन इत्यस्य सामान्यधर्मेणेवादिपदगृहीतप्रधाने-नाप्यन्वयस्य श्रुतित एव लाभसम्भवेन तत्पर्यन्तधावनस्यानर्थक्यात् । तथाऽपि प्रत्येकसम्बन्धस्फुटीकरणा-

र्थमेव दर्शनपदोपादानम् । अत एव प्रधानग्रहणमित्यपि बहुषु मूलकोशेषु पाठः सङ्गच्छत इति मन्तव्यम् । साकाङ्क्षतया वाक्याभासतां परिहरति **दृष्ट इतीति** ।

स०— **सर्वधर्मरहितत्वादिति** । तत्वेन निश्चितत्वादित्यर्थः । तथा च विशेषदर्शनसद्भावान्नारोपित इति भावः । किंचारोपितस्य प्रधानसापेक्षत्वात् । सार्वज्ञादेश्च क्वचिदप्यसत्वेन प्रधानाभावान्नारोप इत्याह **प्रधानाभावाच्चेति** ।

प०— धर्मिज्ञानसाध्यत्वाद्भ्रान्तेस्तदाह **आत्मैव हीति** ॥ **प्रधानाभावाच्चेति** । यदनुभवजन्यसंस्कारो भ्रमकारणं तत्प्रधानमित्युच्यते । तदभावादित्यर्थः ॥

या० — ननु वेदेतरप्रमाणागोचरे ब्रह्मणि कथं धर्मारोप इत्यत आह **आत्मैव हीति** ॥

श्री०— **धर्मरहितत्वादावपीति** । आदिपदेन प्रधानम् । तथा च धर्मप्रधानयोरभावेऽप्यारोपोऽस्त्वित्यर्थः ॥

सु०— **एतदेव प्रपञ्चयति** इदमिति ।

**अनु०** — इदं तदादिधर्मित्वे धर्मोऽन्यः कल्प्यतेऽत्र हि ।

**इदं तदिति भावप्रधानो निर्देशः । आदिपदेन साधारणधर्मग्रहणम् ।** धर्मित्वे **दृष्ट इति शेषः । प्रधानज्ञानमप्यत्र संग्राह्यम् । अत्र लोके । शुक्तिकायां रजतत्वधर्मारोपो हि न शुक्तिकावभासमात्रेण भवति । किन्नाम वस्तुतो रजतत्वधर्मवतः प्रधानस्य, अधिष्ठाने शुक्तिकाशकले पुरोवर्तित्वादेः, प्रधानसाधारण(धर्मस्य)स्य च शुक्लभास्वरत्वादेर्धर्मस्य दर्शन एव । तथा स्फटिके लौहित्यारोपोऽपि वस्तुतो लौहित्यवतो जपाकुसुमस्य, स्फटिके च(चे)दन्तादेः, प्रधानसन्निधानस्य च दर्शन एव दृष्ट इति ।**

शे०— **एतदेवेति** । अतो नोत्तरग्रन्थस्य पौनरुक्त्यमिति भावः । इदन्तदित्यस्य धर्मिपरतायामधिष्ठाननिष्ठपुरोवर्तित्वाद्यलाभात्सधर्मकत्वस्याधिष्ठानत्वव्यापकतालाभाय धर्मिवाचकमिदमादिपदं लक्षणयेदन्त्वादिधर्मपरमित्याह **इदन्तदितीति** ॥ **साधारणेति** । प्रधानसाधारणेत्यर्थः । इदन्त्वादिधर्मज्ञानस्यारोपकारणतालाभायाह **दृष्ट इति शेष इति** । सामान्यधर्मादीत्यादिपदगृहीतस्य प्रधानस्यात्रानुक्तेः कथं तदुक्तार्थप्रपञ्चकत्वमस्य ग्रन्थस्येत्यतस्तस्याप्यत्र सङ्ग्रहान्नानुपपत्तिरित्याह **प्रधानज्ञानमपीति** । दृष्टान्तधर्मिणेऽनुक्तेर्नास्य व्याप्तिप्रदर्शकत्वं संभवतीत्यतोऽत्रेत्यस्यैव दृष्टान्तधर्मिसमर्पकत्वान्नानुपपत्तिरिति भावेन तदर्थमाह **अत्र लोक इति** । मूले आरोपपदं सोपाधिकानौपाधिकारोपरूपोभयविधारोपपरमत एवोभयसंग्रहायात्रेति सामान्यत एवोक्तमिति भावेनोभयविधारोपस्याप्युक्तविधतां दर्शयन्नेव

समुदायार्थमाह **शुक्तिकायामिति** ॥ **पुरोवर्तित्वादेरिति** । इदन्त्वं पुरोवर्तित्वं तत्त्वं तु व्यवहितदेशवृत्तित्वमिति भावेन पुरोवर्तित्वादेरित्युक्तम् । तत्र यत्राधिष्ठानमपरोक्षं तत्रेदन्त्वरूपपुरोवर्तित्वमेव सामान्यधर्मो यत्र च तत्परोक्षं तत्र व्यवहितदेशवृत्तित्वरूपं तत्त्वमेव सामान्यधर्म इति विवेको द्रष्टव्यः । **तथेति** । यद्यपि प्रतिबिम्बस्वरूपं स्वपरमते सदेवेति तज्ज्ञानं प्रमात्वान्नारोपः । तथाऽपि न्यायमतमाश्रित्येदमुक्तमिति द्रष्टव्यम् **प्रधानसन्निधानस्येति** । एकदेशस्थत्वरूपप्रधानसाधारणधर्मस्येत्यर्थः ।

प०— **भावप्रधान इति** । इदंत्वं तत्त्वमिति भावप्रधानो निर्देश इत्यर्थः ॥ **धर्मित्वे** इदन्त्वादिधर्मवत्त्वे दृष्ट इति योजनेति भावः । अत्रेत्यनुवादः लोक इति व्याख्या । इदंत्वादिशब्दार्थमाह **पुरोवृत्ति(वर्ति)त्वादेरिति** । व्यवहितत्वमादिपदार्थः । इदन्तदादीत्यत्रादिपदोपात्तसाधारणधर्ममाह **साधारण(धर्म)स्य चेति** । स्मर्यमाणारोपस्थलमुक्त्वा गृह्यमाणारोपस्थलमाह **तथा स्फटिक इति** ॥ **आरोपोऽपीति** । पररीत्येदम् । स्वमते त्वत्रारोपाभावात् ।

या०— **पुरोवर्तित्वादेरिति** । अनेनेदन्त्वमित्यस्य पुरोवर्तित्वमर्थ इति दर्शितं भवति । आदिपदेन तत्त्वशब्दार्थभूतव्यवहितदेशवर्तित्वग्रहणम् । तथा च यत्राधिष्ठानमपरोक्षं तत्रेदन्त्वरूपपुरोवर्तित्वस्य सामान्यधर्मस्य ग्रहणम् । यत्र तु तत्परोक्षं तत्र तत्त्वरूपव्यवहितदेशवर्तित्वस्य सामान्यधर्मस्य ग्रहणमिति विवेको द्रष्टव्यः । सकृद्दर्शनमात्रेण न व्याप्तिनिश्चय इत्याशयेनोदाहरणान्तरमाह **तथा स्फटिक इति** । इदं च परीत्यैव । स्वमते स्फटिके लौहित्यज्ञानस्य प्रतिबिम्बज्ञानत्वेन प्रमात्वादित्यवधेयम् ॥ **प्रधानसन्निधानस्येति** । प्रधानेन सहैकदेशस्थत्वस्येत्यर्थः । ततश्च साधारणधर्मप्रदर्शनार्थमेतदुक्तमित्यवगन्तव्यम् ॥

श्री० **धर्मित्वे** धर्मवत्त्वे ।

च०— **भावप्रधानो निर्देश इति** । प्रकृतिजन्यबोधीयप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारतापन्नो भावस्तद्विशेष्यकशाब्दधीजनको निर्देश इत्यर्थः । 'न निर्धर्मकं ब्रह्मेतिसिद्धमि'त्यन्तेन ब्रह्मणो निर्धर्मकत्वनिरासः ।

सु०— सहदर्शनमात्रेण न व्याप्तिनिश्चय इत्यत आह सर्वेति ।

अनु०— सर्वधर्मविहीनस्य धर्मारोपः क्व दृश्यते ।

**अत्रापि प्रधानदर्शनमुपलक्षणीयम् । क्व दृश्यते येनोक्तव्याप्तेर्व्यभिचारः स्यादिति शेषः । उपाधिव्यभिचारयोरदर्शने (सहचार)साहचर्यदर्शनं व्याप्तिनिश्चायकमेवेति भावः । अयं(मत्र) समुदायार्थः । धर्मारोपस्य प्रधानदर्शनादिकं व्यापकमुपलब्धम् । न च प्रकृते**

तदस्ति । सार्वज्ञ्यादीनामपहतपाप्मत्वादीनामन्यत्रानभ्युपगमात् । ब्रह्मणि च प्रधानसाधारणधर्मादेरनङ्गीकारात् । अतो व्याप्यस्य धर्मारोपस्याभाव इति । नन्वत्र प्रधानादर्शनेन धर्मारोपासंभवः शक्यानुमानः । सार्वज्ञ्यादिकं न ब्रह्मण्यारोपितं प्रागन्यत्रानुपलब्धत्वादिति प्रयोगसंभवात् । धर्माभावलिङ्गकमनुमानं तु कथम् । भवतामसिद्धत्वादिति । मैवम् । धर्मराहित्यवादिनैवमनुमायोपगन्तव्यमित्यभिप्रायात् ।

शे० — सहदर्शनमात्रेणेति । तथा सत्यग्न्यादीनां धूमादिभिरपि व्याप्त्यध्यवसायप्रसङ्गात् सहदर्शनमात्रस्य तत्रापि सत्त्वादिति भावः । अत्र मूले व्यभिचाराभावोक्त्या सामान्यधर्मादिदर्शनस्यारोपकारणतालाभेऽपि प्रधानदर्शनस्य तदलाभात्तल्लाभायाह अत्रापीति । किमनेनापि व्याप्तिनिश्चायकमुक्तं भवतीत्यत आह उपाधिव्यभिचारयोरदर्शन इति । इदं च 'यदैवाव्यतिरेकेऽस्य ह्यक्षजं वाऽऽगमो भवेत् । तन्निर्धारितयुक्तिर्वा व्याप्तिः सैवापरा न ही'ति ग्रन्थव्याख्यानावसरे टीकायामे'वायमर्थ'इत्यादिना स्पष्टं प्रपञ्चितं तत एव प्रतिपत्तव्यम् । ननु धर्मारोपोऽपीत्यादिना धर्मारोपं प्रति प्रधानदर्शनादेर्व्यापकतालाभेऽपि प्रकृते तदभावासिद्धेर्न धर्मारोपाभावसमर्थनसिद्धिरित्यत आह अयमिति । धर्मारोपोऽपीत्यादिवाक्यसमुदायार्थ इत्यर्थः ॥ धर्माभावलिङ्गकमिति । ब्रह्म न सार्वज्ञ्यादिधर्मारोपाधिष्ठानं सर्वधर्मरहितत्वादिति धर्माभावलिङ्गकमित्यर्थः । का कथन्तेत्यत आह भवतामिति । सधर्मकब्रह्मवादिनामित्यर्थः । धर्मराहित्यवादिनेति । धर्मराहित्यवादिन एव स्वार्थानुमाने न कश्चिद्दोष इत्याशयः ।

प० — धर्माभावलिंगकमिति । ब्रह्म न धर्मारोपाधिष्ठानं निर्धर्मकत्वाव्यतिरेकेण शुक्तिकाशकलवदित्यनुमानं त्वित्यर्थः ॥ भवतामिति । सिद्धान्तिनामित्यर्थः । तैः सार्वज्ञ्यादिस्वीकारादिति भावः ॥

या० — एवमनुमायेति । अनिष्टप्रसङ्गरूपानुमानेन ज्ञात्वेत्यर्थः । अतो नान्यतरासिद्ध्यादिकं दोष इति भावः ॥

श्री० — धर्माभावलिङ्गकमिति । ब्रह्म, सर्वज्ञ्यादिधर्मारोपाधिष्ठानं न, धर्मशून्यत्वादिति धर्माभावलिङ्गकानुमानं ज्ञेयम् ॥ एवमनुमायैवेति । यदि ब्रह्म धर्मशून्यं स्यात्तर्हि धर्मारोपाधिष्ठानं न स्यादित्यनुमायेत्यर्थः ॥ उपगन्तव्यमिति । तथा च तव स्वार्थानुमानं स्यादित्यर्थः ।

सु० ननु (च) धर्मारोपोऽधिष्ठानधर्माणां प्रधानस्य च प्रतीतावेवायतते न तु सत्तायाम् । इदन्त्वादिप्रतीतौ हीदं रजतमित्यादिरूपा प्रतीतिः स्यात् । साधारणधर्मप्रतीतिरेव च प्रधानं बुद्धि(स्थं क)स्थीकरोति । प्रधानप्रतीतिरेव चान्वयव्यतिरेकाभ्यामारोपोपयोगिनी । सत्ताया उपयोगाङ्गीकारेऽतिप्रसङ्गः । उभयोपयोगे तु गौरवम् । अस्ति चाप्यत्राधिष्ठान-

**धर्मादिप्रतीतिरारोपरूपा । न हीदंपूर्वोऽयं ब्रह्मणि धर्मारोपः । तथा च पूर्वारोपितधर्मप्रतीत्यधीनोऽयमुत्तरोत्तरारोपो भविष्यति । पूर्वमेव चोत्तरस्य प्रधानमिति किमनुपपन्नमित्यत आह** तदर्थमिति ।

**यदि ब्रह्म(णो)णि धर्मारोपसिद्ध्यर्थमन्यो धर्माणामारोपः कल्प्यते । तदा सोऽपि धर्मारोपो धर्मारोपान्तरायत्त इत्येवं प्रसक्तानवस्थितिः स्यात् । सिद्धविषयत्वान्नेयमनवस्था दूषणमिति चेन्न । धर्मसद्भावतत्प्रतीत्योः पूर्वसिद्धत्वेऽप्यारोपत्वकल्पनायामनवस्थाऽनिवारणात् । अस्या धर्मप्रतीतेरारोपत्वं पूर्वप्रतीतेरारोपत्वकल्पनाधीनं तस्या अपि तथेति । तदेवं ब्रह्मणि धर्मारोपासंभवात्स्वतो निर्धर्मकत्वे वेदाप्रामाण्यादिप्रसङ्गान्न निर्धर्मकं ब्रह्मेति सिद्धम् ।**

**शे०**— ननु ब्रह्मणो निर्धर्मकत्वात्सार्वज्ञादेश्च मिथ्यात्वात्प्रकृतारोपेऽधिष्ठानधर्मसत्तायाः प्रधानसत्तायाश्चाभावेऽपि तत्सत्ताया धर्मारोपानुपयोगित्वादुपयोगिन्याश्चाधिष्ठानसाधारणधर्मादिप्रतीतेः प्रकृतेऽपि सत्त्वाद्युक्त एव ब्रह्मणि धर्मारोप इत्यभिप्रेत्य तदुभयमुपपादयितुं प्रतिजानीते **नन्विति** । ननु कुतोऽधिष्ठानधर्मप्रतीतेरेवारोपोपयोगः कथञ्चैवं सति प्रधानस्य बुद्धिस्थता तस्याधिष्ठानगतधर्मसाध्यतया तदभावेऽसंभवादित्यतस्तदुभयं क्रमेणोपपादयति **इदन्त्वादिप्रतीतावित्यादिना** । स्याद्भवतीत्यर्थः । अस्त्वधिष्ठानप्रतीतेरेवारोपोपयोगित्वं तथाऽपि प्रधानप्रतीतेरेव तत्रोपयोगो न तत्सत्ताया इत्येतकुत इत्यतस्तत्प्रतीतेः कारणत्वं तत्प्रमाणोपन्यासेनोपपादयति **प्रधानप्रतीतिरेवेति** । एवं प्रधानप्रतीतेरुपयोगमुपपाद्य तत्सत्ताया उपयोगं दूषयिष्यन् किमत्र प्रधानसत्तामात्रमारोपोपयोगीत्यभिमतं किंवा तत्सत्ताप्रतीतिश्चेत्युभयमपीति विकल्पद्वयं मनसि निधायाद्यं दूषयति **सत्ताया इति** । सत्तामात्रस्येत्यर्थः ॥ **अतिप्रसङ्ग इति** । अज्ञातरजतस्यापि शुक्तौ रजतारोपः स्यादित्यतिप्रसङ्ग इत्यर्थः । द्वितीयं दूषयति **उभयेति** । अस्त्वधिष्ठानधर्मादिप्रतीतेरेव धर्मारोपे उपयोगस्तथाऽपि न ब्रह्मणि धर्मारोपः संभवति । ब्रह्मणो निर्धर्मकतयाऽधिष्ठानधर्माप्रतीतेः सार्वज्ञादेर्मिथ्यात्वेन प्रधानप्रतीतेश्चासंभवेन कारणीभूताया अधिष्ठानधर्मादिप्रतीतेरभावादित्यतो नाधिष्ठानधर्मादिप्रमात्वेन तत्प्रतीतेः कारणत्वमस्ति । **गौरवात्** । किन्तु भ्रमप्रमासाधारणतत्प्रतीतित्वेनैव । ततश्च निर्धर्मकत्वादिनाऽत्र प्रमारूपप्रतीत्यसंभवेऽप्यारोपरूपायास्तस्याः संभवान्नानुपपत्तिरित्याशयेनाह **अस्ति चेति** । अस्तु तर्हि प्रथमारोप एवेयमनुपपत्तिः । ततः पूर्वमधिष्ठानादिधर्मप्रतीतेरारोपरूपाया अभावात् । अस्यैव प्रथमारोपत्वादित्यतोऽनादित्वादारोपपरम्परायाः प्रथमारोपस्यैवासिद्धेर्नानुपपत्तिरित्याह **न हीति** । न चैवमपि कल्पाद्यभ्रमानुपपत्तिः । ततः पूर्वमारोपरूपाधिष्ठानादिधर्मप्रतीतेरभावादिति वाच्यम् । तत्रापि कल्पान्तरीयसंस्कारस्य संभवात् । न च प्रमाजन्यसंस्कारस्यैव भ्रमहेतुत्वान्नास्य भ्रमहेतुत्वमिति वाच्यम् । सत्यपि संस्कारे प्रमाजन्यत्वाभावा-

भ्रमाभावादर्शनेन प्रमाभ्रमसाधारणज्ञानमात्रजन्यसंस्कारस्यैव तद्धेतुत्वेनादोषादित्याशयात् । धर्मारोपस्येदं-प्रथमत्वाभावेऽपि किं सिद्धमित्यत आह **तथा चेति** ॥ **पूर्वमेवेति** । पूर्वारोपविषयीभूतमेवेत्यर्थः ।

**सिद्धविषयत्वादिति** । धर्मसद्भावतत्प्रतीत्योः सिद्धत्वेन सिद्धविषयत्वादित्यर्थः ॥ **आरोप-त्वकल्पनायामिति** । तत्प्रतीतेरारोपत्वस्याप्रामाणिकत्वान्न सिद्धविषयत्वमिति भावः । आरोपत्वक-ल्पनायामनवस्थामेवोपपादयति **अस्या इति** । किञ्चैवं कल्पाद्यभ्रमो न स्यात् । न च तत्पूर्वकल्पी-यानुभवजन्यसंस्कारस्य सत्त्वान्नानुपपत्तिरिति वाच्यम् । तथा सति नारिकेलद्वीपवासिनोऽपि गुञ्जापुञ्जादौ ज्वलनसमारोपप्रसङ्गात् । संसारस्यानादितया कदाचित्तस्यापि ज्वलनानुभवसंभवादित्यभिप्रेत्य प्रकृतमुप-संहरति **तदेवमिति** ।

प० — **आयतत इति** । धर्माणां प्रधानस्य च या प्रतीतिः तदधीनो भवतीत्यर्थः ॥ **न तु सत्तायामिति** । आयतत इत्यनुषङ्गः सत्त्वाधीनो नेत्यर्थः ॥ **अतिप्रसङ्ग इति** । रजताज्ञानिनोपि इदं रजतमिति भ्रांतिप्रसङ्ग इत्यर्थः ॥ **उभयेति** । सत्ताप्रतीत्योरित्यर्थः । वस्तुस्थितिमभिप्रेत्याह **सिद्धत्वेऽपीति** । धर्मारोपोपीत्यादेरुपयोगं दर्शयन् 'यदि धर्मा न केचन ब्रह्मण' इत्यादिनोक्तमुपसंहरति **तदेवं ब्रह्मणीति** ॥ **ब्रह्मणो निर्धर्मकत्वनिरासः** ।

या० — **अतिप्रसङ्ग इति** । अनाकलितरजतस्यापि रजतारोपप्रसङ्ग इत्यर्थः ॥ **अनव-स्थाऽनिवारणादिति** । तथा च धर्मसद्भावस्य प्रामाणिकत्वेऽपि न तत्प्रतीतेरारोपत्वं प्रामाणिकमतो नेयमनवस्था सिद्धविषयेति भावः ॥

श्री० — **प्रतीतावेति** । प्रतीतिमेवापेक्षत इत्यर्थः ॥ **सत्तायामिति** । अधिष्ठानधर्मप्रधानयोः सत्तायामित्यर्थः । **पूर्वं** पूर्वारोपितो धर्मः ।

सु० — **यदुक्तं सार्वज्ञादेर्मिथ्यात्वसिद्धये विश्वस्य भ्रान्तिकल्पितत्वं तद्दूषयितुमीशत-ज्ज्ञानेत्यादिको ग्रन्थः । तथा हि । विश्वस्य भ्रान्तिसिद्धत्वं वदता तत्र प्रमाणं वक्तव्यम् । तत्किं प्रत्यक्षं स्यादनुमानं वाऽऽगमो वा । न तावत्प्रत्यक्षम् । तस्य सत्य(तत्सत्य)त्वग्रा-हित्वस्य वक्ष्यमाणत्वात् ।**

शे० — ईशतज्ज्ञानेत्यादेरुत्तरग्रन्थस्याव्यवहितपूर्वप्रकृतोपयुक्तार्थाप्रतिपादकत्वादसङ्गतिमाशङ्क्य तदसङ्गतावपि व्यवहितप्रकृतार्थोपपादकतया तत्सङ्गतत्वान्नानुपपत्तिरित्यभिप्रेत्य व्यवहितेन सङ्गतिं दर्शयति **यदुक्तमिति** ॥ **वक्ष्यमाणत्वादिति** । 'सत्यत्वमक्षजप्राप्तमि'त्यादिनेति शेषः ।

प०— वक्ष्यमाणत्वादिति। 'सत्यत्वमक्षजप्राप्तमनुमागमे'त्यादिनेति भावः ॥ निरस्तत्वादिति। 'नासतो दृष्टत्वादि'त्यधिकरणे 'दृश्यत्वाद्बिमतं मिथ्या स्वप्नवच्चेदियं च मा। मिथ्या चेत्साध्यसिद्धिर्न व्यभिचारो न चेद्भवेदि'त्यादिना निरस्तत्वादित्यर्थः ॥

या०— वक्ष्यमाणत्वादिति। अनुपदमेवेति शेषः।

सु०— नाप्यनुमानम्। शून्यसमयनिरासे (न) निरस्तत्वात्। अधिकं च दूषणं वक्तुमाह ईशेति।

अनु०— ईशतज्ज्ञानवेदाक्षजानुमामातृपूर्विणः ॥
भ्रान्तिर्विश्वस्य येनैव मानाभासेन कल्प्यते ॥
तन्मात्रस्यान्यथाभावे किन्न स्याद्विश्वसत्यता ॥

यद्यप्यत्र भ्रान्तिर्विश्वस्येत्यादिनैवालम्। तथाऽपि ये विश्वं प्रमाणप्रमेयप्रमातृप्रमिति-भेदेन चतुर्विधमाचक्षते तन्निराकरणप्रस्तावनाय प्रमाणप्रमेयप्रमातृभेदेन त्रिविधमेव विश्वमिति प्रतिज्ञातुमीशेत्याद्युक्तम्। तत्रेशमातृपदाभ्यां परापरप्रमात्रोर्ग्रहणम्। यद्यपि मातृपदेनैवेश्व-रोऽपि लभ्यते। तथाऽपि तस्य नियतं प्रमातृत्वमन्येषां तु विपर्ययादिसंभवादनियतमित्यादि-विशेषद्योतनाय पृथग्ग्रहणम्। वेदाक्षजानुमापदैः करणफलरूपप्रमाणस्वीकारः। वेदपदमा-गमो(मात्रो)पलक्षणम्। अक्षजत्वं ज्ञानसन्निकर्षयोरस्त्येव। ईश्वरादि(र)ज्ञानं न वेदादिपदैः संगृह्यते। अकरणत्वादफलत्वाच्च। भवति च प्रमाणमित्यतस्तज्ज्ञानेति पृथगुक्तम्। नित्य-ज्ञानमात्रोपलक्षणं चैतत्। पूर्वशब्देन कर्मधारयं विधाय तत इनिप्रत्ययः। प्रत्ययार्थस्तु प्रमेयम्। तथा च प्रमातृप्रमाणप्रमेयरूपस्येत्यर्थः। यद्वेशमातृशब्दाभ्यां तद्वाक्यं गृह्यते। वेदशब्दश्चापौरुषेयवाक्यवचन एव। पूर्वशब्दः (क)कारणार्थः। प्रमाध्याहारेण तत्संबन्धः। ततश्चेशवाक्येशादिज्ञानवेदाक्षजानुमानानीश्वरप्रमातृवाक्यरूपप्रमाणवतः सर्वप्रमाणसिद्धस्येत्युक्तं भवति। भ्रान्तिः भ्रान्तिकल्पितत्वम्। येनेत्यतो लब्धमेकत्वमेवेत्यवधार्यते मानाभासेनेति। स्वभावतो दुर्बलेनानुमानेनेत्यर्थः। अन्यथाभावे अप्रामाण्ये। किमाक्षेपे।

एतदुक्तं भवति। विश्वं तावत्स्वभावतो बहुत्वेन च प्रबलैरीशवाक्यादिभिः सर्वैः प्रमाणैः सत्यतयाऽवगतम्। तेषां 'असत्यमप्रतिष्ठं त' इत्यादीनामन्यत्र दर्शितत्वात्। विवादपदं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्छुक्तिरजतवत्, अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी पटत्वात्पटान्तरवदित्यादिकं विश्वमिथ्यात्वानुमानं तु स्वभावैकत्वाभ्यां दुर्बलम्। तथा च प्रबलप्रमाणविरुद्धस्यानुमानस्याप्रामाण्योपपत्तेर्विश्वस्य सत्यत्वमेव युक्तमिति।

**शे०** — **निरस्तत्वादिति** । 'दृश्यत्वाद्विमतं मिथ्या स्वप्नवच्चेदियं च मा । मिथ्याचेत्सा-ध्यसिद्धिर्न व्यभिचारो न चेद्भवेदि'त्यादिनाऽनूद्य माध्यमिकसमयनिराकरणावसरे निरस्तत्वादित्यर्थः । **प्रमातृप्रमितिभेदेने**त्यत्र प्रमितिशब्दो ज्ञाततापरः ॥ **तन्निराकरणेति** । 'न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचिदि'त्यादिनेति शेषः । इत्यादिविशेषद्योतनायेत्यत्रादिपदेनेश्वरस्य स्वतन्त्ररूप-चैतन्यमात्रानुवर्तिप्रमातृत्वमन्येषां तु न तथेत्यादिविशेषपरिग्रहः । ननु वेदपदेनापौरुषेयवाक्यतज्जन्य-ज्ञानयोरुक्तरीत्या संग्रहसिद्धावपि पौरुषेयागमतज्जन्यज्ञानयोर्न संग्रह इत्यत आह **वेदपदमिति** । ननु वेदानुमानशब्दयोर्भावकरणसाधनत्वात्ताभ्यां करणफलरूपप्रमाणद्वयस्वीकारसंभवेऽप्यक्षजपदेन कथं तदु-भयस्वीकार इत्यत आह **अक्षजत्वमिति** । ईश्वरादिज्ञानमित्यादिपदेन लक्ष्म्यादिस्वरूपज्ञानसंग्रहः ॥ **अफलत्वाच्चेति** । वेदादिजन्यज्ञानानामेव फलतया गृहीतत्वादीशादिज्ञानस्य च तदजन्यत्वादफलत्व-मिति भावः । तज्ज्ञानेत्युक्त्याऽकरणस्याफलस्य चेश्वरज्ञानस्य प्रमाणतया संग्रहसिद्धावपि तादृशस्य लक्ष्म्यादिस्वरूपज्ञानस्य कथं प्रमाणतया संग्रहसिद्धिरित्यतस्तज्ज्ञानपदस्य नित्यज्ञानमात्रोपलक्षकत्वात्तेनैव तत्सिद्धिरित्याह **नित्येति** ।

नन्वत्रेशादयः पूर्वे यस्येति बहुव्रीहिणैव मत्वर्थलाभादिनिप्रत्ययस्य ( ईशादयश्च ते पूर्वे चेशतज्ज्ञानवेदाक्षजानुमातृपूर्वास्तेऽस्य सन्तीति मत्वर्थे इनिः ) वैयर्थ्यमित्यतो बहुव्रीहिमाश्रित्य मतुबर्थ-प्रत्ययप्रयोगे वैयर्थ्यदोषेऽपि कर्मधारयमाश्रित्य मतुबर्थप्रयोगे शब्दान्तरत्वान्न दोष इत्याशयेनाह **पूर्व-शब्देनेति** । न च तथाऽपि कर्मधारयमत्वर्थीयाद्बहुव्रीहिरेवेष्टव्यो लघुत्वादिति न्यायाच्छब्दान्तरत्वा-श्रयणेऽपि बहुव्रीहिविवक्षयाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसंभवे बहुयत्नाश्रयणं दोषः स्यादेवेति वाच्यम् । बहुव्रीह्यपेक्षया कर्मधारयस्य मत्वर्थीये शब्दगौरवस्थले बहुयत्नाश्रयणस्य दोषत्वेऽपि शब्द-साम्ये तददोषत्वस्य टीकाकृदभिमतत्वात् । अत एव टीकायां यद्विकारीत्यत्र कर्मधारयमत्वर्थीयम-भ्युपगम्यानादिमदित्यत्र तदनङ्गीकारः । बहुव्रीहौ कर्मधारयमत्वर्थीये चार्थगौरवाप्रसङ्गेन शब्द-गौरवस्यैव लाघवन्यायविरुद्धत्वात् । प्रकृते च तदभावेनादोषत्वात् । लाघवन्यायानादरेण शब्द-गौरवेऽपि न्यासादिगतकर्मधारयमत्वर्थीयप्रयोगाणा'मेकगोपूर्वाट्ठञ् नित्यमि'ति सूत्रे दुर्घटवृत्तिकृता दर्शितत्वाच्चेति सकलमकलङ्कमिति संप्रदायः ॥ गुरवस्तु यदा कर्मधारयमत्वर्थीयः क्रियते तदा स्वपदार्थ-प्राधान्यमाश्रित्य कर्मधारयः कर्तव्यः । तेषामेव च पदार्थानामन्यत्र गुणभावमाश्रित्य मत्वर्थीय उत्पद्यत इति प्रतिपत्तिगौरवम् । यदा च पूर्वमेवान्यपदार्थप्राधान्यविवक्षा तदा वर्तिपदार्थानां गुणभाव आश्रीयत इति प्रतिपत्तिलाघवम् । कर्मधारयो मत्वर्थीयसहित एवान्यपदार्थस्य प्रतिपादक इति शब्द-गौरवम् । बहुव्रीहिस्त्वन्यानपेक्ष एव तत्प्रतिपादक इति शब्दलाघवं भवतीति न कर्मधारयमत्वर्थीया-

श्रयणं युक्तम् । तथाऽप्यन्यपदार्थप्राधान्यविवक्षायां बहुव्रीहेरेव प्रसङ्गेन सर्वधनी सर्वबीजी सर्वकेशी नट इत्याद्यभियुक्तप्रयोगानुपपत्तिप्रसङ्गात् । तदुपपादनार्थं प्रवृत्ता 'त्सर्वादेः कर्मधारयादिनिरि'ति भाष्यकारीयवचनाल्लघवानाश्रयणेन वाचनिकः कर्मधारयादिनिरित्यत्र तात्पर्यमिति प्राहुः ।

**प्रत्ययार्थ इति** । इनिप्रत्ययार्थ इत्यर्थः । प्रमेयत्रैविध्यकथनस्यापि प्रयोजनविशेषाभावं मन्वानः प्रकृतोपयुक्तार्थसूचकतया पूर्वार्धं व्याचष्टे ॥ **यद्वेति** । नन्वेतद्भाषितम् । ईशवाक्यादीनां विश्वं प्रत्यकरणत्वादित्यतस्तदकरणत्वेऽपि तत्प्रमाकरणत्वान्नानुपपत्तिरित्यभिप्रेत्यापेक्षितमध्याहरति **प्रमाऽध्याहारेणेति** । पूर्वपदात्पूर्वमिति शेषः । ईशप्रमातृशब्दाभ्यां तद्वाक्यस्य वेदशब्देनापौरुषेयवाक्यस्य ग्रहणेन पूर्वशब्दस्य करणार्थत्वस्वीकारेण ततःपूर्वं प्रमापदाध्याहारेण च सिद्धं तज्ज्ञानशब्दस्य च पूर्वमेवार्थमभिप्रेत्य विशेषणार्थमाह **ततश्चेति** । अनेनापि कः प्रकृतोपयुक्तो विशेषः सूचित इत्यतो निष्कृष्टं मत्वर्थमाह **सर्वेति** । विश्वस्य परेण भ्रान्तित्वस्य मानाभासेन कल्पनादाह **भ्रान्तिकल्पितत्वमिति** ॥ **अवधार्यत इति** । ततश्च नैवशब्दवैयर्थ्यमिति भावः । प्राबल्यचिन्तावसरे आभासत्वोक्तेरनौचित्यं मनसि निधाय तात्पर्यमाह **स्वभावतो दुर्बलेनेति** ।

मूले बहुप्रमाणोपन्यासविशिष्यतदुपन्यासयं वैयर्थ्यमित्याशङ्क्य बाधकत्वाद्युपयोगिप्राबल्यादिसूचकत्वान्न तद्वैयर्थ्यमित्यभिप्रेत्य तत्तद्विशेषणसूचितमर्थविशेषं दर्शयन्नेव किंशब्दोक्तमाक्षेपमुपदर्शयति **एतदुक्तं भवतीति** । इत्यादिकमित्यादिपदेनैतत्पटात्यन्ताभाव एतत्तन्तुनिष्ठ एतत्पटानाद्यभावत्वादेतत्पटान्योन्याभाववदित्याद्यनुमानपरिग्रहः ॥ **स्वभावैकत्वाभ्यामिति** । यद्यपि मिथ्यात्वसाधकानामनुमानानामपि बहुत्वान्नैकत्वम् । अत एव टीकायामित्यादिकमित्यादिपदं तथाऽपि सत्यत्वसाधकानां प्रमाणानां विजातीयानां बहुत्ववद्विजातीयप्रमाणबहुत्वाभावाभिप्रायेणेयमेकत्वोक्तिरित्यवधेयम् ।

स० — प्रमातृप्रमितिभेदेनेत्यत्र प्रमितिशब्देन ज्ञातता ग्राह्या ।

प० — **इत्यादिविशेषेति** । निरतिशयसातिशयत्वादिरादिपदार्थः । ननु वेदानुमानपदाभ्यां भावकरणव्युत्पत्त्या कार्यकारणयोरभेदोपचारेण वा फलकरणयोर्ग्रहणप्राप्तावपि अक्षजपदेन फलमेव प्रतीयते न करणमित्यत आह **अक्षजत्वमिति** । संनिकर्षस्यैव करणत्वाभिप्रायेणेयमुक्तिः । ननु बहुव्रीहिपक्षे मातृपूर्वस्येति भाव्यमित्यतो नायं बहुव्रीहिरित्याह **पूर्वशब्देनेति** । ईशादयश्च ते पूर्वाश्च ईशतज्ज्ञानवेदाक्षजानुमामातृपूर्वाः ते अस्य संतीति मत्वर्थे अत इनि ठनावितीन्प्रत्यय इत्यर्थः । विशेष्याकांक्षायामाह **प्रत्ययार्थस्त्विति** । 'कोकप्रीतिचकोरपारणपटुज्योतिष्मतीलोचने'इत्यादिबहुप्रयोगदर्शनान्न कर्मधारयान्मत्वर्थीय इति न शङ्क्यं इति भावः ॥ **अन्यत्रेति** । तत्वोद्द्योततत्वनिर्णयादाविति भावः । असत्यमिति गीतास्थवाक्ये मिथ्यात्ववादिनां निंदनेन जगत्सत्यतावगतेः । 'अपरोक्षदृशो

**मिथ्यादर्शनं** नेति वाक्ये ईशज्ञानेन विश्वसत्यत्वप्राप्तेः, विश्वं सत्यमित्यादिवेदेन, तत्रोक्तपटादिसत्त्वग्राहिप्रत्यक्षादिना च सत्त्वस्य प्राप्तेरिति भावः ॥ **स्वभावैकत्वाभ्यामिति** । व्यक्तिबहुत्वेप्येकजातीयतया अनुमानत्वेनैकत्वमभिप्रेत्यैवमुक्तम् ।

**या०** — इत्यादिविशेषद्योतनायेत्यत्रादिपदेनेश्वरस्य स्वतन्त्रस्वरूपचैतन्यमात्रानुबन्धि च प्रमातृत्वमन्येषां तु न तथेत्यादिविशेषसंग्रहः । ननु वेदानुमानशब्दयोर्भावकरणसाधनत्वात्ताभ्यां करणफलरूपप्रमाणस्वीकारसम्भवेऽप्यक्षजपदेन कथं तदुभयस्वीकार इत्यत आह **अक्षजत्वं ज्ञानसन्निकर्षयोरिति** । ईश्वरादीत्यत्रादिपदेनास्मदादिस्वरूपज्ञानसंग्रहः । ननु बहुव्रीह्याश्रयेण प्रमेयलाभे इनिप्रत्ययवैयर्थ्यमित्यत आह **पूर्वशब्देनेति** ॥ **प्रमाऽध्याहारेणेति** । पूर्वशब्दात्पूर्वमिति शेषः ॥ **स्वभावैकत्वाभ्यामिति** । अनुमानानां बहुत्वेऽप्यनुमानत्वेनैकत्वमित्याशयः ॥

**श्री०** — प्रमितिः **ज्ञातता** ॥ **आगममात्रेति** । तेन पौरुषेयागमसंग्रहः । ईश्वरादिज्ञानमित्यत्रादिपदेन नित्यभूतं जीवानां स्वरूपज्ञानं ग्राह्यम् ॥ **अकरणत्वादिति** । ज्ञानस्य ज्ञप्तिरूपत्वेन करणत्वाभावात् ॥ **अफलत्वाच्चेति** । नित्यत्वेन जन्यत्वाभावादिति भावः ॥ **पूर्वशब्देनेति** । अत्र पूर्वशब्द आद्यर्थकः । तथा चेशतज्ज्ञानवेदाक्षजानुमामातारश्च ते पूर्वाश्च ते तथेशाद्याः पूर्वे यस्य प्रमेयस्य तत्तथोक्तं तस्येत्यर्थः । नन्वत्र प्रमेयरूपविश्वसंग्रहः केनेत्यत आह **प्रत्ययार्थस्त्विति** । इनिप्रत्ययार्थ इत्यर्थः ॥ **अपौरुषेयेति** । पौरुषेयागमस्येशमातृपदाभ्यां तद्वाक्यगृहीतत्वेन प्राप्तत्वात् । फलितमाह **सर्वप्रमाणेति** ॥ **येनेत्यत इति** । एकवचनादित्यर्थः ॥

**च०** — **तत इनिप्रत्यय इति** । कोकप्रीतिचकोरपारणपटुज्योतिष्मतीलोचने इत्यादिबहुप्रयोगदर्शनात् 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर' इति परिभाषाविरोधो न शंकनीय इति भावः ॥ **शुक्तिरजतवदिति** । प्रथमान्ताद्वतिरुपमेये प्रथमादर्शनात् स्थानिवदादेशो नल्विधाविितिवत् ।

**सु०** — **नाप्यागमः । स हि गौडपादादिपुरुषप्रणीतो वा वेदादिर्वा । आद्यं दूषयति** येनेति ।

**अनु०** — येनेदं कल्प्यते भ्रान्तं भ्रान्तिस्तस्यैव किन्न सा ।

येन **गौडपादादिना** इदं प्रागुक्तमीशादिकं विश्वं, भ्रान्तं भ्रान्तिसिद्धं कल्प्यते, **कल्पयित्वा च तथा वाक्यं प्रणीयते** । तस्यैव सा **कल्पना** भ्रान्तिरयथार्था **किन्न भवेत्** । **एतदुक्तं भवति** ।

ईशवाक्यादिप्रमाणैस्तावदीशादिविश्वं सत्यतयाऽवगतम् । तद्विरुद्धा च गौडपादादीनां विश्वमिथ्यात्वप्रतीतिर्भ्रान्तिरेवेति । ततः किमित्यत आह भ्रान्तत्व इति ।

भ्रान्तत्वे तस्य विश्वारेरीशाद्यभ्रान्तमेव हि ।

विश्वारेर्विश्वमिथ्यात्वं प्रतिपादयतस्तस्य गौडपादादेर्भ्रान्तत्वे सिद्धे तन्मूलस्य तद्वाक्यस्याप्रामाण्यात्तेन विश्वमिथ्यात्वासिद्धावीशवाक्यादिभिः प्रमाणैरीशादिविश्वमभ्रान्तं सत्यमेव सिद्धमिति । नन्वीश्वरवाक्यविरोधाद्गौडपादादीनां भ्रान्तत्वं कुतः कल्पनीयम् । गौडपादादिवाक्यविरोधादीश्वरादीनां विश्वसत्यत्वप्रतीतिरेव भ्रान्तिः कुतो न कल्पनीयेत्यत आह भवेयुरिति ।

भवेयुर्भ्रान्तयो नृणां नैवेशादेः कथञ्चन ।

बाह्या(भ्य)न्तरकारणसामग्रीसत्त्वादिति शेषः । कथञ्चनेन्द्रियदोषादेर्बाह्यकारणस्य अधर्मादेः अज्ञानादेरान्तरकारणस्याप्यत्यन्तमसंभवादित्यर्थः । ईशादयो विप्रलम्भका इति चेन्न । कल्पकाभावादिति ।

शे० — मूले विश्वमिति स्पष्टमनुक्त्वेदमिति तत्प्रामाणिकत्वसूचनमुखेन तत्कथनमनर्थकमित्याशङ्क्य गौडपादादीनां विश्वमिथ्यात्वप्रतीतेर्भ्रान्तित्वोपपादकबाधकसद्भावसूचनार्थत्वान्न तदित्यभिप्रेत्य वाक्यतात्पर्यमाह एतदुक्तं भवतीति । गौडपादादेर्मुख्यस्य विश्वारित्वस्यासंभवात्तत्तात्पर्यमाह विश्वमिथ्यात्वं प्रतिपादयत इति ॥ कल्पकेति । श्रोतृप्रसङ्गरूपदोषस्य विप्रलम्भकल्पकस्यासम्भवादित्यर्थः ।

प० — गौडपादादीति । ते च तदीयपूर्वतनवृद्धाः ।

सु० — अस्तु तर्हि नेह नानाऽस्तीत्यादिरद्वैतपरो वेदादिरागमः सर्वस्यापि मिथ्यात्वे प्रमाणमिति चेन्न । तस्य विश्वसत्यत्वग्राहकप्रत्यक्षबाधितत्वेनातदर्थत्वात् । अथ मतम् । प्रत्यक्षं खलु तात्कालिकं प्रमाणं न पुनरात्यन्तिकम् । वेदस्तु न तथा । स्वतः प्रमाणं च । अतो बलवता वेदेन बाधितत्वात्प्रत्यक्षप्राप्तमपि विश्वसत्यत्वं भ्रान्तिसिद्धमित्येवाङ्गीकर्तुमुचितमित्यत आह सत्यत्वमिति ।

अनु० — सत्यत्वमक्षजप्राप्तं यदि भ्रान्तमितीष्यते ।

सत्यत्वं विश्वस्येति शेषः । आगमबलमाश्रित्य । तन्नेति वाक्यशेषः । कुतो नेत्यत आह प्रामाण्यमिति ।

प्रामाण्यमागमस्यापि प्रत्यक्षादन्यतः कुतः ।

**कुतः सिद्धम् । न कुतोऽपि । न केवलं प्रत्यक्षस्य किन्त्वागमस्यापि प्रामाण्यं प्रत्यक्षेणैव सिद्धं न त्वन्येनेत्यर्थः । तत्कथमित्यत आह** साक्षीति ।

साक्षिप्रत्यक्षतो ह्येव मानानां मानतेयते ।

**आद्यादिभ्य उपसंख्यानात्तृतीयार्थे तसिः । मानानां सर्वेषामीयते प्रतीयते । हिशब्दः सर्वप्रमाणप्रामाण्यस्य साक्षिसिद्धत्वोपपादकप्रमाणसूचनार्थः । तद्विवृणोति** साक्षिणा इति ।

साक्षिणः स्वप्रकाशत्वमनवस्था ततो न हि ।

**प्रमाणानां प्रामाण्यं हि न सत्तामात्रेण निश्शङ्कव्यवहारहेतुः । अपि तु प्रमितमेव । न च बाह्यप्रत्यक्षादिकमेव प्रामाण्यप्रमितिसाधनम् । तत्प्रामाण्यप्रमितेरप्युक्तन्यायेनावश्यकत्वात् । न च तत्प्रामाण्यं स्वग्राह्यम् । अचैतन्यज्ञानस्य स्वप्रकाशत्वाभावात् । प्रत्यक्षाद्यन्तरान्वेषणे चानवस्था स्यात् । साक्षिवेद्यत्वे तु सर्वप्रमाणप्रामाण्यस्य न कश्चिद्दोषः । साक्षी हि चैतन्यरूपतया स्वप्रकाशः । प्रामाण्यं च ज्ञानग्राहकग्राह्यमिति स्वप्रामाण्यं स्वयमेव गृह्णातीति नानवस्थाऽऽपद्यते । अतः साक्षिवेद्यमेव सर्वप्रमाणप्रामाण्यमङ्गीकार्यमिति ।**

**शे०** — पूर्वत्र गौडपादाद्यागमस्य सयुक्तिकप्रामाण्यव्युत्पादनेन तद्विरोधस्याकिञ्चित्करतया

---

तत्प्रयुक्तसत्यत्वग्राहिप्रत्यक्षाप्रामाण्यशङ्कानुदयेन तदुत्थापनपूर्वकतन्निरासपरोत्तरवाक्यवैयर्थ्यमित्याशङ्क्य नेदमुक्तरीत्या तत्परं किन्तु वेदादिविरोधप्रयुक्ततदप्रामाण्यशङ्कोत्थापनपूर्वकतन्निरासपरमेवेत्यभिप्रेत्य किं तेनापीत्यतो वेदादिर्वेति प्राग्विकल्पितद्वितीयपक्षदूषणोपपादनार्थत्वान्न तदिति भावेन बहिरेव द्वितीयपक्षोत्थापनपूर्वकं तद्दूषणं प्रदर्श्य तत्रानुपपत्तिशङ्कोत्थापनपूर्वकं तन्निरासपरतयोत्तरवाक्यं सङ्गमयति **अस्तु तर्हीत्यादिना** । उक्तशङ्कातन्निरासयोर्मूलारूढत्वलाभार्थमपेक्षितं पूरयति **आगमेति** । वेदाद्यागमबलमित्यर्थः । ननु 'प्रतियोगे पञ्चम्यास्तसिरि'ति पञ्चम्यन्तादेव तसिविधानात्साक्षिप्रत्यक्षस्य **च** प्रामाण्यज्ञप्तिं प्रति करणत्वेन कर्तृकरणयोस्तृतीयेति तृतीयान्ततया पञ्चम्यन्तत्वाभावात्कथं साक्षिप्रत्यक्षेणेति साक्षिप्रत्यक्षत इति तृतीयान्तात्तसिरित्यतस्तस्यादित उदात्तमर्धह्रस्वमित्येतन्मूलका'दाद्यादिभ्य उपसंख्यानमि'ति सूत्रीयोपसंख्यानाद्युक्तम्तृतीयान्तादपि तसिरित्याह **आद्यादिभ्य उपसंख्यानादिति** । (प्रथमाविभक्तिप्रभृतीनां परेषां तसेरुपसंख्यानसंग्रहः कार्यः) सप्तम्यादिविभक्त्यन्तेभ्य आदिमध्यपार्श्वपृष्ठादिशब्देभ्यस्तसिर्भवतीत्यर्थः । न च प्रत्यक्षशब्दस्याद्यादित्वाभावान्नोपसंख्यानादपि तत्सिद्धिरिति वाच्यम् । तस्याकृतिगणत्वेन तत्संभवात् । अत एवोक्तं वृत्ता'वाकृतिगणश्चायमि'ति । अत एव चैतदुपसंख्यानविवरणे आदिमध्यपार्श्वपृष्ठादिभ्य इत्यादिपदोपादानमिति द्रष्टव्यम् । केचित्त्वाद्यादिभ्यः

प्रथमादिसप्तविभक्तिभ्यस्तदन्तेभ्य: शब्देभ्य इति यावत् । ततश्च प्रथमादिसप्तविभक्त्यन्तेभ्य: शब्देभ्यस्तसेरुपसंख्यानात् तृतीयान्तादपि साक्षिप्रत्यक्षशब्दाद्युक्तस्तसिरित्यर्थ इत्याहु: ॥ **उपपादकप्रमाणेति** । अन्यथा प्रामाण्यनिश्चयानुपपत्तिरूपवक्ष्यमाणप्रमाणेत्यर्थ: ॥ **तदिति** । सर्वप्रमाणप्रामाण्यस्य साक्षिसिद्धत्वमित्यर्थ: ।

नन्वर्थनिश्चयमात्रेणैव प्रवृत्त्युपपत्तेरर्थसन्देहेऽपि प्रवृत्तिदर्शनाच्च न प्रामाण्यनिश्चयोपेक्षित इति न तदन्यथाऽनुपपत्त्या सर्वप्रमाणप्रामाण्यस्य साक्षिसिद्धत्वसिद्धिरित्यत: कृष्यादावर्थसन्देहात्प्रवृत्तावपि बहुवित्तव्ययायाससाध्ये पारत्रिकफलकयागादौ निष्कम्पप्रवृत्ते: प्रामाण्यनिश्चयमात्रसाध्यत्वेन तस्यावश्यकत्वादस्त्येव तदन्यथाऽनुपपत्तिरित्याशयेन तस्यावश्यकतां तावदाह **प्रमाणानामिति** । यथा च नार्थनिश्चयस्य निष्कम्पप्रवृत्तिहेतुत्वं तथोक्तं वाक्यार्थचन्द्रिकायां गुरुचरणैरेव प्रामाण्यस्वतस्त्ववादे । न सत्तामात्रेणेत्युपलक्षणम् । नापि ज्ञाततामात्रेणेत्यपि द्रष्टव्यम् । एवं प्रामाण्यनिश्चयस्यावश्यकत्वमुपपाद्य तस्यान्यथाऽनुपपत्तिमुपपादयितुं तदन्यथोपपत्तिमाशङ्कते **न चेति** । आदिपदेनानुमानपरिग्रह: ॥ **तत्प्रामाण्येति** । बाह्यप्रत्यक्षादिगतप्रामाण्येत्यर्थ: । अप्रमितप्रमाणभावस्य बाह्यप्रत्यक्षादे: स्वसामग्र्यापादितप्रामाण्याप्रामाण्यशङ्काकलङ्कितत्वेन प्रामाण्यप्रमित्यजनकत्वेन तत्प्रमितिजनकत्वनिर्वाहार्थं साधनीभूतबाह्यप्रत्यक्षादिगतप्रामाण्यप्रमितिरावश्यकीति भाव: । नन्वस्तु प्रमितप्रमाणभावस्यैव बाह्यप्रत्यक्षादे: प्रामाण्यप्रमाजनकत्वं किं तावताऽपीत्यत: किं तत्प्रामाण्यं स्वेनैव ग्राह्यमित्यभिमतं किंवा प्रत्यक्षाद्यन्तरेणेति विकल्पद्वयं मनसि निधायाद्यं दूषयितुमनुवदति **न चेति** । अन्त:करणवृत्तिरूपज्ञानस्य जडत्वेनास्वप्रकाशत्वान्न स्वप्रामाण्यग्राहकत्वं तस्येत्याह **अचैतन्यज्ञानस्येति** । अन्त:करणवृत्तिरूपज्ञानस्येत्यर्थ: । अयं भाव: । क्रिया हि कर्मकारकजन्येति तावदविवादं सर्ववादिनाम् । न च जन्यजनकयोरेकत्वमुचितम् । जन्यजनकभावस्यान्तर्भावितपूर्वापरभावित्वात् । न हि तदेव स्वात्मानं प्रति पूर्वमपरं चेति युज्यते । तत्कथं स्वकर्मकत्वं वृत्तिरूपज्ञानस्य स्यात् । किञ्चास्ति तावद्यत्सन्निकृष्टकरणजन्यं यज्ज्ञानं तत्तद्विषयमि'ति जन्यज्ञाने व्यवस्था । न च वृत्तिरूपज्ञानं स्वसन्निकृष्टकरणजन्यं भवति । तत्कथं स्वविषयं स्यादिति न स्वविषयप्रकाशत्वं तस्य । किञ्च तस्य स्वप्रकाशत्वे तद्वदेव ग्राह्यप्रामाण्याश्रयज्ञानस्यापि स्वप्रकाशत्वसम्भवेन तेनैव तन्निष्ठप्रामाण्यस्यापि निश्चयसम्भवाद्बाह्यप्रत्यक्षादे: प्रामाण्यप्रमितिसाधनत्वकल्पनवैयर्थ्यमिति । द्वितीयं दूषयति **प्रत्यक्षाद्यन्तरेति** । एवं प्रकारान्तरेण सर्वप्रमाणप्रामाण्यनिश्चयासम्भवमुपपाद्य साक्षिणा तत्सम्भवमुपपादयति **साक्षीति** । न चैवं सर्वत्र साक्षिणा प्रामाण्यनिश्चयापत्त्या संशयानुपपत्तिर्दोष: । तन्निवृत्त्यै परीक्षापेक्षाऽभ्युपगमेऽपि च परीक्षाऽनवस्था स्यादिति वाच्यम् । साक्षिण: सुखादिनिश्चयरूपत्वेन तत्सिद्धे सुखादौ

संशयानुदयेन संशयनिवर्तकपरीक्षायाः साक्षिसिद्धसुखाद्यवतारपर्यन्ततयाऽनवस्थाऽसम्भवादत एवोक्तं **न कश्चिदिति** । संशयानुपपत्तिरूपो वा परीक्षानवस्थारूपो वा प्रामाण्यग्रहणे परीक्षापेक्षानङ्गीकारेण स्वतः प्रामाण्यभङ्गरूपो वेत्येवं यः कश्चिदित्यर्थः ।

ननु ग्राहकानवस्थाऽत्रापि समानेति कथं न दोष इत्यतः साक्षिणः स्वप्रकाशत्वेन स्वस्यैव स्वप्रामाण्यग्राहकतया ग्राहकान्तरापेक्षायास्तत्रैव पर्यवसन्नत्वेन तदनवसरादित्यनवस्थापरिहारं वक्तुं वृत्तिज्ञानाद्यसम्भवि स्वप्रकाशत्वं कुतः साक्षिण इत्यतस्तद्धेतूक्त्योपपादयति **साक्षी हीति** । उपलक्षणं चैतत् । नियतयाथार्थ्यश्चेत्यपि द्रष्टव्यम् । अन्यथा साक्षिणा स्वप्रामाण्ये गृहीतेऽपि प्रामाण्यग्राहकसाक्षिण्येव प्रामाण्यसन्देहाहितसाक्षिगृहीतस्वप्रामाण्यसन्देहस्यानिवारणादिति भावः । अस्तु स्वप्रकाशतया ज्ञानग्राहकत्वं साक्षिणः प्रामाण्यग्राहकत्वं तु कुतस्तस्य वाच्यम् । तथा चानवस्थैवेत्यत आह **प्रामाण्यं चेति** ।

स० — **किं चागमस्येति** । अत्र सर्वकरणप्रामाण्ये साक्षिग्राह्यत्वाभावात् आगमप्रत्यक्षशब्दाभ्यां तज्जन्यज्ञानं ग्राह्यम् ।

प० — फलितार्थमाह **न केवलमित्यादिना** ॥ **आद्यादिभ्य इति** । पञ्चमाध्यायचतुर्थपादे प्रतियोगे पञ्चम्यास्तसिरिति सूत्रवार्तिकमते आद्यादिभ्यः परेषां प्रथमाविभक्तिप्रभृतीनां तसेरुपसंख्यानं संग्रहः कार्य इति । तथाच तृतीयार्थे तसिरिति भावः ॥ **अचैतन्यज्ञानस्येति** । चेतनानात्मकज्ञानस्येत्यर्थः ।

---

या० — **आद्यादिभ्य इति** । आद्यादिभ्यः शब्देभ्यः सप्तम्याद्यन्तात्तसिर्भवतीति वार्तिकार्थः । आदौ आदितो मध्यत इत्याद्युदाहरणम् । आकृतिगणश्चायमिति काशिकायामुक्तत्वात्प्रकृतोपयोग इति द्रष्टव्यम् ॥ **अचैतन्यज्ञानस्येति** । चेतनस्वरूपभिन्नज्ञानस्येत्यर्थः । चेतनज्ञानस्वरूपस्यैव स्वप्रकाशत्वे, मामहं जानामीति प्रत्यक्षरूपं वा सुप्तोत्थितस्यैतावन्तं कालं सुखमहमस्वाप्समिति परामर्शान्यथाऽनुपपत्त्यादिरूपं वा प्रमाणमस्ति । न तद्भिन्नज्ञानस्येति भावः । यद्यत्सन्निकृष्टकरणजन्यं तत्तद्विषयकमिति जन्यज्ञाने व्यवस्था । तथा चाचैतन्यरूपज्ञानस्य मनोवृत्तिरूपतया जन्यस्य स्वसन्निकृष्टकरणजन्यत्वाभावान्न स्वविषयकत्वरूपं स्वप्रकाशत्वं तस्येति भाव इत्यप्याहुः ॥ **चैतन्यरूपतयेति** । चेतनस्वरूपतयेत्यर्थः । तथा चोक्तप्रत्यक्षपरामर्शादिकं तस्य स्वप्रकाशत्वसाधकमस्तीति भावः ।

च० — **आद्यादिभ्य इति** । प्रतियोगे पञ्चम्यास्तसिरिति पञ्चमाध्यायीसूत्रस्थवार्तिकमेतत् । आद्यादिभ्यः प्रथमा हि सप्तविभक्त्यन्तेभ्यः शब्देभ्यस्तसेरुपसंख्यानात्तृतीयान्तादपि साक्षिप्रत्यक्षशब्दात्तसिः सङ्गच्छत इति भावः । **अचैतन्यज्ञानस्येति** । चतुर्वर्णादित्वात्स्वार्थेष्यञन्तेन पर्युदासार्थो नञ्नञिति सूत्रे समस्यत इति चिद्रूपज्ञप्तिभिन्नज्ञानस्येत्यर्थः ।

सु० — अस्त्वेवं साक्षिप्रत्यक्षवेद्यं प्रत्यक्षागमप्रामाण्यम् । तथाऽप्युक्तरीत्या प्रबलेनागमेन विरोधे दुर्बलस्य प्रत्यक्षस्य कुतो न बाध इति चेत् । इत्थम् । स्यादयं प्रत्यक्षागमयोर्बाध्यबाधकभावः, यदि व्युत्पादिते दौर्बल्यप्राबल्ये युक्ते स्याताम् । न चोभयप्रामाण्यस्य साक्षिवेद्यत्वे ते युज्येते इत्याशयवान्प्रत्यक्षस्य तात्कालिकं प्रामाण्यमागमस्यात्यन्तिकमिति विभागं तावदपाकरोति तात्कालिकमिति ।

अनु०— तात्कालिकं प्रमाणत्वमक्षजस्य यदा भवेत् ॥

ऐक्यागमस्य किन्न स्यात्

यदि साक्षिगृहीतमपि विश्वसत्यत्वग्राहिणोऽक्षजस्य प्रामाण्यं तात्कालिकमेव भवेत्तर्ह्यैक्यागमस्यापि प्रामाण्यं साक्षिगृहीतत्वाविशेषात्तात्कालिकं स्यादेवेति न विभागः सिध्यति ।

शे०— उक्तरीत्येति । आत्यन्तिकप्रमाणत्वस्वतःप्रमाणत्वाभ्यामित्यर्थः ॥ दुर्बलस्येति । अत्राप्युक्तरीत्येत्यनुवर्तते । तात्कालिकप्रमाणत्वेन चेति तदर्थः ॥ उभयप्रामाण्यस्येति । प्रत्यक्षागमरूपोभयनिष्ठतत्तत्प्रामाण्यस्येत्यर्थः ॥ तावदिति । 'यदि स्वतस्त्वमि'त्यादिनोत्तरत्र करिष्यमाणाद्वैतागमप्राबल्योपपादकप्रामाण्यस्वतस्त्वनिरासापेक्षया तावच्छब्दः । ननु व्याप्तिविकलोऽयं तर्काभास इत्यतोऽविशेषलक्षणसामान्यव्याप्तेः सत्त्वान्नैवमित्यभिप्रेत्य तामाह साक्षिगृहीतत्वाविशेषादिति ।

प० — व्युत्पादिते दौर्बल्यप्राबल्ये इति । तात्कालिकप्रमाणत्वतदभावाभ्यां प्राग्व्युत्पादिते इत्यर्थः ॥ ऐक्यागमस्यापीति । तज्जन्यज्ञानस्येत्यर्थः ।

श्री० — उभयेति । प्रत्यक्षागमेत्यर्थः ।

सु० — नन्वैक्यागमप्रामाण्यमपि तात्कालिकमेव । किन्तु प्रत्यक्षमाभासीकृत्य निवर्तते । यथोक्तम् 'वेणुसङ्घर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् । एवं गुणव्यत्ययजो वेदः शाम्यति तद्यथे'तीत्यत आह तस्यापीति ।

अनु० — तस्याप्येतादृशं यदि ॥

ऐक्यागमस्यापि प्रामाण्यं यदि तात्कालिकं स्वीक्रियेत तदा विश्वस्य सत्यतैव स्यात् ।

ऐक्यप्रमाणमिथ्यात्वं य(त)दा विश्वस्य सत्यता ॥

ननूक्तमत्र प्रत्यक्षमाभासीकृत्य पश्चादैक्यागमप्रामाण्यं निवर्तत इति भवति तात्कालिकम्, न च विश्व(स्य) सत्यत्वापत्तिरित्यत'स्तस्याप्येतादृशं यदी'त्येत'दैक्यप्रमाणमिथ्यात्वं

यदे'ति व्याख्यातम् । ऐक्यागमप्रामाण्यस्य बाध्यत्वं यदेत्यर्थः ॥ न केवलं प्रामाण्यमात्रस्य बाध्यत्वम् । किन्तु धर्मिणो वाक्यस्यापीति ज्ञापनायैवमुक्तम् ।

एतदुक्तं भवति । स्यादिदं यदि प्रामाण्यस्य तात्कालिकत्वं नामानित्यत्वमिह विवक्षितं स्यात् । न चैवम् । क्षणमात्रवर्तिनोऽपि प्रामाण्यस्य विषयसत्यत्वाव्यभिचारित्वेनानित्यताया दौर्बल्यहेतुत्वासंभवात् । किन्तु बाध्यत्वमेव । तच्चेदैक्यागमप्रामाण्यस्याभ्युपगतं तदा कथं विश्वस्य सत्यता न स्यादिति ।

शे०— नन्वेवं विश्वसत्यत्वमेव स्यादिति शङ्कते **किन्त्विति** । परिहरति **प्रत्यक्षमिति** । उक्तमर्थं भागवतसम्मत्या समर्थयते **यथोक्तमिति** । एकादशस्कन्ध इति शेषः । यथा वेणुसङ्घर्षजो वन्हिर्वेणुवनं दग्ध्वा स्वयमेव शाम्यति । एवं सत्त्वादिगुणवैषम्यजातो वेदस्तत्स्वमूलं सत्त्वादिगुणवैषम्यं दग्ध्वा स्वयमेव शाम्यतीति योजना । वेदरूपधर्मिनाशे तद्धर्मस्य प्रामाण्यस्यापि नाशावश्यम्भावान्न प्रकृतासङ्गतिरस्येति द्रष्टव्यम् ॥ **न च विश्वेति** । विश्वसत्यत्वापत्तिश्च नेत्यर्थः । नन्वैक्यागमप्रामाण्यबाध्यत्वपरव्याख्येयवाक्यानुरोधेन तद्व्याख्यानरूपे ऐक्यप्रमाणमिथ्यात्वमित्युत्तरवाक्ये ऐक्यागमप्रामाण्यबाध्यताया एव वक्तव्यत्वादैक्यप्रमाणमिथ्यात्वोक्तिरसङ्गतेत्यतोऽस्या उक्तेरपि तदर्थकत्वान्नासङ्गतिरित्याशयेन तथा योजयति **ऐक्यागमेति** । तर्हि भाष्यकृताऽपि तथैव वक्तव्यत्वात्किं वक्रोक्त्येत्यतस्तत्प्रयोजनोक्त्या तां समर्थयते **न केवलमिति** । ननु प्रामाण्यस्य तात्कालिकत्वमनित्यत्वमेवाभिमतं न तु बाध्यत्वमिति न विश्वसत्यत्वापत्तिरित्यत आह **एतदुक्तं भवतीति** ।

स०— ननु प्रामाण्यमिथ्यात्वस्य प्रकृतत्वेनैक्यप्रामाण्यमिथ्यात्वमिति वक्तव्ये धर्मिनिर्देशः किमर्थमित्यत आह **न केवलमिति** ।

प०— एवं गुणव्यत्ययज इति गुणव्यत्ययजः सत्वरजस्तमोगुणविषमभावेन जातो वेदः स्वकारणस्य शान्तिमापाद्य स्वयं शाम्यतीत्यर्थः ।

या०— वेणुसङ्घर्षज इत्यस्य यथा वेणुसङ्घर्षजो वन्हिर्वेणुवनं दग्ध्वा स्वयमेव शाम्यत्येवं सत्त्वादिगुणवैषम्यजातो वेदस्तत्सत्त्वादिगुणवैषम्यरूपं स्वकारणं दग्ध्वा स्वयमेव शाम्यतीति योजना । धर्मिनाशे तद्धर्मस्य प्रामाण्यस्यापि नाश आवश्यक इति प्रकृतसङ्गतिरस्त्येवेति भावः ।

श्री०— तर्हि बाध्यबाधकभावः कथमित्यभिप्रायेण पृच्छति **किन्त्विति** । उत्तरमाह **प्रत्यक्षमिति** ॥ **न चेति** । न हीत्यर्थः । सत्यताग्राहिप्रत्यक्षस्याभासीकृतत्वादित्यर्थः । **धर्मिणः** प्रामाण्यं प्रति धर्मिणः ॥ **एवमुक्तमिति** । ऐक्यप्रमाणमिथ्यात्वमित्युक्तमित्यर्थः ।

**सु०—** ननु साक्षिणो विषयाव्यभिचारित्वात्तद्गृहीतमैक्यागमप्रामाण्यमबाध्यमेवेत्याशङ्क्याह ऐक्यवाक्यस्येति ।

**अनु०—** ऐक्यवाक्यस्य मानत्वं यद्यबाध्यमितीष्यते ॥
अक्षजस्यापि मानत्वं नाबाध्यं किमितीष्यते ॥

साक्षिगृहीतत्वाविशेषादिति भावः । साक्षिगृहीतत्वाविशेषाद्विश्वसत्यताग्राहकप्रत्यक्षप्रामाण्यस्य बाध्यतायामैक्यागमप्रामाण्यमपि बाध्यं स्यात् । तदबाध्यत्वे वा प्रत्यक्षप्रामाण्यमप्यबाध्यमेवैष्टव्यमिति समुदायार्थः ।

**शे०—** अबाध्यमेवेति । ततश्च न विश्वसत्यत्वापत्तिरिति शङ्काभिप्रायः । प्रशिथिलमूलत्वात्तर्काभासोऽयमित्यतोऽविशेषव्याप्तिसत्त्वान्न तथेत्याशयेन तामाह साक्षीति । समुदायार्थ इति । तात्कालिकमित्यादे'र्नाबाध्यं किमितीष्यत' इत्यन्तस्य ग्रन्थस्यार्थ इत्यर्थः ।

**श्री०—** बाध्यं स्यादित्यत्र हेतुः साक्षिगृहीतत्वाविशेषादिति ।

**सु०—** नन्वद्वैतब्रह्मावस्थानं मोक्षः । स च प्रत्यक्षप्रामाण्यस्याबाध्यत्वे व्याहन्येत । प्रपञ्चसत्यत्वेन सद्द्वैततापत्तेः । अतः साक्षिवेद्यत्वाविशेषेऽप्यनेन विशेषेण प्रत्यक्षप्रामाण्यं साक्षिणा तात्कालिकमेव गृह्यत इति कल्प्यत इत्यत आह अद्वैतेति ।

**अनु०—** अद्वैतहानिसामान्यात्

एवं तर्ह्यैक्यवाक्यप्रामाण्यमपि तथाविधमेव (मन्तव्यम्) । तदबाध्यत्वेऽप्यद्वैतहानिसामान्येनोक्तलक्षणमोक्षासिद्धेः । न हि वाक्यं वा तत्प्रामाण्यं वा तदर्थो भेदाभावो वा ब्रह्मेति । प्रत्यक्षप्रामाण्यस्याबाध्यत्वे बहुप्रपञ्चापत्तिः । आगमप्रामाण्याबाध्यतायां तु नैवमिति चेन्न । अस्य विशेषस्य व्यर्थत्वादित्याशयवानाह नेति ।

न विशेषश्च कश्चन ।

**शे०—** तथाविधमेवेति । तात्कालिकमेवेत्यर्थः ॥ तदबाध्यत्व इति । ऐक्यवाक्यप्रामाण्यस्याबाध्यत्व इत्यर्थः ॥ अद्वैतहानीति । ऐक्यवाक्यतत्प्रामाण्यतदर्थभूतभेदाभावानां सत्त्वापातेन सद्द्वैततापत्तिसाम्येनेत्यर्थः । ननु च वाक्यतत्प्रामाण्यतदर्थभेदाभावानां ब्रह्मस्वरूपत्वान्न सत्त्वेऽपि तेषां सद्द्वैतताप्रसङ्ग इत्यतः सोपाधिकनिरुपाधिकयोरैक्यायोगान्न ब्रह्मस्वरूपत्वं तेषामित्याह न हीति ।

**प०—** तात्कालिकमेव गृह्यत इति । मिथ्याभूतमेवेत्यर्थः । तात्कालिकशब्दस्य मिथ्यात्वार्थकत्वेन व्याख्यानात् । नन्वद्वैतवाक्यप्रामाण्यस्याबाध्यत्वे कथमद्वैतहानिरिति चेत् । तद्वाक्य-

तत्प्रामाण्यतदर्थानां सत्यत्वप्राप्तेरिति भावेनाह **न हि वाक्यं वेति** । येनाद्वैतहानिः न स्यादिति च वाक्यशेषः ।

श्री०— नन्वैक्यवाक्यादेर्ब्रह्माभेदाङ्गीकारान्नाद्वैतहानिरित्यत आह **न हीति** । सोपाधिकनिरुपाधिकयोरैक्यायोगादिति भावः ॥ **नैवमिति** । ऐक्यागमरूपैक एव प्रपञ्चः प्राप्त इत्यर्थः ।

**सु०— यदप्यद्वैतागमस्य प्राबल्योपपादनाय स्वतःप्रामाण्यमुक्तं तत्राह यदीति ।**

**अनु०**— यदि स्वतस्त्वं प्रामाण्ये विश्वसत्ता कथं न ते ।

**स्वतस्त्वधर्मस्य प्रामाण्यं धर्मि, अधिकरणतया विवक्षितमिति सप्तम्युपपत्तिः । यद्यागमप्रामाण्यस्य स्वतस्त्वमुच्यते तदा प्रत्यक्षप्रामाण्यमपि स्वत एवेति ब्रूमः । सम्यङ्मिथ्याज्ञानसाधारणकारणमात्रजन्यत्वं वा सम्यङ्मिथ्याज्ञानसाधारणज्ञापकमात्रज्ञेयत्वं वा प्रामाण्यस्य स्वतस्त्वम् । तदागमजन्यज्ञानवत्प्रत्यक्षजन्यस्याप्यविशिष्टमेव । तथा चागमप्रामाण्यस्य स्वतस्त्वमङ्गीकुर्वतो यथा तद्विषयसत्यता सम्मता तथा स्वतःप्रमाणप्रत्यक्षविषयविश्वसत्ता(त्यता)ऽपि कथं न ते सम्मतेति ।**

शे०— ननु क्रियाश्रययोः कर्तृकर्मणोराधारस्यैवाधिकरणतयाऽतथाभूतस्य प्रामाण्यस्यानधिकरणत्वात्कथं प्रामाण्ये इति सप्तमीत्यतः क्रियाश्रययोः कर्तृकर्मणोराधारत्वाभावेऽपि प्रामाण्यस्याधिकरणत्वविवक्षया सप्तम्युपपत्तिरित्याह **स्वतस्त्वेति** । नन्वागमप्रामाण्यस्वतस्त्वस्य स्वसिद्धान्तत्वात्कथं तन्निराकरणमित्यतस्तन्निरासस्यात्र परोक्तिखण्डनार्थत्वेन वस्तुस्थितिकथनपरत्वाभावान्नापसिद्धान्त इत्याशयेन तद्भाष्यापेक्षितं पूरयति **उच्यत इति** ।

प०— **प्रामाण्यं धर्मीति** । प्रामाण्यरूपधर्मि अधिकरणतया विवक्षितमित्यर्थः । धर्मधर्मिणोराधेयाधिकरणभावस्य प्रसिद्धत्वद्योतनाय धर्मधर्मिशब्दप्रयोगः तथा चात्र 'सप्तम्यधिकरणे चे'ति सप्तम्युपपत्तिरिति भावः । अन्यथा 'षष्ठी शेष' इति संबंधार्थकषष्ठ्या भाव्यमिति भावः ।

या०— 'नन्वेकशतं षष्ठ्यर्थास्ते च स्वस्वामिभावादय' इति वचनात्प्रामाण्यस्वतस्त्वयोर्धर्मधर्मिभावरूपसम्बन्धे 'षष्ठी शेष' इत्यनेन षष्ठ्या भाव्यम् अतः कथं प्रामाण्य इति सप्तमीत्यत आह **स्वतस्त्वधर्मस्येति** । 'विवक्षातः कारकाणि भवन्ती'ति वचनादत्राधिकरणत्वविवक्षायामधिकरणत्वप्राप्त्या शेषत्वस्याभावान्नोक्तसूत्रेण षष्ठीप्राप्तिरिति भावः ॥ **यद्यागमप्रामाण्यस्येति** । अत्राधिकरणस्याविवक्षितत्वादुक्तसूत्रेण षष्ठ्युपपत्तिरिति ज्ञेयम् । 'उच्यत' इति मूले शेषोक्तिः ॥ तेन क्रियाश्रययोः कर्तृकर्मणोराधारस्यैवाधिकरणत्वादत्र च क्रियाया अभावात्कथं प्रामाण्यस्याधिकरणत्वमिति शङ्काऽनवकाशः ।

च०— **सप्तम्युपपत्तिरिति** । तथाच 'प्रकृते अधिकरणत्वत्वोपरक्तान्वयबोधस्य विवक्षिततया राज्ञः पुरुष इत्यादाविव संबन्धत्वोपरक्तान्वयबोधस्याविवक्षिततया 'शेष' इति लक्षणाप्रवृत्त्या न तल्लक्षणलक्षिता षष्ठी प्रसज्यत इति भावः ।

**सु०— स्यादेतत् । प्रत्यक्षागमयोः स्वतःप्रामाण्येऽप्यस्ति विशेषः । यत्प्रत्यक्षं तात्कालिकमेव ज्ञानस्य प्रामाण्यं जनयति वाक्यन्त्वात्यन्तिकम् । तथा ज्ञानग्राहकः साक्षी प्रत्यक्षज्ञानस्य तात्कालिकमेव प्रामाण्यं गृह्णाति वाक्यजन्यज्ञानस्य त्वात्यन्तिकमिति । मैवम् । अस्यां व्यवस्थायां नियामकाभावस्योक्तत्वात्** । **दोषान्तरं** चाह प्रामाण्यस्य चेति ।

अनु०— प्रामाण्यस्य च मर्यादा कालतो व्याहता भवेत् ।

कालतो मर्यादा व्यवच्छेदः । **तात्कालिकत्वमिति यावत्** । **कथं व्याहतिरित्यत आह** कालान्तरेऽपीति ।

कालान्तरेऽप्यमानं चेदिदानीं मानता कुतः ।

**अमानं बाधितमानत्वं (नं) चेत्प्रत्यक्षम् । तात्कालिकशब्देन हीदानीमस्ति कालान्तरे तु बाध्य(त्व)मिति परस्याभिमतम् । तत्र यदि च प्रत्यक्षं कालान्तरेऽपि बाधितप्रामाण्यं स्यात्तर्हीदानीं तस्य मानताऽस्तीति कुतः स्यात् । कालत्रयसत्तानिषेधरूपत्वाद्बाधस्य यदि च प्रत्यक्षप्रामाण्यमिदानीं सत्स्यात्कथं कालान्तरेऽपि तर्हि बाध्येतेति व्याहतमेव तात्कालिकत्ववचनम् । अप्रमाणमेव भवतु तर्हि प्रत्यक्षमिति चेत । सत्यम् । भवति भवतोऽयं मनोरथः । तत्सिद्धिरेवेदानीमपि क(पो)फोणिगुडायते ।**

**शे०— तात्कालिकमेव गृह्णातीति** । साक्षिणो याथार्थ्यनियमादिति भावः ॥ **अस्यां व्यवस्थायामिति** । प्रत्यक्षस्य तात्कालिकमेवागमस्य त्वात्यन्तिकमेवेत्युक्तव्यवस्थायामित्यर्थः ॥ **उक्तत्वादिति** । 'तात्कालिकं प्रमाणत्वमक्षजस्य यदा भवेदि'त्यादिनेति शेषः । उक्तशङ्काया मूलारूढताभिप्रायाह **तात्कालिकत्वमिति यावदिति** ॥ **कफोणीति** । 'स्यात्कफोणिस्तु कूर्पर' इत्यभिधानात्कूर्पराभिधं हस्तमूलं कफोणिशब्दार्थः । तत्संश्लिष्टो गुडः कफोणिगुडस्तद्वदाचरतीत्यर्थः । कफोणिगुडो यथा लेढुमशक्यस्तथा प्रत्यक्षाप्रामाण्यसिद्धिरप्यशक्येति यावत् ।

प०— तात्कालिकशब्दस्येदानीं प्रामाण्यमस्ति कालान्तरे तु नास्तीति **अर्थं** मन्वानश्चोदयति **स्यादेतदित्यादिना ॥ अस्यां व्यवस्थायां नियामकाभावस्योक्तत्वादिति** । 'तात्कालिकं प्रमाणत्वमि'त्यादिवाक्यव्याख्याने उक्तत्वादित्यर्थः ॥ **कफोणिगुडायत इति** । व्याख्यातमेतज्जिज्ञासानये 'बन्धमिथ्यात्वं नैवमुक्तिरपेक्षत' इत्यत्र ।

या०— कफोणिगुडायत इत्येतत्पूर्वमेव व्याख्यातम् ॥

च०— **कपोणिगुडायितेति** । हंसायित इत्यादाविव कर्तुः क्यङसलोपश्चेति सूत्रविहितकर्तृभूतोपमानवाचिपदप्रकृतिकाचारक्यङन्तात्सनाद्यन्ता इति योगानुशिष्टधातुसंज्ञकाद्गत्यर्थोकर्मकेतिकर्तृसाधननिष्ठान्तोयमिति कूर्पराधःप्रदेशसंयुक्तगुडकर्तृकाचारसदृशाचारकर्त्री तत्सिद्धिरित्यर्थः । प्रपञ्चितं चैतज्जिज्ञासानये ।

सु०— अद्वितीयब्रह्मावस्थानलक्षणं मोक्षमभ्युपेत्य प्रत्यक्षप्रामाण्याबाध्यतावदागमप्रामाण्याबाध्यतायामपि तद्धानिः समानेत्युक्तम् । इदानीन्तु स एवानुपपन्न इत्याशयवान्पृच्छति मिथ्यात्वमानमिति ।

अनु०— मिथ्यात्वमानं मोक्षेऽपि मानं किन्नेति भण्यताम् ।

विश्वमिथ्यात्वप्रतिपादकमानमागमोऽनुमानं वा मोक्षेऽपि मानमिति मोक्षसमयेऽप्यबाधितस्वरूपप्रामाण्यमित्यर्थः । नेति बाधितस्वरूपप्रामाण्यमित्यर्थः । किंशब्दः पूर्वेण परेण च संबध्यते । यद्वा कावत्रैव मानमित्ययं प्रश्नो ज्ञातव्यः । इति पृष्टस्योत्तरं, भण्यताम् । आद्ये दोषमाह मानत्व इति ।

मानत्वेऽद्वैतहानिः स्यात्

अबाधितस्वरूपप्रामाण्यपक्षे तेनैव सद्द्वितीयत्वाददद्वैतहानिः स्यादित्युक्तलक्षणो मोक्षो न सिध्येत् । द्वितीये दूषणमाह अमानत्वेऽपीति ।

अमानत्वेऽप्यमोक्षता ॥

अमोक्षता विवक्षितावस्थाया इति शेषः । विश्वमिथ्यात्वमानस्य तत्प्रामाण्यस्य च बाध्यत्वपक्षेऽपि मोक्षो न सिध्यति । कथमित्यत आह विश्वस्येति ।

विश्वस्य पुनरापत्तिर्मिथ्यामानं यदा न मा ॥

विश्वमिथ्यात्वमानं यदा न मा बाधितस्वरूपप्रामाण्यं स्यात्तदा विश्वस्य पुनरापत्तिः स्यात् । नास्तित्वप्रमाणबाधस्यास्तित्वाव्यभिचारात् । विश्वसद्भावे च कथमुक्तलक्षणो मोक्षः स्यादिति । आदौ तावत्प्रत्यक्षेण विश्वं प्राप्तम् । तदागमादिनाऽऽपाततोऽपनीतम् । आगमादेश्च बाधे पुनस्तदापतितमिति प्रतीत्यपेक्षया पुनःशब्दः । विश्वं तद्बाधकं चोभयमपि बाधितमिति चेन्न । उत्तरत्र दूषणात् ।

शे० — 'अद्वैतहानिसामान्यादि'त्यस्य 'मिथ्यात्वमानं मोक्षेऽपि मानमि'त्यस्य च ग्रन्थस्य विरोधपरिहारायाह **अद्वितीयब्रह्मेति ॥ पूर्वेण परेण चेति** । किं मानमिति पूर्वेण विनेत्युत्तरेण च संबध्यत इत्यर्थः । **किंशब्दस्य** नेत्युत्तरेणैव संबन्धः । मानमित्यस्य प्रश्नत्वं च काक्वैव सिध्यतीत्यभिप्रेत्य पक्षान्तरमाह **यद्वेति ॥ काक्वेति** । 'काकुः स्त्रियां विकारो य रेऽपि शोकभीत्यादिभिर्ध्वनेरि'त्यभिधानाद्ध्वनिविकार एव काकुस्तयेत्यर्थः । यथा घटो न भवति किमित्युक्त्यैव भवति न वेति कोटिद्वयं लभ्यते । तथा मानं न किमित्येतावन्मात्रेणैव मानं भवति न वेति कोटिद्वयं लभ्यत इत्यभिप्राय इत्यन्ये । **उक्तलक्षणः** अद्वितीयब्रह्मावस्थानलक्षणः । अमोक्षतापादनस्यानिष्टापादनताला-भायापेक्षितं पूरयति **विवक्षितावस्थाया इति** । तात्पर्यमाह **विश्वेति ॥ कथमितीति** । उक्ततर्कस्याप्रयोजकत्वादिति भावः । विश्वसत्यत्वापादनद्वारा तदापादनस्यात्राभिप्रेतत्वेन साक्षादमोक्षतापादनस्यानभिप्रेतत्वान्नाप्रयोजकत्वमित्यभिप्रेत्य वाक्यं योजयन्नेवापादनक्रमं दर्शयति **विश्वमिथ्यात्वमानमित्यादिना ॥ प्रतीत्यपेक्षयेति** । न त्वर्थापेक्षयेत्यर्थः ॥ **उत्तरत्रेति** । चतुर्थस्य प्रथमे 'एकस्यासत्यतायां हि' 'न स्वप्नेऽपि द्वयं मिथ्ये'त्यादिना विरुद्धयोर्द्वयोर्बाधितत्वस्य दूषणादित्यर्थः ।

स० — **काक्वेति** । किंशब्देनेत्यर्थः ।

प० — **काक्वेति** । स्वरविशेषस्य काकुरिति संज्ञा ॥ **अबाधितस्वरूपप्रामाण्यपक्ष इति** ।

अबाधितत्वं स्वरूपप्रामाण्ययोर्विशेषणम् । कुतः पुनरापत्तिरित्यत आह **नास्तित्वप्रमाणबाधस्येति** । नास्तित्वप्रमाणस्य बाधकप्रमाणस्य बाधः अस्तित्वाविनाभूत इत्यर्थः ॥ **अपनीतमिति** । मिथ्यात्वमानेन बाधितमित्यर्थ इति भावः ॥ **उभयमपि बाधितमिति** । कतकरजोन्यायेनेति भावः ॥ **उत्तरत्रेति** । 'किञ्च भ्रान्तत्ववादी स भ्रान्तत्वं स्वमतस्य च । अङ्गीकरोति नियतं तत्र संप्रतिपन्नता । वादिनोस्तेन चाभ्रान्तं विश्वमेव भविष्यति' इत्येतद्व्याख्यावसरे बाधस्यापि बाधे जगदबाध्यं स्यादिति वक्ष्यमाणत्वादिति भावः ॥

या० — **काक्वेति** । स्वरविशेषेणेत्यर्थः । उभयमपि बाधितमित्यत्र युगपदेवेति शेषः ॥ **उत्तरत्रेति** । 'स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचिदि'त्यत्रेति शेषः । तत्रापिपदेन बाह्यानामपि मानमातृप्रमेयाणां बाधदर्शनाभावस्योक्तत्वात् ।

श्री० — **काक्वेति** । मानशब्दगतस्वरविशेषेणेत्यर्थः । 'काकुः स्त्रियां विकारो यः स्वरवर्णादिभिर्ध्वनेरि'त्यमरः । ततश्च किंशब्दो नापेक्षित इत्यर्थः । **विवक्षितावस्थाया** अद्वितीयब्रह्मावस्थायाः ॥ **उक्तलक्षणेति** । **अद्वितीय**ब्रह्मावस्थानरूपा मुक्तिरित्यर्थः ॥

**च०— काक्वेति ।** स्वरविशेषस्य काकुरिति संज्ञा । **अबाधितत्वं** स्वरूपप्रामाण्योर्विशेषणम् । **उभयमपि बाधितमिति** । कतकरजोन्यायेनेति भावः ॥ **उत्तरत्रेति** । 'किञ्च भ्रान्तत्ववादी'त्यादिक- 'विश्वमेतद्भविष्यती'त्यन्तानुव्याख्याव्याख्यावसरे बाधस्यापि बाधे जगदबाध्यं स्यादित्यभिधास्यमान- त्वादिति भावः ।

**सु०— किञ्च मुक्तिः सती वाऽसती वा । पक्षद्वयेपि नोक्तलक्षणा मुक्तिः सिध्यति । कथमिति । आद्यं प्रत्याह** अस्ति चेदिति ।

**अनु०—** अस्ति चेन्मुक्त्यवस्था च द्वैतापत्तिः

**आत्मस्वरूपमेव मुक्तिः । यथोक्तम् । 'आत्मैवाज्ञानहानिरि'ति । 'अविद्यास्तमयो मोक्ष' इति च । तत्कथं द्वैतापत्तिरित्यतो मुक्त्यवस्थेत्युक्तम् । अवस्थैवैषाऽऽत्मनो न त्वात्मैव । तथात्वे हि प्रागेव सिद्धत्वात् प्रयत्नवैयर्थ्यम् । न चात्मा ज्ञानस्य साध्योऽनादित्वात् । अविद्याध्वंसविशिष्टो न प्राक्सिद्धो ज्ञानसाध्यश्चेति चेत्तर्हि किं स एव मुक्तिः । अद्धेति चेत् । तर्हि विशिष्टस्य सत्त्वाभावेन सती मुक्तिरित्ययुक्तं स्यात् । किञ्च मुक्तिर्नाम धर्मः । स कथमात्मैव स्यादिति ।**

**शे०—** अस्ति चेदित्यादेः पूर्वार्थोपपादकत्वाभावादसङ्गतिमाशङ्क्य तदभावेऽप्यत्राभिप्रेतदूषणा- न्तरोपपादकत्वेन तत्सङ्गतत्वान्नासङ्गतिरित्यभिप्रेत्याभिप्रेतं दोषान्तरं स्वयमुपदर्श्य तदुपपादकतयोत्तरग्रन्थं योजयति **किञ्चेत्यादिना** । मूले मुक्तिरित्येव वक्तव्यत्वादवस्थाग्रहणमनर्थकमित्याशङ्क्य तत्पक्षोद्भा- वितद्वैतापत्तिरूपदोषोपपादनार्थत्वात्तस्य न तदिति भावेन तदुपपादकतया तद्योजयितुं द्वैतापत्त्यनुपपत्तिश- ङ्कामुत्थापयति **आत्मस्वरूपमेवेति** । ननु मुक्तेरात्मस्वरूपताया एवासिद्धेः कथं तस्याः सत्यत्वेन द्वैतापत्तिरित्यत आह **यथोक्तमिति** । नन्वेतावताऽज्ञाननिवृत्तेरात्मस्वरूपत्वात्तस्याः सत्यत्वे द्वैता- पत्त्यभावप्राप्तावपि तस्या मुक्तित्वाभावान्मुक्तेरात्मस्वरूपत्वासिध्या तत्सत्यत्वे द्वैतापत्तिः स्यादेवेत्यतोऽज्ञान- निवृत्तेर्मुक्तित्वं साधयति **अविद्येति** ॥ **तथात्वे हीति** । असिद्धसिद्धेरेव प्रयत्नप्रयोजनत्वान्न सिद्ध- सिद्ध्यर्थं प्रेक्षावत्प्रयत्नो युक्त इति मुमुक्षूणां श्रवणादौ प्रवृत्तिरयुक्ता स्यादिति भावः ॥ **न चेति** । नापीत्यर्थः । प्रयोजनमननुसन्धाय मुमुक्षूणां प्रवृत्तावपि प्रागभावप्रतियोगिन एवोत्पादनापरपर्यायसाधना- र्हतया, सिद्धस्य ब्रह्मणस्तदनर्हत्वान्न साध्यत्वमिति भावः । ननु नात्ममात्रं मुक्तिः किन्त्वज्ञानध्वंसविशिष्ट एव । तथा चाज्ञानध्वंसस्य शास्त्रप्रवृत्तेः प्राग(पि)सिद्धत्वात्तदुपरक्तात्मनोऽपि न शास्त्रप्रवृत्तेः प्राक् सिद्धि- रिति न पूर्वोक्तदोषद्वयमिति **शङ्कते अविद्येति** । न केवलमुक्तदूषणोपपादकतयाऽवस्थापदस्य सप्रयोज-

मत्वं किन्तु दोषान्तरसूचकत्वादपीति भावेन तत्सूचितं दोषान्तरमुपदर्शयति **किञ्चेति** ॥ **धर्म इति** । आगन्तुको धर्म इत्यर्थः । तथा चागन्तुकधर्मरूपमुक्तेरात्ममात्रताया आत्मनोऽप्यागन्तुकत्वापत्त्या मुक्तितः प्राक् तदभाववदात्मनोऽप्यभावः स्यादित्यर्थः ।

स० — नन्वज्ञानहानेरात्मस्वरूपत्वेपि मोक्षस्यात्मस्वरूपत्वे किमायातमित्यत आह **ऐक्यागमस्येति** । **अविद्यास्तमयेति** ॥ **अवस्थैवेति** । अवस्थाऽवस्थावतोश्च भेदस्यापि सिद्धत्वादिर्थः ॥ **मुक्तिर्नामेति** । मुक्तिरूपधर्मस्यागन्तुकत्वेनात्मनोप्यागन्तुकत्वापत्त्या पूर्वमात्माभावः ।

श्री० — **मुक्तिर्नामेति** । बन्धमोक्षरूपः सोपाधिको मुक्तिरूपो धर्मो निर्धर्मकात्मस्वरूपं नेत्यर्थः ।

सु० — **द्वितीयं प्रत्याचष्टे** अतोऽन्यथेति ।

**अनु० —** अतोऽन्यथा ॥

अमुक्तत्वं

**सत्त्वपक्षात्पक्षान्तरे । यदि मुक्तिरसती स्यात्तदाऽऽत्मनोऽमुक्तत्वं स्यात् । विषाणासत्त्वे शशो ह्यविषाणी दृष्टः । तथा च कुत उक्तलक्षणत्वम् । अथ मतम् । न मुक्तिः सती नाप्यसती किन्त्वनिर्वचनीयेति । तदाऽप्यमुक्ततैव(दप्ययुक्तमेव) । संसारेऽप्यनिर्वचनीयेनैव हि द्वितीयेन सद्द्वितीयत्वम् । तदुत्तरमपि तच्चेत्स्यात्कथममुक्तत्वं न भवेत् । एतेन पञ्चमप्रकारताऽपि निरस्ता । अनिर्वचनीयताऽपरिहारात् । न हि चतुर्थप्रकारतावस्थितिरनिर्वचनीयत्वम् । तथा सति निर्वचनीयतापत्तेः । अनिर्वचनीयाविद्यानिवृत्तिः कथमनिर्वचनीया स्यादिति चेत् । घटप्रध्वंसो यथा तथेति जानीथाः । तदेतत्संग्रहायातोऽन्यथेत्युक्तम् । अन्यथाऽसती चेदित्यवक्ष्यत् ।**

शे० — अनिर्वचनीयत्वादिपक्षदूषणसंग्रहाय व्याचष्टे **सत्त्वपक्षात्पक्षान्तर इति** । न च पूर्वमपि सत्त्वासत्त्वरूपकोटिद्वयमात्रविषयविकल्पानुपपत्तिः । सत्त्वासत्त्वयोरेव प्रामाणिकत्वाभिप्रायेण तथा विकल्पस्य पराभ्युपगमानुसारेणात्रानिर्वचनीयत्वादिपक्षनिराकरणस्य चोपपन्नत्वात् । केचित्त्वसतीत्यनेन सद्भिन्नत्वोक्त्याऽसत्त्वस्यैवानिर्वचनीयत्वस्यापि प्राग्विकल्पितत्वाद्युक्तं तत्संग्रहायेदं व्याख्यानमित्याहुः ॥ **कथमिति** । अन्यथा संसारावस्थायामपि मुक्तत्वप्रसङ्गादिति भावः ॥ **एतेनेति** । अमुक्तत्वप्रसङ्गेनेत्यर्थः ॥ **पञ्चमेति** । नाविद्यास्तमयलक्षणो मोक्ष आत्ममात्रतयाऽभ्युपगम्यते । येनोक्तदोषः स्यात्किन्त्वात्मान्य एव । न चैवं सत्त्वासत्त्वादिविकल्पदोषापत्तिः । सदसद्विलक्षणविलक्षणत्व-

रूपपञ्चमप्रकारताऽभ्युपगमात् । 'न सन्नासन्न सदसन्नानिर्वाच्यश्च तत्क्षयः । यक्षानुरूपो बलिरित्याचार्याः प्रत्यपीपदन्नि'त्यभियुक्तवचनादिति भावः । एतेनेत्यतिदिष्टमुक्तत्वमुपपादयति । **अनिर्वचनीयत्वापरिहारादिति** । पञ्चमप्रकारत्वेऽप्यनिर्वचनीयत्वं स्यादेवेत्यर्थः । ननु च सत्त्वेनासत्त्वेन सदसत्त्वेन वा निर्वक्तुमशक्यत्वरूपतयाऽनिर्वचनीयत्वस्य चतुर्थप्रकारत्वमात्रवृत्तित्वात्कथं पञ्चमप्रकारस्याप्यनिर्वचनीयत्वापादनमित्यत आह **न हीति** । तत्र हेतुमाह **तथा सतीति** । उक्तरूपानिर्वचनीयत्वस्य पञ्चमप्रकारेऽसत्त्वे, सत्त्वादिना निर्वचनीयत्वं स्यात् । तत्र चोक्तमेव दूषणमिति भावः । ननु लोके भावनिवृत्तेरभावत्वस्याभावनिवृत्तेर्भावत्वस्य च दर्शनेन प्रतियोगितन्निवृत्तिभावे तदभिमतयोरतुल्यरूपत्वस्य प्रयोजकत्वस्थित्या सदसद्विलक्षणतयाऽङ्गीकृतस्याज्ञानस्य या निवृत्तिस्तस्या अपि सदसद्विलक्षणत्वेऽविद्यातन्निवृत्त्योरुभयोरपि सदसद्विलक्षणत्वेन तुल्यरूपत्वप्रसङ्गेन प्रतियोगितन्निवृत्तिभावप्रयोजकस्यातुल्यरूपत्वस्याभावेन तत्प्रयोज्यस्य प्रतियोगितन्निवृत्तिभावस्याप्यनुपपत्तिप्रसङ्गान्नाविद्यानिवृत्तेः सदसद्विलक्षणत्वमित्याशयेन शङ्कते ॥ **अनिर्वचनीयेति** । प्रतियोगितन्निवृत्तिभावे मात्रयाऽपि सालक्षण्याभावरूपं प्रतियोगिनिष्ठसर्वधर्मराहित्यं न प्रयोजकम् । तथा सति घटतद्ध्वंसयोरपि ज्ञेयत्वाभिधेयत्वानिर्वचनीयत्वादिना सालक्षण्यसद्भावेन प्रतियोगिनिष्ठसर्वधर्मराहित्यरूपातुल्यरूपत्वरूपप्रयोजकविरहप्रसक्त्य प्रतियोगितन्निवृत्तिभावाभावप्रसङ्गात्। किन्तु केनचित्प्रकारेण वैलक्षण्यमात्रम्। तच्च घटतन्निवृत्त्योरिवाविद्यातन्निवृत्त्योरप्यस्त्येव निवृत्तिमत्त्वतद्राहित्याभ्यां वैलक्षण्यस्योभयत्रानुभूयमानत्वात् । ततश्चाविद्यातन्निवृत्त्योः सदसद्विलक्षणत्वाविशेषेऽप्युक्तरूपस्य प्रतियोगितन्निवृत्तिभावप्रयोजकरूपस्यावैकल्यान्न प्रतियोगितन्निवृत्तिभावानुपपत्तिरित्याशयेन समाधत्ते **घटप्रध्वंसो यथेति** । अनिर्वचनीयघटप्रध्वंसस्यानिर्वचनीयत्ववत्तदत्यन्ताभावस्यानिर्वचनीयत्वं न परस्य सम्प्रतिपन्नम् । तस्य घटमिथ्यात्वरूपत्वेन ब्रह्मस्वरूपतायाः परेणाङ्गीकृतत्वात् । अतस्तत्परित्यागेन ध्वंसमात्रोपादानमिह टीकायां कृतमित्यवधेयम् ।

**स०** — ननु पञ्चमप्रकारे सत्त्वेन असत्त्वेन च निर्वक्तुमशक्यत्वलक्षणचतुर्थप्रकारस्याभावेन तद्वत एवानिर्वाच्यत्वस्याङ्गीकृतत्वेन कथमनिर्वचनीयत्वमापद्यत इत्याशङ्क्य परिहरति **तथा सतीति** । यदि मोक्षे सत्त्वेनासत्त्वेन वा निर्वक्तुमशक्यत्वलक्षणचतुर्थप्रकारो नाभ्युपेयेत तर्हि सत्त्वेन वाऽसत्त्वेन वा मोक्षस्य निर्वचनीयत्वं स्यात् । तत्र दूषणमुक्तमेवेति भावः ।

**प०— कुत उक्तलक्षणत्वमिति** । मोक्षस्येति योज्यम् । अनिर्वचनीयतापरिहारादित्युक्तं व्यनक्ति **न हीत्यादिना** ॥ **एतत्संग्रहायेति** । पञ्चमप्रकारतापक्षदूषणसंग्रहायेत्यर्थः ।

या० — एतेनेत्युक्तं विवृणोति **अनिर्वचनीयताऽपरिहारादिति** । मुक्तेः पञ्चमप्रकारतायां सदसद्विलक्षणत्वरूपचतुर्थप्रकारेणापि निर्वक्तुमशक्यत्वरूपानिर्वचनीयताया अवश्यं वाच्यत्वादिति भावः ।

श्री० — एतेनेत्युक्तं विशदयति **अनिर्वचनीयतेति** । ननु सदसद्वैलक्षण्यरूपचतुर्थप्रकार-व्यवस्थितेरेवानिर्वचनीयत्वेन पञ्चमप्रकारत्वे नानिर्वाच्यतापत्तिरित्यत आह **न हीति** ॥ **कथमिति** । प्रतियोगितदभावयोर्वैलक्षण्यस्यावश्यकत्वादित्यर्थः ॥ **घटप्रध्वंस इति** । तत्र प्रतियोगितदभावयोरुभ-योरपि व्यावहारिकत्वेन समसत्ताकत्वादिति भावः ॥ **संग्रहायेति** । तथा च **अतोऽन्यथा** अनिर्वाच्य-त्वाङ्गीकारे पञ्चमप्रकारत्वाङ्गीकारे चेति योजना द्रष्टव्या ।

सु० — **एवमेव मुक्तेरद्वितीयब्रह्मावस्थानरूपतानिरासाय कालेऽपि विकल्प्य दोषोऽभि-धातव्य इत्याह** तथा काल इति ।

अनु० — तथा काले

**ननु च मोक्षदशायां कालोऽस्ति न वेति विकल्प्य 'अस्ति चेद्द्वैतापत्तिरि'ति दूषणं चास्तु**। 'अतोऽन्यथाऽमुक्तत्व**मि'ति कथमतिदेश इत्यत आह** कालाधीना हीति ।

कालाधीना हि मुक्तता ।

कालाधीना **नियमेन कालाधिकरणा । यद्वस्तु तत्कालसंबन्ध्येवेति व्याप्तेरिति हि-शब्दार्थः ।**

**न केवलमनुमानसिद्धो मुक्तेः कालाधिकरणतानियमः किन्तु 'तदा विद्वान्' 'दृष्ट्वैव तं मुच्यत' इत्यागमसिद्धोऽपीत्याह** काल एवेति ।

काल एवागमोऽप्याह मुक्तिं

शे० — **कथमिति** । मुक्तिकालयोर्निमित्तनैमित्तिकभावस्यास्फुरणेन कालासत्त्वेन मुक्त्य-सत्त्वानापत्त्या मुक्तत्वसंभवादिति भावः । ननु घटस्य प्रागभावजन्यतया तदधीनत्ववन्मुक्तेरपि काल-जन्यत्वमात्रेण तदधीनत्वसंभवान्न मुक्त्यवस्थायामपि कालसत्त्वमावश्यकम् । अन्यथा प्रागभावाधीन-त्वाद्घटस्य तत्कालेऽपि तत्सत्त्वापातादित्यतः प्रागभाववैलक्षण्यान्नैवमित्याह **नियमेति** । मूले हिशब्द-वैयर्थ्यमाशंक्य मुक्तेः कालाधिकरणतानियमोपपादकप्रमाणसूचनार्थत्वात्तस्य न वैयर्थ्यमित्यभिप्रेत्य तत्समर्प-कतया हिशब्दं व्याचष्टे **यद्वस्त्विति** ॥ **अनुमानेति** । मुक्तिर्नियमेन कालसंबन्धिनी वस्तुत्वाद्घटव-दित्यनुमानेनेत्यर्थः ॥ **तदेत्यादि** । अत्र पूर्ववाक्ये तदाशब्दात्कालावगतिः स्पष्टैव दृष्ट्वेत्यत्र क्त्वाश्रुत्या

पूर्वकालावगतावपि पूर्वत्वादेरुत्तरकालसापेक्षत्वेन फलतस्तत्काललाभः । मुच्यत इति लटा वा तल्लाभ इति बोध्यम् ।

**स०— मुच्यत इति ।** मुच्यत इति वर्तमानार्थलट्प्रत्ययेन वर्तमानकालसंबन्धस्योक्तत्वा-दित्यर्थः ।

**प०— तदेति ।** 'तदा विद्वान् पुण्यपापे विधूये'त्यादौ तदाशब्दात् यावन्न विमो(क्षेअ)-क्ष्ये अथ संपत्स्यत इत्यादावथादिशब्दात् सिद्ध इत्यर्थः ॥ **दृष्ट्वैवेति ।** श्रुतौ दृष्टयनन्तरका(लता-मुक्तेःस्प)ले मुक्तिः स्पष्टैव ॥

**या० — दृष्ट्वैवेति ।** अत्र क्त्वाप्रत्ययेन दर्शनानन्तरकालो मोक्षाधिकरणतया प्रतीयत इति भावः ।

**श्री०— अतिदेशः** 'तथा काल' इत्युक्तोऽतिदेशः ।

**सु०— किन्ततो यद्येवमधिकरणेन कालेन व्याप्ता मुक्तिरित्यत आह** कालेति ।

**अनु०—** कालनिवर्तने ।

मुक्तेरपि निवृत्तिः स्यात्

**कालासत्त्वे मुक्तेरप्यसत्त्वं स्यात् । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वात् । तथा चातिदेशो युक्त इति । एतदुक्तं भवति । यदि मोक्षः कालसंबन्धी न स्यात्तदा शशशृङ्गा-दिवदसत्त्वापत्तिः इति । ननु च 'न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थते'ति मुक्तेरसत्त्वस्येष्ट-त्वान्नेयमनिष्टापत्तिरित्यत आह** संसारित्वमिति ।

संसारित्वमतो भवेत् ॥

**चैतन्यस्य सतो बन्धाभावलक्षणे मोक्षेऽसति देवदत्तवन्मुक्ताभिमतस्यापि संसारित्वं भवेत् । बन्ध(स्य) मिथ्यात्वात्संसारो मुक्तिश्च न स्त एवेति चेन्नानङ्गीकृतत्वमेवानिष्टत्वं किन्त्वप्रामाणिकत्वादिकम् । न च बन्धमिथ्यात्वं प्रामाणिकमित्युक्तं प्राक् । तदेवमाग-मादितः प्रत्यक्षस्य दौर्बल्यं निराकुर्वता तन्मिषेण प्राबल्यं च व्युत्पादितम् । साक्षिप्रत्यक्षस्या-गमादिप्रामाण्यग्राहकत्वेनोपजीव्यतायास्तदितरस्य साक्षिनिश्चितप्रमाण(प्रामाण्य)तायाश्च सूचित-त्वात् । ततस्तद्विरुद्धस्यागमादेरेवाप्रामाण्यं युक्तमिति ।**

**शे०—अतिदेशः** 'अतोऽन्यथा । अमुक्तत्वमि'त्युक्तः । घटादौ बन्धाभावलक्षणस्य मोक्षस्यासत्त्वेऽपि संसारित्वस्याभावात्तत्र व्यभिचारनिरासायापादककोटौ चेतनस्य सत इति विशेषणं चेतनत्वे सतीत्यर्थः ।

ईश्वरेऽपि बन्धाभावलक्षणमोक्षस्यैव सत्त्वान्न तत्र व्यभिचारः । ननु बन्धो मिथ्यैवेति कृत्वैव मुक्तेरसत्त्वस्य मयाऽभ्युपगमान्न तदसत्त्वापादनमनिष्टम् । नापि मुक्तेरसत्त्वे बन्धसत्त्वापादनम् । बन्धमिथ्यात्वप्रयुक्तत्वान्मुक्त्यसत्त्वस्य तेन बन्धापादनासंभवात् । उभयाभाववत्येकाभावेनापरापादनस्यायुक्तत्वादित्याशङ्कते **बन्धस्य मिथ्यात्वादिति** । बन्धमिथ्यात्वप्रयुक्तत्वान्मुक्त्यसत्त्वस्य बन्धमिथ्यात्वाङ्गीकारिणा मुक्त्यसत्त्वस्याङ्गीकारान्नानिष्टापादनमिति तदा वाच्यम् । यद्यनङ्गीकृतत्वमेवानिष्टत्वं स्यान्न चैवमित्याह **नानङ्गीकृतत्वमेवेति ॥ न च बन्धमिथ्यात्वं प्रामाणिकमित्युक्तं प्रागिति** । ततश्च तत्प्रयुक्तं मुक्त्यसत्त्वमपि न प्रामाणिकमित्यप्रामाणिकत्वादनिष्टत्वोपपत्तिः । बन्धमिथ्यात्वस्यैवाप्रामाणिकत्वेनोभयाभावस्यैवासिद्धत्वादेकाभावेनापरापादनमपि सङ्गतमेवेति भावः । बन्धस्य मिथ्यात्वात्संसारमुक्त्योरभावेन मुक्ताभिमतस्यैवाभावादाश्रयासिद्धिरिति शङ्काभिप्रायः । संसारमुक्त्योर्यदनङ्गीकृतत्वं तस्यैव नानिष्टत्वमपि तु प्रमाणविरोधादिरिति भावः । तर्हि किमन्यदनिष्टमिति पृच्छति **किन्त्विति ॥ अप्रामाणिकत्वादिकमिति** । तथा च संसारमुक्त्योरनङ्गीकारे प्रमाणविरोधोऽप्रामाणिकस्वीकारश्च प्रसज्येते इति 'भाव इत्याहुः । क चे'त्युत्तरग्रन्थस्य वैयर्थ्यमाशङ्क्य प्रकारान्तरेण प्राबल्यसूचकत्वान्न तदिति भावेन तत्परतयोत्तरग्रन्थं योजयितुं तद्व्युत्पादनस्य पूर्वत्र केनचित्प्रकारेण तदनुक्तावनुपपत्तेः पूर्वग्रन्थेन सूचितं तत्प्राबल्यप्रकारं तावदुपदर्शयति **तदेवमिति** । किन्तद्व्युत्पादनेनेत्यतस्तत्फलमाह **तत इति** ।

---

स० — **संसारो मुक्तिश्च न स्त एवेति चेदिति**। असत्ये एव मिथ्याभूतस्तु संसारोऽङ्गीक्रियत एवेति भावः ।

प० — **न च बंधमिथ्यात्वं प्रामणिकमित्युक्तमिति** । अत्रैव प्रकरणे पूर्वतनग्रंथे, पृथगधिकरणे, शून्यसमयापाकृतिप्रस्तावे, प्रकृतिनये, (च), 'इत्युक्तेर्बंधमिथ्यात्वं नैवमुक्तिरपेक्षत' इत्यादिजिज्ञासासूत्रव्याख्यावसरे चेति भावः ॥ **सिद्धं प्रत्यक्षस्यानुमानादित उपजीव्यत्वेन प्राबल्यम्** ॥

श्री० — घटादौ व्यभिचारवारणाय चैतन्यस्य सत इत्युक्तम् । चेतनभूतस्येत्यर्थः । तर्कस्येष्टापत्तिमाशङ्कते **बन्धस्येति** । **मिथ्यात्वात्** मिथ्यात्वेन अङ्गीकृतत्वादित्यर्थः । तथा च मुक्तस्य संसारित्वापादने इष्टापत्तिः । ननु तर्हि मुक्तत्वभङ्गस्तस्येति चेन्न । आरोपितेन नीलिम्ना गगने नीरूपत्वानपायवदारोपितेन संसारेण बन्धात्यन्ताभावरूपं मुक्तत्वं नापैतीति भावः ॥ **नानङ्गीकृतत्वमेवेति** । येन बन्धस्य मया मिथ्यात्वेनाङ्गीकृतत्वान्मिथ्याभूतेन बन्धेनोक्तत्वानपायात्संसारित्वं स्यादित्युक्तेऽनिष्टत्वं न स्यात् । इष्टापत्तिः स्यादिति यावदिति भावः ॥ **किन्त्विति** । तथा चाप्रामाणिकत्वादनिष्टं भवत्येवेति भावः । **मिषेण** व्याजेन ।

च० — प्रागिति । जिज्ञासानयादावित्यर्थः । अनुमानाद्यपेक्षया प्रत्यक्षस्योपजीव्यत्वेन प्राबल्यसमर्थनम् ।

सु० — न केवलमुपजीव्यत्वादिगुणेनान्यतः प्रबलं प्रत्यक्षम् । किन्तु स्वभावतोऽपीत्याशयवानाह क्व चेति ।

अनु० — क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितम् ।

प्रत्यक्षतः प्राप्तमिति साक्षात्कारसिद्धम् । अनुमानागमशब्दौ लिङ्गवचनवचनौ । प्रामाण्यनिर्णयस्येदानीं क्रियमाणत्वात् । दृष्टमिति शेषः । यदि हि प्रत्यक्षप्राप्तं क्वचिदनुमानागमाभ्यां बाधितमुपलब्धवन्तः (स्म)तदा प्रतीमोऽनुमानादितः प्रत्यक्षस्य दौर्बल्यम् । न च तथा । ईश्वरे दोषग्राहिप्रत्यक्षमागमादिबाधितं दृष्टमिति चेत् । सत्यम् । तत्रागमादेरुपजीव्यतया बाधकत्वमिति वक्ष्यामः । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमि'त्यस्य वैदिकार्थविषयत्वादत्र च पृथिव्यादिप्रपञ्चस्य प्रस्तुतत्वान्न विरोधः ।

शे० — साक्षात्कारसिद्धमिति । भ्रमप्रमासाधारणसाक्षात्कारमात्रसिद्धमित्यर्थः । न तु प्रत्यक्षप्रमाणप्राप्तमिति । एवमग्रेऽनुमानागमशब्दावपि लिङ्गवचनमात्रपरौ न प्रमाणभूतानुमानागमपराविति

द्रष्टव्यम् । अत्रानुमानागमबाधितं नेत्युक्तेऽनुमानागमयोर्बाधकत्वं लभ्यते । तच्च बाधजनकत्वम् । बाधश्च ग्राह्याभावप्रमा । तज्जनकत्वं फलीभूतानुमितिशाब्दज्ञानयोर्न संभवति । तयोर्ग्राह्याभावप्रमारूपत्वात् । अतोऽत्रानुमानागमशब्दयोः फलपरत्वानुपपत्त्या करणपरत्वेऽपि साक्षात्कारस्यैव मुख्यतो बाध्यत्वात्करणस्य च तद्द्वारैव बाध्यत्वात्प्रत्यक्षशब्देन फलं गृहीतमिति ध्येयम् । प्रत्यक्षादिशब्दैर्भ्रमप्रमासाधारणसाक्षात्कारादिमात्रग्रहणे नियामकमाह प्रामाण्यनिर्णयस्येति ॥ इदानीं क्रियमाणत्वादिति । अन्यथाऽन्योन्याश्रयत्वादिति भावः ॥ आगमादिबाधितमिति । 'निरनिष्टो निरवद्य' इत्याद्यागमेनेश्वरो निर्दोषः स्वतन्त्रत्वाद्व्यतिरेकेण देवदत्तवदित्यादिपदगृहीतानुमानेन च बाधितं दृष्टमित्यर्थः ॥ उपजीव्यतयेति । न चैवमागमादेर्बाधकत्वं न स्यात् । उपजीव्यस्य 'देवक्यां देवरूपिण्यां विष्णुस्सर्वगुहाशयः । आविरासीदि'त्याद्यागमस्य, श्रीवत्सकौस्तुभादिरूपविष्णुत्वसाधकानुमानस्य विरोधित्वाद्विरोधिनश्चोदाहृतागमादेरनुपजीव्यत्वादिति वाच्यम् । नरशिरःकपालशुचित्वागमस्य तच्छुचित्वानुमानादुपजीव्यशुचित्वग्राहिशब्दसाजात्यमात्रेण प्राबल्यात्तद्बाधकत्ववन्निर्दोषत्वसाधकागमानुमानयोरपि सदोषत्वग्राहिप्रत्यक्षात्तदुपजीव्यविष्णुत्वग्राह्युदाहृतागमानुमानसाजात्यमात्रेण प्राबल्यात्प्रत्यक्षबाधकत्वसंभवात् । यद्यपि निरनिष्ट इत्याद्यागमस्य स्वभावप्राबल्यमात्रेण दोषग्राहिप्रत्यक्षबाधकत्वसंभवादुपजीव्यत्वानुसरणमनर्थकम् ।

तथाऽपि तस्य स्वभावप्राबल्यवदुपजीव्यत्वस्यापि सत्त्वात्तदनुसरणम् । उभयसद्भावेऽप्यस्यैव पुरस्कारस्त्वागमस्येवानुमानस्य स्वभावप्राबल्यानुपपत्त्योपजीव्यत्वस्यानुमानप्राबल्योपपादनायावश्यमनुसरणीयत्वादुभयोक्तौ गौरवप्रसङ्गभिया बहूपपादनसापेक्षत्वाद्वा कृतम् । अत एवोत्तरत्र प्रपञ्चेनोपजीव्यत्वस्योपपादनं करिष्यतीति द्रष्टव्यम् ॥ **वक्ष्याम इति** । चतुर्थे अवतारादिदृष्टौ स्यादागमस्योपजीव्यता । आगमेन हि विष्णुत्वं ज्ञात्वा दोषोऽत्र कल्प्यत', इत्यादिनेति शेषः । ननु प्रत्यक्षस्य स्वभावप्राबल्यं ब्रह्मतर्कवचनविरुद्धम् । तत्रागमस्य स्वभावप्राबल्योक्तेरित्यतो विषयभेदप्रदर्शनेन तदविरोधमुपपादयति **प्राबल्यमिति** ॥ **वैदिकार्थेति** । असंभवत्प्रत्यक्षादिप्रवृत्तिकेश्वरादृष्टादिरूपार्थेत्यर्थः ।

प०— 'क्व च प्रत्यक्षत' इति वाक्ये प्रत्यक्षानुमानागमशब्दाः न प्रमाणभूतप्रत्यक्षादिपराः किं तु भ्रमसाधारणप्रत्यक्षादिपरा इत्याह **साक्षात्कारसिद्धमित्यादि** । कुत इत्यतो हेतुमाह **प्रामाण्येति** । बलाबलविचारणेनेदानीं प्रमाणनिर्णयस्य क्रियमाणत्वात् । प्रागेव प्रमाणतया निर्देशो न युक्त इति भावः ॥ **वक्ष्याम इति** । 'अवतारादिदृष्टौ स्यादागमस्योपजीव्यते'त्यादिना ज्ञानपादे वक्ष्याम इत्यर्थः । नन्वेवमपि तत्वनिर्णयोक्तब्रह्मतर्कवाक्यविरोध इत्याशंकां विषयभेदेन निराह **प्राबल्यमिति** ॥ **त्रिष्विति** । प्रत्यक्षादिषु ॥ **वैदिकार्थेति** । वेदैकसमधिगम्यार्थेत्यर्थः ।

या०— **साक्षात्कारसिद्धमिति** । भ्रमप्रमासाधारणसाक्षात्कारमात्रसिद्धमित्यर्थो न तु प्रत्यक्षप्रमाणप्राप्तमिति । एवमग्रेऽप्यनुमानागमशब्दौ लिङ्गवचनमात्रपरौ न प्रमाणभूतानुमानागमपरावित्यर्थः । **वक्ष्याम इति** । ज्ञानपादे 'अवतारादिदृष्टौ स्यादागमस्योपजीव्यता । आगमेन हि विष्णुत्वं ज्ञात्वा दोषोऽत्र कल्प्यत' इत्यत्रेति शेषः ॥ **वैदिकार्थेति** । ईश्वरादिरूपवेदैकगम्यार्थविषयत्वादित्यर्थः । तेन 'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चने'ति वचनात्पृथिव्यादिप्रपञ्चस्यापि वैदिकार्थत्वमेवेति शङ्काऽनवकाशः । नन्वेवमीश्वरे दोषग्राहिप्रत्यक्षस्य स्वभावत एव प्रबलेनागमेन बाधोपपत्तावुपजीव्यतया बाधकत्वोक्तिरयुक्तेति चेत् । सत्यम् । तत्र हि पूर्वपक्षिणा दोषग्राहिप्रत्यक्षस्येश्वरो न दोषवान्स्वातन्त्र्यत्वाद्व्यतिरेकेण देवदत्तवदित्यनुमानबाधितत्वमप्याशङ्कितम् आगमादीत्यादिशब्दप्रयोगात् । तत्परिहारेऽनुमानस्योपजीव्यतयैव बाधकत्वमित्यवश्यं वाच्यमिति तत्साहित्यादागमेऽपि तथैव बाधकत्वं लाघवायोक्तं न त्वागमे स्वाभावप्राबल्याभावेन येन विरोधः स्यादिति ॥

श्री०— ननु प्रत्यक्षप्राबल्ये आगमप्राबल्यप्रतिपादकब्रह्मतर्कवचनविरोध इत्यत आह **प्राबल्यमिति** । **प्रस्तुतत्वादिति** । सार्वज्ञादेर्मिथ्यात्वोपपादनायेति शेषः ।

च०— **अनुमागमशब्दाविति** । द्वावपि करणसाधनप्रत्ययान्ताविति भावः । **वक्ष्याम इति** । 'अवतारादिदृष्टेः स्यादागमस्योपजीव्यते'त्यादिना ज्ञानपादेऽभिधास्याम इत्यर्थः ।

सु० दृष्टं च दहनशैत्यानुमानस्य, मम कर्णे प्रविश्य गजो गर्जतीत्यादिवाक्यस्य च प्रत्यक्षबाधितत्वम्। तत्रापि प्रत्यक्षमुपजीव्यत्वाद्बाधकं न तु स्वभावेनेति चेत्। न। धर्मिव्यापकव्याप्यव्याप्तिग्राहकत्वाभावाद्दहनौष्ण्यादिग्राहिणः प्रत्यक्षस्य। अनौष्ण्यमुष्णताऽभावः। स च प्रतियोगिज्ञानाधीनज्ञानः प्रतियोगिभूतं चौष्ण्यं तेजस्येव प्रत्यक्षेण प्रत्येतव्यमिति तस्योपजीव्यत्वमिति चेन्न। उक्तोत्तरत्वात्। अनुष्णतासाधने हीदमुपपा(दितम्)दनम्। केनचिद्धेतुना शैत्यसाधने त्वस्यानवकाशः। यदा च समस्तस्यापि तेजसोऽनौष्ण्यं साध्यते तदा भवत्विदं व्युत्पादनम्। अग्निमात्रपक्षीकारे तु नेदमुपयुज्यते। सौरादौ तेजस्युष्णतां स्पर्शनेनोपलभ्य चक्षुषोपलब्धेऽग्नावनौष्ण्यसाधनस्य तु स्वभावप्रबलेनैव प्रत्यक्षेण बाध इत्येष दिक्।

शे०—ननु यथा प्रत्यक्षप्राप्तं न कश्चिदनुमानागमाभ्यां बाधितमुपलब्धमिति नानुमानादितः प्रत्यक्षस्य दौर्बल्यमिति भवतोच्यते तथाऽनुमानागमप्राप्तमपि न कश्चित्प्रत्यक्षेण बाधितमुपलब्धमिति न प्रत्यक्षादनुमानादेर्दौर्बल्यमिति मयाऽपि वक्तुं शक्यत एव। तत्कथं प्रत्यक्षेणाप्यनुमानागमयोर्बाधः स्यादित्यतो वैषम्यमुपपादयति दृष्टं चेति। दहनौष्ण्यग्राहिणः प्रत्यक्षस्यानौष्ण्यानुमानं प्रति किं धर्म्यादिग्राहकत्वेनोपजीव्यत्वमभिमतं किंवाऽनौष्ण्यप्रतियोग्युष्णत्वग्राहकत्वेनेति विकल्पं मनसि निधायाद्यं दूषयति धर्मीति। चक्षुरादिनैव तत्सिद्धेरिति भावः। द्वितीयमाशङ्कते अनौष्ण्यमिति॥ उक्तोत्तरत्वादिति। उक्तप्रायोत्तरत्वादित्यर्थः। तदेव विशदयति अनुष्णतेति। अङ्गीकृत्य चैतदुक्तम्। वस्तुतस्त्वनुष्णतासाधनेऽपि नोक्तरीत्या प्रत्यक्षस्योपजीव्यत्वमित्याह यदा चेति॥ अग्निमात्रेति। तत्रौष्ण्यग्राहिस्पार्शनप्रत्यक्षस्य नोपजीव्यत्वं संभवतीत्यर्थः। तत्कथमित्यतः किमत्रानौष्ण्यप्रतियोग्यौष्ण्यग्राहकत्वेन तदभिमतं धर्मिग्राहकत्वेनेति विकल्पं मनसि निधायाद्यं दूषयति सौरादाविति। द्वितीयं प्रत्याह चक्षुषेति॥ स्वभावप्रबलेनैवेति। अन्यथा बाधकान्तराभावादनौष्ण्यस्य तात्त्विकत्वं स्यादिति भावः। यद्वोक्तरीत्योपजीव्यप्रत्यक्षेण बाधासंभवाद्बाधकान्तरस्य चाभावात्तत्तात्त्विकत्वं स्यादिति भावः। नन्वौष्ण्यात्यन्ताभावात्मकमनौष्ण्यमौष्ण्यमिथ्यात्वरूपमेवेति तस्य तात्त्विकत्वमिष्टमेवेति न तदापादनं युक्तमित्यत आह दिगिति। तदर्थस्तु शैत्यस्यौष्ण्यात्यन्ताभावरूपत्वाभावेनौष्ण्यमिथ्यात्वरूपत्वाभावात्तत्तात्त्विकत्वमनिष्टमेवेति।

प०— स्वभावत एव प्रबलं सत् तत्र बाधकं न तूपजीव्यत्वेनेति भावेनाह दहनशैत्यानुमानस्येति॥ धर्मीति। धर्म्यादिचतुर्षु अन्यतमस्याप्यग्राहकत्वादित्यर्थः। उक्तोत्तरत्वादित्युक्तं

व्यनक्ति **अनुष्णतासाधन इति** । स्वभावप्राबल्येनैव तत्र बाध इत्येतत्प्रकारान्तरेणाह **यदा चेति** । एवं प्रत्यक्षस्यानुमानाद्यविषयरेखोपरेखादिविषयकत्वेनानुमानानिवर्तित (तदीयमोहानि) दिङ्मोहादिनिवर्तकत्वादिनापि प्राबल्यं प्रत्यक्षस्य ध्येयमिति भावेनाह **एषा दिगिति** । प्रपञ्चितमेतन्न्यायामृते प्रत्यक्षप्राबल्योक्तिप्रस्तावे ॥

**या०** — **उक्तोत्तरत्वादिति** । शैत्यानुमानस्येत्यनेनैवेति शेषः । तदेव दर्शयति **अनुष्णतासाधन इति** । समाधानान्तरमाह **यदा चेति** ।

**श्री०** — **तत्रापि** । दहनशैत्यानुमानेऽपि । स चौष्ण्याभावः ॥ **तेजस्येवेति** । पक्षीभूत एव तेजसीत्यर्थः ॥ **उक्तोत्तरत्वादिति** । 'दृष्टं च दहनशैत्यानुमानस्ये'ति वचनेनेत्यर्थः । तदेवोपपादयति **अनुष्णतेति** । **प्रत्यक्षेण** स्पार्शनेन । **इदमुपपादनम्** अनौष्ण्यमुष्णताभाव इत्यादिना कृतम् । **शैत्यसाधने त्विति** । तस्य भावरूपत्वेन तत्रोक्तोपपादनायोगादिति भावः ॥ **भवत्विति** । पक्ष एव प्रतियोगिनो गृह्यमाणत्वादिति भावः ॥ **अग्निमात्रेति** । पिण्डितं तेजोवन्ह्यादीत्यर्थः ॥ **स्वभावेति** । तत्रौष्ण्यस्य सौरादितेजस्येव गृहीतत्वेन पक्षीभूते वन्हावग्रहणेन साध्यग्रहोपयुक्तत्वेनोपजीव्यता न सम्भवति । तत्र प्रत्यक्षविरोधस्तु दीयतेऽतः स्वभावप्राबल्यमेव वाच्यम् । **तत्र प्रत्यक्षस्येति** । यदि स्पार्शनप्रत्यक्षेणैव वन्ह्युपलब्धिस्तदौष्ण्यस्य पक्षीभूतवन्हावेव गृहीतत्वेन प्रत्यक्षस्यैवोपजीव्यतया प्राबल्यं स्यादतस्तत्परिहाराय चक्षुषोपलब्धे इत्युक्तम् । नन्वथाऽपि प्रतियोगिज्ञानेन भाव्यं प्रतियोगिभूतौष्ण्यं वन्हादावेव प्रतिपत्तव्यमिति पुनरुपजीव्यविरोध एवेत्यतः सौरादीत्युक्तम् ।

**च०** — दहनौष्ण्यग्राहिणः स्पार्शनप्रत्यक्षस्य धर्म्यादिग्राहकतयोपजीव्यत्वं साध्यीभूताभावप्रतियोगिग्राहकत्वेन वोपेयत इति वितर्कद्वयमभिप्रेत्याद्यं प्रत्याचष्टे **धर्मीति** । चक्षुरादिनैव तत्सिद्धेरिति भावः । द्वितीयमाशङ्क्यापहस्तयते हेतुविभक्त्यन्तेन । तादृशोक्तोत्तरत्वादित्यभिहितेराशयं प्रकाशयति **अनुष्णतेति** । तेजस्त्वव्यापकताविशिष्टसंसर्गावच्छिन्नानौष्ण्यवृत्तिविधेयताकानुमितेरुद्देश्यतायां तादृशानुमितेस्तेजस्त्वसामानाधिकरण्येन प्रतियोगिज्ञानरूपौष्ण्यप्रत्यक्षस्योपजीव्यतयोपजीव्यबाधितत्वस्य तत्सूपपादत्वेपि वन्हित्वावच्छिन्नोद्देश्यतानिरूपितानौष्ण्यवृत्तिविधेयताकानुमितेरुद्देश्यतायां सौरादितेजस्युष्णताग्रहस्य प्रतियोगिविधया हेतुत्वसंभवेन वन्हित्वसंभवेन वन्हित्वावच्छिन्नधर्मिकौष्णताप्रत्यक्षस्य तद्विधयोपजीव्यताविरहेण निसर्गप्रबलेनैव बाध उपेय इति भङ्ग्यन्तरेणाभिधत्ते **तदा चेति** । **अग्निमात्रेति** । वन्हिधर्मिकौष्ण्यग्राहिस्पार्शनप्रत्यक्षस्य तत्रानुष्णतानुमानोपजीव्यत्वं न संभवतीत्यर्थः । साध्यीभूताभावप्रतियोगिग्राहकतया, धर्मिग्राहकत्वेन वोपजीव्यतोपेयेति वितर्कद्वयं प्रतिसन्दधान आद्यं

प्रत्याख्याति **सौरादाविति** । अभावधीहेतुभूतप्रतियोगिज्ञानस्य तदसमानधर्मिकतदप्रतिबन्धकरूपस्य संभवे तत्समानधर्मिकतत्प्रतिबन्धकप्रतियोगिमत्ताग्रहस्य तद्धेतुत्वानौचित्यादिति भावः । प्राक्तनी तादृश-प्रत्यक्षस्योपजीव्यतोक्तिरभ्युपगमवादरूपैव प्रकृततत्प्रतिविहितिस्तु वास्तवीति न तद्विरोध इति भावः । द्वितीयं प्रत्यस्यति । **चक्षुषेति** ॥ **स्वभावेति** । अन्यथा बाधकान्तरविरहेणानौष्ण्यस्य तात्त्विकत्वं स्यादिति भावः । प्रत्यक्षस्यानुमानाद्यनवगाढरेखोपरेखाद्यवगाहमानत्वतदनिवर्तितदिङ्मोहादिनिवर्तकत्व-नियन्त्रितं च तदवधिकप्राबल्यं ध्येयमित्याशयेनाह **दिगिति** । प्रपञ्चितं चैतन्न्यायामृते ।

**सु० — देहस्यात्मत्वं प्रत्यक्षप्राप्तमपि देहो नात्मा भूतत्वात्कार्यत्वाद्घटवदित्याद्यनुमानेन 'तं स्वाच्छरीरात्प्रवृहेदि'त्यागमेन च बाधितं दृष्टम् । अन्यथा बाधकान्तराभावाद्देहात्मत्वस्य वास्तवतापातात् । तत्कथमेतदित्यत आह** देहात्मत्वमिति ।

अनु० — देहात्मत्वं यदि

**देहात्मत्वं प्रत्यक्षतः प्राप्तमनुमानागमबाधितं दृष्टमिति यदि ब्रूयात्तदा तन्नेति ब्रूम इत्यर्थः । न तदिति पूर्वेणोत्तरेण च संबध्यते । कुतो** नेत्यत आह न तदिति ।

न तत्प्राप्तं प्रत्यक्षतः क्वचित् ।

**देहात्मत्वं प्रत्यक्षप्राप्तमेव न भवति । अतः प्रत्यक्षप्राप्तस्यानुमानादिना बाध इत्यत्र नेदमुदाहरणम् । अयमभिसन्धिः । नास्त्येव देहात्मत्वप्रतीतिः । याऽनुमानादिना बाध्यते । येषां चास्ति नास्तिकादीनां तेषामपि नेन्द्रियजा । किन्त्वनुमानागमाभासजन्यैवेति ।**

**मा भूत्पण्डितरूपाणां देहात्मत्वप्रतीतिः । पामराणां त्वस्त्येव । सैवास्माकमुदाहरणं भविष्यतीत्यतः क्वचिदित्युक्तम् ।**

शे० — **भूतत्वादिति** । बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वादित्यर्थः ॥ **कार्यत्वादिति** । अभूत्वा-भावित्वादित्यर्थः ॥ **तं स्वाच्छरीरादिति** । तमात्मानं स्वात्स्वाधीनतया स्वस्य स्वभूताच्छरीरात्प्रवृहे-त्पृथग्जानीयादित्यर्थः । न तत्प्राप्तं प्रत्यक्षत इत्युक्त्या तत्प्रतीतिमात्रमस्तीति लभ्यते । तच्चायुक्तम् । जातमात्रा इत्याद्यग्रिमग्रन्थे तदभावस्योपपादितत्वेन तद्विरोधापातादित्यत आह **अयमभिसन्धिरिति** ॥ **नास्त्येवेति** । पण्डितरूपाणामिति शेषः । येषां च नास्तिकादीनामस्ति देहात्मत्वप्रतीतिरस्तीति संबन्धः । किन्तर्हि साऽकरणिकैवेति पृच्छति **किन्त्विति** । परिहरति **अनुमानाभासेति** । चार्वाकादीनामनुमानाभासादिजन्येऽपि देहात्मभ्रमे धर्माद्यभावभ्रम इव प्रत्यक्षत्वाभिमानमात्रमिति भावः । इतीत्यस्येत्ययमभिसन्धिरिति संबन्धः ॥ **पण्डितरूपाणामिति** । प्रशस्ताः पण्डिताः पण्डितरूपा इति

प्रशंसायां रूपप् ॥ **अस्त्येवेति** । देहात्मप्रतीतिरिति वर्तते । अन्यथा संसाराभावप्रसङ्गात् । देहात्मभ्रमाद्धि रागद्वेषादयस्ततः पुण्यपापप्रवृत्त्युत्पादस्तस्मादपूर्वदेहलाभस्तेन च दुःखप्राप्तिरित्यनया प्रनाड्या संसारस्य तन्मूलकत्वात् । अत एव 'नैषां ममाहमिति धीः श्वसृगालभक्ष्य' इत्यादिवचनान्युपपद्यन्त इति भावः ।

**प० — तं स्वाच्छरीरादिति** । तमात्मानं जीवं स्वाच्छरीरात् प्रवृहेत् विवेकेन जानीयादित्यर्थः । एतच्च परीचा । अन्यथा 'स्वाख्याच्छरीराज्जीवात्तु प्रवृहेद्विष्णुमव्ययमि'ति काठकभाष्यविरोधः ॥ **अनुमानेति** । देह एवात्मा तद्व्यतिरेकेणानुपलंभादित्याद्यनुमानाभासेन तदीयपूर्वपूर्वाचार्यवाक्यरूपागमाभासेन च जन्यैवेत्यर्थः ॥ **पण्डितरूपाणामिति** । प्रशंसायां रूपप् । प्रशस्तपंडितानामित्यर्थः ।

**या० — तं स्वाच्छरीरादिति** । तमात्मानं स्वात्स्वाधीनतया स्वस्य स्वभूताच्छरीरात्प्रवृहेत् पृथग्जानीयादित्यर्थः । इदं च पूर्वपक्षरीत्या व्याख्यातं । सिद्धान्तरीत्या व्याख्यानं तद्भाष्यादवगन्तव्यम् ।

**श्री० — नास्तिकानां** चार्वाकाणाम् ॥

**च० — तं स्वाच्छरीरादिति** । तमात्मानं जीवं स्वाच्छरीरात्प्रवृहेद्विविक्तत्वेन जानीयादित्यर्थः । मतान्तरदिशैवेत्थं व्याचख्यौ । तेन स्वाच्छरीराज्जीवात्प्रवृहेद्विष्णुमिति काठकभाष्यविरोधो न शङ्कनीयः । **पण्डितरूपाणामिति** । तद्धितवृत्तिरियं प्रशंसायां रूपविधानात्प्रशस्ताः पण्डिताः इति तादृशवृत्त्यर्थबोधकं वाक्यम् ।

**सु० — तदुपपादयति** ममेति ।

**अनु० —** मम देह इति ह्येव न देहोऽहमिति प्रमा ।

**सर्वस्यापि जन्तोर्मम देह इत्येव हि प्रमा प्रतीतिर्न तु कस्यापि देहोऽहमिति । यद्वा यस्मात्सर्वेषां मम देह इत्येव प्रमा सम्यक्प्रतीतिः स(र्व)दानुवर्तते तस्माद्देहोऽहमिति प्रतीतिर्नावकाशमासादयतीति ॥ देहात्मत्वप्रतीत्यभावेऽपि देहधर्माणां कार्ष्ण्यादीनामात्मनिष्ठत्वप्रतीतिस्तावदस्त्येव कृष्णोऽहमित्यादिव्यवहारसन्दर्शनात् । सा च लिङ्गाद्यनपेक्षैव जायमाना प्रत्यक्षजन्यैव । बाध्यते चानुमानादिनेति सैवोदाहरणं भविष्यतीत्यत आह** उपचारश्चेति ।

उपचारश्च कृष्णोऽहमिति

**कृष्णोऽहमिति च प्रतीतिर्नास्तीत्यनुवर्तते । कथं तर्हि व्यवहारः । कृष्णोऽहमिति व्यवहारस्तूपचार एवेति योजना । अथ यो व्यवहारबलेन तथाविधां प्रतीतिमप्यनुमिनोति । तस्यानैकान्तिकत्वं स्यादित्याशयवानुक्तार्थे दृष्टान्तमाह** कर्दमेति ।

कर्दमलेपने ॥

वस्त्रस्य यद्वदेवं स्यात्

**यथा वस्त्रस्य कर्दमलेपने सति कृष्णं वस्त्रमित्युपचारव्यवहारो भवत्येवं प्रकृतेऽपि स्यात् । अयमभिसन्धिः । यो हि वस्त्रस्य शौक्ल्यं कर्दमलेपनं च सम्यगवगच्छति न तस्य वस्त्रे काष्र्ण्यप्रतीतिरस्ति । व्यवहरति च कृष्णं वस्त्रमिति । अतः कृष्णोऽहमिति व्यवहारात्तथाविधज्ञानानुमानं तत्र व्यभिचरति । उपचारव्यवहारोऽसाविति चेत् । प्रकृतेऽपि तथा किन्न स्यादिति ।**

**शे०** — मम देह इत्येव हि प्रमा न तु देहोऽहमिति प्रमेति योजनायां प्रमानिषेधात्तत्प्रतीतिमात्रमस्तीति प्राप्तम् । तच्चोत्तरग्रन्थविरुद्धमित्यतः प्रमापदं प्रतीतिमात्रपरतया व्याचष्टे **सर्वस्येति ॥ प्रमा प्रतीतिरिति ।** यद्यप्येवकारव्यावर्त्यप्रदर्शके न देहोऽहमित्युत्तरवाक्य एव प्रमापदस्य प्रतीतिमात्रपरत्वाश्रयणमात्रेणोत्तरवाक्यविरोधपरिहारसिद्धिरित्यनर्थकं पूर्वत्रापि तस्य प्रतीतिमात्रपरत्वाश्रयणम् । तथाऽप्युत्तरत्र तस्य प्रतीतिमात्रपरत्वलाभायैव पूर्वत्र तदाश्रयणम् । असिति हि तस्मिंस्तदलाभादिति द्रष्टव्यम् । प्रमापदस्य प्रतीतिमात्रपरत्वेऽस्वारस्यं मन्वानः प्रमापरत्वं पूर्वत्रैव च सम्बन्धं च तस्याश्रित्योत्तरत्र बुद्ध्या विवेकेन प्रतीतिसम्बन्धं प्रतीतिपदाध्याहारं वाऽऽश्रित्य योजयति **यद्वेति ॥ अस्त्येवेति ।** सैवोदाहरणमित्युत्तरेण सम्बन्धः । कुतस्तादृशप्रतीतिसत्त्वमित्यतस्तत्कार्यव्यवहारादेवेत्यभिप्रेत्य तदसिद्धिं परिहरति **कृष्णोऽहमित्यादीति ।** अस्त्वेवं प्रतीतिस्तथाऽपि न सोदाहरणम् । तस्याः प्रत्यक्षजत्वस्यानुमानादिबाध्यत्वस्य चासिद्धेरित्यतस्तदुभयं क्रमेणोपपादयति **सा चेति ।** लिङ्गादीत्यादिपदेन शब्दपरिग्रहः । व्याप्त्याद्यनुसन्धानविधुराणां जातिबधिराणां च तद्दर्शनादिति भावः । उदाहरणमित्यत्र प्रत्यक्षप्रतीतस्यानुमानादिना बाध इत्यत्रेति शेषः । ननूपचारस्य शब्दधर्मत्वात्तत्प्रतीतेश्चाशब्दत्वात्कथं तस्या उपचारत्ववर्णनमित्यतो नात्र प्रतीतेरुपचारत्वमुच्यते किन्तु व्यवहारस्यैवेत्यतो नानुपपत्तिरित्यभिप्रेत्यापेक्षितपूरणेन वाक्यं योजयति **कृष्णोऽहमितीति ॥ व्यवहारबलेनेति ।** कृष्णोऽहमिति व्यवहारबलेनेत्यर्थः । प्रतीतिकार्यस्य व्यवहारस्य प्रतीतिं विनाऽनुपपत्त्या तेन कृष्णोऽहमित्याकारप्रतीत्यनुमानमिति भावः ।

ननु कर्दमलिप्ते वस्त्रे कृष्णं वस्त्रमिति व्यवहारस्यापि तथाविधज्ञानपूर्वकत्वात्कथमनैकान्त्यमित्यत आह **अयमभिसन्धिरिति ॥ न तस्येति ।** विरोधिदर्शनसद्भावादिति भावः । अनुपचरितव्यवहारत्वस्यैव हेतुत्वेन विवक्षितत्वात्कृष्णं वस्त्रमित्यादेश्च व्यवहारस्यातथात्वान्न व्यभिचार इति भावेन शङ्कते

**उपचारेति** । माऽस्तु तर्हि व्यभिचारः पक्षेऽप्यनुपचरितव्यवहारत्वस्यासिद्धत्वादसिद्धिरवर्जनीयैवेति भावेन परिहरति **प्रकृतेऽपीति** ।

प० — न देहोऽहमि'त्यत्रापि प्रमापदान्वयात्तत्र प्रमा नेत्युक्ते देहोऽहमिति भ्रांतिरस्तीति प्राप्नोतीत्यतः प्रमापदानुवादेन तस्यार्थमाह **प्रमा प्रतीतिरिति** । प्रतीतिपदाध्याहारेण योजनान्तरमाह **यद्वेति** ।

श्री० — **कथं तर्हीति** । प्रतीत्यभाव इत्यर्थः ।

**सु० — ननु कृष्णं वस्त्रमिति नोपचारः । स्वतः शुक्लेऽपि वस्त्रे कर्दमोपाधिककार्ष्ण्यसद्भावेन प्रतीतिसंभवादिति चेन्न । किमिदमौपाधिकं नाम । साधनाभिमते व्याप्तिरिव कर्दमसन्निधानादारोप्यमाणमिति चेन्न । आरोपासंभवस्योक्तत्वात् । जपाकुसुमसन्निधानात्स्फटिके लौहित्यमिव प्रतिफलतीति चेन्न । वस्त्रस्यास्वच्छत्वात् । घृतादिना कुङ्कमगन्धादि- (वत्कर्द)रिव कर्दमेनाभिव्यक्तमिति चेन्न । प्राग्वस्त्रे कार्ष्ण्यसद्भावे मानाभावात् ।**

**अथाग्निसंयोगात्पार्थिवद्रव्ये रूपादिकमिव कर्दमोपाधिना कृतमिति मतम् । तत्र पृच्छामः किं कर्दमः शौक्ल्यं निवर्त्य कार्ष्ण्यं वस्त्रे करोति, उतानिवर्त्यैव । नाद्यः । कर्दमापगमे शौक्ल्यानुपलब्धिप्रसङ्गात् । न च, पुनः शौक्ल्यमुत्पन्नम् । कारणाभावात् । न द्वितीयः । युगपद्रूपद्वयाधिष्ठानविरोधात् । औपाधिकस्यापि सत्यत्वेन स्वाभाविकाविशेषात् ।**

---

शे० — **साधनेति** । यथोपाधिनिष्ठा व्याप्तिस्तत्सन्निधानात्साधनाभिमते आरोप्यते तथा कर्दमनिष्ठं कार्ष्ण्यं तत्सन्निधानाद्वस्त्रे आरोप्यत इत्यर्थः ॥ **उक्तत्वादिति** । यो हि वस्त्रस्य शौक्ल्यं कर्दमलेपनं च सम्यगवगच्छति न तस्य वस्त्रे कार्ष्ण्यप्रतीतिरस्तीत्यादिनेति शेषः ॥ **अस्वच्छत्वादिति** । स्वच्छत्वस्यैव प्रतिफलनोपाधितावच्छेदकत्वादिति भावः ॥ **मानाभावादिति** । अन्यथाऽग्निसंयोगात्पार्थिवद्रव्ये रूपादिकमप्यभिव्यज्यत इति कल्पनाप्रसङ्गादिति भाव ॥ **अनुपलब्धिप्रसङ्गादिति** । शौक्ल्यस्य निवृत्तत्वादिति भावः । **रूपद्वयाधिष्ठानेति** । अत्राधिष्ठितिरधिष्ठानमिति भावे ल्युट् । तथा च युगपद्रूपद्वयावस्थितिविरोधादित्यर्थः । ननु च युगपदेकत्र स्वाभाविकरूपद्वयावस्थितिरेव विरुद्धा न तु स्वाभाविकौपाधिकरूपद्वयावस्थितिरपि । ततश्च कार्ष्ण्यस्यौपाधिकत्वेन शुक्लत्वकार्ष्ण्ययोरुभयोरस्वाभाविकत्वान्न तयोरेकत्र समावेशो विरुद्ध इत्यत 'औपाधिकान्ययोः । सत्यत्वात्को विशेषः स्यादि'ति पूर्वोक्तरीत्यौपाधिकस्य सत्यादविशिष्टत्वान्न स्वाभाविकौपाधिकरूपद्वयस्याप्येकत्र समावेशो युक्तोऽन्यथा पाकानन्तरं घटे रूपद्वयस्यापि सत्त्वप्रसक्त्या तदुपलम्भप्रसङ्गादित्याशयेनाह **औपाधिकस्यापीति** ।

स०— **रूपद्वयाधिष्ठानेति** । अधिष्ठितिः अधिष्ठानम् । तथाच रूपद्वयावस्थितिविरोधादिति भावः ।

प० — **आरोपासंभवस्योक्तत्वादिति** । 'यो हि वस्त्रस्य शौक्ल्यमि'त्यादिपूर्वग्रंथेनेति भावः ॥ **कुंकुमगन्धादिवदिति** । कुंकुमगन्धो यथा व्यज्यते तथेत्यर्थः । आदिपदेन व्यजनपवनादिना अंगसंगिसलिलशैत्यादि गृह्यते । स्वाभाविकत्वौपाधिकत्वाभ्यां अविरोधोऽस्त्वित्यतः 'अत औपाधिकान्ययोः । सत्यत्वात्को विशेषः स्यादि'ति वैशेषिकनयोक्तमाह **औपाधिकस्यापीति** ॥

या०— **उक्तत्वादिति** । 'यो हि वस्त्रस्य शौक्ल्यं कर्दमलेपं च सम्यगवगच्छती'त्यादिनेति शेषः । ननु युगपत्स्वाभाविकरूपद्वयसमावेशस्य विरुद्धत्वेऽपि स्वाभाविकैकरूपवत्यौपाधिकं रूपान्तरं न विरुद्धमित्यत आह **औपाधिकस्यापीति** । अन्यथा पाकानन्तरं घटे रूपद्वयोपलम्भः स्यादिति भावः । उपपादितं चैतत्समयपादे 'अत औपाधिकान्ययोः । सत्यत्वात्को विशेषः स्यादि'त्यत्र ।

श्री०— ननु युगपद्रूपद्वयाधिष्ठानं न विरुद्धम् । उभयोः स्वाभाविकत्वे किल विरोधः स्यात् । न चैवम् । शौक्ल्यस्य स्वाभाविकत्वात् । कार्ष्ण्यस्य कर्दमोपाधिकत्वादिति चेन्न । औपाधिकस्यापि कार्ष्ण्यस्य स्वाभाविकशौक्ल्यविरोधित्वात् । कुत इत्यत आह **औपाधिकस्यापीति** । पाकजरूपस्य परमाणौ नीरूपत्वविरोधित्वदर्शनादिति भावः ॥

सु०— **भवतु वा वस्त्रे कथञ्चित्कार्ष्ण्यमौपाधिकं किन्तदुपन्यासेनाभ्यर्थ्यते । न चोक्तव्यभिचारपरिहारः । एकोदाहरणनिराकरणेऽपि मञ्चाः क्रोशन्तीत्यादेरनेकस्य व्यभिचारोदाहरणस्य संभवात् । अथ वस्त्रे कर्दमेनेवात्मनि देहोपाधिना कृतं कार्ष्ण्यमस्तीति प्रतीतिसंभावना विवक्षिता तत्राह यदीति ।**

**अनु०—**　　यद्युपाधिकृतं तदा ॥

**यदि वस्त्र इवात्मनि देहोपाधिकृतं कार्ष्ण्यमस्तीति तत्प्रतीतिः संभाव्यते तदा प्रत्यक्षप्रतीतस्यानुमानादिना बाध इत्यत्र नेदमुदाहरणमिति शेषः । कथमित्यत आह स्वत इति ।**

स्वतः शुक्लत्ववत्कार्ष्ण्यं न ममेति प्रतीयते ॥

**अत्र दृष्टान्ते दार्ष्टान्तिके चैकदेशोत्कीर्तनेनान्यदप्युपलक्ष्यते । तथा चायमर्थः । वस्त्रे खलु कार्ष्ण्यं कर्दमोपाधिकृतं (औपाधिकं) प्रतीयमानमेवं प्रत्येतव्यम् । स्वतः शुक्लमेवेदं वस्त्रं न कृष्णम् । कार्ष्ण्यन्तूपाधिकृतमिति । तथाऽत्रापि स्वतो नीरूप एवाहम् । कार्ष्ण्यं तु न**

**मम स्वभावः । किन्तु देहोपाधिकृतमिति प्रतीयत इत्यङ्गीकर्तव्यम् । तथा चास्याः प्रतीतेर्यथार्थत्वान्नानुमानादिना(तो) बाध इति ।**

**शे०**— उक्तानुपपत्तिं मनसि निधायोक्तं **कथञ्चिदिति** । किमुक्तव्यभिचारपरिहारः किंवा तत्प्रतीतिसम्भावनेति विकल्पं मनसि निधायाद्यमनूद्य दूषयति **न चोक्तेति** । द्वितीयं शङ्कते **अथेति** ॥ **एकदेशोत्कीर्तनेनेति** । दृष्टान्ते स्वतः शुक्लत्वरूपैकदेशोत्कीर्तनेन कार्ष्ण्यस्यौपाधिकत्वरूपैकदेशान्तरं दार्ष्टान्तिके च कार्ष्ण्यस्यौपाधिकत्वरूपैकदेशोत्कीर्तनेन स्वतो नीरूपत्वरूपैकदेशान्तरमुपलक्ष्यत इत्यर्थः । ज्योतिषा यजेतेत्यादिलक्षितलक्षणास्थल इवात्राप्येकदेशवचनस्य साक्षादर्थसम्बन्धाभावेन लक्षणायाः कर्तुमशक्यत्वादेतदेकदेशसम्बद्धैकदेशान्तरार्थस्यैव सम्बन्धतया वाच्यत्वाच्छब्दद्वारकार्थलक्षणैव विवक्षितेति ध्येयम् । दृष्टान्तदार्ष्टान्तिकयोरेकदेशोत्कीर्तनैकदेशान्तरोपलक्षणाभ्यां सिद्धमर्थं दर्शयन्नेव किमनेन प्रतीतिसम्भावना विवक्षितेति द्वितीयपक्षस्य दूषणमुक्तं भवतीत्याशङ्कां परिहरति **तथा चायमर्थ इति** ।

**प०— न चोक्तव्यभिचारेति** । कृष्णोऽहमिति व्यवहारस्तादृशप्रतीतिपूर्वकः व्यवहारत्वादित्यस्य कृष्णं वस्त्रमिति व्यवहारे यो व्यभिचारो मतः तत्परिहारोऽभ्यर्थ्यत इति न च वाच्यमित्यर्थः । तत्र रूपसत्वे प्रतीतेरवर्जनेन साध्यस्यापि तत्र सत्त्वादिति भावः ॥

---

**श्री०— उक्तव्यभिचारेति** । व्यवहारात्तथाविधाज्ञानानुमाने कृष्णोऽहमित्यत्र भवद्भिर्दत्तो व्यभिचार उपाधिकृतकार्ष्ण्यसद्भावोक्त्या परिह्रियत इत्यर्थः ॥ **मञ्चा इति** । क्रोशन्तीति व्यवहारमात्रमेव न ज्ञानमिति भावः ।

**सु०— यदुक्तं देहात्मताप्रतीतिर्नास्ति देहोऽहमिति प्रतीत्यननुभवादिति तदसत् । अहमिति प्रतीतेरेव तत्प्रतीतित्वात् । इदमनिदंरूपवस्तुगर्भो ह्यहङ्कारः ।**

**यच्चोक्तं मम देह इति भेदप्रती(तेर)त्यनुवृत्तेर्देहात्मत्वप्रतिभासोऽनुपपन्न इति । तदयुक्तम् । भेदप्रतीत्यसम्प्रतिपत्तेः । मम देह इति व्यवहारस्य मम स्वरूपमितिवदौपचारिकत्वोपपत्तेः । न खलु केवले देहे आत्मत्वप्रतीतिः । किन्तर्हि देहेन्द्रियान्तःकरणादिसङ्घाते । तत्र संघातापेक्षया देहमात्रे संबन्धप्रतीतिरपि न बाधिका । प्रासादस्य स्तम्भो, वृक्षस्य शाखेति यथा । न च, देहेन्द्रियादेरात्मनश्च भेदावभासे स्फुटं प्रमाणमस्ति । येन देहाद्यात्मप्रतीतिर्विरुध्येत ।**

**यदप्युक्तं कृष्णोऽहमित्यादिरूपदेहादिधर्माणामात्मनिष्ठताप्रतीतिर्नास्ति प्रमाणाभावादिति । तन्न । कृष्णोऽहमिति व्यवहारदर्शनात् । ज्ञानमूलता खलु व्यवहारस्योत्सर्गतः सिद्धा । तदनुपपत्तौ तूपचारत्वकल्पना । न च, नाहं कृष्ण इत्यादिरूपा प्रतीतिरस्ति । यद्भयादुपचारत्वं कल्पयामः । अतो भेदादिप्रतीत्यभावादस्त्येवोभयी प्रतीतिः । यथाऽऽह । 'अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्ये'ति ।**

श्रु० — नन्वहमितिप्रत्ययस्यात्मविषयत्वान्न देहात्मतादात्म्यविषयत्वमित्यतोऽहमितिप्रतीतिविषयस्याहमनुभवामीत्यात्मधर्मानुभवाश्रयत्वानुपपत्त्या केवलानात्मत्वस्याहं कर्तेत्यनात्मानुबन्धिकर्तृत्वाश्रयत्वानुपपत्त्या केवलात्मत्वस्य चासम्भवेनात्मानात्मरूपताया अवश्यं वाच्यत्वादेकदेशस्योभयरूपतायाश्च विरुद्धत्वेन वस्तुतोऽनुपपत्तेरात्मनोऽनात्मतादात्म्येनानात्मनश्चात्मतादात्म्येनाध्यस्ततयैव वक्तव्यत्वाच्चिदचित्संवलनात्मकतयाऽध्यस्ताहमर्थविषयकत्वादहमितिप्रतीतेर्देहात्मतादात्म्याध्यासे प्रामाण्यमित्याशयेनाह **इदमनिदंरूपवस्तुद्वयगर्भ इति** । चिदचिद्रूपवस्तुद्वयगर्भ इत्यर्थः । ननु मम देह इति भेदप्रतीत्यभावे कथं मम देह इति भेदव्यवहारः स्यात् । तस्य तत्प्रतीतिसाध्यत्वादित्यतस्तथा सति मम स्वरूपमिति स्वरूपभेदस्यापि व्यवहारात्तस्यापि तत्प्रतीतिसाध्यत्वप्रसङ्गः । यदि चानुपचरितभेदव्यवहारस्यैव स्वमूलभूतप्रतीतिसाधकत्वान्नौपचारिकस्य मम स्वरूपमिति स्वरूपव्यवहारस्य तत्प्रतीतिसाधकत्वमिति मन्यसे, तर्हि मम देह इत्यस्यापि व्यवहारस्यौपचारिकत्वान्न तेनापि मम देह इति देहात्मभेदप्रतीतिसिद्धिरिति सममित्याशयेनाह **ममेति** । अभ्युपेत्यैव चेदमुक्तम् । वस्तुतस्तु मम देह इति भेदप्रतीत्यङ्गीकारेऽपि न क्षतिरित्याह **न खल्वित्यादिना** । आत्मत्वप्रतीतिरहमितिप्रतीतिः ॥ **तत्र सङ्घातेति** । सङ्घातस्यैवाहमितिप्रतीतिविषयत्वेन मम देह इत्यत्रापि सङ्घात एव देहसम्बन्धितयाऽवभासते । ततश्च सङ्घातदेहयोरेव भेदावगाहिनीयं प्रतीतिर्नात्मसङ्घातयोरिति भिन्नविषयत्वान्न तस्याः सङ्घातात्मनोरभेदप्रतीतिबाधकत्वमिति भावः । ननु माऽस्तु मम देह इति प्रतीत्या संघातात्मनोरभेदप्रतीतेर्विरोधः । संघातात्मभेदप्रतीत्या तु विरोधः स्यादेवेत्यत आह **न चेति** । तादृशप्रतीतेरभवान्न तस्य बाधकत्वमिति भावः । ननु व्यवहारस्यौपचारिकत्वान्न स्वमूलभूतप्रतीतिप्रमापकत्वमित्यत आह **ज्ञानमूलतेति** ॥ **भेदादीति** । अत्रादिपदेनासंसर्गपरिग्रहः **उभयी प्रतीतिरिति** । अहमिति तादात्म्यारोपरूपा कृष्णोऽहमिति संसर्गारोपरूपा चेत्युभयीत्यर्थः । उभयविधारोपसद्भावे भाष्यसम्मतिमाह **यथाऽऽहेति** । सङ्कर इति शेषः । तद्वाक्यं पठति **अन्योन्यस्मिन्निति** ।

स० — **इदमनिदमिति** । इदंशब्देन शरीरेन्द्रियादिसंघात उच्यते । अनिदंशब्देन चैतन्यं गृह्यते । अहमर्थस्य चिदचित्संवलनस्य पराभ्युपगमात् । अहमित्यस्यैकवचनान्तत्वेनानया प्रतीत्या संघातैकत्वस्य विषयीकृतत्वेनाहमिति प्रतीतेरैक्यविषयत्वं युक्तमिति भावः ।

प० — **इदमनिदमिति** । चिदचिद्रूपवस्तुविषयक इत्यर्थः । अचिद्भागश्च देहेन्द्रियान्तःकरणादिसंघात इति भावः ॥ **अस्तु वा मम देह इति भेदप्रतीतिः** । तथापि कृष्णोऽहमित्यभेदभ्रमो युज्यत इत्यत आह, त्याह **न खलु केवले देहे आत्मत्वप्रतीतिरिति** । अहमित्युल्लेखनं आत्मत्वप्रतीतिरित्यर्थः ॥ **संबन्धप्रतीतिरपीति** । मम देह इति जायमानेति भावः । ममेत्यस्य चिदचित्संघातविषयत्वात् । तत्तदनुगुणदृष्टान्तमाह **प्रासादस्येति** ॥ **भेदादिप्रतीत्यभावादिति** । आदिपदेन संसर्गाभावादिप्रतीत्यभावादिति गृह्यते ॥ **उभयी प्रतीतिरिति** । अहमिति देहात्मतादात्म्यप्रतीतिरूपा कृष्णोऽहमित्यादितद्धर्मसंसर्गप्रतीतिरूपा चेत्युभयी प्रतीतिरित्यर्थः ॥ **यथाहेति** । अध्यासभाष्यकार इति योज्यम् ।

या० — भेदप्रतीतिमभ्युपेत्यापि समाधत्ते **न खलु केवल इत्यादिना** ॥ **आत्मत्वप्रतीतिः** अहमिति प्रतीतिः । **तत्र संघातापेक्षयेति** । संघातस्यैवाहमिति प्रतीतिविषयत्वेन मम देह इत्यत्रापि ममेत्यनेन संघात एव संबन्धितया प्रतीयते । तथा च संघातादेव देहे भेदावगाहिनीयं प्रतीतिर्नात्मसंघातयोः । सा च भिन्नविषयकत्वान्नाहमिति प्रतीतिबाधिकेति भावः । भेदादिप्रतीत्यभावादित्यत्रादिपदेनासंसर्गग्रहसंग्रहः ॥ **उभयी प्रतीतिरिति** । अहमिति तादात्म्यारोपरूपा कृष्णोऽहमिति संसर्गारोपरूपा चेत्युभयी प्रतीतिरित्यर्थः ।

श्री० — **भेदादीत्यत्र** देहात्मनोर्भेदप्रतीतिरादिपदेन कार्ष्ण्याद्यसंसर्गप्रतीतिर्गृह्यते ।

च० — **उभयी प्रतीतिरिति** । देहोऽहमिति देहतादात्म्यप्रतीतिः कृष्णोऽहमित्यतद्धर्मसंसर्गप्रतीतिश्चेत्यर्थः ।

सु० — **प्रत्यक्षजा चेयं प्रतीतिरिति कथं प्रत्यक्षसिद्धस्य नानुमानादिना बाध इत्यत आह कथं चेति** ।

अनु० — कथं च भेदो देहादेरात्मनो न प्रतीयते ।

**भेदशब्देनासंसर्गोऽपि गृह्यते । देहादिशब्देन संघातस्तद्धर्माश्च । यदा देहादेरिति पञ्चमी तदाऽऽत्मन इति षष्ठी । यदा चात्मन इति पञ्चमी तदा देहादेरिति षष्ठी । अन्यो-**

न्यारोपस्य परेणोक्तत्वात् । देहादिसंघातस्यात्मनश्चान्योन्यं भेदस्तद्धर्माणां च परस्परमसंसर्गः प्रतीयत एवेत्यर्थः । तत्कथमित्यत आह जातमात्रा इति ।

जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः ॥
भयाभयस्वभोगादौ कारणानि विजानते ।

जाता एव न तु व्यापारान्तरं कृतवन्तः । भुज्यत इति भोगः सुखम् । आदिपदेन दुःखम् । सिंहव्याघ्रादीनि भयकारणानि, मात्रादीन्यभयकारणानि, स्तनपानादीनि सुखकारणानि, शंक्वादिना नयनान्तःकण्डूयनादीनि दुःखकारणानीति विजानते । अत एव सिंहादिध्वनिमात्रेण पलायन्ते, मात्रादीनि चोपसर्पन्ति, स्तनपानाद्यर्थं प्रवर्तन्ते, वर्जयन्ति शंकुकण्डूयनादीनि ।

**शे०— प्रत्यक्षजा चेयमिति** । लिङ्गाद्यनपेक्षया जायमानत्वादिति भावः । नन्वत्र भेदप्रतीतिरस्तीत्येवोच्यते न त्वसंसर्गप्रतीतिरपि तत्कथमनेनारोपद्वयनिराससिद्धिरित्यतोऽत्र भेदशब्दस्यासंसर्गोपलक्षकताया देहादिशब्दस्य च तद्धर्मोपलक्षकताया आश्रयणेन तस्य भेदादिमात्रपरत्वाभावाद्युक्तमुभयविधारोपनिवर्तकत्वमस्य वाक्यस्येत्यभिप्रेत्य भेदादिपदमसंसर्गाद्युपलक्षकतया व्याचष्टे **भेदशब्देनेत्यादि** । देहादेरात्मन इति षष्ठीपञ्चम्योरुक्तव्यवस्थायां नियामकमाह **अन्योन्येति** । अन्योन्यस्मिन् अन्योन्यतादात्म्यारोपस्योक्तत्वादित्यर्थः । श्रुत्युपलक्षणाभ्यां लब्धमर्थमाह **देहादीति** । भोगशब्दस्य सामयिकप्रसिद्धार्थस्य स्वसमवेतसुखदुःखान्यतरसाक्षात्कारस्य भावार्थस्याभ्यवहारस्य च वक्ष्यमाणरीत्या प्रकृतेऽयोगात्कर्मसाधनतामाश्रित्य सुखपरतया तं व्याचष्टे **भुज्यत इति** । न चैवं सुखस्येव दुःखस्यापि भुज्यमानत्वेन कर्मसाधनभोगशब्देनैव लाभसम्भवात्तत्संग्राहकादिपदवैयर्थ्यमिति वाच्यम् । स्वपदसमभिव्याहृतभोगपदेन स्वतः स्वारस्येन भुज्यमानत्वप्राप्त्या सुखस्यैव च तथारूपतया तेन दुःखलाभासम्भवेन तद्ग्राहकादिपदानर्थक्यासम्भवादिति भावः । भयादिकारणतया सिंहादिज्ञानं तेषामस्तीत्यत्र किं विनिगमकमित्यत आह **अत एवेति** । भयादिकारणत्वेनत ज्ज्ञानवत्त्वादेवेत्यर्थः ।

**प०— तद्धर्माश्चेति** ॥ गृह्यन्त इत्यनुषञ्जनीयम् । पदद्वयस्यापि पाक्षिकविभक्तिद्वयांतत्वेन योजनायां हेतुमाह **अन्योन्येति** ।

**सु०— ततः किमित्यत** आह अस्मृताविति ।

**अनु०**— अस्मृतौ पूर्वदेहस्य विज्ञानं तत्कथं भवेत् ।

तद्विज्ञानं भयादिकारणमेतदिति विज्ञानम् । पूर्वदेहास्मरणे तद्विज्ञानं (कुतो) कथं न भवेदित्यत आह अन्वयेति ।

अन्वयव्यतिरेकादेरनुसंधानविस्मृतौ ।

आदिपदेन दृष्टान्तधर्मिणोर्ग्रहणम् । यद्वाऽऽदिग्रहणेनोपदेशो गृह्यते । अन्वयव्यतिरेकादेर्विस्मृताविति संबन्धः । न केवलमेतावत । किन्तु तथा चायमित्यनुसन्धानस्य च विस्मृतौ सत्यां विज्ञानं तत्कथं भवेदिति संबन्धः ।

एतदुक्तं भवति । अस्ति तावन्मृगादीनां स्तनपानादौ प्रवृत्तिः शङ्कुकण्डूयनादितो निवृत्तिश्च । ततोऽनुमीयते विद्येते तत्र तेषां रागद्वेषाविति । रागद्वेषयोरेव प्रवृत्तिकारणत्वेनास्मदादौ निर्णीतत्वात् । रागद्वेषाभ्यां चेष्टानिष्टसाधनत्वज्ञानम् । तस्यैव रागादिकारणतया निश्चितत्वात् । न च तज्ज्ञानं प्रत्यक्षसाध्यम् । कार्यकारणभावस्यातीन्द्रियत्वात् । किन्त्वनुमानोपदेशसाध्यमेव । न च मृगादीनामुपदेशः संभवति । अनधिकारात् । तस्मात्प्राग्भवीयोपदेश इति वाच्यम् । न चास्मृतोऽसौ तत्कारणमिति तत्स्मृतिसद्भावोऽङ्गीकार्यः । यद्वाऽनुमानम् । न च तत् , यद्यत्स्तनपानं तदिष्टसाधनं, यदिष्टसाधनं न भवति तत्स्तनपानं न भवति, यथाऽमुकम्, स्तनपानं चेदमित्यन्वयादिस्मरणेन विना भवति । न चाननुभूते स्मृतिरुत्पद्यते । न चास्मिञ्जन्मन्यन्वयाद्यनुभवोऽस्ति । जातमात्राणामुदाहृतत्वात् । अतो जन्मान्तरानुभूतान्वयादिस्मरणमेष्टव्यम् ।

प्राग्भवीयस्योपदेशस्यान्वयादेश्च स्मरणे पूर्वदेहस्मरणमप्यङ्गीकर्तव्यम् । समानयोगक्षेमत्वात् । न चेद्देहान्तरस्मरणं मृगादीनां तदा तदविशिष्टान्वयादिस्मरणमपि न स्यात् । तदभावे चानुमानाद्यभावेनेष्टानिष्टकारणताज्ञानं नोत्पद्येत । तदनुत्पादे च रागाद्यनुत्पादात्प्रवृत्त्याद्यनुत्प(द्यत)द्यते । कारणाभावे कार्याभावस्य सुलभत्वात् । अदृष्टवशात्प्रवृत्त्यादीति चेन्न । दृष्टातिक्रमदोषात् ।

एतावांस्त्वदृष्टस्योपयोगो यज्जन्मान्तरानुभूतं सर्वमस्मरन्नेतावत्स्मरति । यादृच्छिकं प्रवृत्त्यादि भवत्विति चेन्न । अनन्तानां तदनुपपत्तेः । अत एव मृगा इत्यादिबहुवचनम् । अस्तु जातिस्वभावोऽयम् । न । भिन्नजातीयानामप्युपलम्भात् । अत एव मृगा गाव इत्याद्युक्तम् । दृष्टातिक्रमदोषश्चापरिहार्यः ।

तस्मादस्ति मृगादीनां पूर्वदेहस्मरणम् । तथैव मानुषादीनामपीति सिद्धमिति ।

**शे० — दृष्टान्तधर्मिण इति** । अन्वयदृष्टान्तधर्मिणो व्यतिरेकदृष्टान्तधर्मिणश्चेत्यर्थः । **यद्वेति** । अत्र पक्षेऽन्वयव्यतिरेकग्रहणेनैव तद्दृष्टान्तधर्मिणोऽपि लाभ इति ज्ञेयम् ॥ **विस्मृताविति सम्बन्ध इति** । यद्यपि विस्मृतावित्यस्यानुसन्धानपदेन समस्तत्वान्नान्वयव्यतिरेकादेरित्यनेनान्वययोग्यता तथाऽपि बुद्धया विवेकमाश्रित्येदं सम्बन्धकथनमिति ध्येयम् ।

नन्वस्मृतौ पूर्वदेहस्येत्यादिवाक्येन पूर्वानुभूतदेहस्मरणाभावेऽन्वयादेरप्यस्मरणापत्त्या मृगादीनामिष्टानिष्टसाधनताज्ञानं न स्यादित्यापादनं कृतम् । तत्र न तावज्जन्मान्तरानुभूतदेहस्मरणाभावेन जन्मान्तरानुभूतान्वयव्यतिरेकाद्यस्मरणस्यापादनं युज्यते । यत्र जन्मान्तरानुभूतदेहस्यास्मरणं तत्र जन्मान्तरानुभूतान्वयादेरस्मरणमिति व्याप्त्यसिद्धया तद्रूपविकलत्वात् । नापि तेनैव तज्जन्मान्तरानुभूतान्वयाद्यस्मरणस्य । तदभावयोः प्रयोज्यप्रयोजकभावासिद्धया अकारणाभावेनाकार्याभावापादनतयाऽप्रयोजकत्वात् । एवमन्वयाद्यस्मरणेनापीष्टानिष्टसाधनताज्ञानाभावापादनमशक्यम् । अन्वयादिस्मरणेष्टानिष्टसाधनताज्ञानयोर्बाधितत्वेन साक्षात्कार्यकारणभावस्य, मध्ये प्रयोजकान्तरस्यादर्शनेन परम्परयाऽपि तस्यासम्भवेन प्रयोज्यप्रयोजकभावासिद्ध्या तदभावेन तदभावापादनस्याप्रयोजकत्वात् । परबुद्धेः परं प्रत्यप्रत्यक्षतया प्रत्यक्षेण, तदनुमापकलिङ्गाभावेनानुमानेनापि मृगादीनामिष्टानिष्टसाधनताज्ञानसिद्ध्यसम्भवेन तदभावस्येष्टतया तदापादनस्येष्टापादनत्वाच्च । तत्कथमित्यतोऽस्य ग्रन्थस्य न देहस्मरणाभावेनोक्तप्रनाड्येष्टसाधनताज्ञानाभावमात्रापादने तात्पर्यं किन्तु तद्द्वारा स्तनपानादावप्रवृत्त्यादावपीत्यतो न काचिदनुपपत्तिरित्यभिप्रेत्यात्र ग्रन्थेऽभिप्रेतामापादनक्रमपरम्परां सर्वत्र प्रयोज्यप्रयोजकभावस्य समर्थनेन व्युत्पादयितुं प्रवृत्त्याद्यभावस्य तावदनिष्टतामुपदर्शयति **एतदुक्तं भवतीति** ॥ **अस्ति तावदिति** । प्रमितस्यापन्हवायोगादिति भावः ॥ **अतीन्द्रियत्वादिति** । परमते कालाकाशादिरूपानेकातीन्द्रियार्थघटितमूर्तिकत्वात् । स्वमते चान्वयव्यतिरेकसमधिगम्यनित्यातीन्द्रियशक्तिरूपत्वात्कारणत्वमतीन्द्रियमिति भावः । उपदेश इत्यतःपरं तत्कारणमिति शेषः । तथा च मृगादीनामुपदेश इष्टानिष्टसाधनत्वज्ञानकारणं संभवतीत्यर्थः । प्राग्भवीयोपदेश इत्यतःपरमपि तत्कारणमिति शेषः । ततश्च प्राग्भवीयोपदेशस्तज्ज्ञानकारणमिति वाच्यमित्यर्थः ।

**यद्वेति** । अनुमानं तज्ज्ञानसाधनतया वाच्यमित्यर्थः । भवतु तर्ह्यनुमानेनैव मृगादीनामिष्टानिष्टसाधनत्वज्ञानमित्यतो भवेदेतदेवं यद्यनुमानमेव तान्प्रति प्रवर्तेत । न च तत्तान्प्रति प्रवर्तते । क्लृप्ततत्सामग्रीविरहादित्याह **न च तदिति** । अस्तु तर्हि उक्तविधान्वयादिस्मरणेनैव तेषामिष्टानिष्टसाधनत्वानुमितिरपीत्यतो भवेदेवं कथञ्चिद्यद्यन्वयादिस्मृतिरेव तेषामुत्पद्येत । न च सोत्पत्तुमर्हति । तत्कारणभूतान्वयाद्यनुभूतिविरहादित्याह **न चेति** । नन्वस्तु तर्हि तेषामन्वयाद्यनुभवोऽपीति न

तत्स्मरणानुपपत्तिरित्यतः किं तेषां मृगादिजन्मन्यन्वयाद्यनुभवोऽभ्युपगम्यते किंवा पूर्वजन्मनीति विकल्पं मनसि निधायाद्यं निषेधति **न चास्मिन्निति** । तत्र हेतुमाह **जातेति** । अस्तु तर्हि द्वितीय इत्यतस्तमङ्गीकरोति **अत इति** ।

अस्त्वेवं मृगादीनां प्राग्भवीयोपदेशस्यान्वयानुभवादेश्च स्मरणं तथाऽपि न देहान्तरस्मरणसिद्धि-रित्यतस्तामुपपादयति **प्राग्भवीयस्येति** ॥ **समानयोगक्षेमत्वादिति** । पूर्वदेहस्यैतज्जन्मन्यननुभव-वदुपदेशान्वयानुभवादेरप्येतज्जन्मन्यननुभवस्य, उपदेशादेर्जन्मान्तरेऽनुभववत्पूर्वदेहस्यापि जन्मान्तरे-ऽनुभवस्य, सत्त्वेनोपदेशादेर्देहस्य चाविशेषेऽपि कस्यचिज्जन्मान्तरानुभूतस्य स्मरणं कस्यचिन्नेत्यत्र नियाम-काभावादित्यर्थः । एवमापादनोपयुक्तं प्रयोज्यप्रयोजकभावमुपपाद्यापादनक्रममाह **न च तद्देहान्त-रेति** । आपादनाङ्गभूतामविशेषलक्षणां व्याप्तिं सूचयितुमुक्तं **तदविशिष्टेति** । केचित्तु नियमेन तदवच्छे-देन गृहीतोऽन्वयादिस्तदविशिष्टान्वयादिस्तस्य स्मरणमित्यर्थः । यो नियमेन यदवच्छेदेन गृहीतस्तस्य तदस्मरणे स्मरणाभावनियमाद्देहावच्छेदेन चान्वयादेर्गृहीततया तदस्मरणेऽन्वयादेरपि स्मरणं न स्यादिति भाव इत्याहुः । अत्रेष्टापत्तिमाशङ्क्य परिहरति **तदभावे चेत्यादि** । अप्रयोजकत्वमाशङ्क्य परिहरति **कारणेति** । मूले मृगा इत्यादिबहुवचनस्य मृगा गाव इत्यादिविजातीयग्रहणस्य च वैयर्थ्यमाशङ्क्य प्रवृत्त्यादेः कल्पकत्वप्रयोजकत्वस्यान्यथाऽनुपपन्नत्वसूचनार्थत्वान्न वैयर्थ्यमित्यभिप्रेत्य तदुपपादकतया तद्योजयितुं प्रवृत्त्यादेरन्यथोपपत्तिमाशङ्कते **अदृष्टेति** ॥ **दृष्टातिक्रमेति** । रागद्वेषा-देरेव प्रवृत्त्यादिकारणत्वेनास्मदादिषु दृष्टत्वाददृष्टजन्यत्वे प्रवृत्त्यादेस्तदतिक्रम इति भावः । एवं प्रसङ्गमुपपाद्य विपर्ययपर्यवसानलब्धमर्थमाह **तस्मादिति** । उक्तं देहान्तरस्मरणोपपादनप्रकारं प्रकृते-ऽप्यतिदिशति **तथैवेति** । उक्तन्यायस्याविशेषादिति भावः ।

**स० — समानेति** । यत्स्तनपानं तदिष्टसाधनमित्यन्वयस्मरणे दृष्टान्तस्यावश्यकत्वेन तत्र पूर्वदेहस्तनपानस्यैव तत्त्वेन वाच्यतया तत्स्मरणस्यावश्यकत्वादित्यर्थः ॥ **तदविशिष्टेति** । नियतस्या-स्मरणे स्मरणाभावनियमात् देहावच्छेदेनान्वयादेर्गृहीतत्वेन तत्स्मरणेऽन्वयादेरपि स्मरणं न स्यादिति ।

**प० — दृष्टांतधर्मिण इति** । अन्वयव्यतिरेकीग्रहस्थलस्येत्यर्थः ॥ **उपदेश इति** । इदं भयकारणमित्याद्युपदेश इत्यर्थः । योग्यताबलात्समस्तेनापि विस्मृतिपदेनान्वय इत्याह **विस्मृताविति संबन्ध इति** । यद्वा 'सांत महतः संयोगस्ये'ति व्याकरणसूत्रे सान्तपदमिवानुसंधानपदमविभक्तिकं लुप्तषष्ठीकं विभिन्नं पदमित्युपेत्योक्तं **विस्मृताविति संबन्ध** इति **अनुसंधानस्य चेति** च ॥ **अनुमानो-पदेशसाध्यमिति** । अनुमानोपदेशान्यतरसाध्यमित्यर्थः ॥ **यद्वाऽनुमानमिति** । अस्य न मृगादीनां

संभवतीत्यनेनान्वयः ॥ पूर्वपूर्वहेतुत्वाभावादिति भावेन तद्धेतून् व्यतिरेकमुखेनोपपादयति **न च तदित्यादिना** ॥ **समानयोगक्षेमत्वादिति** । तद्देहावच्छेदेनैवोपदेशस्यान्वयव्यतिरेकयोश्च गृहीतत्वादिति भावः ॥ **दृष्टातिक्रमदोषादिति** । इष्टोपायताज्ञानस्यैव प्रवृत्त्यादिहेतुतया सर्वसाक्षिसिद्धत्वेन तत्परित्यागदोषापातादित्यर्थः ॥

**या०— विस्मृताविति सम्बन्ध इति** । अनेन मूलेऽनुसन्धानेत्यविभक्तिको निर्देशः । **विस्मृताविति** पृथक् पदम् । बुद्धया विवेको वेति सूचितमिति ज्ञातव्यम् ॥ **अतीन्द्रियत्वादिति** । कारणत्वस्य परमते कालघटितत्वात् । अस्मन्मते च सहजशक्तिरूपत्वादतीन्द्रियत्वमिति ज्ञातव्यम् । यद्वाऽनुमानमित्यस्य न च मृगादीनां सम्भवतीत्यनेन सम्बन्धः । कुत इत्यत आह **न च तदिति** । अत्र यत इत्यध्याहार्यम् । तस्य वक्ष्यमाणेनात इत्यनेन सम्बन्धः ॥ **समानयोगक्षेमत्वादिति** । प्राग्भवीयोपदेशाद्यनुभवकाले पूर्वदेहस्याप्यनुभूतत्वेन पूर्वदेहाननुभवे उपदेशादेरप्यनुभवासम्भवेन च पूर्वदेहस्योपदेशादिसमानयोगक्षेमत्वादित्यर्थः । कुत एतदिति चेदुच्यते । देहस्य श्रोतृविशेषणतयोपदेशसम्बन्धित्वात्तदनुभवेऽनुभव आवश्यकः । देहावच्छिन्नस्यैव चेतनस्य श्रोतृत्वात् । न हि श्रोतारं विनोपदेशमात्रमनुभूयत इति सम्भवति । अयं मह्यमित्थमुपदिशतीति ह्युपदेशानुभवः । एवं पूर्वदेहस्यान्वयव्याप्तिप्रविष्टसामानाधिकरण्यघटकाधिकरणावच्छेदकत्वात्तदनुभवेऽनुभवोऽवश्यं वाच्यः । स्वकर्तृकस्तनपानरूपाधिकरणावच्छेदेन हि पूर्वजन्मन्यन्वयव्याप्त्यनुभवः । न चासौ कर्तृविशेषणतयाऽधिकरणावच्छेदकदेहाननुभवे युक्तः। अत एवं पूर्वदेहस्योपदेशादिसमानयोगक्षेमत्वादुपदेशादिसरणे तत्स्मरणमप्यावश्यकमिति ॥ **दृष्टातिक्रमेति** । इष्टसाधनताज्ञानस्यैव प्रवृत्त्यादिहेतुतया दृष्टत्वादिति भावः ।

**सु०— तथाऽपि किं प्रकृत इत्यत आह यदेति** ।

अनु० — यदा देहान्तरज्ञानं देहैक्यावसितिः कुतः ॥

**यदैवमेतद्देहवर्तिनो मम न केवलमयमेव देहः किन्तु तत्प्रागन्योऽप्यभूदिति देहान्तरस्मरणं प्रमितम् (णमापतितम्) । तदैतद्देहेन स्वस्यैकया(ध्य)वसायः कुतः स्यात् । किन्त्वनेकमणिष्वनुस्यूतं सूत्रमिवानेकदेहानुस्यूतमात्मानं पश्यतः स्वस्य ततोऽत्यन्तभेदावसितिरेव युक्ता । तथा च कार्ष्ण्यादीनामसंसर्गज्ञानमपि सुस्थमेव । परेण देहाद्यारोपनिबन्धनत्वाभ्युपगमात्तदारोपस्य । अहंप्रत्ययस्तु नारोप इति प्रागेवोक्तम् । अतो मम देह इति प्रत्ययो नान्यथयितव्यः कृष्णोऽहमित्यादिश्चोपचारोऽङ्गीकरणीय इति ।**

**शे०**— नन्वस्त्वेवं विरोधिनो देहात्मभेदावभासस्य विद्यमानत्वात्तादात्म्यानवभासस्तथाऽपि कृष्णोऽहमित्यादिरूपातद्धर्माणामात्मनि प्रतीतिरस्त्येवेति सैवोदाहरणमित्यत आह **तथा चेति** । देहात्मभेदप्रतीतौ सिद्धायामित्यर्थः । असंसर्गज्ञानं संसर्गारोपाभाव इत्यर्थः ॥

ननु विरोधित्वात्तस्मिन्सति तत्तादात्म्यारोपाभाव एव स्याद्धर्मसंसर्गारोपाभावस्तु कुत इत्यतो'ऽन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्ये'तिवदता परेण संसर्गारोपस्य तत्तादात्म्यारोपनिमित्तकत्वाभ्युपगमान्निमित्तभूततत्तादात्म्यारोपस्य भेदज्ञाने सत्यभावसिद्धौ निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायायुक्त एव धर्मसंसर्गारोपाभावोऽपीत्याह **परेणेति** । ननु चिदचित्संवलनात्मकाहमर्थविषयकत्वादहमितिप्रतीतिरेव तत्तादात्म्यारोप इति कथं तदभाव इत्यतः प्रमाणाभावेनात्मातिरिक्तचिदचित्संवलनात्मकाहमर्थस्यैवाभावेन तद्विषयकत्वानुपपत्त्या शुद्धात्ममात्रविषयत्वादहमिति प्रत्ययो नारोप इत्यहमितिप्रत्ययस्यात्मविषयकत्वादित्यादिना जिज्ञासासूत्रएवोक्तत्वान्नाहमितिप्रत्ययस्यारोपत्वमित्याह **अहंप्रत्ययस्त्विति** । **अत इति** । अहमितिप्रत्ययस्य देहाद्यात्मारोपत्वाभावादित्यर्थः ॥ **नान्यथयितव्य इति** । मम स्वरूपमितिवदौपचारिकत्वेन वा प्रासादस्य स्तम्भ इत्यादिवत्संघातापेक्षया देहमात्रे सम्बन्धप्रतीतिरूपत्वेन वा न नेय इत्यर्थः ॥ **कृष्णोऽहमित्यादिश्चेति** । देहात्मैक्याध्यासाभावेन तदधीनस्य कृष्णोऽहमिति धर्मसंसर्गारोपस्याप्यसिद्ध्या तन्मूलकत्वासंभवादिति भावः ।

---

**स०**— **प्रागेवोक्तं** प्रथमाधिकरण इत्यर्थः ॥

**प०**— **देहाद्यारोपेति** । देहेंद्रियाद्यैक्यारोपनिबंधनत्वाभ्युपगमाद्धर्मसंसर्गारोपस्येत्यर्थः । यदुक्त'महमिति प्रतीतेरेव तत्प्रतीतित्वात् इदमनिदंरूपवस्तुगर्भो ह्यहंकार' इत्यादि तत्राह **अहंप्रत्ययस्त्विति** ॥ **प्रागेवेति** । अध्यासभाष्यनिगमपरयोः 'इत्युक्तेर्बन्धमिथ्यात्वमि'त्यनुव्याख्यानसुधयोः 'मिथ्यात्वं यदि दुःखादेरि'त्येतद्व्याख्यावसरे च जिज्ञासाधिकरण एवोक्तमित्यर्थः ॥

**या०**— **देहाद्यारोपेति** । देहात्मैक्यारोपनिबन्धनत्वाभ्युपगमादित्यर्थः । देहात्मैक्यारोपश्चोक्तरीत्या न सम्भवतीति धर्मसंसर्गारोपोऽप्यनुपपन्न इति भावः ॥ **प्रागेवेति** । जिज्ञासाधिकरण एवेत्यर्थः । उपचारो लभ्यत इत्यत्रोपचारपदममुख्यवृत्तिपरं न गौणीमात्रपरम् । सम्बन्धे वेत्यस्यानुपपन्नतापत्तेरित्यवधेयम् ॥

**च०**— **प्रागेवोक्तमिति** । जिज्ञासानय एव बन्धमिथ्यात्वनिरासप्रस्तावे उक्तमित्यर्थः ।

**सु० — स्यादेतत् । न मुख्यार्थानुपपत्तिमात्रादुपचारो लभ्यते । किन्तु सादृश्ये संबन्धे वा प्रयोजने च सति । न चात्र सादृश्यादिकमस्ति । तत्कथमयमुपचारः । किञ्च मृगादीनां पामराणां मनुष्याणां च यदि देहात्मभेदज्ञानं स्यात्तर्हि 'नैषां ममाहमिति धीः श्वसृगालभक्ष्य' इत्यादयः पुराणादिव्यवहाराः कथं सङ्गच्छन्ते । कथं च देहात्मविवेकार्थानामुपदेशानामानर्थक्यं न स्यात् । देहानुकूलप्रतिकूलार्थयो रागद्वेषौ च देहात्मभेदज्ञाने सति न स्याताम् । ततश्च संसारानुपपत्तिरित्यत आह** व्याप्तत्वादिति ।

**अनु० —** व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् ।
भेदज्ञानेऽपि चाङ्गारवन्हिवत्स्वाविविक्तवत् ।
भवन्ति व्यवहाराश्च

**भेदज्ञानेऽपि चेति चशब्दो** व्यवहारेष्वपाटवाच्चेति **संबध्यते ॥** अङ्गारवन्हिवदिति । **अङ्गार**व्याप्तवन्हाविवेत्यर्थः । स्वाविविक्तवत् **स्वाभिन्ने स्वसंसृष्टे च यथा तथेत्यर्थः । व्यवहाराश्चेति चशब्दोऽनुक्तसमुच्चयार्थः । आत्मनो (देहे)** व्याप्तत्वात्स्वाविविक्तवद्व्यवहारा **भवन्ति इत्यनेनैकदेशत्वलक्षणं** सादृश्यं **संबन्धोऽप्यभिहितः । भेदज्ञानेऽप्यभिन्नवद्व्यवहारे किं प्रयोजनमित्यस्योत्तरं भेदज्ञानेऽपि लोकानां** व्यवहारेष्वपाटवात्स्वाविविक्तवद्व्यवहारा **भवन्तीति । न प्रयोजनमुद्दिश्य लोकास्तथा** व्यवहरन्ति **। किन्तु विविक्त**व्यवहारेषु **पाटवाभावादेवेति । अपाटवे हेतुर्व्याप्तत्वादात्मनो देह इति । रूढत्वाच्चैतेषां व्यवहाराणां न प्रयोजनापेक्षेत्याशयेन उक्तम्** अङ्गारवन्हिवदिति **। भेदज्ञानेऽप्यात्मनो देह**व्याप्तत्वादङ्गारवन्हिवल्लोकानां **व्यवहारेषु अपाटवादत्यन्तविविक्तवेदनेष्वसामर्थ्यात्पुराणादि**व्यवहाराश्च **स्वाविविक्तवद्भवन्ति । विशदविवेकाभावविवक्षयैव ते व्यवहारा इत्याशयः । अत एव विवेकार्थानामुपदेशानां च सार्थक्यमुपपद्यते । विशदो हि विवेकः पुरुषार्थाय कल्पते न त्वौत्पत्तिकः । आत्मनो देहे व्याप्तत्वादत्यन्तं प्रेमास्पदत्वाद्रागादयो युज्यन्त एवेति ।**

**शे० — उपचारो लभ्यत इति ।** अत्रोपचारपदममुख्यवृत्तिमात्रपरं न गौणीपरम् । अतो न संबन्धे वेत्युत्तरग्रन्थासङ्गतिरिति ध्येयम् ॥ **सादृश्य इति ।** 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्यार्थो लभ्यते यत्सा लक्षणाऽऽरोपिता क्रिये'त्यभियुक्तवचनादिति भावः । 'नैषां ममाहमिति धीः श्वसृगालभक्ष्ये' देहेऽहमिति तादात्म्यबुद्धिर्येषां नास्ति त एव भगवत्स्वरूपं विन्दन्ति । येषामस्ति ते न विन्दन्तीत्युक्त्या पामराणां देहादावहमिति धीरस्तीति लभ्यते । तेषामपि देहात्मभेदज्ञानाङ्गीकारे

पुराणादिव्यवहारो बाध्येतेत्यर्थः । अपिशब्देनैव प्रकृतार्थसिद्धेश्चशब्दानर्थक्यमित्यत आह **चशब्द इति** । धर्मितादात्म्यव्यवहारधर्मसंसर्गव्यवहारयोरुभयोरपि संग्रहायाह **स्वाभिन्ने स्वसंसृष्टे वेति** ॥ **चशब्दोऽनुक्तेति** । देहात्मविवेकार्थोपदेशादिरूपानुक्तेत्यर्थः । कथमनेन मूलेनाशेषशङ्कानिवृत्तिरित्यतोंऽशभेदेनेति भावेन तत्तदाशङ्का निवर्तकांशभेदप्रदर्शनपूर्वकं तामुपपादयति **आत्मन इत्यादिना** ॥ **संबन्धोऽपीति** । यद्यप्येकदेशत्वलक्षणसादृश्यकथनमात्रेण प्रकृतव्यवहाराणां गौणत्वनिर्वाहे देहात्मनोः संबन्धाभिधानमनर्थकम् । तथाऽपि सादृश्यवत्संबन्धस्यापि सत्त्वेन व्यवहाराणां गौण्येव लक्षणयाऽप्युपपत्तिरिति सूचयितुं तदभिधानमिति ध्येयम् । ननु भेदज्ञानेऽपीत्यादिमूलेऽभिन्नवद्व्यवहारस्य प्रयोजनानुक्तेः किं प्रयोजनमित्युक्तशङ्कायाः कथमनेन परिहार इत्यतस्तदनुक्तावप्यत्र मूले तदनपेक्षत्वसूचनाद्युक्तमस्य तच्छङ्कानिवर्तकत्वमित्यभिप्रेत्य तत्तात्पर्यमाह **नेति** ॥ **अपाटवहेतुरिति** । यद्यपि व्याप्तत्वादित्यस्यापाटवे हेतुत्वेन समुच्चयाभावेन चशब्दस्य व्यवहारेष्वपाटवादित्यनेन संबन्धो न युक्तः । तथाऽप्यपाटवे हेतुभूतस्याप्यस्य देहात्माविविक्तव्यवहारं प्रत्यपि परम्परया हेतुत्वस्यापि विद्यमानत्वाच्चशब्दसंबन्धो युक्त इति भावः । प्रयोजनानपेक्षत्वस्य पूर्वेणैव सूचितत्वादङ्गाग्वन्हिवदित्यस्यानर्थक्यमित्याशंक्य हेत्वन्तरसमर्पकत्वान्न तदिति भावेन तत्परतया तद्योजयति **रूढत्वाच्चेति** । एवं वाक्ययोजनामुक्त्वा तत्तात्पर्यमाह **विशदेति** । देहात्मनोः सत्यपि भेददर्शनेऽङ्गुलीद्वयवत्स्पष्टभेददर्शनाभावात्तदपेक्षयेत्यर्थः । व्यवहाराश्चेति चशब्दसमुच्चितानुक्तमर्थमुपपादयन्नेव दर्शयति **अत एवेत्यादिना** । विशदविवेकाभावादेवेत्यर्थः । **विवेकार्थानां** विशदविवेकार्थानाम् । किं विशदविवेकेनापीत्यत आह **विशदो हीति** ॥ **औत्पत्तिक इति** । अनागन्तुको मम देह इत्यादिरूप इत्यर्थः । देहस्य परमप्रेमास्पदत्वे हेतुकथनमात्मनो देहे व्याप्तत्वादिति ॥ **प्रेमेति** । पुत्रस्येव देहस्यापि प्रेमास्पदत्वात्पुत्रानुकूलादाविव देहानुकूलादावपि रागादिकमुपपद्यत इत्यर्थः ।

स०—**सादृश्ये संबन्धेवेति** । संबन्ध इति तु लक्षणाभिप्रायेणोक्तं **अनुक्तेति** । उपदेशादिकं ग्राह्यमित्यर्थः ॥ **संबन्धोपीति** ॥ यद्यपि एकदेशत्वलक्षणसादृश्यमात्रोक्त्या प्रकृतव्यवहाराणां गौणत्वस्य वक्तुं शक्यत्वेन देहात्मनोः संबन्धाभिधानं व्यर्थं तथापि देहात्मनोः सादृश्यवत् परस्परं संबन्धस्यापि विद्यमानत्वेन देहात्मैक्यव्यवहाराय गौण्या लक्षणया वा प्रवृत्तिर्भविष्यतीति सूचयितुं संबन्धाभिधानं कृतमिति भावः ॥ **अपाटवे हेतुरिति** । यद्यपि व्याप्तत्वादित्यस्यापाटवे हेतुत्वेन समुच्चयाभावेन च शब्दस्य व्यवहारेष्वपाटवादित्यनेन संबन्धो न युज्यते तथापि अपाटवहेतुभूतस्याप्यस्य देहविविक्तव्यवहारं प्रत्यपि परंपराहेतुत्वस्यापि विद्यमानत्वाचशब्देन संबन्धो युक्त इति द्रष्टव्यम् ।

प० — **उपचारो लभ्यत इति** । कृष्णोऽहमिति व्यवहार इति योज्यम् । उपचारशब्दस्य गौणार्थत्वं (लाक्षणिकार्थत्वं चो) लक्षणार्थकत्वं चोपेत्याह **सादृश्ये संबन्धे वेति** । 'प्रयोगयुक्तसादृश्यं संबन्धो वाऽप्यमुख्यतः । वृत्तिहेतुरिति ज्ञेय' इत्यानुमानिकपादीयानुव्याख्यानोक्तेरिति भावः ॥ **अंगारव्याप्तवह्नाविवेति** । अंगारपदेन दग्धदारुग्रहः ॥ **विवेकार्थानामिति** । देहात्मनोर्विवेकार्थानां 'देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा । तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यती'त्याद्युपदेशानामित्यर्थः । तदुक्तं गीताभाष्ये । 'देहिनो भाव एतद्भवति तदेवासिद्धमिति चेन्न । देहिनोऽस्मिन् यथा कौमारादिशरीरभेदे देही तदीक्षितासिद्धः एवं देहान्तरप्राप्तावपि । ईक्षितृत्वादि'त्यादि ॥ **औत्पत्तिक इति** । स्वभावसिद्धो 'जातमात्र' इत्यादिना प्रदर्शित इत्यर्थः ।

या० — **अङ्गारव्याप्तेति** । अङ्गारशब्देनाग्न्यधिष्ठितं दग्धं काष्ठादि विवक्षितम् । चशब्देन समुच्चितमनुक्तमर्थं दर्शयति अत एवेत्यादिना युज्यन्त एवेत्यन्तेन । **औत्पत्तिक इति** । स्वभावसिद्धो मम देह इत्यादिरूप इत्यर्थः ।

श्री० — **नैषां ममाहमिति धीरिति** । श्वसृगालभक्ष्ये देहेऽहमिति तादात्म्यबुद्धिर्येषां नास्ति त एव भगवत्स्वरूपं विदन्ति । येषामस्ति ते न विदन्तीत्युक्त्या पामराणां देहादावहमिति धीरस्तीति लभ्यते । तेषामपि देहात्मभेदज्ञानाङ्गीकारे पुराणादिव्यवहारो बाध्येतेत्यर्थः । **उपदेशानां** तं स्वाच्छरीरादित्यादीनाम् ॥ **विशदेति** । तथा च देहे येषामहमिति धीर्नास्ति स्फुटतरं विवेकज्ञानमस्तीत्यर्थः । त एव जानन्तीत्युक्त्या पामराणां स्फुटतरं विवेकज्ञानं नास्तीति लभ्यत इति तदभिप्रायं पुराणवचनमिति द्रष्टव्यम् । चशब्दोऽनुक्तसमुच्चयार्थ इत्युक्तं तदाह **अत एवेत्यादिना** ।

**सु० — ननु ज्ञानमेव व्यवहारकारणं तच्चेदस्ति कथं तर्हि व्यवहारेष्वपाटवमित्यत** आह न हीति ।

अनु० — न हि प्रत्यक्षगानपि ।
अर्थान्यथाऽनुभवतः प्रतिपादयितुं क्षमाः ।
लोकाः

यथानुभवतः अनुभवानुसारेण प्रतिपादयितुं व्यवहर्तुम् । **यमलयोरत्यन्तविवेकं पश्यन्तोपि मात्रादयः कथमेतौ विविक्तावगन्तव्याविति पृष्टा एवमिति स्वप्रत्यक्षानुभवानुसारेण न परान्प्रतिपादयितुं क्षमन्त इत्याद्यनुभवसिद्धम् । का नामात्र कथन्ता । अथ तत्रात्यन्तसादृश्यं प्रतिबन्धकं तर्ह्यत्राप्यङ्गारवन्हिवदात्मनो देहे व्याप्तत्वं प्रतिबन्धकमुक्तमेव । शुक्तिरजतादि-**

**प्रत्यक्षाणामनुमानादिना बाधो नास्तीत्यन्यत्रोपपादितमित्याशयवान् 'क्व च प्रत्यक्षतः प्राप्तम्' इत्यादिनोक्तमुपसंहरति** ततो हीति ।

**ततो हि प्रत्यक्षसिद्धं नान्येन केनचित् ।**

शक्यं वारयितुं क्वापि

**क्वचित्प्रतीतेरेवाभावात्क्वचित्प्रतीतिसद्भावेऽपि प्रत्यक्षजत्वाभावात्क्वचित्प्रत्यक्षप्रतीतिभावेऽपि यथार्थत्वात्क्वचिदयथार्थत्वेऽपि प्रबलप्रत्यक्षेणैव बाधादित्यर्थः ।** अत एव **क्वापीत्युक्तम् ॥** अन्येनेति । **अनुपजीव्येनागमादिनेत्यर्थः । तदेवं स्वभावतः प्रबलेन प्रत्यक्षेण विरुद्धावनुमानागमावाभासावेवेति ।**

**शे०— अन्यत्रोपपादितमिति ।** 'शुक्त्यादे रजतत्वादिप्रतीतिरपी'त्यादिना ग्रन्थेन तत्त्वनिर्णयादावित्यर्थः ॥ **इत्याशयवानिति ।** ततश्चात्र मूले तदनुपपादनं न न्यूनत्वापादकमिति भावः । प्रतीत्यभावप्रत्यक्षप्रतीत्यभावयोरेव पूर्वं प्रकृततया तयोरेव तच्छब्देन परामर्शेऽनुमानादिबाध्यत्वेन पराभिमतप्रत्यक्षमात्रे तयोरभावेन भागासिद्धिः स्यादित्यतस्तच्छब्दस्य बुद्धिस्थपरामर्शकत्वं मनसि निधाय व्याचष्टे **क्वचित्प्रतीतेरेवाभावादित्यादिना ।** अमरपामरसाधारण्येन देहात्मभेदप्रतीतेरेव सत्त्वेन तदैक्यप्रतीतेरेवाभावान्न तस्यानुमानादिबाध्यत्वेनोदाहरणत्वमित्यर्थः ॥ **क्वचिदिति ।** नास्तिकादीनां देहात्मैक्यप्रतीतिसत्त्वेऽपि तस्यानुमानाभासजन्यत्वेन प्रत्यक्षजन्यत्वाभावान्नोक्तोदाहरणत्वमित्यर्थः ॥ **क्वचिदिति ।** वस्त्रे कर्दमेनेवाऽऽत्मनि देहोपाधिना कृतस्य कार्ष्ण्यस्य सत्त्वेन तत्प्रत्यक्षप्रतीतिसत्त्वेऽपि तस्या याथार्थ्येनाबाध्यत्वान्नोक्तोदाहरणत्वमित्यर्थः ॥ **क्वचिदिति ।** इदं रजतमित्यादिप्रत्यक्षप्रतीतेरयथार्थत्वेऽपि तस्याः प्रबलप्रत्यक्षेणैव बाधितत्वान्नोक्तोदाहरणत्वमिति भावः । हेतुचतुष्टयस्याप्यत्राभिमतत्वे किन्नियामकमित्यत आह **अत एवेति ।** अन्यथा हेतुद्वयमात्रपरतायां तस्य क्वाचित्कत्वेनासार्वत्रिकतया भागासिद्धिप्रसङ्गादिति भावः । रामकृष्णादिदोषग्राहिप्रत्यक्षस्यागमादिना बाधितत्वाभ्युपगमात्कथं नान्येनेत्युच्यत इत्यतो व्याचष्टे अन्येनेति **अनुपजीव्येनागमादिनेत्यर्थ इति ।**

**प०— अन्यत्रेति ।** 'न हि दृष्टेर्बलवत्किंचित्प्रमाणमि'त्यादिना तत्त्वोद्योते । 'न च प्रत्यक्षदृष्टस्य बलवत्प्रत्यक्षमागमं विना अनुमानादिनैव बाधो दृष्ट' इत्यादिना तत्त्वनिर्णये चेत्यर्थः । तत इत्यस्यार्थचतुष्टयमाह **क्वचित्प्रतीतेरेवेति ।** देहात्मैक्यकृष्णवस्त्रादिविषय इत्यर्थः । **क्वचित्प्रतीति(सद्भावे)भावेऽपीति ।** प्रागुक्तदिशा चार्वाकस्य देहात्मविषये । **यथार्थत्वादिति ।** 'स्वतः शुक्लत्ववत्कार्ष्ण्यमि'त्युक्तदिशा जिज्ञासानयोक्तदिशा कृष्णोऽहमितिप्रतीतेर्यथार्थत्वादित्यर्थः ॥ **अयथार्थत्वेपीति ।**

**इदं रजतमित्यादि**प्रतीतेरिति भावः । 'क्वचित्प्रत्यक्षतः प्राप्तमि'त्यादिनोपपादितं प्रत्यक्षप्राबल्यस्योपयोगं दर्शयति **तदेवमिति** । 'ईशतज्ज्ञानवेदाक्षजानुमे'त्याद्यवतारिकायां शङ्किताद्वैतानुमानागमावित्यर्थः ॥ **प्रत्यक्षस्य स्वतःप्राबल्योक्तिः** ॥

या०— **अन्यत्रेति** । तत्त्वनिर्णयादावित्यर्थः ॥ **प्रतीतेरेवाभावादिति** । देहात्मत्वादावित्यर्थः । **प्रत्यक्षजत्वाभावादिति** । नास्तिकानां देहात्मत्वप्रतीतावित्यर्थः ॥ **यथार्थत्वादिति** । अहमितिप्रत्यय इत्यर्थः ॥ **क्वचिदयथार्थत्वेऽपीति** । शुक्तिरजतादिप्रत्यक्ष इत्यर्थः ।

श्री०— **उपपादितमिति** । 'राजगौरवेण राजभृत्येनामात्य इवानुमानादिमूलप्रत्यक्षेणैव बाध' इति तत्त्वनिर्णयादावुक्तमित्यर्थः ।

च०— **अन्यत्रेति** । 'न हि दृष्टेर्बलवत्किंचित्प्रमाणमि'त्यादिना तत्त्वोद्योते 'न च प्रत्यक्षदृष्टस्य बलवत्प्रत्यक्षागमं विनानुमानादिनैव बाधो दृष्ट' इत्यादिना तत्त्वनिर्णये चेत्यर्थः । **अयथार्थत्वेपीति** । इदं रजतमित्यादि विपर्यासानामिति भावः । अनुमानागमावित्यर्थः ॥ **प्रत्यक्षस्य नैसर्गिकप्राबल्यसमर्थनम्** ॥

सु०— भवत्वागमादितः प्रत्यक्षं प्रबलं मा वा भूत् । तद्विरोधस्त्वागमादेर्नास्ति । भिन्नविषयत्वात् । तथा हि । आगमादिकं खल्वागामिनं विश्वस्य बाधं प्रतिपादयति न तु अधुनातनम् । स एव च मिथ्यादिपदेन वेदनीयः । तस्य च प्रत्यक्षविरोधस्तदा स्यात् । यद्यागामिनमपि विश्वस्य बाधं प्रत्यक्षं प्रतिक्षिपेत् । न चैवम् । तस्य वर्तमानमात्रग्राहित्वेन आगामिबाधाभावग्रहणे सामर्थ्याभावात् । यथोक्तम् । 'संबद्धं वर्तमानं च गृह्यते चक्षुरादिना' इति । इदानीन्तनबाधाभावग्रहणेऽपि न विरोधः । न च भिन्नविषययोर्विरोधोऽस्ति । तथा सतीदानीन्तनघटाभावग्राहिणा प्रत्यक्षेण भविष्यति घट इत्यागमादेर्विरोधः स्यादिति ।

उच्यते । अस्ति तावत् प्रत्यक्षं वर्तमानकालीनं बाधाभावमावेदयतीति परस्यापि संप्रतिपत्तिः । आगमश्च नेह नानाऽस्तीत्यादिरूपो वर्तमानमेव विश्वस्य बाधं प्रतिपादयतीति कथं न प्रत्यक्षविरुद्धः । अस्तु वाऽऽगामिबाधबोधकत्वमागमादेस्तथाऽपि बाधो नाम त्रैकालिकसत्तानिषेधः । स च वर्तमानकालीनसत्ताग्राहिणा प्रत्यक्षेण विरुध्यत एवेति तत्प्रतिपादकस्यागमादेः कथं न प्रत्यक्षविरोधः ।

एतेनास्मत्प्रत्यक्षमस्मन्निष्ठमेव बाधं प्रतिक्षेप्तुं क्षमते न पुरुषान्तरगतमिति निरस्तम् । घटादिसत्तानिषेधरूपस्य बाधस्य तत्सत्ताग्राहिणा प्रत्यक्षेण विरोधावश्यम्भावात् ।

**शे०** — नन्वौष्ण्यानौष्ण्यग्राहकप्रत्यक्षानुमानयोरिव सत्यत्वमिथ्यात्वप्रमाणयोरपि समानविषयत्वमेवेति कथं भिन्नविषयतेत्यतस्तामुपपादयति **तथा हीति** । ननु यद्यागमादेरागामिविश्वबाधप्रतिपादकतया नाधुनातनबाधप्रतिपादकत्वं कथं तर्हि तस्य विश्वमिथ्यात्वबोधकत्वमित्यतो विमतं मिथ्येति प्रतिज्ञावाक्यस्थमिथ्यापदेन नेह नानाऽस्तीत्यागमस्थनास्तीतिपदेन चागामिविश्वबाधस्यैव प्रतिपाद्यतयाऽभिमतत्वेनाधुनातनबाधस्य तत्त्वेनानभिमतत्वाद्युक्तमेवाधुनातनबाधाप्रतिपादकस्यापि मिथ्यात्वबोधकत्वमित्याशयेनाह **स एव चेति** । अस्त्वेवं तथाऽपि सत्यत्वग्राहकस्य प्रत्यक्षस्य कथमागमादिना न विरोध इत्यतः किमत्रागामिबाधाभावग्राहकतया प्रत्यक्षस्यागामिबाधग्राहकागमादिना विरोधोऽभिमतः किंवेदानीन्तनबाधाभावग्राहकतयेति विकल्पं मनसि निधायाद्यं दूषयति **तस्य चेति** । आगामिविश्वबाधप्रतिपादकागमस्य चेत्यर्थः । कुतो न प्रत्यक्षस्यागामिविश्वबाधाभावग्राहकत्वं येनाविरोधित्वं स्यादित्यत आह **तस्येति** । भवेदेवं यदि प्रत्यक्षस्य वर्तमानमात्रग्राहित्वं सिद्धं स्यात्तदेव कुत इत्यत आह **यथोक्तमिति** । अस्तु तर्हि वर्तमानबाधाभावग्राहकतयैव प्रत्यक्षस्य तद्विरोधित्वमिति द्वितीय इत्यतो वर्तमानमात्रग्राहकस्य प्रत्यक्षस्य (न तद्वाक्यस्य) वर्तमानबाधाभावग्राहकत्वेन वर्तमानबाधग्राहकप्रमाणविरोधित्वसंभवेऽप्यागामिबाधाभावाग्राहकत्वेन न तद्बाधप्रतिपादकागमादिविरोधित्वं भिन्नविषयत्वादित्याह **इदानीन्तनेति** । अस्तु भिन्नविषयत्वं तथाऽपि कुतो न तद्विरोध इत्यप्रयोजकत्वमित्याशङ्क्य तत्परिहारप्रतिज्ञापूर्वकं विपक्षे बाधकमाह **न चेत्यादिना** ।

---

**वर्तमानमेवेति** । नास्तीति वर्तमानार्थकलट्प्रयोगादिति भावः ॥ **कथं न प्रत्यक्षविरुद्ध इति** । समानविषयत्वादिति भावः । नास्तीत्यस्य लडन्तप्रतिरूपकाव्ययत्वेन लडन्तत्वाभावान्न तदनुरोधेन वर्तमानबाधप्रतिपादकत्वमागमस्येति समानविषयत्वाभावान्न विरोध इत्यत आह **अस्तु वेति** । नन्वेदमिदानीन्तनबाधाभावग्राहकस्य प्रत्यक्षस्य नागामिबाधग्राहकागमादिना विरोधः स्याद्भिन्नविषयत्वादित्यतो भवेदेवं कथञ्चिद्यद्यागामिबाधो नामागामिनि काले सत्तानिषेधोऽभिमतः स्यात् । न चैवम् । तथा सत्यनित्ये प्रपञ्चे आगामिनि काले सत्तायाः परेणाप्यनङ्गीकृतत्वेन तेन सह विवादाभावप्रसङ्गात् । किन्त्वन्य एवेत्यभिप्रेत्य तमाह **बाधो नामेति** ॥ **स चेति** । त्रैकालिकसत्तानिषेध इत्यर्थः ॥ **वर्तमानेति** । प्रतिपन्नोपाधाविति शेषः ॥ **विरुद्ध्यत एवेति** । प्रतिपन्नोपाधौ वर्तमानकालीनसत्त्वग्राहिणा प्रत्यक्षेण तत्र त्रैकालिकसत्त्वात्यन्ताभावग्राहकमागमादिकं विरुद्ध्यत एव । वर्तमानसत्त्वस्य स्वात्यन्ताभावाभावरूपत्वेन तद्ग्राहकस्य प्रत्यक्षस्यागमादिग्राह्याभावावगाहित्वादसत्त्वस्य सत्तासामान्यनिषेधरूपत्वेन तद्विशेषाणामेव तदभावरूपत्वाद्विशेषग्राहकं प्रत्यक्षं ग्राह्याभावग्राहकमेवेत्यर्थः । अयमाशयः । असत्त्वप्रतिषेधो हि असत्त्वप्रतियोगिभूततत्सत्त्वरूप एव । सामान्याभावस्य यत्किञ्चित्प्रतियोगि-

सत्त्वविरोधित्वेन तत्तद्विशेषाणामेव सामान्याभावं प्रति प्रतियोगितया विरोधित्वमवश्यं वाच्यम् । प्रतियोगित्वं च स्वाभावविरहात्मकत्वमेवेति कथं न तत्तद्विशेषाणामेव सामान्याभावाभावत्वम् । तस्य रूपद्वयं सामान्याभावाभावत्वं तत्तद्विशेषित्वं च । तत्र प्रकृते प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेन कालत्रयवृत्तिसत्त्वनिषेधरूपासत्त्वाभावत्वेन तदभावविषयत्वासंभवेऽपि वर्तमानकालीनबाधाभावरूपत्वेन रूपेण तद्बाधकत्वमुपपन्नमेवेति तद्बाधो दुष्परिहार इति ॥ **घटादीति** । क्वचिदपि कदाचिदपि घटादेः सत्ता नास्तीत्येवमात्यन्तिकसत्ताप्रतिषेधरूपस्येत्यर्थः । तत्सत्तादिग्राहिणेत्यत्र क्वचित्कदाचिदिति शेषः ॥ **विरोधेति** । उक्तरीत्या ग्राह्याभावावगाहित्वादिति भावः ।

स० — ननु नेह नानास्तीति वर्तमानार्थकलटो रूपं न । येन वर्तमानमेव विश्वबाधं प्रतिपादयेत् किन्तु विध्यर्थकस्य लेटो रूपम् । तस्य कालौदासीन्येनार्थप्रतिपादकत्वादित्यतः पक्षान्तरमाह **अस्त्विति** ।

प० — **संबद्धमिति** । संनिकृष्टमित्यर्थः ॥ **वर्तमानमेवेति** । नास्तीति वर्तमानार्थकलट्-प्रयोगश्रवणादिति भावः ॥ **त्रैकालिकसत्तानिषेध इति** । त्रिकालवर्ती यः सत्तानिषेधः स इत्यर्थः ॥ **विरुध्यत एवेति** । त्रिकालस्थस्य सत्तानिषेधस्य विरहो हि कालत्रये सत्त्वं घटादिनिष्ठं एककाले सत्त्वं च भवति । तथाचैककालसत्वग्राहिणा (प्रत्यक्षेण) कालत्रयवर्तिनः सत्वनिषेधस्य बोधक आगमादिः विरुध्यत एव नात्र संदेह इत्यर्थः । अत एवाह 'घटादिसत्तानिषेधस्य बाधस्ये'ति ।

या० — **आगामिनमिति** । बाधस्य त्रैकालिकप्रतिषेधरूपत्वादिति भावः ॥ **अधुनातनमिति** । अधुनातनमेवेत्यर्थः ॥ **स एव चेति** । प्रतिषेधप्राधान्यविवक्षायामिति शेषः । अन्यथा तु प्रतिषेध-प्रतियोग्येव मिथ्यादिपदवेदनीय इति ध्येयम् । न विरोध इत्यत्र भिन्नविषयत्वादिति हेतुरनुवर्तनीयः ॥ **वर्तमानमेव विश्वस्य बाधमिति** । नास्तीति लट्प्रयोगादिति भावः । **विरुद्ध्यत एवेतीति** । प्रतिपन्नोपाधौ वर्तमानकाले प्रतियोगिग्राहकेण प्रत्यक्षेण तत्र तदा तदत्यन्ताभावग्राहकं विरुद्ध्यत एव । प्रतियोगिनोऽत्यन्ताभावाभावरूपत्वेन तद्ग्राहकप्रत्यक्षस्य ग्राह्याभावावगाहित्वादित्यर्थः । अत्र वदन्ति । नात्र साक्षाद्विरोधः । वर्तमानकालसत्त्वस्य त्रैकालिकसत्ताप्रतिषेधविरहव्याप्यत्वेऽपि तद्विरह-रूपत्वाभावात् । न हि विशेषणाभावो विशिष्टाभावरूपः किन्तु तद्व्याप्यः । न चैवं तदभाव-व्याप्यत्वेनैव विरोधित्वमत्र विवक्षितमिति वाच्यम् । तथात्वेऽनुमानबाधस्यैव प्राप्त्या प्रत्यक्षबाधाभिधाना-नुपपत्तेरिति । अत्र ब्रूमः । नात्र कालत्रयस्य सत्ताप्रतिषेधविशेषणत्वं विवक्षितं किन्तूपलक्षणत्वमेव । तथा च कालत्रये यः सत्ताप्रतिषेधस्तदत्यन्ताभाव इति यावत् । तद्विरहरूपत्वं कादाचित्कस्यापि प्रतियो-गिनोऽस्त्येव । कथमन्यथा कादाचित्कस्य घटादेस्त्रैकालिकप्रतिषेधरूपस्यात्यन्ताभावविरहरूपत्वमिति । अत एवाहुः । 'स्वकाले ह्यस्तितां गृह्णन्साक्षात्कारस्त्रिकालगम् । प्रतिषेधं निरुन्धानो गृह्णात्येवात्य-

बाध्यतामि'ति । एवमनङ्गीकारे **औष्ण्यग्राहिप्रत्यक्षस्यापि** वर्तमानमात्रग्राहित्वेनानुमानसाध्यत्रैकालिकतत्प्रतिषेधविरहानवगाहित्वप्राप्त्या **बाधोच्छेद एव स्यादिति ।** **केचित्तु** घटादौ **स्वकाले सत्त्वसंसर्गे** प्रत्यक्षेण गृहीते तदधिकरणे तत्काले तदत्यन्ताभावसंबन्धाभावस्य ग्रहो भवति । **प्रतियोग्यधिकरण-**संसर्गाभावस्यैवाधिकरणेऽत्यन्ताभावसंबन्धरूपतयाऽधिकरणे प्रतियोगिसंसर्गेण्यात्यन्ताभावसंबन्धाभावरूपत्वादिति वदन्ति । तच्चिन्त्यम् । एवमपि प्रत्यक्षस्य ग्राह्यसंबन्धाभावावगाहित्वमेव **प्राप्तं न ग्राह्या-**भावावगाहित्वम् । अतस्तद्बाधाभिधानमनुपपन्नमेवेति ॥ **घटादिसत्ताप्रतिषेधरूपस्येति** । कुत्रापि कदाऽपि घटादेः सत्ता नास्तीत्येवमात्यन्तिकसत्ताप्रतिषेधरूपस्येत्यर्थः । तत्सत्ताग्राहिणेत्यत्र कुत्रचित्कदाचिदिति शेषः ॥ **विरोधावश्यम्भावादिति** । ग्राह्याभावावगाहित्वादिति भावः ।

**श्री०— स** कालत्रयबाधः । एतेनेत्युक्तं विशदयति **घटादीति** ॥ **अवश्यमिति** । पुरुषान्तरगतसत्तानिषेधरूपस्य बाधस्य सत्ताग्राहिप्रत्यक्षं परकीयमपि बाधकं भविष्यत्येवेति भावः ।

**च०— संबन्धमिति** । चक्षुरादिप्रतियोगिकसन्निकर्षानुयोगीत्यर्थः । **वर्तमानमेवेति** । तादृशवाक्ये वर्तमानार्थकलट्समभिव्याहारादिति भावः । **अस्तु वेति** । लटो वर्तमानत्वार्थकत्वाविवक्षयेति भावः । त्रैकालिकेति सत्तानिषेधस्य विशेषणीकाले वृत्तौ देशोवच्छेदको देशे वृत्तौ कालोवच्छेदक इति नियमेनेदानीं भूतले घट इत्यत्र कालदेशबोधकपदोत्तरसप्तमीद्वयस्य विकल्पेनाधेयत्वावच्छेदकत्वस्थित्या कालत्रयावच्छिन्नदेशनिरूपिताधेयताकः देशावच्छिन्नकालत्रयनिरूपिताधेयताविशेषितो वा सत्ताप्रतियोगिकनिषेध इत्यर्थः । **विरुध्यत एवेति** । प्रतिपत्तिविशेष्यीभूताधिष्ठाने वर्तमानकालावच्छेदेन प्रतियोगिप्रकारकप्रत्यक्षेण तत्कालावच्छिन्नतद्देशनिरूपिताधेयताकात्यन्ताभावग्राहकं प्रतिबध्यत एव । द्वितीयाभावस्य प्रथमाभावप्रतियोगिस्वरूपतया तद्ग्राहकप्रत्यक्षस्य ग्राह्याभावावगाहित्वादित्यर्थः । उक्तं चैतत् । 'स्वकाले ह्यस्तितां गृह्णन् साक्षात्कारस्त्रिकालगम् । प्रतिषेधं निरुन्धानो गृह्णात्येवात्यबाध्यतामि'ति ।

**सु०— तदेवं प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेऽप्यागमादेस्तद्विरोधो दुष्परिहर एव । तथाऽपि प्रसक्तौ वस्तुस्थितिर्वक्तव्येत्याशयवान्प्रत्यक्षस्य वर्तमानमात्रग्राहितानियममपाकर्तुमुत्तरं प्रकरणमारभमाणः साक्षिप्रत्यक्षस्य तावत्तन्नियममपाकरोति** तच्चेदिति ।

**अनु०—** तच्चेन्नोत्तरगोचरम् ।
कथमेवोत्तरः कालस्तद्गो मोक्षश्च गम्यते ॥

**गम्यत इति** वक्ष्यमाणेन संबन्धः । तदिति प्रत्यक्षविशेषसाक्षिणमेवाधिकुरुते भगवान् भाष्यकारः । चेच्छब्दश्रवणात्तर्हीत्यध्याहार्यम् ॥ नोत्तरगोचरमिति । वर्तमानमात्रगोचरमित्यर्थः । प्रमाणान्तराणां प्रागेव दूषितत्वादित्येवार्थः । उत्तर इत्यतीतस्याप्युपलक्षणम् । येषां चाखण्ड एव कालस्तैरप्युपाधिभेदोऽङ्गीकर्तव्य एव । अन्यथा सर्वाख्यातप्रत्ययानामैकार्थ्यप्रसङ्गात् । अतः स्वाभाविको वौपाधिको वाऽस्त्युत्तरः कालः । माऽवगाम्युत्तरः काल इदानीम् । किन्नश्छिन्नमित्यत आह तद्व इति । कथमेवेत्यनुवर्तते । उत्तरकालानवगताविति चार्थः । गम्यते अवगम्यते । अत्रातीतस्य कण्ठतोऽसङ्कीर्तनं कैश्चिदतीतमोक्षस्यानङ्गीकृतत्वात् । उत्तरकालानवगतौ तत्संबन्धितया मोक्षोऽपि नावगम्यत एव । विशेषणानवगमे विशिष्टानवगमस्य प्रसिद्धत्वात् । भविष्यति मोक्ष इत्यवगमाभावे च तदर्थः प्रयत्नो न स्यात् । मोक्षे सर्वस्य बाधो भविष्यतीत्येतदपि न स्यादिति ।

**शे०** — तदिति तच्छब्दस्य प्रत्यक्षसिद्धमिति पूर्वत्र प्रकृतप्रत्यक्षमात्रपरत्वेन तन्मात्रस्यैव वर्तमानमात्रग्राहकतानिरामकतया प्रतीयमानस्यास्य ग्रन्थस्य कथं साक्षिणस्तन्निरासकतया प्रवृत्तिर्व्याख्यायत इत्यत आह **प्रत्यक्षविशेषमिति** । सामान्यपरस्यास्य भाष्यस्य करिष्यमाणोपपादनानुरोधेन विशेषपरत्वमेवावसीयत इति भावः । 'अतो न वर्तमानैकनियमः स्यात् ग्रहेऽक्षजे' इत्युपसंहारानुसारेण 'नोत्तरगोचरमि'त्येतद्व्याचष्टे **वर्तमानेति** ॥ **प्रमाणान्तराणामिति** । बाह्यप्रत्यक्षादीनामित्यर्थः ॥ **प्रागेवेति** । 'कालो हि साक्षिप्रत्यक्ष' इत्यादिनाऽऽनुमानिकपाद इति शेषः । उत्तरशब्दस्यानागतकालमात्रपरत्वेऽतीतकालग्राहकत्वासिद्धिप्रसङ्गात्तत्सिद्ध्यर्थमतीतानागतपरतया तं व्याचष्टे **उत्तर इतीति** । न केवलं मुख्यया वृत्त्योत्तरपदमनागतपरं किन्तु लक्षणयाऽतीतकालपरं चेत्यर्थः । युगपद्वृत्तिद्वयविरोधस्तु गङ्गायां मत्स्यो घोषश्चेत्यादौ तद्दर्शनात्पङ्कजशब्देन रूढ्या पद्मत्वजातेर्योगेन पङ्कजननस्य च प्रतीतिदर्शनाच्च न दूषणम् । न्यायरीत्या तद्दूषणत्वपक्षे चोत्तरपदमेवोभयलक्षकमिति द्रष्टव्यम् । नन्वखण्डदण्डायमानः काल एक एवेति पूर्वोत्तरकालावेव न स्तः । तत्कथमुत्तरकालानवगतिरापाद्यत इत्यत आह **येषां चेति** ॥ **सर्वाख्यातेति** । लडादिवर्तमानार्थकसर्वाख्यातेत्यर्थः ॥ **औपाधिको वेति** । ततश्च वर्तमानानद्यतनाद्यनेककालवाचित्वाल्लडादीनां भिन्नार्थत्वमिति भावः । अनागतस्येवातीतस्यापि स्ववाचकशब्देन ग्रहणे कर्तव्ये उपलक्षणया तद्ग्रहणे निमित्तमाह **अत्रातीतस्येति** ॥ **नावगम्यत इति** । नावगम्येतेत्यर्थः ॥ **विशेषेणेति** । एतच्च विशेषणज्ञानस्य विशिष्टज्ञानकारणतामतमाश्रित्योक्तमित्यविरोधः । ननु माऽस्तु भविष्यति मोक्ष इत्युत्तरकालसंबन्धितया मोक्षावगमोऽपीत्यत आह **भविष्यतीति** । अनिष्टान्तरमप्याह **मोक्ष इति** ।

प०— उत्तरः काल इत्यस्य क्रियापेक्षायामाह **गम्यत इति वक्ष्यमाणेन संबन्ध इति** । भूतकालागोचरत्वलाभायाह **वर्तमानमात्रगोचरमित्यर्थ इति** ॥ **प्रागेवेति** । 'अतीतानागतौ कालावपि नः साक्षिगोचरौ । पक्षीकर्तुमशक्यत्वान्नानुमा तत्र वर्तते' इत्यादिनानुमानिकपादे दूषितत्वादित्यर्थः । स्यादेतत् । यद्युत्तरः कालो भवेत् । न च सोऽस्ति तस्याखण्डत्वात् इत्यत आह **येषां चेति** । मत इति शेषः ॥ **सर्वाख्यातेति** । भूतवर्तमानभविष्यदर्थकलकारादेशरूपतिङ्प्रत्ययानामित्यर्थः ।

या०— **प्रागेवेति** । प्रथमाध्याय एवेत्यर्थः ।

श्री०— **तन्नियमं** वर्तमानमात्रग्राहित्वनियमम् । ननूत्तरकालग्रहणमनुमानादिप्रमाणान्तरैर्भविष्यतीत्यत आह **प्रमाणान्तराणामिति** । 'अतीतानागतौ कालावपि नः साक्षिगोचरावि'त्यादिनेत्यर्थः। ननु कालस्याखण्डत्वात्कथमुत्तरत्वादिवचनमत आह **येषां चेति** । अन्यथा उपाधिभेदानङ्गीकारे ॥ **सर्वाख्यातेति** । वर्तमानाद्यर्थकलडाद्याख्यातरूपां प्रत्ययानाम् ॥ **ऐकार्थ्येति** । अखण्डकालस्यैकस्यैव तद्वाच्यत्वादिति भावः ।

सु०— **शुकवामदेवादयो ज्ञानेन मुक्ता अभूवन्नहमपि मुक्तो भविष्यामीत्याद्यवगतिः आगमादेव भविष्य(तीति)ति किमत्र साक्षिणोऽतीतानागतार्थगोचरत्वेनेत्यत आह** आगमोऽपीति ।

अनु०— आगमोऽपि हि सामान्ये सिद्धे प्रत्यक्षतः पुनः ।
विशेषं गमयेदेव

**एषा खल्वागमस्य स्थितिः** । यत्सामान्येऽन्वयसामान्यवति **पदार्थसमूहे,** प्रत्यक्षतः **प्रमाणान्तरेण, सिद्धे सति,** पुनः **पश्चाद्विशेषमन्वयविशेषवन्तं तमेव पदार्थसमूहं,** गमयेदित्येव **न पुनः पदार्थानपि गमयेदिति । नद्यास्तीरे पञ्चफलानि सन्तीत्यादौ तथा दर्शनादिति हिशब्दार्थः । किं प्राक् पदार्थसिद्ध्येत्यत आह** कथमिति ।

कथं शक्तिग्रहोऽन्यथा ॥

**यदि पदार्थाः प्राङ् न सिद्धास्तर्हि पदानां तेषु वाचकत्वशक्तिग्रहणं न स्यात् । अविदितविषयायाः शक्तेर्गृहीतुमशक्यत्वात् । न हि काष्ठमजानन्कुठारस्य तच्छेदनशक्तिं ज्ञातुं शक्नोति ।**

शे०— अतीतकालसंबन्धितया मोक्षावगतिमुदाहरति **शुकेति** । उत्तरकालसंबन्धितयाऽपि तदवगतिमुदाहरति **अहमपीति** ॥ **अन्वयसामान्यवतीति** । सामान्यतो योग्येतरान्वयवतीत्यर्थः ॥

**न पुनः पदार्थानपीति** । येनातीतानागतकालसिद्धिरागमात्स्यादिति भावः ॥ **अविदितविषयाया इति** । न विदितो विषयो वाच्यं यस्या इति विग्रहः । शक्तेः ससंबन्धिकपदार्थतया संबन्धितावच्छेदकप्रकारकसंबन्धिज्ञानाधीनत्वेनातीतानागतरूपसंबन्ध्यनवगमे ज्ञातुमशक्यत्वादिति भावः ।

**प०** — मूलपदानामर्थमाह **यत्सामान्यमित्यादिना** । 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमि'ति वाक्यार्थलभ्यः स्वर्गपदार्थो भवति । अतः प्रत्यक्षपदं प्रमाणमात्रपरमित्युपेत्याह **प्रमाणांतरेणेति** । एवशब्दान्वयं प्रदर्श्य तद्व्यावर्त्यमाह **गमयेदित्येव न पुनः पदार्थानपीति** । प्रागनवगतान् पदार्थानपीत्यर्थः ।

**या०** — **अन्वयसामान्यवतीति** । सामान्येन योग्येतरान्वयवतीत्यर्थः । न पुनः पदार्थानपीति येन कालादिरूपपदार्थसिद्धिरागमात्स्यादिति भावः ।

**श्री०** — **अविदितविषयायाः** अविदितपदार्थधर्मिकायाः सम्बन्धिज्ञानाभावे सम्बन्धज्ञानाभाव इत्यत्र दृष्टान्तमाह **न हीति** ॥ **न हि काष्ठमिति** । काष्ठस्थानीयाः पदार्थाः । कुठारस्थानीयानि पदानि । तच्छेदशक्तिस्थानीया वाचकत्वशक्तिरिति ज्ञेयम् । एवं पदार्थज्ञानाभावे तद्वाचकत्वशक्तिरपि न ज्ञातुं शक्यत इति भावः । अत्र धर्मितया सम्बन्धित्वं तत्र कर्मितया संबन्धित्वमिति वैषम्यमिति भावः ।

---

**सु०** — **अस्तु पदानां शक्तिग्रहाय पदार्थज्ञानमावश्यकम् । अथ शक्तिग्रह एव किमर्थ इत्यत आह** अतीतेति ।

> **अनु०** — अतीतानागतार्थेषु जाते शक्तिग्रहेऽखिलम् ॥
> विशेषं ज्ञापयेद्वाक्यं न तदज्ञातशक्तिके ॥

**अत्रातीतानागतग्रहणं प्रकृतापेक्षम् । अखिलमपि वाक्यं पदानां पदार्थेषु वाचकत्वशक्तिग्रहे जात एवान्वयविशेषं गमयेत् । न तु तद्वाक्यं पदार्थेषु पदसमूहेऽज्ञातशक्तिके सति विशेषं गमयेदित्यन्वयव्यतिरेकाभ्यां, वाक्यस्य वाक्यार्थावगतौ कर्तव्यायां, शक्तिग्रहोऽङ्गमिति ज्ञायतेऽतोऽसावर्थनीयः । प्रकृतवाक्यानां चातीतानागतार्थसंसर्गबोधकत्वादतीतानागतार्थेषु लुङ्लृडाद्यन्तपदानां शक्तिर्ज्ञातव्येत्यर्थः ।**

**शे०** — **प्रकृतापेक्षमिति** । 'शुकवामदेवादयो ज्ञानेन मुक्ता अभूवन्नि'त्यादिप्रकृतवाक्यापेक्षमेवातीतादिग्रहणम् । न त्वन्वयव्यतिरेकशरीरान्तर्गतमित्यर्थः । किन्तर्हि तत्रान्तर्गतमित्यतः सामान्यमेवेत्यभिप्रेत्य तत्प्रवेशेनान्वयव्यतिरेकौ दर्शयति **अखिलमपीति** ॥ **असाविति** । शक्तिग्रह

इत्यर्थः । कुतस्तर्ह्यतीतार्थेषु शक्तेर्ज्ञातव्यत्वसिद्धिर्येनातीतादिज्ञानस्यावश्यकता सिध्येदित्यतः प्रकृतापेक्ष-मित्युक्तमेव विशदयति **प्रकृतवाक्यानां चेति** ।

**प०** — पदार्थेष्वित्येव वाच्ये अतीतेत्याद्युक्तिः कुत इत्यत आह **अत्रातीतेति** । शुकादयो मुक्ता अभूवन् अहमपि मुक्तो भविष्यामीत्याद्यवगतिरागमादेव भविष्यतीत्यनीतादिकालीनमुक्तिबोधकागमस्य 'आगमोऽपी'ति पूर्वपक्षेऽत्रप्रकृतत्वात्तदपेक्षमित्यर्थः । यद्वा प्रत्यक्षस्यातीतविषयकत्वसमर्थनस्य 'तच्चेन्नोत्त-रगोचरमि'त्यत्र प्रकृतत्वात्तदपेक्षमित्यर्थः । तदित्यनुवादः वाक्यमिति व्याख्या । अतीतानागता-र्थेष्वित्यस्य विवक्षितार्थानुवादः **पदार्थेष्विति** । पदसमूह इति शेषोक्तिः ॥ **प्रकृतवाक्यानां चेति** । शुकादयो मुक्ता अभूवन्मादृशोन्यः ज्ञानेन मुक्तो भविष्यतीत्यतीतादिकालीनमुक्तिपर-भागवताद्यागमवाक्यानामित्यर्थः ।

**या०** — प्रकृतापेक्षमित्युक्तं विशदयति **प्रकृतवाक्यानां चेति** ।

**श्री०** — **प्रकृतेति** । शुकवामदेवादयो मुक्ता अभूवन्नित्यादिवाक्यानाम् ।

**सु०** — **अस्तु शक्तिग्रहावश्यम्भावः किन्तु वर्तमानेष्वेवार्थेषु नातीतानागतेष्वनुपयोगा-दित्यत आह** शक्तिश्चेदिति ।

**अनु०** — शक्तिश्चेद्वर्तमाने स्यान्नातीतानागतं वदेत् ।

---

**यदि वर्तमान एवार्थे पदानां शक्तिर्गृहीता स्यात्तदा वाक्यम्** अतीतानागतम् **अतीताना-गतार्थसंसर्गं** न वदेत् **न प्रतिपादयेत्** । **सहकारिविरहात्** । **सर्वो द्वन्द्वो विभाषयैकवद्भवती-त्येकवद्भावः** । **अतीतानागतार्थेष्वित्युक्तस्याभिप्रायकथनमेतत्** ।

**शे०** — अतीतानागतार्थेष्वित्यस्य प्रकृतवाक्यानां चेत्यादिनोक्तमभिप्रायमजानानः शङ्कते **अस्तु शक्तिग्रहेति** ॥ **सहकारीति** । शक्तिग्रहरूपसहकारिविरहादित्यर्थः । नन्वतीतं चानागतं चेतीतरेतरयोगद्वन्द्वे अतीतानागते इति द्विवचनेन भाव्यम् । अतीतानागतमित्येकवचनं तु कथमित्यत आह **सर्व इति** । नन्वेवं वाक्त्वचं श्रीःस्रजमिति समाहारद्वन्द्वेऽपि द्विवचनप्रसङ्गः । तथेतरेतरद्वन्द्वेऽपि पक्षे एकवचनप्रसङ्गश्चेति चेत् । उच्यते । न सर्वो द्वन्द्व इत्यनेन समाहारद्वन्द्वे इतरेतरद्वन्द्वो वाऽपूर्व-तया विभाषयैकवत्क्रियते किन्तर्हि न्यायसिद्धोऽर्थोऽनूद्यते । तथा हि । 'चार्थे द्वन्द्व' इति चार्थे द्वन्द्वः क्रियते । चार्थश्चेतरेतरयोगः । स एव यदोद्रिक्तावयवभेदो भवति तदाऽवयवभेदानुगमाद्द्विवचन-बहुवचने सिद्धे एव । यदा तिरोहितावयवभेदविवक्षा । संहतिप्राधान्यमिति यावत् । तदा समाहार इति संहतिप्रधानत्वादेकवचनं भवति । तदेवं चार्थ एव सर्वो द्वन्द्वो विभाषयैकवद्भवतीति परिभाषा-

रूपेण पठ्यते । ननु चार्थः समुच्चयः । नेतरेतरयोगः । चशब्दप्रयोगे समुच्चयस्य प्रतीतेरिति चेत् । सत्यम् । किन्तु तत्प्रभेद एवेतरेतरयोगो न समुच्चयादन्यः । तथा हि । समुच्चय एव युगपदर्थाभिधायिनां परस्परापेक्षाणां भवति तदा द्वन्द्वः क्रियते । तावतैवेतरेतरयोगश्चार्थ इत्युच्यते । न चैवं द्वन्द्वश्च प्राणितूर्येति सूत्रमनर्थकं स्यात् । तेन हि समाहारद्वन्द्वे एकवद्भावो विधेयः । तत्र समाहारद्वन्द्वैकत्वादेवैकवचनसिद्धेरिति वाच्यम् । प्राण्यङ्गादीनां समाहारद्वन्द्व एव यथा स्यादितरेतरयोगो मा भूदिति सूत्रस्य सप्रयोजनत्वात् । ननु तर्हि किमर्थं समाहार एकत्वं क्रियते । इतरेतरयोग एव एकवद्भावः क्रियताम् । एवं समाहारग्रहणं यत्नप्रतिपाद्यं न भवति । कार्यं च विधिमुखेनैव प्रवर्तत इति चेत् । उच्यते । इतरेतरयोगे एकवद्भावे सति अश्वित्वचमित्यत्र समाहारद्वन्द्वलक्षणे द्वन्द्वाच्चुदषहान्तात्समाहार इति न स्यात् । नन्वेवमपि पूर्वोक्तप्रकारेण समाहार एवैकवचनं भवति । समाहारश्चैक एव । एवञ्चैकवदिति वतिर्नोपपद्यते । तर्ह्येक एवैकवदित्युच्यत इति चेत् । उच्यते । बुद्ध्याऽनेकत्वमध्यारोप्य भविष्यति । उक्तं च । बुद्धिर्हि भगवती अभेदेऽपि भेदं जनयति । यथा राहोश्शिर इति । तथाऽप्यशेषद्वन्द्व एकत्वाविधानात्सर्वो द्वन्द्व इत्यघटना स्यादिति चेत् । उच्यते । सर्वो द्वन्द्व इति कोऽर्थः । इतरेतरयोगसमाहारात्मक इत्यर्थः । न चैवमपि वृक्षमृगादिसूत्रमनर्थकम् । अनयैव परिभाषया बाभ्रव्यशालङ्कायनं बाभ्रव्यशालङ्कायना इत्येतद्वत् प्लक्षन्यग्रोधं प्लक्षन्यग्रोधावित्येवमादीनां सिद्धत्वादिति वाच्यम् । सिद्धे परिभाषयैकत्वे वृक्षादीनां सजातीयैरेव द्वन्द्वो यथा स्यान्न विजातीयैरिति व्यतिकरनिरासार्थं विभाषयैकवत्त्वविधानमित्यन्यत्र विस्तरः ।

प०— **इत्युक्तस्याभिप्रायकथनमेतदिति** । तादृशागमवाक्यस्य 'आगमोपि ह्री'ति प्रकृतत्वात्तदपेक्षयाऽतीतानागतग्रहणमिति योऽभिप्राय उक्तः तत्कथनमेतत् । वर्तमाने चेत् व्युत्पत्तिः मुक्ता अभूवन् मुक्तो भविष्यतीत्यादिलुङ्प्रत्ययाद्यंतशब्दोपेतागमवाक्यं तमर्थं न बोधयेदित्येवंरूपेण प्रकृतापेक्षत्वाभिप्रायो व्यक्तीकृत इत्यर्थः ।

या०— अतीतानागतार्थेष्वित्यस्य प्रकृतवाक्यानां चेत्यादिना प्रदर्शितमभिप्रायमबुद्ध्वा यथाश्रुते शङ्कते **अस्तु शक्तिग्रहेति** ॥ **अभिप्रायेति** । प्रकृतापेक्षमित्युक्ताभिप्रायकथनमेतदित्यर्थः । एवं चात्र वक्ष्यमाण एव तदभिप्रायः पूर्वमस्माभिः स्पष्टतायै प्रकृतवाक्याना चेत्यादिना प्रदर्शितः । अतो न पौनरुक्त्यमिति भावः ॥

श्री०— अतीतानागते इति स्यादत आह **सर्व इति** ।

सु०— अस्त्वतीतानागतार्थेष्वपि पदानां शक्तिग्रहः । ततः किमित्यत आह यदीति ।

अनु०— यदि शक्तिग्रहोऽन्यत्र कथं स स्यात्तदग्रहे ॥

वर्तमानादन्यत्रातीतानागतयोरपि पदशक्तिग्रहो यद्यङ्गीकृतस्तदा सः अतीतानागतार्थेषु पदशक्तिग्रहस्तदग्रहेऽतीतानागतार्थाग्रहे कथं स्यात् । न कथञ्चित् । निर्विषयायाः शक्तेर्ज्ञातुमशक्यत्वात् । अतोऽतीतानागतार्थज्ञानमप्यङ्गीकार्यम् ।

अयमत्र समुदायार्थः । वाक्यं तावत्पदार्थसंसर्गविशेषलक्षणं वाक्यार्थमेव बोधयति न पदार्थमात्रम् । तच्चापेक्षते पदानां पदार्थेषु वाचकत्वशक्तिग्रहम् । शक्तिग्रहश्च पदार्थग्रहम् । पदार्थग्रहश्च प्रमाणान्तरायत्तो न पदवाक्यजन्यः । इतरेतराश्रयादिदोषप्रसङ्गात् । यत्र चातीतानागतार्थसंसर्गो वाक्यार्थस्तत्रातीतानागतार्थग्रहणमावश्यकम् । शुकवामदेवादयो मुक्ता अभूवन्नहं च मुक्तो भविष्यामीत्यादिकं च तथा । तस्माल्लुङ्लृङाद्यन्तपदवाच्यानामतीतानागतकालतत्संबन्धिपदार्थानां च ग्रहणमागमेनोक्तार्थप्रतिपत्तिमभिलषताऽपि परेणैष्टव्यम् । न च तत्साक्षिणा विना भवतीति कथमतीतानागतार्थग्राहिणस्तस्य वर्तमानमात्रविषयत्वमिति ।

शे०— अभिप्रायेति । अतो न तेनास्य पुनरुक्तिरिति भावः । विक्षिप्य वर्णितं बुद्ध्यारोहाय सङ्कलय्याह अयमत्र समुदायार्थ इति ॥ न पदार्थमात्रमिति । तेषां मानान्तरसिद्धत्वेन तत्प्रतिपादकत्वे वाक्यस्य वैयर्थ्यापातादिति भावः ॥ इतरेतराश्रयादीति । शक्तिग्रहे सति तद्रूपसहकारिसंपत्त्या शब्दात्पदार्थज्ञानं, सति च तस्मिन्संबन्धिज्ञानाधीनशक्तिग्रह इति पदार्थज्ञानशक्तिज्ञानयोः परस्परसापेक्षत्वेनेतरेतराश्रयः स्यादित्यादिदोषप्रसङ्गादित्यर्थः ॥ तथेति । अतीतानागतार्थसंसर्गप्रतिपादकमित्यर्थः ॥ उक्तार्थेति । अतीतानागतकालसंबन्धितया मोक्षप्रतिपत्तिमित्यर्थः । न च तत्साक्षिणा विना भवतीति । ननु च वर्तमानतादशायां तत्तत्कालानां साक्षिणाऽनुभूतत्वात्तदुपनीतकालेष्वतीतत्वस्य मनसैव विषयीकरणमुपपद्यते । संस्कारसामर्थ्येनातीततत्ताविषयकत्वस्य प्रत्यभिज्ञादौ दर्शनात् । ततश्च न साक्षिणोऽतीतग्राहकत्वम् । यद्वाऽतीतत्वेन कालविशेषस्यैव स्मरणे स्मृतेनातीतकालत्वेन सादृश्यावच्छिन्नेन स्वसंबन्धिकालमात्रभानमपि संभावितम् । पुरोवर्तिनि पदार्थेऽनुभूतेन गोत्वेन सादृश्यावच्छिन्नेन स्वसंबन्धिगोमात्रप्रतीतौ तत्र शक्तिग्रहस्य सिद्धान्तिनाऽप्यङ्गीकारात् । तत्कथमतीतादेर्ज्ञानं साक्षिणा विना न भवतीत्युच्यत इति चेन्न । स घट इत्यादावतीतत्वस्येव कालेऽप्यतीतत्वस्य मनसैव भानं तावन्न युक्तम् । वैषम्यात् । तथा हि । अतीतत्वस्य प्रागननुभूतत्वेऽपि स घट इति स्मरणजनकानुभवेऽविषयत्वात्तज्जन्यस्मरणे कथं तस्य विषयतेत्याशङ्कायां संस्कारसामर्थ्यात्तदनुभवाविषयस्यापि तत्र भानमुपपद्यते । अत एव न

संस्कारसामर्थ्याश्रयणवैयर्थ्यम् । नैवमत्र । अतीतत्वस्य सर्वथाऽननुभूतत्वेन स्मरणस्यैवासंभवात् । अस्तु वा स्मरणं तथाऽपि कालविशेषेऽतीतत्वस्मरणेन तत्र शक्तिग्रहसंभवेऽप्यतीतकालमात्रे शक्तिग्रहोऽनुपपन्न एव । तदर्थं च तत्तत्कालानुभवजन्यसंस्कारसहकृतमनसा तत्तत्कालविषयकैकस्मरणाभ्युपगमेऽनन्तस्मरणाभ्युपगमे कल्पनागौरवम् । एवमङ्गीकुर्वताऽपि साक्षिणैव तत्तत्कालानुभवाभ्युपगमेन तस्यावश्यमङ्गीकार्यत्वात्तमङ्गीकृत्याप्यनेकसंस्काराणां तदुद्बोधकानां च कल्पनीयत्वात् । गोत्वस्य च चक्षुस्सन्निकृष्टत्वेन सकलव्यक्तिभाननियामकत्वसंभवेऽपि कालातीतत्वस्य मनस्सन्निकृष्टत्वाभावान्न सर्वोपस्थापकत्वं संस्कारस्य । कालमात्रविषयकतया कालातीतत्वविषयकत्वाभावेन तत्सन्निकर्षत्वासंभवात् । संस्कारो ह्यतीतत्वभाने सहकारित्वेनैवाभ्युपगम्यते न सन्निकर्षत्वेनेति न द्वितीयः प्रकारः । एवमङ्गीकुर्वताऽतीतत्वस्य प्रकारान्तरेण भानोपपादनेऽप्यनागतत्वभानस्योक्तरीत्याऽसंभवेन तद्ग्राहकतायाः साक्षिण्यवश्याङ्गीकार्यत्वात्तन्न्यायेनातीतत्वस्यापि ग्रहणसंभवेनोक्तकुसृष्टिकल्पनानवकाशादित्यत्र विस्तरः ।

**श्री० — इतरेति** । पदादिना पदार्थबोधे जाते सम्बन्धिज्ञानस्य जातत्वेन तत्र वाचकत्वरूपशक्तिग्रहः । शक्तिग्रहे सति पदपदार्थबोधकत्वमित्यन्योन्याश्रय इत्यर्थः । **तथा** अतीतानागतार्थसंसर्गबोधकत्वम् ।

**सु० — मीमांसकमतानुसारेण शङ्कते** सामान्यमिति ।

**अनु० —** सामान्यं दृष्टमेवासावन्यत्र गमयेद्यदि ॥

---

**असाविति प्रकृतवाक्यैकदेशस्य** शब्दस्य **परामर्शः । सकलमपि वस्तु सामान्यविशेषात्मकम् । तत्र सामान्याकार एव शब्दवाच्यो विशेषस्तु लक्ष्य एवेति तावन्निष्टङ्कितम् । सामान्यं चातीतानागतविशेषेष्वेकमेव । तच्च वर्तमानं चक्षुरादिना दृष्टं शब्दशक्तिविषयतया अवगतमेव,** अन्यत्र **कालान्तरेऽपि, शब्दो बोधयति । तत्र किमतीतानागतार्थज्ञानेन । विशेषाणां हि शब्दवाच्यत्वे तेषामतीतादिरूपत्वात् शक्तिग्रहणायातीतादिज्ञानमपेक्षितं स्यात् । न च लुङ्लृङादिशक्तिग्रहणायातीतानागतादिकालग्रहणमपरिहार्यमिति वाच्यम् । तत्रापि कालत्वजातेरेव वाच्यत्वात् । न हि वैशेषिकादिवन्मीमांसकानां निस्सामान्यं किमप्यस्ति । अतो न शक्तिग्रहायातीतादिग्रहापेक्षेति ।**

**शे० —** सामान्यस्य शब्दवाच्यतायां विशेषस्य लक्ष्यतायाश्च सिद्धान्तविरुद्धत्वान्न तद्रीत्यैतच्छङ्का युक्तेत्यत आह **मीमांसकेति ॥ असाविति प्रकृतवाक्यस्यैकदेश इति** । पदसमूहरूपतया वाक्यस्य वाचकत्वासंभवेन नपुंसकस्य पुलिङ्गेन परामर्शासंभवेन चासावित्यस्य प्रकृतवाक्यपरामर्शकत्वानुपपत्तेस्तदेकदेशशब्दस्यैवासाविति परामर्श इति भावः ॥ **सामान्यविशेषात्मकमिति** । सामान्या-

श्रयव्यक्तिरूपमित्यर्थः । एवमग्रेऽपि विशेषपदं व्यक्तिपरं बोध्यम् ॥ **निष्टङ्कितमिति** । प्रकृत्यधिकरण इति शेषः ॥ **चक्षुरादिना दृष्टमिति** । कालस्य तन्मते षडिन्द्रियवेद्यत्वाद्युक्तं चक्षुरादिना तद्दर्शनमिति भावः ॥ **कालत्वजातेरेवेति** । न चैवं लुङाद्याख्यातानां पर्यायत्वं स्यादिति वाच्यम् । परं प्रति तस्येष्टत्वात् ॥ **मीमांसकानामिति** । यद्यपि जातेराकृतिव्यङ्ग्यत्वादाकृतिशून्यं गुणादिकं निस्सामान्यमिति प्राभाकरैरङ्गीकृतत्वान्न निस्सामान्यवस्तुनिषेधो युक्तः । तथाऽपि भट्टमतमेतदुपन्यस्तमित्यविरोधः ।

प० — वाक्यमिति प्रकृतत्वात्कथमसाविल्युक्तिरित्यत आह **प्रकृतेति** । पुल्लिङ्गनिर्वाहायाह **शब्दस्य परामर्श इति** । पदस्येत्युक्तावसाविति पुल्लिगायोगादिति भावः । **सामान्यविशेषात्मकमिति** । अनुगताननुगतरूपमित्यर्थः । अनुगतजात्याधारतयानुगतं व्यक्त्यात्मनाऽननुगतमिति भावः ॥ **निष्टंकितं** निर्णीतं । पूर्वतंत्रीयाद्याध्यायतृतीयपादीयाऽऽकृत्यधिकरण इति भावः ।

**या० — शब्दस्येति** । पदरूपशब्दस्येत्यर्थः । तस्यैव पदसमुदायात्मकवाक्यैकदेशत्वात् । **सामान्यविशेषात्मकमिति** । सामान्याश्रयव्यक्तिरूपमित्यर्थः । एवमग्रेऽपि विशेषपदं व्यक्तिपरम् । **निष्टङ्कितमिति** । अस्मच्छास्त्रे निर्धारितमित्यर्थः ॥ **मीमांसकानामिति** । तदेकदेशिनां भाट्टानामित्यर्थः । तेन प्राभाकरैर्जातिराकृतिव्यङ्ग्यत्वादाकृतिशून्यं गुणादिकं निःसामान्यमित्यङ्गीकृतत्वात्कथमेतदिति शङ्काऽनवकाशः ।

**श्री० — प्रकृतेति** । शुकवामदेवादयो मुक्ता अभूवन्नित्यादिवाक्यैकदेशभूताभूदित्यादिलुङाद्यन्तशब्दस्येत्यर्थः । तथा च **असौ** शब्दो, **दृष्टं** वर्तमानं चक्षुरादिना सम्बद्धं, **सामान्यमेव गमयेत्** तत्र शक्तिसद्भावात्तदेव बोधयति न व्यक्तिविशेषम् तत्र शक्त्यभावादिति मूलार्थो द्रष्टव्यः । नन्वेकव्यक्तिकत्वान्न कालत्वजातिरित्यत आह **न हीति** ।

सु० — **उत्तरमाह** सामान्येति ।

**अनु० —** सामान्यवर्जितं वस्तुस्वरूपं गमयेत्कथम् ॥

**अस्तु तावत्सर्वविशेषा(षया)नुगतं नित्यं गोत्वादिसामान्यमेव गवादिशब्दवाच्यं सास्नादिमन्तो विशेषास्तु लक्ष्या एव । तथाऽपीदं वक्तव्यम् । स्वरूपशब्दो वस्तुस्वरूपाण्यवगमयति न वेति । नेति पक्षेऽनुभवविरोधः । आद्ये कथं कया वृत्त्येति वाच्यम् । न तावल्लक्षणया । वाच्यार्थद्वारैव(रेणैव) लक्षणासंभवा(लाभा)त्सामान्यस्यैव वाच्यत्वात् । स्वरूपाणां च सामान्यवर्जितत्वात् । अतः स्वरूपशब्दो वस्तुस्वरूपाणां वाचक इत्येवाङ्गीकार्यमिति ।**

**शे०— स्वरूपशब्द इति ।** यद्यपि स्वरूपशब्दस्य यौगिकत्वात्सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते तच्च वाच्यं लक्ष्यं वेति परैरङ्गीकारान्नायं प्रकारः स्वरूपशब्देऽवकाशमर्हति । तथाऽपि सर्वत्र सामान्यमेव वाच्यमिति वदन्तं प्रति स्वरूपशब्दस्यापि तर्हि सामान्यवाचित्वमेव वाच्यमिति परोक्तिदूषणमात्रमेतदित्याहुः । स्वरूपशब्दान्तर्गतस्वशब्दस्यैवायं विचार इत्यन्ये । स्वशब्दपर्यायस्वरूपशब्दस्यैवायं विचार इत्यपरे । धर्मणां भेददृष्ट्यैवेत्यादिना गोत्वादिसामान्यस्यापि सर्वविशेषानुगतत्वस्योत्तरत्र निराकरणात्तावदित्युक्तम् ॥ **अनुभवेति** । अवगमकताया अनुभवसिद्धत्वादिति भावः ॥ **वाच्यार्थेति** । लक्षणाया वाच्यार्थसंबन्धित्वेन लक्ष्योपस्थितिसाध्यत्वादिति भावः ।

**सु०— ननु सर्वसामान्यानां वस्तुस्वरूपाबहिर्भावात्सामान्यवर्जितं (वस्तु)स्वरूपमिति कथमित्यत आह** नेति ।

**अनु०—** न स्वरूपत्वसामान्यं केनाप्यङ्गीकृतं क्वचित् ॥

**सत्यम् सन्ति स्वरूपे सामान्यानि । न च तानि स्वरूपशब्दवाच्यानि । न हि सास्नादिमति पिण्डे वर्तमानं पशुत्वं गोशब्दवाच्यम् । किन्तु गोत्वमेव । तदत्रापि स्वरूपशब्दस्य वाच्यं सामान्यमभ्युपगच्छता स्वरूपत्वमेवाङ्गीकार्यम् । तच्च नास्ति ।** केनापि **परीक्षकेण, क्वचिदप्यनङ्गीकृतत्वात् ।**

---

**शे०— सर्वसामान्यानामिति** । सर्वशब्दोऽनेकार्थः । तथा च द्रव्यत्वपृथिवीत्वाद्यनेकसामान्यानां घटादिवस्तुस्वरूपाश्रितत्वादिति भावः । ननु यदि स्वरूपेऽपि सामान्यानि सन्ति तर्हि तान्येव स्वरूपशब्दवाच्यान्यपि सन्त्वित्यत स्वरूपशब्दात्तत्प्रकारकबोधाद्वा तेषां तद्वाच्यत्वमुच्यते किंवा स्वरूपे वर्तमानतामात्रेणेति विकल्पं मनसि निधायाद्यं निराकरोति **न चेति** । गोशब्दाद्गोत्वप्रकारकबोधवत्स्वरूपशब्दात्तत्प्रकारकबोधाभावान्न तेषां वाच्यतेत्यर्थः । द्वितीयं प्रत्याह **न हीति** । स्वरूपे वर्तमानतामात्रेण सामान्यानां स्वरूपशब्दवाच्यत्वे सास्नादिमति पिण्डे वर्तमानस्य पशुत्वादेरपि गोशब्दवाच्यता स्यादित्यर्थः ।

**प०— सर्वसामान्यानां वस्तुस्वरूपाबहिर्भावादिति** । द्रव्यत्वघटत्वपटत्वादिजातीनां घटपटादिवस्तुस्वरूपगतत्वादिति भावः ॥

**या०— वस्तुस्वरूपाबहिर्भावादिति** । सत्ताद्रव्यत्वपृथिवीत्वादिसामान्यानां घटादिवस्तुस्वरूपाश्रितत्वादित्यर्थः ।

सु० — माऽङ्गीकारि केनापि स्वरूपत्वसामान्यम् । मया त्वङ्गीकरिष्यते । न हि सर्वैरङ्गीकृतमेवाङ्गीकरणीयमित्यस्ति नियमः । तथात्वे दर्शनभेदासंभवादिति वैयात्याद्वदन्तं प्रत्याह स्वरूपं चेदिति ।

अनु० — स्वरूपं चेदनुगतं व्यावृत्तं तत्र किं भवेत् ॥

स्वरूपमिति भावप्रधानो निर्देशः । तत्र वस्तुनि । किंशब्दः प्रश्ने । एवं सत्ययं प्रश्नो निरुत्तरः स्यादिति भावः । तत्कथमित्यत आह सर्वेति ।

सर्वानुगतधर्माणामन्ते हि स्वत्वमिष्यते ॥
किं व्यावृत्तमिति प्रश्ने स्वरूपमिति केवलम् ॥
स्यादुत्तरं

यस्मात्सर्वेषामनुगतधर्माणामन्तेऽवसाने स्वत्वं स्वरूपत्वमिष्यते मीमांसकेन । तस्मात्किं तत्र व्यावृत्तमिति प्रश्ने कृते स्वरूपत्वमित्येवोत्तरं वक्तव्यं स्यात् । एतदुक्तं भवति । द्रव्येष्वत्यन्तं व्यावृत्ता धर्मा अन्त्या विशेषा इति वैशेषिकैरङ्गीकृतम् । विशेषेष्वपि विशेषान्तराङ्गीकारेऽनवस्था( स्यात् )नात् । तत्र यथा स्वरूपत्वमेव व्यावृत्तं तथा द्रव्येष्वपि तदेवास्तु किं विशेषैरिति विशेषानवज्ञाय तत्स्थाने स्वरूपत्वमभिषिञ्चता मीमांसकेन किं व्यावृत्तमिति प्रश्नेऽन्त्या विशेषा इति वक्तुं न शक्यत एव । अपसिद्धान्तापातात् । गुणादयस्तु व्यावृत्तत्वेऽप्यनुगताधारतयाऽङ्गीकृता अनुगतकल्पा एव । अतः स्वरूपत्व(मित्ये,मेव वक्तव्यम् । तस्य चेदानीमनुगतत्वाङ्गीकारे कथमयं प्रश्नो निरुत्तरो न भवेदिति ।

शे० — दर्शनभेदेति । सिद्धान्तभेदेत्यर्थः । स्वरूपत्वस्यानुगतत्वशङ्कायां मूलरूढत्वलाभायाह स्वरूपमितीति ॥ वस्तुनीति । परमाण्वादिरूपे नित्यद्रव्य इत्यर्थः । वाक्यतात्पर्यमाह एवं सतीति ॥ किं तत्र व्यावृत्तमितीति । अत्र व्यावृत्तिशब्दो व्यावृत्तिबुद्धिजनकधर्मपर एव । न तु व्यावृत्तिरूपान्योन्याभावपर इत्यवधेयम् ॥ द्रव्येष्विति । परमाण्वादिरूपनित्यद्रव्येष्वित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । अत्यन्तव्यावृत्ता इति । केवलं व्यावृत्तिबुद्धिहेतवो न तु द्रव्यत्वादिवदनुवृत्तिप्रत्ययहेतवोऽपीत्यर्थः ।

स० — अत्यन्तव्यावृत्ता इति । व्यावर्तकान्तरशून्यत्वे सति व्यावृत्तिहेतव इत्यर्थः । विशेषाणां व्यावर्तकान्तरशून्यत्वं कुत इत्यत आह विशेषेष्वपीति ॥ किं व्यावृत्तमिति । किमनुगतमित्यर्थः ॥ अनुगताधारतयेति । अनुगतसामान्यस्य गुणत्वादिरूपस्य गुणादिषु विद्यमानत्वेन तेषामप्यनुगतत्वादित्यर्थः ।

प०— तत्रेत्यनुवादः वस्तुनीति व्याख्या । **अत्यन्तं व्यावृत्ताः** व्यावर्तकान्तरं विना व्यावृत्ताः अन्त्याः । द्रव्यगुणकर्मसामान्येभ्यो व्यावर्तकेभ्यः पश्चात्तना इत्यर्थः । **व्यावृत्तमिति प्रश्न इति** । अनुगतव्या(वृत्तध)वर्तकधर्मं विना स्वभावत एवान्योन्यभेदयुक्तं किमिति प्रश्न इत्यर्थः ॥

**या०**— दर्शनभेदेत्यत्र दर्शनपदं सिद्धान्तपरम् ॥ **वस्तुनीति** । परमाण्वादिरूपनित्यद्रव्यात्मके वस्तुनीत्यर्थ ॥ **किं तत्र व्यावृत्तमिति** । अत्र सर्वत्र व्यावृत्तशब्दो व्यावृत्तिबुद्धिजनकपर इत्यवधेयम् । **अत्यन्तव्यावृत्ता इति** । केवलं व्यावृत्तिबुद्धिहेतव इत्यर्थः । न द्रव्यत्वादिवदनुवृत्तिप्रत्ययहेतवोऽपीति भावः ॥ **अन्त्या इति** । अन्ते इतरेषां गुणादीनां व्यावर्तकानामवसाने भवा इत्यर्थः ॥ **द्रव्येष्वपीति** । नित्यद्रव्येष्वपीत्यर्थः ॥

**श्री०**— **व्यावृत्तमिति** । अत्र सर्वत्रापि व्यावृत्तशब्देन व्यावृत्तिप्रत्ययजनकं ग्राह्यम् । **किं व्यावृत्तं** द्रव्येष्विति शेषः ॥ **स्यादिति** । अनुवृत्तिप्रत्ययहेतुत्वेन व्यावृत्तिप्रत्ययजनकत्वाभावादिति भावः ।

**सु०**— **ननु भेद एव व्यावृत्तो भविष्यति । तस्यानुगतेरनुगताधारतायाश्चाभावा-दित्यत** आह तत इति ।

अनु० — ततोऽन्यच्चेत्तदेव स्वयमेव नः ॥

**एकस्य एवशब्दस्य तर्हीत्यर्थः** । ततः **स्वरूपत्वादन्यद्भेदलक्षणं व्यावृत्तं यद्यङ्गीक्रियते । तर्हि** तदेवास्माकं स्वयं **स्वरूपम् पदार्थ(यदर्थ)स्वरूपमुदाहृतं तत्र भेद एवोदाहरणं भविष्य-तीत्यर्थः । एतदुक्तं भवति । उदाहरणस्यानादरणीयत्वाद्भेदस्तावन्निस्सामान्योऽपि शब्द-बोध्यो वचनवृत्त्यैवेत्यङ्गीकरणीयम् । न च वाचकः शब्दः शक्तिग्रहेण विनाऽर्थं बोधयतीति तत्र तस्य शक्तिग्रहोऽप्येष्टव्य इति ।**

**ततः किं प्रकृत इत्यत** आह एवमिति ।

एवं व्यावृत्तरूपेऽपि यदा शक्तिग्रहो भवे ॥

तस्य

एवमुक्तप्रकारेण व्यावृत्तरूपे **निस्सामान्येऽपि स्वरूपे वा भेदे वा स्वरूपभेदादिशब्दानां वाचकत्वशक्तिग्रहो यदाऽङ्गीकृतो भवेत्तदा स च शक्तिग्रहस्तस्य स्वरूपादेर्ज्ञानं विना कुतो भवेत् । संबन्धज्ञानस्य संबन्धिज्ञानपूर्वकत्वनियमान्न भवेदेवेति तज्ज्ञानमङ्गीकरणीयम् । सर्वेषां स्वरूपाणां भेदानां च ज्ञाने (च) सार्वज्ञमापतितमित्यत** आह सामान्यत इति ।

सामान्यतो ज्ञानं विना स च भवेत्कुतः ॥

सामान्यतो ज्ञानेनैव व्युत्पत्त्युपपत्तिः, विशेषतो ज्ञानाभावाच्च सार्वज्ञ्यानापत्तिरित्यर्थः । ननु सामान्यवर्जितस्य स्वरूपादेः कथं सामान्यतो ज्ञानमित्यत आह अत इति ।

अतो विशेषसामान्यरूपं सर्वमपीष्यते ॥

सर्वमपि वस्त्वस्माभिर्विशेषसामान्यरूपं व्यावृत्तरूपं सामान्यरूपं चेष्यतेऽतो न काचिदनुपपत्तिः । कुत एवमिष्यते । अतः पूर्वन्यायात् । यदि व्यावृत्तमेव स्यात्तदोक्तप्रकारेण सार्वज्ञ्यमापद्येत शक्तिग्रहाभावो वा स्यात् । यदि च सामान्यरूपमेव भवेत्तदा व्यावृत्तबुद्ध्यनुपपत्तिरेवेति ।

शे०— भेद एवेति । व्यावृत्तो व्यावर्तकः । तत्र निस्सामान्यस्यापि शब्दवाच्यत्वे पूर्वन्यायमेवोपदर्शयति यदीति ॥ उक्तप्रकारेणेति । तेषां व्यावृत्तरूपाणां प्रत्येकं ज्ञान इति शेषः । शक्तिग्रहाभावो वेति । तेन रूपेण ज्ञानाभाव इति शेषः ।

स०— सामान्यरूपमिति । अनुगतधर्मरूपमेव भवेदित्यर्थः ।

प०— ननु भेद इति । स्वरूपेषु विद्यमानो भेद इत्यर्थः । स्वरूपभेदादिशब्दानामिति । स्वरूपशब्दभेदशब्दव्यावृत्त्यादिशब्दानामित्यर्थः ।

श्री०— भेदस्य व्यक्तिभेदस्वरूपस्यानुगतधर्माधारतयाऽनुगतत्वं किं न स्यादित्यत उक्तम् अनुगतेति । अनुगतस्य भेदत्वस्यानङ्गीकारादिति भावः ॥ यदर्थमिति । सामान्यवर्जितवस्तुस्वरूपशब्दव्युत्पत्तिः कथमित्येतदर्थमित्यर्थः ॥ शक्तीति । व्यक्तीनामनन्तत्वेन तत्र शक्तिग्रहे तत्रैव पुरुषायुषपर्यवसानापत्त्येति शेषः ॥

सु०— नन्विदं पूर्वोक्तविरुद्धमुच्यते । यावता प्राक् स्वरूपादिकं निस्सामान्यमेवेति प्रसाध्येदानीं सर्वमपि विशेषसामान्यरूपमिष्यत इत्युच्यत इत्यत आह व्यावृत्तमिति ।

अनु०— व्यावृत्तं यच्च सामान्यं तदेव स्याद्विशेषतः ॥
न चैकधर्मता तेन पदार्थानां परस्परम् ॥

यदेव व्यावृत्तं स्वरूपं तदेव विशेषबलेन सामान्यं च स्यादतस्तेन कारणेन पदार्थानां परस्परमेकधर्मता नास्तीति । एतदुक्तं भवति । यत्प्राक् स्वरूपभेदादौ सामान्यं नास्तीत्युक्तं तत्पदार्थस्वरूपाणां परस्परमनुगतैकधर्मता नास्तीत्यभिप्रायेण । तदभावेऽपि व्यावृत्त(स्य)स्वरूपाभिन्नस्य प्रतिनियतस्य सामान्याकारस्याभ्युपगमे विशेषसामान्यरूपं सर्वमपीष्यत इत्युक्तमिति न पूर्वोत्तरविरोधः । न चैतदयुक्तम् । एकस्यैव वस्तुनो विशेषबलेन व्यावृत्तानुवृत्तबुद्धिजनकत्वेन विशेषसामान्यरूपतोपपत्ते(त्ति)रिति ।

**शे०** — कथमनेन प्रागुद्भावितविरोधपरिहार इत्यतस्तं दर्शयन्नेव मूले विशेषपदप्रयोजनमप्याह । **एतदुक्तं भवतीति** ॥ **व्यावृत्तानुवृत्तेति** । सादृश्यानवच्छिन्नत्वतदवच्छिन्नत्वाभ्यामिति शेषः ।

**प०— विशेषबलेन सामान्यं चेति** । द्रव्यत्वप्रमेयत्वघटत्वादिसामान्योपेतमित्यर्थः । धर्मधर्मिणोरभेदात्कथमेतदित्यतो विशेषबलेनेत्युक्तम् ।

**च०— अनुगतैकधर्मतेति** । बहुव्रीहिप्रकृतिकस्तल् ।

**सु०— एवं गोत्वादिसामान्यस्यानुगतत्वमङ्गीकृत्य स्वरूपत्वादिसामान्याभावात्तत्र शब्दशक्तिग्रहार्थं तत्स्वरूपज्ञानमपेक्षितमित्युक्तम् । इदानीं गोत्वादिकमपि नानुगतमित्याह** धर्माणामिति ।

अनु०— धर्माणां भेददृष्ट्यैव

**पदार्थानां परस्परमेकधर्मता नेत्येतावदनुवर्तते । समुदायव्यतिरिक्तानां शौक्ल्यादि-**धर्माणां भेददृष्ट्या **प्रतिधर्मिव्यावृत्तत्वदर्शनात्तद्दृष्टान्तेन गवादिपदार्थानामपि** परस्परमेकधर्मता **अनुगतगोत्वादिधर्मवत्ता नेत्यनुमातव्यम् । अयमत्र प्रयोगः । गोत्वादिकं प्रतिव्यक्तिव्यावृत्तं समुदायातिरिक्तधर्मत्वाच्छौक्ल्यादिवदिति । एवशब्दः प्रतिज्ञया संबध्यते । तेनानुगतबुद्धिबाध इति निराकरोति । अनुगतबुद्धेरन्यथैवोपपादितत्वात् ।**

**शे०** — 'समुदायस्तु भिन्नग' इति पूर्वग्रन्थं मनसि निधायाह **समुदायव्यतिरिक्ताना-मिति** । समुदायोऽनेकत्वं तद्व्यतिरिक्तानामित्यर्थः । यद्यपि 'धर्माणां भेददृष्ट्यैवे'त्येतद्वाक्यं प्रत्यक्षपरत्वेनैव व्याख्यातुं शक्यम् । न चैवं 'नरत्वादिकमप्येवमि'त्यादिग्रन्थेनास्य पौनरुक्त्यं स्यात्प्रत्यक्षपरतया तस्य व्याख्यातत्वादिति वाच्यम् । तथा सत्यस्यानुमानपरत्वमपि न स्यात् । 'नरत्वादिकमप्येवमि'त्यादेरनुमानपरतयाऽपि व्याख्याततया तेन पौनरुक्त्याविशेषात् । यदि चानुमानपरत्वेऽपि प्रसङ्गादुक्तस्य न पुनरुक्तिरिति मतं तदा प्रत्यक्षपरत्वेऽपि तत्तुल्यमिति प्रत्यक्षपरत्वमेवास्य युक्तम् । तथाऽपि प्रत्यक्षे विप्रतिपन्नं प्रति तत्साधने गौरवं मनसि निधायानुमानपरतयैव व्याख्यातमित्यवधेयम् । अनेकत्वसंख्यायामव्यभिचारायोक्तं **समुदायातिरिक्तेति** । प्रतिज्ञयैवशब्दसंबन्धस्य प्रयोजनमाह **तेनेति** ॥ **अनुगतेति** । अनेकेष्वपि गोपिण्डेष्वयं गौरयं गौरित्येवमनुगतप्रत्ययस्यानुगतगोत्वरूपार्थानभ्युपगमेऽसंभवेन तस्यानुगतगोत्वविषयकत्वसिध्या तद्बाधः प्रकृतानुमानस्येति शङ्कामपाकरोतीत्यर्थः ॥ **अन्यथैवेति** । सादृश्येनैवेत्यर्थः ॥ **उपपादितत्वादिति** । 'व्युत्पत्तिरपि हि सादृश्येनैव गम्यते' इत्यादिना समयपाद इति शेषः ।

**स०— समुदायातिरिक्तेति** । द्वित्वादिव्यासज्यवृत्तिधर्माः समुदायशब्देनोच्यन्ते । तत्र व्यभिचारवारणायैतद्विशेषणम् ॥ **अन्यथैवेति** । सादृश्येनानुगतबुद्धिर्भवतीति समयपादे उपपादितत्वादित्यर्थः ।

**प०— समुदायव्यतिरिक्तानामिति** । द्वित्वबहुत्वादिधर्मव्यतिरिक्तानामित्यर्थः । 'न सर्वधर्म एकोस्ति समुदायस्तु भिन्नग' इति वैशेषिकनयानुव्याख्यानोक्तेरिति भाव । **प्रतिज्ञया संबध्यत इति** । पदार्थानामेकधर्मता नेत्यनुवृत्तप्रतिज्ञया एकधर्मतैव नेति संबध्यत इत्यर्थः ॥ **अन्यथैवेति** । सादृश्येनैव वैशेषिकनये 'इति व्युत्पत्तिरपि ही'त्यादिना उपपादितत्वादित्यर्थः । विशेषबलेनेत्यादिपूर्वप्रबन्धे उपपादितत्वादित्यर्थ इत्यप्याहुः ।

**या०— समुदायेति** । द्वित्वबहुत्वादिव्यतिरिक्तानामित्यर्थः ॥ **अन्यथैवेति** । सादृश्येनैवेत्यर्थः । उपपादितत्वात् समयपाद इति शेषः ।

**श्री०— अङ्गीकृत्येति** । जातौ शक्तिग्रह इत्याशङ्कितेऽनुगतजातिरेव नास्तीति वाच्यम् । तद्विना । यदि जातौ शक्तिस्तर्हि स्वरूपशब्दव्युत्पत्तिर्न संभवति । तत्र स्वरूपत्वसामान्याभावादित्युक्त्या गोत्वादिसामान्यमनुगतं तेन तत्र शक्तिग्रहः संभवतीत्येतदङ्गीकृतमिति ज्ञायत इत्यर्थः ॥ **व्यावृत्तं प्रतिव्यक्तौ** भिन्नभिन्नमेव प्रतिष्ठतीत्यर्थः । नैवं द्वित्वं तस्य व्यक्तिद्वयनिष्ठत्वादिति ज्ञेयम् । **अन्यथा** सादृश्येन ।

**च०— समुदायातिरिक्तेति** । व्यासज्यवृत्तिधर्मातिरिक्तेत्यर्थः ।

---

**सु०— अथवा यथान्यासमेवास्तु संबन्धः । प्राभाकरा मन्यन्ते । रूपादयोऽपि धर्मा अनुवृत्ता एव न तु प्रतिव्यक्ति भिद्यन्ते । अतः साध्यविकलतेति । तन्निरासाय भेददृष्टचैवेत्युक्तम् । अन्यथा भेदादित्येवावक्ष्यत् । शौक्ल्यादेर्व्यावृत्तत्वेऽनुवृत्तप्रत्ययो विरुद्धचेतेत्यत** आह तदिति ।

**अनु०—** तत्सादृश्यस्य दर्शनात् ॥

**शौक्ल्यमिदं शौक्ल्यमिदमिति प्रतीतौ हिमशौक्ल्यसादृश्यमेव हिमांशुशौक्ल्ये प्रतीयते न तु तेनैक्यमित्यतो न विरोधः । मा भूदनुगतं सामान्यं ततः किं प्रकृत इत्यत आह** अत इति ।

अतः सर्वे पदार्थाश्च सामान्यात्साक्षिगोचराः ॥

**अनुगतसामान्याभावेनातीतानागतवर्तमानव्यक्तीनामेव वाच्यत्वादगृहीतशक्तीनां च पदानामबोधकत्वात् शक्तिग्रहणस्य च पदार्थज्ञानेन विनाऽसंभवाद्विशेषतो ज्ञाने सार्वज्ञापत्ते-**

**रित्यर्थः ॥ सर्वे इति । वर्तमानातीतानागताः । अस्त्वतीतादिज्ञानापेक्षा शक्तिग्रहस्य । तच्च साक्षिणेति कुत इत्यत आह** सर्वमिति ।

सर्वमित्येव विज्ञानं सर्वेषां कथमन्यथा ॥

**एवशब्दो विशेषाकारव्यवच्छेदार्थः । प्रमाणान्तराभावादिति भावः । अनुमानेनातीतादिसर्वसामान्यज्ञानं भविष्यतीत्यस्य चेदमुत्तरम् । अतीतानागतवर्तमानं सर्वमपि लिङ्गमनेन साध्येन व्याप्तमिति ज्ञानापेक्षं खल्वनुमानम् । न चैतज्ज्ञानं साक्षिणा विना संभवतीति । यद्वा साक्षिणोऽतीतादिसर्वसामान्याकारगोचरत्वे प्रमाणान्तरमेवानेनोच्यते । अतीतादिकं सर्वं धूमादि तथाविधेनाग्न्यादिना व्याप्तमिति ज्ञानपूर्वकं खल्वनुमानम् । तथा च साक्षिणोऽतीतादिगोचरत्वाभावेऽन्यस्य तथाविधस्याभावादनुमानमात्रोच्छेदः स्यादिति ॥ किञ्चास्ति तावत्सर्वेषां सर्वशब्दशक्तिग्रहः । अन्यथा 'सर्वं खल्विदं ब्रह्मे'ति व्यवहारविलोपप्रसङ्गात् । शक्तिग्रहश्चार्थग्रहापेक्ष इति सर्वेषां सामान्यतः सर्वमिति ज्ञानमङ्गीकार्यम् । साक्षिणश्चातीतादिसर्वगोचरत्वाभावे तन्न स्यादिति ।**

**शे०** — ननु यथास्थितसंबन्धाभ्युपगमे एवकारस्य वैयर्थ्यमित्यतस्तद्व्यावर्त्यां शङ्कां दर्शयति **प्राभाकरा इति ॥ अनुवृत्ता एवेति ।** अनुगता एवेत्यर्थः । अयं गौरयं गौरित्यनुगताकारप्रत्ययबलाद्गोत्वादिसामान्यस्येव रूपादीनामपि घटो रूपी पटो रूपीत्याद्यनुगताकारप्रत्ययबलेनानुगतत्वसिद्धेरिति भावः । अतीतानागतार्थेष्वित्यादिनाऽतीतानागतयोरेव प्रकृतत्वात्तयोरेव सर्वशब्देनात्रग्रहणं न तु वर्तमानस्येति शङ्कापरिहाराय न केवलमतीतानागता अपि तु वर्तमानाश्चेत्येवं सर्वे साक्षिगोचरा इति सर्वशब्दोऽतीतानागतयोरिव वर्तमानस्यापि संग्राहक इति भावेन सर्वशब्दं व्याचष्टे **सर्वे इतीति ।** यद्वा प्रत्यक्षस्य वर्तमानमात्रग्राहकतायाः परेणाङ्गीकृतत्वात्सर्वशब्दस्य वर्तमानमात्रपरतया सङ्कोचशङ्कां वारयितुं न केवलं वर्तमाना एव साक्षिप्रत्यक्षगोचरा अपि त्वतीतानागता अपीत्येवं सर्वशब्दो वर्तमानस्येवातीतानागतयोरपि संग्राहक इत्याशयवान्सर्वशब्दं व्याचष्टे **सर्वे इतीति ॥ सर्वसामान्यज्ञानमिति ।** सर्वेषां सामान्याकारेण ज्ञानमित्यर्थः ॥ **सर्वमपि लिङ्गमिति ।** अन्यथा सर्वोपसंहारेण व्याप्तिग्रहासंभवादिति भावः ॥ **न चैतज्ज्ञानं साक्षिणा विना संभवतीति ।** अत्र व्याप्त्यादिग्रहौपयिकव्यक्त्याद्युपस्थितौ सामान्यतः साक्षिज्ञानस्यापि सत्त्वाद्वा लडादिशब्दानामनागतादिषु शक्तिग्रहेऽनागताद्युपस्थित्यर्थं साक्षिज्ञानस्यावश्यकत्वाद्वा साक्ष्युक्तिर्न तु सर्वथा साक्षिज्ञानाभावे व्याप्त्याद्युपस्थितिरेव न भवतीति भावेन तदुक्तिः । 'वर्तमानसन्निकृष्टमात्रग्राहिप्रत्यक्षं कथमतीताद्यास्पदां व्याप्तिं गृह्णीयादिति चेन्न । सहकारि-

सामर्थ्येन करणानां शक्त्यन्तराविर्भावस्य बहुलमुपलम्भादि'ति पद्धत्युक्तप्रकारेण साक्षिज्ञानाभावेऽपि चक्षुरादिनाऽपि सर्वव्यक्त्युपस्थितिसंभवात् । तत्र च वर्तमानमात्रसन्निकृष्टग्राहीति सहकारिसामर्थ्येनेति चोक्तत्वेन चक्षुरादेरेवाभिमतत्वादित्यन्यत्र विस्तरः । **तथाविधेन** अतीतादिना । **तथाविधस्य** अतीतादिज्ञानजनकस्य ।

**प०**— अत पदस्य चतुर्थोऽर्थमाह **अनुगतसामान्याभावेनेत्यादि ॥ सर्वसामान्यज्ञानमिति** । सर्ववस्तुविषयकसामान्याकारज्ञानमित्यर्थः ।

**या०**— **सर्वसामान्यज्ञानमिति** । सर्वेषां सामान्याकारेण ज्ञानमित्यर्थः ॥ **सर्वमपि लिङ्गमिति** । अन्यथा सर्वोपसंहारेण व्याप्तिग्रहासंभवादिति भावः ॥ **न चैतज्ज्ञानमिति** । सर्वत्वप्रकारकं लिङ्गविशेष्यकं ज्ञानमित्यर्थः । यदशाब्दं सर्वत्वेन ज्ञानं तत्साक्षिरूपमेवेति सिद्धान्तात् । सर्वशब्देन तज्ज्ञानं तु स्वार्थानुमानमूलव्याप्तिग्रहसमये नास्तीति भावः । नन्वेवं पद्धत्यादिविरोधः । तत्र वर्तमानसन्निकृष्टमात्रग्राहिप्रत्यक्षं कथमतीताद्यास्पदां व्याप्तिं गृह्णीयादि'त्याशङ्क्य 'सहकारिसामर्थ्येन करणानां शक्त्यन्तराविर्भावस्य बहुलमुपलम्भादि'ति विप्रकृष्टधूमाद्यंशेऽपि बाह्यप्रत्यक्षविषयत्वस्यैवोक्तत्वात् । तर्कताण्डवे 'विप्रकृष्टमपि धूमादिकं चक्षुरादिनैव परमते सामान्यप्रत्यासत्त्यैवास्मन्मते सादृश्यरूपप्रत्यासत्त्या ज्ञातुं शक्यमि'ति पद्धत्युक्तपक्षस्य निपुणतरमुपपादितत्वाच्च । पद्धतावेव 'किञ्च प्रतीतस्य धूमस्याग्निना संबन्धे स्वाभाविकतया निश्चिते यद्यन्यत्रापि धूमः स्यात्तर्हि तस्याप्येवमित्येवं व्याप्तिग्रहो भवती'ति विप्रकृष्टव्याप्त्यांशे संभावनारूपमेव ज्ञानं भवतीति पक्षान्तरस्याप्युक्तत्वाच्च । अतः कथमेतज्ज्ञानं साक्षिणा विना न संभवतीत्येतदुपपद्यत इति चेदुच्यते । द्विविधं हि विप्रकृष्टधूमादिज्ञानं सर्वत्वप्रकारकं धूमत्वादिप्रकारकं चेति । तत्र सर्वत्वेन विप्रकृष्टधूमादिज्ञानं साक्षिणा विना न संभवतीत्येतद्ग्रन्थाशयः। धूमत्वादिना तज्ज्ञानं तु पद्धत्युक्तप्रकारद्वयेनेत्यङ्गीकारे न कोऽपि विरोधः । एवं चातीतादिकं सर्वधूमादीत्यग्निमफक्किकायां सर्वत्वांशे साक्षिरूपं ज्ञानं धूमत्वांशे मनोवृत्तिरूपमिति ज्ञानद्वयमेव विवक्षितमिति मन्तव्यम् ॥ **अन्यस्य तथाविधस्याभावादिति** । अत्रापि सर्वत्वेन रूपेणातीतादिज्ञानजनकस्यान्यस्याभावादित्यर्थः ।

**सु०— नन्वनुगतसामान्याभावे व्यक्तीनामानन्त्याद्व्यभिचाराच्च शब्दशक्तिग्रह एव न सङ्गच्छते । कुतस्तदन्यथाऽनुपपत्त्या साक्षिणोऽतीतादिगोचरत्वसिद्धिरित्यत आह** किञ्चिदिति ।

अनु०— किञ्चित्सादृश्यविज्ञानादखिलस्यापि वस्तुनः ॥
शब्दशक्तिग्रहश्च स्यात्

**तदेतद्वैशेषिकपरीक्षायां व्याख्यातप्रायम् । नन्वेवं सति गोशब्दस्य गवयेऽपि शक्तिं गृह्णीयात् । सादृश्यसद्भावादित्यत आह तत्तदिति ।**

तत्तत्सादृश्यमानतः ॥

**पूर्वेणान्वयः । न यत्किञ्चित्सादृश्यज्ञानं शब्दशक्तिग्रहणकारणम् । किन्त्वतिव्याप्तिविधुरम् । यथा गोशब्दे सास्नादिमत्त्वमेवमन्यत्रान्यदिति भावः । एतेन पूर्वः 'किञ्चित्'-शब्दो व्याख्यातो भवति ॥**

शे०— **आनन्त्याद्व्यभिचाराच्चेति** । प्रतिव्यक्तिशक्तिग्रहे तत्रैव पुरुषायुषपर्यवसानं स्यादिति भावः ॥ **व्यभिचाराच्चेति** । एकस्यां व्यक्तौ शक्तिग्रहे शक्तिग्रहरहितव्यक्तिदर्शनेऽपि प्रतीतिप्रयोगादेर्दर्शनेन शक्तिग्रहस्य स्वकार्यं प्रति व्यभिचारश्चेत्यर्थः । व्यक्तिः शब्दार्थ इति पक्षे एकैकव्यक्तिरर्थश्चेद्व्यक्त्यन्तरे प्रयोगो न स्यात्सर्वाऽपि व्यक्तिः सर्वत्वाकारेणार्थश्चेदेकैकस्यां व्यक्तौ गोशब्दप्रयोगो न स्यात् । अतः सर्वासु व्यक्तिषु प्रत्येकं शक्तिग्रहो वाच्यः । स च न सम्भवति । आनन्त्यात् । गोशब्देन सास्नावानसावभिधीयते इत्युपदेशाद्वाच्यवाचकभावग्रहे चाभिधानक्रियायां कर्मकरणभावेनान्वितयोः सास्नावदर्थगोशब्दयोः पार्ष्टिकः सम्बन्धो भवन्नरुणैकहायनीति न्यायेन नियतसम्बन्ध एव भवेदिति गोशब्दस्य व्यक्त्यन्तरेऽपि प्रयोगे व्यभिचारेण प्रथमगृहीतस्य नियमस्य बाधप्रसङ्गान्न व्यक्तिषु शब्दशक्तिग्रह इति भावः । ननु च सादृश्यमेव नास्ति मानाभावात् । किञ्च सादृश्यमप्यनुगतं चेत्किं सामान्येनापराद्धम् । व्यावृत्तत्वे च कथं सार्वत्रिकव्युत्पत्त्यङ्गत्वमित्याशङ्क्य, 'न सादृश्यं शब्दशक्तिविषयतया प्रवृत्तिनिमित्ततया वाऽभ्युपगम्यते किन्नाम लिङ्गतया । यथा हि गन्धवत्त्वं न पृथिवीशब्दवाच्यम् । नापि तत्पदप्रवृत्तिनिमित्तं किंतु पृथिवीत्ववत्या व्यक्तेः पृथिवीशब्दवाच्यत्वे लिङ्गमेव । तथा ते ते व्यावृत्ताकारा एव तैस्तैर्व्यावृत्तैर्द्रव्यगुणकर्मसामान्यादिभिर्निमित्तैस्तत्तच्छब्दवाच्याः । सादृश्यं तु व्यावृत्तमपि तदवबोधे लिङ्गतयोपयुज्यत' इत्येतत्प्रमेयम् । 'व्युत्पत्तिरपि हि सादृश्येनैव गम्यते । शक्तिः सादृश्यगा यतः । तादृशोऽयं च तच्छब्द इति ज्ञापयति स्फुटम्,' इत्यनुव्याख्यानव्याख्यावसरे'ऽयमत्र समुदायार्थ' इत्यादिना निपुणतरं व्युत्पादितं तत एव प्रतिपत्तव्यमित्याशयवानाह **तदेतदिति** ॥ **व्याख्यातप्रायमिति** ॥ व्युत्पादितप्रायमित्यर्थः । **पूर्वेणेति** । 'शब्दशक्तिग्रहश्च स्यादि'ति पूर्वेणेत्यर्थः । ननु 'किञ्चित्सादृश्यविज्ञानादि'ति यत्किञ्चित्सादृश्यं शक्तिग्रहोपयोगितया पूर्वमुक्तम् । इदानीं त्वतिव्याप्तिविधुरं सादृश्यं तथोच्यत इति

कथं न पूर्वोत्तरविरोध इत्यतोऽतिव्याप्तिविधुरसादृश्यपरतया पूर्वं किञ्चिच्छब्दव्याख्यानपरत्वादस्य ग्रन्थस्य न पूर्वोत्तरविरोध इत्याशयेनाह **एतेनेति** ॥

**स०**— तर्ह्येकस्यामेव व्यक्तौ अस्तु शक्तिग्रह इत्यत आह **व्यभिचारादिति** । यस्यां व्यक्तौ शक्तिर्गृह्यते तस्याः सर्वत्राभावादिति भावः । तथाच देशान्तरगतस्नानपानादौ प्रवृत्त्यभावापत्तिरिति भावः । **पूर्वः किञ्चिच्छब्द इति** । अतिव्याप्त्यादिविधुरसादृश्यपदत्वेनेत्यर्थः ।

**प०— आनन्त्यादिति** । प्रतिव्यक्तिग्रहे तत्रैव पुरुषायुषपर्यवसानं स्यादिति भावः ॥ **व्यभिचाराच्चेति** । एकस्याम् व्यक्तौ शक्तिग्रहे शक्तिग्रहरहितव्यक्तिदर्शनेपि प्रतीतिप्रयोगादेर्भावेन शक्तिग्रहस्य स्वकार्यं प्रति व्यभिचाराच्चेत्यर्थः ॥ **(व्याख्यातप्रायमेतदिति) तदेतद्व्याख्यातप्रायमिति** । 'इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यत' इत्यादिव्याख्यानेनेति भावः ॥ **साक्षिणोऽतीतादिविषयकत्वोक्तिः** ॥

**या०— आनन्त्याद्व्यभिचाराच्चेति** । अत्र व्यभिचारपदेनानियमप्रसङ्गो लक्ष्यते । ततश्चायमर्थः । वृद्धव्यवहारोपदेशादिना हि व्युत्पत्तिर्भवति । न च प्रतिपिण्डं व्यवहारादिकमस्ति तेषामानन्त्यात् । अथ विनैवैकेन निमित्तेनोपदेशाद्यभावेऽपि यदि गोपिण्डान्तरे गोशब्दसङ्गतिं गृह्णीयात्तदाऽश्वपिण्डेऽपि किन्न गृह्णीयादविशेषादित्यनियमप्रसङ्ग इति ॥ **व्याख्यातप्रायमिति** । 'शक्तिः सादृश्यगा यत' इत्येतद्व्याख्यानेनैवेति शेषः । तथा चानियमप्रसङ्गभञ्जकं सादृश्यमेवास्मन्मते शक्तिग्रहे निमित्तमस्तीति भावः ॥ **सास्नादिमत्त्वमिति** । सन्निहितगोवृत्तिसास्नादिमत्त्वसदृशसास्नादिमत्त्वमित्यर्थः ।

**श्री०— एतेनेति** । तथा चातिव्याप्तिविधुरसादृश्यमेव पूर्वं किञ्चिच्छब्देन विवक्षितमिति भावः ।

**च०— व्याख्यातप्रायमिति** । 'इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यत' इत्यादिप्रतीकव्याख्ययैवेति भावः ॥ **साक्षिणोऽतीताद्यवगाहित्वसमर्थनम्** ॥

**सु०— एवं साक्षिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वमपाकृत्य मानसप्रत्यक्षस्यापि तदपाकरोति** प्रत्यक्षमिति ।

**अनु०** — प्रत्यक्षं मानसं चैव यदाऽतीतार्थगोचरम् ॥

**मानसं प्रत्यक्षं चातीतार्थगोचरमेव यत्स्मृतिकारणमिति** । **यदेत्युत्तरवाक्ये संबध्यते । पूर्वानुभवानधिकविषयायाः स्मृतेः प्रामाण्यमेव दुर्लभं कुतो मानसप्रत्यक्षजत्वमित्यत आह** (यदेति) तदेति ।

तदा स्मृतिप्रमाणत्वमतीतत्वविशेषितम् ॥

**यदा यस्मात्** अतीतत्वविशेषितम् **अर्थं स्मृतिर्विषयीकरोतीति शेषः । तदा तस्मात्स्मृतिप्रमाणत्वं सिद्धम् । अतीतत्वविशेषितार्थविषयत्वेऽपि कथं स्मृतेः प्रमाणत्वमित्यत आह** आधिक्यमिति ।

आधिक्यमनुभूतात्तु यदाऽतीतत्वमिष्यते ॥

मानता च कथं न स्यात्स्मृतेः

**यस्मात्स्मृतिविषयीकृतमतीतत्वं वर्तमानतयाऽनुभूतार्थादाधिक्यमिष्यते सर्वैस्तस्मात्स्मृतेर्मानता कथं न स्यात् । मानत्वे च मानसप्रत्यक्षजत्वं कथं न स्यादिति चार्थः । अपि चानधिगतार्थगन्तृत्वं प्रमाणलक्षणमङ्गीकृत्येदं स्मृतेरनुभवाधिकविषयत्वं व्युत्पादितम् । वस्तुतस्तु नेदं लक्षणम् । किन्तु यथार्थत्वमेव । तच्चास्ति स्मृतेरनुभवसिद्धम् । बाधकप्रत्यये हि सति तन्न भवेत् । न चासावत्रास्तीत्याह** बाधश्चेति ।

बाधश्च नात्र हि ।

**चाक्षुषादिप्रत्यक्षेऽपि न वर्तमानमात्रग्राहित्वनियम इति भावेनाह** मानत्वमिति ।

मानत्वं प्रत्यभिज्ञाया अपि सर्वानुभूतिगम् ॥

**सर्वेऽपि हि परीक्षकास्तद्बलेनात्मादेः स्थायित्वं साधयन्ति । ततः किं प्रकृत इत्यत आह** अतीतेति ।

अतीतवर्तमानत्वधर्मिणी सा च दृश्यते ॥

**अतीतत्ववर्तमानत्वधर्मविशिष्टार्थविषयेत्यर्थः ।** दृश्यते **साक्षिणा । सोऽयमिति हि प्रत्यभिज्ञाकारोऽनुभूयते । सा च चक्षुरादिनैव जायत इति भावः ।**

**शे॰**— 'प्रत्यक्षं मानसं चे'त्यादेरुक्तार्थानुपपादकत्वात्प्रकृतासङ्गतिशङ्कापरिहाराय तामाह **एवमिति । उत्तरवाक्ये** 'तदा स्मृतिप्रमाणत्वमि'त्युत्तरवाक्ये ॥ **पूर्वानुभवेति ।** अनधिगतार्थावगतिरेव प्रमा तत्साधनमेव प्रमाणमित्यभ्युपगम्येयं शङ्केति द्रष्टव्यम् ॥ **यदा यस्मादित्यादि ।** 'यदा तदेति हेत्वर्थे कालार्थे चापि भण्यत' इत्यन्यत्रोदाहृतप्रमाणबलेन कालार्थत्ववद्धेत्वर्थत्वमप्यनयोरिति भावः । **प्रमाणत्वं** प्रमात्वमित्यर्थः । ननु 'बाधश्च नात्रे'त्युत्तरभाष्यखण्डवैयर्थ्यम् । न च याथार्थ्योपपादकबाधाभावकथनार्थत्वान्न तदिति वाच्यम् । याथार्थ्यव्युत्पादनस्यापि निष्प्रयोजनत्वेन तदर्थकबाधाभावस्याप्यवक्तव्यत्वात् । न च लक्षणसंपत्त्या प्रामाण्योपपादनार्थत्वान्न तदानर्थक्यमिति वाच्यम् । 'आधिक्यमनुभूतादि'ति पूर्वग्रन्थेनैव लक्षणसंपत्त्या प्रामाण्यस्य समर्थितत्वात् । न च याथार्थ्यस्यैव प्रामाण्यलक्षणत्वेनानधिगतार्थ-

वगतिसाधनत्वस्य तल्लक्षणत्वाभावात् न तत्सद्भावेऽपि लक्षणसंपत्तिरिति वाच्यम् । तथा सति तद्व्युत्पादनवैयर्थ्यप्रसङ्गादित्यतोऽङ्गीकारवादत्वान्न पूर्वत्र तद्व्युत्पादनवैयर्थ्यं वस्तुस्थितिकथनार्थत्वाच्च न याथार्थ्योपपादनस्यापि तदित्यभिप्रेत्य पूर्वोत्तरग्रन्थयोस्तात्पर्यभेदं दर्शयति **अपि चेति** ।। **नेदमिति** । तथा सति धारावाहिकज्ञानानामप्यप्रमात्वस्य तत्साधनानां चाप्रमाणत्वस्य प्रसङ्गादिति भावः ।

**प०— उत्तरवाक्य इति** । अतीतत्वविशेषितमित्यत्रेत्यर्थः ।। **इति चार्थ इति** । चशब्दार्थ इत्यर्थः । सर्वानुभूतिगत्वं व्यनक्ति **सर्वेऽपीति** ।

**श्री०— उत्तरवाक्ये** अतीतत्वविशेषितमित्यतःपूर्वमित्यर्थः ।। आधिक**यमिति** । स्वार्थे ष्यञ् सुखमेव सौख्यमितिवत् । अधिकमेवाधिक्यमित्यर्थः ।

**सु०— अथ मतम् । प्रत्यभिज्ञायां चत्वारः पक्षाः संभवन्ति । अनुभव एवेति वा स्मृतिरेवेति वा स्मृत्यनुभवरूपं ज्ञानद्वयमिति वैकमेव ज्ञानमंशे स्मृतिरंशेऽनुभव इति वेति । तत्र न तावदाद्यः । तथात्वे ह्ययमित्येव स्यान्न तु स इति । नापि द्वितीयः । तथा सति स इत्येव स्यान्न त्वयमिति । वक्ष्यमा(ण)णो दोषश्च स्यात् । अत उत्तरं पक्षद्वयमेवाङ्गीकरणीयम् । तथा च स इत्यंशस्य स्मृतित्वान्न चाक्षुषादिप्रत्यक्षस्यातीतविषयत्वमित्यत** आह न चेति ।

अनु०— न च सा स्मृतिमात्रार्था

**स्मृतिरेव (मात्रा) स्मृतिमात्रा स्मृतिमात्राऽर्थं यस्याः सा तथोक्ता स्मृत्यनुभवरूपैकदेशसमुदायरूपा तथा स्मृत्यनुभवात्मकैकज्ञानरूपा च नेत्यर्थः । कुतो नेत्यतः प्रथमप्रतिज्ञायां हेतुमाह** तदिदंत्वेति ।

तदिदंत्वग्रहैकतः ।

**तत्त्वेदन्त्वग्रहयोरेकत्वानुभवात् । ग्रहग्रहणेनानुभवत्वं सूचयति । द्वितीयप्रतिज्ञायां हेतुमाह** तदिदन्त्वेति । **तत्त्वेदन्त्वग्रहस्यैकत्वान्निरंशत्वात् । एतदुक्तं भवति । प्रत्यभिज्ञा न स्मृतिरेवेति परेणाप्युक्तम् । नापि ज्ञानद्वयरूपा । तत्तावत एवेदन्तायां मानाभावप्रसङ्गेन क्षणभङ्गभङ्गासिद्धेः । न च स्मृत्यनुभवरूपमेकमेव ज्ञानम् । एकत्वे द्विरूपताविरोधात् । तस्मादनुभवरूपमेकमेव विज्ञानं संस्कारसचिवेन चक्षुरादिना जातत्वात्सोयमित्याकारं भवति । यथा खलु शुक्लहरितपीतादिरूपाणां चित्ररूपारम्भकत्वम् । यथा वा दोषसहकृतानामिन्द्रियाणां विपर्ययहेतुत्वम् । तथा संस्कारसचिवानामिन्द्रियाणां प्रत्यभिज्ञाहेतुत्व भविष्यतीति को दोषः । न च संस्कारस्य स्वतन्त्रस्य ज्ञानहेतुत्वम् । स्मृतेर्मानसप्रत्यक्षजत्वाङ्गीकारादिति ।**

'तच्चेन्नोत्तरगोचरमि'त्यादिनोक्तमर्थमुपसंहरति अत इति ।

अतो न वर्तमानैकनियमः स्याद्ग्रहेऽक्षजे ॥

वर्तमानैकनियमः वर्तमानमेकमेव विषयीकरोतीत्येवंरूपो नियमः ।

**शे०**— पक्षद्वयमसाधारणदूषणेन प्रदूष्य साधारणदूषणेनापि दूषयति **वक्ष्यमाणेति** । तथा सति तत्तावत एवेदन्तायां मानाभावात्क्षणभङ्गभङ्गासिद्धेरिति वक्ष्यमाणक्षणभङ्गभङ्गासिद्धिरूपेत्यर्थः । स्मृत्यनुभवरूपज्ञानद्वयमिति पक्षमाश्रित्य स्मृतिमात्रार्थेत्यस्य तात्पर्यमाह **स्मृत्यनुभवेति** । स्मृत्यनुभवरूपावेकदेशौ यस्य समुदायस्य तद्रूपेत्यर्थः । एकमेव ज्ञानमंशे स्मृतिरंशेऽनुभव इति पक्षमाश्रित्य तत्तात्पर्यमाह **तथेति** । 'तदिदन्त्वग्रहैकत' इति वाक्योक्तहेतुद्वयोपपादनपूर्वकं प्रतिज्ञाद्वयमुपपादयति **एतदुक्तं भवतीति** । ननु प्रत्यभिज्ञाया अनुभवत्वसिद्धयेऽनुभवत्वातिरिक्तपक्षमात्रस्य निराकार्यत्वेन स्मृतिमात्रत्वपक्षस्यापि निराकार्यत्वात्तमनिराकृत्य पक्षद्वयमात्रनिरासोऽनुपयुक्त इत्यतः स्मृतित्वपक्षस्य परेणैव दूषितत्वात्तमनिराकृत्यैव युक्तः पक्षद्वयमात्रनिरासो मूलकारीय इत्यभिप्रायेणाह **न स्मृतिरेवेतीति** । क्षणभङ्गपक्षो हि प्रत्यभिज्ञाबलेनैव निरसनीयः । उपायान्तराभावात् । स च प्रत्यभिज्ञाया एकज्ञानत्व एव सिद्ध्यति । तथा सत्येवैकस्य तदेतद्देशकालसंबन्धलाभान्न तु ज्ञानद्वयत्वे । यस्तद्देशकालसंबन्धवान्स एवैतद्देशकालसंबन्धवानिति प्रत्यभिज्ञयाऽविषयीकरणेनैकस्य देशकालद्वयसंबन्धालाभादिति भावः । **एकत्व इति** । न चैवं भ्रमस्याप्यंशभेदेन प्रमात्वाप्रमात्वे न स्यातामिति वाच्यम् । **बाधोत्तरकालमनुवृत्त्य**नुवृत्त्यन्यथाऽनुपपत्त्या तत्रोभयरूपत्वकल्पनोपपत्तावपि प्रकृते तादृशप्रमाणाभावेन तत्कल्पनाया अयोगात् । तथा हि । प्रत्यभिज्ञायास्तत्तांशे स्मृतित्वं न तावदनुभवबललब्धम् । तदनुपलम्भात् । नाप्यनुभवत्वे बाधकबललब्धम् । तदभावात् । न तावत्तत्तांशे करणानुपपत्तिर्बाधिका । चक्षुरादेरेव तत्संभवात् । नापि तदंशे सन्निकर्षाभावो बाधकः । संस्कारस्यैव तथात्वसंभवात् । तथा च प्रत्यभिज्ञायाः स्मृतित्वसाधकत्वस्यानुभवत्वबाधकस्य चाभावान्नांशभेदेन स्मृतित्वानुभवत्वकल्पनोपपन्नेति भावः । एवं प्रसक्तप्रतिषेधं विधाय परिशेषसिद्धमर्थमाह **तस्मादिति** ।

नन्वेवं घटोऽयमित्यनुभववत्प्रत्यभिज्ञाया अपि घटोऽयमित्याकारत्वापत्त्या सोऽयमित्याकारत्वं न स्यादित्यत आह **संस्कारसचिवेनेति** । ननु घटोऽयमित्याद्यनुभवजननसमर्थस्य चक्षुरादेः कथं संस्कारसाचिव्यमात्रेण सोऽयमित्यनुभवविपरीतप्रत्यभिज्ञाजनकत्वमित्यतो यथाऽवयविनि नीलमात्रारम्भसमर्थस्यावयवगतनीलस्यावयवगतपीतादिरूपसहकारिसाचिव्यान्नीलानुत्पादकत्वं तद्विपरीतचित्ररूपारम्भकत्वं च न्यायमते । तथा संस्कारसाचिव्यादनुभवविपरीताकारप्रत्यभिज्ञाजनकत्वमप्युपपद्यत इत्याशयेनाह

**यथा खल्विति** । ननु नानारूपसमाहार एव चित्रमिति नावयवगतनीलादेः पीतादिसहकारेण नील-पीतादिविपरीतचित्ररूपारम्भकत्वमित्यपरितोषाद्दृष्टान्तान्तरमाह **यथा वेति** । प्रमाजननसमर्थानामपीति शेषः । तथा च यथेन्द्रियाणां प्रमाजननसमर्थानामपि दोषसहकृतानां न तज्जनकत्वं तद्विपरीतविपर्यय-जनकत्वं च तथा चक्षुरादेरनुभवजननसमर्थस्यापि संस्कारसहकारेणानुभवविपरीताकारसोऽयमित्याकार-प्रत्यभिज्ञाजनकत्वमुपपन्नमित्यर्थः । ननु च प्रत्यभिज्ञायां संस्कारस्यैव स्वातन्त्र्येणैव तत्ताग्राहकत्वसंभवान्न सहकारित्वं कल्पनीयम् । तथा च चक्षुषस्तत्ताग्राहकत्वाभावात्कथमतीतादिविषयत्वमित्यतो भवेदेतदेवं यदि स्वतन्त्रस्य संस्कारस्य यत्किञ्चिज्ज्ञानहेतुत्वमपि सिद्धं स्यान्न चैतदस्तीत्याह **न च संस्कारस्येति** ॥ **स्वतन्त्रस्य** कारणनिरपेक्षस्य । ननु स्मृतिं प्रत्येव तस्य स्वातन्त्र्येण हेतुत्वात्कथं तदभाव इत्यतो भवेदेतदेवं यदि स्मृतेः संस्कारमात्रजन्यत्वं स्यान्न चैतदस्तीत्याह **स्मृतेरिति** । 'मानसप्रत्यक्षजन्या स्मृतिरि'त्यन्यत्र भगवत्पादोक्तेः स्मृतिं प्रत्यपि संस्कारस्येन्द्रियसहकारित्वान्न स्वातन्त्र्यमिति भावः । ननु च संस्कारसहकृतमनोजन्यत्वे प्रत्यभिज्ञायाः स्मृतित्वं त्ववर्जनीयमेव तादृशस्य स घट इत्यादेर्ज्ञानस्य स्मृतित्वदर्शनादिति चेन्न । संस्कारसहकृतेन्द्रियानधिष्ठितमनोजन्यत्वस्यैव तत्र तन्त्रत्वेन तदनधिष्ठित-मनोजन्यतया स घट इत्यादेः स्मृतित्वेऽपि प्रत्यभिज्ञायाश्चक्षुराद्यधिष्ठितमनोजन्यत्वेन स्मृतित्वानापत्तेरि-त्याशयात् ।

---

स०— **वक्ष्यमाणेति** । क्षणभङ्गभङ्गासिद्धिलक्षण इत्यर्थः ॥ **तत्तावत एवेति** । क्षण-भङ्गभङ्गे हि प्रत्यभिज्ञा हेतुत्वेनोपपादनीया । सा चेत् ज्ञानद्वयरूपाऽङ्गीक्रियते । तर्हि यस्तद्देशकाल-संबन्धवान् स एवैतद्देशकालसंबन्धवान् इत्यत्र मानाभावात्क्षणभङ्गभङ्गो न स्यादित्यर्थः । **एकत्वे द्विरूपत्वविरोधादिति** । प्रत्यभिज्ञायास्तत्तांशे स्मृतित्वं नानुभवबलात् । नाप्यनुभवत्वे कारणाभावात् । इन्द्रियस्यैव तत्तांशे तदुपपत्तेः न च तत्तांशे सन्निकर्षाभावेन कथमिन्द्रियस्य हेतुत्वम् । संस्कारस्यैव तत्त्वात् । तत्तांशे स्मृतित्वाङ्गीकारे साधकाभावात् बाधकसद्भावाच्च नायं पक्षः साधुरिति भावः ।

प०— **वक्ष्यमाण(णो)दोषश्चेति** । उत्तरवाक्यव्याख्याने वक्ष्यमाणक्षणभङ्गभङ्गासिद्धिरूपदोष-श्चेत्यर्थः । एकत इति पदं भावप्रधानमित्युपेत्यार्थमाह **एकत्वानुभवादिति** ॥ **ग्रहग्रहणेनेति** । ग्रहपदोपादानेनेत्यर्थः ॥ **चित्ररूपारंभकत्वमिति** । न्यायमते चित्ररूपस्य (भिन्नजा)विजातीय-रू(पान्तरत्वा)पत्वाङ्गीकारादिति भावः । संस्कारस्य स्वत एव स्मृतिहेतुत्वात्कथम(स्यसा,न्यसा)चिव्यो-क्तिरित्यत आह **न च संस्कारस्येति** ॥ **स्मृतेर्मानसप्रत्यक्षजत्वेति** । 'मानसं तद्धि विज्ञानमि'ति युक्तिपादीयोद्ग्रन्था(न्तरा)नुव्याख्यानोक्तेरिति भावः ।

**या०**— इष्टापत्तिपरिहारायोभयत्र दोषान्तरमाह **वक्ष्यमाण इति** । तत्तावत एवेदन्तायां मानाभावप्रसङ्गेन क्षणभङ्गभङ्गासिद्धेरिति वक्ष्यमाणदोषश्चोभयत्रेष्टापत्तौ स्यादित्यर्थः । अथवा द्वितीयपक्ष एव दोषान्तरकथनायेदम् । तत्र 'तदिदन्त्वग्रहैकत' इत्यत्रेति शेषः । तथा च तदिदन्त्वज्ञानस्यानुभवरूपत्वं साक्षिसिद्धमित्युत्तरत्र कथनात्तद्विरोधाख्यदोषः स्यादित्यर्थः ॥ **संस्कारसचिवेनेति** । तथा च वर्तमानमात्रग्रहणस्वभावानामपीन्द्रियाणां सहकारिसामर्थ्याच्छक्त्यन्तराविर्भाव इति भावः । एतदेव सदृष्टान्तमुपपादयति **यथा खल्वित्यादिना** ॥ **शुक्लहरितपीतादिरूपाणामिति** । सजातीयरूपजननस्वभावानामपीति शेषः । इन्द्रियाणामित्यत्रापि यथार्थज्ञानजननस्वभावानामपीति पूरणीयम् । ननु प्रत्यभिज्ञायां तत्तांशो न चक्षुरादिना भासते किन्तु संस्कारबलादेव । चक्षुरादेश्चेदन्तांशज्ञानजनन एव सामर्थ्यम् । अतो न तस्य वर्तमानमात्रग्राहित्वनियमभङ्ग इत्यत आह **न च संस्कारस्येति** । स्वतन्त्रस्य इन्द्रियासहकारिणः । तथा चातीतांशेऽपीन्द्रियस्य प्रत्यभिज्ञाजनकत्वमावश्यकमिति भावः । ननु स्मृतावेव स्वातन्त्र्येण तस्य हेतुत्वमुपलब्धमित्यत आह **स्मृतेरिति** । तथा च तत्रापि न संस्कारः स्वतन्त्रो हेतुरिति भावः ।

**श्री०**— स्मृतिमात्रेत्यत्र मात्रशब्दः केवलार्थः ॥ **समुदायेति** । तथा च स्मृतिमात्रमेवार्धमेकदेशो यस्य स्मृत्यनुभवरूपसमुदायस्य तद्रूपप्रतीतिरित्यर्थः । तथा च ज्ञानद्वयमिति लभ्यते । **तथेति** । स्मृतिमात्रमेवार्धमंशो यस्याः प्रतीतेः सा तथा । तथा चैकस्याः प्रतीतेः केवला स्मृतिरेकोंऽशोऽपरस्त्वनुभवरूपः । तथा चैतदंशद्वयोपेतमेकं ज्ञानमिति लभ्यते । **निरंशत्वात्** अखण्डत्वादित्यर्थः ॥ **द्विरूपतेति** । एकस्मिन्नेव ज्ञाने विरुद्धस्मृतित्वानुभवत्वरूपधर्मद्वयसमावेशस्य विरुद्धत्वादित्यर्थः ।

**च०**— **क्षणभङ्गभङ्गासिद्धेरिति** । पदार्थमात्रस्य द्वितीयक्षणवृत्तिध्वंसप्रतियोगितामूरीकुर्वद्वादिमतस्य भङ्गासिद्धिरित्यर्थः ।

**सु०— प्रमाणप्रमेयप्रमातृभेदं विश्वमबाध्यमिति यदुक्तं तदुपसंहरिष्यन्नर्थगताया ज्ञा(तताया: प्राकट्यापरपर्याया)तत्ताप्राकट्यसमाख्यायाः प्रमितेश्चतुर्थ्या विद्यमानत्वात्कथं त्रिविधं विश्वमित्याशङ्कां तावत्परिहरति** न चेति ।

**अनु०**— न च प्रमाणतोऽन्या स्यात्प्रमितिर्नाम कुत्रचित् ।
मानाभावाद्गौरवाच्च कल्पनायाः किमेतया ॥

**प्रमितिर्नाम वस्तु नास्त्येव तत्र मानाभावात् । ननु कथं मानाभावः । 'प्रमाता च प्रमेयं च प्रमाणं प्रमितिस्तथे'त्यादेरागमस्य विद्यमानत्वादित्यत उक्तम्** प्रमाणतोऽन्येति ।

**द्विविधं प्रमाणं करणं फलं च । (अत्र) तत्र प्रमाणशब्देन करणमभिधाय प्रमितिशब्देन फलरूपप्रमाणमेवोच्यते । न तु ततोऽन्या प्रमितिरिति । अस्ति तावदर्थज्ञानयोर्विषयविषयिभावनियमः । न चासौ सत्तया कारणत्वेन वाऽतिव्याप्तेः । नापि तादात्म्यसारूप्याभ्याम् । असंभवात् । यत्र ज्ञाने योऽर्थोऽवभासते तत्रासौ स्वासौ विषय इत्यत्र सप्तम्यर्थानुपपत्तिः । तस्माद्येन यस्यातिशय उत्पद्यते तस्यासौ विषय इत्यङ्गीकार्यम् । तथा चार्थस्य विषयत्वसिद्धये ज्ञानजन्योऽर्थगतोऽतिशयः सर्वथाऽङ्गीकार्य इति कथं मानाभावः । मैवम् । तथा सत्यतीतानागतयोर्ज्ञानविषयताभावप्रसङ्गात् । न ह्यसति धर्मिणि तत्र धर्मोत्पत्तिः संभवति ।**

**अथ करणसंभवात्तत्र विषयत्वमित्युच्यते तर्हि वर्तमानेऽपि तथा संभवान्न ज्ञातता कल्पनीयेति । तदिदमुक्तं** कुत्रचिदिति । **अतीतादिवद्वर्तमानेऽपि नास्तीत्यर्थः ।**

**किञ्च ज्ञानं स्वविषये ज्ञाततामुपजनयति यत्र क्वचिद्वा । द्वितीयेऽतिप्रसङ्गः । आद्ये ज्ञाततोपजननात्प्रागेवार्थस्य विषयत्वसिद्धेर्व्यर्थं तत्कल्पनमित्याह** किमेतयेति ।

**अपि च ज्ञाततायामपि ज्ञाततोत्पादोऽङ्गीक्रियते न वा । नेति पक्षे ज्ञानविषयत्वं न स्यात् । आद्येऽनुभवानारूढं ज्ञातताप्रवाहमङ्गीकुर्वाणस्य कल्पनागौरवं स्यादित्याह** कल्पनाया गौरवाच्चेति ।

---

**अथ ज्ञातता ज्ञाततान्तरमन्तरेणैव विषय इति कल्प्यते । तदाऽपि कल्पनागौरवमेव ।**

**एतेन ज्ञानं स्वविषये किञ्चित्करोति क्रियात्वाद्गमनवदित्यनुमानमपि निरस्तम् । ज्ञानमात्रपक्षीकारेऽतीतानागतज्ञातताज्ञानेषु बाधात् । अन्यथा तत्रैव व्यभिचारादिति ।**

**शे०— यदुक्तमिति** । ईशतज्ज्ञानेत्यादिनेति शेषः ॥ **उपसंहरिष्यन्निति** । 'मानमातृप्रमेयाणां तदुच्छित्तिर्न हि क्वचिदि'त्यादिनेति शेषः ॥ **नास्त्येवेति** । अनेन मूले चशब्द एवार्थ इत्युक्तं भवति । ननु 'प्रमाणतोऽन्ये'त्यनेन कथं प्रमाता चेत्युदाहृतागमनिरास इत्यत आह **द्विविधं हीति** । घटोऽयमिति ज्ञाने घट एव विषयो न पट इति ज्ञानज्ञेययोर्विषयविषयिभावनियमान्यथाऽनुपपत्तिरेव ज्ञाततासद्भावे प्रमाणमिति भावेन **शङ्कते** ॥ **अस्ति तावदिति** । अन्यथोपपत्तिमाशङ्क्य निराकरोति **न चेत्यादिना** । सत्त्वमपि यत्र क्वचिदभिमतं पुरोदेशे वा । आद्येऽपि यदाकदाचिद्वा ज्ञानकाले वेति विकल्पान्मनसि निधायाद्यं तावन्निराकरोति **अतिव्याप्तेरिति** । सद्भावमात्रस्य सर्वप्रत्ययसाधारण्येन सर्वप्रत्ययानां सर्वार्थालम्बनत्वप्रसङ्गादित्यर्थः । अतिव्याप्तेरित्यव्याप्तेरप्युपलक्षणम् ।

तेन ज्ञानकाल इति द्वितीयोऽपि निरस्तः । तथा सत्यतीतादिविषयस्य निरालम्बनता स्यादिति भावः । तृतीयेऽप्येतदेवोत्तरम् **अतिव्याप्तेरिति** । घटपटवति भूतले घटज्ञानस्य घटविषयकत्ववत्पटविषयकत्वस्यापातात् । विषयतानियामकस्य पुरोदेशे सद्भावस्य घटवत्पटेऽपि सत्त्वादित्यर्थः । उपलक्षणं चैतत् । अतीतादिविषयकज्ञानस्य निरालम्बनत्वप्रसङ्गश्चैवं सति स्यादित्यपि द्रष्टव्यम् । कारणत्वमपि यथाकथञ्चिद्वा विषयतया वा । न द्वितीयः । आत्माश्रयत्वापातादित्यभिप्रेत्याद्यं दूषयति **अतिव्याप्तेरिति** । रूपादिज्ञानस्य चक्षुराद्यपि कारणमिति तस्यापि तदालम्बनत्वप्रसङ्गादित्यर्थः । उपलक्षणं चैतत् । अतीतानागतविषयकत्वं च ज्ञानस्य न स्यात् । अतीतानागतयोरसत्त्वेन कारणत्वानुपपत्तेरित्यपि द्रष्टव्यम् ॥ **असंभवादिति** । (ज्ञानार्थयोरैक्यस्यात्यन्तसारूप्यस्य च बाधाद्यत्किञ्चित्सारूप्यस्यातिप्रसञ्जकत्वात् ) । भेदसहिष्णुरभेदस्तादात्म्यं विशेषनित्यद्रव्यातिरिक्तेषु येषु स्थलेषु समवायमाचक्षते वैशेषिकास्तेषु स्थलेषु समवायस्थाने तादात्म्यमभिषिच्य व्यवहरन्ति मीमांसकाः । अत एवोक्तं 'विशेषसमवायौ द्वौ नाङ्गीचक्रुः कुमारिला' इति । तस्माज्ज्ञानज्ञेययोरवयवावयविभावाद्यभावान्न तादात्म्यमिति भावः । साकारवादापत्त्या न ज्ञानज्ञेययोस्तादात्म्यं संभवतीत्यप्याहुः । प्रमेयत्वादिसाधारणधर्मेण घटज्ञानसारूप्यस्य पटादिसाधारणत्वेन घटज्ञाने घटस्यैव विषयतायां नियामकत्वस्यासंभवाद्घटत्वाद्यसाधारणरूपेण तत्सारूप्यस्य च घटतज्ज्ञानयोरप्यभावेन घटस्यापि तज्ज्ञानविषयत्वाभावप्रसङ्गादिति भावोऽपि द्रष्टव्यः ॥ **सप्तम्यर्थानुपपत्तिरिति** । ज्ञेयस्य ज्ञानानाश्रितत्वेनाधिकरणत्वस्य दण्डादेर्घटादिकं प्रतीव ज्ञानस्य ज्ञेयं प्रत्यनिमित्तत्वेन निमित्तत्वस्यात्माश्रयग्रस्ततया विषयित्वस्य च न तदर्थत्वमिति भावः ॥ **येनेति** । ज्ञानजन्यातिशयाधारत्वमेव तन्नियामकमित्यर्थः ॥ **तथा सतीति** । ज्ञानजन्यज्ञातताधारस्यैव विषयतानियामकत्वेऽतीतानागतयोर्वृष्टिरासीद्वृष्टिर्भविष्यतीत्याद्यनुमितिशब्दरूपज्ञानविषयत्वं न स्यात् । अतीतानागतयोर्ज्ञानजन्यज्ञातताऽनाधारत्वादित्यर्थः । प्रतियोगित्वादिवदतीतादौ ज्ञातताऽप्यस्त्वित्यतो ज्ञाततावादिना तस्या रूपादिवद्धर्मिसत्तासापेक्षत्वाभ्युपगमान्नैवमित्याशयेनाह **न हीति** ।

**करणसंबन्धादिति** । अतीतादेः स्वज्ञानजनककरणसन्निकृष्टत्वादनुमित्यादिविषयत्वमित्यर्थः । यत्सन्निकृष्टकरणेन यज्ज्ञानं जन्यते स तस्य विषय इत्यनित्यज्ञानविषयत्वस्य प्राक् व्यवस्थापितत्वादतीतानागतयोश्च स्वज्ञानकरणलिङ्गज्ञानविषयीभूतलिङ्गव्यापकतारूपस्य स्वज्ञानकरणवाक्यज्ञानविषयीभूतपदसमुदायवाच्यतारूपस्य च करणसम्बन्धस्य सत्त्वाद्युक्तं स्वज्ञानविषयत्वमिति भावः । एवं तर्हि वर्तमानस्यापि स्वज्ञानजन्यज्ञातताफलानाधारत्वेऽपि स्वज्ञानजनककरणसन्निकृष्टतामात्रेण विषयत्वनियमोपपत्तेर्न ज्ञातता कल्पनीयेति परिहरति **तर्हीति** ॥ **अतिप्रसङ्ग इति** । घटज्ञाने पटेऽपि ज्ञाततोत्पादप्रसङ्गेन घटवत्पटस्यापि घटज्ञानजन्यज्ञातताधारत्वाविशेषेण विषयत्वापत्तेरित्यर्थः । तथा च ज्ञातताऽङ्गीकारेऽपि कथं

तन्नियम इति भावः ॥ **न स्यादिति** । ज्ञाततायाः स्वज्ञानजन्यज्ञाततानाधारत्वेन तत्रोक्तविषयतानियामकाभावादिति भावः ॥ **आद्य इति** । ज्ञानजन्यज्ञातताधारत्वेनैव ज्ञातताया अपि स्वज्ञानविषयत्वे तथा सति ज्ञातताविष्ठायामपि ज्ञाततायामेतन्न्यायप्रसरात् । तत्र तत्राप्येवमित्यनवस्था स्यादित्यर्थः । कल्पनागौरवपदमनवस्थापरम् । ननु बीजाङ्कुरपरम्परावज्ज्ञाततापरम्पराऽपि न दोषमावहतीत्यतः सिद्धविषयत्वाद्बीजाङ्कुरपरम्पराया अदूषणत्वेऽप्यसिद्धविषयत्वादेतत्परम्पराया दूषणत्वमेवेति भावेनोक्तम् **अनुभवानारूढेति** ॥ **अथेति** । स्वभावादेवेति शेषः ॥ **कल्पनागौरवमेवेति** । ज्ञाततायां स्वभावो ज्ञानविषयतानियामकः । घटादौ ज्ञाततेति प्रयोजकद्वैविध्यात्कल्पनागौरवं त्वत्पक्षे । मत्पक्षे तु सर्वत्र स्वभाव एव प्रयोजक इति प्रयोजकैक्याल्लाघवमित्यर्थः ॥ **गमनवदिति** । यथा देवदत्तसमवेता गमनक्रिया ग्रामरूपे कर्मणि प्राप्तिरूपं फलं जनयति । तथाऽऽत्मसमवेतज्ञानरूपक्रियाऽपि घटरूपे कर्मणि कञ्चिदतिशयं करोतीत्यर्थः । किमत्र ज्ञानमात्रं पक्षो वर्तमानमात्रविषयकं ज्ञानं वेति विकल्पं मनसि निधायाद्यं दूषयति **ज्ञानमात्रेति** । द्वितीयं दूषयति **अन्यथेति** ।

स० — **नास्त्येवेति** । अनेन चशब्द एवार्थ इत्युक्तं भवति । ज्ञानविषयत्वान्यथानुपपत्तिरेव ज्ञाततासद्भावे मानमित्याशङ्कते **अस्ति तावदिति** ॥ **अतिव्याप्तेरिति** । अतिप्रसङ्गादित्यर्थः । सत्तया विषयविषयिभावे घटवत्पटादेरपि सत्त्वेन ज्ञानविषयत्वापातात् । कारणत्वस्य च घट इवेन्द्रियेपि सद्भावेन पटज्ञानस्य इन्द्रियविषयकत्वापातादिति भावः ॥ **असंभवात्** ज्ञानज्ञेययोस्तादात्म्यानुपपत्तेः । अन्यथा साकारवादापातादिति भावः । **सप्तम्यनुपपत्तिरिति** । न तावदाधिकरणत्वं सप्तम्यर्थः । ज्ञेयस्य ज्ञानाश्रितत्वाभावात् नापि निमित्तत्वम् । दण्डादेर्घटं प्रतीव ज्ञानस्य ज्ञेयं प्रत्यनिमित्तत्वात् । विषयत्वमिति वदन् देवानां प्रियत्वादुपेक्षणीय इति सप्तम्यर्थानुपपत्तेरिति भावः । **अतिप्रसङ्ग इति** । घटज्ञानस्य पटेऽपि ज्ञाततोत्पादकत्वापत्तिरित्यतिप्रसङ्ग इत्यर्थः । किमत्र ज्ञानमात्रं पक्षः । किंवा वर्तमानं ज्ञानमेव । आद्ये आह **ज्ञानमात्रेति** । द्वितीयं दूषयति **अन्यथेति** ।

प० — **इति यदुक्तमिति** । ईशतज्ज्ञानवेदेत्यादिग्रन्थेनेति भावः । ज्ञानविषयत्वान्यथानुपपत्तिरेव घटादेर्ज्ञाततावत्त्वे मानमिति शङ्कते **अस्ति तावदिति** । प्रतीतिसमये घटादेः सत्त्वेन वा प्रतीतिं प्रति कारणत्वेन वा विषयविषयिभावनियम उपपद्यत इत्यत आह **अतिव्याप्तेरिति** । ज्ञानहेतुसन्निकर्षादाविति योज्यम् ॥ **असंभवादिति** । ज्ञानार्थयोरैक्यस्या(संभवात्सारू)त्यन्तसारूप्यस्य च बाधाद्यत्किञ्चित्सारूप्यस्यातिप्रसञ्जकत्वादिति भावः ॥ **सप्तम्यर्थेति** । सामीप्याद्यर्थान्तरस्यात्रायोगेन विषयत्वार्थस्यैव वाच्यतया आत्माश्रयत्वापत्तेरिति भावः ॥ **करणसंबन्धादिति** । शक्तिव्याप्तिसंस्कार-

रूपाच्छब्दलिङ्गमनोरूपकरणसंबन्धादित्यर्थः ॥ **तदापि कल्पनागौरवमेवेति** । ज्ञाततान्यस्थले स्वनिष्ठज्ञाततया, ज्ञाततायां तु स्वेनैवेति द्वैरूप्यकल्पनादिति भावः ॥ **गमनवदिति** । गमनं यथा गम्ये संयोगरूपं किञ्चित्करोतीत्यर्थः ॥ **अतीतेति** । अतीतमनागतं ज्ञातता च तत्रत्यविषयज्ञानेष्वित्यर्थः ॥ **अन्यथेति** । अतीतादिज्ञानान्यज्ञानपक्षीकार इति भावः ।

**या०**— शङ्कते **अस्ति तावदित्यादिना** ॥ **अतिव्याप्तेरिति** । चक्षुरादेरपि चाक्षुषज्ञानविषयत्वापत्तेरित्यर्थः ॥ **असम्भवादिति** । अर्थज्ञानयोस्तादात्म्यस्यात्यन्तसारूप्यस्य चासम्भवादित्यर्थः । यथाकथञ्चित्सत्त्वादिना सारूप्यं चातिप्रसङ्गीति भावः ॥ **सप्तम्यर्थेति** । आधारत्वस्यासम्भवाद्विषयत्वमेव सप्तम्यर्थतया वाच्यम् । तत्र चात्माश्रय इति भावः ॥ **करणसम्बन्धादिति** । स्वज्ञानजनककरणसन्निकृष्टत्वादित्यर्थः । तथा च यज्ज्ञानं यत्सन्निकृष्टकरणजन्यं स तस्य विषय इति नियमात् । अतीतादेश्च स्वज्ञानकरणलिङ्गपरामर्शविषयीभूतलिङ्गव्यापकत्वरूपकरणसम्बन्धसद्भावाद्विषयतोपपत्तिरिति भावः ।

**श्री०**— **तदापीति** । घटादेर्ज्ञाततया विषयत्वम् । ज्ञाततायास्तु ज्ञाततामन्तरेणेति द्वैविध्यकल्पनादित्यर्थः ॥ **गमनवदिति** । गमनमपि स्वविषये ग्रामादौ गम्यत्वं करोतीति भावः । अतीतानागतयोर्ज्ञाततायाश्च ज्ञानेष्वित्यर्थः । **अन्यथा** पक्षत्वानङ्गीकारे ।

---

**सु०**— **ननु ज्ञातो घटः प्रकटो घट इत्यर्थविशेषणतया ज्ञातता प्रत्यक्षमीक्ष्यत इत्यत** आह मयेति ।

**अनु०**— मयैतज्ज्ञातमिति तु साक्षिगं ज्ञानगोचरम् ॥

ज्ञानमेव

**ज्ञानमेव मयैतज्ज्ञातमिति ज्ञानगोचरम् । क्रिया हि कर्तृस्थैव यदा कर्तृप्राधान्येन व्यवह्रियते तदा कर्तृधर्मतया प्रतीयते । यथा देवदत्तो घटमिच्छति द्वेष्टीति । यदा तु कर्मप्राधान्येन तदा तद्धर्मतया । यथेष्टो द्विष्ट इति । यदा पुनः स्वप्राधान्येन तदा स्वतन्त्रैव । यथेच्छा द्वेष इति । एवमात्मगतमेव ज्ञानं विषयधर्मतयाऽवभासत इति किमनुपपन्नम् ।**

**ननु च ज्ञानं तावन्न प्रत्यक्षम् । तथा हि । न तावत्पूर्वभाविनो ज्ञानस्य ज्ञानं विषयः । तथा सति ज्ञास्यामीत्येव(मेव) स्यान्न तु जानामीति । नाप्यागामिनः । तथात्वे ह्यज्ञासिषमित्येव स्यात् । न च सहभाविज्ञानान्तरमस्ति । ततो ज्ञाततालक्षणकार्येणैवानुमातव्यमिति**

**कथं सा नाभ्युपगम्यत इत्यत उक्तं** साक्षिगमिति । **साक्षिणो नित्यत्वान्नोक्तदोषः । स च स्वप्रकाश इति । अनुपलम्भबाधिता च ज्ञाततेत्याह** ततोऽन्येति ।

ततोऽन्या न प्रमितिर्नाम दृश्यते ।

**प्रथमज्ञाने हि शुद्ध एवार्थो ज्ञायते न ज्ञातताविशिष्टः ।** तदानीं तस्या अजातत्वात् । **तामुत्पाद्य पुनस्तद्विशिष्टमर्थं विषयीकरोतीति पक्षे विरम्यव्यापारप्रसङ्गात् । न च प्रथमज्ञानविषयीकृतादधिकोऽर्थ उत्तरज्ञानेषु चकास्ति । ज्ञात इत्यत्र तु ज्ञानं विषय इत्युक्तमेवेति ।**

**शे०**— ज्ञाततासद्भावे प्रत्यक्षं प्रमाणमाशङ्कते **नन्विति** । प्रत्यक्षमिति क्रियाविशेषणम् । प्रत्यक्षेणैवानुभूयत इत्यर्थः । इन्द्रियव्यापारानन्तरभाविना ज्ञानेन घटादिलक्षणे विषये प्राकट्यादिपदवेदनीयो ज्ञातताख्यः कश्चिदतिशयो जन्यते । ततश्च ज्ञातो घट इति ज्ञाने विषयविशेषणत्वेन ज्ञाततायाः स्फुरणात्प्रत्यक्षमेवात्र प्रमाणमित्यर्थः । ननु नीलमुत्पलमित्यादौ स्वप्रत्याग्यव्यवच्छेदसमानाधिकरणस्यैव विशिष्टज्ञानहेतुतया विशेषणत्वदर्शनादिहात्मधर्मस्य ज्ञानस्य कथं विषयधर्मत्वेन प्रतीतिरित्यतो न सामानाधिकरण्यव्यवहारमात्रेण धर्माणां धर्मिनिष्ठत्वनियमः । अन्यसमवेतैरिच्छादिभिरपि घटादेः सामानाधिकरण्यव्यवहारदर्शनादिति भावेन तद्धर्मत्वप्रतीतिमुपपादयति **क्रिया हीति** ॥ **आत्मगतमेवेति** । अन्यथा विषयगतमिष्टतादिकमप्यङ्गीकर्तव्यं स्यात् । इष्टो घटो द्विष्टो घट इत्यादिप्रत्यक्षेण घटगतेष्टतादेरप्युक्तन्यायेन सिद्धेर्वक्तुं शक्यत्वादिति भावः । ज्ञानसिद्ध्यन्यथाऽनुपपत्तिरेव ज्ञाततायां मानमित्यभिप्रेत्य तस्य प्रत्यक्षतानिरासपूर्वकमनुमेयतामुत्पादयति **नन्विति** ॥ **न च सहभावीति** । सजातीयात्मविशेषगुणानां युगपदुत्पत्त्यनङ्गीकारादिति भावः । सहभाविसाक्षिरूपज्ञानान्तरविषयत्वादन्यथोपपत्तिरित्यभिप्रेत्य तत्रोक्तदोषमुद्धरति **साक्षिणो नित्यत्वादिति** ॥ **नोक्तेति** । सहभाविज्ञानान्तरं नास्तीत्युक्तदोषो नेत्यर्थः । ननु साक्षिणोऽपि ज्ञाततालक्षणकार्यैकसमधिगम्यत्वेन कथं तदभावे तत्सिद्धिरित्यत आह **स चेति** । चैतन्यरूपत्वादिति भावः । ज्ञाततायाः प्रत्यक्षत्वं वदतः किं प्रथमज्ञाने ज्ञातता भासत इत्यभिमतं किंवा द्वितीयादिज्ञानेष्वथवा ज्ञातो घट इत्यादाविति विकल्पान्मनसि निधायाद्यं दूषयति ॥ **प्रथमज्ञाने हीति** । ननु च ज्ञानमादौ केवलमर्थं विषयीकृत्य तत्र ज्ञाततामुत्पाद्य पश्चात्तद्विशिष्टमर्थं विषयीकरोतीति ज्ञाततासद्भावे प्रथमज्ञानमेव मानमित्यत आह **तामिति** ॥ **विरम्येति** । न चोभयशक्तियुक्तस्यापि पुरुषस्यैकानन्तरमन्यकार्यस्येवोभयविषयीकरणशक्तियुक्तस्यापि प्रत्यक्षस्य विरम्यव्यापारः किन्न स्यादिति वाच्यम् । पुरुषस्य चेतनत्वात्तदिच्छाक्रमेण कार्यक्रमसम्भवेऽपि बुद्धेरचेतनत्वेन विरम्यव्यापारानुपपत्तेर्वक्ष्यमाणत्वादित्याशयात् । यद्वा क्षणभङ्गिन्या बुद्धेः प्रथमं वस्तुमात्रबोधकत्वमनन्तरं

तत्र ज्ञाततोत्पादकत्वं पश्चात्तद्विशिष्टवस्तुबोधकत्वमिति व्यापारक्रमानुपपत्तेरित्यर्थः । न च क्षणमात्रवृत्तित्वं न क्षणिकत्वं ब्रूमो येन व्यापारक्रमो नोपपद्येत । किन्त्वाशुतरविनाशित्वमिति युज्यत एव व्यापारक्रम इति वाच्यम् । तत्पक्षेऽपि जन्मातिरिक्तव्यापाराभावेन जानाया बुद्धेर्व्यापारक्रमानुपपत्तेरित्यन्यत्र विस्तरः । न द्वितीय इत्याह **न चेति ॥ उत्तरज्ञानेषु** अयं घटोऽयं पट इत्येवंरूपेषु । नान्त्य इत्याह **ज्ञात इत्यत्रेति ।** मयैतज्ज्ञातमित्यादिना ज्ञानमेव ज्ञातो घट इत्यादिज्ञानविषयीभूतं न तु ज्ञाततेति पूर्वमुक्तमित्यर्थः ।

**स० —** ज्ञाततासद्भावे प्रत्यक्षमाशङ्कते **नन्विति** । ज्ञानसिद्ध्यन्यथानुपपत्तिरेव तत्र मानमित्याह **नन्विति** । सहभाविसाक्षिरूपज्ञानान्तरविषयत्वात् अन्यथोपपत्तिरित्याह **साक्षिण इति ॥ ननु साक्षिणा सिद्धज्ञानेनेति** । तस्यापि ज्ञानस्य सिद्ध्या भाव्यं सा च ज्ञाततालक्षणकार्येणैवेति ज्ञातता स्वीकार्येत्यत आह **स चेति** । ज्ञातता प्रत्यक्षतो दृश्यत इति वदता किं प्रथमज्ञाने ज्ञातता भासते उत द्वितीयादि-ज्ञाने किंवा ज्ञातो घट इत्यादाविति विकल्प्य प्रथमं दूषयति **प्रथमज्ञाने हीति** । ननु ज्ञानमादौ केवलमर्थं विषयीकृत्य तत्र ज्ञाततामुत्पाद्य पुनस्तद्विशिष्टमर्थं विषयीकरोतीति ज्ञाततासद्भावे प्रथमज्ञानमेव मानमित्यत आह **तामुत्पाद्येति** । ज्ञानस्याचेतनत्वेन विरम्यव्यापारानुपपत्तिरिति भावः । न द्वितीय इत्याह **न चेति** । नान्त्य इत्याह **ज्ञात इत्यत्रेति** । मयैतद् ज्ञातम् इत्यादिना ज्ञानमेव घटो ज्ञात इत्यादिज्ञानविषयीभूतं न तु ज्ञाततेति पूर्वमुक्तमिति भावः ।

**प० — ज्ञानगोचरं** ज्ञानविषय इत्यर्थः । गोचरशब्दस्य नित्यपुलिङ्गत्वेपि 'त्रयी न श्रुति-गोचरे'त्यादिप्रयोगात्त्रिलिंगत्वमस्तीति साधुत्वं ध्येयमिति भावः ॥ **आत्मगतमेवेति** । पररीत्येयमुक्तिः । स्वस्वामिसंबन्धाभिप्रायेण वा धनीतिवदियमुक्तिः ॥ **न च सहभावीति** । आत्मविशेषगुणानां यौगपद्यायोगादिति भावः ॥ **अनुमातव्यमिति** । घटो ज्ञानविषयः ज्ञातताधारत्वादित्यनुमातव्य-मित्यर्थः । **साक्षिगमितीति** । साक्षिविषयो ज्ञानमेवेत्यर्थः । नन्वेवं ज्ञानं ज्ञातमित्यत्रापि साक्षि-गोचरज्ञानान्तरस्वीकारेऽनवस्थेत्यत आह **स चेति** । अनुपलम्भबाधिता चेत्युक्तं ज्ञाततागोचरज्ञानासंभवेनो-पपादयति **प्रथमेति** । अयं घट इति प्रथमज्ञानान्तरं पुनर्घटोऽयमिति ज्ञायमाने द्वितीयज्ञाने भासत इत्यत आह **न चेति** ।

**या० — न च सहभावीति** । सजातीयात्मविशेषगुणानां युगपदुत्पत्त्यनङ्गीकारादिति भाव ॥ **नित्यत्वादिति** । तथा च सहभाविज्ञानान्तरमेव साक्षिरूपं ज्ञानग्राहकं भविष्यतीति भावः । ननु साक्ष्यपि न तावद्बहिरिन्द्रियाणां विषय आन्तरत्वात् । नापि मनसः तस्य साक्ष्य-धीनप्रतीतिकत्वेनान्योन्याश्रयत्वप्रसङ्गात् । नापि साक्ष्यन्तरस्यानवस्थाप्रसङ्गात् । अतो व्यवसाय-गतज्ञाततयैव सोऽनुमेय इति साक्ष्यनुमापकतयैव ज्ञाततासिद्धिरित्यत आह **स च स्वप्रकाश इति ।**

**श्री०— ज्ञानमेवेति** । मयैतज्ज्ञातमिति ज्ञानगोचरं ज्ञानविषयकं ज्ञानमेव न ज्ञात-तेत्यर्थः । ननु ज्ञानमेव यदि विषयतया प्रतीयते तदाऽहं जानामीति कर्तृभूतात्मनिष्ठत्वेन प्रतीतिः स्यान्न तु ज्ञात इति विषयसम्बन्धित्वेनेत्यत आह **क्रिया हीति** ॥ **स्वप्राधान्येनेति** । क्रियाप्राधान्येनेत्यर्थः ॥ **विषयधर्मतयेति** । कर्मप्राधान्येनेत्यर्थ । तथा च कर्मप्राधान्य-विवक्षया विषयसम्बन्धित्वेन प्रतीतिर्युज्यत इति भावः । नन्वयं ज्ञानवाञ्ज्ञाततावत्त्वादित्यनुमानेनैव ज्ञानमनुमेयम् । तत्र ज्ञातताऽनङ्गीकारे ज्ञानानुमानं न स्यात् । न च ज्ञानस्यानुव्यवसायरूप-ज्ञानान्तरेणैव ग्राह्यत्वेन प्रत्यक्षत्वान्नानुमेयत्वम् । येन तदनुमापकतया ज्ञातता सिद्धिरिति वाच्यम् । ज्ञानस्य प्रत्यक्षत्वायोगादित्याशयेन तत्खण्डयति **ननु चेति** । **ज्ञानस्य** अनुव्यवसायरूपज्ञानस्य । **ज्ञानं** उत्तरत्र जायमानम् ॥ **नापीति** । आगामिनो ज्ञानस्य पूर्वभाविज्ञानं विषय इत्यर्थः । नन्विदानीमेवजातं ज्ञानमिदानीन्तनज्ञानान्तरस्यैव विषय इत्यत आह **न च सहभावीति** । ग्राह्यज्ञानसमानकालीनमित्यर्थः । सजातीयात्मगुणानां यौगपद्याभावेन सहभाविज्ञानान्तरस्यैवाभावेन तद्ग्राह्यत्वं न सम्भवतीति भावः ॥ **साक्षिगमिति** । तथा च सहभाविज्ञानान्तरं साक्षिरूप-मेवास्तीति तद्ग्राह्यत्वेन प्रत्यक्षत्वं युक्तं ज्ञानस्येति भावः । सजातीयात्मगुणयौगपद्याभावात्कथं ग्राह्यज्ञानसहभाविज्ञानान्तराङ्गीकार इत्यत आह **साक्षिण इति** । साक्षिरूपं ज्ञानमात्मस्वरूपत्वेन नित्यमित्यर्थः । ननु कथं न चकास्ति । ज्ञातो घट इत्यत्र प्रथमज्ञानविषयीकृतादर्थादधिकस्य भानात्तस्या एव ज्ञाततात्वादित्यत आह **ज्ञात इत्यत्र त्विति** ।

**च०— कर्तृधर्मतयेति** । स्वामितासंसर्गेण कर्त्राश्रिततयेत्यर्थः । **तद्धर्मतयेति** । विषयता-संसर्गेण कर्माश्रिततयेत्यर्थः । **स्वतन्त्रा** इतरविशेषणतानापन्ना । ज्ञानातीन्द्रियतामुपगच्छतो भट्टस्य दिशा शङ्कते **नन्विति** ॥ **पूर्वभाविनो ज्ञानस्य** अनुव्यवसायस्य तत्स्थानाभिषिक्तसाक्षिणो वा **ज्ञानं** विषयिताप्रत्यासत्त्या घटविशेषितज्ञानम् । **ज्ञास्यामीति** । अनुव्यवसायकालीनप्रागभावप्रति-योगित्वरूपागामित्वविशेषितघटज्ञानविषयकत्वादिति भावः । **न तु जानामीतीति** । घटज्ञाने-ऽवगाढस्यानुव्यवसायकालीनत्वस्य बाधादिति भावः । **अज्ञासिपमितीति** । यमरमनमातांसक् चेति-योगेनेट्सकोर्विहिततया युक्तोपन्यासः । अनुव्यवसायकालीनध्वंसप्रतियोगित्वरूपतदतीतत्वविशेषित-घटज्ञानविषयकत्वादिति भावः । **न च सहभावीति** । आत्मविशेषगुणानां यौगपद्यायोगादिति भावः । **अनुमातव्यमिति** । ज्ञाततालक्षणकार्येण विषयताप्रत्यासत्त्या घटे ज्ञानलक्षणं कारणमनु-मेयमित्यर्थः । घटः स्वजनकज्ञानवान् तज्जनितज्ञाततावत्त्वादित्यनुमानाकारः । **साक्षिगमितीति** ।

ज्ञानार्थगमेः कर्मसाधनडप्रत्ययान्ततया साक्षिरूपज्ञानेन विषयीक्रियमाणमित्यर्थः । ज्ञायते विषयी-क्रियते । विरम्यव्यापारेति । विश्रान्तिपूर्वकव्यापारेत्यर्थः ।

सु० — इदानीमीशतज्ज्ञानेत्यादिनोक्तमर्थमुपसंहरति मानेति ।

अनु० — मानमातृप्रमेयाणां तदुच्छित्तिर्न हि क्वचित् ॥

तत्तस्मान्मानादिभेदेन त्रिविधमेव विश्वं तस्य क्वचिदप्युच्छित्तिर्बाधो ना(स्ती)स्त्ये-वेत्यर्थः । प्रकृत(मनुस)मुपसंहरन्स्वप्नस्य मिथ्यात्वं हेत्वन्तरेण दूषयति स्वाप्नानामपीति ।

स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचित् ।

चो हेतौ । यस्मात्स्वाप्नानामप्ये(ते)षां मानमातृप्रमेयाणां क्वचित्काले न बाधो दृश्यते अतः स्वप्नो मिथ्या नैवेति संबन्धः । न केवलं बाह्यप्रपञ्च इत्यपेरर्थः । स्वप्नादुत्थितस्य नात्र गजोऽभूदित्यादिना बाधदर्शनात्कथमेतदित्यत आह जाग्रत्स्वमात्रमिति ।

जाग्रत्स्वमात्रमत्रैकमन्यथा दृश्यते स्फुटम् ॥

अतो मिथ्या न च स्वप्नो

अन्यथा अविद्यमानत्वेन । व्याख्यातप्रायमेतत् । यत्तूक्तं रथोऽयमित्यादि, तत्परि-णामितामावेदयति । न बाधमिति वक्ष्यते । 'न तत्र रथा' इत्यादिश्रुतिस्तु तत्प्रागभावम् ।

ननु स्वाप्नपदार्थानां जाग्रत्त्वं यदि भ्रमसिद्धं बाधितं च तदा तेषां मिथ्यात्वमवर्जनीयम् । स्वाप्नगजादयो मिथ्या भ्रमविषयत्वाद्बाधविषयत्वाच्च शुक्तिरजतवदित्यनुमानादिति चेत्किमिदं भ्रमविषयत्वमारोप्यतया वाऽऽरोपाधिष्ठानतया वा साधारणं वा । तथा बाधविषयत्वमपि किन्निषेध्यतयोत निषेधाधिकरणतयाऽथ साधारणम् । उभयत्रापि द्वितीयतृतीययोर्दोषमाह जाग्रद्वदिति ।

जाग्रद्वत्

जाग्रता दृष्टं शुक्त्यादिकं यथा तथेत्यर्थः । यथा शुक्तिकादेरारोपबाधाधिष्ठानत्वेऽपि न मिथ्यात्वं तथा स्वाप्नानामपीत्यनैकान्त्यमित्यर्थः । ननु जागरोपलब्धस्य शुक्त्यादेरप्यनेनैव हेतुना मिथ्यात्वमस्माकं सिषाधयिषितमेवेति कथं तत्रानैकान्तिकत्वमित्यत आह जाग्रदिति ।

जाग्रदेव च ॥

आत्मवत्

एवं तर्हि जाग्रत्स्वप्नश्चात्मवन्नैव मिथ्येत्यर्थः ।

**शे०** — स्वप्नमिथ्यात्वदूषणस्यासङ्गतिमाशङ्क्य परिहरति **प्रकृतमिति** । तन्मिथ्यात्वस्य पूर्वमेव दूषितत्वात्पुनस्तद्दूषणे पौनरुक्त्यमित्याशङ्क्य परिहरति **हेत्वन्तरेणेति** । पूर्वं त्वप्रामाणिकत्वप्रमाणविरुद्धत्वाभ्यां तद्दूषितमिति भावः ॥ **व्याख्यातप्रायमिति** । 'भ्रान्तिर्जाग्रत्त्वमेव ही'त्येतद्वाक्यव्याख्यानेनैवैतदपि व्याख्यातप्रायमित्यर्थः । यदुक्तं 'स्वप्न एव चैते सुलभबाधा भवन्ति । आद्यन्तयोर्व्यभिचारदर्शनात् । रथोऽयमिति कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यत' इति तदनूद्य दूषयति **यत्तूक्तमिति** ॥ **वक्ष्यत इति** । 'ईशेच्छयाऽन्तर्दधाति व्यज्यते च पुनस्तये'त्यादिनेति शेषः । अत एवैतेन परकीयबाधकथनमपि निरस्तमिति तत्र वक्ष्यतीति द्रष्टव्यम् । ननु 'न तत्र रथा न रथयोगा' इत्यादिः श्रौतो बाधः स्वाप्नपदार्थमिथ्यात्वावेदकोऽस्त्येवेति कथं तदभाव इत्यत आह **न तत्रेति** ॥ **प्रागभावमिति** । न तु सर्वथाऽभावमित्यर्थः । अन्यथा 'अथ रथान्रथयोगान्पथः सृजत' इत्युत्तरवाक्यविरोधापातादिति भावः ॥ **साधारणमिति** । अविवक्षितविशेषं भ्रमविषयत्वमात्रमित्यर्थः । **जाग्रता दृष्टमिति** । अनेन जाग्रता दृष्टत्वाज्जाग्रच्छब्दः शुक्त्यादौ लाक्षणिक इति सूचितं भवति । किमनेन दूषणमुक्तं भवतीत्यतस्तात्पर्यमाह **यथेति** ।

**स०** — **व्याख्यातप्रायमेतदिति** । 'भ्रान्तिर्जाग्रत्त्वमेव ही'त्येतद्व्याख्यानेनैव तदपि व्याख्यातप्रायमित्यर्थः । 'यदुक्तं स्वप्न एव चैते सुलभबाधा भवन्तीति । आद्यंतयोर्व्यभिचारदर्शनात् । रथोयमिति कदाचित्स्वप्ने निर्धारितः क्षणेन तु मनुष्यः संपद्यत' इति । तदनूद्य दूषयति **यत्तूक्तमिति** ।

**प०** — **व्याख्यातप्रायमेतदिति** । अत्रैव प्रकरणे 'भ्रान्तिर्जाग्रत्त्वमेव ही'ति पूर्वोक्तानुव्याख्यानेनेदं व्याख्यातप्रायमित्यर्थः ॥ **यत्तूक्तमिति** । अपव्याख्यानसिद्धान्तानुवादप्रस्तावे 'रथोऽयमिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः संपद्यत' इत्यादि यदुक्तमित्यर्थः ॥ **वक्ष्यत इति** । 'ईशेच्छयाऽन्तर्दधाति व्यज्यते च पुनस्तथे' त्येतद्व्याख्यावसर एवेति भावः । 'स्पष्टं चाभावं स्वप्ने रथादीनां श्रावयती'त्यादिनोक्तं निराह **न तत्र रथा इति** ॥ **अनेनैव हेतुनेति** । स्वाप्नगजादयो मिथ्येत्यादिना प्रागुक्तहेतुभ्यामित्यर्थः ।

**या०** — **व्याख्यातप्रायमिति** । 'भ्रान्तिर्जाग्रत्त्वमेव ही'त्येतद्व्याख्यानेनेति शेषः ॥ **वक्ष्यत इति** । 'ईशेच्छयाऽन्तर्दधाति व्यज्यते च पुनस्तये'त्यत्रेति शेषः ।

**श्री०** — **भ्रमविषयत्वादिति** । जाग्रत्त्वप्रकारकभ्रमविषयत्वादित्यर्थः ॥ **बाधविषयत्वादिति** । अत्रेदं नास्तीति बाधावधित्वादित्यर्थः । बाधाधिष्ठानत्वं नामात्रेदं नास्तीति निषेधाधिकरणत्वं ज्ञेयम् ॥ **शुक्त्यादेरपीति** । तथा च स्वाप्नगजादिकं जाग्रद्दृष्टं शुक्त्यादिकं चेत्युभयं पक्षीकृत्य भ्रमविषयत्वेनैव हेतुना मिथ्यात्वं साध्यत इत्यर्थः ।

च० **आरोप्यतया वेति ।** आरोपनिरूपितप्रकारतारूपं तन्निरूपितविशेष्यतारूपं तन्निरूपितविषयतात्वावच्छिन्नं वेत्यर्थः । **निषेध्यतयेत्यादि ।** अधिष्ठानवृत्तिविशेष्यतानिरूपितनिषेधवृत्तिविषयतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतारूपं तादृशविशेष्यतारूपबाधग्रहनिरूपितविषयतावच्छिन्नरूपं वेत्यर्थः ।

**सु०— तद्विवृणोति** क्वचिदिति ।

**अनु०—** क्वचिदात्मा च स्यादेव भ्रमगोचरः ॥
एतावता न मिथ्याऽसौ स्वप्ने जागरिते तथा ॥

**क्षणिकोऽहमित्यादि भ्रमगोचरः । उपलक्षणं चैतत् । न क्षणिकोऽहं स्थिर एवेति बाधगोचरश्चेत्यपि द्रष्टव्यम् ।** स्वप्ने जागरिते तथेति । **तत्रोपलब्धाः पदार्था अपि न मिथ्येत्यर्थः । उभयपक्षीकारेणानुमा(नेऽप्या)नस्यात्मनि व्यभिचारोऽपरिहार्य इति ।**

**ननु क्षणिकत्वादिना प्रतिपन्न आत्माऽपि मिथ्येति कथं तत्र व्यभिचार इति चेत् । किं क्षणिकत्वादेरारोपितस्य मिथ्यात्वादेवमुच्यते उतात्मस्वरूपस्यैव । द्वितीये त्वपसिद्धान्तः स्फुट एव । आद्यमाशङ्क्य दूषयति** यदीति ।

यद्यात्मन्यन्यथा दृश्यं भ्रान्तमत्रापि तद्भवेत् ॥

**एवं तर्ह्यारोपिताकारस्य मिथ्यात्वं साध्यमित्युक्तं स्यात । तथा च सिद्धसाधनत्वं जाग्रत्स्वप्नावगतार्थेष्वारोपिताकाराणां मिथ्यात्वस्यास्माभिरप्यङ्गीकृतत्वात् । आरोप्यतया निषेध्यतया वा भ्रान्तिबाधविषयत्वं हेतुरित्याद्यपक्षे दोषमाह** अबाधितेति ।

अबाधितानुवृत्तेस्तु स्वाप्नादेर्भ्रान्तता कुतः ॥

**जाग्रत्वादे रजतत्वादेश्च बाधादुत्तरमप्यबाधितत्वेन गजादेः शुक्त्यादेश्चानुवृत्तेः स्वप्नादेरुक्तविधा** भ्रान्तता **बाध्यता च कुतः । तथा च स्वरूपासिद्धिः । यथा खलु बाधोत्तरकालमप्यनुवर्तमान** आत्मा **नारोप्यो नापि बाध्यः । तथा स्वप्नजागरावपि । तयोरप्यद्राक्षमेवाहं गजमित्याद्यनुवृत्तेरिति ।**

**अनुकूलप्रमाणाभावात्प्रतिकूलप्रमाणभावाच्च भ्रान्तिविषयत्वादिहेतुना जाग्रत्स्वप्नयोर्मिथ्यात्वानुमानमनुपपन्नमित्याह** न चेति ।

न च काचित्प्रमा विश्वभ्रान्तत्वे सर्वमेव च ॥
अभ्रान्तत्वे प्रमाणं तु कथं तद्भ्रान्तता भवेत् ॥

**विश्वमित्युभयविधं विवक्षितम् ।** भ्रान्तत्वे **मिथ्यात्वे । यद्वा भ्रान्तिविषयत्वादिहेतुद्वयस्यासिद्धिं प्रकारान्तरेण साधयितुमिदं वाक्यम् । भ्रान्तत्व इ( मि )ति बाध्य-**

**त्वस्याप्युपलक्षणम्** । **यतस्तस्मादित्युपस्कर्तव्यम्** । तद्भ्रान्तता **तस्य द्विविधस्यापि विश्वस्य भ्रान्तिविषयता** ।

**शे०**— क्वचिदात्मा चेत्यत्र ग्रन्थे भ्रमविषयत्वस्यात्मन्यनैकान्त्योक्तावपि बाधविषयत्वस्य तदनुक्तेर्नात्मनि हेतुद्वयस्य स्वप्रतिपादनपरपूर्वग्रन्थविवरणरूपत्वमस्येत्यत आह उपलक्षणं **चैतदिति** । जाग्रदेव चात्मवदित्यादिना किं **पूर्वानुमानस्य दूषणमुक्तं** भवतीत्यतस्तदाह **उभयेति** । स्वाप्नगजादे-र्जाग्रद्दृष्टशुक्त्यादेश्च पक्षीकारेणेत्यर्थः ॥ **स्फुट एवेति** । ततश्च न मूले तद्दूषणप्रयुक्तन्यूनतेति भावः । अत्रापीति मूलेन किमाद्यपक्षे दूषणमुक्तं भवतीत्यतस्तन्निष्कृष्य दर्शयन्नेव फलितदोषोपदर्शन-पूर्वकं तदुपपादकतया मूलं योजयति **एवं तर्हीत्यादिना** । ननु गजादेः शुक्त्यादेश्च बाधोत्तरकाल-मनुवृत्तिरेवासिद्धा । अस्तु वा सा तथाऽप्यनुवृत्तस्यापि तस्यारोप्यतया निषेध्यतया च भ्रान्तिबाध-विषयत्वमेव भविष्यतीति कथमसिद्धिरित्यत एवं तर्हि बाधोत्तरकालमात्मनोऽपि नानुवृत्तिः स्यात् । अनुवृत्तावप्यारोप्यतया निषेध्यतया वा भ्रान्तिबाधविषयत्वमेवेति नानैकान्त्यपरिहारोऽपीत्याशयेनाह **यथा खल्विति** । 'स्वप्नादेर्भ्रान्तता कुत' इति भ्रमविषयत्वादेरसिद्धिकथनात्तेन पौनरुक्त्यमुत्तरग्रन्थस्या-शङ्क्य परिहरति **अनुकूलेति** ॥ **उभयविधमिति** । स्वप्नोपलब्धं रथादि, जाग्रद्दृष्टं शुक्त्यादि चोभयविधमित्यर्थः । भ्रान्तत्व इत्यस्य मिथ्यात्व इत्यर्थकत्वं 'भ्रान्तता कुतः' । 'किञ्च भ्रान्तत्ववादी'-त्यादिपूर्वोत्तरग्रन्थसन्दर्भविरुद्धम् । संदर्भेण भ्रमविषयत्वार्थकताया एव लाभादिति पूर्वत्रापरितोषा-त्पक्षान्तरमाह **यद्वेति** । तर्हि पूर्वेण पौनरुक्त्यमित्यत आह **प्रकारान्तरेणेति** । ननु चात्र भ्रान्तिविषयत्वस्य प्रकारान्तरेणासिद्धिवर्णनेऽपि बाध्यत्वस्य तदवर्णनात्कथं हेतुद्वयस्यापि प्रकारान्तरेणा-सिद्धिसाधकत्वेनास्यावतार इत्यतोऽत्र ग्रन्थे बाध्यत्वस्याप्युपलक्षणतयाऽभिप्रेतत्वान्नानुपपत्तिरित्याह **बाध्यत्वस्याप्युपलक्षणमिति** ।

**प०** — 'स्वप्ने जागरिते तथे'त्युक्तेस्तात्पर्यमाह **उभयपक्षीकारेणेति** । स्वाप्नमात्रपक्षीकारे जागरितशुक्त्यादौ भ्रान्तिविषयत्वादिहेतोर्व्यभिचार उक्तः । स्वप्नजागरितोभयपदार्थपक्षीकारेणोक्तहेतुना मिथ्यात्वसाधने तु न व्यभिचार इति शङ्कानिरासाय 'एतावता न मिथ्याऽसावि'त्युक्तिरिति भावः ।

**या०**— फलितमाह **उभयपक्षीकारेणेति** । स्वाप्नगजादेर्जाग्रद्दृष्टशुक्त्यादेश्च पक्षीकारेणे-त्यर्थः ।

**श्री०**— किमनेनोक्तानुमाने दूषणमुक्तमित्यत आह **उभयेति** । उक्तविधाऽऽरोप्यतया निषेध्यतया च भ्रान्तिविषयरूपा । **उभयविधं** स्वाप्नं जाग्रत्सम्बन्धिशुक्त्यादि चेत्यर्थः । भ्रान्ति-विषयत्वादीत्यत्रादिपदेन बाधविषयत्वं ग्राह्यम् ।

**सु० — दृश्यत्वादिहेतुना स्वप्नजागरयोर्भ्रान्तत्वादिसाधनात्कथमसिद्धिरित्याशङ्कां परिहर्तुं भ्रान्तत्वं प्रकारान्तरेण दूषयति** किञ्चेति ।

**अनु० —** किञ्च भ्रान्तत्ववादी स भ्रान्तत्वं स्वमतस्य च ॥

अङ्गीकरोति नियतं

**भ्रान्तत्ववादी दृश्यत्वादिना द्विविधस्यापि विश्वस्य भ्रान्तत्वादिकं (मा त्वं) साधयन् ॥** स्वमतस्येति । **स्वप्रतिज्ञार्थस्य ॥** नियतमिति । **अन्यथा तत्रानैकान्त्यापत्तेरिति भावः ।**

**न केवलं परेण स्वव्याप्तिसिद्धये स्वप्रतिज्ञातार्थस्य भ्रान्तत्वादिकमङ्गीकरणीयम् । किन्तु वयमपि तदङ्गीकुर्म इत्याह** तत्रेति ।

तत्र संप्रतिपन्नता ॥

वादिनोः

**परप्रतिज्ञातार्थस्य भ्रान्तत्वादौ** वादिनोः **वादिप्रतिवादिनोः । एतच्च वक्ष्यमाणानुमानस्यान्यतरासिद्धिनिरासार्थमिति बोद्धव्यम् । ततः किमित्यत आह** तेन चेति ।

तेन चाभ्रान्तं विश्वमेव भविष्यति ।

**न केवलमुक्तप्रमाणैः किन्तु विश्वभ्रान्तत्वादेर्भ्रान्तत्वादिहेतुना च विश्वमभ्रान्तमेव तथाऽबाध्यमेव भविष्यति । तत्र व्याप्तिं सूचयति** भ्रान्तत्वेति ।

भ्रान्तत्वभ्रान्तता चेत्स्यात्कथं नाभ्रान्तिसत्यता ॥

**तदेतौ प्रयोगौ भवतः । विश्वमभ्रान्तं भ्रान्तभ्रान्तत्वात् । तथा विश्वमबाध्यं बाध्यबाध्यत्वात् आत्मवदिति । अपव्याख्यानदूषणस्य प्रयोजनमाह** अशेषेति ।

अशेषदोषदुष्टं तन्मतं हेयं बुभूषुभिः ॥

तन्मतमिति । **स्वाप्नजागरप्रपञ्चस्य मिथ्यात्वं प्रतिपादयन्मतम् ।**

**शे० — भ्रान्तत्वादिसाधनादिति ।** भ्रमविषयत्वादिसाधनादित्यर्थः ॥ **स्वप्रतिज्ञार्थस्येति ।** द्विविधविश्वभ्रान्तत्वादेरित्यर्थः ॥ **अन्यथेति ।** द्विविधविश्वभ्रान्तत्वादेर्दृश्यत्वादिमत्त्वेऽपि भ्रान्तत्वाद्यभावात् । अदृश्यत्वे चानुमानवैयर्थ्यं तस्य साध्यज्ञप्त्यर्थत्वात् । अजडत्वादौ चापसिद्धान्तापातादित्यर्थः । ननु भ्रान्तत्वादेर्भ्रान्तत्वस्योभयवादिसम्मतताकथनस्य कः प्रकृते उपयोग इत्यत आह **एतच्चेति ॥ वक्ष्यमाणेति ।** तेन चाभ्रान्तमित्यादिनोत्तरत्र वक्ष्यमाणेत्यर्थः ॥ **तदेतौ प्रयोगाविति ।** न चोभयत्राप्यात्मत्वमुपाधिः । अभ्रान्तत्वाबाध्यत्वरूपसाध्यद्वयवत्यात्मनि तस्य सत्त्वेन साध्य-

व्यापकत्वादुक्तसाधनद्वयवति पक्षे चासत्त्वेन साधनाव्यापकत्वाच्चेति वाच्यम् । अभ्रान्तत्वमबाध्यत्वं वा विना तद्विरुद्धस्य भ्रान्तत्वस्य बाध्यत्वस्य च भ्रान्तत्वे बाध्यत्वे च व्याघातवदज्ञातृत्वादिरूपस्यानात्मत्वस्य भ्रान्तत्वं बाध्यत्वं वा विना व्याघाताभावेनोपाधेरप्रयोजकत्वादित्याशयात् ।

स०— ननु भ्रान्तत्वादेर्भ्रान्तित्वस्योभयवादिसंमतत्वकथनमसंगतमित्यत आह **एतच्चेति** । तदेतौ प्रयोगौ भवत इत्यनुपदमेव वक्ष्यमाणानुमानस्येत्यर्थः ।

प०— **वक्ष्यमाणेति** । तेन चेत्यत्रेति भावः ॥ **उक्तप्रमाणैरिति** । 'एवं संशोधितन्यायसदागमविरोधत' इत्यादौ 'सत्यत्वमक्षजप्राप्तमि'त्यत्र चोक्तप्रमाणैरित्यर्थः ।

श्री०— उभयोर्वादित्वाभावादाह **वादिनोरिति** ।

च०— **भ्रान्तभ्रान्तत्वादिति** । कर्मसाधननिष्ठान्तेन भावप्रत्ययान्तस्य कर्मधारयस्तत्प्रकृतिकहेतुविभक्तिः समभिव्याहृतहेतुविभक्त्यन्तरमपि तादृशकृत्यान्तेन तदन्तस्य कर्मधारये तत्प्रकृतिकमवसेयम् ।

**सु०— स्यादेतत् । विश्वस्य भ्रान्तत्वादिकमिवाभ्रान्तत्वादिकमपि मिथ्या किन्न स्यात् । न चैतदघटितं दुर्घटत्वस्य भूषणत्वादित्याशङ्कां परिहरन्मन्दमेतदस्मदीयं तन्मतहेयताव्युत्पादनमुपादानप्रसक्तेरभावादिति सोल्लुण्ठमाह येनेति ।**

अनु०— येन स्वमतहेयत्वं स्वयमङ्गीकृतं सदा ॥
भ्रान्तित्वाद्दुर्घटत्वस्य भूषणत्वाच्च केवलम् ॥
उन्मत्तोऽपि कथं तस्य मतं स्वीकर्तुमिच्छति ॥

भ्रान्तित्वात् **भ्रान्तिविषयत्वेनाङ्गीकृतत्वात्** । दुर्घटत्वस्य भूषणत्वात् **भूषणत्वेनाङ्गीकृतत्वाच्च** । केवलमुन्मत्तोऽपि **साक्षादुन्मत्तोऽपि न पुनरुन्मत्तकबीजाद्यदनेनोन्मत्तः । न ह्युन्मत्तः स्वमतं भ्रान्तं दुर्घटं चेति स्वयमेव मन्यते । तर्हि कथं लोके प्रवृत्तमित्यत आह** ईशेति ।

ईशशक्तेरचिन्त्यत्वान्महोन्मत्तैः प्रवर्तितम् ॥

**महोन्मत्तैरिति** हेत्वन्तरम् ।

शे०— **न चैतदघटितमिति** । भ्रान्तत्वाभ्रान्तत्वयोर्बाध्यत्वाबाध्यत्वयोश्च परस्परविरुद्धतयैकस्याभावेऽन्यस्य सत्यत्वनियमेनोभयमिथ्यात्वमघटितमित्यर्थः । परमार्थसतो हि दुर्घटत्वं बाधकम् । नारोपितस्य प्रत्युत भूषणमेव । **अन्यथाऽऽरोपितत्वानुपपत्तेरित्याशयेन** परिहरति **दुर्घटत्वस्येति** । **सोल्लुण्ठमिति** । सोपहासमित्यर्थः । नन्वयमप्युन्मत्तकबीजाद्यदनेनैवोन्मत्तोऽस्तु **किं साक्षादुन्मत्तत्व-**

कल्पनयेत्यतस्तदुपपादयति **न हीति** । मूले ईशशक्तेरित्येतावतोक्तशङ्कापरिहारसिद्धेर्महोन्मत्तैरित्यस्यानर्थक्यमित्याशङ्क्य परिहरति **महोन्मत्तैरिति** ।

**प०— मन्दमिति** । अनुचितमित्यर्थः । सामर्थ्यविषयक इत्युक्तं ने(समर्थदूषणविषयो ने)त्यर्थः । **सोल्लुण्ठं** सोपहासम् । विनोदसममित्यर्थः ।

**या० — भूषणत्वादिति** । केनापि प्रकारेण निर्वक्तुमशक्यत्वरूपानिर्वाच्यत्वस्यैव प्राप्तत्वादिति भावः ॥ **सोल्लुण्ठमिति** । सोपहासमित्यर्थः ।

**श्री०— मिथ्या किं न स्यादिति** । धर्मिण एवाभावादिति भावः ॥ **न चेति** । परस्परविरुद्धयोरिति न्यायविरोधादिति भावः ।

**सु० — सूत्रव्याख्यानमुपक्रम्यापव्याख्यानस्य हेयताव्युत्पादनमसङ्गतमित्यतः स्वव्याख्यानदार्ढ्यार्थमित्याशयवानुक्तं सूत्रार्थं विवृण्वन्मायाशब्दार्थं तावदाह** अत इति ।

**अनु०**— अतः प्रज्ञाऽत्रमायोक्ता जैवी

अत इति । **अन्यथा व्याख्यानस्य दुष्टत्वात् 'माया वयुनमभिख्ये'ति प्रज्ञानामसु पाठादिति भावः** । मायायाः सन्ध्यकारणत्वं वक्ष्यते । **तत्र जैवी प्रज्ञा कीदृशं कारणमित्यत आह** उपादानमेवेति ।

उपादानमेव सा ॥

**सन्ध्यस्येति शेषः । न केवलं जैवीप्रज्ञाऽत्र माया । किन्त्वैश्वरी च । सा च सन्ध्यस्य निमित्तमेवेत्याह** निमित्तमिति ।

निमित्तमैश्वरी मुख्या

**प्रज्ञाशब्दश्चात्र लाक्षणिको वासनार्थ इति वक्ष्यति (ते) । तच्च व्याख्यानं नोभयसाधारणमित्याशयेनोक्तं मुख्येति । ईश्वरप्रज्ञा मुख्यैव जीवप्रज्ञा तु लाक्षणिकी** ।

**शे०— उक्तमिति** । संस्कारैर्भगवानित्यादिनेति शेषः ॥ **तावदिति** । पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्येति भावः ॥ **प्रज्ञानामस्विति** । एकाक्षरनिघण्टाविति शेषः । ननु जैव्युपादानमिति जैव्या उपादानत्वमुच्यते तदयुक्तम् । **तस्य कारणविशेषत्वेन तत्सिद्ध्युत्तरकालमेव चिन्तनीयत्वेन कारणत्वासिद्धौ** तत्कथनस्यासम्भवदुक्तिकत्वादित्यत आह **मायाया इति ॥ वक्ष्यत इति** । 'निर्मितं त्रातमेव च, ताभ्यां सह पृथक् चैवे'त्यादिनाऽनुपदमेवेति शेषः । ऐश्वर्या मुख्यत्वोक्तेरानर्थक्यमाशङ्क्य तत्तात्पर्यमाह **प्रज्ञाशब्दश्चेति ॥ वक्ष्यतीति** । 'प्रज्ञात्मकं मनो येने'त्यादिनेति शेषः ।

**स०** — ननु जैव्युपादानमित्ययुक्तं उपादानत्वस्य कारणविशेषत्वेन तस्यैवासिद्धौ तद्विशेषचिन्ताऽयोगादित्यत आह **मायाया इति** । 'संस्कारैर्भगवानेव सृष्ट्वा' 'सृष्ट्वैव वासनाभिश्च प्रपञ्चं स्वप्नमीश्वर' इत्यादिना वक्ष्यत इत्यर्थः ॥ **वक्ष्यतीति** । 'प्रज्ञात्मकं मनोऽस्त्येव मनोरूपाश्च वासना' इत्यादिनेति शेषः ।

**प०** — उत्तरवाक्यं सङ्गमयितुमाह **मायाया इति** ॥ **वक्ष्यत इति** । 'निर्मितं त्रातमेव च ताभ्यामित्यत्रेति भावः । मुख्येत्युक्तेरुपयोगं वक्तुमाह **प्रज्ञाशब्दश्चेति** । 'प्रज्ञात्मकं मनो येन मनोरूपाश्च वासना' इत्यत्र वक्ष्यत **इत्यर्थः** ॥ **तच्चेति** । मायाशब्दस्य वासनेश्वरप्रज्ञोभयपरत्वव्याख्यानमित्यर्थः ।

**या०** — **वक्ष्यत इति** । 'निर्मितं त्रातमेव च ताभ्यामि'त्यत्रेति शेषः । मुख्येत्यस्य सार्थक्यं वक्तुमाह **प्रज्ञाशब्दश्चेति** । 'प्रज्ञात्मकं मनो येने'त्यत्रेति **शेषः** । **तच्च व्याख्यानमिति** । मायाशब्दस्य प्रज्ञावासनोभयपरत्वेन व्याख्यानं नोभयत्र समानमित्याशयेनेत्यर्थः ।

**श्री०** — **तच्चेति** । लक्षणया व्याख्यानमित्यर्थः ॥ **उभयेति** । जीववासनेश्वरप्रज्ञेत्यर्थः ।

**सु०** — **मायामात्रपदं व्याख्याति** निर्मितमिति ।

अनु० — निर्मितं त्रातमेव च ॥

**ताभ्यामेवेति संबन्धः । तेन तुशब्दो** व्याख्यातो **भवति** । **यथासंख्येनान्वयपरिहारार्थमुक्तं** सह पृथगेवेति । **चशब्दस्तस्मादित्यर्थे** । **ईर्यते** सन्ध्य**मिति शेषः** । **सह पृथगित्युक्तं विवृणोति** उभाभ्यामिति ।

ताभ्यां सह पृथक् चैव मायामात्रमितीर्यते ॥
उभाभ्यां मातमैश्वर्यात् त्रातं सह पृथक् ततः ॥

**जीवेश्वरप्रज्ञाभ्यां मातं निर्मितमैश्वर्या प्रज्ञया त्रातं यस्मात्ततः सह पृथगित्युक्तम्** । **धातुसमुदायादातोऽनुपसर्गे क इति कः** । **अदिभूभ्यां** डुतजिति **यथा** । **यद्यप्येकस्मादेव** धातोस्तत्प्रत्ययः शक्यः **कर्तुम्** । तथाऽप्यधिकार्थलाभायैवं **कृतम्** । **सौत्रत्वान्निर्देशस्य कर्मणि प्रत्ययः** । **घञर्थे कविधानमिति** वा । **नन्विदं पूर्वापरविरुद्धम्** । **पूर्वं हि जीववासनोपादानकं सन्ध्यमित्युक्तम्** । **इदानीं तु प्रज्ञोपादानकमिति** । **मैवम्** । **प्रज्ञाशब्द( स्यापि वा )स्य वासनोपलक्षणत्वात्** ।

**शे०** — चैवशब्दयोर्विरुद्धार्थकत्वादेकत्रान्वयानुपपत्तेश्चशब्दस्य यथास्थितं संबन्धमङ्गीकृत्यैव-शब्दं भिन्नक्रमतया योजयति **ताभ्यामेवेति** ॥ **तुशब्द इति** । सौत्र इति शेषः ॥ **व्याख्यातो भवतीति** । अतो न भाष्यस्थैवशब्दस्योत्सूत्रत्वमिति भावः ॥ **यथासंख्येनेति** । जैव्या निर्मितमैश्वर्या त्रातमिति यथासंख्येनेत्यर्थः ॥ **विवृणोतीति** । अतो न तस्य वैयर्थ्यमिति भावः ॥ **धातुसमु-दायादिति** । मा निर्माणे त्रैङ् पालन इति धातुद्वयादित्यर्थः ॥ **क इति** । यद्यपि त्रैङ् पालन इत्यस्य नादन्तत्वं तथाऽप्यादेच उपदेशेऽशितीति कृतात्वस्यादन्तत्वाद्युक्त स्तन्निबन्धनः कप्रत्यय इति भावः । ततश्चोक्तधातुद्वयान्मीयते त्रायत इति कर्म'ण्यातोऽनुपसर्गे क' इति कप्रत्यये 'आतो लोप इटि चे'ति द्वितीयधात्वाकारलोपे मात्रशब्दनिष्पत्तिरिति द्रष्टव्यम् । ननु कथं धातुद्वयादेकः प्रत्ययो व्याख्यायते । परश्चेति सूत्राद्धातोरिति पञ्चम्या च प्रत्ययस्य धात्वव्यवहितपरताया एव प्राप्तत्वात्तस्मादित्युत्तरस्येत्यत्र नैरन्तर्येणोच्चारणार्थकनिर्दिष्टग्रहणानुवृत्त्या पञ्चमीनिर्दिष्टादव्यवहितोत्तरमेव कार्यं भवतीति विज्ञानात् । न हि धातुद्वयात्प्रत्ययोत्पत्तावव्यवहितपरत्वं संभवति । मध्ये धात्वन्तरेण व्यवधानात् । धातोरित्ये-कवचनादपि न धातुद्वयादेकप्रत्ययोत्पत्तिरिति लाभाच्च । विधायकोदाहरणयोरनुपलम्भाच्चेत्यत आह **अदिभूभ्यां डुतजिति यथेति** । अद्भुतमित्यत्राद्यते भूयते तदद्भुतमिति अद भक्षणे भू सत्तायामिति धातुद्वयात् डुतच्प्रत्यये द्वितीयधातोष्टिलोपे च सत्यद्भुतमिति रूपनिष्पत्तिर्यथेत्यर्थः । यदत्र वक्तव्यं तदानुमानिकपाद एवोक्तं तत एव च प्रतिपत्तव्यम् ॥ **एकस्मादेवेति** । मीयत इति कर्मणि माधा-

---

तोस्त्रप्रत्ययेऽपि मात्रमिति सिध्यतीत्यर्थः ॥ **अधिकेति** । तथा सति निर्मितत्वमात्रलाभेऽपि त्रातत्वा-लाभाद्धातुद्वयात्प्रत्ययाभ्युपगमे च तदुभयलाभादर्थाधिक्यमित्यर्थः । ननु 'आतोऽनुपसर्गे क' इत्यनेन कर्तरि कप्रत्ययविधानाद्गोद इति तथैवोदाहरणाच्च कथमत्र कर्मणि तेन कप्रत्ययः स्यादित्यतश्छन्दोव-त्सूत्राणि भवन्तीति सूत्राणां छन्दःकल्पत्वस्य 'व्यत्ययो बहुलमि'ति छन्दसि सर्वविधीनां बाहुलकत्वस्य चोक्तत्वाद्युक्तोऽत्र तेन कर्मणि कप्रत्यय इत्याशयेनाह **सौत्रत्वादिति** । कर्मणीत्युपलक्षणम् । कर्मण्य-नुपपदेऽपीत्यपि द्रष्टव्यम् । अन्यथा कर्मण्युपपद एव कप्रत्ययस्य तेन विधानात्प्रकृते च तदभावात्तेन कप्रत्ययप्राप्त्यनुपपत्तेरिति भावः । आतोऽनुपसर्गे क इत्यत्रानुपसर्गपदस्येव कर्मणीत्यस्याश्रवणाद्वृत्ताव-प्यनुपसर्गे क इत्यस्येव कर्मणीत्यस्य प्रत्युदाहरणानुक्तेश्च तदनुवृत्तेरनावश्यकत्वाद्युक्तस्तदभावेऽप्यत्र कप्रत्यय इत्याहुः । अत्र पक्षे सौत्रत्वाद्याश्रयणीयं भवतीत्यपरितोषात्पक्षान्तरमाह **घञर्थ इति** । घञर्थे कविधानं स्थास्नापाव्यधिहनियुद्ध्यर्थमिति ग्रहवृदृनिश्चिगमश्चेत्येतत्सूत्रीयवार्तिके घञर्थे कविधानात्कर्मणोऽपि घञर्थ-त्वाद्धातुद्वयात्कर्मणि कप्रत्ययो युक्त इति भावः । न च स्थास्नादिष्वपाठात्कथमत्र तेनापि कप्रत्ययः स्यादिति वाच्यम् । पाठमूलभूतशिष्टप्रयोगानुरोधेन पाठोऽपि तत्र कार्यः । अन्यथाऽतिप्रसङ्गादित्यत्र तात्पर्यात् । टीकायां प्रज्ञात्मकं प्रज्ञोपादानमित्येव मूलपाठः स्वरसश्च । चिरन्तनकोशेषु दर्शनात् ।

स०— **यथासंख्येनेति** । जैञ्या निर्मितं ऐश्वर्या त्रातमिति यथासंख्येनेत्यर्थः ॥ **धातुसमुदायादिति** । माङ्माने त्रैङ्पालने इति धातुसमुदायादित्यर्थः । ननु धातुसमुदायादेकः प्रत्ययो न दृष्टस्तत्राह **अदिभूभ्यामिति** । अद्भुतमित्यत्र अद्यते भूयते तदद्भुतमिति धातुसमुदायाद्यथैकः प्रत्ययः तद्वदित्यर्थः ॥ अदिभूभ्यामित्यस्यैव मूलकोशे वृत्त्यन्तरे दर्शनात् । अदिभुवो डुतजिति पाठः कल्पित एव । अत एव निघण्टुभाष्ये धातुसमुदायात्प्रत्ययो बहुषु स्थलेषु व्याख्यातः । तथा निरुक्तकारेणापि अग्निशब्दव्याख्यानावसरे अक्ति दहति नयति इत्यग्निरिति धातुसमुदायात् डिप्रत्ययस्याङ्गीकृतत्वाच्चेति द्रष्टव्यम् ॥ **एकस्मादिति** । माधातोः त्रप्रत्यये मात्रमिति सिध्यतीत्यर्थः । नन्वातोऽनुपसर्गे क इत्यनेन कर्तरि कप्रत्ययविधानात् गोद इति तथैवोदाहरणात् कथं मीयते त्रायते इति कर्मणि कप्रत्यय इत्यत आह **सौत्रत्वादिति** । यद्यपि कर्मण्युपपदेऽनेन कप्रत्ययविधानात् मायामात्रमित्यत्र कर्मोपपदाभावेन तत्प्राप्तिर्नास्ति तथापि कर्मरूपोपपदाविवक्षयेत्युक्तमिति ज्ञातव्यम् । यद्वातोनुपसर्गे क इत्यत्रानुपसर्गपदस्येव कर्मणीत्यस्याभावात् वृत्तावनुपसर्ग इत्यस्येव कर्मणीत्यस्य प्रत्युदाहरणस्यानुक्तत्वाच्च कर्मणीत्यस्यानुवृत्त्यनावश्यकत्वात् कप्रत्ययोपपत्तिरिति बोध्यम् । अस्तु वा कर्मणीत्यनुवृत्तिः तथापि न दोष इत्याह **घञर्थ इति** । ग्रहवृदृनिश्चिगमश्चेत्यत्र घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थमिति वार्तिकादिति ज्ञेयम् । न च स्थादिष्वस्याभावान्न तेनापि कप्रत्ययः । तत्रास्याप्युपसंख्येयत्वात् । तन्मूलभूतविशिष्टप्रयोगस्यात्राप्यविशिष्टत्वादित्यत्र तात्पर्यात् ।

प०— **तेन तुशब्दो व्याख्यात इति** । मायामात्रं त्विति सौत्रः तु शब्द एवकारार्थो व्याख्यात इत्यर्थः ॥ **धातुसमुदायादिति** । मा निर्माणे त्रैङ् पालन इति धातुद्वयादित्यर्थः ॥ **आत इति** । आकारान्तेभ्य उपसर्गासहकृतेभ्यो धातुभ्यः कर्मण्युपपदे कप्रत्ययो भवतीति सूत्रार्थः । धातुद्वयात्सहप्रत्ययोत्पत्तौ औणादिकं सूत्रं निदर्शयति **अदिभूभ्यामिति** । ननु कर्मण्युपपदे कर्त्रर्थे च कप्रत्ययविधानात गोदः कंबलद इति तथैवोदाहरणाच्च । प्रकृते च नोपपदं कर्म, नापि कर्ताऽत्र प्रत्ययार्थः । किन्तु कर्म । तत्कथमत्र तेन कप्रत्ययः । तस्य कर्तर्येव विधानादित्यत आह **सौत्रत्वान्निर्देशस्येति** । मायामात्रमितिनिर्देशस्येत्यर्थः । उपलक्षणमेतत् । कर्मकारकोपपदाभावेपीति योज्यम् । सूत्राणां छन्दस्तुल्यत्वात्तत्र सर्वविधीनां बाहुलिकत्वादिति भावः । इति वेत्यनन्तरं कप्रत्यय इति शेषः । 'अकर्तरि च कारके संज्ञायामि'ति सूत्रे कर्तृव्यतिरिक्तकारकं हि घञर्थ उक्तः, तस्मिन्नर्थे इत्यर्थः । तथाच त्रैङ् धातोः कप्रत्यये परतः आदेच उपदेशेऽशितीति आकारादेशे लशक्वतद्धित इति प्रत्ययककारस्य आतो लोप इटि चेति धात्वाकारस्य च लोपे मात्रमिति रूपमिति भावः ।

**या०— धातुसमुदायादिति** । माङ् माने त्रैङ् पालन इति धातुद्वयादित्यर्थः ॥ **आतोऽनुपसर्गे इति** । द्वितीयधातोर'घ्यादेच उपदेशेऽशिती'त्यनेनात्वे आकारान्तत्वमित्यवगन्तव्यम् । **कप्रत्यये** आतो लोप इटि चेति द्वितीयधात्वाकारलोपे मात्रमिति रूपमिति भावः । ननु धातुद्वयादेकः प्रत्ययो न क्वापि दृष्ट इत्यत आह **अदिभूभ्यामिति** । अद भक्षणे भूसत्तायामिति धातुभ्यां डुतच्प्रत्ययो भवतीत्युणादिसूत्रार्थः । अद्भुतमित्यत्रोदाहरणम् । अत्रादिभुवो द्रुतजिति पाठकल्पनमज्ञानमूलमिति प्रथमाध्याय एवोक्तम् । ननु गोद इत्यादौ कर्तर्येव कप्रत्ययदर्शनात्कथमत्र स कर्मणीत्यत आह **सौत्रत्वादिति** । छन्दोवत्सूत्राणि भवन्तीति सूत्राणां छन्दःकल्पत्वस्य 'बहुलं छन्दसी'ति छन्दसि सर्वविधीनां बाहुलिकत्वस्य चोक्तत्वादिति भावः । **घञर्थ इति** । घञर्थश्च कर्मापि भवतीति भावः ।

**श्री०— तुशब्दः सौत्रः ॥ व्याख्यात इति** । अवधारणार्थतयेत्यर्थः ॥ **यथासंख्येनेति** । 'जैव्युपादानमेव सा निमित्तमैश्वरी'त्युक्तत्वान्निर्मितं त्रातमेव चेत्यत्र जीववासनया निर्मितमैश्वर्या त्रातमित्यन्वयः प्रतीयते । तथात्वे ईश्वरप्रज्ञया निर्मितत्वाप्राप्त्या तन्निर्मितत्वप्रतिपादकश्रुत्यादिविरोधः स्यादित्यर्थः ॥ **विवृणोतीति** । 'स्वपदानि च वर्ण्यन्त' इत्युक्तभाष्यलक्षणसंरक्षणायेत्यर्थः ॥ **क इति** । कर्मणि कप्रत्यय इत्यर्थः ॥ **एकस्मादेवेति** । मा निर्माण इत्यस्मादेव ॥ **अधिकार्थेति** । त्रातमित्यर्थलाभायेत्यर्थः । पूर्वं 'वासनाः सर्ववस्तूनामि'त्यादिना ।

**च०— धातुसमुदायादिति** । मानिर्माणे त्रैङ्पालन इति धातुद्वयादित्यर्थः । **क इति** । त्रैङ् उपदेशेऽनदन्तत्वेप्यादेच उपदेश इति योगेन कृतात्वस्य तथाविधतया तन्नियन्त्रितः कप्रत्ययः सङ्गच्छत इति भावः । तथा च दर्शितधातुद्वयप्रकृतिककर्मसाधनोक्तप्रत्यये अतो लोप इटि चेति द्वितीयप्रकृत्यंशाकारलोपे मात्रमिति रूपं निष्पद्यत इति ध्येयम् । अथ तस्मिन्निति निर्दिष्ट इति पूर्वयोगघटकनिर्दिष्टांशस्य तस्मादित्युत्तरस्येत्युत्तरयोगेऽनुषञ्जनान्निःशब्दस्य नैरन्तर्यपरत्वादिशेरुच्चारणक्रियत्वाद्धातोरिति पञ्चम्या परश्चेति सूत्रितपरपदेन च प्रत्ययस्य धात्वन्त्यव्यवहितपरतैवालभिप्रेति । धात्वन्तरेण व्यवहिततया धातोरित्येकवचननिर्देशात् धातुद्वयप्रकृतिकैकप्रत्ययविधायकानुशासनविरहेण च न तदुभयप्रकृतिकैकप्रत्ययोत्पादोपगतिर्युज्यत इत्याशङ्कायामाह **अदिभूभ्यामिति** । अद्भुतमित्यत्र अद्यते भूयतेतदद्भुतमित्यदभक्षणे भू सत्तायामिति धातुद्वयाड्डुतच्प्रत्यये द्वितीयधातोष्टिलोपेद्भुतमिति रूपनिष्पत्तिर्यथेत्यर्थः । अत्र 'अदिभुवो डुतजि'ति नव्यदिशा पाठमुपेत्य प्रकृतग्रन्थासामञ्जस्यचिन्तनमसमञ्जसमेवेति समन्वयाध्याय एव स्फुटीकृतम् । नन्वत्रानुपसर्गे इति योगं कर्तृसाधनकप्रत्ययविधायकतयैव व्याचख्युरुदाजन्हुः च गोदः

कंबलद इत्यादीन्येवेति कर्मसाधनतादृशप्रत्ययान्ततया व्याख्या न सङ्गच्छत इत्याशङ्कायां छन्दोवत्सूत्राणीति सूत्राणां छन्दःकल्पतया छन्दसि बाहुलिकाश्रयणेन कर्मसाधनकप्रत्ययान्तताश्रयणमुपपद्यत इत्याह **सौत्रत्वादिति** । अगतिकेयं समाहितिरिति कल्पान्तरमाश्रयते **घञर्थ इति** । ग्रहवृदृनिश्चिगमश्चेतिसूत्रीयघञर्थेकविधानं स्थास्नापाव्यधिहनियुध्यर्थमिति वार्तिके कर्त्रन्यकारकरूपघञर्थे कप्रत्ययस्य विहिततया शिष्टप्रयोगानुरोधेन स्थादिषु पाठोऽप्युपेय इति सामञ्जस्यमिति भावः ।

**सु०—अथ प्रज्ञाया वासनायाश्च कः संबन्धो येन लक्षणा स्यादित्यत आह** प्रज्ञात्मकमिति ।

**अनु०—** प्रज्ञात्मकं मनो येन मनोरूपाश्च वासनाः ।

येन **कारणेन मनः** प्रज्ञात्मकं **प्रज्ञोपादानं,** वासनाश्च मनोरूपा **मनउपादानकाः तेनैतयोरेककारणत्वलक्षणसंबन्धेन लक्षणोपपद्यत इति शेषः । प्रज्ञावासनयोर्मन उपादानमित्येतत्कुत इत्यत आह** धीरिति ।

धीर्भीरिति मनस्त्वेवेत्याह च श्रुतिरञ्जसा ॥

**श्रुताविति शब्द आद्यर्थः । तेन वासनाया अपि मनोविकारत्वं लभ्यते । इति त्विति संबन्धः । इति श्रुतिश्चशब्दादन्या चाह प्रज्ञादेर्मनोविकारत्वम् ।** अञ्जसा **स्पष्टम् । एतेनात्मकार्यत्वं वदन्तो निरस्ता भवन्ति । बाह्यार्थज्ञानस्य तदानीमभावादसतश्चोपादानत्वानुपपत्तेः मुख्यार्थत्यागः । यदि च वासनामात्रमिति मुख्य एव प्रयोगः क्रियेत तदेश्वरप्रज्ञा न संगृहीता स्यात्पृथगुभयग्रहणे च गौरवं स्यात् । अतो मुख्यामुख्यविवक्षयोभयस्य लाघवेन ग्रहणाय मायामात्रमित्युक्तम् । अत एव मायैव मायामात्रमिति न व्याख्यातम् । सन्ध्यस्य निमित्तकारणभूतयेश्वरप्रज्ञया तादात्म्याभावात् ।**

**शे०—** नन्वस्यां श्रुतौ वासनां प्रति मनस उपादानत्वाकथनात्तदुदाहरणं प्रकृतासङ्गतमित्यत आह **इतिशब्द आद्यर्थ इति ॥ एतेनेति ।** श्रुत्या वासनादीनां मनःकार्यत्वस्य सिद्धत्वेन तद्विरोधान्न वासनादीनामात्मकार्यत्वमिति भावः । लक्षणाबीजभूतमुख्यार्थानुपपत्तेः स्पष्टत्वान्मूले तदनुक्तिरित्यभिप्रेत्य तामाह **बाह्यार्थेति** । (मायापदस्य वासनालक्षकत्वं कुतः । मुख्यार्थः प्रज्ञैवास्त्वित्यत आह **बाह्यार्थेति** । ननु प्रज्ञाशब्देन वासनां लक्षयित्वा तस्या उपादानत्वं किमर्थमुच्यते । प्रज्ञाशब्दमुख्यार्थभूतबाह्यार्थज्ञानस्यैवोपादानत्वं किन्न स्यादिति चेत् । न । स्वप्नावस्थायां बाह्यपदार्थविषयकज्ञानस्यैवाभावादित्याह **बाह्यार्थज्ञानस्येति**) । ननु लक्षणाभ्युपगमे प्रयोजनाभावात्स्वायत्तन्यायविरोध इत्यत आह **यदि चेति । गौरवं स्यादिति ।** ततश्चाल्पाक्षरत्वरूपसूत्रलक्षणहानिः । श्रुत्याऽर्थाद्वा ज्ञायमानस्यार्थस्यानुक्तेरेव

तत्त्वेनाभिप्रेतत्वादिति भावः ॥ **अत एवेति** । मुख्यामुख्यविवक्षया लाघवेनोभयलाभाय मायाशब्दस्य प्रयुक्तत्वादेवेत्यर्थः । जैववासनामात्राभिप्रायकत्वे तूपादानभूतजीवप्रज्ञया तस्याभेदेऽपि निमित्तभूतेश्वर-प्रज्ञया तदभावात् । तथाऽव्याख्यानमुपपद्यते इति भावः ।

**प०**— ननु धियः श्रुतावुपादानादस्तु तस्या एव मनउपादानत्वं न वासनायाः तस्याः श्रुता-वनुपादानादित्यत आह **श्रुताविति** ॥ **इतिशब्द इति** । 'इत्येतत्सर्वं मन एवे'त्यत्रत्य इति भावः ॥ **एतेनेति** । मनःकार्यत्वकथनेन ॥ **वदन्त इति** । तार्किका इत्यर्थः । मायापदस्य वासनालक्षकत्वं कुतः । मुख्यार्थः प्रज्ञैवास्त्वित्यत आह **बाह्यार्थेति** । सूत्रकृतोऽनौचित्यमाशङ्क्य समाधत्ते **यदि चेत्यादिना** ॥ **पृथगुभयेति** । प्रज्ञावासनामात्रमित्युभयग्रहण इत्यर्थः ।

**या०** — **एतेनेति** । श्रुतिविरोधेन प्रज्ञादेरात्मकार्यत्वं वदन्तो वैशेषिकादयो निरस्ता भवन्ती-त्यर्थः ॥ **क्रियेतेति** । सूत्रकृतेति शेषः ।

**श्री०** — **एककारणकत्वेति** । एकोपादानकत्वेत्यर्थः । **तेन** आद्यर्थकेन श्रौतेतिशब्देन । इति त्वित्यस्यापि श्रुतिरित्यनेन संबन्ध इत्याह **इति तु श्रुतिरिति** ॥ **अन्या चेति** । सा च 'मनो-गतांस्तु संस्कारानि'ति भाष्योदाहृता द्रष्टव्या । ननु प्रज्ञाशब्देन वासनां लक्षयित्वा तस्या उपादानत्वं किमर्थमुच्यते । प्रज्ञाशब्दमुख्यार्थभूतबाह्यार्थज्ञानस्यैवोपादानत्वं किं न स्यादिति चेत् न । स्वप्नाव-स्थायां बाह्यपदार्थविषयकज्ञानस्यैवाभावादित्याह **बाह्यार्थज्ञानस्येति** ॥ **उभयस्य ईश्वरप्रज्ञाजीववासना-**रूपोभयस्य । युगपद्वृत्तिद्वयं तु गङ्गायां मीनघोषावित्यत्रेवाविरुद्धमिति द्रष्टव्यम् ॥ **अत एवेति** । उभयग्रहणार्थमेव । यदि जीववासनैव गृहीता विवक्षिता स्यात्तर्हि केवलं मायैव मायामात्रं सन्ध्य-मिति व्याख्यायेत । स्वाप्नार्थस्य मायाशब्दोक्तवासनात्मकत्वसंभवेन दोषाभावात् । अत ईश्वरप्रज्ञा-संग्रहार्थैवं न व्याख्यातम् । ननु मायाशब्देनेश्वरप्रज्ञां गृहीत्वा सन्ध्यं मायामात्रमीश्वरप्रज्ञैवेति तदा-त्मकत्वेनापि व्याख्यानसंभवादित्यत आह **सन्ध्यस्येति** ।

**सु०** — **ननु प्रज्ञावासनयोरस्ति कार्यकारणभावः संबन्धः । स एव लक्षणाबीजमस्तु । किं द्वयोर्मनःकार्यत्ववर्णनेनेत्यत** आह चिदिति ।

**अनु०** — चिदचिन्मिश्रमेवैतन्मनो यावच्च संसृतिः ।
तेनावस्था इमास्सर्वा जीवः पश्यति सर्वदा ॥

**न केवलं स्वप्नं किन्त्विमाः सांसारिकीः सर्वा अप्यवस्थास्तेन मनसैव सर्वदा जीवः पश्यति । अतः प्रधानत्वात्तद्द्वारक एव संबन्ध आदरणीयो नापरः । मनश्च केचन जडमेव मन्यन्ते । अपरे त्वचेतनमेवारोपितचैतन्यम् । तन्निरासेन स्वरूपं कथयति** चिदचिन्मिश्रमेवेति ।

**यदित्यध्याहार्यम् । केवलमचेतनस्य घटादिवदेवम्भावासंभवाच्चैतन्यारोपस्य निराकृतत्वाच्चिदचिन्मिश्रमेवाङ्गीकार्यम् । भवन्ति चात्रागमाः । यदि मनसा सर्वावस्थाप्राप्तिस्तदा मोक्षेऽपि तस्य भावा(दव)देवावस्थास्स्युरित्यत उक्तं यावत्संसृतिस्तावदेव जीवस्योपकारापकारौ करोतीति । कात्स्न्येनानभिव्यक्तस्वरूपत्वादिति व्याख्याति** मनोविकारा इति ।

मनोविकारा विषयाः स्वाप्ना यद्वद्बाह्यवन्न ते ॥

स्थूला भवन्त्यतस्तेषां स्पष्टता न तथा क्वचित् ॥

**यद्यस्मात्स्वाप्ना विषया मनोजन्यवासनाविकारा अत एव हि ते** बाह्यवत् स्थूलाः न भवन्ति **संवृते देशेऽवकाशानर्हा न भवन्ति । तेषां तथा** बाह्यवत्क्वचित्स्पष्टता **बाह्यार्थक्रियाकारिता नास्ति । यद्वा यस्मात्ते बाह्यवत्स्थूला न भवन्ति तथा तेषां क्वचित्स्पष्टता नास्त्यतः स्वाप्ना विषया मनोविकारा इति योजना । यथा चैतत्तथोक्तं पुरस्तात् ।**

**शे०— सर्वावस्था इति ।** एतच्च ऋजुरूपजीवविशेषाभिप्रायेणोक्तम् । **न तु** जीवमात्राभिप्रायेण । जीवमात्रस्य सुषुप्तिप्रलययोर्मनोवृत्तिज्ञानासत्त्वादिति सम्प्रदायः । 'सर्वेभ्यः कामेभ्य' इत्यादाविवेहापि सर्वशब्दः सङ्कुचितवृत्तिः । ततश्च सुषुप्तिप्रलयव्यतिरिक्ता अवस्था एव सर्वावस्थात्वेनाभिमता इत्यर्थ इत्यप्याहुः ॥ **एवम्भावासंभवादिति ।** क्रियात्मकत्वं क्रियाकारणत्वं क्रियाकर्मभूतपादार्थोपादानवासनोपादानत्वं सर्वावस्थाप्रदर्शकत्वमित्येवंरूपस्य भावस्यान्यत्रादर्शनेनासंभवादित्यर्थः ॥ **निराकृतत्वादिति ।** जिज्ञासासूत्रे 'कथं च भेदो देहादेरात्मनो न प्रतीयत' इत्यादिनाऽस्मिन्नधिकरणे चेति शेषः । **आगमा इति ।** 'चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामन्यदैव तु । तान्येव जडयुक्तानि ह्यभिन्नानि स्वरूपत' इत्याद्या इति शेषः । ननु सूत्रकृता कात्स्न्र्येनानभिव्यक्तस्वरूपत्वेन स्वाप्नार्थानां मनोविकारत्वस्य साधितत्वाद्भाष्यकारेणापि तथैव साधनं कर्तव्यम् । तत्कथं मनोविकारत्वेन कात्स्न्र्येनानभिव्यक्तस्वरूपत्वस्य साधनमित्यतोऽत्र भाष्ये न यथाश्रुत एव साध्यसाधनभावोऽभिमतः । किन्तु वन्हिमानेव धूमवानित्यादिवत्सूत्रानुसारेणैवेत्याशयेन व्याचष्टे **यद्यस्मादिति ।** सूत्रभाष्ययोरैकार्थ्याय पक्षान्तरमाह **यद्वेति ॥ पुरस्तादिति ।** 'जाग्रद्वत्स्पष्टता न चे'त्यादिनेति शेषः ।

स० — ननु श्रुतौ वासनां प्रति मनस उपादानत्वकथनात् कथमेतच्छ्रुत्युदाहरणमित्यत आह **आद्यर्थ इति ॥ भवन्ति चात्रागमा इति ।**

प० — इदंशब्दप्रयोगतात्पर्यमाह **सांसारिकीरिति ॥ केचनेति ।** तार्किकादयः ॥ **अपरे त्विति ।** मायावादिप्रमुखाः । तेनेतिश्रवणादाह **यदित्यध्याहार्यमिति ॥ एवंभावेति ।**

'कामः संकल्प आनन्द' इत्यादिप्राक्तनश्रुत्युक्तकामाद्यात्मकत्वसर्वावस्थाप्रदर्शकत्वमित्येवंरूपभावस्यासंभवादित्यर्थः ॥ **निराकृतत्वादिति** । कथं च भेदो देहादेरात्मनो न प्रतीयत' इत्यादौ निराकृतत्वा(चेत्य)दित्यर्थः ॥ **भवन्ति चात्रागमा इति** । 'चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामन्यदैव तु । तान्येव जडयुक्तानि ह्यभिन्नानि स्वरूपत' इति द्वितीयस्कन्धतात्पर्यादौ तत्र तत्रोक्ता ध्येया इति भावः । यावत्संसृति मनसोऽवस्थाने युक्तिमाह **तावदेवेति** । ततः परं कृत्याभावान्नेति भावः । मनोविकारा इत्येतत्परंपरयेत्युपेत्य व्याचष्टे **मनोजन्येति** । अनुभवोत्पन्नेति योज्यम् । उद्देश्यविधेयव्यत्यासेन योजनान्तरमाह **यद्वेति** ॥ **पुरस्तादिति** । 'वासनामात्रमूलत्वाज्जाग्रद्वत्स्पष्टता न चे'त्यादिग्रन्थव्याख्यावसर इति भावः ।

**या०— सर्वा अप्यवस्था इति** । सुप्तिप्रलयव्यतिरिक्ता इति केचित् । ऋजुरूपजीवविशेषाभिप्रायेणेदमित्यन्ये । वस्तुतस्त्वत्रावस्थाशब्द उपकारापकारपरः । ततश्च तेन मनसा जीवः **सर्वा** अवस्थाः सर्वानुपकारापकारांश्च पश्यति प्राप्नोतीत्येवार्थः । अत एव वक्ष्यत्युपकारापकाराविति ॥ **एवम्भावेति** । सर्वावस्थाप्रदर्शकत्वासम्भवादित्यर्थः ॥ **निराकृतत्वादिति** । 'कथं च भेदो देहादेरात्मनो न प्रतीयते इत्यत्रेति शेषः ॥ **भवन्ति चात्रेति** । 'चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामन्यदेव तु । तान्येव जडयुक्तानि ह्यभिन्नानि स्वरूपत' इत्यादय इति शेषः ॥ **पुरस्तादिति** । 'वासनामात्रमूलत्वाज्जाग्रद्वत्स्पष्टता न चे'त्येतद्व्याख्यावसर इत्यर्थः ।

**श्री०— एवंभावस्येति** । सर्वावस्थाप्रवर्तकत्वादेरित्यर्थः ॥ **अत एव हीति** । वासनाविकारत्वादेव हीत्यर्थः ॥ **यद्वेति** । यच्छब्दस्य मनोविकारा इत्यनेन सम्बन्धं कृत्वा वन्हिमत्त्वादेव धूमवत्त्वमित्यादाविव स्थूलत्वाभावस्पष्टत्वाभावयोर्मनोविकारित्वे हेतुत्वं लभ्यत इति पूर्वं व्याख्यातम् । इदानीं तु यस्माद्धूमवानतो वन्हिमानितिवद्यच्छब्दस्य स्थूलत्वाभावस्पष्टत्वाभावरूपहेतुभ्यामेव सम्बन्धं कृत्वा मनोविकारित्वमेव स्पष्टं साध्यमिति व्याख्यायत इति भेदः । प्रमेयं त्वेकमेवेति ज्ञातव्यम् । **पुरस्तात्** 'वासनास्सर्ववस्तूनामि'त्यादिना ।

**च०— पुरस्तादिति** । वासनामात्रमूलत्वादित्यादिप्रतीकव्याख्यावसर इति भावः ।

**सु०— ननु (च) स्वाप्नकामिनीसम्भोगादेश्श्रमधातुविसर्गादिबाह्यार्थक्रियाकारितादर्शनाद्बाह्यासिद्धिरित्यत आह क्वचिदिति ।**

**अनु०— क्वचित्स्पष्टा अपि ह्युष्टे**

ते स्वाप्ना विषयाः क्वचित्स्पष्टा अपि स्युरेव । तथाऽपि तदतिरिक्तपक्षीकरणेनादोष इति भावः । एवं तर्हि तस्यांशस्य वासनामयत्वं न स्यादित्यत आह वासनेति ।

वासना मानसी च सा ॥ ३-२-१ ॥

सा च मानसी वासना सिद्धा । अस्पष्टताऽभावेऽप्यस्थूलत्वस्य सत्त्वादिति भावः । अत एव सौत्रो हेतुर्द्वेधा व्याख्यातः । तदनेन देशकालनिमित्तसंपत्तिः स्वप्ने नास्तीति यदुक्तं तद्वासनामयोक्त्या निरस्तम् । अत एव सृष्टिश्रुतेर्भाक्तत्ववर्णनमपास्तम् । प्राज्ञस्य निर्मातृत्वं च न वृथा त्याज्यम् । स्वयं विहृत्येत्याद्यपीश्वरविषयमन्यत्र व्याख्यातम् । स्वप्ननिर्माणे शुभाशुभयोगापत्तिरिति चासङ्गतम् । व्याप्त्यभावात् । जीवस्य ब्रह्मभावोपदेश इति च सार्वज्ञादेः पारमार्थिकत्वसमर्थनादयुक्तम् । वियदादिप्रपञ्चस्य मिथ्यात्वकथनं च तत्सत्यत्वोपपादनान्निरस्तम् ॥ ३-२-१ ॥

शे०— तर्हि भागासिद्धिः स्यादित्यत आह तथाऽपीति ॥ (द्वेधेति । 'बाह्यवन्न ते स्थूला भवन्तीति' ग्रन्थेन बाह्यार्थक्रियाकारित्वाभावात्संवृतदेशेऽनर्हत्वाभावादित्येवंरूपेणानभिव्यक्तस्वरूपत्वादिति द्वेधा व्याख्यात इत्यर्थः । ननु स्वाप्नकामिनीसंभोगादेर्वासनामयत्वसाधकमस्थूलत्वमुत्सूत्रितमिति चेत्तत्राह अत एवेति । उत्सूत्रत्वपरिहाराय द्वेधेति । यद्बाह्यवन्न ते स्थूला भवन्ति । तथा तासां स्पष्टता नेति द्वेधेत्यर्थः) ॥ सृष्टिश्रुतेर्भाक्तत्ववर्णनमिति । सुप्तो हि स्वप्नदर्शननिमित्तसुकृतदुष्कृतकर्तृत्वात् रथादीनां कर्तोच्यते इत्येवं भाक्तत्ववर्णनमित्यर्थः । ननु श्रुत्यन्तरे 'स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषे'ति जीवव्यापारश्रवणादेव प्राज्ञस्य निर्मातृत्वपरित्याग इति न तन्निर्मितत्वमित्यत आह स्वयं विहृत्येति । अन्यत्र बृहदारण्यकभाष्ये ॥ स्वप्ननिर्माण इति । 'प्राज्ञस्य स्वप्ननिर्मातृत्वे तस्य स्वाप्नपदार्थसूचितशुभाशुभयोगप्रसङ्गः । न हि प्राज्ञस्य शुभाशुभयोगोऽवकल्पते' इति यदुक्तं तदसङ्गतमित्यर्थः ॥ व्याप्त्यभावादिति । यो यस्य कर्ता स तत्कृतशुभाशुभयुक्त इति व्याप्तौ विष्टिगृहीतपुरुषेषु व्यभिचारादित्यर्थः । 'जीवस्य तदेव शुक्रमिति वाक्यशेषे जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते तत्त्वमसीत्यादिवदिति न ब्रह्मप्रकरणविरोध' इत्युक्तं दूषयति जीवस्येति ॥ पारमार्थिकत्वसमर्थनादिति । 'मिथ्याधर्मविधातुश्च वेदस्यैवाप्रमाणते'त्यादिनेति शेषः । 'वियदादिप्रपञ्चोऽप्यसत्य एवेत्युक्तमारम्भणाधिकरणे' इत्युक्तं दूषयति वियदादीति ॥ तत्सत्यत्वोपपादनादिति । जिज्ञासासूत्रादाविति शेषः ॥ ३-२-१ ॥

स०— व्याप्त्यभावादिति । यो यस्य कर्ता स तत्कृतशुभाशुभयुक्त इति व्याप्त्यभावात् । विष्टिगृहीतपुरुषे शुभाशुभकर्मकर्तृत्वेऽपि तत्कृतशुभाशुभयोगाभावादित्यर्थः ।

प० **भागासिद्धिरिति** । अनभिव्यक्तस्वरूपत्वादिति सौत्रहेतोरिति भावः । स्युष्ट इत्यत्र षत्वादिनिर्वाहस्तु 'अन्यापेक्षा यदि स्युष्ट' इत्यत्र दर्शित इति भावः ॥ **द्वेधेति** । 'बाह्यवन्न ते स्थूला भवन्ती'ति ग्रन्थेन बाह्यार्थक्रियाकारित्वाभावात्, संवृते देशेऽवकाशानर्हत्वाभावादित्येवंरूपेणानभिव्यक्त-स्वरूपत्वादितिहेतुर्द्वेधा व्याख्यात इत्यर्थः ॥ **इति यदुक्तमिति** । अपव्याख्यानानुवादप्रस्तावे उक्तं इत्यर्थः ॥ **अन्यत्रेति** । बृहद्भाष्ये षष्ठाध्याय इति भावः । अपव्याख्यानुवादावसरे 'अपरस्त्वेतदर्थमेव सूचकश्चेति सूत्रं व्याख्यातवानि'त्यनूदितं निराह **स्वप्ननिर्माणेत्यादिना** । प्राज्ञस्य स्वप्ननिर्मातृत्वे तस्य स्वप्नसूचितशुभाशुभयोगः स्यादित्यापादनमसङ्गतम् । लोके पुष्पवर्षरुधिरवर्षनिर्मातृषु देवेषु तदभावादिति भावः ॥ **पारमार्थिकत्वसमर्थनादिति** । पृथगुपदेशादित्यधिकरणानुव्याख्यान इति भावः ॥ **तत्सत्यत्वेति** । अत्रैव प्रकरणे पूर्वत्र च ग्रन्थेषु सत्यत्वोपपादनादित्यर्थः ॥ ३-२-१ ॥

या० — **अन्यत्रेति** । बृहदारण्यकभाष्य इत्यर्थः । 'अपरस्त्वेतदर्थमेव सूचकश्चेति सूत्रं व्याख्यातवानि'त्यादिनोक्तं तात्पर्यतोऽनूद्य दूषयति **स्वाप्ननिर्माण इति** । 'प्राज्ञस्य स्वाप्ननिर्मातृत्वे तस्य स्वाप्नपदार्थसूचितशुभाशुभयोगप्रसङ्गः । न हि प्राज्ञस्य शुभाशुभयोगोऽवकल्प्यत' इति यदुक्तं तदसङ्गतमित्यर्थः ॥ **व्याप्त्यभावादिति** । मृदङ्गबोम्बारवादिनिर्मातृषु तत्सूचितशुभाशुभयोगाभावस्य सत्त्वेन यो यन्निर्माता स तत्सूचितशुभाशुभयोगवानिति व्याप्त्यभावादित्यर्थः ॥ ३-२-१ ॥

---

श्री० — **भागासिद्धिरिति** । स्वाप्नाः पदार्थाः वासनोपादानकाः कात्स्न्येनानभिव्यक्तस्वरूप-त्वात् । बाह्यार्थक्रियाकारित्वाभावात् । अस्पष्टत्वादिति यावत् । तथा चास्य हेतोः स्वाप्नपदार्थैकदेशे स्वाप्नकामिनीसम्भोगादावसिद्धिरित्यर्थः ॥ **तथाऽपीति** । तथा च कात्स्न्येनानाभिव्यक्तस्वरूपत्वादित्य-स्यास्पष्टत्वं यदाऽर्थस्तदा कामिनीसम्भोगादिव्यतिरिक्तस्वाप्नपदार्थः पक्षीक्रियत इत्यर्थः । **तस्यांशस्य** स्वाप्नकामिनीसम्भोगादिरूपस्य । ननु तस्य वासनामयत्वादिसाधकहेत्वभाव इति चेत्तत्राह **अस्पष्टे-नेति** । ननु स्वाप्नकामिनीसंभोगादेर्वासनामयत्वसाधकमस्थूलत्वमुत्सूत्रितमिति चेत्तत्राह **अत एवेति** । उत्सूत्रितत्वपरिहाराय **द्वेधेति** । यद्बाह्यवन्न ते स्थूला भवन्ति । तथा तासां स्पष्टता **नेति** द्वेधेत्यर्थः ॥ **भाक्तत्ववर्णनमिति** । सुप्तो हीत्यादिनेति शेषः ॥ ३-२-१ ॥

च० — **सौत्रहेतुरिति** । सूत्रघटकपदबोध्यो हेतुरित्यर्थः ॥

**॥ इति सन्ध्य(स्वप्न)ाधिकरणम् ॥**



॥ अथ पराभिध्यानाधिकरणम् ॥

सु०— ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ ॥ परकृतस्वाप्नव्याख्यानतां प्रतिपादयितुं पराभिध्यानादिति सूत्रतात्पर्यमाह ईशेति ।

अनु०— ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ ॥

ईशेच्छयाऽन्तर्दधाति

सन्ध्यमिति शेषः । न केवलं स्वप्नः किन्तु तत्तिरोधानमपीश्वरेच्छाधीनमित्येष एवार्थोऽनेन सूत्रेणोच्यते नान्यः । जीवस्येश्वरांशतया अप्रामाणिकत्वस्य द्वितीयेऽभिहितत्वात् । न च ज्ञानैश्वर्यशक्ती ब्रह्मणस्तात्त्विकतया परेणाङ्गीकृते । किञ्च देहयोगात्तिरोहितमित्येतावताऽलम् । अन्यदसङ्गतमेव । किञ्च देहयोगश्चेत्तिरोधान (एव) हेतुस्तदा सुप्तिप्रलययोराविर्भावः स्यात् । अविद्याद्युपलक्षणमेतदिति चे(देतदपि त)त् अथ तथैव किन्नोक्तमित्यास्तां विस्तरः । यदि स्वप्नोऽन्तर्धत्ते कथं तर्हि पुनस्तत्प्रतीतिरित्यत आह व्यज्यते चेति ।

व्यज्यते च पुनस्तया ।

एतेन परकीयं बाधकथनं निरस्तम् । व्यक्तिस्तिरोधानं च न ज्ञायत इत्यतोऽधिकरणद्वयार्थमुपसंहरति सृष्ट्वेति ।

सृष्ट्वैव वासनाभिश्च प्रपञ्चं स्वाप्नमीश्वरः ॥

वासनामात्रतां तस्य नीत्वाऽन्तर्धापयत्यजः ॥ ३–२–२ ॥

एवशब्देनारोपं वारयति । दर्शयित्वेत्यपि द्रष्टव्यम् । तस्य च वासनामात्रतां नीत्वा कृत्वा । अन्यथा द्वितीया स्यात् । अन्तर्धापयति अदर्शनं गमयति । तस्य जीवस्य वासनाभिरिति वा । तस्यान्तर्धापयतीति वा ॥ ३–२–२ ॥

शे०— ॥ ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ ॥ ईश्वरांशतया इति । ईश्वरेण भिन्नाभिन्नस्वरूपतदंशतया इत्यर्थः ॥ द्वितीय इति । ( द्वितीयेऽध्याये ) अंशाधिकरणे 'भेदस्य मुक्तौ वचनादपि तत्पक्षनिग्रहः' इत्यादिनेति शेषः ॥ न चेति । नापीत्यर्थः ॥ परेणेति । तत्त्वतो निर्धर्मकब्रह्मवादिनेत्यर्थः । सोपाधिकत्वेन निरुपाधिकब्रह्मस्वरूपताया असम्भवादतिरेके च तात्त्विकाद्वैतभङ्गप्रसङ्गादिति भावः ॥ एतावताऽलमिति । तावतैव त्वदुपवर्णितपूर्वपक्षनिरासादिति

भावः । **अन्यदिति** । पूर्वसूत्रे पराभिध्यानादित्यादेरुत्तरसूत्रेऽपि वासोऽपीत्यस्य प्रकृतेन सङ्गत्यभावा-दित्यर्थः । किञ्च देहसंबन्धमात्रं तिरोधानहेतुरभिमानो वा । नाद्यः । यथा कथञ्चिद्देहसंबन्धस्य सर्वदा सत्त्वेन कदाऽप्याविर्भावाभावप्रसङ्गादिति भावेन द्वितीयं दूषयति **किञ्चेति** । देहयोगो देहाभि-मानः । तत्र तिरोधानहेतोर्देहाभिमानस्याभावादिति भावः ॥ **तथैव किन्नोक्तमिति** । तथा च स्वायत्तन्यायविरोध इति भावः । अस्वतन्त्रप्रयोगत्वान्न प्रयोजनापेक्षेत्यत **आह आस्तामिति** । तदर्थस्तु तथा सति स्वायत्तन्यायवार्तोच्छिद्येत । सर्वत्राप्यस्वतन्त्रप्रयोगत्वेन प्रयोजनानपेक्षत्वस्य वक्तुं शक्यत्वा-दिति ॥ **एतेनेति** । पुनः पुनर्व्यक्तितिरोधानकथनेनेत्यर्थः । **बाधकथनं** (स्वप्ने दृष्टं क्षणेनान्यथो-पलभ्यत इति बाधकथनमित्यर्थः) आद्यन्तयोर्व्यभिचारदर्शनादित्यादिनोक्तम् । अनेन तत्परिणामितामावे-दयतीति वक्ष्यत इत्युक्तं विवृतं भवति । (**न ज्ञायते** व्यक्तितिरोधानशब्दार्थो न ज्ञायते) ॥ **नीत्वा कृत्वेति** । धातूनामनेकार्थत्वादिति भावः । कुतोऽत्र प्रसिद्धार्थपरित्याग इत्यत आह **अन्यथेति** । प्रापणार्थत्व इत्यर्थः । प्रापणार्थस्य नयतेर्यत्कर्म तद्युक्तस्यापि 'अकथितं चे'त्यनेन कर्मसंज्ञाविधानेन 'द्वार-कामनयद्व्रधूनि'त्यादाविवोभयत्रापि द्वितीयावश्यम्भावात् तं वासनामात्रतां नीत्वेति तच्छब्देऽपि द्वितीया-प्रसङ्गादिति भावः । नयतेः प्रापणार्थत्वेऽपि न तच्छब्दे द्वितीयाप्रसङ्गः । तस्य वासनाभिरित्यादि-पदान्तरेणैव संबन्धाभ्युपगमेन नयतिकर्मयोगाभावेनाकथितं चेत्यनेन कर्मत्वाप्रसङ्गात् । न च द्विकर्म-कत्वानुपपत्तिः । प्रपञ्चं वासनामात्रतां नीत्वेति प्रपञ्चमित्यस्यावृत्त्याश्रयणेन तदुपपत्तिरित्याशयेनाह **तस्य जीवस्य वासनाभिरिति वेति** । अत्र पक्षे तस्येत्यस्यातिव्यवहितान्वयो भवतीत्यपरितोषात्सन्नि-हितान्वयमेवाश्रित्यापि द्वितीयाप्रसङ्गं परिहरति **तस्यान्तर्धापयतीति वेति** ॥ ३-२-२ ॥

**स०— अन्यदसङ्गतमिति** । पूर्वसूत्रे पराभिध्यानादित्यस्य उत्तरसूत्रे वासोपीत्यस्य **प्रकृते** सङ्गतेरभावादिति भावः । तथा च 'देहयोगात्तिरोहितमि'त्येव सूत्रं कर्तव्यमिति भावः । **किं च देह-**संबन्धमात्रं तिरोधानहेतुरुत देहाभिमानः । नाद्यः यथाकथंचित् संबन्धमात्रस्य सर्वदा सत्त्वेन कदाप्याविर्भावो न स्यात् । नान्त्य इत्याह **किञ्चेति** । देहयोगः देहाभिमानयोगः **एतेनेति** । व्यक्तितिरोधानकथनेनेत्यर्थः । **बाधकथनं** आद्यंतयोर्व्यभिचारदर्शनादित्यादिनोक्तं । अनेन तत्परिणामि-तामावेदयतीति वक्ष्यत इत्युक्तं विवृतं भवति ॥ **अन्यथेति** । प्रापणार्थकत्वे तस्मिन्नर्थे तस्य द्विकर्मकत्वेन तस्येत्यत्र द्वितीया स्यादिति भावः ।

**प०— पराभिध्यानात्तु ॥ नान्य इति** । जीवस्य ब्रह्माभेदेऽपि ज्ञानैश्वर्यसामर्थ्यं तिरो-हितमित्यादिरूपोऽर्थो नेत्यर्थः । **ईश्वरांशतया** ईश्वरस्वरूपांशतायाः 'अंशो नानाव्यपदेशादि'त्यत्रा-प्रामाणिकत्वस्याभिधानादिति भावः । ब्रह्मणोऽपि ज्ञानादिशक्तिर्न वास्तवी । येन तदभिन्नजीवस्यापि

तदाशङ्क्य तिरोधानं ब्रूयादित्याह **न च ज्ञानैश्वर्येति** । सोपि ज्ञानादितिरस्कारोऽपि जीवस्य देहयोगादेवेति परेण सूत्रार्थकथनात् तत्रोपयुक्तांशमुक्त्वान्यदयुक्तमित्याह **किंच देहेति** ॥ **बाधककथनमिति** । स्वप्ने दृष्टं वस्तु क्षणेनान्यथोपलभ्यत इति बाधककथनमित्यर्थः । नीत्वेत्यनुवादेनार्थमाह **कृत्वेति** । धातूनामनेकार्थत्वादिति भावः । कुत एवं व्याख्येत्यत आह **अन्यथेति** । प्रापणार्थत्वे नीञ् प्रापण इत्यस्य द्विकर्मकत्वात्सुप्त्यादीन् जीवं नयतीन्युत्तरवाक्य इव वासनामात्रतां नीत्वेति द्वितीया स्यात् तस्येति षष्ठी न स्यादित्यर्थः । नयतेः कृत्यर्थत्वाप्रसिद्धेः प्रकारान्तरेण द्वेधा योजयति **तस्य जीवस्येति** ॥ ३-२-२ ॥

या०— **ईश्वरांशताया इति** । ईश्वरस्वरूपांशताया इत्यर्थः ॥ **अभिहितत्वादिति** । अंशाधिकरण इति शेषः ॥ **एतेन परकीयं बाधकथनमिति** । ईशेच्छया तथा तथा वासना परिणमत इत्यस्यार्थस्यात्र विवक्षितत्वेन 'रथोऽयमिति हि कदाचित्स्वप्ने निर्धारित' इत्यादि परकीयं बाधकथनं निरस्तमित्यर्थः ॥ **नीत्वा कृत्वेति** । धातूनामनेकार्थत्वादिति भावः ॥ **अन्यथेति** । प्रापणार्थत्व इत्यर्थः । प्रापणार्थस्य नयतेर्यत्कर्म तद्युक्तस्याप्यकथितं चेत्यनेन कर्मसंज्ञायां कर्मणि द्वितीयेत्यनेन द्वितीयाया विहितत्वात् । 'द्वारकामनयद्बन्धूनि'त्यादौ द्वारकादिशब्द इवात्रापि तं वासनामात्रतां नीत्वेति तच्छब्दे द्वितीया स्यादिति भावः ॥ **तस्य जीवस्येत्यादि** । अत्र नयतिः प्रापणार्थ एव । प्रपञ्चमित्यस्यावृत्तिः । तस्यैवाकथितं चेत्यनेन कर्मसंज्ञा, न तच्छब्दस्य, कर्मयोगाभावात् । तथा च प्रपञ्चं वासनामात्रतां नीत्वेति द्विकर्मता तस्योपपद्यत एवेति भावः ॥ ३-२-२ ॥

श्री०— ॐ **पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ** ॐ ॥ 'नन्वग्नेरंशस्ये'त्यादिनोक्तमर्थं दूषयति **जीवस्येति** ॥ **द्वितीय इति** । द्वितीयाध्याये 'अंशो नाने'त्यत्रेत्यर्थः । **अन्यत्** सोऽपीत्येतत् ॥ **तिरोधानेति** । ज्ञानैश्वर्यादितिरोधानेत्यर्थः ॥ **स्यादिति** । तिरोधानहेतोर्देहयोगस्य तदानीमभावादिति भावः ॥ **अविद्येति** । सूत्रे देहपदमविद्यारूपप्रतिबन्धकपरम् । तथा च सुप्तिप्रलययोरविद्यारूपप्रतिबन्धकस्य सत्त्वात्तदा नाविर्भाव इत्यर्थः ॥ **तथैवेति** । अविद्यायोगाद्ध्रासोऽपीत्येव कुतो नोक्तमित्यर्थः । **न ज्ञायते** व्यक्तितिरोधानशब्दार्थो न ज्ञायत इत्यर्थः ॥ **अन्यथेति** । नयतेः प्रापणार्थत्वे 'द्वारकामनयद्बन्धून् । अजां ग्राममनयदि'त्यादाविवात्रापि तं वासनामात्रतां नीत्वेति द्विकर्मकतापत्त्या तच्छब्दे द्वितीया स्यान्न षष्ठीत्याशयः ॥ ३-२-२ ॥

॥ इति पराभिध्यानाधिकरणम् ॥

## ॥ अथ सुषुप्ति बोध-मोहाधिकरणानि ॥

सु०— ॥ ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ॥ ॐ अतः प्रबोधोऽस्मात् ॐ ॥ ॐ मुग्धेऽर्धसंपत्ति परिशेषात् ॐ ॥ अत्र यज्जीवब्रह्मणोरेकत्वं परेण वर्णितं तत्सूत्राक्षराप्रतीतं तद्विरुद्धं चोपेक्षणीयमेवेति ज्ञापयितुमधिकरणत्रयस्य तात्पर्यमाह सुषुप्तीति ।

अनु०— ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ॥
ॐ अतः प्रबोधोऽस्मात् ॐ ॥
ॐ मुग्धेऽर्धसंपत्तिः परिशेषात् ॐ ॥
सुषुप्तिबोधमोहांश्च स्ववशस्तद्वशं सदा ॥
जीवं नयति जीवेशो ॥ ३–२–२ ॥

सुषुप्तिबोधादेः कारणान्तरदर्शनात्कथमेतदित्यत उक्तं स्ववशस्तद्वशमिति । स्वतन्त्रोऽपीश्वरो लीलया तानि कारणान्युपादाय जीवं तद्वशतां नीत्वा सुषुप्त्यादिकं प्रापयतीत्यर्थः । एतच्च भाष्यादौ स्पष्टम् ॥ ३–२–४।५।७ ॥

---

शे०— ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ॐ अतः प्रबोधोऽस्मात् ॐ ॥ ॥ ॐ मुग्धेऽर्धसंपत्तिः परिशेषात् ॐ ॥ अत्र यज्जीवब्रह्मणोरेकत्वं परेण वर्णितमिति । यद्यप्यासु तदा नाडीषु सुप्तो भवति, पुरीतति शेते, सति संपद्येति जीवस्य सुषुप्तिस्थानतया श्रुतानां नाडीपुरीतदात्मनां किं विकल्पः किंवा समुच्चय इति सन्देहे सर्वत्र सप्तमीश्रुत्या नाड्यादीनामेकनिलयनार्थत्वसिद्धेरेकार्थानां च व्रीह्यादीना'मेकार्थस्तु विकल्पेरन्नि'त्यधिकरणे विकल्पस्य निश्चितत्वादेकार्थानां नाड्यादीनामपि विकल्पेन कदाचित्किञ्चित्स्थानं जीवः स्वापायोपसर्पतीत्येवं प्राप्ते'एवमेषोष्टदोषोऽपि यद्व्रीहियववाक्ययोः । विकल्प आश्रितस्तत्र गतिरन्या न विद्यते' इत्युक्तरीत्या नित्यवदाम्नातानां पाक्षिकत्वस्यागतिकगतित्वेन समुच्चयासंभव एव कल्प्यत्वात् । प्रासादे शेते, पर्यङ्के शेते इत्येवमादिषु समुच्चयेऽप्येकविभक्तिनिर्देशदर्शनेन तन्मात्रेणैकार्थत्वासिद्धेर्नाड्यादिद्वारा ब्रह्मसंपत्त्यभ्युपगमेन गङ्गया सागरं गच्छतो गङ्गायामपि गतत्ववन्नाडीद्वारा ब्रह्मोपसर्पतोऽपि नाडीषु सुप्तत्वावश्यम्भावात् । समुच्चयेऽप्येकस्य नाड्यादिरूपानेकस्थानेषु सुप्तिसंभवात्स्थानतया श्रुतानां नाड्यादीनां समुच्चय इत्याद्यसूत्रे निष्टङ्कितम् । तथा द्वितीयेऽपि कुत एतदागादित्यस्य प्रश्नस्य प्रतिवचनावसरे नाड्यादीनां विकल्पेन सुप्तिस्थानत्वात् ।

कदाचिन्नाडीभ्यः प्रतिबुद्ध्यते कदाचित्पुरीततः कदाचिदात्मन इत्येव वक्तव्यतया 'यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणा' इत्यादिना नित्यवदेवास्मादात्मनः प्रबोधस्य स्वापाधिकारेऽवक्तव्यत्वापत्त्या तदुक्त्यन्यथाऽनुपपत्त्या सुषुप्तिस्थानानां समुच्चय एवेति निष्टङ्कितम् । तृतीये तु जागरणं सुप्तिः स्वप्नो मरणं चेति चतसृणामेवावस्थानां श्रुतिप्रसिद्धत्वात्तद्विरोधेन मूर्छाया अवस्थाचतुष्टयभिन्नावस्थात्वानुपपत्तेश्चतसृणामेवावस्थानामन्यतमा मूर्छेति प्राप्ते, इन्द्रियैर्विषयेक्षणाभावान्मूर्छाया जागरावस्थात्वस्य, निःसंज्ञकत्वेन स्वप्नावस्थात्वस्य, प्राणोष्मणोर्भावान्मरणावरणावस्थात्वस्य, सुषुप्तिप्रयोजनकारणलक्षणविलक्षणप्रयोजनकारणलक्षणवत्त्वात् मोहस्य सुषुप्त्यवस्थात्वस्य चासम्भवात्पञ्चम्येवावस्था मूर्छेति सिद्धान्तितम् । न तु जीवब्रह्मणोरेकत्वं सूत्रत्रये व्युत्पादितमिति तथोक्तिरयुक्तेत्यापाततो भवति । तथापि ब्रह्माधारत्वमस्य नाधाराधेयभेदाभिप्रायेणोच्यते । किन्तर्हि तादात्म्याभिप्रायेणैवेति भाष्यवचनाज्जीवस्य ब्रह्मत्वमेव ब्रह्माधारत्वमिति भामतीवचनाच्चात्रवर्णिताया ब्रह्मसंपत्तेर्ब्रह्मैक्यरूपत्वस्थित्या तथोक्तिरिति द्रष्टव्यम् ॥ **सूत्राक्षराप्रतीतमिति** । सूत्रे तद्वाचकशब्दाभावादिति भावः ॥ **तद्विरुद्धं चेति** । आद्ये आधारत्वार्थकेनात्मनीत्यनेन, द्वितीये चापादानत्वार्थकेनास्मादित्यनेन, तृतीये च संबन्धबोधकेन संपत्तिशब्देन विरुद्धम् । तेषां भेदाविनाभूतार्थप्रतिपादकतया भेदप्रत्यायकत्वादिति भावः । सुप्तिप्रबोधादेरित्यादिपदेन मोहपरिग्रहः ॥ **कारणान्तरेति** । सुप्तिकारणस्य श्रमादेः प्रबोधकारणस्य भेरीताडनादेर्मूर्छाकारणस्य मुसलताडनादेर्दर्शनादित्यर्थः । ननु न प्रमाणेन विनोक्तिमात्रेणार्थसिद्धिरित्यतः पूर्वपक्ष्यभिप्रेतदर्शनरूपप्रमाणाच्छादकानि 'एष एव सुप्तं प्रबोधयति । एतस्माज्जीव उत्तिष्ठत्येष प्रमातैष परमः' । 'मूर्छा प्रबोधनं चैव यत एव प्रवर्तते । स ईशः परमो ज्ञेयः परमानन्दलक्षण' इति सूत्रसूचितप्रमाणानां भाष्यन्यायविवरणादावुदाहृतत्वान्नेदं प्रतिज्ञामात्रमित्याशयवानाह **एतच्च भाष्यादाविति** ॥ ३-२-४।५।७ ॥

प० — **तदभावो नाडीष्वित्यादि** ॥ अत्र **यज्जीवब्रह्मणोरेकत्वमिति** । **तदभावः** प्रकृतस्वप्नदर्शनाभावः सुषुप्तिरिति यावत् । **नाडीष्वात्मनि** नाडीद्वारा आत्मनि । 'पुरीतति शेत इत्यादिश्रुतेः ॥ 'अतः प्रबोधोऽस्मात्' । यत आत्मनि सुप्तिः अतः कारणादस्मादेव प्रबोधः ॥ मुग्धे मेहेऽर्धसंपत्तिः आत्मनीति सूत्रार्थानुक्त्वा आत्मनि संपत्तिस्तदैक्यमेव जीवस्येति वर्णितमित्यर्थः ॥ **सूत्राक्षराप्रतीतमिति** । ऐक्याप्रतीतिर्व्यक्तैव विरुद्धत्वं तु आधाराधेयभावादिकथनादिति भावः ॥ **कारणान्तरेति** । कालादिरूपकारणान्तरेत्यर्थः ॥ ३-२-४।५।७ ॥

**या० — ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ॥ ॐ अतः प्रबोधोऽस्मात् ॐ ॥ ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ॥ अत्र यज्जीवब्रह्मणोरेकत्वमिति** । तदभावो नाडीष्वित्यादिसूत्रत्रयं

परेणैवं व्याख्यातम्। तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति। आसु तदा नाडीषु सुप्तो भवतीति क्वचिच्छ्रूयते। अन्यत्र तु नाडीरनुक्रम्य श्रूयते ताभिः प्रत्यवसृप्य पुरीतति शेत इति। तथाऽन्यत्र सता सोम्य तदा सम्पन्नो भवतीत्यादि। तत्र संशयः। किमेतानि नाड्यादीनि परस्परनिरपेक्षया भिन्नानि सुप्तिस्थानानि। आहोस्वित्परस्परापेक्षयैकं सुप्तिस्थानमिति। तत्र परस्परनिरपेक्षतया भिन्नान्येवैतानि स्थानानि सुषुप्तिरूपैकार्थत्वात्। न ह्येकार्थानां व्रीहियवादीनां क्वचित्परस्परापेक्षत्वं दृश्यते। नाड्यादीनां त्वेकार्थता सुषुप्तौ दृश्यते। नाडीषु सुप्तो भवति, पुरीतति शेते, सति सम्पद्य न विदुरिति तत्र तत्र सप्तमीनिर्देशसाम्यात्। तया च व्रीहियवादिवद्विकल्प एव सुप्तिस्थानानामिति पूर्वः पक्षः। सिद्धान्तस्तु नित्यवदाम्नातानां यत्पाक्षिकत्वं तद्गत्यन्तराभावे कल्प्यम्। यथाऽऽहुः। 'एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः। विकल्प आश्रितस्तत्र गतिरन्या न विद्यत' इति। न च प्रकृते गत्यन्तरासंभवः। समुच्चयेऽपि तथोक्तिसंभवात्। प्रासादे शेते, पर्यङ्के शेत इत्यादौ समुच्चितानामप्येकविभक्तिनिर्देशस्य दर्शनात्। तथेहापि नाडीषु पुरीतति ब्रह्मणि च स्वपितीत्युपपद्यते समुच्चयः। न च समुच्चये कथमेकस्यानेकस्थानेषु सुप्तिः। नाड्यादिद्वारा ब्रह्म संपद्यत इत्यङ्गीकारात्। ततश्चायं सूत्रार्थः। तदभावस्तस्य प्रकृतस्य स्वप्नदर्शनस्याभावः। सुषुप्तं नाडीष्वात्मनि चेति समुच्चयः। कुतस्तच्छ्रुतेः। तथा हि सर्वेषामेव नाड्यादीनां तत्र तत्र सुप्तिस्थानत्वं श्रूयत इति। अतः प्रबोधोऽस्मात् यस्माच्चात्मैव सुप्तिस्थानमत एव कारणान्नित्यवदेवास्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते। कुत एतदागादित्यस्य प्रश्नस्य प्रतिवचनावसरे यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणा इत्यादिना विकल्प्यमानेषु च सुप्तिस्थानेषु कदाचिन्नाडीभ्यः प्रतिबुध्यते कदाचित्पुरीततः कदाचिदात्मन इत्यशासिष्यत्। तस्मादप्यात्मैव सुप्तिस्थानमिति व्याख्यातम्। 'मुग्धेऽर्धसंपत्तिः परिशेषात्'। चतस्रः खल्ववस्थाः प्रसिद्धाः। जागरणं सुषुप्तिः स्वप्नो मरणं चेति। न तु पञ्चमी काचिदवस्था श्रुत्यादौ प्रसिद्धा। तस्माच्चतसृणामेवावस्थानामन्यतमा मूर्च्छेत्येवं प्राप्ते ब्रूमः। न तावन्मुग्धो जागरितावस्थो भवितुमर्हति। इन्द्रियैर्विषयेक्षणाभावात्। नापि स्वप्नावस्थो निस्संज्ञकत्वात्। नापि मृतः प्राणोष्मणोर्भावात्। नापि सुप्तः सुषुप्तिमोहयोः प्रयोजनकारणलक्षणानां विलक्षणत्वात्। श्रमापनुत्त्यर्था हि ब्रह्मसंपत्तिः सुप्तिः। शरीरत्यागार्था तु ब्रह्मसंपत्तिर्मोहः। श्रमादिनिमित्ता हि सुषुप्तिः। मुसलसंपातादिनिमित्तो मोहः। प्रसन्नवदनत्वादिलक्षणा सुषुप्तिः। मुखनेत्रादिविकारलक्षणो मोह इति। तस्मात्परिशेषादर्धसंपत्तिरेव मुग्धतेत्यवगच्छामः। निस्संज्ञकत्वात्संपन्नः। उक्तवैलक्षण्यादसंपन्न इतीति। अत्र सूत्रत्रये जीवस्य ब्रह्मसंपत्तिर्या परेण वर्णिता सा ब्रह्मैक्यरूपैव। 'ब्रह्माधारत्वमप्यस्य नाधाराधेयभेदाभिप्रायेणोच्यते। किन्तर्हि तादात्म्याभिप्रायेणैवे'ति तेनोक्तत्वात्।

भामत्यामपि 'जीवस्य ब्रह्मत्वमेव ब्रह्माधारत्वमि'त्युक्तत्वात् । अतोऽत्र यज्जीवब्रह्मणोरेकत्वं परेण वर्णितमित्येतदुपपद्यत **इति** ज्ञातव्यम् ॥ **तत्सूत्राक्षराप्रतीतमिति** । ऐक्यवाचकपदाभावादिति भावः ॥ **तद्विरुद्धं चेति** । आद्यसूत्रे आधारत्वार्थकेनात्मनीत्यनेन द्वितीयसूत्रे चावधित्वार्थकेनास्मा-दित्यनेन तृतीयसूत्रे संबन्धबोधकेन संपत्तिशब्देन च विरुद्धम् । तेषां भेदनियतत्वादित्यर्थः ॥ **सुप्तिप्रबोधादेरिति** । सुप्तितत्प्रबोधमोहानामित्यर्थः ॥ **कारणान्तरेति** । सुप्तिकारणस्य श्रमादेस्त-त्प्रबोधकारणस्य भेरीताडनादेर्मोहकारणस्य मुसलताडनादेश्च दर्शनादित्यर्थः । ननु प्रतिज्ञामात्रेण कथं पूर्वपक्षोपमर्द इत्यत आह **एतच्च भाष्यादाविति** । आदिपदेन न्यायविवरणं ग्राह्यम् । पूर्वपक्ष्यभिप्रेतदर्शनरूपप्रमाणाच्छादकानि सूत्रसूचितानि प्रमाणानि भाष्ये न्यायविवरणे चाभिहि-तानीत्यर्थः ॥ ३-२-४।५।७ ॥

**श्री०** — ॐ **तदभावो नाडीषु तच्छ्रुतेरात्मनि ह** ॐ ॥ ॐ **अतः प्रबोधोऽस्मात्** ॐ ॥ ॐ **मुग्धेऽर्धसंपत्तिः परिशेषात्** ॐ ॥ **कारणान्तरेति** । अतिश्रमभेरीताडनादिरूपेत्यर्थः ॥ ३-२-४।५।७ ॥

॥ इति सुषुप्ति-बोध-मोहाधिकरणानि ॥



॥ अथ कर्मानुस्मृत्यधिकरणम् ॥

सु०— ॥ ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ **केचिदेवं व्याचक्षते । सुषुप्तौ ब्रह्मसंपन्नो य एव जीवः (किं) स एवोत्तिष्ठत्युतान्योऽपीति संशये महाजलनिधौ क्षिप्तस्योदबिन्दोरिव ब्रह्मणैकीभूतस्योद्धरणासंभवादनियम इति प्राप्ते समाधीयते । स एवोत्तिष्ठति, यः सुप्तः । कुतः । कर्मशेषसमापनात्प्रत्यभिज्ञानाच्छब्देभ्यो विधिभ्यश्च । सुप्तस्य मुक्तत्वापत्त्या विध्यनुपपत्तेरिति । तदेतदपव्याख्यानमिति सूचनायाधिकरणतात्पर्यमाह** नान्य इति ।

अनु० — ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥
नान्यः कर्ताऽस्य कश्चन ॥ ३-२-६ ॥

**स्वप्नादीनां परमेश्वरकृतत्वेऽभिहिते किं देशकालान्तरेऽन्योऽपि कर्ताऽस्त्युतेश्वर एवेति संशये लौकिकेश्वराणां देशकालव्यवस्थयैश्वर्यदर्शनादयमपि तथाविध इति प्राप्ते । स एवेश्वरोऽस्य स्वप्नादेः कर्ता न तु देशकालान्तरेऽन्यः कश्चनेत्येष एवार्थोऽत्र प्रतिपाद्यत इति । न हि यः सुप्तः स एवोत्तिष्ठत्यन्यो वेति कस्यचित्संशयोऽस्ति । न च सुप्तस्य ब्रह्मणैक्यं प्रमाणदृष्टमिष्टं वा परस्येति यत्किञ्चिदेतत् । लाघवार्थं क्रमोल्लङ्घनेन व्याख्यानमिति बो(द्धव्य)ध्यम् । सूत्रकृता च स्वप्नादिवन्म मोहः स्वतन्त्रावस्थेति ज्ञापनाय व्यवधानं कृतमिति ॥ ३-२-६ ॥**

**शे० — ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ कर्मेति ।** यद्धि द्व्यहादिनिर्वर्तनीयमेकस्य पुंसश्चोदितं कर्म तस्य पूर्वेद्युरनुष्ठितस्य परेद्युः शेषानुष्ठानदर्शनादित्यर्थः । न ह्यन्येन समीकृतस्य कर्मणः शेषक्रियां निर्वर्तयितुमन्योऽर्हति । अतिप्रसङ्गात् । तस्मादेक एव द्व्यहादिनिर्वर्तनीयकर्मणः पूर्वेद्युरपरेद्युश्च कर्तेति गम्यत इति भावः ॥ **प्रत्यभिज्ञानादिति ।** योऽहमतीतेऽहन्यद्रोऽद्राक्षं तदिदमिति प्रत्यभिज्ञानं चात्मान्तरोत्थाने नावकल्पते । अन्यदृष्टस्यान्येन स्मर्तुमशक्यत्वादिति भावः ॥ **शब्देभ्य इति ।** स्वापप्रबोधाधिकारपठितेभ्यः पुनः 'प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैवाहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति त इह व्याघ्रो वा सिंहो वे'त्यादिशब्देभ्य इत्यर्थः ॥ **विधिभ्यश्चेति ।** कर्मविद्याविधिभ्यश्चेत्यर्थः । तदुपपादयति **सुप्तस्येति ।** यः सुप्तः स एवोत्तिष्ठतीत्यङ्गीकार्यम् । अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः । अन्योत्थानपक्षे हि सुप्तमात्रं **मुच्यत** इत्याद्यापद्यते ।

एवञ्च किं कालान्तरफलकेन कर्मणा विद्यया वा कृतं स्यादिति भावः । परपक्षेऽधिकरणाङ्गसंशयासंभवमुक्त्वा पूर्वपक्षानुत्थानमप्याह **न च सुप्तस्येति** ॥ **इष्टं वेति** । विशिष्टयोरैक्यस्य परेणानङ्गीकारादिति भावः । ननु स एवेति पूर्वाधिकरणस्य पूर्वं तात्पर्यमभिधायानन्तरं तदुत्तरस्य मुग्धेऽर्धसंपत्तिरित्यधिकरणस्य तात्पर्यकथनमुचितम् । तत्कथमनन्तरस्य पूर्वं तात्पर्यमभिधाय पूर्वस्याधिकरणस्य पश्चात्तात्पर्यकथनमिति भाष्यकारीयं क्रमोल्लङ्घनमित्यत आह **लाघवार्थमिति** । एकेन वाक्येनाधिकरणतात्पर्यकथने उक्तिलाघवादिति भावः । एवं तर्हि सूत्रकृताऽप्येवमेवाधिकरणद्वयपौर्वापर्यस्याश्रयितुं शक्यत्वात्किमिति व्यवधानं कृतमित्यत आह **सूत्रकृता चेति** ॥ ३–२–६ ॥

स० — **स एव च कर्मानुस्मृतिशब्दविधिभ्यः** ॐ । **कर्मेति** । कर्मशेषानुष्ठानदर्शनात् । स एव उत्थातुमर्हति नान्यः । तथा हि । पूर्वेद्युरनुष्ठितस्य कर्मणो परेद्युः शेषमनुतिष्ठन् दृश्यते । न चान्येन कृतस्य कर्मणोऽन्यः शेषं निर्वर्तयितुमर्हति । अतिप्रसङ्गात् । तस्मादेक एव पूर्वेद्युरपरेद्युश्च एकस्य कर्मणः कर्तेति गम्यते । इतश्च स एवोत्तिष्ठति । यत्कारणमतीतेहनि अहमद्राक्षमिति पूर्वानुभूतस्य पश्चात्स्मरणमन्यस्योत्थाने नोत्पद्यते । न ह्यन्यदृष्टमन्येन स्मर्तुमर्हति । सोऽहमस्मीत्यात्मानुस्मरणमात्मान्तरोत्थाने नावकल्पत इति भावेनाह **प्रत्यभिज्ञानादिति** । शब्देभ्यश्च तस्यैवोत्थानमवगम्यते । तथा हि । पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव सर्वाः प्रजा अहरहर्गच्छन्त्यं ब्रह्मलोकं न विदन्ति । 'त इह व्याघ्रो वा सिंहो वे'त्यादिशब्देभ्यश्चेत्याह **शब्देभ्य इति** ॥ **विधिभ्य इति** । कर्मविद्याविधिभ्यश्चैवमेव गम्यते । अन्यथा हि कर्मविधयोऽनर्थकाः स्युः । अन्योत्थानपक्षे हि सुप्तमात्रो मुच्यते इत्यापद्येतेत्याशयः । सुप्तस्य ब्रह्मणैक्यादेव संशयः स्यादित्यत्राह **न चेति** ।

प० — तच्छब्दपरामृष्टं दर्शयति **यः सुप्त इति** ॥ **कर्मशेषेति** । पूर्वेद्युरुपक्रान्तकर्मणो यः शेषः तस्य परेद्युः समापनात्, योऽहं सुप्तः सोहं प्रबुद्ध इति प्रत्यभिज्ञानात् । 'प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैवे'त्यादिशब्देभ्य इत्यर्थः । विधिभ्य इत्येतदस्फुटत्वाद्व्यनक्ति **सुप्तस्येति** । परोक्तं कुतोपव्याख्येत्यत आह **न हि यः सुप्त इति** ॥ **इष्टं वेति** । तथात्वे पुनरुत्थानायोगादिति भावः । **लाघवार्थमिति** । मुग्धेऽर्धसंपत्तिरित्यस्य स एव चेत्येतदनन्तरभावित्वेऽपि सुषुप्तिबोधमोहांश्चेति पूर्वमेव तत्सूत्रतात्पर्यवर्णनं स एव चेत्यस्य नान्यः कर्तेति पश्चादेव तात्पर्यकथनमित्येवं सूत्रकारक्रमोलंघनं सुषुप्तिबोधमोहांश्चेति उक्तिलाघवार्थमित्यर्थः ॥ **व्यवधानमिति** । स एव चेत्येतदानन्तर्यं मुग्ध इत्यस्येत्यर्थः ॥ ३–२–६ ॥

या० — ॐ **स एव च कर्मानुस्मृतिशब्दविधिभ्यः** ॐ ॥ **कर्मशेषसमापनादिति** । यद्धि द्व्यहादिनिर्वर्तनीयमेकस्य पुंसश्चोदितं कर्म तस्य पूर्वेद्युरनुष्ठितस्य परेद्युः शेषसमापनादित्यर्थः । न ह्यनेन असमापितस्य कर्मणः शेषक्रियायामन्यः प्रवर्तितुमुत्सहेतेऽतिप्रसङ्गादिति भावः ॥ **प्रत्यभिज्ञानादिति** । यः पूर्वेद्युः सुप्तः सोऽहमस्मीति प्रत्यभिज्ञानादित्यर्थः ॥ **शब्देभ्य इति** । स्वापप्रबोधाधिकारपठितेभ्यः 'पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति त इह व्याघ्रो वा सिंहो वे'त्यादिशब्देभ्यश्चेत्यर्थः । अयनमायो, नि नियमेन गमनं न्यायः । जीवः प्रतिन्यायं संप्रसादे सुषुप्तावस्थायां बुद्धान्तायाद्रवति आगच्छति । प्रतियोनि यो हि व्याघ्रयोनिः सुषुप्तो बुद्धान्तमागच्छन्स व्याघ्र एव भवति न जात्यन्तरम् । तदिदमुक्तं त इह व्याघ्रो वा सिंहो वेत्यादीत्येतद्भावयार्थस्तत्पक्षे भामत्युक्तोऽवगन्तव्यः । विधिभ्य इत्युक्तं विवृणोति **सुप्तस्येति** । अयं भावः । अन्योत्थानपक्षे हि सुप्तमात्रो मुच्यत इत्यापन्नम् । एवं चेत्किं कालान्तरभाविफलकेन कर्मणा विद्यया वा । ततश्चानर्थका एव कर्मविद्याविधयः स्युरिति ॥ **प्रमाणदृष्टमिष्टं वेति** । येनोक्तरीत्या पूर्वपक्षोत्थानमुपपन्नं स्यादिति भावः ॥ **लाघवार्थमिति** । एकेनैव वाक्येनोक्तिलाघवायेत्यर्थः ॥ ३-२-६ ॥

श्री० — ॐ **स एव कर्मानुस्मृतिशब्दविधिभ्यः** ॐ ॥ **केचित्** रामानुजाः । **उत्तिष्ठति** बहिः पुनरागच्छति ॥ **उदबिन्दोरिवेति** । समुद्रे क्षिप्तो य उदबिन्दुः स एव पुनर्नागच्छति । **अपि** त्वन्यो यथेत्यर्थः ! **अनियमः** स वाऽन्यो वेत्यर्थः । **समापनादिति** । तथा च कर्मशेषसमापनार्थं तस्यैवागमनमङ्गीकार्यम् । प्रत्यभिज्ञा तु योऽहं सुप्तः स एवाहमिदानीं जाग्रदस्मीत्येवंरूपा । अन्यस्यैव उत्थाने एवं प्रत्यभिज्ञा न युक्तेत्यर्थः । **शब्देभ्य इति** । स्वापात्प्रबोधप्रकरणे पठितेभ्यः 'प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्ताये'त्यादिशब्देभ्य इत्यर्थः । विधिभ्य इत्युक्तहेतुमुपपादयति **सुप्तस्येति** । यागादिना स्वर्गाद्यभिधायकानां विधीनामनुपपत्तिः । स्वर्गं गन्तुरभावात् । यागं कृत्वा सुप्तौ मुक्तत्वस्यैव प्राप्तेरिति भावः । ब्रह्मणैकीभूतस्योद्धरणासम्भवादित्युक्तपूर्वपक्षोत्थानमेवायुक्तमित्याह **न च सुप्तस्येति** । **परस्य** त्वत्पूर्वपक्षिणो मायावादिनः ॥ **इष्टं वेति** । सुप्त्यवस्थावतो जीवस्याविशिष्टत्वेन तस्य विशिष्टभूतप्रज्ञारूपब्रह्मैक्यं तन्मते नेष्टमित्यर्थः । ननु स एव चेत्यधिकरणव्याख्यानानन्तरं मुग्धेऽर्धे सूत्रं व्याख्यातव्यम् । अतो मोहांश्चेति मुग्ध इति सूत्रमादौ व्याख्याय नान्य इति स एवेति सूत्रं व्याख्यायते । अतः क्रमोल्लङ्घनं कुत इत्यत आह **लाघवेति** । भगवतः सुषुप्त्याद्यवस्थाप्रेरकत्वमेकोक्त्या वक्तुमित्यर्थः । सूत्रकारस्यापि **स एव चेति** । सूत्रेण व्यवधानं कृत्वाऽन्ते मुग्ध इति मोहस्य भगवदधीनत्वकथने किं निमित्तमित्यत आह **सूत्रकृता चेति** । यदि व्यवधानमकृत्वा स्वप्नाद्यवस्था-

निरूपणानन्तरमेव मोहावस्था निरूप्येत । तदा तद्वदेषाऽपि स्वतन्त्रावस्थेति विज्ञायेत । सा मा विज्ञायीति व्यवधानं कृतमित्यर्थः ॥ ३-२-६ ॥

च०— **स्वप्नादिवदिति** । प्रथमान्ताद्वतिरुपमेये प्रथमादर्शनात् । स्थानिवदादेशोऽनल्विधाविितिवत् ।

**॥ इति कर्मानुस्मृत्यधिकरणम् ॥**



## ॥ अथ स्थान(तोऽप्य)भेदाधिकरणम् ॥

सु०— ॥ ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥ केचिदिदमित्थं व्याचक्षते । द्विरूपं ब्रह्म श्रूयते सर्वकर्मा सर्वकाम इत्यादौ सविशेषमस्थूलमनण्वित्यादौ निर्विशेषं । तत्र किमुभयरूपं ब्रह्म प्रतिपत्तव्यमुतान्यतररूपम् । यदाऽप्यन्यतररूपं तदा(ऽपि) किं सविशेषमुत निर्विशेषमिति संशये द्विविधश्रुत्यनुरोधादुभयरूपमेव ब्रह्मेति प्राप्ते इदमुच्यते । न तावत्स्वत एव परस्य ब्रह्मण उभयरूपत्वं संभवति विरोधात् । अस्तु तर्हि स्थानतः पृथिव्याद्युपाधियोगात् । मैवम् । न ह्युपाधिरन्यदन्यथाकरोति किन्त्वविद्योपस्थापिताः पृथिव्याद्युपाधयो भ्रममुपजनयन्ति । अतश्चान्यतरपरिग्रहेऽपि निरस्तसमस्तविशेषमेव ब्रह्म प्रतिपत्तव्यम् । सर्वत्राशब्दमस्पर्शमित्यादिवाक्येषु तथाभूतमेव हि ब्रह्मोपदिश्यते । न भेदादिति चेन्न प्रत्येकमतद्वचनात् । न निर्विशेषमेव ब्रह्म चतुष्पाद्ब्रह्म षोडशकलं ब्रह्मेत्यादौ भेदेनोपदेशादिति चेन्न । यश्चायमस्यां पृथिव्यामित्यादिना प्रत्युपाधि भेदाभाववचनात् । अपि चैवमेके । नेह नानाऽस्ति किञ्चनेत्यादौ भेददर्शननिन्दापूर्वकमभेदमेके शाखिनः समामनन्तीति ।

तदिदं व्याख्यानं सम्यग्व्याख्यानेनैवापहस्तितं भविष्यति किं पुनः प्रयत्नेनेत्याशयवान्व्याख्यानमेवारभते ।

सर्वशरीरेषु, प्रतिशरीरं च दक्षिणाक्ष्यादिस्थानेषु, स्थितः परमपुरुषः स्वप्नाद्यवस्थाः प्रवर्तयतीत्युक्तम् । तत्र सर्वत्र स्थितः किमेक एवोत परस्परं भिन्न इति संशये यद्युगपद्भिन्नस्थानं तद्भिन्नं दृष्टम् । यथा घटादि । भिन्नस्थानश्चायमित्यतो भिन्न एव भवेत् । भिन्नानां च तारतम्यमनुग्राह्यानुग्राहकभावश्चोपलब्ध इति तत्प्रसङ्गोऽपीति कथं स एव चेत्युक्तमिति प्राप्ते प्रतिविहितं सूत्रकृता न स्थानतोऽपीति । तद्व्याचष्टे नेति ।

अनु०— ॥ ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥

न स्थानभेदतोऽप्यस्य भेदः कश्चित्परेशितुः ।

अत्र स्थानशब्दस्तद्भेदस्योपलक्षण इत्युक्तं भवति । सप्तम्यर्थे तसिः । आद्यादिभ्य उपसङ्ख्यानात् ।

टी०— ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥ विरोधादिति । एकस्य वस्तुनः स्वत एव रूपादिविशेषवत्त्वतद्राहित्ययोर्विरुद्धत्वादित्यर्थः ॥ न हीति । तथा सति

स्वतो धवलस्यापि स्फटिकमणेर्लाक्षारसावसेकोपाधिवशादधवलत्वप्रसङ्गादिति भावः ॥ **न निर्विशेषमेव ब्रह्मेति** । किन्तु सविशेषमपीत्यर्थः । तत्र हेतुमाह **चतुष्पादिति** । न च परस्य ब्रह्मणः स्वत उभयरूपत्वं विरुद्धमित्युक्तमिति वाच्यम् । आकारभेदस्योपाधिकृतत्वेन निर्विशेषत्ववत्स्वाभाविकत्वा-भावेनाविरुद्धत्वादित्याशयात् ॥ **भेदेनोपदेशादिति** । प्रतिविद्यं ब्रह्मण उपदिश्यमानाकाराणां भिन्न-त्वादित्यर्थः । इत्यादिनेत्यादिपदेन 'तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे'ति **वाक्यशेषपरिग्रहः** । प्रत्युपाधिभेदमभेदस्यैव शास्त्रेण प्रतिपादनान्न भिन्ना-कारयोगो ब्रह्मणि शास्त्रीय इति भावः ।

**सर्वशरीरेष्वित्यादि** । तदभावे स्वप्नाद्यवस्थाप्रवर्तकत्वानुपपत्त्या तदुक्त्यैव सर्वशरीरादिस्थत्व-मपि लब्धमेवेति भावेनायमनुवाद इति ज्ञातव्यम् ॥ **उक्तमिति** । 'सन्ध्ये सृष्टिराह ही'त्यादिनेति शेषः । सूत्रानुसारेण स्थानत इत्येव वक्तव्यत्वाद्भाष्ये भेदपदमधिकमित्याशङ्क्य पूर्वपक्षहेतोः स्थानभेदस्य सूत्रोक्तत्वसूचनार्थत्वान्न तदिति भावेन तत्तात्पर्यमाह **अत्रेति** । अप्रयोजकत्वरूपपूर्वपक्षयुक्तहेतुदूष-णस्यापि सूत्रसूचितत्वलाभायाह **सप्तम्यर्थ इति** । प्रतियोगे पञ्चम्यास्तसिरिति पञ्चम्यन्तात्तद्विधानात्क-थमत्र सप्तम्यन्तात्तसिरित्यत आह **आद्यादिभ्य इति** । आद्यादेराकृतिगणत्वात्स्थानभेदशब्दस्याप्याद्या-दित्वमिति भावः । भाष्ये भेद इत्यंशस्योत्सूत्रत्वपरिहारायाह **भेद इति वदतेति** ।

---

प०— **न स्थानतोऽपि परस्य** । स्थानत इति सौत्रपदानुवादः । पृथिव्याद्युपाधियोगादिति व्याख्या । नेति सौत्रनञार्थानुवादः **नैवमिति** । सूत्रान्तरं च पठित्वा तदर्थमनुवदति **न भेदादि-त्यादिना** (भेदेनेति विशेषवाची भेदशब्दः) । **पृथिव्यामित्यादिनेति** । अत्रादिशब्दस्य तेजोमयोऽमृ-तमयः पुरुषो यश्चायमध्यात्मं शरीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेत्यादिनेत्यर्थः । (मशरीरः तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमध्यात्मेत्यादिना) । तथा च भेदोपदेशः औपाधिक एव वाच्य इति भावः ॥ **सर्वशरीरेष्विति** । स एव चेति सूत्रार्थपरेण नान्यःकर्ताऽस्य कश्चनेत्यनेन प्राप्तत्वात् **सर्वशरीरेषु प्रवर्तयति** इत्युक्तमित्युक्तम् । प्रतिशरीरं दक्षिणाक्ष्यादि इत्यादि तु देहयोगाद्वा-सोऽपीत्यादिना जाग्रदाद्यवस्थाप्रेरकत्वोक्त्या प्राप्तम् । 'दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजस' इत्यादेरिति भावः । स एव च कर्मानुस्मृतिशब्दविधिभ्य इति सूत्रे सार्वत्रिकसार्वकालिकसर्वपुरुषेषु स एक एव सर्वावस्थानां प्रवर्तकः इति कथमुक्तमित्यर्थः ॥ **अत्रेति** । सूत्र इत्यर्थः । **सप्तम्यर्थ इति** । सूत्रे भाष्ये च स्थानभेदे सत्यपीत्यर्थे 'प्रतियोगे पंचम्यास्तसिरि'ति सूत्रे आद्यादिभ्य इति वार्तिकेन तसिरित्यर्थः ।

**या०** — ॐ **न स्थानतोऽपि परस्योभयलिङ्गं हि** ॐ ॥ न निर्विशेषमेवेत्यनन्तरमेकरूपमेवेति शेषः। 'यश्चायमस्यां पृथिव्यामित्यादिने'त्यत्रादिपदेन 'तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे'त्यादिवाक्यसंग्रहः। ततश्च भेदो देशस्यौपाधिकपरत्ववर्णनमेव न्याय्यमिति भावः॥ **सर्वशरीरेष्वित्यादि**। स्वप्नाद्यवस्थाप्रवर्तकत्वोक्त्येदमप्यर्थादुक्तमेवेति भावः।

**श्री०** — ॐ **न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हीति** ॐ॥ **अन्यदन्यथेति**। तथा च स्वत एकस्योभयरूपत्वमुपाधिरपि न संपादयतीत्यर्थः। तर्हि किमुपाधिकृत्यमत आह **किन्त्विति**॥ **तत्प्रसङ्गोऽपीति**। तारतम्यानुग्राह्यानुग्राहकभावयोः प्रसङ्ग इत्यर्थः।

**सु०** — **भेद इति** वदता **'उभयलिङ्गमि'त्येतद्भिन्नस्वरूपत्वमिति** व्याख्यातम्। **स्थानानां सुरनरादिशरीराणां तत्रापि दक्षिणाक्ष्यादीनां भेदे सत्यप्यस्य तत्र तत्र स्थितस्य परेशितुः** कश्चित् **अन्योऽन्याभावलक्षणो हीनाधिकत्वरूपोऽनुग्राह्यानुग्राहकत्वरूपो वा, भेदो नास्ति। कुत इत्यतः सर्वत्र हीत्युक्तं व्याचष्ट** सर्वत्रेति।

**अनु०** — सर्वत्राशेषदोषोज्झपूर्णकल्याणचिद्गुणः॥

सर्वत्र **स्थानेषु निर्भेदश्चेत्यपि द्रष्टव्यम्। अशेषदोषोज्झश्चासौ पूर्णकल्याणचिद्गुणश्चेति विग्रहः।** कल्याणा **विनाशादिरहिताः। यद्वा गुणशब्दो दुःखादिष्वपीत्यतः कल्याणेत्युक्तम्। चिच्छब्दात्परत आदिपदमध्याहार्यम्। अथवा चिद्रूपा न त्वचेतना इत्यर्थः। 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत' इत्यादौ परमात्मा श्रूयते यत इति शेषः।**

**शे०** — अन्योन्याभावरूप**स्य** भेदस्यैकत्वाद्भाष्ये तन्नानात्वप्रतिपादककश्चिदित्यंशवैयर्थ्यमित्यतस्तस्यैकत्वेऽपि तत्प्रयुक्तस्य तारतम्यादिरूपस्यापि भेदस्य सूत्रारूढत्वोपदर्शनार्थत्वान्न तदिति भावेन तत्तात्पर्यमाह **कश्चिदिति**। भाष्ये निर्दोषत्वादेरिव निर्भेदत्वस्य श्रुतिसिद्धताया अनुक्तेस्तल्लाभायापेक्षितं पूरयति **निर्भेदश्चेत्यपीति**। पूर्वपक्षिणा शङ्कितयोर्दोषित्वाल्पगुणत्वयोः अभावस्य श्रुतिसिद्धत्वलाभाय तदनुरूपं विग्रहमाह **अशेषदोषोज्झश्चेति**। यद्वा 'प्रसन्नता गुणोत्कर्षज्ञानादेव हि केवलम्। निर्दोषतापरिज्ञानादि'त्युत्तरमूलानुसारेण विग्रहमाह **अशेषदोषोज्झश्चेति**। गुणशब्दस्य शुभवचनत्वेन तेनैव शुभरूपतालाभात्तदर्थककल्याणपदानर्थक्यमित्याशङ्क्य विनाशादिराहित्यसमर्पकत्वाद्गुणानां न तदानर्थक्यमित्याशयेन तद्व्याचष्टे **कल्याणा इति**। वस्तुस्थितिमनुरुध्यैव चेदमुक्तम्। सामान्यवानसमवायिकारणमित्यादिपारिभाषिकगुणपरत्वे तु गुणशब्दस्य तेन तदलाभान्न वैयर्थ्यशङ्काऽपीत्याह **यद्वेति**। मूले

चिच्छब्दोक्तस्य ज्ञानस्य विशिष्यकल्याणत्वोक्त्या तद्वैषम्याभावलाभेऽपि तदितरगुणानां कल्याणत्वालाभात्त-त्प्रयुक्तवैषम्यशङ्कापरिहारायाह **चिच्छब्दात्परत इति** । अत्र पक्षे आदिपदाध्याहारो भवतीत्यपरितोषा-च्चिच्छब्दस्य ज्ञानपरत्वमनङ्गीकृत्य चेतनार्थत्वमेव चाङ्गीकृत्य कल्याणपदोक्तविनाशादिराहित्ये चेतन-स्वरूपहेतुसमर्पकत्वान्न तद्वैयर्थ्यं नाप्यध्याहारो दोष इत्यभिप्रेत्य चित्पदं प्रकारान्तरेण व्याख्याति **अथवेति** । कुतः सर्वेषु स्थानेषु परमात्मन उक्तरूपत्वमित्यतः सूत्रे उक्तस्य हीत्यस्याव्याख्यानप्रयुक्त-भाष्येन्यूनतामपेक्षितपूरणेन परिहरति **सर्वेषु भूतेष्वित्यादि** । सर्वेषु भूतेषु चक्षुरादिस्थानेष्वप्येतमेक-मेव पूर्णगुणमाचक्षत इत्यर्थः ।

**प०**— मूलार्थमाह **स्थानानामित्यादिना** ।

**श्री०— भेद इतीति** । अयमर्थः । **उभयलिङ्गं** भिन्नस्वरूपं नेत्युक्तौ भिन्नस्थानेषु विद्य-मानानां समप्ररूपाणां भेदमात्रनिषेधो विज्ञायते । विशिष्टनिषेधो ह्ययम् । स च विशेष्यबाधे विशेषण एव पर्यवस्यतीति । तत्राप्येकस्मिन् शरीरेऽपि । स्थानत इति तसिः सप्तम्यर्थे इत्युक्तं तद्दर्शयति **भेदे सत्यपीति** ॥ **चिच्छब्दादिति** । अत्र चिच्छब्दो ज्ञानपरः ॥ **सर्वेष्विति** । सर्वेषु भूतेषु स्थितं भगवन्तं ब्रह्मेति पूर्णमित्याचक्षत इत्यर्थः ।

**सु०— ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ** ॥ **उक्तमर्थमाक्षिप्य समाधातुं सूत्रं न भेदादिति** । **निर्भेदं सर्वत्र सर्वदोषदूरं सकलगुणपरिपूर्णं ब्रह्मेति नोपपद्यते । 'कार्यकारण-बद्धौ** तावि'त्यादिश्रुतिपुराणादिवाक्यैर्भिन्नत्वदोषित्वाल्पगुणत्वादेर्भेदशब्दोपलक्षितस्योक्तत्वा-**दित्याक्षेपार्थः** । **नेति परिहारांशं व्याचष्टे** तद्विरुद्धं त्विति ।

**अनु०— ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ** ॥

तद्विरुद्धं तु यत्तत्र मानं नैव क्वचिद्भवेत् ॥

यत्तु वाक्यं **तस्योक्तार्थस्य विरुद्धं प्रतीयते** तत्तत्र उक्तविरुद्धे क्वचिदर्थे **मानं नैव भवेत्कि-न्त्वन्य एव तस्यार्थः प्रतिपत्तव्यः** । कुत इत्यतः प्रत्येकमतद्वचनादित्युक्तम् । तदनुपपन्न-**मिवाभाति** । **सर्वत्र हीत्युक्तस्य प्रतिपक्षचोदनायां पुनस्तन्मात्रोपन्यासस्य व्यर्थत्वात्** । अत-**स्तात्पर्यमाह** महातात्पर्येति ।

महातात्पर्यरोधेन कथं तन्मानमत्र तु ॥

**सकलस्मृतीतिहासपुराणानां परमेश्वरस्याशेषदोषदूरत्वे समस्तगुणपरिपूर्णत्वे च यन्महा-तात्पर्यं तद्विरोधेन** तत् **वाक्यं** अत्र **भगवतो दोषित्वादौ कथं मानं भवेत्** । **तुशब्दो महा-**

**वाक्यत्वावान्तरवाक्यत्वलक्षणविशेषार्थः । दृष्टं हि निर्णीतमहावाक्यार्थविरुद्धस्य तदवान्तर-वाक्यस्य तत्राप्रामाण्यम् । यथा स्वर्गप्रयोजनाग्निहोत्रपरमहावाक्यार्थविरुद्धस्य यद्यमुष्मिन्लोकेऽस्ति वा न वेत्यादेस्तदवान्तरवाक्यस्य । महावाक्यं हि प्रधानम् । अनन्यार्थत्वात् । अप्रधानं त्ववान्तरवाक्यम् । तदर्थप्रतिपत्तिहेतुत्वात् ।**

**शे०— ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ॥ तन्मात्रोपन्यासस्येति ।** यद्यपि प्रत्येकमित्यनेनादरसूचनेनाधिकबलत्वसूचनान्न तन्मात्रोक्तिरियं तथाऽपि तद्व्युत्पादकयुक्त्यनुपन्यासान्नाधिकबलत्वसिद्धिरित्यभिप्रेत्य वैयर्थ्यादित्युक्तमिति ध्येयम् **तात्पर्यमाहेति** । तज्ज्ञापिकां युक्तिमाहेत्यर्थः । ननु श्रुत्यादीनां विष्णोरशेषदोषदूरत्वादौ महातात्पर्यविरोधेन तद्दोषवत्त्वाभिधायकवाक्यानां दोषित्वादावमानत्वमित्येव कुतः कल्प्यम् । नियामकविशेषाभावेन दोषाभिधायकवाक्यविरोधात् निर्दोषत्वाभिधायकवाक्यानामेव निर्दोषत्वादौ महातात्पर्याभावस्यापि वक्तुं शक्यत्वादित्यतो दोषाभावाभिधायकवाक्यानां महावाक्यत्वेन प्राबल्यात् । दोषवाक्यानां चावान्तरवाक्यत्वेन दौर्बल्यान्महातात्पर्यविरोधेन दोषवाक्यानाममानत्वकल्पनमेव युक्तं न तु वैपरीत्यमित्यभिप्रेत्य बाध्यबाधकभावप्रयोजकतयाऽभिमतस्य महावाक्यत्वादिविशेषस्य मूलारूढतासिद्ध्यर्थं तत्समर्पकतया **तुशब्दं** व्याचष्टे ॥ **तुशब्द इति ।** नन्वस्त्वेवं महावाक्यत्वावान्तरवाक्यत्वाभ्यां वाक्यद्वयस्य वैलक्षण्यं तथाऽपि महावाक्यविरोधेनावान्तरवाक्यस्य बाध इत्येतत्कुत इत्यतः किमेवंवादिनो महावाक्यविरोधेनावान्तरवाक्यस्य बाधो न दृष्ट इत्यभिमतं किंवा न तत्र नियामकमस्तीति विकल्पद्वयं मनसि निधायाद्यं दूषयति **दृष्टं हीति** । **तत्र** अवान्तरवाक्यस्य स्वार्थेऽप्रामाण्यमिति सम्बन्धः । तस्य हि प्रधानीभूताग्निहोत्रवाक्यानुरोधेन दिक्ष्वतीकाशाः कर्तव्या इत्यत्रैव प्रामाण्याङ्गीकारादिति भावः । धूमपरिहाराय दिक्षु रन्ध्राणि कर्तव्यानीति यावत् । द्वितीयं दूषयति **महावाक्यं हीति** ।

**स० — यद्यमुष्मिन् लोक इति ।** यद्यमुष्मिन् लोकेऽस्ति वा न वा को हि तद्वेदेति श्रुतिवाक्यमवान्तरवाक्यत्वेन महावाक्यविरोधे स्वार्थं परित्यज्य दिक्षु अतिकाशाः कर्तव्या इत्यत्र तात्पर्यं **कल्प्यते** तद्वदित्यर्थः । अतिकाशशब्दो रन्ध्रवाची । धूमपरिहारार्थं दिक्षु रन्ध्राणि कर्तव्यानीत्यर्थः । **तच्च वक्ष्यते** 'यो मामशेषाभ्यधिकं विजानाति स एव मामि'त्यादिनेति शेषः ।

**प०**— न भेदादिति चेदिति सूत्रं स्वयमेव विवृणोति ॥ **उक्तमर्थमित्यादिना** । समग्रसूत्रस्य परमतानुवादे लिखितत्वात्प्रतीकमात्रमेतन्न भेदादित्येतावन्मात्रं सूत्रमिति ज्ञेयम् ॥ **इत्यादि-**

**श्रुतिपुराणेति** । 'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ' इति माण्डूकश्रुतौ भागवतादिपुराणरामायणादिवाक्यैरित्यर्थः । **इत्युक्तमिति** । सूत्रकृतैवेति योज्यम् ॥ **इत्युक्तस्येति** । 'एतमेव ब्रह्मे'ति श्रुतौ सर्वत्र निर्दोषाशेषसद्गुणमेकमेव श्रूयत इत्युक्तस्य कार्यकारणबद्धाविति श्रुतिपुराणादिरूपप्रतिपक्षशङ्कायां अतद्वचनाद्भगवद्रूपाणामभेदवचनादिति प्रागुक्ताभेदोक्तिमात्रोपन्यासस्य प्रतिपक्षक्षेपणाशक्तनया व्यर्थत्वादित्यर्थः ॥ **तत्राप्रामाण्यमिति** । प्रतीतेऽर्थ इत्यर्थः ॥ **यथेति** । उक्तं हि पूर्वतन्त्रे प्रथमाध्यायद्वितीयपादाद्याधिकरणे यद्यमुष्मिन्निति वाक्यस्य पारत्रिकसुखविषयकसन्देहप्रतिपादकस्य स्वर्गफलकयागविधायकवाक्यविरोधादप्रामाण्यं शास्त्रदृष्टविरोधादिति पूर्वपक्षसूत्रेणाशङ्क्य 'आकालिकेप्से'ति सिद्धान्तसूत्रेण यज्ञशालायां धूमाकुलितलोचनानां ऋत्विजां तात्कालिकसुखापेक्षया गवाक्षकरणाय यद्यमुष्मिन्निति परलोकसुखनिन्दावचनं न तु तत्रैव तात्पर्यमित्युक्तमिति भावः । तत्र युक्तिमाह **महावाक्यं हीति** ॥ **तदर्थेति** । प्रधानवाक्यार्थेत्यर्थः ।

या०— **तन्मात्रोपन्यासस्येति** । अभेदमात्रोपन्यासस्येत्यर्थः । यद्यपि प्रत्येकमित्यनेनादरसूचनेन बलवत्त्वलाभान्न व्यर्थत्वम् । तथाऽपि बलवत्त्वप्रापकयुक्त्यनुपन्यासे बलवत्त्वं न ज्ञातुं शक्यमतो वैयर्थ्यमिति भावः ॥ **तात्पर्यमाहेति** । प्रत्येकपदसूचितादरलभ्यां तात्पर्यज्ञापिकां बलवत्त्वोपपादकयुक्तिमाहेत्यर्थः ।

श्री०— **विशेषार्थ इति** । तथा च तत् अवान्तरं महावाक्यं चेत्यर्थः ॥ **तदर्थेति** । महावाक्यार्थ इत्यर्थः ।

**सु०— स्यादेवम् । यदि परमेश्वरस्य सकलगुणपरिपूर्णत्वे निरस्तसमस्तदोषत्वे च वेदादीनां महातात्पर्यमित्यर्थः प्रमाणवान्स्यात् । तदेव तु न पश्याम इत्यत आह दुःखेति ।**

अनु०— दुःखाप्ययसुखावाप्तिहेतुत्वेनैव वेदवाक् ॥
भवेन्मानं

**मोक्षहेतुत्वेनेति वक्तव्ये दुःखाप्ययेत्यादिवचनं बादिविप्रतिपत्तेर्मोक्षस्वरूपनिरूपणार्थमात्यन्तिकदुःखनिवृत्तिर्निरतिशयसुखाभिव्यक्तिश्च मुक्तिरिति । यद्वाऽप्रधानप्रयोजनस्वर्गादिसंग्रहार्थमिदम् । इत्थम्भूतलक्षणे तृतीया ।** दुःखाप्ययसुखावाप्तिहेतुत्वेनैव **तद्धेतुत्वं यथा निर्वहेत्तथैव, मानं कस्यचिदर्थस्य प्रतिपादिका भवेत् । वेदवागिति स्मृत्यादेरुपलक्षणम् ।**

**एतदुक्तं भवति । शास्त्रेण हि विषयप्रयोजनवता भाव्यम् । प्रमाणत्वात्परार्थत्वाच्च । तत्र यदा विषयः सन्दिग्धः प्रयोजनं च निश्चितं तदा निश्चितेन प्रयोजनेनानिश्चितो विषयो निश्चेतव्यः । न हि शास्त्रं साक्षात्प्रयोजनस्य कारकम् । किन्तु विषयप्रतिपादनद्वारैव । तथा च तत्प्रयोजनं यस्मिन्ज्ञापिते सम्पद्यते स एव विषयोऽवधार्यते । अन्यथा विषयप्रयोजनयोरसंबद्धत्वेन शास्त्रस्यानुपादेयताऽऽपत्तेः । वेदादेश्च मोक्ष एव प्रधानं प्रयोजनम् । 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत' इत्यादेः । स्वर्गादिकं चाप्रधानम् । अतः स एव विषयः कल्पनीयो यस्मिन्ज्ञा(पि)ते मोक्षादिकं सम्प(द्यत इति/द्य)तेति ।**

**शे०** — ननु दुःखाप्ययसुखावाप्त्योः संसारदशायामपि सत्वान्न तन्मात्रस्य मोक्षत्वमिति कथमस्य मोक्षस्वरूपनिरूपणार्थतेत्यतोऽत्र दुःखाप्ययशब्दस्यात्यन्तिकदुःखनिवृत्तिपरत्वेन दुःखनिवृत्तिमात्रपरत्वस्य, सुखावाप्तिशब्दस्य च निरतिशयसुखाभिव्यक्तिपरत्वेन यत्किञ्चित्सुखावाप्तिपरत्वस्य, अभावेन संसारसाधारण्याभावाद्युक्तं मोक्षस्वरूपप्रतिपादकत्वमित्यभिप्रेत्य तत्तात्पर्यमाह **आत्यन्तिकेति** । इदानीं मोक्षस्वरूपनिरूपणस्यापि प्रयोजनविशेषाभावं मन्वानः पक्षान्तरमाह **यद्वेति** । मोक्षहेतुत्वेनेत्युक्ते स्वर्गादिहेतुत्वाभावप्रसङ्गात्तद्धेतुत्वस्यापि ज्ञापनार्थं तथाऽनुक्त्वा दुःखाप्ययसुखावाप्तिहेतुत्वेनेत्येवोक्तमित्यर्थः ॥ **इत्थम्भूतेति** । अर्थविशेषप्रतिपादकत्वरूपं प्रकारान्तरं प्राप्तस्य शास्त्रस्य दुःखाप्ययसुखावाप्तिहेतुत्वं चिन्हमिति तत्र तृतीयेत्यर्थः । दुःखाप्ययसुखावाप्तिहेतुत्वस्यार्थविशेषप्रतिपादकत्वं विनाऽनुपपत्तेस्तच्चिन्हत्वमिति भावः ॥ **प्रमाणत्वादिति** । अत्र प्रमाणत्वाद्विषयवता भाव्यं परार्थत्वाद्विषयप्रयोजनवता भाव्यमिति हेतुहेतुमद्भावो द्रष्टव्यः । ननु शास्त्रसाध्यत्वात्प्रयोजनस्य विषयेण विनाऽपि शास्त्रेणैव निष्पन्नत्वान्न तस्य विषयनिश्चायकत्वमित्यत आह **न हीति** ॥ **विषयप्रतिपादनद्वारैवेति** । अन्यथा शास्त्रत्वमेव न स्यात् । वक्तृश्रोत्रोरभिमतमन्यसाध्यं फलमधिकृत्य तद्धेतुभूतं प्रमाणान्तराप्राप्तमर्थं प्रतिपादयतां वाक्यानां समूहस्यैव शास्त्रत्वादिति भावः । मोक्षादिकमित्यादिपदेनाप्रधानप्रयोजनस्य स्वर्गादेः परिग्रहः ।

**प०** — **इत्थंभूतेति** । कंचित्प्रकारं प्राप्त इत्थंभूतः, तल्लक्षणे तज्ज्ञापन इत्युपेत्य व्यनक्ति **दुःखाप्ययेति** ॥ **परार्थत्वादिति** । परं प्रति प्रवृत्तत्वादित्यर्थः ।

**श्री०** — कर्तृकरणयोस्तृतीयेत्युक्तत्वेन प्रकृते तयोरर्थयोरयोगादाह **इत्थम्भूतेति** । मानत्वरूपप्रकारप्राप्ताया वेदवाचो दुःखाप्ययसुखावाप्तिहेतुत्वं ज्ञापकमित्यर्थः । कथं ज्ञापकमित्यतस्तद्दर्शयति **तद्धेतुत्वं यथा निर्वहेत्तथैव मानमिति** । ननु शास्त्रस्य साक्षात्प्रयोजनकत्वात्किं विषयप्रतिपादनद्वारेण । येन तत्र विषये महातात्पर्यं वाच्यमत आह **न हीति** ।

सु० — ततः किमित्यत आह तदिति ।

अनु० — तदीशानात्प्रसन्नादेव नान्यथा ।

तत् दुःखाप्ययादिरूपं कैवल्यम् । ईशानात् विष्णोरेव भवेन्नान्यस्मात् । स हि तस्येष्टे नान्यः । अस्तु तर्हि स एव विषयः किं गुणपूर्णत्वादिनेत्यत उक्तं प्रसन्नादेव नान्यथा न ज्ञातमात्रादिति ।

ततोऽपि किमित्यत आह प्रसन्नतेति ।

प्रसन्नता गुणोत्कर्षज्ञानादेव हि केवलम् ॥
निर्दोषतापरिज्ञानादपि नान्येन केनचित् ।

विष्णोः प्रसन्नता च तदीयगुणोत्कर्षज्ञानादेव केवलं निर्दोषतापरिज्ञानाच्च भवति । हिशब्दः प्रमाणप्रसिद्धिं द्योतयति । तच्च वक्ष्यते । केवलशब्दोऽवधारणार्थः । नान्येन केनचिदित्येतत्प्रतिरूपेणाल्पगुणत्वादिज्ञानेन कर्मादिना वा नेत्यर्थः । तथा च मोक्षादि-प्रयोजनेन शास्त्रेण तत्साधनभूतं भगवद्गुणोत्कर्षनिर्दोषताज्ञानमेव जीवानामुत्पादनीयमित्यतः सकलगुणपरिपूर्णे निरस्तसमस्तदोषे नारायण एवाशेषशास्त्रस्य महातात्पर्यमित्यवसीयते ।

---

शे० — मूले ईशानादित्यस्य विशेषणस्य प्रयोजनमाह स हीति ॥ तच्च वक्ष्यत इति । यो मामित्याद्यागमरूपमनुपदमेवोदाहरिष्यमाणमित्यर्थः ।

प० - ईशानपदतात्पर्यमाह स हीति । यद्वा ईशानाद्विष्णोरिति कुतो व्याख्येत्यत आह स हीति ॥ वक्ष्यत इति । यो मामित्यादिनोत्तरवाक्य इति भावः ।

या० — तच्च वक्ष्यत इति । अनुपदमेवेति शेषः ।

श्री० — तच्चेति । प्रमाणमित्यर्थः ॥ अवधारणार्थ इति । निर्दोषतापरिज्ञानादित्यनेनास्य सम्बन्धो द्रष्टव्यः । परिज्ञानाच्चेत्युक्त्याऽपिशब्दः समुच्चयार्थ इत्युक्तं भवति । ननु कथं द्वयोर्गुणो-त्कर्षनिर्दोषतापरिज्ञानयोः समुच्चयः । उभयत्राप्यवधारणसद्भावेन परस्परं व्यावर्तितत्वादित्य-तस्तद्व्यावर्त्यं दर्शयितुं नान्येन केनचिदित्युक्तं तस्यार्थमाह नान्येन केनचिदितीति । इत्यस्येत्यर्थ इत्यन्वयः ॥ एतदिति । एतयोर्गुणोत्कर्षनिर्दोषतापरिज्ञानयोरित्यर्थः । तथा च प्रसन्नता गुणोत्कर्षज्ञाना-देव भवति । न त्वल्पगुणत्वज्ञानात् । तथा निर्दोषतापरिज्ञानादेव भवति । न तु दोषित्वपरिज्ञानात् । तथैतदुभयज्ञानव्यतिरिक्तकर्मादिसाधनेन वा न भवतीत्येवमनभिमतव्यावृत्त्यर्थमवधारणमित्यर्थः ।

**सु०— स्यादेतद्यदि तदीशानादित्यादिनोक्तं प्रामाणिकं स्यादित्यतस्तत्रागमवाक्यान्युदाहरति** यो मामिति।

**अनु०** — यो मामशेषदोषोज्झं गुणसर्वस्वबृंहितम् ॥
जानात्यस्मै प्रसन्नोऽहं दद्यां मुक्तिं न चान्यथा ॥
यो मामशेषाभ्यधिकं विजानाति स एव माम् ॥
विजानात्यखिलांस्तस्य दद्यां कामान्परं पदम् ॥
यो मामेवमसम्मूढः किं मां निन्दन्ति शत्रवः ॥

**बृंहितशब्देन प्रत्येकमपि गुणानामनवधिकत्वमाचष्टे** । अशेषाभ्यधिकं **गुणैर्दोषाभावैश्च सर्वोत्तमम्। स एव मां विजानाति। अन्यज्ञानस्य मत्प्रसादाहेतुत्वात्। 'यो मामेवमि'त्यनेन 'कृतकृत्यस्य भारते'त्यन्तं भगवद्वाक्यं संगृह्णाति। एवं समस्तैर्गुणैर्दोषाभावैश्च। क्षराक्षरोत्तमो हि पुरुषोत्तमः। स सर्वविदित्यादिस्तुत्या प्रसन्नता द्योत्यते।** सर्वभावेन **सर्वेण प्रकारेण। अन्यथा व्याघातात्।** कृतकृत्यो **मुक्तः। 'किं मामि'त्यनेन 'अभी ३ इदमेकमेक अस्मि निष्षाळभी द्वा किमु त्रयः करन्ति। खले न पर्षान्प्रति हन्मि भूरिकिम्मां निन्दन्ति शत्रवोऽनिन्द्रा' (ऋ. १०–४८–७) इति श्रुतिमुपादत्ते।** इदमेकं **विश्वं** अभि **प्रति अहमेको निष्षाळस्मि नितरां सहत इति निष्षाट् द्वौ** प्रपञ्चावभि **प्रति अहमेको निष्षाळस्मि। त्रयोऽपि प्रपञ्चा मम किमेव कुर्वन्ति न किमपि ममानिष्टं कर्तुमीशते। किन्त्वहमेव** खल इव **खलस्थितानि धान्यानीव** भूरि **भूरीन्बहून्बहुवारं** वा **तान्निष्ठुरान्निन्दकान्प्रतिहन्मि तस्मादनीश्वरास्ते शत्रवो मां किं निन्दन्तीत्यर्थः। एतद्भगवतो वाक्यम्। अत्र निन्दकेषु भगवतोऽप्रसादोऽ(नर्थावा)निष्टावाप्तिश्च श्रूयते। निन्दा च दोषज्ञानादिकेति प्रसिद्धमेव।**

**शे०** — सर्वस्वशब्देन पौनरुक्त्यं परिहरति **बृंहितशब्देनेति** । 'यो मामशेषाभ्यधिकमि'त्यस्य गुणोत्कर्षज्ञानादेः प्रसादादिहेतुत्वाप्रतिपादकतया प्रकृतानुपयोगमाशङ्क्य तदुपयोगितया व्याचष्टे **अशेषाभ्याधिकमिति** । एवशब्दाभिप्रायमाह **अन्यज्ञानस्येति** । दोषित्वादिना ज्ञानस्येत्यर्थः ॥ **यो मामित्यनेनेति** । उदाहृतांशमात्रस्य विवक्षितार्थाप्रतिपादकत्वादिति भावः । ननु यो मामित्यनेन पुरुषोत्तमत्वज्ञानस्य मोक्षसाधनत्वप्रतिपादनेऽपि गुणोत्कर्षज्ञानादेस्तदप्रतिपादनात्प्रकृतानुपयोग इत्यतस्तदुपयोगितया व्याचष्टे **समस्तैरिति** । नन्वत्र ज्ञानस्य मोक्षसाधनत्वोक्तावपि प्रसादस्य तदनुक्तेर्नास्य प्रकृतोपयोगोऽस्तीत्यत आह **स सर्वविदिति स्तुत्येति** । ननु चोदाहृतवाक्ये सर्वभावेनेत्यनेन सर्वात्म-

कत्वेन ज्ञानस्य मोक्षसाधनत्वोक्तेर्नास्य प्रकृते उपयोगित्वं प्रत्युत तद्विरोधित्वमेवेति कथमस्य प्रमाणतयोपन्यास इत्यतो व्याचष्टे **सर्वेण प्रकारेणेति** । पराभिमतार्थे बाधकमाह **अन्यथेति** । 'भजती'त्युक्तभजनव्याघाता'दुत्तमः पुरुषस्त्वन्य' इति पूर्ववाक्यविरोधाच्चेत्यर्थः । ननु गुणोत्कर्षज्ञानिनः कृतकृत्यत्वमात्रमनेनोच्यते न तु मुक्तत्वमिति कथमस्य प्रकृतोपयोग इत्यत आह **मुक्त इति** । नेति पदं हि लोके प्रतिषेधार्थ एव वर्तते । स्वाध्याये तु प्रतिषेधार्थे उपमार्थे च वर्तते । येन पदेनान्वीयते तत्पूर्वं प्रयुज्यमानं तत्प्रतिषेधे वर्तते । ततःपरं प्रयुज्यमानं तत्पदार्थप्रतियोगिकसादृश्ये वर्तते । 'नेति प्रतिषेधोऽर्थो भाषायामुभयमन्वध्यानं नेन्द्रं देवममंसतेति प्रतिषेधार्थी यः पुरस्तादुपचारस्तस्य यत्प्रतिषेधति, दुर्मदासो न सुरायामित्युपमार्थी य उपरिष्टादुपचारस्तस्य येनोपमीयत' इति यास्कोक्तेस्तथा चोपमेयवाचिनः खलशब्दादुपरिष्टात्प्रयुज्यमानं नेतिपदं खलपदार्थप्रतियोगिकसादृश्यार्थकमित्याशयेनाह **खल इवेति** । 'धान्यानि यद्वत्खलगानी'त्यादिस्मृत्यनुसारेण खलपदं खलस्थितधान्योपलक्षकमित्यभिप्रेत्य वा खलपदात्परतः स्थितधान्यपदाध्याहारं वाऽभिप्रेत्यैतत्तात्पर्यमाह **खलस्थितधान्यानीति** । ये त्वत्र च नशब्दस्य येनान्वीयते ततः पूर्वत्वमभिप्रेत्य क्वचित्पूर्वमपि भवतीत्येतद्वाक्यविषयतामाहुः । तेषामभिप्रायं न विद्मः । ननु निन्दकेषु भगवतोऽप्रसादश्चेद्भवतु निन्दाऽभावस्य प्रसादसाधनत्वं न तु दोषाभावज्ञानस्य प्रसादसाधनत्वमप्यनेनैव सेद्धुमर्हति । दोषज्ञानस्याप्रसादहेतुत्वानभिधानात्कथमस्य प्रकृतोपयोग इत्यत आह **निन्दा चेति** ।

**प०**— एवमिति गीतापदानुवादः । समस्तैरित्यादिव्याख्या । पुरुषोत्तममित्यस्यार्थः क्षराक्षरेत्यादि ॥ **स्तुत्येति** ज्ञानिविषयकभगवत्कर्तृकस्तुत्या भगवतः प्रसन्नता द्योत्यत इत्यर्थः ॥ **अन्यथा व्याघातादिति** । सर्वात्मकत्वार्थत्वे पुरुषोत्तममित्युक्त्वा पुनस्तदात्मकत्वकथने व्याघातादित्यर्थः ॥

**श्री०**— ननु सर्वाभेदेनेत्यर्थ एव किं न स्यादित्यत आह **अन्यथेति** । पुरुषोत्तमं सर्वाभेदेन जानातीत्युक्ते व्याघात इत्यर्थः । व्याघातप्रदर्शनार्थमेव पुरुषोत्तमशब्दः समस्तैरित्यादिना व्याख्यातः । पर्षानित्यस्यार्थमाह **निष्ठुरानिति** । 'सम्यग्वचो व्यक्तमुपाददे पुमानि'ति वाक्यव्याख्यानरूपम् । 'यतः पर्यङ्कशयन आह विष्णुः सनातन' इति दशमस्कन्धभागवततात्पर्यं हृदि निधायाह **एतद्भागवत इति** । नन्वत्र निन्दाया एव प्रसादहेतुत्वं नेत्युच्यते । न दोषज्ञानस्येत्यत आह **निन्दा चेति** ।

**सु०**— **वाक्योदाहरणफलमाह** इत्यादीति ।

**अनु०**— इत्यादिवेदस्मृतिगवाक्यैरेवावसीयते ।

**अवधारणेन प्राबल्यं सूचयति । 'प्रसादेन मुक्तिः सगुणवेदनादि'ति** वक्ष्यमाणमत्रापि **संबध्यते । अत्रानुमानमप्याह** लोकतश्चेति ।

लोकतश्च प्रसादेन मुक्तिः सगुणवेदनात् ।

**इतिशब्दोऽध्याहार्यः अवसीयत इति वर्तते । भगवत्प्रसादेन संसारान्मुक्तिर्भवति स भगवत्प्रसादस्तद्गुणोत्कर्षवेदनाद्दोषाभाववेदनाच्च भवतीत्ययमर्थो लोकतो लोकदृष्टान्तोपेतानुमानतश्चा(नुमीयते)वसीयते । तथा च प्रयोगः । संसारान्मुक्तिः (परमपु) समर्थपुरुषप्रसादसाध्या मुक्तित्वान्निगडमुक्तिवत् । न (च) हि भगवतोऽन्यस्तत्र समर्थोऽस्ति । विमतो भगवत्प्रसादो गुणोत्कर्षज्ञानसाध्यो महाप्रसादत्वाद्राजप्रसादवत् । पक्षतुल्यत्वान्न व्यभिचारश्चोदनीयः ।**

**श्री०**— लोकतश्चेत्यादिना प्रमाणान्तरस्याप्यत्राभिधानाद्वाक्यैरेवेत्यवधारणानुपपत्तिरित्यत आह **अवधारणेनेति** । अत्र 'लोकत'श्चेत्युक्तहेतुं प्रति 'प्रसादेन मुक्तिः सगुणवेदनादि'त्यस्य साध्यत्वाप्रतीतेरितिशब्दाध्याहारेण योजयति **इतिशब्द इति** । न च पूर्ववाक्यस्थेतिशब्दानुवृत्त्यैवोपपत्तेः किमध्याहारेणेति वाच्यम् । अन्यान्वितस्यान्यत्रान्वयानुपपत्त्याऽध्याहारस्यावश्यकत्वात्साकाङ्क्षत्वाद्वाक्याभासतां परिहरति **अवसीयत इति** । लोकस्याप्रमाणत्वादाह **लोकत इति** । समर्थपुरुषेति उद्देश्यसिद्ध्यर्थं विशेषणम् । भगवत्प्रसादसाध्यत्वस्यैवोद्देश्यत्वात् । न चैवं भगवत्प्रसादसाध्येत्येव साध्यतां किं पर्यवसानसापेक्षेणानेनेति वाच्यम् । दृष्टान्ते साध्यवैकल्यपरिहाराय तस्यावश्यकत्वादिति भावः ॥ **महाप्रसादत्वादिति** । कर्मादिसाध्ये भगवत्प्रसादे व्यभिचारवारणाय महत्त्वेन प्रसादो विशेषितः । तदर्थश्चोत्तमत्वं मोचकत्वमिति यावत् । नन्विन्द्रप्रसादकामो'ऽहल्यायै जारे'ति तन्निन्दामेव करोति । अतो भग्नव्याप्तिकमनुमानमित्यतो गीताभाष्यरीत्या 'दोषकृतोऽपि ते तत्फलं बहुतरो लेपो नासीदि'त्यर्थप्रतिपादकतया तद्वाक्यस्योत्कर्षमात्रपरत्वेन पक्षतुल्यत्वान्न तत्र व्यभिचार इत्याह **पक्षतुल्यत्वादिति** । केचित्तु चैद्यादीनां मोक्षसाधनभगवत्प्रसादस्य महाप्रसादत्वेऽपि द्वेषसाध्यत्वेन गुणोत्कर्षज्ञानसाध्यत्वाभावात्तत्र व्यभिचार इत्यत इदमुक्तमित्याहुः ।

**स०**— ननु चैद्यादीनां भगवत्प्रसादस्य मोक्षसाधनत्वेन महाप्रसादत्वेपि द्वेषसाध्यत्वेन गुणोत्कर्षज्ञानसाध्यत्वाभावात्तत्र व्यभिचार इत्यत आह **पक्षतुल्यत्वादिति** ।

**प०**— **अत्रापीति** । 'इत्यादिवेदस्मृतिगवाक्यैरेवे'त्यत्रापीत्यर्थः । क्षुद्रफलहेतुप्रसादे व्यभिचारनिरासाय महाप्रसादत्वादिति प्रसादे महत्त्वविशेषणम् । ननु 'कामाद्गोप्यो भयात्कंस' इत्यादेर्गोपिकादिमुक्तिहेतुप्रसादे कामादिजन्ये व्यभिचार इत्यत आह **पक्षतुल्यत्वादिति** । ज्ञानपादे तत्तात्पर्यस्य वक्ष्यमाणत्वात् । तत्रापि गुणोत्कर्षज्ञानजन्य एव प्रसाद इति भावः ।

**या०**— **महाप्रसादत्वादिति** । अत्र स्वर्गजनके कर्मसाध्येऽधमप्रसादे व्यभिचारवारणाय

महेत्युक्तम् । तदर्थश्चोत्तमत्वं मोचकत्वमिति यावत् । 'उत्तमस्त्वेव मुक्तिद' इति वचनात् । ननु चैद्यादिमोचकभगवत्प्रसादेऽस्य हेतोर्व्यभिचार इत्यत आह पक्षतुल्यत्वादिति । तत्रापि भगवद्गुणोत्कर्षज्ञानसाध्यत्वमस्तीत्यन्यत्रोपपादितमिति भावः । अथवेन्द्रमहाप्रसादकामोऽहल्यायै जारेति तन्निन्दामेव करोति ततस्तत्र व्यभिचार इत्यत आह पक्षेति । अहल्याजारत्वप्रतिपादकं वाक्यमपि 'दोषकृतोऽपि न बहुतरो लेप आसीदि'तीन्द्रगुणोत्कर्षप्रतिपादकतया तत्स्तुतिरूपमेव न निन्दारूपमिति गीताभाष्ये प्रतिपादितमित्यर्थः ॥ ३-२-८ ॥

**श्री०— सूचयतीति** । शब्दादेव प्रमित इतिवदिति भावः । **तत्र** संसारान्मोचने ।

**सु०— महातात्पर्यरोधेनेत्यादिनोक्तमुपसंहरन्परकृतापव्याख्याननिरासेऽप्युक्तां युक्तिमतिदिशति** महातात्पर्येति ।

**अनु०—** महातात्पर्यमुख्यस्य विरोधादत एव हि ॥
दोषित्वनिर्गुणत्वाल्पगुणत्वादि कथञ्चन ॥
नार्थः श्रुतिपुराणादेः

**परममहातात्पर्यस्य । निर्गुणत्वग्रहणमपव्याख्याननिरासार्थम् । कथञ्चनेत्युपाधिसंबन्धादिनेत्यर्थः । न केवलमानुमानिकं सकलवेदा(दीना)न्तानां भगवद्गुणोत्कर्षादौ महातात्पर्यम् । किन्तु वाचनिकं चेत्याह** तद्विरुद्ध इति ।

तद्विरुद्धोऽखिलस्य च ॥
अर्थः स्वयं विनिर्णीतो वासुदेवेन सादरम् ।

**दोषित्वादेर्विरुद्धः** । अखिलस्य **शास्त्रस्य** । **तद्वाक्यं पठति** इति गुह्यतममिति ।

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ॥
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥
इति

इति **यन्मया मम पुरुषोत्तमत्वादिकमुक्तं** इदं गुह्यतमं शास्त्रं तात्पर्येण **सर्वशास्त्रैः प्रतिपाद्योऽर्थः । एतद्बुद्ध्वेति प्रशंसयाऽऽदरः प्रतीयते । यदुक्तं स्थानभेदानुमानं तदन्यथासिद्धमिति परेशितुरित्यनेन सूचितम् । यथोक्तम् । 'एश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयत' इति । कालातीतं चेत्याह** अत इति ।

अतोऽखिलसच्छास्त्रविरुद्धत्वेन नानुमा ॥

वर्तते तत्र

तत्र **परमेश्वरभेदादौ** ।

**अधिकरणार्थमुपसंहरति** तेनेति ।

तेनेशो निर्णीतोऽखिलसद्गुणः ॥ ३-२-८ ॥

सच्छब्दो **निर्दोषार्थः** । **निर्भेद** इत्युपसंहर्तव्ये तत्फलोपसंहारोऽयमपव्याख्याननिरा-समप्युपसंहर्तुम् ॥ ३-२-८ ॥

**शे०**— ननूक्तार्थप्रतिपादकत्वान्महातात्पर्येत्यादिकमनर्थकम् । न चोक्तोपसंहारार्थत्वान्न तदिति वाच्यम् । तथाऽप्यत एवेत्येतद्वाक्यं विनैव तत्सिद्धया तद्वैयर्थ्यानिरासादित्यतस्तं विनोक्तोपसंहार-सिद्धावपि तस्यांशस्यापव्याख्याननिरासे उक्तन्यायातिदेशार्थत्वेनार्थवत्त्वसंभवादित्यभिप्रेत्योक्ताभिप्रायेणो-त्तरग्रन्थं सङ्गमयति **महातात्पर्यरोधेनेतीति** । अत्र मूलेऽत एवेत्यस्यायमर्थः । पूर्वपक्ष्युत्प्रेक्षितश्रुत्यर्थ-निरासार्थमुपन्यस्तो यो महातात्पर्यनिरोधस्तस्मादेव परभिप्रेतनिर्गुणे तात्पर्यमपि नेतीति । नन्वत्र भाष्येऽत एवेत्यंशस्यापव्याख्याननिरासे उक्तन्यायातिदेशकत्वे न किञ्चिज्ज्ञापकमिति कथं तत्परत्वमित्यत आह **निर्गुणत्वेति** । अन्यथा दोषित्वाल्पगुणत्वयोरेव पूर्वपक्षिणा शङ्कितत्वात्तदनुसारेण तद्विरुद्ध-निर्दोषत्वगुणपूर्णत्वयोरेव श्रुत्यर्थतयोपसंहर्तव्यत्वान्निर्गुणत्वस्य श्रुत्यर्थत्वाभाववर्णनासङ्गतिप्रसङ्गादिति भावः ॥ **कथञ्चनेत्युपाधिसंबन्धादिनेत्यर्थ इति** । निर्दोषत्वादौ महातात्पर्याच्चद्विरोधेन दोषित्वादेः पारमार्थि-कत्वासंभवेऽप्यौपाधिकस्याविद्यकस्य वा दोषित्वस्य संभवात्तस्य श्रुत्यर्थत्वमस्त्विति न वाच्यमिति कथञ्च-नेत्यनेन सूचितमित्यर्थः । उक्तार्थस्य वाचनिकत्वसिद्ध्यर्थं प्रकृतोपयोगितया व्याचष्टे **इति यदिति** । सादरत्वस्य कथं लाभ इत्यत आह **प्रशंसयेति** । अखिलगुणत्वनिर्दोषत्वयोः पूर्वपक्षिणाऽऽक्षिप्तत्वा-त्सिद्धान्तिना च समर्थितत्वात्तदनुरोधेनोभयोरप्युपसंहर्तव्यत्वात्कथं गुणपूर्णत्वमात्रोपसंहार इत्यत आह **सच्छब्द इति** । ननु स्थानभेदेन भगवति भेदस्यैव साक्षात्परेण शङ्कितत्वात्तदनुषङ्गेणैव दोषित्वादे-रापादनात्तदनुरोधेन भाष्यकृताऽपि निर्भेदत्वस्यैवोपसंहर्तव्यत्वात्कथं तदनुपसंहृत्य तदनुषङ्गलब्धस्य निर्दोषत्वादेरेवोपसंहार इत्यत आह **निर्भेद इतीति** ॥ ३-२-८ ॥

**प०**— महातात्पर्यमुख्यस्येत्यस्यार्थः **परमेत्यादि** । समासः सुखविशिष्टाभिधानादेवेत्यादा-विव ध्येय इति भावः ॥ **तथोक्तमिति** । भाष्ये ॥ ३ । २ । ८ ॥

**श्री०**— सच्छब्दस्य सन्घट इत्यादाविव सत्तारूपार्थग्रहणे प्रकृतासङ्गतेस्तदर्थमाह **निर्दो-षार्थ इति** ॥ **उपसंहर्तव्य इति** । अत एव सङ्क्षेपे सर्वरूपेष्वभेदवानित्युक्तम् । **अपव्याख्यानं** अत्राधिकरणे ब्रह्मणो निर्गुणत्वप्रतिपादनरूपम् ॥ ३-२-८ ॥

**॥ इति स्थान(तोऽप्य)भेदाधिकरणम् ॥**

॥ अथ उपमाधिकरणम् ॥

सु०— ॥ ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ **इह परमेश्वरे** जीवस्यात्यन्तिकभक्ति-सिद्धये भेदाभेदमतं निराक्रियते । तथा हि । जीवब्रह्मणोर्भेदस्तावत्सिद्धान्तिनाऽङ्गीक्रियत एव । अभेदस्त्वनुमानतः सिद्धः । जीवो ब्रह्माभिन्नश्चेतनत्वाद्ब्रह्मवत्; ब्रह्मांशत्वात् । यो यदंशः स तदभिन्नो यथेश्वरांशो मत्स्यादिस्तदभिन्न इति । अतो भिन्नाभिन्नो ब्रह्मणा जीव इत्येवं प्राप्ते प्रतिविहितं सूत्रकृता सूर्यकादिवदिति सूत्रखण्डेन । तदेतद्दृष्टान्तवचनमात्रं न कस्यचिद-र्थस्य साधकं बाधकं वेत्यतः पूर्वपक्षनिषेधपूर्वकं प्रतिज्ञाहेतू दर्शयति न चेति ।

अनु०— ॥ ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥

न च चित्त्वादभिन्नत्वं जीवस्येशवदाप्यते ॥
यत आभासतामेव श्रुतिरस्य वदत्यलम् ।

चित्त्वादित्यंशत्वस्याप्युपलक्षणम् । अभिन्नत्वं ब्रह्मणेति शेषः । ईशवत् ब्रह्मवदीश्वरा-वतारवच्च । आप्यते युज्यते । अस्य जीवस्य । अस्य ब्रह्मण आभासताम् । एवेत्यविगानेनालं विस्पष्टम् । एतदुक्तं भवति । न चेतनत्वाद्यनुमानेन जीवस्य ब्रह्माभेदसाधनं युक्तम् । जीवो ब्रह्माभिन्नो न भवति तदाभासत्वाद्यो यदाभासो नासौ तदभिन्नो यथा सूर्यकादिः सूर्यादिनेत्य-नुमानविरोधात् । न चासिद्धो हेतुर्विस्पष्टश्रुतिसिद्धत्वादिति ।

शे०— ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ आपातप्रतीतभाष्यदिशेदमधिकरणम-भेदनिरासेन भेदपरमिति प्रतीयते । तच्चायुक्तम् । 'पृथगित्यत्र पूर्णते'ति भेदसमर्थनस्य पृथगधिकरण एव समाप्तत्वाभिधानेन तदुत्तरसूत्राणां भेदपरत्वाभावसिद्धेरिति भावेन पादसङ्गतिं दर्शयन्नेव प्रकारान्तरेणै-तदधिकरणप्रतिपाद्यमाह **इहेत्यादिना** । ननु 'न च चित्त्वादभिन्नत्वमि'त्यादिनोत्तरत्राभेदस्यैवाशङ्क्य निरसनाद्भेदपरत्वमेवास्य सूत्रस्य युक्तम् । न च पौनरुक्त्यं दोषः । वाक्यान्तरद्योतकत्वादियुक्तरीत्या भेदपरसूत्रान्तरेष्विव तत्परिहारसम्भवात् । तत्कथं भेदाभेदमतनिरासकत्वमस्य स्यादित्यतोऽत्र पूर्वपक्षभाष्ये भेदस्य सिद्धान्तिनाऽङ्गीकृतत्वेन तत्साधने सिद्धसाधनत्वप्रसङ्गादेव तदसाधनम् । न तु भेदस्य स्वानभि-मतत्वात् । अतो न दोष इत्याह **भेदस्तावदिति** ॥ **न कस्यचिदिति** । अन्यथा प्रतिदृष्टान्तवचनेन विपरीतस्याप्यर्थस्य सिद्धिप्रसङ्गादिति भावः ॥ **पूर्वपक्षनिषेधपूर्वकमित्यादि** । अनेन 'न चे'त्यादिपूर्वार्धः पूर्वपक्षनिषेधपरः । चित्त्वादित्यस्य तद्बहिर्भावेन तदावृत्त्या प्रतिज्ञोपदर्शनपर इत्युक्तं भवति । 'चेतनत्वेन

चांशत्वादि'त्युपसंहारेंऽशत्वस्यापि श्रवणात्तदनुसारेणोपक्रमोक्तं चित्त्वं तदुपलक्षणतया व्याख्याति **चित्त्वादितीति** ॥ **ईशवद्ब्रह्मवदिति** । यद्यप्यत्रेशशब्दवाच्येशस्यापि चेतनत्वाद्ब्रह्माभिन्नत्वाच्चोक्त-साध्यसाधनवत्तया दृष्टान्तत्वसम्भवान्न तत्परित्यागेन ब्रह्मणो दृष्टान्ततया व्याख्यानमुचितम् । तथाऽपि परमार्थभूतमायासम्बद्धस्य ब्रह्मण एव परमते ईशत्वात्तत्र विशेष्यभूतब्रह्ममात्रस्योक्तसाध्यसाधनवत्तया दृष्टान्तत्वसम्भवे तत्परित्यागेन विशिष्टब्रह्मभूतस्येशस्य तत्त्वेनोपादानमनुचितमिति भावेन विशेष्यभूतब्रह्म-मात्रपरत्वेनेदमीशशब्दव्याख्यानमित्यवधेयम् । ब्रह्मणो ब्रह्मांशत्वाभावेन साधनवैकल्यापत्त्या चेतनत्वा-नुमान इव ब्रह्मांशत्वानुमाने दृष्टान्तत्वासम्भवात्तद्वैत्वमिप्रायेणेशशब्दतात्पर्यमाह **ईश्वरावतारव-च्चेति** । मत्स्यादिरूपब्रह्मांशवदित्यर्थः । भगवदाभासत्ववज्जन्यत्वादेरपि श्रुत्या प्रतिपादनादाभासतामे-वेत्यवधारणानुपपत्तिमाशङ्क्य तत्तात्पर्यमाह **अविगानेनेति** । किमनेन ग्रन्थेनाभेदानुमानस्य दूषणमुक्तं भवतीति न प्रतीयते । आभासत्वस्य श्रुतिसिद्धत्वोक्तेरपि प्रयोजनं न दृश्यत इत्यतस्तदुभयं दर्शयति **एतदिति** । **सूर्यकादिरिति** । सूर्यप्रतिबिम्बादिरित्यर्थः । सूर्यादिप्रतिबिम्ब इत्येवार्थः । अत एव भाष्ये 'सूर्यादिप्रतिबिम्बोपमत्वत' इत्येवोक्तमिति ।

**प०** — **अत एव चोपमा** । क्रमेण हेतुद्वयस्य दृष्टान्तलाभाय ईशवदित्येतत् द्वेधा व्याचष्टे **ब्रह्मवदीश्वरावतारवच्चेति** । अस्येतिपदमावृत्य बिंबप्रतिबिंबरूपोभयपरत्वेन व्याचष्टे **अस्य जीवस्येत्यादि** । एवकारार्थोऽविगानेनेति । निस्संदेह इत्यर्थ ।

**या०** — ॐ **अत एव चोपमा सूर्यकादिवत्** ॐ ॥ **अंशत्वस्याप्युपलक्षणमिति** । 'चेतनत्वेन चांशत्वादि'ति वक्ष्यमाणत्वादिति भावः । भास्करमते ईश्वरजीवस्यात्यन्तभेद एवेति वक्ष्यमाणत्वेन साध्य-वैकल्यं स्यादित्यत आह **ईशवद्ब्रह्मवदिति** । नन्वेवं द्वितीयहेतौ साध्यवैकल्यमित्यत आह **ईश्वरावतार-वच्चेति** ॥

**श्री०** — ॐ **अत एव चोपमा सूर्यकादिवत्** ॐ ॥ **दर्शयतीति** । पूर्वार्धेन प्रतिज्ञा उत्तरार्धेन हेतुर्दर्शित इति भावः । अयं चाभासत्वरूपहेतुः सौत्रचशब्दसूचित इति ज्ञातव्यम् । सौत्र-श्चशब्द आभासत्वसमुच्चयार्थतया व्याख्यात इति वक्ष्यमाणत्वात् । द्वितीयहेतावपि ब्रह्मण एव दृष्टान्तत्वे तत्रांशत्वाभावेन साधनवैकल्यं स्यादित्यतो दृष्टान्तान्तरमाह **ईश्वरावतारवदिति** ।

**च०** — ॐ **अत एव चोपमा सूर्यकादिवत्** ॐ ॥ हेतुद्वयस्य निदर्शनद्वयलाभायेशवदिति पदं तन्त्रताद्याश्रयणेन व्याकुरुते **ब्रह्मवदित्यादि** ।

सु० — काऽसौ श्रुतिरित्यतस्तामुदाहरति यथेति ।

अनु० — यथैषा पुरुषे छाया एतस्मिन्नेतदाततम् ।

छायाऽऽतता तथैतस्मिन्परमात्मन्येतज्जीवजातमाततमायत्तमिति यावत् । एतदेव विशदश्रुतिभ्यां दर्शयति छायेति ।

छाया यथा पुंसदृशी पुमधीना च दृश्यते ।
एवमेवात्मकाः सर्वे ब्रह्माद्याः परमात्मनः ।
सत्ताप्रतीतिकार्येषु पुमधीना यथेयते ।
आभासा एव पुरुषा मुक्ताश्च परमात्मनः ।

आत्मका अल्पचेतनाः । पुरुषाः संसारिणः । तदधीनत्वादिकमेवाभासत्वमिति वक्ष्यति । परमेश्वराभासत्वं (न सर्वेषां सा) च न साक्षात्किन्तु पारम्पर्येणेति स्वरूपकथनाय श्रुतिद्वयं पठति छाया विष्णोरिति ।

छाया विष्णो रमा, तस्याश्छाया धाता, विशेषकौ ।
तस्य, इन्द्रकामौ च तयोः,तयोरन्येऽखिला अपि ।
हरेर्ब्रह्मा,ऽस्य गीः, तस्या विशेषौ, इन्द्र एतयोः ।
मारश्च भासकाः सर्वे एतयोस्तदधीनतः ।
सर्वेऽल्पशक्तयश्चैव पूर्णशक्तिः परो हरिः ।
चेतनत्वेऽपि भिन्नास्ते तस्मादेते न सर्वदा ।

छायेव छाया । विशेषकौ गरुडशेषौ । तस्य धातुश्छाये । तयोः गरुडशेषयोः । पुनस्तयोरिन्द्रकामयोः । हरेर्ब्रह्मा । अभास इति सर्वत्र सम्बन्धः । आभासत्वव्याख्यानं तदधीनत इति । सर्व इत्यनेन सर्वेषां परमेश्वराभासत्वमुपपादयति । चशब्दो हरिस्त्विति तुशब्दार्थः । आभासत्वे किमित्यत उक्तं चेतनत्वेऽपीति । अत्रापि तदंश(त्वस्योप)त्वोपलक्षणम् । तस्मात् आभासत्वात् । सर्वदेत्यनेन भिन्ना एवेत्यवधारणं सूचयति । उदाहृतश्रुतीनां फलमाह इत्यादीति ।

इत्यादिश्रुतिवाक्येभ्यो ज्ञायते भेद एव हि ॥

जीवस्य परमेश्वराभासत्वं ज्ञायते तेनात्यन्तभेदश्च ज्ञायत इत्यर्थः । न परानुमानयोः सत्प्रतिपक्षत्वमुच्यते । किन्त्वस्मदीयानुमानस्य श्रौतत्वेन प्रबलत्वाद्बाधितत्वमिति भावः ।

शे० — साकाङ्क्षत्वादपेक्षितं पूरयति छायाऽऽततेति । अनेनाततमिति वक्ष्यमाणमिहापि सम्बध्यते । योग्यतावशाच्च लिङ्गविपरिणाम इति सूचितं भवति । श्रुतेः पूर्वमेवोदाहृतत्वाच्छायेत्या-

द्युत्तरभाष्यवैयर्थ्यमाशङ्क्य परिहरति **विशदेति** । एकश्रुतित्वभ्रमनिरासायाह **श्रुतिभ्यामिति** । अवच्छेदकाभावेऽसंकुचितवृत्तिनाऽऽत्मशब्देन रुद्रादीनामिव मत्स्यादीनामपि प्राप्त्या तेषामपि ब्रह्माभासत्वाद्ब्रह्माभेदाभावानुमानं स्यादन्यथा तत्रैवोक्तानुमानस्यानैकान्तिकत्वापातादित्यतः तत्संकुचितवृत्तितामाश्रित्य तत्संग्राह्यतावच्छेदकमुक्तम् **आत्मका इति** । तद्व्याचष्टे **अल्पचेतना इति** । अनेनात्मशब्दश्चेतनपरः कप्रत्ययश्चाल्पार्थ इत्युक्तं भवति । मुक्तानामपि पुरुषत्वात्कथं तत्प्रतिद्वन्द्वित्वेन पुरुषा इत्युक्तिरित्यतोऽत्र पुरुषपदस्य संसारिपरत्वान्नानुपपत्तिरित्याशयेन तद्व्याचष्टे **संसारिण इति** । उदाहृतवाक्यैर्जीवानां भगवदधीनत्वादिसिद्धावपि कथमाभासत्वसिद्धिरित्यत आह **तदधीनत्वादिकमेवेति** ।। **वक्ष्यतीति** । 'तावन्मात्रेण चाभासो रूपमेषां चिदात्मनाम्' इत्यादिनेति शेषः । आभासत्वमात्रस्यैवाभेदाभावसाधकत्वात्तत्साधनस्य प्रकृतोपयोगेऽपि साक्षात्त्वपारम्पर्ययोस्तत्साधनानुपयोगित्वात्तद्व्युत्पादनं भाष्यकारीयमनर्थकमित्यत उक्तं **स्वरूपकथनायेति** । 'सर्वेऽल्पशक्तयश्चैवे'ति चशब्दस्य समुच्चयार्थत्वासम्भवाद्भिन्नक्रमतामाश्रित्य तदर्थमाह **चशब्द इति** । **अत्रापीति** । स्वोक्तस्य समस्तस्यार्थस्य श्रुतिसिद्धत्वज्ञापनायात्र चित्त्वस्यांशत्वोपलक्षणत्वाश्रयणमिति द्रष्टव्यम् । 'चेतनत्वेन चांशत्वादि'ति वक्ष्यमाणत्वात्तदाश्रयणमित्यप्याहुः । पूर्वश्रुतीनामाभासत्वमात्रप्रतिपादकत्वेन भेदाप्रतिपादकत्वात्कथं भेदज्ञापकत्वकथनमित्यत आह **जीवस्येति** । भेद एवेत्येवकारतात्पर्यमाह **अत्यन्तभेदश्चेति** । नन्वाभासत्वस्य श्रुतिसिद्धित्वकथनमात्रेणासिद्धिपरिहारादाभासत्वेन भेदस्य श्रुतिज्ञेयत्ववर्णनमनर्थकमित्यतोऽत्र नास्मदीयानुमानस्य परानुमानप्रतिपक्षत्वे तात्पर्यं येनाभासत्वस्यासिद्धिपरिहारमात्रेण तत्सिद्धेस्तद्वैयर्थ्यं स्यात्किन्त्वस्मदीयानुमानस्य श्रौतत्वेन प्राबल्याद्बाधकत्वमेवेति न तद्वर्णनानर्थक्यमिति भावेन तदुक्तेस्तात्पर्यमाह **न परानुमानयोरिति** ।

**स०— वक्ष्यतीति** । तदधीनत्वादित्यादिनेति शेषः ॥ अत एवाभासत्वव्याख्यानं तदधीन इति ।

**प०　इति वक्ष्यतीति** । 'यदुक्तं तदधीनत्वमि'त्यादिनेति भावः ।

**श्री०— आयत्तम्** अधीनम् । 'अधीनो निघ्न आयत्त' इत्यभिधानात् । **कप्रत्ययार्थोऽल्पेति** । नन्वाभासत्वे इयं श्रुतिः कथं मानम् । अत्र तदधीनत्वस्यैवोक्तेरित्यत आह **तदधीनत्वेति** ॥ **अत्रापीति** । तथा च चेतनत्वेऽप्यंशत्वेऽपीत्युक्त्या अभेदसाधकतयोक्तयोरनयोर्हेत्वोरप्रयोजकतोक्तेति ज्ञेयम् ॥ **उच्यत इति** । येन जीवस्य ब्रह्मभेदानिश्चय इति भावः ।

सु०— इदानी'मत एव चोपमे'ति सूत्रावयवं व्याख्यातुं तन्निवर्तनीयामाशङ्कामाह आभासत्वं हीति ।

अनु०— आभासत्वं हि निर्णीतं जीवस्य परमात्मनः ॥

तन्न युक्तं

यज्जीवस्य परमात्मन आभासत्वं श्रुतिबलेन निर्णीतं तद्युक्तिविरुद्धम् । न हि निरवकाशयुक्तिविरुद्धोऽर्थः श्रुत्याऽपि प्रतिपादयितुं शक्यते । तथा सत्यमिमान्यधिकरणानारम्भप्रसङ्गात् । अतः सा कथञ्चिद्योजनीयेति ।

कथं न युक्तमित्यत आह यदिति ।

यदाभास उपाध्यायत्त ईयते ।

यस्मादाभासः सूर्यकादिर्जलाद्युपाध्यायत्तो ज्ञायते । आभासत्वस्योपाध्यायत्तत्वं व्यापकत्वेन सर्वत्र निश्चितमित्यर्थः । तथाऽपि कुतो न युक्तमित्यत आह उपाधीति ।

उपाध्यायत्तताभावात्

जीवानामिति शेषः । व्यापकस्योपाध्यायत्तत्वस्य जीवेष्वभावाद्व्याप्यमप्याभासत्वं न युक्तम् । ततो हेतोरसिद्धेर्दुष्टमनुमानम् । इतश्च दुष्टमित्याह आभासत्वेति ।

आभासत्वविरोधनः ।

आभासत्वस्य भिन्नत्वेन विरोधनश्चानुमानं दुष्टम् । तथा हि । दर्पणादिना सन्निकृष्टाः प्रतिहताः परावृत्ता नायनरश्मयो मुखेन सन्निकृष्टास्तदेव विषयीकुर्वन्ति । न तु ततोऽन्य आभासो नामास्ति । तत्र व्यवच्छेदः पराक्त्वं सव्येतरव्यत्यासश्चेत्यादिकं भ्रान्त्यैव प्रतीयते । सोपाधिकश्चायं भ्रम इति यावदुपाधिसत्त्वं न निवर्तते । एवञ्चाभासत्वस्याभेदेन व्याप्तत्वाद्भेदसाधने विरुद्धत्वमिति । उपलक्षणं चैतत् । तत्त्वमस्यादिश्रुतिविरुद्धत्वेन कालातीतत्वमपि द्रष्टव्यम् ।

एवमाभासत्वानुमाने दुष्टे किम् इति चेन्निराबाधेन प्रागुक्तानुमानद्वयेनैक्यं सिद्धमित्याह चेतनत्वेनेति ।

चेतनत्वेन चांशत्वात्समुदायैक्यमापतेत् ॥

अंशत्वाच्चेत्यन्वयः । ऐक्यं च साध्यमानं न मायावादिनामिवेत्युक्तं समुदायेति ।

शे०— ननु श्रुत्यपेक्षया युक्तेर्दुर्बलत्वात्कथं प्रबलश्रुतिसिद्धाभासत्वापवादकत्वं युक्तेः स्यादित्यत आह न हीति । तत्र हेतुमाह तथा सतीति । तर्ह्याभासत्वप्रतिपादकश्रुतेः का गतिरित्यत

आह **अतः सा यथाकथञ्चिदिति** । तदधीनत्वे सति तत्सद्गत्वरूपसिद्धान्त्यभिमताभासत्वपरित्यागे-नाभेदाविरोधाभासत्वपरतया वर्णनीयेत्यर्थः ॥ **जीवेष्वभावादिति** । उपाध्यायत्तत्वे जीवानां तन्नाशे नाशप्रसङ्गः । उपाधीनामविनाशे प्रत्यक्षादिविरोधः सदा संसारित्वं च स्यादित्युभयथा मोक्षशास्त्रवैयर्थ्यमिति भावः । आभासत्वविरोधत इत्यस्य पूर्वशेषत्वानुपपत्तेरसङ्गतिमाशङ्क्य परिहरति **इतश्चेति** । किमनेन ग्रन्थेन दूषणमुक्तं भवतीत्यतस्तद्व्याख्यानपूर्वकं तदुपदर्शयति **आभासत्वस्येति** । **दर्पणादिनेति** । 'दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम् । व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखमि'त्यभियुक्तवचनादिति भावः । पराक्त्वादिकं भ्रान्त्यैव प्रतीयत इत्ययुक्तम् । प्रत्यक्त्वादिविशेषदर्शने सति भ्रान्तेरयोगात् । योगे वा तदनिवृत्तिरेव स्यान्निवर्तकान्तरस्याभावादित्यत-आह **सोपाधिकश्चेति** । अंशत्वस्य हेत्वन्तरत्वज्ञापनाय चशब्दं तदन्विततया योजयति । **अंशत्वाच्चेत्यन्वय इति** ।

प० — **प्रागुक्तानुमानद्वयेनेति** । चेतनत्वांशत्वरूपानुमानद्वयेनेत्यर्थः । **इत्यन्वय इति** । चशब्दान्वय इत्यर्थः ।

या० - **सूर्यकादिरिति** । सूर्यप्रतिबिम्बादिरित्यर्थः । सूर्यादिप्रतिबिम्ब इति यावत् । अत एव वक्ष्यति भाष्यकारः 'सूर्यादिप्रतिबिम्बोपमत्वत' इति ॥

श्री० — श्रुतेः प्राबल्याद्युक्तिविरुद्धार्थप्रतिपादने का भीतिरित्यत **आह न हीति** ॥

---

**अनारम्भेति** । 'दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृश ' इत्युक्तेरिति भावः । **सा** जीवस्य भगवदाभासत्वप्रतिपादिका 'यथैषा पुरूषे छाये'त्यादिका श्रुतिः । **कथञ्चित्** उपचारादिना ॥

**सु० — मायावादिनो हि जीवानां प्रत्येकं ब्रह्मणाऽत्यन्ताभेदमङ्गीकुर्वते । न चैवमस्मन्मतम् । समुदायैक्ये भेदस्यापि सत्त्वादिति । अत्यन्ताभेदं परित्यज्य समुदायैक्यं कुतोऽङ्गीक्रियत इत्यत आह** अत इति ।

अनु० — अतः पृथक्त्वमुदितं समुदायांशयोर्भवेत् ।

**समुदायैक्याङ्गीकारतो यच्छ्रुत्याद्युक्तं पृथक्त्वं तत्समुदायस्य तदंशस्य च जीवस्य भवेत् । समुदायस्य यावंशौ जीवेश्वरौ तयोर्भवेदिति वा । एतदुक्तं भवति । यदि जीवस्य ब्रह्मणाऽत्यन्ताभेदः सा(ध्येत)ध्यते तदा भेदश्रुतय उपरुध्येरन् । मायिक(भेद)परत्वाभिधाने चाप्रमाणमापद्येरन् । न चायमस्माकमस्ति दोषः । जीवब्रह्मणोर्जीवेश्वरयोश्च भेदसद्भावेन तद्विषयत्वोपपत्तेरिति । एतेन चेतनत्वाद्यनुमानस्याभासोद्धारः कृतो भवति ।**

**समुदायैक्यमित्युक्तम् । तत्किञ्चित्प्रपञ्चयति** ईशाख्येति ।

ईशाख्या समुदाये स्यात्

**ईशशब्दो ब्रह्मपरः ।** समुदाये **चेतनानाम् । एतदुक्तं भवति । ब्रह्मैकमेव स्वभावसिद्धं तत्त्वं तत्परमार्थभूतं मायासंबन्धादीश्वरतामापद्यते । स च सर्वज्ञः सर्वेश्वरो जगज्जननादिकर्ता । जीवास्तु ब्रह्मणोंऽशाश्चित्स्वभावा वन्हेरिव विष्फुलिङ्गा अत एव ब्रह्मणो भिन्नाभिन्नाः । परस्पर-मीश्वराच्च भिन्ना एव । ब्रह्म तु सकलचेतनसमुदायात्मकमतिरिक्तं चेति । अत्र दृष्टान्तमाह** ईशेति ।

ईशरूपेष्विवोदिता ।

**यथा भगवद्रूपाणां मत्स्यादीनां समुदाये भगवत्संज्ञा न स्यानतोऽपीत्यादौ सिद्धान्ति-नोदिता तथा । एतेनात्यन्ताभेदं परित्यज्य भेदाभेदाङ्गीकारे श्रुतिद्वयमिवांशत्वानुमानं चोक्तं भवति । यदि मत्स्यादयः परमेश्वरस्येव जीवा ब्रह्मणोंऽशाः स्युस्तदा मत्स्यादीनामैश्वर्यादिव-ज्जीवानां निर्दुःखत्वादिकं स्यात् । अंशेष्वंशिसाधर्म्यस्याव्यभिचारात् ।**

**शे०— समुदायैक्य इति** । समुदायेन सह जीवनामैक्य इत्यर्थः । न चैवं जीवानां ब्रह्म भेदासिद्धेरेतन्मते चेतनसमूहस्यैव ब्रह्मशब्दवाच्यत्वेन तदभेदे जावानां ब्रह्माभेदस्यैव सिद्धि-रिति भावः । (भास्करमते सकलचेतनसमुदाये एव ब्रह्मसंज्ञा । समुदाये च समुदायिभेदाभेदौ प्रसिद्धा-वित्यर्थः ) ॥ **भेदस्यापीति** । समुदायिसमुदाययोर्भेदाभेदप्रसिद्धिरिति भावः । जीवब्रह्मणोर्भेदसमर्पक-तया वाक्यं व्याख्याय जीवेशयोर्भेदसमर्पकतयाऽपि तद्योजयति **समुदायस्येति** ॥ **एतेनेति** । समुदा-यैक्याङ्गीकारेणेत्यर्थः । **आभासोद्धार इति** । बाधादिरूपाभासोद्धार इत्यर्थः । समुदायैक्ये भेदस्यापि सत्त्वेन भेदश्रुतीनां तद्विषयत्वान्न बाधकत्वमिति भावः ॥ ईशस्य जीववत्समुदायांशत्वात्समुदाये ईशाख्ये-त्ययुक्तमित्यत आह **ईशशब्द इति** ॥ **अत एवेति** । अंशत्वादेवेत्यर्थः ॥ **अत्र दृष्टान्तमाहेति ।** ब्रह्मणः सकलसमुदायत्वमतिरिक्तत्वं चेत्युक्तस्यासम्भावनापरिहारार्थमिति शेषः ॥ **एतेनेति** ब्रह्मणोंऽशि-त्वरूपसमुदायत्ववचनेनेत्यर्थः ॥ **अंशत्वानुमानं चेति** जीवा ब्रह्मणा भिन्नाभिन्ना ब्रह्मांशत्वाद्यो यदंशः स तेन भिन्नाभिन्नो यथा भगवदंशो मत्स्यादिरित्यनुमानमित्यर्थः ।

**स०— आभासोद्धार इति** । श्रुतिबाधलक्षण आभासोद्धारः कृत इत्यर्थः ।

**प०— एतेनेति** । समुदायैक्यकथनेनेत्यर्थः । **आभासत्वोद्धार इति** । भेदश्रुतिविरोधोद्धार इत्यर्थः । **एतेनेति** । ईशरूपदृष्टान्तवचनेनेत्यर्थः । **श्रुतिद्वयमिव** भेदाभेदश्रुतिद्वयमिवेत्यर्थः ।

**या०** — **समुदायैक्य इति** । भास्करमते सकलचेतनसमुदाय एव ब्रह्मसंज्ञा, समुदाये च समुदायिभेदाभेदौ प्रसिद्धावित्यर्थः । ननु साध्यमानमैक्यं न मायावादिनामिवेति प्रदर्शनस्य प्रकृतानुपयोगादर्थान्तरतेत्यत आह **एतेनेति** । समुदायैक्यमिति वचनेन श्रुतिविरोधपरिहारस्य सूचनादिति भावः । ततश्च पूर्वपक्षी सिद्धान्त्युदीरितानुमानस्याभासत्वं व्युत्पाद्यानेन स्वानुमानयोराभासोद्धारं कृतवानतो नार्थान्तरतेत्युक्तं भवतीति ज्ञातव्यम् ॥ **अत एवेति** । अंशत्वादेवेत्यर्थः ॥ **भगवत्संज्ञेति** । भगवतो मूलरूपस्य संज्ञा ब्रह्मेत्यादिरूपेत्यर्थः । तत्र हि सर्वेषु भूतेष्वक्ष्यादिस्थानेषु च स्थितेऽवतारसमुदाये 'एतमेव ब्रह्मेत्याचक्षते' इत्यादिब्रह्मशब्दः, 'अयं वै हरयोऽयं वै दश चे'त्यादिरिदंशब्दः, 'न स्थानभेदतोऽप्यस्य भेदः कश्चित्परेशितुरि'तीशितृशब्दश्च सिद्धान्तिना प्रयुक्तो न तु भगवच्छब्दः । अतोऽत्र भगवानिति संज्ञा भगवत्संज्ञेति नार्थ इति ध्येयम् ॥ **एतेनेति** । ब्रह्मणोंऽशित्वरूपसमुदायत्ववचनेनेत्यर्थः ॥

**श्री०** — **श्रुत्यादीति** । द्वा सुपर्णेत्यादीत्यर्थः । **समुदायस्य** ब्रह्मणः । **भवेत्** युक्तमिति शेषः । **अस्माकं** सत्योपाधिकृतसत्यभेदवादिनाम् । **आभासोद्धारो** भेदश्रुतिबाधोद्धारः । तन्मते ईशस्यापि जीववत्समुदायान्तर्गतत्वेन समुदाये ईशाख्याया अभावादाह **ईशशब्द इति** ॥ **एतेनेति** । जिवा ब्रह्माभिन्ना अंशत्वादित्यनुमाने मत्स्यादेर्दृष्टान्तत्वसम्भवादित्यर्थः । **श्रुतिद्वयं** भेदाभेदश्रुतिद्वयम् ।

**सु०** — **किञ्च यदि जीवस्य ब्रह्मणाऽभेदोऽपि परमार्थः स्यात्तदा ब्रह्मैव भवतीत्युक्ता मुक्तिरयुक्ता स्यादित्यत आह** अत इति ।

**अनु०** — अतो देहाद्युपाधीनामपाये समता भवेत् ।
ईशरूपैः

**बुद्धिमन्निहितं तदीयसिद्धान्तमत इति परामृशति । न जीवानां ब्रह्मणा भेदाभेदौ स्वाभाविकौ । किन्त्वभेदः स्वाभाविको भेदस्त्वौपाधिकः । यथेश्वरांशानां मत्स्यादीनामीश्वरेण। इयांस्तु विशेषः । मत्स्याद्या जगदनुग्रहार्थं लीलाविग्रहोपाधिभिन्ना अतिरस्कृतैश्वर्यादिमन्तः । जीवास्त्वनाद्यविद्याकामकर्मादिनिबन्धनदेहेन्द्रियाद्युपाधिभिन्नास्तिरस्कृतब्रह्मस्वभावा उपाधिनिबन्धनदुःखादिभाजश्चेति । यत एवमौपाधिक एव भेदोऽतो ज्ञानकर्मभ्यां देहाद्युपाधीनामात्यन्तिकेऽपाये सति जीवानामीशरूपैः समता भवेत् । यथेश्वररूपाणि कार्यावसाने स्वेच्छयैव**

**लीलाविग्रहत्यागेनेश्वरतामापद्यन्ते । तथा जीवा अप्यनुष्ठितज्ञानकर्मसमुच्चयाः प्रारब्धकर्मावसाने देहाद्युपाधिभिरत्यन्तविमुक्ताः स्वाभाविकं ब्रह्मत्वमापद्यन्त इति न कश्चिद्दोषः ।**

**शे०**— किं तर्हि मत्स्यादीनां जीवानां च सर्वथाऽविशेष इत्यत आह **इयांस्त्विति । अतिरस्कृतैश्वर्यादिमन्त इति** । नन्वत्रातिरस्कृता ऐश्वर्यादयो येषामिति बहुव्रीहिणैव मत्वर्थलाभान्मतुपो 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः' इत्येतन्मूलकवैयर्थ्यम् । न च बहुव्रीहिमाश्रित्य मतुप्प्रयोगे वैयर्थ्यदोषेऽप्यतिरस्कृताश्चैते ऐश्वर्यादयश्चेति कर्मधारयमाश्रित्य तत्प्रयोगे शब्दान्तरत्वान्न दोष इति वाच्यम् । तथाऽपि कर्मधारयमत्वर्थीयाद्बहुव्रीहिरेवेष्टव्यो लघुत्वादिति न्यायेन शब्दान्तरत्वाश्रयणेऽपि बहुव्रीहिविवक्षयाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवेन बहुयत्नाश्रयणस्य दोषत्वाद्बहुव्रीह्यपेक्षया कर्मधारयमत्वर्थीये शब्दगौरवस्थले बहुयत्नाश्रयणं दोषः, न तु शब्दसाम्येऽपि; अन्यथा यद्विकारीत्यत्रापि तत्प्रसङ्गादित्यपि न समाधिरत्र सम्भवति अतिरस्कृतैश्वर्यादिशब्दादतिरस्कृतैश्वर्यादिमच्छब्दे शब्दगौरवस्य स्पष्टत्वात् । तस्मादेतत्कथमिति चेत् । उच्यते । सर्वादेः कर्मधारयादिनिति वचनाल्लाघवाश्रयणेन कर्मधारयादिनिव न्यायसाम्यान्मतुप्प्रत्ययोऽपि वचनसाध्य एव भविष्यतीति न किञ्चिदेतत् ईशरूपैः समता भवेदित्युक्तम् । तत्रेशरूपाणां कीदृशी रीतिर्यत्साहृश्यं जीवानामुच्यत इत्यत ईशरूपस्थितिप्रदर्शनपूर्वकं जीवानां स्थितिमुपपादयति **यथेत्यादि** ।

**श्री०**— **परमार्थः** स्वाभाविकः ।

**सु०**— **यदुक्तमुपाध्यायत्ततभावादिति तदसिद्धम् । जीवानामपि सूर्यकादिवदाभासत्वाङ्गीकारे बाधकाभावादिति भावेनाशङ्कते अथेति ।**

**अनु०**— अथाभासा मुख्यतः सूर्यकादिवत् ।

यदा

**अथशब्दः शङ्कोपक्रमे पक्षान्तरे वा** । आभासाः जीवाः । **मुख्यत इति उपाध्यायत्तत्वेन । सूर्यकादिना तुल्यं वर्तत इति सूर्यकादिवत् । उत्तरवाक्ये वाऽस्य संबन्धः । परिहरति** तदेति ।

तदोपाध्यायत्तरूपाणां नाशिता भवेत् ॥

**यदि जीवानामुपाध्यायत्तता स्यात्तर्ह्युपाधिनाशे सूर्यकादीनामिव तेषां नाशिता भवेत् । अथोपाधयोऽविनाशिनस्तदा प्रत्यक्षादिविरोधः सर्वदा संसारित्वं च स्यादित्युभयथा मोक्षशास्त्रवैयर्थ्यम् । तस्मादुपाध्यधीनत्वेऽङ्गीकर्तुमशक्ये सुस्थैवाभासत्वस्यासिद्धिरिति ।**

शे॰— 'तत्र तस्येवे'त्यस्याप्रसक्तेराह **सूर्यकादिनेति** । अनेन 'तेन तुल्यं क्रिया चेद्वतिः' इत्यनेन वतिरित्युक्तं भवति । यथोपाधिक्रियया प्रतिबिम्बे क्रिया तथा देहोपाधिक्रिययाऽपि प्रतिबिम्बे क्रिया भवतीति क्रियातौल्यादिति भावः ॥ **उत्तरवाक्ये वेति** । तथा च 'तत्र तस्येवे'त्यनेनैवात्र वतिरिति भावः ॥ **प्रत्यक्षादिविरोध इति** । प्रत्यक्षादिभिरुपाधिनाशस्य सिद्धत्वादिति भावः ॥ **सर्वदेति** । उपाधेः कदाऽप्यनपगमादिति भावः ॥ **उभयथेति** । जीवनाशपक्षे, सर्वदा संसारित्वपक्षे चेत्यर्थः ॥ **सुस्थैवेति** । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वादिति भावः ।

स॰— तत्र तस्येवेत्यस्याप्रसक्तेराह **सूर्यकादिनेति** ॥ यथोपाधिक्रियया प्रतिबिम्बे क्रिया तथा देहोपाधिक्रियया प्रतिबिम्बे जीवेपि क्रियायाः सत्त्वेन क्रियातौल्यस्य सत्त्वेन युक्तः 'तेन तुल्यमि'त्यनेन वतिरिति भावः ।

प॰— **पक्षान्तरे वेति** । समता भवेदित्युक्तात्पक्षांतरे वेत्यर्थः ॥ **जीवा इति** । शेषोक्तिरियम् । मुख्यत इत्यस्य व्याख्या **उपाध्यायत्तत्वेनेति** । 'तेन तुल्यं क्रियाचेद्वतिरि'त्युक्तवतिप्रत्यय इति भावेनाह **सूर्यकादिनेति** । सूर्यकप्रतिमुखादेर्यथोपाध्यायत्तत्वं तथेत्यर्थः । 'तत्र तस्येवे'ति षष्ठ्यताद्वतिरिति भावेनाह **उत्तरवाक्ये वेति** सूर्यकादिव दुपाध्यायत्तादिरूपाणामिति संबंध इत्यर्थः ॥ **उभयथेति** । उपाधीनां नित्यत्वेऽनित्यत्वे चेत्यर्थः ॥

---

या॰— **पक्षान्तरे वेति** । ततश्चाथान्यः पक्षो न पूर्वप्राप्त इत्यर्थः । एवं चायं शङ्क्यमानः पक्षो न पूर्वपक्षिणः किन्तु सिद्धान्तिन इत्युक्तं भवति ॥ **तुल्यं वर्तत इति** । अनेन 'तेन तुल्यं क्रिया चेद्वतिरि'त्यनेनात्र वतिर्भवतीत्युक्तमिति ज्ञातव्यम् ॥ **उत्तरवाक्ये वेति** । तदा 'तत्र तस्येवे'त्यनेनैव वतिरिति भावः ॥

श्री॰— 'तत्र तस्येवे'त्यस्यासम्भवात् 'तेन तुल्यमि'ति क्रियातौल्ये वतिरित्याह **सूर्यकादिनेति** । **तुल्यम्** उपाध्यायत्तत्वेन ॥ **उभयथेति** । उपाध्यायत्तत्वे तन्नाशेन जीवानां नाशापत्त्या निरधिकारिकतया मोक्षशास्त्रवैयर्थ्यम् । तत्परिहारायोपाधीनां नित्यत्वाङ्गीकारे सदा संसारित्वापत्त्या मोक्षशास्त्रवैयर्थ्यमित्युभयथेत्यर्थः ॥

सु॰— **एतदाशङ्कानिवर्तकत्वेन सूत्रावयवमवतारयति** इत्याशङ्केति ।

**अनु॰**— इत्याशङ्कानिवृत्त्यर्थमाह वेदाधिपः प्रभुः ॥

अत एवोपमेत्येव च

**चशब्दोऽत एव चोपमेति भिन्नक्रमः। एतावदेव वाक्यमेतदाशङ्कानिरासार्थं न पुनरिदं सूत्रस्य प्रतीकग्रहणमिति** एवशब्दः। **अन्यथा हि सूर्यकादिवदित्यस्यावृत्तिराशङ्क्येत। यद्वैकवाक्यतानिरासेन परकृतस्यापव्याख्यानतामाह; यत एवायमात्मा चैतन्यस्वरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्योऽत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्ताम-भिप्रेत्य जलसूर्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेष्विति। यद्यप्येवमेकवाक्यतालाभस्तथा-ऽप्यर्थदोषस्तत्र तत्र व्युत्पादित एव। वतेर्वैयर्थ्यं च। सूर्यकादिरित्येतावता पूर्णत्वात्। इतिशब्दाध्याहारश्चैवं न कर्तव्य इति।**

**शे०**— प्रतीकग्रहणमेवैतत्किन्न स्यादित्यत आह **अन्यथेति**। एवशब्दस्य प्रयोजनान्तर-माह **यद्वेति**। किं तदपव्याख्यानमित्यतस्तदेव दर्शयति **यत एवेति** ॥ **परप्रतिषेधोपदेश्यो** ऽन्यनिषेधमुखवेद्य इत्यर्थः। मोक्षशास्त्रेष्वितीत्यत्रत्यम्येतिशब्दस्य इति परकृतस्येति पूर्वेण सम्बन्धः। **तत्र तत्रेति**। 'निर्विशेषत्वमेतेन मूकोऽहमितिवद्धवेदि'त्यादिना जन्माधिकरणे निर्विशेषत्वदूषणेनेक्षत्य-धिकरणे वाङ्मनसातीतत्वपरप्रतिषेधोपदेश्यत्वनिराकरणेन जिज्ञासासूत्रादौ च सार्वज्ञादिविशेषाणामपार-मार्थिकत्वनिरासेन निर्विशेषत्वादिरूपेऽर्थे दोषस्तत्र तत्र व्युत्पादित एवेत्यर्थः। तथा **चार्थदोषेणैकवा-क्यत्वस्यात्रासंभवाद्वाक्यभेदाश्रयणमेव युक्तमिति** भावः। एवं वतिपरित्यागे इतिशब्दाध्याहारश्च न कर्तव्य इति संबन्धः।

**स०**— अपव्याख्यानमेवाह **यत एवेति** ॥ **अर्थदोषा इति** ॥ ब्रह्मणो निर्विशेषत्वरूपेऽर्थे प्रमाणाभावस्योक्तत्वेन तस्य बाधितत्वादिति भावः

**प०**— **अन्यथेति**। एवशब्दाप्रयोगे सूत्रस्यैव प्रतीकत्वापत्त्या पूर्वपक्ष(प्राप)ज्ञापकत्वेन प्राप्तस्य सूर्यकादिवदित्यस्य सिद्धान्तार्थकत्वेनाप्यावृत्तिः शंक्येतेत्यर्थः ॥ **एकवाक्येति**। अत एव चोपमेत्यस्य सूर्यकादिवदित्यनेनैकवाक्यतेत्यर्थः ॥ **परकृतस्येति**। एकवाक्यतया परकृतव्याख्यानस्ये-त्यर्थः ॥ **आहेति**। एवशब्द इत्यनुषङ्गः। किं तद्व्याख्यानं कथं निरास इत्यत आह **यत एवेत्यादि**। मोक्षशास्त्रेष्वितीतिशब्दस्य परकृतेति पूर्वेणान्वयः ॥ **अर्थदोष इति**। आत्मनोर्निर्विशेषत्वे विशेषाणा-मसत्यत्वे च पृथगुपदेशादित्याद्यधिकरणव्याख्याने व्युत्पादित इत्यर्थः ॥ **इति शब्देति**। सूर्यकादि-वदित्युपमेति(वाच्यत्वात्)वचनात्। प्रत्युत वतिप्रत्ययः प्रतिकूल एवेति भावः ॥

**या०**— अपव्याख्यानतामाहेत्यत्रैवशब्द इत्यनुवर्तते। मोक्षशास्त्रेष्वितीतिशब्दस्य परकृत-स्येत्यनेनान्वयः ॥ **अर्थदोष इति**। चैतन्यस्य निर्विशेषत्वरूपेऽर्थे विशेषवत्त्वस्यापारमार्थिकत्वरूपे

चार्थे यो दोषः स तत्र तत्र प्रथमाधिकरणादौ व्युत्पादित इत्यर्थः । तथा चैवमेकवाक्यत्वस्या-सम्भवाद्वाक्यभेदाश्रयणमेव युक्तमिति भावः ॥

**श्री० — अन्यथेति** । समग्रसूत्रप्रतीकग्रहणं चेदाचार्याणां विवक्षितम् तर्हि समग्रसूत्रानुवादाय 'अथाभासा मुख्यतः सूर्यकादिवदि'त्यत्रोनस्य सूर्यकादिवदित्यस्यानुवृत्तिशङ्का स्यादित्यर्थः ॥ **एवं न कर्तव्य इति** । सूर्यकादिरित्येव कृते सति सूर्यकादिरुपमोपादीयत मोक्षशास्त्रेष्विति सामञ्जस्यादित्यर्थः ।

**सु० — सूत्रखण्डस्य तात्पर्यमाह** अन्येति ।

**अनु० —** अन्याभासविशेषिताम् ॥

अन्यस्मात्सूर्यकादेराभासाज्जीवानां विशेषितां **विलक्षणतां अनेन सूत्रखण्डेनाह सूत्रकारः । तदेतत्तात्पर्यं सूत्राक्षरैः कथं लभ्यत इत्यत (एतच्छब्द)इदंशब्दपरामृष्टमर्थं तावद्दर्शयति** यदुक्तमिति ॥

यदुक्तं तदधीनत्वं सर्वावस्थास्वशेषतः ॥
जीवस्य सदृशत्वं च चित्त्वमात्रं न चापरम् ॥

तदधीनत्वं **परमात्माधीनत्वम्** । अशेषतोऽ**शेषेषु** व्यापारेषु ॥ **सन्ध्ये सृष्टिराह हीत्यादौ** । सदृशत्वं च **परमात्मना, यदुक्तं पुंस्त्वादिवदित्यादौ किं तत्सदृशत्वम्,** चित्त्वमात्रं । न चापरं **स्वातन्त्र्यादिकं; येन हेतोर्विरुद्धता स्यादिति भावः** ।

**शे० — इदंशब्दपरामृष्टमिति** । यद्यपि 'एतदोऽशि'त्युक्तत्वादत इति एतदो रूपमित्येतच्छब्द-परामृष्टमित्येव वक्तव्यं तथाऽपि 'एतदोऽशि'त्यत्र 'इदम इशि'त्यत इदम इत्यनुवृत्तिरस्तीत्याशयेन वाऽयं प्रकृतोऽतइतिशब्द इदंशब्द इत्याशयेन वेदंशब्दपरामृष्टमित्युक्तमिति द्रष्टव्यम् । **अशेषेषु व्यापारे-ष्विति** । यद्यप्यत्रावस्थागतसाकल्यस्य सर्वशब्देनैवोक्तत्वादशेषशब्दस्य तदर्थकत्वासम्भवेऽप्यशेषाः समस्तजीवा इत्यादाविव सर्वशब्देनैव प्राप्तसङ्कुचितार्थत्वशङ्कानिरासेन तद्विवरणरूपतया इच्छेषत्वेनैव व्याख्यातुं शक्या तथाऽपि तथा सत्यवस्थामात्रे जीवस्य भगवदधीनत्वलाभेऽप्येकैकस्यामवस्थायामशेष-व्यापारेषु तस्य तदधीनताया अवश्यं वक्तव्याया अलाभात्तल्लाभायाद्यादिभ्य उपसङ्ख्यानात्सप्तम्य-र्थेऽशेषत इति तसिमाश्रित्य व्यापारेष्विति पदान्तरमध्याहृत्य तच्छेषतयैव व्याख्यानं कृतमित्यवधेयम् । **यदुक्तं पुंस्त्वादिवदित्यादाविति** । तत्रास्येति प्रकृततद्गुणसारत्वपरामर्शादिति भावः ॥ **हेतोर्वि-रुद्धतेति** । स्वातन्त्र्यादिसादृश्यस्य हेतुशरीरप्रवेशे तस्य भेदाभावव्याप्तत्वेन तेन भेदसाधनं विरुद्धं **स्यादिति भावः** ।

**स०— इदंशब्दपरामृष्टमिति** ॥ नन्वेतदोशिति तसिलि परतः एतच्छब्दस्याशादेशेऽतःशब्दनिष्पत्तेरतःशब्दस्य एतच्छब्दरूपतयैव प्रसिद्धत्वात् कथमतइत्यस्येदंशब्दरूपत्ववचनं इदंशब्दात्तस्यानिष्पत्तेरिति चेन्न । अयं चासौ शब्दश्चेदंशब्द इति विग्रहमाश्रित्यैतच्छब्दपरामृश्यत्वमेवात्रातःशब्दस्याभिप्रेतं न तु तन्निष्पन्नत्वमित्यत्राभिप्रायात् । यद्वा एतदोशिति सूत्रे अश् इतियोगविभागात् इदंशब्दस्यापि तदुपपत्तिः ।

**प०— इदंशब्देति** । अत्र सौत्रातःशब्दस्य 'एतदोशि'ति एतच्छब्दस्य तसिल्प्रत्यये परत अश्इत्यादेशे सति अत इतिरूपनिष्पत्तेरेतच्छब्देति पाठः साधुः । इदं शब्देतिपाठो लेखकदोषमूलः । अयं चासौ शब्दश्चेति समासेनेदंशब्दनातःशब्द एव गृह्यत इत्यप्याहुः । सप्तम्यर्थे तसिरित्युपेत्य सर्वपदेनापौनरुक्त्याय विशेष्याध्याध्याहारेणार्थमाह **अशेषेषु व्यापारेष्विति** । इत्यादावित्याऽऽदि- 'पराभिध्यानादि'त्यादेः 'मुग्धेर्धसंपत्तिः परिशेषादि'त्यंतस्य संग्रहः । 'सर्वावस्थाप्रेरकश्चे'त्यणुभाष्योक्तेः । 'पुंस्त्वादिवदि'त्यादिपदेन 'अंशो नानाव्यपदेशादि'त्यस्य ग्रहः । तद्गुणसारत्वादित्यत्र सादृश्यस्य हेतूकरणेपि पुंस्त्वादिवदित्यत्र ज्ञानाद्यात्मकत्वसाधनेन ब्रह्मसा[दृश्यस्या]रूप्यसाधनात् पुंस्त्वादिवदित्यादावित्युक्तं ॥ **येन हेतोर्विरुद्धतेति** । आभसात्वाज्जीवो ब्रह्मणोऽत्यन्तभिन्न इत्यत्र स्वतंत्रत्वादिति हेतुशरीरप्रवेशे सति तदनन्यत्वमारंभणेतिसूत्रोक्तदिशा ब्रह्मानन्यत्वसाधकतया विरुद्धहेत्वाभासता स्यादित्यर्थः ॥

---

**या०— इदंशब्देति** । अतःशब्दपरामृष्टमित्यर्थः । अत्र यद्वक्तव्यं तत्प्रथमाधिकरण एवोक्तम् ॥ **पुंस्त्वादिवदित्यादाविति** । तत्रास्येत्यनेन तद्गुणसारत्वादित्यत्रोक्तसादृश्यस्य परामर्शात्तसदृशत्वमुक्तमिति ज्ञातव्यम् ॥ **हेतोर्विरुद्धनेति** । स्वातन्त्र्यादिना सादृश्यं यद्याभासत्वहेतुशरीरे प्रविष्टं स्यात्तदा तेनेश्वरभेदसाधनं विरुद्धं स्यादित्यर्थः ।

**श्री०—इदंशब्देति** । सौत्रातःशब्देत्यर्थः । अस्मादित्यतोऽस्मादिति(?) च इदंशब्दस्य पञ्चमीति ज्ञेयम् । **इत्युक्तं** सूर्यकादिवदिति दृष्टान्तोक्त्या विवक्षितमित्यर्थः ॥

**सु०— इदानीमत एव चोपमेति वाक्यं योजयति** तावन्मात्रेण चेति ।

**अनु०**— तावन्मात्रेण चाभासो रूपमेषां चिदात्मनाम् ।

**तदधीनत्वतत्सदृशत्वमात्रेणैषां चिदात्मनां रूपं स्वरूपमस्माभिराभास इत्युक्तम् । सूर्यकाद्युपमा च तावन्मात्रेण चोपपत्तेरिति चार्थः । जीव इति वक्तव्ये एषां चिदात्मनां रूपमिति वचनं मुक्तेष्विदं द्वयमस्तीति दर्शितुम् । अनेन अत एव प्रकृताभ्यां तदधीनत्वतत्सदृशत्वाभ्यामेव ।**

**आभासत्वं सूर्यकाद्युपमा चोक्तेति स्वाभिप्रायप्रकटनं सूत्रार्थ इत्युक्तं भवति । एवशब्दव्यावर्त्यं दर्शयति** नेति ।

नोपाध्यधीनताद्यैश्च

**उपाध्यधीनत्वतन्नाशनश्यत्वजडत्वाद्यैरपि नेत्यर्थः । (इह) बहुवचनप्रयोगान्नाशिता भवेदित्यापादनमप्युपलक्षणं बोद्धव्यम् ।**

**शे०— उक्तमिति** । सौत्रोपमाशब्दार्थतयेत्यर्थः ॥ **चार्थ इति** । तावन्मात्रेण चेति भाष्यगतचशब्दार्थ इत्यर्थः ॥ **इदं द्वयमस्तीति** । यद्यपि संसारिष्वपि तदधीनत्वं तत्सदृशत्वं चेति द्वयमस्त्येव तथाऽपि व्यक्तं नास्तीत्यभिप्रायेणेयमुक्तिरिति ध्येयम् **अनेनेति** । यदुक्तं तदधीनत्वमित्यादिभाष्यग्रन्थेनेत्यर्थः ॥ **स्वाभिप्रायेति** । सूत्रकाराभिप्रायेत्यर्थः । जडत्वाद्यैरित्याद्यपदेन बिम्बसन्निधिनाशनाशित्वादिपरिग्रहः । ननु 'तदोपाध्यायत्तरूपाणां नाशिता भवेदि'त्युपाध्यायत्तत्वेन नाशित्वमात्रस्यैव प्रागापादितत्वादापादकतयोक्तस्योपाध्यायत्तत्वस्यापाद्यतयोक्तस्य नाशित्वस्य चानभिमतत्वात्तयोरेवैवकारव्यावृत्ततया व्याख्यानमुचितं न तु जडत्वादीनाम् । तेषां प्रागनापादितत्वादित्यतो नाशितेत्यस्य तदुपलक्षणत्वान्नाशित्वस्येव जडत्वादेरपि तेन प्रागापादिततया विवक्षासिद्धेर्युक्तमेवकारव्यावृत्ततया तद्व्याख्यानमित्यभिप्रेत्याह **इहेति** । नाशितेत्यस्य जडत्वाद्युपलक्षणत्वे भाष्यकारीयं नियामकमाह **बहुवचनेति** । नाशितेत्यस्य जडत्वानुपलक्षणत्वे 'नोपाध्यधीनताद्यैरि'ति जडत्वादिसंग्राहकबहुवचनानुपपत्तिरिति भावः । यद्यप्यत्र नाशित्वस्येव जडत्वादेरप्यापाद्यशब्देनैव गृहीतत्वात्तत्संग्राहकाद्यपदप्रयोग एव नाशितेत्यस्य जडत्वाद्युपलक्षणत्वनियामकतया वक्तुं शक्यते । तथाऽपि बहुवचनासमभिव्याहृतस्य तस्य सावकाशत्वेन तन्नियामकत्वानुपपत्त्या तत्समभिव्याहृतस्यैव नियामकत्वेनानुसरणीयत्वात्प्राप्ताप्राप्तविवेकेन बहुवचननिर्देशस्यैव तत्र नियामकत्वपर्यवसानमित्यभिप्रेत्य बहुवचनप्रयोगादित्येवोक्तमित्यवधेयम् ॥

**प०— स्वाभिप्रायेति** । आभास एव चेत्यादौ स्वोक्तजीवाभासत्वस्य योऽभिप्रायः स्वस्य सूत्रकारस्य तत्प्रकटनमत्र सूत्रखंडेन कृतमिति **स** एव सूत्रार्थो न परोक्त इत्यर्थः ॥ **एवशब्देति** । सौत्रैवशब्देत्यर्थः ॥ **इत्याद्यापादनमिति** ॥ आभासत्वहेतोर्विरुद्धत्वापादनादिरादिपदार्थः ॥ **उपलक्षणमिति** । जडत्वहिताहितप्राप्तिपरिहारहेत्वनुष्ठानेच्छापूर्वप्रवृत्त्यभावादेरुपलक्षणम् । एतदापादनमपि उपाध्यायत्तरूपाणां नाशिता भवेदिति शंकाग्रंथे ध्येयमित्यर्थः । आदिपदस्याप्युपलक्षणज्ञापकत्वेऽपि तस्यैकधर्मपरत्वेनाप्युपपत्तेरनेकधर्मलाभाय निरवकाशबहुवचनमेवोपात्तम् ॥

**या०— उक्तमिति** । सौत्रेण चशब्देनेति शेषः ॥ **स्वाभिप्रायेति** । सूत्रकारः स्वाभिप्रायमनेन सूत्रखण्डेन प्रकटितवानित्यर्थः । जडत्वाद्यैरित्यत्राद्यशब्देन बिम्बसन्निधिनाशनाश्यत्वादि-

संग्रहः ॥ **बहुवचनेति** । यद्यपि तत्राशनाश्यत्वं जडत्वादिकं चाद्यशब्देनैव गृहीतम् । तथाऽपि तस्य बहुवचनसमभिव्याहाराभावे तथात्वं न ज्ञातुं शक्यमित्युपजीव्यत्वाद् बहुवचनप्रयोग एवोपात्त इति ज्ञातव्यम् ।

**श्री० — स्वाभिप्रायेति** । सूर्यकादिवदितिदृष्टान्तोक्त्याऽऽभासत्वरूपो हेतुः प्राप्तस्तत्राभासत्वे उपाध्यधीनत्वादिना नाशशङ्कायां न तेन साम्यं विवक्षितम् । किन्तु तदधीनत्वादिनैवेति-सूर्यकादिवदित्यत्रत्यं स्वस्याभिप्रायं सूत्रकारोऽत एव चोपमेति प्रकटीचकारेत्यर्थः ॥ **उपलक्षणमिति** । 'नाशिता भवेत्' उपाध्यधीनत्वे सूर्यकादेवज्जडत्वादिकं च भवेदिति द्रष्टव्यम् ॥

**सु० — नन्वेवं सति दृष्टान्तदार्ष्टान्तिकभावो न स्यात् । अत्यन्तसाम्ये हि स भवति । अन्यथा प्रमेयत्वादिमात्रसाम्यस्य सर्वत्र सम्भवेन मशकोऽपि मातङ्गस्य दृष्टान्तः स्यादित्यत** आह नातिसाम्यमिति ।

**अनु०** नातिसाम्यं निदर्शने

**निदर्श्यते साध्येन साधनस्य व्याप्तिरत्रेति हि निदर्शनम् । अतः साध्यसाधनधर्मसाम्यमेव दार्ष्टान्तिकेन तत्रान्वेष्टव्यम् । न त्वतिसाम्यम् । तथा सति सर्वानुमानोच्छेदप्रसङ्गात् । मशकादेरपि विवक्षितधर्मसाम्ये दृष्टान्तत्वं नानिष्टमिति ।**

**शे० — एवं सतीति** । तदधीनत्वतत्सदृशत्वमात्रेण सूर्यकाद्युपमोपपादन इत्यर्थः ॥ **तथा सतीति** । अत्यन्तसाम्यस्य विवक्षायामित्यर्थः । धूमानुमाने, प्रकृतसाध्यसाधनवत्तया पर्वतमहानसयोः सत्यपि साम्ये, पर्वतत्वमहानसत्वाभ्यां वैषम्येणात्यन्तसाम्याभावात् दृष्टान्तदार्ष्टान्तिकभावाभावप्रसङ्गादिति भावः । नन्वेवं किञ्चित्साम्यान्मशकोऽपि मातङ्गस्य दृष्टान्तः स्यादित्यत आह **मशकादेरपीति** ॥ **विवक्षितेति** । साध्यसाधनेत्यर्थः ।

**प० — मातङ्गस्येति** । गजस्येत्यर्थः ॥ **विवक्षितधर्मसाम्य इति** । मातङ्गोऽभिधेयो मेयत्वान्मशकवदिति विवक्षितसाध्यसाधनधर्मसाम्ये इत्यर्थः ।

**सु० — ननु चित्त्वमात्रमित्यसत् । मुक्तौ सुखाद्यङ्गीकारविरोधादित्यत आह** किञ्चिदिति ।

**अनु०** — किञ्चित्सुखादिसादृश्यमपीशेनासुरानृते ।

**असुरान्विहायान्येषां जीवानामीशेन किञ्चित्सुखादिसादृश्यमप्यस्त्येव । सुखादिसादृश्यं विद्यमानमप्यसर्वगामित्वान्नोक्तम् । चित्त्वसादृश्यं तु सर्वगामित्वादुक्तमिति भावः । निरवधिकसुखादिव्यवच्छेदाय किञ्चिदित्युक्तम् । अन्यथा हि हेतोर्विरुद्धता स्यात् ।**

शे०— ननु यदि सुखादिसादृश्यमस्ति तर्हि तदपि वक्तव्यमेव । अन्यथा सतश्चित्त्वस्याप्यवक्तव्यत्वापातात् । विद्यमानत्वाविशेषेऽपि सुखादिसादृश्यस्यावक्तव्यत्वे चित्त्वसादृश्यस्यैव च वक्तव्यत्वे नियामकाभावादित्यत आह **सुखादीति** ॥ **अन्यथेति** । निरवधिकसुखाद्यव्यवच्छेद इत्यर्थः ॥ **विरुद्धतेति** । निरवधिकसुखादिसादृश्यस्य भेदाभावव्याप्तत्वात्तेन भेदसाधनस्य विरुद्धत्वादित्यर्थः ।

स०— **अन्यथा हीति** । निरवधिकसुखादिव्यवच्छेदाभाव इत्यर्थः । आभसत्वेन हेतुना अभेदाभावः साध्यते । अत्र निरवधिकसुखादिसादृश्यस्य जीवेषु सत्त्वे तस्याभेदाविनाभूतत्वादाभासत्वहेतोर्विरुद्धत्वं स्यादित्यर्थः ।

प० — **अन्यथेति** । निरवधिकसुखेन सादृश्यस्याभासत्वहेतुशरीरप्रवेश इत्यर्थः । **हेतोः** आभासत्वहेतोः ।

श्री०— **अन्यथा हीति** । निरवधिकसुखादिसादृश्यस्याभासत्वहेतुशरीरप्रवेशे तेन जीवब्रह्मभेदसाधनं विरुद्धं स्यादित्यर्थः ।

सु०—अयं समुदायार्थः । ब्रह्माभासत्वादिति हेतोर्ब्रह्माधीनत्वात्तत्सदृशत्वाच्चेत्यर्थो न तु सूर्यकादिवत्प्रतिबिम्बत्वादिति । न चायमर्थोऽसिद्धः । निपुणतरं प्रागुपपादितत्वात् । न चोपाध्यधीनत्वेन व्याप्तो येन तद्व्यावृत्त्या व्यावर्तेत । उपाध्यधीनतारहितेष्वपि भावात् । न च भागासिद्धिः(द्धः) । चिदात्मस्वरूपतयोपपादितत्वात् । नापि विरुद्धः । भिन्नेष्वेव भा(ष्वपि भा)वात् ।

तथाऽपि बिम्बप्रतिबिम्बयोरैक्यात्सूर्यकादिदृष्टान्तः साध्यसाधनविकल इति चेन्न । प्रमाणाभावात् । न तावत्प्रत्यक्षम् । तस्य प्रत्यक्त्वपराक्त्वादिना भेदग्राहित्वात् । प्रत्यभिज्ञानं त्वसिद्धमेव । नाप्यनुमानं लिङ्गाभावात् । अत्यन्तसादृश्यस्य सव्येतरकरादिना व्यभिचारात् । वैधर्म्याभावस्य चासिद्धत्वात् । क्रियासाम्यस्य छायादावनैकान्त्यात् । पृथक्कारणाभावस्य नित्येषु व्यभिचारात् । बिम्बकारणमात्रजन्यत्वस्य सन्दिग्धत्वात् । पृथग्दृष्टकार्यानुरोधेन ह्यदृष्टमपि पृथक्कारणं कल्प्यते । न तु कारणादर्शनेन दृष्टकार्यापलापः । तथा सति बहुविप्लवापत्तेः । ततः कारणमुपाधिरेव कल्प्यते । आगमास्तु प्रत्यक्षादिवि(क्षवि)रोधादुपचरितार्था एव । यदि च जलादिना प्रतिहता नयनरश्मयो मुखमीक्षन्ते तदा शिलादिप्रतिहता अपीक्षेरन् । न चास्यां प्रक्रियायां स्वच्छतायाः कोऽप्युपयोगोऽस्तीत्यलम् ॥ तत्त्वमस्यादिश्रुतिविरोधस्तु परिहरिष्यते । अतो निर्दोषमेवाभासत्वानुमानमिति ।

**शे०** — यदुक्तमित्यादिभाष्येण सूचितमाभासत्वानुमानस्यासिद्ध्यादिदोषपरिहारं तत्तन्निवर्तनीयदोषशङ्काप्रदर्शनपूर्वकमुपपादयितुम् 'अन्याभासविशेषितम्' इत्यादेः 'किञ्चित्सुखादिसादृश्यमपीशेनासुरानृते' इत्यन्तस्य वाक्यसमुदायस्य तात्पर्यार्थमाह **अयं समुदायार्थ इति**। तदधीनत्वं जीवस्य सदृशत्वं चेत्यनेन लब्धमर्थमाह **ब्रह्मेति**। यदुक्तमित्यस्य तात्पर्यमाह **प्रागुपपादितत्वादिति**। 'सन्ध्ये सृष्टिराह ही'त्यादौ ब्रह्माधीनत्वस्य 'पुंस्त्वादिवदि'त्यत्र च सदृशत्वस्योपपादितत्वादित्यर्थः। 'उपाध्यधीनतादैर्न'त्यस्य तात्पर्यमाह **न चेति**। कुतो न तद्व्याप्त इत्यत आह **उपाध्यधीनतारहितेष्वपीति**। चक्षुराद्यभिमान्यपभ्रष्टदेवेषु सूर्याद्यधीनत्वे सति तत्सदृशत्वस्य सत्त्वादित्यर्थः। तेषां च जीवत्वादनादिनित्यत्वेनोपाध्यधीनत्वाभावादिति भावः। 'किञ्चित्सुखादिसादृश्यमपीशेनासुरानृते' इत्यनेन लब्धमर्थमाह **न च भागासिद्ध इति**। सुखादिसादृश्यस्यासर्वगामित्वप्रयुक्तं भागासिद्धत्वं च नेत्यर्थः। **चिदात्मरूपतयेति**। चित्त्वरूपतयेत्यर्थः। न चापरमित्यनेन लब्धमर्थमाह **नापि विरुद्ध इति**।

भाष्यकारीयदोषाभावोपपादनमुपलक्षणपरमित्यभिप्रेत्य संभावितं दोषान्तरमाशङ्क्य परिहरति **तथाऽपीत्यादिना**। तत्कथमित्यतः किमत्र प्रत्यक्षमभिमतमुतानुमानमागमो वेति विकल्पं मनसि निधायाद्यं निराचष्टे **न तावदिति**। ननु यथा बहिस्थितश्चैत्रो यत्स्वलक्षणः प्रतिपन्नस्तत्स्वलक्षण एव वेश्मान्तः स्थितोऽपि भाति। तथा यत्स्वलक्षणं ग्रीवास्थं मुखं तत्स्वलक्षणमेव दर्पणस्थमपि भाति न तद्वस्त्वन्तरत्वे युज्यते। तस्मादेकमेकदेशस्थं च मुखं भ्रान्त्या भिन्नं भिन्नदेशस्थं च भातीति चेन्न। किमनेन सादृश्यप्रतीतिरुपन्यस्ता प्रत्यभिज्ञा वा। नाद्यः। तथाऽभेदासिद्धेः। अन्यथा गवये गोसादृश्यावगत्या तदभेदसिद्ध्यापातादित्यभिप्रेत्य द्वितीयं दूषयति **प्रत्यभिज्ञानं त्वसिद्धमेवेति**। अयमर्थः। प्रतिबिम्बो हि बिम्बाद्भिन्नतया साक्षात्क्रियत इति तावदविवादः। अन्यथा त्वयाऽपि कस्य भ्रमत्वमुच्येत। न च भेदं भेदकं च साक्षात्कुर्वन्नभेदमपि साक्षात्कुर्वन्दृष्टः। न चैक्ये साक्षात्कृते सोपाधिकभेदभ्रमोऽपि युक्तः। तदुपादानस्यैक्याज्ञानस्यैक्यज्ञानेन निवृत्तत्वात्। न चोपाधिनिवृत्तिसहकृतमेव ज्ञानमज्ञाननिवर्तकम्। ज्ञाते कदाऽपि न जानामीत्यननुभवेन ज्ञानस्य स्वप्रागभावं प्रतीवाज्ञानं प्रत्यप्यन्यानपेक्षस्यैव निवर्तकत्वात्। न च बिम्बप्रतिबिम्बयोरैक्ये ज्ञातेऽपि तदवच्छिन्नचैतन्यैक्यस्याज्ञानात्तत्र भेदभ्रम इति वाच्यमतिप्रसङ्गात्। न च बिम्बप्रतिबिम्बैक्यज्ञानाभावेऽपि मूलाविद्याकार्योऽयं भेदभ्रमः। तथा सति व्यावहारिकत्वापातात्। न च सोपाधिकभ्रमं प्रति नाज्ञानज्ञाने उपादाननिवर्तके किन्तूपाधिसन्निधानरूपदोषतदपगमाविति वाच्यम्। दोषो निमित्तमात्रं कार्यानुगुणं मिथ्याभूतमज्ञानमेव तूपादानमिति त्वन्मतहानेरन्यथा ह्यज्ञानाकार्यत्वेन ज्ञानानिवर्त्यत्वेन च बिम्बप्रतिबिम्बभेदस्य सत्यत्वापातादिति।

द्वितीयं दूषयति **नापीति** ॥ **लिङ्गेति** । तत्प्रतिबद्धलिङ्गाभावादित्यर्थः । तत्कथमित्यतस्तद्धि भवत्किमत्यन्तसादृश्यं वैधर्म्याभावो वा क्रियासाम्यं वा पृथक्कारणाभावो वा बिम्बकारणमात्रजन्यत्वं वेति विकल्पान्मनसि निधायाद्यं दूषयति **अत्यन्तेति** । द्वितीयं प्रत्याह **वैधर्म्याभावस्य चेति** । प्रत्यक्त्व-पराक्त्वादिवैधर्म्यस्यैव परिदृश्यमानत्वादिति भावः । न तृतीय इत्याह **क्रियेति** । चतुर्थं प्रत्याह **पृथगिति** । न पञ्चम इत्याह **बिम्बेति** । ननु कारणान्तरस्यादर्शनाद्बिम्बकारणमात्रजन्यत्वनिश्चयो भविष्यतीत्यत आह **पृथगिति** । परिवेषेन्द्रचापच्छायाप्रतिसूर्यादाविवेति शेषः ॥ **तथा सतीति** । भेरीघातादिवत्प्तहेत्वभावाद्ध्वनावुपरतेऽप्युपलभ्यमानस्य प्रतिध्वनेरपि शब्दान्तरत्वाभावापातादित्यर्थः ।

नन्वस्तु तर्हि 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतमि'ति शास्त्रीयो व्यवहार एव बिम्बप्रतिबिम्बयोरैक्ये प्रमाणमिति तृतीयः पक्षः । अत्र वारिस्थे प्रतिबिम्बे बिम्बवाचकादित्यशब्दप्रयोगात्तदैक्यसिद्धेरित्यतश्चित्रिते सिंह इति लोकव्यवहारवत् । 'यथा दारुमयी योषा यथा चर्ममयो मृग' इत्यादिस्मार्तव्यवहारवच्च भेदप्रतीतिबलादेव वारिस्थमादित्यमिति व्यवहारस्य सादृश्यादिनिमित्ततया गौणत्वेनाभेदनिमित्तत्वाभावाद्व्यपदेशमात्रस्यैव प्रत्यक्षबाधकतायां चादित्यो यूप इत्यादावपि तत्प्रसङ्गात्तत्कथमनेनाभेदः सिध्येदित्याशयेनाह **आगमस्त्विति** । **पूर्वो-क्तमनूद्यातिप्रसङ्गेनापि** दूषयति **यदि चेति** । ननु जलादेः स्वच्छत्वात्तत्प्रतिहतानां नायनरश्मीनां स्वमुखग्राहकत्वसंभवेऽपि शिलादेरस्वच्छत्वान्न तेन प्रतिहतानां तेषां स्वमुखग्राहकत्वमित्यतः प्रतिफलनो-पाधित्वपक्षे जलादेः स्वच्छत्वोपयोगसंभवेऽप्यभिघातकत्वमात्रेणोपयोगपक्षे स्वच्छत्वस्य न कथमप्युपयोगो-ऽन्यथा विरलावयवस्य जलस्य नेत्राभिघातकत्वे स्वच्छजलान्तर्गतशिलाद्यग्रहणापत्तेरित्याशयेनाह **न चास्यामिति** ॥ **परिहरिष्यत इति** । 'ईशत्वेनैव विज्ञातमनीशत्वेन चेच्छ्रुतिः । अनीशत्वेन विज्ञातमीशत्वेनाथवा दिशेत् । उपजीव्यविरोधेन नैव मानत्वमेष्यती'त्यादिनेति शेषः । आभासत्वा-नुमानमितीत्यत्रत्येतिशब्दस्येत्ययं समुदायार्थ इति पूर्वेणान्वयः ।

स० — **उपाधीति** । गगनादिषु ब्रह्माधीनत्वसद्भावेपि उपाध्यधीनत्वाभावादित्यर्थः । ननु पक्षीकृतजीवमात्रे ब्रह्माधीनत्वलक्षणाभासत्वसत्त्वेपि सुखादिगुणैर्ब्रह्मसदृशत्वलक्षणतत्सदृशत्वहेतोरभावेन हेतोर्भागासिद्धिरित्यत **आह न च भागेति** ॥ **चिदात्मेति** । चित्वेनैव सदृशत्वं विवक्षित-मिति नासिद्धिः ।

**प०—प्रागुपपादितत्वादिति** । 'सन्ध्ये सृष्टिरि'त्यादौ 'पुंस्त्वादिवदि'त्यादौ चेति भावः ॥ **व्याप्त इति** । आभासत्वे हेतुरित्यनुषङ्गः ॥ **उपाध्यधीनतारहितेष्विति** । सूर्यप्रतिबिम्बेष्विन्द्रचापादिष्विति

भावः । 'इन्द्रचापो यथा रवेरि'त्यादेः विण्मूत्राद्यभिमानिषु उक्तरूपपृथिव्यादिदेवताभासत्वस्य सत्वेप्युपाध्यधीनत्वाभावादिति भाव इत्यप्याहुः ॥ **न च भागासिद्धिरिति** । हेतुशरीरप्रविष्टब्रह्मसदृशत्वरूपभागस्यासुरजीवभागे वाऽसिद्धिर्न चेत्यर्थः ॥ **उपपादितत्वादिति** । 'सदृशत्वं च चित्त्वमात्रं न चापरमि'ति ग्रन्थेनेति भावः । 'आभासत्वविरोधत' इति शंकाग्रन्थे आभासत्वस्याभेदेनैव व्याप्तत्वमुपेत्य याऽऽभासत्वविरुद्धतोक्ता तामुद्धरति **नापि विरुद्ध इति** । ननु ममेदं मुखमिति प्रत्यभिज्ञैव प्रमाणमभेद इत्यत आह **प्रत्यभिज्ञानं त्विति** । ग्रीवायामेव मे मुखं न दर्पण इति प्रतीतेरेव भावेन मम मुखमेतदिति सारूप्यादुपचार इति भावः । प्रसक्तलिंगान्याशङ्क्य निराह **अत्यन्तसादृश्यस्येत्यादिना** ॥ **असिद्धत्वादिति** । सव्येतरभेदादेर्दर्शनादिति भावः । कारणान्तरानुपलंभात् बिंबकारणमात्रजन्यत्वं निश्चीयत इत्यत आह **पृथग्दृष्टेति** । अत्र च पराक्त्वादिना पृथग्दर्शनमस्तीति भावः । **आगमास्त्विति** । 'नेक्षेतोद्यन्तमादित्यं नास्तयं)न्तयंतं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्, इत्याद्या इत्यर्थः । तत्र वारिस्थेऽप्यादित्यपदप्रयोगादभेदधीर्ध्येया । **प्रत्यक्षेति** । प्रत्यगित्यादिना प्रागुक्तभेदग्राहिप्रत्यक्षेत्यर्थः । **उपचरितार्था इति** । सादृश्यनिमित्ता इत्यर्थः । दर्पणादिस्वच्छद्रव्यमेव प्रतिहतिहेतुर्न शिलादिरित्यत आह **न चास्यामिति** । प्रतिहताः परावृत्य ग्रीवास्थमेव मुखं गृह्णन्तीति प्रक्रियायामित्यर्थः । आभासत्वादिति भेदसाधकहेतोरसिद्ध्यादेरभावेपि श्रुतिविरोधस्तु स्यादित्यत आह **तत्त्वमस्यादीति** । 'ईशत्वेनैव विज्ञातमनीशत्वेन चेच्छ्रुति'रित्यादौ परिहरिष्यतेऽस्मेतन(?)ग्रन्थ इत्यर्थः ।

---

या० **प्रागुपपादितत्वादिति** । अनेनातःशब्दप्रयोगे प्रयोजनमुक्तमित्यवधेयम् ॥ **उपाध्यधीनतारहितेष्वपीति** । मुक्तेष्वित्यर्थः । अनेन चिदात्मनां रूपमित्येतल्लब्धार्थो दर्शितः । 'किञ्चित्सुखादिसादृश्यमपीशेनासुरानृत' इत्येतल्लब्धमर्थं दर्शयति **न च भागासिद्ध इति** । सुखेन सादृश्यविवक्षयाऽसुरेषु भागासिद्धिर्नेत्यर्थः । चक्षुराद्यभिमान्यपभ्रष्टदेवेषु सूर्याद्यधीनत्वे सति तत्सादृश्यस्य सत्त्वादित्यर्थः । तेषां जीवत्वेनानादिनित्यत्वात् । न तु बाह्योपाध्यधीनत्वादिकमस्तीत्यवगन्तव्यम् । रूपमेषां चिदात्मनामित्यनेन लब्धमर्थं दर्शयति **न च भागासिद्ध इति** । मुक्तिदशायामभावेन भागासिद्धिर्न चेत्यर्थः । न चापरमित्यनेन लब्धमर्थं दर्शयति **नापि विरुद्ध इति** । यत्स्वलक्षणं ग्रीवास्थं मुखं प्रतिपन्नं तत्स्वलक्षणमेव दर्पणस्थमपि भातीति प्रत्यभिज्ञानमेव तत्र प्रमाणमित्यत आह **प्रत्यभिज्ञानं त्विति** । आदर्शादौ प्रतीते मुखे पराक्त्वसव्येतरव्यत्यासपरिमाणाल्पतादेर्वैधर्म्यस्यापि भासमानत्वेन तत्स्वलक्षणमेव भातीति प्रत्यभिज्ञानमसिद्धमित्यर्थः । करादिनेत्यत्रादिपदेन यमयोर्ग्रहणम् ॥ **क्रियासाम्यस्येति** । समानक्रियावत्त्वस्येत्यर्थः । यौ समानक्रियावन्तौ तावभिन्नाविति

न व्याप्तिः । शरीरतच्छाययोर्व्यभिचारादित्यर्थः । आदिपदेन दीपतत्प्रभयोर्ग्रहणम् । ननु 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतमि'त्याद्यागम एवात्र प्रमाणम् । अत्र वारिस्थे प्रतिबिम्बे बिम्बवाचकादित्यशब्दप्रयोगात्तदैक्यसिद्धेरित्यत आह **आगमस्त्वति ।** तथा च लिखितसिंहे सिंहशब्दवत् 'यथा दारुमयी योषा यथा चर्ममयो मृगः' इत्यादिवच्च वारिस्थे आदित्यशब्दप्रयोगः सादृश्यनिमित्तक एव नाभेदनिमित्त इति भावः ॥ **परिहरिष्यत इति ।** 'ईशत्वेनैव विज्ञातमनीशत्वेन चेच्छ्रुतिरि'त्यादाविति शेषः ।

श्री० **न तु सूर्यकादिवदिति ।** उपाध्यधीनत्वादिनेत्यर्थः । व्याप्तः आभासत्वहेतुः उपाध्यधीनतारहितेष्वपभ्रष्टदेवेष्वप्याभासत्वस्य भावाद्व्यभिचार इत्याह **उपाधीति । भिन्नेषु** अपभ्रष्टदेवेषु ॥ ( **भागासिद्धिरिति ।** मुक्तेष्वभावादिति भावः ॥ **विरुद्ध इति ।** आभासत्वस्याभेदव्याप्तत्वादित्यर्थः ॥ ) **वैधर्म्येति ।** सव्येतरकरादौ किञ्चिद्वैधर्म्यमस्त्येवेति भावः ॥ **असिद्धत्वादिति ।** अत्रापि प्रत्यक्त्वपराक्त्वादिरूपवैधर्म्यस्य सत्त्वादित्यर्थः । **क्रियासाम्यं** बिम्बचलने प्रतिबिम्बचलनरूपम् ॥ **अनैकान्त्यादिति ।** देहतच्छाययोरभेदाभावादिति भावः ॥ **पृथगिति ।** प्रतिबिम्बं बिम्बाभिन्नम् । बिम्बरूपकारणव्यतिरिक्तकारणशून्यत्वादित्यर्थः । छायायाश्च देहक्रियया क्रियावत्त्वेऽपि देहरूपकारणातिरिक्तमालोकादिरूपकारणमस्तीति न तत्र व्यभिचार इति भावः । अत एव नान्धकारे छायाप्रतीतिरिति ज्ञातव्यम् ॥ **नित्येष्विति ।** सर्वथा नित्यानां कारणशून्यत्वेन निरुक्तो हेतुरस्तीति व्यभिचार इत्यर्थः । निरुक्तहेतोर्नित्येषु व्यभिचारपरिहाराय पर्यवसाने कृते दोषमाह **बिम्बकारणेति ।** तद्रूपकारणेत्यर्थः । तदेवोपपादयति **पृथगिति ।** प्रतिबिम्बरूपकार्यस्य बिम्बात्पृथग्दर्शनाद्बिम्बातिरिक्तमुपाधिरूपं कारणं वाच्यमिति भावः ॥ **बहुविप्लवेति ।** स्पष्टदृष्टकण्टकशौक्ल्यादेरप्यपलापापत्तेरित्यर्थः ॥ **तत इति ।** एवं न्यायादित्यर्थः । तथा च प्रकृते आभासत्वविरोधत इत्यत्र तथा हि दर्पणादिना सन्निकृष्टाः प्रतिहताः परावृत्ता नयनरश्मय इत्यादिनोक्तां बिम्बप्रतिबिम्बाभेदसाधकप्रक्रियां दूषयति **यदि चेति ।** न च स्वच्छत्वास्वच्छत्वाभ्यां विशेषः । प्रतिहतानां परावृत्तिरिति प्रक्रियायां स्वच्छत्वादेरनुपयोगादित्याह **न चेति ॥** उपलक्षणमेतदित्यादिना तत्त्वमस्यादिश्रुतिविरुद्धत्वेनोक्तं कालातीतत्वं परिहरति **तत्त्वमस्यादीति ।**

**सु० — ननु ब्रह्माभासशब्दो जीवस्य ब्रह्माधीनतां ब्रह्मसदृशतां च कया वृत्त्या वक्ति । गौण्येति चेत् । एवं तद्यस्मदायत्ते शब्दप्रयोगेऽवाचकं किमिति प्रयोक्ष्यामह इति प्रयोजनं वाच्यम् । मैवम् । योगाश्रयणादित्याह** तत इति ।

**अनु०**— तत आभासते नित्यं तद्वदाभासतेऽपि च ।
भानमस्तित्वमपि चैवासमन्ताद्यतस्ततः ।
जीव आभास उद्दिष्टः सदैव परमात्मनः ॥

**तेन परमात्मना निमित्तेनाभासते प्रतीतो भवतीति प्रतीतौ तदधीनत्वमुच्यते ।** तद्वत् **ब्रह्मवदाभासत इत्यनेन तत्सदृशत्वम् । अपि चेति** व्याख्यानसमुच्चये । भानं **ज्ञानम् ।** अस्तित्वं **सत्त्वम् । अस्तिशब्दोऽव्ययम् । अस्ति स्वतीति** पाठात् **। अपिशब्दो भानास्तित्वयोः समुच्चये । चशब्दो** व्याख्यानसमुच्चये **। एवशब्दस्य तत एवेति संबन्धः । आ इत्यनुवादेन समन्तादिति व्याख्यानम् । यतः कारणात्ततः परमात्मन एव जीवस्य भवतस्ततः कारणादित्यावृत्त्या योज्यम् । भा च आभा च भाऽऽसे, आ सर्वकालवर्तिन्यौ भाऽऽसे आभासे, परमात्माधीने आभासे यस्यासौ परमात्माभासः । 'पूर्वान्तवत्स्वरःसन्धौ क्वचिदेव परादिवत् । द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवदि'ति वचनान्न यतिभङ्गः शङ्कनीयः ।**

**शे० — कया वृत्त्येति ।** अभिधानाद्यभावेन रूढेरसंभवात् । अवयववृत्त्यप्रतिभासेन योगस्याप्यनुपपत्तेर्न तस्य तत्र मुख्यवृत्तिः संभवति । नाप्यमुख्यवृत्तिः । तस्याः प्रयोजनसापेक्षत्वेनासति प्रयोजने तदनुपपत्तेरिति गूढाभिसंधेरियमाशङ्का । आशयमजानानः शङ्कते ॥ **गौण्येति चेदिति ।** पूर्ववादी स्वाशयमुद्घाटयति **एवं तर्हीति ॥ तेन परमात्मनेति ।** अनेनाद्यादिभ्य उपसंख्यानात्तेनेति तत इति तृतीयान्तात्तसिरित्युक्तं भवति **निमित्तेनेति ।** जीवकर्तृकप्रतीतावीश्वरस्य कर्तृत्वकरणत्वयोरसंभवान्न तत्रेयं तृतीया किन्तु निमित्त एवेति भावेनेदमुक्तम् ॥ **तद्वदिति ।** 'तत्र तस्येवेति, लक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वात्प्रथमान्तादेवात्र वतिरिति भावः ॥ **व्याख्यानसमुच्चय इति ।** तत आभासत इति व्याख्यानस्य तद्वदाभासत इति व्याख्यानस्य च समुच्चयेऽपि चेति समुदायरूपो निपात इत्यर्थः । नन्वस्तीत्येषोऽस्तेर्लट् तत्कथं तिङन्तादस्तिशब्दाद्भावप्रत्ययः । 'तस्य भावस्त्वतलावि'ति षष्ठ्यन्तात्समर्थादेव भावे त्वतलोर्विधानादस्य च षष्ठ्यन्तत्वाभावादित्यत आह **अस्तिशब्द इति ।** सत्ताविशिष्टकर्तृवाच्यस्तिशब्दो निपातत्वादव्ययमित्यर्थः । ततश्चाव्ययस्य सर्वविभक्त्यन्ततया युक्तः षष्ठ्यन्ताद्विहितस्त्वप्रत्ययोऽस्तिशब्दादपीति भावः । कथमस्य निपातत्वं येनाव्ययत्वमित्यतो 'विभक्तिप्रतिरूपकाश्च निपाता भवन्ती'ति भाष्यं मनसि निधाय तदुपपादयति **अस्ति स्वस्तीति पाठादिति ।** विभक्तिप्रतिरूपकेषु पाठादित्यर्थः । यद्यपि स्वरादिपाठादप्यव्ययत्वमस्योपपादयितुं शक्यं तथाऽपि तस्य सत्तामात्रार्थत्वेनास्तीत्येतावतैव सत्तालाभात्तदर्थकत्वप्रत्ययवैयर्थ्यप्रसङ्गात्तदनाश्रयणमिति मन्तव्यम् । **व्याख्यानसमुच्चय इति ।** तत आभासत इति पूर्वोक्तव्याख्यानेन भानमस्तित्वमिति व्याख्यानस्य

समुच्चय इत्यर्थः । आ समन्तादिति भाष्येऽन्यतरेणान्यतरस्य वैयर्थ्यमाशङ्क्य परिहरति **आ इत्यनुवादेनेति** । भा च आसा च भासे इत्येव मूलपाठः । अत्र भानं भा, असनमसा भा च असा च भासे इति विग्रहो द्रष्टव्यः ॥ **परमात्माभास इति** । यद्यप्यत्र परमात्माभास इति पदं नास्ति तथाऽपि ब्रह्माभासशब्दार्थकथनार्थमस्य वाक्यस्य प्रवृत्तत्वात्तदुपपत्त्यर्थं परमात्माभास इत्युक्तमिति भावः । ननु पदमध्ये विरामाद्यतिभङ्ग इत्यत आह **पूर्वान्तेति** । योऽयं पूर्वापरयोरेकादेशः स्वरः सन्धौ सवर्णदीर्घादिः स प्रायः पूर्वान्तवत् क्वचिदेव परादिवच्च द्रष्टव्यः । अत एव 'अन्तादिवच्चे'ति पाणिनिः सस्मार । यणादेशः पूर्वान्तोऽपि परादिवदेव द्रष्टव्यः । अत्र च स्वरस्य परादिवद्भावे व्यञ्जनमपि परादिवद्भवति । तद्भक्तत्वात् । प्रकृते च पूर्वापरयोरेकादेशस्यैकारस्य पूर्वान्तवद्भावान्न यतिभङ्ग इति भावः । **वचनात्** वृत्तरत्नाकरवचनात् । एतच्च यतिभङ्गस्य शास्त्रदोषत्वमङ्गीकृत्योक्तम् । वस्तुतस्तु 'य उपाधिर्लगति साध्ये संबन्धविशेषण' इत्याद्यभियुक्तप्रयोगदर्शनान्न तस्य शास्त्रदोषत्वं किन्तु काव्यदोषत्वमेवेति प्रमेयदीपिकायां टीकाकृतोक्तं समाधानमेवात्रावधेयम् ।

स०— ननु तस्य भाव इत्यनेन षष्ठीसमर्थात् भावप्रत्ययस्य विहितत्वेन प्रकृतेऽस्तीत्यस्य क्रियापदत्वेन तदभावात् कथमस्तित्वमिति भावप्रत्यय इत्यत आह **अस्तिशब्द इति** ॥ **आ इत्यनुवादेनेति** । अन्यथा एकस्य वैयर्थ्यापत्तिः । **चशब्दो व्याख्यानेति** । भानमस्तित्वमिति व्याख्यानस्य तत आभासत इति व्याख्यानान्तरसमुच्चयार्थमित्यर्थः ॥ **भा चासा चेति** । भानं भा । असनं असा । भा च असा चेति भासे इति समसो द्रष्टव्यः । परमात्माभास इति पदं नास्ति किंतु आभास इत्येव । तथापि ब्रह्माभासशब्दार्थकथनार्थमस्य वाक्यस्य प्रवृत्तत्वेन तदर्थं परमात्माभास इत्युक्तमिति द्रष्टव्यम् । नन्वस्मिन् वाक्ये 'अपि चैवेत्यत्र पदमध्येऽवसानस्य कृतत्वात् यतिभङ्ग इत्यत्राह **पूर्वान्तवदिति** । कृतव्याख्यानमेतदानन्दमयाधिकरणे ।

प०— **अव्ययमिति** । तिङन्तप्रतिरूपमव्ययमित्यर्थः । तेन 'तस्य भावस्त्वतलावि'ति प्रातिपदिकाद्विहितत्वप्रत्ययोपपत्तिरिति भावः ॥ **इतिपाठादिति** । अव्ययगणपाठादित्यर्थः ॥ **व्याख्यानसमुच्चय इति** । पूर्वव्याख्यानद्वयेनास्य समुच्चय इत्यर्थः ॥ **आवृत्त्येति** । तत इत्यस्येत्यर्थः । अपिचैवेत्यत्र एवशब्दे विच्छेदावगमाद्यतिभङ्गमाशङ्क्याह **पूर्वान्तवदिति** । स्वरः अकारादिः । अत्रैकाररूपस्वरस्य पूर्वान्तवत्स्वभावान्न दोष इत्यर्थः ।

या०— **अव्ययमिति** । न तिङन्तं पदं, तेन त्वप्रत्ययोपपत्तिरिति भावः । **परमात्माभास इति** । तथा चोक्तं व्याख्यानं परमात्माभासशब्दस्यैव नाभासशब्दमात्रस्येति ज्ञेयम् । पूर्वान्तवदिति आनन्दमयाधिकरणे व्याख्यातम् ।

श्री० — **वक्तीति** । योगरूढ्योरभावादिति भावः ॥ **व्याख्यानसमुच्चय इति** । तत आभासते, तद्वदाभासत इत्याभासशब्दव्याख्यानयोः परस्परं समुच्चय इत्यर्थः ॥ **चशब्द इति** । तत आभासत इत्यादिना कृताभासशब्दव्याख्यानद्वयापेक्षया भानमिति क्रियमाणव्याख्यानसमुच्चय इत्यर्थः ।

च० — **इति पाठादिति** । अव्ययगण इति पूरणीयम् ।

अनु० — न जलायत्तसूर्यादिप्रतिबिम्बोपमत्वतः ।

**सु० — न जलायत्तसूर्यादिप्रतिबिम्बोपमत्वत इति । सूर्यादिप्रतिबिम्बा यथा जलाद्युपाध्यायत्तास्तथोपाध्यायत्तत्वेनाभासो नेत्यर्थः । नन्वयमर्थो नोपाध्यधीनताद्यैरित्यनेनैवोक्तः । सत्यम् । यदुक्तमित्यादिनोक्त एवार्थस्तत आभासत इत्यादिना प्रपञ्चित इत्यदोषः ॥ तथा हि । 'रूपमेषां चिदात्मनामि'त्युक्तस्य तात्पर्यं सदैवेत्युक्तम् । स्यादेतत् । सूत्रकारेण दृष्टान्तमात्रमुक्तम् । तद्बलात्कश्चिद्धेतुरध्याहर्तव्यः । न चाभासत्वमेवेत्यस्ति नियमः । नाप्याभासपदोपादाने नियामकमस्ति । तस्मादसङ्गतमेतत् । मैवम् । आभास एव चेति सूत्रकारोक्तस्य ब्रह्माभासत्वस्यात्र हेतुत्वेन विवक्षितत्वात् । ब्रह्मांशत्वेनाक्षेपे तदधिकरणगतार्थस्यैव (तु) बुद्धिसन्निधानात्तत्र कर्तव्य एवायं चर्चोऽत्र कृत इति न कश्चिद्दोषः ।**

**ननूपाधिमत्त्वेनैव जीवस्य भगवत्प्रतिबिम्बत्वमिति सिद्धान्तः । उपाधेरपि नित्यचेतनत्वेन दोषपरिहारः । यथोक्तम् । 'उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति । स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनेति' । तत्कथमेतत् । इत्थम् । द्विविधो हि जीवोपाधिः । आभ्यन्तरो बाह्यश्च । तत्र स्वरूप(स्वभाव)प्रतिभासहेतुराभ्यन्तरः । स्वभावविपरीतावभासहेतुरन्तःकरणादिर्बाह्यः । तदायत्तत्वादिकं चैतन्यस्य नास्तीत्यभिप्रेत्येदमुदितम् । तदुक्तम् । 'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थिति'रिति । निरुपाधिप्रतिबिम्बवाचोयुक्तेरपि बाह्योपाध्यधीनत्वाभावाभिप्रायेण नेतव्येति ।**

शे० — **उक्त इति** । ततश्च 'तत आभासत' इत्यादिग्रन्थस्य तेन पौनरुक्त्यमिति भावः । 'तत आभासत' इत्यादिग्रन्थस्य 'यदुक्तमि'त्यादिपूर्वग्रन्थप्रपञ्चकत्वमेव कुतो ज्ञायत इत्यत आह **तथा हीति** । तथात्वादेव हीत्यर्थः । पूर्वप्रपञ्चकत्वादेव हीति यावत् । तत इत्यादेराभासत्वहेतुव्याख्यानपरभाष्यस्यासङ्गतत्वमाशङ्कते **स्यादेतदिति** ॥ **दृष्टान्तमात्रमिति** ।

**सूर्यकादिवदिति** दृष्टान्तमात्रमित्यर्थः । नापीति द्वितीयदोषं परिहरति **आभास एव चेतीति**। न चाभासत्वमेवेत्याद्यदोषमपि परिहरति **ब्रह्मांशत्वेनेति** ।

शिष्यः शङ्कते **नन्विति** । नन्वेवं जीवस्य सोपाधिप्रतिबिम्बत्वा'त्सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते । जीवः परस्यानुपाधिरिन्द्रचापो यथा रवेरि'त्यनुपाधिप्रतिबिम्बोक्तिविरोधः स्यादित्यत आह **निरुपाधीति** ॥ **वाचोयुक्तिरिति** । षष्ठ्या आक्रोश इत्येतत्सूत्रीय'वाग्दिक्-पश्यद्भ्यो युक्तिदण्डहरेष्वि'ति वार्तिकाद्वाचोयुक्तिरिति षष्ठ्या अलुगिति भावः ।

**प०— यथोक्तमिति** । प्रथमस्कंधतात्पर्ये त्रयोदशेऽध्याये 'जीवोपाधिरि'ति चतुर्थस्कंधता-त्पर्ये एकविंशाध्याये कथितेयं स्मृतिः । वाचोयुक्तिरित्येकं पदम् । वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्विति षष्ठ्या अलुक् । 'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते । जीव ईशस्यानुपाधिरिन्द्रचापो यथा रवेरि'त्यादिनिरुपाधित्वव्यवहार इत्यर्थः ।

**या०— तथा हीति** । तथात्वादेव हीत्यर्थः ॥ **अध्याहर्तव्य इति** । सौत्रचशब्दार्थतयो-हितव्य इत्यर्थः । तेन न वक्ष्यमाणविरोध इति ध्येयम् । नन्वेवं 'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते । जीव ईशस्यानुपाधिरिन्द्रचापो यथा रवेरि'त्यादिवचनायोग इत्यत आह **निरुपाधीति** । वाचोयुक्तिर्योगः प्रयोग इति यावत् ।

---

**श्री०**— प्रपञ्चनप्रकारं दर्शयति **तथा हीति** ॥ **नियामकमस्तीति** । पूर्वं जीवे सूत्रकारेणाभासपदस्य कुत्राप्यप्रयुक्तत्वादिति भावः ॥ **तदधिकरणेति** । अंशाधिकरणेत्यर्थः ॥ **दोषेति** । तन्नाशेन नाशादिरूपः ॥ **एतदिति** । 'नोपाध्यधीनताद्यैश्च', 'न जलायत्तसूर्यादी'ति -कथनमित्यर्थः ॥

**च०— यथोक्तमिति** । प्रथमस्कंधतात्पर्यत्रयोदशाध्याय इत्यर्थः । **तदुक्तमिति** । चतुर्थ-स्कंधतात्पर्ये एकविंशाध्याय इत्यर्थः ।

**सु०— सौत्रश्चशब्द आभासत्वसमुच्चयार्थतया व्याख्यातः । अवधारणार्थो वा प्रतिपत्तव्यः । एवं तर्हि पुनरुक्तिदोषः । एवशब्दस्याप्यवधारणार्थत्वादित्यत आह** तदधीन-त्वमिति ।

**अनु०**— तदधीनत्वमेवेति किञ्चित्सादृश्यमेव च ।
संप्रकाशयतः सूत्रगतौ

एवेतिशब्दस्तदधीनत्वमेवेत्यर्थं, च(श्च)शब्दः किञ्चित्सादृश्यमेवेत्यर्थमित्युभावर्थद्वयं संप्रकाशयत इत्यावृत्त्या योज्यम्। यद्वैवेतिशब्दस्तदधीनत्वम्, चः किञ्चित्सादृश्यमित्युभावर्थद्वयं संप्रकाशयतः अवधारयत इति व्याख्येयम्। एतदुक्तं भवति। अत इत्यर्थद्वयं हेतुत्वेनोक्तम्। प्रत्येकं चोपाध्यधीनत्वादिकं व्यावर्तनीयम्। तदधीनत्वादेव तत्सदृशत्वादेवेति। तस्मादुभावपि सार्थकाविति ॥ एवशब्देनैकेनैवशब्देनोभयावधारणं प्रतिषेधति। नन्वेकेनैवशब्देनार्थद्वयस्योक्तत्वादेकेनैवावधारणेनालम्। मैवम्। बुद्ध्या विविक्तेनार्थद्वयेन संबन्धात्। अथार्थद्वयमेकीकृत्य कस्मान्नावधार्यते। अन्यत्र सूचनीयोऽर्थः। यद्यत एवेत्येतावदेवोच्येत तदेकस्यैवार्थस्यायं परामर्शो न द्वितयस्य परामर्शो द्वितयपरामर्शेऽपि मिलितस्य हेतुत्वमिति ज्ञायेत। अवधारणद्वयप्रयोगे तु तदन्यथाऽनुपपत्त्या प्रत्येकं हेतुभूतार्थद्वयपरामर्शो विज्ञायते। तथा च बाधकस्यानेकत्वेन प्राबल्यं विशेषणकृत्यगवेषणप्रयासनि(रासोऽपि न स्या)रसनं च लब्धं स्यात्। तदिदमुक्तं सूत्रगताविति।

शे० — ननु तदधीनत्वमेवेत्युत्तरभाष्यखण्डवैयर्थ्यम्। न चावधारणद्वयस्यैकार्थत्वप्रयुक्तपौनरुक्त्यपरिहारार्थमेतदुक्तमिति वाच्यम्। सूत्रेऽवधारणद्वयस्यैवासत्त्वेन तदर्थैकत्वप्रयुक्तपौनरुक्त्यशङ्कानवकाशात्। न च सौत्रस्य चशब्दस्याप्यवधारणार्थत्वादवधारणद्वयसिद्ध्या युक्तस्तच्छङ्कोदय इति वाच्यम्। 'तावन्मात्रेण चाभास' इति पूर्वग्रन्थे तस्याभासत्वहेतुसमुच्चयार्थत्वस्थित्याऽवधारणार्थत्वायोगादित्यत आभासत्वहेतुसमुच्चायकस्यापि तस्यावधारणार्थत्वस्यापि भाष्यकृदभिप्रेतत्वेनावधारणद्वयसिद्धेर्नानुपपत्तिरित्यभिप्रेत्योक्तानुवादपूर्वकं तस्यावधारणार्थतामाह **सौत्र इत्यादिना।** **व्याख्यात इति।** 'तावन्मात्रेण चाभास' इत्यत्राभासपदेन सौत्रश्चशब्दोऽनुक्तसमुच्चायक इत्यभिप्रेत्याभासत्वहेतुसमुच्चयार्थतया व्याख्यात इत्यर्थः। अत एव तावन्मात्रेण चेत्यनुव्याख्यानगतश्चशब्दः सौत्रचशब्दार्थभूतहेतुसमुच्चायकतया सूर्यकाद्युपमा च तावन्मात्रेणोपात्तेति चार्थ इति व्याख्यात इति द्रष्टव्यम् ॥ **आवृत्त्येति।** इतिशब्दैवशब्दयोरिति शेषः। अत्र पक्षे तदावृत्तिर्भवतीत्यपरितोषात्पक्षान्तरमाह **यद्वेति।** तावताऽपि कथं पुनरुक्तिपरिहार इत्यत आह **एतदुक्तं भवतीति ॥ अर्थद्वयमिति।** तदधीनत्वं तत्सदृशत्वं चेत्यर्थद्वयमित्यर्थः ॥ **हेतुत्वेनोक्तमिति।** प्रकृतस्य हेतुत्ववाचकत्वादतःशब्दस्यात इत्यत्र प्रातिपदिकेन प्रकृततदधीनत्वतत्सदृशत्वयोः परामर्शसंभवात्तयोराभासतायां हेतुत्वं ततः परया विभक्त्योक्तमित्यर्थः। प्रत्येकमुपाध्यधीनत्वादिव्यावृत्तिप्रकारमेव दर्शयति **तदधीनत्वादेवेत्यादि ॥ तस्मादिति।** सूत्र इति शेषः। इतीत्यस्येत्येतदिति पूर्वेणान्वयः। नन्वावृत्त्या भाष्ययोजनायामवधारणद्वयसार्थक्यलाभेऽपि एवेतिशब्दस्तदधीनत्वं च किञ्चि-

त्सादृश्यमित्युभावप्यर्थद्वयं सम्प्रकाशयतोऽवधारयत इति योजनायां भाष्ये सादृश्यमेवेत्येवकारवैयर्थ्यमित्यत आह **एवशब्देनेति** । (एवशब्देन प्रतिषेधतीति संबन्धः) सूत्रगतचैवशब्दयोर्मध्ये येनकेनचिच्छब्देनातःशब्दोक्ततदधीनत्वतत्सदृशत्वरूपहेतुद्वयावधारणप्रतिषेधार्थत्वाद्भाष्ये एवशब्दस्य न वैयर्थ्यमित्यर्थः । **नन्वेकेनैवशब्देनेति** । एकेनैव सौत्रेणात इतिशब्देनेत्यर्थः । किमत्रार्थद्वयस्यैकेनैवशब्देनोक्ततयाऽविविक्तत्वात्प्रत्येकमवधारणद्वयसंबन्ध एवानुपपन्न इत्यभिप्रायः किंवा संभवत्यपि तस्मिन्नर्थद्वयमेकीकृत्यानवधार्य प्रत्येकमवधारणे किं प्रयोजनमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **बुद्ध्येति** । एकेन शब्देनोपात्तत्वादर्थद्वयस्य शब्दकृतविवेकाभावेऽपि बुद्धिकृतविवेकसंभवान्न तत्संबन्धानुपपत्तिरवधारणद्वयस्येति भावः । द्वितीयं शङ्कते **अथेति** ॥ **एकीकृत्येति** । भेदव्यासतयेति शेषः । प्रयोजनसद्भावान्नैवमित्यभिप्रेत्य तदाह **अस्त्यत्रेति** ॥ **एकस्यैवेति** । तदधीनत्वतत्सदृशत्वयोरन्यतरस्यैवेत्यर्थः । **द्वितयेति** । द्वाववयवौ यस्येति 'संख्याया अवयवे तयप्' इति तयप् । ननु चात इत्यनेन परामर्शप्रयोजकीभूतप्रकृतत्वस्योभयत्रापि साम्यादविशेषेणोभयपरामर्श एवायं नान्यतरपरामर्श इत्यत आह **द्वितयपरामर्शेऽपीति** ॥ **तदन्यथाऽनुपपत्त्येति** । एकस्यावधारणस्य वैयर्थ्यान्यथानुपपत्त्येत्यर्थः । किं तद्विज्ञानेनापि सिद्धमित्यत आह **तथा चेति** । (सूत्रगताविति सूचनात्सूत्रमेतौ च यदा तत्रत्यौ एतयोरप्युक्तार्थसूचकत्वमस्तीत्यर्थः । अत एव 'अस्त्यत्र सूचनीयोऽर्थ' इत्युक्तम् ) ।

स० — ननु तदधीनत्वमेवेति भाष्य एव शब्दवैयर्थ्यमित्यत आह **एवशब्देनेति** ॥ **एकेनैवशब्देनेति** । एकेनव सौत्रेणात इति शब्देनेत्यर्थः । **न द्वितयपरामर्श इति** । द्वाववयवौ प्रदेशौ यस्यासौ द्व्यवयव इति व्युत्पत्त्या द्वितयशब्देन तदधीनत्वतत्सदृशत्वरूपसमुदायो गृह्यते तस्य परामर्शको न स्यादित्यर्थः । **तदन्यथानुपपत्त्येति** । एकस्यैवकारस्य वैयर्थ्यान्यथानुपपत्त्येत्यर्थः ।

प० — **व्याख्यात इति** । अत एवोपमेत्येव चेति चशब्देन सह सूत्रांशं गृहीत्वा तावन्मात्रेण चाभास इत्यत्र व्याख्यात इत्यर्थः । अन्यथा सूत्रे आभासपदाभावादाभास इत्युक्तिरनुव्याख्याने उत्सूत्रिता स्यादिति भावः । मूले एवे(तीतिपदद्वयस्य)तिपदस्य किंचित्सादृश्यमित्यत्राप्यन्वयं अर्थपदाध्याहारं एवचेत्यत्र एवशब्दात्परमितिशब्दं इति चेत्यनन्तरं शब्दपदं इत्युभाविति चपदद्वयमुपेत्य योजयति **एवेतिशब्द इत्यादिना** ॥ **आवृत्त्येति** । एवेतीतिपदद्वयस्येति योज्यम् । एवेतीत्यनन्तरं शब्दपदं चशब्दस्यावृत्तिं अध्याहारं वोपेत्याह **यद्वेत्यादिना** । (चइति चशब्द इत्यर्थः । ) एव चेत्यस्य एवशब्दचशब्दावित्यर्थमुपेत्याह **इत्युभावर्थद्वयमिति** । इत्यर्थद्वयमुभौ संप्रकाशयत इति योजना ॥ **सूत्रगताविति** । सूत्रव्याख्यानप्रस्तावादेव सूत्रीयत्वलाभे सूत्रगतावित्युक्तिबलादेतावानभिप्रायो ज्ञायत इत्यर्थः ॥ **आभासत्वहेतुसमर्थनम्** ॥

**या० — व्याख्यात इति** । 'तावन्मात्रेण चाभास' इत्यत्राभासपदेन सौत्रश्चशब्दोऽनुक्तसमुच्चायक इत्यभिप्रेत्याभासत्वहेतुसमुच्चयार्थतया व्याख्यात इत्यर्थः । अत एव तावन्मात्रेण चेत्यनुव्याख्यानगतश्चशब्दः सौत्रचशब्दार्थभूतहेतुसमुच्चायकतया सूर्यकाद्युपमा च तावन्मात्रेणोपात्तेति चार्थ इति व्याख्यात इति द्रष्टव्यम् । **आवृत्त्येति** । इतिशब्दैवशब्दयोरिति शेषः ॥ **हेतुत्वेनोक्तमिति** । अत्र चशब्दस्यावधारणार्थताया उक्तत्वेन हेतुसमुच्चायकत्वाभावादतःशब्देनैव हेतूक्तिरित्यभिप्रेत्यैवमुक्तमिति ज्ञातव्यम् ॥ **एकीकृत्येति** । भेदव्याप्यतया पूर्वमुक्तत्वेनैकीकृत्येत्यर्थः ॥ **सूत्रगतावितीति** । अनेन हि सूत्रेऽवधारणद्वयं प्रयुक्तमस्तीत्युच्यते । तेनोक्तरीत्या हेतुद्वयावधारणं सूत्रकाराभिप्रेतमिति भगवत्पादैरेवोह्यः कृत इति ज्ञायते । अन्यथा सूत्रगताविति द्विवचनेनावधारणद्वयस्य सूत्रगतत्वोक्तिर्मूले व्यर्था स्यादिति भावः ।

**श्री० — चश्चशब्द इति** । अवधारणार्थक इत्यर्थः । ननु यद्वेत्यादिव्याख्यानेऽन्तिमैवशब्दार्थकथनात्तस्यैव वैयर्थ्यमित्यत आह **एवशब्देनेति** । एवशब्देन प्रतिषेधतीति सम्बन्धः । किं प्रतिषेधतीत्यत आह **एकेनेति** । सौत्रचकारार्थभूतेनैवकारेणैकेनैवोभयेहत्ववधारणसम्भवात्किमन्येन सौत्रेणैवकारेणेति शङ्कानिरासार्थोऽनुव्याख्यानगतान्तिमैवशब्द इति भावः ॥ **एकेनैव शब्देनेति** । एकेनैवातःशब्देनेत्यर्थः ॥ **अर्थद्वयस्येति** । तदधीनत्वतत्सदृश्यरूपार्थद्वयस्येत्यर्थः । अलं सूत्र इति शेषः । तथा च सूत्रे यद्यतःशब्दद्वयं स्यात्तदा तदुभयसम्बन्धायैवशब्दमपेक्षितं स्यान्न त्वेवमस्ति । अतोऽवधरणार्थकश्चशब्दो व्यर्थः सूत्र इति भावः ॥ **अर्थद्वयेनेति** । एकातःशब्दोक्तेनापीति शेषः ॥ **एकीकृत्येति** । तदधीनत्वतत्सदृशत्वाभ्यामेवेत्येकीकृत्येत्यर्थः ॥ **सूत्रगतावितीति** । सूचनात्सूत्रं एतौ च यदा तत्रत्यौ तदैतयोरप्युक्तार्थसूचकत्वमस्तीत्यर्थः । अत एवास्त्यत्र सूचनीयोऽर्थ इत्युक्तमित्यवधेयम् ।

**सु० — एवं चेतनत्वाद्यनुमानस्य बाधकतयोक्तमाभासत्वानुमानं समर्थितम् । तदिदं प्रमाणान्तरोपलक्षणमित्याशयवानाह** अखिलेति ।

**अनु० —** अखिलमानतः ।
जीवेशभेददृष्ट्यैव समुदायैकता कुतः ।

**न केवलमाभासत्वानुमानेन किन्त्वखिलैरपि मानैः । भेददृष्ट्येत्युक्ते सिद्धसाधनता स्यात् । परेणापि भेदस्याङ्गीकृतत्वात् । अत 'एव'शब्दः । स च समासे गुणभूतेनापि बुद्ध्या विविक्तेन भेदशब्देन संबध्यतेऽभेदनिरासेन भेदस्य दर्शनादिति । कुतः प्रमाणात्सिद्धश्चेत् ।**

**तत्रैक्यबाधकं प्रत्यक्षं तावत्(त्प्रसिद्ध)त्सिद्धमेव । नाहं सर्वज्ञो निर्दोष इत्याद्यनुभवात् । यथा हि स्तम्भे कुम्भतादात्म्याभावः प्रत्यक्षस्तथाऽऽत्मनि सार्वज्ञादिलक्षणब्रह्मतादात्म्याभावः साक्षिणा सिद्ध एव । तदभ्रान्तता च प्रागेवोपपादिता । आगमास्तु तत्र तत्रोदाहृता द्रष्टव्याः ।**

**शे०** — अखिलेत्याद्युत्तरभाष्यस्यासूत्रार्थकथनरूपत्वादभाष्यत्वमाशङ्क्य परिहरति **एवमिति** । नन्वेवशब्दस्य भेददृष्ट्येत्यनेन नान्वयो वैयर्थ्यानिस्तारात् । नापि भेदशब्देन । तस्य समासे गुणभूतत्वेनैवशब्देनान्वये विरुद्धयुगपत्प्राधान्याप्राधान्यप्रसङ्गेनासामर्थ्यादित्यत **आह स चेति** । बुद्ध्या विवेकेन भेदशब्दान्वयमेव दर्शयति **अभेदनिरासेनेति** ।

नन्वखिलमानत इति सकलप्रमाणविरोधः प्रतिज्ञातः । तथा च प्रतिज्ञानुरोधेनानुमानविरोधस्येव प्रत्यक्षागमविरोधस्यापि भाष्यकृतावश्यं व्युत्पादनीयत्वान्न तमव्युत्पाद्यैवानुमानविरोधमात्रव्युत्पादनं भाष्यकारस्य सङ्गतमित्यतस्तदव्युत्पादने निमित्तप्रदर्शनपूर्वकमनुमानविरोधोपपादकतयोत्तरग्रन्थं योजयति **तत्रैक्यबाधकमित्यादि** । तदेवाभिनयेन दर्शयति **नाहमित्यादि** । आदिपदेनाल्पज्ञोऽल्पशक्तिर्दुःखीत्यादेः परिग्रहः । न वयं सार्वज्ञ्यादिमता सगुणेनेश्वरेण जीवस्यैक्यं ब्रूमः । सार्वज्ञ्यादेः परोपाधिकस्य मायिकत्वेन मिथ्यात्वात् । अतो नाहं सर्वज्ञोऽल्पज्ञ इत्यनुभवविरोधो न दोषाय किन्तु निरनिष्टो निरवद्य इत्यादिश्रुतिप्रतिपादितेन निर्गुणेनैव ब्रह्मणा । न च तद्भेदः प्रत्यक्षसिद्ध इति कथं प्रत्यक्षबाध इत्यत उक्तं **नाहं निर्दोष इत्यादीति** । आदिपदेन निर्दुःख इत्यादेः परिग्रहः । अयमाशयः । यदि सगुणेनैव ब्रह्मणा जीवैक्यं तवाभिमतं तदा नाहं सर्वज्ञ इत्यादिप्रत्यक्षबाधः । यदि च निर्गुणेन तेन तदा नाहं निर्दुःख इत्यनुभवविरोध इति । ननु च सार्वज्ञाद्यभावग्राहकस्य प्रमाणस्य कुतो भेदग्राहकत्वं येनानुमानबाधकता स्यादित्यतो यो हि यमर्थमवगम्य तद्विरुद्धधर्माणं यमर्थमध्यक्षीकरोति स तस्मात्तस्य भेदं प्रत्यक्षतः पश्यत्येवेति तावदविवादम् । स्तम्भानुसन्धानवतस्तद्विपरीतकुम्भदर्शने तद्भेदस्य च प्रत्यक्षत्वदर्शनात्तदिहापि शास्त्रावगतसार्वज्ञादिमदीश्वरस्य पुरुषस्य स्वात्मानं तद्विरुद्धाल्पज्ञत्वादिधर्मवन्तं साक्षिणाऽनुभवतस्ततः स्वात्मनो भेदस्याप्यध्यक्षत्वमावश्यकमेवेति युक्तं बाधकत्वं सार्वज्ञ्याद्यभावविषयकप्रत्यक्षस्येत्याशयेनाह **यथा हीति** । ननु तथाऽपि नोक्तानुभवस्यैक्यानुमानबाधकत्वं सम्भवति । दुःखित्वादिरूपे हि जीवस्य तात्त्विके सति तथा स्यान्न चैवम् । अहं दुःखीत्यादेरनुभवस्य मिथ्यानुभवत्वादन्तःकरणगतो हि दुःखादिरनर्थः स्वरूपतो मिथ्याभूतो जपाकुसुमारुणिमेव स्फटिके चैतन्ये चकास्ति । न च भ्रान्तप्रतिपन्नेन भेदकेन वस्तु भिद्यत इत्यतो

नाहं दुःखीत्यादिविपरीतप्रमाणाभावादहं दुःखीत्याद्यनुभवः प्रमाणमेव। यद्यपि च दुःखादिकमन्तःकरणगतं तथाऽपि स्वरूपेण सदेव। जीवात्मनस्तद्भोक्तृत्वेन तद्दुःखं च तात्त्विकमेव। अल्पशक्तित्वादिकं तु स्वरूपगतमेवेति तदभ्रान्तत्वस्य 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेदि'त्यादिना पृथगधिकरणे व्युत्पादितत्वान्नानुपपत्तिरित्याह **तदभ्रान्तितेति** ॥ **आगमा इति**। ऐक्यबाधका भेदागमा पृथगधिकरणादावुदाहृता इत्यर्थः।

**प०— कुम्भ(इति)तादात्म्याभाव इति**। कुंभ इति यत्तादात्म्यं तदभाव इत्यर्थः। **प्रागेवेति**। पृथगुपदेशादित्यत्रेत्यर्थः॥ **तत्रतत्रेति**। पृथगधिकरणादाविति भावः। तद्दर्शनादित्यनंतरं सूत्रेणेति योज्यम्।

**या०— तादात्म्याभाव इति**। तादात्म्यावच्छिन्नप्रतियोगिकोऽभाव इत्यर्थः। अन्योन्याभावप्रत्यक्षत्वेऽधिकरणयोग्यत्वस्य तन्त्रत्वादिति भावः। **प्रागेवेति**। पृथगधिकरण इत्यर्थः।

**श्री०**—भेददर्शने मानानां करणत्वेन तृतीयया भाव्यम्। अतः कथं पञ्चम्यर्थकतसेः प्रयोग इत्यत आह **अखिलैरपि मानैरिति**। तसेः सार्वविभक्तिकत्वादिति भावः। **समास इति**। भेददृष्ट्येति समास इत्यर्थः। सम्बन्धे सति लब्धमर्थमाह **अभेदेति**।

**सु०— अनुमानान्तरं (त्वाह)चाह** अशेषेति।

**अनु०**— अशेषदोषराहित्यं सर्वशक्तित्वतो हरेः।
सर्वोपेतेति कथितमत ऐक्यं क्व दोषिणा।

**एतदुक्तं भवति। जीवब्रह्मणी नाभेदवती विरुद्धधर्माधिकरणात्। छायाऽऽतपवत्। न चासिद्धो हेतुः। सर्वोपेता च तद्दर्शनादिति सर्वशक्तित्वेन हेतुना ब्रह्मणोऽशेषदोषराहित्यस्य समर्थितत्वात्। जीवे दुःखादिदोषाणामनुभवसिद्धत्वात्। विरुद्धधर्माधिकरणयोरप्यैक्ये स्तम्भकुम्भयोरप्यैक्यं स्यादिति।**

**नन्वस्तु परमात्मा सर्वशक्तिरशेषदोषरहितश्च। तथाऽप्युपाधिभिन्नस्तदंशो जीवस्तन्निमित्तदोषवांश्च भविष्यति को विरोधः। प्रकारभेदस्य विरोधशान्तिहेतुत्वादित्यत आह** अशेषेति।

अशेषशक्तियुक्तश्चेत् स्वातन्त्र्याद्दोषवान्कथम्।

**यद्यशेषशक्तियुक्तः परमात्माऽङ्गीकृतस्तदा तस्योपाधौ तन्निमित्ते च स्वातन्त्र्यात्कथं तन्निमित्तदोषवान्स्यात्।**

अयमभिसन्धिः । भवतु वाऽनेन प्रकारभेदेन विरोधशान्तिर्मा वा भूत् । प्रकारभेद एवायमनुपपन्नः । तथा हि । अन्तःकरणाद्युपाधयोऽविद्यादिनिमित्तानि च स्वशक्त्या परमात्मानं विच्छिद्य तदंशस्य जीवस्य दुःखादिदोषान्कुर्वन्तीति तावन्न युज्यते । परमात्मनः सर्वशक्तिस्वातन्त्र्यहानिप्रसङ्गात् । अतः परमात्मैव सर्वशक्तिः स्वाधीनैरेव तैः स्वात्मानं विच्छिद्य स्वांशं जीवं दुःखादिदोषयोगिनं करोतीति मन्तव्यम् । तच्चायुक्ततरम् । अप्रेक्षावत्त्वप्रसक्तेः । न हि कश्चित्प्रेक्षावानात्मानमात्माधीनैरहिकण्टकादिभिरपुरुषार्थभाजं कुर्वाणो दृष्टः । न च तापमस्येवात्मनो दुःखोत्पादनेन परमात्मनः किञ्चित्प्रयोजनमस्ति । परिपूर्णत्वात् । न चाविद्यादिनोऽनादिताऽत्र समाधानम्, अनादिनोऽपि तत्प्रवाहस्य तदधीनत्वात् । न च लीलामात्रमेतदिति साम्प्रतम् । स्वापुरुषार्थहेतोर्लीलायाः प्रेक्षापूर्वकारिभिरनुपादानात् । अतः परमपुरुषस्य न केनापि प्रकारेण दोषसंसर्गो युज्यत इति न दोषिणा जीवेन तस्यैक्यं युक्तमिति ।

शे०— अनुमानविरोधस्य पूर्वमेवोक्तत्वान्न तदुक्तिरपि युक्तेत्यत आह **अनुमानान्तरमिति** । 'अशेषदोषराहित्यमि'त्याद्युक्तग्रन्थस्यैवानुमानप्रयोगप्रकारत्वभ्रान्तिनिरासायाभिप्रेतानुमानप्रकारप्रदर्शनपूर्वकं तदुपपादकतया तद्भाष्यखण्डं योजयितुमाह **एतदुक्तं भवतीति** । विपक्षे बाधकमाह **विरुद्धेति** । अविशेषादिति भावः ॥ **प्रकारभेदस्येति** । स्वरूपेण निर्दोषत्वमुपाधितो दोषवत्त्वमिति प्रकारभेदस्येत्यर्थः ॥ **उपाधाविति** । अन्तःकरणादावित्यर्थः ॥ **निमित्ते चेति** । उपाधिनिमित्तेऽज्ञानादावित्यर्थः । तत्कथमित्यत आह **न हीति** । **अपुरुषार्थभाजं** दुःखादिभाजम् । दृष्ट इत्यतःपरं येन तथा कुर्वाणोऽपि भगवान्प्रेक्षावान्स्यादिति शेषः । ननु यथा योगिनः स्वेच्छाधीनैरेव नानाविधशरीरैरात्मनो दुःखोत्पादनं तथा परमेश्वरस्यापि स्वाधीनैरेवोपाध्यादिभिरात्मनो दुःखोत्पादनं किन्न स्यादित्यतस्तस्य कर्मक्षयभोगार्थत्वाद्दुःखोत्पादनसम्भवेऽपि भगवतोऽवाप्तसकलकामत्वेन प्रयोजनाभावान्न स्वाधीनैरेवोपाध्यादिभिः स्वस्य दुःखोत्पादनं सम्भवतीत्याह **न च तापमस्येवेति** ॥ **परिपूर्णत्वादिति** । दुःखोत्पादनस्य सप्रयोजनत्वे तद्विरोधः स्यादिति भावः । नन्वविद्यादेरनादिनित्यत्वेनानागन्तुकत्वान्न तत्साध्यदुःखोत्पादादिव्यापारस्यापि प्रयोजनापेक्षत्वम् । आगन्तुकनिमित्तसाध्यव्यापारस्यैव प्रयोजनापेक्षत्वनियमकल्पनात् । तथा च प्रयोजनाभावेऽपि दुःखोत्पादनमीश्वरस्योपपन्नमित्याशङ्कते **न चाविद्यादिन इति** । अविद्यानिमित्तानीति पूर्वप्रकृतनिमित्तरूपविशेष्यनिघ्नत्वादविद्यादिन इति नपुंसकप्रयोग इति ज्ञेयम् ॥ **अनादिन इति** । अनादिनस्तत्प्रवाहरूपनिमित्तस्येत्यर्थः । अन्यथा प्रवाहरूपविशेष्यनिघ्नत्वेन पुल्लिङ्गत्वप्रसक्त्याऽनादिन इति नपुंसकानुपपत्तिप्रसक्तेरिति द्रष्टव्यम् ॥ **तदधीनत्वादिति** । अनधीनत्वे स्वातन्त्र्यहानिप्रसक्तेरिति भावः । ननु भगवतः सृष्ट्यादिव्यापारस्येव स्वाधीनैरविद्यादिभिरात्मनो दुःखोत्पादन-

स्यापि लीलामात्रत्वान्न प्रयोजनापेक्षत्वमित्याशङ्कते **न चेति** ॥ **स्वेति** । तथा च प्रेक्षापूर्वकारित्वानुपपत्तिरिति भावः । **केनापि प्रकारेणेति** । स्वतः परतो वेत्यर्थः ।

स० — **अनादिनोऽपि तत्प्रवाहस्येति** । यद्यप्यनादिनः इत्यस्य नपुंसकत्वेन प्रवाहविशेषणत्वमनुपपन्नं तथापि स्वरूपेणानादिभूतस्याविद्यानिमित्तस्य प्रवाहेणानादिभूतकर्मप्रवाहस्यापि तदधीनत्वादित्यर्थकरणाददोष इति द्रष्टव्यम् ।

प० — **तन्निमित्तेति** । अंतःकरणाद्युपाधिनिमित्तदुःखादिदोषवानित्यर्थः । एवमपि दोषित्वादोषित्वयोर्विरोधः स्यादेवेति तादृशधर्मवत्त्वेन भेदः सुसाध एवेत्यत आह **प्रकारभेदस्येति** । दोष इति शेषः । दोषित्वादोषित्वयोरिति च शेषः । औपाधिकत्वानौपाधिकत्वरूपप्रकारभेदस्येत्यर्थः । न हि जपाकुसुमौपाधिकेन लोहिम्ना स्फटिकशौक्ल्यमिव विरुद्धमिति भावः ॥ **तन्निमित्ते चेति** । उपाधिनिमित्ते अज्ञाने चेत्यर्थः ॥ **अनादिनोऽपीति** । अविद्यादिन इत्यनुषङ्गः ॥ **तत्प्रवाहस्येति** । (तत्प्रवाहरूपनिमित्तस्येत्यर्थः । अन्यथा प्रवाहरूपविशेष्यनिघ्नत्वेन पुंल्लिंगत्वप्रसक्त्या अनादिन इति नपुंसकत्वानुपपत्तेः इति द्रष्टव्यम् ) ।

या० — **तन्निमित्ते चेति** । उपाधिनिमित्तेऽविद्यादावित्यर्थः । अपुरुषार्थभाजं दुःखभाजम् ।

श्री० — **प्रकारभेदस्येति** । एकस्मिन्नेव भूतले नीलपटसद्भावेऽपि पीतपटाभावदर्शनेन नीलत्वपीतत्वादिप्रकारभेदेन पटतदभावयोरविरोधवत् एकस्मिन्नेव चैतन्ये स्वाभाविकत्वौपाधिकत्वरूपप्रकारभेदेन दोषाभावस्तद्वत्त्वं च संभवतीत्यर्थः । **तन्निमित्ते च** दोषादौ । **प्रयोजनं** स्वर्गादि ॥ **न चेति** । अविद्यारूपोपाधिसंबन्धम् स्वस्य स्वार्थमिदानीं न करोति येनोक्तदोष इत्यर्थः ।

**सु० — जीवब्रह्मणोरैक्येऽपि ब्रह्मणो जीवगतदुःखाद्यनुसन्धानाभावान्नोक्तदोषानुषङ्गः । तथा चोक्तेन प्रकारभेदेन विरोधशान्तिर्भविष्यतीति भावेन शङ्कते** अनुसन्धानेति ।

**अनु०** — अनुसन्धानरहितमैक्यं चेत्

**अनुसन्धानं नाम भोगसमाख्यातः स्वीयतया दुःखादिसाक्षात्कारोऽभिमतः । परिहरति ।** एकतेति ।

एकता न तत् ॥

तत् **तर्हि** । **जीवस्तावद्ब्रह्मस्वरूपं निर्दुःखत्वादिकं नानुसन्धत्त इत्यविवादम् । ब्रह्मापि चेज्जीवगतं दुःखादिकं नानुसन्दध्यात्तदा तयोरेकता नास्तीत्येवोक्तप्रायं स्यात् कथमित्यत आह** चेतनेति ।

चेतनैक्येऽनुसन्धानं प्रमाणं नैव चापरम् ॥

**चो** हेत्वर्थः। **अस्त्वैक्योऽनुसंधान प्रमाणम्**। ततः **किम्**। **एकप्रमाणव्यावृत्तौ प्रमेयव्यावृत्त्यभावात्**। मा हि भूद्धूमाभावोऽग्न्यभाव इत्यत उक्तं नैवापरमिति। **नन्वस्ति घटस्य** घटेनैक्यं न त्वनुसन्धानं तत्कथमेतदित्यत उक्तं चेतनेति।

एतदुक्तं भवति। चेतनत्वावच्छिन्नमैक्यमनुसन्धानैकप्रमाणकम्। आगमादिकं त्वनुसन्धाने सति संवादितया प्रवर्तते। अत एव हि ममात्मा भद्रसेन इति वाक्यमनुसन्धानाभावेन बाध्यते। तथा नायं स इत्यादिवाक्यमनुसन्धानेन। न च प्राग्भवीयदुःखाद्यनुसन्धानमिदानीं नास्त्यस्ति चैक्यमिति व्यभिचारः शङ्कनीयः। न हि वयं सदाऽनुसन्धानं ब्रूमः। किन्तु यश्चेतनो यत्स्वरूपं कदाचिदनुसन्धत्ते स तेनाभिन्नो यो नानुसन्धत्ते स तेन नाभिन्न इति। तदेकप्रमाणकस्य तन्निवृत्तौ निवृत्तिरेव। यथा रूपग्रहणनिवृत्तौ चक्षुर्निवृत्तिः। न च चेतनत्वं शक्यनिवर्तनम्। उभयवादिसिद्धत्वात्। तस्मादेकतैव निवर्तत इति।

एतेन चेतनत्वाद्यनुमानस्य सोपाधिकत्वं चोक्तं भवति। अनुसन्धानं खलु चेतनत्वावच्छिन्नस्यैक्यस्य व्यापकमुपलब्धं देवदत्तादौ। अव्यापकं च चेतनत्वादेः। पक्ष एव तदभावात्। तथा च सुलभः प्रयोगः। जीवब्रह्मणी चेतनत्वे सति परस्परैक्यवती न भवतः परस्प(रस्वरूपानु)रानुसन्धानरहितत्वात्सम्प्रतिपन्नवदिति। न च प्रतिज्ञायां विशेषणं व्यर्थम्। शब्दो न स्पर्शवद्विशेषगुण इत्यादाविव हेतुव्यभिचारपरिहारार्थत्वात्।

शे० — **नोक्तदोषेति**। जीवब्रह्मैक्यस्य 'अशेषदोषराहित्यमि'ति पूर्वोक्तानुमानविरोधरूपोक्तदोषानुषङ्गो नेत्यर्थः। ऐक्यमङ्गीकृत्य ब्रह्मणो जीवगतदुःखाद्यनुसन्धानाभ्युपगमे ब्रह्मणोऽपि भोक्तृत्वेन दोषित्वादनुभवादिसिद्धदोषित्वादोषित्वव्यवस्थाभङ्गेन दोषित्वादोषित्वरूपविरुद्धधर्माधिकरणत्वलक्षणहेतुच्छित्तिरूपविपक्षेबाधकबलेनाप्रयोजकत्वशङ्कानिरासादनाभासैतदनुमानविरोधप्रसक्तावपि ब्रह्मणो जीवगतदुःखाद्यनुसन्धानाभावपक्षे ब्रह्मणोऽभोक्तृत्वेन दोषित्वनापत्त्योक्तप्रमाणसिद्धदोषित्वादोषित्वव्यवस्थोपपत्त्या विरुद्धधर्माधिकरणत्वरूपहेतूच्छित्त्यभावेनाभेदेऽपि दोषित्वादोषित्वहेतूपपत्तेरप्रयोजकत्वेन तेन भेदसाधनस्याभासत्वान्न जीवब्रह्मैक्यस्योक्तानुमानविरोध इति भावः॥ **उक्तेन प्रकारभेदेनेति**। स्वतो निर्दोषत्वमुपाधितो दोषवत्त्वमिति प्रकारभेदेनेत्यर्थः। ननु जीवगतसुखदुःखादिसाक्षात्काराभावे ब्रह्मणः सार्वज्ञं न स्यादित्यतस्तदभ्युपगमान्न तदनुपपत्तिरित्यभिप्रेत्य कथं तर्ह्यनुसन्धानाभाववर्णनमित्यतस्तदनुसन्धानशब्दार्थमाह **अनुसन्धानं नामेति**॥ **भोगसमाख्यात इति**। भोगत्वेन परैरभ्युपगत इत्यर्थः।

'स्वसमवेतसुखदुःखान्यतरसाक्षात्कारो भोग' इति तदुक्तेरिति भावः । दुःखादीत्यादिपदेन सुखपरिग्रहः । ततश्च सुखदुःखसाक्षात्कार इत्यर्थः । तत्त्वं च सुखदुःखान्यतरसाक्षात्कारत्वमेवेति न कश्चित्क्षुद्रोपद्रवः । अस्त्वनुसन्धानस्यैक्ये प्रामाण्यं तथाऽपि न तदभावेनैक्याभावापादनं संभवतीति शङ्कते अस्त्विति । ननु प्रमाणव्यावृत्तौ प्रमेयव्यावृत्तिनियमात्कथमनुसन्धानाभावे ऐक्याभावानापत्तिरित्यतो जीवब्रह्मैक्यस्यानेकप्रमाणकत्वेनानुसन्धानैकप्रमाणकत्वाभावान्न तदभावेन तदभावापादनं संभवतीत्याशयेनाह एकप्रमाणेति । अनेकप्रमाणके वस्तुनीति शेषः । अस्त्वनेकप्रमाणकेऽपि वस्तुनि तद्व्यावृत्त्या प्रमेयव्यावृत्तिरित्यतोऽतिप्रसङ्गमाह मा हि भूदिति । न भवति हीत्यर्थः । अन्यथा सोऽपि स्यादिति भावः । मूले चेतनपदस्यानर्थक्यमाशङ्क्यैक्येऽनुसन्धानैकप्रमाणत्वादिविशेषचिन्तोपयोगितत्प्रामाणिकत्वसंभावनार्थत्वान्न तदिति भावेन तदसंभावनाशङ्कामुत्थापयति नन्विति ।

नन्वागमाद्यनेकप्रमाणकत्वादैक्यस्यानुसन्धानैकप्रमाणकत्वासिद्धेः, सिद्धेऽपि चेतनत्वव्यावृत्त्याऽप्यवच्छिन्नव्यावृत्त्युपपत्तेर्न तद्व्यावृत्त्यैक्यमात्रव्यावृत्तिसिद्धिरित्यत आह एतदुक्तं भवतीति ॥ अत एवेति । चैतन्यावच्छिन्नस्यैक्यस्यानुसन्धानैकप्रमाणकत्वादेवेत्यर्थः । अन्यथा धूमाभावेऽपि क्वचिदालोकाद्वह्निसिद्धिवदत्राप्यनुसन्धानाभावेऽपि वाक्यादेवाभेदसिद्ध्युपपत्त्याऽनुसन्धानाभावेन वाक्यबाधाभावप्रसङ्गादिति भावः । तथेति । अत्राप्यत एवेति योज्यम् ।

एतेनेति । चेतनैक्येऽनुसन्धानं प्रमाणमिति कथनेन जीवब्रह्मणी अन्योन्यमभिन्ने चेतनत्वादंशित्वादित्यनुमानस्यानुसन्धानवत्त्वमुपाधिरप्युक्तो भवति । न केवलं बाधादिरित्यपेरर्थः । साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपपादयति अनुसन्धानमिति ॥ चेतनत्वावच्छिन्नस्येति । यद्यपि जीवो ब्रह्माभिन्नश्चेतनत्वादिति पूर्वपक्ष्युक्तानुमाने शुद्धसाध्यव्यापक एवायमुपाधिः सम्भवति । घटादौ ब्रह्माभेदरूपसाध्यस्यैवासत्त्वेन तत्र व्यभिचाराप्रसङ्गात् । ब्रह्मणि ब्रह्माभेदरूपसाध्यसत्त्वेऽपि ब्रह्मस्वरूपानुसन्धानसद्भावेन तत्रापि तदनवकाशात् । तथाऽपि जीवब्रह्मणी परस्परमैक्यवती चेतनत्वादंशांशिभावापन्नत्वात्सम्मतवदित्यैक्यमात्रसाध्यके पराभिमतानुमाने घटादौ व्यभिचारेण शुद्धसाध्यव्यापकत्वाभावादस्योपाधित्वघटनायेदं विशेषणमिति ध्येयम् ॥ विशेषणमिति । चेतनत्वे सतीति विशेषणमित्यर्थः । घटादौ व्यभिचारपरिहारार्थत्वान्न तदिति भावेन हेतुगतविशेषणानामेव व्यभिचारवारकत्वनियमात्साध्ये तद्वारकविशेषणोपादानमसाम्प्रदायिकमित्याशङ्कां तत्प्रदर्शनेन परिहरति शब्द इति । प्रत्यक्षत्वे सत्यकारणगुणपूर्वकताया बुद्ध्यादौ सत्त्वेऽपि विशेषगुणत्वस्यैव सत्त्वात्कर्मजन्यस्याणुसंयोगादौ प्रत्यक्षत्वे सत्यकारणगुणपूर्वकतायाः सत्त्वेऽपि स्पर्शवद्गुणत्वस्यैव सत्त्वात्तत्र तत्र व्यभिचारपरिहाराय स्पर्शवदिति विशेषेति च साध्ये विशेषणोपादानदर्शनान्न वैयर्थ्यमित्यर्थः ।

स० — **न च प्रतिज्ञायामिति** । चेतनत्वे सतीति विशेषणमित्यर्थः । घटादौ व्यभिचारपरिहारार्थकत्वान्न वैयर्थ्यमिति । साध्ये व्यभिचारवारकविशेषणोपादानमदृष्टमित्यतो दृष्टान्तप्रदर्शनेनाह **शब्द इति** । अयावद्द्रव्यभावित्वादित्यस्य प्रत्यक्षत्वे सतीति अकारणगुणपूर्वकत्वाद्वा इत्यस्य वा हेतोः कर्मजसंयोगे सत्त्वेन तत्र व्यभिचारपरिहारार्थं प्रतिज्ञायां विशेषपदोपादानवदित्यर्थः ।

प० — **एकप्रमाणेति** । अनुसंधानरूपप्रमाणव्यावृत्त्या ऐक्यरूपप्रमेयव्यावृत्त्यभावादित्यर्थः । कुत एवमित्यत आह **मा हि भूदिति** । धूमवत्त्वरूपप्रमाणाभावेनाग्निमत्त्वरूपप्रमेयाभावो मा भूदित्येवमर्थम् । अन्यथा सोपि भवेदित्यर्थः ।। **इत्यादिवाक्यमनुसन्धानेनेति** । न बाध्यत इत्यनुषङ्गः ।। **एतेनेति** । चेतनैक्येऽनुसन्धानं प्रमाणमिति कथनेन । जीवब्रह्मणी अन्योन्यमभिन्ने चेतनत्वात् अंशांशिभावापन्नत्वात् इत्यनुमानस्यानुमन्धानवत्त्वमुपाधिरप्युक्तो भवति । न केवलं बाधादिरित्यर्थः । साध्यव्यापकत्वे सति साधनाव्यापकत्वं व्यनक्ति **अनुसन्धानं खल्विति** । **संप्रतिपन्नवदिति** । **घटपटवदिति** । अत्र यद्यत्स्वरूपानुसन्धानरहितं तत्तदैक्यवन्नेति व्याप्तिरभिमता । तथात्वे हि सति हेतुव्यभिचारपरिहारार्थत्वादिति वाक्यं सङ्गतं भवति । स्वेनैक्यवति घट एव व्यभिचारवारकत्वसंभवात् । साध्ये हेतौ न परस्परेत्युक्तिः पक्षस्य द्वित्वात् प्रकृताभिप्राया । गुणगुण्यादौ व्यभिचारपरिहारार्थत्वादिति भावः । **इत्यादाविवेति** । प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादित्यत्र स्तंभकुम्भसंयोगे व्यभिचारनिरासाय साध्ये यथा विशेषेति विशेषणम् । तथात्र पक्षे विशेषणमित्यर्थः ।

या० — **चेतनत्वावच्छिन्नस्येति** । यद्यपि जीवो ब्रह्माभिन्नश्चेतनत्वादिति पूर्वपक्ष्युक्तानुमाने शुद्धसाध्यव्यापक एवोपाधिः संभवति । घटादौ ब्रह्माभेदाभावेन व्यभिचाराभावात् । तथाऽपि जीवब्रह्मणी परस्परमैक्यवती चेतनत्वादित्यैक्यमात्रे साध्ये पराभिप्रेतेऽयमुपाधिरिति ज्ञेयम् । **शब्दो न स्पर्शवद्विशेषगुण इति** । यथा शब्दो न स्पर्शवद्विशेषगुणः । प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादित्यत्र हेतौ कर्मजे स्थाणुश्येनसंयोगादौ व्यभिचारवारणाय साध्ये विशेषपदम् । तथेहापि स्वेनैक्यवति घटेऽनुसन्धानरहिते व्यभिचारवारणाय साध्ये चेतनत्वे सतीति विशेषणम् । तथा च व्यभिचारवारकं विशेषणं हेतावेव देयमिति नियमो नास्तीति भावः ।

श्री० — **उक्तेति** । अशेषशक्तियुक्तश्चेदित्युक्तरीत्येत्यर्थः ।। **उक्तेनेति** । उपाध्यवच्छिन्ने दोषस्तदनवच्छिन्ने तु नेत्यर्थः ।। **मा हि भूदिति** । प्रत्यक्षेणाप्यग्निसिद्धिसंभवादिति भावः ।। **न चेति** । चैतन्यावच्छिन्नस्यैक्यस्यानुसन्धानं व्यापकं तन्निवृत्त्या विशिष्टस्य व्याप्यस्य निवृत्तिर्वाच्या न च तत्र

विशेषणीभूतस्य चैतन्यस्य निवृत्तिः संभवतीत्यर्थः । एवमुत्तरत्र । **अनुमानस्य** भेदसाधकस्य । घटादौ साध्याव्यापकत्वाच्चेतनत्वरूपसाधनधर्मावच्छिन्ने साध्येऽनुसन्धानवत्त्वमुपाधिरित्यभिप्रेत्याह **अनुसन्धानं खल्वित्यादिना ।**

**सु० — शङ्कते** अनुसन्धानेति ।

**अनु० —** अनुसन्धानरहितं समुदायैक्यमेव चेत् ।

चेतनेषु

**यतः समुदायैक्यमेव मयोच्यते नात्यन्तैक्यम् । अतश्चेतनेष्वप्यनुसन्धानरहितं तद्युक्तम् । अयमभिसन्धिः । समुदायैक्यवादिना हि जीवब्रह्मणोर्भेदाभेदौ स्वीक्रियेते । तत्रानुसन्धानाभावो भेदनिमित्तस्तज्ज्ञापनेनैव चरितार्थो नाभेदं निवर्तयति । तन्तुपटादिषु हि समुदायैक्यस्थलेषु विरुद्धधर्माध्यासो भेदज्ञापनमात्रेण कृतार्थो नाभेदं बाधते । अन्यथा तत्राप्यभेदाङ्गीकारो दुर्घटः स्यात् । तस्मादैक्यं नानुपपन्नमिति । गूढाभिसन्धिः सम्प्रतिपत्तिमुत्तरमाह** अस्तु तदिति ।

अस्तु तत्

**सर्वथाऽपि परस्परस्वरूपानुसन्धानरहितं जीवब्रह्मणोरैक्यं भवत्वित्यर्थः । विप्रतिपन्नार्थाङ्गीकारे प्रतिज्ञाहानिर्निग्रहस्थानं स्यादित्यत आह** नाममात्रमेवेति ।

नाममात्रमेव यतस्ततः ॥

---

**यतस्तदैक्यं नाममात्रं न वास्तवं ततस्तदभ्युपगमो न दूषणम् । अयमभिसन्धिः । तन्तुपटाद्यभेदो न विरुद्धधर्माध्यासाभावैकप्रमाणकः । प्रत्यक्षादिना तदभेदस्य सिद्धत्वात् । तथा च विरुद्धधर्माध्यासः कालात्ययापदिष्टत्वभयादभेदबाधनान्निवृत्तो भेदसाधनेनैव कृती भवति । तथा यदि चेतनैक्यं निरवकाशप्रमाणान्तरगम्यं स्यात्तदाऽनुसन्धानाभावोऽभेदमबाधमानो भेदमात्रप्रतिपादनेन चरितार्थः स्यात् । न चैवम् । चेतनैक्यस्यानुसन्धानव्याप्यतयोक्तत्वात् । व्यापकाभावे च व्याप्यनिवृत्तेरावश्यकत्वेनैक्याभावे पुनस्तद्वचनं निरर्थकमेवेति ।**

**शे० —** नन्वनुसन्धानस्य चेतनैक्ये प्रमाणत्वाच्च तद्व्यावृत्त्यैक्यव्यावृत्तौ चोदितायां नैतच्छङ्कावकाश इत्यतोऽभिप्रायमाह **अयमभिसन्धिरिति ।** प्रमाणाभावेन प्रमेयाभावस्यान्यत्र साधनसंभवेऽपि न प्रकृतेऽनुसन्धानरूपप्रमाणाभावेनैक्याभावसाधनमुपपद्यते । ऐक्यप्रमाणतयाऽभिमतस्यानुसन्धानस्य विरुद्धधर्माध्यासाभावरूपत्वात् । अतोऽनुसन्धानाभावेनैक्याभावं साधयता विरुद्धधर्माधिकरणत्वेनैक्याभावः साध्यत इत्येव वाच्यम् । तथा चात्यन्ताभेदस्थले विरुद्धधर्माधिकरणत्वस्यानन्यथासिद्धत्वेनाभेदाभावसाधकत्वसंभवेऽपि प्रकृते भेदाभेदाङ्गीकारेण विरुद्धधर्माध्यासस्यैक्याभावसाधकत्वं न

सम्भवति । भिन्नाभिन्नस्थलेऽपि तस्याभेदाभावसाधकत्वे तत्त्वेन सम्प्रतिपन्ने तन्तुपटादावपि तस्यैक्याभावसाधकत्वापातात् । तत्र भेदाक्षेपकत्वमात्रेण चरितार्थत्वाद्विरुद्धधर्माध्यासस्य नाभेदाभावसाधकत्वमिति यदि मन्यसे तर्हीहापि भेदाक्षेपकतयाऽन्यथासिद्धत्वाद्विरुद्धधर्माध्यासस्य नाभेदाभावसाधकत्वमिति तुल्यमिति नानुसन्धानाभावेनाभेदाभावसिद्धिरिति भावः । विप्रतिपन्नप्रमेयाङ्गीकारे प्रतिज्ञाहानिर्निग्रहस्थानं स्यादित्यत उक्तं **गूढाभिसन्धिरिति** । एतदैक्यं नाममात्रं न वास्तवमित्यभिप्रायोऽत्र गूढ इति ज्ञेयम् । अभिसन्धिमजानानः शङ्कते **विप्रतिपन्नेति** । विप्रतिपन्नस्यैक्यस्याभ्युपगमे 'न च चित्त्वादभिन्नत्वमि'त्यैक्यनिषेधप्रतिज्ञाहानिः स्यादित्यर्थः । नन्वनुसन्धानरहितमैक्यं न वास्तवमित्युक्त्याऽनुसन्धानाभावो वास्तवैक्याभावसाधक इत्युक्तं भवति । तच्चायुक्तम् । भेदमात्रज्ञापनेन चरितार्थस्यानुसन्धानाभावस्यैक्याभावसाधकत्वायोगात् । अन्यथा तन्तुपटादौ विरुद्धधर्माध्यासस्याप्यभेदाभावसाधकत्वापातादित्यत आह **अयमभिसन्धिरिति** ॥ **तद्वचनमिति** । 'अनुसन्धानरहितसमुदायैक्यमेव चेदि'त्येतद्वचनमित्यर्थः ।

**प०** — **गूढाभिसन्धिरिति** । उत्तरवाक्ये वक्ष्यमाणाभिसन्धिं गूढं कृत्वेत्यर्थः ॥ **प्रत्यक्षादिनेति** । तन्तव एव पटात्मना जाताः इत्येवंरूपप्रत्यक्षेण गुरुत्वभेदाभावाद्यनुमानेन 'तन्तुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथम् गत' इत्याद्यागमेन चेत्यर्थः ॥ **पुनस्तद्वचनमिति** । 'अनुसन्धानरहितसमुदायैक्यमि'तिवचनमित्यर्थः ॥ **प्रागुक्तेति** । 'अत ऐक्यं क दोषिणे'त्यादिनोक्तेत्यर्थः ।

---

**या०** — **गूढाभिसन्धिरिति** । एतदैक्यं नाममात्रं न वास्तवमित्यभिसन्धिरत्र गूढ इति द्रष्टव्यम् ॥ **इत्यत आहेति** । इत्याशङ्कायामभिसन्धिमुद्घाटयतीत्यर्थः ।

**श्री०** — **अयमभिसन्धिरिति** । योगरूढ इत्यर्थः ॥ **एकप्रमाणक इति** । येन विरुद्धधर्मदर्शनेन निवर्तेतेति भावः । **कृती** चरितार्थः ॥ **विरुद्धेति** । तन्तुपटादिभेदसाधक इत्यर्थः । **कालात्ययापदिष्टेति** । तन्तुपटाद्यभेदसाधकप्रत्यक्षविरोधभयादित्यर्थः ॥ **न चैवमिति** । चैतन्यैक्ये निरवकाशं प्रमाणं नास्तीत्यर्थः । तथाऽनुसन्धानमेव तत्र प्रमाणतया वाच्यमिति भावः । **नाममात्रमेवेति** । अस्य तात्पर्यं निरर्थकमेवेतीति ।

**सु०** — **भवत्वनुसन्धानैकप्रमाणकं चेतनैक्यम् । अनुसन्धानं च कादाचित्कमप्यैक्यं साधयति । विद्यते च मुक्तावनुसन्धानमित्यैक्यसिद्धिः । मुक्तस्वरूपस्य दुःखादिदोषदूरत्वेन प्रागुक्तदोषाभावश्चेत्यत आह** मुक्ताविति ।

**अनु०** — मुक्तौ स्यादनुसन्धानमित्यपि स्यात्सुदुष्करम् ।

इत्यपि वचनं सुदुष्करं स्यात् । प्रमाणाभावेन सन्दिग्धत्वादिति भावः । किञ्च मुक्तावनुसन्धानं भविष्यतीति वदता वक्तव्यमिदानीं कुतोऽनुसन्धानं नास्तीति । अथ ब्रूयादविद्याकामकर्मादि(निमित्त)प्रतिबन्धकसद्भावादिति । तत्र वक्तव्यम् । प्रतिबन्धकसद्भावनिबन्धन एवेदानीमनुसन्धानाभावो न पुनरैक्याभावनिबन्धन इति कुतस्ते निश्चय इति । वयं तु वदामः । ऐक्याभावनिबन्धन एवायमिदानीमनुसन्धानाभावो नाज्ञानादिनिमित्त इति । कुतोऽयं निश्चय इति तत्राह सर्वज्ञ इति ।

सर्वज्ञ एकतां नानुसन्धत्ते नैव सा यतः ।

यतः सर्वज्ञ एकतां नानुसन्धत्तेऽतः सा एकता नैवेति संबन्धः । एतदुक्तं भवति । यद्यज्ञानादिनिबन्धनोऽयमनुसन्धानाभावो भवेत् । भवेत्तदा जीवानामेव । तेषामेवाज्ञानादिसंबन्धित्वात् । परमात्मा त्वनुसन्दध्यादेव । तस्य सर्वज्ञत्वेनाज्ञानाद्यभावात् । न चासावनुसन्धत्ते । यस्मात्क्षरमतीतोऽहमित्यादितद्वाक्यैर्भेदानुभवस्यैवावगमात् । तेन निश्चिनुमोऽनुसन्धानाभावो नाज्ञानादिप्रतिबन्धकनिबन्धनः । किन्त्वैक्य भावनिमित्त एवेति ।

शे०— कदाचित्कमपीति । अन्यथा प्राग्भवीयदुःखाद्यनुसन्धानस्येदानीमभावात्तेन स्वस्यैक्याभावप्रसङ्गादिति भावः ॥ प्रागुक्तदोषाभावश्चेति । ब्रह्मणो जीवगतदुःखाद्यनुसन्धानाभावाज्जीवस्य ब्रह्मस्वरूपभूतनिर्दुःखत्वाद्यनुसन्धानाभावात्तयोरेकता नास्तीत्येव प्राप्तमिति प्रागुक्तदोषश्च न । मुक्तस्वरूपस्य दुःखादिदोषरहितत्वेन ब्रह्मस्वरूपनिर्दुःखत्वाद्यनुसन्धानादननुसन्धानासिद्धेरित्यर्थः । किमनेन निश्चायकमुक्तमित्यतो विपक्षे बाधकस्तर्क एव तथेत्यभिप्रेत्य तदुपपादकतया मूलं योजयति एतदुक्तं भवतीति ॥ तेनेति । परमात्मनोऽनुसन्धानप्रसङ्गेनेत्यर्थः ।

प०— कुतोयं निश्चय इति । सिद्धान्तिनोऽप्ययं निश्चयः कुत इत्यर्थः ॥ क्षरमतीत इति । जीवराशिमतिक्रम्य स्थित इत्यर्थः । 'ब्रह्मादिजीवाः सर्वेऽपि शरीरक्षरणात्क्षरा' इत्यादेः । क्षराक्षरोत्तमत्वं च ताभ्यां भेदं विना न घटत इति भेदोऽङ्गीकार्यः । तथा चेश्वरस्य तदनुभवः स्वीकार्यः । अन्यथा असार्वज्ञ्यप्रसक्तेरिति भावः ।

श्री०— ननु तर्हीश्वरीयनिर्दुःखत्वाद्यनुसन्धानमपि जीवस्य स्यादित्युक्तमित्यत आह मुक्तस्वरूपस्येति । तथा च मुक्तजीवस्य तदनुसन्धानमस्तीतीष्टापत्तिरिति भावः । अयं भवद्भिरुच्यमानः । तद्वाक्यैः सर्वज्ञभूतेश्वरवाक्यैः ।

सु० — ईश्वर एवासाविति चेत् । कस्ततोऽन्यः परमात्मा प्रमाणाभावात् । किञ्चे-श्वरोऽपि सर्वज्ञ एवेति किमनेनेति । अपि चैक्ये प्रमाणसिद्धेऽनुसन्धानाभावः प्रतिबन्धकनिबन्धन इति कल्पनोपपद्यते । न च तदस्तीत्युक्तम् । ननु च दुःखादिकं जीवस्य न चैतन्य-स्वरूपानुबन्धि । किन्नाम विशिष्टाकारगतमेव । तत्कथमीश्वरोऽनुसन्दधीतेति दुःखाद्यननु-सन्धानेऽप्यैक्यं तावदनुसन्दध्यादेवेत्युक्तम् एकतामिति । अत एव 'विभेदजनकेऽज्ञाने नाश-मात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यती'त्यादिवाक्यान्यन्यथा योज्यानि । विभेदशब्दो हि विरोधवाची । मित्रभेद इति यथा । तथा च जीवस्य परमात्मना विपरीत-मतित्वमज्ञाननिबन्धनम् । तदपाये न भवतीत्यर्थः ।

शे० — ननु च कृष्णस्येश्वरत्वेऽपि परमात्मत्वाभावाद्यस्मादित्याद्युक्तवाक्येनेश्वरस्य भेदानु-भवावगमादेकत्वाननुसन्धानप्राप्तावपि परमात्मनो भेदानुभवानवगमात्तस्यानुसन्धानं भविष्यतीति शङ्कते ईश्वरोऽसाविति चेदिति । प्रमाणाभावेनेश्वरान्यस्य परमात्मन एवाभावादीश्वरवाक्येन तस्य भेदानुभवाव-गतौ परमात्मन एव तत्प्राप्तेर्न तस्यैवानुसन्धानकल्पना युक्तेत्याह कस्ततोऽन्य इति । किञ्च न वयमज्ञानादिप्रतिबन्धनिबन्धनत्वेऽनुसन्धानाभावस्य सर्वज्ञत्वेनाज्ञानादिदोषशून्यस्य परमात्मनोऽनुसन्धानमा-पादयामो येनोक्तरीत्येष्टापत्तिः शङ्क्येत किन्त्वीश्वरस्यैव । तस्यापि सर्वज्ञत्वेनाज्ञानादिदोषशून्यत्वात् । न चेश्वरस्यैक्यानुसन्धानमस्ति । यस्मादित्यादितद्वाक्यैर्भेदानुभवस्यैवावगमादिति कृष्णस्येश्वरत्वकथनेन न किञ्चिदभिमतं सिध्यतीत्याशयेनाह किञ्चेति । ननु जीवेशयोः समुदायांशत्वाभ्युपगमेन समुदायेन भेदाभेदाभ्युपगमेऽपि परस्परमत्यन्तभेदाभ्युपगमादीश्वरस्य जीवाभेद एवासिद्ध इति कथं सर्वज्ञत्वेन तदनु-सन्धानापादनमित्यत आह अपि चेति ॥ उक्तमिति । 'न ब्रह्मतां वदेद्भेदो जीवस्ये'त्यादिनेति शेषः । ननु मूले दुःखानुसन्धानमनापाद्य किमेकत्वानुसन्धानापादनेनेत्यतः शङ्कामुखेन तदनापादने निमि-त्तमाह नन्विति । ननु सर्वज्ञेनेश्वरेण नानुसन्धीयत इत्येतावता न श्रुतिसिद्धं जीवब्रह्मैक्यमपलपितुं शक्यम् । अन्यथा तत्प्रतिपादकानां 'विभेदजनके ज्ञाने' इत्याद्यागमानां निर्विषयतयाऽप्रामाण्यापाता-दित्यतोऽर्थान्तरपरत्वात्तेषां न तदित्यभिप्रेत्य निमित्तकथनपूर्वकं तेषामर्थान्तरपरतामाह अत एवेति । सर्वज्ञेनेश्वरेणाननुसन्धीयमानत्वेनासत्त्वादैक्यस्य तद्विषयत्वानुपपत्तेरित्यर्थः । अन्यथायोजनामेव दर्शयति विभेदशब्दो हीति । तत्र नियामकमाह मित्रेति ।

प० — ननु ईश्वरो नैक्यमनुसंदध्यात् । मायाशबलितत्वात् । शुद्धब्रह्म तु अनुसंदध्यादेवेति भावेन शङ्कते ईश्वर एवासाविति । कृष्ण इत्यर्थः ॥ किमनेनेति । अन्यथा कृष्णस्येश्वरशब्दितस्य सार्वज्ञं न स्यादिति भावः । (ईश्वर एवेति । मायोपाधिभेदभिन्न एव न शुद्धं ब्रह्मेत्यर्थः) ॥ इत्युक्त-

**मिति** । 'चेतनैक्येऽनुसंधानमित्यादिपूर्ववाक्येनोक्तमित्यर्थः । ननु न च तदस्तीत्युक्तमित्युक्तिरयुक्ता । आगमसिद्धत्वादैक्यस्येत्यत आह **अत एवेति** । सर्वज्ञस्यैकतानुसंधानाभावादेवेत्यर्थः । अन्यथायोज्यमित्युक्तं व्यनक्ति **विभेदशब्दो हीति** ।

**या०**— ननु 'विभेदजनकेऽज्ञान' इत्यादिश्रुत्यैव जीवानां परस्परमैक्यानुसन्धानाभावोऽज्ञानरूपप्रतिबन्धकसद्भावनिबन्धन इत्युच्यत इत्यत आह **अत एवेति** । अज्ञानविधुरस्येश्वरस्यैक्यानुसन्धानाभावादेवेत्यर्थः ।

**श्री०**— **ईश्वर एवासाविति** । यस्मात्क्षरमित्यादिबलेन यस्य भेदानुभव उक्तः स ईश्वर एव । तस्योपाध्यादिप्रतिबन्धकयुक्तत्वादैक्यानुसन्धानं नास्त्येव । समुदायरूपं ब्रह्म यदस्त्युक्तप्रतिबन्धकशून्यम् । तस्य त्वैक्यानुसन्धानमस्त्येवेत्यर्थः । **अनेन** ईश्वर एवासाविति वचनेन । तथा च सर्वज्ञतया त्वदङ्गीकृतस्य रामकृष्णादिरूपस्यैव जीवपरमात्मैक्यानुसन्धानमापादयाम इति भावः । अन्यथा सार्वज्ञहानेरिति भावः । **ईश्वरो** ब्रह्म ॥ **ऐक्यं तावदिति** । चैतन्यस्वरूपानुबन्धित्वादित्यर्थः ॥ **अत एवेति** । सर्वज्ञेनाननुभूयमानत्वेनैक्यस्याभावादेवेत्यर्थः ।

**सु०— परमात्मन ऐक्यानुसन्धानाभावोऽसिद्धः । यत इदानीमननुसन्दधदपीदमागामिनि कालेऽनुसन्धास्यति । न हि सार्वकालिकमनुसन्धानमैक्यस्य व्यापकमित्याशङ्कते** पश्चादिति ।

---

**अनु०**— पश्चात्स्यादनुसन्धानं चेत्

**परमात्मनो जीवैक्यस्येति शेषः । अत्र प्रमाणं नास्तीति स्फुटः परिहारः । गूढाभिसन्धिः परिहारान्तरमाह** मिथ्येति ।

मिथ्याज्ञानिता भवेत् ।

**परमात्मन इति शेषः । सर्वज्ञो हि यदीदानीं जीवैक्यं नानुसन्धत्ते तदा तदसदेव स्यात्सप्तमरसादिवत् । तथा चागामिनि काले तदनुसन्धास्यति चेन्मिथ्याज्ञानी प्रसज्येतेत्यभिसन्धिः ।**

**शे०**— दूषणान्तरं वक्तुं शङ्कितप्रायमेव पुनश्शङ्कते **परमात्मन इति** । उक्तशङ्काया मूलारूढत्वलाभायापेक्षितांशं पूरयति **परमात्मनो जीवैक्यस्येति शेष इति** । नन्वैक्यज्ञानेन मिथ्याज्ञानिता भवेदिति नापादयितुं शक्यम् । ऐक्यस्य विद्यमानत्वेन मिथ्याज्ञानित्वप्रयोजकस्याविद्यमानार्थानुसन्धानस्यालाभादित्यत उक्तं **गूढाभिसन्धिरिति** । कोऽसौ गूढाभिसन्धिरित्यत आह **सर्वज्ञो हीति** ॥ **सप्तमरसादिवदिति** । इदं च चित्ररसानङ्गीकारमतमाश्रित्योक्तम् । तदङ्गीकारमते तु सप्तमरसपदमष्टमरसपरं द्रष्टव्यम् ।

प० — **न हि सार्वकालिकमिति ।** चैत्रमैत्रादेर्जन्मान्तरीयानुसन्धानस्य सर्वकालमसत्त्वेपि स्वस्वरूपैक्यस्य भावादिति भावः । गूढाभिसन्धिरित्युक्तोभिसन्धिः क इत्यत आह **सर्वज्ञो हीति ।**

या० — गूढमभिसन्धिं दर्शयति **सर्वज्ञो हीति ।**

श्री० — ननु कोऽभिसन्धिर्यो गूढ इत्यत आह **सर्वज्ञो हीत्यादिना ॥ तदनुसन्धास्यतीति ।** असदैक्यमनुसन्धास्यतीत्यर्थः ।

**सु० — नन्वविद्यमानं विद्यमानतयाऽनुसन्दधानो मिथ्याज्ञानी भवति । न चैक्यमविद्यमानम् । तत्कथं परमात्मनो मिथ्याज्ञानित्वमित्यविदिताभिसन्धेराशङ्कामभिसन्धिमुद्घाटयन्परिहरति** विद्यमानेति ।

अनु० — विद्यमानानुसन्धानं न चेदज्ञत्वमापतेत् ।

**यद्यैक्यं विद्यमानं तर्हि तदिदानीमननुसन्दधदसर्वज्ञः स्यात् । न च तद्युक्तम् । अतो नास्त्येव तदिति** वाच्यम् । तथा च तदनुसन्धास्यन्कथं **मिथ्याज्ञानी न भवेत् । एतेनेश्वरस्येदानीं** शरीरसद्भावादननुसन्धान**मित्यपि निरस्तम् । सार्वज्ञहानिप्रसङ्गानिस्तारात् । ईश्वरस्य साकारताया नित्यत्वेन न भाविन्यप्यनुसन्धाने प्रत्याशा ।**

प० — **अविदिताभिसन्धेरिति ।** अज्ञातप्रागुक्ताभिसन्धिमत इत्यर्थः ।

श्री० — **न च तद्युक्तमिति ।** ऐक्यस्य विद्यमानत्वं न युक्तमित्यर्थः । एतेनेत्युक्तं दर्शयति **सार्वज्ञेति ।**

**सु० — यदै(द्यै)क्यमविद्यमानमेव यदि वा विद्यमानमेव तदोक्तदोषद्वयं स्यात् । न चैवम् । किन्त्विदानीमसदेव** पश्चाज्ज्ञानोत्तरकाले भवेत् । **तत्रेदानीमसत्त्वान्न परमात्मनस्तदननुसन्धाने सार्वज्ञहानिः । पश्चाद्भावाच्च न तदनुसन्धाने मिथ्याज्ञानित्वमिति परिशिष्टं पक्षं कस्यचिन्मतं** वा शङ्कते असदिति ।

अनु० — असदैक्यं भवेत्पश्चाद्यदि स्यात्सप्तमो रसः ।

**परिहरति** स्यादिति । **तर्हीति शेषः । न ह्यनादौ संसारे यस्य येन नैक्यं तत्तेनैकीभूतमुपलब्धम् । न च तथा भविष्यतीत्यत्र प्रमाणमस्ति ॥ 'परेऽव्यये सर्व एकीभवन्ति', 'यावन्मोक्षं तु भेदः स्याज्जीवस्य परमस्य च । ततःपरं न भेदोऽस्ति भेदहेतोरभावतः' इत्यादिश्रुतिस्मृतीनां स्थानैक्यादिविषयत्वेन सावकाशत्वात् । अतः सप्तमो रसो भविष्यतीतिवदियं प्रत्याशाऽत्यन्तासंभावितविषयेति भावः ।**

शे० — **तदोक्तदोषद्वयमिति** । अनुसन्धानाननुसन्धानयोरिति शेषः । अनुसन्धाने मिथ्याज्ञानित्वमननुसन्धाने सार्वज्ञहानिरिति पूर्वोक्तदोषद्वयमित्यर्थः । **परिशिष्टमिति** । परिशेषलब्धमित्यर्थः । जीवो न कालान्तरे ब्रह्मणैक्यमापत्स्यते । प्राक्ततोऽत्यन्तभिन्नत्वात् । यः कदाचिद्यतोऽत्यन्तं भिद्यते नासौ कदाचिदैक्यमापद्यते यथा घटः पटेनेत्यनुमानबाधितोऽयं पक्ष इति मनसि निधायास्याभासोद्धारं करोति **न ह्यनादाविति** । येन तत्रानैकान्त्यादसदनुमानमेतत्स्यादिति भावः । न केवलं प्रमाणबाधित इत्येव किन्तु पूर्वं भिन्नस्य जीवस्य पश्चादैक्यं भविष्यतीत्यत्र प्रमाणाभावात् अप्रामाणिकश्चेत्याह **न चेति** । नन्वस्मिन्नर्थे 'परेऽव्यये सर्वे एकीभवन्ती'त्यादिश्रुत्यादिकं प्रमाणम् । तत्राभूततद्भावार्थकच्विप्रत्ययेनास्यार्थस्य स्पष्टमवगम्यमानत्वादित्यत आह **परेऽव्यय इति** ॥ **सावकाशत्वादिति** । सावकाशत्वस्य जिज्ञासाद्यधिकरणेषु व्युत्पादितत्वादित्यर्थः ।

स० — **परिशिष्टमिति** परिशेषलब्धमित्यर्थः ।

प० — **दोषद्वयमिति** । मिथ्याज्ञानित्वाज्ञत्वरूपम् ।

या० — **तदोक्तदोषद्वयमिति** । अत्र तदेत्यनन्तरं तदनुसन्धानेऽननुसन्धाने चेति शेषः । तथा चाद्ये मिथ्याज्ञानित्वं द्वितीये सार्वज्ञहानिरिति दोषद्वयमपीत्यर्थः । ननु परमात्मा स्वांशैः प्रागविद्यमानैक्यवान् अंशित्वात्पटादिवदित्यनुमानसिद्धत्वात्कथमस्य सप्तमरससाम्यमित्यत आह **न ह्यनादाविति** । तथा च पटाद्यंशेष्वपि तन्त्वादिषु पटाद्यैक्यं प्रागपि विद्यमानमेवातः साध्यवैकल्यमिति भावः । नन्वेतादृशं निदर्शनमुत्तरत्र भविष्यत्यतो नोक्तदोष इत्यत आह **न च तथेति** । ननु तथाऽप्यागमसिद्धत्वान्न सप्तमरससाम्यमित्यत आह **परेऽव्यय इत्यादि** ।

श्री० — दोषद्वयम् मिथ्याज्ञानित्वाज्ञानित्वरूपम् ।

सु० — **जीवब्रह्मणोः संसारे भेदाभेदौ मोक्षे त्वभेद एवेति संसारे केवलभेदो मुक्तावत्यन्ताभेद इति भेदाभेदमतद्वयदोषातिदेशेनावस्थाद्वयेऽपि भेदाभेदाविति तृतीयमतमपाकरोति** समुदायेति ।

**अनु० —** समुदायैक्यमेतस्मात् दूरतोऽपाकृतं सदा ।

**सदा समुदायैक्यमिति संबन्धः । एतस्मात्प्रमाणशून्यत्वादाभासत्वादिप्रमाणविरुद्धत्वाच्च । इयांस्तु विशेषः । अभेदकार्यस्यानुसन्धानस्य भेदः प्रतिबन्धकः । तस्मिन्नपगते मुक्तावनुसन्धानं भविष्यतीत्यस्ति पूर्वयोर्मतयोः प्रत्याशा । अत्र तु साऽपि नास्ति । भेदस्य**

सदातनत्वात् । अनुसन्धानं च चेतनैक्यस्य व्यापकमित्युक्तम् । तदिदमुक्तं दूरत इति । देहाद्येवानुसन्धानस्य प्रतिबन्धकमिति चेन्न । कायव्हवतां यूयोगिनामनुसन्धानसद्भावस्य वक्ष्यमाणत्वात् ।

**शे०— मुक्तौ त्वभेद एवेति ।** केवलाभेद एवेत्यर्थः । एवं च्विप्रत्ययो युक्तः । पूर्वं केवलाभेदाभावादिति द्रष्टव्यम् ॥ **संसार इति ।** एवञ्च च्विप्रत्ययस्य स्वारस्यम् । उक्तयुक्तिस्तु च्विप्रत्ययश्रुतिबाधितेति भावः ॥ **तृतीयमतमिति ।** तत्त्वमसीति इदानीमभेदश्रवणात्तया च्विप्रत्यय-श्रुतिबाध इति भावः । दूरत इत्यस्य तात्पर्यमाह **इयांस्त्विति ।** नन्वस्त्वस्मिन्मते सर्वथाऽनुसन्धानाभाव इत्यतस्तर्हि चेतनैक्यव्यापकस्यानुसन्धानस्याभावात्तद्व्याप्यस्य चेतनैक्यस्यापि निवृत्तिः स्यादिति पूर्वोक्तं स्मारयति **अनुसन्धानमिति ॥ उक्तमिति ।** 'चेतनैक्येऽनुसन्धानं प्रमाणं नैव चापरमि'त्यादिनेति शेषः ॥ **देहाद्येवेति ।** तथा च तस्यासदातनत्वात्तदपगमे मुक्तावनुसन्धानं भविष्यतीत्यस्मिन्मतेऽपि तत्प्रत्याशेति भावः ॥ **वक्ष्यमाणत्वादिति ।** 'एक आत्मनः शरीरे भावादि'त्यधिकरणे, तथा अंऽशि-नोऽशेषसन्धानमि'त्येतदधिकरणीयोत्तरानुव्याख्याने चेति शेषः । तथा च व्यभिचारान्न देहादेः प्रति-बन्धकत्वमिति न तदपगमेऽप्यनुसन्धानप्रत्याशेति भावः ।

**प०— वक्ष्यमाणत्वादिति ।** 'जीवांशाः सर्व एव च । नियमेनानुसन्धानवन्त' इत्यत्र टीकायां इन्द्रादीनामंशाः अर्जुनाद्या इत्यादिपदेन सौभर्यादयो ग्राह्याः इति भावः ।

**श्री०— सदातनत्वादिति ।** तथा च मुक्तावपि सत्त्वेन तत्रानुसन्धानं न भविष्यतीत्यर्थः । अनुसन्धानाभावेऽपि किमित्यत आह **अनुसन्धानं चेति ।** तथा च व्यापकाभावाद्व्याप्यं निवर्तत एव । तथा च चैतन्यानिवृत्तावैक्यमेव निवर्तत इति मुक्तावैक्याङ्गीकारोऽयुक्त इति भावः । नन्वस्त्येवानुसन्धानं मुक्तौ । न च तत्प्रतिबन्धकीभूतस्य भेदस्य सत्त्वादभावः । देहादेरेव तत्प्रतिबन्धकत्वेन भेदस्य तत्त्वा-नङ्गीकारात् । देहादेश्चेदानीं सत्त्वान्नानुसन्धानम् । मुक्तौ त्वभावाद्युक्तमेव तत्रानुसन्धानमित्याशङ्कते **देहाद्येवेति ।** देहादेरनुसन्धानप्रतिबन्धकत्वं व्यभिचारादयुक्तमित्याह **कायेति ।** योगिनां सौभर्यादीनाम् ।

**सु०— यद्येवं न सकलचेतनसमुदायः परमात्मा तर्हि कियती सीमा परमात्मत्वस्येत्यत आह अत इति ।**

**अनु०—** अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि ।
तावदेवेश्वरो नाम

साधकस्यानुसन्धानस्य सर्वत्राभावाद्बाधकस्याभासत्वादेर्भावादिह तु तद्भावाभावाभ्यामित्यर्थः । अशेषगुणोपेतत्वं निर्दोषत्वं च प्रत्येकं निर्धारणहेतुत्वेनोक्तम् । स्वमते ब्रह्मण ईश्वरातिरिक्तस्याभावं सूचयितुं सर्वत्रेश्वर इत्याद्युक्तिः । इदं हि ब्रह्मणो लक्षणं श्रुत्यादिसिद्धमिति हिशब्दः । तावद्वस्त्वीश्वरो नामेत्युक्ते समुदायैक्यं प्रतीयते तन्निराकरोति तत्रेति ।

तत्र भेदोऽपि न क्वचित् ।

क्वचिदिति । परस्परं परमात्मना चेत्यर्थः । एतेनैतदपि निरस्तम् 'ईश(श्वर)रूपेष्विवोदिते'ति यदुक्तं पूर्वपक्षिणा । तत्कुत इत्यत आह नेहेति ।

नेह नानाऽस्ति किमपि हरयोऽयमयं हि सः ।

इत्यादिश्रुतिमानेन

अनेन 'नेह नानाऽस्ति किञ्चने'ति श्रुतिमुपादत्ते । हरय इति । 'अयं वै हरय इत्यादिकाम् । अयं हि स इति 'अयमेव स योऽयमात्मे'त्यादिकाम् । पूर्वेणैवान्वयः । एतासां श्रुतीनामभेदपरत्वान्न विवक्षितार्थे मानत्वमित्याशङ्कानिरासाय मानेनेत्युक्तम् । आद्यश्रुतावीश्वररूपेषु भेदनिराकरणस्य स्पष्टत्वात्तृतीयायामेवशब्द(स्य)श्रवणात्तदनुसारेण द्वितीयायामपि वैशब्दस्यैवार्थत्वोपपत्तेरेताः श्रुतियो विवक्षितार्थे मानतामापद्यन्त इति भावः ।

---

शे० — इह त्विति । भगवद्रूपेष्वित्यर्थः ॥ तद्भावेति । उक्तसाधकबाधकभावाभावाभ्यामित्यर्थः ॥ प्रत्येकमिति । विशिष्टस्य प्रयोजकतायां विशेषणविशेष्ययोरन्यतरवैयर्थ्यप्रसङ्गादिति भावः । सर्वत्रेश्वर इत्याद्युक्तिरिति । अत्रादिपदेनेशपरिग्रहः ॥ समुदायैक्यमिति । भेदाभेदावित्यर्थः ॥ एतेनेति । परस्परं परमात्मना च भेदनिराकरणेनेत्यर्थः । एतदित्युक्तमेव विशदयति ईशरूपेष्विवोदितेत्यादि ॥ पूर्वेणेति । 'तत्र भेदोऽपि न क्वचिदि'ति पूर्वेणेत्यर्थः ॥ विवक्षितार्थे इति । ईश्वररूपाणामत्यन्ताभेद इत्यर्थः ।

प० — अतःपदार्थमाह साधकस्येत्यादिना । सर्वत्र सर्वजीवेष्वित्यर्थः ॥ इति यदुक्तं पूर्वपक्षिणेति । एतदपि निरस्तमिति पूर्वेणान्वयः ॥ विवक्षितार्थ इति । अत्यन्ताभेदरूपार्थ इत्यर्थः । इन्द्रादीनामंशा अर्जुनादय इत्यत्र सौभर्याद्यंशा आदिपदार्थः ।

या० — सर्वत्रेति । जीवेष्वित्यर्थः । इह त्विति । भगवद्रूपेष्वित्यर्थः । विवक्षितार्थ इति । अत्यन्ताभेद इत्यर्थः ।

**श्री०** — **सीमेति** । एतादृक् परमात्मस्वरूपमिति परमात्मत्वनिर्धारणोपयुक्तो धर्मः **क** इत्यर्थः । **साधकस्य** जीवानां ब्रह्माभेदसाधकस्य । **सर्वत्र** जीवजाते । **बाधकस्य** अभेदबाधकस्य । **इह तु** भगवद्रूपेषु ॥ **तद्भावाभावाभ्यामिति** । अभेदसाधकानुसन्धानभावादभेदबाधकस्याभासत्वादेरभावादित्यर्थः । **स्वमते** सिद्धान्तिमते । **सर्वत्र** ईशास्येत्यारभ्य बहुषु स्थलेष्वित्यर्थः ॥ **एतेनेति** । तत्र भेदोऽपि न क्वचिदिति समुदायैक्यप्रयुक्तभेदमनङ्गीकृत्य मत्स्यादीनां परमात्मनाऽत्यन्ताभेदकथनेनेत्यर्थः । **यदुक्तमिति** । 'यथा भगवद्रूपाणां मत्स्यादीनां समुदाये भगवत्संज्ञा सिद्धान्तिनोदिते'ति यदुक्तं तदेतेन निराकृतं भवति । सिद्धान्तिभिरस्माभिस्तथा नोच्यत यत इत्यर्थः ॥ **तदिति** । 'तत्र भेदोऽपि न क्वचिदि'त्येतत्कृत इत्यर्थः ॥ **पूर्वेणैवेति** । मानेनेत्यस्य 'तत्र भेदोऽपि न क्वचिदि'त्यनेनान्वय इत्यर्थः । **विवक्षितार्थे** तत्र भेदोऽपि न क्वचिदित्यत्र विवक्षिते भेदे निषेधरूपेऽर्थे । एवमुत्तरत्र । तथा चैतच्छ्रुतीनामभेदप्रतिपादकत्वात्तस्य च मयाऽप्यङ्गीकारान्नास्मद्विरोधित्वमित्यर्थः ।

**सु०** — **चेतनैक्यस्यानुसन्धानं व्यापकमित्युक्तं क्व तदुपलब्धमिति चेन्न । देवदत्तसंबन्धिनः सुखादेर्देवदत्तेनानुसन्धीयमानत्वात् । उपाधिभिन्ने नोपलब्धमिति चेन्न । हस्तपाद्युपाधिभिन्नेऽपि दर्शनात् । विश्लिष्टोपाधिभिन्ने न दृष्टमिति चेत्तत्राह** जीवांशा इति ।

**अनु०** — जीवांशाः सर्व एव च ॥

नियमेनानुसन्धानवन्तो

---

**जीवानामिन्द्रादीनामंशा अर्जुनादयः । एतच्च 'एक आत्मनः शरीरे भावादि'त्यादिना समर्थयिष्यते । चशब्देनेश्वरांशाः समुच्चीयन्ते । नच'(नु)आत्मा वै पुत्रनामासीदि'त्यादिवचनात्पितापुत्रयोः सत्यप्यैक्येऽनुसन्धानं नास्तीति कथं तद्व्यापकमित्यत आह** यदीति ।

यद्येकता स्वतः ॥

**तर्ह्यनुसन्धानवन्त इति संबन्धः । अयं भावः । वास्तवस्यैक्यस्यानुसन्धानं व्यापकमभिमतं न तूपचरितस्य । न चाभिमतस्य व्यभिचारोऽस्ति । पितापुत्रैक्यं तूपचरितमेवेति न तत्र व्यभिचारो दोषायेति ।** स्वतो वस्तुतः ।

**शे०** — **क्व तदुपलब्धमिति चेदिति** । यत्र चेतनत्वावच्छिन्नमैक्यं तत्रानुसन्धानमित्येवोक्ते कुत्रेदं दृष्टमिति पर्याकुलितमना न तावद्व्याप्तिं प्रत्येति यावन्न दृष्टान्तोपन्यास इति तदभिधानावश्यकतापक्षमाश्रित्येयं शङ्का न तु दृष्टान्तस्य सार्वत्रिकत्वाभिप्रायेणेति न युक्तिपादीयटीकया विरोधः । ततश्च व्याप्त्यसिद्ध्या मूलशैथिल्यान्न चेतनैक्येनानुसन्धानापादनं वाऽनुसन्धानाभावेनैक्याभावानुमानं वा युक्तमित्यर्थः । देवदत्तेन स्वभावैक्यवतो देवदत्तस्य देवदत्तगतसुखाद्यनुसन्धान-

दर्शनेन तस्यैव दृष्टान्तत्वसम्भवान्न व्याप्तिवैकल्यमित्याशयेन समाधत्ते **देवदत्तेति** । ननु दृष्टान्तस्थलेऽनुसन्धानस्योपाधिभेदाभावः प्रयोजको न स्वरूपैक्यं प्रकृते तूपाधिभेदसद्भावात्कथमनुसन्धानप्रसङ्गः कथं चान्यनिमित्तस्यानुसन्धानस्याभावात्स्वरूपैक्याभावानुमानमित्याशयेन शङ्कते **उपाधिभिन्न इति** । यद्वा गूढाभिसन्धेरेव पूर्वोक्तावाक्षेपपरिहारावुपाधिभिन्न इति तु पूर्ववाद्यभिप्रायोद्घाटनमित्यवधेयम् । साध्यव्यापकत्वान्नायमुपाधिरित्याशयेन समाधत्ते **हस्तेति** । न वयमौपाधिकभेदाभावे सत्यभेदमेवानुसन्धाने प्रयोजकं ब्रूमः । किन्तु विश्लिष्टोपाधिकृतभेदाभावविशिष्टम् । तथा च न व्यभिचारः । औपाधिकभेदसद्भावेऽप्येकस्मिन् शरीरे विश्लिष्टोपाधिकृतभेदाभावात् । न चैतत्प्रयोजकं प्रकृतेऽस्त्युपाधीनां विश्लेषादतो नानुसन्धानप्रसङ्गः । नापि तदभावेनैक्याभावानुमानमित्याशयेन शङ्कते **विश्लिष्टेति** । ननु न प्रतिज्ञामात्रेणार्थसिद्धिः । अन्यथाऽतिप्रसक्तेरित्यत आह **एतच्चेति** ॥ **समर्थयिष्यत इति** । 'अंशिकर्मनिर्मितशरीर एवांशस्य भावादि'त्यादिनेति शेषः । ननु कथमनेन व्यभिचारपरिहार इत्यत आह **अयं भाव इति** ।

प०— **एतच्चैक आत्मन इति** । उपरितनपादे इत्यादिना सूत्रेण समर्थयिष्यत इत्यर्थः । तदर्थो भाष्ये व्यक्त इति भावः ।

या०— ननु न प्रतिज्ञामात्रेणार्थसिद्धिरित्यत आह **एतच्चेति** । अंशिकर्मनिर्मितशरीर एवांशस्य भावादिति युक्त्यादिनैतत्समर्थयिष्यत इत्यर्थः ।

श्री०— शङ्कते ॥ **चैतन्यैक्यस्येति** । ननु मया चेतनैक्यमात्रेऽनुसन्धानं प्रयोजकमिति नोच्यते । किन्नामोपाधिभेदाभावविशिष्टे चैतन्यैक्ये तत्प्रयोजकत्वेनोच्यते । अस्ति चैतदेकस्मिन्देवदत्ते न ब्रह्मणि । उपाधिभेदस्यैव सत्त्वादित्याह **उपाधीति** । प्रयोज्यप्रयोजकभावे समव्याप्तिमभिप्रेत्य तत्र व्यभिचारमाह **हस्तेति** । एतद्दोषपरिहाराय शङ्कते **विश्लिष्टेति** । न दृष्टमनुसन्धानम् । स्यादेवं यद्यौपाधिकभेदाभावे सति अभेदमेवानुसन्धाने प्रयोजकं ब्रूमः । किन्तु विश्लिष्टोपाधिकृतभेदाभावे सति । तथा च न व्यभिचारः । औपाधिकभेदसद्भावेऽप्येकस्मिन् शरीरे विश्लिष्टोपाधिकृतभेदाभावात् । न चैतत्प्रयोजकं प्रकृतेऽस्ति । उपाधीनां विश्लेषात् । अतो नानुसन्धानमिति भावः । प्रयोजकान्तराणां व्यभिचारित्वाच्चैतन्यैक्ये त्वनुसन्धानमात्रमेव प्रयोजकमिति यद्भवदभिप्रेतं तदप्ययुक्तमित्याशङ्कते **नन्विति** । **अभिमतस्य** अनुसन्धानव्याप्यभूतस्वाभाविकैक्यस्य ॥ **उपचारितमेवेति** । तद्देहांशानां पुत्रदेहोपादानत्वादिति भावः । उपपादितमेतत्प्रथमाध्याये चतुर्थपादे । स्वतः स्वसाज्जीवादित्यन्यथाप्रतीतेराह **वस्तुत इति** ।

सु० — **यद्वा परमेश्वरांशत्वहेतुरसिद्धश्चेत्याह** जीवांशा इति ।

**एतदुक्तं भवति । चैतन्यावच्छिन्नांशत्वस्यानुसन्धानं व्यापकमर्जुनादिषु दृष्टम् । तच्च परमेश्वरजीवयोर्नास्तीत्युपपादितम् । व्यापकाभावे च व्याप्याभावोऽवश्यम्भावी । न च चैतन्यव्यावृत्तियुक्तेत्यंशत्वमेव व्यावर्तते । तथा च प्रयोगः । जीवेश्वरौ न चेतनत्वे सत्यंशांशिनौ । परस्परानुसन्धानशून्यत्वात् । यथा घटपटौ । यथा चेन्द्रार्जुनाविति ॥ ननु पितापुत्रयोरंशांशिभावे सत्यप्यनुसन्धानं नास्तीति कथं तत्तस्य व्यापकमित्यत आह यदीति ।** एकता **एकदेशतारूपांशता पितापुत्रयोरंशांशिभावो नैकदेशतादिरूप इति भावः । नन्वनुसन्धानाभावेनांशत्वव्यावृत्तावंशाधिकरणविरोधः स्यात् । न स्यात् । अंशशब्दो हि तदेकदेशार्थस्तत्सदृशाद्यर्थश्च । तत्र (तच्च) द्वितीयमंशत्वमंशाधिकरणप्रतिपाद्यं न निराक्रियते । तस्यानैकान्त्यप्रसङ्गेन परेण हेतूकर्तुमशक्यत्वात् । आद्यस्यासिद्धिव्युत्पादने न कोऽपि दोषः ।**

शे० — अन्वयदृष्टान्तमुक्त्वा व्यतिरेकदृष्टान्तमाह **यथा चेति** ॥ **विरोधः स्यादिति ।** अत्र महता प्रबन्धेनांशत्वसमर्थनादिति भावः **द्वितीयमिति** । तत्सदृशत्वादिकमित्यर्थः ॥ **अनैकान्त्येति** । सूर्याद्यपभ्रष्टदेवेष्विति शेषः । अनैकान्त्यप्रसङ्गो विरुद्धत्वप्रसङ्गस्याप्युपलक्षकः । तदधीनत्वादेरभेदाभावव्याप्यत्वेन तेनाभेदसाधनस्य विरुद्धत्वादिति भावः । **आद्यस्येति** । तदेकदेशत्वस्येत्यर्थः । **न कोऽपीति** । अंशाधिकरणविरोधादिप्रसङ्गरूप इत्यर्थः ।

---

प० — ननु चैतन्यावच्छि(न्नैक्यस्य)न्नांशत्वस्य व्याप्यत्वे विशेषणव्यावृत्त्यापि व्यापकनिवृत्तेरुपपत्तिरस्त्वित्यत आह **न च चैतन्यव्यावृत्तियुक्तेति** । बाधादिति भावः । परेण एतदेवांशत्वं हेतूकृतं कथं निरस्यत इत्यत आह **तस्यानैकान्त्येति** । सव्येतरहस्तादौ सत्यप्यस्मिन्नभेदाभावादिति भावः ॥

या० — व्यतिरेकदृष्टान्तमप्याह **तथा चेन्द्रार्जुनाविति** ॥ **तस्यानैकान्त्येति** । सूर्यांशेष्वपभ्रष्टदेवेष्विति शेषः ॥

श्री० — **हेतुः** अभेदसाधकतया परोपन्यस्तः ॥ **असिद्ध इति** । अंशत्वव्यापकीभूतधर्मस्यात्राभावेन अंशत्वस्याप्यभावापत्त्याऽसिद्ध इत्यर्थः । अंशांशिभावोपेततन्तुपटादौ व्यभिचारवारणाय चैतन्येति पदम् । अनुमाने तन्तुपटयोर्व्यभिचारवारणाय साध्ये चेतनत्वे सतीत्युक्तमिति ज्ञेयम् । व्यतिरेके दृष्टान्तमाह **यथा वेति** । **तत्** अनुसन्धानम् । **तस्य** अंशत्वस्य । कथं व्यापकत्वं येन तदभावेनांशत्वाभावापत्त्याऽसिद्धिः स्यादिति भावः ॥ **एकदेशतारूपेति** । स्वाभाविकांशत्वरूपेत्यर्थः । नैकदेशतादिरूप इत्यत्रादिपदेन बिम्बप्रतिबिम्बभावग्रहणम् । न निराक्रियते व्यापकी-

भूतानुसन्धानाभावेनेति शेषः । ननु यदि तदधीनत्वे सति तत्सदृशत्वरूपं तदंशत्वं न निराक्रियते तर्हि तदेवांशत्वं जीवाभेदेऽस्मन्मते हेतुरस्तु । भवदङ्गीकृतत्वेनासिद्ध्यभावादित्याशङ्कयाऽपभ्रष्टदेवतासु व्यभिचार इत्याह तस्येति ।

**सु० — नन्विन्द्रादीनामनुसन्धानसद्भावे कथमिन्द्रानभिमतं खाण्डववनदाहादिकमर्जुनः कृतवान् । कथं चेन्द्रोऽर्जुनानभिमतं दहनशमनादिकम् । न हि हस्तादावनुसन्धाने सतीदं दृष्टमित्यत आह** अंशिन इति ।

**अनु० —** अंशिनोऽशेषसन्धानमत्यल्पस्यापि विद्यते ॥
भुवि जातेन चांशेन सुखदुःखादि तद्गतम् ॥
अनुभूयते विशेषस्तु कश्चिदीशकृतो भवेत् ॥

**अत्यल्पस्याप्यंशिनोंऽशगताशेषानुसन्धानं विद्यत एव । तथाऽपि कश्चिद्विशेषोंऽशानभिईमतकरणादिः** शकृतो भवत् । **अंशकीर्त्याद्यर्थमीश्वरप्रेरितेनांशिना क्रियत इत्यर्थः । अल्पस्यापीति स्वरूपसङ्कीर्तनम् । भुवि जातेनांशेन चांशिगतं सुखदुःखाद्येवानुभूयते न तु सर्वम् । सत्यप्यैक्ये कश्चित्सर्वाननुसन्धानरूपो विशेषस्तु** ईशकृतो भवेत् । **भूम्याद्यपकृष्टदेशं गर्भवासाद्यवस्थां मानुषान्नोपभोगादिकं च निमित्तीकृत्येश्वरेण क्रियते । अतोंऽशस्यांश्यनभिमतकरणादिकं युज्यते । न ह्यशेषानुसन्धानमस्माभिश्चैतन्यैक्यादेर्व्यापकमुक्तम् । किन्त्वनुसन्धानमात्रमिति भावः ।**

**शे० — अत्यल्पस्यापीति ।** ब्रह्माद्यपेक्षया स्वरूपेणातिनीचस्यापीत्यर्थः ॥ **अंशिगतं सुखदुःखाद्येवेति ।** अंशिकृतप्रधानसाधनोपासनादिजन्यं सुखाद्येवेत्यर्थः ॥ **न तु सर्वमिति ।** अंशिकृताल्पसाधनजन्यं सुखदुःखादि नानुसन्धीयत इत्यर्थः । यद्यप्यत्र सुखदुःखादीति सामान्यमेवोक्तं तथाऽपि 'तत्साधनोत्तमस्यांशेन भुज्यमानत्वादि'ति न्यायविवरणानुसारेणेह टीकायामियं व्यवस्था सूचिता । भाष्यटीकायां तु 'अल्पज्ञानानुसन्धानाभावेऽपि प्रधानसाधनोपासनाफलानुसन्धानादि'त्युक्तव्यवस्थोदाहृतन्यायविवरणानुसारेण स्पष्टमेवोक्तेति द्रष्टव्यम् । नन्वेवमिन्द्रार्जुनादीनां सत्यपि स्वाभाविकैक्ये परस्परगताशेषसुखदुःखाद्यननुसन्धानेन तत्र व्यभिचारापत्त्या व्याप्यव्यापकभावो न स्यादित्यत आह **न हीति ।**

**प० — अत्यल्पस्यापीति ।** उत्क्रान्तिनयन्यायेनात्यन्ताणोरित्यर्थः ॥

**या०— अत्यल्पस्यापीति ।** ब्रह्माद्यपेक्षया स्वरूपेणातिनीचस्यापीत्यर्थः **अंशिगतं सुखदुःखाद्येवेति ।** अत्र सुखदुःखपदे सदसत्स्वरूपसुखदुःखमात्रपरे, न सर्वसुखदुःखपरे । 'अल्पे ज्ञानादावनुसन्धानाभावेऽपीति तत्त्वप्रकाशिकाविरोधप्रसङ्गात् । ततश्चायमर्थः । अर्जुनादिभिः सद्भिरंशैरंशिगतं तत्कृतप्रधानसाधनोपासनादिनाऽभिव्यक्तं यत्स्वरूपसुखादिकं तदेवानुभूयते स्वरूपस्यैकत्वात् । तथा दुर्योधनादिभिरसद्भिरंशैरंशिगतं तत्कृतहरिद्वेषादिप्रधानसाधनाभिव्यक्तं यत्स्वरूपदुःखादिकं तदेवानुभूयते न तु तत्सर्वम् । तत्तदंशिकृताल्पसाधजन्यं बाह्यं सुखदुःखं ज्ञानादिकं वेति । यद्वा सुखदुःखपदे प्रधानसाधनफलभूतसुखदुःखमात्रपरे न सर्वसुखदुःखपरे, उदाहृततत्त्वप्रकाशिकाविरोधात् । ततश्चांशिगतं तत्कृतोपासनादिप्रधानसाधनफलभूतं यन्महासुखं यच्च तद्गतं तत्कृतप्रधानपापफलं महादुःखं तदेवांशेनानुभूयते न तु सर्वमल्पसाधनजन्यं सुखदुःखादिकमित्यर्थः ।

श्री०— ननु चैतन्यैक्येऽशेषानुसन्धानस्य व्यापकतया सिद्धान्त्यभिप्रेतत्वेनेन्द्रार्जुनादौ तदभावाच्चैतन्यैक्यं न स्यादित्यत आह **न हीति ।** स्वानभिमतमित्यत्र स्वशब्देन जीवो ग्राह्यः ।

**सु०— नन्वीश्वरोऽपि कथं स्वानभितं कारयति । कथं चाभिन्नेऽनुसन्धानं प्रतिबध्नातीत्यत** आह ईशस्येति ।

अनु०— ईशस्याचिन्त्यशक्तित्वान्नाशक्यं क्वापि विद्यते ।

---

**दृश्यन्ते खल्वघटितं घटयन्त्यैश्वरशक्त्या प्रेरिताः कामक्रोधादिपरवशा ऐहिकामुष्मिकदुःखहेतुं स्वशिरश्छेदं पातकं च कुर्वाणा इत्याशयः । नन्वेवं तर्हि मयाऽपि शक्यते वक्तुम् । यथाऽर्जुनस्यैक्ये सत्यपीन्द्रगताशेषानुसन्धानमचिन्त्यया ईशशक्त्या प्रतिबद्ध्यते । तथा जीवपरमात्मनोरभेदेऽपि तयैवानुसन्धानप्रतिबन्धो भविष्यति । अपकृष्टदेशादिकमिव देहाद्युपाधयो निमित्ततामापत्स्यन्ते । तथा चानुसन्धानाभावादैक्याभाव इत्यनुपपन्नम् । अनुसन्धानस्यैक्यव्यापकत्वं चासति प्रतिबन्ध इति कल्प्यत इत्यत आह** सेति ।

सेशताऽनुपपन्नैव यदि जीवैकताऽस्य हि ।

**सा अघटितघटनारूपा ।** अस्य **परमात्मनः । भवेदेतद्यदि भवन्मते परमात्मनोऽचिन्त्यशक्तिमत्तारूपेशता भवेत् ( स्यात् ) । जीवेनाभिन्नस्य सेशत्वानुपपन्ना । कुतस्तयाऽनुसन्धानप्रतिबन्धकल्पनादिकमिति । हिशब्देन यो जीवेनाभिन्नो नासावचिन्त्यशक्तिरूपेशतोपेतो यथा देवदत्त इति व्याप्तिं सूचयति । जीवेनैकीभूतोऽपि परमात्माऽस्त्वीशतोपेतः । किं विपक्षे बाधकमित्यत आह** अनीशस्येति ।

अनीशस्येशतेत्येव विरुद्धं सर्वमानतः ।

जीवस्तावदनीश इत्यनुभवसिद्धम् । तदभेदे परमात्माऽप्यनीश इत्युक्तमेव । तथा च अनीशस्येशताऽस्त्विति शङ्कितं स्यात् । एतच्च सर्वप्रमाणैर्विरुद्धं स्वव्याहतं च । न चैवंविधमनुन्मत्तः शङ्कते । शङ्काया एवानुदये कुतो बाधकोपन्यासावसर इत्येवशब्दः(र्थः) ।

शे०— स्वानाभिमतमिति । इन्द्रादिरूपांश्यनभिमतमित्यर्थः । ननु मायाजीवेनाभिन्नस्य परमात्मन जीवत्वमस्त्वित्येव शङ्क्यते । न त्वनीशस्येशत्वमिति कथं सर्वमानविरोध इत्यत आह जीवस्तावदिति ।

स०— स्वानभिमतमिति । इन्द्रादिलक्षणां(रूपां)श्यनभिमतमित्यर्थः ।

प०— स्वव्याहतमिति । ईशत्वांगीकारविरुद्धमित्यर्थः ।

श्री०— प्रतिबध्नातीति । अंशस्याशेषानुसन्धानानङ्गीकारादिति भावः ॥ तयैवेति । ईश्वरशक्त्यैवेत्यर्थः । ननु तर्ह्यनुसन्धानस्यैक्यव्यापकत्वं भग्नमिति चेत्तत्राह अनुसन्धानस्येति ॥ शङ्काया एवेति । व्याघातावधिराशङ्केति वचनादित्यर्थः ।

सु०— स्यादेतत् । सेशताऽनुपपन्नैवेति तर्कोऽनुमानं वा । नाद्यः । एकस्य श्रुतिसिद्धत्वेन विपर्ययपर्यवसानानुपपत्तेः । न द्वितीयः । जीवैकताया भवतामसिद्धत्वात् । यदिपदवैयर्थ्याच्चेति । मैवम् । यस्य जीवैक्यं सिद्धं ( स्यात् ) तस्यानीशताविषयस्वार्थानुमानापादनस्याभिमतत्वात् । तर्कपक्षेऽपि न दोषः । श्रुतीनामैक्यपरत्वाभावादित्याशयवानाह ईशत्वेनैवेति ।

अनु०— ईशत्वेनैव विज्ञातमनीशत्वेन चेच्छ्रुतिः ।
अनीशत्वेन विज्ञातमीशत्वेनाथ वाऽऽदिशेत् ।
उपजीव्यविरोधेन नैव मानत्वमेष्यति ॥

त्रैविध्यं खल्वत्र संभवति । काचित् श्रुतिः प्रमाणान्तरेण ईशत्वेनैव विज्ञातं परमात्मानमुद्दिश्य अनीशत्वेन प्रमितानीशत्वजीवभावेन आदिशेत् । काचिदनीशत्वेन प्रमितं जीवमुद्दिश्य ईशत्वेन प्रमितेशभावपरमात्मत्वेन उपदिशेत् । काचिदुभावपि तथा प्रमितावुद्दिश्यैक्यमुपदिशेदिति । सर्वथाऽप्युपजीव्यविरोधप्रसङ्गेन नैक्ये प्रामाण्यमश्नुत इति । यदत्र वक्तव्यं तत् 'कथं ब्रह्मेति तज्ज्ञेयमि'त्यादिना वक्ष्यते । चेच्छ्रुतिरिति द्वितीयार्धेऽपि ग्राह्यम् । आदिशेदिति प्रथमार्धेऽपि । तृतीयः प्रकारोऽप्यध्याहार्यः । तर्हीतिपदमुपजीव्येत्यतःपूर्वम् ।

शे० — (तर्क इति । यदि परमात्मनो जीवैक्यं स्यात्तदेशत्वं न स्यादिति तर्कः ॥ अनुमानं वेति । 'परमात्मा नेशतोपेतो जीवाभिन्नत्वाद्यो जीवेनाभिन्नो नासावीशतोपेतो' यथा स्वेनाभिन्नो देवदत्तो नेशतोपेत इत्यनुमानमित्यर्थः । दोषो विपर्ययापर्यवसानरूपः ) ॥ यस्येति । यद्यपि तर्कपरतामेवाश्रित्य तत्रोक्तदोषः परिहर्तुं शक्यस्तथाऽपि 'अत एवेशतासिद्धेरि'त्युत्तरग्रन्थेऽनुमानपक्षस्याभ्युपेतत्वात्तदनुसारेणेदं समाधानमिति द्रष्टव्यम् । ऐक्यश्रुतिरुपजीव्यविरोधेन नैव मानत्वमेष्यतीत्येव वक्तव्ये ईशत्वेनैव विज्ञातमित्यादेराधिक्यादानर्थक्यमित्याशङ्क्यैक्यागमस्यानेकविधत्वसूचनार्थत्वान्न तदिति भावेन तत्सूचितमनेकत्वं दर्शयति त्रैविध्यं खल्विति ॥ काचिदिति । 'क्षेत्रज्ञं चापि मां विद्धि'त्यादिकेत्यर्थः । काचिदिति । 'तत्त्वमसी'त्यादिकेत्यर्थः । काचिदुभावपीति । 'नेह नानाऽस्ती'त्यादिकेत्यर्थः । न च नेह नानेतिश्रुतौ चैतन्ये भेदो नास्तीत्येवोक्तेः कथं तत्रोभयोरुद्देश्यतेति वाच्यम् । उभयानुस्यूतचैतन्यस्यैव तत्रेहेतीदंशब्दार्थत्वश्रवणात्तदुपपत्तेरिति भावः । ननु जीवेश्वरगतेशत्वादिरूपविरुद्धाकारोपजीवनेन श्रुतेः ऐक्यबोधकत्वे भवेदुपजीव्यविरोधः । विरुद्धाकारपरित्यागेन स्वरूपमात्रमुपजीव्य तदभेदबोधकत्वाङ्गीकारे तु कथं श्रुतेरुपजीव्यविरोध इत्यत आह यदत्रेति । सर्वज्ञत्वादेर्ब्रह्मलक्षणत्वेन तदनुपादाने ब्रह्मणो बुद्धावनारोहेण बोध्यस्य ब्रह्माहमस्मीति बोधानुदयप्रसङ्गात्तदर्थं सार्वज्ञ्यादिविशिष्टस्यैव उपजीवनेनैक्यबोधकतयाऽवश्यमनुसरणीयत्वादुपजीव्यविरोधोऽवर्जनीय इत्येतत्प्रमेयं ज्ञानपादे वक्ष्यत इत्यर्थः । तृतीयः प्रकार इति । उभावप्युद्दिश्यैक्यमात्रं बोधयतीति तृतीयः प्रकार इत्यर्थः ।

स० — काचिदुभाविति । नेह नानेति श्रुतिरित्यर्थः । न च नेह नानेति श्रुतौ चैतन्येभेदो नास्तीत्यस्य प्रतीयमानत्वेन कथमुभयोरुद्देश्यतेति वाच्यम् । उभयानुस्यूतचैतन्यस्यैवेहशब्दार्थत्वेन गृहीतत्वादुभयोरुद्देश्यत्वोपपत्तिरिति भावः ।

प० — धर्मिस्वरूपमात्रोपजीवनात् नोपजीव्यविरोध इत्यत आह यदत्रेति । तथात्वे धर्मिस्वरूपज्ञानमशक्यमिति ज्ञानपादे वक्ष्यत इत्यर्थः ॥ तृतीय इति । उभावुद्दिश्यैक्यं चेच्छ्रुतिरुपदिशेदिति तृतीयप्रकार इत्यर्थः ।

या० — ऐक्यस्येति । आपादकरूपस्येत्यर्थः । ननु सर्वाऽपि श्रुतिर्जीवेश्वरगतासाधारणाकारं विना स्वरूपमात्रमुपजीव्य प्रवर्तते चेन्नोपजीव्यविरोध इत्यत आह यदत्र वक्तव्यमिति । स्वरूपमात्रस्य बुद्धावनारोहाद् ब्रह्माहमस्मीत्यभिमतबोधायासाधारणाकारविशिष्टमेवोपजीव्यैक्यश्रुतिः प्रवर्तत इति वाच्यमिति ज्ञानपादे वक्ष्यत इत्यर्थः ।

**श्री० — तर्क इति ।** यदि परमात्मनो जीवैक्यं स्यात्तदा ईशत्वं न स्यादिति तर्क इत्यर्थः ॥ **अनुमानं वेति ।** परमात्मा नेशतोपेतो जीवाभिन्नत्वात् । यो जीवेनाभिन्नो नासावीशतोपेतः । यथा स्वेनाभिन्नो देवदत्तो नेशतोपेत इत्यनुमानमित्यर्थः ॥ **भवतामिति ।** तथा चान्यतरासिद्धिरिति भावः ॥ **यदीति ।** तर्कत्वज्ञापकस्य यदिपदस्यानुमानत्वपक्षे वैयर्थ्यादित्यर्थः । **दोषो** विपर्ययापर्यवसानरूपः । **तथा** ईशत्वेनानीशत्वेन च । द्वितीयार्धेऽनीशत्वेन विज्ञानमीशत्वेन चेच्छ्रुतिरादिशेदित्यत्रेत्यर्थः ॥ **प्रथमार्ध इति ।** अनीशत्वेन चेच्छ्रुतिरादिशेदित्यत्रेत्यर्थः ॥ **तृतीय इति ।** ईशत्वानीशत्वोपेततया प्रमितावीशजीवौ अनूद्यैक्यमात्रं चेच्छ्रुतिरादिशेदिति तृतीयः पक्षोऽध्याहार्य इत्यर्थः । **पूर्वलिङ्गविपरिणामेनाध्याहार्यमित्यनुवर्तते ।**

**सु० — ननु परमात्मनोऽघटितघटनस्वरूपया शक्त्यैवेशताऽनीशतयोः (विरुद्धयोरपि) एकत्र समावेशो भविष्यति । तत्कथमुपजीव्यविरोध इत्यत आह** अत एवेति ।

**अनु० —** अत एवेशतासिद्धेर्न किञ्चिच्छक्यमस्य च ।

**जीवैक्यादेवेत्यर्थः** । ईशता **उक्तरूपा शक्तिः** । किञ्चित् **ईशताऽनीशतयोरेकत्रावस्थानम् ।** अस्य च **परमात्मनोऽपि । जीवैक्येनेशताऽभावानुमानमशक्यम् । ईशतायाः 'पराऽस्य शक्तिः' इत्यादिश्रुतिसिद्धत्वात् ।**

**शे० —** नन्वघटितघटनस्वरूपया शक्त्यैव विरुद्धयोरप्येकत्र समावेशे शङ्किते तन्निरासाय तादृशशक्त्यभाव एव वाच्यः । ईशतासिद्धिकथनस्य तु प्रकृते नोपयोग इत्यतः प्रकृतोपयोगितयेशतेत्यनूद्य व्याचष्टे **ईशतोक्तरूपा शक्तिरिति ।**

**प० — उक्तरूपेति ।** ननु परमात्मन इत्यादिनोक्तरूपेत्यर्थः ॥

**श्री० —** कुतोऽशक्यमिति चेत् । श्रुतिबाधादित्याह **ईशताया इति ।**

**सु० — किञ्च जीवैक्येऽपि भेदस्य विद्यमानत्वादीशतोपपद्यत इत्याशङ्कां परिहरन् तर्हि कियती सीमा परमात्मशक्त्याऽघटितघटनकल्पनस्येति मन्देन जिज्ञासिते सत्याह** ईशत्व इति ।

**अनु० —** ईशत्वेऽनीशभेदेन श्रुत्या सम्यक् प्रकाशिते ।
अयुक्तमपि चान्यत्र युक्तं भवति तद्बलात् ।
अतोऽन्यत्रापि यद्दृष्टं तदीशेनैव कल्प्यते ।
श्रुत्याभासासमपि न हीशत्वपरिपन्थि यत् ।

**अत्रानीशभेदेनाङ्गीकृतेनैवेशत्वं श्रुत्या सम्यक् प्रकाशितं भवतीति वदता श्रुतिविरोधः परिहृतः । तथा हि । यदि जीवपरमात्मैक्यं तात्त्विकं तदा निरवकाशानुमानविरुद्धा श्रुतिरुपचरितार्था भवन्ती नेशत्वं व्यवस्थापयेदिति सुस्थः स्वार्थानुमानप्रसङ्ग इति । सम्यगनीशभेदेन न तु भेदमात्रेणेति वा । तथा च भेदेनेशतोपपत्स्यत इति निरस्तम् । अनीशताहेतोः अभेदस्य विद्यमानत्वात् । किमभेदेनानीशताऽस्तु उत भेदेन मा भूदिति सन्देहानिवारणात् ।** अन्यत्र **ईश्वरात् ।** अयुक्तं **परस्परपरिहारेण वर्तमानमपि युक्तं भवति ।** **ईश्वर इति शेषः ।** तद्बलात् **ईशत्वबलात् । दृष्टमिति अत्रापि संबध्यते ।** अतः **परमेश्वरात् । ईशेनेति भावप्रधानो निर्देशः ।** कल्प्यते **युक्ततयेति शेषः । उक्तस्यापवादः** श्रुतीति **। आभासत्वं च वस्तुवृत्तापेक्षया । हीति तत्रोपपत्तिः ।**

शे०— **मन्देनेति** । पूर्वग्रन्थपर्यालोचनया यावत्प्रमाणसिद्धं विरुद्धमिव दृश्यते अथ च कल्पकेशत्वाविरोधि तावदेवघटकेश्वरशक्त्या कल्पनीयमिति सुज्ञेन ज्ञातुं शक्यत्वान्मन्देनेत्युक्तमिति भावः ॥ **निरवकाशानुमानविरुद्धेति** । जीवैक्यहेतुकानीशत्वानुमानविरुद्धेत्यर्थः ॥ **सुस्थ इति** । 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतिविरोधाभावादिति भावः । किञ्चेत्युक्तदोषपरिहारायोपयोगितया सम्यगनीशभेदेनेत्यप्यन्वयमङ्गीकृत्य तत्तात्पर्यमाह **सम्यगनीशभेदेनेति** । तर्हि परमेश्वरादन्यत्र परस्परपरिहारेण वर्तमानमप्रमितमपीश्वरे युक्तं स्यादित्यतिप्रसङ्गपरिहारायाह **दृष्टमित्यत्रापीति** । अनेन परमेश्वरादन्यत्रायुक्तमपि दृष्टं परमेश्वरे युक्तं भवतीति योजना सूचिता भवति । यथाश्रुतसंबन्धोऽप्यस्तीत्यभिप्रायेणापिपदम् ॥ **अतः परमेश्वरादिति** । क्वचित्परस्परपरिहारेण वर्तमानमप्यतः परमेश्वरादन्यत्रार्जुनादावपि यद्दृष्टमंशयनभिमतकरणादिकं तदपीशेनेशत्वेनैव युक्ततया कल्प्यत इति मूलयोजना सूचिता भवति ॥ अतोऽन्यत्रापीतिपूर्वग्रन्थाविरोधायाह । **उक्तस्यापवाद इति** । (अन्यत्रायुक्तत्वेन दृष्टं श्रुतिप्रमाणप्रमितं चेदङ्गीकार्यमित्युक्तस्येत्यर्थः) । नन्वत्र श्रुत्याऽऽपाततः प्राप्तमित्येव वक्तव्यत्वात्तदाभासत्वकथनमधिकत्वादनर्थकमित्यतः श्रुतेरापातप्रतिपन्नेऽर्थे वस्तुत आभासत्वमिति वस्तुस्थितिप्रदर्शनार्थं तदाभासत्वकथनमित्याह **आभासत्वमिति ॥ तत्रोपपत्तिरिति** । श्रुत्याऽऽपाततः प्रतिपन्नस्येशत्वेन युक्ततयाऽकल्पनीयत्वे कल्पकविघातकत्वरूपा युक्तिर्हिशब्देनोच्यत इत्यर्थः ।

प०— **मन्देनेति** । यावत्प्रमाणसिद्धं विरुद्धमिवोपलभ्यते तावदेवेति विमर्शकारिणः सुज्ञानत्वान्मन्देनेत्युक्तम् '**निरवकाशानुमानेति** । 'सेशताऽनुपपन्नैव यदि जीवैकताऽस्य ही'त्यादौ यस्य जीवैक्यं सिद्धं स्यात्तस्यानीशताविषयस्वार्थानुमानापादनस्येत्युक्तानुमानविरुद्धेत्यर्थः ॥ **सम्यगनीशभेदेनेति** । अभेदं विना कृतभेदेनेत्यर्थः ॥ **वस्तुवृत्तेति** । सा श्रुतिः प्रतीयमानेऽर्थे आभासभूतैवेति तथोक्तमित्यर्थः ।

या० — **मन्देनेति** । पूर्वग्रन्थपर्यालोचनया यावत्प्रमाणसिद्धं विरुद्धमिव दृश्यतेऽथ च कल्पकेशत्वाविरोधि तावदेवाघटितघटकेश्वरशक्त्या कल्पनीयमिति सुखेन ज्ञातुं शक्यमिति भावः । **सुस्थ इति** । श्रुतिविरोधाभावादिति भावः ॥ **सम्यगनीशेति** । अत्यन्तमनीशभेदेनेत्यर्थः ॥ **वस्तुवृत्त्येति** । यद्यपि श्रुत्याऽऽपाततः प्रतीतमर्थायैवात्र वक्तव्यम् । तथाऽपि सा श्रुतिः प्रतीयमानेऽर्थे वस्तुताऽऽभासभूतेति प्रदर्शनायाभासत्वमुक्तमित्यर्थः ।

श्री० — अप्रयोजकतां चाह **किञ्चेति** । प्रामाणिकं यावदघटितं तदेवेश्वरशक्त्या घटनायुक्तं भवतीति बुद्धिमता ज्ञातुं शक्यत इत्यतो मन्देनेत्युक्तम् । **इति वदता** अनीशजीवभेदप्रतिपादनपूर्वकमीशत्वं भगवतः पराऽस्येति श्रुतिः प्रतिपादयतीति वदतेत्यर्थः । **श्रुतिविरोधः अनुमानस्य** पराऽस्येत्यादिश्रुतिविरोधः । **निरवकाशानुमानं** तात्त्विकाभेदसाधकत्वेन प्रबलमभेदानुमानम् । श्रुतिः जीवभेदपूर्वकं भगवत ईशत्वप्रतिपादिका । **व्यवस्थापयेत्** इत्यनन्तरं यदा भेदपूर्वकमेव सम्यगीशत्वं श्रुतिः प्रकाशयतीत्युक्तं तदाऽस्माकं पराऽस्य शक्तिरिति श्रुतिविरोधाभावेन जीवैक्येनेशताभावविषयस्वार्थानुमानं तवैव स्यादिति सेशताऽनुपपन्नेत्युक्तं युक्तमिति भावः । किञ्चेत्युक्ताप्रयोजकता परिहारायाह **सम्यगिति** । तथा चानीशादत्यन्तभेदेनैवेत्यर्थः । **भेदमात्रेण** अभेदसहितेन । तथा चेत्यनन्तरं जीवैक्येऽपीति पूरणीयम् । कुत इत्यत आह **अनीशतेति** । ततोऽपि किमित्यत आह **किमभेदेनेति** । **अत्रापीति** । तथा चान्यत्रायुक्तं दृष्टमयुक्ततया परस्परपरिहारेण वर्तमानतया दृष्टमपि चेदीश्वरे प्रमाणेन प्रमितं तर्हि युक्तं भवति इति तद्बलादित्यर्थः । **उक्तस्येति** । अन्यत्रायुक्तत्वेन दृष्टं श्रुतिप्रमाणप्रमितं चेदङ्गीकार्यमित्युक्तस्येत्यर्थः । **वस्तुवृत्तेति** । वास्तवार्थापेक्षयेत्यर्थः ।

सु० — **अयमर्थः । यत्किञ्चिद्विरुद्धमिव प्रतीयमानमपीश्वरे तदितरत्र वा प्रमाणसिद्धमीश्वरैश्वर्यविरोधि च न भवति । यथाऽणुत्वमहत्त्वयौगपद्यादि, यथा वाऽर्जुनादीनामशेषानुसन्धानाभावः । तत्सर्वमीश्वरैश्वर्यबलेन घटत इत्यङ्गीकार्यम् । न तु निराकार्यम् । यत्पुनरप्रमितं तदीश्वरैश्वर्याविरुद्धमपि न कल्पनीयम् । शशविषाणादिकल्पनापत्तेः । यच्च प्रमितमपि ईश्वरैश्वर्यविरोधि तन्न कल्पनीयमेव । कल्पकविघातकत्वात् । किन्तु तस्य प्रमाणस्य यथायोगमाभासत्वं वर्णनीयम् । यथा प्रकृतमिति ।**

शे० — एतावताऽपि परमेश्वरशक्त्यघटितघटकत्वकल्पनस्य कियती सीमोक्तेति न ज्ञायत इत्यत आह **अयमर्थ इति** ॥ **प्रमाणसिद्धमिति** । अनेन मूले दृष्टपदं प्रमितमात्रपरं न तु प्रत्यक्षदृष्टपरमित्युक्तं

भवति ॥ "अयुक्तमपि चान्यत्र युक्तं भवती'त्यस्योदाहरणं **यथेति** । 'अतोऽन्यत्रापि यद्दृष्टमि'त्यस्योदाहरणं **यथा वेति** । ननु प्रमाणसिद्धत्वेश्वरैश्वर्याविरोधित्वयोरन्यतरदेवास्तु तत्र प्रयोजकं, किमुभयप्रयोजकत्वकल्पनयेत्यतः प्रमितत्वस्यावश्यकतां तदनभ्युपगमेऽतिप्रसङ्गकथनेनोपदर्शयति **यत्पुनरिति** । ईश्वरैश्वर्याद्यविरोधित्वस्यापि तामुपदर्शयति **यच्चेति** ॥ **प्रमितमपीति** । प्रमाणेनापाततः प्रतिपन्नमपीत्यर्थः। अनेन मूले श्रुतिपदं प्रमाणमात्रपरमित्युक्तं भवति ॥ **यथायोगमिति** । श्रुतेः प्रतीतार्थ एवाभासत्वम् । न तु सर्वथा । अन्यस्य तु सर्वथेत्येवं यथायोगमित्यर्थः ॥ **यथा प्रकृतमिति** । यथा जीवेश्वरैक्यमित्यर्थः । ( तत्त्वमसीति श्रुत्याऽऽभासप्रतीतमपि जीवैक्यमीशत्वविरोधित्वान्नाङ्गीकार्यमित्यर्थः ) । इतिशब्दस्येत्ययमर्थ इति पूर्वेणान्वयः ।

**स०— प्रमाणप्रमितमिति** । श्रुतिप्रतीतमित्यर्थः ॥ **यथायोगमिति** । श्रुतिरूपत्वे तदर्थप्रच्यावनमात्रं, श्रुत्यतिरिक्तत्वे सर्वथाप्रामाण्यमित्येवं यथायोगमित्यर्थः ।

**प०—** स्फुटमप्रतीतेराह **अयमर्थ इति** । हिशब्दसूचितयुक्तिमाह **कल्पकेति** । ईशत्वरूपकल्पकविघातकत्वादित्यर्थः ॥ **यथायोगमिति** । श्रुतेः प्रतीतार्थत्यागरूपमन्यस्याप्रामाण्यरूपमित्यर्थः ॥ **प्रकृतमिति** । समुदायैक्यपरत्वेनोदाहृतमेकीभवन्तीत्यादिकमित्यर्थः ॥ अत्र मूले श्रुतिपदमुपलक्षणमित्युपेत्य पूर्ववाक्ये तस्य प्रमाणस्येत्युक्तमिति भावः ।

---

**या०—** 'अतोऽन्यत्रापि यद्दृष्टमि'त्यस्योदाहरणमाह **यथा वेति** ॥ **प्रतीतमपीति** । प्रमाणेनापाततो विषयीकृतमपीत्यर्थः । अनेन मूले श्रुतिपदं प्रमाणमात्रोपलक्षकमिति सूचितमिति ज्ञातव्यम् । हिशब्दसूचितामुपपत्तिं दर्शयति **कल्पकेति** । **यथायोगमिति** । श्रुतिश्चेत्प्रतीतार्थे एवाभासत्वमन्यच्चेत्सर्वथैवाभासत्वं वर्णनीयमित्यर्थः ॥

**श्री०—** ईशत्वपरिपन्थीत्यस्य भावमाह **कल्पकेति** । ईशत्वेत्यर्थः ॥ **यथा प्रकृतमिति** । तत्त्वमसीति श्रुत्याभासप्रतीतमपि जीवैक्यमीशत्वविरोधित्वान्नाङ्गीकार्यमित्यर्थः ।

**सु०— 'अनीशस्येशतेत्येव विरुद्धं सर्वमानतः' इत्युक्तम्** । **तदुपपादयितुं स्मृतिमेव पठति** ईश इति ।

**अनु०—** ईशोऽनीशो जगन्मिथ्या दुःखी मुक्तो भिदा न हि ॥
इति प्रतिज्ञाव्याघातः सर्वदोषाधिकाधिकः ॥
इति हि ब्रह्मतर्कोक्तिः

द्विविधो हि प्रतिज्ञाविरोधः । प्रमाणस्ववाक्यविरोधभेदात् । तत्रेशोऽनीशो दुःखी मुक्त इति स्ववाक्यविरोधस्योदाहरणद्वयम् । जगन्मिथ्या भिदा न हीति प्रमाणविरोधस्य ।

यद्वेशोऽनीशो दुःखी मुक्त इति स्ववाक्यविरोधोदाहरणे । जगन्मिथ्येति स्वन्यायविरोधस्य । जगतो मिथ्यात्वे तन्न्यायेन मिथ्यात्वस्यापि मिथ्यात्वापत्त्या सत्यत्वप्रसङ्गात् । भिदा न हीति स्वक्रियाविरोधस्य । अनया हि प्रतिज्ञाक्रियया साध्यधर्मधर्मिणोर्भेदस्तावत्प्राप्यत इति । सर्वदोषेष्वधिकाधिकोऽत्यन्ताधिकः ॥ स्मृत्युदाहरणस्य साध्यमाह अतिहेयमिति ।

अतिहेयमतोऽखिलैः ॥

बुभूषुभिर्मतमिदं जीवेशाभेदवादिनः ॥

इदम् ईशस्यानीशत्वम् । ईशत्वेनेशभेदेनेत्यादिनोक्तेऽर्थे स्मृतिमप्याह नायुक्तमिति ।

नायुक्तमीशितुः किञ्चिदीशत्वस्याविरोधि यत् ॥
यदीशत्वविरोधि स्यात्तदेवायुक्तमञ्जसा ॥
ईशत्वस्याविरोधेन योजयित्वाऽखिलाः प्रमाः ॥
सिद्धेशत्वेन चायुक्तमपि ह्यीशेन योजयेत् ॥
मानतः प्राप्तमखिलं नामानं योजयेत्क्वचित् ॥

इति हि ब्रह्मतर्कोक्तिः

---

यस्मान्नायुक्तमीशतुः किञ्चिदित्यादि तस्मादीशत्वस्याविरोधेनेत्यादि । सिद्धमीशत्वं यस्यासौ तथोक्तः । तेनेशेन संयोजयेत् । ईश्वरेऽस्तीति जानीयात् । अपिपदादन्येनापि । सिद्धेनेशत्वेन निमित्तेनेति वा । स्मृत्युदाहरणस्य प्रयोजनमाह अत इति ।

अतो युक्तमिहोदितम् ॥ २-२-१० ॥

तस्मादत्यन्तभिन्न एव ब्रह्मणा जीव इति स्थितम् ॥ ३-२-१० ॥

शे०— ईशोऽनीश इत्याद्यनेकोदाहरणेन सूचितमर्थमाह द्विविध इति ॥ यद्वेति । ईशोऽनीश इति स्ववाक्यविरोधोदाहरणम् । दुखी मुक्त इति मानविरोधोदाहरणमित्यर्थः । स्वन्यायविरोधमुपदर्शयति जगदिति । स्वक्रियाविरोधमुपपादयति अनया हीति । सिद्धेशत्वेनेत्यस्येशेनेत्यनेन सामानाधिकरण्यानुपपत्तेस्तदुपपत्त्यर्थमाह सिद्धमिति ॥ अन्येनापीति । अन्येन संयोजयेदन्यस्मिन्नस्तीति जानीयादित्यर्थः । अन्यपदार्थप्राधान्येन बहुव्रीहेर्जघन्यत्वान्न सति गत्यन्तरे तदाश्रयणमुचितमित्याशयेन पक्षान्तरमाह सिद्धेनेति । अनेन सिद्धं च तदीशत्वं चेति समानाधिकरणसमास इत्युक्तं भवति । तृतीयार्थकथनं निमित्तेति । अधिकरणार्थमुपसंहरति तस्मादिति ॥ ३-२-१० ॥

स०— **स्ववाक्यविरोधस्येति** । यद्यपीशस्यानीशत्वं सर्वप्रमाणविरुद्धं तथापीशानीशत्वयो- र्विरोधस्य प्रथममेव स्फुरणात् स्ववाक्यविरुद्धमित्यर्थः । **यद्वेति** । पूर्वं जगन्मिथ्येत्यस्य प्रमाणविरुद्ध- त्वमङ्गीकृतम् । आद्ययोस्तु स्ववाक्यविरुद्धत्वम् । इदानीं तु त्रयमपि स्ववाक्यविरोधस्यैवोदाहरणमिति भेदः । (जगन्मिथ्येति स्वन्यायविरोधस्य, भिदा न हीति स्वक्रियाविरोधस्येति भेदः ।)

प०— कर्मधारयमाश्रित्याह **अन्येनापीति** । अखिलप्रमाणानां ईशत्वाविरोधेन योजनया सिद्धेनेशत्वेनेति, वा प्रमाणांतरेणापि सिद्धेनेति वेत्यर्थः ॥ ३ । २ । १० ॥

या०— **अन्येनापीति** । अन्यस्मिन्नप्यस्तीति जानीयादित्यर्थः ॥ ३-२-१० ॥

श्री०— **मुक्तो** दुःखान्मुक्तः ॥ **स्ववाक्यगतेति** । स्ववाक्यविरोधोऽपसिद्धान्तजातिभेदेन द्विविधः । जातिश्च स्ववचनस्वक्रियास्वन्यायविरोधभेदेन त्रिविधा । तथा चेशोऽनीशो दुःखी मुक्त इति द्वयं स्ववाक्यगतो यो विरोधः स्ववचनविरोधस्तस्योदाहरणमित्यर्थः ॥ **अपिपदादिति** । अयुक्तम- पीशसामर्थ्येनान्येनापि योजयेदन्यस्मिन्नप्यस्तीति जानीयात् । यथाऽर्जुनादावंश्यनभिमतकरणादिरूपम् ॥ ३-२-१० ॥

॥ इति उपमाधिकरणम् ॥

## ॥ अथ अरूपाधिकरणम् ॥

सु० — ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥ अत्राधिकरणे प्रथमसूत्रेण ब्रह्मणो रूपराहित्यमुपपाद्य प्रकाशवच्चावैयर्थ्यमिति (द्वितीय)सूत्रेण रूपवत्त्वविषयाणां श्रुतीनां वैयर्थ्यमाशङ्क्य विलक्षणरूपवत्त्वाङ्गीकारेण परिहृतम् ॥ विलक्षणरूपवत्त्वं च, 'आह च तन्मात्रं', 'दर्शयति चाथोऽपि स्मर्यते' इति सूत्रद्वयेन समर्थितमिति भाष्येण प्रतीयते। तदनुपपन्नम्। अन्ततो रूपवत्त्वाङ्गीकारेऽरूपवदेव हि तदित्यस्यावक्तव्यत्वापातात् । प्रयोजनाभावाच्चास्य विचारस्येत्यतश्चतुःसूत्र्यास्तात्पर्यमाह स चेति ।

अनु० — ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥

स चाप्राकृतरूपत्वादरूपः स्वगुणात्मकम् ।
रूपमस्य शिरःपाणिपादाद्यात्मकमिष्यते ।

स परमात्मा । प्रकृतिशब्दोऽन्येषामपि तत्त्वानामुपलक्षकः । अप्राकृतरूपत्वात् । प्राकृतरूपरहितत्वात् । गुणात्मकमित्युक्ते सत्त्वादीनां प्रतीतिः स्यात । तन्निरासार्थं स्वशब्दः । ये परमात्मनः स्वरूपभूता गुणा आनन्दाद्यास्तदात्मकमिति । रूपशब्देन च शुक्लादिगुणप्रतीतिः स्यात् । अतः शिरःपाणीति विवरणं कृतम् । अतो रूपवांश्चेति शेषः । विचारप्रयोजनं दर्शयति अत इति ।

अतो नानित्यता नैव श्रुतिद्वयविरोधिता ।

अनित्यता जन्ममरणवत्ता । नापि सौन्दर्याद्यभाव इति च द्रष्टव्यम् । तथा च तस्मिन्भक्तिरुपपन्नेति शेषः ।

शे० — ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥ प्रकृतिशब्दस्य सत्त्वरजस्तमोरूपाव्यक्ततत्त्वपरत्वान्मूलेऽप्राकृतरूपत्वोक्त्याऽव्यक्ततत्त्वात्मकत्वालाभेऽपि तदन्यतत्त्वात्मकत्वाभावानुक्तेस्तदात्मकत्वप्राप्तिमाशङ्क्य प्रकृतिपदस्यात्र लक्षणया तत्त्वमात्रपरत्वेनाव्यक्ततत्त्वमात्रपरत्वाभावान्न तत्प्राप्तिरिति भावेन प्रकृतिशब्दं तदुपलक्षणतया व्याचष्टे प्रकृतिशब्द इति । प्राकृतशब्दान्तर्गतः प्रकृतिशब्द इत्यर्थः । एतच्च 'अव्यक्ताद्याः पृथिव्यन्ताः सर्वाः प्रकृतयः स्मृताः' इत्यादिप्रमाणमनाश्रित्य द्रष्टव्यम् । तदाश्रयणे तु मुख्यवृत्त्यैव प्रकृतिशब्देन तत्त्वमात्रलाभाल्लक्षणाश्रयणानर्थक्यमिति केचित् । वस्तुतो निरवकाशैतद्ग्रन्थानुरोधेन प्रकृतिशब्दस्य मुख्यामुख्यवृत्तिसाधारण्येन तत्त्वमात्रपरताया एवैतत्प्रमाणार्थत्वा-

न्नानुपपत्तिरिति द्रष्टव्यम् । अप्राकृतरूपत्वस्य रूपवत्त्वव्यवहारनिमित्तत्वेऽप्यरूपवत्त्वव्यवहारनिमित्तत्वाभावा- त्प्राकृतरूपराहित्यस्यैव च तन्निमित्तत्वात्तदेवेह भाष्ये हेतुतया वक्तव्यम् । अप्राकृतरूपवत्त्वोक्तिस्तु कथं युज्यत इत्यतः प्राकृतरूपराहित्यार्थतया हेत्वंशं व्याचष्टे **अप्राकृतेति** । मूले स्वशब्दस्यानर्थक्यमाशङ्क्य परिहरति **गुणेति** । कथमनेनोक्तप्रतीतिनिरास इत्यतस्तदुपयोगितया व्याचष्टे **यत इति** । अनेन कर्मधारयषष्ठीतत्पुरुषौ द्वावपि तन्त्रेणोपात्तावित्युक्तं भवति । मूले साध्यानुक्तेर्न्यूनतामाशङ्क्योत्तरवा- क्यस्थस्यात इत्यस्यात्राप्यनुकर्षमभिप्रेत्य ततःपरमपेक्षितं शेषमाह **अत इति** । देहवतोऽपि जीवस्या- नित्यत्वाभावे तेन तदप्रसक्त्योक्तविधदेहत्वादनित्यत्वाभावसाधनमप्रयोजकमित्यत आह **अनित्यतेति** । अरूपत्वरूपवत्त्वविचारप्रयोजनप्रदर्शनार्थं प्रवृत्तेऽत्र वाक्ये नानित्यतेत्यरूपत्वप्रयोजनोक्तिवद्रूपवत्त्वप्रयो- जनस्याप्यवश्यं वक्तव्यत्वात्तदनुक्तिरयुक्तेत्याशङ्क्य नानित्यतेत्यस्या अरूपत्वप्रयोजनोक्तेरेवात्र वाक्ये लक्षणया रूपवत्त्वप्रयोजनसमर्पकत्वान्न तदनुक्तिरपीत्याशयेन तत्प्रयोजनं दर्शयति **नापीति** । आदिपदेन सालक्षण्यादिपरिग्रह । अनित्यत्वाद्यभावोऽपि न विचारस्य मुख्यं प्रयोजनं किन्त्ववान्तरमेवेति भावेना- नित्यत्वाद्यभावसमर्थनस्यापि प्रयोजनमाह **तथा चेति** ।

**प० — अरूपवदेव हि ॥ रूपराहित्यमिति** । देहराहित्यमित्यर्थः । सूत्राणामर्थस्तंत्रदीपि- कायां व्यक्तः । भौतिकदेहवत्त्वमस्तीति प्रतीतिनिरासायाह **प्रकृतिशब्दोऽन्येषामिति** । अप्राकृते- त्यत्रत्यप्रकृतिशब्द इत्यर्थः । नञ्न्यत्यासेनार्थमाह **प्राकृतेति** । स्वशब्दकृत्यमाह **गुणेति** ॥ **उपपत्ति- स्त्विति** । अलौकिके शब्दशक्तिग्रहणोपायस्तु 'विद्वद्व्युत्पत्तितोऽपि च । तैस्तैः शब्दैश्च भण्यन्ते युज्यते चोपदेशत' इति वक्ष्यमाणरूपेत्यर्थः ॥

**या० — ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ** ॥ प्रकृत्यन्यतरत्वात्मकरूपप्रसक्तिवारणायाह **प्रकृतिशब्द इति** । प्राकृतशब्दान्तर्गतः प्रकृतिशब्द इत्यर्थः । रूपवत्त्वादरूप इति व्याहतमत **आह प्राकृतरूपेति** ।

**श्री० — ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ** ॥ अरूपित्ववचनस्य गतिकथनार्थं प्राकृतरूपशून्यत्वादिति वाच्यम् । अप्राकृतरूपत्वादिति कथमुक्तम् । न ह्यप्राकृतरूपवत्त्वमरूपित्ववचनार्थ इत्यत आह **प्राकृतरूपरहितत्वादिति** ॥

**सु० — यद्यस्ति परमात्मनो रूपं कथं तर्हि तस्य प्रसिद्धवैलक्षण्यमात्रेणारूपत्वव्यवहार इत्याशङ्कापरिहारार्थत्वेन प्रकाशवदिति** सूत्रावयवो भाष्ये व्याख्यातः । **इदानीं यदीश्वररूपं लोकविलक्षणं तदा तत्र** रूपशब्द(प्र)**वृत्तिर्दुर्घटा स्यात् । संबन्धग्रहणानुपपत्तेः । तथा च रूपवत्त्वश्रुतीनां वैयर्थ्यं दुष्परिहरमित्याशङ्कापरिहारार्थत्वेनापि व्याचष्टे** यथा हीति ।

**अनु०**— यथा हि तैजसस्यैव प्रकाशस्योज्झितावपि ।
आत्मैव ज्योतिरित्याह जीवस्येशं श्रुतिस्तथा ॥ ३-२-९ ॥

**'तैजसस्यैव प्रकाशस्ये'त्येतत्तैजस एव हि सौरादिरालोकः** प्रकाशब्दवाच्यः **प्रसिद्धस्त-स्येति** व्याख्येयम् । उज्झितावपि **परमेश्वरस्य तत्त्वाभावेऽपीति** यवत् । **'आत्मैवास्य ज्योति-र्भवती'ति श्रुतिर्जीवस्येशं प्रकाशमाहेत्यर्थः । तथा** लोकविलक्षणेऽपि भगवद्रूपे रूपशब्दप्रवृत्ति-र्युक्तेति शेषः । **उपपत्तिस्तु 'परमत'** इत्यत्र वक्ष्यमाणाऽत्राप्यनुसंधेयेति ।

**शे०— व्याख्यात इति** । यथा चक्षुरादिप्रकाशे विद्यमानेऽपि वैलक्षण्यादप्रकाशादि-व्यवहार इति व्याख्यात इत्यर्थः । **शब्दवृत्तिः** शब्दप्रवृत्तिः । तत्र हेतुमाह **संबन्धेति** । अतीन्द्रि-यत्वेन तत्रोपदेशाद्युपायाभावेन सादृश्यानुमानस्यैवानुसरणीयत्वात्तस्य चासिद्धत्वान्न व्युत्पत्तिरिति भावः । माऽस्तु व्युत्पत्तिरित्यतोऽव्युत्पन्नशब्दस्यार्थानवगमकत्वेन तत्प्रतिपादकत्वासंभवात् श्रुतिवैयर्थ्यमित्याह **तथा चेति** ॥ **तत्त्वाभावेऽपि** तैजसत्वाभावेऽपि ॥ **उपपत्तिरिति** । (अलौकिकशब्दशक्तिग्रहणोपायस्तु) निरुपाधिप्रियत्वादिरूपानुकूल्यादेः प्रवृत्तिनिमित्तस्य सत्त्वात्तदाश्रयणेन व्युत्पत्तेरपि संभवादानन्दादि-शब्दप्रवृत्त्युपपत्तिरित्यादिरूपेत्यर्थः ॥ **वक्ष्यमाणेति** । 'विद्वद्व्युत्पत्तितोऽपि च । तैस्तैः शब्दैश्च भण्यन्ते युज्यते चोपदेशतः', इत्यादिनेति शेषः ।

**या०— भाष्ये व्याख्यात इति** । 'यथा चक्षुरादिप्रकाशे विद्यमानेऽपि वैलक्षण्यादप्रकाशा-दिव्यवहार' इति व्याख्यात इत्यर्थः ॥ **उपपत्तिस्त्विति** । वाच्यवाचकभावसंबन्धग्रहणोपपत्तिस्त्वि-त्यर्थः ॥ **वक्ष्यमाणेति** । 'विद्वद्व्युत्पत्तितोऽपि च । तैस्तैः शब्दैश्च भण्यन्ते युज्यन्ते चोपदेशत' इत्यादिना वक्ष्यमाणेत्यर्थः ।

**श्री०— तत्त्वाभावेऽपीति** । तैजसप्रकाशत्वाभावेऽपीत्यर्थः ॥ **प्रकाशमाहेति** । ज्ञान-साधनमाहेत्यर्थः ।

**सु०—नन्वेतदधिकरण'मत एव चे(चोपमे)'ति सूत्रात्पूर्वम् । तत्कथं पश्चाद्व्याख्यातम् । उच्यते । अत एवे(चे)ति सूत्रं 'न स्थानतोऽपी'त्यधिकरणेन सङ्गतमिति ज्ञापनाय क्रमभेदः । तत्सिद्धा(म)र्थमुपजीव्य पूर्वपक्षोत्थानात् ।** तथा च भाष्यम् 'यस्य देवमि'त्यादि । **अत्रापि 'ईशरूपेष्वि'त्यादि । अथ तदनन्तरमेव किन्न कृतमरूपत्वाधिकरणार्थस्यात एव चेति सूत्रार्थं प्रति हेतुत्वेनोपोद्घातलक्षणया सङ्गत्या वर्णितस्याव्यवधायकत्वात् । हेतुत्वमपि प्रपञ्चयितुमा-चार्येण 'स चाप्राकृतरूपत्वादिति चशब्दो निबद्धः । कालत्रयेऽप्यशरीरात्परमात्मनो जीवस्या-त्यन्तभेद एव ह्युपपन्न इति ॥ ३-२-९ ॥**

शे०— प्रयोजनविशेषात्पूर्वस्याप्यधिकरणस्य पश्चाद्व्याख्यानमित्याह **उच्यत इति** । भवेदेतद्यत एवेत्यस्य न स्थानत इत्यनेन सङ्गतिः स्यात्सैव तु कथमित्यत आह **तत्सिद्धमिति** । भगवद्रूपाणां भगवदभेदरूपत्वमित्यर्थः । कुत एतदित्यतोऽस्मिन्नर्थे भाष्यानुव्याख्यानसम्मतिं क्रमेण दर्शयति **तथा चेत्यादी** ॥ **अथेति** ॥ उक्तरीत्या सङ्गतिविशेषलाभादिति भावः । अरूपवत्त्वाधिकरणार्थस्य सर्वदा प्राकृतविग्रहराहित्यस्य । सूत्रार्थं प्रति जीवेश्वरयोरत्यन्तभेदं प्रति ॥ **हेतुत्वमपीति** । अरूपवत्त्वस्येति शेषः । हेतुहेतुमद्भावमेव दर्शयति **कालत्रयेऽपीति** ॥ ३-२-९ ॥

प०— **तत्सिद्धमर्थमिति** । ईशरूपाणामभेदरूपमर्थम् ॥ ३-२-९ ॥

या०— **तत्सिद्धमर्थमिति** । भगवद्रूपाणां भगवदभेदरूपमित्यर्थः । **अरूपवत्त्वाधिकरणार्थस्य** सर्वथा प्राकृतशरीरराहित्यस्य । **सूत्रार्थं प्रति** जीवेश्वरयोरत्यन्तभेदं प्रति । हेतुत्वमपीत्यत्रारूपत्वस्येति शेषः ॥ ३-२-९ ॥

श्री०— **तदनन्तरं** न स्थानत इत्यनन्तरम् । अरूपवदित्यतः पूर्वमेवात एवेत्यधिकरणं सूत्रकारेण **किमर्थं** न कृतमित्यर्थः ॥ **हेतुत्वमपीति** । न केवलमरूपः किन्नाम रूपवांश्चेति समुच्चयमेव द्योतयितुमुपनिबद्ध इत्यर्थः । कथं हेतुत्वमित्यत आह **कालत्रयेऽपीति** । जीवस्य च मुक्तावशरीरत्वेऽपि न कालत्रयेऽप्यशरीरत्वमिति भेद इत्यर्थः ॥ ३-२-९ ॥

---

॥ इति अरूपाधिकरणम् ॥

॥ अथ वृद्धिह्रासाधिकरणम् ॥

सु० — ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥ यदर्थं भगवन्महिमाऽत्रोच्यते सा भक्तिः पुरुषेषु तारतम्येन तिष्ठतीत्येतदिहोपपाद्यते । तथा हि । अस्ति भक्तेर्वृद्धिह्रासभाक्त्वम् । कुतः । ब्रह्मादीनामस्मदादीनां च भक्तत्वेऽन्तर्भावात् । एवं भक्तितारतम्येऽङ्गीकृते एवेश्वरस्योभयान्प्रति सामञ्जस्यसंभवादिति । तदेतदसङ्गतम् । युक्तेः प्रतिज्ञातार्थेन सह संबन्धाप्रतीतेरि(त्यत)ति तत्र आह तद्भक्तीति ।

अनु० — ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥
तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ।
ब्रह्मादीनां च सर्वेषामानन्दादेर्यथाक्रमम् ॥ ३-२-१२ ॥

ब्रह्मादीनां चशब्दादस्मदादीनामित्येवं सर्वेषां यथाक्रमं श्रौतक्रमानतिरेकेण यद्विमुक्तिगमानन्दादेस्तारतम्यं तद्भगवद्भक्तितारतम्येनैव भवतीत्यर्थः । एतदुक्तं भवति । साधितं तावन्मौक्तस्यानन्दादेः फलस्य भक्तिसाध्यत्वमम्बुवदग्रहणात्तु न तथात्वमिति सूत्रेण । तच्चाथात आनन्दस्य मीमांसेत्यादिश्रुत्या तारतम्यवदवगम्यते । साध्यतारतम्ये (च) साधनतारतम्यमावश्यकम् । अन्यथा तस्याकस्मिकत्वप्रसङ्गात् । फलदातुरीश्वरस्यासामञ्जस्यप्रसक्तेश्च । न चैवम् । अतोऽस्ति भक्तेर्वृद्धिह्रासभाक्त्व(मिति)म् ॥ ३-२-१२ ॥

शे० — ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥ युक्तेरिति । भक्तत्वेऽन्तर्भावाख्ययुक्तेरित्यर्थः ॥ प्रतिज्ञातार्थेनेति । साध्येन भक्तितारतम्येनेत्यर्थः ॥ सम्बन्धेति । हेतुहेतुमद्भावरूपसम्बन्धाप्रतीतेरित्यर्थः । यद्यपि भाष्योदाहृता'त्साधनस्योत्तमत्वेने'त्यादिप्रमाणादेव युक्तेः प्रतिज्ञातार्थेन सह सम्बन्धोपपादनान्नैतच्छङ्कावकाशस्तथाऽपि स्ववाक्येन तदनुक्तेरित्यभिप्रायेणेयं शङ्केति द्रष्टव्यम् । ननु मौक्तस्य ब्रह्माद्यानन्दस्य भक्तिसाध्यत्वमेव तावदसिद्धम् । सिद्धत्वेऽपि वा तस्य नानन्दतारतम्येन भक्तितारतम्यं साधयितुं शक्यम् । आनन्दतारतम्यस्यासिद्धत्वात् । सिद्धत्वेऽपि वाऽप्रयोजकत्वादित्यतस्तदुपपादयति एतदुक्तं भवतीति ॥ साध्यतारतम्ये चेति । तथा च भक्तत्वेऽन्तर्भावादित्यनेन ब्रह्माद्यानन्दतारतम्यमुपलक्ष्यत इत्युक्तं भवति असामञ्जस्येति । वैषम्यनैर्घृण्यरूपेत्यर्थः ।
॥ ३-२-१२ ॥

प०— **वृद्धिह्रासभाक्त्वमन्तर्भावात्** ॥ **युक्तेरिति** । सूत्रोक्तपञ्चम्यन्तद्वयोक्तयुक्तेरित्यर्थः । जातावेकवचनम् । अन्तर्भावादित्यस्य फलतारतम्योपेताऽऽधिकारिकत्वादिति फलितार्थमुपेत्याह **तच्चाथात इति** । द्वितीयामपि युक्तिं सङ्गमयति **फलदातुरिति** । फलदातृत्वं च 'फलमत उपपत्तेरि'तिनयसिद्धमिति भावः ॥ ३–२–१२ ॥

या०— ॐ **वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्** ॐ ॥ **युक्तेरिति** । भक्तत्वेऽन्तर्भावादिति हेतोरित्यर्थः ॥ **प्रतिज्ञार्थेन** साध्येन भक्तितारतम्येन । **संबन्धाप्रतीतेरिति** । हेतुहेतुमद्भावरूपसंबन्धाप्रतीतेरित्यर्थः ॥ **साध्यतारतम्ये चेति** । तथा च भक्तत्वेऽन्तर्भावादित्यनेन तदानन्दतारतम्यमुपलक्ष्यत इति भावः ॥ ३–२–१२ ॥

श्री०— ॐ **वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्** ॐ ॥ **आनन्दादेः फलस्य** तद्रूपफलस्य । दर्शनाच्चेत्युत्तरसूत्रार्थमाह **तच्चेति** । मौक्तमानन्दादिरूपं फलमित्यर्थः । साध्यतारतम्ये च सति ॥ **अन्यथेति** । साधनतारतम्याभावेऽपि चेत्साध्यतारतम्यमित्यर्थः । तस्य साध्यतारतम्यस्य । असामञ्जस्यं वैषम्यादिरूपो दोषः ॥ ३–२–१२ ॥

---

॥ इति वृद्धिह्रासाधिकरणम् ॥

## ॥ अथ स्थानविशेषाधिकरणम् ॥

सु० —ॐ स्थाननिशेषात्प्रकाशादिवत् ॐ ॥ (ॐ उपपत्तेश्च ॐ) ॥ यद्यप्येतदधिकरणं परमत इत्यतोऽनन्तरम् । तथाऽपि तेनेवानेनापि सङ्गतिरस्य । अनेन विषयोपक्षेपात्तेन पूर्वपक्षोपपत्तिदर्शनात् । यद्वाऽनेन पूर्वपक्षयुक्त्युत्थानात्तेन विषयोपक्षेपात् । तथा हि । न ब्रह्मादीनामानन्दस्य तारतम्यमुपपद्यते । भगवदानन्दप्रतिबिम्बत्वाभ्युपगमात् । बिम्बे च तारतम्याभावस्य न स्थानतोऽपीत्युक्तत्वात् । अन्यथाऽऽकस्मिकत्वप्रसङ्गादिति । यद्वा न ब्रह्मा(द्या)दीनामानन्दो भगवदानन्दप्रतिबिम्बः । परस्परं विभिन्न(चित्र)त्वात् । बिम्बाभिमते च वैचित्र्याभावादिति । अतोऽत्रेदं विशदयति प्रतिबिम्बवदिति ।

अनु०— ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ।

प्रतिबिम्बवदप्येषामानन्दोऽन्यगुणा यथा ।

यद्यप्येषां ब्रह्मादीनामानन्दः प्रतिबिम्बवत् । प्रसिद्धप्रतिबिम्बैस्तुल्यं वर्तते । भगवदानन्दप्रतिबिम्बो भवतीति यावत् । तथाऽपि परस्परं विचित्रो भवतीति शेषः । कथम् । अन्येषां साधनभूतानामुपाधिगुणानां भक्त्यादीनां वैचित्र्यानतिक्रमेण । तत्र दृष्टान्तः प्रतिबिम्बवदिति । यथा सूर्यादिप्रतिबिम्बानां सूर्यकान्तजलादिगतानां सूर्यादिबिम्बवैचित्र्याभावेऽपि सूर्यकान्तादिस्थानगुणवैचित्र्याद्वैचित्र्यं तथेत्यर्थः ।

शे०— ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ॥ ॐ उपपत्तेश्च ॐ ॥ अनेनेति । वृद्धिन्हासभाक्त्वमित्यनेनेत्यर्थः ॥ विषयेति । तारतम्यरूपेत्यर्थः । तेनेति । परमत इत्यनेनेत्यर्थः । अनेन विषयोपक्षेपात्तेन पूर्वपक्षोपपत्तिप्रदर्शनादित्याद्यं पक्षमुपदर्शयति न ब्रह्मादीनामिति ॥ यद्वेति द्वितीयपक्षमुपदर्शयति यद्वेति । 'तत्र तस्येवे'त्यस्य प्रकृतेऽप्रसङ्गा 'तेन तुल्यं क्रिया चेद्वतिरि'त्यनेन वतिरित्याह प्रसिद्धेति ॥ उपाधीति । स्वरूपभूतोपाधीत्यर्थः । मूले गुणा इति प्रथमा षष्ठ्यर्थे इति भावेनोक्तं गुणानामिति ॥ वैचित्र्याद्यनतिक्रमेणेति । अत्रानतिक्रमार्थत्वेऽपि यथाशब्दस्य वैचित्र्यसापेक्षतया असमर्थत्वादसमासो युक्तः । अन्यथाऽसादृश्यार्थकतया 'यथाऽसादृश्य' इति नित्यसमासप्रसङ्गादिति ध्येयम् ।

प० — **स्थानविशेषादिति ॥ अनेन ।** वृद्धिह्रासेत्यधिकरणेन दर्शनाच्चेति सूत्रे आनन्दतारतम्यरूपविषयस्योपक्षेपादुपस्थापनादित्यर्थः ॥ **तेनेति** । परमत इत्यनेनेत्यर्थः । तत्र संबन्धपदेन प्रतिबिम्बत्वोक्तेरिति भावः । द्वयं व्यनक्ति **तथाहीत्यादिना** । अनेन वृद्धिह्रासेतिनयेन पूर्वपक्षयुक्त्युत्थापनादित्येतद्व्यनक्ति **परस्परं विचित्रत्वादिति** । वृद्धिह्रासभाक्त्वमित्यत्र तस्य समर्थनादिति भावः । तेन विपर्ययेत्युक्तस्य व्यक्तीकरणं **न ब्रह्माद्यानन्द इति ॥ वैचित्र्याभावादिति** । न स्थानत इत्यत्र तथा समर्थनादिति भावः । **उपाधिगुणानां** स्वरूपोपाधिगुणानाम् । **स्थानगुणेति** । प्रतिबिम्बनोपाधिगुणवैचित्र्यादित्यर्थः ।

या० — ॐ **स्थानविशेषात्प्रकाशादिवत्** ॐ ॥ अनेन विषयोपक्षेपादित्युक्तं दर्शयति **न ब्रह्मादीनामिति** । तेन पूर्वपक्षोपपत्तिप्रदर्शनादित्युक्तं दर्शयति **भगवदानन्देति** । 'परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्य' इत्यत्र संबन्धपदेन बिम्बप्रतिबिम्बभावसंबन्धस्योक्तत्वादिति भावः । यद्वेत्युक्तद्वितीयपक्षे तेन विपर्योपक्षेपादित्युक्तं दर्शयति **यद्वा न ब्रह्माद्यानन्द इति** । अनेन पूर्वपक्षेत्युक्तं दर्शयति **परस्परमिति ॥ विचित्रत्वात्** तारतम्योपेतत्वात् । **उपाधिगुणानामिति** । स्वरूपभूतोपाधिगुणानामित्यर्थः । **स्थानगुणेति** । उपाधिगुणवैचित्र्यादित्यर्थः ।

श्री० — ॐ **स्थानविशेषात्प्रकाशादिवत्** ॐ ॥ **अनन्तरमिति** । तथा च वृद्धिह्रासेत्यनन्तरं कस्य व्याख्यायत इत्यर्थः ॥ **तेनवेति** । परमत इत्यधिकरणेनैवेत्यर्थः ॥ **अनेनापीति** । वृद्धिह्रासेत्यधिकरणेनापीत्यर्थः । कथमित्यत आह **अनेनेति** । वृद्धीत्यधिकरणेन स्थानेत्यधिकरणविषयप्रसञ्जनस्यानेन कृतत्वादित्यर्थः ॥ **तेनेति** । परमत इत्यनेनेत्यर्थः । **अनेनेति** । वृद्धिह्रासेत्यधिकरणेनेत्यर्थः । वृद्धीत्यनेन विषयोपक्षेपप्रकारं दर्शयति **न ब्रह्मादीति** । आनन्दतारतम्यस्य तत्रोक्तत्वादेतदधिकरणविषयस्तेनोपक्षिप्तः प्रसञ्जितः प्रापित इत्यर्थः । परमत इत्यनेन पूर्वपक्षोपपत्तिप्रदर्शनप्रकारं दर्शयति **भगवदिति** । प्रतिबिम्बत्वस्य परमत इति सूत्रे संबन्धपदेनोक्तत्वात् । **बिम्बे** भगवदानन्दे ॥ **अन्यथेति** । बिम्बभूते भगवदानन्दे तारतम्याभावेऽपि तत्प्रतिबिम्बे ब्रह्माद्यानन्दे तारतम्याङ्गीकार इत्यर्थः । **आकस्मिकत्वेति** । ब्रह्माद्यानन्दतारतम्यस्येति शेषः । यद्वेत्युक्तपक्षे परमत इत्यनेन विषयोपक्षेपादित्युक्तं तदादौ दर्शयति **यद्वेति** । ब्रह्माद्यानन्दस्य भगवदानन्दस्य भगवदानन्दप्रतिबिम्बतायाः संबन्धपदेनोक्तत्वादेतदधिकरणविषयो ब्रह्माद्यानन्दस्य प्रतिबिम्बत्वं परमत इत्यनेनोपक्षिप्तं भवतीत्याशयः । वृद्धिह्रासेत्यनेन पूर्वपक्षयुक्त्युत्थानादित्युक्तं दर्शयति **परस्परमिति** । ब्रह्माद्यानन्दादेस्तारतम्यरूपवैचित्र्यं वृद्धिह्रासेत्यनेन स्पष्टमुपपादितमेवास्तीति भावः ॥ **बिम्बाभिमत इति** । भगवदानन्द इत्यर्थः ।

सु० — वैचित्र्ये हेत्वन्तरमाह नारायणेति ।

अनु० — ( ॐ उपपत्तेश्च ॐ )

नारायणगुणाधीनश्च

बिम्बशक्त्या च विचित्र इत्यर्थः । स्थानगुणस्य बिम्बसामर्थ्यस्य च प्रयोजकत्वं न्यायविवरणे व्युत्पादितम् अनेनोपपत्तेश्चेति सूत्रं व्याख्यातं भवति । बिम्बप्रतिबिम्बयोरैक्यं केचिदिच्छन्ति । अतः प्रतिबिम्बत्वं व्याख्या(तं)ति नारायणेति । गुण आनन्दः । चशब्देन तत्सदृशश्चेति ग्राह्यम् । बिम्बाभिन्न एव किन्न भवतीत्यत आह अत्यल्प इति ।

अत्यल्पस्तदपेक्षया ।

तस्माद्भिन्नश्च सततमन्यज्ज्ञानं परस्य च ।

चो हेतौ । यस्मात्तदपेक्षयाऽत्यल्पस्तस्मात्सततं भिन्न इति । तदपेक्षयाऽत्यल्पत्वं कुत इत्याकाङ्क्षां परिहरन्नत्र श्रुतिमाह अन्यदिति ।

अन्यज्ज्ञानं तु जीवानामन्य आनन्द ईशता ।
मुख्येशता परेशस्य गौणी जीवस्य सा यतः ।
इति श्रुतेः ॥ ३-२-१७ ॥

अन्य आनन्दः परस्य जीवानां चेति संबन्धः । एवमीशतेत्यपि योज्यम् । मुख्येशतेत्युपलक्षणया हेतुमाह । इति श्रुतेरिति पूर्वेण संबन्धः ॥ ३-२-१७ ॥

शे० — ननु स्थानवैचित्र्यबिम्बशक्त्योरन्यतरस्यैव नियामकत्वसम्भवादुभयोपपादनमनर्थकमित्यत आह स्थानगुणस्येति । बिम्बसामर्थ्यस्यैव प्रयोजकतायां सूर्यकान्तगतसूर्यप्रतिबिम्बस्य दाहकत्ववज्जलादिगततत्प्रतिबिम्बस्यापि तत्प्रसङ्गात्स्थानवैचित्र्यमावश्यकम् । तावन्मात्रस्यैव प्रयोजकत्वे च सूर्यकान्तगतसूर्यप्रतिबिम्बस्येव तद्गतचन्द्रप्रतिबिम्बस्यापि दाहकत्वप्रसङ्गाद्बिम्बसामर्थ्यमप्यावश्यकमिति स्थानगुणस्य बिम्बसामर्थ्यस्य च प्रयोजकत्वम् । न हि सूर्यकान्तगतप्रतिबिम्बस्याग्निजनकत्वशक्तिर्न जलगतस्यैतावता सूर्ये वैचित्र्यमाधिक्यं तत्र निमित्तम् । सूर्यचन्द्रादिप्रतिबिम्बं विनाऽन्यत्र तथा विशेषादृष्टेरिति न्यायविवरणे उपपादितमित्यर्थः ॥ एवमीशतेत्यपीति । परस्येशताऽन्या जीवस्येशताऽन्या चेति योज्यमित्यर्थः । जीवेशत्वस्य भगवदीशत्वस्य चान्यत्वमेवोत्तरत्रोच्यते ज्ञानानन्दादेस्तु नेति कथं तत्रान्यत्वसिद्धिरित्यत आह मुख्येशतेत्युपलक्षणयेति । तथा चेशतयोरन्यत्वे हेतुतयोक्ते मुख्यत्वामुख्यत्वे तज्ज्ञानानन्दयोरप्यन्यत्वे हेतुत्वेनोपलक्षणतया विवक्षिते इति न पृथगुक्तिरावश्यकीति भावः । ॥ ३-२-१७ ॥

स० — **न्यायविवरण इति** । जलगतसूर्यप्रतिबिम्बस्य दाहकत्वं नास्ति सूर्यकान्तप्रतिबिम्बस्यैव दाहकत्वं अतः स्थानस्य प्रयोजकत्वं तथा सूर्यकान्तगतसूर्यप्रतिबिम्बस्य दाहकत्वेपि मुखप्रतिबिम्बस्य तदभावात् बिम्बसामर्थ्यमप्यङ्गीकार्यमित्यर्थः । **एवमीशतेत्यपीति** । परस्येशताऽन्याजीवस्येशता चान्येति योज्यमित्यर्थः । ननु जीवभगवदीशतयोरेवान्यत्वं मुख्येशतेत्यनेनोच्यते ज्ञानानन्दयोस्तु कुतो नोपपादनमित्यतस्तयोरुपलक्षणत्वान्न दोष इत्याह **मुख्येशतेति** ।

प० — ननु द्वयमपि किमर्थमित्यत आह **स्थानगुणस्येत्यादि** ॥ **न्यायविवरण इति** । 'न च ब्रह्माद्यानन्दवैचित्र्येपि विष्ण्वानन्दवैचित्र्यमित्यादिन्यायविवरणे इत्यर्थः । सूर्यकान्तादौ प्रतिबिम्बनेनाग्निजन्म न जलादाविति स्थानगुणस्यावश्यकत्वम् सूर्यादेरेव प्रतिबिम्बनादग्निजन्म नान्यस्य पाषाणादेरिवेति बिम्बशक्तिरप्यावश्यकीति व्युत्पादितमित्यर्थः ॥ **चो हेताविति** । भिन्नश्चेतिचशब्दइत्यर्थः । **एवमीशतेत्यपीति** । अन्येशतापरेशस्य जीवानां चान्येशतेति योज्यमित्यर्थः ॥ **उपलक्षणमिति** । मुख्यज्ञानं मुख्य आनन्द इत्यापि ज्ञेयमित्यर्थः ॥ **हेतुमाहेति** । कुत इति प्रश्नस्योत्तरत्वेनेति योज्यम् । ॥ ३-२-१७ ॥

या० — नन्वन्यतरेणैवोपपत्तौ किं समुच्चयेनेत्यत आह **स्थानागुणस्येत्यादि** । न हि सूर्यकान्तप्रतिबिम्बस्याग्निजनकत्वशक्तिर्न जलगतस्येत्येतावता सूर्ये वैचित्र्यम् । आधिक्यं हि तत्र निमित्तम् । सूर्यचन्द्रादिप्रतिबिम्बं विनाऽन्यत्र तथा विशेषादृष्टेरिति न्यायविवरण उपपादितमित्यर्थः । सूर्यकान्तादिगतस्यैव सूर्यादिप्रतिबिम्बस्याग्न्यादिजनकत्वं नान्यत्रेति स्थानमावश्यकम् । सूर्यकान्तादिगतस्य चन्द्रादिप्रतिबिम्बस्य नाग्न्यादिजनकत्वमतो बिम्बसामर्थ्यमप्यावश्यकमिति न्यायविवरणाभिप्रायः ॥ **उपलक्षणयेति** । तथा च ज्ञानानन्दयोरन्यत्वेऽपि मुख्यत्वामुख्यत्वरूपहेतुरनेनैवोक्त इत्यवधेयम् ॥ ३-२-१७ ॥

श्री० — एवं परस्येशता अन्या' जीवस्येशता चान्येत्यर्थः । **उपलक्षणयेति** । भगवत आनन्दोऽपरिच्छिन्नत्वान्मुख्यो जीवानन्दस्त्वतादृशत्वादमुख्यस्तथा परं ज्ञानं सर्वविषयत्वान्मुख्यं जीवज्ञानं त्वतादृशत्वादमुख्यमिति द्रष्टव्यम् ॥ **पूर्वेणेति** । इति श्रुतेः अत्यल्पस्तदपेक्षया तस्माद्भिन्नश्च सततं इति पूर्वेण संबन्धः ॥ ३-२-१७ ॥

॥ इति स्थानविशेषाधिकरणम् ॥



## ॥ अथ पालकत्वाधिकरणम् ॥

सु०— ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥ अत्र पूर्वपक्षप्रदर्शन- परं भाष्यं 'सृष्टिसंहारकर्तृत्वमेवास्य न पालकत्वम् । स्वतः सिद्धेरिति । तदयुक्तम् । सृष्टिसंहारकर्तृत्वाभ्युपगमस्य व्यर्थत्वात् । स्वतः सिद्धेरित्यत्रास्येत्यप्रतीतेश्च । स्थितेरित्यध्याहारेऽपि स्वभाववादाश्रयणस्य सृष्टिसंहारयोरपि साम्येन तत्कर्तृत्वाभ्युपगमानुपपत्तेरित्यतः पूर्वपक्षं विशदयति सृष्टीति ।

अनु०— ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥

सृष्टिनाशौ तदधीनावितीरिते ।

स्वभावत्वात्स्थितेर्नैतदपेक्षा

इति ईरिते सिद्धान्तिनाऽभ्युपगते सति । ततश्चायमर्थः । ईश्वरस्य पालकत्वं नोपपद्यते स्थितेस्तत्प्रयोजनत्वात् । तस्याश्च स्वभावसिद्धत्वेनेश्वरानपेक्षत्वात् । ईश्वर एव हि विश्वस्य सृष्टिसंहारयोः कर्ता नान्य इत्यभ्युपगतम् । तथा च सृष्ट्वा यावन्न संहरेत्तावत्स्थितिः स्वभाव- सिद्धैव न परव्यापारमपेक्षते । यदि खलु सृष्टिसंहारयोः कर्ताऽन्यः स्यात्तदोदासीनस्य तस्य सृष्टौ प्रेरणाद्यर्थं संहारे प्रवृत्तस्य निवारणार्थं च स्थितावीश्वरापेक्षा संभवेत् । न च तदस्ति । अतः संहारोदासीनत्वातिरिक्तं पालकत्वं नोपपद्यत इत्येवमत्र पूर्वपक्ष इति ।

एवं तर्हि सिद्धान्तो न युक्तः । स्वभावत्वयुक्तेरपरिहृतत्वादित्यतः सूत्राभिप्रायमाह इति नेति ।

इति न युज्यते ।

यतस्स्वभावोऽप्यखिल ईशायत्तोऽखिलस्य च ॥ ३-२-१३ ॥

परानपेक्षतया प्रतीयमानं स्वरूपं धर्मो वा स्वभाव इत्युच्यते । स सर्वेषां पदार्थानाम् । (स) सर्वोऽपीशायत्त एव । अन्यथा तेषां स्वातन्त्र्यप्रसङ्गेनास्येशत्वानुपपत्तेः । सर्वं खल्वित्या- दिश्रुतिविरोधापत्तेश्च । अन्नदानादौ व्यापारश्च स्फुट एवेति ॥ ३-२-१३ ॥

शे०— ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥ व्यर्थत्वादिति । पूर्वपक्षिण इति शेषः ॥ प्रेरणाद्यर्थमिति । असृष्टस्य रक्षारूपपालनायोगात्पालनकर्तृरित्यस्योदासीन-

प्रेरणं सृष्टावावश्यकमिति भावः ॥ **अतः संहारेति** । संहर्तुरिति शेषः । ततश्च पालकत्वाभावेन महा-महिमत्वाभावान्न तत्र भक्तिर्युक्तेति भावः **परानपेक्षतयेति** । प्रतिमुखादिवदागन्तुककारणानपेक्षतयेत्यर्थः ॥ **स सर्वोऽपीति** । उक्तोभयरूपोऽपीत्यर्थः । तत्कुत इत्यतो भाष्ये ईशशब्दसूचितां युक्तिमाह **अन्यथेति** । तत्रैव चशब्दसूचितां तामाह **सर्वमिति** । अत्र सर्वनियामकत्वादेव सर्वत्वो(राजा राष्ट्रमितिवत्)क्तिरिति भावः । अभ्युपेत्य चेदमुदितम् । वस्तुतस्तु संहर्तुरीश्वरस्य संहारोदासीनत्वातिरिक्तं रक्षारूपं स्पष्टमेव पालकत्वमस्तीति महामहिमत्वाद्युक्ता तत्र भक्तिरित्यभिप्रेत्याह **अन्नेति** ॥ **स्फुट एवेति** । सृष्टिसंहारातिरिक्तः पालनरूपो धर्मः अन्नदानादिव्यापाररूपः स्पष्ट एवेत्यर्थः । तेन संहारोदासीनत्वादन्यत्पालनं नेति प्रागुक्तमपास्तं ध्येयम् ॥ ३-२-१३ ॥

प०—**प्रकृतैतावत्त्वं हि** ॥ **व्यर्थत्वादिति** । पूर्वपक्षे तदुपयोगाप्रतीतेरिति भावः ॥ **स्थितेरिति** । उत्तरकालमपि सत्त्वरूपक्षेमार्थस्य स्थितेरिति पदस्येत्यर्थः । सृष्ट्यादिकर्तृत्वाङ्गीकारस्योपयोगं व्यनक्ति **ईश्वर एव हीति** ॥ **प्रेरणाद्यर्थमिति** । सामग्रीसंपादनादिरादिपदार्थः । आत्मलाभरूपसृष्टिलक्षणयोगाभावे क्षेमरूपस्थितेरयोगात् सृष्टौ प्रेरणाद्यर्थमित्युक्तम् ॥ **स सर्वोपीति** । उक्तद्विविधरूपोपीत्यर्थः ॥ **श्रुतीति** । तत्र सर्वसत्तादेरीशायत्तत्वाभिप्रायेण राजा राष्ट्रमितिवत् सर्वात्मकत्वोक्तेस्तद्विरोधादित्यर्थः ॥ **स्फुट एवेति** । सृष्टिसंहारातिरिक्तः पालनरूपो धर्मः अन्नदानादिव्यापाररूपः स्पष्ट एवेत्यर्थः । तेन संहारोदासीनत्वादन्यत्पालनं नेति प्रागुक्तमपास्तं ध्येयम् ॥ ३-२-१३ ॥

या०— ॐ **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः** ॐ ॥ सृष्टिसंहारकर्तृत्वाभ्युपगमस्येत्यत्र पूर्वपक्षिण इति शेषः ॥ **प्रेरणाद्यर्थमिति** । असृष्टस्यस्थितेः कर्तुमशक्यत्वात् स्थितिकर्तुरीश्वरस्योदासीनप्रेरणं सृष्टावावश्यकमिति भावः । **सर्वोऽपीति** । उक्तोभयरूपोऽपीत्यर्थः । चशब्दसूचितमर्थमाह **सर्वं खल्विति** । संहारोदासीनत्वातिरिक्तं पालकत्वं नोपपद्यत इत्युक्तं दूषयति **अन्नदानादाविति** ॥ ३-२-१३ ॥

श्री०— ॐ **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः** ॐ ॥ **अस्येतीति** । रूस्य स्वतः सिद्धिरित्यपेक्षायामेतादृशस्येत्यप्रतीतेरित्यर्थः ॥ **तत्कर्तृत्वेति** । पूर्वपक्षिण ईश्वरस्य सृष्ट्यादिकर्तृत्वाभ्युपगमानुपपत्तेरित्यर्थः ॥ **तत्प्रयोजनत्वादिति** । पालनप्रयोजनत्वादित्यर्थः । तस्याः स्थितेः उदासीनस्य सृष्टिकारणात् । प्रेरणे सृष्ट्यभावे स्वस्य स्थितिकर्तृत्वानुपपत्तेस्तदर्थमुदासीनस्य सृष्ट्यादौ प्रेरणमावश्यकमिति भावः ॥ ३-२-१३ ॥

**॥ इति पालकत्वाधिकरणम् ॥**

## ॥ अथ अव्यक्ताधिकरणम् ॥

सु०— ॐ तदव्यक्तमाह हि ॐ ॥ अत्र परमात्मनोऽव्यक्तत्वमादौ विस्तरेण समर्थितम् । ततस्तर्हि भक्त्यादिसाधनवैयर्थ्यमित्याशङ्क्य 'प्रकाशश्च कर्मण्यभ्यासादि'ति दृश्यत्वं चोक्तम् । तदेतदुभयं विरुद्धमित्याशङ्क्य अतोऽनन्तेन तथा हि लिङ्गमिति सूत्रितम् । अत्र विरोधशान्तिर्न स्फुटा प्रतीयत इत्यतस्तस्य तात्पर्यमाह अव्यक्तोऽपीति ।

अनु०— ॐ तदव्यक्तमाह हि ॐ ॥

अव्यक्तोऽपि स्वशक्त्यैव भक्तानां दृश्यते हरिः ॥ ३ । २ । १४ ॥

भक्तानामव्यक्तोऽपीत्यन्वयः । भक्तानामनुग्रहायेत्यध्याहारो वा । जीवशक्त्यपेक्षया अव्यक्तोऽपि स्वशक्त्यैव दृश्यत इत्यविरोध इति ॥ ३ । २ । १४ ॥

शे०— ॐ तदव्यक्तमाह हि ॐ ॥ विस्तरेणेति । त्रिसूत्र्येत्यर्थः । 'परमात्माऽपरोक्ष्यं तत्प्रसादादेव, न जीवशक्त्येति वक्तुमुच्यत' इति संबन्धभाष्यस्य च, 'युज्यते च तस्यानन्तशक्तित्वादि'ति व्याख्यानरूपस्य च भाष्यस्य पर्यालोचनया विवक्षितार्थलाभः संभवत्येवेत्यत उक्तं स्फुटेति । यद्यपि 'नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः' इति भाष्योदाहृतप्रमाणवाक्ये स्पष्टमेव विवक्षितार्थप्रतिपादनमस्ति । तथाऽपि स्ववाक्येनाप्रतिपादनात्पुनरारम्भ इति भावः । ननु भक्तानां दर्शनं प्रति कर्तृतया 'कर्तृकरणयोस्तृतीये'ति तृतीयायां भक्तैरिति भाव्यम् । भक्तानां दृश्यत इति षष्ठी तु कथमित्यतो नात्र यथाश्रुतसंबन्धोऽभिमतः किन्तु योग्यत्वाद्भक्तानामव्यक्त इत्येवेति नोक्तानुपपत्तिरित्याशयेनाह भक्तानामव्यक्तोऽपीत्यन्वय इति ॥ भक्तानामिति । अत्र पक्षे ततोऽप्यर्थातिशयलाभ इति द्रष्टव्यम् । यद्वा विरोधपरिहारोपयोगिनो जीवशक्त्याऽव्यक्तत्वस्य मूलारूढतासिद्ध्यर्थमाह भक्तानामव्यक्तोऽपीत्यन्वय इति । तावताऽपि कथं विरोधपरिहार इत्यत आह जीवेति । पुरुषप्रयत्नापेक्षयाऽव्यक्तोऽपीत्यर्थः ॥ ३ । २ । १४ ॥

प०— ॐ तदव्यक्तमाह हि ॐ ॥ सूत्राणामर्थस्तन्त्रदीपिकायां व्यक्तः । क्रियान्वये सति भक्तैरिति भाव्यमत आह इत्यन्वय इत्यादि ॥ ३ । २ । १४ ॥

या०— ॐ तदव्यक्तमाह हि ॐ ॥ कथमनेन विरोधशान्तिः स्फुटतयाऽप्रतीतेरित्यत आह जीवशक्त्यपेक्षयेति ॥ ३ । २ । १४ ॥

श्री०— ॐ तदव्यक्तमाह हि ॐ ॥ ननु भक्तैः दृश्यत इति कर्तरि तृतीयया भाव्यमतो भिन्नक्रमेण संबन्धं दर्शयति भक्तानामिति ॥ ३ । २ । १४ ॥

॥ इति अव्यक्ताधिकरणम् ॥

**सु० ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ॥ यदीश्वरस्य गुणक्रियादयो धर्मास्ततो भिन्नास्तदा समवायस्य निराकृतत्वात्तद्वत्त्वमनुपपन्नम् । यदि चाभिन्नास्तदा ज्ञानादिमत्त्वमानन्दादिभोक्तृत्वमित्याद्ययुक्तमित्युभयथा तत्र भक्त्यनुपपत्तिरिति पूर्वपक्षप्राप्ताविदमारभ्यते । तत्र हेतुदृष्टान्तावेव सूचितौ । न तु पक्षपरिग्रहरूपा प्रतिज्ञा । अध्याहारोऽपि हेतुदृष्टान्तबलेन भेदाभेदपक्षपरिग्रहस्येति प्रतिभाति । अतः प्रतिज्ञां दर्शयति** तदभिन्ना इति ।

**अनु० — ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ॥**

तदभिन्ना गुणा नित्यमपि सर्वे विशेषतः ।
गुणत्वेन गुणित्वेन भोक्तृभोग्यतया स्थितः ॥

**नित्यशब्दो नियमार्थः । परामेश्वराः सर्वे गुणा धर्मा नित्यं तदभिन्नास्तेनात्यन्ताभिन्नास्तथाऽपि विशेषशक्त्या गुणगुण्यादिभावेन स्थिताः ।**

**शे० — ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ॥ निराकृतत्वादिति ।** वैशेषिकपरीक्षायां 'समवायाभ्युपगमाच्च साम्यादनवस्थितेरि'त्यत्रेति शेषः । संयोगस्य च द्रव्यमात्रवृत्तितया गुणक्रियादिभिरनुपपत्तेरिति भावः ॥ **तद्वत्त्वमनुपपन्नमिति ।** असंबद्धयोरपि धर्मधर्मिभावे हिमविन्ध्ययोरपि तत्प्रसङ्गादिति भावः ॥ **ज्ञानादिमत्त्वमित्यादि ।** तद्वत्तादेर्भेदव्याप्तत्वादिति भावः ॥ **पक्षपरिग्रहरूपेति ।** पक्षस्य परिग्रहं स्वीकारं रूपयति प्रतिपादयतीति प्रतिज्ञायाः पक्षपरिग्रहरूपत्वं बोध्यम् ॥ **हेतुदृष्टान्तबलेनेति ।** तयोर्भेदाभेदविषयत्वादिति भावः ॥ **प्रतिभातीति ।** तथा चापसिद्धान्त इति भावः । नित्यशब्दस्य सदातनत्वार्थतायां गुणानामत्यन्ताभिन्नत्वप्रतिज्ञाया मूलारूढत्वालाभात्तल्लाभायाह **नियमार्थ इति ।** अवधारणार्थ इत्यर्थः । गुणपदस्य सामयिकगुणपरत्वे क्रियादीनामत्यन्ताभिन्नत्वप्रतिज्ञाया अलाभप्रसङ्गात्तल्लाभाय गुणपदं धर्ममात्रपरतया व्याचष्टे **गुणा धर्मा इति ॥ विशेषशक्त्येति ।** विशेषस्य भेदप्रतिनिधित्वात्तदभावेऽपि विशेषबलेनैव तद्वत्त्वाद्युपपत्तिरिति भावः ।

**प० — उभयव्यपदेशात् ॥ भक्त्यनुपपत्तिरिति ।** गुणवत्येव स्नेहादिरूपभक्तेरुदयादिति भावः । पक्षपरिग्रहरूपा पक्षवचनरूपेत्यर्थः । यद्वा रूपशब्दो ज्ञापकपरः । पक्षपरिग्रहज्ञापिकेत्यर्थः । गुणशब्दो भावाभावरूपधर्ममात्रपर इत्युपेत्याह **गुणा धर्मा इति ।** यद्वा क्रियाग्रहणाय धर्मा इति व्याख्या । अपीत्यस्यार्थः तथापीति । विशेषशक्त्येत्यादिः विशेषत इत्यादेस्तात्पर्य इत्यर्थः ।

**या० — ॐ उभयव्यपपदेशात्त्वहिकुण्डलवत् ॐ ॥ पक्षपरिग्रहरूपेति ।** पक्षस्य परिग्रहं स्वीकारं रूपयति प्रतिपादयतीत्यर्थः ॥ **नियमार्थ इति ।** अवधारणार्थ इत्यर्थः ॥ **प्रपञ्च इति ।**

शक्तिव्यक्तिशब्दार्थकथनेन क्रियानित्यत्वे साधकबाधकाभावकथनेन च प्रपञ्चो लिङ्गपाद एव कृत इत्यर्थः ।

श्री० — ॐ **उभयव्यपदेशात्त्वहिकुण्डलवत्** ॐ ॥ **दृष्टान्तेति** । अहिकुण्डलस्थले भेदाभेदयोरुभयसम्प्रतिपत्तेरिति भावः ।

**सु० – स्यादेतत् । परिमाणादीनां यावद्द्रव्यभाविनां भवतु नाम भगवताऽत्यन्ताभेदः । क्रियाणां (ज्ञानादि)गुणानां चास्राक्षीत्सृजति स्रक्ष्यति व्यज्ञासीज्जानाति ज्ञास्यतीत्यादिश्रौतव्यवहारैरनित्यतयाऽवगतानां तु न युज्यत इत्यत आह** विशेषात्मतयेति ।

**अनु०** — विशेषात्मतया तेषां नित्यशक्त्यात्मना तथा ॥
नित्यं स्थितेर्न धर्माणां क्रियादीनामनित्यता ॥

**तेषां परमेश्वरसंबन्धिनां क्रियादीनां धर्माणां नित्यशक्त्यात्मना नित्यं स्थितेस्तथा विशेषात्मतया व्यक्तिरूपेण व्यवहारविषयतोपपत्तेर्नानित्यतेति योजना । प्रपञ्चस्तु प्रागेव कृतः**

**ननु च क्रियादीनां या व्यक्तता सा तावदनित्यैव । अन्यथोक्तव्यवहाराणां निरालम्बनत्वापातात् । ततस्तस्या भगवद्धर्मभूताया अपि नात्यन्ताभेदोपपत्तिरित्यत आह** न विशेषेति ।

न विशेषात्मता चेयमनित्या

**इयं व्यवहारालम्बनत्वेनोक्ता । कुत इत्यत आह** शक्तेति ।

शक्तिरूपता ॥

सैव यत्

**यद्यस्मात्सा विशेषात्मता शक्तिरूपतैव । शक्तिश्च नित्येत्युक्तं तस्मादित्यर्थः । नन्वेवं तर्हि शक्तिर्व्यक्तिरिति व्यवहारविशेषो न स्यात् । उक्तव्यवहाराणां निरालम्बनत्वं च न परिहृतं स्यादित्यत आह** सविशेषेति ।

सविशेषा स्यात्

**नेयं व्यक्तिः शक्त्या निर्विशेषाभिन्ना । येनोक्तदोषः स्यात् । किन्तु सविशेषाभिन्नैव । यद्ययं सर्वनिर्वाहहेतुर्विशेषो भगवतो भिन्नस्तदा सर्वेषां तद्धर्माणां तेनात्यन्ताभेद इति प्रतिज्ञा भज्येत । अभिन्नश्चेद्विशेषता तस्य न स्यात् । स्वरूपमात्रपर्यवसानेन सोऽपि न स्यादित्यत आह** विशेष इति ।

विशेषोऽन्यो न चाप्ययम् ।
स्वनिर्वाहकताहेतोस्तथाऽपि स्याद्विशेषता ॥

**चोऽवधारणे । अयं विशेषोऽपि भगवतो नैव भिन्नस्तेन न प्रतिज्ञाहानिः । तथाऽपि तस्य विशेषता स्यात् । कथं । न ह्ययमभिन्नो भवन्निर्विशेषः । एवं तर्हि विशेषपरम्परयाऽनवस्था स्यात् । न स्यात् । कुतः विशेषस्य स्वनिर्वाहकताहेतोरिति ।**

**शे०** — विशेषात्मतया तथा नित्यशक्त्यात्मना नित्यं स्थितेस्तेषां क्रियादीनां धर्माणां नानित्यतेति यथाश्रुतयोजनायां विशेषात्मत्वनित्यशक्त्यात्मत्वयोरन्यतरेणैव विवक्षितसिद्धावन्यतरस्य वैयर्थ्यम् । असिद्धौ च तदुपपादनमनर्थकम् । अस्राक्षीदित्यादिव्यवहारविषयत्वानुपपादनप्रसङ्गश्च भवतीत्यभिप्रेत्यापेक्षिताध्याहारेण नित्यत्वव्यवहारविषयत्वोपपादकतया वाक्ययोजनामाह **तेषामित्यादिना** । विशेषात्मतयेत्यस्य व्याख्यानं **व्यक्तिरूपेणेति** । भवेदेतदेवं यदि क्रियादीनां परमेश्वरधर्माणां नित्यत्वं शक्तिव्यक्तिरूपत्वं च सिद्धं स्यात्तदेव कुत इत्यत आह **प्रपञ्चस्त्विति** । अनित्यत्वे पराभिमतप्रमाणनिरासेन नित्यत्वे साधकप्रमाणकथनेन बाधकाभावव्युत्पादनेन च शक्तिव्यक्तिशब्दार्थकथनपूर्वकं तदुभयसमर्थनेन च प्रपञ्चोऽत्तत्वाधिकरणे 'सविशेषोऽपि क्रियाशक्त्यात्मना स्थिर' इत्यादिना कृत इत्यर्थः ।

**उक्तव्यवहाराणाम्** अस्राक्षीदित्युक्तव्यवहाराणाम् ॥ **उक्तमिति** । 'ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मन' इत्यादिनाऽत्तृत्वाधिकरण इति शेषः ॥ **न स्यादिति** । तयोरभेदादिति भावः ॥ **उक्तदोष इति** । शक्तिर्व्यक्तिरिति व्यवहारविशेषानुपपत्त्यादिरूप इत्यर्थः ॥ **सविशेषाभिन्नैवेति** । तथा च शक्तिव्यक्त्योरभेदेऽपि भेदप्रतिनिधिविशेषसद्भावात्तद्बलेन शक्तिर्व्यक्तिरिति व्यवहार विशेषादिकमुपपन्नमिति भावः ॥ **न स्यादिति** । विशेषविशेषिभावस्य भेदसापेक्षत्वादिति भावः ॥ **प्रतिज्ञेति** । भगवद्धर्माणां भगवताऽत्यन्ताभेद इति प्रतिज्ञेत्यर्थः । तर्ह्यभिन्नत्वाद्विशेषताद्यनुपपत्तिरित्यत **आह तथाऽपीति** । अभेदे विशेषविशेषिभावः कथमिति पृच्छति **कथमिति** । तदुपपादकस्य भेदस्याभावादिति भावः । भेदाभावेऽपि तत्प्रतिनिधिविशेषबलाद्विशेषविशेषिभावोपपत्तिरिति समाधत्ते **न हीति** ॥ **एवं तर्हीति** । धर्मधर्मिभावोपपादकतया स्वीकृतविशेषस्यापि सविशेषत्व इत्यर्थः । क्रियादीनां भगवतश्च धर्मधर्मिभावोपपादकतयाऽभ्युपगतस्य विशेषस्य तेषां धर्मधर्मिभावोपपादकत्ववत्स्वस्मिन्विशेषविशेषिभावोपपादकत्वेन विशेषे विशेषान्तरानङ्गीकारान्नानवस्थेत्याशयेन समाधत्ते **न स्यादित्यादिना** ।

**स०** — **प्रागेवेति** । अत्तृत्वधिकरणे 'सविशेषोपि क्रियाशक्त्यात्मना स्थिरः' इत्यादिना कृत इत्यर्थः । उक्तव्यवहाराणां स्रक्ष्यतीत्यादीनां(न?) निरालम्बनताव्यक्तेर्नित्यत्वादिति भावः ।

प०— **प्रागेवेति** । लिंगपादे अत्ताचराचरेति नय इत्यर्थः ।

या०— **विशेषतेति** । धर्मतेत्यर्थः । एवं भगवद्विशेषत्वेनेत्यत्रापि भगवद्धर्मत्वेनेत्यर्थो ज्ञातव्यः ।

श्री०— **अन्यथेति** । यदि क्रियादीनां व्यक्तिरपि नेत्यर्थः । **उक्तव्यवहाराणाम्** असाक्षीदित्यादिकादाचित्कानाम् । एवमुत्तरत्रापि । **तस्याः** व्यक्तेः । **विशेषात्मता** व्यक्तता ॥ **एवं तर्हीति** । शक्तिव्यक्त्योरभेद इत्यर्थः स्यात् । व्यक्त्यभिन्नशक्तेः सर्वदा सत्त्वादित्यर्थः । **विशेषता** धर्मता । **स्वरूपेति** । यदा भगवत्स्वरूपेणात्यन्ताभेदस्तदा तत्स्वरूपमात्रमेवोर्वरितमित्यर्थः । **सोऽपि** विशेषोऽपि । **तथाऽपि** भगवता भिन्नत्वेऽपि ।

सु०— एवं प्रतिज्ञा दर्शिता । तत्र बाधकानि परिहृतानि । अत्र चोदना । स्यादेवम् । यद्येतेष्वर्थेषु प्रमाणं स्यात् । न च तत्पश्याम इत्यतः सौत्रमुभयव्यपदेशादिति हेतुं व्याचष्टे विशेषत्वेनेति ।

**अनु०**— विशेषत्वेन विज्ञातेः प्रमाणैरखिलैरपि ।

अखिलैः **उभयविधैः** प्रमाणैः वेदवाक्यैर्ज्ञानादिधर्माणां भगवद्विशेषत्वेनापिशब्दात्तदभिन्नत्वेन च **विज्ञातेर्विज्ञानादित्यर्थः । ननु विज्ञातेरिति कथम् । 'आतश्चोपसर्गे' इत्यङः क्तिन्बाधकत्वात् । 'क्तिन्नाबादिभ्यश्चे'ति वचनाद्भविष्यति** । एतदेव **विवृणोति** ससर्जेति ।

ससर्ज सञ्जहारेति विशेषो ह्यवगम्यते ॥
श्रुत्यैव स स एवेति तदभेदश्च गम्यते ॥

**'स इदं सर्वमसृजते'त्यादिश्रुतिं ससर्जेत्यनेनोपादत्ते । तत्तदत्तुमध्रियते'त्यादिकां सञ्जहारेत्यनेन,** स आनन्दादिः सः **परमात्मैवेत्यनेन 'आनन्दो ब्रह्मे'त्यादिश्रुतिम् ।**

तदयमर्थः । **'स इदं सर्वमसृजत, उक्षा स द्यावापृथिवी बिभर्ति; तत्तदत्तुमध्रियत; स ऐक्षत सोऽकामयत; आनन्दम् ब्रह्मणो विद्वानि'त्यादिश्रुत्या सर्जनादिकं ब्रह्मणो विशेषोऽतिशयो न ब्रह्ममात्रमित्यवगम्यते । तन्मात्रत्वे क्रियाकर्तृभावादेरनुपपत्तेः । 'आनन्दो ब्रह्मेति व्यजानात्; सत्यं ज्ञानमनन्तं ब्रह्म; एकधैवानुद्रष्टव्यमि'त्यादिश्रुत्यैव तस्य तेनाभेदश्चावगम्यते । तदेवमुभयव्यपदेशान्यथाऽनुपपत्त्या सकलमिदं कल्प्यते । सर्वेषां ब्रह्मधर्माणां ब्रह्मणा सविशेषोऽत्यन्ताभेदः । क्रियादीनां नित्यता शक्तिव्यक्तिरूपता व्यक्तिरूपस्यापि नित्यता शक्तिरूपा-**

**भिन्नता सविशेषता विशेषस्याप्यभेदः स्वनिर्वाहकता चेति । न ह्येतेष्वर्थेष्वन्यतमस्याप्यकल्पनायामुदाहृतोभयव्यपदेशविरोधशान्तिर्भवतीति ।**

**एतदेव प्रपञ्चयितुं 'निदर्शनत्रयेण' इत्यतः प्राक्तनो ग्रन्थसन्दर्भः ।**

शे० — **भगवद्विशेषत्वेनेति** । भगवदतिशयत्वेनेत्यर्थः । नन्वातश्चोपसर्ग इत्यस्य क्तिन्नपवादकतया विपूर्वात् ज्ञाधातोः स्त्रियां क्तिन्निति प्राप्तक्तिन्बाधेनाकारान्तत्वादातश्चोपसर्ग इत्यनेन स्त्रियामङि प्रदेत्यादिवन्निष्पन्नविज्ञाशब्दस्य पञ्चम्येकवचनं विज्ञाया इति भवितव्यम् । विज्ञातेरिति तु कथमित्याक्षिपति **नन्विति** । 'क्तिन्नाबादिभ्यश्चेति वक्तव्यमि'ति वर्तिककृता आबादिभ्यो धातुभ्यः क्तिनोऽभ्यनुज्ञानादाबादेश्च 'अबादयः प्रयोगतोऽनुगन्तव्या' इत्याकृतिगणत्वादस्यापि तत्रोपसंख्येयत्वात् आप्तिर्दीप्तिर्लब्धिरित्यादाविवात्रापि क्तिनि सति विज्ञातेरित्यस्योपपत्तेरित्याशयेन समाधत्ते **क्तिन्निति** । ननु क्तिन्नाबादिभ्यश्चेति क्तिन्नुपसंख्याय निष्ठायां वा सेटोऽकारवचनात्सिद्धमिति ब्रुवतो वार्तिककारस्य गुरोश्च हल इत्यकारप्राप्तावेवाबादिभ्यश्चेति क्तिन्नभिमत इति गम्यते तत्कथमत्रातश्चोपसर्ग इत्यक्तिन् विषयेऽपि क्तिन्व्याख्यायत इति चेन्न । तथा सति लब्धिरित्यत्रापि क्तिन्नाबादिभ्यश्चेत्यनेन क्तिन्प्रत्ययानुपपत्तिप्रसङ्गात् । तस्य षित्वेन षिद्भिदादिभ्योऽङित्यङ् विषयत्वेन गुरोश्च हल इत्यकारविषयत्वाभावात् । यदि चोपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता' इति न्यायेनाबादेराकृतिगणत्वं स्वीकृत्य बाहुलकलभ्योऽपि लब्धिरबादिकुक्षौ निक्षिप्यत इति मन्यसे तर्ह्युक्तन्यायेन बाहुलकलभ्योऽपि विज्ञातिरबादिकुक्षौ निक्षिप्यत इत्यस्तु । यदि च लब्धेर्लब्धिरित्यादिप्रयोगबाहुल्याद्गुरोश्चहल इत्यकारविषय इव षिद्भिदादिभ्योऽङित्यङ्विषयेऽप्यबादिभ्यश्चेति क्तिन्नभिमत एव वार्तिककारस्येति मन्यसे तर्हि विज्ञातेरित्यादिश्रौतस्मार्तप्रयोगबाहुल्यादातश्चोपसर्ग इत्याङ्विषयेऽपि क्तिन्नभिमत एव तस्येति युक्त एवैतदङ्विषयेऽपि क्तिन्विधायकतयाऽस्योपन्यास इति तुल्यमित्याशयः । केचित्तु वृत्तिकृता क्तिन्नाबादिभ्यश्चेतिवचनं पुरस्कृत्य सर्वमेतत्समाहितमिति तन्मतमेवेह टीकायामुपन्यस्तमित्याहुः ॥ **विवृणोतीति** । ततश्च न पौनरुक्त्यमिति भावः ।

सकलमिदमित्युक्तमेव विशदयति **सर्वेषामिति** । इदं सकलमिति सम्बन्धः ।

स० — ननु विज्ञातेरित्ययुक्तं । आतश्चोपसर्गे इत्यनेनाङः क्तिन्बाधकत्वात् आङि सति प्रतिज्ञाया इति वत् विज्ञाया इति भवेदिति शङ्कते । **ननु विज्ञातेरितीति** ॥ क्तिन्नबादिभ्य इति अबादयश्च प्रयोगतोऽनुसर्तव्या इत्युक्तत्वेन तत्रानाऽऽप्युपसंख्येय इति भावः । नन्वातश्चोपसर्गे इत्यनेनाऽऽप्लृव्याप्तौ दीप् दीप्तौ डुलभष् प्राप्तौ इत्येतेषामाकारान्तत्वाभावेन दीप्तिर्लब्धिरित्यत्राऽऽङोऽप्राप्तत्वेन क्तिन्न-

बादिभ्य इत्यनेन कथं तद्बाध इति वाच्यम् । आप्तिः दीप्तिरित्यत्र गुरोश्च हल इत्यनेनाप्रत्ययप्राप्तेः लब्धिरित्यत्र च षिद्भिदादिभ्योऽजित्यनेनाङः प्राप्तेः तद्बाधकत्वोपपत्तेः ।

प० — **अत्र (परि)चोदनेति** । शंकेत्यर्थः ॥ **भगवद्विशेषत्वेनेति** । भगवद्धर्मत्वेनेत्यर्थः ॥ **आतश्चोपसर्ग इति** । तृतीयस्य तृतीयपादे षिद्भिदादिभ्योऽङ् चिंतिपूजिकथिकुंबिचर्चश्च आतश्चेति सूत्रक्रमे पूर्वस्मादङित्यनुवर्त्य उपसर्गे उपपदे आकारान्ताद्धातोरङ्प्रत्ययो भवतीत्यर्थकथनात् । पूर्वस्य ज्ञाधातोरङ्प्रत्यये स्त्रियां क्तिन्निति स्त्र्यधिकारात् अजाद्यतष्टाबिति टाप्प्रत्यये सति विज्ञेतिरूपेण भाव्यं । ननु क्तिनि प्रत्यये सत्यस्तु विज्ञातिरित्यपि रूपमित्यत आह इत्यङः **क्तिन्बाधकत्वादिति** । क्तिनोऽपवाद इति वृत्त्यादावुक्तेरिति भावः ॥ **क्तिन्नाबादिभ्य इति** । वार्तिकविहितक्तिनोऽबाधकत्वात् । आबादयः प्रयोगतोनुसर्तव्या इति वृत्त्यादावुक्तेराप्तिरित्यादिवत् विज्ञातिरित्यादि साध्विति भावः ॥ **एतदेवेति** । ईशनिष्ठत्वमीशाभिन्नत्वं च धर्माणां प्रमाणैर्ज्ञायत इत्येतदेवेत्यर्थः ॥ **उक्षेति** । उक्षा अभीष्टसेचकः । स भगवान् बिभर्ति द्यावाभूमिस्थान् जनानित्यर्थः । विशेष इत्यनुवादः । अतिशयित इति व्याख्या । धर्म इत्यर्थः ।

या०— **आतश्चोपसर्ग इति** । आकारान्तेभ्यो धातुभ्यः उपसर्ग उपपदे स्त्रियामङ्प्रत्ययो भवतीति सूत्रार्थः । उदाहरणं च प्रदा उपदा उपधेत्यादि द्रष्टव्यम् । एवं च ज्ञाधातोराकारान्तत्वा-द्विज्ञाया इत्येव वक्तव्यमिति भावः **क्तिन्बाधकत्वादिति** । क्तिनोऽपवाद इति काशिकायामुक्तत्वा-दिति भावः ॥ **क्तिन्नबादिभ्य इति** । अस्य वार्तिकस्य क्तिङपवादबाधकतया तस्य प्रतिप्रसवार्थत्वादिति भावः अबादयः प्रयोगतोऽनुसर्तव्या इति काशिकायामुक्तत्वादस्याबादिगणे पाठाभावात्कथमिदं समाधान-मिति चोद्यानवकाशः ॥ **अतिशय इति** । धर्म इत्यर्थः ।

श्री०— **एवं प्रतिज्ञेति** । सूत्रे हेतुदृष्टान्तयोरेवोक्तेस्तदभिन्ना इत्यनेनाचार्यैः प्रतिज्ञा दर्शिते-त्यर्थः ॥ **आतश्चेति** । विपूर्वकात् ज्ञाऽवबोधनेऽस्मात्स्त्रियां क्तिन्निति सूत्रेण क्तिन्प्रत्यये नकारककारयो-र्लोपे विज्ञातिरिति रूपं तस्य पञ्चमि विज्ञातेरिति भवतीति हि स्थितिः । तदुपरि शङ्का विज्ञा इति स्थिते स्त्रियां क्तिन्निति प्राप्तक्तिन्बाधकत्वेनातश्चेति सूत्रेणाङ्प्रत्ययविधानादत्राङ्प्रत्यये ङकारलोपे विज्ञा अ इति स्थिते सवर्णदीर्घे उपधा इतिवद्विज्ञा इत्येव स्यात् । तथा च विज्ञाया इत्येव वक्तव्यमित्यर्थः । उत्तरमाह **क्तिन्नाबादिभ्य इति** । तथा चास्य वार्तिकस्य स्त्रियां क्तिन्निति क्तिन्बाधकाङ्प्रत्ययबाधकत्वे-नापवादस्यापवादे पुनरुत्सर्गस्यैव स्थितिरिति न्यायेन क्तिन्प्रत्यये विज्ञातेरिति साधुः । **अतिशयो धर्मः** ॥ **क्रियेति** । ससर्जेति सर्जनादिक्रियाकर्तृत्वानुपपत्तेः । इदं किमित्यत आह **सर्वेषामित्या-दिना** । स्वनिर्वाहकता चेतीदं सकलं कल्प्यत इत्यन्वयः ।

**च०— आतश्चोपसर्ग इति ।** बिद्भिदादिभ्योऽङित्यनुवर्त्य प्रदा उपदा उपधेत्यादावाकारान्ताद्धातोरुपसर्गे उपपदेऽङ्प्रत्ययो भवतीत्यङो विहिततया तादृशाविपूर्वस्य जानातेरङ्प्रत्ययो स्त्रियामित्यधिकृत्य विहितेऽजाद्यतष्टाबिति टापि च सति विज्ञाया: इति न्यायेन भवितव्यतया विज्ञातेरिति न्यासौचिती दुरुपपादेत्यत आह **क्तिन्बाधकत्वादिति** । क्तिन्नोपवाद इति वामनः काशिकायामभ्यधादिति भावः । **क्तिन्नाबादिभ्यश्चेति** । एतद्वार्तिकस्य क्तिन्नपवादभूताङो बाधकतया तत्प्रतिप्रसवार्थत्वादिति भावः । आबादयः प्रयोगतोऽवगतव्या इति काशिकायामाकृतिगणत्वाभिधानादाप्तिदीप्तिलब्धीदीत्यादिवद्विज्ञातेरित्यस्यापि सूपपादत्वादिति भावः ।

**सु०— अथ मतम् । भेद एव ब्रह्मधर्माणां ब्रह्मणाऽस्तु । समवायेन विशेषणविशेष्यभावो भविष्यति । समवायदूषणानि च श्रुतिविरोधेनाभासतां यास्यन्ति । समवायाभावेऽपि वा धर्मधर्मिणोरेव स कोऽपि महिमा कल्प्यते । न चाभेदश्रुतिविरोधः । अनागन्तुकत्वेनोपचारोपपत्तेः । अतः किमभेदमादाय विशेषाद्यङ्गीकारेणेति ॥ अपर आह अखण्डमेव ब्रह्म न तु तत्र कश्चिद्विशेषः । न चापरश्रुतिविरोधः । क्रियादिविषयाणां सगुणविषयत्वात् । तस्य च मायामयत्वेनाविचारितरमणीयत्वात् । आनन्दं ब्रह्मण इत्यादीनां च राहोः शिर इत्यादिवदुपचरितत्वोपपत्तेरिति ॥ अन्यस्त्वाह भेदाभेदाभ्यामेवोभयव्यपदेशसामञ्जस्योपपत्तेः किमनया सविशेषाभेदकल्पनयेति ।**

**मैवम् । त्रिभिरप्येतैरन्ततोऽभिन्ने विशेषस्याङ्गीकर्तव्यत्वात् । ततो वरमादित एव तदङ्गीकरणमित्याशयवान्भेदवादिनं तावद्विशेषमङ्गीकारयितुमाह** भेद इति ।

अनु०— भेदो यदि विशेषस्य स भेदो भेदिना कथम् ॥

विशेषस्य **ज्ञानादेर्ब्रह्मधर्मस्य, यदि ब्रह्मणो भेदोऽङ्गीक्रियते तदा पृच्छामः । स भेदो,** भेदिना **ब्रह्मणा ज्ञानादिना च सह,** कथं **किं प्रकारः, प्रतिपत्तव्यः । किं भिन्नः किंवाऽभिन्न इति ।**

**आद्ये दोषमाह** भिन्नश्चेदिति ।

भिन्नश्चेदनवस्था स्यात्

**यदि भेदो भेदिभ्यां भिन्नस्तदा सोऽपि भेदस्तथेत्यनवस्था स्यात् । विशेषणविशेष्यभावादिप्रतिपत्तये खलु धर्मधर्मिणोर्भेदोऽभ्युपगम्यते । स च प्रतीयमान एव तद्धेतुः । तत्प्रतीतिश्च विशेषणादिभावेनैवेत्युत्तरोत्तरभेदप्रतीतिरवश्यमपेक्षितैवेति सुस्थाऽनवस्था ।**

**शे०** — नन्वेवमसम्बद्धहिमविन्ध्ययोरिव विशेषणविशेष्यभावावगतिर्न स्यादित्यतोऽत्र सम्बन्धसद्भावेन वैषम्यान्नानुपपत्तिरित्याह **समवायेनेति** । ननु समवायस्य वैशेषिकपरीक्षायां दूषितत्वान्न तेन तदुपपत्तिरित्यत आह **समवायेति** ॥ **महिमेति** । सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययजनकत्वरूपं स्वरूपसम्बन्धत्वमित्यर्थः ॥ **न चाभेदेति** । नेह नानाऽस्ति एकधैवानुद्रष्टव्यमित्यादिश्रुत्या ब्रह्मधर्माणां ब्रह्मणाऽभेदसिद्धेरिति भावः **अनागन्तुकत्वेनेति** । अनादित्वादिना ब्रह्मसादृश्यात्तद्भेदव्यपदेशो धर्माणां गौण इति भावः ॥ **न चापरेति** । विशेषप्रतिपादकश्रुतिविरोधो न चेत्यर्थः ॥ **राहोः शिर इत्यादिवदिति** । शिरस एव राहुत्वेन तयोरभेदेऽपि यथा सम्बन्धव्यवहारस्तद्वदित्यर्थः । आदिपदेन वृक्षस्य शाखेत्यादिपरिग्रहः । ननु धर्मधर्मिणोर्भेदस्यापि भेदिभ्यां भेद एवं तस्य तस्यापीति भेदपरम्परामात्रेण नानवस्था । उत्पत्तिज्ञप्त्यन्यतरप्रतिबन्धकत्वाभावादित्यतोऽत्र ज्ञप्तिप्रतिबन्धकत्वात्स दूषणमेवेत्यभिप्रेत्य तदुपपादयति **विशेषणेति** ॥ **स च प्रतीयमान एवेति** । अन्यथा दूरस्थयोर्दण्डदेवदत्तयोरपि विशेषणविशेष्यभावग्रहणापत्त्याऽभेदभ्रमाभावप्रसङ्गात् । न च दूरादिदोषात्तत्र विशेषणविशेष्यभावाग्रहणम् । अभेदभ्रमश्च भविष्यतीति वाच्यम् । भेदस्य स्वरूपसत्त्वैव विशेषणविशेष्यभावादिप्रतीत्युपयोगपक्षे दोषस्याकिञ्चित्करत्वादित्याशयात् ॥ **तत्प्रतीतिश्चेति** । इमौ भिन्नाविति विशेषणतया अनयोर्भेद इति तद्विशेष्यतया वा प्रतीयते न जातु चिद्भेद इत्येवं स्वतन्त्रो भेदः प्रतीयत इत्यर्थः । एकस्यैव भेदस्य द्विष्ठत्वपक्षे भेदद्वयाङ्गीकारेणान्यतरमात्राश्रयत्वेऽपि धर्मिप्रतियोगिभावमनपेक्ष्य सम्बन्धमात्रापेक्षायां गत्यन्तराभावादिति भावः । अस्त्वेवं विशेषणविशेष्यभावेनैव धर्मधर्मिभेदस्य प्रतिभास इत्यतो दण्डयादौ तद्भावप्रतिभासस्य यो विशेषणविशेष्यभूतयोर्दण्डदेवदत्तयोर्भेदग्रहस्तत्पूर्वकत्वदर्शनेन तद्भेदभेदिनोर्विशेषणविशेष्यभावग्रहणात्प्रागेव भेदान्तरग्रहणपूर्वकत्वस्यावश्याश्रयणीत्वाद्भेदान्तरग्रहणस्यापि विशेषणविशेष्यभावेन तत्प्रतिभासतया तद्भेदभेदिनोर्विशेषणविशेष्यभावग्रहणात्पूर्वभाविभेदान्तरग्रहणपूर्वकत्वम् । एवं तस्य तस्यापीत्यनवस्था । न च मूलक्षतेरभावान्नेयमनवस्था दूषणम् । विशेषणविशेष्यभावग्रहणहेतोः पूर्वपूर्वग्रहणस्यासिद्धौ तदसिद्ध्या मौलिकभेदासिध्या मूलक्षयसद्भावादित्याशयेनाह **इत्युत्तरोत्तरेति** ।

**स०** — **राहोः शिर इत्यादिवदिति** । शिरोविशिष्टस्यैव राहुत्वेन तयोरभेदेपि यथा संबन्धव्यवहार स्तद्वदित्यर्थः । ततश्च भेदोऽपीतिसंबन्धिनोः धर्मधर्मिणोरभावात् संबन्धिकपदार्थस्याभाव इति भावः ।

**प०** — **स कोऽपि महिमेति** । स ज्ञानी सुखीत्यादिविशिष्टधीहेतुः स्वरूपसंबन्धरूपोऽतिशय इत्यर्थः ॥ **न चापरश्रुतीति** । धर्मधर्मिभावबोधकश्रुतिविरोध इत्यर्थः ॥ **त्रिभिरप्येतैरिति** । वादिभि-

रित्यर्थः । अनवस्थायाः ज्ञप्तिप्रतिबंधकत्वेन दुष्टतां व्यनक्ति **विशेषणविशेष्यभावादीति** । सुखवाञ्ज्ञानवानित्यादिप्रतीतिसिध्यर्थमित्यर्थः ॥ **विशेषणादिभावेनेति** । घटादिवद्भेदोऽयमित्यप्रतीतेर्भिन्नोऽयमिति वास्य भेद इति वा तस्य प्रतीतेरिति भावः ॥ **सुस्थेति** । प्रथमज्ञप्तिप्रतिबंधादिति भावः ।

**या०— महिमेति** । सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययजनकत्वरूपं स्वरूपसम्बन्धत्वमित्यर्थः । **अनागन्तुकत्वेनेति** । युतसिद्धत्वाभावेनेत्यर्थः ॥ **न चापरश्रुतीति** । विशेषप्रतिपादकश्रुतिविरोधेनेत्यर्थः । ननूत्पत्तिज्ञप्त्यप्रतिबन्धकत्वात्कथमियमनवस्था दूषणमित्यत आह **विशेषणविशेष्यभावेति** ॥ **स च प्रतीयमान एवेति** । अन्यथा दण्डपुरुषयोः कदाऽप्यभेदभ्रमो न स्यात् । सर्वदा विशेषणविशेष्यभावेनैव ज्ञानं स्यात् । न स्याच्च कदाचिदभिन्नयोरपि विशेषणविशेष्यभावभ्रम इति भावः ॥ **विशेषणादिभावेनैवेति** । भेदः प्रतीयमानो न भेद इत्येव प्रतीयते किन्त्विमौ भिन्नाविति विशेषणतयाऽनयोर्भेद इति विशेष्यतया वेति भावः ॥

**श्री०— श्रुतिविरोधेनेति** । आनंदं ब्रह्मण इत्यादिभेदप्रतिपादकश्रुतिविरोधेनेत्यर्थः । अखण्डं निर्विशेषम् । **अपरश्रुतीति** । ब्रह्मणो निर्विशेषत्वे ब्रह्मणि क्रियादिविशेषप्रतिपादकश्रुतिविरोध इत्यर्थः । नन्वथाऽपि श्रुतीनां सगुणब्रह्मविषयत्वे सत्यभूतं ब्रह्माखण्डं निर्गुणमित्येतद्गतमित्यत आह **तस्य चेति** । सगुणब्रह्मण इत्यर्थः ॥ **राहोरिति** । अमृतसम्बद्धशिरस एव राहुग्रहत्वस्य स्मृतिसिद्धत्वेन राहोः शिर इत्येतदुपचरितं यथा तथा ब्रह्मण एवानन्दरूपत्वेन ब्रह्मण आनन्द इत्येतदुपचरितमित्यर्थः ॥ **आदित एवेति** । भगवतस्तद्धर्माणां चाभेदमङ्गीकृत्य तत्र विशेषाङ्गीकरणमेव वरमित्यर्थः । **स च भेदः । तद्धेतुः** विशेषणविशेष्यभावप्रतीतिहेतुः । तत्प्रतीतिश्च भेदप्रतीतिश्च ॥ **सुस्थाऽनवस्थेति** । ननु विशेषणीभूतप्रतीतेरावश्यकत्वेऽपि न तद्गतं भेदान्तरमपि प्रत्येतव्यम् । न हि विशेषणीभूतो भेदोऽपि भिन्नोऽयं भेद इति प्रतीयते । येन तद्गतभेदान्तरस्यापि विशेषणतया तत्प्रतीतेरप्यावश्यकत्वेनानवस्था किन्त्वनयोर्भेद इति । तथा च कथमनवस्थेति चेन्न । विशेषणीभूतभेदस्येतरसङ्कीर्णताया ज्ञाने विशेषणत्वस्यानयोर्भेद इत्यसङ्कीर्णव्यवहारस्य चायोगेनासङ्कीर्णतया ज्ञातत्वे वाच्ये भिन्नत्वेनैव ज्ञानस्य प्राप्तत्वात् । भिन्नत्वातिरिक्तासङ्कीर्णताया अभावादित्यभिप्रेतत्वात् । न तृतीयेऽनवस्थापत्तेरिति भेदाभेदयोर्भेदान्तराङ्गीकारेऽनवस्थोत्तरान्तरं तत्रोच्यते । तत्राप्येवमेवोपपादनं द्रष्टव्यम् । तथा हि । विशेषणीभूतभेदाभेदगतं भेदाभेदान्तरमप्यवश्यं ज्ञातव्यम् । न हि सङ्कीर्णतया ज्ञातस्य विशेषणत्वम् । नाप्यत्यन्तविविक्ततया ज्ञातस्य मेरोरपि मन्दरविशेषणत्वप्रसङ्गात् । दण्डसम्बन्धस्यैव देवदत्तविशेषण-

वात् । अतो विशेषणत्वान्यथाऽनुपपत्त्यैव भेदाभेदवत्त्वेन ज्ञानमावश्यकमिति तत्राप्यनवस्था दुष्परिहरेति ।

**सु०— अभिन्नत्वेऽपि वक्तव्यं सविशेषाभिन्न उत निर्विशेषाभिन्न इति ।**

**प्रथमे दोषमाह** अभिन्नश्चेदिति ।

**अनु०** -- अभिन्नश्चेत्पुरा न किम् ॥

पुरा न किमिति । **धर्माणां धर्मिणा सविशेषाभेदः किन्नाङ्गीक्रियतेऽङ्गीकार्य एवेत्यर्थः । भेद इव विनाऽपि भेदेन विशेषेणैवोपपत्तावपि वृथा परम्पराकल्पनायां गौरवं स्यात्ततो धर्माणामेव सविशेषाभेदाङ्गीकारः श्रेयानिति भावः । अस्त्वेवमित्यत आह** विशेष इति ।

विशेषोऽभिन्न एवे**ति** तेन नाभ्युपगम्यते ॥

विशेषो **धर्मोऽभिन्न इत्येव तावत् ।** तेन **भेदवादिना नाभ्युपगम्यते । दूरे सविशेषत्वमित्यतोऽपसिद्धान्तः स्यात् । समीहितं च नः (न) सिद्ध्येदित्याशयः ।**

**द्वितीयं दूषयति** अभिन्न इति ।

अभिन्नो निर्विशेषश्चेद्भेदस्तद्भेदता कुतः ।

**भेदो यदि भेदिभ्यामभिन्नो निर्विशेषश्च स्यात्तदा तस्य** तद्भेदता **तयोरयं भेद इत्येवम्भावः** कुतो **न कुतोऽपि । तदीयताया भेदेन विशेषेण वा विनाऽनुपपत्तेः । तन्मात्रत्वे च धर्मधर्मिणावेव स्तो न भेद इति स्यात् । तथा च धर्मधर्मिणावित्यपि न स्यात् । भेद एवास्ति न धर्मधर्मिणाविति वा भवेत् । ततश्च भेदोऽपि न स्यादिति ।**

**शे०**— ननु भेदस्य भेदिभ्यामादावेव भेदाभ्युपगमात्पुरा न किमिति रिक्तं वच इत्यतस्तस्योक्तेरभिप्रायमाह **पुरेति** । कथं धर्मधर्मिणोर्भेदं विना विशेषणविशेष्यभावप्रतीतिरित्यतो यथा भेदस्य भेदिभ्यां भेदाभावेऽपि तत्र विशेषणविशेष्यभावादेर्विशेषेणैवोपपत्तिस्तथा धर्मधर्मिणोरसत्यपि भेदे विशेषेणैव विशेषणविशेष्यभावादेरुपपत्तौ भेदपरम्पराङ्गीकारे कल्पनागौरवापत्तेर्न भेदाङ्गीकारो युक्त इत्याह **भेद इवेति ॥ तदीयताया इति** । अभेदाभ्युपगमान्न भेदेन तदीयतानिर्वाहः । तस्य च निर्विशेषत्वाभ्युपगमान्न विशेषेणापि तदुपपत्तिरिति भावः । भेदस्य धर्मिणा निर्विशेषाभेदाभ्युपगमेऽन्यतरमात्रपरिशेषश्च स्यादित्याह **तन्मात्रत्वे चेति** । इष्टापत्तिं परिहरति **तथा चेति** । द्वित्वस्य भेदाविनाभूतत्वादिति भावः । प्रकारान्तरेणान्यतरावशेषमुपदर्शयति **भेद एवेति** । अत्रापीष्टापत्तिं परिहरति **ततश्चेति** । संबन्धिनोरभावे ससंबन्धिकपदार्थाभावनियमादिति भावः ।

**प०—** यदि धर्मधर्मिणोरभेदः तर्हि धर्मिव्यवहारः कथं तत्कारणस्य भेदस्याभावादित्यत आह **भेद इवेति**। भेद इति सप्तमी यथा भेदभेदिभ्यां सह भेदाभावेपि विशेषबलेन भेदभेदिव्य-वहार आशास्यते तद्वद्धर्मधर्मिणोरभेदेऽपि विशेषेणैव व्यवहारो भविष्यतीति भेदं प्रकल्प्य तस्य भेदिभ्यां सविशेषाभेदांगीकारो गौरवग्रस्त इति भावः ॥ **ततश्चेति**। भेदिनोरभावतश्चेत्यर्थः।

**या०—** **निर्विशेषाभिन्न इति**। घटकरीरादिवदिति भावः ॥ **ततश्च भेदोऽपीति**। भेदिनोर-भावे भेदस्याप्यनुपपत्तिरिति भावः।

**श्री०—** **भेद इवेति**। यथा भेदो ब्रह्मज्ञानरूपभेदिभ्याममभिन्नस्तद्वदित्यर्थः। विनाऽपि भेदेन ज्ञानब्रह्मरूपधर्मधर्मिणोः। उपपत्तौ (धर्मधर्मिभावस्य) विशेषणविशेष्यभावस्येति भावः **परम्परेति**। धर्मधर्मिणोर्भेद एव' स च भेदो धर्मधर्मिरूपभेदिभ्याममभिन्न इति परम्परेत्यर्थः। अङ्गीकारो धर्मिण इति शेषः। तटस्थः शङ्कते ॥ **अस्त्वेवमिति**। धर्माणां धर्मिणा सविशेषाभेदोऽस्त्वित्यर्थः ॥ **अनु-पपत्तेरिति**। तयोश्च त्वयाऽनङ्गीकारादिति भावः। एकतरपरिशेषश्च स्यादित्याह **तन्मात्रत्व इति**। तस्य भेदस्य धर्मधर्मिमात्रत्वे धर्मधर्मिभ्यां निर्विशेषात्यन्ताभेदे सतीत्यर्थः। **न स्यादिति**। द्वित्वस्य भेदव्याप्तत्वादिति भावः।

---

**सु०—** भेदस्य भेदिस्वरूपत्वमङ्गीकृत्य विशेषमनङ्गीकुर्वाणं प्रति दूषणान्तरमाह अनेनेति।

**अनु०—** अनेनानेन भिन्नोऽयमिति यत्सविशेषतः ॥
भेद एवैष बहुधा दृश्यते तत्किमुत्तरम् ॥

**भिन्नोऽयं घट इति स भेद एव विशेषतो विशेषणत्वेन दृश्यते न तु घटः; किन्तु विशेष्यत्वेन। तथाऽनेनानेन। व्यत्ययोबहुलमिति पञ्चम्यर्थे तृतीया। सहयोगे वा। पटा-द्भिन्नस्तम्भाद्भिन्नो घट इत्येष भेद एव सविशेषतः प्रतियोगिविशेषसाहित्येन दृश्यते। तथाऽयं पदार्थोऽनेन वक्रत्वेनानेन कोटरवत्त्वेन पुरुषाद्भिन्न इति स एष भेद एव** विशेषतो व्यावर्तक-धर्मेण दृश्यते। पदार्थस्त्वक्षसन्निकर्षमात्रेण। तथाऽस्मात्पटादस्मात्स्तम्भादस्मात्कुड्याद्भिन्नो-ऽयं घट इत्येष भेद एव सविशेषतः प्रतियोगिविशेषसाहित्येन निमित्तेन बहुधा दृश्यते। घटस्त्वेकधैव। अतो न भेदो घटस्य स्वरूपमिति यत्स्वरूपभेदस्य दूषणं परैरुच्यते। तत्तस्य किमुत्तरं त्वयाऽभिधास्यते, यदि विशेषो नाङ्गीक्रियते; इत्यर्थः। यदि विशेषो नाङ्गीक्रियते तदा भेदो भेदिनाऽभिन्न इत्यपि नाङ्गीकर्तुं शक्यते। भेदभेदिनोर्भेदसाधकानामनेकेषां

भावात् । विशेषेणैव हि तेषामन्यथासिद्धिं व्युत्पाद्य प्रतीतिबलेन भेदस्य भेदिनाऽभेदो वक्तव्यो नान्यथेति भावः ।

तदीयत्वेन विशेषणत्वेन सप्रतियोगित्वेन लिङ्गित्वेन बहुत्वेन च प्रतीयमानोऽन्योन्याभावादिरूपो भेदो न भेदिस्वरूपतयाऽङ्गीक्रियते । यस्तु स्वरूपतयाऽङ्गीक्रियते नासौ तदीयत्वादिना प्रतीयत इति तस्योत्तरं ब्रूम इति चेन्न । अस्यैव प्रसिद्धत्वादन्यस्य तदभावात् । अन्यथा स्वरूपस्यैव भेद इति पारिभाषिकं नामान्तरमुक्तं स्यात् । न चाद्वैतवादिनः स्वरूपं नाङ्गीकुर्वते । तत्किमनेन भेदेन । तदिदमुक्तं स एष इति प्रसिद्धिद्योतकाभ्याम् ॥ तदीयत्वादिरुपचार इति चेन्न । प्रतीतेः स्फुटत्वात् । बाधकाभावेनाभ्रान्तित्वाच्च । तदिदमप्युक्तं दृश्यत इति ।

**शे० — मूले भिन्न इति ॥ अनेनेति ॥ सविशेषत इति ।** बहुधेत्याद्यनेकविशेषणवैयर्थ्यमित्याशङ्क्य तत्तदर्थविशेषसूचकत्वान्न तस्य वैयर्थ्यमित्याशयेन तदुपदर्शयन्नेव वाक्यं खण्डशो व्याचष्टे **भिन्न इत्यादिना ।** मूले विशेषपदं विशेषणपरम् । तच्च भावप्रधानम् । आद्यादित्वात्तृतीयान्तात्तसिरित्यभिप्रेत्य विशेषत इत्यनूद्य व्याचष्टे **विशेषतो विशेषणत्वेनेति ।** अस्मिन्पक्षे छान्दसत्वं कल्पनीयं भवतीत्यपरितोषात्प्रकारान्तरेण तृतीयोपपत्तिमाह **सहयोगे वेति ।** तात्पर्यमाह **यदीति ॥ अनेकेषामिति ।** तदीयत्वादीनामित्यर्थः । स एष इत्येतद्व्यावर्त्यमाशङ्कते **तदीयत्वेनेति ।** अयं च तद्भेदता कुत इत्यस्यानुवादः । विशेषणत्वेनेत्यादिस्तु अनेनानेन भिन्नोऽयमित्यादिनोक्तस्येति द्रष्टव्यम् ॥ **लिङ्गित्वेनेति ।** व्यावर्तकधर्मानुमेयत्वेनेत्यर्थः । अन्योन्याभावादिरूप इत्यादिपदेन पृथक्त्वपरिग्रहः ॥ **अस्यैवेति ।** विशेषणत्वादिना प्रतीयमानस्यान्योन्याभावस्यैव भेदत्वेन प्रसिद्धत्वादित्यर्थः ॥ **अन्यस्येति ।** अन्योन्याभावातिरिक्तभेदस्य भेदत्वेन प्रसिद्ध्यभावादित्यर्थः ॥ **अन्यथेति ।** अन्योन्याभावातिरिक्तस्वरूपस्यैव भेदत्वाङ्गीकार इत्यर्थः । किमत इत्यत आह **न चाद्वैतवादिन इति ।** तथा च स्वरूपमात्रस्याद्वैतवादिनाऽप्यङ्गीकारान्नैतादृशभेदसमर्थनं तं प्रत्यर्थवदिति भावः । दृश्यत इत्येतद्व्यावर्त्यं शङ्कते **तदीयत्वादिति ।** उपचार इति कोऽर्थः तथा व्यवहारमात्रमेवास्ति न प्रतीतिरिति वा किंवाऽस्त्येव प्रतीतिः किन्तु सा भ्रान्तिरिति वेति विकल्पद्वयं मनसि निधायाद्यमनुभवविरोधेन दूषयति **प्रतीतेरिति ।** द्वितीयं प्रत्याह **बाधकाभावेनेति ।**

**स० — अस्यैव प्रसिद्धत्वादिति ।** विषाणत्वादिना प्रतीयमानस्यान्योन्याभावस्यैव भेदत्वेन प्रसिद्धत्वादित्यर्थः ॥ **अन्यस्येति ।** अन्योन्याभावातिरिक्तस्येत्यर्थः । **तदभावात्** भेदत्वेन प्रसिद्ध्यभावात् ।

**प०** — 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्त' इति अन्यशब्दार्थयोगे पञ्चमी विधानात् कथं तृतीयेत्यत आह **व्यत्ययो बहुलमिति** । अस्यापि छन्दस्तुल्यत्वादेवमुक्तम् । **सहयोगे वेति** । 'सहयुक्तेऽप्रधान' इति सूत्रे सहपदाप्रयोगेपि तदर्थविवक्षायां तृतीया भवतीति युक्तग्रहणेन ज्ञापितत्वादिति भावः ॥ **पटाद्भिन्न इति** । घट इत्याकृष्यते साहित्येनेति प्रकारे तृतीया । धर्मेणेत्यत्र ज्ञापकेनेति ज्ञेयम् । अभिन्न इत्यपीति पदविभागः । शङ्कामुखेन प्रागुक्तं सर्वं निष्कृष्यानुवदति **तदीयत्वेनेत्यादिना** । तद्भेदता कुत इत्यस्यानुवादः **तदीयत्वेनेति** । अभिन्नश्चेदनवस्थेत्यत्र प्रतीयमानो भेदो विशेषणादिभावेनैवेत्युक्तमनुवदति **विशेषणत्वेनेति** । अनेन 'अनेने'तिश्लोकस्य योजनात्रयेण लब्धमर्थमनुवदति **सप्रतियोगि(क)त्वेनेत्यादिना** ॥ **लिङ्गित्वेन** वक्रकोटरत्वादिलिङ्गानुमेयत्वेनेत्यर्थः ॥ **अस्यैवेति** । अन्योन्याभाववैधर्म्यादिरूपस्यैवेत्यर्थः ॥ **तदभावात्** प्रसिद्ध्यभावादित्यर्थः । **अद्वैतवादिन इति** । भेदस्य भेदिना निर्विशेषाभेदवादिन इत्यर्थः ॥ **उपचार इति** । तथा व्यवहार एव न प्रतीतिरित्यर्थः ॥ **स्फुटत्वादिति** । पटाद्धटो भिन्न इति जानामीति प्रतीतत्वस्य साक्ष्यनुभवसिद्धत्वादित्यर्थः ।

**या०** — तद्भेदता कुत इत्युक्तानुवादः **तदीयत्वेनेति** । विशेषणत्वेनेत्यादिस्तु अनेन भिन्नोऽयमित्यादिनोक्तानुवाद इति ज्ञातव्यम् ॥ **लिङ्गित्वेनेति** । व्यावर्तकधर्मानुमेयत्वेनेत्यर्थः । अन्योन्याभावादिरूप इत्यत्र दिपदेन पृथक्त्वसंग्रहः । **अद्वैतवादिनो** भेदाभाववादिनः ॥ **उपचार इति** । तथा व्यवहारमात्रं न प्रतीतिरस्तीति भावः । स्फुटत्वात् साक्षिसिद्धत्वात् ।

**श्री०** — न तु घटो विशेषणत्वेन दृश्यत इत्यनुवर्तते । सहयोगे तृतीयेत्येतदुपपादयति **तथेति** ॥ **व्यावर्तकधर्मेणेति** । व्यावर्तकधर्मानुमेयत्वेनेत्यर्थः । अनेकेषां तदीयत्वादिहेतूनाम् । **तदीयत्वेनेत्यादि** । तदीयत्वेन भेदप्रतीतिस्तद्भेदतेत्यनेनोक्ता विशेषणत्वेन प्रतीतिश्चानेनेत्यनेनोक्ता । भिन्नोऽयमित्यारभ्य विशेषत्वेनेत्यन्तेनोपपादिता । सप्रतियोगिकत्वेन प्रतीतिश्चाप्यनेनेत्यनेनोक्ता तथा अनेनेत्यारभ्य दृश्यत इत्यन्तेन उपपादिता । लिङ्गित्वेन व्यावर्तकधर्मानुमेयत्वेन प्रतीतिश्चाप्यनेनेत्यनेनोक्ता । तथाऽयं पदार्थोऽनेन वक्रत्वेनेत्यारभ्य सन्निकर्षमात्रेणेत्यन्तेनोपपादिता । बहुत्वेन प्रतीतिश्च बहुधेत्यनेनोक्ता । तथैवेत्यारभ्यैकधैवेत्यन्तेनोपपादिताऽनुसन्धेया । अन्योन्याभावादीत्यादिपदेन पृथक्त्वम् । **यस्त्विति** । स्वरूपभेद इत्यर्थः । पृथक्त्वाभावतद्रूपान् भेदांस्त्वीनहं कल्पयामीति भावः । **अस्यैव** अन्योन्याभावरूपभेदस्यैव । प्रसिद्धत्वात् । भेदशब्दार्थतयेति शेषः । **अन्यस्य** स्वरूपभेदस्य । **तदभावात्** भेदशब्दार्थत्वेन प्रसिद्ध्यभावात् ॥ **अन्यथेति** । स्वरूपभेदस्यैव भेदशब्दार्थत्वे येऽद्वैतवा-

**दिनः** स्वरूपमात्रमङ्गीकृत्य भेदं नाङ्गीकुर्वन्ति तान्प्रति हि भेदस्त्वया साधनीयः । स्वरूपस्यैव भेदशब्दार्थत्वे तादृशभेदसाधनं तान्प्रति त्वत्क्रियमाणमयुक्तम् । कुत इत्यत आह **न चेति** । असद्विलक्षणस्वरूपाङ्गीकारादिति भावः ॥ **उपचार इति** । तदीयत्वव्यवहारमात्रमेव । न तद्विषयिणी प्रतीतिरस्ति । अस्ति चेत्सा भ्रमरूपैव न प्रमारूपा । तथा चोभयथाऽपि न तदीयत्वादिप्रतीतीनां भेदसाधकत्वमिति भावः ।

सु०— **दूषणान्तरमाह** अभेदेति ।

अनु०— अभेदभेदयोश्चैव स्वरूपत्वं हि भेदिनः ।

**न केवलं भेदस्य । किन्त्वभेदस्य च भेदिनः स्वरूपत्वमेवेति योजना । यो भेदस्य भेदिना घटेनाभेदमङ्गीकरोति । तेन तस्याभेदस्यापि घटस्वरूपत्वमेवाङ्गीकरणीयम् । भेदसमानन्यायत्वादिति हिशब्दार्थः । ततः किमित्यत आह** तयोरपीति ।

तयोरपि

**अभेदोऽङ्गीकार्य इति शेषः । अस्त्वेकेन घटेनात्यन्ताभिन्नयोरभेदभेदयोरभेदस्ततोऽपि किमित्यत आह** अविशेषत्व इति ।

अविशेषत्वे पर्यायत्वं हि शब्दयोः ।

**अभेदभेदयोरत्यन्ताभेदे विशेषे चासत्यभेदाभेदशब्दयोः पर्यायत्वं स्यात् । एकार्थवाचित्वाद्घटकलशशब्दवदिति हिशब्दार्थः । अस्त्वित्यत आह** अभेदेति ।

अभेदभेदशब्दौ च पर्यायाविति को वदेत् ।

को वदेत् **न कोऽपि । प्रत्युतापर्यायावित्येव वदति सर्व इत्यप्रामाणिकं प्रमाणविरुद्धं चैतदिति ।**

**एतदुक्तं भवति । भेदो भेदिनाऽभिन्नस्तन्न्यायेन सोऽभेदोऽपि ततस्तावन्योन्यमप्यभिन्नाविति तावत्तत्त्वम् । तथा च भेदाभेदशब्दयोः पर्यायत्वप्राप्तौ विशेषबलेनैव हि तत्परिहरणीयम् । तस्य चानङ्गीकारे दुष्परिहरं तदापद्येतेति ।**

**ननु भेदभेदिशब्दयोरपि पर्यायत्वमापादयितुमुचितम् । सत्यम् । शिष्यैरूह्यतामिति नोक्तम् ।**

शे०— यथाश्रुते विरुद्धार्थयोश्चैवशब्दयोरेकत्रान्वयानुपपत्तेः समुच्चेयालाभाच्च वाक्यस्य यथावद्योजनामाह **न केवलमिति ॥ योजनेति** । यद्यप्यभेदयोश्चेति समस्तं पदं तथाऽपि बुद्ध्या

**विवेकेन योजनेति** द्रष्टव्यम् **भेदसमानेति** । येन न्यायेन भेदस्य भेद्यभिन्नत्वमङ्गीकृतं तेनैव न्यायेनाभेदस्यापि भेद्यभिन्नत्वमेव वाच्यम् । भेदपक्षेऽनवस्थानादित्यर्थः ॥ **अभेदोऽङ्गीकार्य इतीति** । यद्यदत्यन्ताभिन्नेनात्यन्ताभिन्नं तत्तेनात्यन्ताभिन्नमिति व्याप्तेरिति भावः ॥ **पर्यायत्वमिति** । क्रमेण प्रयोज्यत्वमित्यर्थः । एकस्मिन्वाक्ये प्रयोगानर्हत्वमिति यावत् । प्रमाणविरुद्धत्वस्यापि लाभाय मूलमुपलक्षणतया योजयति **प्रत्युतेति** । समुदायार्थमाह **एतदिति** ॥ **सोऽभेदोऽपीति** । भेदिना घटेनाभिन्न इति वर्तते ॥ **तन इति** । एकेन घटेन भेदाभेदयोरत्यन्तभिन्नत्वादित्यर्थः । तौ भेदाभेदौ ॥ **आपादयितुमुचितमिति** । भेदभेदिनोरप्यत्यन्ताभिन्नत्वेन भेदभेदिशब्दयोरप्येकार्थत्वादिति भावः ।

**प०** — चशब्दस्यार्थो **न केवलमिति** । एवशब्दान्वयं दर्शयति **स्वरूपत्वमेवेति** । भेदाभेदयोरिति **च** शेषः ।

**या०** — **योजनेति** । बुद्ध्या विवेकेन योजनेत्यर्थः ।

**श्री०** — मूले तयोरपीत्यस्याभेदभेदयोरपीत्यर्थः । द्वयोरप्येकेन घटेनात्यन्ताभिन्नत्वाद्यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तेरिति भावः ॥ **उचितमिति** । तथा च भेदाभेदशब्दयोः पर्यायत्वापादनं किमर्थमाचार्यैः कृतमित्यर्थः ।

---

**सु०** — **शङ्कते** भेद इति ।

अनु० — भेदोऽन्योन्यमभेदश्च भेदिना चेत्

**यद्यपि भेदाभेदयोः** भेदिना घटेन **महाभेदस्तथाऽपि तयोरन्योन्यं भेदोऽस्तीति न तच्छब्दयोः पर्यायत्वं** प्रसज्यते । **तत्किं विशेषेणेति** । **परिहरति** विशेषितेति ।

विशेषिता ।

**एवमङ्गीकुर्वाणेनाप्यभिन्ने वस्तुनि विशेषिताऽङ्गीकरणीयैवेत्यर्थः । तत्कथमित्यत आह** अविशेष इति ।

अविशेषे कथं भेदो भेदिनैकस्तथाऽभिदा ॥
पुनस्तयोर्विभेदश्च भेदिमात्रत्वतो भवेत् ॥

**विशेषाभावे भेदो भेदिना** एकोऽभिन्नस्तथाऽभिदा भेदिना **घटेनाभिन्ना, पुनस्तयोर्भेदाभेदयोः परस्परं भेदश्चेति कथमुपपन्नं भवेत् । कुतो न भवेत् । भेदाभेदयोर्भेदिमात्रत्वतः । अन्यथा घटस्यापि स्वतो भेदः स्यात् । घटेनाभिन्नयोर्भेदाभेदयोः परस्परं भेद(कार्य)निर्वाहार्थं घटेन सविशेष एवाभेदोऽङ्गीकार्य** इति भावः ।

**शे०— न तच्छब्दयोरिति ।** उक्तयुक्तेरप्रयोजकत्वेन भेदाभेदयोरभेदासिद्धेर्न तच्छब्दयोरेकार्थवाचित्वमिति न पर्यायत्वमिति भावः ॥ **भेदिमात्रत्व इति ।** भेदिना घटेन निर्विशेषाभिन्नत्वादित्यर्थः । युक्तेरप्रयोजकत्वं परिहरति **अन्यथेति ।** अविशेषादिति भावः । ( भेदाभेदयोर्घटाभिन्नत्वेऽपि पुनर्भेदाङ्गीकार इत्यर्थः ) । वाक्यतात्पर्यमाह **घटेनेति ।**

**प०—** चशब्दः यद्यपि तथापीत्यर्थे इत्युपेत्य वाक्यं योजयति **यद्यपीत्यादिना ।** भेदिनेत्यनुवादो घटेनेति व्याख्या ।

**श्री०—** भेदिना घटेनेत्यत्र भेदिनेत्युपलक्षणम् । अभेदिनेत्यपि द्रष्टव्यम् ॥ **अन्यथेति ।** भेदाभेदयोर्घटाभिन्नत्वेऽपि पुनर्भेदाङ्गीकार इत्यर्थः । ननु कथमनेन विशेषाङ्गीकारः प्राप्त इत्यतो मूलाभिप्रायमाह **घटेनेति ॥ अन्योन्येति ।** भेदभेदिनोरभेदाभेदिनोश्चाङ्गीकृतौ यौ अभेदभेदविशेषौ तयोरन्योन्यसमुच्चयार्थावित्यर्थः ॥ **परस्परमिति ।** भेदस्याभेदस्य च धर्मिणा सविशेषाभेदेऽपि भेदाभेदयोः परस्परं भेद एवाङ्गीक्रियते । न त्वभेदो नापि विशेष इत्येवं सविशेषाभेदव्यावृत्त्यार्थावित्यर्थः ।

**सु०— शङ्कते** भेदिनश्चेति ।

अनु०— भेदिनश्चैव भेदस्य विशेषो यदि गम्यते ॥

---

अभेदाभेदिनोश्चैव

**चशब्दावन्योन्यसमुच्चयार्थौ । एवशब्दौ परस्परं सविशेषाभेदव्यावृत्त्यर्थौ । गम्यतेऽभ्युपगम्यते । भेदस्य भेदिनश्च घटस्याभेदो विशेषश्च मयाऽभ्युपगम्यते । तथाऽभेदस्याभेदिनश्च तस्य सविशेषोऽभेदोऽभ्युपगम्यते । तथा च भेदाभेदयोर्घटतन्मात्रत्वाभावेन परस्परं भेदोपपत्तेर्न शब्दयोः पर्यायत्वम् । ततश्च भेदाभेदयोः परस्परमभेदो विशेषश्चाङ्गीकार्य इत्यसदिति भावः ।**

**एवमपि धर्मधर्मिणोर्भेदमभ्युपगच्छताऽन्ततोऽभिन्ने वस्तुनि विशेषोऽङ्गीकर्तव्य इत्यभिमतं यद्यपि सिद्धमेव, तथाऽप्युक्तं तत्त्वं न परित्याज्यमित्याशयवान्परिहरति** किमिति ।

किं भेदोऽभेदभेदयोः ॥

**एवश्चेदभेदभेदयोर्भेदः कस्मात्कल्प्यते । तयोरपि सविशेषाभेद एवाङ्गीकर्तव्यः । तत्रोपपत्तिमाह** विशेषेणैवेति ।

विशेषेणैव सर्वत्र यदि व्यवहृतिर्भवेत् ॥

कल्पनागौरवायैव किं भेदः कल्प्यते तदा ॥

सर्वत्र भेदभेदिनोरभेदाभेदिनोश्चाभेदेऽपि विशेषेणैव तन्मात्रताभावनिबन्धना व्यवहृतिर्भवेदित्यङ्गीकृतं चेद्भेदाभेदयोस्तर्हि भेदः किं कल्पनागौरवायैव कल्प्यत इति सोल्लुण्ठवचनम् । भेदाभेदयोर्घटेनेव परस्परमपि सविशेषत्वेनैव सर्वस्योपपत्तौ भेदकल्पने कल्पनागौरवं स्यात् । अनेकपदार्थकल्पनात् द्विधा कल्पनाच्चेति भावः ।

अस्त्वेवं ततः किमायातं प्रकृत इत्यत आह विशेषेणैवेति । भेदस्य भेदिनाऽभेदेऽपि तदीयत्वादिव्यवहृतिर्भेदाभेदयो(श्च)र्घटेनाभेदेऽप्यपर्यायशब्दव्यवहृतिर्यदि विशेषेणैव भवेत् तदा धर्मधर्मिणोरपि भेदः किं कल्पनागौरवायैव कल्प्यते । धर्मधर्मिणोर्भेदमङ्गीकृत्याप्यन्ततो विशेषोऽङ्गीकार्यः ततो वरमादित एव तदङ्गीकरणम् । अन्यथा कल्पनागौरवप्रसङ्गादिति । एतेन पुरा न किमितिविवृतं भवति ।

शे० — **अन्योन्येति** । पूर्वोत्तरार्धयोरिति शेषः । (भेदभेदिनोरभेदाभेदिनोश्चाङ्गीकृताविमावभेदविशेषौ तयोरन्योन्यसमुच्चयार्थावित्यर्थः) ॥ **परस्परमिति** । भेदाभेदयोरिति शेषः । (भेदस्याभेदस्य च धर्मिणा सविशेषाभेदेऽपि भेदाभेदयोः परस्परभेद एवाङ्गीक्रियते न त्वभेदो नापि विशेष इत्येवं सविशेषाभेदव्यावृत्त्यर्थावित्यर्थः ) ॥ **अभेदो विशेषश्चेति** । अनेन भेदिनश्चेत्यादि चशब्दद्वयं न केवलमन्योन्यसमुच्चयार्थमित्येव किन्तु विशेषश्चेत्यपि संबन्धनीयम् । तत्र चशब्दावनुक्तस्याभेदस्य समुच्चयार्थावित्यपि द्रष्टव्यमित्युक्तं भवति ॥ **अभेदिनश्च तस्येति** । घटस्येत्यर्थः । यद्यपि भेदिमात्रत्वत इति पूर्वग्रन्थानुरोधेनाभेदभेदिनोरित्येव मूले, तथाऽभेदस्य भेदिनश्च तस्येत्येव टीकायां च वक्तुमुचितं तथाऽपि भेदसंबन्धित्वाद्घटस्य भेदित्ववदभेदसंबन्धित्वादभेदित्वमप्यस्तीति ज्ञापयितुमेवमुक्तम् । अर्थस्तु पाठद्वयेऽपि घटस्येत्येव द्रष्टव्यम् ॥ सविशेषो भेदोऽभ्युपगम्यत इति विशेषश्चेत्यस्यानुवृत्तिः पूर्ववदर्थश्चेत्युक्तं भवति ॥ **शब्दयोरिति** । भेदाभेदशब्दयोरित्यर्थः ॥ **असदिति भाव इति** । ततश्च नैतच्छङ्कायाः प्रकृतासङ्गतिरिति भावः ॥ **उक्तं तत्त्वमिति** । भेदाभेदयोः सविशेषाभेद इत्येवंरूपमित्यर्थः । (तयोरपीत्यनेन भेदाभेदयोरपि परस्परं सविशेषाभेद एवाङ्गीकार्य इति यत्तत्त्वमुक्तमस्माभिस्तन्न त्याज्यमित्यर्थः ॥ ) **भेदभेदिनोरिति** । भेदघटयोरित्यर्थः ॥ **अभेदाभेदिनोश्चेति** । अभेदघटयोरित्यर्थः ॥ **तन्मात्रताभावेति** । घटकलशादिवन्निर्विशेषात्यन्ताभेदाभावेत्यर्थः ॥ (व्यवहृतिरपर्यायव्यवहारः । तदीयत्वादिव्यवहृतिरित्येवार्थः) **सोल्लुण्ठेति** । सोपहासमित्यर्थः ॥ अभिप्रायमाह **भेदाभेदयोरिति । अनेकपदार्थकल्पनादिति** । भेदाभेदयोर्भेदाभ्युपगमे भेदाभेदरूपपदार्थद्वयकल्पनादित्यर्थः ॥ **द्विधेति** । भेदाभेदयोर्भेदं कल्पयता भेदाभेदस्थले भेदस्योक्तव्यवहारनिर्वाहकत्वं कल्पनीयम् । भेदाभेदयोर्भेदिना

घटेनाभेदेऽपि विशेषबलेनोक्तव्यवहारनिर्वाहकत्वेन क्वचिद्भेदस्य क्वचिद्विशेषस्य च कल्पनादिति भावः ॥ **इत्यत आहेति** । इत्यतोऽप्याहेत्यर्थः ॥ **अन्यथा कल्पनेति** । धर्मधर्मिणोर्भेदाभ्युपगमे धर्मधर्मिरूपपदार्थद्वयकल्पनाद्धर्मधर्मिस्थले भेदस्योक्तव्यवहारनिर्वाहकत्वं, भेदाभेदस्थले विशेषस्येति द्विधा कल्पनाद्गौरवं स्यादित्यर्थः ॥ **विवृतमिति** । ततो न पौनरुक्त्यमिति भावः ।

प०— **सोल्लुण्ठवचनमिति**। सोपहासवचनम् । तदेव वाक्यं प्रकारान्तरेणापि योजयति **अस्त्वेवं ततः किं प्रकृत इत्यादिना** । यथाश्रुतमूलानुवादेन वा गवाश्वप्रभृतीनि चेत्येकवद्भावम नाश्रित्य गवाश्वयोरित्युक्तम्। मूले तु 'व्यत्ययो बहुलमि'ति समाधिः प्रागुक्तो ज्ञेय इति भावः ॥ **गुणगुणिभेदवादिना विशेषाङ्गीकारः** ॥

श्री०— **घटतन्मात्रत्वाभावेनेति** । यदि भेदोऽभेदो वा भेदिनाऽभेदिना वा घटेन घटकलशादिवन्निर्विशेषात्यन्ताभिन्नः स्यात्तदैव यो भेदोऽभेदेन निर्विशेषात्यन्ताभिन्नघटेनाभिन्न इत्यभेदेनाप्यभिन्नः स्यात् । न ह्येवमङ्गीक्रियते । किन्तु सविशेषाभेद एव । उक्तव्याप्तिश्च निर्विशेषात्यन्ताभेदस्थलनिष्ठैवातो न पर्यायत्वं भेदाभेदशब्दयोरित्यर्थः ॥ **उक्तं तत्त्वमिति** । तयोरपीत्यनेन भेदाभेदयोरपि परस्परं सविशेषाभेद एवाङ्गीकार्य इति यत्तत्त्वमुक्तमस्माभिस्तन्न त्याज्यमित्यर्थः । (**शब्दयोः** भेदाभेदशब्दयोः ॥ ) **तन्मात्रताभावेनेति** । घटकलशादिवन्निर्विशेषात्यन्ताभेदाभावेनेत्यर्थः । **व्यवहृतिः** अपर्यायव्यवहारः । **सोल्लुण्ठवचनं** सोपहासवचनम् । **सविशेषत्वेनैव** सविशेषाभेदवत्त्वेनैव ॥ **भेदाभेदयोश्चेति** । भेदस्य भेदिना घटेनाभेदेऽप्यभेदस्याभेदिना घटेनाभेदेऽपीत्यर्थः ।

सु०— **यदि कल्पनागौरवभयाद्धर्मधर्मिणोरभेदमङ्गीकृत्य व्यवहारविशेषार्थं विशेषोऽङ्गीक्रियते। तर्हि गवाश्वयोरपि तथा कल्प्यताम् । अविशेषात् । तथा च भेद एव जगति न स्यादित्यत** आह ऐक्येति ।

**अनु०**— ऐक्यप्रतीत्यभावेन भेद एव गवाश्वयोः ।

**भेद एव स्वीक्रियते न विशेषः । गवश्वयोरिति प्रमादपाठः । मूलकोशेष्वदर्शनात् । एक्यप्रतीत्यभावेऽपि कुतो विशेषो नाङ्गीक्रियत इत्यत** आह स एवेति ।

स एवेति प्रतीतौ हि विशेषो नाम भण्यते ।

**धर्मधर्मिप्रतिबन्द्या हि गवाश्वयोर्विशेषः परेणापादनीयः । न च तत्राविशेषः । अभेदप्रतीत्या तत्र तदङ्गीकारात् । इह च तदभावात् । भेदस्य प्रतीतिसिद्धत्वेन कल्पना(गौरवाभावाच्चेति)भावादिति ।**

शे० — **तथेति** । अभेदमङ्गीकृत्य विशेषेणैव व्यवहारविशेषनिर्वाहः कल्प्यतामित्यर्थः । प्रसङ्गमूलभूतव्याप्त्यभावात्तदाभासतामाशङ्क्य विशेषव्याप्त्यभावेऽप्यविशेषलक्षणसामान्यव्याप्तेः सत्त्वान्न प्रसङ्गाभासतेत्याह **अविशेषादिति** । इष्टापत्तिं परिहरति **तथा चेति** । उक्तन्यायेन घटपटादावप्यभेद-मङ्गीकृत्य विशेषेणैव व्यवहारविशेषनिर्वाहसंभवादिति भावः ॥ **गवाश्वयोरिति** । न च गवाश्वप्रभृ-तीनि चेति सूत्रे प्रभृतीनीति शब्दरूपापेक्षनपुंसकनिर्देशानुरोधेन गणपाठे यादृशानि शब्दरूपाणि पठि-तानि तादृशानां साधुत्वमात्रस्यात्र विधानाद्गणे च गवाश्वप्रभृतीनां शब्दरूपाणां कृत-अवङादेशानां कृत-एकवद्भावानामेव च पठितत्वेन गवाश्वमित्येव भाष्यतट्टीकयोर्वक्तव्यत्वाद्गवाश्वयोरित्यकृतैकवद्भाव-प्रयोगः कथमिति वाच्यम् । गणपाठे पठितशब्दरूपाणां कृतैकवद्भाववत्वस्य प्रायिकत्वेन कृतावङादेश-त्ववत्तस्यानियततया तथाप्रयोगसंभवात् । अत एव 'अथासत्यपि सामान्ये स्यादपोहस्य कल्पना । गवाश्वयोरयं कस्मादगोपोहो न कल्प्यते ।' इत्यपोहवादस्थश्लोकवार्तिकस्थप्रयोगस्तट्टीकाकृता तस्य प्रायि-कत्वाभ्युपगमेन समाहित इति द्रष्टव्यम् । यद्वा गौश्चाश्वश्चेति गवाश्वशब्दद्वन्द्वस्य कृतावङादेशस्य कृतै-कवद्भावस्य साधुतया अनेन विधानात्तादृशद्वन्द्वपक्षे गवाश्वयोरित्यस्यानुपपत्तिप्रसक्तावपि गवाश्वश्च गवाश्वश्च गवाश्वौ इति गवाश्वशब्दद्वन्द्वस्यानेन तथाऽसाधुत्वाविधानाद्घटयोरितिवद्गवाश्वयोरिति निर्देशस्योपपन्नत्वात्। गवश्वयोरिति पाठस्य प्रमादपतितत्वे युक्तिमाह **मूलकोशेष्विति** । उपलक्षणं चैतत् । अवङ्स्फोटाय-नस्येति यदाऽवङ् न प्रवर्तते तदा एङः पदान्तादतीति पूर्वरूपप्रसङ्गेन पशुद्वन्द्वविभाषया गोऽश्वस्य गोऽश्वयोरित्येव, सर्वत्र विभाषा गोरिति प्रकृतिभावपक्षे गोअश्वस्य गोअश्वयोरित्येव प्रयोगप्रसङ्गेनावादेशमा-श्रित्य तथा पाठस्यासम्भवदुक्तिकत्वादित्यपि द्रष्टव्यम् ॥ **प्रतिबन्द्या हीति** । आपादकान्तराभावादिति भावः ॥ **तत्रेति** । धर्मधर्मिणोरित्यर्थः ॥ **इहेति** । गवाश्वयोरित्यर्थः ॥ **भेदस्येति** । ततश्च भेदस्य प्रतीतिसिद्धत्वासिद्धत्वप्रयुक्तकल्पनागौरवभावाभावाभ्यामपि विशेषसद्भावान्न प्रसङ्गतन्मूलभूताविशेष-सिद्धिरिति भावः ।

या० — **अखण्डार्थनिष्ठत्व इति** । ब्रह्मप्रातिपदिकार्थमात्रनिष्ठत्व इत्यर्थः ।

श्री० **प्रमादपाठ इति** । ननु कथं प्रामादिकत्वम् । गोऽश्वेति स्थिते ओकारस्यावादेशे गव्-अश्व गवश्वेति भविष्यतीति चेत् । सत्यम् । विशेषविधानपर्यालोचनयैतत्पाठस्य प्रामादिकत्वम् । तथा हि । अवङ्स्फोटायनस्याचि परे गोरवङ् वा स्यात् । गो अग्रं गवाग्रमिति दर्शनात् । प्रकृतेऽपि गो अश्वेति स्थितेऽचिपरे गोरवङादेशे ङकारलोपे गव अश्वेति जाते अकः सवर्णदीर्घे गवाश्वेति रूपसिद्धिः । न च गोरवङादेशस्य विकल्पविधानाद्गवश्वमित्यपि भविष्यतीति कथं प्रामादिकत्वमिति वाच्यम् । स्वमते विकल्पत्वेऽपि स्फोटायनमते तु तस्य नित्यत्वमेवेति न दोषः ॥ (**तत्कल्प्यतामिति** ।

अभेदमङ्गीकृत्य भेदव्यवहारनिर्वाहाय विशेषः कल्प्यतामित्यर्थः ॥ ) **विशेष इति** । अभेदमङ्गीकृत्य विशेष आपादनीय इत्यर्थः । तदापादनमयुक्तमिति भावः । कुतो न युक्तमविशेषादित्युक्तमिति चेत्तत्राह **न च तत्रेति** । **अविशेषः** साम्यम् ॥

**सु०** — **अधुनाऽभेदवादिनाऽपि विशेषमङ्गीकारयति** सच्चिदादेरिति ।

**अनु०**— सच्चिदादेरपर्यायसिद्ध्यर्थं मायिनाऽपि हि ।
अङ्गीकार्यो विशेषोऽयं

मायिनाऽपीति । **क्रियादिविषयाणां वाक्यानां मायिकविषयतामङ्गीकुर्वताऽपीति यावत्** । **तत्र हेतुः** सच्चिदादेः **पदसमूहस्य अपर्यायत्वसिद्ध्यर्थमिति** । **अयमिति अपर्यायशब्दप्रवृत्तिहेतुः** । **विशेषस्य तथाभावः प्रमित इति हिशब्दः** ॥ **एतदुक्तं भवति । सन्तु तावत्क्रियादिविषयाणि वाक्यान्यसत्यविषयाणि । तथाऽपि 'सत्यं ज्ञानमनन्तं ब्रह्म'त्यादीनि तावत्सत्यविषयाणि परेणाङ्गीकृतान्येव । तेषां चाखण्डार्थनिष्ठत्वे सत्यज्ञानादिपदानामेकार्थत्वेन पर्यायत्वं स्यात् । न च तद्युक्तं सहप्रयोगदर्शनात् । न च भेदोऽङ्गीकर्तुं शक्यः । एकमेवाद्वितीयमित्यादिश्रुति-विरोधात् । अतः सत्येऽपि विशेषोऽङ्गीकार्यः । तस्यापर्यायशब्दप्रवृत्तिहेतुता चानयैवार्थापत्त्या सिद्धा । तथात्वेनैव तत्कल्पनादिति** ।

---

**शे०** — **तत्र हेतुरिति** । विशेषाङ्गीकारे हेतुरित्यर्थः । सच्चिदादेरित्यस्यार्थपरत्वे पर्याय-त्वाप्रसक्तेस्तत्प्रसञ्जकतया शब्दपदार्थतया व्याचष्टे **सच्चिदादेः पदसमूहस्येति** । सत्यं ज्ञानमित्या-दिपदसमूहस्येत्यर्थः ॥ मूलेऽपर्यायेति भावप्रधान इति भावेनोक्तमपर्यायत्वेति ॥ धर्मधर्म्यभिन्नस्य तच्छ-ब्दयोरपर्यायत्वनिर्वाहकस्य पूर्वप्रकृतस्य विशेषस्य सच्चिदादिशब्दपर्यायत्वाद्यनिर्वाहकत्वेनायमिति तत्परा-मर्शानुपपत्तेराह **अयमितीति** ॥ **तथाभाव इतीति** । अपर्यायशब्दप्रवृत्तिहेतुत्वमित्यर्थः ॥ ननु सत्यत्वादीनां परस्परं भेदेनैव तच्छब्दानामपर्यायत्वनिर्वाहान्न तदर्थं विशेषोऽङ्गीकार्यः । अङ्गीकृतेनापि विशेषेण कथमपर्यायत्वनिर्वाहः । किञ्च विशेषस्याप्यपर्यायशब्दप्रवृत्तिहेतुत्वसाधकं प्रमाणमित्यत आह **एतदुक्तं भवतीति** ॥ **अखण्डार्थनिष्ठत्व इति** । ब्रह्मप्रातिपदिकार्थमात्रनिष्ठत्व इत्यर्थः । **एकार्थत्वेन** ब्रह्मस्वरूपमात्रप्रतिपादकत्वेनेत्यर्थः । **पर्यायत्वं** वाक्यभेदेन प्रयोज्यत्वम् ॥ **सहप्रयोगेति** । सत्यं ज्ञानमनन्तमित्येकवाक्यप्रयोग इत्यर्थः ॥ **अत इति** । सत्यत्वादीनां निर्भेदत्वं तच्छब्दानामपर्यायत्वं चेत्येतदुभयान्यथाऽनुपपत्तेरित्यर्थः ॥ **अनयैवेति** । सत्यत्वादीनां निर्भेदत्वं तच्छब्दानामपर्यायत्वं चेत्येतदुभयान्यथाऽनुपपत्त्यैवेत्यर्थः । ननूक्तार्थापत्तेः स्वरूपमात्रग्राहकत्वात्कथमनयाऽपर्यायशब्दप्रवृत्ति-

हेतुता विशेषस्य सिध्येदित्यतोऽनुपचरितभेदव्यवहारनिमित्तत्वस्यैव विशेषस्वरूपत्वेन युक्तं स्वरूपग्राहकस्यापि तत्साधकत्वमित्याशयेनाह **तथात्वेनैवेति**। स्वरूपग्राहिण्योक्तार्थापत्त्या भेदकार्यनिर्वाहकत्वेन विशेषस्य सिद्धत्वान्न तत्र प्रमाणान्तरापेक्षेत्याशयः ॥ इतीत्यस्येत्येतदिति पूर्वेणान्वयः ।

प० — माथिनापीत्युक्तिस्वारस्यमाह **क्रियादीति** ॥ **अखण्डार्थनिष्ठत्व इति** । निर्धर्मकब्रह्मरूपार्थबोधकत्व इत्यर्थः ॥ **अनयैवेति** । सहप्रयोगदर्शनभेदनिषेधश्रुत्युभयान्यथानुपपत्तिरूपार्थापत्त्येत्यर्थः ।

श्री० — **तथात्वेनैवेति** । अपर्यायशब्दव्यवहारनिर्वाहहेतुत्वेनैव विशेषस्य कल्पनादित्यर्थः ।

सु० — **अपोहवादाश्रयेण शङ्कते** यदीति ।

**अनु०** —　　यद्यसत्यविशेषणम् ।
पृथक् पृथग्वारयितुं शब्दान्तरमितीष्यते ।

**सत्यादिपदानां विधिवाचित्वे विधीयमानानां सत्यत्वादिविशेषणानां ब्रह्मण्यभावात् स्वरूपमात्रस्य चैकत्वात्पर्यायत्वं स्यात् । न चैवम् असत्यत्वाद्यपोहवाचित्वात् । न चैवं सति वैयर्थ्यम् । ब्रह्मण्यसत्यत्वादीनां विशेषणानां भ्रान्तिकल्पितत्वेन तन्निवारणार्थत्वात् । सन्ति हि नास्ति ब्रह्म, सदपि न ज्ञानं परिच्छिन्नं (चे)वेत्यादिप्रतीतयः प्राणिनाम् । न च सत्यपदमज्ञानस्याप्यपोहं वक्ति येनैकेनैवालमिति स्यात् । तस्मान्न पर्यायत्वं वैयर्थ्यं चेति । यद्वा सत्यादिपदानि सत्यत्वादिपृथगर्थवाचीन्येवेति न पर्यायतामापद्यन्ते । ब्रह्मणि तु लक्षणया प्रवर्तन्त इति न तत्र विशेषणानि समर्पयन्ति । न हि गङ्गापदं तीरे गङ्गात्वमर्पयति । न चैवमेकेनैव लक्षितत्वादितरेषां वैयर्थ्यमिति वाच्यम् । आरोपितानामसत्यत्वादिविशेषणानां प्रत्येकं निवारणेन सार्थक्यात् । न च सङ्गतिग्रहणविषयाभावाल्लक्षणानुपपत्तिः । शबले गृहीतसङ्गतिकानां सत्यब्रह्मलक्षकत्वोपपत्तेः । अतो न पर्यायत्वं नापि वैयर्थ्यमिति शङ्कार्थः** । असत्यविशेषणम् **असत्यत्व(ादि)विशेषणम् । आरोपितं विशेषणमिति वा । इति यदीष्यत इत्यन्वयः ।**

**परिहरति** मायेति ।

मायाविशेषराहित्यविशेषणविशेषिता ।
सत्यस्यापि भवेत्

**मायाशब्देनारोपितत्वमाचष्टे । एवं कुसृष्टौ कल्पितायामपि न सत्यस्याखण्डतासिद्धिः । कल्पितासत्यत्वादिविशेषराहित्यलक्षणविशेषणविशेषिताया अवर्जनीयत्वादित्यर्थः ।**

**शे०** — यद्यसत्यविशेषणमित्यादिशङ्काया अपसिद्धान्तपराहततानिरासायाह **अपोहेति** । अतद्व्यावृत्तिरेव शब्दार्थ इति मतमङ्गीकृत्यैत्यर्थः । नन्वस्मिन्पक्षे पर्यायत्वाप्रसङ्गेऽपि वैयर्थ्यं स्यादेव ।

असत्यत्वादिव्यावृत्तिप्रतिपादनप्रयोजनानुपलब्धेरित्यत आह **न चेति** । नन्वेवमपि सत्त्वपदेनैव भ्रान्तिकल्पितस्यासत्त्वस्येव तत्कल्पिताज्ञानादीनामपि व्यावृत्तेः सिद्धत्वाज्ज्ञानादिपदान्तरवैयर्थ्यमित्यत आह **न चेति** । किन्त्वसत्त्वस्यैव । तथा च भ्रान्तिकल्पिताज्ञानादिव्यावर्तकत्वान्न ज्ञानादिपदवैयर्थ्यमिति भावः ॥ **सत्यत्वादिपृथगर्थेति** । सत्यत्वज्ञानत्वादिविशिष्टभिन्नभिन्नार्थवाचीन्येवेत्यर्थः ॥ **न पर्यायतामापाद्यन्त इति** । वाच्यार्थभेदेनैकार्थ्याभावादिति भावः । तथात्वे तद्वाच्यत्वाद्ब्रह्मणोऽनेकविशेषणविशिष्टत्वेन सखण्डतया निर्विशेषत्वादिरूपाखण्डत्वव्याघात इत्यतो भवेदेतदेवं यदि ब्रह्मणस्तद्वाच्यत्वं स्यात् । न चैतदस्तीत्याह **ब्रह्मणीति** । अस्तु लक्ष्येऽपि ब्रह्मणि विशेषार्पकत्वं सत्यादिपदानामित्यतः तथा सत्यविशेषाद्गङ्गापदस्यापि तीरे विशेषार्पकत्वं स्यादिति भावेनाह **न हीति** ॥ **न चेति** । अधिकलक्षणायां चाखण्डार्थत्वहानिरिति भावः । लक्ष्यार्थभेदाभावान्नाखण्डार्थताहानिरित्यभिप्रेत्य परिहरति **आरोपितानामिति** । ननु ब्रह्मणोऽन्यस्य सङ्गतिग्रहणविषयस्याभावेन ब्रह्मण एव सत्यादिपदसङ्गतिग्रहणविषयता वाच्या । तथा च वाच्यत्वमपि तस्यैव युक्तम् । तत्कथं लक्ष्यत्वान्नाखण्डत्वहानिरित्युच्यत इत्याशयेन शङ्कते **न चेति** । लक्ष्यत्वेनाभिमताच्छुद्धब्रह्मणोऽन्यस्य सगुणब्रह्मण एव सङ्गतिग्रहणविषयत्वाभ्युपगमेन शुद्धस्य तदभावान्न तस्य लक्ष्यत्वहानिरिति भावेन परिहरति **शबल इति** । अत एव च सत्यत्वादिविशिष्टसगुणब्रह्मवाचिनामिति शेषः । ततश्च वाच्यार्थभेदान्न पर्यायत्वं लक्ष्यार्थभेदाभावान्नाखण्डत्वहानिरपीत्याशयः । अत एव सगुणब्रह्मवाचिनामिति पूर्वटीकाऽपि शबले गृहीतसङ्गतिकत्वात्सत्त्वादिगुणविशिष्टसगुणब्रह्मवाचिनामिति, शबले गृहीतसङ्गतिकानामिति तत्त्वोद्योतटीकाऽप्यत एव सत्त्वादिगुणविशिष्टब्रह्मवाचिनामित्येव व्याख्येयेति न टीकाग्रन्थानां परस्परं विसंवादः । अत एवैतत्पक्षतात्पर्यं न्यायामृते एतेनेत्यादिग्रन्थेनैवमेवाभिहितमिति ध्येयम् । नन्वसत्यत्वमेव विशेषणम् न त्वसत्यं तत्कथमुच्यतेऽसत्यविशेषणमित्यतो व्याख्याति **असत्यत्वविशेषणमिति** । अस्मिन्पक्षे धर्मिवाचकस्य शब्दस्य धर्मे लक्षणाऽऽश्रयणीया भवतीत्यपरितोषादाह **आरोपितमिति** । **कल्पितेति** । कल्पितं यदसत्यत्वादिविशेषणं तद्राहित्यलक्षणं यद्विशेषणं तद्विशिष्टत्वस्येति योजना ।

प० — **अपोहवादेति** । पटादिपदानां घटादिव्यावृत्तिवाचित्वमेव न तु पटत्वाद्यर्थकत्वमिति यो वादस्तदाश्रयेणेत्यर्थः ॥ **असत्यत्वाद्यपोहेति** । असत्यत्वाज्ञानत्वपरिच्छिन्नत्वराहित्यवाचित्वादित्यर्थः ॥ **न सत्यस्याखण्डतासिद्धिरिति** । निर्धर्मतासिद्धिरित्यर्थः ।

या० — **अपोहवादेति** । घटादिपदैरघटादिव्यावृत्तिरेव वाच्या न घटत्वादिरिति मताश्रयणेत्यर्थः ॥ **अखण्डतासिद्धिरिति** । निर्विशेषतासिद्धिरित्यर्थः ।

**श्री०— पृथगर्थेति** । परापरजातिरूपेत्यर्थः ॥ **विषयेति** । धर्मीत्यर्थः । तथा च वाच्यार्थद्वारत्वाल्लक्षणाया वाच्यार्थो वाच्य एवेत्यर्थः ।

**च० — शबले** सविशेषे । **गृहीतसङ्गतिकानाम्** अधिगतशक्तिकानाम् ।

**सु०— शङ्कते** सा चेति ।

**अनु०—** सा च तथा चेत्

भवेदखण्डत्वखण्डनं यद्यारोपितविशेषराहित्यरूपविशेषणविशेषिता सत्या स्यात् । न चैवम् । अपि तर्हि साप्यसत्यत्वादिवदारोपितैव । न ह्यारोपितेन रूपेण गगनस्य नीरूपता विहन्यत इत्यर्थः । **परिहरति** अनवस्थितिरिति ।

अनवस्थितिः ।

वाक्यार्थस्येति शेषः । एवं तर्हि न कोऽपि वाक्यार्थो व्यवस्थितः स्यात् । सत्यत्वादिविशेषवत्तयाऽसत्यत्वादिव्यावृत्तिमत्तया चाप्रतिपादितत्वात् । न हि संसर्गभेदौ विहाय वाक्यार्थोऽस्ति । ब्रह्मैव वाक्यार्थ इति चेन्न । तस्य स्वप्रकाशत्वात् । व्यावृत्तेश्चासत्यत्वादिति ।

यद्वा प्रतीता सा च स्वाभावव्यावर्तकत्वेनैव व्यवतिष्ठते न ब्रह्मविषयत्वेन । येनाखण्डता व्याहन्यत इति शङ्कार्थः । एवमपि तदभावव्यावृत्तिरूपविशेषणविशिष्टताया अपरिहारादखण्डत्वहानिरेव । साऽपि तथा चेत् अनवस्थितिः ब्रह्मज्ञानस्याव्यवस्थैवेति परिहारार्थः ।

न केवलं ब्रह्मणो निर्विशेषत्वे पदानां पौनरुक्त्यादि(कं) किन्नामैकस्यापि पदस्य तत्र प्रवृत्तिर्न भवेदित्याह यदीति ।

यदि सत्ये विशेषो न न तदुक्तिर्भवेत्तदा ।

गुणकर्मादिनिमित्तमनालम्ब्य कस्यापि शब्दस्य प्रवृत्त्यभावादिति भावः ।

**शे० —** नन्वस्त्वारोपितयाप्यारोपितविशेषणराहित्यरूपविशेषणविशेषितया ब्रह्मणोऽखण्डत्वखण्डनमित्यतस्तथासत्यविशेषादारोपितरूपेणापि गगनस्यापि नीरूपत्वखण्डनं स्यादिति भावेनाह **न हीति** । प्रसिद्धानवस्थितेः प्रकृतेऽप्रसरादनवस्थाशब्दोऽव्यवस्थापर इत्यभिप्रेत्य कस्येति तन्निरूपकजिज्ञासायामाह **वाक्यार्थस्येति शेष इति** । वाक्यार्थस्याव्यवस्थितत्वे हेतुमाह **सत्यत्वादीति** । सत्यत्वादिविशेषवत्तयाऽसत्यत्वादिव्यावृत्तिमत्तया चाप्रतिपादितत्वमात्रेण कुतो वाक्यार्थस्याव्यवस्थितत्वमित्यत आह **न हीति** ॥ **वाक्यार्थोऽस्तीति** । यदर्थप्रतिपत्त्यर्थं वाक्यं प्रयुज्यते स एव हि वाक्यस्यार्थः । संसर्गभेदयोरन्यतरप्रतिपत्त्यर्थमेव वाक्यं प्रयुज्यतेऽतस्तदुभयान्यतरदेव वाक्यार्थ इत्यर्थः ।

ननु नायमस्ति नियमः यत्संसर्गभेदप्रतिपत्त्यर्थमेव वाक्यप्रयोगात्तयोरेव वाक्यार्थत्वमिति स्वरूपमात्रस्यापि तन्मात्रप्रतिपत्त्यर्थं प्रयुज्यमानलक्षणवाक्यार्थत्वदर्शनात् । तथा च चन्द्रस्वरूपमात्रस्य तत्स्वरूपमात्रप्रतिपत्त्यर्थं प्रकृष्टप्रकाशादिवाक्यार्थत्ववद्ब्रह्मस्वरूपमात्रस्यापि तत्स्वरूपप्रतिपत्त्यर्थं प्रयुज्यमान-सत्यज्ञानादिवाक्यार्थत्वमुपपन्नमेवेत्यभिप्रेत्य शङ्कते **ब्रह्मैवेति** । नित्यसिद्धत्वान्न ब्रह्मणो वाक्यार्थत्व-मित्याह **तस्येति** । न हि प्रकाशमानमेव वाक्यप्रतिपाद्यं भवितुमर्हति । तथा सति तस्यार्थस्य सिद्ध-त्वेन तत्प्रतिपादकवाक्यस्य वैयर्थ्यप्रसङ्गादिति भावः । यद्वाऽवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वं ब्रह्मणः परेणाङ्गीकृतम् । तथा च स्वप्रकाशं च वाक्यप्रतिपाद्यं चेति न युज्यते व्याघातात् । न चावेद्यत्वं फलाव्याप्यत्वं न वृत्त्यव्याप्यत्वमिति न व्याघात इति वाच्यम् । पराभिमतफलस्याप्रामाणिक-ताया अन्यत्र व्युत्पादितत्वात् । घटादेरपि फलाव्याप्यत्वापत्त्या स्वप्रकाशत्वप्रसङ्गादिति भावः ॥ ननु ब्रह्मस्वरूपं स्वप्रकाशतया सिद्धमपि सङ्कीर्णतयैव न तु व्यावृत्तमिति नाव्यावृत्तस्य ब्रह्मणो वाक्यार्थत्वमुप-पन्नमित्यतः किमत्र व्यावृत्तिमद्ब्रह्मस्वरूपं तथाऽभिमतमुत स्वतन्त्राव्यावृत्तिरेव । नाद्यः । अखण्डार्थत्व-भङ्गप्रसङ्गादिति भावेन द्वितीयं दूषयति **व्यावृत्तेश्चेति** । ततश्च तत्त्वावेदकत्वव्याघात इति भावः । यद्य-प्यत्र व्यावृत्तेः पदार्थत्वान्न वाक्यार्थत्वमपदार्थस्यैव सर्वत्र वाक्यार्थत्वादन्यथा वाक्यवैयर्थ्यादित्येव वक्तु-मुचितम् । तथाऽपि पदार्थस्यापि संसर्गस्य वाक्यार्थत्ववद्व्यावृत्तेरपि तदुपपत्तिशङ्कानिरासाय तदभिधानम् । यदि च वाक्येन विना संसर्गविशेषाप्रतिपत्तेर्न वाक्यवैयर्थ्यमिति तत्राभिमतं तर्हि वाक्यं विना व्यावृत्तिविशेषात्प्रतिपत्तेस्तत्प्रतिपत्त्यर्थतया न वाक्यवैयर्थ्यमिति तुल्यमिति भावः ॥ केचित्त्वस्तु संसर्ग-भेदयोरेव वाक्यार्थत्वं तथाऽपि सत्यत्वादिविशेषवत्तयाऽसत्यत्वादिव्यावृत्तिमत्तया चाप्रतिपादितत्वात् संसर्गस्य व्यावृत्तिमत्त्वस्य च सत्यज्ञानादिवाक्यार्थत्वासम्भवेऽपि स्वतन्त्रव्यावृत्तेस्तदर्थत्वं भविष्यतीत्यत आह **व्यावृत्तेश्चेती**त्याहुः ।

**प्रतीता सा चेति** । सत्यपदेन प्रतीतासत्त्वव्यावृत्तिश्चेत्यर्थः ॥ **स्वाभावेति** । स्वस्या असत्य-त्वव्यावृत्तेरभावेऽसत्यत्वं तद्व्यवच्छेदकत्वेनेत्यर्थः ॥ **तदभावेति** । तस्या असत्यत्वव्यावृत्तेरभावोऽसत्यत्वं तस्या या व्यावृत्तिस्तद्रूपविशेषणविशिष्टताया अपरिहारादित्यर्थः ॥ **साऽपि तथा चेदिति** । तदभाव-व्यावृत्तिरपि स्वाभावव्यावर्तकत्वेनैवावतिष्ठते न ब्रह्मनिष्ठत्वेनेति चेदित्यर्थः ॥ **अव्यवस्थैवेति** । सत्य-त्वादिधर्माणामिवासत्यत्वादिव्यावृत्तेरपि ब्रह्मणि कल्पितत्वेन वेदजन्यब्रह्मज्ञानस्य मिथ्याभूतसत्यत्वादिधर्म-वैशिष्ट्यानवगाहित्ववत् मिथ्याभूतोक्तविधव्यावृत्तिवैशिष्ट्यानवगाहित्वप्रसङ्गाद्वेदजन्यब्रह्मज्ञानमेवंरूपमिति निर्णयासम्भवादिति भावः ।

ब्रह्मणि वचनवृत्तिं वदन्प्रष्टव्यः । किं गुणकर्मजातिनिमित्तमालम्ब्य तत्र वचनवृत्तिः किंवा तद-नालम्ब्य । नाद्यः । ब्रह्मणो गुणकर्मजातिरहितत्वाङ्गीकारेण तन्निमित्तकवचनवृत्तेस्तत्रायोगात् । न च डित्थादिशब्दवद्यदृच्छानिमित्ता प्रवृत्तिर्ब्रह्मण्यपि सम्भवतीति वाच्यम् । वैदिकानां शब्दानामसाङ्केति-कत्वेन तदयोगादिति भावेन द्वितीयं दूषयति **गुणकर्मादिनिमित्तमनालम्ब्येति** ॥ **कस्यापि शब्द-स्येति** । वाचकशब्दस्येत्यर्थः ।

**स०— न हि संसर्गेति** । अपोहवादिना तद्व्यावृत्तिरूपभेदस्यैव वाक्यार्थत्वेनाङ्गीकारात् तदभिप्रायेण भेदग्रहणं कृतम् । अत एव पूर्वं असत्यत्वादिव्यावृत्तिः सत्यादिपदार्थ इत्युक्तम् । यद्वा प्रतीतासत्यत्वादिव्यावृत्तिरित्यर्थः ॥ **स्वाभावेति** । असत्यन्वव्यावर्तकत्वेनेत्यर्थः । **अव्यवस्थेति** । सत्त्वादिधर्माणां ब्रह्मण्यनङ्गीकृतत्वेन तेन रूपेण ब्रह्मज्ञानं वेदेनोत्पद्यत इति वक्तुमशक्यत्वेनेत्यसत्यत्वादि-व्यावृत्तिविशिष्टब्रह्मज्ञानमुत्पद्यत इति वक्तव्यम् । तथा च व्यावृत्तिरपि ब्रह्मणि यद्यसत्या स्यात् तदा एतादृशं ब्रह्मज्ञानं वेदेन भवतीति निर्णयो न स्यादिति भावः ।

**प०— न हि संसर्गभेदौ विहायेति** । क्वचिद्धर्मिणि धर्मसंसर्गं वा अतद्व्यावृत्तिरूपभेदं वा विनेति प्रकृताभिप्रायेणोक्तम् । क्वचित्संसर्गभेदौ विहायेति पाठः । तदा तु सोऽयमित्यादौ तादात्म्य-स्यापि वाक्यार्थत्वादभेद इत्युक्तमिति ज्ञेयम् । ब्रह्मणः स्वप्रकाशतया वाक्याबोध्यत्वेपि असत्यादिव्या-वृत्तिर्वाक्यार्थोऽस्त्वित्यत आह **व्यावृत्तेश्चेति** ॥ **स्वाभावव्यावर्तकत्वेनेति** । असत्यत्वादिव्यावृत्त्यभाव-व्यावर्तकत्वेनेत्यर्थः ॥ **साऽपीति** । उक्तरूपविशिष्टतापि । तथा चेत्स्वाभावव्यावर्तकत्वेनैवातिष्ठते न ब्रह्मविशेषणत्वेनेति चेदित्यर्थः । स्वाभावव्यावृत्तिविशेषणविशिष्टता स्यादेवेति सापि तथा चेदनव-स्थितिरित्यर्थः ॥ **पौनरुक्त्यादिकमिति** । आदिपदेनोक्तरूपानवस्थितिग्रहः ।

**या०— न हि संसर्गभेदाविति** । **भेदो**ऽतद्व्यावृत्तिः । अपोहवादिमतानुसारेणेदमुक्तमिति ज्ञातव्यम् ॥ **ब्रह्मैवेति** । ब्रह्मस्वरूपमात्रं वाक्यतात्पर्यविषयोऽर्थ इत्यर्थः । ब्रह्मैवेत्यत्रापि तात्पर्यविषयी-भूतोऽर्थः किं ब्रह्मस्वरूपमुतावधारणार्थभूतेतरव्यावृत्तिरिति विकल्पं मनसि निधायाद्यं दूषयति **तस्येति** ॥ **स्वप्रकाशत्वात्** प्रमाणावेद्यत्वात् । द्वितीयं दूषयति **व्यावृत्तेश्चेति** । ततश्चातत्त्वावेदकत्वमागमस्य स्यादिति भावः । व्यावृत्तिविशिष्टब्रह्मस्वरूपं वाक्यार्थ इति पक्षस्तु प्रागेव दूषित इत्यवगन्तव्यम् ॥ **तथा चेदिति** । स्वभावव्यावर्तकत्वेनैव व्यवतिष्ठते न ब्रह्मविशेषत्वेनेति चेदित्यर्थः । **पौनरुक्त्या-दीति** । एकेनैव पदेन लक्षितत्वात्पदान्तरं व्यर्थमित्युपपादितत्वात्पौनरुक्त्यमुक्तमेवेति ज्ञातव्यम् ।

श्री० - **सा चेति** । असत्यत्वादिव्यावृत्तिः । अखण्डता निर्विशेषता ॥ **गुणकर्मादीति** । तथा च यदि सत्ये ब्रह्मणि शब्दप्रवृत्तिनिमित्तभूतो गुणक्रियादिरूपो विशेषो न, तदा तेषां गुणक्रियादिवाचिशब्दानाम् उक्तिः ब्रह्मणि प्रवृत्तिरिति यावत् , न भवेदिति मूलयोजना द्रष्टव्या ।

सु० - **शङ्कते** लक्ष्यते चेत्तेनेति ।

अनु० — लक्ष्यते चेत्तेन

**स्यादयं दोषो यदि ब्रह्म शब्दाभिधेयं स्यात् । न चैवम् । किन्तु तेन शब्देन लक्ष्यत एव । न हि लक्षणा गुणक्रियाद्यपेक्षा । तथात्वे खल्वभिधैव स्यादिति । परिहरति** लक्ष्यमिति ।

लक्ष्यमित्यपि स्याद्विशेषिता ।

**एवमङ्गीकारेऽपि ब्रह्मणो लक्ष्यमिति विशेषिता स्यात् । लक्ष्यत्वं तावदपरिहार्यमित्यर्थः । उपलक्षणं चैतत् । मुख्यार्थयोगादिनाऽपि विशेषिता स्यादेव । ननु लक्ष्यत्वमपि ब्रह्मणो नास्त्येव लक्ष्यमित्यपि लक्षणयैवोच्यते नाभिधानवृत्त्येति चेन्न । अत्रापि वाक्ये परेण लक्ष्यपदस्य प्रयोगाल्लक्ष्यत्वविशेषप्राप्तेः । तेनापि लक्ष्यमेवेति चेत्तत्राह** पुनरिति ।

पुनः पुनर्लक्षणायामपि स्यादनवस्थितिः ।

**लक्षणायामाश्रितायां सत्यामिति शेषः ।**

शे० - **अपरिहार्यमिति** । तथा च लक्ष्यत्वरूपविशेषवत्त्वान्निर्विशेषत्वरूपाखण्डत्वभङ्ग इति भावः ॥ **स्यादेवेति** । तस्य लक्षणाबीजत्वेन तदभावे लक्षणाया एवानिर्वाहादिति भावः । ब्रह्मणो लक्ष्यत्वाभावे कथं लक्ष्यशब्दवाच्यत्वं तस्येत्यतो लक्ष्यशब्देनापि लक्ष्यत्वाभ्युपगमेन वाच्यत्वाभावान्नानुपपत्तिरित्याह **लक्ष्यमित्यपीति** ॥ **लक्ष्यत्वविशेषप्राप्तेरिति** । तथा चाखण्डत्वभङ्ग इति भावः ॥ **तेनापीति** । तथा च लक्ष्यपदावाच्यत्वेन लक्ष्यत्वाप्राप्तेर्नाखण्डत्वभङ्ग इति भावः ॥ **लक्षणायामिति** । अत्रापि वाक्ये परेण लक्ष्यपदप्रयोगाल्लक्ष्यत्वरूपविशेषप्राप्तेरखण्डत्वभङ्गः । तेनापि लक्ष्यमिति तत्राप्येवमेवेत्यनवस्थैवेति भावः ।

श्री० — **अत्रापीति** । लक्ष्यपदेनापि ब्रह्म लक्ष्यमिति वाक्येऽपि ब्रह्मणि लक्ष्यपदस्य प्रयोगाल्लक्ष्यत्वरूपो विशेषः प्राप्त इत्यर्थः ।

सु० — शङ्कते यदीति ।

अनु० यद्यभावविशेषित्वं स्यादङ्गीकृतमेव ते ।

ते मते इति शेषः । तृतीयार्थेऽव्ययं वा । यदुक्तं मायाविशेषराहित्यविशेषणविशेषिता सत्यस्यापि भवेदिति । तन्नानिष्टम् । अभावरूपविशेषवत्त्वस्य मयाऽङ्गीकृतत्वात् । 'नेह नानाऽस्तीति' श्रुतिः 'इह भूतले घटो नास्ती'तिवदभावं ब्रह्मण्यङ्गीकरोत्येव । यच्चोक्तं न तदुक्तिर्भवेत्तदेति । तदप्यसत् । भावनिमित्ताभावेऽप्यभावनिमित्तेन पदप्रवृत्त्युपपत्तेः । अभावधर्मवत्त्वस्य चाङ्गीकृतत्वात् । एतेन लक्ष्यमित्येतदपि निरस्तम् । लक्ष्यपदस्याप्यपोहवाचित्वोपपत्तेरिति भावः ।

शे० — ननु कर्तृकरणयोस्तृतीयेति प्राप्तां तृतीयां बाधित्वा 'कर्तृकर्मणोः कृती'ति प्राप्तायाः षष्ठ्या न लोकाव्ययेति पुनः प्रतिषेधाद्देवदत्तेन भुक्तमितिवत्त्वयाऽङ्गीकृतमिति तृतीयया भवितव्यम् । तत्कथं त इति षष्ठीप्रयोग इत्यतो नात्र तेऽङ्गीकृत इति यथाश्रुतसम्बन्धो येनोक्तानुपपत्तिः किन्त्वध्याहृतेन सप्तम्यन्तमतशब्देनैवेति नानुपपत्तिरित्यभिप्रेत्यापेक्षितं पूरयति **ते मत इति शेष इति** । एतच्च न लोकेति निषेधस्य षष्ठीमात्रनिषेधकत्वं कारकषष्ठीनिषेधकत्वेऽपि निषेधस्य नित्यत्वं चाश्रित्यैवोक्तं न वस्तुत इत्यन्यत्र विस्तरः । अत्र पक्षे मत इति शेषपूरणं भवतीत्यपरितोषात्प्रकारान्तरमाह **त इति तृतीयार्थेऽव्ययं वेति** । लक्ष्यमित्यपि स्याद्विशेषितेत्यव्यवहितपूर्वप्रकृतलक्ष्यत्वरूपविशेषप्रसङ्गपदं कचिदस्तिकचिन्नास्तिमात्रनिरासकत्वप्रतीतिनिरासाय शङ्काभाष्यस्य तात्पर्यमाह **यदुक्तमित्यादिना** ॥ **अभावविशेषवत्त्वस्येति** । ब्रह्मण इति शेषः । नन्वेवं नेह नानेति श्रुतिविरोधः । तथा ब्रह्मणि विशेषमात्रनिषेधादित्यतो भवेदेवं यदि श्रुतेर्धर्ममात्रनिषेधकत्वं स्यान्न चैतदस्ति । निषेधकप्रमाणस्य स्वप्रतिपाद्याभावानिषेधकत्वेन तदयोगादिति भावेन निषेधकप्रमाणस्य तदनिषेधकत्वं दृष्टान्तदर्शनेनोपपादयति **नेह नानेति श्रुतिरिति** । ननु ब्रह्मणो निर्धर्मकत्वान्नाभावरूपधर्मनिमित्तमवलम्ब्यापि ब्रह्मणि पदप्रवृत्तिः संभवतीत्यत आह **अभावधर्मवत्त्वस्येति** । ब्रह्मणो मयेति शेषः । एवं तर्हि नेह नानेति श्रुतिविरोधः । तथा ब्रह्मणि धर्ममात्रनिषेधादित्यतोऽप्याह **अभावेति** । श्रुत्येति शेषः । नेह नानेति श्रुत्या इह भूतले घटो नास्तीतिवद्ब्रह्मण्यभावाभ्युपगमान्न तन्निषेधकत्वं तस्या इति न तद्विरोध इति भावः ॥ **एतेनेति** । ब्रह्मणोऽभावधर्मवत्त्वोपपादनेनेत्यर्थः । ननु लक्ष्यपदलक्ष्यत्वस्य पूर्ववदनवस्थाग्रस्तत्वेन वक्तुमशक्यत्वाद्ब्रह्मणस्तद्वाच्यत्वमेव वाच्यम् । तथा च लक्ष्यत्वरूपभावधर्मवत्त्वाद्ब्रह्मणो निर्विशेषत्वभङ्गः स्यादेवेति कथमनेन लक्ष्यमित्यपि स्याद्विशेषतेत्युक्तदोषनिरास इत्यत आह **लक्ष्यपदस्येति** । **अपोहेति** ।

अलक्ष्यव्यावृ(?)त्तेरित्यर्थः । ततश्च लक्ष्यपदस्यालक्ष्यव्यावृत्तिवाचकत्वात्तस्याश्चाभावरूपत्वाद्ब्रह्मणि सत्त्वं नानुपपन्नमिति समुदायार्थः ।

प०— न लोकाव्ययनिष्ठेति निष्ठायोगे षष्ठीनिषेधादाह **ते मत इति शेष इत्यादि ॥ लक्ष्यपदस्याप्यपोहवाचित्वेति** । लक्ष्यमित्युक्तेरलक्ष्यं नेत्यर्थकत्वोपपत्तेरित्यर्थः ।

**या०— अपोहवाचित्वेति** । अलक्ष्यव्यावृत्तिवाचित्वोपपत्तेरित्यर्थः ।

**श्री०— अपोहेति** । अलक्ष्यव्यावृत्तीत्यर्थः ।

**सु० अत्र वक्तव्यं परमसिद्धान्तमखण्डत्वं परित्यज्याभावधर्मवत्त्वं कस्मादङ्गीकरोषीति । अथ ब्रूयात् । सत्यं ज्ञानमनन्तं विज्ञानमानन्दमित्यादिपदानि तावद्ब्रह्मणि श्रूयन्ते । न च तेषां विधिरूपोऽर्थः स्वीकर्तुं शक्यः । नेह नानाऽस्तीत्यादिश्रुतिविरोधात् । अभावधर्माङ्गीकारे च न विरोध इत्युक्तमिति** । तत्राह असार्वज्ञ्यादीति ।

अनु०— असार्वज्ञ्यादिराहित्यमप्येवं ते भविष्यति ॥

ते **अङ्गीकार्यमिति** शेषः । **यथा हि सत्यज्ञानादिपदानि ब्रह्मणि श्रूयन्ते; एवमेष सर्वज्ञः, एष सर्वेश्वरः, इति सार्वज्ञ्यादिपदान्यपि । तथा च यथा तान्यनृतत्वाद्यभावप्राचीन्येवमेतान्यपि असर्वज्ञत्वाद्यभाववाचितया** (त्वया) **अङ्गीकर्तव्यान्येव । ततश्च सत्यज्ञानादिवाक्यं तत्त्वावेदकं सार्वज्ञ्यादिवाक्यं मायाशबलपरमिति विभागो न युक्त इति** भावः ।

शे०— **अखण्डत्वमिति** । सर्वविशेषराहित्यरूपमित्यर्थः । नन्वेवमभावधर्मवत्त्वमपि नाङ्गीकार्यं स्यात् । निषेधरूपस्याप्यर्थस्य श्रुतिविरुद्धत्वादित्यत आह **अभावेति** । **उक्तमिति** । नेह नानेति श्रुत्येह भूतले घटो नास्तीतिवदभावस्य ब्रह्मण्यङ्गीकारान्न तस्य श्रुतिविरुद्धत्वमिति भावः । असार्वज्ञ्यादिराहित्यमित्याद्युक्तप्रसङ्गस्य तदङ्गभूतव्याप्तिवैकल्यादाभासत्वमित्याशङ्क्य विशेषव्याप्त्यभावेऽपि अविशेषलक्षणसामान्यव्याप्तेः सत्त्वान्न तदिति भावेनाविशेषमुपपादयति **यथा हीति** । तथाऽपीष्टापादनत्वादाभासत्वमित्याशङ्क्य तस्यानिष्टतामुपदर्शयति **ततश्चेति** ।

**या०— अखण्डत्वमिति** । सर्वविशेषराहित्यरूपमित्यर्थः ।

**श्री०— अखण्डत्वं** सर्वथा भावाभावरूपसर्वविशेषशून्यत्वरूपम् ।

**सु० — मा भूदयं विभागोऽसार्वज्ञाद्यभावोऽपि ब्रह्मण्यङ्गीक्रियत एवेत्यत** आह तदेति ।

अनु० — तदा सार्वज्ञमेव स्याद्भावार्थत्वान्नञोर्द्वयोः ।

**ब्रह्मण्यसार्वज्ञाद्यभावेऽङ्गीकृते (सति) सार्वज्ञादिभावधर्मा दुर्निवारा एव । कुतः । द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायादित्यर्थः । एतच्च चतुर्थे स्पष्टयिष्यते ।**

**शे० —** मूले तदा सार्वज्ञ्यमेव स्यादिति प्रसङ्गान्तरकथनस्य वैयर्थ्यमित्याशङ्क्य पूर्वप्रसङ्गे प्रसक्तेष्टापत्तिपरिहारार्थत्वात्तस्य नानर्थक्यमिति भावेन तत्परतयोत्तरभाष्यखण्डं योजयितुं पूर्वप्रसङ्गे इष्टापत्तिशङ्कामुत्थापयति **मा भूदिति ॥ सार्वज्ञ्यादिभाव इत्यादि ।** असर्वज्ञं न भवतीति निषेधविशिष्टसार्वज्ञ्यनिषेधस्य विशेषणीभूतनिषेधविषयकत्वस्य लाघवमूलकसविशेषणे हीति न्यायसिद्धत्वा. न्निषेधनिषेधरूपातिशयलाभाय च नञ्द्वयसार्थक्यसंभवान्निषेधनिषेधे सार्वज्ञ्यविधिरेव सिद्धो भवतीत्याशयः । ननु निषेधविशिष्टस्य यो निषेधस्तस्य विशेषणीभूतनिषेधविषयतायाः क्वाप्यदृष्टत्वात्कथं निषेधविशिष्टसार्वज्ञ्यादिनिषेधस्य विशेषणीभूतनिषेधविषयकत्वमित्यत आह **एतच्चेति ।** निषेधविशिष्टवस्तुनिषेधस्य विशेषणीभूतनिषेधविषयत्वं च 'असत्यं नोक्तमित्युक्ते सत्यमुक्तमिति प्रजाः । जानन्ति' इत्यादिना चतुर्थे दृष्टान्तोपदर्शनेन स्पष्टयिष्यत इत्यर्थः ।

**प०—** **एतच्चेति ।** विरुद्धयोरेकस्याभावे परस्य सत्यत्वमित्येतच्चतुर्थाध्यायाद्यपादे 'एकस्य सत्यतायां हि द्वयोरेव विरुद्धयोः । अन्यस्य सत्यतैव स्यादिति केन निवार्यत' इत्यादिना स्पष्टयिष्यत इत्यर्थः ।

**या०—** ननु स्वप्नेऽत्र घट इति दृष्ट्वा नात्र घट इत्यपि पश्यति । तत्र घटस्तदभावश्चेति द्वयमपि मिथ्या न तु घटः सत्योऽत उक्तन्यायस्य तत्र व्यभिचार इत्यत आह **एतच्चेति ।** न स्वप्नेऽपि द्वयं मिथ्या तत्रैकं सत्यमेव ही'त्यादिना स्पष्टयिष्यत इत्यर्थः ।

**सु०— असार्वज्ञादिराहित्यमप्येवं ते भविष्यतीत्युक्तानङ्गीकारे बाधकमाह** यदीति ।

अनु० - यदि नैतादृशं ग्राह्यम्

**सर्वज्ञादिपदं ब्रह्मणि श्रूयमाणमसार्वज्ञादिनिवृत्तिं बोधयतीत्येतादृशं प्रमेयं यदि न ग्राह्यं तदाऽऽनन्दपदमप्यसुखत्वं न निवर्तयेत्, सत्यपदं चासत्यत्वम्, ज्ञानपदं चाज्ञानत्वम्, आत्मपदं चानात्मत्वम् । अविशेषादिति वाक्यशेषः ।**

**शे०—** यदि नैतादृशमित्याद्युत्तरग्रन्थस्य तदा सार्वज्ञ्यमेव स्यादिति सन्निहितपूर्वोक्तार्थानुपपादकत्वेन तत्सङ्गतत्वासम्भवादानर्थक्यमित्याशङ्क्य सन्निहितेन सङ्गत्यभावेऽप्यसार्वज्ञ्यादिराहित्यमित्यादि नोक्तार्थानभ्युपगमे बाधककथनेन तद्वाक्योक्तार्थोपपादकतया तत्सङ्गतत्वलाभान्नानर्थक्यमिति भावेन

व्यवहितग्रन्थसङ्गततयोत्तरग्रन्थं योजयति **असार्वज्ञ्यादीति** । नन्वस्य तद्वाक्योक्तार्थानभ्युपगमे बाधककथनपरत्वं न प्रतीयत इति कथं तत्परत्वमित्यतोऽपेक्षिताध्याहारेण तत्परतया योजयति **सार्वज्ञ्यादिपदमित्यादिना** । असत्त्वमित्यादौ न निवर्तयेदिति पूरणीयम् । व्याप्तिवैकल्यात्तर्काभासत्वमित्याशङ्क्य परिहरति **अविशेषादिति** ।

**प० — इति वाक्यशेष इति** । असुखत्वानिवर्तनादित्यतःपूर्वं तदानन्दपदमपीत्यादिवाक्यशेषोऽध्याहार्य इत्यर्थः ।

**श्री० —** असत्त्वमज्ञानत्वमनात्मत्वमित्यत्र सर्वत्रापि न निवर्तयेदित्यनुवर्तते । **अविशेषादिति** । पदत्वाविशेषादित्यर्थः ।

**सु० — मा भूदानन्दादिपदानामसुखत्वादिव्यावर्तकत्वम् । को दोष इत्यत आह** असुखत्वेति ।

**अनु० —** असुखत्वानिवर्तनात् ॥

असत्त्वाज्ञानतादेश्च स्यादसत्त्वादिकं तदा ॥

**असत्त्वाज्ञानतादेश्चानिवर्तनादिति संबन्धः । अयम्भावः । ब्रह्मणि तावदसत्त्वादिकं प्रसक्तम् । तद्व्यावर्तनाय सत्यज्ञानादिवाक्यानां प्रवृत्तिः । तान्यपि चेन्न तद्व्यावर्तयन्ति तदा ब्रह्मणोऽसत्त्वादिकं तात्त्विकमेवेत्यापन्नमिति ॥ यद्वा यदि नैतादृशमित्यध्याहारेण विनैकमेव वाक्यं बुद्ध्या विविच्य तु योज्यमिति ।**

**शे० —** तर्ह्यनेनैवोक्तार्थस्योपपादितत्वादसुखत्वेत्याद्युत्तरभाष्यानर्थक्यमित्याशङ्क्य प्रागुक्तप्रसङ्गस्येष्टापादनत्वशङ्कानिरासार्थत्वान्न तदिति भावेन तत्परतयोत्तरग्रन्थं योजयितुं प्रागुक्तप्रसङ्गे इष्टापादनत्वशङ्कामुत्थापयति **मा भूदिति ॥ संबन्ध इति** । यद्यप्यनिवर्तनादित्यसुखत्वपदेन समस्तं तथाऽपि बुद्ध्या विवेकेनान्येनापि संबन्धनीयमिति भावः । मूलेऽसत्त्वाद्यनिवृत्तेरसत्त्वादिप्रसङ्गस्य च प्रयोज्यप्रयोजकभावाप्रतीतेस्तमाह **अयं भाव इति** । वाक्यभेदेन यदीत्यादिग्रन्थयोजनायामरुचिबीजमुपदर्शयन्नेकवाक्यतया योजनामाह **यद्वेति** । नन्वेवमसुखत्वानिवर्तनादित्यादिपञ्चम्यन्तानामनन्वयप्रसङ्गो दोषः । तेन विनैव यदि नैतादृशं ग्राह्यं तर्ह्यसत्त्वादिकं स्यादिति प्रसङ्गोक्तौ चाप्रयोजकत्वं स्यादसत्त्वादिकं तदेत्युक्तप्रमेयं प्रत्यापादकतया तदन्वयाङ्गीकारे चापादकासिद्धिर्दोषः । तत्कथमेकवाक्यतया योजनेत्यतोऽसिद्धस्यैव सिद्धवन्निर्देशान्यथाऽनुपपत्त्या पूर्ववाक्योक्तं प्रत्यापाद्यत्वेनोत्तरवाक्योक्तं प्रति चापादकत्वेनान्वयसंभवान्नासङ्गतिरित्यभिप्रायेणाह **बुद्ध्या विविच्य त्विति** । ( यद्येतादृशमसार्वज्ञा-

दिराहित्यं सार्वज्ञ्यपदबोध्यमित्येतादृशं प्रमेयं न ग्राह्यं तदाऽसुखत्वनिवर्तनमसत्त्वाज्ञानतादेश्च निवर्तनमेतादृशं सुखादिपदबोध्यमिति प्रमेयमपि न ग्राह्यं स्यादित्येवमेतादृशमित्यस्यार्थं बुद्ध्या विविच्योक्ता । ततश्चासुखत्वाद्यनिवर्तनादसुखत्वादेरेव सदा सत्त्वं स्यादिति योज्यमित्यर्थः ) ।

प० – **यदि नैतादृशमित्यादीति** । एकमेव वाक्यं योज्यमित्यन्वयः । कथमित्यतः तत्रेत्यादिप्रागुक्ताध्याहारेण विनैवेति **बुद्ध्या विविच्येति** । अनिवर्तनादिति समस्तपदस्यासत्त्वाज्ञानतादेश्चानिवर्तनादित्यप्यन्वयायेति भावः । यद्वा यदि नैतादृशं ग्राह्यं सार्वज्ञादिपदं ब्रह्मणि श्रूयमाणं नासार्वज्ञादिनिवृत्तिं बोधयतीत्येतादृशं प्रमेयं न ग्राह्यं तदा एतादृशं आनन्दादिपदमसुखत्वादिव्यावृत्तिं बोधयतीत्येतादृशं प्रमेयमपि न ग्राह्यम् । तथा चासुखत्वानिवर्तनादित्यादि योज्यमित्यर्थः ।

या० — **बुद्ध्या विविच्येति** । यद्येतादृशमसर्वज्ञादिराहित्यं सार्वज्ञादिपदबोध्यमित्येतादृशं प्रमेयं न ग्राह्यं तदाऽसुखत्वनिवर्तनमसत्त्वाज्ञानतादेश्च निवर्तनमेतादृशं सुखादिपदबोध्यमिति प्रमेयमपि न ग्राह्यं स्यात् । ततश्चासुखाद्यनिवर्तनादसुखत्वादेरेव सदा सत्त्वं स्यादिति योज्यमित्यर्थः ।

श्री० — तदनन्तरमित्यनन्तरं नेह नानेति श्रुतिविरोधभीत्येति शेषः ॥ किं निवार्यत इति मूलस्य तथा च सत्यादिवाक्यं तत्त्वावेदकम्, एष सर्वेश्वर इत्यादिवाक्यं च मायाशबलपरमिति विभागो न युक्त इति भावो ज्ञेयः ।

---

सु० — **शङ्कते** अनृतादीति ।

अनु० — अनृतादिविरोधित्वं यद्यस्याभ्युपगम्यते ॥

अस्य सत्यत्वादेः । **अयमर्थः । सत्यादिपदानि** तावदापाततः **सत्यत्वादिविशेषणानि समर्पयन्ति । तदनन्तरं तत्तद्विरोध्याकारनिवर्तकत्वेन पर्यवस्यन्ति । यथोक्तम् 'प्रति(पा)पद्य-पदार्थं हि विरोधात्तद्विरोधिनः । पश्चादभावं जानाति वध्यघातकवत्पदादि'ति । सत्यत्वादि-विशे(षणानां)षाणां चानृतत्वादिविरोधित्वं सुप्रसिद्धमिति कथं न तद्व्यावृत्तिरिति । सममेत-त्प्रकृतेऽपीत्याह** अनैश्वर्येति ।

अनैश्वर्यविरोधित्वमप्येवं किन्निवार्यते ॥

**सर्वेश्वरादिपदसमर्पितस्यैश्वर्यादेरिति शेषः ।**

शे० — यदेतद्विरोधिनिवृत्त्यर्थमेव तत्तदाकारविधानं विरोधिनिवृत्तेश्चाशब्दत्वमुक्तं (तैत्तिरीयवार्तिके) तत्सुरेश्वराचार्यवचनसंवादेन द्रढयितुं तद्वाक्यमुदाहरति **यथेति** । सत्यज्ञानादिवाक्यव्याख्यानावसर इति शेषः ॥ **प्रतिपद्येति** । पदात्सत्यं ज्ञानमित्यादिशब्दात्पदार्थं सत्यत्वादिकं ब्रह्मणि प्रतिपद्य

ज्ञात्वा तेन विरोधाद्धेतोस्तद्विरोधिनोऽनृतादेरभावं जानाति । तत्र निदर्शनं वध्येति । यथा खलु विस्रब्धाखुभूयिष्ठां भूमिं दृष्ट्वाऽर्थान्मार्जाराभावोऽवगम्यत इत्यर्थः । अत्र च मानान्तरादपोहस्तु न शाब्द-स्तेन स स्मृत इत्युत्तरग्रन्थानुसारात्पदादित्यस्य पदार्थं प्रतिपद्येत्यनेनैव सम्बन्धः । न त्वभावं जानाती-त्यनेनैवेति युक्त एव विरोधनिवृत्तेरार्थिकत्वे संवादतयाऽस्य वाक्यस्योपन्यास इति ध्येयम् ।

प०— सुरेश्वरवार्तिकं संवादयति **यथोक्तमिति** । पदात् सत्यज्ञानादि पदात् सत्यत्वादिपदार्थं ब्रह्मणि प्रतिपाद्य विज्ञाय पश्चात्तद्विरोधिनः अनृतत्वादेरभावं जानाति पुमान् कुतः विरोधात् सत्यत्वानृत-त्वादेः यथाऽवध्यानां मूषकादीनां संकुलं दृष्ट्वा तद्विरोधिनो मार्जारादेरभावं जानाति तथेत्यर्थः ॥

**मायिनो विशेषाङ्गीकारः ॥**

या०— **यथोक्तमिति** । तैत्तिरीयकवार्तिके सुरेश्वरेणेति शेषः । पदात्सत्यादेः पदार्थं सत्यत्वादिकं ब्रह्मणि प्रतिपाद्य ज्ञात्वा तेन विरोधाद्धेतोस्तद्विरोधिनोऽनृतादेरभावं जानाति । तत्र निदर्शनं वध्यघातकवदिति । यथा खलु विश्रब्धाखुभूयिष्ठां भूमिं दृष्ट्वा मार्जाराभावोऽवगम्यत एवमिति तदीय-श्लोकार्थः ।

सु०— **उपसंहरति** अखण्डेति ।

अनु०— अखण्डखण्डनादेवं विशेषोऽखण्डवादिना ॥
खण्डितेनापि मनसा स्वीकार्योऽनन्यथागतेः ॥

**प्र(यस्मादे)वमखण्डखण्डनादखण्डवादिनाऽपीत्यन्वयः** । अनन्यथागतेहे **तोः**, खण्डितेन **उत्तरोत्प्रेक्षारहितेन** ।

श्री०— **अन्यथागतेर्हेतोरिति** । अन्यथा गत्यभावरूपत्वात्कारणात्यदिर्थः ।

सु०— **इदानीं भेदाभेदवादिनं विशेषमङ्गीकारयति** अखण्डेति ।

अखण्डखण्डवादिभ्यां खण्डाखण्डेन चैव तत् ॥
महादरेण शिरसि विशेषो धार्य एव हि ॥

**यस्मादेवमखण्डखण्डवादिभ्यां विशेषोऽङ्गीकार्यस्तस्मादेव हि** खण्डाखडेन **खण्डा-खण्डवादिना च विशेषोऽङ्गीकार्य एव । कुन्ताः प्रविशन्तीतिवदुपलक्षणया अर्शआदिभ्योऽजिति वा** खण्डाखण्डेनेति **साधु । तथा हि । धर्मधर्मिणोर्भेदाभेदाविति वदता तौ किं ताभ्या-मत्यन्तं भिन्नावङ्गीक्रियेते उतात्यन्ताभिन्नावथ भिन्नाभिन्नौ । नाद्यः । भेदानवस्थापत्तेः । भेदस्य स्वरूपत्वे च विशेषानङ्गीकारे तदीयत्वाद्यनुपपत्तेः । भेदाभेदयोरत्यन्तभिन्नयोः संबन्धा-भावेन तदीयत्वानुपपत्तेश्च । न द्वितीयः । तदीयत्वाद्यनुपपत्तेरेव । भेदाभेदशब्दयोः पर्याय-**

त्वापत्तेश्च । न तृतीयः । अनवस्थापत्तेः । क्वचिद्भेदाभेदयोरभेदे पूर्वदोषानुषङ्गात् । तस्मा-द्भेदाभेदवादिनाऽपि क्वचिद्विशेषोऽङ्गीकार्य इति ।

तदेवमुभयव्यपदेशान्यथाऽनुपपत्त्या भगवद्धर्माणां सविशेषोऽत्यन्ताभेद एवेति सिद्धम् ।

गो० — ननु चाखण्डवादिनेत्यादिवत्खण्डाखण्डवादिनेत्येव वक्तव्यम् । खण्डाखण्डेनेति तु कथमुच्यते । न च खण्डाखण्डशब्दस्य भेदाभेदपरत्वेन तत एव तल्लाभात्तथाऽनुक्तिर्न दोष इति वाच्यम् । भेदाभेदमात्रशक्ततया तस्य तद्वादिपरत्वासम्भवादित्यतो मुख्यवृत्त्या तत्परत्वासम्भवेऽपि कुन्ताः प्रविशन्तीत्यादौ लक्षणया कुन्तशब्दस्य तद्वत्पुरुषपरत्ववत्खण्डाखण्डशब्दस्यापि लक्षणयैव तद्वादिपरत्व-सम्भव युक्तं तेन भेदाभेदवादिनो ग्रहणमित्याशयेनाह कुन्ताः प्रविशन्तीतिवदिति । न च स्वायत्त-न्यायविरोधः । रूढलक्षणात्वेन प्रयोजनानपेक्षणात् । अत एव दृष्टान्तकथनं सङ्गच्छते । अन्यथोपलक्षण-येत्येवावक्ष्यदिति भावः । अस्मिन्पक्षे लक्षणाऽऽश्रयणीया भवतीत्यपरितोषान्मुख्यवृत्त्यैव खण्डाखण्डशब्दस्य तद्वादिपरतामुपदर्शयति अर्शआदिभ्योऽजिति वेति । खण्डाखण्डौ विद्येते अस्येति मत्वर्थीये अच्प्रत्यये यस्येति चेत्यकारलोपे निष्पन्नखण्डाखण्डशब्दस्य तद्वादिपरत्वं मुख्यवृत्त्यैवेत्यर्थः । न चार्श आदिगणेऽस्यापाठात्कथमत्र तेनाच् स्यादिति वाच्यम् । तस्य कृतिगणतया यत्रादन्तशब्देन तद्वतोऽभिधानं तस्य सर्वस्याप्यर्शआदित्वस्याकरे स्थितत्वादस्यापि तत्त्वोपपत्तेरित्याशयात् ।

---

भेदानवस्थेति । भेदाभेदयोर्धर्मधर्मिभ्यां यो भेदस्तस्यापि भेदिभ्यां भेद एवं तस्य तस्यापीत्य-पर्यवसितभेदपरम्पराप्रसङ्गादित्यर्थः । न च भेदस्य भेदान्तरमित्येतावता नानवस्था, उत्पत्तिज्ञप्तिप्रति-बन्धकत्वाभावादिति वाच्यम् । विशेषणप्रतीतिमन्तरेण विशिष्टप्रत्ययानुपपत्त्या ज्ञप्तिप्रतिबन्धकत्वादित्या-शयात् । क्वचिद्भेदस्य भेदिस्वरूपत्वाभ्युपगमेनापर्यवसितपरम्पराया अप्रसङ्गान्नानवस्थेत्यत आह भेदस्य स्वरूपत्वे चेति । क्वचिद्भेदस्य भेदिस्वरूपत्वमेवेत्यर्थः ॥ तदीयत्वेति । भेदस्य भेदिस्व-रूपत्वेन तदीयत्वनिर्वाहकभेदस्याभावान्न तेन तदीयत्वनिर्वाहः । नापि विशेषेण । तदनभ्युपगमात् । अभ्युपगमे वा सिद्धं नः समीहितमिति भावेनोक्तं विशेषानङ्गीकार इति ॥ अत्यन्तभिन्नयोरिति । धर्मधर्मिभ्यामिति शेषः ॥ संबन्धाभावेनेति । असंबद्धयोरपि तद्भावे मेरुमन्दरयोरपि तद्भावप्रक्तेरिति भाव. । तदीयत्वेति । तन्निर्वाहकयोर्भेदविशेषयोरभावादिति भावः । भेदाभेदशब्दयोरिति । यद्यपि भेदाभेदयोर्धर्मधर्मिभ्यामत्यन्ताभिन्नत्वात्तच्छब्दानामेवैकार्थवाचित्वात्पर्यायत्वमापादयितुं शक्यं न तु भेदाभेदशब्दयोर्भेदाभेदयोरभेदाभावेन तच्छब्दयोरेकार्थवाचित्वाभावात् । तथाऽपि धर्मधर्मिभ्यामत्य-न्ताभिन्नत्वे भेदाभेदयोः परस्परमत्यन्ताभेदोऽवर्जनीयः । यद्यदत्यन्ताभिन्नात्यन्ताभिन्नं तत्तेनात्यन्ताभि-

न्नमिति नियमादिति भावेन युक्तमेव तच्छब्दयोरिदं पर्यायत्वापादनमिति द्रष्टव्यम् । यद्यप्यत्र धर्मधर्मिभेदाभेदशब्दानामेकार्थवाचित्वात्पर्यायत्वमप्यापादयितुं शक्यम् । तथाऽपि तच्छिष्यैरेव सुज्ञानमिति स्वयं नापादितमिति ध्येयम् **अनवस्थेति** । भेदाभेदयोर्धर्मधर्मिभ्यां यौ भेदाभेदौ तयोरपि भेदाभेदिभ्यां भेदाभेदावेवं तयोरपीत्युत्तरोत्तरापर्यवसितभेदाभेदपरम्पराप्रसङ्गादिति भावः । न चोत्पत्त्या-द्यप्रतिबन्धकत्वाददूषणत्वम् । दत्तोत्तरत्वादित्याशयात् । ननु क्वचिद्भेदाभेदयोर्भेदाभेदिस्वरूपत्वाभ्युपगमे-नापर्यवसितभेदाभेदपरम्पराया अभावान्नानवस्थेत्यत आह **क्वचिदिति** ॥ **पूर्वदोषेति** । तदीयत्वानुपप-त्त्यादिरूपेत्यर्थः ।

स० — **कुन्ताः प्रविशन्तीति** । एकदेशवाचिकुन्तशब्दो यथा कुन्तधारिपरः तथा खण्डाखण्डशब्दोपि भेदाभेदपर इत्यर्थः ॥ **पूर्वदोषेति** । तदीयत्वानुपपत्त्यादिरूपेत्यर्थः ।

प० — **अखंडखंडवादिभ्यामिति** । अखंडवादीति हि मायावादी खंडवादी तु गुणगुण्यादेर्भेद-वादी ताभ्यामेवं सच्चिदादेरित्यादिना भेदो यदि विशेषस्येत्यादिनोक्तप्रकारेण विशेषोंऽगीकार्य इत्यर्थः । **खण्डाखण्डवादिना चेति** । गुणगुण्यादेर्भेदाभेदवादिना चेत्यर्थः । ननु खण्डाखण्डेनेति पदं तद्वादिपरं कथमित्यत आह **कुन्ता इति** । कुन्तशब्द आयुधविशेषवाचीति तेषां जडत्वेन स्वतःप्रवेशायोगेन कुन्तधारिण इति लक्षणयार्थ उच्यते । तद्वदित्यर्थः ॥ **अर्श आदिभ्योऽ-जिति** । अर्शःप्रभृतिशब्देभ्यो मत्वर्थेऽच्प्रत्ययविधानादत्रापि खण्डाखण्डशब्दात् मत्वर्थे अकारप्रत्यये यस्येत्यन्त्यलोपे खण्डाखण्डवतेत्यर्थलाभात् । वक्तृवाक्यभावरूपसंबन्धेन तद्वत्त्वात् । खण्डाखण्डवादि-नेतिव्याख्यानेप्ययं शब्दः साधुरित्यर्थः । वादिद्वयाङ्गीकृतत्वं कथमेतद्वादिनाङ्गीकार्यत्वे हेतुरित्यतो व्यनक्ति **तथा हीत्यादिना** ॥ **ताभ्यामिति** । धर्मधर्मिभ्यामित्यर्थः ॥ **तदीयत्वाद्यनुपपत्तेरिति** । भेदस्य यत्स्वरूपत्वमुच्यते तदीयो भेद इति व्यवहारादिर्न स्यात् । आदिपदेन च भेदाभेदयोर्धर्म-धर्मिभूतभेदाभेदिना च यो भेदः तस्य तत्स्वरूपत्वे धर्मधर्मिणावेव स्तः न भेदाभेदाविति वा, भेदाभेदौ स्तो न धर्मधर्मिणाविति वा स्यात् । तच्छब्दयोः पर्यायत्वं स्यादिति प्रागुक्तदोषग्रहः । ताभ्यामत्यन्तं भिन्नाविति प्रागुक्तपक्षे दोषान्तरमाह **भेदाभेदयोरिति** । धर्मधर्मिभ्यामिति योज्यम् । एतत्संबन्धाभावे-नेत्यत्रापि योजनीयम् ॥ **तदीयत्वाद्यनुपपत्तेरेवेति** । धर्मधर्मिसंबन्धित्वस्य भेदाभेदयोरनुपपत्तिरित्यर्थः । आदिपदेनान्यतरपरिशेषादिग्रहः ॥ **पर्यायत्वेति** । भेदाभेदयोरेकवस्तुस्वरूपत्वे अन्योन्यमभेदस्यापि प्राप्तेरिति भावः ॥ **पूर्वदोषानुषङ्गादिति** । 'अभिन्नश्चेत्पुरा न किमि'ति पूर्वोक्तदोषानु-षङ्गादित्यर्थः । यद्वा भेदस्य स्वरूपत्व इत्यादिनोक्तो यो दोषस्तदीयत्वाद्यनुपपत्तिरूपस्तदनुषङ्गादित्यर्थः ॥

॥ **भेदाभेदवादिनोपि विशेषाङ्गीकारः** ॥

**या०— कुन्ता इति** । यथा कुन्तशब्देन तद्वन्तो लक्ष्यन्ते एवं भेदाभेदपरेण खण्डाखण्ड-शब्देन तद्वादी लक्ष्यतेऽत इदं वाक्यं साधु अबाधितार्थकमित्यर्थः ॥ **अत्यन्ताभिन्नयोरिति** । धर्म-धर्मिभ्यामिति शेषः ॥

**श्री० — अखण्डखण्डवादिभ्याम्** अभेदभेदवादिभ्याम् । ननु खण्डाखण्डशब्दस्य भेदाभे-दवाचित्वात्कथं तदङ्गीकारिपुरुषपरत्वमित्यतोऽत्र समाधानद्वयमाह **कुन्ता इति** । यथा भल्लवाचिकुन्त-शब्दस्य तद्वत्पुरुषलक्षकत्वं तथा भेदाभेदवाचिखण्डाखण्डशब्दस्यापि तदङ्गीकारिपुरुषलक्षकत्वमित्यर्थः ॥ **इति वेति** । मत्वर्थियाच्प्रत्ययान्तो वेत्यर्थः । **तौ** भेदाभेदौ । **ताभ्यां** धर्मधर्मिभ्याम् । **तौ** ताभ्यामत्यन्तभिन्नाविति पक्षे दोषान्तरमाह **भेदाभेदयोरिति** ॥ **सम्बन्धेति** । धर्मधर्मिभ्यामित्यर्थः । न हि मेरुर्मन्दरीय इत्युच्यत इति भावः । **अभेदे** अङ्गीक्रियमाणे सति । अनवस्थापरिहारायेति शेषः ॥ **पूर्वदोषेति** । 'अभिन्नश्चेत्पुरा न किमि'त्युक्तदोषेत्यर्थः । आदावेव भेदाभेदौ धर्मधर्मिभ्याममि-न्नाविति कुतो नाङ्गीक्रियत इति भावः ।

**सु०— ननु नायं सूत्रकाराभिप्रायो भवितुमर्हति । तेनानेवंविधानामहिकुण्डलादीनां निदर्शनानामुपात्तत्वात् । अहेरवयवानामन्योन्यसंयोगविशेषो ह्यहिकुण्डलमित्युच्यते । स तावदहिना नात्यन्ताभिन्नः । प्रकाशश्च द्रव्यान्तरं न सूर्याभिन्न इत्यतः प्रकाशाश्रयवद्वेति निदर्शनमपि नात्यन्ताभेदोपयुक्तम् । कालस्य पूर्वत्वं नाम प्रध्वस्तक्रियासंबन्ध इति न पूर्ववद्वे-त्यपि प्रकृतानुगुणमित्यत** आह निदर्शनेति ।

**अनु०—** निदर्शनत्रयेणातो भगवानत्यभिन्नताम् ।
गुणानामादरेणाह

**यत एवमर्थापत्त्या भगवद्गुणानां भगवता सविशेषोऽत्यन्ताभेदः सिद्धोऽत इत्यर्थः ।** अत्यभिन्नतां **सविशेषाम् । निरवकाशप्रमाणानुसारेण निदर्शनत्रयमपि सविशेषाभेदोपयुक्तत्वेन सूत्रकारस्याभिमतं ज्ञातव्यमित्याशयः । तत्राहिकुण्डलं यद्यपि भेदाभेदवत्तथाऽपि मन्दानामभेदे बुद्धिमवतारयितुमुपात्तम् । यथा पृथिव्यामोषधयः संभवन्तीति** यथा । **प्रकाशशब्देन च भास्वरं रूपं विवक्षितम् । तच्च यावद्द्रव्यभावित्वात्सूर्यमण्डलेनात्यन्ताभिन्नमेव । पूर्वत्वं च पूर्वकालसंबन्ध इति सकललोकसिद्धमिति । नन्वेकेनैव निदर्शनेनालं किं त्रयेणेत्यत उक्तम्** आदरेणेति ।

**शे०— स तावदिति** । अवयवानामन्योन्यं संयोगविशेषस्यायावद्द्रव्यभावित्वेन भिन्नाभिन्नत्वादिति भावः **द्रव्यान्तरमिति** । रूपित्वात्सूर्यं विहायान्यत्र वृत्तेः क्रियावत्त्वाच्च तत्सिद्धेरिति भावः ॥ **प्रध्वस्तेति** । अतीततरणिपरिस्पन्दसम्बन्ध इत्यर्थः । सोऽप्ययावद्द्रव्यभावित्वात्कालेन भिन्नाभिन्न एवेति भावः । ननु वैषम्ये कथं दृष्टान्तदार्ष्टान्तिकभाव इत्यतो **यथा पृथिव्यामोषधयः सम्भवन्तीति** वाक्येऽक्षरपृथिव्योर्जगदत्यन्तभिन्नत्वतद्भिन्नाभिन्नत्वाभ्यां जगन्निमित्तत्वतदुपादानत्वाभ्यां वा वैषम्येऽपि भिन्नत्वमात्रेण वा कारणत्वमात्रेण वा साम्यादस्ति दृष्टान्तदार्ष्टान्तिकभावस्तथा ब्रह्माहिकुण्डलयोरत्यन्ताभिन्नत्वभिन्नाभिन्नत्वाभ्यां वैलक्षण्येऽप्यभिन्नत्वमात्रेण साम्याद्युक्त एव दृष्टान्तदार्ष्टान्तिकभाव इत्याशयेनाह **यथा पृथिव्यामिति** ॥ **भास्वरं रूपमिति** । अयं भावः । प्रकाशो न द्रव्यं मानाभावात । न तावद्रूपित्वं तत्र मानम् (न्यायमतेऽपि) नीलघटसम्बद्धबालार्कप्रभादौ प्रतीयमानारुण्यादेः प्रकाशनिष्ठत्वाभावेन तेन घटादिरूपस्यैव प्रतीयमानत्वेन प्रकाशनिष्ठरूपप्रतिभासाभावेन तस्यासिद्धत्वात् । किञ्च गुणादिपञ्चकस्य निर्गुणताया वैशेषिकपरीक्षायां निरस्तत्वात् । गुणेषु च चतुर्विंशतित्वसंख्यावत्समवायादावेकत्वसंख्यावद्रूपं स्पर्शात्पृथगिति पृथक्त्ववत्प्रकाशस्य भास्वररूपत्वेऽपि तत्र रूपस्य सम्भवेनाप्रयोजकत्वम् । नापि सूर्यं विहायान्यत्र वृत्तिः प्रमाणम् । व्यतिरेको गन्धवदित्यधिकरणे गुणस्यापि गन्धस्य द्रव्यं विहायान्यत्र वृत्तेरुक्तत्वात् । नापि क्रियावत्त्वेनालोकस्य द्रव्यत्वम् । दीपे गच्छति प्रभाया अपि गतिदर्शनादिति युक्तम् । घटे गच्छति तद्रूपस्यापि गतेरवश्यम्भावात् । अन्यथा श्येने चलत्यचलस्थाणोरिव रूपस्यापि तत्रैवावस्थित्यापातात् । तथाऽपि कुतस्तद्गुणत्वमिति चेन् । तदनुविधानेनेति ब्रूमः । न च छायायां व्यभिचारः । भित्यादावचलेऽपि छायायाः सूर्यप्रातिलोम्येन चलनात् । लोके माणिक्यप्रभादौ तद्गुणव्यवहाराच्च तत्सिद्धिः । तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिरिति स्मार्तगुणत्वव्यवहाराच्च तत्सिद्धिरित्यास्तां प्रपञ्चः । अस्तु भास्वररूपमेव प्रकाशस्तथाऽपि तस्य कुतः सूर्यमण्डलेनात्यन्ताभेद इत्यत आह **तच्चेति** ॥ **पूर्वकालसम्बन्ध इति** । विशेषणत्वविशेष्यत्वरूप इत्यर्थ । तथा च कालस्वरूपत्वात्कालेनात्यन्ताभेद एवेत्यर्थः । ननु ध्वस्तक्रियासम्बन्ध एव पूर्वत्वं किन्न स्याद्विनिगमकाभावादित्यतोऽस्य सकललौकिकानुभवसिद्धत्वात्पूर्वपक्षिणोत्प्रेक्षितस्य च तदभावान्न विनिगमकाभाव इत्याह **इति सकललोकेति** ।

**स०— यथा पृथिव्यामिति** । यथा भगवतो निमित्तकारणत्वे पृथिव्या औषध्युपादानत्वेपि कारणत्वसामान्याभिप्रायेणायं दृष्टान्त उपादीयते तद्वदत्रेत्यर्थः । **पूर्वकालसंबन्ध इति** । यथैकस्य कालस्य स्वसंबन्धः प्रतीयते तथा परमात्मनो गुणानामभेदेपि संबन्धव्यवहारः स्यादिति भावः ।

प० — **निदर्शनानामिति** । उभयव्यपदेशात्त्वहिकुंडलवत्, प्रकाशाश्रयवद्वा तेजस्त्वात्, पूर्ववद्वा, इत्येवंभूतानामित्यर्थः ॥ **प्रध्वस्तक्रियासंबंध इति** । इदानींतनध्वंसप्रतियोगी यस्तरणिपरिस्पन्दः तेन सह तत्समवायि(भूततरणि)संयोगरूपसंबन्ध इत्यर्थः ॥ **अर्थापत्त्येति** । उभयव्यपदेशान्यथानुपपत्तिरूपार्थापत्त्येत्यर्थः ॥ **यथा पृथिव्यामोषधयस्संभवंतीति यथेति** । आथर्वणे हि अक्षरात्संभवतीह विश्वमिति हरेर्जगत्कर्तृत्वरूपकारणत्वे यथा पृथिव्यामित्युपादनकारणपृथिवी दृष्टान्तिता तथेत्यर्थः ॥ **पूर्वकालसंबन्ध इति** । स च विशेषो भेदरूप एव तरणिपरिस्पंदोपाधिकत्वं तु समयपादे निरस्तमिति भावः ॥

या० — **प्रध्वस्तक्रियेति** । प्रध्वस्ताऽतीता या तरणिक्रिया तत्सम्बन्ध इत्यर्थः । सोऽपि न कालेनात्यन्ताभिन्न इति भावः ॥ **यथा पृथिव्यामोषधय इति** । यथा यथा पृथिव्यामोषधयः सम्भवन्तीत्यत्रौषध्युपादानतया भिन्नाभिन्ना अपि पृथिवी विश्वं प्रति निमित्ततयाऽत्यन्तभिन्नस्य भगवतो नियतपूर्वभावितया कारणत्वमात्रेण मन्दानां विश्वभेदे बुद्धिमवतारयितुमुपात्ता तथैवेत्यर्थः । इयांस्तु विशेषः । तत्र भेदे बुद्धिमवतारयितुं भिन्नाभिन्नं वस्तु निदर्शितम्, अत्र त्वभेद इति ।

श्री० — कालस्य पूर्वत्वं न प्रध्वस्तक्रियासम्बन्धो येन कालेनात्यन्ताभिन्नो न स्यात्किन्त्वित्यत आह **पूर्वत्वं चेति** ॥ **सिद्धमेवेति** । तथा च स्वस्मिन्पूर्वकाले सम्बन्धरूपं पूर्वत्वं यावद्द्रव्यभावित्वादत्यन्ताभिन्नमिति प्रसिद्धमित्यर्थः ।

---

च० — **यावद्द्रव्यभावित्वादिति** । स्वाश्रयद्रव्यनिरूपितकालिकसंबन्धावच्छिन्नाधिकरणतास्वावच्छिन्नव्यापकतावच्छेदकतत्संबन्धावच्छिन्नाधिकरणतात्ववत्त्वादित्यर्थः ।

**सु० — एवं साक्षादधिकरणार्थं व्याख्यायेदानीमनुषङ्गसिद्धमर्थं दर्शयति** तच्चेति ।

**अनु० —** तच्च नाभिहितान्वयः ।

**तस्मादेव भगवद्धर्माणां भगवता सविशेषाभेदस्य समर्थितत्वादेव पदाभिहितैः पदार्थैरन्वयबोध इत्येतन्मतं नेति लभ्यत इति शेषः । अभिहितान्वयग्रहणमुपलक्षणम् । वक्ष्यमाणान्विताभिधानव्यतिरिक्तानां सर्वेषामपि मतानामनुपपन्नत्वात् । यदि तर्ह्यभिहितान्वयवादोऽनुपपन्नः । कः पन्थाः सूत्रकारस्याभिमतः । न हि निरुपायमन्वयज्ञानमिति संभवति । अन्विताभिधानमिति ब्रूमः । तत्राप्यस्ति विशेष इत्याशयेनाह** यदेति ।

यदाऽशेषविशेषाणामुक्तिः सामान्यतो भवेत् ।
पदैकेनाप्युत्तरेण विशेषावगतिर्भवेत् ।

**यदाशब्दो यद्यर्थः । यद्यप्यशेषविशेषाणामित्यशेषविशेषान्वितस्येत्यर्थः । एकशब्दो मुख्यार्थः । पदेष्वेकं पदैकमा(द्ये न)द्यपदेनेत्यर्थः । कर्मधारयत्वे तु पूर्वकालैकेत्येकपदस्य पूर्वनिपातः स्यात् । अपि तथाऽपि । उत्तरेण पदजातेनान्वयविशेषावगतिः ।**

शे० — **साक्षादधिकरणार्थमिति ।** ब्रह्मधर्माणां ब्रह्मणा सविशेषात्यन्ताभेदरूपमित्यर्थः ॥ **अनुषङ्गसिद्धमिति ।** (तत्सिद्ध्युपजीव्यसिद्धिकम्) अधिकरणसिद्धान्ततया सिद्धमित्यर्थः ॥ **तस्मादेवेति ।** अनेन तच्चेति चशब्दोऽवधारणार्थ इत्युक्तं भवति । तस्मादेवेत्यस्यैव विवरणं भगवद्धर्माणामित्यादि । नन्वभिहितान्वयग्रहणमभिहितान्वयमात्रपरमेवास्तु । तत्किमुपलक्षणत्वाश्रयणेनेत्यत आह **वक्ष्यमाणेति ।** अनुपदमेवेति शेषः । कालार्थत्वहेत्वर्थत्वयोरसम्भवादाह **यद्यर्थ इति ॥ मुख्यार्थ इति ।** 'एके मुख्यान्यकेवलाः' इति स्मरणादिति भावः । पदेष्वेकमिति सप्तमीति योगविभागात्समास इति भावः । नन्वेकपदस्य सङ्ख्यार्थकस्यैकं च तत्पदं चेति समानाधिकरणसमाससम्भवे किमिति मुख्यार्थतामाश्रित्य सप्तमीतत्पुरुषाश्रयणमित्यत आह **कर्मधारये त्विति ।** सङ्ख्यार्थतामाश्रित्येति शेषः ॥ **पूर्वकालैकेतीति ।** पूर्वकालैकेति निर्देशेनेत्यर्थः । सङ्ख्यार्थकस्यैकशब्दस्य पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेनेति समासशास्त्रे प्रथमानिर्दिष्टत्वेन प्रथमानिर्दिष्टं समास उपसर्जनमिति तस्योपसर्जनसंज्ञाया- मुपसर्जनं पूर्वमिति पूर्वनिपातः स्यादित्यर्थः । ननु भवेदेतदेवं यदि पूर्वकालैकेति सूत्रं सङ्ख्यार्थकैक- शब्दस्यैव समासविधायकं स्यात्तदेव कस्मादिति चेत् । उच्यते । विशेषणं विशेष्येण बहुलमिति विशेषणवाचकशब्दस्य विशेष्यवाचकशब्देन समासे विहिते विशेषणविशेष्यशब्दयोः सम्बन्धिशब्दत्वा- देकेनैव परस्परसमासविज्ञानसम्भवात्पदान्तरवैयर्थ्यमित्याशङ्कायां तेनैव विशेष्येण समासो यदि तद्विशेष्यं विशेषणमपि स्यादिति परस्परविशेषणविशेष्यभावस्थल एवानेन समासोऽत एव नीलोत्पलमित्यत्र नील- शब्दस्य पीतादिव्यवच्छेदकत्वादुत्पलशब्दस्य नीलभ्रमरादिव्यवच्छेदकत्वादेतादृशस्थल एवानेन समास इतीममर्थं द्योतयितुं पदद्वयोपादानमिति प्रत्युक्ते तदुभयोरपि प्रथमानिर्दिष्टत्वात्पूर्वनिपातानियमः स्यादित्याशङ्कायामुपसर्जनसंज्ञाया अन्वर्थत्वेनाप्रधानपरत्वान्नीलोत्पलमिति द्रव्यगुणवाचकशब्दयोर्गुणवाच- कस्याप्रधानत्वेन पूर्वनिपातनियमसम्भवात्, क्रियाद्रव्यवाचकयोश्च क्रियावाचकस्य पूर्वनिपातनियम- सम्भवाद्गुणवाचकयोरेव खञ्जकुण्ठशब्दयोः क्रियावाचकयोरपि पाचकपाठकशब्दयोरुभयोरप्यप्रधानत्वेन पूर्वनिपातनियमस्येष्टत्वात्, द्रव्यवाचकयोरपि शिंशुपावृक्षशब्दयोरुभयोः प्रधानत्वेऽपि वृक्षत्वस्यान्यत्रापि वृत्त्या वृक्षशब्दस्य बहुविषयत्वेन प्रधानत्वादल्पविषयस्य शिंशुपाशब्दस्यैव पूर्वनिपात इति न पूर्वनिपातानियम इति प्रत्युक्तेऽपि स्नातानुलिप्त इत्यादिक्रियावाचकशब्दयोः पूर्वनिपातानियमप्राप्ते दिक्सङ्ख्ये संज्ञायां

मित्यनेन दिग्वाचकसङ्ख्यावाचकयोः संज्ञायामेव समासस्य नियमितत्वेनैकशाटीत्यादेश्च संज्ञात्वाभावाद-समासत्वे च प्राप्ते एवशब्दस्य समानाधिकरणेन समासविधानार्थं स्नातानुलिप्त इत्यादौ पूर्वनिपातनियमार्थं च प्रवृत्तेः न 'पूर्वकालैके'ति सूत्रेण सङ्ख्यार्थकैकशब्दस्यैव समासविधानसिद्धेरित्याशयः ।

स० — संख्यार्थमेवैकं पदं किं न स्यादित्यत्राह **कर्मधारये त्विति** । एकपदस्य संख्यार्थ-त्वमङ्गीकृत्य कर्मधारयाङ्गीकरण इत्यर्थः । **पूर्वनिपातः** । संख्यार्थकैकपदस्यैव पूर्वनिपातादिति भावः । यद्यपि मुख्यार्थकैकपदेन कर्मधारयः कर्तुं शक्यते । तथापि निर्धारणे सप्तमीसमासेन मुख्यत्वस्य स्पष्टलाभात् सप्तमीसमास आदृत इति ध्येयम् ।

प० **साक्षादधिकरणार्थमिति** । धर्माणां भगवता सविशेषाभेदरूपमित्यर्थः ॥ **अनुष-ङ्गेति** । उक्तार्थोपजीवनेनार्थासिद्धमित्यर्थः । तच्चेत्यस्यार्थस्तस्मादेवेति । तद्विवरणं भगवदित्यादि ॥ **पूर्वकालैकेति** । द्वितीयस्याद्यपादे 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेने'तिसूत्रे पूर्व-कालएकसर्वेत्यादिसुबन्तशब्दाः समानाधिकरणेन सुबन्तेन समस्यन्त इति तत्पुरुषविधायकसूत्रे एकपदस्य प्रथमानिर्दिष्टतया 'प्रथमानिर्दिष्टं समास उपसर्जनमि'ति सूत्रेण समासविधायकशास्त्रे प्रथमानिर्दिष्टस्योप-सर्जनसंज्ञायां उपसर्जनं पूर्वमिति सूत्रेण पूर्वनिपाते एकशाटी एकभिक्षेतिवत् एकपदेनेति स्यादित्यर्थः ।

या० — **एवं साक्षादिति** । भगवद्धर्माणां भगवता सविशेषाभेदरूपमित्यर्थः ॥ **अनुषङ्गसि-द्धमिति** । तत्सिद्ध्युपजीव्यसिद्धिकमित्यर्थः ॥ **पूर्वकालैकेति** । पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेनेत्यत्रैकशब्दस्य प्रथमानिर्दिष्टत्वात्तस्य च प्रथमानिर्दिष्टं समास उपसर्जनमित्युपसर्जनसंज्ञा-यामुपसर्जनं पूर्वमित्यनेन पूर्वनिपातः स्यादित्यर्थः ।

श्री० — तच्चेत्यत्र तच्छब्दस्य तस्मादित्यर्थश्चशब्दोऽवधारणार्थः इत्यभिप्रेत्य व्याचष्टे । **तस्मादेवेति** ॥

सु० — **एतदुक्तं भवति** । सत्यं ज्ञानमनन्तं ब्रह्म यः सर्वज्ञः सर्वविदित्यादिब्रह्मप्रति-पादकवाक्यगतानि सकलान्यपि पदान्यन्वितार्थाभिधायीनि । तत्र ब्रह्मपदं सत्यत्वसर्वज्ञत्वाद्य-शेषविशेषान्वितं ब्रह्म प्रतिपादयति । न चैवं सत्यादिपदानां वैयर्थ्यम् । यतः सामान्यत एवान्विताभिधाने शक्तिः पदानां नान्वयविशेषाभिधाने । अतो ब्रह्मपदेन सामान्यतः समस्त-योग्यधर्मान्विते ब्रह्मणि प्रतीते सत्यत्वेनान्वितं ज्ञानत्वेनान्वितमिति विशेषान्वयप्रतिपत्त्यर्थानि सत्यादिपदानीति ।

**शे०**—नन्वेवं ब्रह्मशब्दस्याशेषविशेषान्वितस्वार्थाभिधायकत्वप्राप्तावपि वाक्यस्याशेषपदानां तदप्राप्तेः पदमात्रमन्वितस्वार्थाभिधायीति सिद्धान्तभङ्ग इत्याशङ्कां परिहरन्नेव मूले सामान्यत इत्यादिविशेषणव्यावर्त्यप्रदर्शनपूर्वकं तत्तात्पर्यमाह **एतदुक्तं भवतीति** ॥ **सकलपदानीति** । ततश्च न पदमात्रस्यान्वितार्थाभिधानवादभङ्ग इति भावः । सामान्यत इत्येतद्य वर्त्यदोषमुत्थाप्य परिहर्तुं तत्प्रसञ्जकं दर्शयति **तत्रेति** । नन्वेवं ब्रह्मेत्यनेनैव सत्यत्वाद्यशेषविशेषान्वितब्रह्मप्रतिपादनात्पदान्तरवैयर्थ्यम् । न च सत्यादिपदैः सत्यतादावभिहिते सत्येव तदर्थान्वितस्वार्थस्य ब्रह्मपदेनाभिधानात्सत्यत्वाद्यभिधाकत्वात्पदान्तरस्य न तद्वैयर्थ्यमिति वाच्यम् । तथा सति सत्यादिपदानां स्वार्थमात्राभिधायकत्वेनानन्विताभिधायित्वप्राप्त्याऽन्विताभिधानवादभङ्गप्रसङ्गात् । न च सत्यादिपदैरपि ब्रह्मपदार्थान्वितस्वार्थप्रतिपादनाभ्युपगमान्न तद्भङ्ग इति वाच्यम् । तथा सति यावद्ब्रह्मपदं स्वार्थं नाभिदत्ते तावदुत्तरपदस्य पूर्वपदार्थान्वितस्वार्थाभिधायकत्वं नास्ति । यावच्चोत्तरपदं स्वार्थं नाभिदत्ते तावत्पूर्वपदस्योत्तरपदार्थान्वितस्वार्थाभिधायकत्वं नास्तीत्यन्योन्याश्रयत्वमित्याशयेन शङ्कते **न चेति** । स्यादिदं विशेषान्विताभिधानवादिनां दूषणम् । नास्माकमित्यभिप्रेत्य तद्विलक्षणं स्वाभिमतमन्विताभिधानवादं दर्शयति **यत इति** । शब्दशक्त्यवधारणोपायस्य वृद्धव्यवहारादेः पदार्थस्वरूपमात्रविषयकत्वानुपपत्त्या पदार्थान्तरान्वितार्थविषयकत्वाद्विशेषाणां व्यभिचारेण त्यागेऽपि सामान्यस्याव्यभिचारित्वेन त्यागायोगात्सङ्गतिग्रहणसमये पदानां सामान्यान्विताभिधाने शक्तेर्गृहीतत्वादभिधानस्य च शक्तिग्रहणानुरोधित्वात्सामान्यान्विताभिधान एवां

---

पदानां शक्तिर्न विशेषान्विताभिधान इति भावः ।

**सु०** **नन्वभिहितान्वयादिवादानामनुपपन्नत्वमन्विताभिधानस्योपपन्नत्वं च प्रथमसूत्रे सूत्रकारेणोक्तमेव । तत्किमत्राधिकरणसिद्धान्ततया तद्वर्णनेन । उच्यते । अतःशब्देन ह्यन्वयबोधेऽस्त्युपाय इत्येतावन्मात्रं प्रतीयते । न पुनः पदान्येव न पदाभिहितार्थादीनीति विशेषः । तत्र व्याख्यातारं प्रति कुतोऽयं सूत्रकृतोऽभिप्राय इति भवत्येव परिचोदना । तत्समाधानाय चाधिकरणसिद्धान्तवर्णनमुपपन्नमेव । यद्यप्युपपन्नः सूत्रकाराभिप्राय इति शक्यते वक्तुम् । तथाऽप्यधिकरणसिद्धान्तवर्णनमिषेण तत्र संक्षेपतो व्युत्पादितोपपत्तीनां प्रपञ्चाय प्रयत्नोऽयमित्यदोषः ।**

**शे०**— **अधिकरणसिद्धान्ततयेति** । एकस्य प्रमेयस्य सिद्धावनुषङ्गेण सिद्ध्यर्थतयेत्यर्थः । 'अनुमेयस्य सिद्ध्याऽर्थो योऽनुषङ्गेण सिध्यति । स स्यादाधारसिद्धान्तः' इत्युक्तेरिति भावः । **विशेषः** प्रतीयत इति पूर्वेणान्वयः । **अधिकरणसिद्धान्तवर्णनमिति** । अधिकरणसिद्धान्ततया वर्णनमित्यर्थः ॥ **तत्रेति** । प्रथमसूत्र इत्यर्थः ।

प०— **प्रथमसूत्र इति** । 'शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते' इति अनुव्याख्यानं सौत्रातःपदस्य वर्णकान्तरपरमिति जिज्ञासाधिकरणे तत्र सुधायामेवोक्तेरिति भावः **अधिकरणेति** । सिद्धान्तस्याधिकरणाभ्युपगमादिभेदेन चातुर्विध्यादधिकरणसिद्धान्ततयेत्युक्तम् । आनुषङ्गिकसिद्धस्यैवाधिकरणसिद्धान्तत्वात् ।

या०— **अधिकरणसिद्धान्ततयेति** । प्रकृतविचार्प्रमेयसिद्धौ तदनुषङ्गेण योऽर्थः सिध्यति सोऽधिकरणसिद्धान्तः । यथाऽऽह 'अनुमेयस्य सिद्ध्याऽर्थो योऽनुषङ्गेण सिध्यति । स स्यादाधारसिद्धान्तो जगत्कर्ता यथेश्वरः' इति । अत्रानुषङ्गो नाम तदुपजीवनमेव न तु तद्व्याप्तत्वम् । यथाऽऽह हरिदीक्षितः 'अतोऽविनाभावादन्य एवानुषङ्गः' इति । तथा च प्रकृतस्य धर्मधर्मिणोः सविशेषाभेदस्य वक्ष्यमाणान्विताभिधानेनाभिहितान्वयादिवादानामयुक्तत्वेन वा व्याप्त्यभावात्कथमेतदिति शङ्काऽनवकाशः । वक्ष्यमाणान्विताभिधानादेः सविशेषाभेदव्यापकत्वाभावेऽपि वक्ष्यमाणरीत्या तत्सिद्ध्यधीनसिद्धिकत्वेनोक्तानुषङ्गशब्दार्थसद्भावात् । वस्तुतस्तु यद्यधोदेशे नदीपूरस्तदूर्ध्वदेशे वृष्टिरित्यादाविवात्रापि यदि धर्मधर्मिणोः सविशेषाभेदस्तर्हि तद्वाचकशब्दे वक्ष्यमाणान्विताभिधानमिति व्याप्तिसम्भवादनुषङ्गशब्दस्य व्याप्त्यर्थकत्वेऽपि नानुपपत्तिरिति ध्येयम् ।

सु०— **तदिति परामृष्टं हेतुं दर्शयति** यत इति ।

**अनु०** — यतोऽशेषविशेषाणां वस्तुनाऽस्त्येव चैकता ।

---

अतः

वस्तुना **ब्रह्मणा** । **चशब्दाद्विशेषश्च** । अतो **नाभिहितान्वयादिवादाः किन्नामोक्तविधान्वितभिधानमिति शेषः । तथा हि । सत्यत्वादिधर्माणां तावद्ब्रह्मणाऽत्यन्ताभेदः समर्थितः । ततो ब्रह्मवाचकस्य ब्रह्मपदस्य सत्यत्वादिवाचकत्वमावश्यकमेव । किन्त्वभेदेऽन्वय एव नास्ति कुतस्तदभिधानं विशेषतोऽभिधानप्रसङ्गश्चेत्यवशिष्यते । तत्र सविशेषत्वाङ्गीकार एव समाधिः । अभेदेऽपि विशेषशक्त्याऽन्वितत्वस्य विशेषानभिधानस्य चोपपत्तिरिति** ।

शे०— कथमन्विताभिधानवादस्याधिकरणसिद्धान्तत्वमित्यतस्तल्लक्षणवत्तामुपदर्शयितुं साक्षादधिकरणप्रतिपाद्यमर्थं तावद्दर्शयति **तथा हीति** । अत्यन्ताभेद इत्युपलक्षणम् । सविशेषश्चेत्यपि द्रष्टव्यम् । तत्राभेदसिध्या सिद्धमर्थं दर्शयति **ततो ब्रह्मेति** । विशेष सिध्यासिद्धमर्थं दर्शयितुं विशेषाभ्युपगमे निमित्तं तावदाह **किन्त्विति** । तथा चैतदधिकरणप्रमेयस्य ब्रह्मधर्माणां ब्रह्मणा सविशेषात्यन्ताभेदस्य सिध्या तद्वाचकस्य ब्रह्मादिपदस्य सामान्यत इतरपदार्थान्वितस्वार्थबोधकत्वं विशेषानभिधानं चेत्येतादृशप्रमेयस्य सिद्धेर्भवत्यस्यार्थस्याधिकरणसिद्धान्ततेति भावः ।

**प०— तदिति परामृष्टमिति** । तच्चेत्यत्र तत्पदपरामृष्टमित्यर्थः । यत इत्यादेर्हेतुहेतुमद्भावं व्यनक्ति **तथा हीत्यादिना** ।

**या०—** उक्तमधिकरणसिद्धान्तलक्षणं प्रकृते दर्शयितुमाह **तथा हि सत्यत्वादीति** । अभेदसिद्ध्या सिद्धमर्थं प्रदर्श्य विशेषसिद्ध्या सिद्धमर्थं दर्शयितुमाह **किन्त्वभेद इति** । तथा चैतदधिकरणप्रमेयस्य ब्रह्मधर्माणां ब्रह्मणा सविशेषाभेदस्य सिद्ध्या तद्वाचकाद्यस्य ब्रह्मादिपदस्य सामान्यत इतरपदार्थान्वितत्वार्थबोधकत्वं विशेषानभिधानं चेत्येतादृशं प्रमेयं सिध्यति । अत इदमधिकरणसिद्धान्ततयाऽत्राभिप्रेतमिति भावः । नन्वेवं भगवत्तद्धर्मवाचकपदेष्वेवान्विताभिधानं सिध्यति न परस्परभिन्नार्थकेषु नदीतीरे पञ्चफलानीत्यादिपदेषु । तत्र सविशेषाभेदाभावात् । अतस्तत्रान्वयबोधो निर्निबन्धन आपन्न इति चेन्न । तत्रान्विताभिधानस्य जिज्ञासाधिकरणोक्तन्यायेनैव सिद्धतयाऽन्वयबोधस्य निर्निबन्धनत्वाभावात् । न चैवमत्रापि तेनैवान्विताभिधानासिद्धौ तदर्थं सविशेषाभेदोपादानं व्यर्थमिति वाच्यम् । उक्तान्विताभिधानं सूत्रकृदभिप्रेतमित्येतज्ज्ञापनायैव सविशेषाभेदोपादानं न तु सर्वत्रोक्तान्विताभिधानसाधकतया, येन (न) नदीतीरादिपदेषु कथमन्विताभिधानसिद्धिरित्यादिशङ्का स्यादिति ।

**श्री०— तदितीति** । तच्चेत्यत्र तेन तस्मादित्यर्थकेन तच्छब्देनेत्यर्थः । **सत्यत्वादिवाचकत्वं** सत्यत्वाद्यभिन्नस्वार्थवाचकत्वम् ॥ **अन्वय एव नास्तीति** । तस्य भेदगर्भत्वादिति भावः । **तदभिधानम्** । अन्विताभिधानम् । **विशेषाभिधानप्रसङ्गश्च** इत्यत्राभेद इत्यनुवर्तते ।

---

**सु०— स्यादेतत्** । **अस्मिन्नन्विताभिधानवादे विशेषान्वयप्रतिपत्तिर्निर्निबन्धनैवापद्यते । सकलपदानां सामान्यतोऽन्विताभिधाने सामर्थ्यात् । न चाद्यं पदं सामान्यतोऽन्विताभिधाय्युत्तरं तु विशेषत इति वाच्यम्** । आद्यत्वादेरव्यवस्थितत्वात । **वेदवाक्येऽपि हि क्वचिद्ब्रह्मपदमाद्यं क्वचिदुत्तरमित्यत** आह सामान्यत इति ।

**अनु०—** सामान्यतो ज्ञातः पदान्तरबलात्पुनः ।
भवेद्विशेषतो ज्ञातस्तेन स्यादन्वितोक्तिता ।

**एकैकशः पदैः सामान्यतोऽन्विततया ज्ञातोऽर्थः पुनः पदान्तरसन्निधानाहित(शक्ति)बलाद्विशेषतोऽन्वितत्वेन ज्ञातो भवेत् । तेन कारणेन पदानामन्वितोक्तिताऽन्विताभिधायिता स्यादुपपन्नेति शेषः** ।

**शे०** ननु नियतानुपूर्वीकत्वाद्वेदस्य न तत्राद्यत्वादेरव्यवस्थितत्वमित्यत आह **वेदवाक्येऽपीति** ॥ **ब्रह्मपदमाद्यमिति** । ब्रह्म पुरस्ताद्ब्रह्म दक्षिणत इत्यादौ, सत्यं ज्ञानमित्यादावुत्तरमित्यर्थः ॥ **पदान्तर-**

**सन्निधानाहितशक्तिबलादिति** । पदान्तरसन्निधानलब्धविशेषविषयताकसामान्यविषयकशक्तिबलादित्यर्थः । न चैवं पदान्तरसन्निधानाहितशक्त्यन्तराणीति पद्धतिविरोधः । तत्रापि पदान्तरसन्निधानेनाहितं पर्यवसितं शक्त्यन्तरं शक्तिविशेषो येषां तानीति पदान्तरसन्निधानप्राप्तविशेषविषयताकसामान्यशक्तिमत्त्वस्यैवाभिमतत्वात् । यत्तु पदान्तरसन्निधानाहितशक्त्यन्तराणीति पद्धत्यनुसारेणैतट्टीकायामपि पदान्तरसन्निधानरूपसहकारिसामर्थ्येनाहितशक्त्यन्तरमेवाभिमतमित्येकार्थत्वादविरोध इति, तन्न । तथा सति पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसानहेतुः, न पुनरविद्यमानशक्त्याधान इति पूर्वग्रन्थविरोधापातात् । न च तस्य पदान्तरसमभिव्याहारात्पूर्वमन्वयसामान्ये शक्तिर्नेत्येतत्त्वन्निषेधपरत्वान्न तद्विरोध इति वाच्यम् । तथाऽपि गौरवं कल्पनेऽन्यथेत्युक्तशक्तिद्वयकल्पनागौरवापरिहारात् । पूर्वं विशेषपर्यवसान एव हेतुरित्यस्वारस्यापाताच्चेति ।

प० — वेदपदानि व्यवस्थितानीत्यत आह **वेदवाक्येपीति** ॥ **ब्रह्मपदमाद्यमिति** । 'ब्रह्म पुरस्ताद्ब्रह्म दक्षिणतः' इत्यादावादौ, 'सत्यं ज्ञानमि'त्यादावुत्तरमित्यर्थः । पदान्तरसन्निधानाहितबलादित्येवमादीनि तत्र तत्रोक्तटीकावाक्यानि तर्कताण्डवेऽन्विताभिधानवादे व्याख्याततात्पर्यकाणि ।

या० — ननु नियतानुपूर्वीके वेदवाक्ये आद्यत्वादिकं नाव्यवस्थितमित्यत आह **वेदवाक्येऽपीति** ॥ **पदान्तरसन्निधानाहितबलादिति** । पदान्तरसमभिव्याहाररूपसहकारिसामर्थ्येनाहितशक्त्यन्तरादित्यर्थः । अत्र च पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसान एव हेतुर्न पुनरविद्यमानशक्त्याधान इति जिज्ञासाधिकरणीयसुधया यथा न विरोधस्तथा तत्रैवोक्तम् ।

श्री० — **आहितबलात्** पर्यवसानबलात् ।

**सु० — सविशेषाभेदसमर्थनेनोक्तप्रकारं पदानामन्विताभिधानं सिद्धमित्ययुक्तम् । अतिप्रसङ्गात्** रूपस्य हि **घटेनाभेद इति त्वचा तस्मिन्गृहीते तदपि गृह्येत । अथाविशेषेण प्रतिबद्धं तद्ग्रहणमित्युच्यते । तर्ह्यत्रापि प्रतिबन्धः स्यात् । विशेषाभिधानं प्रतिबद्धमेवेति चेत् । सामान्याभिधानमपि कुतो न प्रतिबद्धम् । अथ संभावनैवैषोक्तेति मतं तदा नायमधिकरणसिद्धान्तः । एकस्य सिद्धावनुषङ्गी योऽर्थः सिध्यति सोऽधिकरणसिद्धान्तो न हि संभावनासिद्धिरित्यत** आह स्वार्थ एवेति ।

**अनु०** — स्वार्थ एवान्वितो यस्मात्केनचित्तद्विशेषतः ।
अनेनेति तदुक्त्यैव ज्ञायतेऽनुभवेन हि ।

**यस्मात्केनचिदन्वित एव पदानां स्वार्थ इति,** अनेन **सत्यत्वेन ज्ञानत्वेन** वाऽन्वित इति, तद्विशेषतो **धर्मविशेषेण अन्वयः** तदुक्त्यैव **सत्यादिपदोक्त्यैव ज्ञायत** इत्यनुभ(वेन)व-**सिद्धम्** । तस्मादुक्तं युक्तमिति शेषः । **प्रत्येकं पदानि सामान्यतोऽन्विताभिधायीनि, विशेष-तोऽन्वितार्थप्रतीतिस्तु परस्परसन्निधानाहितशक्तिभिः पदैर्भवतीत्येतदनुभवसिद्धमित्यर्थः** ।

**एतदुक्तं भवति । अभेदेन तावद्विशेषाभिधानं प्राप्तं न च तदस्त्यनुभवविरोधात् । अतस्तत्प्र(ती)तिबन्धकत्वेन विशेषः कल्पनीयः । स च यथाऽनुभवमेव स्वीकार्य इति नाति-प्रसङ्गः कश्चिदिति** ।

**शे० — संभावनैवेति** । उभयव्यपदेशादिति नये धर्माणां ब्रह्मणा सविशेषाभेदेऽभिहिते सत्यन्विताभिधानं संभाव्यत इति संभावनोक्ता न तु सिद्धमित्युच्यत इत्यर्थः ॥ **न हीति** । उत्कटैक-कोटिकसंशयस्यैव संभावनात्वादिति भावः । स्वार्थ इतीत्यस्यानुभवसिद्धमिति वक्ष्यमाणेनान्वयः । तात्पर्यमाह **प्रत्येकमिति** ॥ **परस्परेति** । परस्परसन्निधानाल्लब्धविशेषविषयतत्कसामान्यशक्तिभि-रित्यर्थः । ननु तथाऽपि कथमुक्तप्रतिबन्द्या परिहार इत्यत आह **इदमुक्तं भवतीति** ॥ **कश्चिदिति** । विशेषाभिधानप्रसङ्गरूपः सामान्यानभिधानप्रसङ्गरूपो वेत्यर्थः ।

**प० — संभावनैवेत्युक्तेति** । उभयव्यपदेशादितिनये धर्माणां ब्रह्मणा सविशेषाभेदेऽभिहिते सति अन्विताभिधानं संभाव्यत इति संभावनोक्ता न तु सिद्धमित्युच्यते इत्यर्थः ॥ **न हि संभावना-सिद्धिरिति** । संभावना न हि सिद्धिरित्यर्थः । इतिपदस्य हेत्वर्थतया वृत्तिमुपेत्य योजयति **यस्मा-दित्यादिना** ॥ **सन्निधानाहितशक्तिभिरिति** । परस्परसन्निधानान्येवाहितशक्तयो न तु शक्त्यन्तर-मिति व्याख्यातार्थमेतद्वाक्यं तर्कताण्डवे ॥ **नातिप्रसङ्ग इति** । रूपस्य हीत्यादिना प्रागुक्तातिप्रसङ्गो नेत्यर्थः ॥ **अन्विताभिधानोपपादनम्** ।

**या० —** ननु तर्हि सामान्याभिधानप्रतिबन्धकत्वमपि विशेषे स्वीकार्यं स्यादित्यत आह **स चेति** ।

**श्री०** **तत्प्रतिबन्धकत्वेन** विशेषाभिधानप्रतिबन्धकत्वेन । एवं तर्हि सामान्यान्वयाभिधान-मपि कुतो न प्रतिबद्धमित्यतिप्रसङ्ग इति चेत्तत्राह **स चेति** । विशेष इत्यर्थः ॥ **यथानुभवमिति** । सत्यपदेन विशेषान्वयप्रतिपत्तेरननुभूयमानत्वेन तत्प्रतिबन्धकतयैव विशेषोऽङ्गीकार्यः न तु सामान्यान्वया-भिधानप्रतिबन्धकत्वेन । सत्यपदं सामान्यतो योग्येतरान्वितं स्वार्थं बोधयतीत्यनुभवसिद्धत्वादिति । एवं तर्हि घटे त्वचा प्रतीते सति अभेदाद्रूपमपि प्रतीयेतेति चेत् । सत्यम् । सामान्यतो घटत्वेन रूपेण प्रतीयत एव । शुक्लत्वादिविशेषाकारेणाप्रतीतिस्तु विशेषबलादिति न दोष इति ध्येयम् ।

सु० — एवं प्रतिज्ञातमन्विताभिधानमुपपाद्य यदुक्तमभिहितान्वयादिपक्षाणामयुक्तत्वं तदन्विताभिधानानङ्गीकारे बाधकप्रदर्शनमुखेनोपपादयति यदीति ।

अनु० — यद्यनन्वितमेवैतत्पदं स्वार्थं वदेदिह ॥
तथाऽन्यान्यपि सर्वाणि कः कुर्यादन्वयं पुनः ।

एतद्ब्रह्मादिकमाद्यं पदम् । इह सत्यज्ञानादिवाक्ये । अन्यान्युत्तरा(ण्यपि)णि पदा(नि)न्यपि तथा यद्यनन्विता न्येव)नेव स्वार्थान्वदेयुस्तर्ह्यन्वयमन्वयज्ञानं तु कः कुर्यात् । आद्यं पदमलब्धसहायं प्रथमं सामान्यतोऽन्वितमभिधत्ते । उत्तराणि त्वादित एव लब्धसहायानि विशेषत एवान्विताभिधायीनि । तदिदं वैलक्षण्यं सूचयितुमेतदन्यानीति विभागेन ग्रहणम् । अन्यथा यदि वाक्यस्थानि समस्तानि पदानि नान्विताभिधायीनि किन्त्वनन्वितानेव स्वार्थानभिदधतीति; तर्ह्यन्वयज्ञानं निर्निबन्धनमापद्येतेत्यवक्ष्यत् ।

प० — एतदन्यानीति । विभागेन ग्रहणमित्यत्रैतदिति अन्यानीति च विभागेनेत्यर्थः ।

श्री० — अन्विताभिधानाङ्गीकारे नायं दोष इत्याह आद्यं पदमिति ॥ सूचयितुम् अस्मन्मत इति शेषः । आदितः पदात् । उत्तरपदान्याद्यं पदं सहकारीकृत्येति यावत् ।

सु० — एतदेव प्रपञ्चयति व्यापार इति ।

अनु० — व्यापारो न हि शब्दस्य परः स्वार्थप्रकाशनात् ।
पुमानप्येकवारोक्त्या कृतकृत्यो यदा भवेत् ।
अन्वयस्य कथं ज्ञानं शब्दार्थत्वं यदाऽस्य न ।

यदा यद्यस्यान्वयस्य शब्दार्थत्वं पदाभिधेयत्वं न स्यात्तर्ह्यन्वयस्य ज्ञानं कथं न कथञ्चित् । उपायान्तराभावात् । तथा हि अन्वयज्ञानात्पूर्वभावित्वेन वादिभिरङ्गीकृतत्वेन वा प्रसक्तानि तावदेतानि पदानि वा वक्ता वा पदैरभिहिताः पदार्था वा वाक्यं वा वाक्यान्त्यवर्णो वा वर्णमाला वा स्फोटो वा श्रोता वेति । तत्र तावदन्विताभिधानानङ्गीकारे पदानामुपायत्वं नोपपद्यत इत्येतद्व्यापारो न हीत्यर्धेनाह ।

शब्दस्य पदस्य, स्वार्थप्रकाशनादन्यो व्यापारो नास्तीति तावत्सुप्रसिद्धम् । अन्वयश्च न पदाभिधेयः । तत्कथं पदस्य तज्ज्ञानोपायत्वम् । वक्तुरपि तन्नास्तीत्याह पुमानपीति ।

यदा यस्मात्तस्मात्सोऽपि नोपाय इति शेषः । एकवारग्रहणं तस्यात्यन्तव्यवहितत्वद्योतनार्थम् । सकृदुच्चारण एव तस्योपक्षीणत्वादिति ।

**शे०** — स्फोटेतरपदाद्यभिप्रायेणाह **पूर्वभावित्वेनेति** । स्फोटसाधारण्येनाप्याह **वादिभिरङ्गीकृतत्वेनेति** । पदानामन्वयबोधे उपायत्वस्य सिद्धान्तेऽप्यभ्युपगमात्तन्निरासेऽपसिद्धान्तः स्यादित्यत उक्तमन्विताभिधानानङ्गीकार इति ॥ **यस्मादिति** । 'यद्याशब्दस्तु हेत्वर्थे कालार्थे चापि भण्यत' इति स्मरणादिति भावः ।

**श्री०** — **तज्ज्ञानोपायत्वम्** अन्वयज्ञानोपायत्वम् । पदानामिति शेषः ॥ **व्यवहितत्वेति** । पदानामिव वाक्यान्तर्गतत्वाभावादिति भावः । तदेवाह **सकृदिति** ।

**सु०** — **पदाभिहितानां पदार्थानामन्वयबोधकत्वपक्षे दोषमाह** यदैवेति ।

**अनु०** — यदैवानन्वितार्थस्य वचनं तैः पदैर्भवेत् ॥
अनन्वितः स्याच्छब्दार्थो

**अनन्वितार्थस्यैवेति संबन्धः । जातावेकवचनम् । तैर्वाक्यस्थैः । यदि पदान्यनन्वितानेव स्वार्थान्प्रतिपाद्य निवर्तन्ते । ततः पदार्था एवाकाङ्क्षादिमन्तोऽन्वयं बोधयन्ति । तर्ह्यनन्वित एव शब्दार्थः स्यात् । अन्वयस्य शाब्दत्वं न स्यादिति यावत् । पदार्थाख्यं प्रमाणान्तरं चाप(द्येत)द्यते । भवेदेतत् । यदि पदार्थानामेवान्वयबोधकत्वं ब्रूमः । न चैवम् । किन्नाम पदैरभिहितानाम् । तत्कथमन्वयस्याशाब्दत्वमित्यत** आह नेति ।

न तदर्थो हि सोऽन्वयः ॥

**स पदार्थैः प्रतिपादितोऽन्वयस्तेषां पदानामर्थो न हीत्यर्थः । तथा सति प्रत्यक्षावगतधूमप्रतिपादितस्याग्नेः प्रत्यक्षप्रमेयत्वं स्यादिति भावः ।**

**शे०** — पदैरित्यनुरोधेनान्वितार्थानामिति बहुवचनस्यैव प्रयोक्तव्यत्वादनन्वितार्थस्येत्येकवचनप्रयोगस्यानुपपत्तिमाशङ्क्याह **जातावेकवचनमिति** । उक्ततात्पर्यमेतत् ॥ **पदार्थाख्यमिति** । अन्वयप्रमितिकरणत्वात्प्रामाण्यं प्रत्यक्षाद्यनन्तर्भूतत्वाच्च प्रमाणान्तरत्वमिति भावः ।

**श्री०** — **प्रमाणान्तरमिति** । पदार्थानां संसर्गरूपान्वयप्रमितिकरणत्वेन प्रमाणलक्षणाक्रान्तत्वादिति भावः । **धूमप्रतिपादितस्य** धूमजन्यज्ञानविषयस्य ।

**सु०** — **अस्तु तर्हि वाक्यस्यान्वयबोधकत्वमिति पक्ष इत्यत** आह निराकाङ्क्षेति ।

**अनु०** — निराकाङ्क्षपदान्येव वाक्यमित्युच्यते बुधैः ॥

**पदानामन्विताभिधानसामर्थ्यमनङ्गीकुर्वता वाक्यस्यान्वयबोधकत्वमङ्गीकर्तुमशक्यम् । यतः पदान्येव वाक्यमिति बुधैरुच्यते । पदव्यतिरिक्तस्य वाक्यस्याभावादित्यर्थः । केचित्पदा-**

तिरिक्तमेव वाक्यं प्रतिपन्नास्तद्व्युदासाय बुधैरित्युक्तम् । तच्च निराकरिष्यते । गौरश्वः पुरुषो हस्तीत्यादिपदानां वाक्यत्वं मा भूदिति निराकाङ्क्षेत्युक्तम् । सन्निधानाभावे निराकाङ्क्षत्वमेव न निर्वहतीति निराकाङ्क्षत्वेनैव सन्निधानस्य लब्धत्वान्न पृ(तत्पृ)थगुक्तम् । अग्निना सिञ्चेदित्यादौ योग्यताभावेऽप्यन्वयप्रतीतेः प्रकृतानुपयोगाद्योग्यताऽपि नोक्ता ।

**शे० — निराकरिष्यत इति** । तत्तदर्थाभिधानेनेत्येतद्व्याख्यानावर इति शेषः ॥ **निराकाङ्क्षेत्युक्तमिति** । यद्यपि पूर्वपदसञ्जाताकाङ्क्षापूरकत्वरूपाकाङ्क्षाविरहाद्गौरश्वः पुरुषो हस्तीत्यादिपदादावपि निराकाङ्क्षत्वमस्त्येवेति न तेन तन्निरासः । तथाऽपि स्वस्मिन्नेव परिपूर्णाकाङ्क्षत्वेनान्यत्र निराकाङ्क्षत्वस्यैवेह निराकाङ्क्षपदेन विवक्षितत्वात्तेषां च तदभावाद्युक्तस्तेन तन्निरास इति भावः ॥ **न निर्वहतीति** । प्रहरे प्रहरे उच्चारितेषु गामानयेत्यादिपदेष्वाकाङ्क्षापर्यवसानस्यादर्शनादिति भावः ॥ **प्रकृतानुपयोगादिति** । अन्वयप्रमायां तदुपयोगेऽपि तस्या इहाप्रकृतत्वात्प्रकृततत्प्रतीतौ (अन्वयप्रतीतौ) चानुपयोगादित्यर्थः । न चैवं पद्धत्याद्युक्तवाक्यलक्षणेऽपि सन्निधिपदं योग्यतापदं च न ग्राह्यं स्यादिति वाच्यम् । तदुक्तलक्षणप्रविष्टाया आकाङ्क्षायाः पर्यवसितत्वरूपत्वाभावेन सन्निधानाभावेऽपि तत्र विवक्षिताकाङ्क्षाया निर्वाहादाकाङ्क्षायाः सन्निधानस्यालाभात्सन्निधिपदस्य प्रमाणवाक्यस्यैव लक्ष्यत्वाभिप्रायेण योग्यतापदस्य चोपपन्नत्वादित्याशयात् ।

**प० — निराकरिष्यत इति** । उत्तरवाक्य इति भावः ॥ **निराकांक्षेत्युक्तमिति** । समभिव्याहृतपदानामन्योन्यमाकाङ्क्षावत्त्वेऽप्यन्यपदे साकाङ्क्षत्वराहित्यं निराकाङ्क्षत्वम् । तेन गौरश्व इति सङ्गच्छत इति ज्ञेयम् । उक्तं हि । 'अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्विभागे स्यादि'ति जैमिनिसूत्रे यत्पदोद्धारे साकांक्षं पदं भवति । तस्मिन् सन्निहिते सति निराकांक्षं तद्वाक्यमिति ॥ **प्रकृतानुपयोगादिति** । अन्वयबोधकत्वमात्रस्याधुना विचार्यमाणत्वेन प्रमापकत्वाविचारादिति भावः ।

**या० — निराकरिष्यत इति** । अनुपदमेवेति शेषः । **निराकाङ्क्षेत्युक्तमिति** । अत्र निराकाङ्क्षत्वं नाम पर्यवसिताकाङ्क्षत्वमेवेति ज्ञातव्यम् ॥ **न निर्वहतीति** । प्रहरे प्रहरे उच्चारितेषु गामानयेत्यादिपदेष्वाकाङ्क्षापर्यवसानस्यादर्शनादिति भावः । पद्धत्याद्युक्तवाक्यलक्षणप्रविष्टाकाङ्क्षा तु न पर्यवसिता विवक्षिता किन्त्वन्यैवेति न तत्र सन्निधिपदं व्यर्थमित्यवगन्तव्यम् । **प्रकृतानुपयोगादिति** । वाक्येऽन्वयबोधकत्वमेवेदानीं विचार्यतया प्रकृतं न तत्प्रमापकत्वमपि येन तदर्थं योग्यतापेक्षा स्यादिति भावः । योग्यतान्तर्भावेन वाक्यलक्षणकथनं तु प्रमाणवाक्यस्यैव लक्ष्यत्वाभिप्रायेणेति मन्तव्यम् ।

**श्री० — वाक्यं** स्फोटाख्यम् ॥ **न निर्वहतीति** । प्रहरे प्रहरे उच्चार्यमाणेष्वाकाङ्क्षापूर्तिरूपं निराकाङ्क्षत्वमेव नास्तीत्यर्थः ।

सु० — नन्वेवं वदता भवतैव पदव्यतिरिक्तं वाक्यमङ्गीकृतम् । यथा खलु तन्तूनां विक्रियाविशेषः पटो न तन्तुमात्रम् । तथा पदानां यो निराकाङ्क्षतालक्षणो विक्रियाविशेषः स वाक्यं, पदातिरिक्तमेवेत्यत आह तत्तदिति ।

अनु० — तत्तदर्थाभिधानेन स्यान्निराकाङ्क्षता च सा ॥

न तन्तूनां पट इव पदानां निराकाङ्क्षा विक्रिया । येन पदातिरिक्तं वाक्यं स्यात् । किन्नाम श्रोतृपुरुषधर्म एव । जिज्ञासा खल्वाकाङ्क्षा । निराकाङ्क्षता च निवृत्तजिज्ञासत्वम् । सा च निराकाङ्क्षता पदैः स्यादिति पदानि निराकाङ्क्षाणीत्युच्यन्ते । निराकाङ्क्षताकारित्वं च न पदानां विक्रियाविशेषः । जिज्ञासितार्थाभिधानमात्रेण तद्धेतुत्वात् । तस्य च स्वभावत्वात् । तथा च जिज्ञासितार्थानभिदधति जिज्ञासां निवर्तयन्ति पदानि निराकाङ्क्षाणीत्युक्तं भवति ।

शे० — तस्य चेति । जिज्ञासितार्थाभिधानस्येत्यर्थः । तस्य पदशक्तिरूपत्वेन तदनागन्तुकधर्मत्वादिति भावः ।

प० — तद्धेतुत्वादिति । निराकांक्षताहेतुत्वादित्यर्थः ॥ तस्य चेति । अभिधानस्य चेत्यर्थः ।

या० — तस्य चेति । अभिधानस्य च पदशक्तिरूपत्वेन तदनागन्तुकधर्मत्वादित्यर्थः ।

श्री० — एवं वदतेति । निराकाङ्क्षपदान्येवेति पदानां निराकाङ्क्षतालक्षणविक्रियाविशेषस्य वाक्यत्वं वदतेत्यर्थः । विक्रियाविशेषो व्यतिषङ्गविशेषरूप । न तन्तुमात्रम् । व्यतिषङ्गविशेषरहितन्तूनां पटत्वाभावादिति भावः ॥ स वाक्यमिति । स वाक्यमित्युच्यते तच्च पदातिरिक्तमेवेति योज्यम् । पटो व्यतिषङ्गविशेषरूपः । उच्यन्ते उपचर्यन्ते । एवं तर्हि निराकाङ्क्षपदानि पुरुषनिराकाङ्क्षताकारीणि पदानि वाक्यमित्युक्त्या पुरुषनिराकाङ्क्षताकारितारूया विक्रिया वाक्यरूपा पदेष्वतिरिक्ता प्राप्तैवेत्यत आह निराकाङ्क्ष(तैवे)ति । यदि पुरुषनिराकाङ्क्षताकारिता न पदनिष्ठा विक्रिया कथं तर्हि पुरुषनिराकाङ्क्षताहेतुत्वं पदानामित्यत आह जिज्ञासितेति ॥ तद्धेतुत्वादिति । श्रोतृनिराकाङ्क्षताहेतुत्वादित्यर्थः । ननु तर्हि जिज्ञासितार्थाभिधानमेव पदनिष्ठा विक्रिया सा च पदभिन्नैवेति तदाख्यं वाक्यं पदभिन्नमेवेत्यत आह तस्य चेति । अर्थाभिधायकत्वस्येत्यर्थः । तथा च नेदं विक्रियारूपमागन्तुकम् । येन पदाद्भिन्नं स्यादिति भावः । निराकाङ्क्षाणीत्युक्तं भवतीत्यत्र निराकाङ्क्षाणीत्यनन्तरं तान्येव वाक्यमित्युच्यन्त इति शेषः ।

सु० — जिज्ञासितार्थाभिधानेनैव श्रोतुर्निराकाङ्क्षता स्यादित्येतदुपपादयति अपूर्तेरिति ।

अनु० — अपूर्तेस्तावदर्थानामाकाङ्क्षा पूर्वमिष्यते ॥

आनयेत्येवोक्ते गवादिपदप्रयोगात्पूर्वं, या किमि(त्यादि)तिजिज्ञासा (वर्तते) सा तावतां जिज्ञासितानामर्थानां कर्मादीनामपूर्तेर्गवादिपदैरनभिधानादिति यावत् । एतदुक्तं भवति । शाब्दी जिज्ञासा यावन्पदानि जिज्ञासिता(न)र्थान्नाभिदधति तावन्न निवर्तते । निवर्तते च पदैस्ते-ष्वभिहितेष्वित्यतोऽन्वयव्यतिरेकाभ्यां विज्ञायते तत्तदर्थाभिधानेनैव निराकाङ्क्षता स्यादिति ।

वाक्यान्त्यवर्णो वर्णमालेति पक्षद्वयमतिमन्दमिति न दूषितम् । तथा चोक्तं पुरस्तात् ।

शे० — पुरस्तादिति । जिज्ञासाधिकरणे 'गौरवं कल्पनेऽन्यथे'त्येतद्व्याख्यानावसरेऽतिमन्दत्वं ( गामानयेत्यत्र येत्यन्त्यवर्णश्रवणे गौरश्व इत्यादिवर्णमालाश्रवणे चान्वयबोधाजननादिति मन्दत्वम् ) व्युत्पादितमित्यर्थः ।

प० तथा चोक्तं पुरस्तादिति । जिज्ञासानये 'शक्तिश्चैवान्विते स्वार्थे' इति श्लोके 'गौरवं कल्पनेऽन्यथे'त्येतत्पदव्याख्यावसरेऽतिमन्दत्वं तन्मतद्वयस्योक्तमित्यर्थः ।

या० — पुरस्तादिति । जिज्ञासाधिकरण इत्यर्थः ।

श्री० — शाब्दीति । शाब्दी ह्याकाङ्क्षा शब्देनैव शाम्यतीति न्यायादिति भावः ॥ अतिमन्दमिति । गामानयेत्यत्र येत्यन्त्यवर्णश्रवणे गौरश्च इत्यादिवर्णमालाश्रवणे चान्वयबोधा-जननादिति भावः ।

सु० — अस्तु तर्हि निरस्तवर्णपदविभागं स्फोटाख्यं वाक्यमेवान्वयस्य प्रतिपादकम् । पदानि तु तदभिव्यञ्जकतयोपयुज्यन्त इति पक्ष इत्यत आह कर्मेति ।

अनु० — कर्मकर्तृक्रियाणां तु पूर्तौ कोऽन्योऽन्वयो भवेत् ।

अत्र कर्मादिग्रहणमुपलक्षणम् । जिज्ञासितानां पदार्थानामित्यर्थः । अन्योन्यसंसृष्टाना-मिति शेषः । पूर्ताविभिधाने सति पदैरिति शेषः । अन्वयो भवेत्प्रतिपादनीय इति शेषः । एतदुक्तं भवति । स्फोटमन्वयस्य प्रतिपादकं वदता तत्सद्भावे प्रमाणं वाच्यम् । अन्वय-प्रतीत्यन्यथाऽनुपपत्तिरिति चेन्न । पदानामेव संसृष्टार्थप्रतिपादकत्वसम्भवात् । न च तद-तिरिक्तोऽन्वयो नामास्ति प्रतिपादनीयो यदर्थं स्फोटान्वेषणमिति ।

एवमनङ्गीकारे बाधकमाह अपूर्तिरिति ।

अपूर्तिश्चेत्पदैरुक्तैः किं नृशृङ्गेण पूर्यते ।

अन्वयस्यापूर्तिरनभिधानम् । उक्तैरिति पदानां प्रमितत्वमभिप्रैति । नृशृङ्गेण स्फोटेनेति तस्याप्रामाणिकत्वम् । नृशृङ्गतुल्येनेति पूर्यतेऽभिधीयतेऽन्वय इति शेषः । इदमुक्तं भवति । पदवादिनः कल्पनालाघवं प्रमितानां पदानामन्विता(र्था)भिधानस्य कल्पनात् । स्फोटवादिनस्तु गौरवम् । यतो निष्प्रमाणकः स्फोटस्तस्यान्वयप्रतिपादकत्वं चेति द्वयं कल्पनीयमिति ।

शे० — यद्यपि ताल्वादिस्थानोद्भववायवीयध्वनिविशेषाभिव्यक्तवर्णात्मकपदैः स्वसमवेतवाक्यस्फोटोऽभिव्यज्यते स च व्यक्तो वाक्यार्थं प्रत्याययतीति सखण्डवाक्यस्फोटोऽपि पराभिमतस्तथाऽप्यखण्डवाक्यस्फोटपक्षस्य मुख्यत्वेन तदभिमतत्वात्तमेवोपादत्ते **निरस्तेति** । निरस्तमारोपितवर्णपदविभागं निरवयवमिति यावत् । उपलक्ष्यतावच्छेदकं धर्मं वदन्नेव तत्पदार्थमप्याह **जिज्ञासितानामिति** । पदार्थानां सिद्धत्वान्न जिज्ञासाविषयत्वम् । नापि पदैरभिधानमित्यतोऽसिद्धेन रूपेण तेषां तदुभयोपपत्तिं वक्तुमपेक्षितं शेषं पूरयति **अन्योन्येति** । नन्वभिधानान्यथाऽनुपपत्त्या स्फोटं कल्पयन्तं परं प्रत्यभिधानान्यथासिद्धेरेव वक्तव्यत्वात्पूर्तेरन्यथासिद्धत्ववर्णनमसङ्गतमित्यतः पूर्तिपदमभिधानपरतया व्याचष्टे **पूर्तावभिधान इति** । नन्वन्योन्यसंसृष्टानां जिज्ञासितानामर्थानामभिधानस्यैव स्फोटं विनाऽसिद्धेस्तदन्यथाऽनुपपत्त्यैव स्फोटसिद्धिः स्यादित्यतोऽभिधानस्यान्यथासिद्धत्वान्न तत्साधकत्वमिति भावेन तस्यान्यथासिद्धतां वक्तुं शेषं पूरयति **पदैरिति शेष इति** । नन्वन्वयप्रतिपत्त्यन्यथाऽनुपपत्त्या स्फोटं साधयन्तं प्रत्यन्वयप्रतिपत्त्यभावस्यैव वक्तव्यत्वादन्वयाभावकथनमसङ्गतमित्याशङ्क्यात्रापि तत्प्रतिपत्त्यभावस्यैवोच्यमानत्वान्नासङ्गतिरिति भावेन तल्लाभाय शेषं पूरयति **प्रतिपादनीय इति शेष इति** ।

किमनेनोक्तं भवतीत्यत आह **एतदुक्तं भवतीति** । यद्यप्येकं वाक्यं शब्दादर्थं प्रत्येतीत्येकार्थावलम्बनप्रत्यक्षस्यापि सत्त्वात्तदेव वक्तुमुचितमिति न तत्परित्यागेनान्यथाऽनुपपत्तिपर्यन्तधावनं युक्तम् । तथाऽप्येकदेशावस्थानेन निमित्तेनानेकेषु तरुष्वेकं वनमिति प्रतीतिवदनेकेष्वपि पदेष्वेकार्थप्रत्यायकत्वेनोपाधिनैकत्वं संभवतीत्यन्यथासिद्धिशङ्काकलङ्कितत्वात्तदर्थतयाऽप्यन्ततोऽन्वयरूपैकार्थप्रतीत्यन्यथाऽनुपपत्तेरेवानुसरणीयत्वाद्धरमादित एव तदनुसरणमिति भावेन प्रत्यक्षमनादृत्यान्वयप्रतीत्यन्यथाऽनुपपत्तिमेव तत्र प्रमाणत्वेनाशङ्कते **अन्वयेति** । ननु पदैः संसृष्टार्थप्रतिपादनेऽप्यन्वयस्याप्रतिपादनात्तत्प्रतिपादनाय स्फोटोऽभ्युपगमनीय एवेत्यतो भवेदेतदेवं यदि संसृष्टपदार्थातिरिक्तोऽन्वयः स्यान्न चैतदस्ति । गुणप्रधानाभावेनान्योन्यान्विताः पदार्था वा तदन्वयो वा वाक्यार्थ इति प्रामाणिकैरभ्युपगतत्वात् । ततश्च संसृष्टार्थप्रतिपादने वाक्यार्थभूतान्वयस्यैव प्रतिपादनान्न तदन्यथाऽनुपपत्तिरस्तीति न तया स्फोटसिद्धिरित्याह **न चेति** ।

पदैरन्वयाभिधानस्य पूर्वेणैव सिद्धेरपूर्तिश्चेदुत्तरग्रन्थवैयर्थ्यमित्याशङ्क्यानङ्गीकारे बाधककथनेन प्रागुक्तायाः पदानामन्विताभिधायकताया उपपादनार्थत्वान्न तदिति भावेन तदुपपादकतयोत्तरग्रन्थं योजयति **एवमनङ्गीकार इति** । अप्रामाणिकत्वमित्यत्राप्यभिप्रैतीति वर्तते । स्फोटस्य नृशृङ्गत्वाभावात्तथोक्तिरनुपपन्नेत्यतस्तत्सादृश्यात्ताच्छब्द्यमित्याह **नृशृङ्गतुल्येनेति** । नन्वत्र प्रमितानां पदानामन्वयानभिधायकत्वेऽप्रामाणिकस्य स्फोटस्यान्वयानभिधायकत्वमात्रमुच्यते । न तु पदानामन्वयानभिधायकत्वे किमपि बाधकमिति कथमस्योक्तानङ्गीकारे बाधकोक्तितयाऽवतार इत्यत आह **इदमुक्तं भवतीति** ।

श्री० — उपलक्षणे कोऽर्थः सम्पन्न इत्यत आह **जिज्ञासितानामिति** ॥ **पदानामेवेति** । तथा च पदैरेवान्वयस्योपपत्तिरित्यर्थापत्तिरयुक्तेत्यर्थः । **तदतिरिक्तः** अर्थसंसर्गातिरिक्तः ।

**सु० — अस्तु तर्हि नवीनाभिहितान्वयपक्षः । यदि हि पदानि पदार्थान्प्रतिपाद्यैव निवर्तन्ते पदार्था एवान्वयं बोधयन्तीति मतं तदा स्यादेवोक्तदोषः । न चैवम् । किन्तु पदान्येव पदार्थप्रतिपादनावान्तरव्यापाराण्यन्वयं बोधयन्तीति । मैवम् । तथा सति पदानां विरम्यव्यापारप्रसङ्गात् । ततः को दोष इत्यत आह** व्यापारश्चेदिति ।

**अनु० —** व्यापारश्चेत्पुनस्तेषामनुक्तावपि किन्न सः ॥

**अचेतनानामपि पदानां यदि** पुनर्व्यापारो **विरम्यव्यापारोऽङ्गीक्रियते तदा पृच्छामोऽनुक्तानामपि पदानां पदार्थादिप्रतिपादने व्यापारः कुतो न भवतीति ।**

**उत्तरमाशङ्कते** उक्त इति ।

उक्ते बुद्धिस्थताहेतोर्यदि व्यापार इष्यते ।

**भावे क्तप्रत्ययः ।** बुद्धिस्थता **बुद्धिविषयता । पदानि हि ज्ञातकरणानि न तु चक्षुरादिवत्सत्तामात्रेण । उक्तिस्तु(श्च तज्ज्ञा)ज्ञानोपाय इत्यतोऽनुक्तौ ज्ञातत्वाभावान्न व्यापार इत्याशयः । इति यदीष्यत इति सम्बन्धः ।**

शे० — **उक्तदोष इति** । अन्वयस्याशाब्दत्वं पदार्थाख्यप्रामाणान्तरापत्तिश्चेत्युक्तदोष इत्यर्थः ॥ **विरम्येति** । अनेकशक्तियुक्तस्यापि पुरुषस्य क्रमेण कार्यद्वयकारितावत्पदार्थान्वयबोधेन शक्तानामपि पदानां क्रमेण पदार्थतदन्वयबोधकत्वापातात् । न च सोपपद्यते । पदानामचेतनत्वादिति भावः । अप्रयोजकतामाशङ्कते **ततः क इति** । ननूक्तेर्बुद्धिस्थत्वहेतुत्वात्तत्साधकत्वेनोक्तावित्येव वक्तव्यम् । उक्त इति तु कथमित्यतोऽत्र उक्तिरुक्तमिति भावव्युत्पत्त्योक्तशब्दस्योक्तिपरत्वेन कर्मव्युत्पन्नत्वानाश्रयणा-

त्रानुपपत्तिरित्याशयेनाह **भावे क्तप्रत्यय इति** । घटादेर्भूतलादाविव पदानां बुद्ध्याश्रितत्वासंभवमाशङ्क्य विषयतासंबन्धेन तदाश्रयत्वाभ्युपगमान्नानुपपत्तिरित्याह **बुद्धिविषयतेति** । किं पदानां बुद्धिविषयत्वेनापीत्यत आह **पदानि हीति** ।

**प०— उक्तदोष इति** । यदैवानन्वितार्थस्येतिश्लोकोक्तोऽन्वयस्य शाब्दत्वाभावरूपपदार्थाख्यमानान्तरतापत्तिरूपश्च दोष इत्यर्थः ॥ **भावे क्त इति** । उक्तौ सत्यामिति तस्यार्थ इति भावः । इतिपदशेषेण योजयति **इति यदीष्यत इति संबन्ध इति** ।

**या०— उक्तदोष इति** । अन्वयस्याशाब्दत्वं पदार्थानां प्रमाणान्तरतापत्तेश्चेत्युक्तदोष इत्यर्थः ।

**श्री०— कुतो न भवतीति** । अनुक्तान्यनुच्चारितान्यपि पदानि पदार्थप्रतिपादनद्वाराऽन्वयं कुतो न बोधयन्तीत्यर्थः ॥ **भाव इति** । तथा चोक्ते उच्चारणरूपायामुक्तौ सत्यामित्यर्थः ॥ **न व्यापार इति** । पदार्थप्रतिपादनेऽन्वयप्रतिपादने चेति शेषः ।

**सु०— पुनः सिद्धान्ती पृच्छति** बुद्धिस्थत्वायेति ।

**अनु०—** बुद्धिस्थत्वाय यत्नं न कथं कुर्युः पुरैव च ॥

**पदार्थबोधनादिव्यापाराय यत्पदानां ज्ञातत्वमावश्यकम्, तदर्थं तानि पदान्युक्तेः प्रागेव यत्नं कथं न कुर्युरिति च त्वां पृच्छामः । उक्तिं विनाऽपि बुद्धिविषयतायै कुतो यत्नं न कुर्युरिति प्रश्नार्थः । यद्वा बुद्धिविषयत्वाय यदुच्चारणं तदर्थं तूष्णीं स्थितं कुतो न प्रेरयन्तीति । उत्तरं शङ्कते** पुरुषेति ।

पुरुषाधीनता तेषां यदि

**स्यादेतद्यदि पदानि चेतनानि स्युः । न चैवम् । अतो वक्तृपुरुषायत्तान्येव । स यदोच्चारणेन व्यनक्ति तदा श्रोतृबुद्धिस्थानि भूत्वा पदार्थप्रतिपादनादिव्यापारवन्ति भवन्ति । न तु स्वयं किमपि कुर्वन्तीति ।**

**एवं तर्ह्यन्वयबोधनरूपोऽपि विरम्यव्यापारो न तेषामुपपद्यत इत्याह** पश्चाच्चेति ।

पश्चाच्च सा समा ॥

**पश्चादन्वयबोधने सा पुरुषाधीनता । एतदुक्तं भवति । चैतन्ये हि पदानामन्वयबोधनाय समभिव्याहृतानामस्माकं न पदार्थप्रतिपादनमात्रेण कृतार्थता । अतोऽन्वयोऽप्यस्माभिः प्रतिपादनीय इति विमृश्य विरम्यव्यापारो युज्यते । न चैवम् । अन्यथोक्त एवातिप्रसङ्ग इति । श्रोतान्वयज्ञाने कारणमिति तु स्यात् । किन्तु कर्तैव । तस्य करणं तु विचार्यते ।**

**अनन्विताभिधायीनि पदान्येव करणीकृत्य श्रोता तत्स्मारितानामर्थानामन्वयज्ञानाय यतत इति चेत्तत्राह** पुमानेवेति ।

पुमानेवान्वयायैषां यदि पश्चाद्विचेष्टते ॥
अनन्विताभिधानानां स एवार्थान्तरोक्तिषु ॥
यतताम्

**अन्वयशब्देन तज्ज्ञानमुपलक्ष्यते** । पश्चात् **पदैः पदार्थस्मरणानन्तरम्** । अनन्विताभिधानानां साहाय्येनेति शेषः । सः **पुमानेव** । **उक्तिशब्दस्तत्कार्यज्ञानोपलक्षणः । अन्वयानभिधायिभिरपि पदैर्यद्यन्वयं प्रतिपद्यते, तदा गवादिपदैरश्वादिकमपि प्रतिपद्येतेत्यर्थः** ।

**शङ्कते** शब्देति ।

शब्दशक्तिश्चेत्तत्र नैव

**गवादिपदानामश्वादौ शक्तिरेव नास्ति तत्कथं तैस्तत्प्रतिपद्यताम् । न (हि) चक्षुषा शब्दं प्रतिपद्यत इति चेदित्यर्थः । तर्हि समं प्रकृतेऽपीत्याह** अन्वये कथमिति ।

अन्वये कथम् ॥

**अन्वये शक्तिरहितैस्तैः कथमन्वयज्ञानाय यतेतेत्यर्थः** ।

शे० — ननूक्तिं विनाऽन्यस्य तदुपायस्याभावादेव न तदर्थं यत्नं कुर्वन्तीत्यत आह **यद्वेति** ॥ **न चैवमिति** । पदानां न चैतन्यमित्यर्थः । अस्तु चैतन्यमपि तेषामित्यत आह **अन्यथेति** ॥ **उक्त एवेति** । बुद्धिस्थत्वाय यत्नं नेत्युक्तो द्विविधोऽतिप्रसङ्ग इत्यर्थः । ननु तर्हि मूलेऽप्यन्वयज्ञानायेति वक्तव्यम् । अन्वयायेति तु कथमुक्तमित्यतोऽत्रान्वयशब्दस्य तज्ज्ञानोपलक्षणत्वान्नानुपपत्तिरित्याह **अन्वयशब्देनेति** ॥ **तत्कार्येति** । अर्थान्तरोक्तिकार्येत्यर्थः । अभिप्रायमाह **अन्वयेति** । अविशेषादिति भावः ।

**प० — उ(क्ता ति)क्त एवातिप्रसङ्ग इति** । अनुक्तावपि किं न स इति बुद्धिस्थत्वायेति चोक्त-प्रसङ्ग इत्यर्थः । शङ्कते **श्रोतेति** ॥

**श्री० — विरम्यव्यापारः** चेतनधर्मभूत इति शेषः । **तेषां** जडरूपाणां पदानाम् ॥ **अन्य-थेति** । एवमयोगेऽपि चेतनधर्मभूतो विरम्यव्यापारो जडेषु पदेषु यद्यङ्गीक्रियत इत्यर्थः ॥ **उक्त एवेति** । बुद्धिस्थत्वायेत्यनेनोक्त इत्यर्थः । **अनन्विताभिधानानां** पदानां, **सहाय्येन** तादृशानि पदानि सहायीकृत्येत्यर्थः ।

**सु० — यद्यनन्वितमित्यादिनोक्तमर्थमुपसंहरति** तदिति ।

**अनु० —** तत्कल्पनागुरुत्वादिदोषेऽतोऽभिहितान्वयः ।

अनुभूतिविरुद्धश्च त्याज्य एव मनीषिभिः ।

तत् तस्मात् । **तस्यैव विवरणं कल्पनेत्यादि । कल्पनागौरवं प्रथमसूत्रेण व्युत्पादितम् । अभिहितान्वय इत्युक्तसमस्तपक्षोपलक्षणम् । कथमनुभूतिविरोध इत्यत आह** कर्तृशब्दे हीति ।

कर्तृशब्दे ह्यभिहिते धर्मसामान्यवेदनात् ।

विशेषधर्ममन्विच्छन्किमित्येव हि पृच्छति ।

**कर्तृग्रहणं सम्बन्धिमात्रोपलक्षणम् । विशेषधर्ममिति** तज्ज्ञानम् । **देवदत्तेनेति कर्तृवाचिनि शब्दे प्रयुक्ते श्रोता किमिति पृच्छतीति तावदविवादम् । स च पचनादिधर्मविशेषज्ञानमि(मन्वि)च्छन्नेव पृच्छति । विशेषजिज्ञासा च धर्मसामान्यज्ञानादेव । न च तदा तस्य धर्मसामान्यज्ञानोपायोऽस्त्यन्यः पदात् । अतः पदेन धर्मसामान्यान्वितं** वस्तु **प्रतिपादितमिति ज्ञायते । किमिति प्रश्नो विशेषजिज्ञासयेत्येतत्कुत इत्यत आह** गुणेति ।

गुणक्रियादिधर्माणां विशेषे कथिते पुनः ।

निराकाङ्क्षो भवेद्यस्मात्

**निराकाङ्क्षो निवृत्तजिज्ञासः । तस्माद्विशेषधर्ममन्विच्छन्किमित्येव हि पृच्छतीति संबन्धः ।**

**एतदुक्तं भवति । कर्त्रादिपदश्रवणानन्तरभावी किमित्यादिप्रश्नो जिज्ञासामूलः, प्रश्नत्वात्संमतवत् । सा च जिज्ञासा धर्मविशेषविषया । तदुक्त्या निवर्तमानत्वा(त्सम्मत)त्संप्रतिपन्नवत् । विशेषजिज्ञासा च धर्मसामान्यज्ञानपूर्विका विशेषजिज्ञासात्वात्संमतवत् । सामान्यज्ञानं चेदमेतत्पदजन्यं तदनन्तरभावित्वात्संमतवदिति । पदेन पदार्थमात्रेऽभिहिते अविनाभावबलेन धर्मसामान्यज्ञानमिति चेन्न । दृष्टपदपरित्यागेनादृष्टानुमानकल्पनानुपपत्तेरिति ।**

**एतेन विशेषान्विताभिधानपक्षोऽपि परास्तः ।**

**अभिहितान्वयादिपक्षाणां त्याज्यत्वे प्रकृते किमायातमित्यत आह** शब्दा इति ।

शब्दा अन्वितवाचकाः ॥

**सर्वेऽपि शब्दाः सामान्येनान्वित(स्व)ार्थवाचका इत्येष एव पक्षो ग्राह्य इत्यर्थः ।**

**शे० — प्रथमसूत्रेणेति ।** जिज्ञासासूत्रे 'गौरवं कल्पनेऽन्यथे'त्यादिनेति शेषः । अन्विताभिधानातिरिक्तसमस्तपक्षाणामप्यनुपपन्नतायाः प्राक् सम्यक् समर्थितत्वादभिहितान्वयवादमात्रग्रहणानु-

पपत्तिमाशङ्क्याह **अभिहितेति** । ननु देवदत्तेनेति कर्तृवाचिशब्दप्रयोग इव ग्राममित्यादिकर्मवाचकशब्दप्रयोगेऽपि किमिति प्रश्नस्याविशिष्टत्वान्न कर्तुरेव ग्रहणं युक्तमित्यत आह **कर्तृग्रहणमिति** । प्रश्नस्य धर्मविशेषेच्छामूलकत्वासम्भवादाह **तज्ज्ञानमिति** । तज्ज्ञानोपलक्षणमित्यर्थः । करिष्यमाणानुमाने आश्रयासिद्धिपरिहारायाह **अविवादमिति** । कर्तृशब्द इत्यादिवाक्यसमुदायतात्पर्यमाह **एतदुक्तं भवतीति** ॥ **प्रश्नत्वादिति** । न च विदिततत्त्वेन पुरुषेण परपरीक्षार्थं क्रियमाणे प्रश्ने व्यभिचारस्तदन्यत्वेन हेतुविशेषणस्यात्राभिमतत्वेन तदप्रसङ्गादिति भावः ॥ **अविनाभावबलेनेति** । यत्कारकं तत्क्रियान्वयि या क्रिया सा कारकान्वयिनीत्यविनाभावबलेनेत्यर्थः ॥ **एतेनेति** । (अनुभवविरोधेनेत्यर्थः) विशेषधर्मज्ञानेच्छया किमिति प्रश्नानुपपत्त्येत्यर्थः । प्रथमत एव विशेषान्वयबोधने विशेषस्य ज्ञातत्वेन तज्जिज्ञासाया असम्भवेन तन्मूलकप्रश्नानुपपत्तेरिति भावः ।

**प०** — **व्युत्पादितमिति** । 'गौरवं कल्पनेऽन्यथेत्ये'तद्व्याख्यावसर इति भावः । **अविनाभावेति** । क्रियाकारकान्वितेत्यादिव्याप्तिबलेनेत्यर्थः ॥ **एतेनेति** । कर्तृशब्द इत्यादिकथनेनेत्यर्थः ।

**या०** — **व्युत्पादितमिति** । गौरवं कल्पनेऽन्यथेत्येतद्व्याख्यावसर इति शेषः ॥ **धर्मविशेषेति** । क्रियाविशेषज्ञानमित्यर्थः । एवमग्रेऽपि धर्मपदं क्रियापरम् ॥ **अविनाभावबलेनेति** । यत्कारकं तत्क्रियान्वितमित्यविनाभावबलेनेत्यर्थः ॥ **एतेनेति** । कर्तृशब्दे ह्यभिहित इत्यादिनोपपादितानुभवविरोधेनेत्यर्थः । न हि प्रथमत एव विशेषान्वयबोधने तज्जिज्ञासामूलकः किमिति प्रश्नोऽनुभूयमानो युज्यत इति भावः ॥ ३।२।१५ ॥

**श्री०** — **तस्यैव** तस्मादित्यस्यैव ॥ **संबन्धीति** । ससंबन्धिकपदार्थवाचिशब्देत्यर्थः । मूले गुणक्रियादिधर्माणां मध्ये कस्मिंश्चिद्विशेषधर्मे कथित इत्यर्थः ॥ **पदेनेति** । या विशेषजिज्ञासा सा धर्मसामान्यज्ञानपूर्विकेत्यविनाभावबलेनैव धर्मसामान्यज्ञानं भवति नत्वेतत्पदजन्यम् । तथा चान्त्यानुमानेऽप्रयोजकतेति भावः ॥ **दृष्टपदेति** । धर्मसामान्यज्ञानकारणत्वेन दृष्टं यत्पदरूपं कारणं तत्परित्यागेनेत्यर्थः ।

**सु०** — **अधिकरणस्य साक्षात्प्रतिपाद्यमर्थमुपसंहरति** अत इति ।

**अनु०** — अतोऽनन्तगुणात्मैको भगवान्

**अनन्तगुणात्मकत्वेऽपि न तस्यैक्यं विहन्यते, नाप्येकेनाभिन्नानामनन्तत्वं गुणत्वं चेत्यर्थः** । **तच्चेत्यानुषङ्गिक(मर्थ)मुपसंहरति** एक एवेति ।

एक एव तु ।
उच्यते सर्ववेदैश्च ॥ ३ । २ । १५ ॥

**तुशब्देन सकलधर्मान्वित इति सूचयति ॥ ३ । २ । १५ ॥**

**शे०— अनन्तत्वमिति ।** विहन्यत इति पूर्वेण संबन्धः ॥ **तुशब्देनेति ।** अनेन मूले तुशब्दो विशेषार्थ इत्युक्तं भवति ॥ ३ । २ । १५ ॥

**प०— तच्चेतीति ।** तच्च नाभिहितान्वय इत्यादिनोक्तमित्यर्थः ॥ ३ । २ । १५ ॥

**श्री०— तस्य** भगवतः । **एकेनेति ।** एकेन धर्मिरूपेण च भगवतेत्यर्थः । **विशेषबलेनेति** भावः ॥ **तुशब्देनेति ।** पदानामन्विते शक्तेः साधितत्वादिति भावः ॥ ३ । २ । १५ ॥

**॥ इति उभयव्यपदेशाधिकरणम् ॥**



## ॥ अथ परानन्दा(परमता)धिकरणम् ॥

सु० — ॐ परमतः सेतून्मानसंबंधभेदव्यपदेशेभ्यः ॐ ॥ **परमेश्वरस्यानन्दादयो गुणाः किं लौकिकानन्दादिसलक्षणाः किंवा तद्विलक्षणाः । आद्ये न तत्र बहुमानः सम्भवति । न द्वितीयः । प्रकारप्रमाणाभावात् । विमता लौकिकसलक्षणा आनन्दादिशब्दवाच्यत्वादिति बाधकसद्भावाच्च । अन्यथा तत्रानन्दादिशब्दप्रवृत्तिर्न स्यात् । व्युत्पत्त्यभावात् । अतीन्द्रियत्वेन तत्रोपदेशा(द्युपायाद्य)भावे सादृश्यानुमानस्यैवानुसरणीयत्वात् । तस्य चासिद्धत्वात् । ततश्च वेदवेद्यत्वं न स्यादित्यस्य समाधानार्थमिदमारभ्यते । तत्राशङ्कितसकलदोषपरिहारो न स्फुटः प्रतीयत इत्यतो** व्याचष्टे ते चेति ।

**अनु० — ॐ परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः** ॐ ॥

ते चाखिलविलक्षणाः ।

**ते गुणा न केवलं गुणिनाऽभिन्नाः किन्नामाखिलेभ्यो लौकिकानन्दादिभ्यो विलक्षणाश्च । कथं विलक्षणा इत्यत** आह सर्वे इति ।

सर्वे सर्वगुणात्मानः सर्वकर्तार एव तु ।

**आनन्दोऽपि ज्ञानात्मको ज्ञानमप्यानन्दात्मकमित्यादि । न ह्येवमन्तःकरणपरिणामभेदाः सुखादयः । सर्वकर्तारो जगत्सृष्ट्यादिकर्तारश्च । एवशब्देनोपचारं वारयति । अन्योन्यमभेदे शब्दानां पर्यायत्वमनेकत्वाभावश्च स्यादित्यत** आह तथाऽपीति ।

तथाऽपि सविशेषाश्च

**परस्पराभेदेऽपि । ततो नोक्तदोष इति (शेषः) भावः । अनेन वैलक्षण्यप्रकारो दर्शितः । प्रमाणं च वक्ष्यते । तथा चाद्यं सूत्रद्वयं व्याख्यातं भवति ।**

**शे० — ॐ परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः** ॐ ॥ **प्रकारेति** । वैलक्षण्यनिरूपकप्रकारस्य तन्निर्णायकप्रमाणस्य चाभावादित्यर्थः । न केवलं वैलक्षण्यनिर्णायकप्रमाणाभाव इत्येव किन्तु बाधकमप्यस्तीत्याह **विमता इति** । अप्रयोजकत्वमाशङ्क्य परिहरति **अन्यथेति** । लौकिकानन्दादिवैलक्षण्य इत्यर्थः । तथा चानन्दादिशब्दवाच्यत्वरूपहेतूच्छित्तिरेव बाधकत्वान्नाप्रयोजकत्वमिति भावः । तत्कथमित्यतो न तावदव्युत्पन्नस्यैव शब्दस्य वाचकत्वमतिप्रसङ्गात् । किन्तु वाच्यवाचकभावरूपसङ्गतिज्ञानरूपव्युत्पत्तिसापेक्षस्यैव । न च प्रकृते साऽस्ति येन वाचकत्वं स्यादित्याशयेनाह **व्युत्पत्त्यभावादिति** ।

अस्तु भगवदानन्दादावानन्दादिशब्दानां व्युत्पत्तिरपीत्यतः सा किमयं गौरित्यादिवदयमानन्द इत्याद्युपदेशादिनाऽभिमता किंवाऽयं गोशब्दवाच्यो गोसदृशत्वादितिवत् विमता आनन्दादिशब्दवाच्याः आनन्दादिसदृशत्वादित्यनुमानादिति विकल्पद्वयं मनसि निधायाद्यासम्भवे हेतुं वदन्द्वितीयोऽङ्गीकार्य इत्याह **अतीन्द्रियत्वेनेति** । अस्तु तर्ह्यनुमानेनैव व्युत्पत्तिरिति द्वितीय इत्यत आह **तस्य चेति** ॥ **वेदेति** । आनंदं ब्रह्मण इत्यादिवेदेत्यर्थः । न ह्यगृहीतसङ्गतिकः शब्दो बोधक इति भावः । ननु च लौकिकानन्दादेरप्येवम्भावान्नैतावन्मात्रेण तद्वैलक्षण्यसिद्धेरित्यत आह **न हीति** । तेषामयावद्द्रव्यभावितयाऽन्तःकरणेन भिन्नाभिन्नत्वान्न परस्परमत्यन्ताभिन्नत्वं युक्तमिति भावेन हेतुगर्भं विशेषणमाह **अन्तःकरणपरि(णाम)णतिभेदा इति** ॥ **उपचारमिति** । सर्वकर्तृभगवत्सम्बन्धित्वादेव गुणेषु सर्वकर्तृत्वोक्तिर्न तु गुणानां वस्तुतः सर्वकर्तृत्वादिति तदुक्तेरौपचारिकत्वं वारयितुमेवकार इत्यर्थः ॥ **पर्यायत्वमिति** । एकार्थवादित्वादिति भावः । **अनेकत्वाभावश्चेति** । एकैकेन ज्ञानादिनाऽत्यन्ताभिन्नत्वेनानन्दादीनामप्येकत्वादिति भावः । उपलक्षणं चैतत् । अनेकाभिन्नत्वाज्ज्ञानादेः स्वस्मिन्नेकत्वाभावप्रसङ्गाच्चेत्यपि द्रष्टव्यम् । **नोक्तदोष इति** । पर्यायत्वमनेकत्वाभावप्रसङ्ग इत्युक्तदोषो नेत्यर्थः ॥ **प्रमाणमिति** । भगवद्गुणानां लौकिकानन्दादिवैलक्षण्यप्रतिपादकं 'पूर्णोऽशेषनियन्ता चे'त्यादिश्रुतिरूपं प्रमाणमनुपदमेव वक्ष्यत इत्यर्थः ।

**स०— प्रकारप्रमाणेति** । अनेन प्रकारेण विलक्षणा इति वैलक्षण्ये प्रकाराभावात् लोकविलक्षणत्वे प्रमाणाभावाच्चेत्यर्थः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितानुव्याख्यानस्य
श्रीमज्जयतीर्थविरचितायाः सुधायाः श्रीमत्सत्यव्रततीर्थविरचितायां टिप्पण्यां
तृतीयाध्यायस्य द्वितीयः पादः समाप्तः ॥

**प०— परमतः** । मूलं सङ्गमयितुं सूत्रप्रसक्तिमाह **परमेश्वरस्येति** । हेत्वंशव्यावर्त्यमाह **प्रकारेति** । वैलक्षण्यबीजयोः प्रकारप्रमाणयोरभावादित्यर्थः । बुद्ध्यर्थः पादवदिति सूत्रव्यावर्त्यमाह **विमता इति** । देवदत्तसुखादिवदिति दृष्टान्तयोगादिति भावः ॥ **वक्ष्यत इति** । 'पूर्णोऽशेषनियन्ता च' इत्यत्रेति भावः ॥ **तथा चेति** । प्रकारप्रमाणयोर्निरूपणे सतीत्यर्थः ।

**या० — ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ** ॥ **प्रकारप्रमाणेति** । येन प्रकारेण येन प्रमाणेन च विलक्षणः स प्रकारस्तत्प्रमाणं च नास्तीत्यर्थः ॥ **वक्ष्यत इति** । 'तेषां वैलक्षण्यं श्रुतौ श्रुतमि'त्यत्रेति शेषः ।

**श्री०—ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ॥ अन्यथा** लोकविलक्षणत्वे। **व्युत्पत्तीति**। सम्बन्धिज्ञानाभावादिति भावः॥ **तस्य चेति**। विमतो भगवदानन्द आनन्दशब्दवाच्यः प्रसिद्धजीवानन्दसदृशत्वात् व्यतिरेकेण घटवदित्येवं व्युत्पत्त्यर्थमनुसरणीयेऽनुमाने हेतुरसिद्ध इत्यर्थः। **ततश्चेति**। एवं केनापि प्रकारेण व्युत्पत्त्यसम्भवे॥ **वेदेति**। आनन्दं ब्रह्मण इत्यादिवेदेत्यर्थः। न ह्यगृहीतसङ्गतिकः शब्दो बोधक इति भावः॥ **न केवलमिति**। अहिकुण्डलाधिकरणोक्तरीत्येति शेषः। **कथमिति**। केनापि प्रकारेणेत्यर्थः॥ **आहेति**। लौकिकानन्दादिवैलक्षण्यप्रकारमाहेत्यर्थः।

**च०** — ॐ परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॐ।

**सु०— बाधकपरिहारार्थं सूत्रम्** ॐ बुद्ध्यर्थः पादवत् ॐ इति॥ **तद्व्याचष्टे** विद्वदिति।

**अनु०— ॐ बुद्ध्यर्थः पादवत् ॐ ॥**

विद्वद्व्युत्पत्तितोऽपि च ॥

तैस्तैश्शब्दैश्च भण्यन्ते

अपि च **तथाऽपि तैस्तैः शब्दैश्च भण्यन्ते। कथं विद्वद्व्युत्प(त्तितः)त्यन्विता। विद्वांसो हि साक्षात्कृतभगवद्गुणाः पूर्वैर्विद्वद्भिर्व्युत्पादयितुं शक्यन्ते। अविदुषां कथं व्युत्पत्तिः। भवितव्यं हि तया। अन्यथा विद्वत्त्वस्यैवानुपपत्तेरित्यत** आह युज्यते चेति।

युज्यते चोपदेशतः ॥

**विद्वदुपदेशतोऽविदुषामपि व्युत्पत्तिर्युज्यते। अतीन्द्रिये कथमुपदेश इत्यत आह** अन्येति।

अन्यानन्दादिसादृश्यम्

**लौकिकानन्दादिसादृश्यं भगवदानन्दादेर्विद्यते। ततश्च योऽस्मदानन्दसदृशो भगवद्गुणः स आनन्दादिशब्दवाच्य इत्यादिरुपदेशो घटते। तर्हि पूर्वोत्तरविरोधः स्यात्। प्राक् 'ते चाखिलविलक्षणा' इत्युक्त्वेदानीमन्यानन्दादिसादृश्याभ्युपगमादित्यत** आह आनुकूल्यादीति।

आनुकूल्यादि नापरम् ॥

**आनुकूल्यं निरुपाधिप्रियत्वमानन्दस्य। बोधात्मकत्वं ज्ञानस्येत्यादि। अपरमल्पत्वास्थिरत्वादि। आनुकूल्यादेः प्रवृत्तिनिमित्तस्य सत्त्वात्तदाश्रयेण व्युत्पत्तेरपि संभवादानन्दादिशब्दप्रवृत्त्युपपत्तावनुमानमप्रयोजकमित्युक्तं भवति। ननु विलक्षणेष्वानन्दादिषु विलक्षणा**

एव शब्दाः कुतो न प्रयुज्यन्ते । तथा सति तत्र बुद्धिप्रवेशाभावप्रसङ्गात् । अल्पत्वादिसादृश्यं कुतो नेत्यत आह पूर्णत्वादीति ।

पूर्णत्वादिमहत्त्वेषां वैलक्षण्यं श्रुतौ श्रुतम् ॥

(तां) श्रुतिं पठति पूर्ण इति ।

पूर्णोऽशेषनियन्ता च सुस्वादुतम एकलः ॥
गुणोरुसमुदायोऽयं वासुदेवः सुनिष्कलः ॥
वासुदेवश्रुतिश्चैषा गुणान्वक्ति हरेः परान् ॥ ३-२-१६ ॥

पूर्णः **पूर्णगुणः** । सुस्वादुतमः **शोभनानन्दतमः** । एकलः **एकाकी परानपेक्षः** । सुनिष्कलः **सर्वथा विभक्तांशविकलः** । **हरेर्गुणान्परान्विलक्षणान्वक्तीति** ।

**शे०** — ॐ **बुद्ध्यर्थः पादवत्** ॐ ॥ समुच्चायकत्वासम्भवादपि चेत्येतद्व्याचष्टे **तथाऽपीति** । अनेन यद्यपि लोकविलक्षणास्तथाऽपीति मूलयोजना सूचिता भवति । व्युत्पत्त्यभावात्कथं तत्तच्छब्दवाच्यत्वमिति पृच्छति **कथमिति** । किं विदुषां व्युत्पत्त्यनुपपत्तिरभिमतोताविदुषामिति विकल्पद्वयं मनसि निधायाद्यपक्षोत्तरत्वेन मूलं योजयति **विद्वद्व्युत्पत्तित इति** । अतीन्द्रियत्वेनोपदेशादेरसम्भवात्सादृश्यानुमानस्य चासिद्धत्वात्कथं विदुषामपि व्युत्पत्तिरित्यतस्तात्पर्यमाह **विद्वांसो हीति** । तथा च वाच्यार्थभूतानन्दादिसाक्षात्काराच्चान्प्रत्ययमानन्द इत्याद्युपदेशेनैव व्युत्पत्तिरित्युक्तं भवति । द्वितीयपक्षोत्तरतयाऽपि मूलं योजयितुं तमुत्थापयति **अविदुषामिति** । तेषां वाच्यार्थसाक्षात्काराभावेन तान्प्रत्युपदेशादेरसम्भवादिति भावः । माऽस्तु तेषां व्युत्पत्तिरित्यत उक्तं भवितव्यं चेति ॥ **विद्वदुपदेशत इति** । अयमानन्द इत्यादेरुपदेशत इत्यर्थः ॥ **अस्मदानन्दसदृश इति** । अस्मदानन्दादिसदृश इत्यर्थः । अत एवानन्दादिशब्दवाच्य इत्युत्तरत्रादिपदमिति ज्ञेयम् । तथा चाविदुषः प्रत्ययमानन्दादिरित्युपदेशासम्भवेऽप्येवंविधोपदेशसम्भवादुपदेशेनैव व्युत्पत्त्युपपत्तिरिति भावः । **निरुपाधिप्रियत्वमिति** । जन्येच्छाजन्यं जन्येच्छाविषयभावत्वमित्यर्थः । विद्वद्व्युत्पत्तितोऽपि चेति समुदायार्थमाह **आनुकूल्यादेरिति** ॥ **अप्रयोजकमिति** । विमता लौकिकानन्दादिसलक्षणा इत्यत्र हि न निरुपाध्यनुकूलवेदनीयत्वादिना सालक्षण्यसाधनं तस्य बहुमानाविरोधित्वेन ममाप्यभिमततया तत्साधने सिद्धसाधनत्वप्रसङ्गात् । किन्त्वल्पत्वास्थिरत्वादिसालक्षण्यसाधनमेव । तच्चोक्तरीत्याऽप्रयोजकमिति भावः । एवं सूत्राभिप्रेतं बाधकपरिहारमुपपाद्य सूत्रमुत्थापयति **नन्विति** । वैलक्षण्येप्यानन्दादीनामन्यथा तत्प्रयत्नोपायाभावान्निरुपाध्यनुकूलवेद्यत्वादिज्ञापनार्थमानन्दादिपदस्यैव प्रयोग इत्याशयेनाह **तथा सतीति** । अनेन बुद्ध्यर्थ इत्यंशतात्पर्यमुक्तं भवति । ननु पूर्णोऽशेषनियन्ता चेत्यत्र

भगवतः पूर्णत्वमुच्यते । न तु तद्गुणानामानन्दादीनां तत्कथमस्याः श्रुतेः 'पूर्णत्वादि महत्तेषां वैलक्षण्यं श्रुतौ श्रुतमि'त्यानन्दादिभगवद्गुणनिष्ठपूर्णत्वादिप्रतिपादकश्रुतित्वकथनमित्यत आह **पूर्णगुण इति**। रमादीनामपि सत्त्वेनैकाकित्वस्य बाधितत्वादाह **परानपेक्ष इति** । मत्स्याद्यनेककलत्वेन निष्कलत्वस्य बाधितत्त्वादाह **सर्वथेति** ।

**प०**— अपि चेत्यनुवादः । तथापीति व्याख्या ॥ **अनुमानमिति** । सादृश्यानुमानस्यैवानुसरणीयत्वादित्यनेन 'ईशानन्दादयः आनन्दादिशब्दवाच्याः अस्मदानन्दसदृशत्वात् देवदत्तानन्दवदि'ति यदनुमानमुक्तं तदित्यर्थः । विमता इत्यनुमानं तु सिद्धसाधनतयैव परास्तम् । निरुपाधिप्रियत्वादिसादृश्यस्य स्वीकारादिति भावः । विमताः लौकिकविलक्षणा इत्यनुमानमित्यर्थः । गुणानामेव प्रस्तुतत्वात्तदनुगुणतया पूर्णपदं व्याचष्टे **पूर्णः पूर्णगुण इति** ।

**या०**— **साक्षात्कृतभगवद्गुणा इति** । तथा च वाच्यार्थदर्शनादुपदेशेनैव व्युत्पत्त्युपपत्तिरिति भावः । एवं सूत्राभिप्रेतं बाधकपरिहारमुपपाद्येदानीं सूत्रमुत्थापयति **नान्वेति** ॥ **बुद्धिप्रवेशाभावेति** । अनेन बुद्ध्यर्थं इत्यंशतात्पर्यमुक्तमिति ज्ञातव्यम् । पूर्वं 'पूर्णत्वादि महत्तेषामि'ति पूर्णत्वस्य गुणनिष्ठतयोक्तत्वादाह **पूर्णः पूर्णगुण इति** । रमादीनां सत्त्वादेकाकित्वं बाधितमत आह **परानपेक्ष इति** ।

**श्री०**— **अनुमानमिति** । विमता लौकिकसलक्षणा आनन्दादिशब्दवाच्यत्वादिति बाधकत्वेनाशङ्कितमनुमानमित्यर्थः ॥ **कुतो न प्रयुज्यत इति** । तथा च जीवानन्दादिसाधारणानन्दादिशब्दप्रयोगः कुत इत्यर्थः । उत्तरमाह **तथा सतीति** । तथा च विलक्षणशब्दप्रयोगो न भवतीत्यर्थः ।

**सु०**— **एतेषामधिकरणानामपव्याख्यानं न स्थानतोऽपीत्यत्रैव निराकृतमिति न पुनः प्रक्रान्तम्** ॥ ३-२-१६ ॥

**शे०** — **एतेषामिति** । अरूपवदेव हि तत्प्रधानत्वादित्यधिकरणानामित्यर्थः ॥ **अपव्याख्यानमिति** । एतदधिकरणापव्याख्यानस्य न स्थानत इत्येतदधिकरणीयप्रागुपदर्शितापव्याख्यानादनतिभिन्नत्वेन तत्प्रदर्शनेनैवोपदर्शितप्रायत्वात्तत्प्रकारमनुपदर्श्यापव्याख्यानमिति सामान्येनैवोक्तम् । यद्यपि चात एव चोपमेत्येतदधिकरणापव्याख्यानं तदधिकरणापव्याख्यानावसर एव स्वरूपेणोपन्यस्य निरस्तमिति तत्साधारण्येनैतेषामिति न वक्तुमुचितम् । तथाऽपि महातात्पर्ययुक्तिविरोधेन तस्य पूर्वमनिरस्तत्वात्तथानिरसनीयत्वाभिप्रायेणैव तेषामिति सामान्येनैवोक्तमित्यवधेयम् **न स्थानतोऽपीत्यत्रैवेति** तत्र हि श्रुत्यादिशास्त्रस्य विष्णोर्निर्दोषत्वे समस्तगुणपरिपूर्णत्वे च महातात्पर्यं प्रमाणैरुपपाद्य तद्विरोधेन निर्दोषत्वादेर्वेदा-

नर्थत्वप्रतिपादनेन निर्विशेषब्रह्मणो वेदाप्रतिपाद्यतायाः सविशेषब्रह्मणस्तत्प्रतिपाद्यतायाः सिद्धत्वान्निरस्त-समस्तविशेषमेव ब्रह्म प्रतिपत्तव्यमिति तदधिकरणापव्याख्याननिरासवदरूपवदेवेत्याद्यधिकरणीयोक्तरूपाप-व्याख्यानस्यापि निराकृतत्वान्न पृथक् तदत्र निराकृतमित्यर्थः । ततश्च न भाष्ये तदनिरासप्रयुक्तन्यूनत्व शङ्कावकाश इति भावः ॥ ३-२-१६ ॥

**प०— एतेषामधिकरणानामिति** । 'अरूपवदेव हि' 'अत एव चोपमे'त्येवमादीनां निरा-कारनिर्विशेषब्रह्मपरत्वेन यदपव्याख्यानं तत् निर्दोषाशेषसद्गुणत्वादौ वेदपुराणादेर्महातात्पर्यसमर्थनेन 'न स्थानत' इत्येतदनुव्याख्याने निराकृतमित्यर्थः ॥ ३ । २ । १६ ॥

**या०— न स्थानतोऽपीत्यत्रैवेति** । तत्र हि सविशेषं ब्रह्माविद्यकोपाधिकल्पितं न वेदान्त-वाक्यप्रतिपाद्यम्, अपि तु निरस्तसमस्तविशेषमेवेति परेण प्रतिपादितम् । तच्च सगुण एव वेदानां महा-तात्पर्यस्य प्रामाणिकत्वात्तद्विरोधरूपयुक्त्या सम्यक् तत्र निराकृतम् 'महातात्पर्यमुख्यस्य विरोधादत एव हि । दोषित्वनिर्गुणत्वाल्पगुणत्वादि कथञ्चन । नार्थः श्रुतिपुराणादेस्तद्विरुद्धोऽखिलस्य च । अर्थः स्वयं विनिर्णीतो वासुदेवेन सादरमि'ति । अरूपवदेव हि तत्प्रधानत्वादित्याद्यधिकरणेष्वपि निर्विशेषमेव ब्रह्म वेदान्तवेद्यं न कल्पितं सविशेषमितीदमेव प्रमेयं प्रतिपाद्यतया परस्याभिप्रेतम् । तथा हि । अरूपवदेव हीत्यधिकरणारम्भे रूपाद्याकाररहितमेव ब्रह्मावधारयितव्यम् । न रूपादिमदिति तेनोक्त-त्वात् । अत एव चोपमेति सूत्रचतुष्टयमेकमेवाधिकरणमित्यभिप्रेत्यान्ते तस्मान्निर्विकल्पकलिङ्गमेव ब्रह्म नोभय-लिङ्गं विपरीतलिङ्गं वेति सिद्धमित्युपसंहृतत्वात् । प्रकृतैतावत्त्वं हीत्यत्रापि नेति नेतीत्यत्र विषयवाक्ये इतिशब्दद्वयेन पूर्वप्रकृतं मूर्तामूर्तलक्षणं रूपद्वयं परामृश्यते निषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रतिपादनाय चेत्युक्तत्वात् । तदव्यक्तमाह हीत्यत्रापि पूर्वनिर्धारितं ब्रह्म कस्मान्न गृह्यत इत्याशङ्कापरिहाराय तस्या-व्यक्तत्वमत्र समर्थ्यत इत्युक्तत्वेन निर्विशेषस्यैवाभिप्रेतत्वात् । परमत इत्यारभ्यानेन सर्वगतत्वमायामय-शब्दादिभ्य इत्यन्तानि सूत्राण्येकमेवाधिकरणमित्यभिप्रेत्य तत्रापि यदेतन्निरस्तसमस्तप्रपञ्चं ब्रह्म निर्धा-रितम् । अस्मात्परमन्यत्तत्त्वं नास्तीति सिद्धान्तितत्वात् । अत एतेषामप्यधिकरणानां परकृतं व्याख्यानं महातात्पर्यविरोधलक्षणयुक्त्या तत्रैव निराकृतमित्यर्थः ॥ ३-२-१६ ॥

**श्री०— अपव्याख्यानमिति** । निर्विशेषं निरस्तसमस्तप्रपञ्चं शुद्धं ब्रह्मैवैतेष्वधिकरणेषु प्रतिपाद्यत इत्यपव्याख्यानमित्यर्थः ॥ ३–२–१६ ॥

## ॥ इति परानन्दा(परमता)धिकरणम् ॥

॥ अथ फलदानाधिकरणम् ॥

सु० — ॐ फलमत उपपत्तेः ॐ ॥ अत्रादौ तावत्स्वर्गनरकादिकं फलं प्राणिनामीश्वरादेव भवतीति श्रुत्युपपत्तिभ्यामुपपादितम् । तदाक्षेपार्थं सूत्रं 'धर्मं जैमिनिरत एवे'ति । तस्यार्थः । ईश्वरः फलकारणं चेद्धर्माधर्मावपेक्षते न वा । नेति पक्षे वैषम्याद्यापत्तिर्वेदाप्रामाण्यप्रसक्तिश्च । आद्ये किमीश्वरेण तदपेक्षणीयेनैव कर्मणा फलसिद्धेः । अन्यथा गौरवापत्तेः । न चाचेतनत्वो-पपत्तिविरोधः । न हि राजादिरिव कर्म फलं ददातीति ब्रूमो येनाचेतनत्वं बाधेत । किन्तु कारणमात्रम् । न च श्रुतिविरोधः । फलकारणयोर्धर्माधर्मयोरीश्वरकारितत्वेन तत्स्तुतये तस्य फलकारणत्वोपचारादिति ।

समाधानार्थं सूत्रम् ॥ ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ॥ तेनेदमुक्तम् । अपेक्षत एवेश्वरो धर्माधर्मौ । न च तावता तयोरेवास्तु फलहेतुतेति युक्तम् । धर्मादेरिवेश्वरस्यापि फलहेतुतया श्रुतिसिद्धत्वेन त्यागायोगात् । बाधकाभावेन श्रुतेरुपचरितार्थताकल्पनाऽनुपपत्तेः । गौरवस्याप्रामाणिकविषयत्वात् । परस्य ब्रह्मणः कर्मणश्चोभयोर्हेतुत्वे साम्यापत्तिरित्यपि न वाच्यम् । यतः फलदाने परमेश्वरः कर्तृत्वेन' कर्म तु करणत्वेन पुण्येन पुण्यमित्यादौ व्यपदिश्यते । करणं च कर्तृप्रयोज्यमिति प्रसिद्धमेवेति । तत्रेदमाशङ्क्यते । तथाऽपि कर्मापेक्ष-स्येश्वरस्य फलदानेऽनुपचरितं स्वातन्त्र्यं न सिध्यति । ततश्च न तस्मिन्बहुमानातिशय इति ॥ एतत्परिहारत्वेन पूर्वपदं व्याख्याति स एवेति ।

अनु० — ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ॥
ॐ फलमत उपपत्तेः ॐ ॥
स एवाशेषजीवस्थनिस्संख्यानादिकालिकान् ॥
धर्माधर्मान्सदा पश्यन्स्वेच्छया बोधयत्यजः ॥
कांश्चित्तेषां फलं चैवं ददाति स्वयमच्युतः ॥
न ते विशेषं कमपि प्रेरणादिकमच्युते ॥
कुर्युः कदाऽपि तेनायं स्वतन्त्रोऽनुपचारतः ॥

अनादिकालत्वं च प्रवाहापेक्षयोक्तम् कांश्चित् बोधयति सव्यापारीकरोति स्वयमेवेति संबन्धः । लीलया करणीकरोति न तु तेन विना दातुं न शक्नोतीति भावः ।

**शे०**—ॐ **पूर्वं तु बादरायणो हेतुव्यपदेशात्** ॐ॥ ॐ **फलमत उपपत्तेः** ॐ॥ **श्रुत्युपपत्तिभ्यामिति ।** विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विद इति श्रुत्या चेतनत्वरूपोपपत्त्या चेत्यर्थः । यद्यप्यत्र सौत्रक्रमानुरोधेनोपपत्तिश्रुतिभ्यामित्येव वक्तव्यं तथाऽप्यादिसूत्रोक्तोपपत्तेरीश्वरस्य फलदातृत्वसंभावकत्वेनानिश्चायकतया निश्चायकत्वाभिप्रायेण श्रुते प्रथमतो ग्रहणमिति द्रष्टव्यम् ॥ **वेदेति ।** ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवेदेत्यर्थः ॥ **अन्यथेति ।** तदपेक्षणीयेन कर्मणा फलसिद्धावपि तस्य कारणत्व इत्यर्थः । ईश्वरस्यापि कारणत्वे द्वयोः कारणत्वाश्रयणाद्गौरवं कर्मण एव कारणत्वे त्वेकस्यैव तदाश्रयणाल्लाघवमिति भावः ॥ **न च श्रुतीति ।** विज्ञानमानन्दमित्याद्युदाहृतश्रुतीत्यर्थः ॥ **श्रुतिसिद्धत्वेनेति ।** विज्ञानमानन्दमित्यादिश्रुतिसिद्धत्वेनेत्यर्थः । ननु विज्ञानमानन्दमिति श्रुतौ फलकारणयोर्धर्माधर्मयोरीश्वरकारितत्वेन तत्स्तुतये तत्कारणत्वोपचारान्नानया तस्य कारणत्वसिद्धिरित्यत आह **बाधकाभावेनेति ।** गौरवस्यैव बाधकस्य सत्त्वात्कथं तदभाव इत्यत आह **गौरवस्येति ।** बाधकान्तरमाशङ्क्य परिहरति **परस्येति ॥ पूर्वपदं व्याख्यातीति ।** तथा च निस्सङ्ख्यानादिकालीनधर्माधर्मादिद्रष्टृत्वादेः सौत्रपूर्वपदार्थत्वेनोत्सूत्रत्वाभावादस्यार्थस्य न तदभिधायकस्य स एवेत्युत्तरग्रन्थस्याभाष्यत्वमिति भावः ॥ **प्रवाहेति ।** धर्माधर्माणां सादित्वेन स्वरूपानादित्वस्य बाधितत्वादिति भावः । अचेतनत्वेन धर्माधर्मयोर्बोधासंभवाद्बोधयतीति तद्बोधकत्वोक्तेरयोगमाशङ्क्याह **सव्यापारीकरोतीति ।** फलं चैवेत्येवकारस्य व्यर्थत्वाद्विरुद्धत्वाच्चापेक्षितव्यवहितान्वयप्रदर्शनेन तत्सार्थक्यमाह **स्वयमेवेतीति ।** धर्माधर्मान्सदा पश्यन्स व्यापारीकरोतीत्येतावतैव पूर्तेस्तत्र स्वेच्छयेति विशेषणानर्थक्यमाशङ्क्य कर्मापेक्षस्य हरेः फलदानेऽनुपचरितस्वातन्त्र्यसाधनाय लीलया तत्करणी करणरूपार्थप्रतिपादकत्वात्तस्य न वैयर्थ्यमिति भावेन तत्तात्पर्यमाह **लीलया करणीकरोतीत्यादिना ।**

**प०— फलमत उपपत्तेः ।** फलमित्येतदंशार्थमाह **फलं प्राणिनामीश्वरादेव भवतीति ।** श्रुतत्वाच्चेति सूत्रार्थः **श्रुतीति ।** विज्ञानमानन्दं ब्रह्मरातिर्दातुरिति श्रुतीत्यर्थः । उपपत्तेरित्यस्यार्थः उपपत्तिभ्यामिति । ईश्वरकर्मणोर्यथाक्रमं चेतनत्वाचेतनत्वयुक्तेरित्यर्थः ॥ **वैषम्याद्यापत्तेरिति ।** निर्निमित्तं प्राणिनां विभागेन सुखदुःखादिप्राप्त्या वैषम्यनैर्घृण्ययोरापत्तिरित्यर्थः ॥ **वेदाप्रामाण्येति ।** सुखादिहेतुत्वेनोक्तकर्मणां व्यतिरेकव्यभिचारप्राप्तेरिति भावः ॥ **न च श्रुतिविरोध इति ।** रातिर्दातुरिति श्रुतीत्यर्थः । गौरवमेव बाधकमित्यत आह **गौरवस्याप्रामाणिकविषयत्वादिति ।** ब्रह्मकर्मणी च फलहेतुत्वेन प्रमिते इति भावः । सौत्रतुशब्दसूचितविशेषं व्यावर्त्यपूर्वमाह **परस्येत्यादिना ।** इत्यादौ व्यपदिश्यत इत्यनेन हेतुव्यपदेशादित्यंशो व्याख्यातः । इतिपदस्य तेनेदमुक्तमिति पूर्वेणान्वयः ।

**या० — ॐ फलमत उपपत्तेः ॐ ॥ न च श्रुतिविरोध इति ।** 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणमि'ति श्रुतिविरोधो न चेत्यर्थः ॥ **पूर्वपदं व्याख्यातीति ।** तुशब्दोपेतं पूर्वपद-मित्यर्थः । तथा च फलदाने पूर्वोक्तं ब्रह्मैवेति पूर्वं त्वित्यस्यार्थ उक्तो भवतीति ज्ञातव्यम् ॥ ३-२-२० ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्येण यदुपतिना कृतायां सुधाटिप्पण्यां

तृतीयाध्यायस्य द्वितीयः पादः ॥ ३-२ ॥

**श्री० ॐ फलमत उपपत्तेः ॐ ॥** अचेतनस्य फलदातृत्वानुपपत्तिरूपोपपत्तिः ॥ श्रुतत्वा-च्चेति सूत्रोक्ता रातिर्दातुः परायणमिति श्रुतिरिति ध्येयम् ॥ **अन्यथेति ।** कर्मण ईश्वरस्य चेत्युभयोः फलकारणत्वकल्पने गौरवं स्यादित्यर्थः ॥ **ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ॥ गौरव-स्येति ।** ईश्वरस्य तस्य फलहेतुतायाश्च प्रामाणिकत्वान्न गौरवमिति भावः ॥ **प्रसिद्धमेवेति ।** तथा च न साम्यमिति भावः । **सव्यापारीकरोतीति ।** उद्बुद्धानि करोति फलोन्मुखानि करोतीत्यर्थः । तथा चोद्बोध एव व्यापार इति भावः ।

**सु० — यदेतदत्रोक्तं धर्माधर्मदर्शनं तत्प्रेरणं तत्फलदानं तदप्रेर्यत्वादिकं चेश्वरस्य । तदेव विचार्यमाणं तस्मिन्महान्तं बहुमानमुत्पादयिष्यति किमु समस्तपदार्थ इत्याशयवान्कर्मणां स्वरूपं तावत्प्रपञ्चयति** कर्माणीति ।

अनु० — कर्माणि तानि च पृथक् चेतनान्येव सर्वशः ।
अचेतनशरीराणि स्वकर्मफलभाञ्जि च ।
प्रत्येकं तेषु चानन्तकर्माण्येवंविधानि च ।
तानि चैवम्

**तानीत्यशेषजीवस्थेत्याद्युक्तविशेषणानि । पृथगित्येकैकधर्माधर्माधिष्ठा(तृ)नभूतानि मुक्तव्यावृत्तयेऽचेतनशरीराणीत्युक्तम् । तत एव स्वकर्मफलभाञ्जि च ।** तेषु **कर्माभिमानिषु । एवंविधानीति चेतनत्वाद्युक्तधर्मवन्ति तानि तेष्वपि कर्मसु वर्तमानानि । ततः किमित्यत** आह इतीशस्येति ।

इतीशस्य निश्शीमा शक्तिरुत्तमा ।

**एवंभूतानां कर्मणां दर्शनादिमतः ।** उत्तमा **प्रतिबन्धादिरहितत्वात् । कर्मणामेवं-विधत्वं कुत इत्यत** आह एकैवेति ।

एकैव ब्रह्महत्या हि वराहहरिणोदिता ।

**हरिणैव न त्वर्वाचीनेन ।** वराहग्रहणेन **वाराहपुराण इति सूचितम् । उदिता चेतन-त्वादिरूपेणेति शेषः । तदेव दर्शयति** ब्रह्मपारेति ।

ब्रह्मपारस्तवेनैव निष्क्रान्ता राजदेहतः ।
स्तोत्रस्य तस्य माहात्म्याद्व्याधत्वं गमिता पुनः ।
प्राप्य ज्ञानं परं चाप तथाऽन्यान्यपि सर्वशः ।
अनन्तान्युदितान्येवं प्रभुणा कपिलेन हि ।
संसारे पच्यमानानि कर्माण्यपि पृथक् पृथक् ।

**अनेन समग्रमितिहासं संक्षेपेण स्मारयति । व्याधत्वादिप्राप्त्या चेतनत्वादिकं गम्यते । तथाशब्दः प्रमाणसमुच्चये । अन्यानि ब्रह्महत्यायाः । पृथक् पृथगुदितानि । एवं चेतनत्वादिना । हीति (परम)सा(ङ्ख्ये)ङ्ख्यप्रसिद्धिं दर्शयति । कथं चेतनत्वादिना प्रतीतिस्तेषामित्यत उक्तं संसारेति ।**

**शे०**— कर्मणां चेतनत्वादिप्रतिपादनस्य प्रकृतानुपयोगित्वादसङ्गतमित्याशङ्क्य निराकरोति ॥ **यदेतदिति** । अत्र सूत्रे । उक्तं पूर्वपदेनेति शेषः ॥ **अशेषजीवस्थेत्याद्युक्तेति** । अशेषजीवस्थत्वनिस्संख्यत्वानादिकालिकत्वरूपोक्तविशेषणविशिष्टानीत्यर्थः ॥ **मुक्तेति** । चेतनतयाऽभिमतानां कर्मणां मुक्तव्यावृत्तय इत्यर्थः । तत एवाचेतनशरीरत्वादेव ॥ **कर्माभिमानिष्विति** । धर्माधर्माधिष्ठातृभूतकर्मस्वित्यर्थः ॥ **चेतनत्वाद्युक्तधर्मवन्तीति** । आदिपदेनाचेतनशरीरत्वस्वकर्मफलभाक्त्वयोः परिग्रहः ॥ **तेष्वपि कर्मसु वर्तमानानीति** । न केवलं धर्माधर्मरूपाचेतनशरीराधिष्ठातृचेतनकर्मस्वेव वर्तमानानि चेतनत्वाद्युक्तधर्मवन्ति । किन्त्वेवंविधानि चेति चेतनत्वाद्युक्तधर्मवत्त्वेनोक्तकर्मस्वपि वर्तमानानि कर्माण्येवं चेतनत्वाद्युक्तधर्मवन्तीत्यपिशब्दार्थः । मूले निस्सीमशक्तित्वे ईशस्येत्येतद्धेतुगर्भं विशेषणमिति भावेन हेतुसमर्पकतया तत्तात्पर्यमाह **एवंभूतानामिति** । निस्सीमेत्येतावता पूर्तेरुत्तमेत्यनर्थकमित्याशङ्क्य तेन निर्मर्यादत्वलाभेऽप्यप्रतिबद्धत्वासिद्धेस्तत्प्रतिपादकत्वात्तस्य नानर्थक्यमिति भावेन तत्तात्पर्यमाह **उत्तमा प्रतिबन्धरहितत्वादिति** । विवक्षितकर्मस्वरूपप्रतिपादनस्य कर्मणीत्यादिनैव सिद्धेरेकैवेत्याद्युत्तरग्रन्थानर्थक्यमित्याशङ्क्य कर्मणामुक्तप्रकारत्वस्य प्रामाणिकत्वकथनार्थत्वात्तस्य न तदिति भावेन प्रमाणोक्तिपरतयोत्तरग्रन्थं योजयितुं तदप्रामाणिकत्वशङ्कामुत्थापयति **कर्मणामिति** । वैयर्थ्यादिप्रसक्त्यैकैवेत्येवकारस्य यथास्थितसंबन्धानुपपत्तेर्भिन्नक्रमतामाश्रित्य प्रयोजनमाह **हरिणैवेत्यादि** । मूले वराहग्रहणस्यानर्थक्यमाशङ्क्य परिहरति **वाराहेति** । वाराहपुराणस्योक्तार्थाप्रतिपादकत्वान्न तदप्रामाणिकत्वशङ्कानिवर्तकत्वमित्यतोऽपेक्षितशेषपूरणेन तस्योक्तार्थप्रतिपादकतामुपदर्शयति **चेतनत्वादिरूपेणेति शेष इति** ॥ **तदेवेति** । चेतनत्वादिकमेवेत्यर्थः । कथमनेन चेतनत्वं ज्ञापितमित्यत आह **व्याधत्वा-**

**दीति** । आदिपदेन ज्ञानादेः परिग्रहः । एकग्रन्थताभ्रान्तिं परिहरति **तथाशब्द इति** । प्रमाणान्तरोपन्यासस्तु वाराहपुराणेन ब्रह्महत्यायाश्चेतनत्वादिसिद्धावपि तदतिरिक्तकर्मणां तदसिद्धेस्तत्सिद्ध्यर्थमिति भावेन तथा व्याचष्टे **अन्यानीति** । पृथगित्येकैकधर्माधिष्ठातृभूतानीति पूर्वं तात्पर्यस्य कथितत्वात्तदनुक्त्वा व्यवहितत्वात्तत्संबन्धमात्रमेव दर्शयति **पृथगिति** । उक्तार्थस्य प्रतिपादकत्वसिद्ध्यर्थमाह **एवमिति** ।

**श्री० — यदेतदत्रोक्तमित्यादि** । अत्र धर्माधर्मदर्शनं मूले स एवेत्यारभ्य पश्यन्नित्यन्तेनोक्तम् । बोधयतीत्यनेन तत्प्रेरणम् । तेषामिति फलदानम् । न त इत्यादिना तदप्रेर्यत्वादिकं चोक्तमिति ज्ञेयम् ॥ **अधिष्ठानभूतानीति** । धर्माधर्मावेवाधिष्ठानभूतौ येषां तानि धर्माधर्माधिष्ठानभूतानि । धर्माधर्मशरीरकाणीति यावदित्यशेषमतिमङ्गलम् ॥ ३-२-२० ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितटीकाऽसङ्गृहीतसुधावाक्यार्थविवरणे तृतीयाध्यायस्य द्वितीयः पादः ॥ ३-२ ॥

**सु० — पादार्थमुपसंहरति** तस्मादिति ।

**अनु०—** तस्मादनन्तमाहात्म्यगुणपूर्णो(गो) जनार्दनः ।
भक्त्या परमयाऽऽराध्य इति पादार्थ ईयते ॥ ३-२-२० ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने तृतीयाध्यायस्य द्वितीयः पादः ॥ ३-२ ॥

**माहात्म्यं शक्तिः । गुणा आनन्दाद्याः । आराध्य उपास्य इत्युत्तरपादार्थेन सङ्गतिमस्य सूचयति ॥ ३-२-२० ॥**

**इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ॥**
**कृतायां टीकायां विषमपदवाक्यार्थविवृतौ तृतीयेऽध्यायेऽस्मिन्भजनचरणः पर्यवसितः ॥ १ ॥**
**इति श्रीमन्न्यायसुधायां तृतीयाध्यायस्य द्वितीयः पादः ॥ ३-२ ॥**

**शे०—** नन्वशेषमाहात्म्येति गुणानां माहात्म्यमुच्यते न भगवतस्तत्कथमयं पादार्थः । भगवन्माहात्म्यस्यैव तदर्थत्वात् । न चाशेषमाहात्म्यश्चासौ गुणपूर्गश्चेति कर्मधारयाश्रयणाद्भगवन्माहात्म्यप्रतिपादकत्वलाभाद्युक्तमस्य पादार्थोपसंहारत्वम् । तथा सति गुणपूग इत्येतावतैव तत्सिद्ध्याऽनन्तमाहात्म्येत्यस्यानर्थक्यापातादित्यतो व्याख्याति **माहात्म्यमिति** । न चोक्तरीत्या वैयर्थ्यम् । अनन्तमाहात्म्यग्रहणस्य निष्कृष्यैतदधिकरणप्रमेयोपसंहारार्थत्वाद्गुणपूग इत्यस्य चैतद्व्यतिरिक्तैतत्पादीयसकलाधिकरणार्थोपसंहारार्थत्वादवैयर्थ्यमित्याशयात् ॥ **सङ्गतिमिति** । हेतुहेतुमद्भावलक्षणामित्यर्थः ॥ ३-२-२० ॥

गुरुराजोपदिष्टेन मार्गेणैव यथामति ॥ कृपया भक्तिपादस्य विवृत्त्या प्रीयतां हरिः ॥ १ ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥ अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥२॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्यस्य केशवस्य कृतौ गुरुराजोक्तमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां तृतीयाध्यायस्य द्वितीयः पादः ॥ ३-२ ॥

प० — अपौनरुक्त्याय माहात्म्यगुणपदयोरर्थमाह **माहात्म्यं शक्तिः गुणाः आनन्दाद्या इति ॥ सङ्गतिमिति ।** हेतुहेतुमद्भावरूपेत्यग्रे व्यक्तमिति भावः ॥ ३-२-२० ॥

इति श्रीमन्न्यायसुधापरिमळे तृतीयाध्यायस्य द्वितीयपादस्समाप्तः ॥

च० — आराध्य इत्यनूद्य व्याकुरुते **उपास्य इति ।**

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणश्रीमत्सत्यप्रियतीर्थपूज्यपादतनूज-सर्वतन्त्रस्वतन्त्रगालवपुरिश्रीनिवासार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां सुधाचषकनाम्न्यां कतिपयफक्किकाव्याख्यां तृतीयाध्यायस्य द्वितीयः पादः ॥

---

**॥ इति तृतीयाध्यायस्य द्वितीयः पादः समाप्तः ॥**



॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

**सु०**— उपासनाऽस्मिन्पाद उच्यत इति भाष्यम् । तत्रोपासनार्थस्यास्य पादस्य का पूर्वेणोत्तरेण वा सङ्गतिरित्यतोऽस्य पादस्य सङ्गतिं वदन्प्रसङ्गादेतदध्यायगतपादचतुष्टयस्याप्याह वैराग्यत इति ।

**अनु०**— वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् ।
आपरोक्ष्यं भवेद् विष्णोरिति पादक्रमो भवेत् ॥

**मीमांसासाध्याद्वैराग्यात्प्रागेव भक्तेर्भाव्यत्वाद्दार्ढ्यमित्युक्तम् । यदाशब्दो यस्मादित्यर्थे । तयाऽपरोक्ष्यं** भवेत् । इति **तस्मात्** ।

**अयमर्थः । साधनविचारोऽयं तावदध्यायः । मोक्षसाधनं च भगवत्प्रसाद एव । तत्साधनानि च विषयवैराग्यं भगवद्भक्तिस्तदुपासना तत्साक्षात्कार इति चत्वारि । तानि च न समकक्ष्याणि । किन्त्वादौ वैराग्यं साध्यम् । तेन भक्तिः । न हि हेये रागवत उपादेये प्रेमोत्पत्तिरस्ति । दृश्यते तावदिति चेत् । नासौ दृढ(ः) प्रेमा । अत एवं चोक्तं भक्तिदार्ढ्य-मिति । तेन वैराग्येण भक्तिदार्ढ्येन चोपासा भवेत् । न ह्यन्यत्र रागवतस्तत्र भक्तिरहितस्यादरनैरन्तर्याभ्यामनुचिन्तनमुपप(त्प)द्यते । उपासनया चातिदीर्घकालमनुष्ठितया प्रसन्नो भगवानात्मानं दर्शयति । यस्मादेवं वैराग्यादीनां क्रमस्तस्मात्तद्विषयाणामेषां पादानामप्ययं क्रमो भवेदिति ।**

**शे०**— यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥ १ ॥

नन्वत्र पूर्वोत्तरपादाभ्यां भेदस्य स्वस्मिन्नेकवाक्यतायाश्च सिद्धयेऽवश्यं वक्तव्यस्य पादप्रतिपाद्यस्यानुक्तेर्न्यूनत्वं तदनुक्तौ विषयस्य बुद्ध्यनारूढतयाऽस्य पादस्य का पूर्वेणोत्तरेण वा सङ्गतिरिति जिज्ञासाया अनुदयात्तदुक्तेरजिज्ञासितोक्तित्वं चेत्याशङ्क्य पादप्रतिपाद्यस्य भाष्ये स्पष्टत्वादत्रानुक्तिर्न दोषाय तत्रोक्तत्वादेव विषयस्य बुद्ध्यारोहादेव चास्य पादस्य का पूर्वेणोत्तरेण वा सङ्गतिरिति जिज्ञासाया अपि सम्भवान्न तदुक्तेरजिज्ञासितत्वोक्तित्वमपीत्याशयेन पादप्रतिपाद्यस्य भाष्योक्तत्वकथनपूर्वकं सङ्गतिजिज्ञासामुत्थाप्य तत्पूर्वकतया वैराग्यत इति मूलं योजयति **उपासनेति**। अस्य पादस्य पूर्वोत्तरपदसङ्गतिमात्रकथनेनोक्तजिज्ञासापूरणात्पादचतुष्टयस्य सङ्गतिकथनार्थक्यमाशङ्क्य परिहरति **प्रसङ्गादिति** ॥ **मीमांसासाध्यादिति** । गत्यागत्यादिमीमांसासाध्यादित्यर्थः । वैराग्यार्थे गत्यादिनिरूपणा प्रथमपाद इति भाष्योक्तेरिति भावः । **भाव्यत्वादिति** । भक्तिपूर्वकाध्ययनस्यैव ब्रह्मविद्याधिकारत्वेन भक्त्यभावेऽनधिकारप्रसङ्गादिति

भावः ॥ **यस्मादित्यर्थ इति** । यदाशब्दस्तु हेत्वर्थ इति वचनादिति भावः । उपासनायाः साक्षात्कारसाधनत्वस्यात्रोक्तिसिद्ध्यर्थं तेनेत्यस्यापरोक्ष्यमित्यनेनापि संबन्धमर्थवशाल्लिङ्गविपरिणामं चाश्रित्य योजयति **तयाऽऽपरोक्ष्यमिति** । यत्तदोर्नित्यसंबन्धात्तस्मादित्यस्याभावे यस्मादित्यर्थकस्य यदापदस्यानन्वयप्रसङ्गादितिशब्दं तदर्थतया योजयति **इतीति** ।

ननु भवेदेतद्यदि वैराग्यादेः पादार्थत्वं स्यान्न च तदस्ति । नियामकाभावात् । अस्तु वा तस्य तदर्थत्वं तथाऽपि पादक्रमो निर्निबन्धन इत्यत आह **अयमर्थ इति** । वैराग्यादिकं तृतीयाध्यायगतपादचतुष्टयप्रतिपाद्यम् । तृतीयाध्यायार्थत्वात् । न चासिद्धिः । विमतं तृतीयाध्यायार्थो मोक्षसाधनत्वादित्यनुमानादेव तत्सिद्धेरिति भावेनात्राप्रयोजकत्वं तावत्परिहरति **साधनविचारोऽयं तावदध्याय इति** । अयमर्थः । अथातो ब्रह्मजिज्ञासेति प्रथमसूत्रे सङ्क्षेपेण शास्त्रार्थे सूचिते किं तद्ब्रह्मेति जिज्ञासायां तत्स्वरूपं द्वितीयसूत्रे निगदितम् । तदेव चाध्यायशेषेण समर्थितम् । तत्र प्रतीतविरोधाश्च द्वितीये परिहृताः । तदेवं सङ्क्षेपेण सूचितशास्त्रार्थेऽथब्रह्मजिज्ञासापदाभ्यां विहितमोक्षसाधनानामवशिष्टत्वेन तेषामेव तृतीयाध्यायार्थत्वमिति । नन्वेवमपि न वैराग्यादेस्तृतीयाध्यायार्थत्वं भगवत्प्रसादस्यैव मोक्षसाधनतया तत्साधनविचारकतृतीयाध्यायार्थताया न्याय्यत्वात् । वैराग्यादेश्च तदसाधनत्वादित्यतो भगवत्प्रसादस्यैव साक्षान्मोक्षसाधनत्वेऽपि तस्य पुरुषप्रयत्नागोचरत्वेन विधातुमशक्यतया प्रसादसाधनानामेव तृतीयाध्यायार्थताया वक्तव्यत्वाद्वैराग्यादिचतुष्टयस्य तत्साधनत्वात्तदर्थत्वमित्यभिप्रेत्य प्रसादस्य साक्षान्मोक्षसाधनत्वं कथयन्नेव वैराग्यादिचतुष्टयस्य तत्साधनतामाह **मोक्षसाधनं चेत्यादिना** । वैराग्यादेः साधनत्वं च तत्प्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपप्रयोजकत्वमेव द्रष्टव्यम् । अस्त्वेवमध्यायार्थत्वात्पादार्थत्वं वैराग्यादेस्तथाऽपि कुतस्तत्क्रम इत्यतो वैराग्यादीनां क्रमभावित्वात्तत्प्रतिपादकपादानामपि क्रम इति भावेन वैराग्यादीनां क्रमिकतामुपपादयति **तानि चेति** । कुतो भक्तेर्वैराग्यसाध्यत्वमित्यतो तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वादित्याशयेन तस्यास्तत्साध्यतामुपपादयति **न हीति** । तद्व्यतिरेकेऽपि भक्तिदर्शनात्तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वमेवासिद्धमिति न तेन तस्यास्तत्साध्यत्वसिद्धिरित्याशयेन शङ्कते **दृश्यत इति** । अस्मदादिष्विति शेषः । दृढभक्तेरेव तत्साध्यत्वाङ्गीकारेण भक्तिमात्रस्य तत्साध्यत्वानभ्युपगमात्तद्व्यतिरेके भक्तिमात्रसद्भावेऽपि दृढभक्तेरभावान्नासिद्धिरिति भावेन समाधत्ते **नेति** । दृढत्वं चान्तरायसहस्रेणाप्यनपोद्यत्वम् । दृढभक्तेरेव तत्साध्यत्वं न भक्तिमात्रस्येत्यत्र ग्रन्थसंमतिमाह **अत एव चेति** । सन्निहितत्वात्तेनेति भक्तिदार्ढ्यस्यैव परामर्श इति भ्रान्तिनिरासायाह **तेनेति** । नन्वियं भ्रान्तिरेव कुतो वस्तुस्थितिरेव किं न स्यादित्यत उपासनायास्तदुभयसाध्यत्वेन भक्तिदार्ढ्यमात्रसाध्यत्वाभावादिति भावेन तस्या उभयसाध्यतामुपपादयति

**न हीति** ॥ **अतिदीर्घकालमिति** । दर्शनं चिरयानयेत्यत्रोक्तेरिति भावः । नन्वव्यक्तैकस्वभावस्य परमात्मनः कथमुपासनया साक्षात्कार इत्यतोऽतोऽनन्तेनेति न्यायं मनसि निधायाह **प्रसन्न इति** । प्रकृतप्रमेयं निगमयति **यस्मादिति** ।

**प॰** — प्रतिपाद्यमनुक्त्वा संगत्युक्तिरनवसरदुस्थेत्यतः प्रतिपाद्यं स्मारयति **उपासनेति** ॥ तत्रेति । एवमर्थोक्तौ सत्यामित्यर्थः ॥ **प्रसंगादिति** । सङ्गत्युक्तिप्रसक्तयेत्यर्थः ॥ **मीमांसासाध्यादिति** । सारासारवस्तुज्ञानाधीनो ह्यसारे वस्तुनि विरागः । स च तदंतरेत्यादिप्रथमपादप्रकृतमननापरनामकमीमांसासाध्य इत्येवमुक्तम् । मीमांसातः प्राक्तनविरागस्तु श्रद्धामात्रसिद्धो न भक्तिदार्ढ्यहेतुरिति भावः ॥ **प्रागेवेति** । अन्यथा 'भक्तिमान्परमे विष्णावि'त्युक्तदिशा सूत्राथपदोक्ताधिकारिविशेषणाभावेन शास्त्रेऽधिकार एव न स्यादिति भावः । तयेति शेषोक्तिः । उपासनयेत्यर्थः । इतीत्यनुवादः तस्मादिति व्याख्या । वैराग्यादिरेव पादार्थ इति कुतः । कथं च तस्य हेतुहेतुमद्भाव इत्यतः क्रमेण व्यनक्ति **अयमर्थ इत्यादिना** ॥ **दृश्यत इति** । अन्यत्र रागिणोऽपि साधोरीश्वरे प्रेमा दृश्यत इत्यर्थः ।

**या॰** — **भाव्यत्वादिति** । अन्यथा हरिभक्तिपूर्वकाध्ययनरूपाधिकारिलक्षणाभावेनानधिकारित्वप्राप्तेरिति भावः । एतदेव दर्शयितुं मीमांसासाध्यादित्युक्तम् । ननु विषयवैराग्येण कथं भगवति भक्तिर्विनिगमकाभावेन वैपरीत्यस्यापि सम्भवादित्यतस्तदुपपादयति **न हि हेय इति** । तथा च वैराग्यभक्त्योर्भिन्नविषयत्वेऽपि जन्यजनकभाव उपपद्यत एव । वैराग्यविषये हेयत्वस्य स्नेहविषय उपादेयत्वस्य विनिगमकस्य सत्त्वादिति भावः ॥ **दृश्यत इति** । अस्मदादाविति शेषः ।

**श्री॰** — वैराग्ये सति भक्तिरित्यन्वयव्याप्तिदार्ढ्याय वैराग्याभावे भक्त्यभाव इति व्यतिरेकव्याप्तिमुपपादयति **न हीति** । प्रेमोत्पत्तिः स्नेहरूपभक्त्युत्पत्तिः ॥ **दृश्यते तावदिति** । हेये पुत्रादौ रागवतामप्यास्तिककामुकानामुपादेये भगवति प्रेमोत्पत्तेरनुभवसिद्धत्वेन व्यभिचारान्न वैराग्याभावे भक्त्यभाव इति व्यतिरेको युक्त इत्यर्थः ॥ **दृढः प्रेमेति** । तथा च वैराग्यतो भक्तिदार्ढ्यं तदभावे भक्तिदार्ढ्याभाव इत्यन्वयव्यतिरेकयोर्विवक्षितत्वान्न व्यभिचार इति भावः ।

**च॰** — श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः । सुनन्दतात्सेवया मे भक्त्यलंकृतयाऽनया ॥

पूर्वोत्तरपादभेदस्वाश्रितैववाक्यतोभयावगतिफलकप्रकृतपादप्रतिपाद्याभिहितिवैधुर्यनियन्त्रितन्यूनतादृशपादद्वयनिरूपितप्रकृतपादवृत्तिसङ्गतिजिज्ञासौपयिकप्रकृतप्रतिपाद्याधिगतिविरहनिबन्धनाजिज्ञासितसङ्गत्यभिहितिश्चेत्याशङ्कां भाष्यकृदेव भाष्ये तदभाषिष्टेति न प्रकृतानभिहितिः क्षतिमावहतीति प्रतिविद-

धानस्तादृशसङ्गतिजिज्ञासापूरकमौलप्रतीकं सङ्गमयति **उपासनेत्यादि** । अव्यवहितद्विपादीसङ्गत्यभिहित्यैव विषयसिध्योक्तजिज्ञासापूरणात्पादचतुष्टयीसङ्गत्यनभिहितिर्मन्दप्रयोजनेतिशङ्कामपहस्तयते **प्रसङ्गादिति** ॥ **समकक्ष्याणीति** बहुव्रीहिः । नैरन्तर्यशब्दश्चतुर्वर्णादित्वात्स्वार्थिकष्यञन्तः । **अतिदीर्घकालमिति** । 'कालाध्वनोरत्यन्तसंयोगे' इत्यनेनात्र द्वितीया ।

सु० — **एवमेतदध्यायगतानां चतुर्णामपि पादानामानन्तर्यलक्षणां सङ्गतिमभिधाय तत्प्रसङ्गात्प्रथमसूत्रमारभ्यातीतानां सर्वेषामपि सूत्राणां परस्परं सङ्गतिं विवक्षुः प्रथमसूत्रार्थं तावदनुवदति** युक्तित इत्यारभ्य(विशिष्ट)ाचार्यसम्पदेत्यन्तेन ।

**अनु०** — युक्तितो ज्ञातवेदार्थो निरस्य समयान्परान् ॥
परस्परविरोधं च प्रणुद्याशेषवाक्यगम् ।
अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः ।
बहुयुक्तिविरोधानां भानात्तत्सहितश्रुतेः ।
विरोधं च निराकृत्य श्रुतीनां प्राणतत्त्वगान् ।
परिहृत्य विरोधांश्च तत्प्रसादानुरञ्जितः ।
देहकर्तृत्वमीशस्य ज्ञात्वा तन्नित्यतृनाम्मृतेः ।
विशेषस्नेहमापाद्य सर्वकर्तृत्वतोऽधिकम् ।
निष्पाद्य बहुमानं च तदन्यत्रातिदुःखतः ।
उत्पाद्याधिकवैराग्यं तद्गुणाधिक्यवेदनात् ।
सर्वस्य तद्वशत्वाच्च दार्ढ्यं भक्तेरवाप्य च ।
यतेतोपासनायैव विशिष्टाचार्यसम्पदा ।

**तत्र यतेतोपासनायैवेत्यनेन ब्रह्मजिज्ञासा कर्तव्येत्येतद्व्याख्यातम् । अन्यत्सर्वमप्यथ**शब्दव्याख्यानम् । **यद्यपि सङ्गतिमात्रविवक्षयेदमारब्धम् । तथाऽपि** प्रागथशब्दस्याव्याख्यातत्वात् **तस्य च केवलस्य** व्याख्यातुमशक्यत्वात्सूत्रार्थानुवादः कृतः । **अतीतेन** सार्धेनाध्यायद्वयेन **यावानर्थो मीमांसितस्तावतः** सामान्यतो ज्ञानादिमत्त्वमथशब्दस्यार्थ **इति** सङ्क्षेपः । विशिष्टाचार्यसम्पदेति सर्वत्रान्वयः ।

**तत्र** ज्ञातवेदार्थ **इति** सर्ववेदानां भगवानेवार्थ **इति** ज्ञानवानित्यनेन प्रथमाध्यायप्रमेयमुक्तम् । **युक्तित इति** ल्यब्लोपनिमित्ता पञ्चमी । वेदार्थविरोधियुक्तीः सामान्यतो निरा-

कृत्येति द्वितीया(ध्याया)द्यपादस्य । परान्वैष्णवसमयादन्यान्सांख्यादिसमयान्सामान्यतो(निरा-कृत्ये)निरस्येति द्वितीयपादस्य । परस्परविरोधश्चेति तृतीयचतुर्थयोः । कथं तर्हि पादभेद इत्यतोऽध्यात्मप्रवणो भूत्वेति बहुयुक्तिविरोधानां भानात्कारणाच्छ्रुतीनां युक्तिसहितश्रुतेर्विरोधं च निराकृत्येति चतुर्थस्य विशेषो दर्शितः । अध्यात्मविषयश्रुतिविरोधपरिहारज्ञानस्य चरमत्वोपपादनाय तस्येत्युक्तम् । आध्यात्मिका(हि)भावा मिथ्या सम्यग्वा विदिता बन्धमोक्षयोरन्तरङ्गतामश्नुवते । न तथा बाह्याः । प्राणतत्त्वगानित्यनेन चतुर्थपादगतानामेव मुख्यप्राणविषयाणामधिकरणानां प्रमेयमध्यात्मेत्यनेनैव लब्धमेतत्कस्मात्पुनरुच्यत इत्यतो विशेषेणैतद्भाव्यं तत्प्रसादायत्तत्वाज्जिज्ञासाया इत्याशयवतोक्तं तत्प्रसादेति । अनुरञ्जितः समीचीनः कृत इति यावत् । देहकर्तृत्वमित्यादिना त्रिवृत्कुर्वत इत्यधिकरणस्य सर्वकर्तृत्वत इति सर्वकर्तृत्वं विज्ञाय ततश्च भगवद्भक्तिमान्भूत्वेत्यर्थः । अत्रापि पुनर्वचनस्य तात्पर्यं पूर्ववदवधेयम् । अतिदुःखसाधनत्वं विज्ञाय । तदन्यत्र भगवतोऽन्यत्राधिकं वैराग्यमुत्पाद्येति तृतीयाद्यस्य । अजिज्ञासूनामपि कदाचित्क्वचिद्वैराग्यं जायतेऽतोऽधिकमित्युक्तं अतीति च । तद्गुणाधिक्येति द्वितीयस्य । तद्वशत्वात्तद्वशत्वं विज्ञाय भक्तेः प्राक् सिद्धत्वाद्दार्ढ्यमित्युक्तम् । न चैतत्सर्वमनुपासितगुरोर्भवतीत्यतो विशिष्टत्वमिहितमिति ।

---

शे०— अविशेषेण सर्वस्य प्रथमसूत्रार्थप्रतीतिनिरासाय तद्व्यवस्थामाह तत्रेति । नन्वतीतेन सार्धेनाध्यायद्वयेन यावानर्थो मीमांसितस्तावतः सर्वस्यापि ज्ञानादेर्जिज्ञासासाध्यत्वान्न जिज्ञासाधिकारिविशेषणत्वम् । अन्यथाऽन्योन्याश्रयापातादित्यत आह सामान्यतो ज्ञानादिमत्त्वमिति । आदिपदेन विरोधियुक्त्यादेर्निराकरणपरामर्शः ॥ सर्वत्रेति । विशिष्टाचार्यसंपदा ज्ञातवेदार्थो विशिष्टाचार्यसंपदा युक्तीर्निरस्य इत्येवं सर्वत्रान्वय इत्यर्थः ।

युक्तित इत्यस्य ज्ञातवेदार्थ इत्यनेनान्वये तज्ज्ञानस्य प्रथमाध्यायसाध्यत्वादन्योन्याश्रयेणाधिकारिविशेषणत्वानुपपत्तिः द्वितीयाद्यपादार्थसंग्रहश्चेत्यतो ज्ञातवेदार्थ इत्यस्यैव प्रथमाध्यायार्थसंग्राहकत्वं युक्तित इत्येतत्तु द्वितीयाद्यपादार्थसंग्रह इति नोक्तानुपपत्तिरिति भावेन योजयति तत्रेत्यादिना । सामान्यत इत्यस्योक्तमेव प्रयोजनं विरोधियुक्तय आभासा एव साङ्ख्यादिसमया न प्रमाणं श्रुतीनां परस्परविरोधो नास्तीत्येवं सामान्यरूपेण द्वितीयाध्यायस्थपादचतुष्टयार्थज्ञानवदन्यत्र प्रसिद्धशब्दवाच्यत्वादिरूपेण तत्तत्पादार्थतया भगवज्ज्ञानं नाधिकारिविशेषणम् । तदभावेऽपि सर्वशब्दमुख्यार्थ इति ज्ञानमात्रेणैव तदधिकारनिर्वाह इति भावेन ज्ञातवेदार्थ इति सामान्यमेवोक्तमिति द्रष्टव्यम् ॥ ल्यब्लो-

**पेति** । ल्यब्लोपे कर्मण्यधिकरणे पञ्चमी वक्तव्येति द्वितीयासप्तम्योर्बाधेन पञ्चम्यनुशासनादिति भावः । उत्पत्त्यसंभवादित्यधिकरणे वैष्णवसिद्धान्तो निराक्रियत इति जाल्ममतप्रत्याख्यानाय परानित्येतद्वैष्णवसमयादन्यानिति व्याख्यातम् । तत्प्रकारश्च तत्रैवोक्तोऽनुसन्धेयः ॥ **विशेष इति** । तृतीयपादापेक्षयेति शेषः ॥ **अन्तरङ्गतामिति** । अन्तरङ्गत्वाच्चरमत्वमिति भावः ॥ **त्रिवृत्कुर्वत इत्यधिकरणस्येति** । यद्यप्यत्र संज्ञामूर्तिरित्यधिकरणस्येति वक्तुमुचितं तथाऽपि देहकर्तृत्वप्रयोजकत्रिवृत्कर्तृत्वस्य त्रिवृत्कुर्वत इत्यनेन स्पष्टमुक्तत्वादेवमुक्तमिति ज्ञेयम् ॥ **सर्वकर्तृत्वं विज्ञायेति** । अनेन सर्वकर्तृत्वत इति ल्यब्लोपनिमित्ता पञ्चमीत्युक्तं भवति ॥ **भक्तिमान्भूत्वेति** । स्नेहमाहात्म्यज्ञानयोरेव भक्तिपदार्थत्वादिति भावः । सर्वकर्तृत्वमित्यनेनैव देहकर्तृत्वस्यापि लाभाद्देहकर्तृत्वमीशस्येति पुनर्वचनमनर्थकमित्यत आह **अत्रापीति** । **पूर्ववदिति** । विशेषेणैव तद्वाच्यं, तदायत्तत्वाद्विशेषस्नेहस्येति पूर्ववत्तात्पर्यमित्यर्थः ॥ **अतिदुःखत इति** । ल्यब्लोपनिमित्ता पञ्चमीत्याह **अतीति** ॥ **द्वितीयस्येति** । तृतीयद्वितीयस्येत्यर्थः ॥ **तद्वशत्वं विज्ञायेति** । अनेन तद्वशत्वादिति ल्यब्लोपनिमित्ता पञ्चमीत्युक्तं भवति **प्रागिति** । मीमांसासाध्याद्वैराग्यात्प्रागित्यर्थः ।

**स० — ल्यब्लोपेति** । ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वक्तव्येति वार्तिकादिति शेषः । ननु सर्वकर्तृत्वत इत्यनेनैव लब्धं देहकर्तृत्वमीशस्येति पुनरुच्यत इत्यत आह **अत्रापीति** । सर्वकर्तृत्वज्ञानापेक्षया देहकर्तृत्वज्ञानस्यान्यरङ्गत्वेनावश्यकत्वमिति पूर्ववदित्यर्थः । केचित्तु विशेषस्नेहमापाद्येत्युक्तं पुनर्बहुमानं संपाद्येत्युक्तं तद्वचनं पुनरुक्तमित्यत्राह **अत्रापीति** । सर्वथैव भक्तिरापाद्येत्यभिप्रायेण पुनर्वचनमिति भावः इत्यप्याहुः ।

**प० — सर्वेषामिति** । संभावितसर्वपरं सर्वपदं ज्ञेयम् । अन्तिमवाक्यार्थमाह **तत्रेति** । वाक्यसंदर्भमध्य इत्यर्थः ॥ **अन्यदिति** । ततोऽधस्तनं सर्वमित्यर्थः ॥ **ज्ञानादिमत्त्वमिति** । ज्ञानवैराग्यभक्तिमत्त्वमित्यर्थः ॥ **सर्वत्रेति** ॥ **ज्ञातवेदार्थ** इत्यत्र प्रणुद्येत्यादौ चेत्यर्थः । ल्यब्लोपयुक्तं व्यनक्ति **वेदार्थेति** ॥ **द्वितीयाद्यपादस्येति** । प्रमेयमुक्तमित्यनुषङ्गः । एवमग्रेपि । द्वितीयाध्यायस्य पादस्येत्यप्यनुषङ्गः । चशब्दमध्याहृत्य भूत्वेति निराकृत्येति च विशेषो दर्शित इत्यन्वयो बोध्यः । इत्यत इत्यस्य दर्शित इत्यन्तेन सङ्गतिः । **तस्येत्युक्तमिति** । तस्य सन्निहितत्वत इत्युक्तमित्यर्थः । तद्व्यनक्ति **आध्यात्मिका हीति** । देहेन्द्रियादिपदार्था इत्यर्थः । मिथ्यात्वेन व्यवसिताः बन्धस्य सम्यग्व्यवसिताः मोक्षस्येत्यर्थः । सर्वकर्तृत्वत इति ल्यब्लोपे पञ्चमीत्युपेत्याह **सर्वकर्तृत्वं विज्ञायेति** । एवमग्रेपि । देहकर्तृत्वमित्युक्त्वा सर्वकर्तृत्ववचनकृत्यं विशेषेण तद्वाच्यमिति पूर्वत्रेव ध्येयमित्याह **अत्रापीति** । **तृतीयाद्यस्येति** । प्रमेयमित्यनुषङ्गः । **द्वितीयस्येति** । द्वितीयपादस्य प्रमेयमित्यर्थः ।

**या०** — सर्वेषामित्यतः पूर्वं प्रायेणेति शेषः । ज्ञानादिमत्त्वमित्यत्रादिपदेन विरोधियुक्त्यादिनिगमादिग्रहणम् ॥ **अन्तरङ्गतामश्नुवत इति** । यदन्तरङ्गं साधनं तच्चरममेवेति भावः ॥ **सर्वकर्तृत्वं-विज्ञायेति** । अनेन ल्यब्लोपनिमित्ता पञ्चमीत्युक्तं भवति । **भक्तिमान्भूत्वेति** । स्नेहमाहात्म्यज्ञानयोरेव भक्तित्वादिति भावः । नन्वेवं सर्वकर्तृत्वमित्यनेनैव देहकर्तृत्वस्यापि लाभाद्देहकर्तृत्वमीशस्येति पुनर्वचनं किमर्थमित्यत आह **अत्रापीति** ॥ **पूर्ववदिति** । विशेषेणैतद्भाव्यं तदायत्तत्वाद्विशेषस्नेहस्येति पूर्वन्यायेनेत्यर्थः ।

**श्री०** — **युक्तिसहितश्रुतेर्विरोधं चेति** । युक्तिसहितश्रुतेः सकाशात्प्राप्तं विरोधमित्यर्थः ॥ **समीचीनः कृत इति** । सन्मार्गे प्रवृत्त इत्यर्थः ।

**च०** — **ल्यब्लोपेति** । श्वशुराज्जिह्रेति प्रासादात्प्रेक्षत इत्यादिनिर्वाहाय द्वितीयासप्तम्यो र्बाधेन 'ल्यब्लोपे कर्मण्यधिकरणे चे'ति कात्यायनः पञ्चमीमन्वशिक्षदिति भावः ॥ **मिथ्या सम्यग्वेति** । भावप्रधाननिर्देशौ । 'अव्ययादापि'ति लुप्तविभक्तिराधेयतया प्रकृत्यर्थान्वितप्रकारत्वार्थिका । तथा च मिथ्यात्वसम्यक्त्वप्रकारकवेदनविषया इत्यर्थः । **अजिज्ञासूनामिति** । पर्युदासेन नञा समासः ।

**सु०** — **कथमयमथशब्दस्यार्थ इति चेत्** । उच्यते । यद्यप्यथशब्दोऽनेकार्थः । तथाऽप्यर्थान्तराणामत्रायोगादानन्तर्यार्थः परिगृह्यत इत्यविवादम् । आनन्तर्यं न यतः कुतश्चिदभिधातव्यम् । वैयर्थ्यात् । किन्तु येन विना न ब्रह्मजिज्ञासा भवति यस्मिंश्च सति भवत्येव तदानन्तर्यम् । तथाविधं च वेदार्थज्ञानादीति ।

किञ्च जिज्ञासा नाम विचारापरपर्यायं मननम् । न च तच्छ्रवणमन्तरेण संभवतीत्यतो यावदर्थजातमत्र शास्त्रे विचार्यं तावतः श्रवणजन्यं ज्ञानं पूर्ववृत्तम् । सति च तस्मिञ्जन्मान्तरानुष्ठितमत्कर्मणः सत्कुलप्रसूतस्य सात्त्विकप्रकृतेर्वैराग्यादिकमवश्यं भवत्येव । यत्तु परैर्नित्यानित्यवस्तुविवेकः शमदमादिसाधनसम्पदिहामुत्रफलभोगवैराग्यं मुमुक्षुता चेति साधनचतुष्टयं पूर्ववृत्तमुक्तं तदस्मदुक्त एवान्तर्भवतीत्यविरुद्धम् ॥ उत्तमभक्तानां मुमुक्षता नास्तीत्याचार्येण न सङ्कीर्तिता ।

एतेन जिज्ञासासाध्यस्य वैराग्यादेस्तत्साधनत्वेऽन्योन्याश्रयत्वं स्यादित्यपि निरस्तम् । सात्त्विकप्रकृतेः सत्सङ्गवशादीषद्वैराग्यादिमतः श्रवणेन तदभिवृद्धौ कृतमननादेर्भूयस्तदभिवृद्धिरिति ।

**शे०** — अथ शब्दानुशासनमित्यादाविव प्रारम्भादिरूपार्थान्तरस्यापि संभवान्नानन्तर्यार्थत्वमथशब्दस्याश्रयितुं शक्यम् । आनन्तर्यार्थत्वेऽपि नोक्तानन्तर्यमप्रामाणिकत्वादित्याशयेनाक्षिपति **कथ**

**मिति** ।। **अर्थान्तराणामत्रायोगादिति** । प्रतिवचनाभावान्नाथशब्दः प्रश्नार्थः परिग्रहीतुं शक्यते । आरभ्यत इत्यनुक्त्वाऽप्यारब्धे इदमनेनारब्धमिति ज्ञातुं शक्यत्वादधिकार्याद्यसूचनापाताच्च नारम्भार्थता ; अथ शब्दानुशासनमित्यादौ तु व्याकरणेऽङ्गान्तरव्यावृत्तस्याधिकारिविशेषणस्याभावेन तदानन्तर्यार्थत्वासंभवादारम्भार्थत्वाङ्गीकारः । मङ्गलत्वप्रत्यायकत्वं चाथशब्दस्य न युक्तम् । अथेत्यनेन मङ्गलत्वाप्रतीतेः । अधिकार्याद्यसूचनापातात् । तथा च माङ्गलिकावुभावित्यादिस्मृतावोङ्काराथशब्दयोर्मङ्गलफलकत्वकथनाचास्यैवादिसूत्रत्वेन पूर्वप्रकृतार्थसाङ्कर्यशङ्कानुदयात् । आनन्तर्येऽधिकारस्येति स्मृतिविरोधादधिकार्याद्यसूचनापाताच्च न प्रकृतादर्थादर्थान्तरमथशब्दार्थ इत्यर्थान्तराणामत्रायोगादित्यर्थः । वेदार्थज्ञानीत्यादिपदेन विरोधपरिहारज्ञानादेः संग्रहः ।

**विचारापरपर्यायमिति** । तत्त्वनिर्णायकन्यायानुसन्धानरूपमित्यर्थः । अन्यथा न्यायग्रथनात्मकशास्त्रारंभसिद्धये तत्तत्कर्तव्यत्वोक्तिविरोधादिति भावः । **न च तच्छ्रवणमन्तरेणेति** । मननरूपन्यायावताराङ्गसंशयबीजधर्मिज्ञानरूपत्वाच्छ्रवणस्येति भावः । **अविरुद्धमिति** । यद्यपि ब्रह्मैव नित्यमन्यदनित्यमित्येवंरूपस्य पराभिमतनित्यानित्यवस्तुविवेकादेः स्वाभिमताधिकारविरुद्धत्वमेवेति नाविरुद्धत्ववचनं युक्तम् । तथाऽपि परोक्तविशेषाणां विप्रतिपन्नत्वेऽपि सामान्यस्याविप्रतिपन्नत्वात्तदभिप्रायेणेदमविरुद्धत्ववचनमिति द्रष्टव्यम् ।। **मुमुक्षुता नास्तीति** । स्वरससुन्दरतया मुमुक्षुता नास्तीत्येवात्रार्थोऽभिमतः । न तु सर्वथा तदभावः । तथा सति सर्वमन्यत्तदर्थकमित्यङ्गीकारेण भगवदर्थतयोत्तमाधिकारिणामपि मोक्षेच्छासत्त्वेन तदभावकथनस्य विरुद्धत्वादिति भावः ।

रामानुजीयमतं प्रत्याख्याति **एतेनेति** ।। **जिज्ञासासाध्यस्येति** । ब्रह्मज्ञानफलमेव नित्यमन्यदनित्यमित्येवंरूपविवेको हि न वैशेषिकादिशास्त्रान्तरात्तत्रोक्तनित्यानित्यवस्तुविवेकस्य वेदान्तवादविरुद्धत्वात् नापीतिहासादितः । विचारात्प्राक् तेन तदनिश्चयात् । अतो मीमांसयैव तन्निश्चयो वाच्यः । तथा च जिज्ञासासाध्यस्य नित्यानित्यवस्तुविवेकादेस्तत्साधनत्वे कथं नान्योन्याश्रयत्वमिति भावः ॥ **तत्संसर्गवशादिति** । यत्त्वादौ श्रद्धया सिद्धं पुनर्न्यायेन साधितमिति न्यायादिति भावः । अवश्यं चैतदेवम् । अन्यथा तन्मतेऽप्यपशूद्रमधिकारे ज्ञाते शूद्रस्यैतच्छास्त्रविचारे प्रवृत्तिः प्रवृत्तौ चैतच्छास्त्रेणापशूद्राधिकारज्ञानमित्यन्योन्याश्रयः स्यादिति भावः ।

स० -- **श्रवणजं ज्ञानमिति** । मननरूपन्यायावताराङ्गसंशयरूपत्वादिति भावः ।

प० **अस्मदुक्त एवेति** । ज्ञातवेदार्थ इत्यनेन नित्यानित्यवस्तुज्ञानस्य लाभात् । स्नेहमापाद्येकत्यादिना शमदमादेः । वैराग्यपदेन वैराग्यस्योक्तेरिति भावः । ननु मुमुक्षुताया उक्तांतर्भावायोगा पृथक् साधनं वाच्यम् । तथा नोक्तेति कथमस्मदुक्त एवांतर्भाव इत्यत आह **उक्तमेति** ।

**या०** — शमदमादीत्यत्रादिपदेन तितिक्षासंग्रहः ॥ **अस्मदुक्त एवेति** । 'तदन्यत्राति-दुःखत' इत्यत्र नित्यानित्यवस्तुविवेकस्य 'उत्पाद्याधिकवैराग्यमि'त्यत्र दमतितिक्षाविरागाणां, 'दार्ढ्यं भवतेरवाप्य चे'त्यत्र शमस्य, चोक्तत्वादिति भावः । 'यतेतेति' विधिबलान्मुमुक्षुताऽप्यधिकारिणो-ऽर्थादुक्तैवेति ज्ञातव्यम् । ननु कण्ठरवेणैव मुमुक्षुता कुतो नोक्तेत्यत आह **उत्तमभक्तानामिति** ।

**श्री०** — **यतः कुतश्चिदिति** । अकारणानन्तर्यमित्यर्थः ॥ **वैयर्थ्यादिति** । जिज्ञासायाम-नुपयुक्तत्वादित्यर्थः ॥ **तथाविधं च वेदार्थज्ञानादीति** । आदिपदेन परसमयनिराकरणादिकं ग्राह्यम् । तथा च वेदार्थज्ञानदि तथाविधमन्वयव्यतिरेकाभ्यां जिज्ञासासाधनं भवतीत्यर्थः । पूर्ववृत्तं पूर्वस्थितम् ॥ **अस्मदुक्त एवेति** । युक्तितो ज्ञातवेदार्थ इत्यादिनाऽस्मदुक्त एवाथशब्दार्थ इत्यर्थः । व्यक्तिभेदान्नान्यो-न्याश्रयत्वमित्याह **सात्त्विकप्रकृतेरिति** ।

**च०** — अविवादमित्यव्ययीभावः । सत्कर्मान्ते तृतीयार्थे बहुव्रीहिः ।

**सु०** **एवं प्रथमसूत्रार्थमभिधाय तेन द्वितीयसूत्र(स्य) सङ्गतिमाह** कर्तव्येति ।

**अनु०** — कर्तव्या ब्रह्मजिज्ञासेत्युक्ते किमिति संशये ॥

**उक्ते सति किमिति कर्तव्या प्रयोजनाभावान्न कर्तव्येति संशयो भवति । संशयशब्दे-नात्र विपर्ययोऽभिधीयते । मिथ्याज्ञानत्वसाम्यात् । संशये सति तत्परिहाराय** जन्माद्यस्य यत इत्याहेति शेषः । **यद्वा किं कर्तव्या न वेति संशये प्रयोजनाभावान्न कर्तव्येति पूर्वपक्षे च सतीति व्याख्येयम् । इत्याहेति वक्ष्यमाणेनैव (वा) संबन्धः ।**

**शे०** — ननु प्रयोजनाभावान्न कर्तव्येति विपर्ययरूपपूर्वपक्ष एव न संशयः । तत्कथं संशय-कथनमस्येत्यत आह **संशयशब्देनेति** । अभिधीयत गौण्या वृत्त्या प्रतिपाद्यत इत्यर्थः । तन्निमित्त-भूतगुणयोगाभावात्कथं गौणीत्यत आह **मिथ्याज्ञानत्वेति** । संशयशब्दवाच्यार्थनिष्ठायथार्थज्ञानत्वस्य विपर्ययेऽपि सत्त्वादिति भावः । साकाङ्क्षताप्रयुक्तवाक्याभासतापरिहारायाह **संशये सतीति** । अनेन संशय इति सतिसप्तमीत्युक्तं भवति । अत्र पक्षे संशयशब्दस्य गौणी वृत्तिः समाश्रयणीया । संशया-नुक्तिश्च भवतीत्यपरितोषात्पक्षान्तरमाह **यद्वेति** । संशयमात्रस्याधिकरणानारम्भकत्वादपेक्षितमध्याहरति **प्रयोजनाभावादित्यादि** । तत्परिहारायेत्यादिशेषस्त्वत्राप्यविशिष्ट एवेति न साकाङ्क्षत्वमिति भावः । इत्याहेति वक्ष्यमाणेन संबन्धाभ्युपगमात्पक्षद्वयेऽपि न तत्परिहारायेत्यादिशेषपूरणमपीत्याह **वक्ष्यमाणेनैव चेति** । यद्यपि तत्परिहारायेत्येतदत्राप्यपेक्षितं तथाऽपि विशिष्टशेषापेक्षाभावाभिप्रायेणायं ग्रन्थः ।

स०— ननु संशयशब्देन कथं विपर्ययलाभः । **गौण्येति** वदामः । न च तत्र तन्निमित्त-गुणाभावः । मिथ्याज्ञानत्वस्यैव तत्त्वादित्याह **मिथ्याज्ञानत्वसाम्यादिति** ।

या०— संशये सतीत्यनुवादघटनार्थमाह **संशयो भवतीति** ॥ **विपर्यय इति** । तथा च संशये सतीत्यस्य पूर्वपक्षे सतीत्यर्थ उक्तो भवतीति ज्ञातव्यम् ।

श्री० — **किमितीति** । किमर्थमित्यर्थः ॥ **विपर्यय इति** । पूर्वपक्ष इत्यर्थः । कथं पूर्वपक्षस्य विपर्ययत्वमित्यत आह **मिथ्याज्ञानत्व इति** । सम्यग्ज्ञानविरोधित्वसाम्यादित्यर्थः ॥ **इत्याहेति** ॥ **वक्ष्यमाणेन वेति** । इतीत्यस्याहेति वक्ष्यमाणेन वा सम्बन्ध इत्यर्थः ।

च०— प्रकृत्यन्तः षष्ठ्यर्थेनानुप्रयोजनाभावान्न कर्तव्येति निश्चयरूपपूर्ववादिमतस्यैव प्रवर्तिततया संशयत्वोक्तिः कथं सङ्गच्छत इत्यत आह **संशयशब्देनेति** ॥ **अभिधीयते** । गौण्या वृत्त्या प्रतिपाद्यते । तन्निमित्तभूतगुणयोगं दर्शयति **मिथ्येति** । मुख्यार्थतयापि साकाङ्क्षोपस्कारादिना सङ्गमयति **यद्वेति** ।

**सु०— प्रथमसूत्रेऽतः शब्देन जिज्ञासाया मोक्षार्थत्वात्कथं पुनराशङ्केत्यत आह** **अत इति** ।

**अनु०**— अत इत्युदितेऽप्यस्य विशेषानुक्तितः पुनः ॥

**अतःशब्देन जिज्ञासाया मोक्षार्थत्वे उदितेऽप्यस्य मोक्षार्थत्वस्य विशेषानुक्तितो हेतोः पुनः संशय इति पूर्वेण संबन्धः । एवं तर्हि जन्मादिसूत्रेणापि नैषा शङ्का निवर्तते । तत्रापि (हि) मोक्षः समासार्थतया व्याख्यातव्य एव । न तु विशेषेणोक्त इति चेन्न । प्रमाणविशेषानुक्तित इति व्याख्यानात् । एतदुक्तं भवति । मोक्षप्रयोजनत्वाद्ब्रह्म-जिज्ञासाकर्तव्येत्यतःशब्देनोदितेऽपि पुनराशङ्का भवत्येव । तत्र प्रमाणस्यानुक्तत्वादिति ।**

शे०— **समासार्थतयेति** । जन्म आदिर्यस्येत्यन्यपदार्थतयेत्यर्थः ।

स०— **समासार्थतयेति** । जन्म अदिर्यस्येत्यन्यपदार्थतयेत्यर्थः ।

प०— **प्रमाणविशेषानुक्तित इति व्याख्यानादिति** । विशेषानुक्तित इत्यस्येति योज्यम् ।

या०— **समासार्थतयेति** । जन्मादीति बहुव्रीहिसमासार्थतयेत्यर्थः ।

श्री०— **मोक्षार्थत्वस्य** मोक्षरूपप्रयोजनस्य ।

**सु० — एवञ्चेद् द्वितीयसूत्रमपि कथमेतदाशङ्कां निवर्तयेत् । न ह्यत्रायमर्थः प्रमाणेनोपपादित इत्यतस्तद्व्याचष्टे सृष्टीति ।**

**अनु०** — सृष्टिबन्धनमोक्षादिकर्तृत्वस्य श्रुतत्वतः ॥
यतो मोक्षादिदाताऽसावतो जिज्ञास्य एव वः ॥
इत्याह तत्परं ब्रह्म व्यासाख्यं ज्ञानरश्मिमत् ॥

**श्रुतत्वतोऽसौ मोक्षादिदाता । यतश्च मोक्षादिदाताऽसावतो वो युष्माकं मुमुक्षूणां जिज्ञास्य एवेत्येतमर्थं जन्मादिसूत्रेणाहेत्यर्थः । अयमभिसन्धिः ।** जन्माद्यस्य यत **इति सूत्रे श्रुतमिति वाक्यशेषः । तथा च परमेश्वरस्य मोक्षदातृत्वे श्रुतिः प्रमाणमित्युक्तं भवति । किञ्चात्र मोक्षदातृत्वं प्रधानम् । सृष्ट्यादिकर्तृत्वं तु तत्र हेतुत्वेनोक्तम् । केवलव्यतिरेकी चायं हेतुः । तस्य चासिद्धिपरिहाराय श्रुतत्वमभिहितमिति । कृत्यानां कर्तरि वेति व इति षष्ठी ।**

**शे०** — नन्वेवं जन्मस्थित्यादेः श्रुतत्वोक्तेर्वैयर्थ्यमित्यतो मोक्षदातृत्वेऽनुमानसूचकतया तस्योक्तत्वान्न वैयर्थ्यमित्याशयेनाह **किञ्चेति** । यद्वा जन्मादीति सूत्रमीश्वरस्य मोक्षदातृत्वे श्रुतिरूपप्रमाणकथनपरतया योजितम् । अनुमानपरत्वेनापि तद्योजयति **किञ्चेति** । न च समकक्षतया सर्वेषामुपादानात्कथं मोक्षदत्वस्य साध्यतयाऽन्यस्य च साधनतयोपन्यासोऽत्र व्याख्यायत इति वाच्यम् । बुद्ध्या विवेकेन तत्सम्भवात् । ननु सपक्षाभावेन व्याप्त्यसिद्धेः कथं सृष्ट्यादिकर्तृत्वेन मोक्षदत्वानुमानं स्यादित्यत आह **केवलेति** । नन्वेवं श्रुतत्वत इति मूले श्रुतत्वोक्तिवैयर्थ्यमित्यतो हेतूक्तस्य सृष्ट्यादिकर्तृत्वस्यासिद्धिपरिहारार्थत्वान्न तदिति भावेनाह **तस्य चेति** । कर्मणि निष्पन्नत्वाज्जिज्ञास्यशब्दस्य तेन कर्मण उक्तत्वेऽपि कर्तुरनुक्तत्वात्तिङाद्यनभिहिते कर्तरि कर्तृकरणयोस्तृतीयेति प्राप्ततृतीयाबाधकतया नित्यं प्राप्तायाः कर्तृकर्मणोः कृतीति कृद्योगलक्षणषष्ठ्याः कृत्यानां कर्तरि वेति सूत्रे कृत्ययोगे विकल्पितत्वेन तृतीयाषष्ठ्योरुभयोरप्यनुज्ञानाद्यत्प्रत्ययस्य च कृत्याः प्राङ्ण्वुल इति कृत्यप्रत्ययत्वात्तद्योगे तृतीयापक्षे युष्माभिरिति प्रसङ्गेऽपि षष्ठीपक्षे व इति षष्ठ्यादेशप्रयोगो युक्त इत्याशयेनाह **कृत्यानामिति** ।

**स०** — जन्मादीति सूत्रमीश्वरस्य मोक्षसाधनत्वश्रुतिप्रमाणप्रतिपादकत्वेन योजितं अनुमानपरत्वेनापि योजयति **किंचेति** । वस्तुतः श्रुतपदाध्याहारेणास्य सूत्रस्य प्रमाणोपपादनपरत्वेन व्याख्याने अत इत्यस्यैव मोक्षदातृत्वस्य श्रुतत्वादिति व्याख्यानसंभवात् किमनेनेत्यतो मोक्षदातृत्वेऽनुमानमनेनोक्तमित्यनध्याहारपक्षमाश्रित्य योजयति **किं चेति** । इत्येव योज्यम् । ननु सृष्ट्यादिकर्तृत्वेन मोक्षदातृ-

त्वानुमानमयुक्तम् । सपक्षाभावेन व्याप्त्यभावादित्यत आह **केवलेति** । नन्वेवमत्रानुव्याख्याने श्रुतत्वोक्तिरयुक्ता इत्यतो हेत्वर्थस्यासिद्धिपरिहारार्थत्वान्न वैयर्थ्यमित्याह **तस्य चेति** । ननु कर्तृकरणयोस्तृतीयेति युष्माभिरिति भवितव्यं व इति कथं षष्ठ्यत्यत आह **कृत्यानामिति** । जिज्ञास्य इत्यत्र यत्प्रत्ययस्य कृत्यत्वात्तद्योगे कर्तरि षष्ठ्यन्तादेशस्य व इत्यस्योपपत्तिरिति भावः ।

**प॰**— सूत्रे प्रमाणोक्तिलाभप्रकारमाह **अयमभिसंधिरिति** । ननु मीमांसाग्रंथे न्यायेनैव संशयविपर्ययौ निवर्त्यावित्यत आह **किंचेति** । ननु युष्माभिर्जिज्ञास्य इति वाच्ये कथं व इति षष्ठी कर्तृकरणयोस्तृतीयेति कर्तरि तृतीयाविधानादित्यत आह **कृत्यानामिति** । कृत्यसंज्ञकप्रत्यययोगे कर्तरि षष्ठी भवतीति यत्प्रत्ययान्तजिज्ञास्यशब्दस्य कृत्यान्ततया तद्योगात् षष्ठ्याप्रयोगः साधुरिति भावः । इत्यादिपदेन मोक्षादिदातेत्यस्य ग्रहः ॥

**या॰**— नन्वेवं जन्मस्थित्यादेः श्रुतत्वोक्तिवैयर्थ्यमित्याशङ्कायां मोक्षदातृत्वेऽनुमानसूचकतया तस्योक्तत्वेन न वैयर्थ्यमित्याशयेनाह **किञ्चेति** । अन्यत्र मोक्षदातृत्वे प्रमाणमुच्यत **इत्यर्थः** । ननु कर्तृकरणयोस्तृतीयेति कर्तरि तृतीयाया विहितत्वाद्युष्माभिरिति वक्तव्यम् । व इति कथमुक्तमित्यत आह **कृत्यानामिति** । कृत्याः प्राङ्ण्वुल इत्युक्तत्वेन यत्प्रत्ययस्यापि कृत्यत्वादिति भावः । कृत्यानां प्रयोगे कर्तरि षष्ठी वा स्यादिति सूत्रार्थः । उदाहरणं तु मम मया वा सेव्यो हरिरिति ।

**श्री॰**— **प्रधानं** साध्यमित्यर्थः ।

**च॰**— ननु जिज्ञास्यशब्दस्य सन्नतप्रकृतिक'तयोरेवेति'योगस्मारितकर्मसाधनताकप्रत्ययान्ततया तेन कर्माभिधानेपि तिङ्कृत्तद्धितसमासैः कर्तुरनभिहित्या निरूपकताप्रत्यासत्त्या सन्नतोपस्थाप्यविचारान्वितकर्तृत्वप्रत्यायिकया 'कर्तृकरणयोरि'तियोगानुशिष्टतृतीयया भवितव्यमित्यतस्तादृशतृतीयाबाधिकायाः 'कर्तृकर्मणोः कृती'तिविहितषष्ठ्याः 'कृत्यानां कर्तरि वेति योगेन कृत्यप्रत्ययसमभिव्याहारे तृतीयया सह विकल्पिततया तादृशकर्तृत्वार्थकषष्ठीविन्यासोपि संगच्छत इत्याह **कृत्यानामिति** । कृत्या इत्यस्या प्राङ्ण्वुलोऽधिकृततया तदन्तर्गतिवृहलोरित्यनुशिष्टण्यतोपि कृत्यत्वादिति भावः ।

सु॰— **ननु मोक्षादिकर्तृत्वस्येत्यादि कथम्** । **कर्तरि चेति तृजन्तेन षष्ठ्याः समासप्रतिषेधात्** । **तृन्नयं तच्छीलादौ विहितः** । **तेन च श्रितादिषु गमिगाम्यादीनामुपसंख्यानमिति द्वितीयायाः समासः** ।

**शे॰**— मोक्षादिकर्तृत्वस्येत्यादिपदेन मोक्षदातेत्यादेः परिग्रहः ॥ **कर्तरि चेतीति** । एतच्च जयादित्यमतमभ्युपगम्योक्तम् । तन्मते हि तृजकाभ्यां कर्तरीत्यस्य कर्तरि या षष्ठी सा तृजकाभ्यां न समस्यत

इत्यर्थः । अत एव कर्तर्येव तृज्विधानात्कर्तुरभिहितत्वेन तृज्योगे कर्तरि षष्ठी नेत्यपां स्रष्टेत्यनुदाहृत्य भवतः शायिकेत्येवोदाहृतम् । कर्तरि चेत्यत्र कर्तरि यौ तृजकौ ताभ्यां कर्मषष्ठ्या न समास इत्यर्थः । अत्रापि कर्तरीत्येतदेकस्यैव विशेषणं तत्रैव सामर्थ्यात् । संभवे व्यभिचारे च सत्येव हि विशेषणविशेष्यभावो भवति । न च तृच् कर्तारं व्यभिचरति । तस्य कर्तर्येव विधानात् । अकस्तु व्यभिचरति । भावेऽपि तस्य विधानात् । संभवति चात्र कर्तरि चेति प्रतिषेधः । मोक्षादेरिति षष्ठ्याः कर्मणि षष्ठीत्वात्कर्तृशब्दस्य तृजन्तत्वात् । वस्तुतस्तु तृजकाभ्यां कर्तरीति तृजन्तेन षष्ठ्याः समासप्रतिषेधादित्येवात्र वक्तुमुचितम् । तथाहि । इह हि कर्तृग्रहणं तृजकयोरेव विशेषणं युक्तम् । साक्षाच्छ्रुतत्वात् । तृज्ग्रहणं चेहैवोपयुज्यते । वृत्तिकृदभिमते तूत्तरार्थता तस्य वक्तव्या स्यात् । तृच् प्रयोगे कर्तरि षष्ठ्या अभावात् । कर्तृकर्मणोरित्यनभिहिताधिकारात्तृचा च कर्त्रर्थस्याभिधानात् । कर्तरि चेत्यत्र तु कर्तृग्रहणं षष्ठ्या विशेषणं तस्याश्चाकेनैव समासप्रतिषेधः । तस्यैव तृजकाभ्यामित्यतोऽनुवृत्तेः । न च तृचोऽप्यनुवृत्तिरिति वाच्यम् । तद्योगे षष्ठ्यसंभवस्यैवोक्तत्वात् । न चैवं कर्तरि चेत्यत्र तृचः संबन्धाभावात् । नित्यं क्रीडाजीविकयोरित्यत्रानुवृत्तिः स्यादिति वाच्यम् । अत्रैव तस्योपयोगसंभवेनेष्टत्वात् । यद्धि यत्रोच्चारितं पदं तत्तत्रानुपयुज्यमानं सदुत्तरार्थं, तद्युक्तमेव तथाप्रकारस्तु कुत्रचिदेवागत्या स्वीक्रियते । संभवति तु तत्रैवोपयोगेनायं प्रकारो युज्यते । अत एवाह वृत्तिकारः । नित्यं क्रीडाजीविकयोरित्यत्र तृजत्र नास्तीति । सम्मतश्चायं प्रकारो हरदत्तादीनामिति दिक् ।

**तृन्नयमिति** । एतच्च समाधानं कर्मत्वविवक्षां षष्ठीतत्समासनिषेधयोर्नित्यत्वविवक्षां चाश्रित्य द्रष्टव्यम् । न तु कर्तृशब्दस्य तृजन्तत्वतृनन्तत्वयोः षष्ठीसमासानुपपत्तिभिया । तथा हि । अस्तु तावत्कर्तृशब्दस्तृजन्त एव । न चोक्तरीत्या कर्तरि चेति तृजकाभ्यां कर्तरीति वा षष्ठीसमासनिषेधप्रसङ्गः । ताभ्यां कृल्लक्षणषष्ठीसमासस्यैव निषेधेन कर्मणो विद्यमानस्यापि कर्मत्वस्याविवक्षया शेषत्वविवक्षया या षष्ठी तत्समासस्याप्रतिषेधात् । न हि यावद्वस्तुनि वर्तते तावदवश्यं प्रयोगे विवक्षितव्यमेवेति नियमोऽस्ति । तथा सति वृक्षस्य शाखेत्यादावधिकरणत्वादेर्विद्यमानत्वात्तद्विवक्षाप्रसङ्गेन सप्तमीप्रसक्त्या षष्ठ्यभावप्रसङ्गात् अत एवाह भाष्यकारः । एवं तर्हि कर्मादीनामविवक्षा शेष इति । अत एव च न कर्मणि चेत्यप्यत्र षष्ठीसमासनिषेधः । सतोऽपि कर्मत्वस्याविवक्षितत्वात् । किञ्च निपातानामनेकार्थत्वात्कर्मणि चेत्यत्र चकार इत्यर्थे वर्तते । ततश्च कर्मणि चेत्यनेनोभयप्राप्तौ कर्मणीत्यस्या एव षष्ठ्याः समासनिषेधविधिस्थित्या कृल्लक्षणषष्ठ्याः समासस्यानिषेधेन तत्समाससंभवात् । यदि च तत्र या काचन कर्मषष्ठी गृह्येत तथा सति कर्तरि चेति वा तृजकाभ्यामिति वा निषेधोऽनर्थक एव स्यात्कर्मणि चेत्यनेनैव तत्सिद्धेः ।

तस्मात्तृज्योगकर्तृकर्मणोः कृतीति प्राप्तकारकषष्ठ्याः समासासंभवेऽपि शेषषष्ठ्याः समासो युक्त एव । अत एव कैयटः कथं तर्हि घटानां निर्मातुस्त्रिभुवनविधातुश्च कलह इति शेषषष्ठ्याः समास इति । कर्मत्वस्य विवक्षायामपि न कर्तृकर्मणोः कृतीति प्राप्तकृल्लक्षणषष्ठीसमासानुपपत्तिः । जनिकर्तुः प्रकृतिः । तत्प्रयोजको हेतुश्च । जातिवाचको गुणो गुणिविशेषक इत्यादित्रिमुनिनिर्देशेन कर्तरि चेत्यादिनिषेधस्यानित्यत्वज्ञापनेन क्वचिदप्रवृत्तिसंभवात् । अत एव भीष्मः कुरूणां भयशोकहन्ता हितकारक इत्यादिप्रयोगा अप्युपपन्नाः । एवं कर्तृशब्दस्य तृनन्तत्वेऽपि नानुपपत्तिः । न च तृन्योगे न लोकाव्ययेति षष्ठ्या निषेधात्सैव न तत्समासस्तु दूरनिरस्त इति वाच्यम् । तृन्योगे कारकषष्ठ्या एव निषेधेन तस्याः समासासम्भवेऽपि शेषषष्ठ्य-निषेधेन तस्याः समासे दोषाभावात् । अवश्यं चैतत् । यन्न लोकेति कारकषष्ठ्या एव निषेधो न षष्ठी-मात्रस्येति । अन्यथा ब्राह्मणस्य कुर्वन् ओदनस्य पचन् अपां पेरुरसि नरकस्य जिष्णवो गुणैरित्यादिषु षष्ठ्यनुपपत्तिप्रसङ्गात् । कारकषष्ठ्यास्तृनन्तेन समासाश्रयणेऽपि न दोषः । तृजकाभ्यां कर्तरीति तृचः सानुबन्धकस्य निर्देशेन तृन्व्यावर्तेन न लोकेति निषेधस्यानित्यत्वज्ञापनेन प्रकृतेऽप्रवृत्तिसंभवात् । न ह्यसत्यां षष्ठ्यां समासप्रसङ्गोऽस्ति । अत एवाह न्यासकारः । तृनन्तमेतत् । न लोकाव्ययेति षष्ठी-निषेधस्त्वनित्यः त्रकाभ्यामिति वक्तव्ये तृचः सानुबन्धकस्य ग्रहणादिति सङ्क्षेपः ।

अत्र तृजन्तत्वपरित्यागेन कर्त्रादिशब्दानां तृनन्तत्वाश्रयणमपि न तृजन्तत्वे षष्ठीसमासप्रतिषेध-भिया । कर्तरि चेति तृजन्तेन कर्तृशब्देन प्रतिषिद्धस्यापि याजकादिभिश्चेति प्रतिप्रसवेन तदुपपत्तेः । न च कर्तृशब्दस्यायाजकादित्वान्न प्रतिप्रसव इति वाच्यम् । स्युर्याजकाद्वर्तकर्तृकारकाः प्रयोजकोत्सा-दृभर्तृवर्तकाः । अध्यापकस्नापकगोप्तृपूजका इति गणपाठे कर्तृशब्दस्य याजकादिषु पठितत्वात् । अवश्यं चैतदेवम् । वेदकर्तुरप्रसिद्धेरित्यत्र कर्तृशब्दस्य याजकादित्वमभ्युपेत्य षष्ठीसमासप्रतिषेधनिषेध-प्रतिप्रसवस्य स्वयमेव टीकाकृताऽऽश्रितत्वात् । किन्तु प्रयोजनापेक्षया सृष्ट्यादिकारित्वे भगवतोऽपूर्णत्व-प्रसङ्गात् । तदनपेक्षया कारित्वे चाप्रेक्षावत्त्वापत्तेर्न तस्य सृष्ट्यादिकर्तृत्वमिति प्रतिकूलतर्कपराहति-परिहाराय सृष्ट्यादिकर्तृत्वस्य तत्स्वभावत्वान्न प्रयोजनापेक्षेति ज्ञापनाय ताच्छीलिकतृनन्तत्वाश्रयणमिह टीकायां कृतम् । प्रतिप्रसवस्यात्रानुक्तिस्त्वन्यत्रोक्तत्वादनुक्तावपि समानन्यायतया शिष्यैरेव स प्रकार ऊह्यतामिति भावेन वेति सकलमकलङ्कम् ।

**द्वितीयाया इति** । कर्मणि द्वितीयेति प्राप्तद्वितीयां बाधित्वा प्राप्तायाः कर्तृकर्मणोः कृतीति षष्ठ्या न लोकेति प्रतिषेधे पुनः प्राप्ताया द्वितीयायास्तृनन्तेन कर्तृशब्देन मोक्षादीन्कर्ता मोक्षकर्तेति द्विती-याश्रितातीत्यनेन सूत्रेण समास इत्यर्थः । तृनन्तेन कर्तृशब्देन षष्ठीसमासस्येव द्वितीयासमासस्याप्रति-

षेधादिति भावः । ननु श्रितादिष्वपाठात्कर्तृशब्दस्य न द्वितीयासमासोऽपि संभवतीत्यतः श्रितादिषु गम्यादीनामुपसंख्यानाङ्गीकारस्य चाकृतिगणत्वान्नानुपपत्तिरिति भावेनोक्तं **श्रितादिष्विति** ।

**स०** — ननु कर्तृशब्दो न तृन्नन्तः । तृन्योगे 'न लोकाव्यये'ति षष्ठीप्रतिषेधात् मोक्षादेः कर्तेति षष्ठीसमासानुपपत्तेः । नापि तृजन्तः । तृचः कर्त्रर्थकत्वात्तद्योगे कर्तरि चेति षष्ठीसमासप्रतिषेधा-दित्याक्षिपति **न चेति** । तृन्नन्त एवायं कर्तृशब्दः । न चोक्तदोषः । द्वितीयासमासोपपत्तेः । न च श्रितादिष्वभावात् कथं सोपीति वाच्यम् । तस्मिन्सूत्रे गम्यादीनामुपसंख्यानात् तस्य चाकृतिगणत्वा-ददोष इत्याह **तृन्नयमित्यादिना** ।

**प०** — **कर्तरि चेति** । कर्त्रर्थकतृजकाभ्यां योगे षष्ठी न समस्यत इति समासनिषेधादनयोश्च कर्त्रर्थकतृजन्तत्वादिति भावः ॥ समाधिमाह **तृन्नयमिति** । तृतीयस्य द्वितीयपादे आक्वेस्तच्छीलतद्धर्मत-त्साधुकारिष्विति पूर्वसूत्रोक्ततच्छीलादावर्थे तृन्निति तदुपरितनसूत्रेण विहिततृन्प्रत्ययान्ताविमौ शब्दा-वित्यर्थः । तथात्वे न लोकाव्ययनिष्ठाखलर्थतृनामिति षष्ठ्येव न प्राप्नोति समासस्तु दूरतः । अत आह **श्रितादिष्विति** । द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैरिति द्वितीयाद्यपादीयसूत्रे द्वितीयान्तं पदं श्रितादिभिस्समस्यत इति द्वितीयातत्पुरुषो विहितः । तत्र वार्तिकं श्रितादिष्विति गमिगम्यादेः आकृ-तिगणत्वात् । ग्रामगमीत्यादाविव द्वितीयासमासः । द्वितीया तु कर्मणि द्वितीयेत्यनेनेति भावः । एतेन सृष्टिबंधनादिकरणस्य स्वभावत्वान्न प्रयोजनापेक्षेति दर्शितम् ।

**या०** —मोक्षादिकर्तृत्वस्येत्यादीत्यत्रादिपदेन मोक्षादिदातेत्यस्य संग्रहः ॥ **कर्तरि चेति** । कर्त्रर्थ-कतृजकाभ्यां षष्ठ्या न समास इति सूत्रार्थः । उदाहरणं त्वपां स्रष्टेत्यादि ॥ **तृजन्तेनेति** । कर्तृदातृ-शब्दयोस्तृजन्तत्वादिति भावः । उत्तरमाह **तृन्नयमिति** । कर्तृशब्दो दातृशब्दश्चेत्यर्थः । ननु तृन्नन्त-स्यापि योगे न लोकाव्ययेति षष्ठ्याः प्रतिषेधेनाप्राप्तौ कथं षष्ठीसमास इत्यत आह तेनेति । तृन्नन्ते-नेत्यर्थः तृजन्ते कर्तरि चेति समासप्रतिषेधवत्तृन्नन्तेन समासप्रतिषेधकं किमपि नास्तीति भावः । गमि-गम्यादेराकृतिगणत्वमभिप्रेत्येदमुक्तमित्यवधेयम् । नन्वत्र द्वितीयाप्राप्तिरेव कथमिति चेदुच्यते । कर्मणि द्वितीयेति द्वितीयाप्राप्तौ तां बाधित्वा कर्तृकर्मणोः कृतीति षष्ठी प्राप्ता तस्याश्च न लोकेत्यनेन प्रतिषेधे पु द्वितीयाया एव प्राप्तिः । तेन च समासप्रतिषेधकाभावाद् द्वितीयाश्रितेत्यनेन समासोपपत्तिरिति ।

**श्री०** — **समासप्रतिषेधादिति** । तथा च मोक्षादेः कर्ता मोक्षादेर्दातेत्येव षष्ठी श्रूयते न तु मोक्षादिकर्तृत्वस्य मोक्षादिदातेति च षष्ठ्याः समासो न युक्त इत्यर्थः ।

**च०** — मोक्षादिकर्तृत्वस्येत्यादिपदं मोक्षादिदातेत्यस्य परिग्राहकम् । अत्र कारकषष्ठ्या एव निषेधो न शेषषष्ठ्याः कथं तर्हि 'घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः' इति शेषषष्ठ्या समास इति

कैय्यटोक्ते: जनिकर्तु: प्रकृतिस्तत्प्रयोजको हेतुश्च जातिवाचको गुणो गुणिविशेषक इत्यादि-मुनित्रयनिर्देशेन कर्तरि चेत्यादिनिषेधस्य नित्यताज्ञापनेन कर्मणि षष्ठीविवक्षायामपि क्षतिविरहात् । कथमन्यथा भीष्म: कुरूणां भयशोकहन्ता हितकारक इत्यादय: प्रयोगा: सङ्गच्छेरन् । ब्राह्मणस्य कुर्वन् ओदनस्य पचन् नरकस्य जिष्णवो गुणैरित्यादिसामञ्जस्याय 'न लोके'त्यस्य कारकषष्ठीनिषेधपरतया सङ्गमिततया तृन्योगेपि शैषिकषष्ठ्युपपत्त्या तत्समाससंभवात् । तृजकाभ्यामिति सूत्रेपि तव्येतृन्व्यावर्तक-तृजित्यनुबन्धनिर्देशेन 'न लोकाव्यये'ति षष्ठीनिषेधस्यानित्यतज्ञापनेन क्वचित्कारकषष्ठीसमासाश्रयणेपि क्षतिविरहादिति न्यासकारादिभिरभिहितत्वात् । प्रकृते तृजन्तत्वानुपगमेन तृन्नन्तत्वोपगतिर्न षष्ठीसमास-निषेधभीतिबन्धना । तेन प्रतिषिद्धस्यापि तृजकादिभ्यश्चेत्यनेन प्रतिप्रसवस्य वेदकर्तुरप्रसिद्धेरिति प्रतीकव्याख्यावसरे टीकायामेव निरूढत्वात् । किन्तु प्रयोजनोद्देशेन सृष्ट्यादिहेतुत्वे अपूर्णत्वं तदनुद्देशेन तद्धेतुतायामप्रेक्षावत्त्वं प्रसज्येतेति प्रतिकूलतर्कपराहतिपरिजिहीर्षयैव ताच्छीलिकतृन्नन्तता टिटीकिर इति दिशा प्रापञ्चिषत प्रपञ्चिका: । ननु श्रितादिष्वपाठात्कर्तृशब्दस्य न द्वितीयांतेन समास: संगच्छत इत्यत: कात्यायनवचनानुरोधेन तमुपपादयति **श्रितादिष्विति** ।

**सु०— ज्ञानं रश्मय इव ज्ञानरश्मय: । व्याप्तज्ञानवदित्यर्थ: । अपां तरतमो नाम 'कश्चन मुनिर्व्यासो बभूवेति' प्रवाददर्शनाच्छिष्याणां सूत्रकारे भक्तिमान्द्यं मा भूदित्यतो विशेषणोपादानम् ।**

शे०—ज्ञानस्य रश्मित्वाभावेन समानाधिकरणसमासानुपपत्तेरुपमितं व्याघ्रादिभि: सामान्याप्रयोग इत्युपमितसमासोऽयमित्याह **ज्ञानरश्मय इति** । न च मादुपधायाश्च मतोर्वोऽयवादिभ्य इति मकारोपधादकारोपधात्परस्य मतुपो मस्य वत्वविधानान्मकारोपधत्वाद्रश्मिशब्दस्य तत: परस्यमतुपो वत्वस्य बकारे रश्मिवदिति स्याद्रश्मिमदिति तु कथमिति वाच्यम् । तत्रैव सूत्रेऽयवादिभ्य: इति यवादिभ्य: परस्य मतुपो वत्वस्य निषेधाद्रश्मिशब्दस्य यवादित्वेन तत: परस्य मतुपो वत्वाभावसंभवात् । ज्ञानस्य रश्मि-साम्योक्त्या सिद्धमर्थमाह **व्याप्त्येति** ।। **विशेषणोपादानमिति** । ज्ञानरश्मिमदिति विशेषणोपादान-मित्यर्थ: ।

च०— **विशेषणोपादानमिति** । ज्ञानरश्मिमदिति विशेषणोपादानमित्यर्थ: ।

**सु०— जिज्ञासाया मोक्षसाधनत्वे प्रमाणाभावेनाक्षिप्ते भगवतो मोक्षसाधनत्वसमर्थन-मसङ्गतमित्यत** आह येनैवेति ।

**अनु०—** येनैव बन्धमोक्ष: स्यात्स च जिज्ञासया गत: ॥
सुप्रसन्नो भवेदीशो जिज्ञासातोऽस्य मुक्तिदा ॥

**बन्धान्मोक्षो बन्धमोक्षः । पञ्चमीति योगविभागात्समासः । षष्ठीसमासो वा । येन प्रसन्नेनेति शेषः । गतो ज्ञातः । गत्यर्थानामवगत्यर्थत्वात् । चो यस्मादित्यर्थे । प्रसाद-मात्रस्य मोक्षसाधनत्वाभावात्सुशब्दः । अस्येशस्य जिज्ञासाऽस्य जीवस्य मुक्तिदा । एतदुक्तं भवति । जिज्ञासा तावन्न साक्षान्मोक्षसाधनत्वेनास्माकमभिमता । किन्तु (सु)प्रसन्नो भग-वानेव । स चोत्कृष्टतया ज्ञातः सुप्रसन्नो भवति । उत्कर्षज्ञानं च जिज्ञासयेत्येवम्परम्परया । तत्र भगवतो मोक्षदातृत्वं तावत्प्रमाणैः समर्थितम् । प्रसन्न एव ददातीत्युत्कर्षज्ञानात्प्रसीद-तीति जिज्ञासयोत्कृष्टतया ज्ञायत इति च लोकत एव सिद्धम् । किं तत्र प्रमाणोपन्यासेन । अतो भगवज्जिज्ञासाया मोक्षहेतुत्वं प्रमितमिति मन्यते सूत्रकार इति ।**

**ननु स्थानान्तरेऽस्य सूत्रस्यान्यथासङ्गतिरुक्ता । सत्यम् । सत्यां तस्यामियम-पराऽत्रोक्तेति ।**

**शे०** — पञ्चमी भयेनेति भयभीतभीतिभीभिर्योग एव पञ्चमीसमासस्मरणात्कथं बन्धान्मोक्ष इति पञ्चमीसमास इत्यतः कर्तृकरणे कृता बहुलमिति बाहुलकस्यैव पञ्चमी भयेनेत्यादित्रिसूत्रीप्रपञ्च इति वदता वृत्तिकृता बाहुलकोक्त्या ग्रामान्निर्गतो ग्रामनिर्गत इत्यादिपञ्चमीसमासनिर्वाहाङ्गीकारात्तद्वदेव बाहुलकादेव बन्धान्मोक्षो बन्धमोक्ष इति पञ्चमीसमासो युक्त एवेति सत्येव समाधाने उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इति न्यायं मनसि निधाय प्रकारान्तरेण समाधत्ते **योगविभागादितीति** । सूत्रविभागादित्यर्थः । (पञ्चमीत्येकविभागः पञ्चम्यन्तशब्दरूपं येन केनापीष्टशब्देन समस्यते भयेनेत्यपरो योगः पञ्चमीत्येतद-नुवर्त्य पञ्चम्यन्तं भयशब्देन समस्यत इति तस्यार्थो वर्णनीय इति भावः) । न च योगविभागो निर्मूलः । ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि (भवभूतिः) । अधिश्रयन्तीर्जमताः परःशता (माघः) इत्याद्यभियुक्तव्यवहारेषु सहस्रात्पराः शतात्परा इत्यादिविग्रहे पञ्चमीसमाससिद्धेरेव तन्मूलतया निर्मूलत्वाभावात् । अत्र हि पञ्चमीति योगविभागात्समासे राजदन्तादित्वान्मयूरव्यंसकादि-त्वाद्वा परनिपाते सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पुंवद्भावे लोकाश्रयत्वाद्वा लिङ्गस्य विशेष्यनिघ्नतायां पारस्करादित्वात्सुटि परःसहस्रा इत्यादि सिध्यति । यद्यपि परःसहस्रा इत्यादिसमासनिर्वाहोऽपि कर्तृकरणे कृता बहुलमिति बाहुलकोक्त्यैव कर्तुं शक्यस्तथाऽप्यभियुक्तैर्योगविभागाश्रयणेनापि तन्निर्वाहाभ्युपगमात्तन्मूलतया तस्य ग्रहणम् । एतच्च पञ्चमीभयेनेत्येतत्सूत्रीयोपस्करग्रन्थे स्पष्टम् । सति गत्यन्तरे बाहुलकाश्रयणं योगविभागाश्रयणं वा क्लिष्टमित्यपरितोषात्पक्षान्तरमाह **षष्ठीसमासस्त्वेति** । बन्धस्य मोक्ष इति शेषषष्ठ्या मोक्षशब्देन षष्ठीति षष्ठीसमास इत्यर्थः । जिज्ञासाया

मोक्षसाधनतामुपपादयितुमनुरूपं शेषमाह **येन प्रसन्नेनेति शेष इति** । ज्ञात इति व्याख्यानमुपपादयति **गत्यर्थानामिति** । अनेकार्था हि धातव इति धातूनामनेकार्थत्वश्रवणादिति भावः ॥ **प्रसादमात्रस्येति** । अधममध्यमप्रसादस्य स्वर्गादिफलकत्वेन मोक्षसाधकत्वाभावादित्यर्थः । अस्येति जीवेशयोरन्यतरमात्रपरामर्शानुपपत्तेरुभयपरतया योजयति **अस्येशस्येत्यादि** । ईशस्येति कर्मणि षष्ठी जीवस्येति तु सम्बन्धमात्र इति ज्ञेयम् । नन्वेवं परम्पराश्रयणे जिज्ञासाया मोक्षसाधनत्वमिति मतभङ्ग इत्यत आह **एतदुक्तं भवतीति** ॥ **स्थानान्तर इति** । पूर्वस्थानरूपे भाष्य इत्यर्थः ॥ **अन्यथेति** । निर्बाधरूढिबलाज्जीव एवेदं ब्रह्मेति प्राप्ते जिज्ञास्यस्य ब्रह्मणो जीवत्वबाधकं विष्णुत्वसाधकं वाक्यशेषोक्तं लक्षणमाहेति प्रकारान्तरेणेत्यर्थः ॥ **उक्तेति** । ब्रह्मणो लक्षणमाहेति ग्रन्थेनेत्यर्थः ॥ **अत्रेति** । उत्तरप्रस्थान इत्यर्थः ।

स० — ननु पञ्चमीभयेनेति भयादियोग एव पञ्चमी स्मर्यते तत्कथं बन्धान्मोक्ष इति पञ्चमीसमास इत्यत आह **पञ्चमीति योगविभागादिति** । योगविभागकरणे गौरवं मनसि निधायाह **षष्ठीसमासो वेति** । संबन्धसामान्य इति शेषः । **स्थानान्तरे** भाष्ये । **अन्यथा संगतिरिति** । ब्रह्मणो जीवभेदकानन्तगुणपूर्णत्वरूपलक्षणासंभावनानिरासाय संभावकं जन्मादिकारणत्वं द्वितीयसूत्रेणोच्यत इत्यन्यथासंगतिरुक्तेत्यर्थः ।

प० — **मोक्षसाधनत्वसमर्थनमिति** । सृष्ट्यादिकर्तृत्वहेतुना जन्मादिसूत्रे समर्थनमित्यर्थः ।

---

ननु पंचमी भयेनेति सूत्रे भयशब्देन पंचम्यंतं समस्यत इत्युक्तत्वात् । इह च चोराद्भयं चोरभयमित्यादाविव भयशब्दाभावात् कथं पञ्चमीतत्पुरुष इत्यत आह **पञ्चमीतीति** । योगशब्दः सूत्रवाची । पञ्चमीत्येको योगः कार्यः । पञ्चम्यंतं शब्दरूपं येन केनापि इष्टशब्देन समस्यत इति तस्यार्थः । भयेनेत्यपरो योगः । पञ्चमीत्यनुवर्त्य पञ्चम्यंतं भयशब्देन समस्यत इति तस्यार्थो वर्णनीय इति भावः । किमनेन प्रमाणमुपन्यस्तमित्यत आह **एतदुक्तमिति** ॥ **स्थानान्तर इति** । न च जीव एवायं ब्रह्मशब्द इति न्यायविवरणे जीवव्यावर्तकपरतया संगतिरुक्तेत्यर्थः ॥ **इयमपरेति** । सा च चंद्रिकायां विवृता ।

या० — ननु पञ्चमी भयेनेत्युक्तत्वादत्र च भयशब्दाभावात्कथं पञ्चमीत्यत आह **योगेति** । **स्थानान्तर इति** । ब्रह्मणो लक्षणमाहेति सङ्गतिरुक्तेत्यर्थः ।

च० — **योगविभागादिति** । सूत्रविभागादित्यर्थः । तथाच ग्रामनिर्गत इत्यादिनिर्वाहाय पञ्चमीति विभज्य येन केनापि समस्यत इत्यर्थोपगमाद्भयशब्दाभावेपि न क्षतिरिति भावः । कर्तृकरणे कृता बहुलमित्यत्र बहुलग्रहणादपि समासोपपत्तिरित्यपि स्थितम् । **षष्ठीसमासो वेति** । शैषिकषष्ठ्या समासो वेत्यर्थः । **प्रसादमात्रस्य** प्रसादसामान्यस्य । अधमप्रसादादेः स्वर्गादिसाधनत्वादिति भावः । **ईशस्येति** । कर्मणि षष्ठी ईशकर्मिका जिज्ञासेत्यर्थः । **स्थानान्तर इति** । पूर्वप्रस्थानरूप-

भाष्यन्यायविवृत्योरित्यर्थः । तत्र निर्बाधरूढ्या जीव एवेदंब्रह्मेति प्राप्ते जिज्ञास्य ब्रह्मणो जीवत्व-बाधकविष्णुत्वसाधकवाक्यशेषाभिहितलक्षणातात्पर्यकतया संगतिरुक्तेत्यर्थः । **अत्र उत्तरस्थाने** ।

**सु॰— तृतीयसूत्रनिवर्त्यामाशङ्कामभिधाय तत्परिहारत्वेन तत् पठति** मोक्षादीति ।

**अनु॰**— मोक्षादिदत्वमीशस्य कथमेवावगम्यते ॥
इति चेच्छास्त्रयोनित्वाच्छास्त्रगम्यो हि मोक्षदः ॥

**प्रधानं मोक्षदातृत्वं तत्साधनं सृष्ट्यादिकर्तृत्वं चेशस्यैवेति संबन्धः । कथमवगम्यते । न कथञ्चित् । अनुमानैस्तत्तदागमैश्चान्येषां** तथाऽवगमादिति भावः । **इति चेत्तत्रोक्तमिति शेषः । कथमिदं सूत्रमेतदाशङ्काया निवर्तकमित्यतस्तद्व्याचष्टे** शास्त्रगम्यो हीति । **मोक्षग्रहणं सृष्ट्यादेरप्युपलक्षणम् । यस्मान्मोक्षादिदः पुरुषः शास्त्रमात्रस्य विषयोऽतो वेदादिकं यं तथाविधं प्रतिपादयति स एव तथा प्रतिपत्तव्यो नानुमादिना कल्पनीय इति** ।

**शे॰— अनुमानैरिति** । कार्यत्वाद्यनुमानैरित्यर्थः । यद्यपि कार्यत्वाद्यनुमानैः कर्तृमात्रं सिध्यति न तु शिवादिः कर्तेति । कर्तृमात्रं च विष्णोः कर्तृत्वाविरोधिलोकप्रसिद्ध्यादेरुभयत्र तुल्य-त्वात् । तथाऽप्यनुमानानि न स्वप्रामाण्यनिषेधकश्रुत्युक्तेः कर्तरि पर्यवस्यन्ति किन्तु स्वप्रामाण्योपपादका-गमोक्तेः कर्तर्येवेत्यनुमानैरन्येषां तथाऽवगमो युक्त इति भावः ॥ **तत्तदागमैरिति । शैवाद्यागमैरित्यर्थः ।** मोक्षादिदत्वमिति शङ्काग्रन्थानुरोधादाह **मोक्षग्रहणमिति** ।

**प॰**— मोक्षदत्वस्य स्वशब्देन सृष्ट्यादेरादिपदेन चोक्तौ बीजमाह **प्रधानमिति** । तत्साधन-मिति मोक्षदत्वसाधनमित्यर्थः । सृष्ट्यादिकर्तृत्वहेतुना मोक्षदत्वस्य पूर्वसूत्रे समर्थनादिति भावः । सृष्ट्यादिपदोक्तजन्मस्थित्यादिदानं नाम कर्तृत्वमेवेति भावेन सृष्ट्यादिकर्तृत्वमित्युक्तम् । एवशब्दान्वय-माह **इति सम्बन्ध इति ।** ईशस्यैवानवगमे बीजमाह **अनुमानैरिति** । व्यक्तमेतत्पञ्चाधिकरण्या-मेवेति भावः ।

**या॰— तत्तदागमैः** शैवाद्यागमैः ।

**सु॰—मोक्षादिदातुः शास्त्रैकसमधिगम्यत्वं कुतः । परिशेषादित्याशयवान्प्रत्यक्षगम्यत्वं तावद्दूषयति** प्रत्यक्षेति ।

**अनु॰**— प्रत्यक्षावसितेभ्यः स्याद्यदि मोक्षः कथञ्चन ॥
किमित्यनादिसंसारमग्नाः सर्वा इमाः प्रजाः ।

**यदि मोक्षादिदाता प्रत्यक्षः स्यादिति यावत् । कथञ्चन तत्सेवादिना । तदा सर्वेऽपि युक्ताः स्युरित्यर्थः । मोक्षदातुः प्रत्यक्षत्वे कुतः सर्वैर्मुक्तैर्भाव्यमित्यत आह** यस्मादिति ।

यस्मान्नियमतो दुःखहानिः प्रत्यक्षतो भवेत् ॥
धावन्त्येव तमुद्दिश्य राजाद्यमखिलाः प्रजाः ।

**यस्मात्पुरुषाद्धेतोः । अमुमुक्षुत्वान्न धावन्तीत्याशङ्कानिवारणाय मोक्षस्वरूपं व्याख्यातं दुःखहानिरिति । न हि कोऽपि दुःखी दुःखं न जिहासति इति संभवति । प्रत्यक्षतः प्रत्यक्षगम्यात् । राजाद्यमिति संभावनयोक्तम् । दारिद्र्यदुःखं जिहासवो वदान्यं राजाद्यमिवेति वा ।**

**अनुमानगम्यत्वं दूषयति** अनुमेति ।

अनुमागम्यतो मोक्षो यदि स्यादनुमैव हि ॥
दृष्टपूरुषवन्मोक्षदातृतां विनिवारयेत् ॥
तच्छास्त्रगम्य एवैको मोक्षदो भवति ध्रुवम् ।

**यदि कश्चिन्मोक्षदातृत्वेनानुमीयत इत्यर्थः । अनुमैव पुरुषत्वादिका । अनुमानं सप्रतिपक्षत्वान्न तत्र भवतीत्यर्थः ।**

**आगमास्त्वाप्तेरनिश्चयादसमर्था एवेत्याशयवान्परिशेषमुपसंहरति** तदिति ।

**तत्तस्मान्मोक्षदः पुरुषो ध्रुवं केवलं शास्त्रगम्य एव भवेदिति योजना ।**

**शे०—** तच्छास्त्रगम्य **एवैक इत्यस्य** तात्पर्यमाह **मोक्षादिदातेत्यादि** । यस्मात्प्रत्यक्षादिति सामानाधिकरण्यस्य बाधितत्वात्प्रत्यक्षपदं लक्षणया तद्गम्यपरमित्याशयेन तदनूद्य व्याचष्टे **प्रत्यक्षत इत्यादि ॥ संभावनयेति ।** तादृशो राजादिरेव भविष्यतीति संभावनयेत्यर्थः । अत्र पक्षे संभावनाऽऽश्रयणीया भवतीत्यपरितोषात्पक्षान्तरमाह **दारिद्र्येति** । दृष्टपूरुषवन्मोक्षदातृतां विनिवारयेदित्युत्तरग्रन्थानुसारेण व्याचष्टे **यदि कश्चिदिति । मोक्षद इति ।** मोक्षादिद इत्यर्थः ।

**प०— न जिहासतीति** । न त्यक्तुमिच्छतीत्यर्थः । न लोकाव्ययनिष्ठेति **सूत्रेणोप्रत्यययोगे** षष्ठीनिषेधात् कर्मणि द्वितीयया दुःखं जिहासव इत्युक्तम् । वदान्यं दानशूरम् ।

**या०—** दृष्टपुरुषवन्मोक्षदातृतामित्युत्तरग्रन्थानुसारेण व्याचष्टे **यदि कश्चिदिति ।**

सु० — अस्त्वेवं तथाऽपि मोक्षदत्वेन शास्त्रगम्यत्वमन्येषां भविष्यति । तथा प्रतिभासादिति चतुर्थसूत्रस्य सङ्गतिं सूचयंस्तच्चेति पदद्वयं व्याख्याति शास्त्रेति ।

अनु० — शास्त्रगम्यश्च नान्योऽस्ति मोक्षदत्वेन केशवात् ॥

मोक्षदत्वेन शास्त्रगम्यश्च केशवादन्यो नास्ति । किन्तु स एव कुत इत्यतः सौत्रं हेतुं व्याख्याति मोक्षदो हीति ।

मोक्षदो हि स्वतन्त्रः स्यात्

स्वतन्त्र एव हि मोक्षदः स्यादित्यन्वयः । स्वातन्त्र्येण समन्वयश्च भगवत एव नान्येषाम् । यस्य च प्रतीयते श्रुत्यादौ स एव भगवान्विष्णुरिति भावः । परतन्त्रो मोक्षदः किन्न स्यादिति चेत् । स किं स्वतन्त्रमनाश्रित्य स्वयमेव मोक्षं दद्यादुत स्वतन्त्रमन्यमाश्रित्य । आद्ये दोषमाह परतन्त्र इति ।

परतन्त्रः स्वयं सृतौ ॥

वर्तमानः कथं शक्तः परमोक्षाय केवलम् ॥

परतन्त्र एव । केवलं परानपेक्षया । यद्यसौ स्वतन्त्रमनपेक्ष्यैव स्वभक्तमोक्षाय शक्तः स्यात्तर्हि स्वात्मानमपि मोचयेदिति न संसारी स्यादित्याशयः । द्वितीयं दूषयति अन्येति ।

अन्याश्रयेण यद्येष दद्यान्मोक्षं स एव हि ॥

तेन नानुसृतो मोक्षं न दद्यादन्यवाक्यतः ॥

एषोऽवान्तरेश्वरोऽन्यस्य स्वतन्त्रस्य विष्णोराश्रयेण स्वभक्ताय मोक्षं दद्यादिति यद्युच्यते तदा स स्वतन्त्रस्तेन मुमुक्षुणाऽननुसृतोऽसेवितोऽन्यस्यावान्तरेश्वरस्य मम भक्ताय मोक्षं देहीति प्रार्थनावाक्यमात्रेण मोक्षं नैव दद्यादित्यपि संभावितमेव । तथा लोके दर्शनादिति हिशब्दः । ततः किमित्यत आह अत इति ।

अतस्तदर्थमपि स ज्ञेयो विष्णुर्मुमुक्षुभिः ॥

तदर्थमप्यवान्तरेश्वरान्मोक्षप्राप्त्यर्थमपि स स्वतन्त्रः । तथा च भगवज्जिज्ञासाया अपरिहार्यत्वान्न्यर्थावान्तरेश्वरस्य मोक्षदत्वकल्पनेति भावः ।

शे० — तथा प्रतिभासादिति । मोक्षदिदत्वेन ज्ञात्वा शिवमित्यादिवेदादिश्रुत एव रुद्रादेः अज्ञानां प्रतिभासादित्यर्थः । ननु च श्रुत्यादौ स्वातन्त्र्येण समन्वयोऽन्येषामेव प्रतीयते तत्कथमुच्यते स्वातन्त्र्येण समन्वयश्च विष्णोरेव नान्येषामितीत्यत आह यस्य चेति । तच्छब्दानामपि भगवति मुख्यत्वादिति भावः । यद्वा न नाम्नि विप्रतिपत्तिरित्याशयः । शिष्टं स्पष्टम् ।

**स०**— नन्वन्येषामेव स्वातन्त्र्येण समन्वयः प्रतीयते तत्कथमेतदित्यत आह **यस्य चेति** ।

**प०**— **तथाप्रतिभासादिति** । 'ज्ञात्वा शिवं शान्तिमत्यन्तमेती'त्यादाविति भावः । तस्त्विति सौत्रपदद्वयार्थः स एवेति ॥ **समन्वयश्चेति** । वैदिकपदानां शक्तितात्पर्यविषयत्वमित्यर्थः । यद्वा स्वातन्त्र्येण समन्वयः स्वातन्त्र्येण सम्यग्योगश्चेत्यर्थः । श्रुत्यादावन्यस्य मोक्षदत्वप्रतिभासस्य का गतिरित्यत आह **यस्य च प्रतीयत इति** । तच्छब्दस्य भगवत्येव मुख्यत्वादिति भावः ॥

**या०**— तथा प्रतिभासादित्यत्र वेदादिरूपशास्त्रत एवेति शेषः ॥ **भगवानिति** । तच्छब्दानां भगवति मुख्यत्वादिति भावः । अनेन समन्वयादिति सौत्रो हेतुः स्वातन्त्र्येण समन्वयात्सम्बन्धात्तद्वत्त्वादिति स्वतन्त्रतया रुद्रादिप्रतिपादकवैदिकशब्दानां भगवत्येव समन्वयादुपक्रमादिभिर्मुख्यतो वाचकत्वादिति द्वेधा व्याख्यात इति द्रष्टव्यम् ।

**श्री०**— **तथा प्रतिभासादिति** । ज्ञात्वा शिवं शान्तिमत्यन्तमेतीत्यादावित्यर्थः ॥ **अननुसृतोऽसेवित इति** । यतोऽत इति शेषः ।

**सु०**— **प्रकारान्तरेण हेतुं व्याचष्टे** यमेवेति ।

**अनु०**— यमेवैष इति श्रुत्या तमेवेति च सादरम् ॥
शास्त्रयोनित्वमस्यैव ज्ञायते वेदवादिभिः ।

---

**अनेन यमेवैष वृणुते तेन लभ्य इति श्रुतिमुपादत्ते । तमेव चेति श्रुत्या । 'तमेवं विदित्वाऽति मृत्युमेती'ति श्रुतिरनेनोपात्ता । 'नान्यः पन्था विद्यत' इति वाक्यशेषेणादरो गम्यते । मोक्षदत्वेन शास्त्रयोनित्वमस्य विष्णोरेव । अनेन श्रुतीनां सम्यक् सादरमन्वयः समन्वय इत्युक्तं भवति । नन्वेतयोः श्रुत्योरेष इति तमिति च भगवानुच्यत इत्येतत्कुतः । प्रकरणादिपर्यालोचनया तदवधारणात् । तदिदमुक्तं वेदवादिभिरिति ।**

**अत्र श्रुत्यन्तरमाह** य एनमिति ।

य एनं विदुरमृता

**'य एनं विदुरमृतास्ते भवन्ती'ति च श्रुत्येति पूर्वेण संबन्धः । मीमांसार्थमस्याः श्रुतेः पृथग्ग्रहणम् । अत्रैनमित्युक्तो हरिरित्येतत्कुत इत्यत आह** इत्युक्त इति ।

इत्युक्तस्तु समुद्रगः ॥

**य एनं विदुरिति श्रुतौ मोक्षहेतुज्ञानत्वेनोक्तस्तु 'यमन्तः समुद्रे कवयो वयन्ती'ति समुद्रग उक्तः । तच्च हरेर्लिङ्गमित्यर्थः ॥ प्रमाणान्तरमाह** तदेवेति ।

तदेव ब्रह्म परममिति श्रुत्यावधारितः ॥

इत्युक्त इति वर्तते । 'तदेव ब्रह्म परमं कवीनामिति' श्रुत्या ब्रह्मत्वेनावधारितः ।

एतदुक्तं भवति । एनमित्युक्ते ब्रह्मपदश्रवणात्तस्य च भगवन्नामत्वाद्भगवानेवायमिति ज्ञायते । यद्यपि ब्रह्मपदस्यान्यत्रापि वृत्तिरस्ति तथाप्यमुख्यैव । न चैवमत्र शक्यते ग्रहीतुम् । तदेवेत्यवधारणविरोधात् । इदं खल्वस्य मुख्यतो ब्रह्मत्वमाचष्टे । अन्यत्र ब्रह्मशब्दवृत्तिमात्रस्य प्रामाणिकत्वेन निषेधानुपपत्तेरिति । युक्त्यन्तरमाह यत इति ।

यतः प्रसूतेति ततः सृष्टिमाह

'यतः प्रसूता जगतः प्रसूती'ति श्रुतिस्ततो य एतमित्युक्तान्मूलप्रकृतेः सृष्टिमाह । न च मूलप्रकृतेः कारणत्वं परमपुरुषादन्यस्य संभवति । अतोऽप्ययं भगवानिति । एतेन मोक्षादिकर्तृत्वस्य श्रुतत्वत इत्युक्तमपि विवृतं वेदितव्यम् ।

शे०— किमनेन प्रमाणान्तरमुक्तं भवतीत्यत आह **एतदुक्तं भवतीति** । विरोधादित्युक्तमेव विरोधं स्फोरयति **इदं खल्विति** । नन्वनेन ब्रह्मशब्दस्यान्यत्र वृत्तिनिषेधेन ब्रह्मणि वृत्तिमात्रसिद्धावपि न मुख्यत्वस्य लाभ इति नास्य मुख्यतो ब्रह्मत्वाभिधायकत्वमित्यत आह **अन्यत्रेति** ॥ **प्रामाणिकत्वेनेति** । बृहजातिजीवेत्याद्यभिधानादिसिद्धत्वेनेत्यर्थः । अन्यथा तत्प्रमाणबाधादिति भावः ॥ **परमपुरुषादन्यस्येति** । ब्रह्मरुद्रादिसमूहस्य लक्ष्म्यधीनत्वेन तस्य लक्ष्मीकारणताया अन्योन्याश्रयग्रस्तत्वादित्यर्थः ॥

**एतेनेति** । मोक्षदत्वे श्रुत्युदाहरणेनेत्यर्थः ।

स०— **एतेन** मोक्षदातृत्वे श्रुत्युदाहरणेन ।

प०— **प्रकारान्तरेणेति** । स्वातन्त्र्येण वेदतात्पर्यविषयत्वादिरूपप्राक्तनव्याख्यानात्प्रकारान्तरेणेत्यर्थः । तं प्रकारं व्यनक्ति **अनेन श्रुतीनामिति** । 'यमवैष' इत्यादिमोक्षदत्वप्रतिपादकश्रुतीनामित्यर्थः ॥ **मीमांसार्थमिति** । समुद्रगत्वलिङ्गाद्युक्त्या विष्णुपरत्वावधारणार्थमित्यर्थः । अवयन्ति जानन्तीत्यर्थः ।

या०— ननु तदेवेत्यनेन ब्रह्मशब्दस्यान्यत्र प्रवृत्तिनिषेधेन ब्रह्मणि प्रवृत्तिमात्रमुच्यते न पुनः परममुख्यत्वमित्यत आह **अन्यत्र ब्रह्मशब्दस्येति** ।

श्री०— **इत्युक्त इति वर्तत इति** । इत्युक्तः समुद्रगत्वेनोक्तो यः स इत्यर्थः ॥ **एनमित्युक्त इति** । एनमित्युक्ते वस्तुनीत्यर्थः । नन्विदमन्यस्य ब्रह्मशब्दवाच्यतानिषेधपरमेव किं न स्यादित्यत आह **अन्यत्रेति** ॥ **एतेनेति** । भगवतो मोक्षजनकज्ञानविषयत्वस्य य एनमित्याद्युदाहृताभिः श्रुतिभिः समर्थनेनेत्यर्थः ।

सु॰— **द्वितीयं हेतुव्याख्यानमुपसंहरति** तत इति ।

अनु॰— ततो हरिः ।

शास्त्रयोनिर्न चान्योऽस्ति मुख्यतस्त्विति गम्यते ।

**मुख्यत इति मोक्षदत्वेनेति यावत् ।**

**शे॰— द्वितीयहेतुव्याख्यानमिति** । भगवतो मोक्षदातृत्वे जन्माद्यस्य यत इति श्रुतमित्येको हेतुरुक्तः । शास्त्रयोनित्वादिति यो द्वितीयो हेतुस्तद्व्याख्यानमित्यर्थः ।

**श्री॰— द्वितीय(यं)हेतुव्याख्यानमिति** । भगवतो मोक्षदातृत्वे जन्माद्यस्य यतः श्रुतिमित्येको हेतुरुक्तः । शास्त्रयोनित्वादिति द्वितीयो हेतुस्तद्व्याख्यानमित्यर्थः ।

सु॰— **विष्णोरिवान्येषामपि शास्त्रयोनित्वं प्रतीयत इति यदुक्तं तत्परिहारार्थत्वेनापि सौत्रं हेतुं व्याचष्टे** शास्त्रेति ।

अनु॰— शास्त्रयोनित्वमेतस्य ज्ञायते हि समन्वयात् ।

**अन्वय उपपत्यादिलिङ्गम् ।**

**यतो वाचो निवर्तन्ते इत्यादिश्रुतिभिर्ब्रह्मणोऽवाच्यत्वमाशङ्क्य वाच्यत्वमीक्षत्यधिकरणे साध्यते । तदसङ्गतम् । प्राग्वाच्यताया अनुक्तत्वात् । शास्त्रयोनित्वस्य लक्षणादिनाऽपि संभवादित्यतोऽधिकरणं सङ्गमयितुं संशब्दं व्याख्याति** समिति ।

समिति ह्युपसर्गेण परमुख्यार्थतोच्यते ।

**परममुख्यार्थतोच्यते । सङ्कोचे (प्रमाणा)कारणाभावात् । ततः किमित्यत आह** एवमिति ।

एवं परममुख्यार्थो नारायण इति श्रुतेः ॥

निर्धारणाय नाशब्दमिति वेदपतिर्जगौ ॥

एवं **मोक्षादिदत्वेन नारायणः श्रुतेः परममुख्यार्थ इत्यस्यार्थस्य निर्धारणायेति संबन्धः ॥ यस्मात्समित्युपसर्गेण परममुख्यार्थतोच्यते, एवं तस्मात्सङ्गतिसद्भावात् नाशब्दमिति जगाविति वा ।**

शे॰— **श्रुतिभिरिति** । उपलक्षणं चैतत् । शब्दो न यत्र पुरुकारकवान्क्रियार्थ इत्यादिस्मृतिभिश्चेत्यपि द्रष्टव्यम् ॥ **प्रागिति** । समन्वयसूत्र इत्यर्थः । ननु समन्वयसूत्रे कारणत्वेन सकलशास्त्रप्रतिपाद्यत्वस्य ब्रह्मणि प्रतिज्ञातत्वाद्वाच्यत्वाभावे तदसम्भवादेव तल्लाभ इत्यतस्तस्यान्यथासिद्धिमुपपादयति **शास्त्रयोनित्वस्येति** ॥ एवमित्यस्य व्याख्यानं मोक्षादिदत्वेनेति ॥ **यस्मादिति** । अनेन मूले समिति

त्युपसर्गेणेति हिशब्दो यस्मादित्यर्थ इत्युक्तं भवति। एवमित्यस्य व्याख्यानं तस्मादिति । तस्यापि विवरणं सङ्गतिसद्भावादिति।

स०— एवमित्यस्य व्याख्यानं **तस्मादिति**। तस्यापि विवरणं **सङ्गतिसद्भावादिति**।

प०— शास्त्रयोनित्वोक्त्यैव वाच्यत्वं लब्धमित्यत आह **शास्त्रयोनित्वस्य लक्षणादिनेति**। संपदेन मुख्यत्वलाभेऽपि पारम्यं कुत इत्यत आह **सङ्कोचे कारणाभावादिति**।

**या०—प्राग्वाच्यतेति**। ईक्षत्यधिकरण इत्यर्थः।

**श्री०**— पूर्वं भिन्नवाक्यतया योजितमिदानीं समित्यादिकमेकमेव वाक्यमित्याह **यस्मात्स-मित्युपसर्गेणेति**।

**सु०— अत्राधिकरणे गतिसामान्यादिति सूत्रम्। तत्प्राग्वाच्यतासमर्थनपरं न भवतीति न व्याख्यातम्। तस्येदानीं सङ्गतिमाह** कथमिति।

**अनु०**— कथं समन्वयो ज्ञेयः स्वल्पशाखाविदां नृणाम् ॥

**संशब्दो ह्यर्थो मुख्यवृत्त्येति सर्ववेदानामिति च। तत्र द्वितीयार्थोऽत्राक्षिप्यते। अत्र एवैकाधिकरणत्वमेषां सूत्राणाम्। संशब्दार्थाक्षेपसमाधानस्यैकत्वात्। उपक्रमादिलिङ्गैर्जग-ज्जन्मादिकारणत्वेन परमेश्वरे सर्ववेदानां समन्वयो न ज्ञातुं शक्यः। कुतः। नृणां स्वल्पायुः-प्रज्ञादिमतां स्वल्पशाखावेदि(त)त्वस्यैव सम्भवेन सर्ववेदज्ञानासम्भवात्। वेदानामपि स्वल्पत्वे शक्यत एव तत्समन्वयो ज्ञातुमस्मदादिभिरपीत्यत** आह वेदा इति।

वेदा ह्यनन्ता इति हि श्रुतिराहाप्यनन्तताम् ॥

**अनन्ता वै वेदा इति श्रुतिमनेनोपादत्ते। आद्यो हिशब्दः श्रौतवैशब्दार्थः। द्वितीयः श्रुतेः प्रसिद्धत्वं द्योतयति। अपिः** समुच्चये। **न केवलं पुरुषाः स्वल्पवेदविदः। किन्तु वेदा अप्य-नन्ता इति। अनन्तता वेदानामिति शेषः। सन्तु पुरुषाः स्वल्पविदो वेदाश्चानन्तास्तथाऽपि कथं समन्वयज्ञानमशक्यमित्यत आह** अनन्तेति।

अनन्तवेदनिर्णीतिर्महाप्रलयवारिधेः ॥

उत्तारणोपमा

**स्वल्पशाखाविदामिति** वर्तते। **महाप्रलयवारिधेरुत्तारणोपमेति गमकत्वात्समासः। देवदत्तस्य गुरुकुलमिति** यथा। **यो यद्वाक्यं स्वरूपतो न जानाति स तत्रोपमक्रमाद्यनुसन्धाय**

**वाक्यार्थमवधारयतीत्यसम्भावितमेतदिति भावः । एतदुक्तं भवति । विमताः पुरुषा न सर्ववेदसमन्वयज्ञानार्हाः सर्ववेदाज्ञत्वात् । यो यद्वाक्यं न जानाति नासौ तत्समन्वयमपि जानाति । यथा सम्मतः । विमता न सर्ववेदवेदनार्हा अल्पप्रज्ञादिमत्त्वात् यो यदपेक्षयाऽल्प-प्रज्ञादिमान्नासौ तद्वेत्ति यथा सम्मतः । वेदा वा नैतत्पुरुषवेद्याः । एतत्प्रज्ञाद्यतिक्रान्तत्वात् । यदेवं तदेवं तथा सम्मतमिति ।**

**आक्षेपमुपसंहरति** इत्यस्मादिति ।

इत्यस्मान्न ज्ञेयोऽत्र समन्वयः ॥

**अत्र विष्णौ । ततश्च शाखान्तरे प्रतिपाद्यान्तरशङ्कया नोक्तार्थावधारणं सम्भवतीति भावः ।**

**शे०— प्रागिति** । ईक्षत्यधिकरणव्याख्यावसर इत्यर्थः । अत एवेति परामृष्टमेव दर्शयति **संशब्दार्थेति** । अन्यथा गतिसूत्रस्यानन्ता वै वेदा इति श्रुतेर्वेदानामनन्तत्वेन शाखान्तरस्यान्यथात्वे शङ्किते सर्वे वेदा इत्यादिश्रुत्या प्रसिद्धशाखादृष्टान्तेनान्यत्रापि तदनुमानाच्छाखान्तरस्यापि प्रमाणत्वान्नैत-च्छाखाविरोध इत्येवम्परत्वात्सूत्रान्तराणां तु वाच्यत्वसाधकत्वादर्थभेदेनाधिकरणभेदः स्यादिति भावः । ननूत्तारणपदस्य वारिधिपदेन सापेक्षतयाऽसमर्थत्वात्कथमुपमापदेन समासः स्यात्समर्थः पदविधिरिति सामर्थ्य एव तद्विधानादित्यत आह **गमकत्वात्समास इति** । विग्रहवाक्येन योऽर्थः प्रतीयते तस्य समासेन गम्यमानत्वात्सत्यपि सापेक्षत्वे उत्तारणोपमेति युक्तः समास इत्यर्थः । ननु गमकत्वमात्रेण कथं सापेक्षस्यापि समास इत्यतोऽत्रानुरूपं दृष्टान्तमाह **देवदत्तस्येति** । यदि ह्युत्तारणपदस्य वारिधिपदेन सापेक्षत्वादुपमापदेन समासो नेष्यते तर्हि देवदत्तस्य गुरुकुलमित्यपि समासो न स्यात् । तत्रापि देव-दत्तस्य यो गुरुरिति देवदत्तपदापेक्षत्वेन गुरुपदस्यासमर्थतया कुलपदेन समासायोगात् । अतस्तत्र देव-दत्तपदापेक्षस्यापि गुरुपदस्य कुलशब्देन समासो देवदत्तस्य यो गुरुस्तस्य कुलमिति विग्रहवाक्येन प्रतीय-मानार्थस्यैव समासेन गम्यमानत्वाद्यथाऽऽश्रीयते तथा प्रकृतेऽपीति भावः । कथं समन्वयो ज्ञेय इत्याद्याक्षेपपरग्रन्थसमुदायस्य तात्पर्यमाह **एतदुक्तं भवतीति** ।

**स०—** उत्तरपदस्य वारिधेरित्यनेन सापेक्षत्वेनासमर्थत्वात्कथमुपमापदेन समास इत्यत आह **गमकत्वादिति** । नित्यसापेक्षत्वादित्यर्थः ।

**प०— अत्राक्षिप्यत इति** । गतिसूत्रसङ्गतिपरे कथमित्याद्यनुव्याख्यान इत्यर्थः । मूलं योजयति **उपक्रमादिलिङ्गैरित्यादिना** । ननु उत्तारणपदस्य महाप्रलयवारिधेरित्येतत्सापेक्षत्वेनोपमा-पदेन सामर्थ्याभावात् कथं समास इत्यत आह **गमकत्वादिति** । नित्यसापेक्षस्थले सामर्थ्यस्यार्थ-

बोधान्यथानुपपत्त्या ज्ञापकत्वात्समासो भवत्येवेत्यर्थः । **समन्वयज्ञानार्हा** इत्यस्य शक्तितात्पर्यविषयज्ञानार्हा इत्यर्थः ।

**या०** — ननूत्तारणपदस्योपमापदेन कथं समासः । तस्य वारिधिपदसापेक्षत्वेनासमर्थत्वात् । सापेक्षमसमर्थमिति वचनादत आह **गमकत्वादिति** । वाक्यार्थबोधकत्वादित्यर्थः । तथा च सापेक्षत्वेऽप्यसामर्थ्यमसिद्धम् । वाक्यार्थबोधकत्वस्यानुभवसिद्धत्वेन सामर्थ्यकल्पनात् । सापेक्षमसमर्थमिति वचनं तु नित्यसापेक्षव्यतिरिक्तविषयमिति कल्पनीयमिति भावः ।

**श्री०** — स्वरूपासिद्धिं परिहर्तुमाह **विमता न सर्ववेदवेदनार्हा इति ॥ यदपेक्षयेति ।** ज्ञेयापेक्षयेत्यर्थः ।

**च०** — **गमकत्वात्समास इति ।** विग्रहवाक्यजनितावगतिविषयतापन्नगोचरावगतिहेतुत्वादित्यर्थः । नन्वेवं ऋद्धस्य राजमातङ्गा इत्यादेरपि साधुत्वापत्त्या न गमकतामात्रं तत्साधुतायां निबन्धनमित्यतोऽनुरूपनिदर्शनप्रदर्शनेनोपपादयति **देवदत्तस्येति** । 'प्रतियोगिपदादन्यद्यदन्यत्कारकादपि । वृत्तिशब्दैकदेशेन न तस्यान्वय इष्यते' इत्यनुशासनाद्देवदत्तपदस्येव वारिधिपदस्यापि संबन्धिबोधकपदतया तत्साधुत्वोपगमसंभवादृद्धपदस्य चातथात्वेन न तत्र तथात्वापत्तिरिति भावः ।

---

**सु०** — **एतत्परिहारार्थत्वेन सूत्रमवतारयति** इत्याशङ्केति ।

**अनु०** — इत्याशङ्काऽपनोदार्थं स आह करुणाकरः ।

आह गतिसामान्यादिति **सूत्रमिति शेषः ॥ नन्वस्य सूत्रस्य कोऽर्थः । सर्वाभिः शाखाभिरुत्पाद्याया ब्रह्मावगतेरेकरूपत्वात्सर्वा अपि शाखाः परमपुरुषमेकमेव जगज्जन्मादिकारणत्वेनावगमयन्तीति न क्वचिद(प्य)न्यथाप्रतिपादनं शङ्कनीयमिति चेत् । नन्वेतदेव वेदानामनन्तत्वेन ज्ञातुमशक्यत्वादुपक्रमादिभिस्तन्निर्णयो दूरे निरस्त इत्याक्षिप्तम् । पुनस्तदेवोच्यत इति किमनेन कृतं स्यादित्यतः सूत्रकृतोऽभिसन्धिमाह** अशक्येति ।

अशक्योत्तारणत्वेऽपि ह्यागमापारवारिधेः ।
निर्णीयते मयैवायं रोमकूपलयोदिना ।

**मदन्यैरिति शेषः । हिशब्देन परोपन्यस्तं प्रमाणमभ्युपैति । उत्तारणं पारगमनम् । उपक्रमादिभिर्निर्णयनमिति यावत् । उदमुदकमस्यास्तीत्युदी । भूमविवक्षायामिनिः । समुद्र इत्यर्थः । रोमकूपे लयोदी यस्यासौ तथोक्तः । प्रलयसमुद्रसमानोऽपि वेदो मदीयज्ञानेऽन्तर्भवतीति भावः । एतदेव विवृणोति** यद्यपीति ।

यद्यप्यशेषवेदार्थो दुर्गमोऽखिलमानवैः ।
मज्ज्ञानाव्याकृताकाशे प्राप्नोति परमाणुताम् ।

**अव्याकृताकाशे परमाणुरिव मज्ज्ञानेऽन्तर्भवति । भूताकाशस्य परिमितत्वादव्याकृतग्रहणम् । विवरणाभावे पूर्वश्लोकोक्तं किञ्चिद्व्याहतं किञ्चिच्चासङ्गतं प्रतीयेत ॥ अभिप्रायमुपसंहरति** इतीति ।

इति प्रकाशयन्विश्वपतिराह प्रमेयताम् ।
निखिलस्यापि वेदस्य गतिसामान्यमञ्जसा ।

**उक्तप्रकारेण निखिलस्यापि वेदस्य स्वेनाञ्जसा प्रमेयतां प्रकाशयन्सूचयन्गतिसामान्यमाह न तु निरभिसन्धिर्येनोक्तदोषः स्यात् । विश्वपतिरिति सर्ववेदवित्त्वे प्रमाणम् । न हि पालनीयमविद्वान्पालको भवति । विश्वान्तर्गताश्च सर्वे वेदा इति । एतदुक्तं भवति सूत्रकारेण । सर्ववेदज्ञानासंभवेन सर्ववेदसमन्वयाज्ञानं किं मानवादीनामुच्यते उत सूत्रकर्तुर्मम । आद्येऽपि किं विशेषतोऽथ सामान्यतोऽपि । आद्योऽभ्युपगम्यत एव । द्वितीये तु वक्ष्यामः । न तृतीयः । मम सर्वज्ञत्वेनासिद्ध्यादिप्राप्तेरिति ।**

**शे०** — व्याघातमाशङ्क्य परिहरति **मदन्यैरिति शेष इति ॥ परोपन्यस्तमिति ।** अनन्ता वै वेदा इति श्रुतिरूपमित्यर्थः । नन्वत इनिठनाविस्युदकवाचिनोऽदन्तादुदशब्दान्मत्वर्थे इनिप्रत्यये सति निष्पन्नेनोदिन्शब्देन दण्डीत्यादिनेव मत्वर्थसम्बन्धमात्रप्रतिपादनेनोदकसम्बद्धवस्तुमात्रलाभात्तस्य च समुद्रं विहायान्यस्यापि सम्भवात्कथमनेन समुद्रलाभ इत्यतो नायं दण्डीत्यादिवत्सम्बन्धमात्रार्थकेनिप्रत्ययः किन्तु भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादय(वार्तिक) इत्यस्तिविवक्षायां भूमादिष्वर्थेषु मतुबादिविधानादस्तिविवक्षायां भूम्नि मतुबन्तेन गोमच्छब्देन बहुगोस्वामित्वस्येवास्तिविवक्षायां भूमार्थे इनिप्रत्ययान्तेनोदिन्शब्देन बहूदकसम्बन्धलाभात्तस्य च समुद्रं विहायान्यत्रायोगाद्युक्तोऽनेन समुद्रलाभ इत्याशयेनाह ॥ **भूमविवक्षायामिति ॥ रोमकूपे लयोदी यस्यासाविति ।** यद्यपि समानाधिकरणानामेव बहुव्रीहिरिष्टो न व्यधिकरणानां तथाऽपि पञ्च भुक्तवन्तोऽस्येति क्वचित्सामानाधिकरण्येऽपि तददर्शनात्कण्ठे काल इति क्वचिद्वैयधिकरण्येऽपि क्वचिद्दर्शनादभिधानानभिधानयोरेव समासभावाभावप्रयोजकत्वेन सामानाधिकरण्यवैयधिकरण्ययोस्तदप्रयोजकत्वाद्युक्तो वैयधिकरण्येऽप्यत्र समास इति भावः । असङ्गतिपरिहाराय तात्पर्यमाह **प्रलयेपीति ॥ किञ्चिद्व्याहतमिति ।** आगमापारवारिधेरशक्योत्तरणत्वेऽपीत्युक्तम् । अनिर्णेयत्वं निर्णेयत्वं च परस्परव्याहतम् । अखिलमानवैर्दुर्गम इति विवरणे तु न व्याहतिः । अत एव पूर्वं मदन्यैरिति शेषः पूरितः । वेदाना-

मानन्त्यात्तन्निर्णयोऽनुपपन्न इत्याक्षिप्तेऽन्यैर्निर्णेतुमशक्यत्वेऽपि मयैव निर्णीयत इत्येतावदेवोत्तरं वक्तव्यम्। रोमकूपलयोदित्वकथनं त्वसङ्गतम्। उक्ताक्षेपपरिहारानुपयोगात्। मज्ज्ञानाव्याकृताकाशे प्राप्नोति परमाणुतामित्यनेन प्रलयसमुद्रसमानोऽपि वेदोऽपरिच्छिन्ने मज्ज्ञाने परमाणुरिवाव्याकृताकाशेऽन्तर्भवतीति तद्भावकथनेन विवरणे तु तस्योक्तपरिहारोपपादकतया सङ्गतिरुक्ता भवतीति ध्येयम्॥ **उक्तदोष इति॥ पुनस्तदेवोच्यत इति।** किमनेन कृतं स्यादित्युक्तदोष इत्यर्थः। अशक्येत्यादिभाष्येण कः सूत्रकृतोऽभिसन्धिरुक्तो भवतीत्यतस्तमाह **इदमुक्तं भवति सूत्रकारेणेत्यादिना।** विशेषत इत्यादौ सर्ववेदसमन्वयाज्ञानमिति सम्बन्धः॥ **वक्ष्याम इति** 'अन्योऽप्यल्पमतिः शाखाचतुःपंचगतं वसु'इत्यादिना मानवादीनां सर्ववेदसमन्वयज्ञानमनुमानतो भविष्यतीति वक्ष्याम इत्यर्थः॥ **असिद्ध्यादीति।** सूत्रकारो न सर्ववेदसमन्वयज्ञानवान्सर्ववेदाज्ञत्वादिति विवक्षितानुमाने सर्ववेदज्ञत्वहेतोरसिद्धिः। सर्वज्ञे तस्मिन्सर्ववेदसमन्वयाज्ञानस्य बाधितत्वाद्बाधश्च स्यादित्यर्थः।

स०— **परोपन्यस्तं प्रमाणं** अनन्ता वै वेदा इत्येवंरूपम् **किञ्चिद्व्याहतमिति। अशक्योत्तारणत्वेऽपि** मयैव निर्णीयत इति व्याहतम्। अशक्योत्तरणत्वस्य निर्णयस्य च परस्परविरुद्धत्वादिति भावः। **किञ्चिचासङ्गतमिति।** वेदानामनन्तत्वेनानिर्णये उक्ते रोमकूपलयोदित्वकथनस्यासंगतत्वादिति भावः। **उक्तदोष इति।** वेदानामनन्तत्वेन तत्रोपक्रमादिभिर्निर्णयो दूरनिरस्त इत्युक्तदोषः स्यादित्यर्थः। **द्वितीये तु वक्ष्याम इति।** 'अन्योप्यल्पमतिः शाखाचतुष्पंचगतं वस्वि'त्यादिनेति शेषः। **असिद्ध्यादीति।** सर्ववेदज्ञत्वादिहेतूनामिति शेषः।

प०— **परोपन्यस्तमिति।** पूर्वपक्षिणा पूर्वत्रोपन्यस्तमनुमानरूपप्रमाणमित्यर्थः। उदकवत्त्वमात्रेण समुद्रार्थत्वालाभादाह **भूमविवक्षायामिति।** भूमनिन्दाप्रशंसासु भवन्ति मतुबादय इति वचनात्। बाहुल्यार्थे अत इनिठनाविति इतिप्रत्यय इत्यर्थः। लयोदः लयसमुद्रः॥ **किञ्चिद्व्याहतमिति।** अशक्योत्तारणत्वेऽपीति निर्णीयत इति अशक्यत्वनिर्णेयत्वयोर्वचनं व्याहतम्। रोमकूपलयोदिनेतिवचनमसङ्गतं वेदानामानन्त्येनाशक्यनिर्णयत्वमिति कृतचोद्यानिरासकत्वात्। पूर्वोत्तरार्धाभ्यां तदभिप्रायवर्णने तु मानवैरिति व्याहतेः मज्ज्ञानेत्यादिना चासंगतेर्निरासः कृतो भवतीत्येतत् उक्तमित्यादिनाऽग्रे विवरिष्यत इति भावः॥ **उक्तदोष इति।** एतदेव वेदानामित्यादिना किमनेन कृतं स्यादित्यन्तेन प्रागुक्तदोष इत्यर्थः॥ **वक्ष्याम इति।** अन्योऽप्यल्पमतिः शाखाचतुष्पंचगतमित्यादाविति भावः॥ **असिध्यादिप्राप्तेरिति।** विमताः पुरुषा इति प्रागुक्तानुमानत्रये सूत्रकारपक्षीकाराभिप्राये हेतूनां स्वरूपासिद्धिः बाधश्च प्राप्नोतीत्यर्थः।

**या०** — ननु बहुव्रीहिबलादेवोक्तलाभे इनुप्रत्ययो व्यर्थः । यथाऽऽहुः । न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादय इति । तत्राह **भूमविवक्षायामिति** । बाहुल्यविवक्षायामित्यर्थः । 'भूमनिन्दाप्रशंसासु भवन्ति मतुबादय' इति वचनादिति भावः ॥ **किञ्चिन्न हतमित्यादि** । आगमापारवारिधेरशक्योच्चारणत्वेऽपीत्यनेनोक्तमनिर्णेयत्वं निर्णीयत इत्यनेनोक्तं निर्णेयत्वं च परस्परव्याहतम् । अखिलमानवैर्दुर्गम इति विवरणे तु न व्याहतिः । अत एव पूर्वं मदन्यैरिति शेषः पूरित इत्यवधेयम् । वेदानामानन्त्यात्तन्निर्णयोऽनुपपन्न इत्याक्षिप्तेऽन्यैर्निर्णेतुमशक्यत्वेऽपि मयैव निर्णीयते वेद इत्येतावदेवोत्तरं वक्तव्यम् । रोमकूपलयोद्भवत्वकथनं तु न सङ्गतम् । उक्ताक्षेपपरिहारानुपयोगात् । मज्ज्ञानाव्याकृताकाशे प्राप्नोति परमाणुतामित्यनेन प्रलयसमुद्रममानोऽपि वेदोऽपरिच्छिन्ने मज्ज्ञाने परमाणुरिवान्तर्भवतीति तद्भावप्रदर्शनेन विवरणे तु तस्योक्तपरिहारोपपादकतया सङ्गतिरुक्ता भवतीति ध्येयम् ॥ **उक्तदोष इति** । पुनस्तदेवोच्यत इति किमनेन कृतं स्यादित्युक्तदोष इत्यर्थः ॥ **विशेषत इत्यादि** । समन्वयाज्ञानमिति वर्तते । **वक्ष्याम इति** । 'अन्योऽप्यल्पमतिः शाखाचतुःपञ्चगतं वस्त्वि'त्यादिना मानवादीनां सामान्यतः सर्ववेदसमन्वयज्ञानमनुमानतो भवतीति वक्ष्याम इत्यर्थः ॥ **असिद्ध्यादीति** । सूत्रकारो न सर्ववेदसमन्वयज्ञानवान्सर्ववेदाज्ञत्वादिति विवक्षितानुमानेऽसिद्धिबाधयोः प्राप्तेरित्यर्थः ॥

**श्री०** - **न तृतीय इति** । आद्यपक्षस्य द्वेधा विकल्पितत्वात्तृतीयत्वमस्येति ज्ञातव्यम् ।

---

**सु०** — **एवं चेद्यदि कश्चिदन्यः सूत्रकारवद्विषयान्तरे गतिसामान्यं ब्रूयात्तदा पुनरनिर्णय एवेत्यत आह** को नामेति ।

**अनु०** — को नाम गतिसामान्यमनन्तागमसंपदः ।
ज्ञानसूर्यमृते ब्रूयात्तमेकं बादरायणम् ।

**ज्ञानेन सूर्य इव ज्ञानसूर्यः । यथा सूर्यः स्वतेजसा विश्वस्य प्रकाशकस्तथाऽयं ज्ञानेनेति । 'विना वातमि'त्यादिप्रयोगदर्शनाद्विनायोग इव ऋतेऽपि द्वितीया भवत्येव । इदमुक्तं भवति । किं सर्वज्ञो विपरीतं गतिसामान्यं ब्रूयात् । उतापरः । नाद्यः । सर्वज्ञोक्त्योर्विरोधायोगात् । योगे वा द्वयोः सार्वज्ञ्यानुपपत्तेः । द्वितीये संप्रतिपन्नसर्वज्ञसूत्रकारवचनविरोधान्मिथ्यादृष्टिर्वा प्रतारको वाऽसौ स्यादिति कथमनिर्णय इति ।**

**शे०** — भगवतः सूर्यत्वस्य बाधितत्वादाह **ज्ञानेनेति** ॥ **ज्ञानेन सूर्य इवेति** । (ज्ञानेनेति प्रकृत्यादिभ्यस्तृतीया । तृतीया तत्कृतार्थेगुणवचनेनेति सूत्रेण तृतीयेति योगविभागाद्वा कर्तृकरणे कृता बहुलमिति बहुलवचनाद्वा तृतीयासमासोऽयम् । अत एव 'शशिकरपल्लवितः पिकध्वनिमुखरित' इत्यादौ

योगविभागाद्याश्रयणेनैव तृतीयासमासस्तत्सूत्रव्याख्यातृभिः समर्थितः । इवशब्दस्तु सादृश्यहेतुकमभेदोपचारं दर्शयितुं न तु क्रियावाक्यगं तत्तु ज्ञानेन सर्षप इत्येवेति ध्येयम्) । इत्यर्थमेव व्यनक्ति यथेति । ननु 'अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते'इति पञ्चमीविधानादृते देवदत्तादित्यादिवज्ज्ञानसूर्यादृत इति पञ्चम्या भवितव्यम् । ज्ञानसूर्यमिति द्वितीया तु कथमित्यतो 'विना वातं विना वर्षं विद्युत्प्रपतनं विना । विना हस्तिकृतान्दोषान् केनेमौ पातितौ द्रुमावि'ति विनाशब्दप्रयोगे द्वितीयाविधिस्तावत्परस्यापि सम्मतः । अत एवोक्त वृत्तौ पृथग्विनानानाभिरिति योगविभागः कार्यो द्वितीयार्थ इति । उक्तं च हरदत्तेनाप्यत्रासत्यपि मुनित्रयवचने प्रयोगबाहुल्यादेवं व्याख्यातमिति । तथा ऋतेयोगेऽपि द्वितीयाविधिरवश्यमभ्युपगमनीयः । तन्निमित्तस्य ऋतेऽपि त्वां न भविष्यन्तीति ऋतेयोगे द्वितीयाप्रयोगस्यापि सद्भावादित्याशयेनाह **विना वातमित्यादीति** । तावताऽपि कथमनिर्णयशङ्कायाः परिहार इत्यत आह **इदमुक्तं भवतीति** ।

**स०**— नन्वन्यारादितरर्ते इति सूत्रे ऋतेयोगे पञ्चमीविधानात् ज्ञानसूर्यादृत इति भवितव्यम् । द्वितीया कथमित्यत आह **विनावातमिति** । यथा पृथग्विनानानाभिरितिसूत्रे विनायोगे द्वितीयाप्रयोगात् योगविभागः क्रियते तथा ऋतेपि त्वां न भविष्यन्तीत्यादिप्रयोगसाम्यात् ऋतेशब्दस्यापि तत्रोपसंख्यानं कार्यमिति तद्योगेपि द्वितीयोपपत्तिरिति भावः । अत एवोक्तं काशिकायाम् । 'पृथग्विना नानाभिरिति योगविभागः कर्तव्यो द्वितीयार्थः । 'विनावातं विनावर्षं विद्युत्प्रपतनं विना । विनाहस्तिकृतं दोषं केनेमौ पातितौ द्रुमौ' इति ।

**प०**— ननु ज्ञानसूर्यमृत इति कथम् । द्वितीयस्य तृतीयपादे अन्यारादितरर्तेदिक्शब्दांचूत्तरपदाजाहियुक्त इति सत्रे ऋते शब्दयोगे पंचमीविधानेन ज्ञानसूर्यादृत इति भाव्यम् । एवं बादरायणादपीत्यत आह **विनावातमित्यादीति** । वृत्त्यादौ हि अन्यारादितरर्तेतिसूत्रादुपरितने तृतीये पृथग्विनानानाभिस्तृतीयाऽन्यतरस्यामिति सूत्रे पृथगादिशब्दयोगे वैकल्पिक्यौ तृतीयापंचम्यौ भवत इत्युक्त्वा पृथग्विनानानाभिरिति योगविभागः कर्तव्यः । पृथगादिशब्दयोगे द्वितीया विभक्तिर्भवति इत्येतदर्थमुक्त्वा 'विनावातं विनावर्षं विद्युत्प्रपतनं विना । विना हस्तिकृतं दोषं केनेमौ पातितौ द्रुमौ' इति प्रयोगश्च दर्शितः । तथा च प्रयोगानुरोधाद्योगविभागेन द्वितीया निर्वाह इव महाकविप्रयोगात् ऋतेशब्दयोगेपि द्वितीया ध्येया । ऋतेशब्दस्यापि पृथग्विनान्तरेणर्ते इति विनाशब्दपर्यायत्वादिति भावः ।

**या०**— ननु ज्ञानसूर्यमिति कथं द्वितीया । अन्यारादितरर्त इति ऋते योगे पञ्चम्या विहितत्वादित्यत आह **विना वातमित्यादीति** । 'विना वातं विना वर्षं विद्युत्प्रपतनं विना । विना हस्ति-

कृतं दोषं केनेमौ पतितौ द्रुमावि'त्यत्र प्रयोगानुरोधेन पृथग्विनानानाभिरिति योगविभागः कर्तव्यः द्वितीयार्थः इति काशिकायामुक्तत्वेन विनायोगे तावद् द्वितीयाविधिरवगम्यते। एवं तत्पर्यायऋतेयोगेऽपि द्वितीया वक्तव्या। 'ऋतेऽपि त्वां न भविष्यन्ति सर्वे' इत्याद्यभियुक्तप्रयोगेषु ऋतेयोगेऽपि द्वितीयाया दृष्टत्वेन न्यायसाम्यादिति भावः ॥

**श्री०** — **विषयान्तरे** रुद्रादावित्यर्थः ॥ **योगे वेति**। विरोधस्येति शेषः ॥ **अनुपपत्ते-रिति**। एकेन ज्ञातस्यान्येनाज्ञातत्वप्राप्तेरित्यर्थः।

**च०** — नन्वन्यारादित्यनुशासनादृतेशब्दयोगे पंचम्या भवितव्यं कथं द्वितीया विन्यस्तेत्यतः "विना वर्षं विनावातं विद्युत्प्रपतनं विना। विना हस्तिकृतान् दोषान् केनेमौ पतितौ द्रुमावि'तिप्रयोगाणां पाणिनीयसंप्रतिपद्यमानतया काशिकायां पृथग्विनानानाभिरिति योगविभागः कार्यो द्वितीयार्थ इति वामनोक्तेः पदमञ्जर्यां हरदत्तेनासत्यपि मुनित्रयवचने प्रयोगवचने प्रयोगवचनबाहुल्यादित्थमेव व्याख्यात-मित्याशयप्रकाशनाच्च यथा सामञ्जस्यं तद्वत्प्रकृतेपि ऋतेविनापदयोः पर्यायतया 'ऋतेपि त्वां न भविष्यन्ति सर्वे' इति ऋतेशब्दसमभिव्याहारे द्वितीयाप्रयोगदर्शनेन सामञ्जस्यं सुसंपादमित्याह **विना वातमिति**।

**सु०** — **अस्तु भगवतः सर्वज्ञत्वेन गतिसामान्यज्ञानं, परस्य तु कथं यदर्थमिदं शास्त्र-मित्यतः सूत्रस्यार्थान्तरमाह** अन्योऽपीति।

**अनु०** — अन्योऽप्यल्पमतिः शाखाचतुष्पञ्चगतं वसु ॥
जानन्ननुमितत्वेन ब्रूयात्तस्य प्रसादतः ॥

**अल्पमतिरप्यन्यस्तस्य प्रसादतः शाखाचतुष्पञ्चगतं वसु जानन्ननुमितत्वेनानन्तागमसंपदो गतिसामान्यं ब्रूयादिति योजना। यासां शाखानामुदाहरणेन सूत्रकृता परमेश्वरसमन्वयोऽभि-हितस्तद्दृष्टान्तीकृत्य शाखात्वाद्विप्रतिपन्नशाखानामपि तत्परत्वानुमानसंभवादन्येषामपि गति-सामान्यज्ञानं युक्तमिति भावः। अनेन गतिसामान्यानुमानादिति सूत्रं व्याख्यातमिति। ननु चतुष्पञ्चशाखागतमिति वक्तव्यम्। तद्धितार्थोत्तरपदसमाहारे चेति संख्याया उपसर्जनत्वात्। कडाराः कर्मधारय इत्युपसर्जनस्य परनिपातो भविष्यति। वर्गार्थौ वा चतुष्पञ्चशब्दौ। प्रपञ्चो यदि विद्येतेति यथा।**

**शे०** — तद्दृष्टान्तीकृत्येति मूलपाठः। क्वचिद्दृष्टान्तीकृत्येति पाठः। तत्र भगवत्परत्वे निर्णीतशाखारूपवाक्यार्थस्य सामान्येन तदिति परामर्श इति द्रष्टव्यम्। चतस्रः पञ्च वा समाहृताः

शाखा इति विग्रहमभिप्रेत्य शङ्कते **नन्विति** ॥ **उपसर्जनत्वादिति** । इति समासशास्त्रे दिक्संख्ये इति संख्यायाः प्रथमानिर्दिष्टत्वात्प्रथमानिर्दिष्टं समास उपसर्जनमित्युपसर्जनत्वादित्यर्थः । ततश्चोपसर्जनं पूर्वमिति संख्याया एव पूर्वनिपातः स्यादिति भावः । परिहरति **कडारा इति** । तथा च चतुः पञ्च च ताः शाखाश्चेति विशेषणं विशेष्येण बहुलमिति विशेषणसमास एवायमिति भावः ॥ **वर्गार्थाविति** । चतुर्णां पञ्चानां वर्गः चतुष्पञ्चः शाखानां चतुष्पञ्चः शाखाचतुष्पञ्चः तस्मिन्गतमिति विग्रहः । न तु पञ्चद्दशतौ वर्गे वेति वैकल्पिककनोविधानाच्चतुःपञ्चदिति वा चतुःपञ्चक इति वा भवितव्यम् । चतुःपंच इति तु कथमिति चेन्न । वाशब्देन कन्प्रत्ययस्येव डप्रत्ययस्यापि ग्रहीतुं शक्यत्वेन डप्रत्ययान्तत्वा-त्तथोपपत्तेरिति भावात् । पंचशब्दस्य वर्गार्थत्वं दृष्टं चास्तीत्याह **प्रपञ्चो यदीति** । प्रपंचशब्दान्तर्गतः पंचशब्दो वर्गार्थो यथेत्यर्थः । इदं च पंचानां वर्गः पंचः पंचद्दशतौ वर्गे वेति वाशब्देन पंचशब्दस्य निपातनाङ्गीकारादिति प्राचीनं स्वकृतं तद्व्युत्पादनं मनसि निधाय दृष्टान्तीकरणमिति ध्येयम् ।

**स० — नन्विति** । चतस्रः पञ्च शाखाः चतुष्पंचशाखा इति विग्रहः । **उपसर्जनत्वा-दिति** । तथात्वे उपसर्जनं पूर्वम् इति संख्यापदस्य पूर्वनिपातः स्यादिति भावः । **कडारा इति** । तथाच चतस्रः पञ्च वा शाखाः, चतुः पञ्च वा शाखाश्चेति विशेषणं विशेष्येण बहुलमिति कर्मधारय एवेति भावः । **वर्गार्थाविति** । चतुर्णां पञ्चानां वा वर्गः चतुःपञ्चः । शाखानां चतुःपञ्चः शाखाचतुःपञ्चः । तस्मिन् गतमिति विग्रहः । न च पञ्चद्दशतौ वर्गे वेति वैकल्पिककनो विधानात् चतुष्पञ्चदिति वा चतुष्पञ्चक इति वा भवितव्यम् । चतुष्पञ्च इति तु कथमिति वाच्यम् । वाशब्देन कन्वत् ड्स्यापि गृहीतुं शक्यत्वेन तथोपपत्तेरिति भावः ।

**प० — चतुष्पञ्चगतं वस्विति** । वसुपदेन पदार्थ उच्यते **तद्धितार्थेति** । द्वितीयाद्य-पादे सूत्रं दिक्संख्ये संज्ञायामिति पूर्वसूत्रात् दिक्संख्ये इत्यनुवर्तते । पूर्वकालैकेत्यतः समानाधिकरणे-नेति । तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये संख्यावाचिशब्दौ समाना-धिकरणेन सुबन्तेन समस्येते तत्पुरुषश्च समास इति तस्यार्थः । प्रत्येकं निमित्तत्रयम् । तथाच पञ्चगवधन इत्यत्रैव उत्तरपदे परतः संख्यावाचिनः समासोयमिति वाच्यम् । एवंच संख्यावाचिनश्चतुरादिशब्दस्य सूत्रे प्रथमान्ततया निर्देशात् प्रथमानिदिष्टं समास उपसर्जनमिति उपसर्जनसंज्ञिकत्वात् उपसर्जनं पूर्वमिति पूर्वनिपाते चतुष्पञ्चशाखागतमिति भाव्यमित्यर्थः । समाधिमाह **कडारा इति** । द्वितीयस्य द्वितीयपादे कडाराः कर्मधारय इत्यन्तिमसूत्रम् । बहुवचनमाद्यर्थे । कडारादयः शब्दाः विकल्पेन पूर्वं निपात्यन्ते कर्मधारय इति । तथाचेह तत्पुरुषविषयत्वेपि कर्मधारयस्य तत्पुरुषप्रभेदात् । जैमिनिकडारः कडार-जैमिनिरितिवत् विशेषणस्यापि चतुरादिशब्दस्य परनिपात इति भावः ॥ **वर्गार्थौ वेति** । तथाच

शाखानां चतुष्पञ्चः शाखाचतुष्पञ्च इति षष्ठीतत्पुरुषाश्रयणेन शाखपदस्योपसर्जनत्वान्न पूर्वोक्तदोष इति भावः ॥ इति यथेति । विवृतमेतदानुमानिकपादे ।

या० — **तद्धितार्थोत्तरेति** । तद्धितार्थे विषयभूते उत्तरपदे परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन सुपा सह समस्येते इति सूत्रार्थः । उदाहरणं तु तद्धितार्थे पौर्वशालः पञ्चकपालः । उत्तरपदे पूर्वशालाप्रियः पञ्चगवधनः । समाहारे पञ्चफलानीत्यादि ॥ **संख्याया उपसर्जनत्वादिति** । अत्र दिक्संख्ये इत्यनुवर्तत इति काशिकायामुक्तत्वेन संख्यायाः प्रथमानिर्दिष्टत्वे प्रथमानिर्दिष्टं समास उपसर्जनमित्यनेनोपसर्जनत्वादित्यर्थः । उपसर्जनत्वे उपसर्जनं पूर्वमिति सङ्ख्या प्राक् प्रयोज्येति भावः । उत्तरमाह **कडारा इति** । कडारादयः शब्दाः कर्मधारये समासे वा पूर्वं प्रयोक्तव्या इति सूत्रार्थः । जैमिनिकडारः कडारजैमिनिरित्यादिकमुदाहरणम् । अत्र यद्यपि विशेषणस्यैव 'विशेषणं विशेष्येण बहुलमि'ति । प्रथमानिर्दिष्टत्वेनोपसर्जनतया प्रथमप्रयोगे प्राप्ते विकल्प उक्तो, न तु संख्यायास्तथाऽप्युक्तरीत्योपसर्जनीभूतसंख्याया विशेषणत्वमप्यस्तीत्यभिप्रेत्येदमुक्तमिति ज्ञातव्यम् । अत एवास्य द्विगुसमासतया कर्मधारयत्वाभावात्कथमेतत्सूत्रोदाहरणमिति शङ्काऽनवकाशः । द्विगोरपि समानाधिकरणतत्पुरुषत्वेन कर्मधारयत्वात्। तत्पुरुषः समानाधिकरणः कर्मधारय इति वचनात् । इयांस्तु विशेषः । यत्र संख्यान्यद्विशेषणं नीलोत्पलमित्यादौ, स कर्मधारय इत्युच्यते । यत्र संख्यैव विशेषणीभूता स द्विगुरिति । तथा च द्विगोरपि कर्मधारयविशेषत्वादुक्तसूत्रोदाहरणं सङ्गतमेवेति ॥ **वर्गार्थौ वेति** । तथा च चतुष्पञ्चशब्दयोः संख्यार्थत्वाभावेन नोक्तरीत्या पूर्वनिपातप्राप्तिर्वर्गार्थतायां षष्ठीसमासस्यैव विवक्षितत्वेन षष्ठ्यन्तस्य शाखाशब्दस्यैवोपसर्जनतया प्रथमप्रयोगोपपत्तिश्चेति भावः । वर्गार्थत्वे प्रागुक्तं नियामकं स्मारयितुमाह **प्रपञ्चो यदीति** । यथा प्रपञ्चो यदि विद्येतेत्यत्र पञ्चद्दशतौ वर्गे वेति वाशब्दस्यानुक्तसमुच्चायकस्य सत्त्वात्पञ्चन्शब्दो वर्गार्थतया व्याख्यातस्तथाऽत्रापि पञ्चशब्दो वर्गार्थोऽङ्गीकार्यः । तथा चतुःशब्दोऽप्यनुक्तसमुच्चायकवाशब्दबलादेवेति भावः ॥

श्री० — **वर्गार्थौ वेति** । वर्गः समुदायः । तथा च शाखाचतुष्पञ्चगतमित्यस्य शाखासमुदायगतमित्यर्थो द्रष्टव्यः ।

च० — **तद्धितार्थेति** । चतस्रः (प्र)पञ्च समाहृताः शाखा इति समासार्थकथनपरवाक्यस्याभिप्रेततया तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्यावाचिनौ शब्दौ समानाधिकरणेन समस्येते तत्पुरुषश्च च समास इति तत्सूत्रार्थस्थित्या समासविधायके दिक्संख्ये इति शास्त्रे संख्यायाः प्रथमान्तपदनिर्दिष्टतया प्रमानिर्दिष्टं समास उपसर्जनमिति योगव्युत्पादितोपसर्जनसंज्ञकतया पञ्चगवधन इत्यत्र वोपसर्जनं पूर्वमिति पूर्वनिपातप्रसङ्गेन चतुष्पञ्चशाखागतमितिन्यासेन भवितव्य-

मित्याशयः। समाधत्ते **कडारा इति**। कडारादिशब्दानां कर्मधारये वैकल्पिकपूर्वनिपातविधानात्कर्मधारयस्यापि 'तत्पुरुषः समानाधिकरणः कर्मधारयः' इति तत्पुरुषप्रभेदतया समाहारस्याविवक्षिततया जैमिनिकडार इत्यादिवद्विशेषणस्य वैकल्पिकपरनिपातोपपत्तिरिति भावः। **वर्गार्थौ वेति**। **चतुर्णां पञ्चानां** वर्गश्चतुष्पञ्चं, शाखानां चतुष्पञ्चं शाखाचतुष्पञ्चं, तस्मिन् गतमित्येव वृत्त्यर्थबोधकवाक्यं विवक्षितमिति भावः। अत्र व्याकर्तारः। पञ्चद्दशौ वर्गे वेति वैकल्पिककनो विधानात् चतुःपञ्चदिति वा चतुःपञ्चक इति वा न्यासेन भवितव्यतया कथमयं न्यासः सङ्गच्छत इत्याशङ्कमानास्तत्सूत्रघटकवाशब्देन डप्रत्ययस्यापि सुग्रहतया डप्रत्ययान्ततादृग्निर्देशोपपत्तेरिति समादधुः। उक्तार्थे प्राचीनात्मीयव्याख्यां स्मारयति **प्रपञ्च इति**।

**सु०— इदमेवास्तु सूत्रव्याख्यानं श्रोतृप्रत्यायनाङ्गत्वात्। न पूर्वम्। शङ्कानिरासाहेतुत्वात्। न हि सूत्रकारः सर्वज्ञत्वात् सर्ववेदगतगतिसामान्यं वेत्तीत्येतावताऽन्येषां शङ्का निवर्तत इत्यत आह इति मुख्यतयेति।**

**अनु०—** इति मुख्यतयाऽशेषगतिसामान्यवित्प्रभुः॥
प्रतिजज्ञे दृढं यस्माद्देवानामपि पूर्यते॥

**इति प्रतिजज्ञ इति संबन्धः। मुख्यतयेत्यनुमानादिना विनाऽशेषवेदगतिसामान्यवित्। देवानामित्युत्तमाधिकारिणाम्। अपिः पदार्थे। शङ्केत्यर्थः। मधुनोऽपि स्यादिति यथा। पूर्यते निवार्यते। ये सूत्रकारस्य परमाप्तत्वं जानन्त्युत्तमाधिकारिणस्तेषां तदीयप्रतिज्ञामात्रेण शङ्का निवर्तत एवेति तान्प्रति पूर्वव्याख्यानम्। अन्यान्प्रति तु द्वितीयम्। तथा भाष्योक्तगतिसामान्यश्रुतेरिति तृतीयं चेति भावः।**

**शे०—** न केवलमन्येषां किन्तु देवानामपीत्यपिशब्दस्य समुच्चयार्थत्वभ्रान्तिं निवारयति **अपिः पदार्थ इति**। अप्रयुज्यमानस्य पदान्तरस्यार्थ इत्यर्थः। अपिः पदार्थसंभावनेत्यादिस्मरणादिति भावः। तमेव दर्शयति **शङ्केत्यर्थ इति**। नन्वेवं कर्मप्रवचनीयापिशब्दयोगाद्देवानिति द्वितीयया भवितव्यम्। कर्मप्रवचनीययुक्ते द्वितीयेति स्मरणात्। तत्कथं देवानामिति षष्ठीत्यतस्तथा सति मधुनोऽपि स्यादित्यादावपिपदार्थे कर्मप्रवचनीयापिशब्दयोगान्मधुशब्दे द्वितीयाप्रसक्त्या मधुन इत्यादिषष्ठ्यनुपपत्तिप्रसङ्गात्। यदि च तत्र मधुनोऽपि या मात्रा सैवापिशब्देन प्रयुक्ता न मध्वित्यपिशब्देन मधुनो योगाभावान्न तत्र द्वितीयाप्रसङ्ग इति मन्यसे तर्हीहापि देवानां या शङ्का तस्या एवापिशब्देन युक्तत्वेन देवानां तद्योगाभावान्न देवशब्देऽपि द्वितीयाप्रसङ्ग इति समम्। यदि चैवमपि कर्मप्रवचनीयापिशब्द-

योगाच्छङ्काशब्दे द्वितीयाप्रसङ्ग इति मन्यसे हन्त तर्हि मधुनोऽपीत्यादावपि मात्राशब्दात्तत एव द्वितीया स्यादिति समम्। यदि च मात्राशब्दप्रयोगाभावान्न तस्माद्द्वितीया। यदा तु प्रयुज्यते तदा कर्मप्रवचनीयसंज्ञैव नास्ति। अप्रयुज्यमानस्य पदान्तरस्यार्थ एव तस्य कर्मप्रवचनीयसंज्ञाविधानादिति मन्यसे हन्त तर्हीहापि शङ्काशब्दस्याप्रयोगान्न तस्माद्द्वितीया प्रसज्यते। यदा तु प्रयुज्यते शङ्काशब्दस्तदा तस्य कर्मप्रवचनीयसंज्ञैव नास्ति। अप्रयुज्यमानस्य पदान्तरस्यार्थ एव तद्विधानादिति शङ्काशब्देऽपि द्वितीयाप्रसङ्ग इत्यभिप्रेत्यापिशब्दस्याप्रयुज्यमानपदार्थार्थत्वमनुरूपदृष्टान्तकथनेनोपपादयति **मधुनोऽपीति**। ( अत्राप्रयुज्यमानस्य बिन्दुपदस्यार्थे यथाऽपिशब्दात्तेन बिन्दुः स्यादित्यर्थो लभ्यते तथाऽत्राप्यप्रयुज्यमानस्य शङ्कापदस्यार्थे शङ्कारूपेऽपिशब्दः तेन देवानां शङ्का पूर्यत इत्यर्थो लभ्यत इत्यर्थः )।

स०— **अपिः पदार्थ इति**। प्रकृतपदानुक्तपदार्थे अपिशब्दो वर्तते। अप्रयुज्यमानपदान्तरस्यार्थे अपिः कर्मप्रवचनीयो भवतीत्यर्थः। तमेवाह **शङ्केत्यर्थ इति**। तादृशमेवार्थं दृष्टान्तेनाह **मधुनोपीति**। अत्रापिशब्दो बिंद्वर्थः। मधुनो बिन्दुः स्यादित्यर्थः। अत्र कर्मप्रवचनीयापिशब्दस्य प्रार्थनार्थकलिङा स्यादितीति संबन्धः, न तु मधुशब्देन। तथात्वे द्वितीया स्यात्। प्रकृतेपीति द्रष्टव्यम्। **अन्यान्प्रति द्वितीयमिति**। गतिसामान्यानुमानादिति द्वितीयमित्यर्थः। **उक्तम्** प्रायेणान्यत्रप्रसिद्धानामित्यादिना भाष्य इति शेषः। अन्यत्रैव प्रसिद्धानामित्युभयरूपाणामिति योज्यम्।

प०— शङ्कते **इदमेवेति**। अन्योपीत्यादिनोक्तमित्यर्थः॥ **पूर्वमिति**। यद्यपीत्यादिनोक्तमित्यर्थः। इतिपदस्यान्वयमाह **इति प्रतिज्ञा इति संबन्ध इति**। मयैव निर्णीयत इत्यादिनोक्तार्थस्य परामर्श इति भावः॥ **अनुमानादिनेति**। सर्वे वेदा युक्त्य इत्यादिश्रुतिरादिपदार्थः। पूर्यत इत्यत्र कर्माकाङ्क्षायामाह **अपिः पदार्थ इति**। अप्रयुज्यमानस्य पदस्यार्थे वाचकोऽत्रापिशब्द इत्यर्थः। स च क इत्यत आह **शङ्केत्यर्थ इति**। प्रथमाध्यायान्त्यपादे सूत्रं अपिःपदार्थसंभावनान्ववसर्गगर्हासमुच्चयेष्विति। पदार्थे संभावने अन्ववसर्गे गर्हायां समुच्चये च वर्तमानः अपिशब्दः कर्मप्रवचनीयसंज्ञो भवतीति तस्यार्थमुक्त्वा वृत्तौ पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः सर्पिषोपि स्यात् मधुनोपि स्यादित्युदाहृत्य मात्राबिंदुस्तोकमित्यस्यार्थेऽपिशब्दो वर्तत इत्युक्तम्। तदाह **मधुनोपि स्यादिति यथेति**। मधुनो मात्रादिस्तत्र यथाऽर्थः तथात्रापि देवानामपीत्यस्य शङ्केत्यर्थ इति भावः॥ **पूर्वव्याख्यानमिति**। गतिसामान्यमाहेति व्याख्यानमित्यर्थः॥ **द्वितीयमिति**। गतिसामान्यानुमानादित्येतदित्यर्थः।

**या०— अपिः पदार्थ इति** । पदान्तरस्याप्रयुज्यमानस्यार्थ इत्यर्थः । अपिः पदार्थसंभावनेत्यादिस्मरणात् । तमेवाह **शङ्केति** । अत्र काशिकोदाहृतमुदाहरणं दृष्टान्ततया दर्शयति **मधुनोऽपीति** । अत्राप्रयुज्यमानस्य बिन्दुपदस्यार्थे यथाऽपिशब्दस्तेन मधुनो बिन्दुः स्यादित्यर्थो लभ्यते । तथाऽत्राप्यप्रयुज्यमानस्य शङ्कापदस्यार्थे शङ्कारूपेऽपिशब्दः तेन च देवानां शङ्का पूर्यत इत्यर्थो लभ्यत इत्यर्थः ।

**श्री०— भाष्योक्तमिति** । सर्वे वेदा युक्तयः सुप्रमाणा इति भाष्योक्तमित्यर्थः ॥ **उत्सर्गस्येति** । प्रधानं प्रथमं वक्तव्यमित्युत्सर्गस्येत्यर्थः ।

**च०—** न केवलमन्येषामपि तु **देवानामपीति** समुच्चयार्थकताविपर्यासमपाकुर्वन् पूर्यत इति कर्मलकारोपस्थाप्यनिरूपितविशेष्यतापन्नं दर्शयति **अपिः पदार्थ इति** । अप्रयुज्यमानपदान्तरार्थस्य वाचकोऽत्रापिशब्द इत्यर्थः । यथा मधुनोपि स्यादित्यादावप्रयुज्यमानबिन्दुपदस्यार्थोपस्थापकोऽपिशब्दः मधुबिन्दुरित्यर्थस्तद्वत्प्रकृतेपि देवानामपीत्यत्राप्रयुज्यमानशङ्कापदार्थप्रत्यायकोऽपिशब्द इति । देवसंबन्धिनी शङ्केत्यर्थ इति भावः ।

**सु०—** नन्वनया **पञ्चाधिकरण्या वक्तव्यस्योक्तत्वात्किमध्यायशेषेणेत्यतः प्रपञ्च्यप्रपञ्चनरूपां सङ्गतिं दर्शयन्नाह** अत इति ।

**अनु०—** अतो निखिलवेदानां सिद्ध एव समन्वयः ॥
इति सुज्ञापितार्थोऽपि पृथक् चाह समन्वयम् ॥

**अतीतप्रबन्धेनेत्यर्थः** । पृथग् **विस्तरेणाध्यायशेषेणेति** शेषः ।

**शे०—** प्रपञ्च्यप्रपञ्चकभावस्य मूलारूढत्वसिद्ध्यर्थं पृथक्पदं तत्परतयाऽनूद्य व्याचष्टे **पृथग्विस्तरेणेति** । मूलेऽध्यायशेषस्य प्रपञ्चकताया अनुक्तेस्तल्लाभायापेक्षितशेषमाह **अध्यायेति** ।

**च०— पञ्चाधिकरण्येति** । द्विगोरिति ङीप् । **अध्यायशेषेणेति** । समन्वयेक्षत्योरप्यध्यायान्तर्भावः शेषपदोपादानेन ध्वन्यते । **अन्यत्रप्रसिद्धानां नामात्मकानां** कोशादिव्युत्पादितान्यत्रिकप्रसिद्धिमद्रूढानाम् । **अन्यत्राप्रसिद्धानां लिङ्गात्मकानां** प्रत्यापितान्यत्रिकप्रसिद्धिविशेषितयौगिकानाम् । **उभयरूपाणाम्** श्रुत्यन्तरादिव्युत्पादितविष्णुतदितरोभयप्रसिद्धिमताम् । **अन्यत्रैव प्रसिद्धानाम्** बलवच्छ्रुतिलिङ्गादिप्रमापितसावधारणान्यत्रिकप्रसिद्धिमताम् । **क्रममुपपादयन्निति** । चन्द्रिकादिशा महामल्लभङ्गन्यायेनातिप्रयत्नसाध्यस्य प्राथम्ये अन्यत्रैवप्रसिद्धनामलिङ्गानामेवादौ समन्वयो भवेदित्यतोऽन्यत्रप्रसिद्धानां पूर्वसमन्वयस्तत्रापि नाम्नां पूर्वमनन्तरं लिङ्गानां तदनन्तरमुभयत्रप्रसिद्धानां ततोऽन्यत्रैवप्रसिद्धशब्दानामिति क्रमस्य सर्वथाप्ययोगादिति दुरुपपादत्वस्य शङ्कितत्तया तमुपपादयन्नित्यर्थः ।

**सु० — तत्र प्रथमपादे अन्यत्र प्रसिद्धानां शब्दानां समन्वयोऽभिधीयते। द्वितीयेऽन्यत्र प्रसिद्धानां लिङ्गात्मकानाम्। तृतीये तत्रान्यत्र प्रसिद्धानामुभयरूपाणाम्। चतुर्थेऽन्यत्रैव प्रसिद्धानामित्युक्तम्। तमेतं क्रममुपपादयन्नाह** तत्रेति।

**अनु० —** तत्र प्रथमतोऽन्यत्र प्रसिद्धानां समन्वयः ॥

शब्दानां वाच्य एवात्र महामल्लेशभङ्गवत्।

तत्र **प्रथमाध्याये,** प्रथमतः **प्रथमपादे,** शब्दानां नामात्मकानाम्, अत्र **विष्णौ। महामल्लेशभङ्गेन तुल्यं वर्तत इति तथा। यथाऽनेकेषु मल्लेषु प्रत्यर्थितयाऽवस्थितेष्वपि भगवता कृष्णेन प्रधानत्वाच्चाणूरादिमल्लानामेवादौ भङ्गो विहितस्तथेत्यर्थः। उभयत्र प्रसिद्धानां हि शब्दानां समन्वयेऽन्यत्रप्रसिद्धिनिवारणमात्रे यत्नो विधेयः। अन्यत्र प्रसिद्धानां तु भगवति प्रसिद्धिरप्युपपादनीयेति। ततः एतेषां प्राधान्यम्। लिङ्गात्मकाश्च धर्मवचना व्यवधानेनान्यबुद्धिं जनयन्ति। नामात्मकास्तु सत्त्ववचनाः साक्षादेवेति तत्समन्वये यत्नगौरवमस्तीति लिङ्गात्मकेभ्यो नामात्मकानां प्राधान्यमिति।**

**शे० — चतुर्थ इति।** यद्यप्यनुव्याख्यानेऽयं प्रकारो नोक्तस्तथाऽपि भाष्येऽस्योक्तत्वाभिप्रायेणेयमुक्तिरिति ध्येयम्। यद्वाऽनुव्याख्याने प्रथमे तत्रान्यत्र प्रसिद्धानां विष्णावेव समन्वयमिति, द्वितीये च लिङ्गात्मकानां शब्दानां वृत्तिर्नारायणे परे चिन्त्यत इति, तृतीये च तत्रान्यत्र प्रसिद्धानां लिङ्गनाम्नः पुनर्हरिः। विशेषान्मुख्यतो वृत्तिं स्वस्मिन्नेवात्र वक्ष्यज इति पादत्रयेऽपि प्रतिपाद्यस्य कण्ठरवेणैवोक्तत्वाच्चतुर्थे तदनुक्तावप्युक्तत्रिविधशब्दसमन्वयप्रतिपादकत्वे तस्य वैयर्थ्यापत्त्या तद्भिन्नशब्दसमन्वयप्रतिपादकत्वस्यावश्याश्रयणीयत्वादन्यत्रैव प्रसिद्धानां तत्र समन्वय इत्यप्युक्तप्रायमेवेति भावेनेयमुक्तिरिति भावः ॥ **क्रममुपपादयन्निति।** महामल्लेशभङ्गन्यायेनातिप्रयत्नसाध्यस्य प्राथम्ये आदावन्यत्रैव प्रसिद्धानां ततोऽन्यत्र प्रसिद्धनाम्नां ततोऽन्यत्र प्रसिद्धलिङ्गानां तत उभयत्र प्रसिद्धनामलिङ्गानामिति क्रमः स्यात्। सोपानारोहणन्यायेनानतिप्रयत्नसाध्यस्य प्राथम्ये चादावुभयत्र प्रसिद्धानां ततोऽन्यत्र प्रसिद्धलिङ्गानां ततोऽन्यत्र प्रसिद्धनाम्नां ततोऽन्यत्रैव प्रसिद्धलिङ्गानामिति क्रमो भवेदिति। अन्यत्र प्रसिद्धानां पूर्वं समन्वयः। तत्रापि नाम्नां पूर्वम् अनन्तरं लिङ्गानां तदनन्तरमुभयत्र प्रसिद्धानामन्तेऽन्यत्रैव प्रसिद्धानामिति क्रमस्य सर्वथाऽप्ययोगात्तमुपपादयन्नित्यर्थः।

मूले प्रथमत इत्याद्यादित्वात्सप्तम्यर्थे तसिरिति भावेनाह **प्रथमपाद इति।** द्वितीयपादे समन्वेतव्यशब्दानां लिङ्गात्मकानामिति लिङ्गत्वोक्त्या लब्धमर्थमाह **नामात्मकानामिति।** 'तत्र तस्येवे'त्यनेन वत्यप्रसक्तेस्तदनुपपत्तिमाशङ्क्य 'तेन तुल्यं क्रिया चेद्वतिरि'त्यनेन वतिमाश्रित्याह

**महामल्लेशेति** ॥ **तथेति** । महामल्लेशभङ्गवदित्यर्थः । अत्र महामल्लेशभङ्गेन तुल्यं वर्तत इति महामल्लेशभङ्गवदिति वक्तव्ये तथाऽनुक्त्वा तथेति सामान्येन वचनं तथोक्तौ गौरवप्रसङ्गाल्लाघवमनुसृत्येति द्रष्टव्यम् । भवेदेतदेवं यदि मल्लान्तरापेक्षया चाणूरादिमल्लानामिवोभयत्र प्रसिद्धशब्दापेक्षयाऽन्यत्र प्रसिद्धानां तेषां तत्रापि लिङ्गात्मकान्यत्रप्रसिद्धशब्दापेक्षया नामात्मकानां तेषां प्राधान्यं स्यात् । तदेव कुत इत्यत उभयत्र प्रसिद्धशब्दापेक्षयाऽन्यत्रप्रसिद्धानां तावत्प्राधान्यमुपपादयति **उभयत्रेति** ॥ **निवारणमात्रमिति** । न तु भगवति प्रसिद्धिर्व्युत्पादनेऽपि यत्नो विधेयस्तस्याः पूर्वं वादिनाऽप्यभ्युपगमादिति भावः ॥ **भगवति प्रसिद्धिरिति** । भगवति प्रसिद्धिरपीत्यर्थः । नान्यत्र प्रसिद्धिनिवारणमात्रेण कृतार्थता किन्तु भगवति प्रसिद्धिरप्युपपादनीयेत्यर्थः । भगवति प्रसिद्धिरप्युपपादनीयेति पाठे तु न किञ्चिदेतत् ॥ **तत इति** । उभयत्र प्रसिद्धानां ब्रह्मणि समन्वयस्यान्योपस्थितिमात्रेण प्रतिबन्धादन्यत्रप्रसिद्धशब्दसमन्वयस्य चान्योपस्थितिब्रह्मानुपस्थितिभ्यां प्रतिबन्धात्तच्छब्दसमन्वयस्य बहुप्रयत्नसाध्यत्वादुभयत्र प्रसिद्धापेक्षया प्राधान्यमित्याशयः । लिङ्गापेक्षया नामात्मकानां प्राधान्यमुपपादयति **लिङ्गात्मकाश्चेति** । आपाततो रूढिरहिता इत्यर्थः । **व्यवधानेन** अवयवार्थकथनद्वारेण । **नामात्मका इति** । आपाततो रूढा योगरूढियुक्ता वेत्यर्थः ॥ **सत्त्ववचना इति** । द्रव्यवचना इत्यर्थः । चादयोऽसत्त्व इति स्मरणादिति भावः ।

---

**स०— सत्त्ववचनाः** । द्रव्यवचना इत्यर्थः । चादयोऽसत्त्वे । अद्रव्यार्थाश्चादय इत्युक्तेरिति भावः ।

**प०**— अत इत्यस्यार्थो अतीतप्रबन्धेनेति । तृतीयार्थे तसिरिति भावः । तत्रेत्यनुवादः प्रथमपाद इति व्याख्या । शब्दानामित्यस्यार्थो नामात्मकानां शब्दानामिति, तत्रेत्यस्य द्वितीयपाद इति, शब्दानामित्यस्य लिङ्गात्मकानामिति चार्थमुपेत्य द्वितीयपादार्थोक्तिपरतयापि व्याचष्टे **द्वितीय इति** । पाद इत्यनुषङ्गः । तत्रेत्यस्य तृतीयपाद इत्यर्थः । आवृत्त्या तत्रान्यत्रप्रसिद्धानामित्यप्यन्वयं शब्दानामित्यस्य नामलिङ्गात्मकत्वेनोभयरूपाणामित्यर्थं चोपेत्याह **तृतीय इति** । पाद इति वर्तते । समन्वयोऽभिधीयत इति सर्वत्रान्वयः । तत्रेत्यस्य चतुर्थपाद इति अन्यत्रेतिपदं सावधारणमित्युपेत्यापि व्याचष्टे **चतुर्थ इति** ॥ **इत्युक्तमिति** । तत्रेत्यादिवाक्य इत्यर्थः । भाष्यादावुक्तमित्यर्थ इत्येके । तदेव वाक्यमन्यथापि व्याचष्टे **तमेतं क्रममिति** । अत्रेत्यनुवादेनार्थोक्तिः ॥ **अत्र विष्णाविति** । तेन तुल्यं क्रिया चेद्वतिरिति तृतीयान्ताद्वतिप्रत्ययोयमित्युपेत्याह **महामल्लेशेति** । **तथेति** महामलेशभङ्गवदिति समुदायार्थोक्तिः । दशमस्कन्धाद्युक्तदिशा तद्व्यनक्ति **यथेति** । प्रथमत इत्यस्य प्रथमपादद्वय इति, शब्दानामित्यस्य नाम-

लिङ्गोभयरूपाणामिति चार्थमुपेत्य तृतीयपादस्य प्रथमद्वितीययोश्च क्रमोक्तिपरतया तद्वाक्यं तावद्व्याचष्टे **उभयत्र प्रसिद्धानां हीति** । द्विपाद्यामपि पौर्वापर्यबीजोक्तिपरतयेदानीं व्याचष्टे **लिङ्गात्मकाश्चेति** ॥ **धर्मवचना इति** । धर्मद्वारा धर्मिवाचका इत्यर्थः । यौगिकत्वादिति भावः । सत्त्ववचनाः धर्मिवाचिन इत्यर्थः । रूढत्वादिति भावः ।

**या०— उक्तमिति** । प्रथमाध्याय इति शेषः । यद्यप्यनुव्याख्याने चतुर्थेऽन्यत्रैव प्रसिद्धानां शब्दानां समन्वयोऽभिधीयत इति न स्पष्टमुक्तं तथाऽपि 'विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनामि'ति विषयमालायां वस्तुतोऽन्यत्रैव प्रसिद्धानां शब्दानां विचार्यतयोक्तत्वादभिप्रायत उक्तमेवेत्यवगन्तव्यम् । यद्वा भाष्यानुव्याख्यानीयप्रथमाध्याययोरिति शेषः । तत्र तस्यैवेत्यर्थासम्भवादाह **महामल्लेशभङ्गेनेति** । तथा च तेन तुल्यं क्रिया चेद्वतिरित्यनेनात्र वतिरिति भावः ॥ **प्राधान्यमिति** । अत्र प्राधान्यमल्पयत्नासाध्यत्वं यत्नगौरवसाध्यत्वं वा विवक्षितम् । प्रधानतयाऽभिमते चाणूरादिभङ्गे प्रकृते चान्यस्यासम्भवादित्यवगन्तव्यम् ॥ **धर्मवचना इति** । आपाततो यौगिका इत्यर्थः ॥ **व्यवधानेनेति** । अवयवार्थकथनद्वारेणेत्यर्थः । सत्त्ववचना द्रव्यवचनाः चादयोऽसत्त्व इति वचनात् । आपाततो रूढा इति यावत् ॥ **यत्नगौरवमिति** । योगापेक्षया रूढेः प्राबल्यादन्यत्र तन्निरासे भगवति तदुपपादने च भूयान्यत्नो विधेय इत्यर्थः ।

---

**च०**— मौलं प्रथमत इति न तसिलन्तं हेतुविभक्त्यर्थानन्वयात् अपित्वाद्यादित्वात्सप्तम्यर्थे तस्यन्तमित्यभिप्रेत्य व्याकुरुते **प्रथमपाद इति** । 'तेन तुल्यमि'त्यनुशासनात् तृतीयान्तादिवार्थे वतिरिति व्याकरोति **महामल्लेति** । **प्राधान्यमिति** । आन्यत्रिकी प्रसिद्धिरपाकार्या भगवति व्युत्पादनीया चेत्यतिप्रयत्नसाध्यतेति भावः । **धर्मवचना इति** । मुखनासिकावचन इत्यत्र वचनशब्दस्य करणसाधनल्युडन्ततामाश्रित्य समानाधिकरणबहुव्रीहित्वार्थापनेपि प्रकृते तादृशभङ्गीसमाश्रयणायोगेन भावसाधनल्युडन्तस्य कर्मणि षष्ठ्या समस्तस्य 'आढ्यमिदं नगरम् , अनुदात्तं पदं, द्विर्वचनेची'त्यादाविव अर्श आद्यजन्तत्वमुपेयमिति धर्मकर्मकप्रतिपादनक्रियाविशेषिता इत्यर्थः । **व्यवधानेन** अवयवार्थप्रत्यायनद्वारेण । **सत्त्ववचनाः** द्रव्यप्रतिपादकाः । चादयोऽसत्वे' इति स्मृतेः ।

**सु०— यदि प्राधान्यादन्यत्र प्रसिद्धानां नामात्मकानां शब्दानां समन्वयः प्रथमपादे वक्तव्यः स्यात्तदा चतुर्थपादोदितस्यान्यत्रैव प्रसिद्धानां शब्दानां समन्वयस्येतोऽपि प्राधान्यात्प्राथम्यं भवेत्** । **अन्यत्र प्रसिद्धेरन्यत्रैव प्रसिद्धिर्बलीयसीत्यत** आह इत इति ।

**अनु०**— इतोऽप्यभ्यधिकत्वेऽपि तुर्यपादोदितस्य तु ॥

**तुर्यपादोदितस्य समन्वयस्येतो(ऽस्य)प्यभ्यधिकत्वेऽप्यसावत्राध्याये प्राथम्येन नैवोदित इति संबन्धः ।** तत्तु समन्वयादिति **सङ्क्षेपेण तस्याप्यत्रोक्तत्वादञ्जसेत्युक्तम् । कुतो नोदित उत्सर्गस्यापवादविशेषसद्भावादिति तुशब्दः । तमेवापवादहेतुं दर्शयति** महासमन्वय इति ।

महासमन्वये तस्मिन्नाधिकारोऽखिलस्य हि ।।
ब्रह्मैवाधिकृतस्तत्र मुख्यतोऽन्ये यथाक्रमम् ।।
दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोऽञ्जसा ।।

**तर्हि न वक्तव्य एव निरधिकारिकत्वात् । न हि गायमानो बधिरेषु गायतीत्यत उक्तं ब्रह्मैवेति । नैकाधिकारिकं शास्त्रमित्यतोऽन्य इत्याद्युक्तम् । सर्वाधिकारिसाधारणमर्थमादावभिधायासाधारणं पश्चाद्वक्ष्यामीत्याशयः सूत्रकारस्य । तत्र साधारणे त्विदं तारतम्यं चिन्तितमिति । दुर्गमत्वाच्चेति हेत्वन्तरम् । प्रथमं बुद्धावनारोहादित्यर्थः । एतदुक्तं भवति । ब्रह्मादीनामेव तत्र यद्यपि मुख्याधिकारिता । तथाऽप्यस्मदादीनामीषदधिकारोऽस्त्येव । न च मन्दानामसौ समन्वयः प्रथमं बुद्धिमधिरोहति । साधारणसमन्वयज्ञानेन वैदिकव्युत्पत्त्यनुरक्ता तु बुद्धिः क्रमेण तत्राप्यवतरतीति । ततः किमित्यत आह** अत इति ।

अतोऽन्यत्र प्रसिद्धानां शब्दानां निर्णयाय तु ।।
~~प्रवृत्तः प्रथमं देवः~~

**प्राधान्यादतिप्राधान्यस्योपपादितत्वाच्चेत्यर्थः । तुशब्दोऽवधारणे ।**

शे० — **इतोऽपि प्राधान्यादिति** । अन्यत्र प्रसिद्धशब्दस्य समन्वयेऽन्योपस्थितिब्रह्मानुपस्थितिभ्यामतिप्रतिबन्धादन्यत्रैवप्रसिद्धशब्दसमन्वये चान्योपस्थितिब्रह्मानुपस्थितिभ्यां ब्रह्मपरत्वस्याप्यशक्यकल्पनत्वशङ्कया चातितरां प्रतिबन्धात्तत्समन्वयस्यातिबहुप्रयत्नसाध्यत्वादन्यत्रप्रसिद्धेभ्योऽन्यत्रैवप्रसिद्धानां प्राबल्यमिति भावः । **इदं तारतम्यमिति** । उभयत्रप्रसिद्धापेक्षयाऽन्यत्रप्रसिद्धानां तत्रापि लिङ्गापेक्षया नाम्नां प्राधान्यमिति तारतम्यमित्यर्थः ।। **उत्सर्गस्येति** । प्रधानं प्रथमं वक्तव्यमित्युत्सर्गस्येत्यर्थः ।। **हेत्वन्तरमिति** । अन्यत्रैव प्रसिद्धशब्दसमन्वयस्याप्राथम्य इति शेषः । तर्हि सर्वथाऽवक्तव्यतापत्तिरित्यतो व्याचष्टे **प्रथममिति** । ननु चान्यत्रैव प्रसिद्धशब्दसमन्वयस्य ब्रह्मादीनां प्रथममेव बुद्धावारोहादस्मदादीनां तु तत्रानधिकारेण बुद्धौ तदारोहप्रसक्तेरेवाभावादस्मदादीनामप्यधिकाराभ्युपगमे च प्रथममनारोहे उत्तरत्रापि तदनारोहस्योत्तरत्र तदारोहे च पूर्वमपि तदारोहस्य च प्रसङ्गान्न दुर्गमत्वस्य तत्र हेतुत्वं संभवतीत्यत आह **एतदुक्तं भवतीति** ।। **मन्दानामिति** । सर्वथा समन्वय-

प्रकारानभिज्ञानामित्यर्थः । चतुर्थपादे तन्निरूपणेऽपि कथं बुद्धावारोह इत्यत आह **साधारणेति** । पादत्रयोक्तसमन्वयज्ञानेनेत्यर्थः ॥ **क्रमेणेति** । प्रथमाधिकरणेऽल्पतमा द्वितीयाधिकरणेऽल्पतरा तृतीयादिष्वल्पेत्येवं क्रमेणेत्यर्थः ॥ **तत्रापीति** । प्रकरणेषु व्युत्पन्नबुद्धेः शास्त्रेऽवतारदर्शनादिति भावः ।

स०— **बलीयसीति** । विष्णुपक्षे बलवद्बाधकोपपन्नत्वस्य तत्राधिकत्वादिति भावः ।

प०— **शंकते यदीति** ॥ **बलीयसीति** ॥ अन्यपरत्वं विना अनुपपद्यमानत्वरूपत्वात् तस्या इति भावः ॥ गायमान इति चानशन्तोऽयम् । न शानजन्तः । ननु दुर्गमत्वादिति हेतुरयुक्तः । ब्रह्मणोऽधिकारिणः सुगमत्वादित्यत आह **एतदुक्तं भवतीति** । अत इत्यस्यार्थद्वयमाह **प्राधान्यादति-प्राधान्यस्योपपादितत्वाच्चेत्यर्थ इति** । उभयत्र प्रसिद्धापेक्षया प्राधान्यादन्यत्रैवप्रसिद्धशब्दगत-प्राधान्यस्य सर्वाधिकारिकत्वादित्यादिनोपपादितत्वाच्चेत्यर्थः ।

या०— **बलीयसीति** । लोकतोऽन्यत्रैव प्रसिद्धेः श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धिर्बलीयसीत्यर्थः । ननु ब्रह्मादीनां सुगम एव । ब्रह्मैवाधिकृतस्तत्रेत्युक्तत्वात् । अस्मदादीनां तु तत्राधिकाराभावेनावगमप्रसक्तिरेव नास्ति । अतः कथं दुर्गमत्वं हेतुरित्यत आह **एतदुक्तं भवतीति** ॥ **मन्दानामिति** । सर्वथा समन्वयप्रकारानभिज्ञानामित्यर्थः । चतुर्थपादे तन्निरूपणे बुद्धावधिरोहमुपपादयति **साधारणसमन्वयेति** । पादत्रयोक्तसमन्वयज्ञानेनेत्यर्थः ॥ **क्रमेणेति** । प्रथमेऽधिकरणेऽल्पतमा द्वितीयेऽल्पतरा तृतीयादिष्वल्पेत्येवं क्रमेणेत्यर्थः ॥ **तत्रापीति** । यथा प्रकरणेषु व्युत्पन्ना बुद्धिः शास्त्रेऽवतरति तथैति भावः ।

श्री०— **साधारणे त्विति** । सर्वाधिकारिसाधारणे लोकतोऽन्यत्रप्रसिद्धनामात्मकलिङ्गात्मकशब्दसमन्वयरूपार्थनिरूपणे पूर्वोक्तं तारतम्यं चिन्तितमित्यर्थः ॥ **प्राधान्यादिति** । अन्यत्र प्रसिद्धानां नामात्मकानां शब्दानां लिङ्गात्मकशब्देभ्यः प्राधान्यात्तदपेक्षयाऽन्यत्रैव प्रसिद्धानामतिप्राधान्येऽपि तस्य महासमन्वय इत्यनेन सर्वेषामधिकाराभावेनापोदितत्वादित्यर्थः ।

च०— **इतोऽपि प्राधान्यादिति** । अन्यत्रप्रसिद्धशब्दावधिकप्राधान्यादित्यर्थः । चान्द्रिकाऽऽनन्दमयनयीयभावदीधितौ विवेचितमेतत् ।

सु०— तत्रानन्दमयाधिकरणस्याद्यत्वे हेतुं सूचयन्नाह तत्रेति ।

अनु०— तत्रानन्दादयो गुणाः ॥

ईशस्यैवेति निर्णीताः श्रुतियुक्तिसमाश्रयात् ।

तत्र समन्वयप्रपञ्चने । प्रथममित्यनुवर्तते । सर्वेषु हि शुभेषु मूर्धाभिषिक्ता आनन्दविज्ञानादयः । अतो माङ्गलिक आचार्यस्तच्छब्दसमन्वयमादावाहेति ।

अन्तरधिकरणस्याकाशाधिकरणस्य चानन्दमयाधिकरणसङ्गतत्वे समाने कुतः क्रम इत्यतस्तत्र हेतुं सूचयन्नन्तरधिकरणतात्पर्यमाह देवतेति ।

देवतान्तरगास्सर्वे शब्दवृत्तिनिमित्ततः ॥

विष्णुमेव वदन्त्यद्धा

देवताः खलु जडेभ्यो मुख्याः । अतस्तद्वाचिनामाकाशादिजडवाचिभ्य उत्कर्षः । सर्वे शब्दा अद्धा वचनवृत्त्यैव नोपचारेण ॥ कथम् । शब्दवृत्त्योर्योगरूढयोर्निमित्तानां बहुलप्रयोगादीनां हरौ विद्यमानत्वात् ।

तत्किमन्यत्र शब्दानां वृत्तिरेव नास्ति । येन विष्णुमेवेत्यवधार्यत इत्यत आह तत्सङ्गादिति ।

तत्सङ्गादुपचारतः ॥

अन्यदेवान्वदन्तीह विशेषगुणवक्तृतः ॥

विष्णुमेव परं ब्रूयुः

उपचारप्रकारश्च प्रागेव विवृतः । अक्षादिशब्दवदुभयत्र साम्येन प्रवृत्तिः किं न स्यादित्यत आह इहेति । इन्द्रादिशब्दा हि परमैश्वर्यादिगुणान्वदन्ति । ते च भगवत एवासाधारणा इति तमेव परं मुख्यं ब्रूयुः । इह देवतान्तरे । तथा नेति शेषः । यद्वा इह देवेषु तत्सङ्गादिति पूर्वत्र संबन्धः । रूढिनिमित्तातिशयस्याप्येतदुपलक्षणम् । उत्तराधिकरणेष्वप्येवं क्रमनिमित्तादिकं स्वयमूहनीयमित्याशयवानाह एवमिति ।

एवमन्येऽप्यशेषतः ॥

विष्णुमेव परं ब्रूयुरिति वर्तते ।

शे०— समान इति ॥ अदृश्येनात्म्ये इत्युक्तमिति, को ह्येवान्यात्कः प्राण्यादित्याकाशस्यानन्दमयत्वे हेतुरुक्त इत्यादितत्तदधिकरणभाष्योक्तरीत्येत्यर्थः । तत्किमसन्दिग्धशब्दस्येव लोके सर्वशब्दानां लक्षणैव तथा सति गङ्गातीरयोरविशेषप्रसङ्गः । ईक्षत्यधिकरणार्थस्य च मूले निहितः

कुठार इत्यतो नायमसन्दिग्धशब्दस्येवेन्द्रादिशब्दानां पुरन्दरादिषु लक्षणैव । रूढेरभिधानसिद्धत्वाद्योग-निमित्तस्य च परमैश्वर्यादेः सद्भावात्किन्तु परमेश्वरविषययो रूढियोगयोरपराधीनत्वनिरङ्कुशत्वाभ्यामन्यत्र तु तदधीनत्वाल्पत्वाभ्यां मुख्यार्थतायामेवायं विभाग इत्युपचारप्रकारः । 'तस्मात्परममुख्यत्वं विष्णा-वन्यत्र मुख्यतेत्येतदनुव्याख्यानव्याख्यावसरे आनुमानिकपादे विवृतमित्याह **उपचारप्रकारश्चेति** । अत्र पक्षे तथा नेति शेषः पूरणीयो भवतीत्यपरितोषादाह **यद्वेति** ॥ **शब्दवृत्तिनिमित्त इति** । शब्दवृत्त्योर्योगरूढ्योर्निमित्तभूतबहुलातिप्रयोगानां हरौ सद्भावप्रतिपादनात्तदुपपादकेऽस्मिन्वाक्ये विशेष-गुणवत्कृत इति योगनिमित्तातिशयमात्रकथनमनुपपन्नमित्यत आह **रूढनिमित्तातिशयस्येति** । नन्वन्तर-धिकरणेनाकाशाधिकरणस्येव प्राणाद्यधिकरणानामपि सङ्गतिसद्भावात्कुतस्तत्क्रम इत्यत आकाशाद्वायुर्वा-योरग्निरित्यादिश्रुत्याऽऽकाशादेर्वाय्वादिकारणत्वाभिधानात्तदनुसारेणाकाशप्राणज्योतिरधिकरणानां क्रम इति क्रमनिमित्तं स्वयमूहनीयमित्याशयेनाह **उत्तराधिकरणेष्वपीति** । एवमन्येऽप्यशेषत इत्यस्य साकाङ्क्षत्व-प्रयुक्तवाक्याभासतां पूर्वानुवृत्त्या परिहरति **विष्णुमिति** । **वर्तते** अऽनुवर्तते ।

स०— **उपचारप्रकारश्चेति** । कल्पनोपदेशाच्चेत्यादावित्यर्थः ।

प०— सूचयन्नाहेत्यत्र सङ्गतिमिति अर्थमिति वा योज्यम् । तत्रेत्यस्यार्थः समन्वयप्रपञ्चन इति । तत्रेत्यस्यार्थातरं **सर्वेषु हि शुभेष्विति** ॥ **सङ्गतत्वे समान इति** । अदृश्यत्वमुखेनाकाशश्रुतिमुखेन चानन्दमयस्य विष्णुत्वाक्षेपसमाधानरूपत्वेन भाष्ये व्याख्यानादिति भावः । सूचितं हेतुं व्यनक्ति **देवता इति** । सर्व इत्यत्र विशेष्यमाह **शब्दा इति** । बहुलप्रयोगादीनामित्यत्रादिपदेनावयवार्थ-पौष्कल्य(परि)ग्रहः **प्रागेवेति** । आनुमानिकपादे तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यत इत्यादिविष्णा-वन्यत्र मुख्यतेत्यन्तग्रन्थव्याख्यावसर इत्यर्थः ॥ **रूढिनिमित्तातिशयस्यापीति** । शीघ्रोपस्थि(त्यर्था)ता-र्थाविसंवादिरूपस्याप्युपलक्षणमित्यर्थः । लिङ्गशब्दयोरित्यस्यार्थो लिङ्गात्मकानामित्यादि ।

या०— **आनन्दमयाधिकरणसङ्गतत्व इति** । अदृश्येऽनात्म्य इत्युक्तः; तत्रादृश्यत्वमन्तः-प्रविष्टमिति वाक्ये 'न विजानन्ति देवाः' इत्यन्तःस्थस्य कस्यचिदुच्यत इत्यन्तराधिकरणस्य, को ह्येवान्यादित्याकाशस्यानन्दमयत्वे हेतुरुक्त इत्याकाशाधिकरणस्य चानन्दमयाधिकरणेन भाष्ये सङ्गते-रुक्तत्वादिति भावः । नन्विन्द्रादिशब्दानां पुरन्दरादौ सिंहादिशब्दानां देवदत्तादाविव किमुपचारो नेत्याह **उपचारप्रकार इति** । 'शब्दप्रवृत्तिहेतूनां तस्मिन्मुख्यसमन्वयात् । अन्यार्थेष्वल्पताहेतोस्तन्नि-मित्तत्वतस्तथा । तद्वाचकत्वं शब्दानामि'त्यादिना प्रथमाध्याये परममुख्यवृत्त्यपेक्षयैवेयममुख्यवृत्तिरित्यु-च्यते, न तु प्रसिद्धोपचारवदित्युपचारशब्दार्थो विवृत इत्यर्थः ॥ **रूढिनिमित्तातिशयस्येति** । बहुल-प्रयोगरूपस्येत्यर्थः ।

**श्री०— समन्वयप्रपञ्चन इति ।** कर्तव्ये सतीति शेषः । आचार्यः सूत्रकारः । **प्रागेवेति ।** परममुख्यवृत्त्यपेक्षयाऽमुख्यवृत्तिरेवात्रोपचारतया विवक्षितो न तु सिंहादिशब्दानां देवदत्तादाविव प्रसिद्धोपचार इत्येवं शब्दप्रवृत्तिहेतूनां तस्मिन्नित्यादिना प्रथमाध्याये विवृत इत्यर्थः ॥ **अक्षादिशब्दवदिति ।** यथा अक्षशब्दस्येन्द्रिये द्यूतसाधने च साम्येनैव प्रवृत्तिरस्तीत्यर्थः ॥ **अतिशयस्येति ।** बहुलातिप्रयोगरूपस्येत्यर्थः । बहुलातिप्रयोगतो रूढमित्येव साध्यं स्यादित्युक्तत्वादिति ज्ञेयम् ।

**सु०— अन्यत्र प्रसिद्धानां नामात्मकानां शब्दानामनन्तत्वात्कथं पादपरिसमाप्तिरित्याशङ्कां निराकुर्वन्प्रथमपादार्थमनूद्य द्वितीयपादस्य सङ्गतिमाह** इत्यन्यत्रेति ।

**अनु०** — इत्यन्यत्र प्रसिद्धोरुशब्दराशेरशेषतः ॥
ज्ञाते समन्वये विष्णौ लिङ्गेष्वेष समन्वयः ॥
तेषामन्यगतत्वे तु न स्यात्सम्यक् समन्वयः ॥
इत्येवाशेषलिङ्गानां ब्रह्मण्येव समन्वयम् ॥
आह

**समानन्यायसञ्चारविषयत्वादिति भावः । ज्ञाते प्रथमपादेन । शङ्का जायत इति शेषः । कथं(इति) । प्रायेण लिङ्गबलेन ह्येष नामात्मकशब्दसमन्वयोऽभिहितः । लिङ्गानां चान्यगतत्वं प्रतीयते । ततश्च विरुद्धत्वात्तैः प्रतीतः समन्वयः सम्यङ्न स्यादेव । न हि कृतकत्वेन नित्यत्वज्ञानं सम्यगुत्पद्यते । इतिशब्दः शङ्कासमाप्तौ । तत्परिहारायान्यत्र प्रसिद्धानामशेषलिङ्गानाम् । आह द्वितीयपादे ।**

**नन्वेवं तर्हि यानिअन्तस्तद्धर्मोपदेशादित्यादौ समुद्रान्तस्थत्वादीनि लिङ्गानि साधनत्वेनोक्तानि तेषामिह विचारः करणीयः । न चैवम् । किन्तु यान्युक्तानि न तानि विचार्यन्ते । यानि च विचार्यन्ते न तान्युक्तानि । उच्यते । सर्वश्रुतिगताः सर्वेऽप्यन्यत्र प्रसिद्धाः नामात्मकाः शब्दा भगवद्विषया एव तत्र तत्र श्रुतैः सर्वैर्लिङ्गैरिति हि प्रथमपादस्यार्थः । तत्र यानि लिङ्गान्यसन्दिग्धानि तानि विहायेतराणि विचार्यन्त इति को विरोधः । अत एवाशेषत इत्युक्तं प्राक् ।**

**शे०—** नन्वानन्दमयोऽभ्यासादित्यादिसूत्राणामुपात्तानन्दमयादिशब्दसमन्वयमात्रविषयत्वात्कथं नामात्मकाशेषशब्दसमन्वयस्य प्रथमपादार्थत्वमित्यतस्तेषां तत्तत्सूत्रोक्तन्यायसञ्चारविषयतया तत्तत्सूत्रोपात्तशब्दैः समानं यच्छब्दजातं तद्विषयत्वेनोपात्तशब्दमात्रविषयत्वाभावेनानन्दमयादिशब्दोपलक्षितानेकशब्द-

राशिसमन्वयपरत्वस्थितेर्युक्तमशेषनामसमन्वयस्य प्रथमपादार्थत्वमित्याशयेनाह **समानन्यायेति** । नन्वानन्दमयादिशब्दानां ब्रह्मशब्देन विष्णौ समन्वयसाधनात्कथं लिङ्गबलेनेत्युक्तिरित्यत उक्तं प्रायेणेति ॥ **अत एवेति** । सर्वश्रुतिगतानां सर्वेषामन्यत्र प्रसिद्धनामात्मकानां शब्दानां भगवत्परत्वस्य प्रथमपादार्थत्वादेवेत्यर्थः ॥ **प्रागिति** । एवमन्येऽप्यशेषत इत्यत्रेत्यर्थः । यद्वा प्रथमपादार्थानुवादपरे 'इत्यन्यत्र प्रसिद्धोरुशब्दराशेरशेषतः' इति वाक्य इत्यर्थः ।

**स० — अत एवेति** । सर्वश्रुतिगतानां सर्वेषामन्यत्र प्रसिद्धनामात्मकानां भगवत्परत्वस्य प्रथमपादार्थत्वादेवेत्यर्थः ।

**या० —** नन्वानन्दमय इत्यादिसूत्रोपात्तानां केषाञ्चिदेवात्र समन्वयो ज्ञातस्तत्कथमुच्यते शब्दराशेरशेषत इति तत्राह **समानन्यायेति** । सूत्राणां सर्वशाखानिर्णायकत्वात् । आनन्दमयादिशब्दानां चोपलक्षणतयैवोपात्तत्वादिति भावः । अभ्यासादिनाऽपि समन्वयस्योक्तत्वात्कथं लिङ्गबलेनेत्युच्यत इत्यत उक्तं **प्रायेणेति** ॥ **प्रागिति** । एवमन्येऽप्यशेषत इत्यत्रेति शेषः ।

**श्री० — विरुद्धत्वादिति** । अनित्यनिष्ठकृतकत्वेन नित्यत्वज्ञानं यथा विरुद्धमेवमन्यनिष्ठेन लिङ्गेन भगवति समन्वयप्रतीतिर्विरुद्धेत्यर्थः । समर्थनार्थत्वादित्यनन्तरममुख्यया वृत्त्येतरपरत्वस्यापि सद्भावादिति वाक्यशेषः ।

**सु० - तृतीयपादस्य प्रथमद्वितीयाभ्यां सङ्गतिमाह** उभयेति ।

**अनु० —** उभयगतत्वं च स्यादतो लिङ्गशब्दयोः ॥

इति संशयनुत्यर्थम्

**भगवत्तदितरविषयत्वम् । अतोऽन्यत्र प्रसिद्धानां भगवत्परत्वस्य समर्थनात् । लिङ्गात्मकानां च शब्दानाम् ।**

**नन्वन्यवाचित्वनिरासोऽपि तत्रैव नेतर इत्यादिना विहित एव । तत्कथं शङ्कोदयः । मैवम् । अन्यत्र तात्पर्याभावो हि नेतर इत्यादिना दर्शितः । शक्तिस्तूभयत्र स्यादेव । तर्हि त एव पुनर्विचार्याः । सत्यम् । तेष्वेव यत्र यत्र विचारप्राप्तिस्ते विचार्यन्ते । यदा यत्रानुपपत्त्यादीनां सञ्चारः सुगमस्तान्विहायान्यत्रोभयगतत्वं शङ्कैतैवेति युक्तमुक्तम् । तथा च तन्वित्यवधारणानुपपत्तिरिति शङ्काशेषः । इत्याशङ्कानिवृत्त्यर्थं तृतीयपादमारब्धवानिति**

शेषः । इत्याहेति वक्ष्यमाणेन वा संबन्धः । कथमियमाशङ्का तृतीये परिहृतेत्यतस्तात्पर्यमाह उभयत्रेति ।

उभयत्र प्रतीतितः ॥

शब्दानां वर्तमानानां सलिङ्गानां विशेषतः ॥

समन्वयो हरावेव

हरौ तदितरत्र च । प्रतीतितो न तु वस्तुतो वर्तमानानां सलिङ्गानां शब्दानां नाम्नां लिङ्गानां च हरावेव विशेषतः परममुख्यया वृत्त्या तात्पर्येण च समन्वयः । कुत इत्यत आह यदिति ।

यन्नैवान्यत्र मुख्यतः ॥

शब्दा लिङ्गानि च

यद्यस्माद्वर्तन्त इति शेषः । एतदपि कुत इत्यत आह यत इति ।

यतो नैवान्यत्र स्वतन्त्रता ।

स्वतन्त्रतास्तीति शेषः । स्वातन्त्र्याभावेऽपि कुतोऽन्यत्र शब्दानां मुख्यवृत्त्यभाव इत्यत आह अस्वतन्त्रेष्विति ।

अस्वतन्त्रेषु शब्दस्य वृत्तिहेतुर्न मुख्यतः ॥

यतोऽतो

नन्वन्येषामस्वतन्त्रत्वात्तेषु मुख्यतः शब्दप्रवृत्तिहेतोर्गुणादेरभावान्मुख्यतः शब्दा न वर्तन्त इति चेत् । मा वर्तिषत ।

तथाऽपि विशेषतः समन्वयो हरावेवेत्येतत्कुत इत्यत आह अत इति । इतरस्य मुख्यार्थत्वाभावादित्यर्थः । भाव्यं खलु शब्दस्य मुख्यार्थेन । अन्यथा तदपेक्षस्यामुख्यस्यानुपपत्तेः । तथा च द्वयोः प्रसक्तयोरेकस्य मुख्यार्थत्वानुपपत्तावितरस्य मुख्यार्थत्वमावश्यकमेव ।

यदधीनास्त इत्यादिना युक्त्यन्तरमाह ।

यदधीनास्ते शब्दार्थत्वमुपागताः ॥

अत्यल्पेनैव शब्दस्य वृत्तिहेतुगुणेन तु ॥

अयो यथा दाहकत्वं स एवेशः स्वतन्त्रतः ॥

मुख्यशब्दार्थ इति हि स्वीकर्तव्यो मनीषिभिः ॥

इत्याह

ते भगवतोऽन्ये पदार्था भगवदपेक्षयाऽत्यल्पेनैव शब्दप्रवृत्तिहेतुना गुणादिना यस्मिन्भगवत्यायत्ताः सन्तः शब्दार्थत्वमुपगताः स भगवानेवेशो निरवधिकशब्दप्रवृत्तिनिमित्तवान् । स्वतन्त्रत्वतश्च मुख्यशब्दार्थ इति हि स्वीकर्तव्यः । इतरेषु शब्दप्रवृत्तिनिमित्तान्यल्पान्येव तान्यपि भगवदधीनानि । भगवति तु निरवधिकान्यपराधीनानि चेत्येतदसिद्धमित्यत उक्तं मनीषिभिरिति । श्रुत्यादिपरिचयवद्भिः । यो यदधीनः शब्दार्थः सोऽमुख्य इतरस्तु मुख्य इत्यत्र दृष्टान्तः । अयो यथाऽग्न्यधीनं सद् दाहकत्वं दाहकशब्दार्थत्वमुपागतम् अत एव दहतीति शब्दस्तस्मिन्नमुख्योऽग्नौ तु मुख्यस्तथेत्यर्थः । अत्रेतरस्यामुख्यार्थत्वमनूद्यत एवेति न पुनरुक्तिः । इत्याह तृतीयपादेनेति शेषः ।

शे० — गूढाभिसन्धिः शङ्कते नन्विति । शक्त्या लक्षणादिना वा प्रतिपादकत्वरूपत्वात्तात्पर्यस्य शक्त्यन्यत्वसिद्धेर्न तात्पर्यनिरासेन शक्तिनिरासिसिद्धिरित्याशयेन परिहरति अन्यत्रेति । पूर्ववादी स्वाशयमुद्घाटयति तर्हीति । सिद्धान्त्यपि स्वाशयमुद्घाटयति सत्यमिति । अनुपलम्भबाधपरिहारायाह यद्वेति । नन्वेवं पूर्वपक्षस्य सन्देहादविशेषः स्यादित्यत आह तथा चेति । ननु यत्रैवान्यत्र मुख्यत इत्यनेनैवेतरस्यामुख्यार्थताया उक्तत्वाद्यदधीनास्त इत्यादि पुनरुक्तमित्यत आह अत्रेतरस्येति ॥ अनूद्यत एवेति । तथा च यदधीनेत्यादिनेत्यस्यामुख्यार्थत्वं पूर्वोक्तमनूद्य स्वातन्त्र्येण निमित्तेनेश्वरस्य मुख्यशब्दार्थत्वं विधीयत इति न पुनरुक्तिरित्यर्थः ।

तृतीयं पादमित्यादिशेषपूरणेऽपरितोषादाह इत्याहेतीति । ननु तत्सङ्गादुपचारत इत्यादिना अन्यत्रामुख्यताया उक्तत्वाद्यदधीनास्त इत्यादिनाऽपि पुनस्तद्वचने पौनरुक्त्यमित्यत आह अत्रेतरस्येति ।

स० — एवमन्येप्यशेषत इत्यादिनान्यत्रामुख्यं प्रागुक्तमेव तत् कस्मात् यदधीनास्त इत्यादिना पुनरुच्यत इत्यत आह अत्रेतरस्येति । ननु यत्रैवान्यत्र मुख्यत इत्यत्रेतरस्यामुख्यार्थत्वोक्तेरयो दाहकत्वमित्यत्रापि तदुक्तौ पौनरुक्त्यमित्यतो वाह अत्र तस्येति ।

प० — तत्रैव प्रथमादिपाद एवेत्यर्थः । पूर्वोक्तार्थाविरोधादेतच्चिन्ता व्यर्थेत्यत आह इति शंकाशेष इति । इति संशयेत्यादेरर्थ इत्याशंकेत्यादि ॥ इति शेष इति । आरब्धवानित्यतिपदमात्रस्य शेष इति ज्ञेयम् ॥ मा वर्तिषतेति । वर्तनं मा भूदित्यर्थः ॥ द्वयोरिति । विष्णुतदितरयोरित्यर्थः । गुणेनेति गुणकर्मादेरुपलक्षणमित्युपेत्याह गुणादिनेति । भगवत्यायत्ताः भगवदधीनाः । स्वतन्त्रत इत्युपलक्षणमित्युपेत्याह निरवधिकशब्दप्रवृत्तीति । यत्रैवान्यत्र मुख्यत इत्यादिना यदधीना इत्यादेः पौनरुक्त्यं निराह अत्रेतरस्येति ।

**या०**— ननु तत्सङ्गादुपचारत इत्यत्रैवेतरस्यामुख्यार्थत्वमुक्तम् । पुनरत्यल्पेनैव शब्दस्येत्यादिना तद्वचने पुनरुक्तिरित्यत आह **अत्रेतरस्येति** ।

**श्री०**— लिङ्गशब्दयोरित्येतत्तात्पर्यमाह **लिङ्गात्मकानामित्यादि** ॥ **अन्यत्रेति** । आनन्दमयादिशब्दानामिति शेषः ॥ **उभयत्रेति** । भगवति कोशादौ चेत्यर्थः ॥ **तर्हि त एव पुनरिति** । पुनःशब्दो वाक्यालङ्कारे । यथा लिङ्गात्मकानां शब्दानां द्वितीयपादेन समन्वयोक्तौ । नन्वेवं तर्हि यान्यन्तरित्यादिना शङ्काकृता तथैवोभयत्र प्रसिद्धानां नामलिङ्गात्मनां शब्दानां तृतीयपादेन समन्वयोक्तावपि त एव पुनर्विचार्या इत्यर्थः । उच्यत इत्यादिनोक्तमेव समाधानमाह **सत्यमिति** । ननु यत्रैवान्यत्र मुख्यत इत्यत्रेत्यनेनैवेतरस्यामुख्यार्थताया उक्तत्वाद्यदधीनास्त इत्यादि पुनरुक्तमित्यत आह **अत्रेतरस्येति** ॥ **अनूद्यत एवेति** । तथा च यदधीना इत्यादिनोत्तरस्यामुख्यार्थत्वं पूर्वोक्तमनूद्य स्वातन्त्र्येण निमित्तेनेश्वरस्य मुख्यशब्दार्थत्वं विधीयत इति न पुनरुक्तिरित्यर्थः ।

**सु०— चतुर्थपादस्य सङ्गतिं करोति एवश्चेति** ।

**अनु०**— एवं च शब्दानां नारायणसमन्वये ॥
सिद्धेऽप्यशेषशब्दानां न कथञ्चन युज्यते ॥
विरोधादवरत्वादेरपि प्राप्तिर्यतो भवेत् ॥
इति चेत्

---

**एवश्चेत्यस्यैव विवरणमतीतेन पादत्रयेण केषाञ्चिच्छब्दानां नारायणसमन्वये सिद्धेऽपीति । अशेषशब्दानां नारायणे समन्वयो न युज्यते । यः प्रतिज्ञातो दुःखिबद्धावरादिशब्दानां कर्मादिविषयाणां च कथञ्चन योगेन रूढ्या वा प्रवृत्त्यनुपपत्तेरिति शेषः । कथम् । यतोऽवरादिशब्दवाच्यत्वे भगवतोऽवरत्वादेर्दोषस्य प्राप्तिर्भवेत् । तस्याश्च सर्वप्रमाणविरोधात् । कर्मक्रमादिविरोधाच्चेति । इति चेत्तत्र प्रतिविहितं सूत्रकारेणेति शेषः ।**

**कथमित्यतः प्रथमाधिकरणतात्पर्यमाह** अवरत्वादीति ।

अवरत्वादि द्विविधं ह्युपलभ्यते ॥

**अवरादिशब्दप्रवृत्तिनिमित्तमुपलभ्यते प्रमाणैः । हिशब्दस्तेषां प्रसिद्धिं द्योतयति । कथं द्विविधमित्यत आह** परस्येति ।

परस्यावरताहेतुर्यः स्वयं पर एव सन् ॥
सोऽपि ह्यवरशब्दार्थो यथा राजा जयी भवेत् ॥
अन्योऽवरत्वानुभवी

स्वयं पर एव सन्निति न प्रवृत्तिनिमित्तकथनं किन्तु स्वस्यावरत्वाभावेऽपीति प्रदर्शनार्थम् । परस्मिन्नवरत्वादिधर्मनियन्तृत्वमेकं निमित्तमित्यर्थः । तस्य प्रमितत्वदर्शनं यथेति । परगतस्य जयस्य राजाधीनत्वेन यथा राजा जयिशब्दवाच्यो भवेत्तथेत्यर्थः । अवरत्वानुभवी अन्योऽवरशब्दार्थः । अवरत्वादिमत्त्वमपरं निमित्तमिति यावत् । एतच्च सुप्रसिद्धमिति न प्रमाणमुक्तम् । ततः किं प्रकृत इत्यत आह तयोरिति ।

तयोः पूर्वोऽस्ति केशवे ॥

तयोः प्रवृत्तिहेत्वोर्मध्ये । तेनावरादिशब्दवाच्यत्वं चेति शेषः । कुतः पूर्व एवाङ्गीक्रियते न द्वितीय इत्यत आह द्वितीय इति ।

द्वितीयो जीव एवास्ति

जीव इति जडस्याप्युपलक्षणम् । तथा च सतीश्वरत्वहानिः स्यादित्यर्थः । अधिकरणफलमाह स्वातन्त्र्यादिति ।

स्वातन्त्र्यान्नैव दूषणम् ॥

हरेः

परगतावरत्वादौ स्वातन्त्र्यस्यैव निमित्तत्वाङ्गीकाराद्धरेरवरत्वादिकं दूषणं न प्रसज्यत इति । एवमुत्तराधिकरणतात्पर्यमपि वक्तव्यम् ।

शे०— करोतीति । केशान्करोतीत्यादौ शोधनेऽपि करोतेः प्रयोगदर्शनेनानेकार्थत्वात्करोतिरत्र ज्ञापनार्थो द्रष्टव्यः ॥ विवरणमिति । अतो न तद्वैयर्थ्यमिति भावः ॥ कर्मक्रमादिविरोधाच्चेति । कर्मक्रमादिवाचकवेदभागस्य ब्रह्मपरत्वे तत्साधकप्रमाणाभावप्रसक्त्या तदभावप्रसङ्गलक्षणविरोधाच्चेत्यर्थः । नन्वन्यगतधर्मनियामकत्वस्य प्रवृत्तिनिमित्तत्वे यथा राजा जयी भवेदिति यथा प्रमाणमुपन्यस्तमेवं तद्गतत्वस्य प्रवृत्तिनिमित्तत्वेऽवश्यमुपन्यसनीयस्य प्रमाणस्यानुपन्यासाद्भाष्ये न्यूनत्वमित्याशङ्क्यानुक्तौ निमित्तकथनेन तत्परिहरति एतच्चेति । तथाऽपि नोक्तशङ्कापरिहार इत्यत एवशब्दाभिप्रायमाह तथा च सतीति । द्वितीयस्य प्रवृत्तिहेतोरीश्वरेऽभ्युपगम इत्यर्थः । भगवतो ज्योतिरादिशब्दवाच्यतायां शङ्कितकर्मक्रमादिविरोधपरिहारस्य भाष्येऽनुक्तत्वात्कथं तच्छङ्कापरिहार इत्यत आह एवमिति । कर्मादेर्ज्योतिरादिवाक्यमुख्यार्थतात्पर्यविषयत्वाभावेऽप्यवान्तरतात्पर्यविषयत्वेन वेदेनैव तत्सिद्धिसम्भवान्न कर्मक्रमादिविलोपप्रसङ्ग इत्येवंरूपं तात्पर्यं वक्तव्यमित्यर्थः ।

स०— **एवमुत्तराधिकरणतात्पर्यमिति** । ज्योतिरादिशब्दानां मुख्यतो भगवद्वाचकत्वेपि अवान्तरतात्पर्यविषयत्वान्न कर्मादिविलोप इत्येवं तात्पर्यमवगन्तव्यमित्यर्थः ।

प०— शेषोक्त्या व्याचष्टे **अतीतेनेति** ॥ **यः प्रतिज्ञात इति** । समन्वयसूत्र इति योज्यम् । यथा राजा जयीति पूर्वत्रेवेहाप्यर्थे कुतः प्रमाणं नोक्तमित्यत आह **एतच्चेति** । स्वातन्त्र्यादित्यस्यार्थः स्वातन्त्र्यस्येत्यादि ॥ **एवमुत्तराधिकरणेति** । निगमनिघण्टुव्याकरणादिसिद्धान्यार्थत्वविधानेन महायोगविद्वद्रूढिभ्यां विष्णुपरत्वोपगमेन कर्मक्रमादिविरोधो नेत्यानुमानिकपादोक्तरीत्या ज्योतिराद्यधिकरणतात्पर्यं ध्येयमित्यर्थः ।

या०— **कर्मक्रमविरोधाच्चेति** । कर्तप्रतिपादकवेदानां भगवति समन्वये तत्साधकप्रमाणान्तराभावेन तदभावप्रसङ्गलक्षणविरोधाच्चेत्यर्थः ।

श्री०— द्वितीयो जीव एवास्तीन्युत्तरत्र जीवशब्देन जडमप्युपलक्ष्यत इत्युच्यते । तत्र जडेऽवरत्वानुभवित्वाभावादाह **अवरत्वादिमत्त्वमिति** । **प्रमाणं** प्रमापकम् । उदाहरणमित्यर्थः । नन्ववरत्वादिमत्त्वमीश्वरे कुतो नाङ्गीक्रियत इत्यस्यानेन किमुत्तरं जातमित्यत आह **तथा सतीति** ॥ **उत्तराधिकरणेति** । पदाक्षरसमन्वयेन भगवत एव प्रवृत्तिनिमित्तादौ स्वातन्त्र्येण मुख्यवाच्यत्वेऽपि वाक्यान्वयन्यायेनामुख्यवृत्त्या कर्मक्रमादेरपि वाच्यत्वाङ्गीकारान्न तदभावप्रसङ्गरूपो विरोध इत्येव ज्योतिरुपक्रमादित्युत्तराधिकरणतात्पर्यमपि द्रष्टव्यमित्यर्थः ।

सु०— **प्रथमाध्यायार्थानुवादेन द्वितीयाध्यायस्य सङ्गतिमाह** एवमिति ।

अनु०— **एवमशेषेण सर्वशब्दसमन्वये** ॥
उक्ते विरोधहीनस्य स्यात्समन्वयता यतः ॥
अतोऽशेषविरोधानां कृतेशेन निराकृतिः ॥

**सर्वशब्दार्थविवरणमशेषेणेति** । **उक्ते सति द्वितीयेऽशेषविरोधानां निराकृतिरीशेन कृतेति सम्बन्धः** । **विरोधहीनस्यैव समन्वयस्य** ।

**श्री०**— मूलेऽशेषशब्दसर्वशब्दयोः पौनरुक्त्यमाशङ्क्य शेषनिषेधवाचिनोऽशेषशब्दस्य सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावित्यादाविव सर्वशब्दप्राप्तसङ्कोचशङ्कानिरासकत्वेन सर्वशब्दार्थविवरणरूपत्वान्न वैयर्थ्यमित्याशयेनाह **सर्व इति** । विरोधहीनस्यैवेत्यनूद्य तदनन्तरमपेक्षितं स्यात्समन्वयतेत्युत्तरग्रन्थलब्धमध्याहार्यं दर्शयति **विरोधेति** ।

या०— अशेषसर्वशब्दयोः पौनरुक्त्यपरिहारायाह **सर्वशब्दार्थविवरणमिति** । शेषनिषेधवाचिनोऽशेषपदस्य सर्वशब्दार्थे सङ्कोचशङ्कानिरासकत्वेन सर्वशब्दार्थविवरणरूपतेति द्रष्टव्यम् । विरोधहीनस्यैवेत्यनूद्य तदनन्तरमध्याहार्यमाह **एवं समन्वयस्येति** । संस्कारातिशयस्येत्यत्र मनसो भगवद्विषयीकरणपाटवं संस्कारशब्दार्थोऽवगन्तव्यः ।

सु०— **तृतीयाध्यायस्य सङ्गतिमाह** समन्वयेति ।

अनु०— समन्वयाविरोधाभ्यां सज्ञाते वस्तुनिर्णये ॥

**तदर्थयोरध्याययोरुपलक्षणमेतत्** । वस्तुनिर्णये **ब्रह्मनिर्णये** ॥ किं मया कार्यमिति ।

किं मया कार्यमित्येव स्याद्बुद्धिरधिकारिणः ।

**अयमर्थः । यद्यपि ब्रह्मविचारः कर्तव्य इत्युक्तम् । कृतश्चासौ । तथाऽपि साधनफलविचारसहितस्य ब्रह्मविचारस्य कर्तव्यतयोक्तत्वात्कृतब्रह्मविचारस्याधिकारिणो यन्मया कार्यं साधनं तत्किं कथम्भूतमिति । बुद्धिः स्यादिति । फलविषये कुत एवं बुद्धिर्न स्यादिति चेत्स्यादेव । किन्तु फलापेक्षया साधनस्य पूर्वभावित्वात्तद्विषयैवादौ स्यात् । तदिदमुक्तमेवशब्देन । तदर्थं तृतीयोऽध्यायः प्रवृत्त इति शेषः ।**

शे०— तदर्थयोरिति लक्षणाहेतुभूतशक्यसम्बन्धकथनम् । ननु ब्रह्मस्वरूपविचारस्यैव प्रतिज्ञातत्वात्तस्य चाध्यायद्वयेन कृतत्वान्न किं मया कार्यमिति जिज्ञासाया अवसर इत्यत आह **अयमर्थ इति** ॥ **फलविषय इति** । किं फलं मया सम्पाद्यमिति बुद्धिरित्यर्थः । तथा च तृतीयाध्याये फलमेव कस्मान्नोच्यत इत्यर्थः । उद्भाष्यत्वं परिहरति **तदिदमिति** ।

प०— **तदर्थयोरिति** । समन्वयाविरोधार्थयोरित्यर्थः ॥ **ब्रह्मविचार इति** । ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्युक्तं जिज्ञासासूत्रे । असौ च जन्माद्यस्येत्यादिना वैशेष्यात्तु तद्वादस्तद्वाद इत्यन्तेन कृत इत्यर्थः ॥ **उक्तत्वादिति** । आद्यसूत्र एवास्यार्थस्य स्पष्टीकरणादिति भावः ।

श्री०— **फलविषय इति** । कि फलं मया सम्पाद्यमिति बुद्धिरित्यर्थः । तथा च तृतीयाध्याये फलमेव कस्मान्नोच्यत इत्यर्थः ।

सु०— **एतद्गतानां त्रयाणां पादानां प्रागुक्तामेव सङ्गतिं स्फुटीकरोति** तत्रेति ।

अनु०— तत्र भक्तिविधानार्थमभक्तानर्थसन्ततौ ॥

उक्तायां भक्तिदार्ढ्याय प्रोक्तेऽशेषगुणोच्चये ॥

वक्तव्योपासना नित्यं कर्तव्येत्यादरेण हि ॥

तत्र **तृतीयेऽध्याये । भक्तिविधानार्थं भक्त्युत्पादनार्थं वैराग्यार्थमिति यावत् । अभक्तानां काम्यार्थकर्मिणां पापिनां द्वेषिणां च । उक्तार्थां प्रथमपादेन । अशेषगुणोच्चये परमेश्वरस्य प्रोक्ते द्वितीयेन । उपासनाऽस्मिन्पादे वक्तव्यावसरप्राप्ता । ननूपासनायां को भक्तेरुपयोगो यतस्तदानन्तर्यमस्येत्यत आह** नित्यमिति । **यस्मादुपासना नित्यमादरेण कर्तव्या । आदरनैरन्तर्याभ्यामेव संस्कारातिशयस्योत्पादात् । आदरनैरन्तर्ये चोपासनायां नाभक्तस्य भवतः । इति तस्मादिदानीमुपासना वक्तव्येति सम्बन्धः ।**

**शे०** — भक्तेर्विधानमुत्पादनं येन तद्भक्तिविधानं वैराग्यं तदर्थमित्यभिप्रेत्याह **वैराग्यार्थमिति यावदिति** । अभक्तानर्थेत्यत्र नञो राहित्यमात्रार्थकत्वेऽविरुद्धार्थकत्वे च 'तृतीये शब्दावरोधः' अपि सप्तेत्यधिकरणानां पादेऽन्तर्भावो न स्यादित्यतोऽत्रोभयस्यापि विवक्षितत्वान्नानुपपत्तिरित्याशयेनाह **काम्यार्थेति ॥ वक्तव्यावसरप्राप्तेति** । वक्तव्यता याऽवसरप्राप्तेत्यर्थः । उपासनाया आदरनैरन्तर्याभ्यां कर्तव्यत्वमेव कुत इत्यत आह **आदरेति** । उपासनं हि संस्कारातिशयोत्पत्त्यर्थतया कार्यम् । तच्च नोपासनामात्रेण संभवतीत्यतो विशिष्टमेवोपासनं कार्यं यद्यपि च मनसो भगवत्प्रवणत्वव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वाद्ध्यानस्य मनसस्तत्प्रवणत्वमात्रेणोपपत्तेर्न संस्कारातिशयसापेक्षत्वम् । सति तस्मिन्संस्कारातिशयव्यतिरेकात्तद्व्यतिरेकासिद्धेः । तथाऽपि मनसो भगवत्प्रवणत्वस्यैव संस्कारातिशयशब्देन विवक्षितत्वाददोष इति ध्येयम् ।

**प०** — **प्रागुक्तामिति** । एतत्पादादावुक्तामित्यर्थः ॥ **आदरनैरन्तर्याभ्यामिति** । आदरः स्नेहः । **नैरन्तर्यम्** अविच्छेदः ।

**श्री०** — **प्रागुक्तामेवेति** । वैराग्यतो भक्तिदार्ढ्यमिति प्रागुक्तामेवेत्यर्थः । विपूर्वो दधातिः करोत्यर्थ इत्यभिप्रेत्य विधानार्थमित्येतदुत्पादनार्थमिति व्याख्यातम् । तथा च भक्तेर्विधानमुत्पादनम् येन तद्भक्तिविधानं वैराग्यं तदर्थमित्यर्थमभिप्रेत्याह **वैराग्यार्थमिति यावदिति ॥ संस्कारेति** । वासनामयवस्तुनो मनसाऽवलोकनस्यैव ध्यानत्वेन संस्कारातिशयस्य ध्यानोपयोगित्वादिति भावः ।

**सु०** — **एवं तर्ह्युपासनैव विचारणीया । सर्वशास्त्रपरिज्ञानं प्रथमाधिकरणे कस्माद्विचार्यत इत्यत आह** सेति ।

**अनु०** — सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी ॥

ध्यानरूपा परा चैव

या वक्तव्यतयाऽवसरप्राप्ता सा चोपासना द्विविधैव । न त्वेकरूपैव । कथम् । एका शास्त्राभ्यासस्वरूपिणी । परा च ध्यानरूपा । अतो युक्तः प्रथमाधिकरणस्यात्रान्तर्भावः । तथाऽप्ययं क्रमः कुतः । ध्यानस्य शास्त्राभ्यासमाध्यत्वात् । तदिदमुक्तं परेति । ध्यानसमाध्योरनतिभिन्नत्वद्ध्यानशब्देन समाधिरपि गृह्यते । धारणाप्रत्याहारप्राणायामाऽऽसनयमनियमानामप्युपासनाभेदानां सत्त्वात्कथं द्वैविध्यमित्यत आह तदङ्गमिति ।

तदङ्गं धारणादिकम् ॥

तस्य ध्यानस्याङ्गमेव न तु स्वतन्त्रमुपासनम् । योगशास्त्रे चैतत्स्पष्टमवगन्तव्यम् । शास्त्राभ्यासस्य ध्यानाङ्गत्वेऽपि स्वतन्त्रोपासनत्वं चास्ति । ब्रह्मसाक्षात्कारहेतुत्वात् । चित्तवृत्तिनिरोधा(कत्वा)च्च । यच्चोक्तम् । 'अथवा सततं शास्त्रविमर्शेन भविष्यतीति' ।

शे० — कस्मादिति । तद्विचारपरस्य पादार्थभूतोपासनाविचारपरत्वाभावेन पादेऽन्तर्भावयोगादिति भावः ॥ अयं क्रम इति । शास्त्रपरिज्ञानध्यानविचारयोः पौर्वापर्यलक्षण इत्यर्थः । तत्र नियामकाभावेन वैपरीत्यस्यापि संभवादिति भावः ॥ परेतीति । परत्वं चात्र पश्चाद्भावित्वं द्रष्टव्यम् । ननूपासना द्विविधैवेति कथम् । समाधेरपि पृथक् सत्त्वादित्यत आह ध्यानशब्देनेति । तेन शब्देन समाधिग्रहणे निमित्तमाह ध्यानसमाध्योरिति । अत्यन्तभिन्नत्वाभावादित्यर्थः । अखण्डा ध्यानमुच्यते । अप्रयत्नात्समाधिश्चेत्युक्तरीत्या ध्यानसमाध्योः प्रयत्नसाध्यत्वसाध्यत्वाभावाभ्यां भेदात्कथं न भेद इत्यत उक्तमनतीति । ध्यानसमाध्योः प्रयत्नसाध्यत्वतदसाध्यत्वाभ्यां भेदेऽप्यखण्डस्मृतित्वस्योभयत्राविशिष्टत्वान्नात्यन्तभिन्नत्वं तयोरित्यर्थः ॥ न त्विति । ध्यानकार्याकारित्वाद्ध्यानसमकक्षतया नोपासनत्वमित्यर्थः ॥ एतदिति । धारणादिस्वरूपं तस्य ध्यानाङ्गत्वं चेत्यर्थः । नन्वेवं धारणादीनामिव शास्त्राभ्यासस्यापि ध्यानाङ्गत्वेन पृथगवक्तव्यत्वात्तद्द्वैविध्यानुपपत्तेरित्यत आह शास्त्रेति ॥ स्वतन्त्रेति । ध्यानकार्यकारितया ध्यानाङ्गत्वेनोपासनत्वं चास्तीत्यर्थः । किं तद्ध्यानकार्यं यत्कारितया ध्यानाङ्गत्वेन शास्त्राभ्यासस्योपासनत्वमुच्यत इत्यतोऽधिकारिविशेषाभिप्रायेणाह ब्रह्मसाक्षात्कारेति । ध्यानकार्यस्य साक्षात्कारस्य शास्त्राभ्यासमात्रेणाधमाधिकारिणां सिद्धेस्तस्य ध्यानकार्यकारित्वमित्यर्थः । सर्वाधिकारिसाधारण्येनाप्याह चित्तवृत्तीति । तथा च ध्यानकार्यस्य चित्तवृत्तिनिरोधस्य शास्त्राभ्यासेनापि साध्यत्वात्तयोः समकक्षत्वमिति भावः । शास्त्राभ्यासस्य ब्रह्मसाक्षात्कारहेतुत्वे सिद्धे भवेत्तत्कार्यकारित्वेन शास्त्राभ्यासस्य स्वतन्त्रोपासनत्वं तदेव कुत इत्यतस्तत्राचार्यसम्मतिमाह यथोक्तमिति । तन्त्रसार इति शेषः । दर्शनं चिरयानयेति पूर्ववाक्याद्दर्शनमित्यस्यात्रानुवृत्तेर्विवक्षितलाभ इति ज्ञेयम् ।

स०— ननूपासना द्विविधैवेति कथम् । समाधेरपि पृथक् सत्वादित्यत आह **ध्यानसमाध्योरिति** । ध्यानशब्देन समाधेरपि ग्रहणे निमित्तमाह **अनतिभिन्नत्वादिति** । अत्यन्तभिन्नत्वाभावादित्यर्थः । अखण्डा ध्यानमुच्यत इति अप्रयत्नात्समाधिश्चेत्युक्तरीत्या ध्यानसमाध्योः प्रयत्नसाध्यत्वतदभावाभ्यां भेदेन कथं तयोर्भेदो नास्तीत्यत उक्त **अत्यन्तमिति** । तथा च ध्यानसमाध्योः प्रयत्नपूर्वकत्वतदभावाभ्यां भेदेपि अखण्डस्मृतित्वस्योभयत्र साम्याददोष इति भावः । अधिकारिविशेषाभिप्रायेणाह **ब्रह्मसाक्षात्कारेति** । ध्यानेनेवाधिकारिविशेषस्य शास्त्राभ्यासेन ब्रह्मसाक्षात्कारदर्शनेन तस्य ध्यानसमकक्षत्वमिति भावः । सर्वाधिकार्यभिप्रायेणाह **चित्तवृत्तीति** । तथा च ध्यानेनेव शास्त्राभ्यासेन चित्तवृत्तिनिरोधात्तयोः समकक्ष्यतेति भावः । शास्त्राभ्यासस्य साक्षात्कारहेतुत्वे तत्र सारवाक्यं प्रमाणयति **तथोक्तमिति** । दर्शनमिति शेषोऽत्र बोध्यः ।

प०— समाधेरुपासनाभेदस्य सत्त्वात् कथं द्वैविध्यमित्यतो वा समाध्यादिकमिति वक्तव्ये कथं मूले धारणादिकमित्युक्तिरित्यतो वाह **ध्यानसमाध्योरिति** । अभ्यासपाटवादनायासेन प्राप्तं ध्यानं समाधिरुच्यते । खण्डस्मृतिर्धारणा । इन्द्रियाणां विषयेभ्य उपसंहारः प्रत्याहारः । आसनपदेन वीरासनसद्मासनादिग्रहः । **यथोक्तमिति** । तन्त्रसारचतुर्थाध्याये उक्तमित्यर्थः । 'अप्रयत्नात्समाधिश्च दर्शनं चिरयाऽनये'ति पूर्वशेषः ।

---

या०— **परेतीति** । परशब्दस्य पश्चाद्वाच्यर्थत्वादिति भावः । ननु द्विविधैवेति कथम् । यावता तृतीयाऽपि समाधिरूपोपासनाऽस्तीत्यत आह **ध्यानसमाध्योरिति** । यद्यपि 'खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते । अप्रयत्नात्समाधिश्चे'त्यादौ ध्यानस्य समाधिभेद उक्तस्तथाऽप्यखण्डस्मरणस्य उभयत्राविशिष्टतयाऽभेदोक्तिरत्रेति ध्येयम् । अत एवानतिभिन्नत्वादित्युक्तम् । अन्यथाऽभिन्नत्वादित्येव अवक्ष्यत । ननूपासनापदस्य ध्यान एव रूढस्य ध्यानपूर्ववर्तित्वमात्रेण यदि शास्त्राभ्यासे वृत्तिस्तर्हि धारणादेरपि तथात्वादुपासनापदवाच्यत्वप्राप्तौ पुनर्द्वैविध्यानुपपत्तिरेवेत्याशङ्क्याह **धारणाप्रत्याहारेत्यादि** । स्वतन्त्रमुपासनं मुख्यतयोपासनशब्दवाच्यम् । एवं स्वतन्त्रोपासनात्वं चास्तीत्यत्रापि मुख्यमुपासनाशब्दवाच्यत्वमस्तीत्यर्थो द्रष्टव्यः । तथा च न शास्त्राभ्यासे ध्यानपूर्ववर्तित्वमात्रेणोपासनापदं गौणं किन्तु मुख्यमेवातो नोक्तातिप्रसङ्ग इति भावः । ननु शास्त्राभ्यासे ध्यानसाधारणं धारणादिव्यावृत्तं किमुपासनाशब्दप्रवृत्तौ निमित्तम् । यद्योगात्तत्रोपासनाशब्दो मुख्य इत्यत आह **ब्रह्मसाक्षात्कारेति** । अधिकारिविशेषाभिप्रायेणेदम् । अत एव सर्वसाधारणं निमित्तान्तरमाह **चित्तवृत्तीति** । तथा च साक्षाद्ब्रह्मसाक्षात्कारहेतुत्वरूपं चित्तवृत्तिनिरोधस्वरूपं वोपासनाशब्दप्रवृत्ति-

निमित्तं शास्त्राभ्यासेऽस्ति, अतस्तस्य मुख्यत एवोपासनाशब्दवाच्यत्वं धारणादौ तु नैवमिति भावः ॥ शास्त्राभ्यासस्य ब्रह्मसाक्षात्कारहेतुत्वं तन्त्रसारसम्मत्या द्रढयति **यथोक्तमिति** । भविष्यतीत्यत्र दर्शनं चिरयानयेति पूर्ववाक्यस्थं दर्शनपदमनुवर्तत इति द्रष्टव्यम् ।

सु० — **किमतो यद्युपासनावसरप्राप्ता द्विविधा चेति** । तत्राह तथेति ।

**अनु०** — तथोभयात्मकं चैव पादेऽस्मिन्बादरायणः ॥
आहोपासनमद्धैव विस्तराच्छ्रुतिपूर्वकम् ॥

**तथा तस्मादवसरप्राप्तत्वात्** । **अस्मिन्नेवेति संबन्धः** । **उपासनमेवेति च (वा)** । **तेन परेषामिदानीं तु प्रतिवेदान्तं विज्ञानानि भिद्यन्ते न वेति विचार्यत इति पादार्थकथनं निराकरोति** । **तथा हि** । **किं भेदाभेदौ, विरोधाविरोधौ, उत विलक्षणत्वाविलक्षणत्वे** । **नाद्यः** । **गतार्थत्वात्** । **द्वितीये ब्रह्मणोऽखण्डत्वेन प्राप्त्यभावः** । **सगुणब्रह्मविषया प्राणादिविषया चेयं चिन्तेति चेन्न** । **प्रकृतविषयप्रयोजनविरुद्धत्वेनाकर्तव्यत्वादिति** । **अद्धा उपयुक्तप्रमेयेण सह** । **अत एव विस्तरात्** । **अनेन केषाञ्चिदधिकरणानामनन्तर्भावशङ्का निराकृता भवति** । **श्रुतिग्रहणमुपलक्षणम्** । **अत्र सङ्गतिकथनप्रस्तावेऽपि केषाञ्चित्सूत्राणामर्थव्याख्यानं सङ्गतिसमर्थनार्थमेवेति न दोषः** ।

शे० — यथाश्रुतैवसम्बन्धस्य वैयर्थ्येनासम्भवाद्भिन्नक्रमतामाश्रित्य तं योजयति **अस्मिन्नेवेति सम्बन्ध इति** ॥ **इति चेति** । सम्बन्ध इति वर्तते । एवशब्दस्योपासनमित्यनेन सम्बन्धोक्तेर्वैयर्थ्यमाशङ्क्य परिहरति **तेनेति** । उपासनस्यैव तत्पादार्थत्वकथनेनेत्यर्थः । ननु न प्रतिज्ञामात्रेणार्थसिद्धिरन्यथाऽतिप्रसङ्गादित्यतोऽभिप्रेतां निरासकयुक्तिमुपदर्शयितुं प्रतिजानीते **तथा हीति** ॥ **गतार्थत्वादिति** । **गतिसामान्यादिति** सूत्रेणेति शेषः । तत्र वेदान्तोत्पाद्याया ब्रह्मावगतेरेकप्रकारत्ववर्णनेनाविरुद्धत्वसमर्थनादिति भावः ॥ **द्वितीय इति** । विषयवैलक्षण्यावैलक्षण्ययोरेव तज्ज्ञानवैलक्षण्यावैलक्षण्यप्रापकत्वात्प्रकृते च विज्ञेयस्य ब्रह्मणोऽखण्डत्वेनावधारिततया तत्र विरुद्धलक्षणयोगित्वादिरूपवैलक्षण्यस्याभावनिश्चयेन विषयवैलक्षण्यादिरूपप्रापकाभावान्न तज्ज्ञाने तदधीनवैलक्षण्यावैलक्षण्यचिन्ताया अवसर इत्यर्थः । विलक्षणत्वादिप्राप्तिं शङ्कते **सगुणेति** ॥ **इयं चिन्तेति** । तज्ज्ञानवैलक्षण्यावैलक्षण्यचिन्तेत्यर्थः । तथा चाखण्डस्य ब्रह्मणो विरुद्धलक्षणयोगित्वादिरूपवैलक्षण्यानुपपत्तावपि विषयत्वेनाभिमतस्य सगुणब्रह्मणः प्राणादेर्वा विरुद्धलक्षणयोगित्वादिरूपवैलक्षण्याक्रान्ततया विषयवैलक्षण्यप्रयुक्तायास्तज्ज्ञाने वैलक्षण्यचिन्ताया अस्त्येव प्राप्तिरिति भावः । सगुणविषया प्राणादिविषया वोक्तचिन्ता किं शास्त्रे स्वप्रधानत्वेन

कर्तव्यतयाऽभिमता किंवाऽखण्डब्रह्मज्ञानाङ्गतया वा । नाद्यः । अधिकारिणो मुमुक्षुत्वेन तत एव तत्त्वजिज्ञासुत्वेन च तं प्रति सगुणत्वप्राप्तिफलकातत्त्वभूतसगुणब्रह्मविषयायाः प्राणादिविषयाया वा तज्ज्ञानवैलक्षण्यावैलक्षण्यचिन्तायाः स्वप्राधान्येन शास्त्रे कर्तव्यत्वानुपपत्तेरिति भावेन द्वितीयं दूषयति **प्रकृतेति** । उक्तचिन्ताविषयत्वेनाभिमतस्य सगुणब्रह्मणः प्राणादेर्वा जिज्ञास्यतया प्रकृताखण्डब्रह्मरूपविषयेण तत्प्रयोजनत्वेनाभिमतसगुणप्राप्त्यादेश्च प्रयोजनतयाऽखण्डब्रह्मभावलक्षणमोक्षप्रयोजनेन च विरुद्धत्वाद्विरुद्धविषयप्रयोजनवत्या उक्तचिन्ताया मोक्षफलकाखण्डब्रह्मज्ञानाङ्गत्वासंभवेन तदङ्गतया शास्त्रे कर्तव्यत्वानुपपत्तेरिति भावः ॥ **अत एवेति** । उपयुक्तप्रमेयस्यापि कथनेनोपासनामात्रस्याकथनादेवेत्यर्थः ॥ **अनेनेति** । उपयुक्तप्रमेयेण सहोपासनस्यैतत्पादार्थत्वकथनेनेत्यर्थः ॥ **केषाञ्चिदिति** । यावदधिकारमवस्थितिरित्यादीनामित्यर्थः । तेषामुपासनाऽप्रतिपादकत्वेऽपि तदुपयुक्तार्थप्रतिपादकत्वादिति भावः ॥ **उपलक्षणमिति** । स्मृतेरिति शेषः ॥ **केषाञ्चिदिति** । अथातो ब्रह्मजिज्ञासा जन्माद्यस्य यत इत्यादीनामित्यर्थः ॥ **न दोष इति** । सङ्गतिकथनप्रस्तावविरोधलक्षणो दोषो नेत्यर्थः ।

स०—**गतार्थत्वादिति** । द्वितीयाध्याये विरोधस्य परिहृतत्वात्तेन गतार्थतेति भावः । विलक्षणत्वादिप्राप्तिं शङ्कते **सगुणेति** ॥ **प्रकृतेति** । सगुणस्यामोक्षफलकत्वादित्यर्थः । **उपलक्षणम्** । स्मृतेरिति शेषः ।

---

प०— **तेनेति** । उभयत्र एवकारसंबन्धेनेत्यर्थः ॥ **गतार्थत्वादिति** । द्वितीयाध्यायान्तिमपादद्वयेनेत्यर्थः ॥ **प्रकृतेति** । अखण्डचैतन्यरूपविषयकबन्धनिवर्तकज्ञानरूपाऽवान्तरप्रयोजनाखण्डब्रह्मतापत्तिरूपपरमप्रयोजनविरुद्धत्वादित्यर्थः ॥ **केषाञ्चिदिति** । प्रदानवदेवेत्यादीनामनुबन्धादिभ्य इत्यादीनां तन्निर्धारणार्थनियमस्तद्दृष्टेः 'पृथग्ध्यप्रतिबन्धः फलमि'त्यादीनामित्यर्थः ॥ **केषाञ्चित्सूत्राणामिति** । जिज्ञासादिसूत्राणामित्यर्थः ।

या०— **गतार्थत्वादिति** । द्वितीयस्य तृतीयचतुर्थचरणयोः श्रुतीनां परस्परविरोधस्य परिहृतत्वेन ताभ्यामस्य गतार्थत्वापत्तेरित्यर्थः ॥ उक्तं हि वियत्पादारम्भे भामत्याम् । पूर्वं प्रमाणान्तरविरोधः श्रुतीनां निराकृतः । सम्प्रति तु श्रुतीनामेव परस्परविरोधो निराक्रियत इति । यद्वा गतिसामान्यादित्यनेन गतार्थत्वादित्यर्थः ॥ **सगुणब्रह्मेति** । तत्र विरुद्धलक्षणयोगित्वरूपं वैलक्षण्यं प्रसक्तमिति न पूर्वोक्तदोष इति भावः ॥ **प्रकृतविषयेति** । अत्र जिज्ञास्यस्याखण्डब्रह्मण एव विषयतया तद्भावरूपस्यैव च मोक्षरूपप्रयोजनतया प्रकृतत्वात्सगुणादिविषयचिन्तायास्तत्प्राप्तिफलकायास्तत्रैव संस्कारदार्ढ्योपादकतया प्रकृतविषयप्रयोजनविरुद्धत्वमिति ज्ञातव्यम् ॥ **केषाञ्चिदधिकरणानामिति** । यावदधि-

कारमवस्थितिराधिकारिकाणामित्यारभ्य 'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदमि'त्यतः प्राक्तनानामधिकरणानामित्यर्थः । जन्माद्यस्य यत इत्यादीनामित्यर्थः ।

**श्री० — तेनेति** । उपासनमेवोच्यत इति वचनेनेत्यर्थः । भिद्यन्ते न वेत्युक्तभेदाभेदशब्दार्थं विवेचयति **भेदाभेदाविति** । भेदाभेदशब्दार्थावित्यर्थः । किं विरोधेत्याद्यन्वयः ॥ **विरोधाविरोधाविति** । विज्ञानानि विरुद्धान्यविरुद्धानि वेत्यर्थः । वेदान्तानां किं परस्परविरुद्धार्थविषयकज्ञानजनकत्वम् , उताविरुद्धार्थविषयकज्ञानजनकत्वमिति भावः ॥ **विलक्षणेति** । तथा च वेदान्तानां विरुद्धलक्षणोपेतब्रह्मज्ञानजनकत्वं उताविरुद्धलक्षणोपेतब्रह्मज्ञानजनकत्वमित्यर्थः ॥ **गतार्थत्वादिति** । गतिसाम्यादित्युक्तत्वादिति भावः ॥ **अखण्डत्वेनेति** । निर्धर्मकत्वेनेत्यर्थः ॥ **प्राप्त्यभाव इति** । वेदान्तानां विरुद्धलक्षणोपेतब्रह्मज्ञानजनकत्वमिति कोटिप्राप्त्यभावेन विचारानवकाशादिति भावः ॥ **सगुणेति** । तथा च वेदान्तानां विरुद्धलक्षणोपेतसगुणब्रह्मप्राणादिविषयकज्ञानजनकत्वं न वेति चिन्तोपपद्यते । सगुणब्रह्मादेः सधर्मकत्वेन तत्र विरुद्धलक्षणप्रसक्तिसद्भावादिति भावः ॥ **अनेन** अद्धेति वचनेन । **केषाञ्चित्सूत्राणां** जन्माद्यस्येत्यादीनाम् ॥

**सु० — एवं सङ्गतिमभिधायैतत्पादाधिकरणेषु पूर्वपक्षयुक्तीः सिद्धान्तयुक्तीश्च संग्रहेणाह** पृथग्दृष्टिरित्यादिना ।

**अनु० —** पृथग्दृष्टिरशक्यत्वमनिर्णीतिः समुच्चयः ॥
विशेषदर्शनं कार्यलोपो नानोक्तिराशुता ॥
विभ्रमोऽपाकृतिर्लिङ्गमनवस्था विशेषिता ॥
अप्रयोजनता चातिप्रसङ्गो दूरसंश्रयः ॥
विशिष्टकारणं चेष्टा दृष्टवैरूप्यमुन्नतिः ॥
अनुक्तिरप्रयत्नत्वं दृढबन्धपराभवौ ॥
पुंसाम्यं प्राप्तसन्त्यागः कारणानिर्णयो भ्रमः ॥
विशेषदर्शितालापौ गुणसाम्यं पृथग्दृशिः ॥
अगम्यवर्त्मसन्धानमिष्टं फलमकल्पना ॥
शुद्धवैरूप्यमङ्गत्वमविशेषदृशिः क्रिया ॥
युक्तयः पूर्वपक्षस्थास्सुज्ञेयत्वं विधिक्रिया ॥
माहात्म्यमल्पशक्तित्वं यथायोग्यफलं भवः ॥

फलसाम्यं विशेषश्च गुणाधिक्यं प्रधानता ॥
यथाशक्ति क्रिया सन्धिः प्रमाणबलमानतिः ॥
कारणं कार्यवैशेष्यं स्वभावो वस्तुदूषणम् ॥
प्रतिक्रियाविरोधश्च प्रतिसन्धिरनूनता ॥
संस्कारपाटवं स्वेच्छानियतिर्वस्तुवैभवम् ॥
विशेषोक्तिरमानत्वं प्राधान्यं प्रीतिरागमः ॥
सुस्थिरत्वं कृतप्राप्तिरनादिगुणविस्तरः ॥
साधनोत्तमता नानादृष्टिशिष्टिरनूनता ॥
अविन्नत्वाविरोधौ च गुणवैशेष्यमागमः ॥
सिद्धान्तनिर्णया ह्येता युक्तयोऽव्याहताः सदा ॥

**अव्याहताः सदेति सिद्धान्तयुक्तित्वसमर्थनम् ॥**

**शे०— संग्रहेणाहेति ।** व्याख्यां करोमीति प्रतिज्ञासिद्ध्यर्थं कथनं भाष्य एव स्पष्टत्वेन वक्तव्यविशेषाभावाच संग्रह इति भावः । युक्तीनामव्याहतत्वकथनस्यानर्थक्यमाशङ्क्य परिहरति **अव्याहता इति ॥**

---

**प०— एतत्पादाधिकरणेषु पूर्वपक्षसिद्धान्तयुक्तीः संग्रहेणाह पृथग्दृष्टिरित्यादिनेति ।** अत्रैवं विवेकः । सर्ववेदान्तप्रत्ययं, पृथग्दृष्टिः पूर्वपक्षस्य युक्तिः । सुज्ञेयत्वं सिद्धान्तस्य । उपसंहारोऽर्थाभेदात्, अशक्यत्वं विधिक्रिया । न वा प्रकरणभेदात्, अनिर्णीतिर्माहात्म्यम् । प्राप्तेश्च समञ्जसं, अनिर्णीतिर्माहात्म्यम् । सर्वाभेदादन्यत्रेमे, अनिर्णीतिः माहात्म्यम् । आनन्दादयः, समुच्चयः अल्पशक्तित्वं प्रियशिरस्त्वाद्यप्राप्तिः, विशेषदर्शनं यथायोग्यफलम् । इतरे त्वर्थसामान्यात्, कार्यलोपः भवः । आध्यानाय, नानोक्तिः फलसाम्यम् । आत्मगृहीतिः, आशुता विशेषः । अन्वयादिति चेत्, विभ्रमः गुणाधिक्यम् । कार्याख्यानादपूर्वं, अपाकृतिः प्रधानता । समान एवं चाभेदात्, लिङ्गं यथा शक्तिक्रिया न वाऽविशेषात्, अनवस्था सन्धिः । संभृतिद्युव्याप्ती, अविशेषिता प्रमाणबलम् । पुरुषविद्यायामपि, अप्रयोजनता आनतिः । हानौ तूपायन, अतिप्रसङ्गः कारणम् । छन्दतः, अदूरसंश्रयः कार्यवैशेष्यम् । अनियमः सर्वेषां, विशिष्टकारणं स्वभावः । यावदधिकारं, चेष्टा वस्तुदूषणम् । इयदामननात्, दृष्टवैरूप्यं प्रतिक्रियाविरोधः । चकारात् 'प्राणो वा सर्वेभ्यो भूयानि'ति श्रुतिर्गृह्यते । व्यतिहारः उन्नतिः प्रतिसन्धिः । 'सैव हि सत्यादयः' अनुक्तिः अनूनता 'कामादितरत्र' अप्रयत्नत्वं संस्कारपाटवम् ।

तन्निर्धारणार्थनियमः, दृढबन्धः स्वेच्छानियतिः । प्रदानवदेव, पराभवः वस्तुवैभवम् । लिङ्गभूयस्त्वात् पुंसाम्यं, विशेषोक्तिः । पूर्वविकल्पः प्राप्तसंत्यागः, अमानत्वम् । विद्यैव तु, कारणानिर्णयः प्राधान्यम् । श्रुत्यादिबलीयस्त्वाच्च, श्रमः प्रीतिः । अनुबन्धादिभ्यः, विशेषदर्शिता आगमः । प्रज्ञान्तरपृथक्त्ववत्, आलापः सुस्थिरत्वम् । न सामान्यादपि, गुणसाम्यं कृतप्राप्तिः । परेण चशब्दस्य, पृथग्दृशिः अनादिगुणविस्तरः । एक आत्मनः शरीरे भावात्, अगम्यवर्त्म साधनोत्तमता । अङ्गावबद्धास्तु, संधानं नानादृष्टिः । भूम्नः क्रतुवत्, इष्टं फलं शिष्टिः । नानाशब्दादिभेदात्, अकल्पना अनूनता । विकल्पो विशिष्टफलत्वात्, शुद्धवैरूप्यं अविघ्नत्वम् । काम्यास्तु यथाकामं, अङ्गत्वं अविरोधः । चकारादनियताङ्गत्वम् । अङ्गेषु यथाश्रयभावः, अविशेषदृष्टिः गुणवैशेष्यम् । न वा तत्सहभावश्रुतेः, क्रिया आगमः ॥

॥ इति न्यायमालास्थलानि ॥



## ॥ अथ सर्ववेदा(न्तप्रत्यया)धिकरणम् ॥

सु० — ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ ॥ अत्र ध्यानोपासनार्थिभिः किं स्वस्वशाखा एवाध्ययनश्रवणमननैर्ज्ञातव्याः किंवा सर्वेऽपि वेदा इति संशये शाखाभेदस्य सुप्रसिद्धत्वादन्यथा तदनुपपत्तेः प्रथमपक्ष एव ज्यायानिति प्राप्ते सिद्धान्तितम् सर्ववेदान्तप्रत्ययमिति । तत्र सर्वशब्दोऽसंकुचितवृत्तिरिति प्रतीतिनिरासाय व्याचष्टे यथाशक्तीति ।

अनु० — ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ ॥

यथाशक्त्यखिलान्वेदान्विज्ञायोपासनं भवेत् ।

विज्ञायावस्थितस्येत्यध्याहारात्समानकर्तृकतासिद्धिः । उपासनं कुर्वाणो भवेदिति वा । उपासनं कुर्वीतेति वा । भवेदित्यस्योत्तरवाक्येऽन्वयः । अत्र यथाशक्त्यखिलान्वेदान्विजानीयादित्येव वक्तव्यम् । तथाऽप्यत्रोच्यमानं सर्वपरिज्ञानं ध्यानोपासनाङ्गमिति दर्शयितुमेवमुक्तम् । ततश्च परेत्युक्तं विवृतं भवति ।

शे० — ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ ॥ अन्यथेति । सर्ववेदानां ध्यानोपासनार्थिभिरध्ययनश्रवणमननैर्ज्ञातव्यत्वेत्यर्थः । ननु क्रिययोः क्रियाणां वा समानकर्तृकत्वस्य क्त्वाप्रत्ययार्थत्वात्प्रकृते च विज्ञानस्य पुरुषकर्तृकत्वाद्भवनस्य चोपासनाकर्तृकत्वाद्विष्णुं नत्वा स्तौतीत्यादाविव ज्ञानभवनरूपक्रिययोरेककर्तृकत्वाभावेन तदर्थकक्त्वाप्रत्ययस्यैवासंभवाद्विज्ञायेति कथं तदादेशल्यपः प्रयोगः इत्यतः श्रवणस्य नरकर्तृकत्वेन विमोक्षस्य च पापकर्तृकत्वेन श्रवणविमोक्षरूपक्रिययोः समानकर्तृकत्वाभावेऽपि 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यत, इत्यादौ क्त्वाप्रत्ययदर्शनेन समानकर्तृकत्वस्यातदर्थत्वाद्भिन्नकर्तृकत्वेऽपि क्त्वाप्रत्ययसंभवान्न तदादेशल्यपोऽनुपपत्तिरिति सत्येव समाधाने समानकर्तृकत्वस्य तदर्थतामङ्गीकृत्य क्रियान्तराध्याहारेण समानकर्तृकतामुपपादयति **विज्ञायेति** । एवमुपासनमित्यस्य प्रथमान्ततया भवनकर्तृत्वमङ्गीकृत्यैव क्रियान्तराध्याहारेण समानकर्तृकत्वमुपवर्णितम् । वस्तुतस्तूपासनमित्यस्य द्वितीयान्तत्वान्न भवनकर्तृत्वमित्याशयवान्पदान्तराध्याहारेणानन्वयदोषं परिहरन्नेव समानकर्तृकतामुपपादयति **उपसनमिति** । एवं योजनायां गौरवं भवतीत्यतो लघुभूतं पक्षान्तरमाह **उपासनमिति** । तर्हि भवेदित्यनर्थकं स्यादित्यत आह **भवेदित्यस्येति** ॥ **इत्येव वक्तव्यमिति** । तावतैव प्रथमसूत्रतात्पर्यकथनादिति भावः ॥ **एवमिति** । विज्ञायोपासनं कुर्वीतेत्येवमित्यर्थः । किमत्रोच्यमानसर्वपरिज्ञानस्य ध्यानोपासनाङ्गत्वोपपादनेनापि सिद्धमित्यत आह **ततश्चेति** ॥ **परेत्युक्त-**

**मिति** । ध्यानरूपा परा चेत्यादिना यद्ध्यानरूपोपासनायाः शास्त्राभ्यासरूपोपासनापेक्षया परत्वमुक्तं तदत्रोच्यमानसर्वपरिज्ञानस्य ध्यानरूपोपासनाङ्गत्वप्रतिपादनाद्विवृतं भवतीत्यर्थः ।

**स०— ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ** ॥ ननूपासनस्य भवनं प्रति कर्तृत्वात् विज्ञानं प्रतिपुरुषस्य तथात्वात् समानकर्तृकत्वाभावात् विज्ञायेति क्त्वाप्रत्ययोनुपपन्न इत्यत आह **विज्ञायावस्थितस्येति** ॥ **परेत्युक्तमिति** । ध्यानरूपा परा चैवेत्यादिना मद्ध्यानरूपोपासनायाः शास्त्राभ्यासारूपोपासनापेक्षया परत्वमुक्तं तत्सर्ववेदपरिज्ञानस्य ध्यानरूपोपासनाङ्गत्वप्रतिपादनात् विवृतं भवतीत्यर्थः ।

**प०— सर्ववेदान्तप्रत्ययम्** ॥ **ध्यानोपासनेति** । ध्यानरूपोपासनार्थिभिरित्यर्थः । एवमग्रेऽपि ॥ **अध्ययनश्रवणमननैरिति** । गुरूच्चारणानूच्चारणेन स्वाधीनोच्चारणक्षमतया वर्णराशिग्रहणमध्ययनम् । उपदेशबलेनोत्पन्नवाक्यार्थज्ञानं श्रवणम् । मननं तु ज्ञातेऽर्थे युक्त्यनुसंधानं तैरित्यर्थः । ननु समानकर्तृकयोः पूर्वकाल इति सूत्रेण एककर्तृकयोः क्रिययोर्मध्ये पूर्वकालीनक्रियावाचिधातोः क्त्वाप्रत्यये समासे नञ्पूर्वे क्त्वोल्यपितिल्यबादेशे विज्ञायेति रूपमिति वाच्यम् । तत्र विज्ञानकर्तापुरुषः भवेदित्यत्र चोपासनं कर्त्रित्यतः पुरुषकर्तृक्रियान्तरानिर्देशात् कथं विज्ञायेति प्रयोग इत्यत आह **अवस्थितस्येत्यध्याहारादिति** ॥ **परेत्युक्तमिति** । ध्यानरूपा परा चेत्यत्र ध्यानरूपेत्येव वाच्ये परा पश्चात्तनीत्यप्यर्थमभित्याङ्गाङ्गिभावोक्त्या तद्विवृतमित्यर्थः ।

**या०— ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ** ॥ **परेत्युक्तमिति** । ध्यानरूपा परा चेत्यत्र यत्परशब्दस्य पश्चाद्भाव्यर्थत्वमभिप्रेतं तदत्र ध्यानस्य सर्वपरिज्ञानपश्चाद्भावित्वकथनेन विवृतमित्यर्थः ।

**श्री०— ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ** । ननु विज्ञायेत्युक्तविज्ञानक्रियायां पुरुषस्य कर्तृत्वेन भवेदित्युक्तभवनक्रियायां चोपासनस्य कर्तृत्वेन समानकर्तृकत्वाभावाद्विज्ञायेति क्त्वादेशभूतल्यबनुपपत्तिरित्यत आह **विज्ञायावस्थितस्येति** । तथा च विज्ञानावस्थानयोरुभयोरपि पुरुषकर्तृकत्वान्नोक्तानुपपत्तिरित्याशयः । ननु कुर्वीतेत्यध्याहारेण व्याख्याने भवेदित्येतदुर्वरितम् । तस्यान्वयमाह **भवेदित्यस्येति** ॥ **इत्येव वक्तव्यमिति** । उपासनं कुर्वीतेति वचनमधिकमित्यर्थः ।

**च०— ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ** ॥ ननु भुक्त्वा व्रजन्तीत्यादाविव जानातिभवत्युपस्थाप्यक्रिययोरकर्तृकताविग्रहेण कथमयं निर्देशः सङ्गच्छत इत्याशङ्क्य यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते इत्याद्यसमानकर्तृकक्रियावगमस्थलेपि क्त्वानिर्देशदर्शनेन क्रियागतैककर्तृकत्वस्य तदतन्त्रतया न क्षतिरिति सत्यामपि समाहितौ तत्समानकर्तृकप्रकृत्यन्तरोपस्कारेण तत्सामञ्जस्यमुपपादयति **विज्ञायेतीति** । व्याचक्षाणा अवतारयन्ति । उपासनपासनपदस्य प्रथमान्तार्थमुख्यविशेष्यकलकारोप-

स्थाप्यभवनकर्तृताप्रकारकबोधाभिप्रायेण योजयित्वा संप्रति तत्पदस्य द्वितीयान्तताश्रयणेन तदुपस्थाप्यस्य तादृशक्रियाकर्तृतानापन्नतया निरूपकतया तादृशविभक्तिप्रत्याय्यमानकर्मत्वान्वितक्रियाकर्तृप्रत्यायकप्रथमान्तपदाध्याहारेण समानकर्तृकतामुपपादयति **उपासनमिति**। तत्पदस्य द्वितीयान्ततायामपि तदर्थान्वयिप्रत्यायकविधिप्रत्ययान्तपदोपस्कारेणैव नैराकाङ्क्ष्याद्भवेदित्यस्योत्तरार्थतोपगमे पूर्वकल्पावधिकलाघवं मन्वानः कल्पान्तरमाश्रयते **उपासनमिति**।

**सु० — यथाश्रुत एवार्थोऽस्तु किं विशेषणेनेत्यत आह** तत्रेति।

**अनु० —** तत्राखिलस्य विज्ञप्तिः सम्यग्ब्रह्मण एव हि ॥
तदन्येषां यथायोगमखिलज्ञप्तिरिष्यते।

**तत्रोपासकेषु यस्मात्सम्यगखिलस्य वेदस्य विज्ञप्तिर्ब्रह्मण एव युक्ता भवेन्नान्येषां तस्मादन्येषां** यथायोगं **यथाशक्त्येवाखिलज्ञप्तिरेष्टव्या। एतदुक्तं भवति। सर्वाधिकारिसाधारणं तावदिदं सूत्रम्। चोदनाद्यविशेषादियुक्तिभिस्तदवगमात्। संशयपूर्वपक्षासङ्गतत्वप्रसङ्गाच्च। न च सर्वेषां सर्ववेदविज्ञानं संभवति। वेदानामनन्तत्वात्। अल्पप्रज्ञादिमत्त्वाच्च पुंसाम्। ततो युक्तमुक्तमिति। यद्वा प्रथमवाक्य एव भवेदित्यनेनैवैषोऽर्थोऽभिहितः। यस्मादेवमेवोपपन्नं भवेदिति। ततः कस्य कीदृशी शक्तिरिति जिज्ञासायामिदं वाक्यम्। हिशब्दः प्रसिद्धौ।** योगो **योग्यता।** ज्ञप्तिर्ज्ञप्तिशक्तिः।

**शे० — विशेषणेनेति।** यथाशक्तीति विशेषणेनेत्यर्थः। नन्वस्य सूत्रस्य ब्रह्ममात्राधिकारिकत्वेन सर्वाधिकारिसाधारण्यमेव तावदसिद्धम्। तत्त्वेऽपि वा ब्रह्मण इव तदन्येषामपि निखिलवेदज्ञप्तिरेव भविष्यतीति नोक्तशङ्कापरिहारकत्वमस्येत्यतोऽभिप्रायमाह **एतदुक्तं भवतीति**। सर्वाधिकारिसाधारण्ये साधकमुक्त्वा तदनङ्गीकारे बाधकमप्याह **संशयेति**। अन्यथेति शेषः। सर्वाधिकारिसाधारणत्वाभावे ब्रह्ममात्राधिकारिकत्वे चोक्तसंशयपूर्वपक्षयोरसङ्गतत्वापातात्। उक्तसंशयपूर्वपक्षानुरोधेन सूत्रे सर्वेषामधिकारिणां सर्वशाखाध्ययनादेरेव वक्तव्यतयाऽधिकारिविशेषस्य तदुक्तेरसङ्गतत्वादिति भावः। न च संशयपूर्वपक्षावपि व्यक्तिविशेषनिष्ठावेव किं न स्यातामिति वाच्यम्। चोदनाद्यविशेषादियुक्तिभिः साधारण्येनैव तयोः कर्तव्यत्वावगमात्। एतदभिप्रायेणैव चोदनाद्यविशेषादित्युक्तिभिरेव साधारण्यमुपपादितमिति ज्ञेयम् ॥ **युक्तमिति**। यथाशक्त्यखिलान्वेदान्विजानीयादित्युक्तं युक्तमित्यर्थः। तत्तदधिकारिशक्तिप्रदर्शनपरस्य तत्राखिलस्य विज्ञप्तिरित्यादिमूलग्रन्थस्य कस्य कीदृशी शक्तिरिति जिज्ञासापूर-

कतया प्रवृत्तिवर्णनमेव स्वरसम् । न तु यथाश्रुत एव सूत्रार्थोऽस्तु किं यथाशक्तिविशेषणेनेत्याक्षेपनिवर्तकतयाऽपीत्यपरितोषात्प्रकारान्तरेण योजयति **यद्वेति** ॥ **एषोऽर्थ इति** । यथाश्रुत एव सूत्रार्थोऽस्तु किं विशेषणेनेत्येतच्छङ्कापरिहारायोक्तोऽर्थ इत्यर्थः । अनेन ननु यथाश्रुत एव सूत्रार्थोऽस्तु किं विशेषणेनेत्यत आह **भवेदितीति** वाक्ययोजना सूचिता भवति । कथं भवेदित्यनेनैषोऽर्थोऽभिहित इत्यतोऽध्याहारेण तद्वाक्यं योजयति **यस्मादिति** । यस्माद्यथाशक्त्यखिलवेदज्ञानपूर्वकमुपासनं कर्तव्यमित्येवोपासनं भवेत्तस्माद्यथाशक्तीति विशेषणमावश्यकमित्यर्थः । कीदृशी शक्तिरिति प्रश्नस्य ज्ञाप्तिरिति कथमुत्तरमित्यतस्तद्व्याचष्टे **ज्ञप्तिरिति** ।

**स० — संशयेति** । ध्यानोपासनार्थिभिः किं स्वस्वशाखा एवाध्ययनश्रवणमननैर्ज्ञातव्या किंवा सर्वे वेदा इति संशये शाखाभेदस्य सुप्रसिद्धत्वात् स्वस्वशाखाध्ययनाद्येव कर्तव्यमिति पूर्वपक्षे च सति अधिकारिविशेषस्यैव सर्वशाखाध्ययनाद्युक्तौ संशयपूर्वपक्षासङ्गत्यापत्या सर्वाधिकारिसाधारण्यमावश्यकमिति भावः । कीदृशी शक्तिरित्यस्य ज्ञप्तिरिति कथमुत्तरमित्यत आह **ज्ञप्तिरिति** ।

**प० — यथाश्रुत इति** । सर्ववेदान्तप्रत्ययमिति सूत्रे योज्यम् । **विशेषणेनेति** । यथाशक्तीतिविशेषणेनेत्यर्थः । यथायोगमित्यस्य व्याख्या यथाशक्त्येवेति ॥ **चोदनाद्यविशेषादियुक्तिभिरिति** । आत्मेत्येवोपासीतेत्यादिविधीनां सर्वाधिकारिसाधारण्यादित्युक्तयुक्त्या ज्ञानविध्यर्थे तत्र तत्रोक्तार्थवादादिरूपयुक्तिभिश्चेत्यर्थः । **संशयेति** । अस्य सूत्रस्योत्तराधिकरणस्येव ब्रह्मासाधारण्यपक्षे प्रागुक्तसंशयपूर्वपक्षयोरसङ्गतत्वापातादित्यर्थः । सिद्धान्तार्थश्चासङ्गतश्च प्राप्नोतीत्यत आह **न च सर्वेषामिति** । चोद्योत्तरत्वेन व्याख्यातमेव वाक्यं पूर्वोक्तार्थविवृतिपरत्वेन व्याचष्टे **यद्वेति** ॥ **एषोऽर्थ इति** । यथाश्रुत इत्यादिना कृतचोद्यनिवर्तकत्वेन यस्मात्सम्यगित्यादिनोक्तार्थः । तदेव संग्रहेण व्यनक्ति **यस्मादेवमिति** ॥ **इदमिति** । 'तत्राखिलस्य विज्ञप्तिरि'त्यादिवाक्यमित्यर्थः ।

**या० —** साधकमुक्त्वा विपक्षे बाधकमप्याह **संशयपूर्वपक्षेति** । अन्यथेति शेषः । सर्वाधिकारिसाधारणत्वाभावे ब्रह्मादिमात्राधिकारिकत्वे चोक्तसंशयपूर्वपक्षयोरसङ्गतत्वापातादित्यर्थः । यथायोग्यमित्यस्य यथाशक्त्यैवेति व्याख्यानं न स्वरसमित्यरुच्याऽऽह **यद्वा प्रथमवाक्य एवेति** ॥ **एषोऽर्थ इति** । यथाश्रुत एवार्थोऽस्तु किं विशेषणेनेत्येतच्छङ्कापरिहारायोक्तोऽर्थ इत्यर्थः । कथमभिहित इत्यतस्तद्दर्शयति **यस्मादेवमिति** । एवमेव यथाशक्तीति विशेषणदान एवोपपन्नं भवेदेतत्सूत्रोक्तं प्रमेयमुक्तरीत्येति शेषः । तस्मात् 'यथाशक्त्यखिलान्वेदान्विज्ञायोपासनं कुर्वीतेति पूर्वेण सम्बन्धः । अनेन भवेदित्यस्य न पूर्वेणान्वयो नाप्युत्तरवाक्येन किन्तूक्तरीत्याऽध्याहारसाहित्येन पृथग्वाक्यत्वमित्युक्तं भवति **ज्ञप्तिर्ज्ञप्तिशक्तिरिति** । अत्रेदं न स्वरसमतः पूर्वव्याख्यानमित्यवगन्तव्यम् ।

श्री० — **यथाश्रुत एवेति** । सर्ववेदान्तेत्युक्तत्वात्तदनुसारेणाखिलान्वेदान्विज्ञायेत्येवोच्यताम् । तथा च निरुपचरितसर्ववेदज्ञानरूपार्थ एवास्त्वित्यर्थः । **किं विशेषणेनेति** । यथा शक्तीति विशेषणेन किमित्यर्थः ॥ **संशयेति** । ब्रह्ममात्राधिकारिकत्वे ध्यानोपासनार्थिभिः स्वस्वशाखा एव श्रवणमननै-र्ज्ञातव्याः । किं वा सर्वे वेदा इति संशयोऽसङ्गतः । स्वस्वशाखा एव सर्वैर्ज्ञातव्या इति पूर्वपक्षश्चासङ्गत इत्यर्थः ॥ **युक्तमुक्तमिति** । उक्तं यथाशक्तीति विशेषणं युक्तमित्यर्थः ॥

**सु० — उपासनायोग्यतासम्पत्तये खल्वत्र सर्वविज्ञानमुच्यते । न चाल्पवेदज्ञस्य सा भवति । 'सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्धचेदि'त्यादिश्रुतेः । अतः सर्वशब्दो मुख्यार्थ एव व्याख्यातव्यः । अत एव यद्यप्यस्मदादीनामस्मिञ्जन्मनि सर्व-वेदज्ञानमसंभवि । तथाऽपि तादृशं जन्म कल्पनीयं यत्रेदं संभवतीत्यत आह** तावतेति ।

अनु० — तावतोपासने योग्यो भवेदेवाखिलः पुमान् ।

**यथाशक्ति विज्ञानमात्रेण । अयमभिसन्धिः । ध्यानोपासने वेदज्ञानस्य कथमुपयोगः । ध्येयाज्ञाने ध्यानायोगादिति चेत् । तर्हि सर्वेषां सर्ववेदार्थध्यानाभावस्य वक्ष्यमाणत्वान्न सर्ववेदज्ञानमुपयुक्तम् । सत्यम् । तथाऽप्यधिगतैकशाखस्य शाखान्तरेऽन्यथोक्तिशङ्कया ध्यानासंभवात्सर्व(वेद)परिज्ञानमावश्यकमिति चेन्न । गतिसामान्यानुमानेनैव शङ्कानिरासस्यो-क्तत्वात् । अन्यथा परस्परविरोधेन वेदाप्रामाण्यापत्तेः । ततः श्रुतिर्यथाशक्तीत्येव व्याख्येयेति ।**

शे० — शङ्कते **उपासनेति** । ननु यदि यथाशक्ति ज्ञानमात्रेणोपासनयोग्यतासम्पत्तिस्तर्ह्युदा-हृतश्रुतिविरोध इत्यतः श्रुतेर्यथाशक्तिविषयतया सावकाशतां वक्तुं सर्वपरिज्ञानस्योपासनयोग्यतासम्पत्ता-वनुपयोगं तावदुपपादयति **अयमभिसन्धिरिति** ॥ **वक्ष्यमाणत्वादिति** । प्रियशिरस्त्वाद्यप्राप्तिरित्यादि-नेति शेषः ॥ **गतिसामान्यानुमानेनेति** । विप्रतिपन्नाः शाखा भगवत्पराः शाखात्वात्सम्प्रतिपन्नशाखा-वदिति गतिसामान्यानुमानेनेत्यर्थः ॥ **उक्तत्वादिति** । 'अन्योऽप्यल्पमतिः शाखाचतुष्पञ्चगतं वसु । जानन्ननुमितत्वेन ब्रूयात्तस्य प्रसादत' इत्यादिनेति शेषः ॥ **तत इति** । सर्ववेदपरिज्ञानस्य ध्यानोपासने अनुपयोगादित्यर्थः ।

स० —शङ्कते **उपासनेति** । **वक्ष्यमाणत्वादिति** । आनन्दादयः प्रधानस्येत्यत्रेति शेषः । **गति-सामान्यानुमानेनेति** । विप्रतिपन्नाः शाखा भगवत्पराः शाखात्वात् संप्रतिपन्नशाखावदित्येवं रूपेणेत्यर्थः । **उक्तत्वादिति** । को नाम गतिसामान्यमित्यादिनेति शेषः । **अन्यथेति** । गतिसामान्याभाव इत्यर्थः । तर्हि सर्वैश्च वेदैः परम इत्युदाहृतश्रुतेः का गतिरित्यत आह **ततः श्रुतिरिति** ।

**प०** — उत्तरवाक्यमवतारयितुं चोदयति **उपासनायोग्यतेत्यादि** । तावतेत्यस्यार्थः यथाशक्तिज्ञानमात्रेणेति । तावतेति वाक्येनोक्तचोद्यनिराकृतेरस्फुटत्वादाह **अयमभिसन्धिरिति** ॥ **वक्ष्यमाणत्वादिति** । न वा प्रकरणभेदादित्यादाविति भावः । शङ्कते **सत्यमित्यादिना** । प्रागुक्ता श्रुतिरुत्तमाधिकारिविषया । सर्वाधिकारिकत्वपक्षे तु सापि यथाशक्तीतिव्याख्येयेत्याह **तत इति** । सर्वज्ञानस्य सर्वेषामनुपयोगाच्छाखान्तरे अन्यथात्वशङ्कानुदयाच्चेत्यर्थः । **श्रुतिः** 'सर्वैश्च वेदैरि'ति श्रुतिः ।

**या०** — उत्तरवाक्यमुत्थापयितुं शङ्कते **उपासनायोग्यतेति** ॥ **यथाशक्तिज्ञानमात्रेणेति** । उपासनायोग्यतासम्पत्तेरेतावन्मात्रेणापि भवतीत्यर्थः । नन्वेवमुदाहृतश्रुतेः का गतिरित्यतः साऽपि यथाशक्तीत्येव व्याख्येयेति वक्तुं तत्रत्यसर्वशब्दस्य मुख्यार्थताव्याख्यानं न ध्यानार्थमुपयुज्यत इति तावदाह **अयमभिसन्धिरित्यादि** ॥ **वक्ष्यमाणत्वादिति** । न वा प्रकरणभेदादित्यत्रेति शेषः ॥ **तत इति** । सर्ववेदपरिज्ञानस्य ध्याने उपयोगाभावादित्यर्थः ॥

**श्री०** — **अन्यथेति** । गतिसामान्यानुमानेन शङ्कानिरासाभाव इत्यर्थः ॥ **ततः श्रुतिरिति** सर्वैश्च वेदैरिति श्रुतिरित्यर्थः ।

**सु०** — **यथाशक्ति वेदज्ञानं भगवदुपासनोपयुक्तं न सर्ववेदज्ञानावश्यम्भाव इत्यत्र पुराणवाक्यमपि पठति** महत्त्वस्येति ।

**अनु०** — महत्त्वस्य परं पारं विदित्वैव जनार्दनः ॥
स्तोष्यतामेति तुष्टत्वमिति नास्त्येव नारद ॥
किन्तु निश्चलया भक्त्या ह्यात्मज्ञानानुरूपतः ॥
यः स्तोष्यति सदा भक्तस्तुष्टस्तस्य सदा हरिः ॥
इत्यादिवाक्यसन्दर्भाद्यथायोग्याखिलज्ञता ॥

**महत्त्वस्य परं पारं विदित्वेति सर्ववेदज्ञत्वमुच्यते । वेदेन विना भगवन्महत्त्वस्य ज्ञातुमशक्यत्वात् । स्तोष्यतामिति** ध्यानस्याप्युपलक्षणम् । **समानन्यायत्वात् । नास्त्येवेति नियमनिषेधः । यथायोग्याखिलज्ञता** ध्यानोपयोगिनीति **विज्ञायत इति शेषः । यथायोग्येति कथम् । अव्ययीभावस्य नपुंसकत्वेन यथायोग्यमिति** भाव्यम् । **सत्यम् । यथायोग्याखिलज्ञतेति समासोऽयमित्यदोषः । यद्वा यथा यादृशी योग्या तथैवेति भिन्ने एवैते पदे ।**

**शे०**— नन्वत्र महत्त्वं ज्ञात्वा स्तोष्यतां जनानां जनार्दनस्तुष्टत्वमेतीति नास्त्येवेत्युक्त्या भगवदुपासने महत्त्वज्ञानानवश्यम्भावप्राप्तावपि सर्ववेदज्ञानानवश्यम्भावाप्राप्तेर्नास्योक्तार्थसाधकत्वमित्यत आह **महत्त्वस्येति** । (महत्त्वस्य परम्परां निरुपचरितमहत्त्वम्) । ननु तथाऽप्यनेन प्रमाणेन भगवत्स्तुतौ सर्ववेदज्ञानानवश्यम्भावप्राप्तावपि भगवद्ध्याने तदप्राप्तेर्नास्य प्रकृतोपयोग इत्यत: स्तोष्यतामित्यस्य ध्यायिनामित्येतदुपलक्षणत्वान्नानुपपत्तिरित्याह **स्तोष्यतामितीति** । तत्र निमित्तमाह **समानेति** । स्तुतेरिव ध्यानस्यापि सर्ववेदार्थज्ञानव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वादित्यर्थ: । चतुर्मुखस्य भगवद्ध्याने सर्ववेदपरिज्ञानावश्यम्भावान्नास्त्येवेति तन्निषेधोक्तिरयुक्तेत्यत आह **नियमनिषेध इति** । विदित्वैवेत्येवकारलब्धो नियम एव ध्याने निषिध्यते न सर्ववेदपरिज्ञानमतो नानुपपत्तिरिति भाव: । यथायोग्येत्यखिलज्ञतेति च द्वे एते पदे इति मन्वान: शङ्कते **यथायोग्येति कथमिति** । का कथंतेत्यतस्तामाह **अव्ययीभावस्येति** । अव्ययीभावश्चेति सूत्रेणाव्ययीभावस्य नपुंसकत्वविधानान्नपुंसकत्वे ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वतायां नाव्ययीभावादतोम्त्वपञ्चम्या इति तत्परस्य सुपोऽम्भावस्यावश्यकत्वादित्यर्थ: । **अदोष इति** । ततश्च कृत्तद्धितसमासाश्चेति समासस्य प्रातिपदिकतायां सुपो धातुप्रातिपदिकयोरिति प्रातिपदिकावयवस्य सुपो लोपे तदादेशस्यामोऽपि निवृत्तेर्यथायोग्याखिलज्ञतेति युक्तमिति भाव: । यथायोग्यपदेऽव्ययीभावसमासमङ्गीकृत्य यथायोग्याखिलज्ञतेत्यस्य साधुत्वं समर्थितमिदानीं तु **यथेति** योग्येति च भिन्नपदत्वाश्रयणान्नायमव्ययीभाव इति न नपुंसकत्वादिप्रसङ्ग इत्याशयेनाह **यद्वेति** ॥ **यादृशीति** । ततश्चात्र यथाशब्दस्य सादृश्यार्थत्वान्न समासप्रसक्ति: ॥ यथाऽसादृश्य इति असादृश्यार्थकस्यैव तस्य तत्स्मरणादिति भाव: ।

---

**स०**— अधिकारिविशेषं प्रति तथात्वान्नास्त्येवेत्ययुक्तमित्यत आह **नियमेति** ॥ **स्तोष्यतामिति** । स्तोष्यतेऽसौ स्तोष्य: तस्य भावस्तथा तामिति स्तुष् धातो: कर्मणि यत्प्रत्ययो ज्ञेय: । यद्यपि ष्टुञ्स्तुतावित्येव धातु: पठ्यते तथापि स्तुष् स्तुताविति धात्वन्तरस्येदं रूपं ज्ञातव्यम् । अथवा ष्टुञ् स्तुतावित्यस्मात् स्तूयतेऽसौ स्तुत्य इति क्यपा भवितव्ये स्यप्रत्ययो द्रष्टव्य: । तथाच स्तोष्यतामेति तुष्टत्वं चैतीत्यर्थ: । स्तोष्यतां स्तुतियोग्यतामिति व्याख्याने तु निमित्तं नोपलभामहे । स्तोत्रं कुर्वतां तथा ध्यानं च कुर्वतां तुष्टत्वमेतीत्येव वाक्यार्थप्रतिभासात् । यस्तोष्यति सदा भक्तस्तुष्टस्तस्य सदा हरिरित्युत्तरवाक्यविरोधाच्चेति यत्किञ्चिदेतत् ।

**प०**— कथमनेन सर्ववेदज्ञत्वलाभ इत्यत आह **वेदेन विनेति** ॥ **ध्यानस्यापीति** । ध्यायतामित्यपि ज्ञेयमित्यर्थ: ॥ **समानन्यायत्वादिति** । स्तुतेरिव ध्यानस्यापि तुष्टिहेतुत्वात् तत्रैकस्याभावेन

अन्यस्यापि तथात्वावश्यंभावादिति भावः ॥ **नियमनिषेध इति** । महत्त्वस्य परं पारं विदित्वैव स्तुतिध्याने कुर्वताम् हरिस्तुष्टो भवतीत्ययं नियम एव निषिध्यते । कस्यापि सर्ववेदज्ञानपूर्वकं स्तुतिध्याने न स्तः इति वास्तवकथनपरत्वाङ्गीकार इत्यर्थः । अन्यथा ब्रह्मणस्सर्ववेदज्ञानपूर्वकं स्तुतिध्याने कुर्वतः फलाभावप्रसङ्गादिति भावः । **योग्यं** संभवः तमनतिक्रम्येत्यर्थे यथाऽसादृश्ये इत्यनेनाव्ययीभावसमासेन भिन्नपदमिति मत्वा शङ्कते **यथायोग्येति कथमिति** । **नपुंसकत्वेनेति** । अव्ययीभावश्चेति सूत्रेण नपुंसकत्वविधानादिति भावः ॥ **समासोयमिति** । यथायोग्यमखिलज्ञता यथायोग्याखिलज्ञतेति विशेषणं विशेष्येण बहुलमिति विशेषणसमासे सुपोधातुप्रातिपदिकयोरिति सुपो लुकि स्वमोर्नपुंसकादित्यमादेशस्य स्थान्यभावेनाभावे यथायोग्याखिलज्ञतेति भवतीति भावः ॥ **तथैवेतीति** । यथाशब्दोऽत्राध्याहार्य इति भावः ।

या० — **सर्ववेदज्ञत्वमुच्यत इति** । अनेन मूले सर्वैर्वेदैरिति शेषः सूचित इति ज्ञातव्यम् । स्तोष्यतामिति षष्ठ्यन्तम् ॥ **समानेति** । वेदार्थज्ञानव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपस्योपलक्ष्यतावच्छेदकस्य स्तुताविव ध्यानेऽपि समानत्वादित्यर्थः ॥ **नियमनिषेध इति** । विदित्वैवेत्येवकारेण लब्धो नियमो निषिध्यत इत्यर्थः । अन्यथा चतुर्मुखस्य सर्ववेदज्ञस्यापि स्तुत्यादिसद्भावेन यथास्थितनिषेधोऽनुपपन्न इति भावः **नपुंसकत्वेनेति** । अव्ययीभावश्चेति सूत्रेणाव्ययीभावस्य नपुंसकत्वे ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वतायां नाव्ययीभावादतोम्त्वपञ्चम्या इति तत्परस्य सुपोऽम्भावे च सति यथायोग्यमिति भवितव्यमित्यर्थः ॥ **समासोऽयमिति** । समासत्वे सुपो धातुप्रातिपदिकयोरिति सुपो लोपे तदादेशोऽम् न भवतीति भावः ।

श्री० — महत्त्वस्य परं पारमित्यस्य निरुपचरितमहत्त्वमित्यर्थः । कथमनेन सर्ववेदज्ञत्वमुक्तमित्यत आह **वेदेन विनेति** । तथा चान्यथाऽनुपपत्त्या लब्धमिति भावः ॥ **समानन्यायत्वादिति** । वेदेन विना भगवन्महत्त्वस्य ध्यातुमशक्यत्वादित्यर्थः ॥ **नियम इति** । विदित्वैवेत्यनेनोक्तनियमेत्यर्थः । **भाव्यमिति** । क्रममनतिक्रम्य वर्तमानं यथाक्रममितिवद्योग्यतामनतिक्रम्य वर्तमानं यथायोग्यमिति वक्तव्यमित्यर्थः । **समासोऽयमिति** । न भिन्नपदमित्यर्थः । तथा च यथायोग्यमखिलज्ञता यथायोग्याखिलज्ञतेति विग्रहो द्रष्टव्यः । यथेत्येकं पदं योग्येत्यपरं पदमित्येते पदे भिन्ने एवेत्याह **यद्वेति** ।

च० — यथायोग्येत्यस्योत्तरपदासमस्ततां विपर्यस्यन्नाशङ्कते **यथायोग्येति** ॥ **अव्ययीभावस्येति** । अव्ययीभावश्चेति योगेन तस्य क्लीबत्वे ह्रस्वो नपुंसक प्रातिपदिकह्रस्वतायां नाव्ययीभावादिति तदुत्तरसुपोऽम्भावस्यावश्यवश्यकत्वादित्यर्थः । **अदोष इति** । समासस्य कृत्तद्धितेति प्रातिपदिकतया 'सुपो

धात्वि'ति प्रातिपदिकावयवसुब्लोपतस्यानिकाम्भावाप्रसङ्गेन न क्षतिरिति भावः। यथेत्यस्य व्यस्तोपगत्यापि न क्षतिरित्याह **यद्वेति**।

**सु० — नन्वत्रात्मज्ञानमेवोपासनोपयोगित्वेनोच्यते। न तु यथाशक्तिज्ञानम्। अतो न प्रकृतोपयोगीदं वाक्यमित्यत आह** आत्मेति।

**अनु०** — आत्मज्ञानानुरूपत्वं यथाशक्तिविचारणात् ॥

**अत्रोपासनस्यात्मज्ञानानुरूपत्वं नाम यथाशक्ति वेदविचारणाद्भावित्वमेव। अन्यथा वाक्यस्यासङ्गतत्वप्रसङ्गादिति भावः। सर्वज्ञाननियमे निराकृते** 'किन्त्वि'**त्याशङ्कायां यथाशक्तिज्ञानं हि वक्तव्यम्। न त्वात्मज्ञानम्। न हि परज्ञानं प्राङ् निराकृतम्। तस्मादात्मज्ञानं नामात्मयोग्यं ज्ञानमित्येव व्याख्येयमिति।**

**शे० — अन्यथेति**। आत्मज्ञानस्यैवोपासनोपयोगित्वाभिधायकत्व इत्यर्थः। असङ्गतत्वप्रसङ्गमेव विवृणोति **सर्वेति**।

**प० — नन्वत्रेति**। पुराणवाक्य इत्यर्थः॥ **वाक्यस्येति**। उदाहृतपुराणवाक्यस्येत्यर्थः। असङ्गतत्वं व्यनक्ति **सर्वज्ञानेति**। महत्त्वस्येत्यादिश्लोकेन निराकृते इत्यर्थः॥ **प्रागिति**। **पूर्वश्लोक** इत्यर्थः।

**या० —** असङ्गत्वप्रसङ्गमेव दर्शयति **सर्वज्ञाननियम इति**।

**श्री० — उच्यत इति**। आत्मज्ञानानुरूपत इत्युदाहृतवाक्य इत्यर्थः॥ **निराकृत इति**। उदाहृतवाक्ये महत्त्वस्येत्यारभ्य नारदेत्यन्तेन निराकृते सतीत्यर्थः॥

**सु० — कुतः सर्ववेदज्ञानमित्यतश्चोदनाद्यविशेषादित्युक्तम्। तत्र शाखाभेदस्य सुप्रसिद्धत्वाच्चोदनादिकमपि विशेषनिष्ठं व्याख्यातव्यमित्यतो युक्त्यन्तरमाह सूत्रकारः** ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्चेति ॐ॥ **तत्र हीत्यन्तं व्याचष्टे** वेद इति।

**अनु० — ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॐ॥**

वेदः कृत्स्नोऽधिगन्तव्यः स्वाध्यायाध्ययनं भवेत् ॥
इत्यादिवाक्यवैयर्थ्यमन्यथा न निवार्यते ॥

**अनेन 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मने'ति स्मृतिमुपादत्ते। स्वाध्यायाध्ययनं कर्तव्यं भवेदित्यनेन 'स्वाध्यायोऽध्येतव्य'** इति **श्रुतिम्**। अन्यथा **स्वस्वशाखामात्रज्ञानाङ्गीकारे**।

एतदुक्तं भवति । स्वाध्यायस्य **स्वाध्यायविधेस्तथात्वेन सामान्यतः सर्ववेदाध्ययनविधायकत्वेन हेतुना सर्वज्ञानमङ्गीकरणीयम् ।** अध्ययनस्यार्थज्ञानपर्यन्ततास्थितेः । **स्वस्वशाखामात्रज्ञानाङ्गीकारे चास्य विधेर्वैयर्थ्यापत्तेः । न च वाच्यं शाखाभेदस्य प्रसिद्ध्या स्वाध्यायपदमपि तथैव** व्याख्येयमिति । **स्मृत्यनुरोधेनैव श्रुतिव्याख्यानस्य** न्याय्यत्वात् । **स्मृतौ च कृत्स्नपददर्शनात् । शाखाभेदस्याशक्तिनिमित्तत्वोपपत्तेरिति ।**

**शे० — ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॐ ॥ विशेषणनिष्ठमिति ।** यद्विध्यादिकं यच्छाखागतं तत्तच्छाखिनः प्रत्येवोपासनविधायकं न सर्वान्प्रत्येत्येवं विशेषनिष्ठमित्यर्थः । ननु विधेरक्षरग्रहणमात्रपरतया चरितार्थत्वसम्भवान्न त्वदुक्तमर्थज्ञानमङ्गीकार्यमित्यत आह **अर्थज्ञानपर्यन्ततास्थितेरिति ।** अन्यथा विचारशास्त्रस्यावैधत्वापत्त्याऽनारम्भणीयत्वप्रसङ्गादिति भावः ।

अथातो धर्मजिज्ञासेत्यत्र स्थितं चोदनालक्षणोऽर्थो धर्म इत्यारभ्यान्वाहार्ये च दर्शनादित्येतदन्तं शास्त्रमस्य विषयः । तत्रैतन्मतद्वयम् । अध्ययनविधिरक्षरग्रहणमात्रपर्यवसायीति केचित् । अपरे त्वर्थज्ञानरूपदृष्टप्रयोजनायेदमध्ययनं विधीयते । अर्थज्ञानं च विचारमन्तरेण न सम्भवति । ततो विधिर्विचारशास्त्रप्रयोजक इति । अत्र विचारशास्त्रमनारम्भणीयमारम्भणीयं वेति चिन्ता तदर्थमध्ययनं विधत्ते उत दृष्टार्थमिति । यद्यदृष्टार्थं स्वाध्यायाध्ययनं विधीयते ततस्तन्मात्रेणैव शास्त्रसमाप्तेरधीत्य स्नायादिति वचनबलेन समावर्तितव्यम् । अवैधश्चायं विचारोऽनारम्भणीयः । यदि चाक्षरग्रहणपरम्परोपजायमानवाक्यार्थज्ञानायाध्ययनं विधीयते ततस्तस्य विचारमन्तरेणासम्भवादध्ययनविधिनैवार्थाद्विचारो विहित इति विचारयितव्यत्वाद्धर्मस्य विचारशास्त्रमारम्भणीयमिति । पूर्वपक्षस्तु 'विनाऽपि विधिना ज्ञानलाभान्न हि तदर्थता । कल्प्यस्तु विधिसामर्थ्यात्स्वर्गो विश्वजिदादिवत् । तथा हि । अदृष्टार्थ एवायमध्ययनविधिर्न दृष्टार्थः । विनैव विधिनाऽध्ययनस्यार्थज्ञानहेतुताया लोकत एव सिद्धत्वेन विध्यनपेक्षतयाऽपूर्वविधित्वानुपपत्तेः । न चावघातविधिवन्नियमार्थता तर्ह्यस्तु लिखितपाठादिनाऽप्यर्थज्ञानसम्भवेन गुरुपूर्वकाध्ययनेनैवैतत्कुर्यादिति तत्सम्भवादिति वाच्यम् । अवघातो हि दर्शापूर्वे नियम्यतेऽवघातनिष्पन्नैरेव तण्डुलैरपूर्वं सिध्यतीति न तण्डुलस्वरूपे विनाऽप्यवघातं तण्डुलस्वरूपसिद्धेर्मानान्तरगृहीतत्वेन तद्विरोधात् । न चेह तथा । विनाऽप्यध्ययनं लिखितपाठादिना ज्ञानदर्शनेन तत्स्वरूपे नियमासम्भवात् । न च तर्ह्यवघातस्य दर्शापूर्व इव क्रत्वपूर्वे नियमोऽस्त्वधीतैरेव वेदैरवगतानि कर्माणि फलदानीति तत्सम्भवादिति वाच्यम् । अनारभ्याधीततयाऽध्ययनस्याक्रत्वर्थत्वात् । नाप्यध्ययनस्य क्रत्वर्थत्वे श्रुत्यादिकं मानमस्ति । तस्माद्दृष्टार्थत्वेऽपूर्वनियमतासम्भवाददृष्टार्थत्वम् । किञ्चाधीत्य स्नायादित्यध्ययनस्नानयोर्नैरन्तर्यं बोधयन्ती स्मृतिरन्तरार्थज्ञानसम्पादनायासंविद्विरुणद्धि । तस्मादपूर्वद्वारा स्वर्गार्थमध्ययनं न विधीयत इति विचारस्या-

वैधत्वाद्विचारशास्त्रमनारम्भणीयमिति । सिद्धान्तस्तु 'लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना । विधेश्च नियमार्थत्वान्नानर्थक्यं भविष्यति' ।

यदुक्तं ज्ञानस्वरूपे क्रत्वपूर्वे वा न नियमः सम्भवतीति तदनुमन्यामहे । किन्तु योऽयमग्निहोत्रादिष्वधीतवेदानां त्रैवर्णिकानामेवाधिकारो नानधीतवेदानां शूद्राणामित्यधिकारनियमः स प्रयोजनमध्ययनविधेः । तथा हि । असत्यध्ययनविधावग्निहोत्रादिशास्त्राणि विद्वांसमलभमानान्यविद्वांसमेवाधिकृत्य विद्यामन्तरेणानुष्ठानासम्भवाद्विद्यामाक्षिपन्त्यविशेषात् चतुर्वर्णान्यधिकुर्युः । सति त्वध्ययनविधौ त्रैवर्णिकानामेव विदुषामधिकारो भवति न तुरीयस्य । तथा हि । वसन्ते ब्राह्मणमुपनयीतेत्यादौ द्वितीयानिर्देशादुपनयनस्य संस्कारकर्मत्वं संस्कृताश्च त्रैवर्णिकाः किमस्माभिः कर्तव्यमित्यपेक्षन्ते । शेषस्य परार्थत्वात्तदाश्रयत्वाच्च तेषां तत्सन्निधौ चाध्ययनमनिर्दिष्टकर्तृकं विधीयमानं कर्तारमपेक्षते । तत्राकाङ्क्षासन्निधियोग्यत्वैरेव ज्ञायते । त्रैवर्णिकैरेवोपनीतैरध्ययनेनाक्षरग्रहणादिपरम्परयाऽर्थज्ञानं कर्तव्यमिति । एवञ्च फलवदध्ययनकर्तृभूतमाणवकसंस्कारत्वादुपनयनमध्ययनाङ्गम् । अध्ययनमपि दृष्टफलज्ञानार्थम् । अर्थज्ञानं त्वनुष्ठानौपयिकत्वात्प्रसिद्धफलमेवेति सर्वेषां फलवत्त्वम् । एवञ्च त्रैवर्णिकेषु विद्वत्सु लब्धेषु न चतुर्थस्य विद्यामाक्षिपन्त्यग्निहोत्रादीनि किन्तु त्रैवर्णिकानेव विदुषोऽधिकुर्वन्ति ततोऽग्निहोत्रादिकर्मानुष्ठानौपयिकार्थज्ञानावसानामध्ययनमध्ययनविधिना विधीयत इति विचारमन्तरेणार्थज्ञानानुपपत्तेरध्ययनविधिरेव विचारमाक्षिपन्स्मार्तमप्यध्ययनसमावर्तनयोर्नैरन्तर्यं बाधत इति सिद्धमप्यध्ययनानन्तरं वैधो विचारः कर्तव्य इति विचारशास्त्रमारम्भणीयमेवेति ।

ननूत्तरत्र टीकायां योऽनधीत्य द्विजो वेदानित्याद्यकरणे प्रत्यवायस्मरणेनाध्ययनस्य नित्यताया अप्युक्तत्वात्कथं तस्यार्थज्ञानपर्यन्तत्वमिति चेत् । शृणु । अर्थज्ञानार्थत्वेऽपि तस्य पुस्तकपाठादिनाऽपि सम्भवेनाध्ययनविधिवैयर्थ्यापत्त्या तदवैयर्थ्यायाधीतेनैव वेदेनेतिकर्तव्यतां ज्ञात्वाऽनुष्ठितं कर्म फलायालमित्यादिनियमात् । असत्यध्ययने यथोक्तनित्यादिकर्मानुष्ठानासिद्ध्या प्रत्यवायश्रवणमुपपन्नं तथा चार्थज्ञानार्थस्याप्यध्ययनस्य फलतो नित्यत्वमित्यदोषः । अपरे त्वनध्ययनेन सन्ध्याऽनुपासनेनेव साक्षात्प्रत्यवायस्मरणेनाध्ययनस्यादृष्टार्थत्वेऽप्यर्थज्ञानस्यापि दृष्टत्वादपेक्षितत्वाच्च तादर्थ्यमपीत्युभयार्थत्वं पशुपुरोडाशादिवदित्याहुः । इतरे तु श्रुतिबलाद्दध्यादेः क्रत्वर्थत्वपुरुषार्थत्ववद्दर्शपौर्णमासादेर्नित्यत्वकाम्यत्ववच्चाध्ययनस्याप्युभयार्थता प्रत्यवायस्येव सर्वे वेदा यत्पदमामनन्तीत्यादिश्रुत्या वेदैश्च सर्वैरहमेव वेद्य इत्यादिस्मृत्या च ब्रह्मज्ञानार्थत्वस्याप्यवगमादित्याहुः । अन्ये तूक्तश्रुत्याऽध्ययनस्य ब्रह्मज्ञानार्थत्वेऽपि यदेव विद्यया करोतीत्यादिश्रुत्या ब्रह्मज्ञानस्यैवावश्यकत्वात् । ज्ञानार्थत्वेऽप्यध्ययनस्याकरणे प्रत्यवायश्रवणं युक्तमिति ब्रह्मज्ञानफलस्यापि स्वाध्यायाध्ययनस्य न टीकोक्तनित्यत्वानुपपत्तिरित्याहुः ॥ **तथैवेति** । विशेषनिष्ठमित्यर्थः । नन्वेवं शाखाभेदानुपपत्तिरित्यत आह **शाखेति** ।

प० — सूत्रशेषमवतारयति **कुत इति** । कुतो मानाज्ज्ञायत इत्यर्थः ॥ **विशेषनिष्ठमिति** । 'आत्मेत्येवोपासिते'त्यादिचोदनानां ज्ञानविध्यर्थं तत्रतत्र श्रुतार्थवादानां च समीपे काण्वैरेवं काठकैरेवमित्यधिकारिविशेषाश्रवणेपि ते चोदनादयो यस्यां शाखायां सन्ति तत्तच्छाखिनामेव ते चोदनादय इत्येवं विशेषनिष्ठम् । न तु सर्वाधिकारिसाधारणमित्यर्थः । हेतुनेत्युक्तं सर्वपरिज्ञानहेतुत्वं व्यनक्ति **अध्ययनस्येति** । गुरूच्चारणानूच्चारणरूपाध्ययनस्य स्वोच्चारणक्षमतयाऽक्षरराशिग्रहणद्वारा स्वर्गादिकमदृष्टं फलं उत वेदार्थज्ञानमिति सन्देहे दृष्टे सम्भवत्यदृष्टकल्पनायोगादर्थज्ञानमेव फलमिति अथातो धर्मजिज्ञासेति पूर्वतन्त्रीयाद्याधिकरणे निर्णीतत्वादत्राप्याद्याधिकरणे ब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इत्युक्त्या अर्थज्ञानपर्यन्तत्वस्य प्राप्तत्वाच्चेति भावः ॥ **तथैवेति** । स्वस्य योऽध्यायः शाखारूपाक्षरराशिः सोऽध्येतव्य इति व्याख्येयमित्यर्थः । 'शाखाभेदो ह्यशक्तिज' इति स्मृत्यनुरोधादाह **शाखाभेदस्येति** ।

या० — **विशेषनिष्ठमिति** । यो विधिर्यच्छाखागतः स तच्छाखिनः प्रत्येवोपासनं विधत्ते न सर्वान्प्रतीति व्याख्यातव्यमित्यर्थः ॥ ॐ **स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च** ॐ ॥ **अर्थज्ञानपर्यन्तताश्रितेरिति** । अन्यथा विचारशास्त्रस्यावैधत्वप्राप्त्याऽनारम्भणीयत्वप्रसङ्ग इति भावः । तथा **हि** । प्रमाणलक्षणे प्रथमपादे प्रथमाधिकरणे चिन्तितं विचारशास्त्रं विषयः । तत्किं विधिप्रयुक्त्याऽनारम्भणीयमुतारम्भणीयमिति संशयः । तदर्थमिदं चिन्तनीयम् । स्वाध्यायोऽध्येतव्य

---

इत्यध्ययनविधिः किमक्षरग्रहणमात्रपर्यवसायी धर्मद्वारा स्वर्गमात्रफलक उतार्थज्ञानरूपदृष्टफलार्थ एवेति । यद्यक्षरग्रहणमात्रपर्यवसायी स्वाध्यायाध्ययनविधिस्तदा न विचारशास्त्रारंभप्रयोजकः, यदि तु वाक्यार्थज्ञानरूपदृष्टफलार्थस्तदाऽर्थज्ञानं विचारमन्तरेण न सम्भवतीत्युक्तविधिर्विचारशास्त्रारम्भप्रयोजक इति । पूर्वपक्षस्तु । अर्थज्ञानायाध्ययनं विधीयत इति वदन्प्रष्टव्यः । किमत्यन्तमप्राप्तमध्ययनमर्थज्ञानाय विधीयते किंवा पक्षे प्राप्तमवघातवन्नियम्यत इति । नाद्यः । विमतं वेदाध्ययनमर्थज्ञानजनकमध्ययनत्वाद्भारताध्ययनवदित्यनुमानेनैव विधिनिरपेक्षेणाध्ययनेऽर्थज्ञानहेतुत्वस्य प्राप्तेः । न द्वितीयः । वैषम्यात् । अवघातनिष्पन्नैरेव तण्डुलैरवान्तरापूर्वद्वारेण दर्शपूर्णमासौ परमापूर्वं जनयतः न नखविदलनादिनिष्पन्नैः ततः परमापूर्वमवघातस्य नियमहेतुः । अत्र तु गुरुपूर्वकाध्ययनं विना लिखितपाठजन्येनाप्यर्थज्ञानेनक्र त्वनुष्ठानसिद्धेरध्ययनस्य नियमहेतुर्नास्तीति । अतो द्विविधविध्यसम्भवादर्थज्ञानहेतुविचारशास्त्रस्यारम्भो न वैधः । तर्हि श्रूयमाणस्य विधेः का गतिरिति चेत् । स्वर्गायाक्षरग्रहणमात्रं विधेयमिति वदामः । अश्रुतोऽपि स्वर्गो विश्वजिन्न्यायेन कल्पनीयः । किञ्चैवं सति वेदमधीत्य स्नायादिति शास्त्रमनुगृह्यते । अत्र हि वेदाध्ययनसमावर्तनयोर्नैरन्तर्यं प्रतीयते । त्वत्पक्षे त्वधीतेऽपि वेदेऽर्थविचाराय गुरुकुल एव वासः कर्तव्यः तेन च तन्नैरन्तर्यं बाध्यते । तस्माद्विचारशास्त्रस्य वैधत्वाभावात्पाठमात्रेण स्वर्गसिद्धेः । समावर्तन-

शास्त्राच्च विचारशास्त्रं नारम्भणीयमिति । सिद्धान्तस्तु । यदुक्तं प्रमाणान्तरसिद्धत्वान्नाप्राप्तविधिरिति तत्तथैव । नियमविधित्वं तु न निवारयितुं शक्यम् । यथा दर्शपूर्णमासजन्यं परमापूर्वमवघातनियमजन्यस्यावान्तरापूर्वस्य कल्पकम्, एवमशेषक्रतुजन्यमपूर्वजातं क्रतुज्ञानसाधनाध्ययननियमजन्यस्यापूर्वस्य कल्पकं भविष्यति । एवं नियमादृष्टानङ्गीकारे श्रूयमाणोऽयं विधिरनर्थकः स्यात् । न च विश्वजिन्न्यायेन स्वर्गार्थं इति युक्तम् । दृष्टफलेऽर्थज्ञाने सम्भवत्यदृष्टकल्पनाया अयुक्तत्वात् । नन्वेवमपि श्रुतव्याकरणाद्यङ्गस्याधीतवेदस्य पुरुषस्यार्थज्ञानसम्भवान्न विचारशास्त्रस्य कृत्यमिति चेन्न । ज्ञानमात्रसम्भवेऽपि निर्णयस्य विचाराधीनत्वात् । न ह्यक्ताः शर्करा उपदधातीत्यत्र घृतेनैव न तैलादिनेत्ययं निर्णयो व्याकरणेन निगमनिरुक्त्यादिना वा सिध्यति । विचारशास्त्रं तु तेजो वै घृतमिति वाक्यशेषादर्थं निर्णेष्यति । अतो विचारो वैधः । वेदमधीत्य स्नायादिति शास्त्रं त्वध्ययनसमावर्तनयोः पूर्वापरीभावसमानकर्तृत्वे एवाचष्टे न तु नैरन्तर्यं तस्माद्विचारशास्त्रारम्भो वैध इति ॥ **अस्य विधेरिति** । सामान्यतः सर्ववेदपरिज्ञानविधायकस्यास्योक्तविधेरधिकार्यभावेन तं प्रति वैयर्थ्यप्रसङ्गादित्यर्थः ॥ **तथैव व्याख्येयमिति** । ऋक्शाखिन ऋग्रूपः स्वाध्यायोऽध्येतव्यो यजुःशाखिनो यजुर्लक्षण इत्यादिरूपेण विशेषनिष्ठमेव व्याख्येयमित्यर्थः ।

श्री० — ॐ **स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकारात्** ॐ ॥ ननु विधेरक्षरग्रहणमात्रपरतया चरितार्थत्वसम्भवान्न तदुक्तार्थज्ञानमङ्गीकार्यमित्यत आह **अध्ययनस्येति** ॥ **तथैवेति** । स्वस्वशाखापरतयैवेत्यर्थः ॥

च० — **अर्थज्ञानपर्यन्तताश्थितेरिति** । प्रमाणलक्षणे प्रथमचरणे प्रथमनये चिन्तितमथातो धर्मजिज्ञासा चोदनालक्षणोऽर्थो धर्म इत्यारभ्य अन्वाहार्ये च दर्शनादित्यन्तं शास्त्रमस्य विषयः आरंभणीयं अनारंभणीयं वेति चिन्ता तदर्थमधीत्य स्नातव्यं वा धर्मजिज्ञासया गुरुगृहेऽवस्थातव्यमिति तदर्थमपि स्वाध्यायाध्यनविधिरदृष्टार्थमध्ययनं विधत्ते उत दृष्टार्थमिति यद्यदृष्टार्थं स्वाध्यायाध्ययनं विधीयते ततस्तन्मात्रेणैव शास्त्रसमाधेरधीत्य स्नायादिति वचनबलेन समावर्तितव्यं अवैधश्चायं विचारो नारंभणीयः यदि चाक्षरग्रहणपरंपरोपजायमानवाक्यार्थज्ञानायाध्ययनं विधीयते ततस्तस्य विचारमन्तरेणासंभवात् अध्ययनविधिनैवार्थाद्विचारो विहित इति विचारयितव्यो धर्म इति विचारशास्त्रमारंभणीयम् । पूर्वपक्षस्तु 'विनापि विधिना दृष्टलाभान्न हि तदर्थता । कल्प्यस्तु विधिसामर्थ्यात्स्वर्गो विश्वजिदादिवत्' इदं मीमांसाशास्त्रं नारंभणीयं अनुग्राह्यप्रमाणशून्यत्वात् प्रत्यक्षानुमानादेर्वक्ष्यमाणविधया धर्मेऽप्रमाणत्वात् । न च स्वाध्यायोऽध्येतव्य इत्यध्ययनविध्यधीनग्रहणो वेद एव तादृशमानमिति युक्तं तद्विधेरदृष्टार्थतया स्वर्गफलत्वात् न च

दृष्टेर्भावबोधे पूर्वविधिः संभवति नियमविधेरप्यवघातविधेस्तण्डुलस्वरूप इवार्थावबोधे मानान्तरविरोधात् । अध्ययनमन्तरेणापि तद्दर्शनात् । न च क्रत्वपूर्वोद्देशेन नियमः अधीतैरेव वेदैः स्वगतानि कर्माणि सफलं ददतीति युक्तम् । अक्रत्वर्थत्वादध्ययनस्यानारभ्याधीतत्वात् । श्रुत्याध्याभावाच्च तस्माददृष्टार्थमेव स्वाध्यायाध्ययनमित्यध्ययनमात्रेणैव शास्त्रार्थसमाप्ते गुरुकुलात्समावर्तितव्यमिति चेत् । अथातो धर्मजिज्ञासा 'लभ्यमाने तु दृष्टेर्थे नादृष्टस्य प्रकल्पना । विधेस्तु नियमार्थत्वान्नानर्थक्यं भविष्यति' इति नियमविधिरेवायम् । यो यमग्निहोत्रादिष्वधीतवेदानां त्रैवर्णिकानामेवाधिकारो नानधीतवेदानां शूद्राणामिति अधिकारनियमः स प्रयोजनमध्ययनविधेः । तथाहि असत्यध्ययनविधौ अग्निहोत्रादिशास्त्राणि विद्वांसमलभमानानि अविद्वांसमेवाधिकृत्य विद्यामन्तरेणानुष्ठानासंभवाद्विद्यामाक्षिपन्ति । सत्यं विशेषाच्चतुरो वर्णानाधिकुर्युः । सति त्वध्ययनविधौ त्रैवर्णिकानामेव विदुषामधिकारो न तुर्यादेः । तथाहि वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमित्यादिषु द्वितीयानिर्देशादुपनयनसंस्कृतास्त्रैवर्णिकाः किमस्माभिः कर्तव्यमित्यपेक्षन्ते तत्सन्निधौ चाध्ययनमनिर्दिष्टकर्तृकं विधीयमानं कर्तारमपेक्षते तत्रापेक्षासन्निधियोग्यत्वैरेवं विज्ञायते त्रैवर्णिकैरुपनीतैरध्ययनेनाक्षरग्रहणादिपरंपरया अर्थज्ञानं कर्तव्यमिति । एवं च फलवदध्ययनकर्तृभूतमाणवकसंस्कारत्वादुपनयनमध्ययनाङ्गम् । अध्ययनमपि दृष्टार्थज्ञानार्थमर्थज्ञानं चानुष्ठानौपयिकत्वात्प्रसिद्धफलमेवेति सर्वेषां फलवत्त्वम् । एवं च त्रैवर्णिकेषु सत्सु विद्वत्सु नाग्निहोत्रादिविधयः चतुर्थस्य विद्यामाक्षिपन्ति । किन्तु त्रैवर्णिकानेव विदुषोऽधिकुर्वन्ति । सोयमधिकारनियमोपशूद्राधिकरणे वक्ष्यमाणोऽध्ययनविधिप्रसादलभ्य इति फलवानेव विधिः अध्ययनविधिनाऽर्थज्ञानावसानमध्ययनं विधीयत इति विचारमन्तरेण तदनुपपत्तेरध्ययनविधिरेव विचारमाक्षिपस्तद्विरुद्धं स्मार्तं स्नानं बाधत इति सिद्धमध्ययनानन्तरं धर्मविचारः कर्तव्य इत्यवश्यं धर्ममीमांसाशास्त्रमारंभणीयमिति ।

**सु०— ननु श्रुत्यनन्तरं हिशब्देन स्मृतिः सूत्रकृतोपात्ता तत्कथमत्र विपर्ययः । उच्यते । आकाङ्क्षाक्रमेण सूत्रम् । व्याख्यानं तूपोद्घातप्रक्रिययेति न विरोधः । श्रुतिस्मृतिबलादेव यथाशक्ति सर्वविज्ञानस्यैव निश्शङ्कताहेतुत्वं कल्प्यते । भूयोदर्शनं चानुमानाङ्गमिति सुप्रसिद्धम् ।**

**शे०— अत्रेति** । भाष्य इत्यर्थः । भाष्ये स्मृत्यनन्तरं श्रुत्युदाहरणादित्यर्थः ॥ **आकाङ्क्षाक्रमेणेति** । श्रुतावुदाहृतायामेव तत्रार्थान्तरशङ्कावसरः सति च तस्मिंस्तन्निरासकस्मृत्युदाहरणावसर इत्याकाङ्क्षाक्रमेणेत्यर्थः ॥ **व्याख्यानं त्विति** । स्मृतेर्विस्पष्टवादित्वात्तदनुसारेणैव श्रुतेर्व्याख्येयतेत्यभिप्रायेण प्रथमं स्मृत्युदाहरणमित्यर्थः । किञ्च स्वशाखामात्रज्ञानाङ्गीकारे शाखान्तरेऽन्यथोक्तशङ्कया

ध्येयस्वरूपानिश्चयात्कथं त्वन्मते ध्यानमुपपद्येत । न चैवम् । यथाशक्त्यखिलवेदज्ञानाङ्गीकारेऽप्यनधिगतशाखान्तरेऽन्यथोक्तिशङ्कया ध्येयस्वरूपनिश्चयानुपपत्तेर्ध्यानानुपपत्तिस्त्वत्पक्षेऽपि तुल्येत्यत आह श्रुतिस्मृतिबलादेवेति । यथाशक्तिज्ञानस्य संशयनिवर्तकत्वेनान्यथोक्तिशङ्काया अनुदयेन ध्येयस्वरूपनिश्चयोपपत्तेर्नास्मन्मते ध्यानानुपपत्तिः प्रसज्यते । न चैवमपि स्वस्वशाखाज्ञानस्यैवान्यथोक्तिशङ्कानिवर्तकत्वस्य वक्तुं शक्यत्वात्तच्छङ्काऽनुदयेन ध्येयस्वरूपनिश्चयोपपत्तेर्न मन्मतेऽपि ध्यानानुपपत्तिरिति वाच्यम् । कल्पकाभावेन तदनुपपत्तेः । न चैवं यथाशक्तिज्ञानस्यापि तन्निवर्तकत्वं न स्यात्कल्पकाभावस्य तुल्यत्वादिति वाच्यम् । श्रुतिस्मृत्योर्ध्यानाङ्गतया विहितस्य यथाशक्तिविज्ञानस्य संशयनिवर्तकत्वाभावे तयोस्तद्विधानवैयर्थ्यापत्त्या तदन्यथाऽनुपपत्त्यैव यथाशक्तिविज्ञानस्य तन्निवर्तकतायाः कल्पयितुं शक्यत्वादिति भावः । किञ्च यथाशक्तिविज्ञानस्य गतिसामान्यानुमानद्वारोक्तसंशयनिवर्तकत्वं भविष्यति । न चैवं स्वस्वशाखाज्ञानस्यापि तद्द्वारैवोक्तसंशयनिवारकत्वमस्त्विति वाच्यम् । त्वत्पक्षे गतिसामान्यानुमानस्यैवासम्भवात् । न च भवत्पक्षेऽपि गतिसामान्यानुमानासम्भवस्तुल्य इति वाच्यम् । अनेकशाखाज्ञानेन विप्रतिपन्नाः शाखा भगवत एवोत्कर्षप्रतिपादकाः शाखात्वादिति गतिसामान्यानुमानाङ्गभूतव्याप्तिग्रहहेतुभूयोदर्शनसद्भावाद्व्याप्तिग्रहसम्भवेन मन्मते तत्सम्भवात्त्वत्पक्षे च भूयोदर्शनरूपव्याप्तिग्राहकाभावात् व्याप्तिग्रहासंभवेन तदसंभावादिति वैषम्यादित्याशयवानाह भूयोदर्शनं चेति ।

स० — आकाङ्क्षाक्रमेणेति । श्रुतावुदाहृतायां तत्रार्थान्तरशङ्कायां तन्निरासार्थं स्मृत्युदाहरणमित्याकाङ्क्षाक्रमेणेत्यर्थः । व्याख्यानं त्विति । स्मृतेर्विस्पष्टत्वात्तदनुसारेण श्रुतिर्नेयेत्यभिप्रायेण प्रथमं स्मृत्युदाहरणमिति भावः । ननु यदि स्मृत्यनुसारेण श्रुतिव्याख्यानं न्याय्यं तर्हि स्मृतौ कृत्स्नपददर्शनात्तदनुसारेण श्रुतिरपि सर्ववेदविषयतयैव व्याख्येयेत्यत आह श्रुतिस्मृतिबलादेवेति । यथाशक्तिविज्ञानस्यैव निःशङ्कताहेतुत्वं यत्कल्प्यते तच्छ्रुतिस्मृतिबलादेव । कृत्स्नपदवत्स्मृत्यनुसारेण सर्वपरिज्ञानस्यैव निःशङ्कताहेतुत्वमुपपत्तिविरुद्धमिति न तदर्थत्वं श्रुतिस्मृतेः । अन्यथाऽप्रामाण्यापातादिति भावः । ननु यथाशक्तिविज्ञानं न निःशङ्कताहेतुः । शाखान्तरेऽन्यथोक्तिशङ्कया संशयतादवस्थ्यात् इत्यतो गतिसामान्यानुमानद्वारा तेन तन्निरास इत्यभिप्रेत्य कथं गतिसामान्यानुमानं प्रति यावच्छक्तिविज्ञानस्योपयोग इत्यतः शाखात्वरूपहेतोः भगवत्परत्वरूपसाध्येन व्याप्तिं प्रति कारणभूतभूयोदर्शनसाधकत्वादिति मनसि निधाय तस्याङ्गत्वेन तद्द्वारा गतिसामान्यानुमाने उपयोगः स्यात् । भूयोदर्शनमेव तत्र नाङ्गमिति शङ्कां परिहरति भूयोदर्शनं चेति । अन्यथा प्रसिद्धबाधापत्तेरिति भावः । केचित्तु ततः किं फलितमित्यत आह श्रुतिस्मृतीति । तथाच सर्वविज्ञानं निःशङ्कताहेतुः तथात्वेन श्रुत्यादिषु

प्रमितत्वादित्यनुमानमुक्तं भवति । श्रुतिस्मृतिषु तथा तथादर्शनेपि कुतस्तद्धेतुत्वानुमानमित्यत आह **भूयोदर्शनं चेति** । इति व्याचक्षते । तत्र ग्रन्थास्वारस्यं स्पष्टमेव प्रतीयते ॥ अपरे तु 'चोदनाद्यविशेषयुक्तिभिः यथाशक्ति सर्वविज्ञानस्य कर्तव्यत्वमुपपादितम् । तदयुक्तम् । शाखान्तरेऽन्यथोक्तिशङ्कया संशयापातात् । न च गतिसामान्यानुमानेन तन्निरासः । अप्रयोजकताशङ्कया तस्यैवानुपपन्नत्वात् । न च तत्रैव परस्परविरुद्धतापत्त्याऽप्रामाण्यापत्तेरित्युक्तत्वात्, कथमप्रयोजकतापत्तिरिति सांप्रतम् । तत्र बाधकमात्रस्योक्तावपि कल्पकस्यानुक्तत्वादित्याशङ्कयात्रोक्तस्य यथाशक्तिसर्ववेदविज्ञानस्य तावदुक्तध्यानाभावस्य वक्ष्यमाणत्वेन ध्यानार्थत्वासंभवेन संशयनिवारकत्वस्य वक्तव्यतया तदनङ्गीकारे श्रुतिस्मृत्यादौ यथाशक्तिसर्ववेदविज्ञानोक्तेरयोगेन तदन्यथानुपपत्त्या संशयनिवर्तकत्वमङ्गीकार्यमेवेत्याह **श्रुतिस्मृतीति** । यदि स्मृत्यादौ प्रतिपादितं सर्ववेदविज्ञानं शङ्कानिवर्तकं न स्यात् तर्हि नोच्येत । उच्यते च तदिति तस्य निःशङ्कताहेतुत्वं सिद्धमित्यभिप्रेत्योक्तं **बलादिति** । यथाशक्ति सर्वविज्ञानकर्तव्यताप्रतिपादकमेव तस्य निःशङ्कताहेतुत्वप्रतिपादकं न तत्र हेत्वन्तरमपेक्षितमित्येवशब्दार्थः ॥ इत्यर्थ इति वदन्ति ।

प० — **श्रुत्यनन्तरमिति** । सूत्र इति योज्यम् । **तत्कथमत्रेति** । अनुव्याख्याने स्मृतेः पूर्वमुक्तिः पश्चाच्छ्रुतेरुक्तिरिति विपर्ययः कथमित्यर्थः ॥ **आकांक्षेति** । शाखाभेदप्रसिध्या स्वाध्यायनविधेरपि तत्तच्छाखापरत्वसंभवेपि कथं सर्ववेदाध्ययनपरत्वमित्याकांक्षायां हीति स्मृतिः सूत्रे सूचिता । आचार्यकृतव्याख्यानं तु स्मृतौ कृत्स्नशब्दस्तावदस्ति तदनुरोधाच्छ्रुतिरपि तथैव व्याख्येयेत्युपोद्घातप्रक्रियया कृतमित्यर्थः । ननु सर्ववेदापरिज्ञाने क्वचिदन्यथोक्तिशङ्काप्रतिबन्धः स्यादित्यत आह **श्रुतिस्मृतीति** ।

या० — **आकाङ्क्षाक्रमेणेति** । शाखाभेदस्य सुप्रसिद्धत्वाच्चोदनादिकमपि विशेषनिष्ठं व्याख्यातव्यमित्याकाङ्क्षानिवर्तकतया स्वाध्यायस्य तथात्वेनेत्यनेन श्रुतावभिहितायां शाखाभेदप्रसिद्ध्यैव स्वाध्यायपदमपि तथैव व्याख्येयमित्याकाङ्क्षायां तन्निवर्तकतया श्रुत्यनन्तरं हिशब्देन स्मृतिः सूत्रे गृहीतेत्याकाङ्क्षयोः क्रमेणेत्यर्थः । ननु यथाशक्ति सर्वविज्ञानमपि कथं ज्ञानोपयोगि । ध्येयपरिज्ञानस्य स्वस्वशाखाविज्ञानेनैव संभवात् । शाखान्तरेऽन्यथोक्तिशङ्कायाश्च यथाशक्ति सर्वविज्ञानेनाप्यनिवारणात् । अन्यथा स्वस्वशाखाविज्ञानेनैव तन्निवारणप्रसङ्ग इत्यत आह **श्रुतिस्मृतिबलादेवेति** । न स्वस्वशाखामात्रविज्ञानप्रतिबन्द्या यथाशक्ति सर्वविज्ञाने निःशङ्कताहेतुता वारयितुं शक्या । वैषम्यात् । 'स्वाध्यायोऽध्येतव्य' इति श्रुतेः 'वेदः कृत्स्नोऽधिगन्तव्य' इति स्मृतेश्च यथाशक्ति सर्वविज्ञानविधायकत्वं तावदस्तीत्युक्तं तच्च न ध्येयपरिज्ञानादिरूपप्रयोजनान्तराय । तस्योक्तरीत्याऽन्यथासिद्धेः । किन्तु शाखान्तरेऽन्यथोक्तिशङ्कापरिहारायैव । अन्यथा तद्विधिवैयर्थ्यापत्तेः । अत उक्तश्रुतिस्मृतिसार्थक्यान्यथा-

ऽनुपपत्त्या यथाशक्ति सर्वविज्ञानस्य निश्शङ्कताहेतुत्वं कल्पनीयम् । तदिदमुक्तं बलादेवेति । न चैवं स्वस्वशाखामात्रविज्ञाने निश्शङ्कताहेतुत्वकल्पकं किञ्चिदस्तीति भावः । ननु स्वस्वशाखामात्राविज्ञानमपि गतिसामान्यानुमानसहितं निश्शङ्कताहेतुर्भविष्यति । श्रुतिस्मृतिसार्थक्यं त्वदृष्टेनापि फलेनोपपद्यत इत्यस्वरसादाह **भूयो दर्शनं चेति** । सत्यं विप्रतिपन्नाः शाखा भगवत एवोत्कर्षप्रतिपादिकाः शाखात्वात्संप्रतिपन्नशाखावदिति गतिसामान्यानुमानेन निश्शङ्कता भवतीति । एतदर्थमेव यथाशक्ति सर्वविज्ञानमावश्यकम् । न ह्येकस्यां शाखायां शाखात्वस्य भगवदुत्कर्षप्रतिपादकत्वव्याप्यता ग्रहीतुं शक्या । भूयोदर्शनस्यैव व्याप्तिग्राहकत्वात् । तथा च निश्शङ्कताहेत्वनुमानाङ्गभूयोदर्शनसम्पादकतया यथाशक्ति सर्वपरिज्ञानं निश्शङ्कताप्रयोजकं भवति । तेन तद्विधायकयोः श्रुतिस्मृत्योः सार्थक्यमेवेति नादृष्टार्थता कल्पनीया गौरवादिति भावः ।

श्री०— **विपर्यय इति** । हिशब्दोक्तस्मृतिमादावुपादाय स्वाध्यायस्येत्युक्तश्रुतिः ॥ पश्चात्कथं गृहीतेत्यर्थः ॥ **आकाङ्क्षेति** । शाखाभेदस्य सुप्रसिद्धत्वाच्चोदनादिकं विशेषनिष्ठं व्याख्येयमित्याकाङ्क्षानिवर्तकतया स्वाध्यायस्येति श्रुतिः सूत्रकृताऽभिहिता । अनन्तरं शाखाभेदस्य सुप्रसिद्धत्वात्स्वाध्यायपदमपि तथैव व्याख्येयमित्याकाङ्क्षानिवर्तकत्वेन हिशब्देन स्मृतिः सूत्रकृता गृहीतेत्यर्थः । तर्हि व्यत्ययेन व्याख्यानं किमर्थमित्यत आह **व्याख्यानं त्विति** । श्रुत्यर्थसङ्कोचं वारयितुमुपोद्घातप्रक्रिययाऽऽदौ हिशब्दगृहीतकृत्स्नपदोपेतस्मृतिरादावुपात्तेत्यर्थः । ननु यथाशक्तिसर्वपरिज्ञानं व्यर्थम् । शाखान्तरेऽन्यथोक्तिशङ्कायास्तेनाप्यनिवारणादित्यत आह **श्रुतिस्मृतीति** । स्वाध्यायोऽध्येतव्यः । वेदः कृत्स्नोऽधिगन्तव्य इति श्रुतिस्मृतिबलादेवेत्यर्थः । स्वस्वशाखामात्रपरिज्ञानस्य निःशङ्कताहेतुत्वज्ञापकं प्रमाणं तु किमपि नास्तीत्यर्थः । ननु स्वस्वशाखामात्रपरिज्ञानमपि विप्रतिपन्नाः शाखा भगवदुत्कर्षप्रतिपादकाः शाखात्वात्सम्प्रतिपन्नशाखावदिति गतिसामान्यानुमानसहितं शङ्कानिवृत्तिहेतुर्भविष्यतीति चेत्तत्राह **भूयोदर्शनं चेति** । एकस्यां सम्प्रतिपन्नशाखायां शाखात्वस्य भगवदुत्कर्षव्याप्यत्वं न गृहीतुं शक्यम् । भूयोदर्शनस्यैव व्याप्तिग्राहकत्वात् । अतो निश्शङ्कताहेत्वनुमानाङ्गभूयोदर्शनसम्पादकतया यथाशक्ति सर्वपरिज्ञानमेव निश्शङ्कताप्रयोजकत्वेन कल्प्यत इति भावः ।

**सु०— आह नाध्ययनविधिप्रयुक्तमध्ययनम् । किन्त्वध्यापनविधिप्रयुक्तमेव । अध्ययनविधेर्नियोज्यरहितत्वात् । न ह्यत्र स्वर्गकामो यजेतेतिवत्कश्चिन्नियोज्यः श्रूयते । नापि विश्वजिदादाविव कल्पयितुं शक्यते । अध्यापनविधिनैवाध्ययनसिद्धौ कल्पकाभावात् । न चाध्यापनविधिरपि नियोज्यरहित इति वाच्यम् । आचार्यकरणकामस्य तत्र नियोज्यत्वात् ।**

अष्टवर्षं ब्राह्मणमुपनयीतेत्यात्मनेपदश्रवणात् । 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणन-व्ययेषु निय' इत्याचार्यकरणे नयतेरात्मनेपदविधानात् । तमध्यापयीतेत्युपनयनाध्यापन-योरेककर्तृकताप्रतीतेः । न ह्यध्यापनमध्ययनेन विना भवतीति स्वसिद्धये परा(पेक्ष क्षेप)-लक्षणेनोपादानेनाध्यापनविधिरेवाध्यापनविधिरेवाध्ययनं प्रयुंक्ते । किञ्चाध्ययने सति विधि-ज्ञानं ततश्चाध्ययनमितीतरेतराश्रयत्वं स्यात् । अतो नैतद्वाक्योदाहरणमत्र सङ्गतमिति ।

उच्यते । स्यादेवं यद्यध्यापनविधिप्रयुक्तमध्ययनं स्यात् । न चैवम् । अध्यापनस्य जीविकार्थत्वात् । त्रीणि कर्माणि जीविकेति वचनात् । अध्ययनस्य च नित्यत्वात् । 'योऽनधीत्य द्विजो वेदानि'त्यकरणे प्रत्यवायश्रवणात् । न च नित्यमनित्येन प्रयुज्यते । किञ्चैकस्य माणवकस्याध्यापनेन चरितार्थत्वे माणवकान्तरस्यानध्ययनप्रसङ्गः । यो येनोपनीतः स तेनाध्यापनीय इति चेत् । तर्ह्युपनायके परेतेऽध्ययनाभावः स्यात् ॥ यत्पुनरितरेतराश्रय-त्वमुक्तं तत् प्रातःसन्ध्यामुपासीतेत्यादावपि समानम् ॥ अयमप्याचार्यस्यैव विधिः । शौचा-चारांश्च शिक्षयेदित्यादेरिति चेन्न । आचार्ये परेते तदभावापातात् ॥ अतोऽध्ययनादिविधिं वृद्धाः कथञ्चिन्माणवकं बोधयन्तीत्यङ्गीकार्यमित्यलम् ।

शे० — स्वाध्यायोऽध्येतव्य इति विधेरुक्तं सर्ववेदाध्ययनविधायकत्वमसहमानः प्राभाकरः प्रत्यवतिष्ठते आहेति ॥ प्रयुक्तमिति । लभ्यमित्यर्थः । नन्वध्ययनस्य स्वतन्त्राध्ययनविधिप्रयुक्तत्वमेव

---

कस्मान्न स्यादित्यत आह अध्ययनविधेरिति । नियोज्यरहितस्य च विषयाप्रयोजकत्वादिति शेषः । अयमाशयः । विधिकार्येषु ममेदं कार्यमिति कार्यप्रत्येता नियोज्यः । ततश्च मदर्थसाधनत्वादनुष्ठेयमिदं कर्मेति तादर्थ्यज्ञानवानधिकारी । ततस्तु कर्मनिर्वर्तकः कर्तेति तिस्रोऽवस्था एकस्यैव क्रमभाविन्यः । तत्र च यो विधि स नियोज्यः । स एव तस्य कर्मण्यधिकारमुपजनय्य विषयानुष्ठानं प्रयोजयति । विषयो नाम कार्यावच्छेदको धात्वर्थ इति हि तन्मतम् । 'यजेत', 'दद्यात्', 'जुहुयादि'त्यादिषु लिङादिभिः कार्यं प्रतीयमानं स्वरूपेण प्रत्येतुमशक्यमिति धात्वर्थावच्छिन्नमेव प्रत्याय्यते । यागकार्यं दानकार्यं होमकार्यमिति । ततश्च कार्यप्रतीतिदशायां योऽवच्छेदको धात्वर्थः स एव विषयः । स नियोज्य एव च विधिस्तत्प्रयोजकः । स्वर्गकामनियोज्यकदर्शपूर्णमासविधेस्तद्दर्शनात् । यस्तु नियोज्यहीनो नासौ तत्प्रयोजकः समिधो यजतीत्याद्यङ्गविधेस्तद्दर्शनात् । अयं त्वध्ययनविधि-र्नियोज्यरहितत्वान्न विषयानुष्ठापक इति । असिद्धिं परिहरति न हीति । अत्र स्वाध्यायाध्ययन-विधावित्यर्थः । यागविधौ स्वर्गकाम इतिवदध्ययनविधावमुककाम इति नियोज्यो न श्रूयत इत्यर्थः । ननु विश्वजिता यजेतामावस्यामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यादावश्रुतोऽपि यथा स्वर्गकामो नियोज्यः

कल्प्यते तद्वदत्रापि तत्कल्पनेनाध्ययनविधेरेव स्वविषयप्रयोजकत्वमस्त्वित्यत आह **नापीति** । अनुष्ठानाधीनसिद्धिर्हि नियोगः ॥ तत्सिद्ध्यर्थमनुष्ठातारमाक्षिप्यानधिकारिणोऽनुष्ठातृत्वासंभवादनियोज्यस्य चाधिकारासंभवात्तन्नियोज्यं कल्पयतीत्येव । न पुनः स्वप्रतिपत्त्यर्थं स्वसिद्ध्यर्थं वा विषयवत्करणवच्च साक्षान्नियमेन नियोज्यमाकाङ्क्षति । निर्नियोज्यकानां प्रयाजादिविधीनां बहुलमुपलम्भात् । तथा च स्वस्य कार्यत्वेन यत्र स्वविषयानुष्ठानापेक्षा तादर्थ्येन च कर्त्राद्यपेक्षा तत्रैव नियोज्यमपेक्षते । यदा तु विध्यन्तरानुष्ठापितेनैव विषयेण स्वात्मलाभं पश्यति तदा न नियोज्यमपेक्षते । यथा प्रयाजादिविधयस्ते हि दर्शपूर्णमासविध्यनुष्ठापितविषयकत्वान्न नियोज्यापेक्षिणः । प्रकृते चाध्यापनविध्यनुष्ठापितेनैवात्मविषयेणाध्ययनविनियोगसिद्धेर्नियोज्यानपेक्षत्वान्न तत्कल्पनमुचितमिति भावेनाह **अध्यापनविधिनैवेति** ।

नियोज्याभावान्नाध्ययनविधिरध्ययनप्रयोजक इत्युक्तमयुक्तम् । तथा सत्यध्यापनविधेरपि नियोज्यरहितत्वेन स्वविषयाप्रयोजकत्वापातात् । न ह्यष्टवर्षमित्यादौ स्वर्गकामो यजेतेत्यादिवत्कश्चिन्नियोज्यः श्रूयते । ततश्चानियोज्यत्वादध्ययनविधिवत्स्वविषयाप्रयोजकत्वात्तद्द्वारा परप्रयोजकत्वमध्यापनविधेर्दण्डापूपनयहतमित्याशङ्कते **न चेति ॥ तत्रेति** । अध्यापनविधावित्यर्थः । नन्वध्यापनविधावश्रुतत्वात्कथमाचार्यकरणकामस्य नियोज्यत्वमित्यतस्तत्राश्रवणेऽप्युपनयनविधौ श्रुतत्वाददोष इत्याह **अष्टवर्षमित्यादि ॥ आत्मनेपदश्रवणादिति** । ततश्चात्मनेपदेनैवोपनयनविधावाचार्यकरणकामस्य नियोज्यत्वसिद्धिरिति भावः । कथमात्मनेपदेनाप्याचार्यत्वस्य नियोज्यविशेषणत्वसिद्धिरित्यत आचार्यकरणे तद्विधानादित्याह **सम्माननेति** । नन्वस्त्वाचार्यकरणकामस्योपनयनविध्यधिकारित्वं किं तावताऽपि । न ह्युपनयने नियोज्यः स एवाध्यापने इत्यत्र प्रमाणमस्ति । तत्कथमध्यापनविधौ तस्याधिकारित्वमित्यत आह **तमिति** । नन्वस्त्वध्यापनविधेः सनियोज्यतया स्वविषयानुष्ठापकत्वं तथाऽपि कुतस्तेनाध्ययनस्य प्रयुक्तिरित्यत आह **न हीति** । पुरुषान्तरकर्तृकोच्चारणार्थमुच्चारणमध्यापनशब्दार्थः । गुरुमुखोच्चारणमनूच्चारणं चाध्ययनशब्दार्थः । तथा च पुरुषान्तरकर्तृकोच्चारणार्थोच्चारणरूपस्याचार्यकर्तृकस्य माणवककर्तृकाध्ययनेन विनाऽनुपपत्त्याऽध्यापनविधिनैवाध्ययनानुष्ठानसिद्धिरिति भावः ।

ननु द्रव्योपायतयाऽध्ययनस्य प्राप्तत्वादप्राप्त एव च विधेः साफल्यात्स्मृतिवाक्यं वा तदनुमितमुपनीयाध्यापयेदाचार्यत्वसिध्यर्थमित्येवंरूपं वा वचनं नाध्यापनविधायकं भवितुमर्हति । किन्नामाध्ययनविधानमेवेदम् । इयांस्तु विशेषः । यदष्टवर्षमिति गूढोऽध्ययनविधिः स्वाध्यायोऽध्येतव्य इति च स्पष्टः । न चात्र णिचः श्रवणान्नाध्ययनविधायकत्वमिति वाच्यम् । अष्टवर्षतयाऽशक्तस्य

पुत्रस्य शुभलोकार्थिना पित्रवानुशास्यत्वाभिप्रायेण तदुपपत्तेः । अत्राकामं याजयेदित्यत्र याजयतेः परतः श्रूयमाणस्य विधेर्यागविधिपरत्ववदत्रापि श्रूयमाणस्य विधेरध्ययनविधिपरत्वस्यैव न्याय्यत्वात् । ननु च श्रुतौ नयतेर्ञित्त्वात्स्वरितञितः कर्त्रभिप्राय इत्यनेनात्मनेपदं विधीयते । तच्चोपनयनस्याध्यापनाङ्गत्वे तत्फलस्यैवोपनयनफलत्वात्तस्य चोपनयनकर्तृभूताचार्यगामित्वाद्युज्यते । अध्ययनाङ्गत्वे तु तत्फलस्याध्येतृगामितया क्रियाफलस्यान्यगामित्वेन नात्मनेपदं सिध्येत । अतोऽध्यापनाङ्गमेवोपनयनमिति । सत्यम् । नात्र स्वरितञित इत्यनेन तद्विधिः । किन्त्वाचार्यकरणेऽर्थे सम्माननेति सूत्रेण । अन्यथा तत्फलस्य कर्तृगामित्वात्पूर्वसूत्रेणैवात्मनेपदसिद्धेः सम्माननसूत्रमनर्थकं स्यात् । अतोऽकर्तृगामित्वेऽप्यात्मनेपदसिध्यर्थमेव तत् । तदुक्तं वृत्तिकृता । अकर्त्रभिप्रायार्थः पुनरारम्भ इति । ततश्चाध्ययनविधायकत्वान्नाध्यापनविधायकत्वमुदाहृतस्येति नाध्यापनविधिप्रयुक्तत्वमध्ययनस्य किन्तु स्वतन्त्रविधिप्रयुक्तत्वमेव । न च नियोज्याभावो दोषः । अर्थज्ञानकामस्यैव तत्कल्पनादित्यरुचेराह **किञ्चेति** ।

**स्यादेवमिति** । यद्यप्यत्र द्रव्यमार्जयन्ब्राह्मणो याजयेदध्यापयेत्प्रतिगृह्णीयाद्वेत्यादिवाक्याद्द्रव्यार्जनोपायतया प्राप्तत्वादप्राप्ते च विधेः साफल्याच्च एवं विद्वान्पौर्णमासीं यजतेत्यादाविव प्रसिद्धार्थतया विधिशक्तिप्रतिबन्धकत्वेन क्लृप्तयच्छब्दयोगाच्चाध्यापनविधेरेवासंभवान्न तद्विधिप्रयुक्तत्वमध्ययनस्येति वक्तुमुचितम् । तथाऽ'प्युपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षत'इत्यध्यापनस्याचार्यत्वफलकत्वश्रवणान्नेदं वचनं द्रव्यार्जनार्थप्राप्ताध्यापनानुवादपरम्। किन्तु पृथगध्यापनविधिपरमेवेति युक्तमध्ययनस्य तद्विधिप्रयुक्तत्वमित्याशङ्कापरिहाराय नित्यनैमित्तिकत्ववैषम्योपन्यासेन प्रयोजकप्रयुक्तिभावो निराकृत इति ध्येयम् । न च मा भूदाचार्यकार्यमध्यापनं तथाऽपि विद्यादानेन सुमतिर्ब्रह्मलोके महीयते इत्यादिभिर्विद्यादानात्मकत्वादध्यापनमपि ब्रह्मलोकावाप्तिलक्षणफलशेषतया विधीयते इति तत्प्रयुक्तत्वमध्ययनस्य स्यादेवेति वाच्यम् । तस्यापि नियोज्याश्रवणेन प्रयाजादिविधिवदप्रयोजकत्वेनाध्ययनस्य तत्प्रयुक्तत्वानुपपत्तेः । न च नियोज्याभावेऽपि फलसाधनत्वश्रवणात्तावन्मात्रेणाधिकारोदये सत्यध्यापनानुष्ठाने तत्प्रयुक्तिरध्ययनस्य स्यादेवेति वाच्यम् । विषयस्य स्वभावजन्यस्यार्थज्ञानस्यापि पश्चात्प्रतीतत्वादध्ययनविधावपि तत्कामस्यैवाधिकारित्वसंभवादध्ययनस्यापि स्वविधिनैव प्रयुक्तेर्युक्ततयाऽन्यविधिप्रयुक्तत्वायोगादित्याशयात् ॥ **जीविकेति** । तथा च नैमित्तिकत्वं तस्येति भावः ॥ **त्रीणि कर्माणीति** । याजनाध्यापनप्रतिग्रहाख्यानि त्रीणि कर्माणीत्यर्थः ॥ **योऽनधीत्येति** । योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमधिगच्छति सान्वय इति वेदाध्ययनाकरणे प्रत्यवायश्रवणादसत्यागन्तुके निमित्ते यदकरणे प्रत्यवायः श्रूयते तस्यैव नित्यत्वादिति भावः । **अनित्ये-**

**नेति** । नैमित्तिकेनेत्यर्थः । नैमित्तिकस्यागन्तुकनिमित्तसमावेश एव कर्तव्यता । श्राद्धादौ नैमित्तिके तथा दर्शनात् । नित्यस्य तु तदभाव एव । एवञ्च कस्यचिदाचार्यस्य जीविकारूपनिमित्ताभावेनाध्यापनाभावे तदुपनीतमाणवकस्य नित्यतयाऽऽवश्यकमध्ययनं न तत्पक्षे सिध्यतीति भावः ॥ **चरितार्थत्व इति** । अध्यापनविधेरिति शेषः । न चैकेनोपनीतमाणवकान्तरस्यान्येनाध्यापनं भविष्यतीति कथं तदभाव इति वाच्यम् । उपनयनकर्तुरेवाध्यापनेऽधिकारस्याङ्गीकृतत्वेनैकोपनीतस्यान्येनाध्यापनासंभवादिति भावः ॥ **य इति** । यद्यप्याचार्यत्वकामना सकृदध्यापनेन निवृत्ता तथाऽपि विधिबलादधिकाराभावेऽपि माणवकान्तरस्य स्वेनोपनीतत्वादध्यापनं करोतीति भावः । परेते मृते ॥ **समानमिति** । प्रातः सन्ध्यामुपासीतेत्येतद्विधिज्ञाने सति सन्ध्योपासनं सति च तस्मिन्नेतद्विधिपठनेनैतद्विधिज्ञानं कृतसन्ध्यावन्दनस्यैव वेदाधिकारित्वात्तथा चेतरेतराश्रयत्वमिति भावः ॥ **कथञ्चिदिति** । वृद्धा अध्ययनादिविध्यर्थं स्ववाक्येन माणवकं प्रति कथयन्त्विति नेतरेतराश्रयत्वमिति भावः ।

स०—**आचार्येति** । ममाचार्यत्वं भवत्विति कामवान् अध्यापनविध्यधिकारीत्यर्थः । आचार्यकरणकामस्योपनयनाधिकारित्वेपि कुतोऽध्यापनाधिकारस्तत्राह **तमध्यापयीतेति** ॥ **उपादानेन** प्रमाणेनेत्यर्थः । मीमांसकैस्तस्य प्रमाणत्वेनाङ्गीकारादिति भावः । **त्रीणि कर्माणीति** । याजनाध्यापने प्रतिग्रहश्चेवं त्रीणि कर्माणीत्यर्थः । **चरितार्थत्वादिति** । आचार्यत्वसंपादनार्थमध्यापनस्य क्रियमाणत्वेनाचार्यत्वस्य चैकाध्ययनेनापि लब्धत्वात् उपनीतमाणवकान्तरस्याध्ययनाभावः स्यादित्यर्थः । नन्वेवमुपनीतमाणवकान्तरस्यान्येनाध्ययनमिति कथं तदभावः । न । उपनयनकर्तुरेवाध्यापनेऽधिकारस्याङ्गीकृतत्वेनैतदुपनीतस्यान्यस्मादध्ययनस्याङ्गीकर्तुमशक्यत्वादिति भावः । **यो येनेति** । यद्यप्याचार्यत्वकामना सकृदध्ययनकामनेनापि निवृत्ता तथापि माणवकान्तरस्य स्वेनोपनीतत्वादध्यापनं करोतीति भावः । **परेते** मृते । **समानमिति** । प्रातःसंध्यामुपासीतेत्येतद्विधिज्ञाने संध्यावन्दनकरणम् । कृते च संध्यावन्दने तद्विधिज्ञानम् । कृतसंध्यावन्दनस्यैव वेदाधिकारित्वात् । तथाचान्योन्याश्रय इति भावः । **कथञ्चिदिति** । वृद्धा अध्ययनादिविध्यर्थं स्ववाक्येन माणवकं प्रति कथयन्ति । तेन नान्योन्याश्रय इति भावः ।

प०— प्राभाकरमतमनूद्य निराह **आहेति** । प्राभाकर इति योज्यम् ॥ **अध्यापनेति** । अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेति श्रवणात्तत्प्रयुक्तमित्यर्थः ॥ **नियोज्येति** । प्रेरणीयपुरुषरहितत्वादित्यर्थः ॥ **विश्वजिदादाविति** । चतुर्थस्य तृतीयपादे 'फलाश्रुतेः कर्ममात्रं प्रतीयते न ह्यशब्दं

प्रतीयत इति पञ्चमाधिकरणे विश्वजिता यजेतेत्यादिषु फलाश्रवणेन स्वर्गकामादिरूपनियोज्यहीनत्वादागमकार्यताबोधनेन वाक्यस्य परिपूर्णतयाऽध्याहारानपेक्षणाच्च पुरुषप्रवृत्त्ययोगेन विध्यानर्थक्यादप्रमाणमेवमादीति प्राप्ते नियोज्याभावे अनुष्ठानापर्यवसानात्तत्पर्यवसानार्थं स्वर्गकामादिरूपो विनियोज्योऽध्याहारेण कल्पनीय इत्युक्तं तद्वदित्यर्थः । वैषम्यमाह **अध्यापनेति** । विश्वजिदादावनन्यलभ्दविधिबोधितापूर्वशब्दितविनियोगबलान्नियोज्यकल्पनायाः संभवेपि इह अध्ययनेन विनाऽध्यापनायोगादन्यलभ्याध्ययनानुवादेन विधित्वाभावान्न नियोज्यकल्पनं युक्तमित्यर्थः । अध्यापयीतेत्यादावपि स्वर्गकामादिपदश्रवणाच्छंकते **नचेति** ॥ **आचार्यकरणकामस्येति** । (स्वस्याचार्यत्वं कर्तुकामस्येत्यर्थः) । आचार्यत्वसंपत्तिकामस्येत्यर्थः । सोपि न श्रूयत इत्यतस्तद्बोधकं शब्दं पूर्ववाक्यस्थं दर्शयति **अष्टवर्षमिति** । आत्मनेपदेत्यलुक्समासेनैकं पदं । तावता कथमुक्तनियोज्यलाभ इत्यत आह **संमाननेति** । आद्यस्य तृतीयपादे 'अनुदात्तङित आत्मनेपदमिति' आत्मनेपदप्रकरणे संमाननेतिसूत्रे 'संमाननं पूजनम् । उत्संजनं उत्क्षेपणम् । आचार्यकरणं स्वस्याचार्यत्वं यथा भवति तथा संपादनम् । ज्ञानं वस्तुनिश्चयः । भृतिर्वेतनम् । विगणनं ऋणादेर्निर्यातनं । व्ययः धर्मादिषु विनियोगः । संमाननादौ सति नीञ्प्रापण इत्यस्मादात्मनेपदं भवती'तिविधानात्स्वस्याचार्यत्वसिद्धये अष्टवर्षं ब्राह्मणं स्वसमीपं नयतीति वाक्यार्थसंपत्त्या कामनाभावे तत्करणायोगेनाचार्यकरणकामस्य लाभ इति भावः । तावताऽध्ययनविधौ तल्लाभः कथमित्यत आह **तमध्यापयीतेति** । अध्यापनेनाध्ययनलाभं प्रागध्यापनविधिनैवाध्ययनसिद्धावित्युक्तं व्यनक्ति **न हीति** । इति शब्दो हेतौ । इति कृत्वा स्वसिद्धये अध्यापनसिद्धये अध्ययनरूपपराक्षेपरूपेणोपादानेनोपादानाख्यप्रमाणेनेत्यर्थः । तन्मते हि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपप्रमाणषट्कमिवोपादानाख्यं सप्तमं प्रमाणमङ्गीकृतमिति उपादानेनेत्युक्तम् । सङ्गतमितीतिशब्दस्येत्याहेति पूर्वेणान्वयः । जीविकार्थत्वात् जीवनोपायत्वादित्यर्थः ॥ **त्रीणीति** । यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपषट्कर्ममध्ये याजनाध्यापनप्रतिग्रहरूपत्रीणि कर्माणि जीवनहेतुरित्यर्थः । 'षण्णां तु कर्मणां मध्ये त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशिष्टाच्च प्रतिग्रह' इति वचनादित्यर्थः । अस्तु ततः किमित्यत आह **अध्ययनस्य चेति** । 'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' इत्यध्ययनस्याकरणे निंदाश्रवणादित्यर्थः । ततोपि किमित्यत आह **न च नित्यमनित्येनेति** । जीवननिमित्तकत्वादनित्येनेत्युक्तम् । प्रयुज्यते अनुष्ठाप्यत इत्यर्थः । नित्यस्य विपक्षे दण्डभयेनैवानुष्ठातव्यत्वेनान्यप्रयुक्तत्वादित्यर्थः ॥ **चरितार्थत्व इति** । अध्यापनविधेरिति योज्यम् । **अध्ययनादीति** । अध्ययनसंध्यावन्दनाग्निकार्यादिविधिरित्यर्थः ॥ **कथञ्चिति** । लौकिकपरोचनविपक्षदण्डादिनेत्यर्थः ॥ **इत्येतदिति** । पूर्वोदाहृतसूत्रशेषमित्यर्थः ।

**या०** — स्वाध्यायोऽध्येतव्य इति विधेः सर्ववेदाध्ययनविधायकत्वमुक्तमसहमानं प्राभाकरमुत्थापयति **आहेति** ॥ **प्रयुक्तमिति** । लभ्यमित्यर्थः ॥ **नियोज्येति** । तथा चाध्यापनविधिलब्धाध्ययनानुवादित्वमेव स्वाध्यायोऽध्येतव्य इत्यस्य नाध्ययनविधित्वमिति भावः **विश्वजिदादावित्वेति** । विश्वजिता यजेतेत्यादौ किं नियोज्योऽध्याहार्यो न वेति सन्देहे लोके द्वारं द्वारमित्यादौ क्रियया विना कारकाभिधानापर्यवसानाद्युक्तोऽध्याहारः । इह तु विषयेण कार्यस्यान्विताभिधानपर्यवसानादध्याहार इति प्राप्ते उच्यते । अत्राप्यभिधेयापर्यवसानद्वाराऽभिधानापर्यवसानमेव । कार्यं हि साध्यत्वेन कृतिनिरूप्यम् । नरव्यापाररूपा च कृतिः । सा यथा स्वसाध्यधात्वर्थनिरूप्या एवं स्वाश्रयनरनिरूप्या । तदेवं कृतेः कर्ताऽपि कार्ये कृतिद्वारा सम्बन्धित्वेन निरूपक इति तमन्तर्भाव्यैव नियोगधीः । न चासावबुद्ध्वाऽऽत्मनः कार्येण सम्बधं स्वतस्तेन सम्बध्यते । स्वसम्बन्धिकार्यबोद्धा च नियोज्य इति सोऽध्याहार्य इति । तथाऽत्रापि नियोगधीबलान्नियोज्यः कल्पयितुं शक्यत इत्यर्थः ॥ **अध्यापनविधिनैवेति** । विश्वजिदादेरनन्यलभ्यतया यजेतेत्यस्य विधित्वेन नियोगधीजनकतयोक्तरीत्या तत्र नियोज्याध्याहारोऽपेक्षितो' न चात्र तथा । अध्ययनस्याध्यापनविधिप्रयुक्तत्वेन स्वाध्यायोऽध्येतव्य इत्यस्य तदनुवादकतया विधित्वाभावेन नियोगबुद्धेरेवाभावे नियोज्यकल्पकाभावादित्यर्थः । ननु स्वर्गकामो यजेतेत्यादौ स्वर्गकामादिपदवन्नात्राचार्यकरणकामप्रापकं किञ्चिच्छ्रूयत इत्यत आह **आत्मनेपदश्रवणादिति** । तथाऽपि कथमुक्तलाभ इत्यत आह **सम्माननेति** । सम्माननं पूजनम् । उत्सञ्जनमुत्क्षेपणम् । आचार्यकरणमाचार्यक्रिया । आचार्यसम्पत्तिरिति यावत् । अभूततद्भावेऽपि च्विर्विकल्पितत्वान्न कृतः । ज्ञानं प्रमेयनिश्चयः । भृतिर्वेतनम् । विगणनम् ऋणादेर्निर्यातनं शोधनमिति यावत् । व्ययो धर्मादिषु विनियोगः । सति सप्तमीयम् । स्वभावात्स्वतो विशेषणत्वं गमयति । विशेषणं च यथासंभवं किञ्चिद्धात्वर्थस्य किञ्चिद्धातोः । तेन सम्माननोत्सञ्जनाचार्यकरणभृतिषु नयत्यर्थविशेषणेषु सत्सूत्सञ्जनज्ञानविगणनव्ययेषु वाच्यतया नयतिविशेषणेषु सत्सु णीञः णीञ् प्रापण इति धातोस्तङानावित्यर्थः सम्पद्यते । उदाहरणं तु सम्मानने शास्त्रे नयते । शास्त्रस्थान्पदार्थान्युक्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयतीत्यर्थः । युक्तिभिः स्थिरीकरणमेव पदार्थानां पूजनम् । अन्ये त्वाहुः । पदार्थानामचेतनत्वान्नेयं पूजा मुख्या किन्त्वभिलषितार्थसंपादनेन शिष्याणामेव पूजेति व्याख्येयमिति । उत्सञ्जने दण्डमुन्नयते उत्क्षिपतीत्यर्थः । आचार्यकरणे माणवकमुपनयति माणवकमीदृशेन विधिनाऽऽत्मसमीपं प्रापयति । यथा स्वयमुपनेताऽऽचार्यः सम्पद्यते । आत्मानमाचार्यं कुर्वन्माणवकमात्मसमीपं नयतीत्यर्थः । ज्ञाने पदार्थं नयते पदार्थलक्षणं प्रमेयं निश्चिनोतीत्यर्थः । भृतौ भृत्यमुपनयते वेतनेनात्मसमीपं प्रापयतीत्यर्थः । विगणने करं विनयते राज्ञे देयं भागं निर्यातयति शोधय-

तीत्यर्थः । व्येय शतं विनयते धर्मार्थं विनियुङ्क्त इत्यर्थः । यद्यपि माणवकमुपनयत इत्यत्रात्मनेपदमहिम्नाऽत्राचार्यत्वसम्पादक एवोपनयनेऽधिकारी प्रतीयते न तु तत्कामस्तथाऽपि तत्कामनाभावे तत्सम्पादनासम्भवात्तत्कामनाऽप्यर्थाल्लभ्यत एव । एवञ्चाचार्यकरणकाम एव नियोज्य आत्मनेपदप्रयोगबलादेव प्रतीयत इति न तत्प्रापकाभाव इति भावः । नन्वेवमुपनयनविधावेव नियोज्यः प्राप्तो न त्वध्ययनविधावत आह **तमध्यापयीतेति** । अध्ययनं न साक्षादध्यापनविधि-प्रयुक्तम् । किन्तु तद्विहितेनाध्यापनेनाक्षिप्यत इति दर्शयति **न ह्यध्यापनमिति** । उपादानमिति पर-मतेऽर्थापत्तेः संज्ञेति दर्शयितुं स्वसिद्धये पराक्षेपलक्षणेनेत्युक्तम् ॥ **जीविकार्थत्वादिति** । तथा च नैमित्तिकत्वं तस्येति भावः ॥ **त्रीणि कर्माणीति** । यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहलक्षणेषु षट्सु कर्मसु याजनाध्यापनप्रतिग्रहाख्यानि त्रीणि कर्माणि जीवनोपायभूतानीत्यर्थः ॥ **योऽनधीत्येति** । 'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' इति वेदा-ध्ययनाकरणे प्रत्यवायश्रवणात् । असत्यागन्तुके निमित्ते यदकरणे प्रत्यवायः श्रूयते तन्नित्यमिति नित्य-कर्मणो लक्षणमिति भावः ॥ **अनित्येनेति** । नित्यभिन्नेन नैमित्तिकेनेत्यर्थः ॥ नैमित्तिकस्यागन्तुकनिमित्त-समावेश एव कर्तव्यता । श्राद्धादौ निमित्तके तथा दर्शनात । नित्यस्य तु तदभाव एव । एवं च कस्यचिदाचार्यस्य जीविकारूपनिमित्ताभावेनाध्यापनाभावे तदुपनीते माणवके नित्यतयाऽऽवश्यकमध्ययनं न त्वत्पक्षे सिध्यतीति भावः ॥ **चरितार्थत्व इति** । अध्यापनविधेरिति शेषः । **परेते** मृते ॥ **समान-मिति** । सन्ध्योपासने सति विधिज्ञानम् । ततश्च सन्ध्योपासनमितीतरेतराश्रयत्वं समानमित्यर्थः । **आचार्यस्यैवेति** । अन्तर्णीतणिच्त्वेनेति भावः ॥ **कथञ्चिदिति** । घनगर्जितन्यायेन वा लौकिकवाक्येन चेत्यर्थः । तेन चार्थज्ञानपर्यन्ताध्ययनादौ प्रवृत्तिरिति नोक्तेतरेतराश्रयत्वमिति । अत्रादिपदेन 'प्रातः सन्ध्यामुपासीते'त्यादिविधिसंग्रहः । ततश्चानयैव रीत्या तत्राप्यन्योन्याश्रयता परिहरणीयेति भावः ।

श्री० — नन्वध्ययनविध्यभावे माणवकस्याध्ययनमेव न सिध्येत् । अतस्तदन्यथाऽनुपपत्त्या नियोज्यः कल्पनीय इत्यतोऽन्यथैवोपपत्तिमाह **अध्यापनविधिनैवेति** । आचार्यस्याध्यापनं माणव-कस्याध्ययनं विना न सम्भवतीत्यध्यापनविधिनैव माणवकस्याध्यनमाक्षिप्यते । अतोऽन्यथाऽनुपपत्तिल-भ्यस्याध्ययनस्य न चोदनार्थत्वं 'यश्चार्थादर्थो न स चोदनार्थः' इति न्यायादिति भावः । अध्यापनमे-वाध्ययनमुपादत्त इति तदीयग्रन्थाभिप्रामाह **स्वसिद्धय इति** ॥ **कथञ्चिदिति** । तथा चाध्ययने सति विधिज्ञानमित्यनङ्गीकारान्नेतरेतराश्रय इति भावः ।

**च०**— स्वाध्यायोऽध्येतव्य इति विधिप्रत्ययस्य निखिलतदध्ययनविधायकतामनुपगच्छद्गुरुमत-दिशा शङ्कते **आहेति** । प्राभाकर इत्युपस्कृतेनान्वेति । **प्रयुक्तं** लभ्यम् । **नियोज्यरहितत्वात्** । प्रेरणीयपुरुषरहितत्वात् । **विश्वजिदादिवदिति** । विश्वजिता यजेतेत्यादिषु फलश्रवणेन स्वर्गकामादि-रूपनियोज्यरहितत्वाद्यागकार्यताबोधनेन वाक्यस्य परिपूर्णतयाऽध्याहारानपेक्षणाच्च पुरुषप्रवृत्त्ययोगेन विद्या-नर्थक्यादप्रमाणमेवेति प्राप्ते नियोज्याभावे तुष्टतापर्यवसानतात्पर्यवासनार्थं स्वर्गकामादिरूपो नियोज्या-ध्याहारेण कल्पनीय इत्युक्तं चतुर्थस्य तृतीयपादे फलाश्रुतेरितिपञ्चमनये तद्वदित्यर्थः । **कल्पकाभावा-दिति** । विश्वजिदादावनन्यलभ्यविधिबोधितापूर्वशब्दितविनियोगबलान्नियोज्यकल्पनायाः संभवेपीहाध्ययनं विनाध्यापनायोगादन्यलभ्याध्ययनानुवादेन विधित्वाभावान्न नियोज्यकल्पनं युक्तमित्यर्थः । अध्यापयीते-त्यादावपि फलकामपदाश्रवणादाशङ्कते **न चेति** । **आचार्यकरणकामस्य** । आचार्यत्वं संपिपादयिषोः । **अष्टवर्षमिति** । तत्पूर्ववाक्ये तद्बोधकपदश्रवणान्न तद्राहित्यशङ्काऽवकाश इति भावः । 'संमानने'ति-सूत्रस्य '**संमाननं** पूजनम् । **उत्सञ्जनमुत्क्षेपणम्** । **आचार्यकरणं** स्वस्याचार्यत्वसंपादनम् । **ज्ञानं** वस्तुनिश्चयः । **भृतिः** वेतनम् । **विगणनं** ऋणादेर्निर्यातनम् । **व्ययः** धर्मादिषु विनियोगः । एषु विवक्षितेषु नयतेरात्मनेपदं भवती'त्यर्थः ॥ अत्रोत्सञ्जनज्ञानविगणनव्ययाः नयतेर्वाच्या इतरे प्रयोगोपाधयः। तथाहि । शास्त्रे नयते, शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः । तेन च शिष्यसंमाननं फलितम् । उत्सञ्जने दण्डमुन्नयते उत्क्षिपतीत्यर्थः । माणवकमुपनयते विधिना आत्मसमीपं प्रापयति । उपनयन-पूर्वकेणाध्ययनेन हि उपनेतरि आचार्यत्वं क्रियते । ज्ञाने तत्त्वं नयते निश्चिनोतीत्यर्थः कर्मकरानुपनयते भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः । विगणनं ऋणादेर्निर्यातनं । करं नयते । राज्ञे देयं भागं परिशोध-यतीत्यर्थः । शतं विनयते । धर्मार्थं विनियुङ्क्ते इत्यर्थः । इति पाणिनीयैर्विवेचितमवसेयम् । **परापेक्षलक्षणेन** अध्ययनापेक्षस्वरूपेण । **उपादानेन** उपादानाख्यप्रमाणेन । तन्मते श्रुत्यादिषट्क-मिवोपादानाख्यं सप्तमं प्रमाणमङ्गीकृतमिति तथोक्तिः । **संगतमितीति** । प्राक्तनाऽऽहेत्यनेन इति-**रन्वेति** । **त्रीणीति** । यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपकर्मषट्कमध्ये याजनाध्यापनप्रतिग्रह-रूपकर्मत्रयं जीवनहेतुरित्यर्थः । **अयमपीति** । अध्ययनसंध्यावन्दनाग्निकार्यादिरित्यर्थः ।

**सु०— समाचारेधिकाराच्च इत्येतद्व्याचष्टे** अद्यापीति ।

**अनु०**— समाचारेऽधिकाराच्च ॐ ॥

अद्यापि तेन देवाद्याः श‍ृण्वते मन्वते सदा ॥

ध्यायन्ति च यथायोगं

यतः सर्वविज्ञानमावश्यकम् । तेनैव हि कारणेन देवाद्या अद्यापि श्रवणमनने कुर्वन्ति सदा ध्यायन्ति च । अन्यथा महामतीनां तेषामेकैकशाखाश्रवणादेरल्पीयसैव कालेन कर्तुं शक्यत्वेनाद्यापि तत्करणं न स्यादिति । यथायोगं यथाशक्तीति प्रत्येकं विशेषणम् । शृण्वत इत्यात्मनेपद उक्तम् । समाचाराच्चेत्येवोक्ते देवादीनां वेदाधिकारित्वाभावात्कथमेतदित्यतो देवताधिकरणन्यायं मा विस्मार्षीरिति सूचयितुं सूत्रकृता समाचारेऽधिकाराच्चेत्युक्तम् ।

**शे० — समाचारेऽधिकाराच्च ॐ ॥ प्रत्येकं विशेषणमिति** । यथायोगं शृण्वते यथायोगं मन्वत इति प्रत्येकमित्यर्थः । ननु शृण्वतेः परस्मैपदित्वात् 'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः' इति समित्युपसर्गपूर्वकादेव तस्मादात्मनेपदविधानात्प्रकृते तदभावात् शृण्वतीत्येव भवितव्यं शृण्वत इत्यात्मनेपदं तु कथमित्यतः सांख्याधिकरणे स्वनाशार्थं को यतेदिति परस्मैपदविषये यत्समाधानमुक्तं- बहुलमेतन्निदर्शनमिति स्मरणाद्यतेदिति परस्मैपदं साधु । तथा चाह । चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदमिति । तदेव शृण्वत इत्यात्मनेपदविषयेऽपि द्रष्टव्यमित्याह **शृण्वत इत्यात्मनेपद उक्तमिति** । क्वचिदात्मनेपदमुक्तमिति पाठः । तत्रात्मनेपदमुक्तसमाधानकमित्यर्थः ॥ **न्यायमिति** । 'भावं तु बादरायणोऽस्ति ही'ति सूत्रोक्तं न्यायमित्यर्थः ॥ **वेदाद्यधिकारित्वाभावादिति** । पदप्राप्तेः पूर्वं पश्चाच्च देवाभावेन तदुद्देशेन द्रव्यत्यागात्मकयागादिरूपकर्मविरोधस्य वाच्यहीनाया वाचः प्रामाण्यायोगेन शब्दविरोधस्य च प्रसक्त्या तत्तत्पदादिविशिष्टदेवतानामुत्पत्तिविनाशवत्त्वासम्भवेन तत्तत्पदादिविशिष्टदेवानामनादिनित्यत्वस्यावश्यं वक्तव्यत्वात्स्वपदेभ्यो मोक्षस्यातिशयितत्वेऽपि स्वपदानां नित्यत्वेन स्वेषां मोक्षाभावनिश्चयेन तत्रार्थित्वाभावादिति भावः **अधिकरणन्यायमिति** । विशिष्टबुद्ध्यादिमत्त्वेन तिर्यगादिवदसामर्थ्याभावाच्छूद्रादेरिव प्रतिषेधाभावात्प्रवाहतोऽनादिनित्यत्वेन तुल्यरूपादिमत्त्वेन च कर्मादिविरोधादेरभावादधिकारस्य श्रुतिसिद्धत्वाच्चेति तदधिकरणन्यायमित्यर्थः ।

**स० —** ननु शृण्वत इति कथम् । शृणोतेः परस्मैपदित्वात् शृण्वन्तीति भाव्यम् । न च समोगम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिभ्य इति शृणोतेरात्मनेपदमपि[1] विहितमिति नानुपपत्तिरिति वाच्यम् । तत्र समित्युपसर्गे विद्यमान एव तद्विधानेन प्रकृते च तदभावेनात्मनेपदासंभवादित्यत आह **शृण्वत इत्यात्मनेपद उक्तमिति** । आत्मनेपद इति विषयसप्तमी । समयचरणे सांख्याधिकरणे स्वनाशार्थं च को यतेदित्यत्र बहुलमेतन्निदर्शनम् । चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदमित्यादिना शृण्वत

१. पाणिनीयाष्टाध्यायीस्थमिदं १-३-२९, क्रमाङ्कीयं सूत्रं सिद्धान्तकौमुद्यादिषु पूर्णं नोपलभ्यते परं प्रक्रियाकौमुद्यां ४०७ पृष्ठे उपलभ्यते । अत्र पातञ्जलभाष्यटीकाटिप्पण्यश्चापि आलोचनार्हाः ।

इत्यात्मनेपदविषये समाधानमुक्तमित्यर्थः । आत्मनेपदमित्यपि क्वाचित्कः पाठः । तत्रात्मनेपदमुक्तसमाधानकमित्यर्थः ननु देवादिभिः । क्रियमाणस्य श्रवणस्य पारार्थ्यान्न तेन सर्वं विज्ञानस्यावश्यकत्वसिद्धिरित्यतः श्रवणस्यात्मार्थत्वाभावे आत्मनेपदायोगात् स्वार्थत्वमेवेत्याह **शृण्वत इति** । इति व्याख्यानं तु न बुध्यामहे । चतुर्थ्यन्तत्वनिरासायाहेति व्याख्यानं त्वतितुच्छम् । तथाऽप्रतीतेः कर्त्राद्युक्त्यभावात् । वक्तादिपदास्वारस्याच्च ।

**प० — तच्छब्दपरामृष्टमाह यत इति** । सर्वज्ञानहेतुरिति कुत इत्यत आह **अन्यथेति** । यथायोगमित्यस्यार्थो यथाशक्तीति ॥ **प्रत्येकमिति** । क्रियापदत्रयेणापीत्यर्थः । ननु शृणोतेः परस्मैपदत्वात् शृण्वंतीति वाच्ये कथं शृण्वत इत्युक्तिः । न च समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्य इत्यात्मनेपदमपि विहितमस्तीति वाच्यम् । समित्युपसर्गपरस्यैव तत् न केवलस्य अत आह **आत्मनेपद इति** । आत्मनेपदविषये समाधानमुक्तम् । समयपादीयाद्याधिकरणांत्यभागे स्वनाशार्थं च को यतेदित्येतद्व्याख्यावसरे 'चन्द्रादयस्तु मन्यंते सर्वस्मादुभयं पद'मित्येवं रूपेणेत्यर्थः ।

**या० —** ननु समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्य इति समित्युपसर्गपूर्वकादेव श्रृणोतेरात्मनेपदविधानात्प्रकृते च तदभावात्कथमात्मनेपदमित्यत आह **श्रृण्वत इत्यात्मनेपद इति** । श्रृण्वत इत्यस्यात्मनेपदत्वविषये समाधानं पूर्वमुक्तमित्यर्थः । 'स्वनाशार्थं च कोयतेदि'त्यनुव्याख्याव्याख्यावसरे 'चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदमि'त्युक्तत्वादिति भावः । आत्मनेपदमुक्तमिति पाठे तु चन्द्रादिभिरिति शेषः । सर्वस्मादिति सामान्येन उक्तत्वादिति भावः ।

**श्री० —** देवाद्याः श्रृण्वन्तीत्यनेन समाचारे देवानां सम्यक् श्रवणादीनामाचरणेऽधिकारादित्यर्थ उक्तो द्रष्टव्यः ॥ **अर्थित्वाभावादिति** । अर्थी समर्थो विद्वानधिक्रियते । देवानां प्राप्तफलत्वेनार्थित्वाभावान्नाधिकार इत्यर्थः ॥ **न्यायमिति । 'भावं तु बादरायणोऽस्ति ही'ति** सूत्रोक्तं **न्यायमित्यर्थः** ।

**च० —** ननु 'समोगम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्य' इतिसमुपसृष्टश्रुणोतेरेवात्मनेपदविहितेरनुपसृष्टत्वविधानात्कथमयं न्यासः सङ्गच्छत इत्यत आह **आत्मनेपद इति** । चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदमित्येवंरूपेण समयचरणेऽभिहितमित्यर्थः ।

**सु० — यदि ब्रह्मसाक्षात्कारवन्तोऽपि देवाद्याः श्रवणाद्यनुतिष्ठन्ति तर्हि तस्य निरवधिकत्वं प्रसक्तमित्यत आह** तथाऽपीति ।

**अनु० —** तथाऽप्यावस्तुनिर्णयात् ॥
श्रवणं मननं चैव कर्तव्यं सर्वदैव हि ॥

यद्यपि सूत्रकारेण देवाद्याचारः प्रमाणीकृतस्तथाऽपि, वस्तु परब्रह्मादिकम् । निर्णयो यथार्थः परोक्षो निश्चयः । प्रथमस्यैवशब्दस्यावस्तुनिर्णयादेवेति सम्बन्धः । वस्तुनिर्णयहेतुत्वाच्छ्रवणादेरिति हिशब्दार्थः ।

**शे० — अवधारयितुमिति** । अयमेव वस्तुनिर्णयो नातःपरं संशयो भविष्यतीत्येवं चरमावधित्वेनावधारयितुमशक्यत्वादित्यर्थः ।.

**सु० — वस्तुनिर्णयपर्यन्तं श्रवणमनने कर्तव्ये इत्यसत् । निर्णीतेऽप्यर्थे पुनः कारणान्तरोपनिपातेन संशयाद्युत्पादस्य दर्शनेन वस्तुनिर्णयस्यावधारयितुमशक्यत्वादित्यत आह** मतीति ।

**अनु० —** मतिश्रुतिध्यानकालविशेषं गुरुरुत्तमः ॥
वेत्ति तस्योक्तमार्गेण कुर्वतः स्याद्धि दर्शनम् ।

**मतिर्मननं श्रुतिः श्रवणम् । उत्तमः शिष्ययोग्यताभिज्ञः । कुर्वतः श्रवणादिकम् । दर्शनं ब्रह्मसाक्षात्कारः । एतदुक्तं भवति । ब्रह्मदर्शनार्थं हि श्रवणादिकम् । न च तद्यथाकथञ्चिदनुष्ठितं** तत्साधनम् । **किन्तु शिष्ययोग्यताभिज्ञगुरुप्रदानपूर्वकमेवेति वक्ष्यति । अतस्तादृशो गुरुरेव श्रवणादिकालविशेषमुपदेक्ष्यति । यतः परं कारणशतोपनिपातेऽपि न संशयाद्युत्पादः स्यादिति ।**

**शे० —**मतिश्रुतिशब्दयोर्बुद्धिवेदपरताया दर्शनसाधनीभूतध्यानसमभिव्याहारेणायोगाच्छ्रवणमननपरतया तौ व्याचष्टे **मतिरित्यादि** ॥ **वक्ष्यतीति** । 'प्रदानवदेव हि तदुक्तमि'त्यत्रेति शेषः ।

**स० — वक्ष्यतीति** । प्रदानवदेव हि तदुक्तमित्यत्रेति शेषः ।

**प० —** कुर्वत इत्यत्र कर्माऽऽह **श्रवणादिकमिति** ॥ **वक्ष्यतीति** । 'प्रदानवदेव हि तदुक्तमित्याद्यधिकरण इति भावः ।

**या० — अवधारयितुमिति** । चरमावधित्वेनेति शेषः ॥ **वक्ष्यतीति** । 'प्रदानवदेव हि तदुक्तमि'त्यत्रेति शेषः ।

**सु० — देवाद्याः श्रवणादिकमद्यापि कुर्वन्तीति न युक्तम् । स्याद्धि दर्शनमिति श्रवणादेस्तत्त्वदर्शनसाधनत्वस्योक्तत्वात् । देवादीनां च तत्त्वदर्शनस्यौत्पत्तिकत्वात् । यथोक्तम् 'नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः' इत्यादि । न च प्राप्तसाध्यः साधनमनुतिष्ठतीत्यत आह** श्रवणमिति ।

**अनु० —** श्रवणं दृष्टतत्त्वस्य मननं ध्यानमेव च ॥
विशेषानन्दसम्प्राप्त्या(=प्त्यै)

**दृष्टतत्त्वस्यापि पुंसः श्रवणं मननं ध्यानं च विशेषानन्दसम्प्राप्त्यै युज्यत एवेति योजना। एवं तर्हि श्रवणादेर्दर्शनसाधनत्वोक्तिर्व्याहन्यत इत्यत आह अन्यस्येति।**

अन्यस्यैतानि दृष्टये।

**अदृष्टतत्त्वस्यैतानि श्रवणादीनि दृष्टये भवन्ति॥ यथा खलु समुच्चयवादिनां ज्ञानात्पूर्वाणि कर्माणि ज्ञानार्थानि। ततः पराणि तु मोक्षार्थानि। यथा च सकामानि कर्माणि संसारकारणानि निष्कामानि तु ज्ञानकारणानि। तथा श्रवणादीन्यदृष्टतत्त्वस्य ज्ञानार्थानीति न तदुक्तिव्याघातः। दृष्टतत्त्वस्य तु विशेषानन्दार्थानीति देवादीनां तदनुष्ठानं च युक्तम्। समाचारकथनं च यथाशक्ति वेदार्थश्रवणमननयोः कर्तव्यतामात्रोपोद्धलनाय कृतमिति नासङ्गतम्। विशेषानन्दं तु वक्ष्यामः।**

**शे० — औत्पत्तिकत्वादिति** । अनागन्तुकत्वादित्यर्थः। नन्ववस्थाभेदमात्रेण श्रवणादीनां कथं भिन्नफलकत्वमित्यतो दृष्टान्तमुखेन तदुपपादयति **यथेति ॥ तदुक्तीति**। दर्शनसाधनत्वोक्तीत्यर्थः। ननु ब्रह्मदर्शनहेतुश्रवणादेः कर्तव्यत्वेन प्रकृतत्वाद्देवतादिभिश्च क्रियमाणस्य तस्य विशेषानन्दार्थत्वेन ज्ञानार्थत्वाभावात्तदुदाहरणं प्रकृतासङ्गतमित्यत आह **समाचारकथनं चेति ॥ कर्तव्यतामात्रेति**। न तु ज्ञानार्थकश्रवणमननयोः कर्तव्यतोपोद्धलनायेत्यर्थः। ननु ज्ञानोत्तरकालीनश्रवणादेरानन्दातिशयसाधनत्वं न युक्तम्। तस्य मुक्तककर्तृकश्रवणादिवल्लीलात्मकत्वेन निष्प्रयोजनत्वादित्यत आह **विशेषानन्दं त्विति**। भयपूर्वप्रवृत्तिमत्त्वेन ज्ञानिकृतश्रवणादेर्मुक्तकर्तृकश्रवणादिवैलक्षण्येन लीलात्मकत्वाभावाद्युक्तमानन्दातिशयसाधनत्वमिति, युक्तं च साधनाधिक्यात्साध्याधिक्यं सुरादिष्वित्यादिना वक्ष्याम इत्यर्थः। यद्वा परमं साम्यमुपैतीति मुक्तानामानन्दस्य साम्यश्रुतेरानन्दतारतम्यमेव नास्ति तदतिशयस्तु दूरापास्त इत्यत आनन्दतारतम्यं ज्ञानपादे वक्ष्याम इत्याह **विशेषेति**। यद्वा वैशेषिकादिरीत्या मुक्तावानन्द एव नास्ति तदतिशयस्तु दूरोपास्त इत्यत आह **विशेषेति**। चतुर्थाध्याये वैशेषिकाभिमतमोक्षखण्डनसमये मुक्तावानन्दसद्भावं ज्ञानपादे तद्विशेषं च वक्ष्याम इत्यर्थः।

**स०—** ननु ब्रह्मसाक्षात्कारहेतुश्रवणादेः कर्तव्यत्वेन प्रकृतत्वात् देवादिभिः क्रियमाणस्य च तदहेतुत्वात्तदुदाहरणं प्रकृतासङ्गतमित्यत आह **समाचारकथनमिति ॥ उपोद्धलनायेति**। अपरोक्षज्ञानवद्भिरपि यदा श्रवणादिकमनुष्ठीयते तदा किमु तत्कामैरपीति कैमुत्यं सूचयितुं समाचारकथनमिति भावः।

**प०— यथोक्तमिति**। द्वितीयगीतातात्पर्ये। **समुच्चयेति**। ज्ञानकर्मणी समप्राधान्येन समुच्चित्य मोक्षं प्रति हेतू इति वादिनां मते पूर्वकालीनत्वादिना ज्ञानादिविलक्षणफलहेतुत्वं कर्मणां

यथा तथेत्यर्थः । ननु ज्ञानहेतुतया सर्ववेदविषयश्रवणमननयोरत्र प्रकृतत्वात्कथं तत्रानन्दहेतुश्रवणादेरत्र प्रमाणीकरणमित्यत आह **समाचारकथनं चेति** । ननु मुक्तानन्द एव नास्ति विशेषानन्दः कुत इत्यत आह **विशेषानन्दं तु वक्ष्याम इति** । चतुर्थस्य द्वितीयपादे पराभिप्रेतमोक्षस्वरूपनिरासावसरे मुक्तावानन्दसत्त्वं तद्विशेषं च ज्ञानपादे तारतम्योक्तिप्रस्तावे वक्ष्याम इत्यर्थः ।

**या०**— नन्ववस्थाभेदमात्रेण श्रवणादीनि कथं भिन्नफलकानीत्यतो दृष्टान्तमुखेनैतदुपपादयति **यथा खल्वित्यादिना**। नन्विदमसङ्गतम् । ज्ञानार्थकयथाशक्तिसर्ववेदार्थश्रवणादिकर्तव्यता ह्यत्र प्रकृता । तत्कथं देवादीनां समाचारकथनं साधकम् । तस्य विशेषानन्दार्थत्वेन ज्ञानार्थत्वाभावादित्यत आह **समाचारकथनं चेति** ॥ **कर्तव्यतामात्रेति** । न तु ज्ञानार्थकश्रवणमननयोः कर्तव्यतारूपोद्बलनायेत्यर्थः । ननु देवादीनां परमं साम्यमुपैतीति श्रुत्या मुक्तौ समानानन्दत्वावगमात्कथं समाचारस्य विशेषानन्दफलकत्वमित्यत आह **विशेषानन्दमिति** । ज्ञानपादे तारतम्यप्रतिपादनावसर इति शेषः । यद्वा मुक्तावानन्द एव नास्तीति केचित् । तत्सत्त्वेऽपि स सर्वेषां सम एवेत्यपरे अतः कथं विशेषानन्दार्थत्वं सामाचारस्येत्यत आह **विशेषानन्दमिति** । चतुर्थाध्याये वैशेषिकमोक्षखण्डनावसरे मुक्तावानन्दसद्भावं ज्ञानपादे तत्तारतम्यरूपं च विशेषं वक्ष्याम इत्यर्थः ।

---

**सु०**— **शिष्ययोग्यताभिज्ञगुरूपदेशानुसारेण श्रवणादिकं कर्तव्यमित्ययुक्तम् । तादृशस्य गुरोर्दुलभत्वेन श्रवणाद्यभावापत्तेः । लभ्यमानोऽप्यसावनुष्ठितश्रवणादिना आध्यात्मिकशक्तिसम्पन्नेनैव शिष्येण लभ्यते नान्येन । तथा चान्योन्याश्रय इत्यत आह यदीति ।**

**अनु०**— यदि तादृग्गुरुर्नास्ति निर्णीतश्रवणादिकम् ॥
तत्सिद्धान्तानुसारेण निर्णयज्ञात्समाचरेत् ॥

**द्विविधं शास्त्रं निर्णीतं निर्णेतव्यं च । तत्राद्यं ब्रह्मसूत्रादिकं, द्वितीयं वेदादिकम् । तत्र निर्णीतस्य श्रवणादिकं समाचरेत् । सर्वज्ञानां सिद्धान्तानुसारेण यो निर्णयं जानाति तस्मात् । इदमुक्तं भवति । मुख्यस्य गुरोः प्रथममलाभेऽपि न श्रवणाद्यभावापत्तिः । अमुख्यादपि गुरोस्तदुपपत्तेः । तत्र मुख्यवदमुख्यस्यातिगहनवेदादिव्याख्यानसामर्थ्याभावेऽपि निर्णीतव्याख्यानमुपपद्यत एव । न च निर्णीतशास्त्रस्यापि व्याख्यानविप्रतिपत्त्याऽभिप्रायो दुरधिगम इति वाच्यम् । सर्वज्ञप्रणीतोपायग्रन्थानुसारेणामुख्यस्यापि गुरोस्तदवगमसंभवात् । एवं चामुख्ये श्रवणादावनुष्ठिते मुख्योऽपि गुरुर्लभ्यत इति ।**

**शे०— आध्यात्मिकेति** । आध्यात्मिकस्य देहेन्द्रियादेर्या शक्तिरलौकिकार्थावगाहित्वादि-लक्षणा तत्सम्पन्नेनेत्यर्थः । योग्यताभिज्ञगुरोरलौकिकत्वादिति भावः ॥ **तथा चेति** । श्रवणाद्यनुष्ठाने सतीन्द्रियादेरलौकिकार्थदर्शनशक्तिसम्पत्त्या योग्यताभिज्ञगुरुदर्शनं सति च तस्मिंस्तदुक्तमार्गेण श्रवणाद्य-नुष्ठानमित्यन्योन्याश्रयत्वमित्यर्थः ॥ **ब्रह्मसूत्रादिकमिति** । तद्धि सर्वज्ञप्रणीतभाष्याद्युपायग्रन्थानुसारेण स्वाभिप्रेतार्थपरतया निर्णीतत्वान्निर्णीतं शास्त्रमित्यर्थः । आदिपदेन सर्वज्ञप्रणीतभाष्याद्युपायग्रन्थवद्गीतोप-निषदादिपरिग्रहः **अनुष्ठित इति** । आध्यात्मिकशक्तिसम्पद्द्वारेति शेषः ।

**प०— आध्यात्मिकशक्तिसंपन्नेनेति** । अधिकात्मा परमात्मा तत्संबन्धिज्ञानध्यानादिक-माध्यात्मिकं तत्र सामर्थ्ययुक्तेनेत्यर्थः । (महावाक्यार्थप्रमादरहितेनेत्यर्थ इत्येके) बाह्यार्थप्रावण्यरहिते-नेत्यर्थ इत्येके । सूक्ष्मालौकिकार्थविषयकेन्द्रियशक्तियुक्तेनेत्यर्थ इत्यन्ये ॥ **अन्योन्येति** ॥ सति श्रवणादौ गुरुलाभः लब्धे च तस्मिन् श्रवणादीत्यन्योन्याश्रयत्वमित्यर्थः ॥ **ब्रह्मसूत्रादिकमिति** । 'ब्रह्म-सूत्रपदैश्चापि हेतुमद्भिर्विनिश्चितैरि'ति गीतोक्तेः । आदिपदेन सर्वज्ञप्रणीतः व्याख्यानग्रहः ॥ **वेदादीति** । वेदपुराणादिकम् ।

**या०— आध्यात्मिकेति** । आत्मानं देहमधिकृत्य वर्तमानमाध्यात्मिकमिन्द्रियादि तस्य या शक्तिरलौकिकार्थावगाहित्वादिलक्षणा तत्सम्पन्नेनेत्यर्थः । योग्यताभिज्ञगुरोरलौकिकत्वादिति भावः । एवं श्रवणाद्यनुष्ठाने इन्द्रियादेरलौकिकार्थदर्शनशक्तिसम्पत्तौ योग्यताभिज्ञगुरुदर्शनं तस्मिंश्च सति श्रवणा-द्यनुष्ठानमित्यन्योन्याश्रयत्वमित्यर्थः ॥ **ब्रह्मसूत्रादिकमिति** । ब्रह्मसूत्रादिकं हि सर्वज्ञप्रणीतभाष्याद्युपाय-ग्रन्थानुसारेण स्वाभिप्रेतार्थपरतया निर्णीतमिति भावः । आदिपदेन यत्र यत्र सर्वज्ञप्रणीतोपायास्ते सर्वे भारतभागवतोपनिषदादयो ग्राह्याः । एवं चामुख्ये श्रवणादावनुष्ठित इत्यनन्तरमाध्यात्मिकशक्तिसम्पत्ति-द्वारेति शेषः ।

**श्री०— विप्रतिपत्त्येति** । अपव्याख्यानजनितविप्रतिपत्त्येत्यर्थः ।

**सु०— सर्वज्ञस्य गुरोः श्रवणाद्यङ्गत्वे तदभावे श्रवणाद्यभाव एव कुतो नाङ्गीक्रियते किमनेनामुख्येन श्रवणादिना । सर्वज्ञगुरुप्राप्तिस्तु पुण्योपचयेनापि भविष्यतीत्यत आह** श्रवणादीति ।

**अनु०**— श्रवणादि विना नैव क्षणं तिष्ठेदपि क्वचित् ।

**सन्ति तावत्सर्वदा श्रवणादिकं कर्तव्यं क्षणमपि न त्याज्यमित्येवमर्थाः श्रुतिस्मृतयः स्वाध्यायप्रवचने एवेति नाको मौद्गल्य इत्याद्याः । तत्र च सर्वज्ञो गुरुरङ्गम् । तदलाभे तु गुणे त्वन्याय्यकल्पनमिति न्यायेन यादृशतादृशमपि श्रवणादिकं कार्यमेवेतीति भावः ।**

**नन्वेताः श्रुतय एवानुपपन्नार्थाः । अपरिहार्यनिद्राद्युपद्रवप्राप्तौ श्रवणादेः कर्तुमशक्यत्वात् । न ह्याकाशरोमन्थनं शक्यविधानमित्यत** आह अतीति ।

अत्यशक्ये तु निद्रादौ पुनरेव समाचरेत् ।

**परिहर्तुमशक्ये निद्रादौ प्राप्ते तु पुनरेव तदपगमनानन्तरमेव श्रवणादिकं समाचरेत् । अयमभिप्रायः । यथा सायम्प्रातरग्निहोत्रं जुहोतीत्यादिविधयः सन्निपाताद्युपप्लवसंभवेऽपि नानुपपन्नास्तथा प्रकृतेऽपीति ।**

**शे०**— इत्याद्या इत्याद्यशब्देन प्राक् स्मृतिशब्देन प्रतिज्ञात'आयुर्वै हरति पुंसामुद्यन्नस्तं च यन्नसौ । तस्यर्ते यः क्षणो नीत उत्तमश्लोकवार्तये'त्यादिभागवतादिवाक्यपरिग्रहः ॥ **गुणे त्वन्याय्यकल्पनेति । न्यायेनेति** । यथा ह्यग्नीषोमीये पशावेकपाशके 'अदितिः पाशान्प्रमुमोक्त्वैतानिति 'अदितिः पाशं प्रमुमोक्त्वेतमि'ति च मन्त्रौ श्रुतौ । तत्र बहुवचनवान्मन्त्रः प्रकरणादुत्कृष्टव्यो न वेति विशये बहुवचनस्यासमवेतार्थत्वादुत्कर्षप्राप्ते विशेष्यप्राधानभूतपाशवाचिप्रातिपदिकस्याग्नीषोमीये समवेतार्थत्वात्तदनुरोधेन बहुवचनं पाशगुणत्वेन तद्विशेषणभूतबहुत्ववाचकमन्याय्यया लक्षणया पाशावयवान् लक्षयतीति नवमे निर्धारितम् । 'विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वात्' । उत्कर्षोनुत्कर्षो वेत्यस्यां विप्रतिपत्तौ पाशं पाशानिति मन्त्रयोर्विकल्पः स्यात् । पाशप्रातिपदिकस्योभयत्र समत्वात् । गुणे प्रत्ययार्थे त्वन्याय्यकल्पना न तद्बलान्मन्त्रोत्कर्षः प्रत्ययस्य पदैकदेशत्वात् । प्रातिपदिकपारतन्त्र्येणोत्कर्षकत्वायोगादिति सूत्रार्थः । तथा च प्रधानभूतपाशप्रातिपदिकानुरोधेन गुणभूतप्रत्ययार्थे बहुत्वेऽन्याय्यकल्पनावत्प्रधानभूतश्रवणाद्यनुरोधेन तदङ्गभूतसर्वज्ञगुरोरेव परित्यागो युक्तो न तु तदलाभात्प्रधानभूतश्रवणादेः परित्याग इति भावः । **श्रुतय इति** । बहुवचनमाद्यर्थे । श्रुत्याद्या इत्यर्थः । अत एव श्रुतिस्मृतय इति पूर्वग्रन्थः सङ्गच्छते । रोमन्थनं चर्वितचर्वणम् । आकाशस्य भक्षणमेवानुपपन्नं पुनर्भक्षितस्य भक्षणमित्यशक्यत्वज्ञापनाय रोमन्थनपदं प्रयुक्तम् । अन्यथा भक्षणमित्येवावक्ष्यदिति ध्येयम् । ननु सर्वज्ञगुरोः श्रवणाद्यङ्गत्वात्तदभावे कथं श्रवणादिकं स्यादित्यत आह **न हीति** । अङ्गाभावे प्रधानत्यागो न युक्तः किन्तु प्रधानानुरोधेनाङ्गत्याग एव युक्त इति भावः ।

**स०— गुणे त्वन्याय्यकल्पनेति** । मुख्यासंभवेऽमुख्यस्यापि ग्राह्यत्वादित्यर्थः ।

प० — **नाको मौद्गल्य इति** । मुद्गलगोत्रजः नाको नाम मुनिः स्वाध्यायप्रवचनं परमं तप इति वक्तीत्यर्थः । आदिपदेन 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यमि'त्यादिश्रुतिः । 'य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यती'त्यादिना 'तस्मान्मे प्रियकृत्तम, इत्यन्तं गीतास्मृत्यादिः । तथा 'भगवान्हरिरीश्वरः । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयमि'त्यादिद्वितीयस्कन्धादिस्थवाक्यं गृह्यते ॥ **गुणे त्वन्यायकल्पनमिति** । विप्रतिपत्तौ विकल्पः स्यादसमत्वाद्गुणे त्वन्यायकल्पनैकदेशत्वादि'ति नवमाध्यायतृतीयपादीयजैमिनिसूत्रांशोक्तन्यायेनेत्यर्थः । तत्र हि गुणप्रधानयोर्द्वयोः स्वारस्यासंभवे सति अन्यतरस्वारस्येऽवश्यंभाविनि कस्येतिविचारे गुणभूत एवान्यायशब्दितमस्वारस्यकल्पनमित्युक्तम् । तत्र शाबरभाष्यादौ प्रदर्शितमुदाहरणम् । अथाग्नीषोमीयपशावेकपाशके अदितिः पाशान् प्रमुमोक्त्वित पठितमन्त्रे प्रधानप्रातिपदिकपाशेत्यस्याप्रधानभूतबहुवचनस्वारस्यमनुरुध्य अग्नीषोमीयपशुप्रकरणादुद्धारेणान्यत्र पशुगणस्थले बहुपाशयुक्ते निवेशो न कल्प्यः । किन्तु बहुवचनस्यैव पाशावयवबहुत्वाद्यभिप्रायेणास्वारस्यमुपेत्याग्नीषोमीयपशुप्रकरण एवादितिः पाशानिति मन्त्रस्य निवेशः कल्पनीय इति । तथा चेह श्रवणादेः प्रधानत्वात् गुरोस्तदङ्गत्वेन प्रधानत्वादमुख्यगुरुमुपादायापि प्रधानं श्रवणादिकार्यमित्यर्थः ॥ **यादृशतादृशमिति** । अमुख्यगुरुमुखीयमित्यर्थः । अशक्यमपि कुतो न क्रियतामित्यत आह **न ह्याकाशरोमन्थनमिति** । आकाशविषयकचर्वणं भक्षणमिति यावत् । पशुजातीनां हि पूर्वभक्षणेन उदरप्रविष्टतृणानां पुनर्दन्तपर्यन्तं कानिचिदानीय सम्यग्दन्तैः खादित्वा तेषां पुनरुदरप्रवेशकरणं स्वभावः । तत्र तेषां चर्वितचर्वणं यदस्ति तद्रोमन्थनमित्युच्यते ।

या० — **स्वाध्यायप्रवचने एवेति** । स्वाध्यायप्रवचने एव श्रेयोऽर्थिभिः सर्वदा कर्तव्ये इति नाको मौद्गल्य आहेत्येतद्वाक्यार्थः । आद्यग्रहणेन 'आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ । तस्यर्ते यः क्षणो नीत उत्तमश्लोकवार्तये'त्यादिस्मृतिसंग्रहः ॥ **गुणे त्वन्यायकल्पनमिति** । यथा ह्यग्नीषोमीये पशावेकपाशकेऽदितिः पाशान्प्रमुमोक्त्वेतानित्यत्र गुणभूतप्रत्ययार्थेऽन्याय्यकल्पना न तद्बलान्मन्त्रस्यैवोत्कर्षः । एवमिहाप्यङ्गतया गुणभूते सर्वज्ञगुरावेव परित्यागकल्पना न्याय्या न प्रधाने श्रवणादावित्यर्थः । न्यायस्त्वानन्दमयाधिकरणे प्रदर्शितः । **रोमन्थनम्** पशुचर्वितचर्वणम् ।

सु० — **निर्णयज्ञस्य गुरोरभावे किं श्रवणाद्यभाव एव, नेत्याह** अभाव इति ।

अनु० — अभावे निर्णयज्ञस्य सच्छास्त्राण्येव सर्वदा ॥

शृणुयात्

**निर्णयज्ञस्य गुरोरभावेऽपि यादृशतादृशात्सर्वदा शृणुयात् । मन्वीत च । न हि गुणालाभे मुख्यपरित्यागो युक्त इति भावः । वेदादिश्रवणे सर्वज्ञो गुरुरपेक्षितः । तदितर-**

**श्रवणे तु निर्णयज्ञः सर्वज्ञकल्पः । द्वयोरभावेऽपि श्रवणादिकं चेदनुष्ठेयं तदाऽसच्छास्त्राणामिति प्रतीतिः स्यात् । अतः सच्छास्त्राण्येवेत्युक्तम् । यादृशतादृशात् श्रुणुयादित्यनेनातिप्रसक्तौ सत्यामाह** यदीति ।

यदि सज्ज्ञानप्राचुर्यमुपलभ्यते ॥

**यदि तस्मिन्पुरुषे स्वापेक्षया सम्यग्ज्ञानादिप्राचुर्यमुपलभ्यते तर्हि ततः शृणुयात् । न त्वधमात् । वैयर्थ्यात् । न ह्यदृष्टमात्रार्थं श्रवणादिकमिति** भावः ।

स० — ननु निश्चयज्ञगुरोः श्रवणाद्यंगत्वात्तदभावे कथं श्रवणादिकं स्यादित्यत आह **न हि गुणेति** । **गुणः** अङ्गम् । अङ्गाभावेपि प्रधानत्यागो न युक्त इति भावः ।

प० — **वेदादिश्रवण इति** । निर्णेतव्यग्रन्थश्रवण इत्यर्थः ॥ **तदितरेति** । निर्णीतग्रन्थेत्यर्थः ।

श्री० — **अतिप्रसक्ताविति** । स्वाधमादपि श्रवणरूपातिप्रसक्तौ सत्यामित्यर्थः । नन्वधमाच्छ्रवणमपि तस्मात्स्वस्य ज्ञानप्राप्तिरूपदृष्टार्थसाधनं यद्यपि न भवति तथाऽप्यदृष्टार्थं भविष्यतीत्यत आह **न हीति** । किन्तु दृष्टार्थं । तच्च नास्तीति भावः ।

**सु० — स्वतोऽधिकस्य पुरुषस्य प्रबन्धेन व्याख्यानासम्भवे किं श्रवणाद्यभाव एवेत्याकाङ्क्षायामाह** महद्भ्य इति ।

**अनु०** — महद्भ्यो विष्णुभक्तेभ्यो यथाशक्ति च संशयान् ॥
छिन्द्यात्

**स्वतो महद्भ्यो, महत्त्वं च न सज्ज्ञानमात्रेण किन्तु विष्णुभक्त्यादिगुणैश्चेत्युक्तं विष्णुभक्तेभ्य इति । तादृश एव ह्यादरमुत्पादयन्व्याख्याति । सादरमेव च श्रवणादिकं फलायालम् ।** संशयान् **अज्ञानविपर्ययांश्चेति श्रवणादिफलमुक्तम् । एकस्मात्प्रबन्धेन श्रवणाद्यसंभवेऽपि बहुभ्यो महद्भ्यो यथाशक्ति यथासंभवमेकैकदेशश्रवणादिकमपि कुर्यादेव । तेनापि संशयादिच्छेदस्य श्रवणादिफलस्य लाभादिति भावः ।**

शे० — ननु विष्णुभक्तैर्व्याख्याने उपयोगो न दृश्यत इत्यतस्तमाह **तादृश एवेति** । ननु किमनेनादरेण कृत्यं येन भक्तेरावश्यकत्वं स्यादित्यत आह **सादरमेव चेति ॥ अज्ञानविपर्ययांश्चेति** । ( संशयान् छिन्द्यादित्यत्र संशयपदमज्ञानविपर्ययोरप्युपलक्षणमित्यभिप्रेत्याज्ञानविपर्ययानित्युक्तम् ) । च संशयानित्यत्र चशब्दः संशयांश्चेति सम्बध्यत इत्युक्तं भवति ।

प० — संशयानिति बहुवचनार्थमाह **संशयाज्ञानविपर्ययानिति ॥ श्रवणादिफलमिति ।** अज्ञाननिरसनं श्रवणफलं अन्यन्मननफलमिति ज्ञेयम् ।

श्री० — संशयं छिन्द्यादित्यत्र संशयपदमज्ञानविपर्यययोरप्युपलक्षणमित्यभिप्रेत्याज्ञानविपर्ययाविरयुक्तम् ।

सु० — **स्वतोऽधिकाभावे कथं श्रवणादीत्यत आह** स्वत इति ।

अनु० — स्वतोऽधिकाभावे स्वयमेव समभ्यसेत् ॥
ब्रूयादपि च शिष्येभ्यः

**अपिचावितरेतरयोगे । श्रुताऽऽवृत्तिप्रवचनाभ्यामभिनवोत्प्रेक्षोदयात्तेऽपि श्रवणादिफलं प्रसुवाते ।**

**सम्यक् श्रवणादिरहितो व्याचक्षाणः स्खलनेन प्रत्यवेयात् । तत्कथमुच्यते शिष्येभ्यो ब्रूयादिति तत्राह** सदिति ।

सत्सिद्धान्तमहापयन् ।

**ब्रूयादिति संबन्धः । प्रामाणिकतयाऽभिमतोऽर्थः सिद्धान्तः । न तु प्रामाणिक एवेति नियमः । तथात्वे शब्दनित्यत्वं केषाञ्चित्सिद्धान्तः । केषाञ्चित्तदनित्यत्वमिति न स्यात् । द्वयोः प्रामाणिकत्वायोगात् । अयं तु न तथा । अपि तु प्रामाणिक एवेत्यतः सदित्युक्तम् । स्वार्थिको णिच् । अजहदित्यर्थः । यद्वा शिष्यैरहापयन् । सत्सिद्धान्तहानिरेव महतः प्रत्यवायस्य हेतुरिति वक्ष्यामः । क्षुद्रस्खलितं त्वल्पीयस एव । न च तावता महाप्रयोजनव्याख्यानत्यागः । तथा सति मृगभयाद्बीजानावापप्रसङ्गादिति भावः ।**

शे० — परस्परनिरपेक्षपदार्थानामेकस्मिन्प्रतिसंबन्धिन्यन्वये हि समुच्चयः । न चात्र श्रुतावृत्तिप्रवचनयोः परस्परनिरपेक्षयोरज्ञाननिवृत्त्यादिरूपश्रवणादिकार्यप्रयोजकत्वमपि तु सापेक्षयोरेवेति समुच्चयासंभवादितरेतरयोग एव चापिशब्दावित्याशयेनाह **अपिचावितरेतरयोग इति ।** इतरेतरयोगमेवोपपादयति **श्रुतेति ।** अत्राभ्यसेदित्युक्तस्यानुवादः श्रुतावृत्तीति । ब्रूयादपि च शिष्येभ्य इत्यस्यानुवादः प्रवचनेति । मूले सदित्यस्य व्यावर्त्याभावाद्वैयर्थ्यमाशङ्क्य परिहरति **प्रामाणिकतयेति ॥ द्वयोरिति ।** अन्यथा वस्तुनो द्वैरूप्यापातादिति भावः ॥ **इत्यत इति ।** इति दर्शयितुमित्यर्थः । नन्वत्र सत्सिद्धान्तमजहदिति सत्सिद्धान्तस्य स्वयमहानमेव वाच्यम् । अहापयन्नित्यहापनोक्तिस्त्वयुक्तेत्यतोऽहापयन्निति णिचः स्वार्थिकत्वेनाहानस्यैवात्रोच्यमानत्वान्नानुपपत्तिरित्याह **स्वार्थिक इति ।** णिचः स्वार्थिकत्वे वैयर्थ्यं भवतीत्यपरितोषाद्धेतुमण्णिचमेवाभ्युपेत्य अहापपमुपपादयति **यद्वेति ।** ननु सत्सिद्धान्तविरुद्धज्ञानेन

तद्धानिवत्पूर्वोत्तरविरुद्धवाक्यार्थज्ञानेन वाक्यार्थहानेरपि ज्ञानदौर्बल्येनावर्जनीयत्वात्सत्सिद्धान्तहानिवद्वाक्यार्थस्खलनादेरप्यनर्थहेतुत्वादुभयोरपि स्वयमहानस्य शिष्यैरहापमस्य वा वक्तव्यत्वाद्विशिष्यसत्सिद्धान्तमहापयन्निति सत्सिद्धान्तस्यैवाहानाद्युक्तिरयुक्तेत्यतः सत्सिद्धान्तस्खलनवाक्यार्थस्खलनयोरनर्थसाधनत्वेऽपि सत्सिद्धान्तहानेर्महाप्रत्यवायहेतुत्वाद्वाक्यार्थहानेश्चाल्पप्रत्यवायहेतुत्वादवान्तरवैषम्येण युक्तं विशिष्य तत्कथनमित्यभिप्रेत्य भवेदेतदेव यदि सत्सिद्धान्तहानेर्महाप्रत्यवायहेतुत्वं सिद्धं स्यात्तदेव कुत इत्यत आह **सत्सिद्धान्तहानिरेवेति** ॥ **वक्ष्याम इति** । 'एतद्विरोधि यत्सर्वं तमसेन्धाय केवलमित्यादिनेति शेषः । नन्वस्तु सत्सिद्धान्तहानेरेव महाप्रत्यवायहेतुत्वं तथाऽपि तत्र तत्र स्खलनरूपवाक्यार्थहानेरप्यल्पीयांसं प्रत्यवायं प्रति हेतुत्वात्तत्र तत्र स्खलनादिमतो व्याख्यानस्यापि त्याज्यत्वात्कथं ब्रूयादपि च शिष्येभ्य इति तस्यानुष्ठेयत्वकथनमित्यतस्तत्साध्यानिष्टापेक्षया तत्साध्यस्येष्टस्य महत्त्वेन महाप्रयोजनसाधनत्वाद्युक्ता व्याख्यानस्यापरित्याज्यत्वोक्तिरित्यभिप्रेत्याह **न च तावतेति** । तत्र तत्र स्खलनादल्पप्रत्यवायहेतुतामात्रेणेत्यर्थः । नन्वल्पानिष्टसाधनस्यापि महाप्रयोजनसाधनत्वादपरित्याज्यत्वमेव कुतो महाप्रयोजनसाधनस्याल्पानिष्टसाधनत्वेन परित्यागस्यापि वक्तुं शक्यत्वादित्यत आह **तथा सतीति** ॥ **सिद्धान्त इति** । सत्सिद्धान्त इत्यर्थः । क्वचित्तु सत्सिद्धान्त इत्येव पाठः ।

स०— **इतवेतरयोग इति** । भिन्नविषययोरपि समुच्चयदर्शनात् कस्यचिदावृत्तिः कस्यचिद्व्याख्यानमिति प्रतीतिनिरासार्थमितरेतरयोग इत्युक्तम् । तथाचैकविषययोरेव व्याख्यानावृत्त्योः साहित्यमात्रं विवक्षितमिति भावः । **वक्ष्याम इति** । 'एतद्विरोधि यत्सर्वं तमसेऽन्धाय केवलमि'त्यादिनेति शेषः ।

प०— **अपिचावितरेतरयोग इति** । अभ्यासप्रवचनयोरन्योन्यसमुच्चय इत्यर्थः । रथगतौ चक्रद्वयमिवान्योन्यसाहाय्येनैककार्यनिष्पादकत्वरूपमितरेतरयोगं दर्शयति **श्रुतेति** । **अभिनवोत्प्रेक्षा** अपूर्वनिश्चयः । **श्रवणफलं** अज्ञानादिनिवृत्तिरूपम् । सत्पदकृत्यं वक्तुमाह **प्रामाणिकतयेति** । अजहदिति वक्तव्ये कथमहापयन्निति णिजन्तप्रयोग इत्यत आह **स्वार्थिको णिजिति** । स्खलनेन प्रत्यवेयादिति प्राक्कृतचोद्यं निराह **सत्सिद्धान्तेति** ॥ **वक्ष्याम इति** । सिद्धान्तस्वरूपनिरूपणम् । एतद्विरोधि यत्सर्वं तमसेऽन्धाय केवलमित्यत्रेति भावः ।

या०— क्रियाभेदश्रवणान्न समुच्चयार्थत्वं संभवत्यत आह **इतरेतरयोग इति** । ननु परस्परसाहित्येन यत्र द्वयोरेककार्यजनकत्वं तत्रैवेतरेतरयोगो दृष्टो यथा हरिहरौ कुरुत इति । तदत्र कथमित्यतस्तद्दर्शयति **श्रुतावृत्तीति** । अभ्यसेदित्युक्तानुवादः श्रुतावृत्तीति । ब्रूयादपि च शिष्येभ्य इत्यस्यानुवादः प्रवचनेति । **अभिनवोत्प्रेक्षा** इदमित्थमिति निर्णयः । **इत्यतः** इति दर्शयितुम् **वक्ष्याम इति** । एतद्विरोधि यत्सर्वं तमसेऽन्धाय केवलमित्यत्रेति शेषः ।

श्री० — **ते अपि** श्रुतावृत्तिप्रतिवचने अपि। श्रवणादिफलमज्ञाननिवृत्त्यादिकम् ॥ **न तथेति**। प्रामाणिकत्वेन केवलमभ्युपगम्यत इति नेत्यर्थः। **इत्यत** इत्यभिप्रेत्य ॥ **मृगभयादिति**। मृगाः समागत्यांकुरं भक्षयिष्यन्तीति भयेन बीजावापरूपं प्रधानं कर्म न परित्यज्यते कर्षकैस्तद्वदिति भावः।

च० — **स्वार्थिको णिजिति**। रामो राज्यमचीकरदिति यथेति भावः।

सु० — **कोऽसौ सत्सिद्धान्तो यो न हातव्यः। द्विविधः सत्सिद्धान्तः परापरभेदात्। प्रत्येकं द्विविधो वाचनिक आनुषङ्गिकश्च। तत्र वाचनिक परं सत्सिद्धान्तं तावदाह** अशेषेति।

**अनु०** — अशेषगुणपूर्णत्वं सर्वदोषसमुज्झितिः ॥
विष्णोरन्यच्च तत्तन्त्रमिति सम्यग्विनिर्णयः ॥

**अन्यत्तत्तन्त्रमिति सकलजगज्जन्मादिकारणत्वमुच्यते। निर्णीयत इति निर्णयः। सम्यग्विनिर्णयो वाचनिकः परसिद्धान्तः। साक्षाद्ब्रह्मस्वरूपावधारणपरे जन्मादिसूत्रे खल्वभिहितोऽयमर्थः ॥ आनुषङ्गिकं परसिद्धान्तमाह** स्वतन्त्रत्वमिति।

स्वतन्त्रत्वं सदा तस्य तस्य भेदश्च सर्वतः।

स्वतन्त्रत्वं **स्वाधीनसत्त्वादिमत्त्वम्**। तस्य **विष्णोः। द्वितीयस्तस्येतिशब्द उत्तरत्र सम्बध्यते**। सर्वतो भेदश्चेति। **प्रकृतिजीवजडेभ्योऽत्यन्तभिन्नत्वम्। नन्वेतदप्यसंभवस्तु सतो नात्माऽश्रुतेः पृथगुपदेशादित्यादिनाऽभिहितमेव। तत्कथमानुषङ्गिकः सिद्धान्तः। सत्यम्। तथाऽपि प्रधानप्रमेयोपयोगितयोक्तत्वाददोषः। स्वगतभेदवर्जितत्वादेरुपलक्षणमेतत्। इति सम्यक् स्थितिरिति वक्ष्यमाणेनान्वयः।**

शे० — **वाचनिक इत्यादि**। अत्र वचनवृत्त्या प्रतिपादितत्वं न वाचनिकत्वमभिमतं तथा सति जन्मादिसूत्रे निर्दोषत्वादेरार्थिकतया वचनवृत्त्या प्रतिपाद्यत्वाभावेन वाचनिकपरसिद्धान्तत्वाभावप्रसङ्गात्किन्तु साक्षाद्ब्रह्मस्वरूपावधारणपरेऽनन्यार्थतयोक्तोऽर्थ एव तत्त्वेन विवक्षितः। अन्यार्थतया प्रतिपादितस्त्वानुषङ्गिक इत्यनयोर्भेदः। अत्र च शास्त्रप्रतिपाद्यस्य गुणपूर्णत्वादेः सर्वस्य न समकक्षत्वं प्रतिपत्तव्यमिति भावेन वाचनिकानुषङ्गिकभेदेन तद्वैविध्यकथनम्। अत एव भाष्यकारेण परसिद्धान्तोदाहरणे इति सम्यग्विनिर्णय इत्येवोक्तम्। अन्यत्र तु 'अदोषत्वस्य सिद्ध्यर्थमिति तद्गुणपूर्तय' इति चान्यार्थत्वं प्रदर्शितमित्यवगन्तव्यम्। अन्यत्तन्त्रमित्येतन्न यथास्थितं ग्रहीतुं शक्यं परसिद्धान्तताभावप्रसङ्गात्। भगवन्निष्ठस्वातन्त्र्यपरतया च व्याख्याने स्वतन्त्रत्वं सदा तस्येत्यनेन पौनरुक्त्यापातादित्यतो व्याचष्टे **सकलजगज्जन्मादीति**। अत्रान्यदिति सामान्योक्त्या सकलेत्यस्य तत्तन्त्रमिति तदधीनसत्तादिकत्वोक्त्या

जन्मादिकरणत्वस्य च लाभ इति द्रष्टव्यम् । ननु निर्णयनं निर्णय इति भावव्युत्पत्त्या निर्णयशब्दस्य निश्चयार्थत्वात्सम्यग्विनिर्णय इति वचनं सत्सिद्धान्त इत्युत्तरग्रन्थेन तदनुसारिणा कोऽसौ सत्सिद्धान्त इति शङ्काग्रन्थेन चाननुगुणत्वादनुपपन्नमित्यतोऽत्र निर्णयशब्दस्य कर्मव्युत्पन्नत्वाश्रयणान्नानुपपत्तिरित्याशयेनाह **निर्णीयत इति निर्णय इति** । कुतोऽस्य सिद्धान्तस्य वाचनिकत्वं परत्वं चेत्यतस्तदुभयमुपपादयति **साक्षादिति** । प्राधान्येनेत्यर्थः । अनेन वाचनिकत्वमुपपादितम् । ब्रह्मस्वरूपावधारणपर इति तु परत्वोपपादनमिति ज्ञेयम् ।

स्वतन्त्रत्वं न परतन्त्रताव्यावृत्तिर्बाधकाभावेनोपचाराश्रयणस्यायुक्तत्वात्पारतन्त्र्याख्यदोषाभावरूपत्वप्रसक्त्या सर्वदोषसमुज्झितिरित्यनेनैव तल्लाभात्स्वतन्त्रत्वमित्यस्य तेन पौनरुक्त्यापाताच्चेति भावेन 'स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुरिति सांख्यानिकरणीयानुव्याख्यानानुसारेण तद्व्याख्याति **स्वतन्त्रत्वमिति** । तस्य स्वतन्त्रत्वं सर्वतो भेदश्चेत्येकेनैव तस्येतिशब्देन पूर्तेर्द्वितीयस्य वैयर्थ्यमित्याशङ्कयादोषत्वस्य सिद्ध्यर्थमित्युत्तरवाक्यसंबन्धाभ्युपगमान्न तद्वैयर्थ्यमित्याशयेनाह **द्वितीय इति** । सर्वत इति सर्वशब्दस्य स्वपरसाधारण्येन सर्वपरत्वे स्वतोऽपि भेदप्रसङ्गात्तस्य च नेह नानेति बाधितत्वान्न सर्वशब्दस्तत्परः किन्तु भगवदितरसर्वपर इत्याशयेन व्याचष्टे **प्रकृतीति नन्वसंभवस्तु सत इत्यादि** । यद्यप्येतद्भगवत उत्पत्तिनाशाभावप्रतिपादकतया भाष्ये व्याख्यातं तथाऽपि 'स्वतन्त्रत्वात्परात्मनः । नैवोत्पत्तिः कथमपि न स्वतन्त्रं ततोऽपरमिति, सौत्रसच्छब्दस्य स्वातन्त्र्यपरतया पूर्वत्रानुव्याख्यानकृता व्याख्यातत्वात्तदनुसारेणेयं शङ्केति ध्येयम् ॥ **प्रधानप्रमेयेति** । जन्मादिकारणत्वरूपप्रधानप्रमेयोपयोगितयेत्यर्थः । अनन्यार्थतया प्राधान्येनोच्यमानस्यैव वाचनिकपरसिद्धान्तत्वादस्य चातथात्वादानुषङ्गिकत्वमिति भावः । स्वतन्त्रत्वसर्वतोभिन्नत्वयोरिव स्वगतभेदवर्जितत्वादेरपि निर्दोषत्वादिरूपप्रधानप्रमेयोपयुक्ततयोक्तत्वेनानुषङ्गिकत्वस्य सत्त्वात्कथं द्वयोरेव तत्त्वेनोक्तिरित्यतस्तदुपलक्षणतया तां व्याचष्टे **स्वगतेति** । भगवति भेदेऽनेकेषां स्वातन्त्र्यायोगात्तस्यानुग्राह्यत्वादिप्राप्त्या निर्दोषत्वायोगात्तस्यानुषङ्गिकत्वम् । आदिपदेन प्रयोजनाभावपरिग्रहः । तत्सत्त्वेऽपूर्णत्वापातादिति भावः । अदोषत्वस्येत्यनेनानुषङ्गिकत्वमुपपाद्यते तदनर्थकम् । न च कथमस्यार्थस्यानुषङ्गिकत्वमित्याशङ्कापरिहारार्थं तदिति वाच्यम् । पूर्वग्रन्थे तस्यानुक्त्या तादृशजिज्ञासाया एवासंभवादित्यतः पूर्वग्रन्थेनैतल्लाभमुपपादयति **इति सम्यगिति** । एतद्वाक्यसंबद्धस्य तस्येत्यस्य व्याख्यानं विष्णोरिति ।

स० — ननु निर्णयनं निर्णय इति व्युत्पत्त्या निर्णयशब्दस्य निश्चयार्थत्वोक्तौ कोऽसौ सत्सिद्धान्त इति शङ्काऽननुगुणत्वात्सम्यङ्निर्णय इति वचनमनुपपन्नमिति तत्राह **निर्णीयत इति** ।

प०— **परापरेति** । परः भगवद्विषयः । अपरः जगद्विषयः । परसिद्धान्तातास्फोरणायाह **सकलजगदिति** । कर्मव्युत्पत्तिप्रदर्शनेन फलितमाह **वाचनिक इति** । तद्व्यनक्ति **साक्षादिति** ॥ **जन्मादिसूत्र इति** । जिज्ञासासूत्रोक्तब्रह्मशब्दोक्तनिर्दोषगुणपूर्णतोपपादकत्वादस्य सूत्रस्य जन्मादिसूत्रेऽभिहितोऽयमर्थ इत्युक्तम् । स्वसत्तादौ परानपेक्षत्वस्यादोषत्वरूपत्वेनादोषत्वसिध्यर्थत्वाभावात्प्रकृतोपयोगितया व्याचष्टे **स्वतन्त्रत्वमिति** ॥ **प्रकृतीति** । चित्प्रकृतीत्यर्थः ॥ **नन्वेतदिति** । स्वतन्त्रत्वादिप्रमेयमित्यर्थः ॥ **असंभवस्त्विति** । द्वितीयस्य तृतीयपादे असंभवस्तु सतोऽनुपपत्तेरिति सूत्रे असतः सदजायतेति श्रुतेः सच्छब्दितं ब्रह्मापि पराधीनविशेषावाप्तिरूपोत्पत्तिमदिति प्राप्ते सतो ब्रह्मणः असंभवस्तु असंभव एव संभवः उत्पत्तिः पराधीनविशेषावाप्तिरूपोत्पत्त्यभाव एव । सत इति हेतुगर्भं विशेषणम् । स्वतन्त्रत्वादिति सत्वं स्वातन्त्र्यमुद्दिष्टमिति भारतोक्तेः असतो निस्स्वरूपस्य करणत्वानुपपत्तेश्चेत्युक्त्या स्वातन्त्र्यस्य तत्राभिधानादित्यर्थः । नात्मा श्रुतेर्नित्यत्वाच्चताभ्य इत्यत्र च तमसि लीन इत्यादिश्रुतेः ब्रह्मणोपि देहत्यागरूपलयोऽस्तीति प्राप्ते; आत्मा न लीयते लयस्याश्रवणात्, लीनत्वश्रुतेरपिहितत्वपरत्वात्, 'नित्यो नित्यानामि'त्यादिश्रुतिभ्यो नित्यत्वाच्चेत्युक्तेरिति भावः । पृथगुपदेशात् । 'अत एव चोपमा-सूर्यकादिवदित्यादौ स्पष्टं भेद उक्त एतेति भावः ॥ **प्रधानप्रमेयोपयोगितयेति** । निर्दोषत्वगुणपूर्णत्वरूपब्रह्मपदोक्त यत्प्रमेयं तदुपपादकं च यज्जगज्जन्मादिहेतुत्वं तदुपयोगितया तत्र स्वातन्त्र्यादेरुक्तत्वादित्यर्थः ॥ **स्वगतेति** । तत्सत्वेऽनेकेश्वरापातेनादोषत्वाद्यसिद्धेरिति भावः । आदिपदेन अप्राकृतविग्रहवत्त्वादिग्रहः ॥

या०— **वाचनिकः** प्राधान्येनोक्तः । **आनुषङ्गिकः** तदुपपादकः । अन्यत्तत्तन्त्रमित्येतन्न यथास्थितं ग्रहीतुं शक्यम् । परसिद्धान्तताभावात् । भगवन्निष्ठस्वतन्त्रत्वपरतया व्याख्याने च स्वतन्त्रत्वं सदा तस्येत्यनेन पौनरुक्त्यमतो व्याचष्टे ॥ **सकलजगज्जन्मादीति** । अन्यदिति सामान्योक्त्या सकलेत्यस्य तत्तन्त्रमिति तदधीनसत्तादिकत्वोक्त्या जन्मादिकारणत्वस्य च लाभ इति द्रष्टव्यम् । ब्रह्मस्वरूपावधारणेत्यनेन परत्वमुपपादितम् । प्राधान्यादित्यर्थकेन साक्षादित्यनेन वाचनिकत्वमिति ज्ञातव्यम् । स्वतन्त्रत्वमित्यत्र स्वसत्तादौ परानपेक्षत्वविवक्षायामस्य पारतन्त्र्याख्यदोषाभावरूपतया सर्वदोषसमुज्झितिरित्यनेनैवोक्तत्वात्पुनरभिधानं व्यर्थमत आह **स्वाधीनेति** । सर्वत इत्येतद्भगवदितरमित्याशयेनाह **प्रकृतीति** । अन्यदित्यनेन जीवजडयोः । **नन्वसम्भवस्तु सत इत्यादि** । अत्राधिकरणद्वये यद्यपि भगवतः क्रमेणोत्पत्तिविनाशाभावप्रतिपादनमेव कृतं न स्वाधीनसत्तादिमत्त्वम् । तथाऽपि पराधीनविशेषावाप्तिरूपोत्पत्तिपराधीनविशेषापगमरूपनाशयोरभावप्रतिपादनेन तत्र स्वाधीनसत्तादिमत्त्वमेवोक्तं भवतीति भावः ॥ **प्रधानप्रमेयेति** । जन्मादिकारणत्वरूपप्रधानप्रमेयोपयोगितयेत्यर्थः । अनन्यार्थतया प्राधान्येनोच्यमानस्यैव परसिद्धान्तत्वमयं

च न तथाऽत आनुषङ्गिक एवेति भावः ॥ **स्वगतभेदेति** । भगवति भेदेऽनेकेषां स्वातन्त्र्यायोगात्तस्यानुग्राह्यत्वादिप्राप्त्या निर्दोषत्वायोगः । अत इदमानुषङ्गिकमिति ध्येयम् । आदिपदेन प्रयोजनाभावग्रहणम् । तत्सत्त्वेऽपूर्णत्वाख्यदोषापत्तेः ।

**श्री०** — अपरसिद्धान्तत्वप्रसक्तिपरिहारायाह **सकलजगज्जन्मादीति** ॥ **निर्णीयत इति निर्णय इति** । तथा च निर्णीतोऽर्थ इत्यर्थः ॥ **उत्तरत्रेति** । भेदश्च सर्वत इत्यनेनेत्यर्थः ।

**सु०** — **कथमस्यार्थस्यानुषङ्गिकत्वमित्यत आह** अदोषत्वस्येति ।

**अनु०** — अदोषत्वस्य सिद्ध्यर्थं

**विष्णोरदोषत्वस्य सिद्ध्यर्थमङ्गीकार्योऽयमर्थ इति शेषः । उपलक्षणमेतत् । अशेषगुणपूर्णत्वस्य सकलजगज्जन्मादिकारणत्वस्य चेत्यपि द्रष्टव्यम् ॥ अनेन कथं तत्सिद्धिरित्यत आह यदिति ।**

यदभेदे तदन्वयः ॥

**यस्माज्जगताऽभेदे विष्णोर्दोषसम्बन्धः प्रसज्यते तस्मादिति पूर्वेण सम्बन्धः । अत्राप्यभेद इत्यस्वातन्त्र्यस्याप्युपलक्षणम् । तदन्वय इति च गुणपूर्त्याद्यभावस्यापि ॥ अन्यत्तत्तन्त्रमित्यन्यशब्दोऽमुक्तविषय इति प्रतीतिः स्यात्तदर्थमाह** तत्तन्त्रत्वं चेति ।

तत्तन्त्रत्वं च मुक्तानामपि

**चशब्दो वक्ष्यमाणेन भेदेन सह समुच्चयार्थः । अङ्गीकार्यमिति शेषः ॥ किमर्थमिदमङ्गीकार्यं जन्मादिसूत्रस्यामुक्तविषयतयाऽप्युपपत्तेरित्यत आह** तदिति ।

तद्गुणपूर्तये ॥

**न हि मुक्तानां तत्तन्त्रत्वेन विना तस्य निरर्गलमैश्वर्यं सिध्यति । न च तदन्तरेण गुणपूर्तिर्भवतीति ॥ स्यादेतत् । यदि मुक्ताः परमात्मनो भिन्नाः स्युः । न च तथा । तत्किं तत्तन्त्रत्वेनेत्यत आह** मुक्तानामपीति ।

मुक्तानामपि भेदश्च

**परमात्मनोऽत्यन्तभेदश्चाङ्गीकार्यः ॥ अनेन 'तस्य भेदश्च सर्वतः' इत्येतदपि विवृतं भवति ॥ किमर्थमित्यतः प्रयोजनं वक्तुं पीठमारचयति** न हीति ।

न हि भिन्नमभिन्नताम् ॥

गच्छद्दृष्टं क्वचित्

**मुक्तानां परमात्मनाऽभेदो भवन्न तावत्प्राग्भिन्नानाम्। भिन्नस्याभेदावाप्तेः क्वाप्य-दर्शनात्॥ न केवलमदर्शनं किं तर्हीत्यत आह** तस्येति।

तस्याप्यभावोऽनुभवोपगः॥

**भिन्नमभिन्नतां गच्छतीत्यस्यार्थस्याभावोऽनुभवसिद्धोऽपि॥** ततः संसारेऽप्यभिन्नानामेव **मुक्तावभेदो व्यज्यत इत्येव वक्तव्यम्। तथैवास्त्वित्यत आह** पूर्वेति।

पूर्वाभेदे दोषवत्त्वमीशस्येत्यतिभिन्नता॥

नारायणेन मुक्तानामपि सम्यगिति स्थितिः॥

**समर्थितं तावद्दुःखादिरूपोऽयं संसारः सत्य इति। ततः संसारेऽपि जीवानां पर-मात्मना भेदे तस्य दोषवत्त्वं स्यात्। इतिशब्दो हेतौ।** सम्यक् स्थितिः **सत्सिद्धान्त आनु-षङ्गिकः पर इति शेषः।**

**शे०**— स्वातन्त्र्यभेदयोरदोषत्वोपपादकत्वस्येवाशेषगुणपूर्णत्वसकलजगत्कारणत्वोपपादकताया अपि सत्त्वाद्विशिष्यादोषत्वोपपादकत्वोक्त्ययोगमाशङ्क्य परिहरति **उपलक्षणमेतदिति।** केचित्त्वेवमदो-षत्वसिद्ध्यर्थत्वात्सर्वतो भिन्नत्वस्य प्रधानप्रमेयोपयुक्तत्वलाभेनानुषङ्गिकत्वसिद्धावपि तत्त्वेन प्रतिज्ञातस्य स्वतन्त्रत्वादेरदोषत्वसिद्ध्यर्थत्वाभावान्नानुषङ्गिकत्वसिद्धिरित्यतस्तस्यादोषत्वसिद्ध्यर्थत्वाभावेऽप्यशेषगुणपूर्ण-त्वादिरूपप्रधानप्रमेयसिद्ध्यर्थत्वाद्युक्तमानुषङ्गिकत्वमिति भावेनादोषत्वस्येत्येतदशेषगुणपूर्णत्वाद्युपलक्षणतया व्याचष्ट उपलक्षणमेतदितीत्याहुः॥ **पूर्वेण सम्बन्ध इति।** सर्वतो भिन्नत्वस्यादोषत्वसिध्यर्थत्वमिति पूर्वेण सम्बन्ध इत्यर्थः। यदभेदे तदन्वय इत्यभेदे दोषप्रसङ्गेन भेदस्यादोषत्वोपपादकत्वसिद्धावपि न स्वातन्त्र्यस्य तदुपपादकत्वसिद्धिरित्यतोऽत्राभेदग्रहणस्यास्वातन्त्र्योपलक्षणत्वेनाभेदमात्रपरत्वाभावेनाभेद इवास्वातन्त्र्येऽपि दोषप्रसङ्गस्याभिमतत्वाद्युक्तं भेदस्येवस्वातन्त्र्यस्य तदुपपादकत्वमित्याशयेनाह **अत्रापीति।** एतावता भेद-स्वातन्त्र्ययोरदोषत्वोपपादकत्वसिद्धावपि न गुणपूर्णत्वजगत्कारणत्वोपपादकत्वसिद्धिर्विपक्षे बाधकानुपपत्त्या-सादित्यतोऽत्र वाक्ये तदन्वय इत्यस्य दोषान्वयपरत्वस्येव **गुणपूर्त्यभावपरत्वस्याप्युपलक्षणतयाऽभिप्रेतत्वेन** विपक्षे बाधकलाभाद्युक्ता तत्सिद्धिरित्यभिप्रेत्याह **तदन्वय इति चेति।** अभावस्यापीत्यत्रोपलक्षणमित्य-नुवर्तते। केचित्त्वनेन सर्वाभेदे सर्वदोषत्वप्रसङ्गेन सर्वतो भिन्नत्वस्यादोषत्वसिद्ध्यर्थत्वलाभेनानुषङ्गिकत्व-सिद्धावपि स्वातन्त्र्यादिनाऽशेषगुणपूर्णत्वादिसिद्धेर्विपक्षे बाधकानभिधानेनासिद्धेर्न तस्यानुषङ्गिकत्वसमर्थन-मित्यतोऽत्राभेद इत्यस्य तदन्वय इत्यस्य चास्वातन्त्र्याद्युपलक्षणत्वस्य गुणपूर्त्याद्यभावोपलक्षणत्वस्य चाङ्गी-कारेण श्रुतमात्रपरत्वाभावेनाभेदे सदोषत्वप्रसङ्गस्येवास्वातन्त्र्ये गुणपूर्त्याद्यभावप्रसङ्गस्यानेनैवोक्तत्वाद्युक्तमेव स्वातन्त्र्यादेरानुषङ्गिकत्वोपपादकत्वमस्य ग्रन्थस्येत्याशयेनाह अत्रापीत्यादीत्याहुः॥ **अमुक्तविषय इति।**

मुक्तानां परमं साम्यमुपैतीति भगवदभेदस्यैव श्रुतत्वात्तदधीनत्वानुपपत्तेरमुक्तविषय एवान्यशब्द इत्यर्थः ॥ **तदर्थमाहेति** । अत्रार्थशब्दो मक्षिकार्थो धूम इत्यादाविवार्तनीयः । तत्राद्यो निवृत्तिवचनः । ततश्च तस्मिन्निवृत्त्यर्थमित्यर्थः ॥ **वक्ष्यमाणेनेति** । मुक्तानामपि भेदश्चेत्युत्तरवाक्ये वक्ष्यमानेत्यर्थः ॥ **विवृतमिति** । सर्वशब्दोक्ता जीवा नामुक्ता एव किन्तु मुक्ता अपीत्येवं विवृतमित्यर्थः ।

**प्रयोजनं वक्तुमिति** । पूर्वाभेदे दोषवत्त्वमित्यादिनेति शेषः ॥ **पीठमिति** । वक्तव्यप्रमेयोपयोगिनमर्थमित्यर्थः । ननु दुःखादिरूपदोषस्य जीवे आरोपितत्वेन पारमार्थिकत्वाभावान्न तदभेदेन परमात्मनो निर्दोषत्वव्याघातोऽन्यथाऽऽरोपितेन रूपेण गगनस्यापि नीरूपताव्याघातप्रसङ्गादित्यत आह **समर्थितमिति** । 'मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः । मिथ्यात्वं यदि दुःखादेरित्यादिना' जिज्ञासासूत्रे 'न दुःखानुभवः क्वापी'त्यादिना पृथगधिकरणादिषु चेति शेषः । सत्सिद्धान्तप्रसङ्गे सम्यक् स्थितिकथनस्यासङ्गततामाशङ्क्य सत्सिद्धान्तपरतया सम्यक् स्थितिपदं सम्यग्व्याचष्टे **सत्सिद्धान्त इति** । वाचनिकपरसत्सिद्धान्तताभ्रमनिरासायापेक्षितं पूरयति **आनुषङ्गिक इति** ।

स० — **विवृतमिति** । मुक्तेभ्य इति सर्वत इति विवृतं भवतीत्यर्थः ।

प० — **इत्येतदपि विवृतमिति** । सर्वशब्दोऽसंकुचितवृत्तिरिति विवृतमित्यर्थः । तेन न पौनरुक्त्यमिति भावः ॥ **किमर्थमिति** । मुक्तानां परमात्मनो भेदश्चाङ्गीकार्य इत्यनुषङ्गः ॥ **प्रयोजनं वक्तुमिति** । 'पूर्वाभेदे दोषवत्त्वमि'त्यत्र वक्तुमुपयुक्तार्थमाहेत्यर्थः ॥ **समर्थितमिति** । प्रकृत्यधिकरणे वशून्यवादिनिरासप्रस्तावादाविति भावः ।

या० — **विवृतं भवतीति** । सर्वशब्दार्थतयोक्ता जीवा नामुक्ता एव किन्तु मुक्ता अपीति कथनादिति भावः । **प्रयोजनं वक्तुमिति** । पूर्वाभेदे दोषत्वमित्यत्रेति शेषः ॥ **पीठमिति** । वक्तव्यप्रमेयोपयोगिनमर्थमित्यर्थः । ननु दुःखादिरूपदोषस्यारोपितत्वान्न तत्प्राप्त्या निर्दोषत्वहानिरित्यत आह **समर्थितं तावदिति** ।

श्री० — **गुणपूर्त्याद्यभावस्यापीति** । आदिपदेन निर्दोषत्वम् । अभेदे दोषान्वयोऽस्वातन्त्र्ये गुणपूर्त्याद्यभावः । 'यदधीना गुणाश्चैव दोषा अपि हि सर्वशः । गुणास्तस्य कथं न स्युः स्युर्दोषाश्च कथं पुनरित्युक्तरीत्या स्वातन्त्र्यस्य गुणपूर्त्यादिसाधकत्वादिति भावः । **इदमङ्गीकार्यमिति** । मुक्तानां तत्तन्त्रत्वमित्यर्थः । ननु जन्मादिसूत्रे स्वव्यतिरिक्तमुक्तामुक्तसर्वप्रपञ्चस्य यथायोगं जन्मस्थित्यादिकर्तृत्वोक्त्या तदधीनत्वस्योक्तत्वादिदमङ्गीकार्यमिति चेत्तत्राह **जन्मादिसूत्रेति** ।

सु०— नन्वतिभिन्नता किमर्था भेदाभेदोपपत्तेरित्यत आह भेदेति ।

अनु०— भेदाभेदेऽप्यभेदेन दोषाणामपि संभवः ।

भेदेन सहितोऽभेदो भेदाभेदः । 'विप्रतिषिद्धं चानधिकरणवाची'ति द्वन्द्वैकवद्भावो वा । अत्रापि पूर्वन्यायेन संसारेऽपि भेदाभेदावङ्गीकार्यौ । ततश्चाभेदेन दोषाणामपि सम्भवः । भेदेन तत्परिहारो भविष्यतीति चेत्तर्हि किमजागलस्तनायितेनाभेदेनेति ॥ इदानीमपरं सिद्धान्तमाह निर्दोषत्वमिति ।

निर्दोषत्वं रमायाश्च

तथा परमेश्वरवद्रमायाश्च निर्दोषत्वम् । यथोक्तम् 'कामादितरत्र तत्र चायतनादिभ्यः' 'समना चासृत्युपक्रमादमृतत्वं चानुपोष्ये'ति ॥ निर्दोषत्वमित्युक्त्या पारतन्त्र्यमपि नास्तीति प्रतीतिनिरासार्थमाह तदिति ।

तदनन्तरता तथा ।

परमेश्वरानन्तरता तदधीनतेति यावत् ॥ यद्वाऽनेनापरसिद्धान्तान्तरमाह एकस्माद्भगवत एवावरत्वमिति । तदप्युक्तम् अस्यैव चोपपत्तेरूष्मे'ति ॥ सिद्धान्तान्तरमाह ब्रह्मेति ।

ब्रह्मा सरस्वती वीन्द्रशेषरुद्राश्च तस्त्रियः ।

शक्रकामौ तदन्ये च क्रमान्मुक्तावपीति च ।

सत्सिद्धान्त इति ज्ञेयो

मुक्तौ संसारेऽपि । प्रोक्तात्क्रमात्तिष्ठन्तीत्यर्थः । अत्र द्वन्द्वनिर्दिष्टानां साम्यमन्येषां तारतम्यमिति ज्ञेयम् । एतच्चोक्तमियदामननादिति । उपलक्षणं चैतत् । प्रपञ्चसत्यत्वादिकमपि ग्राह्यम् ॥ कुतोऽयमशेषगुणेत्यादिसत्सिद्धान्त इत्यत आह निर्णीत इति ।

निर्णीतो हरिणा स्वयम् ॥

हरिणा सूत्रकारेण स्वयं साक्षान्निर्णीतो न तु बलात्सूत्रार्थतया कल्पितः । एतच्च तत्र तत्र दर्शितमेव ।

शे०— ननु भेदाभेदयोर्द्वित्वात्तद्विवक्षया द्विवचनेन भाव्यम् । तत्कथं भेदाभेदेऽपीत्येकवचनमित्यतः शाकपार्थिवादित्वेन मध्यमपदलोपीसमासत्वान्नैकवचनानुपपत्तिरित्याह भेदेन सहित इति । अस्तु वा भेदश्चाभेदश्चेति द्वन्द्व एव समासः । न चैवं भेदाभेदयोरिति द्विवचनप्रसङ्गो दोषः । एकवद्भावविधानेन तदप्रसङ्गादित्याह विप्रतिषिद्धमिति । अद्रव्यवाचिनां विरुद्धार्थानां द्वन्द्व एकवद्भा

स्यादिति सूत्रार्थः । एवञ्च शीतोष्णमित्यादाविव भेदाभेदशब्दयोरद्रव्यवाचित्वाद्विप्रतिषिद्धार्थत्वाच्च द्वन्द्वैकवद्भावोपपत्तेर्न द्विवचनप्रसङ्ग इति भावः ॥ **पूर्वन्यायेनेति** । मुक्तानां परमात्मना भेदाभेदौ भवन्तौ न तावत्प्राग्भिन्नानां, पूर्वं भिन्नस्य पश्चाद्भिन्नाभिन्नतायाः क्वाप्यदर्शनादिति पूर्वन्यायेनेत्यर्थः । अस्तु तर्हि तथैवेत्यत आह **ततश्चेति** । तथाऽप्यभेदेन तत्प्राप्तेरनिवारणात् । भेदस्य प्राबल्यात्तन्निवारणामिति चेत्तत्राह **तर्हीति** । कथमस्य वाचनिकत्वमित्यत आह **यथोक्तमिति** । आद्ये सूत्रे जननमरण रूपदोषाभावस्य, द्वितीये नित्यमुक्तत्वेन लयरूपदोषाभावस्य चोक्तत्वादिति भावः । तस्यापि वाचनिकत्वं दर्शयति **तदप्युक्तमिति** । प्रकृते भगवता किञ्चित्साम्योपपादनायोदाहृतायामूष्मपदोपेतायां द्विधा हीदमनुदृश्यत इति श्रुतौ ब्रह्मण ऊष्मावत्त्वं तच्चोष्मावत्परं ब्रह्मेत्यंशेनाभिधायाथानूष्मावदित्यंशेन प्रकृतिप्राकृतयोरनूष्मावत्त्वं चोक्त्वा तयोः साम्यनिरासाय यन्न जिघ्रन्तीत्याद्यंशेन प्रकृतेरूष्मावत्त्वमनूष्मावत्त्वं चोक्तं तदेतदभिप्रेत्योक्तं टीकायां प्रकृतेरूष्मावत्त्वमनूष्मावत्त्वं वदन्ती श्रुतिरिति । ततश्चोदाहृतश्रुतौ ब्रह्मणः केवलोष्मावत्त्वस्य प्रकृतेश्चोष्मावदनूष्मावत्त्वस्य प्राकृतस्य च केवलानूष्मावत्त्वस्योक्त्या प्रकृतेरेकसाद्भगवत एवावरत्वं लभ्यते । अनूष्मावत्त्वस्यापि सत्त्वेन वा परब्रह्मवत् केवलोष्मावत्त्वाभावात्तदपेक्षयाऽवरत्वस्योष्मावत्त्वस्यापि सत्त्वेन प्राकृतवत्केवलानूष्मावत्त्वाभावात्तदपेक्षयाऽवरत्वाभावस्य च प्राप्तेरिति ध्येयम् ॥ **द्वन्द्वनिर्दिष्टानामिति** । प्रायेणेति शेषः । प्रायो द्वन्द्वगृहीतानामत्र साम्यमित्यन्यत्र टीकाकृता स्वयमेवोक्तत्वात्प्राय इन्द्रवत्काम इत्याद्युत्तरानुव्याख्यानाद्यनुसाराच्चेति द्रष्टव्यम् । प्रपञ्चसत्यत्वादिरूपसिद्धान्तान्तरानुक्त्या प्रसक्तां मूले न्यूनतां परिहरति **उपलक्षणं चैतदिति** ॥ **कतिपय इति** । अस्माभिरिति शेषः ॥ **एतच्चेति** । उक्तार्थस्य सूत्रार्थतयाऽकल्पितत्वं चेत्यर्थः ॥ **तत्र तत्रेति** । तत्तत्सूत्राक्षरलभ्यत्वोपपादनेनेत्यर्थः ।

**स०**— ननु भेदाभेदयोः द्वित्वेन तद्विवक्षायां द्विवचनेन भाव्यम् । भेदाभेद इति तु कथमित्यतो मध्यमपदलोपी समासोऽयमित्याह **भेदेन सहित इति** । अस्तु भेदश्चाभेदश्चेति द्वन्द्व एव । न चैवं द्विवचनापत्तिः । विप्रतिषिद्धमित्येकवद्भावाङ्गीकारादित्याह **विप्रतिषिद्धमिति** । अद्रव्यवाचिनां विरुद्धानां द्वन्द्व एकवत्स्यात् इति शीतोष्णमित्यादिवत् द्वन्द्वैकवद्भाव इति भावः । **पूर्वन्यायेनेति** । संसारेऽत्यन्तभिन्नानां मुक्तौ भेदाभेदानुपपत्तिरित्युक्तन्यायेनेत्यर्थः ।

**प०**— द्वन्द्वपक्षेऽप्युपपत्तिमाह **विप्रतिषिद्धं चेति** । द्वितीयाध्यायान्त्यपादे सूत्रमिदम् । अद्रव्यवाचिनां विरुद्धार्थानां द्वन्द्व एकवद्भवतीति तस्यार्थः । तथाच शीतोष्णमित्यादाविवैकवचनं साध्विति भावः ॥ **पूर्वन्यायेनेति** । न हि भिन्नमित्यत्रोक्तन्यायेन हि प्रागत्यन्तभिन्नं पश्चाद्भिन्नाभिन्नं गच्छत् कचिद्दृष्टमिति प्रागपि भेदाभेदावुपेयावित्यर्थः । **इति द्विविधपरसिद्धान्तोक्तिः यथोक्तमिति** । अत्रैव पादे सूत्रकृतोक्तमित्यर्थः । तदाह **कामादितरत्रेति** । कामादित्यधिकरणे रमाया

जीवानामिव जन्म नेत्युक्तेः समना चेति चतुर्थद्वितीयाधिकरणे लयाभावस्योक्तेः निर्दोषत्वं **सिद्धमिति** भावः । सूत्रार्थस्तन्त्रदीपिकादौ व्यक्तः ॥ **अस्यैवेति** । अस्यैव चोपपत्तेरूष्मेति समनाचेत्यधिकरण-गुणसूत्रे भगवता किंचित्साम्यस्यैवोष्मपदोपेतश्रुत्युक्तदिशोपपत्तेरिति तत्र रमायाः भगवता किञ्चित्साम्यस्य तदितरापेक्षया त्वाधिक्यस्य च श्रुत्यर्थपर्यालोचनया सिद्धेरिति भावः ॥ **एतच्चोक्तमिति** । तारतम्यं चोक्तमत्रैव पादे सूत्रकृता । सूत्रमाह **इयदिति** । भगवदुपासकानां छन्दोगश्रुत्युक्तमुख्य-प्राणावधित्वमेव 'प्राणो वा व सर्वेभ्यो भूयानित्यामननादित्यर्थः ॥ **ग्राह्यमिति** । तस्यापि 'नाभाव उपलब्धेरित्यादौ समर्थनादिति भावः ॥ **तत्रतत्र प्रदर्शितमेवेति** । जन्मादिसूत्रे खल्वभिहितोऽयमर्थ इत्यनेनासंभवस्त्वित्यादिसूत्राणामुदाहरणेन च प्रदर्शितमित्यर्थः ।

**या०**— द्वन्द्वपक्षेऽपि नैकवचनानुपपत्तिरेकवद्भावविधानादित्याह **विप्रतिषिद्धमिति** । अद्रव्य-वाचिनां विप्रतिषिद्धार्थानां द्वन्द्व एकवद्भावः स्यादिति सूत्रार्थः ॥ उदाहरणं तु शीतोष्णं शीतोष्णे । द्रव्ये तु शीतोष्णे उदके । एवं भेदाभेदशब्दयोरद्रव्यवाचित्वाद्विप्रतिषिद्धार्थत्वाच्च द्वन्द्वैकवद्भाव इत्यर्थः । **पूर्वन्यायेनेति** । 'न हि भिन्नं भिन्नाभिन्नतां गच्छदृष्टमिति न्यायेनेत्यर्थः । रमानिर्दोषत्वस्य वाचनिकत्वं दर्शयति **यथोक्तमिति** । एवमग्रेऽपि । कामादितरत्रेत्यत्र इच्छयाऽवतारग्रहणकथनेन रमाया जननरूपदोषाभावः समना चेत्यत्रापि संसारानुपक्रमकथनेन मरणाद्यभाव एवोक्त इति द्रष्टव्यम् ॥ **अस्यैव चोपपत्तेरिति** ।अत्र हि प्रकृतेर्भगवता किञ्चित्साम्योपपादनायोष्मपदोपेता श्रुतिः प्रमाणतयोक्ता । तस्यां च द्विधा हीदमवदृश्यते । उष्मावदनूष्मावच्च । तत्रोष्मावत्परं ब्रह्मेत्युक्त्वाऽथानूष्मावत्प्रकृतिश्च प्राकृतं च यन्न जिघ्रन्ति जिघ्रन्ति चेत्याद्युक्तम् । अत्र हि प्रकृतिप्राकृतयोरनूष्मावत्त्वप्रतिषेधेन तयोः साम्यप्राप्तौ यन्न जिघ्रन्ति जिघ्रन्ति चेत्यादिना यत्प्रकृतिस्वरूपं तन्न जिघ्रन्ति जिघ्रन्ति चेत्या-दिरूपेण प्रकृतेरूष्मावत्त्वमनूष्मावत्त्वं चोक्तम् , तेन परंब्रह्म केवलमूष्मावत्, प्रकृतिस्वरूपमूष्मावद-नूष्मावच्च । प्राकृतमनूष्मावदेवेति विभागो लभ्यते । ऊष्मावत्त्वानूष्मावत्त्वे चोत्तमत्वावरत्वप्रयोजकतया अत्राभिप्रेते । ततश्च प्रकृतेः परब्रह्मवत् केवलोष्मवत्त्वाभावात् तदपेक्षया अवरत्वम् प्राकृतवत् केवला-नूष्मावत्त्वाभावात्, तदपेक्षया अवरत्वाऽभाव इति तस्या भगवत एवावरत्वमुपपादितमिति ज्ञातव्यम् ॥ **प्रपञ्चसत्यत्वादिकमपीति** । इदं चानुषङ्गिकापरसिद्धान्तप्रदर्शनायोक्तमिति ज्ञातव्यम् । अत्रादिपदेन तत्त्वसंख्यानप्रमाणलक्षणाद्युक्तरीत्या तत्त्वप्रमाणविभागादिकं ग्राह्यम् ।

**श्री०**— पूर्वं निर्दोषत्वोक्तौ पारतन्त्र्यमपि नास्तीति शङ्कानिरासकत्वेन तदनन्तरतेति वाक्यं योजितम् । इदानीं निर्दोषत्वमित्यनेन यथाऽपरसिद्धान्त उक्त एवं तदनन्तरतेत्यनेनाप्यपरसिद्धान्तान्तर-मेवोच्यत इत्याशयेनाह **यद्वेति** ।

सु० — सत्सिद्धान्तमहापयन्नित्युक्तम् । तद्धानौ को दोष इत्यत आह एतदिति ।

अनु० — एतद्विरोधि यत्सर्वं तमसेऽन्धाय केवलम् ।

ज्ञातं सदित्यर्थः । विरोधि ज्ञानमेव हि । अस्य त्यागः । अन्धाय भवतीति शेषः । केवलमिति न कदाऽपि न सुखायेत्यर्थः ॥ कुत एतदित्यत आह अन्धमिति ।

अन्धन्तमो विशन्तीति प्राह श्रुतिरतिस्फुटम् ॥

अनेनान्धन्तमः प्रविशन्ति येऽविद्यामुपासत इति श्रुतिमुपादत्ते । उक्तार्थस्य प्रामाणिकत्वं वक्ष्यते । अतस्तद्विरुद्धप्रतीतिरविद्या भवत्येव । अतिस्फुटमित्यनेन परेषां व्याख्यानं पराचष्टे । तथा च वक्ष्यामः ।

शे० — एतद्विरोधिनः स्वरूपेणानर्थसाधनताया अतिप्रसङ्गपराहतत्वादाह ज्ञातमिति । ननु विरोधिज्ञानेऽपि सत्सिद्धान्तत्यागान्नानर्थप्राप्तिरित्यत आह विरोधिज्ञानमेवेति । ननु सर्वोत्तमत्वादिविरोधिज्ञानस्य तमः साधनत्वेऽन्धन्तम इति वाक्योदाहरणमसङ्गतम् । तत्राविद्योपासकानामेव तमःप्राप्तेरभिधानादित्यत आह उक्तार्थस्येति ॥ वक्ष्यत इति । इत्येव श्रुतयोऽशेषा इत्यादिनेति शेषः ॥ अविद्या भवत्येवेति । प्रामाणिकत्वेनोक्तार्थप्रतीतेर्विद्यात्वात्तद्विरुद्धार्थप्रतीतिः श्रौताविद्याशब्दवाच्या भवत्येवेत्यर्थः ॥ परेषां व्याख्यानमिति । अत्राविद्यापदं कर्मवाचकम् । ततश्च ज्ञानकर्मणोरेकैकनिन्दया मोक्षे तयोः समुच्चयस्य साधनत्वप्रतिपादिकेयं श्रुतिरिति विद्यापदं देवताज्ञानस्य वाचकं ततश्च स्वर्गादौ तस्य कर्मणा समुच्चयप्रतिपादकमिदं वाक्यमिति भास्करादीनां व्याख्यानमित्यर्थः ॥ वक्ष्याम इति । अन्धन्तमः प्रविशन्ति येऽविद्यामुपासत इति श्रुतिविरोधाच्च नान्यथोपासनं भवेदित्युत्तरानुव्याख्यावसरे श्रुतिस्त्वन्यत्र स्मृतिसम्मतिप्रदर्शनेन व्याख्यातेति वक्ष्याम इत्यर्थः ।

स० — ननु विरोधिज्ञाने प्रागुक्तसिद्धान्तात्यागात्कथमनर्थप्राप्तिरिति तत्राह विरोधिज्ञानमेवेति । ननु सर्वोत्तमत्वादिविरोधिज्ञानस्य तमःसाधनत्वे अन्धन्तम इति वाक्योदाहरणमसङ्गतम् । तत्राविद्योपासकानामेव तमःप्राप्तेरभिधानादित्यत आह उक्तार्थस्येति ॥ वक्ष्यत इति । इत्येव श्रुतयोऽशेषा इत्यादिनेति शेषः । तथा च वक्ष्यामः ।

प० — अविद्यामिति । विद्याशब्दितसम्यग्ज्ञानविरोधिज्ञानमित्यर्थः । तद्व्यनक्ति उक्तेति ॥ वक्ष्यत इति । इत्येव श्रुतय इत्याद्युत्तरग्रन्थ इति भावः । परेषां व्याख्यानं कर्मपरत्वव्याख्यानमित्यर्थः । वक्ष्याम इति ।'अंधन्तमः प्रविशन्ति येऽविद्यामुपासते' इति श्रुतिविरोधाच्च 'नान्यथोपासनं भवेदि'त्युत्तरत्रात्रैव पादे पराभिमतमुक्तिहेतुखण्डनप्रस्तावे वक्ष्याम इत्यर्थः ।

या० — **वक्ष्यत इति** । अनुपदमेवेति शेषः ॥ **अविद्या भवत्येवेति** । प्रामाणिकत्वादुक्तार्थप्रतीतिः विद्येत्युच्यते । अतस्तद्विरुद्धार्थप्रतीतिः श्रौताविद्याशब्देन वाच्या भवत्येवेत्यर्थः । तथा च श्रुतावविद्योपासकानामेवान्धन्तमःप्रवेशस्योक्तत्वात्प्रकृतासङ्गतेयं श्रुतिरिति शङ्काऽनवकाशः ॥ **परेषां व्याख्यानमिति** । अविद्यापदं कर्मादिपरमिति भास्करादीनां व्याख्यानमित्यर्थः ॥ **तथा च वक्ष्याम इति** । 'इति श्रुतिविरोधाच्च नान्यथोपासनं भवेदि'त्येतदनुव्याख्याव्याख्यावसरे श्रुतिस्त्वन्यत्र स्मृतिसंमतिप्रदर्शनेन व्याख्यातेति वक्ष्याम इत्यर्थः ।

श्री० — ननु सत्सिद्धान्तविरोधिज्ञानस्यैवान्धन्तमःसाधनत्वमुच्यते न तु तत्त्यागस्येत्यत आह **विरोधिज्ञानमेव हीति** ।

सु० — **ननु च वस्तुतः प्रामाणिकः सत्सिद्धान्तः । प्रकृतस्य कथं प्रामाणिकत्वमित्यत आह** इत्येवेत्यादिना सादरमित्यन्तेन ।

**अनु०** — इत्येव श्रुतयोऽशेषाः पञ्चरात्रमथाखिलम् ॥
मूलरामायणं चैव भारतं स्मृतयोऽखिलाः ॥
वैष्णवानि पुराणानि सांख्ययोगौ परावपि ॥

---

ब्रह्मतर्कश्च मीमांसेत्यनन्तः शब्दसागरः ॥
अनन्ता युक्तयश्चैव प्रत्यक्षागममूलकाः ॥
प्रत्यक्षमैश्वरं चैव रमादीनामशेषतः ॥
मुक्तानामप्यमुक्तानामेतमेवार्थमुत्तमम् ॥

**इत्येवेत्युक्तप्रकारावधारणम् । एतमेवार्थमिति प्रकृतधर्म्यवधारणम् । तेन व्यत्यासमपि वारयति । अशेषा इति श्रुतिभागस्य कर्मादिपर्यवसायित्वनिरासार्थम् । अथशब्दः समुच्चये । अखिलमिति जीवजननादिवाक्यानामप्युपादानार्थम् । मूलरामायणमेवेत्यवान्तररामायणानां व्युदासः । अखिला इति बहुवचनविषयविवरणार्थम् । इतरपुराणानां पाशुपतादिमूलत्वेनाप्रामाण्याद्वैष्णवानीत्युक्तम् । पराविति अर्वाचीनसांख्ययोगव्यावृत्तये । तयोरप्रमाणत्वात् । मीमांसा त्रिविधा । शब्दसागरः प्रकाशयतीति संबन्धः । युक्तयश्च प्रकाशयन्ति प्रत्यक्षागममूलका एव । न त्वाभासाः । प्रत्यक्षं च प्रकाशयति । एवशब्देनेश्वरप्रत्यक्षस्य प्राबल्यं सूचयति । कर्मकाण्डादीनामेतदर्थप्रकाशकत्वं कथमित्यत उक्तमुत्तममिति । कर्मादेरुत्तानार्थत्वेऽप्युत्तमोऽर्थोऽयमिति भावः ।**

**वेदादीनामन्यथाव्याख्यानं वारयति** अन्यावकाशरहितमिति ।

अन्यावकाशरहितं प्रकाशयति सादरम् ॥

**क्रियाविशेषणमेतत् । सादरमिति तत्र तात्पर्यसद्भावमाचष्टे । एतदर्थं (र्थे) च श्रुत्यादिकमन्यत्र पठितमेव द्रष्टव्यम् ।**

**शे०** — ननु इत्येवेत्येतमेवेति चेत्यवधारणद्वयं व्यर्थम् । एकेनैव तेन प्रागुक्तप्रकाराद्यवधारणसंभवात् । अन्यथा पौनरुक्त्यापातादित्यतोऽत्रेतिशब्दस्य प्रकृतप्रकारपरामर्शकत्वेन तदन्वितावधारणस्य प्रकारमात्रावधारकत्वादेतमित्येतच्छब्दस्य च धर्मिपरामर्शकत्वेन तदन्वितावधारणस्य तन्मात्रावधारकत्वान्न पौनरुक्त्यमिति दर्शयन्नेव किं धर्मिप्रकारयोरवधारणस्यास्य प्रयोजनमित्यतो ये ये धर्मिणो यैर्यैः प्रकारैर्विशिष्टतया दर्शितास्त एव धर्मिणस्तैरेव प्रकारैर्विशिष्टतयोक्ता न पुनर्धर्मिणां धर्माणां व्यत्यासोऽस्तीति धर्मधर्मिव्यत्यासवारकत्वमेव तत्प्रयोजनमित्याह **इत्येवेत्यादिना** ।

**श्रुतिभागस्येति** । कर्मकाण्डस्येत्यर्थः । **जीवजननादिवाक्यानामिति** । वासुदेवात्सङ्कर्षणो नाम जीवोऽजायतेत्यादीनामित्यर्थः ॥ **उपपादनार्थमिति** । यथा च तेषां नानुपपन्नार्थत्वं तथा समयपादान्ते स्पष्टम् । ननु प्रकृतविरुद्धार्थाभिधायकानां पाशुपतादिस्मृतीनां बहुवचनबलेन प्राप्तानामुक्तार्थे प्रामाण्यात्कथमखिलाः स्मृतयोऽत्र प्रमाणमुच्यत इत्यतोऽत्राखिलपदं न सर्वसंग्रहार्थं किन्तु त्रितयातिरिक्तानामपि ग्रहणमस्तीति द्योतयितुमेवेत्यभिप्रायेणाह **अखिला इतीति** । अयं भावः । वसन्ताय कपिञ्जलानालभेतेत्यत्र बहुवचनबलेन प्राप्तानां सर्वेषामालम्भस्याशक्यत्वेन तद्विधानस्याशक्यार्थविषयतयाऽसंभवेन सङ्कोचे कर्तव्ये प्रथमातिक्रमे कारणाभावाद्यथा त्रित्व एव बहुत्वपर्यवसानमभ्युपगम्यते । तथा स्मृतय इति बहुवचनानुसारेण प्राप्तानां पाशुपतादिस्मृतीनामुक्तार्थविरुद्धाभिधायित्वादुक्तार्थे प्रामाण्याभावेनासंकुचितार्थत्वस्यासंभवात्सङ्कोचे कर्तव्ये प्रथमातिक्रमे कारणाभावात्त्रित्व एव पर्यवसानात्स्मृतित्रयस्यैव ग्रहणमिति शङ्का स्यात्तन्निवृत्त्यर्थमखिला इत्युक्तम् । तथा च त्रितयालम्भमात्रेणाप्यदृष्टसिद्ध्या यथा शक्त्यालम्भस्यैवादृष्टसाधनतायाः कल्पयितुमशक्यत्वेन तस्य नियामकत्वासंभवात्प्रथमातिक्रमे कारणाभावेन त्रित्व एव पर्यवसानावश्यम्भावेऽपि प्रकृतेऽविरुद्धानां सर्वस्मृतीनां प्रामाण्यकथनस्य दार्ढ्यार्थतया सार्थक्येन कारणविशेषान्न त्रित्वे पर्यवसानमिति ॥ **तयोरिति** । सर्ववेदविरुद्धत्वेन कुतर्कपरिबृंहितत्वेन चेति शेषः ॥ **त्रिविधेति** । ब्रह्मदेवकर्मरूपविषयभेदादिति भावः । व्यवहितत्वात्सम्बन्धं दर्शयति **शब्दसागरः प्रकाशयतीति संबन्ध इति ॥ प्रकाशयन्तीति** । अनेनार्थवशाद्वचनविपरिणाम इत्युक्तं भवति । चैवशब्दयोर्विरुद्धार्थत्वेन युक्तयश्चैवेत्येवशब्दस्य यथाश्रुतसंबन्धानुपपत्तिमाशङ्क्य भिन्नक्रमतया

तं योजयति **प्रत्यक्षागममूलका एवेति** । तत्राप्येवकारस्य वैयर्थ्यमाशङ्क्याभासभूतयुक्तिव्यावृत्त्यर्थत्वान्न तदिति भावेन तत्तात्पर्यमाह **न त्विति** । ऐश्वर्यं चैवेत्यत्र चशब्दो भिन्नक्रम इत्याशयेनाह **प्रत्यक्षं चेति** । रमादीनामशेषत इत्यादिना रमादिप्रत्यक्षस्यापि प्रमाणतयोक्तत्वेन प्रत्यक्षमैश्वर्यं चैवेत्यवधारणानुपपत्तिमाशङ्क्य परिहरति **एवशब्देनेति** । मुक्तामुक्तप्रत्यक्षस्य गुणपूर्णत्वादिविषयकत्वं च 'स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्वेदि'त्यनुव्याख्यानीयव्याख्याने यद्यपि जीवचैतन्यं ब्रह्मस्वरूपतद्धर्मप्रकाशकमित्यादि टीकाकारीयग्रन्थे स्पष्टम् ॥ **कर्मकाण्डादीनामिति** । अन्यथा तत्साधकप्रमाणान्तराभावत्तदसिद्धिरेव स्यादित्यर्थः ॥ **उत्तमोऽर्थ इति** । परममुख्योऽर्थ इत्यर्थः । अमुख्यार्थत्वाच्च कर्मादेर्न तदसिद्धिरिति भावः ।

**अन्यथाव्याख्यानमिति** । ऐक्यादिपरतया व्याख्यानमित्यर्थः । ननु चान्याकाशरहितमित्यस्य शब्दसागरयुक्तिप्रत्यक्षविशेषणतया तल्लिङ्गवचनप्रसक्त्याऽन्यावकाशरहित इत्यन्यावकाशरहिता इति पुल्लिङ्गबहुवचनादिप्रसङ्गादेकवचननपुंसकत्वयोरनुपपत्तिरित्यतः साधनं परित्यज्य धात्वर्थमात्रविशेषणस्य क्रियाविशेषणत्वात्क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं वाच्यमिति नपुंसकत्वैकवचनान्तत्वानुशासनादस्यापि क्रियाविशेषणत्वान्न नपुंसकत्वाद्यनुपपत्तिरित्याशयेनाह **क्रियाविशेषणमेतदिति** । कुतस्तत्र तात्पर्यसिद्धिरित्यत आह **एतदर्थं चेति** । श्रुत्यादिकं 'सर्वोत्कर्षे देवदेवस्येत्या'दिकम् । **अन्यत्र तत्त्वनिर्णयादौ** ।

**स०**— ननु इत्येवेति वा एतमेवेति वाऽवधारणं व्यर्थम् । एकेनैव पूर्वोक्तप्रकारादिपरामर्शोपपत्तेरित्येव पौनरुक्त्यापातादित्यत इतिशब्दस्य प्रकृतप्रकारपरामर्शकत्वेन तन्मात्रावधारकत्वात् एतमित्यस्य च धर्मिपरामर्शकत्वेन तदवधारकत्वान्न पौनरुक्त्यमिति मनसि निधाय किं धर्मिप्रकारावधारणेन प्रयोजनमित्यतः एकस्य धर्मिव्यत्यासवारकत्वादपरस्य प्रकारव्यत्यासवारकत्वात्पार्थक्यमित्याह **इत्येवेत्युक्तप्रकारावधारणमित्यादिना** ॥ **बहुवचनेति** । स्मृतय इति बहुवचनं त्रित्वे पर्यवसन्नमिति सूचयितुमिदमिति भावः ।

**प०**— **प्रकारेति** । अशेषगुणपूर्णत्वादिप्रकारावधारणमित्यर्थः ॥ **धर्मीति** । विष्ण्वादिधर्म्यवधारणमित्यर्थः ॥ **व्यत्यासमपीति** । उक्तधर्मधर्मिणां व्यत्यासमित्यर्थः । न केवलं प्रामाणिकत्वप्रदर्शनमित्यपेरर्थः । वारयति मूलकतेति योज्यम् ॥ **बहुवचनेति** । स्मृतिपदगतेति योज्यम् ॥ **त्रिविधेति** । कर्मदेवब्रह्ममीमांसाभेदेनेति भावः । उक्तं द्वितीये गीतातात्पर्ये ब्राह्मी दैवी च कार्मिकीति ॥ **उत्तमार्थोऽयमिति** । मां विधत्तेऽभिधत्ते मामित्यादेर्महातात्पर्यविषयार्थ इत्येके । पर्यव-

सितार्थ इत्यन्ये ॥ **अन्यत्र पठितमिति** । जन्माद्यधिकरणभाष्यादाविति भावः । यद्वा उक्तरूपपरापरत्वे श्रुत्यादिकं बृहद्भाष्यऋग्भाष्यादिग्रन्थेषु तत्र पठितमित्यर्थः । यद्वा ईश्वरादिप्रत्यक्षमेतमर्थं प्रकाशयतीति कथं ज्ञेयमित्यत उक्तम् ॥ **एतदर्थे श्रुत्यादिकमन्यत्रेति** ।

**या०—** ननु प्रकारावधारणेनैव धर्मिणोऽन्यथाकथनशङ्कानिरासस्य लाभात्पुनर्धर्म्यवधारणं व्यर्थमित्यत आह **व्यत्यासमिति** । धर्मिव्यत्यासमित्यर्थः । तथा चास्माभिर्ये ये धर्मिणो यैर्यैः प्रकारैर्विशिष्टतयोक्तास्त एव धर्मिणस्तैरेव प्रकारैर्विशिष्टतया श्रुत्यादिषूक्ता न व्यत्यासेनेत्यर्थः ॥ **उत्तमार्थोऽयमिति** । महातात्पर्यविषयभूतोऽर्थ इत्यर्थः ।

**श्री०— अवान्तरेति** । वाल्मीक्यध्यात्मादिरामायणानामित्यर्थः ॥ **स्मृतय इति** । बहुवचनस्य त्रित्वे पर्यवसानं किं न स्यादित्याशङ्कानिरासायाखिला इति बहुवचनार्थ उक्त इत्याह **अखिला इतीति** ॥ **त्रिविधेति** । ब्राह्मी दैवी च कार्मिकीत्यर्थः । उत्तानार्थो नाम आपातप्रतीतार्थः ।

**सु०— सत्सिद्धान्तमहापयन्सच्छास्त्राण्येव सर्वदा शृणयादित्युक्तम्** । तत्र स(त)त्सिद्धान्तस्वरूपं निरूप्य सच्छास्त्राण्येव सर्वदा शृणुयादित्येतद्विवृणोति एतदेव चेति ।

**अनु०—** एतदेव च सच्छास्त्रं दुश्शास्त्रं तु ततः परम् ।
सच्छास्त्रमभ्यसेन्नित्यं दुश्शास्त्रं तु परित्यजेत् ।

---

एतद्वेदादिकम् । ततः परं **तद्विरुद्धं तदुदासीनं च** । ऋगाद्या भारतं चैवेत्याद्यागमोऽत्र स्फुट एव । दुश्शास्त्रं नाभ्यसेदिति वक्तव्ये परित्यजेदिति वचनं न केवलं तत्रोदासीनत्वं किन्तु हेयतया ज्ञानमपि भाव्यमिति ज्ञापयितुम् । अत्र चासच्छास्त्राधिगमनमिति पातकेषु परिगणनं प्रमाणम् । स्फुटानि चाचार्येणान्यत्रात्रार्थे वाक्यान्युदाहृतानि ।

**शे०—** कुतो वेदादेरेव सच्छास्त्रत्वं तद्विरुद्धस्य तदुदासीनस्य च दुश्शास्त्रत्वमित्यत आह **ऋगाद्या इति** ॥ **अत्र चेति** । हेयतयाऽपि ज्ञातव्यत्वे ॥ **परिगणनमिति** । याज्ञवल्क्यस्मृताविति शेषः । (ब्रह्माण्डपुराणे शतापराधकथनप्रसङ्गे 'ब्रह्महत्यासुरापानं गुरुस्त्रीगमनं तथा । ब्रह्मस्वहरणं चापि सुरापानकृतिस्थता । हरिनिन्दा गुरोर्निन्दा देवतानिन्दनं तथा । असच्छास्त्राधिगमनं तद्व्याख्यानकृतिस्तथा । अयोग्येषूपदेशश्च भगवद्विस्मृतिस्तथा' इति परिगणनं कृतमस्तीत्यवगन्तव्यम् ) ।

**स०— अन्यत्र** गीतातात्पर्यनिर्णय इत्यर्थः ।

**प०— इत्याद्यागम इति** । तत्वनिर्णयोक्तागम इत्यर्थः ॥ **असदिति** । 'असच्छास्त्राधिगमनं व्यसनादात्मविक्रयः । व्रात्यतात्मार्थपक्त्वमेकैकमुपपातकमि'ति स्मृतौ । 'असच्छास्त्राधिगमनं शुष्कत-

कावलम्बनम् । मौल्येनाध्यापनं ब्रह्मनुपपातकसंज्ञितमि'ति पुराणेषु परिगणनमित्यर्थः ॥ **अन्यत्रेति** । सप्तमस्कन्धतात्पर्ये त्रयोदशाध्याये 'न चोदासीनशास्त्राणि न निषिद्धानि वाऽभ्यसेदि'त्याद्युदाहृतानीत्यर्थः ।

श्री० — **ऋगाद्या इति** 'ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् । मूलरामायणं चैव पुराणं चैतदात्मकम् । ये चानुयायिनस्त्वेषां सर्वे ते च सदागमाः । दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः' इति तत्त्वनिर्णयोदाहृते प्रमाणेऽयमर्थः स्फुट इत्यर्थः ॥ **परिगणनमिति** । ब्रह्माण्डपुराणे शतापराधकथनप्रसङ्गे 'ब्रह्महत्या सुरापानं गुरुस्त्रीगमनं तथा । ब्रह्मस्वहरणं चापि सुरापानकृतिस्तथा । हरिनिन्दा गुरोर्निन्दा देवतानिन्दनं तथा । असच्छास्त्राधिगमनं तद्व्याख्यानकृतिस्तथा । अयोग्येषूपदेशश्च भगवद्विस्मृतिस्तथा' इति पातकेषु परिगणनं कृतमस्तीत्यवगन्तव्यम् ।

**सु० — सच्छास्त्रमभ्यसेदिति श्रवणमननयोः कर्तव्यत्वमुक्तं तदयुक्तम् । निदिध्यासनेनैव ब्रह्मदर्शनोपपत्तेः । अन्यथा तद्वैयर्थ्यादित्यत आह** असंशयेनेति ।

**अनु०** — असंशयेन तत्त्वस्य निर्णये ब्रह्मदर्शनम् ।

**संशयशब्देन विपर्ययोऽपि लक्ष्यते । निर्णये सति निदिध्यासनेन ब्रह्मदर्शनं भवतीति योज्यम् । एतदुक्तं भवति । सत्यं निदिध्यासनं ब्रह्मदर्शनसाधनमिति । किं तु तत्सिद्ध्ये श्रवणमनने अपि कर्तव्ये । अवितथं ब्रह्मानुचिन्तनं हि निदिध्यासनम् । वितथानुचिन्तनस्य चतुर्थे निराकरिष्यमाणत्वात् । न चाविदितस्यानुचिन्तनं सम्भवतीति । तद्वेदनार्थं श्रवणमभ्यर्थनीयम् । श्रुते चार्थे लिङ्गाभासप्रतिभासेन संशयविपर्ययोदयेन वितथं तद्भवतीति तद्व्युदासहेतुर्मननमप्येष्टव्यमिति ।**

शे० — श्रवणमननयोश्च किं निदिध्यासनार्थतया कर्तव्यत्वमभिमतं किंवा साक्षात्कारार्थतया वा । नाद्यः । निदिध्यासनस्य ध्यानतया मानसक्रियावत्त्वेन ज्ञानरूपत्वाभावेन तदर्थं श्रवणमननयोरनपेक्षणाज्ज्ञानरूपत्वेऽप्यनुचिन्तनस्याज्ञाने सत्यसंभवात्तदर्थं श्रवणस्यापेक्षायामपि वितथानुचिन्तनस्याप्यनुचिन्तनतया मननानपेक्षणादिति भावेन द्वितीयं दूषयति **निदिध्यासनेनैवेति** । श्रुत्वा मत्वा तथा ध्यात्वेति वाक्ये संशयनिवृत्तेरिव विपर्ययनिवृत्तेरपि मननफलत्वेनोक्तत्वात्तदनुरोधेन संशयपदं विपर्ययोपलक्षणतया व्याचष्ट **विपर्ययोपीति** । न चोदाहृतप्रमाणानुसारेण मननफलसंशयविपर्ययनिवृत्तेरिव श्रवणफलाज्ञाननिवृत्तेरप्यत्र वाच्यत्वात्तदनुक्तिरयुक्तेति वाच्यम् । अप्रसक्तसंशयादेर्मननेन निवृत्त्यसंभवेन तन्निवृत्त्युक्त्या संशयादेः प्रसक्तत्वलाभात् । तत्प्रसक्तेश्च धर्मिज्ञानसाध्यत्वात्संशयादेरज्ञाने सत्ययोगेनार्थादज्ञाननिवृत्तेर्लाभादर्थतो लब्धाया अज्ञाननिवृत्तेः किमुपलक्षणेनेत्यत्र तात्पर्यात् ॥ **निदिध्यासनं ब्रह्म-**

**दर्शनसाधनमित्यादि** । अनेनापरोक्षज्ञाने जननीये निदिध्यासनमङ्गि श्रवणमनने तु निदिध्यासने स्वरूपोपकारकाङ्गे इत्युक्तं भवति । न च निदिध्यासनस्याङ्गित्वे प्रमाणाभावः । श्रवणसामर्थ्यरूपलिङ्गस्य ततस्तु तं पश्यते निष्कलं ध्यायमान इति वाक्यस्य निदिध्यासनस्य फलसम्बन्धात्प्रकरणस्य च तत्र मानत्वात् । न चैवंभावनाप्रकर्षजन्यत्वात्कामुकस्य कामिनीसाक्षात्कारवदप्रमात्वापत्तिरिति वाच्यम् । तथा सति त्वन्मतेऽपि वेदान्तवाक्यजन्यज्ञानभावनाजन्यत्वेन ब्रह्मसाक्षात्कारस्याप्यप्रमात्वापातात् । साक्षात्कारस्यादुष्टकरणजन्यत्वेन विषयाबाधेन चौत्सर्गिकस्वतःप्रामाण्यत्यागायोगेन प्रमात्वमिति यदि तदेतन्मापि तुल्यम् । न च निदिध्यासनस्य प्रत्यक्षादिप्रमाणान्तर्भूतत्वादतिरिक्तप्रमाणस्य चानभ्युपगमात्प्रमाणत्वमेव नेति कथं दर्शनसाधनत्वमिति वाच्यम् । तथा सति श्रवणस्यापि दर्शनसाधनत्वे प्रमाकरणत्वेन प्रामाण्यस्य वाच्यतया तस्य च प्रत्यक्षानन्तर्भूतत्वेनातिरिक्तस्य च प्रमाणस्यानभ्युपगमेनाप्रमाणत्वाद्दर्शनसाधनत्वाभावापातात् । यदि च तत्र श्रवणानन्तरमनुस्मृतः शब्द एव दर्शनसाधनमिति मन्यसे तर्हि निदिध्यासनमन्तरमनुस्मृतः शब्द एव ब्रह्मदर्शनसाधनं श्रवणाद्यङ्गकं निदिध्यासनं तु तत्सहकारीति ममापि समानम् । वस्तुतस्तु मन्मते मनस एवापरोक्षज्ञानकरणत्वं श्रवणाद्यङ्गकनिदिध्यासनस्य त्वपरोक्षज्ञानकरणमनःसहकारित्वमेवेत्यन्यत्र विस्तरः ॥ **निराकरिष्यमाणत्वादिति** । 'योऽन्यथासन्तमात्मानमन्यथा प्रतिपाद्यते' इत्यादिनेति शेषः ।

---

स०— **निदिध्यासनं ब्रह्मदर्शनसाधनमिति** । न च निदिध्यासनस्याङ्गित्वे मानाभावः । श्रवणसामर्थ्यरूपलिङ्गस्य ततस्तु तं पश्यते निष्कलं ध्यायमान इति वाक्यस्य निदिध्यासनस्य फलसंबन्धात् प्रकरणस्य च तत्र मानत्वात् । न चैवं भवनाजन्यप्रकर्षजन्यत्वात् कामुकस्य कामिनी साक्षात्कारवदप्रमात्वापत्तिरिति वाच्यम् । तथा सति त्वन्मते वेदान्तवाक्यजन्यज्ञानभावनाजन्यत्वेन साक्षात्कारस्याप्रमात्वापातात् । न च निदिध्यासनस्य प्रत्यक्षादिप्रमाणानन्तर्भूतत्वात् अतिरिक्तप्रमाणस्यानभ्युपगमान्न प्रमाणत्वमेव नेति कथं दर्शनसाधनत्वमिति वाच्यम् । तथा सति *श्रवणस्यापि दर्शनसाधनत्वे प्रमाकरणत्वेन प्रामाण्ये वाच्ये तस्य चोक्तदोषलंघनाजंघालुत्वेनासंभवापातात् । अथ-श्रवणानन्तरमनुस्मृतः शब्द एव दर्शनसाधनमिति मन्यसे तर्हि निदिध्यासनानंतरमनुस्मृतः शब्द एव ब्रह्मदर्शनसाधनम् । श्रवणाद्यङ्गकं निदिध्यासनं तु तत्सहकारीति प्रकृतेऽपि समानम् । न च शब्दस्यापरोक्षज्ञानकरणत्वे अपसिद्धान्तः, मनस एव अपरोक्षज्ञानकरणत्वात् । श्रवणाद्यङ्गकनिदिध्यासनस्य त्वपरोक्षज्ञानकरणमनःसहकारित्वाभ्युपगमादिति सकलमकलंकम् । **निराकरिष्यमाणत्वादिति** । योऽन्यथासन्तमात्मानमित्यादिनेति शेषः ।

प०— निदिध्यासनस्यैव ब्रह्मदर्शनसाधनत्वे श्रौतवाक्ये श्रवणादेः पूर्वमुक्तिः कुत इत्यत आह **तत्सिद्धय इति**। उपोद्धातप्रक्रियया तदुक्तिरिति भावः। एतेन निदिध्यासनं प्रधानमन्यत्तदङ्गमिति सूचितम्। तद्विवृतं न्यायामृते तृतीयपरिच्छेदे। तत्सिद्धय इत्युक्तमर्थं 'तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यः प्रतिबन्धः फलमि'ति सूत्रभाष्यदिशा न चेत्यादिना विवरितुमाह **अवितथमिति**॥ **चतुर्थ इति**। चतुर्थाद्यपादे न प्रतीके न हि स इति सूत्रे निराकरिष्यमाणत्वादित्यर्थः।

या०— **किन्तु तत्सिद्धय इति**। अनेनापरोक्षज्ञाने जननीये निदिध्यासनमङ्गि। श्रवण मनने तु निदिध्यासने स्वरूपोपकारकाङ्गे इति दर्शितमिति ज्ञातव्यम्। इदमुपलक्षणम्। श्रवणमनन- योर्निदिध्यासने फलोपकारकाङ्गत्वमपि वक्ष्यमाणमत्रानुसन्धेयम्। अत्र कश्चित्। न निदिध्यासनमपरो- क्षज्ञानकरणम्। तत्र प्रमाणाभावात्। निदिध्यासनस्यैव करणत्वे तस्य प्रमाणान्तरतापाताच्च। कामुकस्य भावनाप्रकर्षजन्यकामिनीसाक्षात्कारवद्ब्रह्मसाक्षात्कारस्याप्रमात्वापाताच्चेत्याह। तत्तुच्छम्। 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' (आथर्वण)। 'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ। संशयं च पराणुद्य लभते ब्रह्मदर्शनमि'त्यादिश्रुतिस्मृतीनामेवात्र प्रमाणत्वात्। परिपक्वनिदिध्यासनसह- कृतमनस एव तत्र करणत्वेन निदिध्यासनस्य प्रमाणान्तरताभावात्। साक्षात्कारस्यादुष्टकरणजन्यत्वेन विषयाबाधेन चौत्सर्गिकस्वतःप्रामाण्यत्यागायोगेन प्रमात्वोपपत्तेश्चेति।

---

**सु०— अन्ये पुनर्मन्यन्ते। श्रवणमेव ब्रह्मापरोक्षज्ञानसाधनम्। मनननिदिध्यासने श्रवणं प्रति फलोपकार्यङ्गभूते। असम्भावनाविपरीतभावनाख्यचित्तविक्षेपप्रतिबद्धं हि ब्रह्मा- परोक्षज्ञानं नाविद्यानिर्मूलनस्येष्टम्। मननादिकं च प्रतिबन्धं निवर्तयतीति। तदसत्। शब्दस्य साक्षात्कारकारणतायाः क्वाप्यदर्शनात्। ब्रह्मविषयशब्दवद्धर्मादिविषयस्यापि तथा- त्वापत्तेश्च। न च विशेषहेतुरस्ति। येन ब्रह्मविषयस्यैव तद्भावो न धर्मादिविषयस्येति प्रतीमः। प्रत्यक्षलक्षणाक्रान्ततया शब्दस्य तत्रान्तर्भावश्चापद्येत॥ अथ मतम्। दृश्यते तावद्दशमस्त्वमसीत्यादिवाक्यस्य साक्षात्कारकरणत्वम्। न च तत्रापीन्द्रियमेव करणं न शब्द इति साम्प्रतम्। शब्दस्याप्यन्वयव्यतिरेकसिद्धत्वात्। अस्तु तर्हीन्द्रियमेव करणं शब्दस्तु सहकारीति चेन्न। वैपरीत्यस्यापि सुवचत्वात्। तथाऽपि कुतो विनिगमनमिति चेत्। क्वचिद्बहलतमे तमसि क्वचिच्च लोचनविरहिणोऽपि वाक्याद्दशमोऽस्मीत्यपरोक्षप्रतीति- दर्शनादिति वदामः। धर्मादिविषयस्यापि शब्दस्यापरोक्षज्ञानसाधनत्वापादनं चासत्। वैषम्यात्। प्रकृतो हि शब्दोऽपरोक्षब्रह्मात्मविषयः। न तथाऽन्यः॥ अस्ति चास्यापरोक्ष-**

**ज्ञानसाधनत्वे प्रमाणम् । नान्यस्य । तथा हि । विमतं श(शा)ब्दज्ञानमपरोक्षम्, अपरोक्षविषयत्वात् सुखादिज्ञानवत् । अपरोक्षत्वं वेदान्तवाक्यजन्यज्ञानवृत्ति, अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात् ज्ञानत्ववदिति । न च विवादाध्यासितः शब्दोऽपरोक्षज्ञानजनको न भवति, शब्दत्वात्, ज्योतिष्टोमादिवाक्यवदिति युक्तम् । दशमस्त्वमसीत्यादौ व्यभिचारात् । श्रूयते च 'तद्वास्य विजिज्ञौ तमसः पारं दर्शयती'त्युपदेशमात्रादेवापरोक्षप्रमितिजन्म । अत एव ब्रह्मात्मविषयवाक्यान्यत्वेन प्रत्यक्षलक्षणं विशेषणीयमिति ।**

**शे०**— स्वाभिमतमङ्गाङ्गिभावं व्यवस्थापयितुं विवरणोक्तमङ्गाङ्गिभावमनूद्य दूषयति **अन्ये पुनरिति ॥ श्रवणमेवेति ।** प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानादिति भावः । इन्द्रियार्थसन्निकर्षः करणमितिवद्व्यापारप्राधान्यविवक्षयैवायं निर्देशः । वस्तुतस्तु तद्विशिष्टः शब्दः एवात्र करणतयाऽभिमतः । अत एवोत्तरत्र शब्दस्य साक्षात्कारकारणतायाः क्वाप्यदर्शनादिति दूषणं संलग्नकं भवति । अन्यथा तस्यासङ्गतत्वापातादिति ध्येयम् । नन्वेवं श्रवणेनैव ब्रह्मसाक्षात्कारोपपत्तेः श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधानानर्थक्यमित्यत आह **मनननिदिध्यासने त्विति ।** फलोपकारकाङ्गतामेवोपपादयति **असंभावनेति ॥ तथात्वापत्तेश्चेति ।** धर्मविषयकसाक्षात्कारजनकत्वापात्तेश्चेत्यर्थः ॥ **ब्रह्मविषयस्यैवेति ।** ब्रह्मप्रतिपादकस्यैव शब्दस्येत्यर्थः । तद्भावो ब्रह्मसाक्षात्कारजनकत्वम् ॥ **दृश्यत इति ।** दशमस्त्वमसीति वाक्यादहं दशमोऽस्मीति साक्षात्कारजननात् ॥ **प्रत्यक्षलक्षणेति ।** साक्षात्कारिप्रमाकरणत्वरूपप्रत्यक्षलक्षणाक्रान्ततयेत्यर्थः ।

**न च तत्रापीति ।** दशमशरीरगोचरेन्द्रियसन्निकर्षान्वयव्यतिरेकानुविधानादिति भावः । सत्यपीन्द्रियसन्निकर्षे शब्दाभावदशायां तस्याभावात्तत्र शब्दस्य करणत्वमित्याशयेनाह **शब्दस्यापीति ।** शब्दान्वयव्यतिरेकयोरिन्द्रियेण दशमत्वसाक्षात्कारे शब्दस्य सहकारितामात्राभिप्रायेणोपपत्तेर्न प्रमितेन्द्रियकरणत्वबाधकत्वम् । अन्यथा सत्यपीन्द्रियसन्निकर्षेऽनधिगतरत्नतत्त्वपरीक्षाशास्त्रस्य पुंसो रत्नतत्त्वसाक्षात्कारानुदयादधिगतशास्त्रतत्त्वस्य च तत्साक्षात्कारोदयात्तत्रापि शास्त्रस्यैव प्रत्यक्षप्रमितिजनकत्वमभ्युपेयं स्यात् । यदि च रत्नतत्त्वसाक्षात्कारे शब्दस्य सहकारित्वमात्रेणैव तदन्वयव्यतिरेकयोरुपक्षीणतया प्रमितेन्द्रियकरणत्वाबाधकत्वाच्छास्त्रसहकृतप्रत्यक्षस्यैव तत्र करणत्वमिति मन्यसे तदेतदत्रापि तुल्यमित्याशयेन शङ्कते **अस्तु तर्हीति ॥ वैपरीत्यस्यापीति ।** दशमत्वसाक्षात्कारे रत्नतत्त्वसाक्षात्कारे चेन्द्रियसहकृतशब्दस्यैव करणत्वमिति वैपरीत्यस्यापीत्यर्थः । अन्वयव्यतिरेकयोरुभयत्राविशिष्टत्वे शब्दसहकृतस्येन्द्रियस्यैव करणत्वं नेन्द्रियसहकृतशब्दस्येति विनिगन्तुमशक्यत्वादिति भावः ॥ **तथाऽपीति ।**

शब्द एव करणं नेन्द्रियमिति विनिगमनानुपपत्तिरेवान्वयव्यतिरेकयोरुभयत्राविशिष्टत्वादिति भावः। सलोचनस्यापि गाढान्धकारनिरुद्धतयाऽव्यापृतलोचनस्य लोचनविरहिणश्च शब्दादपरोक्षज्ञानदर्शनमेव तत्र नियामकमित्याह **क्वचिदिति**।

किं तदित्यतो न्यायदीपावल्युक्तमनुमानं तत्र प्रमाणयति **विमतमिति**। प्रत्यक्षेणार्थान्तरतानिवृत्त्यै शाब्दग्रहणम्। ज्योतिष्टोमादिवाक्यजन्यज्ञानेषु बाधासिद्ध्योः परिहाराय विमतमित्युक्तम्। तत्त्वमस्यादिवाक्यजनितं ज्ञानमित्यर्थः। **अपरोक्षविषयत्वात्** अपरोक्षमात्रविषयकज्ञानत्वात्। तेनापरोक्षविषयके धर्मवानहमिति ज्ञाने सुखादीच्छायां च न व्यभिचार इति ध्येयम्। चित्सुखोक्तमनुमानमप्यत्र प्रमाणयति **अपरोक्षत्वमिति**। ज्ञानवृत्तीत्येवोक्ते प्रत्यक्षवृत्तितयाऽर्थान्तरतया स्यादतो वाक्यजन्यज्ञानवृत्तीत्युक्तम्। तथाऽपि विवक्षितासिद्धिः। वाक्यान्तरमादायाप्युपपत्तेरित्यत उक्तं वेदान्तेति। असिद्धिनिवृत्त्यर्थं हेतावपरोक्षपदम्। सविकल्पकत्वादिना वेदान्तवाक्यजन्यज्ञानानिष्ठेन व्यभिचारनिरासार्थमत्यन्ताभावग्रहणम्। न च परोक्षत्वं तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्तिपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वाज्ज्ञानत्ववदिति सत्प्रतिपक्षसाधनमेतदिति वाच्यम्। असंभावनाविपरीतभावनाप्रतिरुद्धान्तःकरणे पुरुषे तस्य परोक्षज्ञानजनकताया दृष्टत्वेन सिद्धसाधनत्वादित्याशयात्॥ **श्रूयते चेति**। तथा च बाधितविषयं च शब्दत्वानुमानमिति भावः। (तद्धास्य विजिज्ञावित्यस्य तद्ब्रह्म विजज्ञौ साक्षात्कृतमासीदित्यर्थं मन्यते)॥ **अत एवेति**। शब्दादपरोक्षज्ञानजन्मनः प्रमितत्वादेवेत्यर्थः। **अयमाशयः**। यथा बाह्यप्रत्यक्षत्वे न बाह्यप्रत्यक्षप्रमितिकरणत्वमात्रं तन्त्रं तथा सति योगिमनसोऽपि तत्प्रसङ्गात्, किन्तु योगिमनोऽन्यत्वे सति बाह्यप्रत्यक्षप्रमितिकरणत्वमिति कल्प्यते, एवं प्रत्यक्षत्वे न प्रत्यक्षप्रमितिकरणत्वमात्रं प्रयोजकम्। शब्दस्यापि तत्प्रसङ्गात्। किन्तु स्वतोऽपरोक्षविषयकशब्दान्यत्वे सति प्रत्यक्षप्रमितिजनकत्वमेव। तथा च प्रत्यक्षलक्षणानाक्रान्तत्वान्न तस्य प्रत्यक्षान्तर्भाव इति।

स०— **अन्ये पुनरिति**। विवरणकारा इत्यर्थः। **श्रवणमेवेति**। प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानादिति भावः। **मनननिदिध्यासने त्विति**। श्रवणेन ब्रह्मापरोक्षज्ञाने जननीये चित्ते तस्य प्रत्यगात्मप्रवणसंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते इति प्रयाजादिवत् फलोपकार्यङ्गभूते इत्यर्थः। **प्रत्यक्षलक्षणेति**। साक्षात्कारप्रमाकरणत्वरूपप्रत्यक्षलक्षणाक्रान्ततयेत्यर्थः। **क्वचिदिति**। दशमत्वसाक्षात्कारस्य चाक्षुषत्वे चक्षुर्हीनस्य तत्साक्षात्कारस्यानुपपत्तिः। चक्षुषः साक्षात्कारे विषयसंस्कारकबाह्यालोकसापेक्षेणैव चक्षुषा घटादिसाक्षात्कारस्य दृष्टत्वेन प्रकृते बहुलतमे तमसि विषयसंस्कारकबाह्यालोकाभावेन न चक्षुषा तत्साक्षात्कार इति च वाक्यस्यैव तद्धेतुत्वम्। उपलक्षणं चैतत्। स्पर्शनव्यापाराभावस्यापि लोचनविरहिणः सलोचनस्यापि गाढान्धकारनिरुद्धतया व्यावृत्तत्वस्य

शब्दादिना परोक्षज्ञानदर्शनमेव नियामकमेवेति भावः ॥ **विमतं इति** । ज्योतिष्टोमादिवाक्येषु बाधासिद्ध्योः परिहाराय विमतं इत्युक्तम् । तत्त्वमस्यादिशब्दजनितज्ञानमित्यर्थः । प्रत्यक्षेणार्थन्तरतानिवृत्त्यै शब्दग्रहणम् । **अपरोक्षत्वात्** । अपरोक्षविषयज्ञानत्वादित्यर्थः । तेन नेच्छायां व्यभिचार इति भावः । **अपरोक्षज्ञानत्वमिति** । ज्ञानवृत्तीत्युक्ते प्रत्यक्षवृत्तितयाऽर्थान्तरता । तदर्थं वाक्यजन्यज्ञानवृत्तीत्युक्तम् । तथापि विवक्षितासिद्धिः वाक्यान्तरमादायापि उपपत्तेरित्यत उक्तम् **तत्त्वमस्यादीति** । असिद्धिनिवृत्त्यर्थं हेतावपरोक्षग्रहणम् । सविकल्पकत्वादिना वेदान्तवाक्यजन्यज्ञाननिष्ठेन व्यभिचारनिरासार्थमत्यन्ताभावग्रहणम् । यथा बाह्यप्रत्यक्षत्वे न बाह्यप्रत्यक्षप्रमितिकरणत्वमात्रं तन्त्रम् । योगिमनसोपि तत्प्रसङ्गात् । तत्र योगिमनोऽन्यत्वे सति बाह्यप्रत्यक्षप्रमितिकरणत्वं यथा बाह्यप्रत्यक्षत्वे प्रयोजकं कल्प्यते एवं प्रत्यक्षत्वे न प्रत्यक्षप्रमितिकरणत्वमेव प्रयोजकम् । शब्दस्यापि तत्प्रसङ्गात् । किन्तु स्वतोऽपरोक्षविषयकशब्दान्यत्वे सति प्रत्यक्षप्रमितिकरणत्वमेव । तथाच न शब्दस्य प्रत्यक्षान्तर्भावापत्तिरित्याह **अत एवेति** । शब्दादपरोक्षज्ञानजन्यत्वस्य प्रमितत्त्वादेवेत्यर्थः ।

प० — **फलोपकार्यङ्गेति** । द्विविधमङ्गं साधनस्वरूपनिष्पत्तौ सहकारिभूतं निष्पन्ने च साधने तस्य फलजनने कार्ये सहकारिभूतं चेति । तत्र द्वितीयं फलोपकार्यङ्गमित्युच्यत इति ज्ञेयम् । तथात्वं तयोर्व्यनक्ति **असंभावनेति** ॥ **क्वापीति** । क्वचिदपि शब्देऽनुपलब्धेरित्यर्थः ॥ **दशमस्त्वमिति** । कश्चित्कंचित्प्रति वदति दशमस्त्वमसीति । तत्र तस्य वाक्याद्दशमोऽहमिति साक्षात्कारो जायते । अतः क्वाप्यदर्शनादित्ययुक्तमिति भावः ॥ **शब्दस्यापीति** । दशमस्त्वमितिशब्दस्यापि सति तस्मिन्दशमोऽहमिति प्रत्यक्षम्, अन्यथा तु नेत्यन्वयव्यतिरेकाभ्यां करणत्वस्य सिद्धत्वादित्यर्थः ॥ **अपरोक्षब्रह्मेति** । साक्षादपरोक्षं ब्रह्मेति श्रुतिवदपरोक्षो धर्म इति श्रुतेरभावादिति भावः ॥ **तद्धास्येति** । तत् ब्रह्म विजिज्ञौ साक्षात्कृतमासीत् ह इत्यर्थः ।

या० — **प्रत्यक्षलक्षणाक्रान्ततयेति** । साक्षात्कारिप्रमाकरणत्वरूपप्रत्यक्षलक्षणाक्रान्ततयेत्यर्थः ॥ **शब्दस्यापीति** । दशमस्त्वसीति वाक्ये सत्येवाहं दशमोऽस्मीति साक्षात्कारो भवति नान्यथेत्यन्वयव्यतिरेकाभ्यां दशमस्त्वमसीति वाक्यस्यापरोक्षज्ञानकरणतया निश्चितत्वादित्यर्थः ।

श्री० — **फलोपकार्यङ्गभूत इति** । प्रयाजादिवदिति भावः । किं तत्फलं कथं च तदुपकारकत्वं मनननिदिध्यासनयोरित्यतस्तदुपपादयति **असम्भावनेत्यादिना** ॥ **निवर्तयतीति** । मननमसम्भावनां निदिध्यासनं च विपरीतभावनां निवर्तयतीत्यर्थः ॥ **तथात्वापत्तेश्चेति** । धर्मविषयकसाक्षात्कारजनकत्वापत्तेरित्यर्थः ॥ **ब्रह्मविषयस्यैवेति** । ब्रह्मप्रतिपादकस्यैव शब्दस्यैवेत्यर्थः । **तद्भाव इति** । साक्षात्कारजनकत्वमित्यर्थः ॥ **धर्मादिविषयस्येति** । धर्मादिविषयकस्येत्यर्थः ॥ **दृश्यत इति** । दश-

मस्त्वमसीति वाक्यादहं दशमोऽस्मीति साक्षात्कारजननादित्यर्थः । करणं साक्षात्कारकरणम् ॥ **विनिगमनमिति** । शब्द एव करणमिन्द्रियं सहकारीत्येव विनिगमनं निर्धारणं कुतः प्रमाणात्क्रियत इत्यर्थः । लोचनविरहिणोऽप्यपरोक्षप्रतीतिदर्शनादित्यन्वयः । प्रतीतिर्मानसी । वाक्यात् दशमस्त्वमसीति **कस्यचिद्वाक्यात्** । त्वमसीत्युक्त्या सहकारिभूतेन्द्रियाभाव उक्तः । क्वचिच्चेत्यनेन स्पष्टं तदभावः । तथा चेन्द्रियाभावेऽपि जायमाने साक्षात्कारे इन्द्रियस्य सहकारित्वायोगाच्छब्दकरणकत्वमेवेत्यस्ति विनिगमकमिति भावः । न च विशेषहेतुरस्तीत्युक्तदूषणं परिहरति **अस्ति चेति** ॥ **विमतं शाब्दज्ञानमिति** । वेदान्तवाक्यजन्यमित्यर्थः ॥ **अपरोक्षविषयकत्वादिति** । अहमिति जीवस्य स्वप्रकाशतया नित्यसिद्धत्वेपि न ब्रह्मणोऽपि तदभिन्नस्यापरोक्षत्वादित्यर्थः । अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात् इत्यस्यापरोक्षज्ञानवृत्तित्वादिति फलितार्थः ॥ **अत एवेति** । शब्दस्यापि साक्षात्कारकारणतायाः प्रमितत्वादेवेत्यर्थः ।

**च० — तद्धास्य विजज्ञाविति** । तद्ब्रह्म साक्षात्कृतमासीदित्यर्थः ।

**सु० — अत्रोच्यते । यत्तावदुक्तं दशमस्त्वमसीत्यादिवाक्यादपरोक्षज्ञानजन्मोपलब्धमिति तदसङ्गतम् । दशत्वसंख्या खल्वपेक्षाबुद्धिजन्या तद्व्यङ्ग्या वेत्यतो नापाततो रूपादिकमिव प्रत्यक्षेणोपलभ्यते । ततो दशानां पूरणो दशमोऽपि तथा । अतः प्रथमं शब्देन परोक्षज्ञाने जातेऽनन्तरं लब्धसहायेन प्रत्यक्षेणापरोक्षज्ञानं जायते । आशुभावादेकमेवापरोक्षं ज्ञानमित्यभिमानः । अन्धकारादौ तु वाक्यादुत्पन्नस्य ज्ञानस्यापरोक्षत्वं नास्त्येव । प्रतीतिकलहोऽयं निरवधिक इति चेत् । अत्रेदं वक्तव्यम् । शब्दस्यापरोक्षज्ञानसाधनत्वं किं स्वभावः किं वा अपरोक्षज्ञानसाधनत्वमस्याप्यागन्तुकम् । आद्ये सर्वेषामपि शब्दानां तथाभावः स्यात् । द्वितीये निमित्तं वक्तव्यम् । ब्रह्मात्मविषयत्वमिति चेत् । तर्हि दशमस्त्वमसीत्यादेरतथाभूतस्य नापरोक्षज्ञानसाधनत्वं स्यात् । अपरोक्षविषयत्वमिति चेन्न । अपरोक्षज्ञानविषयत्वातिरिक्तस्यार्थे अपरोक्षत्वस्याभावात् । तत्रैतज्ज्ञानविषयत्वेन तदुक्तावितरेतराश्रयत्वम् । ज्ञानान्तराभिप्राये तु स्वर्गादयोऽपि केषाञ्चिदपरोक्षज्ञानविषया इत्यस्माकं तद्विषयः शब्दोऽपरोक्षज्ञानं जनयेत् । एकपुरुषाभिप्रायेऽपि प्रत्यक्षावगतेऽग्नौ धूमदर्शनेनापरोक्षज्ञानजन्मप्रसङ्गः । शब्दस्यैवंभाव इति चेत् । तथाऽप्यग्नौ शब्देनापरोक्षज्ञानोत्पत्तिः स्यात् । अपरोक्षतया ज्ञायमाने तथेति चेन्न । धर्मिमात्राभिप्राये प्रत्यक्षेणावगम्यमाने घटे शतपलपरिमितोऽयमिति शब्दस्यापरोक्षज्ञानकारणतापत्तेः । प्रकाराभिप्राये तु प्रकृतेऽभावात् । न हि तत्त्वमसीत्यादिवाक्यप्रतिपाद्यं ब्रह्मात्मैक्यमपरोक्षतयाऽवभासते । तथा सति शब्दवैयर्थ्यापत्तेरिति ।**

शे० — **आपातत इति** । प्रथमाक्षिसन्निकर्षानन्तरमेवेत्यर्थः । (अपेक्षाबुद्ध्युत्पत्तेः प्रागित्यर्थः ) । तत्कालेऽपेक्षाबुद्धेरेवाभावेन तज्जन्यदशमत्वादिशङ्ख्याया एवासत्त्वात्सत्त्वेऽपि वा व्यञ्जकीभूतापेक्षाबुद्धिविरहादित्यर्थः ॥ **तथेति** । नापाततो रूपादिकमिव प्रत्यक्षेणोपलभ्यत इत्यर्थः । विशेषणस्यातथात्वाद्विशिष्टस्यापि तथात्वमिति भावः । **निरवधिक इति** । तत्राप्यपरोक्षत्वस्य मया उच्यमानत्वादिति भावः **सर्वेषामिति** । ज्योतिष्टोमादिशब्दानामित्यर्थः । अतथाभूतस्येति हेतुगर्भं विशेषणम् । अब्रह्मात्मविषयत्वादित्यर्थः ॥ **अपरोक्षेति** । तथा च दशमस्त्वमसीत्यादेरपरोक्षज्ञानसाधनत्वं युक्तमिति भावः **अपरोक्षज्ञानविषयत्वातिरिक्तस्येति** । अर्थस्यापरोक्षत्वं हि न तावदपरोक्षधीरूपत्वम् । तथा सति ब्रह्मणोऽपरोक्षधीरूपत्वात्तद्विषयकशब्दस्यापरोक्षज्ञानजनकत्वोपपत्तावपि दशमत्वादेरपरोक्षधीरूपत्वाभावेन दशमस्त्वमसीत्यादिशब्दानां तदभावापातात् । चैत्रस्यापरोक्षज्ञाने मैत्रस्यापरोक्षज्ञानवांश्चैत्र इतिशब्देन साक्षात्कारापाताच्च । अपरोक्षज्ञानजनकताप्रयोजकस्यापरोक्षधीरूपविषयापरोक्ष्यस्य तत्रापि सत्त्वात् । नाप्यपरोक्षोऽयमित्येवंरूपत्वम् । अज्ञानावृते ऐक्येऽपरोक्षोऽयमित्येवं व्यवहारविषयत्वाभावात् । नाप्यपरोक्षोऽयमित्येवं व्यवहारयोग्यत्वम् । भित्तिव्यवहिते घटे शब्दादपरोक्षधीप्रसङ्गात् । नाप्यपरोक्षज्ञानजन्यत्वम् । वक्ष्यमाणपक्षाबहिर्भावात् । तस्मादपरोक्षधीविषयत्वमेवापरोक्षत्वं वाच्यमित्याशयः । अस्तु तर्ह्येतदेवार्थस्यापरोक्षत्वमित्यत आह **तत्रेति** ॥ **इतरेतराश्रयत्वमिति** । अर्थस्यापरोक्षत्वे सिद्धे अपरोक्षविषयतया शब्दजन्यज्ञानस्यापरोक्षत्वसिद्धिस्तत्सिद्धौ चापरोक्षधीविषयत्वेनार्थस्यापरोक्षत्वसिद्धिरितीतरेतराश्रयत्वमित्यर्थः ॥ **एकपुरुषाभिप्राय इति** । कालविशेषेऽपरोक्षस्य कालान्तरे लिङ्गदर्शनेनापरोक्षधीप्रसङ्गादित्यर्थः । नन्वेककालत्वस्याप्यभिप्रेतत्वान्नातिप्रसङ्ग इत्याशयेन शङ्कते **अपरोक्षतयेति** । अत्र तादृशेऽप्यग्नौ लिङ्गाच्छब्दाच्चापरोक्षज्ञानोत्पत्तिरवर्जनीया । न चेष्टापत्तिः । करणशक्तिमतिलङ्घ्य ज्ञानस्य विषयानुसारित्वे चाक्षुषादिविषयकस्मृत्यनुमितिस्पार्शनज्ञानादेश्चाक्षुषत्वापातादिति सत्येव दोषे स्पष्टत्वात्तमनुक्त्वाऽपरोक्षतया ज्ञायमानत्वं धर्मिमात्रेऽभिप्रेतमुत प्रकारेऽपीति विकल्पद्वयं मनसि निधायाद्यं दूषयति **धर्मिमात्राभिप्राय इति** । द्वितीयं दूषयति **सप्रकाराभिप्राय इति** । अभावमेवोपपादयति **न हीति** ॥ **तथा सतीति** । न च स्वरूपाभिन्ने ऐक्ये स्वरूपज्ञानेनापरोक्षतेत्यपि वृत्त्यर्थत्वाच्छब्दस्य न वैयर्थ्यमिति वाच्यम् । त्वया स्वरूपज्ञानप्रयुक्तभानप्रतिबन्धार्थमेवावरणकल्पनादिति भावः ।

स० — **निरवधिक इति** । तत्राप्यपरोक्षेति मयोच्यमानत्वादिति भावः । **सर्वेषां** ज्योतिष्टोमादिशब्दानाम् । **अपरोक्षज्ञानविषयत्वातिरिक्तस्येति** । अथ स्यादपरोक्षत्वं किमपरोक्षधीरूपत्वं

अपरोक्षव्यवहारविषयत्वं वा । नाद्यः । अपरोक्षधीरूपत्वस्य ब्रह्मणि सत्त्वेन शब्देन ब्रह्मविषयकापरोक्षज्ञानजननसंभवेऽपि दशमत्वादेरपरोक्षधीरूपत्वाभावेन दशमस्त्वमसीत्यादेस्तदभावापातात् । चैत्रस्यापरोक्षज्ञाने मैत्रस्य घटापरोक्षज्ञानाभावाच्चैत्र इति शब्देन साक्षात्कारः स्यात् । अपरोक्षज्ञानजनकत्वे प्रयोजकीभूतस्यापरोक्षधीरूपविषयापरोक्ष्यस्य तत्रापि सत्त्वात् । द्वितीयेऽपि व्यवहारापरोक्ष्यं किमपरोक्षप्रमितिविषयत्वं वा, अपरोक्षोयमित्येवंरूपत्वं वा, अपरोक्षोयमित्येवं व्यवहारयोग्यत्वं वा अपरोक्षज्ञानजन्यत्वं वा । नाद्यः । इतरेतराश्रयापातात् । न द्वितीयः । अज्ञानवत ऐक्ये अपरोक्षोयमित्येवं व्यवहारविषयत्वाभावात् । न तृतीयः । भित्तिव्यवहिते घटे शब्दादपरोक्षधीप्रसङ्गात् । नान्त्यः । वक्ष्यमाणपक्षाबहिर्भावात् । तस्मादपरोक्षधीविषयत्वमेवापरोक्षत्वं वाच्यमिति भावः । **अन्योन्याश्रय इति ।** अर्थस्यापरोक्षत्वे तद्विषत्वेन शब्दज्ञानस्यापरोक्षत्वसिद्धिः । तत्सिद्धौ चापरोक्षधीविषयत्वेनार्थस्यापरोक्षत्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः । **एकपुरुषाभिप्राय इति ।** कालविशेषेऽपरोक्षस्येदानीमपि शब्दादपरोक्षधीप्रसङ्गादित्यर्थः । नन्वेकस्मिन्काल इति विवक्षितं तत्राह **प्रत्यक्षावगतेऽग्नाविति ।** न चेष्टापत्तिः । करणशक्तिमतिलङ्घ्य ज्ञानस्य विषयानुसारित्वे चाक्षुषादिविषयकस्मृत्यनुमितस्पर्शनज्ञानादेश्चाक्षुषत्वापातादिति भावः । तथा सति शब्दवैयर्थ्यापत्तेरिति । न च स्वरूपाभिन्ने ऐक्ये स्वरूपज्ञानेनापरोक्षतेत्यपि वृत्यर्थं शब्दः सार्थक इति शक्यम् । त्वया स्वरूपज्ञानप्रयुक्तभावप्रतिबन्धार्थमेवावरणकल्पनाभावादिति भावः ।

प०— **नापातत इति ।** अपेक्षाबुद्ध्युत्पत्तेः प्रागित्यर्थः ॥ **दशानां पूरण इति ।** 'तस्य पूरणे डट' नान्तादसंख्यादेर्मडिति पञ्चमद्वितीयपादे पूरणार्थे मट् प्रत्ययविधानाद्दशानां पूरण इत्युक्तम् ॥ **तथेति ।** नापाततः प्रत्यक्षेणोपलभ्यत इत्यर्थः ॥ **अपरोक्षविषयत्वमिति चेदिति ।** जीवचितोऽप्यपरोक्षत्वाद्दशमस्त्वमसीत्यादौ अपरोक्षहेतुत्वं शब्दस्याप्रतिहतमेवेति भावः **केषांचिदिति ।** योगिन स्वर्गादिस्थानां चेत्यर्थः ॥ **अपरोक्षज्ञानजन्मप्रसङ्ग इति ।** न चेष्टापत्तिः । प्रत्यक्षेण करिणि दृष्टे चीत्कारेणानुमित इत्याद्युक्तिः परीक्षकाणां न स्यात् । प्रमाणेन प्रमाणाभ्यां प्रमाणैरिति संप्लव इत्यादिन्यायवार्तिकाद्युक्तिः सर्वजनसंमता न (खल्विति) स्यादिति भावः ॥ **तथाप्यग्नाविति ।** प्रत्यक्षावगत इत्यनुषङ्गः ॥ **प्रकृतेऽभावादिति ।** प्रकारे अपरोक्षतया ज्ञायमाने प्रयुक्तः शब्दोऽपरोक्षज्ञानं जनयतीत्य(स्यप्रकृ)स्याङ्गीकृते ब्रह्मात्मैक्यरूपप्रकारे अभावादित्यर्थः प्रकृते वेदांतवाक्ये अभावादिति वार्थः । तद्व्यनक्ति **नहीति ।**

या०— **आपातत इति ।** प्रथमाक्षसन्निकर्षानन्तरमेवेत्यर्थः ॥ **अपरोक्षज्ञानजन्मप्रसङ्ग इति ।** न चात्रेष्टापत्तिः । करणशक्तिमतिलङ्घ्य ज्ञानस्य विषयानुसारित्वे चाक्षुषार्थे स्पार्शनज्ञानादेश्चाक्षु-

पादित्वापातात् । लिङ्गशब्दादिसिद्धे चेन्द्रियात्परोक्षधीप्रसङ्गाच्च । अपरोक्षतया ज्ञायमानत्वं किं धर्मिमात्रे विवक्षितमुत प्रकारेऽपीति विकल्प्याद्ये दूषणमाह **धर्मिमात्राभिप्राय इति** । द्वितीये त्वाह **प्रकाराभिप्राय इति** ।

**श्री०** — **आपातत इति** । विचाराभावदशायां प्रथमाक्षसन्निकर्षानन्तरमेवेत्यर्थः । अपेक्षाबुद्ध्यभावदशायामिति यावदिति भावः । रूपादिकमिवेति व्यतिरेकदृष्टान्तः । रूपादिकं यथा प्रत्यक्षेणोपलभ्यते तथा नेति । **पूरण इति** । तस्य पूरणे डडिति सूत्रेण पूरणार्थे डट्प्रत्ययविधानादित्यर्थः ॥ **तथेति** । नापाततः प्रत्यक्षेणोपलभ्यत इत्यर्थः । विशेषणस्य तथात्वात्तद्विशिष्टस्यापि तथात्वमिति भावः । नन्वयं क्रमः कस्मान्नोपलभ्यत इत्यत आह **आशुभावादिति** । कचिद्बहलतमे तमसीत्युक्तस्योत्तरमाह **अन्धकारादौ त्विति** । आदिपदेन लोचनविरहदशाग्रहणम् । **आगन्तुक**निमित्ताधीनम् ॥ **अतथाभूतस्येति** । ब्रह्मात्माविषयकस्येत्यर्थः । अपरोक्षविषयकत्वमपरोक्षार्थविषयकत्वम् । **तत्र अर्थे** ॥ **एतज्ज्ञानेति** । अपरोक्षविषयकत्वेन यस्मिन् शाब्दज्ञानेऽपरोक्षत्वमुच्यते तज्ज्ञानविषयत्वेनेत्यर्थः । तदुक्तावपरोक्षत्वोक्तौ **इतरेतरेति** । शब्दजन्यज्ञानस्यापरोक्षत्वे सिद्धे तद्विषयत्वेनार्थस्यापरोक्षत्वसिद्धिस्तत्सिद्धौ च तद्विषयकत्वेन शब्दजन्यज्ञानस्यापरोक्षत्वमित्यन्योन्याश्रय इत्यर्थः । नन्वपरोक्षार्थविषयकत्वेन यस्मिन् शाब्दज्ञानेऽपरोक्षत्वमुच्यते तज्ज्ञानविषयत्वेनैवार्थस्यापरोक्षत्वं नोच्यते । किन्तु ज्ञानान्तरविषयकत्वेनैवातो नेतरेतराश्रयत्वमित्याशङ्क्याह **ज्ञानान्तरेति** । **केषाञ्चित्** योगिनाम् ॥ **जनयेदिति** । अपरोक्षार्थविषयकत्वादिति भावः । एतद्दोषपरिहारं शङ्कते **एकपुरुषेति** । यस्य पुरुषस्य योऽर्थोऽपरोक्षस्तस्यैव तद्विषयकं प्रमाणमपरोक्षज्ञानजनकमित्युच्यत इत्यर्थः ॥ **धूमेति** । येन पुरुषेण प्रत्यक्षेणाग्निरवगतस्तस्यैव पुनर्धूमदर्शनेनाग्न्यनुमितिर्भवति । तस्या अप्यनुमितेरपरोक्षार्थविषयकत्वेनापरोक्षत्वापत्त्याऽनुमिमानस्याप्यपरोक्षज्ञानजनकत्वं स्यादित्यर्थः ॥ **एवं भाव इति** । अपरोक्षार्थविषयकत्वेनापरोक्षज्ञानजनकत्वं स्वभाव इत्यर्थः ॥ **तथाऽप्यग्नाविति** । एकेन पुरुषेणैकदाऽग्निः प्रत्यक्षेणावगतः स एव यदा कालान्तरे व्यवहितो जातस्तदा तद्विषयेऽत्राग्निरस्तीति केनचित्प्रयुक्तः शब्दोऽप्यपरोक्षज्ञानं जनयेत् । तस्यापि शब्दस्य यथाकथञ्चिदपरोक्षार्थविषयकत्वादिति भावः ॥ **ज्ञायमान इति** । अपरोक्षतया ज्ञायमानेऽर्थे प्रवर्तमानः शब्दोऽपरोक्षज्ञानजनक इत्यर्थः । अग्निस्तु तदा नापरोक्षतो ज्ञायत इति भावः । अपरोक्षतया ज्ञायमानत्वं धर्म्यंशे विवक्षितमुत प्रकारांशेऽपीति विकल्प्याद्ये दूषणमाह **धर्मिमात्रेति** ॥ **शब्दस्येति** । शतपलपरमितत्वरूपगुरुत्वरूपप्रकारप्रतिपादकशब्दस्येत्यर्थः ॥ **आपत्तेरिति** । गुरुत्वस्यातीन्द्रियत्वादिति भावः ॥ **सप्रकारेति** । अपरोक्षतया ज्ञायमानप्रकारविशिष्टे धर्मिणि प्रवर्तमानः शब्दोऽपरोक्षज्ञानजनक इत्यभिप्रायः । तथा च शतपल-

परमितत्वरूपः प्रकारश्च नापरोक्षतया ज्ञायते इत्यतो नोक्तदूषणावकाश इति भावः। अपरोक्षतया ज्ञायमानैक्यरूपप्रकारविशिष्टब्रह्मस्वरूपधर्मिणि प्रवर्तमानस्य तत्त्वमसीति शब्दस्यापरोक्षज्ञानजनकत्वं वक्तव्यं तन्न संभवतीत्याह **प्रकृत इति**। तदुपपादयति **न हीति**। ऐक्यं प्रकारभूतम् ॥ **तथा सतीति**। ऐक्यस्याप्यपरोक्षावभासविषयत्वे सतीत्यर्थः ॥ **वैयर्थ्येति**। अधिगतार्थबोधकत्वेनाप्रामाण्यप्रसङ्ग इति भावः।

**च०— आपाततः** प्रथमाक्षिसन्निकर्षानन्तरम्। **दशानां पूरण इति**। दशमशब्दस्य पूरणार्थकप्रत्ययान्तत्वादिति भावः।

**सु०— एतेनापरोक्षविषयत्वानुमानमपि परास्तम्।**

**यच्चापरोक्षत्वमित्यादि। तज्ज्योतिष्टोमादिवाक्येऽपि तथा प्रयोगसंभवादाभाससमानयोगक्षेमम्। ज्योतिष्टोमादिवाक्यस्यापरोक्षज्ञानसाधनत्वाभावे न किञ्चिद्बाधकमिति चेत्। सममेतद्वेदान्तवाक्येष्वपि। संसारस्याविद्यामयत्वादविद्यायाश्चापरोक्षज्ञानेन विना निबर्हणायोगाद्वेदान्तवाक्यस्यापरोक्षज्ञानसाधनत्वाभावे मोक्षाभावप्रसङ्ग इति चेन्न। ज्ञाननिवर्त्यताया निरस्तत्वात्। चित्तैकाग्र्यरूपनिदिध्यासनस्यापरोक्षज्ञानसाधनत्वोपपत्तेश्च। मनसोऽपरोक्षज्ञानसाधनत्वं क्वापि नोपलब्धमिति चेत्। तर्हि किं शब्दस्योपलब्धम्। यन्मनसा न मनुत इति श्रुतिविरुद्धं तदिति चेन्न। श्रुतेर्मनसैवेदमाप्तव्यमिति श्रुत्या सत्प्रतिपक्षत्वात्। चित्तैकाग्र्यस्य अन्तरङ्गतापरेयं श्रुतिरिति चेत्। साऽप्यपक्वमनोविषयेति स्यात्।**

**शे०— एतेनेति**। ऐक्यादेरपरोक्षत्वाभावेन तद्विषयत्वस्य वेदान्तजन्ये ज्ञानेऽभानादसिद्धिप्रसङ्गेनेत्यर्थः। परोक्षत्वं तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्तिपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वाज्ज्ञानत्ववदिति सत्प्रतिपक्षत्वसाधनत्वम्। न चोक्तरीत्या सिद्धसाधनता। भवदभिमतज्ञानवृत्तित्वस्यानुमेयतया तदसम्भवात्। न च श्रुतिबाधः। तस्या अर्थान्तरपरतया वक्ष्यमाणत्वादिति सत्येव दोषे आभाससाम्येन दूषयति **तज्ज्योतिष्टोमादिवाक्येपीति** ॥ **तथेति**। अपरोक्षत्वं ज्योतिष्टोमादिवाक्यजन्यज्ञानवृत्ति अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वाज्ज्ञानत्ववदिति प्रयोगसम्भवादित्यर्थः ॥ **न किञ्चिद्बाधकमिति चेदिति**। न तावदत्र ज्योतिष्टोमादिवाक्यं यद्यपरोक्षज्ञानजनकं न स्यात्तर्ह्यप्रमाणं स्यादित्येवं वाक्यप्रामाण्यानुपपत्तिर्बाधिका। अनुमानादिवत्प्रामाण्यसम्भवात्। नाप्यनुष्ठानानुपपत्तिः। परोक्षनिश्चयादप्यनुष्ठानसिद्धेः। नापि स्वर्गादिफलासिद्धिः। अनुष्ठानादेव तत्सिद्धेः। ततश्च विपक्षबाधकतर्काभावेनातुल्यबलत्वान्नाभाससाम्यमिति भावः ॥ **सममेतदिति**। तत्त्वमस्यादिवाक्यानामपरोक्षज्ञानजनकत्वाभावेऽप्यनुमानादिवत्प्रामाण्योपपत्त्या वाक्यप्रामाण्यानुपपत्तेरबाधकत्वादन्यस्य च बाधकस्या-

भावादप्रयोजकत्वं तुल्यमेवेति युक्तमाभासत्वमिति भावः । ब्रह्मज्ञानस्य मोक्षसाधनत्वश्रुत्यन्यथाऽनुपपत्तेरेव विपक्षे बाधकत्वान्नाप्रयोजकत्वमित्याशयेन तत्कथमित्यतो वेदान्तवाक्यस्यापरोक्षज्ञानसाधनत्वाभावेऽनिर्मोक्षत्वप्रसङ्गं वक्तुं बन्धस्यापरोक्षाध्यासत्वं विना तदनुत्थानात्तस्यापरोक्षाध्यासतामुपोद्घातेन तावदाह **संसारस्येति** । अहं कर्ता भोक्तेत्याद्यपरोक्षभ्रमलक्षणत्वात्संसारस्याविद्यामयत्वमिति भावः । अस्तु बन्धस्यापरोक्षाध्यासत्वं तथाऽपि तस्य वेदान्तजन्यपरोक्षज्ञानेनैव निवृत्तिसंभवान्नापरोक्षज्ञानापेक्षेति न तदनुरोधेनापि वेदान्तानामपरोक्षज्ञानजनकत्वसिद्धिरित्यतो दिङ्मोहादौ तथा दृष्टतयाऽपरोक्षभ्रमस्यापरोक्षविशेषदर्शनैकनिवर्त्यत्वसिद्धेर्न परोक्षज्ञानेन तत्सिद्धिरित्यस्त्येवापरोक्षज्ञानापेक्षेति नानुपपत्तिरित्याह **अविद्यायाश्चेति** । न च बन्धनिवृत्त्यर्थमपरोक्षज्ञानापेक्षायामपि न वेदान्तानामपरोक्षज्ञानजनकत्वसिद्धिः । मनसाऽप्यात्मापरोक्षसंभवेन तेनैव तन्निवृत्तिसंभवादिति वाच्यम् । तस्यौपनिषदत्वेन तत्र प्रमाणान्तरप्रवृत्तेर्बाधितत्वेन मनसाऽपि तदपरोक्षज्ञानासंभवादित्यत्र तात्पर्यात् । एवं बन्धस्यापरोक्षाध्यासतां तस्यापरोक्षज्ञाननिवर्त्यतां च प्रसङ्गोपयुक्तामुक्त्वा प्रसङ्गमाह **वेदान्तेति ॥ निरस्तत्वादिति** । 'ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन' इत्यादिना जिज्ञासासूत्र इति शेषः ।

अङ्गीकृत्यापि संसारस्यापरोक्षज्ञाननिवर्त्यतां शब्दस्य तदसाधनत्वमुपपादयति **निदिध्यासनस्येति** । तत्सहकृतस्य मनस इत्यर्थः । साक्षात्कारहेतुतया क्लृप्तस्य मनस एवापरोक्षज्ञानहेतुत्वसंभवे तत एव च तन्निवृत्तिसंभवे शब्दस्य तत्कल्पनानौचित्यादिति भावः ॥ **क्वापि नोपलब्धमिति** । सुखादीनां साक्षिवेद्यत्वादात्मनश्च स्वयंप्रकाशत्वान्न क्वापि मनसः साक्षात्कारहेतुत्वक्लृप्तिरिति भावः । यद्यप्यत्र भावनापरिपाकसहकृतमनसो गरुडादिसाक्षात्कारहेतुत्वदर्शनान्न तदक्लृप्तिः । न च प्रमितिरूपसाक्षात्कारहेतुत्वं न क्लृप्तमित्यभिप्रायः । गरुडसाक्षात्कारस्तु कामुकस्य कामिनीसाक्षात्कारवत् भावनाप्रकर्षजन्यत्वाद्भ्रम एवेति न दोष इति वाच्यम् । तथा सति वेदान्तवाक्यजन्यभावनाप्रकर्षजन्यत्वेनात्मसाक्षात्कारस्यापि भ्रमत्वापातात् । क्वचित्प्रमाहेतूनामेव नयनादीनामप्रमारूपसाक्षात्कारहेतुत्वदर्शनेन प्रमारूपगरुडसाक्षात्कारहेतोरपि मनसः क्वचित्प्रमाहेतुत्वावश्यम्भावेनोक्तक्लृप्तेरवर्जनीयत्वादिति शक्यते वक्तुं तथाऽपि तच्छिष्यैरेवोह्यतामिति भावेन तदनुक्त्वाऽनुपलब्ध्या मनसोऽपरोक्षज्ञानाजनकत्वे शब्दस्यापि तदनुपलब्धेस्तन्न स्यादिति प्रतिबन्द्यैव समाधत्ते **तत्किमिति** । यद्वा मनसा योगजसाक्षात्कारदर्शनान्न तदनुपलब्धिरिति सत्येव दोषेऽङ्गीकृत्यानुपलब्धिं प्रतिबन्द्या समाधत्ते **तत्किमिति** । चित्तैकाग्र्यमन्तरङ्गसाधनत्वादवश्यं सम्पाद्यमित्यत्रैव मनसैवेदमाप्तव्यमिति श्रुतेस्तात्पर्यात्तया तत्सिद्धावपि न तया मनसः करणत्वसिद्धिः । तत्र तस्यातात्पर्यादिति शङ्कते **चित्तैकाग्र्यस्येति ॥ अपक्वेति** । मनसा तु विशुद्धेनेत्यादिविशेषश्रुतेरिति भावः ।

स० — **एतेनेति** । ऐक्यादेरपरोक्षत्वाभावेन तद्विषयत्वस्य वेदान्तजन्यज्ञानेऽभावेनासिद्ध्युपपादनेनेत्यर्थः । **तथेति** । अपरोक्षत्वं ज्योतिष्टोमादिवाक्यजन्यज्ञानवृत्ति अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगिज्ञानत्वात् ज्ञानत्ववत् इति प्रयोगसंभवादित्यर्थः । कर्तृत्वादिरूपापरोक्षाध्यासस्य परोक्षप्रमया न निवृत्तिः साक्षात्कारिविषयदर्शनस्य साक्षात्कारिनिश्चयनिवर्तकत्वात् । तस्मादपरोक्षज्ञानेनैव तन्निवृत्तिः वाच्या । औपनिषदे च ब्रह्मणि मानान्तरेणापरोक्षज्ञानानुपपत्त्या शब्दादेवापरोक्षज्ञानमेष्टव्यं अन्यथा मोक्षो न स्यादिति कथं विपक्षे बाधकाभाव इति शङ्कते **संसारस्येति** । निरस्तत्वात् । ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन इत्यादिनेति शेषः । किञ्च निदिध्यासनसहकृतमनोजन्यब्रह्मापरोक्षज्ञानेनेव कर्तृत्वादिरूपापरोक्षाध्यासस्य निवृत्त्युपपत्तेर्न शब्दस्यापरोक्षज्ञानजनकतेत्याह **निदिध्यासनस्येति** । मनसा योगजसाक्षात्कारदर्शनादिति सत्येव दोषे दोषान्तरमाह **तत्किमिति** ।

प० — **एतेनेति** । अपरोक्षज्ञानविषयत्वातिरिक्तस्यार्थे अपरोक्षत्वस्याभावादिति कथनेनेत्यर्थः । हेतोरसिद्ध्यादिप्रसङ्गादिति भावः । द्वितीयानुमानं च प्रागुक्तं निराह **यच्चापरोक्षत्वमित्यादीति** । अपरोक्षत्वं ज्योतिष्टोमादिवाक्यजन्यज्ञाननिष्ठम् , तत्रोक्तादेव हेतोरिति प्रयोगसंभवादित्यर्थः । **निरस्तत्वादिति** । 'इत्यादेर्न हरिं विना । ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि क्वचित्' इत्यादिग्रन्थतद्व्याख्यानयोर्जिज्ञासाधिकरणे निरस्तत्वादित्यर्थः । ननु निदिध्यासनं नाम (मनोमयस्य वस्तुनो मनसा) वासनामयस्य मनसावलोकनम् । तथा च भगवदधिष्ठानस्य मनसाऽनवरतावलोकनेन मनसा करणेन भगवतोऽपरोक्षमित्युक्तं स्यात् । तत्कथमुपपद्यत इति शङ्कते **मनस इति** ॥ **इदमिति** । इदं ब्रह्म आप्तव्यं ज्ञातव्यमित्यर्थः ।

या० — **एतेनेति** । अपरोक्षधर्मिविषयकत्वस्य हेतुत्वे शतपलपरिमितोऽयं घट इति शाब्दज्ञाने व्यभिचारेण तादृशप्रकारविषयकत्वस्य हेतुतायामसिद्धिप्रसङ्गेनेत्यर्थः । **निरस्तत्वादिति** । भगवत्प्रसादनिवर्त्यत्वस्यैव जिज्ञासाधिकरण उक्तत्वादिति भावः । ननु शब्दैकगम्यस्य ब्रह्मणः साक्षात्कारः शब्देनैव भवितुं युक्तः । अन्यथा तदनुत्पत्तिप्रसङ्गादित्यत आह **चित्तैकाग्र्यरूपनिदिध्यासनस्येति** । ननु अखण्डस्मृतिरूपनिदिध्यासनस्य ब्रह्मसाक्षात्कारकरणत्वे तस्य प्रमाणान्तरतापत्तिरित्यत उक्तं चित्तैकाग्र्यरूप इति । ततश्च तस्य यत् भगवत्यैकाग्र्यं तन्मात्रनिष्ठत्वं तत्सन्निकर्षविशेष इति यावत् । तद्रूपमेव निदिध्यासनं ब्रह्मसाक्षात्कारकरणतया विवक्षितम् । तच्च प्रत्यक्षमेव । निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षमिति वचनात् । अखण्डस्मृत्यादिरूपं तु निदिध्यासनं तत्सहकारीति न कोऽपि दोष इति भावः । **क्वापीति** । सुखादिसाक्षात्कारस्य साक्षिरूपत्वादिति भावः । **अन्तरङ्गतापरेति** । चित्तैकाग्र्यमन्तरङ्गं साधनं तस्मात्संपाद्यमित्यत्रैव तात्पर्यं न मनसः करणत्व इत्यर्थः ।

श्री० — **अपरोक्षविषयत्वानुमानमिति** । विमतं शाब्दज्ञानमपरोक्षं अपरोक्षविषयकत्वात्सुखादिज्ञानवदित्यनुमानमप्येतेनापास्तम् । अपरोक्षधर्मिविषयकत्वस्य हेतुत्वे शतपलपरिमितोऽयं घट इति वाक्ये व्यभिचारात् । अपरोक्षप्रकारविषयत्वस्य हेतुत्वे उक्तरीत्या स्वरूपासिद्धिप्रसङ्गादित्यर्थः ।। **प्रयोगसंभवादिति** । अपरोक्षत्वं ज्योतिष्टोमादिवाक्यजन्यज्ञानवृत्तिपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात् । ज्ञानत्ववदिति प्रयोगसंभवादित्यर्थः । विपक्षे बाधकाभावादप्रयोजकमिदमनुमानमिति चेत् । समं प्रकृतेऽपीत्याह **ज्योतिष्टोमादिवाक्यस्येति** । वेदान्तवाक्यस्यापरोक्षज्ञानजनकत्वाभावे बाधकमाशङ्कते **संसारस्येति ।। निरस्तत्वादिति** । 'यथा दृष्ट्या प्रसन्नः सन्नि'त्यादिना प्रसादसाध्यत्वस्योक्तत्वादिति भावः । ननु शब्दस्यापरोक्षज्ञानजनकत्वाभावे तत्साधनस्यान्यस्याभावात्तदनुत्पत्तिरेव स्यादिति चेत्तत्राह **चित्तैकाग्र्यरूपेति ।। मनस इति** । ध्यानस्य मानसक्रियारूपत्वादिति भावः । यथोक्तम् । क्रियामानसवदिति । उक्तं च टीकाकारैः । ध्यानं हि मानसी क्रियेति । तन्मनसोऽपरोक्षज्ञानसाधनत्वम् । **श्रुतेः** यन्मनसेति श्रुतेः । इयं **श्रुतिः** मनसैवेदमाप्तव्यमिति श्रुतिः । **साऽपि** यन्मनसा न मनुत इति श्रुतिरपि ।

**सु० — किञ्च शब्दस्यापि ब्रह्मज्ञानसाधनत्वं यतो वाचो निवर्तन्त इति श्रुतिविरुद्धं कथमङ्गीकार्यम् । तद्वास्य विजिज्ञावित्यादिश्रुतयस्तु परोक्षज्ञानेनापि सार्थकाः । परंपरया अपरोक्षज्ञानसाधनत्ववादिन्यो वा ।। स्पष्टं हि स्मृतयो वदन्ति 'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शनमि'ति, 'श्रृणुयाद्यावदज्ञानं मतिर्यावदयुक्तता । ध्यानं च यावदीक्षा स्यान्नेक्षा क्व च न बाध्यते' इति च ।**

**एतेन धर्मादिवाक्येऽतिप्रसङ्गः शब्दत्वानुमानं च समाहितं वेदितव्यम् । अत एव प्रत्यक्षलक्षणे विशेषणप्रक्षेपोऽपि निरस्तः । निर्निबन्धनत्वात् ।**

शे० — एवं मनसो भगवत्साक्षात्कारहेतुतायाः श्रुत्यविरुद्धत्वमुपवर्णितम् । अधुनाऽङ्गीकृत्य तत् तर्हि तत एव शब्दस्यापि न साक्षात्कारहेतुत्वं स्यादिति प्रतिबन्द्या समाधत्ते **किञ्चेति** । शब्दस्यापरोक्षज्ञानसाधनत्वे साधकतया परोपन्यस्तमनुमानं निरस्य तत्साधकतयोक्ताः श्रुतीरपि निराकरोति **तद्वास्येति** । ननु नोदाहृतश्रुतीनां परोक्षज्ञानेन सार्थकत्वमभ्युपगन्तुं शक्यम् । तथा सति तद्वास्येति श्रुतौ विशब्दस्य तमसः पारमिति श्रुतौ दर्शयतीत्यस्य (दृशेरपरोक्ष एव प्रयोजनम्) वेदान्तविज्ञानसुनिश्चितार्था इति श्रुतौ च विसुशब्दयोरानर्थक्यापातादित्यत आह **परंपरयेति** । ग्राममार्गोपदेष्टरि ग्रामं दर्शयतीत्यादिबहुलप्रयोगदर्शनादिति भावः । परंपरयाऽपरोक्षज्ञानसाधनत्ववादितायां कल्पकमप्याह **स्पष्टं हीति ।। श्रुत्वेति** । श्रुत्वाऽज्ञानं मत्वा संशयविपर्ययौ पराणुद्य ध्यात्वा ब्रह्मदर्शनं लभत इत्यर्थः ।

**एतेनेति** । विषयापरोक्ष्यस्य शाब्दज्ञानापरोक्षताप्रयोजकत्वनिरासादिनेत्यर्थः ॥ **धर्मादिवाक्य इति** । ब्रह्मविषयकसत्यज्ञानादिवाक्यस्य तदपरोक्षज्ञानजनकत्वे धर्मादिविषयकज्योतिष्टोमादिवाक्यस्यापि तदपरोक्षज्ञानजनकत्वं स्यादित्यतिप्रसङ्ग इत्यर्थः ॥ **शब्दत्वानुमानं चेति** । विमतः शब्दो नापरोक्षज्ञानजनकः शब्दत्वाज्ज्योतिष्टोमादिशब्दवदित्यनुमानं चेत्यर्थः । तद्धास्येत्यादिश्रुतीनामन्यार्थतया बाधकत्वाभावस्य शब्दस्यापरोक्षज्ञानजनकत्वाभावसमर्थनेन दशमस्त्वमसीत्यादौ व्यभिचाराभावस्य च समर्थनादिति भावः । अत एवेति परामृष्टव्यमेव दर्शयति **निर्निबन्धनत्वादिति** । योगिमनसो बाह्यप्रत्यक्षप्रमितिकरणत्वस्य क्लृप्तत्ववच्छब्दस्य प्रत्यक्षप्रमितिकरणताया अक्लृप्तत्वाद्योगिमनोव्यावृत्त्यर्थं विशेषणप्रक्षेपेऽपि न शब्दव्यावृत्त्यर्थं लक्षणे विशेषणप्रक्षेपो युक्त इति भावः ।

स०— **तद्धास्येत्यादि** । तत्र तद्धास्य विजज्ञाविति श्रुतिः परोक्षज्ञानेन चरितार्था । आदिपदोपात्ता 'तमसः पारं दर्शयती'ति श्रुतिः परंपरयाऽपरोक्षज्ञानसाधनत्वप्रतिपादिकेति संबन्धो बोध्यः । न चैवं परंपरयापरोक्षज्ञानसाधनत्वे दर्शयतीति प्रयोगानुपपत्तिः । ग्राममार्गोपदेष्टरि ग्रामं दर्शयतीत्यादौ परंपरासाधनेपि दर्शयतीतिप्रयोगस्य दृष्टत्वात् । **एतेनेति** । विषयापरोक्षत्वस्य शब्दज्ञानारोपक्षत्वप्रयोजकत्वनिरासेनेत्यर्थः । ब्रह्मविषयकशब्दवत् धर्मादिविषयकस्यापि तथात्वापत्तिरूपातिप्रसङ्गः । विमतः शब्दः अपरोक्षज्ञानजनको न भवति शब्दत्वात् ज्योतिष्टोमादिशब्दवदित्यनुमानं चेत्यर्थः । अत एवेति परामृष्टं दर्शयति **निर्निबन्धनत्वादिति** । बाह्यप्रत्यक्षत्वे योगिमनोजन्यत्वे असतीति विशेषणमावश्यकं योगिमनसोपि बाह्यप्रत्यक्षमितिकरणत्वस्य सत्त्वेन कल्पकसद्भावात् । प्रकृते तु शब्दस्य क्वचिदप्यपरोक्षज्ञानजनकत्वाभावेन स्वतोपरोक्षविषयशब्दान्यत्वरूपविशेषणकल्पकाभावादित्याशयः ।

प०— प्रागुदाहृतश्रुतिगतिमाह **तद्धास्येति** ॥ **स्मृतय इति** । तन्निर्धारणार्थनियम इत्यादौ भाष्योक्ता श्रुत्वेति स्मृतिः । शृणुयादिति स्मृतिस्तु आप्रायणात्तत्रापीति सूत्रभाष्योक्ता ॥ **एतेनेति** । ब्रह्मापरोक्षं धर्मस्तु नेति वैषम्यस्य निरस्तत्वेन धर्मादिविषयकज्योतिष्टोमादिवाक्यस्यापि अपरोक्षहेतुत्वप्रसङ्गः समाहित इत्यन्वयः । दशमस्त्वमसीति वाक्यस्याप्यपरोक्षहेतुत्वं नेत्युपपादनेन च प्रागुक्तं शब्दत्वादित्यनुमानं च समाहितमित्यर्थः । व्यभिचाराभावादिति भावः ॥ **अत एवेति** । शब्दस्यापरोक्षहेतुत्वाभावादेवेत्यर्थः ।

**या०**— ननु विजज्ञावित्यत्र विशब्दस्तमसः पारं दर्शयतीत्यत्र दृशिश्च परोक्षज्ञानविवक्षायामयुक्तावित्यत आह **परम्परयेति** । ग्राममार्गोपदेष्टरि ग्रामं दर्शयतीत्यादिप्रयोगाणां बहुलमुपलम्भादिति भावः । ननु साक्षादेव साधनत्वसंभवे किं परम्पराकल्पकमित्यत आह **स्पष्टं हीति** । श्रुत्वा मत्वेत्यत्र बुद्ध्या विवेकेन श्रुत्वाऽज्ञानं पराणुद्य मत्वा संशयं विपर्ययं च पराणुद्य ध्यात्वा ब्रह्मदर्शनं लभत

इति योजना द्रष्टव्या ॥ **नेक्षा क्वचनेति** । कदाचित्क्वापि मोक्षसाधनं भवतीत्यर्थः ॥ **एतेनेति** । शब्दस्य क्वाप्यपरोक्षज्ञानजनकत्वाभावसमर्थनेनेत्यर्थः ।

**श्री०— परम्परयेति** । अपरोक्षज्ञानद्वारेत्यर्थः ॥ **एतेनेति** । शब्दस्यापरोक्षज्ञानजनकत्वाभावसमर्थनेनेत्यर्थः ॥ **अतिप्रसङ्ग इति** । ब्रह्मविषयकशब्दवद्धर्मविषयस्यापि तथात्वापत्तेश्चेत्युक्तातिप्रसङ्ग इत्यर्थः ॥ **शब्दत्वानुमानं चेति** । विवादाध्यासितः शब्दोऽपरोक्षज्ञानजनको न भवति, शब्दत्वाज्ज्योतिष्टोमादिशब्दवदित्युक्तं शब्दत्वानुमानमित्यर्थः । अत एवेत्युक्तं विशदयति **निर्निबन्धनत्वादिति** । शब्दस्य साक्षात्कारकारणत्वाभावेन लक्षणस्यातिव्याप्तिप्रसक्त्यभावादिति भावः ।

**सु०— ये तु शब्द एवापरोक्षज्ञानजननाय प्रवृत्तोऽसम्भावनादिप्रतिबद्धो मनननिदिध्यासनाभ्यां प्रतिबन्धापगमे तज्जनयतीति मन्यन्ते ते प्रष्टव्याः । प्राङ्मनननिदिध्यासनाभ्यां किमसौ किमप्यकृत्वा परस्तादपरोक्षज्ञानं जनयत्युत परोक्षज्ञानं कृत्वा । नाद्यः । गृहीतसङ्गतेः शब्दाद्बोधोदयाभावस्य प्रमाणविरुद्धत्वात् । द्वितीयेऽपि विरम्यव्यापारापत्तिः । ततो वरं शब्दस्य तावतैव चरितार्थत्वकल्पनमित्येषा दिक् ।**

**श्री०—** शब्द एवेति धर्मिप्राधान्येनैवायं निर्देशः । वस्तुतस्तु श्रवणादिविशिष्टः शब्द एव करणमित्यर्थः । तर्हि किं मननादिनेत्यत उक्तमसंभावनेत्यादि । पूर्वमतेऽविद्यानिर्मूलनरूपापरोक्षज्ञानफलोपकारकतया मनननिदिध्यासनयोरुपयोगोऽत्र तु मते श्रवणफलापरोक्षज्ञानोपकारकतया तदुपयोगः । आरादुपकारकत्वं तु पक्षद्वयेऽप्यविशिष्टमिति ध्येयम् ॥ **विरम्येति** । विमर्शपूर्वको व्यापारो विरम्यव्यापारः । न चाचेतनस्य शब्दस्य विमर्शो युज्यत इत्यर्थः ॥ **तावतैवेति** । परोक्षज्ञानमात्रेणेत्यर्थः । दिगर्थस्तु मनसो ब्रह्मापरोक्षज्ञानकरणत्वे श्रुत्यादिप्रमाणसद्भाववच्छब्दस्य तत्करणत्वे न श्रुत्यादिकं प्रमाणमस्तीति ।

**प०— ये त्विति** । फलोपकार्यङ्गत्वं प्रागुपन्यस्तमते एतन्मते चाविशिष्टं तत्र फलमविद्याबर्हणम् । अत्र त्वपरोक्षज्ञानमेवेति भेद इति ज्ञेयः । सन्निपत्यांगत्वमेतन्मत इत्येके ॥ **किमसाविति** । शब्द इत्यर्थः ॥ **तावतैवेति** । परोक्षज्ञानजननेनैवेत्यर्थः ॥ **इत्येषा दिगिति** । विस्तरस्तु न्यायामृते ।

**या०— ये तु शब्द एवेति** । एतन्मते मनननिदिध्यासने श्रवणं प्रति स्वरूपोपकारकाङ्गे इति द्रष्टव्यम् ।

**श्री०— तावतैवेति** । परोक्षज्ञानकरणेनैवेत्यर्थः ।

सु० — यदुक्तं यथाशक्ति श्रवणमनने कर्तव्ये इति तदयुक्तम् । पुरुषशक्तीनां तारतम्यवत्त्वेन श्रवणादेरपि तारतम्यापत्तेः । न च तथाऽस्त्विति वाच्यम् । तत्साध्यस्य ज्ञानस्यैकविधत्वेन वैयर्थ्यप्रसङ्गात् । न च वाच्यं ज्ञातव्यस्य ब्रह्मणोऽपरिमितत्वात्तज्ज्ञानान्यपि तारतम्यवन्तीति । तत्फलस्य मोक्षस्य तारतम्यरहितत्वेन वैयर्थ्यापरिहारात् । न खलु बन्धविध्वंसस्य तारतम्यमुपपद्यत इत्यत आह सम्यगिति ।

अनु० — सम्यग्विषमविज्ञानतारतम्यानुसारतः ।
फलं भवेत्तारतम्यात्सुखदुःखात्मकं नृणाम् ।

विषमं विपरीतम् । ज्ञानमेव विज्ञानम् । ततो न पुनरुक्तिर्विरोधश्च । तारतम्यादिति तारतम्येनोपेतमित्यर्थः । सम्यग्विपरीतज्ञानयोस्तारतम्यमित्युक्ते परस्परमिति प्रतीतिः स्यात् । तन्निरासार्थमुक्तं विवृणोति सम्यक्चेति ।

सम्यक्चाधिकविज्ञानात्सुखाधिक्यं भवेन्नृणाम् ।

सम्यगित्यव्ययं समीचीनादित्यर्थः । चशब्दोऽनुक्तसमुच्चयार्थः । मध्यमात्सम्यग्ज्ञानात्तथाविधं सुखं भवेत् । अल्पाच्च सम्यग्ज्ञानादल्पम् । एवमधिकान्मिथ्याज्ञानादधिकं दुःखमित्यादि । अत्र मिथ्याज्ञानतारतम्येन दुःखतारतम्यस्याभिधानं दृष्टान्तत्वेनोपयुज्यते । यद्वा दुश्शास्त्रं तु परित्यजेदित्युक्तम् । तत्रात्यन्तपरित्यागार्थोऽर्थवादोऽयम् । न बन्धप्रध्वंसमात्रं मोक्षः किन्तु सुखमपि । तस्य च तारतम्यमुपपद्यत इति भावः ।

शे० — बन्धध्वंसमात्रं मोक्ष इति सम्भ्रान्तश्चोदयति यदुक्तमिति । ननु विज्ञानमित्यत्र विशब्दः किं विशेषवाच्यभिमतः किंवा विरोधवाची । नाद्यः । तथा सति सम्यगित्यनेन पौनरुक्त्यापातात् । विषममित्यनेन व्याघातप्रसङ्गाच्च । नान्त्यः । तथा सति विषममित्यनेन पौनरुक्त्यस्य सम्यगित्यनेन व्याघातस्य च प्रसङ्गादित्यतो विज्ञानशब्दस्य ज्ञानमात्रपरत्वान्नानुपपत्तिरित्याह ज्ञानमेव विज्ञानमिति । ननु सम्यगिति प्रथमान्तस्य न प्रथमान्तेन सुखाधिक्यमित्यनेन विशेषणतया संबन्धो वैयर्थ्यप्रसङ्गात् । नापि विज्ञानादिति पञ्चम्यन्तेन प्रथमान्तस्य पञ्चम्यन्तेन विशेषणविशेष्यभावायोगादित्यतो विज्ञानशब्देन संबन्धमभ्युपेत्यानन्वयं परिहरति अव्ययमिति । अनुक्तसमुच्चयमेव दर्शयति मध्यमादित्यादिना । इत्यादीत्यादिपदेन मध्यमान्मिथ्याज्ञानान्मध्यमं दुःखमल्पाच्च मिथ्याज्ञानादल्पं दुःखमित्यस्य संग्रहः । दृष्टान्ततया तत्कथनस्यापि प्रयोजनविशेषाभावं मन्वानः प्रकारान्तरमाह यद्वेति ।। अर्थवाद इति । निन्दारूप इति शेषः । तथाऽपि नोक्तशङ्कायाः परिहार इत्यतोऽभिप्रायमाह न बन्धेति ।

**स०** — ननु विज्ञानमित्ययुक्तम् । विशिष्टं हि ज्ञानं विज्ञानम् । ज्ञाने च विशिष्टत्वं सम्यक्पदेनैव लब्धमिति सम्यक्पदेन पौनरुक्त्यात् । विषमपदेन विपरीतत्वलाभात् तेन विरोधाच्चेत्यत आह **ज्ञानमेवेति** । अनुक्तसमुच्चयमेव दर्शयति **मध्यमादित्यादिना** ।

**प०** — विषममित्यनूद्यार्थमाह **विषमं विपरीतमिति** । वीत्युपसर्गोऽत्र ज्ञाधात्वर्थमात्रपरो न तस्य विशेषक इत्याह **ज्ञानमेव विज्ञानमिति** । कुत एवमित्यत आह **तत इति** । विशब्दस्य विशेषार्थत्वे सम्यगित्यनेन पुनरुक्तिः विषमपदेन विरोधः । विपरीतार्थत्वे च विषमपदेन पुनरुक्तिः सम्यक्पदेन विरोधश्चैवं व्याख्यानान्नास्तीत्यर्थः । पञ्चम्यन्तत्वघटनायाह **सम्यगित्यव्ययमिति** ॥ **अर्थवादोयमिति** । यतो मिथ्याज्ञानात् दुःखप्राप्तिः अतस्तत्परित्यागः प्रशस्तः दुःखप्राप्तेरित्येवंरूपेणार्थवाद इत्यर्थः । यदुक्तमित्यादिना कृतचोद्यस्य किमुत्तरमित्यत आह **न बन्धप्रध्वंसेति** ।

**या०** — **ततो न पुनरुक्तिरित्यादि** । विज्ञानमित्यत्र विशब्दो यदि विशेषवाची तदा सम्यक्पदेन पुनरुक्तिर्विषमपदेन विरोधः । यदि विरुद्धं ज्ञानमिति विरोधवाची तदा विषमपदेन पुनरुक्तिः सम्यक्पदेन विरोध इत्यर्थः ॥ **अव्ययमिति** । अन्यथा प्रथमान्तस्य तस्य सुखाधिक्यमित्यनेनान्वये वैयर्थ्यप्रसङ्गेनान्वयाभाव इति भावः ॥ **अर्थवादइति** । निन्दारूपार्थवाद इत्यर्थः ।

**श्री०** — **अपरिमितत्वादिति** । अपरिमितविशेषवत्त्वादित्यर्थः ॥ **अर्थवादोऽयमिति** । दुःशास्त्रजन्यज्ञानस्य मिथ्याज्ञानत्वेन दुःखसाधनत्वादित्येवं निन्दारूपार्थवादोऽयमित्यर्थः ।

**सु०** — **अधिकरणार्थमुपसंहरति** अत इति ।

**अनु०** — अतो यथात्मशक्त्यैव श्रवणं मननं तथा ॥ ३-३-१ ॥

**नन्वत्रात्मशक्तिमनतिक्रम्य यथात्मशक्तीत्यव्ययीभावे सति, तस्याव्ययीभावश्चेति अव्ययत्वादव्ययादाप्सुप इति तृतीयाया लुका भवितव्यम् यथाऽऽत्मशक्त्यैवेति कथम् । उच्यते । यथेति भिन्नं पदं सम्यग्वाचि । निवृत्तिमार्गः कथित आदौ भगवता यथेति, यथा श्रवणमित्यादिना च संबध्यते । सादृश्यार्थे वा । आत्मशक्त्यैव श्रवणं मननं चाचरेत् । न तु सर्वशाखाविषयम् । नापि स्वस्वशाखामात्रविषयम् । यथा च श्रवणं मननं चात्मशक्त्यैव । निदिध्यासनमपि तथाऽऽचरेत् । तच्च श्रवणं मननं च कृत्वा कुर्वन्नेति । यद्वा यथाऽऽत्मशक्तीत्यव्ययीभावात्पर आशब्दः सम्यग्वाची । श्रवणमित्यादिना संबध्यते । अथवा यथाशब्दस्यात्मशब्देनाव्ययीभावः । ततः शक्तिशब्देन कर्मधारयः । योग्यतानुसारिण्या शक्त्येत्यर्थः । अत्र यथाऽऽत्मशक्त्यैव श्रवणं मननं तथाऽऽचरेदित्येतावतैवोपसंहारे**

**कर्तव्येऽधिकमुच्यते यत्तच्छ्रवणमननयोरुक्तस्य निदिध्यासनाङ्गत्वस्याप्युपसंहारार्थम् । कृत्वा अथवा कुर्वन्नपीति विशेषज्ञापनार्थं च । अयं च विकल्पो गुरूपदेशानुरोधेन व्यवतिष्ठते । अथवा पूर्वार्ध एवाधिकरणार्थोपसंहारः । तत्राचरेदिति वक्ष्यमाणं सिंहावलोकनेन संबध्यते । इति सिद्धमिति शेषः ॥ ३-३-१ ॥**

शे०— यथाऽऽत्मशक्त्येत्येकं पदमिति मन्वानः शङ्कते **नन्विति** । शङ्कामूलं विघटयति **यथेति** ॥ **भिन्नं पदमिति** । ननु यथाऽसादृश्य इति सादृश्यार्थकस्यैव यथाशब्दस्य समासनिषेधात्पदार्थानतिवृत्त्याद्यर्थकस्य समासध्रौव्यात् कथं तदर्थकस्य यथाशब्दस्य भिन्नपदता स्यात् ; इत्यतोयोग्यतावीप्सापदार्थानतिवृत्त्यर्थकस्य यथाशब्दस्य समासप्रसक्तावप्यत्र सम्यगर्थत्वेन वीप्साद्यर्थकत्वाभावान्न समासप्रसक्तिरित्याशयेनाह **सम्यग्वाचीति** । भवेदेतदेवं यदि यथाशब्दस्य सम्यग्वाचित्वं सिद्धं स्यात् । तदेव कुत इत्यतस्तत्र प्रयोगादेतत्सिद्धिरिति भावेन तमुदाहरति **निवृत्तिमार्ग इति** । अत्र **यथाशब्दस्य** सम्यगर्थत्व एव वाक्यार्थस्य श्लिष्टतालाभात्तदर्थत्वमेवेति भावः ॥ **श्रवणमित्यादिना चेति** । **तथा** चात्मशक्त्या सम्यक् श्रवणं मननं च कृत्वेति योजनोक्ता भवति **सादृश्यार्थे वेति** । तथा **च** सादृश्यार्थस्य यथाशब्दस्य समासप्रतिषेधाद्युक्ता भिन्नपदतेति भावः । सादृश्यार्थतामेवोपपादयति **आत्मशक्त्यैवेत्यादिना** । अनतिक्रमार्थस्य यथाशब्दस्याव्ययीभावमभ्युपेत्यापि यथात्मशक्त्येत्युपपादयति **यद्वेति** । ( अस्मिन्पक्ष एवेत्यस्याचरेदेव न तु परित्यजेदिति संबन्धः ) । अत्राप्यव्ययीभावात्परस्य आशब्दस्य कल्पना भवतीत्यतस्तदकल्पनेऽप्युपपत्तिमाह **अथवेति** । समासद्वयाश्रयणेन लब्धमर्थमाह **योग्यतेति** ॥ **उपसंहारे कर्तव्ये इति** । तावत एवार्थस्यैतदधिकरणप्रमेयत्वादिति भावः ॥ **अधिकमिति** । निदिध्यासनमाचरेदित्येतदित्यर्थः ॥ **उक्तस्येति** । असंशयेन तत्त्वस्य निर्णयेत्यादिनोक्तस्येत्यर्थः । विकल्पप्रसक्तामव्यवस्थिततां परिहरति **अयं चेति** । **व्यवतिष्ठते** व्यवस्थया वर्तते । कश्चित्कृत्वैव कश्चित्पुनः कुर्वन्नेवेति व्यवस्थया वर्तते । न पुनः सर्वोऽपि कृत्वा कुर्वन्वेत्यव्यवस्थयेत्यर्थः । व्यवस्थापकमपि न स्वेच्छादिकं किन्तु शिष्ययोग्यताभिज्ञसर्वज्ञगुरूपदेश एवेत्याह **गुरूपदेशानुरोधेनेति** । अस्मिन्पक्षे कृत्वाऽथ कुर्वन्नित्यादेर्विशेषज्ञापनाद्यर्थत्वं कल्पनीयं भवतीत्यपरितोषात्पक्षान्तरमाह **अथवेति** । तर्हि साकाङ्क्षत्वाद्वाक्याभासता स्यादित्यत आह **तत्रेति** । उपसंहारत्वप्रकटनायानुरूपं शेषं पूरयति **इति सिद्धमिति शेष इति** ॥ ३-३-१ ॥

स०— **विकल्प इति** । कृत्वाथ कुर्वन्नपि वेति विकल्प इत्यर्थः ।

प०— **इत्यव्ययीभावे इति** । यथाऽसादृश्य इति सूत्रेण सादृश्यव्यतिरिक्तेर्थे वर्तमानो यथाशब्दः समस्यते स समासोऽव्ययीभाव इत्यव्ययीभावसमासे सति अव्ययीभावश्चेति सूत्रेण योऽव्ययीभावः

सोऽव्ययं भवतीति अव्ययसंज्ञकत्वमव्ययादाप्सुप इति सूत्रेणाव्ययात्परस्य टाप्रत्ययस्य लुग्भवतीति तृतीयाविभक्तेर्लुकि सति यथात्मशक्तीति भाव्यमित्यर्थः ॥ **इति यथेति** । यथा षष्ठादौ परीक्षितकृतानुवादवाक्ये यथाशब्दो यथावत्कथित इति सम्यक्त्वार्थः तथेत्यर्थः । भिन्नपदत्वे केनान्वय इत्यत आह **श्रवणमित्यादिना चेति** । सम्यग्वाचित्वपक्षार्थमुक्त्वा सादृश्यार्थत्वपक्षे व्याचष्टे **यथा च श्रवणमित्यादि** । **तच्चेति** । निदिध्यासनमित्यर्थः ॥ **अधिकमुच्यते यदिति** । कृत्वेत्याद्युत्तरार्थोक्तमधिकमित्यर्थः । **उक्तस्येति** । 'असंशयेन तत्वस्य निर्णये ब्रह्मदर्शनमि'त्यत्रोक्तस्येत्यर्थः ॥ **व्यवतिष्ठत इति** । अधिकारिभेदेन व्यवस्थितो भवतीत्यर्थः ॥ ३–३–१ ॥

या०— **अव्ययीभावश्चेति** । अव्ययीभावोऽप्यव्ययं स्यादिति सूत्रार्थः ॥ **अव्ययादाप्सुप इति** । अव्ययात्परस्यापः सुपश्च लुक् स्यादित्येतत्सूत्रार्थः ॥ **निवृत्तिमार्ग इति** । अत्र यथाशब्दस्य सम्यग्वाचित्व एव स्वारस्यं न सादृश्याद्यर्थत्व इति भावः ॥ **अत्र यथाऽऽत्मशक्त्यैवेति** । योग्यतानुसारिण्यैव शक्त्या श्रवणं तथा मननमाचरेदित्येवोपसंहारः कर्तव्य इत्यर्थः ॥ **गुरूपदेशानुरोधेनेति** । योग्यताभिज्ञसर्वज्ञगुरूपदेशानुसारेणेत्यर्थः ॥ ३–३–१ ॥

श्री०— **सम्बध्यत इति** । सम्यक्त्ववाची यथाशब्दः श्रवणमित्यनेन सम्बध्यत इत्यर्थः । **सादृश्यार्थं वेति** । उपमार्थमित्यर्थः । अत्रापि यथेत्येतद्भिन्नमेव पदं न समस्तम् । यथाऽसादृश्य इति सादृश्यव्यतिरिक्तार्थ एव समासविधानात्प्रकृते च सादृश्यार्थत्वान्न समास इत्यर्थः । **तच्च** निदिध्यासनम् ॥ **यथाऽऽत्मशक्त्यैवेति** । आ एवेति पदच्छेदमभ्युपेत्य योजयति **यद्वेति** ॥ **सम्बध्यत इति** । तथा च यथात्मशक्ति आ सम्यक् श्रवणं मननं चाचरेदेव न तु परित्यजेदित्यर्थो द्रष्टव्यः ॥ **कर्मधारय इति** । यथात्मभूता च सा शक्तिश्चेति कर्मधारय इत्यर्थः । यथात्मेत्यस्यार्थमाह **योग्यतानुसारिण्येति** । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यनियमार्था इत्युक्तत्वादत्र यथाशब्दो योग्यतावाचीत्यर्थः ॥ **अत्रेत्यादि** । यथात्मशक्त्यैव श्रवणं मननं चाचरेत् । यथा श्रवणं मननं चाचरेत् तथा निदिध्यसनमप्याचरेदित्येवोपसंहर्तव्यमित्यर्थः ॥ **अधिकमिति** । कृत्वाऽथ कुर्वन्नपि वेत्यधिकमित्यर्थः ॥ **उक्तस्येति** । असंशयेन तत्त्वस्य निर्णये ब्रह्मदर्शनमित्यनेनोक्तस्येत्यर्थः ॥ ३–३–१ ॥

च०— **अव्ययीभावश्चेति** । अव्ययीभावश्चेत्यत्र स्वरादिनिपातमव्ययमित्यतोऽव्ययमित्यनुवर्त्य अव्ययीभावोप्यव्ययं स्यादिति विधानादिति भावः । **अव्ययादाविति** । अव्ययात्परस्यापः सुपश्च लुक् स्यादित्येतद्योगार्थः ।

॥ इति सर्ववेदा(न्तप्रत्यया)धिकरणम् ॥

॥ अथ उपसंहाराधिकरणम् ॥

सु०— ॥ ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥ अत्र सर्ववेदोक्तान्गुणान्दोषाभावांश्चोपसंहृत्यैव परमात्मोपास्य इत्युक्तम् । इहापि सर्वशब्दो नासंकुचितवृत्तिरुक्तन्यायादित्याशयवांस्तात्पर्यमाह कृत्वेति ।

अनु०— ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥

कृत्वाऽथ कुर्वन्नपि वा निदिध्यासनमाचरेत् ॥ ३-३-२ ॥

श्रवणं मननं तथेति वर्तते । यथाऽऽत्मशक्त्यैवेति च । अनेन 'प्राप्तेश्च समञ्जसमि'त्यादीनां सूत्राणामपि तात्पर्यमुक्तं वेदितव्यम् । तथा 'तन्निर्धारणार्थनियम' इत्यादीनां, प्रथमाधिकरणव्याख्यानेनेति ॥ ३-३-२ ॥

शे०— ॥ ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥ उक्तन्यायादिति । सर्ववेदान्तेत्याद्यसूत्रस्थसर्वशब्दस्य सङ्कुचितार्थत्वसाधकतयोक्तन्यायादित्यर्थः ॥ वर्तते इति । अनुवर्तत इत्यर्थः । इति चेत्यतःपरं वर्तत इति पूरणीयम् । ननु निदिध्यासनमाचरेदित्येतावतैतदधिकरणार्थोक्तेर्यथाऽऽत्मशक्त्यैवेत्यस्यानुवृत्तिः कुतो व्याख्यायत इत्यत आह अनेनेति । यथाऽऽत्मशक्त्यैवेत्यस्यानुवर्तनेनेत्यर्थः । आदिपदेन सर्वाभेदादन्यत्रेमे आनन्दादयः प्रधानस्येतरे त्वर्थसामान्यादित्यादिसूत्राणां परिग्रहः । तेष्वपि तत्तद्योग्यतानुसारेणोपासनाविशेषस्योक्तत्वादिति भावः ॥ प्रथमाधिकरणेति । सर्ववेदान्तप्रत्ययमिति प्रथमाधिकरणेत्यर्थः । आदिपदेन प्रदानवदेवेत्यादीनां परिग्रहः । तत्र 'असंशयेन तत्त्वस्य निर्णये ब्रह्मदर्शनमि'त्यनेन तन्निर्धारणार्थसूत्रस्य 'मतिश्रुतिध्यानकालविशेषं गुरुरुत्तमः । वेत्ति तस्योक्तमार्गेण कुर्वतः स्याद्धि दर्शनमि'त्यनेन प्रदानवदेवेत्यस्य 'श्रवणं दृष्टतत्त्वस्य मननं ध्यानमेव च । विशेषानन्दसम्प्राप्त्ये'त्यनेन यावदधिकारसूत्रस्य 'ब्रह्मासरस्वतीवीन्द्रशेषरुद्राश्च तत्स्त्रिय इत्यादिनेयदामननादित्यस्य 'निर्दोषत्वं रमायाश्च तदनन्तरता तथे'त्यादिना कामादितरत्रेत्यादिसूत्राणां तात्पर्यमुक्तं वेदितव्यमित्यर्थः ॥ ३-३-२ ॥

प०— उपसंहारोऽर्थाभेदात् ॥ उक्तन्यायादिति । 'तत्राखिलस्य विज्ञप्तिः सम्यग्ब्रह्मण एव ही'त्यादिग्रन्थेन सर्वपरिज्ञानोक्तन्यायादित्यर्थः । इत्यादीनामिति । मन्दमध्योत्तमाधिकारिभेदेनाल्पानल्पाल्पतमगुणोपसंहारव्यवस्थापराणां प्राप्तेश्च समञ्जसं सर्वाभेदादन्यत्रेमे इत्येवमादीनामनेकेषां तात्पर्यमुक्तमित्यर्थः । अधिकरणशरीराणि तु न्यायमुक्तावल्यां संक्षेपभाष्यव्याख्याने च व्यक्तानि ॥ तन्निर्धा-

**रणार्थनियम इत्यादीनामिति** । 'असंशयेन तत्त्वस्य निर्णये ब्रह्मदर्शनमि'त्यनेन तन्निर्धारणेति सूत्रतात्पर्यमुक्तं । आदिपदगृहीतानां प्रदानवदेवेत्येवमादीनां गुरुनियमोक्तिपराणां तात्पर्यं तु मतिश्रुतिध्यानकालविशेषं गुरुरुत्तम इत्यादिनोक्तम् । कामादितरत्र तत्र चेति सूत्रतात्पर्यं निर्दोषत्वं रमाया इत्यनेनोक्तम् । इयदामननादित्यादितात्पर्यं तु 'ब्रह्मा सरस्वतीत्यादि नोक्तमि'त्यादि ध्येयम् ॥ ३-३-२ ॥

**या० — ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥ यथाऽऽत्मशक्त्यैवेति** । अत्र यथाऽऽत्मशक्त्यैव निदिध्यासनमाचरेदित्येतावतैव वक्तव्ये यदधिकमुच्यते तच्छ्रवणमननयोरङ्गयोरनुष्ठानानान्तरमङ्गिनो ध्यानस्यानुष्ठानं युक्तम् । ततश्चास्याधिकरणस्य पूर्वाधिकरणेन कार्यकारणभावलक्षणा सङ्गतिरिति ज्ञापनार्थम् ॥ **अनेन प्राप्नेश्चेति** । सर्वाभेदादन्यत्रेमे । आनन्दादयः प्रधानस्येतरे त्वर्थसामान्यादित्यादिसूत्रेषु तत्तद्योग्यतानुसारेणोपासनाविशेषस्योक्तत्वादिह यथाऽऽत्मशक्त्यैव निदिध्यासनमाचरेदित्युक्त्या तेषां तात्पर्यमुक्तं भवतीति भावः ॥ **प्रथमाधिकरणेति** । सर्ववेदान्तप्रत्ययमित्यधिकरणव्याख्यानेनेत्यर्थः । तन्निर्धारणेत्यत्र तत्त्वनिश्चयो वेदार्थनियमश्च ब्रह्मदृष्टेः पृथगेवेति श्रवणमननयोर्ब्रह्मदर्शनापेक्षया पृथक्फलमुक्तं तच्च प्रथमाधिकरणे 'असंशयेन तत्त्वस्य निर्णये ब्रह्मदर्शनमि'त्यत्रोक्तम् । इत्यादीनामित्यनेन प्रदानवदेवेत्यादीनां ग्रहणम् । तथा हि । प्रदानवदेव हि तदुक्तमिति सूत्रार्थो 'मतिश्रुतिध्यानकालविशेषं गुरुरुत्तमः । वेत्ति तस्योक्तिमार्गेण कुर्वतः स्याद्धि दर्शनमि'त्यनेनोक्तेः । तथा यावदधिकारमवस्थितिराधिकारिकाणामित्यत्र यथा यथाऽधिकारो विशिष्यते एवं मुक्तावानन्दो विशिष्यत इति यदुक्तं तत् 'श्रवण दृष्टतत्त्वस्य मननं ध्यानमेव च । विशेषानन्दसम्प्राप्त्ये'त्यनेनोक्तम् । तथेयदामननादित्यत्र यत्तारतम्यमुक्तं तदपि 'ब्रह्मासरस्वतीवीन्द्रशेषरुद्राश्च तत्स्त्रिय' इत्यादिनोक्तम् तथा कामादितरत्र चायतनादिभ्य इत्यत्र यद्रमाया निर्दोषत्वमुक्तं तदपि 'निर्दोषत्वं रमायाश्च तदनन्तरता तथे'त्यनेनोक्तमिति ज्ञातव्यम् । एतेषां सूत्राणामत्रैवं तात्पर्यकथनेन व्याख्यातत्वेऽपि पुनरग्रेतनं व्याख्यानं प्रपञ्चार्थमित्यवधेयम् ॥ ३-३-२ ॥

**श्री० — ॐ उपसंहारोऽर्थभेदाद्विधिशेषवत्समाने च ॐ ॥ उक्तन्यायादिति** । 'तत्राखिलस्य विज्ञप्तिः सम्यग्ब्रह्मण एव हि । तदन्येषां यथायोग्यमखिलज्ञप्तिरिष्यते' इत्युक्तन्यायादित्यर्थः ॥ **इति वर्तत इति** । अत्र यथाशब्दोऽधिकरणान्तरव्याख्यानसमुच्चये । यथात्मशक्त्याऽऽत्मशक्त्यैवेति पदोपर्येवातिभारः ॥ ३-३-२ ॥

॥ इति उपसंहाराधिकरणम् ॥

## ।। अथ अनुबन्धाद्यधिकरणम् ।।

सु० — ।। ॐ अनुबन्धादिभ्यश्च ॐ ।। योगशास्त्रे यमादिकमुपासनाङ्गतयोपदिश्यते । तत्र पूर्वपक्षवादी मन्यते । यमानुष्ठानं तावदसत् । विष्णुभक्त्यादिगुणसम्पत्तिर्विषयसंसर्गादि-दोषवर्जनं च यमशब्दाभिधेयम् । देशकालावस्थाव्यवस्थया विनाऽनुष्ठेयस्य तथात्वात् । अहिंसादिपरिगणनं तु तत्प्रदर्शनार्थमिति हि योगानुशासनानि । तत्र यमानां किमुपासनो-त्पत्तावुपयोगः । किंवा तत्फलज्ञानोत्पत्तौ । नाद्यः । विद्वेषिणामपि सततानुचिन्तनदर्शनात् । तन्मात्रत्वाच्चोपासनायाः । न द्वितीयः । भक्त्यादिसहितमेवोपासनं ब्रह्मसाक्षात्कारं जनयति नान्यथेत्यत्र प्रमाणाभावात् । किञ्च 'द्वेषाच्चैद्यादयो नृपाः' । 'वैरेण यन्नृपतय' इत्यादौ द्वेषस्य तावन्मोक्षसाधनत्वं प्रतीयते । दृष्ट्वैव तं मुच्यते नापरेणेति मोक्षस्य दर्शनैकसाध्यत्वं च । तदुभयपर्यालोचनया द्वेषस्य दर्शनसाधनत्वमवगम्यते । एवं नियमासनप्राणायामप्रत्याहाराणा-मप्यङ्गता निरसनीयेति । तत्र समाधानमनुबन्धादिभ्य इति । तस्यार्थो भक्त्यादिभ्य इति । तत्र न ज्ञायते कः पक्षोऽङ्गीकृतः कथं च तत्रोक्तदोषः परिहृत इति । अतो व्याचष्टे विषये-ष्वित्यादिना ।

---

अनु० — ।। ॐ अनुबन्धादिभ्यश्च ॐ ।।

विषयेषु च संसर्गाच्छाश्वतस्य च संशयात् ।।
मनसा चान्यदाकाङ्क्षात्परं न प्रतिपद्यते ।।
इति भारतवाक्यं हि तेनैतद्दोषवर्जितः ।।
सदोपासनया युक्तो वासुदेवं प्रपश्यति ।।

विषयसेवनात् । शाश्वतस्य ब्रह्मणः मोक्षादन्यद्विषयजातं प्रति । आकाङ्क्षादिति घञन्तः परं ब्रह्म न प्रतिपद्यते न पश्यति । मिथः समुच्चये चशब्दः । हिशब्दो यस्मादित्यर्थे । विषय-संसर्गादिदोषाणां ज्ञानविरोधित्वमाहेति शेषः । एतद्दोषवर्जित एव सदोपासनया युक्तो भवति । तथाविध एव सदोपासनया युक्तो वासुदेवं प्रपश्यतीति योज्यम् ।

एतदुक्तं भवति । उपासनोत्पत्तौ तावद्यमानामङ्गत्वं ब्रूमः । विषयसंसर्गादिमतो भक्तिरहितस्य सदोपासनानुपपत्तेः । न ह्यन्यत्र (व्या)आसक्तमनास्तत्र स्नेहविधुरश्च तत्सन्ततं चिन्तयतीति युज्यते ।

**यदत्रोक्तं स्निग्धवत्क्रुद्धानामपि सन्ततानुचिन्तनं दृष्टमिति तत्सत्यम् । तथाऽपि तदितरसंसर्गवर्जनादिकमङ्गीकार्यमेव । न च भगवति विद्वेषस्य कारणमस्ति । केषाञ्चिदाशयदोषवशाद्द्वेषसंभवेऽपि न तथाविधमनुचिन्तनं ज्ञानसाधनं भवति । किन्तूक्तयमादिसहितमेवेति द्वितीयपक्षमपि स्वीकुर्मः । न च तत्र प्रमाणाभावः । भारतवाक्यस्य विद्यमानत्वात् । तत्र (च) विषयसंसर्गादिपदानां यममात्राभावोपलक्षणत्वादिति । भक्त्याद्यभावस्यापि दोषत्वेनैतद्दोषवर्जित इत्युक्तम् ।**

**शे०— ॐ अनुबन्धादिभ्यश्च ॐ** ॥ नन्वत्र मूले दोषवर्जनभक्त्योरेवोपासनाद्यङ्गत्वं विचार्यते । तदयुक्तम् । योगशास्त्रे उपासनाङ्गतयोक्तानां यमादीनां तदङ्गत्वमविचार्य तत्रानुक्तस्य भक्त्यादेरेवाङ्गताविचारे निमित्ताभावादित्यतो भक्त्यादेरपि यमान्तर्भावात्तद्विचारपरस्यास्य ग्रन्थस्य योगशास्त्रोक्तयमादीनामुपासनाङ्गविचारकत्वान्न तदनुक्तस्याङ्गत्वविचारकत्वादीत्याशयेनाह **योगशास्त्र इत्यादिना** । आदिपदेन नियमादिपरिग्रहः ॥ **यमशब्दाभिधेयमिति** । यमशब्दाभिधेयतयाऽभिमतमित्यर्थः । कुतोऽस्य यमशब्दाभिधेयतेत्यतो यमशब्दप्रवृत्तिनिमित्तभूतधर्माक्रान्तत्वादिति भावेन तं धर्ममाह **देशकालेति** । अस्मिन्नेव देशेऽस्मिन्नेव कालेऽस्यामेवावस्थायामिदमनुष्ठेयं नान्यदेशादाविति देशकालावस्थाव्यवस्थया विना सर्वस्मिन्देशे सर्वस्मिन्काले सर्वस्यामवस्थायां यदनुष्ठेयं तदेव यमशब्दवाच्यम् । विष्णुभक्त्यादिकं च तादृशं भवतीति युक्तमस्य यमशब्दवाच्यत्वमिति भावः । ननु देशकालावस्थाव्यवस्थया विनाऽनुष्ठेयस्यैव यमशब्दार्थत्वे तथाविधस्यान्यस्यापि संभवात् 'अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ यमा' इति कथमहिंसादेरेव यमतया परिगणनमित्यत एतत्परिगणनस्यैतादृशो यमः क इत्यपेक्षायामुदाहरणमात्रत्वेनैतावन्त एव यमा नातोऽन्य इत्यन्यव्यवच्छेदार्थत्वाभावान्नानुपपत्तिरित्याशयेनाह **अहिंसादिपरिगणनं त्विति** । कुत एतत्सर्वमित्यत आह **इति हीति** । एतदर्थकानि योगानुशासनानि प्रसिद्धानीत्यर्थः ॥ **किमुपासनोत्पत्ताविति** । यमानामवघातादिवत्स्वरूपोपकारकाङ्गत्वं वा प्रयाजादिवत्फलोपकारकाङ्गत्वं वेति विकल्पार्थः । व्यतिरेकव्यभिचाराच्च यमानां न फलोपकारकतेत्याह **किञ्चेति** ॥ **द्वेषस्य दर्शनसाधनत्वमिति** । द्वेषयुक्तोपासनस्य दर्शनसाधनत्वमित्यर्थः ॥ **एवमिति** । 'शौचं तपस्तुष्टिः स्वाध्यायो हरिपूजनम् । नियमा वीरपद्मं च स्वस्तिकाद्यानि चासनमि'त्यादिवाक्योक्तानां नियमादीनां नोपासनोत्पत्तावुपयोगः । तदभावेऽपि सततानुचिन्तनस्य दर्शनात् । नापि तत्फलज्ञानोत्पत्तौ नियमादिसहितमेवोपासनं ब्रह्मसाक्षात्कारं जनयति नान्यथेत्यत्र प्रमाणाभावादिति नियमादीनामङ्गता निरसनीयेत्यर्थः ।

नन्वन्यशब्दोक्तविषयजातस्याकाङ्क्षाकर्मतया कर्तृकर्मणोः कृतीति कृद्योगे षष्ठ्या भवितव्यम् । अन्यदिति द्वितीया तु कथमित्यतः प्रतिशब्दयोगे द्वितीयेयमिति भावेन तदध्याहारेण योजयति **अन्यदित्यादि** । नन्वाकाङ्क्षादिति कथम् । काङ्क्षतेर्धातोर्गुरुमत्त्वेन हलन्तत्वेन च गुरोश्च हल इति स्त्रियामकारप्रत्ययेऽजाद्यतष्टाबिति टापि निष्पन्नस्याऽऽबन्तस्याकाङ्क्षाशब्दस्याकाङ्क्षाया इत्येव पञ्चम्येकवचनेन भाव्यत्वादित्यतो नायमप्रत्ययान्तः किन्त्वकर्तरि च कारके संज्ञायामिति भावे घञन्त एव । घञन्तस्यास्य च घञजबन्ताः पुंसीति लिङ्गानुशासने पुल्लिङ्गत्वनियमनात्, आकाङ्क्षादिति पञ्चम्यैकवचनोपपत्तिरित्याशयेनाह **आकाङ्क्षादिति ॥ घञन्त इति** । भारतवाक्येन यमानां परज्ञानाङ्गत्वप्राप्तावपि ब्रह्मज्ञानाङ्गत्वाप्राप्तेर्न प्रकृतोपयोगीदं वाक्यमित्यतस्तत्सिद्ध्यर्थं परपदं ब्रह्मपरतया व्याचष्टे **परं ब्रह्मेति** । तथाऽपि ब्रह्मज्ञानाङ्गत्वप्राप्तावप्युपासनाफलीभूततत्साक्षात्काराङ्गत्वासिद्धिरेवेत्यतो वासुदेवं प्रपश्यतीति फलवाक्यानुरोधेन प्रतिपत्तिपदं साक्षात्कारपरतया व्याचष्टे **परं न प्रतिपद्यते न पश्यतीति ॥ मिथः समुच्चय इति** । विषयसेवनादीनां परस्परं समुच्चय इत्यर्थः ॥ तेनेति तच्छब्दापेक्षितयच्छब्दार्थतया हिशब्दं व्याचष्टे **हिशब्द इति** । भारतोक्तज्ञानप्रतिबन्धकत्वस्य तेनेत्युत्तरवाक्यार्थत्वं प्रति हेतुत्वेऽपि स्वरूपसतो वाक्यस्य तद्धेतुत्वानुपपत्तेरपेक्षितं पूरयति **विषयेति** । 'एतद्दोषवर्जितः सदोपासनया युक्तो प्रपश्यतीत्येकवाक्यतया योजनायामुपासनाफलीभूतब्रह्मसाक्षात्काराङ्गत्वप्राप्तावपि तदुपासनाङ्गत्वाप्राप्तेस्तदुभयलाभाय वाक्यभेदेन योजयति **एतद्दोषवर्जित एवेत्यादिना** ।

नन्वनेन भाष्येण पूर्वं विकल्पितपक्षद्वयस्याङ्गीकारसिद्धावपि तदनुपपादनात्तत्रोक्तदोषापरिहाराच्च न नियमानां स्वरूपोपकारकाङ्गत्वफलोपकारकाङ्गत्वसिद्धिरित्यत आह **एतदुक्तं भवतीति** । अनुपपत्तिमेव प्रथयति **न ह्यन्यत्रेति** । अनेन विषयसंसर्गो व्याख्यातो भवति **तथाऽपीति** । भगवति क्रुद्धत्वेनास्निग्धत्वाद्भगवदुपासनार्थं भक्तिरूपयमानपेक्षायामित्यर्थः ॥ **तदितरसंसर्गवर्जनादिकमिति** । तदितरस्नेहादितरयत्संसर्गवर्जनादिकं मनसोऽन्यत्र व्यासङ्गाभावरूपमित्यर्थः ॥ **अङ्गीकार्यमेवेति** । सति व्यासङ्गे द्वेषेणापि सततानुचिन्तनानुपपत्तेरिति भावः । तथाचोपासनोत्पत्तौ भक्तिरूपयमैकदेशस्यानपेक्षायामपि तदितरविषयव्यासङ्गाभावरूपयमापेक्षायाः सत्त्वान्नोपासनोत्पत्तौ यमानपेक्षेति भावः । एवं प्रथमपक्षमुपपाद्य किञ्चेत्युक्तं द्वितीयपक्षदोषं परिहरन्नेव तमुपादत्ते **न चेति** । द्वेषयुक्तं ध्यानं दर्शनसाधनमिति वदन्प्रष्टव्यः । किं सर्वेषां द्वेषयुक्तमेवोपासनं दर्शनसाधनं किंवा केषाञ्चिदिति विकल्पं मनसि निधायाद्यं दूषयति **न चेति** । सर्वेषामिति शेषः । आशयदोषरूपकारणाभावान्न सर्वेषां भगवति द्वेषः संभवतीति भावः । द्वितीयं दूषयति **केषाञ्चिदिति ॥ तथाविधमिति** । द्वेषयुतमित्यर्थः ॥ **उक्तयमसहितमिति** । भक्त्यादिरूपयमसहितमेवेत्यर्थः । ननूक्तयमसहितमनुचिन्तनं ब्रह्म-

साक्षात्कारसाधनमित्यत्र भारतवाक्यं कथं प्रमाणम् । तेन विषयसंसर्गादिरूपदोषाभावस्यापरोक्षज्ञानार्थत्वलाभेऽपि विष्णुभक्त्यादिरूपयमस्य तदर्थत्वालाभादित्यत आह **तत्रेति** । ननु तथाऽपि न भक्त्यादिरूपयमस्य तादर्थ्यसिद्धिः । तत्रैतद्दोषवर्जित इति दोषाभावस्यैव तदुपयोगकथनात् । तेन च विषयसेवनादिरूपदोषाणामभावस्योपयोगप्राप्तावपि भक्त्यभावस्य साधनाभावतयाऽदोषत्वेन भक्तेर्दोषाभावरूपत्वाभावादित्यतो भक्त्याद्यभावस्यापि दोषत्वेन श्रुतिस्मृतिप्रसिद्धत्वेन दोषत्वाद्भक्त्यादेस्तदभावरूपतया दोषाभावरूपत्वात्तस्यापि तदुपयोगसिद्धिरित्याशयेनाह **भक्त्याद्यभावस्यापीति** ।

म० — विष्णुभक्त्यादिगुणसंपत्त्यादेर्यमशब्दार्थत्वमुपपादयति **तथात्वादिति** । यमशब्दार्थत्वादित्यर्थः । अहिंसादिकमपि यमशब्दार्थत्वेन परिगणितमिति कथमेतदित्यत आह **अहिंसादीति** ॥ **प्रदर्शनार्थं** यमादीनामिति शेषः । नन्वाकाङ्क्षादिति कथम् । क्षकारस्य गुरुत्वेन हलत्वेन च गुरोश्च हल इति अप्रत्ययेऽजाद्यतष्टाबिति टापि आकांक्षाया इति भवितव्यमित्यत आह **आकांक्षादिति घञन्त इति** । तथा च नायमप्रत्ययान्तः किं तु घञन्त एव घञन्ताश्च पुलिङ्गा एवेति नोक्तदोषः । ननु भारतवाक्ये एतद्दोषवर्जित इत्यनेन तत्रोक्तदोषविषयादिसंसर्गवर्जितस्यैवोपासनोपयोगस्य लब्धत्वात् भक्त्यादिरूपयमाभावेपि स्यादेवोपासने नियमादीनामुपासनाङ्गत्वमित्यत आह **तत्र विषयसंसर्गादिपदानामिति** ।

---

प० — **अनुबन्धादिभ्यः** । सांख्ययोगौ परावपीति प्रमाणत्वेनोपात्तयोगशास्त्रोक्तयमनियमाद्यंगापेक्षयाऽत्रोच्यमानं भक्त्यादिकमन्यदिति भ्रमं निरस्यन् सूत्रगमनिकां तावदाह **योगशास्त्र इत्यादिना** । यद्वा यमादेरंगत्वप्रत्याख्याने पूर्वपक्षिणोङ्गत्वप्रसंजकं किमित्यत आह **योगशास्त्र इति** । 'मूले विष्णौ-पराभक्तिरि'त्यादेरग्रे श्रवणात् भक्त्यादेरपि प्रत्याख्यानायाह **विष्णुभक्त्यादीति** । कुतो भक्त्यादेर्यमशब्दार्थत्वमित्यत आह **देशकाल इति** । पर्वताग्रादिदेशविशेषब्राह्ममुहूर्तादिकालविशेषशुचित्वाद्यवस्थाविशेषनियमं विना क्रियमाणं यत्तद्धि **यमशब्दार्थः** । भक्त्यादिकं तादृशं भवतीति भवत्येव यमशब्दाभिधेयं भक्त्यादिकमित्यर्थः । तर्हि तन्त्रसारे अहिंसासत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ यम इति यमशब्दार्थपरिगणनस्य का गतिरित्यत आह **अहिंसादीति** । परिगणनं नामैत इति विशिष्य कीर्तनम् । कुत एषा कल्पनेत्यत उक्तार्थबोधकानि योगानुशासनानि प्रसिद्धानीत्याह **इति हि योगानुशासनानीति** । एवं परिष्कृत्य पूर्ववादी प्रत्याख्यातुं विकल्पयति **तत्र यमानामिति** ॥ **विद्वेषिणामिति** । कंसचैद्यप्रभृतीनामित्यर्थः । व्यक्तमेतद्दशमस्कंधादौ 'सनित्यदोद्विग्नधिया तमीश्वरं पिबन्नदन्वा विचरन्स्वपन् श्वसन् । ददर्श चक्रायुधमग्रतोऽच्युतमित्यादिना । द्वेषाच्चैद्यादयो नृपा इत्यादिना च । भक्त्यादिविहीनध्यानस्यापरोक्षहेतुत्व-

रूपस्वामिमतेऽर्थेऽर्थापत्तिं प्रमाणमस्ति ॥ **किञ्चेति** । यद्वा निदिध्यासनमपि न दृष्टिहेतुः । तेन विनापि तत्सिद्धेरित्याह **किञ्चेति** ॥ **एवं नियमेति** । 'यमाः शौचं तपस्तुष्टिः स्वाध्यायो हरिपूजनम् । नियमा वीरपद्मे च स्वस्तिकाद्यानि चासनम् । रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः । प्राणायाम' इत्यादितन्त्रसारोक्तस्वरूपाणां नियमादीनामपि उक्तदिशा ध्यानस्वरूपोत्पत्तौ साक्षात्काररूपफलोत्पत्तौ वा क्रमात्प्रागुक्तदिशा व्यभिचारप्रमाणाभावाभ्यामङ्गत्वं निरस्यमित्यर्थः ॥ **भक्त्यादिभ्य इतीति** । भक्तिशमदमादिभ्य इत्यर्थः । अनुबन्धस्तु भक्तिः स्यादिति स्मृतेरिति भावः ॥ **तत्रेति** । ध्यानस्वरूपोत्पत्त्यङ्गत्वतज्जन्यदृष्टिस्वरूपफलोपकार्यङ्गत्वपक्षयोर्मध्य इत्यर्थः । **अङ्गीकृतः** सूत्रकृतेत्यर्थः । ननु कथमाकांक्षादिति । आङ्पूर्वस्य कांक्षतेर्धातोर्गुरुमत्त्वेन हलन्तत्वेन स्त्रियां क्तिनिति स्त्र्यधिकारे अप्रत्ययादिति पूर्वसूत्रप्रकृताप्रत्ययस्य गुरोश्च हल इति तृतीयाध्यायतृतीयपादीयसूत्रेणोक्त्या अप्रत्ययान्तत्वे स्त्रीत्वादजाद्यन्वाविति टापि आकांक्षाया इति भाव्यमित्यत आह **आकांक्षादिति घजन्त इति** । वाऽसरूपोऽस्त्रियामिति असरूपप्रत्ययस्य विकल्पेन बाधोक्तेः पक्षे घञ् प्राप्तिरस्त्येव । तथाच घञन्तः पुंसीति पुंलिङ्गत्वादाकांक्षादिति साध्विति भावः ॥ **इति योज्यमिति** । (उपासनातत्फलज्ञानोभयाङ्गत्वलाभायेत्यर्थः) । उभयाङ्गत्वलाभाय वाक्यभेदेन योज्यमित्यर्थः । तद्व्यनक्ति **एतदुक्तमिति** । फलोत्पत्त्यङ्गत्वं च वक्ष्याम इति तावदित्युक्तम् । साधुजनाभिप्रायेण द्वेषोपि न संभाव्यत इत्याह **न च भगवतीति** ॥ **केषाञ्चिदिति** । चैद्यादीनामाशयदोषो दुर्जीवादिसङ्गादिति ध्येयम् । **द्वितीयपक्षमिति** । फलोपकार्यङ्गत्वपक्षमपीत्यर्थः । नन्वेतद्दोषवर्जित इत्यत्र पूर्वप्रकृतदोषमात्रपरामर्शेन हिंसाऽनृतादिदोषराहित्यं न प्राप्तमित्यत आह **विषयसंसर्गादिपदानामिति** । नन्वेवं प्रागुक्तदिशा यमशब्दाभिधेयस्य भक्त्यादेरभावस्य भारतवाक्ये प्राप्तत्वेपि कथमेतद्दोषेति तत्परामर्श इत्यत आह **भक्त्याद्यभावस्येति** । तस्य निरन्तरानुचिन्तनादिप्रतिबन्धकत्वाद्दोषत्वमिति भावः ॥

**या० — ॐ अनुबन्धादिभ्यः ॐ** ॥ अत्र दोषवर्जनभक्त्योरेवोपासनाद्यङ्गत्वं विचार्यतया मूले प्रतीयते । इदं चायुक्तम् । योगशास्त्रे उपासनाङ्गतयोक्तानां यमादीनामुपासनाङ्गत्वमविचार्य तदनुक्तभक्त्यादेरेव तदङ्गताविचारे निमित्ताभावादित्याशङ्कायां भक्त्यादेरपि यमान्तर्भावात्तद्विचारे यमादिकमेवात्र विचारितं भवतीत्याह **योगशास्त्र इत्यादिना** । आदिपदेन नियमासनप्राणायामादिपरिग्रहः । **विष्णुभक्त्यादीति** । यमशब्दाभिधेयतयेदमपि धर्मद्वयं विवक्षितमित्यर्थः । कुत इत्यतो यमशब्दप्रवृत्तिनिमित्तभूतधर्माक्रान्तत्वादित्याह **देशकालावस्थेति** । अस्मिन्नेव देशेऽस्मिन्नेव कालेऽस्यामेवावस्थायामिदमनुष्ठेयं नान्यदेशादाविति देशकालावस्थाव्यवस्थया विना सर्वस्मिन्देशे सर्वस्मिन्काले सर्वास्व-

वस्थासु च यदनुष्ठेयं तस्यैव यमशब्दाभिधेयत्वादित्यर्थः । उक्तं च धर्मद्वयं तादृशमिति भावः । नन्वेवं 'अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहः । यमा' इति कथं परिगणनमित्यत आह **अहिंसादि-परिगणनं त्विति** । उक्तप्रवृत्तिनिमित्तभूतसलक्षणाक्रान्तलक्ष्यप्रदर्शनार्थमेवेदं वाक्यं न त्वेतावन्त एव यमा इति परिगणनार्थमित्यर्थः । कुत एतत्सर्वमित्यत आह **इति हीति** । एतदर्थकानि योगानुशासनानि प्रसिद्धानीत्यर्थः ॥ **तत्र यमानामिति** । स्वरूपोपकारकाङ्गत्वं वा फलोपकारकाङ्गत्वं वेति विकल्पाशयः ॥ **विद्वेषिणामपीति** । यमशब्दाभिधेयस्य सर्वस्याप्यभाववतामित्यर्थः । अन्यथा यमानामित्युपक्रमविरोधः इति द्रष्टव्यम् । भक्त्यादीत्यत्राप्यादिपदेन सर्वं यमशब्दाभिधेयं ग्राह्यम् । विशेषाकारेण द्वेषरूपदोषवर्जनरूपस्य वा भक्तिवर्जनरूपस्य वा यमस्य फलोपकारकत्वे व्यभिचारमप्याह **किञ्चेति** ॥ **एवं नियमासनेति** । 'शौचं तपस्तुष्टिः स्वाध्यायो हरिपूजनम् । नियमा वीरपद्मे च स्वस्तिकाद्यानि चासनम् । रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः । प्राणायामः' । मनसो विषयेभ्यो भगवन्तं प्रत्याहरणं प्रत्याहारः । एतेषां नियमादीनां नोपासनोत्पत्तावुपयोगः । तेषामभावेऽपि सततानुचिन्तनदर्शनात् । नापि ज्ञानोत्पत्तौ । एतत्सहितमेवोपासनं ज्ञानं जनयतीत्यत्र प्रमाणाभावादिति निरसनीयेत्यर्थः । नन्वाकांक्षादिति कथम् । कांक्षतेर्गुरुमत्त्वेन हलन्तत्वेन च गुरोश्च हल इति स्त्रियामप्रत्ययेऽजाद्यतष्टाबिति टापि आकाङ्क्षाया इति भवितव्यमित्यत आह **आकांक्षादिति घञन्त इति** । घञबन्त इति लिङ्गानुशासनवचनाद्घञन्ताः पुल्लिङ्गा इति भावः ॥ **तदितरेति** । क्रोधरूपदोषापेक्षयेतरे ये विषयसंसर्गादयो दोषास्तद्वर्जनादिकमित्यर्थः ॥ **अङ्गीकार्यमेवेति** । अन्यथा द्वेषेणापि सततानुचिन्तनस्यासंभवादिति भावः ॥ **न चेति** । एवं सतीति शेषः । ततश्चायमर्थः । चैद्यादयो हि भगवान् स्वेष्टराज्यादिविषयविघातीति तं द्विषन्ति तेन ज्ञायते विषयस्नेहलक्षणः संसर्ग एव तद्विघातकद्वेषे कारणमिति । सततानुचिन्तनाय विषयसंसर्गरूपदोषत्यागे च कारणाभावादेव न भगवति द्वेषः संभवतीति । नन्वस्त्वेवं स्वभावतः शुद्धान्तःकरणानां चैद्यादीनां ध्यानकाले विषयसंसर्गरूपकारणाभावाद्भगवति द्वेषाभावः । ये तु तद्विपरीताः कंसादयस्तेषामुक्तबाह्यकारणाभावेऽपि स्वाभाविकाशयदोषवशाद्बाह्यान्तःकरणे द्वेषोत्पत्तिसंभवात्तदीयसततानुचिन्तने व्यभिचारतादवस्थ्यमित्याशङ्क्याह **केषाञ्चिदिति** ॥ **ज्ञानसाधनमिति** । तथा चोक्तयमादिजन्यतावच्छेदकं ज्ञानसाधनसततानुचिन्तनत्वमेव न सततानुचिन्तनत्वमात्रम् । अतो न व्यभिचार इति भावः । ननु तत्र ज्ञानसाधनत्वमपि नानतिप्रसक्तमेकमवच्छेदकं विना ग्रहीतुं शक्यम् । न चोक्तयमादिजन्यत्वमेव तदवच्छेदकम् । अन्योन्याश्रयादित्याशयेन पृच्छति **किन्त्विति** । उत्तरमाह **उक्तयमादिसहितमेवेति** । इदं च यमादिकं ध्यानजनकयमाद्यपेक्षयोत्कृष्टं न तदेव । तथा चैतादृशाशययमादिसहितध्यानत्वमेव ज्ञानसाधनतावच्छेदकं ज्ञानसाधनीभूतध्यानत्वं

चोक्तयमादिजन्यतावच्छेदकमतो न कोऽपि दोष इति भावः ॥ **यममात्राभावोपलक्षणमिति** । अत्र नियमाद्यभावोऽपि ग्राह्यस्तेनैवं नियमादेरङ्गता निरसनीयेत्यस्य समाधानमुक्तं भवतीति ध्येयम् । ननु यदि नियममात्राभावोऽत्रोपलक्ष्यस्तर्हि तद्दोषवर्जित इति कथम् । विषयसंसर्गादिदोषवर्जनरूपयमाभावस्य विषयसंसर्गरूपतया दोषत्वेपि विष्णुभक्त्यादिगुणाभावस्य साधनाभावमात्ररूपत्वेनादोषत्वात् । न हि साधनाभावोऽपि दोषतया लोके प्रसिद्ध इत्यत आह **भक्त्याद्यभावस्यापीति** । सत्यं साधनाभावमात्रं न दोष इति । भक्त्याद्यभावस्तु साधनाभावरूपोऽपि दोष एव । तथा शास्त्रे प्रसिद्धेरित्यर्थः ।

**च०**— ननु आङुपसृष्टस्य काङ्क्षतेर्गुरुत्वेन हलन्तस्य 'गुरोश्च हलः' इति स्त्रियामकारप्रत्यये अजाद्यन्तष्टाबिति निष्पन्नाबन्तस्याकाङ्क्षाया इत्येव पञ्चम्येकवचनन्यासेन भवितव्यतया कथमिदं व्यन्यसनमित्यतो वाऽसरूपपरिभाषया अकारप्रत्ययं विकल्पेन बाधत इति घञबन्तः पुंसीति लिङ्गानुशासने पुलिङ्गत्वाभिधानात्सामञ्जस्यमित्याह **घञन्त इति** ।

**सु०— यमानामवश्यानुष्ठेयत्वे युक्तिमप्याह** दोषा इति ।

**अनु०**— दोषा अनादिसम्बद्धास्ते मुक्तिपरिपन्थिनः ॥
सन्त्येव प्रायशः पुंस्सु तेन मोक्षो न जायते ॥

**ते विष्णुभक्त्यभावाद्या विषयसंसर्गाद्याश्च दोषा मुक्तिपरिपन्थिनः प्राचुर्येण पुरुषेष्वनादिसंबन्धाः सन्त्येव । तेन कारणेन तेषां मोक्षो न जायते । एतदुक्तं भवति । मोक्षयोग्यानां मुमुक्षूणामपीदानीं तावन्मोक्षो न जायते । तत्कुत इति चिन्त्यम् । भगवत्प्रसादाभावादिति चेत्सोऽपि कुतः । ज्ञानाभावादिति चेदसावपि कुतः । ध्यानाभ्यासासत्त्वादिति चेन्न । विद्वेषिणां तत्सत्त्वेऽप्यसत्त्वस्य वक्ष्यमाणत्वात् । अपि च ध्यानाभ्यासोऽपि कुतो नेति वाच्यम् । श्रवणाद्यभावादिति चेत् । तद्भावोऽपि न कुतः । अतो दोषा एव तत्तदुत्पत्तिं प्रतिबध्नन्तो मोक्षपरिपन्थिन इति ज्ञायते । न च दोषाणामागन्तुकानामनादिमोक्षाभावहेतुत्वं न सम्भवतीति साम्प्रतम् । प्रवाहतोऽनादित्वादिति । तथा चोक्तम् । दोषगृहीतगुणामिति ।**

**शे०**— ननु साधनाभावप्रयुक्तत्वान्मुक्त्यभावस्य कथं दोषरूपप्रतिबन्धकसद्भावप्रयुक्तत्वम् । तत्त्वेऽपि वा न तदनादित्वस्योपयोग इति मूले तदुक्तेरानर्थक्यमेवेत्यत आह **एतदुक्तं भवतीति** । **तत्सत्त्वे** ध्यानाभ्याससत्त्वे । असत्त्वस्येत्यत्र ज्ञानस्येति शेषः । वक्ष्यमाणत्वाद् 'द्वेषतोऽपि विमुक्तिश्चेन्महातात्पर्यरोधनमि'त्यादिनेति शेषः ॥ **मोक्षाभावहेतुत्वमिति** । मोक्षप्रागभावपरिपालनहेतुत्वमित्यर्थः । ननु तत्तदुत्पत्तिं प्रतिबध्नन्त इति श्रवणादिगुणप्रतिबन्धद्वारा मोक्षप्रतिबन्धकत्वमुक्तं तदयुक्तम् ।

दुष्टप्रकृतेरेव स्वगुणाच्छादिकेत्यादिस्मृत्या जीवगुणाच्छादकत्वकथनेन तद्विरुद्धत्वादित्यत उक्तार्थे प्रमाणसम्मतिमाह **यथोक्तमिति** । श्रुतिगीतायामिति शेषः । दोषैर्गृहीता आच्छादिता गुणा यया सेति प्रकृतेर्दोषद्वारा जीवगुणाच्छादकताया एव तत्रोक्तत्वेन दोषप्रतिबन्धकतायास्तद्वाक्याभिमतत्वान्न तद्विरोध इति भावः ।

**स०— तत्सत्त्वे** ध्यानाभ्यासस्य सत्त्वे । असत्त्वस्येत्यत्र ज्ञानस्येति शेषः । **वक्ष्यमाणत्वात्** । द्वेषतोपि विमुक्तिश्चेन्महातात्पर्यरोधनमित्यादिनेति शेषः । दोषाणामेव मुक्तिप्रतिबन्धकत्वे संमतिमाह **तथोक्तमिति** । श्रुतिगीतास्थमिदं वाक्यम् । **दोषैः** दुःखाद्यैः आनन्दाद्या जीवगुणा गृहीता आवृता यया सा दोषगृहीतगुणा तामित्यर्थः ।

**प०— यमानामिति** । भक्त्यादीनामित्यर्थः ॥ **युक्तिमपीति** । न केवलं भारतवाक्यं यमाननुष्ठानस्य श्रेयःप्रतिबन्धकत्वान्यथानुपपत्तिरूपयुक्तिमित्यपेरर्थः ॥ **असत्त्वस्य वक्ष्यमाणत्वादिति** । द्वेषकृतध्यानासाधुत्वस्य द्वेषाद्यन्मुक्तिकथनमित्यादौ वक्ष्यमाणत्वादित्यर्थः । तादृशध्यानमप्रयोजकमिति भावः ॥ **तथा चोक्तमिति** । दशमस्कन्धे श्रुतिगीतायाम् । जय जय जह्यजामजितदोषगृहीतगुणामित्यत्र दोषैर्दुःखाद्यैरानन्दाद्या जीवगुणा गृहीता यया सेति तात्पर्योक्तिः । तामजामविद्यां जहि (व्यापादयेत्यर्थः ।) व्युदासयेत्यर्थः ।

**या० — असत्त्वस्येति** । ज्ञानासत्त्वस्येत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'द्वेषाद्यन्मुक्तिकथनमि'त्यादाविति शेषः । तत्र द्वेषिणां मुक्त्यभावसमर्थने तत्साधनज्ञानाभावस्याप्यर्थात्प्राप्तेः । मोक्षाभावहेतुत्वं मोक्षप्रागभावपरिपालनहेतुत्वम् । तत्तदुत्पत्तिं प्रतिबध्नन्त इत्यनेन दोषाणां यच्छ्रवणादिगुणप्रतिबन्धकत्वमुक्तं तदयुक्तम् । 'स्वगुणाच्छादिका त्वेके'त्यादिस्मृतिविरुद्धत्वात् । तत्र दुष्टप्रकृतेरेव जीवगुणाच्छादकताया उक्तत्वादित्याशङ्क्य परिहर्तुमुक्तार्थे श्रुतिगीतावाक्यसम्मतिं दर्शयति **तथा चोक्तमिति** । दोषैर्गृहीता आच्छादिता जीवगुणा यया सा तथोक्ता तामित्यर्थः । इदं च 'जयजय जह्यजामि'त्युक्ताजाया विशेषणम् । तथा चात्राजाशब्दोदितदुष्टप्रकृतेर्जीवगुणाच्छादने दोषाणां द्वारतयोक्तत्वान्नोक्तस्मृतिविरोध इति भावः ।

**श्री० — ॐ अनुबन्धादिभ्यश्च ॐ ॥ मोक्षाभावहेतुत्वादिति** । मोक्षाभाववतामपि केषाञ्चिद्रागादिदोषशून्यानामपि सत्त्वादिति भावः ॥ ३–३–२ ॥

**सु० — स्यादेतत् । सन्ति केचित्संसारिणोऽपि रागादिदोषरहिता जीवा बालमुग्धादयः । तत्कथं दोषाणां मोक्षाभावहेतुत्वमित्यत** आह सर्व इति ।

**अनु० —** सर्वे त एते जीवेषु दृश्यन्ते तारतम्यतः ॥

उदाहृतेष्वपि बालमुग्धादिजीवेषु त एते भगवद्भक्त्यभावाद्या दोषास्तावत्प्रत्यक्षानुमानाभ्यां दृश्यन्त एव । रागद्वेषादयोऽपि पुरुषेषु तारतम्यतः सन्ति । चतुर्विधा हि ते प्रसुप्ततनुविच्छिन्नोदारभेदेन । अतो बालादिषूदाराणां तेषामभावादभावाभिमानः । स्तन्यादिकामादेस्तेष्वपि दर्शनात् । तथा चागमः । गर्भे बाल्येऽप्यपौष्कल्यादित्यादिः । तदेवं सर्वेऽपि दोषाः सर्वेष्वपि प्रमिता इति युक्तमुक्तम् ।

शे० — सर्वजीवेषु तारतम्येन दोषाणामवस्थानप्रतिपादनपरस्य 'सर्वे त' इत्याद्युत्तरभाष्यस्यानर्थक्यमाशङ्क्य प्रागुक्ताया दोषाणां मोक्षाभावहेतुताया व्यतिरेकव्यभिचारपरिहारेण समर्थनार्थत्वान्न तस्यानर्थक्यमित्याशयेन व्यतिरेकव्यभिचारपरिहारकतया तद्वाक्यं योजयितुं तच्छङ्कामुत्थापयति **स्यादेतदिति ॥ प्रत्यक्षानुमानाभ्यामिति** । प्रतियोगिनो भगवद्भक्त्यादेस्तत्र सर्वथाऽनुपलम्भादिति भावः ॥ **प्रसुप्तेति** । प्रसुप्तत्वमाच्छादितत्वम् । अप्राकट्यमिति यावत् । तनुत्वं स्वल्पत्वम् । विच्छिन्नत्वं मुहूर्तमात्रावस्थायित्वम् । उदारत्वमुत्कृष्टत्वमिति विवेकः । सर्वथा तेषामभावादेवाभावाभिमानः किन्न स्यादित्यत आह **स्तन्यादिकामादेरिति** । बालादिषूदाराणां तेषामभाव इत्यत्र भागवतवाक्यं प्रमाणतयोदाहरति **तथा चेति ॥ युक्तमुक्तमिति** । उक्तं दोषाणां मुक्त्यभावहेतुत्वं युक्तं बालादिष्वपि दोषाणां सत्त्वेन व्यतिरेकव्यभिचाराभावादिति भावः ।

---

स० — **प्रसुप्तेति** । दोषाणां प्रसुप्तत्वमाच्छादनमप्राकट्यमिति यावत् । **तनुत्वं** स्वल्पत्वम् । **विच्छिन्नत्वं** मुहूर्तमात्राद्यवस्थायित्वम् । **उदारत्वं** उत्कृष्टत्वम् ।

प० — **प्रत्यक्षानुमानाभ्यामिति** । विषयसंसर्गहिंसाऽनृतादिदोषाः प्रत्यक्षेण भक्त्याद्यभावस्तत्कार्यरूपलिङ्गरूपानुमानेनेत्यर्थः ॥ **प्रसुप्तेति** । प्रसुप्ता अव्यक्ताः । तनवः अल्पाः । विच्छिन्नाः बहुशो व्यक्तत्वेपि सदाऽविद्यमानाः । उदाराः सदा प्रकटभूता इत्यर्थः ॥ **आगम इति** । चतुर्थस्कन्धस्थवाक्यम् । 'गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं तदा । लिङ्गं न दृश्यते यूनः कुह्वां चन्द्रमसो यथा' इत्येकोनत्रिंशेऽध्याये । अस्यार्थः अत्र 'नाहं ममेत्ययं भावः पुरुषे व्यवधीयत इत्यादिना पूर्वं प्रकृतमहं ममे'त्यादिज्ञानं स्वहेतुभूतकामादिज्ञापकत्वाल्लिङ्गपदेनोच्यते । कामादिकं च पुरुषस्य गर्भे बाल्येऽपि स्थितिदशायामपौष्कल्यात्तनुलिङ्गं अतो तदा न दृश्यते न व्यक्तीभवति । यूनो यौवने स्थितं एकादशविधं ज्ञानेन्द्रियकर्मेन्द्रियमनोभेदेनैकादशभिरिन्द्रियैर्विशेषेण धीयमानं व्यक्तीक्रियमाणं लिङ्गं दृश्यते । तदा पटुकरणैर्विषयसंबन्धे रागाद्यौत्कट्यादहं ममेत्यादिधीर्भवतीति भावः । यथा चन्द्रमसः गर्भे स्थितस्य सूर्यबिम्बे प्रविष्टस्य बाह्ये प्रतिपद्दिनस्थितस्य लिङ्गं स्वरूपं बिम्बं 'लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव

चे'त्युक्तेः । कुह्वाममावास्यायामपौष्कल्यान्न दृश्यते । अयूनः द्वितीयातृतीयादितिथिस्थस्य यूनः अष्टम्यादितिथिस्थस्य चन्द्रमसः लिङ्गमेकादशभिः कलाभिः क्रमाद्विशेषेण क्षीयमाणं पूर्यमाणं सत दृश्यते तथेति । यून इत्युक्तत्वात् एकादशेत्युक्तम् । एकद्वित्रिप्रभृतिभिः षोडशभिः कलाभिरित्यर्थः ।

**या० — प्रत्यक्षानुमानाभ्यामिति** । भगवद्भक्त्यादेः प्रतियोगिनः सर्वथा तत्रानुपलम्भादिति भावः ॥ **प्रसुप्तेति** । रागादीनां प्रसुप्तत्वं नामाव्यक्तत्वम् । तनुत्वं नाम व्यक्तत्वेऽपि स्वल्पत्वम् । विच्छिन्नत्वं बहुत्वेऽपि सदा स्थित्यभावः । उदारत्वं सदोत्कृष्टतयाऽवस्थानम् । आद्यं गर्भे द्वितीयं बाल्ये तृतीयं कैशोरे तुरीयं यौवनेऽस्तीति द्रष्टव्यम् ॥ **गर्भे बाल्येऽपीति** । 'गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं तदा । लिङ्गं न दृश्यते यूनः कुह्वां चन्द्रमसो यथे'ति भागवतश्लोकस्यायमर्थः । यद्यूनो यौवनावस्थापन्नस्यैकादशविधमेकादशेन्द्रियेभ्यः साक्षात्परम्परया वा विधीयत उत्पद्यत इत्येकादशमुदारावस्थमिति यावत् । लिङ्गं चिन्हं पूर्वश्लोकप्रकृतमहमिति ज्ञानोपलक्षितं रागद्वेषादिकं तत्तस्य गर्भे गर्भस्थतादशायां बाल्ये बाल्यावस्थायां च न दृश्यते । कुतः । तदवस्थाद्वयेऽपौष्कल्यादौदार्याभावात् । अत्र दृष्टान्तमाह **कुह्वामिति** । यथा चन्द्रमसो लिङ्गं चिन्हं प्रकाशादिकमव्यक्ततया विद्यमानमप्यौदार्याभावादमावास्यायां न दृश्यते तथैवेति ।

**श्री० — ते** रागादिदोषाः । **तेषां** रागादीनाम् ॥ **स्तन्यादिकामादेरिति** । तदनुभूतस्येत्यर्थः ।

---

**सु० — अथापि स्यात् । ऋजवो नाम हिरण्यगर्भपदप्राप्तियोग्याः सन्ति संसारिणः पुरुषाः । न च ते दोषिण इति युक्तम् । ऋजुत्वविरोधात । ऋजवः समीचीना निर्दोषा इत्यनर्थान्तरम् । तत्कथमित्यत आह** ऋजूनामिति ।

**अनु० —** ऋजूनामेक एवास्ति परमोत्साहवर्जनम् ॥

**ऋजूनामपि मोक्षार्थं महोद्योगवर्जनं नाम दोषोऽस्तीत्यतो नोक्तमयुक्तम् । अन्यथा मोक्षविलम्बासंभवात् । न चैवमृजुत्वविरोधः । यतोऽसावेक एव । दोषबाहुल्याभावाभिप्रायमृजुत्ववचनम् । अल्पत्वे निःस्वप्रयोगदर्शनादिति भावः ।**

**शे० —** तथाऽपि ऋजूनां दोषवत्त्ववर्णनपरोत्तरवाक्यमनर्थकमेवेत्याशङ्क्य तत्र व्यतिरेकव्यभिचारपरिहारेण प्रागुक्ताया दोषाणां मोक्षाभावहेतुतायाः समर्थनार्थत्वान्न तदिति भावेन तत्परतयोत्तरग्रन्थं योजयितुं तत्र व्यभिचारशङ्कामुत्थापयति **अथाऽपि स्यादिति ॥ मोक्षविलम्बेति** । अपरोक्षज्ञानानन्तरमिति शेषः ॥ **बाहुल्याभावेति** । 'एकोऽपि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति न्यायादिति भावः ।

प०— **हिरण्यगर्भपदेति** । 'ऋजवो नाम ये देवा योग्या ब्रह्मपदस्य तु' इति चतुर्थ-तात्पर्ये चतुर्विंशाध्यायोक्तस्मृतेरिति भावः ॥ **अन्यथा मोक्षविलम्बेति** । ननु एवं मुक्तिफलानियम इति सूत्रेऽपरोक्षज्ञानरूपसामग्रीसत्त्वेपि प्रारब्धकर्मप्रतिबन्धसत्त्वे मोक्षो विलम्ब्यत इत्युक्तत्वात्तेषां च तद्भावस्य ब्रह्मणां शतकालात्तु पूर्वमारब्धसंक्षयः । ब्रह्मण इत्यादिना चतुर्थाद्यपादे वक्ष्यमाणत्वात्प्रारब्धकर्मणैव मोक्षविलम्बोऽस्त्विति चेन्न । कर्मणामुपमर्दसंभवादिति भावः ॥

या० — **मोक्षविलम्बेति** । अपरोक्षज्ञानानन्तरमिति शेषः ।

श्री०— **बाहुल्याभावेति** । एकोऽपि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्क इति न्यायादिति भावः ।

सु०— **प्रकारान्तरेण विरोधं परिहरति** स इति ।

अनु०— स गुणाल्पत्वमात्रत्वान्नर्जुत्वेन विरुध्यते ॥

**स परमोत्साहवर्जनं नाम दोषः । यद्यपि महोद्यमाभावो दोष एव हेयत्वात् । तथाऽपि न रागादिरिव भावरूपः । नापि गुणाभावरूपः । किन्नामोत्साहलक्षणगुणाल्पतामात्र-मित्यदोषोऽप्युच्यत इति नर्जुत्वेन विरुध्यते ।**

---

शे०— ननु स इति पुल्लिङ्गेन परमोत्साहवर्जनस्य कथं परामर्श इत्यतः परमोत्साहवर्जननामक-दोषस्यायं परामर्श इत्याह **स इति** ॥ **गुणाल्पतामात्रमिति** । परमत्वविशिष्टोत्साहनिषेधस्य लाघवमूलसविशेषणे हीति न्यायेनोत्साहे परमत्वरूपविशेषणमात्रविषयकत्वात्तदल्पतालाभ इति भावः । महोद्यमाभावो गुणसामान्याभावरूपो न भवति । महोद्यमो नास्तीत्युक्ते अल्पोद्यमरूपगुणस्यैव प्राप्तेरतो महोद्यमाभावो नामोद्योगस्याल्पत्वरूप एवेति ।

प०—**उत्साहलक्षणगुणाल्पतामात्रमिति** । विशेषनिषेधो विशेषविधिं गमयतीति न्यायेन परमोत्साहवर्जनमित्युक्त्या उत्साहमात्रमस्तीति लाभादिति भावः ॥

या०— **गुणाल्पतामात्रमिति** । सविशेषणे हीति न्यायेन परमत्वरूपविशेषणनिषेध उत्साह-लक्षणगुणेऽल्पता लभ्यत इति भावः ।

श्री०— **रागादिवदिति** । दोषा रागादयश्च त इति वचनाद्रागादिदोषवदित्यर्थः ॥ **गुणा-भावरूप इति** । महोद्यमाभावो गुणसामान्याभावरूपो न भवति । महोद्यमो नास्तीत्युक्तेऽल्पोद्यमरूप-गुणस्यैव प्राप्तेरतो महोद्यमाभावो नामोद्योगस्याल्पत्वरूप एवेत्यर्थः ।

**सु० — किमतो यद्येवं दोषाः संसारहेतवो मुक्तिपरिपन्थिन इत्यत आह** अत इति ।

**अनु०** — अतो विष्णौ परा भक्तिस्तद्भक्तेषु रमादिषु ॥
तारतम्येन कर्तव्या पुरुषार्थमभीप्सता ॥

**इदं च सर्वयमोपलक्षणम् । पुरुषार्थं मोक्षम् । अयमत्र सङ्क्षेपः । विष्णुभक्त्यभावाद्या विषयसंसर्गाद्याश्च दोषा मुमुक्षादिमता त्याज्याः । मोक्षादिविरोधित्वात् । यद्यद्विरोधि तत्त-दर्थिना त्याज्यं दृष्टम् । यथाऽऽरोग्यविरोध्यपथ्यं तदर्थिना । तथा च विष्णुभक्त्यादिकं कार्यमिति सिध्यति । भावानुष्ठानेन विनाऽभावपरित्यागायोगादिति ।**

**शे०** — ननु विष्णुभक्तिवद्विषयसंसर्गवर्जनादिरूपयमस्यापि सत्त्वात्तत्साधारण्येन विष्णुभक्त्या-दिकं कार्यमित्युपसंहारे कर्तव्ये कथं तदेकदेशभक्तेरेव कर्तव्यतोपसंह्रियत इत्यतोऽत्र भक्तिशब्दस्य लक्षणया सर्वयमपरत्वेन शक्त्या तदेकदेशभक्तिमात्रपरत्वाभावान्नोपसंहारानुपपत्तिरिति भावेनाह **इदं चेति** । दोषा अनादिसम्बद्धा इत्यादिग्रन्थस्य यमानामवश्यानुष्ठेयत्वे युक्त्यभिधायकत्वमुक्तम् । तत्र काऽनेन युक्तिरुक्तेत्यपेक्षायामाह **अयमत्रेति** । विष्णुभक्त्यभावादीनां त्याज्यत्वसिद्धावपि न प्रकृतप्रमेय-सिद्धिरित्यत आह **तथा चेति** । दोषाणां त्याज्यत्वसिध्या भक्त्यादेः कथं कर्तव्यतासिद्धिरित्यतस्तां विना तदनुपपत्तेरित्याह **भावेति** । इति शब्दस्येत्ययमिति पूर्वेण सम्बन्धः ।

**प० — सर्वयमेति** । विषयसंसर्गाभावादेरुपलक्षणमित्यर्थः ।

---

**सु० — विष्णौ पराऽन्यत्र तारतम्येनेत्युक्तं विवृणोति** स्वादर इति ।

**अनु०** — स्वादरः सर्वजन्तूनां संसिद्धो हि स्वभावतः ॥
ततोऽधिकः स्वोत्तमेषु तदाधिक्यानुसारतः ॥
कर्तव्यो वासुदेवान्तं सर्वथा शुभमिच्छता ॥

**आदरः स्नेहः । स्वभावतः संसिद्ध इत्युपकारादिकरणमनपेक्ष्यानादिसिद्ध इत्यर्थः । अन्यथा सुखिनैव मया भाव्यं न जातु दुःखिनेत्याशीर्न स्यादिति हिशब्दार्थः । ततः स्वविष-यादादरादधिक आदरः साक्षात्स्वोत्तमेषु कर्तव्यः । एवं तेषां तेषामाधिक्यानुसारतोऽधिकः कर्तव्यो वासुदेवान्तम् । वासुदेवे तु निरतिशयः । शुभं ध्यानादिकम् । एतच्चोपपादयिष्यते ।**

**शे० — अधिक आदर इति** । यद्यप्यादरपदं स्वपदेन समस्तत्वान्नात्रान्वेतुमर्हति तथाऽपि बुद्ध्या विवेकेनायमन्वयोऽभिहित इति द्रष्टव्यम् । तदाधिक्यानुसारत इत्युत्तरग्रन्थानुरोधादाह **साक्षा-त्स्वोत्तमेष्विति** । किमियमुत्तरोत्तराधिकस्नेहपरम्परा निरवधिकेत्यत उक्तं मूले **वासुदेवान्तमिति** ।

वासुदेवपर्यन्तमेवेयं परम्पराऽभिमतेत्यभिप्रेत्य तदनुवदति **वासुदेवान्तमिति** । तर्हि वासुदेवे कीदृशः स्नेहः कार्य इत्यतस्तत्पर्यन्तत्वोक्त्या सूचितमर्थमाह **वासुदेवे त्विति** । नन्वत्र वासुदेवान्तमित्येवोच्यते न तु तत्र स्नेहस्य निरतिशयत्वमपि तत्कथं निरतिशय इति व्याख्यायते इत्यत एतद्विवरणरूपे 'भक्तिश्चैव हरावेव मुख्याऽन्यत्र यथाक्रममि'त्युत्तरग्रन्थे भगवति भक्तेर्मुख्यत्वस्य स्पष्टमुक्तत्वादत्र तथा व्याख्यानं न दोषायेत्याह **एतच्चेति** ।

**स०— एतच्चोपपादयिष्यत इति** । भक्तिश्चैव हरावेव मुख्याऽन्यत्र यथाक्रममित्यादिनोपपादयिष्यत इत्यर्थः ।

**प०— आदरः स्नेह इति** । स्नेहस्यैव भक्तित्वादुक्तविवरणमेतदिति भावः । विष्णौ परा भक्तिरित्युक्तत्वात् तद्विवरणलाभायाह **वासुदेवे तु निरतिशय इति** । ध्यानादिकमित्यादिपदेनापरोक्षमोक्षयोर्ग्रहः । उक्तरूपादरः शुभार्थिना कार्य इति कुत इत्यत **आह एतच्चोपपादयिष्यत इति** । एतत्पादान्ते भक्तिश्चैव हरावेवेत्यत्रेति भावः । यद्वा उक्तरूपा भक्तिरेव ध्यानादिशुभसाधनं न द्वेषादिः । परवादिभिरुक्तसाधना(नीवेत्य)नि वेत्यनुपदमेव महाप्रबंधेनोपपादयिष्यत इत्यर्थः ।

**या०—** ननु मूले वासुदेवान्तमित्येवोक्तत्वाद्वासुदेवे निरतिशय इत्येतत्कथं लभ्यत इत्यत **आह एतच्चोपपादयिष्यत इति** । 'भक्तिश्चैव हरावेव मुख्याऽन्यत्र यथाक्रममि'त्यत्रेति शेषः । यद्वा ननु शुभमित्येकवचनादेकं ध्यानं साध्यतयाऽत्र प्रतीयतेऽतः कथं ध्यानादिकमिति व्याख्यानमित्यत **आह एतच्चेति** । उपसंहारानुसारेण त्रितयमपि साध्यतयाऽत्र विवक्षितमित्यनुपदमेवोपपादयिष्यत इत्यर्थः ।

**सु०— सकृदनुष्ठेयासकृदनुष्ठेयसदानुष्ठेयभेदादङ्गमनेकविधम्** । **अयं तु कथमित्यपेक्षायामाह नेति** ।

**अनु०—** न कदाचित्त्यजेत्तं च क्रमेणैनं विवर्धयेत् ।।

**तं विष्ण्वाद्यादरम् । न केवलं न त्यजेत्किन्तु कालक्रमेणैनं विवर्धयेच्च ।। स्वसमेषु स्वतोऽधमेषु च कथमित्यपेक्षायामाह** समेष्विति ।

समेषु स्वात्मवत्स्नेहः सत्स्वन्यत्र ततो दया ।
कार्यैवमापरोक्ष्येण दृश्यते क्षिप्रमीश्वरः ।

**कर्तव्य इति वर्तते । तत उत्तमसमेभ्योऽन्यत्राधमेषु सत्सु दया कार्या । यदि सत्स्वित्येवोच्येत तदोत्तमसमेष्वपि प्रसङ्गः । ततोऽन्यत्रेत्येवोक्तावसत्स्वपि प्रसक्तिः । ततो वर्गत्रयादन्यत्राज्ञेष्वोदासीन्यम् । विपरीतेषु वैपरीत्यं चेत्यपि योज्यम् । एवं क्रियमाणे यमानामुपास-**

**नोत्पत्तौ ज्ञानोत्पादे मोक्षातिशये चाङ्गत्वमिति सूचनाय पुरुषार्थमभीप्सता शुभमिच्छता दृश्यते क्षिप्रमीश्वर इति विचित्रोक्तिः । अत एवोपसंहारे त्रयस्यापि सङ्कीर्तनम् ।**

**शे० — सकृदित्यादि** । सकृदनुष्ठेयं प्रयाजादि । असकृदनुष्ठेयमवघातादि । सदाऽनुष्ठेयं शिखाबन्धनादि 'विशिखो व्युपवीतश्चे'त्यादिना कर्माङ्गतया बोधितस्य सदा बद्धशिखेन चेत्यनेन सदाऽनुष्ठेयत्वोक्तेरिति भावः ॥ **प्रसङ्ग इति** । ततश्च ततोऽधिकः स्वोत्तमेष्विति प्रागुक्तव्याघात इति भावः ॥ **इत्यपि योज्यमिति** । तेन तेषु कथमित्यपेक्षाया अपूरणान्न भाष्ये न्यूनत्वमिति भावः । एवं क्रियमाणे इत्येव मूलपाठः । तत्र कार्यैवमिति मूलस्थैवंशब्दानुवादेन ततःपरं क्रियमाणे इत्यध्याहारो दर्शितः । समेष्वित्याद्युक्तप्रकारेण स्नेहे क्रियमाण इति च तदर्थः । विचित्रोक्तेः प्रयोजनमाह **यमानामिति** । अत्रैवोपष्टम्भकमाह **अत एवेति** । यमानामुपासनादित्रितयाङ्गत्वादेवेत्यर्थः ॥ **उपसंहार इति** । 'सम्प्रोक्तगुणसंयुतः । उपासीत हरिं दृष्ट्वा मुक्तिस्तेनैव जायते' इत्युपसंहारे उपासनापरोक्षज्ञानमोक्षरूपस्य त्रयस्यापि सङ्कीर्तनमित्यर्थः ।

**स० —** सकृदनुष्ठेयं प्रयोजादि । असकृदनुष्ठेयं अवदानादि । सदानुष्ठेयं शिखाबन्धादि । एवं क्रियमाणे यमानामित्येव मूलपाठः । एवं क्रियमाणे यमादीनामिति पाठान्तरकल्पनेन व्याख्यानं तु न बुध्यामहे । कार्यैवमित्यत्र एवशब्दव्याख्यानं क्रियमाणे इति विचित्रोक्तेः प्रयोजनमाह **यमादीनामिति** ॥ **उपसंहारं त्रयस्यापीति** । 'तेनः संप्रोक्तगुणसंयुतः उपासीत हरिं दृष्ट्वा मुक्तिस्तेनैव जायते' इत्युपसंहारत्रये उपासनापरोक्षज्ञानमोक्षरूपत्रयस्यापि सङ्कीर्तन इत्यर्थः ।

**प० — सकृदिति** । यज्ञकर्मणि हि व्रीहीन्प्रोक्षतीत्युक्त प्रोक्षणादिकमदृष्टजनकं अंगं सकृदनुष्ठेयं । दृष्टफलमरणिमथनावघातादिकं यावत्फलोदयमसकृदनुष्ठेयम् । वाचं यच्छतीत्युक्तवाङ्नियमनमुष्टीकरणादिकं यावत्कर्मसमाप्त्यनुष्ठेयमित्यनेकविधमित्यर्थः ॥ ततोऽन्यत्रेतिपदद्वयस्यार्थान्तरे ॥ **ततो वर्गत्रयादिति** । उत्तमसमाधमरूपवर्गत्रयादित्यर्थः । विपरीतेषु मिथ्याज्ञानिषु विष्ण्वादिद्वेषिषु वैपरीत्यं प्रतीपाचरणम् ॥ **विचित्रोक्तिरिति** । मोक्षध्यानापरोक्षरूपविचित्रफलोक्तिः । स्थानभेदेन कृतेत्यर्थः । ज्ञानेनैव मोक्षसिद्धेः किमनेनेत्युक्तम् । मोक्षातिशये चेति । ज्ञानस्य संपूर्णमोक्षजननाय फलोपकार्यंगमेतत्सर्वमित्यर्थः ॥ **अत एवेति** । 'त्रितयांगत्वादेव तेन संप्रोक्तगुणसंयुतः । उपासीते'त्यादिवाक्ये उपासादृष्टिमुक्तिपदैः त्रितयसंकीर्तनमित्यर्थः ।

**धा० — सकृदनुष्ठेयं** प्रयाजादि । **असकृदनुष्ठेयम्** अवघातादि । **सदाऽनुष्ठेयं** हरिस्मरणादि । **विचित्रोक्तिरिति** । तथा च सर्वत्र त्रयमपि साध्यतया व्यास्येयमिति भावः ।

**श्री० — वर्गत्रयादिति** । उत्तमसमसज्जनरूपाधमरूपवर्गत्रयादन्यत्रेत्यर्थः ।

**सु०** — **दोषपरित्यागेऽप्यस्ति विशेषः । रागादयो हि संसारमातन्वते । विपरीतज्ञानादयस्तु नित्यं नरकं प्रापयन्तीत्यतो रागादितोऽतिशयेन त्याज्या इत्याशयवांस्तत्र श्रुतिमाह** तदिति ।

**अनु०** — तत्तमोऽन्धं व्रजेद्विष्णुसमत्वं योऽनुपश्यति ॥
रमाब्रह्मशिवादीनामपि मुक्तौ कथञ्चन ॥
किमुताधिक्यदृष्टेस्तद्गुणाभावमतेरपि ॥
दोषवेत्तुरभेदस्य द्रष्टुर्द्रष्टुस्तथोभयोः ॥
इत्याह सच्छ्रुतिः

**तत्प्रसिद्धम् । न केवलं संसारे किन्तु मुक्तावपि कथञ्चन केनापि धर्मेण समत्वम् । रमाब्रह्मशिवादीनां विष्णोराधिक्यदृष्टेः पुरुषस्यान्धतमसावाप्तिर्भवतीति किमुतेति योज्यम् । विष्णोर्गुणाभावमतेर्विष्णोर्जीवैर्जडैश्चाभेदस्य द्रष्टुः । उभयोर्भेदाभेदयोः ।**

**शे०** — **एकेनापि धर्मेणेति** । निरवधिकेनानन्याधीनेन वैकेन धर्मेणेत्यर्थः ।

**प०** — **केनापि धर्मेणेति** । परमं साम्यमुपैति मम साधर्म्यमागता इत्यादौ साम्योक्तिः बुद्ध्यर्थः पादवदित्युक्तन्यायेन बुद्ध्यारोहार्था न वस्तुतः । अन्यथा परमत इति सूत्रविरोध इति भावः ।

**या०** — **एकेनापि धर्मेणेति** । अन्यानधीनेनैकेनापीत्यर्थः । अतः समना चेति सूत्रे देशतः कालतश्च व्याप्त्या रमाया भगवत्समत्वं, परमं साम्यमुपैतीति श्रुतौ मुक्तानां ब्रह्मादीनामपि परानन्दादिना भगवत्समत्वं कथितं कथमुपपद्यत इति शङ्काऽनवकाशः ।

**सु०** — **स्वपक्षसाधनमुपसंहरति** तेनेति ।

**अनु०** — तेन सम्प्रोक्तगुणसंयुतः ॥
उपासीत हरिं दृष्ट्वा मुक्तिस्तेनैव जायते ॥

**प्राक् सम्प्रोक्तैर्विषयसंसर्गवर्जनादिभिर्गुणैः संयुतः । यद्वा योगशास्त्रे सम्प्रोक्तैर्यमादिभिर्गुणैरङ्गैः संयुतः । तेनैव तथाविधेनैवोपासनेन हरिं दृष्ट्वा कर्माणि क्षपयतो मुक्तिर्जायते ।**

**शे०** — **तेनेति** उपासीतेत्युक्तोपासनमात्रपरामर्शः । तन्मात्रस्य दर्शनसाधनतायाः पूर्वमसमर्थितत्वात्किन्तु यमाद्यङ्गयुक्तस्यैवोपासनस्येति भावेन व्याचष्टे **तथाविधेनैवोपासनेनेति** । **कर्माणि क्षपयत इति** । तथा च दर्शनक्षपणयोरेककर्तृकत्वेन दृष्ट्वेति समानकर्तृकत्वार्थकक्त्वाप्रत्ययोपपत्तिरिति भावः ।

**प०** — तेनेति तच्छब्देन न दृष्टिपदोक्तज्ञानमात्रपरामर्शः किं तु प्रागुक्तसर्वाङ्गोपेतस्येत्याह **तथाविधेनैवेति** । ननु असमानकर्तृकत्वाद्दृष्ट्वा मुक्तिर्जायत इति कथमित्यतो मध्ये शेषमाह **कर्माणि क्षपयत इति** । भोगेन प्रारब्धानि तदन्यानि ज्ञानाग्निना निरस्यत इत्यर्थः । भोगे न त्वितरे क्षयित्वाऽथ संपत्स्यत इत्युक्तेरिति भावः ।

**या०**— ननु येनोपासनेन हरिदर्शनं जातं न तेनैव मुक्तिस्तस्य तदैव नष्टत्वादत **आह तथाविधेनेति** ।

**श्री०**— ननु दर्शने पुरुषस्य कर्तृत्वेन जायत इत्युक्तजननरूपक्रियायां मुक्तेः कर्तृत्वेन समानकर्तृकत्वाभावात्क्त्वाप्रत्ययानुपपत्तिरित्यत उक्तं **कर्माणि क्षपयत इति** । तथा च दर्शनकर्मक्षपणक्रिययोरेकपुरुषकर्तृकत्वाद्युक्तः क्त्वाप्रत्यय इत्यर्थः ।

**सु० — इदानीं यत्पूर्वपक्षिणोक्तं भगवद्द्वेषिणामपि पुराणे मुक्तिः कथ्यत इति तन्निराकरोति** द्वेषादिति ।

**अनु०** — द्वेषाद्यन्मुक्तिकथनं श्रुतिवाक्यविरोधि तत् ।

**तस्मादन्यथा व्याख्यातव्यमिति भावः । तत्प्रकारं च वक्ष्यति । किं तच्छ्रुतिवाक्यमित्यतो 'मा नस्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुरि'त्येतदर्थतः पठति** रिपव इति ।

> रिपवो ये तु रामस्य विमुखत्वान्निरामिणः ॥
> अभिद्रोहपदे नित्यमन्धे तमसि ते स्थिताः ॥
> हरिद्विषस्तमो यान्ति ये चैव तद्भेदिनः ॥
> तन्निर्गुणत्ववेत्तारस्तस्य दोषविदोऽपि च ॥

**रामो रमणं तदस्यास्तीति रामी भगवान्रामस्तस्मान्निष्क्रान्तास्तस्य विमुखा निरामिण इत्यर्थः । अत एव तस्य रिपवः । अभिद्रोहपद इत्यस्यैव व्याख्यानमन्धेतमसीति । नित्यं स्थिता भवन्तीति शेषोक्तिः । अनेन ये निरामिणो रिपवोऽन्नेषु भोगेषु जागृधुरभिकाङ्क्षावन्तस्तेऽभिद्रुहोऽभितो द्रोहस्य पदे स्थाने स्थातुं योग्या यतोऽतस्तेभ्यः स्तेनेभ्योऽस्मान्मावोचः । न ह्यस्मच्छ्रवणवान्दुःखमर्हतीति योजना सूचिता भवति । इदं च वायुं प्रति विद्यादेवताया वचनम् । तद्भेदिनस्तस्य हरेर्जीवाद्यभेदवादिनः ।**

शे० — वक्ष्यतीति । 'स्मर्तव्यो भगवान्नित्यमर्थेनैव हि कश्चित् । द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवदि'त्यादिनेति शेषः ॥ रामो रमणमिति । अनेन भावे घञित्युक्तं भवति जागृधुरिति । गृधु अभिकांक्षायामित्यस्य लिटि प्रथमपुरुषबहुवचनम् । अभ्यासदीर्घस्तु छान्दस इति ज्ञेयम् । नन्वेतद्यस्य कस्यापि वाक्यं तथा च कथं तच्छ्रवणमात्रेण दुःखाभावः स्यात्तच्छ्रवणेऽपि दुःखसंभवादित्यत आह इदं चेति । ननु विद्यादेवतानां यं कञ्चन प्रतीदं प्रार्थनं तथा च तस्य वक्तृत्वप्रसक्तेरेवाभावात्तदभावप्रार्थनानुपपत्तेरित्यत आह वायुं प्रतीति । न ह्यस्मच्छ्रवणवान्दुःखमनुभवतीति भावकथनमुपपन्नमिति ध्येयम् ।

स० — तत्प्रकारं च वक्ष्यतीति ॥ जागृधुरिति । गृधु अभिकांक्षायामित्यस्य लिटि बहुवचनम् । अत आदेरित्यस्य प्राप्त्यभावेनाभ्यासस्य दीर्घत्वं छान्दसं द्रष्टव्यम् ।

प० — पूर्वपक्षिणेति । विषयेषु च संसर्गादित्येतदवतारिकायामुक्तमित्यर्थः । पुराणे सप्तमस्कंधादिस्थवाक्ये प्रागुदाहृते मुक्तिः कथ्यत इत्यर्थः ॥ वक्ष्यतीति । उत्तरपादे 'स्मर्तव्यो भगवान्नित्यमित्यर्थेनैव हि कश्चित् । द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवदि'त्यादाविति भावः ॥ रामो रमणमिति । भावे घञंत इति भावः । निरादयः क्रांताद्यर्थे पंचम्येति स्मरणादाह तस्मान्निष्क्रांता इति । स्तेनेभ्यः तस्करेभ्य इत्यर्थः । अस्मानिति वक्त्रादेरश्रवणादाह वायुं प्रति विद्यादेवताया इति । व्यक्तमेतन्मंत्रार्थवर्णनमैतरेयभाष्ये द्वितीयप्रपट्ठके सप्तमेऽध्याये ।

---

या० — वक्ष्यतीति । 'स्मर्तव्यो भगवान्नित्यमित्यर्थेनैव हि कश्चित् । द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवदित्यत्रेति शेषः ॥ जागृधुरिति । गृधु आकांक्षायामित्यस्य लिटि बहुवचनमभ्यासस्य दीर्घश्छान्दसः ।

श्री० — द्रोहो दुःखम् ॥ ३–३–३१ ॥

सु० — कथमेतच्छ्रुतिविरोध इत्यत आह इत्यादीति ।

अनु० — इत्यादिश्रुतिसन्दर्भाद्द्वेषिणस्तम ईयते ।

स्मृतिविरुद्धं च द्वेषिणां मोक्षकथनमित्याशयवांस्ताः पठति हिरण्यकशिपुश्चेति ।

हिरण्यकशिपुश्चापि भगवन्निन्दया तमः । विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः ॥
यदनिन्दत्पिता मह्यं त्वद्भक्ते मयि चाघवान् । तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात् ॥
निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा । ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥
'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परम्भावमजानन्तो मम भूतमहेश्वरम् ॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' ॥
'मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः । तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' । यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं प्रभुम् ॥
कथं स न भवेद्द्वेष्य आलोकान्तस्य कस्यचित । यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं प्रभुम् ॥
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।

**विविक्षुर्वेशनसंभावनाविषयः । आशङ्कायामचेतनेषूपसंख्यानमिति वचनात् । श्वा मुमूर्षतीति यथा । अत्यगात्तमः । मम पिता मह्यं मन्निमित्तं त्वामनिन्दत् । मयि मद्विषये चाघवानपराधवान् । तस्माद्विष्णुवैष्णवनिन्दापराधजादघान्नित्यनिरयात् । निन्दादिकं च द्वेषमूलमिति प्रसिद्धमेव । नरहरिं प्रति प्रह्लादस्य वाक्यमिदम् । ततः स्थानात । निन्दां शृण्वतो यदाऽधःपातस्तदा निन्दकस्य किमु ॥ मानुषीं मनुष्यसदृशीम् ॥ ये मामवजानन्ति ते मोघाशादिमन्तो भवन्ति । तेषां सुखलेशोऽपि न भवति ॥ आत्मपरदेहेषु प्रेरकत्वेन स्थितम् ॥ संसरन्त्यत्रेति संसारा देहाः । तस्य विवरणमासुरीष्वेवेत्यादि ॥ लोको जनस्तस्यान्तश्चण्डालादिस्तत्पर्यन्तस्य ।**

**कथमेतत्स्मृतिविरोध इत्यत आह** इत्यादीति ।

इत्यादिवाक्यसन्दोहाद् द्वेषिणस्तम एव तु ॥ ३-३-३१ ॥

**ज्ञायत इति शेषः । तमोऽपि निरुत्थानमिति तुशब्दः ।**
**अतो यमाद्यङ्गमवश्यानुष्ठेयमिति सिद्धम् ॥ ३-२-३१ ॥**

शे०— ननु तमःप्रवेशेच्छाया असंभवात्कथं विविक्षुरित्युच्यत इत्यत आह **विविक्षुरिति ।** नन्विच्छायामेव सन्विधानात् (धातोः समानकर्तृकादिच्छायां वा कर्मणः) कथं तमो वेक्ष्यामीतीच्छाभावेऽपि वेक्ष्यतीति संभावनाविषयत्वमात्रेण सन्स्यादित्यतः कूलं पिपतिषतीत्यादौ पतिष्यामीति तस्येच्छाभावेऽपि पतिष्यतीति संभावनाविषयत्वमात्रेण तत्र सनो दर्शनादत्राप्युक्तविधेच्छाभावेऽप्युक्तविधसंभावनाविषयत्वमात्रेण सन्प्रत्ययो नानुपपन्न इति भावेन संभावनायां सनो विधायकमुपसंख्यानं पठति **आशङ्कायामिति ।** आशङ्का संभावना प्रयोक्तृधर्मः तद्विशिष्टक्रियावचनाद्धातोः स्वार्थे सन्प्रत्ययो भवतीत्युपसंख्यानार्थः । ननु कूलस्याचेतनत्वेन तत्राचेतनगर्भितोपसंख्यानप्रवृत्तिसंभवात्तत्र संभावनायामुपसंख्यानेन सन्प्रत्ययसंभवेऽपि हिरण्यकशिपोश्चेतनत्वेन तत्राचेतनगर्भितोपसंख्यानाप्रवृत्त्या कथं तेन तत्र

संभावनायां सन्प्रत्ययसिद्धिरित्यतस्तथा सति श्वा मुमूर्षतीत्यत्रापि शुनश्चेतनत्वेन तत्रोक्तोपसंख्यानाप्रवृत्त्या तेन तत्र सनः सिद्ध्यसंभवेन तदनुदाहरणत्वप्रसङ्गात् । यदि च शुनश्चेतनत्वेऽपि जीवनस्यातिप्रियत्वा-द्व्याध्याद्यभिभवे मर्तुमिच्छाया असंभवेनेच्छायां सनोऽनुपपत्त्या मरिष्यति श्वेति संभावनाविषयतया संभावनायां सन्प्रत्ययसिद्धिसंभवात्तत्रोदाहरणत्वमिति मन्यसे हन्त तर्हि हिरण्यकशिपोरपि चेतनत्वेऽपि तमो वेक्ष्यामीतीच्छाया असंभवेनेच्छायां सनोऽनुपपत्त्योक्तसंभावनाविषयत्वमात्रेणोपसंख्यानात्सन्निसिद्धि-र्भविष्यतीति न प्रकृतेऽनुपपत्तिः । यदि चाचेतनग्रहणेन नार्थ इति वदता भाष्यकारेणाचेतनभाग-स्योपसंख्यानान्तर्भावस्य खण्डनेनोपसंख्यानस्य तदगर्भितत्वाच्चेतनेऽपि शुनि प्रवृत्तिसंभवात्तेन संभावनायां सन्निसिद्धिरिति मन्यसे हन्त तर्हि प्रकृतोदाहरणेऽप्यचेतनागर्भितोपसंख्यानप्रवृत्त्युपपत्त्या तेन संभावनायां सनः सिद्धिसंभवान्नात्रानुपपत्तिरिति भावेन प्रतिबन्द्या सर्वानुपपत्तिपरिहारं सूचयितुमनुरूपं दृष्टान्तमुपादत्ते **श्वा मुमूर्षति यथेति** । अन्यथा कूलं पिपतिषतीत्यस्य संभावनायां सन्युदाहरणतया परेण दर्शितत्वा-त्प्राथमिकत्वाच्च तस्यैव दृष्टान्ततयैवोपदर्शनीयत्वे तदनुपदर्श्य द्वितीयोदाहरणस्य दृष्टान्ततया टीकाकारी-योपदर्शनस्याश्लिष्टत्वप्रसङ्गादिति ज्ञेयम् ॥ **अत्यगात्तम इति** ॥ अनेन तम इत्येतदुभयत्र संबध्यत इत्युक्तं भवति **मह्यं मन्निमित्तमिति** । यद्यपि चतुर्थ्यर्थे बहुलं छन्दसीति परस्परार्थे षष्ठी चतुर्थ्यो इति छन्दसि विधानादस्यापि छन्दस्त्वात् षष्ठ्यर्थ एव मह्यमिति चतुर्थी व्याख्यातुं युक्ता तत एव च न ममेत्यध्याहारोऽप्यत्र कर्तव्यो भविष्यति । सम्मतश्चायं प्रकारष्टीकाकाराणाम् । मह्यं ममेति गीताभाष्यटीकायां स्वयमेव व्याख्यातत्वात् । ततश्चेह टीकायां ममेत्यध्याहृत्य मह्यमित्यस्य चतुर्थ्यन्त-त्वाश्रयणमनर्थकमित्याभाति । तथाऽप्येवं सति पितुर्भगवन्निन्दाकरणे निमित्तानुक्तिप्रसङ्गभयेन छान्दस-त्वाश्रयणप्रसङ्गेन च तथा न व्याख्यातमिह टीकायाम् । गीताभाष्यटीकायां तु तदुभयं सोढ्वा तथा व्याख्यानं कृतमित्यवधातव्यम् । त्वद्भक्ते मयीति विषयसप्तमीत्याशयेनाह **मद्विषय इति** । ननु यदनिन्ददिति यस्य कस्यचिच्च कञ्चन प्रति वाक्यं तथा च कथं विष्णुर्वैष्णवापराधजादघादिति व्याख्यानमित्यत आह **नरहरिं प्रतीति** । तत इत्यनेन भगवन्निन्दातच्छ्रवणयोः परामर्शानुपपत्तेस्तत्परा-मर्ष्टव्यं दर्शयति **ततः स्थानादिति** ।

ये मूढा अवजानन्तो मोघाशादिमन्तश्चेति प्रकृतसङ्गत्यलाभात्तल्लाभाय वाक्ययोजनामाह **य इति** । मोघाशादिमन्तो भवन्तीत्यस्माल्लब्धमर्थं दर्शयति **सुखलेशोऽपीति** । अन्यथा तत्साधकाऽऽशा-देर्मोघत्वानुपपत्तिरिति भावः । संसरणस्याधिकरणत्वासंभवेन संसारशब्दस्य भावव्युत्पन्नत्वानुपपत्तेरधि-करणव्युत्पन्नत्वमाह **संसरन्त्यत्रेति** । लोकान्तं मर्यादीकृत्येत्यालोकान्तमिति मर्यादार्थकस्याङो लोकान्त-शब्देनाव्ययीभावसमासाश्रयणे आलोकान्तस्येति षष्ठीश्रवणानुपपत्तिभयादन्यथासमासमाह **लोक इति** ।

एतच्च तात्पर्यकथनमात्रम् । विग्रहस्तु आ तात्पर्यतो लोकान्त आलोकान्त इति । प्रगत आचार्यः प्राचार्य इत्यादिवत्प्रादिसमास एवेत्यवधातव्यम् । गीताभाष्यटीकायां तु आ सम्यक् लोकान्तश्चण्डाला-दिरिति व्याख्यातम् । तत्राप्युक्तानुपपत्तिपरिहाराय आ सम्यक् लोकान्त आलोकान्त इति प्रादिसमास एवोक्त इति द्रष्टव्यम् ॥ ३-२-३१ ॥

स० — ननु तमःप्रवेशेच्छासंभवात्कथं विविक्षुरिति अत आह **विविक्षुरिति** । नन्विच्छा-यामेव सन्विधानात् कथं विविक्षुरित्यस्य संभावनाविषय इति व्याख्यानं तत्राह **आशङ्कायामचेतने-षूपसंख्यानमिति** । आशङ्का संभावना प्रयोक्तृधर्मः । तद्विशिष्टक्रियावचनात् स्वार्थे सन्प्रत्ययः । कूलं पिपतिषतीत्यत्र कूलस्याचेतनत्वेनेच्छाऽसंभवः । श्वा मुमूर्षतीत्यत्र शुनः चेतनत्वेपि जीवनप्रियत्वात् व्याध्याद्यभिभवे तिरश्चां मर्तुमिच्छा न संभवतीति शङ्कते पतिष्यति कूलं, मरिष्यति श्वेत्यर्थः । तथाचा-चेतनत्वं नाम सन्नन्तप्रकृत्यर्थेच्छाराहित्यमात्रं चेतनाचेतनसाधारणं विवक्षितमिति संप्रदायविदः । ननु द्वेषस्य नरकसाधनत्वे निन्दायास्तत्साधनत्वप्रतिपादकप्रमाणोदाहरणमयुक्तमित्यत्राह **निन्दादिकमिति** ।

प० — इच्छार्थकसनोऽत्र तमःप्रवेशविषयेऽनुपपत्तेराह **विविक्षुर्वेशनसंभावनाविषय इति** ॥ **आशंकायामिति** । आशंका हि संभावना तद्विषयीभूतक्रियावचनात्स्वार्थे सन्प्रत्ययो भवति । अचेत-नेषु इच्छाहीनेष्वित्यर्थः ॥ **श्वा मुमूर्षतीति** । मरिष्यतीति शंकाविषयो जायत इत्यर्थः । शुनश्चेतनत्वेपि मर्तुमिच्छाहीनत्वेनाचेतनत्वं ज्ञेयम् । नन्वत्र स्मृतौ द्वेषिणस्तम इति न प्रतीयत इत्यत आह **निंदादिक-मिति** । अत्रश्रुतोऽस्मदादिपदार्थः कः इत्यत आह **नरहरिं प्रतीति** । सप्तमस्कंधे व्यक्तमेतत् ॥ **स्थानादिति** । निंदास्थलादित्यर्थः ॥ ३-३-३१ ॥

**या०** - तमः प्रवेशनेच्छाया असम्भवादाह **वेशनसम्भावनेति** । नन्विच्छायामेव सन्विधाना-त्कथमिदं व्याख्यानमित्यत आह **आशङ्कायामिति** । आशङ्का संभावना प्रयोक्तृधर्मः । तद्विषयीभूतक्रिया-वचनात्स्वार्थे सन्प्रत्ययः । अचेतनेष्विच्छारहितेषु ॥ **श्वा मुमूर्षतीति यथेति** । श्वा मरिष्यतीति शङ्केत्यर्थः । अत्र शुनश्चेतनत्वेऽपि जीवितस्य प्रियत्वाद्व्याध्याद्यभिभवेऽपि तिर्यक्त्वान्मर्तुमिच्छा न सम्भवतीत्यचेतनत्व-मिति ध्येयम् । **भूतमहेश्वरमिति मूलस्य** भूतं महदीश्वरं चेत्यर्थः । तत्र भूतं सर्वदा विद्यमानमिति कालानन्त्यमाचष्टे । महदिति देशानन्त्यम् । ईश्वरमिति गुणानन्त्यम् । भावं याथार्थ्यमिति व्याख्या-नापेक्षया नपुंसकम् । ये मूढा अजानन्तो मोघाशादिमन्तश्च ते मामवजानन्तीति योजनायां न प्रकृत-सङ्गतिरत आह **ये मामवजानन्तीति** । मोघाशादिमन्तो भवन्तीत्युक्त्या लब्धमर्थं दर्शयति **सुख-लेशोऽपीति** । अन्यथा तत्साधकाशादेर्मोघत्वानुपपत्तेरिति भावः ॥ **प्रेरकत्वेनेति** । अनेनैवमुपकार-

कतया स्थितमपि मां प्रद्विषन्तीति लाभेन तेषामतीव कृतघ्नतोक्ता भवतीति ज्ञातव्यम् । भावव्युत्पत्त्या संसारशब्दवाच्यस्य संसरणस्याधिकरणत्वासम्भवादाह **संसरन्त्यत्रेति** ॥ **निरुत्थानमिति** । यत्रान्धकूपे मज्जितस्य श्वासादिमोक्षार्थमपि नोत्थानमित्यर्थः । तादृशं चाधरंतम एव । यथोक्तम् । 'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरमिति' । तेन तुशब्दार्थभूतविशेषरूपतासिद्धिरिति ध्येयम् ॥ ३-३-३१ ॥

**च०— विविक्षुरिति** । विशनविषयकेण वत्वबाधेन नायं धातोः कर्मण इतीच्छार्थेऽनुशिष्टः संनन्त इति विधान्तरेण सन्नन्ततां घटयति **आशङ्क्यामिति** । प्रयोक्तृवृत्तिसंभावनाविषयीभूतत्वेच्छाराहित्यरूपाचैतन्यविशेषितकर्तृकत्वोभयेपि तत्क्रियावगमकधातुप्रकृतिको धात्वर्थानुवादकः सन्प्रत्यय इत्यर्थः । **यथेति** । रोगाद्यभिभूततिर्यग्भूतशुनश्चेतनत्वेपि जीवितस्य प्रियतया मृतिगोचरेच्छाराहित्यमवसेयम् । अचेतनग्रहणेनार्थ इति भाषमाणो भाष्यकारोऽचेतनग्रहणस्योपसंख्यानान्तर्भावं प्रत्याचख्याविति शुनो हिरण्यकशिपोश्च चेतनत्वेपि प्रकृतवार्तिकं प्रववृत्त इत्यपि समाहितम् । अधिकरणसाधनघञन्तताममिप्रेत्य व्याकुरुते **संसरन्त्यत्रेति** ।

॥ इति अनुबन्धाद्यधिकरणम् ॥



## ॥ अथ विद्याधिकरणम् ॥

सु० — ॐ विद्यैव तु निर्धारणात् ॐ ॥ **यद्यपीदमधिकरणमनुबन्धादिभ्य इत्यतः पूर्वं तथाऽप्युपासनस्वरूपावगमे सत्येव तत्सार्थक्यसमर्थनस्यावसरो नान्यथेति व्युत्क्रमेण व्याख्यातम् । तथा हि । न भगवदुपासनं कर्तव्यं वैयर्थ्यात् । न च साक्षात्कारार्थम् । तस्यापि व्यर्थत्वात् । न च मोक्षप्रयोजनोऽसाविति वाच्यम् । चार्वाकदिशा मोक्षस्यैवाभावात् । भावे वा जैनादिमतानुसारेण साधनान्तरसाध्यत्वादिति प्राप्ते मोक्षसद्भावं तस्यापि भगवद्दर्शनसाध्यत्वं च साधयितुमिदमारभ्यते । यद्यपि समयपादे चार्वाकादिमतानि निराकृतानि । तथाऽपि मोक्षतत्साधनविषयदूषणविशेषव्युत्पादनार्थोऽयं प्रयत्नः । तत्र चार्वाकमतं तावदनुवदति नैवेति ।**

**अनु०** — ॐ **विद्यैव तु निर्धारणात्** ॐ ॥

नैव मोक्ष इति प्राहुर्लोकायतमते स्थिताः ॥

**एवशब्दः स्वरूपनिषेधद्योतनार्थः । अन्यथा पुरुषविशेषादिसम्बन्धेन निषेधोऽपि ज्ञायेत । तस्मादुपासनं व्यर्थमिति शेषः ।**

---

**शे०** — ॥ ॐ **विद्यव तु निर्धारणात्** ॐ ॥ ननु विद्यैवेत्येतत्सूत्रानन्तरत्वादनुबन्धादिभ्य इति सूत्रस्य तत्सूत्रव्याख्यानानन्तरमेव भाष्यकृता व्याख्येयत्वात्कुतो व्यत्यासेन व्याख्यानमिति भावेन शङ्कते **यद्यपीति** । प्रकरणशुद्धावेव प्रमेयं सुग्रहं भवतीत्यतः क्रमभङ्ग इत्याशयेन परिहरति **तथाऽपीति** । उपासनस्वरूपानिश्चये न कोऽपि विचारोऽवसरं लभत इति तत्स्वरूपमादौ (यमाद्यङ्गानां स्वरूपोपकारकाङ्गत्वोक्त्या यमादिजन्यं ज्ञानजनकमुपासनमिति तत्स्वरूपम्) दर्शितम् । ततस्तस्य कर्तव्यत्वसमर्थनावसर इति तत्समर्थितमिति युक्तमेव क्रममुल्लङ्घ्य भाष्यकारीयं व्याख्यानम् । सूत्रकारेण तु वक्तव्यं सर्वं यथाकथञ्चिदुक्तमपि शिष्यैरेव विवक्षितक्रमवत्तया स्वयमेव ज्ञातुं शक्यमिति भावेन क्रममविवक्षित्वैव कर्तव्यतासमर्थनानन्तरं स्वरूपं निरूपितमिति न तं प्रत्यपि नियामकपर्यनुयोगो युक्त इति ध्येयम् ॥ **साधनान्तरेति** । सम्यक्दर्शनसम्यक्चारित्र्यादिस्वरूपसाधनान्तरेत्यर्थः ॥ **चार्वाकमतमिति** । तस्यैवातिविरोधित्वादिति भावः ॥ **पुरुषविशेषादीति** । नित्यसंसार्यधमरूपपुरुषादिसम्बन्धिनेत्यर्थः । तथा च तस्य प्रामाणिकैः स्वीकृतत्वान्नेदं तस्य वैषम्यकथनमुचितमिति भावः ॥ **तस्मादिति** । तत्साध्यत्वेनाभिमतस्य मोक्षस्य स्वरूपेणैवासत्त्वादिति भावः ॥

प०— ॐ **विद्यैव तु निर्धारणात्** ॥ **उपासनास्वरूपावगम इति** । भक्त्यादिरूपयमशब्दिताङ्गसहितमेवोपासनं फलजनकं नान्यदिति तत्स्वरूपावगमे सतीत्यर्थः ॥ **पुरुषविशेषादीति** । साधनानुष्ठानहीनस्य नेति साधनापरिपाककाले नेत्याद्यर्थः प्रतीयेतेत्यर्थः ।

या०— ॐ **विद्यैव तु निर्धारणात्** ॐ **पुरुषविशेषादीति** । नित्यसंसारिणामधमानां च मोक्षाभावस्यास्माभिरपि स्वीकृतत्वेन मोक्षो नेति प्रतिज्ञा सिद्धार्था स्यादिति भावः । आदिपदेन सृष्टिकालादिग्रहणम् ।

श्री० — ॐ **विद्यैव तु निर्धारणात्** ॐ ॥ **उपासनास्वरूपेति** । यमाद्यङ्गानामुपासनास्वरूपोपकारकाङ्गत्वोक्त्या यमादिजन्यं ज्ञानजनकमुपासनमिति तत्स्वरूपं निरूपितमेवेत्याशयः ।

सु०— **तर्हि कः पुरुषार्थोऽस्तीत्यत आह** भोग इति ।

भोगः

**स्रक्चन्दनादिविषयसुखानुभवो** भोगः स **पुरुषार्थोऽस्तीति प्राहुरिति सम्बन्धः** । **भोगश्चैहिक एव न तु स्वर्गादिगत इत्याह** शरीरेति ।

शरीरपर्यन्तं

**शरीरपातपर्यन्तमित्यर्थः । कुतः स्वर्गापवर्गयोरसत्त्वमित्यत आह** भस्मीभाव इति ।

भस्मीभावस्ततो भवेत् ॥

इति

**ततः पातानन्तरं शरीरस्य भस्मीभावो भवेत् । इदमुक्तं भवति । शरीरपातोत्तरकालमात्मनः स्वर्गापवर्गौ वक्तव्यौ । आत्मा च न शरीरातिरिक्तोऽस्ति । शरीरं च पातोत्तरकालं नश्यत्येव । ततः कस्य तौ स्यातामिति । इति प्राहुरिति सम्बन्धः । शङ्कासमाप्तौ वेतिशब्दः ।**

शे०— **तर्हीति** । मोक्षस्यापुरुषार्थत्व इत्यर्थः । सर्वथा पुरुषार्थता नास्तितायाश्च समयत्वव्याघातकतयाऽनुपपन्नत्वादिति भावः ॥ **विषयसुखेति** । तज्जन्यसुखेत्यर्थः । वैषयिकसुखानुभवरूपभोगस्यैहिकामुष्मिकसाधारण्येन पुरुषार्थतायाः सिद्धान्तिनाऽभ्युपगमात् नास्य निरस्यताप्रयोजकवैषम्यसमर्पकत्वमित्यतस्तदुपपादयति **भोगश्चेति** । ननु शरीरपातानन्तरं तस्य भस्मीभावात्स्वर्गानुपपत्तावपि तत्पूर्वं शरीरस्यैव स्वर्गापवर्गौ भविष्यतः पातानन्तरं भस्मीभूतत्वाच्छरीरस्य तदनुपपत्तावप्यात्मनो न तदनुपपत्तिरित्यत आह **इदमुक्तं भवतीति** ॥ **वक्तव्याविति** । तयोरेतद्देहानुपभोक्तव्यत्वादिति भावः ।

सु० — तदेतत्प्रमाणाभावेन दूषयंस्तावत्पृच्छति तदिति ।

अनु० — तत्केन मानेन दृष्टं

**मोक्षो नैवास्तीति वाक्यार्थं तदिति परामृशति । केन मानेनेति । प्रत्यक्षेण वा तदितरेण वेत्यर्थः । दृष्टमवगतम् । द्वितीयस्तावच्चार्वाकेण नाङ्गीकर्तुं शक्यत इत्याशयवानाह प्रत्यक्षेति ।**

प्रत्यक्षवादिना ॥

**प्रत्यक्षमेकमेव प्रमाणं नान्यदित्यभ्युपगच्छता । पूर्वेण सम्बन्धः । आद्यं निराकरोति न हीति ।**

न हि प्रत्यक्षमानेन मोक्षाभावोऽवसीयते ॥

**अनुमानादिकं तावत्परस्य मानं न भवति । यच्च मानत्वेनाङ्गीकृतं प्रत्यक्षं तेनेति यावत् । मोक्षो हि नाम परमानन्दावाप्तिविशिष्टात्यन्तिकी दुःखनिवृत्तिः । तदभावश्चैवमवगन्तव्यः । नास्ति कोऽपि पुरुषः परमानन्दानुभवी सर्वोऽपि दुःखी चेति । न च पुरुषान्तरवर्तिनी सुखदुःखे तदभावौ वा पुरुषान्तरप्रत्यक्षविषयाविति कथं मोक्षाभावः प्रत्यक्षेणावसीयेतेति हिशब्दार्थः ।**

---

शे० — 'न हि प्रत्यक्षमानेन मोक्षाभावोऽवसीयते' इत्युत्तरग्रन्थविरोधापत्त्या तदिति न भोगपरामर्शः । नापि मोक्षाभावपरामर्शः । तस्यापदार्थतया केनापि पदेनाप्रकृतत्वादित्याशङ्क्य लाघवेन प्रकृतत्वमात्रस्यैव परामर्शप्रयोजकत्वस्थित्या पदप्रकृतत्वस्यातथात्वान्मोक्षाभावस्यापदार्थत्वेऽपि वाक्यार्थत्वेन प्रकृतत्वात्तत्परामर्शकत्वमुपपन्नमित्याशयेनाह **वाक्यार्थमिति** ॥ प्रत्यक्षेणेति स्वपररीत्योक्तम् । तदितरेणेति तु संभावनामात्रेण । न हि प्रतिवादिन्याश्वासोऽस्ति । येन स्वमतमपहाय नैव शङ्केतीति निश्चिनुम इति भावः । ननु चार्वाकस्य प्रत्यक्षवादित्वात्तदितरप्रमाणेनाभिमतप्रमेयस्य साधनं तेन कर्तुं न शक्यत इत्ययुक्तम् । तथा सति तदितरसर्ववादिनामपि तद्वादित्वात्तेषामपि प्रत्यक्षेतरप्रमाणेनाभिमतसमर्थनस्याशक्यत्वप्रसङ्गादित्यतः सावधारणमित्याशयेन प्रत्यक्षवादित्वं व्याचष्टे **प्रत्यक्षमिति** ॥ **पूर्वेणेति** । दृष्टमित्यनेनेत्यर्थः । प्रत्यक्षेणेत्येव वक्तव्ये मानेनेत्यधिकमित्यतस्तथोक्त्या लब्धमर्थमाह **अनुमानादिकमिति** ॥ **मोक्षो हीति** । आनन्दविशिष्टदुःखनिवृत्तिमात्रस्य संसारावस्थायामपि सत्त्वादिति भावः ॥ **सुखदुःखे तदभावौ वेति** । यद्यप्यत्र पुरुषान्तर्वर्तिनोः सुखाभावदुःखयोर्न पुरुषान्तरप्रत्यक्षतेत्येव वक्तव्यं सुखस्य दुःखाभावस्य चाप्रत्यक्षत्वकथनं त्वनर्थकं प्रकृतानुपयोगात् । तथाऽपि संसर्गाभावप्रत्यक्षे प्रतियोगि-

योग्यत्वस्य तन्त्रत्वात् । सुखरूपमोक्षाभावस्याप्रत्यक्षत्वोपपादनाय तत्प्रतियोगिनः सुखस्य दुःखाभावरूपमोक्षाभावरूपस्य दुःखस्याप्रत्यक्षत्वोपपादनाय तत्प्रतियोगिनो दुःखाभावस्य चाप्रत्यक्षत्वमुक्तमित्यवधेयम् ।

प० — **तदिति परामृशतीति** । सामान्ये नपुंसकलिंगमिति भावः । केनेति प्रश्नस्य प्रमाणसामान्यपरत्वव्याख्यानानुरोधेनाह **दृष्टमवगतमिति** । न हि प्रत्यक्षेति विशिष्योक्तिं घटयति **अनुमानादिकमिति** ॥ **सुखदुःखे तदभावौ वेति** ।

या० — तदितरेण दृष्टत्वासंभवादाह **दृष्टमवगतमिति** । प्रत्यक्षेणेत्यनुक्त्वा प्रत्यक्षमानेनेत्युक्त्या लब्धमर्थं दर्शयति **अनुमानादिकमिति** ॥ **सुखदुःखे तदभावौ वेति** । अत्र यद्यपि पुरुषान्तरवर्तिनोः सुखाभावदुःखयोर्न पुरुषान्तरप्रत्यक्षतेत्येव वक्तव्यम् । सुखस्य दुःखाभावस्य चाप्रत्यक्षत्वकथनं व्यर्थं प्रकृतासङ्गतत्वात् । तथाऽपि संसर्गाभावप्रत्यक्षे प्रतियोगियोग्यत्वस्य तन्त्रत्वेन सुखरूपमोक्षाभावस्याप्रत्यक्षत्वोपपादनाय तत्प्रतियोगिनः सुखस्याप्रत्यक्षत्वमुक्तम् । एवं दुःखाभावरूपमोक्षाभावस्यापि दुःखपर्यवसन्नस्याप्रत्यक्षत्वोपपादनाय तत्प्रतियोगिनो दुःखाभावस्याप्यप्रत्यक्षत्वमुक्तमित्यवगन्तव्यम् ।

श्री० — **वाक्यार्थमिति** । सामान्ये नपुंसकमिति वचनादिति भावः । ननु प्रत्यक्षेण दृष्टमिति सम्भवेऽपि तदितरप्रमाणेन दृष्टमित्ययुक्तमतो व्याचष्टे **दृष्टमवगतमिति** ।

---

**सु० — मा भूत्प्रमाणाभावेन मोक्षाभावनिश्चयः । तत्सद्भावनिश्चयोऽपि दुर्घट एव । प्रमाणाभावात् । तावत्तत्र प्रत्यक्षं प्रमाणम् । परपुरुषवर्तिनोः परमानन्ददुःखाभावयोः परप्रत्यक्षस्य सामर्थ्याभावात् । स्वनिष्ठस्तु तदभाव एव प्रत्यक्षेणेक्ष्यते । नापि प्रत्यक्षादन्यत् । तत्प्रामाण्यासिद्धेः । ततश्च साधकबाधकप्रमाणाभावादप्रतिपत्तिर्नित्यसंशयो वा मोक्षे स्यादिति नोपासनानुष्ठानं सम्भवतीति । मैवम् । प्रत्यक्षेण तावन्मोक्षनिश्चयोपपत्तेः ।**

शे० — **अप्रतिपत्तिर्नित्यसंशयो वेति** । पदार्थमात्रस्याज्ञानसंशयनिश्चयरूपत्रितयान्यतमविषयत्वनियमान्मोक्षविषये साधकबाधकप्रमाणाभावेन तद्विषयकसत्त्वासत्त्वनिश्चयासंभवात् । तस्य निश्चयाविषयत्वसिद्धौ निश्चयाविषयस्य पदार्थस्याज्ञानसंशयान्यतरमात्रविषयतानियमान्मोक्षविषयेऽज्ञानं संशयो वा स्यादित्यर्थः । अज्ञानस्य ज्ञानमात्रनिवर्त्यतया निश्चयरूपज्ञानेनेव संशयरूपेणापि तेन तन्निवृत्त्यवश्यम्भावात् । प्रकृते तु साधकबाधकप्रमाणाभावेन तन्निश्चयाभावात्तेनाज्ञाननिवृत्त्यसंभवेऽपि संशयेनैव निवृत्तेः संभवेन नित्यमप्रतिपत्तिः स्यादित्यनापाद्याप्रतिपत्तिमात्रमेवापादितम् । संशयस्य तु निश्चयमात्रनिवर्त्यत्वेन प्रकृते च साधकबाधकप्रमाणाभावेन कोटिद्वयनिश्चयस्याप्यसम्भवेन निवर्तकाभावात्संशयनिवृत्त्यसंभवेन नित्यसंशयः स्यादिति नित्यत्वेन संशयो विशेषित इत्यवधेयम् ।

प० — सुखदुःखाभावयोरुक्तिर्दृष्टान्ततयोपयुज्यते **तदभाव एवेति** । प्रागुक्तरूप(मोक्षाभा)-स्याभाव एवेत्यर्थः । सुखदुःखाभावाभाव एव सुखदुःखे एवेत्यर्थ इत्येके ॥ **बाधकेति** । मोक्षाभाव-ग्राहिप्रमाणरूपबाधकेत्यर्थः ।

श्री० — **बाधकेति** । मोक्षानङ्गीकार इत्यर्थः ।

सु० — **ननूक्तमत्र प्रत्यक्षस्य तत्र सामर्थ्यं नास्तीति तत्राह** घटत इति ।

अनु० — घटते मुक्तिदृष्टिस्तु पुरुषेण महीयसा ।

**यद्यपि प्राकृतानां प्रत्यक्षं न मोक्षं गोचरयितुं क्षमते । तथाऽपि महत्तमपुरुषप्रत्यक्षेण मोक्षनिश्चयो युज्यत एव । तदीयप्रत्यक्षावगमश्च परेषां तद्वाक्येन भविष्यतीति भावः । ननु कर्तृकर्मणोः कृतीत्यत्र षष्ठ्या भवितव्यं कथं तृतीया । शेषविवक्षायां षष्ठी विहिता । न चात्र शेषविवक्षेति चेन्न । अस्मिन्योगे शेषग्रहणस्य निवृत्तत्वात् । उच्यते । हेतावेषा तृतीया । न कर्तरि करणे वा । महीयसा पुरुषेण हेतुना करणेन वा तदीयप्रत्यक्षेणेति यावत् । इतरेषां मुक्तिदृष्टिर्मुक्तिसद्भावनिश्चयो घटत इति । यद्वा मुक्तिविषया प्रत्यक्षदृष्टिर्घटते । कथम् । यतो महीयसा पुरुषेणेक्ष्यते मोक्ष इति वदाम इति योजना । अथवा क्रियमाणेति पदाध्याहारे न दोषः ।**

शे० — **भवितव्यमिति** । दृष्टिरिति क्तिन्प्रत्ययस्य कृत्प्रत्ययत्वेन कृद्योगान्महीयसः पुरुषस्य च दर्शनकर्तृत्वात्तत्र षष्ठ्यां सत्यां 'घटते मुक्तिदृष्टिस्तु पुरुषस्य महीयस' इति भवितव्यम् । **कर्तृकर्मणोः** कृतीति प्राप्तषष्ठ्याः कर्तृकरणयोस्तृतीयेति प्राप्ततृतीयापवादकत्वादिति भावः । नन्वधीगर्थदयेशां कर्मणी-त्यादाविव कर्तृकर्मणोः कृतीत्यत्रापि शेषग्रहणानुवृत्तेः शेषत्वेन विवक्षितयोः कर्तृकर्मणोरेव षष्ठ्या अनेन विधानात्तदविवक्षायां कथं षष्ठीप्राप्तिरिति शङ्कते **शेषेति ॥ अस्मिन्योग इति** । कर्तृकर्मणोः कृतीति सूत्र इत्यर्थः ॥ **निवृत्तत्वादिति** । ज्ञापकं चात्र पुनः कर्मग्रहणमेव । अन्यथा कर्तरि च कृतीत्येवा-वक्ष्यत् । चकारात्कर्मणीत्यनुकर्षसंभवात् । शेषग्रहणस्य निवृत्तौ तु तत्सम्बद्धकर्मग्रहणस्यापि निवृत्तत्वा-त्कर्तव्यमेव कर्मग्रहणम् । अत एव च कृद्योगवार्तिकस्याप्यनारम्भसिद्धिः । अन्यथा हि कर्तृकर्मणोः कृतीत्ये-तद्विषयेऽपि षष्ठी शेष इत्यनेनैव षष्ठीसिद्धेरस्य सूत्रस्य वैयर्थ्यापत्त्या षष्ठी भवत्येव श्रूयत एव न लुप्यत इति समासप्रयुक्ततल्लोपनिषेधकत्वेनैव योगस्य सार्थकताया उपवर्णनीयत्वादेतत्प्रतिषिद्धसमासप्रतिप्रसवरूपेण कृद्योगवार्तिकस्यारम्भोऽप्यावश्यक एव स्यात् । शेषग्रहणनिवृत्तौ तु कारकषष्ठ्या लक्षणान्तराप्राप्ताया एवानेन विधानेनैतदारम्भवैयर्थ्याऽन्यथाऽनुपपत्तिमूलकस्य समासप्रयुक्तलोपनिषेधेन समासनिवृत्तिफलक-

नियमस्यासिद्ध्या कृद्योगवार्तिकानारम्भसंभवात् । ततश्च यत्कर्मैव कर्म न कर्मणः शेषत्वेन विवक्षाऽस्ति तत्रैव कर्मणि षष्ठी स्यादिति लभ्यते । तत्समानन्यायत्वाच्च कर्तुरपि तत्त्वेन विवक्षा यत्र नास्ति तत्रैव षष्ठी भवतीति पर्यवसानान्न शेष इत्यस्याप्यस्मिन्सूत्रेऽनुवृत्तिरित्यव जनीयैव षष्ठीप्राप्तिरिति भावः । कर्तृकर्मणोः कृतीति कर्तरि षष्ठ्याः कर्तरि तृतीयापवादकत्वेऽपि हेतौ करणे वा या तृतीया तदपवादकत्वाभावात्पुरुषेणेति तृतीयायाश्च हेतौ करणे वा तृतीयात्वेन कर्तरि तृतीयात्वाभावान्न षष्ठ्या तद्बाध इति समाधत्ते **उच्यत इति** । पुरुषप्रत्यक्षस्य हेतुत्वकरणत्वयोः सद्भावेऽपि पुरुषस्यातादृशत्वात्कथं करणादावेषा तृतीया स्यादित्यतोऽत्र लक्षणया पुरुषपदस्य तत्प्रत्यक्षपरत्वेन पुरुषपरत्वाभावाद्भवत्येवेयं करणादौ तृतीयेत्याशयेनाह **तदीयप्रत्यक्षेणेति यावदिति** । तदीयेति लक्षणाबीजशक्यसंबन्धोपदर्शनम् । अत्र पक्षे पुरुषपदस्य तत्प्रत्यक्षोपलक्षणत्वाश्रयणं भवतीत्यपरितोषात् पुरुषपदस्य मुख्यार्थत्वमभ्युपगम्यैव प्रकारान्तरेण तृतीयोपपत्तिमाह **यद्वेति** । तथा च पुरुषेणेत्यस्य मुक्तिदृष्टिरिति कृद्योगाभावान्न षष्ठीप्राप्तिरिति भावः । अस्मिन्नपि पक्षे ईक्ष्यत इति क्रियान्तराध्याहारवाक्यभेदौ समाश्रयणीयौ भवत इत्यरुच्या क्रियान्तरमात्रमध्याहृत्यैकवाक्यतया समाधत्ते **अथवेति ॥ न दोष इति** । कृद्योगाभावान्न षष्ठीप्राप्तिलक्षणो वाक्यभेदापत्तिलक्षणो वा दोष इत्यर्थः ।

स॰— **न चात्र शेषविवक्षास्तीति** । कारकप्रतिपदिकार्थान्यार्थस्य शेषत्वेनोक्तत्वेन प्रकृते पुरुषस्य कर्तृत्वेन शेषविवक्षाया असंभवादिति भावः ।

प॰ — **परेषामिति** । मोक्षद्रष्टृमहत्तमपुरुषादन्येषामित्यर्थः ॥ **अत्र षष्ठ्या भवितव्यमिति** । पुरुषेणेत्यादौ पुरुषस्येत्यादिरूपेण भाव्यम् । कृत्प्रत्यययोगे कर्तरि कर्मणि षष्ठी भवतीति द्वितीयस्य तृतीयपादे कृद्योगे षष्ठीविधातादिह च दृष्टिरिति क्तिन्प्रत्ययस्य कृदतिङिति कृत्संज्ञकत्वात्पुरुषस्य कर्तृत्वादित्यर्थः । ननु तत्सूत्रे पूर्वोक्तात् षष्ठीशेष इति सूत्रात् शेष इत्यनुवर्तते । तेन कर्त्रादिकारकव्यतिरिक्तस्वस्वामिभावादिसंबंधरूपशेषविवक्षायामेव कृद्योगे षष्ठी विहिता । पुरुषस्य कर्तृकारकतया शेषत्वाभावात् षष्ठी न भवतीतितटस्थचोद्यमनूद्य निराह **शेषविवक्षायामिति** ॥ **निवृत्तत्वादिति** । शेष इति निवृत्तमिति वृत्त्यादावुक्तेरिति भावः ।

या॰— **शेषविवक्षायामिति** । कारकप्रातिपदिकार्थादन्योऽर्थः स्वस्वामिसंबन्धादिः शेषस्तद्विवक्षायामित्यर्थः ॥ **न चात्र शेषेति** । कर्तृत्वस्यैव विवक्षितत्वादिति भावः ॥ **शेषग्रहणस्येति** । शेष इति निवृत्तमिति काशिकायामुक्तत्वादिति भावः ॥ **ईक्ष्यत इति** । क्रियमाणे इति चाध्याहारे कृद्योगाभावान्न षष्ठीप्राप्तिरिति भावः ।

**श्री० — प्राकृतानाम्** अस्मदादीनाम् ॥ **षष्ठ्येति** । दृष्टिरिति कृदन्तत्वेन कृद्योगसद्भावात्तद्योगे कर्तरि षष्ठ्या विहितत्वात्पुरुषस्येति वाच्यमित्यर्थः । ननु कर्तृकर्मणोः कृतीति शेष इति पूर्वसूत्राच्छेष इत्यनुवर्तते । तथा च कृद्योगे कर्तृकर्मत्वाविवक्षया शेषविवक्षायां षष्ठी स्यादिति सूत्रार्थः । तथा च प्रकृते पुरुषस्य कर्तृताया विवक्षितत्वेन शेषत्वविवक्षाया अभावान्न कर्तृकर्मणोः कृतीति सूत्रस्य प्रसक्तिरतो युक्ता तृतीयेति शङ्कते **शेषविवक्षायामिति** । योगे कर्तृकर्मणोरिति सूत्रे ॥ **शेष इति** । निवृत्तमित्युक्तत्वादित्यर्थः । तथा च कृद्योगे कर्तृकर्मत्वविवक्षायां षष्ठीविधानात् षष्ठ्यैव भवितव्यमित्यर्थः । करणे वेत्यनन्तरं तृतीयेति वर्तते । ननु पुरुषस्य कर्तृत्वात्कथं तस्य करणत्वमित्यत आह **तदीयप्रत्यक्षेणेति यावदिति** ॥ **क्रियमाणेति** । तथा च पुरुषेण क्रियमाणा उत्पाद्यमाना मुक्तिदृष्टिरित्यर्थः । तथा च पुरुषेणेत्यस्य दृष्टिरित्यनेनान्वयाभावेन कृद्योगाभावान्न षष्ठीशङ्काप्राप्तिरिति भावः ।

**च० —** ननु दृशिप्रकृतिकक्तिनः कृदतिङिति विहितकृत्संज्ञतया तत्समभिव्याहारनियन्त्रितकर्तृकर्मणोरिति योगप्रत्यायितषष्ठ्याः कर्तृकरणयोरिति लक्षणालक्षिततृतीयाऽपवादकतया निरूपकताप्रत्यासत्त्या विशेषणवाचकसाधुत्वार्थविभक्त्यन्तमहीयःपदसमभिव्याहृतपुरुषपदप्रकृतिकषष्ठ्युपस्थापितकर्तृत्वान्विता मुक्तिदृष्टिरित्यन्वयबोधौपयिकेन 'घटते मुक्तिदृष्टिस्तु पुरुषस्य महीयसः' इति न्यासेन भवितव्यमित्याशङ्कते **नन्विति** । ननु कर्तृकर्मणोरित्यत्राधीगर्थेत्यादाविव षष्ठीशेष इति पूर्वसूत्राच्छेषग्रहणानुवर्तनेन संबन्धरूपशेषत्वेन विवक्षितयोः कर्तृकर्मणोरनेन योगेन षष्ठीविधानात्प्रकृते च कर्तृत्वत्वोपरक्तोऽन्वयबोधस्याभिप्रेततयोक्तशेषत्वोपरागेण शाब्दबुद्धेरनभिप्रेततया षष्ठीप्रसञ्जनानवकाश इत्याशङ्कते **शेषेति** ॥ **निवृत्तत्वादिति** । शेष इति निवृत्तमिति वामनः काशिकायामभ्यधादिति भावः । **क्रियमाणेति** । तृतीयार्थकर्तृत्वस्य करोत्यर्थान्विततया कृदर्थान्वितताविरहान्न तृतीयापवादकषष्ठ्यापत्तिरिति भावः ।

**सु० — एवं तर्हि मयाऽपि वक्तुं शक्यत एव । यद्यपि परपुरुषवर्ती मोक्षाभावोऽस्मदादीनां न प्रत्यक्षः । तथाऽपि महीयसः पुरुषस्य लोकायताचार्यस्य प्रत्यक्ष एव । तदवगमश्चास्माकं तद्वाक्येन भविष्यतीति । तथा च सत्प्रतिपक्षतया पुनरनिश्चय एवेत्यत आह** नेतीति ।

**अनु०** — नेति वक्तुर्महत्त्वं तु कथञ्चन न विद्यते ॥

**कस्मिन्नपि पुरुषे वर्तमानोऽनागतो वा मोक्षो नास्त्येवेत्यहं प्रत्यक्षेणेक्ष इति वक्तुस्त्विति संबन्धः । महत्त्वमेव न विद्यते कुतो महीयस्त्वमित्येवशब्दार्थो वा तुशब्दः । महत्त्वमिह**

**बहुप्रकारमपेक्षितम्** । **इतरपुरुषाप्रत्यक्षार्थसाक्षात्कारित्वं तदुपयुक्तासाधारणधर्मवत्त्वं यथार्थवादित्वं चेति । तत्रैकप्रकारमपि न लोकायताचार्यस्य विद्यते । कुतस्तेन सत्प्रतिपक्षताशङ्का मोक्षवादिनां महापुरुषाणाम्** ।

**शे०** — महत्त्वं त्विति तुशब्दस्य यथास्थितसम्बन्धे वैयर्थ्यमाशङ्क्य भिन्नक्रमतया तद्योजनामाह **इति वक्तुस्त्विति संबन्ध इति** । अनेन तुशब्दो निर्देशार्थ इत्युक्तं भवति । अस्मिन्पक्षे तुशब्दस्य भिन्नक्रमत्वमाश्रयणीयं भवतीत्यपरितोषाद्यथाश्रुतसम्बन्धमेवाश्रित्य तत्सम्बन्धमुपपादयति **महत्त्वमेवेति** ।

**प०** — चार्वाकः शङ्कते ॥ **एवं तर्हीति** । ईक्ष इति उत्तमपुरुषैकवचनम् ॥ **कुतो महीयस्त्वमिति** । अतिशयेन महत्त्वं कुत इत्यर्थः ॥ **तदुपयुक्तेति** । योगध्यानादिरूपधर्मवत्त्वमित्यर्थः ॥

**श्री०** — **महीयस्त्वमिति** । अतिशायिने तरवीयसुनाविति अतिशये ईयसुनो विधानात् । तथा चातिशयेन महत्त्वमिति भावः ।

**च०** — चार्वाकः प्रत्यवतिष्ठते **एवं तर्हीति** ।

**सु०** — **कुत इत्यत आह** साधयन्निति ।

**अनु०** — साधयन्सर्वसामान्यं कथमेव विशेषवान् ।

**धर्माद्यभावप्रतिपादनेन सर्वेषां पुंसां समानत्वं साधयंल्लोकायताचार्यः कथमेवेतरेभ्योऽतिशयवान्भवति । न कथञ्चित् । एतदुक्तं भवति । पुरुषान्तराप्रत्यक्षस्य परपुरुषगतस्य मोक्षाभावस्य साक्षात्करणे लोकायताचार्यस्येतरेभ्यो विशेषेण भाव्यम् । अन्यथेतरेषामपि तत्प्रसङ्गात् । न चासावस्ति । तपसा योगेन वा जनितो धर्मविशेषस्तथा । स चेतरेषामिव स्वात्मनोऽपि नास्तीति तेनैव साधितम् । अतः कारणाभावादितरवत्तस्यापि परपुरुषवर्तिमोक्षाभावसाक्षात्करणं नास्त्येवेति निश्चीयते । तत एवाहं मोक्षाभावं साक्षात्करोमीति तदीयवचनमयथार्थमेव । भूतपरिणामविशेष एवातिशयोऽस्त्विति चेत् । स किं प्रत्यक्षोऽप्रत्यक्षो वा । नाद्यः । अनुपलम्भात् । यादृशतादृशस्य प्रकृतफलहेतुत्वे मानाभावात् । अन्यथाऽतिप्रसक्तेः । न द्वितीयः । अतीन्द्रियार्थं निराकुर्वता तेनैवेतरवदात्मन्यपि तदभावस्य साधितत्वादिति** ।

**शे०** — ननु लोकायताचार्यस्येतरपुरुषापेक्षयाऽतिशयाभावेऽपि तत्प्रत्यक्षेण मोक्षाभावनिश्चये बाधकाभावाद्भूतपरिमाणविशेष(देहे कश्चन विकारः)रूपातिशयसद्भावेनेतरपुरुषापेक्षयाऽतिशयाभावासिद्धेश्च युक्तस्तत्प्रत्यक्षेण मोक्षाभावनिश्चय इत्यत आह **एतदुक्तं भवतीति** ॥ **अन्यथेति** । इतरपुरुषापेक्षयाऽतिशयाभावेऽपि तस्य पुरुषान्तराप्रत्यक्षार्थसाक्षात्कारित्व इत्यर्थः ॥ **तत्प्रसङ्गादिति** । पुरुषान्तरा

प्रत्यक्षमोक्षाभावसाक्षात्कारित्वप्रसङ्गादित्यर्थः । अविशेषादिति भावः । **तथा** अतिशयरूपः ॥ **तत एवेति ।** लोकायताचार्यस्य परपुरुषगतमोक्षाभावसाक्षात्कारित्वाभावादेवेत्यर्थः । ननु तच्छरीरावयवसन्निवेशविशेषस्यैवातिशयत्वात्तस्य चोपलभ्यमानत्वान्नानुपलम्भबाध इत्यत आह **यादृशतादृशस्येति** । पुरुषान्तरसाधारणस्येत्यर्थः ॥ **प्रकृतेति** । परपुरुषगतमोक्षाभावसाक्षात्काररूपफलहेतुत्वमित्यर्थः ॥ **अतिप्रसक्तेरिति ।** इतरपुरुषाणामपि परपुरुषगतमोक्षाभावसाक्षात्कारित्वप्रसक्तेरित्यर्थः ।

**स०— प्रकृतफलहेतुत्व इति ।** पुरुषान्तरप्रत्यक्षपरपुरुषगतमोक्षाभावसाक्षात्करणरूपफलहेतुत्व इत्यर्थः । **अतिप्रसक्तेरिति ।** लोकायताचार्यापेक्षया तच्छिष्याणामपि यादृशतादृशविशेषस्य विद्यमानत्वेन तस्यापि पुरुषान्तरप्रत्यक्षपरपुरुषगतमोक्षाभावसाक्षात्कारणरूपफलहेतुत्वं स्यादित्यतिप्रसङ्गादित्यर्थः ।

**प०— यादृशतादृशस्येति** । अवयवपुष्ट्यादेः परगतमोक्षाभावप्रत्यक्षीकरणहेतुत्वे मानाभावादित्यर्थः ॥ **अतिप्रसक्तेरिति** । तादृशस्थूलकायादेरप्युक्तरूपमहत्त्वापत्तेरित्यर्थः ।

**या०** - नन्वनुपलम्भादित्यसिद्धम् । लोकायताचार्यशरीरगतस्यावयवसन्निवेशविशेषस्यैव तादृशत्वादित्यत आह **यादृशतादृशस्येति** । पुरुषान्तरसाधारणस्येत्यर्थः ॥ **प्रकृतफलेति ।** परपुरुषगतमोक्षाभावसाक्षात्काररूपप्रकृतफलहेतुत्व इत्यर्थः ॥ **अतिप्रसक्तेति** । यादृशतादृशो भूतपरिणामविशेषस्योक्तरूपस्य रथ्यापुरुषेऽपि संभवेन तस्याप्युक्तफलप्रसक्तेरित्यर्थः ।

**श्री०— भूतपरिणामो** नाम देहे कश्चन विकाररूपः ।

---

**सु०— यथा युष्माभिरभिधीयते नास्त्येव मोक्षाभावसाक्षात्कारी महापुरुष इति तथा अहमपि वदामि । नास्त्येवासौ महीयान्पुरुषो यः प्रत्यक्षेण मोक्षमीक्षेत । प्रमाणाभावादिति । तथा च पुनरनिश्चय एवेत्यत आह** दृश्यन्त इति ।

**अनु०—** दृश्यन्ते पुरुषा लोके परापरविदोऽपि च ॥
अपरोक्षदृशो योगनिष्ठाश्चामलचक्षुषः ॥
प्रत्यक्षं देवतां दृष्ट्वा तत्प्रसादाप्तभूतयः ॥
ज्ञानविज्ञानपारज्ञा

**न केवलमेक इति भावः । लोकेऽस्मिन्नेव भूमण्डले । ते च वसिष्ठादयः । तेषां महीयस्त्वमाह** ज्ञानविज्ञानपारज्ञा इति । **अत्र विषयिभ्यां विषयावुपलक्ष्येते । सामान्यविशेषाकारपारज्ञाः । न केवलं वर्तमानाशेषविदः किन्नाम परावरविदोऽपि । तत्किमनुमानादिना नेत्याह** अपरोक्षदृशश्चेति । **अस्मदादिभ्यः को विशेषस्तेषामित्यत उक्तं** योगनिष्ठाश्चामलचक्षुष

इति । **योगनिष्ठाजनितविशिष्टादृष्टेन दिव्यदृष्टयः । किन्तेनैव नेत्याह** प्रत्यक्षमिति । **योगसामर्थ्येन परदेवतां साक्षादुपलभ्य तत्प्रसादासादितप्राकाश्याद्यैश्वर्यवन्तः । वसिष्ठादयो योगर्धिसम्पन्नया दिव्यया दृष्ट्या परपुरुषवर्तिनं मोक्षं साक्षात्कुर्वाणाः प्रत्यक्षेणैव दृश्यन्तेऽतो न मोक्षानिश्चय इति । अस्मदादिभिरनुपलब्धत्वाच्च न सन्तीत्यत आह** निषिध्यन्त इति ।

निषिध्यन्ते कथं नृभिः ॥

**नृभिरित्यनेन मन्दभाग्यैः परिमिता विविक्तदेशपरिचयवद्भिरिति सूचयति । न हि ते वणिग्वीथ्यां वर्तन्ते । येन युष्माभिरुपलभ्येरन् । अतो विप्रकर्षादनुपलभ्यमाना न निषेद्धुं शक्यन्त इति भावः ।**

**शे०**— नास्त्येवेति प्रतिज्ञायां हेतुमाह **प्रमाणेति** । पुरुषस्वरूपे तस्य महीयस्त्वे च प्रमाणाभावादित्यर्थः । **अनिश्चय एवेति** । मोक्षस्येति शेषः । ज्ञानविज्ञानशब्दयोर्ज्ञानविज्ञानमात्रपरतायां तज्ज्ञानोक्त्या वर्तमानाशेषार्थज्ञानालाभेन तस्य सार्वज्ञापरपर्यायप्राकाश्याद्यैश्वर्यादिरूपमहीयस्त्वासमर्पकत्वप्रसङ्गात्तत्समर्पकतासिद्ध्यर्थं ज्ञानविज्ञानशब्दौ लक्षणया वर्तमानाशेषज्ञेयविज्ञेयपरतया **व्याचष्टे अत्रेति** । लक्षणाबीजभूतशक्यसम्बन्धाभावे कथं लक्षणेत्यतो विषयविषयिभावस्यैव तत्त्वान्नानुपपत्तिरिति भावेनोक्तं **विषयिभ्यां विषयाविति** । ज्ञानविज्ञानयोरन्यतरोक्त्याऽपि वर्तमानाशेषलाभादुभयोक्तौ पौनरुक्त्यमित्यतोऽर्थभेदं सूचयन्नेव लक्षणाश्रयणेन सिद्धमर्थं दर्शयति **सामान्येति** । वर्तमानसामान्यविशेषाकारपारज्ञा इत्यर्थः । मूले योगनिष्ठत्वामलचक्षुष्ट्वयोर्हेतुहेतुमद्भावोऽपि विवक्षित इति भावेन विशेषणद्वयतात्पर्यमाह **योगेति ॥ तेनैवेति** । योगनिष्ठाजनितविशिष्टादृष्टेनैवेत्यर्थः । तथाऽपि तथाऽहमपि वदामीत्युक्तशङ्कायाः कः परिहार इत्यतो दृश्यत इत्यादेस्तात्पर्यमाह **वसिष्ठादय इति** । तावताऽप्यस्मदादिभिरनुपलब्धत्वाच्च न सन्त्येवेत्येतच्छङ्कापरिहारः कथमित्यत आह **न हि त इति** ।

श्री०— योगो नामेश्वरे मनःप्रणिधानम् । **परिचयः** परिचितिः ।

**सु०— ननु पुरुषस्वरूपमात्रे न विप्रतिपत्तिः । तेषां महीयस्त्वं तु कुत इत्यत आह** दृश्यते चेति ।

अनु०— दृश्यते चातिमाहात्म्यं तेषामतिमहौजसाम् ॥

**न केवलं पुरुषाः किन्तु तेषामतिमाहात्म्यं महीयस्त्वं च दृश्यते । कथम् । अतिमहौजसाम् । एतदुक्तं भवति । दृश्यन्ते तावद्विन्ध्यस्थगनसमुद्रपानादीनि तेषामतिमहान्त्योजांसि । तानि च महैश्वर्यकार्याणि । न च कार्याणि विना कारणैर्भवितुमर्हन्ति । महैश्वर्येषु च सार्वज्ञापरनामकं प्राकाश्यमिति तेषां महीयस्त्वसिद्धिरिति ।**

शे० — **कुत इति** । सिद्धमिति शेषः । माहात्म्यस्यापि प्रमाणान्तरेण सिद्धेरनुक्तत्वाद् दृश्यते चेति यथास्थितचशब्दसम्बन्धानुपपत्तिमाशङ्क्य भिन्नक्रमतया तद्योजयति **न केवलमिति** । महीयस्त्वं कुतः सिद्धमिति प्रश्नस्यातिमाहात्म्य दृश्यत इति वचनं न परिहारो भिन्नविषयत्वादित्यतो महीयस्त्वपरतया तद्योजयति **अतिमाहात्म्यमिति** । सार्वज्ञापरनामकप्राकाश्यरूपमहीयस्त्वस्य परं प्रत्यप्रत्यक्षत्वान्न दृश्यत्वं तस्य सम्भवतीति भावेन पृच्छति **कथमिति** । परं प्रति तस्याप्रत्यक्षत्वेऽप्यतिमहौजस्त्वलिङ्गेन तत्सिद्धिसम्भवान्नानुपपत्तिरिति भावेन समाधत्ते **अतिमहौजसामिति** । अतिमहौजस्त्वलिङ्गस्यासिद्धिपरिहरन्नप्रयोजकत्वं परिहरति **एतदुक्तं भवतीति** । अस्त्वेवं तदीयमहैश्वर्यस्य तत्कार्यभूतैर्महोजोभिः सिद्धिः प्राकाश्यरूपमहीयस्त्वस्य तु कथं सिद्धिरित्यत आह **महैश्वर्येषु चेति** ॥ **प्राकाश्यमिति** । प्राकाश्यमन्तर्भूतमित्यतो हेतोर्महैश्वर्यासिद्धौ महीयस्त्वसिद्धिर्युक्तेत्यर्थः ।

प० — **विंध्येति** । अगस्त्यस्य विन्ध्याद्रिवृद्धिस्तम्भनम् । 'मार्गं निरोद्धुं सततं भास्करस्याचलोत्तमः । निर्देशं पालयंस्तस्य विंध्यः शैलो न वर्धते इत्यरण्यकाण्डे द्वादशसर्गे । मुनेर्विंध्यस्थगनसमुद्रपानाद्यारण्यपर्वण्यगस्त्योपाख्याने व्यक्तम् । महैश्वर्येषु चेति बहुव्रीहिः । प्राकाश्यं नाम णिमाद्यैश्वर्यप्रभेदः । उक्तं हि एकादशस्कन्धे पञ्चदशाध्याये । 'अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः । प्राकाश्यं श्रुतदृष्टेषु' इत्यादि । तथा च परगतमोक्षप्रत्यक्षं तेषां युक्तमित्यर्थः ।

या० — नन्वेवं महैश्वर्यसिद्धावपि परपुरुषगतमोक्षज्ञानोपयोगिसार्वज्ञं न सिद्धमित्यत आह **सार्वज्ञापरनामकमिति** ।

**सु० — ननु तदीयं मोक्षविषयं प्रत्यक्षं परेषां कुतः सिद्धम् । तद्वाक्यादिति चेन्न । तेषां विप्रलम्भकत्वोपपत्तेरित्यत** आह यदीति ।

**अनु०** — यदि तेऽपि निषिध्यन्ते किं नोक्तिस्ते निषिध्यते ॥

**विप्रलम्भो हि प्रयोजनमूलो भवति । न च तेषां प्रयोजनानुसन्धानं संभवति । आप्तसमस्तैश्वर्यत्वात् । प्रयोजनान्तरस्य चाप्रमितत्वात् । एवंभूता अपि ते योगिनो यदि विप्रलम्भका इति निषिध्यन्ते । तदीयं वाक्यं विप्रलम्भमूलत्वेन निराक्रियत इति यावत् । तदा ते त्वदभ्युपगता लोकायताचार्योक्तिः किं तथैव न निषिध्यते । साऽपि विप्रलम्भमूलेति कल्पयित्वाऽनादरणीया स्यात् । अविशेषादिति यावत् ।**

**एतेनैतदपि निरस्तम् । विप्रकर्षवशादस्माभिरनुपलभ्यमाना अपि योगिनस्तन्माहात्म्यं तदीयं स्वप्रत्यक्षविषयं वाक्यं चास्माभिः कुतोऽवगन्तव्यम् । इतिहासपुराणेभ्य इति चेन्न ।**

**तेषामप्रमाणत्वादिति ।। दोषदर्शनेन हि तेषामप्रामाण्यं कल्प्यम् । न च तत्र प्रमाणमस्ति । वाक्यत्वेनैव प्रामाण्यप्रतिषेधे लोकायताचार्योक्तेरपि तत्प्रतिषेधप्रसङ्गादिति ।**

**श्रे०** — ननु च वसिष्ठादीनां मोक्षविषयकप्रत्यक्षस्यास्मान्प्रति किं प्रत्यक्षेण सिद्धिः किंवा तद्वाक्यादिति विकल्प्याद्यं दूषयति **परेषामिति** । परबुद्धेः परं प्रत्यप्रत्यक्षत्वान्न प्रत्यक्षेण तत्सिद्धिरिति भावः । द्वितीयं शङ्कते **तदिति** । किमत्र प्रयोजनं विनैव विप्रलम्भोऽभिमत उत प्रयोजनापेक्षयेति विकल्पं मनसि निधाय प्रयोजनं विना विप्रलम्भादृष्टेर्नाद्य इत्याह **विप्रलम्भो हीति** । द्वितीयप्रयोजनं दृष्टमैश्वर्यादिकं किंवाऽन्यदिति विकल्प्याद्यं दूषयति **आप्तेति** । द्वितीयं प्रत्याह **प्रयोजनान्तरस्य चेति** । ननु विप्रलम्भमूलत्वेन तदीयमोक्षप्रत्यक्षविषयकवाक्यनिराकरणेऽपि योगिनामनिराकरणाद्यदि तेऽपि निषिध्यन्त इत्यसदनुवाद इत्यतोऽस्य तत्रैव तात्पर्यान्नासदनुवादत्वमित्यभिप्रेत्य तत्तात्पर्यमाह **एवम्भूता इत्यादिना** । ननु यत्र वसिष्ठादीनां तथोक्तेर्विप्रलम्भमूलकत्वं तत्र लोकायताचार्योक्तेर्विप्रलम्भमूलकत्वमिति विशेषव्याप्तौ दृष्टान्ताभावेन तादृशव्याप्त्यसिद्ध्या मूलशैथिल्यात्प्रसङ्गाभासोऽयमित्याशङ्क्य **विशेषव्या-**प्त्यभावेऽप्यविशेषलक्षणसामान्यव्याप्तेर्भावान्न मूलशैथिल्यमित्याशयेनोक्तमविशेषादिति । एतदित्युक्तं विवृणोति **विप्रकर्षेति** । एतेनेत्युक्तं विवृणोति **दोषेति** । इतिहासपुराणादेरप्रामाण्यं किं दोषमूलकत्व-प्रयुक्तं किंवा तेन विनैव तत्र द्वितीयस्यातिप्रसङ्गपराहतत्वात् । आद्य एवाङ्गीकार्य इत्याह **दोषेति** । अस्तु तर्हि विप्रलम्भादिदोषमूलकत्वादेव तदप्रामाण्यमित्यतो दोषवत्त्वसाधकप्रमाणाभावेन तदसिद्धेर्न तेन तदप्रामाण्यसिद्धिरित्याह **न चेति** । विमतं दोषमूलं वाक्यत्वादिति वाक्यत्वस्यैव तत्र प्रमाणत्वा-त्कथं प्रमाणाभाव इत्यत आह **वाक्यत्वेनैवेति** ।

**प०** — इत्येतत्कुतो निरस्तमित्यत एतेनेत्युक्तं व्यनक्ति **दोषदर्शनेनेति** ।

**श्री०** — एतेनेत्युक्तं विशदयति **दोषदर्शने हीत्यादिना** ।। **तत्रेति** । लोकायताचार्य-वचसीत्यर्थः ।

**सु०** — **न लोकायताचार्योक्तिर्विप्रलम्भशङ्कया निराक्रियते । प्रत्यक्षसंवादेन प्रामाण्य-निश्चयादिति चेत्समं प्रकृतेऽपीत्याह** यदुक्तेति ।

**अनु०** — यदुक्तवाक्यप्रामाण्यं प्रत्यक्षेणोपलभ्यते ।

**यैर्योगिभिरुक्तानां वाक्यानां प्रामाण्यं प्रत्यक्षेण प्रत्यक्षसंवादेनोपलभ्यन्ते तेऽपीति पूर्वेणान्वयः । कथमित्यत आह** वरादयोऽपीति ।

वरादयोऽपि तद्दत्ताः सदा सत्या भवन्ति हि ।

तैर्योगिभिर्दत्ता वराः शापाश्च सदाऽव्यभिचारेण सत्या भवन्ति । हि यस्मात्तस्मादिति पूर्वेणैव संबन्धः । ते प्रसन्नाः सन्तस्तवेदं भद्रं भविष्यतीति वा कुपिताः सन्तस्तवेदमभद्रं भविष्यतीति वा यदाहुस्तत्तथैव भवत्प्रत्यक्षेणोपलभ्यत इति ।

स्यादेतत् । प्रत्यक्षयोग्यार्थे भवतु तत्संवादेन तदीयं वाक्यं प्रमाणम् । अतीन्द्रिये तु मोक्षादौ कथमिति । एवं तर्हि लोकायताचार्यवचनमपि प्रत्यक्षयोग्यार्थे तत्संवादेन प्रमाणमस्तु । अतीन्द्रिये तु मोक्षाभावादौ कथमिति समानम् ।

अथ मन्यसे प्रत्यक्षयोग्यार्थे तावत्तदीयं वचनं प्रत्यक्षसंवाद्येवोपलब्धम् । तेनातीन्द्रियार्थविषयेऽपि तत्र विश्वसिमः । लोके तथोपलम्भादिति । तदिदं प्रकृतेऽपि समानम् । तदिदमुक्तमनुक्तसमुच्चयार्थेनापिपदेन ।

शे०— दोषवत्त्वसाधनद्वारेति शेषः ॥ **निराक्रियत इति** । निराकर्तुं शक्यत इत्यर्थः । **सममिति** । वसिष्ठाद्युक्तेरपि प्रत्यक्षसंवादेन प्रामाण्यनिश्चयान्न विप्रलम्भादिशङ्कया निराकरणं कर्तुं शक्यमिति भावः ॥ **अनुक्तसमुच्चयार्थेनेति** । अनेन वरादय इत्यनेन प्रत्यक्षसंवादिवसिष्ठादिवाक्यमपिपदसमुच्चितं प्रत्यक्षासंवादितद्वाक्यं च प्रमाणमेवेति वाक्ययोजनोक्ता भवति ।

श्री०— **लोके तथेति** । एकत्र विश्वासेऽन्यत्रापि विश्वासदर्शनादिति भावः ।

सु०— एवं सत्प्रतिपक्षतानिरासाय योगिनां मोक्षप्रत्यक्षवादस्य प्रामाण्यम्, अप्रामाण्यं च लोकायताचार्यस्य मोक्षाभावप्रत्यक्षोक्तेरुपपादितम् । हेत्वन्तरेणापि तदप्रामाण्यमुपपादयति अप्रामाण्यमिति ।

अनु— अप्रामाण्यं तदुक्तेश्च वृथावाचाऽवसीयते ॥

हेतुसमुच्चये चशब्दः । वृथावाचेति भावप्रधानो निर्देशः । वृथात्वादित्येवोक्ते तृणादिदर्शने व्यभिचारः स्यात् । तदर्थं वाग्ग्रहणम् । कथं लोकायताचार्योक्तेर्वृथात्वमित्यत आह न हीति ।

न हि प्रयोजनं किञ्चित्परलोकनिवारणात् ।

परलोकस्य मोक्षादेर्निवारणात् नास्तित्वप्रतिपादनाल्लभ्यं किञ्चित्प्रयोजनं नास्तीत्येतत्प्रसिद्धमेव । तथा हि । तदुक्तेरदृष्टं वा प्रयोजनं स्याद्दृष्टं वा । न तावददृष्टम् । परलोकनिवारणात् । अदृष्टं हि स्वर्गादावुपभोग्यं वा स्याद्देहान्तरेणैव वा । नाद्यः । स्वर्गादेः परलोकस्य परेण प्रतिषिद्धत्वात् । न द्वितीयः । देहात्मवादिनाऽस्यात्मनः परलोकस्य देहान्तरस्य निवारणात् । नापि दृष्टम् । प्रतिपादकप्रतिपाद्ययोरर्थकामलाभानुपलम्भादिति ।

शे० — हेतुहेतुमद्भावस्यास्पष्टत्वात्परलोकनिवारणादित्युक्तमेव स्पष्टयति **अदृष्टं हीति** । परलोकस्येत्यस्य व्याख्यानं **देहान्तरस्येति** ॥ **प्रतिपादकेति** । आचार्यशिष्ययोरित्यर्थः ।

स० — **प्रतिपाद्यः** शिष्यः तस्यापि प्रतिपादनकर्मत्वात् ।

प० — **हेत्वन्तरेणेति** । विप्रलंभपूर्वकत्वरूपप्रागुक्तहेत्वपेक्षया वृथात्वरूपहेत्वन्तरेणेत्यर्थः । वृथावाचा चेत्यन्वयमुपेत्याह **हेतुसमुच्चये चशब्द इति** । विप्रलंभरूपहेतुना वृथात्वहेतोर्वक्ष्यमाणानर्थत्वहेतुना च समुच्चय इत्यर्थः ॥ **भावप्रधान इति** । वृथावाक्त्वेनेत्येवं रूपेणेत्यर्थः ॥ **प्रतिपादकप्रतिपाद्ययोरिति** । बोधकबोध्ययोरित्यर्थः । गुरुशिष्ययोरिति यावत् ॥ **अर्थेति** । अर्थकामयोर्लाभानुपलंभादित्यर्थः ।

या० — **प्रतिपाद्यप्रतिपादकयोरिति** । शिष्याचार्ययोरित्यर्थः । **विनेयानां** शिष्याणाम् ॥ **साध्यनिर्देश इति** । उद्देश्यविशेषणतया प्रतीतस्यापि वृथावाक्त्वस्य साध्यतैव विवक्षितेत्यर्थः । एतदेव दर्शयति **एवमपीति** ॥ **अदृष्टप्रयोजनेति** । अस्मिन्पक्षे हेतुगर्भमिदं विशेषणमिति बोध्यम् ।

श्री० — **हेतुसमुच्चय इति** । अप्रामाण्ये हेत्वन्तरसमुच्चय इत्यर्थः ।

---

सु० — वैदिकानां धर्माधर्मव्यवस्थापकैर्वचनैरुपरुद्धकामभोगानां प्राणिनां धर्माद्यभावप्रतिपादनेन कामोपभोगोपरोधनिवृत्तिरूपपरोपकारस्तावदाचार्यस्य प्रयोजनमस्ति । यद्यप्युपकारो न स्वरूपेण प्रयोजनम् । नाप्यदृष्टहेतुत्वेन । तथाऽप्युपकर्तारं प्रत्युपकुर्वन्त्येव । विनेयानां च कामोपभोगोपरोधनिवृत्तिरेवास्ति प्रयोजनम् । तत्कथं वृथात्वमित्यत आह वृथा वाचमिति ।

अनु० — वृथा वाचं वृथा हन्याद्यदि तस्य किमुत्तरम् ॥

अत्र वृथावाचमिति साध्यनिर्देशः । एवमपि वृथावाक्त्वं न परिहार्यमिति । अदृष्टप्रयोजनरहितवाचमिति वा । यदि कश्चित्तमाचार्यं विनेयं वा वृथैव हन्यात्तदा तं प्रति तस्य किमुत्तरम् । न किञ्चित् ।

एतदुक्तं भवति । न स्त एव धर्माधर्मौ, अतस्त्वया निरङ्कुशेन कामोपभोगः करणीय इत्याचार्येण बोधितोऽन्तेवासी तदीयकमनीयकान्ताद्यपहारार्थं तं हन्यादेव, तदाऽस्य का प्रतिक्रिया । उपकर्तुरपकारो महाप्रत्यवायहेतुरिति छान्दसोक्तेस्तेनैव त्याजितत्वात् । उपकर्तारं

**प्रत्युपकुर्वन्तीत्येतदपि धर्मादिवासनायां सत्यामेव । सा तु तेनैव निश्शेषिता । अतो नास्त्येवाचार्यस्य प्रयोजनम् । प्रत्युत स्वजीवनहानिलक्षणोऽनर्थ एव एवं विनेयानामप्यन्योन्यधनवनिताद्यपहाराय परस्परवधादावेव प्रवृत्तिः न तु कामोपभोगावसरः । महताऽनर्थेनाक्रान्तोऽल्पीयान्कामोपभोगोऽनर्थ एवेति ।**

शे० — **न स्वरूपेणेति** । सुखदुःखाभावेतरत्वादिति भावः ॥ **नापीति** । तदनङ्गीकारादिति भावः ॥ **विनेयानां चेति** । शिष्याणामित्यर्थः ॥ **साध्यनिर्देश इति** । उद्देश्यविशेषणतया प्रतीतमपि वृथावाक्त्वं साध्यतयैव विवक्षितमित्यर्थः । तदेवोपदर्शयति **एवमपीति** । भावप्रधानत्वाश्रयणे लक्षणा भवतीत्यपरितोषादाह **अदृष्टेति** । ननु प्रतिपाद्यप्रतिपादकयोः शङ्कितप्रयोजननिरासस्य मूलात्स्पष्टमप्रतीतेः कथमेतेन वृथावाक्त्वरूपसाध्यसिद्धिरित्यत आह **एतदुक्तं भवतीति** । ननूपकर्तुरपकारस्य महाप्रत्यवायहेतुत्वात्कथमुपकर्तारमाचार्यं हन्यादित्यत आह **उपकर्तुरिति** ॥ **तेनैवेति** । आचार्येणैवेत्यर्थः ॥ **त्याजितत्वादिति** । धर्माधर्माभावप्रतिपादनेनेति शेषः । ननु तथाऽपि ये हिंसादिना धनवनितादिकं लभन्ते तेषामस्त्येव कामोपभोग इति कथं तस्यानवसर इत्यतस्तेऽपि ततोऽपि बलवत्तरैरन्यैर्हिंस्यन्त एवेत्यतो महताऽनर्थेनाक्रान्तत्वान्नासौ प्रयोजनमित्याह **महतेति** ।

प० — **विनेयानां चेति** । शिष्याणामित्यर्थः । साध्यनिर्देशरूपतां व्यनक्ति **एवमिति** । हेतुगर्भतामुपेत्याह **अदृष्टेति** ॥ **छान्दसोक्तेरिति** । वैदिकानामुक्तेरित्यर्थः ॥ **निश्शेषितेति** । शेषोऽपि यथा नास्ति तथा कृतेत्यर्थः ।

श्री० — **न स्वरूपेणेति** । सुखदुःखावाप्तिहान्योरन्यतरत्वाभावादिति भावः । **उपकुर्वन्ति** द्रव्यदानादिना ।

सु० — **अस्त्वेवं लोकायताचार्योक्तेर्वृथात्वमनर्थहेतुत्वं च । तथाऽप्यप्रामाण्यं कुत इत्यत आह स्वेति ।**

अनु० — स्वजीवनविरोधाय वदन्किन्नाम बुद्धिमान् ।

**स्वशब्दः परेषामप्युपलक्षकः । व्यर्थं चेति शेषः । व्यर्थानर्थहेतुवाक्त्वेन लोकायताचार्यस्याप्रेक्षावत्त्वमनुमीयते । ततस्तद्वचनस्याप्रामाण्यमिति शेषः । उक्तश्चायमर्थः प्रयोजनाधिकरणे ।**

शे० — निष्प्रयोजनत्वस्याप्युपपादितत्वादनर्थहेतुत्वमात्रकथनानुपपत्तिमाशङ्क्याह **व्यर्थं चेति शेष इति** । ननु लोकायताचार्योक्तेर्वृथात्वेऽपि प्रामाण्यसंभवादप्रयोजकमेतदिति शङ्काया न परिहार

इत्यतो न वयं वृथात्वेन साक्षादप्रामाण्यं साधयामो येनाप्रयोजकत्वं शङ्क्येत । किन्नाम व्यर्थानर्थवाक्त्वेन लोकायताचार्यस्याप्रेक्षावत्स्वरूपानाप्तत्वमनुमायानाप्तवाक्यतया तच्छास्त्रस्याप्रामाण्यमनुमीयते । तत्र चानाप्तेरप्रामाण्यकारणत्वेन नाप्रयोजकत्वमित्याशयेन श्रुतपूरितसङ्कलनेन वाक्यतात्पर्यमाह **व्यर्थानर्थेति** । अभ्युपेत्य चेदमुक्तम् । वस्तुतस्तु निष्फलत्वेन साक्षादप्यप्रामाण्यसाधनेनानुपपत्तिरित्यभिप्रेत्य कथं फलाभावेन तद्वचनस्याप्रामाण्यानुमानम् । न हि फलवत्त्वं प्रामाण्यं किन्तु याथार्थ्यमेव । नापि प्रामाण्यस्य व्यापकम् । तृणादिदर्शनस्य प्रयोजनाभावेऽपि प्रामाण्यदर्शनादित्यतः प्रामाण्यमात्रस्य प्रयोजनवत्त्वेन व्याप्त्यभावेऽपि तद्विशेषस्य वाक्यप्रामाण्यस्यास्त्येव । पदानामिष्टसाधन एव गृहीतसङ्गतिकत्वात् । सङ्गतिग्रहणव्यपेक्षस्यैव वाक्यस्यार्थबोधकत्वात् । ततश्च व्यापकाभावेन व्याप्यवाक्यप्रामाण्याभावापादनमुपपन्नमेवेति 'याथार्थ्यमेव प्रामाण्यमपि वाक्यं प्रयोजकमि'त्यादिना प्रयोजनाधिकरणे उक्तश्चायमर्थ इत्याह **उक्तश्चायमर्थ इति** ।

**म० — उक्तश्चायमर्थः प्रयोजनाधिकरण इति** । 'एवमपि वाक्यं प्रयोजकम् । मानत्वमेति तत्रापि यत्सम्पूर्णप्रयोजनमि'त्यादिनेति शेषः ।

**प० — तथाऽपीति** । प्रयोजनादिहीनत्वेऽपीत्यर्थः । याथार्थ्यमेव प्रामाण्यं न प्रयोजनवत्त्वमिति स्वीकारादित्यर्थः ॥ **परेषामपीति** । शिष्याणामपीत्यर्थः ॥ **उक्तश्चायमर्थ इति** । प्रयोजनवत्त्वमपि वाक्यप्रामाण्यप्रयोजकमित्येषोऽर्थः न प्रयोजनवत्त्वादित्यत्र युक्तिपादे 'याथार्थ्यमेव मानत्वमपि वाक्यं प्रयोजकम् । मानत्वमेती'त्यनुव्याख्यानसुधयोरुक्त इत्यर्थः ।

**या० — लोकायतनाचार्योक्तिर्वृथात्वेऽप्यप्रामाण्यं** कुत इत्याशङ्कायां न वृथात्वं साक्षादप्रामाण्ये हेतुर्येनाप्रयोजकत्वशङ्का किन्त्वप्रेक्षावत्स्वरूपानाप्तत्वानुमानद्वारा । तत्र च नाप्रयोजकत्वशङ्का । अनाप्तेरप्रामाण्यकारणत्वादित्यभ्युपेत्योक्तं । वस्तुतस्तु साक्षादपि तस्य हेतुत्वेनाप्रयोजकत्वशङ्केत्याह **उक्तश्चायमर्थ इति** । 'याथार्थ्यमेव मानत्वमपि वाक्यं प्रयोजकम् । मानत्वमेती'त्येतद्व्याख्यावसरे वाक्यप्रामाण्यं प्रयोजनवत्त्वेन व्याप्तमिति तावदवश्यमङ्गीकार्यम् । पदानामिष्टसाधन एव गृहीतसङ्गतिकत्वात् । पदसङ्गतिग्रहणसव्यपेक्षस्यैव वाक्यस्य बोधकत्वात् । अतो व्यापकाभावे व्याप्यस्य वाक्यप्रामाण्यस्याप्यभाव इति नाप्रयोजकत्वशङ्केत्ययमर्थः प्रयोजनाधिकरण उक्तश्चेत्यर्थः ।

**श्री० — तत इति** । अप्रेक्षावत्प्रणीतत्वादित्यर्थः ।

सु० — **उक्तमर्थं बुद्ध्यारोहाय सङ्क्षिप्याह** प्रामाण्य इति ।

अनु० — प्रामाण्ये संशयः किं स्यात्तयोः पुरुषयोरपि ॥
स्वजीवनविरुद्धोक्तिरज्ञो दृष्टस्य चापि यः ॥
यश्चातीन्द्रियदेवोक्तिश्रोता दृष्टपरावरः ॥
अतीतानागतं सर्वं लोकानुभवमापयन् ॥

**(अत्र) प्रामाण्यशब्देनाप्तत्वमुच्यते । किमित्याक्षेपे । अपिशब्दो गर्हायाम् । स्वेत्युपलक्षणम् ।** दृष्टस्य **दर्शनयोग्यस्यापि बहोरर्थस्य । चशब्दो विशेषणसमुच्चये । देवोक्तीत्यतीन्द्रियान्तरस्याप्युपलक्षणम् । स्वोक्तं सर्वं प्रत्यक्षसंवादेन** लोकानुभवं-**लोकाश्वासं** प्रापयन् ।

**यः स्वजीवनविरुद्धोक्तित्वादिविशेषणो लोकायताचार्यो यश्चातीन्द्रियदेवोक्तिश्रोतृत्वादिविशेषणो योगी तयोरपि पुरुषयोः प्रामाण्ये संशयः स्यात्किं, न स्यादेव । किन्त्वाद्यस्याप्रामाण्यमेव द्वितीयस्य प्रामाण्यमेव निश्चीयत इति योजना ।**

शे० — उक्तस्यैव पुनर्वचनात्पौनरुक्त्यमित्यत आह **उक्तमर्थमिति** । सङ्क्षिप्योक्तेः प्रयोजनमाह **बुध्यारोहायेति** । पुरुषस्य प्रामाण्याभावात्प्रामाण्य इत्यस्यानुपपत्तिमाशङ्क्याह **अत्रेति** । **प्रामाण्यं** प्रमापकत्वमाप्तत्वमिति यावत् ॥ **आक्षेप इति** । उत्तराभावेन प्रश्नार्थत्वायोगादिति भावः । समुच्चयाद्यर्थत्वासम्भवादाह **अपिशब्द इति** । अपिः पदार्थसम्भावनान्वयगर्हासमुच्चयेष्विति स्मरणादिति भावः । आप्तत्वानाप्तत्वव्याप्यधर्मवत्तया निश्चिततया सन्देहायोगाद्गर्हितत्वमिति द्रष्टव्यम् ॥ **स्वेत्युपलक्षणमिति** । स्वपरजीवनविरुद्धोक्तिरिति द्रष्टव्यमित्यर्थः । ननु दृष्टस्याज्ञ इति विरुद्धमित्यत आह **दर्शनयोग्यस्येति** । एवं पदार्थमुक्त्वा व्यवहितत्वादाकाङ्क्षाक्रमेण वाक्ययोजनामाह **य इत्यादिना** ॥ **आद्यस्येति** । लोकायताचार्यस्यानाप्तत्वमित्यर्थः ॥ **द्वितीयस्येति** । वसिष्ठादेराप्तत्वमित्यर्थः ॥

प० — **अपिशब्दो गर्हायामिति** । द्वयोरसाम्यादाप्तत्वसंशयो गर्हितोऽयुक्त इत्यर्थः ॥ **उपलक्षणमिति** । स्वपरजीवनेत्यर्थो लक्षणमित्यर्थः ।

या० — **गर्हायामिति** । आप्तत्वानाप्तत्वव्याप्यविशेषणवत्त्वेनानयोर्निश्चितत्वात्संशयो गर्हित इत्यर्थः ।

श्री० — दृष्टस्याप्यज्ञ इति व्याहतमतो व्याचष्टे **दृष्टस्येति** । **अप्रामाण्यम्** अप्रमापकत्वम् । अनाप्तत्वमिति यावत् । **प्रामाण्यं** प्रमापकत्वमाप्तत्वमिति **यावत्** ।

सु० — एवं निमित्ताभावेनासंभावितातीन्द्रियज्ञानस्य कामुकत्वादिना संभावितविप्रलम्भस्य लोकायताचार्यस्य योगर्धिसंपदा संभावितसार्वज्ञ्यावाप्तसमस्तैश्वर्यवत्त्वादिनाऽत्यन्तासंभावितवञ्चकत्वात्प्रत्यक्षसंवादिवचसो योगिनः प्रति, प्रतिपक्षत्वासंभवे (न) तद्वचनावगतेन तत्प्रत्यक्षेण मोक्षः सिध्यतीत्युक्तम् । इदानीं वेदेनापि तं सिषाधयिषुस्तत्प्रामाण्ये विप्रतिपन्नं प्रति किं संवादरहितत्वाद्वेदस्याप्रामाण्यमुच्यते । उत वाक्यत्वादुन्मत्तवाक्यवत् । अथवोन्मत्तवाक्यादनिश्चितविशेषत्वादथ (वा) बाधितत्वादिति विकल्प्याद्येऽपि किं सर्वस्य संवादो नास्ति उतैकदेशस्येति विकल्प्याद्यं निराचष्टे अत इति ।

अनु० — अतः प्रत्यक्षगम्यत्वाद्वेदमात्रस्य च स्फुटम् ॥

वैदिकानुष्ठानवतां तत्फलसिद्धेर्दृष्टत्वादित्यर्थः । प्रत्यक्षगम्यत्वात् प्रत्यक्षसंवादेन सिद्धत्वात् । प्रमाणसमुच्चये चशब्दः । वेदेन च मोक्षसिद्धिरिति । अनेन सर्वस्यापि वेदस्य प्रमाणान्तरसंवादो नास्तीत्येतदसिद्धम् । ऐश्वर्यादिसाधनतया योगादिकमुपदिशतो वेदभागस्य संवाददर्शनादित्युक्तं भवति । मोक्षप्रतिपादकानि च वेदवाक्यानि तत्र तत्रोदाहृतान्येव द्रष्टव्यानि । फलविसंवादोऽपि वेदस्य दृश्यत इति चेन्न । तस्य कर्तृकर्मादिवैगुण्यहेतुतायाः प्रागुक्तत्वात् । तदिदमुक्तं स्फुटमिति ।

आद्ये द्वितीयं दूषयति यदीति ।

यद्यागमस्य नो मात्वमक्षजस्य तथा भवेत् ॥

यदि भागविशेषस्य संवादाभावेन कृत्स्नस्यापि आगमस्य नो मानत्वम् अप्रमाणत्वमित्युच्यते तर्हि अक्षजस्य प्रत्यक्षमात्रस्य तथा अप्रमाणत्वं भवेत् । अस्मात्सुखादिविषयस्य प्रत्यक्षस्य संवादाभावात् । यदि च संवादरहितस्यैव वेदभागस्य नो मानत्वमित्युच्यते तदाऽस्मत्सुखादिविषयस्य प्रत्यक्षस्याप्रामाण्यं भवेदेवेति । यद्यपि योगिप्रत्यक्षसंवा(दोऽस्ति तथा)दः प्रागुक्तस्तथाऽपि तदितरप्रमाणापेक्षयेदमुदितं वेदितव्यम् ॥ स्यादेतत् । प्रत्यक्षं स्वत एव प्रमाणं तत्र किं संवादेनेत्यत आह यद्यक्षजस्येति ।

यद्यक्षजस्य मात्वं स्यादागमस्य कथं न तत् ॥

यदि संवादेन विनाऽक्षजस्य स्वत एव प्रमाणत्वं स्यात्तर्हि आगमस्य तत् स्वत एव प्रामाण्यं कथं न भवेत् अविशेषाद्भवेदेव ।

शे० — निमित्ताभावेनेति । योगर्धिसम्पत्तिरूपनिमित्ताभावेनेत्यर्थः ॥ कामुकत्वादिनेति । रागादिदोषवत्त्वेनेत्यर्थः ॥ आद्येऽपीति । किं सर्वथा (कस्यापि भागस्येत्यर्थः) संवादो नास्ति किंवा

सर्वस्यापि संवादो नास्तीति प्रश्नाभिप्रायः ॥ **प्रमाणसमुच्चय इति**। योगिप्रत्यक्षरूपपूर्वोक्तान्यस्त-प्रमाणसमुच्चयार्थ इत्यर्थः। समुच्चयमेव दर्शयति **वेदेन चेति** ॥ **प्रागिति**। 'न विलक्षणत्वादि'त्यत्रेत्यर्थः। एकदेशसंवादाभावेन किं सर्वस्याप्रामाण्यमुच्यते उत यस्मिन् देशे संवादाभावः तस्य सर्वस्यैवेति विकल्पद्वयं मनसि निधाय पक्षद्वयोत्तरत्वेनापि मूलं योजयति **यदीति** ॥ **यद्यपीति**। अस्मत्सुखादेरपि योगिप्रत्यक्षवेद्यत्वादिति भावः। तथा च संवादाभावकथनं न युक्तमिति वाक्यशेषः।

**स०— प्रागुक्तत्वात्** प्रामाण्यवाद इति शेषः।

**प०— तत्रतत्रोदाहृतानीति**। 'बन्धान्मोक्षं तत एवाभिवांच्छेत्। तत्प्रीणनान्मोक्षमाप्नोति सर्वः'। 'मोक्ष एव परानन्दः संसारे परिवर्तताम्। मुमुक्षुभिः कर्मपाशादि'त्यादीनीति भावः ॥ **प्रागुक्तत्वादिति**। न विलक्षणत्वादित्युक्तिपादीयानुव्याख्यानसुधयोरुक्तत्वादित्यर्थः।

**या०— प्रागुक्तत्वादिति**। विलक्षणाधिकरण उक्तत्वादित्यर्थः।

**श्री०— निमित्ताभावेनेति**। अतीन्द्रियार्थज्ञाननिमित्तभूतयोगर्द्ध्याद्यभावेनेत्यर्थः। लोकायताचार्यस्य योगिनः प्रतिपक्षत्वासम्भवादित्यन्वयः। योगिन इति कर्मणि षष्ठी। योगिनं प्रतीत्यर्थः। प्रतिपक्षत्वासम्भवे निमित्तकथनाय योगिभिरित्याद्युक्तम्। ईश्वरसाम्यव्यावृत्त्यर्थमुक्तं सम्भावितसार्वज्ञेति। **सर्वस्येति**। कस्यापि भागस्येत्यर्थः। चशब्दसमुच्चेयं प्रमाणमेव दर्शयति **वेदेन चेति**। मोक्षप्रतिपादकानि वेदवाक्यानि कानि यैर्मोक्षसिद्धिः स्यादित्यत आह **मोक्षप्रतिपादकानि चेति** ॥ **सर्वस्यापीति**। कस्यापि भागस्येत्यर्थः।

**सु०— द्वितीयं निराकरोति** यद्यागमस्येति। **यदि वाक्यत्वमात्रेणोन्मत्तवाक्यवदागमस्य न मानत्वमित्युच्यते। तर्ह्यक्षजत्वेन शुक्तिरजतादिविषयाक्षजवत्स्तम्भाद्यक्षजस्याप्यप्रामाण्यं स्यादविशेषात्। निर्दोषत्वात्स्तम्भादिविषयमक्षजं प्रमाणमित्यत** आह यद्यक्षजस्येति। **यदि निर्दोषत्वात्स्तम्भादिविषयस्याक्षजस्य प्रमाणत्वं स्यात्तर्ह्यागमस्यापि तत एव कथं न भवेत्। न ह्यपौरुषेयस्य सदोषता सम्भवति। वेद इत्युपक्रमात्तथैव वक्तव्ये यदागमस्येति वदति तदनेनैव न्यायेन पौरुषेयागमस्यापि प्रामाण्यं साधनीयमिति सूचयितुम्।**

**शे०— तत एव** निर्दोषत्वादेव। निर्दोषत्वमेवोपपादयति **न हीति** ॥ **अनेनैव न्यायेनेति**। किमत्र सर्वथा संवादाभावोऽभिमतः। किंवा सर्वस्यापि। नाद्यः। पौरुषेयवाक्यस्यापि क्वचित्प्रमाणसंवाददर्शनात्। द्वितीयेऽपि किं तेन सर्वस्याप्रामाण्यं साध्यमुत संवादरहितांशस्य। आद्ये क्वचित्प्रत्यक्षस्य

संवादाभावेन सर्वस्यापि प्रत्यक्षस्याप्रामाण्यापातात् । अस्मत्सुखादिविषयप्रत्यक्षस्य संवादाभावात् ॥ द्वितीये सुखादिविषयप्रत्यक्षस्याप्रामाण्यमित्यादिप्रागुक्तन्यायेनैव पौरुषेयागमस्यापि प्रामाण्यं ज्ञातव्यमिति भावः ।

प० — **अनेनैव न्यायेनेति** । प्रत्यक्षप्रतिबंद्या फलसंवादादिन्यायेनेत्यर्थः ।

सु० — **तृतीयं निराकरोति** लोकेति ।

अनु० — लोकवाक्याद्विशेषश्चाव्यभिचारेण सिध्यति ॥

**उन्मत्तादिवाक्यात्** । विशेषो **वेदस्य** । अव्यभिचारेण **बाधराहित्येन । न हि वैदिकोऽर्थः प्रत्यक्षसिद्धो येन तत्तत्र बाधकतयाऽवकाशं लभेत** ।

**एतेन चतुर्थोऽपि निरस्तः** ।

शे० — **एतेनेति** । वैदिकार्थस्याप्रत्यक्षत्वेन तत्र प्रत्यक्षस्य बाधकत्वासंभवप्रतिपादनेन बाधकसद्भावादिति चतुर्थोऽपि निरस्त इत्यर्थः ।

प० — **एतेनेति** । फलसंवादकथनेनेत्यर्थः ।

---

सु० — **तदेवं प्रत्यक्षागमाभ्यां मोक्षं साधयतेहामुत्र फलभोगवैराग्यवतां योगिनां प्रवृत्तिः सफला प्रेक्षावत्प्रवृत्तित्वात्सम्मतवदित्यनुमानमपि सूचितम् । अनुमानप्रामाण्यं च प्रागेव समर्थितम्** ।

शे० — किरणावलीकाराद्यभिमतमनुमानेन मोक्षसाधनप्रकारं दूषयितुं स्वाभिमतमनुमानेन मोक्षसाधनप्रकारं तावदाह **तदेवमिति** ।

स० — **एतेन चतुर्थोऽपीति** । वैदिकार्थस्याप्रत्यक्षत्वे तत्र प्रत्यक्षस्य बाधकत्वासंभवप्रतिपादनेन बाधकसद्भावादिति चतुर्थोऽपि निराकृत इत्यर्थः ।

प० — **प्रवृत्तिरिति** । श्रवणाद्यनुष्ठानमित्यर्थः ॥ **प्रागेवेति** । 'प्रत्यक्षस्यैव मानत्वमिति केनावसीयते' इत्यादिना अभ्युपगमेऽपीत्येतत्सूत्रानुव्याख्यानसुधयोः, तथा आगमानुगृहीतानुमानमित्यादिना तर्काप्रतिष्ठानादित्येतदनुव्याख्यानादौ चेत्यर्थः ।

या० — **प्रागेवेति** । जिज्ञासाधिकरण इत्यर्थः ।

सु० — अपरे पुनरनुमिमते । दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वाद्दीपज्वालासन्ततिवदिति । तदसत् । सकलजीवगतदुःखसन्ततिपक्षीकारेऽशे बाधितत्वात् । नित्यसंसारिणां केषाञ्चित्सत्त्वस्य तैरप्यङ्गीकृतत्वात्समर्थयिष्यमाणत्वाच्च । तद्व्यतिरिक्तजीवगतदुःखसन्ततिपक्षीकारे तु तत्रैव व्यभिचारात् । पार्थिवपरमाणुरूपादिसन्ताने व्यभिचाराच्च । सर्वमुक्तिपक्षे फलमूलयोरभावेन सोऽप्यत्यन्तमुच्छिद्यत एवेति चेन्न । सर्वमुक्तिपक्षस्यैव निराकरिष्यमाणत्वात् । कालक्षणसन्ताने व्यभिचाराच्च ।

किञ्च दुःखसन्ततिशब्देन दुःखान्येवोच्यन्ते उत तद्धर्मः कश्चित् । आद्ये सिद्धसाधनता । मोक्षमनङ्गीकुर्वताऽपि दुःखानां विनाशिताऽभ्युपगमात् । अत एवात्यन्तमित्युक्तमिति चेत् । कोऽस्यार्थः । किं सर्वाण्यपि दुःखान्युच्छिद्यन्त इति । उत निःशेषतयोच्छिद्यन्त इति । अथवा तत्र दुःखान्तरानुत्पादेनेति । न प्रथमः । सिद्धसाधनताऽनिस्तारात् । सर्वेषामपि दुःखानां परेणानित्यतायाः स्वीकृतत्वात् । अत एव न द्वितीयः । न हि दुःखं सावयवद्रव्यम् । येन सशेषमुच्छिद्यत इति शङ्क्येत । न तृतीयः । दृष्टान्तस्य साध्यविकलत्वात् । न हि दीपज्वालासन्ततिरेवमुच्छिद्यते । तत्रैव पुनर्ज्वालान्तरोदयसंभवात् ॥ न द्वितीयः । दुःखधर्मो हि जातिर्वा तदन्यो वा । आद्येऽपसिद्धान्तः । जातेर्नित्यत्वाङ्गीकारात् । न द्वितीयः । आश्रयासिद्धेः । गुणेषु जातिव्यतिरिक्तधर्मानङ्गीकारात् । अङ्गीकारेऽप्यर्थान्तरता स्यात् । न हि दुःखधर्मस्य कस्यचिद्विनाशसिद्धौ मोक्षसिद्धिरिति ।

शे० — **अपर इति ।** किरणावलीकारादय इत्यर्थः ॥ **अत्यन्तमुच्छिद्यत इति ।** दुःखप्रागभावासमानकालीनध्वंसप्रतियोगिनीत्यर्थः । प्रलयावस्थायां दुःखसन्ततेरुच्छेदस्वीकारात्सिद्धसाधनतानिवृत्त्यर्थमत्यन्तपदम् ॥ **तैरपीति ।** कन्दलीकारलीलावतीकारप्रभृतिभिः । कैश्चिद्वैशेषिकैः सर्वमुक्त्यनङ्गीकारेण केषाञ्चिदात्मनां संसार्येकस्वभावताऽङ्गीकारादिति भावः ॥ **समर्थयिष्यमाणत्वाच्चेति ।** त्रिविधजीवयोग्यताया अनादिनित्यत्वसमर्थनेन नित्यसंसारिजीवानां सत्त्वस्य ॥ **सर्वथाऽपि तु त एवोभयलिङ्गात्** इत्यत्र समर्थयिष्यमाणत्वाच्चेत्यर्थः ॥ **तत्रैवेति ।** नित्यसंसारिदुःखसन्ततावेवेत्यर्थः ॥ **पार्थिवेति ।** तत्र हि सन्ततित्वे सत्यपि नात्यन्तोच्छित्तिरस्ति सर्गान्तरेषु रूपाद्युत्पत्तेरित्यर्थः । अत्र तदीयमेव परिहारमुद्भावयति **सर्वमुक्तिपक्ष इति ॥ फलमूलयोरभावेनेति ।** सर्वमुक्तिपक्षे साऽपि सन्ततिरत्यन्तमुच्छिद्यत एव । सर्वात्मना ध्वस्ताशेषविशेषगुणवत्त्वेन धर्माधर्माख्यनिमित्तस्य सुखदुःखोपभोगलक्षणप्रयोजनस्य चाभावादित्यर्थः ॥ **निराकरिष्यमाणत्वादिति ।** 'सर्वथाऽपि तु त एवोभय-

लिङ्गादि'त्यादिनेति शेषः । तत्र नित्यसंसारिजीवसमर्थनादिति भावः ॥ **काल(ल)क्षणसन्तान इति ।** न च तस्याप्यत्यन्तोच्छेदान्न व्यभिचारः । तथा सति कदेति प्रश्नस्य निरुत्तरत्वापातात् ।

**अत एवेति ।** मोक्षमनङ्गीकुर्वताऽपि दुःखादीनां विनाशताऽभ्युपगमेन सिद्धसाधनत्वप्रसङ्गादेव तत्परिहारार्थमत्यन्तमिति साध्ये विशेषणं गृहीतमित्यर्थः ॥ **दुःखान्तरेति ।** स्वसमानाधिकरणदुःख-प्रागभावासमानकालीनत्वमेव दुःखोच्छेदस्यात्यन्तिकत्वमित्यर्थः ॥ **सिद्धसाधनतानिस्तारादिति ।** सिद्धसाधनताया अनिस्तारादपरिहारादित्यर्थः । एतदेव प्रपञ्चयति **सर्वेषामपीति** ॥ **अत एवेति ।** सिद्धसाधनत्वप्रसङ्गादेवेत्यर्थः । अत एवेत्युक्तमेव प्रथयति **न हीति** ॥ **तत्रैवेति ।** दीपारोपणेनेति शेषः । आद्यद्वितीयं निषेधति **न द्वितीय इति** ॥ **अङ्गीकारादिति ।** अन्यथा नित्यमनेकसमवेतमिति लक्षणव्याघातादिति भावः ॥ **गुणेष्विति ।** तत्र द्रव्यगुणकर्मविशेषाणामनभ्युपगमात् समवायस्य च धर्मनिरूपितत्वेन तद्रूपत्वानभ्युपगमात् । उपाधिरूपसामान्यस्य च परम्परासम्बन्धाज्जातिरेवोपाधिरिति पक्षे जातिकोटिप्रवेशात् । पक्षान्तरे च तस्य धर्मिस्वरूपत्वेन दुःखवृत्तित्वासम्भवात प्रध्वंसात्यन्तान्योन्या-भावानां नित्यत्वेन बाधप्रसक्त्याऽसम्भवात् । प्रागभावस्य नित्यत्वभावेपि दुःखेऽसम्भवान्न जातबन्यो धर्मस्तत्र सम्भवतीत्याशयः । अभ्युपेत्यापि यत्किञ्चिद्धर्मसम्भवं दूषयति **अङ्गीकारेऽपीति ।**

**स०— अत्यन्तमुच्छिद्यत इति ।** दुःखप्रागभावासमानकालीनध्वंसप्रतियोगिनीत्यर्थः । प्रलयावस्थायां दुःखसंततेरुच्छेदस्वीकारात् सिद्धसाधनतानिवृत्त्यर्थमत्यन्तग्रहणम् । **तैरपीति ।** कन्द-लीकारलीलावतीकारप्रभृतिभिः कैश्चित् वैशेषिकविशेषैः सर्वमुक्त्यनङ्गीकारेण केषांचिदात्मनां संसार्यैक्य-स्वभावताङ्गीकारादिति तत्त्वप्रदीपिकायाम् । **पार्थिवेति ।** तत्र हि संततित्वमस्ति न चात्यन्तोच्छित्तिः सञ्जतिरेषु तेषु रूपाद्युत्पत्तेरित्यर्थः । अत्र तदीयमेव परिहारमुद्भावयति **सर्वमुक्तिपक्ष इति । फल-मूलयोरभावेनेति ।** सर्वमुक्तिपक्षे सापि सन्ततिरत्यन्तमुच्छिद्यते धर्माधर्माख्यनिमित्तस्य सुखदुःखो-पभोगलक्षणप्रयोजनस्य वाऽभावादित्यर्थः । (तत्त्वप्रदीपिकायामुक्तम् । ) **निराकरिष्यमाणत्वात्** सर्वथापि तु त एवोभयलिङ्गादित्यत्रेत्यर्थः । न हि दीपज्वालासंततिरेवमुच्छिद्यते । तत्रैव पुन-र्ज्वालान्तरोदयसंभवात् इति ।

**प०**— एवं स्वमते प्रत्यक्षादिप्रमाणत्रयेण मोक्षास्तित्वमुपपाद्य तार्किकोक्तं मोक्षास्तित्वसाधका-नुमानमनूद्य निराह **अपर इति** ॥ **अत्यंतमिति ।** तदुच्छेदस्यैव मुक्तित्वमिति भावः ॥ **तैरपीति ।** तार्किकैरपीति भावः ॥ **समर्थयिष्यमाणत्वाच्चेति ।** ज्ञानपादे 'अनादियोग्यतां चैव कलिवाणीश्वरावधिम् ।

को निवारयितुं शक्त इत्यादिना अनादियोग्यतोक्तिप्रकरणे 'चोष्कूयते विश इन्द्रो मनुष्यानि'त्यादिवाक्योदाहरणेन समर्थयिष्यमाणत्वाच्चेत्यर्थः ॥ **फलमूलयोरिति** । फलं कार्ये द्व्यणुकादौ रूपाद्युत्पादः । मूलमदृष्टं तेजस्संयोगादि तयोरभावादित्यर्थः ॥ **निराकरिष्यमाणत्वादिति** । चतुर्थे तत्र मोक्षस्वरूपं त्वित्यदिना शून्यवादाद्यभिमतमोक्षस्वरूपनिरासेनेत्येके । ज्ञानपादे त्रिविधजीवसमर्थनेनेत्यन्ये ॥ **गणेषु जातिव्यतिरिक्तेति** । जातिव्यतिरिक्तधर्मस्यौपाधिकत्वादुपाधेश्च द्रव्यगुणाद्यनतिरेकात् । गुणेषु च द्रव्यगुणाद्यन्यतमस्याप्यभावादिति भावः ।

**या०** — एवं स्वमते विप्रतिपन्नं प्रति प्रत्यक्षानुमानागमैर्मोक्षसाधनप्रकारमुक्त्वेदानीमुदयनोक्तं मोक्षसाधनप्रकारमनूद्य दूषयति **अपरे पुनरिति** ॥ **तैरप्यङ्गीकृतत्वादिति** । यथाऽऽहोदयनः 'संसार्येकस्वभावा एव केचिदात्मान इति स्थितम्' इति ॥ **समर्थयिष्यमाणत्वादिति** । 'सर्वथाऽपि तु त एवोभयलिङ्गादि'त्यत्रेति शेषः । तत्र त्रिविधजीवयोग्यताया अनादिनित्यत्वसमर्थने नित्यसंसारिणां जीवानां सिद्धिरिति द्रष्टव्यम् ॥ **फलमूलयोरभावेनेति** । महाप्रलयानन्तरं परमाणुषु पुना रूपाद्युत्पत्तेः फलं रूपरसादीनामनुभवरूपो भोगो मूलमदृष्टम् । इदमुभयं सर्वमुक्तिपक्षे न संभवति । सर्वात्मना ध्वस्ताशेषविशेषगुणत्वादित्यर्थः । यथाऽऽह किरणावलीकारः 'न हि सर्वमुक्तिपक्षे सर्वोत्पत्तिमन्निमित्तस्यादृष्टस्यापायात्तदुत्पत्तिबीजमस्ति । न च सर्वभोक्तॄणामपवृक्तौ तदुत्पत्तेः प्रयोजनमस्ति । न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ती'ति । **निराकरिष्यमाणत्वादिति** । नित्यसंसारिजीवसमर्थनेनेति शेषः ॥ **दुःखान्तरानुत्पादेनेति** । तथा च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वं दुःखोच्छेदस्यात्यन्तिकत्वमिति भावः ॥ **जातिव्यतिरिक्तधर्मेति** । औपाधिकधर्माणां द्रव्यादिपदार्थघटितमूर्तिकत्वेन द्रव्याद्यनाश्रयेषु गुणेषु कथं ते धर्मा अङ्गीकर्तुं शक्या इति भावः । ननु गुणेषु द्रव्यगुणकर्मविशेषाणां वृत्त्यभावेन तद्घटितोपाधिकधर्माणां तत्राङ्गीकर्तुमशक्यत्वेऽपि समवायाभावयोस्तेषु सत्त्वेन तद्घटितधर्माणां तत्राङ्गीकारे न किञ्चिद्बाधकमित्याशयेनाह **अङ्गीकारेऽपीति** ।

**श्री०** — अपरे तार्किकाः ॥ **अनुमिमत इति** । अनुमानेन मोक्षं साधयन्तीत्यर्थः ॥ **दीपज्वालासन्ततिवदिति** । करदीपज्वालासन्ततिवदित्यर्थः ॥ तमेवांशे बाधमुपपादयति **नित्यसंसारिणामिति** । सकलजीवमध्ये तेषामपि पतितत्वेन तद्गतदुःखसन्ततेरपि पक्षकोटिनिविष्टत्वेन तस्या अत्यन्तमुच्छेदाभावाद्बाधः नित्यसंसारित्वेन तेषां मोक्षाभावादिति भावः ॥ **सोऽपीति** । पार्थिवपरमाण्वादौ पाकजरूपादिसन्तानेत्यर्थः ॥ **दुःखान्येवेति** । समुदायस्य समुदाय्यनतिरिक्तत्वादिति भावः । **तद्धर्म इति** । समुदायिनां दुःखानां धर्मभूतस्तदतिरिक्तः कश्चित्समुदाय इत्यर्थः । अनङ्गीकुर्वता चार्वाकेण ॥ **अत एवेति** । सिद्धसाधनतापरिहारार्थमेवेत्यर्थः । अस्य अत्यन्तपदस्य । अत एवेत्युक्तं विशदयति

**न हीति शङ्केतेति** । एवं शङ्कायामेव हि निश्शेषतयोच्छेदः साध्यत इति भावः । दीपज्वालासन्ततिः करदीपज्वालासन्ततिः । एवं ज्वालान्तरानुत्पादेन । कुतो नैवमुच्छिद्यत इत्यत आह **तत्रैवेति** । करदीपिकायामेव परमात्मनि कार्यविशेषगुणवत्त्वाभावादित्यपरः पक्षीभूते प्रकारः शेषः ॥ **न द्वितीय इति** । तद्धर्मः कश्चिदिति द्वितीयः पक्षो नेत्यर्थः ॥ **अनङ्गीकारादिति** । अनङ्गीकारे तेषां द्रव्याद्यन्तर्भावासंभवेन षट्पदार्थातिरेकः स्यादिति भावः । तामेवोपपादयति **तथा हीत्यादिना** । दुःखनाशासिद्धेरिति भावः ।

**च०**— सिद्धान्तदिशा प्रत्यक्षादिप्रमाणत्रयेण मोक्षास्तितां समर्थ्य न्यायनयदिशा तदस्तितासमर्थनभङ्गीनिराचिकीर्षया तामनुवदति **अपर इति** ।

**सु०— आत्मा कदाचिद्ध्वस्ताशेषविशेषगुणो विभुत्वे सति कार्यविशेषगुणवत्त्वात् महाप्रलयावस्थायामाकाशवदिति चासत् । सर्वात्मपक्षीकारे परमेश्वरात्मनि बाधात् । असिद्धेश्च । जीवात्मपक्षीकारेऽपि संसार्येकस्वभावानां जीवानां स्वयमेवोररीकृतत्वेन तत्र बाधात् । तदतिरिक्तजीवपक्षीकारे तत्रैवानैकान्त्यात् । जीवात्मनां विभुत्वाभावेनासिद्धेश्च ।**

**आत्मत्वं कदाचिद्ध्वस्ताशेषविशेषगुणद्रव्यनिष्ठमिति प्रतिज्ञार्थ इति चेन्न । तथा सति हेतोरसिद्धिप्रसङ्गात् । जातित्वं हेतुरिति चेन्न । पूर्वानुमानदोषापरिहारात् । घटत्वादावनैकान्तिकत्वाच्च ।**

**अशेषविशेषगुणशून्यद्रव्यनिष्ठमिति प्रतिज्ञार्थ इति चेन्न । सगुणानामेव द्रव्याणामुत्पादस्य समर्थितत्वात् । विभुकार्यविशेषगुणवद्वृत्तिजातित्वस्य हेतुत्वान्न कोऽपि दोष इति चेन्न । कार्यविशेषगुणवत्पदस्य वैयर्थ्यात् । तत्त्यागेऽप्यर्थान्तरत्वात् । अशेषविशेषगुणध्वंसो न मोक्ष इति वक्ष्यमाणत्वात् ।**

**शे०**— श्रीवल्लभोक्तमनुमानमाशङ्कते **आत्मेति** । धर्माणामिदानीमुपलभ्यमानतया बाधपरिहारार्थं कदाचिदित्युक्तम् । पर्यायेण ध्वंसस्य संसारदशायां सिद्धत्वेनार्थान्तरतानिवृत्त्यर्थमशेषग्रहणम् । तेन युगपदिति चात्र विवक्षितम् । संख्यापरिमाणादीनां मोक्षदशायामपि विद्यमानत्वेन बाधपरिहाराय विशेषपदम् । पीलुपाकपक्षे घटादिषु विशेषगुणैः सह ध्वंस्यमानेषु व्यभिचारनिवृत्त्यर्थं विभुत्वे सतीति हेतुविशेषणम् । ईश्वरे व्यभिचारनिवृत्त्यर्थं कार्यविशेषगुणवत्त्वादित्युक्तम् । दृष्टान्ते च शब्दव्यक्तिभेदमादायाशेषपदसार्थक्यमिति ध्येयम् । किमत्रात्ममात्रस्य पक्षत्वमभिमतं किंवेश्वरव्यतिरिक्तस्यात्मन इति विकल्पद्वयं मनसि निधायाद्यं दूषयति **सर्वेति** । तद्गुणानां नित्यत्वादिति भावः ॥ **असिद्धे-**

**श्चेति** । तद्गुणानामकार्यत्वेन विभुत्वे सति कार्यविशेषगुणवत्त्वस्येश्वरात्मन्यभावादसिद्धेश्चेत्यर्थः । द्वितीयेऽपि किं जीवात्ममात्रं पक्ष इत्यभिप्रेतं नित्यसंसारिव्यतिरिक्तजीवा वेति विकल्पं मनसि निधायाद्यं प्रत्याह **जीवात्मेति** । नान्त्य इत्याह **तदतिरिक्तेति** ॥ **तत्रैवेति** । नित्यसंसारिष्वेवेत्यर्थः । तत्र विभुत्वे सति कार्यविशेषगुणवत्त्वसत्त्वेऽपि नित्यसंसारितया कदाचिद् ध्वस्ताशेषविशेषगुणवत्त्वाभावादिति भावः ॥ **विभुत्वाभावेनेति** । उत्क्रान्तिगत्यागतीनामित्यधिकरणोक्तन्यायेनेति शेषः ।

**आत्मत्वमिति** । तथा च किमत्रात्ममात्रस्य पक्षत्वं किंवेश्वरात्मव्यतिरिक्तजीवात्मनामित्यादि-विकल्पदोषोऽनवसरग्रस्त इति भावः । उक्तप्रतिज्ञायामपि किं विभुत्वे सति कार्यविशेषगुणवत्त्वमेव हेतुतयाऽभिमतं तदन्यद्वा किञ्चिदिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **तथा सतीति** । आत्मत्वस्य विभुत्वे सति कार्यविशेषगुणवत्त्वाभावादिति भावः । द्वितीयं शङ्कते **जातित्वमिति** ॥ **पूर्वानुमानेति** । जातित्वस्य हेतुत्वे हीदमनुमानान्तरमेव विवक्षितमोक्षसाधकतयोक्तं स्यात् । न चैता-वताऽऽत्मा कदाचिद् ध्वस्ताशेषविशेषगुणः । विभुत्वे सति कार्यविशेषगुणवत्त्वादिति लीलावतीकारो-क्तानुमानस्य जीवात्मनां विभुत्वाभावेनासिद्धिलक्षणो यो दोष उक्तस्तस्यापरिहारेत्यर्थः । माऽस्त्वनेन पूर्वानुमानदोषपरिहारः । अनुमानान्तरमेवैतन्मोक्षसाधकमस्त्वित्यत आह **घटत्वादाविति** । तत्र जातित्वे सत्यपि कदाचिद् ध्वस्ताशेषविशेषगुणद्रव्यनिष्ठत्वरूपसाध्यस्यासत्त्वादिति भावः । यद्वा सन्ततित्वानुमाने दृष्टान्ते साध्यवैकल्यरूपो यो दोष उक्तस्तस्यात्रापरिहारात् । अत्रानुमाने दृष्टान्तीकृतस्याकाशस्यावृत्तितया ध्वस्ताशेषविशेषगुणद्रव्यनिष्ठत्वाभावात्साध्यवैकल्यमित्यर्थः । न चात्राकाशत्वं दृष्टान्तः । तच्च कदा-चिद् ध्वस्ताशेषविशेषगुणद्रव्यनिष्ठमिति न साध्यवैकल्यमिति वाच्यम् । तथाऽपि तस्याजातित्वेन साधन-वैकल्यापरिहारादित्याशयात् । दृष्टान्तान्तरमेव क्रियत इति न तद्वैकल्यमित्यरुचेराह घटत्वादावितीति योज्यम् । यद्वाऽऽत्मत्वस्य जातितायाः पूर्वं निरस्तत्वेनात्मत्वे जातित्वरूपहेत्ववृत्त्या हेत्वसिद्धिरूपात्मपक्ष-कानुमानदोषस्यात्रानुमानेऽपि प्राप्तेरित्यर्थः । अथवा ध्वस्ता अशेषा विशेषा गुणा यस्येति द्रव्यस्य ध्वस्ताशेषगुणवत्त्वमुक्तम् । तत्र विशेषगुणानामशेषाणां ध्वस्तत्वमिति कोऽर्थः । किं सर्वेऽपि विशेष-गुणा ध्वस्ता भवन्तीति किंवा निःशेषतया ध्वस्ता भवन्तीति । अथवा तत्र विशेषगुणान्तरानुत्पादे-नेति । आद्ये सिद्धसाधनता । सर्वेषामप्यात्मविशेषगुणानां परेणानित्यतायाः स्वीकारात् । अत एव न द्वितीयः । न हि गुणाः सावयवा येन सशेषं ध्वस्ता भवन्तीति शङ्क्येत । न तृतीयः । दृष्टान्तस्य साध्यविकलत्वात् । महाप्रलयानन्तरमाकाशे पुनः शब्दान्तरोत्पादसंभवात् । महाप्रलयानन्तरं पुनर्न सृष्टिरित्यस्य च मानाभावेनासिद्धेरिति । दुःखसन्ततेरात्यन्तिकोच्छेदसाधकपूर्वानुमानदोषाणामात्मत्वपक्ष-कानुमानेऽपि साम्यादित्यर्थः । पीलुपाकपक्षमाश्रित्याह **घटत्वादाविति** । यद्वा पूर्वानुमाने आत्मत्व-

पक्षकानुमाने ये दोषा उक्तास्तेषामप्यत्राप्यपरिहारादित्यर्थः । तथा हि । आत्मत्वस्यानुगतत्वाभावेन प्रातिस्विकतया सर्वात्मत्वानां पक्षीकारे परमात्मत्वे बाधः । तद्व्यतिरिक्तजीवात्मत्वपक्षीकारे नित्यसंसार्यात्मत्वेषु बाधः । तद्व्यतिरिक्तजीवात्मत्वपक्षीकारे च नित्यसंसार्यात्मत्वेऽनैकान्त्यम् । अनेकसमवेतत्वरूपजातित्वस्यात्मत्वेऽभावादसिद्धेश्चेति ।

घटत्वादेर्ध्वस्ताशेषविशेषगुणद्रव्यनिष्ठत्वाभावेऽप्यशेषविशेषगुणशून्यप्रथमक्षणावच्छिन्नघटादिनिष्ठत्वेन साध्यस्यापि सत्त्वान्न तत्र व्यभिचार इत्याशङ्कते **अशेषेति**। एवमपि घटत्वादौ नानैकान्त्यपरिहारः। घटादेरशेषविशेषगुणशून्यद्रव्यत्वाभावेन तादृशद्रव्यनिष्ठत्वस्य घटत्वादावभावात् । न च प्रथमक्षणे घटादेर्निर्गुणस्यैवोत्पत्तेर्नाशेषविशेषगुणशून्यत्वाभाव इति वाच्यम् । सगुणद्रव्यस्यैवोत्पत्त्या प्रथमक्षणे निर्गुणत्वस्यासम्मतेरित्याह **सगुणानामेवेति** ॥ **समर्थितत्वादिति** । 'कारणस्य गुणास्तेन भवेयुः कार्यगा अपी'त्यादिना वैशेषिकपरीक्षायामिति शेषः ॥ **विभ्विति** । विभुत्वे सति यत्कार्यविशेषगुणवद्वृत्तिजातित्वादित्यर्थः । तथा च घटस्य विभुत्वे सति कार्यविशेषगुणवत्त्वाभावान्न तादृशद्रव्यवृत्तिजातित्वं घटत्वस्येति न तत्र व्यभिचार इति भावः । अत्राप्यात्मत्वस्य विभुकार्यविशेषगुणवद्वृत्तिधर्मत्वेऽपि गुणवद्वृत्तिजातित्वाभावादसिद्धिरिति सत्येव दोषे दोषान्तरमाह **कार्येति** । विभुवृत्तिजातित्वादित्येतावतैव घटत्वादिजातौ व्यभिचारपरिहारादित्यर्थः । अस्तु तर्हि तत्त्यागेन विभुवृत्तिजातित्वमात्रं हेतुरित्यत आह **तत्त्यागेऽपीति** । अर्थान्तरतामेवोपपादयति **अशेषेति** । एवञ्चात्मनि कदाचिद् ध्वस्ताशेषविशेषगुण इति लीलावत्युक्तानुमानाभिप्रायमपि बोध्यम् । तथा चात्मा कदाचिद् ध्वस्ताशेषविशेषगुण इत्याद्यनुमानैरशेषविशेषगुणध्वंससिद्धावपि तन्मात्रस्य मोक्षत्वाभावादात्यन्तिकदुःखनिवृत्तिविशिष्टपरमानन्दावाप्तेरेव च मोक्षत्वात्तस्याश्चोक्तानुमानैरसिद्धत्वान्नानुमानेन मोक्षसिद्धिरिति भावः ॥ **वक्ष्यमाणत्वादिति** । 'सांख्यनैयायिकाद्याश्च प्राहुर्मोक्षं तु निःसुखम् । इच्छाद्वेषप्रयत्नादेरपि सर्वात्मना लयमि'त्यादिना चतुर्थस्य द्वितीयपाद इति शेषः ।

**स०**— लीलावतीकारमतं दर्शयति **आत्मेति** । इदानीमुपलभ्यमानतया बाधपरिहारार्थं कदाचिदित्युक्तम् । पर्यायेण ध्वंसस्य संसारदशायां सिद्धत्वेनार्थान्तरनिवृत्त्यर्थमशेषग्रहणम् । तेन युगपदिति वाऽत्र विवक्षितम् । संख्यापरिमाणादीनां मोक्षदशायामपि विद्यमानत्वेन बाधपरिहारार्थं विशेषगुणग्रहणम् । पीलुपाकपक्षे घटादिषु विशेषगुणैः सह ध्वंस्यमानेषु व्यभिचारनिवृत्त्यर्थं विभुत्वे सतीति । ईश्वराप्यपरमाणुषु व्यभिचारनिवृत्त्यर्थं कार्यविशेषगुणत्वादित्युक्तम् । नित्यगुणादिषु अनैकान्तिकत्वपरिहाराय गुणाश्रयग्रहणम् । दृष्टान्ते च शब्दव्यक्तिभेदापेक्षया विशेषपदसार्थक्यम् । तदेवं दुःखा-

त्यन्ताभावात्मनोः संबन्धरूपाशेषहेतुक्लेशनाशो मोक्ष इत्युक्तं भवति । किमत्रात्ममात्रस्य पक्षत्वं किं वा ईश्वरव्यतिरिक्तस्य । नाद्य इत्याह **सर्वेति** । तद्गुणानां नित्यत्वादिति भावः । **असिद्धेश्चेति** । तद्गुणानामकार्यत्वेन विभुत्वे सति कार्यविशेषगुणत्वस्येश्वरात्मन्यभावादसिद्धेश्चेत्यर्थः । द्वितीयेऽपि किं जीवात्ममात्रस्य पक्षता किं वा नित्यसंसारिव्यतिरिक्तस्य । नाद्य इत्याह **जीवात्मेति** । नान्त्य इत्याह **तदतिरिक्तेति** । तत्रैव संसारिष्वेवेत्यर्थः । विभुत्वे सति कार्यविशेषगुणत्वसत्त्वेऽपि कदाचिद्ध्वस्ताशेषविशेषगुणवत्त्वाभावादिति भावः ॥ **पूर्वानुमानेति** । जातित्वस्य हेतुत्वेऽपीदमनुमानान्तरमुक्तं स्यादित्यर्थः ॥ न चैतावतात्मा कदाचित् ध्वस्ताशेषविशेषगुण इति पूर्वानुमानोक्तो जीवात्मनां विभुत्वाभावेन हेतुत्वसिद्धिलक्षणो यो दोषस्तस्यापरिहारादित्यर्थः । मास्त्वनेन पूर्वानुमानदोषपरिहारः अनुमानान्तरमेवैतद्भवतु इत्यत आह **घटत्वादाविति** । घटत्वे जातित्वसत्त्वेऽपि ध्वस्ताशेषविशेषगुणद्रव्यनिष्ठत्वाभावादिति भावः । यद्वा सन्ततित्वानुमाने दृष्टान्तसाध्यविकलत्वादिरूपो यो दोष उक्तस्तस्याशयपरिहारादत्रापि दृष्टान्तीकृताकाशस्यावृत्तित्वेन ध्वस्ताशेषविशेषगुणद्रव्यनिष्ठत्वाभावात्साध्यवैकल्यं स्यादेवेत्यर्थः । मास्तु अयमाकाशो दृष्टान्तः । न चाकाशत्वं दृष्टान्तः । तथा सति साधनवैकल्यापातात् दृष्टान्तान्तरमवगृह्यत इत्यत्राह **घटत्वादाविति** । अथवा समयपादोक्तरीत्यात्मत्वस्य ज्ञातित्वनिरासेन तत्र ज्ञातित्वरूपहेत्वभावेन हेत्वसिद्धिरूपपूर्वानुमानदोषस्यात्मत्वपक्षकानुमानेऽपि प्राप्तेरित्यर्थः । तथापि घटत्वादावनैकान्तिकमेव । घटस्याशेषविशेषशून्यत्वाभावेन तन्निष्ठत्वस्य घटत्वेऽभावात् । न च प्रथमक्षणे घटस्य निर्गुणस्यैवोत्पन्नत्वेन तत्र घटत्वसत्त्वात् न व्यभिचार इति वाच्यम् । निर्गुणवस्तूत्पत्तेर्निरस्तत्वादित्याह **सगुणानामेवेति** । **समर्थितत्वात्** समयपाद इति शेषः ॥ **विभ्विति** । विभुत्वे सति कार्यविशेषगुणवत्तद्वृत्तिजातित्वादित्यर्थः । तथा च न घटत्वे व्यभिचार इति भावः ॥ **कार्येति** । विभुवृत्तिजातित्वादित्येतावतैव घटत्वादिजातौ व्यभिचारपरिहारसंभवादिति भावः । अस्तु तर्हि तावदेवेत्यत आह **तत्त्याग इति** ॥ **वक्ष्यमाणत्वात्** चतुर्थाध्याय इति शेषः ॥ **एतेनेति** । देवदत्तगतो धर्मः तत्समानकालीनत्वे सति देवदत्तगं तं तदनधिकरणं दुःखं तस्य यो ध्वंसस्तस्याधिकरणमिति साध्यार्थः । अत्र यज्ञदत्तगतस्य दुःखस्य देवदत्तगतधर्मिसमानकालीनत्वेन देवदत्ताधर्मसमानकालीनत्वरूपविशेषणाभावाभावेन तत्प्रयुक्तदेवदत्तधर्मसमानकालदेवदत्तगतरूपविशिष्टाभावासंभवेऽपि तादृशमुपान्त्यदुःखं ततोऽनधिकरणं दुःखं चरमदुःखं तस्य ध्वंसः । देवदत्तगतत्वानधिकरणयज्ञदत्तगतदुःखस्य देवदत्तगतत्वाभावेन तद्रूपविशेष्याभावप्रयुक्तविशिष्टाभावसंभवेन तादृशदुःखध्वंसाधिकरणत्वस्य यज्ञदत्ते सत्त्वात् दृष्टान्ते साध्यपर्यवसानम् । पक्षे तु देवदत्तगतदुःखस्य देवदत्तगतत्वेन तद्रूपविशेष्याभावप्रयुक्तविशिष्टाभावासंभवेऽपि देवदत्तगतदुःखस्य देवदत्ताधर्मसमानकालीनत्वेन तदभावस्यासंभवेन हेतोः पक्षधर्मताबलात् साध्यं सिध्यत् विशेषणा-

भावप्रयुक्तविशिष्टाभावमादायैव सिध्यतीति देवदत्ताधर्मसमानकालीनदुःखसिद्धौ चरमदुःखध्वंसलक्षणो मोक्षः सिध्यतीति भावः ॥ **अर्थान्तरेति** । चरमदुःखध्वंसो न मोक्ष इति वक्ष्यमाणत्वादिति भावः ।

**प०** — मोक्षसाधकमनुमानान्तरं शङ्कते **आत्मेति** । ध्वस्तसामान्यगुणवत्त्वेनार्थान्तरतावारणाय साध्ये विशेषपदम् । घटादावव्यभिचाराय हेतौ सत्यन्तम् । ईश्वरात्मन्यव्यभिचाराय कार्येत्युक्तिः । कालादावव्यभिचाराय विशेषपदम् । आकाशे तदा शब्दमात्रस्य नाशात् साध्यानुगमो दृष्टान्त इति भावः ॥ **असिद्धेश्चेति** । ईश्वरात्मनीत्यनुषङ्गः ॥ **स्वयमेवोररीकृतत्वेनेति** ॥ संसार्येकस्वभावा एव केचिदात्मान इत्युदयनोक्तेरिति भावः ॥ **विभुत्वाभावेनेति** । उत्क्रान्तिनये जीवाणुत्वस्य साधनादिति भावः ॥ **असिद्धिप्रसङ्गादिति** । आत्मत्वे गुणवत्त्वाभावेन हेतोरभावादिति भावः ॥ **पूर्वानुमानेति** । जातित्वारूपहेत्वन्तरोक्तावपि पूर्वानुमाने यो दोषोऽसिध्यादिरुक्तस्तत्परिहारस्याप्रासेरित्यर्थः । ईशानीशात्मगतात्मत्वपक्षीकारे ईशस्य नित्यसंसारिणां ध्वस्ताशेषगुणवत्त्वाभावेनांशे बाध इति भावः । अस्त्वेवमस्मिन्हेतौ को दोष इत्यत आह **घटत्वादाविति** । यद्वा ईश्वरात्मत्वपक्षीकारे बाधासिद्धी । (सर्वजी)जीवात्मत्वपक्षीकारे तु संसार्येकस्वभावत्वेनाङ्गीकृतजीवान्तरांशे बाधः । आत्मत्वसामान्यस्य पक्षत्वे तु तस्य वैशेषिकनयोक्तदिशा जातित्वाभावेनासिद्धेरिति पूर्वानुमानोक्तबाधादिदोषपरिहारादित्यर्थः । व्यभिचारं चाह **घटत्वादाविति** । यद्वा पूर्वानुमाने दुःखसन्ततिपक्षानुमाने यः प्रतिज्ञार्थविकल्पेन दोष उक्तस्तस्यापरिहारादित्यर्थः । तथाहि । ध्वस्ताशेषेत्यादिप्रतिज्ञार्थः को विवक्षितः । सर्वे विशेषगुणा नश्यन्तीति उत निश्शेषतयेति अथ विशेषगुणान्तरोत्पादराहित्येन । नाद्यः । सिद्धसाधनात् । न द्वितीयः । निरवयवत्वात् । न तृतीयः । सर्वमुक्त्योक्तेरपाकरणेन संसारिस्वभावात्मनां परेणाप्यङ्गीकृतत्वेन चात्मत्वस्य विशेषगुणान्तरोत्पादसमानाधिकरणतया बाधात् । (अ)सर्वमुक्तिपक्षे गगने शब्दान्तरोत्पादसंभवाच्चेति ॥ **समर्थितत्वादिति** । वैशेषिकनये 'कारणस्य गुणाः सर्वे भवेयुः कार्यगा अपी'त्यादिनेति भावः । तथा चाद्यक्षणेपि गुणसत्वात् घ(टत्वादा)टादावनैकान्त्यमेवेति ज्ञेयम् । एतद्दोषपरिहाराय विशिष्ट हेतुमाशङ्कते **विभुकार्येति** । विभुत्वे सति कार्यविशेषगुणवत् यद्द्रव्यं तद्वृत्तिजातित्वादित्यर्थः ॥ **वैयर्थ्यादिति** । विभुद्रव्यवृत्तिजातित्वादित्युक्त्यैवानैकान्त्यनिरासादिति भावः । मोक्षासिद्धिरूपमर्थान्तरत्वं व्यनक्ति **अशेषेति** । चतुर्थे वैशेषिकाभिमतमोक्षनिरासप्रस्तावे वक्ष्यमाणत्वादित्यर्थः ।

**या०** — लीलावत्युक्तमनुमानमाशङ्कते **आत्मेति** । इदानीमात्मनि विशेषगुणानामुपलम्भेन तद्ध्वंससाधने बाधः अतः कदाचिदित्युम् । सुषुप्तिदशायां बुद्ध्यादिविशेषगुणध्वंससत्त्वेन सिद्धसाध्य-

तावारणायाशेषेति । तदानीं भावनाया धर्माधर्मयोश्च सत्त्वान्नाशेषगुणध्वंस इति भावः । संख्यादि-सामान्यगुणानामात्मनि मोक्षदशायामपि सत्त्वेन बाधपरिहाराय विशेषेति । पीलुपाकपक्षे, सति घटादौ तद्रूपादिध्वंसाभावेन तत्र व्यभिचारोऽतो विभुत्वे सतीत्युक्तम् । ईश्वरात्मनि व्यभिचारवारणाय कार्येति । ईश्वरे कालादौ च कार्यभूतसंयोगादीनां सत्त्वेन तत्र व्यभिचारोऽतो विशेषेति । गुणवत्त्वं च समवायेन विवक्षितमतो जगदाधारताप्रयोजकसंबन्धेन विशेषगुणवति काले न व्यभिचारतादवस्थ्यमिति द्रष्टव्यम् । समवायेनैव कार्यविशेषवत्त्वलाभाय गुणग्रहणम् । इदानीमाकाशे शब्दसत्त्वेन साध्यवैकल्यपरिहाराय महाप्रलयेति । अशेषपदं विद्यमानाशेषपरं न त्वनेकाशेषपरम् । अत एकविशेषगुणवत्याकाशेऽनेका-शेषगर्भसाध्याभावात्साध्यवैकल्यमिति शङ्काऽनवकाशः । शब्दव्यक्तीनामेवानेकत्वमभिप्रेत्येदमित्यपि केचित् ॥ **पूर्वानुमानदोषापरिहारादिति** । ध्वस्ताशेषविशेषगुणवत्त्वस्य कोऽर्थः । किं सर्वेऽपि विशेषगुणा ध्वस्ता भवन्तीति । उत निश्शेषतया ध्वस्ता भवन्तीति । अथवा तत्र विशेषगुणान्तरा-नुत्पादेनेति । न प्रथमः । सिद्धसाधनत्वप्रसङ्गात् । सर्वेषामप्यात्मविशेषगुणानां परेणानित्यतायाः स्वीकृतत्वात् । अत एव न द्वितीयः । न हि गुणाः सावयवा येन सशेषं ध्वस्ता भवन्तीति शङ्केत । न तृतीयः । दृष्टान्तस्य साध्यविकलत्वात् । महाप्रलयानन्तरमाकाशे पुनः शब्दान्तरोत्पत्तिसंभवात् । महाप्रलयानन्तरं पुनर्न सृष्टिरित्यस्य परं प्रत्यसिद्धेरिति दुःखसन्ततेरात्यन्तिकोच्छेदसाधकपूर्वानुमाने ये दोषा उक्तास्तेषामपरिहारादित्यर्थः । केचित्तु पूर्वानुमाने आत्मपक्षके ये दोषा उक्तास्तेषामत्रापरिहारा-दित्यर्थः । तथा हि । आत्मत्वस्यानुगतस्याभावेन प्रातिस्विकतया सर्वात्मत्वानां पक्षीकारे परमेश्वरात्मत्वे बाधः । जीवात्मत्वानां पक्षीकारे नित्यसंसार्यात्मत्वेषु बाधः । तदतिरिक्तात्मत्वपक्षीकारे तत्रैवानैका-न्त्यम् । अनेकसमवेतत्वरूपजातित्वस्यात्मत्वेऽभावेनासिद्धेश्चेत्याहुः । पीलुपाकपक्षमाश्रित्याह **घटत्वा-दाविति ॥ अशेषविशेषगुणशून्येति** । अत्र शून्यशब्दः संसर्गाभावमात्रपरः । तेन प्रथमक्षणे घटादावप्यशेषविशेषगुणप्रागभावसत्त्वेन घटत्वादौ साध्यसत्त्वान्न व्यभिचार इत्याशयः ॥ **समर्थित-त्वादिति** । समयपादे 'कारणस्य गुणास्तेन भवेयुः कार्यगा अपि' इत्यत्र यतः कारणान्येव कार्याकारेणोत्पद्यन्ते तेन कारणगुणा एव कार्यगा भवेयुरिति समर्थितत्वादित्यर्थः । घटत्वादौ व्यभि-चारवारणाय हेतौ विशेषणं देयमित्याशङ्कते **विभुकार्येति** । विभुत्वे सति यत्कार्यविशेषगुणवत्तद्वृत्ति-जातित्वादित्यर्थः ॥ **वक्ष्यमाणत्वादिति** । चतुर्थाध्याय इति शेषः । तथा चात्यन्तिकदुःखनिवृत्ति-विशिष्टपरमानन्दावाप्तेरेव मोक्षत्वात्तस्याश्चानेन सिद्ध्याऽर्थान्तरतेति भावः ।

श्री० — **आत्मा कदाचिदिति** । इदानीमात्मनि विशेषगुणोपलम्भेन तद्ध्वंससाधने बाधः स्यादतः कदाचिदित्युक्तम् । सुषुप्तिदशायां बुद्ध्यादिविशेषगुणध्वंससत्त्वेन सिद्धसाधनतावारणायाशेषे-

त्युक्तम् । तदानीम्भावनासंस्कारस्य धर्माधर्मयोश्च सद्भावान्नाविशेषगुणध्वंस इति नोक्तदोषः । संख्यादि-सामान्यगुणानामात्मनि मोक्षदशायामपि सत्त्वेन बाधवारणाय विशेषपदम् । हेतौ घटादौ व्यभिचारवारणाय विभुत्वे सतीत्युक्तम् । ईश्वरे व्यभिचारवारणाय कार्येत्युक्तम् । कालदिशोः कार्यभूतसंयोगादिगुणवत्त्वेन हेतुत्वसद्भावाद्विशेषगुणवत्त्वाभावेन तद्ध्वंसायोगेन साध्याभावाद्व्यभिचारः स्यात्तद्वारणाय विशेषपदम् । जगदाधारताप्रयोजकसंबन्धातिरिक्तसमवायसंबन्धेन विशेषगुणवत्त्वस्य विवक्षितत्वान्न पुनः कालादौ व्यभिचारः इति द्रष्टव्यम् । इदानीमाकाशे शब्दरूपविशेषगुणस्यैव सद्भावेन साध्यवैकल्यपरिहाराय महाप्रलयावस्थायामित्युक्तम् । आकाशेऽपि स्थित्यवस्थायां कार्यविशेषगुणवत्त्वमस्ति कदाचिन्महा-प्रलयावस्थायां ध्वस्ताशेषगुणवत्त्वं चास्तीत्यर्थः ॥ **असिद्धश्चेति** । जीवात्मनामपि पक्षकोटिनिविष्टत्वेन तेषामणुत्वस्य **ज्ञोऽत एवेति** साधितत्वेन विभुत्वरूपविशेषणस्यासिद्धेरित्यर्थः ॥ **जीवात्मेति** । ईश्वरा-तिरिक्तेत्यर्थः । तथा च न बाध इति भावः । तेषां मोक्षाभावादिति भावः ॥ **संसारीति** । तेषां मोक्षाभावादित्यर्थः ॥ **विशेषगुणद्रव्येति** । विशेषगुणवद्द्रव्येत्यर्थः ॥ **प्रतिज्ञार्थ इति** । आत्म-कदाचिद्ध्वस्ताशेषविशेषगुण इति प्रतिज्ञार्थ इत्यर्थः ॥ **हेतोरिति** । विभुत्वे सति कार्यविशेषगुणवत्त्व-रूपहेतोरात्मत्वेऽभावेनासिद्धिप्रसङ्गादित्यर्थः ॥ **अशेषविशेषेति** । ध्वस्तपदं परित्यज्यत इत्यर्थः । ननु प्रथमक्षणावच्छिन्नघटमादाय साध्यस्यापि सत्त्वान्न व्यभिचार इत्यत आह **सगुणानामेवेति** । तथा च प्रथमं निर्गुणमेव द्रव्यमुत्पद्यते पश्चात्तत्समवेता गुणा उत्पद्यन्त इति पक्षस्य दूषितत्वादित्यर्थः । तथा च घटत्वादौ व्यभिचारः स्यादेवेति भावः ॥ **हेतुत्वादिति** । तथा च यत्र कदाचिद्ध्वस्ता-शेषविशेषगुणवद्द्रव्यनिष्ठत्वाभावस्तत्र विभुत्वे सति यत्कार्यविशेषगुणवत्तद्वृत्तिजातित्वाभाव इति व्यति-रेकव्याप्तौ घटत्वं दृष्टान्त इति द्रष्टव्यम् ॥ **वैयर्थ्यादिति** । विभुवृत्तिजातित्वादित्येव हेतुरस्त्विति भावः ॥ **अर्थान्तरेति** । अनेनानुमानेनाशेषविशेषगुणध्वंसस्य मोक्षत्वसिद्धेस्तस्य च मोक्षत्वाभावस्य वक्ष्यमाणत्वादिति भावः । तथा च बाध इत्यत्र तात्पर्यम् ।

**सु० — एतेन देवदत्तो देवदत्ताधर्मसमानकालीनदेवदत्तगतत्वानधिकरणदुःखध्वंसाधि-करणं दुःखित्वाद्यज्ञदत्तवदिति विशिष्टव्यतिरेक्यनुमानमपि निरस्तम् । अर्थान्तरतापरिहारादि-त्यास्तां प्रपञ्चः ।**

**शे०** — एवं श्रीवल्लभाभिमतं मोक्षसाधकमनुमानं प्रदूष्य तद्दूषणातिदेशेनाधुनिकाभिमतं महा-विद्यानुमानेन मोक्षसाधनमनूद्य दूषयति **एतेनेति** । देवदत्ताधर्मसमानकालं यद्देवदत्तगतं तस्य भावस्तत्त्वं तदनधिकरणं यो दुःखध्वंसस्तदधिकरणमिति साध्यार्थः । अत्र च यज्ञदत्तगतदुःखध्वंसस्य देवदत्तगताधर्म-

समानकालत्वेन तत्र तद्रूपविशेषणाभावायत्तविविशिष्टाभावासम्भवेऽपि तस्य देवदत्तगतत्वाभावेन देवदत्तगतत्वरूपविशेष्याभावायत्तदेवदत्ताधर्मसमानकालदेवदत्तगतत्वरूपविशिष्टाभावाधिकरणतया दृष्टान्ते साध्यपर्यवसानम् । पक्षीभूतदेवदत्तगतदुःखध्वंसस्य देवदत्तगतत्वेन तत्र विशेष्याभावायत्तोक्तविशिष्टाभावासंभवेऽपि हेतोः पक्षधर्मताबलात्पक्षे विशिष्टाभावः सिध्यन् देवदत्ताधर्मसमानकालत्वरूपविशेषणाभावायत्त एव वक्तव्य इति देवदत्ताधर्मेणासमानकालीनदुःखध्वंसरूपमोक्षसिद्धिः । न चान्त्यदुःखोत्पत्त्यनन्तरं तदुत्पादकाधर्मनाशेन तदसमानकालीनोपान्त्यदुःखध्वंसस्यापि मोक्षत्वापत्तिरिति वाच्यम् । तस्यान्त्यदुःखोत्पत्तेः पूर्वं तदुत्पादकाधर्मसमानकालीनत्वस्यैव तत्र सत्त्वेन तदभावस्य तत्र विरुद्धतया वक्तुमशक्यत्वेनातिप्रसङ्गासम्भवादिति भावः । एतेनेत्यतिदेशमेव प्रपञ्चयति **अर्थान्तरेति** । आत्यन्तिकदुःखनिवृत्तिविशिष्टपरमानन्दावाप्तेरेव मोक्षत्वस्य चतुर्थे उपपादयिष्यमाणत्वेन केवलदुःखनिवृत्तिमात्रस्य तत्त्वाभावात् । उक्तविशिष्टव्यतिरेकिणा तदेकदेशदुःखनिवृत्तिमात्रसिद्धावप्युक्तरूपविशिष्टमोक्षस्वरूपासिद्धेरर्थान्तरत्वं स्यादित्यर्थः । केचित्त्वनेन देवदत्ताधर्मसमानकालदेवदत्तगतत्वानधिकरणदुःखध्वंसाधिकरणत्वसिद्धावपि गुणान्तरध्वंसासिद्ध्याऽर्थान्तरं तदर्थं देवदत्तधर्मसमानकालदेवदत्तगतत्वानधिकरणत्वस्यापि साधने तेन सुखध्वंससिद्धावपि दुःखादिध्वंसासिद्ध्याऽर्थान्तरमेव । अशेषविशेषगुणध्वंसस्य केनाप्यसिद्धेः । तत्तद्गुणाभावसिद्धावपि पर्यवसानगत्याऽशेषगुणध्वंसरूपमोक्षसिद्धिरिति चेन्न । तावन्मात्रस्य मोक्षत्वाभावस्य चतुर्थे वक्ष्यमाणत्वेनाशेषगुणध्वंसस्य यथाकथञ्चित्सिद्धावपि मोक्षत्वासिद्ध्याऽर्थान्तरापरिहारादित्यर्थ इत्याहुः ।

**प० — देवदत्ताधर्मेति** । देवदत्तस्य यो धर्मस्तत्समानकालीनं यद्देवदत्तगतं वस्तु तत्त्वानधिकरणं यो दुःखध्वंसः तदधिकरणमित्यर्थः । देवदत्ताधर्मसमानकालीनदेवदत्तगतत्वानधिकरणत्वरूपविशिष्टव्यतिरेकश्च दृष्टान्तगते यज्ञदत्तीयदुःखध्वंसे देवदत्तगतत्वाभावेन देवदत्तीयदुःखध्वंसे तु देवदत्तगतत्वाभावस्य बाधात् । देवदत्ताधर्मसमानकालत्वरूपविशेषणाभावमादाय ज्ञेय इति मोक्षसिद्धिरिति भावः ॥ **अर्थांतरतेति** । सुखानुभवस्यैव मोक्षत्वेन वक्ष्यमाणत्वात् त्वदुक्तस्याधर्मासमानकालीनदुःखध्वंसाधिकरणत्वस्य मोक्षत्वाभावादिति भावः ॥ **मोक्षसत्वसमर्थनेन चार्वाकनिरासः** ॥

**या० — देवदत्ताधर्मेति** । देवदत्ताधर्मसमानकालीनं यद्देवदत्तगततत्त्वानधिकरणत्वं दुःखध्वंसे विशेषणम् । एवं च दृष्टान्तगते दुःखध्वंसे देवदत्ताधर्मसमानकालीनदेवदत्तगतत्वाधिकरणत्वाभावः । देवदत्तगतत्वरूपविशेष्याभावमादाय पक्षीये तु तस्मिन्देवदत्ताधर्मसमानकालीनत्वरूपे विशेषणाभावमादाय पर्यवस्यति । ततश्च देवदत्ते स्वाधर्मासमानकालीनदुःखध्वंसरूपो मोक्षोऽनेन सिध्यति । अत्र दुःखध्वंसाधिकरणमित्येवोक्ते इदानीन्तनदुःखध्वंसमादाय सिद्धसाध्यता । अतो देवदत्तगतत्वानधिकरणेति ध्वंसविशेषणम् । तावत्युक्ते बाधः । देवदत्तीयदुःखध्वंसे देवदत्तगतत्वस्य सत्त्वात् । अतोऽधर्मसमान-

कालेति । एवमपि बाध एव । देवदत्तगते दुःखध्वंसे यज्ञदत्तीयाधर्मसमानकालत्वस्य सत्त्वेन विशेषणा-भावमादाय साध्यपर्यवसानासम्भवात् । अतो देवदत्तेति । देवदत्ताधर्मसमानकालत्वानधिकरणदुःख-ध्वंसाधिकरणमित्येवोक्तौ यज्ञदत्तीयदुःखध्वंसे देवदत्ताधर्मसमानकालत्वस्य सत्त्वेन तदनधिकरणत्वाभावाद् दृष्टान्ते साध्यवैकल्यम् । अतो देवदत्तगतत्वेत्युक्तम् । एवं च साध्यस्य विशिष्टव्यतिरेकगर्भतयोक्त-रीत्या दृष्टान्ते विशेष्याभावमादाय पक्षे च विशेषणाभावमादाय पर्यवसानमिति न कोऽपि दोष इति ।

**च०— आस्तां प्रपञ्च इति ॥ चार्वाकमतनिरासः ।**

**सु०— इदानीं जैनोक्तमोक्षसाधनं दूषयितुमनुवदति** अस्तीति ।

**अनु०—** अस्ति मोक्षोऽपि धर्मेण यथार्थज्ञानतोऽपि च ।

**यदिदं मोक्षास्तित्वं समर्थितं** तत्साध्विति **जैनाः प्राहुरिति संबन्धः । अङ्गीकृतश्चेन्मोक्ष-सद्भावस्तदा तत्साधनमपि किञ्चिदङ्गीकार्यमेव । तथा च का विप्रतिपत्तिरित्याशयवान्पृच्छति** अपीति । **किं तर्हीत्यर्थः । उत्तरमाह** धर्मेणेति । **लभ्यत इत्याहुः । अपिचावितरेतरसमुच्चये । यद्यपि मोक्षं तत्साधनं चाभ्युपयन्ति जैनास्तथापि तद्विशेषे विप्रतिपद्यन्ते । यतः सम्यग्ज्ञान-सम्यक्चारित्र्यसमुच्चयसाध्यं मोक्षमाहुरित्याशयः । सम्यग्दर्शनं यद्यपरोक्षज्ञानं तदा यथार्थ-ग्रहणेनैव गृहीतम् । यदि च स्वसमयपरिपालनं तदा धर्मग्रहणेनेति पृथग्ग्रहणं व्यर्थमिति सूचयितुं द्वयोरेव ग्रहणम् ।**

**धर्मज्ञानसमुच्चयसाध्यत्वं मोक्षस्य कथञ्चिदस्माभिरप्यङ्गीक्रियते । अतो विप्रतिपत्त्यनन्तरं दर्शयति** प्रामाण्यमिति ।

प्रामाण्यमनुमायाश्च जिनस्याप्तत्वसाधने ॥
तद्वाक्यात् धर्मसज्ज्ञानविज्ञप्तिर्भवतीति च ॥

**जिन आप्तोऽस्खलितवाक्त्वादित्याद्यनुमायाः । चशब्दाज्जिनदर्शिनां वाक्यस्य च ।** तद्वाक्यात् **जिनवाक्यात् । इति च जैनाः प्राहुः । अनुमा(ना)द्यवगताप्तभावजिनवाक्यान्मोक्ष-साधनसिद्धिमाहुः । न तु स्वतः प्रमाणाद्वेदादित्याशयः । मोक्षसाधनविषयां विप्रतिपत्तिं दर्शयितुमुपक्रम्य प्रमाणविप्रतिपत्तिप्रदर्शनमसङ्गतमिति चेन्न । साधनज्ञापकस्यापि साधनत्वात् ।**

**धर्मज्ञानस्वरूपेऽपि विप्रतिपत्तिं दर्शयति** धर्म इति ।

धर्मोऽहिंसापरो नान्यो ज्ञानं पुद्गलदर्शनम् ॥
इति जैनाः ॥

**अहिंसा परा प्रधानभूता यस्मिन्स तथोक्तः । एतदस्माकमपि सम्मतमित्यत उक्तमन्यो हिंसासहितो यज्ञादिर्न धर्म इति । आत्मविविक्तत्वादिरूपेण पुद्गलस्य देहस्य दर्शनम् । यद्वा पुद्गलस्यात्मनो देहादिविविक्ततया दर्शनम् । अत्रापि नान्यद्यत्सिद्धान्तिना विवक्षितमित्यनुवर्तते ।**

शे० — इति जैना इति व्यवहितेनास्यान्वयः । नैव मोक्ष इति प्राहुरिति पूर्ववाक्यात्प्राहुरित्यस्यानुवृत्तिं चाभिप्रेत्य वाक्यं व्याचष्टे **यदिदमिति** । साकांक्षत्वप्रयुक्तवाक्याभासतामपेक्षितपूरणेन परिहरति **लभ्यत इतीति** ॥ **इतरेतरसमुच्चय इति** । यद्यपि परस्परसापेक्षतया यथार्थज्ञानधर्मयोरेककार्यजनकत्वादितरेतरयोग एवात्र युक्तः । न तु समुच्चयः । परस्परनिरपेक्षयोरेककार्यसम्बन्धे एव तत्प्रवृत्तेः अत्र च तदभावात् । तथाऽपि समुच्चयशब्दस्यात्रेतरेतरयोगपरत्वाददोष इति ध्येयम् । ननु सम्यग्ज्ञानसम्यक्चारित्र्ययोरिव सम्यग्दर्शनस्यापि मोक्षसाधनतया परेणाङ्गीकृतत्वेन तस्याप्यत्र वक्तव्यत्वात्तदनुक्त्वा द्वयोरेव परिगणने किं निमित्तमित्यत आह **सम्यगिति** ॥ **धर्मग्रहणेनेति** । गृहीतमिति वर्तते ॥ **कथञ्चिदिति** । संपूर्णानन्दाभिव्यक्तिरूपमोक्षैकदेशस्य ज्ञानकर्मसमुच्चयसाध्यत्वस्य स्वसिद्धान्तत्वेऽपि दुःखनिवृत्तिरूपमोक्षस्य ज्ञानमात्रसाध्यतया समुच्चयसाध्यत्वं नास्तीत्यभिप्रायेण कथञ्चिदित्युक्तम् ॥ **जिनदर्शिनामिति** । जिनं साक्षात्कुर्वतामित्यर्थः ॥ **साधनज्ञापनस्यापीति** । मोक्षसाधनभूतधर्मज्ञानज्ञापकस्यापीत्यर्थः ॥ **साधनत्वादिति** । साधनकोटिनिविष्टत्वादित्यर्थः । अहिंसापर इत्यस्यासमासत्वे पर इत्यस्य धर्म इत्यनेन संबन्धे भिन्नक्रमत्वं पर इत्यस्य पुलिङ्गतयाऽहिंसेति स्त्रीलिङ्गेन संबन्धानुपपत्तिः । समासत्वेऽप्यहिंसायाः पर इति पञ्चमीतत्पुरुषे पञ्चमीति योगविभागाश्रयणं कर्तृकरणे कृता बहुलमिति बाहुलकाश्रयणम् । परशब्दस्यान्यार्थत्वपक्षे नान्य इति निषेधानुपपत्तिः । उत्तमार्थत्वे च तस्य धर्मशब्दस्य साधारणत्वेन विशेष्याकाङ्क्षायां सप्तघटिकाभोजनादेरध्याहारेऽसदनुवादः । अहिंसाया एवोत्तमत्वस्य तत्सिद्धान्तत्वादित्यालोच्य बहुव्रीहिसमासं परशब्दस्य प्रधानार्थत्वं चाश्रित्य व्याख्याति **अहिंसेति** ॥ **पुद्गलस्य देहस्येति** । ( इदं च नवीनजैनमतमाश्रित्योक्तम् । जरज्जैनमतमाश्रित्याप्याह **यद्वेति** । ननु पुद्गलस्यात्मनो देहादिविविक्ततया दर्शनं ज्ञानमित्येतदस्माकमपि संमतमिति कथं विप्रतिपत्तिसूचनमित्यत आह **अत्रापीति** ॥ **नान्यदिति** । अनेन नान्य इत्यत्रापि संबध्यते । अर्थवशाच्च लिङ्गव्यत्यय इत्युक्तं भवति ।

**स०** — ननु सम्यग्ज्ञानसम्यक्चारित्र्ययोरिव सम्यग्दर्शनस्यापि जैनेन मोक्षसाधनतयोक्तत्वात्तद्वचनेन न्यूनत्वमित्यत आह **सम्यगिति** । यद्वा पुद्गलस्यात्मन इति तु 'पुद्गलो निरयं गिरन्ति'ति प्रमाणमनुसृत्य स्वरीत्या व्याख्यानम् । प्राचीनं तन्मतरीत्येति ज्ञेयम् ।

प० — **प्राहुरिति संबन्ध इति ।** प्राहुरिति पूर्वमतानुवादस्थमिहाप्यन्वेतीति भावः । ननु तैः सम्यग्दर्शनमपि मुक्तिसाधनतयाऽभिमतम् । तत्कुतो नानूदितमित्यत आह **सम्यग्दर्शनमिति ॥ कथञ्चिदिति ।** मोक्षस्वरूपसाधनत्वं ज्ञानस्य मोक्षगतातिशयरूपफलहेतुत्वं कर्मण इत्येवं रूपेणेत्यर्थः ॥ **जिनदर्शिनामिति ।** जिनं साक्षात्कुर्वतामित्यर्थः । अनुमानाद्यवगतेत्यत्र जिनदर्शितवाक्यमादिपदार्थः ॥ **साधनत्वादिति ।** तथाच साधनज्ञापकविमतिरपि मोक्षसाधनविमतिरेवेति न दोष इति भावः ॥ **सिद्धान्तिना विवक्षितमिति ।** स्वबिंबापरोक्षज्ञानमित्यर्थः ।

या० — **प्राहुरिति सम्बन्ध इति ।** 'अनेन नैव मोक्ष इति प्राहुरि'त्यत्र विद्यमानं प्राहुरितिपदमत्रानुवर्तनीयमिति सूचितं भवति । अस्ति मोक्ष इत्यस्य यदिदं मोक्षास्तित्वं समर्थितं तत्साधिवति तात्पर्यकथनम् । लभ्यत इति शेषोक्तिः ॥ **इतरेतरसमुच्चय इति ।** इतरेतरयोग इत्यर्थः । परस्परसापेक्षतयैककार्यजननस्यात्र विवक्षितत्वात् । तेन परस्परनिरपेक्षयोरेकक्रियासंबन्धः समुच्चयः । स चात्र बाधित इति शङ्काऽनवकाशः । ननु सम्यग्दर्शनमपि साधनतया जैनैः परिगणितं तत्कस्मादत्र नोक्तमित्यत आह **सम्यग्दर्शनमिति ।** मोक्षैकदेशरूपाया आनन्दाभिव्यक्तेः समुच्चयसाध्यत्वेऽपि दुःखनिवृत्तेस्तदसाध्यत्वात् कथञ्चिदित्युक्तम् ॥ **जिनदर्शिनामिति ।** जिनं पश्यतामित्यर्थः । पुद्गलस्य देहस्येति पररीत्योक्तम् । इदानीं 'पुद्गलो निरयं गिरन्त्रि'ति प्रमाणानुसारेणाह **यद्वेति ।**

श्री० — **कथञ्चिदिति ।** आनन्दाभिवृद्धिरूपमुक्त्यंशे इत्यर्थः ॥ **साधनज्ञापनस्यापीति ।** मोक्षसाधनभूतधर्मज्ञानज्ञापकस्यापीत्यर्थः ॥ **साधनत्वादिति ।** साधनकोटिनिविष्टत्वादित्यर्थः । **यत्सिद्धान्तिनेति ।** भगवज्ज्ञानमित्यर्थः ।

सु० — **दूषयति** कथमिति ।

**अनु०** — कथं तत्स्यात्प्रमाणमनुमानतः ॥

**तज्जिनवाक्यमनुमानेन प्रमाणमिति प्रतिपत्तव्यं कथं स्यात् । अनुमानेन वाक्येन च जिनस्याप्तत्वमवधार्याप्तवाक्यत्वानुमानेन मोक्षसाधनं धर्मं ज्ञानं च प्रतिपादयतो जिनवाक्यस्य प्रामाण्यावधारणं यदुक्तं तन्नोपपद्यत इत्यर्थः ।**

**कुतो नोपपद्यत इत्यतो हेतुं वक्तुमुपोद्घातत्वेन प्रत्यक्षानुमानागमस्वरूपं क्रमेण तावदाह** विषयानिति ।

विषयान्प्रति स्थितं ह्यक्षं प्रत्यक्षमिति गीयते ॥
प्रत्यक्षशब्दानुसारादनुमेति प्रकीर्तिता ॥

आसमन्ताद्गमयति धर्माधर्मौ परं पदम् ॥
यच्चाप्यतीन्द्रियं त्वन्यत्तेनासावागमः स्मृतः ॥

**विषयान्निर्दोषान्प्रति स्थितं तैः सन्निकृष्टमक्षमदुष्टमिन्द्रियम् । जातावेकवचनम् । यस्येन्द्रियस्य यो विषयोऽन्वयव्यतिरेकाभ्यामवगतस्तेनादोषेण सन्निकृष्टमदुष्टं तत्प्रत्यक्षमित्यर्थः ॥ अनेन प्रादिसमासोऽयं नाव्ययीभाव इति सूचितम् । तथा सति प्रत्यक्षस्येति षष्ठी न श्रूयेत । यद्यपि प्रतिस्थितमक्षं प्रत्यक्षम् । तथाऽपि योग्यतया विषयाणां संबन्ध इति हिशब्देनाचष्टे ।**

**प्रत्यक्षशब्दानुसारात् । प्रत्यक्षागमानुसारेणैव मानत्वात् । अनुसरणं च तद्गृहीतधर्म्यादिमत्त्वं तदबाधिताप्रतिबद्धविषयत्वं च । प्रकीर्तिताऽनुमेति शेषः । याऽनुमा प्रसिद्धा साऽस्मान्निमित्तादनुमेति प्रकीर्तिता । यद्यप्यनुसृता माऽनुमा तथाऽपि सामर्थ्यात्प्रत्यक्षादिसंबन्धः । अनुमानमूलाऽनुमाऽप्यन्ततः प्रत्यक्षादिमूलैवेत्युक्तं प्राक् ।**

**आ इत्यनुवादेन समन्तादिति व्याख्यानम् । सम्यक् चेत्यपि ग्राह्यम् ।** गमयति **ज्ञापयति । करणे कर्तृत्वोपचारः । ग्रहवृदनिश्चिगमश्चेत्यकर्तरि कारके भावे वा अपो विधानात् । अनुप्रमाणविषयं चेदं व्याख्यानं ज्ञातव्यम् । यच्च धर्मादिभ्योऽन्यदतीन्द्रियमपिशब्दादननुमितं च । तुशब्दोऽवधारणे । तेनैवेति संबध्यते । यद्यप्या सम्यक् समन्तात्सर्वं गम्यते अनेनेत्यागमः । तथाऽपि प्रत्यक्षानुमानावगतेऽर्थे तस्य वैयर्थ्यादतीन्द्रियमपीत्युक्तम् । तस्य विवरणं धर्मेत्यादि । य आगमः प्रसिद्धोऽसौ ।**

**शे०** — तात्पर्यमाह **अनुमानेनेति ॥ हेतुं वक्तुमिति** । 'अतोऽनुमा कथं धर्मं पुद्गलं चापि दर्शयेदि'त्यादिनेति शेषः । अतिसामीप्यादिदोषयुक्तविषयैः सन्निकृष्टस्याक्षस्यापि विषयसन्निकृष्टाक्षत्वेन प्रत्यक्षत्वापत्तिरित्यतो निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षमित्यादिग्रन्थान्तरानुसारेण निर्दोषत्वस्वरूपविषयविशेषणस्यात्राभिप्रेतत्वान्नानुपपत्तिरित्याशयेनाह **निर्दोषानिति** । प्रतिस्थितत्वोक्तेस्तात्पर्यमाह **तैरिति ॥ अक्षमिति** । अदुष्टमिन्द्रियं त्वक्षमिति वचनादिति भावः । विषयानित्यनेकत्वस्य विषयेषु श्रुतत्वात्तादृशविषयसन्निकृष्टत्वमेकस्येन्द्रियस्य कथमित्यतो नेदमेकवचनं व्यक्तिरूपार्थैक्यविवक्षानिमित्तं येनोक्तानुपपत्तिः स्यात् । किन्तु जातिरूपार्थैक्यविवक्षानिमित्तमिति नानुपपत्तिरित्याशयेनाह **जातावेकवचनमिति** । मूले विषयग्रहणस्यानर्थक्यमाशङ्क्याकाशादिसन्निकृष्टचक्षुरादिव्युदासार्थत्वान्न तदित्यभिप्रेत्य केवलान्वयित्वेन विषयत्वस्याकाशादिसाधारणत्वात्कथमनेन तद्व्यावृत्तिरित्यतोऽत्र विषयपदस्येन्द्रियविषयपरत्वेन विषयमात्र-

परत्वाभावादिन्द्रियविषयत्वस्य चाकेवलान्वयित्वाद्युक्तमाकाशादिव्यावर्तकत्वमित्याशयेन तथाऽपि चक्षुरादिना गन्धादिग्रहणप्रसङ्गो दुर्वार एवेत्यतो विषयपदस्य तत्तदिन्द्रियविषयपरत्वं नियामकोक्त्या कथयन्नेव लक्षणवाक्यार्थमाह **यस्येन्द्रियस्येत्यादि** ।

मूले विषयान्प्रति स्थितमक्षमित्युक्तरीत्या प्रत्यक्षशब्दनिर्वचनस्यानर्थक्यमाशङ्क्य प्रत्यक्षशब्दे प्रादिसमासत्वज्ञापनद्वाराऽव्ययीभावत्वनिवृत्तिसूचनार्थत्वान्न तदिति भावेन तन्निर्वचनप्रयोजनमाह **अनेनेति** । विषयान्प्रतीत्यादिप्रत्यक्षशब्दनिर्वचनेनेत्यर्थः ॥ **प्रादिसमास इति** । प्राचार्यः प्रान्तेवासीत्यादौ वृत्तिविषये गताद्यर्थे वर्तमानानां प्रादीनामगतित्वेऽपि कुगतिप्रादय इत्यत्र प्रादिग्रहणात् प्रथमान्तेनाचार्यादिपदेन प्रगत आचार्यः प्राचार्यः प्रकृष्टोऽन्तेवासी प्रान्तेवासीति समासतद्वृत्तिविषये गताद्यर्थ इत्यादिपदग्राह्यस्थितार्थे वर्तमानस्य प्रतिशब्दस्य गतित्वाभावेऽपि कुगतिप्रादय इत्यत्र प्रादिग्रहणात्प्रथमान्तेनाक्षशब्देन प्रतिस्थितमक्षं प्रत्यक्षमिति प्रादिसमास इत्यर्थः । प्रतिस्थितमित्युक्तिस्तु गताद्यर्थे वृत्तिम् अस्वपदविग्रहेण नित्यसमासत्वं च सूचयितुमिति द्रष्टव्यम् । न च प्रत्यक्षशब्देन प्रादिसमासोऽङ्गीकर्तुं शक्यते । तथा सति प्रत्यक्षशब्दस्यार्धपिप्पलीत्यादिवत् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरि'ति परवल्लिङ्गताविधानेन नियतलिङ्गत्वापत्त्या प्रत्यक्षोऽर्थः प्रत्यक्षा बुद्धिः प्रत्यक्षं ज्ञानमित्यभिधेयलिङ्गत्वाभावापातादिति वाच्यम् । वार्तिककृता कात्यायनेन प्राप्तापन्नालंगतिपूर्वसमासेषु प्रतिषेध इति गतिसमासे परवल्लिङ्गताप्रतिषेधात् । गतिग्रहणस्यान्यस्यासंभतेन प्राद्युपलक्षणताया आकरे स्थितत्वात्प्रादिसमासस्य परवल्लिङ्गत्वाभावेन विशेष्यनिघ्नतया निष्कौशाम्बिरित्यादिवदभिधेयलिङ्गत्वोपपत्तेः । न च प्रादिसमासे कर्मप्रवचनीयानां न समास इति कर्मप्रवचनीयस्य प्रतिशब्दस्य समासनिषेधात्कथमत्राक्षशब्देन प्रतिशब्दस्य प्रादिसमासः स्यादिति वाच्यम् । लक्षणेत्थम्भूताख्यानेत्यादिरूपकर्मप्रवचनीयत्वप्रयोजकस्यात्राभावेनाकर्मप्रवचनीयत्वात् प्रतिशब्दस्याक्षशब्देन समासोपपत्तेः । न चैवं विषयानिति विषयशब्दे द्वितीयानुपपत्तिः । कर्मप्रवचनीययोगाभावेन कर्मप्रवचनीययुक्ते द्वितीयेत्यनेन तदप्राप्तेर्लक्षणान्तरस्य चाभावादिति वाच्यम् । बुभुक्षितं न प्रतिभाति किञ्चनेत्यादाविव उभसर्वतसोः कार्येत्यादिवार्तिककृदुक्तरीत्याऽकर्मप्रवचनीयप्रतिशब्दयोगेऽपि द्वितीयाया उपपन्नत्वात् । एतच्च तद्वार्तिकव्याख्यानावसरे आकर एव स्पष्टम् ।

नन्वक्षस्याक्षस्य प्रतीति प्रत्यक्षमिति वात्स्यायनभाष्यकृदुक्तरीत्या विग्रहाश्रयणेनाव्ययीभावस्याप्यत्र वक्तुं शक्यत्वात्किं प्रादिसमासत्वाश्रयणेनेत्यतस्तथा सति प्रतिशब्दयोगे षष्ठ्या अविधानात् प्रति अक्षस्येति विग्रहेऽक्षस्येति षष्ठ्या अश्रवणप्रसङ्गात् न तथाविग्रहाश्रयणेनाव्ययीभावत्वमङ्गीकर्तुं शक्यमित्याह **तथा सतीति** । यद्वा नन्वक्षमक्षं प्रति वर्तत इति प्रत्यक्षमिति निर्वचनाश्रयणेन प्रत्यक्ष-

शब्देऽव्ययीभावस्यापि सति संभवे परित्यागायोगान्न तन्निवृत्तिसूचकत्वं संभवतीत्यतस्तथा सत्युपकुम्भादिवन्नियतनपुंसकत्वेन विशेष्यनिघ्नत्वाभावापत्त्या प्रत्यक्षोऽर्थः प्रत्यक्षा बुद्धिरित्याद्यभिधेयलिङ्गता न स्यात् । इन्द्रियगुणकर्मसामान्येष्वतिव्याप्तिश्चेत्यादिदोषे सत्येव स्पष्टत्वाच्छिष्यैरेवोह्यतामिति भावेन तमुपेक्ष्य तत्पक्षे उद्योतकारवार्तिकोक्तं दोषमेवाह **तथा सतीति** । अव्ययीभावत्व इत्यर्थः । प्रत्यक्षस्य लक्षणमाहेत्याद्यभियुक्तप्रयोगेष्विति शेषः । नाव्ययीभावादतोम्त्वपञ्चम्या इति पञ्चम्या अमादेशनिषेधेऽपि तृतीयासप्तम्योर्बहुलमिति तृतीयासप्तम्योर्विकल्पेन तद्विधानेऽप्यन्यत्र नियमेनाऽऽम्विधानात्प्रत्यक्षमित्येव भाव्यत्वेन प्रत्यक्षस्येति षष्ठी न श्रूयतेत्यर्थः । यद्यपि प्रत्यक्षे प्रत्यक्षाणीति प्रथमाद्वितीयाद्विवचनबहुवचने चतुर्थीषष्ठीद्विवचनबहुवचने च परीक्षकप्रयोगेषु श्रूयन्त इति तदश्रवणमप्यापादयितुं शक्यम् । तथाऽपि प्रत्यक्षस्येति प्रयोगस्य प्रायिकत्वात्तदश्रवणमेवापादितमिति द्रष्टव्यम् ।

नन्वनुसरणस्य चेतनधर्मत्वात्कथमचेतनस्यानुमानस्य तदुक्तिरित्यतोऽत्राभिमतमनुसरणं दर्शयति **अनुसरणं चेति** । केचित्तु शब्दस्यापि स्वरूपस्वसहकारिशक्त्यादिग्राहकप्रत्यक्षशब्दानुसारिण एव प्रमाणत्वात्तत्रास्य लक्षणस्यातिव्याप्तिः स्यादित्यतः शब्दव्यावृत्तप्रत्यक्षाद्यनुसारित्वस्यैवात्रानुसरणपदेन विवक्षितत्वाददोष इत्याशयेन तदुपदर्शयत्यनुसरणं चेतीत्याहुः । विशेष्यानुक्तेः कथं केत्याकांक्षापरिपूर्तिरत्रेत्यतोऽपेक्षितं पूरयति ॥ **अनुमेति शेष इति** । या प्रत्यक्षानुसारादनुमेति प्रकीर्तिता साऽनुमेति यथास्थितवचनव्यक्तावाश्रीयमाणायामसिद्धस्यानुवादः सिद्धस्य विधानं भवतीत्यतोऽत्रान्यथावचनव्यक्तिमाह **याऽनुमेति** ॥ **अनुमानमूलाऽपीति** । या चक्षुरादिपक्षीकारेण प्रवृत्तेत्यर्थः ॥ **प्रागिति** । 'व्याप्यस्यान्यस्य तौ पुनरि'त्यादिनेत्यर्थः ।

आसमन्तादित्यनयोरन्यतरवैयर्थ्यपरिहारायाह **आ इत्यनुवादेनेति** । न केवलं समन्तादित्येव आ इत्यस्य व्याख्यानं किन्त्वन्यदपीत्याह **सम्यक् चेत्यपीति** । आ इत्येतद्व्याख्यानतयेति शेषः । अत एव वक्ष्यति । आ सम्यक् समन्तादित्यादीति भावः । गमकत्वं नाम प्रापकत्वमिति प्रतीयते । तथा च नानेनागमलक्षणसूचनमुपपद्यते इत्यतो व्याचष्टे **ज्ञापयतीति** । गमयतीति प्रत्ययोक्तं ज्ञापनकर्तृत्वमेव निर्वचनलभ्यं प्रवृत्तिनिमित्तमागमशब्दस्येति प्रतीतिनिरासायाह **करण इति** । करणे कर्तृत्वोपचारेणैव युक्तम् । न तु निर्वचनलभ्यप्रवृत्तिनिमित्तकथनमेतदिति शेषः । न चोपचाराश्रयणमनर्थकम् । स्वातन्त्र्यज्ञापनार्थत्वात् । ननु निर्वचनलभ्यप्रवृत्तिनिमित्तकथनमेवैतत्किन्न स्यादित्यत आह **ग्रहेति** । अकर्तरि कारकेऽप्प्रत्ययविधानात् । ज्ञापनकर्तृत्वं नागमशब्दनिर्वचनलभ्यं तच्छब्दप्रवृत्तिनिमित्तमिति भावः । ननु यदि भावेऽप्यप्प्रत्ययो विधीयते- तर्ह्यासमन्ताद्गमयतीति भाष्यकारीयव्याख्यानस्य न्यूनत्वं भावार्थानुसारेणाप्यागमशब्दार्थस्य वक्तव्यत्वादित्यत आह **अनुप्रमाणेति** । अनु-

प्रमाणप्रायपाठादिति भावः । आ इत्यस्य व्याख्यानं सम्यगिति समन्तादिति च । समन्तादित्यस्य विवरणं सर्वमिति । असावित्युक्तः कः कथं च तस्य सिद्धत्वं येनोद्देश्यता स्यादित्यतस्तत्परामर्शविषयं दर्शयन्नेव तस्योद्देश्यत्वोपयोगिनीं सिद्धतामाह **य आगमः प्रसिद्धोऽसाविति** । यद्वाऽसावित्यनेन परामृष्टव्यं दर्शयन्नेव तस्य परामर्शोपयोगिनीं बुद्धिस्थितां सूचयति **य आगम इत्यादि** ।

स०— **प्रादिसमास इति** । प्रति स्थितमक्षं प्रत्यक्षमिति प्रादिसमास इत्यर्थः । अक्षं प्रतीति प्रत्यक्षमित्यव्ययीभावे बाधकमाह **तथा सति प्रत्यक्षस्येतीति** । प्रत्यक्षस्य लक्षणमाहेत्यादाविवेति शेषः । नाव्ययीभावादतोम्त्वपञ्चम्या इति पञ्चम्या अमादेशनिषेधेपि तृतीयासप्तम्योर्बहुलमित्यनेन तृतीयासप्तम्योर्विकल्पेन तद्विधानेप्यन्यत्र नियमेन तद्विधानात् प्रत्यक्षमित्येव स्यात् न तु प्रत्यक्षस्येतीति भावः । **अनुमानमूलानुमानमिति** । चक्षुरादिपक्षीकारेण वृत्तेरित्यर्थः । **प्रागिति** । 'न्यायस्यान्यस्य तौ पुनरि'त्यादिनेति शेषः । नन्वागमस्यागमं प्रति करणत्वेन कर्तृत्वाभावात् आ सम्यक् गम्यतेऽनेनेति आगम इत्येव वक्तव्यम् । गमयतीति कथमित्यत आह **करण इति** । वस्तुतः कर्तृत्वमेव किं नाङ्गीक्रियते किमुपचारेणेत्यत आह **ग्रहेति** । आगमस्य कर्तृत्वेऽप्रत्ययानुपपत्तिः तस्याकर्तर्येव-विधानादिति भावः ।

प०—**हेतुं वक्तुमिति** । अतोऽनुमेत्यादिना वक्तुमित्यर्थः ॥ **निर्दोषानिति** ॥ अतिदूरस्थत्वातिसामीप्यादिदोषशून्यानित्यर्थः । बहुवचनलब्धविषयबाहुल्येन एकाक्षस्य सन्निकृष्टत्वधीनिरासायाह **जाताविति** । अक्षत्वस्य जातित्वं सदृशधर्मत्वमेवेति ज्ञेयम् । **प्रादिसमासोऽयमिति** । कुगतिप्रादय इति द्वितीयाध्यायद्वितीयपादीयसूत्रेण कुशब्दो गतिसंज्ञकशब्दाः प्रादय उपसर्गाश्च समर्थेन सुबन्तेन समस्यंत इति विधानात्। प्रतिशब्दस्य प्रादिषु पाठात्कुपुरुषः दूरीकृतं सुपुरुष इतिवत्। प्रतिस्थितं च तत् अक्षं चेति प्रादिसमास इत्यर्थः॥ **नाव्ययीभाव इति**। प्रादेरव्ययत्वात् । अव्ययं विभक्तीत्यादिनाव्ययीभावसमासो नेत्यर्थः । **तथा सतीति** । अक्षं प्रति प्रत्यक्षमिति अव्ययीभावत्वे उपकुंभमित्यादाविवाव्ययीभावस्याव्ययत्वेनाव्ययादाप्सुप इति सुपो लुकि प्राप्ते नाव्ययीभावादिति लुगपवादतया आदेशे सति 'प्रत्यक्षस्यैव मानत्वमिति केनावसीयत'इति समयपादीयचार्वाकमतनिरासप्रस्तावादौ कृतषष्ठीनिर्देशो न युक्तः स्यादित्यर्थः। उपलक्षणमेतत्। प्रत्यक्षः कस्यचिद्धर्मो वस्तुत्वादिति जिज्ञासासूत्रानुभाष्यादौ प्रथमादिर्न श्रूयेतेत्यपि ज्ञेयम् । नन्वनुमेति सत्यपि पुनः शेषोक्तौ कथं योजनेत्यत आह **याऽनुमा प्रसिद्धेति** । अनुमानमूलाप्यनुमास्ति कथं प्रत्यक्षशब्दानुसारादित्युक्तमित्यत आह **अनुमानमूलेति** ॥ **उक्तं प्रागिति** । 'प्रत्यक्षागममूलास्तु न्यायाः सर्वे भवंति हि । न्यायाभासा अमूलाः स्युर्न्यायस्यान्यस्य तौ पुनः' इत्येतत्पादीयादिभागानु-

व्याख्यानांत्यपादीयतट्टीकयोरुक्तमित्यर्थः ॥ **इत्यपि ग्राह्यमिति** । आङर्थतयेति भावः ॥ कर्तर्येव निष्पन्नोऽस्त्वागमशब्द इत्यत आह **ग्रहेति** ॥ तृतीयस्य तृतीयपादे ऋदोरप् इति पूर्वसूत्रानुवृत्तस्याप्प्रत्ययस्य गृहादिभ्यो धातुभ्यः कर्तृभिन्ने कर्मादिकारके भावे च विधानेन ग्रहो वरो दरो निश्चय इतिवदागम इति निष्पत्तेरिति भावः । केवलप्रमाणे कथं घटनैतन्निरुक्तेरित्यत आह **अनुप्रमाणेति** । असावित्यनुवादघटनायाह **यः आगमः प्रसिद्ध इति** ।

**या० — जातावेकवचनमिति** । अत्र जातिपदेन समुदायो विवक्षितः । अत एव विप्राणां भोजनं यथेत्यत्र भोजनमित्येकवचनं समुदायापेक्षयेति व्याख्यातम् । एवं चास्मन्मते जातेरेकत्वाभावात्कथं तत्रैकवचनमिति शङ्काऽनवकाशः ॥ **अनेनेति** । वृत्तिविषयतया स्थितरूपार्थप्रदर्शनेनेत्यर्थः ॥ **प्रादिसमास इति** । कुगतिप्रादय इत्यत्र प्रादयो गताद्यर्थे प्रथमयेति वार्तिकेन विहितः समासः प्रादिसमासो वृत्तिविषये गताद्यर्थे वर्तमानाः प्रादयो गतित्वाभावेऽपि प्रथमान्तेन समस्यन्त इति वार्तिकार्थः । एवं च प्रगत आचार्यः प्राचार्यः प्रगतः पितामहः प्रपितामह इत्यादिवत्प्रतिस्थितमक्षं प्रत्यक्षमित्ययमपि प्रादिसमास इत्यर्थः । ननु 'लक्षणेनाभिप्रती आभिमुख्ये' इति वचनादक्षं प्रति प्रत्यक्षमित्यव्ययीभाव एव किन्न स्यादित्यत आह **नाव्ययीभाव इति** ॥ **षष्ठी न श्रूयेतेति** । प्रत्यक्षस्य लक्षणमाहेत्यादिपरीक्षकप्रयोगेष्वित्यर्थः । यद्यपि नाव्ययीभावादतोम्त्वमपञ्चम्या इति पञ्चम्या अमादेशो नियमेन निषिद्धः । तृतीयासप्तम्योर्बहुलमिति तृतीयासप्तम्योर्विकल्पेनैव स विहितः । तथाऽप्यन्यत्र नियमेन तद्विधानात्प्रत्यक्षमित्येव स्यान्न प्रत्यक्षस्येतीत्यर्थः । उपलक्षणं चैतत् । प्रत्यक्षे प्रत्यक्षाणीति प्रथमाद्वितीयाद्विवचनबहुवचने चतुर्थीषष्ठीद्विवचनबहुवचने च परीक्षकप्रयोगेषु न श्रूयेरन्नित्यपि द्रष्टव्यम् । प्रत्यक्षस्येति प्रयोगस्य प्रायिकत्वात्स्वपदेन ग्रहणमित्यवधेयम् । नन्वेवं शेषपूरणेऽनुमाऽनुमापदवाच्याऽनुमेति प्रकीर्तितेति पौनरुक्त्यमित्यत आह **याऽनुमा प्रसिद्धेति** । तथा च याऽनुमा प्रसिद्धा निर्दोषोपपत्तिरूपा सेति तामनूद्य तत्रावयवार्थरूपनिमित्तयोगेनानुमाशब्दवाच्यत्वं विधीयत इति न पौनरुक्त्यमिति भावः ॥ **प्रागिति** । 'न्यायस्यान्यस्य तौ पुनरित्यत्रेति शेषः ॥ **करण इति** । तथा च करण एव प्रत्ययो न कर्तरीति भावः । अत एव सर्वं गम्यतेऽनेनेत्यागम इत्युत्तरत्रानुवादः । ननु कर्तर्येव प्रत्ययोऽस्तु ततश्च मुख्यमेव कर्तृत्वं तत्र कथञ्चिद्भविष्यतीत्यत आह **ग्रहेत्यादि** । ग्रहादिभ्यो धातुभ्योऽप्प्रत्ययो भवतीति सूत्रार्थः । उदाहरणन्तु ग्रहः वरः दरः निश्चयः ॥ **गम इति** । एरजिति सूत्रव्याख्यावसरे काशिकायां भावेऽकर्तरि च कारक इति प्रकृतमनुवर्तते यावत् कृत्यल्युटो बहुलमित्युक्तत्वादकर्तरि कारके भावे वेत्युक्तमिति ज्ञातव्यम् । तथा च कर्तरि न भवतीत्युक्तत्वात्कर्तृत्वोपचार इत्युक्तं युक्तमिति

भावः । ननु भाव इत्यप्यनुवृत्तिसद्भावादागमनमागम इत्येव कस्मान्न निरुच्यत इत्यत आह **अनुप्रमाणविषयमिति** । आचार्यैः क्रियमाणमित्यर्थः । पूर्वोत्तरवाक्यबलादिति भावः । असावागम आगमः स्मृत इत्युक्तौ पौनरुक्त्यमत आह **य आगम इति** । तथा च य आगमप्रसिद्धो निर्दोषशब्दरूपोऽसावुक्तनिमित्तेनागमशब्दवाच्य इति विवक्षितत्वान्न पौनरुक्त्यमिति भावः ।

श्री० — **वाक्येन** जिनदर्शितवाक्येन । रूपरसादिविषयान्प्रति स्थितस्याक्षस्यैकत्वाभावादक्षमित्येकवचनानुपपत्तिरित्यत आह **जाताविति** । तथा चाक्षाणीत्यर्थः । अदोषेण विषयेण ॥ **तत्प्रत्यक्षमिति** । तदिन्द्रियप्रत्यक्षमित्यर्थः । **अनुमेति** प्रकीर्तितमिति वक्तव्यमित्यत आह **माऽनुमेति** । नन्वागमस्य ज्ञानकरणत्वेन गमयतीति कथं कर्तृत्वोक्तिरित्यत आह **करणे कर्तृत्वोपचार इति** । ननूपचार इति कुतो व्याख्येयं मुख्यमेव कर्तृत्वं किं न स्यादित्यत आह **ग्रहेत्यादि** । आगमशब्दस्तावदाङ्पूर्वकाद्गम्लृगतावित्यस्मादप्प्रत्यये पकारलोपे च सति निष्पन्नः । सचाप्प्रत्ययो ग्रहेत्यादिसूत्रेण गम्धातोः कर्तृकारकभिन्नकारकविवक्षायामेव विहितो न कर्तरि । अतः कर्तृत्वमुपचरितमित्येव व्याख्येयमिति भावः ।

सु० — **निर्वचनमात्रमेवैतत्प्रत्यक्षादिशब्दानाम् । न च निर्वचनलभ्योऽर्थोऽतिव्याप्तिपरिहारेणावश्यम्भावीत्यस्ति नियमः । व्याघ्रपर्ण्यादिष्वभावादिति न मन्तव्यमित्याशयवानाह** एतेनेति ।

अबु० — एतेन कारणेनैव तत्तन्मानत्वमिष्यते ॥

**तत्तन्मानत्वं प्रत्यक्षादीनां प्रत्यक्षादित्वं प्रत्यक्षादिशब्दवाच्यत्वमिष्यते प्रामाणिकैः । प्रत्यक्षादिषु प्रत्यक्षादिशब्दप्रवृत्तौ निमित्तमेवैतत् । न तु निर्वचनमात्रलभ्योऽर्थ इत्यर्थः । कुत इत्यत आह** स्वरूपं हीति ।

स्वरूपं हि तदेतेषाम्

तत् **निर्दोषविषयसन्निकृष्टनिर्दोषेन्द्रियत्वादिकम्** एतेषां **प्रत्यक्षादीनां** स्वरूपं **लक्षणं** हि **इत्यर्थः । लक्षणं हि शब्दप्रवृत्तिनिमित्तं भवति । एतदपि कुत इत्यत आह** अन्यथेति ।

अन्यथाऽसिद्धिमानतः ॥

**अन्यथाऽसिद्धिश्च तन्मानं च । प्रकारान्तरेण प्रत्यक्षादिलक्षणानां निरूपयितुमशक्यत्वादित्यर्थः । तथा चोक्तम् ।**

**शे०— निर्वचनमात्रमेवेति** । न तच्छब्दप्रवृत्तिनिमित्तमिति भावः । (असाधारणरूपलक्षणः) **व्याघ्रेति** । (व्याघ्रपर्ण्यादिशब्दानामौषधादिषु रूढतयाऽवयवार्थानुस्यूतेरभावादिति भावः) । व्याघ्रपर्णीशब्द औषधविशेषवाचकः ॥ **लक्षणं हीति** । स्वरूपलक्षणं हीत्यर्थः । अन्यथासिद्धत्वस्य मानत्वविभाजकत्वेनाप्रसिद्धत्वेनान्यथासिद्धिरूपमानत इत्यर्थानुपपत्तेराह **प्रकारान्तरेणेति** । लक्षणानां स्वरूपलक्षणानाम् ॥ **तथा चोक्तमिति** । युक्तिपादे 'निर्दोषाक्षोद्भवं ह्यत्र प्रत्यक्षमि'त्यादिनेति शेषः ।

**स०—** व्याघ्रपर्णीशब्द औषधविशेषस्य वाचकः । **तथा चोक्तमिति** । युक्तिपादे अनुभूतिः प्रमाणं चेत्यादिनेति शेषः ।

**प०— निर्वचनमात्रमिति** । न तु प्रवृत्तिनिमित्तासाधारणधर्मरूपलक्षणमित्यर्थः ॥ **व्याघ्रपर्ण्यादिष्विति** । व्याघ्रपर्ण्यश्वकर्णपुनर्नवादिशब्दानां वृक्षविशेषादिषु रूढतया तत्रावयवार्थानुस्यूतेरभावादिति भावः ॥ **तथाचोक्तमिति** । प्रकारान्तरेणासिद्धिमानकत्वं उक्तं युक्तिपादे याथार्थ्यमेव मानत्वमित्यादिप्रकरणे 'न परिच्छेदकार्येव प्रमाणमिति च प्रमा' इत्यादिग्रन्थव्याख्यान इत्यर्थः ।

**या० – निर्वचनमात्रमेवेति** । न तच्छब्दप्रवृत्तिनिमित्तमिति भावः ॥ **व्याघ्रपर्ण्यादिष्विति** । औषधविशेषेष्वित्यर्थः ॥ **लक्षणं हीति** । स्वरूपलक्षणं हीत्यर्थः ॥ **तथा चोक्तमिति** । युक्तिपाद इति शेषः ।

---

**श्री०— कुत इति** । इदं प्रवृत्तिनिमित्तमिति शेषः ।

**सु०— ततः किं यद्येवं प्रत्यक्षादिस्वरूपमित्यत** आह अत इति ।

**अनु०—** अतोऽनुमा कथं धर्मं पुद्गलं चापि दर्शयेत् ॥

**अनुमेत्यनुमानावगतप्रामाण्यं जिनवाक्यमुच्यते । चापिशब्दावितरेतरसमुच्चये ।** दर्शयेत् **प्रतिपादयेत् । इदमुक्तं भवति । जिनवाक्याद्धर्मादिसिद्धिरिति वदता किं प्रमाणमुक्तं भवति । आगम इति चेन्न । सम्यक् प्रत्यक्षाद्यन(वग)धिगतार्थप्रतिपादकस्यैवागमत्वात् । जिनवाक्यस्य च तदसिद्धेः । जिनो हि प्रमाणेनार्थमुपलभ्य वाक्यं प्रणीतवानन्यथा वा । द्वितीये पौरुषेयस्य निर्मूलस्योन्मत्तवाक्यवत्सम्यक्त्वं दुर्लभम् । आद्ये प्रत्यक्षेणानुमानेन** वाऽवगतौ **तदनधिगतार्थ(त)ाऽसंभवः । वाक्यान्तरेण चेदन्धपरम्परापत्त्या पुनरसम्यक्त्वमेव ।**

**शे०— प्रत्यक्षादिस्वरूपमिति** । तत्स्वरूपलक्षणमित्यर्थः । नन्वतोऽनुमा कथं धर्ममित्यनुमानस्य धर्मादिज्ञापकत्वनिराकरणमनुपपन्नम् । अनुक्तोपालम्भत्वादनुमानाद्यवगतासभावजिनवाक्यस्यैव धर्मादिज्ञापकतायाः परेणाभ्युपगतत्वेनानुमानस्य तज्ज्ञापकतायाः परं प्रत्यसम्मतेरित्यतोऽत्रानुमापदस्यापि

लक्षणया तादृशजिनवाक्यपरत्वान्नानुक्तोपालम्भप्रसङ्ग इत्याशयेनानुमापदतात्पर्यमाह **अनुमेतीति** । चापिशब्दयोरन्यतरेणैव समुच्चयसिद्धेरन्यतरवैयर्थ्यमित्याशङ्क्य न केवलं धर्मं न दर्शयेत्किन्तु पुद्गलं च । न केवलं पुद्गलं न दर्शयेत्किन्तु धर्ममपीति परस्परसमुच्चयार्थत्वान्नान्यतरवैयर्थ्यमित्याह **चापिशब्दाविति** । तथाऽपि जिनवाक्यस्य धर्मादिज्ञापकताया एव तेनोक्तत्वेन धर्मादिसाक्षात्कारजनकताया अनुक्तत्वाद्दर्शयेदित्यंशस्यानुक्तोपालम्भत्वमेवेत्यतस्तस्यापि प्रतिपादयेदित्यर्थकत्वान्न तदंशोऽपि तदित्याशयेनाह **प्रतिपादयेदिति** । नन्वनुमानाद्यवगताप्तभावजिनवावाक्याद्धर्मादिसिद्धिः कुतो नोपपद्यतेत्यतोऽत्र हेतुं वक्तुं प्रत्यक्षादिस्वरूपनिरूपणमित्युक्तम् । तत्रातोऽनुमेत्यादिग्रन्थेनोक्तप्रतिज्ञायां को हेतुरुक्तो यदुपोद्घातत्वं प्रत्यक्षादिस्वरूपनिरूपणस्य स्यादित्यतोऽत्र प्रतिज्ञायाममिमतं हेतुं प्रत्यक्षादिनिरूपणस्य च तत्सिद्ध्यर्थचिन्तात्वं च दर्शयितुमाह **इदमुक्तं भवतीति** ॥ **तदसिद्धेरिति** । सम्यक् प्रत्यक्षाद्यनवगतार्थप्रतिपादकत्वासिद्धेरित्यर्थः । तदेव व्युत्पादयति **जिनो हीति** ॥ **प्रत्यक्षेणेनेति** । न च प्रत्यक्षादिना स्वयमर्थे ज्ञातेऽपि स्वं प्रति तन्मूलकवाक्यस्य प्रामाण्याभावादन्यान्प्रति चाज्ञातज्ञापकत्वान्नाधिगतार्थत्वम् । अन्यथा वाक्यमात्रस्य तदनधिगतार्थता न स्यादिति वाच्यम् । वाक्यबोध्यार्थस्य प्रत्यक्षाद्ययोग्यत्वे जिनस्यापि प्रत्यक्षादिना तज्ज्ञानासंभवेन तन्मूलकवाक्यप्रयोगानुपपत्तेः प्रत्यक्षादियोग्यताया अवश्याश्रयणीयत्वात्तादृशस्य चार्थस्य जिनं प्रतीवान्यान्प्रत्यपि प्रत्यक्षानुमानाभ्यामेवावगतिसंभवात्तान्प्रति प्रत्यक्षाद्यवगतार्थबोधकजिनवाक्यस्यानधिगतार्थज्ञापकत्वानुपपत्तेरित्यभिप्रायात् ॥ **अन्धपरम्परापत्ते(त्ये)रिति** । अयमर्थः । शुक्लं क्षीरमित्यन्धेनोक्ते केनेदमवगतमिति च पृष्टो यदाऽन्धान्तरमेव मूलं निर्दिशति सोऽप्यन्धान्तरं तदा नैतद्वचः शौक्ल्ये प्रमाणं भवति । तादृगेव तद्धर्मादिप्रतिपादकजिनवाक्यस्येव तन्मूलभूतपौरुषेयवाक्यस्यापि निर्मूलस्योन्मत्तवाक्यवत्सम्यक्त्वानुपपत्त्या पौरुषेयवाक्यान्तरमात्रमूलकत्वापत्त्या न जिनवाक्यस्य धर्मादिप्रमापकत्वसिद्धिरिति ।

प०— **अनुमानावगतेति** । जिनवाक्यं प्रमाणं आप्तोक्तत्वादित्यनुमानावगतेत्यर्थः । आप्तत्वं च जिनस्यास्खलितवाक्त्वेनेति भावः ।

श्री०— वाक्यं दर्शयेदित्ययुक्तमत आह **प्रतिपादयेदिति** ॥ **सम्यक्त्वं दुर्लभमिति** । अत एवागमलक्षणे सम्यक्त्वेत्यपि ग्राह्यमित्युक्तमिति ध्येयम् ।

**सु०— एतेन विमतं प्रमाणमाप्तवाक्यत्वात् , जिन आप्तोऽस्खलितवाक्त्वादित्यनुमानं जिनदर्शिनां वाक्यं च प्रत्युक्तम् । तथा हि । आप्तत्वविषयं वाक्यं तावन्निर्मूलं चेदसम्यगेव । वाक्यान्तरमूलत्वेऽपि तथा । न च प्रत्यक्षं मूलम् । विषयान्प्रति स्थितस्याक्षस्य प्रत्यक्षत्वात् ।**

न चाप्तत्वरूपापरचित्तवृत्तिरपरोक्षविषयतामश्नुते । अतोऽस्खलितवाक्त्वाद्यनुमानमूलमित्येव वक्तव्यम् । न चैतदनुमानम् । प्रत्यक्षाद्यनुसरणेनार्थगमकस्यानुमानत्वात् । न चैतत्प्रकृते अस्ति ॥ आप्तवाक्यत्वादित्यस्य हि यथाश्रुतार्थत्वे क्वचिदाप्तस्य विप्रलम्भकस्याज्ञस्य वाक्ये व्यभिचारः । आप्तिमूलवाक्यत्वादित्यभिप्राये विशेषणासिद्धिः । तत्त्वज्ञानादिलक्षणा खलु आप्तिः । तत्र धर्मादिविषयं तत्त्वज्ञानं तावन्न जिनस्य प्रत्यक्षजन्यम् । विषयान्प्रति स्थितस्य अक्षस्य प्रत्यक्षत्वात् । धर्मादेश्चाक्षाविषयत्वात् । तथात्वे वाऽन्येषामपि तदधिगतिप्राप्तेः । अत एव नानुमानजन्यम् । वाक्यान्तराभ्युपगमे त्वन्धपरंपरैव ॥ एवमविप्रलिप्साऽपि दुरधिगमा ।

अत एवाप्तत्वसाधकमनुमानं कालात्ययापदिष्टम् । आप्तेरुक्तविधया बाधितत्वात् । अन्येषामप्रत्यक्षेऽर्थेऽस्य प्रत्यक्षं प्रवर्तत इत्यतो न विरोध इति चेन्न । पुरुषत्वादिना सत्प्रतिपक्षत्वात् ॥ अस्खलितवाक्त्वं च क्वचिद्वा प्रकृते वा सर्वत्र वा । नाद्यः । यः क्वचिदस्खलितवागसौ विषयविशेष आप्त इति व्याप्त्यभावात् । न द्वितीयः । निर्धारणोपायाभावात् । फलप्राप्त्यनुमेयं खल्वेतत् । अत एव न तृतीयोऽपि ॥

यत्तु निःस्वेदत्वादिकं लिङ्गमुच्यते तत्तावत्सन्दिग्धासिद्धम् । औषधादिना संभवदन्यथासिद्धं च । न चायं मन्वादिवाक्येष्वपि प्रसङ्गः । अपौरुषेयतया मूलानपेक्षवेदमूलत्वात् । 'यद्वै किञ्चन मनुरवदत्तद्भेषजमि'त्यादिवेदेनैवाप्तत्वादिनिश्चयाच्च । अतः प्रत्यक्षादीनामुक्तलक्षणत्वाज्जिनतद्दर्शितप्रत्यक्षे परोपन्यस्तानुमाने जिनादिवाक्ये च तदभावादनुमानादिसिद्धाप्तभावजिनवाक्याद्धर्मादिसिद्धिरित्यसदिति ।

**शे०** — नन्वस्खलितवाक्त्वाद्यनुमानेन जिनदर्शिनां वाक्येन च जिनस्याप्तत्वसिद्ध्याऽऽप्तवाक्यत्वेन चागमप्रमाणत्वसिद्धेः कथं तस्यागमत्वाभाव इत्यत आह **एतेनेति** । एतेनेति परामृष्टमर्थं दर्शयति **तथा हीति** ॥ **वाक्यमिति** । जिनदर्शिनामिति शेषः । जिनदर्शिनां वाक्यादाप्तत्वसिद्धिं वदन्प्रष्टव्यः । तत्किं निर्मूलमेव तन्निश्चायकतयाऽभिमतमुत समूलम् । समूलत्वेऽपि किं वाक्यान्तरमूलतयोत प्रत्यक्षमूलतया किंवाऽस्खलितवाक्त्वाद्यनुमानमूलतयेति विकल्पान्मनसि निधायाद्यं दूषयति **निर्मूलं चेति** । पौरुषेयवाक्यस्य निर्मूलस्योन्मत्तवाक्यवदसम्यक्त्वनियमादिति भावः । द्वितीयेऽप्याद्यं दूषयति **वाक्यान्तरेति** । पौरुषेयवाक्यान्तरेत्यर्थः ॥ **तथेति** । अन्धपरम्परापत्त्या पुनरसम्यक्त्वमेवेत्यर्थः । द्वितीयमुत्थाप्य दूषयति **न चेति** । तस्मात्तृतीयपक्ष एवाङ्गीकार्य इत्याह **अत इति** ।

अस्तु तर्ह्येतदनुमानमूलतयैव जिनदर्शिनां वाक्यस्य प्रामाण्यमित्यतो भवेदेतदेवं यद्येतदनुमानं स्यात् । न चैतदस्तीत्याशयेनानुमानलक्षणकथनपूर्वकं तदभावमुपपादयति **न चैतदिति** । तत्कथमित्यतोऽत्र प्रत्यक्षाद्यनुसरणस्य तदबाधिताप्रतिबद्धविषयत्वरूपत्वात् प्रकृते चास्खलितवाक्त्वाद्यनुमानस्य तद्बाधित-प्रतिबद्धविषयत्वान्नानुमानत्वमित्यभिप्रेत्य कथं बाधादीत्यतस्तत्रैव विशिष्यबाधादेर्व्युत्पादयितुं शक्यत्वेऽपि प्रामाण्यसाधकाप्तवाक्यत्वानुमानदूषणातिदेशेनास्खलितवाक्त्वानुमानदूषणे लाघवम् । एतेनेत्यादिना प्रतिज्ञातमाप्तवाक्यत्वानुमानस्याभासत्वं च सिद्धं भवतीति मन्वानस्तदेव प्रथमं निराकरोति **आप्तवाक्य-त्वादित्यस्येति** । नन्वज्ञवाक्यस्य विप्रलम्भकवाक्यस्य चाप्तवाक्यत्वाभावान्न तत्र व्यभिचार इत्यतो विप्रलम्भकस्याज्ञस्य च क्वचिदाप्तत्वादस्त्येव तद्वाक्यस्याप्तसंबन्धिवाक्यतेत्यभिप्रायेणोभयत्र हेतुवृत्तिमुप-पादयितुं क्वचिदाप्तस्येत्युभयविशेषणं कृतम् ॥ **आप्तीति** । तथा च व्यभिचारपरिहारेऽपीति शेषः । तत्कथमित्यत आप्तिस्वरूपनिरूपणपूर्वकं तदसिद्धिं दर्शयन्नेव तन्मूलकत्वासिद्धिमुपपादयति ॥ **तत्त्वज्ञाना-दीति** । तथात्वे धर्मादेरपि प्रत्यक्षविषयत्वे ॥ **अन्येषामपीति** । तथा च प्रत्यक्षावगतार्थप्रतिपाद-कत्वेनानधिगतार्थत्वाभावाज्जिनवाक्यस्य वैयर्थ्यमेव स्यादिति भावः ॥ **अत एवेति** । अन्येषामप्यनु-मानेनाधिगतिप्राप्तेरेवेत्यर्थः ॥ **दुरधिगमेति** । अयमर्थः । न तावत्प्रत्यक्षतस्तत्सिद्धिः । परचित्तवृत्ति-तया विप्रलम्भस्य परं प्रत्ययोग्यत्वेनायोग्यप्रतियोगिकतदभावस्याप्यप्रत्यक्षत्वात् । नाप्यनुमानात् । तत्प्रति-बद्धलिङ्गाभावात् । न च रागाद्यभाव एव लिङ्गम् । तद्रहितेष्वपि बुद्धादिष्वीश्वरावतारेषु तद्दर्शनात् । वीतरागाणामपि ज्ञानांकुरसंरक्षणार्थं छलादिना प्रतिवादिप्रतारणस्य सर्वैरप्यङ्गीकृतत्वाच्च । नापि पौरुषे-यवाक्यात् अन्धपरम्पराप्रसङ्गादिति ।

**अन्येषामिति** । तथा च जिनस्य धर्मादिविषयं तत्त्वज्ञानं प्रत्यक्षजन्यमेवेति न कालात्ययाप-दिष्टत्वमिति भावः । एवमप्यविप्रलिप्सादिरूपाप्त्येकदेशस्य बाधितत्वमेवेति सत्येव दोषे दोषान्तरमाह **पुरुषत्वादिनेति** । जिनोऽनाप्तः पुरुषत्वाद्यज्ञदत्तवदिति भावः । बाधप्रतिरोधाभ्यां दूषितमनुमानं व्याप्त्यभावादिनाऽपि दूषयितुं विकल्पयति **अस्खलितवाक्त्वं चेति** ॥ **व्याप्त्यभावादिति** । विषय-विशेषेऽनाप्तत्वेन संप्रतिपन्नेष्वपि क्वचिदस्खलितवाक्त्वदर्शनादिति भावः ॥ **अत एवेति** । निर्धारणो-पायाभावादेवेत्यर्थः । अस्खलितवाक्त्वादीत्यादिपदेन प्राक् संगृहीतं लिङ्गमप्युत्थाप्य दूषयति **यत्त्विति** । ( यः स्खलितवाक् चोरादिस्तद्देहे स्वेदादिकं दृश्यते । अयं तु स्वेदादिरहित इति तद्राहित्यं जिनस्या-स्खलितवाक्त्वे लिङ्गमित्यर्थः ) प्रतिज्ञायां हेतुं तादर्थ्यं च प्रत्यक्षादिस्वरूपनिरूपणस्य दर्शयन्नेवोक्तप्रतिज्ञां निगमयति **अत इति** ।

**स०— अत एव न तृतीय इति** । निर्धारणोपायाभावादेवेत्यर्थः । **नञिवयुक्तन्यायेनेति** । नञा युक्तं इवयुक्तं च तदन्यस्मिन् तत्सदृशे वर्तते तथाह्यर्थगतिरिति न्यायेनेत्यर्थः ।

**प०—** एतेनेत्युक्तं व्यनक्ति **तथा हीत्यादिना** ॥ **आप्तत्वविषयमिति** । जिन आप्त इति यज्जिनदर्शिनां वाक्यं तदित्यर्थः । तथेति सम्यङ्नेत्यर्थः । अन्धपरंपरापत्तेरिति भावः ॥ **अनुमान-मूलमिति** । आप्तत्वविषयं वाक्यमित्यनुकर्षः ॥ **नचैतदनुमानमिति** । एतदनुमानं न चेत्यर्थः । कुत इत्यत आह **प्रत्यक्षादीति** ॥ **न चैतत्प्रकृतेऽस्तीति** । जिनदर्शिवाक्यमूलभूते आप्तत्वसाधका-स्खलितवाक्त्वाद्यनुमाने प्रत्यक्षाद्यनुसरणेनार्थगमकत्वं नेत्यर्थः । कथमित्यतोऽत एवेत्यादिना बाधित-विषयत्वादिनेति वक्तुं जिनवाक्यं प्रमाणमाप्तवाक्यत्वादित्यनुमानं दूषयति **आप्तवाक्यत्वादित्यस्य हीति** । क्वचिदाप्तस्येत्येतद्विप्रलम्भकाज्ञयोर्विशेषणम् । विशेषणासिद्धिं व्यनक्ति **तत्त्वज्ञानादीति** ॥ **अत एवेति** । धर्मादेरप्रत्यक्षत्वेन तद्घटितव्याप्त्यादेरसंभवादनुमानजन्यं नेत्यर्थः ॥ **तद्धेपजमिति** । दर्शन-साधनमित्यर्थः ।

**श्री०— तथेति** । अन्धपरम्पराया निर्मूलत्वमेवेत्यर्थः । अविषयत्वात् तत्प्रत्यक्षाविषयत्वात् । **अत एवेति** । प्रत्यक्षाप्रवृत्तेरेवेत्यर्थः । प्रत्यक्षशब्दानुसारादनुमेति प्रकीर्तितेत्युक्तत्वादिति भावः ॥ **दुरधिगमेति** । परचित्तवर्तिन्यास्तस्या अप्रत्यक्षत्वादित्यर्थः ॥ **उक्तविधयेति** । तत्त्वज्ञानादिलक्षणा खल्वाप्तिरित्युक्तविधयेत्यर्थः । ननु नाप्तिर्बाधिता जिनस्य प्रत्यक्षेण धर्मादितत्त्वज्ञानसम्भवादित्याशङ्कते । **अन्येषामिति** । अर्थे धर्मादिरूपे ॥ **सप्रतिपक्षत्वादिति** । जिनः अन्याप्रत्यक्षधर्मादिविषयकप्रत्यक्ष-वान्न भवति पुरुषत्वात् रथ्यापुरुषवदिति सप्रतिपक्षत्वादित्यर्थः ॥ **प्रकृत इति** । मोक्षसाधनविषय इत्यर्थः । अत एव निर्धारणोपायाभावादेव ॥ **निःस्वेदत्वादिकमिति** । यः स्खलितवाक् चोरादिस्तद्देहे स्वेदादिकं दृश्यते । अयं तु स्वेदादिरहित इति तद्राहित्यं जिनस्यास्खलितवाक्त्वे लिङ्गमित्यर्थः । अयं प्रसङ्गः जिन इवोक्तरीत्याऽऽप्त्यनिश्चयरूपः । तथा च तद्वाक्येनापि धर्मादिसिद्धिर्न स्यादिति भावः । वेदमूलकत्वेऽन्धपरम्परात्वं न शङ्कनीयमित्याशयेनोक्तं **मूलानपेक्षेति** ॥ **तत्र हेतुरपौरुषे-यतयेति** । परोपन्यस्तानुमाने विमतं प्रमाणमाप्तवाक्यत्वादित्याद्यनुमाने ॥ **तदभावादिति** । क्रमेण प्रत्यक्षादिलक्षणाभावादित्यर्थः ।

**सु०— न केवलं जिनस्यास्खलितवाक्त्वं निश्चायकाभावादसिद्धम्** । **किन्तु स्खलन-दर्शनादपीत्याशयेनाह** स्वरूप इति ।

**अनु०—** स्वरूपे पुद्गलस्योक्ता दोषाः

**विषयसप्तमीयम् । अपुद्गलशब्देन नञिवयुक्तन्यायेन पुद्गलाद्देहादन्यस्तत्सदृशश्चात्मोच्यते पुद्गलशब्देनैव वा । उक्ताः 'एवं चात्मा कार्त्स्न्य'मित्यादिना । अयमर्थः । जिनेनात्मस्वरूपं शरीरपरिमाणं रूपवच्चोक्तम् । तत्प्राग्दूषितमिति स्खलितवागसाविति । यद्यपि सप्तभङ्गिनयोऽपि तदुक्तो दूषितस्तथाऽपि मोक्षसाधनं यत्पुद्गलदर्शनमुक्तं तत्रैव स्खलनप्रदर्शनायेयमुक्तिः । ननु एतदपि पूर्ववाक्येन सिद्धम् । सत्यम् । प्रपञ्चार्थ उत्तरबन्ध इत्यदोषः ।**

**शे०**— अस्खलितवाक्त्वस्यासिद्धेरुक्तत्वात्तदभिधायकोत्तरग्रन्थस्य वैयर्थ्यमित्याशङ्क्याज्ञानासिद्धेरभिहितत्वेऽपि स्वरूपासिद्धेरनभिहितत्वान्न तदभिधायकोत्तरग्रन्थस्य वैयर्थ्यमित्यभिप्रेत्य पूर्वोत्तरग्रन्थयोरर्थभेदं दर्शयन्नेव स्वरूपासिद्ध्यभिधायकतयोत्तरग्रन्थं योजयति **न केवलमिति** । स्वरूपस्य दोषोक्त्यधिकरणत्वासंभवात्सप्तम्यनुपपत्तिमाशङ्क्याधिकरणत्वाभावेऽपि विषयताया विद्यमानत्वान्न तदर्थकसप्तम्यनुपपत्तिरित्यभिप्रेत्याह **विषयेति** । ननु 'एवं चात्मा कार्त्स्न्यमि'त्यत्रात्मनो देहपरिमाणत्वे दोषाणामुक्तत्वेऽपि पुद्गलशब्दवाच्यदेहस्य स्वरूपे तेषामनुक्तत्वात्तत्र दोषाणामुक्तत्वोक्तिरयुक्तेत्यतो भवेदेतदेवं यद्यत्र पुद्गलस्येति पदच्छेदेन देहपरता तस्याभिमता स्यात् । न चैवम् । किं तर्ह्यपुद्गलस्येति पदच्छेदेन तस्यात्मस्वरूपपरत्वमेव । तथा चात्मस्वरूपविषये दोषाणामुक्तताया एव लाभान्नानुपपत्तिरित्यभिप्रेत्य कथमपुद्गलशब्दस्य पुद्गलान्यमात्रवाचकस्यात्मपरत्वमपीत्यतो न्यायेन तदुपपादयति **अपुद्गलशब्देनेति । नञिवयुक्तन्यायेनेति** । नञा युक्तमिवशब्देन च युक्तं पदं न तत्सदृशमात्रपरम् । नापि तदन्यमात्रपरम् । किन्तु स्ववाच्यान्यतत्सदृशपरमेव । अब्राह्मणमानयेत्यादौ ब्राह्मणसदृशस्य ब्राह्मणान्तरस्य वा ब्राह्मणभिन्नस्यापि विसदृशस्य घटादेर्वाऽप्रतीत्या ब्राह्मणभिन्नस्य तत्सदृशस्य शूद्रादेरेव च प्रतीत्या नञादियुक्तस्य पदस्य तादृशार्थपरताया व्युत्पन्नत्वेनापुद्गलशब्देनापि पुद्गलशब्दवाच्यदेहभिन्नतत्सदृशात्मग्रहणं नानुपपन्नमिति भावः । एतच्च पुद्गलशब्दो देहपर इति नवीनजैनमतमाश्रित्योक्तम् । पुद्गलशब्दस्यात्मपरत्वमिति जरज्जैनमताश्रयणे पुद्गलो निरयं गिरन्निति प्रमाणानुसारिस्वमताश्रयणे च न किञ्चिदुक्तकुसृष्ट्याश्रयणमित्याशयेनाह **पुद्गलशब्देनैव चेति** । नन्वेवं चात्मेत्यादिनाऽऽत्मनः शरीरपरिमाणत्वादिकमेव दूषितं न त्वात्मस्वरूपं तत्कथं स्वरूपे पुद्गलस्योक्ता दोषा इत्युक्तिरित्याशङ्कां परिहरन्नेव तत्फलमप्याह **अयमर्थ इति** । नन्वस्खलितवाक्त्वासिद्धिव्युत्पादनस्य तदुक्तसप्तभङ्गीनयस्य प्रागदूषितत्वोक्त्याऽपि सिद्ध्या विशिष्यात्मस्वरूपविषयदोषोक्तिमात्रसाध्यत्वाभावाद्विशिष्यतत्कथनमनर्थकमित्याशङ्क्य प्रयोजनसद्भावान्न तदिति भावेनाह **यद्यपीति** । ननु 'अतोऽनुमा कथं धर्ममि'ति पूर्ववाक्य एव जिनवाक्यस्याप्रमाणत्वेन धर्मादिनिश्चायकत्वाभावस्योक्तत्वात्तदुक्तात्मस्वरूपस्याप्यसत्त्वस्य

तत्रैव सिद्धतया स्वरूपासिद्धेरपि सिद्धया किं 'स्वरूपे पुद्गलस्योक्ता' इत्याद्युत्तरग्रन्थेनेति भावेन शङ्कते **नन्विति** ।

**प०— नञिवयुक्तन्यायेनेति** । नञ्युक्तमिवयुक्तं च पदमन्यस्मिन्सदृशेऽधिकरणे प्रतिपत्तिं गमयतीति शाब्दिकैरुक्तन्यायेनेत्यर्थः । अब्राह्मणमानयेत्यादौ तदन्यः शूद्रादिस्तत्सदृश एवानीयत इति भावः ॥ **तत्प्रागिति** । समयपादे जैनसमयनिरास इति भावः ॥ **नन्वेतदिति** । जीवादिविषयस्खलितवाक्त्वमित्येतदास्त्वादिनिरासपरेणातोऽनुमेति पूर्वार्धेनैव सिद्धमित्यर्थः ।

**या०— नञिवयुक्तन्यायेनेति** । नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थावगतिरिति न्यायस्यायमर्थः । नञा युक्तमिवयुक्तं च पदं स्ववाच्यान्यस्मिंस्तत्सदृशे वर्तते तथा हि तत्रार्थो ज्ञायते । अनश्व इत्यादावश्वादन्यस्याश्वसदृशस्य गर्दभादेरेव प्रतीतिरिति **पूर्ववाक्येनेति** । 'अतोऽनुमा कथं धर्मं पुद्गलं चापि दर्शयेदि'ति पूर्ववाक्येन पुद्गलस्वरूपसाधकाभावस्योक्तत्वादिति भावः ।

**श्री०— पुद्गलशब्देनैवेति** । आत्मोच्यत इति वर्तते । पुद्गलशब्दो जरज्जैनैरात्मवाचित्वेन स्वीकृत इति समयपाद उक्तत्वादिति ध्येयम् ॥ **दूषित इति** । तथा च सप्तभङ्गिनये दोषा उक्ता अतोऽपि जिनः स्खलितवागिति कस्मादत्र नोच्यत इत्यर्थः ॥ **एतदपीति** । पुद्गलस्वरूपविषये स्खलितवाक्त्वं पूर्ववाक्येनैव पुद्गलस्वरूपसाधकाभावोक्त्या सिद्धमित्यर्थः ।

**सु०— प्रकारान्तरेणात्मस्वरूपे जिनवचनस्खलनं दर्शयति** आनन्दमेवेति ।

**अनु०—** आनन्दमेव च ॥

न मन्यते पुद्गलं स

**अत्राप्यपुद्गलपुद्गलशब्दाभ्यामात्मोच्यते । तत्त्वविद आत्मानमानन्दमेवानन्देनात्यन्ताभिन्नं मन्यन्ते । स जिनस्तमानन्दमेव न मन्यते । भिन्नत्वादिना सप्तप्रकारं ब्रवीति । तत्सप्तभङ्गीनयनिरासेन पुंस्त्वादिवदित्यात्मनः सुखाद्यत्यन्ताभेदसाधनेन च निरस्तम् । अतश्च स्खलितवागसाविति भावः ।**

**शे०— अत्रापीति** । नवीनजरज्जैनस्वमतभेदेनेति शेषः ॥ **सप्तभङ्गिनयनिरासेनेति** । 'नैकस्मिन्नसंभवादि'ति सूत्रोक्तन्यायेनेत्यर्थः ।

**प०— पुंस्त्वादिवदिति** । पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगादिति वियत्पादीयजीवविषयकसूत्र इत्यर्थः ।

सु० — इतश्च तथेत्याह दुःखेति ।

अनु० — 　　　दुःखाभावः सुखं त्विति ।

तुशब्द आत्मव्यावृत्त्यर्थः । इतिशब्दो हेतौ । पूर्वेणैव सम्बन्धः । यस्मादात्मा भावः । सुखं तु दुःखाभावः । न च विरुद्धस्वभावयोरत्यन्ताभेदो दृष्टः । तस्मादात्मा न सुखात्यन्ताभिन्न इति जिनो ब्रूते । तच्चायुक्तमित्यतः स्खलितत्रागसौ । कुतस्तदयुक्तमित्यत आह मात्रेति ।

मात्राभोगातिरेकेण सुखाधिक्यस्य दर्शनात् ।

मीयन्त इति मात्राः शब्दाद्या विषयाः । भोगोऽनुभवः । उपलक्षणं चैतत् । विषयभोगाल्पत्वेन सुखाल्पत्वदर्शनत्वादित्यपि ग्राह्यम् । सुखं भावस्तारतम्योपेतत्वाद्दुःखादिवदिति प्रमाणविरुद्धत्वात्सुखस्य दुःखाभावत्ववचनमयुक्तमित्यर्थः । सुखस्य तारतम्योपेतत्वसमर्थनाय दर्शनादिति साक्षी तत्र प्रमाणत्वेन दर्शितः । यस्तु तत्रापि विप्रतिपन्नस्तं प्रत्यनिष्टप्रसङ्गं सूचयितुं मात्राभोगातिरेकेणेत्युक्तम् । यदि सुखं निरतिशयं स्यात्तदा प्रेक्षावतां विषयभोगातिरेकोपादानं व्यर्थं स्यात् । दृश्यते च तदिति ।

शे० — आत्मव्यावृत्त्यर्थ इति । सुखमेवाभावो नात्मेति तुशब्दोऽवधारणार्थ इत्यर्थः ।

---

इतिशब्दोक्तमेतद्वाक्यार्थस्य हेतुत्वं दर्शयन्नेव पूर्वेण संबन्धमुपदर्शयति यस्मादिति । मात्राशब्दस्यांशपरताया 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादौ दर्शनादत्रापि तत्परत्वभ्रमनिरासाय कर्मव्युत्पत्त्या विषयार्थतामाह मीयन्त इति । भावार्थस्याभ्यव्यवहारस्य शब्दादिविषयस्यासंभवाद्भोगपदमनुभवपरतया व्याचष्टे भोगोऽनुभव इति । ननु तथाऽपि कथमनेन वाक्येन सुखस्य दुःखाभावत्वोक्तेरयुक्तत्वसिद्धिरित्यत आह सुखमिति । नन्वेवं भोगरूपतासाधकतया तारतम्यवत्त्वमात्रमेव वक्तव्यमिह भाष्ये तद्दर्शनोक्तिस्त्वप्रयोजनैव । कथञ्चित्सार्थक्येऽपि मात्राभोगातिरेकोक्तेर्न प्रयोजनं किञ्चिदित्यतस्तदुक्तेः क्रमेण प्रयोजनमाह सुखस्येति । सूचितमनिष्टप्रसङ्गमेव प्रथयति यदीति । निरतिशयं तारतम्यरहितम् । प्रसङ्गस्येष्टापादनतामाशङ्क्य परिहरति दृश्यते चेति ।

प० — पूर्वेणेति । इति मन्यत इत्यनेन संबन्ध इत्यर्थः । आत्मव्यावृत्त्यर्थ इत्युक्तं व्यनक्ति यस्मादात्मेति ॥ निरतिशयमिति । नीरपानजात् क्षीरपानजं सुखमतिशयितमित्येतन्न स्यादित्यर्थः ।

या० — आत्मव्यावृत्त्यर्थमिति । तथा च सुखमेव दुःखाभावो नात्मेति तुशब्दोऽवधारणार्थ इति भावः ॥ निरतिशयमिति । तारतम्यशून्यमित्यर्थः ॥

**श्री० — आत्मव्यावृत्त्यर्थं इति** । आत्मस्वरूपस्याभावत्वव्यावृत्त्यर्थं इत्यर्थः । तथा च भावाभावयोरैक्यायोगादिति भावः ।

**सु० — ननु न सुखं तारतम्योपेतं किन्तु दुःखं भावभूतं तारतम्योपेतं तदभावश्च सुखम् । तद् यावद्यावन्निवर्तते तावत्तावत्सुखमिति प्रतीयते । न च प्रतियोगरूपोपाधिनिमित्ता तारतम्योपलब्धिस्तात्त्विकं तदुपपादयितुमीष्टे । विषयभोगातिरेकोपादानं च दुःखातिरेकव्यावृत्त्यर्थम् । विषयभोगसाध्यत्वाद्दुःखाभावस्येत्यत आह** सुखस्येति ।

**अनु० —** सुखस्याभावता केन

**भवेदेतत्प्रतीत्यादेरौपाधिकत्ववर्णनम् । यदि सुखस्याभावता प्रमाणेन सिद्धा स्यात् । सुखस्याभावता केन न केनापि प्रमाणेन सिद्धेत्यर्थः । एवमेव प्रतीत्यादेरौपाधिकत्ववर्णने बाधकमाह** न चेति ।

न च स्यात्किं विपर्ययः ॥

**यदि निर्निबन्धनमेव सुखतारतम्यदर्शनादेरौपाधिकत्वं कल्प्यते । तदा सुखं भावरूपं दुःखं तदभावः । तत्र तारतम्यदर्शनं प्रतियोगिसुखोपाधिनिमित्तम् । सुखनिवृत्त्यर्थानि चाहिकण्टकादीनीति परोक्तविपर्ययश्च किन्न स्यात् । स्यादेव । अतो द्वयोरप्यनुपलभ्यमानविशेषत्वात्स्वाभाविकतारतम्ययोर्भावत्वमङ्गीकर्तव्यमिति ।**

**शे० — एवमेवेति** । सुखस्याभावतायाः प्रमाणेनासिद्धावपीत्यर्थः । आपादकस्यानुक्तेस्तदध्याहारपूर्वकं विपर्ययपर्यवसानमेव दर्शयति **यदीत्यादिना** ।

**या० — तात्त्विकमिति** । स्वाभाविकमित्यर्थः ।

**श्री० —** न सुखमित्यनन्तरं भावरूपं सदिति शेषः । अभावभूतं तत् । तदभावो दुःखाभावः । तद्दुःखम् । प्रतियोगि दुःखम् । तात्त्विकं स्वाभाविकम् । तत् भावत्वम् ।

**सु० — सुखमभावो वस्तुत्वात्सम्मताभाववदिति प्रमाणासद्भावात्कथं सुखस्याभावता केनेत्युक्तमिति चेत् । किमेवंवादिनो मते कश्चिद्भावो विद्यते । उत सर्वेऽप्यभावाः । आद्ये दोषमाह** यदीति ।

**अनु० —** यदि भावोऽपि कश्चित्स्यात्तस्यैवाभावता कुतः ॥

**वस्तुत्वेन सुखस्याभावतामनुमिमानस्य मते यदि कश्चित्पदार्थो भावोऽपि स्यात् । तर्हि तस्य सुखस्यैवाभावता कुतः । अपि तु भावत्वेनाङ्गीकृतस्यापि पदार्थस्याभावता स्यात् । अन्यथा वस्तुत्वस्य तत्र व्यभिचारापत्तेः ।**

**ननु सर्वेऽपि पदार्था अभावा भवन्त्येवेति नोक्तो दोषः । यद्यपि घटादीनामनादित्वाद्यापत्त्या प्राक्प्रध्वंसात्यन्ताभावत्वमनुपपन्नम् । तथाऽप्यन्योन्याभावत्वं युज्यत एव । घटे हि पटाद्यन्योन्याभावः प्रमाणसिद्धः । न चान्योन्याभावो धर्मिणोऽन्योऽस्ति । अतो घट एव पटाद्यन्योन्याभावः । एवं पटादयोऽपीति द्वितीयं शङ्कते** यदि सर्वेऽपीति ।

यदि सर्वेऽप्यभावाः स्युरन्योन्यमिति

**सर्वेऽपि पदार्था अन्योन्याभावाः स्युरिति यदि मन्यस इत्यर्थः ।**

**उत्तरमाह** भावतेति ।

भावता ॥

अभावाभावतैव स्यात्किन्नश्छिन्नं तदा भवेत् ॥

**तदेवं सर्वपदार्थानामन्योन्याभावत्वव्युत्पादनेन नोऽस्माकं किं छिन्नं भवेत् । न किमपि । कथम् । यतोऽभावाभावता भावतैव स्यात् । इदमुक्तं भवति । सुखस्य वस्तुत्वेन साध्यमानमभावत्वं किं प्रागभावादित्रयान्यतमत्वम् । अथवाऽन्योन्याभावत्वम् । उत सामान्यम् । आद्ये प्रागुक्तदोषापरिहारः । द्वितीयतृतीययोः सिद्धसाधनम् । अस्माभिरपि सुखादीनां सर्वपदार्थानामन्योन्याभावतास्वीकारात् । न च भावत्वाङ्गीकारविरोधः । सुखं हि स्वान्योन्याभावदुःखा(द्य)न्योन्याभावः । अभावाभावश्च भाव एव । एवम्भूतं चाभावत्वं सुखस्य नात्मस्वरूपतां विरुणद्धि । आत्मनोऽपि तथात्वादिति ।**

**शे०** — यदि भावोऽपीत्युत्तरग्रन्थानर्थक्यमाशङ्क्य सुखस्याभावतासाधकपरतया पराभिमतानुमानस्य व्यभिचारप्रदर्शनेनाभासतासूचनेन सुखस्याभावता केनेत्याक्षिप्तसुखाभावत्वप्रमाणाभावसमर्थनार्थत्वान्न तद्वैयर्थ्यमित्यभिप्रेत्यानुमानदूषणपरतयोत्तरग्रन्थं योजयितुं सुखस्याभावत्वसाधकप्रमाणशङ्कामुत्थापयति **सुखमिति** । नन्वेवमनुमिमानेन भावस्यैवानभ्युपगमान्न तत्र व्यभिचारोपदर्शकत्वमुत्तरग्रन्थस्येत्यतोऽत्र भावाभ्युपगमपक्ष एव व्यभिचारकथनान्नानुपपत्तिरित्यभिप्रेत्य संभावितविकल्पद्वयं प्रदर्श्याद्यपक्षदूषणतयोत्तरग्रन्थं योजयति **किमेवमिति ॥ अनादित्वाद्यापत्तिरिति** । प्रागभावस्यानादित्वाद्घटादीनां प्रागभावत्वेऽनादित्वापत्तिः । ध्वंसस्य नित्यत्वाद्घटादीनां ध्वंसत्वे नित्यतापत्तिः । अत्यन्ताभावस्यानादिनित्यत्वाद्घटादीनां तत्त्वेऽनादिनित्यत्वापत्तिरित्यर्थः ॥ **तथाऽप्यन्योन्याभावत्वमिति** । यद्यत्यन्ताभावत्व इवान्योन्याभावत्वेऽपि घटादीनां नित्यत्वापत्तिरवर्जनीयैवात्यन्ताभावस्येवान्योन्याभावस्याप्यनादिनित्यत्वात् । अन्यथाऽनादिरनन्तः संसर्गाभावोऽत्यन्ताभाव इत्यत्यन्ताभावलक्षणे संसर्गपदानर्थक्य-

प्रसङ्गात् । तस्यान्योन्याभावमात्रव्यावर्तकत्वात्तद्व्यावर्तकत्वस्य चान्योन्याभावस्यानादिनित्याभावत्व एव संभवात् । अन्यथा तत एव तद्व्यावृत्तिसिद्धौ संसर्गपदस्य स्फुटमानर्थक्यम् । तथाऽप्यन्योन्याभावत्वं ध्वंसप्रतियोगिवृत्ति ध्वंसेतराव्याप्यवृत्त्यप्रतियोगिकप्रतियोगिसमानाधिकरणाभाववृत्तित्वात् । प्रागभावत्ववदित्यनुमानबलेन तदनित्यत्वाद्यभ्युपगन्तृवैशेषिकमतानुरोधेनेदमुक्तम् । यद्वा नित्यधर्मिकस्य तस्य नित्यत्वेऽप्यनित्यधर्मिकस्य तस्यानित्यताया टीकाकृत्संमतत्वात् । असद्रीत्याऽयं ग्रन्थः । न चैवं विनष्टयोर्घटपटयोरभेदापत्तिः । स्वरूपाभावेनैक्यरूपाभेदापादनानुपपत्तेः । अन्योन्याभावाभावापादने चेष्टापत्तेरित्यन्यत्र विस्तरः ।

भावताऽभावाभावतैव न त्वतिरिक्तेति भावताया अभावाभावतात्वावधारणस्याभावपक्षकभावत्वसाध्यकानुमाने सिद्धसाधनत्वोपपादकत्वेऽपि भावपक्षकाभावत्वसाध्यकानुमाने किन्नश्छिन्नं तदा भवेदित्युद्भावितसिद्धसाधनताऽनुपपादकत्वादभावाभावताया भावतात्वावधारणस्यैव तदुपपादकत्वात् यथाश्रुतैवकारसंबन्धमाश्रित्य भावताया अभावाभावतात्वावधारणस्य व्याख्यातुमशक्यत्वेन भिन्नक्रमतामाश्रित्याभावाभावताया भावतात्वावधारणपरतया भावताऽभावाभावतैव स्यादित्येतद्योजयति **यतोऽभावाभावता भावतैव स्यादिति** । ननु सुखमभावो वस्तुत्वादित्यनुमानेऽन्योन्याभावत्वस्यैव वा सामान्यस्यैव वा साध्यत्वे न निमित्तं किञ्चित् । तस्यैव साध्यत्वेऽपि न सिद्धसाधनं भावत्वाङ्गीकारविरोधेनान्योन्याभावतायाः स्वीकर्तुमशक्यत्वात् । शक्यत्वे वाऽभावरूपत्वे सुखस्य नात्मनाऽत्यन्ताभेदः संभवति । विरुद्धस्वभावयोरपि सुखात्मनोरभेदे तादृशघटपटयोरपि तत्प्रसङ्गादित्यत आह **इदमुक्तं भवतीति** ॥ **प्रागुक्तेति** । अनादिनित्यत्वाद्यापत्तिरूपेत्यर्थः । ननु सुखस्य स्वान्योन्याभावदुःखान्योन्याभावरूपत्वेऽपि कथं भावत्वनिर्वाह इत्यत आह **अभावाभावश्चेति** ॥ **एवम्भूतं चेति** । स्वान्योन्याभावदुःखान्योन्याभावत्वादिरूपमित्यर्थः ॥ **आत्मनोऽपीति** । तस्यापि स्वान्योन्याभावदुःखाद्यन्योन्याभावत्वादित्यर्थः ।

स० — **अनादित्वाद्यापत्त्येति** । प्रागभावत्वेऽनादित्वापत्तिः । ध्वंसत्वे नित्यत्वापत्तिः । अत्यन्ताभावत्वेऽनादिनित्यत्वापत्तिरित्यर्थः । **प्रागुक्तशेषेति** । अनादित्वापत्तिरूपेत्यर्थः ।

प० — शंकते **सुखमभाव इति** ॥ **अनादित्वाद्यापत्त्येति** । अनंतत्वमादिपदार्थः ॥ **इति द्वितीयमिति** । सर्वेप्यभावाः इति प्राग्विकल्पितं द्वितीयपक्षमित्यर्थः । तदेत्त्वनुवादः । एवमित्यादि व्याख्या ॥ **आद्ये प्रागुक्तदोषापरिहार इति** । यद्यपि घटादीनामनादित्वाद्यापत्त्येत्यादिनोक्तो यः प्रागभावात्मकत्वेऽनादित्वरूपदोषः प्रध्वंसात्यंताभावात्मकत्वेऽनंतत्वरूपो यश्च दोषः तस्यापरिहार इत्यर्थः ॥ **सिद्धसाधनमिति** । तृतीयपक्षेऽन्योन्याभावमादायेति भावः ॥ **न चेति** । सुखादीनामित्यनुषङ्गः ।

स्वान्योन्याभावदुःखेत्यत्र स्वान्योन्याभावो यद्दुःखादि तदन्योन्याभाव इत्यर्थः ॥ **एवंभूतं चेति** । स्वान्योन्याभावात्मकस्वरूपमित्यर्थः ॥ **तथात्वादिति** । स्वान्योन्याभावरूपसुखाद्यनात्मान्योन्याभावरूपत्वादित्यर्थः ।

**या०— अनादित्वाद्यापत्त्येति** । घटादीनां प्रागभावरूपत्वेऽनादित्वापत्तिः ध्वंसरूपत्वे नित्यत्वापत्तिरत्यन्ताभावरूपत्वे चानादिनित्यत्वापत्तिरित्यर्थः ॥ **प्रागुक्तदोषेति** । सुखस्यानादित्वाद्यापत्तिरूपदोषपरिहार इत्यर्थः ।

**श्री०— तथात्वादिति** । स्वान्योन्याभावरूपघटाद्यन्योन्याभावरूपत्वादित्यर्थः ।

**सु०—अभावाभावता भावतैव स्यादित्युक्तम् । तदुपपादयितुं भावाभावस्वरूपं तावदाह** भावत्वमिति ।

**अनु०**— भावत्वं विधिरूपत्वं निषेधत्वमभावता ॥

**भावत्वं नाम विधिरूपत्वमभावत्वं नाम निषेधत्वमिति योजना । शब्दप्रवृत्तिनिमित्तनिष्कर्षार्थं भावप्रत्ययः । अन्यथेन्द्रः पुरन्दर इतिवत्स्यात् ॥ ततः किमित्यत** आह निषेधस्येति ।

निषेधस्य निषेधोऽपि भाव एव बलाद्भवेत् ॥

**यस्मादभावो नाम निषेधस्तस्मादभावस्याभाव इति निषेधस्यापि निषेध इत्युक्तं स्यात् । स च विधिरेव भवेत् । दर्शनबलात् । दृष्टो हि 'नेयङुवङ्स्थानावि'ति निषेधस्यास्त्रीति निषेधो विधिः । वक्ष्यते चैतत् । विधिश्च भाव एवेत्युक्तम् । तस्मादभावाभावता भावतैवेति युक्तम् ।**

**शे०**— ननु भावत्वविधिरूपत्वयोर्निषेधत्वाभावत्वयोश्च पर्यायत्वात्कथं सहप्रयोग इत्यत आह **भावत्वं नामेति** । विधिरूपत्वं भावत्वशब्दवाच्यमित्यर्थः । एवं निषेधरूपत्वमभावत्वशब्दवाच्यमित्यर्थः । तथा च घटशब्दवाच्यः करीर इत्यादिवत्सहप्रयोगो युक्त इति भावः । ननु विधिरूपो भावो निषेधरूपोऽभाव इत्येतावतैव पूर्तेः किं भावप्रत्ययेनेत्यत आह **शब्देति** । यत्र घटादौ भावपदं प्रागभावादौ चाभावपदं वर्तते तत्र विधिरूपत्वनिषेधरूपत्वलक्षणनिमित्तवशेनेति भावाभावपदप्रवृत्तिनिमित्तनिष्कर्षार्थमित्यर्थः ॥ **अन्यथेति** । भावप्रत्ययानुपादाने । यथा हीन्द्रः पुरन्दर इत्यादाविन्द्रत्वपुरन्दरत्वयोर्न पुरन्दरे इन्द्रशब्दप्रवृत्तिनिमित्तत्वं विज्ञायते । तथा विधिरूपत्वनिषेधरूपत्वयोर्न भावाभावशब्दप्रवृत्तिनिमित्तत्वं विज्ञायेतेति तज्ज्ञापनार्थं त्वप्रत्यय इत्यर्थः ॥ **अस्त्रीति**

**विधिरिति** । अस्त्रीशब्देन नदीसंज्ञानिषेधस्य निषेधे नदीसंज्ञाविधिरेव भवतीत्यर्थः ॥ **वक्ष्यते चैतदिति** । भावस्य हि निषेधेऽपीत्यादिना चतुर्थस्य प्रथम इति शेषः । नन्वस्त्रीति निषेधनिषेधस्य विधित्वदर्शनान्निषेधनिषेधरूपसुखस्य विधित्वप्राप्तावपि भावत्वाप्राप्तेः कथं भाव एवेति भावत्वावधारण-मित्यत आह **विधिश्चेति** ॥ **उक्तमिति** । भावत्वं विधिरूपत्वमित्यत्रेति शेषः ।

**स०**— ननु विधिरूपो भाव इत्येवालं किं भावप्रत्ययेनेत्यत आह **शब्दप्रवृत्तीति** । यत्र घटादौ भावशब्दः प्रवर्तते तत्र विधिरूपत्वलक्षणनिमित्तत्वेनैवेति प्रवृत्तिनिमित्तनिष्कर्षार्थमित्यर्थः । **अन्यथेति** । विधिप्रत्ययानुपादाने । न हीन्द्रः पुरन्दर इत्यत्रेन्द्रत्वस्य पुरन्दरशब्दनिमित्तत्वं पुरन्दरत्वस्येन्द्र-शब्दप्रवृत्तिनिमित्तत्वं ज्ञायते । एवं च त्वप्रत्ययाभावे प्रकृते विधिरूपत्वस्य भावशब्दप्रवृत्तिनिमित्तत्वं न विज्ञायेत अतस्तज्ज्ञानार्थं विधिप्रत्यय इति भावः । **अस्त्रीति विधिरिति** । स्त्रीशब्दे नदीसंज्ञानिषेध-स्यापि निषेधे नदीसंज्ञाविधिरेव भवतीत्यर्थः ।

**प०**— **इतिवत्स्यादिति** । पर्यायशब्दोक्तिः स्यान्न तु तत्स्वरूपकथनमित्यर्थः ॥ **नेयङिति** । प्रथमस्य चतुर्थपादे यूस्त्र्याख्यौ नदीति पूर्वसूत्रान्नदीत्यनुवर्त्य इयङादेशस्थानमूतेकारोकारांतब्दौ नदी-संज्ञौ न भवतः । स्त्रीशब्दस्तु नदीसंज्ञको भवतीति गम्यते यथा तथेत्यर्थः । भवतु शब्दे अर्थशास्त्रे तु कथमित्यत आह **वक्ष्यते चैतदिति** । असत्यं नोक्तमित्युक्ते सत्यमुक्तमिति प्रजाः । जानंत्युक्तं तु नो सत्यमित्युक्तेऽसत्यतामपीत्यादिना चतुर्थाद्यपादे वक्ष्यत इत्यर्थः ।

**या०**— ननु भावत्वविधिरूपत्वयोर्निषेधत्वाभावत्वयोश्च पर्यायत्वात्कथं सहप्रयोगोऽभावत्वलक्षणे च निषेधत्वस्यैव लक्ष्यता प्रतीयतेऽत आह **भावत्वं नामेति** । भावत्वशब्दवाच्यमित्यर्थः । एवमभावत्वं नामेत्यत्रापि अभावत्वशब्दवाच्यमित्यर्थः । तथा च घटशब्दवाच्यः करीर इतिवत्सहप्रयोगोपपत्तिरिति भावः । **शब्दप्रवृत्तिनिमित्तेति** । प्रसङ्गादिदमेव भावाभावशब्दप्रवृत्तिनिमित्तमित्यपि प्रदर्शनार्थ-मित्यर्थः ॥ **अन्यथेति** । उक्ताभिप्रायाभावे इन्द्रशब्दवाच्यः पुरन्दर इतिवत् भावशब्दवाच्यो विधिरूप इत्यादिरूपेण धर्मिनिर्देश एव मूले स्यात् । भावाभावस्वरूपमाहेत्यवतारितत्वेन धर्मिणोरेव वक्तव्यत्वादित्यर्थः ॥ **नेयङुवङ्स्थानावस्त्रीति** । इयङुवङोःस्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्रीति सूत्रार्थः । तथा चात्र स्त्रीशब्दे नदीसंज्ञानिषेधस्यापि निषेधे नदीसंज्ञाविधिरेवोक्तो भवतीत्यर्थः । ननु निषेधस्यापि निषेधे न विधिप्राप्तिः । स्वाप्नघटाद्यभावस्य मिथ्यात्वे स्वाप्नघटादिसत्यताया अभावा-दित्यत आह **वक्ष्यते चैतदिति** । 'न स्वप्नेऽपि द्वयं मिथ्ये'त्यादिना चतुर्थे स्वाप्नघटाद्यभावो न मिथ्येति वक्ष्यत इत्यर्थः ॥ **विधिश्चेति** । अनेन भावत्वं विधिरूपत्वमित्युक्तस्योपयोग उक्तो भवतीति ज्ञातव्यम् ।

**मु०—एवं तर्हि द्रव्यादयो भावाः प्रागभावादयोऽभावा इत्यन्यत्रोक्तनियमो न स्यात्। घटस्यापि न पट इति निषेधरूपतायाः प्रागभावस्यापि प्रमेय इति विधिरूपताया दर्शनादित्यतः प्रागुक्तं स्मारयति** प्रथमेति ।

अनु०— प्रथमप्रतिपत्तिस्तु भावाभावनियामिका ।।

**कृतव्याख्यानमेतत् ।**

**शे०** — ननु 'प्रथमप्रतिपत्तिषु । निषेधविधिरूपत्वं भावाभावत्वमत्र ही'त्यादिनाऽसदधिकरणे. 'तथाऽपि प्रथमं बुद्धेर्यो निषेधस्य गोचरः । सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमं परः' इत्यादिना वैशेषिकपरीक्षायामप्यस्यार्थस्य कथनादत्र पुनस्तत्कथने कथं न पौनरुक्त्यमित्यत उक्तं **प्रागुक्तं स्मारयतीति ।। कृतेति ।** प्रथमप्रतिपत्तिरित्यतः प्राक् विधिनिषेधरूपतयेति शेषः । भावाभावशब्दौ भावप्रधानौ घटादीनां विधिरूपतया प्रथमप्रतीतिर्भावत्वनियामिका । अयं घट इति विधिरूपेणैव प्रथमं तत्प्रतिभासात् । अनन्तरमेव न पट इति निषेधतया प्रतिभासात् भावत्वं तेषाम् । तथा निषेधतया प्रथमप्रतीतिः प्रागभावादीनामभावत्वनियामिका । नास्ति घट इत्येव प्रथमं निषेधतयैव तत्प्रतिभासात् । अनन्तरमेव च घटाभावोऽस्तीति विधितया प्रतीयमानत्वादिति युक्तिपादीयानुव्याख्यानव्याख्यानेनैवेदमपि व्याख्यातप्रायमित्यर्थः ।

---

**प०— प्रागुक्तमिति** । युक्तिपादे असदिति चेन्न प्रतिषेधमात्रत्वादित्येतदनुव्याख्याने 'प्रथमप्रतिपत्तिषु । निषेधविधिरूपत्वं भावाभावत्वमत्र ही'ति वाक्येन तथा वैशेषिकनये 'तथापि प्रथमं बुद्धेर्यो निषेधस्य गोचरः । सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमं पर' इति वाक्येनोक्तमित्यर्थः । स्मारयतीत्युक्त्या पौनरुक्त्यं नेति दर्शितम् । **कृतव्याख्यानमिति** । पूर्वतनवाक्यद्वयव्याख्यानेनेति भावः ।

**या०**—ननु युक्तिपादे 'प्रथमप्रतिपत्तिषु । निषेधविधिरूपत्वं भावाभावत्वमत्र ही'त्युक्तत्वात् । समयपादेऽपि 'तथाऽपि प्रथमं बुद्धेर्यो निषेधस्य गोचरः । सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमं पर' इत्युक्तत्वात्पुनः किमर्थमिदमुच्यत इत्यत आह **प्रागुक्तं स्मारयतीति ।। कृतव्याख्यानमिति** । तद्व्याख्यानेनैवैतद्व्याख्यानं कृतप्रायमित्यर्थः । तथा च प्रथमप्रतिपत्तिरित्यतः प्राक् विधिनिषेधरूपतयेति शेषः । भावाभावशब्दौ भावप्रधानौ । विधिरूपतया प्रथमप्रतिपत्तिर्भावत्वनियामिका । अयं घट एव न पट इति प्रतीयमानत्वात् । निषेधरूपतया प्रथमप्रतिपत्तिरभावत्वनियामिका । घटो नास्ति तदभाव एवास्तीति प्रतीयमानत्वादिति व्याख्येयमिति भावः ।

सु० — एवं जिनस्य स्खलितवाक्त्वप्रदर्शनेन तदुक्तस्य मोक्षसाधनस्याप्रामाणिकत्वमुक्तम् । युक्तिविरुद्धत्वं च दर्शयन्नात्मज्ञानस्य यन्मोक्षसाधनत्वमुक्तं तत्किं साक्षादुतात्मप्रसादद्वारेति विकल्प्याद्यं तावन्निराकरोति न चेति ।

अनु० — न च पुद्गलविज्ञानं मोक्षदं भवति क्वचित् ॥

आत्मविज्ञानं मोक्षदं न भवति अचेतनत्वात्पटवदिति शेषः । अस्य व्याप्तिमुपपादयति क्वचिदिति । नेति वर्तते । मोक्षदमिति च । तच्च भावप्रधानम् । न हि क्वचिदप्यचेतने मोक्षदत्वं दृष्टम् । येन व्याप्तिर्न स्यात् । कर्मणस्तथात्वं निराकरिष्यते । ज्ञानं तु चैतन्यमेव न चेतनमिति प्रसिद्धमेव ।

आत्मा ज्ञातः प्रसन्नो मोक्षं ददातीति द्वितीयं दूषयति अस्वातन्त्र्यादिति ।

अस्वातन्त्र्यात्पुद्गलस्य ज्ञातोऽपि सुखदो न हि ॥

ज्ञात आत्माऽपि सुखदो मोक्षदो न भवति । कुतः पुद्गलस्यात्मनोऽस्वातन्त्र्यात् । हिशब्देन पटादौ व्याप्तिः स्फुटेति सूचयति । अस्वातन्त्र्यं चानुपदमेव ज्ञास्यते । आत्मनः सुखमात्रदानं नोपपद्यते । किमुतानन्तसुखमोक्षदानमिति सूचयितुं सुखद इत्युक्तम् ।

शे० — हेत्वादेरनुक्तत्वान्न्यूनत्वमित्याशङ्क्य निश्चैतन्यादित्युत्तरग्रन्थानुरोधेन तल्लाभान्न तदित्यभिप्रेत्य शेषं पूरयति अचेतनत्वादित्यादि ॥ इति चेति । वर्तत इति वर्तते ॥ तच्चेति । मोक्षदमित्येतन्मोक्षदत्वमिति भावप्रधानमित्यर्थः । नन्वचेतनस्य कर्मण एव मोक्षदत्वदर्शनात्कथमस्य व्याप्तिरित्यत आह कर्मण इति । तथात्वं मोक्षहेतुत्वम् ॥ निराकरिष्यत इति । 'कर्महेतुत्वमपि तु निश्चैतन्यादि'त्यादिनेति शेषः । तथा च न तत्र व्यभिचार इति भावः । ननु माऽस्तु व्यभिचारो ज्ञानस्य चेतनत्वादचेतनत्वं नास्तीति हेत्वसिद्धिस्तु स्यादेवेत्यत आह ज्ञानं त्विति । चैतन्यमेव चेतनधर्म एवेत्यर्थः ॥ नेति । तथा च नाचेतनत्वहेतोरसिद्धिरपीति भावः ॥ अनुपदमेवेति । न हीत्युत्तरवाक्य एव दुःखित्वकथनेनास्वातन्त्र्यं ज्ञास्यत इत्यर्थः ।

स० — वक्ष्यते कर्मण इति ॥ तथात्वम् अचेतनस्यापि मोक्षसाधनत्वम् । निराकरिष्यते 'कर्महेतुत्वमपि तु निश्चैतन्यान्न हि क्वचिदि'त्यादिनेति शेषः । तथाच न तत्र व्यभिचार इति भावः । व्यभिचारं निराकृत्य ज्ञानस्यापि चेतनत्वे चेतनत्वहेतोरसिद्धत्वं परिहरति ज्ञानं त्विति । चैतन्यं चेतनधर्म इत्यर्थः । अनुपदमेवेति । दुःखित्वोक्त्या अस्वातन्त्र्यं समर्थितमित्यादिनेति शेषः ।

प० — कर्मणि व्याप्तिभंग इत्यत आह **कर्मण इति** । हेतुत्वमपि त्वित्यत्र मोक्षदत्वं निराकरिष्यत इत्यर्थः । उक्तहेतोरसिद्धिं निराह **ज्ञानं त्विति** । चेतनस्य भावश्चैतन्यम् ॥ **अनुपदमेवेति** । उत्तरवाक्ये दुःखिपदप्रयोगादिति भावः ।

या० — **निराकरिष्यत इति** । 'कर्महेतुत्वमपि तु' इत्यत्रेति शेषः ॥ **चैतन्यमेवेति** । चेतनधर्म एवेत्यर्थः । तथा च पक्षे नासिद्धिरिति भावः ॥ **ज्ञास्यत इति** । दुःखित्वोक्त्येति भावः ।

श्री० — कर्मणि व्यभिचारमाशङ्क्य परिहरति **कर्मण इति** । तथात्वं मोक्षदत्वम् । स्वरूपासिद्धिमाशङ्क्य परिहरति **ज्ञानं त्विति** ॥ **चैतन्यमेवेति** । चेतयत इति चेतनो ज्ञानवानिति यावत् । तस्य भावश्चैतन्यम् । तथा च ज्ञानं चेतनधर्म एव न चेतनं ज्ञानाश्रय इत्यर्थः । तथा च नासिद्धिरिति भावः ॥ **सुखद इत्युक्तमिति** । सुखमात्रदाताऽपि न हीति तदर्थः ।

सु० — **पक्षद्वयं हेत्वन्तरेण निराकरोति** न हीति ।

अनु० — न हि दुःखिपरिज्ञानाद् दुःखित्वं विनिवर्तते ॥

**आत्मज्ञानमात्यन्तिकदुःखनिवृत्तिहेतुर्न भवति दुःखिज्ञानत्वाद्देवदत्तज्ञानवत् । जैनेनापि स्वात्मज्ञानमेव मोक्षसाधनमुच्यते नात्मज्ञानमात्रम् । ईश्वरज्ञाने व्यभिचारनिरासाय दुःखीत्युक्तम् । तस्यापि साक्षान्मोक्षसाधनत्वाभावविवक्षायां ज्ञानत्वादित्येव वक्तव्यम् । यद्वाऽऽत्मा दुःखं निवर्तयितुमशक्तः । दुःखित्वाद्यो यदनर्थवान्नासौ तन्निवर्तने शक्तो यथा दरिद्रो दारिद्र्यनिवर्तने इति तात्पर्यार्थः । दुःखित्वोक्त्याऽस्वातन्त्र्यं समर्थितं स्वातन्त्र्ये हि जातु न दुःखी भवेदिति ।**

शे० — नन्वत्र चात्मज्ञानमात्रस्य पक्षत्वात्तत्र च दुःखिज्ञानत्वानिश्चयात्सन्दिग्धासिद्धोऽयं हेतुरित्यत आह **जैनेनापीति** । तथा च स्वात्मनो दुःखादेः प्रत्यक्षसिद्धत्वेन तज्ज्ञाने दुःखिज्ञानत्वानिश्चयसंभवान्न सन्दिग्धासिद्धिरिति भावः । यद्वा नन्वात्मज्ञानस्य मोक्षसाधनत्वं वदता देवदत्तात्मज्ञानस्यापि तत्त्वेन पक्षत्वाभ्युपगमात्कथं दुःखनिवृत्तिहेतुत्वाभावानुमाने तस्य दृष्टान्तीकरणमित्यत आह **जैनेनापीति** । अथवा ननु देवदत्तज्ञानमपि जैनमते देवदत्तीयात्यन्तिकदुःखनिवृत्तिहेतुर्भवत्येवेत्यतः साध्यवैकल्यं दृष्टान्तस्येत्यत आह **जैनेनापीति** ॥ **नात्मज्ञानमिति** । न परात्मज्ञानमित्यर्थः । तथा च यज्ञदत्तीयं स्वात्मज्ञानं यज्ञदत्तीयात्यन्तिकदुःखनिवृत्तिहेतुर्न भवति दुःखिज्ञानत्वात् यज्ञदत्तीयदेवदत्तविषयकज्ञानवदित्यनुमानस्यात्र विवक्षितत्वात् देवदत्तसमवेतज्ञानस्य दृष्टान्तत्वाभावान्न साध्यवैकल्य-

मित्याशयः । नन्वत्र साक्षान्मोक्षसाधनत्वस्य साध्यत्वादीश्वरज्ञानस्य च प्रसादद्वारा तत्साधनत्वेऽपि साक्षादसाधनत्वेन साध्यस्यापि तत्र सत्त्वान्न व्यभिचार इत्यत आह **तस्यापीति** । आत्मज्ञानस्य मोक्षहेतुत्वं हेत्वन्तरेण निराकृत्यात्मनोऽपि तद्धेतुत्वं हेत्वन्तरेण निराकरोति **यद्वेति** ।

स० — नन्वत्रात्मज्ञानमात्रस्य पक्षत्वात् तत्र दुःखिज्ञानत्वानिश्चयात् संदिग्धासिद्धो हेतुरित्यत आह **जैनेनापीति** । तथा च स्वात्मनो दुःखादेः प्रत्यक्षसिद्धत्वेन तज्ज्ञाने दुःखिज्ञानत्वनिश्चयान्न संदिग्धासिद्धिरिति भावः ।

प० — **पक्षद्वयमिति** । ज्ञानं साक्षाद्वा प्रसादद्वारा वेति पक्षद्वयमित्यर्थः ॥ **आत्यन्तिकेति** । साक्षाद्वा प्रसादद्वारा वेति योज्यम् । आत्मज्ञानमात्रस्य पक्षत्वे दृष्टांतासिद्धिरित्यतो वा मुक्ता(त्मेश्वरात्म)त्मज्ञानयोर्भागासिद्धिरित्यतो वाह **जैनेनापीति** । नन्वात्मज्ञानत्वादित्येवास्तु हेतुः किं दुःखीत्युक्त्येत्यत आह **ईश्वरेति** ।

या० — नन्वात्मज्ञानत्वावच्छिन्नस्य पक्षत्वाद्देवदत्तज्ञानस्याप्यात्मज्ञानत्वेन पक्षत्वे दृष्टान्ताभाव इत्यत आह **जैनेनापीति** । अतोऽस्माभिरप्यधिकारिणः स्वात्मज्ञानमेव पक्षीक्रियते तेन देवदत्तज्ञानस्य दृष्टान्तत्वोपपत्तिरिति भावः । यद्वा ननु देवदत्तज्ञानं जैनमते देवदत्तीयात्यन्तिकदुःखनिवृत्तिहेतुर्भवत्येवातः साध्यवैकल्यमित्यत आह **जैनेनापीति** ॥ **नात्मज्ञानमात्रमिति** । न परात्मज्ञानमित्यर्थः । तथा च यज्ञदत्तीयं स्वात्मज्ञानं यज्ञदत्तीयात्यन्तिकदुःखनिवृत्तिहेतुर्न भवति दुःखिज्ञानत्वाद्यज्ञदत्तीयदेवदत्तविषयकज्ञानवदित्यनुमानमत्र विवक्षितम् । ततश्च देवदत्तसमवेतज्ञानस्य दृष्टान्तत्वाभावान्न साध्यवैकल्यशङ्केति भावः ।

श्री० — **पक्षद्वयमिति** । आत्मज्ञानस्य साक्षान्मोक्षसाधनत्वपक्षं आत्मप्रसादद्वारा मोक्षसाधनत्वमिति पक्षद्वयमित्यर्थः । दुःखिज्ञानत्वाद् दुःखिविषयकज्ञानत्वात् ॥ **देवदत्तज्ञानवदिति** । देवदत्तविषयकज्ञानवदित्यर्थः ॥ **ईश्वरज्ञान इति** । स्वमत इति शेषः । नन्वीश्वरप्रसादस्यैवात्यन्तिकदुःखनिवृत्तिरूपमोक्षहेतुत्वेनेश्वरज्ञानस्य साक्षान्मोक्षहेतुत्वाभावादीश्वरज्ञाने हेतुवत्साध्यस्यापि सत्त्वान्न व्यभिचारोऽतो दुःखिपदमनपेक्षितमेवेति चेत्सत्यमित्याह **तस्यापीति** । ईश्वरज्ञानस्यापीत्यर्थः ॥ **स्वातन्त्र्ये हीति** । 'यदि नाम न तस्य वशो सकलं कथमेव तु नित्यसुखं न भवेदि'ति वचनात् । न च पुद्गलविज्ञानमित्यनेनोक्ते आत्मविज्ञानं मोक्षदं न भवति अचेतनत्वात्पटवदित्यनुमानेन दुःखाविरोधित्वमेव साध्ये प्रयोजकं नाचैतन्यम् । तथा च दुःखाविरोधित्वमुपाधिः । पटादौ साध्यव्यापकत्वात् ।

सु०— स्यादेतत् । नात्मज्ञानं देवदत्तो गामिव मोक्षं ददाति । किन्तु प्रकाशोऽन्धकारमिव विरोधाद् दुःखं निवर्तयति । तत्र किमचैतन्यं करिष्यति । स्वात्मज्ञानमेव च स्वदुःखविरोधि नात्मज्ञानमात्रमिति द्वितीयहेतुरप्यप्रयोजक इत्याशङ्क्याह यदीति ।

अनु०— यदि पुद्गलविज्ञानाददुःखी स्यात्कथञ्चन ।।
देहवानपि नादुःखी किं ज्ञानादुत्तरं सदा ।।

कथञ्चन दुःखात्मज्ञानयोर्विरुद्धत्वेन । तर्हि ज्ञानादुत्तरकालं देहवानपि सदा निरन्तरमदुःखी किन्न स्यात्, स्यादेव । एतदुक्तं भवति । प्रकाशः खल्वन्धकारविरोधित्वात्तन्निवर्तयन् उत्पत्त्यनन्तरमेव निवर्तयति न तु विलम्बेन । विलम्बे विरोधस्यैवानिर्वाहात् । तथाऽत्मतत्त्वज्ञानं यदि दुःखाद्यनर्थविरोधित्वात्तन्निवर्त्यात्मानं मुक्तं कुर्यात् । तर्हि जिनादयस्तत्त्वज्ञानसंपन्ना ज्ञानोत्पत्त्यनन्तरमेव मुक्ताः स्युः । न चैवम् । देहादिमत्त्वेनोपलम्भात् । तथाविधानां च दुःखादेरवर्जनादिति । इष्टापत्तिनिरासाय सदेत्याद्युक्तम् । अयमत्र प्रयोगः । दुःखादिकमात्मतत्त्वज्ञानविरोधि न भवति बहुलं कालं तेन सह स्थितत्वात्सम्मतवदिति । किञ्चात्मतत्त्वज्ञानं न तावदामोक्षादेकम् । ज्ञानानां क्षणिकत्वदर्शनात् । तथा च यदनन्तरं मोक्षोऽभिलष्यते तज्जिनस्य चरमज्ञानं न मोक्षसाधनमात्मज्ञानत्वात्प्रथमादिज्ञानवत् । अन्यथा प्रथममेव मोक्षं साधयेदविशेषादिति ।

टी०— अनुमानद्वयेऽप्यप्रयोजकत्वमाशङ्कते **स्यादेतदिति** । तत्कथमित्यतोऽचेतनत्वानुमानस्याप्रयोजकत्वं तावदुपपादयति **नात्मज्ञानमिति** ।। **किमचैतन्यं करिष्यतीति** । तदविरोध एव तदनिवर्तकत्वे प्रयोजको न त्वचेतनत्वं तथा सति तत एव प्रकाशस्याप्यन्धकारानिवर्तकत्वप्रसङ्गादिति भावः । द्वितीयानुमानस्याप्यप्रयोजकत्वमुपपादयति **स्वात्मज्ञानमेवेति** ।। **नात्मज्ञानमात्रमिति** । न परात्मविषयकं ज्ञानमपीत्यर्थः । ततश्च यज्ञदत्तसमवेतदेवदत्तविषयज्ञानस्य यज्ञदत्तगतदुःखाविरोधिताया एव तद्गतदुःखानिवर्तकत्वे प्रयोजकत्वेन दुःखिज्ञानत्वस्यातथात्वान्न तत्प्रयोजकमित्याशयः ।। **निरन्तरमिति** । अव्यवधानेनेत्यर्थः । नन्वेतावताऽपि किमुपाधेर्दूषणमुक्तं भवतीत्यतः साधनव्यापकत्वमेवेत्याह **एतदुक्तं भवतीति** ।। **सदेत्याद्युक्तमिति** । आदिपदेन **देहवानित्यस्य** परिग्रहः । ज्ञानादुत्तरमदुःखी किन्न स्यात्स्यादेवेत्यत्रेष्टापत्तिवारणाय सदेत्युक्तम् ।। **तदर्थस्त्वविलम्बेनेति** । तत्रापीष्टापत्तिवारणाय देहवानपीत्युक्तम् । न तु तर्कशरीरप्रविष्टतयेत्यर्थः ।

**स०**— आत्मज्ञानं न मोक्षदं अचेतनत्वात् पटवदित्यप्रयोजकम् । न चाचेतनस्य मोक्षदातृत्वानुपपत्तिः देवदत्तस्य गोदातृत्ववत् । प्रकृते तदनभ्युपगमादेवात्मज्ञाने आत्यन्तिकदुःखनिवृत्तिर्न भवति दुःखिज्ञानत्वात् इत्यत्राप्रयोजकत्वमित्याह **स्यादेतदिति** ।

**प०** — **द्वितीयहेतुरिति** । अस्वातंत्र्यादित्युक्तहेतुः दुःखित्वादित्युक्तहेतुश्चेत्यर्थः । यद्वा दुःखिज्ञानत्वादिरूपहेतुरित्यर्थः । तस्याचेतनत्वहेत्वपेक्षया द्वितीयत्वात् ॥ **सदेत्याद्युक्तमिति** । देहवानपीत्युक्तमित्यादिरादिपदार्थः । **जैनोक्तज्ञानस्य मुक्तिहेतुत्वनिरासः** ॥

**या०** —अनुमानद्वयेऽपि दुःखाविरोधित्वस्योपाधेः सत्त्वादप्रयोजकत्वमित्याशङ्कते **स्यादेतदिति** ॥ **किमचैतन्यं करिष्यतीति** । दुःखाविरोधस्यैव साध्ये प्रयोजकतयाऽचैतन्यमप्रयोजकमिति भावः । द्वितीयहेतावप्युपाधिमुपपादयति **स्वात्मज्ञानमेवेति** ॥ **नात्मज्ञानमात्रमिति** । न परात्मविषयकज्ञानमित्यर्थः । तथा च तद्दृष्टान्ते दुःखाविरोधित्वमेव साध्ये प्रयोजकतया दृष्टं न हेतुरिति भावः ॥ **निरन्तरमिति** । व्यवधानाभावेनेत्यर्थः । पक्षेऽपि दुःखाविरोधित्वस्य सत्त्वादुपाधेः साधनव्यापकतया न हेत्वोरप्रयोजकतेत्याशयेनाह **एतदुक्तं भवतीत्यादिना** ॥ **सदेत्याद्युक्तमिति** । आदिपदेन देहवानपीत्यस्य ग्रहणम् । ज्ञानादुत्तरमदुःखी किन्न स्यात्स्यादेवेत्यत्रेष्टापत्तिवारणाय सदेत्युक्तम् । तदर्थस्त्वविलम्बेनेति । तत्रापीष्टापत्तिवारणाय देहवानपीत्युक्तं न तु तर्कशरीरान्तर्गततयेत्यर्थः ।

---

**श्री०** — अचेतनस्यापि पक्षीभूतस्वात्मज्ञानस्य दुःखविरोधित्वेन साधनाव्यापकत्वादित्याशयेनाह **आत्मज्ञानं देवदत्तो गामिवेति** ॥ **करिष्यतीति** । अचेतनत्वेऽप्युक्तरीत्या दुःखनिवृत्तिरूपमोक्षदत्वं संभवतीत्यप्रयोजकतेत्यर्थः । न हि दुःखिपरिज्ञानादित्यनेनोक्ते आत्मज्ञानमात्यन्तिकदुःखनिवृत्तिहेतुर्न भवति, दुखिज्ञानत्वाद्देवदत्तज्ञानवदिति द्वितीयानुमानेऽपि दुःखविरोधित्वमेवोपाधिर्दृष्टान्ते साध्यव्यापकत्वात् । साधनाव्यापकत्वमुपपादयति **स्वात्मज्ञानमेव चेति** । पक्षीभूतस्वात्मज्ञानस्य दुःखिज्ञानत्वेऽपि दुःखविरोधित्वादात्यन्तिकदुःखनिवृत्तिहेतुत्वं युक्तमिति भावः । **सदेत्यस्यार्थो** निरन्तरमिति । अन्तरं व्यवधानमन्तरेणेत्यर्थः ॥ **इष्टापत्तीति** । ज्ञानादुत्तरं मुक्तिः स्यादित्युक्ते इष्टापत्तिः स्यात् । किञ्चित्कालव्यवधानेन मुक्त्यङ्गीकारादित्यर्थः ॥ **सदेत्याद्युक्तमिति** । ज्ञानोत्पत्त्यव्यवहितोत्तरकाल एव मुक्तिः स्यादित्यर्थः । अत्रापीष्टापत्तिशङ्कापरिहारायादिपदम् । तेन देहवानित्यस्य संग्रहः । यदि ज्ञानोत्पत्त्यव्यवहितोत्तरक्षणे मुक्तिः स्यात्तर्हि ज्ञानित्वेन त्वत्संप्रतिपन्नस्यापि जिनस्येदानीं देहदर्शनं न स्यादतोऽत्रापि नेष्टापत्तिर्वाच्येत्यर्थः ॥ **अन्यथेति** । आत्मज्ञानत्वेऽपि चरमं ज्ञानं मोक्षसाधनमस्त्वित्यङ्गीकार इत्यर्थः ॥ **प्रथममेवेति** । आद्यज्ञानमेवेत्यर्थः । अविशेषात् ज्ञानत्वाविशेषात् ।

**सु०** — **ननु भवद्भिरीश्वरज्ञानं मोक्षसाधनमभ्युपेयते । तत्रापि समानमिदं दूषणमित्यत आह ईशेति ।**

**अनु०** — ईशश्वल्लृप्त्यनुसारेण स्यात्कालादीशवादिनः ॥

**ईशवादिनो मम मते तदिच्छाविशेषानुसारेण कालात्कश्चन कालमतिवाह्य मुक्तिः स्यात् । अयमभिसन्धिः । न वयमीश्वरज्ञानं मोक्षसाधनमाचक्ष्महे । किन्नाम प्रसन्नः परमेश्वर एव । ज्ञानं तु प्रसादसाधनत्वान्मोक्षसाधनमिति गीयते । स च चेतनः कामपि कालकल्पनां करोति । अस्मिन्समयेऽमुं मुक्तं करिष्यामीति । तत्कल्पनानुसारेण भवत्येवासौ मुक्त इति न कश्चिद्दोषः । यथा ब्राह्मणस्य विद्याचरणादिना प्रसन्नोऽपि प्रभुश्चेतसा कल्पयति । आगामिनि सूर्योपरागेऽस्मै गां दास्यामीति । स तदनुसारेण तस्माद्गां लभते तथैवेति ।**

**शे०** — नन्वीश्वरज्ञानस्यापि दुःखाद्यनर्थविरोधित्वात्तन्निवर्तकता स्यान्न तु विलम्बेन । विलम्बं विरोधस्यैवानिर्वाहात्तत्कथं कश्चन कालमतिवाह्य मुक्तिः स्यादित्यत आह **अयमभिसन्धिरिति** ।

**या०** — ननु ज्ञानोत्तरकालं मोचकस्य भगवत्प्रसादस्य भवन्मतेऽपि जातत्वादविलम्बेनैव मोक्षः स्यादित्यत आह **यथा ब्राह्मणस्येति ॥ तथैवेतीति** । तथा ज्ञानेन प्रसन्नोऽपि भगवांश्चेतसा कल्पयति । प्रारब्धकर्मनाशानन्तरमस्मै मुक्तिं दास्यामीति तस्मान्मुक्तिं लभत इत्यर्थः । प्रसादो हीच्छाविशेषः स च कालविशेषघटित एव ज्ञानादुत्पन्नोऽतो नोक्तदोष इति भावः ।

---

**श्री०** — **समानमिति** । ईश्वरज्ञानं न मोक्षसाधनमचेतनत्वात् । किञ्चेश्वरज्ञानं न तावदा-मोक्षादेकम् । ज्ञानानां क्षणिकत्वदर्शनात् । तथा च यदनन्तरं मोक्षोऽभिलष्यते तच्चरमं शुकादीनां ज्ञानं न मोक्षसाधनमीश्वरज्ञानत्वात् प्रथमादिज्ञानवत् । अन्यथा प्रथममेव मोक्षं साधयेदविशेषादिति दूषणं समानमित्यर्थः ॥ **कालादिति** । ल्यब्लोपनिमित्ता पञ्चमीत्याह **कश्चनकालमतिवाह्येति** । अतिक्रमित्वेत्यर्थः । आचरणं कर्म ।

**च०** — **आगामिनि सूर्योपराग इति** । सांप्रतिकप्रागभावप्रतियोगिनि तरण्युपराग इत्यर्थः ॥

**जैनोक्तज्ञानस्य मुक्तिहेतुत्वनिरासः** ॥

**सु०** — **एवमात्मज्ञानस्य मोक्षसाधनत्वं निराकृत्य धर्मस्यापि तं निराचष्टे** कर्मेति ।

**अनु०** — कर्महेतुत्वमपि तु निश्चैतन्यान्न हि क्वचित् ॥

**कर्मणो हेतुत्वं कर्महेतुत्वं मोक्षं प्रति । यद्वा कर्महेतुत्वमिति बहुव्रीहिः । मोक्षस्येति शेषः । तुशब्दोऽवधारणे । नैवेति संबन्धः । निश्चैतन्यात्कर्मणः । विमतं कर्म न मोक्षसाधनं**

भवति अचेतनत्वात्पटवदित्यर्थः । व्याप्तिमुपपादयति न हीति । नेत्युभयत्र संबध्यते । न हि क्वचिदचेतने मोक्षसाधनत्वमावयोः सम्मतम् । येनात्र व्याप्तिर्न स्यादित्यर्थः ।

शे० — ननु चात्र मोक्षस्याश्रुतत्वात्कथं कर्मणो मोक्षसाधनतानिरासकत्वमस्य वाक्यस्येत्यत-स्तत्पूरयति मोक्षं प्रतीति । समासप्राबल्यात्तत्पुरुषाश्रयणे मोक्षं प्रतीति पदद्वयं भवतीत्यपरितोषात्पक्षा-न्तरमाह यद्वेति । मोक्षस्यान्यपदार्थतालाभायापेक्षितं शेषमाह मोक्षस्येति शेष इति । तथा चैकस्यैव पदस्य पूरणादत्र लाघवमिति भावः ॥ निश्चैतन्यादिति । मक्षिकाणामभावो निर्मक्षिकमित्यादाविव चैतन्याभावो निश्चैतन्यं तस्मादित्यव्ययीभावसमासः । अपञ्चम्या इत्युक्तत्वान्निश्चैतन्यादिति पञ्चमी युक्तेति भावः ॥ कर्मेति । धर्माधर्मरूपमदृष्टमेवात्र कर्मतया विवक्षितं न तु क्रियामात्रम् । अत एव धर्मस्यापीति पूर्वं धर्मपदं प्रयुक्तम् । अन्यथा कर्मणोऽपीत्येवावक्ष्यदिति ज्ञेयम् ।

स० — कर्मेति । अत्र कर्मशब्देन धर्माधर्मरूपमदृष्टं ग्राह्यम् ।

प० — पूरणगुणेति गुणेन समासनिषेधादाह यद्वेति । कर्मपदेनात्र क्रियाजन्यमदृष्टमुच्यते ।

या० — कर्मण इति । अत्र सर्वत्र कर्मपदेन धर्मरूपमदृष्टं ग्राह्यम् ।

श्री० — कर्मण इत्यादि । अत्र सर्वत्र कर्मशब्दोऽदृष्टपरः । अशेषदुःखविलय इत्यस्य तात्पर्यं मोक्षस्येति ।

---

सु० — नन्वचेतनत्वेऽपि विशिष्टं कर्मेदं मोक्षसाधनं किन्न स्यादिति चेत् । किमामोक्ष-प्राप्तेः क्रियमाणमेकमेव कर्मोतानेकानि । नाद्यः । क्रियाणामनेकत्वदर्शनात् । प्रतिक्रियं कर्मोत्पत्तेः । एकत्वे च जातस्यैव जन्म वा क्रियाणां वैयर्थ्यं वा विरम्यव्यापारो वाऽऽपद्येत ॥ अभ्युपगम्यैकत्वं बाधकमाह अशेषेति ।

अनु० — अशेषदुःखविलये नेदानीं कारणं यथा ॥
तथोत्तरं न चैव स्यात्

यथेदानीं प्रथमक्रियोत्तरकालं जातं कर्माशेषदुःखविलये मोक्षस्य कारणं न भवति । तथोत्तरकालं विवक्षितकालेऽपि मोक्षकारणं न स्यात् । कर्मत्वादिति शेषः । एकस्यापि कर्मणः कालभेदेन भेदात्पक्षसपक्षत्वं युज्यते । विपक्षे तूत्पत्त्यनन्तरमेव मोक्षं साधयेदविशेषादिति ।

द्वितीयेऽपि बाधकं प्रमाणमाह अशेषेति । अत्रेदानीमितीदानीन्तनी कर्मव्यक्तिरुच्यते । उत्तरमित्यन्तिमा । अन्यत्समानम् । न चान्तिमकर्मव्यतिरिक्तानां कर्मणां मोक्षसाधनत्व-

मस्ति। तथा सति तदनन्तरमेव मोक्षप्रसङ्गात्। न च पूर्वसहकृतस्यान्तिमस्य कर्मणो मोक्षसाधनत्वं वाच्यम्। इयत्ताभावेनानियतकारणकत्वापत्तेः। न हि ज्ञानोदयानन्तरमियतैव कालेनेयन्त्येव कर्माणि कृत्वाऽपवृज्यत इति नियमः प्रमाणवान्। न च जैनैरिष्यते। जिनानां विषमकालत्वाभ्युपगमात्।

**शे०**— कर्म न मोक्षसाधनमचेतनत्वाद्घटवदित्यत्र निवृत्तकर्मेतरत्वमुपाधिरित्याशङ्कते **नन्विति** ॥ **विशिष्टमिति**। निष्कामत्वादिना विशिष्टमित्यर्थः। न च पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरत्वादनुपाधित्वम्। निवृत्तकर्मणो मोक्षसाधनतायाः प्रमाणसिद्धत्वेन तदभावसाधनस्य बाधितविषयत्वेनास्य बाधोन्नीतत्वादित्याशयात्। तर्कपराघातेन कर्मणो मोक्षहेतुताया न प्रमाणसिद्धत्वमिति न बाधोन्नीतत्वमित्याशयेन तर्कपराहतिमाह **किमामोक्षप्राप्तेरिति**। न चाङ्मर्यादावचन इति आङो मर्यादायां कर्मप्रवचनीयत्वस्मरणात्तस्य च पञ्चम्यपाङ्परिभिरिति कर्मप्रवचनीयाङ्योगे विहितपञ्चम्यन्तेन मोक्षप्राप्तिशब्देनाङ्मर्यादाभिविध्योरिति समासे सुपो धातुप्रातिपदिकयोरिति सुब्लोपेऽपविष्णु संसार इत्यादिवदामोक्षप्राप्तीत्येव भवितव्यम्। आ मोक्षप्राप्तेरिति पञ्चमी तु कथमिति वाच्यम्। विभाषेति महाविभाषाधिकारे आङ् मर्यादाभिविध्योरिति मर्यादार्थकस्याङो विकल्पेन पञ्चम्या समासविधानेन समासपक्षे आमोक्षप्राप्तीति रूपप्राप्तावपि तदभावपक्षे आ मोक्षप्राप्तेरिति वाक्यस्यापि संभवेन पञ्चमीश्रवणोपपत्तेरित्याशयात् ॥ **क्रियमाणमिति**। क्रियया निष्पाद्यमानमित्यर्थः ॥ **क्रियाणामिति**। अदृष्टजनकक्रियाणामित्यर्थः। एकमेव कर्मोत्पद्यत इति वदन्प्रष्टव्यः। किं प्रथमादिक्रियाणां सर्वासामपि प्रत्येकं तत्कर्मजनकत्वमभिमतं, किंवा प्रथमक्रियाया एव तज्जनकत्वं न तु द्वितीयादिक्रियाणामिति, किंवा चरमक्रियाव्यतिरिक्तसर्वकर्मणां चरमक्रियोत्पादनद्वारा तत्कर्मोत्पादकत्वमिति विकल्पान्मनसि निधाय क्रमेण पक्षत्रयं दूषयति **एकत्वे चेत्यादिना**। नन्वेकस्यैव कर्मणः कथं पक्षसपक्षभाव इत्यत आह **एकस्यापीति**। अविशेषादित्यतःपरं बाधकमिति शेषः ॥ **अन्यत्समानमिति**। शिष्टपदव्याख्यानं कालभेदात्पक्षसपक्षत्वव्युत्पादनं च पूर्ववद्द्रष्टव्यमित्यर्थः। अन्तिमा कर्मव्यक्तिर्न मोक्षहेतुः कर्मव्यक्तित्वात्पूर्वकर्मव्यक्तिवदित्यनुमाने पूर्वकर्मव्यक्तेरपि मोक्षहेतुत्वाद्दृष्टान्तस्य साध्यवैकल्यमित्याशङ्क्य परिहरति **न चान्तिमेति** ॥ **इयत्ताभावेनेति**। कर्मणामिति शेषः। ननु नानियतकारणत्वमापाद्यते। ज्ञानोदयानन्तरमियतैव कालेनैतावन्त्येव कर्माणि कृत्वाऽपवृज्यते इति नियमाङ्गीकारादित्यत आह **न हीति**। तथाऽपि प्रमाणाभावेनोक्तनियमासिद्धेरनियतकारणकत्वप्रसङ्गोऽवर्जनीय एवेति भावः। न केवलमयं नियमो न प्रमाणवानित्येतावतैवानियतकारणत्वानिस्तरः किन्तु जैनानामनिष्टत्वादपीत्याह **न चेति**। नापीत्यर्थः।

यदि हि यावान्देवदत्तस्य ज्ञानोदयानन्तरं मोक्षार्थमपेक्षितः कालस्तावानेव यज्ञदत्तस्यापि मोक्षार्थमपेक्षितः स्यात्तदा यावता कालेन देवदत्तेन यावन्ति कर्माणि क्रियन्ते तावता कालेन तावन्त्येव यज्ञदत्तेनापीति कर्मनियमः संभाव्येतापि । न चैतदस्ति । जैनैः सर्वेषामात्मनां ज्ञानोदयानन्तरं मोक्षस्य विषमकालतायाः एवाभ्युपगतत्वेनोक्तकर्मनियमानुपपत्त्या नानियतकारणकत्वपरिहार इत्यर्थः । जिनस्यैकत्वेऽपि गीताभाष्योक्तरीत्या तच्छिष्याणामपि तच्छब्दवाच्यत्वात्तदभिप्रायेण जिनानामपि (कर्तृषष्ठी जिनदर्शनाभिज्ञैरित्यर्थः) बहुवचनमिति ध्येयम् ।

स०— **क्रियमाणमिति** । अदृष्टजनकक्रियमाणमित्यर्थः । नन्वेकस्यैव कर्मणः कथं पक्षसपक्षभाव इत्यत आह **एकस्यापीति** । ननु नानियतकरणकत्वं इयतैव कालेन इयन्त्येव कर्माणि कृत्वापवृज्यत इति नियमाङ्गीकारादित्यत **आह न हीति ॥ न चेति** । नापीत्यर्थः । तत्र हेतुमाह **जिनानामिति** । कर्मणामिति शेषः । जिनैः कर्मणां विषमकालीनताङ्गीकारेणेयतैव कालेनेयन्त्येव कर्माणीति नाभ्युपगन्तुं शक्यन्त इति भावः ।

प०— **विशिष्टं कर्मेति** । इतरकर्मतो व्यावृत्तं कर्म निवृत्तं कर्मेति यावत् । क्रियमाणं क्रियातो जायमानम् ॥ **अनेकत्वेति** । तथाच तज्जन्यं कर्माप्यनेकमेव वाच्यमिति भावः । एकमिति पक्षे बाधकं चाह **एकत्वे चेति** । अत्र पक्षे क्रियाणां किं प्रत्येकं कर्मोत्पत्तिहेतुत्वमुतैकस्य अथ समुचिताशेषक्रियाणामिति कल्पान् हृदि कृत्वा क्रमेण निराह **जातस्यैवेति** । अशेषदुःखविलय इत्यनुवादः । मोक्षस्येति व्याख्या । तर्कमाह **विपक्षे त्विति** । उक्तसाध्यानङ्गीकारे त्वित्यर्थः ॥ **द्वितीय इति** । उतानेकानीति पक्ष इत्यर्थः । कुतो नेष्यत इत्यत आह **जिनानामिति** । उत्पन्नतत्वज्ञानानां जिनानां केषांचिदल्पकालेऽपवर्गः केषांचिदधिककाल इत्यङ्गीकारेण इयतेति नियमो नाङ्गीक्रियत इत्यर्थः ॥ **आभासोद्धारमिति** । निश्चितन्यानुमानस्याशेषेत्यादित्रिपाद्यामुक्तानुमानस्य चेति योज्यम् । **जैनोक्तस्य कर्मणो मुक्तिहेतुत्वनिरासः ॥**

या० — **विशिष्ट इति** । निष्कामत्वादिना विशिष्ट इत्यर्थः । निवृत्तमिति यावत् । तथा च निवृत्तकर्मेतरत्वमचेतनत्वानुमाने उपाधिर्न च पक्षेतरत्वम् । निवृत्तकर्मणो मोक्षहेतुत्वस्य प्रमाणसिद्धत्वेन तदभावसाधनस्य बाधितविषयत्वेनास्य बाधोन्नीतत्वादित्याशयः । अत एव निवृत्तकर्मणो मोक्षहेतुत्वं प्रमाणसिद्धमिति पराभिमानं खण्डयितुं तर्कपराहतिमाह **किमामोक्षप्राप्तेरित्यादिना** । तथा च बाधाभावात्पक्ष एव साध्याव्यापकतयाऽयं पक्षेतरो नोपाधिरिति भावः । क्रियमाणं क्रियाभिर्जायमानम् । ननु न प्रतिक्रियं कर्मोत्पद्यते किन्त्वेकमेवेत्यत आह **एकत्वे चेति** । एकमेव कर्मोत्पद्यत इति वदन्प्रष्टव्यः । किं द्वितीयादिक्रियमाणमपि प्रत्येकं तत्कर्मजनकत्वमस्ति, किंवा न, यद्वा चरमक्रियाव्यतिरिक्तानां सर्वासा

चरमक्रियाजननद्वारा तत्कर्मोत्पादकत्वमिति । आद्यं दूषयति **जातस्यैव जन्मेति** । द्वितीयं दूषयति **न वैयर्थ्यमिति** । तृतीयमपाकरोति **विरम्येति** । अविशेषादितीत्यनन्तरं बाधकमिति शेषः । अन्तिमा कर्मव्यक्तिर्न मोक्षहेतुः कर्मव्यक्तित्वात्तत्पूर्वकर्मव्यक्तिवदित्यनुमाने दृष्टान्ते साध्यवैकल्यमाशङ्क्य परिहरति **न चान्तिमकर्मेत्यादिना** ॥ **जिनानामिति** । जिनदर्शनवेदिनां सर्वेषां नैकस्मिन्कालेमुक्तिः किन्तु कस्यचिदस्मिन्कल्पे कस्यचिदतीते कस्यचिद्भविष्यतीत्येवं विषमकालत्वाभ्युपगमान्न कर्मादेरियत्ता युक्तेत्यर्थः ।

**श्री०** — उत्तरकालीनं कर्मापरपर्यायमदृष्टं न मोक्षसाधनं कर्मत्वाददृष्टत्वात्पूर्वादृष्टवदित्यनुमानमयुक्तम् । कर्मणोऽदृष्टस्यैकत्वेन पक्षसपक्षत्वयोरयोगादित्यत आह **एकस्यापीति** । कर्मणोऽदृष्टस्य ॥ **कालभेदेनेति** । उत्तरकालावच्छिन्नस्य पक्षत्वं पूर्वकालावच्छिन्नस्य सपक्षत्वमित्यर्थः ॥ **विपक्षे त्विति** । कर्मत्वेऽपि विवक्षितकाले मोक्षसाधनत्वाङ्गीकार इत्यर्थः । **अविशेषात्** कर्मत्वाविशेषात् ॥ **द्वितीयेऽपीति** । आमोक्षप्राप्तेः क्रियाभिर्जायमानानि अदृष्टान्यनेकानीति पक्ष इत्यर्थः ॥ **अन्यत्समानमिति** । कर्मत्वादिति शेषकरणं समानमित्यर्थः । अन्तिमाऽदृष्टव्यक्तिर्न मोक्षसाधनं कर्मत्वात् इदानीन्तनकर्मव्यक्तिवदित्यनुमाने दृष्टान्ते साध्यमुपपादयति **न चान्तिमेति** । अपवृज्यतेऽपवर्गवान्भवति । जिनानाम् । कर्तरि षष्ठी । जिनदर्शनाभिज्ञैरित्यर्थः ।

**सु०** — **आभासोद्धारं करोति** दृष्टीति ।

**अनु०** — दृष्टिपूर्वाऽनुमा यतः ॥

---

**यस्मादियं दृष्टिपूर्वा प्रमाणगृहीतव्याप्त्यादिमती । ततोऽनुमा न त्वाभास इत्यर्थः ।**

**यदुक्तमीशक्लृप्त्यनुसारेणेति तदसत् । ज्ञानादीश्वरप्रसादस्ततो मुक्तिरित्यत्र प्रमाणाभावादिति चेन्न । श्रुतेः सद्भावात् ।** तत्प्रामाण्यस्य साधितत्वात् ।

**आभासानुद्धरन्नेव (वा)चानुमानमप्याह** दृष्टीति ।

शक्तस्यान्यस्य विज्ञानं तत्प्रीतिजनकं यदि ॥
तयैव न्धहानिः स्यादिति किन्नाम दूषणम् ॥

**शक्तस्यान्यस्य विज्ञानं विशिष्टज्ञानं गुणोत्कर्षादिज्ञानमिति यावत् । तत्प्रीतिजनकमिति यद्यनुमीयते । यदि च तया तत्प्रीत्यैव बन्धहानिः स्यादित्यनुमीयते । तदा किन्नाम दूषणम् । न किमपि । कुतः । यतो दृष्टिपूर्वा प्रमाणगृहीतव्याप्त्यादिमतीयमनुमेत्यर्थः । अर्थमात्रमिदमुक्तम् ।**

**एषा तु प्रयोगप्रक्रिया । संसारबन्धहानिः समर्थपुरुषान्तरप्रीतिनिबन्धना बन्धहानित्वात् राजप्रसादाधीनभृत्यनिगडबन्धहानिवत् । यश्चासौ पुरुषः स एवेश्वरः । विप्रतिपन्ना प्रीतिर्गुणो-**

त्कर्षादिज्ञानजा अनिजप्रीतित्वाद्राजप्रीतिवत् । कर्मादिना भवन्नीश्वरप्रसादोऽपि गुणोत्कर्षादिज्ञाने सत्येवेति न दोषः ॥ यद्वेश्वरविषयं गुणोत्कर्षादिज्ञानं तत्प्रीतिजनकं गुणोत्कर्षादिज्ञानत्वात्संमतवत् । न चेश्वरासिद्ध्या दोषः । प्रथमानुमानेन तस्य सिद्धत्वात् । तदिदमुक्तं शक्तस्यान्यस्येति ।

शे० — **यश्चासौ पुरुष इति** । ईश्वरातिरिक्तस्य समर्थत्वविशेषणवैशिष्ट्यासंभवादिति भावः । निजेषु पुत्रादिषु या प्रीतिस्तस्यामव्यभिचारायानिजेति विशेषणम् । एवं प्रीतिपक्षकगुणोत्कर्षज्ञानजनकत्वानुमाने कर्मादिजन्यभगवत्प्रीतौ साध्यसद्भावकथनेन व्यभिचारः परिहृतः । इदानीं तु तच्छङ्काशून्यमेव प्रयोगमाह **यद्वेति** ॥ **प्रथमानुमानेनेति** । संसारबन्धहानिः समर्थपुरुषान्तरप्रीतिनिबन्धनेति पूर्वानुमानेनेत्यर्थः । ईश्वरं विनाऽन्यस्य सामर्थ्यविशेषणायोगादिति भावः ।

प० — **श्रुतेरिति** । 'ज्ञानी प्रियतमोऽतो मे तं विद्वानेव चामृतः । वृणुते यं तेन लभ्य' इति जिज्ञासानयोक्तश्रुत्यादेरित्यर्थः ॥ **साधितत्वादिति** । 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य ही'ति जिज्ञासानयानुव्याख्यानादाविति भावः ॥ **अनिजेति** । अस्वाभाविकेत्यर्थः । देहापत्यादिषु जायमानस्वाभाविकप्रीतावव्यभिचारायानिजेत्युक्तिः । यद्वा लक्ष्म्यादिष्वनादिसिद्धनिजप्रीतावव्यभिचारायानिजेत्युक्तिः ।

या० — निजेषु पुत्रादिषु या प्रीतिस्तस्यां व्यभिचारवारणायानिजेत्युक्तम् ।

---

श्री० — ननु कर्मजन्ये भगवत्प्रसादे गुणोत्कर्षज्ञानजन्यत्वाभावाद्व्यभिचार इत्यत आह **कर्मादिना भवन्निति** ॥ **प्रथमानुमानेनेति** । संसारबन्धहानिः समर्थपुरुषान्तरप्रीतिनिबन्धनेति प्रथमानुमानेनेत्यर्थः ।

च० — **आभासोद्धारं करोतीति** । निश्चैतन्यानुमानस्याशेषेत्यादिपादत्रयोक्तानुमानस्य चेति पूरणीयम् ॥ **जैनोक्तस्य कर्मणो मुक्तिहेतुत्वनिरासः** ॥

सु० — **नन्वेतद्विपरीतमपि मयाऽनुमीयते । ततः सत्प्रतिपक्षतेति चेत् । किं विमता बन्धहानिः स्वज्ञाननिबन्धनेत्यनुमीयते उत परप्रसादनिबन्धना न भवतीति । आद्ये दोषमाह** स्वज्ञानादिति ।

**अनु०** — स्वज्ञानाद्बन्धहानिस्तु दृश्यते कस्य कुत्रचित् ॥

**दृश्यत इत्येतत्काक्वा न दृश्यत इति व्याख्येयम् । तथा च व्याप्त्यभाव इति भावः । द्वितीये तु बन्धहानित्वादे राजप्रसादाधीननिगडबन्धहान्यादौ व्यभिचारः । परप्रसादनिरपेक्षैव**

काचिद्बन्धहानिर्दृश्यते । तत्र भवतामपि व्यभिचार इति चेन्न । पक्षतुल्यत्वात् । सर्वोऽप्य-निष्टनिवृत्तिरीश्वरप्रसादाधीनेति हि तत्त्वविदां पन्थाः ।

शे० — **काक्वेति** । ध्वनिविकारविशेषेणेत्यर्थः । काकुः स्त्रियां विकारो यः शोकभीत्यादि-भिर्ध्वनेरित्यभिधानादिति ध्येयम् । अत्र च कुत्र दृश्यते न कुत्रापीत्येवमाक्षेपशक्तेश्चिच्छब्देन प्रति-बद्धतया तत्परत्वानुपपत्तेः कुत्रचिदित्यस्य स्थलविशेषपरत्वमेव वाच्यम् । तथा च स्थलविशेषे न दृश्यत इत्यर्थस्य तेन लाभेऽपि स्थलान्तरे दृश्यत इति शङ्का स्यादेव । एवं कस्येत्यस्यापि न कस्यापीत्येवमाक्षेप-परत्वेऽपि स्थलविशेषे न कस्यापि दृश्यत इत्यर्थपर्यवसानेऽपि कुत्रापि न दृश्यत इत्यर्थालाभात्तदर्थं काक्वा व्याख्यानमाश्रितमित्यवगन्तव्यम् ।। **काचिदिति** । औषधादिवशाज्जायमानेत्यर्थः ।

या० — **काक्वेति** । ध्वनिविकारविशेषेणेत्यर्थः । 'काकुः स्त्रियां विकारो यः शोक-भीत्यादिभिर्ध्वनेरि'त्यभिधानात् ।

सु० — यदुक्तं धर्मज्ञानयोर्मोक्षसाधनत्वे तदैव मोक्षः स्यादिति तदसत् । कर्मणः प्रतिबन्धकस्य सद्भावात् । न हि प्रतिबन्धकवशात्कार्यमकुर्वाणो हेतुरहेतुर्भवति । अतिप्रसङ्गात् । अनेकविधं खलु कर्म । तत्र यद्यपि ज्ञानावरणा(णीया)दिकं ज्ञानादेव निवृत्तम् । तथाऽप्यायुरादि-कारणमस्त्येवेति चेत् । स्यादिदं प्रतिबन्धकसद्भावकल्पनं यदि 'अहिंसादिरूपो धर्मः, शरीर-परिमाणत्वादिनाऽऽत्मज्ञानं च तत्त्वज्ञानम्, एते च धर्मज्ञाने मोक्षसाधने' इत्येषोऽर्थः प्रमितो भवेत् । न चैवम् । एवमेव कल्पनेऽतिप्रसङ्ग इत्याशयवान्धर्मादिस्वरूपे तावत्प्रमाणं नास्ती-त्याह अहिंसायाश्चेति ।

अनु० — अहिंसायाश्च धर्मत्वं केन मानेन गम्यते ।

चशब्दो ज्ञानसंग्रहार्थः । यद्वा सप्तघटिकाभोजनादिसमुच्चयार्थः । ज्ञानविशेषस्य चोपलक्षणम् । जिनवाक्येनावगम्यत इति चेन्न । तत्प्रामाण्यसाधकाभावस्योक्तत्वात् ।

शे० — ननु ज्ञानादेव विपर्ययरूपकर्मणो निवृत्तत्वान्न प्रतिबन्धकवशादपि कार्याभाव उपपाद-यितुं शक्यत इत्यत आह **अनेकेति** । आदिपदेन दर्शनावरणीयादिपरिग्रहः ।। **ज्ञानादेवेति** । सम्यग्ज्ञानात्संशयविपर्ययनिवृत्तेर्लोकसिद्धत्वात्सम्यग्ज्ञानं न मोक्षहेतुरिति विपर्ययरूपज्ञानावरणीयमार्हत-दर्शनाभ्यासान्न मोक्ष इति विपर्ययरूपं दर्शनावरणीयं बहुषु तीर्थकारैरुपदर्शितेषु विप्रतिषिद्धेषु मुक्तमार्गेषु विशेषानवधारणरूपं मोहनीयं मोक्षमार्गप्रवृत्तानां तद्विघ्नकरविज्ञानरूपमान्तरीयं च सम्यग्ज्ञानादेव निवृत्तमित्यर्थः । उक्तज्ञानानां कर्मत्वं चोर्ध्वगमनशीलस्य जीवस्य देहेऽवस्थितिहेतुत्वेनाधर्मलक्षणाक्रान्त-

त्वमभिप्रेत्य स्थितिहेतुरधर्म इति स्थितिहेतुत्वस्यैव तन्मते तल्लक्षणत्वादिति भावः ॥ सम्यग्ज्ञानाद्धातिकर्मनाशेन तस्याप्रतिबन्धकत्वेऽप्याघातिकर्मणोऽनिवृत्त्या तस्यैव प्रतिबन्धकत्वसंभवाद्युक्तं कार्याभावस्य प्रतिबन्धकसद्भावनिबन्धनत्वमित्याशयेनाह **तथाऽपीति** । आयुरादीत्यादिपदेन गोत्रिकादिपरिग्रहः । आयुरादिकारणत्वं च शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखदुःखादिहेतुभूतत्वमित्यन्यत्र विस्तरः । नन्वत्र धर्मस्वरूपस्याप्रामाणिकत्वोक्तावपि परोक्तज्ञानस्य तदनुक्तेर्धर्मादिस्वरूपे प्रमाणाभावाभिधायकतया कथमस्यावतार इत्यतोऽत्र वाक्ये चशब्देन परोक्तज्ञानस्य संगृहीतत्वेन तस्याप्यप्रामाणिकत्वप्रतिपादकत्वसिद्धेर्युक्तस्तथाऽवतार इत्याशयेनाह **चशब्द इति** । अहिंसाऽन्यस्य धर्मत्वसमुच्चायकतया प्रतीयमानस्याहिंसायाश्चेति चशब्दस्य भिन्नक्रमतया ज्ञानसमुच्चायकत्वं न स्वरसमित्यतस्तदन्यस्य धर्मत्वसमुच्चायकतया तं व्याचष्टे **यद्वेति** ॥ **सप्तघटिकाभोजनादीति** । अत्र च सप्त च ता घटिकाश्चेति न विशेषणसमासः । दिक्संख्ये संज्ञायामिति संज्ञायामेव तस्य नियमितत्वात्सप्तघटिकाशब्दस्य चासंज्ञात्वात् । किन्नाम घटिकासु भोजनं घटिकाभोजनं सप्तसु घटिकाभोजनं सप्तघटिकाभोजनमित्युभयत्रापि सप्तमीति योगविभागादेव समासः । सप्तत्वं तु सामर्थ्यादेव घटिकास्वन्वेति । साध्यो धर्मो यस्येति साध्यधर्मेति व्युत्पाद्य सन्दिग्धश्चासौ साध्यधर्मा चेति कर्मधारयेऽपि सन्दिग्धतायाः साध्यमात्रपर्यवसायित्वस्य नवरसरुचामित्यत्र नवत्वस्य रसेष्वेव पर्यवसानस्य लोकानां नाथो लोकनाथ इति लोकनाथपदं व्युत्पाद्य त्रयाणां लोकनाथ इति विगृह्य समासेऽपि त्रित्वस्य सामर्थ्यात्प्रसिद्धेश्च लोकेष्वेव पर्यवसानस्य च दर्शनादित्यवधेयम् । नन्वस्मिन्पक्षे चशब्दस्य स्वारस्यलाभेऽप्यनेन परोक्तज्ञानस्याप्रामाणिकत्वानभिधानादुक्तावतारानुपपत्तिस्तदवस्थैवेत्यत्राहिंसापदस्य लक्षणया ज्ञानपरत्वस्याप्यभिमतत्वेन धर्ममात्रपरत्वाभावेन परोक्तधर्मज्ञानयोरप्रामाणिकत्वस्यानेनोक्तिलाभान्नानुपपत्तिरित्याह **ज्ञानविशेषस्येति** ॥ **उक्तत्वादिति** । आप्तवाक्यत्वस्य तदसाधकताया 'अतोऽनुमा कथं धर्ममि'त्येतद्व्याख्यानावसर इति शेषः ।

**स०— ज्ञानावरणीयादिकमिति** । ज्ञानोत्पादकप्रतिबन्धकमित्यर्थः ।

**प०— अतिप्रसङ्गादिति** । मणिमन्त्रादिना दाहमकुर्वाणो वह्निर्दाहहेतुर्न स्यादित्यर्थः ॥ **ज्ञानावरणादिकमिति** । तन्मते विपर्ययज्ञानादेः सम्यग्ज्ञानावरणत्वव्यवहारात् विपर्ययादिकं ज्ञानावरणमिति ज्ञेयम् ॥ **कारणमस्त्येवेति** । आयुरादिकारणं दुष्कर्मास्त्येवेत्यर्थः ॥ **ज्ञानविशेषस्येति** । कायपरिमाणत्वादिनात्मज्ञानस्येत्यर्थः ॥ **उक्तत्वादिति** । अतोऽनुमा कथं धर्ममित्यादिग्रन्थ इति भावः ।

**या०— ज्ञानावरणीयादिकमिति** । अत्रादिपदेन दर्शनावरणीयमोहनीयान्तरायाणां ग्रहणम् । तन्मते एतानि चत्वारि श्रेयोहन्तृत्वाद्धातिकर्माणीत्युच्यन्ते । तत्र सम्यग्ज्ञानं न मोक्षसाधनमिति विपर्ययो

ज्ञानावरणीयं कर्म । आर्हतदर्शनाभ्यासान्न मोक्ष इति विपरीतज्ञानं दर्शनावरणीयम् । बहुषु विप्रतिषिद्धेषु तीर्थकरैरुपदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयम् । मोक्षमार्गप्रवृत्तानां तद्विघ्नकरं विज्ञानमन्तरायं इति ज्ञातव्यम् ॥ **ज्ञानादेवेति** । सम्यग्ज्ञानात्संशयविपर्ययनिवृत्तेर्लोके दर्शनादिति भावः । अत्र च तृतीयस्य संशयत्वमन्येषां विपर्ययत्वमिति द्रष्टव्यम् । उक्तज्ञानानां कर्मत्वं चोर्ध्वगमनशीलस्य जीवस्य देहेऽवस्थितिहेतुतयाऽधर्मलक्षणाक्रान्ततामभिप्रेत्य । स्थितिहेतुरधर्म इति हि तन्मतेऽधर्मलक्षणं समयपाद उक्तम् । अथवा ज्ञानावरणीयादिशब्दैरुक्तज्ञानविशेषहेतवोऽधर्मविशेषा एव ग्राह्याः ॥ **आयुरादिकारणमिति** । घातिकर्मचतुष्टयनाशेऽप्यघातिकर्मचतुष्टयमस्त्येवेत्यर्थः । तच्च शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखदुःखादिहेतुभूतमिति समयपाद उक्तम् । तदेवायुरादिकारणपदेन विवक्षितमिति ज्ञातव्यम् ॥ **ज्ञानविशेषस्य चेति** । शरीरादिपरिमाणत्वादिनाऽऽत्मज्ञानस्येत्यर्थः ।

**श्री०— अतिप्रसङ्गादिति** । वन्हेरपि स्फोटं प्रत्यकारणत्वप्रसङ्गादित्यर्थः । ज्ञानसंग्रहार्थं यथार्थज्ञानसंग्रहार्थम् ॥ **सप्तघटिकेति** । सायङ्कालस्य सप्तघटिका उर्वरिताः सन्ति ततः प्रागेव भोजनं कर्तव्यमित्यर्थः । ज्ञानविशेषो यथार्थज्ञानम् ।

---

**सु०— सत्प्रतिपक्षं च जिनवाक्यमित्याह** हिंसाया एवेति ।

**अनु०—** हिंसाया एव धर्मत्वमित्युक्ते स्यात्किमुत्तरम् ॥

**अत्रापि पूर्ववदुपलक्षणं ज्ञातव्यम् । जिनवाक्यादहिंसाया धर्मत्वं प्रतिपन्नस्य भिन्नकाचार्येण हिंसाया एव धर्मत्वमित्युक्ते किमुत्तरं स्यान्न किमपि । तथा च न धर्मनिश्चयः स्यात् । भिन्नकाचार्यो नाप्त इति चेत् । जिनोऽपि कथमाप्तः । (सार्वज्ञगु)सर्वगुणोपेतत्वादिति चेत् । भिन्नकाचार्येऽपि तुल्यमेतत् । अप्रामाणिकास्तत्र ते गुणा इति चेत् । जिनेऽपि किं प्रमाणसिद्धाः । जिनदर्शिनां वचनेन तेषां तत्र सिद्धिरिति चेन्न । समानमन्यत्रापि । भिन्नकाचार्यदर्शिनो भ्रान्ताः प्रतारका वेति चेत् । जिनदर्शिनोऽपि कुतो न तथेति ।**

**शे०— उपलक्षणमिति** । ज्ञानविशेषस्येति शेषः ।

**प०— पूर्ववदिति** । ज्ञानविशेषस्योपलक्षणमित्यर्थः ॥ **भिन्नकाचार्येणेति** । मार्गान्तरवर्तिनेत्यर्थः ।

**श्री०— उपलक्षणमिति** । चशब्दस्य सप्तघटिकाभोजनसमुच्चायकत्वेन व्याख्यातत्वादित्यर्थः ।

सु० — इदानीं धर्मादेर्मोक्षसाधनत्वमप्यप्रामाणिकमित्याह धर्मस्येति ।

अनु०— धर्मस्य सुखहेतुत्वमपि केनावगम्यते ॥

सुखं मोक्षः ॥ जिनवाक्येनावसीयत इति वदतः पूर्ववत्सत्प्रतिपक्षतेत्याह हत्याया इति ।

हत्याया मोक्षहेतुत्वं कुतो मानान्निवार्यते ॥

मोक्षहेतुत्वं केनचिदाचार्येणोक्तमिति शेषः । हनस्त चेत्यत्र सुपीति नानुवर्तते । ब्रह्महत्यादयस्तु षष्ठीसमासाः । अतो हत्येति साधुः । 'सन्ति खल्वक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती'त्यादिश्रुतिमनुसृत्य हिंसात्मकस्य यागस्य मोक्षहेतुत्वं वदन्त इत्ययुक्तमेव जैनानां मोक्षसाधनमिति ॥

शे० — सुखं मोक्ष इति । धर्मस्य सुखमात्रहेतुत्वमपि नोपपद्यते किमुतानन्तसुखमोक्षहेतुत्वमिति दर्शयितुं मूले मोक्षेत्यनुक्त्वा सुखेत्येवोक्तमिति भावः । ननु हत्येति कथम् । न च हन्तेर्हनस्त चेति क्यपि नकारस्य तकारे च सति हत्येति रूपनिष्पत्तिरिति वाच्यम् । वदः सुपि क्यप् चेत्यतः सुपीत्यस्य भुवो भाव इत्यस्य चात्रानुवृत्त्याऽनुपसर्गे सुप्युपपदे सत्येवानेन भावे हन्तेः क्यप्प्रत्ययविधानेन प्रकृते च सुबन्तस्योपपदस्याभावादनेन क्यप्प्रत्ययस्यासंभवादित्यत आह हनस्तचेत्यत्रेति ॥ नानुवर्तत इति । नानुवृत्तिः कार्या प्रयोजनाभावादित्याशयः । ननु ब्रह्महत्येत्यत्र समाससिद्धिरेव तत्प्रयोजनम् । तथा हि । अत्र हि उपपदमतिङिति उपपदसमासः कार्यः । तत्र सुपीत्यनुवृत्तौ सप्तमीनिर्दिष्टतया ब्रह्मण इत्यस्य तत्रोपपदं सप्तमीस्थमिति उपपदत्वप्राप्तस्योपपदमतिङिति उपपदस्य ब्रह्मण इत्यस्यातिङन्तेन हत्याशब्देन समासोपपत्तावपि तदननुवृत्तौ सप्तम्यनिर्दिष्टतया ब्रह्मण इत्यस्योपपदत्वाभावेन तत्समासासंभवादित्यत आह ब्रह्महत्यादय इति । नात्रोपपदतिङित्यनेन नित्यसमासः किन्तु षष्ठीत्यनेन विहितो ब्रह्मणो हत्या ब्रह्महत्येति वैकल्पिकषष्ठीसमास एव । अतो हनस्त चेत्यत्र सुपीत्यस्याननुवृत्तौ बाधकाभावादसत्यपि सुबन्ते उपपदे भावे क्यप्प्रत्यये हत्येति रूपनिष्पत्तिरप्रत्यूहेति भावः ॥ सन्ति खल्वक्षय्यमिति । एतच्च वारुणप्रघासकमेषीमेषरूपपशुहिंसासद्भावमभ्युपेत्योक्तमिति भावः ।

स० — ननु हत्येति कथम् । न च हन्तेः हनस्त चेति क्यप्प्रत्यये नकारस्य तकारे हत्येति रूपनिष्पत्तिरिति वाच्यम् । वदः सुपि क्यप्चेत्यतः सुपीत्यस्य भुवो भाव इत्यतो भाव इत्यस्य चानुवृत्त्याऽनुपसर्गे सुप्युपपदे भावे हन्तेः क्यब्विधानेन प्रकृते सुबुपपदत्वाभावेन क्यप्प्रत्ययासंभवादित्यत आह हनस्तचेत्यत्रेति । निष्प्रयोजनत्वान्न तदनुवृत्तिः कार्येत्याशयः । ननु कथं प्रयोजनाभावः । ब्रह्महत्येत्यत्र समासविधेरेव प्रयोजनत्वात् । अन्यथा तदनुपपत्तेः । तथाहि । अत्रोपपदमतिङ् इति सूत्रेण ब्रह्महत्येत्यत्र समासस्य कार्यत्वात् । तत्र च सुपीत्यनुवृत्तौ तत्रोपपदं सप्तमीस्थमिति सप्तमी-

निर्दिष्टस्यैवोपपदसंज्ञाया एव विहितत्वेन सुपीत्यननुवृत्तौ सप्तमीनिर्देशाभावेन ब्रह्मण इत्यस्योपपदत्वाभावेन समासाऽनुपपत्तिरित्यत आह **ब्रह्महत्यादय इति** । हननं हत्या ब्रह्मणो हत्या ब्रह्महत्येति षष्ठीसमासः संभवतीति भावः ।

**प०**— ननु हनस्तचेति तृतीयाध्यायप्रथमपादीयसूत्रे हन हिंसागत्योरिति धातोः क्यप्प्रत्ययो नकारस्य तकारादेशश्चेति विधानात् । तत्र च वदः सुपि क्यप् चेति पूर्वस्मात्सुपीत्यनुवृत्तौ सुबंतोपपदाभावात्कथं हत्येत्युक्तिरित्यत आह **हनस्तचेत्यत्रेति** । कथं तर्हि ब्रह्महत्या गोहत्येत्यादौ उपपदश्रवणमित्यतस्तत्रापि ब्रह्मादिशब्दे उपपदे सति हंतेर्नक्यबादिविधानं किंतु केवलस्यैव । तथा च ब्रह्मणो हत्या ब्रह्महत्येति हत्यापदेन षष्ठीसमासः । नोपपदमतिङिन्त्यनेन समास इत्यर्थः । एतेन वृत्त्या सुबनुवृत्त्य कृतं व्याख्यानं नादर्तव्यमित्युक्तं भवति । न चैव व्याघात इत्यादौ घञ्बाधेन क्यबेव स्यादिति शङ्कयम् । वाऽसरूपोऽस्त्रियामिति असरूपप्रत्ययेनेति विकल्पेन बाधोक्तेरबाधपक्षे घञुपपत्तेर्द्वयमपि समाहितम् । कृत्यल्युटो बहुलमिति बहुलग्रहणाद्वा एवमादिषु घञ्निर्वाह इति भावः । हिंसाया मुक्तिहेतुत्ववादिन एव न सन्ति । येन एवं सत्प्रतिपक्षत्वमित्यत आह **सन्ति खल्विति** । **जैननिरासः** ।

**या०** — ननु हत्येति कथम् । न च हन्तेर्हनस्त चेत्यनेन क्यप्प्रत्यये नकारस्य तकारे च हत्येति रूपमिति वाच्यम् । हनस्त चेत्यत्र वदः सुपि क्यप् चेत्यतः सुपीत्यस्य भुवो भाव इत्यतो भाव इत्यस्य चानुवृत्त्याऽनुपसर्गे सुप्युपपदे भावे हन्तेः क्यब्विधानेन प्रकृते सुप उपपदस्याभावान्न तत्सूत्रप्राप्तिरित्यत आह **हनस्त चेत्यत्रेति** । 'कलौ पापं कियन्मात्रं हत्यास्तेयादिसंभवमि'त्यादिप्रयोगसद्भावात्सुपीत्यस्यानुवृत्त्या व्याख्यानमज्ञानमूलमिति भावः । ननु यदि हनस्त चेत्यत्र सुप उपपदत्वं नेत्युच्यते तर्हि ब्रह्महत्येत्यत्र कथमुपपदमतिङिन्त्यनेन कुम्भकार इत्यादाविव नित्यसमासविधानमित्यत आह **ब्रह्महत्यादय इति** । आदिपदेनाश्वहत्यादिसंग्रहः । नात्रोपपदमतिङिन्त्यनेन नित्यसमासः किन्तु षष्ठीत्यनेन विहितो ब्रह्मणो हत्या ब्रह्महत्येति वैकल्पिकः षष्ठीसमास एवातो हत्येति रूपाङ्गीकारे न किञ्चिद्बाधकमिति भावः ॥

**श्री०**— ननु हनस्त च हन्तेर्धातोः क्यप्प्रत्ययः स्यान्नकारस्य च तकार इति सूत्रार्थः । तथा च हन्धातोः क्यप्प्रत्यये ककारप्कारयोर्लोपे नकारस्य च तकारे हत्येति रूपं भवति । इदं चानुपपन्नम् । हनस्त चेत्यत्र पूर्वसूत्रात्सुपीत्यनुवृत्तेरत्र च सुबन्तोपपदस्याभावादित्यत आह **हनस्त चेत्यत्रेति** । ननु यद्यत्र सूत्रे सुपीति नानुवर्तते तर्हि ब्रह्महत्येति रूपं कथं सिध्येत् । तत्र सुबन्तस्य ब्रह्मपदस्योपपदस्य सत्त्वादित्यत आह **ब्रह्महत्यादयस्त्विति** । ब्रह्महत्यादयः शब्दा इत्यर्थः । यथा लोके राजन्शब्दः स्वतन्त्रः प्रसिद्धस्तथा पुरुषशब्दश्च तयोः समासे षष्ठीत्यनेन सूत्रेण विहिते सति

राजपुरुष इति भवति । एवं ब्रह्मशब्दः स्वतन्त्रः प्रसिद्धस्तथा हत्याशब्दश्च । 'कलौ पापं कियन्मात्रं हत्यास्तेयादिसम्भवमि'ति प्रयोगात् । तयोः स्वतन्त्रशब्दयोः समासे सति ब्रह्मणो हननं ब्रह्महत्येति ब्रह्महत्यादयः शब्दाः षष्ठीसमासा एव भविष्यन्तीति न तदर्थं सुपीत्यस्यानुवृत्तिः कल्पनीयेति न काऽप्यनुपपत्तिरिति भावः । ननु हत्याया मोक्षहेतुत्वं वदन्तो वादिनो न सन्त्येव तेषां साधकाभावादित्यत आह **सन्ति खल्विति** । चातुर्मास्ययागे पशुहिंसायाः प्रसिद्धत्वाच्चातुर्मास्ययाजिनः पशुहिंसोपेतचातुर्मास्ययागजनितं सुकृतमक्षयं भवति । अक्षयमोक्षफलकं भवतीत्यर्थः । हिंसात्मकस्य हिंसाप्रधानकस्य । तथा च हत्याया इति मूलस्य चातुर्मास्ययागीयपशुहिंसाया इत्यर्थो द्रष्टव्यः ।

**च०**— ननु हनस्तचेति तृतीयाध्यायीयप्रथमपादस्थसूत्रे वदः सुपि क्यप्चेत्यतः सुपीति, भुवो भाव इत्यतो भाव इति चानुवृत्त्यानुसर्गे सुप्युपदे भावे हन्तेः क्यप् नकारस्य तकारश्चेति विधानात्प्रकृते सुबन्तोपपदत्वाभावान्नैतद्योग्योदाहरणं सङ्गच्छत इत्यत आह **हनस्तचेत्यत्रेति** । इत्थं च वामनादीनां काशिकादौ सुपीत्यनुवर्त्य व्याख्या 'कलौ पापं कियन्मात्रं हत्यास्तेयादिसंभवमि'त्याद्यभियुक्तप्रयोगप्रतिसंधाननिबन्धनैवेति ध्वन्यते । अथात्र वदः सुपीत्यतः सुपीत्यस्याननुवृत्तौ ब्रह्महत्येत्यादौ तत्रोपपदं सप्तमीस्थमित्यनेन ब्रह्मण इत्यस्योपपदत्वं दुरुपपादमित्युपपदमतिङिति योगेनाविग्रहत्वसमासघटकपदघटितविग्रहकत्वान्यतररूपनित्यसमासत्वविशेषितोपगतिः कुम्भकार इत्यादाविव कथं सङ्गच्छत इत्याशङ्कां नात्रोक्तदिशा नित्यसमासः किन्तु षष्ठीत्यनेन विभाषाधिकारीयः वैकल्पिकषष्ठीसमास एवाश्वहत्येत्यादिवदिति न क्षतिरित्यपहस्तयते **ब्रह्महत्यादय इति** ॥ **जैनमतनिरासः** ॥

**सु०— अधुना बौद्धाभिमतं मोक्षसाधनं निराकुर्वाणः शून्यवाद्युक्तं तावदपाकरोति न चेति ।**

**अनु०**— न च शून्यपरिज्ञानाच्छून्यभावनयाऽपि च ॥
मोक्षः कथं च न भवेत्

**शून्यमेव तत्त्वं समस्तं तत्राध्यस्तमिति परिज्ञानात् । तथैव शून्यभावनया शून्यध्यानेन । अपिचावन्योन्यसमुच्चये । मोक्षो न भवेदिति संबन्धः । कथं च नेत्यनेनेदमाचष्टे । शून्यपरिज्ञानादिकं मोक्षसाधनमित्यत्र प्रमाणाभावात्तथैव बन्धहानिः स्यादित्युक्तप्रमाणविरोधाच्चेति । यद्वा शून्यपरिज्ञानादिकं किं स्वयमेव मोक्षं साधयति किंवा शून्यप्रसादजननेन । नाद्यः । अचेतनत्वात्पटवत् । न द्वितीयः । शून्यस्य प्रसादगुणानङ्गीकारात् । अन्यथा शून्यत्वव्याघातादिति ।**

**शे०— शून्यध्यानेनेति** । चतुर्विधशून्यध्यानेनेत्यर्थः । **अन्योन्यसमुच्चय इति** । इतरेतरयोग इत्यर्थः । शून्यपरिज्ञानशून्यभावनयोरन्योन्यसापेक्षयोरेव मोक्षरूपैककार्यसंबन्धेन समुच्चयप्रयोजकस्यान्योन्यनिरपेक्षयोरेककार्यसंबन्धस्य प्रकृतेऽसत्त्वेनान्योन्यसमुच्चयस्य बाधितत्वादिति ज्ञेयम् । इदमित्यनेन परामृष्टमेव दर्शयति **शून्यपरिज्ञानादिकमिति** । अन्यदपि तत्परामृष्टं दर्शयति **यद्वेति** । इतीदमनेनाचष्ट इति संबन्धः ।

**प०— अन्योन्यसमुच्चय इति** । द्वयमपि सहितं सदेव मुक्तिहेतुरिति द्योतनाय चापिशब्दावित्यर्थः ॥ **इत्युक्तेति** । संसारबन्धहानिः समर्थपुरुषांतरप्रीतिनिबन्धना बन्धहानित्वात् इति प्रमाणविरोधाच्चेत्यर्थः । कथं च नेत्यस्यार्थान्तरमाह **यद्वा शून्येति** ।

**या०— अन्योन्यसमुच्चय इति** । इतरेतरयोग इत्यर्थः । परस्परसापेक्षत्वेन मोक्षजनकत्वस्यात्र विवक्षितत्वात् । कथञ्चनेत्यस्य प्रकारान्तरेणाभिप्रायमाह **यद्वेति** ।

**श्री०— बौद्धाभिमतमोक्षसाधननिरासः ॥ प्रसादगुणेति** । इच्छारूपगुणेत्यर्थः ।

**सु० —स्यादेतत् । बन्धस्तावत्संवृतिनामकाज्ञाननिमित्तोऽध्यासः । संवृतिश्च विरोधिना शून्यज्ञानेन निवर्त्यते । ततस्तन्मूलो बन्धाध्यासोऽपीति किमचेतनत्वादिकं करिष्यति । न च एवंभावनावैयर्थ्यम् । असंभावनाविपरीतभावनानिवृत्त्यर्थत्वादिति । मैवम् । बन्धस्याध्यस्तताया निरस्तत्वात् ॥ अङ्गीकृत्य दोषमाह** यदीति ।

अनु०— यदीदानीं कथं न सः ॥

शून्यपरिज्ञानादित्यादिकं **सर्वमनुवर्तते** । शून्यज्ञानेन **कथञ्चनेति** शङ्कितरीत्या **मोक्षो भवेदिति यद्युच्यते तर्हि स मोक्षः कथमिदानीं ज्ञानोदयानन्तरक्षणे न भवेत्** । **तदैव भवितव्यमित्याशयः** । **न हि प्रदीपस्य विरोध्यन्धकारनिवर्तने विलम्बोऽस्ति** । **अङ्गीक्रियन्ते च शून्यज्ञानसमनन्तरमपि संसरन्तः पुरुषाः परेण** । **असंभावनाविपरीतभावनासद्भावाद्विलम्ब इति चेत्** । **ते किं संवृतिकार्ये न वा** । **द्वितीये शून्यवदनिवृत्तिरेव** । **आद्ये संवृतौ निवृत्तायां कथं तदनिवृत्तिः** । **अन्यथा संवृत्यनिवृत्तिर्वा तदकार्यत्वमेतयोर्वा स्यात्** । **संवृतेरनिवृत्तौ च कथं ज्ञानविरोधित्वम्** । **पश्चादपि कथं निवृत्तिः** ।

**शे०— न चैवमिति** । शून्यज्ञानेनैव संवृतिनाशसिद्ध्या तन्मूलकबन्धाध्यासनिवृत्तिसिद्धेरिति भावः । असंभावनाविपरीतभावनारूपमोक्षविलम्बहेतुनिवृत्त्यर्थत्वान्न शून्यभावनाया वैयर्थ्यमित्याशयेन परिहरति **असंभावनेति** ॥ **निरस्तत्वादिति** । 'मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधत' इत्यादिनेति

शेषः ॥ **शङ्कितरीत्येति** । शून्यज्ञानेन संवृतौ ध्वस्तायां तन्मूलो बन्धाध्यासोऽपि निवर्तत इति शङ्कितरीत्येत्यर्थः । कुतो मोक्षेण तदैव भाव्यमित्यतो विलम्बे हेत्वभावादित्यभिप्रेत्य हेत्वभावेऽपि विलम्बेऽतिप्रसङ्गमाह **न हीति** । अन्यथा प्रदीपेनापि विरोध्यन्धकारनिवर्तने विलम्बः स्यादविशेषादिति भावः । ज्ञानोदयक्षणानन्तरमेव मोक्षापादनस्यानिष्टापादनतामुपपादयति **अङ्गीक्रियन्ते चेति** । ननु विलम्बहेतुभावाभावाभ्यां विशेषात्प्रसङ्गमूलभूताविशेषासिद्धेः प्रदीपस्य विरोध्यन्धकारनिवर्तने विलम्बाभावेऽपि शून्यज्ञानोदयानन्तरं मोक्षविलम्बो युज्यते इत्याशङ्कते **असंभावनेति** ॥ **अनिवृत्तिरेवेति** । संवृतिकार्यत्वेऽसंभावनाविपरीतभावनयोः संवृतिनिवर्तकशून्यज्ञाननिवर्त्यत्वसंभवेऽपि तदकार्यत्वेन शून्यज्ञाननिवर्त्यत्वम् । अन्यथा तदकार्यशून्यस्यापि शून्यज्ञाननिवर्त्यत्वापातादविशेषादिति भावेनोक्तं शून्यवदिति **आद्य इति** । असंभावनाविपरीतभावनयोः संवृतिकार्यत्वे शून्यज्ञानेन संवृतौ निवृत्तायामुपादाननिवृत्तावुपादेयनिवृत्तेरावश्यकत्वात्संवृतिकार्यस्यासंभावनादेरपि निवृत्तत्वावश्यम्भावान्न तद्बलेन मोक्षविलम्ब इति भावः ॥ **अन्यथेति** । शून्यज्ञानेनासंभावनाविपरीतभावनयोरनिवृत्तावित्यर्थः । संवृतिनिवृत्तौ तत्कार्यभूतासंभावनाविपरीतभावनयोरनिवृत्त्यनुपपत्त्या तदनिवृत्तिं वदता तदुपपादकत्वेन संवृत्यनिवृत्तेरवश्यं वाच्यत्वात्तदनिवृत्तिः स्यादित्यर्थः । असंभावनाद्यनिवृत्तौ संवृत्यनिवृत्तिः स्यादित्येकं बाधकमुक्तम् । बन्धकान्तरमप्याह **तदकार्यत्वमेतयोरिति** । तत्कार्यत्वे तन्निवृत्तौ तदनिवृत्त्यसंभवेन तन्निवृत्तौ तदनिवृत्तेरसंभावनादेः संवृत्यकार्यतामात्रनिबन्धनत्वेन संवृतौ निवृत्तायामप्यसंभावनाद्यनिवृत्तिं वदताऽसंभावनाविपरीतभावनयोः संवृत्यकार्यत्वमवश्यमभ्युपेयं स्यादित्यर्थः । अस्तु तर्ह्यसंभावनादिरूपमोक्षविलम्बहेत्वनिवृत्त्युपपादकतया शून्यज्ञानोदयानन्तरं संवृत्यनुवृत्तिर्वाऽसंभावनादेः संवृत्यकार्यत्वं वेत्यतः संवृत्यनुवृत्तौ तावद्बाधकमाह **संवृतेरनिवृत्तौ चेति** । तथा च शून्यज्ञानस्य संवृत्यविरोधित्वान्न तन्निवर्तकत्वमिति संवृतिनिवृत्तिरूपमोक्षो न स्यादिति भावः । अकार्यत्वपक्षेऽप्यनिष्टमाह **पश्चादपीति** । संवृतितत्कार्ययोरेव शून्यज्ञानविरोधित्वेन तन्निवर्त्यत्वादकार्यत्वे चासंभावनादेः संवृतितत्कार्ययोरन्यतरत्वाभावेन न ज्ञाननिवर्त्यत्वम् । न च निवर्तकान्तरं दृष्टमिष्टं वेति निवर्तकाभावान्न कदाऽपि निवृत्तिः स्यात् । ततश्च मोक्षप्रतिबन्धकस्यासम्भावनादेः सार्वकालिकत्वान्न कदाऽपि मोक्षः स्यादित्यर्थः ।

प०— कथं च नेत्यस्यार्थान्तरं वदन्नेव शङ्कते **स्यादेतदिति** ॥ **निरस्तत्वादिति** । 'मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधत इत्यादिना जिज्ञासासूत्रे शून्यवादिनिरासप्रस्तावे चेति भावः ।

या०— **निरस्तत्वादिति** । 'मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधत' इत्यादाविति शेषः ।

सु० — ननु यथा भवन्मते ज्ञानोदयानन्तरमपि संसारावस्थानं तथाऽस्मन्मतेऽपि किं न स्यादित्यतो वैषम्यमाह परेति ।

अनु० — परप्रसादनेच्छोस्तु विलम्बो नाम युज्यते ॥
पुमिच्छाधीनता नो चेद्विलम्बः किं कृतो भवेत् ॥

अनुष्ठितस्वकृत्यस्यापि तेन परप्रसादनेच्छोस्तु फलावाप्तौ विलम्बो नाम युज्यते । लोके तथा दर्शनात् । मोक्षस्य पुरुषान्तरप्रसादाधीनता नो चेदाश्रीयते केवलं शून्यज्ञानं बन्धविरोधित्वाद्बन्धं निवर्तयतीत्यङ्गीक्रियते तदा ज्ञानोदयानन्तरं मोक्षस्य विलम्बः किं निबन्धनो भवेत् । प्रतिबन्धकत्वेन कल्प्यमानस्य संवृतिकार्यत्वेन ज्ञानविरोधित्वात् । न हि प्रबोधानन्तरं स्वाप्नबन्धनिवृत्तेर्विलम्बोऽस्ति ।

शे० — तेनेति । अनुष्ठितेन स्वकृत्येनेत्यर्थः । नन्वसंभावनाविपरीतभावनारूपमोक्षप्रतिबन्धकनिबन्धन एव मन्मते मोक्षविलम्बो भविष्यतीत्यत आह प्रतिबन्धकत्वेनेति । तथा चासंभावनादेः संवृत्यकार्यत्वे पश्चादपि तदनिवृत्त्यापत्त्याऽनिर्मोक्षत्वप्रसङ्गेन संवृतिकार्यत्वावश्यम्भावाच्छून्यज्ञानविरोधित्वस्थित्या विरोधित्वाच्छून्यज्ञानस्य संवृतिनिवर्तकत्ववदसंभावनादिरूपतत्कार्यनिवर्तकत्वान्न तद्बलादपि मोक्षविलम्बः सम्भवतीति भावः । विरोधिनि शून्यज्ञाने विद्यमानेऽपि बन्धनिवृत्तौ विलम्बाभ्युपगमेऽतिप्रसङ्गं चाह न हीति । अन्यथा प्रबोधानन्तरं स्वाप्नबन्धनिवृत्तावपि विलम्बः स्यादिति भावः

सु० — परप्रसादानपेक्षेष्वपि कार्येषु विलम्बोऽस्ति । त्रिवृन्मूलाभ्यवहरणादौ कृतेऽपि विरेचनादेर्विलम्बदर्शनात् । तत्कथमुच्यते पुमिच्छाधीनताभावे विलम्बो न भवेदिति । तत्राह अन्यत्रापीति ।

अनु० — अन्यत्रापि विलम्बास्तु स्युरीशेच्छानिमित्ततः ॥

मोक्षादन्यत्र । एतावता कालेनेदं भवत्वितीशेच्छैव निमित्तं ततः । कुतोऽत्रेश्वरेच्छानिमित्तं कल्प्यत इत्यत आह अन्यथेति ।

अन्यथा कारणं चेत्स्यात्किं कार्यं नोपजायते ॥

ईश्वरेच्छाया अकल्पने कारणं स्याच्चेत्त्रिवृन्मूलादनादिमात्रं विरेकादेः कारणं यदि भवेत्तदा तस्य सद्भावात्कार्यं विरेकादिकं कस्मान्नोपजायते । उपजायेतैव । कार्यानुदयेनैव सामग्रीवैकल्यं कल्प्यते । न (चादृष्टवै) च दृष्टस्य वैकल्यमत्रास्तीति परमेश्वरेच्छैव कल्प्या । न च धर्मवैकल्यं कल्पयितुं युक्तम् । उत्तरकालमपि कार्यानुदयप्रसङ्गात् । न हि तन्मध्ये

**कश्चिद्धर्मोऽनुष्ठीयते । विद्यमान एव प्रागलब्धवृत्तिर्धर्म इति चेत् । केयं वृत्तिर्नाम । किं कार्यकरणमुत सहकारिसाहित्यम् । नाद्यः । करणमेव कुतो नास्तीति विचार्यमाणत्वात् । द्वितीये तदेव सहकारीश्वरेच्छैवोच्यते । औषधस्य शरीराशयव्याप्त्यभावात्कार्यानुदय इति चेन्न । तस्यापीश्वरेच्छामन्तरेणानुपपत्तेरिति ।**

**शे० — अभ्यवहरणादाविति ।** भक्षणादावित्यर्थः । ननु कार्यानुदयेन सामग्रीवैकल्यस्य कल्पनीयत्वसिद्धावपि न तत्रोक्तविधेच्छायाः कल्पनीयता सम्भवति । दृष्टवैकल्यकल्पनयाऽदृष्टवैकल्यकल्पनया वा कार्यानुदयनिर्वाहादित्यतोऽदृष्टवैकल्यस्याकल्पनीयत्वे तावन्निमित्तमाह **न चेति ।** दृष्टसाकल्यस्य प्रमितत्वान्न तद्वैकल्यं कल्पयितुं शक्यम् । अन्यथा प्रमाणबाधप्रसङ्गादिति भावः । माऽस्तु दृष्टवैकल्यात्कार्यानुदयोऽदृष्टवैकल्यात्तु भविष्यतीत्यत आह **न च धर्मेति ।** ननु त्रिवृन्मूलाभ्यवहरणविरेकयोर्मध्य एव धर्मानुष्ठानान्न त्रिवृन्मूलाभ्यवहरणानन्तरं विरेकप्रसङ्गः । तदा धर्मरूपकारणवैकल्यात् । नाप्युत्तरकाले कार्यानुदयप्रसङ्गः । तदा निमित्तभूतधर्मसाद्गुण्यादित्यतो भवेदेतदेवं यदि तन्मध्ये धर्मोऽनुष्ठीयत इति स्यात् । न च तदस्तीत्याह **न हीति** । धर्मजनकतया सम्प्रतिपन्नक्रियानुष्ठानस्य प्रत्यक्षबाधितत्वान्न मध्ये धर्मानुष्ठानं वक्तुं शक्यमिति भावः ॥ **प्रागलब्धवृत्तिरिति ।** तथा च त्रिवृन्मूलाभ्यवहरणानन्तरं न विरेकप्रसङ्गः नाप्युत्तरकालमपि कार्यानुदयप्रसङ्गः । तस्य लब्धवृत्तित्वेन कार्यकारणत्वसम्भवादिति भावः ॥ **करणमेवेति ।** तत्र च कार्यकरणं नास्तीत्यस्यानुत्तरत्वादिति भावः ॥ **तस्यापीति ।** अन्यथोत्तरत्रापि (शरीराशयेति शरीरस्थानविशेषेत्यर्थः । धातुविशेषेति यावत् । ) व्याप्त्यभावापत्त्या कार्यानुदयप्रसङ्गादिति भावः ।

**प० — त्रिवृदिति ।** औषधविशेषः । न च दृष्टवैकल्यमत्रास्तीत्युक्तमेव शङ्कोत्तराभ्यां व्यनक्ति **न च धर्मेति ।**

**या० — त्रिवृन्मूलेति ।** रेचनीसंज्ञकौषधिविशेषवाचकः । 'त्रिपुटा त्रिवृता त्रिवृत् । त्रिभंडी रेचनी'त्यभिधानात् । **धर्मवैकल्यमिति ।** अदृष्टवैकल्यमित्यर्थः ।

**श्री० — त्रिवृन्मूलेति ।** चित्रमूलरूपौषधविशेषस्य संज्ञा **कल्प्यत इति ।** तावल्लोके कल्प्यत इत्यर्थः ॥ **दृष्टस्येति ।** दृष्टसामग्र्या इत्यर्थः । औषधस्य सानुपानं गृहीतत्वादिति भावः । इच्छैव अदृष्टसामग्रीरूपा । नन्वदृष्टसामग्री ईश्वरेच्छा, कुतः । पुण्यरूपमदृष्टमेव तथाऽस्तु । तथा च तद्वैकल्यमेव कल्प्यत इत्यत आह **न चेति ।** ननूत्तरकाले कार्यं भवत्येव । तदनुकूलादृष्टस्य तदा प्राप्तेरित्यत आह **न हीति ।** तन्मध्ये त्रिवृन्मूलाऽदनानन्तरं विरेकात्पूर्वमित्यर्थः । **शरीराशयेति ।** शरीरस्थानविशेषेत्यर्थः । धातुविशेषेति यावत् ।

सु०— किञ्च प्राप्तसाधनाभिमतानामपि मोक्षविलम्बे सामग्रीवैकल्यं वा प्रतिबन्धक-सद्भावो वाऽन्यैर्वादिभिः कथञ्चिच्छक्यते वक्तुम् । न तु बौद्धेनेत्याशयवानाह कारणे सतीति ।

अनु०— कारणे सति कार्यस्य भावः सुनियतोऽस्य हि ॥

अस्य बौद्धस्य मते कारणे सति कार्यस्योत्पादः सुनियतो न त्वन्येषामिवाप्रतिबद्ध-कारणसामग्र्यां सत्याम् । समर्थस्य क्षेपायोगादिति तद्वचनादिति हिशब्दार्थः । अतः शून्यविज्ञानादिकं न मोक्षसाधनमिति सिद्धम् ॥

शे०— कथञ्चिदिति । जैनादिमते प्राप्तसाधनाभिमतानां प्रतिबन्धकादिसद्भावतत्प्रयुक्तमोक्ष-विलम्बयोर्दूषितत्वात्कथञ्चिदित्युक्तम् ॥ समर्थस्येति । कार्योत्पादनसमर्थस्य क्षेपो विक्षेपो विलम्बस्तस्या-योगादित्यर्थः ।

प०— समर्थस्येति । कार्योत्पादनशक्तस्य क्षेपो विक्षेपो विम्लवो न युक्त इत्यर्थः ॥ शून्य-विज्ञानादिकमिति । आदिपदेन शून्यभावनाग्रहः । शून्यवादिनिरासः ॥

या०— समर्थस्येति । कार्योत्पादसमर्थस्य क्षेपो विक्षेपो विलम्बस्तस्यायोगादित्यर्थः ॥

सु०— विज्ञानवाद्युक्तं मोक्षसाधनं दूषयति विज्ञानेति ।

अनु०— विज्ञानवादिनश्चैव विज्ञानाद्वैतवेदनात् ॥
विज्ञानभावनाच्चैव मोक्षो न घटते क्वचित् ॥

द्वितैव द्वैतम् । स्वार्थिकोऽण् । न द्वैतमद्वैतम् । विज्ञानस्याद्वैतं विज्ञानाद्वैतम् । विज्ञानमेकमेव तत्त्वं न ततोऽन्यदस्तीति वेदनात् । विज्ञानभावनात् विज्ञानाद्वैतध्यानात् । आद्यश्चशब्दो वादिसमुच्चये । द्वितीयः साधनसमुच्चये । एवशब्दो नैव घटत इत्याद्यः संबध्यते । द्वितीयस्तु साधननियमार्थः । विज्ञानवादिन इति तेनै(ताभ्यां)व ताभ्यां साधनाभ्यां भवतीति प्रतिपादितः । सामर्थ्याद्विज्ञानाद्वैतवेदनादिकं विज्ञानवादिनोक्तं मोक्षसाधनं नैवोपपद्यत इत्यर्थः । यद्वा विज्ञानवादिन इति तेन प्रतिपादिताद्विज्ञानाद्वैतवेदनादिकान्मोक्षो नैव घटते नैव संपद्यत इति योजना । कुत इत्यतः पूर्वोक्तं सर्वं स्मारयितुं क्वचित्काले ह्यसौ, न तु ज्ञानोदयोत्तरकाल एव भवतीत्युक्तम् ।

शे०— द्वितैवेति । द्वयोर्भावो द्विता भेद इत्यर्थः ॥ स्वार्थिक इति । द्विताशब्दात्प्रज्ञादि-त्वात्स्वार्थिकेऽण्प्रत्यये कृते णित्स्वादादिवृद्धौ यस्येति चेत्याकारलोपे द्वैतशब्दनिष्पत्तिरिति भावः ॥ वादि-समुच्चय इति । न केवलं शून्यवादिनः किन्तु विज्ञानवादिनश्चेति वादिसमुच्चय आद्यश्चशब्द

इत्यर्थः ॥ **साधनसमुच्चय इति** । अत्र समुच्चयपदमितरेतरयोगपरं ज्ञेयम् । विज्ञानाद्वैतवेदनविज्ञानाद्वैतध्यानरूपसाधनयोः परस्परापेक्षयोरेव मोक्षरूपैककार्यसम्बन्धादितरेतरयोगे द्वितीयश्चशब्द इत्यर्थः । **साधननियमार्थ इति** । विज्ञानाद्वैतवेदनादिकमेव मोक्षसाधनं नान्यदिति मोक्षसाधननियमार्थ इत्यर्थः । **तेनेति** । अनेन विज्ञानवादिन इति षष्ठी व्यत्ययेन तृतीयार्थ इत्युक्तं भवति । भवतीति प्रतिपादित इति शेषपूरणेनान्वयदोषः परिहृतो भवति । तत्तद्वाद्युक्तमोक्षसाधननिरासप्रस्तावे विज्ञानवाद्युक्तमोक्षसाधनस्यैवानुपपन्नताया वक्तव्यत्वान्मोक्षानुपपन्नत्वोक्तिरसङ्गतेत्यतस्तथोक्तेस्तात्पर्यमाह **सामर्थ्यादिति** । अस्मिन्पक्षे सामर्थ्यादिकमाश्रयणीयं भवतीत्यपरितोषात्तदुक्तसाधननिषेधकतया वाक्ययोजनामाह **यद्वेति** । **सर्वं स्मारयितुमिति** । अयमाशयः । यदि विज्ञानाद्वैतवेदनान्मोक्षो भवतीत्युच्यते तर्हि ज्ञानोदयानन्तरमेव मोक्षप्रसक्त्या तत्र विलम्बाभावप्रसङ्गात् । प्रदीपस्य विरोध्यन्धकारनिवर्तने विलम्बादर्शनात् । अङ्गीक्रियन्ते च विज्ञानाद्वैतवेदनानन्तरं संसरन्तः पुरुषाः परेण । असम्भावनाविपरीतभावनासद्भावात् विलम्ब इति चेत् । ते किं संवृतिकार्ये न वा । नेति पक्षे विज्ञानवदनिवृत्त्यापत्त्याऽनिर्मोक्षत्वप्रसङ्गः । आद्ये संवृतौ निवृत्तायां कथं तदनिवृत्तिरन्यथा संवृत्यनिवृत्तिर्वा तदकार्यत्वमेतयोर्वा स्यात् । संवृत्यनिवृत्तौ च कथं ज्ञानविरोधित्वं पश्चादपि कथं तदनिवृत्तिरित्यादिकं सर्वं स्मारयितुं क्वचिदित्येकदेशमात्रोत्कीर्तनं कृतमिति ।

**प० — द्वितैवेति** । भेद इत्यर्थः । द्वयोर्भावो द्वितेति व्युत्पत्तेः ॥ **स्वार्थिकेति** । प्रज्ञादिभ्यश्चेति सूत्रेण स्वार्थे अण्प्रत्यये यस्येति लोपादिवृद्ध्योर्द्वैतमिति सिद्धेरिति भावः ॥ **साधननियमेति** । विज्ञानात् द्वैतवेदनविज्ञानभावने एव साधने मुक्तेर्नान्यदिति नियमार्थ इत्यर्थः । विज्ञानवादिन इति षष्ठीप्रतिपाद्यप्रतिपादकभावरूपसंबन्धार्थेत्युपेत्य फलितार्थमाह **विज्ञानवादिन इतीत्यादिना** । मुक्तिहेतुत्वनिरासप्रस्तावे मोक्षनिरासो न युक्त इत्यत आह **सामर्थ्यादिति** । प्रकरणबलादित्यर्थः ॥ पूर्वं विज्ञानवादिन इत्येतन्मोक्षान्विततया व्याख्याय साधनान्विततया व्याचष्टे **यद्वेति** ॥ **पूर्वोक्तमिति** । 'यदीदानीं कथं न स' इत्यादिनोक्तमित्यर्थः । क्वचिदित्यनुवादः काल इति व्याख्या । **विज्ञानवादिनिरासः** ॥ विज्ञानादिशब्दार्थः समयपादे व्यक्तः । उक्तमार्गेणेत्यनुवादः क्षणिकत्वेनेति व्याख्या ॥

**या० — द्वितैवेति** । द्वयोर्भावो द्विता भेद इत्यर्थः ।

**श्री० — द्वितैतेति** । द्वयोर्भावो द्विता भेद इत्यर्थः । अद्वैतमेकत्वम् ॥ **सामर्थ्यादिति** । मोक्षसाधननिराकरणप्रसङ्गादित्यर्थः ॥ **क्वचित्काले ह्यसाविति** । ज्ञानोदयानन्तरं कालविशेषे विलम्बेन भवतीत्यर्थः ।

**सु० — वैभाषिकसौत्रान्तिकाभिमतं मोक्षसाधनं पराचष्टे** अन्तरिति ।

**अनु० —** अन्तर्ज्ञानस्य बाह्ये च क्षणिकत्वस्य वेदनात् ||
भावनाच्चोक्तमार्गेण मानाभावान्न मुच्यते ||

शरीरान्तःस्थितस्य ज्ञानस्य । उपलक्षणमेतत् । **विज्ञानवेदनासंज्ञासंस्काराणां बाह्ये स्थितस्य रूपस्य च यत्क्षणिकत्वं तस्य वेदनात् । उक्तमार्गेण क्षणिकत्वेन । न मुच्यते पुरुषः । कुतोऽत्रार्थे मानाभावात् । अकृताभ्यागमकृतविप्रणाशादयो दोषाः स्फुटा एवेति नोक्ताः ||**

**शे० —** विज्ञानस्येव वेदना संज्ञा संस्काराणामपि शरीरान्तःस्थितत्वाविशेषात्क्षणिकत्वेन तद्विज्ञानध्यानयोरिव वेदनासंज्ञासंस्काराणामपि ज्ञानध्यानयोर्मोक्षसाधनत्वस्याप्यविशिष्टत्वादन्तर्ज्ञानस्येति शरीरान्तःस्थिततया विशिष्यविज्ञानग्रहणमनुपपन्नमित्यतोऽत्र विज्ञानपदस्यान्तरत्वावच्छिन्नस्कन्धमात्रोपलक्षणत्वेन विज्ञानमात्रपरत्वाभावान्नानुपपत्तिरित्याशयेनाह **उपलक्षणमेतदिति** । शक्यलक्ष्यार्थकथनपूर्वकं वाक्यार्थमाह **विज्ञानेत्यादि** । अत्र निर्विकल्पकं ज्ञानं विज्ञानं दुःखं वेदना कुण्डली गौर्गच्छतीत्यादि सविकल्पकं ज्ञानं संज्ञा रागद्वेषमोहादिरूपः समनन्तरप्रत्ययः संस्कार इति विवेकोऽवधेयः । प्रपञ्चस्तु बौद्धपरीक्षायामेव कृतो द्रष्टव्यः || **बाह्ये स्थितस्य रूपस्य चेति** । अत्र रूपशब्दो विषयेन्द्रियाद्यात्मना स्थितरूपरसगन्धस्पर्शशब्दात्मकपरमाणुपरः || **अकृतेति** । सन्तन्यमानज्ञानरूपस्यात्मनः क्षणिकत्वेन कर्तृभोक्त्रोरेकत्वाभावादिति भावः । आदिपदेन प्रमाप्रमारूपानुमानागमप्रत्यभिज्ञालक्षणसर्वव्यवहारविलयप्रसङ्गपरिग्रहः ।

**प० —** मुच्यत इत्यत्र कर्माप्रतीतेराह **पुरुष इति** । क्षणभंगुरस्य कथं मोक्ष इत्यर्थः || **अकृताभ्यागमेति** । साधनानुष्ठातुः क्षणिकत्वेन नाशात् अकृतसाधनस्य मोक्षः कर्तुः कृतस्य पुण्यस्य नाशः क्षणिकत्वपक्षे साधनाद्यनुष्ठानाद्ययोगः इत्यादयो दोषा इत्यर्थः || **वैशेषिकसौत्रान्तिकनिरासः ||**

**या० — अकृताभ्यागम इति** । तन्मते सन्तन्यमानं ज्ञानमेवात्मा तस्य च क्षणिकत्वेन कर्तृभोक्त्रोरेकत्वाभावादिति भावः ।

**श्री० —** संज्ञानं कायव्यूहेन भोगः ।

**च० — वैभाषिकसौत्रान्तिकमतनिरासः ||**

सु० — एवं वेदबाह्यमतानि निराकृत्य वैदिकानि निराकुर्वाणः सांख्योक्तं मोक्षसाधनं तावदनुवदति प्रकृतेरिति ।

अनु० — प्रकृतेः पुरुषस्यापि विवेको मुक्तिसाधनम् ॥

इति सांख्याः

प्रकृतेरन्तःकरणादिरूपायाः पुरुषस्य स्वात्मनः विवेकः स्वरूपतो धर्मतश्च भेददर्शनं सांख्याः प्राहुः ॥ दूषयति न चेति ।

न चैतस्मिन्मानम्

एतस्मिंश्चार्थे मानं नास्ति । कथं नास्ति । 'य एनं वेत्ति पुरुषं प्रकृतिं च गुणैः सह । सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते । क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा । भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परमि'त्याद्यागमानां सत्त्वादित्यत उक्तम् ईशाप्रसादत इति ।

ईशाप्रसादतः ॥

ईशप्रसादेन विना केवलं प्रकृतिपुरुषविवेको मोक्षसाधनमित्यस्मिन्नर्थे मानं नास्तीत्यर्थः । अयमभिसन्धिः । भवत्येव प्रकृतिपुरुषविवेको मोक्षसाधनम् । किन्तु भगवत्प्रसादसाधनत्वेन । प्रकृतिपुरुषविवेके हि पुरुषस्य वैराग्यं संपद्यते । विरक्तस्य भक्त्यादिद्वारा भगवत्प्रसाद इति । तदर्थानि चैतानि वाक्यानि । निरीश्वरेण तु सांख्येन साक्षान्मोक्षसाधनत्वं प्रकृतिपुरुषविवेकस्योच्यते । न च तस्मिन्विशेषे प्रमाणमस्तीति ।

नन्वेतानि वाक्यानि प्रकृतिपुरुषविवेकस्य मोक्षसाधनत्वं तावत्प्रतिपादयन्ति । न च पारम्पर्यकल्पने कारणमस्ति । अत एतेषामेव साक्षात्साधनत्वे प्रामाण्यमित्यत आह श्रुतय इति ।

श्रुतयः स्मृतयश्चैव यदेशस्य प्रसादतः ॥

वदन्ति नियमान्मुक्तिं तमृतेऽतः कुतो भवेत् ॥

यस्य प्रसादादित्याद्याः श्रुतयः । अज्ञानां ज्ञानदो विष्णुरित्याद्याश्च स्मृतयः । एवशब्दस्य न प्राकृतपुरुषवाक्यानीत्यर्थः । यदा यस्मात् । नियमात्साधनान्तरव्यवच्छेदेन । नापरेण । स एवैक इति वचनात् । तं प्रसादम् । भवेन्मुक्तिः । बलवद्बाधकसद्भावात् लाङ्गलेन वयं जीवाम इतिवत् पारम्पर्यपरत्वमेव तेषां वाक्यानां युक्तमिति भावः ॥

शे० — ननु च गत्यन्तराभावादुदाहृतवचनानामेव तत्र प्रमाणत्वात्कथं प्रमाणाभाव इत्यत आह अयमभिसन्धिरिति । मूल एवशब्दः प्रमाणान्तरव्यवच्छेदार्थ इति शङ्कानिरासाय तत्तात्पर्यमाह एव-

**शब्दस्येति** । यदाशब्दस्तु हेत्वर्थे कालार्थे चापि भण्यतेति भागवततात्पर्यं मनसि निधाय ह ॥ **यस्मादिति** । साधनान्तरव्यवच्छेदस्याश्रौतत्वादिकं परिहरति **नापरेणेत्यादि** ।

प० — चशब्दः समुच्चय इत्युपेत्याह **एतस्मिंश्चार्थ इति** । नापरेणेत्याद्या इत्यत्राद्यशब्देन 'तत्प्रीणनान्मोक्षमाप्नोति सर्वः । यमेवैष वृणुत इत्यादेः संग्रहः । द्वितीयेन तु 'बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराडि'त्यादेर्ग्रहः । नियमादित्यनूद्यार्थमाह **साधनान्तरव्यवच्छेदेनेति** । अत्रार्थे प्रमाणतया प्रागुक्तश्रुतिस्मृतिशेषौ क्रमादुदाहरति **नापरेणेति** । तमित्यनुवादः प्रसादमिति व्याख्या । विपरिणामेन मुक्तिपदस्यान्वयमाह **भवेन्मुक्तिरिति** ॥ **बलवद्बाधकेति** । नापरेणेत्याद्यन्यव्यवच्छेदरूपबाधकेनेत्यर्थः ॥ **सांख्यनिरासः** ॥

च० — **सांख्यमतनिरासः** ।

सु० — **वैशेषिकाद्युक्तं मोक्षसाधनं निराकरोति** कणादेति ।

**अनु० —** कणादयोगाक्षपादा अपि

**योगशब्देन योगानुशासनस्य प्रणेता पतञ्जलिरुपलक्ष्यते । अनुपपन्नभाषिण इति शेषः । न केवलं सांख्याद्या इत्यपेरर्थः ।**

शे० — समयकर्तृपरपूर्वोत्तरपदसंदष्टत्वाच्छास्त्रवाचकोऽपि योगशब्दः शास्त्रकर्तृपर इति भावेनाह **योगशब्देनेति** ।

---

**सु० —नन्वेते त्रयोऽपीश्वरप्रसादसाध्यां मुक्तिं ब्रुवते ॥ तथा हि वैशेषिकेण यद्यपि द्रव्यादिपदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुरित्युक्तम् । तथाऽपि न साक्षात् । किन्तु धर्मद्वारैव । अन्यथा यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति सूत्रविरोधात् । न च धर्मोऽपि साक्षान्मोक्षहेतुः । अपि त्वीश्वरप्रसादसहकृत एव । यथोक्तम् । तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेवेति । स्पष्टं च 'तुष्टैर्मोचयतो बद्धानतुष्टैर्बध्नतः पुनः । कारागारमिदं विश्वं यस्य वन्दे तमीश्वरमि'ति ।**

शे० —**साधर्म्यवैधर्म्येति** । अनुवृत्तो धर्मः साधर्म्यं व्यावृत्तधर्मस्तु वैधर्म्यं ताभ्यां तत्त्वज्ञानमिति विग्रहः । द्रव्यादीनां पदार्थत्वादिनाऽनुवृत्तधर्मेण ज्ञातानां व्यावृत्तधर्मेण द्रव्यत्वादिना ज्ञानं पृथिव्यादीनां च द्रव्यत्वादिनाऽनुवृत्तधर्मेण ज्ञातानां पृथिवीत्वादिना व्यावृत्तधर्मेण ज्ञानमेव साधर्म्यवैधर्म्याभ्यां द्रव्यादीनां तत्त्वज्ञानं तदेव च निःश्रेयसहेतुरिति वैशेषिकैरुक्तमित्यर्थः॥ द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुरिति प्रशस्तपादभाष्यकृद्वचनादिति भावः । ननु भाष्यकृदुक्तं

तत्त्वज्ञानस्य निःश्रेयसहेतुत्वं यथाश्रुतमेव विवक्षितमस्तु किं परम्पराकल्पनयेत्यतो धर्मस्य निःश्रेयसहेतुताया यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति वैशेषिकद्वितीयसूत्रेऽभिधानाद्भाष्यकारीयस्य निःश्रेयसं प्रति तत्त्वज्ञानहेतुतावचनस्य साक्षात्तदभिप्रायकत्वे तत्सूत्रविरोधापत्त्या तदनुरोधेन भाष्यकृद्वचनस्य धर्मद्वारैव तत्त्वज्ञानस्य निःश्रेयसहेतुत्वाभिप्रायकत्वसिद्धेरित्याह **अन्यथेति ॥ यतोऽभ्युदयेति** । यद्यपि किरणावलीकारेण तत्त्वज्ञानस्य दृष्टे मिथ्याज्ञानध्वंसरूपे व्यापारे सम्भवति नादृष्टस्य तद्व्यापारत्वकल्पनमुचितम् । तथा च यतोऽभ्युदयसिद्धिस्तत्त्वज्ञानसिद्धिरभ्युदयोऽत्र तत्त्वज्ञानमिति वर्धमानोक्तेः स धर्म इत्येव लक्षणं पारम्पर्येण निःश्रेयसेऽप्यस्य तत्प्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपं हेतुत्वमस्तीति दर्शयितुमेवात्र निःश्रेयसग्रहणमितीदं सूत्रमन्यथाव्याख्यातमिति नास्योक्तार्थव्यवस्थापकतयोदाहरणं युक्तमित्याभाति । तथाऽप्यभ्युदयस्तत्त्वज्ञानं निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिस्तदुभयं यतः स धर्मोऽभ्युदयनिःश्रेयसेत्यत्राभ्युदयद्वारकं निःश्रेयसमिति मध्यमपदलोपी समासः पञ्चमीतत्पुरुषो वा । ततश्च धर्मात्तत्त्वज्ञानं तस्य चाशुतरविनाशितया व्यापारभूतो धर्मस्तत्त्वज्ञानसाध्यस्तेन च मोक्ष इत्येवं तत्त्वज्ञानमोक्षौ यतो भवतः स धर्म इत्येतत्सूत्रस्य चिरन्तनव्याख्यानमपेक्ष्यात्रोदाहरणमित्यवधेयम् ।

नन्वेवं तत्त्वज्ञानस्य धर्मद्वारा निःश्रेयसहेतुत्वसिद्धावपि न भवदभिमतार्थसिद्धिस्तत्त्वज्ञानजन्यधर्मेणैव मोक्षसिद्धौ तदर्थतया प्रसादस्यानपेक्षणेन मोक्षस्येश्वरप्रसादसाध्यत्वासिद्धेरित्यतस्तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेवेत्युत्तरभाष्ये ईश्वरप्रसादसहकृतधर्मस्यैव निःश्रेयसहेतुत्वावगत्या केवलधर्मस्यैव निःश्रेयसहेतुत्वे तद्विरोधेनेश्वरप्रसादसहकृतधर्मस्यैव निःश्रेयसहेतुत्वसिद्धेरभिमतसिद्धिरित्याह **न च धर्मोऽपीति ।** साक्षात्केवल इत्यर्थः ॥ **तच्चेश्वरेति** । तत्त्वज्ञानं निःश्रेयसं चेश्वरस्य चोदनोपदेशो वेद इति यावत् । तेनाभिव्यक्तात्प्रतिपादिताद्धर्मादेवेत्यर्थः । अत्र धर्मोपदेष्टृत्वकथनादर्थतः प्रसादस्य लाभ इति द्रष्टव्यम् ।

ननु भाष्यकारीयं तत्त्वज्ञानस्य निःश्रेयसहेतुत्ववचनं न धर्मद्वारा तत्साधनत्वपरतया व्याख्यातव्यम् । साक्षात्तत्साधनाभिप्रायकत्वेऽप्यविरोधात् । न चैवम् । यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति वैशेषिकद्वितीयसूत्रविरोधः स्यादिति वाच्यम् । तत्र सामान्यतो धर्मस्य निःश्रेयसहेतुत्वमभिधाय तत्कथमित्यपेक्षायां प्रवृत्ते धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमिति धर्मविशेषप्रसूतादिति तत्त्वज्ञानविशेषणात् निवृत्तिलक्षणधर्मेण तत्त्वज्ञानं तेन निःश्रेयसमिति तत्त्वज्ञानद्वारा धर्मस्य निःश्रेयसहेतुत्वप्रतिपादनात्तदनुसारेण द्वितीयसूत्रेऽपि तथैव धर्मस्य निःश्रेयसहेतुत्वाभिधायकत्वसिद्ध्या तद्विरोधाभावात् । आशुतरविनाशित्वेऽप्यात्मतत्त्वज्ञानस्य संसारनृत्तशालामूलस्तम्भायमानात्मविषयकमिथ्याज्ञाननिवर्तकतया तदितरपदार्थतत्त्वज्ञानस्य चात्मतत्त्वज्ञानसाधनतया साक्षात्परम्परासाधारणतत्प्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपप्रयोजकत्वरूपस्याहान्या व्यापारत्वेन

धर्मकल्पनानवकाशात् । तथा च नोक्तरीत्या तत्त्वज्ञानस्य धर्मद्वारा निःश्रेयसहेतुत्वसिद्धिः ॥ अस्तु वा सा यथाकथञ्चित् । किं तावताऽप्यभ्यर्थ्यते । न च धर्मोऽपि न केवलो मोक्षहेतुः किन्त्वीश्वर-प्रसादसहकृत एवेति मुक्तेरीश्वरप्रसादसाध्यत्वसिद्धिरेवं सति स्यादिति वाच्यम् । धर्मस्य केवलस्यैव निःश्रेयसहेतुत्वसंभवेनेश्वरप्रसादसहकृतत्वस्य नियामकविशेषाभावेनाविवक्षणीयत्वात् । न च तच्चेश्वर-चोदनाभिव्यक्तधर्मादेवेत्युत्तरभाष्यवचनमेव तत्र नियामकमित्युक्तमिति वाच्यम् । ईश्वरस्य चोदनोपदेश इति यावत्तेनाभिव्यक्तात्प्रतिपादितान्निवृत्तिलक्षणाद्धर्मादेव तत्त्वज्ञानमुत्पद्यत इति निःश्रेयसहेतुतत्त्वज्ञानस्य निवृत्तिलक्षणधर्मसाध्यत्वमात्रस्य तत्राभिमततया प्रसादसहकृतधर्मस्य निःश्रेयससाधनत्ववर्णनस्य तत्रत्य-पूर्वोत्तरवाक्यविरुद्धत्वेनानुचितत्वात् । ततश्च तत्त्वज्ञानस्य मिथ्याज्ञानध्वंसद्वारा मोक्षप्रयोजकत्वस्यैव वैशेषिकाभिमतत्वान्मोक्षार्थं नेश्वरप्रसादस्यापेक्षायामेतद्वाक्योदाहरणं युक्तमित्यत आह **स्पष्टं चेति** । गुणकिरणावल्यामुदयनोक्तमिति शेषः ।

तद्वाक्यमेव पठति **तुष्टेरिति** । अत्र तुष्टिरनुरक्तिः । अतुष्टिर्द्वेषः । तदुभयमपि मोच-नीयबन्धनीययोरीश्वरविषयमेव । 'परात्परतरं यान्ति नारायणपरायणाः । न ते तत्र गमिष्यन्ति ये द्विषन्ति जनार्दनमि'ति स्मृतेः । यद्वा मोचनेच्छाबन्धनेच्छे तुष्ट्यतुष्टी ईश्वरस्यैव । तदिच्छाया एकत्वेऽपि तत्तत्फलोपधानादिसिसृक्षासञ्जिहीर्षावदौपाधिको भेदः । सहकारिसमवधानभेदाच्च तस्याः कार्यभेदजनकत्वात् । अत्र बध्नतः पुनरित्यनेन बन्धस्यावृत्त्याऽऽत्ममोक्षानन्तरं बन्ध इत्यर्थे विरोधात् अतुष्टेः पुनरित्येव योजना । तथा च व्यवच्छेदार्थः पुनःशब्दो नावृत्त्यर्थ इति नोक्तदोषः । यद्वा बध्नतः पुनरित्यनेन बन्धस्य निरन्तरावृत्तिरुच्यते । न मोक्षोत्तरतेति न दोषः । मुक्तिबन्धौ दुःखसन्त-त्यन्तोच्छेदतदनुवृत्ती । तयोश्च शरीरावच्छेद्यत्वात् । विश्वपदेन भोगायतनं शरीरमेव कारागारेण रूप्यते । न च तयोः सादृश्यप्रतिपत्त्यर्थं तयोरेव विशेषणमुचितम् । अन्यत्र हि कारागृहे प्रभोरेव तोषातोषाभ्यां मोक्षबन्धनदर्शनात्प्रकृतेऽपीश्वरव्यापारायत्तत्वात्तत्साम्यात्तद्विशेषणस्यैवोचितत्वात् । 'कारा बन्धे निश्चये च बलौ यत्ने पशावपि । तुषारशैलेऽपि पुमान्स्त्रियां भूम्नि प्रसेचके । सुवर्णे कारिकायां च बन्धनागारबन्धयोरि'ति मेदिनीकारकोशात्कारा बन्धनं तदर्थं गृहं कारागृहमिति श्लोकार्थः । अत्र तुष्टिशब्दस्यानुरक्त्यर्थत्वे यद्यप्यस्य श्लोकस्य न प्रकृतोपयोगो दृश्यते । तथाऽपि मोचनेच्छार्थत्वेऽस्त्येव प्रकृतोपयोगः । तदिच्छाया एव प्रसादत्वादित्यवधेयम् ।

स०— **तुष्टेरिति** । तुष्टिरनुरक्तिः । अतुष्टिर्द्वेषः । तदुभयमपि बन्धनीयमोचनीययोरीश्वर-विषयमेव । 'परात्परतरं यान्ति नारायणपरायणाः । न ते तत्र गमिष्यन्ति ये द्विषन्ति जनार्दनम्'

इति स्मृतेः । यद्वा मोचनेच्छाबन्धनेच्छे तुष्ट्यतुष्टी । ईश्वरस्यैव तदिच्छापादकत्वेपि तत्फलोपधाना तु सिसृक्षा सञ्जिहीर्षावदौपाधिकोभेदः सहकारिभेदसमवधानाच्च तस्याः कार्यभेदजनकत्वात् अत्र बध्नतः पुनरित्यनेन बन्धस्यावृत्त्याऽऽत्ममोक्षानन्तरं बन्ध इत्यर्थे विरोधात् अतुष्टेः पुनरिति योजना । तथाच व्यवच्छेदार्थः पुनःशब्दो नावृत्त्यर्थ इति नोक्तदोषः । बध्नतः पुनरित्यनेन बन्धस्य निरन्तरावृत्तिरुच्यते । न मोक्षोन्तरेति नोक्तदोषः । मुक्तिबन्धो दुःखसन्तत्यत्यन्तोच्छेदतदनुवृत्ती । तयोश्च शरीरावच्छेद्यत्वाद्विश्वपदेन भोगायतनं शरीरमेव कारागारेण रूप्यते । न च तयोः सादृश्यप्रतिपादनार्थं तयोरेव विशेषणमुचितम् । अन्यत्र कारागृहे प्रभोरेव तोषातोषाभ्यां मोक्षबन्धदर्शनात् प्रकृतेपीश्वरव्यापाराधत्तत्वात् तत्साम्यापत्त्या तद्विशेषणस्यैवोचितत्वात् । कारा बन्धे निश्चये च बलौ यत्ने पशावपि । तुषारशैलेपि पुमान् स्त्रियां भूम्नि प्रसेचके । सुवर्णकारिकायां च बन्धनाकारबन्धयोरिति मेदिनीकारकोशात् । काराबन्धनं तदर्थगृहं कारागृहं यथा कारागृहे निजिनति वासवेत्यत्र कारारूपं गृहं कारागृहं विशेषमुपादाय च सामान्यपदेनोपादानं विशेषणताविशेषं प्रतिपादयति । व्युत्पत्तेरित्यत्रापि विशेषप्रतिपत्तये गृहं पदमित्यन्ये ।

प०— **साधर्म्यवैधर्म्यतत्वज्ञानमिति** । द्रव्यत्वादिसाधर्म्येण पृथिवीत्वादिवैधर्म्येण च पदार्थानां तत्वज्ञानमित्यर्थः । यद्वा द्रव्यत्वपृथिवीत्वादिसाधर्म्यवैधर्म्यरूपं यत्तत्वं तज्ज्ञानमित्यर्थः ॥ **ईश्वरचोदनाभिव्यक्तादिति** । ईश्वरेच्छाकृतविधिवाक्यादिरूपवेदबोधितादित्यर्थः । इच्छाप्रसाद **इति** चानर्थान्तरमिति भावः ॥ **स्पष्टं चेति** । उदयनवाक्यमित्यर्थः । तुष्टेः प्रसादादित्यर्थः ।

या०— **साधर्म्यवैधर्म्येति** । अनुवृत्तधर्मः साधर्म्यं व्यावृत्तधर्मो वैधर्म्यं ताभ्यामित्यर्थः । द्रव्यादीनां हि पदार्थत्वादिनाऽनुवृत्तधर्मेण ज्ञातानां द्रव्यत्वादिना व्यावृत्तधर्मेण ज्ञानम् । तथा पृथिव्यादीनां द्रव्यत्वेनानुवृत्तधर्मेण ज्ञातानां पृथिवीत्वादिना व्यावृत्तधर्मेण ज्ञानमित्यादिसाधर्म्यवैधर्म्याभ्यां ज्ञानं तेषां तत्त्वज्ञानमिति द्रष्टव्यम् । पदार्थानां सामान्यतो विशेषतश्च ज्ञानं तेषां तत्त्वज्ञानमित्यत्र तात्पर्यम् । सामान्यलक्षणं साधर्म्यं विशेषलक्षणं वैधर्म्यमित्यप्याहुः ॥ **यतोऽभ्युदयेति** । अभ्युदयस्तत्त्वज्ञानम् । निःश्रेयसमात्यन्तिकी दुःखनिवृत्तिस्तदुभयं यतः स धर्मः । अभ्युदयद्वारकं निःश्रेयसमिति मध्यमपदलोपी समासः पञ्चमीतत्पुरुषो वा । ततश्च धर्मात्तत्त्वज्ञानं तस्य चाशुतरविनाशितया व्यापारभूतो धर्मस्तत्त्वज्ञानसाध्यस्तेन च मोक्ष इत्येवं तत्त्वज्ञानमोक्षौ यतो भवतः स धर्म इति सूत्रार्थः । यद्यप्युदयनेन तत्त्वज्ञानस्य दृष्टे मिथ्याज्ञानध्वंसरूपव्यापारे सम्भवति नादृष्टं तद्व्यापारतया कल्पनीयम् । तथा च यतोऽभ्युदयसिद्धिः स धर्म इत्येव लक्षणम् । पारम्पर्येण निःश्रेयसेऽप्यस्य हेतुत्वं दर्शयितुं निःश्रेयसग्रहणमितीदं सूत्रमन्यथा व्याख्यातम् । तथाऽपि चिरन्तनव्याख्यानमपेक्ष्यात्रोदाहरणमिति ध्येयम् ॥ **तच्चे-**

**श्वरेति ।** तत्तस्यापरोक्षज्ञानं निःश्रेयसं चेश्वरस्य चोदनोपदेशो वेद इति यावत् । तेनाभिव्यक्तात्प्रतिपादिताद्धर्मादित्येवेत्यर्थः । अत्र धर्मोपदेशकर्तृतया प्रसादोऽर्थाल्लभ्यत इति द्रष्टव्यम् । अत एवाह **स्पष्टं चेति ॥ तुष्टेरित्यादि ।** अत्रेश्वरे तुष्ट्यतुष्टिशब्दोदितयोः सुखदुःखयोर्वैशेषिकैरनङ्गीकारात्कथमिदमित्याशङ्कापरिहाराय वर्धमानेनायं श्लोको व्याख्यातः । तुष्टिरनुरक्तिरतुष्टिर्द्वेषस्तदुभयमपि मोचनीयबन्धनीययोरीश्वरविषयमेव । परात्परतरं यान्ति नारायणपरायणाः । न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरमिति स्मृतेः । यद्वा मोचनेच्छाबन्धनेच्छे तुष्ट्यतुष्टी ईश्वरस्यैव । तदिच्छाया एकत्वेऽपि तत्तत्फलोपधानात्सिसृक्षासञ्जिहीर्षयोः औपाधिको भेदः । सहकारिसमवधानाच्च तस्याः कार्यभेदजनकत्वम् । अत्र बध्नतः पुनरित्यनेन बन्धस्यावृत्त्या मोक्षानन्तरं बन्ध इत्यर्थे विरोधादतुष्टेः पुनरिति योजना । तथा च व्यवच्छेदार्थः पुनःशब्दो नावृत्त्यर्थं इति नोक्तदोषः । यद्वा बध्नतः पुनरित्यनेन बन्धस्य निरन्तरावृत्तिरुच्यते न मोक्षोत्तरतेति नोक्तदोषः । मुक्तिबन्धौ दुःखसन्तत्युच्छेदतदनुवृत्ती । तयोश्च शरीरावच्छेद्यत्वाद्विश्वपदेन भोगायतनं शरीरमेव कारागारेण रूप्यते । 'कारा बन्धे निश्चये च बली यत्ने पशावपि । तुषारशैलेऽपि पुमान् स्त्रियां सूतिप्रसेचके । सुवर्णकारिकायां च बन्धनागारबन्धयोरिति मेदिनीकारकोशात्कारा बन्धनं तदर्थं गृहं कारागृहमि'ति । अत्र यद्यपि तुष्टिशब्दस्याद्यव्याख्यानेऽस्य श्लोकस्य प्रकृतोपयोगो न दृश्यते तथाऽपि द्वितीयव्याख्यानेऽस्ति प्रकृतोपयोगः । मोचकेच्छायाः प्रसादरूपत्वादित्यवधेयम् । ईश्वरप्रणिधानशब्देनेश्वरप्रसादसाधनं ध्यानमभिप्रेतम् । एवमग्रेऽपि यदुपास्तिमित्यत्र यत्प्रसादभूतामुपास्तिमिति व्याख्येयम् । तेन प्रकृतसङ्गतिरिति द्रष्टव्यम् ।

**सु० — पतञ्जलिस्तु स्पष्टमाचष्टे तपःस्वाध्यायेश्वरप्रणिधानादिक्रियायोग इत्यादि ।**

**शे० — तप इत्यादि ।** अत्रेश्वरप्रणिधानशब्देनेश्वरप्रसादसाधनस्य ध्यानस्याभिप्रेतत्वात्प्रकृतोपयोग इति भावः ॥ **षोडशपदार्थेति ।** अत्र षोडश च ते पदार्थाश्च षोडशपदार्था इति विशेषणसमासः । न च दिक्संख्ये संज्ञायामिति तस्य नियमनात्प्रकृते च विशिष्टस्यासंज्ञात्वान्न संख्यार्थकस्य षोडशपदस्य पदार्थशब्देन विशेषणसमास इति वाच्यम् । षोडशपदार्थपदाद्येषां केषाञ्चिच्छोडशानामप्रतीतेः प्रमाणादीनामेव च प्रतीतेस्तादृशार्थविशेषे सामयिकसंज्ञात्वोपपत्त्या विशेषसमाससंभवात् । वस्तुतस्तु पदार्थानां तत्त्वज्ञानं पदार्थतत्त्वज्ञानं षोडशानां पदार्थतत्त्वज्ञानं षोडशपदार्थतत्त्वज्ञानमिति षष्ठीसमास एवात्र विवक्षितः । षोडशत्वं च सामर्थ्यात्पदार्थेष्वेव पर्यवस्यति । त्रयाणां लोकनाथ इति विग्रहेऽपि त्रित्वस्य लोकेष्वेव पर्यवसानदर्शनादिति भावः ।

**प० —** ईश्वरप्रणिधानं ईश्वरे मनःसमाधानं तेन प्रसादो लभ्यते । तस्य तत्प्रीतिहेतुत्वादित्यर्थः । एवं यदुपास्तिमित्यत्रापि ध्येयम् ।

सु०— अक्षपादो यद्यपि प्रमाणादिषोडषपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्याह । तथाऽपि प्रमाणादिपञ्चदशपदार्थतत्त्वज्ञानस्यात्मादिद्वादशविधप्रमेयतत्त्वज्ञानहेतुत्वमेव । आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति तुशब्दकरणात् । आत्मादिज्ञानमपि न साक्षान्मोक्षसाधनम् । किन्नाम परमेश्वरप्रसादोपेतमेव । 'स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः । यदुपास्तिमसावत्र परमात्मा निरूप्यते' इति सम्प्रदायविद्वचनात् ।

अथ कथमनुपपन्नभाषिण इत्यत आह ईशस्येति ।

अनु०—　　　　ईशस्य प्रसादतः ॥

मुक्तिं ब्रुवाणा अप्याहुः

ईश(स्य)प्रसादतो मुक्तिं ब्रुवाणा अप्येते किञ्चिदयुक्तमाहुर्यतोऽतोऽनुपपन्नभाषिण इत्यर्थः ।

शे०— तत्त्वज्ञानहेतुत्वमेवेति । न मोक्षसाधनत्वमित्यर्थः । तत्कुत इत्यत आह आत्मशरीरेति ॥ तुशब्दकरणादिति । अयमर्थो ज्ञायत इति शेषः । स्पष्टं चैतन्न्यायवार्तिके न पुनरिदं प्रमेयावधारणार्थं सूत्रम् । अपि तु प्रमेयविशेषावधारणार्थम् । प्रमेयमात्रावधारणार्थं च प्रवृत्तौ विदितविधानादकुशलः सूत्रकारः स्यात् । आद्येन वा सूत्रेण प्रमेयं विहितमिति पुनर्विधानादुन्मत्तवाक्यमिदं स्यात् । एवञ्चार्थं जिज्ञापयिषुः सूत्रकारस्तुशब्दमाह । अन्यदपि प्रमेयमस्ति । यस्य तु तत्त्वज्ञानान्निःश्रेयसं तदिदं प्रमेयं तुशब्देन ज्ञापयतीति । तावता पञ्चदशपदार्थतत्त्वज्ञानसाध्यप्रमेयपदार्थज्ञानस्य मोक्षसाधनत्वप्राप्तावपि न मुक्तेः प्रसादसाध्यत्वसिद्धिरित्यतो भवेदेवं यदि प्रमेयज्ञानस्यापि केवलस्य मोक्षसाधनत्वं स्यान्न चैतदस्तीत्याह आत्मादीति ॥ प्रसादेति । प्रसादसहकृतमेवेत्यर्थः । किमत्र प्रमाणमित्यतः कुसुमाञ्जलिस्थमुदयनवचनं सम्मतितया पठति स्वर्गापवर्गयोरिति ।

ननु स्त्रियां क्तिन्निति क्तिन्नपवादकतया प्राप्तस्य गुरोश्च हल इत्यकारप्रत्ययस्य 'ण्यासश्रन्थो युजिति' युजापवादाद्युचि तस्य युवोरनाकावित्यनादेशे स्त्रियां टापि निष्पन्नस्योपासनामिति द्वितीयैकवचनेन भाव्यं तत्कथमुपास्तिमित्युक्तमिति चेत् । अत्र गुरवः । क्तिन्नाबादिभ्यश्चेति वक्तव्यमिति वार्तिककृता आबादिभ्यः क्तिनुपसंख्यानादाबादेश्चाबादयः प्रयोगतोऽनुसर्तव्या इत्यभियुक्तोक्तेराकृतिगणत्वात् क्तिन्प्रत्यये उपास्तिमिति द्वितीयैकवचनस्योपपन्नत्वात् । न चाबादिभ्यश्चेति क्तिनुपसंख्याय निष्ठायां वा सेटोकारवचनात्सिद्धमिति ब्रुवतो वार्तिककारस्य गुरोश्च हल इत्यकारप्राप्तिस्थल एवाबादिभ्यश्चेति क्तिन्नभिमत इति गम्यते । तत्कथं ण्यासश्रन्थो युजिति युज्विषये क्तिन्व्याख्यायते इति वाच्यम् । षित्त्वात्

पिच्छिदादिभ्योऽङिति भङ्गविषये क्तिन्प्रत्ययस्य लब्धिरित्यादौ युजिविषयेऽपि आप्तिरित्यादौ क्तिन्प्रत्ययस्य दृष्टत्वेनोक्तनियमासिद्ध्या युजिविषयेऽपि क्तिन्प्रत्ययाश्रयणस्योपपन्नत्वादिति ।

वर्धमानचरणास्तु । धातुनिर्देशे उपास्तीति श्तिपोऽयं प्रयोगः । तस्य च धातुरूपशब्दाभिधायकत्वेऽप्यर्थे द्विरेफपदवल्लक्षणाश्रयणाददोषः । न चात्र श्तिपपदे लक्षणा वक्तुं युक्ता । तस्य प्रकृतेः स्वबोधकत्वतात्पर्यमात्रग्राहकत्वेनोपसर्गवदशक्तत्वात् । अन्यथा तत्तद्धातूपसन्धानेनानन्तशक्त्यापत्तेः । स्वपरेणोपासापदेन सह पौनरुक्त्यापत्तेश्च । नाप्युपासापदे तस्यार्थे शक्ततया तदनवसरादिति वाच्यम् । उपास्तीत्यादिनोपासधातुरित्यादिप्रत्ययबलाद्धातुत्वेन रूपेण श्तिपो धातुमात्रे शक्तेः । तथा च न शक्त्यानन्त्यादिदोषः । अन्यथा धातुत्वप्रकाशकप्रत्ययानुपपत्तेः । न च धातुत्वं नानुगतमस्तीति वाच्यम् । क्रियावाचित्वस्य तथात्वात् । न चैवं यागपाकादौ श्तिप्प्रयोगापत्तिः । केवलस्याधातुत्वात् । धातुसमभिव्याहारे च तत्तद्धात्वन्वयबोधजननियमेन तदप्रतिपादकत्वात् । एवञ्च प्रकृतिप्रत्ययाभ्यां लक्षणया शक्त्या बोपासधातुरिति विशिष्टानुभवे जनिते स्वज्ञाप्यधातुत्वविशिष्टोपाससंबन्धिन्युपासनारूपेऽर्थे गम्भीरनदीतीरे नदीपदस्येव श्तिप्पदस्य लक्षणा । ज्ञाप्यसंबन्धमात्रस्यैव लक्षणात्वात् । अस्तु वा क्रियावाचित्वरूपे धर्ममात्र एव शक्तिर्लाघवात् । तत्रापि कल्पे विशिष्टलक्षणा पूर्वकल्पवदेव । न चैवमेकलक्षणमेवेति द्विरेफपददृष्टान्तोपादानमसङ्गतमिति वाच्यम् । न हि द्विरेफपदे लक्षणाद्वयम् । किन्तु शब्दघटितसंबन्धेनैकैव लक्षणा । तथा चात्रापि शब्दघटितेन संबन्धेन शब्दोपस्थापितस्यार्थस्य लक्षणेत्यत्रैव च तद्दृष्टान्तोपादानात् । न च तत्र द्विरेफपदेन भ्रमरपदोपस्थितिः । तेन चार्थस्य शक्त्यैवोपस्थितिरिति नोक्तक्रमेणापि तद्दृष्टान्ततेति वाच्यम् । तथा सति द्विरेफपदोत्तरविभक्त्यर्थस्यार्थेन अन्वयापत्तेः । प्रत्ययानां प्रकृत्युपस्थितार्थान्वितस्वार्थाभिधायकत्वस्य व्युत्पत्तिसिद्धत्वादित्याहुः ।

तच्चिन्त्यम् । तथा हि । उपास्तिपदस्यार्थे लक्षणेति पक्ष एवासङ्गतः । इक्श्तिपौ धातुनिर्देश इत्यनेन वचनेन शब्दपरतायामेव तस्य साधुत्वानुशासनात् । अन्यथा अपादानानुशिष्टायाः पञ्चम्याः कर्मणि लक्षणया प्रयोगापत्तेः । न च सुब्विभक्तौ लक्षणाविरहान्न तथेति वाच्यम् । तत्कल्पनायामपि साधुत्वविरहस्यैव मूलत्वात् । अत एव व्यत्ययानुशासनस्थले लक्षणा स्वीक्रियत एव । न च तत्र शक्तिरेव । अन्यथा व्यत्ययानुशासनवैयर्थ्यापातादिति वाच्यम् । गौरवात् । व्यत्ययानुशासनस्य लक्ष्यविशेषे साधुत्वज्ञापकत्वात् । श्तिपश्च धातुविशिष्टे शक्तिरित्यपि न युक्तम् । तस्य प्रकृतेः स्वपरत्वतात्पर्यमात्रग्राहकत्वादिति ।

अन्ये तूपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इति न्यायेनाबादेराकृतिगणत्वं स्वीकृत्य बाहुलकलभ्यस्याप्युपास्तीत्यस्याबादिकुक्षौ निक्षेप इत्याशय इत्याहुः ।

**प०** — **प्रमाणादिषोडशपदार्थेति** । प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानरूपषोडशपदार्थेत्यर्थः ॥ **तुशब्दकरणादिति** । विशेषार्थकेन तेन एते तु प्रमेयमन्यत्त्वेतज्ज्ञानोपयोगीति सूचनादिति भावः ।

**या०** — **तत्त्वज्ञानहेतुत्वमेवेति** । न साक्षान्मोक्षहेतुत्वमित्यर्थः । कुत इत्यत आह **आत्मशरीरेति** । तुशब्देन द्वादशविधप्रमेयाणामेव तत्त्वज्ञानं साक्षान्मोक्षसाधनमिति सूचनादित्यर्थः । यथाऽऽहुः । 'प्रमेयमपवर्गार्थं ज्ञेयं द्वादशधा च तदि'ति ।

**सु०** — **तथा हि । यद्यपि वैशेषिकैरीश्वरप्रसादोऽङ्गीकृतस्तथाऽपि धर्मसहकारित्वेनैव ईश्वरचोदनाभिव्यक्तादिति वचनात् । एवं पतञ्जलिरपि तपःस्वाध्यायादिसमानकक्ष्यतामेवेश्वरप्रणिधानस्याह । नैय्यायिका अप्यात्मतत्त्वज्ञानमेव मोक्षसाधनमीश्वरप्रसादस्तु सहकारिमात्रमित्यास्थिताः । द्वितीयसूत्रे तथैव व्युत्पादितत्वात् । श्रुतिस्मृतयस्तु धर्मादिकं समस्तं साक्षात्परम्परया वा भगवत्प्रसादसाधनम् । भगवत्प्रसादस्त्वनन्यापेक्षः साक्षादेव मोक्षसाधनमित्याचक्षते । 'सर्वं तदन्तराधाय मुक्तये साधनं भवेत् । न किञ्चिदन्तराधाय विमोक्षायापरोक्षदृगि'त्याद्याः । अतः कथं नानुपपन्नवादिन इति ।**

**शे०** — ननु भवेदनुपपन्नभाषित्वं नैयायिकादीनां यदि तेषामीश्वरप्रसादस्य न मोक्षसाधनत्वं किन्तु सहकारिमात्रत्वमित्ययमर्थोऽङ्गीकर्तुं शक्यः स्यात् । न चासौ शक्यतेऽङ्गीकर्तुम् । तदभ्युपगतज्ञानमोक्षसाध्यसाधनभावान्यथाऽनुपपत्त्यैव ज्ञानजन्यप्रसादस्य मोक्षसाधनताया लभ्यत्वेन सहकारिमात्रत्वायोगात् । न च ज्ञानस्य स्वभावेनैव मोक्षसाधनत्वसंभवान्न तदन्यथाऽनुपपत्तिरस्तीति कथं तया प्रसादस्य तत्साधनत्वलाभः स्यादिति वाच्यम् । ज्ञानस्य मोक्षसाधनताया अदृष्टत्वेन स्वभावकल्पनाया असंभवेन मध्ये प्रसादस्यावश्यं कल्पनीयत्वादित्यतो दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानरूपकार्यकारणप्रवाहरूपसंसारनिवृत्तिरूपत्वान्मुक्तेस्तादृशकार्यकारणप्रवाहस्यानाद्यज्ञानमूलकत्वाज्ज्ञानाज्ञानयोश्च दीपान्धकारयोरिव स्वाभाविकविरोधाज्ज्ञानेन साक्षाद्दुःखाद्यनिवृत्तावपि तन्मूलभूताज्ञाननिवृत्तिसंभवात्तन्निवृत्तौ च कार्यनिवृत्तेः कारणाभावेन सुलभत्वाद्दुःखादीनां कार्यकारणभावस्य कारणाभावे कार्याभावस्य च न्यायशास्त्रीयदुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति द्वितीयसूत्र एवोक्तत्वेनादृष्टकल्पनाया अप्रसङ्गेन स्वभावेनैव मोक्षसाधनत्वोपपत्त्या तदन्यथाऽनुपपत्तेरभावान्मध्ये प्रसादस्याकल्पनीयत्वाद्युक्त एव सहकारिमात्रत्वाभ्युपगमः प्रसादस्य परेषामित्याशयेनाह **द्वितीयसूत्र इति** । अत्र च दुःखादीनां कथं कार्यकारणभावः । कुतश्च तदपायेऽपायः । तथात्वे वा कथं प्रागापादितदोषाद्यनिवृत्तावात्यन्तिकदुःखनिवृत्तिरित्यादिशङ्कापरिहारस्तत्सूत्रीयभाष्यवार्तिकतात्पर्यपरिशुद्धिनिबन्धेषु तदनुसारिणि द्रव्यं कर्म

चेत्यादिजिज्ञासासूत्रीयमूलग्रन्थव्यावर्त्यशङ्काग्रन्थे च स्पष्टस्तत एवानुसन्धेय इति द्रष्टव्यम् । कास्ता विवक्षितार्थवादिन्यः श्रुतिस्मृतय इत्यतस्ता उदाहरति **सर्वमिति** । ( सर्वं तदिति प्रथमा श्रवणाद्यपरोक्षज्ञानान्तं साधनजातं किञ्चित्प्रसादमन्तरा मध्ये आधाय मुक्तये साधनं भवेत् । अपरोक्षदृक् तज्जन्यः प्रसाद इति यावत् किञ्चिदन्तराधाय विमोक्षाय न भवति किन्तु साक्षादेवेत्यर्थः ) । धर्माधर्मादिकं समस्तमित्यादितात्पर्यकथनरूपैतच्छ्रुतिव्याख्यानरूपप्राचीनग्रन्थानुरोधेन विवक्षितार्थोपपादकत्वान्नैतच्छ्रुत्युपन्यासस्य प्रकृतासङ्गतिरिति ध्येयम् ।

स० — ईश्वरप्रणिधानशब्देन तत्प्रसादो गृह्यते । **द्वितीयसूत्र इति** । गोतमीयद्वितीयसूत्र इत्यर्थः ।

प० — **द्वितीयसूत्र इति** । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये(पूर्वपूर्वापा)-तदन्तरापायादपवर्ग इति सूत्रे व्याख्यातृभिः मोक्षस्येश्वराधीनत्वोक्तिहेतुज्ञानस्येश्वरनिमित्तकत्वादित्याद्युक्त्या तथैव व्युत्पादनादित्यर्थः ।। **परंपरयेति** । ज्ञानद्वारेत्यर्थः । तृतीयगीताभाष्योक्तस्मृतिमाह **सर्वमिति** । अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते इति पूर्वशेषः । सर्वं साधनं भवेत् । अपरोक्षदृशमन्तराधाय व्यवधानीकृत्येत्यर्थः । तमेवं विद्वानित्यादिश्रुतिस्मृतयः आद्यपदेन ग्राह्याः । अपरोक्षदृक्पदेन श्रुत्यन्तरबलात्तज्जन्यप्रसाद एवाभिमत इति भावः ।

या० — **द्वितीयसूत्र इति** । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः इति न्यायशास्त्रस्य द्वितीयसूत्रे तद्व्याख्यानसमये यत्तु मोक्षस्येश्वराधीनत्ववचनं तत् ज्ञानादिजन्मनीश्वरस्यापि निमित्ततापरमित्यविरुद्धं तदर्थं च तदुपास्त्यादेरुपयोग इति तैर्व्युत्पादितत्वादित्यर्थः । अपरोक्षदृगित्यत्र तत्साध्यः प्रसादो लक्षणीयः । अन्यथाऽसङ्गतेः ।

श्री० — सर्वं तदिति प्रथमा । श्रवणाद्यपरोक्षज्ञानान्तं साधनजातं किञ्चित्प्रसादमन्तरा मध्ये आधाय मुक्तये साधनं भवेत् । अपरोक्षदृक् तज्जन्यः प्रसाद इति यावत् । किञ्चिदन्तराधाय मध्येऽपि न मोक्षाय भवति किन्तु साक्षादेवेत्यर्थः ।।

सु० — **इतश्चानुपपन्नभाषिण इत्याह** भोगादेव चेति ।

**अनु०** — भोगादेव च कर्मणाम् ।।

**क्षयं प्राहुः**

**वैशेषिकादयस्तत्त्वविद इव ज्ञानात्पूर्वेषां कर्मणां ज्ञानादेव विनाशं न मन्यन्ते । किन्तु समाधिमहिम्नाऽपरिमितदेहव्यूहनिर्माणेनानन्तान्यपि विषमविपाकसमयान्यपि कर्माणि पिण्डीकृत्य तत्फलसुखदुःखभोगेनैव ज्ञानिनो विनाशयन्तीति प्राहुरतोऽप्यनुपपन्नभाषिण इत्यर्थः ।**

**नन्वेतदसङ्गतम् । मोक्षसाधनविचारस्य प्रस्तुतत्वादिति । मैवम् । अविद्याकाम-कर्मादिलक्षणो हि बन्धः । अतस्तन्निवृत्तिर्मोक्ष इति कथं कर्मक्षयो न मोक्षः । वक्ष्यति च । कर्मक्षयस्तथोत्क्रान्तिरित्यादि । अतो मोक्षसाधनविषयैवेयं चिन्तेति ।**

**शे० — विषमेति** । कालभेदेन भोज्यानीत्यर्थः ॥ **एतदिति** । कर्मक्षयसाधनचिन्तन-मित्यर्थः ॥ **मोक्षेति** । कर्मक्षयस्यामोक्षत्वेन तत्साधनविचारो मोक्षसाधनचिन्ताप्रक्रमविरुद्ध इति भावः ।

**प० — विषमविपाकसमयानीति** । विषमाः विपाकसमयाः फलोन्मुखत्वकाला येषां तानीत्यर्थः । तत्फलेति भोगविशेषणम् ॥ **वक्ष्यतीति** । चतुर्थे ॥ **मोक्षसाधनविषयैवेति** । साधननिरूपणे मोक्षैकदेशचिन्तापि परम्परया साधनचिन्तैवेति भावः ।

**या० —** विपाकशब्देन फलमुच्यते ।

**सु० — तथाब्रुवाणा अपि कथमनुपपन्नभाषिण इत्यतोऽस्यार्थस्याप्रामाणिकत्वादित्याह** कुतश्चेति ।

**अनु० —** कुतश्चैतत्प्रसन्ने जगदीश्वरे ॥

**ज्ञानिनोऽपि कर्मणां फलभोगेनैव क्षय इत्येतत्कुत एव प्रमाणात्प्रतिपत्तव्यम् । न कुतश्चित् । अक्षीणकर्मणां मोक्षानुपपत्तेस्तत्क्षयहेतोश्चान्यस्याभावादत्यन्तसुखदुःखसंज्ञानमेव तत्क्षयकारणमिति कल्प्यत इत्यत आह** प्रसन्न इति । **कुत एतदिति वर्तते । ज्ञानेन प्रसन्नो भगवानेवाभुक्तफलान्येव कर्माणि विनाशयतीत्यन्यथैवोपपत्तेः कुत एतत्कल्प्यत इत्याशयः । भगवानपि कथमदत्तफलकर्मक्षयस्येष्ट इति न शङ्कनीयम् । तदैश्वर्यस्य क्वाप्यप्रतिहतत्वादिति भावेनोक्तं जगदीश्वर इति ।**

**शे० — संज्ञानं** कायव्यूहेन भोगः ।

**प० — संज्ञानमिति** । भोग इत्यर्थः ।

**या० — संज्ञानं** भोगः ।

**सु० — सम्भावितमेवैतन्न तु प्रमितम् । तत्कथमन्यथैवोपपत्तिरित्यत आह** भिद्यत इति ।

**अनु० —** भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥

क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥
इति श्रुतिपुराणादिवचनेभ्योऽन्यथागतेः ॥

**हृदयग्रन्थिरविद्या । परा अप्यवरा यस्मात्स परावरः । आत्मन्याततगुणे जगदीश्वरे । आद्यं कठश्रुतिवचनम् । द्वितीयं भागवतवचनम् । आदिपदेन वक्ष्यमाणानीतिहासवचनानि गृह्यन्ते । अन्यथा फलभोगेन विनेश्वरप्रसादेनैव कर्मणां गतेरपगतेर्विनाशनिश्चयादन्यथैवोपपत्तिरिति ।**

**शे०— परा अप्यवरा इति ।** विभाषा जसीति पूर्वादेर्जसि विकल्पेन सर्वनामसंज्ञाविधानात्परा इत्यादेः साधुत्वम् । आत्मनीश्वर इति सामानाधिकरण्याज्जीवेश्वरैक्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे **आत्मन्याततगुण इति ॥ आदिपदेनेति ।** श्रुतिपुराणादीत्यादिपदेनेत्यर्थः ॥ **वक्ष्यमाणानीति ।** यथैधांसि समिद्धोऽग्निर्भस्मसादित्यादिनोत्तरत्रेति शेषः ।

**प०—** आत्मनि जीव इति भ्रमनिरासायापौनरुक्त्याय वाह **आत्मन्याततगुण इति ।** इति श्रुतिपुराणेत्युक्त्युपपत्तये विवेकमाह **आद्यमिति ॥ वक्ष्यमाणानीति ।** यथैधांसीत्यादीनीति भावः । अन्यथेत्यनुवादः, फलेत्यादि व्याख्या ।

**या०—** आत्मनीश्वर इति सामानाधिकरण्येन जीवाभेदप्रतीतिनिरासायाह **आत्मन्याततगुण इति ।**

**सु०— नन्वत्र परमेश्वरे दृष्टे कर्माणि क्षीयन्त इत्युच्यते न तु दर्शनेनेति । ततो भोगेनेति व्याख्यानेऽपि न विरोध इति चेन्न । तथा सति हृदयग्रन्थिभेदनसंशयच्छेदनयोरप्यन्यसाध्यतास्वीकारापातात् । दृष्ट एवेत्येवशब्दविरोधाच्च । भोगेन क्षयस्य सर्वसाधारण्याद्दर्शनविशेषणस्य वैयर्थ्याच्च ।**

**शे०— तथा सतीति ।** परमेश्वरे दृष्टे कर्माणि क्षीयन्त इत्युक्तावपि दर्शनेनेत्यनुक्तिमात्रेण कर्मक्षयस्य दर्शनसाध्यत्वमनभ्युपगम्य तदन्यभोगसाध्यत्वाङ्गीकार इत्यर्थः ॥ **अन्यसाध्यतापातादिति ।** परमेश्वरे दृष्टे हृदयग्रन्थिर्भिद्यते सर्वसंशयाश्छिद्यन्त इत्युक्तावपि दर्शनेन हृदयग्रन्थिर्भिद्यते दर्शनेन सर्वसंशयाश्छिद्यन्त इत्यनुक्त्या हृदयग्रन्थिभेदेन सर्वसंशयच्छेदयोरपि न दर्शनसाध्यत्वं किन्तु तदन्ययत्किञ्चित्साध्यत्वमेव स्यादविशेषादिति भावः ॥ **एवशब्देति ।** तेन दर्शनान्यसाधननिषेधादिति भावः ॥ **सर्वसाधारणत्वादिति ।** ज्ञान्यज्ञानिरूपसर्वसाधारणत्वादित्यर्थः ॥ **विशेषणस्येति ।** दृष्ट इति दर्शनरूपपरमेश्वरविशेषणस्येत्यर्थः । दर्शनसाध्यत्वे कर्मक्षयस्य तस्य ज्ञानिमात्रनिष्ठत्वात्तदभिप्रायेण विशेषणो-

पपत्तावपि भोगमात्रसाध्यत्वे कर्मक्षयस्य तस्य सर्वसाधारणत्वेन विशेषाभावात्तदर्थकविशेषणानुपपत्तिरिति भावः ।

प०— **सर्वेति** । ज्ञान्यज्ञानिसाधारण्यादित्यर्थः ॥ **दर्शनविशेषणस्येति** । दृष्ट इति विशेषणस्येत्यर्थः ।

या०— **दर्शनविशेषणस्येति** । दृष्ट इति दर्शनेन विशेषणस्येत्यर्थः ।

**सु०— अज्ञो न सर्वाणि कर्माणि भोगेन क्षेप्तुं क्षमते । बहुतरत्वाद्विषमविपाकसमयत्वाच्च । ज्ञानी तु समाधिसामर्थ्यात्कायव्यूहं निर्माय सर्वाणि समाहृत्य फलभोगेन विनाशयतीत्यतो विशेषणोपपत्तिरिति चेत्कुत एषा कल्पना । उक्तार्थापत्त्यैवेति चेन्न । अस्मदुदाहृतवचनानामन्यथाव्याख्यानस्थितावर्थापत्तिस्थितिः । तत्स्थितौ च वचनानामन्यथाव्याख्यानस्थितिरिति परस्पराश्रयापत्तेः । वचनानामन्यथाव्याख्याननिरासे सत्यर्थापत्तिनिरासस्तन्निरासे (सत्यन्य)नान्यथाव्याख्याननिरास इति भवतामपि परस्पराश्रयापत्तिरिति चेन्न । अवधारणादिना निरवकाशस्योक्तत्वात् । 'भिनत्ति कर्मसङ्घातं प्रसन्नो भगवान्हरि'रित्यादीनामत्यन्तानवकाशानामन्यत्रोदाहृतत्वाच्च । अत एव 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी'त्यादिसामान्यवचनमज्ञानिविषयम् । ज्ञानिनामपि प्रारब्धकर्मविषयम् । 'आत्मनो वै शरीराणि बहूनि मनुजाधिप । प्राप्य योगबलं कुर्यात्तैश्च सर्वां महीं चरेत् । भुञ्जीत विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् । संहरेच्च पुनस्तानि सूर्यस्तेजोगणानिवे'त्यादिकं ज्ञानिनां प्रारब्धकर्मविषयम् । विशेषवचनबलेन प्रारब्धकर्मविनाशस्य वक्ष्यमाणत्वात् ।**

**अत एव 'ज्ञानादेवाशेषकर्मक्षये तदैव मुक्तिः स्यात् । न चैवम् । जीवन्मुक्तानामुपलब्धेरि'त्यनवकाशं चोद्यम् ।**

श्री०— कर्मक्षयस्य भोगमात्रासाध्यत्वेऽपि ज्ञान्यज्ञानिनोर्विशेषसद्भावात्तदर्थकविशेषणोपपत्तिरिति शङ्कते **अज्ञ इति** ॥ **बहुतरत्वादिति** । अनयोरिदं बहुतरम् । बहुतरं च बहुतरं च बहुतरं च बहुतरं तस्य भावस्तत्त्वं तस्मादित्यर्थाश्रयणात्कर्मणां बहुतरत्वादित्यस्य साधुत्वम् । अन्यथा द्विवचनविभज्योपपदे तरबीयसुनावित्युक्तेस्तरबनुपपत्तिप्रसङ्गादिति ध्येयम् । अत्र सर्वत्र विपाकपदं फलपरम् ॥ **कुत एषा कल्पना इति** । कुत एवं विशेषः कल्प्यतेत्यर्थः ॥ **उक्तार्थापत्त्येति** । अक्षीणकर्मणां मोक्षानुपपत्तेस्तत्क्षयहेतोश्चान्यस्याभावादुक्तरीत्या भोग एव तत्क्षयहेतुतया कल्पनीय इति प्रागुक्तार्थापत्त्येत्यर्थः ॥ **अवधारणादिनेति** । दृष्ट एवेत्यवधारणेनादिपदोपात्तदर्शनपदविशेषणेन चेत्यर्थः । तथा

चार्थापत्तिनिरासार्थं वचनानामन्यथाव्याख्याननिरासस्यापेक्षायामपि वचनानामन्यथाव्याख्याननिरासस्यार्थापत्तिनिरासापेक्षत्वाभावान्न परस्पराश्रयत्वमिति भावः ॥ **अत एवेति** । भिनत्ति कर्मसङ्घातमिति निरवकाशवाक्यानुरोधेन कर्मक्षयस्येश्वरप्रसादसाध्यताया निश्चितत्वादेवेत्यर्थः ॥ **आत्मनो वा इत्यादि** । अत्र योगबलं प्राप्यात्मनो बहूनि शरीराणि कुर्यादित्यन्वयः ॥ **विशेषवचनबलेनेति** । तस्य तावदेव चिरं यावन्न विमोक्ष्येथ संपत्स्यत इति विशेषवचनबलेनेत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'सर्वात्मना त्वभोगो हि प्रारब्धस्यैव कर्मण' इत्यादिनेति शेषः ॥ **अत एवेति** । विशेषवचनबलेन प्रारब्धस्यानष्टत्वेनेत्यर्थः ।

स० — **उक्तार्थापत्त्यैवेति** । अक्षीणकर्मणां मोक्षानुपपत्तेरन्यस्य क्षयहेतोरभावात् अन्यथाऽनुपपत्त्या भोग एव क्षयहेतुत्वेन कल्प्यत इति प्रागुक्तार्थापत्त्यैवेत्यर्थः । **अवधारणादिनेति** । दृष्ट एवेत्यवधारणादिनैवान्यथाव्याख्याननिरासंभवेनार्थापत्तिनिरासस्यान्यथाव्याख्याननिरासे हेतुत्वाभावान्नान्योन्याश्रय इति भावः । **वक्ष्यमाणत्वात्** । 'सर्वात्मना त्वभोगो हि प्रारब्धस्यैव कर्मणः' इत्यादिनेति शेषः । **अत एवेति** । प्रारब्धाविनाशादेवेत्यर्थः ।

प० — **कुत एषा कल्पनेति** । भोगेन कर्माणि क्षीयन्त इति श्रुत्यर्थ इति कल्पनेत्यर्थः ॥ **उक्तार्थापत्त्येति** । अक्षीणकर्मणो मोक्षानुपपत्तेरित्यादिनोक्तार्थापत्त्येत्यर्थः ॥ **अवधारणादिनेति** । हृदयग्रन्थिभेदनादिसहपाठः दृष्टिविशेषणं चादिपदार्थः ॥ **अन्यत्रेति** । उपासनापादीयन्यायविवरणे । अनुबन्धादिभ्य इत्यधिकरणे तथा भक्तिपादीयान्तिमन्यायविवरणादौ तत्र तत्रेत्यर्थः ॥ **योगेति** । योगबलं समाधिसामर्थ्यं प्राप्य आत्मनः बहूनि शरीराणि कुर्यादित्यर्थः । कुत एतत्कल्पनेत्यत आह **विशेषवचनबलेनेति** । 'तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचिदि'ति भाष्ये कर्माणि क्षपयेद्विष्णुरप्रारब्धानि विद्यया । प्रारब्धानि तु भोगेन क्षपयन्स्वगतिं नयेदि'ति न्यायविवरणादौ चोक्तवचनबलेन चतुर्थाद्यपादे तदधिगमेत्यधिकरणे भोगेन त्वितरे क्षपयित्वेति सूत्रे वक्ष्यमाणत्वादित्यर्थः । यद्वा 'सर्वात्मना त्वभोगो हि प्रारब्धस्यैव कर्मणः । न ब्रह्मदर्शिनोपि स्यादित्युत्तरपादीयानुव्याख्यान इति भावः ।

या० — **कुत एषा कल्पनेति** । एवं श्रुत्यर्थकल्पना कुत इत्यर्थः ॥ **उक्तार्थापत्त्येति** । अक्षीणकर्मणां मोक्षानुपपत्तेस्तत्क्षयहेतोश्चान्यस्याभावादुक्तरीत्या भोग एव तत्क्षयहेतुतया कल्पनीय इति प्रागुक्तार्थापत्त्येत्यर्थः । अवधारणादिनेत्यत्रादिपदेन दर्शनविशेषणग्रहणम् । ननु ज्ञानबलेन प्रारब्धकर्मणोऽपि नाशे कथमेतद्वाक्यं तद्विषयं भवेदित्यत आह **विशेषवचनबलेनेति** । तस्य तावदेव चिर-

मित्यादिविशेषवचनबलेनेत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'सर्वात्मना त्वभोगो हि प्रारब्धस्यैव कर्मण' इत्यत्रेति शेषः ॥ **अत एवेति** । प्रारब्धनाशादेवेत्यर्थः ।

**श्री०— उदाहृतवचनानामिति** । क्षीयन्ते चास्य कर्माणीत्यादिवाक्यानां भोगेनेत्यन्यथा-व्याख्यानस्थितौ तद्विरोधाभावेनाक्षीणकर्मणां मोक्षानुपपत्तेस्तत्क्षयहेतोश्चान्यस्याभावाद्भोग एव तत्क्षयहेतुरि-त्यर्थापत्तिस्थितिः तत्स्थितौ च तद्विरोधेनोक्तवचनानामन्यथाव्याख्यानस्थितिरित्यन्योन्याश्रय इत्यर्थः ॥ **निरासे सतीति** । तद्विरोधेनेति शेषः ॥ **तन्निरासे सतीति** । अर्थापत्तिविरोधाभावादिति भावः ॥ **निरास इति** । वचनानामिति शेषः ॥ **उक्तत्वादिति** । दृष्ट एवेत्यवधारणेन वाक्यानां भोगेनेति व्याख्यानेऽव-काशाभावस्य स्वत एव सिद्धत्वेनार्थापत्तिनिरासाधीनत्वाभावान्नान्योन्याश्रयोऽयमस्माकमिति भावः ।

**सु०— विमतं कर्म फलभोगविनाश्यं कर्मत्वात्संप्रतिपन्नकर्मवदित्यनुमानं तु कृतप्राय-श्चित्तकर्मण्यनैकान्तिकम्** । **प्रायश्चित्तं न कर्मक्षयहेतुरित्येतदुत्तरत्र निराकरिष्यामः** । **अकृत-प्रायश्चित्तकर्मत्वं हेतुरिति चेत्किमिदं प्रायश्चित्तं नाम** । **पापनिवृत्त्यर्थत्वेन विहितो व्रतविशेष इति चेत्** । **तर्हि महानुभावानामनुग्रहादिना विनष्टे कर्मणि व्यभिचारः** । **पापनिवृत्तिहेतुमात्रं प्रायश्चित्तं विवक्षितमिति चेत्** । **तथाऽपि महदवज्ञादिना विनष्टे पुण्ये व्यभिचारः** । **क्षय-हेत्वन्तररहितकर्मत्वं हेतुरिति चेन्न** । **ज्ञानस्यैव क्षयहेतोः सत्त्वेनासिद्धेः** । **ज्ञानं न कर्मक्षय-हेतुतया विहितमिति चेत्** । **तर्किं विधिरेव हेतुत्वं गमयति** । **तथा सति समाधेरपि काय-व्यूहनिर्माणादौ हेतुत्वं न स्यात्** । **आर्थवादिकं फलमविरुद्धं स्वीक्रियत इति चेत्** । **समं प्रकृतेऽपि** । **न ह्यत्र कश्चिद्विरोधोऽस्तीत्युक्तम्** । **अलौकिकत्वं तूभयत्रापि समानम्** ।

**शे०— उत्तरत्रेति** । सर्वात्मनेत्येतद्व्याख्यानावसरेऽनेनैव प्रायश्चित्तानां कर्मक्षयहेतुत्वाभावोऽपि परास्तः । तथा सति प्रायश्चित्तविधीनां वैयर्थ्यापत्तेरित्यादिनेति शेषः ॥ **अनुग्रहादिना विनष्ट इति** । अनुग्रहादेः पापनिवृत्तिहेतुतया विहितव्रतविशेषत्वाभावेनाप्रायश्चित्तत्वादकृतप्रायश्चित्तकर्मत्वस्य तत्र सत्त्वा-दिति भावः ॥ **पापेति** । तथा चानुग्रहस्यापि पापनिवृत्तिहेतुत्वरूपप्रायश्चित्तसद्भावात्तेन विनष्टे कर्मणि कृतप्रायश्चित्तकर्मत्वसद्भावेनोक्तहेत्ववगमनान्नानैकान्त्यमिति भावः ॥ **अवज्ञादिनेति** । अवज्ञादेः पाप-निवृत्तिहेतुत्वाभावेनाप्रायश्चित्तत्वात्तेन विनष्टे कर्मण्यकृतप्रायश्चित्तकर्मत्वसद्भावेऽपि भोगनाश्यत्वाभावादिति भावः ॥ **क्षयेति** । तथा च तत्र भोगातिरिक्तावज्ञादिरूपक्षयहेत्वन्तररहितकर्मत्वं तत्र नास्तीति हेत्व-गमनान्न व्यभिचार इत्यर्थः । मास्तु तर्हि व्यभिचारेणानुमानस्याभासत्वमसिद्ध्या ( विशेषणासिद्ध्या ) तु स्यादेवेत्याह **ज्ञानस्यैवेति** ॥ **विहितमिति** । तथा च क्षयहेतुत्वेन विहितहेत्वन्तररहितकर्मत्वं

हेतुतया विवक्षितमित्यर्थः । सत्यमेतदित्यत आह **तथा सतीति** । विधेरेव हेतुत्वगमकतायामित्यर्थः ॥ **न स्यादिति** । हेतुत्वगमकस्य विधेस्तत्राभावाभावादिति भावः । न ब्रूमो वयं विधिरेव हेतुतां गमयतीति येनोक्तानुपपत्तिः स्यात्किन्तु विधिरपीत्येव । तथा च समाधेः कायव्यूहनिर्माणादौ हेतुत्वावगमविध्यभावेन तद्बलाद्धेत्वसिद्धावप्यात्मनो वै शरीराणीत्याद्यर्थवादबलात्तद्धेतुत्वसिद्धिः स्यादेवेति शङ्कते **आर्थवादादिकमिति** । एवं तर्हि ज्ञानस्य कर्मक्षयहेतुताया विधिबलादसिद्धावपि भिद्यते हृदयग्रन्थिरित्याद्यर्थवादबोधितत्वेन तद्बलात्तद्धेतुत्वसिद्धिः ( तद्बलाद्विधिः कल्पनीय इत्यर्थः ) स्यादेवेति कर्मक्षयहेतुज्ञानसद्भावात्क्षयहेत्वन्तररहितकर्मत्वस्यासिद्धिः स्यादेवेत्याह **सममिति** । नन्वर्थवादोक्तमपि ज्ञानस्य कर्मक्षयहेतुत्वं न स्वीकर्तुं शक्यं ज्ञानस्य कर्मक्षयहेतुत्वे तदैवाशेषकर्मविनाशापत्त्या जीवन्मुक्त्यभावप्रसङ्गापातादिति युक्त्या प्रागुक्तार्थापत्त्या च विरुद्धत्वादित्यत आह **न हीति** ॥ **उक्तमिति** । अप्रारब्धनाशेऽपि प्रारब्धकर्मविनाशाभावान्न जीवन्मुक्त्यभावप्रसङ्गः । अन्यथैवोपपत्तिप्रतिपादनान्नार्थापत्तिविरोधोऽपीत्यनुपदमेवोक्तमित्यर्थः । नन्वर्थापत्त्यादेरविरुद्धत्वेऽपि ज्ञानस्य कर्मक्षयहेतुताया लोकेऽदृष्टत्वादलौकिकत्वमस्त्येवेति तदेव बाधकं भविष्यतीत्याशङ्क्य तथा सति लोकेऽदृष्टत्वात्समाधेरपि कायव्यूहनिर्माणादौ हेतुत्वं न स्यादविशेषादित्याशयेनाह **अलौकिकं त्विति** ।

स०— **उत्तरत्र निराकरिष्यामः** । **आर्थवादिकमिति** । समाधेः कायव्यूहनिर्माणहेतुत्वमर्थवादोक्तत्वात् गृह्यत इत्यर्थः । नन्वर्थवादोक्तमपि ज्ञानस्य कर्मक्षयहेतुत्वं विरुद्धत्वात्परित्याज्यमित्यत आह **न हीति** ।

प०— **उत्तरत्रेति** । उत्तरपादे 'स्यात्काम्यविधिवैयर्थ्यमित्युक्तनियमो भवे'दित्यत्रेति भावः ॥ **अनुग्रहादिनेति** । नामोच्चारणादिरादिपदार्थः । उक्तं हि षष्ठस्कन्धे । 'स्तेनः सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः । स्त्रीराजपितृ(गोहन्तारो)हन्तारो ये च पातकिनोऽपरे । सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् । नामव्याहरणं विष्णोर्यतस्तद्विषया मतिरि'ति ॥ **हेतुत्वं न स्यादिति** । 'आत्मनो वै शरीराणी'ति प्रागुक्तवाक्ये योगविधेरभावादिति भावः ॥ **अर्थवादादिकं फलमिति** । आत्मनो वै शरीराणीत्यादर्थवादवाक्ये श्रुतं फलमित्यर्थः ॥ **समं प्रकृतेऽपीति** । भिद्यत इत्यादिप्रागुक्तार्थवादश्रुतमपि फलं स्वीकार्यमेवेत्यर्थः । ननु दृष्टिमात्रेणाखिलकर्मक्षयाङ्गीकारे नाभुक्तं क्षीयते कर्मेत्यादिवाक्यविरोधः स्यादित्यत्राह **न ह्यत्रेति** । ज्ञानादखिलकर्मक्षय इत्यत्रेत्यर्थः ॥ **उक्तमिति** । अत एव नाभुक्तं क्षीयते कर्मेत्यादिना इत्यनवकाशंचोद्यमित्यन्तेन ग्रन्थेनोक्तमित्यर्थः । ननु अलौकिकोऽयं ज्ञानादेवाखिलकर्मक्षयाङ्गीकार इत्यत आह **अलौकिकत्वं त्विति** । कायव्यूहेनाखिलकर्मक्षयस्याप्यलौकिकत्वमेवेत्यर्थः ।

**या०— उत्तरत्रेति** । 'स्यात्काम्यविधिवैयर्थ्यमित्युक्तरीत्या भवेदि'त्यर्थः ॥ **पापनिवृत्त्यर्थत्वेनेति** । 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधकमि'ति वचनादिति भावः ॥ **आर्थवादिकमिति** । आत्मनो वै शरीराणि बहूनीत्याद्यर्थवादोक्तमित्यत्रेत्यर्थः ॥ **समं प्रकृतेऽपीति** । क्षीयन्ते चास्य कर्माणी'त्याद्यर्थवादोक्तमपि ग्राह्यमित्यर्थः । ननु ज्ञानादेवाशेषकर्मक्षये तदैव मुक्तिः स्यादिति युक्तिविरोध इत्यत आह **न ह्यत्रेति** । अप्रारब्धकर्मणामेव नाशो न प्रारब्धानामित्युक्तत्वादिति भावः । ननु ज्ञानस्य कर्मनाशहेतुत्वं, न लोकप्रसिद्धमतः कथं कल्पनीयमित्यत आह **अलौकिकत्वमिति** । समाधेः कायव्यूहनिर्माणादिहेतुत्वमपि न लोकप्रसिद्धमतो न कल्पनीयमिति भावः ।

**श्री०— विमतं कर्म** अप्रारब्धं कर्म । संप्रतिपन्नं कर्म प्रारब्धं कर्म ॥ **अनुग्रहादिना विनष्ट इति** । तत्र व्रतविशेषाभावादिति भावः ॥ **विवक्षितमिति** । महानुभावानामनुग्रहस्यापि पापनिवृत्तिहेतुत्वेन प्रायश्चित्तत्वात्तेन विनष्टे कर्मणि हेतोरेवाभावान्न व्यभिचार इति भावः ॥ **पुण्य इति** । अकृतपापनिवृत्तिहेतुकर्मत्वसद्भावादिति भावः । उक्तहेतुं परित्यज्य हेत्वन्तरमाशङ्कते **क्षयेति** । तथा च नोक्तपुण्ये व्यभिचार इति भावः । असिद्धेः विशेषणासिद्धेः ॥ **विहितमिति** । तथा च क्षयहेतुत्वेन विहितहेत्वन्तरगर्हि कर्मत्वं हेतुतया विवक्षितमित्यर्थः ॥ **न स्यादिति** । कायव्यूहनिर्माणहेतुतया समाधेरपि विहितत्वादिति भावः ॥ **स्वीक्रियत इति** । तद्बलाद्विधिः कल्पनीय इति भावः ।

**सु०— किञ्चास्मिन्मते न कदाऽपि कर्मक्षयः । भोगकालेऽपि पुनः करणात् ॥ न करोतीति चासंभावितम् । 'न हि कश्चित्क्षणमपी'त्युक्तत्वात् ॥ क्रियमाणाऽपि प्रवृत्तिर्नादृष्टजननीति चेन्न । श्रुतिस्मृतिविरोधात् ॥ ज्ञानिनां ज्ञानसामर्थ्यात्तथेत्यन्यविषयं श्रुत्यादिकम् । 'तद्यथा पुष्करपलाशे', 'ब्रह्मण्याधाय कर्माणी'त्यादिश्रुतिस्मृतिबलादित्थं कल्प्यत इति चेत् । प्राक्तनकर्मस्वप्ययं प्रकारः कुतो नाभ्युपगम्यते ॥ रागद्वेषयोरभावान्न प्रवृत्तिरदृष्टकारणम् । यथोक्तम् । 'न प्रवृत्तिः प्रतिबन्धाय हीनक्लेशस्ये'ति । मैवम् । प्रामादिकब्रह्महननादीनामधर्महेतुत्वाभावप्रसङ्ग इत्यलम् ।**

**शे०—** अङ्गीकृत्य भोगनाश्यत्वं दूषणमभिहितं प्राक् । वस्तुतस्तु तत्र संभवत्येवेत्याह **किञ्चेति** । **श्रुतिस्मृतिविरोधादिति** । आ चतुर्दशमाद्वर्षात्कर्माणि नियमेन तु । दशावराणां देहानां कारणानि करोत्ययमिति स्मृतिविरोधादित्यर्थः । शङ्कते **ज्ञानिनामिति** । तथा च प्रवृत्तिरदृष्टजननी नेत्यर्थः । तर्हि प्रवृत्तेरदृष्टजनकत्वप्रतिपादकश्रुतिस्मृतिविरोधः स्यादित्यतस्तासामज्ञानिविषयत्वान्न ज्ञानिप्रवृत्तिरदृष्टजनकत्वापादकत्वमित्याह **इत्यन्येति** । कुत इत्यतस्तत्रोपष्टम्भकमाह **तद्यथेति** । **अयं प्रकारः** अदृष्टजनकत्वाभावलक्षणः । अविशेषादिति भावः । अत्र नियामकविशेषमाशङ्कते **रागेति** ।

( ज्ञानिन इति शेषः । ) ॥ **प्राक्तनेति** । ज्ञानात्प्राचीनकर्मसु प्राक्तनकर्मणां च रागद्वेषाद्यवस्थाया-मेवानुष्ठितत्वात्तेषामदृष्टजनकत्वमेवेति भावः ॥ **यथेति** । क्लेशा रागद्वेषमोहास्तद्धीनस्य प्रवृत्तिर्न प्रति-बन्धाय नादृष्टजनिकेत्यर्थः ॥ **प्रामादिकेति** । अज्ञानिष्विति शेषः । तेषां प्रमादतः प्राप्तत्वेन राग-द्वेषमूलकत्वाभावादिति भावः ।

स०— शङ्कते **ज्ञानिनामिति** । तथा प्रवृत्तिरदृष्टजननी न । ननु प्रवृत्तेरदृष्टजनकत्वप्रतिपा-दकश्रुतेः का गतिरित्यत आह **अन्यविषयमिति** । अज्ञानिविषयमित्यर्थः । तत्र नियामकमाह **तद्यथेति** । अयं प्रकारः अदृष्टजनकत्वाभावलक्षणः ।

प०— **उक्तत्वादिति** । गीतायामिति ज्ञेयम् । **श्रुतिस्मृतीति** । 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इत्यादिश्रुत्या । 'ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः' इत्यादिस्मृत्या च विरोधादित्यर्थः ॥ **तथेतीति** । कर्मादृष्टजनकं न भवतीति हेतोरज्ञानिविषयकर्मणोऽदृष्टजनकत्वे उदा-हृतं श्रुत्यादिकमित्यर्थः । कल्पकमाह **तद्यथेति** ॥ **ब्रह्मण्याधायेति** । 'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवांभसे'ति पञ्चमस्थगीतास्मृतिः ॥ **प्राक्तनेति** । ज्ञानात्प्राक्तनकर्माणि ज्ञानिनां न फलप्रदानि अज्ञानिनस्तु फलदानीत्ययं प्रकार इत्यर्थः । प्रकारान्तरेण शङ्कते **रागेति** ॥ **प्रामादिकेति** । प्रमादकृतेषु रागद्वेषपूर्वकत्वाभावादिति भावः । **काणादादि-निरासः** ॥

या०— **श्रुतिस्मृतिविरोधादिति** । 'कर्मैव देहं दैविकं मानुषं वाऽप्यन्वारभेन्नापरस्तत्र हेतुः । भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं यत्' । 'आ चतुर्दशमाद्वर्षात् कर्माणि नियमेन तु । दशावराणां देहानां कारणानि करोत्ययमि'त्यादिश्रुतिस्मृतिविरोधादित्यर्थः । शङ्कते **ज्ञानिना-मिति** । अन्यविषयमज्ञानिविषयम् । कुत इत्यत आह **तद्यथेति** । पुनः शङ्कते **रागद्वेषयोरिति** ॥ **प्रामादिकेति** । अज्ञानिष्विति शेषः । प्रमादतः प्राप्तत्वेन तत्र रागद्वेषयोर्मूलत्वाभावादिति भावः ।

श्री०— शङ्कते **ज्ञानिनामिति** । यतः अपरोक्षज्ञानिनां ज्ञानसामर्थ्यात्तथा क्रियमाणमपि कर्म नादृष्टजनकमतः कर्मैव देहम् । आचतुर्दशमादिति श्रुतिस्मृत्यादिकम् अन्यविषयमज्ञानिविषयमिति कल्प्यते । ज्ञानिनां ज्ञानसामर्थ्यात्तैः क्रियमाणस्य कर्मणोऽदृष्टजनकत्वाभावे तद्यथेति श्रुतिसद्भावादिति भावः ॥ **ब्रह्मण्याधायेति** । 'लिप्यते न स पापेने'त्युक्तत्वादित्यर्थः ॥ **प्राक्तनेति** । ज्ञानात्प्राचीन-कर्मस्वपीत्यर्थः । अयं प्रकारोऽदृष्टजनकत्वाभावः ॥ **रागद्वेषयोरिति** । ज्ञानिन इति शेषः । प्राक्तन-कर्मणां तु रागद्वेषपूर्वकत्वान्न तत्रायं प्रकारोऽभ्युपगन्तुं शक्य इति भावः ॥ **हीनक्लेशस्येति** । रागादि-

हीनस्येत्यर्थः । अविद्यारागद्वेषास्मिताभिनिवेशाः पञ्चक्लेशा इत्युक्तत्वादिति भावः । रागादिपूर्वकत्वाभावोपपादनायैव प्रामादिकमित्युक्तमिति द्रष्टव्यम् ॥ **पाशुपताद्युक्तमोक्षसाधननिरासः प्रारभ्यते ॥**

**सु०— पाशुपताद्युक्तं मोक्षसाधनं निराकरोति** न चेति ।

**अनु०** — न च पाशुपताद्युक्तशिवादीनामनुग्रहात् ॥

**पाशुपतशब्देन चतुर्विधा अपि गृह्यन्ते । आदिपदेन स्कान्दसौरादयः । द्वितीयेनादिपदेन स्कन्दादयः । अनुग्रहान्मोक्षो भवतीति शेषः ।**

**ननु च पाशुपताद्युक्तेति तावन्नानुग्रहस्य विशेषणम् । असामर्थ्येन समासानुपपत्तेः । तथा सति पाशुपताद्युक्तादिति स्यात् । अत एव न मोक्षस्य विशेषणम् । तथा सति पाशुपताद्युक्त इति भवेत् । शिवादिविशेषणत्वे तु वैयर्थ्यमिति ।**

**उच्यते । अस्तु तावदनुग्रहविशेषणम् । तत्र शिवादीनामनुग्रह इति समास एव । षष्ठ्या आक्रोश इति षष्ठ्या अलुक् । 'ज्ञात्वा शिवं शान्तिमत्यन्तमेती'त्यादिश्रुतिविरोधपरिहारश्च तत्प्रयोजनम् । यः संसारधर्मैरीषदप्यस्पृष्टः परमशिवस्तत्प्रसादान्मुक्तिरिष्यत एव । यस्त्वज्ञानाद्युपेतस्तथा प्रमितस्तदनुग्रहान्मोक्षो नेत्युच्यत इति । 'मोक्षो ज्ञानं च क्रमशो मुक्तिगो भेद एव च । उत्तरेषां प्रसादेन नीचानां नान्यथा भवेदि'त्यादिवाक्यविरोधपरिहाराय पाशुपताद्युक्तेत्यनुग्रहो विशेषितः । अङ्गीक्रियत एव शिवाद्यनुग्रहो भगवत्प्रसादसाधनभूतो मोक्षहेतुः । न तु पाशुपताद्युक्तः स्वतन्त्रसाधनभूत इति । यद्वा पाशुपताद्युक्तेत्यपि भिन्नं पदम् । सुपां सुलुगिति पञ्चम्या लुक् । यद्वा प्रथमाया लुक् । मोक्षस्य चेदं विशेषणम् । तत्र वादिनिर्देशप्रयोजनं व्यक्तमेव । यद्वाऽस्तु यथाश्रुतं शिवादीनामेव । ये शिवादयः पाशुपतादिभिः स्वातन्त्र्येणोपास्या उक्तास्तेषां (य)तथोपासितानामनुग्रह एव नास्ति प्रत्युत कोप एव । अतोऽनुग्रहान्मोक्षो दूरनिरस्त इति भावः ।**

**शे०— चतुर्विधा अपीति** । शैवाः पाशुपताः कालामुखा महाव्रताश्चेत्येवं चतुर्विधा अपीत्यर्थः । स्कन्दसूर्यगणेशादिमतानीति समयपादीयानुव्याख्यानानुसारेण पाशुपतादीत्यादिपदसंग्राह्यमाह **आदिपदेनेति** । आद्येनादिपदेनेत्यर्थः ॥ **द्वितीयेनेति** । शिवादीनामिति द्वितीयादिपदेनेत्यर्थः । स्कन्दादय इत्यादिपदेन सूर्यादिपरिग्रहः ।

**असामर्थ्येनेति** । तथा सत्यसामर्थ्येन समासानुपपत्तेः पाशुपताद्युक्तादिति स्यादिति संबन्धः । पाशुपताद्युक्तेत्यस्यानुग्रहविशेषणत्वे तदन्वितत्वापत्त्या शिवादीनामित्यनेनान्वेतुमसमर्थत्वेन तेन सह समासानुपपत्त्या भिन्नपदत्वावश्यम्भावात् । अनियतलिङ्गवचनविशेषणानां च विशेष्यनिघ्नत्वादनुग्रहा-

दिति विशेष्यवचनानुरोधेन पाशुपताद्युक्तादिति पञ्चम्यैकवचनप्रयोगप्रसङ्गादित्यर्थः । अत एवेत्युक्तमेव विशदयति **तथा सतीति** । मोक्षविशेषणत्वे पाशुपतेत्यस्यासामर्थ्येन शिवादीत्यनेन समासानुपपत्त्या भिन्नपदत्वावश्यम्भावान्मोक्षरूपविशेष्यलिङ्गवचनप्रसक्त्या पाशुपताद्युक्त इति प्रथमैकवचनप्रयोगप्रसङ्गादित्यर्थः । अस्तु तर्हीदं यथाश्रुतं शिवादीनामेव विशेषणमित्यत आह **शिवादिविशेषणत्वे त्विति** ।

नन्वेवमसमर्थत्वेन शिवादिपदेन समासानुपपत्त्या भिन्नपदत्वावश्यम्भावात्पाशुपताद्युक्तादिति स्यादित्युक्तमित्यतोऽनुग्रहविशेषणस्यास्य शिवादीत्यनेनासमर्थतया पाशुपताद्युक्ताश्च ते शिवादयश्चेति विशेषणसमासानुपपत्तावपि पाशुपताद्युक्तश्चासौ शिवादीनामनुग्रहपदेन तत्समासम्भवेन भिन्नपदत्वाभावान्न पञ्चमीप्रसङ्ग इत्यभिप्रेत्य शिवादीनामनुग्रह इति पदभेदश्रवणात्कथमेतदित्यतो नैते भिन्ने पदे किन्तु शिवादीनामनुग्रह इति षष्ठीसमास एवेत्यतो न पाशुपताद्युक्तेत्यस्य विशेषणसमासानुपपत्तिरित्याशयेनाह **तत्रेति** । ननु न शिवादीनामनुग्रह इति षष्ठीसमासोऽङ्गीकर्तुं शक्यते । तथा सति कृत्तद्धितसमासाश्चेति समासतया प्रातिपदिकसंज्ञायां सुपो धातुप्रातिपदिकयोरिति प्रातिपदिकतया सुब्लोपप्रसङ्गेन शिवाद्यनुग्रहादित्येव वक्तव्यतया शिवादीनामिति षष्ठ्यश्रवणप्रसङ्गादित्यतः षष्ठ्या आक्रोश (निन्दा) इति निन्दायां गम्यमानायां षष्ठ्या अलुग्विधानेन निन्दितत्वसूचनार्थत्वान्न तच्छ्रवणानुपपत्तिरित्याशयेनाह **षष्ठ्या इति** । किं निन्दितत्वसूचनस्यापि प्रयोजनमित्यत आह **ज्ञात्वेति** । निन्दितोऽयं शिव इत्यलुकाभिहिते निन्दितत्वविशेषणसामर्थ्यादनिन्दितोऽपि शिवोऽस्तीति सिद्धं भवति । तथा च ज्ञात्वेत्यादिवाक्यस्यानिन्दितशिवपरत्वान्न तद्विरोध इत्युक्तं भवति । श्रुतिविरोधपरिहारमेव प्रकटयति **य इति** । ननु समासत्वाश्रयणेनानुग्रहविशेषणत्वपक्षे पाशुपताद्युक्तादिति पञ्चम्यप्रसङ्गेऽपि विशेषणवैयर्थ्यं स्यादेवेत्यतस्तत्प्रयोजनमाह **मोक्ष इति** । विरोधपरिहारप्रकारमेव दर्शयति **अङ्गीक्रियत एवेति** । एवं समासत्वमाश्रित्य पाशुपताद्युक्तेत्यस्यानुग्रहविशेषणत्वे षष्ठ्या अलुगाश्रयणं ज्ञात्वा शिवं शान्तिमत्यन्तमेतीत्यादिश्रुतिविरोधपरिहाररूपतत्प्रयोजनाश्रयणं च भवतीत्यपरितोषाद्विशेषणसमासाद्यनाश्रयणेनैवानुग्रहविशेषणत्वं समर्थयते ॥ **यद्वेति** । तर्हि पाशुपताद्युक्तादिति स्यादित्युक्तमित्यत आह **सुपामिति** । पाशुपताद्युक्तेत्यस्यानुग्रहविशेषणत्वे श्रुतिविरोधपरिहाररूपप्रयोजनविशेषः कल्पनीयो भवतीत्यपरितोषात्तद्विशेषणत्वं परित्यज्य मोक्षविशेषणत्वे प्रागुक्तं दोषं परिहरन्नेव तं पक्षमुपादत्ते **यद्वेति** ॥ **प्रथमाया लुगिति** । सुपां सुलुगिति तत्स्मरणादिति भावः । माऽस्त्वयं दोषो वैयर्थ्यं तु स्यादेवेत्यत आह **तत्रेति** ॥ **व्यक्तमेवेति** । अतो न पक्षान्तरवत्तद्व्युत्पादनं क्रियत इति भावः । अनुग्रहविशेषणत्वे वा तस्य यथाश्रुतविशेषणविशेष्यभावपरित्यागो भवतीत्यपरितोषात्पक्षान्तरमाह **यद्वेति** । विशेषणमिति वर्तते । तत्पक्षोक्तदोषं परिहरति **ये शिवादय इति** ।

स० — **चतुर्विधा अपीति** । शैवाः पाशुपताः कालामुखा महाव्रताश्चेति चतुर्विधा अपीत्यर्थः । **असामर्थ्येति** । तथा सति पाशुपताद्युपेत्यस्य शिवाद्यन्वये सामर्थ्याभावेन तेन सह समासानुपपत्तेः पाशुपताद्युक्तादिति स्यादित्यन्वयः । ननु शिवादीनामनुग्रह इत्यस्य समासत्वे सुपो लुका भवितव्यमित्यत आह **षष्ठ्या आक्रोश इति** । अलुकः प्रयोजनं दर्शयति **ज्ञात्वेति** । विरोधपरिहारमेवाह **यः संसारेति** । किमर्थमनुग्रहविशेषणं वाच्यम् । तत्राह **मोक्ष इति** ।

प० — **चतुर्विधा इति** । शैवपाशुपतकालामुखमहाव्रतभेदभिन्नाः समयपादसुधोक्ताश्चतुर्विधा इत्यर्थः ॥ **असामर्थ्येनेति** । सामर्थ्यमाकाङ्क्षा अनुग्रहपदेनान्वितपाशुपताद्युक्तेतिपदस्य शिवादिपदेनाकाङ्क्षाभावात् । तयोः पदयोः समासो न स्यात् । समर्थः पदविधिरित्यधिकृत्य द्वितीयाद्यपादे समर्थयोरेव समासविधानादिति भावः ॥ **वैयर्थ्यमिति** । द्विविधशिवाद्यभावेन व्यावर्त्याभावादिति भावः । उक्तेत्यन्तस्यानुग्रहविशेषणत्वमुपेत्याह **समास एवेति** । ननु समासश्चेत्तर्हि कृत्तद्धितसमासाश्चेति प्रातिपदिकसंज्ञायां सुपो धातुप्रातिपदिकयोरिति षष्ठ्याः लुक् प्राप्नोतीत्यत आह **षष्ठ्या आक्रोश इति** । आक्रोशो निन्दा तस्यां गम्यमानायां षष्ठ्या अलुक् स्यादितीति षष्ठतृतीयपादे उक्तेः । इह मुक्तिहेतुतया पाशुपताद्युक्तशिवानुग्रहस्य निन्दासूचनाच्चोरस्य कुलमित्यादाविवालुगित्यर्थः । निन्दासूचनस्य किं फलमित्यत आह ज्ञात्वा **शिवमिति** । पाशुपताद्युक्तशिवानुग्रहस्य निन्दितत्वान्न तत्परेयं श्रुतिः । किन्तु अन्यपरेत्येवं विरोधपरिहार इति भावेन तत्तात्पर्यमाह **यः संसारेति** । एवमनुग्रहविशेषणे कथमुदाहृतवाक्याविरोध इत्यत आह **अङ्गीक्रियत एवेति** । भिन्नपदत्वे पाशुपताद्युक्तादिति स्यादित्यत आह **सुपां सुलुगिति** । सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजाल इति षष्ठान्त्यपादीयसूत्रेण सुपां लुग्भवतीत्युक्तेर्लुगित्यर्थः । यथा सान्तमहतः संयोगस्येत्यत्र संयोगस्येत्येतद्विशेषणे सान्तेतिपदे षष्ठ्या अश्रवणं तथेह पञ्चम्या इति भावः ।

या० — **चतुर्विधा अपीति** । शैवाः पाशुपताः कालामुखा महाव्रताश्चेति चतुर्विधा इत्यर्थः । **असामर्थ्येनेति** । तथा सति पाशुपताद्युक्तेत्यस्य शिवादीनामित्यनेनान्वेतुं सामर्थ्याभावेन तेन सह समासानुपपत्तेः पाशुपताद्युक्तादिति स्यादिति सम्बन्धः । ननु तर्हि सुपो धातुप्रातिपादिकयोरिति षष्ठ्या लोपेन भाव्यमित्यत आह **षष्ठ्या आक्रोश इति** । आक्रोशो निन्दा । तस्यां गम्यमानायां षष्ठ्या अलुग्भवतीत्यर्थः । उदाहरणं तु चोरस्य कुलमिति । ननु तत्र चोरकुलनिन्दया तस्य हेयत्वज्ञापनं प्रयोजनम् । प्रकृते तु पाशुपताद्युक्तशिवाद्यनुग्रहनिन्दया किं प्रयोजनमित्यत आह **ज्ञात्वा शिवमिति** ॥ **सुपां सुलुगिति** । सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः । सुपमेते आदेशाः स्युरित्यर्थः । यथाऽऽर्द्रेचर्मणीति प्राप्ते सप्तम्या लुकि आर्द्रे चर्मन् इति भवति । तथाऽत्र पञ्चम्या लुगिति भावः ।

श्री०— तत्प्रयोजनं निन्दाप्रयोजनम् । तदुपपादयति यः संसारधर्मैरिति । संसरन्तीत्यत्रेति संसारा देहास्तद्धर्मैर्दुःखादिभिरित्यर्थः । परमशिवो भगवान् ॥ यस्त्विति । प्रसिद्धो महादेव इत्यर्थः ।

सु०— कुतः शिवादीनामनुग्रहान्मोक्षो नेत्यत आह नान्य इति ।

अनु०— नान्यः पन्था इति ह्युक्तं पुरुषज्ञानतः श्रुतौ ॥

तमेवमिति श्रुतौ सहस्रशीर्षा पुरुष इति प्रकृतपुरुषज्ञानतोऽन्यनिषेधेनामृतत्वमुक्तं हि यस्मात्तस्मात्पुरुषोत्तमानुग्रह एव ज्ञानेनेरितो मोक्षहेतुर्न शिवाद्यनुग्रह इति ।

शे०— ज्ञानेनेरित इति । ज्ञानवाचकपदेनोपलक्षित इत्यर्थः ।

प०— ज्ञानेनेरित इति । 'तमेवं विद्वानि'ति विद्वत्पदोक्तज्ञानेनान्यथोपपत्त्योक्त इत्यर्थः ।

या०— ज्ञानेनेरित इति । ज्ञानवाचकपदेनोपलक्षित इत्यर्थः ।

श्री० — ज्ञानेनेरितो जनितो ज्ञानशब्देनोपलक्षित इति वा ।

सु० — ननु पुरुषसूक्ते पशुपुरुष एव प्रतिपाद्यते न विष्णुस्तत्कथं विष्णुज्ञानस्य मोक्षसाधनत्वे मन्त्रोऽयमुदाहृतः । पशुपुरुषज्ञानमपि पशुपतेरनुग्रहे परमोपयोगीति मोक्षसाधनमुच्यते । नान्य इति च न विरुद्धम् । साधनवत्साधनसाधनस्य परित्यागेऽपि फलानुदयादिति चेत् । किमेतत्पुरुषशब्दस्य विष्णौ शक्त्यभावात्कल्प्यते । तात्पर्यज्ञापकाभावाद्वा । बाधकसद्भावाद्वा ।

नाद्यः । नारायणानुवाके पुरुषशब्दस्य हरौ प्रयोगादित्याह सर्व इति ।

अनु०— सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ॥
एवं पुरुषशब्दश्च प्रयुक्तोऽब्धिशये हरौ ॥

न केवलं पुरुषज्ञानतोऽमृतत्वमुक्तम् । किन्तु पुरुषशब्दश्च हरौ प्रयुक्तः । विद्युतः पुरुषादित्युक्तोऽपि पशुपुरुष एव किन्न स्यादित्यत उक्तमब्धिशय इति । अम्भस्य पारे, यमन्तःसमुद्रे इत्यस्मिन्पुरुषेऽब्धिशयत्वस्य श्रवणात् । महोदधिशयोन्तक इत्यादिना तस्य विष्णुलिङ्गत्वावगमात् ।

शे०— पशुपुरुष एवेति । अत्र नरं च नारायणमेव चादावित्यत्रेवानभिमतव्यावृत्त्यर्थत्वादेवकारस्य न पुरुषस्य पशोर्हिरण्यगर्भस्य वा प्रतिपादनादिति हिरण्यगर्भस्यापि पुरुषसूक्तप्रतिपाद्यत्व-

प्रतिपादकजिज्ञासासत्रीयपूर्वग्रन्थविरोध इति ध्येयम् । नन्वेवं तन्मतेऽपि पशुपतिज्ञानस्यैव मोक्षसाधनत्वं न स्यात् । उदाहृतमन्त्रानुसारेण पशुपुरुषज्ञानस्यापि मोक्षसाधनत्वादित्यत आह **पशुपुरुषेति** । नन्वेवं साधनसाधनत्वे पशुपुरुषज्ञानस्य नान्य इति निषेधानुपपत्तिः । पशुपुरुषातिरिक्तपशुपतिज्ञानस्य मोक्षसाधनस्य सत्त्वादित्यतोऽस्य साधनसाधनावधारणत्वेन साधनावधारणत्वाभावान्नानुपपत्तिरित्याशयेनाह **नान्य इति चेति** । पुरुषशब्दो हरौ प्रयुक्त इत्येतावता पूर्वमूले तस्याभिधशायित्वकथनानर्थक्यमित्यतो **विद्युतः** पुरुषादित्युक्तस्य पुरुषस्यायं हरिरभिधशयत्वादिति हरित्वसाधनार्थत्वात्र तदिति भावेन तत्साधकतया तद्योजयितुं तद्यावत्यशङ्कामुत्थापयति **विद्युत इति** । अपक्षधर्मत्वादव्याप्तत्वाच्च कथमनेन विद्युत्पुरुषस्य हरित्वसाधनमित्यलस्तदुभयं दर्शयति **अम्भसीत्यादिना** ।

प० — **इत्यादिनेति** । सहस्रनामस्थवाक्येनेत्यर्थः ।

**श्री०** — ननु पशुपतिज्ञानस्यापि न मोक्षहेतुत्वं युक्तम् । पुरुषपशुज्ञानस्यैव पुरुषसूक्ते मोक्षहेतुत्वोक्तेरित्यत आह **पशुपुरुषेति** । नियम्यतया ज्ञानमपीत्यर्थः । पशुपतेरिति हेतुगर्भम् । पुरुषपशोस्तदधीनत्वेन तत्पतित्वात्तस्येति भावः ॥ **साधनवदिति** । मोक्षसाधनीभूतपशुपत्यनुग्रहवदित्यर्थः । **साधनसाधनस्येति** । पशुपत्यनुग्रहसाधनपशुपुरुषज्ञानस्येत्यर्थः ।

सु० — **इतश्चायं नारायणो न पशुरित्याह** न तस्येति ।

---

**अनु०** — न तस्येशे कश्चन तस्य नाम महद्यशः ॥
इति चाधिपतिस्तस्य प्रतिषिद्धः स्वयं श्रुतौ ॥
विश्वतः परमां नित्यं विश्वं नारायणं हरिम् ॥
इति सर्वाधिकत्वोक्त्या समोऽपि विनिवारितः ॥

तस्य **पुरुषस्य** । **ईशे ईष्टे** । **व्यत्ययो बहुलमिति वचनात्** । **अधीगर्थदयेषां कर्मणीति षष्ठी** । **महदिति यशश्चेति तस्य पुरुषस्य नाम** । **श्रुतौ नारायणानुवाके न तस्येति वाक्येन तस्य पुरुषस्याधिपतिः स्वयं मुखत एव प्रतिषिद्धः** । **परमश्चासावश्चेति परमास्तं परमाम्** । **लिङ्गव्यत्ययेन परममिति वा** । **विश्वं पूर्णम्** । **नारायणानुवाक एव विश्वत इति श्रुतौ तस्य पुरुषस्य सर्वाधिकत्वोक्त्या समोऽपि विनिवारितः । न हि सर्वाधिकस्य समो युज्यते ।**

**शे०** — नन्वत्र तस्य नेष्टे इति प्रथमपुरुषप्रयोगः कर्तुमुचितः । युष्मदस्मद्विषयादन्यत्र तद्विधानात् । अस्य च युष्मदस्मद्विषयत्वाभावात्तत्कथमीशे इत्युत्तमपुरुषप्रयोग इत्यतः पुरुषव्यत्ययोऽयमिति भावेन व्याचष्टे **ईशे ईष्ट इति** । तत्र नियामकं पठति **व्यत्यय इति** । यद्यपीदं यथायथं

विहितानां शबादीनां विकरणानां छन्दसि विषये व्यत्ययविधायकसूत्रं न पुरुषव्यत्ययविधायकमिति न तदुपपादकतयाऽस्योपन्यासो युक्तः । तथाऽप्यत्र सूत्रे छन्दसि शायजपीति पूर्वसूत्रात् छन्दस्यपीत्यस्यानुवृत्त्या छन्दसि व्यत्ययो भवति अपिशब्दाद्यथाप्राप्तं चेत्येतावन्मात्रेणेष्टसिद्धया बहुलग्रहणं व्यर्थमित्याशङ्कायां बहुलग्रहणं सर्वविधिव्यभिचारार्थमिति वृत्तौ प्रकृताप्रकृतसर्वविधिव्यत्ययलक्षणव्यभिचारार्थत्वं बह्वर्थादानप्रवृत्तिनिमित्तकबहुलग्रहणस्य प्रदर्श्य बहुलग्रहणसंग्राह्यप्रदर्शनपरतयोदाहृते सुप्तिङुपग्रहलिङ्गनराणामिति श्लोके नरशब्देकपुरुषव्यत्ययस्याप्यनेन सिद्धेरस्योपन्यास इति द्रष्टव्यम् । यद्यपि लोपस्त आत्मनेपदेष्विति छन्दसि तकारलोपविधानादीश इति प्रथमपुरुष एवेत्यपि समाधानं कर्तुं शक्यम् । तथाऽपि सर्वेषां छन्दोविषयविधीनां व्यत्ययो बहुलमित्येतत्प्रपञ्चनार्थत्वेन तन्मूलकत्वान्मूलभूतेन व्यत्यय इत्यनेनैवेदं समाहितमित्यवधेयम् । ननु तथाऽपि कर्मणि द्वितीयास्मरणात्कर्मतया तमिति द्वितीयया भवितव्यम् । तस्येति षष्ठी तु कथमित्यत आह **अधीगर्थेति** । महद्यश इति विशिष्टं नामेति भ्रान्तिनिरासायाह **महदितीत्यादि** । एवं पुलिङ्गत्वेऽपि सोमपाशब्दवदाकारान्ततामाश्रित्य परमाशब्दो व्युत्पादितः । इदानीमाबन्तत्वमाश्रित्यापि व्याख्याति ॥ **लिङ्गव्यत्ययेनेति** । स्त्रीलिङ्गव्यत्ययेनेत्यर्थः । व्यत्ययो बहुलमित्यत्र बहुलग्रहणसंग्राह्यप्रदर्शनपरतयोदाहृते श्लोके छन्दसि लिङ्गव्यत्ययस्यापि विधानादिति भावः । ननु श्रुतौ विश्वमिति विश्वतादात्म्यकथनान्न तस्य विश्वतः परमत्वं संभवतीत्यतो नेदं विश्वतादात्म्यपरं येनोक्तदोषः स्यात् । किन्तु विश्वतः परमत्वप्रयोजकधर्मकथनेन तदुपपादकमिति नानुपपत्तिरित्याशयेन तद्याचष्टे ॥ **विश्वं पूर्णमिति** । अप्रयोजकत्वमाशङ्कयाह **न हीति** । व्याघातप्रसङ्गादिति भावः ।

**स०— व्यत्यय इति** । तत्पुरुषव्यत्यय इत्यर्थः । ननु तस्येश इत्यत्र तमिति द्वितीयया भवितव्यमित्यत आह **अधीगर्थ इति** ॥ **लिङ्गव्यत्ययेन** स्त्रीलिङ्गव्यत्ययेन ।

**प०— व्यत्ययो बहुलमिति** । प्रथमपुरुषे प्रयोक्तव्ये बहुलं व्यत्ययो व्यत्यासो भवति छन्दसीत्युक्तत्वात् ईशे इत्युत्तमपुरुषैकवचनमित्यर्थः । 'लोपस्त आत्मनेपदेष्वि'ति तलोपे सति प्रथम पुरुष एवेश इति रूपसिद्धावपि समाधानान्तरमेतदित्यदोषः ॥ **अधीगर्थेति** । अधीगर्थाः स्मृत्यर्थाः । दय दानगतिरक्षणहिंसादानेषु ईश ऐश्वर्ये एतेषां योगे कर्मकारके षष्ठी भवतीत्युक्तेस्तस्येति षष्ठी साध्वीत्यर्थः । श्रुतावित्यस्यार्थद्वयम् ॥ **नारायणेत्यादि** । स्वयमित्यस्य व्याख्या मुखत इति **लिङ्गव्यत्ययेनेति** । परममिति पुलिङ्गे प्रयोक्तव्ये व्यत्ययेन स्त्रीलिङ्गप्रयोग इत्यर्थः । स्त्रीलिङ्गस्यास्य शब्दस्य व्यत्ययेन परमिति पुलिङ्गो ध्येय इति वार्थः ॥

**या०— व्यत्यय इति** । ईष्ट इति प्रथमपुरुषप्रयोगेण भाव्यम् । तत्रेश इत्युत्तमपुरुषप्रयोगो यः स व्यत्ययेनेत्यर्थः । यद्यपि लोपस्त आत्मनेपदेष्विति छन्दसि तकारलोपविधानादीश इति प्रथमपुरुषेऽपि रूपमुपपद्यत इति समाधेयम् । तथापि सर्वेषां छन्दोविषयविधीनां व्यत्ययो बहुलमित्येतत्प्रपञ्चनार्थत्वान्मूलभूतेन व्यत्यय इत्यनेनैव समाहितमिति ज्ञातव्यम् ॥ **अधीगर्थेति** । एषा कर्मणि षष्ठी स्यादित्यर्थः । अधीगर्थाः स्मृत्यर्थाः । मातुरध्येति पितुः स्मरति सर्पिषो दयते जगतामीष्टे इत्युदाहरणानि । पूर्वं पुल्लिङ्गत्वेऽपि सोमपाशब्दवदाकारान्तत्वमाश्रित्य व्याख्यातम् । इदानीमाबन्तत्वमङ्गीकृत्याह **लिङ्गव्यत्ययेनेति** । स्त्रीलिङ्गव्यत्ययेनेत्यर्थः ।

**सु०—** ततः **किमित्यत आह** समेति ।

**अनु०—** समाधिकस्य राहित्यान्नोपचारपुमानसौ ॥

**समाधिकस्येति द्वन्द्वैकवद्भावः । असौ नारायणानुवाकोक्तः । उप समीपे चारो यस्यासौ प्रधानस्योपसर्जनभूत उपचारपुमान् पशुपुरुषो नेत्यर्थः । नारायणनामादिना हरिरेवायमिति शिष्यैरेव ज्ञातुं शक्यत इति नोक्तम् ।**

**शे०—** ननु समश्चाधिकश्च समाधिकौ तयोः समाधिकयोरिति द्विवचनेन भवितव्यम् । समाधिकस्येत्येकवचनं तु कथमित्यतः सर्वो द्वन्द्वो विभाषयैकवद्भवतीति विकल्पेन द्वन्द्वस्यैकवद्भावविधानादेकवचनोपपत्तिरिति भावेनाह **समाधिकस्येतीति** ।

नन्वेवं सति वाक्त्वचमित्यादसमाहारद्वन्द्वेऽपि द्विवचनं धवखदिरादिराविती तरेतरयोगद्वन्द्वेऽपि पक्षे एकवचनं च प्रसज्यत इति चेदुच्यते । सर्वो द्वन्द्व इत्यनेन न समाहारद्वन्द्वस्तथेतरेतरद्वन्द्वो वा अपूर्वतया विभाषयैकवत्क्रियते । किं तु न्यायसिद्धोऽर्थोऽनूद्यते । तथा हि । चार्थे द्वन्द्व इति चार्थे द्वन्द्वः क्रियते । चार्थश्चेतरेतरयोगः स यदोद्रिक्तावयवभेदो भवति तदाऽवयवभेदानुगमाद्द्विवचनबहुवचने सिद्धे एव । यदा तिरोहितावयवभेदविवक्षा संहतिप्राधान्यमिति यावत् तदा समाहार इति संहतिप्रधानत्वादेकवचनं भवति । तदेवं चार्थ एव सर्वो द्वन्द्वो विभाषयैकवद्भवतीति परिभाषारूपेण पठ्यते । ननु चार्थः समुच्चयो, नेतरेतरयोगः । चशब्दप्रयोगे समुच्चयस्य प्रतीतेरिति चेत् । सत्यम् । किन्तु तत्प्रभेद एवेतरेतरयोगो न समुच्चयादन्यः । तथा हि । समुच्चय एव युगपदर्थाभिधायिनां परस्परापेक्षाणां पदानां भवति तदा द्वन्द्वः क्रियते । एतावतैवेतरेतरयोगश्चार्थ इत्युच्यमानत्वात् । नन्वेवं द्वन्द्वश्च प्राणितूर्ये ति' सूत्रमनर्थकं स्यात् । तेन हि समाहारद्वन्द्वे एकवद्भावो विधीयते । तत्र समाहारद्वन्द्वैकत्वादेकवचनं सिद्धेरिति चेन्न । प्राण्यङ्गादीनां समाहारद्वन्द्व एव यथा स्यादितरेतरयोगो मा भूदिति

सूत्रप्रयोजनम् । ननु तर्हि किमर्थं समाहारे एकत्वं क्रियते इतरेतरयोग एव एकवद्भावः क्रियताम् । एवं समाहारग्रहणं यत्र प्रतिपाद्यं भवति कार्यं च विधिमुखेनैव वर्तते । उच्यते । इतरेतरयोगे एकवद्भावे सति अस्थित्वचमित्यत्र समाहारद्वन्द्वलक्षणे 'द्वन्द्वाच्चुदषहान्तात्समाहार' इति न स्यात् । नन्वेवमपि पूर्वोक्तप्रकारेण समाहार एव एकवचनं भवति समाहारश्चैक एव । एवञ्चैकवदिति वतिर्नोपपद्यते । न ह्येक एव एकवदित्युच्यते । उच्यते बुद्ध्यानेकत्वमध्यारोप्य भविष्यति । बुद्धिर्हि भगवति अभेदेऽपि भेदं जनयति । यथा राहोः शिर इति । ननु तथाऽप्यशेषद्वन्द्वे एकत्वाविधानात्सर्वो द्वन्द्व इत्यघटना स्यादिति चेत् । उच्यते । सर्वो द्वन्द्व इति कोऽर्थः । इतरेतरयोगसमाहारात्मक इत्यर्थः । न चैवमपि वृक्षमृगादिसूत्रमनर्थकम् । अनयैव परिभाषया बाभ्रव्यशालङ्कायनं बाभ्रव्यशालङ्कायना इत्येतद्वत् प्लक्षन्यग्रोधं प्लक्षन्यग्रोधा इत्येवमादीनां सिद्धत्वादिति चेत् । उच्यते । सिद्धे परिभाषयैकत्वे वृक्षादीनां सजातीयैरेव द्वन्द्वो यथा स्यान्न विजातीयैरिति व्यतिकरनिरासार्थं विभाषयैकवत्त्वविधानमित्यन्यत्र विस्तरः ।

विद्युत्पुरुषादित्युक्तस्य शङ्किताया: पशुपुरुषताया एव निषेधनीयतया प्रक्रान्तत्वादुपचारपुरुषत्वस्यानाशङ्कितस्य निषेधोऽसङ्गत इत्यतोऽस्याशङ्कितपशुपुरुषत्वनिषेधत्वान्नासङ्गतिरिति भावेनोपचारपुमानित्येतत्पशुपुरुषपरतया योगमाश्रित्य योजयति ॥ **उप समीप इति** । प्रबलेन नारायणनामादिना विद्युत्पुरुषादित्युक्तपुरुषस्य हरित्वसाधनसंभवे तत्परित्यागेन तदपेक्षया दुर्बलाब्धिशयत्वादिरूपलिङ्गाश्रयणेन हरित्वं साधयतां भाष्यकाराणां प्रसक्तामचातुरीयशङ्कां तदनुक्तौ निमित्तकथनेन परिहरति **नारायणेति** । स्पष्टत्वादिति शेषः ।

**प० — अयमिति** । नारायणानुवाकोक्तो विश्वत इति वाक्योक्तो वेत्यर्थः । आदिपदेन विष्ण्वादिनाम त्रिधामत्वसमुद्रशायित्वादिश्रुतिलिङ्गग्रहः ।

**सु० — अधिपतिराहित्यसर्वाधिकत्वयोस्ततोऽवगतस्य समाधिकराहित्यस्य च पश्चावनुपपत्तेर्न तद्विषयोऽयं पुरुषशब्दः । किन्तु नारायणादिनाम्नाऽब्धिशयत्वादिलिङ्गेन च विष्णुविषय एवेत्यस्तु । न तावता पुरुषशब्दस्य विष्णौ वाचकत्वशक्तिः सिध्यति । प्रयोगस्यामुख्यया वृत्त्याऽप्युपपत्तेरित्यत आह समेति । असौ विष्णुरुपचारेण पुरुषशब्दविषयो न भवति किन्तु मुख्यवृत्त्यैव । कुतः । मुख्यासम्भवे ह्युपचारः कल्प्यते । पुरुषशब्दस्य मुख्यार्थः पूर्णत्वम् । तच्च विष्णोरेव समाधिकराहित्याद्युज्यत इति ।**

**शे०— तावतेति** । प्रयोगमात्रेणेत्यर्थः । अन्यथा गङ्गाशब्दस्य प्रयोगबलात्तीरवाचकत्व-शक्तिकल्पनाप्रसङ्गादिति भावः । वाचकत्वशक्त्यभावे कथं तत्र प्रयोग इत्यतो न प्रयोगो वाचकत्व-शक्तिनिमित्तक एवेति नियमः । तथा सति गङ्गाशब्दस्य तीरे प्रयोगाभावप्रसङ्गात् किन्तु मुख्यामुख्य-साधारण्येन वृत्तिमात्रनिमित्तक एव । तथा च पुरुषशब्दस्य विष्णौ वाचकत्वशक्त्यभावेऽप्यमुख्यवृत्ति-सद्भावात्तन्निबन्धनः प्रयोगः संभवत्येवेत्याह **प्रयोगस्येति** ॥ **पूर्णत्वेति** । पॄ पालनपूरणयोरित्यस्मात्पुरः कुषन्निति कुषन्प्रत्यये किस्त्वाद्गुणनिषेधे उदोष्ठ्यपूर्वस्येति ऋत उत्त्वे रपरत्वे च पुरुषशब्दनिष्पत्तिरिति भावः ।

**प०— तदेव** वाक्यमन्यथापि योजयितुं शङ्कते **अधिपतीति** ॥ **हेत्वन्तरमाहेति** । सर्वा-त्मकत्वमर्थो नेत्यत्रेति योज्यम् । युक्त्यन्तरमाहेत्यत्रापि ध्येयम् । ब्राह्मणशब्दार्थो व्याख्यानरूपमिति ॥

**श्री०—** सर्वाधिकत्वयोः पश्चावनुपपत्तेरित्यन्वयः ॥ **ततोऽवगतस्येति** । ताभ्यामवगत-स्येत्यर्थः । तद्विषयस्तत्प्रतिपादकः । वाचकत्वशक्तिः वाचकत्वरूपा शक्तिः । **द्वयोर्मुक्तामुक्तयोः** । तौ प्रतीति यावत् ।

**सु०— अस्त्वेवं पुरुषशब्दस्य विष्णौ वाचकत्वशक्तिस्तथाऽपि पुरुषसूक्ते ज्ञापका-भावात्तत्परत्वं नास्तीति द्वितीयं निराकरोति** पुरुष एवेति ।

**अनु०—** पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ॥
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥
मुक्तामुक्तपरेशत्वमिति तस्याह सा श्रुतिः ॥

**यद्भूतं यच्च भव्यं यच्च भवदमुक्तं विश्वमिदं सर्वं पुरुष एव । पुरुषाधीनमेव । यत एवमन्नेनान्नमदनीयममुक्तवर्गमतिरोहति अतिक्रामति । अमुक्ताधिपतिरिति यावत् । तस्माद-मृतत्वस्योत भावभवित्रोरभेदान्मुक्तवर्गस्यापीशानः । संसारे स्वाधीनं जगद्यदि मुक्तौ स्वाधीनत्वं जह्यात्तदा प्रेक्षावान्न मोचयेत् । अतो मुक्तावपि तदधीनमेवेति सा श्रुतिः पुरुषसूक्तमन्त्रस्तस्य मुक्तामुक्तपरेशत्वमाह । तच्च मुक्तानां परमा गतिरित्यादिना विष्णोरेवावगतं पञ्चास्त्वसम्भावित-मेवेत्यतः पुरुषसूक्तं विष्णुपरमेवेति ज्ञायते ।**

**शे०—** श्रुतौ भूतभव्यग्रहणं भवदुपलक्षणमित्यभिप्रेत्याह **यच्चेति** । ननु प्रवृत्तिनिमित्तरूप-भाववाचकामृतत्वशब्दस्य कथममृतरूपधर्मिपरत्वमित्यतो लक्षणयेति भावेन लक्षणाबीजशक्यसम्बन्धमाह

**भावभवित्रोरिति** । अनेन तादात्म्यमेव लक्षणाबीजभूतः शक्यसम्बन्ध इत्युक्तं भवति । लक्षणया विना भाववाचकामृतत्वशब्दास्स्वातन्त्र्येणामृतवर्गोपस्थितेरसम्भवादिति भावः ।

प० — **एवमिति** । पुरुष एवेदं सर्वमित्येतत्पुरुषस्य सर्वत्वं न वक्तीत्येवमाहेत्यर्थः ।

सु० — **ननु च पुरुष एवेदं सर्वमिति पुरुषस्यात्र स(र्वत्व)र्वात्मकत्वमेवोदितम् । तत्कथं मुक्तामुक्तपरेशत्वमाह श्रुतिरिति तत्राह** अमृतेति ।

**अनु० — अमृते**शानवचनात्सर्वस्येशानतोदिता ॥

**ईशानेति भावप्रधानो निर्देशः । उत्तरार्धे मुक्तेशानत्वस्योक्तत्वात्पूर्वार्धेऽमुक्तस्य सर्वस्येशानतैवोदिता ज्ञातव्या । न तु सर्वत्वम् । न हि कोऽपि वादी मुक्तौ भेदममुक्तावभेदमङ्गीकरोति । नापि युज्यते । अभिन्नस्य पश्चाद्भेदादर्शनात् ।**

शे० — नन्वमृतेशानत्ववचनादिति वक्तव्यमीशानवचनादिति तु कथमित्यतोऽत्रेशानशब्दस्य लक्षणयेशानत्वरूपधर्मपरत्वेन धर्मिपरत्वाभावान्नानुपपत्तिरित्याह **भावप्रधान इति** । **अमुक्तस्य** सर्वस्येति कर्मणि षष्ठी । अमुक्तसर्वं प्रतीत्यर्थः । ननूत्तरार्धस्य मुक्तनियामकत्वप्रतिपादकत्वेऽपि पूर्वार्धस्य कुतोऽमुक्तसर्वनियामकत्वप्रतिपादकत्वम् । अमुक्तसर्वात्मकत्वप्रतिपादकत्वे बाधकाभावादित्यतः किमयं प्रकारः केनचिद्वादिनाऽङ्गीकृतोऽस्तीत्याशङ्क्यते यौक्तत्वमात्रेण वेति विकल्पं मनसि निधायाद्यं दूषयति **न हीति** । द्वितीयं दूषयति **नापीति** । तत्र हेतुः **अभिन्नस्येति** । पूर्वमभिन्नस्येत्यर्थः ।

सु० — **हेत्वन्तरमाह** यदीति ।

**अनु०** — **यदि** सर्वत्वमुदितमुतेश इति तद्वृथा ॥

**पूर्वार्धे यदि पुरुषस्य सर्वत्वमुदितं स्यात्तर्ह्युत्तरार्धेऽमृतत्वस्योतेशान इत्युतशब्दो वृथा स्यात्** । **तत्कथमित्यत आह** उतशब्द इति ।

उतशब्दो वदेदेष हीशत्वस्य समुच्चयम् ॥

**उत्तरार्धस्थउतशब्दो यस्मादीशत्वस्य समुच्चयं वदेत् । अर्थान्तरस्यासंभवात् । न च द्वयोरीशत्वयोरनुक्तौ तत्समुच्चयोक्तेरवकाशोऽस्ति । तस्मादुतशब्दो वृथैवेति ।**

शे० — ननु शब्दः किं नित्य उतानित्य इत्यादाविव विकल्पार्थमेव किन्न स्यादित्यतस्तस्यार्थस्य प्रकृतेऽसम्भवान्नोतशब्दस्य तदर्थत्वमत्राभ्युपगन्तुं शक्यमित्याह **अर्थान्तरस्य चेति** । अस्तु तर्हीशत्वसमुच्चयाभिधायकत्वमेवोतशब्दस्येत्यत आह **न चेति** ।

सु॰— **युक्त्यन्तरमाह** पुरुषेणैवेति ।

अनु॰— पुरुषेणैवेदं व्याप्तमिति ब्राह्मणं चाह तं प्रति ॥

**पुरुष एवेदं सर्वमिति पुरुषेणैवेदं** सर्वं व्याप्तमातृणादाकरीषात्सर्वं भगवानिति मिथ्या-दृष्टिरेषेति शाखान्तरब्राह्मणं च तं मन्त्रं प्रति प्रवृत्तं तस्य मन्त्रस्य व्याख्यानरूपमेवाह अतश्च न सर्वत्वमर्थः । व्याप्तं वशीकृतम् ।

**एतेन धर्म(र्मि)समुच्चयार्थ उतशब्द इत्यपि परास्तम् ।**

शे॰— तमिति व्याख्येयतया प्रकृतमन्त्रपरामर्श इत्याशयेनाह **तं मन्त्रमिति** । मन्त्रं प्रति किमित्यतोऽपेक्षितं पूरयति **प्रवृत्तमिति** । मन्त्रं प्रति प्रवृत्तमित्यस्य विवरणं **व्याख्यानरूपमिति** ॥ **एवमिति** । पुरुष एवेदं सर्वमित्येतत्पुरुषस्य सर्वत्वं न वक्तीत्येवमाहेत्यर्थः । ननूदाहृतब्राह्मणवाक्यं न भवद्व्याख्यानानुकूलम् । तत्र भगवद्व्याप्तत्वाभिधानेऽपि तदधीनत्वानुक्तेरित्यतः प्रकृतोपयोगितया व्याचष्टे **वशीकृतमिति** ॥ **एतेनेति** । ब्राह्मणवाक्यविरोधेनेत्यर्थः ॥ **धर्मिसमुच्चयार्थ इति** । न केवलम-मृतस्येशानः किन्नामामृतत्वस्यापीत्येवं धर्मिसमुच्चयार्थ इत्यर्थः ॥ धर्मसमुच्चयार्थ इति पाठेऽपि धर्मस्य धर्मिणा सह समुच्चयार्थ इत्यर्थः ।

स॰— **एतेनेति** । ब्राह्मणवाक्यविरोधेनेत्यर्थः ।

प॰— प्रकृतोपयोगार्थमाह **वशीकृतमिति** ।

या॰— **एतेनेति** । ब्राह्मणवाक्यविरोधेनेत्यर्थः ।

श्री॰— ननु पुरुषेणैवेदं व्याप्तमिति सर्वस्य पुरुषेण व्याप्तत्वमेवोच्यते न तदधीनत्वमित्यत आह **व्याप्तं वशीकृतमिति** । विशेषेण प्रेरणाय भगवताऽऽप्तं प्राप्तं तत्प्रेरितं वशीकृतमिति फलितार्थ इति द्रष्टव्यम् । यदुक्तमुतशब्द ईशत्वसमुच्चायकः । न च द्वयोर्मुक्तामुक्तयोरीशत्वयोरनुक्तौ समुच्चयोक्तेरव-काशोऽस्त्यतः पूर्वार्धेऽमुक्तेशत्वमेवोक्तमिति । तदयुक्तम् । पूर्वार्धे सर्वत्वमेवोक्तम् । उतशब्दस्त्वमृत-त्वस्य देवसमूहस्येशान इत्येवं देवेशानत्वरूपधर्मसमुच्चयार्थ इत्यङ्गीकारादित्यत आह **एतेनेति** । ब्राह्मणवाक्यविरोधेन पूर्वार्धस्य सर्वेशत्वपरत्वादिति भावः ।

सु॰— **इतश्च सर्वेशत्वमेव पूर्वार्धार्थो न तु सर्वत्वमित्याह** एतावानिति ।

अनु॰— एतावानस्य महिमेति महिम्नो वचो हि तत् ॥

**इति वचनादिति शेषः । अस्य पुरुषस्यैतावान्महिमा यः पूर्ववाक्योक्त इत्युत्तरवाक्य-बलात् तत् पुरुष एवेदमित्येतत्पुरुषस्य महिम्नो वाचकं वच इति तावज्ज्ञायते । ततश्च महिम-**

**प्रतिपादकं यथा स्यात्तथा व्याख्येयम् । न च सर्वात्मत्वं महिमा । अपकर्षहेतुत्वात् । किन्तु सर्वाधिपत्यमेव । न च तदतिरिक्त(क्तं)महिम्नो वचनम् । सङ्कोचे कारणाभावात् ।**

**शे०— वचनादिति शेष इति** । मूले इतीत्यन्तरं वचनादिति शेष इत्यर्थः ॥ **न च तदतिरिक्तमिति** । पुरुष एवेदं सर्वमित्येतद्वाक्यव्यतिरिक्तं वाक्यजातमित्यर्थः ॥ **सङ्कोच इति** । असद्व्याख्यानरीत्यैतद्वाक्यसाधारण्येन सर्वस्यापि पुरुषसूक्तस्य महिमाभिधायकत्वसम्भवे तत्परित्यागेन पुरुष एवेदं सर्वमित्येतत्सर्वात्मकत्वाभिधायकम् तद्व्यतिरिक्तमेव च वाचकमिति सङ्कोचकप्रमाणाभावादित्यर्थः ।

**प०— एतेनेति** । उदाहृतवाक्यानुरोधेन पूर्वार्धेऽपीशानत्वस्यैवाभिमततया तत्समुच्चयसंभवेन सर्वात्मकत्वधर्मेण सहेशानत्वधर्मसमुच्चयार्थ उपशब्द इति पक्षो न युक्त इत्यर्थः । अन्यथा तद्विरोधापत्तेरिति भावः ॥

**श्री०—तदतिरिक्तेति** । अमुक्ताभेदस्य पूर्वार्धोक्तत्वेऽप्युत्तरार्धे मुक्ताधिपत्यस्योक्तत्वेऽप्युत्तरार्धे मुक्ताधिपत्यस्योक्तत्वेनामुक्तसर्वाधिपत्यव्यतिरिक्तमुक्तसर्वाधिपत्यवाचकमेवैतावानस्येति वाक्यार्थः ।

**सु० — इतोऽप्येतदेवमित्याह** सोऽमृतस्येति ।

**अनु०— सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ॥**

इत्यमुक्ताधिपत्यं तु पूर्वार्धोक्तमनूद्य च ॥

उतामृतस्येश इति विधत्ते मुक्तिगेशताम् ॥

**इति भागवतवचनादिति शेषः । अनूद्य यदन्नेनातिरोहतीति वचनेन हेतुतयेति शेषः । विधत्ते श्रुतिः । अयमर्थः । उत्तरार्धे तावदमुक्ताधिपत्यं हेतुत्वेनोपादाय मुक्ताधिपत्यं प्रति जानीते श्रुतिरिति ज्ञायते । पुरुषसूक्तव्याख्यानप्रसङ्गे सोऽमृतस्येति भागवतवचनेनोत्तरार्धस्य तथैव व्याख्यातत्वात् । अत एव 'अन्नेन दिव्यभोगेन यदतिरोहत्यधिरोहत्येधते तस्यामृतत्वस्य देवत्वस्येशान' इति व्याख्यानमयुक्तम् । भावभवित्रोरेकत्वाभिप्रायेणामृतत्वस्येत्येतदमृतस्येति हि व्याख्यातम् । देवव्यावृत्त्यर्थमेव चाभयस्येत्युक्तम् । अन्नेनेति तृतीया च द्वितीयार्थेत्यभिहितम् । अन्नं च न प्रसिद्धमिति मर्त्यमित्युदितम् । सोऽयमुत्तरार्धार्थः पूर्वार्धस्यासद्व्याख्यान एव युज्यते । पूर्वार्धेऽमुक्ताधिपत्यं विहितम् । उत्तरार्धे तत्पूर्वार्धोक्तममुक्ताधिपत्यं हेतुत्वेनानूद्य पुरुषस्य मुक्तिगेशतां विधत्ते श्रुतिरिति । परकीयव्याख्याने तु परस्परव्याघातेनानुपपन्न एवेति ।**

**शे०—अत एवेति** । उत्तरार्धव्याख्यानरूपोदाहृतभागवतवाक्यविरोधादेवेत्यर्थः । उतामृतत्वस्येत्युत्तरार्धस्य च व्याख्यानव्याख्येयभावमेव प्रकटयति **भावेति** । अस्त्वेवंरूपमेवोत्तरार्धः किमेतावतेत्यत आह **सोऽयमिति** । योगमेवोपदर्शयति **पूर्वार्ध इत्यादिना** । परकीयव्याख्याने तदयोगं दर्शयति **परकीयेति** । पूर्वार्धस्येति शेषः ॥ **अनुपपन्न एवेति** । उत्तरार्धार्थ इति वर्तते । तत्र हेतुः परस्परेति । अनुपपन्ने एवेत्यपि क्वचित्पाठः । तत्र परकीयव्याख्याने इति द्विवचनं पूर्वोत्तरार्धव्याख्याने अनुपपन्ने एवेति सम्बन्धः । तत्र हेतु परस्परेति । अस्मिंश्च पाठे परस्परेति श्लिष्टं पूर्वपाठे पूर्वार्धार्थविरुद्धतामात्रेणोत्तरार्धार्थस्यानुपपन्नत्वसिद्धिसम्भवेन परस्परविरोधपर्यन्तधावनानर्थक्यात् ।

**स०— अत एवेति** । भागवतवचनविरोधादेवेत्यर्थः । **अनुपपन्न एवेति** । पूर्वार्ध इति शेषः । अनुपपन्ने एवेत्यपि पाठः । तत्र परकीयव्याख्याने इति वचनम् । पूर्वोत्तरार्धव्याख्याने परस्परविरोधादनुपपन्ने एवेत्यर्थः ।

**प० — अत एवेति** । भागवतविरोधादेवेत्यर्थः ॥ **अभयस्येत्युक्तमिति** । 'सोऽबिभेत्' 'भयादग्निरि'त्यादिना देवानामपि भयश्रवणादिति भावः ॥ **परस्परेति** । सर्वात्मकत्वस्वामित्वयोर्व्याघातेनानुपपन्न एव मन्त्रः स्यादित्यर्थः ।

**या०— अनुपपन्न एवेति** । उत्तरार्ध इति वर्तते ।

**श्री०— अत एव** भागवतवाक्यविरोधादेव ॥ **देवत्वस्येति** । देवसमूहस्येत्यर्थः । भावभवित्रोर्धर्मधर्मिणोः ॥ **अभयस्येत्युक्तमिति** । भीषाऽस्माद्वातः पवत इत्यादिना देवानां भयावगमादिति भावः । अनूद्य यदन्नेनेत्यनूद्य । मुक्तेशतां मुक्तगान्प्रतीशताम् ॥ **परस्परव्याघातेनेति** । पूर्वार्धे सर्वाभेदोक्त्या मुक्ताभेदस्यापि प्राप्तत्वात्पुनरुत्तरार्धे मुक्तनियामकत्वोक्तौ परस्परव्याघातप्रसङ्गेनोत्तरार्धोऽनुपपन्न एव स्यादित्यर्थः ॥

**सु०— एतेन 'पुरुषशब्दस्य विष्णुविषयत्वे सर्वात्मकत्वं बाधकम् । न हि विष्णोः सर्वात्मकत्वं भवाद्भिरप्यभ्युपगम्यते । पशोस्तु देहयोगवशाद्भूतत्वादिकं युज्यत' इति तृतीयपक्षोऽपि निरस्तः ।**

**शे० — एतेनेति** । पुरुष एवेदं सर्वमिति वाक्यस्य भूतभव्यभवदमुक्ताधिपतित्वसमर्थनेनेत्यर्थः ॥ **सर्वात्मकत्वमिति** । भूतभव्यभवद्रूपसर्वात्मकत्वमित्यर्थः । सर्वात्मकत्वस्य विष्णाविव पशावप्यनुपपत्तेस्तत एव बाधकात्पुरुषशब्दस्य विष्णुविषयत्वाभाववत्पुरुषपशुविषयत्वाभावोऽपि स्यादित्यत आह **पशोस्त्विति** ॥ **तृतीयपक्षोऽपीति** । बाधकसद्भावान्न पुरुषशब्दस्य विष्णुविषयकत्वमिति तृतीयपक्षोऽपीत्यर्थः ॥ **परास्त इति** । ततश्च भाष्ये न तदनिरासप्रयुक्तन्यूनता शङ्कनीयेति भावः ।

**प०** — बाधकसद्भावादिति पक्षं विवृण्वन्नेव निराह **एतेनेति** । अभेदार्थकत्वस्य निरासेनेत्यर्थः ।

**या०** — **सर्वात्मकत्वं** भूतभवद्भव्यरूपसर्वात्मकत्वम् ।

**श्री०** – **एतेनेति** । पूर्वार्धे सर्वात्मकत्वस्यानुक्तत्वादिति भावः ॥ **तृतीयपक्षोऽपीति** । पुरुषशब्दस्य विष्णुपरत्वे बाधकसद्भावादिति प्राग्विकल्पित इत्यर्थः ।

**सु०** — **उपसंहरति** अत इति ।

**अनु०** — अतो विष्णुपरिज्ञानादेव मुक्तिर्न चान्यतः ॥

**परिज्ञानात्परिज्ञानोदितात्प्रसादात् । अन्यतः शिवादीनामनुग्रहात् ।**

**शे०** — ननु 'न च पाशुपताद्युक्तेरि'त्यादिप्रक्रमानुरोधेन भगवदनुग्रहस्यैव मोक्षसाधनत्वमुपसंहर्तुमुचितम् । तत्कथं ज्ञानस्य तत्साधनत्वोपसंहार इत्यतोऽत्र परिज्ञानपदस्य लक्षणया तज्जन्यप्रसादपरत्वेन ज्ञानपरत्वाभावान्नानुपपत्तिरित्याशयेन व्याचष्टे **परिज्ञानोदितात्प्रसादादिति** ।

**सु०** — **पाशुपता अपि ज्ञानिनो भोगेनैव कर्मक्षयमाचक्षते । तदप्यनुपपन्नमित्याह** तद्यथेति ।

**अनु०** — तद्यथेति श्रुतेश्चैव ततः कर्मक्षयो भवेत् ॥

**'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्त' इति श्रुतेः । 'इष्टकेषीकामालानां चिततूलभारिष्वि'ति ह्रस्वता श्रुतित्वान्न भवति । प्रोतं प्रविष्टम् । प्रदूयेत परितप्तं भवेद्भस्मीभवेत् । इति तन्निदर्शनं यथा । अस्य ज्ञानिनः । प्रदूयन्ते विनश्यन्तीत्यर्थः । चशब्दः पूर्वोदाहृतवाक्यसमुच्चयार्थः । तत एव विष्णुपरिज्ञानादेव ।**

**शे०** —मूले तद्यथेत्यनेन तद्यथा पुष्करपलाश आपो न श्लिष्यन्त इति श्रुतिर्गृह्यत इति भ्रान्तिनिरासाय तत्परिगृहीतश्रुतिमुदाहरति **तद्यथेति** । नन्विष्टकेषीकामालानामितीष्टकादिशब्दानां चितादिषु परतो ह्रस्वत्वविधानादिषीकशब्दस्य तूलपरतो ह्रस्वतायां सत्यामिषीकतूलमिति भवितव्यम् । इषीकातूलमिति तु कथमित्यतश्छन्दसि सर्वे विधयो विकल्प्यन्त इति सर्वविधिविकल्पाभ्युपगमाद्युक्तो ह्रस्वत्वाभाव इत्याह **इष्टकेति** ॥ **प्रविष्टमिति** । अव प्रवेशन इति धातोरिति भावः ॥ **परितप्तमिति** । दूङ् परिताप इति धातोरिति भावः ॥ **पूर्वोदाहृतेति** । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणीति' पूर्वोक्तेत्यर्थः । श्रुतेश्चैवेत्यत्रैवकारस्य तत्रैव संबन्धस्य समुच्चायकचशब्देन विरोधेनासंभवाद्भिन्नक्रमत्वाश्रयणेन तं योजयति **तत एवेति** ।

**स॰**— नन्विषीकतूलमिति भवितव्यमित्यत आह **इषीकेति** ।

**प॰**— **इष्टकेति** । इष्टका इषीका मालेत्येवं त्रयाणां शब्दानां क्रमाच्चिततूलभारिशब्देषु परतो ह्रस्वो भवतीति षष्ठाध्यायतृतीयपादे विहिता ह्रस्वतेत्यर्थः । तद्यथेत्यस्यार्थः **इति** तन्निदर्शनं **यथे**ति ।

**या॰**— **इष्टकेषीकेति** । इष्टकादीनां चितादौ परे यथाक्रमं ह्रस्वः स्यादिति सूत्रार्थः । उदाहरणं तु इष्टकचितम् इषीकतूलम् मालभारीति ॥ **परितप्तमिति** । दूङ् परिताप इति धातोरिति भावः ।

**श्री॰**— **पूर्वोदाहृतेति** । क्षीयन्ते चास्य कर्माणीति पूर्वोदाहृतवाक्य इत्यर्थः । उपात्तं प्राक् सम्पादितम् ।

**सु॰— नन्वस्यां श्रुतौ ज्ञानिनः कर्मणां परितापः श्रूयते न तु ज्ञानेन विनाश इति विवक्षितोऽर्थ इत्यतो भगवद्वाक्यसमाख्यामा**ह यथेति ।

**अनु॰**— यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥

**यद्यप्यत्र ज्ञानस्य कारणत्वं स्फुटं प्रतीयते । तथाऽपि कर्मणां भस्मसात्करणं नाम मुख्यासम्भवात्किं कल्पनीयमिति न ज्ञायतेऽतोवाक्यान्तरं पठति** सर्वेति ।

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥

अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

इत्यादिभगवद्वाक्यैरुक्तार्थश्चावसीयते ॥

**धर्मानवैष्णवान्काम्यार्थांश्च । शरणप्राप्तिश्च 'सर्वोत्तमत्वविज्ञानपूर्वमि'त्यादिनाऽन्यत्र भगवत्पादैरेव व्याख्याता । ततः प्रसन्नोऽहम् । मा शुचः । न शोचिष्यसि मुक्तो भविष्यसि । आदिपदेन 'गतसङ्गस्य मुक्तस्ये'त्यादेः संग्रहः । भगवद्वाक्यैश्चेति सम्बन्धः ॥ तद्यथेति श्रुतेरुक्तार्थः भगवद्वाक्यैरवसीयत इति वा ।**

**शे॰**— मूले सर्वधर्मानित्येतद्वाक्योदाहरणवैयर्थ्यमाशङ्क्य परिहरति **यद्यपीति** ॥ **मुख्यासंभवादिति** । ज्ञानस्य वन्ह्यादिवदुष्णस्पर्शवद्द्रव्यत्वाभावाद्वन्ह्यादिभिर्व्रीह्यादीनामिव ज्ञानेन कर्मणां प्रसिद्धभस्मीकरणासंभवादित्यर्थः । ननु ज्ञानेन कर्मणामीदृशं भस्मसात्करणमिति वक्तुमुदाहृते प्रमाणे- शरणप्राप्तेरेव सर्वकर्मनाशकत्वमुच्यते न तु ज्ञानस्येति तत्कथमस्य प्रकृतोपयोग इत्यत आह **शरण-**

**प्रविश्वेति** ॥ **अन्यत्रेति** । गीतातात्पर्य इत्यर्थः । 'सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा । सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम् । अखण्डा त्रिविधा पूजा तद्दत्यैव स्वभावतः । रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः । शरणागतिरेषा स्याद्विष्णोर्मोक्षफलप्रदे'त्यादिनेति शेषः । पूर्वोक्ताया भगवत्प्रसादस्य मोक्षसाधनताया अप्रतिपादनात्प्रकृतानुपयोगमाशङ्क्य तदुपयोगितया व्याचष्टे **ततः प्रसन्नोऽहमिति**॥ **न शोचिष्यसीति** । माङ्योगे लुङः सर्वलकारापवादकत्वाद्भविष्यदर्थताकथनं नायुक्तमिति भावः ॥ **गतसङ्गस्येति** । 'गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः । यज्ञायाचरतः कर्म समग्रं प्रविलीयत' इति चतुर्थगीतायाम् । नन्विति श्रुतिपुराणादिवचनेभ्य इत्यादिवदित्यादिभगवद्वाक्यैरिति वक्तुं शक्यत्वात्तथाऽनुक्त्वा तद्यथेति श्रुतेश्चैव ततः कर्मक्षयो भवेदिति योगविभागाश्रयणमनर्थकमित्यरुचेराह **तद्यथेतीति** ।

स०— **मा शुच इति** । माङित्यनेन भविष्यदर्थे लुङ् च ज्ञेयः ।

प०— **अन्यत्रेति** । गीतातात्पर्येऽष्टादशेऽध्याये 'सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा । सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम् । अखण्डा त्रिविधा पूजा तद्भक्त्यैव स्वभावतः । रक्षतीत्येव विश्वासस्तदीयोहमिति स्मृतिः । शरणागतिरेषा स्याद्विष्णौ मोक्षफलप्रदेति विष्णुपुराणवाक्येन व्याख्यातेत्यर्थः । भविष्यदर्थे लुङयं माङ्योगबलादिति भावेनाह **न शोचिष्यसीति** ॥ **गतसङ्गस्येति** । 'गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः । यज्ञायाचरतः कर्म समग्रं प्रविलीयत इति चतुर्थगीतायाम् । आदिपदेन 'ब्रह्मण्याधाय कर्माणी'त्यादेर्ग्रहः । चशब्दान्वयमाह **इति संबन्ध इति** । नन्वस्यां श्रुताविल्यादिना प्रागुक्तचोद्यनिरासकत्वेन योजयति **तद्यथेतीति** । उक्तार्थः । 'प्रोतं प्रविष्टमि'त्यादिनोक्तार्थश्चेत्यर्थः । **शैवादिनिरासः** ॥

या०— **सर्वोत्तमत्वविज्ञानपूर्वमित्यादिनेति** । 'सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा । सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम् । अखण्डा त्रिविधा पूजा तद्दत्यैव स्वभावतः । रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः । शरणागतिरेषा स्याद्विष्णोर्मोक्षफलप्रदे'ति गीतातात्पर्ये व्याख्यातेत्यर्थः ॥ **न शोचिष्यसीति** । माङ्योगे लुङः सर्वलकारापवादकत्वेन भविष्यदर्थताकथनं नायुक्तमिति द्रष्टव्यम् ।

च०— **पाशुपतमतनिरासः** ।

सु०— भाट्टानां मोक्षसाधनमनुवदति नित्येति ।

अनु० नित्यनैमित्तिकं कर्म कुर्वन्नन्यत्परित्यजन् ॥
मुच्यते संसृतेश्च

नित्यं नाम यदकरणे प्रत्यवायो, ब्राह्मण्यादिकमेव च निमित्तमुपादाय विहितं तदुच्यते । यथा सन्ध्यावन्दनादि । नैमित्तिकं नाम यदकरणे प्रत्यवायः पितृमरणाद्यागन्तुकं च निमित्तमुपादाय विहितं तदुच्यते । यथा पितृश्राद्धादि । अन्यत्काम्यं निषिद्धं च । तत्र यत्करणे फलमकरणे न प्रत्यवायः । कामनानिमित्तं तत्काम्यम् । यथा ज्योतिष्टोमादि । प्रतिषिद्धं निषिद्धम् । यथा ब्रह्महत्यादि । उपात्तं च कर्म भोगेन क्षपयन्निति चशब्दार्थः ।

अयमाशयः । सुखदुःखतत्कारणरूपो हि संसारः । स च कर्मनिमित्त एव । नित्यनैमित्तिकयोरकरणे त्वधर्मप्रचयेन दुःखतत्साधनावाप्तिरस्य भवति । निषिद्धकरणेऽपि तथा । काम्यकरणे तु धर्मोत्पादनेन सुखतत्साधनावाप्तिर्जायते । मुमुक्षुस्तु नित्यं नैमित्तिकं च नियमेन करोति । परित्यजति च निषिद्धमिति न दुरितोपचयः । काम्यमपि परित्यजतीति न धर्मोपचयः । एवमनागतयोर्धर्माधर्मयोरनुत्पादे प्रागुपात्तौ च भोगेन क्षपयन्निर्बीजायाः संसृतेर्मुच्यत इति । यथोक्तम् । 'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवाय जिहासये'ति । न च पञ्चमी कर्मविधाऽस्ति । यत्करणेऽकरणे वा धर्माधर्मोदयः स्यदिति ।

शे०— नित्यं नामेति । अत्र यदकरणे प्रत्यवाय इत्येव कृते चन्द्रोपरागे स्नायादिति विहितस्नानाकरणे प्रत्यवायश्रवणेन नैमित्तिकस्याप्यकरणे प्रत्यवायफलकत्वादतिव्याप्तिः स्यात्तन्निवृत्त्यर्थं ब्राह्मण्यादिकमेव निमित्तमुपादायेत्युक्तम् । अस्य च नियतं निमित्तमुपादायेत्यत्र तात्पर्यम् । नैमित्तिकस्य तूपरागस्नानादेरनियतनिमित्तकत्वान्नातिप्रसङ्गः । काम्येऽतिप्रसङ्गनिवृत्त्यर्थं यदकरणे प्रत्यवाय इत्युक्तम् । अकरणे प्रत्यवायफलको नियतनिमित्तको विधिर्नित्यस्तद्विहितं नित्यम् । अकरणे प्रत्यवायफलकोऽनियतनिमित्तको विधिर्नैमित्तिकस्तद्विहितं कर्म नैमित्तिकमिति निष्कर्षः । तत्राकरणे प्रत्यवायफलकत्वस्य नित्यसाधारण्यात्तद्व्युदासायोत्तरभागः । काम्यस्याप्यनियतनिमित्तकतया तत्रातिप्रसङ्गव्यावृत्त्यै पूर्वभाग इति द्रष्टव्यम् ॥ यत्करण इति । श्रुत्यर्थवादन्यायैः कर्मपदसंबन्धिफलसम्पादको विधिः काम्यः । तद्बोध्यं काम्यमित्यर्थः । तत्र श्रूयमाणफलकः स्वर्गकामो यजेतेत्यादि । अर्थवादकल्पितफलस्तु प्रतिष्ठाकामो रात्रिसत्रं कुर्यादित्यादिः । न्यायकल्पितफलस्तु विश्वजिता यजेतेत्यादिः । श्रुतिकल्पनाभ्यां कामनामात्रनिमित्तकस्यास्य नित्यादितो वैलक्षण्यं स्पष्टमेवेति भावः । ननु नित्यनैमित्तिकयोः काम्यनिषिद्धयोश्च

करणपरित्यागमात्रं न मोक्षसाधनं नित्यानित्ययोरकरणस्य निषिद्धकरणस्य चाधर्मोत्पादकतया काम्यकरणस्य च धर्मोत्पादकतया नित्यनैमित्तिकयोः करणे काम्यनिषिद्धयोः परित्यागे चानागतधर्मानुत्पादलाभेन तन्मूलकसंसारानवस्थानप्राप्तावपि प्रागुपात्तधर्माधर्मसद्भावेन तन्मूलकसंसारावस्थानसंभवात् किन्तु भोगनिमित्तकस्तत्क्षयोऽपि तत्कथं नित्यनैमित्तिककाम्यनिषिद्धकरणपरित्यागमात्रस्य मोक्षसाधनत्वानुवाद इत्यतोऽत्र चशब्देन भोगनिमित्तकप्रागुपात्तधर्माधर्मक्षयस्याप्युक्तत्वेन तन्मात्रस्य मोक्षसाधनतयाऽननुवादान्नासदनुवादतेत्यभिप्रेत्य चशब्दार्थमाह **उपात्तं चेति** ।

ननु धर्माधर्मयोरेव सुखदुःखतत्साधनावाप्तिसाधनतया नित्यादिकरणादिदशायां धर्माधर्मादिरूपकारणशून्यतया सुखदुःखतत्साधनावाप्त्यभावप्राप्तावपि न संसाराभावप्राप्तिः । तस्य संसारत्वस्यैवासिद्धेः । सिद्धावपि न तस्य धर्माधर्ममात्रनिमित्तकत्वमविद्यादिनिमित्तकत्वस्यापि संभवात्तन्मात्रनिमित्तकत्वेऽपि वा नित्यादिकरणादिना धर्माधर्माभावलाभसिद्धावपि मुमुक्षोर्नित्यादिकर्तव्यत्वादिनियमासिद्ध्या तदकरणादिनिमित्तकाधर्माद्युत्पादसंभवेन तन्मूलकसंसारस्याप्यवस्थाने बाधकाभावात्तन्नियमेऽपि वा नित्याद्यकरणादिनिमित्तकाधर्माद्यनुत्पादेऽपि कर्मविधान्तरेण तदुत्पादने बाधाभावान्न नित्यनैमित्तिकादिकरणादेर्मोक्षसाधनत्वमित्यत आह **अयमाशय इति** । सुखदुःखतत्कारणयोरेव संसारत्वमुपपादयितुं प्रमाणप्रसिद्ध्यर्थकहिशब्दप्रयोगः । कर्मनिमित्तकतां संसारस्योपपादयति **नित्येति** ॥ **तथेति** । अधर्मप्रचयेन दुःखतत्साधनावाप्तिरस्य भवतीत्यर्थः ।

**प० — यदकरण इति** । 'ब्राह्मणो वाजपेयेन यजेत राजा राजसूयेन यजेते'त्यादिवाक्योक्तवाजपेयादावनतिव्याप्तये यदकरण इत्युक्तम् । नैमित्तिके पितृश्राद्धादावनतिप्रसक्त्यर्थमुत्तरपदम् । एवं नैमित्तिकेऽपि वृष्ट्यादिकामनाहेतुके कारीर्यादिकर्मण्यनतिव्याप्तये यदकरण इति विशेषणम् । नित्यकर्मण्यनतिव्याप्तये पितृमरणेत्यादि । अन्यदित्यनुवादः । काम्यं निषिद्धमिति व्याख्यानम् ।

**या० —** नित्यकर्मलक्षणे ब्राह्मण्यादिकमेव निमित्तमुपादाय निष्कामतया क्रियमाणे नित्यकर्मतयाऽनाभिमते ज्योतिष्टोमादावतिव्याप्तिपरिहाराय पूर्वभागः । नैमित्तिके पितृश्राद्धादावतिव्याप्तिपरिहारायोत्तरभागः । नैमित्तिककर्मलक्षणे कामनारूपमागन्तुकं निमित्तमुपादाय विहिते काम्यकर्मण्यतिव्याप्तिवारणाय पूर्वभागः । नित्यकर्मण्यतिव्याप्तिवारणायोत्तरभागः ।

सु० — **निराकरोति** एतदपीति ।

अनु० — एतदप्येतेन निराकृतम् ॥

**एतेन नान्यः पन्था इति श्रौतेन भगवज्ज्ञानव्यतिरिक्तमोक्षसाधननिषेधेन । अपि च नित्यनैमित्तिककर्मणां नियमेन सम्यगनुष्ठानं तावदशक्यमेव । 'चरन्ति देवा विहितं समस्त-**

मर्धमेव मुनयो दशांशतो मनुष्या' इत्यादिश्रुतेः । नापि निषिद्धाकरणं सम्भावितम् । प्रामादिकानां मानसवाचिककायिकानामपरिहार्यत्वात् । प्रायश्चित्तात्तत्क्षय इति चेन्न । प्रायश्चित्तस्यापि सम्यगनुष्ठातुमशक्यत्वात् । पूर्वोपार्जितकर्मणां भोगेन क्षयस्त्वत्यन्तासम्भावित एव । अनन्तत्वादित्यलम् ।

**शे०** — **अशक्यमिति** । तथा च सम्यगननुष्ठाननिमित्तकाधर्मप्रचयेन दुःखतत्साधनावाप्तिरवर्जनीयैवेति भावः । सम्यगनुष्ठानस्याशक्यतायां सिद्धायां भवेदेतत् । सैव कुत इत्यत आह **चरन्तीति** ॥ **संभावितमिति** । तथा च निषिद्धकरणनिमित्तकाधर्मप्रचयेन दुःखतत्साधनावाप्तौ नानुपपत्तिरेति भावः । असंभावितनामेवोपपादयति **प्रामादिकानामिति** ॥ **तत्क्षय इति** । नित्यादिकर्मणां सम्यगननुष्ठानप्रयुक्तदुरितस्य प्रामादिकनिषिद्धाचरणप्रयुक्तदुरितस्य च क्षय इत्यर्थः ॥ **अशक्यत्वादिति** । चरन्ति देवा विहितं समस्तमित्याद्युदाहृतश्रुतेरेवेति शेषः । ततश्च सम्यक् प्रायश्चित्ताद्यननुष्ठानप्रयुक्ताधर्मप्रचयेन दुःखतत्साधनावाप्तिरूपसंसारापत्तिरवर्जनीयैवेति भावः । **अनन्तत्वादित्युपलक्षणम्** । विषमविपाकसमयत्वादित्यपि द्रष्टव्यम् । ननु समाधिमहिम्नाऽपरिमितदेहव्यूहनिर्माणेनानन्तान्यपि विषमविपाकसमयान्यपि कर्माणि पिण्डीकृत्य तत्फलसुखदुःखभोगेनैव क्षयो भविष्यतीत्यत **आह अलमिति** । अस्मिन्मते न कदाऽपि कर्मक्षयो भोगकालेऽपि पुनः करणात् । न करोतीति चासंभावितम् 'न हि कश्चित्क्षणमपी'त्युक्तत्वादित्यादिप्रागुक्तदोषजातमलमोऽर्थः ।

**प०** — कृत्स्नभावात्त्वित्यत्र न्यायविवरणोक्तश्रुतिमाह **चरन्ति देवा इति** ॥ **भाट्टनिरासः** ॥

**सु०** — **नन्वेतत्सर्वं सूत्रानुक्तं कस्माद्वर्ण्यत इत्यत आह** विद्यैवेति ।

**अनु०** — विद्यैवेतीममेवार्थं स्वयमेवाह वेदराट् ॥

'विद्यैव तु निर्धारणादि'ति सूत्रेण । **स्वयमेव न त्वर्थतः** । **'वाजसनेयिनोऽधीयते । 'षट्त्रिंशत्सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चित' इत्यादि । तत्र संशयः । किमेतेऽग्नयः क्रियानुप्रवेशिनस्तच्छेषभूता उत स्वतन्त्राः केवलविद्यात्मका इति । क्रियामयस्याग्नेः प्रकरणात्तद्विषय एवायमुपदेश इति प्राप्तेऽभिधीयते । विद्यात्मका एवैतेऽग्नयो न क्रियाशेषभूताः । ते हैते विद्याचित एवेति निर्धारणात् ।'** इति परेषां व्याख्यानममदेवेति भावेनोक्त**मिममेवार्थमिति । दिफलत्वादस्याश्चिन्तायाः । पक्षद्वयेऽप्यभ्युदय एव ह्यस्य प्रयोजनम् । यस्तु नित्यानित्यवस्तुविवेकवाञ्छमदमादिसम्पन्नः सर्वभोगवैराग्योपेतो मुमुक्षुरथशब्देनोत्तरमीमांसायामधिकारी सूचितः स कथमेतासु फल्गुचिन्तासु प्रवर्तेत इति ।**

शो० मोक्षसाधननिराकरणस्य सूत्रार्थत्ववर्णनपरोत्तरग्रन्थस्य वैयर्थ्यमाशंक्यास्ति मोक्षोऽपि धर्मेणेत्यादिप्राचीनग्रन्थस्यासूत्रार्थप्रतिपादकत्वप्रयुक्ताभाष्यत्वशङ्कानिवृत्त्यर्थत्वान्नानर्थक्यमित्यभिप्रेत्य तच्छङ्कानिवर्तकतयोत्तरग्रन्थं योजयितुमुदाहृतग्रन्थस्याभाष्यत्वशङ्कामुत्थापयति **नन्विति ॥ नन्वर्थत इति ।** यद्यपि श्रुत्या प्राप्त इवार्थतः प्राप्तोऽपि सूत्रार्थ एवेति तदुपपादकस्यास्य ग्रन्थस्य भाष्यत्वसिद्धेर्नार्थिकत्वनिरासो युक्तस्तथाऽपि वाचनिकत्वसंभवे नार्थिकत्वाश्रयणमुचितमित्येवाभिप्रेतम् । न त्ववाचकत्वेऽभाष्यत्वप्रसङ्गादिविरोध इति द्रष्टव्यम् ॥ **वाजसनेयिनोऽधीयत इति ।** वाजसनेयिनोऽग्निरहस्ये नैव वा इदमग्रे सदासीदित्यस्मिन्ब्राह्मणे मनोऽधिकृत्याधीयतेत्यर्थः । पुरुषायुषस्याहानि षट्त्रिंशत्सहस्राणि तैरवच्छिन्ना मनोवृत्तिसमूहाः प्रत्यहोरात्रमेकैकीभूत्वा षट्त्रिंशत्सहस्राणि भवन्ति । ता एतावत्संख्याकेष्टका मनसाऽग्नित्वेन संपाद्यन्त इत्युच्यते षट्त्रिंशत्सहस्राणीत्यादिना । अत्रात्मन इति षष्ठी । तथा च मन एवोक्तविवक्षया षट्त्रिंशत्सहस्रसंख्याकानात्मनः संबन्धभूतान्मनोमयान्मनोविकारान्मनश्चितो मनसा चीयन्त इति तथोक्तान्सुखादिप्रत्ययरूपानर्कान्वर्णव्यत्ययेनार्चानर्च्यान्पूज्यानग्नीनपश्यदित्यर्थः । उपलक्षणं चैतत् । तथैव वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित इति पृथगग्नीनामनन्ति सम्पादकानित्यपि द्रष्टव्यम् । अत्र वागादिप्रवृत्तयो वागादिभिश्चीयमानत्वाद्वागादिचितो ज्ञेयाः । प्राणशब्दश्च घ्राणपर इन्द्रियाधिकारात् । कर्मशब्देन वागतिरिक्तकर्मेन्द्रियाणि प्रतीन्द्रियप्रवृत्त्यैकैकमग्निचयं संपाद्यमत एवोक्तं पृथगग्नीनिति **तत्रेति** । तेष्वग्निष्वित्यर्थः । एतेऽग्नयो मनश्चिदादयः । **क्रियानुप्रवेशिन** इति कोटेरेव विवरणं तच्छेषभूता इति । स्वतन्त्रकोटिविवरणं केवलेत्यादि । तत्र पूर्वपक्षार्थसूत्रम् ॥ **पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवदिति** । तत्तात्पर्यमाह **क्रियामयस्येति ।** कर्माङ्गस्येत्यर्थः । विफलत्वमेवोपपादयति **पक्षद्वय इति ।** क्रियाशेषत्वं विद्यात्मकत्वं चेति पक्षद्वयेऽपीत्यर्थः । नह्यभ्युदयफलकत्वादेव कथं विफलत्वं चिन्ताया इत्यतो न सर्वान्प्रति तद्वैफल्यं ब्रूमः किन्तु मुमुक्षु प्रत्येवेति भावेन तस्येतरवैलक्षण्यं दर्शयन्नेव विफलत्वमुपदर्शयति **यस्त्विति ।**

स० – **उपभोक्तुम्** आरब्धम् । **षट्त्रिंशदिति** । पुरुषस्याहानि षट्त्रिंशत्सहस्राणि तैरवच्छिन्ना मनोवृत्तयः समूहा प्रत्यहोरात्रमेकैकीभूत्वा षट्त्रिंशत्सहस्राणि भवन्ति । ता एतावत्संख्याके अष्टकात्मतया अग्निमत्वेन संपाद्यन्ते षट्त्रिंशत्सहस्राण्ययपश्यदात्मनोग्नीनर्कान्मनोमयान्मनश्चित इत्यादीनां मन एवात्मनः संबन्धिभूतानग्नीनर्कान् वर्णव्यत्ययेनाच्र्यान् पूज्यानपश्यदित्यर्थः । मनसा चीयन्त इति मनश्चितः सुखादिप्रत्ययरूपाः मनसा मनोवृत्तीनामग्निमत्वेन भावना कर्तव्येत्यस्य वाक्यस्य भाव इति कल्पतरूक्तत्वादवधेयम् ।

प० — इममेवेति पदद्वयव्यावर्त्यमपव्याख्यानमिति दर्शयितुं तदनुवदति **वाजसने यिन इति** । अधीयते पठन्तीत्यर्थः ॥ **अपश्यदिति** । मन इति कर्तृ प्रकृतं मनोमयान् मनोविकारान् मनोवृत्तिविशेषान् अग्नीन् इष्टकचितरूपाग्नि वेनापश्यदित्यर्थः । अग्नित्वेन मनोवृत्तिविशेषा ध्येया इत्यर्थः ॥ **क्रियेति** । यज्ञादिकर्मेत्यर्थः ॥ **तच्छेषेति** । तदङ्गेत्यर्थः ॥ **क्रियामयस्येति** । कर्माङ्गस्येत्यर्थः ॥ **अभ्युदय इति** । मोक्षेतरस्वर्गादिपुमर्थ एवेत्यर्थः ।

या० 'षट्त्रिंशत्सहस्राण्यपश्यदि'त्यत्र मन एव कर्तृ । मनोऽधिकृत्याधीयत इति तद्वा ये उक्तत्वात् । पुरुषायुषस्याहस्सु षट्त्रिंशसहस्रसंख्या दृष्टा सती तत्सम्बन्धिनीषु मनोवृत्तिष्वारोप्यन्ते । तथा च मन उक्तविवक्षया षट्त्रिंशत्सहस्रसंख्याकान्, **आत्मन** आत्मसम्बन्धिनः, **मनोमयान्** मनोविकारान् मनश्चितः । आदिपदाद्वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित इत्येतत्तद्वृत्तिविशेषान्, **अर्कान्** अर्च्यान्ग्रहान्वाऽग्नीनपश्यत् । ग्रहतयाऽग्नितया चाकल्पयत् । वृत्तिविशेषा ग्रहाग्नितया मनसा भावनीया इति तन्मते तात्पर्यमस्य वाक्यस्य ।

**विद्यात्मका इति** । केवलमग्न्यादितया ज्ञानव्या इत्यर्थः । **अभ्युदयः स्वर्गादिः** ॥ **एतासु फल्गुचि तास्विति** । अनेन यान्यन्यान्यप्यधिकरणान्येतद्विषये परेण व्याख्यातानि तत्र सर्वत्रापीदं दूषणमिति सूचयति ।

श्री० — क्रियानुप्रवेशिनः स्वतन्त्रा वेति तदीयवचनाभिप्रायमाह **तच्छेषभूता इति** । क्रियाङ्गमूला इत्यर्थः । **केवलविद्यात्मका इति** । अन्नमय एवार्का अग्नित्वेन ध्यातव्याः । अविद्यमानैवोपास्तिः कार्येति यावत् ।

**च० — भट्टाभिमतमोक्षसाधननिरासः ॥**

**सु० — एवं सूत्रकृता पूर्वपक्षितानि मतानि निराकृत्येदानीं ये सूत्राणां वृत्तिकारा अन्यथा भाषन्ते तेषां मतानि निराकुर्वाणः समुच्चयनियमवादिनां मतं तावदपाकरोति विनेति ।**

**अनु० —** विना कर्म न मोक्षः स्याज्ज्ञानेनेत्यपि सा श्रुतिः ॥
नान्यः पन्था इति ह्येव निवारयति सादरम् ॥

**संसारनिवृत्तिमात्रं केवलेन ज्ञानेन भवति । आनन्दवृद्धिस्तु कर्मसापेक्षणैव ज्ञानेनेति भगवतः पन्थाः । यद्वक्ष्यति सहकारित्वेन चेति । अतो ज्ञानकर्मभ्यां मोक्ष इत्यनुक्त्वा कर्म विना केवलज्ञानेन न मोक्षः किन्तु कर्मसहितेनेत्युक्तम् । इत्येतदपि मतं सैव सूत्रगृहीतैव नान्यः पन्था इति श्रुतिः स्पष्टं निवारयति । तमेवं विदित्वेति ज्ञानमात्रस्य मोक्षसाधनत्वमुक्त्वा**

**पुनर्नान्यः पन्था इति वचनादादरोऽवगम्यते । न च समुच्चयनियमे किमपि प्रमाणमस्ति । अन्धन्तमः प्रविशन्तीत्यादीनामन्यार्थत्वात् । 'यथाऽन्नं मधुसंयुक्तं मधु चान्नेन संयुतम् । एवं तपश्च विद्या च संयुक्ते भेषजं महदि'त्यादीनां परोक्षज्ञानविषयत्वात् । अपरोक्षज्ञानविषयत्वेऽप्यानन्दवृद्धयर्थत्वात् ॥**

**शे०** — ननु ज्ञानकर्मभ्यां मोक्ष इत्येव वक्तव्ये तथाऽनुक्त्वा कर्मणा विना केवलेन ज्ञानेन न मोक्ष इति किं वक्रोक्त्येत्यतस्तथोक्तौ परप्रतिज्ञायाः सिद्धार्थत्वापत्तिभयेनेयं वक्रोक्तिरर्थवती । एवमुक्तौ च कर्मणा विना केवलेन ज्ञानेन संसारनिवृत्तिरूपमोक्षस्य सिद्धान्तिनाऽभ्युपगमान्न सिद्धार्थतेति भावेन सिद्धार्थतापरिहारार्थतया वक्रोक्तिं समर्थयते **संसारेति** । अत्र टीकायां ज्ञानकर्मभ्यां मोक्ष इत्यनुक्त्वेत्येव पाठः । न तु ज्ञानकर्मभ्यां न मोक्ष इत्यनुक्त्वेति मूलकोशेष्वदर्शनादिति ध्येयम् । ननु कथं समुच्चये प्रमाणाभावः । 'अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायां रता, इत्यादिश्रुतेरेव ज्ञानकर्मणोः समुच्चितयोर्मोक्षसाधनत्वप्रतिपादिकायास्तत्र मानत्वात् । संसारनिवृत्तिर्ब्रह्मप्राप्तिश्च मुक्तिः । तत्र विद्येतरत्वेनाविद्यामूलत्वेन वाऽविद्याशब्दवाच्यानां कर्मणां मृत्युपदवेदनीयकर्मक्षयद्वारेण संसारनिवृत्तावुपयोगः । ब्रह्म ह्यात्मरूपतया नित्यप्राप्तमप्यविद्यामात्रतिरोहितम् कण्ठगतचामीकरवन्न तत्राविद्यानिवृत्तेरधिकं कार्यमस्तीत्यविद्यानिवृत्तौ विद्याया उपयोगः । तदिदमुक्तं विद्ययाऽमृतमश्नुत इति । 'सत्येन लभ्यस्तपसा ह्येष लभ्य आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यमि'त्यादेश्च समुच्चयावगतिरित्यत आह **अन्धन्तमः प्रविशन्तीत्यादीनामिति** ॥ **अन्यार्थत्वादिति** । 'ततो विद्यामविद्यां च यो जानात्युभयं सह । दोषज्ञानादतीत्यैतां विद्ययाऽमृतमश्नुत इत्यादिसमयपादोक्तरीत्या तद्भाष्यरीत्या चेति शेषः ॥ **आनन्दवृद्धयर्थत्वादिति** । सम्पूर्णानन्दाभिव्यक्तावुभयोः कारणत्वादित्यर्थः । ज्ञानेन किञ्चिदानन्दस्य कर्मणा च योग्यस्यापि ज्ञानेनानभिव्यक्तांशस्येत्यंशभेदेन ज्ञानकर्मणोः कारणत्वेऽप्यानन्दवृद्धिरूपवैक्षिकैककार्यं प्रति उभयोरप्युपयोगात्समुच्चयो न तु कर्मसाध्यांशस्यापि ज्ञानसाध्यत्वाभिप्रायेण । मानाभावात् । ज्ञानिकृतकर्मण एव तत्साधनत्वमित्यनेन रूपेण ज्ञानस्य तत्रोपयोगेऽपि कर्मसमकक्ष्यत्वाभावादिति भावः ।

**स०** — ननु कथं समुच्चये प्रमाणाभावः । अन्धन्तमः प्रविशन्ति ये विद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायां रताः' इत्येकैकनिन्दापुरःसरं विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति ज्ञानकर्मणोः समुच्चितयोर्मोक्षसाधनत्वप्रतिपादनात् । तथाहि । संसारनिवृत्तिर्ब्रह्मप्राप्तिश्च मुक्तिः । तत्र विद्येतरत्वेनाविद्यामूलत्वेनाविद्याशब्दितानां कर्मणां मृत्युपदवेदनीय-

कर्मक्षयद्वारेण संसारनिवृत्तावुपयोगः । ब्रह्मात्मरूपतया नित्यप्राप्तमविद्यामात्रतिरोहितं कण्ठगतचामीकरवत् । न तत्राविद्याविवृत्तेरधिककार्यमस्ति इत्यविद्यानिवृत्तौ विद्याया उपयोगः । तदिदमुक्तम् । विद्यया-ऽमृतमश्नुत इति । 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यमित्यादेश्च समुच्चया-वगतिरित्यत आह **अन्धन्तमः प्रतिशन्तोत्यादीन मिते** । अन्यथोपासका ये तु तमोन्धं यात्यसंशयम् । ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः । तस्माद्यथास्वरूपं तु नारायणमनामयम् । अयथार्थस्य निन्दां च ये विदुः सह सज्जनाः । ते निन्दया यथार्थस्य दुःखादिज्ञानरूपिणः । यथार्थस्य परिज्ञानात् । सुखज्ञानस्वरूपताम् । यान्तीत्यादिकौर्मवाक्यार्थानुसारेणान्यार्थं वात्र समुच्चयप्रतिपादकत्वमिति भावः ।

प० — **वक्ष्यतीति** । उत्तरपादे स्तुतयेऽनुमितिर्वेति नये चरमं सूत्रं ज्ञानसहकारित्वेनाप्या-श्रमादिकर्मकार्यमिति सूत्रार्थः । ननु कथं नास्ति मानं 'अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते' इति श्रुत्यैवाऽविद्याशब्दस्य कर्मार्थकत्वेन प्रत्येकोपासनां निन्दित्वा 'विद्यां चाविद्यां च यस्तद्वेदोभयꣳसह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत' इति समुच्चयोक्तेरित्यत आह **अन्धन्तम इति** । समय-पादान्तोक्तरीत्या अविद्याश(ब्दितमिथ्याज्ञा)नदोक्ताज्ञाननिन्दार्थकत्वेन समुच्चयार्थकत्वाभावाच्छ्रुतेरिति भावः । **ज्ञानकर्मसमुच्चयनियमनिरासः** ।

---

या० — **इत्यनुक्त्वेति** । तथोक्तौ परप्रतिज्ञायाः सिद्धसाध्यता स्यादिति भावः ॥ **केवल-ज्ञानेनेति** । एवं व्यतिरेकमुखेनोक्तौ न सिद्धसाध्यता । अस्मन्मते केवलज्ञानसाध्यस्य मोक्षविशेषस्य प्रतियोगिनः सत्त्वेन सामान्यतस्तन्निषेधासम्भवादिति भावः । नन्वन्धन्तमः प्रविशन्ति येऽविद्यामुपासत' इत्यत्राविद्यापदेन च तत्त्वज्ञानम् । तथा चानेन वाक्येन तयोः प्रत्येकं मोक्षसाधनतां निराकृत्य समुच्चयस्य तामाह विद्यां चाविद्यां च यस्तद्वेदोभयꣳसह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत' इत्यनेन । तथा च कथं मानाभाव इत्यत आह **अन्धन्तम इत्यादि** । अन्यार्थत्वं च समयपादान्त उक्तरीत्या तद्भाष्योक्तरीत्या च द्रष्टव्यम् ।

श्री० — **इत्यादीनामिति** । आदिपदेनोभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिस्तथैव ज्ञानकर्मभ्यां मोक्षो भवति नान्यथेति वाक्यस्य ग्रहणम् ॥ **परोक्षेति** । तथा च कर्मपरोक्षज्ञाने मिलित्वाऽपरोक्षज्ञानसाधनमित्येवार्थो नामिलितयोर्मोक्षसाधनत्वमिति भावः ॥ **आनन्दवृद्धीति** । तदंशे समुच्चयसाध्यत्वमस्माकमपि सम्मतमिति भावः ॥ **अथ मायावाद्यक्तमोक्षसाधननिरासः** ॥

सु० — मायावादिनो वदन्ति । द्विविधो मोक्षः परापरभेदात् । तत्रापरो वैकुण्ठ-सत्यलोकादिप्राप्तिलक्षणः । परस्त्वविद्याऽस्तमये सत्यद्वैतब्रह्मावस्थानरूपः । प्रतीकादिविषय-मन्यथोपासनमपरस्य साधनम् । परस्य त्वेकत्वज्ञानमिति । तत्रान्यथोपासनस्य वैकुण्ठादि-प्राप्तिसाधनत्वं तावदपाकरोति अन्यथेति ।

अनु० — अन्यथोपासनमपि तमेवमिति वादिनी ॥
निवारयत्यादरेण

एवं यथास्थितेनैव प्रकारेण न त्वन्यथेति वदन्ती श्रुतिरन्यथोपासनमपि पुरुषार्थसाधनं निवारयति । न केवलं परमपुरुषज्ञानव्यतिरिक्तपक्षान् । तमित्यनेन यथार्थज्ञानं लब्धमेव । सप्रकारस्य प्रकृतस्य परामर्शोपपत्तावेकदेशविषयत्वकल्पनानुपपत्तेः । तथाऽपि यदेवमिति वदति तदाऽऽदरसूचनार्थमिति । परममोक्षविषयेयं श्रुतिरस्तु । अपरस्तु पुरुषार्थोऽन्यथोपा-सनेन भविष्यतीत्यत आह नेति ।

न प्रतीक इति प्रभुः ॥

'न प्रतीके न हि सः' इति सूत्रकारोऽन्यथोपासनस्य सर्वथाऽप्यकर्तव्यत्वं वक्ष्यति । अतो न तत्पुरुषार्थलेशहेतुः ।

शे० — प्रतीकादिविषयमिति । मनआदिप्रतीकविषयमित्यर्थः ॥ लब्धमेवेति । पूर्वप्रति-पादितमहामहिमविशिष्टभगवद्वाचकत्वात्तच्छब्दस्येत्यर्थः ॥ सप्रकारस्येति । सहस्रशीर्षत्वादिप्रकारोपेतस्य परामर्शोपपत्तौ विशेष्यमात्रविषयत्वायोगादित्यर्थः ॥ एकदेशविषयत्वेति । धर्मिमात्रविषयत्वेत्यर्थः । वक्ष्यति चतुर्थस्य प्रथम इति शेषः ।

स० — प्रतीकादिविषयमिति । मनो ब्रह्मेत्याद्युपासनमित्यर्थः ।

प० — एवमित्यनुवादः, यथेति व्याख्या । अपिशब्दार्थो न केवलमिति ॥ सप्रकारस्येति । सहस्रशीर्षत्वादिप्रकारोपेतस्य तमिति परामर्शोपपत्तौ विशेष्यमात्रविषयत्वायोगादित्यर्थः ।

या० — एकदेशविषयत्वेति । धर्मिमात्रविषयत्वेत्यर्थः ।

श्री० — लब्धमेवेति । पूर्वप्रतिपादितमहामहिमविशिष्टभगवद्वाचकत्वात्तच्छब्दस्येत्यर्थः । ननु भगवतो महामहिमरूपप्रकारप्रतिपादनेऽपि न तद्विशिष्टस्य भगवतस्तच्छब्देन परमर्शोऽङ्गीक्रियते । किन्तु विशेष्यांशस्यैवेति चेत्तत्राह सप्रकारस्येति । प्रकारांशस्यापि सत्यतायाः प्राक् प्रतिपादितत्वेऽपि न तत्परित्यागानुपपत्तेरिति भावः ॥ पुरुषार्थलेशहेतुरिति । तथा चापरपुरुषार्थसाधनत्वमपि न सम्भव-तीति भावः ।

**सु०— सूत्रस्यार्थान्तरं वक्ष्यामीति वदन्तं प्रति श्रुतिविरोधमाह** अन्धमिति ।

**अनु०—** अन्धन्तमः प्रविशन्ति ये त्वविद्यामुपासते ॥

इति श्रुतिविरोधाच्च नान्यथोपासनं भवेत् ॥

**पुरुषार्थसाधनमिति शेषः । श्रुतिरत्रान्यत्र स्मृतिसंमतिप्रदर्शनेन व्याख्याता ।**

**शे०— सूत्रस्येति ।** उपासकस्य प्रतीकात्मकत्वाभावान्न प्रतीकेष्वहंग्रहः कार्य इत्यर्थत्वान्न प्रतीक इति सूत्रस्य प्रतीकेषु ब्रह्मदृष्टेरकर्तव्यत्वार्थत्वाभावान्न तद्विरोध इति भावः । श्रुतेरप्यर्थान्तरं वक्ष्यामीति वदन्तं प्रत्याह **स्मृतिसंवादप्रदर्शनेनेति** । 'अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम् । ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः । तस्माद्यथास्वरूपं तु नारायणमनामयम् । अयथार्थस्य निन्दां च ये विदुः सह सज्जनाः । ते निन्दयाऽयथार्थस्य दुःखाज्ञानादिरूपिणः । दुःखाज्ञानादिसन्तीर्णाः सुखज्ञानादिरूपिणः । यथार्थस्य परिज्ञानात्सुखज्ञानादिरूपताम् । यान्ती'त्यादिकौर्मवाक्यानुसारेणेशावास्यभाष्येऽन्यथा व्याख्यातेत्यर्थः ।

**स०— श्रुतिस्त्विति ।** अन्धन्तम इति श्रुतिः कौर्मस्मृतिसंमतिप्रदर्शनेनान्यत्रेशावास्यभाष्यादावन्यथाव्याख्यानेत्यर्थः ।

---

**प०— सूत्रस्येति ।** 'न प्रतीके न हि स' इति सूत्रस्य भवदुक्तार्थादर्थान्तरमित्यर्थः ॥ **अन्यत्रेति ।** 'अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम् । ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः । तस्माद्यथास्वरूपं तु नारायणमनामयम् । अयथार्थस्य निन्दां च ये विदुः सह सज्जनाः । ते निन्दयाऽयथार्थस्य दुःखाज्ञानादिरूपिण इत्यादिस्मृत्युक्त्या ईशावास्यभाष्ये व्याख्यातेत्यर्थः ।

**या०— अन्यत्रेति ।** तद्भाष्य इत्यर्थः । श्रुतेरप्यर्थान्तरं वक्ष्यामीति वदन्तं प्रत्याह **स्मृतिसम्मतिप्रदर्शनेनेति** । स्मृतिस्तु 'अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम् । ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः । तस्माद्यथास्वरूपं तु नारायणमनामयम् । अयथार्थस्य निन्दां च ये विदुः सहसज्जनाः । ते निन्दयाऽयथार्थस्य दुःखाज्ञानादिरूपिणः । दुःखाज्ञानादिसन्तीर्णाः सुखज्ञानादिरूपिणः । यथार्थस्य परिज्ञानात्सुखज्ञानादिरूपताम् । यान्ती'त्यादिका द्रष्टव्या ।

**च०— मायावाद्युदीरितमोक्षतत्साधनद्वैविध्यनिरासः ॥**

सु०— इदानीमेकत्वज्ञानस्य परमोक्षसाधनत्वं निराकरोति न चेति ।

अनु०— न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यते ॥

चोऽवधारणे । एकत्वविज्ञानादपि पुरुषः संसारान्न मुच्यते । कुतः । उक्तन्यायेन 'तमेवं विद्वानि'ति सहस्रशिरस्त्वादिमहामहिमोपेतस्य भगवतो ज्ञानममृतत्वसाधनमभिधाय 'नान्यः पन्था' इति साधनान्तराभावस्योक्तत्वात् । 'पुरुष एवेदं सर्वमि'त्युक्तमेकत्वमेवशब्देन परामृश्यत इति चेन्न । उक्तन्यायेन तस्य वाक्यस्यैकत्वविषयताया अभावात् । 'तद्यो यो देवानां प्रत्यबुध्यत' इत्यादिश्रुतयस्तु तद्गुणसारत्वादित्युक्तन्यायेन नैक्यज्ञानस्य मोक्षसाधनतां वदन्ति ।

टी०— ननु पुरुषसूक्ते पशुपुरुष एव प्रतिपाद्यते न विष्णुस्तत्कथं विष्णुज्ञानस्य मोक्षसाधनत्वे एतन्मन्त्रोदाहरणमित्यत उक्तम् उक्तन्यायेनेति । सर्वे निमेषा जज्ञिर इति विष्णौ पुरुषशब्दस्य श्रौत-प्रयोगोपदर्शनेन वाचकत्वशक्तिस्तात्पर्यज्ञापकोक्त्या पुरुषशब्दस्य तत्परत्वं पुरुष एवेदमित्यस्या मुक्ताधिपति-त्वप्रतिपादकत्वेन सार्वात्म्यप्रतिपादकत्वाभावाद्विष्णुपरत्वे बाधकाभावश्चेत्युक्तन्यायेनेत्यर्थः ॥ उक्तन्या-येनेति । 'इत्यमुक्ताधिपत्यं तु पूर्वार्धोक्तमनूद्य च । उतामृतत्वस्येश इति विधत्ते मुक्तिगेशतामि'त्युक्तन्या-येनेत्यर्थः । ननु 'तद्यो यो देवानां प्रत्यबुध्यते'ति मुख्यैक्यज्ञानस्य मोक्षसाधनत्वोक्त्यन्यथाऽनुपपत्त्या तदैक्यलाभात्पुरुष एवेदमित्यादेस्तद्विषयत्वमेवाभ्युपेयम् । तत्कथमन्यविषयत्वं तस्येत्यतो भवेदेतद्यदि मुख्यैक्यज्ञानस्य मोक्षसाधनत्वप्रतिपादकत्वं 'तद्यो य' इत्यादिश्रुतीनां स्यात् । न चैवम् । तासां तद्गुणसारत्वादित्यादिप्रागुक्तन्यायेन गौणाभेदज्ञानस्य मोक्षसाधनताप्रतिपादकत्वेन मुख्याभेदज्ञानस्य तदप्रतिपादकत्वेन तदनुरोधेन पुरुष एवेदमित्यादेर्गौणाभेदपरत्वप्राप्तावपि मुख्याभेदपरत्वालाभाद्युक्ताऽन्य-विषयत्वकल्पनेत्याह तद्य इति ।

प०— उक्तन्यायेनेत्यस्यार्थस्तमेवमित्यादिनोक्तत्वादित्यन्तेन शङ्कापूर्वं तस्यार्थान्तरमाह पुरुष एवेदमिति । अमृतेशानवचनादित्यादिनोक्तन्यायेन मुक्तामुक्तेशानपरत्वेनैकत्वाविषयकत्वादित्यर्थः । अर्थान्तरं चाह इत्युक्तन्यायेनेति । भगवद्गुणसदृशगुणस्वरूपत्वात् तत्त्वमसीत्युच्यते जीवो नामेदेने-त्युक्तन्यायेनेत्यर्थः । (अर्थान्तरं) ॥

सु०— किञ्चैक्यज्ञानमन्यथाज्ञानमिति पृथगुपदेशादि'त्युक्तन्यायेन सिद्धम् । मिथ्या-ज्ञानं चानर्थसाधनमित्युक्तम् ।

शे० — ऐक्यज्ञानस्य मिथ्याज्ञानत्वमेव कुतः सिद्धमित्यतस्तत्साधकप्रमाणाभावव्युत्पादनेन बाधकप्रमाणसद्भावव्युत्पादनेन चेत्यभिप्रेत्याह **पृथगुपदेशादित्युक्तन्यायेनेति ॥ उक्तमिति ।** 'अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते इति श्रुतिविरोधाच्च नान्यथोपासनं भवेदि'त्यादिनाऽनुपदमेवेति शेषः । तथा चैक्यज्ञानस्य मोक्षसाधनत्वं दूरनिरस्तमिति भावः ।

स० — **मिथ्याज्ञानं चानर्थसाधनमित्युक्तमिति ।** सम्यग्विषमविज्ञानतारतम्यानुसारतः । फलं भवेत्तारतम्यात्सुखदुःखात्मकं नृणामित्यत्रेति शेषः ।

प० — **पृथगुपदेशादित्युक्तन्यायेनेति ।** ईश्वराज्जीवः पृथग् अत्यन्तं भिन्नः इत्युक्तन्याये-नेत्यर्थः ॥ **उक्तमिति ।** अन्यथोपासनमित्यादिनोक्तमित्यर्थः ।

**सु० — अपि चाद्वैतज्ञानस्य न तावद्यागादिवद्राजसेवादिवद्वा मोक्षसाधनत्वम् । किन्तु अविद्याविरोधित्वेन । विरोधिनाऽद्वैतसाक्षात्कारेणाविद्यायां निवृत्तायां तदुपादानको बन्धः स्वयमेव निवर्तत इति । तथा च साक्षात्कृताद्वैतानामुत्तरक्षण एव देहादिद्वैतदर्शनाभावः प्राप्नोति । अङ्गीक्रियते च जीवन्मुक्तिः ॥ ज्ञानेनाविद्यायां निवृत्तायामपि तत्संस्कारेण द्वैत-दर्शनानुवृत्तिर्भवतीति चेन्न । संस्कारस्याविद्याकार्यत्वेऽवस्थानानुपपत्तेः । न ह्युपादाने निवृत्ते कार्यमवस्थितं दृष्टम् । अन्यथा सत्यत्वप्रसङ्गः । ज्ञानोदयेऽप्यनिवृत्तस्य तस्य निवर्तकान्तरा-भावात्सर्वदा(ऽनिवृ)नुवृत्तौ न कदाऽपि द्वैतदर्शननिवृत्तिः स्यात् । असङ्गस्यात्मनो विनैवाविद्या-संबन्धेन संस्काराश्रयत्वं चायुक्तमेव ॥ एतेन प्रारब्धकर्मवशाद् द्वैतदर्शना(ऽनिवृ)नुवृत्तिरित्यपि निरस्तम् । ज्ञानेन निवृत्ताऽप्यविद्या दग्धपटन्यायेन किञ्चित्कालमवतिष्ठते । तेन द्वैतदर्शना-नुवृत्तिर्घटत इति चेन्न । आत्यन्तिकनिवृत्तौ कारणाभावेन द्वैतदर्शनानुपरमप्रसङ्गात् ॥ एतेन अविद्यालेशावस्थानपक्षोऽपि प्रतिक्षिप्तः । लेशश्च पटस्य तन्तुरिवावयवो वा स्यात्प्रदेशो वा धर्मो वा । नाद्यः । अकार्यत्वादविद्यायाः । न द्वितीयः । प्रदेशानङ्गीकारात् । प्रदेशिनो निवृत्तौ प्रदेशावस्थानासंभवाच्च । न तृतीयः । धर्मिणोऽपगमे धर्मानपगमानुपपत्तेः ।**

शे० — **न तावदिति ।** तथा सति ज्ञाननिवर्त्यत्वप्रसङ्गेन बन्धस्य सत्यत्वप्रसङ्गादिति भावः । अस्तु तर्ह्यैक्यज्ञानस्याविद्याविरोधित्वेन मोक्षसाधनत्वमित्यत आह **तथा चेति ।** इष्टापत्तिमा-शङ्क्य परिहरति **अङ्गीक्रियते चेति ।** अन्यथा पौरुषेयब्रह्मोपदेशानां वातपुत्रीयत्वप्रसङ्गादिति भावः ।

मण्डनमिश्रमतमुत्थापयति **ज्ञानेनेति ॥ तत्संस्कारेणेति ।** यथा भ्रमणक्रियायां निवृत्तायामपि तत्संस्काराच्चक्रभ्रमणानुवृत्तिर्यथा वा निवृत्तसर्पभ्रमस्यापि तत्संस्काराद्भयकम्पाद्यनुवृत्तिस्तथाऽविद्यायां निवृत्ता-यामपि तत्संस्काराच्छरीराद्यनिवृत्तिर्युक्तेत्यर्थः ॥ **अन्यथेति ।** अविद्याकार्यत्वाभाव इत्यर्थः ॥ **सत्यत्वेति ।**

अविद्यातत्कार्ययोरन्यतरस्याभावादिति भावः ॥ **न कदाऽपीति** । साक्षात्कृताद्वैतानामुत्तरक्षण इवान्यदाऽप्यविद्यासंस्कारवशेन द्वैतानुवृत्तिर्न भवति । किञ्चैवं सति संस्कारस्य निराश्रयत्वमापद्यते । नन्वविद्यासंस्कारस्याप्यविद्याश्रयभूतात्मैवाश्रयः स्यात् । संस्कारतदाधायकयोरेकाश्रयत्वात्तत्कथं तस्यानाश्रयत्वमित्यतो भवेदेतद्यद्यात्मनस्तदाश्रयत्वमुपपद्येत । न च तदुपपद्यते । तस्य निरवयत्वादिति भावेनोक्तम् **असङ्गस्येति** । न च यथा निरवयस्याप्यविद्याश्रयत्वं तद्वत्संस्काराश्रयत्वमपि किन्न स्यादिति वाच्यम् । अपरिणामिनस्तस्याकार्यभूताविद्याश्रयत्वोपपत्तावपि न कार्यभूतसंस्काराश्रयत्वमित्याशयात । तथा च संस्काराश्रयत्वघटकतयाऽपि अविद्यासंबन्धस्याश्रयणीयत्वात्साक्षात्कृताद्वैतानां विरोधिज्ञानेनाविद्यानिवृत्त्यभ्युपगमे तदधीनसंस्काराश्रयत्वानुपपत्त्या न संस्कारादपि द्वैतदर्शनानुवृत्तिरिति भावः ॥ **एतेनेति** । कर्मणोऽप्यविद्याकार्यतया तन्निवृत्तौ निवृत्त्यवश्यम्भावेनावस्थानानुपपत्तेः । अकार्यत्वे च सत्यत्वापत्त्या द्वैतप्रसक्तेः । ज्ञानोदयेप्यनिवृत्तस्य सर्वदाऽप्यनिवृत्तिप्रसङ्गेन न कदाऽपि द्वैतनिवृत्तिः स्यात् । असङ्गस्यात्मनो विनैवाविद्यासंबन्धेन कर्माश्रयत्वं चायुक्तमित्युक्तदोषेणेत्यर्थः ॥ **एतेनेति** । ज्ञानेनाविद्यानिवृत्तावप्यनुवृत्तमानस्य लेशस्य निवृत्तौ कारणाभावेन द्वैतदर्शनानुपरमप्रसङ्गेनेत्यर्थः । एवमविद्यालेशस्थितिरनुपपन्नेत्युक्तम् । इदानीं तु लेश एवाविद्याया दुर्निरूप इत्याह **लेशश्चेति** ॥ **प्रदेशो वेति** । पटस्य तन्त्वतिरिक्तहस्तवितस्त्याद्यवच्छेद्यभागवदिति शेषः ॥ **अकार्यत्वादिति** । घटादिवत्सावयवत्वानङ्गीकारादित्यर्थः । अनादितयाऽवयवानारभ्यत्वादिति यावत् ॥ **प्रदेशानङ्गीकारादिति** । अवयवातिरिक्तप्रदेशानामप्रामाणिकत्वादिति भावः । ननु पटादौ तन्त्वतिरिक्ता हस्तवितस्त्याद्यवच्छेद्याः प्रदेशाः प्रत्यक्षेणैव सिद्धा इति नाप्रामाणिकत्वं तेषामिति कुतस्तदनङ्गीकार इत्यत आह **प्रदेशानामिति** । न च पटनिवृत्त्यनन्तरमपि हस्तवितस्त्याद्यवच्छेद्यभागावस्थानमनुभूयत इति वाच्यम् । तस्य पटान्तरत्वेन पूर्वपटप्रदेशत्वानङ्गीकारात् । पटसद्भावदशायामेव हि तत्र प्रदेशत्वव्यवहारस्तन्निवृत्त्यनन्तरं तु खण्डपट इत्येव व्यवहारात् । न चात्रापि खण्डाविद्यावस्थानमेव तर्ह्यस्त्विति वाच्यम् । तथा सति तन्निवर्तकाभावेन सर्वदाऽनिवृत्तिप्रसक्त्या द्वैतदर्शनानुपरमप्रसङ्ग इत्याशयात् । यद्वा निरवयवेत्यत्र विशेषणीयम् । अतो न पटरूपप्रदेशिनो निवृत्तावपि प्रदेशानामवस्थानदर्शनात्तत्र व्यभिचारः । निरवयवस्य प्रदेशिनो निवृत्तौ प्रदेशावस्थानानुपलब्धेः । प्रदेशिनामित्युक्तिस्तु व्याप्त्यभिप्राया । अन्यत्र प्रदेशिनां निवृत्तौ प्रदेशावस्थानानुपलब्धेः । प्रकृतेऽपि प्रदेशिनोऽज्ञानस्य निवृत्तौ तत्प्रदेशावस्थानानुपपत्तिरिति । क्वचित्तु प्रदेशिनो निवृत्तावित्यपि पाठः । तत्र न किञ्चिदेतदिति ध्येयम् ।

प० — **न तद्वद्यागादिवदिति** । अनङ्गीकारादिति भावः । शङ्कते **ज्ञानेनेति** ॥ **द्वैतदर्शनेनेति** । द्वैतदृष्टिः अवृत्तिरित्यर्थः ॥ **एतेनेति** । न ह्युपादानमित्यादिनोक्तन्यायेनेत्यर्थः ॥

**कारणाभावेनेति** । ज्ञानादन्यस्याभावात् ज्ञानस्य तद्विषये त्वयाऽप्रयोजकीकृतत्वादित्यर्थः ॥ **एतेनेति** आत्यन्तिकनिवृत्तिहेत्वभावकथनेनेत्यर्थः ॥ **अवयव इति** । उपादानभूतोऽवयवो वेत्यर्थः ॥ **प्रदेशो वेति** । हस्तवितस्त्यादिरूप एकदेश इत्यर्थः ।

**या०— प्रदेशो वेति** । हस्तवितस्त्यादिरिवेत्यर्थः ॥ **प्रदेशावस्थानेति** । न च पटनिवृत्त्यनन्तरमपि हस्तवितस्त्याद्यवस्थानं दृश्यत इति वाच्यम् । तस्य पटान्तरत्वेन पूर्वपटप्रदेशत्वाभावात् पटानिवृत्तिदशायामेव हि तत्र प्रदेशत्वव्यवहारः । तन्निवृत्त्यनन्तरं तु खण्डपट इत्येवेति ज्ञातव्यम् न चात्रापि खण्डाविद्यावस्थानमिति शङ्क्यम् । आत्यन्तिकनिवृत्तौ कारणाभावेन द्वैतदर्शनानुपरम प्रसङ्गादित्युक्तदोषप्रसङ्गात् ।

**श्री० — यागादिवदिति** । अदृष्टद्वारा स्वर्गसाधनत्ववत् दृष्टद्वारा मोक्षसाधनत्वमित्यर्थः **राजसेवादिवदिति** । धनाद्यैहिकपुरुषार्थसाधनत्ववदित्यर्थः ॥ **विनैवाविद्यासम्बन्धेनेति** । अविद्यायाश्च निवृत्तत्वेन तत्सम्बन्धस्यैवाभावादिति भावः । **एतेनेति** । प्रारब्धकर्मणामप्यविद्याकार्यत्वे तन्निवृत्तौ तेषामवस्थानायोगादिति भावः ॥ **आत्यन्तिकेति** । कञ्चित्कालमवस्थिताया अपि निवृत्तादित्यर्थः ॥ **प्रतिक्षिप्त इति** । लेशस्याप्यविद्याकार्यत्वेन तन्निवृत्ताववस्थानानुपपत्तेरिति भावः । दूषणान्तरमाह **लेशश्चेति** ॥ **अवयव इति** । अविद्याया इति शेषः ॥ **प्रदेश इति** । हस्तवितस्त्यादिवदित्यर्थः ॥ **अकार्यत्वादिति** । द्रव्योपादनस्यैवावयवत्वेनाविद्यायाश्चानादित्वेनाकार्यतया तदवयवभावादिति भावः ।

**सु० — अथ मतम्** । **संसारमूलकारणभूताऽविद्या यद्यप्येकैव । तथाऽपि तस्य सन्त्येव बहव आकाराः । तत्रैको बन्धस्य परमार्थसत्यत्वविभ्रमहेतुः । द्वितीयोऽर्थक्रियसमर्थवस्तुकल्पकः । तृतीयस्त्वपरोक्ष्यप्रतिभासविषयाकारकल्पकः । तत्राद्वैतस्य सत्यत्वाध्यवसायेन समस्तद्वैतसत्यत्वकल्पक आकारो निवर्तते । अर्थक्रियासमर्थप्रपञ्चोपादानं मायाकारस्तत्त्वसाक्षात्कारेण विलीयते । अपरोक्षप्रतिभासयोग्यार्थाभासजनकस्तु मायालेशो जीवन्मुक्तस्य निवृत्तः समाध्यवस्थायां तिरोहितोऽन्यदा देहाभासजनकाभासहेतुतयाऽनुवर्तते । प्रारब्धकर्मफलोपभोगावसाने तु निवर्तत इति । तदयुक्तम् । अस्याः कल्पनायाः निष्प्रमाणकत्वात् इन्द्रो मायाभिः पुरुरूप ईयत इति श्रुतिरत्र प्रमाणमिति चेन्न । अत्र पारमेश्वरशक्तिप्रतिपादनात् । ज्ञानबाध्यानिर्वाच्यमायाकारप्रतिपादनाप्रतिभासनात् । 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिरिति श्वेताश्वतरमन्त्रेऽपि भूयोभूयस्तस्मिन्मनसो योजनात्**

**ज्ञायते तत्त्वभावस्तत्त्वज्ञानं तस्मादुदितात्तस्य परमेश्वरस्याभिध्यानादनुग्रहात्कर्मक्षयान्ते विश्वबन्धमाया निवृत्तिर्भवतीत्युच्यते न त्वनिर्वाच्यविद्याकाराणां क्रमेण निवृत्तिर्बाधलक्षणा ॥ योऽपि मायाकारोऽनुवर्तेत इत्युच्यते तत्त्वज्ञानं तस्य विरोधि न वा । आद्ये कथं न निवर्ते द्वितीये ज्ञानेन न निवर्तेत । तथा च सत्यः स्यात् । कर्मक्षये सति निवर्तेत इति वदता कः तत्कारणत्वमुक्तं स्यात् । अन्यथा तन्निवृत्तौ निवृत्तेरनुपपत्तेः ।**

**शे०** — लेशपक्षोक्तदूषणोपमर्देन चित्सुखमतमुत्थापयति **अथ मतमिति** ॥ **आकारा इ** तथा चाकारस्यैव लेशशब्देन विवक्षितत्वान्नोक्तदोष इति भावः ॥ **बहव इति** । श्रुतौ मायाभि बहुवचनश्रवणादिति भावः । **अपरोक्षेति** । अपरोक्षप्रतिभासविषयभूतो य आकारः पारमार्थिकत क्रियासामर्थ्यरहिततया ज्ञातस्यापि शुक्तिरजतादिवद्य आकारस्तृतीय इत्यर्थः । एतेषामाकाराणां च ? निवर्तकज्ञानशरीराणि दर्शयति **तत्रेत्यादिना** । अन्यदा तु देहावभासजगदाबभासहेतुतरं मूलपाठः । अन्यादृशस्तु कल्पितः । मूलकोशेष्वदर्शनात् । एतत्पाठाभिप्रायेणैव न्यायामृ शरीराद्यवभासहेतुरित्यादिप्रयोग इति ध्येयम् । ननु यदि साक्षात्कारे जातेऽपि जीवन्मुक्तस्य सम वस्थायां तिरोहितोऽन्यदा चोद्बुद्धो वर्तते कश्चिदाकारः केन तर्हि तस्य निवृत्तिरित्यत आह **प्रारब्धे इन्द्रो मायाभिरिति** । मायां तु प्रकृतिमित्यादावेकत्वेन प्रतिपादितमायाया मायाभिरिति बहु भिधानस्याकारभेदमन्तरेणाघटनादिति भावः ॥ **अत्र परमेश्वरेति** । अयं वै हरय इति तच्छ्रुति व्याख्यानरूपब्राह्मणवाक्यादिति भावः । ननु तस्याभिध्यानादिति श्वेताश्वतरश्रुतिरेवात्र प्रमाणम् । अ भूयो निवृत्तिरन्ते निवृत्तिर्विश्वमायानिवृत्तिरिति प्रतीयते । तत्र विश्वग्रहणेनानेकमायाकारप्रतीत तेषां चाकाराणां क्रमेण निवृत्तिर्भूयो निवृत्तिरिति पौनःपुन्यापरपर्यायक्रियासमभिव्याहाराभिधा भूयश्शब्देनावगम्यते । अन्ते निवृत्तिरित्यनेन च विदेहकैवल्यावस्थायां विलीयमानः कश्चिदा प्रतीयते विश्वमायानिवृत्तिरिति । पूर्वमशेषमायाऽनिवृत्तिरिति च प्रतीयते । तथा च विवक्षितार्थे इयमेव श्रुतिः प्रमाणमिति कथमत्र प्रमाणाभाव इत्यत आह **तस्याभिध्यानादित्यादि** । तथा च रन्यार्थत्वान्नोक्तार्थव्यवस्थापकत्वमिति भावः । श्रुत्यर्थे विवदन्तं प्रत्यनिष्टान्तरमाह **किञ्चेति** । अ मित्यत आह **तथा चेति** । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वस्य ज्ञाननिवृ व्याप्ततया तदभावे तस्यानुपपन्नत्वादिति भावः ॥ **कारणत्वमुक्तं स्यादिति** । मायाकारानुवृत्ति प्र शेषः । तदुपपादयति **अन्यथेति** । कर्मनिवृत्तावाकारनिवृत्तेराकारस्य कर्मकारणत्वं विनाऽनु रित्यर्थः । तथा च सत्यत्वापत्तिर्वक्ष्यमाणरीत्याऽन्योन्याश्रयो वेति भावः ।

**स०— अपरोक्षेति** । अपरोक्षप्रतिभासविषयभूतो य आकारः पारमार्थिकत्वात् क्रियासामर्थ्यरहिततया ज्ञातस्यापि प्रपञ्चस्य शुक्तिरजतादिवत्समर्पक आकारः तृतीय इत्यर्थः । एतेषां च क्रमेण प्रवर्तकाज्ञानशरीराणि दर्शयति **तत्रेत्यादिना** ॥ **तत्त्वसाक्षात्कारेणेति** । अद्वैतात्मवस्तुसाक्षात्कारेणेत्यर्थः । अन्यदा तु **देहाभासजगदवभासहेतुतयेत्येव** मूलपाठः । तत्त्वप्रतीपिकायां चतुर्थपादे तथैवोक्तेः । ननु साक्षात्कारे जातेपि जीवन्मुक्तस्य समाध्यवस्थया तिरोहितोऽन्यदा चोद्बुद्धो वर्तेत कश्चिदाकारः केन तर्हि तस्य निवृत्तिस्तत्राह **प्रारब्धेति** ॥ **इन्द्रो मायाभिरिति** ॥ माया तु प्रकृतिमित्यादावेकत्वेन प्रतिपादितमायायाः मायाभिरिति बहुवाभिधानमाकारभेद एव घटत इति भावः ।

**प०— आकारा इति** । लेश इत्यग्रे व्यवहारलेश इत्यर्थः ॥ **देहाभासजनकाभासहेतुतयेति** । आभासपदमसत्परं असत्यदेहजनकं यदसत्यं तद्धेतुतयेत्यर्थः ॥ **तथा च सत्यः स्यादिति** । ज्ञाननिवर्त्यस्यैव मिथ्यात्वोपगमादिति भावः ॥ **तत्कारणत्वमुक्तं स्यादिति** । मायायाः कारणत्वमित्यर्थः । तच्चायुक्तं अविद्यापगमे तदुपादानककर्मावस्थानानुपपत्तेरिति भावः ।

**या०— आकारा** लेशाः ॥ **देहाभासहेतुतयेति** । अपरोक्षप्रतिभासयोग्योऽर्थाभासो देहाभासस्तद्धेतुतयेत्यर्थः । देहाभासजनकाभासहेतुतयेति क्वचित्पाठः । तत्र देहाभासोऽवास्तवदेहस्तज्जनकाभासोऽवास्तवो देहानुकूलः । ततश्चापरोक्षप्रतिभासयोग्यौ यौ अवास्तवदेहतदनुकूलरूपावर्थौ तद्धेतुतयेत्यर्थो बोध्यः । ननु तस्याभिध्यानादित्यत्र 'भूयश्चान्ते विश्वमायानिवृत्तिरि'त्यविद्याकाराणां क्रमेण निवृत्तिः श्रूयत इत्यत आह **तस्याभिध्यानादिति** ॥ **तत्कारणत्वमिति** । उक्ताविद्यालेशकारणत्वमित्यर्थः । तथा च तस्यानादित्वाङ्गीकारो भज्येतेति भावः ।

**श्री०— अध्यवसायेनेति** । परोक्षनिश्चयेनेत्यर्थः ॥ **देहाभासेति** । देहावभासेत्यर्थः । **मायाभिरिति** । एकस्या अपि मायाशब्दोदितायाः आकारबहुत्वाभिप्रायेणैव बहुवचनस्य प्रयुक्तत्वादन्यथा तदनुपपत्तेरिति भावः । ननु तस्याभिध्यानादिति श्रुतौ विश्वमायनिवृत्तिरिति समस्तमायानिवृत्तरुच्यते । एकस्या अप्यविद्यायाः समस्तत्वमाकारबहुत्वाभिप्रायेणैव क्तमिति चेत्तत्राह **तस्याभिध्यानादिति** ॥ **विश्वबन्धकेति** । तथा च विश्वशब्दस्य जगद्वाचकत्वेन समस्तार्थकत्वं नेति भावः । **तत्कारणत्वमिति** । अविद्यालेशावस्थानकारणत्वमुक्तं स्यादित्यर्थः ॥ **अनुपपत्तेरिति** । तथा चाविद्यालेशस्यानादित्वाङ्गीकारभङ्गापत्त्याऽपसिद्धान्तादिति भावः ।

सु०— अथ मन्यसे । ज्ञानमेवाविद्यालेशस्य निवर्तकम् । किन्तु प्रबलेन प्रारब्धकर्मणा प्रतिबद्धं न निवर्तयति । फलभोगेन तु प्रतिबन्धके क्षीणे निवर्तयतीति । तदप्ययुक्तम् । निरुपादानकर्मावस्थानानुपपत्तेः । स एवाविद्यालेशः कर्मोपादानमिति चेन्न । कर्मावस्थानेऽविद्यालेशावस्थानं तदवस्थाने च कर्मावस्थानमिति परस्पराश्रयत्वापत्तेः । उत्पत्त्यादाविवावस्थानेऽपि तस्य दोषत्वात् ।

किञ्चास्यार्थस्य न किञ्चित्स्फुटं ज्ञापकान्तरमस्ति । ततो मा नाम भूदवस्थितावितरेतराश्रयत्वम् । ज्ञप्तौ तु भवत्येव । जीवन्मुक्त्यन्यथाऽनुपपत्त्यैवैषोऽर्थः कल्प्यत इति चेन्न । परमपुरुषानुग्रहेणैव मोक्ष इत्यस्य सकलश्रुतीतिहासपुराणादिसिद्धस्यार्थस्याङ्गीकारेणैव सर्वस्योपपत्तावस्याः कल्पनाया अनवकाशादिति ।

शे०— पूर्ववादी स्वाभिसन्धिमुद्घाटयति अथ मन्यस इति । तर्हि विरोधिनि ज्ञाने सति कथमनिवृत्तिरिति पृच्छति किन्त्विति । उत्तरमाह प्रबलेनेति । अप्रतिबद्धसामग्र्या एव कार्यजनकत्वादिति भावः । तर्हि कथमुत्तरत्रापि तन्निवृत्तिः । प्रारब्धकर्मणो ज्ञानस्य प्रतिबद्धत्वादित्यत आह फलेति । यद्यप्यत्र न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृदिति वचनाद्भोगकालेऽपि कर्मकरणान्न भोगकालेऽपि तत्क्षय इति वक्तुं युक्तम् । तथाऽपि पूर्वोक्तन्यायेन शिष्यैरेव तदूह्यतामिति भावेन दोषान्तरमेव विवक्षुः किमेवं वादिनः कर्माविद्योपादानकतयाऽभिमतं किंवा तल्लेशोपादानतयेति विकल्पं मनसि निधायाद्यं निराकरोति निरुपादानेति । उपादाननिवृत्तावुपादेयनिवृत्तेरवश्यकत्वादिति भावः । द्वितीयं शङ्कते स एवेति । कर्मनिमित्तक एवेत्यर्थः ॥ तस्य दोषत्वादिति । चैत्रमैत्रयोरन्योन्यारोहणादिप्रसङ्गभयेनोत्पत्तिज्ञप्तिमात्रप्रतिबन्धकतया तद्दोषत्वासिद्धेरिति भावः ।

अङ्गीकृत्यापि तन्नियममन्योन्याश्रयमुपपादयति किञ्चेति ॥ अस्यार्थस्येति । ज्ञानोत्पत्त्यनन्तरमप्यविद्यालेशावस्थानरूपस्य प्रतिबन्धकीभूतकर्मसद्भावरूपस्यार्थस्येत्यर्थः । न च ज्ञापकान्तरमस्तीत्यनन्तरमत इदमर्थद्वयमन्योन्यं ज्ञापकमित्यङ्गीकार्यमिति शेषः । तथा च कर्मावस्थानज्ञाने तदुपादानकतयाऽविद्यालेशावस्थानस्य ज्ञानं सति च तस्मिंस्तस्य ज्ञानानिवृत्तत्वोपपादकतया कर्मावस्थानज्ञानमिति परस्परज्ञप्तिप्रतिबन्धकतयैवान्योन्याश्रयस्य दूषणत्वमिति भावः ॥ ज्ञप्तौ त्विति । कर्मावस्थानज्ञाने तदुपादानभूताविद्यालेशावस्थानज्ञानं तज्ज्ञाने च सति तत्कार्यकर्मावस्थानज्ञानमिति ज्ञप्तावेवान्योन्याश्रयत्वमित्यर्थः । ननु भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रुतेरेव लेशावस्थानगमकत्वान्न लेशावस्थानकर्मावस्थानयोरन्योन्यगमकत्वमिति कथं परस्परापेक्षत्वमित्यत उक्तं स्फुटमिति । तस्यार्थान्तराभिधानेन

सावकाशत्वसमर्थनादस्फुटत्वमिति भावः ॥ **सर्वस्योपपत्ताविति** । प्रसन्नो भगवान्प्रारब्धानि कर्माणीत्यादिनाऽनुपदमेव वक्ष्यमाणस्य सर्वस्योपपत्तावित्यर्थः ।

**प० — स एवेति** । कर्मप्रतिबद्ध एवेत्यर्थः । ज्ञापकान्तरमस्तीत्यनन्तरं अन्योन्यज्ञाप्यज्ञापकभावाङ्गीकारादिति शेषः । अर्थापत्तेरन्यथासिद्धिमाह **परमपुरुषेति ॥ सर्वस्येति** । जीवन्मुक्तावस्थानं तद्धेतुकर्म तदुपादानाद्यवस्थानमित्यादेः सर्वस्येत्यर्थः ।

**या० — अस्यार्थस्येति** । अविद्यालेशावस्थानरूपस्य कर्मावस्थानरूपस्य चार्थस्येत्यर्थः । ज्ञापकान्तरमस्तीत्यनन्तरमत इदमर्थद्वयमन्योन्यज्ञापकमङ्गीकार्यमिति शेषः । तथा कर्मावस्थाने तदुपादानतयाऽविद्यालेशावस्थानस्य ज्ञानं तस्मिन्सति तस्य ज्ञाननिवर्त्यत्वोपपादकतया कर्मावस्थानमिति ज्ञप्तावेव परस्पराश्रयत्वमित्यर्थः ॥ **सर्वस्योपपत्ताविति** । 'प्रसन्नो भगवानारब्धानि कर्माणीत्यादिनाऽनुपदमेव वक्ष्यमाणस्य सर्वस्येत्यर्थः ।

**श्री० — ज्ञप्तौ त्विति** । कर्मावस्थानज्ञाने तदुपपादनभूताविद्यालेशावस्थानज्ञानं तज्ज्ञाने च सति तत्कार्यकर्मावस्थानज्ञानमिति ज्ञप्तावेवान्योन्याश्रय इत्यर्थः ॥ **जीवन्मुक्तीति** । जीवन्मुक्तानां शुकवामदेवानामवस्थानान्यथाऽनुपपत्त्याऽविद्यालेशाद्यवस्थानादिरूपोऽर्थः कल्प्यत इत्यर्थः ।

**सु० — अधिकरणार्थमुपसंहरति** इति सर्वमिति ।

---

**अनु० —** इति सर्वं प्रतिज्ञाय सर्वैस्तर्कैः सदागमैः ॥
उपासीत हरिं नित्यं गुणैरेव स्वयोग्यतः ॥

**नास्त्येव मोक्षः सत्त्वे वा साधनान्तरसाध्य इत्येतदनुपपन्नम् । किन्नाम निष्कामभगवदर्थश्रुत्यादिविहितकर्मानुष्ठानेन शुद्धान्तःकरणस्य रागादिदोषक्षये जातभगवद्भक्तेः श्रवणमनननिदिध्यासनाभ्यासवतः परमभागवतस्य भगवत्साक्षात्कारे जाते प्रसन्नो भगवानप्रारब्धानि कर्माणि विनाश्य भागवतधर्मप्रवृत्तये ज्ञानिनं कमपि कालं व्यवस्थापयंस्तदर्थं प्रारब्धानि कर्माण्यवशेष्य तत्फलोपभोगे सति तान्यपि विनाश्य प्रकृतिबन्धान्मोचयतीति सर्वं प्रतिज्ञाय गुणैरेव न तु सोऽरोदीदित्यादिना प्रतीतैरप्यगुणैरिति** समाने चेति **सूत्रखण्डस्यार्थमनुवदति । युक्तमिति शेषः । स्वयोग्यत एव न तु योग्यतातिक्रमेणेति** प्रासेश्चे(त्यादिसू)ति **सूत्रार्थानुवादः । प्रयोजनं चोत्तरेण सङ्गतिसूचनमिति ।**

**शे० — भागवतधर्मप्रवृत्तय इति** । ज्ञानेनाप्रारब्धानामिव प्रारब्धानमपि निवृत्तौ साक्षात्कृतब्रह्मणां सद्यः शरीरादिपातापत्त्या ब्रह्मोपदेशकत्वासम्भवेन पौरुषेयब्रह्मोपदेशानां वातपुत्रीयत्वापातेन भागवतधर्मप्रवृत्तिर्न स्यादिति भावः ॥ **प्रयोजनं चेति** । अनुवादप्रयोजनं चेत्यर्थः ।

प० — सर्वशब्दार्थं व्यनक्ति **नास्त्येवेत्यादिना इति सर्वमित्यन्तेन** । एवकारस्य व्यावर्त्यं न त्वित्यादिनाह **इतीति** । इत्यनेनोपसंहारसूत्रस्य समाने चेति योंशस्तस्यार्थमित्यर्थः ॥ **इत्यादीति** । प्राप्तेश्च समञ्जसं इतरे त्वर्थसामान्यादित्यादिसूत्रार्थेत्यर्थः ॥ **प्रयोजनं चेति** । प्राप्तेश्चेत्यादिसूत्रार्थानुवादप्रयोजनं चेत्यर्थः ।

**या० — प्रयोजनं चेति** । अनुवादप्रयोजनं चोत्तराधिकरणेन सङ्गतिसूचनमित्यर्थः ।

**श्री० — भागवतधर्मप्रवृत्तय इति** । अन्यथा वातपुत्रीया ब्रह्मोपदेशाः प्रसज्येरन्निति भावः ॥ **प्रयोजनं चेति** । सूत्रार्थानुवादस्येति शेषः ।

**सु० — स्वयोग्यत इत्युक्तम्** । तामेव **योग्यतां विवृणोति ब्रह्मेति** ।

**अनु० —** ब्रह्मा सर्वगुणैश्चैव क्रियासामान्यतश्च गीः ॥
गुणसामान्यतो रुद्रो द्रव्यसामान्यतः परे ॥ ३-३-२९ ॥

**ब्रह्मैवेति सम्बन्धः । सर्वैर्वेदोदितैः । चशब्दः क्रियाद्रव्यसमुच्चयार्थः । हरिमुपासीतेति वर्तते । वेदोक्तसमस्तगुणक्रियोपेततयाऽनन्तरूपं हरिमुपासितुं ब्रह्मैव योग्य इत्यर्थः । चस्त्वर्थः । सरस्वती तु क्रियासामान्यतः क्रियासङ्कोचेनोपास्ते । सकलवेदोक्तगुणोपेततयाऽनन्तरूपं हरिमुपास्ते । त्रिविक्रमत्वादिक्रियास्तु नित्यविक्रान्त्यादिष्वन्तर्भावयतीत्यर्थः । गुणसामान्यतः समस्तरूपाण्युपास्ते । गुणान्क्रियांश्च सङ्कोचयतीत्यर्थः । परे शक्रादयः । द्रव्याणि रूपाणि गुणक्रियासङ्कोचस्तु सिद्ध एव ।**

**एतेन 'समान एवं चाभेदादि'त्यधिकरणतात्पर्यमुक्तं भवति । विद्यैव तु निर्धारणादित्यतः पूर्वमेवेदमधिकरणम् । तत्कुतो व्यत्यासेन व्याख्यानम् । उच्यते । प्रकरणशुद्धौ प्रमेयं सुग्रहं भवतीत्यतः क्रमभङ्गः । तथा हि । उपासनस्वरूपानिश्चये न कोऽपि विचारोऽवकाशं लभत इति तत्स्वरूपमादौ दर्शितम् । ततस्तस्य कर्तव्यता समर्थिता । अनन्तरं तदितिकर्तव्यताजिज्ञासायां योग्यतादिविचार इति ॥ ३-३-२९ ॥**

शे० — समुच्चयार्थकचशब्देन विरोधपरिहारायैवशब्दं भिन्नक्रमतया व्याचष्टे **ब्रह्मैवेतीति** । क्रियासामान्यत इत्यस्य व्याख्यानं **क्रियासङ्कोचेनेति** । क्रियासङ्कोचमेव दर्शयन्सरस्वत्या उपासनस्य मर्यादामाह **सकलेति** । सरस्वत्याः क्रियामात्रसङ्कोचवद्रुद्रस्य गुणमात्रसङ्कोचप्रतीतिनिरासाय गुणसामान्यत इत्यस्य तात्पर्यमाह **गुणानित्यादि** । पार्वत्या अपि गुणक्रियासङ्कोचावेव न तु रूपसङ्कोचोऽपि । तथाऽपि रुद्रापेक्षयाऽधिकगुणक्रियासङ्कोचसद्भावात्ततोऽपकर्ष इति भावेन प्रायो रुद्रसाम्यात्तद्ग्रहणेनैव

ग्रहणं मन्वानेन पृथक्तदुपासनप्रकारो न शिक्षितः । अत एव परे शक्राद्या इत्युत्तरग्रन्थः । अन्यथा पार्वत्याद्या इत्येवावक्ष्यदिति ध्येयम् । नयचन्द्रिकायां तु परे पार्वत्याद्या इत्येव व्याख्यातम् । एवञ्चात्र टीकयोर्विरोध इत्याभाति । समस्तगुणक्रियायुक्ततया समस्तरूपोपासनस्य ब्रह्ममात्रनिष्ठत्ववत्क्रियामात्र-सङ्कोचे सति समस्तगुणयुक्तत्वेन समस्तरूपोपासनस्य सरस्वतीमात्रनिष्ठत्ववद्गुणक्रियासङ्कोचे सति समस्त-रूपोपासनस्य रुद्रमात्रनिष्ठत्ववद्गुणक्रियारूपसङ्कोचेनोपासनस्येन्द्रमारभ्य मनुष्योत्तमपर्यन्तं साधारणत्वेन शक्रमात्रनिष्ठत्वाभावात्पूर्वत्र ब्रह्मेति सरस्वती रुद्र इति च विशेषमात्रग्रहणवच्छक्र इति विशेषमगृहीत्वा शक्रादय इति साधारण्येनैवोक्तमिति हृदयम् ॥ **एतेनेति** । न च तत्र ब्रह्माणीब्रह्मणोरेव विषमो-पासनमित्युक्तं न रुद्रादेरिति वाच्यम् । तत्रोपलक्षणया ब्रह्माण्यादिशब्देन रुद्रादेरपि ग्रहणादित्याशयात् ॥ ३-३-२९ ॥

प०— तामेव सङ्गतिं व्यनक्ति **स्वयोग्यत इत्युक्तमिति** । गुणसामान्यत इत्यत्र क्रिया-सामान्यत इत्यपि ज्ञेयमिति भावेनाह **गुणान् क्रियाश्चेति** । द्रव्याणीत्यनुवादः । रूपाणीति व्याख्या ॥ **समान इति** । एवं च एवमपि ईशधर्माणामपूर्वत्वेपि समाने च योग्यविषय एवोपसंहारः कार्यः । न त्वयोग्य इत्येवं सूत्रार्थप्रतीतेरिति भावः ॥ **तत्स्वरूपमिति** । 'सोपासना च द्विविधे'त्यादिनोपासना-स्वरूपं दर्शितम् ॥ **तस्य कर्तव्यतेति** । 'अतो विष्णौ परा भक्तिरि'त्यादिनेति भावः ॥३।३॥२९॥

या०— द्रव्यसमुच्चयार्थ इत्यत्र द्रव्यशब्दो रूपपरः ॥ **एतेन समान इति** । न च तत्र ब्रह्माणीब्रह्मणोरेव विषमोपासनमुक्तं न रुद्रादेरपीति वाच्यम् । उपलक्षणया तत्र ब्रह्माणीशब्देन रुद्रादेरपि विवक्षितत्वात् ॥ ३-३-२९ ॥

श्री०— तदेव दर्शयति **स्वयोग्यत इतीति** । ॥ ३-३-२९ ॥ ॐ **यावदधिकारवस्थि-तिराधिकारिकाणाम्** ॥ ॐ ॥

**॥ इति विद्याधिकरणम् ॥**



॥ अथ यावदधिकाराधिकरणम् ॥

सु० — ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥ एतद्यथा यथेत्यादिना भाष्ये व्याख्यातम् । तदविस्पष्टम् । अधिकारविशेषस्य कारणत्वानभिधानात् । मुक्तावित्युक्त्या संसारे नैवमिति प्रतीतेः । आनन्दमात्रग्रहणाद्गुणानन्तरव्यावृत्तिप्राप्तेः । धर्मिणामनिर्देशाच्च । अतः स्पष्टं व्याचष्टे अधिकारेति ।

अनु० — ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥
अधिकारविशेषेण भक्तिज्ञानसुखादिभिः ॥
विशेषो देवतादीनां

अधिकारो योग्यता । अत्र सामान्योक्त्या मुक्तौ संसारे चेति गम्यते । तर्हि मुक्ताविति कस्मादुक्तमित्यत आह मोक्षे चेति ।

मोक्षे चैव विशेषतः ॥

चस्त्वर्थः । विशेषतस्तु मोक्ष एवेत्यन्वयः । संसारे विक्षेपवशाद्योग्यतानुसारित्वं किञ्चिद्विहन्यते । मोक्षे तदभावाद्योग्यतानुसार्येव नियमेन भक्त्यादिकं भवतीत्यतो मुक्तावित्युक्तमिति ।

प० — यावदधिकारमवस्थितिः ॥ मुक्ताविति कस्मादुक्तमिति । भाष्य इत्यस्ति ॥ अक्षरधियां त्विति ॥ एतदप्यविशदमिति । भाष्य इति वर्तते ।

सु० — एवं तर्हि मुक्तानां परस्परं द्वेषेर्ष्यादिप्रसङ्गेन मुक्तत्वविरोधः स्यादित्याशङ्कापरिहारार्थं सूत्रम् 'अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तमि'ति । एतदप्यविशदम् । दोषाभावसाम्यादित्यत्र साम्यपदप्रयोजनादर्शनात् । उत्तमेभ्योऽन्येषां भावादित्यस्योत्पत्तेरिति प्रतीतेः । शिष्यवदिति चायुक्तम् । क्वचिच्छिष्यस्यापि गुरौ द्वेषादिदर्शनात् । अतो व्याख्याति नेति ।

अनु० — ॐ अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॐ ॥
न तावता विरोधोऽस्ति निर्दोषत्वात्समस्तशः ॥
आभासत्वात्परेषां तदवराणां च सर्वशः ॥

तावता परस्परमसाम्येन द्वेषादिप्रसङ्गेन मुक्तत्वविरोधोऽस्ति । साम्यशब्दस्यार्थः समस्तश इति । उत्तमेभ्य इत्यस्य विवरणमाभासत्वादिति । तदवराणां सर्वेषां पराभासत्वाच्चेति योजना ॥ एतदेव विवृण्वन्दृष्टान्तं व्याख्याति यत इति ।

यतोऽवराणां सर्वेऽपि गुणा सर्वाः क्रिया अपि ॥
नियमेनैव पूर्वेषां सुप्रसादनिबन्धनाः ॥
अतः सच्छिष्यवत्तेषां नैवेर्ष्यादिः कथञ्चन ॥

गुरौ सच्छिष्यस्येवेत्यर्थः । एतच्चोत्तरत्र स्फुटीकरिष्यत्याचार्यः ।

शे० — ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥ उत्तमेभ्य इत्यस्येति । उत्तमेभ्योऽन्येषां भावादित्यर्थः । ननु यदि मुक्ता न समास्तर्हि परस्परं द्वेषेर्ष्यादिमन्तः स्युरिति पराभिमततर्के निर्दोषत्वादित्यनेन किं समाधानमुक्तमित्यत आह एतच्चेति । 'निश्शेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्यादापरोक्ष्यं हि हरेर्द्वेषेर्ष्यादिस्तत कुतः' इत्यादिना ज्ञानपादे द्वेषेर्ष्यादिमत्त्वेऽविद्याऽहङ्कारादिदोषवत्त्वं प्रयोजकम् नासमत्वं तथा लोके दर्शनात् । मुक्तेषु च नाविद्यादयो दोषाः । सम्भावयितुमपि शक्याः । भगवत्साक्षात्कारेणैव समूलघातं हतत्वात् । अतो व्यापकाभावाद्व्याप्यानां द्वेषेर्ष्यादीनामप्यभाव इति सोपाधिकत्वमनेनोक्तमिति स्फुटीकरिष्यतीत्यर्थः । यद्वा तदवराणां सर्वेषां पराभासत्वं चोषा स्वाहा च पर्जन्य इत्यादिनाऽऽचार्य एव स्फुटीकरिष्यतीत्यर्थः ।

स० — एतच्चोत्तरत्र स्फुटीकरिष्यत्याचार्य इति ।

प० — उत्तमेभ्योऽन्येषां भावादित्यस्येति । इति भाष्यस्येत्यर्थः ॥ इत्यस्येति । उत्तमेभ्योऽन्येषां भावादित्युक्तवाक्यस्येत्यर्थः ॥ एतच्चोत्तरत्रेति । न तावता विरोधोऽस्तीत्यादिनोक्तप्रमेयं 'निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्यादापरोक्ष्यमि'त्यादिनोत्तरपाद इति भावः ।

या० — ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥ उत्तमेभ्य इत्यस्येति । उत्तमेभ्योऽन्येषां भावादित्यस्येत्यर्थः । ननु यदि मुक्ता न समास्तर्हि परस्परं द्वेषेर्ष्यादिमन्तः स्युरिति पराभिप्रेततर्के निर्दोषत्वादित्यनेन किं समाधानमुक्तमित्यत आह एतच्चेति । निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्यादापरोक्ष्यं हि हरेर्द्वेर्ष्यादिस्तु ततः कुत' इत्यत्र द्वेषेर्ष्यादिमत्त्वेऽविद्याऽहङ्कारादिदोषवत्त्वं प्रयोजकं नासमत्वं तथा लोके दर्शनात् । मुक्तेषु च नाविद्यादयो दोषाः सम्भावयितुमपि शक्याः । भगवत्साक्षात्कारेणैव समूलघातं हतत्वात् । अतो व्यापकाभावाद्व्याप्यानां द्वेषेर्ष्यादीनामप्यभाव इति सोपाधिकत्वमनेनोक्तमिति स्फुटीकरिष्यतीत्यर्थः ।

च० — ॐ अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॐ ॥ सच्छिष्यस्येवेति । 'तस्येवे'ति षष्ठ्यन्ताद्वतिरिति भावः ॥

सु० — चिरन्तनास्तु वृत्तिकाराः सूत्रद्वयमिदमन्यथा व्याचक्षते । विदुषां किं ज्ञानोदयानन्तरमेव मुक्तिः किंवा नेति संशये पूर्वस्मिन्पक्षे सतीदमुच्यते । आधिकारिकाणां परमेश्वरदत्ताधिकारे वर्तमानानां विदुषामपि देवादीनां यावदधिकारं संसारेऽवस्थितिः । न तदैव मुक्तिः । तथा श्रुत्यादिषु दर्शनात् । सत्यामपि साधनसम्पत्तौ यदि न मोक्षस्तदा न तेषां कदाऽपि मोक्षः स्यादित्याशङ्कापरिहाराय द्वितीयं सूत्रम् । ब्रह्मविदां न मोक्षाभावरूपो विरोधः । कुतः । सामान्यतद्भावाभ्यां सामान्यविशेषभावाभ्याम् । यद्यपि क्षीयन्ते चास्य कर्माणीति सामान्यतः सर्वकर्मणां ज्ञानेन क्षयोऽभिहितस्तथाऽपि तस्य तावदेव चिरमिति विशेषवचनात्प्रारब्धकर्मणामवशेषो गम्यते । एतदुक्तं भवति । अप्रारब्धानि कर्माणि निवर्तन्ते । प्रारब्धस्य तु भोगेनैव क्षयः । अतस्तत्फलभूतेऽधिकारे स्थित्वा तत्क्षये प्रव्रज्यन्त इति ।

मायावादिनस्तु प्रथमसूत्रस्यैवायं समस्तोऽर्थ इति वर्णयन्तोऽक्षरधियामित्येतदधिकरणान्तरं व्याचक्षते ।

शे० — प्रथमसूत्रस्यैवेति । यावदधिकारमिति प्रथमसूत्रस्यैवेत्यर्थः ॥ अयं समस्त इति । चिरन्तनवृत्तिकाराणां पक्षे सूत्रद्वयार्थ इत्यर्थः । निर्गुणविद्या मोक्षसाधनं न वेति संशये न तस्या अपवर्गः फलं भवितुमर्हति । श्रुतिस्मृतीतिहासपुराणेषु विदुषामप्यपांतरतमःप्रभृतीनां तत्तद्देहपरिग्रहत्यागौ तावच्छ्रूयेते । न च तदपवर्गफलत्वे उपपद्येते । मुक्तेरपुनरावृत्तिलक्षणत्वेनापवृक्तस्य देहपरिग्रहत्यागयोरनुपपत्तेः । न च तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यत इति श्रुतेर्विदुषो देहपातावधि प्रतीक्षावद्वसिष्ठादीनामपि प्रारब्धकर्मफलोपभोगप्रतीक्षा संभवतीति वाच्यम् । येन हि कर्मणा वसिष्ठादीनामारब्धं शरीरं तत्प्रतीक्षा स्यात् । तथा च न शरीरान्तरं ते गृह्णीयुः । तस्मादर्थवादत्वान्नापवर्गो विद्याफलमिति प्राप्ते ब्रूमः । पौर्वापर्यालोचनेन भूयसीनां श्रुतीनामत्रैव तात्पर्यावधारणात् । तात्पर्यविषयीभूतस्य चान्यथयितुमशक्यत्वात् । निर्गुणविद्यायामपवर्गलक्षणफलश्रवणस्य स्तुतिमात्रत्वानुपपत्त्या निर्गुणविद्याया मोक्षफलकत्वमेव । न च विदुषामप्यपांतरतमःप्रभृतीनां तत्तद्देहसञ्चारेण सत्यामपि ब्रह्मविद्यायामनिर्मोक्षान्न ब्रह्मविद्याया मोक्षहेतुत्वमिति वाच्यम् । यथा वर्तमाना ब्रह्मविद आरब्धभोगक्षये कैवल्यमनुभवन्ति तस्य तावदेव चिरं यावन्न विमोक्ष्य इति श्रुतेरेवमपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्मणो यावदधिकारमवतिष्ठन्ते तदवसानेऽपवृज्यन्त इत्यङ्गीकारात् । यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणमाविर्भवेत् । ततोऽन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येत इति ब्रह्मज्ञानस्य मोक्षहेतुत्वमिति चेन्न । ज्ञानात्कर्मबीजदाहस्य 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व-

संशयः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे'। 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे'ति श्रुतिस्मृतिसिद्धत्वादिति सूत्रद्वयप्रमेयं प्रथमसूत्रार्थतया वर्णयन्तीत्यर्थः । तर्ह्यक्षरधियामित्युत्तरसूत्रवैयर्थ्यम् । तदुक्तव्यस्याप्यनेनैवोक्तत्वादित्यतोऽधिकरणान्तरत्वान्न तदिति भावेनोक्तमक्षरधियामित्यधिकरणान्तरं व्याचक्षत इतीति ।

स०— **पूर्वस्मिन्पूर्वपक्षे** ज्ञानोदयानन्तरमेव मुक्तिरिति पूर्वपक्षे ।

प०— **पूर्वस्मिन्निति** । ज्ञानोदयानन्तरमेव मुक्तिरिति पूर्वपक्षे इत्यर्थः ॥

या०— **प्रथमसूत्रस्यैवायमिति** । एवमपान्तरतमप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते तदवसाने चापवृज्यन्ते । तस्य तावदेव चिरमिति श्रुतेरित्युक्त्वा यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणमाविर्भवेत्ततोऽन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वा स्यादित्याशङ्क्य न त्वियमाशङ्का युक्ता । ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वादित्यादिना प्रथमसूत्रव्याख्यावसर एव परिहारस्योक्तत्वादित्यर्थः ॥ **अधिकरणान्तरमिति** । तच्च प्रकृतानुपयोगान्न प्रदर्शितम् । अस्माभिरपि ग्रन्थगौरवभयान्न लिखितम् ।

श्री० — ॐ **यावदधिकारमवस्थितिराधिकारिकाणाम्** ॐ ॥ **सामान्यविशेषभावाभ्यामिति** । सामान्यविशेषवचनयोः सद्भावादित्यर्थः । तदेव दर्शयति **यद्यपीत्यादिना** ।

सु० — **तत्राद्यं मतं निराकरोति** न चेति ।

अनु०— न च संसारिदेवानां कालेयत्तापरे इमे ॥ सूत्रे

**संसारावस्थानस्य कालेयत्ता कालमर्यादा प्रारब्धकर्मफलभोगावसानरूपा सा परा उद्देश्या प्रतिपाद्या ययोस्ते तथोक्ते । कुतो नेत्यत आह** हीति ।

ह्यारब्धमात्रस्य भोगेनैव क्षयो ध्रुवः ॥

अनारब्धस्य भोगेन त्वितरे इति चोदितः ॥

**यस्मादनारब्धस्य ज्ञानेनैव क्षय आरब्धमात्रस्य भोगेनैव क्षयो ध्रुव इत्येषोऽर्थ 'अनारब्धकार्ये एव तु पूर्वे तदवधेरि'ति सूत्रेण, 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते' इति च सूत्रेणोदितः । तस्मान्नेति संबन्धः । एवमुदितत्वेऽपि कुतो नेत्याशङ्कां परिहरन्नप-व्याख्याननिरासस्य प्रयोजनमाह** पौनरुक्त्येनेति ।

पौनरुक्त्येन तेनैते उक्तार्थे इति निश्चयः ॥ ३-३-२० ॥

**एतेन मायावादिनामपि (व्याख्यानं) मतं निरस्तम्। तात्पर्यभेदात्प्रपञ्चयप्रपञ्चनभावाद्वा न पौनरुक्त्यमिति चेत्। स्यादेवम्। यद्यसङ्कीर्णं व्याख्यानान्तरं न स्यात्। तदिदमुक्तम्** इति निश्चय इति ॥ २-३-२० ॥

शे० — **एतेनेति**। यावदधिकारमित्यस्यानारब्धकार्ये भोगेन त्वितरे क्षपयित्वेत्युत्तराधिकरणद्वयेन पौनरुक्त्यप्रसङ्गदोषेणेत्यर्थः ॥ **तात्पर्यभेदादिति**। यावदधिकारमित्यस्य विदुषामप्यपान्तरतमःप्रभृतीनां श्रुतिस्मृतीतिहासपुराणेषु देहपरिग्रहपरित्यागश्रवणान्न निर्गुणविद्याया अपवर्गसाधनतेति प्राप्ते हेतोरपि सति प्रतिबन्धे कार्यानुपजनो हेतुभावमपाकरोति। तथा सति वृन्तफलसंयोगप्रतिबद्धस्य गुरुत्वस्य पतनाजनकतया तदपगमदशाकारिणोऽप्यहेतुत्वप्रसङ्गात्। ततश्च विदुषामपि वसिष्ठादीनां विद्याकर्माराधनावर्जितेश्वरविहिताधिकारपदप्रतिबद्धा निर्गुणविद्या यद्यपि न तदैव मुक्तिं ददाति तथाऽपि तत्समाप्तौ प्रतिबन्धापगमे दास्यत्येवेत्यस्यैवापवर्गहेतुत्वं तद्विद्याया इत्यत्र तात्पर्यम्। अनारब्धकार्ये एवेत्यस्य त्वद्वैतब्रह्मतत्त्वसाक्षात्कारस्यानाद्यविद्योपदर्शितप्रपञ्चमात्रविरोधितया तन्मध्यपतितसकलकर्मविरोधित्वादुभे उ हैवैष एते तरतीत्यविशेषेणैव क्षयश्रवणाच्चाद्वैतज्ञानस्वभावालोचनयाऽऽरब्धानारब्धकार्ययोरविशेषेणैव निवृत्त्या निर्बीजसंसारावस्थानाऽनुपपत्तेः। सद्यो मोक्षः स्यादिति प्राप्तेऽत्र भवतां हिरण्यगर्भादीनां तत्त्वसाक्षात्कारवतामपि श्रुतिस्मृतिप्रतीतदेहधारणान्यथाऽनुपपत्त्या तत्त्वसाक्षात्कारस्य प्रारब्धकर्मतत्कार्यभोगसम्पादकतयाऽविद्यालेशं प्रत्यनिवर्तकत्वसिद्ध्या भोगसमाप्त्या कर्मक्षयेन प्रतिबन्धकनिवृत्तौ सततमनुवर्तमानसाक्षात्कारेण तस्याप्यविद्यालेशस्य निवृत्तिसिद्ध्या लोके सोपाधिकस्य द्विचन्द्रभ्रमस्य चन्द्रैकत्वसाक्षात्कारेण किञ्चित्कालं सहानुवृत्तेरुपाधिनिवृत्तौ तन्निवृत्तेः प्रमाणसिद्धत्वादभ्युपगमवन्निरुपाधिकभ्रमस्यापि सान्तःकरणस्य तदुपादानाविद्यलेशस्य च बहुकालं ब्रह्मसाक्षात्कारेण सहानुवृत्तेः प्रारब्धकर्मोपरमे तन्निवृत्तेरपि हिरण्यगर्भादिदेहधारणविषयश्रुत्यादिप्रमाणसिद्धतयाऽनारब्धकार्यस्यैव कर्मणो नाश आरब्धस्य तु भोगेनेत्यारब्धकर्ममूलकसंसारावस्थानसंभवान्न सद्यो मोक्ष इत्यत्र तात्पर्यम्। भोगेन त्वितरे क्षपयित्वेत्यस्य तु येषां विद्यायोगिशरीरावसानं प्रारब्धं तेषां विद्याफलमस्तु नाम। येषां त्वनेकशरीरानुयायि तेषां तत्फलं न संभवति। जन्मान्तरस्य पूर्वसंस्कारप्रमोषकतया शरीरान्तरे विद्याविहीनैः क्रियमाणानां कर्मणां बन्धहेतुत्वेन ततो जन्मपरम्पराया एव प्राप्तेः। न च तेषां न जन्मान्तरं संस्कारप्रमोषकमिति वाच्यम्। दृष्टनियमसङ्कोचाभावात्। न च यावन्न विमोक्ष्य इति प्रारब्धकर्मविमोक्षावधिश्रवणं सङ्कोचकम्। धृत्वा शरीरमकृतं कृतात्मा इति श्रुत्यन्तरानुसारेण तस्य शरीरविशेषावधिपरतया येषां विद्यायोगिशरीरावसानं प्रारब्धं तद्विषयत्वोपपत्तेः। न च धृत्वा शरीरमित्यत्र शरीरग्रहणं प्रारब्धकार्ययावच्छरीरपरम्। एकवचनश्रवणात्। असाच्छरीरात्समुत्थायेति श्रुत्यन्तरेऽस्मादिति विशेषणेन विद्यायोगिशरीरस्यैव विव-

क्षितत्वाच्च । तस्मान्न सर्वेषां ब्रह्मविदां विद्याफलकमिति प्राप्ते न तावदाधिकारिकाणां जन्मान्तरे संस्कारप्रमोषः कल्पयितुं युक्तः । श्रुतिस्मृतीतिहासपुराणेषु तेषां तत्त्वज्ञत्वप्रतिपादनेनानारब्धकार्ये एवेत्यत्र तन्निरासात् । नाप्यस्मदादीनां मुक्त्यर्थं विद्यानुष्ठानप्रतिपादकबहुशास्त्रप्रामाण्यात्तस्य तावदेवेति विवक्षिताध्यवसाने मुक्त्यवश्यम्भावप्रतिपादकावधारणप्रामाण्याच्च । यावन्न विमोक्ष्य इत्यस्य कर्मविषिपरताया धृत्वा शरीरमित्यत्रत्यशरीरपदस्य प्रारब्धकार्ययावच्छरीरपरताया असदिति विशेषणस्यानुभवसिद्धहेयताप्रदर्शनार्थतया विदुषां जन्मान्तरस्य संस्कारे प्रमोषानापादकतायाश्च कल्पने न प्रारब्धभोगानन्तरं मुक्तेर्ज्ञानिमात्रनियतत्वात्सर्वेषां ब्रह्मविदां विद्याफलमित्यत्र तात्पर्यमिति तात्पर्यभेदान्न पौनरुक्त्यमित्यर्थः ॥ ३-३-२० ॥

**प०— अयं समस्त इति** । सूत्राक्षरार्थः प्रागुक्तदिशैव परं तु 'तस्य तावदेव चिरमि'ति प्रागुक्तश्रुतेरपि तत्रोक्त्या यावत्प्रारब्धमवस्थितिः तदवसाने च मोक्ष इत्याद्यर्थस्य परभाष्ये प्रतीतेरिति भावः ॥ **अधिकरणान्तरमिति** । मूले तद्दूषणाप्रतीतेस्तदर्थो नानूदितः ॥ **तात्पर्यभेदादिति** । इह प्रारब्धवशादुत्पन्नज्ञानानामप्यवस्थित्युक्तिः तत्र तु ज्ञानमहिम्नैव प्रारब्धस्याप्यस्तु नाश इत्याशङ्कानिरास इति तात्पर्यभेदादित्यर्थः ॥ ३-३-२० ॥

**या० — एतेनेति** । **पौनरुक्त्येनेत्यर्थः** । तैरपि प्रथमसूत्र एव वक्ष्यमाणप्रमेयस्योक्तत्वादिति भावः । **तात्पर्यभेदादिति** । यावदधिकारमित्यस्य हि निर्गुणविद्यया नापवर्गः फलं भवितुमर्हति श्रुत्यादिषु विदुषामपि देहपरिग्रहपरित्यागयोः श्रवणादित्यपवर्गाक्षेपेण पूर्वपक्षे हेतोरपि सति प्रतिबन्धे कार्यानुपजननेन हेतुभावमपाकरोतीति हि लोके प्रसिद्धम् । एवमिहापि विद्याकर्माराधितेश्वरविहिताधिकारपदप्राप्तिप्रतिबद्धा विद्या यद्यपि न मुक्तिं दत्तवती तथाऽपि तत्परिसमाप्तौ प्रतिबन्धविगमे दास्यतीत्यस्येव मुक्तिहेतुत्वं निर्गुणविद्याया इत्यत्र तात्पर्यं तदुपयुक्तमन्यत् । अनारब्धकार्ये इत्यादेश्चाद्वैतज्ञानस्वभावादारब्धानारब्धकार्ययोरविशेषेणैव निवृत्तिरिति प्राप्ते नारब्धमेव नश्यति न त्वारब्धमपि तन्नाशस्तु भोगेनैव । यदा लोकेऽपि विरोधिनोः कञ्चित्कालं सहानुवृत्तिरुपलब्धा तदा तद्वदेवागमबलाद्दीर्घकालमपि भवन्ती न शक्या निवारयितुम् । प्रमाणप्रसिद्धस्य नियोगपर्यनुयोगानुपपत्तेरित्यत्र तात्पर्यमिति तात्पर्यभेदादित्यर्थः । ३-३-२० ॥

**श्री०— एतेन मायावादिनामपीति** । प्रथमसूत्रस्यैवायमर्थ इति तेनोक्तत्वादित्यर्थः ॥ ३-३-२० ॥

**च०— असङ्कीर्णं** परस्परव्यामिश्रणरूपसङ्करविनिर्मुक्तम् ।

॥ इति यावदधिकाराधिकरणम् ॥

॥ अथ इयदामननाधिकरणम् ॥

सु० — ॐ इयदामननात् ॐ ॥ येषां ज्ञानयोग्यानामिदं मुक्तिसंसारयोस्तारतम्यं समर्थितम् । ते छन्दोगानामुपनिषदि नामवागादिक्रमेण प्राणान्ता उक्ताः । तत्र किं प्राण एवाधिकारितारतम्यस्यावधिः उताधिकोऽप्यस्तीति संशये सतीयदेव देवतातारतम्यमिति सिद्धान्तितम् । तत्र न ज्ञायते कास्ता नामाद्या देवता इति । कथं च पञ्चदशैव अधिकानामपि भावादित्याशङ्कानिरासार्थं बृहत्संहितावचनमेव पठति उषा इति ।

अनु० — ॐ इयदामननात् ॐ ॥

उषास्स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः ॥

प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः ॥

उत्तरोत्तरतस्त्वेते गुणैस्सर्वैश्च मुक्तिगाः ॥

उषा अश्विनोर्भार्या । स्वाहाऽग्नेर्भार्या । पर्जन्यो मित्रश्चादित्यौ । प्रवहो मरुत् । अनिरुद्धः कामसुतः । एते मुक्तिगा संसारगाश्च सर्वैर्गुणैरुक्तक्रमेणोत्तरोत्तरत एव वर्तन्त इत्यर्थः ।

शे० — ॐ इयदामननात् ॐ ॥ इयदेवेति । प्राणावसानमेवेत्यर्थः ।

---

प० — ॐ इयदामननात् ॐ ॥ छन्दोगानामुपनिषदीति । सप्तमेऽध्याये नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञानबलान्नापतेजआकाशस्मराशाप्राणाः पञ्चदशोक्ता इत्यर्थः ॥ इयदेवेति । प्राणावधित्वमेवेत्यर्थः ॥ अनिरुद्धभार्येति भ्रमं निराह अश्विनोर्भार्येति । चशब्दः समुच्चय इत्याह संसारगाश्चेति ।

या० — ॐ इयदामननात् ॐ ॥ इयदेवेति । प्राणावसानमेवेत्यर्थः ।

सु० — अधिकसद्भावशङ्कानिरासायैतेषां समानन्तरावस्थितांश्चाह सूर्येत्यादिना ।

अनु० — सूर्यधर्मौ यथा सोमो मनुर्दक्षो बृहस्पतिः ॥

शची रतिश्चानिरुद्धसमास्तारा च मित्रवत् ॥ सोमवच्छतरूपा तु प्रसूतिर्वह्निवद्विराट् ॥

पर्जन्यवद्वारुणी च तथा संज्ञा च रोहिणी ॥ धार्मी च मित्रवत्त्वेव प्रावही परिकीर्तिता ॥

मित्रपर्जन्यमध्यस्थावश्विनौ विप्रचित्तयौ ॥ भृगुरग्निसमो मित्रतन्मध्ये ब्रह्मपुत्रकाः ॥

वरुणाग्न्यन्तरा तत्र नारदः प्राय इन्द्रवत् ॥ कामः सुपर्णी चोमावद्वीन्द्रो रुद्रवदीरितः ॥

निर्ऋतिर्मित्रसदृशो विश्वामित्रः कसूनुवत् ॥ वैवस्वतो मनुश्चाश्विपश्चादन्ये ततोऽवराः ॥
च्यवनोचथ्यवैन्याश्च शशिबिन्दुश्च हैहयः ॥ तद्वच्च विप्रराजन्यविशेषोऽत्रापि कश्चन ॥
तद्वत्प्रियव्रतश्चापि तदन्याः शतदेवताः ॥ पर्जन्यमित्रान्तराले तदन्ये तु ततोऽवराः ॥

तथेति शेषः । सूर्यधर्मौ सोमसमानौ ॥ मन्वादयः पश्चानिरुद्धसमानाः । मनुरत्र स्वायम्भुवो विवक्षितः ॥ तारा बृहस्पतिभार्या । चस्त्वर्थः । मित्रेण तुल्यं वर्तत इति मित्रवत् ॥ शतरूपा स्वायम्भुवस्य पत्नी सोमवत् । सूर्यधर्मावित्यत्रैवेयं वक्तव्या । स त्यम् । पतीनामुक्तौ इदानीमासां प्रस्तुतत्वात्पृथगुक्तिः ॥ प्रसूतिर्दक्षपत्नी वह्निवत् । विराड-निरुद्धभार्या पर्जन्यवत् ॥ वरुणस्येयं वारुणी । पुंयोगे तु वरुणानीति स्यात् । इन्द्रवरुणेति स्मरणात् । संज्ञा सूर्यभार्या । रोहिणी सोमभार्या । धर्मस्येयं धार्मी । वारुणी संज्ञा रोहिणी धार्मी च तथैव पर्जन्यवदेव ॥ प्रवहस्येयं प्रावही तु मित्रवदेव प्रकीर्तिता ॥ अश्विनौ विघ्नप-वित्तपौ मित्रपर्जन्यमध्यस्थाविति प्रत्येकं संबन्धः । एते चत्वारः परस्परं समा मित्रादधमाः । पर्जन्यादुत्तमा इत्यर्थः ॥ भृगुरग्निसम इति वक्ष्यमाणस्यापवादः । ब्रह्मपुत्रा मरीच्याद्या मित्रतन्मध्ये मित्राग्न्योर्मध्ये । परस्परं समा मित्रादुत्तमा अग्नेरधमा इत्यर्थः । तत्र तेषु ब्रह्मपुत्रेषु नारदो वरुणाग्न्यन्तरा वरुणादधमोऽग्नेरुत्तम इत्यर्थः । तथा च दक्षभृगुनारदानां पृथगुक्तत्वाद्ब्रह्मपुत्रका मरीच्याद्याः सप्तैव । प्रायग्रहणेनेषन्न्यूनः ॥ सुपर्णी गरुडभार्या । विश्वामित्रः कसूनुवत् ब्रह्मपुत्रैर्मरीच्याद्यैः समानः । वैवस्वतो मनुश्च कसूनुवदिति संबन्धः ॥ स्वायम्भुवाद्वैवस्वताद्भगवदवतारात्तापसाच्चान्ये मनवस्ततो वैवस्वतादवराः । तेऽश्विभ्यां पश्चा-त्पर्जन्यादुत्तमाः । च्यवनाद्याश्च तद्वत् । एकादशमनुसमानाः । अत्रैतेष्वपि विप्रराजन्यत्व-निमित्तः कश्चन विशेषोऽस्ति । मुक्तावपि विप्रत्वादेर्भावात् ॥ अत्र च्यवनोचथ्यौ विप्रौ । अन्ये राजन्याः प्रियव्रतोऽपि तत् अवरमनुवदेव ।

तदन्या उक्तेभ्योऽन्याः शतदेवताः सोमार्हदेवताः शतान्तरगताः पर्जन्यमित्रान्तराले । पर्जन्यादुत्तमा मित्रादधमा अश्विनोः समाना इत्यर्थः ।

तदन्ये उक्तेभ्योऽन्ये तु देवास्ततः शतान्तर्गतदेवताभ्योऽवराः । अवरमनुसमाना इत्यर्थः ।

शे०— सूर्यधर्मौ यथा सोम इति यथाशब्दश्रवणादाह तथेति शेष इति । अस्यैव तात्पर्य-कथनं सूर्येत्यादि ॥ मनुरित्यस्य जातावेकवचनपरतया मनुमात्रपरतया व्यक्त्येकवचनमाश्रित्य यत्किञ्चि-

देकपरतया वा वैवस्वतो मनुरिति तस्य ब्रह्मपुत्रसमत्वोक्त्याऽन्यमनूनां वैवस्वतादवरत्वोक्त्या चासंभवादाह **मनुरत्रेति** । तारा चेति चशब्दस्य समुच्चयार्थत्वासंभवादाह **चस्त्वर्थ इति** । अनेन तारा त्विति योजनोक्ता भवति । मित्रवदिति षष्ठ्यन्तात्सप्तम्यन्ताद्वा तत्र तस्येवेत्यनेन वत्यसंभवमाशङ्क्याह **मित्रेणेति** । अनेन 'तेन तुल्यं क्रिया चेद्वतिरि'त्यनेनात्र वतिरित्युक्तं भवति ॥ **सोमवदिति** । सोमेन तुल्यं वर्तत इति तेन तुल्यं क्रिया चेद्वतिरिति भावः ॥ एवं वन्हिवदित्यादावपि द्रष्टव्यम् ।

वरुणस्येयमिति षष्ठ्यन्ताद्वरुणशब्दात्तस्येदमितीदमर्थेऽणि कृते णित्वात्तद्धितेष्वचामादेरित्यादिवृद्धौ यस्येति चेति तद्धिते परतोऽवर्णलोपे सति निष्पन्नस्य वारुणशब्दस्याणन्तत्वात् टिड्ढाणञित्यादिना ङीपि यस्येति चेतीकारे परतोऽवर्णलोपे वारुणीति प्रातिपदिकनिष्पत्तिरिति भावः । ननु चात्र गोपस्य स्त्रीत्यादिवरुणस्य स्त्री वारुणीत्येव कस्मान्न विग्रह इत्यत आह **पुंयोगे त्विति** । पुंसा योगस्तस्येयमित्येवंरूपः संबन्धः पुंयोगस्तस्मिन्नित्यर्थः । अयमर्थः । गोपशब्दस्य पुंस आख्यात्वेऽपि तत्साहचर्याद्यष्टीः प्रवेशयेदित्यादिवत्तस्मिन्नपि तस्याध्यारोपणात्तस्य स्त्रियामपि वर्तते । तत्र गोपस्य स्त्रीति वास्तवभेदेऽप्यभेदाध्यारोपेण भेदस्य निवृत्तत्वादभेदविवक्षायां च रघोरपत्यानि रघवः केकयस्यापत्यं स्त्री कैकेयीत्यादौ भेदविवक्षानिमित्तकतद्धिताभावदर्शनेन भेदविवक्षानिमित्तकतद्धितोत्पत्त्यसंभवेन पुंयोगादाख्यायामित्यनेन ङीषि गोपीत्येव शब्दनिष्पत्तिवद्वरुणशब्दस्य पुंस आख्यारूपस्य वरुणस्त्रियां वरुणाभेदारोपेण प्रवृत्तौ पुंयोगप्राप्त्या वरुणस्य स्त्रीति वास्तवभेदेऽप्यभेदारोपेण भेदस्य निवृत्तत्वात्तद्विवक्षया निमित्तकस्य तस्येदमिति तद्धिताण्प्रत्ययस्योत्पत्त्यसंभवेन तन्निमित्तकवृद्ध्यप्रसङ्गाद्वरुणशब्दात् ङीषि वरुणानीत्येव स्यान्न तु वरुणीत्यतस्तत्सिद्ध्यर्थं न तथा विगृह्यत इति भावः । ननु तथा विग्रहे वारुणीति रूपनिष्पत्तिर्माऽस्तु । तथाऽपि वरुणानीति रूपापत्तिः कुतः । वरुणीति तु स्यात् । वरुणशब्दात् ङीषि यस्येति चेत्यकारलोपसंभवादित्यत आह **इन्द्रवरुणेतीति** । यस्येति चेति प्राप्तावर्णलोपबाधेनाऽऽनुको विधानाद्वरुणशब्दादानुक्प्रत्ययप्रसङ्गेन वरुणानीतिरूपप्रसञ्जनं युक्तमिति भावः । यद्यपि वरुणस्य स्त्रीत्यत्र स्त्रियां वरुणाभेदाध्यारोपेण भेदो निवृत्तस्तथाऽपि वास्तवभेदसद्भावात्तद्विवक्षया तस्येदमिति तद्धिताण्प्रत्ययसंभवात् । सति च तस्मिंस्तन्निमित्तकादिवृद्धौ यस्येति चेत्यवर्णलोपे च निष्पन्नवारुणशब्दात् टिड्ढाणञिति ङीपि अवर्णलोपे च वारुणीति रूपसिद्धिरप्रत्यूहा । भेदविवक्षया तद्धितोत्पत्तौ गोपस्येयं स्त्री गौपी केकयस्यापत्यं स्त्री कैकेयीत्यादौ तद्धितोत्पत्तिदर्शनात् । तथा च न वरुणानीति रूपप्रसञ्जनमपि । तथाऽपि भेदविवक्षामनाश्रित्यायं ग्रन्थ इति द्रष्टव्यम् । पदार्थमुक्त्वा वाक्यार्थमाह **वारुणीति** । मित्रवत्त्वेवेत्यत्र मित्रवदेवेत्येतावतैव पूर्तेस्तुशब्दस्यानर्थक्यमाशङ्क्य भिन्नक्रमतया तस्यान्वयमाह **प्रावही त्विति** ।

चतुर्षु मित्रपर्जन्यमध्यस्थाविति द्विवचनानुपपत्तिमाशङ्क्याश्विनौ मित्रपर्जन्यमध्यस्थौ विघ्नवित्तपौ मित्रपर्जन्यमध्यस्थाविति प्रत्येकं संबन्धाश्रयणान्न तदनुपपत्तिरित्याह **प्रत्येकं संबन्ध इति** ॥ **वक्ष्यमाणस्यापवाद इति** । मित्रतन्मध्ये ब्रह्मपुत्रका इत्युत्तरत्र ब्रह्मपुत्राणामग्नेः सकाशादधमत्वप्रतिपादनात् । ब्रह्मपुत्रस्य भृगोरपि प्राप्तं यदग्न्यधमत्वं तस्य भृगुरग्निसम इत्ययमपवाद इत्यर्थः ।

ननु रुद्रस्वायम्भुवमनुदक्षनारदादीनामपि ब्रह्मपुत्रत्वान्मित्रतन्मध्ये ब्रह्मपुत्रका इत्यनेन प्राप्ताग्न्यधमत्वस्य मनुदक्षावनिरुद्धसमानावित्यादिनाऽपवादात् । तत्र वक्ष्यमाणापवादतामनभिधायात्रैव तदभिधाने किं निमित्तम् । न च क्वचिद् वक्तव्यत्वादत्र तदुक्तिः प्रथमातिक्रमे कारणाभावेन तत्रैव तथा वक्तव्यत्वादिति चेन्न । रुद्रादेरङ्गजत्वाभावेन पुत्रत्वाप्रसक्तेः । दक्षादेरङ्गुष्ठादुत्पन्नत्वेनाङ्गजत्वेऽपि नाग्न्यधमत्वापवादकता । तद्वचनस्याग्नेरधम इत्यस्य ह्यग्निसम इत्ययमेव ह्यपवादो युज्यते । न पुनर्दक्षोऽनिरुद्धसम इत्यग्निसमत्ववाची शब्दो येन सोऽपि तदपवादः स्यात् । ततश्चान्यत्रापवादत्वप्रसक्तेरेवाभावाद्वरुणाग्न्यन्तरा तत्र नारद इत्यस्य नारदोऽग्नेरुत्तम इत्यर्थप्रतिपादकत्वादग्न्यधमत्वोक्त्यपवादकत्वसंभवेऽप्याहत्याग्नेरुत्तम इत्यनभिधानान्नापवादत्वमित्यत्रैव तदुक्तिः श्लिष्टैवेति ध्येयम् । वैवस्वतस्यैव वैवस्वतादवरताया बाधितत्वेन मनुशब्दस्य मनुमात्रपरत्वायोगात् । अनिरुद्धसमत्वेनोक्तस्वायम्भुवमनोर्वैवस्वतादवरताया बाधितत्वेन वैवस्वतान्यमनुमात्रपरताया अप्यसंभवात् भगवदवतारभूततापसस्य मनोर्वैवस्वतादवरताया बाधितत्वेन वैवस्वतस्वायम्भुवान्यमनुमात्रपरताया अप्ययोगात् तृतीयान्यपरतयाऽन्य इत्येतद्व्याख्याति **स्वायम्भुवादिति** ॥ **पश्चादिति** । नीचा इत्यर्थः ।

शतदेवतानां पर्जन्यमित्रान्तर्गतेः पर्जन्यादुत्तमत्वं मित्रादधमत्वमित्येवंरूपाया बाधितत्वेन मूले तदन्या इत्युक्तम् । तत्र न ज्ञायते किमपेक्षयाऽन्या इत्यतोऽनूद्य व्याचष्टे **उक्ताभ्योऽन्या इति** । सोमार्हशतदेवतानां मध्ये स्वधाः स्वाहा च पर्जन्य इत्यादावुक्ताः । पर्जन्यो मित्रोऽग्निर्वरुणः प्रवह इन्द्रो रुद्रो मुख्यप्राणः सूर्यो बृहस्पतिरश्विनावाहङ्कारिकः प्राण इत्येवं त्रयोदशदेवतास्ताभ्योऽन्या इत्यर्थः। उक्ताभ्योऽन्याः शतदेवता इत्ययुक्तम् । तदन्यासां सोमार्हशतदेवतानामभावादित्यतः शतदेवता इत्येतद्व्याचष्टे **शतदेवता इति** । ततश्च सोमार्हशतदेवतासु या अत्रोक्ताः प्रधानवाय्वाद्यास्त्रयोदशदेवतास्तद्व्यतिरिक्तानां सप्ताशीतिसोमपानार्हदेवतानामेव शतदेवताशब्देन विवक्षितत्वान्नोक्तदोषः । सोमार्हदेवताक्रमस्तु तत्त्वप्रदीपे विभागः शतवदित्यधिकरणे नवकोट्यो हि देवानां तेषां मध्ये शतस्य त्वित्येतत्प्रमाणव्याख्यानावसरे प्रदर्शितः । यथा प्रधानवायुः (१) । वसवः (८) पितृष्वग्नेः प्राग्नेः । रुद्राः (११) । आदित्याः (१२) । मरुतः (४९) । विश्वेदेवाः (१०) । बृहस्पतिः (१) । पितृपतयः (३) । ऋभुः (१) अश्विनौ (२) । द्यावापृथिव्यौ (२) । चेति । ततश्च सोमपार्हशतदेवतान्तर्गता उक्ताभ्योऽन्याः सप्ताशीति-

देवताः पर्जन्यमित्रान्तर्गते । पर्जन्यादुत्तमा मित्रादधमा ज्ञेया इत्युक्तं भवति । सप्ताशीतिदेवताकमस्तु । सप्तवसवः (७) । सप्तादित्याः (७) । सप्तचत्वारिंशन्मरुतः (४७) । दशविश्वेदेवाः (१०) । दशरुद्राः (१०) । ऋभुरेकः (१) । द्वे द्यावापृथिव्यौ (२) । पितृपतयस्त्रयः (३) । इति । अत्र च सोमपानार्हत्वमात्रेणादित्येष्वन्तर्गतोऽप्युरुक्रम उषाः स्वाहा चेत्यादावनुक्ततयोक्तान्यत्वेन शेषतयोक्तोऽप्यधिकारिवर्गबहिर्भूतत्वान्न शेषत्वेन विवक्षणीयः । अधिकारिवर्गस्यैवोषाः स्वाहा चेत्यत्र विवक्षितत्वादुरुक्रमस्योपास्यत्वेनातथात्वात् । तथा च तद्व्यतिरिक्तानां षण्णामेवादित्यानां तारतम्यगणनायां विवक्षितत्वान्न विष्णोः सर्वोत्तमत्वहानिः । ततश्चोक्ताभ्योऽन्याः षडशीतिदेवता एव शेषाः सिध्यन्ति ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रश इति भागवते ऋभूणां सहस्रत्वोक्तावप्यत्र तद्गणस्यैव ऋभुशब्देन विवक्षितत्वान्न संख्याधिक्यं शङ्कनीयम् । साहचर्यादेकस्य नाम्ना त्रयोऽप्युच्यन्त इति ऋग्भाष्यटीकोक्तरीत्या ऋभुर्विभ्वावाज इति त्रयाणामपि ऋभुशब्देन विवक्षायामप्यश्विनोर्द्यावापृथिव्योश्च देवतात्वैक्येनैकत्वविवक्षणान्न संख्याधिक्यम् । अत्र च पक्षे द्वादशदेवा एवोक्ता ग्राह्याः । उरुक्रमभिन्नाः सप्ताशीतिदेवा एव शेषदेवा द्रष्टव्याः । तथा च सोमार्हदेवतानां शतसंख्याकत्वेऽपि तारतम्यगणनायामेकोनशतस्यैव ग्रहणमिति सम्प्रदायः । स्वामिनस्तु । उरुक्रमस्योपास्यतया बहिर्भूतत्वेऽपि पितृभिरेव शतसंख्यापूरणात्तारतम्यगणनायामपि शतसंख्या विवक्षितैव । अत एव मूलकोशेषु तत्त्वप्रदीपे पितृपितृपतय इति पाठः सङ्गच्छते । यद्यप्येवं तेषामनेकत्वात्तद्विवक्षायां संख्याधिक्यं संभवति तथाऽपि तच्छब्देन तद्गुणविवक्षायां न तत्प्रसक्तिरिति न किञ्चिदेतत् । अयमत्र निष्कर्षः । उक्तेषु त्रयोदशसु वा देवेषु प्रधानवाय्वाद्या दशदेवाः शेषशतदेवतापेक्षयोत्तमाः परस्परतारतम्यभाजश्च । अश्विनौ शेषशतदेवतासमानौ पर्जन्यस्त्वधमः शेषदेवाश्च पित्रन्तर्भावेन सप्ताशीत्यष्टाशीतिर्वेति तत्रोक्तान्तर्भूतयोरप्यश्विनोः समतया शेषकोटिनिक्षेपेण पक्षद्वयेऽप्येकोननवतिरेव पर्यवस्यति । सा च परस्परं समत्वेन पर्जन्यादुत्तमत्वेन मित्राच्च नीचत्वेन ज्ञेयेति ।

**उक्तेभ्योऽन्ये तु देवा इति ।** सोमार्हशतदेवन्यूननवकोटिसंख्याकदेवा इत्यर्थः । ताभ्यः शतावरास्त्विन्द्राः पुरन्दर इतीरिताः । तेभ्यः शतावरास्त्वन्य इन्द्राश्चान्याश्च देवता इति बृहद्भाष्योदाहृतप्रमाणे । तत्रोक्तापवादविषयसनत्कुमारादिव्यतिरेकेणान्यासां नवकोटिसंख्याकदेवतानां कर्मदेवसमत्वेनोक्तेस्तदनुसारेण शतावरत्वेन व्याख्याति **शतान्तर्गतदेवताभ्योऽवरा इति ।** अत्र टीकायां शतोननवकोटिसंख्याकदेवतानां शतान्तर्गतदेवताभ्योऽवरत्वोक्त्या पर्जन्यादुत्तमत्वेन कर्मदेवसमानत्वमुक्तम् । सन्न्यायरत्नावलीनवचन्द्रिकयोस्तु । ततः पर्जन्यादवरा इति पर्जन्यादवरत्वमुक्तमिति विरोधोऽवभाति ।

तत्रोदाहृतप्रमाणानुसारिटीकानुरोधात्पर्जन्यशब्दो लक्षणया शतदेवतापरतया योज्य इति परिहार इति स्वामिनः ॥

इयदामननात् ॥ वक्ष्यमाणस्येति । ब्रह्मपुत्रका इति वक्ष्यमाणस्येत्यर्थः । तत्र भृगुव्यतिरिक्तब्रह्मपुत्रा एव ग्राह्या इति भावः ।

चशब्दश्रवणादाह तथेति शेष इति । समुच्चेयाभावादाह चस्त्वर्थ इति । तत्र तस्येवेत्यस्यात्रायोगात्तेन तुल्यं क्रिया चेद्वतिरिति भावेनाह मित्रेण तुल्यमिति । एवं सोमवदित्याद्यपि ध्येयमिति भावः ॥ वरुणस्येयमिति । तस्येदमिति सूत्रेण संबन्धसामान्ये अण्प्रत्यये टिड्ढाणित्यादिना ङीप्प्रत्यये यस्येत्यकारलोपे, आदिवृद्धौ वारुणीति भवतीति भावः । वरुणस्य स्त्रीति पुंयोगं विवक्षित्वा पुंयोगादाख्यायामिति सूत्रेण ङीप् कुतो नाश्रीयत इत्यत आह पुंयोगे त्विति । 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुगिति सूत्रेणानुगागमे सति वरुणानीति प्राप्नोति तन्निवृत्त्यर्थमित्यर्थः ॥ वक्ष्यमाणस्येति । मित्रतत्समध्ये ब्रह्मपुत्रका इति वक्ष्यमाणस्येत्यर्थः । तत्रत्यस्य प्रतिपदं तेष्विति ब्रह्मपुत्रेष्विति व्याख्या ॥ सप्तैवेति । 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चे'ति सप्तेत्यर्थः ॥ अन्ये मनव इति । (रैवतश्चाक्षुषः स्वारोचिष उत्तमसावर्णिरुद्रसावर्णिब्रह्मसावर्णि) स्वारोचिषः उत्तमः रैवतः चाक्षुषः सावर्णिः ब्रह्मसावर्णिः रुद्रसावर्णिः इन्द्रसावर्णिः दक्षसावर्णिः धर्मसावर्णिः इत्येकादश मनव इत्यर्थः ॥ उक्तेभ्योऽन्याः शतदेवता इति । विभागश्शतवदित्युत्तरपादीयसूत्रे 'नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु । सोमाधिकार' इति भाष्योक्तदिशा सोमपानयोग्यशतसंख्याकासु देवतासु प्रागुक्तेभ्यः अग्निरुद्रप्रधानवायुभ्योऽन्ये वसुरुद्रमरुद्गणाः बृहस्पतिऋभुः द्यावापृथिव्यावश्विनौ विश्वेदेवाः त्रयः पितरः इत्येवं शतान्तर्गता इत्यर्थः । उक्तं हि प्रधानवायुर्वसवो रुद्रादित्या मरुद्गणाः । बृहस्पतिर्ऋभुर्द्यावापृथिव्यावश्विनौ तथा । विश्वेदेवाश्च पितरः शतस्था देवता मता' इति । अत्र प्राग्विष्णोरनुक्तत्वेऽपि उपासकतारतम्यचिन्तायामुपास्यकोटेर्विष्णोरादित्यगणान्तर्गतत्वेपि इह विभाव्य एकादशादित्या एव भविष्यन्तीति भावेनोक्तेभ्योऽन्ये इत्येवोक्तम् ॥

वा० — वरुणस्येयमिति । तस्येदमित्यणि टिड्ढाणञित्यादिना ङीबिति भावः ॥ पुंयोगे त्विति । ननु पुंयोगादाख्यायामित्यत्र वा पुमाख्या पुंयोगात्स्त्रियां वर्तते, ततः स्त्रियां ङीप् स्यादित्युक्तत्वेन गोपीत्यादाविवात्रापि पुंयोगोऽस्त्येवातः ङीबस्त्वेतदिति चेदुच्यते । यः शब्दः पुंसि रूढस्तस्य स्त्रियां तदभेदारोपेणैव प्रवर्तने तत्सम्बन्धित्वेन ङीप् स्यादिति तत्र विवक्षितम् । एवं च पुंयोगशब्देन तदभेदारोप एव विवक्षितः । अत एव गोपस्य स्त्रियां सोपाभेदारोपेण भेदाविवक्षयामनेन सूत्रेण ङीषि गोपीति रूपम् । भेदस्यैव विवक्षायां तु तस्येदमित्यणि गौपीति रूपं भवति । एवं प्रकृतेऽपि वरुणस्य

स्त्रियां वरुणाऽभेदारोपेण वरुणशब्दप्रवृत्तौ पुंयोगप्राप्त्या वरुणानीति स्यात् । न चैवं किन्तु भेदस्यैव विवक्षा, अतस्तद्धितोत्पत्त्यैव वारुणीति रूपमिति भावः ॥ **इन्द्रवरुणेति** । इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुगिति सूत्रस्यायमर्थः । इन्द्रादेस्त्रियां ङीष् आनुक् चागमः स्यादिति । इन्द्राणीत्याद्युदाहरणम् । अत्रेन्द्रादीनां पुंयोग इत्येव ङीष्सिद्धेरानुगागममात्रं विधीयत इत्युक्तत्वेन पुंयोगविवक्षाऽस्तीति ज्ञातव्यम् ॥ **वक्ष्यमाणस्येति** । अनुपदमेव मित्रतन्मध्ये ब्रह्मपुत्रका इति वक्ष्यमाणस्येत्यर्थः ॥ **उक्तेभ्योऽन्याः शतदेवता इति** । 'नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु । सोमाधिकारो वेदोक्त' इति वचनान्नवकोट्यन्तर्गताः सोमार्हा देवताः शतसंख्याकाः सन्ति । ताश्च 'प्रधानवायुवसवो रुद्रादित्या मरुद्गणाः । बृहस्पतिर्ऋभुर्द्यावापृथिव्यावश्विनौ तथा । विश्वेदेवाश्च पितरः शतस्था देवता मता' इति प्रमाणानुसारेण ज्ञेयाः । वसवोऽष्टौ, रुद्रा एकादश, आदित्या द्वादश, मरुद्गणा एकोनपञ्चाशत्, विश्वेदेवा दश, पितरस्त्रय, इति शतसंख्या । एतेषु प्रधानवायुर्वसुष्वग्नी रुद्रेषु रुद्र आदित्येषु विष्णुः शक्रविवस्वद्वरुणमित्रपर्जन्या मरुत्सु प्राणप्रवहावित्येते उक्ता ज्ञातव्याः । विष्णुर्यद्यपि नोक्तस्तथाऽपि तारतम्यान्तर्गतत्वेन वक्ष्यमाणत्वात्सोऽपीहोक्ततया विवक्षित इति ध्येयम् । ननूक्तेभ्योऽन्यासां शतत्वं कथमित्यत आह **शतान्तर्गता इति** ॥ **उक्तेभ्योऽन्य इति** । उक्तशतदेवभिन्ना नवकोट्यन्तर्गता देवा इत्यर्थः ।

**श्री०** — ॐ **इयदामननात्** ॐ ॥ शङ्कते **सूर्यधर्मावित्यत्रैवेति** । इयं शतरूपा । तस्याः सूर्यधर्मादिसामान्यत्वादित्यर्थः ॥ **वरुणस्येयमिति** । वरुणशब्दात्तस्येदमित्यनेन वरुणस्येयं पत्नीति यावत् । अस्मिन्नर्थेऽण्प्रत्यये यस्येति चेति णकारस्थाकारलोपे णित्वादादिवृद्धौ वारुणेति जाते टिड्ढाणञित्यादिना ङीपि वारुणीति भवति । **पुंयोगे त्विति** । पुंयोगादाख्यायां यः शब्दः पुरुषे निरूढः । तस्य स्त्रियां तदभेदारोपः पुंयोगशब्दार्थः । तद्विवक्षायां तस्मात् ङीप् भवति । इन्द्रवरुणेति सूत्रेणानुक् चागमो भवति । तथा च वरुणशब्दादानुगागमे उक् इत्यस्य लोपे णकारस्थाकारस्य पररूपत्वे ङीपि वरुणानीति स्यात् । न चैवम् । प्रकृते स्त्रियां पुरुषभेदस्यैव विवक्षितत्वेन तदभेदारोपस्याविवक्षितत्वादित्यर्थः । यद्वा पुंयोगः पुरुषसम्बन्धस्तद्विवक्षायामानुगागमे ङीप् विहितः । अत्र तु पुंयोगो न विविक्षितः किन्तु पुरुषाद्विविक्ततयाऽवस्थानमेव । अत एवोक्तरीत्या तद्धिताण्प्रत्ययेन ङीप्प्रत्ययेन वारुणीत्येव रूपमिति भावः ॥ ३-३-२१ ॥

**च०** **मित्रेण तुल्यमिति** । 'तेन तुल्यमि'ति तृतीयान्ताद्वतिरिति भावः । **स्मरणादिति** । इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुगिति पाणिनिस्मृतेरित्यर्थः । कसुनुवदिति तृतीयान्ताद्वतिरित्याह **ब्रह्मपुत्रैरिति** ।

सु०— ननु महालक्ष्मीः प्राणादप्युत्तमाऽस्ति । तत्कथं प्राणावसानत्वमधिकारिणामित्यत आह एतेभ्य इति ।

अनु०— एतेभ्योऽभ्यधिका श्रीस्तु सदा मुक्ता विशेषतः ॥
तत्समो नास्ति परमो हरिरेव न चापरः ॥
संहितायां बृहत्यां तु स्वयं भगवतोदितम् ॥
तदेतत्खिलं

यद्यपि श्रीरेतेभ्यो विशेषतोऽभ्यधिका । तथाऽपि सदा मुक्ता बन्धरहितेति नाधिकारिवर्गे गृह्यते । तस्याः समो नास्तीति स्वरूपकथनम् ।

एतेन कामादितरत्र तत्र चायतनादिभ्य इत्यधिकरणस्य तात्पर्यमुक्तं भवति ।

परमो हरिरेव न चापर इत्यनेन 'व्यतिहारो विशिंषन्ति हीतरवत्' 'सैव हि सत्यादयः' इत्यधिकरणद्वयस्य तात्पर्यमुक्तं वेदितव्यम् ।

शे०— सदा मुक्तेत्यनेनैवाधिकारित्वाभावसमर्थनाद्विशेषत इत्यस्य वैयर्थ्यमाशङ्क्य भिन्नक्रमतया तद्योजयति यद्यपीति । न चात्राप्यभ्यधिकेत्येतावतैव पूर्तेस्तद्वैयर्थ्यमिति वाच्यम् । प्राणान्तानां पूर्वपूर्वापेक्षया शतगुणैराधिक्यवल्लक्ष्म्याः प्राणापेक्षया न तथाऽधिकत्वं किन्त्वधिकमिति ज्ञापनार्थतयाऽर्थवत्त्वादिति भावः । तत्तदधिकरणतात्पर्यकथनपरपूर्वोत्तरवाक्यसंदृष्टतया तत्समो नास्तीत्यस्याप्यधिकरणतात्पर्यकथनपरत्वं प्रतीयते । तच्च न संभवति । तत्समाभावस्याधिकरणप्रतिपाद्यत्वाभावादित्यत आह तस्याः समो नास्तीति ॥ स्वरूपकथनमिति ॥ एतेनेति । सदामुक्तेत्यनेनेत्यर्थः । तत्र तस्या नित्यमुक्तत्वकथनादिति भावः ॥ अधिकरणद्वयस्येति । परमो हरिरित्यनेन व्यतिहारो विशिंषन्ति हीतरवदित्यस्य तात्पर्यमुच्यते । तत्र प्रश्नपरिहाराध्याहारेण विष्णोः प्राणोत्तमतायाः साधनात् । न चापर इत्यनेन 'सैव हि सत्यादय' इत्यस्य तत्र सत्यादीनां भगवत्स्वरूपताप्रतिपादनेन भगवदपरस्योत्तमत्वाभावसाधनादिति भावः ।

प०— एतेनेति । सदा मुक्ता विशेषत इति कथनेनेत्यर्थः ।

या०— एतेनेति । सदामुक्तेत्यनेनेत्यर्थः । कामादितरत्रेत्यत्र स्वेच्छयैव मूलस्थाने स्थिताऽन्यत्रावतारान्करोतीश्वरेच्छानुसारेणेत्युक्त्या बन्धाभावोपपादनेन नित्यमुक्ततायाः कथितत्वात् ॥ व्यतिहार इत्यादि । परमो हरिरित्यनेन व्यतिहार इत्यस्य तात्पर्यमुक्तमिति मन्तव्यम् । तत्र प्राणादुत्तमं नास्तीति प्राप्ते पूर्वाध्याहारेणास्ति प्राणादुत्तममित्युक्तत्वात् । न चापर इत्यनेन सैव हि सत्यादय

इत्यस्य । तत्र कृतिर्निष्ठा ज्ञानमित्यादीनां भेदाद्द्वव उत्तमा इत्याशङ्कायां सत्यादिगुणास्तस्या एव पर-देवतायाः स्वरूपभूता अतो न भगवदपरमुत्तममित्युक्तत्वात् ।

सु० — ननूपनिषदि नामाद्याः प्राणान्ताः पञ्चदशोक्ताः । अत्र चोषाः स्वाहेत्यादिना चतुर्दशैव तत्कथं न विसंवाद इत्यतो बृहत्संहितावचनेनानुक्तमेकं स्वयमाह प्राण इति ।

अनु० — प्राण आहङ्कारिक एव च ॥

इन्द्रादनन्तरो ॥ ३–३–२१ ॥

तैजसाहङ्कारादुत्पन्नः प्राणश्चापरोऽस्ति । स चेन्द्रादनन्तर एवानिरुद्धादुत्तमो ज्ञातव्यः । परप्राणव्यावृत्त्यर्थमाहङ्कारिक एवेत्युक्तम् ।

शे० अत्र चेति । बृहत्संहितायामित्यर्थः । तामसादिभेदभिन्नत्रिविधाहङ्कारकार्यत्व-प्रतीतिनिरासायाह तैजसेति । बुद्धिः प्राणश्च तैजसावित्यन्यत्रोक्तेरिति भावः ।

सु० — अयमत्र संग्रहः । पुष्करो नाम सर्वावरो देवः । 'कलाभ्यश्चान्यादेवेभ्यः कर्म प्रत्यवरं यतः । कलाभ्यः पृथगुक्तं तत्पुष्करः कर्म चोच्यत' इत्यन्यत्रोक्तत्वात् । ततश्श-नैश्चरोऽधिकः । पृथिव्यात्मा शनिश्चेति वचनात् । तत उषाः (उपा) । ततो बुधः । उदकात्मको बुधश्चेति वचनात् । ततः स्वाहा । ततः पर्जन्यो वारुणी संज्ञा रोहिणी धार्मी विराट् । तत एकादश मनश्च्यवनोचथ्यवैन्यशशबिन्दुहैहयप्रियव्रतगया अनुक्तदेवाश्च । 'प्रियव्रतो गयश्चैव कर्मदेवसमौ मतावि'त्यन्यत्रोक्तत्वात् । ततोऽश्विनौ विघ्नेशवित्तपौ विष्व-क्सेनश्च । विष्वक्सेनो वायुजः खेन तुल्य इति वचनात् । ततो मित्रो निर्ऋतिस्तारा प्राव-हीति च । ततो मरीचिरत्र्यङ्गिराः पुलस्त्यः पुलहः क्रतुर्वसिष्ठो विश्वामित्रो वैवस्वतमनुश्च । ततोऽग्निर्भृगुः प्रसूतिश्च । ततो नारदः । ततो वरुणः । ततश्चन्द्रसूर्यधर्माः शतरूपा च । ततः प्रवहः । ततोऽनिरुद्धस्वायम्भुवबृहस्पतिदक्षाः शची रतिश्च । तत आहङ्कारिकः प्राणः । तत इन्द्रकामौ । तत उमा सुपर्णी उमात्मकत्वाच्छेषभार्या च ॥ ततो जाम्बवत्याद्या भगवन्महिष्यष्षट् । अन्यत्रोक्तत्वात् । ततो रुद्रात्मकत्वाच्छेषश्च । ततो भारती तदात्मकत्वात्सरस्वती च । ततो मुख्यवायुस्तदात्मकत्वाद्ब्रह्मा च । ततो महालक्ष्मीः । ततो भगवानिति ॥ ३–३–२१ ॥

शे० — तारतम्यज्ञानस्य मोक्षोऽन्तरङ्गताज्ञापनाय सर्वप्रतिपत्तृसाधारण्येनोक्तं तारतम्यं संगृह्णाति अयमत्रेति । अत्र बृहत्संहितायाम् । या कक्ष्या नोक्ता आचार्यैरप्यत्रापूरिता स्वयं पूर्यते तत्रैवाचार्य-

वाक्यादिसम्मतिः प्रदर्श्यते । न तु तत्रोक्ततत्पूरितकक्ष्या त्वपीति काचित्कसंवादकथनेन नियामकान्तरं मृग्यम् ॥ **कलाभ्यश्चेति** । गताः कलाः पञ्चदशप्रतिष्ठा इति श्रुत्युक्तकलाभिमानिदेवेभ्य इत्यर्थः ॥ **अन्यदेवेभ्य इति** । देवाश्च सर्वे प्रतिदेवतास्वित्युक्तदेवेभ्य इत्यर्थः । कलाभ्य इत्युपलक्षणम् । अन्यदेवेभ्य इत्यपि ग्राह्यम् ॥ **पृथगुक्तमिति** । कर्माणि विज्ञानमयश्चेत्यस्यां श्रुतौ कर्माणीति पृथगुक्तमित्यर्थः । पुष्करश्च तुम्बुरप्रमुखेभ्य आजानदेवेभ्योऽधिक इत्यवधेयम् ॥ **अनुक्तदेवाश्चेति** । सोमार्हशतदेवताभिन्ननवकोटयन्तर्गतदेवाश्चेत्यर्थः ॥ **ततोऽश्विनावित्यादि** । उपलक्षणं चैतत् । उक्तदेवेभ्योऽन्याः सोमार्हशतान्तर्गता देवताश्चेत्यपि द्रष्टव्यम् ॥ **उमासुपर्णीति** । उमासुपर्ण्यावित्यर्थः । **उमात्मकत्वादिति** । उमागिरिशावपि भारतीराविति स वाग्वेदगता ब्रवीति । अहीन्द्रपत्नीमहिपं विरिञ्चपत्नीं विरिञ्चं च विमुक्तिकाले । त एव यत्तत्पदमाप्नुवन्तीति' चतुर्थे वक्ष्यमाणत्वादिति भावः ॥ **तदात्मकत्वाच्छेषश्चेति** । 'स्थितप्रज्ञोऽपि यस्तूर्ध्वैः प्राप्य रौद्रपदं ततः । साङ्कर्षणं ततो मुक्तिमगाद्विष्णुप्रसादत' इति गारुडवचनादिति भावः । इतीत्यस्येत्ययमत्र संग्रह इति पूर्वेणान्वयः ॥ ३-३-२१ ॥

प०— **कलाभ्य इति** । गताः कलाः पंचदश प्रतिष्ठा इति षट्प्रश्नमंत्रव्याख्यानरूपेयं स्मृतिः ॥ **अन्यत्रेति** । आथर्वणभाष्ये उक्तत्वादित्यर्थः ॥ **इति वचनात्** । इत्युक्तत्वात् । 'उदकात्मको बुधस्तस्मादुषा नामात्मिका ततः । ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्तत इति षट्प्रश्नभाष्यवचनं ध्येयम् ॥ **अन्यत्रेति** । पञ्चमस्कन्धपञ्चविंशाध्यायतात्पर्ये इत्यर्थः ॥ **इति वचनादिति** । भारततात्पर्ये तृतीयाध्याये उक्तादिति ज्ञेयम् ॥ **अन्यत्रोक्तत्वादिति** । भारततात्पर्ये विंशेऽध्याये भैष्मी सत्या चैकतनुर्द्विधैव जाता भूमौ प्रकृतिर्मूलभूता । तयैवान्याः सर्वदानुप्रविष्टा इत्यारभ्य यदावेशो ह्रासमुपैति तत्र प्रद्युम्नतो विंशगुणाधिकाः स्युरित्यन्तेन ग्रन्थेनोक्तत्वादित्यर्थः ॥ ३।३।२१ ॥

या०— **कलाभ्यश्चेति** । गताः कलाः पञ्चदशप्रतिष्ठा इति श्रुत्युक्तकलाभिमानिदेवेभ्य इत्यर्थः ॥ **अन्यदेवेभ्य इति** । देवाश्च सर्वे प्रतिदेवतास्वित्युक्तदेवेभ्य इत्यर्थः । कलाभ्य इत्युपलक्षणम् । अन्यदेवेभ्य इत्यपि ग्राह्यम् ॥ **पृथगुक्तमिति** । 'कर्माणि विज्ञानमयश्चात्मे'त्यत्र कर्माणीति पृथगुक्तमिति । पुष्करस्तुम्बुरप्रमुखेभ्य आजानजदेवेभ्योऽधिक इति ज्ञातव्यम् ॥ **अनुक्तदेवाश्चेति** । शतभिन्ना नवकोटयन्तर्गता देवा इत्यर्थः ॥ **अन्यत्रोक्तत्वादिति** ॥ 'रामेण तुल्या जाम्बवती प्रियत्वे कृष्णस्यान्याः किंचिदूनाश्च तस्याः ॥ यदावेशो बहुलः स्यादि'त्यादिना भारततात्पर्यनिर्णये उक्तत्वादित्यर्थः ॥ ३-३-२१ ॥

॥ इति इयदामननाधिकरणम् ॥

## ॥ अथ दर्शनभेदाधिकरणम् ॥

मु०— ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॐ ॥ एतद्व्याख्यातं भाष्ये । उपासनाभेदवद्दर्शनभेद इति । तदस्पष्टम् । दर्शनभेदे मूलकारणस्यानुक्तत्वात् । ततो व्याख्याति दृष्टिरपीति ।

अनु०— ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॐ ॥ दृष्टिरपि योग्यानुसारतः ॥ ३–३–३२ ॥ नानाविधेति शेषः ॥ ३–३–३२ ॥

शे०— उपासनाभेदस्य दर्शनभेदे कारणस्योक्तेः कथं तस्यानुक्तिरित्यत उक्तं मूलेति । योऽयमुपासनभेदः कारणमुक्तो तासौ मूलकारणं यच्च मूलकारणं स्वरूपयोग्यताख्यमुपासनभेदेऽपि नियामकं तदत्र नोक्तमित्यर्थः ॥ ३–३–३२ ॥

॥ इति दर्शनभेदाधिकरणम् ॥

## ॥ अथ प्रदानाधिकरणगुरुप्रसादाधिकरणौ ॥

मु०— ॐ प्रदानवदेव तदुक्तम् ॐ ॥ अत्र प्रकृष्टं दानं प्रदानम् । प्रशब्दो न स्फुटं व्याख्यातो भाष्ये । अतः सूत्रार्थमाह सम्यगिति ।

अनु०— ॐ प्रदानवदेव तदुक्तम् ॐ ॥

ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ ॥

सम्यग्गुरुप्रसादश्च मुख्यतो दृष्टिकारणम् ॥

न केवलं श्रवणादि किन्तु सम्यग्गुरुप्रसादश्च । सम्यक् प्रसादपूर्वकं गुरोर्यद्विद्यादानं तच्च भगवद्दृष्टेः कारणमित्यर्थः । ननु 'प्रज्ञान्तरपृथक्त्ववदि'ति सूत्रं प्रदानवदेवेत्यतः पश्चात्तनं तत्कुतो व्युत्क्रमः । उच्यते । योग्यताचिन्तासङ्गतं तदिति प्रकरणशुद्धये पूर्वमेव व्याख्यातमिति न दोषः ॥ ३–३–२६ ॥

ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ ॥ अत्र गुरुप्र(साद)दानस्य बलवत्त्वमुक्तम् तदयुक्तम् । श्रवणादितो हि बलवत्त्वम् । तच्च प्रदानशब्दार्थान्तर्गतमेव । न हि स्वस्मादेव स्वय बलीय इति संभवतीत्यतो व्याचष्ट सम्यगिति । मुख्यतः श्रवणाद्यपेक्षयाऽतिशयेन । अयमभिसन्धिः । प्रदानशब्देन हि सम्यग्गुरुप्रसादपूर्वकं दानं प्रकृतम् । तत्र सम्यग्गुरु-प्रसादमात्रं तदिति अत्र परामृश्यत इति ।

लिङ्गभूयस्त्वादित्युक्तम् । यास्वाख्यायिकासु लिङ्गानि दृश्यन्ते तत्र गुरुप्रसादेनैव ज्ञानप्राप्तिश्रवणात् श्रवणादिकं न करणीयमिति शङ्का स्यात्तां निवारयितुं तदपीत्युक्तम् ॥ तद्व्याख्याति श्रवणादि चेति ॥

श्रवणादि च कर्तव्यं नान्यथा दर्शनं क्वचित् ॥ ३-३-२६ । २७ ॥

कुत इत्यत आह नान्यथेति । अन्वयव्यतिरेकाभ्यां श्रुत्या च प्रमाणानामेव प्रमेयाधि-गतिसाधनत्वनिश्चयादिति भावः । आख्यायिकास्वपि श्रवणादीनामनुक्तिमात्रम् । न पुनर-भावोक्तिरस्ति ॥ ३-३-२७ ॥

शे०—ॐ प्रदानवदेव तदुक्तम् ॐ ॥ दाननिष्ठस्य सम्यक् प्रसादपूर्वकत्वरूपप्रकर्षस्य 'यथा गुरुदत्तं तथैव भवती'ति भाष्येण सूचनात्कथमव्याख्यातत्वं तस्येत्यत उक्तं स्फुटमिति । ननु सम्यग्गुरु-प्रसादश्चेत्यत्र सम्यग्गुरुप्रसादस्य दृष्टिकारणत्वमुच्यते न तु तत्पूर्वकदानस्येति कथमिदं प्रशब्दव्याख्यान-मित्यतस्तस्य तात्पर्यमाह सम्यगित्यादि ॥ न दोष इति । व्याख्यानस्य सौत्रक्रमविपरीतक्रमानुपपत्तिरूप इत्यर्थः ॥ ३-३-२६ ॥

अत्र टीकायां गुरुप्रदानस्य बलवत्त्वमुक्तमित्येव मूलपाठः । गुरुप्रसादस्येति क्वाचित्कपाठेऽपि गुरुप्रसादपूर्वकप्रदानस्येत्येवार्थोऽवधेयः । सौत्रतच्छब्दस्य पूर्वसूत्रप्रकृतप्रदानपरत्वेन प्रसादमात्रपरत्वा-संभवादिति द्रष्टव्यम् ॥ तच्चेति । श्रवणादिकं चेत्यर्थः ॥ अत्र परामृश्यत इति । श्रवणादेः-श्रवणाद्यपेक्षयाऽतिशयस्य बाधितत्वेन तच्छब्दस्य विशिष्टदानपरामर्शकत्वायोगाद्योग्यतया विशेषणीभूत-गुरुप्रसादमात्रपरामर्शकत्वमेवेति भावः ॥

उक्तमिति । सूत्र इति शेषः ॥ श्रुत्या चेति । ततस्तु तं पश्यते निष्कलं ध्यायमान इति श्रुत्या चेत्यर्थः ॥ प्रमाणानामेवेति । तत्त्वसाक्षात्कारलक्षणायाः प्रमेयावगतेः । निदिध्यासनसहकृत-मनःकरणत्वेन निदिध्यासनं विनाऽनुपपत्तेर्निदिध्यासनस्य श्रवणादिना विनाऽसंभवाच्छ्रवणादेर्दर्शनं प्रति कारणत्वमित्यर्थः । तर्ह्युक्ताख्यायिकाविरोधः । तत्र गुरुप्रसादेनैव ज्ञानप्राप्तिश्रवणादित्यत आह आख्यायिकास्वपीति । उक्त्यनुक्त्योश्च न विरोधित्वमिति भावः ॥ ३-३-२७ ॥

स० — **लिङ्गभूयस्त्वात्** ॥ **प्रमाणानामेवेति** ॥ तत्त्वसाक्षात्काररूपप्रमेयावगतेः **निदिध्यासन**सहकृतमनःकरणकत्वेन निदिध्यासनस्य श्रवणादिना विनाऽसंभवाच्छ्रवणादेः कारणत्वं सिद्धमित्यर्थः ।

प० — **लिङ्गभूयस्त्वात्** ॥ **प्रदानशब्दार्थान्तर्गतमेवेति** । प्रदानशब्देन श्रवणादेर्लाभादिति भावः ॥ **यास्वाख्यायिकास्विति** । छांदोग्ये चतुर्थेऽध्याये सत्यकामो जाबालिरित्यादिरूपासु गौतमं प्रति सत्यकामस्य ज्ञानार्थं प्रार्थनादिरूपाणि गुरुप्रसादस्य बलवत्त्वे लिङ्गानि दृश्यन्त इत्यर्थः ॥ **गुरुप्रसादेनैवेति** । 'अत्र ह न किंचन वीयाये'त्यनुज्ञानेन प्रसादावगतेरिति भावः ॥ **इत्युक्तमिति** । सूत्र इति योज्यम् ॥ **श्रुत्या चेति** । श्रोतव्य इत्यादिश्रुत्या चेत्यर्थः ॥ **प्रमाणानामिति** । गुरूपदेशानुमानप्रत्यक्षाख्यश्रवणमननरूपप्रमाणानामित्यर्थः ॥ ३ । ३ । २७ ॥

या० — ॐ **प्रदानवदेव हि तदुक्तम्** ॐ ॥ यथा गुरुर्दत्तं तथैव भवतीति भाष्येण गुरोर्दानप्रसादपूर्वकत्वरूपः प्रकर्षोऽर्थाल्लभ्यत एव । अन्यथा तथैव भवतीत्यस्यासंभवादत आह **स्फुटमिति** ॥ ३-३-२६ ॥

ॐ **लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि** ॐ ॥ तच्च **प्रदानशब्दार्थेति** । प्रदानं नाम न धनादिदानमत्र विवक्षितं किन्त्वनधिगतवेदार्थं शिष्यं प्रति वेदार्थव्याख्यानमधिगततदर्थेन सह विचारश्च । एतदुभयं च श्रवणमननरूपमेवेति भावः ॥ **तत्र गुरुप्रसादेनैवेति** । 'अत्र ह न किञ्चन वीयाये'त्यनुज्ञानादिना तत्र प्रसादोऽवगम्यत इति भावः ॥ ३-३-२७ ॥

---

श्री० — ॐ **प्रदानवदेव हि तदुक्तम्** ॐ ॥ **योग्यताचिन्तासङ्गतं तदिति** । इयदामननादिति योग्यतायाश्चिन्तितत्वात् । प्रज्ञान्तरेत्यत्रापि योग्यताया एव चिन्त्यमानत्वात्प्रज्ञान्तरेति सूत्रं योग्यताचिन्तासङ्गतमित्यर्थः ॥ **खेन तुल्य इति** । आकाशाभिमानिना गणपतिना समान इत्यर्थः । **गुरोर्यद्विद्यादानमिति** । विद्योपदेशः श्रवणादीति यावदित्यर्थः ॥ ३-३-२६ ॥

ॐ **लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि** ॐ ॥ **तदित्यत्रेति** । तद्धि बलीय इति सूत्रे तच्छब्देन परामृश्यते न तु तत्पूर्वं दानापरपर्यायं श्रवणमपि येनोक्तदोषः स्यादित्यर्थः ॥ **श्रुत्या चेति** । श्रोतव्यो मन्तव्य इत्यादिश्रुत्या चेत्यर्थः ॥ ३-३-२७ ॥

॥ इति प्रदानाधिकरणगुरुप्रसादाधिकरणौ ॥



## ॥ अथ पूर्वविकल्पाधिकरणम् ॥

सु० — ॐ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॐ ॥ किं प्रथमप्राप्त एव गुरुरुत तं परित्यज्यान्योऽपि स्वीकर्तुं शक्यत इति संशये 'गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेदि'ति गुरुपरित्यागे दोषस्मरणात्प्रथमप्राप्त एवेति प्राप्ते विकल्प उच्यते । स हीनसमोत्तमेषु किंविषय इति न ज्ञायते । दोषस्मरणस्य का गतिरित्यतो व्यक्तं व्याख्याति गुणाधिकमिति ।

अनु० — ॐ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॐ ॥

गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्क्वचित् ॥

क्वचित्प्रयोजनविशेषेऽपि । दोषस्मरणं तद्विषयमिति भावः ।

शे० — ॐ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॐ ॥ स इति । सौत्रो विकल्प इत्यर्थः ॥ तद्विषयमिति । गुणाधिकपरित्यागपूर्वकहीनगुरुस्वीकारविषयमित्यर्थः ।

च० — गुरुमन्त्रपरित्यागीति । गुरोर्मन्त्रस्य च परित्यागीत्यर्थः ।

सु० — एवं तर्हि सौत्रो विकल्पोऽधिकगुरुप्राप्तिविषयः किमिति नेत्याह विपर्ययस्त्विति ।

अनु० — विपर्ययस्तु कर्तव्यः सर्वथा शुभमिच्छता ॥

अधमगुरुपरित्यागेनोत्तमगुरुस्वीकार इत्यर्थः । अन्यथा दैवादादावल्पं गुरुं प्राप्तस्य शिष्यस्य प्रज्ञोत्कर्षवतो जातयोः संशयविपर्यासयोरज्ञानस्य च निवृत्तिर्न स्यात् । तदिदमुक्तं शुभमिच्छतेति ।

शे० — एवं तर्हीति । दोषस्मरणस्य हीनविषयत्वेन सौत्रविकल्पस्य तद्विषयत्वानुपपत्तेरिति भावः ।

प० — एवं तर्हीति । पूर्वप्राप्तगुरुणा संशयविपर्ययाद्यनिवृत्तौ परित्यागस्यावश्यकत्वे सतीत्यर्थः ।

सु० — एवं तर्ह्यनुपदिशत उत्तमस्य त्यागेनोपदिशतोऽधमस्य स्वीकारोऽपि कर्तव्यः स्यात् । सत्यम् । प्रतिषेधवचनेन तत्रापोदितोऽयं न्यायः । तर्हि सौत्रस्य विकल्पस्य को विषय इत्यत आह सम इति ।

अनु० — समे विकल्प एव स्यात्

पूर्वस्वीकृतेन गुरुणा समे गुरौ स्वयमेव प्राप्ते सति स्वीकारस्य विकल्प एव स्यात् । न तु नियमः । सम एवेति वा सम्बन्धः ।

**दोषस्मृतेर्विषयान्तरं च दर्शयितुमाह** पूर्वेति ।

पूर्वानुज्ञा च सर्वथा ।

**समगुर्वन्तरस्वीकारे पूर्वस्यानुज्ञा च सर्वथा भाव्या । विनाऽनुज्ञया समानपूर्वपरित्याग-विषयं दोषस्मरणमिति** भावः ।

शे० — **सत्यमिति** । अनुपदिशदुत्तमपरित्यागेनोपदिशदधमगुरुस्वीकारः कार्य इत्येतत्सत्य-मित्यर्थः । तर्हि गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्क्वचिदिति प्रागुक्तन्यायविरोध इत्यत आह **अत्रापोदितोऽयं न्याय इति** । तत्रानुपदिशदुत्तमे गुरौ गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्क्वचिदि-त्युक्तो न्यायोऽपोदितः । तत्र हेतुमाह **प्रतिषेधवचनेनेति** । प्रतिषेधवचनेनेत्यस्य शुभमिच्छतेत्यपवादे-नेत्यर्थः । तदपरित्यागे शुभमिच्छतेत्युक्ताज्ञानादिनिवृत्त्यनुपपत्तेरिति भावः । गुरुमन्त्रपरित्यागीति प्रति-षेधवचनस्योपदिशदुत्तमपरित्यागेनाधमस्वीकारविषयत्वेनानुपदिशदुत्तमपरित्यागेनोपदिशदधमस्वीकारविषय-त्वाभावादिति भावः । यद्वा तथा चोपदिशद्गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयादिति न्यायपर्यवसानान्न तद्विरोध इति हृदयम् । अज्ञानादिपरिहारार्थं पूर्वपरित्यागेनोत्तमस्वीकारः कार्य इति न्यायो गुरुमन्त्र-परित्यागीति प्रतिषेधवचनेन तत्रापोदित इत्यर्थ इत्यप्याहुः । तद्धीनं नाप्नुयात्क्वचिदिति प्रतिषेधवचनेन यस्माच्छुभप्राप्तिस्तं प्राप्नुयादित्ययं न्यायस्तत्रापोदित इत्यर्थ इत्यन्ये । अत्र पक्षे एवशब्दस्य यथाश्रुत-सम्बन्धलाभेऽपि सौत्रस्य विकल्पस्य को विषय इत्यस्य विकल्प एवेत्येतन्नोत्तरमित्यपरितोषादाह **सम एवेति वा सम्बन्ध इति** । योग्यतावशादेवकारो भिन्नक्रम इति भावः ।

स० — **पूर्वविकल्पः** । **सत्यमिति** । अनुपदिशदुत्तमपरित्यागेनोपदिशदधमस्वीकारः कर्तव्य इत्यर्थः । तर्हि 'गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्क्वचिद्'इति प्रागुक्तन्यायविरोध इत्यत आह **तत्रापोदितोऽयं न्याय इति** । तत्रानुपदिशदित्युत्तमगुणाधिकमित्याद्युक्तन्यायोऽपोदितः । तत्र हेतुमाह **प्रतिषेधवचनेनेति** । गुरुमन्त्रपरित्यागीति प्रतिषेधवचनस्योपदिशदुत्तमपरित्यागेनाधमस्वीकारविषयत्वे-नानुपदिशदुत्तमपरित्यागेनोपदिशदधमस्वीकारविषयत्वाभावादिति भावः । अज्ञानादिपरिहारार्थं पूर्व-परित्यागेनोत्तरः स्वीकार्य इति न्यायः । गुरुमन्त्रपरित्यागीति प्रतिषेधवचनेन तत्रोपदिशत इत्यर्थ इत्याहुः । यद्वा सत्यमित्यादेरयमर्थः । अनुपदिशदुत्तमपरित्यागेनोपदिशदधमस्वीकार इत्येतत्सत्य-मित्यर्थः । तर्हि गुणाधिकमित्याद्युक्तन्यायबाध इत्यत उक्तम् **तत्रापोदिशतोयं न्याय इति** । अनुपदि-शदुत्तमे गुणाधिक इत्याद्युक्तन्यायोऽपोदितः । तत्र हेतुमाह **प्रतिषेधवचनेनेति** । शुभमिच्छतेत्यनेन ज्ञानमिच्छतेत्यर्थः । तदपरित्यागे शुभमिच्छतेत्युक्त-अज्ञाननिवृत्त्यनुपपत्तेरिति भावः । तथा चोपदिश-द्गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयादिति न्यायपर्यवसानान्न तद्विरोध इति हृदयम् ।

**प०** — **प्रतिषेधवचनेनेति** । गुरुमन्त्रपरित्यागीति प्रागुक्तवचनेनेत्यर्थः । **अयं न्याय इति** । विशेषलाभायान्यः प्राप्य इत्ययं न्यायो धर्म विषये अपोदित इत्यर्थः । **तद्धीनं नाप्नुयादिति तु** भाष्यं व्यासचित्तस्थवाक्यमेव न तु स्ववचनमिति ।

**या०** — ॐ **पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत्** ॐ ॥ **प्रतिषेधवचनेनेति** । 'तद्धीनं नाप्नुयात्कचिदि'ति प्रतिषेधवचनेन यस्माच्छुभप्राप्तिस्तं प्राप्नुयादित्ययं न्यायस्तत्रापोदित इत्यर्थः । सत्यकामः स्वकं गुरुमृषभाद्यनुज्ञयैव प्रापेति भाष्ये स्पष्टम् ।

**श्री०** — ॐ **पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत्** ॐ ॥ **कर्तव्यः स्यादिति** । संशयादिनिरासस्यावश्यकत्वादिति भावः ॥ **प्रतिषेधवचनेनेति** । तद्धीनं नाप्नुयादिति निषेधवचनेनेत्यर्थः । अयं न्यायः संशयादिनिरासाय गुरुस्वीकाररूपो न्यायः । विषय एव स्यात्, समो गुरुरिति शेषः ॥ **गुर्वन्तरेति** । ततश्चाधमगुरुं परित्यज्योत्तमगुरुप्राप्तावपि पूर्वानुज्ञापेक्षितेति प्रतीतिनिरासायेत्यर्थः ।

**सु०** — **पूर्वानुज्ञा चेत्येतद्गुर्वन्तरप्राप्तिमात्रविषयमिति मन्दप्रतीतिनिरासायाह** तदुत्तमेति ।

अनु० — तदुत्तमगुरुप्राप्त्यै पूर्वानुज्ञा न मृग्यते ॥

**तदिति पूर्वप्राप्तस्य परामर्शः । तस्मादुत्तमस्य गुरोः प्राप्त्यै पूर्वस्यानुज्ञा न मार्गणीया ।**

**शे०** — 'विपर्ययस्तु कर्तव्यः सर्वथा शुभमिच्छते'ति पूर्वं सर्वथा तस्य स्वीकर्तव्यतासमर्थनेन पूर्वानुज्ञासापेक्षत्वे तदनुपपत्त्या पूर्वानुज्ञाया न गुर्वन्तरप्राप्तिमात्रविषयत्वप्रतीतेरवसर इत्यत उक्तं **मन्देति** ।

**श्री०** — समे विकल्प एव स्यात्पूर्वानुज्ञेति समगुरुस्वीकार एव पूर्वानुज्ञायाः स्पष्टं प्रतीयमानत्वान्मन्देत्युक्तम् ।

**सु०** — **गुरुप्रसादः सर्वथा भाव्य इति सूत्रकृतोक्तम् । तद्विद्यादेवतयोरपि प्रसादस्योपलक्षणमिति विवक्षुर्गुरुविद्यादेवतास्वरूपं तावदाह** गुरुरिति ।

अनु० — गुरुर्ब्रह्माऽखिलानां च विद्या चैव सरस्वती ॥
देवता भगवान्विष्णुः सर्वेषामविशेषतः ॥

**येषां तेषामिति विशेषं विहाय सर्वेषामेव । ततः किमित्यत आह** तदिति ।

तत्प्रसादेन मुक्तिः स्यान्नान्यथा तु कथञ्चन ॥

**न केवलं गुरुप्रसादेन किन्तु विद्यादेवतयोरपीत्यर्थः । मुक्तिरिति ज्ञानादेरुपलक्षणम् ।**

शे० — **विवक्षुरिति** । तत्प्रसादेन मुक्तिः स्यादित्यादिनाऽनुपदमेवेति शेषः । अनेन मुक्त्यर्थतया देवतादिप्रसादस्यावश्यकत्वप्राप्तावपि सम्यग्गुरुप्रसादश्च मुख्यतो दृष्टिकारणमिति प्रकृतभगवद्दृष्टिं प्रति विद्यादेवताप्रसादस्यावश्यकताया अलाभात्तल्लाभाय मुक्तिपदं तदुपलक्षणतया व्याचष्टे **मुक्तिरितीति** ।

श्री० — **विद्यादेवतयोरिति** । विद्याभिमानिनी च प्रतिपाद्यदेवता चेति विद्यादेवते तयोरित्यर्थः ।

सु० — **साधारणगुरुमुक्त्वाऽसाधारणानाह** स्वोत्तमास्त्विति ।

**अनु० —** स्वोत्तमास्तु क्रमेणैव सर्वेषां गुरवः स्मृताः ॥

**क्रमेणैवेति साक्षादुत्तमो गुरुस्ततोप्युत्तमो गुरुतर इत्यादि । एवं विद्याविशेषे तद्देवताविशेषोऽपि ज्ञातव्यः ।**

शे० — असाधारणगुरुवदसाधारणविद्यादेवतयोरप्यवश्यवक्तव्यत्वात्तदनुक्तिरत्रायुक्ता भाष्यकाराणामित्यत ऋग्भाष्ये तयोरुक्तत्वात्तदनुसारेण शिष्यैरेव ज्ञातुं शक्यत्वात्तदनुक्तिर्न दोषमावहतीत्यभिप्रेत्य 'ऋते तत्र प्रसिद्धिश्च देवता श्रीस्तथाऽत्र च । ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च । पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः । इन्द्रावरा विशेषेण लिङ्गैनैव पृथक् पृथक् । देवतास्तत्र तत्र स्युरेष एव परो विधिरि'ति विद्यादेवताविशेषप्रतिपादकमृग्भाष्यं मनसि निधायासाधारणे विद्यादेवते आह **एवमिति** । विद्याविशेषसहितस्तद्देवताविशेष इति मध्यमपदलोपी समासः । अम्भ्रणीसूक्तादिरूपविद्याविशेषो लक्ष्म्यादिरूपदेवताविशेषोऽपि ग्रन्थान्तरानुसारेण ज्ञातव्य इत्यर्थः ।

प० — **एवं विद्याविशेषे तत्तद्देवताविशेषोऽपीति** । गुरुविशेष इवाग्निमीळ इत्यादिविद्याविशेषे अग्न्यादिर्विष्णुभिन्नदेवताविशेषोऽपि ज्ञायत इत्यर्थः । ऋग्भाष्योक्तदिशा गायत्र्यादिछन्दस्कविद्यानां गरुडादेरप्यभिमान्यादिदेवतात्वादिति ज्ञेयम् ।

या० — असाधारणान्गुरूनुक्त्वाऽसाधारणे विद्यादेवते अप्याह **एवं विद्याविशेष इति** । उमाद्यभिमन्यमानविद्याविशेषे विष्ण्वन्यप्रतिपाद्यविशेषोऽपि ज्ञातव्य इत्यर्थः ।

श्री० — **गुरुतरः** परमगुरुः ॥ ३–३–२८ ॥

सु० — **नन्वस्तु विद्यात्वं विद्याभिमानित्वात्सरस्वत्यादीनाम् । देवतात्वं च विद्याप्रतिपाद्यत्वाद्विष्णोः । ब्रह्मणो गुरुत्वं तु कुतः । विद्योपदेष्टृत्वं हि गुरुत्वम् । न च सर्वान्प्रति ब्रह्मणस्तदस्तीत्यत आह** उपदेश इति ।

**अनु० —** उपदेशो ब्रह्मणस्तु सर्वेषामेव मुक्तये ॥ ३–३–२८ ॥

इह जन्मान्तरे वा हिरण्यगर्भोपदेशेन विना न कस्यापि मुक्तिरित्यतस्तस्य गुरुत्वमुपपन्नम् । तदितरेषामप्युत्तमानां विद्यासम्प्रदायप्रवर्तकत्वाद्गुरुत्वमप्रवर्तकानां त्वनुग्राहकत्वादिनेति ॥ ३-३-२८ ॥

शे० — **विष्णोरिति** । विष्ण्वादीनामित्यर्थः । अत एव सरस्वत्यादीनामिति प्रागादिपदं प्रयुक्तमिति भावः ॥ **हिरण्यगर्भोपदेशेन विनेति** । 'यो यो भावो देवतानां विमुक्तौ तत्तत्प्राप्तौ सद्गुणानीशितुश्च । ब्रह्मा दिशत्यथ तांस्ते विचिन्त्य तत्तद्भावं प्राप्नुवन्त्यात्मशक्त्ये'ति श्रुतेरिति भावः ॥ अत्र ब्रह्मणः सर्वोपदेष्टृत्वं सर्वान्प्रति साक्षाद्वा तदाज्ञप्तसर्वज्ञकल्पगुरुद्वारा वाऽभिमतं न तु साक्षादेव सर्वान्प्रतीति भ्रमितव्यम् । अन्यथा भाष्यटीकयोर्विरोधप्रसङ्गात् । तत्र ब्रह्मणो वा तदाज्ञप्तस्य सर्वज्ञकल्पस्यान्यस्य वा कस्यचिदुपदेष्टृत्वकथनादित्यवधेयम् । ननु चोपदेशत एव गुरुत्वे सर्वेषां स्वोत्तमानामुपदेष्टृत्वाभावाद्गुरुत्वाभावप्राप्त्या स्वोत्तमास्तु क्रमेणैवेत्युक्तविरोध इत्यत आह **तदितरेषामिति** । नन्वेवमस्तूपदेष्टॄणां सम्प्रदायप्रवर्तकानां च स्वोत्तमानां गुरुत्वम् । ये तु नोपदेष्टारो नापि सम्प्रदायप्रवर्तकाः स्वोत्तमास्तेषां तु न गुरुत्वं संभवतीति स्वोत्तमास्तु क्रमेणैवेत्युक्तविरोधस्तदवस्थ एवेत्यत आह **अप्रवर्तकानां त्विति** ॥ ३-३-२८ ॥

प० — **विद्यासंप्रदायेति** । शिष्येभ्यो व्याख्यानसंप्रदायः ॥ **अनुग्राहकत्वादिनेति** । अनुग्राहकत्वं श्रवणादौ प्रेरणा । करणपाटवादिदानमादिपदार्थः ॥ ३ । ३ । २८ ॥

या० — नन्वेवमुपदिशत एव गुरुत्वे स्वोत्तमास्तु क्रमेणैवेत्युक्तविरोधः । सर्वेषां स्वोत्तमानामुपदेष्टृत्वाभावादत आह **तदितरेषामिति** । अनुग्राहकत्वादिनेत्यत्रादिपदेन 'श्रीमदानन्दतीर्थीयमतमाचन्द्रतारकम् । आ सेतोराहिमाद्रेश्च समीचीनं प्रवर्ततामि'त्यादि तत्कर्तृकं प्रार्थनं तत्त्वाभिमानिरुद्रादिकर्तृकं सन्मार्गप्रेरणमित्यादि ग्राह्यम् ॥ ३ । ३ । २८ ॥

॥ इति पूर्वविकल्पाधिकरणम् ॥

## ॥ अथ ताद्विध्याधिकरणम् ॥

सु०— ॥ ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ भक्तिरेवैनं नयतीत्यादिश्रुतेर्भक्तिरेव मोक्षादिसाधनं न परमात्मा । यथैकलव्यस्य गुरुभक्तिरेव विद्याप्राप्तिसाधनं न गुरुरित्येवं प्राप्ते इदमुक्तम् । तत्र भाष्यम् । प्रधानसाधनत्वाद्भक्तिः करणत्वेनोच्यत इति । तत्रप्रकृतत्वाद्भगवदपेक्षयैव भक्तेः प्राधान्यमिति प्रतीतिः स्यात्तां निवारयितुमाह साधनेभ्य इति ।

अनु०— ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ।

साधनेभ्योऽधिका भक्तिः

मोक्षसाधनेभ्यो ज्ञानादिभ्यः । एतदपि तादृगेव भगवतोऽपि मोक्षसाधनत्वादित्यत आह नैवेति ।

नैवान्यत्तादृशं क्वचित् ।

क्वचिन्मुक्तौ ज्ञानादौ वा भगवतोऽन्यत्साधनं भक्तिसदृशं नैवास्तीत्यर्थः ।

शे०— ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ नन्वेतदपि तादृगेव मुक्तौ ज्ञानादौ वा भगवत एव भक्तिसदृशस्यान्यस्य सत्त्वादित्यतोऽन्यपदं भगवदन्यपरतया योजयति भगवतोऽन्यत्साधनमिति ।

प०— परेण च शब्दस्य ॥ एतदपि तादृगेवेति । (एवं कथनमपि ईश्वराव्यावर्तकमेवेत्यर्थः । ) परब्रह्मापि ज्ञानादितुल्यमेवेत्यर्थः । एवं च ईश्वरापेक्षया भक्तेः प्राधान्यमिति प्रतीत्यनिवृत्तिरेवेति भावः ।

श्री०— ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ मुक्तौ ज्ञानादाविति । विषयसप्तमी ।

सु०— भक्तिरिति सामान्येनोक्तं न ज्ञायते किंविषया कथं चेति । अत आह भक्तिश्चेति ।

अनु०— भक्तिश्चैव हरावेव मुख्याऽन्यत्र यथाक्रमम् ।

हरावेव मुख्या सर्वाधिका न तथाऽन्यत्र । अन्यत्रापि यथाक्रममेव न तु साम्येनाक्रमेण वेत्यर्थः । तदियत्तामाह स्वाधिकेति ।

स्वाधिकत्वेन सर्वत्र स्वोत्तमेषु क्रमेण च ।

**साक्षात्स्वोत्तमे स्वाधिकैव कर्तव्या । अन्यत्र स्वोत्तमेषु तदुत्तमत्वक्रमेणेत्यर्थः । यद्यप्येषोऽर्थः प्रागुक्तस्तथाऽपि तात्पर्यातिशयद्योतनाय पुनरुक्तः ।**

शे० — **मुख्या सर्वाधिकेति** । साधिका त्वेव सर्वत्रेति वक्ष्यमाणत्वादिति भावः । क्रमेणेवेत्युक्तक्रममुपदर्शयितुं साक्षात्स्वोत्तमेष्वन्यत्र स्वोत्तमेष्वित्युक्तम् ॥ **स्वाधिकैवेति** । अनेन तुशब्दोऽवधारणार्थ इत्युक्तं भवति । एषोऽर्थो विष्णावेव सर्वाधिकेत्यादिरूपः ॥ **प्रागुक्त इति** । अनुबन्धादिभ्य इत्यधिकरणे 'अतो विष्णौ परा भक्तिस्तद्भक्तेषु रमादिषु । तारतम्येन कर्तव्या पुरुषार्थमभीप्सता । स्वादरः सर्वजन्तूनां संसिद्धो हि स्वभावतः । ततोऽधिकः स्वोत्तमेषु तदाधिक्यानुसारतः । कर्तव्यो वासुदेवान्तं सर्वथा शुभमिच्छते'त्यादिनेति शेषः ॥ ३-३-३४ ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते यस्मात् ।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां तृतीयाध्यायस्य तृतीयः पादः ॥३-३॥

---

म० — **एषोऽर्थ इति** । विष्णावेव सर्वाधिक इत्युक्तोऽर्थ इत्यर्थः ॥ **इति तृतीये तृतीयः** ॥

प० — क्रमेण चेत्यस्यार्थः **उत्तमत्वक्रमेणेति** । प्रागुक्ततारतम्यक्रमेणेत्यर्थः ॥ **प्रागुक्त इति** । अतो विष्णौ परा भक्तिस्तद्भक्तेषु रमादिषु । तारतम्येन कर्तव्ये'त्यादाविति भावः ।

या० — ॐ **परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः** ॐ ॥ **प्रागुक्त इति** । स्वादरः सर्वजन्तूनामित्यत्रेत्यर्थः ॥ ३-३-३४ ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्येण यदुपतिना विरचितायां सुधाटिप्पण्यां
तृतीयाध्यायस्य तृतीयः पादः ॥ ३-३ ॥

श्री० — **अन्यत्र स्वोत्तमेष्विति** । साक्षात्स्वोत्तमापेक्षयोत्तमैष्वित्यर्थः । तेषामपि स्वोत्तमत्वादिति भावः ॥ **प्रागुक्त इति** । 'स्वादरः सर्वजन्तूनामि'त्यादिना प्रागुक्त इत्यर्थः ।

सु० — भक्तिः साधनं चेन्मुक्तिप्राप्त्यनन्तरं नास्तीति प्रतीतिः स्यात् । फलप्राप्तौ साधननिवृत्तिदर्शनात् । तन्निवृत्त्यर्थमाह अनुवर्तते चेति ।

अनु० — अनुवर्तते च सा भक्तिर्मुक्तावानन्दरूपिणी ।

प्रेमविशेषो हि भक्तिर्नाम । उपकारकत्वज्ञानाज्जाता हि प्रेमा कृतमहोपकारे नितरां वर्धत इत्येव खलु युक्तं न तु हीयत इति । तदेतत् अस्तीत्यनुक्त्वाऽनुवर्तत इति वदता सूचितम् । तर्हि तस्याः फलमपि किञ्चित्स्यादित्यत आह आनन्दरूपिणीति । प्राक्कर्तव्यतया प्रकृता । अतः साधनरूपा । मुक्तौ तु स्वभावभूताविर्भूताफलरूपैव ।

श्री० — कर्तव्यतयेति । विहितत्वेनेत्यर्थः ।

सु० — पादार्थमुपसंहरति तदिति ।

अनु० — तत्पूर्विकोपासनैवं कर्तव्या मुक्तये गुणैः ॥ ३-३-३४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने

तृतीयाध्यायस्य तृतीयः पादः ॥ ३-३ ॥

---

भक्तिपूर्वा । एवमिति योग्यतादेः परामर्शः । गुणैरुपेतस्य हरेः ॥ ३-३-३४ ॥

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ॥
कृतायां टीकायां विषमपदवाक्यार्थविवृतौ तृतीयेऽत्रोपासाविषयचरणः पर्यवसितः ॥ ३-३ ॥

प० — गुणैरित्यस्यान्वयाप्रतीतेराह गुणैरुपेतस्य हरेरिति ॥ ३ । ३ । ३४ ॥

इति श्रीमन्न्यायसुधापरिमळे राघवेंद्रयतिकृते

तृतीयाध्यायस्य तृतीयः पादः ॥

श्री० — गुणैरित्यनन्तरमध्याहार्यमाह उपेतस्य हरेरिति ॥ ३-३-३४ ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽगृहीतसुधावाक्यार्थविवरणे

तृतीयाध्यायस्य तृतीयः पादः ॥ ३-३ ॥

च०— पादार्थमिति । पादप्रतिपाद्यमित्यर्थः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणश्रीमत्सत्यप्रियतीर्थपूज्यपादतनूज-
सर्वतन्त्रस्वतन्त्रगालवपुरीश्रीनिवासाचार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां
श्रीमत्सुधाचषकनाम्न्यां समासिकव्याख्यायां तृतीयाध्यायस्य तृतीयः पादः ॥

॥ इति तृतीयाध्यायस्य तृतीयः पादः ॥



श्रीमत् जयतीर्थ(टीकाकृत्पादाचार्य)विरचिता

# श्रीमन्-न्यायसुधा

षट्टिपणीसमेता

## अथ तृतीयाध्यायस्य चतुर्थः पादः

॥ श्री गुरुभ्यो नमः ॥ हरिः ॐ ॥

## ॥ अथ पुरुषार्थाधिकरणम् ॥

सु० — ज्ञानसामर्थ्यमस्मिन्पाद उच्यत इति पादप्रतिपाद्यं भाष्येऽभिहितम् । सङ्गतिस्तु प्रागुक्तैव । ननु च ज्ञानस्य स्वातन्त्र्येण मोक्षसाधनत्वं सामर्थ्यम् । तच्च विद्यैवेत्युक्तम् । किमपरमवशिष्यते । यदर्थं पादारम्भः । उच्यते । सिद्धे(द्धं) स्वतन्त्रस्यैव ज्ञानस्य मोक्षसाधनत्वे(त्वम्) । विषयान्तरे तु सामर्थ्यमत्र समर्थ्यते । यद्यपि साधकेन मोक्षार्थमेवेदं साधितं तथाऽपि स्वभावबलायातं तत्सामर्थ्यमुपपद्यते । यथा दहनार्थमुत्पादितोऽपि दहनः स्वभाववशात्प्रकाशयत्यपीति ॥ ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ॥ किं कर्मानुप्रवेशेन ज्ञानं मोक्षसाधनं किं वा स्वतन्त्रमेवेति संशये स्वतन्त्रस्यैव ज्ञानस्य मोक्षसाधनत्वमनेन समर्थ्यत इति केचिद्व्याचक्षते । तदसत् । विद्यैवेत्यत्रैवास्यार्थस्य समर्थितत्वात् । किन्तु ज्ञानं किं मोक्षमेव साधयत्युतान्यमपि पुरुषार्थमिति संशये ज्ञानिनां पुरुषार्थान्तरे रागाभावान्मोक्षस्यैव साधकं ज्ञानमिति प्राप्ते सतीदमुच्यत इत्याशयवान्पुरुषार्थोऽत इत्येतद्व्याचष्टे एवमिति ।

---

अनु० — ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ॥
एवमुत्पन्ननिर्दोषभगवद्दर्शनात्सदा ॥
अपेक्षितफलप्राप्तिः

अत इति ज्ञानपरामर्शो नोपपद्यते । पूर्वत्र प्राधान्येनोपासनस्यैव प्रकृतत्वादित्यत उक्तमेवमुत्पन्नेति । न खलूपासनं स्वातन्त्र्येण प्रकृतं किन्नाम भगवद्दर्शनार्थत्वेन । अतः साध्यतया तदपि प्रकृतमेवेति भावः । एवमुक्तरूपोपासनोत्पन्नात् । भगवतो निर्दोषत्वसङ्कीर्तनं तदुपपादनाय पातनिकार्थं ज्ञातव्यम् । यद्वा भगवद्दर्शनादित्येवोक्ते दैत्यादीनां यदवतारदर्शनं तस्यापि पुरुषार्थहेतुत्वं स्यात् । एवमुत्पन्नेत्यनेनैव तत्परिहृतमिति चेन्न । तस्य प्रकृतताप्रदर्शन एव चरितार्थत्वात् । तन्न तेषां बिम्बदर्शनमिति चेत् । मा भूत् । तस्य मोक्षार्थत्वात् । अत्र तु पुरुषार्थान्तरस्य प्रस्तुतत्वात् । अतो निर्दोषाद्भगवद्दर्शनादित्युक्तम् । भगवद्ग्रहणेनाद्वैतज्ञानमत्र गृह्यत इति निराचष्टे । सदा ज्ञानोदयक्षणादारभ्य स्वोदयात्फलदं ज्ञानमिति वचनात् । अपेक्षितफलप्राप्तिर्भवतीति मोक्षमात्रं व्यावर्तयति ।

शे॰—

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ॥ अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥१॥

एकवाक्यत्वादिसिद्धयेऽवश्यवक्तव्यस्य पादप्रतिपाद्यस्यानुक्त्या प्रसक्तां मूले न्यूनतामनुक्तौ निमित्तकथनेन परिहरति **ज्ञानसामर्थ्यमित्यादिना** । तथाऽपि ज्ञानसामर्थ्यप्रतिपादकस्यास्य पादस्य कुतः पूर्वपादानन्तर्यमित्यतो ज्ञानोपासनयोः साध्यसाधनभावापन्नतया क्रमभावित्वात्तद्विषययोरनयोः पादयोरपि क्रमो युक्त इत्येवंरूपा सङ्गतिः 'वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् । आपरोक्ष्यं भवेद्विष्णोरिति पादक्रमो भवेदि'त्युपासनापादे लाघवायैकीकृत्योक्तैवेति न तदनुक्तिरप्यत्र दोष इत्याह **सङ्गतिस्त्विति** ॥ **स्वातन्त्र्येणेति** । कर्मानपेक्षयेत्यर्थः ॥ **विषयान्तर इति** । मोक्षेतरस्वर्गादिरूप-पुरुषार्थविषय इत्यर्थः । अन्यार्थं संपादितस्यापि स्वभावबलायातमन्यार्थत्वमेव निदर्शयति **यथेति** ॥ ॐ **पुरुषार्थोऽतः शब्दादिति बादरायणः** ॐ ॥ **कर्मानुप्रवेशेनेति** । कर्मशेषतयेत्यर्थः ॥ **स्वतन्त्रमिति** । स्वप्राधान्येनेत्यर्थः । ननु निर्दोषभगवद्दर्शनादित्यत्र निर्दोषत्वं न तावदव्यवहित-भगवद्विशेषणम् । व्यावर्त्याभावेन वैयर्थ्यप्रसङ्गात् । नापि व्यवहितस्य दर्शनस्य । उक्तादेव हेतोरित्य-नर्थकमेव तदित्यतः पक्षद्वयमप्यत्राभिमतमित्यभिप्रेत्य भगवद्विशेषणत्वपक्षे व्यावर्त्याभावाद्व्यावर्तकविशेषण-त्वासंभवेऽपि स्वरूपकथनत्वं संभवतीत्यभिप्रेत्य तद्वैयर्थ्यशङ्कां वारयति **भगवत इति** । 'न चान्य-भेदवद्विष्णावि'त्यादितन्निर्दोषत्वोपपादकप्रकरणनिवर्त्यशङ्कोत्थापनार्थमित्यर्थः । उत्तरत्र भगवतो निर्दोष-त्वोपपादनाय भूमिकारचनरूपमिदम् । अन्यथोत्तरत्र तदुपपादनमसङ्गतं स्यादिति भावः । ज्ञान-विशेषणमेतदिति द्वितीयमभ्युपेत्य तत्रोक्तदोषपरिहाराय तद्व्यावर्त्यमाह **यद्वेति** । ननु दैत्यानामवतार-दर्शनस्य पुरुषार्थहेतुत्वशङ्का एवमुत्पन्नेत्यनेनैव परिहृता । तेषामवतारदर्शनस्योक्तरूपोपासनोत्पन्नत्वाभावात्त-त्कथमेतन्निर्दोषग्रहणप्रयोजनं स्यादिति शङ्कते **एवमुत्पन्नेति** ॥ **तस्येति** । एवमुत्पन्नस्येत्यस्योक्तरूप-ज्ञानस्यात इत्यनेन परामर्शोपपादकप्रकृततापदर्शन एव चरितार्थत्वान्नोक्तशङ्कापरिहारकत्वमिति भावः । ननु बिम्बदर्शनमेव पुरुषार्थसाधनमिति स्थितम् । दैत्यानामवतारदर्शनं च न बिम्बदर्शनमिति कथं तस्य पुरुषार्थहेतुता स्यादिति शङ्कते **तन्नेति** ॥ **तस्येति** । बिम्बदर्शनस्येत्यर्थः ॥ **अत्र त्विति** । ज्ञानसामर्थ्यप्रतिपादके पाद इत्यर्थः । तथा च दैत्यानामवतारदर्शनस्याबिम्बदर्शनतया मोक्षहेतुत्वा-भावेऽपि पुरुषार्थान्तरहेतुत्वसंभवाद्युक्ता शङ्केति भावः ॥ **अत्रेति** । पुरुषार्थसूत्रेऽत इति शब्देनेत्यर्थः ।

स॰— **सङ्गतिस्त्विति** । आनन्तर्यलक्षणेत्यर्थः । **प्रागुक्ता** । वैराग्यतो भक्तिदार्ढ्यमित्या-दिनोपासनापादे । ननु निर्दोषभगवद्दर्शनादिति निर्दोषत्वं भगवद्विशेषणमुक्तम् । तत्किमर्थमित्यत आह **निर्दोषत्वेति** । न चान्यभेदवद्विष्णावित्यादिना भगवतो निर्दोषत्वोपपादनाय पातनिकार्थं प्रसक्त्यर्थ-

मित्यर्थः । अन्यथोत्तरत्र तदुपपादनमसङ्गतमिति भावः । दैत्यानामवतारदर्शनस्य पुरुषार्थहेतुत्वशङ्का एवमुत्पन्नेत्यनेनैव परिहृता दैत्यानामवतारदर्शनस्योक्तरूपोपासनोपपन्नत्वाभावात् । तथा च नैतन्निर्दोष ग्रहणे प्रयोजनमिति शङ्कते **एवमुत्पन्नेति ॥ तस्येति** । एवमुत्पन्नेत्यस्य उक्तरूपज्ञानस्य प्रकृतता-प्रदर्शन एव चरितार्थत्वेन नोक्तशङ्कापरिहारकत्वमिति भावः । ननु बिंबदर्शनमेव पुरुषार्थहेतुः । दैत्यानामवतारदर्शनेपि न बिम्बदर्शनमिति कथं तस्य पुरुषार्थहेतुत्वमुच्यत इति शङ्कते **तत्रेति ॥ तस्येति** । बिम्बदर्शनस्येत्यर्थः । **अत्रास्त्विति** । तथा चावतारदर्शनेन पुरुषार्थान्तरमस्त्वित्याशयः । **अत्रेति** । पुरुषार्थोत इति सूत्रेऽतःशब्देनेत्यर्थः ।

**प०** — न्यूनतापनुत्त्यर्थं वक्ष्यमाणचोद्यसमाध्यर्थं वाह **ज्ञानेति ॥ प्रागुक्तैवेति** । वैराग्यतो भक्तिदार्ढ्यमित्यादिना पूर्वपादोपक्रमे उक्तेत्यर्थः ॥ **स्वतन्त्रस्यैवेति** । कर्मासहकृतस्येत्यर्थः ॥ **विषयान्तर इति** । मोक्षान्यफलेपीत्यर्थः ॥ **साधकेनेति** । मोक्षसाधनानुष्ठात्रेत्यर्थः ॥ **पुरुषार्थोऽतः** । परमतमनुवदति **किं कर्मानुप्रवेशेनेति** । कर्मसहायेनेत्यर्थः । एवमित्यनुवादः । उक्त-रूपोपासनोत्पन्नादिति व्याख्या ॥ **तदुपपादनायेति** । भगवतो रूपं निर्दोषमित्यस्योत्तरत्र 'न चान्यभेद-वद्विष्णौ भेदस्तद्दर्शिनामि'त्यत्रोपपादनाय प्रस्तावार्थमित्यर्थः । दर्शनविशेषणं तदित्युपेत्याह **यद्वेति ॥ इति वचनादिति** । तदोकोग्रज्वलनमित्यत्र न्यायविवरणोक्तादिति ज्ञेयम् ।

**या०** — **प्रागुक्तैवेति** । 'वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् । आपरोक्ष्यं तया विष्णोरिति पादक्रमो भवेदि'त्यनेनेति शेषः ॥ **विषयान्तर इति** । स्वर्गादिरूपपुरुषार्थान्तर इत्यर्थः । तत्सामर्थ्यमित्यत्र विषयान्तर इत्यनुवर्तनीयम् ॥ ॐ **पुरुषार्थोऽतःशब्दादिति बादरायणः** ॐ ॥ **कर्मानुप्रवेशेनेति** । कर्मसाचिव्येनेत्यर्थः ॥ **पातनिकार्थमिति** । निर्दोषत्वोपपादकप्रकरणनिवर्त्य-शङ्कोत्थापनार्थमित्यर्थः । उत्तरत्र निर्दोषत्वोपपादनाय भूमिकारचनरूपमिदमिति भावः ।

**श्री०** — ॐ **पुरुषार्थोऽतःशब्दादिति बादरायणः** ॐ ॥ **अत इतीति** । सौत्रातः-शब्देनेत्यर्थः ॥ **भगवद्दर्शनार्थत्वेनेति** । अपरोक्ष्यं तया विष्णोरित्युक्तत्वादिति भावः ॥ **एवमुत्पन्नेत्य-नेनैवेति** । दैत्यादीनां भगवदवतारदर्शनस्योक्तरूपोपासनोत्पन्नत्वाभावादिति भावः ॥ **प्रकृतताप्रदर्शन एवेति** । ज्ञानस्य पूर्वत्र प्राधान्येन प्रकृतत्वप्रदर्शन एव चारितार्थ्यं न तु तस्योपासनासाध्यत्व इत्यर्थः ॥ **तत्र तेषामिति** । बिम्बदर्शनस्यैव मोक्षरूपपुरुषार्थहेतुत्वेन दैत्यादीनां तदवतारदर्शनं न भवतीत्यर्थः ॥ **स्वोदयादिति** । ल्यब्लोपनिमित्ता पञ्चमी । स्वोदयमारभ्येत्यर्थः । नन्वपेक्षितफलप्राप्तिरित्युक्त्या मोक्षस्यापि प्राप्तेः पुनर्विद्यैवेत्यनेन भवतामपि पुनरुक्तिरित्यत आह **अपेक्षितफलेति** । तथा च मोक्षे-तरापेक्षितपुरुषार्थप्राप्तिर्भवतीत्यर्थः । अतो न पुनरुक्तिरस्माकमिति भावः ।

**च०— स्वतन्त्रस्यैवेति** । कर्मसाचिव्यविनिर्मुक्तस्येत्यर्थः ॥ **विषयान्तरे त्विति** । मोक्षान्यफलेपीत्यर्थः ॥ **साधकेन** मोक्षसाधनस्यानुष्ठात्रा । **रागाभावात्** पुरुषार्थान्तरगोचरेच्छाविरहात् । **ज्ञानपरामर्श इति** । अत इति तसिलन्तसमुदायघटकतसिल्स्थानिभूतपञ्चमीप्रकृतिभूतसर्वनामैतच्छब्देन ज्ञानस्मृतिरित्यर्थः । **साध्यतया** उद्देश्यतया ।

**सु० — नन्वेतदसत् । ज्ञानिनामप्यभिप्रायस्य कदाचिन्मोघत्वदर्शनादित्यत आह** आरब्धस्येति ।

**अनु०—** आरब्धस्यानतिक्रमात् ।

**प्रारब्धकर्मणोऽतिक्रममविधायेति पूर्वेणैव संबन्धः । प्रारब्धप्रतिबद्धं हि ज्ञानं मोक्षमपि न करोति । अतस्तत्प्रतिबन्ध(क)वशाज्ज्ञानिनामप्यभिप्राया मोघाः स्युः । ज्ञानस्य पुरुषार्थहेतुत्वेऽपि विशेषोऽस्तीत्याह** देवेति ।

देवर्षिमानुषादीनां तत्तज्जात्यनुसारतः ॥

**जातिशब्देनात्र योग्यतोच्यते । अपेक्षितफलप्राप्तिर्भवतीति संबन्धः ॥ एतेन नाविशेषादित्यस्यापि तात्पर्यमुक्तं भवति ।**

**शे० — पूर्वेणैवेति** । अपेक्षितफलप्राप्तिरिति पूर्वेणैवेत्यर्थः । नन्वेवमपि नोक्तशङ्कापरिहार इत्यत आह **प्रारब्धेति** । ज्ञानस्य पुरुषार्थहेतुत्वेऽप्युक्ततत्तद्योग्यतानुसारित्वरूपविशेषकथनस्यापि क उपयोग इत्यत आह **एतेनेति** । उक्तविशेषकथनेनेत्यर्थः ।

**प०— इत्यस्यापीति** । तत्राधिका(रिता)रतारतम्यस्योक्तेरिति भावः ।

**या०— एतेन नाविशेषादिति** । तत्र न सामान्येनाधिकारो देवादीनामित्युक्तत्वादित्यर्थः ।

**श्री०— मोक्षमपीति** । अपिशब्दात्तदितरपुरुषार्थग्रहणम् । तथा च न किमपि पुरुषार्थं करोतीत्यर्थः ।

**सु०— अत्र न ज्ञानं स्वतन्त्रमेव स्वर्गादिसाधनं किन्तु कर्मैव । ज्ञानं तु कर्मशेषत्वात्तत्साधनत्वेनोच्यते । शेषत्वं च कर्मणैव सिध्यति पुरुषार्थेऽतिशयाधायकत्वमिति शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिरित्यादिसूत्रैः पूर्वपक्षयित्वाऽधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनादित्यादिना स्वतन्त्रस्यैव ज्ञानस्य स्वर्गादिसाधनत्वं पुनः सिद्धान्तितम् । तत्र पूर्वपक्ष्युपन्यस्तप्रमाणनिरासः स्फुटो भाष्ये । जैमिनिमतविरोधपरिहारस्तु कथमित्यत आह** जैमिन्युक्तमिति ।

**अनु०—** जैमिन्युक्तं मानुषाणां तद्विशेषाश्च केचन ॥

**ज्ञानशेषस्य कर्मण एव स्वर्गादिसाधनत्वं मानुषज्ञानिविषयम् । न केवलं जैमिन्युक्तं किन्तु स्वर्गादय: कर्मणैव नान्येनेत्यपरे विदु: । 'अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यते । इति केचिद्विद: प्राहुरि'त्यादिनोक्तास्तद्विशेषा जैमिनिमतैकदेशा ये केचन तेऽपि मानुषाणाम् । कथमेतेषां जैमिनिमतैकदेशत्वमिति चेत् । स्वतन्त्रस्य ज्ञानस्य न स्वर्गादिसाधनत्वमित्येतावत्यंशे साम्यादिति ब्रूम: । मानुषा अप्युत्तममध्यमाधमभेदभिन्ना इति यथायोग्यं विचित्रमतविषया भवन्त्येव ।**

शे० — **पूर्वपक्ष्युपन्यस्तेति** । जैमिनिमतावलम्बिना पूर्वपक्षिणाऽऽचारदर्शनादित्यादिभिर्नियमाच्चेत्यन्तै: सूत्रैर्यानि प्रमाणान्युपन्यस्तानि तेषां निरास इत्यर्थ: ॥ **स्फुटो भाष्य इति** । तत्र ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामा: सम्पद्यन्त इति ज्ञानस्यैव स्वातन्त्र्येणाशेषपुरुषार्थसाधनताया: कर्मणां च तथाऽपि यथा यथा कर्म करोति तथा तथाऽधिको भवतीति श्रुत्यवलम्बनेन ज्ञानशेषतायाश्च प्रतिपादितत्वेन तद्विरोधेन पूर्वपक्ष्युपन्यस्तप्रमाणानां स्वातन्त्र्येण कर्मणां पुरुषार्थसाधनत्वाभिप्रायकत्वानुपपत्त्या तेषां ज्ञानशेषत्वाभिप्रायकत्वसिद्धेरिति भाव: । 'जैमिन्युक्तं मानुषाणामि'त्युक्तम् । तत्र किं तत् जैमिन्युक्तमित्यपेक्षायामाह **ज्ञानशेषस्येति** । ज्ञानं शेषो यस्येति बहुव्रीहि: । ज्ञानस्य कर्मशेषत्वं च कर्मणैव सिध्यति पुरुषार्थे तस्यातिशयाधायकत्वमेवात एवोक्तं ज्ञानेनाधिक्यमित्याहुरितीत्यवधेयम् । तद्विशेषाश्चेति (अदृष्टं स्वर्गादि, दृष्टं पुत्रादि । एवं च ज्ञानं तेषां मोक्षेतरसमस्तपुरुषार्थसाधनं न भवतीत्यर्थ: ।) चशब्दार्थमाह **न केवलमिति** । तथा च न केवलं जैमिन्युक्तमेव मानुषविषयं किन्तु तद्विशेषा अपि तद्विषया इत्युक्तं भवति । यद्यप्युदाहृतप्रमाणे द्वावेव जैमिनिमतैकदेशौ प्रतीयेते इति द्विवचनमेव प्रयोगार्हं न तु तदेकदेशा इति बहुवचनं तथाऽपि जैमिन्याद्यास्तु केचनेत्याद्यपदसंगृहीतजैमिनिमताननतिभिन्नतदेकदेशमतमादाय बहुत्वसंभवाद्बहुवचनमुपपन्नमित्यवधेयम् । मतत्रयस्य परस्परमत्यन्तविलक्षणत्वान्न जैमिनिमतैकदेशत्वमिति शङ्कते **कथमिति** । नन्वेकप्रकाराणां मानुषाणां कथं विचित्रमतविषयत्वमित्यत आह **मानुषा अपीति** । अव्यवस्थया यस्य कस्यचिद्यत्किञ्चिन्मतविषयत्वमिति भ्रमनिरासायोक्तं यथायोग्यमिति । 'ज्ञानेनाधिक्यमित्याहुर्जैमिन्याद्यास्तु केचने'त्युक्तम् । ज्ञाने विशेषस्य कर्मण एव स्वर्गादिसर्वपुरुषार्थसाधनतेति जैमिनिमतम् । आदिपदोपात्ततदभिन्नतदेकदेशमतं चोत्तममानुषविषयम् । कर्मसाध्येऽदृष्टे स्वर्गादिके पुरुषार्थ एव ज्ञानमतिशयाधायकं न तु कर्मसाध्ये दृष्टे फल इति । अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यत इत्युक्ततदेकदेशिमतं तु मध्यममानुषविषयम् । मोक्षेतरदृष्टादृष्टपुरुषार्थे कर्मैव हेतुर्न तु ज्ञानमिति । 'स्वर्गादय: कर्मणैव नान्येनेत्यपरे विदुरि'त्युक्तं मुनिमतं त्वधममानुषविषयमिति यथायोग्यमित्यर्थ: ।

स० — जैमिन्युक्तं मानुषाणामित्यत्र किं तज्जैमिन्युक्तमित्यतस्तदाह **ज्ञानशेषस्येति** । ज्ञानं शेषो यस्येति बहुव्रीहिः । तद्विशेषाश्चेति चशब्दार्थमाह **न केवलमिति** । तथाच न केवलं जैमिन्युक्तमेव मानुषविषये तद्विशेषा अपि तद्विषया इति चशब्दार्थ उक्तो भवति । मतत्रयस्यापि परस्परमत्यन्तविलक्षणत्वात्कथं जैमिनिमतैकदेशत्वमिति शङ्कते **कथमिति** । नन्वेकप्रकाराणां मानुषाणां कथं विचित्रमतविषयत्वं तत्राह **मानुषा अपीति** ।

प० — **इत्यादिसूत्रैरिति** । षड्भिः सूत्रैरित्यर्थः ॥ **पूर्वपक्ष्युपन्यस्तप्रमाणेति** । यदेव विद्ययेति ज्ञानशेषत्वश्रुतेः देवानां कर्मानुष्ठानरूपाचारस्य कर्मैव देहमित्याद्यैहिकामुष्मिकदेहाद्यारंभकत्वश्रुतेः ज्ञानी च कर्मणीति ज्ञानिनः कर्मविधानस्य कुर्वन्नेवेति ज्ञानिनः कर्मानुष्ठाननियमस्य च प्रमाणस्य कर्मणः शेषपरत्वेनान्यथासिद्धिरूपनिरास इत्यर्थः । ज्ञानशेषस्येति बहुव्रीहिः । किं त्वित्यस्य जैमिनिमतैकदेशाश्चेत्यन्वयः ॥ **इत्यादिनेति** । एतदधिकरणभाष्योक्तवाक्येनेत्यर्थः । एकरूपमानुषाणां नानामतविषयत्वायोगादाह **उत्तममध्यमेति** । ज्ञानं शेषत्वेनोपादाय फलमार्जयति **कर्मेति**। जैमिनिमतमुत्तममानुषविषयम् । 'स्वर्गादयः कर्मणैव नान्येनेत्यपरेविदुरि'त्युक्तं कर्मैव सर्वत्र हेतुः ज्ञानं तु क्वापि मोक्षेतरपुमर्थे हेतुर्नेति मतं मध्यमविषयम् । दृष्टं नैवेति मतं त्वधमविषयमित्यर्थः । विशेषतो देवादीनामित्यस्य फलितार्थोक्तिरपवादैरपोदितं देवादिविषयमिति । विशेषत इत्यस्यापवादविषयभिन्नविषयसंबन्धीत्यर्थः । स विषयः क इत्यतो विवरणं देवादीनामिति । षष्ठ्यर्थः विषयविषयिभाव इति भावः ।

---

या० — **पूर्वपक्ष्युपन्यस्तेति** । जैमिनिमतावलम्बिना पूर्वपक्षिणाऽऽचारदर्शनादित्यादिभिर्नियमाच्चे'त्यन्तैः सूत्रैर्यानि प्रमाणान्युपन्यस्तानि तेषां निरासो भाष्ये स्फुटः । तत्र ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामाः सम्पद्यन्त इति ज्ञानस्यैवाशेषपुरुषार्थसाधने स्वातन्त्र्यमुक्त्वा तथाऽपि यथा यथा कर्म कुरुते तथा तथाऽधिको भवतीति श्रुत्या कर्मणां ज्ञानशेषत्वप्रतिपादनेन पूर्वपक्ष्युपन्यस्तप्रमाणानां कर्मणां ज्ञानशेषत्वप्रतिपादन एव तात्पर्यं न प्राधान्येन पुरुषार्थहेतुत्व इत्यभिप्रायस्य स्पष्टत्वादित्यर्थः । ज्ञानशेषस्येत्यत्र ज्ञानं शेषो यस्येति बहुव्रीहिः ॥ **जैमिनिमतैकदेशा इति** । यद्यप्युदाहृतप्रमाणे जैमिनिमतैकदेशौ द्वावेव प्रतीयेते। तथाऽपि जैमिन्याद्याश्च केचनेति वचनेनोत्तममानुषविषयकजैमिन्यभिप्रेतमताङ्गीकारिणोऽपि केचित्तदेकदेशिनः सन्तीत्यवगमाद्बहुवचनोपपत्तिरिति ज्ञातव्यम् ॥ **मानुषा अप्युत्तमेति** । कर्मणैव सर्वं स्वर्गादिकं भवति ज्ञानेनाधिक्यमिति जैमिनेस्तदेकदेशिनां च केषाञ्चिन्मतमुत्तममानुषविषयं कर्मसाध्येऽदृष्टे स्वर्गादिके पुरुषार्थे ज्ञानमतिशयाधायकं, न तु दृष्ट इति तदेकदेशिमतं मध्यममानुषविषयम् । सर्वत्र कर्मैव हेतुर्ज्ञानस्य न क्वापि मोक्षेतरपुरुषार्थे हेतुत्वमित्यपरं तदेकदेशिमतमधममानुषविषयमित्यर्थः । अत एव यथायोग्यमित्युक्तम् ।

**श्री० — ज्ञानशेषस्येति ।** ज्ञानं शेषो यस्येति बहुव्रीहिः । अदृष्टं स्वर्गादि । दृष्टं पुत्रादि । एवं च ज्ञानं तेषां मोक्षेतरसमस्तपुरुषार्थसाधनं न भवतीत्यर्थः । अपोदितं व्यावृत्तम् । मनुष्येभ्य इति शेषः ।

**च० — कर्मशेषत्वादिति** । तत्पुरुषप्रकृतिको भावप्रत्ययः । ज्ञानशेषस्येति बहुव्रीहिः । **भेदभिन्ना इति** । उत्तमत्वमध्यमत्वाधमत्वरूपभेदकधर्मवन्त इत्यर्थः ।

**सु० — एवं जैमिनिमतविषयमुक्त्वा सूत्रकारमतविषयं दर्शयति** सामान्यमिति ।

**अनु० —** सामान्यं भगवत्प्रोक्तं

**ज्ञानं सकलपुरुषार्थसाधनं भवतीति सामान्यमेव भगवता प्रोक्तम् । न तु पुरुषविशेषनिष्ठं ज्ञानमिति । अतः सामान्यविशेषनियतत्वान्नैतयोर्मतयोर्विरोधः ॥ ननु सामान्येनापि क्वचिद्विशेषेऽवस्थातव्यम् । तदिदमपि क्वावतिष्ठत इत्यत आह** देवादीनामिति ।

देवादीनां विशेषतः ।

**भगवन्मतं विशेषतोऽपवादैरपोदितं देवादिविषयं व्यवतिष्ठते । यद्यप्ययमर्थो लोकत एव सिद्धः । यदपवादविषयं परित्यज्य सामान्यं व्यवतिष्ठत इति । तथाऽपि मन्दप्रबोधनायाचार्यैरभिहितः ।**

---

शे० — **अपवादैरपोदितमिति ।** बाधकैर्मनुष्येभ्यो व्यावृत्तम् । अनेन मूले विशेषशब्दोऽपवादपरः । ल्यब्लोपनिमित्ता पञ्चमी । देवानामिति षष्ठ्यर्थसंबन्धश्च विषयविषयिभाव इत्युक्तं भवति ।

**या० — अपवादैरपोदितमिति ।** अनेन विषयशब्दोऽपवादविषयपरः । ल्यब्लोपनिमित्ता पञ्चमी । देवादीनामिति षष्ठी विषयविषयिभावे । तथा चापवादविषयं परित्यज्य देवादिविषयमित्येतावल्लभ्यत इति ज्ञातव्यम् ।

**सु० — प्रकारान्तरेण मतयोर्विषयभेदं दर्शयति** बलवदिति ।

**अनु० —** बलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यते ॥ ३-४-१ ॥

**अत्रापि सामान्यं भगवत्प्रोक्तमिति वर्तते । भगवता ज्ञानं सकलपुरुषार्थसाधनमिति सामान्येनोक्तम् । जैमिन्यादयस्तु बलवत्प्रतिबन्धककर्मसद्भावे ज्ञानस्य पुरुषार्थासाधनत्वमभिप्रेत्य न स्वतन्त्रज्ञानात्स्वर्गादिप्राप्तिर्भवतीत्युक्तवन्तः । ततश्च सामान्यविशेषविषयत्वान्न विरोधः । तथा चाप्रतिबद्धज्ञानविषयं भगवन्मतं व्यवतिष्ठते । यथोक्तम् । आरब्धस्यानतिक्रमादिति ।**

**ननु नायं जैमिन्यादिमतस्य विषयो वक्तुं शक्यते। बलवद्विरोधसद्भावे कर्मणोऽपि स्वर्गादिसाधनत्वानुपपत्तेः। मैवम्। न हि यज्ज्ञानस्य प्रतिबन्धकं कर्म तत्कर्मणोऽपीत्यस्ति नियमः। लोकेऽन्यथा दर्शनात्। फलप्रतिबन्धककर्मसद्भावे कथमिति चेत्। तदा स्वर्गादिसाधनं कर्मैव नोत्पद्यते। उत्पन्नं वा प्रतिबद्धं तिष्ठतीति को विरोधः। न हि बलवद्विरोधिसद्भावे सर्वत्रैव जैमिन्याद्युक्तिरिष्यत इत्युक्तम्। इयं च व्यवस्था पूर्वव्यवस्थयोपस्कर्तव्या। अन्यथा विरोधापत्तेरिति ॥ ३-४-१ ॥**

शे० — जैमिन्यादिमतविषयोक्तावपि सूत्रकारमतविषयस्यानुक्तत्वात्कथमियं प्रकारान्तरेण विषयभेदोक्तिः स्यादित्यत आह **अत्रापीति**। ननु सामान्येनापि क्वचिद्विशेषेऽवस्थातव्यमेव तदिदं क्वावतिष्ठत इत्यत आह **तथा चेति** ॥ **लोकेऽन्यथेति**। तत्त्वज्ञानप्रतिबन्धकस्य दुरितस्य पुत्रकामेष्ट्यादिकर्मप्रतिबन्धकत्वादर्शनात्। अन्यथा तदपि स्यादिति भावः। ननु न कर्मणो ज्ञानप्रतिबन्धकत्वमुच्यते किन्तु फलप्रतिबन्धकत्वमेव। तथा च कर्मणः फलसाधनमात्रप्रतिबन्धकत्वेन कथं सति तस्मिन्कर्मादेरपि स्वर्गसाधनत्वमित्यभिप्रेत्य शङ्कते **फलेति**। ननु फलप्रतिबन्धकीभूतबलवद्विरोधसद्भावदशायां कर्मणः स्वर्गादिसाधनत्वं गतमेवेति कथं जैमिन्याद्युक्तिरित्यत आह **न हीति** ॥ **सर्वत्रैवेति**। फलप्रतिबन्धककर्मसद्भावकालेऽपीत्यर्थः। किन्तु ज्ञानस्यैव स्वर्गादिसाधनत्वे यत्प्रतिबन्धकं तत्काल एवेति शेषः ॥ **इयं च व्यवस्थेति**। अप्रतिबद्धज्ञानविषयं भगवन्मतं व्यवतिष्ठत इत्युक्तव्यवस्थेत्यर्थः ॥ **पूर्वेति**। ज्ञानं सकलपुरुषार्थसाधनमिति भगवन्मतम्। मानुषेष्वपवादैरपोदितं देवादिविषयं व्यवतिष्ठत इति पुरुषविशेषाश्रयणेनोक्तपूर्वव्यवस्थेत्यर्थः ॥ **उपस्कर्तव्येति**। देवादीनामप्रतिबद्धज्ञानं सकलपुरुषार्थसाधनमित्यप्रतिबद्धज्ञानदेवताविषयं भगवन्मतमित्युपस्कर्तव्यमित्यर्थः। उपस्कारे नियामकमाह **अन्यथेति**। उक्तप्रकारेणोपस्काराभावे ज्ञानमेव सकलपुरुषार्थसाधनमिति भगवन्मतस्य मानुषेष्वपवादैरपोदितत्वादपवादविषयमानुषपरित्यागेन तदतिरिक्तदेवादिमात्रविषयत्वाद्भगवन्मतस्य मानुषविषयत्वाभावः पूर्वव्यवस्थया लब्धः। अप्रतिबद्धज्ञानं पुरुषार्थसाधनमिति भगवन्मतं व्यवतिष्ठत इत्युक्तव्यवस्थया त्वप्रतिबद्धज्ञानत्वरूपसामान्यधर्माक्रान्तदेवतादिविषयत्ववत्तदाक्रान्तमानुषविषयत्वं च लब्धम्। तथा च भगवन्मतस्य मानुषविषयत्वं नास्त्यस्ति चेति प्राप्त्या व्यवस्थाद्वयस्य परस्परविरोधापत्तेरित्यर्थः। देवादीनामप्रतिबद्धं ज्ञानं सकलपुरुषार्थसाधनमित्युपस्कारे तु भगवन्मतस्य मानुषव्यतिरिक्तदेवादिमात्रविषयत्वलाभादविरोधः। ज्ञानं न पुरुषार्थसाधनं किन्तु कर्मैवेति जैमिनिमतं तु प्रतिबद्धज्ञानमानुषविषयम्। प्रतिबन्धकयुक्तदेवताविषयं चाभिमतं न तु मानुषमात्रविषयम्। तथा सति प्रतिबन्धक-

युक्तदेवताविषयत्वोपपत्तेरिति भाष्यटीकया ज्ञानिसामान्यविषयमपि भगवन्मतं जैमिनिमतानुरोधेन देवादिषु व्यवस्थाप्यते। जैमिनिमतं तु ज्ञानवन्मनुष्यविषयकं देवादिष्वपि प्रबलप्रारब्धप्रतिबन्धकवज्ज्ञानिविषयकं चेति सन्न्यायरत्नावल्या च विरोधापातादिति ध्येयम् ॥ ३-४-१ ॥

स० — **लोक इति।** एकसाधनप्रतिबन्धकस्यासाधनान्तराप्रतिबन्धकत्वस्यापि लोके दृष्टत्वादिति भावः। ननु कर्मणः साधनप्रतिबन्धकत्वे एकसाधनप्रतिबन्धकस्यापि साधनान्तराप्रतिबन्धकत्वेपि तदनभ्युपगमात फलप्रतिबन्धकतास्वीकारात् च तत्प्रतिबन्धकस्य फलसाधनमात्रप्रतिबन्धकत्वात् कथं कर्मणोपि स्वर्गादिसाधनत्वमिति शङ्कते **फलेति**। ननु जैमिनिमतभगवन्मतपूर्वोत्तरव्यवस्थायोर्विरोधः। ज्ञानं न पुरुषार्थसाधनं किन्तु कर्मैवेति जैमिनिमतम्। मनुष्यविषयज्ञानमेव पुरुषार्थसाधनकर्मेति भगवन्मतं। तथा च भिन्नविषयत्वान्न मतद्वयस्य विरोध इति पूर्वव्यवस्था। प्रतिबद्धज्ञानं न पुरुषार्थसाधनमिति जैमिनिमतं, अप्रतिबद्धज्ञानं पुरुषार्थसाधनमिति भगवन्मतं इत्युत्तरव्यवस्था। तत्र देवानामिव मनुष्याणामपि अप्रतिबद्धज्ञानत्वे तेनैवाशेषपुरुषार्थापत्या ज्ञानमेव पुरुषार्थसाधनमिति भगवन्मतविषयत्वापत्त्या कर्मणैव साध्यमिति जैमिनिमतस्य मनुष्यविषयकत्वानुपपत्तेः। एवं देवानामपि मनुष्याणामिव प्रतिबद्धज्ञानत्वे प्रतिबद्धं न पुरुषार्थसाधनमिति जैमिनिमतविषयत्वापत्या देवानां ज्ञानमेव पुरुषार्थस्य साधनमिति भगवन्मतविषयत्वानुपपत्तेः। तथाच व्यवस्थाद्वयस्य परस्परविरोध इत्यत आह **इयं चेति**। प्रतिबद्धज्ञानं न पुरुषार्थसाधनमिति जैमिनिमतं अप्रतिबद्धज्ञानं पुरुषार्थसाधनमिति भगवन्मतं इतीयं व्यवस्थेत्यर्थः। **पूर्वव्यवस्थयेति।** मनुष्याणां कर्मैव मोक्षसाधनं न ज्ञानमिति जैमिनिमतं देवानां ज्ञानमेव पुरुषार्थसाधनं न कर्मेति भगवन्मतमिति पूर्वव्यवस्थयेत्यर्थः। मानुषाणां ज्ञानं प्रतिबद्धमेव न पुरुषार्थसाधनं देवानां तु ज्ञानमप्रतिबद्धमेवेति। तदेवं पुरुषार्थसाधनं इत्युपस्कर्तव्येत्यर्थः। अन्यथेत्युक्ताभिप्रायम्। अत्र ब्रूमः। प्रतिबद्धज्ञानं न पुरुषार्थसाधनमिति जैमिनिमतस्य प्रतिबन्धन इत्युक्तवद्देवविषयत्वं मनुष्यविषयत्वं चाभिमतम्। न मनुष्यमात्रविषयत्वम्। तथा सति जैमिनिमतस्य प्रतिबन्धकवद्देवताविषयत्वोपपत्तेश्चेति तत्त्वप्रकाशिकाया ज्ञानिसामान्याविषयमपि भगवन्मतं जैमिनिमतानुरोधेन देवादिषु व्यवस्थाप्यते। जैमिनिमतं तु ज्ञानवन्मनुष्यविषयं देवादिष्वपि प्रबलप्रारब्धप्रतिबन्धकवज्ज्ञानिविषयं चेति सन्न्यायरत्नावल्या च विरोधापातात्। न च मनुष्याणां ज्ञानस्य पुरुषार्थसाधनत्वस्यैवाभावात्प्रतिबद्धत्वकल्पनमयुक्तम्। अन्यथा क्वचिज्ज्ञानेनापि पुरुषार्थप्रसङ्गादिति वाच्यम्। योग्यतारूपसर्वकालानुगतप्रतिबन्धकसद्भावेन कदाचिदपि तदनापत्तेः भगवन्मतं तु देवादिमात्रविषयमिति।

प० — **यथोक्तमिति** । प्राचीनानुव्याख्यान इति योज्यम् ॥ **लोकेऽन्यथादर्शनादिति** । ज्ञानप्रतिबन्धकदुरदृष्टवतोपि प्रहारामनिर्माणादिरूपकर्मफलदर्शनादिति भावः ॥ **सर्वत्रैवेति** । प्रतिबन्धफलस्थलेऽपीत्यर्थः । जैमिन्याद्युक्तिरवश्यं फलमार्जयति कर्मेत्येवं रूपोक्तिः न हीत्यर्थः । नन्वेवं बलवद्विरोधीति वाक्योक्ताप्रतिबद्धज्ञानविषयं भगवन्मतम् । प्रतिबद्धज्ञानविषयं जैमिनिमतं इत्येषा व्यवस्था । जैमिन्युक्तिर्मानुषाणामित्यादिना विरुध्यते । मानुषेष्वप्रतिबद्धज्ञानत्वस्य देवेषु प्रतिबद्धज्ञानत्वस्य च संभवेन तेषामपि यथाक्रमं भगवन्मतजैमिनिमतविषयतापत्तेरित्यत आह **इयं चेति** । बलवदित्यादिनोक्ताव्यवस्था देवादीनामिति प्रागुक्तव्यवस्था परिष्कर्तव्या । देवादीनामित्यनुवृत्त्याऽप्रतिबद्धज्ञानदेवादिविषयं भगवन्मतं प्रतिबद्धज्ञानदेवादिविषया जैमिन्याद्युक्तिरित्येवं देवेष्वेवाप्रतिबद्धप्रतिबद्धविषयतया व्यवस्थाध्येयेत्युक्तं भवति । तेन जैमिनिमतं मानुषपरम् । भगवन्मतं देवपरमिति प्रागुक्तं न विरुध्यते । अन्यथा तु विरोधापत्तेरित्यर्थः ॥ ३ । ४ । १ ॥

या० — **लोकेऽन्यथेति** । प्रतिबन्धकदुरितसद्भावात्तत्त्वज्ञानजन्यसंशयनिवृत्त्यादिरूपफलशून्येन त्रैविद्येन कृतस्य पुत्रकामेष्ट्यादेः कर्मणः फलदर्शनादित्यर्थः ॥ **सर्वत्रैवेति** । फलप्रतिबन्धककर्मसद्भावकालेऽपीत्यर्थः । किन्तु ज्ञानस्यैव स्वर्गादिहेतुत्वे यत्प्रतिबन्धकं तत्काल एवेति शेषः । नन्वेवं यद्यप्रतिबद्धज्ञानमात्रविषयं भगवन्मतं तदाऽप्रतिबद्धज्ञाना मानुषा अपि तन्मतविषयाः स्युः । तथा च जैमिन्युक्तं मानुषामित्युक्तं विरोध इत्यत आह **इयं च व्यवस्थेति** । प्रतिबन्धकसदसद्भावदशामाश्रित्योच्यमानेयं व्यवस्था । भगवन्मतं देवादिविषयं जैमिनिमतं तु मानुषविषयमिति पुरुषविशेषमाश्रित्य या पूर्वमुक्ता व्यवस्था तया व्यवस्थाया कर्तव्येत्यर्थः । यथा चाप्रतिबद्धज्ञाना मानुषव्यतिरिक्ता देवादय एव भगवन्मत विषयास्तादृशा मानुषास्तु जैमिनिमतविषया एवेति पूर्ववदत्रापि विवक्षितमतो नोक्तविरोध इति भावः । इयांस्तु विशेषः । अस्यां व्यवस्थायां प्रतिबद्धज्ञाना देवादयोऽपि जैमिनिमतविषयतया लभ्यन्त इति । उक्तं हि तत्त्वप्रकाशिकायाम् । प्रतिबन्धकयुक्तदेवताविषयत्वोपपत्तेश्चेति । नन्वेवं प्रतिबद्धज्ञानानां मानुषाणामुक्तमतद्वयविषयता न प्राप्तेतीति चेत् । सत्यम् । तेषां 'स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुरि'ति स्मृत्युक्तजैमिनिमतैकदेशविषयत्वोपपत्तेः । अत एवैतत्सूचनाय मूले जैमिन्याद्युक्तिरिष्यत इत्यादिपदम् ॥ ३-४-१ ॥

श्री० — **कर्मैवेति** । अदृष्टमेवेत्यर्थः । ननु फलप्राप्तिप्रतिबन्धकीभूतबलवद्विरोधिसद्भावदशायां कर्मणः स्वर्गादिफलसाधनत्वं गतमेवेति कथं जैमिन्याद्युक्तिरित्यत आह **न हीति** ॥ **सर्वत्रैवेति** । सर्वकालेऽपीत्यर्थः । फलप्रतिबन्धककर्मसद्भावकालेऽपीति यावत् ॥ ३-४-१ ॥

॥ इति पुरुषार्थाधिकरणम् ॥

## ॥ अथ कामचाराधिकरणम् ॥

सु० — ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ **अत्राधिकरणे ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषसद्भावः समर्थ्यते । तथा चाज्ञानिसामान्यसमर्थनार्थस्यास्य न ज्ञानसामर्थ्यप्रतिपादनार्थेऽस्मिन्पादेऽन्तर्भावः संभवतीत्यतोऽधिकरणस्य तात्पर्यमाह** विकर्मेति ।

अनु० — ॐ **स्तुतयेऽनुमतिर्वा** ॐ ॥

विकर्मलेपो नैवास्ति सम्यग्दृष्टिमतां क्वचित् ।

**यद्यप्यत्र मुखतो ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषसद्भावः प्रतिपाद्यते । तथाऽपि सम्यग्दृष्टिमतां क्वचिदपि विकर्मलेपो वक्ष्यमाणरूपो नैवास्तीत्यस्यार्थस्य फलतो लाभाद्युक्तोऽस्यान्तर्भावः । न ह्यज्ञानिनां विकर्मलेपाभावोऽस्तीति भावः । यथोक्तम्** 'कामकारेण चैके' इति । **विकर्मलेपाभावे कथमसत्प्रवृत्त्या विशेषसद्भावोऽङ्गीक्रियत इति चेत् । आनन्दादिगुणहानेर्विकर्मकर्तुर्विशेषस्य स्वीकारात् । अलेपस्तु ततोऽन्य इति वक्ष्यते ।**

**शे० — ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ अज्ञानिसामान्येति** । अज्ञानिसाम्येत्यर्थः । अज्ञानिनामपि सदसत्प्रवृत्तिभ्यां विशेषसद्भावादिति भावः ॥ **वक्ष्यमाणरूप इति** । पापफलीभूतनरकप्राप्तिलक्षण इत्यर्थः ॥ **फलतो लाभादिति** । ज्ञानस्यासत्प्रवृत्तावपि मोक्षसाधनत्वनियमसमर्थनेन लाभादित्यर्थः । वक्ष्यमाणरूपविकर्मलेपाभावे ज्ञानिनो नियामकमाह **यथोक्तमिति** । ननु विकर्मकर्तुरानन्दादिगुणहानिरूपविशेषाभ्युपगमे विकर्मलेपो नैवास्तीति तदभावोक्तिविरोध इत्यत आह **अलेपस्त्विति** । तत आनन्दादिगुणहानेरन्योऽन्यप्रतियोगिकः पापफलीभूतनरकप्राप्तिरूपलेपप्रतियोगिक इति 'ज्ञानोत्तरस्य पापस्य चतुर्थे लेप उच्यते' इत्यादिना वक्ष्यत इत्यर्थः ।

**स० — अज्ञानिसामान्येति** । अज्ञानिनामपि सदसत्प्रवृत्तिभ्यां विशेषसद्भावादिति भावः । **वक्ष्यमाण इति** । पापफलीभूतनरकप्राप्तिलक्षण इत्यर्थः । ननु विकर्मकर्तुरानंदादिगुणहानिरूपविशेषाभ्युपगमे विकर्मलेपो नास्तीत्येतद्विरोधः स्यात् तत्रालेपस्योक्तत्वादित्यत आह **लेपस्त्विति** । तत आनन्दादिहानेरन्य अन्यप्रतियोगिकः पापफलीभूतनरकप्राप्तिरूपलेपप्रतियोगिक इति ज्ञानोत्तरस्य पापस्य चतुर्थे लेप उच्यत इत्यादिना लक्ष्यत इत्यर्थः ।

**प० स्तुतयेऽनुमतिर्वा** । भाष्य एवाधिकरणार्थस्य व्यक्तत्वादिह पुनस्तदुक्तौ किं बीजमित्यतस्तत्रोक्तार्थानुवादपूर्वं तत्रानुपपत्तिं दर्शयति **अत्रेति** ॥ **अज्ञानिसामान्येति** । अज्ञानिसाधारण्यसमर्थनादित्यर्थः। शङ्कोत्तरपरतया व्याचष्टे **यद्यपीति ॥ अत्रेति** । अधिकरण इत्यर्थः ॥ **वक्ष्यमाणरूप इति** । क्लृप्तस्य तु कथंचनेत्यादिना क्लृप्तन्हासाशुचित्वमोक्षप्रतिबन्धकत्वादिरूपो वक्ष्यमाण इत्यर्थः ॥ **यथोक्तमिति ।**

ज्ञानिनो विकर्मलेपो नेत्येतत् यथेष्टाचाररूपकामकारेणापि मोक्षमेके शाखिनः पठन्तीति सूत्रकृतोक्त मित्यर्थः ॥ **स्वीकारादिति** । एतेन मूले गुणहानिश्चास्तीत्येवमर्थतया पूर्वेणाप्यन्वेतीत्युक्तं भवति ॥ **वक्ष्यत इति** । उत्तरवाक्ये क्लृप्तह्रासाशुचित्वमोक्षाभावादिरूपो लेपो वक्ष्यत इत्यर्थः ।

या० — ॐ **स्तुतयेऽनुमतिर्वा** ॐ ॥ **अज्ञानिसामान्येति** । अज्ञानिसाधारण्येत्यर्थः । **वक्ष्यमाणरूप इति** । 'अत्र ज्ञानफलस्यैव मुक्तेर्नियततोच्यत' इत्यत्रेति शेषः । तत्र ज्ञानिकृतपापानां ज्ञानफलमोक्षविघातकत्वरूपो लेपो निषेध्यतयाऽभिप्रेत इति सुधायामेव स्पष्टम् ॥ **फलत इति** ॥ ज्ञानस्यासत्प्रवृत्तावपि मोक्षसाधनत्वं नियतमिति समर्थनमेतदधिकरणस्य फलम् । तेन चोक्तरूपो लेपो नैवास्तीति लभ्यत इत्यर्थः । फलतो लाभादित्युक्तं सूत्रसम्मत्या दर्शयति **यथोक्तमिति** । अत्र हि सूत्रे ज्ञानिनो यथेष्टाचारेणापि मोक्षमेके शाखिनः पठन्तीत्युक्त्या ज्ञानस्यासत्प्रवृत्तावपि न मोक्ष-साधनत्वप्रतिबन्धरूपो लेप इत्येषोऽर्थो लभ्यत इत्यभिप्रेतमिति भावः । लेपस्त्वित्यस्यापि पूर्व-वद्व्याख्यानम् ।

श्री० — ॐ **स्तुतयेऽनुमतिर्वा** ॐ ॥ **अज्ञानिसामान्येनेति** । अज्ञानिनोऽपि सदसत्प्रति-वृत्तिभ्यां विशेषसद्भावेन ज्ञानिन एवासाधारणत्वाभावादिति भावः ॥ **वक्ष्यमाणेति** । अशुचित्वादि । रूपेत्यर्थः ।

**सु० — किं सर्वेषामपि ज्ञानिनां विकर्मसंभवो गुणहानिश्चास्तीत्यपेक्षायामाह** गुणहा-निश्चेति ।

**अनु० —** गुणहानिश्च नैवास्ति ब्रह्मणस्त्वविकर्मतः ॥
देवानामपि न प्रायः

**ब्रह्मणस्तु सर्वथा विकर्म नास्ति । 'न भारती मेऽङ्ग मृषोपलक्ष्यत' इत्यादिवचनात् । अविकर्मतो गुणहानिश्च नैवास्ति । हिरण्यगर्भेतरदेवानामपि प्रायो विकर्मगुणहानी न स्तः । ईषद्विकर्मतन्निमित्ता गुणहानिश्चास्तीत्यर्थः ।**

**यदि देवानां विकर्म संभवति तेन चानन्दादिगुणहानिः स्यात्तदाऽयमस्मादेतावता न्यूनोऽस्मादेतावताऽधिकोऽनेन समान इति शास्त्रीयनियमो भज्येत । तथा च शास्त्रस्याप्रामाण्यं स्यात् । न च तदेव प्रतियोगिपरम्परा विकृतिः प्रमाणवतीत्यत आह** क्लृप्तस्येति ।

क्लृप्तस्य तु कथञ्चन ॥

**हानिर्नेति वर्तते । यस्य देवस्य यावद् गुणत्वं क्लृप्तं तस्य तु कथञ्चन केनापि विकर्मणा हानिर्न भवतीत्यर्थः ।**

**शे०— इत्यादीति** । आदिपदेन 'न कर्हिचिन्मे मनसो वृथा गतिः । न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिरि'ति वाक्यशेषपरिग्रहः ॥ **वचनादिति** । भागवते (नारदं प्रति) हिरण्यगर्भवचनादित्यर्थः । माऽस्त्वयं नियम इत्यत आह **तथा चेति ॥ शास्त्रस्येति** । तारतम्यशास्त्रस्येत्यर्थः । तस्योक्तनियमपरत्वादिति भावः । ननु भवेदुक्तनियमभङ्गेन तत्प्रतिपादकतारतम्यशास्त्रस्याप्रामाण्यं यदि कस्यचिदेव विकर्मतन्निमित्तकगुणहानी स्याताम् । न चैतदस्ति । यदा हि कश्चिदेको देवो विकर्म करोति तन्निमित्ता च तस्यानन्दादिगुणहानिर्भवति तदैवोक्ततारतम्यगणनायां प्रविष्टानां तदधमानां तत्समानानां तदुत्तमानां च सर्वेषामपि विकर्मतन्निमित्तकगुणहानियमभङ्गाभावात्तत्कथं नियमशास्त्रस्याप्रामाण्यं स्यादित्यतो भवेदेतदेवं यदि यदैकः कश्चिद्देवो विकर्म करोति तन्निमित्तकगुणहानिभाक् च भवति तदैव तारतम्यगणनाविष्टास्तदधमादयोऽपि विकर्म कुर्वन्ति तन्निमित्तगुणहानिभाजश्च भवन्तीत्येवं प्रतियोगिपरम्परा विकृतिः प्रमाणवती स्यान्न चैतदस्ति । ततश्च यस्य तन्निमित्तकगुणहानिभाक्त्वेऽप्यन्येषां विकर्मशून्यानां निर्निमित्तानन्दादिगुणहान्यनुपपत्त्योक्तनियमभङ्गेन तत्परस्य तारतम्यशास्त्रस्याप्रामाण्यमवर्जनीयमेवेत्याशयेनाह **न चेति** । एकस्य द्वयोर्वा विकर्मतन्निमित्तकगुणहानिसंभावनायामपि न सर्वेषां तत्संभावनाऽपीति भावेन परम्परोक्तिः ।

**स०— इत्यादिवचनादिति** । न भारती मेऽङ्ग मृषोपलक्ष्यतेन कर्हिचिन्मे मनसो मृषा गतिः । न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिरि'त्यादि हिरण्यगर्भवचनाद्भागवत इत्यर्थः । ननु यदा केनचित्पुरुषेण विकर्मकृतं तन्निमित्ताच तस्य गुणहानिर्जाता । तदा तत्पूर्वे तदुत्तरं च सर्वेपि विकर्म कुर्वन्त्येव तन्निमित्तगुणहानिभाजापि भवन्तीति कथं तारतम्यानुपपत्तिः ततश्च न तारतम्यप्रतिपादकशास्त्रस्य प्रामाण्यमित्यत आह **न च तदेवेति** । एकस्य द्वयोर्वा कथञ्चित्संभवेपि न सर्वेषामित्यभिप्रायेण परोक्तिः ।

**प०— भारतीति** । वागित्यर्थः ॥ **मृषेति** । अनृतरूपेत्यर्थः ॥ **इति वचनादिति** । 'न भारती मेऽङ्गमृषोपलक्ष्यते न कर्हिचिन्मे मनसो मृषा गतिः । न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिरि'ति द्वितीयस्कन्धषष्ठाध्यायवचनादित्यर्थः । प्रायःपदार्थमाह **ईषदिति ॥ शास्त्रीयनियम इति** । इयदामननादित्यत्र प्राक् श्रुतिस्मृतिसूत्रोक्तनियम इत्यर्थः ॥ **प्रतियोगिपरम्पराविकृतिरिति** । यस्य विकर्मकृतसुखादिह्रासः तदवराणां तदुत्तमानां च तदपेक्षया किंचिन्न्यूनानन्दादिमत्त्वेन विकृतिः परिणाम इत्यर्थः । तथात्वे हि शास्त्रीयनियमो न भग्नः स्यादिति भावः ।

**या०— न भारतीति** । 'न भारती मेऽङ्ग मृषोपलक्ष्यते न कर्हिचिन्मे मनसो मृषा गतिः । न मे हृषीकाणि पतन्त्यसत्पथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिरि'ति भागवतवचनादित्यर्थः । न देवानां

विकर्मणाऽऽनन्दादिगुणहानावपि शास्त्रीयनियमभङ्गः । यस्य देवस्य येन विकर्मणाऽऽनन्दादिहानिस्तेनैव विकर्मणा तदैव तदधमानां तदुत्तमानां च तदीयावशिष्टानन्दाद्यपेक्षया शतांशोनाधिकानन्दादिपरम्परायाः विकृतिर्भवतीत्यङ्गीकारादित्यत आह **न च तदैवेति** । यस्मिन्देवे विकर्मसम्भवस्तन्निष्ठानन्दादितारतम्यप्रतियोगित्वं तदुत्तमाधमानन्दादेः' तन्निष्ठतारतम्यप्रतियोगित्वं तदुत्तमाधमानन्दादेरित्येवं तत्तन्निष्ठतारतम्यप्रतियोगित्वमानन्दादिपरम्पराया इति द्रष्टव्यम् ।

**श्री०— अविकर्मत इति** । विकर्मराहित्यादित्यर्थः ।। **शास्त्रस्येति** । आनन्दतारतम्यप्रतिपादकस्य ते ये शतमित्यादिशास्त्रस्येत्यर्थः । क्षितिपापेक्षया मनुष्यगन्धर्वः शतानन्दस्तदपेक्षया देवगन्धर्वः शतानन्दः । एवं सति देवगन्धर्वापेक्षया क्षितिपः शतद्वयन्यूनानन्द इत्यस्ति । तथा च यदा मनुष्यगन्धर्वस्य विकर्मकरणेनानन्दह्रासो जातः । पञ्चाशदानन्दा जाता इति यावत् । तदा क्षितिपापेक्षया शतगुणानन्दत्वं तदपेक्षया देवगन्धर्वाणां शतोद्रिक्तानन्दत्वमिति नियमो भग्न इति भावः । ननु मनुष्यगन्धर्वानन्दस्य ह्रासेन पञ्चाशदानन्दत्वे तदानीं प्रतियोगिभूतक्षितिपानन्दानां तादृशानन्दतारतम्यानुकूल एवानन्दविकारो जातः । एवं देवगन्धर्वाणामपि शतगुणानन्दत्वं विहाय तदनुकूलाधिक्यमेव विकृतमित्युच्यत इति चेन्न । अप्रामाणिकत्वादित्याह **न च तदैवेति** ।

**च०— स्तुतयेऽनुमतिर्वा ।। यावद्गुणत्वमिति** । बहुव्रीहेर्भावप्रत्ययः ।

**सु०— तर्हि देवानां विकर्मणेषद्गुणहानिर्भवतीत्यस्य कोऽर्थ इत्यत आह** प्राप्तेति ।

अनु० — प्राप्तह्रासो भवेत्क्वापि महता तु विकर्मणा ।।

**प्राप्तशब्देन प्रसक्तमुच्यते । देवानामल्पेन विकर्मणा न किञ्चिद्धीयते । क्वापि प्राप्तेन महता तु विकर्मणा प्राप्तस्यैव गुणस्य ह्रासो भवेत् । स्वयोग्यपरिपूर्तये यावत्साधनमनुष्ठेयं ततोऽतिरिक्तेन साधनेनानुष्ठितेन यदानन्दादिकं प्रसक्तं तस्याभावो भवेत् ।**

**यदि स्वयोग्यपरिपूर्त्यर्थं साधनातिरिक्तमपि साधनं देवैरनुष्ठीयते तदा तारतम्यनियमो भज्येत । यो हि देवोऽतिरिक्तसाधनमनुष्ठाय न महद्विकर्म करोति तस्योत्पत्तव्यमेव तेन गुणेन । ईश्वराराधनस्य वैफल्यानुपपत्तेः । न च तदैवान्येषां विक्रियायां प्रमाणमस्ति । ततश्च शास्त्रस्याप्रामाण्यमित्यत आह** तथाऽपीति ।

तथाऽपि तत्क्लृप्तमेव

**यद्यपि देवैः स्वयोग्यपरिपूर्त्यर्थं साधनातिरिक्तमपि साधनमनुष्ठीयते । तथाऽपि तेषां तद्विघातकं तद्विकर्म महत्क्लृप्तं नियतमेव । 'स्वाधिकाराधिको यत्नः कथञ्चिन्नोपपद्यते । कथञ्चिदधिके यत्ने दोषः कश्चित्समापतेदिति' वचनात् ।**

**'फलमस्य तु कथञ्चन'** 'तथाऽपि तत्**फलप्रमेवे**'त्युक्तम् । **द्वयस्यापि साध्यमाह** तस्मादिति ।

तस्मान्न नियमोज्झितिः ॥

**फलप्रहान्यभावादधिकानुष्ठाने विकर्मपत्तिनियमाच्च । श्रौततारतम्यनियमभङ्गो नास्ती-त्यर्थः ।**

**उक्तार्थमुदाहरति** चन्द्रेति ।

चन्द्रसुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात् ॥
प्राप्तहानिरभून्नैव फलप्रहानिः कथञ्चन ॥

**चशब्दो यथेत्यर्थे । एवशब्दस्य प्राप्तहानिरेवेत्यन्वयः ।**

**शे०**— ननु विकर्मणा प्राप्तह्रासो नाभ्युपगन्तुं शक्यते । तथा सत्यधिकानन्दादिप्राप्त्योक्त-नियमभङ्गेन नियमपरशास्त्रस्याप्रामाण्यापातादित्यतोऽत्र प्राप्तशब्दस्य प्रसक्तमात्रपरत्वेन प्राप्तपरत्वाभावान्न नियमभङ्ग इत्यभिप्रेत्य प्राप्तपदं तत्परतया व्याचष्टे **प्राप्तशब्देनेति** । मूले महतेति विशेषणवैयर्थ्यमा-शङ्क्य तत्सूचितमर्थमाह **देवानामिति** । ननु कथमानन्दादेरप्राप्तस्यैव प्रसक्तता येन तदभावस्य विकर्मसाध्यता स्यादित्यतः प्रसङ्गकोक्त्या तस्य प्रसक्ततामुपपादयन्नेव तदभावस्य विकर्मसाध्यतामाह **स्वयोग्येति** । यद्यप्यत्र फलस्य प्रसक्तत्वेऽप्यनुत्पन्नत्वान्न तद्विनाशः संभवति । तथाऽप्यधिकसाधना-नुष्ठानजनितपुण्यनाशस्यैव प्राप्तह्रासशब्देन विवक्षितत्वेन फलनाशस्य तत्त्वेनाविवक्षितत्वाददोष इति भावः । ननु च यदा कश्चिदेको देवः स्वयोग्यपरिपूर्त्यर्थं साधनातिरिक्तसाधनमनुष्ठाय न महद्विकर्म करोति तदा तदधमास्तत्समास्तदुत्तमाश्च स्वस्वयोग्यपरिपूर्त्यर्थं साधनातिरिक्तसाधनमनुष्ठाय न महद्विकर्म कुर्वन्ति । ततश्च तद्वदेव सर्वेषामप्येषां तत्तद्गुणोत्पादान्न तारतम्यभङ्ग इत्यतो भवेदेवं यदि तारतम्य-गणनाकोटिनिविष्टानां सर्वेषामपि स्वयोग्यपरिपूर्त्यर्थं साधनातिरिक्तसाधनानुष्ठानमस्तीत्यत्र किञ्चित्प्रमाणं स्यात् । न चैतदस्ति । ततश्च कस्यचिदेव तादृशसाधनानुष्ठानमहद्विकर्माकरणाभ्यां तद्गुणोत्पत्ताव-प्यन्येषां निर्निमित्ततत्तद्गुणोत्पत्त्यनुपपत्त्योक्तनियमभङ्गोऽवर्जनीय एवेत्याशयेनाह **न च तदैवेति** । **विक्रियायां** विशिष्टक्रियायाम् । स्वयोग्यपरिपूर्त्यर्थं सत्कर्मातिरिक्तविशिष्टकर्मणीत्यर्थः । क्वचिन्न च तदैव विक्रियायामित्येव पाठः । तत्रायमर्थः । ननु यो हि देवोऽतिरिक्तं साधनमनुष्ठाय न महद्विकर्म करोतीत्य-युक्तम् । तेन महद्विकर्माकरणनियमादित्यत आह **न चेति । विक्रियायां** विरुद्धक्रियायामित्यर्थः ।

**प्राप्तहानिरेवेति** । स्वोत्तमबृहस्पतिभार्यापरिग्रहदोषेण चन्द्रस्य राजसूयेन फलप्रादधिकं यदार्जितं तस्य हानिरभवत् । स्वोत्तमदेवेन्द्रांशवालिभार्योपभोगदोषेण सुग्रीवस्यापि सूर्यांशस्य रामसेवातिशयेन फलप्रादधिकं यदार्जितं तस्यैव हानिरभवदित्यर्थः ।

**स०**— ननु स्वयोग्यतापरिपूर्त्या साधनातिरिक्तसाधनानुष्ठानेन विकर्मानुष्ठानेन चाधिकं फलमुत्पन्नं तदान्येपि सर्वकर्मानुष्ठानेन विकर्मानुष्ठानेन चाधिकफलभाजो भवन्त्येवेति न । तारतम्यानुपपत्तिरित्यत आह **न च तदेवान्येषां क्रियायामिति** । विशिष्टक्रियायामित्यर्थः । तथा च तारतम्यानुपपत्तिरेवेत्यर्थः । क्वचिन्न च तदेव क्रियायामित्येव पाठः । तत्रायमर्थः । ननु यो हि देवोऽतिरिक्तं साधनमनुष्ठाय न महद्विकर्म करोतीत्ययुक्तम् । तेन महद्विकर्मकरणनियमादित्यतस्तत्र मानाभाव इत्याह **न चेति** । विक्रियायां विरुद्धक्रियायामित्यर्थः ॥ **प्राप्तहानिरिति** । क्लृप्तादधिकं यदार्जितं चन्द्रस्य राजसूयेन तस्य संभवत्स्वोत्तमबृहस्पतिभार्यापरिग्रहदोषेण स्वोत्तमदेवेन्द्रांशवालिभार्योपभोगदोषेण सुग्रीवस्य सूर्यांशस्य रामसेवातिशयेन क्लृप्तादधिकं यदार्जितं तस्य हानिरभवदिति भावः ।

**प०**— **अन्येषां विक्रियायामिति** । अधिकानन्दादिमत्त्वेन परिणाम इत्यर्थः ॥ **शास्त्रस्येति** । तारतम्योक्तिपरश्रुतिरूपस्येत्यर्थः ॥ **इति वचनादिति** । यावदधिकारमित्यत्र न्यायविवरणोक्तादिति ज्ञेयम् ।

**या०**— नन्वधिकसाधनेनाधिकानन्दादिप्राप्तौ शास्त्रीयनियमभङ्गप्रसङ्ग इत्यत आह **प्राप्तशब्देनेति** ॥ **ह्रासो भवेदिति** । अत्र ह्रासशब्देनाधिकसाधनानुष्ठानजनितपुण्यनाश एव विवक्षितो न फलनाशः । फलस्य प्रसक्तत्वेऽप्यनुत्पन्नत्वादिति ज्ञातव्यम् । ननु नेश्वराराधनस्य वैफल्यम् । तेन तस्याधिकानन्दोत्पत्त्यङ्गीकारात् । न च शास्त्रीयनियमभङ्गः । तदीयेनैवेश्वराराधनेन तदैव तदन्येषामुत्तमानामधमानां चानन्दादीनां तत्तच्छतांशाधिकत्वादिना विक्रियाङ्गीकारादित्यत आह **न च तदैवेति** ।

**श्री०**— **तेन गुणेनेति** । अधिकानन्देनेत्यर्थः ॥ **विक्रियायामिति** । अधिकानन्दतारतम्यानुकूलाधिकानन्दविकारवत्तायामित्यर्थः ।

**सु०— देवानां विकर्मणा प्रसक्तहानिरेव भवति न तु क्लृप्तहानिरित्युक्तम् । तदतिरिक्तानां तु कथमित्यपेक्षायामाह** ह्रासोऽपीति ।

**अनु०**— ह्रासोऽपि मानुषादीनामानन्दस्य विकर्मणा ॥
भवेन्मुक्तौ विशेषेण स्वोच्चानामपराधतः ॥

**क्लृप्तस्यापीत्यपेरर्थः । आनन्दस्येत्युपलक्षणम् । ह्रासोना मानभिव्यक्तिः । सा चेश्वरेच्छाधीना । प्रकृत्याद्यावरणानामपास्तत्वात् । विकर्मस्वप्यधिकं निर्धारयन्नाह** विशेषेणेति । **स्वोत्तमविषयापराधाद्विशेषेणानन्दह्रासो भवति** ।

**शे०**— ननु मानुषादीनामानन्दस्येव ज्ञानादिगुणानामपि ह्रासस्य विकर्मसाध्यत्वेनानन्दादेरित्येव वक्तव्यत्वादानन्दस्येत्यानन्दमात्रग्रहणानुपपत्तिरित्यतोऽत्रानन्दपदस्य ज्ञानादिधर्मोपलक्षणतयाऽऽनन्दमात्रपरत्वाभावान्नानुपपत्तिरित्याशयेनाह **आनन्दस्येतीति** । शिष्टं स्पष्टम् ।

**म०**— विशेषग्रहणेन ज्ञानादेर्विकर्मणा ह्रासो न भवतीति प्रतीतिनिरासायाह **आनन्दस्येति** ।

**श्री०**— **इच्छाधीनेति** । ईश्वरेच्छारूपावरणाधीनेत्यर्थः ।

**सु०**— ॐ कामकारेण चैके ॐ ॥ **स्यादेतत् । अत्राधिकरणे कामकारेण चैक इति सूत्रेण ज्ञानोत्तरकालं कृतेन विकर्मणा ज्ञानिनो लेपाभावोऽभिधीयते । तथोपमर्दं चेति सूत्रेण ज्ञानात्पूर्वेषां कर्मणां ज्ञानेन विनाशः । एतदुभयं चतुर्थेऽध्याये** तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशाविति **सूत्रेणोच्यते । तत्कथं न पुनरुक्तिदोष इत्यतस्तावत्कामकारेण चैक** इत्यस्य **पुनरुक्तिदोषं परिहरति** ज्ञानोत्तरस्येति ।

**अनु०**— ॐ **कामकारेण चैके** ॐ ॥

ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते ॥

**चतुर्थेऽध्याये उत्तराघस्याश्लेष इत्यनेन ज्ञानोत्तरस्य पापस्यालेपस्तत्फलनरकादिप्राप्त्यभाव उच्यते । विषयान्तरमाह** अशुचित्वादिकं चेति ।

अशुचित्वादिकं चास्य न भवेदिति तत्फलम् ॥

**अस्य ज्ञानिनस्तत्फलं ज्ञानोत्तरपापफलमशुचित्वासंभाष्यत्वादिकं न भवेदिति चोत्तराघस्याश्लेष इत्यनेनोच्यते । ततः किमित्यत आह** अत्रेति ।

अत्र ज्ञानफलस्यैव मुक्तेर्नियततोच्यते ॥

**अत्र तृतीयेऽध्याये कामकारेण चैक इत्यनेन ज्ञानफलस्य मुक्तेर्नियतता । ज्ञानिना कृतानि पापानि ज्ञानफलं मोक्षं न विहन्तुमलमित्येषोऽर्थ उच्यते । अतो न पुनरुक्तिदोष इति ।**

**सु०** — ॐ उपमर्दं च ॐ ॥ **द्वितीयां पुनरुक्तिं परिहर्तुमुपमर्दं चेत्यस्य प्रतिपाद्यमाह** प्रारब्धेति ।

**अनु०** — ॐ उपमर्दं च ॐ ॥

प्रारब्धकर्मजस्यैव विषभक्षान्मृतेरिव ॥

प्राप्तस्याप्यनिवर्त्यस्य किञ्चिद्भुक्तस्य संविदा ॥
उपमर्द इह प्रोक्तो

चतुर्थेऽध्याये पूर्वाघस्य स्वरूपविनाशः कथ्यते । अनारब्धकार्ये एवेति वचनात् । इह तृतीयेऽध्याये तूपमर्दं चेति सूत्रेण प्रारब्धकर्मजस्य फलस्यैव संविदोपमर्दः प्रोक्तः । न तु प्रारब्धस्याप्रारब्धस्य वा कर्मणो नाश इति न पुनरुक्तिदोषः । नन्वत्र प्रारब्धकर्मण इत्येव कस्मान्नोक्तं किं तज्जनितफलग्रहणेन । नैवं शङ्क्यम् । 'भोगेन त्वितरे' इति प्रारब्धस्य कर्मणो भोगविनाश्यत्वोक्तेः । संविद्विनाश्यत्वाङ्गीकारे तद्विरोधात् । ईषद्विनाशस्तु फलद्वारेणैव । कर्मणां निर्भागत्वात् । ननु च फलोपमर्दे कर्मोपमर्द एवोक्तोऽर्थतः स्यात् । तथा च भोगेनेति सूत्रविरोधस्तदवस्थ इत्यत उक्तं किञ्चिद् भुक्तस्येति । न सर्वस्य प्रारब्धकर्मफलस्योपमर्दः संविदोच्यते । किन्नाम किञ्चिद्भुक्तस्यातो न सूत्रविरोधः । कर्माणि ज्ञानिनं न तावत्स्वफलं भोजयन्ति यावदज्ञानिनमिति भावः । यथोक्तम् । 'न वै जनो जातु कथञ्चनाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिमि'ति । ननु 'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभमि'ति प्रारब्धकर्मफलोपभोगस्यापरिहार्यत्वस्मरणात्कथमेतदित्यत उक्तम् अनिवर्त्यस्य प्राप्तस्यापीति । अपरिहार्यतया प्रसक्तस्यापीत्यर्थः । अनिवर्त्यतया प्रसक्तस्यापीत्यर्थः । अनिवर्त्यस्यापीत्येतावत्येव वक्तव्ये प्राप्तस्येत्यनेन विरोधपरिहारं सूचयति । अत्र दृष्टान्तमाह विषेति ।

यथा विषभक्षणान्मृतिरनिवर्त्यतया प्रसक्तैव न पुनरतिवर्त्यैव । विषहरमन्त्रौषधादिना निवृत्तेर्दर्शनात् । तथा प्रारब्धकर्मफलभोगोऽप्यनिवर्त्यतया प्रसक्त एव न त्वनिवर्त्य एव । ज्ञानादिना निवृत्तेरुपपादयिष्यमाणत्वात् । तथा च विषभक्षणान्मरणमवश्यं भावीति वचनवदवश्यमनुभोक्तव्यमिति वचनस्याप्यर्थोऽवगन्तव्यः । उत्सर्गतः प्रारब्धकर्मफलानि भोक्तव्यान्येव । अपवादेन तूपमृद्यन्त इति ।

शे० — ॐ उपमर्दं च ॐ ॥ ननु 'आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयो'रित्यादिनाऽल्पस्य प्रारब्धकर्मणोऽपि संविद्विनाश्यत्वकथनात्कथं भोगैकनाशाश्यत्वं तस्येत्यत आह **ईषदिति** । एकदेशतो विनाश एव कस्मान्नोच्यत इत्यत आह **कर्मणामिति** । ननु फलोपमर्दो नाम फलस्य नाशः । न चासौ युक्तः । अनुत्पन्नस्य फलस्य नाशासंभवात् । किन्तु तदनुत्पाद एव । स च तत्कारणीभूतकर्मनाशाभावे न संभवतीति कर्मनाशेनैव वाच्यः । तथा च कर्मणो ज्ञाननाश्यत्वावश्यम्भावाद्भोगेनेति सूत्रविरोधस्तदवस्थ एवेत्याशयेन शङ्कते **ननु चेति** । स्यादेवं

यदि **फलोपमर्दो** नाम फलानुत्पादो भवेन्न चैवम् । किं तर्हि भोगाल्पत्वमेव तदुपमर्दः । अल्प एव च फलभोगः सर्वकर्मविनाशको न तु ज्ञानमिति न सूत्रविरोध इत्याह **नेति** । उक्तमेव विवृणोति **कर्माणीति** । ज्ञानादिनेत्यादिपदेन प्रायश्चित्तपरिग्रहः ॥ **उपपादयिष्यमाणत्वादिति** । फलह्रासस्तु विद्यत इत्यादिनेति शेषः । वचनार्थमेव सूचयति **उत्सर्गत इति** ।

स० — नन्वारब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोरित्यादिना प्रारब्धकर्मणोऽपि संविद्विनाश्यत्वप्रतिपादनात्कथं भोगैकनाश्यत्वं तस्येत्यत आह **ईषदिति** । उपपादयिष्यमाणत्वात् । **अपोदितः** असंकुचितः । **ब्रह्महत्येति** । ब्रह्महत्यारूपं यत्कर्म तस्य योऽयं विपाकः फलं क्षयरोगादीति यावत् तन्निवृत्त्यर्थ इत्यर्थः । सर्वथा ईषदपीत्यर्थः । अनुपमर्दः संविन्नाश्यत्वाभावलक्षणः ।

प० — **अनारब्धकार्ये एवेति वचनादिति** । चतुर्थाद्यपादे सूत्रकारवचनादित्यर्थः ॥ **भोगविनाश्यत्वोक्तेरिति** । चतुर्थाद्यपादे सूत्रकृतोक्तिरित्यर्थः ॥ **यथोक्तमिति** । प्रथमस्कन्धे ॥ **ज्ञानादिनेति** । वक्ष्यमाणदिशा प्रायश्चित्तमादिपदार्थः ॥ **उपपादयिष्यमाणत्वादिति** । फलह्रासस्तु विद्यत इत्यादिनोत्तरग्रन्थे इति भावः ।

---

या० — ॐ **उपमर्दं च** ॐ ॥ ननु 'आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोरि'त्यादिना प्रारब्धकर्मणोऽपि संविद्विनाश्यत्वस्योक्तत्वात्कथमेतदित्यत आह **ईषद्विनाशस्त्विति** । ज्ञानादिनेत्यत्रादिपदेन प्रायश्चित्तसंग्रहः ॥ **उपपादयिष्यमाणत्वादिति** । अनुपदमेव फलह्रासस्तु विद्यत इत्यादिनेति शेषः ।

श्री० — ॐ **उपमर्दं च** ॐ ॥ **फलोपमर्द इति** । उपमर्दो नाशः । सर्वस्यापि फलस्योपमर्द इत्यर्थः ॥ **विरोधपरिहार इति** । अनिवर्त्यस्यापि निवृत्त्युक्तौ विरोधापत्तेस्तत्परिहाराय प्रसक्त्यर्थकप्राप्तपदप्रयोग इत्यर्थः ॥ **अनिवर्त्यतया प्रसक्तैवेति** । प्रसक्तिर्ज्ञानम् । प्रतियोग्यधिकरणसंसर्गज्ञानं प्रसक्तिरित्यादिवचनेन ज्ञानस्यैव प्रसक्तिपदार्थतयाऽवगमात् । तथा च विषभक्षान्मृतिरावश्यम्भाविनीति लौकिकैर्ज्ञातैवेत्यर्थः ॥ **अनिवर्त्यतया प्रसक्त एवेति** । अनिवर्त्यतया लौकिकैर्ज्ञात एवेत्यर्थः । भोक्तुमारब्धं प्रारब्धमिति निर्वचनोपपादनायोत्पादितक्षयादिकमित्युक्तम् ।

च० — विषहरेति मन्त्रौषधयोर्विशेषणम् ।

सु०— किं सर्वेषां ज्ञानिनां प्रारब्धकर्मफलोपमर्द एकविध एवोत नानाविध इत्यपेक्षायामाह देवादीनामिति ।

अनु०— देवादीनां यथाक्रमम् ॥

येषामधिकं ज्ञानं तेषामधिक इत्यादि । एतेन 'नाविशेषादि'ति मध्ये पठितस्य सूत्रस्य पूर्वत्रोत्तरत्र चोपयोग इत्युक्तं भवति ।

प्रारब्धकर्मणां भोगेन विना न क्षयः । किन्तु ब्रह्मज्ञानेन फलह्रासो भवतीत्युक्तम् । तत्रैके मन्यन्ते । अचिन्त्यो हि ब्रह्मज्ञानस्य महिमा । अतस्तत्सामर्थ्यादप्रारब्धानीव प्रारब्धान्यपि कर्माण्यभुक्तफलानि क्षीयन्ते । नाभुक्तं क्षीयते कर्मेत्यादिवाक्यानि त्वज्ञानिविषयाणि । ततश्च ज्ञानाग्निः सर्वकर्माणीति सर्वशब्दोऽप्यपीडितः स्यादिति । अन्ये तु परमेश्वरेच्छोपोद्बलितानि प्रारब्धानि भोजयन्त्येव सर्वं स्वफलम् । न कश्चिदपि फलह्रासोऽस्तीति ।

तत्राद्यं मतं तावदपाकरोति सर्वात्मनेति ।

सर्वात्मना त्वभोगो हि प्रारब्धस्यैव कर्मणः ॥
न ब्रह्मदर्शिनोऽपि स्यात्

ब्रह्मदर्शिनोऽपि प्रारब्धस्य कर्मणः सर्वात्मना त्वभोगो न स्यादेव । विना भोगेन ब्रह्मज्ञानादेव प्रारब्धान्यपि कर्माणि क्षीयन्त इति मतमनुपपन्नमित्यर्थः । तथा सति ब्रह्मविदां संसारावस्थानं न स्यात् । निर्बीजत्वात् । लोकानुग्रहार्थमेव विग्रहांस्ते बिभ्रतीति चेन्न । शापादिनिमित्तानामापदामपीतिहासपुराणेषु बहुलमुपलम्भात् । तस्य तावदेव चिरमित्यादिश्रुत्या चावगम्यते कर्मावस्थानमिति हिशब्दार्थः ।

द्वितीयं मतमपाकर्तुमाह फलेति ।

फलह्रासस्तु विद्यते ॥

प्रारब्धस्य कर्मण इति वर्तते । ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च काममाचरन्तो ब्रह्मानुव्रजन्ती'त्यागमादिति भावः ।

यस्त्वागममप्रारब्धविषयं व्याख्याय प्रारब्धकर्मफलस्येषदपि ह्रासो नास्तीति ब्रूयात्तं प्रत्याह सर्वात्मनेति ।

सर्वात्मना फलह्रासो यदि नारब्धकर्मणः ॥
स्यात्काम्यविधिवैयर्थ्यम्

**ईषदपीत्यर्थः । ब्रह्महत्यादिकर्मविपाकक्षयरोगादिनिवृत्त्यर्थाः प्रायश्चित्तविधयोऽत्र काम्यविधयो विवक्षिताः ।**

**शे०— मध्ये पठितस्येति** । पुरुषार्थाधिकरणस्तुत्यधिकरणयोर्मध्ये पठितस्येत्यर्थः ॥ **तत-श्चेति** । अप्रारब्धानामिव प्रारब्धानामपि ज्ञानेन विनाश्यत्वे सतीत्यर्थः ॥ **अपीडित इति** । अप्रारब्धानामेव ज्ञानेन विनाश्यत्वे प्रारब्धातिरिक्तकर्मपरत्वात्सर्वशब्दस्य संकुचितार्थतया पीडितत्वेऽप्यत्र पक्षे प्रारब्धाप्रारब्धकर्ममात्रपरतयाऽसंकुचितार्थत्वान्न सर्वशब्दपीडित इत्यर्थः । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिकाम्यविधीनामप्रारब्धकर्मणः सर्वात्मना फलह्रासाभावेऽपि वैयर्थ्यानापत्तेः कथं तदापादन-मित्यत आह **ब्रह्महत्यादीति** । ब्रह्महत्यादिरूपं यत्कर्म तस्य विपाकभूतं फलभूतं यत्क्षयरोगादि तन्नि-वृत्त्यर्था इत्यर्थः ।

**स०— प्रायश्चित्तविधय इति** । कर्मविपाकप्रायश्चित्तविधय इत्यर्थः ।

**प०— मध्ये पठितस्येति** । असार्वत्रिकीति स्तुतय इत्यधिकरणयोर्मध्ये पठितस्य ज्ञानाधि-कारो नाविशेषादिति उपमर्दो नाविशेषादिति च पूर्वत्रोत्तरत्र चेत्यर्थः ॥ **शापादिनिमित्तानामिति** । इन्द्रप्रभृतेर्दुर्वासआदिशापेनैश्वर्यहीनत्वादेः ब्रह्मादिशापेन मुद्गलप्रभृतेरुत्तमस्त्रीसङ्गादेः (अ)अणिमाण्ड-व्यादेर्वसिष्ठसाम्येच्छाप्रयत्नाभ्यां शूलप्राप्त्यादे राजन्येषु वसिष्ठशापेन कल्माषपादादे रक्षस्त्वस्य निमिप्रभृते-र्विदेहत्वादेश्च भारतादौ श्रवणादित्यर्थः ॥ **इत्यागमादिति** । उपमर्दं चेत्यत्र भाष्योक्तादिति ज्ञेयम् ॥ **ब्रह्महत्यादिकर्मविपाकेति** । ब्रह्महत्यादिकर्मफलभूतक्षयरोगादिनिवृत्त्यर्था इत्यर्थः ।

**या०— मध्ये पठितस्येति** । पुरुषार्थाद्यधिकरणस्तुत्यधिकरणमध्ये पठितस्येत्यर्थः । **कर्मविपा-केत्यत्र** विपाकशब्दः फलार्थकः ।

**सु०— अयमत्रोत्तरक्रमः । 'ब्रह्महा क्षयरोगी स्यादि'ति स्मरणात्क्षयादिकं तावद्ब्रह्म-हत्यादेः फलम् । तत उत्पादितक्षयादिकं ब्रह्महत्यादिप्रारब्धमेव । तस्य च प्रारब्धकर्मफलस्य क्षयादेः प्रायश्चित्तकरणे निवृत्तिर्दृश्यते । तत्कथं प्रारब्धकर्मकफलस्य सर्वथाऽप्यनुपमर्दः ।**

**अथ मन्येत । प्रायश्चित्तं न क्षयनिवृत्तिहेतुः किन्तु भोगनिमित्तकर्मक्षय एवेति । तदा प्रायश्चित्तविधयो व्यर्थाः स्युः । गृहदाहेष्ट्यादिवत्प्रायश्चित्तानां नैमित्तिकत्वं भविष्यतीति चेन्न । क्षयादिसंयोगेन विधीयमानानामेषां तद्विघातफलसंभवे फलान्तरकल्पनानुपपत्तेः । किञ्चात्र नियतपश्चाद्भावित्वमसमाहितमेव । तदिदमुक्तं काम्येति । तथाऽपि ब्रह्मज्ञानं न तदर्थं विहितमिति चेन्न । फलश्रवणेनैव विधिकल्पनात् ।**

**अनेनैव न्यायेन प्रायश्चित्तानां कमक्षयहेतुत्वाभावोऽपि निरस्तः। तथा सति प्रायश्चित्तविधीनां वैयर्थ्यापत्तेः। नैमित्तिकत्वपक्षस्य च दृष्टादृष्टहानोपादानप्रसङ्गेन निरस्तत्वात्।**

**अथ कर्मणो द्वयी शक्तिः। एका तावत्फलजननी अपरा त्वसंव्यवहार्यत्वहेतुः। तत्र प्रायश्चित्तैर्द्वितीयाऽपाक्रियत इति चेत्। एवं तर्हि कर्मविपाकप्रायश्चित्तानामपीयमेव गतिरिति कथं नोपमर्दः॥ किञ्च न सर्वो रोगः सर्वं च दुरितमसंव्यवहार्यताहेतुरिति तत्र प्रायश्चित्तवैयर्थ्यमेव स्यात्॥ अपि च क्षयकुष्ठाद्युपहतोऽपि न प्रायश्चित्ताचरणमात्रेण संव्यवहार्यः। किन्तु क्षयाद्यपगम एवेति तत्कारणत्वमेव प्रायश्चित्तानामङ्गीकार्यम्। मरणान्तिकप्रायश्चित्तानामानर्थक्यं च स्यात्। श्राद्धादिव्यवहारसिद्ध्यर्थं तदिति चेन्न। परिव्राजकानां तदभावापातादित्यलम्।**

**उपसंहरति** इत्युक्तेति।

**अनु०—** इत्युक्तनियमो भवेत्।

**इतिशब्दस्तस्मादित्यर्थे। प्रारब्धकर्मणां भोगादेव क्षयस्तथाऽपि फलह्रासोऽपि विद्यत इत्युक्तनियमो भवेदुपपन्न इति शेषः।**

---

**शे०** — ननु च ब्रह्महत्यादिकर्मणः क्षयरोगादिफलकत्वं प्रारब्धत्वं च कुतः। तत्त्वेऽपि कुतः प्रायश्चित्तस्य तत्फलक्षयरोगादिनिवर्तकत्वं येन प्रारब्धकर्मणोऽपि फलह्रासः सिद्ध्येदित्यत आह **अयमत्रेति**॥ **ब्रह्महा क्षयरोगीति**। 'ब्रह्महा क्षयरोगी स्यात्सुरापी श्यावदन्तकः। हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पगः। यो येन संवसत्येषां स तल्लिङ्गोऽभिजायत' इति याज्ञवल्क्यस्मरणादित्यर्थः। **प्रायश्चित्तकरण इति**। ब्रह्महा द्वादशाब्दं व्रतं चरेदिति वचनाद् द्वादशाब्दव्रतचरणादिरूपं मुख्यं ब्रह्महत्यादिप्रायश्चित्तम्। 'प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव चे'ति याज्ञवल्क्यस्मरणात्तदर्धभूतं षडब्दव्रताचरणादिरूपममुख्यं तत्प्रायश्चित्तम्। अधिकारिभेदेन तदुभयानुष्ठान इत्यर्थः॥ **निवृत्तिर्दृश्यते इति**। अनेन क्षयरोगादिनिवृत्तिः प्रायश्चित्तफलं नियतं तत्पश्चाद्भावित्वादित्यनुमानमुक्तं भवति।

**प्रायश्चित्तविधय इति**। कर्मविपाकप्रायश्चित्तविधय इत्यर्थः॥ **गृहदाहेष्ट्यादिवदिति**। यथा 'यस्याहिताग्नेरग्निर्गृहान्दहेदग्नये क्षामवते पुरोडाशमष्टकपालं निर्वपेदि'ति विधीयमाना गृहदाहेष्टिर्न गृहदाहपरिहारार्था। नापि तज्जनितप्रत्यवायपरिहारार्था किन्तु गृहदाहादिरूपे निमित्ते सति दग्धगेहेऽधिकारिणि लब्धे तेनानुष्ठीयमानाऽन्यफलैव। ज्योतिष्टोमोपक्रमेऽनुष्ठीयमानकेशश्मश्रुवपनादिवद् गृहदाहेष्ट्यादेरपि (अ)पुरुषार्थत्वस्य तृतीये निर्णीतत्वात्। अदिपदात् 'यस्योभयं हविरार्तिमार्च्छेत्स ऐन्द्रं

पञ्चशरावमोदनं निर्वपेदि'ति वाक्योक्तहविरार्तिनिमित्तकेष्टिपरिग्रहः । तथा **ब्रह्महत्यादिप्रायश्चित्त-**विधयोऽपि क्षयरोगादिके निमित्ते सति रोगिण्यधिकारेणि प्राप्ते तेनानुष्ठीयमाना न तत्पापजनितक्षय-रोगादिनिवृत्त्यर्थाः किन्तु फलान्तरार्था एवेत्यर्थः ॥ **क्षयादिसंयोगेनेति** । क्षयरोगादिसंबन्धनिमित्ते-नेत्यर्थः ॥ **तद्विघातेति** । यथा क्षयादिसंबन्धेन विधीयमानानां रसौषधादीनां रोगिकामनाविषयतयोपस्थि-तत्वात्क्षयरोगादिविघात एव फलतया कल्प्यते तथैवेति भावः ॥ **नियतपश्चाद्भावित्वमिति** । क्षयरोगादि-निवृत्तेरिति शेषः ॥ **काम्येतीति** । अनेन काम्यफलका विधयः काम्यविधय इति मध्यमपदलोपी समासः काम्यपदं च रोगिकामनाविषयीभूतक्षयरोगादिनिवृत्तिपरम् । तथा च क्षयरोगादिनिवृत्तिरेव रोगिका-मनाविषयतयोपस्थितत्वात् प्रायश्चित्तफलमित्येतदनेन मूलेनोक्त इति ज्ञायत इति भावः । अत एवैतन्मूलं पूर्वं क्षयरोगादिनिवृत्त्यर्था इति व्याख्यातम् ॥ **तदर्थमिति** । प्रारब्धफलनाशार्थमित्यर्थः ॥ **फल-श्रवणेनेति** । 'ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य यत्पुण्यं च पापं चे'त्यर्थवादिकफलश्रवणे-नेत्यर्थः । न चैतदनारब्धकर्मविषयकमिति वाच्यम् । सङ्कोचे कारणाभावात् । उपमृद्येत्यस्यास्वारस्य-प्रसङ्गाच्च । सर्वात्मना नाशे उपमर्दशब्दप्रयोगादर्शनादिति भावः ।

ननु सर्वेषामपि दुष्कर्मप्रायश्चित्तानां तत्तदधिकारिप्राप्तिमात्रेण विधीयमानानां गृहदाहेष्ट्यादिवन्नै-मित्तिकत्वेन फलान्तरार्थत्वमेव वाच्यम् । अन्यथा न हि कर्म क्षीयते नाभुक्तं क्षीयते कर्मेत्यादिवाक्य-विरोधापातात् । तथा च क्षयरोगादिप्रायश्चित्तानामपि नैमित्तिकत्वात्तद्वदेव फलान्तरमेवाभ्युपगन्तव्यम् । अन्यथा प्रायश्चित्तविधिषु केषाञ्चित्फलान्तरार्थत्वं केषाञ्चिन्नेति द्वैरूप्यकल्पनाप्रसङ्गादित्यत आह **अने-नैव न्यायेनेति** । कर्मविपाकप्रायश्चित्तानां क्षयरोगादिनिवृत्तिफलकत्वसमर्थनन्यायेनैवेत्यर्थः ॥ **कर्म-क्षयेति** । दुष्कर्मजन्यदुरितक्षयहेतुत्वाभाव इत्यर्थः । अनेनैव न्यायेनेत्युक्तन्यायमेव दर्शयति **तथा सतीति** ॥ **दृष्टादृष्टेति** । प्रायश्चित्ताचरणकाले कामनाविषयतयोपस्थितदुरितनिवृत्तेरेव फलत्वोपपत्ताव-कामितादृष्टफलान्तरकल्पनायां दृष्टहानादृष्टकल्पने स्यातामिति भावः ।

**कर्मेति** । ब्रह्महत्यादिकर्मविपाकक्षयरोगादिप्रायश्चित्तानामित्यर्थः ॥ **इयमेव गतिरिति** । यथा प्रसिद्धदुष्कर्मप्रायश्चित्तानां दुष्कर्मप्रयुक्तासंव्यवहार्यत्वादिमात्रनिवर्तकत्वं तथा च कर्मविपाकप्रायश्चित्ता-नामपि क्षयरोगादिप्रयुक्तासंव्यवहार्यत्वादिमात्रनिवर्तकत्वमपीत्यस्त्वित्यर्थः । तावताऽपि प्रायश्चित्तानां कर्मफलनिवर्तकता प्राप्तैव क्षयादेरिवासंव्यवहार्यत्वादेरपि तत्फलत्वादिति भावः । अभ्युपेत्य चेद-मुदितम् । वस्तुतस्तूभयत्रापि दुरितस्य रोगस्य वा निवृत्तिरेव फलतया वक्तव्या । अन्यथा प्रायश्चित्त-विधिवैयर्थ्यापरिहारादित्याह **किञ्च न सर्वं इति** । दग्धगेहेष्टेरप्यग्निनाशप्रयुक्तप्रत्यवायपरिहारेण दृष्टेनैव

फलेनोपपत्तावदृष्टफलकल्पनायां गौरवमेवेत्यभिसन्धायाह **अलमिति** । न चैवं पूर्वमीमांसाविरोधः । तत्राप्यस्मदुक्तार्थस्यैव सूत्रकृदभिमतत्वादित्याशयात् ।

**स०— गृहदाहेति** । गृहदाहनिमित्तकगृहदाहेष्टेर्गृहनिवृत्तिहेतुत्वाभावेपि तन्निमित्तकप्रत्यवायपरिहारहेतुत्वेन नैमित्तिकत्ववत् प्रायश्चित्तविधीनां कर्मफलक्षयनिवृत्तिहेतुत्वाभावेपि तन्निमित्तकप्रत्यवायपरिहारहेतुत्वेन नैमित्तिकत्वमित्यर्थः । **क्षयादीति** । न च क्षयादिसंयोगेन विधीयमानानां प्रायाश्चित्तविधीनां क्षयादिविघातफलत्वे गृहदाहसंयोगेन विधीयमानगृहदाहेष्टेर्गृहदाहविघातफलकत्वं स्यादिति वाच्यम् । तत्र गृहदाहस्य परिहर्तुमशक्यत्वेन तत्फलत्वाभावेपि प्रकृते क्षयादिनिवृत्तिहेतुत्वसंभवात् तत्फलकत्वोपपत्तेः । अत एवोक्तं संभव इति । प्रायश्चित्तस्य क्षयनिवृत्तिहेतुत्वाभावे तदन्वयव्यतिरेकविरोधश्च स्यादित्याह **किञ्चेति** । ननु प्रायश्चित्तादिविधीनां कर्मक्षयादिनिवर्तकत्वेन विधानेन तत्फलकत्वेपि ब्रह्मज्ञानस्य प्रारब्धकर्मफलह्रासजनकत्वं तद्धेतुत्वेनाविधानादित्यत आह **तथापीति** ॥ **अनेनैवेति** । प्रायश्चित्तविधेर्ब्रह्महत्यादिरूपकर्मफलक्षयनिवृत्तिसाधनत्वोपपादनन्यायेनैवेत्यर्थः । **कर्मक्षयहेतुभावः** । कर्मजन्यदुरितक्षयहेतुत्वाभाव इत्यर्थः । ननु प्रायश्चित्तस्य फलजनककर्मशक्तिनिवर्तकत्वाभावेपि असंव्यवहार्यत्वहेतुभूतशक्तिनिवर्तकत्वान्न वैयर्थ्यमित्याशङ्कते **अथेति** ॥ **कर्मेति** । ब्रह्महत्यादिकर्मविपाकत्वाक्षयरोगादिप्रायश्चित्तानामित्यर्थः । तत्रापि कर्मणो द्वयी शक्तिः तत्र प्रायश्चित्तानां क्षयादिरूपफलजनकत्वाभावेपि असंव्यवहार्यत्वहेतुशक्तिनिवर्तकत्वमिति समैव गतिः । तथाच प्रायश्चित्तानां कर्मफलनिवर्तकत्वं प्राप्तमेव क्षयादेरिवासंव्यवहार्यत्वस्यापि तत्फलत्वादिति भावः । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु न प्रायश्चित्तस्यासंव्यवहार्यत्वं हेतुशक्तिनिवर्तकत्वमात्रमित्याह **किञ्चेति** । कर्मविपाकप्रायश्चित्ताभिप्रायेण सर्वो रोग इत्युक्तम् । कर्मप्रायश्चित्ताभिप्रायेण दुरितमित्युक्तम् ।

**प०— इत्यादिस्मरणादिति** । 'ब्रह्महा क्षयरोगि स्यात्सुरापी श्यावदन्तकः । हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पग' इत्यादि स्मरणादित्यर्थः ॥ **ब्रह्महत्यादिप्रारब्धमेवेति** । ब्रह्महत्यादिफलं भोक्तुं प्रारब्धमेवेत्यर्थः ॥ **प्रायश्चित्तकरण इति** । द्वादशवत्सरादिरूपप्रायश्चित्तकरण इति वा । 'अयुतामृतसमिद्धोमाद्गोघृतक्षीरसंयुतात् । सर्वे रोगा विनश्यन्ति विमुखो न हरेर्यदी'त्याद्युक्तप्रायश्चित्तकरण इति वार्थः ॥ **भोगनिमित्तकर्मेति** । क्षयरोगभोगे निमित्तं यत्कर्म तस्य क्षय इत्यर्थः ॥ **व्यर्था इति** । रोगानिवर्तकत्वादिति भावः ॥ **गृहदाहेति** । 'यस्य गृहान्दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदि'त्यग्निहोत्रगृहदाहे सति अष्टाकपालपुरोडाशद्रव्यकक्षामवत्त्वविशेषणयुक्ताग्निदेवताकेष्टेर्गृहदाहनिमित्तकत्वेन विधानात् स्कन्ने जुहोति भिन्ने जुहोतीत्यादेः कपालभेदनादिनिमित्तकत्वेन विधानान्निमित्तकृतदोषनिर्हरणफलकत्वेन वा फलान्तरार्थत्वेन वा सार्थक्यात्तद्विधीनां न

व्यर्थेति भावः ॥ **किंचात्रेति** । फलान्तरकल्पनापक्षे क्षयरोगादौ सति तन्निवृत्तिकामनया तत्पश्चाद्भावेन नियमेनानुष्ठानं यत्तदसमाहितमेव स्यात्तेनैव तन्निवृत्तिफलकत्वस्यैवावगमादिति भावः । यद्वा प्रायश्चित्तकरणानन्तरं नियमेन जायमानरोगनिवृत्तेः पश्चाद्भावित्वेन निवृत्तिर्दृश्यत इति प्रागुक्तम-समाहितमित्यर्थः ॥ **तदिदमुक्तमिति** । काम्यपदेन रोगनिवृत्तेः प्रायश्चित्तपश्चाद्भावित्वेन रोगिणां तत्कामनया प्रायश्चित्तानुष्ठानेन प्रायश्चित्तरोगनिवृत्त्योर्नियतपौर्वापर्यसूचनादिति भावः ॥ **तथापीति** । प्रायश्चित्तस्य विधिबलेन रोगनिवृत्तिफलकत्वेऽपीत्यर्थः ॥ **फलश्रवणेनेति** । इममात्मानमभिपश्योपमृद्य पुण्यं च पापं चेति फलश्रवणेन पुण्यपापोपमर्दकामः आत्मानमभिपश्येदिति विधिकल्पनादित्यर्थः । तदुद्देशेनाविहितस्य तत्फलकत्वायोगादिति भावः । अनेनैवेत्युक्तं व्यनक्ति **तथा सतीति** ॥ **कर्मविपाक-प्रायश्चित्तानामिति** । ब्रह्महत्यादिकर्मफलभूतक्षयरोगादिनिवृत्त्यर्थप्रायश्चित्तानामपीत्यर्थः । इयमेव गतिरित्युपेत्योक्तमेवं रूपेणाप्युपमर्द इति । वस्तुतो रोगनिवृत्तिरेव फलमिति वाच्यमिति भावेनाह **किं च न सर्व इति** ॥ **दुरितमिति** । निषिद्धकर्मजनितपापमित्यर्थः ।

या० — **ब्रह्महा क्षयरोगीति** । 'ब्रह्महा क्षयरोगी स्यात्सुरापी श्यावदन्तकः । हेमहारी तु कुनखी दुश्चर्मा गुरुतल्पगः । यो येन संवसत्येषां स तल्लिङ्गोऽभिजायत' इति याज्ञवल्क्यस्मरणा-दित्यर्थः । श्यावदन्तकः स्वभावतः कृष्णदशनः ॥ **प्रायश्चित्तकरण इति** । षडब्दव्रताचरणादि-रूपप्रायश्चित्तकरण इत्यर्थः । 'प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव चेति याज्ञवल्क्यस्मरणात् । ब्रह्महा द्वादशाब्दव्रतं चरेदि'त्यादि यन्मुख्यं ब्रह्महत्यादिप्रायश्चित्तं तदर्धमित्यर्थः ॥ **निवृत्तिर्दृश्यत इति** । अनेन क्षयरोगादिनिवृत्तेः प्रायश्चित्तफलत्वं तन्नियतपश्चाद्भावित्वेन दृष्टत्वादिति हेतुसिद्धमिति सूचितम् । शङ्कते **गृहदाहेष्ट्यादिवदिति** । 'यस्याहिताग्नेरग्निर्गृहान्दहेदग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदि'त्यनेनाभिधीयमाना गृहदाहेष्टिर्न गृहदाहजनितप्रत्यवायपरिहारार्था किन्तु गृहदाहरूपनिमित्ते सति दग्धगेहेऽधिकारिणि लब्धे तेनानुष्ठीयमानाऽन्यफलैव । ज्योतिष्टोमोपक्रमेऽनुष्ठीयमानकेशश्म-श्रुवपनादिवद्गृहदाहेष्ट्यादेरपि पुरुषार्थत्वस्य तृतीये निर्णीतत्वात् । आदिपदाद्यस्योभयं हविरार्तिमार्च्छेत्स ऐन्द्रं पञ्चशरावमोदनं निर्वपेदिति वाक्योक्तहविरार्तिनिमित्तकेष्टिर्ग्राह्या । उभयं दधि पयश्च । तथा ब्रह्महत्यादिप्रायश्चित्तविधयोऽपि क्षयादिरोगे निमित्ते सति रोगिण्यधिकारिणि प्राप्ते तेनानुष्ठीयमाना न तत्पापजनितक्षयादिनिवृत्त्यर्थाः किन्तु फलान्तरार्था एव भविष्यन्तीत्यर्थः ॥ **क्षयादिसंयोगेनेति** । क्षयरोगादिसम्बन्धनिमित्तेनेत्यर्थः ॥ **तद्विघातेति** । यथा क्षयादिसम्बन्धेन विधीयमानानां रसौषधादीनां रोगिकामनाविषयतयोपस्थितत्वात्क्षयरोगादिविघात एव फलतया कल्प्यते तथैवेति भावः । नियतपश्चा-

द्भावित्वमित्यत्र क्षयादिनिवृत्तेरिति शेषः । तथा च प्रायश्चित्तानां फलान्तरार्थत्वे क्षयादिनिवृत्तेरुक्तप्रायश्चित्तानुष्ठाननियतपश्चाद्भावित्वं दृश्यत इति यदुक्तं तन्न समाहितमिति भावः ॥ **काम्येतीति** । काम्यफलका विषयः काम्यविषय इति मध्यमपदलोपी समासः । काम्यपदं च रोगिकामनाविषयीभूतक्षयरोगादिनिवृत्तिपरम् । तथा च क्षयरोगादिनिवृत्तिरेव रोगिकामनाविषयतयोपस्थितत्वात्प्रायश्चित्तफलमित्येतदनेन मूलेनोक्तमिति ज्ञायत इति भावः । अत एवैतन्मूलं पूर्वं क्षयरोगादिनिवृत्यर्था इति व्याख्यातम् ॥ **तदर्थमिति** । प्रारब्धफलनाशार्थमित्यर्थः ॥ **फलश्रवणेनेति** । ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं चेत्यार्थवादिकफलश्रवणेनेत्यर्थः । न चास्याः प्रारब्धविषयत्वम् । उपमृद्येत्यस्यास्वारस्यप्रसङ्गात् । सर्वात्मना नाशे उपमर्दशब्दप्रयोगादर्शनात् । ननु सर्वेषामपि दुष्कर्मप्रायश्चित्तानां एनस्विनराधिकारिप्राप्तिमात्रेण विधीयमानानां गृहदाहेष्ट्यादिवत् नैमित्तकत्वेन फलान्तरार्थत्वमेव वाच्यम् । अन्यथा न हि कर्म क्षीयते । नाभुक्तं क्षीयत कर्म इत्यादिवाक्यविरोधप्रसङ्गात् । अतस्तद्वत्क्षयरोगादिप्रायश्चित्तानामपि नैमित्तिकतया फलान्तरमेव वक्तव्यम् । अन्यथा प्रायश्चित्तविधिषु द्वैरूप्यकल्पनागौरवप्रसङ्गादित्यत आह **अनेनैव न्यायेनेति** । कर्मविपाकप्रायश्चित्तानां क्षयरोगादिनिवृत्तिफलकत्वसमर्थनन्यायेनेत्यर्थः ॥ **कर्मक्षयेति** । दुष्कर्मक्षयहेतुत्वाभाव इत्यर्थः ॥ **दृष्टादृष्टेति** । प्रायश्चित्ताचरणकाले कामनाविषयतयोपस्थितदुरितनिवृत्तेरेव फलत्वोपपत्तावकामितादृष्टफलान्तरकल्पनायां दृष्टहानादृष्टकल्पने स्यातामिति भावः ॥ **इयमेव गतिरिति** । यथा प्रसिद्धदुष्कर्मप्रायश्चित्तानां दुष्कर्मप्रयुक्तासंव्यवहार्यतामात्रनिवर्तकत्वं तथा कर्मविपाकप्रायश्चित्तानामपि क्षयरोगादिप्रयुक्तासंव्यवहार्यतामात्रनिवर्तकत्वमपीत्यस्त्वित्यर्थः । अभ्युपेत्य चेदमुदितं वस्तुतस्तूभयत्र दुरितस्य रोगस्य वा निवृत्तिरेव फलत्वेन वक्तव्या । अन्यथा प्रायश्चित्तवैयर्थ्यापरिहारादित्याह **किञ्चन सर्वो रोग इति** । दग्धगेहेष्टेरप्यग्निनाशप्रयुक्तप्रत्यवायपरिहारेण दृष्टेनैव फलेनोपपत्तावदृष्टफलकल्पनायां गौरवमेव । न च पूर्वमीमांसाविरोधः । तत्राप्यस्मदुक्तार्थस्यैव सूत्रकाराभिप्रेतत्वात् तद्भाष्यकारादीनां चान्यथाज्ञानादिसम्भवेन तद्व्याख्यानविरोधस्याकिञ्चित्करत्वादित्याशयेनाह **इत्यलमिति** ।

श्री० — **सर्वथाऽप्यनुपमर्द इति** । तथा चाज्ञानिनामप्रारब्धस्य यथा प्रायश्चित्तेन फलह्रास, एवं ज्ञानिनामपि प्रारब्धस्य ज्ञानेनोपमर्दः फलह्रासोऽस्तीति भावः ॥ **गृहदाहेष्ट्यादिवदिति** । न हीष्टिकरणेन गृहदाहो निवर्तते । किं नाम तादृशेष्टिकरणे गृहदाहवानधिकारी सम्पद्यते । एवं द्वादशाब्दव्रताचरणे क्षयरोगी अधिकारी सम्पन्न इत्येव न तु तेन स रोगो निवर्तत इति भावः । तत्कारणत्वं क्षयापगमकारणत्वम् । दूषणान्तरमाह **मरणान्तिकेति** । प्रायश्चित्तैरसंव्यवहार्यताहेतुशक्तिनिवर्तने सति

संव्यवहार्यत्वं सम्पद्यत इति न वक्तुं शक्यते । तस्य मृतत्वादित्यर्थः । ननु प्रायश्चित्तैरसंव्यवहार्यता हेतुशक्तिर्निवर्तत इत्येतन्मरणान्तिकप्रायश्चित्तव्यतिरिक्तप्रायश्चित्तविषयम् । मरणान्तिकप्रायश्चित्तेन पापिनो मृतस्य पुत्रकृतश्राद्धादिभोक्तृत्वायोगाच्छ्राद्धाद्यभ्यवहारसिद्ध्यर्थमेव तत्प्रायश्चित्तं, न तु संव्यवहारार्थम् । येनोक्तदूषणं स्यादित्याशङ्कते **श्राद्धादीति** । व्यवहारोऽदनादिरूपः ॥ **पारिव्राजकानामिति** । यदि पापी गृहस्थोऽकृतप्रायश्चित्तो मृतः स्यात्तदा श्राद्धादिभोक्तृत्वायोगात् तदधिकारसिद्ध्यर्थं मरणान्तिकं प्रायश्चित्तं युक्तं स्यात् । यदा सन्न्यासी पापी सन्मरणान्तिकप्रायश्चित्तमाचरितवांस्तत्र प्रायश्चित्तस्य न श्राद्धादिव्यवहारसिद्धिः प्रयोजनम् । संन्यास्युद्देशेन श्राद्धस्य पुत्रं प्रत्यविहितत्वेन संन्यासिनः श्राद्धाऽदनाभावेन तत्कृतप्रायश्चित्तस्यासंव्यवहार्यतानिवृत्तिहेतुत्व एव वाच्ये मरणान्तिकप्रायश्चित्तानामानर्थक्यं यदुक्तं तद्युक्तमेवेति भावः ॥ **तदभावेति** । मरणान्तिकप्रायश्चित्ताचरणेत्यर्थः ।

सु० — **'एवमुत्पन्नानिर्दोषे'त्यादिनोक्तार्थे स्मृतिसम्मतिमाह** एवमादीति ।

अनु० — एवमाद्यपि सम्प्रोक्तं तन्त्रभागवते स्फुटम् ॥

**आदिपदेनैतदुपयुक्तमन्यत् । भाष्यादावुदाहृतैर्वचनैरपीत्यपेरर्थः । यद्वैवमादीत्येतदधिकरणप्रमेयं तदुपयुक्तं च गृह्यते । अपिपदेन प्रथमाधिकरणप्रमेयस्य समुच्चयः । अथवाऽधिकरणप्रमेयस्य समुच्चयः । अथवाऽधिकरणद्वयार्थ एवमादीत्यनेन गृहीतः । द्वितीयाद्यधिकरणार्थग्रहणायापिशब्दः । पुरुषार्थाधिकरणे स्तुत्यधिकरणे च ज्ञानफलस्य तारतम्यमभिहितम् । तत्सांसारिकफलस्य न विप्रतिपन्नमिति मुक्तिगतस्य साधयितुमुत्तरो ग्रन्थः । ये मोक्षे भेदमेव नाङ्गीकुर्वते ये चाङ्गीकृत्यापि भेदमानन्दादिकं नाभ्युपयन्ति न तान्प्रति तारतम्यसाधनस्यावकाशः । किन्तु भेदादिसाधनमेव कर्तव्यम् । करिष्यते च चतुर्थेऽध्याये । ये पुनर्भेदमानन्दादिकं चाङ्गीकृत्यापि तारतम्यं न मन्यन्ते तान्प्रत्ययं प्रयत्नः क्रियते । यावदधिकारमित्यधिकरणार्थस्यैवायं प्रपञ्च इति न दोषः ।**

शे० — **वचनैरपीत्यपेरर्थ इति** । अनेन तन्त्रभागवतेऽपि सम्प्रोक्तमित्यपिशब्दो भिन्नक्रमतया व्याख्यातो भवति **यद्वेति** । ततश्चापिशब्दो न भिन्नक्रम इति भावः ॥ **प्रथमाधिकरणेति** । पुरुषार्थाधिकरणेत्यर्थः ॥ **अधिकरणद्वयेति** । पुरुषार्थाधिकरणस्तुत्यधिकरणरूपाधिकरणद्वयेत्यर्थः ॥ **द्वितीयादीति** । पुरुषार्थाधिकरणस्तुत्यधिकरणमध्यस्थद्वितीयतृतीयाधिकरणेत्यर्थः ॥ **पुरुषार्थाधिकरणस्तुत्यधिकरणे चेति** । पुरुषार्थाधिकरणे तत्तज्जात्यनुसारत इति स्तुत्यधिकरणे च देवादीनां यथाक्रममित्युक्तत्वादिति भावः । भेदादिसाधनमित्यत्रादिपदेनानन्दादिपरिग्रहः । तर्हि तदेव क्रियतामित्यत

आह **करिष्यते चेति** । 'कालोऽप्यसौ नैक्ययुतः परेणे'त्यादिना भेदस्य 'सुखादिधर्महानौ च मुक्तेः किञ्च प्रयोजनमित्यादिनाऽऽनन्दादेश्च साधनं करिष्यत इत्यर्थः । ननु 'अधिकारविशेषेण भक्तिज्ञानसुखादिभिः विशेषो देवतादीनां मोक्षे चैव विशेषत' इत्युक्तरीत्या यावदधिकारमवस्थितिराधिकारिकाणामित्यादिना गुणोपसंहारपादे मुक्तिसंसारयोर्देवादीनामानन्दादितारतम्यसाधनात्पुनस्तत्साधने पौनरुक्त्यं स्यादित्यत आह **यावदिति** ॥ **तत्र तावच्छ्रुत्येति** । 'युक्तं च साधनाधिक्यादित्यादिनोत्तरत्रानुमानस्यापि कथनात्तदपेक्षया तावच्छब्दः ।

स० — **करिष्यते** । चतुर्थे ।

प० — **एतदुपयुक्तमन्यदिति** । ऊर्ध्वरेतस्त्वादिकं वा येन स्यात्केन स्यादित्यादेरुक्तार्थानुगुणत्ववर्णनादिकं वा असार्वत्रिकीत्यादिनोक्ताधिकरणादिकं वेत्यर्थः ॥ **तदुपयुक्तमिति** । अपौनरुक्त्यादिकमित्यर्थः ॥ **अधिकरणद्वयेति** । आद्याधिकरणस्तुत्यधिकरणाभ्यां इत्यर्थः ॥ **द्वितीयेति** । असार्वत्रिकीत्याद्यधिकरण इत्यर्थः । श्रोतृबुद्धिसौकर्यार्थमाह **पुरुषार्थेति** । पुरुषार्थनयानुव्याख्याने तत्तज्जात्यनुसारतः इति स्तुतिनये देवादीनां यथाक्रममिति चोक्त्या नाविशेषादिति मध्ये पठितस्य पूर्वोत्तरशेषत्वमभिप्रेत्यैतदर्थवर्णनमिति पूर्वत्र सुधायां व्यक्तत्वादमिहितमित्युक्तम् ॥ **चतुर्थेऽध्याय इति** । आद्यपादे 'यदि जीवेशयोर्वेदप्रतिरक्यं च मन्यत' इत्यादिना भेदसाधनं 'सुखादिधर्महानौ तु मुक्तेः किं च प्रयोजनमि'त्यादिना च द्वितीयपादे आनन्दादिसाधनं करिष्यत इति भावः । उत्सूत्रत्वेनाभाष्यत्वमाशङ्क्याह **यावदिति** । यावदधिकारमवस्थितिराधिकारिकाणामित्युपासनापादीयविंशाधिकरणार्थस्य अत्र प्रपञ्चनस्य सङ्गतत्वादिति भावः ।

या० — **पुरुषार्थाधिकरण इति** । पुरुषार्थाधिकरणे तत्तज्जात्यनुसारत इत्युक्तत्वात् । स्तुत्यधिकरणे च देवादीनां यथाक्रममित्युक्तत्वादिति भावः ॥ **अन्यत्रेति** । 'सर्वं श्रुतिफलं मुक्तेः प्राप्यं नान्येन केनचित् । अतस्ते श्रोत्रिया मुक्ता ह्यन्यः श्रोत्रियको भवेदि'ति बृहदारण्यकभाष्य इत्यर्थः ।

श्री० — **अधिकरणद्वयेति** । आद्यतृतीयेत्यर्थः ॥ **द्वितीयादीति** । द्वितीयचतुर्थादीत्यर्थः । नाभ्युपयन्ति तार्किकाः । न मन्यन्ते रामानुजाः ।

**सु० — तत्र तावच्छ्रुत्या मुक्तावानन्दतारतम्यमुपपादयति** तारतम्यमिति ।

**अनु० —** तारतम्यं फले नो चेद्ब्रह्मादीनां कथं श्रुतिः ॥
अवृजिनोऽकामहत इति मुक्तिं निगद्य च ॥
आनन्दतारतम्यं च तेषां ब्रूयात्पृथक् पृथक् ॥

**ब्रह्मादीनां ज्ञानफले मुक्तिगामिन्यानदे यदि यदि तारतम्य नो भवेत्तर्हि कथ 'स यो हवै मनुष्याणां राद्ध' इत्यादिका वाजसनेयिनां सैषाऽऽनन्दस्य मीमांसा भवती'त्यादिका तैत्तिरीयाणां च श्रुतिस्तेषां ब्रह्मादीनामानन्दस्य तारतम्यं ब्रूयात् । सर्वेऽप्युत्तरोत्तरं शतगुणनन्दा-इत्यनभिधाय पृथक्पृथगेव ब्रवीति । तेन तत्र तात्पर्यसद्भावश्चावगम्यते । ब्रह्मादीनामानन्दस्य तारतम्यं श्रुतिर्ब्रवीति मुक्तानां तु तत्साध्यत इति किं केन सङ्गतमित्यत उक्तमवृजिन इति । यश्च श्रोत्रियोऽवृजिनोऽकामहत इत्याद्या । श्रोत्रियस्य चाकामहतस्येति द्वितीया । यद्यपि श्रोत्रियत्वमपि मुक्तिज्ञापक मित्यन्यत्रोक्तम् । तथाऽपि बहुसंविधानसाध्यं तदिति न सङ्कीर्तितम् मुक्तिं च निगद्य तेषां मुक्तानामानन्दतारतम्यं च ब्रवीति । चशब्दौ मिथः समुच्चये । तैत्तिरीयश्रुतिरप्यत्रोपलक्षितेत्युत्तरत्र ज्ञास्यते ।**

शे०— **इत्याद्येति** । वाजसनेयिनां श्रुतेरित्यर्थः ॥ **इति द्वितीयेति** । तैत्तिरीयाणां श्रुतिरित्यर्थः ॥ **अन्यत्रोक्तमिति** । श्रोत्रियत्वावृजिनत्वाकामहतत्वानां मुक्तेष्वेव भावादित्यादिना बृहद्भाष्य इति शेषः ॥ **बहुसंविधानेति** । बृहद्भाष्योक्तदिशा मुख्यत्वयुक्त्यादिनोपपादनसापेक्षत्वादित्यर्थः । अयमाशयः । यद्यपि श्रोत्रियश्छन्दोऽधीत इति स्मरणाच्छ्रोत्रियशब्दश्छन्दोऽध्ययनस्य कर्तारमाह । तथाऽप्यत्र पुरुषार्थप्रसङ्गादध्ययनमात्रस्य चापुरुषार्थत्वादध्ययनफलप्राप्तेर्लक्षको वर्णनीयः । फलमपि न यत्किञ्चित्किन्तु मुक्तिरेव मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इति न्यायादत एव बृहद्भाष्ये सम्यक् श्रुतिफलं प्राप्ता इत्यमुक्तानामपि श्रुतिफलसद्भावात्तद्व्यावृत्त्यर्थतया सम्यक्पदप्रयोगः । तथा च सम्यगध्ययनफलावाप्तेर्मुक्तिं विनाऽन्यत्रायोगान्मुक्त एव श्रोत्रिय इत्युच्यते । उक्तं च 'प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिण' इति । ततश्चोक्तरूपश्रोत्रियत्वस्य मुक्तत्वज्ञापकत्वेऽपि तस्य मुख्यार्थानुपपत्त्यादिव्युत्पादनसापेक्षत्वेन बहुसंविधानसाध्यत्वादत्रासङ्कीर्तनम् । अत एव बृहद्भाष्ये न ह्यमुक्ता अवृजिना अकामहता चेत्यवृजिनत्वाकामहतत्वयोरमुक्तेष्वसंभवमुक्त्वा व्युत्पादनसापेक्षत्वात् । न च श्रुतिफलं सम्यक् प्राप्ता इति श्रोत्रियत्वस्यामुक्तेषु पृथगसंभवमुक्त्वा श्रुतिफलप्राप्तिर्हि श्रोत्रियत्वमित्यादिना तस्यैवोत्तरत्र व्युत्पादनं कृतमिति ॥ **उत्तरत्रेति** । 'साधुना विष्णुना युक्तो मुक्तः साधुयुवा मतः' इत्यादिनोत्तरत्र तच्छ्रुतिव्याख्यानादन्यथा च तदयोगादिति भावः ।

स०— **अन्यत्रेति** । बृहदारण्यकभाष्य इत्यर्थः । **उत्तरत्रेति** । साधुना विष्णुना युक्त इत्याद्युत्तरत्रेत्यर्थः ।

प०— **वाजसनेयिनामिति** । षष्ठे अध्याये आद्येति वाजसनेयश्रुतिः ॥ द्वितीयेति तैत्तरीयश्रुतिः ॥ **अन्यत्रेति** । **मुक्तानां** चायं विशेषः । श्रोत्रियस्य चाकामहतस्येति विशेषणादित्यादिना

षष्ठाध्यायवाजसनेयभाष्ये 'यस्य श्रुतिफलं प्राप्तं स श्रोत्रिय उदाहृतः' इत्यादिना तैत्तिरीयभाष्ये चोक्त-मित्यर्थः ॥ **बहुसंविधानेति** । बृहद्भाष्याद्युक्तदिशा मुख्यत्वयुक्त्यादिनोपपादनसापेक्षत्वादित्यर्थः । श्रुत्यन्तरमनुक्तं कुत उपादाय व्याख्यायत इत्यत आह **तैत्तिरीयेति** । 'साधुना विष्णुना युक्त' इत्यादिनाऽग्रे तच्छ्रुतिव्याख्यानादिति भावः ।

या०— **बहुसंविधानेति** । ननु श्रोत्रियशब्दश्छन्दोऽधिगतिनिमित्तोऽवगतः । श्रोत्रियँश्छन्दोऽधीत इति वचनात् । तत्कथमेतदित्याशङ्कायां पुरुषार्थप्रकरणत्वान्मुख्ये सत्यमुख्यग्रहणायोगादुदाहृतविशेषप्रमाणाच्चेदं मुक्तिज्ञापकमङ्गीकार्यमिति बहुयत्नसाध्यमस्य मुक्तिज्ञापकत्वमित्यर्थः ॥ **उत्तरत्रेति** । 'साधुना विष्णुना युक्त' इत्युत्तरत्र तच्छ्रुतिव्याख्यानादिति भावः ।

**सु०— श्रुतिद्वयोक्तमानन्दतारतम्यं संसारविषयमेव न मुक्तिविषयमित्याशङ्क्य परिहरति** संसार एवेति ।

**अनु०**— संसार एव चेदेतत्तारतम्यं न मुख्यतः ॥
अकामहतशब्दार्थोऽवृजिनत्वं च नो भवेत् ॥

**एतच्छ्रुत्युक्तं तारतम्यं संसार इत्येवोक्ते सिद्धान्तिनो नानिष्टम् । मुक्तामुक्तविषयताया वक्ष्यमाणत्वात् । अत एवेत्युक्तं । तस्यैव विवरणं न मुख्यत इति । सप्तम्यर्थे तसिः । एतत्तारतम्यं संसार एव न तु मुख्ये पुरुषार्थे मोक्षे इति चेदित्यर्थः । तर्ह्यकामहतशब्दार्थोऽकामहतत्वमवृजिनत्वं च नो भवेत् । युक्तमिति शेषः तथा हि । यश्च श्रोत्रियोऽवृजिनोऽकामहत इति श्रोत्रियस्य चाकामहतस्येति चोक्ताकामहतत्वादिकं किं प्रकृतानां संसारिणामेव विशेषणमुत संसार्यन्तरसमुच्चयार्थम् । नाद्यः । यतः संभवे व्यभिचारे च विशेषणमर्थवत् । न च ब्रह्मादयः केचिदश्रोत्रियत्वादिगुणाः सन्ति । येन व्यभिचारनिवारणार्थमेतत्स्यात् । नापि संसारिष्वकामहतत्वादिकं संभवति । अत एव द्वितीयोऽपि परास्तः ।**

शे०— **वक्ष्यमाणत्वादिति** । 'स एक इति संसारगतमुक्त्वा सुखं पुनः । श्रोत्रियस्येति वदति मुक्ताच्छतगुणात्मतामि'त्यादिनेति शेषः ॥ **सप्तम्यर्थे तसिरिति** । आद्यादिभ्य उपसंख्यानादिति भावः ॥ **सम्भवे व्यभिचारे चेति** । यद्विशेषणं लक्ष्यमात्रे सम्भवति यदनुपादाने व्यभिचारश्च भवति तदेव विशेषणमर्थः । तत्र यद्विशेषणं लक्ष्यमात्रे सम्भवतीत्यसम्भवाव्याप्तिवारकत्वसूचनं यदनुपादाने व्यभिचार इत्यतिव्याप्तिवारकत्वसूचनमित्यवधेयम् । अस्त्वेवंविधं विशेषणं श्रोत्रियत्वादिकमपि

चैवंविधमेवेति भवेदेव प्रकृतसंसारिविशेषणमित्यतः श्रोत्रियत्वादेरनेवंविधतां दर्शयति **न च ब्रह्मादय इत्यादिना** ॥ **नापीति** । संसारिष्विति हेतुगर्भं विशेषणं संसारित्वादित्यर्थः ॥ **अत एवेति** । संसारिष्वकामहतत्वाद्यसम्भवादेवेत्यर्थः ।

**स०— वक्ष्यमाणत्वादिति** । स एक इति संसारगतमुक्त्वा सुखं पुनः । श्रोत्रियस्येति वदति मुक्ताच्छतगुणात्मतामित्यादिनेति शेषः । **सप्तम्यर्थ इति** । आधादिभ्य उपसंख्यानादिति भावः । **न च ब्रह्मादय इति** । संसारिणां ब्रह्मादीनां द्वैविध्ये तन्मध्ये एकविधानां ब्रह्मादीनामश्रोत्रियत्वादिके सति अपरेषां ब्रह्मादीनां श्रोत्रियत्वादिकं वक्तुमुचितम् । तथा नास्तीति भावः । **अत एवेति** । संसारिष्वकामहतत्वासंभवादेवेत्यर्थः ।

**या०— सम्भवे व्यभिचार इति** । यस्य विशेषणस्य विशेष्ये सम्भवः । विशेष्यतावच्छेदकधर्मेण तत्सजातीये व्यभिचारो व्यतिरेकश्च तदेव विशेषणं सजातीयव्यावर्तकतया सार्थकमित्यर्थः । यथा नीलोत्पलमित्यादौ नैल्यादि ।

**श्री०— सम्भवे व्यभिचारे चेति** । यस्य विशेषणस्य विशेष्ये सम्भवो यत्परित्यागे च व्यभिचारोऽतिव्याप्तिस्तदेव विशेषणमर्थवत्प्रयोजनवदित्यर्थः । सम्भवव्यभिचारयोः प्रकृतेऽभावं व्युत्क्रमेणोपपादयति **न च ब्रह्मादय इति** । श्रोत्रियत्वादीनां संसारिष्वसम्भवादेव संसारिपक्षोऽपि निरस्त इत्याह **अत एवेति** ।

**सु०— ननु संसारिष्वप्यकामहतत्वादिकं कथञ्चित्संभवति । सत्यम् । मुख्यतो न संभवतीति ब्रूमः । न च विना बाधकेनामुख्याङ्गीकारो युक्तः । एतेनावृजिनोऽकामहत इति मुक्तिं निगद्येत्येतद्विवृतं भवति । कथमकामहतत्वादेः संसारिष्वसंभव इत्यतोऽकामहतत्वस्य तावदुपपादयति** कामस्येति ।

**अनु०**— कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि ॥
इति यल्लक्षणं मुक्तेः श्रुतिराह बलीयसी ॥
कामाहतिः कुतोऽन्यत्र

**यत्र लोके कामस्येच्छायाः कामा विषया आप्ताः पर्याप्तास्तत्र माममृतं मुक्तं कृधि कुर्विति वायुं प्रति प्रार्थनम् । यद्यस्मादिति श्रुतिरित्याप्तकामत्वं मुक्तेर्लक्षणत्वेनाह । विशेष-**

**णस्येतरव्यावृत्त्यर्थत्वात् । निरवकाशत्वादिना बलीयस्याः श्रुतेरन्यथयितुमशक्यत्वात् । तस्मा-त्कामाहतिरकामहतत्वं मुक्तादन्यत्र कुतः सम्भवेत् । आप्तकामत्वस्य मुक्तलक्षणत्वेन श्रुत्युक्तत्वे तदेवं संसारिष्वसंभवि स्यात् । अकामहतत्वं तु कथमसंभवीत्यत आह** प्राप्तेति ।

प्राप्तकामस्य सा भवेत् ॥

**सा कामाहतिः । अकामहतत्वस्याप्तकामत्वं हेतुः । न च निमित्ताभावे नैमित्तिकस्य संभवोऽस्ति । तत्र निमित्तं चाप्तकामत्वं संसारिषु न संभवतीत्युक्तम् । ततो नैमित्तिकमकाम-हतत्वमपि तत्रासंभवीति ।**

**शे० — कथञ्चित्संभवतीति** । कामनिमित्तबहुतरोपद्रवाभावाद्ब्रह्मादिसंसारिष्वमुख्यं संभव-तीत्यर्थः ॥ **एतेनेति** । अकामहतत्वादेः संसारिष्वसंभवोपपादनेनेत्यर्थः ॥ **तावदिति** । 'अपापत्वं च नैवास्ती'त्यादिनोत्तरत्रावृजिनत्वस्याप्यसंभवप्रतिपादनात्तदभिप्रायेण तावच्छब्दः । नन्वाप्तकामत्वस्य मुक्तलक्षणत्वेन श्रुत्युक्तत्वेऽपि कुतः संसारिषु तदसंभवः । येन तत्प्रयुक्तो कामहतत्वाभावस्तेषामित्यतो लक्षणस्येतरव्यावृत्ततया लक्ष्यबोधार्थत्वात्स्वयमितरसाधारणस्य तदनुपपत्तेस्तदन्यथाऽनुपपत्त्या संसारिभ्य-स्तस्य व्यावृत्तत्वसिद्धेर्न तत्साधारण्यं तस्येत्याशयेनाह **विशेषणस्येति** । ननु तथाऽप्याप्तकामत्वस्य लोकलक्षणत्वप्रतिपादकतया श्रुतेर्व्याख्यातुं शक्यत्वान्न तस्या मुक्तिलक्षणतया तत्प्रतिपादकत्वमित्यत आह **निरवकाशत्वादिनेति** । आदिपदेन मुक्तिप्रकरणपरिग्रहः ॥ **उक्तमिति** । अन्यथा संसारिष्वति-व्याप्ततया तस्य मुक्तलक्षणत्वायोगादिति भावः ।

**स० — कथञ्चित्संभवतीति** । कामनिमित्तबहुतरोपद्रवाभावात् ब्रह्मादिसंसारिष्वमुख्यं संभवतीत्यर्थः । **एतेनेति** । संसारिष्वसंभवोपपादनेनेत्यर्थः ।

**प० — मुख्यत इत्येतत्सप्तम्यन्तमुपेत्य पूर्वान्विततया व्याख्यातमपि यथाश्रुतं उत्तरेणाप्यन्वेतीति** भावेनाह **मुख्यतो न संभवतीति ब्रूम इति । विशेषणस्येति** । यत्राप्ताः कामा इत्यत्र यच्छब्दार्थम-निर्दिष्टं लोकं प्रत्याप्तकामत्वादिविशेषणस्यामुक्तव्यावृत्त्यर्थत्वादिति भावः । श्रुतिरन्यथाव्याख्यातव्येत्यत आह **निरवकाशत्वादिनेति** । स्पष्टार्थत्वमादिपदार्थः ॥ **इत्युक्तमिति** । अकामहतशब्दार्थ इत्यादि-पूर्ववाक्य इति भावः ।

**श्री० — एतेनेति** । मुख्यतोऽकामहतत्वादेः संसारिष्वसम्भववचनेनेत्यर्थः ।

सु० — आप्तकामत्वस्याकामहतत्वं प्रति निमित्तत्वं विवृणोति अप्रयत्नेनेति ।

अनु० — अप्रयत्नेन, कामानामवाप्तिः सा यदा भवेत् ॥
तदैवाकामहतता कुत एवान्यथा भवेत् ।

साऽकामहततेति संबन्धः । याऽकामहतशब्दात्प्रतीयते सेत्यर्थः । अन्यथाऽप्रयत्नेन कामानामवाप्त्यभावे कुत एव कारणात्साऽकामहतता भवेन्न कुतोऽपीत्यन्वयव्यतिरेकावुक्तौ । एतदुक्तं भवति । कामेनोपद्रवो हि कामहतता तदभावश्चाकामहतता । कामनिमित्तोपद्रवाभावश्चानायासेन तत्तद्विषयप्राप्तावेव भवति नान्यथेत्यनुभवसिद्धम् । अतः प्राप्तकामत्वाकामहतत्वयोर्निमित्तनैमित्तिकभावो युक्त एवेति ।

सु० — नायमस्ति नियमः, यदाप्तकामस्यैव, कामनिमित्तोपद्रवाभावो नान्यथेति । कामाभावेऽपि तन्निमित्तोपद्रवाभावसंभवादितिचेत् । किमनेनोक्तस्य व्यभिचारमात्रं चोद्यते किंवा प्रकृतेषु संसारिष्वप्याप्तकामत्वाभावेऽप्यकामत्वेनाकामहतता संभवतीत्याशास्यते । नाद्यः । वक्ष्यमाणन्यायेन विशेषणप्रक्षेपात् । न द्वितीयः । ब्रह्मादयो न कामरहिता असुप्तामूढचेतनत्वाद्देवदत्तवदित्यनुमानविरोधादित्याशयवाननुमानस्य व्याप्तिमुपपादयति चेतनस्येति ।

अनु० — चेतनस्य त्वसुप्तस्य कुत्र दृष्टा ह्यकामता ॥

---

घटादौ व्यभिचारपरिहाराय चेतनस्येत्युक्तम् । सुप्तमुग्धयोस्तत्परिहारायासुप्तस्येति । अमुग्धस्येत्यपि द्रष्टव्यम् । ननु सुप्तौ मोहे च न चेतयत एव । अतश्चेतनस्येत्यनेनैव तद्व्यवच्छेदसिद्धेर्व्यर्थं विशेषणमिति । मैवम् । चेतनशब्देनात्मत्वमात्रस्य विवक्षितत्वात् । चैतन्ययोगे हि विवक्षिते कामाभावाङ्गीकारसाहसादबिभ्यत्परश्चैतन्याभावमपि ब्रह्मादीनामङ्गीकुर्यादित्यसिद्धिः स्यात् । तदिदमुक्तं तुशब्देन । कुत्रेत्याक्षेपे । हिशब्दो यस्माद्व्याप्तिः सिद्धेति शेषः । नोपादेयमेव वा हेतावसुप्तत्वादिविशेषणम् । न च तथा सति व्यभिचारापातः । सुप्त्यादावप्यात्मनः कामसद्भावात् । न चैवं सति यत्र सुप्तो न कञ्चन कामं कामयत इत्यादिश्रुत्याऽनुपलम्भेन च विरोधः । विद्यमानानामपि कामानां तदानीमव्यक्तत्वेन श्रौताभावव्यवहारस्यानुपलम्भस्य चोपपत्तेः ।

शे० — उक्तस्येति । आप्तकामत्वस्याकामहतत्वं प्रति यन्निमित्तत्वमुक्तं तस्येत्यर्थः ॥ व्यभिचारमात्रमिति । आप्तकामत्वाभावेऽकामहतत्वाभाव इति व्यतिरेकेऽकामे, व्यभिचारः । तत्राप्तकामत्वाभावे सत्यप्यकामहतत्वाभावाभावात् । तथा च निमित्तनैमित्तिकभावस्तयोर्युक्त इत्यर्थः ॥

**वक्ष्यमाणेति** । 'चेतनस्य त्वसुप्तस्येत्यनुपदमेव वक्ष्यमाणेत्यर्थः । तथा च सकामत्वे सति यत्राप्तकामत्वाभावस्तत्राकामहतत्वाभाव इति विवक्षितव्यतिरेकशरीरे न व्यभिचार इति भावः । नन्वेवमपि न मुग्धे व्यभिचारपरिहार इत्यत आह **अमुग्धस्येत्यपीति** । ननु चेतयते जानातीति व्युत्पत्त्या ज्ञानवत्त्वमेव चेतनत्वम् । एवं च सुप्त्याद्यवस्थायां ज्ञानवत्त्वाभावेन व्यभिचारस्यैवाभावेनासुप्तामूढपदं व्यर्थमित्याशङ्कते **ननु सुप्ताविति** ॥ **न चेतयत इति** । न जानातीत्यर्थः । चित सञ्चेतन इत्यस्माच्चुरादित्वाण्णिचि लघूपधगुणे च निष्पन्नचेतिशब्दस्य सनाद्यन्ता धातव इति धातुत्वाल्लडात्मनेपदप्रथमपुरुषैकवचने सति तस्मिन्परतश्शपि सार्वधातुकार्धधातुकयोरिति गुणे अयादेशे टेरेत्वे च सत्येतद्रूपसिद्धिरिति द्रष्टव्यम् ॥ **आत्मत्वमात्रस्येति** । 'प्राणी तु चेतनो जन्मी जन्तुर्जन्यशरीरिणः' इत्यभिधानसिद्धरूढोऽयमिति शेषः । यौगिकत्वे बाधकमाह **चैतन्येति** । चेतनस्य ज्ञानवतो भावश्चैतन्यं ज्ञानं तद्योगस्तद्वत्त्वं चेतनत्वमिति विवक्षिते सतीत्यर्थः ॥ **तदिदमिति** । चैतन्यशब्दो न चैतन्ययोगनिमित्तकः । किन्त्वात्ममात्रपर इति यदुक्तं तदिदं विशेषार्थेन चेतनस्य त्विति तुशब्देनोक्तमित्यर्थः ।

**स०— उक्तस्येति** । आप्तकामत्वस्याकामहतत्वं प्रति निमित्तत्वं यदुक्तं तस्येत्यर्थः । **व्यभिचारमात्रमिति** । संसारिणोऽकामहतता न अनाप्तकामत्वादित्यनुमाने सुप्त्यादावनाप्तकामत्वेऽपि अकामहतत्वसद्भावेन तत्र व्यभिचार इति व्यभिचारमात्रमित्यर्थः । **वक्ष्यमाणेति** । चेतनस्य त्वसुप्तस्य कुत्र दृष्टा ह्यकामतेति वक्ष्यमाणन्यायेनेत्यर्थः । तथाच विशिष्टहेत्वभावात् न सुप्त्यादौ व्यभिचार इति भावः ।

**प०— कामाभावेऽपीति** । जडे विरक्ते मुग्धादौ च तथादृष्टेरिति भावः ॥ **व्यभिचारमात्रमिति** । आप्तकामत्वाभावेप्यकामहतत्वमस्तीति व्यतिरेकव्यभिचारमात्रं न तु ब्रह्मादिष्वकामहतत्वेनाकामहतत्वमपीति मात्रपदार्थः ॥ **वक्ष्यमाणेति** । उत्तरवाक्ये वक्ष्यमाणदिशाऽसुप्तामूढचेतनस्याकामहतत्वमाप्तकामत्वनिमित्तकमित्युक्तविशेषणप्रक्षेपादित्यर्थः । असुप्तेत्यादिहेतौ विशेषणकृत्यं व्यक्तम् । चेतनत्वादित्यस्य मनोवृत्तिरूपचेतनावत्त्वादित्यर्थमुपेत्य शङ्कते **नन्विति** । **मोहे** मूर्च्छायामित्यर्थः । न चेतयत एवेत्यत्र सुप्तमूढाविति योज्यम् ॥ **तुशब्देनेति** । सुप्त्यादावपि अनुवृत्तिमत इति विशेषसूचकत्वात्तस्येति भावः ।

**या०— कामभावेऽपीति** । अचेतने सुप्ते मुग्धे चेतने चेत्यर्थः ॥ **उक्तस्य व्यभिचारेति** । उक्तस्य निमित्तनैमित्तिकभावस्य व्यतिरेकव्यभिचारश्चोद्यत इत्यर्थः । मात्रपदेन वक्ष्यमाणद्वितीयकल्पनिरासः ॥ **वक्ष्यमाणेति** । 'चेतनस्य त्वसुप्तस्ये'त्यत्रेति शेषः । तथा चासुप्तामूढचेतनानां कामाहति-

राप्तकामत्वेनैवेति विवक्षायां नोक्तव्यतिरेकव्यभिचार इति भावः ॥ **आत्मत्वमात्रस्येति** । रूढ्येति शेषः । योगाङ्गीकारे बाधकमाह **चैतन्ययोगे हीति** ॥ **तुशब्देनेति** । चेतनशब्दार्थविशेषसूचकेनेत्यर्थः ।

**श्री०— कामाभावेऽपीति** । सर्वथा कामाभावेऽपीत्यर्थः ॥ **सम्भवादिति** । जडेषु दर्शनादित्यर्थः । तथा च कामनिमित्तोपद्रवाभावरूपाकामहतत्वे कामाभाव एव प्रयोजको नाप्तकामत्वमिति भावः । त्वयोच्यमानं निमित्तं ब्रह्मादिषु नास्तीत्याह **ब्रह्मादय इति** । ननु चेतयते जानातीति व्युत्पत्त्या ज्ञानवत्त्वमेव चेतनत्वम् । एवं च सुप्त्याद्यवस्थायां ज्ञानवत्त्वाभावेन व्यभिचारस्यैवाभावेनासुप्तामूढपदं व्यर्थमित्याशङ्कते **ननु सुप्ताविति** ॥ **चैतन्ययोग इति** । चेतनस्य ज्ञानवतो भावश्चैतन्यं ज्ञानं तद्योगस्तद्वत्त्वं चेतनत्वमिति विवक्षिते सतीत्यर्थः ।

**च०— अमूढेति** । मुहवैचित्त्य इत्यस्मात् निष्ठायां ढत्वधत्वष्टुत्वढलोपेदीर्घेषु निष्पन्नोऽयमिति मोहविशेषितेतर इत्यर्थः । **अमुग्धस्येतीति** । वाद्रुहमुहष्णुष्णिहाम् । एषां हस्य वा घः स्यादिति वैकल्पिके घत्वे 'झषस्तथोर्धोऽधः' इति धत्वे जस्त्वे च मुग्धशब्दनिष्पन्नतया पर्युदासनञा समासे मोहविशेषितेतरस्येत्यर्थः । **अबिभ्यदिति** । 'नाभ्यस्ताच्छतुरि'ति नुम्निषेधः ।

---

**सु०— व्यक्तकामाभिप्रायेण प्राग्विशेषणमुपात्तमित्याशयवानाह** अव्यक्तिरेवेति ।

**अनु०**— अव्यक्तिरेव कामानां न नाशो मोहसुप्तयोः ।

**नाशोऽभावः । सुप्तं सुप्तिः । नपुंसके भावे क्तः ।**

**शे०**— तर्हि सुप्त्यादावप्यात्मनः कामसद्भावात्कामरहितत्वाभावरूपसाध्यस्यापि सत्त्वेनाव्यभिचारात् असुप्तस्येत्यादिविशेषणोपादानमनर्थकमित्यत आह **व्यक्तेति** । अवस्थावाचकमोहशब्दसमभिव्याहारात्कुतः सुप्तावकामतेत्युत्तरग्रन्थानुसाराच्च सुप्तशब्दोऽप्यवस्थावाचक एवेत्याशयेनाह **सुप्तं सुप्तिरिति** ।

**प०**— कर्त्रर्थत्वेनान्वयादाह **सुप्तं सुप्तिरिति** ।

**श्री०**— ननु सुप्तौ मोहे च कामसद्भावे चेतनत्वहेतोर्व्यभिचाराभावेनासुप्तामूढेति विशेषणोपादानं व्यर्थमित्यत आह **व्यक्तेति** । तथा च ब्रह्मादयो नाभिव्यक्तकामरहिता इति साध्यं विवक्षितम् । तस्य च सुप्त्यादावभावेन चेतनत्वहेतोर्व्यभिचारप्राप्तेऽसुप्त्यादिविशेषणमुपात्तम् । इदानीं तु कामराहित्यं

नास्तीति सामान्येनोच्यते । सुप्त्यादौ त्वनभिव्यक्तकामसद्भावेन साध्याभावाभावान्न व्यभिचार इति विशेषणमनुपादेयमेवेति भावः । ध्वंसस्य परेणानाशङ्कितत्वादाह **नाशोऽभाव इति ।**

सु०— **स्यादेतत् । सुप्त्यादौ कामसद्भावे सिद्धे युक्तमव्यक्तिकल्पनम् । स एव तु कुतः सिद्ध इत्यत आह** यत्काम इति ।

**अनु०**— यत्कामः स्वापमाप्नोति तदेवोत्थापितः पुनः ॥
अवशोऽपि व्याहरति कुतः सुप्तावकामता ॥

**मोहोऽत्रापि ग्राह्यः । व्याहरतीत्यतः परं यतस्तस्मादित्यध्याहार्यम् । यद्भोजनादिकं कामयमानो देवदत्तः स्वापादिकमाप्नोत्युत्थापितः पुनस्तदेव कदाचिद्व्याहरतीति तावदनुभवसिद्धम् । तस्माद्व्याहरणविशेषाच्च तस्य तदा तत्र कामोऽस्तीत्यनुमीयते । स च न तावदुत्थानानन्तरमुत्पन्नः । तदा देवदत्तस्यावशत्वात् । वस्तुदर्शनेऽनुमानादिनेष्टसाधनताज्ञाने च सति खलु कामोदयः स्यात । न चावशस्यैषा कामसामग्री कल्पयितुं शक्यते ततः प्राक्तन एव कामः सुप्त्यादौ सन्नतरो(ऽव्यक्तो)ऽनुवर्तमानः पुनः सहकारिलाभक्रमेण व्यज्यत इत्येवाङ्गीकार्यम् । तथा चाह पतञ्जलिः । अविद्याक्षेत्रत्वमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणामिति । यत एवं तस्मात्कुतः सुप्त्यादावात्मनोऽकामता स्यात् ।**

**शे०**— यादृशो व्यवहारविशेष इच्छानुमापकस्तस्मादिच्छाऽस्तित्वमनुमीयत इत्याह **व्याहरणविशेषाच्चेति ।** सन्नतरोऽव्यक्तः ॥ **अविद्याक्षेत्रत्वमिति ।** उत्तरेषां रागद्वेषमोहानामविद्याक्षेत्रत्वमविद्याकार्यत्वं । किं भूतानां तेषामित्यत उक्तं प्रसुप्ततनुविच्छिन्नोदाराणामिति । प्रसुप्ता अव्यक्ता रागादयो गर्भे । तनव ईषद्व्यक्ता बाल्ये । तदा स्तन्यादिमात्रकामादेर्दर्शनात् । विच्छिन्नाः, नानापदार्थतया व्यक्ताः कैशोरादौ । उदाराः, उत्कृष्टतया व्यक्ता यौवनादाविति विवेकः ।

**स०**— सन्नतरोऽव्यक्तः ।

**प०**— अवशत्वेपि कुतो न काम इत्यत आह **वस्तुदर्शन इति ।** वाक्यमादिपदार्थः ॥ **सुप्त्यादाविति ।** मोह आदिपदार्थः । **सन्नतरः** सूक्ष्मतमः । कामोऽस्तीत्यत्र संमतिमाह **तथा चाह पतञ्जलिरिति ।** सांख्यैकदेशी । अविद्याक्षेत्रत्वमविद्याहेतुकत्वं, उत्तरेषां काममोहप्रभृतीनां, प्रसुप्तत्वं अव्यक्तत्वं, तनुत्वं सन्नतत्वं, विच्छिन्नत्वं, सुन्दरनानाविधवस्तुषु विक्षिप्तत्वं, उदारत्वं अत्यन्ताभिव्यक्ततैवेति ज्ञेयम् ।

**या०**— अनुमानादिनेत्यत्रादिपदेनाप्तवाक्यग्रहणम् । सन्नतरोऽतिशयेन सूक्ष्मः ॥ **अविद्याक्षेत्रत्वमिति । उत्तरेषां** रागद्वेषमोहानाम् अविद्याक्षेत्रत्वमज्ञानकारणकत्वम् कथम्भूतानामुत्तरेषां प्रसुप्ततनुवि-

च्छिन्नोदाराणाम् । प्रसुप्ता अव्यक्ता रागादयो गर्भे तनव ईषद्व्यक्ता बाल्ये तदा स्तन्यादिमात्रकामादेर्दर्शनात् । विच्छिन्ना नानापदार्थविषयकतया व्यक्ताः कैशोरादौ । उत्कृष्टतया व्यक्ता यौवनादाविति द्रष्टव्यम् । अत्र यद्यपि सुप्त्यादौ कामावस्थानं नोक्तम् । तथाऽपि गर्भमारभ्य यौवनपर्यन्तं रागादेरनुवृत्त्युक्त्या सुप्त्यादावपि तदनुवृत्तिर्गतैवेति द्रष्टव्यम् ।

श्री०— **तदेति** । उत्थानाव्यवहितोत्तरक्षणे । अवशत्वात् परवशत्वात् । सम्यग्जागरणाभावादिति यावत् ।

**सु०— नन्वयं केवलो विशिष्टो वा चेतनत्वहेतुर्मुक्तेष्वनैकान्तिकः । तेषां कामाभावादित्यत आह** सर्वेति ।

अनु०— सर्वकामानवाप्नोति ब्रह्मणा सह मुक्तिगः ॥
पर्येति तत्र जक्षंश्च क्रीडन्नतिमवाप्नुयात् ॥
कामान्नी कामरूपी सन्निमाँल्लोकांश्च सञ्चरन् ॥
आस्ते गायन्साम मुक्त इत्यादिश्रुतिसद्बलात् ॥
अकामस्स्यात्कथं मुक्तः

**अनेन 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति श्रुतिमुपादत्ते । पर्येतीत्यनेन 'स तत्र पर्येति जक्षन्क्रीडन्रममाण' इति । जक्षन्निति वैदिकत्वात्साधुः । कामान्नीत्यनेन 'इमाँल्लोकान्कामान्नी कामरूप्यनुसञ्चरन् । एतत्साम गायन्नास्त' इति । आदिपदेन 'स एकधा भवतीत्यादेः संग्रहः । बलात्कामसद्भावावगतेरिति शेषः । यद्यप्येताः श्रुतयो न साक्षान्मुक्तस्य कामसद्भावमाचक्षते । तथाऽपि सामर्थ्यात्तं गमयन्त्येव । तदिदमुक्तं श्रुतिबलादिति । तच्च सामर्थ्यमव्यभिचरितमेव न तु संभावनामात्रमिति सच्छब्देनाह । तथा हि । कामकर्मत्वाद्धि विषयाः कामाः । कर्मणि घञो विधानात् । तथा च सोऽश्नुते सर्वान्कामानित्यत्र सन्निधेस्तत्कामकर्मभूतान्विषयानश्नुत इत्युक्तं स्यात् । निष्कामस्य शिलासमस्य कामावाप्तिः कीदृशी स्यात् । पर्यटनादिकं च कामकार्यं न विना कामेन संभवति । स्त्रीभिर्निष्कामस्य रमणमत्यन्तासंभावितम् । अन्नादीनां च कामत्वं काम्यतयैवेति पूर्ववत्कामावगतिः । यद्यपि स यदि पितृलोककामो भवतीत्याद्या विस्पष्टाः श्रुतयोऽत्र सन्ति तथाऽपि शिष्यैर्न्यायमनुसन्दधानैर्भाव्यमित्येतासामुदाहरणम् । मुक्तस्याकामत्वाभावान्नानैकान्त्यं हेतोरिति ।**

**शे०** — ननु जक्षतेर्जक्षित्यादयः षडित्यभ्यस्ततया ततः परस्य शतुर्नाभ्यस्ताच्छतुरिति नुमो निषिद्धत्वेनोगिदचामिति नुमोऽप्राप्तेर्जक्षदित्येव भवितव्यं जक्षन्निति तु कथमित्यतः सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनाच्छान्दसोऽत्र नुमित्याशयेनाह **जक्षन्नितीति** ॥ **कर्मणीति** । अकर्तरि च कारके संज्ञायामिति सूत्रेणेति शेषः ॥ **सन्निधेरिति** । सोऽश्नुत इति तच्छब्दार्थस्य सन्निहितत्वात्तत्कामकर्मभूतानित्यर्थलाभ इति भावः ॥ **पूर्ववदिति** । सोऽश्नुत इति पूर्ववाक्य इवेत्यर्थः । फलितमाह **मुक्तस्येति** ।

**स०** — ननु जक्षित्यादयः षडित्यनेन जक्षतेरभ्यस्ताच्छतुरित्यभ्यस्तात्परस्य शतुर्नुम्निषेधेन प्रकृते नुमोऽभावे जक्षदित्येव भवितव्यम् । जक्षन्निति तु कथमित्यत आह **जक्षन्नितीति** ॥ **सन्निधेरिति** । पूर्ववदिति सोऽश्नुत इति पूर्ववाक्य एवेत्यर्थः । फलितमाह **मुक्तस्येति** ।

**प०** — **नन्वयमिति** । ब्रह्मादयो न कामरहिता इत्यत्रोक्तो हेतुरित्यर्थः । ननु जक्षित्यादयः षडिति सूत्रेण जक्ष भक्षहसनयोरिति धातोः अभ्यस्तसंज्ञायां शतृप्रत्यये उगिदचामितिप्राप्तनुमागमस्य नाभ्यस्ताच्छतुरिति प्राप्तनिषेधेन जक्षदिति भाव्यमित्यत आह **जक्षन्निति** ॥ **वैदिकत्वादिति** । वेदगतत्वादित्यर्थः । तदनुकरणत्वाद्भाष्यकृत्प्रयोगोऽपि साधुरेवेति भावः ॥ **स एकधेति** । स एकधा भवति स त्रिधा भवति पञ्चधा सप्तधा नवधा चेत्यादिसप्तमाध्यायगतच्छन्दोगश्रुतिसंग्रह इत्यर्थः । **कामकर्मत्वादिति** । कामं प्रति कर्मकारकत्वादित्यर्थः । काम्यमानत्वादिति यावत् । विषयाः स्रक्चन्दनवनितादयः ॥ **कर्मणीति** । कमु कान्ताविति धातोः अकर्तरि च कारके संज्ञायामिति कर्मणि घञ्प्रत्यये अत उपधया इति उपधावृद्धौ काम इति रूपसिद्धिरिति भावः । ननु कामानित्यस्य काम्यमानानित्यर्थत्वेऽप्यन्येन काम्यमानान् इत्यर्थकत्वे तदश्नतोऽपि मुक्तस्य कामो न सिध्यतीत्यत आह **सन्निधेरिति** । अन्तरङ्गत्वादित्यर्थः ॥ **तत्कामेति** । यो ह्यश्नुते तत्कामेत्यर्थः ॥ **कीदृशी स्यादिति** । काकुस्वरेण न काऽपि कामावाप्तिरित्यर्थः ॥ **पर्यटनादिकमिति** । पर्येतीत्युक्तं पर्यटनजक्षणादिकमित्यर्थः । कामान्नीत्यस्य प्रकृतोपयोगितां व्यनक्ति **अन्नादीनां चेति** । पूर्ववत् पूर्वत्रेव । सर्वान्कामानितिश्रुतौ कामावगतिप्रकारसमर्थनदिशेति भावः ॥ **न्यायमिति** । स च न्यायस्तथाहीत्यादिना दर्शितः । प्रकृतमुपसंहरति **मुक्तस्येति** ॥ **हेतोरिति** । असुप्तामूढचेतनत्वादिति हेतोरित्यर्थः ॥ मुक्तानां कामवत्त्वोक्तिः ।

**या०** — ननु जक्षित्यादयः षडित्यनेन जक्षतेरभ्यस्तत्वान्नाभ्यस्ताच्छतुरित्यनेनाभ्यस्तात्परस्य शतुर्नुम्निषेधेन जक्षदिति भवेज्जक्षन्निति कथमित्यत आह **जक्षन्नितीति** । छान्दसोऽत्र नुमिति भावः ॥ **स एकधा भवतीत्यादेरिति** । स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः

स्मृतः । शतं त्र दश चैकं च सहस्राणि च विंशतिरिति छान्दोग्यवाक्यसंग्रह इत्यर्थः । **कर्मणि घञिति** । अकर्तरि च कारके संज्ञायामित्यनेनेति शेषः । पर्यटनादिकं चेत्यत्रादिपदेनैकरूपत्वमपि गृहीतमिति ज्ञातव्यम् ।

**श्री०— सन्निधेरिति** । कामशब्देनैव प्रतिपाद्यतया सन्निहितत्वादित्यर्थः ।

**च०—** ननु जक्षितेर्जक्षित्यादयः षडिति योगविहिताभ्यस्तसंज्ञतया ततः शतृप्रत्यये 'उगिद्चामि'ति विहितनुमो 'नाभ्यस्तादिति निषेधे जक्षदिति न्यासेन भवितव्यमित्यत आह **जक्षन्निति** ।

**सु० — ननु मुक्तानां कामाभावेऽपि 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इत्याद्या श्रुतिरस्ति । तत्कथं कामवत्त्वनिश्चय इत्यत आह** कामा येऽस्येति ।

**अनु०—** कामा येऽस्य हृदि श्रिताः ।।
इत्यन्तःकरणस्थानां कामानां मोक्षमेव हि ।।
आह श्रुतिः

**इति श्रुतिरित्यन्वयः । अन्तःकरणस्थानामेवेति च । न तु सर्वथाऽपीत्येवार्थः । हिशब्दो यस्मादित्यर्थे । तस्मादकामः स्यात्कथं मुक्त इति संबन्धः ।**

**कुतः श्रुतेरर्थसङ्कोचः क्रियत इत्यत आह** हृदीत्येवेति ।

हृदीत्येव न चेद्व्यर्थं विशेषणम् ।।

**न चेदेषा श्रुतिरुक्तरीत्या व्याख्यायेत । सर्वथाऽपि कामाभावपरेति व्याख्यायेतेति यावत् । तदा हृदि श्रिता इति कामानां विशेषणं व्यर्थमेव स्यात् । व्यावर्त्याभावात् । अतो विशेषणं प्रयुञ्जाना श्रुतिरन्तःकरणपरिणतीनां कामानामेव मुक्तावभावोऽन्तःकरणस्यैवाभावान्न तु सर्वेषां स्वरूपभूतानां कामानामवस्थानादित्येतमर्थं गमयतीति** ।

**शे०— इति श्रुतिरित्यन्वय इति** । इत्यन्तःकरणस्थानामित्यत्रत्यस्येतिशब्दस्य व्यवहितेन श्रुतिरित्यनेनान्वय इत्यर्थः ।। **अन्तकरणस्थानामेव चेति** । अन्वय इति वर्तते । अन्तःकरणस्थानामित्यस्य व्यवहितेन मोक्षमेवेत्यत्रत्यैवकारेणान्वय इति भावः ।। **व्यावर्त्याभावादिति** । सम्भवे व्यभिचारे च विशेषणस्यार्थवत्त्वादिति भावः ।

**स०**. श्रुतिः पूर्वोदाहृतेति । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'त्यादिरूपा पूर्वोक्तेत्यर्थः ।

प०— व्यवधानादाह **इति श्रुतिरित्यन्वय इति** । एवशब्दस्यान्वयप्रदर्शनपूर्वं व्यावर्त्यमाह **अन्तःकरणेति** । मूलोक्तव्यतिरेकस्य व्यर्थतारूपायाऽऽद्येन व्याप्तेरस्फुटत्वादन्वयरूपमापादकमाह **इति व्याख्यायेतेति यावदिति** ॥ **प्रयुंजाना श्रुतिरित्यस्य** गमयतीत्यन्वयः ।

**श्री०— उक्तरीत्येति** । अन्तःकरणस्थानां कामानामित्युक्तरीत्येत्यर्थः । ननु कथं सावकाशत्वं विशेषणस्य स्वरूपकथनपरत्वादिति चेत्तत्राह **विशेषणेति** । विशेषणस्येत्यर्थः । स्वरूपकथनपरत्वस्याद्याप्यनिश्चितत्वेन निरवकाशत्वनिश्चय इति भावः ।

**सु०— भवेदेतत् । यदीदं विशेषणं स्यात् । न चैवम् । व्यावर्त्याभावात् । एतत्सर्वं मन एवेति श्रुत्या सर्वेषामपि कामानां मनःपरिणाम(वर)त्वमेव न त्वात्मधर्मः कामोऽस्तीत्यवगमात् । अतो हृदि श्रिता इत्येतत्स्वरूपकथनमात्रमित्याशयेनाशङ्क्य निषेधति** हृद्येवेति ।

**अनु०—** हृद्येव तेषां श्रयणमिति पक्षो न भासते ॥

**अन्तःकरण एव । तेषां कामानाम् । भासते शोभते । कुतो न भासत इत्यत आह** मुक्तानामिति ।

मुक्तानां कामितामाह पृथक् शाखासु यच्छ्रुतिः ॥

**अन्तःकरणविधुराणामपीत्यर्थः । यद्यस्मात्तस्मान्न शोभत इति संबन्धः । श्रुतिः पूर्वोदाहृता । नन्वेतदयुक्तम् । प्रागुदाहृतश्रुतेः प्रतिपक्षतयोद्भाविताया अस्याः श्रुतेस्तयैव बाधस्योच्यमानत्वात् । मैवम् । प्रागुदाहृतश्रुतेः प्रबलत्वेन बाधकत्वोपपत्तेः । तथा हि । कामश्रुतिस्तावन्निरवकाशा । तदभावश्रुतिस्तूक्तरीत्या सावकाशा । विशेषणस्वरूपकथनत्वसन्देहेऽपि न निरवकाशत्वम् । एतत्सर्वं मन एवेत्यपि सावकाशश्रुतिरिति सांख्याधिकरणेऽभिहितम् । किञ्च कामश्रुतिः सर्वास्वपि शाखास्वस्ति । तथैवोदाहृतत्वात् । तदभावश्रुतिस्तु क्वचिदेवेति कथं न बाध्यबाधकभावः । तदिदमुक्तं पृथक्शाखास्विति ।**

**शे०— पूर्वोदाहृतेति** । सोऽश्नुते सर्वान्कामानित्यादिकेत्यर्थः ॥ **उक्तरीत्येति** । हृदि श्रिता इति विशेषणं प्रयुञ्जाना श्रुतिरन्तःकरणतत्परिणतानामेवाभावं वदति । अन्यथा विशेषणवैयर्थ्यप्रसङ्गादित्युक्तरीत्येत्यर्थः । ननु तदभावश्रुतेः कथं सावकाशत्वं हृदीत्यस्य विशेषणतयाऽद्याप्यनिश्चयादित्यत आह **विशेषणस्वरूपकथनत्वेति** । विशेषणत्वस्वरूपकथनत्वेत्यर्थः । न निरवकाशत्वं न निरवकाशत्वनिश्चयः । तथा च निश्चितनिरवकाशतया श्रुत्या तदभावश्रुतेर्बाधोपपत्तिरिति भावः । नन्वेतत्सर्वं मन एवेति श्रुति-

बलात्स्वरूपकथनपरतानिश्चयो भविष्यतीत्यत आह **एतत्सर्वं मन एवेत्यपीति ।** द्विविधो हि कामः । एक आत्मधर्मोऽपरोऽन्तःकरणधर्मः । तत्रान्तःकरणधर्मं काममभिप्रेत्यैतत्सर्वं मन एवेति श्रुतिः प्रवृत्ता नात्मनः कामवत्तां बाधते । अन्यथा देवदत्तो गोमानित्यनेनापि यज्ञदत्तस्य गोसम्बन्धबाधापातात् । विषम उपन्यासः । यावता देवदत्तस्येव यज्ञदत्तस्यापि गोस्वामितायाः प्रमाणेन सिद्धेर्न प्रमिततन्निषेधकत्वं वाक्यस्य कल्पयितुं शक्यमित्यतो वाक्यस्य तत्र देवदत्तस्य गोसम्बन्धप्रतिपादनमात्रे तात्पर्यं कल्प्यते । न चैवम् । कामद्वैविध्ये प्रमाणमस्ति । येन मनोधर्मकाममभिप्रेत्य श्रुतिः सावकाशा भवेदित्यतः श्रुत्यनुभवबलात्तद्द्वैविध्यसिद्धेर्युक्तमत्रापि सावकाशत्ववर्णनमिति सांख्याधिकरणे उभयात्मकता यत इत्यादिनाऽभिहितमित्यर्थः ।

**प०— एतत्सर्वमिति ।** कामः संकल्पो विचिकित्सा ह्रीर्धीर्भीरिति पूर्वभागोक्तधर्मपरामर्शः हृच्छब्दस्य गोलकार्थकत्वभ्रमनिरासायोक्तमन्तःकरण एवेति । प्रकृतोपयोगाय अपिशब्दाध्याहारेण मुक्तशब्दार्थमाह **अन्तःकरणविधुराणामपीति ॥ पूर्वोदाहृतेति ।** कामस्य यत्राप्ताः कामाः सर्वकामानवाप्नोतीत्याद्येऽर्थः । ननु हृदि (श्रिता) इत्यस्य स्वरूपोक्तिमात्रपरत्वसन्देहान्न सावकाशतेत्यत आह **विशेषणेति ।** प्रत्येकं त्वप्रत्ययान्वयः । नन्वेतत्सर्वं मन एवेति श्रुतिबलाद्धृदीति स्वरूपोक्तिरिति आह **एतत्सर्वमिति ।** 'उभयात्मकता यतः । 'कामस्य तु मनः कामः प्रियाप्रियविभेदतः । द्वैविध्यं दृश्यत इत्येतद्व्याख्यावसरे निरीश्वरसांख्यनयेऽभिहितमित्यर्थः ।

**या०—** ननु कामाभावश्रुतिः कथं सावकाशा हृदीत्यस्य विशेषणतायां अद्याप्यनिश्चयादित्यत आह **विशेषणस्वरूपकथनत्वेति ।** न निरवकाशत्वं न निरवकाशत्वनिश्चयः । तथा च निश्चितनिरवकाशत्वं कामश्रुत्या तदभावश्रुतेर्बाधोपपत्तिरिति भावः । नन्वेतत्सर्वं मन एवेति श्रुतिबलात्स्वरूपकथनपरतानिश्चयोऽस्त्वित्यत आह **एतत्सर्वमिति ।** 'उभयात्मकतया यतः । कामस्य तु मनः कामः प्रियाप्रियविभेदतः । द्वैविध्यं दृश्यते चास्ये'त्यत्रेति शेषः ।

**श्री०—** ननु कामः सङ्कल्प इत्याद्युक्त्वैतत्सर्वं मन एवेति श्रुतेर्नात्मधर्मः कामोऽस्ति । अतो व्यावर्त्याभावान्न विशेषणं हृदीत्येतत्किन्तु स्वरूपकथनपरमेवैतदिति न तदभावश्रुतिः सावकाशा । अपि तु निरवकाशैवेत्यत आह **एतत्सर्वं मन एवेत्यपीति ।**

**सु०— कामस्य यत्रेत्यादिनोक्तमर्थमुपसंहरति** अत इति ।

**अनु०—** अतोऽकामहतत्वं तु मुक्तानामेव मुख्यतः ।

**कामनिमित्तोपद्रवाभावस्याकामहतत्वस्याकामत्वाप्तकामत्वाभ्यामेवोपपत्तेरकामत्वस्य चेतनमात्रेऽसंभवादाप्तकामत्वस्य च मुक्तलक्षणत्वेन तत्रैव संभवादमुक्तेष्वसंभवादित्यर्थः । मुक्तानामेव धर्म इति सिद्धमिति शेषः ।**

शे० — **कामनिमित्तोपद्रवाभावस्येति** । तद्रूपस्येत्यर्थः ॥ **मुक्तानामेवेति** । मुक्तानामेवेत्यतः परं धर्म इति सिद्धमिति शेषः पूरणीय इत्यर्थः ।

प० — अतःपदार्थमाह **कामनिमित्तेति** ।

श्री० — उपद्रवाभावस्योपद्रवाभावरूपस्याकामहतत्वस्येत्यर्थः ॥ **एतेनेति** । तत्कारणत्वादिति वचनेनेत्यर्थः ।

**सु० — सत्यम् । मुख्यया वृत्याऽकामहतत्वं मुक्तेष्वेव संभवति । तथाऽपि कामनिमित्तबहुतरोपद्रवाभावाद्ब्रह्मादिष्वप्यमुख्यं युज्यत एव । अतः संसारिण एव श्रुतिप्रतिपाद्याः किन्न भवन्तीति चेत् । किं मुख्यार्थपरिग्रहे बाधकसद्भावात्तत्परित्यागः क्रियते किंवा वृथैव । नाद्यः । तदभावात् । बाधकाभासानां च निराकरिष्यमाणत्वात् । द्वितीयं दूषयति** मुख्यार्थस्येति ।

**अनु०** — मुख्यार्थस्य वृथा त्यागो मायिनामेव भूषणम् ॥

**अपरीक्षका एव मायावादिप्रभृतयो विना बाधकेन मुख्यार्थं त्यजन्ति । वाच्यार्थपरमेश्वरपरित्यागेन निर्गुणलक्षणाङ्गीकारात् । न तु न्यायविद इति ।**

शे० — ननु तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यादिति तैत्तिरीयश्रुत्युक्तस्य वित्तपूर्णपृथिवीपतित्वस्यान्येषामधिपतिरिति वाजसनेयश्रुत्युक्तस्यान्याधिपतित्वस्य मुक्तेष्वसम्भव एव बाधकः । तत्कथमुच्यते बाधकाभावादितीत्यत आह **बाधकाभासानामिति** ॥ **निराकरिष्यमाणत्वादिति** । तस्येयं पृथिवीत्यादिपूर्वभाविव्यपक्षयेत्यादिनेति शेषः ।

स० — **बाधकाभासानां चेति** । तस्येयं पृथिवीत्यादिपूर्वभावव्यपेक्षयेत्यादिनेति शेषः ।

प० — **निराकरिष्यमाणत्वादिति** । मुक्तविषयत्वे ज्ञापकाभावादित्यादिबाधकाभासस्य राद्धः संसिद्ध इत्यादिना पृथिवीपतित्वादेश्च तस्येयं पृथिवीत्यादिपूर्वभावव्यपेक्षयेत्यादिना चात्रैवोपरितनग्रन्थेनेति भावः ।

या० — **निराकरिष्यमाणत्वादिति** । 'तस्येयं पृथिवीत्यादिपूर्वभावित्वव्यपेक्षये'त्यादिनेति शेषः ।

सु० — एवमकामहतत्वस्यामुक्तेष्वसंभवमभिधायावृजिनत्वस्याप्यभिधास्यन्नवृजिनत्वं तावद्व्याख्याति अपापत्वमिति ।

अनु० — अपापत्वमदुःखत्वं चावृजिनत्वमिहोदितम् ॥

इहोदितमवृजिनत्वं तावदपापत्वमदुःखत्वं चेति योजना । कुत एतदित्यत आह अप्रियमिति ।

अप्रियं वृजिनं दुःखमकं तोद इतीर्यते ॥
तत्कारणत्वात्पापं वा वृजिनं नाम कथ्यते ॥
इत्युक्तः स्वयमीशेन नामार्थः शब्दनिर्णये ॥

दुःखमप्रियमित्यादिशब्दैरीर्यत इति सम्बन्धः । तत्कारणत्वाद् दुःखकारणत्वात् । दधित्रपुसं प्रत्यक्षो ज्वर इति यथा । एतेन वृजिनशब्दो दुःखे मुख्यः । पापे तादर्थ्यात्ताच्छब्द्यमित्युक्तं भवति । अत एव वाशब्दः । नामार्थो वृजिननामार्थः । वृजिनशब्दस्य दुःखाद्यर्थत्वेऽवृजिनशब्दस्यादुःखाद्यर्थत्वं सिद्धमेवेति भावः ।

शे० — ईर्यत इति । लक्षणयेति शेषः ॥ तत्कारणत्वादिति लक्षणाबीजभूतशक्यसंबन्धकथनम् । रूढलक्षणात्वान्न स्वायत्तन्यायविरोध इत्याशयेनाह दधित्रपुसमिति । दधित्रपुसमिति समाहारद्वन्द्वः । त्रपुसमिति फलविशेषस्य संज्ञा कर्मधारयो वा । दध्येव विशिष्टावस्थायुक्तं त्रपुसमित्युच्यत इति ध्येयम् ॥ दशरात्रात्पूर्वं दध्यात्मना विक्रियमाणं पयो दधित्रपुसमित्यन्ये ॥ अत एवेति । उभयोरप्येकप्रकारेणार्थत्वाभावादेवेत्यर्थः । अन्यथा पापं चेत्येव ब्रूयादिति भावः । वाशब्द इत्युपलक्षणम् । तत्कारणत्वादित्यप्यनर्थकमिति द्रष्टव्यम् ।

(कारणे कार्यवाचकः शब्दः क दृष्ट इत्यत आह । तथा चादुःखत्वं च नैवास्तीत्यपि द्रष्टव्यम् ।)

स० — ननु वृजिनकारणत्वेन वृजिनशब्दवाच्यत्वं पापस्योक्तम् । तत्कथम् । कार्यवाचकस्य शब्दस्य कारणवाचकतायाः कुत्राप्यदृष्टत्वादित्यत आह त्रपुसमिति । फलविशेषस्य संज्ञा । त्रपुसस्य ज्वरकारणत्वेन ज्वरशब्दवाच्यत्ववत् प्रकृतेपि पापस्य वृजिनशब्दवाच्यत्वं संभवतीति भावः ।

प० — तद्धेतौ तच्छब्दप्रयोगोऽस्तीत्यत्र दृष्टान्तमाह (त्रपु)दधित्रपुसमिति । उक्तं हि महाभाष्ये प्रथमपादे द्विर्वचनेऽचीत्यत्र दधित्रपुसं प्रत्यक्षो ज्वरः नड्वलोकं पादरोग इति । व्याख्यातं च कैयटे दध्येव विशिष्टावस्थायुक्तं त्रपुसमिति । अन्ये तु दशरात्रात्पूर्वं दध्यात्मना विक्रियमाणं पयो

दधित्रपुसमिति । तत्र यथा ज्वरहेतौ ज्वरशब्दस्तथेत्यर्थः ॥ अत एवेति । न्यूनवृत्तित्वादेवेत्यर्थः । अन्यथा हि चशब्दमेव ब्रूयादिति भावः ।

**या०**— कारणे कार्यवाचकशब्दः क्व दृष्ट इत्यत आह **त्रपुसमिति** । त्रपुसं मण्डम् । अत एव क्वचिद्दधित्रपुसमिति पाठः । एवं च यथा ज्वरकारणत्वात्त्रपुसे ज्वरशब्दस्तथा प्रकृतेऽपीति भावः ॥ **अत एवेति** । उभयत्र वृत्तिसाम्याभावादेवेत्यर्थः । अन्यथा पापं चेति निर्देशः स्यादिति भावः ।

**श्री०**— ताच्छब्द्यं तच्छब्दवाच्यत्वम् ।

**सु०**— **ततः किं यद्यपापत्वादिकमवृजिनशब्दार्थ इत्यत आह** अपापत्वं चेति ।

**अनु०**— अपापत्वं च नैवास्ति यावत्संमाग्मस्य हि ॥
आरब्धपापमस्त्येव दुःखं च ज्ञानिनोऽपि हि ।

**चशब्दो वक्ष्यमाणसमुच्चयार्थः । अस्य जीवस्य । हिशब्दः संसारित्वादिति हेतुसूचनार्थः । तद्यथा इषीकातूलमित्यादिश्रुतेर्ज्ञानिनः पापाभावात्कथमेतदित्यत उक्तमारब्धेति । अनारब्धविषया श्रुतिरिति भावः । ज्ञानिनोऽप्यारब्धपापमस्त्येवेति संबन्धः । दुखं चास्त्येव पापसद्भावादिति हिशब्दार्थः । तस्मादवृजिनत्वमपि मुक्तेभ्योऽन्यत्रासंभवीति सिद्धम् ।**

---

**शे०**— **वक्ष्यमाणेति** । आरब्धपापमस्त्येवेत्युत्तरवाक्ये वक्ष्यमाणादुःखत्वसमुच्चयार्थ इत्यर्थः ।

**स०**— **वक्ष्यमाणेति** । प्रारब्धपापमस्त्येवेत्युत्तरवाक्ये वक्ष्यमाणदुःखत्वसमुच्चयार्थ इत्यर्थः ।

**प०**— **वक्ष्यमाणेति** । दुःखं च ज्ञानिनोऽपि हीति वक्ष्यमाणदुःखित्वसमुच्चयार्थ इत्यर्थः । ईशशब्दार्थपरामर्शभ्रमं निराह **अस्य जीवस्येति** । यश्च श्रोत्रिय इत्यादेर्मुक्ततारतम्योक्तिपरत्वम् ।

**या०**— **वक्ष्यमाणेति** । 'दुःखं च ज्ञानिनोऽपि ही'त्यत्र वक्ष्यमाणदुःखसमुच्चयार्थ इत्यर्थः । ईशेनेति प्रकृतेशपरामर्शवारणायाह **अस्य जीवस्येति** ।

**श्री०**— **वक्ष्यमाणेति** । तथा चादुःखत्वं च नैवास्तीत्यपि द्रष्टव्यमित्यर्थः ।

**सु०**— **केचिदेतां श्रुतिं अन्यथा व्याचक्षते । यश्च श्रोत्रियोऽवृजिनोऽकामहत इति श्रोत्रियस्य चाकामहतस्येति च वाक्यं न मुक्तसंग्रहार्थम् । किन्नाम प्रकृतमनुष्यगन्धर्वादिविषयमेव । न च तत्रासंभवः । श्रोत्रियञ्छन्दोधीत इति स्मरणाच्छ्रोत्रियशब्दस्य छन्दोऽधिगतिनिमित्तत्वात् । मनुष्यगन्धर्वादीनां च सर्वज्ञकल्पत्वात्प्रारब्धपापसद्भावेऽपि न ते तदा पापमाचरन्तीत्यवृजिना एवोच्यन्ते । विषयवैराग्योपेतत्वादकामहताश्च भवन्तीति । न च**

व्यावर्त्याभावेन वैयर्थ्यमिति युक्तम् । न हि वयं श्रोत्रियत्वादिकं विशेषणत्वेन ब्रूमः । किन्तु मनुष्येभ्यो मनुष्यगन्धर्वाणां शतगुणानन्दत्वेऽभिहिते तत्र हेत्वाकाङ्क्षायामिदमुच्यते । एवं मनुष्यगन्धर्वेभ्यो देवगन्धर्वाणां शतगुणानन्दाभिधाने कुत इत्याकाङ्क्षायां श्रोत्रियत्वादिहेतुरुच्यते । एवमुत्तरत्रापि । न च वाच्यं सर्वेष्वपि विद्यमानं श्रोत्रियत्वादिकमानन्दातिशये कथं हेतुः स्यादिति । मनुष्यादप्यतिशयेन मनुष्यगन्धर्वः श्रोत्रियोऽवृजिनोऽकामहतश्च यतः । एवं पूर्वपूर्वनिर्दिष्टादप्यतिशयेनोत्तरोत्तरः श्रोत्रियत्वादिमान् यस्मादिति व्याख्यानादिति ।

तदेतन्निराचष्टे तस्मादिति ।

अनु०— तस्मात्तस्मादकामत्वमिति चाश्रुतकल्पना ॥

चस्त्वर्थः । तस्मात्तस्मात्पूर्वपूर्वनिर्दिष्टादतिशयेनोत्तरोत्तरस्याकामत्वम् । उपलक्षणमेतत् । श्रोत्रियत्वादिकं चेति व्याख्याने त्वश्रुतकल्पनं स्यात् । तस्मादित्यतिशयेनेति चाश्रुतस्य कल्पनीयत्वात् । अन्यथा विवक्षितार्थस्यालाभात् ।

दोषान्तरमाह अकामेति ।

अकामहत इत्युक्तेः श्रुतहानिरपि स्फुटा ॥

श्रुतावकामहत इत्युक्तेः परेण चाकाम इति व्याख्यातत्वाच्छ्रुतस्य हतशब्दस्य हानिरपि स्फुटाऽऽपद्यते । न हि हतशब्दस्य किञ्चित्प्रयोजनमस्ति । अतः श्रुताश्रुतत्यागोपादानप्रसङ्गादयुक्तमिदं व्याख्यानमिति ।

शे०— केचिदित्यादि स्पष्टम् ॥ अन्यथेति । तस्मादिति अतिशयेनेति चाकल्पने । विविक्षितार्थस्य पूर्वपूर्वनिर्दिष्टादतिशयेनोत्तरोत्तरः श्रोत्रियत्वादिमानिति विवक्षितार्थस्येत्यर्थः । तथा च सर्वेष्वपि विद्यमानस्य श्रोत्रियत्वादेः साधारणत्वान्न तस्य पूर्वपूर्वस्मादुत्तरोत्तरस्यानन्दातिशये हेतुत्वमिति भावः ।

अकाम इति व्याख्यातत्वादिति । विषयवैराग्योपेतत्वादिति हेतूक्त्याऽकामत्वस्यैव लाभात्तदभिप्रायेणैवायमनुवादः । अतो विषयवैराग्योपेतत्वादकामहताश्च भवन्तीति न पूर्वग्रन्थानानुगुण्यमिति ध्येयम् ।

प०— इति स्मरणादिति । व्याख्यातमेतत् जिज्ञासासूत्रार्थोक्तिप्रस्तावे ओतत्ववाचीत्यादिव्याख्यानपरसुधापरिमळे । श्रुतौ यच्छब्दाध्याहारेण योजनां दर्शयति अकामहतश्च यत इति । चस्त्वर्थ इत्युक्तस्यान्वयमाह इति व्याख्याने त्विति । इति चाश्रुतस्येत्युपलक्षणं यत इत्यपि कल्प्यत्वात् ॥ इति

**व्याख्यातत्वादिति** । वैराग्योपेतत्वादकामहताश्चेति व्याख्यानानुवादस्य पूर्वकृतत्वेपि तत्पक्षे अकामा इत्येव पूर्तेर्हतपदासार्थक्यं मत्वोक्तमिति व्याख्यातत्वादिति । शाखाद्वयगतवाक्योक्तिर्यश्च श्रोत्रिय इति श्रोत्रियस्य चेति ।

**श्री०— व्यावर्त्येति** । न हि मनुष्यगन्धर्वादिषु केचिदश्रोत्रियाः सन्ति येन तद्व्यावर्त्यर्थं श्रोत्रियत्वादिविशेषणं सार्थकं स्यादित्यर्थः । विशेषणत्वेन व्यावर्तकत्वेन । यावदायासान्मुक्त इत्यत्र मुक्तो जीवन्मुक्तः । आनन्दोत्कर्षो दृश्यत इत्यत्र दृश्यत इत्युक्त्या तत्त्वस्यैवोक्तत्वेन तत्त्वं न मार्गणीय-मित्युक्तमसदित्यर्थः ।

**सु०— अपरे तु व्याचक्षते । यश्च श्रोत्रिय इति श्रोत्रियस्य चेति च न मुक्तविषयं नापि प्रकृतमनुष्यगन्धर्वादिविषयं किन्तु पुरुषान्तरविषयम् । तथा हि । मनुष्येभ्यो मनुष्य-गन्धर्वाणां शतगुणस्तावदानन्दः । यश्चापरः श्रोत्रियोऽवृजिनो मनुष्यगन्धर्वपदे कामरहितश्च । तस्यापि मनुष्येभ्यः शतगुणो मनुष्यगन्धर्वसमान एवानन्दो भवतीत्येवं तेषु तेषु पदेष्वकामस्य तत्तत्समानानन्दत्वमत्रोच्यते । न च वाच्यं विरक्तानां सर्वत्र कामाभावात्कथमियं तारतम्यो-क्तिरिति । तदतिरिक्तपदेषु कामसद्भावस्य विवक्षितत्वात् । यो यो यावदायासान्मुक्तोऽसावसौ तावदानन्दवानित्यर्थो ह्यत्र प्रतिपिपादयिषित इति ।**

**एतदपि श्रुतहानाश्रुतकल्पनाप्रसङ्गादेव निरस्तम् । अत्रापि हतशब्दस्य प्रयोजनाभावेन हातव्यत्वात् । तस्मिन्पद इत्यस्यान्यत्र सकाम इत्यस्य च कल्पनीयत्वात् ।**

**शे०— सर्वत्रेति** । मनुष्यगन्धर्वपदे कामाभावात्तत्समानानन्दत्ववद्देवगन्धर्वादिपदेष्वपि कामाभावेन तत्तत्समानानन्दत्वस्यापि प्राप्तेरित्यर्थः । **तदतिरिक्तपदेष्विति** । तदुत्तमपदेष्वित्यर्थः । अस्तु मनुष्यगन्धर्वपदे कामनारहितस्य तदुत्तमपदे कामना तावताऽपि कथं तारतम्यनिर्वाह इत्यत आह **यो य इति** । **आयासात्** कामरूपात् । तथा च यो यत्पदाकामस्तस्य तत्समानानन्दप्राप्तिनियमान्मनुष्य-गन्धर्वपदे कामनारहितस्य न देवगन्धर्वादिसमानानन्दप्राप्तिस्तत्पदे कामनारहितत्वाभावात् । ततश्च तारतम्योपपत्तिरेवेति भावः ।

**प०— यावदायासादिति** । कामरूपादित्यर्थः ।

**या०— तदतिरिक्तपदेष्विति** । तदुत्तमपदेष्वित्यर्थः । आयासात् कामरूपात् ।

सु० -- अधिकं दोषमाह कुत्रचिदिति ।

अनु० — कुत्रचित्कामिनः पुंसः कामाभावात्क्वचित्क्वचित् ॥
इन्द्रादिसुखभोगोऽस्तीत्यनुभूतिर्हि कुप्यति ॥

**कुत्रचिदिन्द्रादिपदव्यतिरिक्ते कामिनः पुंसः क्वचित्क्वचिदिन्द्रादिपदे कामाभावादिन्द्रादिसमानसुखानुभवोऽस्तीति व्याख्यानेऽनुभवविरोधः स्यात् । राज्यमकामयमानस्य राजसमानसुखानुभूतेरनुभवबाधितत्वस्य स्पष्टत्वात् । वैराग्यप्रशंसातो न तत्त्वं मार्गणीयमिति चेन्न । निरवधिकानन्दस्वरूपोऽयमात्मा कामाद्युपद्रवावरणात्तु तथा न भासते । अतो यावद्यावत्कामक्षयस्तावत्तावदानन्दोत्कर्षो दृश्यत इत्यस्यार्थस्य प्रदर्शनार्थमस्य प्रकरणस्यावतारितत्वात् । आनन्दोत्कर्षे(ऽत्र)तु तात्पर्यं शतगुणत्वे तु न निर्भरः कार्य इति चेन्न । देवपदाकामादिन्द्रपदाकामस्यानन्दविशेषादर्शनादिति ।**

शे० — **वैराग्येति** । यस्येन्द्रादिपदे कामो नास्ति तस्यापीन्द्रादिसमं सुखं भवतीति वैराग्यस्य प्रशंसैव न त्वियं वस्तुतत्वोक्तिरतो नानुभवविरोध इत्यर्थः ॥ **निरवधिकेति** । तथा च तत्त्वमार्गणार्थमेव प्रवृत्तत्वाद्वस्तुतत्वोक्तिरियम् न वैराग्यप्रशंसेत्यनुभवविरोधोऽपरिहार्य इति भावः । ननु नास्माभिस्तत्तत्पदविरक्तस्य तत्तत्समानानन्दत्वं साध्यते येन राज्यमकामयमानस्य तत्समसुखानुभूतेरनुभवबाधितत्वस्य स्पष्टत्वात्साध्यवैकल्यं स्यात्किन्नाम पूर्वस्मादानन्दोत्कर्षमात्रम् । श्रुतेरपि तत्रैव तात्पर्यमिति शङ्कते **आनन्दोत्कर्ष इति** । यदि तत्तत्पदे विरक्तस्य पूर्वस्मादानन्दोत्कर्षः साध्यः स्यात्तर्हीन्द्रादिपदाद्विरक्तस्य सकाशाद्ब्रह्मपदविरक्तस्य सुखविशेषः स्यात् । न च सोऽप्यस्ति । लोके राज्यपदाकामस्यामात्यपदाकामात्सुखविशेषस्यादर्शनात्तथा चानुभवविरोधो दुष्परिहर इत्याशयेनाह **देवपदाकामादिति** । अत्र टीकायां देवपदाकामादिन्द्रपदाकामस्य सुखविशेषादर्शनादित्येव पाठो मूलकोशेषु तथैव दृष्टत्वात् । बृहद्भाष्यतैत्तिरीयभाष्याद्यनुसाराच्च । अन्यादृशस्तु लेखकदोषपतित इति द्रष्टव्यम् ।

स० — **वैराग्येति** । यस्येन्द्रादिपदे कामो नास्ति तस्यापीन्द्रादिसमं सुखं भवतीति वैराग्यस्य प्रशंसैवेत्यर्थः । **निरवधिकेति** । तत्वमार्गणार्थमेव प्रकृतत्वेन वैराग्यप्रशंसैवमित्यर्थः । ननु नास्माभिस्तत्तत्पदविरक्तस्य तत्तत्समसुखत्वे साधिते येन राज्यकामयमानस्य तत्समसुखानुभूतेरनुभवबाधितत्वस्य स्पष्टत्वात् साध्यवैकल्यं स्यात् किन्तु पूर्वस्मादानन्दोत्कर्षमात्रे श्रुतेरपि तत्रैव तात्पर्यमिति शङ्कते **आनन्दोत्कर्ष इति** । यदि तत्तत्पदविरक्तस्य पूर्वस्मादानन्दोत्कर्षः साध्यः स्यात् तर्हि इन्द्रादिपदाद्विरक्तस्य सकाशात् ब्रह्मपदाद्विरक्तस्य सुखविशेषः स्यात् न च सोस्ति । लोके राजपदाकामस्यामात्यपदाकामस्य

च सुखविशेषादर्शनादित्याह **देवपदाकामादिति** ॥ अत्र देवपदाकामादिन्द्रपदाकामस्यानन्दविशेषदर्शनादित्येव पाठः । मूलकोशेषु तथैव दृष्टत्वात् । बृहद्भाष्यतैत्तिरीयभाष्यानुसाराच्चेति बोध्यम् ।

प० — **इत्यस्यार्थस्य प्रदर्शनार्थमिति** । प्रशंसापरत्वे चैतन्न स्यादिति भावः । प्रशंसात्वेनानुभवविरोधानिरासेपि प्रकारान्तरेण तन्निरास इति भावेन शङ्कते **आनन्दोत्कर्ष इति** ॥ **आनन्दविशेषादर्शनादिति** । तथा चानुभवविरोध एवेति भावः ।

या० — **इन्द्रादिपदव्यतिरिक्ते** इन्द्रादिपदोत्तमे ॥ **निर्भर इति** । तथा च नानुभवविरोध इति भावः । एवमप्यनुभवविरोधस्तदवस्थ एवेत्याह **देवपदाकामादिति** ।

श्री० — स्वावतारिकानुसारेणानन्दोत्कर्षो दृश्यत इत्युक्तमङ्गीकृत्य शङ्कते **आनन्दोत्कर्ष इति** ॥ **देवपदाकामादिति** । देवपदाकामाद्विरक्तपुरुषादिन्द्रपदाकामस्य विरक्तपुरुषस्येत्यर्थः ।

च० — **राज्यमकामयमानस्येति** । राज्यकर्मककामनाविनिर्मुक्तस्येत्यर्थः ।

सु० — **तर्हि कः श्रुत्यर्थ इत्यत आह** तस्मादिति ।

अनु० — तस्मादमुक्तसुखगं तारतम्यं पृथक् पृथक् ॥
उक्त्वा यश्चेति मुक्तानां तारतम्यं सुखे श्रुतिः ॥
आहेति पेशलं

**अर्थान्तरप्रतीतेर्निरस्तत्वात् । अमुक्तमनुष्यादिसुखसंबन्धितारतम्यं ते ये शतमित्यादिवाक्यैः पृथक् पृथगुक्त्वा यश्चेति श्रोत्रियस्य चेति च वाक्येन मुक्तानां मनुष्यगन्धर्वादीनां सुखे तारतम्यं श्रुतिरतिदेशेनाहेति व्याख्यानमेव पेशलम् ।**

**नन्वेवं सति वाक्यभेदो दोषः स्यात् । नैवम् । ज्ञापकसद्भावादित्याह** तच्चेति ।

तच्च चशब्दादेव गम्यते ॥

**यश्चेति वाक्यस्य प्रकृतादन्यो विषय इत्येतच्च चशब्देनैव गम्यते । किमुतैकवाक्यतायामुक्तानुपपत्त्येत्येवार्थः । चशब्दो ह्ययं समुच्चयस्य द्योतकः प्रतीयते । देवदत्तो धनिको यज्ञदत्तश्चेति यथा । न चैकविषयतायामेवं युज्यते । न हि भवति वसिष्ठो ब्रह्मिष्ठोऽरुन्धतीपतिश्च तथेति प्रयोगः । विशेषणसमुच्चये चशब्दः किन्न स्यादिति चेन्न । मुख्यार्थे बाधकाभावेन त्यागायोगात् । वचनव्यत्ययश्चैकवाक्यतायां स्फुट एव । तथात्वे खलु ते ये शतं कर्मदेवानामानन्दाः । स एक आजान(ज)देवानामानन्दो ये श्रोत्रिया अवृजिना अकामहताश्चेति**

स्यात् । तथा ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियाणामकामहतानामिति भवेत् ।

नन्वेवं तर्हि कथं बृहदारण्यकवाक्यं भाष्ये मुक्तमात्रविषयं व्याख्यातम् । यश्चेति विशेषणसमुच्चयपरमुक्तम् । अयमभिप्रायो भाष्यकारस्य । सर्वथा वाक्यद्वयमेवेदं भिन्नविषयम् । एकवाक्यताश्रद्धायामपि मुक्तमात्रविषयमस्तु । तत्रानुपपत्तीनामल्पत्वात् । नामुक्तमात्रविषयम् अनुपपत्तिबाहुल्यादिति ।

शे०— **ज्ञापकेति** । वाक्यभेदज्ञापिकेत्यर्थः । चशब्देनैवेत्येवशब्दसूचितमर्थमाह **किमुतेति** । चशब्देनैव गम्यत इति प्रतिज्ञातं चशब्दस्य भिन्नविषयत्वावगमकत्वं प्रकटयति **चशब्द इति** ॥ **विशेषणेति** । यः श्रोत्रियोऽवृजिनोऽकामहतश्चेति श्रोत्रियत्वावृजिनत्वादिविशेषणानां समुच्चयस्य प्रतिपादकोऽयं चशब्द इत्यर्थः ॥ **मुख्यार्थ इति** । धर्मिसमुच्चयरूप इत्यर्थः । तस्यैव स्वरसतः प्रतीयमानत्वान्मुख्यार्थत्वमिति भावः । कथमेकवाक्यतायां वचनव्यत्यय इत्यतो वाजसनेयश्रुतौ तमुपदर्शयति **तथात्व इति** । तैत्तिरीयश्रुतावपि तमुपदर्शयति **तथेति** ॥ **एवं तर्हीति** । ज्ञापकसद्भावेनैकविषयत्वानुपपत्तावित्यर्थः ॥ **कथमिति** । यश्चेतिवाक्यस्य प्रकृतादन्यो विषय इत्येतदर्थज्ञापकचशब्दसद्भावेन वाक्यभेदस्यैवावश्यकत्वादिति भावः ॥ **विशेषणसमुच्चयपरमुक्तमिति** । अत्राप्येवं तर्हि कथमिति सम्बध्यते । अत्र चशब्दस्य मुख्यार्थे बाधाभाववचनव्यत्ययदोषप्रसङ्गेन विशेषणसमुच्चयार्थत्वानुपपत्तावित्यर्थः । उक्तबाधकादेव विशेषणसमुच्चायकत्वस्यैवाश्रयणीयत्वादिति भावः । मानुषानन्दनिर्देश इत्यत्र मानुषशब्देन क्षितिप उच्यते । अन्येभ्योऽपि मनुष्येभ्य आनन्दश्चक्रवर्तिनामित्यादिनाऽत्रत्यमानुषशब्दस्य क्षितिपपरतया निर्णीतत्वादिति ज्ञेयम् ।

प०— **इति च वाक्येनेति** । वाक्यपदस्य यश्चेत्यत्राप्यन्वयार्थं चशब्दः । मूले यश्चेति काण्ववाक्योक्तिरुपलक्षणमिति भावः ॥ **पेशलमिति** । समीचीनमित्यर्थः । एवशब्दसूचितमाह **किमुतेति** ॥ **एकवाक्यतायामिति** । प्राक्प्रदर्शितापव्याख्यानरीत्येति भावः ॥ **उक्तेति** । श्रुतहानाश्रुतकल्पनानुभवविरोधादिरूपानुपपत्त्येत्यर्थः । श्रौतचशब्दस्य वाक्यभेदद्योतकत्वं व्यनक्ति **चशब्दो हीति** ॥ **मुख्यार्थ इति** । यश्चेतिविशेष्यसमुच्चायकतया व्युत्पत्तिबलेन प्रतीतस्य विशेषणसमुच्चयार्थत्वममुख्यमिति भावः । स्फुट एवेत्युक्तं व्यनक्ति **तथात्व इति** ॥ **भाष्य इति** । षष्ठाध्यायबृहदारण्यकभाष्ये चशब्दस्तु श्रोत्रियत्वावृजिनत्वाकामहतत्वानां गुणानां मुक्तौ समुच्चयार्थमित्यादिना ग्रन्थेन विशेषणसमुच्चयपरत्वमुक्त्वा राद्धो मुक्त इत्यादिना मुक्तमात्रपरं च व्याख्यातमित्यर्थः ॥ **अल्पत्वादिति** । चशब्दास्वारस्यद्विरूपवचनव्यत्ययादेरनुभवविरोधश्रोत्रियत्वासंभवाद्यपेक्षयाऽल्पत्वादिति भावः ।

या० — **मुख्यार्थ इति** । धर्मिसमुच्चयरूप इत्यर्थः । अत्र धर्मिसमुच्चयस्यैव स्वरसतः प्रतीयमानत्वेन मुख्यार्थत्वमिति ज्ञातव्यम् ।

श्री० — **विशेषणेति** । एकवाक्यतामङ्गीकृत्य श्रोत्रियत्वादिति विशेषणानां परस्परसमुच्चय इत्यर्थः । मुख्यार्थे धर्मिसमुच्चयरूपे । बृहदारण्यके वचनव्यत्यासं दर्शयति **ये शतमिति** । तैत्तिरीयके तं दर्शयति **तथा ते ये शतमिति** । मानुषानन्दनिर्देश इत्यत्र मानुषशब्देन क्षितिप उच्यते । 'अन्येभ्योऽपि मनुष्येभ्य आनन्दश्चक्रवर्तिनामि'त्यादिनाऽत्रत्यमानुषशब्दस्य क्षितिपपरतया निर्णीतत्वादिति ज्ञेयम् ।

च० — **पेशलं** सुन्दरम् । चारौ दक्षेपि पेशल इति नानार्थवर्गे लान्ते अभिधानात् । **समुच्चयस्य** । समभिव्याहृतपदार्थान्वितविशेषणान्वितत्वरूपस्य । **देवदत्त इति** । देवदत्तपदोपस्थाप्यान्वितधनिकत्वान्वितत्वस्य यज्ञदत्तेपि चशब्देन प्रत्यायनात् । **एकविषयतायां** विशेष्यवाचकपदयोरेकधर्मिप्रतिपादकतायाम् । वशिष्ठारुन्धतीपतिपदयोरेकधर्मिप्रत्यायकतया विशेष्यभेदनियन्त्रिततादृशसमुच्चयस्य दुरुपपादत्वादिति भावः ॥ **विशेषणसमुच्चय इति** । चैत्रः कुण्डली वासस्वीत्या च द्वाविव समभिव्याहृतपूर्वपदोपस्थाप्यविशेषणधर्मितावच्छेदकीभूतधर्मावच्छिन्नधर्मिताकतादृग्विशेषणतुल्यकक्ष्यापन्नविशेषणान्तरान्वयित्वरूपविशेषणसमुच्चय इत्यर्थः ।

---

**सु० — मानुषादिहिरण्यगर्भान्तानाममुक्तानां मुक्तानां चोत्तरोत्तरं शतगुणानन्दत्वं श्रुतिद्वयमाहेत्ययुक्तम् । मानुषानन्दनिर्देशे मुक्तज्ञापकाभावात् । न हि तत्राकामहतत्वादिकमन्यद्वा किमपि श्रूयते इत्याशङ्कां निराकुर्वन् श्रुत्यर्थं विवृणोति** राद्ध इत्यादिनाऽभिवीक्षत इत्यन्तेन । **तत्र तावद् बृहदारण्यके मनुष्यमुक्तस्य ज्ञापकं दर्शयति** राद्ध इति ।

अनु० — राद्धः संसिद्ध इत्येव मुक्त एवावगम्यते ॥

**स यो मनुष्याणां राद्धः समृद्धो भवतीत्युपक्रमवाक्ये राद्ध इति पदेन मुक्त एव गृह्यते नामुक्तः । कया वृत्त्याऽभिधयैव न तूपचर्यते । येन मुख्यार्थानुपपत्त्यादिकं व्युत्पादनीयं स्यात् । कथं ? संसिद्ध इति । एतदुक्तं भवति । राध साध संसिद्धाविति पठ्यते । राधधातोश्च 'गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्चे'त्यकर्मकत्वात्कर्तरि क्तः । ततो राद्धः संसिद्ध इत्युक्तं भवति । संसिद्धिश्च मुक्तिरेव नित्यत्वेन दुःखासंभिन्नत्वेन च समीचीनसिद्धित्वात् । नेतरा, अनित्यत्वेन दुःखसंभिन्नत्वेन चासमीचीनत्वात् । न च मुख्ये संभवत्यमुख्यार्थोऽङ्गीकर्तुं शक्यत इति । एवं समृद्धशब्दोऽपि मुक्तस्यैव वाचकः । मुक्ति**

विना सम्यग्दृष्टेरभावात् । अन्येषामधिपतिरित्यादिकं तु मुक्तामुक्तसाधारणम् । यथा च मुक्ते संभवति तथोक्तं भाष्ये ।

**शे०— कर्तरि क्त इति** । गत्यर्थेति सूत्रेण गत्यर्थेभ्यो धातुभ्योऽकर्मकेभ्यः श्लिष्यादिभ्यश्च कर्तरि क्तप्रत्ययविधानादकर्मकतयाऽस्मात् क्तप्रत्यये ककारलोपे झषस्तथोर्धोऽध इति झषः परतया तकारस्य धकारे झलां जश् इति जश्त्वेन पूर्वधकारस्य दकारे च सति राद्ध इति शब्दनिष्पत्तिरिति भावः । अन्येषामधिपतिरित्यादिकमित्यादिपदेन सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतम इति वाक्यशेषपरिग्रहः । नन्वन्येषामधिपतिरित्यस्य न मुक्तामुक्तसाधारणत्वं संभवति । मुक्तस्यामुक्ताधिपतित्वासंभवेनामुक्तमात्र-विषयताया अवश्याश्रयणीयत्वादित्यत आह **यथा चेति** ॥ **तथोक्तं भाष्य इति** । स्वराष्ट्रे ज्ञानो-पदेष्टत्वान्मुक्तावपि तेषामधिपतिरित्यादिना मुक्तस्यान्याधिपतित्वं बृहद्भाष्ये उक्तमित्यर्थः ।

**स०**— कथमन्येषामधिपतिरिति मुक्तामुक्तसाधारणत्वं उक्तं मुक्तस्य तदसंभवेनामुक्तमात्र-विषयताया वाच्यत्वादित्यत आह **यथा चेति** ॥ **तथोक्तं भाष्य इति** । स्वराष्ट्रे ज्ञानोपदेष्टृत्वान्मु-क्तावपि तेषामधिपतिरित्यादिना मुक्तस्याप्यन्याधिपतित्वं बृहद्भाष्ये उक्तमित्यर्थः ।

**प०— मुख्यार्थानुपपत्त्यादिकमिति** । प्रयोजनमादिपदार्थः ॥ **गत्यर्थेति** । तृतीयस्य चतुर्थे सूत्रम् । 'आदिकर्मणि क्तः कर्तरि चे'ति पूर्वस्मात्क्त इति वर्तते । गत्यर्थेभ्यो धातुभ्यः अकर्मकेभ्यो धातुभ्यः श्लिषादिभ्यश्च कर्तरि कर्मणि भावे च क्तप्रत्ययो भवतीति सूत्रार्थः ॥ **कर्तरि क्त इति** । राध्नोतीत्यर्थे क्तप्रत्यये लशक्वतद्धित इति ककारापगमे झषस्तथोर्धोऽध इति तस्य धत्वे 'एकाच उपदेशेनुदात्तादिती'डभावे राद्ध इति सिद्धेरिति भावः ॥ **नेतरेति** । ऐश्वर्यादिरूपेत्यर्थः ॥ **अन्येषामिति** । 'अन्येषामधिपतिर्मानुष्यकैर्भोगैः संपन्न' इति वाक्यं षष्ठे बृहद्भाष्ये स्वराष्ट्रे ज्ञानोपदेष्टृ-त्वान्मुक्तावपि तेषामधिपतिरित्यादिग्रन्थेन मुक्ते यथा संभवति तथोक्तमित्यर्थः । राद्ध इति श्रुत्यर्थः ।

**या०— गत्यर्थाकर्मकेति** । गत्यर्थेभ्यो धातुभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च यः क्तः स कर्तरि भवति । चकाराद्भावकर्मणोश्चेति सूत्रार्थः । उदाहरणं तु गत्यर्थे गतो देवदत्तो ग्रामम् । गतो देवदत्तेन ग्रामः । गतं देवदत्तेन । अकर्मके । आशितो भवान् आशितं भवतेत्यादि द्रष्टव्यम् ।

**कर्तरि क्त इति** । क्तप्रत्यये ककारलोपे तकारस्य च दकारे राद्ध इति रूपमिति भावः ॥ **अन्येषामधिपतिरित्यादिकमिति** । अन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः । सम्पन्नतम इति वाक्यमि-त्यर्थः ॥ **तथोक्तं भाष्य इति** । स्वराष्ट्रे ज्ञानोपदेष्टृत्वान्मुक्तावपि तेषामधिपतिरित्यादिना बृहदारण्य-कभाष्य उक्तमित्यर्थः ।

**श्री०**— इतरा संस्तुतिः ।

सु०— इदानीं तैत्तिरीयश्रुतौ मुक्तमनुष्यज्ञापकं दर्शयन्युवा स्यादित्यादीनि पदानि व्याचष्टे साधुनेति ।

अनु०— साधुना विष्णुना युक्तो मुक्तः साधुयुवा मतः ॥
यौवनं नित्यमेतस्य मुक्तस्येति युवा स च ॥
फलमध्ययनस्याप्तं तेनाध्यायक ईरितः ॥
निर्ह्रासानन्दसंप्राप्त्या चाशिष्ठ इव गीयते ॥
स्थितस्यानन्यथाप्राप्तेर्दृढिष्ठ इति चोदितः ॥
बलिष्ठश्च स्वभावेन मुक्तो भवति केवलम् ॥

निर्दोषो हि साधुरित्युच्यते । न च विष्णोरितरो निर्दोषोऽस्ति । अतः साधुना विष्णुनेत्युक्तम् । तृतीयान्ते साधुशब्द उपपदे यु मिश्रण इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्त' इति क्वनिप्प्रत्यये कृते साधुयुवेति भवति । यद्वा युजिर् । योग इत्यस्येदं रूपम् । दृशिग्रहणसामर्थ्याद्धातोरन्तलोपः । तथा च भगवत्सामीप्यलक्षणमोक्षवानित्युक्तं भवति । युवशब्दादप्यतिशयेन साधुयुवशब्दो मुक्तस्य ज्ञापक इति क्रममतिलङ्घ्यादौ व्याख्यातः । यद्यपि युवशब्दो यौवननिमित्तस्तथाऽपि मुख्यामुख्ययोर्मुख्ये संप्रत्यय इति नित्ययौवनमङ्गीकार्यम् । तच्चैतस्य मनुष्यस्य मुक्तस्यैव युज्यते न संसारिण इति हेतोर्युवा च स मुक्त एव ॥ आध्यायकशब्दो यद्यप्याङधिपूर्वादिङध्ययन इत्यस्मात् ण्वुलि प्रत्यये सति निष्पन्नः सम्यगध्ययनस्य कर्तारमाह । तथाऽप्यत्र पुरुषार्थप्रसङ्गादध्ययनस्यापुरुषार्थत्वादध्ययनफलप्राप्तेर्लक्षको वर्णनीयः । अध्ययनस्य फलं च तेन मुक्तेनैवाप्तम् । मुक्तेरेव तत्फलत्वात् । तेन कारणेन मुक्त एवाध्यायक ईरितः । आ सम्यक् समन्ताच्च शमस्येत्याशः । अतिशयेनाश आशिष्ठः । सम्यक्त्वादि च ह्रासाभावादिकमेव । ततो निर्ह्रासस्य योग्यतानुसारेण पूर्णस्यानन्दस्य सम्प्राप्त्या कारणेन मुक्त एवाशिष्ठ इति च गीयते ॥ अविकारो हि दृढो नाम । अतिशयेन दृढो दृढिष्ठः । छान्दसत्वात् 'र ऋतो हलादेर्लघोरि'त्येतन्न भवति । मुक्त एव स्थितस्यानन्यथाप्राप्तेः अतिशयेन निर्विकारत्वात् दृढिष्ठ इति चोदितः ॥ बलमस्यास्तीति बली । अतिशयेन बली बलिष्ठः । अतिशयश्च स्वाभाविकत्वम् । स्वभावेन बलिष्ठश्च केवलं मुक्तो भवति । नामुक्तः । अतो बलिष्ठ इति स एवोच्यत इति ।

शे०— 'आतो मनिन् क्वनिप् वनिपश्चे'ति आकारान्तेभ्यो धातुभ्य एव क्वनिबादीनां विधानादनाकारान्ततया यु मिश्रणे इत्येतस्मात्तेन क्वनिबनुपपत्तावप्यनाकारान्तेभ्यो धातुभ्यस्तद्विधायकेनान्येभ्योऽपि

दृश्यन्त इत्यनेनात्र क्वनिप्प्रत्यय इत्याह **तृतीयान्त इति**। सुप्युपपदेऽनाकारान्तेभ्योऽपि धातुभ्यो मनिन् क्वनिप् वनिप् विच इत्येते प्रत्यया भवन्तीत्युदाहृतसूत्रार्थः। अत्र क्वनिपः कित्त्वाद्गुणाभावः। न च ह्रस्वस्य पिति कृति तुगिति तुग्विधानादत्र तुक्प्रसङ्गः। दृश्यन्त इति दृशिग्रहणसामर्थ्यात्तदभावोपपत्तेरित्याशयात्। अत एव वक्ष्यति दृशिग्रहणसामर्थ्यादितीति द्रष्टव्यम्। यद्वैतदस्वरसादाह **यद्वेति ॥ दृशिग्रहणसामर्थ्यादिति**। दृशिग्रहणं प्रयोगानुसारार्थमिति वृत्तिकृता तत्सामर्थ्याश्रयणादिति भावः ॥ **अन्तलोप इति**। जकारलोप इत्यर्थः ॥ **युवशब्दादप्यतिशयेनेति**। युवशब्दस्य मुक्तज्ञापकत्वेऽपि यद्यपीत्यादिवक्ष्यमाणन्यायापेक्षयैव तद्गमकत्वं साधुयुवशब्दस्य च तदनपेक्षेति भावेनेयमतिशयोक्तिः। केचित्तु यद्यपि यु मिश्रण इति वा युजिर् योग इति वा धातोः क्वनिपि दृशिग्रहणसामर्थ्यादेव तुगभावधात्वन्तलोपयोर्युवन्निति प्रातिपदिकनिष्पत्तिः संभवति। न च निरुपपदात्क्वनिप्प्रत्ययायोगः। धीवा पीवेत्यादाविव निरुपपदादपि तत्संभवात्। अत एवोक्तं वृत्तिकृता अपिः सर्वविधिव्यभिचारार्थः। तेन निरुपपदादपि भवतीति। तथा च सामीप्यलक्षणमोक्षवानित्यर्थलाभाद्युवशब्दस्यापि मुक्तत्वज्ञापकत्वादतिशयोक्तिरनुपपन्नेवाभाति। तथाऽप्युक्तरीत्या सामीप्यवत्त्वमात्रस्यैव तेन लाभात्साधुयुवशब्दादिव भगवत्सामीप्यालाभात्तदभिप्रायेणेयमतिशयोक्तिः। अत एव भगवत्सामीप्यलक्षणेति पूर्वत्र भगवत्पदप्रयोगः कृत इत्यभिप्राय इत्याहुः ॥ **क्रममतिलङ्घ्येति**। युवा स्यात्साधुयुवाध्यायक इति श्रौतक्रममतिलङ्घ्येत्यर्थः ॥ **यौवननिमित्त इति**। तथा च भाष्ये नित्यत्वाभिधानमनर्थकमिति भावः।

**ण्वुलीति**। ण्वुल्तृचाविति कर्तरि ण्वुलि वृद्ध्याऽऽयादेशाकादेशसवर्णदीर्घयणादेशेषु सत्स्वाध्यायकशब्दनिष्पत्तिरिति भावः ॥ **अपुरुषार्थत्वादिति**। सुखदुःखाभावेतरत्वेन स्वतः पुरुषार्थत्वाभावादित्यर्थः।

**अतिशयेनेति**। अतिशायने तमबिष्ठनावित्यतिशायनविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकात्स्वार्थे इष्ठन्प्रत्ययविधानादाशशब्दादिष्ठन्प्रत्यये तस्मिन्परतष्टेरिति टिलोपविधानादाशशब्दान्ताकारलोपे आशिष्ठेति रूपनिष्पत्तिरिति भावः।

**दृढो नामेति**। यद्यपि दृढः स्थूलबलयोरित्यनेन स्थूले बलवति चार्थे दृंहेः क्तप्रत्यये इडभावस्य हकारनकारयोर्लोपस्य परस्य ढत्वस्य च निपातनेन दृढशब्दो निष्पादितः स्थूलं बलवन्तं चाह न तु निर्विकारम्। तथाऽपि तत्र प्रयोगप्रत्ययप्राचुर्याद्रूढ्या स निर्विकारपर इत्याशयेनेयमुक्तिरिति द्रष्टव्यम्। नन्वतिशयार्थे दृढशब्दादिष्ठन्प्रत्यये सति तस्मिन्परतो र ऋतो हलादेर्लघोरिति हलादेर्लघोः ऋकारस्य रेफादेशविधानात्प्रथिष्ठः प्रथिमेत्यादाविव द्रढिष्ठ इति ऋकारस्य रेफादेशेन भवितव्यम्।

अत एवोक्तं वृत्तिकृता । पृथुं मृदुं भृशं चैव कृशं च दृढमेव च । परिपूर्णं दृढं चैव षडेवात्र विधौ स्मरेदिति । कथं दृढिष्ठ इति रूपनिष्पत्तिरित्यत आह **छान्दसत्वादिति** ।

**बलमस्यास्तीत्यादि** । अस्यास्तीत्यर्थे 'अत इनिठनावि'ति इनिप्रत्यय इति भावः । बलिष्ठशब्दनिष्पत्तिस्त्वाशिष्ठशब्दनिष्पत्तिवद्द्रष्टव्या ।

म०— **अन्तलोप इति** । ज(त)कारलोप इत्यर्थः ।

प०— **न च विष्णोरितर इति** । श्रियोपि पारतंत्र्यादिदोषित्वादिति भावः ॥ **अन्येभ्योऽपीति** । आतो मनिन्क्वनिब्वनिपश्चेति क्वनिप्प्रकरणे अन्येभ्योऽपि दृश्यंत इति सूत्रम् । आकारान्तादन्येभ्योऽपि धातुभ्यो मनिनादयः प्रत्यया दृश्यन्त इत्युक्तेः क्वनिप्प्रत्ययेकारस्योच्चारणार्थत्वेन ककारपकारयोर्लशक्वतद्धिते हलन्त्यमिति आद्यन्तव्यञ्जनयोर्लोपे सार्वधातुकार्धधातुकयोरिति प्राप्तगुणस्य क्ङितिचेति निषेधे युवशब्दात्स्वाद्युत्पत्तौ सर्वनामस्थाने चेति दीर्घे हल्ङ्याब्भ्य इति सुलोपे न लोपः प्रातिपादिकांतस्येति नलोपे आगमशासनमनित्यमिति ह्रस्वस्येति प्राप्ततुगभावे युवेति रूपमिति भावः । युक्त इत्युक्तिस्वारस्यादाह **यद्वा युजिरिति** । अन्येभ्योऽपीत्यनेन निष्प्रत्यये रूपमिति भावः । तर्हि युग्वेति स्यादित्यत आह **दृशिग्रहणेति** । जकारलोप इत्यर्थः । अन्येभ्योपीत्येतावता पूर्तौ दृश्यन्त इत्युक्तिः कार्यान्तरमपि स्यादित्येतदर्थमिति दृशिग्रहणसामर्थ्यादित्युक्तम् । युवशब्दार्थोक्तिपरमुत्तरार्धं व्याचष्टे **यद्यपीति** ॥ **ण्वुलि प्रत्यय इति** । ण्वुल्तृचाविति सूत्रेण ण्वुल्प्रत्यये चुटू इति हलन्त्यमिति चाद्यन्तव्यञ्जनयोर्लोपे युवोरनाकावित्यकादेशे अचोञ्णितीति वृद्धावायादेशे च रूपसिद्धिरिति भावः ॥ **पुरुषार्थप्रसङ्गादिति** । आनन्दस्य मीमांसेति प्रस्ताव्य तत्तारतम्यस्यात्रोक्तेरिति भावः । आ इत्यनुवादेनार्थद्वयं सम्यगिति समन्ताच्चेति । दुःखासंभिन्नत्वं सम्यक्त्वं समन्तादिति तत्तद्योग्यतानुसारिणी पूर्तिः । शमिति सुखम् । अतिशायने तमबिष्ठनाविति सूत्रादिष्ठन्प्रत्यये यस्येत्यकारलोपे रूपम् । एवं दृढिष्ठ इत्याद्यपि ध्येयम् । ननु रऋत इति सूत्रेण हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेमेयःसु परत इति ऋकारस्य रत्वे द्रढिष्ठ इति स्यादित्यत आह **छान्दसत्वादिति** ॥ **मुक्तिपरत्वे ज्ञापकोक्तिः** ॥

**या०**— ननु आतो मनिन् क्वनिब्वनिपश्चेत्यादन्तत्वात्क्वनिपो विधानात्कथमत्र क्वनिबत आह **अन्येभ्योऽपीति** । क्वनिप्प्रत्यये ककारेकारपकाराणामितां लोपे कित्वाद्गुणाभावे साधुयुवनिति प्रातिपदिकसिद्धिस्ततः स्वाद्युत्पत्तौ साधुयुवेति भवतीति ज्ञातव्यम् ॥ **अन्तलोप इति** । जकारलोप इत्यर्थः । इरित्यस्यानुबन्धतया लोपः सिद्ध एवेति भावः ॥ **यौवननिमित्त इति** । यूनि रूढ इत्यर्थः ॥ **ण्वुलीति** । ण्वुल्तृचाविति धातुमात्राण्ण्वुलो विधानादिति भावः । तथा च ण्वुल्प्रत्यये युवोरनाकावित्यकादेशे णित्वाद्वृद्धौ आयादेशे च सति अध्यायकशब्दो निष्पन्न इति ज्ञातव्यम् ।

**अतिशयेनेति** । अतिशायने तमबिष्ठनावित्यतिशायने इष्ठन्प्रत्ययविधानादिति भावः । तथा चेष्ठन्-प्रत्यये टेरित्यनेन टिलोपे आशिष्ठ इति रूपमिति द्रष्टव्यम् ॥ **र ऋतो हलादेरिति** हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठे मेयस्स्विति सूत्रार्थः । तथा चानेन ऋकारस्य रेफे जाते द्रढिष्ठ इति भवितव्यम् । पृथोर्भावः प्रथिमेत्यादिवत् । तदत्र रत्वं न भवति छान्दसत्वादित्यर्थः ।

**श्री०— अधीत्यादि** । आङधिपूर्वकादिङ् अध्ययनेऽस्मात् ण्वुल्प्रत्यये वकारस्याकादेशे आ अधि इ अकेति जाते णित्वाद्धात्विकारस्यैकाररूपवृद्धावायादेशे आधि आय् अकेति जाते आधि आय् इत्यत्र यणादेशे आध्याय् अक आध्यायकेति रूपम् ।

**सु०— ननु मुक्तस्य 'तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यादि'ति वित्तपरिपूर्णपृथिवीपतित्वमुच्यमानं कथं युज्यत इत्यत आह** तस्येति ।

**अनु०**— तस्येयं पृथिवीत्यादि पूर्वभावव्यपेक्षया ॥

**पूर्वभावोऽमुक्तत्वं मुक्तामुक्तमनुष्ययोर्विवक्षया हि युवा स्यादित्यादिकमारब्धम् । तत्र युवा स्यादित्यादिना मुक्तं प्रतिपाद्यामुक्तविवक्षया तस्येत्यादिवाक्यं प्रवृत्तमित्यर्थः ॥ अनेनैव न्यायेनान्येषामधिपतिरित्यादिकममुक्तविषयं प्रतिपत्तव्यम् । नन्वेवं युवा स्यादित्यादेर्मुक्तामुक्तविषयताऽङ्गीकृतावेकविषयताप्रतीतिविरोध इत्याशङ्कानिरासायामुक्तेति वक्तव्ये पूर्वभावेत्युक्तम् । एक एव चेतनो युवादिशब्दैः प्रतिपाद्यते । तस्य चावस्थाभेदेन विशेषणानि व्यवस्थाप्यन्ते । तस्मादेकविषयताप्रतिभासो नानुपपन्न इति ।**

**शे०— अनेनैव न्यायेनेति** । तस्येयं पृथिवीत्यादितैत्तिरीयवाक्यान्मुक्तपरत्वोपपादकन्यायेनेत्यर्थः ।

**स०— अनेनैव न्यायेनेति** । तस्येयं पृथिवीत्यस्य वाक्यस्य मुक्तपरत्वव्युत्पादनेनेत्यर्थः ।

**प०— अनेनैव न्यायेनेति** । पूर्वभावापेक्षयेत्युक्तन्यायेनेत्यर्थः । काण्ववाक्यमप्यमुक्तपरं ज्ञेयमित्यर्थः । तद्भाष्ये केवलमुक्तमात्रपरत्वोक्तेः तात्पर्यं प्रागेवोक्तम् ।

**सु०— एवं वाजसनेयश्रुतौ 'स यो ह वै मनुष्याणामित्यादेः सम्पन्नतम इत्यन्तस्य, तैत्तिरीयश्रुतौ च युवा स्यादित्यादेः पूर्णा स्यादित्यन्तस्य' मुक्तामुक्तपरत्ववर्णनेन स मनुष्याणां परम आनन्दोऽथ (ते) ये शतं मनुष्याणामानन्दा इत्येतत्स एको मानुष आनन्दस्ते ये शतं मानुषा आनन्दा इत्येतच्च मुक्तामुक्तविषयमिति सिद्धे तैत्तिरीयश्रुतिगतं स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्येत्येतावद्व्याचष्टे** स एक इतीति ।

अनु० — स एक इति संसारगतमुक्त्वा सुखं पुनः ॥
श्रोत्रियस्येति वदति मुक्ताच्छतगुणात्मताम् ॥

**संसारगतं सुखमुक्त्वेति संसारिमनुष्यसुखाच्छतगुणं संसारिणो मनुष्यगन्धर्वस्य सुखमुक्त्वेत्यर्थः । मुक्ताच्छतगुणात्मतामिति मुक्तमनुष्यस्य सुखान्मुक्तमनुष्यगन्धर्वस्य शतगुणसुखात्मतां वदतीत्यर्थः । श्रुतिरिति शेषः । स एक इति वाक्येन श्रोत्रियस्येति वाक्येन ।**

**शे०** — स एक इत्यस्य वा श्रोत्रियस्य चेत्यस्य वा तत्तदर्थमात्रप्रतिपादकत्वाभावादुक्त्वा वदतीति क्त्वाप्रत्ययानुपपत्तिः । समानकर्तृकयोः पूर्वकाल इति समानकर्तृक एव क्त्वाप्रत्ययविधानात्प्रकृते च तदभावादित्यतः स एक इत्यस्य श्रोत्रियस्य चेत्यस्य वाऽत्र न कर्तृत्वं किन्तु श्रुतिवाक्यस्यैव । तथा च श्रुतिवाक्यमेवेत्युक्त्वा वदतीति समानकर्तृकत्वाद्युक्तस्तदर्थकः क्त्वाप्रत्ययः । न चैवं स एक इत्यादेर्वैयर्थ्यं स्यादिति वाच्यम् । श्रुतिरेव स एक इत्यंशेनार्थविशेषमुक्त्वा श्रोत्रियस्येत्यंशान्तरेणार्थान्तरं वदतीत्यर्थलाभाय तस्यावश्यकत्वादिति भावेनापेक्षितं शेषं पूरयति **श्रुतिरिति शेष इति ।**

**प०** — स एक इति श्रोत्रियस्येति वाक्यद्वये शेषमाह **इति वाक्येनेति** । ननु संसारिगतसुखात्संसारिगतसुखस्य मुक्तगतसुखान्मुक्तगतसुखस्य शतगुणितत्वं श्रुतिर्वक्तीति स एक इतीत्यादिना कृतं व्याख्यानमयुक्तम् । तथा त्वे हि ते ये शतं मानुषा आनन्दाः स एको मनुष्यगंधर्वाणामानंदः । ते ये शतं मुक्तिगमानुषा आनन्दाः स एकः श्रोत्रियस्य चाकामहतस्येत्यादिरूपेण सर्वत्र ते ये शतमित्यस्य स एक इत्यस्य च वाक्यस्य द्विर्द्विवारं श्रवणप्रसङ्गादित्यत आह **अनेनेति** । संसारिगतमुक्तेत्यादिभाष्यकारीयव्याख्यानेनामुक्तमुक्तगतं शतगुणितमानन्दं ते ये शतमित्येकोक्त्या परामृश्य तद्वाक्यपरामृष्टं चोभयं स एक इति तच्छब्देन परामृश्य संसारिमनुष्यगात् संसारिमनुष्यगन्धर्वगतसुखस्य मुक्तमनुष्यगात् मुक्तमनुष्यगन्धर्वगस्य तथा संसारिमनुष्यगन्धर्वगात्संसारिदेवगन्धर्वगसुखस्य मुक्तमनुष्यगन्धर्वगान्मुक्तदेवगन्धर्वगतसुखस्य शतगुणत्वमित्येवं रूपेण यथायोगं पृथक् मुक्तानाममुक्तानां च प्रत्येकं शतानन्दत्वमुच्यते श्रुतावित्युक्तं भवतीत्यर्थः ।

**सु०** — **अनेनैव न्यायेन ते ये शतं मनुष्यगन्धर्वाणामानन्दा इत्यादिकं व्याख्येयमित्याशयवानाह** संसारगादिति ।

अनु० — संसारगाच्च संसारगतस्यैव शताधिकम् ॥
मुक्तान्मुक्तस्य

**संसारिमनुष्यगन्धर्वादिसुखादित्यर्थः । संसारगतस्य देवगन्धर्वादेः शताधिकं शतगुणाधिकं सुखमुक्त्वेति वर्तते । मुक्तान्मुक्तस्येति मुक्तमनुष्यगन्धर्वादिसुखाच्छतगुणं मुक्तदेवगन्ध-**

**वादैः सुखं वदतीत्यर्थः । अनेन ते ये शतमित्युभयमेकोक्त्या परामृश्य स एक इति श्रोत्रियस्येति च यथायोग्यं पृथक् शतगुणानन्दत्वमुच्यत इत्युक्तं भवति ।**

**अनयैव रीत्या स एकः पितॄणामित्यादि वाजसनेयश्रुतिवाक्यमपि व्याख्येयम् । उपक्रमे मुक्तश्रवणादाजान(ज)देवादौ यश्च श्रोत्रिय इत्यादिना तच्छ्रवणान्मध्येऽपि यश्च श्रोत्रिय इत्यनुवर्तनीयम् । श्रुतिद्वयविसंवादस्तु भगवत्पादैरन्यत्र परिहृत इति ।**

**शे०— उपक्रमे मुक्तश्रवणादिति** । राद्धः समृद्ध इत्यादिनेति शेषः ॥ **मध्येऽपीति** । गन्धर्वादावपीत्यर्थः ।

ननु 'ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्द' इति तैत्तिरीयश्रुतौ मनुष्यपदवाच्यचक्रवर्तिभ्यो मनुष्यगन्धर्वाणां तेभ्यो देवगन्धर्वाणां तेभ्यः पितॄणां शतगुणानन्दत्वमुक्तम् । बृहदारण्यकश्रुतौ त्वथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्द इति चक्रवर्तिभ्य एव पितॄणां शतगुणानन्दत्वमुच्यते । अतः श्रुत्योर्विसंवाद इत्यत आह **श्रुतिद्वयविसंवादस्त्विति** । अन्यत्र बृहद्भाष्ये । न च तैत्तिरीयश्रुतिविरोध इत्याशङ्क्य शतशब्दस्यायुतदशलक्षादावपि समत्वादतश्चक्रवर्तिभ्यो मनुष्यगन्धर्वाः शताधिका देवगन्धर्वा अयुताधिकाः पितरो दशलक्षाधिका इत्यादिना श्रुतिद्वयविरोधः परिहृत इत्यर्थः । अयं भावः । यत्र चक्रवर्तिभ्यो मनुष्यगन्धर्वाणां शतगुणानन्दत्वमुच्यते तत्रैव शतशब्दस्य शतपरत्वं यत्र च चक्रवर्त्यपेक्षया देवगन्धर्वाणां शतगुणानन्दत्वमुच्यते तत्र शतशब्दस्यायुतपरत्वं बृहच्छ्रुतौ च दशलक्षार्थत्वमिति न श्रुतिद्वयविसंवाद इति ॥ ननु तैत्तिरीयश्रुतौ पितॄणां गन्धर्वापेक्षयाऽऽधिक्यमुक्तं बृहच्छ्रुतौ च पित्रपेक्षया गन्धर्वाणामित्यतो विरोध इत्यतो वाऽऽह **श्रुतिद्वयेति** । तुम्बुरप्रमुखानां गन्धर्वाणामाजानदेवतासमानत्वेऽपि पितृभ्यस्तेषामाधिक्योपपत्तेः । तदुक्तम् । उत्तमगन्धर्वापेक्षया पितृभ्यो गन्धर्वाणामाधिक्यं च युज्यत इत्यतो न तदंशेऽपि विरोध इति भावः । ननु तथाऽपि बृहच्छ्रुतावाजानदेवानां कर्मदेवोत्तमत्वस्य तैत्तिरीयश्रुतौ तदवरत्वस्योक्तेर्विरोध इत्यत्राप्येतदेवोत्तरम् **श्रुतिद्वयेति** । बृहच्छ्रुत्युक्तानां जातेभ्योऽवराणामजानदेवानामिन्द्रादीनां कर्मदेवोत्तमत्वेऽपि तैत्तिरीयश्रुत्युक्तानामाजानदेवेभ्य इन्द्रादिभ्यो जातानामनाख्यातानां कर्मदेवावरत्वोक्तेरविसंवादः । तदुक्तं बृहद्भाष्ये । अजानदेवेभ्यो जाता आजानजा इत्यतस्तत्राप्यविरोध इति ॥ ननु यत्र वाक्ये आजानजा इत्येव कर्मदेवानामुपरि पाठस्तद्वाक्यस्य तैत्तिरीयश्रुतिविरोधः स्यादेव । तत्राजानजानां कर्मदेवावरत्वोक्तत्वादित्यत आह **श्रुतीति** ।

स्यादयं विरोधो यदि तैत्तिरीयश्रुतावाजानजशब्दोक्ता इन्द्रादिदेवेभ्यो जाता अनाख्याता देवता एवोच्येरन् । न चैवं किन्त्वाजानेभ्यो जातेभ्यो वरेभ्यो ब्रह्मादिभ्यो जाता इन्द्राद्या एवाजानजशब्देनोच्यन्ते । तेषां च कर्मदेवोत्तमत्वं संभवतीत्यविरोधः । तदुक्तं बृहद्भाष्ये । यत्राजानजा इत्येवोपरि पाठस्तत्राजानेभ्यो ब्रह्मादिभ्यो जाता इति भवतीति ॥ ननु तैत्तिरीयश्रुतौ देवेभ्य इन्द्रस्येन्द्राद्बृहस्पतेस्तस्माच्च प्रजापतेः शतगुणानन्दत्वमुक्तम् । बृहच्छ्रुतिवाक्ये आजानशब्दवाच्येभ्यो देवेभ्य एव प्रजापतेः शतानन्दत्वमतो विरोध इत्यत्राप्येतदेवोत्तरम् **श्रुतिद्वयेति** । तैत्तिरीयवाक्यस्य विशेषवचनाद्बृहच्छ्रुतिवाक्यस्य सामान्यवचनत्वाच्चैत्तिरीयवाक्योक्तविशेषस्य बृहच्छ्रुतावङ्गीकार्यत्वादविरोधसम्भवाददोषः । तदुक्तं बृहद्भाष्ये । इन्द्रबृहस्पत्यादीनां विशेषस्तु विशेषवचनत्वादत्राप्यङ्गीकर्तव्य इति ।

स० — **उपक्रमे मुक्तश्रवणादिति** । राद्धः समृद्ध इत्यादिनोपक्रमे मुक्तश्रवणादित्यर्थः । **मध्येपीति** । गन्धर्वादावपीत्यर्थः । ननु 'ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः स एको देवगन्धर्वाणामानन्दः । ते ये शतं देवगन्धर्वाणामानन्दाः स एकः पितृणां चिरलोकलोकानामानन्दः ।' इति तैत्तिरीयश्रुतौ 'क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः' इति श्रुत्यन्तरे च मनुष्यपदवाच्यचक्रवर्तिभ्यो मनुष्यगन्धर्वाणां तेभ्यः पितृणां शतगुणानन्दत्वमुक्तम् । क्वचित्तु चक्रवर्तिभ्य एव देवगन्धर्वाणां अत्र तु चक्रवर्तिभ्य एव पितृणां शतगुणानन्दत्वमुच्यते । अतः श्रुतिद्वयस्य विसंवाद इत्यत आह **श्रुतिद्वयविसंवादस्त्विति** । अन्यत्र बृहद्भाष्ये । न च तैत्तिरीयश्रुतिविरोध इत्यादिना परिहृत इत्यर्थः । तथाच यत्र देवगन्धर्वाणामेव चक्रवर्तिभ्यः शतगुणानन्दत्वमुच्यते तत्र शतशब्दो मुख्यार्थः । अत्र तु दशलक्षार्थ इति तु विसंवाद इति भावः । ननु तैत्तिरीयश्रुतौ पितॄणां गन्धर्वापेक्षयाधिक्यमुक्तम् । बृहदारण्यके च पित्रपेक्षया गन्धर्वाणाम् । अतो विरोध इत्यत्रापि एतदेवोत्तरम् । **श्रुतिद्वयेति** । तुम्बुरुप्रभृतीनां गन्धर्वाणां आजानदेवतासमत्वेन पितृभ्यस्तेषामाधिक्यं युज्यत इति भावः । नन्वत्राजानदेवानां कर्मदेवोत्तमत्वमुच्यते । तैत्तिरीयश्रुतौ कर्मदेवावरत्वमित्यतो विरोध इत्यतोप्याह **श्रुतिद्वयेति** । तथाच बृहदारण्यकश्रुत्युक्तानां जातेभ्यो वराणां आजानदेवानां इन्द्रादीनां कर्मदेवोत्तमत्वेपि तैत्तिरीयश्रुत्युक्तानां आजानदेवेभ्य इन्द्रादिभ्यो जातानामनाख्यातदेवानां कर्मदेवावरत्वं युज्यत इति न विरोधः । ननु यत्र वाक्ये आजानजा इत्येव कर्मदेवानामुपरि पाठः तद्वाक्यस्य तैत्तिरीयादिश्रुतिविरोधः स्यादेव । तत्राजानजानां कर्मदेवावरत्वेनोक्तत्वादित्यत आह **श्रुतिद्वयेति** । स्यादयं विरोधः यदि तैत्तिरीयादिश्रुतौ आजानजशब्दोक्ता इन्द्रादिदेवेभ्यो जाता अनाख्याता देवा एवात्रोच्येरन् । न

चैवम् । किं नाम आजानेभ्यो जातेभ्यो वरेभ्यो ब्रह्मादिभ्यो जाता इन्द्राद्या एवाजानजशब्देनोच्यन्ते । तेषां च कर्मदेवोत्तमत्वं संभवतीति न विरोध इति भावः । ननु तैत्तिरीयश्रुतौ देवेभ्य इन्द्रस्येन्द्राद् बृहस्पतेस्तस्माच्च प्रजापतेः शतगुणानन्दत्वमुक्तम् । अत्र त्वाजानजशब्दवाच्येभ्यो देवेभ्य एव प्रजापतेः । शतगुणानन्दत्वम् । अतो विरोध इत्यत्राप्येतदेवोत्तरम् । **श्रुतिद्वयेति** । तैत्तिरीयवाक्यस्य विशेषवचनत्वादस्य च सामान्यवचनत्वात्तत्रोक्तविशेषस्य बृहच्छ्रुतावप्यङ्गीकार्यत्वान्न विरोधः । तदेतत्स्पष्टं बृहद्भाष्ये । न च तैत्तिरीयश्रुतिविरोधः । शतशब्दस्यायुतदशलक्षादावपि समत्वात् । अतश्चक्रवर्तिभ्यो मनुष्यगन्धर्वाः शताधिकाः मनुष्यगन्धर्वेभ्यो देवगन्धर्वा अयुताधिकाः पितरो दशलक्षाधिका इत्यविरोधः । उत्तमगन्धर्वापेक्षया पितृभ्यो देवगन्धर्वाणामाधिक्यं च युज्यते । आजानदेवेभ्यो जाता आजानजा इत्यतस्तत्राप्यविरोधः । यत्राजानजा इत्येवोपरिपाठः, तत्राजानेभ्यो ब्रह्मादिभ्यो जाता इति भवति । इन्द्रबृहस्पत्यादीनां विशेषस्तु विशेषवचनादवगन्तव्यः । अङ्गीकर्तव्य इति (?) ।

**प०— अनयैवेति** । ते ये शतमित्युभयमेकोक्त्येत्याद्युक्तरीत्येत्यर्थः । ननु मध्येऽश्रवणस्य पूर्वोत्तरश्रवणरूपसंदंशेन मध्येऽप्यनुषङ्गेण परिहारेपि श्रुत्योर्नैकविषयतास्ति । काण्वश्रुतौ चक्रवर्तिपितृगन्धर्वाणां पूर्वपूर्वापेक्षया शतानन्दत्वमुत्तरोत्तरेषामुच्यते । तैत्तिरीयश्रुतौ च नृपमनुष्यगन्धर्वपितृणामुत्तरोत्तरं शतानन्दत्वं श्रूयते । अतो विवादसंवाद इत्यत आह **श्रुतिद्वयविसंवादस्त्विति** ।

---

**अन्यत्रेति** । बृहद्भाष्ये षष्ठेऽध्याये तैत्तिरीयादिश्रुतिविरोधमाशंक्य शतशब्दस्यायुतदशलक्षादावपि समत्वाच्चक्रवर्तिभ्यो मनुष्यगन्धर्वाः शताधिकाः ततो देवगन्धर्वा अयुताधिकाः । पितरो दशलक्षाधिका इत्यविरोधः । उत्तमगन्धर्वापेक्षया पितृभ्यो गन्धर्वाणामाधिक्यं युज्यत इत्यादिना परिहृत इत्यर्थः ।

**या०—** ननु 'ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्दः' इति तैत्तिरीयश्रुतौ मनुष्यपदवाच्यचक्रवर्तिभ्यो मनुष्यगन्धर्वाणां तेभ्यो देवगन्धर्वाणां तेभ्यः पितॄणां शतगुणानन्दत्वमुक्तम् । बृहदारण्यकश्रुतौ त्वथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां चिरलोकानामानन्दोऽथ ये शतं पितॄणां चिरलोकानामानन्दाः स एको गन्धर्वलोक आनन्द इति चक्रवर्तिभ्य एव पितॄणां शतगुणानन्दत्वमुक्त्वा तदपेक्षया गन्धर्वाणां शतगुणानन्दत्वमुच्यतेऽतः श्रुत्योर्विसंवाद इत्यत आह **श्रुतिद्वयेति** । **अन्यत्र** बृहदारण्यकभाष्ये । तत्र न च तैत्तिरीयादिश्रुतिविरोध इत्याशङ्क्य शतशब्दस्यायुतदशलक्षादावपि समत्वात् । अतश्चक्रवर्तिभ्यो मनुष्यगन्धर्वाः शताधिकाः । देवगन्धर्वा अयुताधिकाः पितरो दशलक्षाधिका इत्यविरोधः । उत्तमगन्धर्वापेक्षया पितृभ्यो

गन्धर्वाणामाधिक्यं च युज्यत इत्यादिना परिहृतत्वात् । एवमन्येऽपि श्रुतिद्वयविसंवादास्तत्रैव परिहृता द्रष्टव्याः ।

**श्री०**— उभयं मुक्तममुक्तं चेत्यर्थः ॥ **अनुवर्तनीयमिति** । वाजसनेयक इति शेषः ।

**सु०** – **श्रुतिद्वयव्याख्यानमुपसंहरति** युक्तं स्यादिति ।

**अनु०**— युक्तं स्याच्छ्रुत्युक्तमभिवीक्षतः ॥

**श्रुत्युक्तमभिवीक्षतोऽभिवीक्षमाणस्य सम्यग्विचारयतो मतेनैतदेव व्याख्यानं युक्तं स्यात् । अथवाऽभिवीक्षोऽभिवीक्षणं सम्यग्विचारस्तस्मादिदमेव श्रुत्युक्तं युक्तं स्यादिति ।**

**शे०**— अत्र पक्षे मतेनेत्यादिशेषः पूरणीयो भवतीत्यरुचिं मनसि निधाय पक्षान्तरमाह **अथवेति** ।

**प०**— ईक्षतेरात्मनेपदत्वादाह **अभिवीक्षमाणस्येति** । 'चन्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदमि'ति सांख्यनयेऽभिधानान्मूले शत्रन्तप्रयोगः साधुर्ज्ञेय इति । भावे घञन्तात्तसिलन्तोऽयं न शत्रन्त इत्याह **अथवेति** । विवृतश्चायं श्रुत्यर्थो न्यायामृतचतुर्थपरिच्छेदे ॥ **आनन्दतारतम्यश्रुत्यर्थोक्तिः ॥**

**सु०**— **एवं श्रुत्या मुक्तौ तारतम्यमुपपाद्य युक्त्याऽप्युपपादयति** युक्तं चेति ।

---

**अनु०**— युक्तं च साधनाधिक्यात्साध्याधिक्यं सुरादिषु ॥

**सुरादिषु मानुषादिभ्यः साध्याधिक्यं मुक्तिगतफलाधिक्यं साधनाधिक्याद्धेतोर्युक्तमनुमितं चेत्यर्थः । देवादयो मानुषादिभ्योऽधिकमौक्तफलभाजस्तदपेक्षयाऽधिकतत्साधनवत्त्वादित्युक्तं भवति ।**

**विपक्षे बाधकाभावादप्रयोजकोऽयं हेतुरित्यत आह** नाधिक्यमिति ।

- नाधिक्यं यदि साध्ये स्यात्प्रयत्नः साधने कुतः ॥

**सुरादिष्विति वर्तते । मानुषादिभ्य इति च । साधने साधनाधिक्ये । यदि देवादयो मानुषादिभ्योऽधिकमौक्तफलभाजो न स्युस्तदा तदधिकतत्साधनार्थप्रयत्नवन्तो न स्युः । अनधिकफलाय चाधिकं प्रयत्नमातिष्ठमाना न प्रेक्षावन्तो भवेयुरिति विपक्षे बाधकान्नाप्रयोजको हेतुः ।**

**शे०**— नन्वत्र साधनाधिक्येन साध्याधिक्यं सुरादिषु साध्यते न तु मुक्तिगतफलाधिक्यम् । तत्कथमस्य ग्रन्थस्य युक्त्या मुक्तौ तारतम्योपपादकत्वं स्यात् । किञ्च न तावत्सुरादिषु साध्यसाधनयोः

स्वगतसाध्यसाधनापेक्षयाऽऽधिक्यं वक्तुं युक्तम् । तस्य बाधितत्वात् । नोऽप्यधिकार्यन्तरगततदपेक्षया तस्यात्रानुपादानादित्यतोऽधिकार्यन्तरगतसाध्यसाधनापेक्षयैवाधिक्यं विवक्षितम् । स्पष्टत्वाच्च तदनुपादानं भाष्यकाराणां न दोषमावहति । साध्याधिक्यपदं च मुक्तिगतफलाधिक्यपरमिति युक्तमस्य युक्त्या मुक्तौ तारतम्योपपादकत्वमित्याशयेनापेक्षितं पूरयन्नेव युक्त्या मौक्तनारतम्योपपादकतया वाक्यं योजयति **सुरादिष्विति** ॥ **इति चेति** । वर्तत इति सम्बन्धः । यथास्थितमूलग्रन्थस्यैव प्रयोगप्रकारताभ्रान्तिनिरासायामिमतमनुमानप्रयोगं दर्शयति **देवादय इति** ॥ **तत्साधनेति** । मौक्तफलसाधनेत्यर्थः ॥ अत्राप्यप्रयोजकत्वमाशङ्क्य परिहरति **अनधिकेति** ॥ **आतिष्ठमाना इति** । ननु तिष्ठतेः परस्मैपदित्वात्सोपसर्गस्यात्मनेपदत्वेऽपि समवप्रविभ्यः स्थ इति स्मरणात्समवाद्युपसर्गपूर्वकस्यैवात्मनेपदित्वेन सन्तिष्ठते प्रतिष्ठते इत्यादेरुपपत्तावपि आङ्पूर्वकस्य तदप्राप्तेरातिष्ठमाना इत्यात्मनेपदप्रयोगोऽनुपपन्न इति चेत् । आङः स्थः प्रतिज्ञाने इति तत्सूत्रीयवार्तिके आङ्पूर्वादपि तिष्ठतेरात्मनेपदविधानात्तदुपपत्तेः । तथा चातिष्ठमाना इत्यस्य करिष्याम इति प्रतिजानाना इत्यर्थः । उपलक्षणं चैतत् । कुर्वाणाश्चेत्यपि द्रष्टव्यम् ।

**प०** — युक्तं चेत्यस्यार्थोनुमिऽतं चेति । न केवलं पूर्वोक्तश्रुतिसिद्धमिति चार्थः ॥ **मानुषादिभ्य इति चेति** । वर्तत इत्यनुषङ्गः । पूर्वत्र मानुषादिभ्य इति अध्याहारेण निवेशितत्वादिति भावः । तर्केऽप्यप्रयोजकत्वं निराह **अनधिकफलाय चेति** ।

---

**सु०** — **प्रमाणाभावात्स्वरूपासिद्धोऽस्त्वित्यत आह** यत्नश्चेति ।

**अनु०** — यत्नश्च दृश्यते तेषां महानेव महात्मनाम् ॥

**महात्मनां महाफलभाक्त्वेनानुमेयानां तेषां देवादीनां मानुषादिभ्यो महान्यत्नोऽधिकं मोक्षसाधनानुष्ठानं च दृश्यत एव प्रमाणैः । तान्यपि वक्ष्याम इति भावः ।**

**शे०** — महात्मनामित्येतत्प्रकृतानुपयोगपरिहाराय तदुपयुक्ततया व्याचष्टे **महात्मनामिति** । ननु तदीयस्य महतो यत्नस्यात्र प्रमाणदृश्यत्वमुच्यते न त्वधिकमोक्षसाधनानुष्ठानस्य तत्कथमनेन स्वरूपासिद्धिपरिहार इत्यतस्तत्तात्पर्यमाह **महान्यत्न इति** । प्रमाणैर्दृश्यत इत्युक्तम् । तत्र कानि तानि प्रमाणानीत्यत आह **तान्यपीति** ॥ **वक्ष्याम इति** । दशकल्पं तपश्चीर्णमित्यादिनेति शेषः ।

**स०** — **तान्यपि वक्ष्याम इतीति** । दशकल्पं तपश्चीर्णमित्यादिनेति शेषः ।

**प०** — **वक्ष्याम इति** । दशकल्पमित्याद्युत्तरग्रन्थे वक्ष्याम इत्यर्थः । महात्मनामित्यनुवादः । महाफलभाक्त्वेनेत्यादि व्याख्या ॥ महान्यत्न इत्यनुवादः । अधिकं मोक्षेत्यादि व्याख्या ।

**या०** — **वक्ष्याम इति** । दशकल्पं तपश्चीर्णमित्यादिनेति शेषः ।

सु० — व्याप्तिमुपपादयति यत्रेति ।

अनु० — यत्र साधनबाहुल्यं साध्यबाहुल्यमत्र च ॥

दृष्टं नियमतो

यत्र पुरुषे यदपेक्षया साधनाधिक्यमस्त्यत्र तदपेक्षया साध्याधिक्यं च नियमेन दृष्टम् । कर्षकवणिग्राजपुरुषादिषु लोके, वेदे चाग्न्याहितादिषु; यो यदधिकसाधनवानसौ तदधिकसाध्यवानिति नियमेन तत्तत्प्रमाणैरुपलब्धमेवेत्यर्थः ।

यस्त्वग्न्याधानादिफलानां तारतम्यमजानानः कृष्यादिफले च धान्यादौ तारतम्यं कारणान्तरायत्तं न कृष्यादिसाधनतारतम्याधीनमिति मन्यमानो दृष्टान्तेष्वपि विप्रतिपद्यते तं प्रत्याह नो चेदिति ।

नो चेन्न यत्नं कुर्युरञ्जसा ॥

यदि लोके वेदे च साधनाधिक्यात्साध्याधिक्यं नो भवेत् । तदा केऽप्यञ्जसा यत्नं साधनातिशयानुष्ठानं न कुर्युः किन्तु सममेव कुर्युः । इतरथा प्रेक्षावन्तो न भवेयुः । न ह्यग्न्याधानेन यावान्स्वर्गोऽश्वमेधेनापि तावत एव लाभेऽश्वमेधे कश्चित्प्रवर्तेत । प्रवर्तमानो वाऽबुद्धिमान्भवेत् । द्रो(णावा)णवापमात्रकर्षणेन यावान्धान्यलाभस्तावत एव खा(र्यावा)रीवापकर्षणेन भावे न कश्चित्तत्र प्रवर्तेत । तथात्वे च मन्दः स्यात् ॥ दृष्टं वृष्ट्यादिकमदृष्टं धर्मादिकं च साधनान्तर्भूतमेवेति न व्यभिचारः शङ्कनीयः ।

एवं मानुषादयो देवादिभ्योऽल्पमुक्तिफलभाजस्तदपेक्षयाऽल्पसाधनवत्त्वाद्यो यदपेक्षयाऽल्पसाधनवान्स ततोऽल्पफलवान्दृष्टः यथा संमतः । देवादयो मानुषान्ता मुक्तौ फलतारतम्यवन्तः साधनतारतम्योपेतत्वाद्ये यत्साधनतारतम्यवन्तस्ते तत्साध्यतारतम्यवन्तो यथा संमताः । ब्रह्मादिमानुषान्तैरनुष्ठितानि मोक्षसाधनानि तारतम्यवत्फलवन्ति तारतम्यवत्त्वात्संमतवत् । ब्रह्मादीनां मानुषान्तानां मोक्षफलानि तारतम्यवन्ति तारतम्यवत्साधनसाध्यत्वात्सम्मतवदित्यनुमानान्यप्यत्र द्रष्टव्यानि । अनुकूलतर्कादिकं च पूर्ववदूहनीयमिति ।

शे० — साधनाधिक्यसाध्याधिक्ययोस्तदुभयनिष्ठत्वेन पक्षीकृतसुराद्यनिष्ठत्वात्तदुक्तप्रयोगानानुगुण्यमित्यतोऽस्य तात्पर्यमाह **यो यदधिकेति** ॥ **कारणान्तरायत्तमिति** । वृष्ट्यादिरूपदृष्टधर्माधर्मादिरूपादृष्टकारणान्तरायत्तमित्यर्थः ॥ **इतरथेति** । अनधिकफलायाधिकप्रयत्नानुष्ठान इत्यर्थः ॥ **द्रोणावापेति** । (धान्यपरिमाणविशेषः) । द्रोण आ सम्यक् उप्यतेऽस्मिन्निति व्युत्पत्त्या द्रोणावापशब्दः क्षेत्रपरः क्वचित् द्रोणवापेत्यपि पाठः । तत्र द्रोण उप्यतेऽस्मिन्निति व्युत्पत्त्या स क्षेत्रपरः ॥ **खार्यावा-**

**पेति** । खारी आ सम्यक् उप्यतेऽस्मिन्निति व्युत्पत्त्या स क्षेत्रपरः । ननु यत्र केनचित् द्रोणावापमात्र-कर्षणं कृतं वृष्ट्यादिरूपदृष्टवशेन धर्माधर्मादिरूपादृष्टकारणवशेन चाधिकं सस्याद्युत्पन्नं यत्र केनचित्खार्या-वापकर्षणे कृतेऽप्यविशिष्टवृष्ट्यादिना धर्मादिवशेन चाल्पमेव सस्याद्युत्पद्यते तत्र खार्यावापकर्षकस्य द्रोणावापकर्षकापेक्षयाऽधिकसाधनवत्त्वेऽपि तदपेक्षयाऽधिकसाध्यवत्त्वाभावाद्व्यभिचार इत्यत आह **दृष्टं वृष्ट्यादीति** । अनुकूलतर्कादिकं चेत्यादिपदेन स्वरूपासिद्धिपरिहारसंग्रहः ।

**स०** — नन्वदृष्टादिवशेन दृष्टवशेन च खारीपरिमितधान्यावापकर्त्रपेक्षया द्रोणपरिमितधान्या-वापकर्तुरेव फलाधिक्यात्तत्र व्यभिचारादित्यत आह **दृष्टं वृष्ट्यादीति** । अनुकूलतर्कादीत्यादिपदेन स्वरूपासिद्धिसंग्रहः ।

**प०** — तृतीयायास्तसिरिति भावेन नियमेन दृष्टमित्यनुवादः । **अग्न्याहितादिष्विति** । आहिताग्न्यादिष्वित्यर्थः । वाहिताग्न्यादिष्विति परनिपातः । अध्ययनादिसंपत्तिमन्त आदिपदार्थः । दृष्टमित्यस्यार्थः तत्तत्प्रमाणैरुपलब्धमेवेति । यथायोगं प्रत्यक्षादिप्रमाणैरित्यर्थः ॥ **बुद्धिमान्भवेदिति** । न हीत्यनुषज्यते । द्रोणेति खारीति च धान्यपरिमाणविशेषः ॥ **तावत एवेति** । भावे इत्यन्वयः । ननु क्वचित्कर्षकादिषु अधिकसाधनभावेपि दृष्टादृष्टाभावादिनाऽधिकफलानुपलब्धेरधिकसाधनत्वादधिक-फलवत्त्वमिति नास्तीत्यत आह **दृष्टं वृष्ट्यादिकमिति** । तथाच तत्र हेतोरेवाभावान्न व्यभिचार इति भावः । मूले यत्रेति सामान्यव्याप्त्युक्त्या लब्धप्रयोगानाह **एवं मानुषादय इत्यादिना** ॥ **अनुकूल-तर्कादिकमिति** । अल्पसाधनेपि महाफले महाफलार्थिनां महासाधनानुष्ठानं न स्यात् । साधनतार-तम्येऽपि फलतारतम्याभावे निरुपाधिसहचारोपलम्भाविरोधरूपादिस्तर्कः । आदिपदेन व्यभिचाराभावश्च ऊह्य इत्यर्थः ।

**या०** — साधनाधिक्यसाध्याधिक्ययोस्तदुभयनिष्ठत्वेन सुराद्यनिष्ठत्वादुक्तप्रयोगानानुगुण्यमित्यतो-ऽस्य तात्पर्यमाह **यो यदधिकेति** । कारणान्तरायत्तमित्यत्र कारणान्तरं वृष्ट्यादिकं वा धर्मादिकं वा ज्ञेयम् ॥ **द्रोणावापेत्यादि** । अत्र द्रोणवापेत्येव पाठो न द्रोणावापेति । 'अस्त्रियामाढकद्रोणे खारीवाहो निकुञ्चकः । कुडुपः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथगि'त्यभिधानात् । द्रोणाढकौ नपुंसके चेति लिङ्गानुशासने द्रोणाढकशब्दौ पुंसि नपुंसके च भवत इत्युक्तत्वाच्चेति द्रष्टव्यम् ।' उप्यतेऽस्मिन्निति व्युत्पत्त्या वापशब्दः क्षेत्रपरः ।

**श्री०** — **कारणान्तरायत्तमिति** । साधनाधिक्यात्साध्याधिक्यमित्यनुमाने हेतोरप्रयोजकत्वमिति भावः । ननु कृष्यादिफले धान्यादौ तारतम्ये कारणान्तरायत्तं न कृष्यादिसाधनतारतम्याधीनमिति साध्यतारतम्येऽप्रयोजकान्तरशङ्कायाः किमुत्तरं जातमित्यत आह **दृष्टमिति** । 'न व्यभिचारः शङ्कनीयः'

इत्यत्र व्यभिचारशब्देनाप्रयोजकत्वं ग्राह्यम् । साध्यं विनाऽपि हेतुरस्त्वित्यप्रयोजकताशङ्काया व्यभिचार-शङ्कारूपत्वादिति भावः ॥

सु०— **स्यादेतत् । मुक्ता अप्युपासनं कर्म चानुतिष्ठन्तीति गुणोपसंहारपादे समर्थितम् । न चैकप्रकारमेव तेषामनुष्ठानमिति नियामकमस्ति । तथा च तेषामुपासनादि-तारतम्ये सत्यपि तत्प्रयुक्तफलतारतम्याभावादयुक्तान्येव सतर्काण्यनुमानानि । मुक्तैरनुष्ठितं साधनमेव न भवति साध्याभावादिति चेत् । अमुक्तै(मुमुक्षुभि)रनुष्ठितस्याप्यधिकस्य तथात्वोपपत्तेः । अनुष्ठानं च मुक्तवल्लीलात्मकं भविष्यतीत्यत आह कृच्छ्रेणेति ।**

अनु०— कृच्छ्रेण साधनादेव न मुक्तवदुदीर्यते ॥

**मुमुक्षुभिः कृच्छ्रेणैव साधनानां साधनादनुष्ठानात्कारणान्मुक्तवन्मुक्तानामिव लील-याऽनुष्ठानं न भवति ॥ अनेन विशेषणप्रक्षेपादनैकान्त्यादि परिहृतम् । मुक्तानां कृच्छ्राभावा-ल्लीलावैलक्षण्यदर्शनादन्यथासिद्धिरप्यपास्ता । न हि कृच्छ्रवती लीला भवतीत्युक्तं भवति ॥ कृच्छ्रेण मुमुक्षूणां साधनानुष्ठाने किं प्रमाणमित्यत** आह उदीर्यत इति । **एतदागमेनोदीर्यत इत्यर्थः ।**

शे०—**समर्थितमिति** । 'हानौ तूपायनशब्दशेषत्वादि'त्यादावुपासनस्य, 'छन्दत उभयाविरोधा-दि'त्यादौ कर्मणश्च कर्तव्यत्वं समर्थितमित्यर्थः ॥ **तथात्वोपपत्तेरिति** । साध्याभावेन साधनाभावो-पपत्तेरि'त्यर्थः ॥ **मुक्तानामिवेति** । अनेन मुक्तवदिति षष्ठीसमर्थात् 'तत्र तस्येवे'त्यनेन वतिरित्युक्तं भवति **विशेषणप्रक्षेपादिति** । साधने कृच्छ्रेणानुष्ठीयमानत्वरूपविशेषणप्रक्षेपादित्यर्थः । अनैकान्त्यादीत्यादि-पदेनान्यथासिद्धिसंग्रहः । कथं विशेषणप्रक्षेपेणानैकान्त्यपरिहार इत्यत आह **मुक्तानामिति ॥ अन्यथा-सिद्धिरपीति** । साध्याभावेऽप्यनुष्ठानस्य मुक्तवल्लीलयाऽन्यथासिद्धिरित्यर्थः । ननु माऽस्त्वनैकान्त्य-मन्यथासिद्धिपरिहारस्तु कथमित्यत आह **लीलेति** ।

स०— अनैकान्त्यादीत्यादिपदेनान्यथासिद्धिसंग्रहः । कथमनैकान्त्यादिपरिहार इत्यत आह **मुक्तानामित्यादि** ।

प०— **गुणोपसंहारेति** । पूर्वपादे हानौ तूपायनशब्दशेषत्वात्, छन्दत उभयाविरोधादि-त्यधिकरणद्वये यथाक्रममुपासनं कर्म चेति ज्ञेयम् । प्रागुक्तहेतूनां मुक्तेषु तत्फलादिषु च व्यभिचारं मुक्त्वा असिद्धिमन्यथासिद्धिं वा प्रतिबन्द्या चोदयति **मुक्तैरित्यादिना ॥ अनेनेति** । अनेनेत्य-स्येत्युक्तं भवतीत्यनेनान्वयः । अनेन मूलेनेत्यर्थः ॥ **विशेषणेति** । कृच्छ्रेणानुष्ठीयमानाधिकसाधन-

वत्त्वादित्येवं विशेषणप्रक्षेपादित्यर्थः । कृच्छ्रेणेत्युक्तत्वेनालीलात्वादधिकस्यासाधनत्वमपि निरस्तमित्य-सिद्धिरपि परिहृतेत्यर्थः ॥ **अन्यथासिद्धिरिति** । लीलात्वेनोपपन्नतारूपेत्यर्थः ।

**या० — गुणोपसंहारपाद** इति । उपासनापादे 'हानौ तूपायनशब्दशेषत्वादि'त्यत्र मुक्तानामुपासनं 'छन्दत उभयाविरोधादि'त्यत्र तेषां कर्म च समर्थितमित्यर्थः ॥ **विशेषणप्रक्षेपादिति** । साधने कृच्छ्रेणानुष्ठीयमानत्वरूपविशेषणप्रक्षेपादित्यर्थः ।

**श्री० — तथात्वोपपत्तेरिति** । साध्याभावेन साधनत्वाभावोपपत्तेरित्यर्थः ॥ **अन्यथासिद्धिरपीति** । साध्याभावेऽप्यनुष्ठानस्य मुक्तवल्लीलयाऽन्यथासिद्धिरित्यर्थः ।

**सु० — तदागमं पठति** दशकल्पमिति ।

**अनु० —** दशकल्पं तपश्चीर्णं रुद्रेण लवणार्णवे ॥
त्यक्त्वा सुखानि सर्वाणि क्लिष्टेन लवणाम्भसा ॥
शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखतः ॥
वर्षायुतं च सूर्येण तपोऽर्वाक्शिरसा कृतम् ॥
सुदुःखेन सुखं त्यक्त्वा धर्मेणाकाशशायिना ॥
पीता मरीचयो वर्षसाहस्रमतिसादरम् ॥
अतिकृच्छ्रेण कुर्वन्ति यत्नं ब्रह्मविदोऽपि च ॥
इति

**कल्पो ब्रह्मणो दिवसः । पात्रादित्वान्नपुंसकत्वम् । कालाध्वनोरत्यन्तसंयोग इति द्वितीया । यद्वा दशकल्पमिति बहुव्रीहिः । तपसो विशेषणम् ।**

**सहस्रं परिमाणमस्येति साहस्रः सङ्घः । तदस्य परिमाणमित्यर्थे शतमानविंशतिकसहस्रवसनादणित्यणो विधानात् । अन्येऽप्यतिकृच्छ्रेण यत्नं कुर्वन्ति किमैहिकफलार्थं नेत्युच्यते ब्रह्मविदोऽपीति । विषयवैराग्यमनेनोपलक्ष्यते । ब्रह्मज्ञानोत्त(र)रं साधनानुष्ठानेन मोक्षतारतम्यस्योपरि साधयिष्यमाणत्वादत्र सामान्यमात्रं विवक्षितम् । इतिशब्दो वाक्यसमाप्तौ ।**

**शे० —** मूले कल्पशब्दो द्विपरार्धात्मकमहाकल्पार्थकश्चेद्रुद्रशब्दानुपपत्तिः । न हि दशसु महाकल्पेष्वयं रुद्रशब्दवाच्यः किन्त्वेकस्मिन्नेव ततः पूर्वं तूग्रतपःशब्दवाच्य एव । 'शुश्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः' इति चतुर्थे वक्ष्यमाणत्वात् । 'महादेव परे जन्मंस्तव मुक्तिर्निरूप्यते' इति

**प्रमाणाच्च** । अतः कल्पशब्दं दैनन्दिनकल्पपरत्वेन व्याख्याति **कल्पो ब्रह्मणो दिवस इति** । ननु दशानां कल्पानां समाहारो दशकल्पमित्यस्य संख्यापूर्वकत्वेन द्विगुत्वादकारान्तोत्तरपदद्विगुत्वेन स्त्रीलिङ्गत्वाद्द्विगोरिति ङीपि दशकल्पीति भवितव्यम् । दशकल्पमिति तु कथमित्यतः पात्राद्युत्तरपदकस्य द्विगोरकारान्तोत्तरपदस्यापि स्त्रीत्वभावस्य पात्रादौ नेत्येतद्वार्तिकसिद्धत्वात्पात्रादेश्चाकृतिगणत्वेन कल्पशब्दस्यापि पात्रादित्वसंभवान्न दोष इत्यभिप्रायेणाह **पात्रादित्वादिति** । तथा च पञ्चपात्रमित्यादाविवात्रापि ङीपोऽप्राप्तौ स नपुंसकमिति नपुंसकत्वमुपपन्नमिति भावः । ननु ब्रह्मणो दशदिवसात्मककालस्याधिकरणत्वादधिकरणे सप्तमीति सप्तम्या भवितव्यम् । दशकल्पमिति द्वितीया तु कथमित्यतो मासमधीतेत्यादौ त्रिंशदहोरात्रात्मककालस्याध्ययनेनात्यन्तसंयोगात्कालवृत्तेर्मासशब्दान्मासमिति द्वितीयावद्ब्रह्मणो दशदिवसात्मककालस्य तपश्चरणेनात्यन्तसंयोगसद्भावाद्युक्ता कालवृत्तेर्दशकल्पशब्दाद्दशकल्पमिति द्वितीयेत्यभिप्रेत्य कालस्य गुणक्रियादिभिरत्यन्तसंयोगे सति कालवृत्तेः शब्दाद् द्वितीया भवतीत्येतद्विधायकलक्षणं पठन्नेव तामुपपादयति **कालाध्वनोरिति** । अन्तं विराममतिक्रान्तोऽत्यन्तः स चासौ संयोगश्चेत्यत्यन्तसंयोगो निरन्तरसन्निकर्ष इति यावत् । स च सामर्थ्यात्कालाध्वनोर्गुणादिभिरेव संभवति । ततश्चायं सूत्रार्थः । गुणक्रियादिभिः कालाध्वनोरत्यन्तसंयोगे सति कालाध्ववृत्तिभ्यां शब्दाभ्यां द्वितीया स्यादिति । अस्मिन्पक्षे नपुंसकत्वद्वितीयोपपादनप्रयासो भवतीत्यपरितोषात्पक्षान्तरमाह **यद्वेति** ।

ननु सहस्रशब्दात्तदस्य परिमाणमित्यर्थे प्राग्वतेष्ठञिति ठञि वर्षसाहस्रिकमिति भाव्यम् । संख्याया अतिशदन्तायाः कन्निति तस्मिन्नेवार्थे कनः ठञ्बाधकत्वात्तत्प्रसङ्गेन वर्षसहस्रकमिति भवितव्यम् । वर्षसाहस्रमिति तु कथमित्यतः शतमानेति तदस्य परिमाणमित्यर्थे प्राप्तठञ्कनोरपवादेनाणिवधानात्तस्मिन्सति वर्षसाहस्रमित्यस्योपपत्तेरित्याशयेनाह **तदस्येति** ॥ **परिमाणमित्यर्थ इति** । उपाधावित्यर्थः ॥ **अणित्यण इति** । अणित्यतोऽनुवर्तमानस्याण इत्यर्थः ॥ **विधानादिति** । संख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति सूत्रेण सङ्घेऽर्थे विधानादित्यर्थः । तथा च सहस्ररूपपरिमाणोपाधिके सङ्घरूपेऽर्थे सङ्ख्यावाचिनः सहस्रशब्दात्सङ्ख्यायाः संज्ञासङ्घसत्राध्ययनेष्वित्यनेनाण्प्रत्यये णित्वादादिवृद्धौ यस्येति चेत्यकारलोपे साहस्रशब्दनिष्पत्तिरित्युक्तं भवति । कथमनेनैहिकफलार्थत्वाभावसिद्धिरित्यत आह **विषयवैराग्यमिति** । विषयविरक्तानामैहिकफलाकाङ्क्षितत्वं विप्रतिषिद्धमिति भावः । अपरोक्षज्ञानिनां तारतम्येन साध्यतारतम्यप्रतिपादकस्यास्य ग्रन्थस्य प्रतीतार्थे तात्पर्येऽनुपपत्तिं सूचयन्नेवान्यत्र तात्पर्यमाह **ब्रह्मज्ञानोत्तरेति** ॥ **उपरीति** । 'ज्ञानिनोऽपि यतो नित्यं कुर्वन्ति शुभमेव हि । तारतम्यं च मुक्तौ तु तेनैवाऽध्यवसीयते' इत्यादिनेति शेषः ॥ **सामान्यमात्रमिति** । जिज्ञासुज्ञानिसाधारणं यद्विषयवैराग्यादिसाधनजातं तत्तारतम्यमेव मोक्षतारतम्यसाधकतया विवक्षितमित्यर्थः । अन्यथा पौनरुक्त्यापत्तेरित्यर्थः ॥

स० — ननु दशानां कल्पानां समाहारो दशकल्पमित्यत्र संख्यापूर्वकत्वेन द्विगुत्वे अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्त्रीलिङ्गत्वे द्विगोरिति ङीपि दशकल्पीति भवितव्यम् । दशकल्पमिति तु कथमित्यतः पात्राद्युत्तरपदकस्य द्विगोरकारान्तोत्तरपदकत्वेपि स्त्रीत्वाभावश्च पात्रादिभ्वेनेत्यत्र वार्तिकसिद्धत्वान्न दोष इत्यभिप्रायेण तद्वार्तिकमर्थतोनुवदति **पात्रादित्वादिति** । तथाच पञ्चपात्रमित्यादाविव ङीबभाव इति भावः । **उपरि साधयिष्यमाणत्वादिति** । 'ज्ञानिनोपि यतो नित्यं कुर्वन्ति शुभमेव ही'त्यादिनेति शेषः ।

प० — महाकल्पभ्रमनिरासाय दैनंदिनकल्पपरोऽयमित्याह **कल्पो ब्रह्मणो दिवस इति** । ननु दशकल्पमित्यत्र दशानां कल्पानां समाहार इत्यत्र पक्षे संख्यापूर्वो द्विगुरिति द्विगुसंज्ञायामकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्त्रीत्वे द्विगोरिति ङीपि सति दशकल्पीति स्यादित्यत आह **पात्रादित्वान्नपुंसकत्वमिति** । पात्रादौ नेति पात्राद्युत्तरपदे स्त्रीत्वं नेति निषेधेन स्त्रीत्वाभावे ङीपोऽप्राप्तौ स नपुंसकमिति सामान्यतः प्राप्तं नपुंसकत्वमित्यर्थः ॥ **कालाध्वनोरिति** । अन्तशब्दोऽत्र विरामवाची अन्तमतिक्रान्तः अत्यन्तः स चासौ संयोगश्चात्यन्तसंयोगः गुणक्रियादिभिः कालाध्वनोरत्यन्तसंयोगे अविच्छिन्नसंबन्धे विवक्षिते द्वितीया भवतीति द्वितीयाध्यायतृतीयपादे कर्मणि द्वितीयेत्यनुवर्त्य द्वितीयाविधानादत्र मासं गुडधानाः मासमधीते क्रोशं कुटिला नदी क्रोशमधीते इत्यादाविव द्वितीयेत्यर्थः । दशकल्पमध्ये तपोहीनकालः कोपि नेत्यर्थो लभ्यत इति ज्ञेयम् । एतेन वर्षकोटीरित्यादिद्वितीयापि व्याख्याता । वर्षसाहस्रं वर्षाणां समूहमित्यर्थलाभायाह **सहस्रमिति** । तदस्येति पञ्चमस्याद्यपादे तत्परिमाणमस्येत्यर्थे यथाविधानं प्रत्यया भवन्तीत्युक्तम् । तत्र को वाऽत्र प्रत्ययो विहित इत्यत आह **शतमानेति** । शतमानादिशब्देभ्योऽण्प्रत्ययो भवतीत्यणि आदिवृद्धौ साहस्रमिति सिद्धेरिति भावः । **अतिकृच्छ्रेणेत्यत्र** कर्त्राकांक्षां पूरयति **अन्येऽपीति** ॥ **उपलक्ष्यत इति** । वैराग्यसाध्यत्वाद्ब्रह्मवेदनस्येति भावः । कुत एवं लक्षणेत्यतो पौनरुक्त्यायेति भावेनाह **ब्रह्मज्ञानोत्तरेति** ॥ **उपरीति** । 'ज्ञानिनोऽपि यतो नित्यं कुर्वन्ति शुभमेव हि । तारतम्यं च मुक्तौ तु तेनैवाध्यवसीयत' इत्यत्रेति भावः । तावता कथमपौनरुक्त्यमित्यत आह **अत्र सामान्यमात्रमिति** । ज्ञान्यज्ञानिसाधारण्येन साधनतारतम्यान्मुक्तितारतम्यमित्येवात्र विवक्षितम् । ज्ञानोत्तरसाधनतारतम्यात् मुक्तितारतम्यमित्येतदुपरीति भावः ।

या० — ननु दशानां कल्पानां समाहारे विवक्षितेऽस्य संख्यापूर्वकत्वात्संख्यापूर्वो द्विगुरिति द्विगुसंज्ञायामकारान्तोत्तरपदो द्विगुःस्त्रियामिष्ट इत्युक्तत्वेनास्य स्त्रीलिङ्गत्वात् द्विगोरिति ङीपि दशकल्पीति भवितव्यं दशकल्पमिति तु कथमित्यत आह **पात्रादित्वादिति** । पात्रादौ नेत्यनेन पात्राद्युत्तरपदे

द्विगोः स्त्रीत्वनिषेधाद् द्विगोरित्यनेन ङीषोऽप्राप्तौ स नपुंसकमित्यनेन नपुंसकत्वमित्यर्थः । पात्रादिराकृतिगण इत्युक्तत्वेन पात्रादित्वादित्युपपन्नम् ॥ **कालाध्वनोरिति** । गुणक्रियादिभिः कालाध्वनोरत्यन्तसंयोगे द्वितीया स्यादिति सूत्रार्थः । अन्तं विराममतिक्रान्तोऽत्यन्तः स चासौ संयोगो निरन्तरः सन्निकर्ष इत्यर्थः । स च सामर्थ्यादनयोर्गुणादिभिरेव सम्भवतीति तद्ग्रहणमिति द्रष्टव्यम् । उदाहरणं तु मासं कल्याणी, मासमधीते, मासं गुडधानाः, क्रोशं कुटिला नदी, क्रोशमधीते, क्रोशं गिरिरित्यादि ज्ञेयम् ॥ **तदस्य परिमाणमिति** । तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं तच्चेत्परिमाणं भवतीति सूत्रार्थः । नन्वितः पूर्वमस्मिन्नर्थे कः प्रत्ययो विहितो येन यथाविहितमित्युच्यत इत्यत आह **शतमानेत्यादि** । शतमानादिभ्यः शब्देभ्योऽण्प्रत्ययो भवति आर्हीयेष्वर्थेष्विति सूत्रार्थः । शातमानं वैशातिकं साहस्रं वासनमित्युदाहरणम् । तदस्य परिमाणमित्युक्तोऽप्यर्थ आर्हीयतयैव विवक्षित इति ज्ञातव्यम् । ननु विषयवैराग्यमनेन किमर्थमुपलक्षणीयम् । ब्रह्मविदामेव साधनतारतम्येन मोक्षतारतम्यसाधनपरमेवैतत्किं न स्यादित्यत आह **ब्रह्मज्ञानोत्तरेति** । **उपरीति** । 'ज्ञानिनोऽपि यतो नित्यं कुर्वन्ति शुभमेव हि । तारतम्यं च मुक्तौ तु तेनैवाध्यवसीयत' इत्यत्रेत्यर्थः ॥ **सामान्यमात्रमिति** । जिज्ञासुज्ञानिसाधारणं यद्विषयवैराग्यादिसाधनजातं तत्तारतम्यमेव मोक्षतारतम्यसाधकतयाऽत्र विवक्षितमित्यर्थः । तथा च ब्रह्मविदोऽपीत्येतदुक्तार्थमेवेति भावः ।

---

**सु०— अनुमानमुपसंहरति** एतदिति ।

अनु० एतदखिलं मोक्षविशेषाभावतः कथम् ॥

**एतदखिलं कृच्छ्रेण साधनानुष्ठानम् । विशेषो वैचित्र्यम् । सप्तम्यर्थे तसिः । कथं युज्यते । ततोऽनेन मोक्षविशेषः सिद्ध इति शेषः ।**

**शे०— सप्तम्यर्थ इति** । आद्यादिभ्य उपसंख्यानादिति भावः ।

**प०— अनुमानमिति** युक्तं चेत्यादावुक्तमित्यर्थः ॥ **तसिरिति** । आद्यादिभ्य उपसंख्यानमित्युक्तेरिति भावः ।

**सु०— स्यादेतत् । मुक्तौ तारतम्यानुमानं कालात्ययापदिष्टम् । परमं साम्यमुपैतीत्यादिश्रुतिविरुद्धत्वादिति । मैवम् । श्रुतेः श्रुतिस्मृतिबाधितत्वेन बाधकत्वासम्भवादित्याशयवान्मोक्षतारतम्यवादिनीः श्रुतिस्मृतीस्तावत्पठति दैवीति ।**

अनु०— दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ॥

इति मोक्षविशेषश्च स्वयं भगवतोदितः ॥

तमेव यूयं भजतात्मवृत्तिभिर्मनोवचःकायगुणः स्वकर्मभिः ॥
अमायिनः कामदुघाङ्घ्रिपङ्कजं यथाधिकारावसितार्थसिद्धये ॥
अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ॥
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥
इत्यादीनि च वाक्यानि तारतम्यं विमुक्तिगम् ॥
व्यक्तं वदन्ति

सम्पद्योग्यता । विमोक्षो विशिष्टमोक्षः । निबन्धो नीचस्थानेऽन्धे तमसि बन्धः । तादर्थ्ये चतुर्थी । चशब्द एवार्थे । भगवता स्वयमेवोक्त इति सम्बध्यते । अन्यथा वीत्युपसर्गस्य वैयर्थ्यापत्तेः ॥

तमेवेति मुनीन्प्रति पृथोर्वाक्यम् । तं विष्णुमेव । आत्मवृत्तिभिरित्यस्यैव विवरणं मनोवचःकायकार्यैः स्वकर्मभिरिति । अमायिनश्छद्मरहिता निष्कामाः । यथाधिकारं योग्यतानुसारेणावसितस्य निश्चितार्थस्य मोक्षस्य सिद्धय इति मोक्षतारतम्योक्तिः । अमायिन इत्युक्तत्वादर्थशब्देन मोक्षस्यैवोक्तेः ॥

अक्षण्वन्तोऽक्षिमन्तः । अनो नुडिति नुट् । कर्णवन्तः प्राप्तसमस्तेन्द्रियफलाः । परस्परं सखायो मुक्ताः । मनोजवेषु मनोजवः प्रज्ञातिशयो बहुवचनमाद्यर्थे ज्ञानादिगुणेषु असमास्तारतम्योपेता बभूवुः ।

भगवत्सामीप्ये च तारतम्यमुच्यते । तेषु केचिदादघ्नास आस्यशब्दस्याऽऽभावः । आस्यं परिमाणमेत्यादघ्नममृतं तदेतेषामस्ति स्थानमित्यर्शआदिभ्योऽच् । आस्यपरिमाणे सुधानिधौ विहरन्त इति दूरत्वमुच्यते । यद्वा तरतमशब्द इव दघ्नशब्दोऽप्रत्ययोऽप्यस्ति । तथा सम्यग्दघ्ना मग्ना इत्यर्थः । त्वे केचिदुपगताः कक्षं वनमुपकक्षाः । उशब्द एवार्थः । श्वेतद्वीपगतवनक्रीडारता एवेति मध्यत्वमुच्यते । आज्जसेरसुगित्यसुक् । त्वे(एव) एके स्नात्वाः स्नातव्याः । कृत्यार्थे 'तवैकेन् केन्यत्वन' इति त्वन् ।

ह्रदा इव गम्भीराः परमेश्वरं ददृश्रे ददृशुः । इरयोरे । अनेनातिसामीप्यमुच्यते । 'श्रुत्वा विष्णुं कर्णफलमि'त्यादिस्मृत्याऽस्य मन्त्रस्यैवं व्याख्यातत्वान्नार्थान्तरं कल्पनीयम् ॥

इत्यादीनि चेति चशब्देन प्रागुदाहृतकाण्वतैत्तिरीयश्रुती समुच्चिनोति । व्यक्तं निरवकाशम् ।

**ततः किमित्यत आह** तत्केनेति ।

तत्केन साम्यं मुक्तेषु गम्यते ॥

**तत्तस्मान्निरवकाशश्रुतिस्मृतिबाधितत्वात्केन न केनापि । यदुदाहृतं वाक्यं तन्न तत्परमिति भावः ।**

**शे०** — अत्र टीकायां श्रुतिस्मृतिबाधितत्वेनेति स्वरसः पाठः । श्रुतिस्मृतिभिर्बाधितत्वेनेति च तदर्थः । मोक्षतारतम्यवादिनीः श्रुतिस्मृतीस्तावदुदाहरतीत्युत्तरग्रन्थानुरोधात् । श्रुतिस्मृतिभ्यां बाधितत्वेनेति तु लेखकदोषपतितः पाठ इति द्रष्टव्यम् ॥ नन्वागन्तुकसम्पत्साध्यत्वे मोक्षतारतम्यस्य स्वभावनिबन्धनत्वाभावात्तत्स्वाभाविकत्वसिद्धान्तभङ्ग इत्यतः स्वभावाख्ययोग्यतापरत्वेन सम्पत्पदं व्याख्याति **सम्पद्योग्यतेति ।** तथाऽपि मोक्षस्य स्वभावसाध्यताया अनेन लाभेऽपि मोक्षतारतम्यस्य तदलाभात्कथमस्य प्रकृतोपयोग इत्यतो विशिष्टमोक्षस्य देवस्वभावसाध्यत्वकथनेन मोक्षनानात्वलाभात्प्रकृतोपयोगोपपत्तिरिति भावेन विमोक्षपदं विशिष्टमोक्षपरतया व्याचष्टे **विमोक्ष इति ।** ननु ततो यान्त्यधमां गतिमित्यादिनाऽसुरस्वभावस्यान्धन्तमसहेतुतायाः श्रवणात्कथं निबन्धायासुरी मतेति तस्य संसारहेतुत्वमुच्यत इत्यतो नात्र तस्य संसारहेतुत्वमुच्यते किन्त्वतिनीचान्धतमससाधनत्वमेवेत्यतो नानुपपत्तिरित्यभिप्रायेण निबन्धपदं व्याख्याति **निबन्ध इति ।** तथाऽपि सम्पत्पदोक्तस्वभावस्य मोक्षादितारतम्यस्य च साध्यसाधनभावप्रत्यायकस्यात्राभावात्कथमनेन तत्सिद्धिरित्यतश्चतुर्थ्येव तद्गमिकाऽस्तीत्यभिप्रेत्य तदर्थमाह **तादर्थ्ये इति ।** मोक्षविशेषश्चेति चशब्दस्य यथाश्रुतसंबन्धमाश्रित्य वा भगवता स्वयं चेति वा भिन्नक्रमतामाश्रित्य वा समुच्चयार्थताया बाधितत्वाच्चशब्दमेवार्थतया व्याचष्टे **चशब्द इति ।** नन्वेवार्थस्यापि चशब्दस्य न यथाश्रुतसंबन्धः संभवतीत्यत आह **भगवतेत्यादि ।** ननु विमोक्षपदस्य कुतो विशिष्टमोक्षार्थतेत्यतो विमोक्षायेत्युपसर्गादेव च मोक्षनानात्वं ज्ञायत इति गीतातात्पर्यीयभगवत्पादीयोक्तिं मनसि निधाय तल्लब्धं तदनङ्गीकारे बाधकमाह **अन्यथेति ।**

**तं विष्णुमेवेति ।** तद्भजनस्यैव मोक्षसाधनत्वात्तत्पादसेवेति पूर्वश्लोके यच्छब्दार्थतया प्रकृतत्वाच्च तमिति विष्णोरेव परामर्श इति भावः । नन्वत्र मोक्षस्यैवाश्रयणात्तत्तारतम्यस्य सर्वथैवानेनासिद्धेः कथं तत्तारतम्योपपादकतयाऽन्योपन्यास इत्यतो यथाऽधिकारेत्यादेरेव तत्प्रत्यायकत्वान्नानुपपत्तिरिति भावेन मोक्षतारतम्यप्रतिपादकतया तद्व्याचष्टे **यथाऽधिकारमिति ।** ननु चार्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजन इति स्मरणाद्विषयाद्यनेकार्थस्यार्थशब्दस्य कुतो विषयादिपरित्यागेनात्र मोक्षमात्रार्थता येनोक्तरीत्या मोक्षतारतम्योक्तिस्साऽस्य स्यादित्यतो विषयाद्यर्थताया अमायिन इत्युक्तनिष्कामताविरुद्धतयाऽसंभवान्मोक्षमात्रपरत्वसिद्धेर्युक्तमेवास्य तत्तारतम्यगमकत्वमित्याशयेनाह **अमायिन इत्युक्तत्वादिति ।**

**अनो नुडिति ।** ( || अनो नुडिति । अत्र परिमलेऽक्षिशब्दस्यानन्तत्वाभावात्कथमनो नुडित्युक्तमिति शङ्कायाः समाधानं यादुपत्योक्तम् अन्ये त्वित्यनूदितम् । उपगताः कक्षमित्यत्र द्वितीयाश्रितेति समास इति परिमले मुद्रितपुस्तकपरं स लेखकप्रमादः । तस्मिन्सूत्रे कक्षशब्दाभावात्तेन समासे द्वितीयान्तस्य कक्षशब्दस्य पूर्वनिपातापत्तेश्च । अत्र अत्यादयः क्रान्ताद्यर्थे इत्यनेन समासो बोध्यः ) नुडिति छन्दसि विषयेऽन्नन्तादुत्तरस्य मतुपो नुडागमः स्यादिति सूत्रार्थः । नन्वक्षिशब्दस्येकारान्ततयाऽन्नन्तत्वाभावात्कथमत्रान्नन्तादुत्तरस्य मतुपो नुड्विधायकस्यानो नुडित्यस्य प्राप्तिः । न चास्थिदधिसक्थ्यक्ष्णामनङुदात्त इत्यनेन ङित्वादन्त्येकारस्यानङादेशेनान्नन्तत्वसंभवाद्युक्तैव ततः परस्य मतुपो नुट्प्राप्तिरिति वाच्यम् । तृतीयाद्यजादिविभक्तिपरत्व एव तस्यानङादेशविधायकतयाऽसति तस्मिन्ननङादेशस्य तेनाप्यत्रानुपपत्तेरिति चेन्न । छन्दस्यनङ्विधानार्थे प्रवृत्ते छन्दस्यपि दृश्यत इति सूत्रे दृशिग्रहणसामर्थ्याद्यतो विहितस्ततोऽन्यस्मादप्यजादाविवानजादावपि तृतीयादाविवातृतीयादावपि विभक्ताविवाविभक्तावपि परतश्छन्दस्यनङादेशविधानसिद्ध्याऽसत्यप्यजादितृतीयादिविभक्तिपरत्वेऽक्षिशब्देकारस्यानङादेशसंभवेनान्नन्तत्वोपपत्त्या तत्परस्य मतुपोऽनो नुडिति नुड्विधानसंभवात् । ननु चात्र विधीयमानोऽपि नुट् नुगिति कित्त्वात्कित्पूर्वान्ततयाऽभिमतः किंवा नुटो वेति टित्त्वात्परादितया । नाद्यः । तथा सति प्रातिपदिकान्तत्वात्पदान्तत्वाच्च नुटो नकारस्य न लोपः प्रातिपदिकान्तस्येति लोपप्रसङ्गात् । पदान्तस्येति पदान्तनकारस्य णत्वनिषेधेन तत्प्रसङ्गाच्च । नान्त्यः ।

---

तथा सति यदागमास्तद्ग्रहणेन गृह्यन्त इति न्यायेन तस्य मतुप्भक्ततया तद्ग्रहणेन गृहीतत्वान्मादुपधाया इति वत्वप्रसङ्गात् । नुटा व्यवहितत्वान्मतुपो मकारस्य वत्वाभावप्रसङ्गाच्चेति चेन्न । उभयत्राप्यदोषात् । तथा हि । अस्तु तावत्पूर्वान्त एवेत्याद्यः । न चैवं 'नलोपः प्रातिपदिकान्तस्ये'ति नुटो नकारस्य लोपप्रसङ्ग इति वाच्यम् । नुटोऽसिद्धत्वेन तत्पूर्वनकारस्यैव 'नलोपः प्रातिपदिकान्तस्ये'ति लोपसंभवेन तदप्राप्तेः । न चैवमन्नन्तत्वाभावान्नुडनुत्पत्तिप्रसङ्ग इति वाच्यम् । इदानीमन्नन्तत्वाभावेऽपि पूर्वं तत्सद्भावेन भूतपूर्वगत्याऽन्नन्तत्वाश्रयणेन नुडुत्पत्तेरप्रत्यूहत्वात् । न चैवमपि पदान्तस्येति नुटो नकारस्य णत्वप्रतिषेधप्रसङ्गः । भत्वाश्रयणेन णत्वोपपत्त्या तदप्रसङ्गात् । अस्तु वा द्वितीयः । न चैवं यदागमा इति न्यायेन मतुप्ग्रहणेन ग्रहणात्तस्य मादुपधाया इति वत्वप्रसङ्ग इति वाच्यम् । निर्दिश्यमानस्यादेशा भवन्तीति न्यायेन तत्र सूत्रनिर्दिश्यमानमतुप्परित्यागेनानिर्दिश्यमानस्य नुटस्तदप्रसङ्गात् । न च निर्दिश्यमानस्य मतुपो नुटा व्यवहितत्वात्कथं वत्वं स्यादिति वाच्यम् । नुटोऽसिद्धतया तद्व्यवधानसंभवेन मतुपो मस्य वत्वसंभवात् । न च नुटः परादित्वे णकारस्य पूर्वपदान्तत्वाभावादक्षण्वन्त इत्यक्षण् वन्त इति णन्तस्य पदकालेऽवग्रहानुपपत्तिरिति वाच्यम् । पदस्यानित्यतया

पदकारैरेव लक्षणानुवर्त्यतया लक्षणेन पदकाराणामननुवर्तनीयत्वाद् इत्यन्यत्र विस्तरः । ततश्चाक्षिशब्दात्तदस्यास्तीत्यस्मिन्नर्थे मतुप्प्रत्यये छन्दस्यपि दृश्यत इत्यनङादेशेऽनो नुडिति नुटि नुटोऽसिद्धतया पूर्वनकारलोपे तत एव च मादुपधाया इति मतुपो मकारस्य वत्वे भूतपूर्वगत्याऽन्नन्तत्वान्नुटि तस्य णत्वे चाक्षण्वत्प्रातिपदिकनिष्पत्तिरिति भावः ।

अक्षादिमत्त्वस्य संसारिसाधारणत्वाद्विशिष्य मुक्तेषु तदुक्त्यनुपपत्तिमाशङ्क्य तत्तात्पर्यमाह **प्राप्तेति** । ननु मनोजवस्यैकत्वान्मनोजवेष्विति बहुवचनानुपपत्तिरित्यतोऽत्र मनोजवपदस्य लक्षणया तत्सहचरितगुणान्तरपरत्वस्यापि सत्त्वेन शक्त्या मनोजवमात्रपरत्वाभावान्न बहुवचनानुपपत्तिरित्यभिप्रेत्य मनोजवप्रातिपदिकस्याद्यर्थे लक्षणैव कुत इत्यतस्तत्र ज्ञापकमाह **बहुवचनमिति** । मनोजवप्रातिपदिकस्याद्यर्थे लक्षणायां बहुवचनं ज्ञापकमित्यर्थः । प्रपञ्चस्तु युक्तिचरणे कृतोऽत्रानुसन्धेयः ।

**अभाव इति** । पृषोदरादित्वादिति भावः ॥ **आस्यपरिमाणमिति** । प्रमाणे द्वयसच् दघ्नच् मात्रच् इति दघ्नच्प्रत्यय इति भावः । नन्वेवमादघ्नवन्त इति मत्वर्थीयप्रत्ययश्रवणप्रसङ्ग इत्यतोऽत्र मत्वर्थीयमतुबाश्रयणीये तत्प्रसक्तावपि तदर्थकाच्प्रत्ययान्तत्वे यस्येति चेति तस्मिन्परतोऽकारलोपे आदघ्नशब्दनिष्पत्त्या तदश्रवणोपपत्तिरिति भावेनाह **अर्शआदिभ्य इति** । तस्याकृतिगणत्वादिति भावः । तत्तात्पर्यं वदन्नेव कथमनेन भगवत्सामीप्यमुक्तं भवतीत्याशङ्कां च परिहरति **आस्यं परिमाणमिति** । अत्र आस्यपरिमाण इत्यादघ्नशब्दार्थकथनं **सुधानिधाविति** । अस्येति पदार्थकथनं विहरन्त इति तदेषामस्तीत्युक्तसम्बन्धनिरूपणमित्यवधेयम् ॥ **अप्रत्ययोऽपीति** । यथा तरप् तमप्प्रत्ययभिन्नस्तरतमशब्दोऽस्ति । अन्यथा तरतमस्य भावस्तारतम्यमिति तरतमशब्दात् ष्यञनुपपत्त्या तारतम्यशब्दस्यासाधुत्वप्रसङ्गात् । तथा प्रमाणार्थकदघ्नच्प्रत्ययभिन्नो मग्नशब्दपर्यायो दघ्नशब्दोऽपि कश्चिदस्तीत्यर्थः । नन्वेवमुक्तनिर्वचनानुसारेणादघ्ना उपकक्षा इति भवितव्यम् । आदघ्नास उपकक्षास इति तु कथमित्यत आह **आज्जसेरिति** । उभयत्रेति शेषः । छन्दसि विषयेऽवर्णान्तादङ्गादुत्तरस्य जसेरसुगागमो भवतीति सूत्रार्थः ॥ **कृत्यार्थ इति** । स्नातेरिति शेषः । कृत्यानामर्थो भावकर्मणी तस्मिन्कृत्यार्थे छन्दसि विषये तवैकेन्केन्यत्वन इत्येते प्रत्यया भवन्तीति सूत्रार्थः ॥ तथा च भावकर्मणोरिहार्हे कृत्यतृचश्चेत्यहार्थेऽपि कृत्यस्मरणदर्हार्थे त्वन् इति भावः ।

दृशेः परस्मैपदित्वेऽपि व्यत्ययेन ददृश्र इत्यात्मनेपदमित्याशयेनाह **ददृशुरिति** । नन्वेवमपि लिटस्तझयोरिति झस्येरे इत्यादेशे सति ददृशिर इति भवितव्यम् । ददृश्र इति तु कथमित्यतो झादेशस्येरे इत्यस्य छन्दसि विषये रेभावे सति ददृश्र इत्यस्योपपत्तेरित्यभिप्रेत्य तस्य रेभावविधायकं सूत्रं पठति **इरयोर इति** । इरे इत्येतस्य छन्दसि विषये बहुलं रे इत्ययमादेशो भवतीत्यर्थः । झादेशभूतः

स्वारसिकः। एक इरेच् ञादेशस्य तस्यैव रेभावे पुनरिटप्राप्तावपरो लाक्षणिक इरेच् तस्यापि रेभावसिद्ध्यर्थं सूत्र इरयोरिति द्विवचननिर्देशः। असति तु द्विवचननिर्देशे स्वारसिकस्य रेभावसिद्धावपि तस्यैव पुनरिड्विधानेन संपन्नो यो लक्षणिक इरेच् तस्य रेभावाभावप्रसङ्गात्। न चेरे इत्यादेशस्य रेशब्दस्य पुनरिट् प्रसज्यते। तथा सति रेभाववैयर्थ्यप्रसङ्गादिति वाच्यम्। कृसृभृप्रभृतिष्वनिट्सु तदप्रसङ्गेन तत्रैव रेभावस्य चरितार्थतयाऽन्यत्र पुनरिट्प्राप्तावपि तद्वैयर्थ्यप्रसङ्गात्। सति तु द्विवचननिर्देशे तस्यापि रेभावसिद्धेर्नानुपपत्तिरिति भावः। नन्वक्षण्वन्तोऽक्षिमन्तः सर्वदर्शनसाधनाक्षियुक्ताः कर्णवन्तः सखायः समानं ख्यानं ज्ञानं येषामिति सखायस्ते मनोजवेषु मनसा जायन्त इति मनोजवाः प्रज्ञाद्यास्तेष्वसमा अतुल्या बभूवुर्भवन्ति। तेषु केचिदादघ्नास आस्यदघ्ना आस्यपरिमाणोदका ह्रदा इवाल्पोदकाः। अनेनाल्पाधमप्रज्ञानाह। अथ त्वे एके उपकक्षासः कक्षसमीपप्रमाणोदका ह्रदा इवाल्पोदका इत्यर्थः। अनेनाल्पप्रज्ञानाह। तथात्वे एके स्नात्वा स्नानार्हा अक्षोभ्योदका ह्रदा इव ददृश्रे दृश्यन्ते। अनेन महाप्रज्ञानाहेति। अक्षिमन्तः कर्णवन्तोऽभिचष्टेरित्यादियास्कनिरुक्तानुसारिवेदापभाष्यरीत्या विदितवेद्यानाममुक्तानां बृहस्पतिशिष्याणां स्तुतिरूपाऽन्यार्थत्वादस्य वाक्यस्य न विवक्षितार्थसाधकतेत्यतः 'श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात्कर्णसंयुताः। अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्तास्तु ये गुणाः। तारतम्यं च तेषां च श्रुतावुदितमञ्जसा। क्षीरसागरदघ्नास्तु केचित्तिष्ठन्ति मुक्तिगाः उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम्। एके ह्रदे केचिदपि देवा एव सदा हरिम्। नागभोगशयं मुक्ता ददृश्रेऽधिकमोदिनः। सागरादिस्थिता विष्णुं पश्यन्ति कचिदेव ही'त्यक्षण्वन्त इति श्रुतिव्याख्यानरूपागमे बहुशो मुक्तपदश्रवणात्तस्य मन्त्रस्यास्मदुक्तरीत्या व्याख्यातत्वात्तद्विरुद्धमपव्याख्यानमुपेक्षणीयमित्याशयेनाह **श्रुत्वेत्यादि**। टीकायां काण्वतैत्तिरीयश्रुती समुच्चिनोतीति सरसः पाठः। श्रुतीः समुच्चिनोतीति तु लेखकदोषपतित एव। श्रुतिद्वयस्यैव पूर्वमुपन्यस्ततया श्रुतीरिति बहुवचनस्याश्लिष्टत्वादित्यवधेयम्। वचनानां व्यक्तत्वकथनस्यानर्थक्यमाशङ्क्योक्तेर्बाधकत्वोपयोगिनिरवकाशत्वसूचनार्थत्वान्न तदिति भावेन तदर्थतया व्यक्तपदं व्याचष्टे **व्यक्तमिति**।

उत्तराभावेन प्रश्नार्थत्वायोगादाक्षेपार्थतया किंशब्दं व्याचष्टे **केनेति**। ननु परमं साम्यमुपैतीति श्रुतेरेवात्र प्रमाणत्वात्कथं न केनापीत्याक्षेप इत्यतोऽभिप्रायमाह **यदुदाहृतमिति**।

स० — **सामान्यमिति**। यत्र साधनाधिक्यं तत्र साध्याधिक्यमिति सामान्यमित्यर्थः। तथाच न पौनरुक्त्यमिति हृदयम्। **अनो नुडिति नुडिति**। अक्षिशब्दाच्छन्दस्यापि दृश्यत इति दृशिग्रहणात्। अचि अनचि अनङादेशो भवतीत्यनङादेशः। स च ङिच्चेति ङिदन्तस्येकारस्य भवति। ततश्चाक्षन्शब्दात् अस्यास्तीत्यस्मिन्नर्थे मतुप् अनो(?)नुट् अन्नन्तादुत्तरस्य मतुपो नुडागमः

स्यादिति नुट् । स च पूर्वान्तो वा परादिर्वा । यदि पूर्वान्तः तदा पदान्तत्वाच्च प्रातिपदिकान्तत्वा-न्नुटो नकारस्य लोपे प्राप्ते इतः परमप्युत्तरोत्तरकार्यं पूर्वपूर्वकार्यं प्रत्यसिद्धमिति नुटोऽसिद्धत्वे पूर्वनकारस्य लोपे सति भूतपूर्वगत्या नर्नुट् तस्य च रषाभ्यामिति णत्वे मादुपधाया इति नकारस्य च वकारे च अक्षण्वन्त इति भवति । न च पूर्वान्तत्वे पदान्तस्येत्यनेन णत्वनिषेध इति वाच्यम् । भत्वाण्णत्वो-पपत्तेः । यदि परादिस्तदापि पूर्वनकारलोपे सति नुटो नस्य णत्वं भवति । न च तदागमा इति न्यायेन नुटो वत्वं स्यात् । नुटा व्यवहितत्वान्मतुपो न स्यादिति वाच्यम् । निर्दिश्यमानस्यादेशा भवन्तीति एवं न भविष्यति । एवं तर्हि निर्दिश्यमानमतुपो न स्यात् । नुटा व्यवहितत्वात् । नुट्सिद्धत्वान्मतुपो भविष्यतीति द्रष्टव्यम् । **बहुवचनमाद्यर्थ इति** । 'कडाराः कर्मधारये' इति सूत्रे बहुवचननिर्देशादाद्यर्थोऽवगम्यत इत्याह **कडारा इतीति** । पदमञ्जर्यामुक्तत्वादित्यर्थः । **अप्रत्ययोपीति** । प्रत्ययव्यतिरिक्तो भवतीत्यर्थः । ननु ददृशिर इति भवितव्यम् । ददृश्र इति तु कथमित्यत आह **इरयोरे इति** । अत्र रेशब्दस्य सेटां धातूनामिति कृते पुना रेभावः क्रियते । तदर्थं इरयोरिति द्विवचननिर्देशः । इरे चेरे चेरयौ तयोः । लिटस्तझयोरेशिरेजितिसूत्रविहित एक इरे अपरश्च सेट् रे । तयोः रे इत्ययमादेशो भवतीत्यर्थः । उदाहृतं परमं साम्यमुपैतीत्येतत् ।

प० — श्रुतियुक्तिभिः पूर्वं मुक्तितारतम्यस्य साधितत्वात् पुनस्तत्र श्रुतिस्मृत्युक्तिः कुत इत्यतो युक्तौ विशेषशङ्कामाह **स्यादेतदिति** ॥ **विशिष्टेति** । सुखविशेषानुभवरूपमोक्षायेत्यर्थः ॥ **अन्यथेति** । मोक्षे विशेषबोधनाभावे विमोक्षायेत्यत्रत्यवीत्युसर्गस्येत्यर्थः । यूयमित्युक्तानां ज्ञानायाह **तमेवेति मुनीन्प्रतीति** । चतुर्थस्कन्धे पृथुचरिते वाक्यमेतत् ॥ **इत्युक्तत्वादिति** । अमायिपदस्य निष्काम-त्वार्थकत्वेन व्याख्यानादिति भावः ॥ **अनो नुडितीति** । अन्नन्ताच्छब्दात् मतुपो नुडागमो भवति छन्दसीति अष्टमाध्यायद्वितीयपादस्थसूत्रार्थः । अक्षन्शब्दात् मतुपो नुडागमे 'न लोपः प्रातिपदि-कान्तस्ये'ति पूर्वनकारलोपे अट्कुप्वाङ्नुम्व्यवायेपीति नुटो णत्वे मतुपो मकारस्य मादुपधायाश्चेति वकारे अक्षण्वन्त इति सिद्धेरिति भावः । अक्षिशब्दस्येकारान्तत्वेनान्नन्तत्वाभावेऽपि अक्षिशब्दपर्या-योऽक्षन्शब्दोऽयमन्य एव । दध्नशब्दोऽप्रत्ययोऽप्यस्तीत्यग्रेऽभिधानेन तुल्यन्यायादित्येके । अन्ये तु सप्तमाद्यपादे छन्दस्यपि दृश्यत इति सूत्रे दृशिग्रहणसामर्थ्यात् तृतीयाद्यजिभक्तिपरत्वाभावेपि अस्थि-दधिसक्थ्यक्ष्णामनङुदात्त इति पूर्वसूत्रादनुवृत्तानङादेशे ङित्वादन्त्यस्य कृते अक्षन् शब्द एवेति नुट्-प्राप्तिसंभवादनोनुडिति कथमुक्तमिति न शङ्क्यमिति समादधुः । विद्यारण्यस्तु छन्दस्यपीत्यपिपदादनङ् अनोनुडिति नुडित्याह । अक्षण्वन्तः कर्णवन्तः इत्युपलक्षणं मत्वाह **प्राप्तसमस्तेति** । अन्यथा अक्षण्वन्तः कर्णवन्त इत्युक्तिर्व्यर्थापद्येतेति भावः । आदघ्नास इति श्रुतेस्तात्पर्यमाह **भगवदिति** ।

भगवत्सामीप्यलक्षणमोक्षेपीत्यर्थः । उच्यते उत्तरार्धेनेति योज्यम् ॥ **आस्यशब्दस्याऽऽभाव इति** । आस्यशब्दस्य स्थाने आभावः आत्वं आकारादेश इति यावत् । छन्दस्त्वादिति भावः । आस्यं परिमाणमस्येति प्रमाणे द्वयसच्दघ्नञ्मात्रच इति परिमाणरूपप्रमाणार्थे दघ्नच्प्रत्ययस्य विधानादिति भावः । **आदघ्नमिति** । आस्यपर्यन्तविद्यमानममृतमित्यर्थः । स्थानमिति स्थानत्वे नास्तीत्यर्थः । इतिशब्दानन्तरमादघ्नास इति शेषः ॥ **अर्शआदिभ्योऽजिति** । अर्शसूप्रभृतिभ्यः शब्देभ्यो मत्वर्थेऽच्प्रत्ययो भवतीति पञ्चमतृतीयपादस्थसूत्रार्थः । तस्याकृतिगणत्वादिहापि मत्वर्थेऽच्प्रत्यये यस्येति सूत्रेण पूर्वाकारलोपे आदघ्नः आदघ्नवानित्यर्थो भवति । बहुवचनस्य आज्जसेरसुगिति असुगागमे सवर्णदीर्घे चादघ्नास इति भवतीति भावः ॥ **इतिदूर(स्थ)त्वमिति** । इत्यर्थकेनादघ्नास इत्यनेन हर्यपेक्षया मुक्तानां दूरस्थत्वमुच्यते इत्यर्थः ॥ **अप्रत्यय इति** । दघ्नच्प्रत्ययभिन्नसुबन्तशब्दरूप इत्यर्थः । एवमग्रेपि । द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैरिति द्वितीयातत्पुरुषमुपेत्याह **उपगताः कक्षमिति** ॥ **आज्जसेरिति** । आकारान्तात्परस्य जसेर्बहुवचनस्यासुगित्यागमो भवतीत्यर्थः । सवर्णदीर्घः ॥ **त्वे इति** । केचनेत्यर्थः । **स्नातव्या इति** । ह्रदा इत्यस्य विशेषणं स्नानार्हा इत्यर्थः ॥ **कृत्यार्थ इति** । तृतीयस्यांत्यपादे सूत्रं कृत्यार्थ इत्यादि पूर्वत्र हि अर्हेकृत्यतृचश्चेत्यर्हार्थकृत्प्रत्ययो विहितः । कृत्प्रत्ययस्यार्थेतवैकेन्केन्यत्वन इत्येते प्रत्यया भवन्तीत्युक्तेः त्वन्प्रत्यय इत्यर्थः । नकारो ञ्नित्यादिर्नित्यमित्याद्युदात्तस्वरार्थ इत्संज्ञकः । ददर्शिरे इति वक्तव्ये कथं ददृश्रे इत्युक्तिरित्यतः षष्ठान्त्यपादीयसूत्रमेव पठति **इरयोरे इति** । बहुलं छन्दस्यमाङ्योगेपीति पूर्वसूत्रात् छन्दसीति वर्तते । इरे इत्यस्य स्थाने रे इत्ययमादेशो भवति छन्दसीति सूत्रार्थः । रेभावविधानसामर्थ्यात् आर्धधातुकस्येड्वलादेरिति इडागमो नेति भावः । ननु विद्यारण्यादिना ब्रह्मज्ञानस्तुत्यादिपरत्वेन व्याख्यानात्कथं मुक्ततारतम्यपरत्वमित्यत आह **श्रुत्वेति** । ऐतरेयभाष्ये द्वितीयप्रघट्टके 'श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात् कर्णसंयुताः । अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्ताश्च ये गणाः । तारतम्यं च तेषां च श्रुतावुदितमञ्जसा । क्षीरसागरदघ्नास्तु केचित्तिष्ठन्ति मुक्तिगाः । उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् । ऐरे ह्रदे केचिदपि देवा एव सदा हरिम् । नागभोगशयं मुक्ता ददृश्रेऽधिकमोदिनः । सागरादिस्थिता विष्णुं पश्यन्ति क्वचिदेव हि ।' इत्युक्तस्मृत्येत्यर्थः । श्रुत्युक्तमुपलक्षणमुपेत्य ऐरे ह्रदे केचिदिति स्मृतिशेषः । अमृतकल्पमद्यह्रदे केचित् स्थिता इत्यर्थः ॥ **उदाहृतं वाक्यमिति** । परमं साम्यमुपैतीति वाक्यमित्यर्थः ।

**या० — अन्यथेति** । मोक्षे विशेषाप्रतिपादकत्व इत्यर्थः ॥ **अनो नुडितीति** । अन्नन्तादुत्तरस्य मतोर्नुडागमो भवति छन्दसि विषय इति सूत्रार्थः । अक्षण्वन्तः कर्णवन्तः । अक्षण्वन्तं

यद्दनवस्था बिभर्तीत्याद्युदाहरणम् । नन्वक्षिशब्दस्येकारान्तत्वेनान्नन्तत्वाभावात्कथमनो नुडित्यस्य प्राप्तिः । न चास्थिदधिसक्थ्यक्ष्णामनङुदात्त इत्यनेन ङित्त्वादन्त्येकारस्यानङादेशेऽनन्तत्वसिद्धिः । तृतीयादिविभक्तिष्वजादिष्वेव परतस्तत्रानङ्विधानादिति चेदुच्यते । छन्दस्यपि दृश्यत इति तदुत्तरसूत्रेणात्रानङादेशविधानसम्भवात् । तत्र दृशिग्रहणसामर्थ्याद्यतो विहितस्ततोऽन्यत्रापि भवतीत्युक्तत्वेनाचि अनचि विभक्तावपि परत इत्यभिप्रेतत्वात् । ननु तथाऽपि नलोपः प्रातिपदिकान्तस्येत्यनेन नकारलोपेऽन्नन्तत्वं गतमेवेति चेत् । सत्यम् । भूतपूर्वगत्याऽत्रान्नन्तत्वोक्तिसम्भवात् । न च कृते नुटि तस्यापि प्रातिपदिकान्तत्वेन नलोपप्राप्तिः । तस्य मतुबागमस्य तद्भाक्त्वेन तदादितया प्रातिपदिकान्तत्वाभावात् । अत एवान्नन्तत्वे पुनर्नुड्विधानं व्यर्थमिति चोद्यानवकाशः । पूर्वस्य नकारस्य लुप्तत्वात् । अत्र च लोपप्रसक्त्यभावात् । ततश्चाक्षिशब्दात्तदस्यास्त्यस्मिन्निति मतुप्प्रत्यये इकारस्याङादेशे मादुपधायाश्च मतोर्वोयवादिभ्य इति मकारस्य वकारे प्रातिपदिकान्तनलोपे मतोर्नुडागमे नकारस्याट्कुप्वाङ्नुम्व्यवायेऽपीति णत्वेऽक्षण्वदिति प्रातिपदिकनिष्पत्तिरिति भावः । न च नुटा व्यवधानात्कथं वकार इति वाच्यम् । वत्वाविधिं प्रति नुटोऽसिद्धत्वेनाव्यवधायकत्वात् ॥ **आस्य शब्दस्येति** । पृषोदरादित्वादिति भावः ॥ **अर्शआदिभ्य इति** । एभ्यो मत्वर्थेऽच्प्रत्ययो भवतीति सूत्रार्थः । अर्शांसि विद्यन्तेऽस्येत्यर्शस इत्याद्युदाहरणम् । आकृतिगणोयमिति भावः ॥ **अप्रत्ययोऽपीति** । यथा तरप्तमप्प्रत्ययभिन्नस्तरतमशब्दोऽस्ति । अन्यथा तारतम्यशब्दस्यानिष्पत्तिप्रसङ्गात् । तथा प्रमाणार्थकदघ्नच्प्रत्ययभिन्नो दघ्नशब्दोऽपि कश्चिदस्तीत्यर्थः । स च मग्नशब्दपर्याय इत्याशयेनाह **मग्ना इत्यर्थ इति** । अत्र योग्यतया सुधानिधाविति लभ्यत इति भावः ॥ **आज्जसेरिति** । अकारान्तात्परस्य जसेरसुगागमः स्यादिति सूत्रार्थः । ब्राह्मणास इत्याद्युदाहरणम् ॥ **कृत्यार्थ इति** । धातोरेते स्युः कृत्यानामर्थे भावकर्मणोरिति सूत्रार्थः । उदाहरणं तु अन्वेतवै अवगाहे दिदृक्षेण्यः कर्त्वमित्यादि । तथा च ष्णा शौच इत्यस्मात्त्वन्प्रत्यये धात्वादेः षस्य सकारे स्नात्वेति रूपमिति भावः ॥ **इरयोरे इति** । अत्र इरयोः रे इति पदच्छेदः । इरे इत्येतस्य छन्दसि बहुलं रे इत्ययमादेशो भवतीति सूत्रार्थः । तमिद्गर्भं प्रथमं दध्र आप इत्युदाहरणम् । क्वचिन्न भवति । कर्माणि चक्रिरे इति । अत्र रेशब्दस्य सेटां धातूनामार्धधातुकस्येड्वलादेरितीटि कृते पुना रेभावः क्रियते । तदर्थमिरयोरिति द्विवचननिर्देशः कृतः । आदेशविधानसामर्थ्याच्च न पुनरिड्विधानप्रवृत्तिरिति ज्ञातव्यम् ॥ **श्रुत्वा विष्णुमिति** । 'श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात्कर्णसंयुताः । अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्ताश्च ये गणाः । तारतम्यं च तेषां हि श्रुतावुदितमञ्जसा । क्षीरसागरदघ्नास्तु केचित्तिष्ठन्ति मुक्तिगाः । उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् । ऐरे ह्रदे केचिदपि देवा एव सदा हरिम् । नागभोगशयं

मुक्ता ददृशेऽधिकमोदिनः । सागरादिस्थिता विष्णुं पश्यन्ति क्वचिदेव ही'त्यैतरेयभाष्योदाहृत-स्मृत्येत्यर्थः । अत्र ऐरे ह्रदे केचिदपीत्येतद्व्याख्येयोंऽश उक्तरीत्या श्रुतिव्याख्याने यद्यपि नोपलभ्यते तथाऽपि सन्न्यायरत्नावल्युक्तरीत्याऽमृतह्रदेषु स्नाताः केचिद्ददृशे केचिच्च स्नातव्या ह्रदा इव गम्भीराः सदा ददृशे इत्यर्थद्वयस्याप्यत्र विवक्षितत्वान्न कोऽपि दोष इति ज्ञातव्यम् ॥ **अर्थान्तरमिति** । विदितवेद्यानाममुक्तानां बृहस्पतिशिष्याणां स्तुतिरूपमर्थान्तरमित्यर्थः ।

**श्री०— अन्यथेति** । मोक्षविशेषाप्रतिपादकत्व इत्यर्थः ॥ **इरयोर इति** । इरे इत्यस्य षष्ठी इरय इति । तथा च इरयइरे इत्ययमादेशो भवतीति सूत्रार्थः । तथा च ददृशिर इत्यत्र इरे इत्यस्य रे इत्यादेशे जाते ददृश्रे इति भवतीत्याहुः । **उदाहृतं वाक्यमिति** । परमं साम्यमिति वाक्यमित्यर्थः ।

**सु०— तर्हि कस्तस्यार्थ इत्यत आह** दुःखादीति ।

अनु०— दुःखाद्यभावसाम्यं च साम्यवाक्यार्थ ईयते ॥

**चशब्दोऽत्रधारणे परमानन्दसाम्यसमुच्चये वा । यथोक्तम् । 'दुःखाभावः परानन्दो लिङ्गभेदः समा मता' इति ।**

**शे०—** चशब्दस्य समुच्चयार्थत्वे दुःखाद्यभावसाम्यमपि साम्यवाक्यार्थ इति पर्यवसानेन सर्वसाम्यस्य वाक्यार्थत्वाभावसिद्धेरुदाहृतवाक्यस्य प्राक् प्रतिज्ञातस्तत्परत्वाभावेन सिद्ध्यतीत्यतस्तत्सिद्ध्यर्थ-मवधारणार्थतया चशब्दं व्याचष्टे **चशब्द इति** । परमानन्दसाम्यस्यापि सद्भावाद्दुःखाद्यभावसाम्य-मेवेत्यवधारणानुपपत्तेराह **परमानन्देति** ॥ **यथोक्तमिति** । नारयाणाष्टाक्षरकल्प इति शेषः । यद्यपि ज्ञानवैचित्र्यादानन्दोऽपि विचित्र एवेति न तत्साम्यं तथाऽपि परमानन्दस्यालम्बुद्धिगोचरतामात्रेण तत्सा-म्यविवक्षयेयं तत्साम्योक्तिरिति ध्येयम् ।

**प०— यथोक्तमिति** । गीताभाष्ये द्वितीयेऽध्याये ।

**या०— परानन्द इति** । अलम्बुद्धिविषयस्वरूपानन्द इत्यर्थः ।

**सु०— किञ्चनेदमनुमानमुत्प्रेक्षितम् । किन्त्वागमसिद्धम् । तत्र कथं कालातीताशङ्क्-स्याशयेनाह** भक्त्यादीति ।

**अनु०—** भक्त्यादिगुणसद्भावे ह्यतुल्यत्वं च भारते ॥

उक्त

**तारतम्येन भक्त्यादिगुणसद्भावे सति भक्त्यादिसाधनगुणानां तारतम्येन हेतुनेति यावत् । अतुल्यत्वं मोक्षफलस्य । न केवलमस्माभिः किन्तु भारते चोक्तम् । हीति तद्वाक्यस्य प्रसिद्धतां सूचयति । यथा सति हि गुणे प्रवदन्त्यतुल्यतामिति । सति साधौ गुणे भक्त्यादावतुल्ये सति फलस्याप्यतुल्यतां वदन्ति हीत्यर्थः । साधनतारतम्यं प्रमाणैर्दृश्यत इत्युक्तम् । कानि तानीत्यतः कृच्छ्रेणानुष्ठानं प्रदर्शयितुमुदाहृतं तावदेकं वाक्यम् । अन्यान्यपि सन्तीत्याह** साधनेति ।

साधनवैचित्र्यमपि सर्वत्र कथ्यते ॥

**साधकानां साधनवैचित्र्यं सर्वत्रापि ग्रन्थेषु ।**

शे० — **इदमनुमानमिति** । युक्तं च साधनाधिक्यादित्यादिनोक्तमनुमानमित्यर्थः । नन्वत्रातुल्यत्वमात्रत्वस्य भक्त्यादिगुणसद्भावनिमित्तत्वमुच्यते । न तु मुक्तिगतानन्दादितारतम्यस्येति कथमनेनोक्तानुमानस्यागमसिद्धत्वलाभः । अतुल्यत्वपदस्य मौक्ततारतम्यपरत्वाश्रयणेऽपि तस्य भक्त्यादिगुणसाध्यत्वकथनेन तत्तारतम्यसाध्यत्वानुक्तेरुक्तार्थालाभ एवेत्यतो विवक्षितार्थसिध्यर्थमपेक्षितपूरणेन वाक्यं व्याचष्टे **तारतम्येनेत्यादिना** । अतुल्यत्वमन्यच्च भारते उक्तमिति यथाश्रुतचशब्दसम्बन्धमङ्गीकृत्य समुच्चयस्य बाधितत्वात्तत्परित्यागेन समुच्चयं दर्शयन्नेव भिन्नक्रमतामाह **न केवलमिति** । उक्तं शान्तिपर्वणीति शेषः । नन्वत्र नानागुणानामतुल्यतायाश्च निमित्तनैमित्तिकभावमात्रमुच्यते न तु साधनतारतम्यसाध्यतारतम्ययोरिति कथमनेन तत्सिद्धिर्येनोक्तानुमानस्यैतदागमसिद्धत्वं स्यादित्यतः प्रकृतोपयोगितया तद्व्याख्याति **सतीति** ॥ **उदाहृतमिति** । दशकल्पं तपश्चीर्णमित्येतदित्यर्थः ।

स० — **उदाहृतं तावदेकमिति** । दशकल्पमित्येतदित्यर्थः ।

प० — **कालातीतेति** । साम्यश्रुतिबाधितत्वशङ्केत्यर्थः । शेषोक्त्या मूलं योजयति **तारम्येनेति** । फलितमाह **भक्त्यादीति** ॥ **प्रसिद्धतामिति** । शान्तिपर्वणीति योज्यम् । किं तद्वाक्यमित्यत आह **सति हीति** । तद्वाक्यार्थमाह **सतीति** । तस्य व्याख्या साधाविति ॥ **उदाहृतमिति** । दशकल्पमित्यादिकम् । साधकानां साधनानुष्ठातॄणाम् ।

या० — **यथा सति हि गुण इति** । 'न भवति विदुषां महद्भयम् । न हि गतिरधिकाऽस्ति कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यता'मिति भारतश्लोकः ।

सु० — तानि वाक्यानि पठति दुर्ज्ञेयमिति ।

अनु० — दुर्ज्ञेयं घोररूपस्य त्रैलोक्यध्वंसिनः प्रभोः ॥
देवतैर्मुनिभिः सिद्धैर्महायोगिभिरेव च ॥

प्रभोर्नृसिंहस्य ध्यानचक्रं देवतादिभिर्दुर्ज्ञेयम् । कुतो घोरं भयङ्करं रूपमस्येति तथोक्तः । त्रैलोक्यं ध्वंसितुं शीलमस्येति । एवशब्देन न संज्ञामात्रेण महायोगिनः किन्त्वर्थत एवेत्याह तदेवोक्तं नित्ययुक्तैरित्यादिना ।

नित्ययुक्तैर्महाभागैर्विमोहक्लेशसाध्वसैः ॥
महोत्साहैर्महाधैर्यैः सत्त्वस्थैर्व्यवसायिभिः ॥
अतीतानागतज्ञानप्रभवाप्ययवेदिभिः ॥
शौचस्वाध्यायसन्तोषतपःसत्त्वदयान्वितैः ॥
किमु मर्त्यैर्भयभ्रान्तिध्वंसमोहरुजान्वितैः ॥
अल्पायुर्वीर्यधीसत्त्वव्यवसायश्रुतिव्रतैः ॥

सर्वदा ध्यानाद्युद्योगवद्भिः । भागो भाग्यमिन्द्रियजयादि । मोहो मिथ्याज्ञानम् । क्लेशा अविद्याद्याः । साध्वसं विघ्नादिभयम् । न केवलं सदोद्युक्ताः किन्तु स चोद्योगो महानित्युच्यते महोत्साहैरिति । सत्त्वस्थैः सदा सत्त्वगुणप्रचुरैः । व्यवसायो निश्चयः । ज्ञानशब्देन ज्ञेयमुपलक्ष्यते । अतीतानागतानि ज्ञानानि प्रभवाप्ययौ सृष्टिसंहारौ च वेत्तुं शीलमेषामिति तथोक्ताः । प्रभवाप्ययज्ञानस्य महाफलत्वात्पृथगुक्तिः । मर्त्यैर्दुर्ज्ञेयमिति किमु वक्तव्यम् । ध्वंसो मनोविशरणम् । मोहोऽज्ञानम् । श्रुतिः श्रवणम् । अत्र वैहायससंहितावाक्ये देवादिभ्यो मनुष्याणामल्पं साधनमिति स्फुटं प्रतीयते । मानुषत्वापगमानन्तरमाधिक्यं भविष्यतीति चेन्न । मानुषत्वादेरनपगमस्यानन्तरमेव वक्ष्यमाणत्वात् ।

शे० —ध्यानचक्रमिति । ध्यानविषयीभूतं रूपमित्यर्थः । नृसिंहरूपमिति सन्न्यायरत्नावल्यनुरोधात् । यद्यपि ध्यानचक्रमित्यत्र न श्रुतं तथाऽप्यथातः सम्प्रवक्ष्यामि ध्यानचक्रमित्युपक्रमे प्रकृतत्वात् किमाकाङ्क्षानिवर्तकत्वेन योग्यत्वाच्च तदेवात्रान्वीयत इति भावेन तथाऽन्वयो दर्शितः । मूले घोररूपत्वत्रैलोक्यध्वंसित्वविशेषणयोरानर्थक्यमाशङ्क्य घोररूपस्य दुर्ज्ञेयत्वोपपादकत्वात्त्रैलोक्यध्वंसित्वस्य घोररूपत्वोपपादकत्वान्न तदित्यभिप्रायेण पूर्वपूर्वविशेषणार्थोपपादकतयोत्तरोत्तरविशेषणार्थमाह घोरमित्यादि । अत एव क्वचित्कुतो घोरं भयङ्करं रूपमस्येति तथोक्तः । कुतस्त्रैलोक्यध्वंसितुं शीलमस्येत्यपि पाठः । अविद्याद्या इत्याद्यपदेनास्मितादिपरिग्रहः । तत्स्वरूपं च प्राक् साङ्ख्याधिकरणे प्रपञ्चितमिति नेह

प्रपञ्च्यते । टीकायां वेत्तुं शीलमित्यत्र शब्दसाधुत्वप्रकारः शोकं तरत्यात्मविदित्यत्र टीकाकृता स्वयमेव वक्ष्यमाणोऽनुसन्धेयः । पृथगत्र भ्रान्तिग्रहणेन पूर्ववन्मोहशब्दस्य मिथ्याज्ञानपरत्वासंभवादाह **मोहोऽज्ञानमिति** ॥ **अनन्तरमेवेति** । सर्वथाऽपि तु त एवोभयलिङ्गादित्यनन्तराधिकरणे 'अनादियोग्यतां चैव कलिवाणीश्वरावधिमि'त्यादिनाऽनादियोग्यतासाधनेनेति शेषः ।

**स०— ध्यानचक्रं** ध्यानविषयीभूतं स्वरूपम् । **अनन्तरमेव वक्ष्यमाणत्वादिति** । 'सर्वथापि तु त एवोभयलिङ्गादि'त्यत्रानादियोग्यतासाधनेनेति शेषः ।

**प०—** ध्यानचक्रं प्रवक्ष्यामीत्युपक्रमे श्रवणादाह **ध्यानचक्रमिति** । ध्यानावर्तनमाहात्म्यम् । सर्वतृतीयान्तानामित्यर्थः देवतादिभिरिति **कुत इति** । घोररूपत्वं कुत इत्यर्थः ॥ **अविद्याद्या इति** । रागादय आद्यपदार्थः ॥ **ज्ञानानीति** । ज्ञातव्यानीत्यर्थः ॥ **वेत्तुमिति** । वेदितुमित्यर्थः । आगमशासनमनित्यमितीडागमो न कृतः । तथाच माघे प्रयोगः' चिक्रंसया कृत्रिमपत्त्रिपंक्ती'रिति । चिक्रमिषयेति वाच्यत्वात् ॥ **शीलमिति** । ताच्छीलिकोऽयं णिनिरिति भावः । ज्ञेयोपलक्षकज्ञानपदेनैव लाभात्पृथगुक्तौ हेतुमाह **प्रभवाप्ययेति** । भ्रान्तिपदेनापौनरुक्त्यार्थमाह **मोहोऽज्ञानमिति** ॥ **अनन्तरमेवेति** । तारतम्यप्रकरणसमाप्त्यनन्तरमेव । सर्वथाऽपि तु त एवोभयलिङ्गादित्यादिसूत्रार्थोक्तिप्रस्तावे अनादियोग्यतां चैवेत्यादिग्रन्थव्याख्यावसरे वक्ष्यमाणत्वादित्यर्थः ।

**या०— ध्यानचक्रमिति** । कृत्यल्युटो बहुलमिति स्मरणाद् ध्यानशब्दोऽत्र ध्येयपरः । चक्रशब्दश्च रूपपरः । सन्न्यायरत्नावल्यां नृसिंहस्य रूपमित्युक्तत्वात् । तथा च ध्येयं रूपमित्यर्थः पर्यवस्यतीति ज्ञातव्यम् । 'अथातः सम्प्रवक्ष्यामि ध्यानचक्रमि'त्युपक्रमे प्रकृतं अत्रान्वेतीत्यभिप्रायः ॥ **क्लेश अविद्याद्या इति** । आद्यपदेनास्मितारागद्वेषाभिनिवेशानां ग्रहणम् । इदं मदीयमित्यभिमानोऽस्मिता । भयमभिनिवेशः भ्रान्तेः पृथगुक्तत्वादाह **मोहोऽज्ञानमिति** ॥ **अनन्तरमेवेति** । तारतम्यप्रकरणसमाप्त्यनन्तरमेवेत्यर्थः ॥ **वक्ष्यमाणत्वादिति** । 'अनादियोग्यतां चैव कलिवाणीश्वरावधिमि'त्यादिनेति शेषः ।

**श्री०—** ननु ज्ञानशब्देन ज्ञेयस्योपलक्षितत्वादतीतानागते ज्ञेयमध्ये प्रभवाप्ययोरपि पतितत्वात्पुनः प्रभवाप्ययग्रहणे पुनरुक्तिः स्यादित्यत आह **प्रभवाप्ययज्ञानस्येति** ॥ **श्रोतुरिति** । उपश्रोतुरित्यर्थः ।

अनु० — कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥
ब्रह्मैव किञ्चिज्जानाति न तदन्यो हि कश्चन ॥

सु० — कस्तमिति श्रुतिर्यमवाक्यम् । सुरासुराणां सुखदुःखहेतुत्वान्मदामदः । अनेन यमस्यान्येभ्यो ज्ञानाधिक्यमुच्यते । ब्रह्मैवेत्यनेन ब्रह्मणः । अत एव मदन्य इति ब्रह्मादीन्विनेति व्याख्येयम् ।

मुक्तानामपि सिद्धानां नारायणपरायणः ॥
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामते ॥

मुक्तानामिति भागवतवाक्ये मुक्तानां शरीराद्यभिमानरहितानां सिद्धानां ज्ञानिनां कोटिष्वपि नारायणपरायणः प्रशान्तात्मा सुदुर्लभः कश्चिदेव । 'नारायणायनाः शान्तात्मानस्तु सर्वेऽपीति' स्फुटं साधनतारतम्यं प्रतीयते । अत्र विशेषणद्वयेन वैराग्यभक्ती कथ्येते ।

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ॥
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥

इयं विसृष्टिरिति मन्त्रस्यायमर्थः । इयं प्रत्यक्षादिसिद्धा विविधा सृष्टिर्यतो हिरण्यगर्भादा समन्ताद्बभूव । यश्चास्य प्रपञ्चस्याध्यक्षोऽधिपतिः सोऽपि परमात्मानं परमे व्योमन् व्योम्नि हृदयाकाशे यदि वा दधे यदि वा न तथा वेद यदि वा न । अङ्गेति कस्यचित्संबुद्धिः । इतरापेक्षयाऽऽधिक्येन ध्यायति जानाति च कार्त्स्न्येन तु न ध्यायति न जानाति चेति । व्योमन्निति सप्तम्या लुक् । यो अस्य सो अङ्गेति प्रकृत्यान्तःपादमव्यपर इति प्रकृतिभावः ।

यः स्वात्ममायाविभवं स्वयं गतो नाहं नभस्वांस्तमथापरे कुतः ॥
ब्रह्मापि यं वेत्ति न चेह सम्यगन्ये कुतो देवमुनीन्द्रमर्त्याः ॥

यः स्वात्ममायेत्यादिषु भागवतवचनेषु कैमुत्योक्त्या ज्ञानतारतम्यमवगम्यते । यो भगवान्स्वात्ममायाया विभवं स्वरूपमहिम्नो विस्तरं स्वयमेव गतो ज्ञातवान् । ब्रह्मवाक्यमिदम् । यं हरिमिह जीवेषु ।

नमस्तेऽमिततत्त्वाय ब्रह्मादीनां च सूतये ॥
निर्गुणाय च सत्काष्ठां नाहं वेदापरे कुतः ।

तत्त्वं स्वरूपम् । सूतिः कारणम् । यस्य सत्काष्ठां सम्यग्दिङ्मात्रम् । ब्रह्मवाक्यमिदम् ।

नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्विरचितं खलु सत्त्वसङ्घाः ॥
यन्मायया मुषितचेतस ईशदैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः ॥

**नाहं परायुरिति शिववचनम् । यद्विरचितं यस्य चरित्रम् । ईशेति भगवत्संबुद्धिः ।**

अहं महेन्द्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः ॥
आदित्यविश्वे वसवोऽथ साध्या मरुद्गणा रुद्रगणाः ससिद्धाः ॥
अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः ॥
यस्येहितं न विदुः स्पष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये ॥
सर्वस्यादौ स्मृतो ब्रह्मा तस्माद्देवादनन्तरः ॥
जानाति देवप्रवरं भूयश्चातोऽधिकं नृप ॥

**अहमिति यमवचनम् । ईहितं चेष्टितम् । सर्वस्य प्रपञ्चस्यादौ स्मृतः । आद्यतया प्रमितः । अतो ज्ञानिवर्गात् । भूयोऽधिकमतिशयेनाधिकम् ।**

न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन ॥ मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसि ॥
यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ॥ तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ॥
सायुज्यं समनुप्राप्ता अपि देवादयोऽखिलाः ॥ तारतम्याद्धि तिष्ठन्ति तारतम्यं हि साधने ॥
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥ यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥

---

**न त्वामिति ब्रह्माणं प्रति भगवद्वाक्यम् । अत्र संसारे । लिङ्गभेदने लिङ्गशरीरभङ्गे जाते सति । सिद्धये ज्ञानाय । यततामपि मध्ये केचित्सिद्धा भवन्ति । सिद्धानां मध्य इति योज्यम् । तत्त्वतः प्राचुर्येण । एकं च तत्त्वतो ज्ञातुमिति यथा ।**

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ॥ भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥ भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ॥ ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ॥ सोऽपि मुक्तश्शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणा ॥

**(य)इममिति व्याख्यातुरध्येतुः श्रोतुश्च तारतम्यमुच्यते । व्याख्यानादिप्राचुर्यं च प्रत्येकं मोक्षसाधनमित्यन्यत्रोक्तम् ।**

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ॥ अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥
अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते । तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥

**ध्यानेनेत्यस्य भगवत्पादकृतं गीतातात्पर्यगतं व्याख्यानं द्रष्टव्यम् ।**

सुसूक्ष्मैरप्यशेषैश्च विशेषैः सह पश्यति ॥ स्वात्मानं भगवान्विष्णुः सर्वरूपोऽपि सर्वदा ॥
सर्वत्र चान्यदप्येवं तेनादृष्टं न हि क्वचित् ॥ सर्वत्र सर्वदैवेशं पश्यत्येव रमाऽपि तु ॥
न तु सर्वैर्विशेषैस्तं पश्यन्त्यप्यन्यतोऽधिकम् ॥ स्वात्मानमन्यच्चाशेषं पश्यत्येव हि सर्वदा ॥
ब्रह्मा तु सर्वगं पश्येद्गुणानप्यन्यतोऽधिकम् ॥ न तु सर्वेषु कालेषु तथा पश्यत्यमुक्तिगः ॥
मुक्तस्तु सर्वदा पश्येत्सर्वगत्वेन चापि तु ॥ न रमावद्विशेषाणां दर्शनं शक्नुयात्क्वचित् ॥
स्वात्मानमन्यच्च सदा विशेषैरखिलैरपि ॥ पश्यत्यज्ञस्तथा वाणी विशेषांस्तावतो न तु ॥
त्रैगुण्यात्परतः पश्येद्व्यासं शतगुणं हरिम् ॥

**सुसूक्ष्मैरित्यादिना सर्वेषां ज्ञानतारतम्यमुच्यते । स्वतोऽन्यद्विश्वमप्येवं पश्यति ।** अपि तु किन्तु । **तर्हि भगवत्समाना किमिति प्रश्नार्थः । अन्यतो ज्ञानवर्गादधिकं पश्यन्त्यपि सर्वैर्विशेषैर्युक्तं तं नैव पश्यति विष्णोः स्वस्माच्चान्यदशेषम्** । अन्यतः **सरस्वत्यादेरधिकं** पश्येत् । **ब्रह्मणोऽप्यवस्थाभेदेन विशेष उच्यते न तु सर्वेष्विति** । तथा **सर्वगतत्वेन सरस्वत्यादिदृष्टाधिकगुणत्वेन सर्वगतत्वेन चेति । चशब्देनोक्तगुणवत्त्वं समुच्चिनोति । तर्हि मुक्तस्य ब्रह्मणो रमासाम्यं किमिति प्रश्नः अपि त्विति । दर्शनं कर्तुम् । अन्यत् भगवतः । यथा ब्रह्मा रमादृष्टान्न पश्यति तथा । यावन्तो ब्रह्मदृष्टास्तावतः ।**

गिरिशो गरुडश्चैव तमोमात्रगतं हरिम् ॥ पश्येद्विशेषानपि हि वाणीदृष्टान्न पश्यति ॥

---

उमा सुपर्णी च महत्तत्त्वं यावत्प्रपश्यति ॥ रुद्रदृष्टान्विशेषांश्च नैव पश्येत्कदाचन ॥
स्वरूपमन्यरूपं च मुक्ता देवाः समस्तशः ॥ जानन्तीन्द्रश्च कामश्च ब्रह्म यावदहंकृतिः ॥
पश्यन्तो मनुदक्षाद्या बुद्धितत्त्वस्थितं हरिम् ॥ पश्यन्ति सोमसूर्यौ तु मनस्स्थं परमेश्वरम् ॥
अन्ये भूतस्थितं विष्णुं देवाः पश्यन्ति सर्वदा ॥ बहुसाहस्रवर्षेण महत्तत्त्वे क्वचित्क्वचित् ॥
अन्ये चैव यथायोगमण्डान्तर्वर्तिनं हरिम् ॥ श्वेतद्वीपपतिं चैव हृद्येवान्ये तु केचन ॥
कदाचिदेव तत्रापि केचित्पश्यन्ति केशवम् ॥

**तमोगुणमात्रगतमेवेति संबन्धः । पश्येदित्यादेः प्रत्येकं संबन्धः** । अन्यरूपं **स्वाधमरूपम् । बहुसाहस्रवर्षेणेति । बहुसहस्रवर्षानुष्ठितसाधनेन । क्वचित्क्वचिदिति महत्तत्त्वप्रविभागानभिप्रेति । यथायोगमेव केचन (तु) श्वेतद्वीपपतिमेव** । तत्रापि **हृद्यपि** ।

**शे०** — मदन्य इत्यस्यार्थप्रतिपत्त्यर्थमाह **यमवाक्यामिति ॥ सुरासुराणामिति** । यद्यपि येषां च विरोधः शाश्वतिक इति स्मरणात्सुरासुरमित्येव वक्तव्यत्वात्सुरासुराणामित्येतदसाध्वित्याभाति ।

तथाऽपि सतोऽपि शाश्वतिकविरोधस्याविवक्षया कादाचित्कविरोधविवक्षया (अङ्गीकृतवादेन) चैवमुक्तम् । देवासुरैरमृतमम्बुनिधिर्ममन्त इत्याद्यभियुक्तप्रयोगदर्शनेन तद्विवक्षाया आवश्यकत्वादिति ध्येयम् । ब्रह्मण इत्यतः परमन्येभ्यो ज्ञानाधिक्यमुच्यत इत्यनुवर्तते ॥ **अत एवेति** । ब्रह्मादीनामन्येभ्यो ज्ञानाधिक्यस्य वाक्यान्तरेण सिद्धत्वादेवेत्यर्थः ॥ **व्याख्येयमिति** । अन्यथा ब्रह्मादीनां ज्ञानाधिक्यबोधकवाक्यविरोधप्रसङ्गादिति भावः ।

नन्वत्र साधनबोधकं पदमेव नास्ति तत्कथं तत्तारतम्यावगमकत्वमस्य वाक्यस्येत्यत आह **अत्रेति** । नारायणपरायणः प्रशान्तात्मेति विशेषणद्वयेनेत्यर्थः । आद्येन वैराग्यं द्वितीयेन भक्तिरिति विवेकः ।

'यदि वा दधे यदि वा ने'ति तथा 'वेद न वेदे'ति च विप्रतिषिद्धमित्यतो विरोधं परिहरति **इतरापेक्षयेति** ॥ **सप्तम्या लुगिति** । सुपां सुलुगिति स्मरणादिति भावः । नन्वेङः पदान्तादतीति पदान्तस्यैङोऽति परे पूर्वरूपविधानात्पूर्वरूपे सति योऽस्याध्यक्ष इति सोऽङ्ग वेदेति च भवितव्यम् । तत्कथं यो अस्या इति सो अङ्ग इति च निर्देश इत्यतो ऋक्पादमध्यस्थेङः सन्ध्यभावस्य विधानान्नानुपपत्तिरिति भावेन तद्विधायकं पठन्नेवोक्तनिर्देशमुपपादयति **प्रकृत्येति** ।

अहमित्यस्यार्थविशेषप्रतिपत्त्यर्थमाह **ब्रह्मवाक्यमिति** । तथा च ब्रह्मैवात्राहंशब्दार्थ इति भावः । एवमुत्तरत्रापि बोध्यम् । भगवतः सम्यग्भगवज्ज्ञानसद्भावेन सम्यक् तज्ज्ञाननिषेधानुपपत्तेर्मूले इहेत्युक्तम् । तत्रेहेत्यस्य चेतनाचेतनसाधारण्येन जगन्मात्रपरतायां चेतनमात्रपरतायां च तदुभयान्तर्गतत्वादीश्वरस्य पुनस्तद्दोषतादवस्थ्यमेवेत्यतो जीवमात्रपरतया तद्याचष्टे **जीवेष्विति** । ततश्च जीवान्तरापेक्षयाऽधिकं वेत्ति कार्त्स्न्येन न वेत्तीत्यतो न विरोध इति भावः ।

**तत्त्वं स्वरूपमिति** । यद्यपि तस्य भावस्त्वतलाविति स्मरणाद्भावे स्मृतस्त्वप्रत्ययः शब्दप्रवृत्तिनिमित्तं भावमाह । तथाऽपि जातिगुणक्रियाद्रव्याणामिवाकाशत्वं चन्द्रत्वमित्यादौ स्वरूपस्यापि तद्धितवाच्यशब्दप्रवृत्तिनिमित्तभावत्वदर्शनात्स्वरूपार्थत्वमप्यस्तीत्यभिप्रेत्येदं तत्त्वशब्दव्याख्यानमिति द्रष्टव्यम् ।

ब्रह्मादीनां तत्कृतजगज्ज्ञानित्वेन तन्निषेधानुपपत्त्या विरचितशब्दस्य कृतार्थत्वानुपपत्तेराह **यस्य चरित्रमिति** । ईशदैत्यमर्त्यादय इत्येकपदत्वभ्रान्तिनिरासायाह **ईशेति भगवत्संबुद्धिरिति** ।

**सर्वप्रपञ्चस्येति** । ब्रह्माऽतो ज्ञानिवर्गाद्भूयोऽधिकमतिशयेनाधिकमेव देवप्रवरं जानाति न तु सामस्त्येन । तत्कुत इत्यतो यतः सर्वस्य प्रपञ्चस्याद्यतया प्रमितोऽपि ब्रह्मा यतस्तस्माद्देवाद्भगवतोऽनन्तर एव न तु तद्वदेव प्रवरोऽपि । अतो न तस्य सामस्त्येन तज्ज्ञानमिति श्लोकयोजनाऽनेन सूचिता भवति ।

**अत्र संसार इति** । तस्यैव लिङ्गशरीरभङ्गात्पूर्वावस्थात्वादिति भावः । **अधिकरणसप्तमीत्वानु**-पपत्तेराह **लिङ्गेति** । नन्वत्र सिद्धानां मध्ये कस्यचिदधिकवेदनमुच्यते न तु ज्ञानिनां मध्ये तत्कथमेत-ज्ज्ञानिनां साधनतारतम्याभिधानमित्यतोऽत्र सिद्धपदस्य ज्ञानिपरत्वान्नानुपपत्तिरित्यभिप्रेत्य सिद्धिपदं ज्ञानपरतया व्याचष्टे **सिद्धये ज्ञानायेति** । पूर्वं सिद्धत्वस्याविधानात्सिद्धानामित्यनुवादानुपपत्तिरित्य-तस्तदध्याहारेण योजयति **यततामपि मध्ये केचित्सिद्धा भवन्तीति ॥ मध्य इति** । अनेनेयं निर्धारणषष्ठीत्युक्तं भवति । अन्येषामपि सिद्धानां भगवद्वेदनस्यायाथार्थ्यप्राप्त्या तत्त्वत इत्यस्य याथा-र्थ्यार्थताया अनुपपत्तेस्तदर्थमाह **तत्त्वतः प्राचुर्येणेति** । कुतस्तस्य प्राचुर्यार्थत्वमित्यतो याथार्थ्य इव प्राचुर्येऽपि प्रयोगप्रतीत्योरविशेषादिति भावेन प्राचुर्ये प्रयोगं दर्शयति **एकं च तत्त्वतो ज्ञातुमिति यथेति** । यथा च 'एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः । न समर्थो महेन्द्रोऽपि तस्मात्सर्वत्र जिज्ञसे-दि'त्यत्र तत्त्वत इत्यस्य प्राचुर्येणेत्येवार्थः, अन्यथैतद्वाक्यार्थापर्यवसानात् ; तथा प्रकृतेऽपीत्याशयः ।

**तारतम्यमुच्यत इति** । तच्च व्याख्यानादितारतम्यं विना न संभवतीत्यर्थाद्व्याख्यानादितार-तम्यसिद्धौ साधनतारतम्याभिधायकत्वसिद्धिरिति भावः । भवेद्व्याख्यानादितारतम्यगमकतया प्रकृतोप-योगित्वमुक्तवाक्यस्य यदि व्याख्यानादेर्मोक्षसाधनत्वं सिद्धं स्यात्तदेव कुत इत्यत आह **व्याख्याना-दीति** । प्राचुर्यपर्यन्तधावनं तु सकृद्व्याख्यानादेरमोक्षसाधनत्वज्ञापनार्थम् ॥ **अन्यत्रोक्तमिति** । 'मुक्ति-र्ज्ञात्वाऽपि विष्णुं स्याच्छ्रुत्वा शास्त्रं ततोऽधिकम् । मुक्तौ सौख्यं तत्पठतस्ततोऽप्यधिकमिष्यते । व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचिदि'त्यादिना गीतातात्पर्ये उक्तमित्यर्थः ।

**गीतातात्पर्यगतमिति** । 'अनादियोग्यताभेदात्पुंसां दर्शनसाधनम् । नानैव तत्र विष्णोस्तु प्रसादाद्विष्णवं वपुः । स्वयं विज्ञायते किञ्चिच्छ्रूयते किञ्चिदन्यतः । तथा ध्यात्वा हरिं ज्ञात्वा स्वान्तः पश्यन्ति केचन । ऋषयः, केचिदृषयो नारदाद्या बहिस्त्वपि । देवा विष्णुप्रसादेन लब्ध-सत्प्रतिभाबलात् । सर्वं क्रमेण विज्ञाय प्रतिभास्पष्टताक्रमात् । पश्यन्ति बहिरन्तश्च विष्णुं ध्यानमृतेऽपि तु । येषां ध्यानमृते दृष्टिस्तेषां ध्यानेऽपि दर्शनम् । स्यादेव सांख्ययोगास्तेदेवा ब्रह्माधिकोऽत्र च । केचित्तु क्षत्रियवरा अश्वमेधादिकर्मभिः । यजन्तो भक्तिमन्तश्च यज्ञभागार्थमागतम् । श्रवणप्रतिभाभ्यां च स्मरन्तः पुरुषोत्तमम् । पश्यन्त्यन्ये तथाऽन्येभ्यः सर्वं श्रुत्वाऽनुमत्य च । उपास्यैव तु पश्यन्ति नान्यथा तु कथञ्चन । ऋषीत्राज्ञस्तथाऽऽरभ्य प्रतिभाऽभ्यधिका क्रमात् । यावद् ब्रह्मा ब्रह्मणस्तु प्रायो-नाप्रतिभासितम् । विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो भवेत् (हरेः) । अन्येषां श्रवणाज्ज्ञानं क्रमशो मानुषोत्तरम् । अत्यल्पप्रतिभानत्वान्मनुष्याः श्रुतवेदिनः । सर्वे ते दर्शनात्तस्मात्स्वयोग्यान्मुक्ति-

गामिन' इत्यादिना विवरणं कृतं द्रष्टव्यमित्यर्थः । तथा हि । विष्णुप्रसादलब्धस्वप्रतिभयाऽन्यतः श्रवणेन चोत्पन्नं यज्ज्ञानं तत्पूर्वकध्यानेन ऋषय आत्मानं भगवन्तं स्वान्तः पश्यन्ति । ऋषयोऽन्तःप्रकाशा इति श्रुतेः । अयं चोत्सर्गो न तु नियमः । नारदादीनामृषीणां स्वान्तरिव बहिरपि भगवद्दर्शनसत्त्वात् । न चैवं ध्यानातिरिक्तसाधनान्तरप्राप्त्या ध्यानेनेति विशेषग्रहणानुपपत्तिः । साधनान्तरस्य सत्त्वेऽपि तस्याल्पत्वेन ध्यानप्राचुर्याभिप्रायेण तदुपपत्तेः । अन्ये देवाः सांख्येन विष्णुप्रसादलब्धप्रतिभारूपेण योगेन ज्ञानसाधनेन सर्वं कालक्रमेण विज्ञाय प्रतिभातारतम्यक्रमेण भगवन्तमन्तर्बहिश्च पश्यन्ति । यद्यपि च तेषां भगवद्ध्यानेऽपि तद्दर्शनमस्त्येव तथाऽपि ध्यानमृते तद्दर्शनात्साङ्ख्ययोगित्वमुपपन्नम् । अपरे क्षत्रियवरा अश्वमेधादिकर्मभिर्भक्तिपूर्वकं यजन्तो यज्ञभागार्थमागतं श्रवणप्रतिभाभ्यां विष्णुं स्मरन्तः पश्यन्ति । अन्ये च मनुष्या विष्णुप्रसादलब्धप्रतिभाविरहात्तथाऽजानन्तोऽप्यन्येभ्यः श्रुत्वा मत्वोपास्य च भगवन्तं पश्यन्ति । ते च श्रवणरता मृत्युमतितरन्त्येव । न च ध्यानादियोगिनामपि श्रवणादि-सद्भावाद्विशिष्यमनुष्याणां श्रुतवेदित्वकथनानुपपत्तिरिति वाच्यम् । अत्यल्पप्रतिमानत्वाभिप्रायेण श्रुत-वेदित्वकथनोपपत्तेः । न च मनुष्याणामत्यल्पप्रतिभाभ्युपगमे श्रुतिपरायणा इति श्रवणैकाश्रयत्वोक्त्य-नुपपत्तिः । अस्वतन्त्रेऽसाधुनि चासत्त्वोक्तिदर्शनेन तत्प्रतिभायाश्च मूलप्रमाणापेक्षत्वेनास्वतन्त्रत्वाभि-प्रायेणासम्यक्त्वाच्चासत्त्वविवक्षया श्रुत्येकाश्रयत्वोक्तिसंभवादिति ।

**सर्वेषां ज्ञानतारतम्यमुच्यत इति** । यद्यपि साधनतारतम्यकथनप्रस्तावे ब्रह्मादिदर्शन-तारतम्यमेव वक्तुं युक्तम् । तस्य स्वयं साधमत्वेन साधनायत्तत्वेन च तत्तारतम्यस्य साधनतारतम्य-त्व-साधनतारतम्यायत्तत्वयोः सत्त्वात् । न तु विष्णुलक्ष्म्योर्दर्शनतारतम्यम् । तद्दर्शनस्य स्वयमसाधन-त्वेनासाधनायत्तत्वेन च तत्तारतम्यत्वस्य साधनतारतम्यत्व-साधनतारतम्यायत्तत्वयोरभावेन तत्कथनस्य च प्रस्तावविरुद्धत्वात् । तथाऽपि प्रसङ्गादेवात्र तदुक्तिरित्यवधेयम् । अन्यदप्येवमित्यत्रान्यशब्द-स्यान्यमात्रपरत्वे स्वस्यापि तत्कोटिनिविष्टत्वेन तदंशे पौनरुक्त्या तद्विशेषपरत्वमेव वाच्यम् । तत्र प्रतियोग्यादिकथनेन कस्मादन्यत्किं च तदिति शङ्काद्वयं परिहरन्नेव पूर्वक्रियानुवृत्तिप्रदर्शनेन साकाङ्क्षत्व-प्रयुक्तां वाक्याभासतां परिहरति **स्वत इत्यादिना** । एवं सुसूक्ष्मैरशेषैर्विशेषैः सह सदेत्यर्थः । स्वापेक्षया स्वस्याधिकदर्शित्वासंभवेनान्यशब्दस्यान्यमात्रपरत्वासंभवादीश्वरादधिकदर्शित्वानुपपत्त्या स्वान्य-मात्रपरताया अप्यनुपपत्तेरधिकारिवर्गमात्रपरतयाऽन्यशब्दं व्याख्याति **अन्यतो ज्ञानिवर्गादिति** । अधिकारिवर्गादित्यर्थः । अन्यशब्दस्यान्यमात्रपरतायां स्वस्यापि यत्किञ्चिदन्यत्वेन तत्कोटिनिविष्टत्वा-पत्त्याऽन्यत्पश्यन्तीत्यनेन पौनरुक्त्यं स्वान्यपरत्वेऽपि भगवतस्तथात्वेन तत्कोटिनिविष्टत्वापत्त्याऽन्य-त्पश्यन्तीत्यस्य 'न तु सर्वैर्विशेषैस्तं पश्यती'त्यनेन भगवदंशे विरोधः स्यादित्यतस्तदुभयान्य-

परतयाऽन्यशब्दं व्याचष्टे **विष्णोः स्वस्माच्चान्यदिति** । स्वस्माद्विष्णोर्लक्ष्म्याश्च सकाशादधिकगुण-दर्शनस्य बाधितत्वेनान्यमात्रपरत्वस्य स्वान्यमात्रपरत्वस्य वाऽनुपपन्नत्वात्स्वापकृष्टसरस्वत्यादिपरतया व्याचष्टे **अन्यतस्सरस्वत्यादेरिति** ॥ **उक्तगुणत्वमिति** । सरस्वत्यादिदृष्टगुणाधिकगुणत्वमित्यर्थः । अन्यशब्दस्यान्यमात्रपरत्वे स्वस्यापि तत्कोटिनिविष्टत्वादन्यत्पश्यतीत्यस्य स्वात्मानं पश्यतीत्यनेन स्वांशे पौनरुक्त्यम् । स्वान्यपरत्वे च भगवतोऽपि तत्कोटिनिविष्टत्वात्पत्याऽन्यदशेषविशेषविशिष्टं पश्यतीत्यस्य भगवदंशे सरस्वत्यादिदृष्टगुणाधिकगुणत्वेन भगवद्द्रष्टृत्वेऽपि न सर्वविशेषविशिष्टभगवद्द्रष्टृत्वमित्यर्थ-तात्पर्यकेण 'गुणानप्यन्यतोऽधिकमि'ति पूर्वग्रन्थेन विरोधो भवतीत्यतोऽन्यशब्दं व्याचष्टे **अन्यदिति** । भगवत इत्युपलक्षणम् । स्वस्माच्चेत्यपि द्रष्टव्यम् । तथा वाणीत्यत्र यथा ब्रह्मा स्वात्मानमन्यच्च विशेषैरखिलैरपि पश्यति तथा वाण्यपि स्वात्मानमन्यच्च विशेषैरखिलैरपि पश्यतीत्यन्यथाप्रतीतिनिरासार्थ-माह **यथेति** । तावच्छब्दस्य यावच्छब्दसापेक्षत्वादाह **यावन्त इति** । मूले त्रैगुण्यात्परतः पश्येदित्य-स्यायमर्थः । ब्रह्मा जगदन्तर्बहिः स्थितं विष्णुमव्यवच्छेदेन सदा पश्यति । सरस्वती तु पञ्चाशत्कोटि-योजनविस्तीर्णब्रह्माण्डपरिमितदेशमारभ्य महदाद्यावरणरूपात्त्रैगुण्यात्परतस्तच्छतोत्तरपरिमितदेशपर्यन्तं स्थितं विष्णुं सदा, कदाचित्सर्वगतत्वेन च पश्यतीति ।

**तमोगुणमात्रगतमेवेति** । महत्तत्त्वस्यावरणभूतस्तद्दशोत्तरं यस्तमोगुणस्तेन परिमितदेशपर्यन्तमेव व्याप्तमित्यर्थः । तमोमात्रगतत्वेन सन्दर्शनस्य सार्वकालिकत्वद्योतनाय तमोमात्रगतमेवेत्येवशब्दो-पादानम् । ननु गिरिशो गरुडश्च पश्यत इति द्विवचनेन भवितव्यम् । पश्येत् पश्यतीत्येकवचनं तु कथमित्यत आह **पश्येदित्यादेरिति** ॥ **प्रत्येकमिति** । गिरिशः पश्येद्गरुडः पश्येदित्यादि-रूपेणेत्यर्थः ॥ **मूले उमेति** । उमासुपर्ण्यौ तमोगुणात्परिमाणतो दशहीनेन महत्तत्त्वेन परिमितदेश-पर्यन्तं स्थितं विष्णुं पश्यत इत्यर्थः । उत्तमाधमसाधारण्येनान्यदर्शनस्य बाधितत्वात्स्वाधममात्रपर-तयाऽऽप्यन्यशब्दं व्याचष्टे **स्वाधमरूपमिति** । मूले इन्द्रश्च कामश्चेतीन्द्रकामौ तु महत्तत्वात्परिमाणतो दशहीनेनाहङ्कारेण परिमितदेशपर्यन्तमेव स्थितं विष्णुं पश्यत इत्यर्थः । मनुदक्षबृहस्पत्यादयोऽहङ्कारा-त्परिमाणतो दशहीनेन बुद्धितत्त्वेन परिमितदेशपर्यन्तमेव स्थितं विष्णुं पश्यन्ति । सोमसूर्यौ तु बुद्धितत्त्वात्परिमाणतो दशहीनेन मनस्तत्त्वेन परिमितदेशपर्यन्तं विष्णुं पश्यतः । वरुणादयस्त्वाका-शादिभूतैः क्रमेण परिमाणतो दशहीनैः परिमितदेशपर्यन्तमेव स्थितं विष्णुं योग्यतानुसारेण पश्य-न्तीत्यर्थः । ननु महत्तत्त्वस्यैकत्वात्कथं क्वचित्क्वचिदिति तद्भेदनिर्देश इत्यत आह **महत्तत्त्वप्रविभागा-निति** । तथा च महत्तत्त्वे विद्यमाना ये प्रविभागा अंशास्तद्देशपर्यन्तमेव व्याप्तमपीन्द्राद्याः सर्वे

कदाचिद्बहुसहस्रवर्षानुष्ठितसाधनेन पश्यन्ति । अत एव सदेत्येतद्यावदहङ्कृतीत्यादावपि योजनीयमिति । द्रष्टव्यम् । अन्ये चैवेत्यत्र चैवशब्दयोर्विरुद्धार्थत्वादुभयोर्यथाश्रुतसंबन्धानुपपत्तेरेवशब्दस्य यथाश्रुत-संबन्धमङ्गीकृत्य चशब्दस्य स्थानान्तरे संबन्धस्याप्यनुपपत्तेश्चशब्दस्य यथाश्रुतसंबन्धमङ्गीकृत्य एवशब्दं भिन्नक्रमतया योजयति **यथायोगमेवेति** । योग्यतानुसारेणैवेत्यर्थः । तथा च भूतेभ्यो परिमाणतो दशहीनेन ब्रह्माण्डेन परिमितदेशपर्यन्तमेव स्थितं विष्णुं केचन पश्यन्तीत्युक्तं भवति । **श्वेतद्वीपपति-मेवेति** । केषाञ्चिच्छ्वेतद्वीपवर्तित्वेन भगवत्संदर्शनमेव सार्वकालिकमिति दर्शयितुमेवशब्दः । तथा च ब्रह्माण्डात्परिमाणतो दशहीनेन श्वेतद्वीपेन परिमितदेशपर्यन्तमेव स्थितं विष्णुं केचन पश्यन्तीत्य-ण्डान्तरवर्तिभगवद्दर्शनापेक्षयाऽपकृष्टकक्ष्यान्तरमुक्तं भवति । ततोऽप्यपकृष्टं कक्ष्यान्तरमाह **मूले हृद्येवेति** । सर्वकालं हृदयवर्ति भगवद्द्रष्ट्रपेक्षयाऽप्यपकृष्टं कक्ष्यान्तरमाह **मूले कदाचिदेवेति** । तद्यथाऽपकृष्टकक्ष्या-न्तरसूचकं स्यात्तथा व्याचष्टे **तत्रापि हृद्यपीति** । सर्वकालं हृदयवर्तित्वेन भगवद्दर्शनात्कादाचित्कं हृदयवर्तित्वेन भगवद्दर्शनमपकृष्टमिति भावः ।

**स० — अत एवेति** । ब्रह्मैवेत्यनेन ब्रह्मणो ज्ञानाधिक्यप्रतिपादनादेवेत्यर्थः । **अन्यत्रोक्त-मिति** । 'मुक्तिर्ज्ञात्वापि विष्णुं स्याच्छ्रुत्वा शास्त्रं ततोधिकम् । मुक्तौ सुखं तत्पठतस्ततोऽभ्यधिकमिष्यते । व्याख्यातुस्तु समं मुक्तौ सुखं नास्त्यस्य कस्यचित् । ततोधिकं तु देवानां मुख्यव्याख्याकृतो यतः' । इतिगीतातात्पर्ये उक्तमित्यर्थः । **ध्यानेनेत्यस्यापीति** । 'अनादियोग्यताभेदात् पुंसो दर्शनसाधनम् । नानैव तत्र विष्णोस्तु प्रसादाद्वैष्णवं पुनः । स्वयं च ज्ञायते किञ्चिच्छ्रूयते किञ्चिदन्यतः । तथा ज्ञात्वा हरिं ध्यात्वा स्वान्तः पश्यन्ति केचन । ऋषयः केचिदृषयो नारदाद्या बहिस्स्वपि देवा विष्णुप्रसादेन लब्धसत्प्रतिभाबलात् । सर्वं क्रमेण विज्ञाय प्रतिभास्पष्टताक्रमात् । पश्यन्ति बहिरन्तश्च विष्णुं ध्यानमृते-ऽपितु । येषां ध्यानमृते दृष्टिस्तेषां ध्यानेपि दर्शनम् । स्यादेव सांख्ययोगास्तु देवा ब्रह्माधिकोऽत्र च । केचित्तु क्षत्रियवरा अश्वमेधादिकर्मभिः । यजन्तो भक्तिमन्तश्च यज्ञभागार्थमागतम् । श्रवणप्रति-भाभ्यां च स्मरन्तः पुरुषोत्तमम् । पश्यन्त्यन्ये तथान्येभ्यः सर्वं श्रुत्वानुमत्य च । उपास्यैव तु पश्यन्ति नान्यथा तु कथञ्चन । ऋषीन्द्राज्ञस्तथारभ्य प्रतिभाभ्यधिका क्रमात् । यावद्ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रति-भासितम् । विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो हरेः । अन्येषां श्रवणाज्ज्ञानं क्रमशो मानुषोत्तरम् । अत्यल्पप्रतिभानत्वान्मानुषाः श्रुतवेदिनः । सर्वे ते दर्शनात्तस्मात्स्वयोग्या मुक्तिगामिनः' इत्यादिना कृतं विवरणं द्रष्टव्यमित्यर्थः ।

**प० —** मदन्य इत्यस्य सुबोधायाह **यमवाक्यमिति** ॥ **ब्रह्मण इति** । अन्येभ्यो ज्ञाना-धिक्यमित्यनुषङ्गः । व्याघातशान्त्यर्थमाह **अत एवेति** । प्रकृतोपयोगाय मुक्तपदार्थमाह **मुक्तानामिति** ।

सुदुर्लभ इति सामान्यनिषेधभ्रांतिं वारयितुमर्थमाह **कश्चिदेवेति** । कश्चिन्मुच्यते सिध्यतीति षष्ठ-स्कन्धस्थपूर्ववाक्यात् कश्चिदित्यनुषङ्गो वा । साधनतारतम्यस्यास्फुटत्वादाह **अत्र विशेषणद्वयेनेति** । नारायणपरायणः प्रशान्तात्मेति विशेषणद्वयेनेत्यर्थः । आद्येन विष्णुपादैकसंश्रयत्वोक्त्या वैराग्यस्य, 'शमो मन्निष्ठते'त्युक्त्या प्रशान्तः आत्मा मनो. यस्येत्युक्त्या ज्ञानस्नेहरूपभक्तेर्लाभात् स्नेहाभावे तत्र बुद्धिप्रवेशायोगादिति वा प्रवेशशब्देन स्नेहस्य, शान्तात्मेति ज्ञानस्य, लाभादिति वाऽभिप्रायः ॥ **परमात्मानमिति** । 'आनीदवातं स्वधया तदेकमि'त्यादिना तस्य प्रकृतत्वादिति भावः । हृदि धारणं ध्यानं वेदनं तु ज्ञानमित्युपेत्य व्याहतिनिरासाय तात्पर्यमाह **इतरापेक्षयेति** ॥ **सप्तम्या लुगिति** । सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल इति सूत्रेण लुकि सति न ङिसंबुद्ध्योरिति नलोपा-भावे व्योमन्निति रूपमिति भावः । ननु एङः पदान्तादतीति पूर्वरूपेण भाव्यमित्यत आह **प्रकृत्येति** । ऋक्पादमध्यस्थ एङ् प्रकृत्या भवति अति परे वकारे यकारे च परे अतिइति षष्ठाद्यपादे पाणिन्युक्त्या संध्यभाव इत्यर्थः । नाहमिति वक्तृज्ञानायाह **ब्रह्मवाक्यमिति** । ब्रह्मापीति वाक्यान्तरेऽयमित्यनु-वादेनार्थोक्तिः '**यं** हरिमि'ति । यस्येति शेषोक्तिः । सत्काष्ठामित्यनुवादः । सम्यक् दिङ्मात्रमिति व्याख्या । यस्यैकदेशमपीत्यर्थः । सिद्धानामित्यनुवादबलाद्यततामपीत्यनन्तरं शेषमाह **यततामपि मध्ये केचित्सिद्धा भवन्तीति** । तत्वत इत्यस्य यथार्थत इत्युक्तौ सिद्धय इति सिद्धा इति च पूर्वोक्तज्ञाना मयथार्थमिति धीः स्यादत आह **प्राचुर्येणेति** । तत्र चतुर्थगीताभाष्योक्तां स्मृतिं संवादयति **एकं चेति** । 'एकं च तत्वतो ज्ञातुं विना सर्वज्ञतां नरः । न समर्थो महेन्द्रोपि तस्मात्सर्वत्र जिज्ञसेदि'त्यत्र यावदपेक्षितं तावज्ज्ञानित्वरूपसर्वज्ञतां विना तत्वतो ज्ञातुं न समर्थ इत्युक्त्या तावत इत्यनेन प्राचुर्यलाभो यथा तथेत्यर्थः॥ **व्याख्यानादिप्राचुर्यं चेति** । सकृदनुष्ठितव्याख्यानाध्ययनश्रवणानामपरोक्षज्ञानाहेतुत्वादिति भावः ॥ **अन्यत्र** गीतातात्पर्ये अष्टादशेऽध्याये मुक्तिर्ज्ञात्वापि विष्णुं स्याच्छास्त्रं श्रुत्वा ततोऽधिकम् । मुक्तौ सुखं तत्पठतः ततोप्यधिकमिष्यते । व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचिदि'त्यादिनोक्त-मित्यर्थः । तथाच साधनतारतम्यस्य मुक्तितारतम्यहेतुत्वप्राप्त्या तत्र नासंगतिरिति भावः ॥ **गीता-तात्पर्येति** । त्रयोदशेध्याये 'अनादियोग्यताभेदात्पुंसां दर्शनसाधनम् । नानैव तत्र विष्णोस्तु प्रसाद्य द्वैष्णवं वपुः । स्वयं विज्ञायत' इत्यादिना कृतं व्याख्यानमित्यर्थः । इत्थं हि तत्र व्याख्यातं(नं) केचिन्नारदादिभ्योन्ये ऋषयः आत्मना मनसा आत्मानं विष्णुं आत्मनि स्वहृदये ध्यानेन उपलक्षणं स्वप्रतिभया श्रवणेन च ज्ञात्वा ध्यात्वा पश्यन्तीत्यर्थः । श्रवणप्रतिभयोरल्पत्वादनुक्तिः । नारदादेर्बहिरपि द्रष्टृत्वादात्मनीत्यस्योपपत्तये नारदाद्यन्यर्षिग्रहणाय केचिदित्युक्तिः । अन्ये देवाः सांख्येन स्वप्रतिभारूपेण योगेनोपायेन विनापि ध्यानेन विष्णुप्रसादलब्धस्वप्रतिभयैव ध्यानरूपयोगेन च द्वेधाऽपि आत्मानं बहिरन्तः

स्वस्वयोग्यतानुरोधेन पश्यन्ति, अपरे राजानः कर्मयोगेन अश्वमेधादिकर्माख्योपायेन पश्यन्ति, श्रवणेन स्वप्रतिभया च नित्यं विष्णुं स्मरन्तो राजवराः यज्ञानुष्ठानसमये यज्ञभागार्थमागतं हरिं पश्यन्तीत्यर्थः। श्रवणप्रतिभयोरल्पत्वादनुक्तिः। अन्ये मानुषोत्तमा एवं स्वप्रतिभादिनाऽजानन्तोऽन्येभ्यः स्वोत्तमेभ्यः श्रुत्वा उपलक्षणं मत्वेत्यपि ज्ञातव्यं उपासते उपास्य ध्यात्वेति यावत्। आत्मानं पश्यन्तीत्यर्थः। सर्वेषां श्रवणसत्त्वेपि मानुषाणां श्रवणबाहुल्यमावश्यकम्। प्रतिभाया अप्यल्पत्वादिति भावेन श्रुतिपरायणा इत्युक्तमिति। एवं बहुवक्तव्यमित्यन्यत्रोक्तं ज्ञेयमित्युक्तम्। 'तारतम्यं च मुक्तानां साधनानां च दृश्यत इत्यन्तग्रन्थस्यास्फुटत्वात्तात्पर्यमाह **सुसूक्ष्मैरित्यादिनेति**। अन्यदित्यत्रावध्यप्रतीतेराह **स्वत इति**। स्वस्मादन्यदित्यर्थः। तस्याप्यर्थो विश्वमिति। एवंपदसमुच्चेयमाह **पश्यतीति**। समुच्चयार्थत्वधी-निरासायापि त्वित्यनूद्य प्रतिपदमाह **किं त्विति**। दर्शनमित्यनूद्य शेषमाह **दर्शनं कर्तुमिति**। तथेति-पदस्यार्थोक्तिर्यथेत्यादि। पश्येदित्यादेरित्यादिपदेन न पश्यतीत्यस्य ग्रहः। महत्तत्वस्यैकत्वात् क्वचित्क्वचिदित्युक्तिः कथमित्यत आह **महत्तत्त्वविभागानिति**। बहुकालोपचितसाधनानुष्ठानबलेन महत्तत्त्वांशपर्यन्तं व्याप्तं हरिं इन्द्रादिदेवाः कदाचित्पश्यन्तीत्यर्थः। महत्तत्त्वशब्दस्य साधुत्वमुक्तं वैशेषिकनये 'न महत्तत्वगुणत एतावानिति हीश्वर' इत्येतद्व्याख्यावसरे। अन्ये चैवेत्येवकारस्या-न्वयमाह **यथायोगमेवेति**। योग्यतामनतिक्रम्येत्यर्थः। श्वेतद्वीपपतिं चैवेत्यत्र कर्त्रुक्तिपूर्वमेवकारान्वय-माह **केचन त्विति**। तत्रापीत्यनुवादः। हृद्यपीति व्याख्या। हृद्यपि कदाचिदेव केचन पश्यन्तीत्यर्थः।

॥ **या०** — नन्वत्र साधनतारतम्यं न प्राप्तमित्यत आह **अत्र विशेषणद्वयेनेति**। अत्राद्यविशेष-णेन नारायण एव परं मुख्यमयनमुपजीव्यो न विषयसमूहो यस्येत्यर्थकेन वैराग्यप्राप्तिः। द्वितीयेन प्रक-र्षेण शान्तो माहात्म्यज्ञानेन स्निग्ध, आत्मा मनो यस्येत्यर्थकेन भक्तिप्राप्तिरिति ध्येयम्॥ **सप्तम्या लुगिति**। सुपां सुलुगिति सूत्रादिति भावः॥ **प्रकृत्याऽन्तःपादमिति**। ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यादतिपरे न तु वकारयकारपर इति सूत्रार्थः। उपप्रयन्तोऽध्वरं सुजाते अश्वसूनृते इत्याद्युदाहरणम्। **प्रकृतिभाव इति**। एङः पदान्तादतीत्यनेन पूर्वरूपं न भवतीत्यर्थः। केचित्सिद्धा भवन्तीति शेषोक्तिः। ततः सिद्धानामित्यनुवादोपपत्तिरिति ध्येयम्॥ **मध्य इति योज्यमिति**। अन्यस्य षष्ठ्यर्थस्यात्रासम्भवान्निर्धारणे षष्ठीत्यर्थः। तत्त्वत इत्यस्य याथार्थ्येनेति व्याख्याने इतरेषां सिद्धानां वेदनं न यथार्थमिति प्राप्तमतो व्याचष्टे **प्राचुर्येणेति**॥ **एकं च तत्त्वत इति**। 'एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः। न समर्थो महेन्द्रोऽपि तस्मात्सर्वत्र जिज्ञसेदि'त्यत्र यथा तत्त्वत इत्यस्य

प्राचुर्येणेत्येवार्थः, अन्यथैतद्वाक्यापर्यवसानात्, तथा प्रकृतेऽपीत्यर्थः ॥ **तारतम्यमुच्यत इति** । तथा चात्र व्याख्यानादिसाधनानामपि परस्परं तारतम्यमर्थाल्लभ्यत इति नासङ्गतिरिति भावः । नन्वेवं व्याख्यानादिकं प्रत्येकं मोक्षसाधनमित्यायातम् । न च तद्युक्तम् । कुत्राप्यनुक्तत्वादित्यत आह **व्याख्यानादिप्राचुर्यं चेति** । अत्र सकृदनुष्ठितव्याख्यानादेर्न मोक्षसाधनत्वमभिप्रेतं किन्नाम प्राचुर्येणानुष्ठितस्यैवेत्यभिप्रेत्य प्राचुर्यं चेत्युक्तमिति ध्येयम् ॥ **अन्यत्रोक्तमिति** । 'मुक्तिर्ज्ञात्वाऽपि विष्णुं स्याच्छ्रुत्वा शास्त्रं ततोऽधिकम् । मुक्तौ सुखं तत्पठतस्ततोऽप्यधिकमिष्यते । व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचिदि'ति गीतातात्पर्ये उक्तमित्यर्थः ॥ **गीतातात्पर्यगतमिति** । 'अनादियोग्यताभेदात्पुंसां दर्शनसाधनम्। नानैवे'त्यादिगीतातात्पर्यगतप्रमाणानुसारेण व्याख्यानं द्रष्टव्यमित्यर्थः । तथा हि । केचिदृषयो ध्यानेनात्मनि पश्यन्ति । केचिन्नारदादयो बहिरप्यात्मानं परमात्मानमात्मना बुद्ध्या पश्यन्ति । अन्ये देवाः सांख्येन योगेन स्वप्रतिभानुसारेण तारतम्येन पश्यन्ति । अपरे राजानः कर्मयोगेन यजन्तो यज्ञभागार्थमागतं श्रवणप्रतिभाभ्यां विष्णुं स्मरन्तः पश्यन्ति । अन्ये मनुष्या अल्पप्रतिभावत्त्वादन्येभ्यः श्रुत्वोपासते । तेऽपि च श्रवणनिरता मृत्युमतितरन्त्येव । अन्येषां किञ्चिच्छ्रवणसत्त्वेऽपि मनुष्याणामल्पप्रतिभावत्त्वा'च्छ्रुत्वाऽन्येभ्य' इति वचनम् । अत एवैतेषां श्रुतिपरायणा इति विशेषणमिति ॥ **ज्ञानतारतम्यमुच्यत इति** । अत्र विष्णुरमामुक्तज्ञानानामसाधनानामपि तारतम्यं प्रसङ्गादेवोक्तमिति ज्ञातव्यम् ॥ **तमोगुणमात्रगतमिति** । महत्तत्त्वस्यावरणभूतस्तद्देशोत्तरो यस्तमोगुणस्तद्देशपर्यन्तमेव व्याप्तमित्यर्थः । ननु महत्तत्त्वस्यैकत्वात्कथं क्वचित्क्वचिदिति निर्देश इत्यत आह **महत्तत्त्वप्रविभागानिति** । तथा च महत्तत्त्वे विद्यमाना ये प्रविभागा अंशास्तद्देशपर्यन्तमेव व्याप्तमपीन्द्रकामाद्याः सर्वे कदाचिद्बहुसहस्रवर्षानुष्ठितसाधनेन पश्यन्ति न समग्रमहत्तत्त्वव्याप्तमित्यर्थः । सदा त्वहङ्काराद्युक्तदेशपर्यन्तं व्याप्तं पश्यन्ति । अत एव मदेत्येतद्यावदहङ्कृतीत्यादावपि योजनीयमिति ।

श्री० — **उक्तगुणवत्त्वमिति** । सरस्वत्यादिदृष्टाधिकगुणवत्त्वमित्यर्थः । बहुसाहस्रवर्षेणेत्यनेनेन्द्रकामयोरहङ्कारात्परमहत्तत्त्वस्थपरब्रह्मदर्शनमुक्तं मन्वादीनां च बुद्धितत्त्वात्पराहङ्कारतत्त्वपरमहत्तत्त्वस्थब्रह्मदर्शनमुक्तम् । तदयुक्तम् । मन्वादीनामिन्द्रकामापेक्षयाऽधिकव्याप्तिदर्शनप्रसङ्गात् । इन्द्रकामयोरत्यल्पदर्शनप्रसङ्गात् । तयोरहङ्कारतत्त्वादव्यवहितपरमहत्तत्त्वदर्शनस्यैव सद्भावादित्यत आह **महत्तत्त्वप्रविभागानिति** । अहङ्कारादितत्त्वांशानां सत्त्वेन सविशेषतस्तपआद्यनुष्ठानाभावकाले महत्तत्त्वविकाराहङ्कारादितत्त्वगतमेव पश्यन्ति । तदनुष्ठानकाले त्वहङ्कारबुद्धितत्त्वान्तः सूक्ष्मरूपेण

स्थितमहत्त्वांशगतं पश्यन्तीत्यर्थः । एतावत्सूक्ष्मभागव्यापितया परब्रह्मदर्शनस्य बहुकालानुष्ठिततपआदि-साधनसाध्यत्वादित्याशयः ।

सु० — परिमाणदर्शनवद्विशेषदर्शने तारतम्यं न विस्पष्टमुक्तमत आह उमेति ।

अनु० — उमा यावदनन्तांशान्पूर्वदृष्टेभ्य एव तु ॥
विशेषान्वासुदेवस्य पश्चादुक्ता विचक्षते ॥
शक्रकामादयश्चैव विशेषान्ब्रह्मणि स्थितान् ॥
उमादिभिः प्रबुद्धेभ्यः शतांशानेव चक्षते ॥

**उमापर्यन्तं तु पश्चात्पश्चादुक्ताः पूर्वपूर्वदृष्टेभ्यो दृष्टानामनन्तांशानेव वासुदेवस्य विशेषान्विचक्षते । शक्रकामादयश्चेति चस्त्वर्थः । एवशब्दस्योमादिभिरेवेत्यन्वयः । प्रबुद्धेभ्य इति पूर्ववत् षष्ठ्यर्थे । चक्षते पश्यन्ति ।**

शे० — 'गुणानप्यन्यतोऽधिकमि'त्यादिना विशेषदर्शनेऽपि तारतम्यस्योक्तत्वात्कथमनुक्तिरित्यत उक्तं **विस्पष्टमिति** । चतुर्थ्यर्थे बहुलं छन्दसीति परस्परार्थे छन्दसि षष्ठीचतुर्थ्योर्विधानात् षष्ठ्यर्थे पूर्वदृष्टेभ्य इति चतुर्थीत्याशयेनाह **दृष्टानामिति** । अत एव प्रबुद्धेभ्य इति पूर्ववत् षष्ठ्यर्थे चतुर्थीति वक्ष्यतीति ध्येयम् । चैवब्दयोर्विरुद्धार्थतया यथाश्रुतसम्बन्धानुपपत्तेः पूर्ववद्भिन्नक्रमतया तदुभयसम्बन्धाभ्युपगमेऽप्युमादिभिरेव प्रबुद्धानामित्यर्थालाभादुमादिभिरिव ब्रह्मादिभिरपि प्रबुद्धानां शतांशानित्यर्थलाभेन बाधितार्थत्वप्रसक्त्यैवशब्दस्य यथाश्रुतसम्बन्धानुपपत्त्योमादिभिरित्यनेन सम्बन्धस्यावश्यकत्वाच्चशब्दस्यैव यथाश्रुतसंम्बन्धसिद्ध्या समुच्चयार्थत्वे तदयोगान्निर्देशार्थतया तं व्याचष्टे **चस्त्वर्थ इति** ।

**पश्यन्तीति** । धातूनामनेकार्थत्वादिति भावः । नन्वनेन ग्रन्थेन भगवान्स्वगतानशेषानपि विशेषान्पश्यति रमा तु भगवद्दृष्टानां विशेषाणामनन्तधा विभक्तानामेकमेव भागं पश्यति । रमादृष्टानां भगवद्गुणानामनन्तधा विभक्तानामेकमेव भागं ब्रह्मवायू पश्यतः । ब्रह्मवायुदृष्टस्यापि भागस्यानन्तधा विभक्तस्यैकमेव भागं ब्रह्माणीभारत्यौ पश्यतः । तद्दृष्टस्यापि भागस्यानन्तधा विभक्तमेकमेव भागं रुद्रगरुडौ पश्यतः । तस्यापि भागस्यानन्तधा विभक्तस्यैकमेव भागमुमासुपर्ण्यौ पश्यतः । इत्युमापर्यन्तं पूर्वपूर्वदर्शनात्पश्चादुक्तानां ज्ञानेऽनन्तांशन्यूनं तारतम्यमुक्तम् । उमा यावतो नारायणस्य गुणान्पश्यति तावतां

शतधा विभक्तानामेकमेव भागं शक्रः पश्यतीत्यनेन क्रमेण शक्रादीनामुमादिज्ञानापेक्षया शतगुणितं च तारतम्यमुक्तम् । तदेतत्कथम् । रमाया भगवद्दृष्टानां गुणानामनन्तधा विभक्तानामेकभागमात्रदर्शन-सद्भावेऽपि ब्रह्मवाय्वो रमादृष्टानां कोटिधा विभक्तानामेकभागदर्शनस्य ब्रह्माणीभारत्योश्च ब्रह्मवायुदृष्टानां कोटिधा विभक्तानामेकभागदर्शनस्य तद्दृष्टानां शतधा विभक्तानां रुद्रगरुडयोरेकभागविषयदर्शनस्य तद्दृष्टशतधाविभक्तैकभागविषयदर्शनवत्त्वादुमासुपर्ण्योस्तत्पर्यन्तं शतांशन्यूनस्यैव ज्ञाने तारतम्यस्य ग्रन्थान्तरसिद्धतयाऽनन्तगुणितज्ञानतारतम्यकथनस्य तद्विरुद्धत्वात् । न चात्र शतांशन्यूनतारतम्य-कथनमानन्दमात्रविषयकं न ज्ञानविषयकम् । 'त्रैगुण्यात्परतः पश्येद्व्यासं शतगुणं हरिमि'ति ब्रह्माण्या भगवत्परिमाणविषयकज्ञानस्य परिच्छेदोक्त्याऽपरिच्छिन्नतत्परिमाणविषयकब्रह्मज्ञानापेक्षयाऽनन्तांशन्यून-ताया अर्थतो लब्धत्वात् । 'समान एवञ्चाभेदादि'त्यत्र सदा ब्रह्मोपास्यत्रिविक्रमत्वादिक्रियाणां ब्रह्माण्या विशेषतोऽनुपासनाद्युक्त्याऽपि ब्रह्माणीज्ञानस्य ब्रह्मज्ञानापेक्षयाऽनन्तांशन्यूनताया लब्धत्वात् । ततश्च शतगुणिततारतम्यस्य ज्ञानविषयत्वाभावान्न ज्ञानेऽनन्तगुणिततारतम्यकथनपरस्यास्य ग्रन्थस्य ग्रन्थान्तरविरोध इति वाच्यम् । 'यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलाधिके । सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिला' इत्यादिनिरवकाशतैत्तिरीयभाष्योदाहृतप्रमाणविरुद्धत्वेन शतांशन्यूनत्वेन तारतम्योक्तीनां गुणमात्रविषयत्वसिद्ध्याऽऽनन्दमात्रविषयतायाः कल्पयितुमशक्यत्वात् । त्रैगुण्यात्परत इत्यत्रापि पूर्वोत्तरग्रन्थसन्दर्भानुरोधेन सदेत्यस्यानुवृत्तिसिद्ध्या त्रैगुण्यात्परतः शतगुणस्य भगवतो दर्शनं सार्वकालिकम् । सर्वगतत्वेन तु तद्दर्शनं न ब्रह्मवत्सार्वकालिकं किन्तु कादाचित्कमित्यर्थसिद्ध्या ततोऽन-न्तांशोनत्वस्यार्थतोऽप्यलाभात् । 'समान एवञ्चाभेदादि'त्यत्रापि ब्रह्माण्याश्च नित्यं तदुपास्तियोग्यत्वाभावा-दिति त्रिविक्रमत्वादिक्रियाणां सर्वदा विशेषत उपासनानिषेधपरभाष्यटीकानुसारेण ब्रह्माण्यास्त्रिविक्रमत्वा-दिभगवत्क्रियाणां विशेषतः कादाचित्कोपासनाया अनुमतत्वलाभेन ततोऽप्यनन्तांशन्यूनत्वालाभात् । तथा च शतगुणिततारतम्यस्य गुणमात्रविषयत्वाज्ज्ञानेऽनन्तगुणिततारतम्यकथनपरस्यास्य ग्रन्थस्य ग्रन्था-न्तरविरोधो दुष्परिहर इति चेत् । अत्र गुरवः प्राहुः । इहापि टीकायां ज्ञाने शतगुणिततारतम्य-मेवाभिमतम् । उमापर्यन्तं ज्ञानेऽनन्तांशन्यूनत्वकथनं तु पूर्वपूर्वज्ञानानां पश्चात्पश्चादुक्तज्ञानापेक्षयाऽति-स्फुटत्वाभिप्रायम् । 'अथवा सहस्रगुणिता अनन्तगुणितास्तथा । परिमाणे शतगुणेऽप्यानन्दस्फुटतावशा-दि'ति तैत्तिरीयभाष्यानुसारात् । न चैवं शक्रादिज्ञानानामपि पश्चात्पश्चादुक्तज्ञानापेक्षयाऽऽनन्दस्फुटताव-शात्तथा व्यवहारापत्तिः । सिद्धप्रयोगानुसारेण निमित्तस्य कल्प्यतया निमित्तानुरोधेन प्रयोगापादनस्या-न्याय्यत्वादिति ।

प० — पञ्चमी षष्ठ्यर्थ इत्युपेत्याह **दृष्टानामिति** । निर्धारणे षष्ठी । ईशधर्माणामिति योज्यम् ।

**या०— अनन्तांशानेवेति।** ननु भगवद्दृष्टानां गुणानामनन्तानन्तधा विभक्तानामेकमेव भागं रमा पश्यति। रमादृष्टानां भगवद्गुणानां कोटिधाविभक्तानामेकं भागमजः पश्यति। अजदृष्टानां गुणानां शतधा विभक्तानामेकं भागं वाणी, तद्दृष्टानां शतधा विभक्तानामेकं भागं गरुडशेषरुद्रास्तद्दृष्टानां गुणानां शतधा विभक्तानामेकं भागमुमेत्येवमुमापर्यन्तमपि शतांशन्यूनमेव ज्ञाने तारतम्यं ग्रन्थान्तरसिद्धम्। अतः कथमनन्तांशानेवेति घटत इति चेदुच्यते। अत्रोमाज्ञानपर्यन्तं यदनन्तांशन्यूनत्वमुक्तं तत्पूर्वपूर्वज्ञानाना-मतिस्फुटत्वापेक्षयैव वस्तुतस्तूक्तरीत्यैव न्यूनत्वम्। यथोक्तं तैत्तिरीयभाष्ये। 'अथवा सहस्रगुणिता अनन्तगुणितास्तथा। परिमाणे शतगुणेऽप्यानन्दस्फुटतावशादि'ति। अत्रानन्दपदं ज्ञानाद्युपलक्षकम्। अतो न कोऽपि विरोध इति। अत्र केचित्। उमा यावदनन्तांशानिति ग्रन्थस्वारस्येनोमाज्ञानपर्यन्त-मनन्तांशन्यूनत्वं वास्तवमेव विवक्षितं न स्फुटत्वप्रयुक्तम्। अन्यत्र शतांशन्यूनतया तारतम्यकथनं त्वान-न्दमात्रविषयं न ज्ञानविषयम्। अत एव 'त्रैगुण्यात्परतः पश्येद्व्याप्तं शतगुणं हरिमि'त्यत्र ब्रह्माण्या भगवत्परिमाणविषयकं ज्ञानमपरिच्छिन्नतत्परिमाणविषयकब्रह्मज्ञानापेक्षयाऽनन्तांशन्यूनमित्यर्थाल्लभ्यते। तथा च 'समान एवं चाभेदादि'त्यत्र वेदोक्तत्रिविक्रमत्वादिक्रियाणां सदा ब्रह्मोपास्यानां विशेषतोऽनुपासनादिकं ब्रह्माण्या उक्तम्। तेनापि ब्रह्माणीज्ञानं ब्रह्मज्ञानापेक्षयाऽनन्तांशन्यूनमिति प्राप्तमित्याहुः। तच्चिन्त्यम्। उमा यावदित्यस्योक्तरीत्या सावकाशत्वात्। 'यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलादिके। सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिला' इत्यादिनिरवकाशप्रमाणविरोधप्रसङ्गेन शतां-शन्यूनत्वेन तारतम्योक्तीनामानन्दमात्रविषयत्वस्य वक्तुमशक्यत्वात्। त्रैगुण्यात्परत इत्यस्य सदेत्यनु-वृत्त्या त्रैगुण्यात्परतः शतगुणं व्याप्तं सदा पश्येत्। कदाचित्तु सर्वगत्वेनापि पश्येदिति व्याख्यानेऽ-नन्तांशोनत्वालाभात्। समान एवं चेत्यत्रापि ब्रह्माण्याः भगवत्क्रियाणां विशेषोपासनायाः सर्वदा निषेधेऽपि कादाचित्कं तथोपासनमनुमतमेवेति न तेनाप्युक्तार्थलाभ इति। उक्तं च तत्त्वप्रकाशि-कायाम्। 'ब्रह्माण्याश्च नित्यं तदुपास्तियोग्यताभावादि'ति।

**श्री०**— उमा यावदित्यस्यायमर्थः। उमापर्यन्तमनन्तांशानेव पश्यन्ति। भगवद्दृष्टगुणाना-मनन्तांशानेव रमा पश्यति। रमादृष्टगुणानामनन्तांशान्ब्रह्मा पश्यति। अत्रानन्तांशशब्देन कोटिधा विभक्ता-नामेको भागो ग्राह्यः। वाण्यपि ब्रह्मदृष्टानां गुणानामनन्तांशानेव पश्यति। रुद्रोऽपि वाणीदृष्टानां गुणानामनन्तांशानेव पश्यति। उमाऽपि रुद्रदृष्टानां गुणानामनन्तांशानेव पश्यति। इन्द्रकामौ तूमादृष्टानां गुणानां शतांशानेव पश्यत इत्येवमुमापर्यन्तमानन्त्यद्रष्टारः। न चैवमानन्त्यद्रष्टृत्वेन ब्रह्माद्युमान्तानां साम्यापात इति वाच्यम्। आनन्त्येऽपि तारतम्यसद्भावादित्यवधेयम्।

**सु०— उदाहृतानां वचनानां प्रयोजनमाह** इत्यादीति ।

**अनु०—** इत्यादिवेदस्मृतिगवचनेभ्यो यथार्थतः ॥
तारतम्यं च मुक्तानां साधनानां च दृश्यते ॥

यथार्थत इति । **न परमतानुवादरूपेणेत्यर्थः । मुक्तानां च साधनानां चेति योजना । साधनतारतम्यप्रतिपादनायोदाहृतेष्वेव केषुचिद्वाक्येषु मुक्तानां तारतम्यं प्रतीयते । तदपि प्रकृतत्वाद् ग्राह्यमित्यर्थः ।**

**शे०— केषुचिद्वाक्येष्विति** । 'न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन । तथामुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने । सायुज्यं समनुप्राप्ता अपि देवादयोऽखिलाः । तारतम्याद्धि तिष्ठन्ती'-त्यादिष्वित्यर्थः ॥ **प्रकृतत्वादिति** । साधनतारतम्यसाध्यत्वेनेति शेषः ।

**या०— केषुचिद्वाक्येष्विति** । 'न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने । सायुज्यं समनुप्राप्ता अपि देवादयोऽखिलाः । तारतम्याद्धि तिष्ठन्ती'त्यादिष्वित्यर्थः ॥ **प्रागिति** । 'नाधिक्यं यदि साध्ये स्यात्प्रयत्नः साधने कुतः' इत्यत्रेत्यर्थः ॥ **व्याप्तेरुक्तत्वादिति** । 'सति हि गुणे प्रवदन्त्यतुल्यताम्' । 'यथा भक्तिविशेषोऽत्र दृश्यते परमेश्वरे । तथा मुक्तिविशेषोऽपि' 'तारतम्याद्धितिष्ठन्ति' । 'तारतम्यं हि साधने' इत्यादिभिः कैश्चिद्वाक्यैः साधनतारतम्यवत्स्वेव मोक्षतारतम्यस्याप्युक्तत्वेन गौर्न पदा स्प्रष्टव्येत्यादिवाक्यानामिव तेषां व्याप्त्यभिधायकत्वमिति ज्ञातव्यम् ।

**सु०— अस्तु मुमुक्षूणां साधनेषु तारतम्यं मा च भून्मोक्षे तारतम्यमित्याशङ्कायां प्राग्बाधकमुक्तम् । इदानीं शङ्कैवैषा नोपपद्यते दूरे दूषणाभिधानमित्याह** साध्येति ।

**अनु०—** साध्यसाधनवैरूप्यम्

**साध्यमविचित्रं साधनं विचित्रमिति साध्यसाधनयोर्वैरूप्यं केन बीजेन कल्प्यते शङ्क्यते न केनापि । अयमभिसन्धिः । पक्षे विपक्षत्वशङ्का खलु केनचिद्बीजेन स्यात् । निर्बीजं शङ्कमानो न लौकिको नापि परीक्षक इत्युन्मत्त इवोपेक्षणीयः । बीजं च व्यभिचारदर्शनं वोपाधिदर्शनं वा तयोरन्यतरशङ्का वा । तत्राद्यं तावदिह नास्ति । तदिदमाह** अदृष्टमिति ।

अदृष्टं केन कल्प्यते ॥

**नापि द्वितीयम् । पक्षे साध्यसद्भावस्य श्रुत्यादिसिद्धत्वेन यस्य कस्यचिदाशङ्क्यमानस्यावश्यं साध्यव्यापकत्वाभावेनोपाधित्वासंभवात् । पक्षेऽपि तद्वृत्तौ साधनव्यापकत्वात् ।**

**अत एवोपाधिशङ्काऽपि निरस्ता । ततो व्यभिचारशङ्काऽपि । उदाहृतवाक्यैर्व्याप्तेरुक्तत्वात् । अतो बीजाभावाच्छङ्कैवैषाऽनुपपन्नेति ।**

**श्रे०— प्रागिति** । 'नाधिक्यं यदि साध्ये स्यात्प्रयत्नः साधने कुत' इत्यादिनेति शेषः । ननु शङ्काया बीजापेक्षत्वनियम एवासिद्ध इति न तदभावेन शङ्काया अनुपपत्तिः प्रसज्यते । उक्तनियम-सिद्धावपि वा प्रकृते व्यभिचारादिदर्शनस्यैव बीजत्वसंभवेन तदभावासिद्धेर्न तन्मूलकशङ्काया अनुपपत्ति-रित्यत आह **अयमभिसन्धिरिति** । उपाधित्वेनाशङ्क्यमानो धर्मः किं पक्षावृत्तिरभिमतः किंवा तद्वृत्ति-रिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **पक्ष इति** । पक्षेऽवृत्ताविति शेषः । द्वितीयं दूषयति **पक्षेऽपीति** ॥ **अत एवेति** । पक्षे साध्यसद्भावस्य श्रुत्यादिसिद्धत्वेन तत्रोपाध्यवृत्तौ साध्याव्यापकत्वेन वृत्तौ च साधनव्यापकत्वेनोपाध्यभावस्य निश्चितत्वादेवेत्यर्थः ॥ **तत इति** । उपाधिशङ्काऽनुपपत्तेरित्यर्थः । व्यभिचारशङ्काया उपाधिशङ्काप्रयुक्ततया प्रयोजकीभूतोपाधिशङ्काविरहे तत्प्रयुक्तशङ्काया (व्यभिचार-शङ्काया) अप्यनुपपत्तेरिति भावः । साधनतारतम्यस्य साध्यतारतम्येन व्याप्तेरागमेन निश्चितत्वाच्च नोपाध्यादिशङ्का संभवतीत्याह **उदाहृतेति** । सति हि गुणे प्रवदन्त्यतुलतामित्युदाहृतवाक्यैरित्यर्थः । तत्र साधनतारतम्यवत्साध्यतारतम्यकथनेन गौर्न पदा स्प्रष्टव्येत्यादिवाक्यानामिव तेषामपि व्याप्त्यभि-धायकत्वादिति भावः ।

---

**स०— प्रागिति** । 'नो चेन्न यत्नं कुर्युरञ्जसा' इत्यादौ ॥ **अत एवेति** । साध्यव्यापकत्व-साधनाव्यापकत्वाभावादेवेत्यर्थः ।

**प०— प्राग्बाधकमुक्तमिति** । 'नाधिक्यं यदि साध्ये स्यादि'त्यादिना 'इत्येतदखिलं मोक्षे विशेषाभावतः कथमि'त्यन्तेन ग्रन्थेनोक्तमित्यर्थः । साधनवैचित्र्येऽपि साध्ये तन्मास्त्विति शङ्काया उत्तरस्यास्पष्टत्वादाह **अयमभिसन्धिरिति** ॥ **पक्ष इति** । देवादयो मानुषादिभ्यः अधिकमोक्ष-फलभाजः तदपेक्षयाऽधिकसाधनत्वादिति । युक्तं चेत्यत्र प्रागुक्तप्रयोगे यः पक्षस्तत्रेत्यर्थः । उपाधेः पक्षे असत्वे सत्वे चोभयत्र क्रमाद्दोषमाह **साध्यव्यापकत्वाभावेनेत्यादिना** ॥ **तत इति** । उपाधि-शङ्काभावादित्यर्थः । अविपक्षत्वनिश्चयोपायं चाह **उदाहृतेति** । विचित्रेत्यादिद्वितीयहेतौ विशिष्ट-भेदात् । न साध्याविशिष्टतेति भावः ।

**श्री०— अदृष्टमितीति** । कुत्रापि व्यभिचारादर्शनादिति भाव इति तदर्थः ॥ **अत एवेति** । उक्तरीत्योपाधिदर्शनाभावेन तच्छङ्काऽपि तद्रीत्यैवापास्ता इत्यर्थः ॥ **तत इति** । व्यभिचारशङ्काया उपाधि-शङ्काधीनत्वेन तदभावे तस्याप्यभावादिति भावः ।

सु०— **ईश्वरो मुमुक्षुभ्यो विचित्रं फलं ददाति विचित्रसाधनैराराधितत्वात्। विचित्रसाधनान्यपेक्ष्य फलदातृत्वादित्यनुमानान्तरं हृदि निधायान्यथासिद्धिनिरासार्थं विपक्षे बाधकमाह** वैषम्यमिति ।

**अनु०**— वैषम्यं निर्घृणत्वं च तेन स्यातां परस्य च ॥

तेन **साध्यसाधनवैरूप्येण । द्वितीयश्चशब्दः प्रमाणान्तरसूचनार्थः । यदीश्वरोऽनुष्ठिताल्पसाधनायानुष्ठितमहासाधनसमानफलं दद्यात्। तदाऽसौ विषमः प्रसज्येत। यदि वाऽनुष्ठितमहासाधनायानुष्ठिताल्पसाधनसमानफलं दद्यात् । तदा निर्घृणः स्यादित्यर्थः ।**

**ईश्वरस्य वैषम्याद्यापत्तिर्नानिष्टा । दुःखाद्यहेतुत्वादित्यत** आह सापेक्षत्वादिति ।

सापेक्षत्वादिति च तौ विद्याधीशेन वारितौ ॥

**अनेन** 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' **इति सूत्रमुपादत्ते । तौ चेति संबन्धः । तौ वैषम्यनैर्घृण्यलक्षणौ दोषौ। यद्धि प्रमाणविरुद्धमप्रामाणिकं वा तदुच्यतेऽनिष्टमिति । वैषम्यं(ादिकं) चे(मी)श्वरस्य सूत्रकारेण वारितत्वात्प्रमाणविरुद्धमिति कथं नानिष्टम्। अङ्गीकृतसूत्रप्रामाण्यान्प्रत्ययं यत्न इति नासङ्गतिः । ये तु सूत्रप्रामाण्यमनङ्गीकृत्येश्वरस्य वैषम्याद्यापत्तेरिष्टत्वं मन्यन्ते । तान्प्रति वेदाप्रामाण्यहेतुत्वेन वैषम्यादेर्दोषत्वं सूचयितुं पुल्लिङ्गनिर्देशः। अन्यथा प्रकरणात्ते वारिते इत्यवक्ष्यत्। नपुंसकप्रयोगेऽपि दूषणे इति शक्यते ज्ञातुमिति चेन्न। ते वैषम्यनैर्घृण्ये इति निराकाङ्क्षत्वात् ।**

**शे०**— ननु वैषम्यं निर्घृणत्वं चेत्युत्तरवाक्यमनर्थकम् । न च विपक्षे बाधककथनेनाप्रयोजकताशङ्कापरिहारार्थत्वान्न तदिति वाच्यम् । उक्तं च साधनाधिक्यादिति प्रागुपन्यस्तानुमानेऽप्रयोजकताशङ्काया नाधिक्यं यदि साध्ये स्यादित्यादिना विपक्षे बाधककथनेन निरासात् । बीजाभावेन तच्छङ्काया एवानुदयस्य समर्थनात्तत्परिहारार्थं बाधककथनपरत्वायोगाच्च । न चानुमानान्तरे तच्छङ्कानिवर्तकत्वेन सार्थक्यम्। ब्रह्मादिपक्षकमानुषादिपक्षकसाधनपक्षकफलपक्षकानुमानव्यतिरेकेण विवक्षितार्थसाधकानुमानाभावात् । भावे वा तस्यानुपन्यस्ततया तत्राप्रयोजकताशङ्काऽनुदयाच्चेत्यतस्तादृशानुमानस्यानुपन्यस्तत्वेऽपि हार्दत्वात्तत्राप्यप्रयोजकताशङ्कानिरासाय विपक्षे बाधककथनपरस्योत्तरग्रन्थस्य नानर्थक्यमिति भावेन तादृशानुमानप्रकारं दर्शयन्नेव तत्राप्रयोजकत्वशङ्कानिवर्तकतयोत्तरग्रन्थं सङ्गमयति **ईश्वर इत्यादि ॥ साधनसाध्यवैरूप्येणेति** । साधनं विचित्रं साध्यमविचित्रमिति साधनसाध्यवैरूप्येणेत्यर्थः॥ **प्रमाणान्तरसूचनार्थ इति** । वैषम्यं निर्घृणत्वं चेत्युक्ततर्कमूलकोदाहृतानुमानरूपप्रमाणान्तरसूचनार्थ इत्यर्थः । अनुष्ठिताल्पसाधनानुष्ठितमहासाधनसमानफलदाने वैषम्यप्रसक्तावप्यनुष्ठितमहासाधनायानुष्ठिताल्पसाधन-

फलदाने वैषम्याप्रसङ्गात् । अनुष्ठितमहासाधनायानुष्ठिताल्पसाधनसमानफलदाने नैर्घृण्यस्यैवानुष्ठिताल्पसाधनायानुष्ठितमहासाधनसमानफलदाने नैर्घृण्यस्य चाप्रसङ्गात् । तयोरव्यवस्थितयत्किञ्चित्पक्षविषयकत्वानुपपत्त्या व्यवस्थिततत्पक्षविषयतया वैषम्यादिप्रसङ्गकथनपरतया ग्रन्थं योजयति **यदीश्वर इत्यादि** ।

अन्यत्रानिरस्ततयेत्यपि निवारिताविति समुच्चयार्थकचशब्दस्य यथाश्रुतसंबन्धानुपपत्तेर्भिन्नक्रमतया तं योजयति **तौ चेति संबन्ध इति** । ननु दुःखाद्यहेतुत्वाद्वैषम्यादेः कथं तस्यानिष्टत्वमित्यनस्तद्भावेऽपि प्रमाणविरुद्धत्वात्तदुपपत्तिरिति भावेन कुतः प्रमाणविरुद्धत्वेऽप्यनिष्टत्वं कथं च तस्य प्रमाणविरुद्धत्वमित्यतस्तदुभयमुपपादयति **यद्वीति** । सूत्रकारेण निवारितत्वेऽपि वैषम्यादेः कुतः प्रमाणविरुद्धत्वं तस्येत्यतः किमेतदवधृतसूत्रकाराप्तभावस्य चोद्यं किंवाऽनवधृततद्भावस्येति विकल्पं मनसि निधायाद्यं दूषयति **अङ्गीकृतेति** । द्वितीयमनूद्य दूषयति **ये त्विति ॥ अन्यथेति** । वेदाप्रामाण्यहेतुत्वेन वैषम्यादेर्दूषणत्वसूचनस्य पुल्लिङ्गनिर्देशप्रयोजनस्याभाव इत्यर्थः ॥ **ते वैषम्येति** । ते वैषम्यनैर्घृण्ये निवारिते इत्यन्वयेन निराकाङ्क्षत्वादित्यर्थः । नपुंसकेन निर्दिष्टव्यस्य पुल्लिङ्गेन निर्देशे तु कुत एतदिति प्रयोजनजिज्ञासायामुक्तार्थविशेषस्योहसंभवादिति भावः ।

स० — **प्रमाणान्तरेति** । पूर्वोक्तप्रमाणापेक्षया यदन्यत् प्रमाणं ईश्वरो मुमुक्षुभ्यः फलं ददातीत्येवंरूपं तत्सूचनार्थमित्यर्थः । **अन्यथेति** । वेदाप्रामाण्यहेतुत्वेन वैषम्यादेर्दोषत्वसूचनस्य पुल्लिङ्गनिर्देशे प्रयोजनाभाव इत्यर्थः । **ते वैषम्येति** । वैषम्यनैर्घृण्ये निवारिते इत्यन्वयेन विना साकाङ्क्षत्वादित्यस्य व्यर्थत्वान्नपुंसकनिर्दिष्टव्यस्य पुल्लिङ्गेन निर्देशे हि कुत एतदिति प्रयोजनजिज्ञासायामुक्तार्थविशेषस्योहसंभवादिति भावः ।

प० — **अन्यथासिद्धीति** । उक्तहेत्वोरिति योज्यम् । अप्रयोजकतानिरासायेत्यर्थः ॥ **प्रमाणान्तरेति** । युक्तं च साधनाधिक्यादित्यादावुक्तप्रमाणापेक्षया ईश्वरेत्यादिनोक्तप्रमाणान्तरेत्यर्थः । तेनेत्यादिनोक्तापादकापाद्यभावं व्यनक्ति **यदीति ॥ दुःखाद्यहेतुत्वादिति** । सर्वविध्याद्यतिदूरत्वेनेश्वरस्य प्रत्यवायाभावादिति भावः । दोषापेक्षया तावित्युक्तेर्भावं व्यनक्ति **ये त्विति ॥ निराकाङ्क्षत्वादिति** । ते इत्युक्तौ ते वैषम्यनैर्घृण्ये वारिते इत्यन्वयेनैवाकाङ्क्षाशान्तेर्दोषत्वं तयोर्न ज्ञापितं स्यात् । तावित्युक्तौ तु वैषम्यनैर्घृण्ययोर्नपुंसकत्वेन परामर्शायोगात् तौ कावित्याकांक्षोदये दोषाविति वाच्यत्वादिति भावः ।

या० — **प्रमाणान्तरसूचनार्थ इति** । एतत्तर्कमूलकोक्तानुमानरूपप्रमाणान्तरसूचनार्थ इत्यर्थः । अत एवोक्तमनुमानान्तरं हृदि निधायेति । साधनसंस्कारेत्यत्र साधनशब्दः प्रयत्नपरः । त्रयाणां

ग्रहणेन मूले साधनानामिति बहुवचनमाद्यर्थ इत्युक्तं भवतीति ज्ञातव्यम् । अत एव साधनादवित्य-प्रेतनं मूलम् ।

**श्री० — वेदाप्रामाण्येति** । 'पुण्येन पुण्यं लोकं नयति पापेन पापमि'ति वेदाप्रामाण्यहेतुत्वेनेत्यर्थः ॥ **अन्यथेति** । दोषत्वसूचनाभाव इत्यर्थः ॥ **निराकाङ्क्षत्वादिति** । वारितावित्यनेनान्वया-योगेनाकाङ्क्षासम्पूर्तिर्नास्तीत्यर्थः । उक्तस्य कथनाभिप्रायो वर्णनीय इति भावेनैवेदम् । अन्यथा वारिते इत्युक्तौ सुखेन दूषणे इत्यस्याकाङ्क्षाऽपि संभवत्येवेति द्रष्टव्यम् ।

**सु० — प्रसङ्गस्य विपर्यये पर्यवसानमुपपादयति** तारतम्यादिति ।

**अनु० —** तारतम्यात्साधनानां साध्यतादृक्त्वमीशतः ।
अवैषम्यादिहेतुः स्यात्सदैव परमेश्वरे ॥

**साधनानां तारतम्यात्सदैव नियमेनेशतो भवतः साध्यस्य तारतम्यं परमेश्वरेऽवैषम्या-दिहेतुः स्यात् । आपादकविपर्ययस्य खल्वापाद्यविपर्ययं प्रति निर्वाहकत्वे भवेत्प्रसङ्गस्य विपर्य-यपर्यवसानम् । निरग्निकत्वविपर्ययो हि निर्धूमत्वविपर्ययं घटयति । अस्ति चैतत्प्रकृत इति ।**

**यद्वा कथं वैषम्यादि सूत्रकारेण वारितमित्यतः सापेक्षत्वस्य वैषम्याद्यभावेन सह हेतु-हेतुमद्भावं व्युत्पादयति** तारतम्यादिति । **पूर्वैव योजना** ।

**शे० —** किं तद्विपर्यये पर्यवसानोपपादकं कुतश्च तस्य तदुपपादकत्वं कथं च तस्य प्रकृते सद्भावो येन तदभिधायकतयाऽस्य विपर्ययपर्यवसानोपपादकता स्यादित्यत आह **आपादकेत्यादिना** । सापेक्षत्वेन वैषम्यादिनिवारणोपपादकस्य सापेक्षत्ववैषम्याद्यभावयोर्हेतुहेतुमद्भावस्य व्युत्पादकतया साक्षा-त्प्रकृतग्रन्थसङ्गतिसम्भवे प्रतिपत्तिगौरवग्रस्तविर्ययपर्यवसानोपपादकत्वाश्रयणमनुचितमित्याशयेन पक्षा-न्तरमाह **यद्वेति** ।

**प० —** साध्यतादृक्त्वमित्यत्र साध्यस्येति बुद्ध्या विभक्तेन भवत इत्यध्याहृतस्यान्वयः । कस्माद्भवत इत्यत ईशत इत्यन्वेतीति योजयति **ईशतो भवतः साध्यस्येति** । तादृक्त्वमित्यस्यार्थ-स्तारतम्यमिति । उपपादयतीत्युक्तं व्यनक्ति **आपादकेति** ॥ **प्रकृत इति** । साध्यसाधनवैरूप्यरूपा-पादकस्य विपर्ययो हि वैषम्याद्यापत्तिरूपापाद्यस्य विपर्ययं निर्वहतीत्यस्ति विपर्यये पर्यवसानमित्यर्थः ।

**श्री० — अस्ति चैतदिति** । अनुष्ठितात्पसाधनानां समफलदानरूपापादकस्य विपर्ययः । साधनवैचित्र्यमपेक्ष्य विचित्रफलदानरूपस्तस्य वैषम्याद्यापत्तिरूपापाद्यस्य यो विपर्ययस्तदभावरूपस्तं प्रति निर्वाहकत्वमस्त्येवेत्यर्थः ।

**सु०— व्यर्थमिदं सूत्रकारस्य साधनसंस्कारपूर्वकर्मापेक्षाऽङ्गीकारेण वैषम्यादिनिवारणम् । फले तत्परिहारेऽपि साधनादौ परिहर्तुमशक्यत्वात् । तथ हि । साधनादौ परमेश्वरस्य प्रयोजकत्वमस्ति न वा । नेति पक्षे परमेश्वरत्वहानिः । आद्ये निर्निमित्तं विचित्राणि साधनानि प्रयोजयतः कथं न वैषम्यादीत्यतोऽनुपपन्नस्य सूत्रस्य कथं बाधकत्वमिति । मैवम् । अस्याक्षेपस्य सूत्रकृतैव निरस्तत्वादित्याह** स्वातन्त्र्य इति ।

**अनु०—** स्वातन्त्र्ये विद्यमानेऽपि साधनादौ परेशितुः ॥
अपेक्ष्यानादिवैचित्र्यं न दोष इति तद्वचः ।

**स्वातन्त्र्यं प्रयोजककर्तृत्वम् । वैचित्र्यं साधनादेः । अपेक्ष्य प्रेरणादिति शेषः । दोषो वैषम्यादिः । तद्वचः सूत्रकृतो वचोऽस्ति ।**

**शे०— साधनानामिति** । बहुवचनं सप्तमी शौण्डैरित्यादिवदाद्यर्थ इत्याशयेनाह **साधनसंस्कारेति** । अत एव साधनादावित्येवोत्तरत्र वक्ष्यतीति ध्येयम् । उक्ताक्षेपस्य सूत्रकृता निरस्ततया मूलारूढतासिद्ध्यर्थं तत्पदं प्रकृतसूत्रकृत्परतया व्याचष्टे **सूत्रकृत इति ।**

**प०—** 'पूर्वकर्मप्रयत्नं च संस्कारं चाप्यपेक्ष्य तु' इत्यादिस्मृत्यनुरोधादाह **साधनेति** । साधनभूतसंस्कारपूर्वकर्मेत्यर्थः । प्रयत्नस्याप्युपलक्षणम् । साधनपदेन वाप्रयत्नस्य ग्रहः । एतेन साधनादावित्यादिपदार्थो विवृतः । ल्यबन्तनिर्वाहायाह **प्रेरणादिति ।**

**श्री०— प्रयोजकत्वं** प्रेरकत्वम् ।

**सु०— नन्वेवं सर्वत्र सापेक्षस्य हरेः स्वातन्त्र्यहानिर्दोषः स्यादित्यत** आह स्वातन्त्र्य इति । **अयमपि दोषो नास्ति । कथम् । परेशितुः साधनादौ स्वातन्त्र्ये विद्यमानेऽपि स्वेच्छयाऽनादिवैचित्र्यमपेक्ष्य प्रेरकत्वमित्येतदर्थप्रतिपादकं** तद्वचोऽस्ति यत इति । **किं तद्वच इत्यतः क्रमेण सूत्रद्वयं पठति** नानादित्वादिति ।

**अनु०—** नानादित्वादिति ह्युक्तमुपपद्यत इत्यपि ॥

**तत्राद्यदोषपरिहाराय 'न कर्माविभागादिति चेन्नानादित्वादि'ति सूत्रं(मनेनो)उपादत्ते । द्वितीयपरिहाराय 'उपपद्यते चे'ति ।**

**शे०—** नानादित्वादित्यस्येवोपपद्यते चेत्यस्याप्युत्तरत्र भाष्यकृतोदाहरणात्तदवैयर्थ्याय तन्निवर्त्यपूर्वपक्षनिवर्तकतयाऽप्येतदेव भाष्यं योजयितुं स्वातन्त्र्यहानिशङ्कामुत्थापयति **नन्विति ॥ आद्य-**

**दोषेति ।** निर्निमित्तं विचित्रफलदातृत्वप्रयुक्तवैषम्यादिदोषपरिहारायेत्यर्थः ॥ **द्वितीयेति ।** साधन-भूतानादिकर्मपरम्पराया अपि तदधीनत्वेन पुनर्वैषम्याद्यापातेन दोष इत्याशङ्कापरिहारायेत्यर्थः ।

**प० — अयमपीति ।** स्वातन्त्र्यहानिरूपदोष इत्यर्थः ॥ **क्रमेणेति ।** अनादिसाधनादे-र्वैचित्र्यापेक्षया फलदाने तथात्वे चास्वातन्त्र्यं नेत्यत्र च क्रमेणेत्यर्थः ।

**श्री० — आद्यदोषेति ।** निर्निमित्तं विचित्रफलदातृत्वप्रयुक्तवषम्यादिदोषापरिहारायेत्यर्थः ॥ **द्वितीयेति ।** साधनभूतानादिकर्मपरम्पराया अपि तदधीनत्वेन पुनर्वैषम्याद्यापातेन दोष इत्याशङ्का-परिहारायेत्यर्थः ।

**सु० — एवमनुमानस्यान्यथासिद्धिं निरस्य बाधकप्रतिरोधौ निराकरोति** अपेक्ष्येति ।

**अनु० —** अपेक्ष्योपायवैषम्यमुपेयस्य तथा स्थितिः ॥
मया कया विरुद्धा स्यात्

तथास्थितिर्विषमतेश्वरेण क्रियत इति साध्यमानेति शेषः । **मया प्रमाणेन । कया न कयापि । परमं साम्यमित्यादेरन्यथाव्याख्यातत्वादिति** भावः । **अनुमानादेर्व्याप्तिप्रतिपत्तये दृष्टान्तमाह** राजादाविति ।

राजादावपि दृश्यते ॥

**प्रेक्षावति राजादौ सेवानुरूपफलदानं वैपरीत्यकर्तर्यप्रेक्षावति वैषम्यादिकं च दृश्यत इत्यर्थः । साध्यसाधनवैरूप्यकल्पने बाधकान्तरमाह** त्याग इति ॥

त्यागो दृष्टस्य चादृष्टकल्पनेति सुदुष्करौ ॥
मायिभ्योऽन्येन केनापि

**सर्वत्र साध्यसाधनैकरूप्यस्य दृष्टत्वात्तद्वैरूप्यस्य क्वाप्यदृष्टत्वात्प्रकृतवैरूप्यं शङ्कमानस्य दृष्टत्यागोऽदृष्टकल्पना चेति दोषौ प्रसज्येते । न च स्यातां ताविति शक्यते वक्तुम् । प्रेक्षा-वता केनाप्यनङ्गीकृतत्वादित्याह** सुदुष्कराविति । **मायावादिनो दृष्टं प्रपञ्चस्य सत्यत्वादिकं त्यजन्ति । अदृष्टमनिर्वाच्यादिकं कल्पयन्ति । अतो मायिभ्योऽन्येनेत्युक्तम् । अस्य चोत्तर-त्रोपयोगः । अन्यैरकृतमपि दृष्टत्यागादिकं कुर्वतां को दोष इत्यत आह** तत्किमिति ।

तत्किमन्यैश्च वादिभिः ॥

मायिनोऽत्रानुगम्यन्ते

तत् तर्हि । **किमिति गूढाभिप्रायः प्रश्नः** । अत्र **दृष्टत्यागाद्यनुष्ठानविषये** । अनुगम्यन्ते अनुस्रियन्ते । **एतदुक्तं भवति । दृष्टत्यागादिप्रसङ्गेन मायावादिनो दूषयतां पुनरत्र दृष्टत्यागादिकं स्वयं कुर्वतां व्याहतिः स्यादिति ।**

**शे०— अन्यथेति** । दुःखाद्यभावसाम्यं चेत्यादिनेति शेषः । अनुमानादेरित्यादिपदेनोक्तविपक्षबाधकतर्कपरिग्रहः । ईश्वरो मुमुक्षुभ्यो विचित्रं फलं प्रयच्छति विचित्रसाधनाराधितत्वादित्यनुमानमूलभूतव्याप्तौ दृष्टान्तमाह **प्रेक्षावतीति** । इदं च विशेषणं दृष्टान्ते साध्यवैकल्यपरिहाराय । यत्र विचित्रसाधनाराधितत्वं तत्र विचित्रफलदातृत्वमिति सामान्यव्याप्तौ समफलदातरि राजादौ व्यभिचारपरिहाराय प्रेक्षावत्त्वस्य व्याप्तिशरीरप्रवेशेऽपि हेतुशरीरे न तत्प्रवेशो निर्दिष्टहेतावव्यभिचारादिति द्रष्टव्यम् । योऽनुष्ठिताल्पसाधनायानुष्ठितमहासाधनसमानफलदाता स विषम इत्याद्युक्ततर्कमूलभूतव्याप्तौ दृष्टान्तमाह **वैपरीत्येति** । साधनवैचित्र्येऽप्यविचित्रफलदातरीत्यर्थः ॥ **साध्यसाधनवैरूप्यकल्पन इति** । साध्यमविचित्रं साधनं तु विचित्रमिति साध्यसाधनवैरूप्यकल्पन इत्यर्थः ॥ **ऐकरूप्यस्येति** । साध्यस्य विचित्रत्वे साधनस्यापि विचित्रत्वमिति तदैकरूप्यस्येत्यर्थः ॥ **अस्य चेति** । मायिभ्योऽन्येत्यनेनार्थतो लभ्यस्य मायिनो दृष्टादृष्टत्यागस्वीकाररूपप्रमेयस्येत्यर्थः ॥ **उत्तरत्रेति** । 'तत्किमन्यैश्च वादिभिर्मायिनोऽत्रानुगम्यन्त' इत्युत्तरत्रेत्यर्थः । उत्तरवाक्यार्थ एवोपयोगोऽस्य न पूर्ववाक्यार्थ इत्याशयः । गूढाभिप्रायमेव व्यनक्ति **एतदुक्तं भवतीति** ॥ **दूषयतामिति** । तारतम्याभाववादिनां रामानुजीयानामित्यर्थः ।

**स०— उत्तरत्रेति** । 'तत्किमन्यैश्च वादिभिः । मायिनोत्रानुगम्यन्ते' इत्युत्तरत्रेत्यर्थः । गूढाभिप्राय इत्युक्तम् । तमेवाभिप्रायं व्यनक्ति **एतदुक्तं भवतीति** ।

**प०— एवमनुमानस्येति** । वैषम्यमित्येतदवतारिकायामुक्तस्येत्यर्थः ॥ **अन्यथाव्याख्यातत्वादिति** । 'दुःखाद्यभावसाम्यं च साम्यवाक्यार्थ ईयत' इत्यत्र पूर्वमेवात्रैव पाद इत्यर्थः । तथा च न तद्विरोधः शङ्क्य इति भावः ॥ **अनुमानादेरिति** । आदिपदेन वैषम्यं चेत्यत्रोक्ततर्कग्रहः । प्रेक्षावत्यप्रेक्षावतीत्युक्त्या साधनानुरूपफलदानव्यभिचारोऽप्रेक्षावत्त्वनिमित्त इति चेत् प्रेक्षावत्त्वे सतीत्यभिमतविशेषणविशिष्टहेतोस्तत्राभावान्न दोषायेति सूचितम् । मायिभ्योऽन्येनेति किमर्थमुक्तम् । केनापि सुदुष्करावित्येतावता पूर्तेरित्यत आह **अस्य चेति** । तत्किमन्यैश्च वादिभिरित्याद्युत्तरवाक्ये व्याहत्युपपादनोपयोग इत्यर्थः ॥

या० — **अन्यथाव्याख्यातत्वादिति** । 'दुःखाद्यभावसाम्यं च साम्यवाक्यार्थ ईक्षत' इत्यत्रेति शेषः । **अस्य चोत्तरत्रेति** । दृष्टहानादृष्टकल्पने मायिभिः क्रियेते इत्यर्थलिङ्गकस्यास्य **प्रमेयस्या-**त्तरत्र 'तत्किमन्यैश्च वादिभिः । मायिनोत्रानुगम्यन्त' इत्युत्तरवाक्यार्थ एवोपयोगो न प्रकृतवाक्यार्थे इत्यर्थः । अत्र तदप्रदर्शने मायिनोऽत्रानुगम्यन्त इति वक्तुमशक्यत्वादिति भावः ॥ **दूषयतामिति** । रामानुजीयानामिति शेषः । तेषामेव तारतम्याभाववादित्वेनात्र पूर्ववादित्वेनाभिप्रेतत्वात् ।

श्री० — गूढाभिप्रायं व्यनक्ति **अत्र दृष्टत्यागादिकमिति** ।

सु० — **साध्यसाधनयोर्वैरूप्यं शङ्कमानस्यानिष्टान्तरमाह** श्रुतेति । **उक्तविधया साध्य-साधनसारूप्यस्य श्रुतत्वादन्यथा चाश्रुतत्वादत्र वैरूप्याङ्गीकारे श्रुतहान्यश्रुतग्रहावपि स्याताम् । मायिनां लिङ्ग इति तयोर्विशेषणं प्रयुञ्जानस्योक्त एवाभिसन्धिः । मायावादिनो हि श्रुतं सार्वज्ञाद्युपेतं ब्रह्म परित्यज्याश्रुतं निर्गुणमुपयन्ति ।**

**दृष्टत्यागादिचतुष्टयं कुर्वतां बाधकान्तरमाह** तदिति ।

अनु० — श्रुतहान्यश्रुतग्रहौ ॥
अप्यत्र मायिनां लिङ्गं तत्के दोषास्ततोधिकाः ॥

तत् तत्र **प्रकृतदोषेषु** । ततो **दृष्टत्यागादेः** । अधिका **बहिर्भूताः** । **दृष्टत्यागादिकं कुर्वा-णेनान्यदपि प्रमितं त्याज्यं स्यात् । अदृष्टकल्पनादिकं च कुर्वताऽप्रामाणिकमन्यदपि कल्पनीयं भवेदिति(त्यर्थः) भावः ।**

शे० — **उक्त एवेति** । श्रुतहान्यश्रुतकल्पनाप्रसङ्गेन मायावादिनो दूषयतां पुनरत्र श्रुतहाना-दिकं कुर्वतां स्वव्याहतिः स्यादित्युक्त एवाभिसन्धिरित्यर्थः । श्रुतहानाश्रुतकल्पनयोर्मायिलिङ्गतामुपपाद-यति **मायावादिनो हीति** । मूलस्थतत्पदव्याख्यानं **तत्रेति** । तस्यैव विवरणं **दोषेष्विति** । तत्के दोषास्ततोऽधिका इति गूढाभिसन्धिनोक्तस्याभिप्रायमाह **दृष्टत्यागादिकमिति** ॥ **अन्यदपि प्रमित-मिति** । तारतम्यादन्यत्प्रमितं दृष्टं जगत्सत्यत्वादिकं श्रुतमीश्वरादिकमपीत्यर्थः ॥ **अप्रामाणिकमप्य-न्यदपीति** । साधनसाध्यवैरूप्यादन्यदप्रामाणिकमदृष्टं जगन्मिथ्यात्वादिकमश्रुतं शून्यादिकमित्यर्थः । तथा च प्रामाणिकस्य जगत्सत्यत्वादेस्त्यागेऽप्रामाणिकस्य तन्मिथ्यात्वादेः स्वीकारे प्रत्यक्षादिबाधादिरेव दोषो वाच्यः । स सर्वोऽप्यदोषतया त्वत्स्वीकृतदृष्टादित्यागादिभ्यो न बहिर्भूत इति नोक्तार्थत्यागस्वीकारयोः प्रतिबन्धकः स्यात् । तथा चापसिद्धान्त इति भावः ।

स० — **उक्त एवाभिसन्धिरिति** । श्रुतहानाश्रुतकल्पनाप्रसङ्गेन मायावादिनो दूषयतां पुनः श्रुतहानादिकं कुर्वतां स्वव्याहतिः स्यादित्युक्त एवाभिसंधिरित्यर्थः ।

प०— **श्रुतत्वादिति** । प्रागुक्तवचनैरिति भावः ॥ **अन्यथेति** । साध्यसाधनवैरूप्यस्येत्यर्थः ॥ **उक्त एवेति** । पूर्ववाक्योक्तदिशा व्याहत्युपपादनमेवाभिप्राय इत्यर्थः । श्रुतहान्यादिप्रसङ्गेन मायावादिनो दूषयतां पुनरत्र श्रुतहान्यादिकं स्वयमङ्गीकुर्वतां व्याहतिरित्येवंरूपेणेति भावः । तदित्यस्य प्रतिपदं तत्रेति । तस्यार्थः प्रकृतदोषेष्विति ॥ **साध्यसाधनवैरूप्ये युक्त्युक्तिः** ॥

या०— **उक्त एवाभिसन्धिरिति** । श्रुतहानादिप्रसङ्गेन मायावादिनो दूषयतां पुनरत्र श्रुतहान्यादिकं कुर्वतां स्वव्याहतिरित्युक्त एवाभिसन्धिरित्यर्थः ॥ **प्रकृतदोषेष्विति** । त्वयोच्यमानदोषेष्वित्यर्थः । अन्यदपि प्रमितमित्यादि मुक्ततारतम्याद्यदन्यत्प्रमितं दृष्टं जगत्सत्यत्वादिकं श्रुतमीश्वरादिकं तदपीत्यर्थः । एवं साध्यसाधनवैरूप्यादप्रामाणिकमदृष्टं जगन्मिथ्यादिकमश्रुतं शून्यादिकं तदपीत्यर्थः । तथा च प्रामाणिकस्य जगत्सत्यत्वादेस्त्यागेऽप्रामाणिकस्य तन्मिथ्यात्वादेः स्वीकारे च प्रत्यक्षादिबाधादिदोषो वाच्यः । स सर्वोऽप्यदोषतया त्वत्स्वीकृतदृष्टादित्यागादिभ्यो न बहिर्भूत इति नोक्तार्थत्यागस्वीकारयोः प्रतिबन्धकः । ततश्चापसिद्धान्तापत्तिरिति भावः ।

मु०— **स्यादेतत्** । यदि मुक्तास्तारतम्योपेताः स्युस्तदा परस्परं द्वेषवन्तः स्युरिति प्रतिकूलतर्कपराहतं मुक्ततारतम्यानुमानमित्यत आह निश्शेषेति ।

अनु०— निश्शेषगतदोषाणां बहुभिर्जन्मभिः पुनः ॥
स्यादापरोक्ष्यं हि हरेर्द्वेषेर्ष्यादिस्ततः कुतः ॥

**निश्शेषेण गता अपगता दोषा येभ्यस्ते तथोक्ताः । पुनः श्रवणादिमतामिति शेषः । तेषां हरेरापरोक्ष्यमिति तान्प्रति हरेरापरोक्ष्य(रपरोक्षत्व)मित्यर्थः । अनुबन्धादिभ्य इत्यत्र प्रतिपादितोऽयमर्थ इति हिशब्दः । यस्मादित्यर्थे वा । द्वेषेर्ष्यादिदोषस्ततस्तस्मात्कुतो मुक्तानां नापादयितुं शक्यत इत्यर्थः ।**

**एतदुक्तं भवति । ये तारतम्योपेतास्ते द्वेषादिमन्तो दृष्टा यथा लौकिकाः पुरुषा इति खल्वत्र व्याप्तिरभिधातव्या । न चैवम् । लौकिकानां द्वेषादिमत्त्वे दोषित्वस्यैव प्रयोजकत्वात् । यत्र द्वेषादिमत्त्वं तत्र दोषित्वमिति व्याप्तेर्दर्शनात् । न च दोषित्वं मुक्तेषु संभवति । औपाधिका हि तेषु दोषा वक्तव्याः । स्वाभाविकानां शङ्कितुमशक्यत्वात् । ते च भगवत्साक्षात्कारोदयात्प्रागेव प्राचुर्येण गताः । साक्षात्कारेण च समूलघातं हताः । मुक्तौ चोपाधेरेवापगतत्वान्नेषदपि स्थातुमर्हन्ति । अतो व्यापकाभावाद्व्याप्यस्याप्यभाव इति ।**

**ननु परेणापि न मुक्तेषु द्वेषादिमत्त्वं साध्यते किन्त्वापाद्यत एव । ततस्तेभ्यस्तद्व्यावृत्तिसाधनमसङ्गतम् । मैवम् । तर्कमूलभूतव्याप्तावुपाधिः खल्वत्र कथितः । तस्य च पक्षाद्व्यावृत्तिः स्वव्यावृत्त्या विवक्षितधर्मव्यावर्तनशक्तिश्चावश्यकेति तद्व्युपादनस्य क्रियमाणत्वात् । अत्र द्वेषेर्ष्यामन्तापपरेष्टप्रतिघातप्रयत्नेच्छा व्याप्याः । अविद्याऽहङ्काराद्या व्यापका इति विवेकः ।**

**शे०— तेषामित्यादि ।** तेषामिति न कर्मणि षष्ठी किन्तु कर्तरि **हरे**रिति च न कर्तरि षष्ठी किन्तु कर्मणीति भावः । आदिशब्दसंग्राह्यतावच्छेदकं धर्मं सूचयितुं दोष इत्युक्तम् । कुत इत्यस्य तात्पर्यमाह **मुक्तानामिति ।** किमनेन प्रतिकूलतर्कस्य दूषणमुक्तं भवतीत्यत आह **एतदुक्तं भवतीति ॥ अशक्यत्वादिति ।** तथा सति मुक्त्यभावप्रसङ्गात्स्वभावतो दोषिणां मुक्त्ययोगादिति भावः । सन्तु तर्हि मुक्तेष्वौपाधिका एव दोषा इत्यत आह **ते चेति प्रागेवेति ।** तदनपगमे साक्षात्कारोदयस्यैवायोगादिति भावः ॥ **समूलघातमिति ।** सह मूलेन हता इत्यर्थः । **कषादित्वादनु**-प्रयोगः । साक्षात्कारेण द्वेषादिदोषकारणाविद्यानिवृत्त्या तन्मूलकदोषाणामपि निवृत्तेरिति भावः ॥ **असङ्गतमिति ।** उपाधेः स्वतोऽदोषत्वात्प्रतिपक्षोन्नायकतया दोषत्वं वाच्यम् । तच्च न संभवति । अदोषित्वेन द्वेषाद्यभावसाधनस्य परं प्रति सिद्धसाधनत्वेनासङ्गतत्वादित्यर्थः ॥ **व्याप्ताविति ।** तथा च व्याप्तिग्रहवेलायां परस्यैवंविधोपाध्युपस्थित्याऽव्याप्त्युन्नयनसंभवेन तर्कमूलभूतव्याप्तिशैथिल्यान्नोक्ततर्कावतारो भवितुमर्हतीत्येतावन्मात्रस्यैवात्र विवक्षितत्वेन साध्याभावस्योपाध्यभावेन पक्षेऽसाधनान्न सिद्धसाधनमिति भावः । किमर्थं तर्हि पक्षाद्व्यावृत्त्यादिप्रतिपादनं तस्य क्रियत इत्यत उपाधेः साध्यव्यापकत्वसाधनव्यापकत्वानुसरणस्य पक्षव्यावृत्त्यादिमात्रप्रयोजनकत्वेन तदभावे तदनुसरणस्य वैयर्थ्यापत्त्या तदर्थत्वेन तद्व्युत्पादनस्य नानर्थक्यमित्याह **तस्य चेति ॥ तद्व्युत्पादनस्येति ।** मुक्तेभ्यो द्वेषादिव्यावृत्तिव्युत्पादनस्येत्यर्थः । ननु च द्वेषादेरपि दोषत्वाद्द्वेषादिमत्त्वे दोषित्वस्य कथमुपाधित्वमित्यत आह **अत्रेति ।**

**स०—** ननु द्वेषादिसत्त्वे दोषित्वमुपाधिरित्ययुक्तम् । द्वेषादीनां दोषत्वेन साध्योपाध्योरभेदादित्यत आह **अत्र द्वेषेति ।**

**प०—** पुनरित्यत्र कांक्षितं तदनुवादपूर्वमाह **पुनः श्रवणादिमतामिति ।** हरेरिति षष्ठी कर्तरीति भ्रान्तिं निराह **तान्प्रतीत्यादि ॥ इत्यत्रेति ।** पूर्वपादे तद्व्याख्यानपरे 'विषयेषु च संसर्गेच्छाश्वतस्य च संशयात् । मनसा चान्यदाकाङ्क्षात्परं न प्रतिपद्यत' इत्यनुव्याख्याने चेत्यपि ध्येयम् ।

नन्वदोषित्वे द्वेषेर्ष्यादिः कुतो नापादयितुं शक्यते तारतम्यस्यापादकस्य सत्त्वादित्यत आह **एतदुक्तं भवतीति** ॥ **समूलघातं हता इति** । मूलेन सह हताः निश्शेषं हता इत्यर्थः । व्युत्पादितमेतत्पदं प्राक् समयपादादिभागे ॥ **तर्कमूलभूतेति** । मुक्ता यदि तारतम्योपेतास्तर्हि द्वेषेर्ष्यादिमन्तः स्युरिति परोक्ततर्कमूलभूतव्याप्तौ दोषित्वरूपोपाधिः निश्शेषगतदोषेति मूले कथित इत्यर्थः ॥ **विवक्षित-धर्मेति** । द्वेषेर्ष्यादिमत्त्वरूपसाध्यधर्म इत्यर्थः ॥ **व्यावर्तनशक्तिश्चावश्यकेति** । आङ्पूर्वादवश्य-शब्दात् कप्रत्यये केण इति ह्रस्वे टापि उदीचामात इति वैकल्पिके त्वाभावे सत्यावश्यकेति रूपं साधिवति साध्यव्यापकत्वबलादिति भावः । यत्र द्वेषादिमत्त्वं तत्र दोषित्वमिति व्याप्तिरसिद्धेत्यत आह **अत्रेति** । सन्तापेत्याद्युक्त्या द्वेषेर्ष्यादिरिति मूलगतादिपदार्थो विवृतः ॥ **अहङ्काराद्या इति** । कामकर्मादिराद्यपदार्थः ।

**या०**— हरिकर्तृकमापरोक्ष्यं वारयितुं तान्प्रतीत्युक्तम् । **विवक्षितधर्मेति** । व्यापकतया पराभिमतधर्मव्यावर्तनशक्तिरित्यर्थः । तथा च व्याप्तिग्रहणसमये ज्ञातस्यास्योपाधेर्व्यभिचारोन्नायकतैवोच्यते न सत्प्रतिपक्षोत्थापकत्वं येनासङ्गतिः स्यादिति भावः ॥ **आवश्यकेति** । अन्यथा व्याप्यत्वाभिमता-व्यापकत्वस्य व्यापकत्वाभिमतव्यापकत्वस्य चोपाधिलक्षणस्यालाभादिति भावः ।

**श्री०**— हरेरापरोक्ष्यमिति भगवत्कर्तृकापरोक्षज्ञानपरिहारायेतरेषां हरिकर्मकापरोक्षज्ञानलाभाय व्याचष्टे **तान्प्रतीति** । **औपाधिकाः** अविद्याऽहङ्कारादिप्रयुक्ताः । **दोषाः** द्वेषेर्ष्यसन्तापादयः ॥ **अत्र कथित इति** । मूले भगवत्पादैः कथित इत्यर्थः ॥ **तद्व्युत्पादनस्येति** । आपाद्यव्यापकत्वादिनो-पाधित्वव्युत्पादनस्येत्यर्थः । तत्प्रकारश्चैदमुक्तं भवतीत्यादिना प्रदर्शित इति द्रष्टव्यम् ।

सु०— **दोषाणामेव द्वेषादौ प्रयोजकत्वमित्येतमर्थं परेणापि स्वीकारयितुं प्रतिबन्दीं गृह्णाति** भवेयुरिति ।

अनु०— भवेयुर्यदि चेर्ष्याद्याः समेष्वपि कुतो न ते ॥

**तारतम्येऽङ्गीकृते मुक्तानामीर्ष्यादयो यदि भवेयुर्यद्यापाद्यन्ते । तदा मुक्तेषु समेष्वङ्गी-कृतेष्वपि कुतो न भवेयुः । यदि मुक्तास्तारतम्योपेतास्तदा द्वेषादिमन्तः स्युरिति वदता न द्वेषादिमन्तस्तस्मात्समा एवेति वाच्यम् । न च साम्यमप्यङ्गीकर्तुं शक्यते । यदि मुक्ताः समाः स्युस्तदा द्वेषादिमन्तः स्युरिति तत्राप्यनिष्टप्रसङ्गादित्यर्थः ।**

**साम्ये कथं द्वेषादिप्रसङ्ग इत्यतः परप्रसङ्गवत्साम्यस्यापि द्वेषादिसाहचर्यं दृष्टमित्याह** तप्यमाना इति ।

तप्यमानाः समान्दृष्ट्वा द्वेषेर्ष्यादियुता अपि ॥
दृश्यन्ते बहवो लोके दोषा एवात्र कारणम् ॥

**समसत्तामात्रं नापादकत्वेन विवक्षितम् । अतिप्रसङ्गात् । किन्तु समदर्शनमेवेत्याशयेनोक्तं** समान्दृष्ट्वेति ।

**प्रतिबन्दीग्रहणस्य प्रयोजनमाह** दोषा इति । **दोषाणां समुदितानामेव कारणत्वमित्येकवचनम् । एवमस्माभिः साम्यवादिनं प्रत्यतिप्रसङ्गेऽभिहिते तेनैतदेव वक्तव्यम् । अत्र लोके दोषा एव द्वेषादेः कारणम् । अन्वयव्यतिरेकाभ्यां तन्निश्चयात् । न तु साम्यम् । सत्यपि साम्ये सन्निष्वभावात् । असत्यपि क्वचिद्भावात् । न च मुक्तेषु दोषास्सन्ति । अतः साम्येऽपि न (द्वे)दोषादिप्रसङ्ग इति ।**

**शे०— एकवचनमिति** । कारणमित्येकवचनमित्यर्थः ।

**प०— स्वीकारयितुमिति** । दोषा एवात्र कारणम् । यदीत्यादिनेति योज्यम् ॥ **परप्रसङ्गवदिति** । यदि मुक्तास्तारतम्योपेतास्तर्हि द्वेषादिमन्तः स्युरिति परेणोक्तप्रसङ्गे यथापादकापाद्ययोः साहचर्यं लोके तथेत्यर्थः ॥ **समसत्तेति** । समस्य सत्त्वमात्रमित्यर्थः ॥ **अतिप्रसङ्गादिति** । सुप्त्यादावपि द्वेषादिप्रसङ्गादित्यर्थः ।

---

**श्री०— एकवचनमिति** । कारणमित्येकवचनमित्यर्थः । अन्यथा कारणानीति वक्तव्यमिति भावः ।

**सु०— अतः किमित्यत आह** यदीति ।

**अनु०—** यदि निर्दोषता तत्र किमाधिक्येन दूष्यते ॥

**यद्येवं दोषाणामेव द्वेषादिकारणत्वम् । तत्र मुक्तेषु । निर्दोषता चाङ्गीकृता । तदा** आधिक्येन **हीनाधिकभावेनाङ्गीकृतेन । किं दूष्यते न किमपि । साम्यमङ्गीकुर्वाणेनापि निर्दोषतयैव द्वेषादिप्रसङ्गो वारणीयः । तारतम्यमङ्गीकुर्वाणैरस्माभिरपि तथैव निराकरिष्यते । इयांस्तु विशेषः । यत्तारतम्यं प्रमितं न साम्यमिति समुदायार्थः ।**

**शे०—** नन्वेवं पक्षद्वयस्यापि साम्यात्किं साम्यं परित्यज्य तारतम्यपक्षपातेनेत्यत आह **इयांस्त्विति** ।

**प०—** ननु दोषा एवात्र कारणानीति वाच्यमित्यत आह **दोषाणामिति** । अविद्यादीनाम् । एवं सति साम्यमेवोपेयतां किं हीनाधिकभावोपगमेनेत्यत आह **इयांस्त्विति** ।

**श्री०— तथैव निराकरिष्यत इति** । निर्दोषतयैव द्वेषादिप्रसङ्गो निराकरिष्यत इत्यर्थः ।

**सु०— शङ्कते यदीति ।**

**अनु०—** यद्यन्यदर्शनाभावादीर्ष्यादिर्विनिवार्यते ॥

**भवेदेतद्यदि साम्येन प्रसक्तं द्वेषादिकं निर्दोषतया निवारयामः । न चैवम् । किन्नाम समसत्तामात्रं हि न द्वेषादिकारणमतिप्रसङ्गात् । अपि तर्हि समदर्शनम् । न च मुक्तः समं मुक्तान्तरं पश्यत्यतो न द्वेषादीति । एवं तर्हि न तारतम्यसत्तामात्रं द्वेषादिकारणं किन्तु स्वतोऽधिकदर्शनमेव । न च मुक्तः स्वतोऽधिकं मुक्तान्तरं पश्यति । तस्मात्सत्यपि तारतम्ये न द्वेषादिप्रसङ्ग इति कुतो न सन्तोष्टव्यमिति परिहारोऽत्र शक्यते वक्तुम् । तथाऽपि नासौ तात्त्विक इत्यन्यदर्शनाभावमेव दूषयति** अदर्शनादिति ।

अदर्शनादरत्यादिः कथं तेन निवार्यते ।

**एवमन्यदर्शनाभावेन द्वेषादिकं निवारयता तेनादर्शनात्प्रसक्तमरत्यादिकं कथं निवार्यते । अरतिः सुखाभावः । आदिपदेन तन्द्री भयं च गृह्यते । एतदुक्तं भवति । स्यादयं परिहारो यदि मुक्तस्यान्यदर्शनाभावः संभवेत् । न चैवम् । मुक्तो हि न तावद-चेतनः । अपसिद्धान्तप्रसङ्गात् । ततश्चेतनस्य सतोऽन्यदर्शनाभावेऽरत्यादिकं प्रसज्यत इति ।**

**शे०— न च मुक्त इति** । न प्रेत्य संज्ञाऽस्तीति मुक्तस्य दर्शननिषेधादिति भावः ॥

**नासौ तात्त्विक इति** । न प्रेत्य संज्ञाऽस्तीत्यस्यामुक्तकर्तृकमुक्तकर्मकदर्शननिषेधपरतायाः 'नामुक्त ज्ञेयते ही'त्यादिनोत्तरत्र समर्थितत्वेन मुक्तकर्तृकदर्शनाभावपरत्वाभावेन मुक्तस्य मुक्तान्तरदर्शना-भावस्याप्रामाणिकत्वादिति भावः ।

**प०—** ननु घटादावन्यदर्शने सत्यपि तन्द्रीशब्दितनिद्राभयं नास्तीत्यत आह **एतदुक्तमिति** । चेतनस्य स्वत इति पाठे स्वतः स्वस्मादित्यर्थः ।

**सु०— ननु बहिर्मुखा एवान्यदर्शनाभावेऽरत्यादिकं प्राप्नुवन्ति न च मुक्तास्तथाऽतो नारत्यादिप्रसङ्ग इत्यत आह** ब्रह्मणोऽपीति ।

**अनु०—** ब्रह्मणोऽप्यरतिर्दृष्टा पूर्वमेकाकिनः श्रुतौ ॥

**'ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयमि'त्येवं प्रमितस्यापीत्यर्थः । पूर्वम् आदिकाले । श्रुताविति जातावेकवचनम् । ताः श्रुतीरर्थतः पठति नैवेति।**

नैव रेमे स चैकाकी तस्मान्न रमते क्वचित् ॥

द्वितीयमैच्छत्तेनासाविति श्रुतय ऊदिरे ॥

**अनेन स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छदिति वाक्यमुपादत्ते ।**

**शे०** — नैवेत्यादिनोत्तरग्रन्थे बह्वीनां श्रुतीनामर्थतः पठितत्वाच्छ्रुतिष्विति बहुवचनेन भाव्यम् । श्रुतावित्येकवचनं तु कथमित्यतो नेदं व्यक्त्यैक्यविवक्षानिमित्तमेकवचनं किन्तु जातिरूपार्थैक्यविवक्षा-निमित्तमेवातो नानुपपत्तिरित्याह **जातावेकवचनमिति** ।

**प०** — **बहिर्मुखा इति** । लौकिका इत्यर्थः ॥ **ज्ञानमप्रतिघमिति** । बृहद्भाष्ये आद्ये अध्याये ग्रंथांतभागे वाक्यमिदम् ॥ **इतिवाक्यमिति** । वाजसनीयवाक्यमित्यर्थः । मूले ऊदिर इत्या-त्मनेपदसमाधानमुक्तं प्राक् इत्यूदे पैंगिनां श्रुतिरित्यात्रेक्षत्यधिकरण इति भावः ।

**सु० — स्यादेतत् । यद्यन्यदर्शनाभावमात्रमरत्यादेः कारणं स्यात् । न चैवम् । किन्त्वन्य-दर्शनेच्छायां तदभावः । मुक्तस्य त्विच्छैव नास्त्यतोऽन्यदर्शनाभावेऽपि नारत्यादिकं प्रसज्यत इत्याशङ्क्याह** यदीति ।

**अनु०** — यदीच्छा नैव तत्रास्तीत्येव तत्कल्प्यते मृषा ॥
श्रुत्युक्तनिर्दोषतैवं किन्नाङ्गीक्रियते स्वयम् ॥

तत् **तत्र मुक्तौ** । तत्र **अन्यदर्शनविषये । इच्छा नैवास्तीति मृषैव कल्प्य तेयदीति योजना । भिद्यते हृदयग्रन्थिरित्यादिश्रुत्युक्ता । स्वयं साक्षाच्छ्रुत्युक्तेति संबन्धः । तर्हीति शेषः । तच्छब्दो वा तर्ह्यर्थः । इदमुक्तं भवति । मुक्तानां साम्यमङ्गीकृत्यान्यदर्शनाभावेन द्वेषादि परिहृत्यान्यदर्शनेच्छाभावेन चारत्यादिकं परिहरतोऽप्रामाणिकानेककल्पनं प्रामाणिकपरित्यागश्च स्याताम् । सामान्यदर्शनाभावेनाभावतदिच्छाभावानामप्रामाणिकत्वात् । तारतम्यादेः प्रामाणिकत्वात् । ततो वरं तारतम्यमङ्गीकृत्य द्वेषादिनिरासाय श्रौतनिर्दोषतास्वीकार इति । एतेन तारतम्यं साम्यं वाऽङ्गीकृत्य निर्दोषत्वेन द्वेषादिसमाधानं विधातव्यमिति सन्देहोऽपि निरस्तो वेदितव्यः ।**

**शे०** — **एतेनेति** । साम्यतारतम्यपक्षयोरप्रामाणिकानेककल्पनाप्रामाणिकपरित्यागभावाभाव-प्रसङ्गव्युत्पादनेनेत्यर्थः ॥ **सन्देहोऽपीति** । न केवलं भवेदेतदिति शङ्कितरीत्या प्राप्तविपर्ययो निरस्त इत्यपेरर्थः । केचित्तु न केवलं भवदुक्तरीत्या मुक्तानां तारतम्यमङ्गीकृत्य निर्दोषत्वेन द्वेषादिपरिहारो वा कर्तव्यः किंवा साम्यमेवाङ्गीकृत्यान्यदर्शनेच्छाभावादन्यदर्शनाभावेनारत्यादिप्रसङ्गायोगो वाऽङ्गीकार्य इति संशय एव स्यादित्युक्तसन्देहस्यानेन निरासः । किन्तु तारतम्यमङ्गीकृत्य निर्दोषत्वेन द्वेषादि-परिहारो वा साम्यमेवाङ्गीकृत्य निर्दोषत्वेन द्वेषादिपरिहारो वा कार्य इति सन्देहो निरस्त इत्यपि-शब्दार्थ इत्याहुः ।

प०— तदित्यनुवादः । तत्रेति प्रतिपदं । मुक्ताविति व्याख्या । तत्रेत्यनुवादः । अन्ये_त्यादि व्याख्या ॥ **इत्यादिश्रुतीति** । पूर्वपादोदाहृतश्रुत्युक्तेत्यर्थः । स्वयमित्यस्य व्याख्या साक्षादिति । साम्यपक्षेप्युक्तदिशा द्वेषाद्यभावोपपादनसंभवे तारतम्य एव कुतः पक्षपात इत्यत आह **इदमुक्तं भवतीति** ॥ **एतेनेति** । स्वपरसाधनयोः प्रामणिकत्वाप्रामाणिकत्वकथनेनेत्यर्थः ।

श्री०— **एतेनेति** । तारतम्यादेः प्रामाणिकत्वेन तारतम्यमङ्गीकृत्य द्वेषादिनिरासस्यैव साम्यादिकमङ्गीकृत्य द्वेषादिनिरासद्वारत्वेनेत्यर्थः ।

सु०— **उक्तमेव स्पष्टमाह** तारतम्यं चेति ।

अनु०— तारतम्यं च कामं च श्रुतमेवातिहाय तु ॥
अश्रुता समता केन कल्प्यते युक्तिमानिना ॥

**अन्यदर्शनं चेत्यपि ग्राह्यम् । 'स यो मनुष्याणां राद्धः । कामस्य यत्राप्ताः कामाः । अक्षण्वन्तः कर्णवन्तः सखाय' इत्यादौ श्रुतम् । न ह्यन्यदर्शनाभावे सख्यं संभवति । समतेत्यन्यदर्शनाभावेच्छाभावयोरप्युपलक्षणम् । युक्तिं मन्यत इति युक्तिमानी । युक्तौ बहुमानवता केनाप्येवं न कल्प्यत इत्यर्थः । प्रामाणिकपरित्यागाप्रामाणिकस्वीकारप्रसङ्गो हि तर्कापरनामिका युक्तिः ।**

---

श्री०—साम्यादेरश्रुतत्वकथनप्रस्तावे समताया इवान्यदर्शनाभावेच्छाभावयोरप्यश्रुतताया वक्तव्यत्वात्समताया एव तत्कथनमनुपपन्नमित्यतोऽत्र समताशब्दस्यान्यदर्शनेच्छाभावोपलक्षणत्वेन स्वमात्रपरत्वाभावान्नानुपपत्तिरित्याह **समतेतीति** । युक्तिमानिनेत्यनेन सूचितमर्थमाह **युक्ताविति** ।

प०— उक्तार्थत्रये क्रमाच्छ्रुतित्रयमाह **स य इत्यादि** । युक्तिमानिनेत्यत्र का युक्तिरित्यत आह **प्रामाणिकेति** ।

श्री०— **प्रसङ्ग हीति** । 'तर्कोऽनिष्टप्रसङ्गः स्यादि'त्याद्युक्तेरित्यर्थः ॥ **अस्मदुक्त इति** । युक्तिमात्रे बहुमानवतेयमपि युक्तिरङ्गीकार्येति भावो युक्तिमानिनेत्यनेन सूचितो द्रष्टव्यः ।

सु०— **ननु समताया अश्रुतत्वेऽपि नाप्रामाणिकत्वम् । न हि श्रुतिरेव प्रमाणमित्यत** आह किं तदिति ।

अनु०— किं तन्मानं समत्वे ते मुक्तानामुपलभ्यते ॥

**न किञ्चित्तच्छ्रुतेरन्यत् । अतः प्रमाणान्तराभावेऽश्रुतत्वेनाप्रामाणिकत्वमेव सिध्यति । यद्यन्यदर्शनाभावादित्यादिनोक्तमुपसंहरति** वृथेति ।

वृथाऽयमाग्रहः केन श्रुतहान्यश्रुतग्रहे ॥

केन न **केनापि कारणेन । श्रुतहान्यश्रुतग्रह इति द्वन्द्वैकवद्भावः । श्रुतहानिसहितोऽश्रुतग्रह इति वा । विषयसप्तमीयम् । ततो न कार्यं इति भावः । मुक्तानां तारतम्येऽनुमानान्तरमाह** मोक्षेऽपीति ।

मोक्षेऽपि तारतम्येतश्चेतनत्वाद्यथा पुरा ॥

**तारतम्येनेतः प्राप्तस्तारतम्यवानिति यावत् । पुरा संसारे ।**

**शे०— नाप्रामाणिकत्वमिति ।** प्रमाणविशेषाभावेनाप्रामाणिकतायामतिप्रसङ्गादिति भावः । ननु तदेकप्रमाणस्य तन्निवृत्तावप्रामाणिकत्वे नातिप्रसङ्ग इत्यत आह **न हीति** । श्रुत्यन्यस्यापि तद्बोधकस्य प्रमाणस्य संभवादिति भावः । ननु श्रुतहान्यश्रुतग्रहयोरिति द्विवचनेन भवितव्यम् । श्रुतहान्यश्रुतग्रह इत्येकवचनं तु कथमित्यतः सर्वो द्वन्द्वो विभाषयैकवद्भवतीति वचनादेकवद्भावविधानादेकवचनोपपत्तिरित्याह **श्रुतेति** । विभाषयैकवद्भावस्य बहूपपादनसापेक्षत्वादत्र पक्षेऽरुच्या शाकपार्थिवादित्वमभिप्रेत्य पक्षान्तरमाह **श्रुतहानीति** । केचित्तु द्वन्द्वैकवद्भावपक्षे समासस्यैव साहित्ये लक्षणा स्यादित्यरुच्या पक्षान्तरोपदर्शनं ततश्च तत्पुरुषस्योत्तरपदार्थप्रधानत्वात्पूर्वपदस्य साहित्ये लक्षणायामपि न प्रधानभूते उत्तरपदे लक्षणेत्यभिप्राय इत्याहुः । श्रुतहान्यश्रुतग्रहस्याग्रहं प्रत्यधिकरणत्वाभावात्सप्तम्यनुपपत्तिमाशङ्क्याधिकरणत्वाभावेनाधिकरणसप्तम्या असंभवेऽप्यग्रहविषयतया विषयसप्तम्याः संभवान्न तदनुपपत्तिरित्याह **विषयसप्तमीयमिति** ।

**प०—** तात्पर्यमाह **ततो न कार्यं इति** । वृथात्वादित्यर्थः । आग्रह इति योज्यम् ॥
**मुक्तानां तारतम्ये द्वेषेर्ष्यादिमत्त्वरूपबाधकोद्धारः ॥**

**सु०— नन्वत्र संसारे वर्तमानं कमपि पक्षीकृत्यायं तारतम्येत इति साध्यते तत्र च मोक्षेऽपीति सिद्धसाधनतापरिहाराय विशेषणमुपादीयत इति वा । मोक्षेऽपीत्यनेन मुक्तं पक्षीकृत्य तारतम्येत इति वा । मुक्तं पक्षीकृत्य तारतम्येत इति साध्यते । तत्र प्राचीनेन तारतम्येन सिद्धसाधनतापरिहाराय मोक्षेऽपीति विशेषणमुपादीयत इति वा । नाद्यः । तस्य नित्यसंसारित्वस्यापि संभवेन बाधापत्तेः । निश्चितमोक्षपुरुषविशेषपक्षीकारेऽपि दृष्टान्तस्य साध्यविकलत्वात् । न हि संसारी मुक्तिगततारतम्योपेतः । द्वितीये अपिपदवैयर्थ्यम् । प्राक्तनतारतम्योपेतत्वेन सिद्धसाधनता च । तृतीयेऽपि दृष्टान्तस्य साध्यविकलतैव । तारतम्योपेतत्वं च हीनाधिकसद्भावो वान्यतरसद्भावो वा । आद्ये परमेश्वरेऽनैकान्त्यम् । द्वितीये सिद्धसाधनता ।**

**मुक्तानामप्यमुक्तेभ्योऽधिकत्वस्य परेणाङ्गीकृतत्वात् । मुक्ताधिकत्वसाधने देवदत्ते व्यभिचारस्तत्कथमेतत् ।**

**उच्यते । मुक्तास्तदानीन्तनेन परस्परं तारतम्येनोपेताश्चेतनत्वात्संसारिणो यथेत्ययमर्थोऽत्र विवक्षितः । तारतम्यं च कुतश्चिद्धीनत्वं कुतश्चिदधिकत्वमित्येतयोरन्यतरदिति नोक्तदोषः । सामान्यस्य च विशेषनिरासेनापाकरणे चातिप्रसङ्गः । यद्वा मुक्त्युत्तरक्षणवर्ती मुक्तः प्राग् यतोऽधिकत्वहीनत्वाभ्यामुपेतस्वरूपोऽभूदिदानीमपि ताभ्यामुपेत इति प्रतिज्ञार्थो वर्णनीयः । सामान्यत एव व्याप्तिरभिधातव्येति ।**

शे० — **नन्वत्रेति** । अत्र संसारे वर्तमानो मोक्षे तारतम्यवानिति साध्यत इति प्रथमकल्पार्थः । मोक्षेऽपीत्येतद्विशेषणमुक्तरूपपक्षलाभायैव न साध्यान्तर्गतम् । ततश्च मुक्तस्तारतम्यवानिति साध्यत इति द्वितीयकल्पार्थः । प्रकरणप्राप्तत्वादेव मुक्तस्य पक्षतासिद्धेर्न मुक्तरूपपक्षलाभाय मोक्षेऽपीति विशेषणं किन्तु प्रकरणप्राप्तमुक्तपक्षीकारेण मोक्षेऽपि तारतम्योपेतत्वं साध्यत इति तृतीयकल्पार्थः । आद्येऽपि संसारे वर्तमानो यः कश्चित्पुरुष पक्ष इत्यभिमतं किंवा तादृशो निश्चितमोक्षः पुरुषविशेषो वेति विकल्पं मनसि निधायाद्यं दूषयति **तस्येति** । द्वितीयमनूद्य दूषयति **निश्चितेति** । साध्यवैकल्यमेव विशदयति **न हीति** ॥ **वैयर्थ्यमिति** । मोक्ष इत्येतावतैव मुक्तस्य पक्षतालाभसंभवादिति भावः । अस्तु तर्ह्यपिपदत्यागेनैव पक्षतेत्यत आह **प्राक्तनेति** ॥ **दृष्टान्तस्येति** । संसारिणो मुक्तिगततारतम्योपेतत्वाभावादिति भावः ॥ **परमेश्वर इति** । तत्र स्वापेक्षया हीनसद्भावेऽप्यधिकसद्भावाभावादिति भावः । सिद्धसाधनतामेवोपपादयति **मुक्तानामिति** । मुक्ताधिकत्वस्यैव साधनात्तस्य चासिद्धत्वान्न सिद्धसाधनतेत्याह **मुक्तेति** ॥ **देवदत्त इति** । तस्य मुक्ताधिकत्वाभावात् । तथा च दृष्टान्ते साध्यवैकल्यमित्यत्र तात्पर्यम् ।

**विवक्षित इति** । अत्र प्राचीनतारतम्योपेतत्वेन सिद्धसाधनतापरिहाराय तदानीन्तनेनेत्युक्तम् । अमुक्ताधिकत्वस्य सिद्धत्वेन तद्वारणाय परस्परेति विशेषणमिति भावः ॥ **नोक्तदोष इति** । तथा च हीनाधिकसद्भावरूपतारतम्यसाधने तस्य परमेश्वरेऽसत्त्वादनैकान्त्यप्रसक्तावपि कुतश्चिद्धीनत्वकुतश्चिदुत्तमत्वयोरन्यतररूपतत्साधने भगवत्यपि तस्य सत्त्वान्नानैकान्त्यमिति भावः । नन्वत्र तदानीन्तनेत्यस्य यदि मुक्तिकालीनेत्यर्थस्तदा दृष्टान्ते साध्यवैकल्यम् । यदा संसारकालीनेति तदा बाधः । मुक्तस्य संसारकालीनतारतम्योपेतत्वाभावात् । एवं परस्परशब्दमात्रेणापि यदि मुक्तमात्रविवक्षा तर्हि दृष्टान्ते साध्यवैकल्यम् । यदि चामुक्तविवक्षा तर्हि सिद्धसाधनमेवेति किमनेन कृतं स्यादित्यतस्तदानी-

न्तनत्वादिना सामान्यरूपेणोपेतत्वस्यैवात्र विवक्षितत्वाददोषोऽन्यथा पर्वतोऽग्निमानित्यादिप्रसिद्धानुमानेऽपि सामान्यतो विवक्षितसाध्यस्यैतद्देशकालसंलग्नत्वानेतद्देशकालसंलग्नत्वादिविशेषनिरासेनापाकरणसंभवा-दनुमानमात्रोच्छेदः स्यादित्याशयेनाह **सामान्यस्य चेति** ।

एवमप्यपिपदवैयर्थ्यं न परिहृतमित्यत आह **यद्वेति** । मुक्त इत्येवोक्ते द्वितीयादिक्षणवर्तिनं मुक्तमादाय बाधः स्यात्तत्प्राक्कालतया तत्पूर्वप्रथमक्षणादिरूपमुक्तिकालस्यापि प्राप्तेस्तादृशमुक्तिकाले यतो-ऽधिकत्वहीनत्वाभ्यामुपेतरूपता द्वितीयक्षणादिरूपताकालेऽपि तत एवाधिकत्वहीनत्वाभ्यामुपेतस्वरूपत्वस्य प्रतिज्ञातार्थस्य प्राप्त्या तादृशमुक्तिकाले च किञ्चिदपेक्षयाऽधिकत्वाद्युपेतस्वरूपताया असिद्धत्वात्तत्परिहाराय मुक्त्युत्तरक्षणवर्तीत्युक्तम् । अत्र च मुक्त्युत्तरकालवर्तित्वेनैव तद्विशेषणे मुक्त्युत्तरकालस्य द्वितीयक्षणादि-रूपस्यापि प्राप्त्या तत्प्राक्कालतया तत्पूर्वप्रथमक्षणादिरूपमुक्तिकालस्यापि प्राप्तेरुक्तरीत्या बाध एव तत्परि-हारार्थं मुक्त्युत्तरक्षणग्रहणम् । ततश्च प्रागित्यनेन संसारकालस्यैव मुक्त्युत्तरक्षणपूर्वत्वेन प्राप्त्या संसारकाले यतोऽधिकत्वहीनत्वाभ्यामुपेतस्वरूपता मुक्त्युत्तरक्षणेऽपि तत एवाधिकत्वाद्युपेतस्वरूपतायाः प्रतिज्ञातार्थ-त्वप्राप्त्या संसारकाले च किञ्चिदपेक्षयाऽधिकत्वाद्युपेतस्वरूपतायाः सिद्धत्वान्न बाधितार्थत्वम् । मुक्ताना-मप्यमुक्तेभ्योऽधिकत्वस्य परेणाङ्गीकृतत्वात्सिद्धसाधनतापरिहारायाधिकहीनत्वाभ्यामित्युभयं गृहीतम् । हीनत्वमात्रविवक्षया सिद्धसाधनतापरिहारेऽपि विशिष्टसिद्धेरुद्देश्यत्वात्तत्सिद्ध्यर्थमधिकत्वस्याप्यनुसरणं कृतम् । संसारदशायां बृहस्पत्यादिशिष्यतयेन्द्रादेस्ततो हीनत्वेऽपि मोक्षे ततो हीनत्वाभावाद्बाधवारणाय हीनत्वाद्युपेतस्वरूपपर्यन्तधावनम् । ततश्च संसारे इन्द्रादेर्बृहस्पत्यादिशिष्यादिभावेन ततो हीनत्वेऽपि हीन-त्वाद्युपेतस्वरूपताया अभावाद्यदपेक्षया चेन्द्रादेस्तत्र हीनत्वाद्युपेतस्वरूपताऽभून्मोक्षे ततो हीनत्वाद्युपेत-स्वरूपतायाश्च सत्त्वान्न बाधः । नन्वत्र यश्चेतनः स मुक्तेः पूर्वं यतोऽधिकत्वहीनत्वाभ्यामुपेतस्वरूपोऽ-भून्मुक्त्यनन्तरमपि ताभ्यामुपेतस्वरूप इति व्याप्तेर्दृष्टान्ताभावेन ग्रहीतुमशक्यत्वाद्व्याप्यत्वासिद्धिः स्यादि-त्यतोऽत्र दृष्टान्ताभावेन विशेषव्याप्त्यभावेऽपि यश्चेतनो यस्मिन्क्षणे यदधिकत्वहीनत्वाभ्यामुपेतस्वरूपो भवति स तदुत्तरक्षणेऽपि ताभ्यामुपेतस्वरूपो भवतीति सामान्यव्याप्तौ देवदत्तादेरेव दृष्टान्तत्वेन न तत्प्रसङ्ग इत्याशयेनाह **सामान्यत एवेति** । चेतनत्वं च संसारोपलक्षितचेतनत्वमेवेति नेश्वरे व्यभिचार इति ध्येयम् ।

**स०** — तारम्योपेतत्वं यदि गृहीताधिकसद्भावस्तर्हीश्वरेनैकान्त्यम् । यद्यन्यतरसद्भावस्तर्हि सिद्धसाधनत्वमित्यत आह **तारतम्यं चेति** ।। **नोक्तदोषः** ईश्वरेनैकान्त्यलक्षणो दोषो नेत्यर्थः । तथापि अन्यतरत् किं कुतश्चिद्धीनत्वमेव वाऽधिकत्वमेव वा । नाद्यः ईश्वरेनैकान्त्यात् । नान्त्यः । सिद्ध-साधनादित्यतः सामान्यस्यैवात्र विवक्षितत्वात् तस्य च विशेषविकल्पेन निरासस्यातिप्रसङ्गित्वान्न दोष

इत्याह **सामान्यस्येति** । यद्वैतदस्वरसादेव पक्षान्तरमाह **यद्वेति** । अत्रापि संसारित्वं हेतुविशेषणम् । अतो नेश्वरे व्यभिचार इति बोध्यम् ।

**प०-- तस्येति** । पक्षीकृतसंसारिजीवस्येत्यर्थः । मोक्षस्यैवाभावेन मुक्तिगततारतम्योपेत इति विवक्षितसाध्यस्याभावनिश्चयादिति भावः ॥ **नोक्तदोष इति** । बाधसिद्धसाधनतासाध्यवैकल्य-व्यभिचाररूपदोषो नेत्यर्थः । मुक्तस्य पक्षीकरणात् बाधस्य, तदानींतनेत्युक्त्या प्राचीनतारतम्येन परस्परमित्युक्त्या च मुक्तादाधिक्येन वा सिद्धसाधनत्वस्य, तदानीमित्यस्य समभिव्याहृतपरतया दृष्टांते संसारकालीनतारतम्यसत्वेन साध्यवैकल्यस्य, अन्यतरदित्युक्त्या सर्वाधिके हरौ व्यभिचारस्य च निरासा-दिति भावः । नन्वन्यतरदित्यत्र किं कुतश्चिद्धीनत्वं विवक्षितं अथाऽधिकत्वम् । आद्ये हरौ व्यभिचारः । अन्त्ये मुक्तः कुतश्चिन्मुक्तादाधिक्योपेत इति साध्यार्थः स्यात् । तथा च दृष्टान्ते संसारिणि मुक्तादाधिक्याभावात्साध्यहीनतेत्यत आह **सामान्यस्य चेति** । कुतश्चिद्धीनत्वमधिकत्वं च द्वयमपि तारतम्यशब्दार्थः । तत्रोभयसाधारण्येनोक्तस्य तारतम्यमित्युक्तदिशा विशेषविकल्पनिरासेना-पाकरणे पर्वतोऽग्निमानित्यत्र कारीषाग्निमत्त्वे बाधः । तदन्याग्निमत्त्वे दृष्टांते साध्यहीनतेत्यपि निरास-प्रसङ्गादित्यर्थः । तारतम्यपदेन उभयमपि उपादाय पक्षान्तरमाह **यद्वा मुक्त्युत्तरक्षणवर्तीति** । चैत्र-मुक्त्युत्तरक्षणवर्ती संसारिमैत्रोऽपि भवतीति तद्व्यावृत्तये मुक्त इति विशेष्योक्तिः । स्वमुक्त्युत्तरक्षणवर्ती मुक्त इत्यर्थः । मुक्त इत्येवोक्तौ चिरमुक्तस्यापि प्राह्या प्राक्पदेन मुक्तिकालग्रहणे परो बाधं ब्रूयात् । अतो विशेषणोक्तिः ॥ **प्रागिति** । अमुक्तिदशायाम् ॥ **यत इति** । मुक्तात् कतिपयादधिकत्वेन हीनत्वेन च प्राग्मुक्त आसीदिति अधुनापि तथेत्यर्थः ॥ **स्वरूप इति** । मुक्तावप्यनुवृत्तचिदानन्दघना-त्मस्वरूपोक्त्या मुक्तावननुवृत्तदेहेन्द्रियाद्युपाधिरूपविशेषणमादाय बाधो(षोढः)ऽपास्तः ॥ **सामान्यत एवेति** । य एवंरूपः प्राक् स पश्चादपि तथा यथा निगडमुक्त इति वा यः प्राग्यत्स्वरूपः स उत्तर-कालेपि तथेति वा ध्येयेत्यर्थः । एवकारेण विशिष्य व्याप्तौ दृष्टान्तान्वेषणक्लेशं ईश्वरे व्यभिचारचोद्यं च निराचष्टे । सामान्यव्याप्तेरीश्वरेऽपि सत्वेनाव्यभिचारात् ।

**या०— नोक्तदोष इति** । तदानीन्तनेनेत्युक्त्या न प्राचीनेन तारतम्येन सिद्धसाधनता । अन्यतरदित्युक्त्या नेश्वरेऽनैकान्त्यम् । परस्परमित्युक्त्या च नामुक्ताधिकत्वमादाय सिद्धसाध्यतेत्यर्थः । ननु तदानीन्तनेनेत्यस्य यदि मुक्तिकालीनेनेत्यर्थस्तदा दृष्टान्ते साध्यवैकल्यम् । यदा संसारकालीने-नेति तदा बाध इत्यत आह **सामान्यस्य चेति** । तदानीन्तनत्वेन सामान्येनैव रूपेण विवक्षित-

स्येत्यर्थः ॥ **अतिप्रसङ्ग इति** । पर्वतोऽग्निमानिति प्रसिद्धानुमानेऽपि सामान्यतो विवक्षितस्य साध्यस्यै-तद्देशकालसंलग्नानेतद्देशकालसंलग्नत्वादिरूपविशेषनिरासेनापाकरणप्रसङ्ग इत्यर्थः । अत्रापिपदवैयर्थ्यं न परिहृतमित्यस्वरसादाह **यद्वा मुक्त्युत्तरक्षणेति** । इदं च विशेषणं प्रागित्यनेन जीवन्मुक्तिकालापेक्षया प्राक्कालस्य इदानीमित्यनेन जीवन्मुक्तिकालस्य च ग्रहणे प्राचीनतारतम्यस्यैव सिद्ध्या सिद्धसाध्यता-परिहाराय । अस्मिंश्च विशेषणे दत्ते प्रागित्यनेन जीवन्मुक्तिकालस्येदानीमित्यनेन परममुक्त्युत्तरकाल-स्यैव प्राप्त्या न सिद्धसाध्यताशङ्काऽवकाशः । मुक्त्युत्तरक्षणग्रहणं च प्रागित्यनेन संसारकालस्यैव लाभाय । अन्यथा मुक्त्युत्तरकालस्य कल्पादिरूपस्यापि प्राप्त्या तत्प्राक्कालो मुक्तिकालेऽपि स्यात् । तत्र च यतोऽधिकत्वहीनत्वाभ्यामुपेतस्वरूपोऽभूदित्यस्यासिद्धत्वेनानुवादासम्भवाद्बाध इति शङ्का स्यादिति ध्येयम् । संसारदशायां बृहस्पत्यादीनां कश्यपादीनां च गुरुत्वादिनेन्द्रादेस्ततो हीनत्वेऽपि मोक्षे तदु-पेतत्वाभावाद्बाधोऽतः स्वरूप इत्युक्तम् । नन्वेवमिदानीमित्यनेन मुक्त्युत्तरक्षणस्य परामर्शात्तत्रत्यतार-तम्योपेतस्वरूपत्वस्य दृष्टान्ते परं प्रत्यसिद्ध्या कथं व्याप्तिग्रह इत्यत आह **सामान्यत एवेति** । यश्चे-तनः स पूर्वोत्तरकालयोरेकविधस्वरूपो यथा सम्प्रतिपन्न इति वा यश्चेतनः स स्वकालात्प्राक् यदवधिका-धिक्यहीनत्वाभ्यामुपेतस्वरूपोऽभूत्तदानीमपि ताभ्यामुपेतस्वरूप इति वा सामान्यत एव व्याप्तिरभिधात-व्येत्यर्थः । अत्रापि साध्येऽन्यतरोपेतत्वस्य विवक्षितत्वान्नेश्वरे व्यभिचार इति ध्येयम् ।

---

श्री० — **मोक्षेऽपीत्यनेनेति** । मोक्षेऽपीत्यनेन मुक्तपक्षीकारः सूचितः । तथा च तस्य तत्सूचन एव चरितार्थत्वं न तु साध्ये तत्प्रक्षेप इत्यर्थः ॥ **अपिपदेति** । मुक्तपक्षीकरणसूचनस्य मोक्ष इत्यनेनैव लब्धत्वादित्याशयः । अस्तु वैयर्थ्यमनुमानस्य किं दूषणमित्यत आह **प्राक्तनेति** ॥ **मुक्तं पक्षीकृत्येति** । अत्र मुक्तपक्षीकरणं बहिरेव द्रष्टव्यम् । न तु मोक्षेऽपीत्यनेन सूचितमित्यर्थः ॥ **अनैकान्त्यमिति** । तत्राधिकसद्भावादिति भावः । **नोक्तदोष इति** । परमेश्वरे कुतश्चिदधिकत्व-सद्भावेन नानैकान्त्यमित्यर्थः ॥

सु० — **आभासानुद्धरति** इत्युक्त इति ।

अनु० — इत्युक्त उत्तरं किं ते

**उक्ते प्रयुक्ते** । **व्याप्तिपक्षधर्मत्वयोः प्रमितत्वान्न किमप्युत्तरमस्तीति भावः** । **बाधित-विषयमनुमानमित्यत आह** कल्पनेति ।

कल्पनामात्रवादिनः ॥

कल्पनामात्रेण वदतीति तथोक्तः । **पूर्वेणैव संबन्धः । श्रुतीनामन्यार्थत्वात्प्रमाणान्तरस्य चाभावात्स्वोत्प्रेक्षयैव मुक्तानां तारतम्याभावं वदतस्तवोत्तरं किमिति ।**

**यद्येवमनुमीयेत तदा मुक्ता दुःखाद्युपेताश्चेतनत्वात्संसारिवदित्यप्यनुमीयेतेत्यतिप्रसङ्गपराहतमनुमानमित्यत आह** न चेति ।

न च दुःखादिकं कल्प्यं

कल्प्यं **अनुमेयं मुक्तस्य । आदिपदेनापरिपूर्णानन्दत्वादेः संग्रहः । कुत इत्यत आह** निर्दुःखत्वेति ।

निर्दुःखत्वश्रुतेर्बलात् ॥

**अत्राप्यादिपदं ग्राह्यम् । अयमभिसन्धिः । समानयोगक्षेमत्वाभिप्रायेण खल्वयमतिप्रसङ्गो वाच्यो नान्यथा व्याप्त्यभावात् । न च प्रकृते तदस्ति । दुःखादिसाधकस्य निर्दुःखत्वादिकं प्रतिपादयन्त्या श्रुत्या बाधितत्वात् । श्रुतेरपौरुषेयत्वेन धर्मिग्राहकत्वेन चानुमानतो बलवत्त्वात् । तारतम्यानुमानस्य चाबाधितत्वादिति ।**

**शे० — श्रुतीनामिति** । परमं साम्यमुपैतीत्यादिश्रुतीनामित्यर्थः । अन्यार्थत्वाद्दुःखाद्यभावसाम्यार्थत्वात् ॥ **इत्यप्यनुमीयेतेति** । न चेश्वरे व्यभिचारः । तस्य पक्षसमत्वादित्याशयात् । उक्तरीत्या चेतनत्वविवक्षणेन वा तत्परिहारादित्याशयात् । अतो दुःखाद्यनुमेयेत्युत्तरग्रन्थानुसारेण कल्प्यमित्येतद्व्याख्याति **कल्प्यमिति ॥ व्याप्त्यभावादिति** । यत्र चेतनत्वेन तारतम्यसाधनं तत्र तेन दुःखस्यापि साधनमिति प्रसङ्गमूलभूतव्याप्तेर्दृष्टान्ताभावादभावेन व्याप्तिविकलत्वादित्यर्थः । अस्त्वविशेषव्याप्त्याश्रयणेनैव तर्ह्ययं प्रसङ्ग इत्यत आह **न चेति** ।

**प० — पूर्वेणैवेति** । किमुत्तरं त इत्यनेनेत्यर्थः । सामान्यप्रमाणेन हि बाधो वाच्यः । तच्च श्रुतयो वा तदन्यद्वा । तदुभयमपि अश्रुतासमतेत्यादिना निरस्तमिति भावेनाह **श्रुतीनामिति** । परमं साम्यमित्यादीनां दुःखाद्यभावसाम्यं चेत्यादिना प्रागेवान्यार्थत्वोक्तेरिति भावः । ननु समानयोगक्षेमत्वाभिप्रायेण नायमतिप्रसङ्गः किन्तु 'यदि मुक्तास्तारतम्योपेता इत्यनुमीयते तर्हि दुःखाद्युपेता इत्यप्यनुमीयतामिति वा तारतम्योपेता यदि स्युस्तर्हि दुःखाद्युपेताः स्युरिति वातिप्रसङ्ग उच्यत इत्यत आह **नान्यथेति** । कुत इत्यत आह **व्याप्त्यभावादिति** । उक्तद्विरूपातिप्रसङ्गेष्वापाद्यापादकयोर्व्याप्त्यभावादित्यर्थः । अस्तु तर्हि भवदुक्त एवाभिप्राय इत्यत आह **न च प्रकृते तदस्तीति** । समानयोगक्षेमत्वमित्यर्थः ॥ **धर्मीति** । श्रुतिसिद्धमुक्तस्यैव त्वया पक्षीकर्तव्यत्वात् श्रुत्या च निर्दुःखतयैव तत्सिद्धेरिति भावः ।

या० — व्याप्त्यभावादिति । यद्येनाविशिष्टं तत्तथेति व्याप्तेर्वक्तुमशक्यत्वादित्यर्थः ।

श्री० — अन्यथेति । प्रकरणबलादेव ज्ञानसंभवात्किं स्पष्टं व्याख्यानेनेत्यङ्गीकार इत्यर्थः ॥
॥ ३-४-४ ॥

सु० — एतदेव विवृण्वन्मुक्तस्य निर्दुःखत्वादि प्रतिपादयन्तीः श्रुतीस्तावत्पठित्वा तासां तात्पर्यमाह शोकमिति ।

अनु० — शोकं तरत्यात्मवेत्ता तीर्णः सर्वानदुःखभाक् ॥
येनानन्द्येव भवति न शोचति कदाचन ॥
किल्बिषस्पृत्पितुषणिररं हित इहेश्वरः ॥
यं यमन्तमभिप्रेप्सुः स सङ्कल्पाद्भवेदिह ॥
इत्यादिश्रुतयो मानं निर्दुःखत्वादिसम्पदि ॥

अनेन तरति शोकमात्मविदिति श्रुतिमुपादत्ते । वेत्ता वेदिता । विचारणार्थस्य विन्दतेर्वा रूपमेतत् । तीर्णः सर्वानित्यनेन तीर्णो हि तदा सर्वाञ्छोकानिति । अदुःखभागित्यनेन नानानन्दं कश्चिदुपस्पृशतीति । येनेत्यनेन तद्वै जैवं मनो येनानन्द्येव भवतीत्यथो न शोचतीति । एवशब्देन शोकाभावे लब्धेऽपि यत्पुनः 'न शोचती'त्युक्तं तस्याभिप्रायः कदाचनेति ।

किल्बिषस्पृदित्यनेन सर्वे नन्दन्ति यशसाऽऽगतेन सभासाहेन सख्या सखायः । किल्बिषऽस्पृत्पितुऽषणिर्ह्येषामरं हितो भवति वाजिनाये'ति मन्त्रम् ( ऋ. १०-७१-१० ) परस्परं सखायः सर्वे मुक्ता आगतेन स्वागतेन यशसा (यशस्वता)(यशस्विना)यशोवता सभां सहत इति सभासहः कर्मण्यण् । तेन सख्या परमेश्वरेण निमित्तेन नन्दन्ति । कथं । हि यस्मादीश्वर एषां मुक्तानां किल्बिषस्पृद् । दुःखं न सहते । स्पर्धतेरर्थे स्पृधेति धात्वन्तरं ततः क्विप् । पितुषणिः अन्नस्य दाता । अन्नं वै पितुरिति श्रुतेः । षणु दाने । अस्मादिकारप्रत्ययः । अरं (मलं) मत्यर्थम् । वाजिनायेन्द्रियाय हितो भवति । इन्द्रियं वै वाजिनमिति श्रुतेः । इह मुक्तविषये । यं यमित्यनेन यं यमन्तमभिकामो भवति सोऽस्य सङ्कल्पादेव भवतीति । अन्तं स्थानम् । इह मुक्तौ । निर्दुःखत्वादिसंपदि मुक्तानाम् ।

शे० — ननु तुर्दि नुर्दि विद्यति विन्त इत्यपीति वृत्तौ विनत्तिर्विद्यतिः पच् वच् इत्यादि कौमुद्यां चानुदात्तसंग्राहककारिकायां श्यना श्नमा च निर्देशाद्दैवादिकस्य विद्यते रौधादिकस्य विनत्तेरेव च ग्रहणेन तयोरेवानुदात्तत्वं न तु वित्तिविन्दत्योरौदादिकतौदादिकयोः श्यना श्नमा च निर्देशस्यान्य-

विकरणव्यावृत्त्यर्थत्वात् । किन्तु वित्तिविन्दत्योरुदात्तत्वमेवेत्याकरे स्थितम् । तथा च विद्यतिविनत्यो-रेवानुदात्ततया ततः परस्य वलादेरार्धधातुकस्यैकाच उपदेशेऽनुदात्तादितीण्निषेधसंभवेऽप्युदात्तयोर्वित्ति-विन्दत्योः परस्यैकाच इतीण्निषेधाप्रसङ्गाद्वेदिता विद्यानां, वेदिता धनस्येत्यादौ तयोरिड्दर्शनाच्च सेट्कत्व-मेवास्थेयम् । तथा च ज्ञानार्थस्य वित्तेर्वेदितेत्येव रूपेण भाव्यम् । अत एव ज्ञानार्थे षट्दर्शनवेत्तेत्या-द्यपशब्द एवेत्याकरे स्थितम् । तत्कथं वेत्तेति तद्रूपमित्यतोऽत्रेडभावश्छान्दस इत्याशयेनाह **वेत्ता वेदितेति** । अत्र पक्षे छान्दसत्वाश्रयणं भवतीत्यपरितोषात्पक्षान्तरमाह **विचारणार्थस्येति** । विद विचारण इति रौधादिकस्य विनत्तेरित्यर्थः । रूपमेतदिति वक्ष्यमाणमत्रापि संबध्यते । अत्र पक्षे विन्ते इति वेत्तेति व्युत्पत्तिर्बोध्या । तथा च वेत्तेत्यस्य विनत्तिरूपत्वपक्षे तस्योक्तरीत्याऽनुदात्तत्वात्तत्परस्य वलादेरार्धधातुकस्यैकाच इतीण्निषेधाद्युक्त एव अत्रेडभाव इति भावः ॥ **विन्दतेर्वेति** । तौदादिकस्य विदॢ लाभ इत्यस्येत्यर्थः । यद्यपि विन्दतेरुदात्ततायां उक्तरीत्या स्थितत्वादेकाच इति निषेधानुपपत्त्या इट्प्रसङ्गेन विन्दतिरूपत्वाश्रयणमनर्थकम् । तथाऽपि चान्द्रदौर्गादिभिर्लाभार्थस्य विन्दतेरप्यनुदात्तत्वेनेष्ट-त्वाद्भाष्येऽपि कः पुनरुदात्ता इत्याद्यनुदात्तसंग्रहे विन्दतिविद्यती इति विन्दतेरप्यनुदात्ततया संगृहीत-त्वादनुदात्तत्वमेवेत्याशयेनैतत्पक्षाश्रयणमुचितमेव । अत एव चान्द्रसूत्रम् 'विदेरलुक् इती'ति । यथा चैतत्तथा विनत्तिर्विद्यतिरित्यनिट्कारिकाव्याख्यानावसरे स्पष्टमिति दिक् ।

---

सोमेन यजेतेत्यादिवन्मत्वर्थलक्षणामाश्रित्य व्याचष्टे **यशोवतेति** । ननु स्वादिष्वसर्वनामस्थान इति सूत्रप्राप्तपदसंज्ञापवादेन भसंज्ञायास्तसौ मत्वर्थ इति सूत्रेण विधानाद्यशःशब्दस्य पदसंज्ञाभावेन ससजुषोरुरिति पदान्तसापेक्षरुत्वस्याप्राप्त्या तन्मूलकस्य हशि चेत्युत्वस्य सुतरामप्राप्तेर्यशस्वतेति भवितव्यम् । यशोवतेति तु कथमिति चेत् । अत्र गुरवः । अष्टमस्य प्रथमे पदस्येति सूत्रवृत्तौ वक्ष्यमाणवाक्यापेक्षया पदस्येत्यधिकृत्य तस्य षष्ठ्यर्थव्यवस्था द्रष्टव्या । क्वचित्स्थानषष्ठी क्वचिदवयवषष्ठीति व्याख्यातत्वात् । पदावयवस्यापि पदत्वेन वक्ता पक्तेत्यादाविव पदकार्यस्य संभवात् । न च चोः कुरित्यत्र वृत्तौ झलि पदान्ते चेति वचनाद्वक्तेत्यादौ कुत्वस्य झल्परत्वेनैवोपपत्तेर्न तदर्थमवयवस्य पदत्वापेक्षेति वाच्यम् । पदस्येत्यवयवषष्ठीबलादेव परिसंख्यान्यायेन नाझलीति व्याख्यानात् । अन्यथाऽवयवपदत्वेन वाचो वाच इत्यादावपि कुत्वप्रसङ्गात् । अवश्यं चैतदेवं पदस्येत्यवयवषष्ठीव्याख्यानम् । अन्यथा नलोपः प्राति-पदिकान्तस्येत्यत्रान्तग्रहणाभावेऽपि पदस्येत्यधिकारेऽलोन्त्यपरिभाषया पदान्त्यस्यैव लोपप्राप्त्या पदावयव-लोपस्याप्राप्तेस्तत्परिसंख्याप्रतिषेधार्थकान्तग्रहणानर्थक्यप्रसङ्गात् । तथा च षष्ठी स्थानेयोगेति वचनात्पदस्येति स्थानषष्ठीनियमे उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येत्युक्तस्वरितत्वमप्यलोन्त्यपरिभाषया कुमार्यावित्यत्रेव

स्यान्न तु कुमार्थ इत्यादौ । तत्र सकारस्य पदान्तत्वात्तस्य च व्यञ्जनत्वेन स्वरविधावविद्यमानवद्भावात् । तथैकादश उदात्तत्वेनोदात्त इत्यादावप्यलोन्त्यपरिभाषया वृक्षावित्यत्रैवोदात्त आदेशः स्यात् । न तु वृक्षानित्यादौ । तत्रापि नकारादिव्यञ्जनस्यैव पदान्तत्वात् । तस्मादवयवपदत्वावश्यम्भावात्तदाश्रयेण पदकार्योपपत्तिरिति । एवमेव रजोवांस्तमोवानित्यादिगीतातात्पर्यटीकाऽप्युपपादनीयेति दिक् ॥ **कर्मण्यणिति** । सभाशब्दे कर्मण्युपपदे षह मर्षण इत्यस्मादणि णित्वादत उपधाया इत्युपधावृद्धौ धात्वादिषकारस्य सकारे सति साहेति रूपसिद्धिरिति भावः । ननु स्पर्ध सङ्घर्ष इत्यस्य कथं स्पृदिति रूपम् । संप्रसारणाकारलोपयोर्लक्षणाभावेनासंभवादित्यतो नेदं स्पर्धते रूपं किन्तु धात्वन्तरस्यैव । न चैवं न सहत इति स्पर्धत्यर्थकथनानुपपत्तिरिति वाच्यम् । स्पर्धत्यर्थकधात्वन्तराश्रयणेन तदर्थकथनाविरोधादित्याह **स्पर्धतेरर्थ इति** । न च स्पर्धत इति स्पृदिति कर्तरि क्विपि बहुलं छन्दसीति रेफस्य ऋकारे संप्रसारणेऽकारलोपे च सति स्पृदिति रूपनिष्पत्तेर्वेदापभाष्यरीत्योपपत्तौ न तदर्थकधात्वन्तराश्रयणमुचितमिति वाच्यम् । इत्यनुवर्तत इति वदता वृत्तिकृतैतत्सूत्रस्थबाहुलकस्य ह्वयत्यवच्छिन्नत्वाभ्युपगमात् । तस्य च प्रागुक्तसंप्रसारणनिमित्ताभावेऽपि वेदे ह्वयतेरेव संप्रसारणविधायकत्वसिद्ध्या स्पर्धतावपि संप्रसारणाकारलोपसंपादनाक्षमत्वाभिप्रायेण धात्वन्तराश्रयणस्य टीकाकारीयस्योपपन्नत्वादिति ज्ञेयम् ॥ **ततः क्विबिति** । क्विप् चेति कर्तरि क्विबित्यर्थः । ततश्च कृदन्तत्वात्कृत्तद्धितेति प्रातिपदिकत्वं क्वित्त्वाद्गुणाभावश्चेत्याशयः ॥ **इकारप्रत्यय इति** । खनिकष्यजज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्चेत्यौणादिक इकारप्रत्यय इत्यर्थः ।

स०— ननु विद ज्ञान इत्यस्य सेट्त्वात् वेदितेति भवितव्यं वेत्तेति तु कथमित्यत आह **वेत्ता वेदितेति** ॥ **विचारणार्थस्येति** । विन्ते इति वेत्ता । तस्य चानिट्त्वमिति भावः । **यशसा यशोवतेति** । सोमेन यजेतेत्यादिवत् मत्वर्थलक्षणयेदं व्याख्यानमिति ज्ञेयम् । अत्र वदन्ति । नित्यस्यापि अस्मायामेधास्रजो विनिरिति विहितविनिप्रत्ययस्य मतुबभ्यनुज्ञानेन विधानात्तत्संभवेपि तसौ मत्वर्थे इति सूत्रेण 'आकडारादेका संज्ञे'ति नियमात् 'स्वादिष्वसर्वनामस्थाने' इतिसूत्रप्राप्तपदसंज्ञापवादेन भसंज्ञाविधानात् यशःशब्दस्य पदसंज्ञाभावेन 'ससजुषो रुरि'ति रुत्वस्य पदान्तत्वसापेक्षत्वेनाप्राप्तेस्तन्मूलकस्य 'हशि च' इत्युत्वस्य सुतरामप्राप्तेर्यशस्वतेति भवितव्ये यशोवतेत्यसाध्विति । अत्र ब्रूमः । अष्टमाध्याये प्रथमचरणे पदस्येति सूत्रवृत्तौ वक्ष्यमाणवाक्यापेक्षया पदस्येत्यधिकृतस्य षष्ठ्यर्थव्यवस्था द्रष्टव्या । क्वचित्स्थानषष्ठी क्वचिदवयवषष्ठीति व्याख्यानात् पदावयवस्यापि पदत्वेन वक्ता वक्तेत्यादाविव पदकार्यस्य संभवात् । न च 'चोः कुः' इत्यत्र वृत्तौ झलि पदान्ते चेति वचनात् वक्तेत्यादौ कुत्वस्य झल्परत्वेन-

वोपपत्तेः न तदर्थमवयवस्य पदत्वापेक्षेति वाच्यम् । पदस्येत्यवयवषष्ठीबलादेव परिसंख्यान्यायेन झलीति-व्याख्यानात् । अन्यथाऽवयवस्य पदत्वेन वाचीत्यादावपि कुत्वापत्तेः । अवश्यं चैतदेवं पदस्येत्यवयव-षष्ठीत्याख्यानम् । अन्यथा 'नलोपः प्रतिपदिकान्तस्य' इत्यत्रान्तग्रहणाभावेपि पदस्येत्यधिकारेऽलोन्त्य-परिभाषया पदान्त्यस्यैव लोपप्राप्तेः पदावयवलोपस्याप्राप्तेः तत्परिसंख्याप्रतिषेधकान्तग्रहणानर्थक्य-प्रसङ्गात् । तथा षष्ठी स्थानेयोगेति वचनात् पदस्येति स्थानषष्ठीनियमे उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्येत्युक्तस्वरितत्वमपि अलोन्त्यपरिभाषया कुमार्यौ इत्यत्रैव स्यात् न तु कुमार्य इत्यादौ । तत्र सकारस्य पदान्तत्वात् । न च व्यञ्जनत्वेन स्वरविधावविद्यमानवद्भावात् । तथा एकादेश उदात्तेनोदात्त इत्यत्रापि अलोन्त्यपरिभाषया वृक्षावित्यत्रैवोदात्त आदेशः स्यात् । न तु वृक्षानित्यादौ । तत्रापि नकारादिव्यञ्जनस्यैव पदान्तत्वात् । तस्मादवयवस्य पदत्वावश्यंभावात् यशोवतेति साधुः ।

ननु स्पर्ध संघर्ष इत्यस्मात् किल्बिषं स्पर्धत इति किल्बिषस्पृत् इति कथं । संप्रसारणाकारलोप-योरविहितत्वेनासंभवादित्यत आह **स्पर्धतेरर्थ इति** । तथाच स्पृध इत्यस्येदं रूपम् । तथाच संप्रसारणाकारलोपौ कथमिति नानुपपत्तिः । न च स्पर्ध इत्यस्मात् क्विपि समागते अकारलोपविधायका-भावेनाकारलोपासंभवेपि क्विपः कित्वात् संप्रसारणं किं न स्यादिति वाच्यम् । ग्रहिज्यादिष्वभावेन वच्यादिष्वभावेन च संप्रसारणानुपपत्तेरिति भावः ।

प०— विद ज्ञाने इत्यस्य सेट्त्वेऽप्यागमशासनमनित्यमिति मूले वेत्तेत्युक्तमिति भावेनाह **वेदितेति** । ज्ञातेत्यर्थः । विद विचारण इत्यस्यानिट्त्वादाह **विचारणेति** । आत्मविचारक इत्यर्थे आत्मवेत्तेत्युक्तमित्यर्थः ॥ **इति मन्त्रमिति** । उपादत्त इति पूर्वत्रात्र चानुषज्यते । मन्त्रार्थमाह **परस्परमिति** । यशोवतेति लेखकदोषमूलोऽयं पाठः । यशस्विनेति वा यशस्वतेति पाठः साधुः । अस्मायामेधास्रजो विनिरिति सूत्रे विन्प्रत्ययो मतुप्चेति द्वयोर्विधानेऽपि रुत्वप्राप्तेरभावात् । केचित्तु यशोवता यशःप्राप्तवतेत्यर्थः । अवतेति पदच्छेदः अव रक्षणगतीत्याद्युक्तेर्गत्यर्थस्यावतेरूपमेतदित्याहुः अन्ये तु तसौ मत्वर्थे तां तसां तौ मत्वर्थे परतो भसंज्ञौ भवत इति भसंज्ञानाश्रिता । अतः पदत्वात् ससजुषोरुरिति रुत्वोत्वगुणाः । यद्वा यशोवाति गच्छति प्राप्नोतीति यशोवान् तेन यशोवता गत्यर्थस्य शत्रन्तस्य वातेरातो लोप इति योगविभागेनातो लोपे रूपमेतदित्याहुः ॥ **कर्मण्यणिति** । कर्मकारके उपपदे सति धातोरणिति सूत्रार्थः । तथा च सभापदे कर्मणि उपपदे षह मर्षण इत्यतोऽणि अत उपधाया

इत्युपधावृद्धौ धात्वादेः षः स इति षस्य सत्वे सभासाह इति रूपमिति भावः ॥ **स्पर्धतेरिति** । स्पर्ध सङ्घर्षण इत्युक्तेः असहनरूपसङ्घर्षणार्थ इत्यर्थः ॥ **स्वव्याहतत्वाच्चेति** । मुक्तपदेनैव निर्दुःखत्व-प्राप्तेरिति भावः ।

**या०— वेदितेति** । तथा च ज्ञानार्थस्य विदेः सेट्कत्वाद्वेत्तेति मूलं छान्दसमिति भावः । **विचारणार्थस्येति** । तस्यानिट्कत्वादिति भावः ॥ **यशोवतेति** । यशस्शब्दस्य तसौ मत्वर्थे इत्यनेन मत्वादपदत्वे कथं रुत्वमिति विचार्यम् ॥ **कर्मण्यणिति** । सभाशब्दे कर्मण्युपपदे षह मर्षण इत्यस्मा-दणि उपधावृद्धौ धात्वादेः षस्य सकारे साहेति रूपमिति भावः ॥ **स्पर्धतेरर्थ इति** । स्पर्ध सङ्घर्ष इति धातुव्याख्यानादसहनलक्षणसङ्घर्षरूपेऽर्थ इत्यर्थः ॥ **धात्वन्तरमिति** । अन्यथा किल्बिषस्पर्ध इति रूपं स्यादिति भावः ॥

**सु०— ततः किमित्यत आह** अत इति ।

**अनु०—** अतो दुःखाद्यनुमया नावकाशोऽत्र लभ्यते ॥

**श्रुतिबाधितत्वादित्यर्थः** । अत्र **मुक्तेषु** । **मुक्ता दुःखाद्युपेता इति प्रतिज्ञायाः स्वव्या-हतत्वाच्चेत्यपि द्रष्टव्यम्** । **ततोऽपि किमित्यत आह** तारतम्येति ।

---

तारतम्यानुमा तस्माद्भवेन्नातिप्रसङ्गिनी ॥

तस्मात् **बाधाभावेन समानयोगक्षेमत्वाभावात्** ।

**शे०—**'ईशोऽनीशो जगन्मिथ्या दुःखी मुक्तोऽभिधा न हीति' प्रतिज्ञाव्याघात इत्याचार्यीय पूर्वोक्त्यनुरोधेन दोषान्तरमाह **स्वव्याहतत्वाच्चेतीति** । दुःखाभाववत एव मुक्तशब्दवाच्यत्वादिति भावः । 'तारतम्यानुमा तस्माद्भवेन्नातिप्रसङ्गिनी'ति मूलपाठः । तत्र मौलस्य तस्मादित्यनुवादपूर्वकं व्याख्यानं बाधाभावेनेति । क्वचित्तारतम्यानुमानेनेति पाठः । तत्राविशेषात्तेनेति वक्तव्ये तस्मादित्य-नुवादः कृत इति द्रष्टव्यम् ॥ ३–४–४ ॥

**प०— समानेति** । दुःखाद्युपेतत्वसाधकानुमानसमानेत्यर्थः ॥ **मुक्ततारतम्ये अनुमाना-न्तरम्** ॥ ३–४–४ ॥

**या०— स्वव्याहतत्वाच्चेति** । दुःखाभाववत एव मुक्तशब्दवाच्यत्वादिति भावः ॥ ॥ ३–४–४ ॥

सु०— मुक्ततारतम्यसाधनमुपसंहरति श्रुतीति ।

अनु०— श्रुतियुक्तिबलादेव तारतम्यं विभाव्यते ॥
मुक्तावपि ततः केऽत्र विरोधं कर्तुमीशते ॥ ३-४-४ ॥

विभाव्यते सम्यगनुभूयते । के वादिनो न केऽपि । अत्र मुक्ततारतम्यविषये ॥

॥ इति कामचाराधिकरणम् ॥ ३-४-४ ॥



## ॥ अथ उभयलिङ्ग-आधिकारिकाधिकरणे ॥

सू० — ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ॥ ॐ न चाधिकारिकमपि पतनानुमाना-त्तदयोगात् ॐ ॥ अत्र प्रथमाधिकरणेऽनादिज्ञानयोग्यतावतामेव ज्ञानप्राप्तिर्नान्येषामित्युक्तम् । द्वितीये च देवतादिपदप्राप्तिरनादितद्योग्यतोपेतानामेव नेतरेषामित्यभिहितम् । सेयं जीवानां नानाविधानादियोग्यता प्रसिद्धैस्तैस्तैः कारणैरुत्कर्षापकर्षप्राप्तिर्भवतीति वदद्भिर्वादिभिर्नाभ्युप-गम्यतेऽतस्तां साधयितुमाह अनादीति ।

अनु० — ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ॥
ॐ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॐ ॥
अनादियोग्यतां चैव कलिवाणीश्वरावधिम् ।
को निवारयितुं शक्तो युक्त्यागमबलोद्धताम् ॥

न केवलं मुक्तानां तारतम्यमिति चार्थः । अनेन मुक्ततारतम्यस्यापीदं साधकमित्युक्तं भवति । अनादेर्नित्यत्वात् । एवशब्दस्य त एवेति संबन्धः । कलिवाणीश्वरावधी यस्याः सा तथोक्ता । योग्यतापकर्षपरंपरायाः कलिरवधिस्तदुत्कर्षपरंपराया वाणीश्वरः । उद्धतां अप्रति-हताम् । कथं युक्त्यागमसिद्धेत्यत आगमानां सावकाशत्वाभिमानेन युक्तावेव बहुमानवन्तं प्रत्यादौ तामाह ब्रह्मण इति ।

ब्रह्मणोऽन्यत आधिक्ययुक्तः कालो विवादवान् ।
कालो ह्ययं यथेत्यादि माऽनुमामानिनो भवेत् ॥

वर्तमानकाले ब्रह्मा सर्वाधिक इति संप्रतिपन्नम् । अतो विवादवान्विवादविषयः काल इत्युक्तम् । वर्तमानमहाकल्पव्यतिरिक्तोऽतीतोऽनागतश्च काल एतस्य ब्रह्मणो यदन्यत आधिक्यं तेन युक्तः । कालो हीति कालत्वादित्यर्थः । अयं वर्तमानः कालो यथा । आदिपदेनायं ब्रह्मातीतादिकालेऽप्यन्यतोऽधिको ब्रह्मत्वात्तत्कालवर्तिब्रह्मवदित्यादेः संग्रहः । अनुमामानिनोऽनुमायां बहुमानवतो बोधाय प्रयोक्तव्या भवेत् । अनुमामानिनः प्रतीतिं वा ; ब्रह्मगतेनाधिक्येन कालस्य संबन्धाभावात्कथमनुमानमिति चेन्न । परंपरासंबन्धेनानु-मानप्रामाण्यवादिभिरयं कालो वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवानित्याद्यनुमानप्रवृत्तेः अङ्गीकृतत्वात् । तदिदमुक्तमनुमामानिन इति । ब्रह्मणः पदाद्यभावकालेऽपि सर्वोत्कर्षसिद्धौ योग्यतैव सर्वोत्कृष्टानादिनित्या सिद्धा भवति ।

शे० — ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ।। ॐ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॐ ।। योग्यताया असूत्रितत्वात्तत्त्वेऽप्यविप्रतिपन्नत्वाच्चानादीत्यादितत्प्रतिपादनप्रयासानर्थक्यमाशङ्क्य तस्याः सूत्रितत्वं वादिविप्रतिपन्नतां चोपदर्शयन्नेव तत्समर्थनपरतयोत्तरभाष्यं सङ्गमयति अत्रेत्यादिना । ननूत्कर्षापकर्षान्यथाऽनुपपत्त्या प्राप्ताया योग्यतायाः कथमनभ्युपगमो वादिनां युज्यत इत्यतस्तस्यान्यथासिद्धतामाह प्रसिद्धेरिति । विशिष्टादृष्टादिभिरित्यर्थः ॥ अनेनेति । उक्तसमुच्चायकचशब्देनेत्यर्थः । अनादियोग्यतासाधनप्रतिज्ञारूपेऽस्मिन्वाक्येऽनादियोग्यतामात्रे वक्तव्ये यच्चशब्देन तारतम्यवचनं तेन वक्ष्यमाणानादियोग्यत्वं तारतम्यस्यापि साधकमित्युक्तं भवति । अन्यथोपक्रमे उभयोक्तिवैयर्थ्यमिति भावः । नन्वनादिभूतयोग्यताया अपि प्रागभाववन्नाशित्वसंभवात्तन्नाशे साम्योपपत्तेर्नानादियोग्यतया तारतम्यसिद्धिरित्यत आह अनादेरिति । अनादिभावो न निवर्तत इति व्याप्तेरिति भावः । न हिंस्यात्सर्वाणि भूतानीत्यादेरिवानादिभावो न निवर्तत इत्यस्याप्युत्सर्गत्वान्न भावरूपाज्ञानादौ व्यभिचार इति ज्ञेयम् । कलिवाणीश्वरयोरव्यवस्थयाऽवधित्वभ्रान्तिनिरासायाह योग्यतेति ॥ युक्तावेवेति । अन्यथा पृष्टेनागम एवादौ वक्तव्य इत्यङ्गीकारादागमस्यैव प्रथमवक्तव्यत्वेन प्रथमं युक्त्युपन्यासासङ्गतिप्रसङ्गादिति भावः ॥ परंपरेति । वेदरूपशब्दस्य कालेऽसमवेतत्वेन साक्षात्संबन्धविरहादिति भावः । नन्वनेन ब्रह्मणोऽन्यत अधिक्यसिद्धावपि प्रतिज्ञातयोग्यताया न सिद्धिरिति कथमस्य तत्साधनायोपन्यास इत्यत आह ब्रह्मण इति ।

स० — ननु योग्यताया अनादित्वेपि प्रागभाववन्नाशे साम्योपपत्तिरित्यत आह अनादेरिति । भावस्येति शेषः ।

प० — ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ।। सेयं जीवानां नानाविधानादियोग्यतेति । नाभ्युपगम्यत इत्यन्वयः ॥ अनेनेति । अनादियोग्यतां चेति पूर्वसमुच्चायकशब्दकथनेनेत्यर्थः । इदं योग्यतासाधनम् । अनादित्वोक्त्या मुक्तिगत्वलाभः कथमित्यत आह अनादेर्नित्यत्वादिति । भावस्येति योज्यम् । तथा चानादियोग्यतासाधने नित्यत्वस्याप्यवश्यं प्राप्तत्वान्मुक्तावपि नानाविधयोग्यतायाः सत्त्वात्तारतम्यसिद्धिरिति भावः । 'प्राबल्यागमस्यैव जात्यां तेषु त्रिषु स्मृतमि'त्यलौकिकार्थे आगमस्यैव प्राबल्यात्स एवादौ वाच्य इत्यत आह आगमानामिति । द्वितीयान्तत्वमभ्युपेत्याह अनुमामानिनः प्रतीतिं वेति ॥ परंपरेति । ब्रह्मद्वारकसंबन्धादिरूपपरम्परासंबन्धेनेत्यर्थः ॥ इत्याद्यनुमानेति ॥ अयं काल इति । औपाधिकस्य वर्तमानकालस्य पक्षतया तस्य चाकाशस्य संबन्धसंभवात् आकाशद्वारकपरम्परासंबन्धेन पौरुषेयवेदरूपशब्दवत्त्वं ध्येयम् । एतदनुमानार्थो

जिज्ञासाधिकरणे वेदापौरुषेयत्ववादे 'न बुद्धो धर्मदर्शी स्यात्पुंस्त्वादित्यनुमाहतिरि'त्येतद्व्याख्यानसुधा-परिमळे विवृतः । तत्र तन्मते जगदाधारताप्रयोजकस्वरूपसंबन्धश्चेदिहापि तथास्तु । अखण्डस्यौ-पाधिकस्य जगदाधारत्वाभावेन परम्परासंबन्धस्यैव वाच्यत्वादिति भावः । फलितार्थमाह **ब्रह्मण इति** । पदादीत्यादिपदेन तद्व्यापागदिग्रहः ।

**या०— ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ॥ न चाधिकारिकमपि पतनानु-मानात्तदयोगात् ॐ ॥ अनेनेति** । उक्तसमुच्चायकचशब्देनेत्यर्थः । अनादियोग्यतां साधयितुं भूमिकारचनरूपोऽयं श्लोकः । तत्रानादियोग्यतामात्रे वक्तव्ये यच्चशब्देन मुक्ततारतम्यवचनं तेन वक्ष्य-माणमनादियोग्यतासाधकं प्रमाणजातं मुक्ततारतम्यस्यापि साधकमिति सूचितं भवतीत्यर्थः । अन्यथोप-क्रमे उभयोक्तिवैयर्थ्यमिति भावः । ननु वक्ष्यमाणमनादियोग्यतासाधकं प्रमाणजातं किं साक्षादेवामुक्त-तारतम्यस्यापि साधकं नेत्याह **अनादेरिति** । तथा च परम्परयैव तत्साधकमिति भावः । इदं च प्रायिकं साक्षादेवोभयसाधकप्रमाणानामपि वक्ष्यमाणत्वात् ॥ **युक्तावेवेति** । अन्यथा 'पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धय' इति वचनादागम एवादौ वक्तव्य इति भावः ॥ **परम्परासम्बन्धेनेति** । वेदरूपपौरुषेयस्य शब्दस्य काले समवायाभावादिति भावः । वेदव्यतिरिक्तेत्यादेरर्थः पूर्वमुक्तः ।

**सु० — स्यादेतत् । प्रमाणबाधितेयं प्रतिज्ञा । दृष्टान्तश्च साध्यविकलः । अन्यशब्दो ह्ययं प्रकरणाद्ब्रह्मव्यतिरिक्तं सर्वमाह । तत्र हरेर्महालक्ष्म्या, ऋजुभ्यश्चाधिक्यं ब्रह्मणः काल-त्रयेऽपि नास्ति । हरेःश्रियश्चाधिकत्वेन ऋजूनां समत्वेन प्रमितत्वादित्यत आह** अन्यशब्द इति ।

**अनु०—** अन्यशब्दो हरिश्रीस्वसमेभ्योऽन्यविवक्षया ॥
प्रयुक्तो नैव दोषाय

**स्वशब्देन ब्रह्मोच्यते । स चावर्तनीयः । स्वश्च स्वसमाश्चेति । यदा वक्ता स्वविवक्षां स्वयमेव व्याख्याति काऽत्र प्रकरणाद्यपेक्षा । तदभावे तस्योपयोगात् । कथायां तु व्यक्तमेव वक्तव्यम् । अन्यथा प्रतिज्ञान्तरादीनामप्येवं परिहारप्रसङ्गात्** । नैव दोषाय **बाधादिहेतुर्नैव भवति** ।

**शे०—प्रकरणादिति** । उत्कर्षपरम्पराया वाणीश्वरोऽवधिरिति साधनस्य प्रकान्तत्वादित्यर्थः । ननु चान्यशब्दस्य हर्याद्यतिरिक्तविवक्षया प्रयुक्तत्वेऽपि प्रकरणेन ब्रह्मव्यतिरिक्तसर्वार्थताया अनिवार्यत्वादु-क्तरीत्या प्रमाणबाधादिकं(धितं) स्यादेवेत्यतोऽभिप्रायमाह **यदेति** ॥ **काऽत्रेति** । वक्तृव्याख्यानादेवा-न्यशब्दस्य वक्तृविवक्षितार्थविशेषपरत्वनिश्चयादिति भावः । तर्हि प्रकरणादेरनिश्चायकत्वात्तद्वैयर्थ्यमेव

स्यादित्यतो न वयं प्रकरणादेरर्थविशेषनिश्चयार्थमपेक्षां सर्वथा निराकुर्मः । किन्नाम व्याख्यानेनार्थविशेषनिश्चयस्थले एव । तथा च यत्र व्याख्यानादेव वक्तृविवक्षितार्थविशेषनिश्चयस्तत्र तदनपेक्षायामपि यत्र तदभावेन तदनिश्चयस्तत्र तन्निश्चायकतया प्रकरणादेरर्थवत्त्वादिति भावेनाह **तदभाव इति** । ननु व्याख्यानेन विवक्षितार्थनिश्चयाभ्युपगमो न युक्तः । तथा सति शब्दोऽनित्य इत्यादावपि व्याख्यानेन शब्दशब्दस्यापि वर्णात्मकशब्दरूपविवक्षितार्थविशेषपरत्वनिश्चयसम्भवेन सिद्धसाधनतादेरप्रसङ्गात् । प्रतिज्ञान्तरादीनामनवकाशेन तन्निग्रहस्थानत्वाभावप्रसक्तेरित्यतो वादकथायामेव व्याख्यानस्य विवक्षितार्थविशेषनिश्चायकत्वाभ्युपगमात् । तेन तत्रार्थविशेषनिश्चयसम्भवेऽपि न जल्पादावपि तथाऽभ्युपगच्छामो येनोक्तदोषः स्यात् । किन्नाम जल्पादिकथायां प्रथमतो व्याख्यानानपेक्षमेव वर्णात्मकः शब्दोऽनित्य इत्येव वक्तव्यम् । सत्यप्येवं तथाऽनुक्त्वा शब्दोऽनित्य इत्येवोक्तौ च सिद्धसाधनादेरवकाशाद्युक्तं प्रतिज्ञान्तरादीनां निग्रहस्थानत्वमित्याह **कथायां त्विति** । केचित्तु नन्वेवं व्याख्यानाभावे प्रकरणादिना विवक्षितार्थनिश्चये शब्दोऽनित्य इत्यादावपि प्रकरणादिना विवक्षितार्थज्ञानसंभवात्सिद्धसाधनादेरनवकाशेन प्रतिज्ञान्तरस्याप्यनवकाशेन तद्वार्तैवोच्छिद्येत इत्याशङ्कयाह कथायामपीत्याहुः । तन्न । तथा सत्यन्यथा प्रतिज्ञान्तरादीनामपि परिहारप्रसङ्गादित्येव वक्तव्यतया प्रतिज्ञान्तरादीनामप्येवं परिहारप्रसङ्गादित्युत्तरग्रन्थास्वारस्यापातात् । एवंशब्दबलाद्धि प्रकृतबाधपरिहारोपायस्यैव सिद्धसाधनपरिहारोपायत्वं लभ्यते । न च तत्पक्षे तदस्ति । शब्दोऽनित्य इत्यादौ प्रकरणेनार्थविशेषनिश्चयाभ्युपगमात् । प्रकृते च व्याख्यानेनेति न प्रकारैक्यमिति कथं नास्वारस्यमिति । बाधादिहेतुरित्यत्रादिपदेन दृष्टान्ते साध्यवैकल्यपरिग्रहः ।

**स०**— प्रतिज्ञान्तरादीनामित्यतद्गुणसंविज्ञानः । अन्यत्र तद्दोषत्वस्य व्युत्पादितत्वात् ।

**प०**— **प्रकरणादिति** । सर्वाधिक्यसाधनस्य वाणीश्वरावधिमित्यनेन प्रस्तुतत्वादित्यर्थः ॥ **ब्रह्मव्यतिरिक्तमिति** । पक्षीभूतचतुर्मुखव्यतिरिक्तमित्यर्थः । तर्हि प्रकरणस्य का गतिरित्यत आह **यदा वक्तेति** । **तदभावे** व्याख्यानाभावे ॥ **कथायामिति** । जल्पकथायाम् ॥ **व्यक्तमिति** । हरिलक्ष्मीस्वस्वसमान्येत्येवमादिरूपेणेत्यर्थः ॥ **प्रतिज्ञान्तरेति** । पूर्वमविशिष्टतयोक्तदोषपरिजिहीर्षया विशेषणप्रक्षेपरूपप्रतिज्ञान्तरहेत्वन्तरादीनामित्यर्थः ॥ **एवमिति** । यदा वक्तेत्याद्युक्तदिशेति वाऽन्यशब्द इत्यादिमूलोक्तरीत्या वेत्यर्थः । नैव दोषायेति मूलपदानुवादः । बाधेत्यादि व्याख्या ॥

**या०**— **प्रकरणादिति** । उत्कर्षपरम्पराया वाणीश्वरोऽवधिरिति साधनाय प्रकान्तत्वादित्यर्थः ।

**श्री० — ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ॥ ॐ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॐ ॥ प्रतिज्ञान्तरादीनामपीति ।** अनित्यः शब्दः कृतकत्वादित्युक्ते ध्वनिभिः सिद्धसाधनतोद्भावने वर्णात्मकः शब्द इति वदति । तत्र च प्रतिज्ञान्तरं नाम निग्रहस्थानं दीयते । तन्न स्यात् । ध्वन्यात्मकशब्दानित्यताया उभयवादिसिद्धत्वेन प्रकरणबलादेव वर्णात्मकः शब्दः पक्षत्वेनाभिप्रेत इति ज्ञानसम्भवात्किं वर्णात्मक इति व्यक्तमुक्त्या प्रयोजनम् । तथा च प्रतिज्ञान्तरस्याकर्तव्यत्वात्तन्नामकनिग्रहस्थानस्यापि परिहारप्रसङ्गादनुद्भावनप्रसङ्गादित्यर्थः । तथा च कथायां स्पष्टमेव वक्तव्यम् । तथा च प्रतिज्ञान्तरकरणे तन्नामकनिग्रहस्थानोद्भावनावाकाश इति भावः ।

**सु० — उक्तन्यायमन्यत्राप्यतिदिशति** रुद्रादिषु चेति ।

**अनु० —** रुद्रादिषु च युक्तितः ॥

**अनयैव रीत्या रुद्रादिष्वपि साऽनादियोग्यता युक्त्या साधनीयेत्यर्थः । विमतः कालोऽस्य रुद्रस्येश्वरादिव्यतिरिक्तायदाधिक्यं तेन युक्तः कालत्वादेतत्कालवदित्यादि ।**

**(ननु) मुक्तास्तावत्सर्वेऽपि ब्रह्मणोऽधिकास्तेषां मुक्तत्वादस्य संसारित्वात् । अतोऽन्यशब्दव्याख्याने तेऽपि कुतो न गृह्यन्त इत्यत आह** उत्तमत्वं त्विति ।

---

उत्तमत्वं तु मुक्तानामपि न ब्रह्मणो भवेत् ॥

**अतस्तदग्रहे न दोष इति शेषः । तत्कथमित्यत आह** व्यक्तिरिति ।

व्यक्तिः सुखस्य तु भवेन्न त्वाधिक्यं सुखस्य च ॥

**आद्यस्तुशब्दोऽवधारणार्थः । व्यक्तिरेवेति संबध्यते । चशब्दो गुणान्तरसमुच्चयार्थ उभयत्रान्वेति । प्राग्विद्यमानस्यैव स्वरूपसुखादेर्मुक्तावविद्याद्यावरणापायेन व्यक्तिरनुभवलक्षणा भवेन्न तु किमप्यधिकमुत्पद्यते । तथा सत्यनित्यत्वप्रसङ्गात् । न च ब्रह्मणः स्वरूपादितरेषां स्वरूपमधिकम् । न च निर्णिक्तं कांस्यमनिर्णिक्तात्सुवर्णादधिकं भवति । एतेन मुक्तत्वहेतुरपि प्रत्युक्तः ।**

**शे० —** कुतो न गृह्यन्त इति मृदूक्तिः । स्ववाचकशब्देन तेऽपि ग्राह्या एव । अन्यथा बाधादिप्रसङ्गादित्यत्र तात्पर्यम् । **अतः** अनुत्तमत्वतः । **तदग्रहे** तेषां मुक्तानामन्यशब्दव्याख्यानावसरेऽग्रहे । न दोषो न बाध इति यावत् ॥ **गुणान्तरेति** । बलज्ञानादिरूपगुणान्तरेत्यर्थः ॥ **उभयत्रान्वे-**

**तीति** । सुखस्य च व्यक्तिर्भवेदिति सुखस्य चाधिक्यं न भवेदित्युभयत्रान्वेतीत्यर्थः । उत्तमत्वं तु मुक्तानामपात्यादिमूले उत्तमत्वं नेत्यंशेन मुक्ता ब्रह्मणोऽधिका इति प्रतिज्ञादोषस्य बाधस्य मुक्तानामपीत्यंशेन हेतुदोषस्याप्रयोजकत्वस्य च सूचितत्वात् 'व्यक्तिः सुखस्य तु भवेन्न त्वाधिक्यं सुखस्य चे'त्युत्तरवाक्ये च तयोरुपपादितत्वादस्य ग्रन्थस्य प्रतिज्ञाहेतुदोषपरत्वसिद्धावपि प्रथमप्राप्तत्वात्प्रतिज्ञादोषस्योत्तमत्वमिति पूर्ववाक्यं बाधप्रतिज्ञापरं व्यक्तिरित्युत्तरं च तदुपपादकमित्यभिप्रायेण भाष्यं व्याख्याय हेतुदूषणसिद्ध्यर्थं पूर्ववाक्यं हेतोरप्रयोजकत्वप्रतिज्ञापरमुत्तरं च तदुपपादकमित्यभिप्रेत्याह **एतेनेति** । उत्तमत्वं त्वित्यादिना वाक्येनेत्यर्थः । न केवलं प्रतिज्ञा प्रत्युक्तेत्यपिशब्दार्थः । पूर्ववाक्यमुभयप्रतिज्ञापरम् । उत्तरवाक्यं च प्रतिज्ञातबाधोपपादकतया व्याख्याय प्रतिज्ञाताप्रयोजकत्वोपपादकतयाऽपि व्यापारयति **एतेनेति** । व्यक्तिरित्यनेन वाक्येनेत्यर्थः । न केवलं प्रतिज्ञा प्रत्युक्तेत्यपिशब्दार्थ इत्याहुः । उभयोपपादकेऽत्र वाक्ये न केवलं, न त्वाधिक्यमित्यनेन बाधोपपादनात्प्रतिज्ञा प्रत्याख्याता, किन्तु व्यक्तिः सुखस्य तु भवेदित्यंशेनाप्रयोजकत्वोक्त्या हेतुरपि प्रत्युक्त इत्याह । एतेनेतीत्यप्याहुः । अनाधिक्येऽपि प्राग्विद्यमानस्यैव सुखादेर्मुक्तावविद्यावरणापायेन व्यक्तिमात्रेणैव मुक्तत्वोपपत्त्याऽन्यथासिद्धत्वान्नेदं विपक्षे बाधकमिति वदता व्यक्तिः सुखस्य तु भवेदिति वाक्येन न केवलं मुक्तत्वहेतोरनुकूलस्तर्कोऽन्यथासिद्ध्या निरस्तः । किन्त्वनुकूलतर्कनिरासद्वाराऽप्रयोजकत्वव्युत्पादनेन मुक्तत्वहेतुरपि निरस्त इत्यभिप्राय इत्यप्याहुः ।

---

**प०— उभयत्रेति** । व्यक्तिः सुखादिगुणस्येति नाधिक्यं सुखादिगुणस्येत्येवं स्वस्थाने पूर्वत्र चान्वेतीत्यर्थः ॥ **एतेनेति** । आधिक्यं नेति कथनेन । मुक्तत्वादस्य च संसारित्वादित्यत्र प्रागुक्तो हेतुर्बाधेनाप्रयोजकत्वेन वाऽपास्त इत्यर्थः ।

**या०— उभयत्रेति** । प्राक्तनेऽपि सुखस्येति पदेऽन्वेतीत्यर्थः ।

**श्री०— कुतो न गृह्यन्त इति** । हरिश्रीस्वस्वसममुक्तेभ्योऽन्यविवक्षयेति कुतो नोक्तमित्यर्थः ।

**सु०— न केवलं मुक्तानां ब्रह्मणोऽधिकत्वं नास्ति किं तर्हीत्यत आह** बलेति ।

**अनु०—** बलज्ञानाधिकत्वं तु तेभ्यो हि ब्रह्मणः सदा ।

**गुणान्तरोपलक्षणमेतत्** । **सदा संसारे मुक्तौ च** । **एतेन समशब्देनापि तत्परिग्रहो निरस्तः** ।

**शे०**— ननु मुक्तानां ब्रह्मापेक्षयाऽधिकत्वाभावेनान्यशब्दव्याख्यानावसरे तद्वाचकशब्देन ग्रहणासम्भवेऽपि तेषां ब्रह्मसमत्वेन समशब्देनैव गृहीतत्वान्न बाधादिप्रसङ्ग इत्येव समाधातव्यम् । तत्किमुत्तमत्वं त्वित्यादि पूर्वग्रन्थेनेत्यत आह **एतेनेति** । मुक्तेभ्यो ब्रह्मणोऽधिकत्वप्रतिपादनेनेत्यर्थः । न केवलमन्यशब्दव्याख्यानावसरे तद्वाचकशब्देन तत्परिग्रहनिरासः किन्तु समशब्देनापीत्यपिशब्दार्थः ।

**प०**— ननु मुक्तानां संसारिब्रह्मत आधिक्याभावेपि तत्साम्यमस्तु । एवं च 'हरिश्रीस्व-समेभ्योऽन्यविवक्षये'त्यत्रोक्तसमपदेन मुक्तानां परिग्रहे बाधदोषो न भविष्यतीत्यत आह **एतेनेति** । मुक्तेभ्यो बलज्ञानादिगुणैराधिक्यकथनेनेत्यर्थः ।

**श्री०**— यदा ब्रह्म मुक्तेभ्यो नीचः संसारित्वादित्यनुमानं बाधितविषयं तदा मुक्ता ब्रह्मणो-ऽधिका मुक्तत्वादित्यनुमानमपि बाधितविषयत्वेनापास्तमित्याह **एतेनेति** । मुक्तेभ्योऽपि ब्रह्मणो बल-ज्ञानाधिकत्ववचनेनेत्यर्थः ॥ **समशब्देनापीति** । अन्यशब्दो हरिश्रीस्वसमेत्यत्र समशब्देन मुक्तानां ग्रहणं किं न स्यात् । तेषां ब्रह्मसमत्वादित्यर्थः ।

**सु०— नन्वेवमनुमाने विमतः कालोऽस्य राज्ञः संप्रतिपन्नाधिक्येन युक्तः कालत्वा-त्संप्रतिपन्नकालवदित्यप्यनुमानप्रसङ्ग इत्यत आह** आधिक्यस्येति ।

**अनु०**— आधिक्यस्य त्वनित्यत्वे न किञ्चिन्मानमीक्ष्यते ॥

**ब्रह्मण इति शेषः । अनित्यत्व इति** सादित्वस्याप्युपलक्षणम् । **तुशब्दो राजाद्याधि-क्यस्य** व्यावर्तकः । **बाधकभावाभावाभ्यां विशेषान्नातिप्रसङ्ग इति** भावः ।

**शे०**— ननु तथाऽपि कथमुक्तप्रसङ्गनिरास इत्यतो न तावदयं प्रसङ्गो विशेषव्याप्तिमूलो वक्तुं शक्यते । दृष्टान्ताभावेन तदसिद्धेः । नाप्यविशेषव्याप्तिमूलकः । विशेषसद्भावादिति भावेन तमुपपाद-यन्नतिप्रसङ्गं परिहरति **बाधकेति** ।

**प०— विमतः काल इति** । अतीतानागतकाल इत्यर्थः ॥ **अनादिनित्ययोग्यतायां युक्त्युक्तिः** ।

**श्री०— विमतः** कालोऽतीतानागतकालः । **अस्य राज्ञः** वर्तमानकालीनस्य राज्ञः । सम्प्रतिपन्नेभ्यो यदाधिक्यं तेन युक्तः ॥ **प्रसङ्ग इति** । तथा चातीतानागतसमस्तकालेऽप्येतस्य राज्ञ इदानीमिव सर्वाधिक्यं सिध्येदित्याभाससाम्यमित्यर्थः ।

सु०— एवं ब्रह्मादिजीवेष्वनादिनित्यां नानाविधां योग्यतां प्रसाध्येदानीमागमेनापि साधयन्नादौ तावत् श्रुतीः पठति शृण्वे वीर इति ।

अनु०— शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ॥

एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥

वीरोऽध्यवसितान्तगामी । इन्द्रः परमेश्वरः । उग्रमुग्रं सर्वान्दुष्टप्रकृतीन्दमयन्नित्यनरकं प्रापयन्नन्यमन्यं सर्वान्सत्स्वभावानतिनेनीयमानः संसारं भृशमतिक्रामयन् । स्वयोग्यतातिरेकेणैधमानं द्वेष्टीत्येधमानद्विट् । शृण्वे श्रूयते । कुत उभयस्य देवतासुरवर्गस्य राजा यतः । किञ्च मनुष्यान्विशः प्रजाश्चोष्कूयते नित्यं परिवर्तयति ।

परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति ।

अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरदस्तर्तरीति ॥

परा पूर्वेषाम् । अतीतमन्त्रे पूर्वेषां पूर्वनिर्दिष्टानामुग्राणां सख्या सख्यानि परावृणक्ति परित्यजति । अपरेभिरपरैः साधुभिः सह सख्यानि वितर्तुराणोऽतिशयेन त्वरमाण एत्यानानुभूतीः सम्यगनुभवरहितानवधून्वानोऽवमे संसारे वर्तयन्निन्द्रः पूर्वीः शरदोऽतीतान्संवत्सरांस्तीर्णो वर्तमानांश्च तर्तरीति । आगामिनश्च तरिष्यतीति । अत्र मन्त्रद्वयेऽसुराणामनादितो भगवद्भजनाभावो नित्यनरकावाप्तिश्च श्रूयते । देवानां सदा भगवद्भजनं मोक्षावाप्तिश्च । मनुष्याणां सर्वदा संसार इति ॥

दिवे दिवे सदृशीरन्यमर्धं कृष्णा असेधदपसद्मनो जाः ॥

अहन् दासावृषभो वस्नयन्तोदव्रजे वर्चिनं शम्बरं च ॥

दिवे दिवे वर्षणाद्वृषभः परमेश्वरो दिवे दिवे सर्वदा सदृशीश्चेतनत्वमात्रेण कृष्णास्तमोमयीर्जाः प्रजाः कास्ता देवेभ्योऽन्यमर्धं स्वीयात्सद्मनोपासेधत् । निवर्तयति । किञ्च दासौ दस्यू वस्नयन्ता जगच्छादयन्तौ वर्चिनं शम्बरं चोदव्रजे जलराशौ समुद्रतीरेऽहन्हिंसितवानिति । अत्र दैत्यानां कदाऽपि न मोक्ष इति प्रतीयते ॥

तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाऽप्येतर्हि सुप्तो

भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुः ॥

तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुते ॥

एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते ॥

पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां भूतानाम् ॥

तं भूतिरिति । **तं परमेश्वरम् । भूतिरैश्वर्यरूपः । बभूवुर्मुक्ता इति शेषः । एतर्हीदानीं सुप्तः सुप्तस्थो वायुः । पराबभूवुर्नित्यनिरयं प्राप्ताः । अत्र देवासुराणां सम्यग्विपरीतोपासनाभ्यां मोक्षतमसोः प्राप्तिः श्रूयते । तेन देवत्वमसुरत्वं च सहजमिति ज्ञायते ॥** तद्यथा **तद्वक्ष्यमाणं निदर्शनं यथा । पेशस्कारी सुवर्णकारः पेशसः सुवर्णस्य मात्रामंशम् । अन्यदिव नवतरं प्रागननुभवात् । कल्याणतरं मलापकर्षात् । रूपं रुचकादिकम् । आत्मा परमात्मा । अन्येषां भूतानां मनुष्योत्तमानाम् । अत्र सुवर्णस्यैव यथा रुचिकादिभावः सुवर्णकारेण क्रियते न यस्य कस्यचिद्द्रव्यस्य तथा मुक्तियोग्यानामेवेश्वरेण मुक्तत्वं क्रियते नान्येषामिति प्रतीयते ।**

**शे०— प्रसाध्येति ।** अनुमानेनेति शेषः । प्रयान्तीत्यादिना स्मृतीनामप्युत्तरत्रोदाहरणात्तावच्छब्दः ॥ **इन्द्रः परमेश्वर इति ।** 'इन्द्रः स परमैश्वर्यादि'ति ऋग्भाष्योक्तेरिति भावः । उग्रमुग्रमिति वीप्सायां नित्यवीप्सयोरिति द्विर्वचनमिति भावेनाह **सर्वानिति ।** अन्यमन्यमित्यपि पूर्ववद् द्विर्वचनमितिभावेनाह **सर्वानिति ।** नयतेर्धातोरेकाच इति भृशार्थे यङि सन्यङोरिति द्विर्वचने गुणो यङ्लुकोरिति गुणे यङन्ताल्लटः शानचि आने मुगिति भावेनाह **संसारमित्यादि ॥ द्रेष्टीतीति ।** क्विप्चेति कर्तरि क्विप्प्रत्यये कृदन्तत्वात्तद्धितेति प्रातिपदिकत्वे किस्त्वाद्गुणाभावे चैतद्रूपसिद्धिरिति भावः । श्रु श्रवण इत्यस्मात्कर्मण्यात्मनेपदं पुरुषव्यत्ययो यगभावश्च श्रुवः शृचेति शपोपवादः श्नुः शृभावश्च ऋवर्णान्नस्य णत्वमिति णत्वम् । उवङि प्राप्ते हुश्नुवोः सार्वधातुक इति यणादेशश्चेत्यभिप्रेत्य व्याख्याति **शृण्वे श्रूयत इति ।** स्कुञ् आप्रवणे धातोरेकाच इति यङ् अकृत्सार्वधातुकयोरिति दीर्घः । द्विभावः शर्पूर्वाः खय इति सकारलोपेन ककारशेषः । कुहोश्चुरिति चुत्वम् । गुणो यङ्लुकोरिति गुणः । सुषामादित्वात् षत्वम् । यङन्ताल्लडात्मनेपदमिति भावेन व्याचष्टे **नित्यं परिवर्तयतीति ।** सुपां सुलुगिति सुपो डादेशः । टिलोपश्चेत्यभिप्रेत्य व्याचष्टे **सख्या सख्यानीति ।** वृजी वर्जन इत्यस्माल्लट् प्रथमपुरुषैकवचनमिति रुदादिभ्यः श्नमिति शपोऽपवादः श्नम नित्यत्वाच्चायं गुणात्पूर्वं भवति मित्वादचोन्त्यात्परः चोःकुरिति कुत्वं ऋवर्णान्नस्य णत्वं वाच्यमिति णत्वे च वृणक्तीत्येतद्रूपनिष्पत्तिरित्यभिप्रेत्य व्याख्याति **वृणक्ति परित्यजतीति ।** बहुलं छन्दसीति वचनाद्भिस ऐसादेशाभाव इत्यभिप्रेत्याह **अपरेभिरपरैरिति ।** विपूर्वकात्तरतेर्धातोरेकाच इति यङि यङोऽचि चेति तल्लुकि च सत्यन्तरङ्गत्वात्सन्यङोरिति द्विर्भावे उरदित्याभ्यासऋवर्णस्यात्वे रपरत्वे हलादिशेषे प्रत्ययलक्षणेन धातुत्वात् शप्तिबाद्युत्पत्तौ चर्करीतं चेत्यदादिवद्भावात् शपो लुकि ऋदन्तत्वेऽपि छन्दस्त्वादभ्यासस्य नुगागमे बहुलं छन्दसीति धातो रुत्वे रपरत्वे लटः शतृशानचाविति शानजादेशे च वितर्तुराण इति शब्दनिष्पत्तिमभिप्रेत्य

तद्याचष्टे **अतिशयेन त्वरमाण इति** ॥ **एतीति** । इण् गतावित्यस्मात् शप्तिबाद्युत्पत्तावदादित्वाच्छपो लुकि सार्वधातुकार्धधातुकयोरिति गुणे चैतन्निष्पत्तिरिति भावः । चेतनस्यानुभवशून्यताया बाधितत्वादनानुभूतीरिति तथोक्त्यनुपपत्तिमाशङ्क्य तत्तात्पर्यमाह **सम्यगिति** । धूञ् कम्पन इत्यस्माल्लडात्मनेपदप्रथमपुरुषैकवचने परतः शपोऽपवादेन स्वादिभ्यः श्नुरिति श्नुप्रत्यये लटः शतृशानचाविति लडात्मनेपदस्य शानजादेशे च सति धूनत इति धुन्वान इति रूपनिष्पत्तिरित्यभिप्रेत्यावशब्दार्थकथनपूर्वकं तत्तात्पर्यमाह **अवम इत्यादिना** । अतीतसंवत्सरतरणस्यातीतत्वात्तर्तरीति तद्वर्तमानत्वोक्तेरनुपपत्तिमाशङ्क्योभयस्योपलक्षणतामाश्रित्य व्याचष्टे **पूर्वीः शरद इत्यादिना** ॥ **तीर्ण इति** । श्युकः कितीतीट्निषेधः । निष्ठायामित्वरपरत्वदीर्घत्वेषु रदाभ्यामिति णत्वमिति भावः ॥ **तर्तरीतीति** । तरतेर्यङि तल्लुकि च सति द्विर्भावे हलादिशेषे धातुत्वाच्छप्तिबाद्युत्पत्तौ छान्दसेऽभ्यासस्य रुगागमेऽदादित्वाच्छपो लुकि गुणरपरत्वयोः सतोर्यङो वेतिति यङ्लुङन्तात्परस्य तस्य हलादेः पितः सार्वधातुकस्य इडागमविधानादिटि सति तर्तरीतीति रूपनिष्पत्तिरिति ज्ञेयम् ।

**वर्षणादिति** । वृष सेचन इत्यस्माद्वर्षतीति वृषभ इति कर्तर्यौणादिकेऽभक्प्रत्यये तस्य कित्त्वाद्गुणाभावे वृषभ इति रूपनिष्पत्तिरिति भावः । नित्यवीप्सयोरिति वीप्सायां दिवे दिव इति द्विर्भाव इत्यभिप्रेत्याह **सर्वदेति** ॥ **दासौ दस्यू इति** । दास दान इत्यस्माद्दासन्तेऽस्मै इति व्युत्पत्त्या दासशब्दस्य भृत्यवाचकत्वेऽपि दसु उपक्षय इत्यस्माद्दस्यत इति व्युत्पत्त्या दस्युवाचकत्वमप्यस्तीति भावेनैवं व्याख्यातम् ॥ **जगदाच्छादयन्ताविति** । वस आच्छादन इति धातोरिति भावः ॥ **अहन्निति** । हन्तेर्लुङ् प्रथमपुरुषैकवचने तिपि शपि अदादित्वात्तल्लुकि इतश्चेतीकारलोपे हलङ्याप्भ्य इति तकारलोपेऽडागमे चाहन्निति रूपसिद्धिरिति भावः ।

'स एव भूतिनामाऽपि ज्ञानैश्वर्यादिभूतिदः । अज्ञानादिप्रदातृत्वात्स एवाभूतिनामकः । सुखज्ञानादिगुणदं पूर्णं सर्वगुणैः प्रभुम् । उपासते तं वाय्वाद्या देवास्तस्माच्च तेऽखिलाः । बभूवुः सुखसज्ज्ञानपूर्वैः सर्वगुणैर्युताः । देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः । स्थित्वा सुरेषु विष्णुं तं भूर्भूरित्येव शंसति । भूः शब्दार्थो भूतिरिति वैपरीत्येन चासुराः । अभूतिकारकोऽस्माकमैश्वर्यादिगुणोज्झितः । इत्येवोपासते तस्मात्पराभूताश्च सर्वशः । ज्ञानैश्वर्यादिभिर्हीनाः पेतुरन्धे तमस्यथ' इत्यैतरेयभाष्योदाहृतप्रमाणानुरोधेन श्रुतिं सङ्क्षेपतो व्याचष्टे **तं परमेश्वरमित्यादिना** । पूर्वमविद्यमानस्वरूपप्राप्तेरभावान्नवतरत्वोक्त्यनुपपत्तिमाशङ्क्य पूर्वाननुभूतत्वान्नवतरं च भवतीति बृहद्भाष्यं मनसि निधाय तदुक्तिं समर्थयते **नवतरमिति** ॥ **आत्मा परमात्मेति** । जीवपरत्वे आत्मशब्दस्य शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुत इत्यादेरयोगादिति भावः ॥ **मनुष्योत्तमानामिति** । अत्र मनुष्य-

शब्दश्चक्रवर्तिपरः । स मनुष्याणां परम आनन्द इति पूर्वब्राह्मणे मनुष्यशब्देन चक्रवर्तिनामुक्तत्वात् । उत्तमशब्दश्च मनुष्योत्तमपरः । अत एव बृहद्भाष्येऽन्येषां वा भूतानामित्येतन्मनुष्यादीनामिति व्याख्यातम् । पूर्वब्राह्मणे यद्यपि चक्रवर्तिभ्यो नीचा मनुष्योत्तमा नोक्तास्तथाऽपि 'अन्येभ्योऽपि विमुक्तेभ्य आनन्दश्चक्रवर्तिनामि'ति प्रमाणबलात्तत्रापि ग्राह्या एवेत्यभिप्रेत्य भाष्ये आदिपदप्रयोगः । नन्वस्य वाक्यस्य कथमनादियोग्यतागमकत्वमित्यत आह **अत्रेति** ।

स० — **वर्षणात् वृषभ इति** । वृष सेचन इत्यस्मात् कर्तरि अभक्प्रत्यये तस्य कित्वाद्गुणाभावे वृषभ इति रूपनिष्पत्तिः । वर्षतीति वृषभः । **दासौ दस्यू इति** । दासृ दान इत्यस्मात् दासते इति दास इति व्युत्पत्त्या दासशब्दस्य भृत्यवाचकत्वेपि दसु उपक्षय इत्यस्मात् दस्यतीति दास इति व्युत्पत्त्या निष्पन्नस्य दासशब्दस्य दस्युवाचकत्वमप्यस्तीति दासा दस्यू इति व्याख्यानं युक्तमेवेति द्रष्टव्यम् ।

प० — वीप्सायां द्विर्वचनमिति भावेनाह **सर्वानिति** । संहितायां दैर्घ्येपि न पदे अतो दमयन्नित्यनुवादः शृण्व इत्यात्मनेपदोत्तमपुरुषैकवचनं व्यत्ययेनेति भावेनाह **श्रूयत इति** ॥ **कुत इति** । देवासुराणां सदसद्गती कुतः करोतीत्यर्थः ॥ **किञ्चेति** । न केवलं सदसद्गतिप्रापणमन्योऽपि व्यापारोऽस्तीत्यर्थः । तमाह **मनुष्यानिति** । विश इत्यस्यार्थः प्रजा इति । चोष्कूयत इति यङन्तत्वान्नित्यमित्युक्तम् । परा पूर्वेषामिति श्रुतिप्रतीकग्रहणम् । सख्येति सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजाल इति सूत्रेण प्रथमाबहुवचनस्य डादेश इति भावेनाह **सख्यानीति** । वृजी त्यागे श्नम्विकरणमित्युपेत्याह **वृणक्ति परित्यजतीति** । अतो भिस ऐस् इत्यत्र बहुलं छन्दसीत्युक्तेराह **अपरेभिः अपरैरिति** । तर्तरीति तरतीत्यर्थः । सख्यत्यागोपादानतात्पर्योक्तिः 'असुराणामनादित' इत्यादि । नित्यनरकेत्यादि फलोक्तिः । पूर्वमन्त्रार्थः । मनुष्याणामिति मन्त्रद्वयोक्तार्थः दिवे दिव इति मन्त्रप्रतीकम् । अन्यमर्धमित्यत प्रतियोगिनमाह **देवेभ्य इति** । दासेत्यस्य प्रतिपदं दासाविति तस्यार्थः दस्यू इति । वसयन्तेत्यस्य वसयन्ताविति विभक्तेर्दिशः । वस आच्छादने वासयन्तावित्यर्थे छान्दसं रूपमित्युपेत्याह **जगदाच्छादयन्ताविति** । जगदिति योग्यतयाऽन्वयः । वर्चिनं वर्चिनामकमसुरं शम्बरासुरं चेत्यर्थः । तमित्यैतरेयश्रुतिः । रुचकादिकं कण्ठभूषणादिकम् । इयं तु काण्वश्रुतिः ॥ **अनादिनित्ययोग्यतायां श्रुत्युक्तिः** ॥

श्री० — नन्वन्यमर्धमिति कथं पुल्लिङ्गप्रयोगः । अर्धं नपुंसकमिति सूत्रादन्यदर्धमिति वक्तव्यत्वादिति चेत् । सत्यम् । यत्रोभयोरयोः साम्यं तत्रैवार्धं नपुंसकमिति सूत्रप्रवृत्तिः । यथोक्तममरकोश-

कारेण । अर्धं समेंऽशकमिति । अंशके भागे समे सत्यर्धमिति नपुंसकं भवतीत्यर्थः । प्रकृते च देवभागादसुरभागस्य बहुत्वेनोभयोरर्धयोः साम्याभावादन्यमर्धमिति पुल्लिङ्गोपपत्तिरित्याशयः । भेदाभेदसद्भावादन्यदिवेत्युक्तम् ।

**सु० — अधुनाऽत्रैव स्मृतीः पठति** प्रयान्तीति ।

अनु० — प्रयान्ति परमां सिद्धिमैहिकामुष्मिकीं द्रुतम् ॥
या न प्राप्याऽसुरैः सर्वैरक्षय्या क्लेशवर्जिता ॥
न तां गतिं प्रपद्यन्ते विना भागवतान्नरान् ॥

**पुरा सत्ये युग इति प्रकृतानां देवतास्वभावानां प्रयान्तीत्यनेन मोक्षादिफलप्राप्तिमुक्त्वा या न प्राप्येत्यसुराणां न तां गतिमिति मनुष्याणां च कदाचित्तत्प्राप्तिर्नास्तीत्युच्यते ।**

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ॥
परं भावमजानन्तो मम भूतमहेश्वरम् ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥

**अवजानन्तीत्यनेन भगवदवज्ञादिलक्षणराक्षसादिस्वभाववतां कदाऽपि पुरुषार्थावाप्तिर्नास्तीति कथ्यते ।**

---

**प्रकृतिः स्वभावः ।**

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ॥
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥

**महात्मान इत्यत्र भगवद्भजनादिलक्षणदेवत्वं स्वभाव इति प्रतीयते ।**

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥ दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥
अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् ॥ दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ॥ भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ॥ अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥

**अभयमित्यनेनाभयादिलक्षणं देवत्वं दम्भादिलक्षणं चासुरत्वं स्वभाव एवेति ज्ञायते**

मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥

**मामात्मेत्यनेनासुरस्वभावानामन्धतमसावाप्तिपर्यवसानमभिधीयते ।**

द्विविधो भूतसर्गोऽत्र दैव आसुर एव च ॥ विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः ॥
देवानां परमो धर्मः सदा यज्ञादिकाः क्रियाः ॥ स्वाध्यायस्तत्त्ववेदित्वं विष्णुपूजा रतिः स्मृतिः ॥
दैत्यानां बाहुशालित्वं मात्सर्यं युद्धसत्क्रिया ॥ नीतिशास्त्रप्रवेदित्वं शिवपूजा रतिः स्मृतिः ॥
वर्णाश्रमाचारवत्त्वं स्वाध्यायो भक्तिरच्युते ॥ शिवे सूर्ये तथा देव्यां स्वभावो मानुषः स्मृतः ॥
अनादिवैष्णवा एव देवतास्तु स्वभावतः ॥ विपरीताः स्मृता दैत्याः सदैवानादिकालतः ॥
मानुषा मिश्रमतयो विमिश्रगतयोऽपि च ॥

**द्विविध इति स्पष्टं देवासुरत्वयोः स्वभावत्वमाख्यायते । सर्गशब्दस्य स्वभाववाचित्वात् । द्विविध एवेति संबन्धः । सर्गाणां सुबहुत्वेऽपि 'शुभाशुभफलाधिकौ । देवासुराख्यौ द्वावेव गन्धर्वद्यास्तदन्तरा' इति वचनादवधारणोपपत्तिः । स्वभाव इत्येतद्देवानां दैत्यानामित्यत्रापि संबध्यते । परमो धर्म इति यज्ञादिकानां क्रियाणां विशेषणम् । भगवदर्पणादिना परमधर्मरूपयज्ञादिकाः क्रिया इति । रतिः स्मृतिश्च विष्णोः शिवस्य चेति शेषः । बाहुशालित्वमित्यस्थाने बाहुबलप्रयोगोऽभिप्रेयते । युद्धसत्क्रिया युद्धकौशलम् । वर्णाश्रमेति तदनुष्ठानमात्रपर्यवसायित्वमाचष्टे । अच्युतादौ साम्येन भक्तिरित्यर्थः । अनादीति स्पष्टम् । अनादित्वादेव स्वभावतोऽनादिकालत इत्येतन्मानुषा इत्यनेन संबध्यते । मिश्रमतयः सम्यगसम्यग्ज्ञानाः । विमिश्रगतयः सुखदुःखात्मकसंसारफलाः । देवादीनामप्येवं फलं ज्ञातव्यम् ।**

**श्रुतिस्मृत्युदाहरणफलं दर्शयति** इत्यादीति ।

'इत्यादिवाक्यसन्दर्भैर्ज्ञायतेऽनादियोग्यता ॥

**सन्दर्भैरित्यतिबहूनि वाक्यान्यत्रार्थेऽन्यत्रोदाहृतानि द्रष्टव्यानीति सूचयति ।**

**शे०** — नन्वत्र देवाः परमां सिद्धिं प्रयान्तीत्यश्रवणात्कथमनेन देवत्वस्य सहजत्वसिद्धिरित्यतोऽत्राश्रवणेऽपि पूर्वत्र तेषां प्रकृतत्वेन तेषामेव सम्बन्धान्नानुपपत्तिरित्यभिप्रेत्य तेषां प्रकृततामुपपादयति **पुरेति** । भगवदवज्ञादिलक्षणराक्षसत्वासुरत्वयोरत्र प्रकृतित्वप्राप्तावपि कथं तयोः स्वभावत्वसिद्धिरित्यतः प्रकृतिशब्दस्य स्वभाववाचित्वात्प्रकृतिमिति विशेषणेनैव तत्सिद्धिरित्याह **प्रकृतिः स्वभाव इति ।**

नन्वत्र देवत्वासुरत्वयोः सर्गत्वमुच्यते तत्कथं स्वभावत्वमाख्यायत इत्युच्यत इत्यत आह **सर्गशब्दस्येति** । चैवशब्दयोर्विरुद्धार्थत्वादेकत्र संबन्धाभावादेवशब्दस्य यथास्थितसंबन्धमङ्गीकृत्य चशब्दस्य भिन्नक्रमताया अप्ययोगाच्चशब्दस्य यथास्थितमेव संबन्धमङ्गीकृत्यैवशब्दस्य भिन्नक्रमतामाह

**द्विविध एवेति संबन्ध इति** । ननु भूतसर्गाणामतिबहुप्रकारत्वात्कथं द्विविध एवेत्यवधारणम् । न च सर्गाणां सुबहुत्वेऽपि शुभाशुभफलविवक्षयेयमुक्तिरिति वाच्यम् । गन्धर्वमनुष्याधमादीनामपि शुभाशुभफलाविक्यसद्भावेन तद्विवक्षयाऽपि द्वैविध्यासंभवादित्यतस्तद्द्वैविध्यावधारणघटकं गीतातात्पर्यगतं वाक्यमुदाहरति **सर्गाणामिति** । ननु स्वभावो मानुषः स्मृत इत्यन्ते श्रवणाद्वर्णाश्रमाचारवत्त्वादेर्मानुषस्वभावत्वसिद्धावपि पूर्वत्र देवानां स्वभाव इति दैत्यानां स्वभाव इति चाश्रवणात्सदा यज्ञादिक्रियादीनां कथं देवदैत्यस्वभावत्वसिद्धिरित्यतो योग्यतया **स्वभाव** इत्यस्य मानुष इत्यनेनेव देवानां दैत्यानामित्येताभ्यामपि संबन्धाभ्युपगमाद्युक्तैवानेन यज्ञादिक्रियादीनां देवादिस्वभावत्वसिद्धिरित्याशयेनाह **स्वभाव इत्येतदिति** । नन्वेवं यज्ञादिक्रियोद्देशेन परमधर्मत्वस्येव स्वभावस्यापि विधानप्रसङ्गाद्वाक्यभेद इतरसाधारणयज्ञादिक्रियाणां तत्स्वभावत्वानुपपत्तिश्चेत्यतः परमधर्मत्वविशिष्टयज्ञादिक्रियोद्देशेन स्वभावत्वमात्रविधानाभ्युपगमेन परमधर्मत्वस्योद्देश्यविशेषणत्वेनाविधेयत्वान्न वाक्यभेदप्रसङ्गः । तादृशक्रियाणामितरव्यावृत्तत्वान्न स्वभावत्वानुपपत्तिरित्याशयेनाह **परमो धर्म इति** । यज्ञादिक्रियाणां विशेषणमिति कुतो यज्ञादिक्रियाणां परमधर्मत्वं येनोद्देश्यविशेषणत्वं तस्येत्यतस्तत्प्रयोजकं कथयन्नेव तद्विशेषणत्वं स्फोरयति **भगवदिति** । ननु स्मृतिमात्रस्य सर्वसाधारणत्वात्कथं देवदैत्यस्वभावत्वमित्यतः पूर्ववाक्ये विष्णुस्मृतेरुत्तरवाक्ये च शिवस्मृतेः स्वभावत्वेनोच्यमानत्वात् । तस्याश्च सर्वसाधारणत्वाभावान्न स्वभावत्वानुपपत्तिरित्यभिप्रेत्योभयत्र तदर्थलाभायानुरूपं शेषमाह **रतिः स्मृतिश्चेति** । रतिः स्मृतिरित्यतः पूर्ववाक्ये विष्णोरित्युत्तरवाक्ये च शिवस्येति शेष इत्यर्थः । बाहुशालित्वस्य देवादिष्वपि सत्त्वात्कथं दैत्यस्वभावत्वमित्यत आह **बाह्विति** । प्राचुर्याभिप्राया चेयमुक्तिरित्यविरोधः ।

वर्णाश्रमाचारस्य देवसाधारणस्य कथं मनुष्यस्वभावत्वमित्यतो भगवत्समर्पणपर्यन्तस्य तस्य देवस्वभावत्वेऽपि तदसमर्पितस्य तस्य तदभावान्न मानुषस्वभावत्वानुपपत्तिरित्याह **वर्णेति** । तारतम्येनाच्युतादिभक्तेर्देवादिष्वपि सद्भावान्न मानुषस्वभावत्वं तस्या इत्यत आह **अच्युतादाविति** । देवतास्वभावतो वैष्णवा इत्येतावतैव वैष्णवत्वस्य स्वभावत्वसिद्धेरनादित्वेन तद्विशेषणानर्थक्यमित्यतो वैष्णवत्वस्य स्वभावत्वमुपपादयितुं तदिति भावेन हेतुतया तद्योजयति **अनादित्वादेवेति** । अनादिनित्यत्वादेवेत्यर्थः । दैत्यानामनादिकालतोऽवैष्णवत्वस्य सदैवेत्यनेनोक्तत्वादनादिकालत इत्यस्य वैयर्थ्यमाशङ्क्याह **अनादीति** । तथा च मनुष्याणां मिश्रगतितायाः स्वभावत्वोपपादकानादिकालत्वप्रतिपत्त्यर्थत्वान्न तदिति भावः ॥ **सम्यगसम्यग्ज्ञाना इति** । सम-सम्यगसम्यग्ज्ञाना इत्यर्थः ॥ **सुखदुःखेति** । समसुखदुःखात्मकसंसारफला इत्यर्थः ॥ **एवमिति** । दुःखासंमिन्नसुखरूपमुक्तिफला देवाः दुःखमात्र-

रूपतमःफला दैत्या इति देवतादीनां फलं ज्ञातव्यमित्यर्थः । अन्यथा मानुषाणामेव विशिष्यतत्कथनत्व-स्याश्लिष्टत्वप्रसङ्गादिति भावः ।

प०— स्मृतीनां प्रकृतोपयोगितया तात्पर्यमाह **पुरा सत्ये युग इति ॥ प्रकृतानामिति ।** 'पुरा सत्ये युगे देवा विशुद्धमतयोऽखिलाः । यजन्ति विष्णुमेवैकं ज्ञात्वा सर्वेश्वरेश्वरम् । प्रयान्ती'-त्यादिपाद्मवचनमिति सन्न्यायरत्नावल्युक्तेः तत्र ग्रन्थे पूर्वत्र प्रकृतानामित्यर्थः । प्रधानमिति भ्रमनिरा-सायाह **प्रकृतिः स्वभाव इति ॥ अंधतमसावाप्नोति ।** अवसमंधेभ्यस्तमस इति समासान्तोक्तेः साधुत्वं ज्ञेयम् । 'सर्गाणां सुबहुत्वेऽपि शुभाशुभफलाधिकौ । देवासुराख्यौ द्वावेव गन्धर्वाद्यास्तदन्तराः' इति गीतातात्पर्योक्तवचनं हृदि कृत्वाह **सर्गाणामिति ॥ इति वचनादिति ।** षोडशेऽध्याये । सर्गपदमर्थतोऽनूद्यान्वयमाह **स्वभाव इत्येतदिति ।** स्वभावार्थकं सर्ग इत्येतत्पदमित्यर्थः । यद्वा अग्रेतनस्वभाव इत्येतदित्यर्थः । वाक्यद्वयस्थं रतिः स्मृतिः इति पदचतुष्टयं सकृदुपादाय कस्येत्याकांक्षापूरक-पदे वाक्यद्वये यथाक्रममाह **रतिः स्मृतिश्च विष्णोः शिवस्येति शेष इति ॥ तदनुष्ठानमात्रेति ।** न तु विष्ण्वर्पणमिति मात्रपदार्थः । अनादीति विशेषणं स्वभाव इत्यत्र हेतुरित्याह **अनादित्वादेव स्वभावत इति ॥ देवादीनामप्येवं फलमिति ।** सुखैकगतयो देवाः, दुःखैकगतयो दैत्या इत्येवं ज्ञेयमित्यर्थः । अत्रार्थे योग्यताभेदरूपेऽर्थे । **अन्यत्र** गीतातात्पर्ये षोडशेऽष्टादशे चाध्यायेऽध्यायान्तरे च तत्र तत्र तथा भारततात्पर्यनिर्णये चाद्याध्याये 'त्रिविधा जीवसंघाश्चे'त्यादौ 'भविष्यत्पर्ववचनमित्ये-तदखिलं परमि'त्यन्तेन ग्रन्थेनोक्तानीत्यर्थः । **योग्यतायां स्मृत्युक्तिः ॥**

**या०**— रतिः स्मृतिरिति तन्त्रेण प्रतीकद्वयग्रहणम् । ततश्च पूर्वत्र विष्णोरिति शेषः । उत्तरत्र शिवस्येति शेष इत्यर्थः । चशब्दस्तु शेषशब्दस्यावृत्तिद्योतकः ॥

**श्री०**—बाहुशालित्वस्य देवेष्वपि सत्त्वात्किं विशिष्योच्यते दैत्यानामित्यतो बाहुशालित्वं देव-व्यावृत्तं यथा स्यात्तथा व्याख्याति **अस्थान इति ।** अविषय इत्यर्थः । दैत्या बाहुबलप्रयोगाविषयेषु सज्जनेषु बाहुबलं प्रयुञ्जते । नैवं देवा इत्यर्थः ।

**सु०— उक्तानामनुमानानां व्याप्त्यवधारणाद्यर्थमागमानां चान्यार्थव्याख्याननिरासा-र्थमनुग्राहकं तर्कमाह** यदीति ।

**अनु०**— यद्यनादिविशेषो न साम्प्रतं कथमेव सः ॥

विशेषः **स्वरूपगतो योग्यतालक्षणोऽतिशयः । स विशेषः परिदृश्यमानोऽतिशयः । एत-दुक्तं भवति । यदि हिरण्यगर्भस्यानादिः सर्वोत्कृष्टो योग्यतालक्षणो विशेषो न स्यात्तद्-**

**साम्प्रतं दृश्यमानं सर्वोत्कृष्टत्वं न स्यात् । तस्यैतद्बीजत्वात् । कारणाभावे च कार्याभावस्य नियतत्वात् । अन्यथा सर्वेषामपि सर्वोत्कृष्टत्वापत्तेः । एवमन्यत्रापि वक्तव्यमिति ।**

**शे०** — यद्यनादीत्युत्तरवाक्यानर्थक्यमाशङ्क्य तर्ककथनार्थत्वान्न तदिति भावेन किन्तर्केणापीत्यस्तत्प्रयोजनं दर्शयंस्तत्परिहारतयोत्तरग्रन्थं सङ्गमयति **उक्तानामिति** । ननु परिदृश्यमानविशेषान्यथाऽनुपपत्त्याऽनादिविशेषसिद्धावप्यनेनानादियोग्यताऽसिद्धेः कथमस्य तर्कस्यानादियोग्यतासाधकानुमानाङ्गव्याप्त्यवधारणार्थत्वं तत्साधकागमानां चान्यार्थनिरासकत्वमित्यता विशेषपदं तत्परतया व्याचष्टे ॥ **विशेष इति** । विपक्षे बाधककथनेन तर्कस्याप्रयोजकतां परिहरन्नेव विवक्षितं तर्कं दर्शयन्नाह **एतदुक्तं भवतीति** । नन्वेतावता हिरण्यगर्भस्य सर्वोत्कर्षप्रयोजकसर्वोत्कृष्टयोग्यतासिद्धावपि नान्यत्र तत्सिद्धिरिति कथं सार्वत्रिकयोग्यतासाधकत्वमस्य तर्कस्येत्यत आह **एवमिति** ॥ **अन्यत्रापीति** । रुद्रादावपीत्यर्थः । तथा चानेन तर्केणान्यत्र योग्यताया असिद्धावप्येवंजातीयतर्केण तत्सिद्धिसम्भवाद्युक्तमेव सार्वत्रिकयोग्यतागमकत्वमस्येति भावः ।

**स०** — **एवमन्यत्रेति** । रुद्रादावपीत्यर्थः ।

**प०** — अस्फुटत्वादभिप्रायमाह **एतदुक्तमिति** । **एतद्बीजत्वात्** । बहुव्रीहिः ॥ **एवमन्यत्रापीति** । रुद्रादावपीत्यर्थः ।

---

**सु०** — **ननु ब्रह्मादीनां योग्यतालक्षणाऽनादिविशेषाभावेऽपि सादिनो विशिष्टादृष्टादेव सर्वोत्कृष्टत्वादिकं भविष्यति । तथा च स्मृतिः 'स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चतामेती'त्यादिकेति चेत् । अत्र वक्तव्यम् । किं तद्विरिञ्चस्य सर्वोत्कर्षबीजं विशिष्टमदृष्टं ततः प्राक्तनतथाविधमदृष्टमनपेक्ष्यैव जायते । उतापेक्ष्येति । आद्यं दूषयति** अदृष्टादेव चेति ।

**अनु०** — अदृष्टादेव चादृष्टं स्वीकृतं सर्ववादिभिः ॥

**तानि तानि द्रव्यादीनि खल्वदृष्टोत्पत्तौनिमित्तानि श्रुतिस्मृतिभ्यामुपलभ्यन्ते । तत्सम्पत्तिश्चादृष्टनिमित्तैव । तस्मान्न केवलं फलं किन्नामोत्तरोत्तरमदृष्टं च पूर्वपूर्वादृष्टाद्भवतीति चार्वाकव्यतिरिक्तसर्ववादिभिः स्वीकृतम् । अतः सर्वोत्कर्षहेतोर्विशिष्टादृष्टस्य तथाविधप्राक्तनादृष्टानपेक्षोत्पत्तिकत्वाभ्युपगमेऽपसिद्धान्तः स्यात् । भवत्वन्येषां वादिनामित्थं सिद्धान्तो मम तु सर्वोत्कर्षादिफलोत्पत्तावेव विशिष्टादृष्टापेक्षा न तु तदुत्पत्तावपीति । यद्वा यद्विरिञ्चस्य सर्वोत्कर्षनिमित्तं विशिष्टमदृष्टं तस्य तथाविधादृष्टकार्यत्वेऽपि तस्य नादृष्टकार्यत्वमिति ।**

शे० — ननु चादृष्टादेव चादृष्टमित्युत्तरग्रन्थानर्थक्यम् । न चोत्तरोत्तरादृष्टस्य पूर्वपूर्वादृष्टसापेक्षत्वस्य सर्ववादिसम्मतत्वकथनव्याजेन तदनङ्गीकारेऽपसिद्धान्तकथनार्थत्वान्न तस्यानर्थक्यमिति वाच्यम् । तत्कथनस्याप्यनर्थकत्वात् । न चानादियोग्यताभावेऽपि विशिष्टादृष्टेनैव विशेषोपपत्त्योक्ततर्केऽन्यथासिद्धिशङ्कानिरासाय विपक्षे बाधककथनार्थं तदिति वाच्यम् । विशेषादृष्टविशेषयोः कार्यकारणभावस्यैवाप्रामाणिकत्वेन तेनान्यथासिद्धिशङ्काया एवानुपपत्त्या तन्निरासाय विपक्षे बाधककथनस्य दूरनिरस्तत्वादित्यतोऽन्यथासिद्धिशङ्कानिवर्तकतयोत्तरग्रन्थं योजयितुं विशिष्टादृष्टविशेषयोः कार्यकारणभावस्य प्रामाणिकत्वोपपादनेन विशिष्टादृष्टेन विशेषस्यान्यथासिद्धिशङ्कां तावदुत्थापयति **नन्विति** । ननु विशिष्टादृष्टेन विशेषस्यान्यथासिद्धिं वदता मया विशेषस्येव विशिष्टादृष्टस्यापि विशिष्टादृष्टान्तसापेक्षताया एव वक्तुं शक्यत्वान्नापसिद्धान्त इत्यतोऽनपेक्षितत्वपक्ष एवापसिद्धान्तस्योच्यमानत्वान्नानुपपत्तिरित्यभिप्रेत्यात्र सम्भावितं पक्षद्वयं विकल्प्याद्योत्तरत्वेनोत्तरग्रन्थं योजयति **किं तदित्यादिना** । ननु प्रमाणाभावेन सर्वोत्कर्षहेतोर्विशिष्टादृष्टस्य तथाविधप्राक्तनादृष्टापेक्षोत्पत्तिकत्वमेवासिद्धम् । नापि तस्य सर्ववादिसम्मतत्वमस्ति । अदृष्टमनभ्युपगच्छतश्चार्वाकस्य तदसम्मतेः । तत्कथं विशिष्टादृष्टस्य तदनपेक्षोत्पत्तिकत्वेऽपसिद्धान्त इत्यतो विशिष्टादृष्टस्य तथाविधदृष्टापेक्षोत्पत्तिकत्वं तावदुपपादयति **तानि तानीति** ॥ **न केवलं फलमिति** । अनेनादृष्टादेव चेति चशब्दस्य भिन्नक्रमत्वकथनाद्विरुद्धार्थकचैवशब्दयोः कथमेकत्र सम्बन्ध इति शङ्का निरस्ता भवति **तदुत्पत्ताविति** । विशिष्टादृष्टोत्पत्तावित्यर्थः ॥ **तस्येति** । विरिञ्चस्य सर्वोत्कर्षनिमित्तविशिष्टादृष्टनिमित्तभूतविशिष्टादृष्टस्येत्यर्थः । इतीत्यतः परं सिद्धान्त इत्यनुवर्तते ।

स० — **तदुत्पत्ताविति** । विशिष्टादृष्टोत्पत्तावित्यर्थः ।

प० — **तथाच स्मृतिरिति** । चतुर्थस्कन्धस्था । शतजन्मभिः स्वधर्मनिष्ठ इत्यर्थः । इत्यादीत्यादिपदेन 'वया विष्णोरेषस्य प्रभृथे हविर्भिः । विदेहि रुद्रो रुद्रियं महित्वमित्यादिग्रहः ॥ **विशिष्टमिति** । इतरासाधारणमित्यर्थः । अदृष्टा देवा दृष्टं जायत इति वादिनानङ्गीकारे युक्तिमाह **तानि तानीति** । सोमव्रीहियवदधिक्षीराज्यपश्वादिद्रव्याणि । आदिपदेन यागादीनां क्रियादिग्रहः ॥ **श्रुतिस्मृतिभ्यामिति** । सोमेन यजेत व्रीहिभिर्यजेत पशुमालभेतेत्यादिश्रुत्या । यज्ञाद्भवति पर्जन्यः 'वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।' इत्यादिस्मृत्या चेत्यर्थः । चशब्दार्थं विवृण्वन् योजयति **न केवलमिति** ।

**सु॰— सर्वस्यापि प्रवाहस्य तथात्वे हि भवतामिष्टसिद्धिरिति वदन्तं प्रत्यतिप्रसङ्गमाह** आकस्मिक इति ।

**अनु॰—** आकस्मिको विशेषश्चेददृष्टे क्वचिदिष्यते ॥
सर्वत्राकस्मिकत्वं स्यान्नादृष्टापेक्षता भवेत् ।

**क्वचिद्विरिञ्चोत्कर्षहेतौ तद्धेतौ वाऽदृष्टे विशेषोऽतिशयो यद्याकस्मिकोऽदृष्टनिरपेक्ष एवेष्यते, यदि किमपि विशिष्टमदृष्टं तथाविधादृष्टनिरपेक्षमेवोत्पद्यते इत्यङ्गीक्रियत इति यावत् । तर्हि सर्वत्र फलादावप्याकस्मिकत्वमङ्गीकार्यं स्यादविशेषात् । आपाद्यं विवृणोति** नेति ।

**सर्वत्रेत्यनुवर्तते । यद्येवं न विव्रीयेत तर्हि परेणादृष्टस्य निष्कारणताया अनङ्गीकृतत्वादसङ्गतोऽयं प्रसङ्गः स्यात् । एवमेवापादकमपि व्याख्येयमिति भावः ।**

**अस्तु विरिञ्चोत्कर्षस्याप्यदृष्टानपेक्षतेति चेन्न । प्राग्भवीयस्य दृष्टकारणकलापस्य नष्टत्वेन निष्कारणतापातात् । किञ्च विशिष्टो दृष्टकारणकलापोऽपि तस्य कुत इति वाच्यम् । निर्निमित्तश्चेदतिप्रसङ्गः । स्वभावनिमित्तश्चेत्सिद्धं नः समीहितम् । एतेन दृष्टव्यापारपरितुष्टादीश्वराद्विरिञ्चस्य सर्वोत्कर्षसम्पत्तिरित्यपि निरस्तम् । अनादियोग्यताऽपरिहारादिति ।**

---

**शे॰—** नन्वेवं सर्वोत्कर्षहेतुविशिष्टादृष्टस्य तथाविधादृष्टकार्यत्वाभ्युपगमेऽनादियोग्यतासिद्ध्याऽस्मदिष्टसिद्धिरित्यतो नैतावता तत्सिद्धिरित्याह **सर्वस्यापीति । तथात्वे** प्राक्तनविशिष्टादृष्टापेक्षत्वे । मम तु सर्वोत्कर्षादिरूपफलोत्पत्तावेवेत्याद्यपक्षानुसारेणोक्तम् ॥ **क्वचिद्विरिञ्चोत्कर्षहेतावदृष्ट इति** । यद्वेत्युक्तपक्षानुसारेणाह **तद्धेतावदृष्ट इति** । सर्वोत्कर्षहेतुविशिष्टादृष्टहेतावदृष्ट इत्यर्थः । निष्कारणकत्वस्य परेणानङ्गीकृतत्वाद्वक्ष्यमाणग्रन्थानुरोधेन तत्तात्पर्यमाह **अदृष्टेति** । विरिञ्चोत्कर्षहेतौ तद्धेतौ चादृष्टेऽतिशयस्यादृष्टानपेक्षत्वोक्त्या फलितमापादकं दर्शयति **यदीति** ॥ **किमपीति** । सर्वोत्कर्षहेतुभूतं वा सर्वोत्कर्षहेतुविशिष्टादृष्टहेतुभूतं वेत्येवं किमपीत्यर्थः ॥ **तथाविधेति** । तत्प्राक्तनविशिष्टादृष्टेत्यर्थः ॥ **फलादाविति** । सर्वोत्कर्षादिरूपफलादावित्यर्थः । आदिपदेन सर्वोत्कर्षादिरूपफलहेतुविशिष्टादृष्टपरिग्रहः । ततश्च यदि सर्वोत्कर्षहेतुभूतं विशिष्टमदृष्टं तत्प्राक्तनविशिष्टादृष्टनिरपेक्षं स्यात्तर्हि सर्वोत्कर्षादिफलमपि विशिष्टादृष्टनिरपेक्षं स्यादिति । यदि सर्वोत्कर्षादिहेतुविशिष्टादृष्टहेतुभूतं विशिष्टादृष्टं तथाविधादृष्टनिरपेक्षं स्यात्तर्हि सर्वोत्कर्षादिफलहेतुभूतमपि विशिष्टादृष्टं तथाविधदृष्टनिरपेक्षं स्यादिति तर्कस्वरूपमुक्तं भवति । तर्कद्वयेऽप्यापादकद्वयस्यापाद्यद्वयेन सह दृष्टान्ताभावेन व्याप्त्यसिद्धेस्तर्कस्य मूलशैथिल्यादाभासत्वमाशङ्क्य विशेषव्याप्त्यभावेऽप्यविशेषलक्षणसामान्यव्याप्तिसद्भावान्न तदिति भावेन तामाह **अविशेषादिति** ।

ननु निष्कारणकत्वरूपाकस्मिकत्वमेवापाद्यमस्तु किं तद्विवरणेनेत्यत आह **यद्येवमिति**। तर्ह्य-सङ्गतोऽयं प्रसङ्गः स्यादिति संबन्धः। तत्कथमित्यत उक्तं **परेणेति**। अदृष्टस्य सर्वोत्कर्षादिरूपफल-हेतुभूतस्य तद्धेतुभूतविशिष्टादृष्टहेतुभूतस्यादृष्टस्य निष्कारणतायाः परेणानङ्गीकृतत्वादित्यर्थः। अयं भावः। न तावदत्रादृष्टस्य निष्कारणकत्वेन फलादेर्निष्कारणकत्वमविशेषव्याप्त्याश्रयणेनापाद्यमिति वक्तुं शक्यं परेण। तथा सति सर्वोत्कर्षहेतुभूतस्य तद्धेतुभूतस्य वाऽदृष्टस्य निष्कारणतायाः पूर्ववादिनाऽनङ्गीकृतत्वे-नापादकासिद्ध्यापत्त्या तेन फलादेः निष्कारणकत्वापादनस्यासङ्गतत्वापातात्। किन्त्वदृष्टस्योक्तविधादृष्ट-निरपेक्षत्वेन फलस्याकस्मिकत्वमेवापाद्यत इति। न च तद्युक्तम्। प्रसङ्गमूलभूतविशेषव्याप्तेरविशेष-व्याप्तेर्वा तथा सत्यभावप्रसङ्गेन मूलशैथिल्यात्तर्कस्यासङ्गतत्वप्रसङ्गादिति। ननु चैवं विवरणार्थं प्रवृत्तेन भाष्यकृताऽऽपाद्यस्येवापादकस्याप्यवश्यं विवरणीयत्वात्तदविवरणाद्भाष्ये न्यूनत्वमित्यतो भाष्यकारीयापाद्य-विवरणस्यापादकविवरणोपलक्षणत्वेन स्वमात्रपरत्वाभावान्न तदिति भावेन भाष्यकारीयमापाद्यव्याख्यानमा-पादकव्याख्यानेऽप्यतिदिशति **एवमेवेति**। यद्येवं न व्याख्यायते तदा परेणादृष्टस्य निष्कारणताया अनङ्गीकृतत्वादापादकासिद्ध्या तर्कस्यासङ्गतता स्यादिति भावः।

फलादेरदृष्टनिरपेक्षत्वापादनस्येष्टापादनतामाशङ्कते **अस्त्विति**। तदुत्कर्षस्यादृष्टनिरपेक्षत्वं वदन्प्रष्टव्यः। किमय दृष्टकारणकलापप्रयुक्तः किंवाऽदृष्टकारणपरितुष्टेश्वरनिमित्तक इति विकल्पद्वयं मनसि निधायाद्यं दूषयति **प्राग्भवीयस्येति** ॥ **किञ्चेति**। एतच्च दृष्टकारणकलापस्य नष्टत्वोपपादकं हेतुगर्भविशेषणम्। दृष्टकारणकलापस्य नष्टत्वान्न तदुत्कर्षापादकमित्युक्तम्। इदानीन्तु व्यर्थश्चायं सर्वो-त्कर्षस्य विशिष्टादृष्टनिमित्तकत्वपरित्यागेन दृष्टकारणकलापनिमित्तकत्वाभ्युपगमः परस्य। विशिष्टादृष्टप्रयुक्तत्व इव तस्य दृष्टकारणकलापप्रयुक्तत्वेऽप्यनादियोग्यताया अवर्जनीयत्वादित्यभिप्रेत्य तत्कथमित्यतस्तदुपपाद-यितुं पृच्छति **किञ्चेति**। स किं निर्निमित्तकः सनिमित्तको वा। द्वितीयेऽपि विशिष्टादृष्टनिमित्तको वा स्वभावनिमित्तको वेति विकल्पान्मनसि निधायाद्यमनूद्य दूषयति **निर्निमित्तश्चेदिति** ॥ **अतिप्रसङ्ग इति**। तथा सति सर्वेषामपि सर्वोत्कृष्टत्वं स्यादविशेषादित्यतिप्रसङ्ग इत्यर्थः। न द्वितीयः। तथा सति सर्वोत्कर्षस्यैव विशिष्टादृष्टप्रयुक्ततासम्भवेन तस्य दृष्टकारणकलापप्रयुक्ततामभ्युपगम्य दृष्टकारणकलाप-निमित्ततया विशिष्टादृष्टकल्पनायां गौरवप्रसङ्गादिति भावेन तृतीयं दूषयति **स्वभावेति** ॥ **सिद्ध-मिति**। स्वभावस्यैव योग्यतात्वस्य वक्ष्यमाणत्वादिति भावः। आद्यद्वितीयं दूषयति **एतेनेति**। एतेनेत्युक्तमेव विशदयति **अनादीति**। दृष्टव्यापारसम्पत्तेरपि पूर्ववदनादियोग्यतां विनाऽनुपपत्तेरिति भावः।

स० — **परेणादृष्टस्येति** । व्याप्याङ्गीकारेऽनिष्टप्रसञ्जनं तर्कः । व्याप्यं चादृष्टस्य निष्कारणकत्वम् । तस्य परेणानङ्गीकृतत्वात् फलादावाकस्मिकत्वं यद्व्यापकं तन्नापादयितुं शक्यमित्यतः आपाद्यविवरणं कर्तव्यमिति भावः । **आपादकमपीति** । अतिशयो यद्याकस्मिक इष्यत इत्यापादकमित्यर्थः । **अनादिरिति** । इष्टव्यापारसंपत्तेरपिअनादि तत्तद्योग्यतां विना तदसंभवादित्यर्थः ।

प० — **भवतामिष्टसिद्धिरिति** । अदृष्टाच्चेत्यादिना वक्ष्यमाणदिशेति भावः ॥ **एवमेवापादकमपीति** । आकस्मिकमित्यापादकमप्यदृष्टनिरपेक्षमिति व्याख्येयम् । न तु निष्कारणमित्येवमित्यर्थः । दृष्टकारणकलापादेव ब्रह्मणो दृश्यमानमुत्कर्षं मन्वानः शङ्कते **अस्तु विरिञ्चेति** ॥ **निष्कारणतेति** । एतद्गवीयस्य विरिञ्चत्वप्राप्त्यनन्तरभावित्वादित्यर्थः । अभ्युपेत्याप्याह **किञ्चेति** ॥ **अतिप्रसङ्ग इति** । विरिञ्चेतरस्यापि स्यादित्यतिप्रसङ्ग इत्यर्थः ।

श्री० — **भवतामिष्टसिद्धिरिति** । सर्वस्यापि विशिष्टादृष्टस्य यः प्रवाहस्तदाश्रयत्वं तस्यैव कुत इत्यनुयोगस्यानादिविशिष्टयोग्यताया अन्यदुत्तरं नास्तीत्येवं योग्यताया अनादित्वरूपभवदिष्टसिद्धिरित्यर्थः । तत्तत्फलप्राप्त्युपाययोः प्रयत्नादृष्टयोरागन्तुकयोर्बीजभूतोऽनागन्तुकः स्वभावविशेष एवानादियोग्यतेत्युच्यत इति ज्ञेयम् ॥ **अविशेषादिति** । अदृष्टनिरपेक्षत्वाविशेषादित्यर्थः ॥ **असङ्गतोऽयं प्रसङ्गः स्यादिति** । यदि परेणादृष्टस्य निष्कारणकत्वमङ्गीकृतं तर्ह्येव सर्वत्र फलादावप्याकस्मिकत्वं निष्कारणकत्वं वा स्यादित्यापादनं सङ्गच्छते । न ह्येवमङ्गीकृतं परेण किन्त्वदृष्टनिरपेक्षत्वमेव । अतोऽसङ्गतिपरिहारायाकस्मिकत्वविवरणं नादृष्टापेक्षता भवेदित्यनेन कृतमित्यर्थः । नन्वथाऽपि यथास्थितमूले पुनरसङ्गतिरेव । यद्यदृष्ट आकस्मिको निष्कारणको विशेषः स्यात्तर्हि सर्वत्र फलादावप्याकस्मिकत्वमदृष्टनिरपेक्षत्वं स्यादित्यापादनेऽसङ्गतिरेवेत्यत आह **एवमेवेति** । सर्वत्राकस्मिकत्वं स्यादित्यापाद्यवदेवाकस्मिकोऽदृष्टनिरपेक्ष एव विशेषो दृष्ट इष्यते चेदित्येवमापादकमपि व्याख्येयमित्यर्थः ॥ **दृष्टव्यापारेति** । स्वधर्मनिष्ठ इत्युक्तस्वधर्माचरणरूपेत्यर्थः ॥ **अनादियोग्यतापातादिति** । दृष्टकारणजनितेश्वरतुष्टिजनितसर्वोत्कर्षसंपदन्यत्राविद्यमाना तस्मिन्नेव यदा प्राप्ता तदाऽनादियोग्यतैव प्राप्तप्रायेत्यर्थः ।

सु० — **अस्तु तर्हि द्वितीयः पक्ष इति तत्राह** अदृष्टाच्चेदिति ।

अनु० — अदृष्टाच्चेद्विशेषोऽयमनादित्वं कुतो न तत् ॥

**भवतीति शेषः । विशिष्यत इति विशेषो विशिष्टमदृष्टमित्यर्थः । अयमिति विरिञ्चस्य सर्वोत्कर्षहेतुः । अनादित्वं तथाविधादृष्टपरंपरायाः । अनादियोग्यतावत्त्वमिति च । तत्तर्हि । इदमुक्तं भवति । यथा विरिञ्चस्य सर्वोत्कर्षे कारणं विशिष्टमदृष्टं तथा (विधादृष्ट-**

**पूर्वकं) विधपूर्वादृष्टहेतुकम् । तथा तदपि तदपीति स्वीकार्यम् । समानन्यायत्वात् । तथा चानादिविशिष्टादृष्टप्रवाहाश्रयत्वं तस्यैव कुत इत्यनुयोगस्य नान्यदुत्तरमनादेर्विशिष्टस्वभावात् । तत्तत्फलप्राप्त्युपाययोः प्रयत्नादृष्टयोरागन्तुकयोर्बीजभूतोऽनागन्तुकस्वभावविशेष एवानादियोग्यतोच्यते । यथोक्तम् । 'स्वभावाख्या योग्यता या हठाख्ये'त्यादि । अतः सिद्धा ब्रह्मादिकलिपर्यन्तेषु जीवेष्वनादियोग्यतेति ।**

**शे०**— ननु तथाविधादृष्टपरम्पराया अनादित्वं नानिष्टमित्यतोऽनादियोग्यताऽऽपादकत्वात्तस्यानिष्टत्वमित्यभिप्रेत्य तस्याप्यापाद्यमाह **अनादियोग्यतावत्त्वमिति चेति** । इति च तदर्थ इति शेषः । ननु च सर्वोत्कर्षकारणविशिष्टादृष्टस्य तथाविधादृष्टहेतुत्वेऽपि फलहेतुविशिष्टादृष्टनिमित्तकविशिष्टादृष्टस्य वा तन्निमित्तविशिष्टादृष्टस्य वा न तथाविधादृष्टनिमित्तकत्वमिति न तथाविधादृष्टपरम्पराया अनादित्वमापद्यते । बीजाभावात् । अस्तु वाऽनादित्वं तथाऽपि कथमनादियोग्यतासिद्धिर्निमित्तनैमित्तिकभावस्याप्रतीतेः । तस्यैव विशिष्टादृष्टप्रवाहाश्रयत्वोपपादकतयाऽनादिविशिष्टस्वभावसिद्धावपि न योग्यतासिद्धिः स्वभावस्य योग्यतात्वासिद्धेरित्यत आह **इदमुक्तं भवतीति** ॥ **यथोक्तमिति** । भारततात्पर्यनिर्णय इति शेषः ।

**प०**— तथाविधं विशिष्टादृष्टमपेक्ष्यैव जायत इति प्राग्विकल्पितपक्षं शङ्कते **अस्तु तर्हीति** । अनादित्वमित्यत्राकाङ्क्षितमाह **तथाविधादृष्टपरंपराया इति** । तस्या अर्थान्तरमाह **अनादियोग्यतावत्त्वमिति चेति** । अदृष्टप्रवाहस्यानादित्वे अनादियोग्यतावत्त्वं कुत इत्यत आह **इदमुक्तमिति** । तस्यैव विरिञ्चस्यैव कुतः, अन्यस्य कुतो नेति प्रश्नस्यानादिभूतेतरासाधारणस्वभावादन्यदुत्तरं नास्ति । तादृशस्वभावस्तस्यास्तीति अत्युत्कर्षहेतुभूतादृष्टप्रवाहः तस्यैवेत्येवोत्तरं वाच्यमित्यर्थः । तावताऽनादियोग्यतासिद्धिः कुत इत्यत आह **तत्तत्फलेति** । 'स्वभावाख्या योग्यता या हठाख्या याऽनादिसिद्धा सर्वजीवेषु नित्या । सा कारणं प्रथमं तु द्वितीयमनादिकर्मैव तथा तृतीयम् । जीवप्रयत्नः पौरुषाख्य' इति भारततात्पर्योक्तिं हृदि कृत्वाह **प्रयत्नादृष्टयोरिति** ॥ **यथोक्तमिति** । द्वाविंशेऽध्याये । **अनादियोग्यतासत्वे तर्कोक्तिः** ।

**सु०— भगवान्निर्दोष इति यत्प्रागुक्तं तत्समर्थनार्थमुत्तरो ग्रन्थः । ननु 'न स्थानतोऽपी'त्यादिनैव समर्थितमेतत् । सत्यम् । युक्त्यादिना प्राप्तं सदोषत्वं तत्रापाकृतम् । अत्र तु प्रत्यक्षप्राप्तमिति भेदात् । एतदपि तत्रैव कुतो न दूषितमिति चेत् । विश्वादिषु प्रत्यक्षस्याप्रवृत्तेः । प्रासङ्गिकं तु निराकरणं तत्र वाऽत्र वा न कश्चिद्विशेषः । प्रागुक्तार्थप्रपञ्चश्चात्रानु-**

भाष्यकृता क्रियते । मुक्ततारतम्यादेः प्रपञ्चनात् । अतोऽत्रैव निर्दोषताप्रपञ्चनं युक्तम् । किञ्चात्र ज्ञानस्वरूपनिरूपणं भविष्यति तत्प्रसङ्गश्च ज्ञानपादे समुचितः । अपि च न भगवत्साक्षात्कारमात्रेणाशेषपुरुषार्थप्राप्तिः किन्तु निर्दोषाद्भगवद्दर्शनादित्युक्तम् । तच्चानेन निर्दोषभगवद्दर्शनमुपदर्शितं भवति । तर्हि तत्रैवायं ग्रन्थसन्दर्भः कुतो न निवेशित इति चेत् । देवदानवमानवस्वभावप्रपञ्चनस्यात्रोपयुक्तत्वेन तदानन्तर्योपपत्तेः । तथा च वक्ष्यामः ।

शे० — **प्रागिति** । एवमुत्पन्ननिर्दोषभगवद्दर्शनादित्यत्रेत्यर्थः । ननु विश्वादिषु प्रत्यक्षस्याप्रवृत्तावपि यौक्तिकभेदनिराकरणेन स्मृतत्वात् प्रसङ्गलक्षणया सङ्गत्या रामकृष्णादिभेदस्यापि तत्रैव निराकरणं किन्न कृतमित्यत आह **प्रासङ्गिकं त्विति** । तत्रेवात्रापि प्रसङ्गसङ्गतेः संभवेन तस्यास्तत्रैव कर्तव्यतायामनियामकत्वादिति भावः । तर्हि भवतोऽपि विनिगमनाविरह एवेत्यत आह **प्रागुक्तेति** । यावदधिकारमित्यत्रोक्तमुक्ततारतम्यप्रपञ्चनं तावदस्मिन्पादे क्रियते । एवमेव प्रपञ्चनप्रसङ्गान्न स्थानतोऽपीति भक्तिपादोक्तं निर्दोषत्वमपि प्रपञ्च्यत इत्यर्थः । तदेव कथमस्यावगतमित्यत आह **मुक्तेति** । यावदधिकारमवस्थितिरित्याद्यधिकरणेषु तस्योपसंहारपादे प्रतिपादितत्वादिति भावः ॥ **भविष्यतीति** । 'न चान्यभेदवद्विष्णौ भेदस्तद्दर्शिनामपि । दृश्यते प्रत्यभिज्ञैव बहुरूपेषु दृश्यत' इत्यनुपदमेव 'निर्दोषमेव तं ब्रह्मा ददर्शाशेषरूपिणमि'त्यादिनेति शेषः ॥ **तत्रैवेति** । पुरुषार्थाधिकरण एवेत्यर्थः । ननु देवदानवमानवस्वभावप्रपञ्चनस्य निर्दोषत्वोपपादने कथमुपयोग इत्यत आह **तथा च वक्ष्याम इति** । देवदानवमानवस्वभावप्रपञ्चनस्य निर्दोषभगवद्दर्शनोपदर्शने यथोपयोगस्तथा च 'न चान्यभेदवद्विष्णावि'त्येतद्व्याख्यानावसरे 'स्वभावत एव जीवास्त्रिविधा देवदानवमानवभेदात्तत्र दैवं प्रत्यक्षं तावदवताराणां परस्परं भेदं न गोचरयती'त्यादिनेति शेषः ।

स० — ननु विश्वादिषु प्रत्यक्षस्याप्राप्तावपि त्वयोक्तभेदनिराकरणेन प्रात्यक्षिकरामकृष्णादिभेदस्यापि स्मृतत्वेन प्रसङ्गलक्षणसङ्गत्या तत्रैव कर्तव्यमित्यतस्तस्याप्यविशेष इत्याह **प्रासङ्गिकं त्विति** । तर्हि भवतोऽपि विनिगमनाविरह इत्यत आह **प्रागुक्तेति** । ननु प्रागुक्तार्थप्रपञ्चकत्वमेव कथमस्यावगम्यत इत्यत आह **मुक्तेति** । ननु देवदानवमानवस्वभावप्रपञ्चनस्य निर्दोषत्वोपपादने कथमुपयोग इत्यत आह **तथा च वक्ष्याम इति** । 'स्वभावत एव जीवाः त्रिविधाः देवदानवमानवभेदात् । तत्र दैवं प्रत्यक्षं तावदवताराणां परस्परभेदं न गोचरयती'त्यादिनेति शेषः ।

प० — शिष्यमनःसमाधानायाह **भगवान्निर्दोष इति** ॥ **यत्प्रागुक्तमित्यादि** । एतत्पादोपक्रमे एवमुत्पन्ननिर्दोषभगवद्दर्शनादिति यदुक्तमित्यर्थः । अत एव तत्र व्याख्यावसरे भगवतो निर्दोषत्वसङ्कीर्तनं तदुपपादनाय पातनिकार्थमित्युक्तम् ॥ **न स्थानत इति** । 'न स्थानतोपि परस्योभयलिङ्गं

सर्वत्र ही'त्यादिसूत्रेण 'न स्थानभेदतोऽप्यस्य भेदः कश्चित्परेशितुरि'त्याद्यनुव्याख्यानेन भक्तिपादे समर्थितमेतन्निर्दोषत्वमित्यर्थः ॥ **युक्त्यादीति** । भिन्नस्थानकत्वयुक्त्या कार्यकारणबद्धौ तावित्यादिश्रुत्या च प्राप्तमित्यर्थः । विश्वादिषु विश्वतैजसादिरूपेषु तत्र विचार्यतया प्रसक्तेष्विति योज्यम् । ननु बहुत्वं च विशेषेणेत्यनेनानुमाननिरासोऽत्रापि वक्ष्यते । आगमोऽप्यत्राशङ्क्य निरस्यत इति चेत् । एवं तर्हि प्रपञ्चनत्वान्न स्थानत इत्यादिना पौनरुक्त्यमित्याह **प्रागुक्तार्थेति** । तत्र ज्ञापकमाह **मुक्तेति** । 'वृद्धिह्रासभाक्त्वमि'त्यादिनोक्ततारतम्यस्येत्यर्थः । **ज्ञानस्वरूपेति** । निर्दोषत्वप्रकारकत्वमेव ब्रह्मज्ञानस्वरूपमिति तन्निरूपणं निर्दोषमेव तं ब्रह्मा ददर्शेत्यादिना भविष्यतीत्यर्थः । प्रकारान्तरेणात्र पादेऽस्य प्रपञ्चनस्य सङ्गतिमाह **अपि चेति** ॥ **इत्युक्तमिति** । एवमुत्पन्ननिर्दोषभगवद्दर्शनादित्यस्य द्वितीयव्याख्यानेनोक्तमित्यर्थः ॥ **अनेनेति** । उत्तरग्रन्थेनेत्यर्थः ॥ **तत्रैवेति** । एतत्पादोपक्रम एवेत्यर्थः ॥ **देवदानवमानवस्वभावप्रपञ्चनस्येति** । पूर्वमुक्तस्येति योज्यम् ॥ **अत्रेति** । ज्ञानस्वरूपनिरूपणपरे ग्रन्थ इत्यर्थः ॥ **तथाच वक्ष्याम इति** । 'देवादिस्वभावप्रपञ्चनस्योपयोगं न चेत्यादिव्याख्यावसरे अनुपदमेव वक्ष्याम इत्यर्थः ॥ **ग्रन्थसङ्गत्युक्तिः** ॥

**या० — प्रागुक्तमिति** । एवमुत्पन्ननिर्दोषभगवद्दर्शनादित्यत्रेत्यर्थः । **भविष्यतीति** । 'न चान्यभेदवद्विष्णौ भेदस्तद्दर्शिनामपि । दृश्यते प्रत्यभिज्ञैव बहुरूपेषु दृश्यत' इत्यनुपदं 'निर्दोषमेव तं ब्रह्मा ददर्शाशेषरूपिणमि'त्यादावपीति शेषः । **समर्थितमिति** । न स्थानतोऽपीत्यत्रेति शेषः । **तथा च वक्ष्याम इति** । देवदानवमानवस्वभावप्रपञ्चनस्य निर्दोषभगवद्दर्शनोपदर्शने यथोपयोगस्तथा 'न चान्यभेदवद्विष्णावि'त्येतद्व्याख्यानावसरे वक्ष्याम इत्यर्थः ।

**श्री० — तत्रैव** उपासनापाद एव । **विश्वादिषु** विश्वतैजसादिरूपेषु ॥ **प्रागुक्तार्थप्रपञ्चनमिति** । यावदधिकारमित्यत्रोक्तमुक्ततारतम्यप्रपञ्चनं तावदस्मिन्पादे क्रियते । एवमेव प्रपञ्चनप्रसङ्गान्न स्थानतोऽपीति भक्तिपादोक्तं निर्दोषत्वमपि प्रपञ्च्यत इत्यर्थः । अनेनोत्तरग्रन्थेन ॥ **भगवद्दर्शनमुपदर्शितमिति** । सर्वरूपेष्वभेदेन ज्ञानरूपमित्यर्थः ॥ **तत्रैवेति** । एवमुत्पन्नेत्यत्रैवेत्यर्थः ।

**सु० — इदमत्र शङ्क्यते । रामकृष्णादयो भगवदवतारा भगवतात्यन्ताभिन्ना इति तावत्समर्थितम् । तेषां च परस्परं भेदस्तत्कालवर्तिनां पुरुषाणां प्रत्यक्षेण दृश्यते । न च ते देहवन्त इति चोक्तम् । ततो देहगत एव भेद इत्यनवकाशम् । ततश्च सर्वेषां स्वातन्त्र्यानुपपत्तेः । केषाञ्चित्पारतन्त्र्यम् । एवमन्येऽपि भेदानुषङ्गिणो दोषा द्रष्टव्याः । समानन्याय-**

त्वात् । वेधादिदोषाश्च प्रत्यक्षेणेक्ष्यन्त इति न भगवतो निर्दोषत्वमिति । तत्र तावद्भेदस्य प्रत्यक्षसिद्धतां निराकर्तुमागमवाक्यं पठति न चेति ।

अनु० — न चान्यभेदवद्विष्णौ भेदस्तद्दर्शिनामपि ॥
दृश्यते

चोऽवधारणे । अन्यभेदवदिति व्यतिरेकदृष्टान्तः । अन्येषां घटादीनां यथाऽनेकत्वातिरिक्तोऽन्योन्याभावलक्षणो भेदो दृश्यते न तथेति । विष्णौ भेदो न दृश्यत इत्येवोक्तेऽनेकत्वस्याप्यदर्शनं प्रतीयेत तदर्थमिदं वचनम् । यद्वा यथा विष्णावन्यप्रतियोगिको भेदो दृश्यते न तथा स्वप्रतियोगिक इति योजना । अन्यथा घटादिप्रतियोगिकोऽपि भेदो न दृश्यत इत्यपि प्रतीयेत । अथवाऽन्यप्रतियोगिकभेदवति विष्णावित्यैकपद्येन व्याख्येयम् । प्रयोजनं तूक्तमेव । विष्णौ रामकृष्णादिरूपे । अधुनातनैर्भेदो न दृश्यत इति परस्यापि सम्मतम् । अतस्तद्दर्शिनामपीत्युक्तम् । तृतीयार्थे षष्ठी । अवतारदर्शिभिरपीत्यर्थः । तद्दर्शिनां प्रत्यक्षेणापीति वा । स्वभावत एव जीवास्त्रिविधाः । देवदानवमानवभेदात् । तत्र दैवं प्रत्यक्षं तावदवताराणां परस्परं न भेदं गोचरयतीति भावः ।

शे० — **समर्थितमिति** । न स्थानतोऽपीत्यादिनेति शेषः ॥ **उक्तमिति** । अरूपवदेव

---

हि तत्प्रधानत्वादित्यादिनेति शेषः ॥ **सर्वेषामिति** । युगपदनेकेषामेकमतित्वानुपपत्त्या जगतोऽचेष्टत्वोन्मथनप्रसङ्गादिति भावः ॥ **एवमन्येऽपीति** । अनुग्राह्यानुग्राहकभावादय इत्यर्थः ॥ **भेदेति** । भिन्नानामनुग्राह्यानुग्राहकभावदर्शनादिति भावः ॥ **अन्यथेति** । विष्णौ भेदो न दृश्यत इत्येवोक्ताविर्थः ॥ **प्रयोजनं तूक्तमेवेति** । अन्यथा घटादिप्रतियोगिकोऽपि भेदो न दृश्यत इत्यपि प्रतीयेतेत्येवं विशेषणप्रयोजनं तु द्वितीयपक्षोक्तमेवात्रेत्यर्थः । रामकृष्णाद्यवतारगतभेदस्यैव तत्कालवर्तिपुरुषप्रत्यक्षतायाः शङ्कितत्वादाह **रामकृष्णादिरूप इति** । ननु कर्तृत्वात्कर्तृकरणयोस्तृतीयेति तृतीयया भवितव्यम् । षष्ठी तु कथमित्यतो व्यत्ययेन षष्ठीयं तृतीयार्थे इत्याह **तृतीयार्थे इति** । अत्र पक्षे व्यत्ययाश्रयणं भवतीत्यपरितोषादाह **तद्दर्शिनामिति** ।

स० — **प्रयोजनं तूक्तमेवेति** । अन्यथा घटप्रतियोगिकोपि भेदो न दृश्येतेत्यपि प्रतीयत इत्येव प्रयोजनं तद्द्वितीयपक्षोक्तमेवात्रेति भावः ।

प० — **समर्थितमिति** । न स्थानत इत्यत्रेति योज्यम् ॥ **इति चोक्तमिति** । अरूपवदेव हि तत्प्रधानत्वादिसूत्रैरुक्तमित्यर्थः ॥ **एवमन्येपीति** । अनुग्राह्यत्वजन्ममृत्यादयः ॥ **समानेति** ।

स्वतन्त्रब्रह्मभिन्नजीवसमानन्यायत्वादित्यर्थः । दृष्टान्तोक्तेरुपयोगमाह **विष्णौ भेदो न दृश्यत इत्येवोक्त इति** ॥ **इदमिति** । अन्यभेदवदिति वचनमित्यर्थः । व्यतिरेकदृष्टान्त एव स्थानान्तरोक्तिः ॥ **यद्वेति** । एवमुक्तेरप्युपयोगमाह **अन्यथेति** ॥ **ऐकपद्येनेति** । मतुबन्तत्वोपगमेनान्यभेदवांश्चासौ विष्णुश्चेत्येकपदत्वेनेत्यर्थः । विशेषणोक्तेरपि कृत्यं किमित्यतोऽन्यथेत्यादिनोक्तमेवेत्याह **प्रयोजनं तूक्तमेवेति** । छन्दस्तुल्यत्वादागमस्याह **तृतीयार्थ इति** । सुपां सुलुगित्यादिसूत्रे सुपां सुपो भवन्तीति वार्तिकोक्तेस्तृतीयार्थे षष्ठीत्युक्तम् ॥ **प्रत्यक्षेणापीति** । न केवलं न स्थानत इत्यत्रोक्तदिशा युक्त्या श्रुत्या च नोपलभ्यते प्रत्यक्षेणापीत्यपेरर्थः । यद्वा रूपाणि भिन्नानि । बहुत्वात् विलक्षणाकारवत्वात् भिन्नव्यापारवत्त्वाच्चैत्रमैत्रादिवदित्याद्यनुमानैरपीति समुच्चयार्थोऽपिशब्दः । तथा च वक्ष्यति एतद्वचनव्याख्यावसाने एवमीश्वरेत्यादिना । तथाच वक्ष्याम इत्यनेनोक्तं देवमानवदानवस्वभावप्रपञ्चनस्योपयोगमाह **स्वभावत एव जीवा इति** ।

**या॰— उक्तमिति** । अरूपवदेव हि तत्प्रधानत्वादित्यत्रेति शेषः ॥ **भेदानुषङ्गिण इति** । स्वतन्त्रप्रतियोगिकभेदानुषङ्गिणस्तारतम्यानुग्राह्यानुग्राहकभावादयो दोषा इत्यर्थः ॥ **उक्तमेवेति** । अन्यथा घटादिप्रतियोगिक इत्यादिपूर्ववाक्येनेति शेषः ।

**मु॰— न केवलमेतावत्किं तर्हीत्यत आह** प्रत्यभिज्ञैवेति ।

**अनु॰—** प्रत्यभिज्ञैव बहुरूपेषु दृश्यते ॥

**उत्तमानां पुरुषाणां भगवतो बहुरूपेषु तदेवेदमित्यभेदविषया प्रत्यभिज्ञैव पुराणादौ दृश्यते । यथा जाम्बवतः स राम एवायं कृष्ण इति प्रत्यभिज्ञा । तथा च कुतो भेदज्ञानस्यावकाश इति भावः ।**

**ननु बहुत्वं भेदेन विनाऽऽनुपपद्यमानं तमाक्षिपति । तथा च बहुरूपेषु प्रत्यभिज्ञा न संभवत्येव । संभवन्ती वा भ्रान्तिः स्यादित्यत आह** बहुत्वं चेति ।

बहुत्वं च विशेषेण

**भगवद्रूपाणामिति शेषः । अन्यथोपपत्तिकुण्ठितार्थापत्तिर्न भेदं प्रमापयतीत्यर्थः । अन्यथाऽप्युपपत्तिपक्षे भेदसन्देहः स्यात्सोऽप्यनिष्ट इत्यन्यथैवोपपत्तिं सूचयति** न भेदेनेति ।

न भेदेन कथञ्चन ॥

**उपपद्यत इत्युभयत्र शेषः । कुतः । भगवद्रूपाणां भेदे निरवकाशप्रमाणाभावात्तद्विरोधाच्च । तददिमाह** कथञ्चनेति ।

शे० — **तथा चेति** । अभेदप्रत्यभिज्ञारूपभेदप्रत्यक्षप्रतिबन्धकसद्भावादित्यर्थः ॥ **तथा चेति** । भेदज्ञानरूपस्याभेदप्रत्यभिज्ञाप्रतिबन्धकस्य सद्भावादिति भावः ॥ बहुत्वं विशेषेणेति न भेदेनेति च वाक्यद्वयस्यानाकाङ्क्षत्वप्रयुक्तवाक्याभासत्वं परिहरति **उपपद्यत इतीति** ।

स० — **उभयत्र शेष इति** । बहुत्वं विशेषेणेत्यत्र न भेदेनेत्यत्र चेत्यर्थः । तथा च बहुत्वं विशेषेणोपपद्यते भेदेन नोपपद्यत इति व्याख्यातं भवति ।

प० — **यथा जाम्बवत इति** । 'यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत् क्षुभितनक्रतिमिङ्गिलोऽब्धिः । सेतुः कृतः स्ववश उज्ज्वलिता च लङ्का रक्षशिशरांसि भुवि पेतुरिषुक्षतानी'तिदशमस्कन्धे षष्ठितमेऽध्याये कृष्णविषये जाम्बवत उक्त्या प्रत्यभिज्ञा ज्ञायत इत्यर्थः ॥ **प्रत्यभिज्ञेति** । तदेवेदमिति प्रत्यभिज्ञेत्यर्थः ॥ **अन्यथोपपत्तीति** । भेदप्रतिनिधिविशेषेणोपपत्त्या कुण्ठिता प्रतिबद्धेत्यर्थः ॥ **अन्यथापीति** । किं बहुत्वं ईशरूपेषु भेदेन युज्यते किंवा विशेषबलेन युज्यत इति संदेहस्तु स्यादेवेत्यर्थः ॥ **उभयत्रेति** । अन्यथोपपत्त्युक्तिपरे बहुत्वं च विशेषेणेति वाक्ये न भेदेन कथञ्चनेत्यन्यथैवोपपत्त्युक्तिपरे च वाक्य इत्यर्थः । **कुत इति** न भेदेनेति कुत इत्यर्थः ॥ **तद्विरोधाच्चेति** । निरवकाशप्रत्यभिज्ञाविषयत्वोक्तिरूपप्रागुक्तप्रमाणविरोधाच्चेत्यर्थः ।

श्री० — **बहुत्वम्** अनेकत्वम् ॥ **अन्यथोपपत्तीति** । विशेषेणेत्यर्थः ॥ **अन्यथाऽपीति** । भेदेनापीत्यर्थः ।

---

**सु० — एवमुत्तमानां पुंसां भगवदेकरूपदर्शनसमये रूपान्तरप्रतीतावसत्यां ततो भेदज्ञानमसंभावितम् । प्रतियोगिज्ञानाभावे भेदज्ञानाभावस्य नियतत्वात् । सत्यामपि तथा विरोधिन्याः प्रत्यभिज्ञाया भावादित्युक्तम् । तथाऽपि मध्यमादिजनानां प्रत्यक्षं भगवद्रूपभेदे प्रमाणं भविष्यति । एकरूपदर्शनसमये रूपान्तरप्रतीत्यभावे भेददर्शनानुपपत्तावपि तद्भावे संभवत्येव । न च तेषामपि प्रत्यभिज्ञा भवद्भिरभ्युपेतुं शक्यते । उत्तमत्वप्रसङ्गादित्यतो मध्यमानपेक्ष्य तावदाह** प्रत्यभिज्ञा चेति ।

**अनु० —** प्रत्यभिज्ञा च येषां न तेऽपि तन्मुष्टदृष्टयः ॥

**वाक्यार्थः । येषां तु मध्यमानां जनानां प्रत्यभिज्ञा भगवद्रूपेषु नास्ति तेऽपि तत्र भेदं नैव पश्यन्तीति योजना । प्रत्यभिज्ञाभावे कारणं तेन भगवता मुष्टापहता दृष्टिरेषामिति । तेन बहुत्वेनेति वा । भगवदिच्छया तेषां योग्यतया चोपोद्बलितं बहुत्वमुपलभ्यमानं प्रतीयमाने(ऽपि) वस्तुनि विद्यमानस्याप्यभेदस्य ज्ञानं प्रतिबध्नाति । अत्र तन्मुष्टदृष्टयस्तेऽपीत्यनुवादात्तन्मुष्टदृष्टित्वात्प्रत्यभिज्ञैषां नास्तीति लभ्यते ।**

शे० — **सत्यामपि तथेति** । भगवदेकरूपदर्शनसमये रूपान्तरप्रतीतौ सत्यामपि भेदज्ञानमसंभावितमित्यर्थः । ननु च प्रतियोगिज्ञानरूपतत्तत्कारणसद्भावात्कथं भेदज्ञानस्यासंभावितत्वमित्यतो विरोध्यसहकृतस्यैव तज्ज्ञानस्य भेदज्ञानकारणत्वात्प्रकृते च तद्विरहान्न तज्ज्ञानसंभव इत्याह **विरोधिन्या इति** ॥ **भेददर्शनानुपपत्तावपीति** । प्रतियोगिज्ञानाभावे भेदज्ञानाभावस्य नियतत्वादिति भावः ॥ **येषां त्विति** । अनेन प्रत्यभिज्ञा चेति चशब्दो भिन्नक्रम इत्युक्तं भवति ।

स० — **सत्यामपि तथेति** । भगवदेकरूपदर्शनसमये रूपान्तरप्रतीतौ सत्यामपि भेदज्ञानमसंभावितमित्यर्थः । ननु प्रतियोगिज्ञानरूपकारणसद्भावात्कथं भेदज्ञानमसंभावितमित्यतो बाधकाभावसहकृतस्यैव तस्य साधकत्वात् प्रकृते च तदभावात् न भेदज्ञानसंभव इत्याह **विरोधिन्या इति** ।

प० — स्पष्टतया मूलानुक्तमप्युक्तप्रायं मत्वाऽनुवदति **एवमिति** ॥ **सत्यामपि तथेति** । प्रतियोगिप्रतीतावित्यनुषज्यते । **तथेति** भेदधीर्नास्तीत्यर्थः । तत्र हेतुमाह **विरोधिन्या इति** ॥ **विष्णुरूपेषु भेदस्य उत्तमप्रत्यक्षाविषयत्वोक्तिः** ॥ **भवद्भिः** सिद्धान्तिभिः ॥ **मध्यमानिति** । मानवानपेक्ष्येत्यर्थः । तन्मुष्टेत्यत्र तच्छब्दस्यार्थान्तरम् ॥ **तेन बहुत्वेनेति वेति** । भगवद्रूपगतबहुत्वेनेत्यर्थः । प्रत्यभिज्ञाऽभावे कारणमित्युक्तं प्राक् तत्कथमित्यतः कारणत्वलाभप्रकारं व्यनक्ति **अत्र तन्मुष्टेति** ।

श्री० — मध्यमादीनामित्यत्र मध्यमशब्देन नित्यसंसारिणो ग्राह्याः ॥ **दृष्टिरिति** ।

---

प्रत्यभिज्ञारूपेत्यर्थः । 'तन्मुष्टदृष्टयस्तेऽपि भेदं नैव प्रपश्यन्ती'त्यनुवादस्य विधिसापेक्षितत्वान्मुष्टदृष्टय इति विधिवाक्यं ग्राह्यम् । तच्च प्रत्यभिज्ञा नास्तीत्यत्र हेतुप्रतिपादकं यतस्तन्मुष्टदृष्टय इत्यनन्तरं तन्मुष्टदृष्टयस्तेऽपि भेदं नैव प्रपश्यन्तीति योज्यमित्याशयेनाह **तन्मुष्टदृष्टयस्तेऽपीत्यनुवादो(वादादिति) हीति** ।

सु० — **भगवद्रूपे भेदं नैव पश्यन्तीत्युक्ते घटादिभ्योऽपि भेदं न पश्यन्तीति मन्दस्य प्रतीतिः स्यात्तां निवारयितुमाह** भेदमिति ।

अनु० — भेदं नैव प्रपश्यन्ति भेदमन्येभ्य एव च ॥
पश्यन्त्येवं हरिस्तेषां सन्दर्शयति नान्यथा ॥

**अन्येभ्यो भेदं** पश्यन्त्येव **चेति योजना** ।

**ननु प्रतीयमानं वस्तुद्वयं भेदेन वा प्रतीयतेऽभेदेन वा । भेदाभेदोदासीनतया तु प्रतीतिः कथमित्यत** आह एवमिति ।

एवं बृहत्संहितायां वचनं

**तेषां योग्यतयेति शेषः । अन्यथा गतिबुद्धीत्यादिना कर्मसंज्ञायां द्वितीया स्यात् । विभक्तिव्यत्ययो वा छान्दसः । अन्यथा भेदेनाभेदेन च दर्शयति । यथा खल्वख्यातवादिनां सहकारिसामर्थ्याद्भेदाभेदौदासीन्येन वस्तुप्रतीतिः । यथा वाऽन्येषां शुक्तिकाशकलदर्शनानन्तरं व्यासक्तौ । तथा परमेश्वरशक्त्याऽत्रापि तथा प्रतीतौ को विरोधः । अधमजीवप्रत्यक्षस्य त्वन्या गतिर्भविष्यति । एवमीश्वररूपभेदे प्रत्यक्षं निराकुर्वताऽनुमानमपि निराकृतम् । बहुत्व-स्यान्यथासिद्धेरुक्तत्वात् । तन्न्यायेन चाकारविशेषादीनामन्यथासिद्धत्वादिति । वचनम् अस्तीति शेषः ।**

**शे०— मन्दस्येति ।** भगवद्रूपे तदेवेदमिति भगवद्रूपाभेदविषयप्रत्यभिज्ञाभावकथनेन भगवद्रूपान्तरभेदं न पश्यन्तीत्येव सुमतेः प्रतीतिनियमेन घटादिभ्यो भेदं न पश्यतीति प्रतीत्यनुदयादिति भावः ॥ **शेष इति ।** उपलक्षणं चैतत् । योग्यत्वात्तानिति **शेष** इत्यपि द्रष्टव्यम् । योग्यतयेति शेषपूरणे नियामकमाह **अन्यथेति ।** शेषापूरण इत्यर्थः । ण्यन्तस्य विदेर्ज्ञानार्थकस्य कर्तॄणां स्वेषां ण्यन्तावस्थायां कर्मत्वा'द्वेदार्थे स्वानवेदयदि'त्यादौ स्वानिति द्वितीयादिवज्ज्ञानार्थस्यापि ण्यन्तस्य दृशेः कर्तॄणां तच्छब्दार्थभूतानां ण्यन्तावस्थायां कर्मत्वेन द्वितीयाप्राप्त्या तेषामिति षष्ठ्यनुपपत्तिप्रसङ्गेन तदुपपत्त्यर्थं योग्यतयेति शेषपूरणमावश्यकमिति भावः । अत्र पक्षे शेषपूरणं भवतीत्यपरितोषात्पक्षा-न्तरमाह **विभक्तिव्यत्यय इति ।** 'व्यत्ययो बहुल'मिति छन्दसि बहुलं व्यत्ययविधानादिति भावः । ननु भेदाभेदोदासीनतया प्रतीतेरदृष्टत्वात्कथं भगवदवतारेषु तदौदासीन्येन तद्दर्शिनां प्रतीतिः स्यादित्यत आह **यथेति ॥ अख्यातिवादिनामिति ।** प्राभाकराणामित्यर्थः ॥ **सहकारीति ।** दोषवशादित्यर्थः ॥ **वस्त्विति ।** शुक्तिरजतरूपवस्तुद्वयप्रतीतिरित्यर्थः । **अन्येषां** तार्किकादीनाम् । व्यासक्तावित्यतः परं (रजतस्य स्मृतौ शुक्तिकाशकलदर्शनानन्तरं विषयान्तरव्यासङ्गे सति शुक्तिकारजतयोर्भेदोऽभेदो वा तार्किकादिमते न प्रतीयत इत्यर्थः) भेदाभेदौदासीन्येन प्रतीतिरिति वर्तते ॥ **अत्रापीति ।** भगवदव-तारेष्वपीत्यर्थः ॥ **अन्या गतिरिति ।** उत्तमानामभेदविषयकप्रत्यक्षेण बाधितत्वाद्भ्रमत्वमेवेति गतिरपरीक्षितदृष्टिश्चेत्युत्तरग्रन्थावतारे भविष्यतीत्यर्थः ॥ **उक्तत्वादिति ।** 'बहुत्वं च विशेषेण न भेदेने'त्यादिनेति शेषः ॥ **तन्न्यायेनेति ।** बहुत्वान्यथासिद्ध्युक्तन्यायेनेत्यर्थः ।

**स०— अन्यथेति ।** योग्यतयेति शेषपूरणाभाव इत्यर्थः । तेऽप्यण्यन्तावस्थायां पुरुषाणां कर्तृत्वेन तेषां दर्शयतीति ण्यन्तावस्थायां कर्मणि द्वितीयेति द्वितीयायां तानीत्येव स्यात् तेषामित्यनुपपन्नं

स्यादित्यतो योग्यतयेति शेषपूरणमावश्यकमिति भावः । व्यासक्ताविल्यतःपरं भेदाभेदौदासीन्येन प्रतीतिरित्यर्थः । **अन्या गतिर्भविष्यतीति** । उत्तमानामभेदविषयेण प्रत्यक्षेण बाधितत्वादिना गतिर्भविष्यतीत्यर्थः । **तन्न्यायेनेति** । बहुत्वान्यथासिद्धयुक्तन्यायेनेत्यर्थः ।

**प०— मन्दस्येति** । रूपाणामन्योन्यं भेददृष्टेरेव प्रस्तावादन्यभेदादृष्टेरप्रसक्तेर्मन्दस्येत्युक्तम् । प्रकरणानभिज्ञस्येत्यर्थः ॥ **अन्यथेति** । योग्यतयेत्यनुषङ्ग इत्यर्थः ॥ **गतिबुद्धीति** । आद्याध्यायान्त्यपादे गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णाविति सूत्रम् । कर्तुरीप्सिततमं कर्मेति सूत्रात् कर्मेति वर्तते । अर्थपदं प्रत्येकमन्वेति । गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानशब्दितभोजनार्थानां धातूनां तथा शब्दकर्मकाणां च धातूनां अण्यन्तानां कर्मसंज्ञा भवतीति तस्यार्थः । गच्छति चैत्रो ग्रामं, गमयति चैत्रं ग्राममित्यादि ज्ञेयम् । तथाच बुद्ध्यर्थस्य दृशेरण्यन्तस्य योगे कर्तृत्वेन तेषामिति निर्दिष्टाः पुरुषाः ते पश्यन्तीति प्राप्ताः त एव दर्शयन्तीति ण्यन्तत्वेनोक्तदृशेर्योगे कर्मसंज्ञका भवन्तीति बुद्ध्यते चैत्रः धर्मं, बोधयति चैत्रं धर्ममित्यत्रेव तान् दर्शयति भेदाभेदौदासीनं रामकृष्णादिरूपमिति तेषामित्यत्र द्वितीया स्यादित्यर्थः ॥ **अन्यथेति** मूलानुवादः । भेदेनेत्यादि व्याख्या । दर्शयति स्वकीयं रूपमिति योज्यम् ॥ **अख्यातीति** । भ्रमो नेति वादिनां प्राभाकराणां **सहकारीति** दोषरूपेत्यर्थः ॥ **वस्त्विति** । इदं रजतमित्यादिविसंवादस्थल इति योज्यम् । **अन्येषां** अन्यथाख्यातिवादिनाम् । **व्यासक्तौ** व्यासङ्गे सति रजतभेदाभेदप्रतीतिरित्यर्थः ॥ **विष्णुरूपेषु भेदस्य मध्यमजनप्रत्यक्षाविषयत्वोक्तिः** ॥

---

**अधमेति** । तमोयोग्यजनप्रत्यक्षस्य तु भेदावगाहिनोऽप्रामाण्यरूपाऽन्या गतिः । अपरीक्षितदृष्टिश्चेत्ये-तद्गमनिकादिव्याख्यावसरे भविष्यतीत्यर्थः ॥ **बहुत्वस्येति** । बहुत्वादिति हेतोर्विशेषेणोपपत्तिरूपा-न्यथोपपत्तेर्बहुत्वं च विशेषेणेति ग्रन्थेनोक्तत्वादित्यर्थः । **भेदेऽनुमाननिरासः** ॥ वचनमिति मूलपद-स्यान्वयाप्रतीतेराह **वचनमस्तीति शेष इति** ।

**या०—मन्दस्येति** । भगवद्रूपान्तरविषयकप्रत्यभिज्ञानिषेधे तत्प्रतियोगिकं भेदं न पश्यन्तीत्येव सुमतेःप्रतीतिः स्यादिति भावः ॥ **गतिबुद्धीत्यादिनेति** । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्म-काणामणि कर्ता स णाविति सूत्रेणेत्यर्थः । अस्यार्थः । गत्यर्थादीनां धातूनां णेः पूर्वं यः कर्ता स ण्यन्तानां कर्मसंज्ञः स्यादिति । उदाहरणानि तु शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् । आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् । आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिरि'त्यादीनि द्रष्टव्यानि । तथा चात्र बुद्ध्यर्थस्य दृशेर्णेः पूर्वं ये तच्छब्दवाच्याः कर्तारस्तेषां णौ सत्यनेन कर्मसंज्ञायां तानिति द्वितीया स्यादित्यर्थः ॥ **अख्यातिवादिनामिति**। अत्र ख्यातिशब्दो भ्रमपरस्तेन तदभाववादिनां प्राभाकराणा-

मित्यर्थः ॥ **वस्तुप्रतीतिरिति** । शुक्तिरजतरूपवस्तुद्वयप्रतीतिरित्यर्थः ॥ **व्यासक्ताविति** । रजतस्मृतौ शुक्तिकाशकलदर्शनानन्तरं विषयान्तरव्यासङ्गे सति शुक्तिरजतयोर्भेदोऽभेदो वा तार्किकादिमतेऽपि न प्रतीयत इत्यर्थः ॥

श्री० — **योग्यतयेति शेष इति** । तथा च तेषामित्यस्य न प्रदर्शयतीत्यनेनान्वयः । किन्त्वध्याहृतेन योग्यतयेतिपदेनेत्यर्थः । प्रदर्शयतीत्यनेनान्वये किं दूषणमित्यत आह **अन्यथेति** । तान्प्रतीति वक्तव्यमित्यर्थः ॥ **भेदाभेदौदासीन्येनेति** । इदं रजतमिति ग्रहणस्मरणात्मकज्ञानद्वयस्य स्वरूपतो विषयतश्च भेददर्शने प्रवृत्त्यभावः । अभेददर्शनेऽन्यथाख्यात्यापत्तेः भेदाभेदौदासीन्येनैव शुक्तिरजतरूपवस्तुद्वयप्रतीतिरित्यर्थः । **व्यासक्तिः** विषयान्तरसञ्चारः ।

**सु० — मा भूद्भगवद्रूपभेदः प्रत्यक्षानुमानसिद्धः । आगमसिद्धस्तु भविष्यति । पुराणेषु तत्र तत्रान्यादिशब्दश्रवणादिति चेन्न । नेह नानाऽस्ति किञ्चनेत्यादिवेदवाक्यविरोधात् । पुराणमेव वेदस्य किन्न बाधकं भवतीत्यत आह नेति ।**

**अनु०** — न पुराणगम् ॥

लोकदर्शनवाद्येव वेदरोधाय शक्नुयात् ॥

**वचनमिति वर्तते । पुराणवचनं खलु लोकानां यद्भगवद्रूपेषु भेददर्शनं तदनुवादपरमेव । न वस्तुनिष्ठम् । उपक्रमादिना तथाऽवगमात् । वेदस्तु वस्तुतथात्वे तात्पर्यवान् । लिङ्गैः तथाऽध्यवसायात् । अतो न तत् तद्बाधनाय शक्नोति ।**

**नन्वेतद्व्याहतम् । यत्प्राग्भगवद्रूपभेदविषयं प्रत्यक्षं नास्तीत्युक्तम् । इदानीन्तु तदस्तीति । तस्यैवाभावे पुराणवचनस्य तदनुवादित्वानुपपत्तेः । मैवम् । बहुत्वाद्यनुमानाभासजनितभेददर्शनानुवादित्वोपपत्तेः ।**

**किञ्चोत्तममध्यमानां भेदविषयं प्रत्यक्षं नास्तीत्यभिहितम् । अधमानां तु तदस्तीत्यधुना अङ्गीक्रियते । तर्हि तदेव भगवद्रूपभेदे प्रमाणं भविष्यतीत्यपि न वाच्यम् । उत्तमानाममेदविषयेण प्रत्यक्षेण बाधितत्वात् । न च तदेव नास्ति । प्रत्यभिज्ञैव बहुरूपेषु दृश्यत इत्यागमोक्तत्वात् । तथा च भीष्मवाक्यम् । 'तमिममहमजं शरीरभाजां हृदि हृदि विष्ठितमात्मकल्पितानाम् । प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोह' इति ।**

शे० — **लिङ्गैरिति** । उपक्रमादिभिरित्यर्थः । बहुत्वाद्यनुमानाभासेत्यत्रादिपदेनाकारादिविशेषादिरूपहेत्वन्तरपरिग्रहः ॥ **तमिममिति** । प्रतिदृशं प्रेरकत्वेनैश्वर्यवशान्नैकधा स्थितमर्कं यथैकमेव

समधिगच्छन्ति । तथा स्वसृष्टानां देहिनां प्रतिहृदयं प्रेरकत्वेन परमैश्वर्यवशान्नैकधा विशेषेण स्थितं वेदादिवेद्यत्वात्परोक्षमिममपरोक्षमजं जन्मादिदोषरहितं कृष्णमेकं समधिगतोऽस्मि यतोऽहं विगतभेद-भ्रम इति श्लोकयोजना ।

प०— **अन्यादिशब्देति** । आदिपदेन प्रथमस्कन्धे तृतीयेऽध्याये अवतारमालायामुक्त-प्रथमद्वितीयतृतीयादिशब्दग्रहः । नन्वत्र तदस्तीति नोच्यते तद्वाचिपदाभावात् अतो न व्याहतिरित्यतो-ऽन्यथानुपपत्त्या तदस्तीति प्राप्तमित्याह **तस्यैवाभाव इति** ॥ **तथा चेति** । विष्णुरूपेष्वभेदविषयं-प्रत्यभिज्ञानमस्तीत्यत्र भीष्मवाक्यं च प्रथमस्कन्धे नवमाध्यायेऽस्तीत्यर्थः । स्वसृष्टानां प्राणिनां हृदयेषु विशेषेण स्थितमपि तमिमं कृष्णं विधूतभेदमोहः अपगतभेदभ्रमस्सन् एकमभिन्नं समधिगतोऽस्मि सं निश्चितं यथातथा ज्ञातवानस्मि । **कमिव** अर्कमिव । प्रतिदृशं सर्वचक्षुष्षु प्रेरकत्वेनानेकधा संतमप्यर्कमेकं **यथा** तथा समधिगतोऽस्मीति तस्यार्थः ।

या०— **भविष्यतीति** । उत्तमानामभेदावगाहिप्रत्यक्षविरोधान्न स्वार्थे प्रामाण्यमिति गतिर-परीक्षितदृष्टिश्चेति ग्रन्थावतारसमये भविष्यतीत्यर्थः । प्रतिदृशं प्रेरकत्वेनैश्वर्यवशान्नैकधास्थितमर्कं यथैक-मेव समधिगच्छन्ति तथा स्वसृष्टानां देहिनां प्रतिहृदयं प्रेरकत्वेन सम्पूर्णैश्वर्यवशान्नैकधा विशेषेण स्थितं तं वेदादिवेद्यत्वात्परोक्षमिममपरोक्षमजं जन्मादिदोषरहितं कृष्णमेकं समधिगतोऽस्मि यतोऽहं विगतभेद-भ्रम इति भीष्मवाक्यार्थः ।

श्री०— **बहुत्वाद्यनुमानमिति** । बहुत्वं भेदेन विनाऽनुपपद्यमानं तमाक्षिपतीत्युक्तत्वाद-र्थापत्तेश्चानुमानविशेषत्वादिति भावः ॥ **अन्यथासिद्धेरिति** । विशेषेणेति शेषः । नन्वथाऽपि चतुर्भुजत्व द्विभुजत्वाद्याकारविशेषाणामेव भेदसाधकत्वं भविष्यतीत्याशङ्क्य तेषामपि विशेषेणैवान्यथा-सिद्धिरित्याह **तन्न्यायेनेति** । बहुत्वन्यायेनेत्यर्थः ॥ **अङ्गीक्रियत इति** । तथा च तदीयप्रत्यक्ष-जनितभेददर्शनानुवादित्वं युक्तमिति भावः । बहुत्वाद्यनुमानाभासेत्यत्रादिपदेनाकारविशेषग्रहणम् ।

सु०— **अथ भेददर्शनमेवाभेददर्शनस्य बाधकं कुतो न भवतीत्यत आह** अपरीक्षितेति ।

**अनु०**— अपरीक्षितदृष्टिश्च परीक्षापूर्वदर्शनम् ॥
निषेद्धुं शक्नुयात्क्वापि

**अपरीक्षिता परीक्षया प्रमाणत्वेनानिश्चिता । नेत्यस्यानुकर्षणार्थश्चशब्दः । परीक्षापूर्वः प्रामाण्यनिश्चयो यस्य दर्शनस्य तत्परीक्षापूर्वदर्शनम् । परीक्षापूर्वं दर्शनं प्रामाण्यनिश्चयो यस्य प्रत्यक्षस्येति वा । क्वापीत्यनेन नियममाह । तदनेन यत्परीक्षया न निश्चितप्रामाण्यं ज्ञानं न**

**तन्निश्चितप्रामाण्यं ज्ञानान्तरं बाधत इति व्याप्तिरुक्ता। परीक्षाग्रहणं प्रामाण्यनिश्चयोपलक्षणमेव, न तु नियमार्थमित्युत्तरत्र स्फुटीभविष्यति।**

शे० — **परीक्षापूर्व इति**। परीक्षापूर्वः प्रामाण्यनिश्चयो यस्य तत्परीक्षापूर्वप्रामाण्यनिश्चयम्। तच्च तद्दर्शनं चेति। शाकपार्थिवादित्वान्मध्यमपदलोपी समास इति भावः॥ **परीक्षापूर्वमिति**। अस्मिन्पक्षेऽन्यपदार्थस्य विशिष्यानुपस्थितेस्तत्सिद्ध्यर्थमाद्यपक्षाश्रयणं दर्शनपदं च तत्रैव स्वरसं। द्वितीयपक्षे प्रामाण्यनिश्चयरूपविशेषपरतायाः सामान्यशब्दस्याश्रयणीयत्वादिति द्रष्टव्यम्। निश्चितप्रामाण्यं ज्ञानान्तरमित्यत्रापि परीक्षयेत्यनुवर्तते। ननु यत्परीक्षया न निश्चितप्रामाण्यं ज्ञानं न तत्परीक्षया निश्चित-प्रामाण्यज्ञामान्तरं बाधत इति न नियमोऽङ्गीकर्तुं शक्यते। तथा सति परीक्षायाः सार्वत्रिकत्वप्राप्त्याऽ-नवस्थाप्रसङ्गादित्यतोऽत्र क्वचित्प्रामाण्यग्रहणे यथाकथञ्चित्तदपेक्षाऽस्तीत्यभिप्रायेणैव परीक्षाग्रहणं कृतं न तु सर्वत्र प्रामाण्यनिश्चये तदपेक्षाऽस्तीत्यभिप्रायेणेत्यतो नानवस्थेति न परीक्षाऽनवस्था स्यादित्यादौ स्फुटीभविष्यतीत्याह **परीक्षाग्रहणमिति**।

स० — **परीक्षाग्रहणमिति**। 'न परीक्षानवस्था स्यात्साक्षिसिद्धे त्वसंशयादि'त्युत्तरत्रेत्यर्थः।

प० — परीक्षाशब्दार्थः। प्रामाण्यनिश्चय इति। **न तु नियमार्थमिति**। सर्वत्र परीक्षयैव भाव्यमिति नियमार्थमत्र परीक्षाग्रहणं नेत्यर्थः। येन केनापि प्रकारेण निश्चितप्रामाण्यकेन भाव्यमित्यत्रैव तात्पर्यमिति भावः॥ **उत्तरत्रेति**। 'ज्ञानस्य ग्राहकेणैव साक्षिणा मानतामितेरि'त्यत्रेत्यर्थः। यद्वा 'न च निश्चितभेदस्ये'त्यादावनुपदमित्यर्थः।

या० — **प्रामाण्यनिश्चयोपलक्षणमिति**। तथा च निश्चितप्रामाण्यकं दर्शनमिति मूलार्थ इति द्रष्टव्यम्। अत एव पूर्वं निश्चितप्रामाण्यं ज्ञानान्तरमित्येवोक्तम्॥ **नियमार्थमिति**। सर्वत्रापि परीक्षयैव प्रामाण्यनिश्चय इति नियमार्थमित्यर्थः। प्रामाण्यस्य स्वतस्त्वादिति भावः॥ **उत्तरत्रेति**। 'ज्ञानस्य ग्राहकेणैव साक्षिणा मानतामितेरि'त्यादावित्यर्थः।

श्री — **परीक्षापूर्व इति**। परीक्षापूर्वक इत्यर्थः। पूर्वं परीक्षापूर्वशब्देन प्रामाण्यनिश्चय आनीतः, इदानीं दर्शनपदेनैव प्रामाण्यनिश्चयो विवक्षित इत्याह **परीक्षापूर्वं दर्शनमिति**।

सु० — **अत्र दृष्टान्तमाह** देवदत्तेति।

अनु० — देवदत्तादिदृष्टिवत्॥

**यथा यज्ञदत्तादावनिश्चितप्रामाण्या देवदत्तादिदृष्टिर्न निश्चितप्रामाण्यां यज्ञदत्तादिदृष्टिं बाधते तथेत्यर्थः। ततः किं यद्येवं व्याप्तिरिति चेत्। भेददर्शनमनिश्चितप्रामाण्यमभेददर्शनं तु निश्चितप्रामाण्यम्। अतो न तत्तस्य बाधकं किन्तु वैपरीत्यमेवेति वदामः।**

**कुतो भेददर्शनमनिश्चितप्रामाण्यमित्यत** आह न चेति ।

न च निश्चितभेदस्य दर्शनेऽस्ति पुराणगम् ॥
वाक्यं क्वचिद्धि

**चोऽवधारणे । क्वचित्प्रदेशे । हिशब्दो हेतौ । परमेश्वररूपभेदविषयं प्रत्यक्षं तावदस्माकं पुराणवाक्यादेव सिद्धम् । पुराणवाक्यं च केचिद्भेदं पश्यन्तीति वा प्रतिपादयतु । अनुवादकतया लिङ्गत्वेन वा । अतस्तत्प्रामाण्यनिश्चयस्तत एवान्वेष्टव्यः । न च भेददर्शनस्य प्रामाण्यं निश्चाययत्पुराणवाक्यमस्ति । अतः प्रमाणाभावान्न भेददर्शनस्य प्रामाण्यनिश्चय इति भावः ।**

**प्रामाण्यनिश्चयो द्वाभ्यां प्रकाराभ्यां भवति । अर्थतथात्वनिश्चयेन वा ज्ञानपरीक्षया वा । आद्याभिप्रायेणोक्तं सत्यतया निश्चितभेदस्येति । द्वितीयाभिप्रायेण तु भेदस्य दर्शन इति समासः । षष्ठ्या आक्रोश इत्यलुक् । निश्चितं परीक्षितं च तद्भेदस्यदर्शनं चेति तथोक्तम् । तत्र स्वाभिप्रायेणाक्रोशः पराभिप्रायेण निश्चितत्वमित्यविरोधः ।**

---

शे० — **देवदत्तादिदृष्टिरिति** । अनेन देवदत्तादिदृष्टिवदिति प्रथमान्ताद्वतिः । तत्र तस्येवेति लक्षणस्य प्रायिकत्वेन व्याख्यातत्वादित्युक्तं भवति **प्रतिपादयत्विति** । शब्दविषयेति शेषः ॥ **अनुवादकतयेति** । एतच्च लिङ्गत्वेनेत्यस्योपपादनायोक्तम् । तथा च विवादपदं पुराणवाक्यं पुरुषविशेषनिष्ठेश्वरभेदप्रत्यक्षप्राप्तिपूर्वकं तदनुवादकवाक्यत्वादिति पुराणवाक्यं केचिद्भेदं पश्यन्तीत्येतल्लिङ्गतया वा प्रतिपादयत्वित्यर्थः ॥ **तत एवान्वेष्टव्य इति** । अयमर्थः । अधमानां यदीश्वरभेदविषयकप्रत्यक्षं तत्प्रामाण्यस्य न तावदधमस्वरूपज्ञानेनैव निश्चयः । तस्यायथार्थत्वात् । अस्मदादिसाक्षिणश्च परकीयज्ञानग्रहणेऽसमर्थत्वेन तत्प्रामाण्यानिश्चायकत्वात् । नाप्यनुमानेन तत्प्रतिबद्धलिङ्गाभावात् । समर्थप्रवृत्तिजनकत्वादेश्च तत्कालीने ज्ञानेऽस्माभिर्ज्ञातुमशक्यत्वात् । नाप्यागमेन । अपौरुषेयस्य वा तन्निश्चायकस्यागमस्यानुपलभ्यमानत्वात् । अतः परिशेषात्पुराणवाक्यादेव निश्चयो वाच्य इति । एतदेवाभिसन्धायोक्तं **तत एवान्वेष्टव्य इति** । अस्तु तर्हि पुराणवाक्यादेव तन्निश्चय इत्यत आह **न चेति** । भेदस्य दर्शने इति समास इत्येव मूलपाठः । भेदस्य दर्शनमिति समास इति पाठे तु विग्रहोऽपि समासत्वेन विवक्षणीय इति द्रष्टव्यम् । ननु चास्य समासत्वे सुपो धातुप्रातिपदिकयोरिति भेदस्येति सुपो लुका भवितव्यम् । तत्कथं भेदस्येति षष्ठीत्यत आह **षष्ठ्या आक्रोश**

**इत्यलुगिति** । ( आक्रोशो निन्दा ) । ननु भेदस्य निश्चितत्वं पुनस्तस्य निन्द्यत्वं च विरुद्धमित्यत आह **स्वाभिप्रायेणेति** । सिद्धान्त्यभिप्रायेणेत्यर्थः ।

स० — षष्ठ्या आक्रोशे ।

प० — **प्रतिपादयत्विति** । ईशरूपभेदप्रत्यक्षमिति योज्यम् । **अनुवादकतया लिङ्गत्वेनेति** । तस्यैवाभावे पुराणवचनस्य तदनुवादित्वानुपपत्तेरिति पूर्वोक्तदिशेति भावः ॥ **तत्प्रामाण्येति** । प्रत्यक्षप्रामाण्यनिश्चयः तत एव । प्रत्यक्षसत्वप्रतिपादकवाक्यादेवेत्यर्थः । सत्यतयेति शेषोक्ति । आवृत्योत्तरेणैकपद्यमुपेत्याह **भेदस्य दर्शन इति समास इति** । आक्रोशे निन्दायां गम्यमानायां षष्ठ्या अलुगिति षष्ठ्या आक्रोश इति सूत्रार्थः ।

या० — **अनुवादकतयेति** । इदं च लिङ्गत्वेनेत्यस्योपपादनाय । तथा च विवादपदं पुराणवाक्यं पुरुषविशेषनिष्ठेश्वरभेदप्रत्यक्षप्राप्तिपूर्वकं तदनुवादकवाक्यत्वादिति पुराणवाक्यं केचिद्भेदं पश्यन्तीत्येतल्लिङ्गतया वा प्रतिपादयत्वित्यर्थः ॥ **तत एवान्वेष्टव्य इति** । अधमानां यदीश्वरभेदप्रत्यक्षं तत्प्रामाण्यस्य न तावदधमस्वरूपज्ञानेनैव निश्चयः । तस्यायथार्थत्वात् । अस्मदादिसाक्षिणश्च परकीयज्ञानग्रहण एवासमर्थत्वात् । समर्थप्रवृत्तिजनकत्वादिलिङ्गानां च तत्कालीने ज्ञानेऽस्माभिर्ज्ञातुमशक्यत्वेन नानुमानेनापि तन्निश्चयः । अपौरुषेयस्येतरस्य पौरुषेयस्य वा तन्निश्चायकस्यागमस्याप्यभावात्पुराणवाक्यादेव तन्निश्चयो वाच्य इत्यर्थः । तदिदमाह **अन्वेष्टव्य इति** ।

श्री० — **पुराणवाक्यादेवेति** । अन्यथा पुराणवचनस्य तदनुवादित्वानुपपत्तेरिति भावः ॥ **प्रतिपादयत्विति** । विधायकं भवत्वित्यर्थः । **अर्थतथात्वनिश्चयेनेति** । प्रत्यक्षेणेत्यर्थः ॥ **परीक्षया वेति** । सजातीयविजातीयसंवादरूपानुमानेनेत्यर्थः । **आक्रोशो** निन्दा । ननु भेदस्य निश्चितत्वं पुनस्तस्य निन्द्यत्वं च विरुद्धमित्यत आह **स्वाभिप्रायेणेति** । सिद्धान्त्यभिप्रायेणेत्यर्थः ।

**सु० — यदि पुराणवाक्या(देव)न्निश्चितप्रामाण्यं भेददर्शनं न प्रतीयेत तर्हि कीदृशं तत्प्रतीयत इत्यत आह** सम्मुग्धमिति ।

**अनु० —** सम्मुग्धं दर्शनं तत्र गम्यते ॥

**प्रमाणत्वाप्रमाणत्वाभ्यां सन्दिग्धम् । दर्शनं भेदस्य । तत्र पुराणवाक्ये ।**

**एतदुक्तं भवति । पुराणवाक्यं भेददर्शनमात्रं गमयति । न तु तस्य प्रामाण्यमप्रामाण्यं वा । ततः प्रागभेददर्शनावगमात्तत्र प्रामाण्याप्रामाण्यसन्देह एव युक्तः । अवगते त्वभेददर्शने तस्याप्रामाण्यमेव निश्चीयते । पुराणवाक्यादेव तत्प्रामाण्यस्य निश्चितत्वात् । समधिगतोस्मीति**

**संशब्दश्रवणात् । हृदि हृदि नैकधा स्थितमपीत्यनुमानानामाभासत्वस्योक्तत्वात । विभूत-भेदमोह इति भेदज्ञानस्य मोहत्वाभिधानाच्चेति । एवं भगवद्रूपेषु भेदाभावः सिद्धः । तथा वेधादिदोषाभावश्च । प्रमाणाभावात् ।**

**शे०** — ननु भेददर्शनस्य निन्दितत्वे कथं निश्चितत्वम् । एकस्यैव निश्चितत्वनिन्दितत्वयो-र्विरुद्धत्वादित्यत आह **तत्रेति** । ननु पुराणस्य भेददर्शनमात्रगमकत्वान्न प्रमाणत्वाप्रमाणत्वाभ्यां सन्दिग्धभेददर्शनगमकत्वमित्यतः सत्यमेवमित्याह **एतदुक्तं भवतीति** । यदि तस्य भेददर्शनमात्रगमकत्वं कथं तर्हि सन्दिग्धभेददर्शनगमकत्वोक्तिरित्यत आह **तत इति** । ततश्चाभेदावगमात्प्राक् पुराणवाक्या-त्प्रतीतभेददर्शनस्य प्रमाणत्वाप्रमाणत्वकोटिकसन्देहविषयत्वमस्तीत्येतावन्मात्राभिप्रायेणैव पुराणस्य सन्दिग्धभेददर्शनगमकत्वोक्तिरिति भावः । अभेदावगमात्प्रागिति किमर्थं विशेषणमित्यतस्तत्सूचितमर्थमाह **अवगते त्वेति** । अभेददर्शनेन बाधितत्वादिति भावः । नन्वभेददर्शनस्य प्रामाण्यमेव कुतो येन तद्बलाद्भेददर्शनस्य भ्रमता स्यादित्यत आह **पुराणवाक्यादेवेति** । कथमभेददर्शनप्रामाण्यनिश्चायकत्वं पुराणवाक्यस्येत्यतस्तद्व्युत्पादयति **समधिगतोऽस्मीत्यादिना** ।

**प०** — **पुराणवाक्यादेवेति** । भीष्मवाक्यादित्यर्थः ॥ **इत्यनुमानानामिति** । अनेक-त्वादिरूपाणामनुमानानां बहुत्वं च विशेषेणेतिग्रन्थेनोक्तदिशाऽन्यथोपपत्त्या आभासत्वस्य अपिपदे-नोक्तत्वात् पुराण इति भावः ॥ **रूपभेदग्राहकाधमप्रत्यक्षस्यामानत्वोक्तिः** ॥

**श्री०** — स्थितमपीत्यनन्तरमेकं समधिगतोऽस्मीत्यपि ग्राह्यम् । **अनुमानानां** भेदसाधकानां बहुत्वानुमानानाम् ॥ **आभासत्वस्येति** । विशेषेण बहुत्वस्यान्यथासिद्धेरुक्तत्वादित्यर्थः ।

**सु०** — **नन्वस्ति तद्दर्शिनां प्रत्यक्षमत्र प्रमाणम् । मैवम् । महतां प्रत्यक्षेण वेधाद्य-भावग्राहिणा बाधितत्वात् । इदमेव तस्य बाधकं किन्न स्यादित्यत आह** अपरीक्षितमेवेति ।

**अनु०** — अपरीक्षितमेवात्र वेधादिकमधीशितुः ॥
परीक्षादर्शने नैव दृश्यते केनचित्क्वचित् ॥

अत्र **वेधादि (दोष) तदभावयोर्मध्ये । अधीशितुरत्रावतारेष्विति वा । दृश्यत इति संबन्धः । यद्वा वेधादिकमिति तद्दर्शनमुपलक्ष्यते । परीक्षया युक्तं दर्शनं परीक्षादर्शनम् । यद्वा परीक्ष्यत इति परीक्षा । गुरोश्च हल इत्यकारप्रत्ययः । परीक्षा च तद्दर्शनं च तस्मिन् । दृश्यते वेधादिकं क्वचित् । दोषदर्शनमपरीक्षितं निर्दोषत्वदर्शनं तु परीक्षितमिति भावः ।**

**शे०— अकारप्रत्यय इति** । हलन्तो यो धातुर्गुरुमांस्ततस्त्रियामकारप्रत्ययो भवतीति सूत्रार्थः । ननु भावव्युत्पन्नस्य परीक्षाशब्दस्य कथं कर्मणि व्युत्पत्तिरित्यत आह **गुरोश्च हल इति** । गुर्वक्षरयुताद्धलन्ताद्धातोर्भावे कर्मणि चाकारः स्यादित्यर्थः । तथा च पर्युपसर्गपूर्वकादीक्ष दर्शन इति धातोः कर्मण्यकारप्रत्यये सवर्णदीर्घे परीक्षेति कर्मणि व्युत्पन्न इत्यर्थः । ततश्च परिपूर्वस्येक्षधातोर्हलन्तत्वाद्गुरुमत्त्वाच्च तस्मात्स्त्रियामकारप्रत्ययेऽजाद्यतष्टाबिति टापि परीक्षेत्याबन्तशब्दनिष्पत्तिरिति भावः ।

**प०—** अत्रेत्यनुवादेनार्थद्वयमाह **अत्र वेधादिदोषेत्यादि** ॥ **गुरोश्च हल इति** । तृतीयस्य तृतीयपादे सूत्रमिदम् । अ प्रत्ययादिति पूर्वसूत्रात् अ इत्यनुवर्तते । स्त्रियां क्तिन्नित्यतः स्त्रियामिति च । गुरुसंज्ञकवर्णवतो हलन्ताद्धातोरप्रत्ययो भवति स्त्रियां विषय इत्यर्थः । अजाद्यतष्टाबिति टाप्प्रत्यये परीक्षेति रूपमिति भावः ।

**या०— गुरोश्च हल इति** । हलन्ताद् गुरुमतो धातोः स्याद्भावादौ स्त्रियामिति सूत्रार्थः । ईहा ऊहेत्याद्युदाहरणम् ।

**श्री०— उपलक्ष्यत इति** । तथा च वेधादिदर्शनमपरीक्षितमेवेत्यर्थः ॥ **परीक्ष्यत इति** । सजातीयविजातीयसंवादेन प्रामाण्यवत्तया विचार्यत इत्यर्थः । तथा च संवादादिना निश्चितप्रामाण्यकं यद्दर्शनं तत्र वेधादिकं न दृश्यत ' इत्यर्थः । ननु भावव्युत्पन्नस्य परीक्षाशब्दस्य कथं कर्मणि व्युत्पत्तिरित्यत आह **गुरोश्च हल इति** । गुर्वक्षरवतो हलन्ताद्धातोर्भावे कर्मणि चाकारः स्यादित्यर्थः । तथा च पर्युपसर्गपूर्वकादीक्ष दर्शन इति धातोः कर्मण्यकारप्रत्यये सवर्णदीर्घे परीक्षेति व्युत्पन्न इत्यर्थः ॥ **परीक्षा च तदिति** । परीक्षितं च तदित्यर्थः ।

**सु०— ननु दोषाभावविषयं महतां प्रत्यक्षं तावत्कुतः सिद्धमित्यत आह** निर्दोषमेवेति ।

**अनु०—** निर्दोषमेव तं ब्रह्मा ददर्शाशेषरूपिणम् ॥
निर्दोषमेव रुद्रोऽद्राङ्निर्दोषं तं पुरन्दरः ॥ निर्दोषाण्यस्य रूपाणि दृष्टान्येवं सुरोत्तमैः ॥
अन्ये सदोषाः सर्वेऽपि निर्दोषो हरिरेकलः ॥ इति बर्कश्रुतेश्चैव सदोषं नास्य दर्शनम् ॥

अद्राक् **अद्राक्षीत् । अनित्यमागमशासनमिति वचनात् । पुरन्दरोऽद्राक्षीत् । अन्यैरपि सुरोत्तमैः । सदोषा दृष्टाः । तस्मान्निर्दोषो हरिरेक एव । चशब्दः श्रुत्यन्तरसमुच्चयार्थः । अस्य परमेश्वरस्य विषये महतां दर्शनं सदोषं दोषग्राहि नैव, किन्तु निर्दोषमेव गृह्णातीति ।**

**शें०**— ननु दृशेः लुङ्प्रथमपुरुषैकवचने तिपि तस्मिन्परतः प्राप्तशपोऽपवादेन च्लिप्रत्यये तस्य च्लेःसिजिति सिचि इतश्चेतीकारलोपेऽस्तिसिचोपृक्त इति सिचः परस्य तकारस्येडागमे पुगन्त-लघूपधस्य चेति प्राप्तलघूपधगुणस्य च सृजिदृशोर्झल्यमकितीत्यम्विधिनाऽकितीति वचनान्नाप्राप्तेत्य-स्यारम्भादपवादेन निवृत्त्या सत्यमागमे सति च यणादेशे द्रश् सीदित्यत्राम्विधेः पूर्वं प्राप्ताया हलन्त-लक्षणहलन्तवृद्धेर्नित्यत्वादमागमेन बाधसंभवेऽप्यम्विधेः पश्चात्तत्प्राप्तवृद्धेः सिचोऽन्यत्राम्विषयेऽप्रसङ्गेन नाप्राप्त्यभावादमागमविधानात्तद्बाधासंभवेन व्रजहलन्तस्याच इति हलन्तलक्षणवृद्धौ सत्यां व्रश्चादिना शस्य षत्वे षढोः कःसीति षस्य कत्वे आदेशप्रत्ययोरिति सिचः सस्य षत्वे कषयोगे क्ष इति क्षत्वेऽडागमे च सत्यद्राक्षीदिति भवितव्यमद्रागिति तु कथमित्यतोऽनित्यमागमशासनमिति वचनबलेन तस्यानित्यत्वावगत्या सिच्परस्यापृक्ततकारस्येडागमनिवृत्तौ झलपरस्य सकारस्य झलि परतो झलो झलीत्यनेन लोपे संयोगान्तापृक्ततकारलोपे च सत्यद्रागिति रूपसंभवान्नानुपपत्तिरित्याशयेनाह **अनित्य-मागमवचनमिति वचनादिति** ।

**स०**— **अनित्यमागमशासनमिति** । दृश इत्यस्मात् लुङि च्लेःसिचि ईडागमे सृजिदृशो-रित्यनेनामागमे प्रश्चेत्यनेन षत्वे षढोः कसीति कत्वे सिचिः षत्वेऽद्राक्षीदिति रूपनिष्पत्तिः । यदा-ऽनित्यमागमशासनमिति ईडागमो नागतः तदा झलोझलीत्यनेन सिचो लोपे संयोगान्तस्य लोप इत्यनेन तकारलोपेऽद्रागिति रूपसिद्धिरिति भावः । **छान्दस इति** । तत्र तस्येवेति सूत्रस्याभियुक्तैः प्रायिकत्वेन व्याख्यातत्वादिति भावः ।

**प०**— ननु कथमद्रागिति । दृशिर्प्रेक्षण इत्यतो लुङि तिपि अडागमे च्लिप्रत्यये इरितो वेति च्लेरङभावपक्षे च्लेः सिचि इतश्चेति तिप इकारलोपे अस्तिसिचोऽपृक्त इतीडागमे सृजिदृशोर्झल्यम-कितीत्यमागमे वदव्रजहलन्तस्याच इति वृद्धौ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशांष इति शकारस्य षत्वे षढोः कस्सीति कत्वे इण्कोरिति षत्वे अद्राक्षीदिति स्यादित्यत आह **अनित्यमागमशासनमिति** । घोर्लोपो लेटि वेति सूत्रे वाग्रहणेन आगमविधेरनित्यत्वस्य मञ्जर्यां ज्ञापितत्वात् । तत्रैव युवोरनाका-वित्याद्यपादीयसूत्रे वृत्तौ च 'नुमनित्यमागमशासनमि'ति कृत्वा न भवतीत्युक्तत्वाच्च । तथाच इडभावे हल्ङ्याब्भ्य इत्यपृक्ततकारस्य लोपे षत्वस्यासिद्धया संयोगान्तस्येति सिचः सकारस्य लोपे अद्रागिति रूपमिति भावः ॥ **श्रुत्यन्तरेति** । वक्ष्यमाणेति योज्यम् । अस्येति कर्मणि षष्ठीत्युपेत्याह **अस्य परमेश्वरस्य विषय इति** । एवकारान्वयेनानुवादो नैवेति । फलितोक्तिः ॥ **निर्दोषमेव गृह्णातीति** । श्रुतौ तथैवोक्तेरिति भावः ।

**या०**— नन्वद्राक्षीदिति कथम् । दृशिर् प्रेक्षणश्च इत्यस्माल्लुङि तिपि च्लेः सिचि अस्तिसिचोऽपृक्त इतीडागमे सृजिदृशोर्झल्यमकितीत्यमागमे यणादेशे व्रश्चेति शस्य षत्वे षढोः कस्सीति षस्य कत्वे आदेशप्रत्यययोरिति सस्य षत्वे अडागमे वदव्रजेति वृद्धौ इतश्चेतीकारलोपेऽद्राक्षीदिति भवेदत आह **अनित्यमागमशासनमिति** । तथा च ईडागमस्यानित्यतयाऽप्राप्तावपृक्तस्य तकारस्य लोपे संयोगान्तस्य सकारस्यापि लोपेऽद्रागित्येव रूपमिति भावः ।

**श्री०**— ननु दृश्धातोर्लुङि तस्य तिपि इप् इत्यस्य लोपे दृश्त् इति स्थिते, सिच्प्रत्यये, इचित्यस्य लोपे, दृश् स्त् इति जाते, इडागमे, दृश्स् इत् इति जाते, ऋवर्णादुत्तरममागमे, यणादेशे, द्रेति जाते, द्रक्ष् इत् जाते, लुङि, अडागमे, अद्रक्ष् ईदिति जाते वृद्धावद्राक्षीदिति भवितव्यमत आह **अनित्यमिति** । आगमः सूत्रम् ।

**सु०**—**दोषदर्शनमपरीक्षितं तदभावदर्शनं तु परीक्षितमेतत्कुत इत्यत आह** अविद्ध इति ।

अनु० — अविद्धो विद्धवद्विष्णुरजातो जातवन्मृषा ॥
अबद्धो बद्धवच्चैव दर्शयत्यमितद्युतिः ।
इति पैङ्गिश्रुतिश्चैव प्राह निर्दोषतां हरेः ॥

**अविद्धमिव विद्धवत् छान्दसो द्वितीयान्ताद्वतिः । एवशब्दस्याविद्ध इत्यादिना संबन्धः । दर्शयत्यात्मानम् । पूर्वश्रुत्याऽप्ययमर्थोऽर्थात्सिध्यतीति पैङ्गिश्रुतिश्चेत्युक्तम् । निर्दोषतामिति फलोक्त्या विवक्षितमर्थमुपलक्षयति । अत्रैव स्पष्टां श्रुतिमुदाहरति** अपरीक्षितेति ।

अपरीक्षितदृष्ट्यैव सदोषो दृश्यते हरिः ॥
परीक्षादर्शने नैव दोषो दृश्यो हरेः क्वचित् ॥
इति पैङ्गिश्रुतिश्चाह

आह **दोषदर्शनस्यापरीक्षितत्वं निर्दोषतादर्शनस्य परीक्षितत्वं च । ततः किमित्यत आह** प्रमाणं हीति ।

प्रमाणं हि परीक्षितम् ॥

**यत्परीक्षितं परीक्षया प्रमाणत्वेनावधृतं तदेव प्रमाणम् । अपरीक्षितं त्वापाततः सन्दिग्धम् । निश्चितविरोध्युपनिपाते त्वप्रमाणमेव । अतः परीक्षितेन निर्दोषतादर्शनेनापरीक्षितं दोषदर्शनमेव बाध्यते । न तु विपर्ययः । प्रामाण्यनिश्चये परीक्षोपयोगः प्रमाणसिद्ध इति हिशब्दः । तथा च वक्ष्यते ।**

**शे०** — ननु तदर्हमिति द्वितीयासमर्थादर्हार्थे एव वतिविधानादिवार्थे च षष्ठीसप्तमीसमर्थयोरेव तत्र तस्येवेति विधानेन द्वितीयासमर्थादिवार्थे तस्यालाक्षणिकत्वात्कथं विद्धमेवेति विद्धवदिति द्वितीयासमर्थादपीवार्थे वतिरित्यतोऽर्हार्थे द्वितीयान्ताद्विहितो वतिरिवार्थेऽपि छन्दस्त्वाद्युक्त इत्याह **छान्दस इति** । इवार्थ इति शेषः । ननु तत्र तस्येवेति योगो न नियतः किन्तु प्रायिक एव । तथाऽभियुक्तैर्व्याख्यानात् । नित्यत्वे च पूर्ववत्सन इति पञ्चम्यन्ताद्वतिर्न स्यात् । न च तृतीयान्तादेव तत्र वतिः । पूर्वस्मादिव सन्नन्तादप्यात्मनेपदमिति पञ्चम्यर्थावगमात् । अन्यथा तदनुपपत्तिप्रसङ्गात् । सन इत्युपमेये पञ्चमीश्रवणात्पूर्ववदिति पञ्चम्यन्तादेव तत्कल्प्यमानस्यावश्यकत्वाच्चान्यथोपमानोपमेयभावानुपपत्तिप्रसङ्गात् । अत एवोक्तं कुसुमाञ्जलिवर्धमाने । तत्र तस्येवेति योगस्य प्रायिकत्वाच्छरीरवदिति प्रथमासमर्थाद्वतिरिति । संप्रतिपन्नं च योगस्य प्रायिकत्वं टीकाकाराणामपि । तत्र तस्येवेति योगस्य प्रायिकत्वाद्घटवदिति प्रथमासमर्थाद्वतिरिति तत्त्वनिर्णयटीकायां स्वयमेव समाहितत्वात् । तथा च प्रायिकत्वादेव द्वितीयासमर्थादपि वतेर्व्युत्पादयितुं शक्यत्वात्किमिति छान्दसत्वाश्रयणमिति चेत् । उच्यते । भवेदेतदेवं यदि तत्र तस्येवेति योगस्य प्रायिकत्वं स्यात् । न चैतदस्ति । तत्र मानाभावात् । यदत्रोक्तं पूर्ववत्सन इति पञ्चम्यन्ताद्वतिदर्शनमेव तद्योगस्य प्रायिकतायां प्रमाणमिति तदसत् । पूर्ववदिति न पञ्चम्यन्ताद्वतिर्लक्षणाभावात्किन्तु पूर्वेण तुल्यं पूर्ववदिति तृतीयान्तात्तेन तुल्यं क्रिया चेद्वतिरित्यनेनैव । न चैवं पूर्वस्मादिव सन्नन्तादप्यात्मनेपदं भवतीति पञ्चम्यर्थावगमानुपपत्तिरित्युक्तमिति वाच्यम् । यथा हि ब्राह्मणेन तुल्यं वैश्यादधीत इत्युक्तेर्ब्राह्मणादधीत इति पञ्चम्यर्थोऽर्थादवगम्यते तथेहापि पूर्वेण तुल्यं सन्नन्तादात्मनेपदं भवतीत्युक्ते पूर्वस्मादिव सन्नन्तादप्यात्मनेपदं भवतीति पञ्चम्यर्थावगमोपपत्तेः । तुल्यार्थैरिति तृतीयायाः सर्वविभक्त्यन्तर्भावकत्वात् । नन्वेवं तुल्यार्थैरिति तृतीयान्तशब्दयोगे सर्वविभक्त्यर्थप्राप्तेः सर्वत्रापि तृतीयान्तादेव वतिः अर्थात्तु तत्तद्विभक्त्यर्थावगमः; इति वक्तुं शक्यत्वात् 'तत्र तस्येवे'त्येतद्योगविषयेऽपि पूर्वसूत्रेणैव वतिप्रत्ययसिद्धेस्तत्सूत्रवैयर्थ्यमेव ।

यथा हि ब्राह्मण इवाधीते ब्राह्मणेन तुल्यमधीते ब्राह्मणमिव पश्यति ब्राह्मणेन तुल्यं पश्यति ब्राह्मणेनेवाधीते ब्राह्मणेन तुल्यमधीते ब्राह्मणायैव ददाति ब्राह्मणेन तुल्यं ददाति ब्राह्मणादिवाधीते ब्राह्मणेन तुल्यमधीते ब्राह्मणस्येव क्षत्रस्य स्वं ब्राह्मणेन तुल्यं क्षत्रस्य स्वं ब्राह्मण इव क्षत्रिये वर्तते ब्राह्मणेन तुल्यं क्षत्रिये वर्तते इत्यादावेक एवार्थोऽवगम्यते । तथा मधुरायामिव पाटलीपुत्रे प्राकारः देवदत्तस्येव यज्ञदत्तस्य शुक्लदन्ता इति य एवार्थः स एव मधुरया तुल्यः पाटलीपुत्रप्राकारो देवदत्तेन तुल्यं यज्ञदत्तस्य शुक्लदन्ता इति गम्यते । ततश्चात्रापि तेन तुल्यमित्यनेन तृतीयान्तादेव वतिप्रत्ययो-

पपत्तेः । तस्मान्न तुल्यार्थतृतीयायाः सर्वविभक्त्यर्थान्तर्भावकत्वमिति पूर्ववदिति तृतीयान्ताद्वत्याश्रयणे पञ्चम्यर्थानवगमो दुष्परिहर एव स्यादिति पूर्ववदिति पञ्चम्यन्तादेव वतिर्व्युत्पाद्यः । ततश्च तस्मादेव ज्ञापकाद्योगस्य प्रायिकत्वमप्रत्यूहमेवेति चेन्न । स्यादेतदेवं यदि तुल्यार्थतृतीयायाः सर्वविभक्त्यर्थान्तर्भावकत्वे तत्र तस्येवेति योगस्य वैयर्थ्यमापद्येत । नैतदस्ति । पूर्वसूत्रेण हि तुल्यस्य प्रतियोगिन्येव प्रत्ययविधानमिह तु मधुरया तुल्यः पाटलीपुत्रे प्राकार इति न मधुरा प्रतियोगिनी किन्तु तद्गतः प्राकार एव । एवं देवदत्तेन तुल्या यज्ञदत्तस्य शुक्ला दन्ता इति न देवदत्तः प्रतियोगी किन्तु तदीयदन्ता एवेति न पूर्वेण प्रत्ययप्राप्तिः संभवतीति कथमुत्तरयोगवैयर्थ्यम् । न चात्रापि मधुरा-देवदत्तशब्दाभ्यां प्राकारो दन्ताश्च लक्षिष्यन्त इति युक्ता पूर्वेणैव प्रत्ययप्राप्तिरिति वाच्यम् । पूर्वसूत्रे हि क्रियाग्रहणेऽसति गवा तुल्यो गवय इत्यादावपि प्रत्ययप्रसङ्गात्तन्निवृत्त्यर्थं तस्यावश्यकत्वेन क्रिया-तुल्यत्व एव तेन सिद्धावपि गुणद्रव्ययोस्तुल्यत्वे तदप्राप्तेस्तदर्थतया तत्र तस्येवेतिसूत्रस्य सार्थक्या-दुक्तबाधकाभावेन तुल्यार्थतृतीयायाः सर्वविभक्त्यर्थसंग्राहकत्वं युक्तम् । ततश्च पूर्ववदिति तृतीया-न्ताद्वतिपक्षेऽपि पञ्चम्यर्थावगमोपपत्तेः पूर्ववदिति न पञ्चम्यन्ताद्वतिसिद्धिरिति ज्ञापकाभावाद्योगस्य न प्रायिकत्वं सिध्यतीति न तत्प्रकाराश्रयणेन न द्वितीयान्ताद्वतिसमाधानम् । तत्त्वनिर्णयटीकायामपि योगस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वादिति टीकाकारीयोक्तिरपि न योगस्य प्रायिकत्वाभिप्राया । तथा सति योगस्य प्रायिकत्वादित्येव वक्तव्यत्वापातात् । किन्तु किं तत्साधुत्वासाधुत्वचिन्तया । तेनापि प्रकारेण स्वाभिमतसिद्धिरित्यभिप्रायैवेति युक्तं द्वितीयान्ताद्वतिप्रत्ययस्य छान्दसत्वाश्रयणमिति दिक् ।

**पूर्वश्रुत्येति** । पूर्वश्रुत्येत्यर्थः । तत्र निर्दोषो हरिरेकल इति सामान्येनोक्तत्वाद्द्वेषादिदोषा-भावोऽप्यर्थात्सिद्ध इत्यर्थः ॥ **विवक्षितमर्थमिति** । दोषदर्शनमपरीक्षितं तदभावदर्शनं परीक्षितमितीम-मर्थमित्यर्थः ॥ **प्रमाणसिद्ध इति** । अन्यथाऽनुपपत्तिरूपप्रमाणसिद्ध इत्यर्थः । ननु कथं प्रामाण्य-निश्चयस्य परीक्षां विनाऽनुपपत्तिः । येन प्रामाण्यनिश्चये परीक्षोपयोगस्यान्यथाऽनुपपत्तिसिद्धत्वं स्यादित्यत आह **तथा च वक्ष्यत इति** । 'न ज्ञानदृष्टिमात्रेण प्रामाण्यं तस्य दृश्यत' इत्यादि-नेति शेषः ।

स० — **तथाच वक्ष्याम इति** । 'अतो न सर्वमानानां प्रामाण्यं निश्चितं भवेत् । साक्षिणा निश्चितं यत्र तत्प्रामाण्यं स्वलक्षणमि'त्यादिना प्रामाण्यनिश्चये परीक्षोपयोगस्यान्यथानुपपत्तिरूपप्रमाण-सिद्धत्वं वक्ष्यत इत्यर्थः ।

प०— तेन तुल्यं क्रिया चेद्वतिः तत्र तस्येति च योगाभ्यां तृतीयासप्तमीषष्ठ्यन्तेभ्य एव वतिप्रत्ययोक्तेराह **छान्दसो द्वितीयान्ताद्वतिरिति** ॥ एतेन बद्धवदित्यपि व्याख्यातं ध्येयम् । कर्म-कारकानुक्तेराह **आत्मानमिति** ॥ **पूर्वश्रुत्येति** । निर्दोष इति सामान्योक्त्या वेधादिदोषमविद्यमानमेव दर्शयतीति प्राप्तेरिति भावः ॥ **विवक्षितमर्थमिति** । दोषदृष्टिरपरीक्षिता तदभावदृष्टिः परीक्षितेति तथा तस्याः बाध इतीम्मर्थमित्यर्थः । आहेत्यनूद्य कर्मकारकमाह आह **दोषेत्यादि** ॥ **ततः किमित्यत आहेति** । इदमेव तस्य बाधकं किं न स्यादिति शङ्कायाः कः परिहार इत्यत उत्तरमाहेत्यर्थः ॥ **तथाच वक्ष्यत इति** । न ज्ञानदृष्टिमात्रेणेत्यादिना समीपग्रन्थ एव परीक्षायाः प्रामाण्यनिश्चयोप-योगोऽस्तीति वक्ष्यत इत्यर्थः । निर्दोषत्वदृष्ट्या सदोषत्वदृष्टेर्बाधः ।

या०— तेन तुल्यं क्रिया चेद्वतिरिति तृतीयान्ताद्वा तत्र तस्येवेति सप्तम्यन्तात् षष्ठ्यन्ताद्वा वतेर्विधानात्कथं द्वितीयान्ताद्वतिरित्यत आह **छान्दस इति** ॥ **विवक्षितमर्थमिति** । दोषदर्शनमपरीक्षितं तदभावदर्शनं परीक्षितमितीममर्थमित्यर्थः ॥ **तथा च वक्ष्यत इति** । 'न ज्ञानदृष्टिमात्रेण प्रामाण्यं तस्य दृश्यते' इत्यादाविति शेषः ।

श्री०-- **पूर्वश्रुत्याऽपीति** । बहुश्रुत्येत्यर्थः । तत्र 'निर्दोषो हरिरेकलः इति सामान्येनोक्त-त्वाद्वेधादिदोषाभावोऽप्यर्थात्सिद्ध इत्यर्थः । ननु दोषदर्शनमपरीक्षितं तदभावदर्शनं परीक्षितमित्येव वक्तव्यम् । अस्यैव विवक्षितार्थत्वान्न तु निर्दोषताया इत्यत आह **फलोक्त्येति** । दोषदर्शनस्या-परीक्षितत्वकथनस्य दोषाभावदर्शनस्य परीक्षितत्वकथनस्य च फलं यत् निर्दोषत्वं तदुक्त्येत्यर्थः ।

सु० — **अत्र केचिदाहुः । स्वत एव ज्ञानानां प्रामाण्यं (गृह्यते) न तु परीक्षाधीनम् । सकलमपि ज्ञानं स्वप्रकाशं यथार्थं च । अतः स्वेनैव स्वयं स्वप्रामाण्यं च सिध्यति का तत्र परीक्षापेक्षेति ॥ अन्ये तु ब्रुवते । ज्ञानं तत्प्रामाण्यं चानुमानेनैव गृह्यत इति ॥ अपरे तु वदन्ति । ज्ञानं तत्प्रामाण्यं च साक्षिणैव ज्ञायत इति । यदि च स्वतःप्रामाण्यग्रहो न स्यात्तर्हि न स्यादेव । तस्य परीक्षाधीनत्वेऽनवस्थाप्रसङ्गात् । अनुमानविशेषः खलु परीक्षा नाम । सा च स्वयं प्रमाणतया निश्चिताऽन्येषां ज्ञानानां प्रामाण्यावधारणाय प्रभवति नान्यथा । तत्प्रामाण्यावधारणं च परीक्षान्तरेणेति कथं नानवस्था स्यादिति ॥ तत्र प्रामाण्यग्रहस्य परीक्षाधीनत्वेऽनवस्थाप्रसङ्गं तावत्परिहरति** नेति ।

**अनु०**— न परीक्षाऽनवस्था स्यात्

**प्रामाण्यग्रहणस्य परीक्षाधीनत्वाङ्गीकारेऽपीति शेषः । तत्र हेतुमाह** साक्षीति ।

साक्षिसिद्धे त्वसंशयात् ॥

**द्विविधं खलु ज्ञानमन्तःकरणपरिणामरूपं साक्षिरूपं चेति । तत्राद्याद्विशेष्टुं तुशब्दः । एतदुक्तं भवति । स्यादियमनवस्था यदि सर्वत्र परीक्षाऽपेक्षा स्यात् । न चैवम् । सन्दिग्धे खल्वर्थे परीक्षाऽपेक्ष्यते न त्वसन्दिग्धे । संशयश्च मनोवृत्तिविषये पानीयादौ भवति न पुनः साक्षिसिद्धे सुखादौ । अतस्तावदेव परीक्षा यावत्साक्षिगृहीतेषु सुखादिष्ववतार इति कुतोऽनवस्थेति । प्रपञ्चितश्चायमर्थोऽस्माभिः प्रकृत्यधिकरणे ।**

**शे० — अनुमानेनैवेति** । अनुमित्यैवेत्यर्थः । यद्यप्यनुमितिग्राह्यत्वं न यत्किञ्चिदनुमितिग्राह्यत्वं प्रामाण्यानुमितिग्राह्यतायाः सर्वैरप्यङ्गीकृतत्वेन विवादाभावप्रसङ्गात् । नापि यावदनुमितिग्राह्यत्वम् । पर्वतो वन्हिमानित्याद्यनुमित्यग्राह्यत्वेनासम्भावितत्वात् । तथाऽपि ज्ञाततानुमितिग्राह्यत्वमेव तत्त्वेन विवक्षितम् । कथमस्याः प्रामाण्यविषयकत्वमिति चेत् । उच्यते । अहं ज्ञानवान्ज्ञाततावत्त्वादिति वा घटत्वप्रकारकज्ञानवान्घटत्वप्रकारकज्ञाततावत्त्वादिति वा जायमानाऽनुमितिर्ज्ञानविषया भवन्ती ज्ञानविषयत्वमप्यवगाहत इति तावदविवादम् । तथा च ज्ञानविषयीभूतधर्मधर्मिवत्तदुभयवैशिष्ट्यमपि विषयीकरोति ज्ञानविषयत्वाविशेषात् । न च प्रत्यक्षेणैव ज्ञानस्य ग्रहे विषयस्य ज्ञानवित्ति वेद्यतेति वाच्यम् । परैः स्ववृत्तिवर्तमानज्ञानग्रह एव तथाऽभ्युपगमात् । ज्ञाननित्यत्ववच्च व्यापकतानवच्छेदकस्यापि विषयस्य भानमुपपद्यते । न च ज्ञाततावत्त्वं समवायेनासिद्धम् । जनकतया च व्यभिचारीति वाच्यम् । तदीयतानियामकस्य सम्बन्धान्तरस्यैवाभ्युपगमात् । अन्यथा नियताधिकरणज्ञानासिद्धिप्रसङ्गादिति । यद्वा घटो घटत्वप्रकारकज्ञानविषयः घटत्वप्रकारकज्ञाततावत्त्वादित्यनुमितिग्राह्यत्वं तत्त्वेनाभिसंहितमित्यन्यत्र विस्तरः । अत्राद्यं प्राभाकरमतं द्वितीयं भट्टमतं तृतीयं मिश्रमतं वेदान्तिमतं च । यद्यप्यनुव्यवसायेन प्रामाण्यं गृह्यत इति मिश्रमतं तथाऽपि तदभिमतानुव्यवसायस्यैवात्र साक्षित्वेन विवक्षितत्वाददोष इत्यवधातव्यम् । साक्षिसिद्धे त्वसंशयादित्युक्त्याऽन्यसिद्धे संशयोऽस्तीति लभ्यते । न चास्त्यन्यज्ज्ञानमिति मूले तुशब्दानर्थक्यमित्यत आह **द्विविधं हीति** । नन्वेवमपि कथमनवस्थापरिहारः । न च साक्षिगृहीते सुखादौ परीक्षानपेक्षणेन तत्परम्परायास्तत्रैव विश्रान्तत्वादिति वाच्यम् । ज्ञानान्तरविषय इव साक्षिविषयेऽपि तदपेक्षाया वक्तुं शक्यत्वेन तत्परम्परायास्तत्र विश्रान्त्यसम्भवात् । न च ज्ञानान्तरविषय इव संशयविषयत्वात्तत्र परीक्षापेक्षासंभवेऽपि साक्षिविषयस्य तस्य तदविषयत्वान्न तत्र परीक्षापेक्षेति वाच्यम् । संशयविषय इव तदविषयेऽपि तदपेक्षाया वक्तुं शक्यत्वादित्यत आह **एतदुक्तं भवतीति** ॥ **न त्विति** । सन्दिग्धस्यैवार्थस्यैवानुमानापरपर्यायपरीक्षाविषयत्वस्य सन्दिग्धे न्यायः प्रवर्तत इति भाष्यकृद्वचनात्सिद्ध्याऽसन्दिग्धस्य न्यायविषयतायास्तद्विरुद्धत्वादित्यर्थः ॥ **अवतार इति** । साक्षिण इति शेषः ।

**कुतोऽनवस्थेति** । कुतः परीक्षाऽनवस्थेत्यर्थः । भवेदेतदेवं यदि मनोवृत्तिविषयस्यैव संशयविषयत्वं न तु साक्षिविषयस्येत्येतत्सिद्धं स्यात् । तदेव कुत इत्यत आह **प्रपञ्चितश्चेति** । 'परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेदि'त्येतद्व्याख्यानावसर इति शेषः ।

**स०**— साक्षिसिद्धे त्वसंशयादित्युक्त्याऽन्यसिद्धे संशयोऽस्ति इति प्राप्नोति । न चास्त्यन्यज्ज्ञानमिति तुशब्दानर्थक्यमित्यत आह **द्विविधं हीति** ।

**प०**— **अत्रेति** । प्रामाण्यनिश्चयस्य परीक्षाधीनत्वविषये ॥ **केचिदिति** । प्राभाकराः ॥ **अन्ये त्विति** । भाट्टाः ॥ **अनुमानेनैवेति** । घटो ज्ञानविषयः ज्ञाततावत्त्वादिति ज्ञाततालिंगानुमानेनेत्यर्थः ॥ **अपरे त्विति** । वेदान्तिनः । उक्तमतत्रयेऽपि प्रामाण्यस्य स्वतस्त्वात् । विपक्षे बाधकोक्त्या तत्साधयति **यदि च स्वत इति** । स्वप्रकाशज्ञानेन वा ज्ञानग्राहकेण ज्ञाततारूपानुमानेन वा साक्षिणा वेत्यर्थः ॥ **अनुमानविशेष इति** । संवादविसंवादाभावरूप इत्यर्थः । शङ्कानिरासस्यास्फुटत्वादाह **एतदुक्तमिति** ॥ **प्रकृत्यधिकरण इति** । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्यानुमानिकपादीयाधिकरणे 'परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेदि'त्येतद्व्याख्यावसर इति भावः ।

**या०**— **अनुमानेनैवेति** । अहं ज्ञानवान्ज्ञाततावत्त्वादिति ज्ञाततालिङ्गकानुमानेनैवेत्यर्थः । **सुखादिष्ववतार इति** । साक्षिरूपज्ञानस्येति शेषः । असन्दिग्धत्वोपपादनाय साक्षिगृहीतेष्वित्युक्तम् । ननु कथं संशयनिवर्तिकायाः परीक्षाया मनोवृत्तिविषयेष्वेवावतारो न साक्षिसिद्धेषु सुखादिष्वित्यत आह **प्रपञ्चितश्चायमिति** । 'परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेदि'त्यनुव्याख्याव्याख्यावसरे । तथा हि । अस्त्यत्र पुरतः पानीयमित्यादिना ग्रन्थेन प्रपञ्चित इत्यर्थः ।

**श्री०**— **अनुमानेनैवेति** । अहं ज्ञानवान् ज्ञाततावत्त्वादित्यनुमानेन ज्ञानमनुमेयम् । बाधाभावेन लिङ्गेन च प्रामाण्यमनुमेयमित्यर्थः । तथा च न परीक्षाऽपेक्षेति भावः ॥ **साक्षिणैवेति** । परीक्षानपेक्षेण साक्षिणैवेत्यर्थः ।

**सु०**— **मनोवृत्तिविषय एव संशयो न साक्षिसिद्ध इत्यत्र किं कारणमित्यत आह** मानस इति ।

**अनु०**— मानसे दर्शने दोषाः स्युर्न वै साक्षिदर्शने ॥

**मनःपरिणतिरूपे दोषाः कारणतया संभाविताः स्युः । वैशब्दस्तुशब्दार्थे । अयमर्थः । द्विविधो हि संशयो भवति । एकस्तावदादित एव । यथा स्थाणुर्वाऽयं पुरुषो वेति । अप-**

**रस्तु निश्चयपृष्ठभावी । यथा स्थाणुतया(वदयं) प्रतीयते स्थाणुर्भवति न वेति । तत्राद्यो विशेषादर्शनादिदोषमूलः । द्वितीयोऽपि प्रथमज्ञानस्य दोषजन्यत्वशङ्कामूलः । दोषाश्च मानस एव दर्शने संभवन्ति । अतस्तत्संशयात्मकं वा जायते निश्चयतया जातस्य विषये वा आहार्यः संशयो भवति । न तु साक्षि(सिद्धे) दर्शने दोषसंभवः । अतो न तत्संशयात्मकं नापि (साक्षिसिद्धे) तत्सिद्धेऽर्थे संशय इति ।**

**शे०** — ननु मानसदर्शनसाक्षिदर्शनयोरस्तु सदोषत्वनिर्दोषत्वाभ्यां वैलक्षण्यम् । तथापि मानसदर्शनवत्साक्षिदर्शनस्य संशयात्मकत्वं तद्विषयवच्च साक्षिविषयस्यापि संशयविषयत्वमस्त्वित्यत आह **अयमर्थ इति । आहार्य इति ।** आहित इत्यर्थः ।

**प०** — वैलक्षण्यद्योतनायाह **वैशब्दस्तुशब्दार्थ इति ।** को दोषः कथं साक्षिणि स नास्तीत्यत आह **अयमर्थ इति ।** ननु साक्षिगृहीतोऽपि अयं स्थाणुरिति निश्चिते संदेहो दृष्ट इत्यतो वाह **अयमर्थ इति ॥ दोषजन्यत्वशङ्कामूल इति ।** दोषजन्यत्वशङ्कयोत्पादित इत्यर्थः ॥ **आहार्य इति ।** आहित इत्यर्थः ॥ वै तुशब्दार्थे इत्युक्तं तदाह **न तु साक्षिसिद्ध इति ।** साक्षिसिद्धत्वेन सिद्धे दर्शन इत्यर्थः । अत एवाह **न तत्संशयात्मकमिति ।** साक्षिणा सिद्ध इत्यर्थमुपेत्याह **नापि साक्षिसिद्धेर्थ इति ।**

---

**या०** — **आहार्य इति ।** आहित इत्यर्थः ।

**श्री०** — **पृष्ठभावीति ।** आहितसंशय इत्यर्थः । तत्प्रकारं दर्शयति **स्थाणुतयेति ।** तथा च ज्ञाने प्रामाण्याप्रामाण्यसन्देहात् अर्थेऽपि सन्देहो भवतीत्यर्थः ।

**सु०** — **मानसे दर्शने दोषाः संभवन्तीति स्फुटम् । साक्षिदर्शने न संभवन्तीत्येतत्कुत इत्यत आह** सुदृढ इति ।

**अनु०** — सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनम् ॥

**सुदृढः कदाऽपि बाधरहितः । निर्णयोऽवधारणात्मकः प्रत्ययः । यत्रेति निपातो य इत्यर्थे । इदमुक्तं भवति । दोषास्तावज्ज्ञानस्य डोलायमानतादर्शनेन बलवद्बाधकोपनिपातेन वा कल्प्याः । यथोक्तम् । 'बलवत्प्रमाणतश्चै(श्चैव ज्ञेया दोषा न चान्यते)'ति । साक्षिदर्शनं च निर्णयात्मकमेव भवति न च बाध्यत इत्युपपादितं पृथगधिकरणे । अतः प्रमाणाभावान्न तत्र दोषः संभवति ।**

**शे०** — **स्फुटमिति** । इन्द्रियलिङ्गशब्दजन्यस्य तस्यानादौ संसारे गतिद्बयदर्शनादिति भावः । नन्वस्तु साक्षिज्ञानस्य बाधरहितत्वमवधारणात्मकत्वं च । तथाऽपि कुतस्तत्र न दोषसंभवः कुतस्तस्य बाधरहितत्वावधारणात्मकतायाः सिद्धिर्येन सदोषत्वाभावस्तस्य स्यादित्यत आह **इदमुक्तं भवतीति** ॥ **पृथगधिकरण इति** । 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेत् । न हि बाधः क्वचिद्दृष्टो दुःखाद्यनुभवस्य त्वि'त्यादिनेति शेषः ।

**प०** — कथमनेन साक्षिणो निर्दोषतोपपादितेत्यत आह **इदमुक्तमिति** । (तथेति कारण-तयेत्यर्थ ) ॥ **यथोक्तमिति** । तत्वनिर्णयोक्तब्रह्मतर्के ॥ **पृथगिति** । पृथगुपदेशादित्यधिकरणे 'न हि बाधः क्वचित् दृष्टो दुःखाद्यनुभवस्य तु' इत्यादिनेति भावः ।

**सु०** — **साक्षिसिद्धेऽर्थे संशयो नास्तीत्युक्तं तदनुभवारूढं कर्तुं साक्षिसिद्धमर्थं तावदाह** इच्छेति ।

**अनु०** — इच्छा ज्ञानं सुखं दुःखं भयाभयकृपादयः ॥
साक्षिसिद्धाः

**आदिपदेन प्रयत्नद्वेषावेतदभावाश्च गृह्यन्ते । ततः किमित्यत आह** नेति ।

न कश्चिद्धि तत्र संशयवान्क्वचित् ॥

---

**तत्र क्वचिदिति संबन्धः । न जातु मम सुखमस्ति न वेति संशयो नापि प्रतीयमान-मिदं सुखं सदसद्वेति संशय इति हिशब्देनाह ।**

**शे०** — साक्षिज्ञानस्य संशयात्मकत्वाभावोपदर्शनं **न जात्विति** । तद्विषयस्य संशय-विषयत्वाभावोपदर्शनं **नापीति** ।

**प०** — **एतदभावाश्चेति** । इच्छादेरभावाश्चेत्यर्थः ॥ **इति संबन्ध इति** । तत्र तेष्विच्छादिषु मध्ये क्वचिदपि विषय इत्यर्थ इति भावः ।

**सु०** — साक्षिदर्शनम**बाधितमेवेति न युज्यते शुक्तिरजतादौ बाधदर्शनात् । न हि प्रतीतिसमयमात्रवर्तिनि तत्रान्यज्ञानं संभवतीत्यत आह** यदिति ।

**अनु०** — यत्क्वचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तत् ॥

**यद्दर्शनं क्वचिच्छुक्तिरजतादौ विषये व्यभिचारि बाधितं स्यात्तच्चक्षुरादिकरणकं मनः-परिणतिरूपमेव न साक्षिरूपम् । कुत एतत् । मानसदर्शनस्य बाध्यत्वाङ्गीकारेऽनिष्टाभावात् ।**

**साक्षिणस्तु तथात्वे सर्वव्यवहारविलोपप्रसङ्गस्योक्तत्वात् । तदिदमुक्तं हिशब्देन । संभवति चास्य मानसत्वमन्यथाख्यातिसमर्थनादिति ।**

शे० — ननु भवेत्साक्षिज्ञानस्याबाधितत्वनियमभङ्गो यदि शुक्तिरजतादिज्ञानस्य साक्षिरूपत्वं स्यात् । न च तदस्ति । तस्य चक्षुरादिकरणकान्तःकरणपरिणामत्वात् । तत्कथं तस्य बाधदर्शनात्साक्षिणस्तन्नियमभङ्ग इत्यत आह **न हीति** । लिङ्गशब्दाद्यननुसन्धानेऽपि जायमानत्वात्प्रतीतिसमयमात्रवर्तितया ततः पूर्वमसत्त्वेन तदिन्द्रियसन्निकर्षासंभवान्न तज्ज्ञानस्यान्यकारणकत्वं किन्त्विदमाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्याविद्यावृत्तिप्रतिबिम्बितचैतन्यरूपसाक्षिरूपत्वमेवेति भावः । तथात्वे बाध्यताऽङ्गीकारे ॥ **सर्वव्यवहारेति** । हानोपादानादिसर्वव्यवहारेत्यर्थः ॥ **उक्तत्वादिति** । यदि साक्षी क्वचिद्व्यभिचरेत्तदा तेनाविश्वसनीयेन करणदोषादिनिश्चयो न स्यात् । तदभावे च प्रत्ययानां भ्रमत्वादि न निश्चीयेत । ततश्च वस्तुनिर्णयो न स्यात् । ततश्च हानोपादानादिसर्वव्यवहारो लुप्येत । सर्वव्यवहाराणामेतत्कार्यत्वात् । कारणाभावे च कार्याभावनियमादिति 'भ्रमत्वमभ्रमत्वं च यदैवानुभवोपगम् । स चेत्साक्षी क्वचिद्दुष्टः कथं निर्णय ईयते । विशेषाः सर्व एवैते साक्षिप्रत्यक्षगोचराः । ऊरीकृत्य च तान्सर्वान्व्यवहारः प्रवर्तते । तस्मात्सर्वप्रसिद्धस्य व्यवहारस्य सिद्धये । साक्षी निर्दोष एवैकः' इत्यादिना सर्वव्यवहारविलोपप्रसङ्गस्योक्तत्वादित्यर्थः । ननु प्रतीतेः पूर्वमसत्त्वाद्रजतस्य तेन सहेन्द्रियसन्निकर्षायोगान्न चक्षुरादिकरणकान्तःकरणपरिणामत्वं तज्ज्ञानस्येत्युक्तमित्यतः सत्यमुक्तं दुरुक्तं तत् । चक्षुःकरणकान्तःकरणपरिणामत्वसंभवादित्याह **संभवति चास्येति** । तत्कथमित्यतो रजतस्यासत्त्वात्तेन सहेन्द्रियसन्निकर्षासंभवेऽपि शुक्तेः सत्त्वात्तया सन्निकृष्टं दुष्टमिन्द्रियं तामेव शुक्तिमत्यन्तासद्रजतात्मनाऽवगाहमानं ज्ञानं जनयतीत्यस्मिन्पक्षे संभवत्येव चक्षुःकरणकान्तःकरणवृत्तिरूपत्वं तज्ज्ञानस्य । अत एव नासत्ख्यातिप्रसङ्गः । यावत्खलु विगीते प्रत्ययेऽवभासते तस्य सर्वस्यासत्त्वे ह्यसत्ख्यातिः स्यात् । न चैवमत्रास्ति । शुक्तेः सत्त्वाभ्युपगमात् । नाप्यख्यातिपक्षपातः । रजतस्यासत्त्वाभ्युपगमात् । तादात्म्यावभासाभ्युपगमाच्च । नापि प्रसिद्धान्यथाख्यातिपक्षपातः । रजतस्यात्यन्तासत्त्वाभ्युपगमादित्याशयवानाह **अन्यथाख्यातीति** । एवंविधाभिनवान्यथाख्यातीत्यर्थः ॥ **समर्थनादिति** । लक्षणनिर्वचनेन कारणनिरूपणेन प्रमाणव्युत्पादनेन बाधकाभावव्युत्पादनेन च 'विज्ञातस्यान्यथासम्यग्विज्ञानं ह्येव तन्मतमि'त्येतद्व्याख्यानावसर इति शेषः ।

स० — ननु शुक्तिरजतादिज्ञानस्य चक्षुरादिजन्यत्वात् साक्षिरूपत्वमेव नास्तीति कथमेतस्योदाहरणं साक्षिणो निर्बाधत्वस्याभिधानादित्यत आह **न हि प्रतीतिसमयेति** । लिङ्गशब्दाद्यननुसन्धानेपि

जायमानत्वात् प्रतीतिसमयमात्रपरिवर्तित्वेनेन्द्रियसन्निकर्षाभावादन्यज्ज्ञानं न संभवतीति भावः । **न हि प्रतीतिसमयमात्रपरिवर्तिन्यन्यज्ज्ञानं** संभवतीत्युक्तं परिहरति **संभवति चेति** । तथा च प्रतीतेः पूर्वं रजताभावेपि शुक्तेः सत्त्वे तत्सन्निष्टकरणेनात्यन्तासद्रजतात्मना शुक्तिविषयकज्ञानं संभवतीति भावः । नन्वेवमन्यथाख्यात्यापत्तिरित्यत इष्टापत्तेरित्याह **अन्यथाख्यातीति** । संभावितत्वं बाधदोषविशेषणम् ।

**प०** — शुक्तौ रजतमिति ज्ञानं साक्षिरूपमिति मन्वानः शङ्कते **साक्षिदर्शनमिति** ॥ **तत्रेति** । रजते साक्षिणो ज्ञानादन्यज्ज्ञानं न हि संभवतीत्यर्थः । प्रतिकाल एव विद्यमाने तस्मिन् इन्द्रियसन्निकर्षायोगेन करणजन्यत्वस्यासंभवादिति भावः । शुक्तिसन्निकृष्टादेव करणात् रजतज्ञानजन्म संभवतीति भावेनाह **संभवति चास्य मानसत्वमिति** । मनोवृत्तिरूपत्वमित्यर्थः ॥ **अन्यथाख्यातीति** । दुष्टेन्द्रियसन्निकृष्टमेव शुक्तिशकलमत्यन्तासद्रजतात्मना प्रतिभातीत्यर्थस्य जिज्ञासानये 'विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतमि'त्येतद्व्याख्यावसरे समर्थनादित्यर्थः ।

**या०** — ननु शुक्तिरजतादिविषयकं चक्षुरादिकरणकमन्तःकरणवृत्तिरूपमेव ज्ञानं न साक्षिरूपमित्यत आह **न हि प्रतीतीति** । रजतस्य प्रतीतेः पूर्वमसत्त्वात्सन्निकर्षासंभवेन न तज्ज्ञानमिन्द्रियजन्यमपि त्विदमाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्याविद्यावृत्तिप्रतिबिम्बितचैतन्यरूपसाक्षिवेद्यमेवेत्यर्थः ॥ **उक्तत्वादिति** । पृथगधिकरण इति शेषः । नन्विन्द्रियसन्निकर्षासंभवान्न मनोवृत्तिरूपत्वमस्य ज्ञानस्येत्युक्तमित्यत आह **संभवति चेति** । मानसत्वं मनोवृत्तिरूपत्वम् ॥ **अन्यथाख्यातीति** । स्यादेतदेवं यद्यनिर्वचनीयं प्रातिभासिकं रजतं प्रतीयत इति त्वन्मतमुपपन्नं स्यात् । न चैवं किन्तु शुक्तिकैव स्वसन्निकृष्टेनेन्द्रियेण दोषवशादत्यन्तासद्रजतात्मना प्रतीयत इत्यभिनवान्यथाख्यातेरेव त्वां प्रति समर्थनादित्यर्थः ।

**सु०** — **मानसस्य दर्शनस्य दोषबाधसंभवोऽभिहितः । कीदृशस्य तर्हि प्रामाण्यमित्यत आह** मन इति ।

**अनु०** — मनश्चक्षुर्दर्शनादेरपि यत्रैव साक्षिणा ॥
प्रामाण्यं सुगृहीतं स्यात्तत्परीक्षितदर्शनम् ॥

**मनश्चक्षुश्शब्दौ श्रोत्रादेरुपलक्षकौ । दर्शनं साक्षात्कारः । आदिपदेन लैङ्गिकशब्दज्ञानसंग्रहः । इन्द्रियलिङ्गशब्दकरणकस्य मनोवृत्तेर्ज्ञानस्येत्यर्थः । निर्धारणे षष्ठी । संभावितदोषबाधस्यापीत्यपेरर्थः । यत्र ज्ञाने सुगृहीतं परीक्षया निश्चितं तत्परीक्षितदर्शनं प्रमाणमिति**

**शेषः । प्रत्यक्षागमज्ञानप्रामाण्यग्रहण एव परीक्षोपयोगः, धर्मिज्ञानानुमानोपमानानुव्यवसायानां तु प्रामाण्यग्रहणं न परीक्षापेक्षमिति केचिन्मन्यन्ते । तन्निरासाय सर्वमानससंग्रहार्थं मनश्चक्षुर्दर्शनादेर्मध्य इत्युक्तम् । अन्यथा यत्र ज्ञान इत्यादिकमेवावक्ष्यत् । तदेव प्रमाणमित्येतावता पूर्णे परीक्षितदर्शनमित्यनुवादेन सुगृहीतमित्येतद्विवृणोति ।**

शे०— मनश्चक्षुश्शब्दयोस्तन्मात्रार्थकत्वे मनश्चक्षुःकरणकमनोवृत्तिरूपज्ञानस्यानेन प्राप्तावपीन्द्रियमात्रकरणकमनोवृत्तेर्ज्ञानस्यानेनालाभात्तल्लाभाय मनश्चक्षुश्शब्दाविन्द्रियमात्रोपलक्षकतया व्याचष्टे **मनश्चक्षुश्शब्दाविति** । विनिगमनाविरहादुभयत्रोपलक्षणत्वाश्रयणमिति द्रष्टव्यम् । श्रुत्योपलक्षणया च लब्धं वाक्यार्थमाह **इन्द्रियेति** । दर्शनादेरित्यस्य यत्रेत्यनेनान्वयपरिहारायाह **निर्धारण इति** ॥ **अन्यथेति** । तावतैव कीदृशस्य मानसदर्शनस्य प्रामाण्यमिति जिज्ञासापूर्तेरिति भावः ।

प०— **धर्मिज्ञानेति** । धर्म्यंशज्ञानस्यानुमित्युपमित्यनुव्यवसायरूपत्रिविधज्ञानानां चेत्यर्थः । **केचित्** प्राचीनतार्किकाः ॥ **सर्वमानसेति** । प्रमाणत्रयजन्यमनोवृत्तिज्ञानेत्यर्थः । निर्धारणे षष्ठीति प्रागुक्तत्वात् मध्य इत्युक्तम् ॥ **परीक्षानवस्थाभावोक्तिः** ।

---

श्री०— **मनोवृत्तेर्ज्ञानस्येति** । समस्तस्यापि वृत्तिरूपज्ञानस्येत्यर्थः ॥ **प्रतीयमानमिति** । सुखादिविषयकं ज्ञानं प्रमाणमप्रमाणं वेत्यर्थः ॥ **धर्मिज्ञानेत्यादि** । सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति वचनेन तत्र कदाऽपि प्रामाण्याप्रामाण्यसन्देहाभावेन तत्प्रामाण्यस्य स्वतस्त्वान्न परीक्षापेक्षा । तथाऽनुमानप्रामाण्यमपि स्वत एव । वह्निमति वह्निप्रकारकत्वं वह्निज्ञाने (अनुमितौ) प्रामाण्यम् । तत्र लिङ्गोपहितलैङ्गिकभानपक्षे धूमवान्पर्वतोऽग्निमानित्यत्र वह्निमति वह्निप्रकारकत्वरूपप्रामाण्यव्याप्यस्य धूमवति वह्निप्रकारकत्वस्य गृहीतत्वेन स्वतस्त्वान्नानुमितिप्रामाण्ये संशयः । अतो न तत्र परीक्षापेक्षा । एवमेवोपमितावपि वाच्यत्ववति वाच्यत्वप्रकारकत्वरूपप्रामाण्यव्याप्यस्य, सादृश्यवति वाच्यत्वप्रकारकत्वस्य, गृहीतत्वेन स्वतस्त्वान्न तत्रापि संशय इति न परीक्षापेक्षा । अनुव्यवसायप्रामाण्ये सन्देहाभावेन स्वतस्त्वनिश्चयान्न परीक्षापेक्षेति स्पष्टमिति द्रष्टव्यम् ॥ **सर्वमानसेति** । समस्तमनोवृत्तिरूपज्ञानेत्यर्थः । धर्मिज्ञानादेरपि चक्षुरादिद्वारा मनोजन्यत्वेन मनोवृत्तिरूपज्ञानत्वादिति भावः ॥ **अन्यथेति** । धर्मिज्ञानादिरूपसर्वमानससंग्रहाभिप्रायाभावे इत्यर्थः ॥ **यत्र ज्ञान इत्यादिकमिति** । यत्र ज्ञाने प्रामाण्यं सुगृहीतं स्यात्तत्परीक्षितदर्शनमित्येव वक्तव्यमित्यर्थः ।

सु० — **एवं मानसप्रत्यक्षादिज्ञानप्रामाण्यग्रहस्य परीक्षाधीनत्वेऽपि साक्षिप्रामाण्यग्रहस्य तदनपेक्षत्वान्न परीक्षाऽनवस्थेत्युक्तम्। तत्र किमनया द्विविधकल्पनया। साक्षिवत्प्रत्यक्षादिज्ञानस्यापि प्रामाण्यग्रहः परीक्षानपेक्ष एवोक्तविधया स्वतः किन्न स्यादित्याशङ्कां परिहरति** नेति।

अनु० — न ज्ञानदृष्टिमात्रेण प्रामाण्यं तस्य दृश्यते ॥

**ज्ञानस्य दृष्टिर्ज्ञानदृष्टिः**। तस्य **ज्ञानस्य**।

प० — **उक्तविधयेति**। अत्र केचिदाहुरित्यादिनोक्तप्रकारत्रयेणेत्यर्थः।

सु० — **एतदुक्तं भवति। वृत्तिज्ञानानां स्वप्रकाशत्वमेव तावदसत्। प्रमाणाभावात्। ज्ञानव्यवहारस्य साक्षिवेद्यत्वेनैवोपपत्तेः। इदमहं जानामीत्यनुभवस्य साक्षिरूपत्वात्। विमतं ज्ञानं न स्वप्रकाशमनात्मत्वात्कार्यत्वादनित्यत्वान्मनोरूपत्वात्सुखादिवदित्यादिप्रमाणविरोधाच्च।**

**भवतु वा ज्ञानं स्वप्रकाशं तथाऽपि स्वरूपमात्र एव न तु स्वधर्मे प्रामाण्येऽपि। तथा हि। वेदवाक्यश्रवणे सति बाह्यस्य वाक्यार्थज्ञानमुत्पद्यते न वा। न द्वितीयः। सत्यां सामग्र्यां कार्यानुदयानुपपत्तेः। अन्यथा मीमांसकस्यापि तदनुदयप्रसङ्गात्। आद्येऽपि तत्प्रकाशते न वा। नेति पक्षेऽपसिद्धान्तः। प्रथमे तत्प्रामाण्यं प्रकाशते न वा। नाद्यः। तन्निरा-(सस्यानु)सानुपपत्तेः। ततो ज्ञानदृष्टिमात्रेण न ज्ञानप्रामाण्यं दृश्यत इति द्वितीय एवाङ्गीकार्यः। तथा च स्वप्रकाशज्ञानेनैव प्रामाण्यग्रह इति कथं स्यात्। अपौरुषेयत्वादियुक्तिभिः प्रबोधितो बाह्यः प्रतिपद्यते च तत्प्रामाण्यमिति कथं न परीक्षापेक्षत्वम्। अन्यथा वैदिकज्ञानप्रामाण्ये विप्रतिपत्तिरेव न स्यात् ज्ञानस्वरूपवत्। किञ्चैवंवादिनो मते शुक्तिरजतादिविभ्रमो न स्यात्। इदमनुभवस्य रजतस्मरणस्य च भेदाग्रहो हि विभ्रमः। तत्र प्रामाण्यवद्भेदस्यानुभवत्वस्मरणत्वयोश्च प्रकाशोऽवश्यम्भावीति कथं विभ्रमावकाशः। न हि प्रामाण्यस्य भेदादेश्च कश्चिद्विशेषोऽस्तीति।**

शे० — अत्र केचिदाहुरित्यादिना प्रागुपन्यस्तप्राभाकरादिमतत्रयनिरासस्य मूले स्पष्टमप्रतिभासादपेक्षितं पूरयन्नेव तन्निरासपरतया मूलं योजयति **एतदुक्तं भवतीति**। प्रमाणं भवद्व्यवहारान्यथाऽनुपपत्तिर्वा स्यात्। इदमहं जानामीत्यनुभवो वेति विकल्पद्वयं क्रमेण दूषयति **ज्ञानव्यवहारस्येत्यादिना ॥ अनात्मत्वादित्यादि**। न चाप्रयोजकत्वं हेतूनामिति वाच्यम्। स्वकर्मकप्रकाशत्वं हि स्वप्रकाशत्वम्। न चैवं स्वप्रकाशत्वमन्तःकरणपरिणतिरूपज्ञानस्योपपद्यते। तथा सति तस्य कर्मत्व-

क्रियात्वयोः प्रसङ्गात् । न च ते एकस्य संभवतः । क्रियायाः कर्मकारकजन्यत्वात् । न च जन्यजनकयोरेकत्वमुचितम् । अन्तर्भावितपूर्वापरभावित्वात्तस्य । न च तदेव स्वात्मानं प्रति पूर्वमपरं चेति युज्यत इति न वृत्तिज्ञानस्य स्वप्रकाशत्वमित्यन्यत्र विस्तरः ।

एतच्च वृत्तिज्ञानानामस्वप्रकाशत्वव्युत्पादनं वस्तुस्थितिमनुरुध्यैव कृतम् । इदानीं त्वङ्गीकृतेऽपि तेषां स्वप्रकाशत्वे न तज्ज्ञानप्रामाण्ययोरुभयोः स्वप्रकाशज्ञानसिद्धत्वमिति वक्तुं परोक्तस्य ज्ञानतत्प्रामाण्ययोरुभयोः स्वप्रकाशज्ञानसिद्धत्वस्य निरासपरतया 'न ज्ञानदृष्टिमात्रेणे'त्यादिमूलं योजयितुमुभयोस्तदसिद्धतामाह **भवतु वेति** । न च घटग्राहकेण घटगतरूपस्येव तत्प्रामाण्यस्यापि स्वप्रकाशज्ञानसिद्धत्वं संभवति । कुत एतद्वैषम्यमित्यतस्तदुपपादयितुं प्रतिजानीते **तथा हीति** । वेदवाक्यश्रवणे बाह्यस्य वाक्यार्थज्ञानदृष्ट्या तज्ज्ञानप्रामाण्यादृष्टेर्नायं नियम इति मूलयोजनामभिप्रेत्य वाक्यश्रवणे ज्ञानस्यैवानुत्पत्तौ, तदुत्पत्तावप्यदृष्टौ, दृष्टावपि प्रामाण्यस्यापि दृष्टौ, तदनुपपत्तेस्तत्तत्पक्षप्रतिषेधपूर्वकं ज्ञानदृष्टावपि प्रामाण्यं न दृष्टमित्येतत्पक्षनिरासपरतया मूलं योजयितुं संभावितविकल्पांस्तत्तत्पक्षदूषणं चोपर्येव कृत्वा शिष्टपक्षदूषणपरतया मूलं योजयति **वेदवाक्यश्रवण इत्यादिना** ॥ **अन्यथेति** । सत्यामपि सामग्र्यां कार्यानुदय इत्यर्थः । अविशेषादिति भावः ॥ **अपसिद्धान्त इति** । वृत्तिज्ञानस्य स्वप्रकाशतायास्त्वत्सिद्धान्तत्वेन तदप्रकाशवचनस्य तत्सिद्धान्तविरुद्धत्वादिति भावः । परिशिष्टपक्षदूषणं वक्तुं तदनुवादकतया मूलं व्याख्याति **तत इति** । अस्त्वेवमित्यत आह **तथा चेति** । तथा सतीत्यर्थः । एवं परोक्तं ज्ञानतत्प्रामाण्ययोः स्वप्रकाशज्ञानसिद्धत्वं निराकृत्य स्वाभिमतं प्रामाण्यस्य परीक्षासिद्धत्वमुपदर्शयति **अपौरुषेयत्वादीति** । अनेन न ज्ञानदृष्टिमात्रेण प्रामाण्यं दृश्यते किन्त्वपौरुषेयत्वादियुक्त्यनुसन्धानसापेक्षेणेति मूलयोजनोक्ता भवति । ज्ञानतत्प्रामाण्ययोः परीक्षानपेक्षस्वप्रकाशज्ञानमात्रसिद्धत्वाभ्युपगमे बाधकं चाह **अन्यथेति** ॥ **ज्ञानस्वरूपवदिति** । अन्यथा तत्रापि विप्रतिपत्तिः स्यादविशेषादिति भावः । ननु ज्ञानधर्मस्य प्रामाण्यस्य प्रकाशोऽप्यस्वप्रकाशो भेदादेरित्यप्रयोजकतामाशङ्क्याह **न हीति** । तथा चाविशेषलक्षणप्रसङ्गाङ्गव्याप्तिसद्भावान्नाप्रयोजकत्वमिति भावः ।

**प०**— ज्ञानदृष्टिमात्रेणेत्यादेः स्वप्रकाशज्ञानमतनिरासपरतया तावद्भावमाह **एतदुक्तं भवतीत्यादिना** । एवं तात्पर्यमुक्त्वाऽभ्युपेत्यवादेन मूलार्थमाह **भवतु वा ज्ञानमिति** । कुत इत्यतो मूलाभिमतयुक्तिमाह **वेदवाक्येत्यादिना** ॥ **सत्यां सामग्र्यामिति** । सङ्केतस्मरणादिरूपायामित्यर्थः ॥ **तन्निरासस्येति** । बौद्धेन क्रियमाणस्य वेदजन्यज्ञाने प्रामाण्यनिरासस्यानुपपत्तिरित्यर्थः । घटादिज्ञान इव वेदजन्यज्ञानेपि प्रामाण्यस्य प्रतीतत्वात् प्रतीतस्य निरासायोगादिति भावः । तावता प्रामाण्य-

निश्चयपरीक्षाधीनत्वं न प्राप्तमित्यत आह **अपौरुषेयत्वादीति** ॥ **अन्यथेति** । स्वप्रकाशकज्ञानेनैव स्वप्रामाण्यग्रहणे सतीत्यर्थः ॥ **एवंवादिन इति** । स्वप्रकाशज्ञानेनैव स्वगतधर्माणामपि ग्रहणमिति वादिनो मत इत्यर्थः ।

श्री० — **वेदबाह्यस्य** वेदाप्रामाण्यवादिनो बौद्धस्य ॥ **सत्यां सामग्र्यामिति** । सङ्गतिग्रहणादिरूपायामित्यर्थः । आकाङ्क्षादिमत्पदसमूहस्यार्थप्रतिपत्तिजनकत्वस्वाभाव्याद्गृहीतसङ्गतेरर्थप्रतिभासस्य दुरपन्हवत्वादित्याशयः ॥ **अन्यथेति** । गृहीतसङ्गतेरर्थप्रतिभासानङ्गीकारे वेदप्रामाण्यवादिनो मीमांसकस्यापि तदनुदयप्रसङ्गेन वेदार्थमीमांसाऽनुपपत्तेरित्यर्थः ॥ **अन्यथेति** । वेदबाह्यस्यापि ज्ञानदृष्टिमात्रेण प्रामाण्यग्रहणाङ्गीकार इत्यर्थः ॥ **कश्चिद्विशेष इति** । ज्ञानधर्मत्वाविशेषादित्यर्थः ।

**सु० — ज्ञानप्रामाण्ये सहैवानुमेये इत्यप्यसत् । ज्ञानस्या(प्य)नुमेयत्वे प्रमाणाभावात् । तद्व्यवहारस्यान्यथैवोपपत्तेः । आशुतरविनाशिनो ज्ञानस्य जानामीति वर्तमानतया प्रतिभा(सा)ऽनुपपत्तेश्च । अपरोक्षावभासविरोधाच्च । अनुमेयत्वेऽपि ज्ञानस्य न ज्ञानानुमितिमात्रेण प्रामाण्यं तस्य दृश्यते । तद्धि ज्ञाततया व्यवहारेण कार्येण वाऽनुमातव्यम् । न च तावता प्रामाण्यमनुमातुं शक्यते । व्यभिचारात् । ततो ज्ञाततादिमात्रेण प्रतीते ज्ञाने बाधाभावादिना प्रामाण्यमनुमेयम् । अन्यथा बाह्यानामपि वैदिकज्ञानप्रामाण्यानुमानप्रसक्तेः । प्रसक्तमप्यपोद्यत इति चेत् । तर्ह्यपवादनिरासाय परीक्षापेक्षावश्यम्भाविनीत्यागतम् । इदमेव चास्माभिरभिधास्यते, सर्वथा परीक्षाऽनपेक्षेति तु न क्षम्यते ।**

शे० — तद्व्यवहारान्यथाऽनुपपत्तिरेव तज्ज्ञानस्यानुमेयत्वे प्रमाणमस्तीति कथं तदभाव इत्यतस्तद्व्यवहारस्य साक्षिवेद्यत्वेनैवोपपत्तेर्न तदन्यथाऽनुपपत्तिरपि तत्र मानमित्याशयेनाह **तद्व्यवहारस्येति** ॥ **वर्तमानतयेति** । अनुमितिकाले ज्ञानस्यावर्तमानत्वादिति भावः । तत्कथमित्यत उक्तम् **आशुतरविनाशिन इति** । आशुतरविनाशित्वादित्यर्थः ॥ **अपरोक्षेति** । जानामीत्यनुव्यवसायस्यापरोक्षत्वावभासविरोधाच्चेत्यर्थः । एतच्च ज्ञानस्यानुमेयत्वनिराकरणं वस्तुस्थितिमनुरुध्यैव कृतम् । वस्तुतस्त्वङ्गीकृतेऽपि ज्ञानस्यानुमेयत्वे न प्रामाण्यस्यानुमेयत्वसिद्धिरित्याह **अनुमेयत्वेऽपीति** ॥ **तावतेति** । ज्ञाततादिमात्रेणेत्यर्थः ॥ **व्यभिचारादिति** । शुक्तिरजतादिज्ञानजन्यज्ञाततादिमति पुरुष इति शेषः । तत्र ज्ञाततावत्त्वेऽपि प्रमावत्त्वाभावादिति भावः ॥ **अन्यथेति** । ज्ञाततादिमात्रेणैव प्रामाण्यानुमानाङ्गीकार इत्यर्थः ॥ **अपोद्यत इति** । बौद्धैः पश्चादनृतत्वादियुक्तिभिर्निराक्रियत इत्यर्थः ॥ **अपवादनिरासायेति** । बौद्धोदीरितयुक्त्याभासनिरासायेत्यर्थः । तेन विना तत्र प्रामाण्यानिश्चयायोगात् । स च

परीक्षयैव विधेय इति सिद्धोऽपवादनिरासद्वारा परीक्षाया उपयोग इति भावः । नन्वेतावताऽपवाद-निरासाय परीक्षापेक्षाप्राप्तावपि प्रामाण्यनिश्चयस्य तदपेक्षत्वानापत्तेः कथं तन्निश्चयस्य तदपेक्षत्वोक्तिरित्यत आह **इदमेव चेति** । अपवादनिरासकत्वमेव प्रामाण्यग्राहकत्वशब्दार्थतयाऽभिसंहितमित्यर्थः ॥ **सर्वथेति** । अपवादनिरासकतयाऽप्यनुपयोगित्वमित्यर्थः ।

**स० — न च तावतेति** । ज्ञाततान्यवहारमात्रेणेत्यर्थः । **व्यभिचारात्** । शुक्तिरजतादि-ज्ञान इति शेषः ॥ **अपवादेति** । वेदबाह्यानामपि वैदिकज्ञानप्रामाण्यानुमानं प्रसक्तम् । तस्य यदपवादकं बाह्यैरुच्यते तन्निरासोऽवश्यं कर्तव्यः । अन्यथा तव प्रामाण्यनिश्चयानुपपत्तेः । स च परीक्षैवेति अपवादनिरासद्वारा प्रामाण्यनिश्चये उपयोगः सिद्ध इति भावः ।

**प० —** अन्ये त्वित्यादिनोक्तभट्टमतनिरासकतयापि न ज्ञानदृष्टीतिवाक्यं व्याख्यातुं तन्मतस्या-युक्तत्वं तावदाह **ज्ञानप्रामाण्ये सहैवेत्यादिना** । ज्ञानव्यवहारो मानमित्यत आह **तद्व्यवहारस्येति** ॥ **अन्यथेति** । साक्षिवेद्यत्वेनोपपत्तेरित्यर्थः । बाधकं चाह **आशुतरेति** । ज्ञानस्यानुमेयत्व इत्यापादकानु-कर्षः । **ज्ञानस्य वर्तमानतया** वर्तमानत्वमवगाहमानः जानामीति यः प्रतिभासः तस्यानुपपत्तेश्चेत्यर्थः । अनुमेयत्वपक्षे व्याप्तिस्मृत्यादिना तस्य नाशादज्ञासिषमित्येव प्रतिभासोदयः स्यादिति भावः । अभ्यु-पेत्यवादपरत्वेन मूलं योजयति **अनुमेयत्वेऽपि** ॥ **ज्ञानस्येति** । ज्ञानदृष्टीत्यस्यार्थो ज्ञानानुमितीति ॥ **व्यवहारेणेति** । ज्ञानगोचरव्यवहारेण वेत्यर्थः ॥ **व्यभिचारादिति** । शुक्तिज्ञानादौ बौद्धागमादि-जन्यज्ञाने च सत्यपि ज्ञाततादिना ज्ञानानुमानेपि तत्र प्रामाण्याभावेन व्यभिचारादिति भावः । तावता कथं परीक्षाधीनेत्यत आह **तत इति** । ज्ञानानुमितिमात्रेण प्रामाण्यानुमानायोगादित्यर्थः ।

**या० — वर्तमानतयेति** । पक्षलिङ्गव्याप्त्यादिज्ञानैर्व्यवहितत्वेनानुमितिकाले ज्ञानस्य वर्तमा-नताऽसम्भवादिति भावः ॥ **अपरोक्षेति** । जानामीत्यनुव्यवसायस्येति शेषः ॥ **व्यभिचारादिति** । भ्रमाहितज्ञाततादिवर्तीति शेषः । **अपोद्यत इति** । **बौद्धैः** पश्चाद्युक्तिभिर्निराक्रियत इत्यर्थः ॥ **अपवाद-निरासायेति** । बौद्धोदीरितयुक्त्याभासनिरासायेत्यर्थः । नन्वेमपवादनिरास एव परीक्षापेक्षा प्राप्ता न प्रामाण्यनिश्चय इत्यत आह **इदमेव चेति** ।

**श्री० —** ननु व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वेन व्यवहार एव स्वप्रकाशज्ञाने लिङ्गमिति चेत्तत्राह **तद्व्यवहारस्येति** ॥ **अन्यथैवेति** । साक्षिप्रत्यक्षसिद्धज्ञानेनैवेत्यर्थः ॥ **अन्यथेति** ॥ ज्ञानमिव प्रामाण्यमपि ज्ञाततामात्रेणैवानुमेयमित्यङ्गीकार इत्यर्थः ।

**सु०— एतेन साक्षिवेद्यतापक्षोऽपि प्रतिक्षिप्तः । औपनिषदज्ञानदृष्टिमात्रेण बाह्यैस्त-त्प्रामाण्यस्यादर्शनात् ।**

**शे०—** एतेनेत्युक्तमेव विवृणोति **औपनिषदेति** । परीक्षानपेक्षसाक्षिमात्रेण ग्रहणं न संभवति । अन्यथौपनिषदज्ञानदृष्टिमात्रेण बाह्यानामपि तत्प्रामाण्यदर्शनप्रसङ्गान्न च तदस्तीत्याशयः । न च प्रसक्तमप्यपोद्यत इति वाच्यम् । तथा सत्यपवादनिरासाय परीक्षापेक्षावश्यम्भावप्राप्त्या प्रामाण्यस्यानपेक्षसाक्षिग्राह्यत्वसिद्धान्तभङ्गापातात् ।

**प०—** अपरे त्वित्यादिनोक्ततृतीयमतं निराह **एतेन साक्षीति** । परीक्षानपेक्षसाक्षिवेद्यतापक्ष इत्यर्थः । मूलं योजयति **औपनिषदज्ञानदृष्टीत्यादि** । ज्ञानदृष्टिपदेन ज्ञानगोचरसाक्षिग्रहः ॥ **अदर्शनादिति** । अन्यथा तन्निकरणानुपपत्तेरिति भावः ॥

**या०— साक्षिवेद्यतापक्षोऽपीति** । सर्वथा परीक्षानपेक्षसाक्षिवेद्यतापक्ष इत्यर्थः ॥

**श्री०— साक्षिवेद्यतेति** । परीक्षानपेक्षसाक्षिवेद्यतापक्ष इत्यर्थः ॥

**सु०— चतुर्थपक्षस्त्वतिमन्दः । अनुमानादिज्ञानदृष्टिमात्रेण तत्प्रामाण्यस्य चार्वाका-दिभिरदृष्टत्वात् । विभागे मानाभावाच्च । धर्मिज्ञानादिप्रामाण्ये विगानाभावादिति चे(त्)न्न । निरालम्बनादिमतदर्शनात् । उपपत्तिबाधितं तदिति चेत् । तर्हि स्वीकृताऽऽयुष्म-तैव परीक्षापेक्षेत्यलं पल्लवेनेति ।**

**शे०— चतुर्थपक्षस्त्विति** । प्रत्यक्षागमज्ञानप्रामाण्यज्ञान एव परीक्षोपयोगः । धर्मि-ज्ञानानुमानोपमानानुव्यवसायानां तु प्रामाण्यग्रहणं न परीक्षापेक्षमिति केषाञ्चित्पक्षस्त्वित्यर्थः ॥ **विभाग इति** । धर्मिज्ञानादिप्रामाण्यग्रहणे न परीक्षोपयोगः प्रत्यक्षागमप्रामाण्यग्रहण एव तदुपयोग इति विभाग इत्यर्थः ॥ **विगानेति** । धर्मिज्ञानादेः प्रामाण्ये नास्ति विगानमन्यज्ञानप्रामाण्ये त्वस्ति विगानमिति युक्तो विभाग इति भावः ॥ **निरालम्बनादीति** । इदं रजतमित्यादिभ्रमे प्रतीयमानस्य धर्मिणोऽप्यसत्त्वस्य बौद्धैरभ्युपगतत्वादनुमानोपमानयोरप्रामाण्यस्य चार्वाकैरभ्युपगतत्वादप्रमाऽपि प्रमेत्येव गृह्यत इति वदद्भिरप्यनुव्यवसायस्य प्रामाण्यानभ्युपगमात् । धर्मिज्ञानादिप्रामाण्येऽपि तत्तद्वादिविमतेः सत्त्वान्न तत्राप्यविगानमित्यर्थः । ननु तत्र वादिविमतिनिरासाय परीक्षापेक्षायामपि न प्रामाण्यग्रहणाय तदपेक्षेति कथं तद्ग्रहणस्य परीक्षापेक्षत्वमित्यत आह **अलं पल्लवेनेति** । तदर्थस्त्विदमेवास्माभिर-भिधास्यत इत्यादिना पूर्वोक्तोऽवधेयः ।

स० — **चतुर्थपक्षस्त्विति** । प्रत्यक्षागमप्रामाण्यग्रह एव परीक्षोपयोगः सिद्धः । धर्मिज्ञानोपमानानुव्यवसायानां तु प्रामाण्यग्रहणं न परीक्षापेक्षमिति चतुर्थपक्षस्त्विति मत इत्यर्थः । **विभाग इति** । धर्मिज्ञानादौ न परीक्षोपयोगः । प्रत्यक्षागमज्ञानप्रामाण्यग्रहणे तु तदुपयोग इति विभाग इत्यर्थः । **विगानेति** । ['पुरा सत्ये युगे देवि विशुद्धमतयोऽखिलाः । यजन्ति विष्णुमेवैकं ज्ञात्वा सर्वेश्वरेश्वरम् । प्रयान्ती'त्यादिपद्मपुराणवचनं] धर्मिज्ञानादेः प्रामाण्ये नास्ति विगानं अन्यज्ञानप्रामाण्ये त्वस्तीति विभागो युक्त इति भावः । **निरालम्बनेति** । निर्विषयमेव धर्मिज्ञानमिति निरालम्बनवादिमतविप्रतिपत्तेः प्रकृतविगानाभावोऽसिद्ध इति भावः ।

प० — **चतुर्थपक्षस्त्विति** । धर्मिज्ञानानुमानोपमानानुमानानुव्यवसायानां प्रामाण्यग्रहणं न परीक्षापेक्षमिति पक्ष इत्यर्थः । मूलारूढं योजयति **अनुमानादिज्ञानदृष्टिमात्रेणेति** ।। **अदृष्टत्वादिति** । अन्यथा चार्वाकादिभिः क्रियमाणः तत्प्रामाण्यनिरासोऽनुपपन्नः स्यादिति भावः ॥ **विभाग इति** । धर्मिज्ञानाद्यंशे परीक्षानपेक्षं प्रामाण्यग्रहणमन्यत्र तदपेक्षमिति विभाग इत्यर्थः ॥ **निरालम्बनादीति** । सर्वप्रत्ययानां निरालम्बनत्वस्य बौद्धादिभिरङ्गीकारादित्यर्थः । आदिपदेन चार्वाकादेरनुमानादिप्रामाण्ये विवाददर्शनादिति ग्राह्यम् । **प्रामाण्यज्ञप्तावपवादनिरासकतया परीक्षाया आवश्यकत्वोक्तिः** ॥

---

या० — **चतुर्थपक्षस्त्विति** । धर्मिज्ञानानुमानोपमानानुव्यवसायानां तु प्रामाण्यग्रहणं न परीक्षापेक्षमिति केषाञ्चित्पक्ष इत्यर्थः ॥ **निरालम्बनादीति** । इदं रजतमित्यादिभ्रमे प्रतीयमानस्य धर्मिणोऽप्यसत्त्वमिति बौद्धमतदर्शनाद्धर्मिज्ञानप्रामाण्ये विगानम् । आदिपदेनानुमानोपमानयोरप्रामाण्यमिति चार्वाकादिमतदर्शनादनुमानोपमानयोः प्रामाण्ये अप्रमापि प्रमेत्येव गृह्यत इति मतदर्शनादनुव्यवसायप्रामाण्येऽपि विगानमित्यर्थः ॥ **अलं पल्लवेनेति** । पल्लवप्रकारश्च जिज्ञासाधिकरणेऽस्माभिः प्रदर्शितस्तत्रैवानुसन्धेयः ।

श्री० — **विभाग इति** । धर्म्यादिज्ञानं प्रामाण्यं स्वतः, तदितरज्ञानप्रामाण्यं परतः, अतस्तत्रैव परीक्षापेक्षेति विभाग इत्यर्थः ॥ **निरालम्बनादिमतेति** । यत्र भ्रमे यावत्प्रतीयते तत्सर्वमप्यसदिति निरधिष्ठानभ्रान्तेः शून्यवादिभिरङ्गीकारादिति भावः ॥ **उपपत्तीति** । इदमित्थं न भवतीति बाधदर्शनान्निरधिष्ठानभ्रान्तेर्निरवधिकबाधस्य चादर्शनात्तन्मतं बाधितमित्यर्थः ॥ **अलं पल्लवेनेति** । यदुक्तं प्रामाण्यव्याप्यस्य गृहीतत्वात्प्रामाण्यमप्यनुमितौ स्वत एव गृहीतमिति । तत्र । व्याप्यत्वप्रकारकज्ञानस्यैव संशयविरोधित्वं न व्याप्यज्ञानमात्रस्य तथात्वे तैलं पृथिवी न वेति सन्देहो न

स्यात् । तैलत्वस्य वस्तुगत्या पृथिवीत्वव्याप्यत्वात् । तथा च धूमवति वह्निप्रकारकत्वादेर्वस्तुगत्या वह्निमति वह्निप्रकारकत्वरूपप्रामाण्यव्याप्यत्वेऽपि न व्याप्यत्वेन तज्ज्ञानमस्तीति न संशयविरोधित्वं तस्येत्यपि द्रष्टव्यम् ।

**सु० — एवं तर्हि प्रत्यक्षादिवत्साक्षिणोऽपि प्रामाण्यं परीक्षापेक्षग्रहणमेवाङ्गीक्रियताम् । द्विधा कल्पनस्यान्याय्यत्वादित्यत आह** नियमेनेति ।

अनु०— नियमेन सुखाद्येषु प्रामाण्यं साक्षिगोचरम् ॥

दृश्यत **इति वर्तते । साक्षी गोचरो यस्य तत्तथोक्तम् । गोचरत्वं चाश्रयतया विवक्षितम् । सुखादिविषये यत्साक्षिगतं प्रामाण्यं तन्नियमेन** दृश्यते **। एतदुक्तं भवति । यदि वृत्तिज्ञानानामिव साक्षिज्ञानस्यापि प्रामाण्यं तद्दर्शनमात्रेण न दृश्यते तदाऽधिकमपि कारणं कल्पयामः । न चैवम् । सुखज्ञाने दृष्टे तत्प्रामाण्याज्ञानसंशयविपर्ययाणां कदाऽप्यदर्शनात् । कल्पकसद्भावे द्विधा कल्पनस्यादूषणत्वादिति ।**

**शे०— एवं तर्हीति ।** प्रत्यक्षादीनां प्रामाण्यस्य परीक्षापेक्षसाक्षिग्राह्यत्वाङ्गीकार इत्यर्थः । समासप्राबल्यादत्र षष्ठीतत्पुरुषाश्रयणे साक्षिगतप्रामाण्यस्य नियमेन दृश्यताया वक्तव्यत्वात्साक्षिविषयस्य प्रामाण्यस्य दृश्यत्वोक्तिरनुपयुक्ता । आधेयतया प्रामाण्यस्य साक्षिविषयत्वविवक्षायां गोचरशब्दस्य नित्यपुंस्त्वेन गोचर इत्येव वक्तव्यतया गोचरमिति नपुंसकलिङ्गानुपपत्तिः । न च नित्यपुंस्त्वमेव तस्यासिद्धमिति वाच्यम् । गोचरसञ्चरेति गोचरशब्दस्य घान्ततया निपातितत्वात् । लिङ्गानुशासने पुमानित्यधिकारे घान्तश्चेति नित्यपुल्लिङ्गत्वविधानाद्वृत्तिकृद्भिर्गोचरो विषय इत्युदाहृतत्वात् । 'परिखावलयच्छलेन परेषां ग्रहणस्य गोचर' इति श्रीहर्षेण प्रयुक्तत्वाच्च तत्सिद्धेरित्यतस्त्रयी न श्रुतिगोचरेति गोचरशब्दस्य विशेष्यलिङ्गतयाऽऽर्षप्रयोगात्साक्षिगोचरमिति नपुसकोपपत्तिरिति सत्यपि टीकोक्तरीत्या समाधाने तत्रापि गोचर इत्येव मूलपाठादार्षप्रयोगे विप्रतिपन्नं प्रति तदनुसारेण क्लीबत्वसमर्थनानुपपत्तेः प्रकारान्तरेण समाधत्ते **साक्षी गोचरो यस्य तत्तथोक्तमिति ।** तथा चात्र बहुव्रीहिसमासाश्रयणात्तस्य च विशेष्यनिघ्नत्वाद्विशेष्यभूतप्रामाण्यलिङ्गापत्त्या नपुंसकोपपत्तिरित्याशयः । भवेदेतदेवं कथञ्चिद्यदि साक्षिणो गोचरता स्यान्न च साऽस्तीत्यत आश्रयतया गोचरतायाः साक्षिण्यपि सत्त्वान्नानुपपत्तिरित्याह **गोचरत्वं चेति ।** ननु वृत्तिज्ञानप्रामाण्यवत्सुखादिज्ञानप्रामाण्यस्यापि परीक्षापेक्षग्रहणत्वमेवास्तु कल्पकाभावेन द्विधा कल्पनस्यान्याय्यत्वात् । न च सुखादिज्ञानदृष्टिमात्रेण तत्प्रामाण्यनिश्चयदर्शनमेव तत्कल्पकमिति वाच्यम् । तदनङ्गीकारे बाधकाभावेनोक्तनियमासिद्ध्या तस्य कल्पकत्वा-

नुपपत्तेरित्यत आह **एतदुक्तं भवतीति** । यद्वा ननु वृत्तिज्ञानप्रामाण्यवत्सुखादिज्ञानप्रामाण्यस्य नियमेन दृश्यत्वमेवासिद्धम् । सिद्धौ वा न द्विधाकल्पनस्य दूषणत्वपरिहार इत्यत आह **एतदुक्तं भवतीति** । साक्षिज्ञानप्रामाण्यस्य तद्दर्शनमात्रेण दृश्यत्वानङ्गीकारे तत्र कदाचित्संशयाद्यन्यतमप्रसङ्ग इत्यभिप्रेत्य तस्यानिष्टतामुपपादयति **सुखज्ञान इति** ।

प० — साक्षिगोचरमित्यस्य साक्षिनिष्ठमित्यर्थलाभायाह **साक्षी गोचरो यस्येत्यादि** । द्विधा कल्पनमन्याय्यमित्यस्योत्तरमस्फुटत्वादाह **एतदुक्तमिति** ॥ **सुखज्ञाने दृष्ट इति** । स्वप्रकाशतया स्वेनैव विषयीकृत इत्यर्थः ।

**सु० — किञ्च साक्षिप्रामाण्यस्यापि परीक्षापेक्षग्रहणत्वेऽनवस्था च स्यात् । ननु प्रामाण्यग्रहणमभिलषता नानवस्थातो भेत्तुं युक्तम् । परीक्षाऽनवस्थाभावेऽपि ग्राहकानवस्थाया दुष्परिहरत्वादित्यत** आह स्वप्रामाण्यमिति ।

**अनु०** — स्वप्रामाण्यं सदा साक्षी पश्यत्येव सुनिश्चयात् ॥

**साक्ष्येवेति संबन्धः । सदा सुनिश्चयादिति । परीक्षानपेक्षमेवेति यावत् । एतच्चानुभवान्यथाऽनुपपत्तिभ्यां कल्प्यते ।**

**शे०** — ननु स्वप्रामाण्यं सदेत्युत्तरवाक्यमनर्थकम । न च साक्षिप्रामाण्यस्य स्वमात्रग्राह्यत्वप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रदर्शनस्याप्यानर्थक्यात् । न च तद्द्वारा ग्राहकान्तरानपेक्षत्ववर्णनेन ग्राहकानवस्थापरिहारार्थत्वान्न तदिति वाच्यम् । प्रसञ्जकाभावेन तच्छङ्काया एवानुत्थानात् । न च साक्षिप्रामाण्यस्य परीक्षापेक्षग्रहणत्वेऽनवस्थैव तत्प्रसञ्जिकेति वाच्यम् । तस्याः प्रागनुक्तत्वेन प्रसञ्जकत्वासंभवादित्यतस्तस्यात्र मुखतोऽनुक्तावपि हार्दत्वेन ग्राहकानवस्थाप्रसञ्जकत्वान्नानुपपत्तिरित्यभिप्रेत्य साक्षिप्रामाण्यस्य परीक्षापेक्षग्राहकत्वे स्वयमेव तामाह **किञ्चेति** ।

प० — **अनवस्था स्यादिति** । तस्याः परीक्षायाः प्रामाण्यग्रहणस्यापि परीक्षान्तरसापेक्षत्वेन परीक्षापरंपरानवस्था स्यादित्यर्थः ॥ **अनुभवान्यथानुपपत्तिभ्यामिति** । साक्षिसिद्धे त्वसंशयादित्यत्र प्रकृतिनये चानुभव उपपादितः । तेन, अनवस्थाभावान्यथानुपपत्त्या चेत्यर्थः ।

**सु० — नन्वेवं सति वृत्तिज्ञानानां परतःप्रामाण्यमुक्तं स्यात् । ज्ञानस्वरूपस्य साक्षिवेद्यत्वात् । प्रामाण्यस्य परीक्षागम्यत्वात् । तथा च न विलक्षणत्वादिति यत्स्वतः प्रामाण्यमिष्टं तत्त्यक्तं स्यादित्यत** आह ज्ञानस्येति ।

**अनु०** — ज्ञानस्य ग्राहकेणैव साक्षिणा मानतामितेः ॥

**ज्ञानस्य ग्राहकेण साक्षिणैव ज्ञानस्य मानताया मितेः कारणात्स्वतःप्रामाण्यमिष्यत एवेति संबन्धः । भवेत्स्वतःप्रामाण्यत्यागो यदि ज्ञानमेव साक्षिवेद्यं न प्रामाण्यमिति ब्रूमः । न चैवम् । ज्ञानवत्तत्प्रामाण्यस्यापि साक्षिवेद्यत्वाभ्युपगमादिति ॥ किमर्थं तर्हि परीक्षावश्यम्भावोऽभ्युपगम्यत इत्यत** आह दोषेति ।

दोषाभावे प्रमाणत्वं

**साक्षिणा निश्चितत्वमिति वक्ष्यमाणमिहापि योज्यम् । इति प्रामाण्यस्येति पदद्वयमध्याहार्यम् । ज्ञानं गृह्णन्साक्षी करणदोषाभावेऽस्य प्रामाण्यमित्येव प्रामाण्यं निश्चिनोति । न तु प्रमाणमेवेदमिति ॥ ततः किमित्यत** आह दोषाभावस्येति ।

दोषाभावस्य साक्षिणा ॥

निश्चितत्वं क्वचिच्चैव स्वतः प्रामाण्यमिष्यते ॥

**परीक्षयेति शेषः । चोऽवधारणे । क्वचिदेव प्रयोजनवशाज्जिज्ञासायां जातायां परीक्षालाभे चेत्यर्थः । दोषाभावनिश्चयार्था परीक्षा न तु प्रामाण्यग्रहणार्था । तत्पुनर्ज्ञानमिव साक्षिवेद्यमेव । अतो न स्वतःप्रामाण्यपरित्याग इति भावः ।**

**शे०**— ननु साक्षिप्रामाण्यस्य स्वग्राह्यतायाः पूर्ववाक्येनैवोक्तत्वात्तत्प्रतिपादकोत्तरवाक्यवैयर्थ्यम् । न च नेदं साक्षिप्रामाण्यस्य स्वग्राह्यत्वप्रतिपादनपरम् । किन्तु वृत्तिज्ञानप्रामाण्यस्य साक्षिग्राह्यत्वप्रतिपादनपरम् । तत्कथं पौनरुक्त्यमिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च स्वतःप्रामाण्यग्रहसमर्थनार्थत्वान्न तदिति वाच्यम् । साक्षिप्रामाण्यस्येव वृत्तिज्ञानप्रामाण्यस्यापि स्वतस्त्वेऽनुपपत्त्यदर्शनेन तत्समर्थनस्य व्यर्थत्वात् । असमर्थनेऽप्यनिष्टाभावाच्चेत्यतः साक्षिप्रामाण्यस्य परीक्षानपेक्षसाक्षिग्राह्यत्वेन तस्य स्वतस्त्वसंभवेऽपि वृत्तिज्ञानप्रामाण्यस्य तत्सापेक्षसाक्षिग्राह्यत्वेन ज्ञानग्राहकमात्रग्राह्यत्वाभावेन तत्र स्वतस्त्वानुपपत्तिशङ्कोदयान्न तत्समर्थनपरोत्तरवाक्यस्य वैयर्थ्यमित्यभिप्रेत्य तत्समर्थनपरतयोत्तरभाष्यं योजयितुं वृत्तिज्ञानप्रामाण्यस्य तदनुपपत्तिशङ्कामुत्थापयति **नन्वेवं सतीति ।** साकाङ्क्षत्वप्रयुक्तवाक्याभासत्वपरिहारायैव स्वतःप्रामाण्यमिष्यत इति वक्ष्यमाणैकवाक्यतां ज्ञानस्येत्यस्यावृत्तिमेवकारस्य भिन्नक्रमतां चाश्रित्य वाक्यं योजयति **ज्ञानस्येति ।** तर्ह्येतावतैव स्वतःप्रामाण्यत्यागसमर्थनाद्दोषाभावे प्रमाणत्वमित्युत्तरग्रन्थवैयर्थ्यमित्यतः प्रागुक्तायाः प्रामाण्यग्रहणे परीक्षापेक्षायाः साक्षिणा स्वाभिमतप्रामाण्यग्रहणप्रकारप्रदर्शनद्वारा तदुपयोगित्वसूचनेन प्रामाण्यस्य साक्षिणा निश्चितत्वोक्त्यर्थत्वान्न तदिति भावेन तत्प्रकारोपदर्शकतया तद्वाक्यं योजयितुं तद्वैयर्थ्यशङ्कामुत्थापयति **किमर्थमिति ।** उक्ताभिप्रायस्य मूलारूढत्वसिद्ध्यर्थमपेक्षितमंशमनुवृत्त्याऽध्याहारेण सूचयति **साक्षि-**

**णेति** । श्रुतानुवर्तिताध्याहृतैकदेशपरिनिष्पन्नविशिष्टवाक्यार्थमाह **ज्ञानं गृह्णन्निति** ॥ **न त्विति** । येन परीक्षानपेक्षत्वं प्रामाण्यग्रहणस्य स्यादिति भावः ॥ **ततः किमितीति** । उक्तरीत्या प्रामाण्यग्रहणेऽपि कथं परीक्षाया उपयोगसिद्धिरित्यर्थः । दोषाभावस्य साक्षिणा निश्चिततया एवोक्तेर्नानेन परीक्षोपयोगसमर्थनमित्यतोऽपेक्षितं पूरयति **परीक्षयेति शेष इति** । सजातीयविजातीयसंवादविसंवादभावाभावलक्षणेत्यर्थः ।

**प० — मितेरिति** । ज्ञानात् कारणादित्यर्थः । शङ्कानिरासप्रकारं व्यनक्ति **भवेत्स्वत इत्यादिना** ।

**श्री० — इहापि योज्यमिति** । दोषाभावे प्रमाणत्वमित्येव तत्प्रामाण्यस्य साक्षिणा निश्चितत्वं भवतीत्यपि योज्यम् । योजनामेव तात्पर्यतो दर्शयति **ज्ञानं गृह्णन्निति** ॥ **तत्पुनरिति** । **तत्** प्रामाण्यमित्यर्थः ॥

**सु० — स्यादेतद्यदीयं प्रक्रिया प्रमाणवती स्यान्न च तदस्तीत्यत आह** अत इति ।

**अनु० —** अतो न सर्वमानानां प्रामाण्यं निश्चितं भवेत् ॥
साक्षिणा निश्चितं यत्र तत्प्रामाण्यं स्वलक्षणम् ॥

**अत एव हि सर्वेषां ज्ञानानां प्रामाण्यं प्रथमतो न निश्चितं भवेत् । किन्नाम यत्र यदा परीक्षासहकृतेन साक्षिणा प्रामाण्यं निश्चितं भवति तत्तदेव प्रामाण्यं स्वलक्षणं प्रामाण्यस्वरूपमप्रामाण्यविविक्तं प्रामाण्यं सिध्यति । इदमुक्तं भवति । यदि साक्षी दोषाभावे प्रमाणमेतदिति प्रथमं सम्मुग्धं प्रामाण्यं गृहीत्वा पश्चाज्जिज्ञासायां सत्यां परीक्षया प्रमाणमेवेत्यवधारयतीत्येषा प्रक्रिया नाङ्गीक्रियेत तदाऽनभ्यस्तविषयाणां शब्दादिना जातानां सर्वेषामपि ज्ञानानां प्रथममेव प्रामाण्यमवधार्येत । न चैतदस्ति । तेन जानीमोऽस्तीयं प्रक्रियेति ।**

**शे० —** अत इत्युत्तरग्रन्थानर्थक्यमाशङ्क्योक्तप्रक्रियाया अन्यथाऽनुपपत्तिरूपप्रमाणसिद्धार्थत्वकथनार्थत्वान्न तदिति तत्परतयोत्तरग्रन्थं योजयितुमुक्तप्रक्रियाया अप्रामाणिकत्वशङ्कामुत्थापयति **स्यादेतदिति** ॥ **इयं प्रक्रियेति** । प्रथमतः सम्मुग्धतया प्रामाण्यग्रहणमेवेत्यादिकेत्यर्थः । किमनेनोक्तप्रक्रियायां प्रमाणमुक्तं भवतीत्यत आह **इदमुक्तं भवतीति** ।

**प० —** ननु साक्षी ज्ञानं गृहीत्वा तत्प्रामाण्यं चेन्न गृह्णाति तर्हि स्वतस्त्वभङ्ग एव प्राप्त इत्यत आह **इदमुक्तं भवतीति** ॥ **संमुग्धमिति** । अप्रामाण्यविवेकेन प्रामाण्यं न गृह्णातीति संमुग्धं प्रामाण्यं गृहीत्वेत्युक्तम् । तदित्यस्य प्रतिपदं तस्मादिति । तस्यार्थः तद्विरोधादिति ।

**या०— प्रथमं सम्मुग्धमिति ।** सन्दिग्धमित्यर्थः । इदं च प्रामाण्यविशेषणम् । न क्रियाविशेषणम् । साक्षिणो निश्चयरूपत्वात् । तथा चायमर्थः । यदा दोषशङ्काप्रतिबद्धः साक्षी तदा दोषशङ्कया मानसे प्रामाण्यसंशये जाते तं गृह्णन्साक्षी तद्विषयीभूतं प्रामाण्यमपि गृह्णाति न पुनः स्वातन्त्र्येण तत्सत्तामवधारयतीति ।

**सु०— उक्तमर्थं बुद्ध्यारोहाय सङ्क्षिप्याह** न हीति ।

**अनु०—** न हि कश्चित्सुखाद्येषु संशयं कुरुते जनः ॥
न चैवाखिलमानानि निश्चिनोत्यखिलो जनः ॥
तस्मादनुभवारूढं किमर्थमपलप्यते ॥

**यस्मात्सुखाद्येषु कश्चित्संशयं न करोति यस्माच्चाखिलानि वृत्तिज्ञानानि दर्शन एव प्रमाणतयाऽखिलो जनो न निश्चिनोति तस्मात्साक्षिप्रामाण्यं परीक्षानपेक्षेण साक्षिणैव गृह्यते । वृत्तिज्ञानानां तु तत्सापेक्षेणेत्यनुभवारूढं प्रमेयं किमर्थमपलप्यते । निर्निमित्तमपलपितुं न शक्यत इति ।**

**शे०—** नियमेन सुखाद्येष्वित्यादिनोक्तस्यैवोत्तरत्र प्रतिपादनात्पौनरुक्त्यमित्याशङ्क्य परिहरति **उक्तमर्थमिति ।**

---

**श्री०— परीक्षानपेक्षेणैवेति ।** सुखादिविषय इत्यर्थः ।

**सु०— 'न परीक्षाऽनवस्था स्यादि'त्युक्तमुपसंहरति** दोषाभावादिकं चेति ।

**अनु०—** दोषाभावादिकं चैव साक्षी सम्यक् प्रपश्यति ।

**साक्ष्येवेति संबन्धः । स्वस्य परीक्षायाश्च दोषाभावं प्रामाण्यं च परीक्षानिरपेक्षः साक्ष्येव सम्यक् प्रपश्यति । तस्मान्न काऽप्यनवस्थेति ।**

**शे०— न काऽपीति ।** ग्राहकानवस्था परीक्षानवस्था वेत्येवं काऽपीत्यर्थः ।

**सु०— 'अपरीक्षितमेवे'त्यादिनोक्तमुपसंहरति** तदिति ।

**अनु०—** तत्परीक्षितमानेन न दोषो विष्णवि क्वचित् ॥

**तत्तस्मात्परीक्षितमेव मानम् । तेन च भगवति क्वचिदपि दोषो नास्तीति सिद्धम् । तद्विरोधादपरीक्षितं दोषदर्शनमप्रमाणमेवेत्यर्थः ।**

शे०— तदित्युत्तरग्रन्थस्य परीक्षितमेवेत्यादिनोक्तार्थोपसंहारतासिद्ध्यर्थमनेकोद्देश्यविधेयभावाश्रयणेन तद्योजयति **तत्तस्मादिति** ।

प०— शेषोक्त्यार्थमाह **अपरीक्षितमित्यादि** । मूले विष्णवीत्युक्तेः समाधानमुक्तमानुमानिकनये ।

**सु०— एवमपरीक्षितं दोषदर्शनं परीक्षितेन निर्दोषतादर्शनेन बाधितं न भगवतो दोषित्वं साधयितुं शक्तमित्युक्तम् । इदानीं तादृशस्यापि साधकत्वेऽतिप्रसङ्गं सूचयति** अपरीक्षितेति ।

**अनु०**— अपरीक्षितदृष्टिस्तु कस्मिन्नर्थे न विद्यते ॥

**शुक्त्यादीनां रजतत्वादावपि विद्यत एव । ततश्च तथा तदपि सिद्ध्येदविशेषादिति भावः** ।

शे०— प्रसङ्गाङ्गव्याप्तेरभावात्प्रशिथिलमूलतामाशङ्क्याह **अविशेषादिति** ।

**सु०— तदेवं दोषदर्शनं परीक्षितप्रत्यक्षविरोधादप्रमाणमित्यभिहितम् । निरनिष्टो निरवद्य इत्याद्यागमविरोधाच्च । स्यादेतत् । प्राक् तत्त्वमस्याद्यागमस्य प्रत्यक्षविरुद्धत्वात्प्रतीतार्थे न प्रामाण्यमित्युक्तम् । तत्कथं तद्विपरीतं प्रत्यक्षस्यागमविरोधेनाप्रामाण्यमिदानीमुच्यत इत्याशङ्कां परिहर्तुमाह** तदिति ।

**अनु०**— तत्प्रत्यक्षविरुद्धार्थे नागमस्यापि मानता ॥
उपजीव्यमक्षजं यत्र तदन्यत्र विपर्ययः ॥

यत्र **यदाऽक्षजमागमस्योपजीव्यं** तत् तदा **प्रत्यक्षविरुद्धार्थे जात्या प्रबलस्याप्यागमस्य मानता नास्ति । तस्मादु(क्तादु)पजीव्योपजीवकभावादन्यत्र विपरीतोपजीव्योपजीवकभावे बाध्यबाधकभावस्यापि विपर्ययः । यदाऽऽगमः प्रत्यक्षस्योपजीव्यस्तदाऽऽगमविरुद्धार्थे प्रत्यक्षस्य न मानतेत्यर्थः** ।

शे०— ननु तदित्याद्युत्तरवाक्यमनर्थकम् । न च यत्र प्रत्यक्षस्यागमं प्रत्युपजीव्यत्वं तत्र प्रत्यक्षमागमस्य बाधकम् । यत्रागमस्य प्रत्यक्षं प्रत्युपजीव्यत्वं तत्रागमः प्रत्यक्षस्य बाधक इति व्यवस्थाकथनार्थमेतदिति वाच्यम् । उक्तव्यवस्थाकथनस्याप्यनर्थकत्वात् । न च विष्णोर्दोषवत्त्वतदभावप्रमाणयोर्बाध्यबाधकभावसमर्थनार्थत्वान्न तद्वैयर्थ्यमिति वाच्यम् । अपरीक्षितत्वपरीक्षितत्वाभ्यामेव तत्प्रमाण-

योर्बाध्यबाधकभावस्य समर्थितत्वेनोक्तव्यवस्थाकथनस्य तादर्थ्यायोगात् । न चापरीक्षितत्वपरीक्षितत्वाभ्यां दोषवत्त्वतदभावग्राहकयोः प्रत्यक्षयोर्बाध्यबाधकभावनिर्वाहेऽपि तद्ग्राहकयोः प्रत्यक्षागमयोस्तदनिर्वाहात्तन्निर्वाहार्थमुक्तव्यवस्थाकथनं स्यादिति वाच्यम् । निर्दोषत्वप्रतिपादकागमस्य दोषवत्त्वग्राहकप्रत्यक्षबाधकताया एवात्रानुक्तत्वेन तन्निर्वाहार्थत्वस्य वस्तुमशक्यत्वात् । आगमस्य प्रत्यक्षं प्रत्युपजीव्यत्वोक्तिमात्रेणैतन्निर्वाहस्यापि संभवेन व्यवस्थाकथनस्य तादर्थ्यायोगाच्चेत्यतो दोषग्राहकप्रत्यक्षस्य तन्निर्दोषत्वग्राहकप्रत्यक्षविरोधेनेव तन्निर्दोषत्वप्रतिपादकागमविरोधेनाप्यप्रामाण्यमित्यर्थस्यात्राभिप्रेतत्वेन तदुपपादकतया नागमस्योपजीव्यतया बाधकत्ववर्णनानर्थक्यं पूर्वोत्तरविरोधपरिहारार्थत्वाच्च नोक्तव्यवस्थाकथनस्यापि तदित्याशयवानुक्तव्यवस्थाकथनपरतयोत्तरग्रन्थं योजयितुं परीक्षितनिर्दोषत्वप्रत्यक्षविरुद्धतया दोषवत्त्वग्राहकप्रत्यक्षस्य प्रागुपपादिताप्रामाण्योपसंहारपूर्वकं निर्दोषत्वप्रतिपादकागमविरोधेन तदप्रामाण्यं बहिरेव प्रतिज्ञाय व्यवस्थाकथननिवर्त्यपूर्वोत्तरविरोधशङ्कामुत्थाप्य तत्परिहारकतयोत्तरग्रन्थं सङ्गमयति **तदेवमित्यादिना** ॥ **प्रागिति** । न ब्रह्मतां वदेद्वेद इत्यादिनेति शेषः ॥ **जात्या प्रबलस्यापीति** । यद्यपि लौकिकार्थे प्रत्यक्षस्यैव जात्या प्राबल्यं नागमस्यात एव प्रत्यक्षेणैव तत्त्वमस्याद्यागमस्य विषयापहारवर्णनं प्राक् कृतम् । तथाप्यलौकिकार्थे जात्या तत्प्राबल्याभिप्रायेणायं ग्रन्थः प्रवृत्त इत्यवधेयम् । विपर्ययमेवोपदर्शयति **यदेति** ।

प० — **प्राक् तत्वमस्यादीति** । पृथगधिकरणे । 'अनुभूतिविरोधेन कथमेकत्वमुच्यते' इत्यादिग्रन्थेनोक्तमित्यर्थः । तदन्यत्र विपर्यय इत्यस्यार्थः जात्या प्रबलस्यापीति । 'प्राबल्यमागमस्यैव जात्या तेषु त्रिष्वि'त्युक्तेः । अलौकिकेऽर्थे जात्या प्रबलस्यापीत्यपेरर्थः ।

**या० — जात्या प्रबलस्यापीति** । इदं चालौकिकार्थाभिप्रायेण । लौकिके त्वर्थे प्रत्यक्षमेव जात्या प्रबलमिति ज्ञातव्यम् । आगमस्योपजीव्यतयेत्यत्र जात्या चेत्यपि ग्राह्यम् । अतो गर्भस्रावेणेत्युपपन्नम् ।

सु० — **ततः किमित्यत** आह लौकिक इति ।

अनु० — लौकिके व्यवहारेऽत्र प्रत्यक्षस्योपजीव्यता ॥
अवतारादिदृष्टौ स्यादागमस्योपजीव्यता ॥

**लौकिके प्रत्यक्षसिद्धजीवादिविषये ब्रह्मात्मकत्वादिबोधनरूपे व्यवहारे तत्त्वमस्याद्यागमेन क्रियमाणे** अत्र **आगमे आगमं प्रति प्रत्यक्षस्योपजीव्यता । अवताराणां विश्वादीनां च दोषदृष्टौ प्रत्यक्षादिकं प्रत्यागमस्योपजीव्यता स्यात् । एतदुक्तं भवति । प्राक् प्रत्यक्षविरोधेनागमस्याप्रामाण्यमभिधायेदानीमागमविरोधेन प्रत्यक्षस्याप्रामाण्याभिधानं न विरुद्धम् । न हि**

निर्विशेषणयोः प्रत्यक्षागमयोः परस्परं बाध्यबाधकभावोऽभिहितः । किन्तूपजीवकत्वेन बाध्यत्वमुपजीव्यत्वेन बाधकत्वम् । तच्च तत्रान्यथाऽत्रान्यथेति कथं विरोध इति । अनेन दोषविषयप्रत्यक्षविरोधादागमस्यैवाप्रामाण्यं किन्न स्यादिति चोद्यं गर्भस्रावेणैव गतम् । आगमस्योपजीव्यतया प्रत्यक्षतः प्राबल्यस्योक्तत्वात् ।

शे० — तावताऽपि कथं विरोधपरिहार इत्यत आह **एतदुक्तं भवतीति** ।

प० — तस्मादुक्तादित्यादिपूर्वोत्तरविरोधचोद्यस्योत्तरं स्फुटीकरोति **एतदुक्तं भवतीति** ।

सु० — **कथं प्रत्यक्षं प्रत्यागमस्योपजीव्यत्वमित्यत आह** आगमेनेति ।

अनु० — आगमेन हि विष्णुत्वं ज्ञात्वा दोषोऽत्र कल्प्यते ॥

अत्र **विष्णौ** । **वस्तुतः कल्पनैवैषा न प्रमितिरितिभावेन कल्प्यत इत्युक्तम् । भवेदागमस्योपजीव्यत्वं यदि विष्णुत्वं ज्ञातव्यं भवेत् । तदेव न ज्ञातव्यमित्यत आह** न चेदिति ।

न चेत्स्याद्दोषवानन्यः ॥

**यदि विष्णुत्वं रामकृष्णादौ न ज्ञातं तदा दोषग्राहिणा प्रत्यक्षेण विष्णोरन्यो दोषवानिति गृहीतं स्यात् । न तु विष्णुर्दोषवानिति । न हि देवदत्ते देवदत्तत्वाज्ञाने देवदत्तोऽयमागत इत्याकारं ज्ञानमुत्पत्तुमर्हतीति । तथाऽपि नागमस्योपजीव्यत्वम् । यतः श्रीवत्सकौस्तुभादिलक्षणेन विष्णुत्वमनुमाय विष्णुर्दोषवानिति प्रत्यक्षेण ज्ञास्यत इत्यत आह** शास्त्रेति ।

शास्त्रसिद्धं हि लक्षणम् ॥

**श्रीवत्सादिकं लक्षणं विष्णुत्वेन** व्याप्तमित्येतच्छास्त्रेणैव **सिद्धम्** । **यद्यप्यस्मिन्पक्षे साक्षादागमो नोपजीव्यः । तथाऽप्यनुमानमूलव्याप्तिग्रहणाय तदुपजीवनमपरिहार्यमेवेति भावः । ननु** विष्णुत्वाज्ञाने **विष्णोरन्यो दोषवानिति ज्ञानेन कुतो भाव्यम् । विष्णुत्ववत्तदन्यत्वस्याप्यज्ञातत्वादिति चेत्** । **एवं तर्ह्यज्ञानं प्रसज्यत इत्याह** कस्यचिदिति ।

कस्यचिद्दोषवत्त्वं स्यादितिमात्रेऽक्षजं भवेत् ॥

इतिमात्रे **एतावत्येव विषये** । **विष्णुर्दोषवानिति ज्ञान(स्य)ानुत्पादप्रसङ्ग एव तात्पर्यमिति भावः । ननु यथा पटोऽयं छिन्नो दग्धो मलिन इति परानुपजीविना प्रत्यक्षेणैव गृह्यते । तथाऽऽगमादिकमनुपजीव्य प्रत्यक्षेणैव विष्णुर्दोषवानिति ज्ञास्यत इत्यत आह** नेति ।

न विष्णोर्दोषवत्त्वे हि प्रत्यक्षं वर्तते स्वतः ॥

स्वतः **परानुपजीवनेन । अयमभिसन्धिः । पटत्वमवयवसन्निवेशव्यङ्ग्यं प्रत्यक्षमेवेति युज्यते तथा ज्ञानम् । विष्णुत्वं तु समस्तगुणपरिपूर्णत्वनिर्दोषत्वजगज्जन्मादिकारणत्वलक्षणं न प्रत्यक्षम् । अतो न तथाविधं ज्ञानमुपपद्यते । यथा पञ्चपलपरिमितोऽयं पटो मलिन इति ज्ञानमिति ।**

प॰— अत्रेत्यनुवादः । विष्णाविति व्याख्या ॥ **इत्येतच्छास्त्रेणैव सिद्धमिति ।** 'श्रीवत्स-लक्ष्मकलशोभिकौस्तुभमि'त्यादि 'वासुदेवो ह्ययमिति पुमान् श्रीवत्सलाञ्छनः । चतुर्भुजोऽरविन्दाक्षो वनमाल्यतिसुन्दरः । लक्षणैर्नारदप्रोक्तैर्नान्यो भवितुमर्हती'ति । तथा 'वसत्युरसि मे भूतिर्भवत्पादहतांहसः । श्रीवत्समिति नामापि जायतां पदलक्षणमि'ति च दशमस्कन्धादिवाक्यरूपशास्त्रेणैवेत्यर्थः ॥ **यथा पञ्चपलेत्यादि ।** इतिप्रत्यक्षज्ञानं यथा नोपपद्यते पलस्यातीन्द्रियत्वात्तथेत्यर्थः ।

सु॰— **अयं समुदायार्थः । रामकृष्णादिदोषग्राहिणा प्रत्यक्षेण त्रेधोत्पत्तव्यम् । विष्णुरयं दोषवानिति वा विष्णोरन्योऽयं दोषवानिति वा कश्चिदयं दोषवानिति वा । प्रकारान्तराभावात् । तत्र द्वितीयतृतीययोर्न विष्णोर्दोषवत्त्वे तदुद्भावयितुं (शक्यते) शक्यम् । विष्णुर्दोषवानिति तेनानवगाहनात् । वस्तुवृत्त्याऽसौ विष्णुरेवेति चेत । किं ततः । न हि वस्तुवृत्तिसहितं यत्किञ्चिज्ज्ञानं विवक्षितविशे(षणं सा)षं साधयति । अतिप्रसङ्गात् । आद्ये विष्णुत्वं सर्वथा ज्ञातव्यम् । न चैतत्प्रत्यक्षवेद्यं नाप्यनुमेयमित्युक्तं शास्त्रयोनिसूत्रे । तस्मा-'द्देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासी'दित्यागमेन वाऽऽगमावगतव्याप्तिकानुमानेन वाऽवगन्तव्यम् । ततः सर्वथा प्रत्यक्षस्यागमोपजीव्यत्वमङ्गीकार्यम् । सर्वोऽप्यागमस्तावदेकमेव वाक्यम् । स च सर्वरूपोपेतस्य विष्णोर्निर्दोषत्वं प्रतिपादयतीति तद्विरोधादप्रमाणमेव दोषविषयं प्रत्यक्षमिति ।**

शे॰— आगमेन हीत्यादिग्रन्थसमुदायार्थमाह **अयं समुदायार्थ इति ॥ वस्तुवृत्त्येति ।** दोषवानयमिति ज्ञानविषयस्य वस्तुगत्या विष्णुत्वात्तेन विष्णोर्दोषवत्त्वसिद्धिः स्यादेवेत्यर्थः ॥ **अतिप्रसङ्गादिति ।** तथा सति प्रमेयमिदं शुक्लरूपवदिति ज्ञानविषयस्यापि वस्तुवृत्त्या घटत्वेन तेनैव घटस्य शुक्लरूपवत्त्वसिद्ध्यापत्त्या शुक्लघटार्थिनोऽपि तादृशज्ञानात्प्रवृत्तिः स्यादित्यतिप्रसङ्गादित्यर्थः ॥ **सर्वथेति ।** साक्षात्परम्परासाधारण्येनेत्यर्थः । ननु देवक्यां देवरूपिण्यामित्यादिरागमः कृष्णस्य विष्णुतामेव बोधयति न तु तन्निर्दोषताम् । यश्च निरनिष्टो निरवद्य इत्यादिनिर्दोषत्वप्रतिपादक आगमो न स विष्णुत्वबोधक इति नोपजीव्यः । तत्कथमुपजीव्यागमविरोधो विष्णुर्दोषवानिति

प्रत्यक्षस्य स्यादित्यतश्चक्षुरादेः शब्दतज्जन्यज्ञानप्रामाण्याद्यग्राहित्वेऽपि तद्ग्राहिश्रोत्रसाक्ष्यादिसजातीयत्वादुपजीव्यतया प्राबल्यवन्नरशिरःकपालाशुचित्वागमस्य तच्छुचित्वानुमानादुपजीव्यशुचित्वग्राहिशब्दसाजात्यमात्रेणैवोपजीव्यतया प्राबल्यवन्निरनिष्टो निरवद्य इति निर्दोषत्वागमस्य विष्णुत्वावगमकशब्दसजातीयत्वमात्रेणैवोपजीव्यतया प्राबल्यात्तद्बाधो दोषप्रत्यक्षस्य दुष्परिहर एवेति सत्येव समाधाने वस्तुस्थितिमनुरुध्य समाधानान्तरमेवाह **सर्वोऽप्यागम इति** । भेदे प्रमाणाभावादिति भावः । ननु निर्दोषत्वबोधकागमस्य भगवन्मूलरूपविषयकस्य रामकृष्णाद्यवतारदोषग्राहकप्रत्यक्षेण भिन्नविषयत्वेनाविरोधित्वान्न तद्बाधकत्वमित्यत आह **स चेति** ।

स०—**न हि वस्तुवृत्तिसहितमिति** । तथा सति प्रमेयमिदं शुक्लरूपवदिति ज्ञानविषयस्यापि वस्तुवृत्त्या घटत्वेन तेनैव घटस्य शुक्लरूपवत्त्वसिद्धेः शुक्लघटार्थिनः तादृशज्ञानात्प्रवृत्त्यापत्तिरित्यतिप्रसङ्गादित्यर्थः ।

प०— बुद्ध्यारोहायागमेनेत्यादेरर्थं निष्कृष्याह **अयं समुदायार्थ इति** । **अतिप्रसङ्गादिति** । वस्तुगत्या धूमादौ धूमत्वादिकमजानतोऽपि इदं वह्निव्याप्यमिति ज्ञानादपि धूमत्वेनाग्निव्याप्यत्वसिद्धिप्रसङ्गात् । (प्रमेयत्वशब्दत्वादिना ज्ञातादपि घटमानयेति शब्दादर्थविशेषबोधप्रसङ्गादित्यर्थः) ॥ **इत्याद्यागमेनेति** । दशमस्कन्धादिवाक्येनेत्यर्थः ॥ **आगमावगतेति** । प्रागस्मदुक्तागमावगतेत्यर्थः ननु वस्त्वेवं निर्दोषत्वादिलक्षणविष्णुत्वबोधकोदाहृतवाक्यविशेषस्योपजीव्यस्य विरोधात्कृष्णादौ दोषित्वग्राहिप्रत्यक्षस्याप्रामाण्यं । विष्णोर्दोषत्वोक्तिपरवाक्यविशे(षवशा)षात् 'जनितोत विष्णोरि'त्येवमादिरू(पदो)पाद्दोषित्वमप्यस्तु । तथा च रूपविशेषदोषित्वप्रत्यक्षस्योपजीव्या विरोधाद्दोषित्वप्रत्यक्षत्वं प्रमाणमस्त्वित्यत आह **सर्वोप्यागम इति** । गतिसामान्यादित्युक्तन्यायादिति भावः । यद्वा विष्णोः क्वचिन्निर्दोषत्वोक्तावपि वाक्यान्तरे दोषित्वोक्तिरप्यस्ति चेत्कथं निर्णयः । मूलरूपस्य निर्दोषत्वसिद्धावपि कृष्णो निर्दोषीत्येवंरूपवाक्याभावेन दोषित्वप्रत्यक्षबलादस्त्ववताररूपस्य दोषितेत्यत आह **सर्वोपीति** ।

या०— ननु देवक्यां देवरूपिण्यामित्यागमः कृष्णस्य विष्णुतामेव बोधयति न निर्दोषत्वम् । यच्च निरनिष्टो निरवद्य इत्यादिकं निर्दोषताबोधकं न तदुपजीव्यमतः कथमुपजीव्यागमविरोध इत्यत आह **सर्वोऽप्यागम इति** । नन्वागमो मूलरूपस्यैव निर्दोषतां प्रतिपादयति दोषप्रत्यक्षं तु विष्णाववतारविषयमतो भिन्नरूपविषयत्वात्कथं तयोर्बाध्यबाधकभाव इत्यत आह **स च सर्वरूपोपेतस्येति** ।

श्री०— **वस्तुवृत्तिसहितं यत्किञ्चिज्ज्ञानमिति** । यत्किञ्चित्पदार्थसाधारण्येन ज्ञानमित्यर्थः ॥ **अतिप्रसङ्गादिति** । अज्ञातधूमस्यापि नारिकेलद्वीपवासिनो यत्किञ्चित्पदार्थसाधारण्येन धूमदर्शनेऽप्य-ग्न्यनुमितिः स्यात् । वस्तुगत्या तस्य धूमत्वाज्ज्ञातत्वाच्चेत्यतिप्रसङ्गादित्यर्थः ॥ **उपजीव्यत्वम्** । उपजीवकत्वम् ।

सु०— **इतश्च तदप्रमाणमिति दर्शयितुमाह** केचिदिति ।

अनु०— केचित्पश्यन्ति दोषानित्यत्रापि स्यान्न चाक्षजम् ॥

**न केवलं दोषेष्वित्यपिशब्दः । च शब्दोऽनुमानादिसमुच्चयार्थः** ।

शे०— समुच्चेयाभावेन समुच्चयार्थत्वानुपपत्तेस्तदर्थकापिशब्दवैयर्थ्यमित्याशङ्क्य समुच्चेयप्रदर्शनेन परिहरति **न केवलमिति** । अनेन न केवलं दोषेष्वक्षजं नास्तीत्येव किन्तु दोषान्केचन पश्यन्तीत्य-त्राप्यर्थे नाक्षजमस्तीति योजनोक्ता भवति । नाक्षजमित्येतावतैव पूर्तेर्न चाक्षजमिति यथाश्रुतचशब्द-वैयर्थ्यम् । उक्तार्थेऽक्षजाभावोक्त्या तस्याप्रत्यक्षत्वप्राप्तावप्यानुमानिकत्वादिसंभवादप्रामाणिकत्वासिद्धे-र्मूलेऽप्रत्यक्षत्ववर्णनानर्थक्यं चेत्याशङ्क्य चशब्दस्य यथाश्रुतसंबन्धानङ्गीकारान्न वैयर्थ्यम् । अक्षजं च नास्तीति संबन्धाश्रयेणाप्रामाणिकत्वलाभसंभवान्नाप्रत्यक्षत्ववर्णनानर्थक्यमित्यभिप्रेत्य चशब्दार्थमाह **चशब्देति** । अनेन न केवलमुक्तप्रत्यक्षेऽनुमानादिकं नास्तीत्येव किन्त्वक्षजं च नास्तीति चशब्द-योजनोक्ता भवति ।

सु०— **प्रत्यक्षं भगवद्रूपाणां दोषित्वे प्रमाणमिति वदन्प्रष्टव्यः । केचित्तत्काल-वर्तिनः पुरुषा भगवद्रूपेषु दोषान्पश्यन्तीत्यत्रार्थेऽस्माकं किं प्रमाणम् । प्रत्यक्षमनुमानमागमो वेति । न तावत्प्रत्यक्षम् । परपुरुषवर्तिनि प्रत्यक्षे परेषां प्रत्यक्षायोगात् । दूरे कालभेदे । नाप्यनुमानं लिङ्गाभावात् । आगमोऽपि वेदः पुराणादिर्वा । नाद्यः । तस्यादर्शनात् । तस्माद्द्वितीय एवाङ्गीकार्य इत्याह पौराणमिति** ।

अनु०— पौराणं वाक्यमेवात्र

**अत्र भगवद्रूपदोषग्राहिप्रत्यक्षसद्भावे । वक्तव्यमिति शेषः** ।

शे०— ननु च स्ववृत्तिदोषप्रत्यक्षस्य स्वं प्रति प्रत्यक्षत्वेन तत एव तत्सिद्धेर्न चाक्षजमिति कथं तन्निराकरणं सङ्गच्छते इत्यतो न स्वं प्रति तस्याप्रत्यक्षत्वं ब्रूमः । येनानुपपत्तिः स्यात्किन्त्वन्या-न्प्रत्येव । न च तान्प्रति तस्य प्रत्यक्षत्वमस्तीत्यतो नानुपपत्तिरित्यभिप्रेत्याह **केचिदिति** ।

प०— अत्रेत्यनुवादः । भगवद्रूपदोषग्राहिप्रत्यक्षसद्भाव इति व्याख्या ।

श्री०— दूरे कालभेद इति । कालव्यवहितेऽर्थे प्रत्यक्षं न प्रवर्तत इति किं वक्तव्यमित्यर्थः । तद्ग्राहिणो दोषग्राहिणः प्रत्यक्ष(य)स्य ।

सु०— ततः किमिति चेत् । तत्पुराणवाक्यं तद्दोषदर्शनं किं प्रत्यक्षलक्षणं प्रमाणतया मन्यते, उतापरीक्षितप्रमाणाप्रमाणभावप्रतीतिमात्रतया, अथाप्रमाणतया ।

आद्ये दोषमाह तदिति ।

अनु०— तच्छ्रुत्यैव विरुद्ध्यते ॥

भगवद्रूपेषु दोषग्राहिणीं प्रतीतिं प्रमाणतया प्रतिपादयत्पुराणवाक्यं दोषसद्भावं मन्यत एव । न हि संभवति तद्ग्राहिणः प्रामाण्यमङ्गीकरोति नाङ्गीकरोति च तदिति । दोषसद्भावं मन्यमानं च तत्प्रागुदाहृतया श्रुत्यैव विरुद्ध्यत इति ।

पुराणवाक्यस्य श्रुतिविरुद्धत्वे को दोष इत्यत आह पुराणस्येति ।

पुराणस्योपजीव्यश्च वेद एव

पौरुषेयेण खलु वाक्येन समूलेन भाव्यम् । यतः केनचित्कारणेन कश्चिदर्थं बुद्धिस्थीकृत्य वाक्यं प्रयुञ्ज्महे । अन्यथोत्पत्तेरेवासंभवः ।

पुराणवाक्यस्य च वेद एव मूलं कुत इत्यत आह न चेति ।

न चापरः ॥

अपरः पौरुषेयो ग्रन्थः । चशब्दः प्रत्यक्षा(गमा)दिसमुच्चयार्थः । पौरुषेयस्तावदागमो न पुराणस्य मूलम् । तस्यापि मूला(न्तरा)पेक्षायामन्धपरम्परापातात् । न (च) प्रत्यक्षानुमाने । तदर्थस्य तदगोचरत्वात् । नाप्युत्प्रेक्षा । प्रतारकवाक्यवदप्रामाण्यप्रसङ्गात् । अतः परिशेषाद्वेद एव पुराणस्योपजीव्य इति सिद्धम् ।

ततः किमित्यत आह तद्विरोध इति ।

तद्विरोधे कथं मानं तत्तत्र च भविष्यति ॥

उपजीव्यवेदविरोधे । तत् पुराणवाक्यम् । तत्र भगवतः सदोषत्वे । उपजीव्यविरुद्धस्योपजीवकस्याप्रमाण्यावश्यम्भावादिति चार्थः ।

नन्वीश्वरप्रणीतानां पुराणानां तदीयं निजं ज्ञानमेव मूलं न वेदः । अनीश्वरप्रणीतानामपि योगिप्रत्यक्षमेव । अतो वेदविरोधेऽपि को दोषः । उच्यते । वेदस्तावत्प्रमाणमेवेति निष्टङ्कितम् । न च प्रमाणयोर्विरोधोऽस्ति । वस्तुविकल्पप्रसङ्गात् । ततो वेद-

**विरोधे निजज्ञानादिमूलत्वमेवापनीयते । तथाऽपि वेद एव पुराणस्योपजीव्य इति कथम् । अनीश्वरप्रणीतपुराणाभिप्रायेणेति न दोषः । अनीश्वरा हि स्वयंप्रतिभातेऽप्यर्थे ( समाश्वा ) आश्वासार्थं वेदमुपजीवन्ति । यथोक्तम् 'यत्स्वयंप्रतिभातस्य संशयार्थं गुरोर्वचः' इति । यद्वेश्वरप्रणीतपुराणानामपि प्रामाण्यावधारणाय वेदसंवादोऽपेक्षितः । अन्यथोत्प्रेक्षामूलत्व-शङ्कनात् । तदभिप्रायेण 'पुराणस्योपजीव्यश्च वेद एवे'त्युक्तम् ।**

**शे०**— ननु च पुराणवाक्यं दोषग्राहिप्रत्यक्षमपरीक्षितप्रमाणाप्रमाणभावप्रतीतिमात्रपरतया-ऽप्रमाणतया वा मन्यत इत्यभ्युपगमेन पुराणस्य दोषसद्भावेऽभिनिवेशाभावान्न तस्य निर्दोषत्वबोधक-श्रुतिविरुद्धत्वमिति कथं तद्विरुद्धत्ववचनमित्यतोऽत्र दोषग्राहिप्रत्यक्षं प्रमाणत्वेन पुराणवाक्यं मन्यत इति पक्ष एव दोषसद्भावेऽभिनिविष्टतया पुराणवाक्यस्य श्रुतिविरुद्धताया उच्यमानत्वान्नानुपपत्तिरित्यभिप्रेत्य कथं तर्हि तत्पक्षनिराकरणमित्यतो दोषान्तरेणेत्याशयवानत्र संभावितविकल्पप्रदर्शनपूर्वकं तत्पक्षोत्तरत्वे-नोत्तरग्रन्थं योजयति **तत्पुराणवाक्यमित्यादिना** । ननु च दोषग्राहिप्रतीतेः प्रामाण्यमङ्गीकुर्वाणस्यापि पुराणवाक्यस्य तद्विषयदोषानङ्गीकारित्वान्न निर्दोषत्वश्रुत्या विरुद्धत्वमस्तीति कथमस्मिन्नपि पक्षे तत्प्रसङ्ग इत्यतो दोषाङ्गीकारमन्तरेण तत्प्रतीतेः प्रामाण्याङ्गीकारानुपपत्त्या तदन्यथाऽनुपपत्त्यैव तदङ्गीकारसिद्धे-रस्त्येव श्रुतिविरुद्धत्वमित्यत आह **भगवदिति** ।

---

ननु च पुराणवाक्यस्य वेदमूलकत्ववर्णनपरोत्तरवाक्यमनर्थकम् । न च वेदस्योपजीव्यत्वेन पुराणापेक्षया प्राबल्यप्रतिपादनार्थत्वान्न तदिति वाच्यम् । तत्प्रतिपादनस्याप्यानर्थक्यात् । न च श्रुत्या पुराणस्य बाध्यत्वसमर्थनार्थं तदिति वाच्यम् । श्रुतिविरुद्धार्थाभिधायकत्वमात्रेणैव तदप्रामाण्योपपत्त्या तदर्थतया प्राबल्यस्यानपेक्षितत्वादित्यतो न विरुद्धार्थाभिधायकत्वमात्रेण तत् । तथा सति श्रुतेरपि तद्विरुद्धार्थाभिधायकत्वेन तत्प्रसङ्गात् । किन्तु प्राबल्यदौर्बल्ये सति । तथा च तत्प्राबल्यसमर्थन-परोत्तरग्रन्थस्य न वैयर्थ्यमित्यभिप्रेत्य तत्प्रतिपादनपरतयोत्तरग्रन्थं योजयितुं तद्विरुद्धतामात्रस्याप्रयोजक-तामाशङ्कते **पुराणवाक्यस्येति** । ननु वेदस्येव पुराणवाक्यस्यापि निर्मूलस्यैव प्रामाण्यसंभवान्न मूलापेक्षेति न वेदमूलत्वं वक्तुं शक्यमित्यतः पौरुषेयत्वापौरुषेयत्वाभ्यां वेदपुराणयोर्वैलक्षण्याद्वेदस्य निर्मूलत्वसंभवेऽपि न पुराणवाक्यस्य तत्संभवतीत्यभिप्रेत्य पौरुषेयस्य समूलतां निर्मूलत्वे बाधककथने-नोपपादयति **पौरुषेयेणेति** ।

नन्वेवं पौरुषेयतया समूलत्वसिद्ध्या वेदमूलतायाः पूर्वेणैव सिद्धत्वात् 'न चापरः' इति मूला-न्तरप्रतिषेधार्थकोत्तरभाष्यवैयर्थ्यमित्याशङ्क्य पौरुषेयत्वेन सिद्धसमूलताया वेदमूलत्वेनेव प्रमाणान्तरमूल-

त्वेनाप्युपपन्नत्वेन समूलत्वसिद्ध्या प्रसक्तमूलान्तरप्रतिषेधसहकृतसमूलत्वसिद्धेरेव तत्साधकतयाऽभिप्रेतत्वान्न प्रसक्तमूलान्तरप्रतिषेधार्थकस्य न चेत्यादिभाष्यखण्डस्य वैयर्थ्यमित्याशयेन प्रसक्तमूलान्तरप्रतिषेधपरतया तद्योजयितुमवतारयति **कुत इति** । नन्वनेन पौरुषेयग्रन्थरूपप्रसक्तमूलान्तरप्रतिषेधेऽपि प्रत्यक्षादिरूप-तदप्रतिषेधात्कथं वेदेतरमूलनिषेधकत्वमस्येत्यतो न चेति चशब्दस्यापरश्च नेति भिन्नक्रमत्वाश्रयणेन न केवलं प्रत्यक्षादिकमेव न मूलं किन्नाम पौरुषेयग्रन्थश्च न मूलमित्यर्थसिद्ध्या वेदेतरप्रसक्तसकलमूल-निषेधकत्वसंभवान्नानुपपत्तिरित्यभिप्रेत्य चशब्दार्थमाह **चशब्द इति** । ननु हेतोरनुक्तत्वान्न प्रति-ज्ञामात्रेणार्थसिद्धिरन्यथा विपरीतप्रतिज्ञया तदर्थसिद्धिः स्यादित्यतः स्पष्टत्वाद्धेत्वनुक्तिर्भाष्यकाराणा-मित्यभिप्रेत्यापेक्षितं हेतुं कथयन्नेव परिशेषप्रकारमुपपादयति **पौरुषेयस्तावदिति** । अन्धपरम्परान्यायश्च प्रागेव व्याख्यातः ।

उपजीव्यवेदविरोधेऽपि पुराणस्य भगवतो दोषित्वे कुतो न प्रामाण्यमित्यतोऽत्र मूले चशब्देनोक्तं नियामकमाह **उपजीव्येति** ।

**निजं ज्ञानमेवेति** । तस्य तदर्थगोचरत्वेन मूलत्वसंभवादित्यर्थः ॥ **को दोष इति** । न कोऽपि दोष इत्यर्थः । विरोधिनो वेदस्यानुपजीव्यत्वादुपजीव्यस्य च निजज्ञानादेरविरोधित्वादिति भावः ॥ **निष्टङ्कितमिति** । न विलक्षणत्वाधिकरण इति शेषः ॥ **तथाऽपीति** । वेदविरोधे पुराणस्य निजज्ञानमूलत्वापनयनेऽपीत्यर्थः । ईश्वररचितपुराणानां वेदविरोधे निजज्ञानमूलत्वाभावेऽपि तदविरोधे निजज्ञानमूलत्वसंभवान्न वेदमात्रमूलकत्वमिति कथं वेदेतरामूलकत्वोक्तिरित्याशयः । संशयार्थमित्यत्रार्थ-शब्द आवर्तनीयः । तत्र चाद्यस्यार्थशब्दस्य निवृत्तिरर्थः । ततश्च संशयार्थं संशयनिवृत्त्यर्थं गुरोर्वचो वेदादिरूपमित्यर्थः । अत्र पक्षे ईश्वरानीश्वरसाधारणपुराणशब्दस्यानीश्वरपुराणरूपतद्विशेषपरत्वे लक्षणा भवतीत्यपरितोषादाह **यद्वेति** ।

स० — **निष्टङ्कितमिति** । न विलक्षणत्वाधिकरण इति शेषः । **संशयार्थमिति** । अर्थ-शब्दो निवृत्तिवचनो ज्ञेयः ।

प० — मन्यत एवेत्युक्तं व्यनक्ति **न हि संभवतीति** ॥ **तदितीति** । प्रत्यक्षग्राह्यं दोषित्व-मित्यर्थः ॥ **प्रागुदाहृतयेति** । निरनिष्ट इत्यादिश्रुत्येत्यर्थः ॥ **उत्पत्तेरेवेति** । वाक्यस्येति योज्यम् । समाधत्ते **उच्यत इति** । **निष्टंकितमिति** । जिज्ञासासूत्रे 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य ही'ति ग्रन्थेन निर्णीतमित्यर्थः ॥ **यथोक्तमिति** । ऋग्भाष्ये उक्तमित्यर्थः ॥ **संशयार्थमिति** । संशयनिवृत्त्यर्थमित्यर्थः । **गुरोर्वचः** वेदादिरूपम् ।

**या॰** -- संशयार्थमित्यत्रार्थशब्द आवर्तनीयः । तत्राद्यस्यार्थशब्दस्य निवृत्तिरर्थः । तथा च संशयनिवृत्त्यर्थमित्यर्थः । **गुरोर्वचो** वेदादिरूपम् ।

**श्री॰** — **नाङ्गीकरोतीति** । प्रामाण्यस्यार्थसत्ताघटितत्वादिति भावः । **उत्पत्तेः** वाक्यप्रयोगस्य ॥ **वेदविरोधेऽपि को दोष इति** । वेदस्य मूलत्वे खलु मूलभूतवेदविरोधेनाप्रामाण्याख्यदोषः स्यान्न चैवमित्यर्थः । तदीयं निजं ज्ञानमेव मूलमित्युक्तम् । निजज्ञानमूलत्वं न संभवतीत्याह **उच्यत इति** ।

**सु॰**— **द्वितीयं दूषयति** अपरीक्षितेति ।

**अनु॰**— अपरीक्षितदृष्टिश्च कथमेवाक्षजं भवेत् ॥

**अक्षजं कथमेव भवेदिति प्रत्यक्षं प्रमाणतयाऽभिलषितार्थे नोद्भावयितुं शक्यते । न हि प्रमाणत्वेनानवधारितं प्रमाणत्वेनोद्भावयन्परीक्षकः स्यादिति भावः ॥ विपक्षे बाधकमाह** यद्येवमिति ।

यद्येवं देवदत्तादिभ्रमः किन्नाक्षजं भवेत् ॥

**प्रमाणत्वेनापरीक्षितमपि यदि प्रत्यक्षतयोद्भाव्यत इत्यर्थः** ॥ देवदत्तादिभ्रम इति । **यज्ञदत्तशुक्त्यादौ देवदत्तरजतादिभ्रम इत्यर्थः । बाधितत्वात्तन्नाक्षजं प्रमाणमिति चेत् । तत्किं बाधाभावमात्रं वस्तुव्यवस्थाहेतुः । तथात्वे निश्चायकप्रमाणवैयर्थ्यापत्तेः । अस्ति च प्रकृते वेदबाध इति ।**

**शे॰**— प्रमाणत्वेनानवधारितस्य दोषप्रत्यक्षस्य दोषव्यवस्थापकत्वे तत्त्वेनानवधारितस्य देवदत्तादिभ्रमस्य स्वार्थव्यवस्थापकत्वमापादितम् । तदयुक्तम् । समानयोगक्षेमत्वाभिप्रायेण खल्वयमतिप्रसङ्गो वाच्यः । नान्यथा । व्याप्त्यभावात् । न च प्रकृते तदस्ति दोषदर्शनस्याबाधितत्वाद्देवदत्तादिभ्रमस्य च बाधितत्वात । तथा च प्रमाणतयाऽनवधारितस्यापि दोषदर्शनस्याबाधितत्वाद्युक्तमेव स्वार्थव्यवस्थापकत्वं न त्वतादृशदेवदत्तादिभ्रमस्येति भावेन वैषम्यं शङ्कते **बाधितत्वादिति** । अस्तु तावत्प्रकृते बाधाभावः । तत एव वैषम्येण प्रतिबन्दीपरिहारोऽपि । तथाऽपि न तन्मात्रं वस्तुव्यवस्थापकं तथा सति स्वपक्षसाधनस्याकर्तव्यत्वापत्त्या तदर्थकनिश्चायकप्रमाणवैयर्थ्यापातात । किन्तु बाधकाभावसहकृतसाधकसद्भाव एव । न च प्रकृतेऽसावस्ति । दोषप्रत्यक्षस्य प्रमाणतयाऽनवधारितत्वेन साधकाभावस्य सत्त्वात् । तथा च न विष्णोर्दोषत्वव्यवस्थापकत्वमक्षजस्येत्याशयेनाह **तत्किमित्यादिना** । अङ्गीकृत्यैव च प्रकृते बाधाभावं तन्मात्रस्य न वस्तुव्यवस्थापकत्वमिति वस्तुस्थितिरेवेयमुक्ता । इदानीमस्तु बाधाभावस्यैव वस्तुव्यवस्थापकत्वं तथाऽपि दोषग्राहिप्रत्यक्षस्य

वेदबाधितत्वेन प्रकृते बाधाभावस्यैवाभावान्न प्रत्यक्षेण दोषसिद्धिर्नापि प्रतिबन्दीपरिहारः प्रमाणत्वेनानवधारितयोर्बाधितयोश्चैकस्यार्थव्यवस्थापकतायां तदविशिष्टद्वितीयस्यापि तदापत्तेरवर्जनीयत्वादित्याह **अस्ति चेति** । केचित्तु, किं बाधाभावमात्रं वस्तुव्यवस्थापकं, तत्सहितं साधकं वेति विकल्पं मनसि निधायाद्यं दूषयति **तत्किमिति** । बाधाभावमात्रं न वस्तुव्यवस्थाहेतुरित्यर्थः । तत्कुत इत्यत आह **तथात्व इति** । बाधाभावमात्रेणैव वस्तुव्यवस्थितेरिति भावः । द्वितीयं दूषयति **अस्ति चेति** । उपलक्षणं चैतत् । साधकमप्यत्रोक्तन्यायेन नास्तीत्यपि द्रष्टव्यम् । तथा च बाधाभावसहकृतसाधकस्य प्रकृतेऽभावान्न वस्तुव्यवस्थेति भाव इत्याहुः ।

**स०** — यज्ञदत्ते देवदत्तभ्रमः शुक्तौ रजतभ्रमः आदिपदेन वल्मीकादौ घटादिभ्रम इत्यर्थः । न केवलं बाधकमात्रं तस्य वस्तुव्यवस्थापकमात्रं किं नाम प्रकृते बाधाभावो नेत्याह **अस्ति चेति** ।

**प०** — **द्वितीयमिति** । उतापरीक्षितेत्युक्तपक्षमित्यर्थः ॥ **वेदबाध इति** । 'निरनिष्टो निरवद्य' इत्यादिवेदबाध इत्यर्थः ।

**सु० — तथा च तृतीयपक्ष एवाङ्गीकार्यः । न चाप्रमाणतया निश्चितेन दोषसिद्धिरिति भावः ।**

**शे०** — **तृतीयः पक्ष इति** । पुराणवाक्यं दोषग्राहिप्रत्यक्षमप्रमाणतया मन्यत इति तृतीयः पक्ष इत्यर्थः । अस्तु तर्ह्येवमेवेत्यत आह **न चेति** । अन्यथाऽप्रमाणतया निश्चितेन रजतादिभ्रमेणापि शुक्त्यादे रजतादित्वसिद्ध्यापातादिति भावः ।

**श्री०** — **तृतीयपक्ष एवेति** । पुराणवाक्यं दोषदर्शनमप्रामाण्यतया मन्यत इति तृतीयपक्ष इत्यर्थः ।

**सु० — उपजीव्यवेदविरोधादुपजीवकयोः प्रत्यक्षपुराणवाक्ययोरप्रामाण्यमित्युक्तम् । तदसत् । उपजीवकमुपजीव्यविरोधेन बाध्यत इति नियमाभावात् । दृश्यते ह्युपजीव्यस्यापीदं रजतमिति ज्ञानस्योपजीवकेन नेदं रजतमिति ज्ञानेन बाध इति चेत् । कथमत्रोपजीव्योपजीवकभाव इति वक्तव्यम् । अप्राप्तस्य प्रतिषेधायोगात्प्राप्तिरूपमिदं रजतमिति ज्ञानमाद्यमुपजीव्यं, प्रतिषेधात्मकं तु नेदं रजतमिति ज्ञानमुपजीवकमिति वा, असिद्धे धर्मिणि प्रतिषेधासंभवाद्धर्मिज्ञानमाद्यमुपजीव्यं द्वितीयं तूपजीवकमिति वा । आद्ये समाधिमाह** यावच्छक्तीति ।

**अनु०** — यावच्छक्तिपरीक्षायामुपजीव्यस्य बाधने ॥
दोषो नाशोधिते दोष उपजीव्यत्वमस्त्वलम् ॥

परीक्षायां सत्यां प्रमाणतया प्रतीतस्येति शेषः । बाधने उपजीवकेन कृत इति शेषः । दोषोऽस्मदभिमत(तो) नियमभङ्गः स्यात् । उपजीव्येऽशोधिते परीक्षयाऽप्रमाणादविविक्ते उपजीवकेन बाधिते न दोषः । उपजीव्यत्वमस्त्वलमिति । प्रकृतोदाहरणे प्रथममुपजीव्योपजीवकभावमभ्युपैति । उपजीव्यत्वमित्युपलक्षणम् । उपजीवकत्वं चेत्यपि द्रष्टव्यम् । पूर्वोत्तरज्ञानयोरिति शेषः । अलंशब्दोऽवधारणे ।

प०— तादात्म्य(रजतत्वसं)तत्संसर्गरूपनिषेध्यार्पकत्वेन वा निषेधाधिकरणार्पकतया वा द्वेधोपजीव्यत्वं व्यनक्ति अप्राप्तस्येति ॥ प्रकृतोदाहरण इति । इदं रूप्यमित्युक्तोदाहरण इत्यर्थः ।

सु०— इदमुक्तं भवति । (अस्त्वेव) अस्त्येवेदं रजतं नेदं रजतमिति ज्ञानयोरुपजीव्योपजीवकभाव उपजीव्यस्योपजीवकेन बाधश्च । तथाऽप्युपजीव्यविरोधेनोपजीवकं बाध्यत इति नियमभङ्गो नास्ति । अयं खल्वस्य नियमस्यार्थः । परीक्षया शोधितमुपजीव्यं विरोध्युपजीवकं बाधते स्वयं तेन न बाध्यत इति । न तु यथाश्रुतः । अस्य तु तदा भङ्गः स्यात् । यदि परीक्षितमुपजीव्यं विरोधिनोपजीवकेन बाध्यं (बाधितं) क्वचिदुपलभेमहि । न चैवम् । इदं रजतमिति ज्ञानं तु न शोधितम् । ततस्तस्मिन्नुपजीवकेन बाधिते न नियमभङ्गः । न हि निर्विशेषणस्य व्यभिचारे विशिष्टं व्यभिचरत्यतिप्रसङ्गात् । न च वाच्यं विशिष्टस्य प्रयोजकताकल्पनं निर्मूलमिति । उभयथा(पि) बाध्यबाधकभावदर्शनात् । विशेषणानपेक्षायामव्यवस्थापातात् । ननु परीक्षायामङ्गीकृतायां तयैवालम् । परीक्षितेनापरीक्षितं बाध्यत इत्येतावतः क्वचिद्व्यभिचाराभावात्किमुपजीव्योपजीवकभावेन । उच्यते । भवेदेवं यद्यात्यन्तिकीं परीक्षामत्राङ्गीकुर्मः । न चैवम् । किन्तु यावच्छक्तिपरीक्षामेव । न च तावन्मात्रस्य बाधकत्वनियमोऽस्ति । यावच्छक्तिपरीक्षितस्यापि बाधदर्शनात् । अतो युक्तं विशिष्टस्योपादानम् । आत्यन्तिकपरीक्षैव बाधकत्वोपयोगिनी भवतु किमुपजीव्यत्वेनेत्यपि न वाच्यम् । तस्यापि सांव्यावहारिकत्वात् । यथोक्तम् । 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति । प्रकृते तु वेदः परीक्षित उपजीव्यश्चेति ।

शे०— ननूपजीव्यस्येदं रजतमिति ज्ञानस्योपजीवकेन नेदं रजतमिति ज्ञानेन बाधाभ्युपगमे उपजीव्यविरोधेनोपजीवकं बाध्यते इति नियमभङ्गो दुष्परिहर इत्यतोऽभिप्रायमाह इदमुक्तं भवतीति । अतिप्रसङ्गादिति । पर्वतो धूमवानार्द्रेन्धनप्रभववन्हिमत्त्वादित्यादावपि तथात्वप्रसङ्गादित्यर्थः ॥ उभयथाऽपीति । वन्हिरनुष्ण इत्यादावुपजीव्येनोपजीवकस्येदं रजतमित्यादौ चोपजीवकेनोपजीव्यस्य

बाध इत्युभयथाऽपीत्यर्थः ॥ **विशेषणेति** । परीक्षितेतिविशेषणेत्यर्थः ॥ **यावच्छक्तिपरीक्षितस्यापीति** । पूर्वपक्ष्याद्यभिमतप्रमाणस्येति शेषः । धर्म्यंशे विशिष्टस्य सत्त्वेऽपि बाधकत्वाभावाद्विशिष्टस्याप्यप्रयोजकत्वनिरासाय विरोधित्वेनोपजीवकं विशेषितमिति ध्येयम् । उपजीव्यत्वस्य बाधकत्वोपयोगित्वेन संव्यवहारोऽस्तीत्युक्तम् । तत्र महाभाष्यसंमतिमाह **यथोक्तमिति** ॥ **सन्निपातेति** । अत्र तच्छब्दश्रवणाद्यच्छब्दोऽध्याहार्यः । ततश्च यत्सन्निपातेन यदुपजीवनेन लक्षणं स्वरूपं यस्य विधेः स विधिस्तस्य स्वोपजीव्यस्य विघातं प्रति अनिमित्तं, निमित्तं न भवतीति न्यायादित्यर्थः । यथा शतानि सहस्राणीत्यादौ नपुंसकस्य झलचेत्यनेन सर्वनामस्थानसंज्ञकशिप्रत्ययनिमित्ते नुमागमे कृते ष्णान्ताः षडिति सूत्रेणोपदेशग्रहणं कर्तव्यं शताद्यष्टनार्थमिति वार्तिकाभावपक्षे नकारान्तत्वेन षट्संज्ञायां षड्भ्यो लुगिति शिप्रत्ययस्य लुकि प्राप्ते सन्निपातपरिभाषया शिप्रत्यययोगे जायमानो नुम् षट्संज्ञाद्वारा शिप्रत्ययलोपनिमित्तं न भवति । तथा मथितं पण्यमस्येत्यर्थे तदस्य पण्यमिति ठकि ठस्येकादेशेऽजादित्वाद्भसंज्ञायां यस्येति चेत्यकारलोपे णन्तात्परस्येकप्रत्ययस्य स्थानिवद्भावेन इसुसुक्तान्तात्क इति कादेशप्राप्तौ सन्निपातपरिभाषया कादेशो न भवति । माथितिको भवत्या अयमित्यर्थे भवतष्ठक् छसाविति ठकि ठक्छसोश्चेति ठावस्थायामेव पुंवद्भावात्सन्निपातपरिभाषया अप्रवृत्तौ भावत्क इति भवतीति ।

स० — **उभयथेति** । क्वचिदुपजीव्येनोपजीवकस्य क्वचिदुपजीवकेनोपजीव्यस्येत्युभयथेत्यर्थः । **विशेषणेति** ॥ **परीक्षितेति** । विशेषणेत्यर्थः । उपजीव्यत्वस्य बाधकत्वोपयोगित्वे संव्यवहारोस्तीत्यत्र संमतिमाह **यथोक्तमिति** । तच्छब्दश्रवणात् यच्छब्दोऽध्याह्रियते । **यत्सन्निपातेन** यदुपजीवतेन लक्षणं स्वरूपं यस्य विधेः स विधिः तस्य स्वोपजीव्यस्य विघातं प्रत्यनिमित्तं निमित्तं न भवतीति न्यायादित्यर्थः । यथा शतानि सहस्राणीत्यादौ नपुंसकस्य झलच इत्यनेन सर्वनामस्थानसंज्ञकशिप्रत्ययनिमित्ते नुमागमे कृते ष्णान्ताषडिति सूत्रेणोपदेशग्रहणं कर्तव्यं शताद्यष्टनार्थमिति वार्तिकाभावपक्षे नकारान्तत्वेन षट्संज्ञायां षड्भ्यो लुगिति शिप्रत्ययस्य लुकि प्राप्ते सन्निपातपरिभाषया शिप्रत्ययेन जायमानौ नुम् षट्संज्ञाद्वारा शिप्रत्ययलोपनिमित्तं न भवति । तथेहापीति भावः ।

प० — **निर्विशेषणस्येति** । शोधितत्वरूपविशेषणहीनस्येत्यर्थः ॥ **अतिप्रसङ्गादिति** । पर्वतो धूमवानार्द्रेन्धनप्रभववह्निमत्त्वादित्यादावपि तथात्वप्रसङ्गादित्यर्थः ॥ **प्रयोजकताकल्पनमिति** । अबाध्यत्व इति वा विरोध्युपजीवकत्वबाधक इति वा योज्यम् ॥ **उभयथेति** । इदं रूप्यमित्यादावुपजीव्यस्योपजीवकेन वह्निरनुष्ण इत्यादावुपजीवकस्योपजीव्येन बाधदर्शनादित्यर्थः ॥ **बाधदर्शनादिति** । नभो नैल्यादौ द्वित्रिकक्ष्यानन्तरमपि बाधदर्शनादित्यर्थः ॥ **यथोक्तमिति** । वैयाकरणैरुक्तमित्यर्थः ।

आद्याध्यायाद्यपादे 'क्नमेजन्त' इति सूत्रे कैयटे अयं न्यायो व्याख्यातः। सन्निपातः सन्निधिः लक्षणं निमित्तं बहुव्रीहिसमासः यत्सन्निधानं निमित्तीकृत्य यो विधिः प्रवर्तते स विधिस्तत्सन्निधानविघातस्य न निमित्तमिति। यथा शतानीति शब्दे शतशब्दात्परस्य जसः जश्शसोः शिरिति शिभावे कृते तस्य शिसर्वनामस्थानमिति सर्वनामस्थानसंज्ञायां तत्सन्निपातेन शतशब्दस्य नपुंसकस्य झलच इति नुमागमे सति शतन् इति स्थिते ष्णान्ता षडितिः षट्संज्ञायां शिभावस्य षड्भ्योलुगिति लुक्प्राप्नोति शिसन्निपातेन विहितो नुम् षट्संज्ञाद्वारा शिभावविघातकस्य लुकः निमित्तं न भवतीत्येवं ज्ञेयम्। कैयटे च ग्रामणिकुलमित्यत्र इको ह्रस्व इति प्राप्तं ह्रस्वत्वं ह्रस्वस्येति तुको निमित्तमित्युक्तम्।

**या० — उभयथाऽपि बाध्यबाधकेति।** वह्निरनुष्ण इत्यादावुपजीव्येनोपजीवकस्य बाध इदं रजतमित्यादावुपजीवकेनोपजीव्यस्य बाध इत्युभयथाऽपीत्यर्थः ॥ **यावच्छक्ति परीक्षितस्यापीति।** पूर्वपक्ष्याद्यभिमतप्रमाणस्येति शेषः ॥ **सन्निपातलक्षणो विधिरिति।** अत्र तच्छब्दश्रवणाद्यच्छब्दोऽध्याहार्यः। तथा च यत्सन्निपातेन यदुपजीवनेन लक्षणं स्वरूपं यस्य विधेः स विधिस्तस्य स्वोपजीव्यस्य विघातं प्रति निमित्तं न भवतीत्यर्थः। यथा शतानि सहस्राणीत्यादौ नपुंसकस्य झलच इत्यनेन सर्वनामस्थानसंज्ञकशिप्रत्ययनिमित्ते नुमागमे कृते ष्णान्ता षडिति सूत्रेणोपदेशग्रहणं कर्तव्यम्। शताद्यष्टनार्थमिति वार्तिकाभावपक्षे नकारान्तत्वेन षट्संज्ञायां षड्भ्यो लुगिति शिप्रत्ययस्य लुकि प्राप्ते सन्निपातपरिभाषया शिप्रत्यययोगेन जायमानो नुम् षट्संज्ञाद्वारा शिप्रत्ययलोपनिमित्तं न भवतीत्याद्युदाहरणम् ॥

**श्री० — विशिष्टमिति।** परीक्षितमुपजीव्यमपरीक्षितस्योपजीवकस्य बाधकमिति विशिष्टमित्यर्थः।

**सु० — द्वितीये परिहारमाह** भ्रमेऽपीति।

**अनु० —** भ्रमेऽप्यभ्रमभागोऽस्ति

**हीति वक्ष्यमाणमत्रापि संबध्यते। यद्यप्येकमेवेदं रजतमिति ज्ञानं तथाऽपि विषयोपाधिवशाद् द्विभागम्। तत्र प्रकारे भ्रमत्वेऽपि स्वरूपेऽभ्रमत्वमेव। तत्र कदाऽपि बाधाभावात्। तथाऽन्येप्याहुः। सर्वं ज्ञानं धर्मिणि प्रमाणं प्रकारे तु विपर्यय इति। भागाभ्युपगमादेव न विरोधचोदनावकाशः। ततः किमित्यत आह** तन्मात्रमिति।

तन्मात्रमुपजीव्य हि ॥

बाधकज्ञानवृत्तिस्स्यात्

अभ्रमभागमात्रम् । तेनैव धर्मिणः सिद्धेः । रजताकारस्य निषेध्यत्वेन धर्मित्वाभावादिति हिशब्दार्थः । एतदुक्तं भवति । अस्मिन्पक्षे यदुपजीव्यं न तदुपजीवकेन बाध्यते यच्च बाध्यते न तदुपजीव्यमित्यतो नेदमस्मदीयनियमभङ्गस्योदाहरणमिति ।

शे० — न तद्बाध्यत इति । इदमंशस्याप्याबाधादिति भावः ॥ यच्च बाध्यत इति । रजतत्ववैशिष्ट्यमित्यर्थः ॥ न तदुपजीव्यमिति । रजतत्वविशिष्टस्याधर्मित्वादिति भावः ।

प० — द्वितीय इति । असिद्धे धर्मिणीत्युक्तपक्ष इत्यर्थः ॥ अन्येऽपीति । तार्किकाः । कथमेकस्य भ्रमत्वमभ्रमत्वं च भ्रमत्वाभ्रमत्वयोर्विरोधादित्यत आह भागाभ्युपगमादेवेति ।

सु० — अत्रान्तरे मायावादिनश्चोदयन्ति । यदुक्तमुपजीव्यविरोधादद्वैतश्रुतीनामप्रामाण्यमिति । तदसत् । तत्राप्यस्य समाधानस्य सुवचत्वात् । तथा हि । यः सर्वज्ञ इत्यादीनां तत्त्वमस्यादीनां च कथमुपजीव्योपजीवकभाव इति वक्तव्यम् । सिद्धं तु निवर्तकत्वादित्यादिवचनात् । तत्त्वमस्यादिवाक्यमैक्यविरोधिनां सार्वज्ञादीनां दुःखादीनां च प्रतिषेधकमङ्गीकृतम् । न च प्राप्तिं विना प्रतिषेधोऽस्तीति प्राप्तिरूपं यः सर्वज्ञ इत्यादिकमुपजीव्यम् , तत्त्वमस्यादिकं तूपजीवकमिति वा, असिद्धे धर्मिणि प्रतिषेधानुपपत्तेर्धर्मिप्रतिपादकमाद्यमुपजीव्यमुपजीवकं चोत्तरमिति वा । आद्ये रजतज्ञानस्येवापरीक्षितत्वादुपजीव्यस्यापि प्रथमस्योत्तरेण बाधे न काऽप्यनुपपत्तिः । द्वितीये शुक्तिस्वरूपमात्रमिव ब्रह्मस्वरूपमात्रमुपजीव्यं न सार्वज्ञादिविशिष्टम् । तथा च यदुपजीव्यं न तदुत्तरेण बाध्यते । यद्बाध्यते सार्वज्ञादिकं न तदुपजीव्यमिति न कश्चिद्विरोध इति ।

अत्र परिहारद्वयमपि प्रतिषेधति न चैवमिति ।

अनु० — न चैवं

प्रसिद्धयोर्भ्रान्तिबाधयोरिवात्र समाधानं न वक्तुं शक्यते । वैषम्यादिति भावः ।

शे० — ननु न चैवमित्युत्तरभाष्यमनर्थकम् । न च जीवस्वरूपग्राहकस्य साक्षिण ईश्वरस्वरूपग्राहकस्य यः सर्वज्ञ इत्याद्यागमस्य च परीक्षितत्वप्रतिपादनार्थत्वान्न तदिति वाच्यम् । तत्प्रतिपादनस्यापि निष्प्रयोजनत्वात् । न चेदं रजतमिति ज्ञानापेक्षया साक्षिप्रत्यक्षश्रुत्योर्वैषम्योपपादनार्थत्वान्न तदिति वाच्यम् । तदुपदर्शनस्यापि निष्प्रयोजनत्वात् । न च साक्षिप्रत्यक्षश्रुत्योस्तत्त्वमस्याद्यागमबाध्यत्वकथनार्थत्वान्न तदिति वाच्यम् । तत्कथनस्यापि प्रयोजनानुपलम्भात् । न चोपजीव्यत्वेऽपि साक्षिप्रत्यक्षादेर्नोपजीवकतत्त्वमस्याद्यागमबाधकत्वम् । किन्तु तद्बाध्यत्वमेवेति शङ्कानिरासार्थत्वात्तद-

बाधकत्वकथनमर्थवदिति वाच्यम् । इह ग्रन्थे साक्षिप्रत्यक्षादेस्तद्बाधकत्वतदबाध्यत्वयोरनुक्त्या निर्विषयत्वेन प्रसञ्जकाभावेन च तच्छङ्काया एवात्रानुत्थानेन तदबाध्यत्वकथनस्य तन्निरासार्थत्वायोगादित्यतोऽत्र प्रकरणे साक्षिप्रत्यक्षादेस्तदबाध्यत्वाद्यनुक्तावपि 'न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चन । यजमानः प्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत् । ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषत' इत्यादिना जीवरूपधर्मिग्राहकतया साक्षिप्रत्यक्षस्य । 'सार्वज्ञ्यादिगुणं जीवाद्भिन्नं ज्ञापयति श्रुतिः । ईशं तामुपजीव्येव वर्तते ह्यैक्यवादिनी । उपजीव्यविरोधेन नास्यास्तन्मानता भवेदि'त्यादिनेशरूपधर्मिग्राहितया सार्वज्ञ्याद्यागमस्य तदैक्यबोधकतत्त्वमस्याद्यागमापेक्षया प्राबल्येन तद्बाधकत्वतदबाध्यत्वयोर्जिज्ञासासूत्रपृथगधिकरणयोर्वर्णितत्वेन निर्विषयत्वानुपपत्तेः, सिद्धान्तीयस्येदं रजतमिति ज्ञाने नेदं रजतमित्युपजीवकेन यावच्छक्तिपरीक्षायामिति भ्रमेऽप्यभ्रमोऽस्तीति द्विधा बाधवर्णनप्रकारस्यैव प्रसञ्जकत्वेनोपजीव्यस्येदं रजतमिति ज्ञानस्योपजीवकेन नेदं रजतमिति ज्ञानेनैव बाधवदुपजीव्ययोः साक्षिप्रत्यक्षश्रुत्योरप्युपजीवकेन तत्त्वमस्याद्यागमेन बाधः किन्न स्यादिति शङ्कायाः संभवात् । इदं रजतमित्युपजीव्यभूतज्ञानापेक्षया प्रत्यक्षश्रुत्योः परीक्षितत्वेन वैषम्यकथनेनास्य तत्त्वमस्याद्यागमाबाध्यत्वकथनस्योक्तशङ्कानिवर्तकत्वेन सार्थकत्वान्न परीक्षितत्वप्रतिपादकोत्तरग्रन्थवैयर्थ्यमित्यभिप्रेत्य वैषम्यप्रतिपादकतयोत्तरग्रन्थं योजयितुं स्यादेतदेवं यदि रजतज्ञानतद्बाधयोर्धर्मिग्राहिसाक्ष्यादिप्रमाणतदभेदश्रुत्योश्चाविशेषः सिद्धः स्यात्स एव तु कथमित्यतो विषयप्रदर्शनपूर्वकमविशेषमप्युपपादयन्नेवोक्तशङ्कामुत्थापयति **अत्रान्तर इति** । निर्दोषत्वव्युत्पादनावसर इत्यर्थः ॥

**तत्त्वमस्यादिवाक्यमिति** । अनेन, तत्त्वमस्यादिवाक्यानां प्रयोजनवत्त्वं सिद्धम् । तत्त्वमस्याद्यागमस्यैक्यविरोधिसार्वज्ञ्यादिदुःखादिप्रपञ्चप्रतिषेधकत्वेन स्वप्रकाशब्रह्मस्वरूपतया नित्यसिद्धजीवब्रह्मैक्यबोधकत्वाभावादिति, 'सिद्धं तु निवर्तकत्वादि'त्युदाहृतपरकीयवचनार्थः सूचितो भवति । (ऐक्यस्य ब्रह्मस्वरूपत्वात्तस्य च स्वप्रकाशतया नित्यसिद्धत्वात्तद्बोधकतत्त्वमस्यादिवाक्यस्य वैयर्थ्यमाशङ्क्य परिहारायेदं प्रकृतं सिद्धमिति । तत्त्वमस्यादिवाक्यस्य प्रयोजनवत्त्वं सिद्धम् । अस्यैक्यविरोध्यारोपिताकारनिवर्तन एव तात्पर्यमित्यर्थः) ॥ **न तदुत्तरेणेति** । ब्रह्मस्वरूपमात्रस्याबाधादिति भावः ॥ **न तदुपजीव्यमिति** । सार्वज्ञ्यादिविशिष्टस्यानुपजीव्यत्वादित्यर्थः ।

प० — **अत्रान्तर इति** । उपजीव्यवेदविरोधात् दोषग्राहिप्रत्यक्षपुराणयोर्न प्रामाण्यमित्यत्रोपजीव्येनोपजीवकस्य बाध इति नियमव्यभिचारोद्धारे सति लब्धावकाशाः सन्तो मायावादिनः हरेर्निर्दोषित्वोक्तिप्रकरणमध्ये शङ्कन्त इत्यर्थः ॥ **यदुक्तमिति** । पृथगुपदेशादित्यत्र 'उपजीव्यविरुद्धं तु

कथमैक्यं श्रुतिर्वदेदि'त्यादिग्रन्थेनोक्तमित्यर्थः। द्वेधोपजीव्योपजीवकभावं व्यनक्ति **सिद्धं त्वित्यादिना।** इति मायावादिनां पूर्वेषां वचनादित्यर्थः। निवर्तकत्वादित्यंशार्थं व्यञ्जयन्नेवोपजीवकत्वमद्वैतवाक्यस्योपेत्योक्तदिशोपजीव्यबाधदोषं परिहरति **तत्त्वमसीत्यादिना न कश्चिद्विरोध इत्यन्तेन ॥ प्रतिषेधकमिति (प्रतिषेधतीति)**। एतेनाद्वैतवाक्यानां विरोध्याकारनिवर्तकत्वात्सिद्धं तत्त्वमस्यादिशास्त्रस्यार्थवत्त्वमिति तदीयवचनस्यार्थ उक्तो भवति। एवंशब्दार्थः प्रसिद्धयोरित्यादि।

**या० — अत्रान्तर इति।** निर्दोष(षि)त्वप्रकरणमध्य इत्यर्थः॥ **सिद्धं तु निवर्तकत्वादिति।** ऐक्यस्य ब्रह्मस्वरूपत्वात्तस्य च स्वप्रकाशतया नित्यसिद्धत्वात्तद्बोधकस्य तत्त्वमस्यादिवाक्यस्य वैयर्थ्यमित्याशङ्कापरिहारायेदं वचनं परमते प्रवृत्तम्। तत्त्वमस्यादिवाक्यस्य प्रयोजनवत्त्वं सिद्धम्। अस्यैक्यविरोध्यारोपिताकारनिवर्तन एव तात्पर्यादिति तद्वचनार्थोऽत्रानुसन्धेयः।

**सु० — तत्कथमित्यतः प्रथमपक्षे तावद्वैषम्यं दर्शयति** सुपरीक्षित इति।

**अनु० —** सुपरीक्षिते ॥

**प्रथमप्रमाणे सुपरीक्षिते सति न चैवमिति संबन्धः। एतदुक्तं भवति। इदं रजतमिति ज्ञानमुपजीव्यमप्यपरीक्षितत्वादुपजीवकेन नेदं रजतमिति ज्ञानेन बाध्यते। उपजीव्योपजीवकन्यायस्य यावच्छक्तिपरीक्षाविषयत्वादिति ह्यस्माभिरभिहितम्। अस्मन्न्यायेन च परेण प्रत्यवस्थीयते। न च तद्युक्तम्। यः सर्वज्ञ इत्यादीनामहं दुःखीत्यादीनां च सुपरीक्षितत्वात्। उपपादितं खलु यः सर्वज्ञ इत्यादिश्रुतीनां तत्त्वावेदकत्वं साक्षिणश्च नियमेनाव्यभिचारित्वमिति।**

**द्वितीयपक्षे वैषम्यं दर्शयति** सर्वमिति।

सर्वं तदुपजीव्यैव प्रमाणं वर्तते यतः ॥

**यतः कारणात्तत्सर्वं सार्वज्ञादिकमुपजीव्यैव तत्त्वमसीत्यादिकं प्रमाणं प्रवर्ततेऽतो न चैवमिति संबन्धः। इदमुक्तं भवति। यथा नेदं रजतमिति ज्ञानं पुरोवर्तिनः स्वरूपमात्रं धर्मीकृत्य प्रवर्तते न तु रजतत्वविशिष्टं न तथा तत्त्वमस्यादिवाक्यं प्रवर्तितुमर्हति। किन्तु सर्वज्ञत्वादिविशिष्टं ब्रह्मस्वरूपं दुःखादिविशिष्टं जीवस्वरूपं च धर्मीकृत्यैव। तथा च धर्मिग्राहकविरोधोऽपरिहार्य इति। अत्र सर्वमिति सर्वज्ञत्वाद्यन्यतमस्योपलक्षणम्।**

**शे० — सुपरीक्षितत्वादिति।** परीक्षया प्रमाणत्वेनावधृतत्वादित्यर्थः। तत्कथमित्यत आह **उपपादितं खल्विति।** 'न च मिथ्यागुणत्वं स्यादनिर्वाच्यस्य दूषणादि'त्यादिना जन्मादिसूत्रे 'अप्रामाण्यं यदा भेदवाचकस्य भविष्यति। स एव धर्मिणो ग्राही तदभेदः कथं भवेदि'त्यादिना

श्रुतीनां तत्त्वावेदकत्वं 'न दुःखानुभवः क्वापि' 'बाधो यद्यनुभूतेऽर्थे', 'तस्मात्सर्वप्रसिद्धस्य व्यवहारस्य सिद्धये । साक्षी निर्दोष एवैकः' इत्यादिना पृथगधिकरणेऽव्यभिचरितत्वं चोपपादितमित्यर्थः ।

ननु सर्वज्ञत्वादिविशिष्टं ब्रह्मस्वरूपं दुःखादिविशिष्टं जीवस्वरूपं च धर्मीकृत्य यत्रैक्यं बोध्यते तत्र सर्वस्य सर्वज्ञत्वादेरुपजीव्यत्वेनैक्यबोधकस्य सर्वस्य प्रमाणस्य धर्मिग्राहिमानविरोधसंभवेऽपि यत्र जीवमात्रं ब्रह्ममात्रं वा धर्मीकृत्य ब्रह्मैक्यं वा जीवैक्यं वा बोध्यते तत्रासार्वज्ञ्यादिमात्रस्य सार्वज्ञ्यादिमात्रस्य वोपजीव्यत्वेन सर्वस्य तदभावात्कथं सर्वं तदुपजीव्येति सर्वोपजीवनेनैक्यप्रमाणप्रवृत्त्युपवर्णनमित्यतोऽत्र सर्वपदस्य लक्षणया सर्वज्ञत्वाद्यन्यतमपरत्वस्याप्यभिमतत्वेन सर्वज्ञत्वादिसर्वमात्रपरत्वाभावात्तत्र सर्वस्योप-जीवनाभावेऽप्यसर्वज्ञत्वाद्यन्यतमोपजीवनस्य सत्त्वाद्युक्तैव तदुपजीवनेनैक्यप्रमाणप्रवृत्त्युक्तिरित्याशयेनाह **अत्र सर्वमितीति** ।

स० — ननु सर्वज्ञत्वादिविशिष्टब्रह्मस्वरूपं दुःखादिविशिष्टं जीवस्वरूपं च धर्मीकृत्य यत्रैक्यं बोध्यते तत्र सर्वस्योपजीव्यत्वेन धर्मिग्राहिविरोधसंभवेपि यत्र जीवमात्रं ब्रह्ममात्रं वा धर्मीकृत्य तदुच्यते तत्रान्यतरस्योपजीव्यत्वेन सर्वस्य तदभावात् कथं सर्वं तदुपजीव्यैवेत्युच्यत इत्यत आह **अत्र सर्वमि-तीति** । तथाचाजहल्लक्षणयोभयस्यान्यतमस्यापि प्राप्तत्वान्न दोष इति भावः ।

प० — अस्फुटत्वादाह **एतदुक्तमिति** ॥ **उपपादितं खल्विति** । भक्तिपादे 'यदि स्युस्ता-

---

दृशा धर्माः सर्वज्ञत्वादयो न किमि'त्यादिना 'वेदवेद्यस्य मिथ्यात्वं यदि नैक्यस्य तत्कथमि'त्यादिना च श्रुतीनां साक्षिणस्तु पृथगुपदेशादित्यत्र 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेदित्यादिना 'दोषाः स्युर्न वै साक्षिदर्शने' इत्यादिनाऽत्रैव पादे पूर्वत्रोपपादितमित्यर्थः ॥ **वैषम्यमिति** । शुक्तिरूप्यादि-निषेधवैषम्यमित्यर्थः । एकैकस्याप्यसाधारणधर्मत्वेन सर्वज्ञत्वसर्वशक्तिमत्त्वसर्वकर्तृत्वादिषु दुःखित्वादिषु च एकैकस्याप्युपजीवनसंभवात् सर्वमित्युक्तिरयुक्तेत्यत आह **सर्वमितीति** ।

या० — **उपपादितं खल्विति** । पृथगधिकरणादाविति शेषः ॥

श्री० — **साक्षिणश्चेति** । जीवगतदुःखादिग्राहिण इत्यर्थः ।

सु० — **ननु तत्त्वमस्यादिवाक्यमपि यदि स्वरूपमात्रमुपजीव्य प्रवर्तेत तदा कीदृशो दोष इत्यत आह** कथमिति ।

**अनु०** — कथं ब्रह्मेति तज्ज्ञेयं सर्वज्ञत्वादिलक्षणम् ॥
विहाय यस्मात्कस्माच्चित्स्वरूपस्यैव चेद्यदि ॥
उपजीव्यत्वम्

वाक्यद्वयमेतत् । तत्रैकस्यार्थः । धर्मान्विहाय स्वरूपस्यैवोपजीव्यत्वं चेत्तर्हि तत्कथं ज्ञेयं यत्तत्त्वमसीति बोध्यते । एतदुक्तं भवति । शब्देनानूद्य हि स्वरूपं तत्त्वमसीति वक्तव्यम् । न च निर्धर्मस्य प्रतिपादकः शब्दोऽस्ति । अतः स्वरूपमात्रस्य बुद्धावनारोहाद्बोधनमेवानुपपन्नमिति । न ब्रूमः स्वरूपमात्रस्योपजीव्यत्वम् । किन्तु भेदकान्सर्वज्ञत्वादिधर्मान्विहाय तत्त्वादिना विशिष्टस्य । तथा च न कश्चिद्दोष इत्यतः शिष्टं वाक्यम् । यदि तत्त्वादिधर्मोपेतस्योपजीव्यत्वं तर्हि सर्वज्ञत्वादिकं विहाय यस्मात्कस्माच्चित्तत्त्वादेस्तद्ब्रह्मेति कथं ज्ञेयम् । यद्यप्यस्मिन्पक्षे नोक्तदोषस्तथाऽपि बोध्यस्य ब्रह्मास्मीति ज्ञानमनुपपन्नमेव । सर्वज्ञत्वादेर्ब्रह्मलक्षणत्वेन तदनुपादाने ब्रह्मणो बुद्धावनारोहात् । तत्त्वादेर्घटादिसाधारणत्वादिति भावः । सर्वज्ञत्वादिपरित्यागेनोपजीवने बाधकमभिधाय विपर्यये पर्यवसानमाह एतस्मादिति ।

एतस्माद्व्यावृत्तं यावता भवेत् ॥

तावतैवोपजीव्यत्वं

अपरथा ज्ञानासंभवात् । यावता धर्मेण । तावतोपेतस्यैव ।

ननु नेदं रजतमिति ज्ञानं यथा स्वरूपमात्रमुपजीव्य प्रवृत्तम् । तथेदमपि प्रवर्त्स्यति को दोष इत्यत आह स्वरूपस्यैवेति ।

स्वरूपस्यैव न कश्चित् ॥

---

उपजीव्यत्वमिति वर्तते । उक्तानुपपत्तेरेव दृष्टान्तोऽपि न सम्मत इत्यर्थः ।

शे० — ननु 'कथं ब्रह्मेति तज्ज्ञेयमि'त्युत्तरवाक्ये त्वमिति बोध्यस्य ब्रह्मत्वेनाविज्ञेयत्वमुच्यते । तदयुक्तम् । सार्वज्ञादिविशिष्टब्रह्मोपजीवनेन प्रवृत्ते तत्त्वमसीति वाक्ये त्वमिति बोध्यस्य ब्रह्मत्वेन विज्ञेयताया निष्कलङ्कत्वादित्यतो न ब्रूमो वयं सार्वज्ञादिविशिष्टब्रह्मस्वरूपोपजीवनेन प्रवृत्ते तत्त्वमसीति प्रमाणे त्वमसीति बोध्यं न ब्रह्मत्वेन विज्ञेयमिति किन्त्वेतत्पक्षोक्तधर्मिग्राहकप्रमाणविरोधपरिहाराय नेदं रजतमित्यादाविव स्वरूपमात्रोपजीवनेन तत्त्वमस्यादिवाक्यप्रवृत्तिपक्ष एवेत्यतो नानुपपत्तिरित्यभिप्रेत्य तद्दूषणपरतयोत्तरग्रन्थं योजयितुं तं पक्षमुत्थापयति नन्विति । कथं तज्ज्ञेयमित्येतावन्मात्रेणैव स्वरूपमात्रोपजीवनेन प्रमाणप्रवृत्तौ दोषस्योक्तत्वाच्छिष्टभाष्यखण्डवैयर्थ्यमित्याशङ्क्याह वाक्येति । ननु यत्तत्त्वमसीति बोध्यते तन्निर्धर्मिकमपि ज्ञेयं भविष्यतीति काऽत्र कश्नन्तेत्याशङ्क्याह एतदुक्तं भवतीति ॥ न कश्चिदिति । धर्मान्विहाय स्वरूपस्यैवोपजीव्यतायां धर्मिग्राहकमानबाधलक्षणो वाऽबोधकत्वलक्षणो वेत्येवं न कश्चिद्दोष इत्यर्थः ॥ उक्तदोष इति । स्वरूपानुपस्थितिनिबन्धनैक्यबोधनानुपपत्तिरूप

इत्यर्थः । ननु सर्वज्ञत्वादीनामनुपादाने कुतो न ब्रह्मेति ज्ञानं येन ब्रह्माहमस्मीति बोधानुपपत्तिर्बोध्यस्य स्यादित्यत आह **सर्वज्ञत्वादेरिति । अपरथा ज्ञानासंभवादिति** । स्वरूपमात्रस्य वा तत्त्वादिविशिष्टस्य वोपजीव्यतायां बोध्यस्य ब्रह्माहमस्मीति ज्ञानासंभवादित्यर्थः ॥ **तथेदमपीति** । अन्यथा तत्रापि स्वरूपमात्रोपजीवनेन प्रवृत्तिर्न स्यादिति भावः । प्रतिज्ञामात्रस्यासाधकत्वाद्धेतुं वदन्नेन कंचिदित्येतद्व्याचष्टे **उक्तानुपपत्तेरेवेति** । स्वरूपमात्रस्य बुद्धावनारोहप्रयुक्तबोधानुपपत्तिरूपोक्तानुपपत्तेरेवेत्यर्थः ।

स०— **नोक्तदोष इति** । बुद्धावनारोहरूपो दोषो नास्तीत्यर्थः । **उक्तानुपपत्तेरिति** । स्वरूपमात्रस्य बुद्धावनारोहरूपोक्तानुपपत्तेरित्यर्थः ।

प०— **वाक्यद्वयमिति** । सर्वज्ञत्वादिलक्षणं विहाय स्वरूपस्यैवोपजीव्यत्वं चेत् ब्रह्मेति तत्कथं ज्ञेयमित्येकं वाक्यं । सर्वज्ञत्वादिलक्षणमित्यस्यार्थः **धर्मान्विहायेति** । शङ्कते **न ब्रूम इति** । अभिमुखत्वरूपत्वमादिपदार्थः ॥ **शिष्टं वाक्यमिति** । समग्रं वाक्यमित्यर्थः ॥ **नोक्तदोष इति** । तच्छब्देन ब्रह्मस्वरूपस्य बुद्धावनारोहलक्षणदोष इत्यर्थः ॥ **बोध्यस्येति** । शिष्यस्येत्यर्थः । एतस्मादित्यस्यार्थोऽपरथा ज्ञानासंभवादिति ॥ **उक्तानुपपत्तेरिति** । बुद्धावनारोहरूपानुपपत्तेरित्यर्थः ।

श्री०— **उक्तानुपपत्तेरेवेति** । नेदं रजतमिति ज्ञानं यथा स्वरूपमात्रमुपजीव्य प्रवृत्तमित्युक्तो दृष्टान्तो न सम्प्रतिपन्नः । तत्रापि धर्मं विहाय केवलस्य बुद्धावनारोह एवेत्युक्तानुपपत्तेरेवेत्यर्थः ।

**सु०— ननु यत्सर्वज्ञं तत्त्वमसीति न बोधनीयम् । किन्तु तत्त्वमसीत्येव । न चोक्तदोषः । तच्छब्दो ब्रह्म वदति । योग्यान्विताभिधायिनश्चशब्दाः । लक्षणं च ब्रह्मणाऽन्वेतुं योग्यम् । ततश्च तच्छब्देनैव व्यावृत्तस्य प्रतीतेरित्याशयवानाशङ्कते** सर्वेति ।

**अनु०**— सर्वलक्षणयुक्तं च स्वरूपं यदि भण्यते ॥

**चशब्दोऽवधारणे । भण्यते तच्छब्देन इति यदि भण्यते इत्यावृत्त्या योज्यम् । संप्रतिपत्तिमुत्तरमाह** अस्त्विति ।

अस्तु

**यत्परेणोक्तं तदस्त्वित्यर्थः ॥ प्रतिवाद्युक्तार्थाङ्गीकारे प्रतिज्ञाहानिः कथं न भवेदित्यत आह** न इति ।

नो नैव हानिः स्यात्

**अनभिमतप्रमेयाङ्गीकारे हि प्रतिज्ञाहानिः स्यात् । अनेन चाङ्गीकृतेन नोऽस्माकं (न प्रतिज्ञाहा) नैव हानिः स्यात् । परस्य धर्मिग्राहिविरोधो ह्यस्माभिरुच्यते । तत्परिहाराय परेण चेदमुदितम् । न चानेन तत्परिहृतम् । प्रत्युत दृढीकृतमिति भावः ।**

**किं प्रकृतप्रमेयाविरोधित्वमात्रेणेदमङ्गीक्रियते उत तथाभूतत्वेनेति जिज्ञासायामाह** स्वपक्षश्चेति ।

स्वपक्षश्चायमञ्जसा ॥

**अञ्जसेति नाभ्युपगममात्रेणेत्यर्थः ॥ तदुपपादयति** यस्मादिति ।

यस्मादन्वित एवार्थः शब्दानामपि सर्वशः ॥

**सर्वशोऽपीति संबन्धः । इत्येतत्सूत्रसामर्थ्येन प्रागुपपादितमिति शेषः ।**

**शे० — न बोधनीयमिति ।** येन सर्वज्ञत्वादिविशिष्टस्योपजीव्यत्वं स्यादिति भावः ॥ **न चेति ।** बोध्यस्य ब्रह्माहमस्मीति ज्ञानानुपपत्तिरूपोक्तदोष इत्यर्थः ॥ **ब्रह्म वदतीति ।** सर्वनाम्नां प्रकृतपरामर्शकत्वाद् ब्रह्मणश्च प्रकृतत्वादिति भावः । तथाऽपि प्रकृतमात्रपरामर्शकतच्छब्देन व्यावृत्त-ब्रह्मानुपस्थित्या कथं बोध्यस्य ब्रह्माहमस्मीति ज्ञानं स्यादित्यतस्तस्य तदुपस्थापकतामुपपादयति **योग्येति ॥ अवधारण इति ।** समुच्चयस्य बाधितत्वादिति भावः । तच्छब्दस्य व्यावृत्तब्रह्मोपस्थापकताया मूला-रूढतामानेतुमपेक्षितं पूरयति **तच्छब्देनेति ।** वक्ष्यमाणदूषणमुक्तनिमित्तकमिति भावेनेतीत्यस्याध्याहारं भण्यत इत्यस्यावृत्तिं दर्शयन्नन्वयमाह **इति यदीति ।** हान्यभावमेवोपपादयति **परस्येत्यादि ।** साकाङ्क्षत्वप्रयुक्तवाक्याभासतां शेषपूरणेन परिहरति **इत्येतदिति ॥ सूत्रसामर्थ्येनेति ।** अथातो ब्रह्म-जिज्ञासेति सूत्रस्थातःशब्दसामर्थ्येन **उभयव्यपदेशात्त्वहिकुण्डलवदि**त्येतत्सूत्रसामर्थ्येन चेत्यर्थः ।

**स०— सूत्रसामर्थ्येनेति ।** 'अथातो ब्रह्मजिज्ञासे'ति सूत्रस्थातःशब्दसामर्थ्येनेत्यर्थः । यद्वा 'परमतःसेतून्माने'ति सूत्रसामर्थ्येनेत्यर्थः ।

**प०— ब्रह्म वदतीति ।** पूर्वत्र तस्यैव सदेवेति सच्छब्देन प्रकृतत्वादिति भावः । इत्या-वृत्त्येत्युपलक्षणम् । तच्छब्देतिशब्दाध्याहारेणेत्यपि ध्येयम् । तच्छब्देन सर्वलक्षणयुतं ब्रह्म भण्यते इति यदि त्वया भण्यत इत्यर्थः ॥ **प्रतिज्ञाहानिरिति ।** विप्रतिपन्नप्रमेयाङ्गीकाररूपनिग्रहस्थानप्रसङ्ग इत्यर्थः ॥ **इदमुदितमिति ।** तच्छब्दो हीत्यादिकमुदितमित्यर्थः ॥ **तदिति ।** धर्मिग्राहकविरुद्धत्व-मित्यर्थः । सर्वज्ञ इत्यनन्तरं अध्याहार्यमपौनरुक्त्याय वा न्यूनतापरिहाराय वाह **इत्येतत्सूत्रेति ।** भक्तिपादे उभयव्यपदेशादिति सूत्रसामर्थ्येन प्राप्तमेतत्प्रमेयं 'तच्च नाभिहितान्वयः । यदाशेषविशेषाणा-मुक्तिः सामान्यतो भवेदि'त्यादिनोपपादितमित्यर्थः ।

या० — **ब्रह्म वदतीति** । ब्रह्मणः प्रकृतत्वादिति भावः ॥ **सूत्रसामर्थ्येनेति** । उभय-व्यपदेशात्त्वहिकुण्डलवदित्येतत्सूत्रसामर्थ्येनेत्यर्थः ।

श्री० — **उक्तदोष इति** । तथाऽपि बोद्धयस्येत्यादिनोक्तदोष इत्यर्थः । **व्यावृत्तस्य** वस्तुनः ।

**सु० — किञ्चास्मिन्नपि पक्षे ब्रह्मणो बुद्धावनारोहस्तदवस्थ एव । यतस्तदादिशब्दाः सामान्यत एव योग्यान्वितं ब्रुवते । सर्वज्ञादिशब्दा एव विशेषतः । तथाऽनुभवात् । न च सामान्यतोऽन्विताभिधायिना व्यावृत्तप्रतीतिरित्याशयवानाह** विशेषेति ।

अनु० — विशेषसामान्यतया स्वरूपमखिलं भवेत् ॥

**अखिलं योग्यान्वितं स्वरूपं विशेषसामान्यतया शब्दबोध्यं भवेत् ।**

शे० — ननु विशेषसामान्यतयेत्युत्तरवाक्यमनर्थकम् । न च सर्वपदार्थानां सामान्यविशेषतया शब्दबोध्यत्वव्युत्पादनार्थत्वान्न तदिति वाच्यम् । तद्व्युत्पादनस्याप्यनर्थकत्वात् । न च तदादिशब्दानां सामान्यतोऽन्विताभिधायित्वेन सर्वज्ञत्वादिव्यावृत्तवस्तुव्यवस्थापकत्वाभावात्तदनुपस्थितेर्बोध्यस्य ब्रह्माहमस्मीति बोधानुपपत्तिसमर्थनार्थत्वान्न तदिति वाच्यम् । अत्र पक्षे तद्बोधनानुपपत्तेरनुद्भावितत्वेन तत्समर्थनार्थत्वायोगादित्यतोऽस्मिन्नपि पक्षे तदनुपपत्तेरभिप्रेतत्वान्न तत्समर्थनपरोत्तरग्रन्थवैयर्थ्यमित्यभिप्रेत्यात्र पक्षे तदनुपपत्तिदूषणान्तरमुद्भाव्य तदुपपादकतयोत्तरग्रन्थं सङ्गमयति **किञ्चेति** ॥ **सामान्यत एवेति** । यद्यपि तदादिशब्दानां सार्वज्ञादिपदसमभिव्याहृतानां विशेषत एव योग्यान्विताभिधायकत्वं तथाऽपि पदान्तरासमभिव्याहृतानां न तदिति भावेनेयमुक्तिरिति भावः ॥ **विशेषत इति** । यद्यपि सर्वज्ञादिपदानामपि पदान्तरासमभिव्याहृतानां न विशेषतोऽन्विताभिधायकत्वमस्ति तथाऽपि पदान्तरसमभिव्याहृतानां तदस्तीत्याशयेनेयमुक्तिरिति भावः । उभयत्रापि नियामकमाह **तथेति** । असमभिव्याहृतानां सामान्यतः समभिव्याहृतानां च विशेषतो योग्यान्विताभिधायकत्वस्यानुभवादित्यर्थः । अस्त्वेवं ततः किमित्यत आह **न चेति** । तत्कथं बोध्यस्य ब्रह्माहमस्मीति बुद्धिः स्यादिति शेषः । नन्वत्र सर्वस्य विशेषसामान्याक्रान्तत्वमुच्यते न तु सामान्यविशेषतया शब्दबोध्यत्वं तत्प्रत्यायकाभावात् । तत्कथमनेनोक्तार्थसिद्धिरित्यतोऽपेक्षितं पूरयन्नेव संबन्धमाह **अखिलमिति** ॥ **विशेषसामान्यतयेति** । तदादिशब्दैः सामान्यतः सर्वज्ञादिशब्दैर्विशेषतश्चेत्यर्थः ।

प० — **शब्दबोध्यमिति** । शेषोक्तिरियम् ।

या० — **तदादिशब्दा इति** । सर्वज्ञादिपद(।)समभिव्याहृता इति शेषः ॥ **सर्वज्ञादिशब्दा एवेति** । तदादिशब्दसमभिव्याहृता इति शेषः ।

सु० —**अन्विताभिधानमात्रमङ्गीक्रियत एव । तच्चैकस्य पदस्य सामान्यत एव न विशेषत इति न बुद्धौ ब्रह्मारोहः । यदि च विशेषतस्तदा धर्मिग्राहिविरोधस्तदवस्थ एवेति समुदायार्थः ।**

**केचिन्मायावादिनोऽन्विताभिधानमङ्गीकुर्वते विज्ञानघनादय इति नाप्राप्तशङ्केयम् ।**

शे० — 'नन्वस्तु नो नैव हानिः स्यादि'ति तत्पदस्य सार्वज्ञादिव्यावृत्तब्रह्मोपस्थापकत्वस्य स्वसम्प्रतिपन्नत्वमुक्तं तदयुक्तम् । पदानां सामान्यतोऽन्विताभिधायित्वेऽपि विशेषतस्तदभावेन तत्पदस्य सार्वज्ञादिव्यावृत्तब्रह्मोपस्थापकतायाः स्वमतेऽभावात् । यच्च सामान्यविशेषतयेति तदादिपदानां सामान्यतोऽन्विताभिधायकत्वमेव । सर्वज्ञादिशब्दानामेव विशेषतोऽन्विताभिधायकत्वमिति वैषम्यमुपवर्णितम् । तदप्ययुक्तम् । पदमात्रस्य सामान्यतोऽन्विताभिधायकत्वस्य सिद्धान्तत्वेन सर्वज्ञादिशब्दानां विशेषान्विताभिधायकत्वकथनस्य तद्विरुद्धत्वात् । न च समभिव्याहृतानां तेषां विशेषतोऽन्विताभिधायित्वाभिप्रायेणेयमुक्तिरिति न सिद्धान्तविरोध इति वाच्यम् । तथा सति तादृशानां तदादिपदानामपि तदभिधायकत्वेन तेषां सामान्यान्विताभिधायकत्वोक्तेरश्लिष्टत्वप्रसङ्गात् । न चासमभिव्याहृततदादिशब्दाभिप्रायेणेति वाच्यम् । तथा सति असमभिव्याहृतसर्वज्ञादिपदानामपि सामान्यतोऽन्विताभिधायकत्वप्रसङ्गेनोक्तवैषम्यानुपपत्त्यपरिहारात् । न हि तदादिपदमसमभिव्याहृतमेव, सर्वज्ञादिपदं च समभिव्याहृतमेवेति नियन्तुं शक्यते । येन तत्सामान्यान्विताभिधाय्येवेदं च विशेषान्विताभिधायीति सिद्ध्येत् । कथं चात्र पक्षे ब्रह्माहमस्मीति बुद्ध्यभावप्रसञ्जनम् । सार्वज्ञादिव्यावृत्तब्रह्मस्वरूपस्य तदादिपदेनानुपस्थितौ प्रागुक्तधर्मिग्राहकविरोधानुपपत्तिप्रसङ्गात् । तदनुरोधेन तदादिपदानां विशेषोपस्थापकतया तद्बुद्धिसंभवादित्यतोऽस्त्वित्यादिग्रन्थस्यान्विताभिधायित्वमात्रस्य स्वयं सम्प्रतिपन्नताकथनपरत्वेन विशेषान्विताभिधानस्य तत्परत्वासंभवात् । विशेषसामान्यतयेत्यादिवैषम्योपदर्शनपरग्रन्थस्य चैकं पदं सामान्यतोऽन्वितमेवाभिधत्ते न विशेषत इत्येतत्परत्वेन पदमात्रस्याप्यसहायस्य सामान्यतोऽन्विताभिधायकत्वसिद्ध्या सिद्धान्तविरोधाभावात्सामान्यतोऽन्विताभिधायिना तत्पदेन सार्वज्ञादिव्यावृत्तब्रह्मस्वरूपानुपस्थित्याऽत्र पक्षे ब्रह्माहमस्मीति बुद्ध्यभावप्रसङ्गस्यापि श्लिष्टत्वात् । वस्तुतः सामान्यान्विताभिधायित्वेऽपि तत्पदस्य परोक्तविशेषान्विताभिधानवादाङ्गीकारवादेन धर्मिग्राहिविरोधकथनस्याप्युपपन्नत्वान्न कश्चिद्दोष इत्याशयवान् 'अस्तु नो नैव हानिः स्यादि'त्यादिग्रन्थसमुदायार्थमाह **अन्विताभिधानमात्रमङ्गीक्रियत एवेत्यादिना** ।

व्यवहारे भट्टनय इति वदतो मायावादिनोऽभिहितान्वयवादित्वेनान्विताभिधानवादित्वाभावादे-तच्छङ्काग्रन्थस्यासदनुवादतामाशङ्क्य परिहरति **केचिदिति** ।

प० — व्यवहारे भट्टनय इत्यभ्युपगमात् विशेषान्विताभिधानमपि मयोपेयत इति वादिनं प्रति सर्वलक्षणेत्यादिश्लोकद्वयस्य निष्कृष्टार्थमाह **अन्विताभिधानेति** । अखण्डवादिमते अन्विताभिधाना-भावात्कथमेवं सर्वेत्यादिशङ्केत्यत आह **केचिदिति** । विज्ञानघन इति कस्यचिन्नाम ।

**सु० — व्यावर्तकधर्मैर्व्यावृत्तस्यैवोपजीव्यत्वमिति यदुक्तं तन्नास्ति । बाधकज्ञानेषु तदभावात् । न च तत्रापि व्यावृत्तस्यैवोपजीव्यत्वं न स्वरूपमात्रस्येत्युक्तमिति वाच्यम् । पूर्वस्मिन्भ्रमज्ञाने व्यावृत्तत्व(स्य)स्यैवासिद्धत्वात् । सिद्धौ च भ्रमत्वानुपपत्तेः । 'तन्मात्रमुपजीव्य ही'त्युक्तविरोधाच्चेत्यत आह** पुरोवर्तित्वेति ।

**अनु०** — पुरोवर्तित्वपूर्वाणि देवदत्तादिकभ्रमे ॥
व्यावर्तयन्ति तद्रूपं चैत्रमात्राद्भिनैव तु ॥

**देवदत्तादौ यश्चैत्रादिभ्रमस्तत्र पुरोवर्तित्वपूर्वाणि विशेषणानि देवदत्तादिस्वरूपं देवदत्ता-देरविदितत्वाच्चैत्रमात्राद्भिनैवापुरोवर्त्यादिभ्यो व्यावर्तयन्ति यस्मात्तस्माद्बाधकज्ञानं व्यावृत्तमेवोप-जीवतीति नियमो नानुपपन्नः । नापि भ्रमानुपपत्तिः । आरोप्यव्यावृत्तेरनङ्गीकरणात् । तन्मात्रशब्देन चारोप्यमात्रव्यावर्तनान्नोक्तविरोधोऽपीति भावः ।**

**नन्वनेन नात्यन्तव्यावृत्तिरु(पजीव्यत्वो)पयोगिनी । किन्तु व्यावृत्तिमात्रमित्युक्तं भवति । तत्प्रकृतेऽप्यस्ति । तत्त्वादिना ब्रह्मणोऽपि व्यावृत्तत्वेनोपजीव्यत्वसंभवादिति चेन्न । तावन्मात्रेण बोध्यस्यापि ब्रह्मास्मीति ज्ञानानुपपत्तेरुक्तत्वात् ।**

**शे०** — ननु पुरोवर्तित्वपूर्वाणीत्युत्तरग्रन्थोऽनर्थकः । न च पुरोवर्तित्वादिविशेषणव्यावृत्त-देवदत्तस्वरूपस्य बाधकज्ञाने उपजीव्यत्वप्रदर्शनार्थं स इति वाच्यम् । तत्प्रदर्शनस्य प्रकृतासङ्गतत्वात् । अनर्थकत्वाच्च । न च देवदत्तस्वरूपमात्रस्यैवोपजीव्यत्वेन व्यावर्तकधर्मैर्व्यावृत्तस्वरूपस्य तस्य बाधक-ज्ञानेऽनुपजीव्यत्वेन कथं ब्रह्मेति तज्ज्ञेयमिति पूर्वग्रन्थोक्तव्यावर्तकधर्मैर्व्यावृत्तस्योपजीव्यत्वमित्युक्तनियम-स्यानुपपत्तिशङ्कायाः पुरोवर्तित्वादिव्यावृत्तदेवदत्तस्वरूपस्योपजीव्यत्वकथनेन विरोधपरिहारार्थत्वान्नानर्थक्य-मिति वाच्यम् । देवदत्तत्वादिव्यावृत्तदेवदत्तादिस्वरूपस्यैव बाधकज्ञाने उपजीव्यतासंभवेन तच्छङ्काया एवानुदयात् । कथञ्चिदुदयेऽपि वा देवदत्तत्वादिव्यावृत्तदेवदत्तादिस्वरूपपरित्यागेन पुरोवर्तित्वादि-व्यावृत्तस्वरूपस्योपजीव्यत्वकल्पनानर्थक्यादित्यतो देवदत्तत्वादिव्यावृत्तदेवदत्तस्वरूपस्य बाधकज्ञानोप-

जीव्यत्वानुपपत्तिकथनेनोक्तनियमानुपपत्तिशङ्कामुत्थाप्य तदुपपादकत्वेनोत्तरग्रन्थं सङ्गमयति **व्यावर्तकधर्मैर्व्यावृत्तस्येति** । देवदत्तादिभ्रमशब्देन चैत्रधर्मिको देवदत्तत्वादिविषयो भ्रमो न ग्रहीतुं शक्यः । तथा सति पुरोवर्तित्वादिव्यावृत्तचैत्रस्वरूपस्यैवोपजीव्यत्वप्रसक्त्या पुरोवर्तित्वादिव्यावृत्तदेवदत्तादिस्वरूपस्य तदभावेन चैत्रमात्राद्भिन्नैव तद्रूपं व्यावर्तयतीति तथोक्तेरलग्नत्वापातादिति भावेन देवदत्तादिधर्मिकचैत्रत्वप्रकारकभ्रमपरतया तं व्याचष्टे **देवदत्तादाविति** । मूले चैत्रमात्रादिति चैत्रव्यावृत्तिरुक्ता तत्र हेतुमाह **देवदत्तत्वादेरिति** । ननु पुरोवर्तित्वादिव्यावृत्तस्योपजीव्यत्वेन तन्मात्रमुपजीव्य हीति स्वरूपमात्रस्योपजीव्यत्वोक्तिविरोध इत्यत आह **तन्मात्रेति** ॥ **आरोप्यमात्रेति** । यद्रजतत्वादिकं तद्विशिष्टमुपजीव्य बाधकज्ञानप्रवृत्तिरित्यर्थानङ्गीकारादित्यर्थः ।

**प०**— शङ्कते **व्यावर्तकेति** ॥ **इत्युक्तविरोधाच्चेति** । 'भ्रमेऽप्यभ्रमभागोऽस्ति तन्मात्रमुपजीव्य हि । बाधकज्ञानवृत्तिः स्यादि'त्यत्राभ्रमभागसिद्धधर्मिस्वरूपमात्रमुपजीव्य बाधस्योत्थानमित्युक्तेरिति भावः ॥ **बोध्यस्येति** । ज्ञातुरित्यर्थः ॥ **उक्तत्वादिति** । 'कथं ब्रह्मेति तज्ज्ञेयमि'त्यादिवाक्यव्याख्यावसरे उक्तत्वादित्यर्थः ।

**श्री०**— ननु तन्मात्रमुपजीव्य हीति केवलमविशिष्टस्य स्वरूपमात्रस्यैवोपजीव्यत्वोक्तेस्तद्विरोध इत्यत आह **तन्मात्रशब्देनेति** ॥ **आरोप्यमात्रेति** । आरोप्यं यद्रजतत्वादिकं तद्विशिष्टमुपजीव्य बाधकज्ञानप्रवृत्तिरित्यर्थानङ्गीकारादित्यर्थः । पूर्वज्ञाने आरोप्यरजतादिव्यावर्तकधर्मवैशिष्ट्यं न प्रतीयते किन्नाम तत्तदितरधर्मवैशिष्ट्यमेव । तादृशमेव धर्मीकृत्योत्तरज्ञानं प्रवर्तते । न केवलं स्वरूपं धर्मीकृत्य तस्य बुद्धावनारोहादिति पूर्ववाक्याभिप्राय इति भावः ॥ **अत्यन्तव्यावृत्तिरिति** । आरोप्यादपि व्यावृत्तिरित्यर्थः ॥ **व्यावृत्तत्वेनेति** । अतस्मादित्यर्थः ।

**सु०— दोषान्तरं चाह** ब्रह्मण इति ।

**अनु०**— ब्रह्मणो निर्विशेषत्वाद्व्यावर्तयति किं पुनः ॥

**ब्रह्मणः पुनरिति संबन्धः । किं कर्तृ, ब्रह्म व्यावर्तयति, न किमपि ।**

**तत्त्वादीनामङ्गीकारेऽपि दोषमाह** यस्मादिति ।

यस्मात्कस्माच्चिदप्यर्थात्तावच्चेत्सिद्धसाधनम् ॥

**तत्त्वादि विशेषणेन यस्मात्कस्माच्चिदप्यर्थात्तत्त्वादिरहितात् । तावद्व्यावृत्तं चेदुपजीव्य । त्वमसीति बोध्यते । तदेदं वाक्यं सिद्धसाधनं ज्ञातस्यैव ज्ञापकं स्यात् । बोध्येनास्यार्थस्य प्रागेव विदितत्वात् । तथा चाशास्त्रं स्यात् ।**

**शे०** — मूले किंशब्दः कर्तृवाची ब्रह्मेति कर्मवाचकं पदमध्याहार्यमिति भावेन किंशब्दमनूद्य व्याकुर्वन्नेवान्वयमाह **किं कर्त्रित्यादि** । व्यावर्तकधर्माभावेन व्यावृत्तत्वानुपपत्तेरात्यन्तिकव्यावृत्तत्वाभाववद्यत्किञ्चिद्व्यावृत्तत्वस्याप्यभावान्न तदाश्रयणेनाप्युपजीव्यत्वसमर्थनमिति भावः । ननु ब्रह्मणो निर्विशेषत्वेन तत्र तत्त्वादिधर्माणामप्यभावान्न तैरपि व्यावृत्तत्वस्योपजीव्यत्वमित्युक्तम् । तत्कथं तत्त्वादिना व्यावृत्तमुपजीव्य त्वमसीति बोधने वाक्यस्य ज्ञातज्ञापकत्वकथनमुत्तरत्रेत्यतोऽव्यावृत्तत्वकथनस्य वस्तुगतिमनुरुध्य प्रवृत्तत्वाद्व्यावृत्तमुपजीव्य त्वमसीति बोधने सिद्धसाधनकथनस्य तत्त्वादिधर्माङ्गीकारवादेन प्रवृत्तत्वान्न पूर्वोत्तरविरोध इति भावेनाङ्गीकारवादेनोत्तरग्रन्थं योजयति **तत्त्वादीनामिति** । साकाङ्क्षत्वाद्वक्ष्यमाणज्ञातज्ञापकत्वोपयोग्यर्थजातं पूरयन्वाक्यं व्याचष्टे **तत्त्वादिविशेषणेनेति** । सिद्धसाधनत्वस्याप्यनुमानदूषणत्वेन वाक्यदोषत्वाभावात्कथं तदुक्तिरित्यत आह **ज्ञातस्यैवेति** । तदेवोपपादयति **बोध्येनेति** । अस्तु वाक्यस्य ज्ञातार्थज्ञापकत्वं को दोषः । न चाप्रामाण्यम् । याथार्थ्यमेव प्रामाण्यमित्यङ्गीकारेण तदप्रसङ्गादित्यत आह **तथा चेति** । वक्तृश्रोत्रोरभिमतमनन्यसाध्यं फलमधिकृत्य तद्धेतुभूतं प्रमाणान्तराप्राप्तमर्थं प्रतिपादयतां वाक्यानां समूहस्यैव शास्त्रत्वेन ज्ञातज्ञापकस्य तदयोगादिति भावः ।

**या०** — **किं कर्त्रिति** । किंशब्दः कर्तृवाचीत्यर्थः । ब्रह्मेति कर्मवाचकं पदमध्याहृत्यान्वयं दर्शयति **ब्रह्म व्यावर्तयतीति** । उक्तश्चेत्यनन्तरमभेदेऽपि विशेषबलेनेति शेषः ।

**श्री०** — **बोध्येनेति** । उपदेश्येन श्वेतकेतुनेत्यर्थः ॥ **अशास्त्रं स्यादिति** । अपूर्वताविरहादिति भावः ।

**सु०** — **मा भूत्तत्त्वादिना व्यावृत्तं ब्रह्मोपजीव्यम् । विज्ञानमानन्दं ब्रह्मेत्यादिश्रुत्या ब्रह्मलक्षणत्वेनोक्तेन चिन्मात्रत्वादिना तु भविष्यतीत्यत आह** चिन्मात्रत्वं चेति ।

**अनु०** — चिन्मात्रत्वं च नैवेष्टमविशेषत्ववादिनः ॥

**मात्रशब्देन चितः सर्वविषयत्वादिकं व्यावर्तयति । आनन्दत्वादेरप्युपलक्षणमेतत् । ब्रह्मण इति शेषः ॥ चिन्मात्रत्वादिकं न ब्रह्मणो भिन्नम् अतो निर्विशेषत्वाविरोधात्तदङ्गीक्रियत इत्यत आह** तावन्मात्रमिति ।

तावन्मात्रं यदीष्टं स्यात्सर्वज्ञत्वं कुतो न तत् ॥

**तत्तर्हि तस्यापि श्रुतत्वादभिन्नत्वाच्चेति भावः । अभेदे कथं लक्षणत्वमिति चेत् । समं विज्ञानादावपि । उक्तश्च लक्ष्यलक्षणप्रकारो लक्षणसूत्र इति ।**

**शे०— मा भूत्तत्त्वादिनेति** । तत्त्वादिधर्माणामनभ्युपगमादभ्युपगमेऽपि तद्व्यावृत्तस्योपजीव्यतायां ज्ञातज्ञापकत्वप्रसङ्गादिति भावः ॥ **चिन्मात्रत्वादिनेति** । यद्यप्येतदुक्तन्यायेनैव परिहृतमत एवाविशेषत्ववादिनेत्यत्राप्युक्तदोषाभिधानं तथाऽपि गूढाभिसन्धेरियमाशङ्काऽभिसन्ध्युद्घाटनं तु 'तावन्मात्रं यदीष्टं स्यादि'त्युत्तरग्रन्थ एव स्पष्टम् । चित्त्वं चेत्येतावता पूर्तेर्मात्रशब्दोऽनर्थक इत्यत आह **मात्रशब्देनेति** । आदिपदेन सर्वाज्ञानविरोधित्वादिपरिग्रहः । ननु यदि ब्रह्मणश्चिन्मात्रत्वं स्यात्तर्हि सर्वज्ञत्वादिकमपि स्यादिति प्रसङ्गो निर्मूलः । दृष्टान्ताभावेन व्याप्त्यसिद्धेरित्यतो विशेषव्याप्त्यभावेऽपि यदविशिष्टस्येत्यविशेषलक्षणसामान्यव्याप्तेः सत्त्वान्न निर्मूलत्वमिति भावेनाविशेषमुपपादयति **तस्यापि श्रुतत्वादित्यादिना** ॥ **कथमिति** । प्रसिद्धेन ह्यप्रसिद्धं लक्षणीयम् । न च तदेव तदैव प्रसिद्धमप्रसिद्धं चेति युज्यत इति भावः ॥ **उक्तश्चेति** । समर्थितश्चेत्यर्थः । अभेदेऽपि विशेषबलेनेति शेषः ॥ **लक्षणसूत्र इति** । 'अतोऽनन्तगुणं ब्रह्मणि भेदमपि भण्यते' इत्यादिनेति शेषः ।

**स०— मात्रशब्देनेति** । सर्वविषयत्वमादिपदोक्तम् सर्वविषयव्यवहारजनकत्वं चेत्येतन्मात्रशब्दप्रयोजनमिति भावः ।

**प०— उक्तश्चेति** । सविशेषाभेदाङ्गीकारेण जन्मादिसूत्रानुव्याख्याने उक्त इत्यर्थः ।

**या०— लक्षणसूत्र इति** । लक्षणसूत्रव्याख्यावसर इत्यर्थः ॥

---

**श्री०— व्यावर्तयतीति** । अन्यथा मिथ्याभूतसर्वापेक्षत्वेन(सापेक्षत्वेन) मिथ्यात्वापातादिति भावः ।

**सु०— श्रुतत्वसाम्येऽपि चिन्मात्रत्वादिकमेव धर्मिणि निवेश्यते । अविरुद्धत्वात् । न सर्वज्ञत्वादिकं विरुद्धत्वात् । यथा नेदं रजतमिति ज्ञानेऽविरुद्धपुरोवर्तित्वाद्युपेतस्य धर्मित्वं न विरुद्धरजतत्वाद्युपेतस्येत्यत आह** चिन्मात्रेति ।

अनु०— चिन्मात्राभेदसाध्येऽपि

**चिन्मात्रेणाभेदश्चिन्मात्राभेदः सः साध्यः प्रतिपाद्यो यस्य तत्तथोक्तम् । तत्त्वमस्यादिवाक्ये चिन्मात्राभेदसाध्येऽङ्गीकृतेऽपि तद्वाक्यं सिद्धसाधनं भवेदित्यन्वयः । तत्कथमित्यत आह** सिद्धमिति ।

सिद्धं तत्प्रतिवादिनः ॥

**तच्चिदैक्यं प्रतिवादिनो बोध्यस्य यत इति शेषः । कथं सिद्धमित्यत आह** स्वेति ।

स्वाभेदाङ्गीकृतेरेव

**स्वस्य स्वेनाभेदाङ्गीकृतेः । एवशब्दस्य सिद्धमिति पूर्वेण संबन्धः । स्वाभेदाङ्गीकृतौ चिदभेदः कथं सिद्ध इत्यत आह** चित्त्वमिति ।

चित्त्वं स्वस्यापि यन्मतम् ॥

**स्वस्य बोध्यस्य यद्यस्मान्मतं सम्मतम् ।**

**एतदुक्तं भवति । विरोधभयात्सर्वज्ञत्वादिविशिष्टं न धर्मीक्रियते इति वदता चिदानन्दरूपमपि न धर्मीकर्तव्यम् । ज्ञातज्ञापनप्रसङ्गात् । विरोध इव ज्ञातज्ञापनस्याप्यशास्त्रताहेतुत्वे विशेषाभावात् । चिन्मात्रं त्वदतिरिक्तं नास्तीति वाक्यार्थ इति चेन्न । अप्रतिभासनात् । गत्यन्तराभावादित्थं कल्प्यत इति चेत्(न्न) । सूत्रकृतैवार्थान्तरस्योक्तत्वात् ।**

**शे० — श्रुतत्वसाम्येऽपीति ।** तथा च विरुद्धत्वाविरुद्धत्वाभ्यां वैलक्षण्यादविशेषासिद्धेः प्रशिथिलमूलत्वमेवेति भावः ।

नन्वेतावताऽपि विरुद्धत्वान्न सर्वज्ञत्वविशिष्टस्य धर्मित्वमविरुद्धत्वाच्च चित्त्वादिविशिष्टस्य तदिति वैषम्यशङ्कायाः कः परिहारः । न च यदि न सर्वज्ञत्वविशिष्टस्य धर्मित्वं तर्हि चित्त्वादिविशिष्टस्यापि धर्मित्वं न स्यादिति चित्त्वादिविशिष्टस्य धर्मित्वप्रसङ्ग एव परिहार इति वाच्यम् । अत्रापि प्रसङ्गमूलभूतव्याप्तेरसिद्ध्या तदप्रवृत्तेर्दृष्टान्ताभावेन यत्र सर्वज्ञत्वादिविशिष्टस्याधर्मित्वं तत्र चित्त्वादिविशिष्टस्याधर्मित्वमिति विशेषव्याप्त्यभावेन विरुद्धत्वाविरुद्धत्वाभ्यां वैलक्षण्येन विशेषेणाविशेषव्याप्तेरप्यसंभवेन प्रसङ्गमूलभूतव्याप्त्यसिद्ध्या तदनुत्थानादित्यतो विरुद्धत्वाविरुद्धत्वाभ्यां वैलक्षण्येऽपि विरुद्धस्य धर्मितायाः स्वबोधकशास्त्रस्याशास्त्रत्वहेतुत्ववज्ज्ञातार्थस्य धर्मितायाः स्वबोधकशास्त्रस्याशास्त्रत्वहेतुतासद्भावेनाशास्त्रताहेतुत्वाविशेषलक्षणव्याप्त्याश्रयणेनोक्तप्रसङ्गसमुत्थानसंभवादित्याह **एतदुक्तं भवतीति** । ननु चित्त्वादिविशिष्टस्य धर्मित्वेऽपि न तद्बोधकशास्त्रस्य ज्ञातज्ञापकत्वं प्रसज्यते । न ह्यत्र चिदभेदो बोध्यते । येन बोध्यस्य पूर्वमेव तज्ज्ञानसिद्धेः सिद्धसाधनता स्यात्किं नाम चिन्मात्रं त्वदतिरिक्तं नास्तीति । न चायमर्थो बोध्येन प्रागवगत इति न चित्त्वादिविशिष्टस्य धर्मिताया अशास्त्रत्वहेतुत्वमिति कथं तदविशेषोऽपीति शङ्कते **चिन्मात्रमिति ॥ अप्रतिभासनादिति** । तत्प्रत्यायकपदाभावान्नायं वाक्यार्थः । किन्तु चिदभेद एवेति सिद्धसाधनत्वमेवेति भावः । चिदभेदस्य सिद्धसाधनत्वेन वाक्यार्थत्वाभावादस्याप्यतदर्थत्वे निरर्थकत्वेनाप्रामाण्यप्रसङ्गादपौरुषेयस्य च तदयोगादुक्तार्थपरत्वसिद्धिरित्याशङ्कते **गत्यन्तरेति ॥ अर्थान्तरस्येति** । सादृश्यादिरूपार्थान्तरस्येत्यर्थः ॥ **उक्तत्वादिति** । 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदि'ति पृथगधिकरण इति शेषः ।

प०— शङ्कते श्रुतत्वेति ।। इतिवाक्यार्थेति । तत्वमसीतिवाक्यस्य त्वदतिरिक्तं नेत्यर्थः ।। सूत्रकृतैवेति । वियत्पादे पृथगुपदेशादितिनये तद्गुणसारत्वात्तु तद्व्यपदेश इति सूत्रे सादृश्यरूपार्थान्तरस्योक्तत्वादित्यर्थः ।

या०— अर्थान्तरस्येति । तद्गुणसारत्वात्तु तद्व्यपदेश इत्यत्रेति शेषः ।

सु०— न विरोधभयाद्वयं सार्वज्ञादिकं धर्मिणि न निवेशयामः । किन्तु सर्वज्ञत्वादिकं (हि) न ब्रह्मणो भिन्नम् । नेह नानेत्यादिश्रुतिविरोधात् । नापि स्वरूपम् । तस्य वियदादिसर्वसापेक्षत्वात् । सर्वस्य च मिथ्यात्वात् । न हि तथाभूतस्य सत्यस्वरूपता संभवति । चिदानन्दादेस्तु ब्रह्मस्वरूपत्वे न काप्यनुपपत्तिरित्याशयवानाशङ्कते सर्वेति ।

अनु०— सर्वापेक्षतया सर्वज्ञत्वमित्येव तन्न हि ॥

इति चेत्

सर्वज्ञत्वं वर्तत इति शेषः । इतिशब्दो हेतौ । एवशब्दस्य तदेवेत्यनेन संबन्धः । न हि मिथ्येत्यर्थः ।। परिहरति चेतनत्वं चेति ।

चेतनत्वं च

यत्परसापेक्षं तन्न सदित्यङ्गीकारे ब्रह्मणश्चेतनत्वं च न स्यादित्यर्थः । कुत इत्यतो (ल्युट् प्रत्य) युप्रत्ययस्यानेकार्थत्वात्कर्तृवाचितां तावदुपादाय व्याचष्टे ज्ञत्वमिति ।

ज्ञत्वं

चेतनत्वं नाम तावज्ज्ञत्वमित्यर्थः । ततः किमित्यत आह नेति ।

न ज्ञेयवर्जितम् ॥

ज्ञत्वमिति वर्तते । किन्तु ज्ञेयसापेक्षमेव । ज्ञानक्रियां प्रति कर्तृत्वं खलु ज्ञत्वम् । सकर्मकक्रियावचनश्च जानातिः । अतः कर्मापेक्षक्रियाकर्तृत्वमपि सापेक्षमेव ।

शे०— सर्वस्य चेति । ततश्च तत्सापेक्षत्वात्सर्वज्ञत्वस्यापि मिथ्यात्वमिति भावः । तथाभूतस्य मिथ्याभूतस्य ॥ न काऽपीति । ब्रह्मणो भिन्नत्वानभ्युपगमान्न नेह नानाऽस्तीति विरोधः सर्वनिरपेक्षत्वेन मिथ्यात्वाभावान्न सत्यरूपब्रह्मस्वरूपत्वानुपपत्तिरित्येवं न काऽपीत्यर्थः ।। युप्रत्ययस्येति । ल्युट्प्रत्ययस्येत्यर्थः । (चिती संज्ञानेऽस्माल्ल्युट् प्रत्यये युवोरनाकाविति युकारस्यानादेशे इकारस्यैकाररूपगुणे च सति चेतनेति रूपम् । ईकारोऽनुबन्धार्थः । चित् इत्येवं धातुः) ॥ अनेकार्थत्वादिति । कर्तृभावरूपानेकार्थत्वादित्यर्थः । यद्यपि ल्युट्प्रत्ययस्य भावकरणाधिकरणरूपानेकार्थत्वमेव 'ल्युट् भावे करणा-

धिकरणयोश्चे'ति स्मरणान्न पुनः कर्तृत्वं तदस्मरणात् । ततश्च न तस्य कर्तृभावरूपानेकार्थत्वम् । तथाऽपि कृत्यल्युटो बहुलमिति बहुलग्रहणेन/ कर्त्रर्थत्वमप्यस्याविकलमेवेति भावेनैवमुक्तम् । अत एव माधवीय-धातुवृत्तौ चिती संज्ञान इत्यस्मात्कर्तर्येव बाहुलकात् ल्युट्प्रत्ययमुत्पाद्य चेतनशब्दनिष्पादनं कृतं सङ्गच्छत इति ध्येयम् ॥ **तावदिति** । 'चेतनस्य स्वभावो हि चैतन्यमिति गीयते' इत्यादिना चेतनशब्दस्य भावार्थताया अपि वक्ष्यमाणत्वात्तावच्छब्दः ।

प०— न हीति तदेवेत्यन्वेति । तदेव न हि सर्वज्ञत्वमेव नहीत्यस्यालीकत्वोक्तिपरत्वभ्रम-निरासाय तात्पर्यार्थमाह **मिथ्येत्यर्थ इति** ॥ **ल्युट्प्रत्ययस्येति** । भावे करणयोश्च कृत्यल्युटो बहुलमिति भावकरणाधिकरणकर्तृकर्माद्यनेकार्थत्वादित्यर्थः । **कर्तृवाचितामिति** । चिती संज्ञान इति धातोः कृत्यल्युटो बहुलमिति बहुलग्रहणेन कर्तर्यपि ल्युट्प्रत्यये हलन्त्यं लशक्वतद्धित इति अनुबन्ध-द्वयलोपे युवोरनाकावित्यनादेशे पुगन्तेत्युपधागुणे चेतन इति सिद्धेरिति भावः । केचित्तु युप्रत्ययस्येति पाठमुपादाय नन्दिग्रहेतिसूत्रोक्तकर्त्रर्थकल्युप्रत्यये भावाद्यर्थकल्युट्प्रत्यये चानुगतयुप्रत्ययस्येत्यर्थ इत्याहुः ॥ **ज्ञानक्रियां प्रति कर्तृत्वं खलु ज्ञत्वमिति** । ज्ञा अवबोधन इति धातोः जानातीति कर्त्रर्थे इगुपध-ज्ञाप्रीकिरः क इति प्रत्यये आतो लोप इटि चेत्याकारलोपे ज्ञ इति रूपनिष्पत्तेरिति भावः ।

---

या० — **युप्रत्ययस्येति** । नन्द्यादिभ्यः कर्तरि विहितो यो ल्युः यश्च भावे करणाधिकरणयोश्च विहितो ल्युट्, तदुभयानुगतो यो युः सौत्रः युप्रत्ययशब्देन विवक्षितः तस्यैव कर्तृभावरूपप्रकृतानेकार्थ-तासंभवात् । अन्यस्योक्तानेकार्थस्य युप्रत्ययस्य शास्त्रेऽदर्शनात् । ल्युल्युटोरेकमात्रग्रहणे ल्युटः कर्तरि ल्योश्च भावेऽननुशासनादुक्तानेकार्थत्वासंभवात् । युच्प्रत्ययस्य च स्त्र्यधिकारे विहितस्यात्र ग्रहणा-संभवात् । औणादिकस्यापि युच्प्रत्ययस्य भावेऽननुशासनेनोक्तानेकार्थत्वासंभवात् । तस्मादुक्तप्रकारेणैव युप्रत्ययो वक्तव्य इति सम्प्रदायविदः ।

श्री०— इत्येवेत्येवकाराभिप्रायमाह **न विरोधभयादिति** ॥ तथा च सर्वापेक्षतया सर्वज्ञत्वं वर्तत इत्येव हेतोर्न विरोधभयादित्यर्थः तदेव सर्वज्ञत्वमेव । न हि । धर्मिणि निवेश्यते । न तु चित्त्वादिकम् । तस्य मिथ्याभूतसर्वसापेक्षताया अभावादिति मूलार्थो द्रष्टव्यः ॥ **युप्रत्ययस्येति** । चिती संज्ञानेऽस्माल्ल्युट्प्रत्यये युवोरनाकाविति युइत्यस्यानादेशे इकारस्य एकाररूपे गुणे च सति चेतनेति रूपम् ।

सु० – **तथाऽपि कुतश्चेतनत्वं न स्यादिति चेत् । ज्ञस्य ब्रह्मणो ज्ञेयं स्वयमेव वा स्यात्परं वा । नाद्य इत्याह** स्वेति ।

अनु० स्वज्ञेयत्वं च नैवासौ मन्यते सविशेषतः ॥

**चस्त्वर्थः** । असौ **मायावादी । कुतो न** मन्यत इत्यत आह सविशेषत इति । **सविशेषत्वप्रसङ्गात् । प्रत्यक् पराग्भावलक्षणो हि कर्तृकर्मभावो नैकत्रैकस्य युज्यते । यदि च स्यात्तदा भेदप्रतिनिधिना विशेषेण घटनीयः । अतो ब्रह्मणो** ज्ञत्वज्ञेयत्वयोरङ्गीकारे **विशेषोऽङ्गीकर्तव्यः स्यात् । निर्विशेषं च ब्रह्माङ्गीकृतमिति स्वज्ञेयत्वं न मन्यते । ततश्च परमेव ज्ञेयं** वक्तव्यम् । **तच्च मिथ्याभूतमिति कथं तदपेक्षं चेतनत्वं** सत्स्यादिति । एवं ज्ञत्वस्य ज्ञानसापेक्षत्वमपि **वक्तव्यम्** ।

शे० — स्वज्ञेयत्वे ब्रह्मणः सविशेषत्वप्रसङ्गं स्पष्टयति **प्रत्यगित्यादिना ॥ ज्ञानसापेक्षत्वमिति** । क्रियास्वातन्त्र्यरूपं हि कर्तृत्वं क्रियासापेक्षम् । तथा चात्र क्रियारूपं ज्ञानं किं स्वयमेव विवक्षितं किंवा परम् । नाद्यः । एकस्यैव ब्रह्मणः क्रियात्वकर्तृत्वयोर्निर्विशेषत्ववादिना वक्तुमशक्यत्वात् । नान्त्यः । तस्य मिथ्यात्वेन तदपेक्षकर्तृत्वरूपचेतनत्वस्य सत्त्वाभावप्रसङ्गादिति दूषणमुक्तमार्गेण शिष्यैरेव कर्तुं शक्यत्वादत्र न कृतमिति द्रष्टव्यम् ।

स० — **एवं ज्ञत्वस्येति** । ज्ञानरूपक्रियाकर्तृत्वं हि ज्ञत्वम् । तथा च ज्ञानस्यैवाभावे कर्तृत्वरूपं ज्ञत्वम् न ... ।

प० — **चेतनत्वमिति** । उक्तरूपज्ञत्वलक्षणं चेतनत्वं कुतो न स्यादित्यर्थः ॥ **एवं ज्ञत्वस्य ज्ञानसापेक्षत्वमपीति** । यथा चेतनत्वज्ञत्वस्य ज्ञेयसापेक्षत्वमुक्तं तथा ज्ञानक्रियां प्रति कर्तृत्वरूपत्वात् ज्ञत्वं ज्ञानसापेक्षमित्यपि मूले उपलक्षणतया वक्तव्यमित्यर्थः । ज्ञानसापेक्षत्वादात्मनो ज्ञत्वनिरासोऽपि, उक्तदिशा सविशेषत्वप्रसङ्गेन स्वरूपज्ञानकर्तृत्वमयुक्तम् परज्ञानकर्तृत्वं तु ज्ञानस्य मिथ्यात्वेन तत्कर्तृत्वरूपज्ञत्वमपि न हि, इति सुज्ञान इति भावः ।

या० — **ज्ञानसापेक्षत्वमपीति** । क्रियास्वातन्त्र्यरूपस्य कर्तृत्वस्य क्रियासापेक्षत्वादिति भावः । तथा चात्र क्रियारूपं ज्ञानं किं स्वयमेव विवक्षितं परं वा । नाद्यः । एकस्मिन्नेव क्रियाकर्तृभावस्य निर्विशेषवादिना वक्तुमशक्यत्वात् । नान्त्यः । तस्य मिथ्यात्वेन तदपेक्षस्य चेतनत्वस्य सत्त्वाभावप्रसङ्गादिति, तत्र दूषणमपि वक्तव्यमिति वाक्यशेषः ।

**सु०— किञ्चैवं** वदता **स्वरूपमात्रमुपजीव्यमित्यपि** वक्तुं न **शक्यते। तस्यापि स्वशब्देन परापेक्षताप्रतीतेरित्याह** स्वशब्दोऽपीति ।

**अनु०—** स्वशब्दोऽपि परापेक्षः

**परापेक्षः** परापेक्षस्यार्थस्य प्रतिपादकः । **कथमित्यत आह** तस्मादिति ।

तस्माद्व्यावृत्तिरेव हि ॥

स्वशब्दार्थ इति प्रोक्तः

**परस्मात्** । **हिशब्दो हेतौ** । अर्थः **प्रवृत्तिनिमित्तम्** । इति प्रोक्तः **शब्दशक्तिज्ञैः** । **स्वं च तद्रूपं चेति हि स्वरूपम्** । **रूपशब्दश्च स्वपरसाधारणः** । **तेन स्वस्मिन्प्राप्तेऽप्युच्यमानः स्वशब्दः परिसंख्यान्यायेन परव्यावृत्तिमेव प्रतिपादयतीति ज्ञायते** ।

**शे०— एवं वदतेति** । मिथ्याभूतपरसापेक्षत्वान्न सर्वज्ञत्वादेरुपजीव्यत्वमिति वदतेत्यर्थः ॥ **परापेक्षतेति** । मिथ्याभूतपरापेक्षतेत्यर्थः । स्वशब्दस्य परापेक्षताया बाधितत्वादाह **परापेक्षस्यार्थस्य प्रतिपादक इति** ॥ **कथमिति** । स्वशब्दार्थभूतस्य स्वस्य परानपेक्षत्वान्न परापेक्षार्थप्रतिपादकत्व-मपीत्यर्थः । भवेदेतद्यदि परस्माद्व्यावृत्तिः स्वशब्दार्थः स्यात्सैव कुतः । स्वशब्दस्य स्वमात्रवाचक-त्वोपपत्तेरित्यत आह **स्वं च तदित्यादि ॥ स्वपरेति** । रूपशब्दस्याभिधेयवचनत्वात्स्वपरयोश्चाभि-धेयत्वाविशेषात्स्वपरसाधारणत्वं तस्येति भावः ॥ **परिसंख्यान्यायेनेति** । द्वयोः शेषिणोरेकस्य शेषस्य वैकस्मिन् शेषिणि द्वयोः शेषयोर्वा नित्यप्राप्तौ शेष्यन्तरस्य शेषान्तरस्य वा निवृत्तिफलको विधिः परिसंख्याविधिः । उदाहरणं तु पञ्च पञ्चनखा भक्ष्या इत्यादि । अत्र पञ्चानां पञ्चनखानां भक्षणं न विधीयते । तस्य रागत एव प्राप्तत्वेन विध्यनपेक्षत्वात् । अप्राप्ते च शास्त्रस्यार्थवत्त्वात् । किन्तु तदितरनखा न भक्ष्या इतीतरपरिसंख्यानमेव (इतरवर्जनं) विधिप्रमेयम् । यथा वाऽग्निचयने इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इति । तत्राग्निचयने गर्दभरशनाग्रहणमश्वरशनाग्रहणं चेति द्वयमनुष्ठेयम् । तत्राश्वरशनाग्रहणे इमामगृभ्णन्निति मन्त्रो लिङ्गादेव रशनाग्रहणप्रकाशनसामर्थ्यरूपान्नित्यं प्राप्नोतीति न तत्प्राप्त्यर्थः । तदप्राप्तांशपूरणार्थो वा विधिः । किन्तु लिङ्गाविशेषाद्गर्दभरशनाग्रहणेऽपि मन्त्रः प्राप्नोतीति तन्निवृत्त्यर्थः । यथा वा चातुर्मास्यान्तर्गतेष्टिविशेषे गृहमेधीये आज्यभागौ यजतीति । अत्र गृहमेधीयस्य दर्शपूर्णमासप्रकृतिकत्वात्प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशादेवाज्यभागौ नित्यं प्राप्नुत इति न तत्र विधिस्तत्प्राप्त्यर्थः । तन्नियमार्थो वा । किन्त्वतिदेशात्प्रयाजादिकमपि प्राप्नुयादिति तन्निवृत्त्यर्थः । तथेह रूपशब्देन स्वप्राप्तावप्युच्यमानः स्वशब्दो न स्वप्राप्त्यर्थ-

स्तन्नियमार्थो वा किन्तु रूपशब्देनैव प्रसक्तस्य परस्य व्यावृत्त्यर्थ एव । अत एव रूपशब्देन प्रसक्तस्य बाह्यार्थस्य व्यावृत्त्यर्थं स्वं रूपं शब्दस्येत्यत्र स्वमिति विशेषणं सङ्गच्छत इति भावः ।

स० — अंशत्वे सामर्थ्येन लिङ्गेनोभयत्र विनियोगे प्राप्तेऽश्वरशनादानेपि विनियोगस्य प्राप्तत्वान्न तदर्थं ब्राह्मणवाक्यं किं नाम गर्दभरशनादानेन विनियोक्तृ(ग)व्यावृत्तिरित्येतदर्थमेवेति । यथोक्तम् । (?) 'तत्र चान्यत्र च प्राप्तौ परिसंख्या विधीयत इति परिसंख्यान्यायेनेत्यर्थः ।

प० — तस्मादित्यस्यार्थः परस्मादिति । अर्थ इत्यनुवादः । प्रवृत्तिनिमित्तमिति व्याख्या । तथाच स्वशब्दार्थः स्वशब्दप्रवृत्तिनिमित्तमित्युक्तं भवति ॥ **रूपशब्दश्च स्वपरसाधारण इति** । अर्थपर्यायो रूपशब्दः ॥ **परिसंख्यान्यायेनेति** । पूर्वतन्त्रे प्रथमाध्यायद्वितीयपादीयान्तिमाधिकरणे परिसंख्येति सिद्धान्तगुणसूत्रम् । तस्यायमर्थः । कर्मप्रयोगे उच्चार्यमाणा मन्त्राः विवक्षितार्थतया दृष्टार्थाः उताविवक्षितार्थाः सन्तः अदृष्टार्था इति संदेहे 'इमामगृभ्णन् रशनामृतस्ये'त्यादिमन्त्रप्रतिपाद्यार्थ-प्रतिपादकस्येमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इति ब्राह्मणवाक्यरूपशास्त्रस्य सत्त्वाद-विवक्षितार्थाः मन्त्राः । विवक्षितार्थत्वे मन्त्रेण वक्तव्यार्थस्यानेनोक्तिरयुक्ता स्यात् । अन्धो हि अन्येन नीयते न तु चक्षुष्मानित्येवं तदर्थशास्त्रादिति सूत्रेण पूर्वपक्षयित्वा परिसंख्येति सूत्रेणाश्वाभिधानीं अश्वसंबन्धिनीं रशनां आदद्यादित्यर्थोक्त्यर्थं ब्राह्मणवाक्यं न प्रवृत्तम् । येन मन्त्रगतशब्दशक्तिपर्या-लोचनयैवास्यार्थस्य प्राप्तत्वात् ब्राह्मणवाक्यसार्थक्याय मन्त्राणां विषहरमन्त्रस्योवोच्चारणमात्रेणादृष्टार्थ-तयोपकारकत्वं कल्प्येत किन्तु परिसंख्या इतरपरिवर्जनं ब्राह्मणवाक्यस्यार्थः । चयनोपयुक्तेष्टकाधारशकटा-कर्षणार्थं युगवाहकतया विनियुक्तयोरश्वरासभयोर्द्वयोरपि संबन्धिरशनाग्रहणे मन्त्रपदशक्त्या प्राप्ते सति गर्दभरशनां नादद्यादिति वक्तुं ब्राह्मणस्य प्रवृत्तिरिति तस्यानर्थक्याप्राप्तेर्मन्त्रा विवक्षितार्था इति सिद्धान्तः कृतः तेन न्यायेनेत्यर्थः । 'उभयत्र प्राप्तावन्यत्र विवर्जनं परिसंख्ये'त्युक्तेरिति भावः ।

या० — **परिसंख्यान्यायेति** । परिसंख्यान्यायस्य चेदमुदाहरणम् । इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इति ब्राह्मणवाक्येन ऋतस्य पशोर्नाश्वाभिधान्यादानं विधीयते । तस्येमामगृभ्णन् रशनामृतस्येति मन्त्रेणैव सामान्यतः प्राप्तत्वात् । किन्त्वनेन मन्त्रेण सामान्यतः प्राप्तगर्दभरशनापरिसंख्यानं वर्जनमेव विधीयते॥ **गर्दभरशना नादातव्येति** । 'तत्र चान्यत्र च प्राप्तौ परिसंख्या विधीयत' इति वचनात् । एवं पञ्च पञ्चनखा भक्ष्या इत्येतदपि परिसंख्यान्यायस्योदाहरणम् । अत्रापि पञ्चानां पञ्चनखानां भक्षणं न विधीयते । तस्य रागत एव प्राप्तत्वात् । किन्तु पञ्चेतरे पञ्चनखा न भक्ष्या इतीतरपरिसंख्यानमेव विधीयत इति ।

**सु० — सत्यमेतदेवं व्याख्याने । न चैवमित्यत आह** स्वरूपमिति ।

**अनु० —** स्वरूपं नाम किन्न चेत् ॥

न स्वरूपाभिधायि स्यात् वैयर्थ्यं स्वपदस्य यत् ॥

रूपशब्देन पूर्णत्वात्तच्च सामान्यतावचः ॥

**अस्मदभिप्रेतं व्याख्यानं न चेदङ्गीक्रियते तदा स्वरूपं नाम किं, न किमपि । स्वरूपशब्दो निरर्थकः स्यादित्यर्थः । रूपशब्दसमानार्थः स्वरूपशब्द इत्यतः कथमेतदिति चेदत्र वक्तव्यम् । स्वं च तद्रूपं चेति व्युत्पत्तिमङ्गीकृत्यैवमुच्यते । उताखण्ड एवायं शब्द इत्युपेत्य । आद्ये दोषमाह** वैयर्थ्यमिति । **यस्मादस्मिन्पक्षे स्वशब्दस्य वैयर्थ्यं तस्मात्स्वरूपं नाम किमिति संबन्धः । कुतो वैयर्थ्यमित्यत** आह रूपेति । **स्वरूपशब्दे यो रूपशब्दस्तेनैव रूपशब्दार्थाभिधानस्य पूर्णत्वात् । न हि रूपशब्दो रूपशब्दार्थं नाभिधत्त इति संभवति । अन्यथोत्पलनीलोत्पल-शब्दावप्येकार्थौ स्याताम् ॥ द्वितीयं निराकरोति** तच्चेति । तत् **रूपपदम् । चो यस्मादित्यर्थे ।** सामान्यतावचः **सामान्याकारस्य वाचकम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः । एतदुक्तं भवति । प्रतीतिप्रमाणक एव शब्दार्थनिश्चय इति हि शाब्दाः । तत्र रूपशब्दः सामान्याकार-स्याभिधायकः । सर्वेषां ततस्तत्प्रत्ययात् । स्वरूपशब्दश्चासाधारणाकारस्य । तस्मात्तत्प्रतीतेः । तस्मान्न तयोरेकार्थत्वमिति ।**

---

**शे० — कथमेतदिति** । निरर्थकत्वमित्यर्थः । नन्वखण्डस्यैव स्वरूपशब्दस्य रूपशब्द-समानार्थत्वाभ्युपगमात्कथं स्वशब्दस्य वैयर्थ्योद्भावनमित्यतोऽत्रोक्तरूपव्युत्पत्त्याश्रयणेन स्वरूपशब्दस्य रूपशब्दसमानार्थत्वपक्ष एव स्वशब्दवैयर्थ्यस्योच्यमानत्वान्नानुपपत्तिरित्यभिप्रेत्यात्र संभावितं विकल्पं कृत्वाऽऽद्यपक्षोत्तरत्वेनोत्तरग्रन्थं योजयति **अत्र वक्तव्यमिति ॥ अन्यथेति ।** नीलोत्पलशब्दान्तर्गतो-त्पलशब्दस्याप्युत्पलरूपार्थानभिधायकत्वप्रसङ्गेन तन्मात्रेणोत्पलरूपार्थानभिधानेन नीलशब्दवैयर्थ्यपरिहारस्य वक्तुमशक्यत्वादिति भावः । ननु गुणवचनब्राह्मणादिभ्य इति भावे ष्यञ्विधानात्सामान्यमित्यनेनैव समानानां भावस्य लब्धत्वात्पुनर्भावार्थकतल्प्रत्ययवैयर्थ्यमित्यतश्चतुर्वर्णादीनां स्वार्थे ष्यञ् वाच्य इत्येत-त्सूत्रीय (गुणवचनब्राह्मणादिभ्य इति । गुणवचनाद्ब्राह्मणादेश्च ष्यञ् स्यात्कर्मणि भावे चेति सूत्रार्थः । जडस्य कर्म भावो वा जाड्यम् । ब्राह्मण्यमित्युदाहरणम् । आकृतिगणोऽयमिति प्रकृतसिद्धिः । भावः प्रवृत्तिनिमित्तभूतधर्मो न तु धात्वर्थः ।) वार्तिके स्वार्थे ष्यञ्विधानाच्चत्वारो वर्णा एव चातुर्वर्ण्य-मित्यादाविव समाना एव सामान्यमिति समानशब्दात्स्वार्थे ष्यञि कृते ञित्त्वादादिवृद्धौ यस्येति

चेत्यकारलोपे सति निष्पन्नसामान्यशब्देन भावस्यालाभात्तदर्थकतल्प्रत्ययस्य न वैयर्थ्यमित्याशयेनाह **चातुर्वर्ण्यादित्वादिति** । ननु रूपशब्दस्य सामान्याकारवाचकत्वमेवासिद्धम् । तत्त्वेऽपि स्वरूपशब्दस्यापि तद्वाचकत्वस्यैव संभवाद्रूपशब्दसमानार्थत्वमप्रत्यूहमित्यत आह **एतदुक्तं भवतीति** ।

स० — **स्वार्थे प्रत्यय इति** । सामान्येति ष्यञ्प्रत्यय इति भावः ।

प० — **वैयर्थ्यं स्वपदस्येति** अस्यार्थः स्वशब्दवैयर्थ्यमिति ॥ **अन्यथेति** । स्वशब्दस्य रूपसमानार्थकत्वे इत्यर्थः । ननु पञ्चमस्य प्रथमे पादे तस्य भावस्त्वतलावित्यधिकरणे गुणवचनब्राह्मणादिभ्यः कर्मणि चेति सूत्रेण सामान्यशब्दस्य भावार्थकष्यञन्तत्वात्पुनर्भावार्थकतल्प्रत्ययः कथमित्यतः ष्यञ्प्रत्ययोऽयं न भावार्थ इत्याह **चातुर्वर्ण्यादित्वादिति** । चतुर्वर्णादिभ्यः स्वार्थे ष्यञ् वक्तव्य इति वार्तिकेन 'चातुर्वर्ण्यं मया सृष्टमि'त्यादिगीतादौ चातुर्वर्ण्यमित्यादिवत् समानमेव सामान्यमिति समानशब्दात् ष्यञ्प्रत्यये, षः प्रत्ययस्य, हलन्त्यमिति आद्यन्तानुबन्धलोपे तद्धितेष्वचामादेरिति आदिवृद्धौ यस्येत्यन्तलोपे सामान्यमितिरूपं अतो न दोषः । चतुर्वर्णादिः प्रयोगानुसारित्वात् अयमपि शब्दस्तत्र ज्ञेय इति भावः । **शाब्दाः** शब्दशक्तिज्ञा इत्यर्थः ॥ **न तयोरेकार्थत्वमिति** । अत एव पाणिनीये स्वं रूपं शब्दस्येत्यत्र स्वमिति रूपविशेषणमुक्तमिति ज्ञेयम् ।

या० — ननु गुणवचनब्राह्मणादिभ्य इत्यनेन भावे ष्यञ्प्रत्ययविधानात्सामान्यमित्यनेनैव समानानां भावे लब्धे पुनर्भावार्थतल्प्रत्ययोऽत्रानुपपन्न इत्यत आह **चातुर्वर्ण्यादित्वादिति** । चतुर्वर्णादीनां स्वार्थे ष्यञ् वाच्य इति वार्तिके चातुर्वर्ण्यमित्यादौ चत्वारो वर्णाश्चातुर्वर्ण्यमिति स्वार्थे ष्यञ्विधानात्तस्य चाकृतिगणतयाऽभिप्रेतत्वात्समानशब्दादपि स्वार्थे ष्यञि कृते ततो भावे तल्प्रत्ययोपपत्तिरिति भावः ।

श्री० — **अन्यथोत्पलेति** । स्वं च तद्रूपं चेति व्युत्पत्तिमङ्गीकृत्य यदि रूपस्वरूपशब्दावेकार्थौ स्यातां तर्हि नीलं च तदुत्पलं चेति व्युत्पत्तिमङ्गीकृत्योत्पलनीलोत्पलशब्दावप्येकार्थौ स्यातामित्यर्थः ।

सु० — **यदुक्तं चेतनत्वं ब्रह्मणो न स्यादिति तदिष्टापादनम्** । **न हि वयं ब्रह्मणश्चेतनत्वमङ्गीकुर्मः** । **क्रियावेशलक्षणस्य कर्तृत्वस्य निर्विकल्पकेऽभावात्** । **किन्तु चैतन्यमेव ब्रह्म** । **तदर्था एव चेतनत्ववादा व्याख्यातव्या इत्यतश्चैतन्यमपि न परेण शक्याङ्गीकारमिति भावेन तद्व्याख्याति** चेतनस्येति ।

**अनु०** — चेतनस्य स्वभावो हि चैतन्यमिति गीयते ॥

**भावः शब्दप्रवृत्तिनिमित्तम् । तस्यात्रानागन्तुकत्वं ज्ञापयितुं स्वशब्दः । इति हि गीयत इत्यनेन गुणवचनब्राह्मणादिभ्यः कर्मणि चेति स्मृतिं सूचयति । चेतनशब्दप्रवृत्तिनिमित्तं च ज्ञानम् । चिती संज्ञान इति पाठात् । ततश्च ज्ञानं ब्रह्मेत्युक्तं भवति ।**

शे० — **चेतनत्वमिति** । ज्ञानक्रियाकर्तृत्वरूपं ज्ञत्वमित्यर्थः । अनङ्गीकारे निमित्तमाह **क्रियावेशेति ॥ निर्विकल्पक इति ।** निर्विकार इत्यर्थः । अभिनिविष्टस्य विकारनियमादिति भावः ॥ **चैतन्यमेवेति** । ज्ञानमेवेत्यर्थः । **भाव इति ।** भवत्यस्माच्छब्दप्रवृत्तिरिति व्युत्पत्त्येत्यर्थः ॥ **अनागन्तुकतामिति ।** चेतनस्य स्वः स्वरूपभूतो भावः प्रवृत्तिनिमित्तमित्युक्त्या स्वाभाविकत्वापरपर्यायानागन्तुकत्वस्य सूचनादित्यर्थः । ज्ञानमेव चेतनशब्दप्रवृत्तिनिमित्तमित्यत्र नियामकमाह **चिती संज्ञान इतीति ।**

प० — **चेतनत्वशब्दा इति** । 'चेतनश्चेतनानामि'त्यादय इत्यर्थः ॥ **गुणवचनेति** । गुणवचनेभ्यो ब्राह्मणादिशब्देभ्यश्च भावे कर्मणि च ष्यञ् भवतीति सूत्रार्थः । वर्णदृढादिभ्यः ष्यञ् वेति पूर्वसूत्रात् ष्यञोऽनुवृत्तेः अस्य च ब्राह्मणादित्वात् ष्यञ् इति भावः । भावार्थे ल्युडन्तमुपेत्याह **चेतनशब्दप्रवृत्तिनिमित्तं च ज्ञानमिति ।**

या० — **चेतनत्वमङ्गीकुर्म इति** । चित्कर्तृत्वरूपमित्यर्थः ॥ **किन्तु चैतन्यमेवेति ।** तथा च भावे युप्रत्यय इति भावः ॥ **गुणवचनब्राह्मणादिभ्य इति ।** गुणवचनाद् ब्राह्मणादेश्च ष्यञ् स्यात्कर्मणि भावे चेति सूत्रार्थः । जडस्य कर्म भावो वा जाड्यम् । ब्राह्मण्यमित्याद्युदाहरणम् । आकृतिगणोऽयमिति प्रकृतसिद्धिः ।

श्री० — **तस्य** चेतनशब्दप्रवृत्तिनिमित्तभूतस्य ज्ञानस्य ॥ **अनागन्तुकतामिति** । चेतनस्य स्वः स्वरूपभूतो भावः प्रवृत्तिनिमित्तमित्युक्त्या स्वाभाविकत्वापरपर्यायानागन्तुकत्वस्य सूचनादित्यर्थः ।

सु० — ततः **किमित्यत आह** तस्मादिति ।

अनु० — तस्माद्विशेषबाहुल्यं चैतन्यस्य विशेषतः ॥

**यस्माच्चैतन्यं नाम ज्ञानं तस्माच्चैतन्यस्य ब्रह्मणो, विशेषतोऽतिशयेन, विशेषबाहुल्यं प्रसज्यते । ज्ञानं हि ज्ञेयज्ञातृकरणसापेक्षं भवति । ज्ञानत्वादिधर्माश्चानिवार्याः । न च सविशेषं ब्रह्म परेणाङ्गीक्रियते । ज्ञेयादिकं च न स्वयम् । विरोधात् । परन्तु मिथ्येति तत्सापेक्षं ज्ञानं कथं सत्स्यात् । ब्रह्मणो ज्ञानत्वे ज्ञेयाद्युपेतता कुत इति चेत् । ज्ञानत्वात् । प्रसिद्धज्ञानवत् । न च ज्ञानत्वमसिद्धमिति युक्तम् । अङ्गीकारविरोधात् । व्याप्तिमुपपादयति** नेति ।

न ज्ञेयज्ञातृहीनं हि ज्ञानं नाम क्वचिद्भवेत् ॥

**यदुक्तं प्राग्ब्रह्मणश्चेतनत्वे ज्ञेयज्ञानोपेतत्वेन भाव्यमिति, तत्रापि ज्ञत्वात्संमतवदिति नियामकमभिप्रेतम् । प्रसङ्गात्तस्यापि व्याप्तिमुपपादयति** ज्ञेयेति ।

ज्ञेयज्ञानविहीनश्च ज्ञ इत्यत्र न च प्रमा ॥

**आद्यश्चशब्दो ज्ञेयादिराहित्यज्ञत्वयोः समुच्चये । द्वितीयस्तु व्यभिचारद्वयसमुच्चये ।**

**शे०** — विशेषबाहुल्यप्रसङ्गमेव प्रपञ्चयति **ज्ञानं हीति** । इष्टापत्तिमाशङ्क्याह **न च सविशेषमिति** ॥ **विरोधादिति** । ज्ञानस्य ब्रह्मणो ब्रह्मकर्मकत्वे क्रियाकर्मभावस्य, ब्रह्मकर्तृकत्वे क्रियाकर्तृभावस्य, ब्रह्मकरणकत्वे क्रियाकरणभावस्य, प्रसक्त्या तस्य च लोके एकत्रादर्शनाद्विरुद्धत्वादित्यर्थः ॥ **कथं सत्स्यादिति** । मिथ्यासापेक्षस्य मिथ्यात्वनियमस्य त्वयाऽभ्युपगमादिति भावः । ननु न ज्ञेयज्ञातृहीनं हीति ज्ञानस्य ज्ञेयज्ञातृहीनत्वाभाववर्णनं क्रियते तदनर्थकम् । न च ज्ञानत्वहेतोर्ज्ञेयाद्युपेतत्वेन व्यभिचाराभावोपदर्शनद्वारा व्याप्त्युपपादनार्थमेतदिति वाच्यम् । तद्व्याप्त्युपपादनस्यापि प्रयोजनाप्रतिभासात् । न च ज्ञानत्वेन ज्ञेयाद्युपेतत्वानुमानसमर्थनार्थत्वान्न तदिति वाच्यम् । ज्ञानत्वेन ज्ञेयाद्युपेतताया प्रागसाधितत्वेन तत्समर्थनार्थत्वायोगात् । न च तादृशानुमानस्य पूर्वमनुक्तत्वेऽप्यभिप्रेतत्वाद्युक्तमस्य तत्समर्थनत्वमिति वाच्यम् । तादृशस्यानुमानस्यात्राभिप्रेतत्वकल्पने निमित्ताभावात् । अभिप्रेतत्वे वा तत्र पक्षधर्मतामनुपपाद्य व्याप्तिमात्रोपपादने निमित्ताभावाच्चेत्यतस्तस्माद्विशेषबाहुल्यमित्युक्तस्य ज्ञानत्वेन ज्ञेयादिसापेक्षप्रसङ्गस्योपपादनाय तादृशानुमानस्याभिप्रेतत्वात्पक्षधर्मतोपपादनस्य च स्पष्टत्वात्तामनुपपाद्य तदङ्गव्याप्त्युपपादनपरस्य न ज्ञेयेत्यादिग्रन्थस्य नानर्थक्यमिति भावेन तदुपपादकतयोत्तरग्रन्थं सङ्गमयितुं तस्मादित्युक्तप्रसङ्गस्याप्रयोजकताशङ्कामुत्थापयति **ब्रह्मण इति** । ज्ञेयज्ञानविहीनश्चेत्यादेरसङ्गतिमाशङ्क्याव्यवहितार्थानुपपादकत्वादव्यवहितग्रन्थेनासङ्गतावपि व्यवहितार्थोपपादकत्वेन तत्सङ्गतिसद्भावान्नासङ्गतिरित्यभिप्रेत्य व्यवहितेन सङ्गतिमाह **यदुक्तमिति** । ज्ञत्वं न ज्ञेयवर्जितमित्यादिनेति शेषः ॥ **आद्यश्चशब्द इति** । (ज्ञेयविहीनो ज्ञो ज्ञानविहीनश्च ज्ञ इत्येवं समुच्चय इत्यर्थः) । अनेन न केवलं न ज्ञेयादिविहीनः किन्तु ज्ञश्चेत्याद्यचशब्दस्य योजनोक्ता भवति । **व्यभिचारद्वयेति** । ज्ञानं ज्ञेयज्ञातृरहितमित्येको व्यभिचारः । ज्ञो ज्ञेयज्ञानरहित इति द्वितीयस्तयोः समुच्चये द्वितीयश्चशब्द इत्यर्थः । अनेन न केवलं ज्ञातृज्ञेयरहितं ज्ञानमित्यत्रैव न प्रमाणं किन्तु ज्ञेयज्ञानविहीनो ज्ञ इत्यत्रापि न प्रमाणमिति चशब्दयोजनोक्ता भवति ।

**स०— व्यभिचारद्वयेति** । यो ज्ञाता स ज्ञानज्ञेयविहीन इत्येको व्यभिचारः । ज्ञानं ज्ञातृज्ञेयविहीनमिति द्वितीयो व्यभिचारः । तत्समुच्चये द्वितीयश्चशब्दार्थः । यो ज्ञाता स ज्ञानरहित इत्येकः । ज्ञेयरहित इत्यपरः । इति व्यभिचारद्वयसमुच्चय इति चार्थः ।

प०— **चेतनत्व इति** । ज्ञानकर्तृत्वरूपचेतनत्वे चेतनत्वं च ज्ञत्वमित्यत्रोक्ते इत्यर्थः ॥ **प्रसङ्गात्तस्यापीति** । ब्रह्मणो ज्ञत्वे ज्ञेयज्ञानसापेक्षत्वं स्यादित्येवंरूपस्येत्यर्थः ॥ **व्यभिचारद्वयेति** । न केवलं पूर्वार्धोक्ते व्यभिचारे न प्रमाणम् । किन्तु उत्तरार्धोक्तव्यभिचारे च न प्रमाणमिति व्यभिचार-द्वयनिरासप्रयोगद्वयेपि व्याप्तिरुपपादितेति भावः ।

श्री०— **आद्यश्चशब्द इति** । ज्ञेयविहीनो ज्ञो, ज्ञानविहीनश्च ज्ञ इत्येवं समुच्चय इत्यर्थः ॥ **व्यभिचारद्वयसमुच्चय इति** । ज्ञेयज्ञानविहीनो ज्ञ इत्यत्र च व्यभिचार इति यावत् । प्रमाणं नास्ति । यदि ज्ञेयादिविहीनोऽपि ज्ञ इत्यत्र प्रमाणं स्यात्तर्ह्येव व्यभिचारः स्यादिति भावः ।

**सु०— ननु प्रसिद्धस्य ज्ञानस्य ज्ञेयाद्युपेतत्वेऽपीदं ब्रह्मस्वरूपं ज्ञानं तद्रहितं भवतु किं बाधकमित्यत आह** ज्ञातृज्ञेयेति ।

> **अनु०** — ज्ञातृज्ञेयविहीनं च ज्ञानं चेद्भोक्तृभोग्यतः ॥
> हीनं भोजनमेव स्यात्ताडनं कर्तृ ताडयतः ॥

**हीनमेवेति संबन्धः** । कर्तृ ताडयत इति **ताडयितृताड्याभ्यां हीनं स्यादित्यर्थः** । **धात्वर्थोऽपि ज्ञानं यदि कर्तृरहितं स्यात् । आकाङ्क्षावशात्सकर्मकतया प्रतीयमानमपि च यदि निष्कर्मकं स्यात्तदोक्तो बहुतरोऽतिप्रसङ्गः, विशेषाभावादिति । ज्ञविषयेऽप्येवं भोज्यभोजन-विहीनो भोक्ताऽपि स्यादित्यादिरतिप्रसङ्गो** वाच्यः । **न हि सकर्मकक्रियायाः कर्ता क्रियादि-रहितो युक्त इति** ।

शे० — हीनं भोजनमेवेत्यत्र यथाश्रुतसंबन्धे एवकारवैयर्थ्यप्रसङ्गाद्भिन्नक्रमतया तं योजयति **हीनमेवेति संबन्ध इति** ॥ **ताडयितृताड्याभ्यामिति** । कर्तृशब्दः सामान्यशब्दोऽपि ताड्यपद-सन्निधानाद्विशेषपर इति भावः । विशेषव्याप्त्यभावान्मूलोक्ततर्काणामाभासत्वमाशङ्क्य विशेषलक्षण-सामान्यव्याप्त्याश्रयणेन तत्परिहरन्मूलोक्ततर्कस्य विशिष्टैकतर्कताभ्रान्तिं च परिहरन्नेव प्रसङ्गवाक्य-तात्पर्यमाह **धात्वर्थोऽपीति** । या क्रिया सा सकर्तृकेतिवत्सा सकर्मकेति व्याप्त्यभावेन क्रियात्वेन सकर्तृकत्ववत्सकर्मकत्वासिद्धेराह **आकांक्षावशादिति** ॥ **ज्ञविषयेऽपीति** । अन्यथा **प्रसिद्धस्य ज्ञस्य** ज्ञानाद्युपेतत्वेऽपि ब्रह्मरूपस्य ज्ञस्य ज्ञानादिराहित्यमेव भवतु । किं विपक्षे बाधकमित्यप्रयोजकताशङ्का न परिहृता **स्यादिति** भावः ॥ **अतिप्रसङ्ग इति** । यदि ज्ञो ज्ञानविहीनः स्यात्तर्हि भोक्ता भोजनविहीनः स्यात् । यदि ज्ञो ज्ञेयविहीनः स्यात्तर्हि भोक्ता भोज्यविहीनः स्यादित्यतिप्रसङ्ग इत्यर्थः । **आदिपदेन** ताडयिता ताडनविहीनः स्यात्ताड्यविहीनः स्यादिति **प्रसङ्गद्वयसंग्रहः** । कण्ठतो भाष्यकाराणां तदनु-

किन्तु ज्ञातृज्ञेयविहीनं चेत्यतिप्रसङ्गोक्त्याऽस्यातिप्रसङ्गस्य शिष्यैरेव ज्ञातुं शक्यत्वात्किं पृथक् तदुक्त्येति। भावेनेति द्रष्टव्यम्। उक्तप्रसङ्गानां प्रशिथिलमूलतामाशङ्क्य विशेषव्याप्त्यभावेऽप्यविशेषव्याप्तेः सत्त्वान्न तदिति भावेनाविशेषव्याप्तिमुपपादयति **न हीति**। अकर्मकक्रियाकर्तरि व्यभिचारवारणाय सकर्मकेति क्रियाविशेषणम्।

प० — ज्ञानस्य कर्त्रादिहीनत्वे भोजनादेस्तथात्वापादनं कुतः हेत्वभावादित्यत आह **धात्वर्थोऽपीति आकाङ्क्षेति**। जानातीत्युक्ते किमिति जायमानाकाङ्क्षावशादित्यर्थः ॥ **विशेषाभावादिति**। धात्वर्थत्वाविशेषादित्यर्थः।

**सु० —ज्ञाता ज्ञेयमिति च कारकाभिधानमेतत्। कारकमुत्पादकमिति च पर्यायावेतौ। कार्यमेव चोत्पादकमपेक्षते। अकार्यं च ब्रह्माख्यं ज्ञानमिति न तस्य कर्त्राद्यपेक्षेत्याशयवान् शङ्कते** नित्यत्वादिति।

अनु०— नित्यत्वात्तादृशं च स्यादिति चेत्

**नित्यत्वमकार्यत्वस्योपलक्षणम्। अनित्यस्य भोजनादेर्भोक्त्राद्यपेक्षायामपीदं नित्यत्वात्तादृशं ज्ञात्रादिरहितं च स्यादित्यनेन** व्यापकविरुद्धोपलब्ध्या व्याप्यविपर्ययः **शङ्कितः। नोत्पादकमेव कारकम्। तथा सत्यस्ति गगनमित्यादौ गगनादीनामकारकत्वप्रसङ्गात्। किन्तु धात्वर्थाश्रयः कर्ता, तद्विषयः कर्मेत्यादि।**

**आकाङ्क्षाऽनाकाङ्क्षे एव च तदन्वितत्वानन्वितत्वयोः प्रयोजके। न तु कार्यत्वाकार्यत्वे। अत एव कश्चिद्धात्वर्थः कर्माद्यन्वितः कश्चिन्नेति युज्यत इत्याशयवानाकाङ्क्षामप्रयोजकीकृत्य कार्यत्वाद्येव प्रयोजकीकुर्वाणस्यातिप्रसङ्गमाह** नित्येति।

नित्यवागपि ॥

वाच्यवक्तृविहीना स्यात्

**अकार्यस्य कारकानन्वितत्वेऽकार्या वेदवाक्** वाच्यवक्तृविहीना **स्यात्। कार्यस्य च कारकान्वितत्वे कर्माद्यन्वितत्वानियमोऽपि स्यादित्यपेरर्थः**॥ विपर्यये पर्यवसानमाह न हीति।

न हि सा चैव तादृशी ॥

**सा तादृशी नैव हीति संबन्धः। द्वितीयप्रसङ्गस्य** विपर्ययपर्यवसानं **चशब्देनाह**॥ **कथं न सा तादृशीत्यत** आह द्रष्टार इति।

द्रष्टारो वेदवाचो हि सन्ति वाच्यानि चाञ्जसा ॥

**वक्तार इति वक्तव्ये द्रष्टार इत्युक्तमपौरुषेयत्वाविघातार्थम्। अङ्गसेति** वाच्यसद्भावे **न काचिदनुपपत्तिरित्युक्तम्।**

**शे० — अनित्यस्येति।** कार्यस्येत्यर्थः॥ **व्यापकविरुद्धोपलब्ध्येति।** ब्रह्मरूपं ज्ञानं ज्ञेयादिमदित्यनुमीयमानं ज्ञेयादिमत्त्वं हि कारकोपेतत्व एव पर्यवसन्नम्। ज्ञातृज्ञेयशब्दयोः कारकाद्य- भिधानत्वात्। तथा च कारकोपेतत्वसाध्यस्य यद्व्यापकं कार्यत्वं तद्विरुद्धं यदकार्यत्वं तस्य पक्षे उपलब्ध्या व्याप्यस्य कारकोपेतत्वरूपसाध्यस्य विपर्ययोऽभावः शङ्कित इत्यर्थः। ततश्च ब्रह्मरूपं ज्ञानं ज्ञेयादिमज्ज्ञानत्वादित्यत्र कार्यत्वमुपाधिः। यत्कारकोपेतं तत्कार्यमिति साध्यव्यापकत्वात्। ज्ञानत्ववति ब्रह्मणि कार्यत्वाभावेन साधनाव्यापकत्वात्। तस्य च पक्षाद्व्यावृत्तिः स्वव्याप्यं साध्यमपि व्यावर्तयति। व्यापकनिवृत्तौ व्याप्यनिवृत्तेरवश्यम्भावादित्युपाध्यभावेन साध्याभावसाधनशङ्केयमिति भावः॥ **अकारकत्वप्रसङ्गादिति।** ततश्चास्तीति कर्तरि लकारो न स्यादिति भावः। अप्रयोजकत्वान्न कार्यत्वमुपाधिरिति भावेनाह **आकांक्षाऽनाकांक्षा एव चेति।** अत्रैवोपष्टम्भकमाह **अत एव चेति।** आकाङ्क्षाऽनाकाङ्क्षयोरेवान्वितत्वानन्वितत्वप्रयोजकत्वादेवेत्यर्थः॥ **द्वितीयप्रसङ्गस्येति।** कार्यस्य कारकान्वितत्वे कर्माद्यन्वितत्वनियमः स्यदिति द्वितीयप्रसङ्गस्येत्यर्थः॥ **विपर्ययपर्यवसानमिति।** न हि सर्वस्य धात्वर्थस्य कर्माद्यन्वितत्वानियमोऽस्ति। आसनशयनादेरकर्मकस्यापि बहुलमुपलम्भात्। ततः कार्यत्वं न तदन्वयप्रयोजकमिति विपर्यये पर्यवसानमित्यर्थः।

---

**स० — व्यापकविरुद्धोपलब्ध्येति।** ब्रह्मरूपं ज्ञानं ज्ञेयादिमत् ज्ञानत्वादित्यत्र ज्ञेयादिम- त्त्वरूपसाध्यव्यापकं कार्यत्वं तद्विरुद्धमकार्यत्वं तस्य पक्षे उपलब्ध्या व्याप्यस्य ज्ञेयादिमत्वस्य विपर्ययः शङ्कित इत्यर्थः। अनेन ब्रह्मरूपं ज्ञानं ज्ञेयादिमत् ज्ञानत्वादित्यत्र कार्यत्वमुपाधिः। यत् ज्ञेयादिमत् तत्कार्यमिति साध्यव्यापकत्वात्। अकार्ये ब्रह्मज्ञाने ज्ञानत्वस्य सत्वेपि कार्यत्वाभावेन साधनाव्यापकत्वाच्च। तस्य च पक्षाद्व्यावृत्तिः साध्यमपि व्यावर्तयति। व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वादित्युक्तं भवति। अप्रयोजकत्वान्नाकार्यत्वस्योपाधित्वमिति भावेनाह **आकांक्षानाकांक्षे एव चेति॥ अत एवेति।** आकाङ्क्षानाकाङ्क्षयोरेवान्वितत्वानन्वितत्वयोः प्रयोजकत्वादेवेत्यर्थः। अन्यथा कार्यत्वस्यैव तदन्वये प्रयोजकत्वे धात्वर्थमात्रस्य कर्माद्यनन्वयापत्तिरिति भावः॥ **द्वितीयप्रसङ्गस्येति।** कार्यस्य कारकान्वितत्वे च कर्माद्यन्वितत्वनियमः स्यादिति द्वितीयप्रसङ्गस्येत्यर्थः। **विपर्ययपर्यवसानम्।** न हि सर्वस्य धात्वर्थस्य कर्माद्यन्वितत्वनियमोऽस्ति। ततः कार्यत्वं न प्रयोजकमिति भावः।

**प० —** उत्तरवाक्यमवतारयति **ज्ञाता ज्ञेयमिति॥ कारकाभिधानमेतदिति।** ण्वुल्तृचाविति तृचः कर्तरि, अचो यदिति यत्प्रत्ययस्य कर्मणि विधानादिति भावः॥ **पर्यायाविति।** ज्ञातृपदं कर्तृवाचि

ज्ञेयपदं कर्मवाचि 'क्रियां कुर्वद्धि कारकमि'ति निर्वचनादिति भावः ॥ **अनित्यस्येति** । जन्यस्येत्यर्थः । किमनेनोक्तानुमानद्वयस्य दूषणमुक्तं स्यादित्यतः कार्यत्वमुपाधिरुक्तं स्यादिति भावेनाह **इत्यनेनेति** । पूर्वं हि ज्ञानं, कर्त्रादिकारकोपेतं ज्ञानरूपं जानातिधात्वर्थत्वात् भोजनताडनादिधात्वर्थवत् । ब्रह्मरूपं ज्ञानकर्तृ कारकाद्युपेतं ज्ञत्वाद्धोक्रादिवदित्यत्र कार्यत्वं प्रयोजकमिति मनसि निधाय पक्षीभूते ब्रह्मरूपे ज्ञाने (ब्रह्मरूपज्ञानक)कर्तरि च कार्यत्वरूपव्यापकविरुद्धनित्यत्वोपलब्ध्येति वा कार्यत्वाभावोपलब्ध्येति वार्थः । व्याप्यविपर्ययः कर्तृकर्मरूपकारकोपेतत्वविपर्ययः शङ्कित इत्यर्थः । परोक्तोपाधौ दोषमनभिधायातिप्रसङ्गोक्तिरयुक्तेत्यतोऽभिप्रायं वदन्नेवावतारयति **नोत्पादकमेवेत्यादिना** ॥ **अस्तीति** । असभुवीत्यतो लः कर्मणि च भावे चाकर्मकेभ्य इति कर्त्तरि विहितलादेशतिपः कर्तृकारकाभिधायित्वादिति भावः ॥ **धात्वर्थाश्रयः कर्तेति** । तथा च गगने सत्ताश्रयत्वादिसंभवाद्युक्तं अस्तीत्यादौ कर्तृकारकत्वादिकं तस्येति भावः ॥ **अत एवेति** । आकाङ्क्षानाकाङ्क्षयोरेव कारकान्वितत्वानन्वितत्वयोः प्रयोजकत्वाङ्गीकारादेवेत्यर्थः । एकरूपत्वाविशेषेपि जानाति बुध्यत इत्यादिधात्वर्थः कर्मान्वितः । किमित्याकाङ्क्षायाः सत्त्वात् । प्रकाशते स्फुरतीत्यादिधात्वर्थस्तु कर्माकाङ्क्षावैधुर्यात्तदनन्वित इति युज्यते । अन्यथा कार्यत्वस्यैव प्रयोजकत्वे तन्न स्यादिति अग्रे व्यक्तम् ॥ **कर्माद्यन्विततानियमोऽपीति** । घटः प्रकाशते द्योतते स्फुरतीत्यादावपि कर्मान्वितता स्यात् कार्यत्वस्य सत्वादिति भावः ॥ **द्वितीयप्रसङ्गस्येति** । न हि ज्ञानं ज्ञेयहीनमित्येवंरूपेणाहेत्यर्थः ॥ **न काचिदिति** । अपौरुषेयत्वहान्यादिरूपेत्यर्थः ।

**या॰ — अनित्यस्येति** । कार्यस्येत्यर्थः ॥ **व्यापकविरुद्धेति** । ज्ञाता ज्ञेयमिति च कारकाभिधानमेतदित्यत्र ज्ञेयाद्युपेतरूपत्वस्य साध्यस्य कारकोपेतत्व एव पर्यवसानमुक्तम् । तथा च कारकोपेतरूपत्वस्य साध्यस्य यद्व्यापकं जन्यत्वं तद्विरुद्धं यदजन्यत्वं तदुपलब्ध्या व्याप्यस्य कारकोपेतत्वरूपसाध्यस्य विपर्ययोऽभावः शङ्कित इत्यर्थः । तथा चोक्तानुमाने जन्यत्वमुपाधिः, तस्य साध्यव्यापकत्वात्तदभावेन साध्याभावसाधनशङ्कैवमिति भावः ।

**श्री॰ — कारकेति** । कर्तृकर्मकारकेत्यर्थः ॥ **पर्यायाविति** । क्रियां कुर्वद्धि कारकमिति वचनादिति भावः ॥ **आकाङ्क्षेति** । । कर्माद्याकाङ्क्षेत्यर्थः ॥ **तदन्वितत्वेति** । कर्माद्यन्वितत्वेत्यर्थः ॥ **अत एवेति** । कर्माद्याकाङ्क्षानाकाङ्क्षयोरेव कर्माद्यन्वितत्वानन्वितत्वयोः प्रयोजकत्वादेवेत्यर्थः । **कश्चित्** ज्ञानादिः । **कश्चित्** वृद्धिक्षयभयादिः । अपिशब्दसमुच्चेयमतिप्रसङ्गमाह **कार्यस्य चेति** ॥ **द्वितीयप्रसङ्गस्येति** । अपिशब्दसमुच्चितस्येत्यर्थः ।

सु०— ननु सन्ति स्थितिसमये वेदवाचो वसिष्ठादयो द्रष्टार इन्द्रादयश्च वाच्याः । न तु महाप्रलय इत्यत आह नित्य इति ।

अनु०— नित्यो द्रष्टा च वाच्यश्च भगवानेव च स्वयम् ॥
न हि वक्तृविहीना च वाच्यहीनाऽपि वाक् क्वचित् ॥

द्वौ चशब्दावन्योन्यसमुच्चये । तृतीयो यस्मादित्यर्थे वेदवाच इति वर्तते । हिशब्दः तस्मादित्यर्थे । वाक् वेदवाक् । क्वचित् प्रलयेऽपि । यथा वेदवाग्वाच्याद्युपेताऽपि क्वचित्तद्रहिता तथा ब्रह्म(स्व)रूपं ज्ञानं व्यवहारे ज्ञेयाद्यन्वितमपि परमार्थतस्तद्रहितं भविष्यतीति प्रत्याशां वारयितुमिदं वचनम् ।

यस्मादेवं कार्यत्वादिकमप्रयोजकं किन्त्वाकाङ्क्षानिमित्तो नियतसंबन्ध एव । तस्मान्नित्यवागिव नित्यमपि ज्ञानं ज्ञेयाद्युपेतमेवाङ्गीकार्यमित्युपसंहरति ज्ञातृज्ञेयेति ।

ज्ञातृज्ञेयविहीनं च ज्ञानमेव न तद्भवेत् ॥

ननु वाङ् न धात्वर्थः । अपि तु धात्वर्थं प्रति कर्म । तत्कथमत्रोदाहरणम् । उच्यते । आकाङ्क्षानिमित्तं प्रतिसंबन्ध्यन्वितत्वं नित्यत्वेन न हीयत इत्येतावन्मात्रे(ण) वागुदाहरणस्य गृहीतत्वान्न दोषः । वागित्युक्ते हि किंवक्तृका किंवाच्येत्याकाङ्क्षा भवत्येव ।

वर्णानामप्यर्थवत्त्वस्य स्थितत्वान्न नित्यत्ववाच्यवत्त्वयोर्व्यधिकरणत्वम् ।

---

शे०— ननु ज्ञानरूपक्रियायाः कर्माद्यनन्वितत्वे शङ्किते तादृशक्रियान्तरस्यैव तदापादनमुचितं न तु वाचः । तस्या देवदत्तो वाचमभिव्याहरतीति व्याहरणादिधात्वर्थकर्मत्वेन स्वयं धात्वर्थत्वाभावेन ज्ञानस्येव क्रियात्वाभावादित्यभिप्रायेण शङ्कते नन्विति । नन्वाकाङ्क्षानिमित्तं प्रतिसंबन्ध्यन्वितत्वम् अकार्यत्वेन न हीयत इत्येतावन्मात्रेणापि न वाग्ग्रहणं सङ्गच्छते । यस्या आकाङ्क्षादिनिमित्तं प्रतिसंबन्ध्यन्वितत्वं वेदवाच उपपादितम् तस्याः कृतकक्रमविशिष्टवर्णात्मकत्वेनाकार्यत्वाभावात् । यस्याश्चाकार्यत्वं वर्णादिरूपाया न तस्या आकाङ्क्षादिनिमित्तं प्रतिसंबन्ध्यन्वितत्वमित्यकार्यत्ववाच्यवत्त्वयोर्व्यधिकरणत्वादित्यत आह वर्णानामिति । ज्योतिरुपक्रमादित्यत्र वर्णानामपि भगवति समन्वयस्य समर्थितत्वादित्यर्थः । यद्यप्यकृतकक्रमविशिष्टशब्दबुद्धिविषयवर्णात्मकवेदवाचोऽप्यकार्यत्वान्न नित्यत्ववाच्यत्वयोर्व्यधिकरणत्वमिति शक्यते वक्तुं तथाऽप्यनित्यत्वशङ्काऽनास्पदानां वर्णानामप्याकाङ्क्षानिमित्तप्रतिसंबन्ध्यन्वितत्वसंभवे किं तच्छङ्काविषये तदुपपादनेनेत्यभिप्रायेण वर्णग्रहणं कृतमिति ध्येयम् ।

स०— ननु ज्ञानरूपक्रियायाः कर्मान्वितत्वे शङ्किते तादृशक्रियान्तरस्यैव तदापाद्यं न तु वाचः । तस्या देवदत्तो वाचं व्याहरतीति व्याहरणादिधात्वर्थं प्रति कर्मत्वेन ज्ञानस्येव क्रियात्वा-

भावादित्यभिप्रायेण शङ्कते **नन्विति** । नन्वाकांक्षादिनिमित्तं प्रतिसंबन्ध्यन्वितत्वमकार्यत्वेन न हीयते इत्येतावन्मात्रेणापि न वागुदाहरणं संभवति । यस्या आकांक्षानिमित्तं प्रतिसंबन्ध्यन्वितत्वं वेदवाच उपपादितम् तस्याः कृतकक्रमविशिष्टत्वेनाकार्यत्वाभावात् । यस्याश्चाकार्यत्वं वर्णादिरूपायाः न तस्या आकांक्षानिमित्तं प्रतिसंबन्ध्यन्वितत्वमिति अकार्यत्ववाच्यवत्वयोर्व्यधिकरणत्वमित्याशङ्कां परिहरति **वर्णानामिति** । प्रथमाध्याये चतुर्थचरणे ज्योतिरधिकरणे वर्णानामप्यर्थवत्वस्य प्रतिपादितत्वात् न तयोर्व्यधिकरणत्वमित्यर्थः । यद्यप्यत्रैव बुद्धिघटितक्रमविशिष्टवर्णरूपवेदवाचोपि नित्यत्वात् न वाच्यवत्वनित्यत्वयोर्व्यधिकरणत्वमिति शक्यते वक्तुं तथापि सर्वथा नित्यत्वशङ्कानास्पदानामपि आकांक्षानिमित्तप्रतिसंबन्ध्यन्वितत्वसंभवे किं शङ्काविषये तदुपपादनेनेत्यभिप्रायेण वर्णग्रहणं कृतं इति ध्येयम् । नित्यत्वेत्यकार्यत्वस्योपलक्षणम् ।

प० — **वसिष्ठादयो द्रष्टार इति** । द्रष्टृत्वं च 'जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः । मुनीनां प्रतिभास्यन्ति भागेनैव न सर्वशः' इत्यत्रोक्तदिशा समाधिवेलायां स्मृतिविषयत्वं ज्ञेयम् । नित्य इत्यादेः प्रकृतानुपयोगमाशङ्क्याह **यथा वेदवागिति** ॥ **न धात्वर्थ इति** । वर्णमालाया अक्रियारूपत्वात् वाचं वक्ति उच्चारयति अधीते अध्यापयति इत्यादिधात्वर्थं प्रति कर्मकारकमित्यर्थः । ननु नित्यानां वर्णानां अर्थहीनत्वात् तत्समुदायस्य क्रमविशिष्टवेदवाचोऽर्थवत्या अनित्यत्वात् कथं नित्यत्ववाच्यत्वयोः समावेश इत्यत आह **वर्णानामिति** । जिज्ञासासूत्रे शक्तिश्चैवान्विते स्वार्थ इति पद्यव्याख्यावसरे स्फोटाद्यपाकरणेन वर्णानामर्थवत्त्वस्य स्थितत्वादित्यर्थः । यद्वा अन्वयव्यतिरेकाभ्यां वर्णानामर्थवत्त्वस्य सर्वानुभवसिद्धतया स्थितत्वादित्यर्थः । त एव च पौर्वापर्येणानुसंहिताः वेदवागित्युच्यन्त इति भावः । यद्वा वेदगतवर्णानां प्रत्येकं भगवदर्थकत्वस्य वेदाक्षराणि यावन्तीत्यादिस्मृत्या ज्योतिर्नयेन च स्थितत्वादित्यर्थ इत्येके ।

या० — **वाक् न धात्वर्थ इति** । वेदवाक् न वचधात्वर्थः । परिभाषणरूपत्वाभावादिति भावः । ननु क्रमविशेषविशिष्टवर्णात्मके वेदे वाच्यत्वं तत्र च नाजन्यत्वम् । क्रमस्य जन्यत्वात् । यत्र वर्णेषु नित्यत्वं तत्र न वाच्यत्वम् । क्रमरहितवर्णानां प्रत्येकमर्थवत्त्वाभावात् । तथा च नित्यत्ववाच्यत्वयोः कथं सामानाधिकरण्यमत्रोक्तमित्यत आह **वर्णानामर्थवत्त्वस्येति** । प्रथमाध्याये वैदिकवर्णानामपि समन्वयस्य समर्थितत्वादित्यर्थः ।

श्री० — **क्वचित्** प्र लयकाले ।

सु० — ज्ञस्यापि नित्यत्वेन ज्ञेयादिरहितत्वशङ्कैवमेव परिहार्येत्याह न हीति ।

अनु० — न हि नित्योऽपि वक्ताऽस्ति वाक्यवाच्यविवर्जितः ॥
ज्ञानज्ञेयविहीनश्च ज्ञोऽप्येवं नैव विद्यते ॥

**नित्योऽपि वक्ता परमेश्वरो वाक्यवाच्यविवर्जितो नास्ति । यस्मात्तस्मादेवं नित्योऽपि ज्ञो ज्ञानज्ञेयविहीनो नैव विद्यते । शक्तिः कारकमिति पक्षस्य स्थितत्वान्नित्यो वक्तेति युज्यते । अनेनोभयत्र व्याप्त्यभावेन व्यापकविरुद्धोपलब्धिरसिद्धेत्युक्तं भवति ।**

शे० — ननु नित्यो वक्तेति वचनक्रियाकर्तुर्नित्यत्वमुच्यते तदयुक्तम् । कर्ता हि कारकविशेष कारकं च क्रियाविशिष्टमेव वा कार्यानुकूलव्यापारविशिष्टं वा । न च विशेषणीभूतक्रियाया व तदनुकूलपरिस्पन्दादिव्यापारस्य वा नित्यत्वं संभवति । ततश्च तद्विशिष्टस्याप्यनित्यत्वमेवेति कथं तन्नित्यत्वं स्यादित्यतो भवेदेतदेवं यदि क्रियाविशिष्टं वा तदनुकूलव्यापारविशिष्टं वा कारकमिति स्यान्न चैवं किन्नाम शक्तिरेव कारक तस्याश्च नित्यत्वान्नानुपपत्तिरित्याह **शक्तिः कारकमितीति** । ननु च द्रव्यव्यतिरेकेण शक्तिरेव नास्ति । तत्र मानाभावात् । न तावत्प्रत्यक्षं द्रव्यव्यतिरिक्तशक्तिस्वरूपपरिच्छेदि समुपजायते । द्रव्यस्वरूपातिरेकेण शक्तिस्वरूपानुपलम्भात् । प्रत्यक्षाप्रवृत्तौ च तत्पूर्वकस्यानुमानस्यापि नास्ति शक्तिसद्भावे प्रवृत्तिः । कार्यं च द्रव्यरूपायत्तमेवेति कार्यव्यतिरेकादपि नास्ति शक्तिसद्भावावगमः । तत्कथं शक्तेः कारकत्वाभिधानमिति चेत् । उच्यते । न तावद्द्रव्यं कारकमिति पक्षो युक्तः । तथा सति द्वयोः क्रिययोः कारकमधिकरणं यत्रैकं तत्र विभक्त्यभावप्रसङ्गाद्विभक्तिविधावनभिहिताधिकारादनभिहित एव तत्र सप्तमी वाच्या । अनभिहित इति चाभिहिते न भवतीति प्रसज्यप्रतिषेधो न भवति किन्त्वभिहितान्यस्मिन्निति पर्युदास एवेत्यन्यदेतत् । न च द्रव्यकारकतायां प्रसज्यप्रतिषेधपर्युदासयोरस्ति संभवः । तथा हि । यदि तावदनभिहित इति प्रसज्यप्रतिषेधः स्यात्ततो द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्त्यभावप्रसङ्गः । प्रासाद आस्त इत्यत्र सदिक्रियाया आसिक्रियायाश्चैकमधिकरणं प्रासादाख्यं तच्चान्यतरेण सदिप्रत्ययेन घञाऽभिहिते प्रसीदन्त्यस्मिन्निति प्रासाद इति तत्राभिहिते न भवतीत्युच्यमाने सप्तमी न प्राप्नोति । अस्तु तर्ह्यभिहितादन्यस्मिन्नभिहितसदृशे भवतीति पर्युदासः । आसिप्रत्ययेनानभिधानादभिहितान्यत्वस्य सदिप्रत्ययेन चाभिधानादभिहितसदृशत्वस्य च प्रासादे संभवेन तत्र विभक्त्युपपत्तेरिति चेन्न । एकस्य प्रासादद्रव्यस्याधिकरणकारकत्वात्तस्य च सदिप्रत्ययेनाभिहिततया तदन्यत्वानुपपत्तेः । न ह्येकमेव वस्त्वभिहितमनभिहितं चेति संभवति । तत्कस्य हेतोः अन्योन्याभावस्य व्याप्यवृत्तित्वनियमात् । ततश्च

न सप्तमी स्यात् । तदेवं द्रव्यस्य कारकतायां प्रसज्यप्रतिषेधपर्युदासयोरनुपपत्तेर्न तत्कारकत्वपक्षो न्याय्यः । किन्तु शक्तिकारकत्वपक्ष एव । शक्तेर्नानात्वेनाभिहितत्वानभिहितत्वसंभवात्प्रासाद आस्त इत्यत्र सदिक्रियाशक्तेरप्यभिधानेऽप्यासिक्रियाशक्तेरनभिहितत्वात्तदाश्रयणेन सप्तम्युपपत्तेः ।

अथ सत्यभिधानेऽनभिधाने चानभिहिताश्रया सप्तमी भविष्यति न पुनरभिहिताश्रयः प्रतिषेध इत्येतत्कुत इति चेच्छृणु । अनभिहिते सप्तमीविधानेऽप्यभिहिते तदप्रतिषेधात् । न च मानाभावेन शक्तेरेवासिद्धौ न तन्नानात्वकल्पनया पर्युदाससमर्थनमुपपन्नमिति वाच्यम् । अन्यथाऽनुपपत्त्यैव तत्सिद्धेः । तथा हि । एवं हि कश्चित्कञ्चित्पृच्छति । क देवदत्त इति । स तस्मा आचष्टे । असौ वृक्ष इति । अन्यस्त्वाह कतरस्मिन्बहवो वृक्षाः । अपर आह यस्तिष्ठतीति । स वृक्षोऽधिकरणं भूत्वाऽन्येन शब्देनाभिसंबध्यमानः कर्ता संपद्यते । द्रव्ये पुनः साधने सति यत्कर्म कर्मैव स्यात् । यत्करणं करणमेव स्यात् । यदधिकरणमधिकरणमेव स्यात् । पदार्थस्य नियतरूपत्वात् । अयमर्थः । यदि द्रव्यं साधनं स्यात्तदा तस्यैकत्वात्तत्स्वनिबन्धनाबाधितप्रत्यभिज्ञाविषयत्वात् । नानार्थक्रियाकारकसंबन्धनिबन्धनो मानाव्यपदेशभेदो न स्यात् । दृश्यते चासाविति तदन्यथाऽनुपपत्त्या नानाशक्तिसद्भावशक्तिः । न चैवं प्रसज्यप्रतिषेधेऽपि या शक्तिरभिहिता तत्र मा भूद्विभक्तिर्या त्वनभिहिता तत्र भविष्यत्येव विभक्तिरिति पर्युदासाश्रयणमनर्थकमिति वाच्यम् । अनभिहिते कर्मणीत्येकत्वादीनामाधारनिर्देशः । संख्या च द्रव्यधर्मः । अतोऽनभिहिते कर्मणीत्यादिभिरपि शक्तिद्वारेण द्रव्यमेवोच्यते । अनभिहितायाः कर्मादिशक्तिस्तदाधारभूतं यद्द्रव्यं तस्यैकत्वादिषु विभक्तय इति । एवंच प्रसज्यप्रतिषेधः स्यात् । ततोऽभिहितशक्तिद्वारेण द्रव्यस्याभिहितत्वात्प्रतिषेधः स्यात् । पर्युदासे त्वनभिहितशक्तिद्वारेण विधिरिति स्पष्ट एव फलभेदः ।

भवेदेतद्यत्र शक्तिभेदः स्याद्यत्र तु शक्तिभेदो नास्ति तत्र कथमासने आस्ते शयने शेत इति । मैवम् । अत्राप्यासनशयनादिशब्दैरासनादिक्रियायोग्यं वस्तुमात्रमनुद्भूतशक्तिकमभिहितमिति । ततश्च शक्त्याऽऽविर्भावप्रतिपादनाय विभक्तिर्भविष्यतीति को दोषः । यदि तर्हि पर्युदासो निर्णीयते इह पक्त्वा भुज्यते ओदनं इति भुजिप्रत्ययेनाप्यभिहिते ओदने क्त्वाप्रत्ययेनानभिधानमाश्रित्य द्वितीया प्राप्नोति । भावे हि क्त्वाप्रत्ययः । प्रसज्यप्रतिषेधे तु भुजिप्रत्ययेनानभिधानमाश्रित्य प्रतिषेधो भविष्यति । उच्यते । नात्रौदनस्य युगपदुभाभ्यां शाब्द एवान्वयः । सकृच्छ्रुतस्य युगपदुभय-

संबन्धस्याव्युत्पन्नत्वात् किन्त्वेकेनैव शब्दान्वयो वाच्यः । स च प्रधानन्यायात्प्रधानेन भुजिनैव वाच्यः । पचिना तु सन्निधानादार्थः । केवलं शब्दव्यापारनिरूपणे किमिष्टकाः पक्त्वौदनो भुज्यते उतौदनमेवेति न ज्ञायते । अतः शब्दव्यापारापेक्षयाऽनभिधानमेवेति न द्वितीयाप्रसङ्गः । तदेतत्सर्वमभिसन्धायोक्तम् **इति पक्षस्य स्थितत्वादिति** । अनभिहितसूत्रभाष्यादाविति शेषः ।

**उभयत्रेति** । ज्ञात्रादिमत्त्वे ज्ञानादिमत्त्वे चेत्यर्थः ॥ **व्यापकेति** । ज्ञेयादिमत्त्वरूपसाध्य-व्यापककार्यत्वरूपोपाधिविरुद्धस्याकार्यत्वस्योपलब्धिरसिद्धेत्यर्थः । कथमसिद्धत्वमित्यतस्तत्र हेतुमाह **व्याप्त्यभावेनेति** । साध्यद्वये उपाधिव्याप्त्यभावेनेत्यर्थः । आकाङ्क्षानिमित्तप्रतिसंबन्ध्य(न)न्वितत्व-स्याकार्येऽप्युपपादितत्वेन तत्र ज्ञेयादिमत्त्वेऽपि कार्यत्वाभावेनोपाधेः साध्याव्यापकत्वान्न तद्व्यावृत्त्या ज्ञात्रादिमत्त्वरूपसाध्यविपर्ययसिद्धिरिति समुदायार्थः ।

**म०**— ननु वक्तृत्वं वचनक्रियायाः कर्तृत्वम् । तथा च यदा वचनक्रियां करोति तदा वक्तृ-त्वसद्भावेपि यदा न तां करोति वक्तृत्वस्याभावेन कथं वक्तृत्वस्य नित्यत्ववचनमित्यत आह **शक्तिः कारकमिति पक्षस्येति** । तथाच वक्तृत्वशक्तेः सदा सत्त्वान्न दोष इति भावः । कथमेतावतोक्तोपाधि-निरास इत्यत आह **अनेनोभयत्रेति** । ज्ञानं ज्ञातृज्ञेयस्यापेक्षं ज्ञानत्वात् । ज्ञाता ज्ञानज्ञेयसापेक्षः ज्ञत्वात् इत्युभयत्रेत्यर्थः । **व्यापकेति** । ज्ञेयादिमत्त्वरूपसाध्यव्यापककार्यत्वरूपोपाधिविरुद्धस्याकार्यत्वस्योपलब्धेर-सिद्धेरित्यर्थः । कथमसिद्धत्वमित्यतस्तत्र हेतुमाह **व्याप्त्यभावेनेति** । साध्योपाध्योर्व्याप्त्यभावेनेत्यर्थः । आकांक्षानिमित्तप्रतिसंबन्ध्यन्वितत्वस्याकार्येप्युपपादितत्वेन तत्र ज्ञानादिमत्वेपि कार्यत्वाभावेनोपाधेः साध्याव्यापकत्वान्न तद्व्यावृत्त्या ज्ञात्रादिमत्वसाध्यविपर्यय इति समुदायार्थः ।

**प०**— ननु वचनक्रियायाः अनित्यत्वात् कथं नित्यो वक्तेति उक्तिरित्यत आह **शक्तिरिति** । तथा च वचनस्यानित्यत्वेपि तच्छक्तेरपि कारकत्वान्नित्यत्वाच्च वचनक्रियाशक्तिमानीश्वरो नित्यवक्तेति नित्यवचनं प्रति कर्तृकारकतयोक्तिर्युज्यत इति भावः ॥ **उभयत्रेति** । ज्ञानं नित्यं चेन्न कारकापेक्षं ज्ञो नित्यश्चेन्न क्रियाज्ञेयापेक्षः किन्तु कार्यमेव कारकापेक्षमिति प्रसङ्गद्वये वेदवाचि ईश्वरे च व्यभिचारात् कारकापेक्षत्वे प्रयोजकत्वेन शङ्कितस्य कार्यत्वस्य व्याप्त्यभावेन तत्प्रतिव्यापकत्वाभावात् । ब्रह्मरूपज्ञाने कार्यत्वाभावोपलम्भेपि व्यापकविरुद्धोपलब्धिरसिद्धेति नित्यवागपीत्यादिग्रन्थेनोक्तं भवतीत्यर्थः ॥ **मिथ्यावस्तुसापेक्षत्वे ब्रह्मणश्चेतनत्वाभावोक्तिः ॥**

**या०** — ननु वचनक्रियाया अनित्यत्वात्तद्विशिष्टरूपो वक्ताऽप्यनित्य एव । अतः कथं नित्यत्वोक्तिर्युज्यत इत्यत आह **शक्तिः कारकमिति** । पक्षस्येत्यनन्तरं व्याकरणशास्त्र इति शेषः । तथा हि । यदि द्रव्यमेव कर्तृकर्मकरणादिकारकरूपं स्यात्तदा क्वचित्तस्यैव नानाक्रियासंबन्धनिबन्धनः कर्तृकर्मकरणादिरूपभेदव्यपदेशोऽनुपपन्नः स्यात् । वर्तते चासावतो द्रव्यगता नानाशक्तय एव कर्त्रादिकारकरूपा न द्रव्यम् । तस्य प्रत्यभिज्ञाबलेनाभिन्नत्वात् । न चैवं विभक्तिवाच्याया एकत्वादिसंख्यायाः कारकान्वयानुपपत्तिः । तस्या द्रव्यधर्मत्वेन शक्त्यन्वयासंभवादिति वाच्यम् । संख्यायाः शक्तिद्वारैव द्रव्यान्वयाभ्युपगमात् । कर्त्रादिकारकभूता या शक्तिस्तदाधारभूतं यद्द्रव्यं तस्यैकत्वादिषु विभक्तय इति । एवं च वक्तेत्यत्रापि कर्त्रर्थकेन प्रत्ययेन साक्षाच्छक्तेरेवाभिधानम् । द्रव्यस्य तु तद्द्वारैव । ततश्च या वचनक्रियां प्रति कर्तृकारकरूपा शक्तिस्तदाधारभूतो यः स नित्य इत्युक्ते न कोऽपि विरोधः । वचनक्रियाविशिष्टरूपद्रव्यस्य कर्त्रर्थकप्रत्ययवाच्यत्वानभ्युपगमात् । शक्तेश्च तद्वाच्याया यावद्धर्मिभावित्वादिति ॥ **व्याप्त्यभावेनेति** । व्याप्त्यभावेन व्यापकत्वासिद्धौ तद्विरुद्धोपलब्धिरसिद्धेत्यर्थः ।

**श्री०** — **उभयत्र व्याप्त्यभावेनेति** । ज्ञानस्य कर्त्राद्यन्वितताया: कार्यत्वं व्यापकं ब्रह्मस्वरूपज्ञानस्य चाकार्यत्वात्कर्त्राद्यन्वितत्वं नास्तीत्ययुक्तम् । वेदवाचि व्यभिचारात् । तथा ज्ञातृत्वापरपर्यायज्ञस्यापि ज्ञानज्ञेयसापेक्षत्वस्यानित्यत्वं व्यापकम्, अस्य च नित्यत्वान्न ज्ञेयादिसापेक्षत्वमित्यप्ययुक्तम् । नित्यवक्तरीश्वरे व्यभिचारादित्येवं व्याप्त्यभावेन कार्यत्वस्य कर्त्राद्यन्वितताव्यापकत्वस्य तथाऽनित्यत्वस्य ज्ञानज्ञेयादिसापेक्षत्वव्यापकत्वस्य चाप्यभावेन तद्विरुद्धोपलब्धिरसिद्धेत्यर्थः ।

**सु०** — **मिथ्याभूतपरसापेक्षस्य सार्वज्ञस्यापि मिथ्यात्वमङ्गीकुर्वाणस्य चेतनत्वाद्यभावप्रसङ्गोऽभिहितः । इदानीं प्रपञ्चमिथ्यात्वं चाप्रामाणिकमित्याह** किञ्चेति ।

**अनु०** — किञ्च सर्वविलोपश्च केन मानेन गम्यते ॥

**सर्वविलोपः सर्वस्य मिथ्यात्वम् । न तावत्प्रत्यक्षेण, तस्य सत्यताग्राहित्वात् । नाप्यनुमानेन, प्रत्यक्षबाधितस्य तस्य प्रामाण्याभावात् । न चागमेन । प्रपञ्चमिथ्यात्वं प्रतिपादयतः तस्याभावादित्याक्षेपार्थः ।**

**शे०** — प्रपञ्चमिथ्यात्वस्याप्रामाणिकत्ववर्णनपरोत्तरग्रन्थस्यासङ्गतिमाशङ्क्य परिहरति **मिथ्याभूतेति** ॥ **चेतनत्वाद्यभावेति** । ज्ञत्वज्ञानत्वाभावप्रसङ्ग इत्यर्थः ।

**सु० — ननु नेह नानाऽस्ति किञ्चनेत्यागमस्य सद्भावात्कथं विश्वमिथ्यात्वे मानाभाव इति चेदत्र पृच्छामः । अत्र सर्वस्य मिथ्यात्वं प्रतिपादयति वाक्ये सर्वान्तर्गतत्वेनेदं वाक्यमेतद्वाक्यार्थश्च गृह्यते न वेति । आद्यमनूद्य दूषयति** सर्वेणेति ।

**अनु०**— सर्वेण सह तद्वाक्यमर्थश्च यदि गृह्यते ।।
तदभावेन सर्वस्य नापलापो भवेत्तदा ।।

तदभावेन **वाक्यवाक्यार्थयोर्मिथ्यात्वेन कारणेन ।** वाक्याभावे **प्रतिपादकाभावाद्वाक्यार्थस्य सर्वमिथ्यात्वस्याभावे च व्याघातात् । द्वितीयमनूद्य दूषयति** न गृह्यते चेदिति ।

न गृह्यते चेत्तन्न्यायादपलापो न हि क्वचित् ।

**क्वचिद्वियदादिविषयेऽप्यपलापो निषेधो न युज्यते । तन्न्यायाद्वाक्यादिन्यायात् । अयमर्थः । वाक्यवाक्यार्थौ कुतः सर्वस्माद्बहिष्क्रियेते इति** वाच्यम् । **अनुपपत्तेरिति चेत् । किमनुपपन्नं न प्रतिपादनीयम्** । **अङ्गेति चेत् । एवं तर्हि वियदादिमिथ्यात्वमप्यनुपपन्नत्वान्न प्रतिपादनीयमिति** ।

**शे०** — तन्न्यायादित्युक्तन्यायमेव प्रपञ्चयति **अयमर्थ इति ।**

**प०** — तदभावेनेत्यनुवादः । वाक्येत्यादि व्याख्या ।। **व्याघातादिति** । सर्वं मिथ्येति वक्तुं प्रवृत्तमिदं वाक्यं मिथ्येत्युक्त्वा पुनर्मिथ्यात्वं नेति वक्ति चेत् व्याघात इत्यर्थः । अस्फुटत्वादाह **अयमर्थ इति ।**

**श्री० — व्याघातादिति** । सत्यत्वप्राप्त्या श्रुतेः स्वव्याघातप्रसङ्गादित्यर्थः ।। **अनुपपत्तेरिति** । वाक्याभावे प्रतिपादकाभावाद्वाक्यार्थाभावे च व्याघातरूपानुपपत्त्या वाक्यवाक्यार्थौ नेह नानेति श्रुतिप्रतिपादितमिथ्यात्वोपेततया नाङ्गीक्रियेत इत्यर्थः ।

**सु० — ननु वाक्योदाहरणे कृते नैवंविधं वाक्यमस्तीति वा (ए)नैषां पदानामत्र शक्तिर(ना)स्तीति वा नास्य वाक्यस्यात्र तात्पर्यमस्तीति वा वक्तव्यम् । अनेन विकल्पनिराकरणेन तु किं कृतं स्यादित्यत आह** उपपत्तीति ।

**अनु०** — उपपत्तिविहीनस्य वाक्यस्यार्थो न गम्यते ।।

**विहीनस्य विरुद्धस्य । अर्थस्तात्पर्यम्** । **एतदुक्तं भवति । न ब्रूमो वयं नास्तीदं वाक्यमिति** । नाप्येषां पदानामत्र शक्तिर्नास्तीति । **किन्त्वस्य वाक्यस्य प्रपञ्चमिथ्यात्वे तात्पर्यं नास्तीति । उपपत्तिविरोधाभावो हि प्रतीतार्थे तात्पर्यस्य ज्ञापकः । अत्र चास्त्युपपत्तिविरोध इति ज्ञापनाय विकल्प्य दूषणाभिधानं कृतमिति ।**

**शे०— इति वा वक्तव्यमिति ।** तच्चाशक्यं वाक्यस्य तेषां पदानां तत्रार्थे शक्तेश्च प्रमितत्वात्तात्पर्यस्य चोपक्रमादिलिङ्गैर्निश्चितत्वादिति भावः ॥ **किं कृतमिति ।** वाक्यदूषणतया वल्सोक्तप्रकारत्रितयान्यतमत्वाभावान्न विकल्पनिराकरणस्य वाक्यदूषणत्वमिति भावः । ननु विकल्पनिराकरणादर्थाभावकथनस्याप्युक्तप्रकारत्रयान्यतमत्वाभावात्कथं दूषणत्वमित्यतोऽत्रार्थशब्दस्य तात्पर्यपरत्वेन तृतीयान्यतमत्वलाभान्न वाक्यार्थनिराकरणत्वानुपपत्तिरित्याह **अर्थस्तात्पर्यमिति ।** ननूपपत्तिविहीनत्वेऽप्यतात्पर्यं कुतः । अस्तु वा तत् । तथाऽप्यतात्पर्योपपादकतयोपपत्तिविरोधस्यैव वाच्यतया विकल्पनिराकरणानुपपत्तिरेवेत्यत आह **एतदुक्तं भवतीति ।**

**प०—** विहीनस्येत्यनुवादः । विरुद्धस्येति व्याख्या । यद्वा विहीनस्येत्युपलक्षणमुपेत्योक्तं **(उपपत्ति)विरुद्धस्येति ।**

**सु०— स्यादेतत् । उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तयः श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याश्च तात्पर्यलिङ्गानि । तत्रोपपत्तिविरोधेऽप्यन्यैर्लिङ्गैरस्य वाक्यस्य प्रपञ्चमिथ्यात्वे तात्पर्यमवगम्यतामित्यत आह** उपक्रमादीति ।

**अनु०—** उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम् ॥
श्रुत्यादौ पूर्वपूर्वं च

---

**उपक्रमादिलिङ्गानां मध्ये यद्यदुत्तरं तत्तद्बलीय इत्युपपत्तिरेव बलीयसी । श्रुत्यादौ लिङ्गसमूहे च यद्यत्पूर्वं तत्तद्बलीय इति । तत्रापि लिङ्गशब्दोदितोपपत्तिरेव बलवती । ततो बलवद्विरोधे सतामन्येषां लिङ्गानां न तात्पर्यनिश्चायकत्वं युक्तम् ॥ कुत एतदित्यत आह** ब्रह्मतर्केति ।

ब्रह्मतर्कविनिर्णयात् ॥

**ब्रह्मतर्काख्ये तर्कशास्त्रे तथा निर्णीतत्वात् । एतेनोपक्रमस्योपसंहारात्प्राबल्यं वदन्तो निरस्ताः । यथा चैतत्तथोक्तं न्यायविवरणे ।**

**शे०— श्रुतिलिङ्गेति ।** यद्यपि श्रुत्यादीनामागमार्थनिर्णायकत्वमेवेति सिद्धान्तः । न तु तात्पर्यनिर्णायकत्वम् । 'आगमार्थावसित्यर्था नियतव्यासयोऽखिलाः' इत्युक्तत्वात् । तथाऽपि साक्षाद्विप्रतिपन्नार्थनिष्ठानामेतेषामागमार्थनिर्णायकत्वेऽपि प्रकरणादौ श्रुतानामुपक्रमादिनिर्णायकत्वेन तद्द्वारा तात्पर्यनिर्णायकत्वाभिप्रायेणेयमुक्तिरिति ध्येयम् ॥ **लिङ्गशब्दोदितोपपत्तिरेवेति ।** यद्यपि न श्रुत्य-

पेक्षया तस्या बलवत्त्वं तथाऽपि श्रुत्यतिरिक्तवाक्याद्यपेक्षया लिङ्गशब्दोदितोपपत्तेः प्राबल्यापेक्षयेयमुक्तिः। वस्तुतस्त्वतद्गुणसंविज्ञानबहुव्रीहिणा श्रुत्यतिरिक्तलिङ्गसमूहस्यैवेह 'श्रुत्यादौ लिङ्गसमूह' इत्यनेन ग्रहणं न तु श्रुतेः। तस्याः स्वनिर्णये श्रुतित्वेनैव निर्णायकतया वाक्यादिवदनुमानत्वाभावात्। अत एव 'वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा' इत्यनुव्याख्याने 'समाख्यावाक्यप्रकरणस्थानानि च उपपत्तिविशेषाः' इति प्रमाणलक्षणे च वाक्यादीनामेव लिङ्गतोक्ता न तु श्रुतेः। लिङ्गस्य त्वनुमानतयाऽविप्रतिपन्नत्वान्न तत्र तदुक्तिः। तथा च विवक्षितलिङ्गसमूहे लिङ्गपदोदितोपपत्तेरेवेतरापेक्षया प्राबल्याद्युक्तैवेयमुक्तिरिति ध्येयम्। अत्र 'लिङ्गानुकूल्यं स्वार्थस्य श्रुत्यादीनामनुग्रह' इति युक्तिपादीयग्रन्थव्याख्यानरूपया 'श्रुत्यादीनां, वेदादीनां श्रुतिर्लिङ्गं समाख्या चेत्युक्तानां लिङ्गग्रहणेनैव गृहीतत्वादि'ति टीकया विरोध इत्याभाति। तदनुरोधेन श्रुतेर्लिङ्गताप्रसक्तिरिति द्रष्टव्यम्।

**एतेनेति**। उपक्रमादिषूत्तरोत्तरप्राबल्यकथनेनेत्यर्थः। ननूपक्रमादुपसंहारस्य कुतः प्राबल्यमित्यत आह **यथा चैतदिति ॥ न्यायविवरण इति**। तृतीयाऽऽद्यचरणे 'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेरि'त्यधिकरणे 'उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमङ्गीकरणीयम्। व्याख्यानस्य पश्चात्तनत्वनियमादि'ति ग्रन्थेनोपक्रमादुपसंहारस्य प्राबल्यमुपपादितमित्यर्थः। अयं भावः। एकप्रकरणे प्रथमेनार्थे धीस्थे चरमस्य तद्विषयस्य प्रथमस्वारस्यविरोधिनोऽप्यवैयर्थ्याय प्रथमव्याख्यानरूपताया, लोके गामानय बलीवर्दमानयेत्यादौ, वेदे च वासः परिधत्ते यत्क्षौममित्यादौ, दर्शनान्निश्चितप्रामाण्यव्याख्यानानुसारेण च व्याख्येय'स्याशनापिपासे ह वा उग्रं वाच' इत्यादिब्राह्मणानुसारेणोग्रं वाचोऽपावृधीमित्यादिमन्त्रस्येव, सदिति प्राणस्तीत्यन्नं यमित्यसावादित्य इत्याद्यनुसारेण च सत्यमित्यादेरिव च नेयत्वात्तथा पूर्वाबाधे उत्तरानुत्थानाच्चोपक्रमादुपसंहारस्य प्राबल्यम्। यथा प्रथमेऽश्रवणादित्यत्र 'श्रद्धां जुह्वती'त्युपक्रमा'दिति तु पञ्चम्यामाहुतावाप' इत्युपसंहारस्य तत्राप्शब्दानुसारेण श्रद्धाशब्दस्य लक्षणाश्रयणात्। न चैवं वेदोपक्रमाधिकरणविरोधः। न हि तत्रोच्चैर्ऋचा क्रियत इत्युपसंहारस्थऋगादिशब्दस्त्रयो वेदा इत्युपक्रमस्थवेदशब्दमात्राद्वेदे लाक्षणिकः। किन्त्वग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इति वेदशब्दाभ्यासात्। नाप्यश्वप्रतिग्रहेष्टिनयविरोधः। तन्त्रसारे मैत्रायणीयशाखायां 'दातृपक्रमतोऽप्यृते। कर्माङ्गत्ववशादेव दातुरिष्टिः प्रतीयते॥' इत्युक्तत्वात्। शास्त्रदीपिकायामपि 'सा लिङ्गादार्त्विजे स्यादि'ति सूत्रानुसाराद्भाष्यकारान्तैरैस्तत्राप्युपसंहारानुरोधात्प्रतिग्रहीतुरेवेष्टिरित्युक्तत्वात्। याज्ञिकैरपि तथैव स्वीकृतत्वात्। प्राभाकरैरपि पौण्डरीके श्रूयत इति कृत्वाचिन्तेयमन्यथा दातुरिति सिद्धान्तासिद्धेरिति वदद्भिर्वस्तुतः प्रतिग्रहीतुरिष्टिरिति स्वीकृतत्वाच्चेति।

**स०— श्रुतिलिङ्गेति** । ननु श्रुत्यादीनां न तात्पर्यनिर्णायकत्वं किन्तु आगमार्थनिर्णायकत्वमेव अन्यथापसिद्धान्त इति चेत् । न साक्षाद्विप्रतिपन्नार्थनिष्ठानां श्रुत्यादीनां आगमार्थनिर्णायकत्वेपि प्रकरणादौ श्रुतानामुपक्रमादिनिर्णायकत्वेन तद्द्वारा तात्पर्यनिर्णायकत्वमित्यत्र तात्पर्यादविरोधः । **लिङ्ग-शब्दोदितोपपत्तिरेवेति** । श्रुत्यतिरिक्तापेक्षया बलवतीत्यर्थः । वस्तुतस्तु 'श्रुत्यादौ लिङ्गसमूह' इति अतद्गुणसंविज्ञानो बहुव्रीहिः द्रष्टव्यः । श्रुतेर्लिङ्गत्वाभावादिति द्रष्टव्यम् । **न्यायविवरण इति** । 'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेरि'त्यधिकरण इति शेषः ।

प० —श्रुत्यादावित्यत्र विशेष्याकाङ्क्षायां पूर्वत्र लिङ्गस्य प्रकृतत्वादाह **लिङ्गसमूह इति** । तात्पर्य-निर्णायकलिङ्गसमूह इत्यर्थः ॥ **तत्रापीति** । श्रुत्यादिषट्केपि लिङ्गपदेनोदितः असाधारणधर्म एवोपपत्ति-रित्यर्थः । यदा तु उपपत्तिर्लिङ्गपदेनाभिप्रेयते तदा श्रुतितोऽपि लिङ्गं बलवदिति ज्ञेयमित्यर्थः ॥ **एतेनेति** । ब्रह्मतर्कोक्तत्वकथनेन पूर्वमीमांसाप्रभृतयोपि निरस्ता इत्यर्थः ॥ **न्यायविवरण इति** । तृतीयाद्यपादे 'प्रथमेऽश्रवणादि'तिनये उक्तमित्यर्थः । विस्तृतमेतत्तर्कताण्डवचन्द्रिकयोः ।

**या०— न्यायविवरण इति** । 'प्रथमेऽश्रवणादिति चेदि'त्येतस्मिन्नधिकरणे न्यायविवरणे उपसंहारस्य व्याख्यानरूपत्वेन प्राबल्यमुपपादितमित्यर्थः ।

**सु०— इतश्च नाप्यस्य वाक्यस्य प्रपञ्चमिथ्यात्वे तात्पर्यमित्याह** प्रत्यक्षमिति ।

---

**अनु०—** प्रत्यक्षमुपपत्तिश्च बहवश्चागमा यदा ॥
विरुध्यन्ते, न चार्थोऽस्ति यत्र, लिङ्गविरोधिता ॥
स एवार्थः कथं ग्राह्यः

**सद्गगनमित्यादि प्रत्यक्षम् । तच्च साक्षिरूपत्वाद्बलवत् । उपपत्तिश्चार्थक्रियाकारित्वा-दिका । सा च व्याप्त्यादिमत्त्वाद्बलवती । आगमाश्च विश्वं सत्यमित्याद्याः । तेषां प्राबल्य-व्युत्पादनाय बहव इत्युक्तम् । निरवकाशत्वाद्युपलक्षणमेतत् । यदा यस्मिन्नर्थेऽङ्गीकृते । यत्र यदर्थप्रतिपादनेऽर्थः प्रयोजनं च नास्ति । ब्रह्मणोऽद्वितीयतासिद्धिः प्रयोजनमिति चेन्न । तस्या एवाप्रामाणिकत्वात् । आत्मनो मुक्तिसिद्धिरिति चेन्न । विनाशेनापि तत्सिद्धेः । बहु-जीववादिनामिवादर्शनेनाप्युपपत्तेः । वैराग्यार्थमिति चेन्न । दुःखसाधनताज्ञापनेन तत्सिद्धेः । अर्थग्रहणमुपलक्षणम् । उपक्रमादीनामप्यानुकूल्यं नास्तीति च द्रष्टव्यम् । न केवलं लिङ्गानु-कूल्याभावः । किन्नाम यत्र लिङ्गविरोधिता च । एतद्द्वयं ग्रन्थान्तरे तत्र तत्रोक्तं ज्ञातव्यम् ।**

**शे०—** अर्थो हि भवन्ब्रह्मणोऽद्वितीयतासिद्धिर्वाऽऽत्मनो मुक्तिसिद्धिर्वा वैराग्यं वेति विकल्पान्मनसि निधायाद्यमुत्थाप्य दूषयति **ब्रह्मण इति** । द्वितीयमाशङ्कते **आत्मनो मुक्ति-**

**सिद्धिरिति** । जीवस्याद्वितीयताया एव मुक्तित्वात्तस्याश्च बन्धमिथ्यात्वं विनाऽनुपपन्नत्वात्तस्यैव मिथ्यात्वाङ्गीकारे प्रयोजनमिति भावः । अद्वितीयतालक्षणमुक्तेर्बन्धमिथ्यात्वाक्षेपकत्वं तदा स्याद्यदि तस्याः प्रमितत्वमनुपपद्यमानत्वं च स्यात् । न चैतदस्तीति भावेन ब्रह्मणोऽद्वितीयताया अप्रामाणिकत्ववर्णनेन समानन्यायतया जीवस्याद्वितीयतालक्षणमुक्तेरप्यप्रमितत्वस्योक्तत्वात्पृथगप्रमितत्वमनुक्त्वाऽन्यथाऽप्युपपन्नतामेवाह **विनाशेनापीति** । सत्यस्यैव द्वितीयस्येति शेषः । तथा च बन्धमिथ्यात्वेनेव बन्धविनाशेनाप्यद्वितीयतालक्षणमुक्तेरुपपन्नत्वान्न तस्या बन्धमिथ्यात्वाक्षेपकत्वमिति भावः ॥ **बहुजीववादिनामिवेति** । अयं भावः । यथा हि लोकेऽनेकेषु मायामयान्गजतुरगादीन्पश्यत्सु यस्य कारणविशेषेण माया गच्छति स एव तान्न पश्यति । अन्ये तु पश्यन्त्येव तथा द्वैतदर्शनकारणमज्ञानं यस्यापगतं स एव तन्न पश्यति । अन्येषां कालादिप्रपञ्चदर्शनमनुवर्तत एवेत्यङ्गीकारेण बहुजीववादिनां मते सतोऽपि कालादिरूपप्रपञ्चस्य तददर्शनमात्रेण मुक्तस्याद्वितीयता । तथा तत्त्वसाक्षात्कारे सतोऽपि द्वितीयस्यादर्शनमात्रेण मुक्तस्याद्वितीयतोपपत्तेर्नाभावप्रतिपादनस्य मुक्तिसिद्धिः प्रयोजनमिति । तृतीयमाशङ्कते **वैराग्यार्थमिति** । ननु वाक्यस्य तत्रातात्पर्योपपादकतया लिङ्गमात्रानुकूल्यराहित्यमेव वक्तव्यम् । लिङ्गमात्रविरोधिताप्रतिपादकोत्तरग्रन्थानुसारात् । तत्कथमत्र फलमात्रानुकूल्याभावकथनमित्यतोऽत्रार्थपदस्य लक्षणयोपक्रमादितात्पर्यलिङ्गमात्रपरत्वेन फलमात्रपरत्वाभावात्तेन लिङ्गमात्रानानुकूल्यलाभान्नानुपपत्तिरित्याशयेनाह **अर्थग्रहणमिति** । कथं नेह नानेतिश्रुतीनां परोक्तार्थे लिङ्गानुकूल्याभावो लिङ्गविरोधित्वं चेत्यत आह **एतद्द्वयमिति** ॥ **ग्रन्थान्तरेति** । तत्त्वनिर्णयादिग्रन्थान्तरेत्यर्थः ।

स०— **विनाशेनापीति** । बन्धस्य सत्यत्वेपीति शेषः । **बहुजीववादिनामिवादर्शनेनाप्युपपत्तेरिति** । अयं भावः । यथा हि लोकेऽनेकेषु मायामयान् गजतुरगादीन्पश्यत्सु यस्य कारणविशेषेण मायाऽपगच्छति स एव तान्नपश्यति । अन्ये तु पश्यन्त्येव । तथा द्वैतदर्शनकारणमज्ञानं यस्यापगतं स एव तन्न पश्यति । अन्येषां तु कालादिप्रपञ्चदर्शनमनुवर्तत इति तत्सिद्धान्त इति ।

प०— **प्रयोजनमिति** । नेह नानेति वाक्येन प्रपञ्चाभावोक्तेरिति योज्यम् ॥ **मुक्तिसिद्धिरिति** । प्रपञ्चहीनतयाऽवस्थानस्यैव मुक्तित्वादिति भावः ॥ **विनाशेनेति** । प्रपञ्चस्येति योज्यम् । तथाच सत्यत्वेऽपि विनाशसंभवेन मिथ्यात्वं न वाच्यमित्यर्थः । अनादेः सत्यस्य न विनाश इति तु निरस्तं जिज्ञासासूत्र इति भावः ॥ **बहुजीवेति** । तन्मते बद्धमुक्तव्यवस्थोपगमेन सत्यपि व्यावहारिकप्रपञ्चे तस्यादृष्टिमात्रेण शुकादिमुक्तत्वस्यैवोपपत्तेरित्यर्थः ॥ **वैराग्यार्थमिति** । विश्वमिथ्यात्वोक्तिरिति योज्यम् ॥ **ग्रन्थान्तरे** तत्त्वनिर्णयोपनिषद्भाष्यादावित्यर्थः ।

या०— **मुक्तिसिद्धिरिति** । आत्मनोऽद्वितीयताया एव मुक्तित्वादिति भावः ॥ **विनाशेनापीति** । सत्यस्यैवाद्वितीयस्येति शेषः । बहुजीववादिनामिवेत्यदर्शनमात्रे दृष्टान्तः । तथा च यथा बहुजीववादिमते यस्य ब्रह्मात्मैक्यज्ञानं समुत्पन्नं स स्वोपाधिमन्योपाधिं च न पश्यतीत्यङ्गीकृतत्वेन व्यावहारिकस्य अद्वितीयस्य सत्त्वेऽपि तददर्शनमात्रेण मुक्तस्याद्वितीयता तथा तत्त्वसाक्षात्कारेण यस्य शरीरेन्द्रियाद्यपगमः स तार्किकरीत्या परमार्थसत्ये द्वितीये सत्येव तन्न पश्यतीत्यदर्शनमात्रेण मुक्तस्याद्वितीयतोपपद्यत इत्यर्थः ।

सु०— **तर्हि निरवकाशं वाक्यमप्रमाणं प्रसज्यत इत्यत आह** उपपन्न इति ।

अनु० — उपपन्नेऽविरोधिनि ॥

**प्रत्यक्षादिप्रमाणोपक्रमादिलिङ्गाविरोधिनि तदानुकूल्योपपन्ने च भगवति स्वगतभेदाभावेऽर्थे वाक्यस्य सति स एवार्थः कथं ग्राह्यः । नेह नानेति वाक्यस्यापव्याख्याने निराकृते लब्धमाह** मुख्यार्थ इति ।

मुख्यार्थे विद्यमाने तु क्व सार्वज्ञं निषिध्यते ॥

**प्रतिषेधस्य सङ्कोचे कारणाभावेन प्रपञ्चमिथ्यात्वं मुख्योऽर्थः । तस्मिन्नविद्यमाने तु सार्वज्ञं न प्रतिषेद्धुं शक्यते । मिथ्यार्थसापेक्षतया हि तन्निषेध्यम् ॥ यद्वोपपन्न इत्यादिकमेकं वाक्यम् । उपपन्नेऽविरोधिनि च । अत एव मुख्यार्थे वाक्यस्य विद्यमाने सति । अनेन प्रपञ्चमिथ्यात्वासिद्धेः क्व सार्वज्ञं निषिध्यत इति योजना । सङ्गतिस्तूक्तसङ्गतिसमाहारेण द्रष्टव्या ।**

शे०— नन्वेकवाक्यतापक्षे कथं सङ्गतिः । न तावत्तर्हि निरवकाशं वाक्यमप्रमाणं प्रसज्यत इत्यत आहेति । तथा सति मुख्यार्थ इत्यादेराधिक्यप्रसङ्गात् । नापि नेह नानेति वाक्यस्यापव्याख्याने निराकृते लब्धमाहेति अनुपपन्न इत्यादिग्रन्थस्याधिक्यप्रसङ्गादित्यत त्याह । **सङ्गतिस्त्विति** । तर्हि निरवकाशवाक्यमप्रमाणं प्रसज्यत इत्याशङ्कां परिहरन्नेव तस्य वाक्यस्यापव्याख्याननिरासेन लब्धमर्थमाहेत्येवमुक्तसङ्गतिद्वयसम्मेलनेन सङ्गतिर्द्रष्टव्येत्यर्थः ।

स०— **प्रतिषेधस्येति** । ब्रह्मेतरसर्वविषयत्वेन सङ्कोचाभाव इत्यर्थः ॥ **उक्तसङ्गतिसमाहारेणेति** । तर्हि निरवकाशवाक्यमप्रमाणं प्रसज्यत इत्याशङ्कां परिहरन्नेव तस्य वाक्यस्यापव्याख्याननिरासेन लब्धमर्थमाहेत्येवं संगतिरित्यर्थः ।

प०— **निरवकाशमिति** । नेह नानेतिवाक्यं मिथ्यात्वरूपादर्थादर्थान्तरशून्यमित्यर्थः । एकवाक्यत्वे योजनामाह **उपपन्न इत्यादिना** । अवतारिका तु कथमेकवाक्यत्वपक्ष इत्यत आह **सङ्गतिस्त्विति** । निरवकाशं वाक्यमप्रमाणं प्रसज्यत इति शङ्कां निरस्यन् नेह नानेत्यस्यापव्याख्यानिरासेन लब्धमर्थमाहेत्येवं ध्येयेत्यर्थः ।

या०— नन्वेकवाक्यतापक्षे कथं सङ्गतिरित्यत आह **सङ्गतिस्त्विति** । उभयोः सङ्गत्योर्मेलनेनेत्यर्थः । तथा च, तर्हि निरवकाशं वाक्यमप्रमाणं प्रसज्यत इत्याशङ्कामपाकुर्वन् **नेह** नानेति वाक्यस्यापव्याख्याने निराकृते लब्धमर्थमाहेति सङ्गतिरुक्ता भवतीति द्रष्टव्यम् ।

श्री०— **निरवकाशमिति** । अर्थान्तरेऽवकाशाभावेन निरर्थकतयाऽप्रमाणं प्रसज्यत इत्यर्थः । **सङ्कोच इति** । सिद्धान्तरीत्या नेह नानेति वाक्योक्तप्रतिषेधस्येश्वरगुणकर्मादिभेदपरतया सङ्कोचेन व्याख्याने कारणाभावेनेत्यर्थः । **मुख्योऽर्थः** परमत इति शेषः । मुख्यार्थे विद्यमाने इत्यत्राकारप्रश्लेषेण व्याख्यायेदानीं तं विनैव व्याचष्टे **यद्वेति** ।

सु०— **सर्वं तदुपजीव्यैवेत्यादिनोक्तमर्थमुपसंहरति** अत इति ।

**अनु**०— अतः सर्वगुणैर्युक्तं ब्रह्माङ्गीकार्यमेव हि ॥

अङ्गीकार्यम् **धर्मितयेति शेषः । तथा चोपजीव्यविरोधस्तत्त्वमस्यादिवाक्यस्य दुर्वार इति हेरर्थः ।**

शे०— नन्वत्र सर्वगुणैर्युक्तं ब्रह्माङ्गीकार्यमित्येतावदेवोच्यते न तु सर्वगुणैर्युक्तस्य धर्मितया अङ्गीकर्तव्यत्वं तत्कथमस्य ग्रन्थस्य सर्वं तदुपजीव्यैवेत्याद्युक्तोपसंहारत्वमित्यतोऽपेक्षितपूरणेन तदुपपादयति **धर्मितयेति शेष इति** ।

सु०— **स्यादेतत् । सार्वज्ञादिगुणोपेतमेव ब्रह्म धर्मीकुर्मः । किन्तु तेषां मिथ्यात्वान्नोपजीव्यविरोधोऽद्वैतागमस्य । यथा यः पुरुषः स स्थाणुरित्यत्रारोपितेन पुरुषत्वेन व्यावृत्तं वस्तु धर्मीकृत्य प्रवृत्तावपि नोपजीव्यविरोध इत्यत आह** अपलापोऽपीति ।

**अनु**०— अपलापोऽपि सर्वस्य न कथञ्चन युज्यते ॥

**मिथ्यात्वाभिधानम् । अपिशब्दः पूर्ववाक्यार्थसमुच्चये । सर्वशब्देन प्रकृतं गुणजातमुच्यते । कथञ्चनेति प्रमाणाभावात् श्रुत्यादिप्रमाणविरुद्धत्वाच्च । अप्राप्तत्वेनानुवादत्वाभावस्य चोक्तत्वादित्यर्थः ।**

**शे०—** नन्वपलापोऽपीत्युत्तरवाक्यमनर्थकम् । न च सर्वज्ञत्वादिधर्मकलापस्य मिथ्यात्वाभाव-प्रतिपादनार्थत्वान्न तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च सर्वज्ञत्वादिविशिष्टस्य ब्रह्मणो धर्मितायामपि सर्वज्ञत्वादीनां मिथ्यात्वान्नोपजीव्यश्रुतिविरोधोऽद्वैतप्रमाणस्येतिशङ्कापरिहारार्थ-त्वात्तस्य नानर्थक्यमिति वाच्यम् । विशिष्टस्य धर्मितायामङ्गीकृतायां धर्माणां सत्यत्व इव मिथ्यात्वेऽप्युपजीव्यविरोधतादवस्थ्येन तच्छङ्काया एवानुदयादित्यतो धर्माणां सत्यत्व एव विशिष्टस्य धर्मिताया-मुपजीव्यविरोधो न तु मिथ्यात्व इतीममर्थं दृष्टान्तोपदर्शनेनोपपादयन्नुक्तशङ्कानिवर्तकतयोत्तरग्रन्थं सङ्गमयति **स्यादेतदिति** । तथा च बोध्यस्य ब्रह्माहमसीत्यवगतिरुपपन्नैवेति भावः । एवमप्युपजीव्य-विरोधः स्यादिति शङ्कते **किन्त्विति** । उत्तरमाह **तेषामिति** । सत्यत्व इव मिथ्यात्वेऽपि सार्वज्ञ्यादीनां तद्विशिष्टस्य धर्मितायामुपजीव्यविरोधः किन्न स्यादित्यत आह **यथेति** । अन्यथा तत्राप्युपजीव्य-विरोधः स्यादिति भावः । सार्वज्ञ्यादिमिथ्यात्वशङ्काया मूलारूढतायै अपलापशब्दं मिथ्यात्वपरतया व्याचष्टे **मिथ्यात्वेति** । विशिष्टशङ्काया मूलारूढतालाभायापिशब्दार्थमाह **अपिशब्द इति** ॥ **पूर्ववाक्यार्थ इति** । सार्वज्ञ्यादिगुणयुक्तस्य ब्रह्मणो धर्मित्वाङ्गीकार इत्यर्थः । ततश्च न केवलं सार्वज्ञ्या-दिगुणयुक्तं ब्रह्म धर्मितयाऽङ्गीक्रियत इत्येव किन्तु सर्वस्य गुणजातस्यापलापोऽङ्गीक्रियत इति योजना सूचिता भवति । सर्वज्ञत्वादिगुणमिथ्यात्वस्यैवैक्यप्रमाणस्योपजीव्यविरोधाभावोपपादकतया शङ्कितत्वा-त्सार्वज्ञ्यादीनामेव मिथ्यात्वाभावोपपादनं सङ्गतं तत्कथं सर्वमिथ्यात्वाभावोपपादनं तस्य तदनुपपादकतया परेणानाशङ्कितत्वादित्यतोऽत्र सर्वपदस्य सार्वज्ञ्यादिधर्मकलापमात्रपरत्वेन सर्वपरत्वाभावान्नानुपपत्तिरिति भावेनाह **सर्वशब्देनेति** । ननु यः सर्वज्ञ इत्यादिश्रुतीनां धर्मनिषेधाय तदनुवादकत्वेन स्वयं धर्म-विधायकत्वाभावान्न श्रुत्यादिविरोध इत्यत आह **अप्राप्तत्वेनेति** ॥ **उक्तत्वादिति** । 'न हि वेदं विना ब्रह्म वेद्यं धर्माश्च तद्गताः' इत्यादिना स्वप्राधिकरण इति शेषः ।

**स०— अपिशब्द इति** । न केवलं ब्रह्म सर्वगुणयुक्तमङ्गीकर्तव्यमित्येतावन्मात्रं किं नामापलापोपि नेत्येवमपिशब्दोऽनेन व्याख्यातो भवति । ननु श्रुत्यादेरनुवादकत्वेन सर्वज्ञत्वादावतात्पर्यान्न बाधकत्वमित्यत आह **अप्राप्तत्वेनेति** ।

**प०— यः पुरुष इति** । यः पुरुषत्वेन ज्ञात इत्यर्थः । अपलापशब्दार्थो मिथ्यात्वाभिधान-मिति ॥ **पूर्ववाक्यार्थसमुच्चय इति** । न केवलं किन्त्वित्यादिनोक्तः प्रपञ्चापलापो मानाभावतद्विरोधा-भ्यामयुक्तः । किन्त्वीशगुणजातापलापोपि न युक्त इति समुच्चय इत्यर्थः ॥ **उक्तत्वादिति** । पृथगुप-देशाधिकरणादौ ।

**या०— यः पुरुष इति** । यः पुरुषत्वेन ज्ञात इत्यर्थः ।

श्री०— **यः पुरुष इति** । यः पुरुषत्वेन प्रतीतः स विचार्यमाणे स्थाणुरितिवत् यदारोपितसार्वज्ञादिमत्त्वेन प्रतीतं तद्विचार्यमाणे त्वदभिन्नमिति व्याख्यानादित्यर्थः ।

**सु०— ननु च तत्त्वमस्यादिवाक्यमेव जीवब्रह्मणोरेकतां प्रतिपादयत्सार्वज्ञादिगुणजातस्य मिथ्यात्वं गमयति । न हि तस्य सत्यत्वे जीवब्रह्मैकत्वमुपपद्यते । तत्कथं गुणानां मिथ्यात्वे प्रमाणाभाव इति चेन्न । सिद्धे तत्त्वमस्यादिवाक्यस्य जीवब्रह्मैकत्वनिष्ठत्वे गुणानां मिथ्यात्वसिद्धिः । तत्सिद्धौ च तत्सिद्धिरिति परस्पराश्रयतादोषात् । दोषान्तरं चाह** अनादीति ।

अनु०— अनादियोग्यता चोक्ता तेन ग्राह्यैव सर्वथा ॥

**यस्माज्जीवानामनादियोग्यतोक्ता प्रमाणैरुपपादिता । तेन कारणेन सा ग्राह्यैव सर्वथा । एतदुक्तं भवति । यदा देवमानवदानवरूपा तदवान्तरभेदरूपा च जीवानां योग्यताऽनादिनित्या प्रमिता तदा का वार्ता जीवब्रह्मणोरेकत्वस्य । तथा च कथं तत्सिद्धये गुणानां मिथ्यात्वकल्पनमिति ।**

**अत्रैव हेत्वन्तरमाह** मुक्तानामिति ।

मुक्तानां तारतम्यं च मानैरुक्तैर्न चाल्यते ॥

मानैरुक्तैरिति **मानानामुक्तत्वादित्यर्थः** । न चाल्यते **नान्यथयितुं शक्यते । यदा मुक्तावपि तारतम्यं प्रमितम् । तदा का जीवब्रह्मैक्यप्रत्याशा । कथं च तत्त्वमस्यादिवाक्यस्य तत्परत्वम् । यतो गुणानां मिथ्यात्वकल्पनं युक्तं स्यादिति ।**

**शे०**— नन्वनादीत्युत्तरवाक्यमनर्थकम् । न च देवदानवमानवादिरूपानादियोग्यतायाः सर्वथा स्वीकर्तव्यत्वप्रतिपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यानर्थक्यात् । न च जीवब्रह्मैक्यस्य तत्त्वमस्यादिश्रुत्यसिद्धत्वज्ञापनार्थत्वान्न तदिति वाच्यम् । तज्ज्ञापनस्यापि प्रयोजनाभावात् । न च गुणमिथ्यात्वस्य तत्त्वमस्यादिश्रुतिसिद्धत्वशङ्कानिवृत्तिरेव तत्प्रयोजनमिति वाच्यम् । अपदार्थत्वादवाक्यार्थत्वाच्चोक्तशङ्काया एवानुदयात् । कथञ्चिदुदयेऽपि वा तदनिवृत्तावपि बाधकाभावेन तादर्थ्यायोगादित्यतो गुणमिथ्यात्वस्य तत्त्वमस्यादिश्रुतिसिद्धत्वशङ्कानिवर्तकतयोत्तरग्रन्थं सङ्गमयितुं तस्य श्रुतिसिद्धत्वं तदनिवृत्तौ चानिष्टं चोपदर्शयन्नुक्तशङ्कामुत्थापयति **नन्विति** । ननूक्तशङ्कापरिहारस्य प्रकारान्तरेणैव सिद्धेः किमनेनेत्यतो दोषान्तरार्थत्वान्नानर्थक्यमित्यभिप्रेत्य प्रकारान्तरेण तत्परिहारमुपदर्शयन्नेव दोषान्तरसमर्पकतयोत्तरग्रन्थं योजयति **नेत्यादिना** । उक्ततामात्रस्य सर्वथाग्राह्यतायां हेतुत्वासम्भवा-

दाह **प्रमाणैरुपपादितेति** । नन्वस्त्वनादियोग्यतायाः प्रामाणिकत्वात्सर्वथाग्राह्यत्वं तावताऽपि **कथमनेन** गुणमिथ्यात्वस्याकल्प्यत्वसिद्धिरित्यत आह **एतदुक्तं भवतीति** ।

मुक्तानां तारतम्यस्यान्यथयितुमशक्यत्ववर्णनपरोत्तरग्रन्थस्यासङ्गतिमाशङ्क्य परिहरति **अत्रैवेति** । **गुणमिथ्यात्वस्य** तत्त्वमस्यादिश्रुत्यज्ञाप्यत्व एवेत्यर्थः । कथमस्य तत्र हेतुत्वमित्यतो हेतुहेतुमद्भावं व्युत्पादयति **यदेति** ।

**प०— उपपादितेति** । 'अनादियोग्यतां चैव कलिवाणीश्वरावधिमि'त्यादिग्रन्थसन्दर्भेणोपपादितेत्यर्थः । ऐक्यनिरासप्रस्तावे योग्यतास्वीकारोक्तिरसङ्गतेत्यत आह **एतदुक्तमिति** ॥ **उक्तत्वादिति** । पूर्वपादेऽत्रापीति भावः ।

**श्री०— तत्सिद्धाविति** । विरुद्धधर्माणां मिथ्यात्वसिद्धावित्यर्थः ॥ **तदवान्तरेति** । 'गन्धर्वाद्यास्तदवान्तरा' इति वचनादित्यर्थः ।

**सु०— मुक्तानां तारतम्ये प्रमाणान्तरमाह** ज्ञानिनोऽपीति ।

**अनु०**— ज्ञानिनोऽपि यतो नित्यं कुर्वन्ति शुभमेव हि ॥
तारतम्यं तु मुक्तौ च तेनैवाध्यवसीयते ॥

**एवशब्देन पापं परिहरन्ति चेति सूचयति । तुशब्देन शुभाशुभकरणपरित्यागयोः तारतम्यं द्योतयति । हिशब्देन तत्र प्रमाणप्रसिद्धिम् । प्रमाणानि तु दशकल्पमित्यादीनि प्रागुदाहृतान्येव । तेनैवेत्यस्य प्रमाणस्य निरवकाशतामाह । प्राङ्मोक्षसाधनानां तारतम्यान्मोक्षतारतम्यमुक्तम् । इदानीं तु ज्ञानेन निश्चितमोक्षाणामपि शुभाशुभकरणपरित्यागतारतम्यादुच्यत इति भेदः । विपक्षे बाधकमाह** तारतम्यमिति ।

तारतम्यं न चेन्मुक्तौ कुतः कुर्युः शुभं पुनः ॥

पुनरिति **ज्ञानोत्तरम् । यदि ब्रह्माद्या मुक्तौ तारतम्यवन्तो न स्युस्तदा ज्ञानमात्रेण मोक्षस्य प्राप्तप्रायत्वाज्ज्ञानोत्तरकालं शुभं न कुर्युः । अशुभं च न परित्यजेयुरित्यर्थः ।**

**शे०**— 'बिभ्यति स्माशुभान्नित्यमि'ति विपर्ययपर्यवसानपरोत्तरग्रन्थानुसारेणैवकाराभिप्रायमाह **एवशब्देनेति** । शुभाशुभकरणपरित्यागमात्रं न मुक्तितारतम्यसाधकम् । किन्तु तत्तारतम्यमेवेति भावेन तत्परतया तुशब्दं व्याचष्टे **तुशब्देनेति** । अनेन, तु, शुभं कुर्वन्ति, तारतम्येन शुभं कुर्वन्ति । तु अशुभं परिहरन्ति, तारतम्येनाशुभं परिहरन्तीति योजनोक्ता भवति । साधनतारतम्यान्मोक्षतारतम्यकथनपरस्यास्य ग्रन्थस्य साधनाधिक्यात्साध्याधिक्यमित्यादितत्पूर्वग्रन्थेन पौनरुक्त्यमाशङ्क्य परिहरति **प्रागिति** ।

'ज्ञानिनोऽपि यतो नित्यमि'ति वाक्येनैव मुक्तानां तारतम्ये, मुक्तास्तारतम्यवन्तो ज्ञानोत्तरकालं शुभाशुभकरणपरित्यागतारतम्यवत्त्वादित्यनुमानरूपमानान्तराभिधानसिद्धेः, किं 'तारतम्यं न चेदि'त्युत्तरवाक्येनेत्यतस्तत्र प्राप्ताप्रयोजकत्वशङ्कापरिहाराय विपक्षे बाधकतर्ककथनार्थत्वात्तस्या नानर्थक्यमित्यभिप्रेत्य तत्परतयोत्तरवाक्यं सङ्गमयति **विपक्षे बाधकमाहेति** । नन्वत्र कुतः शुभं पुनः कुर्युरित्येरित्येवोच्यते न तु ज्ञानोत्तरकालं शुभस्याकर्तव्यता तत्कथमेतद्विपक्षे बाधककथनमित्यतः पुनरित्येतज्ज्ञानोत्तरपरतया व्याचष्टे **पुनरितीति** ।

सु० — **विपर्ययपर्यवसानमाह** कृच्छ्रेणेति ।

अनु० — कृच्छ्रेणापि तपो ज्ञानं कर्माप्येते चरन्ति हि ॥
बिभ्यति स्माशुभान्नित्यं सकामाश्च शुभे सदा ॥

**तपो ज्ञानं कर्मापीत्यनेन शुभमित्युक्तं भवति । ज्ञानमिति श्रवणादिकमुच्यते । कर्मेति यज्ञादि । एते ज्ञानिनः । कृच्छ्रेणापीत्यादिविशेषणानां फलमनुपदमेव ज्ञास्यते । सकामाश्च शुभे सदेत्येकस्य तपआदेश्चरणकाले तपआद्यन्तरं कामयन्त इत्यर्थः । तस्माज्ज्ञानोत्तरकालानुष्ठितेन विचित्रेण शुभेन विचित्रामानन्दवृद्धिं प्राप्नुवन्तीति शेषः ।**

शे० — विपक्षे बाधकतर्काभिधानस्याप्यनेनैव सिद्धेर्न कृच्छ्रेणेत्युत्तरेण किञ्चित्प्रयोजनमित्यतो विपर्ययपर्यवसानहीनस्य तर्काभासत्वात्स्वप्रयुक्तस्य तर्कस्य विपर्ययपर्यवसानकथनार्थत्वान्न तस्यापि वैयर्थ्यमित्याशयेन तत्परतयोत्तरवाक्यं सङ्गमयति **विपर्यय इति** । नन्वत्र ज्ञानोत्तरकालं शुभस्याकर्तव्यत्वापादनानुरोधेन कृच्छ्रेण शुभमाचरन्तीत्येव विपर्ययपर्यवसानं वाच्यम् । तत्कथं 'कृच्छ्रेणापि तपो ज्ञानं कर्माप्येते चरन्तीति' विपर्ययपर्यवसानमुच्यत इत्यतोऽत्र तपो ज्ञानं कर्मापीत्यस्य शुभमात्रतात्पर्यकत्वान्नानुपपत्तिरित्यभिप्रेत्य तत्परतया तद्व्याचष्टे **तपो ज्ञानं कर्मापीत्यनेनेति** । ज्ञानपदस्य ज्ञानमात्रार्थकत्वे ज्ञानमात्रस्यापरोक्षज्ञानोत्तरकालीनस्य मौक्ततारतम्यप्रयोजकत्वानुपपत्तेस्तद्विशेषश्रवणादिपरतया तद्व्याचष्टे **ज्ञानं श्रवणादीति** ॥ **यज्ञादीति** । कर्मशब्दस्य कर्मसामान्यपरतायां तस्य मौक्ततारतम्यप्रयोजकताया बाधितत्वात् तद्विशेषयज्ञादिपरत्वमेव । तस्य च ज्ञानोत्तरकालस्य मौक्ततारतम्यप्रयोजकत्वमक्षुण्णमिति भावः ॥ एत इति ज्ञानिनोऽपीति पूर्ववाक्यप्रकृतज्ञानिपरामर्श इत्याह **एते ज्ञानिन इति** ॥ **अनुपदमेवेति** । न च स्वभाव एवायमित्यव्यवहितोत्तरवाक्य एवेत्यर्थः । सिद्धे इच्छाविरहात्सकामाश्च शुभे सदेत्येतदसिद्धतपआद्यन्तरपरतया व्याचष्टे **सकामाश्चेत्यादि** । आपाद्यविपर्ययेणापादकविपर्ययपर्यवसानानुक्त्या प्रसक्तां न्यूनतां शेषपूरणेन परिहरति **तस्मादिति** ।

स०— **अनुपदमेवेति** । 'न च स्वभाव एवायमि'त्युत्तरवाक्य एवेत्यर्थः ।

प०— **अनुपदमेवेति** । न च स्वभाव इत्यादिग्रन्थ इत्यर्थः ।

सु०— **भवेदेतद्यदि ज्ञानोत्तरकालकृतानां शुभानां फलवत्त्वं स्यात् । न चैवम् । तेषां कर्मस्वनधिकारात् । अनधिकारिणा च कृतं विफलमिति प्रसिद्धमेव । अनुष्ठानं त्वन्यथाऽप्युपपद्यते । ते हि प्राग्ज्ञानोदयादादरनैरन्तर्याभ्यां शुभान्यनुष्ठितवन्तस्तत्स्वाभाव्यमापन्ना ज्ञानोदयानन्तरमप्यनुतिष्ठन्तीत्याशङ्क्य परिहरति** न चेति ।

अनु०— न च स्वभाव एवायं भयपूर्वप्रवृत्तितः ॥

**अयं ज्ञानिनां शुभाचरणरूपः । अकरणे प्रत्यवायो भविष्यतीत्येवं भयपूर्वप्रवृत्तितः कृच्छ्रेणैवाचरणाच्च, शुभस्यैवेति प्रेक्षापूर्वमशुभपरित्यागेनेत्यर्थः ।**

कृच्छ्रेणाचरणाच्चैव शुभस्यैव पुनः पुनः ।

**एतेन कृच्छ्रेणापीत्यादिविशेषणफलमुक्तं भवति । न हि स्वभावकृता प्रवृत्तिरेवं भवितुमर्हति ।**

शे०— ननु प्रकृतासङ्गततया निर्बीजतया च ज्ञानिकृतकर्मणां निष्फलत्वशङ्काया एवानुदयेन तन्मूलकतदनुष्ठानानुपपत्तिशङ्कायाः सुतरामयोगात्तदन्यथोपपत्तिवर्णनपरतत्स्वभावप्रयुक्तत्वशङ्काया निर्निमित्ततया सर्वथैवानुदयात्तन्निरासपरस्य 'न च स्वभाव एवायमि'त्युत्तरवाक्यस्य वैयर्थ्यमित्यतोऽस्याः शङ्काया ज्ञानोत्तरशुभतारतम्यप्रयुक्तप्रागुक्तमौक्ततारतम्याक्षेपरूपतया प्रकृतसङ्गतत्वात्सबीजत्वाच्चोपपत्तेर्न तन्निरासकोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य प्रकृतसङ्गतिं दर्शयन्नेव तत्कर्मणां निष्फलत्वमाह **भवेदिति** । नन्वज्ञानिकर्मवज्ज्ञानिकर्मणामपि फलवत्त्वं भवत्वित्यतोऽधिकारप्रापकविधिबलेन कर्मस्वधिकारसिद्ध्याऽज्ञानिकर्मणामधिकारिकृततया फलवत्त्वोपपत्तावपि ज्ञानिनामधिकारप्रापकविध्यभावेनानधिकारनिश्चयात्तत्कर्मणामनधिकारिकृततया शूद्रकृतयज्ञादिवन्निष्फलत्वमेवेत्यभिप्रेत्य वैषम्यमुपपादयति **तेषामित्यादि** । यदि ज्ञानिकर्मणां फलं नास्ति कथं तर्हि तदनुष्ठानं, तस्य फलप्रयुक्तस्य तदभावेऽयोगादित्यतस्तस्यान्यथोपपत्तिमाह **अनुष्ठानं त्विति** । निमित्तोपदर्शनेन स्वाभाव्यापत्तेर्निर्निमित्तताशङ्कां परिहरन्नेवान्यथोपपन्नतामनुष्ठानस्योपपादयति **ते हीति** । उक्तशङ्काया मूलारूढतां दर्शयितुं व्याख्याति **अयमिति** । **कृच्छ्रेणाचरणाच्चैवेत्यत्र** चशब्दैवकारयोरितरेतरसमुच्चयतद्व्यावृत्त्यर्थकतया विरुद्धार्थकयोरेकत्रान्वयानुपपत्तिर्भयपूर्वप्रवृत्तित इत्युक्तशुभाचारस्यैव कृच्छ्रेणाचरणाच्चैव शुभस्येत्यनेनोक्तौ पुनरुक्तिश्च भवतीत्यतोऽत्र चशब्दस्य यथाश्रुत एव संबन्धः । एवशब्दस्य तु कृच्छ्रेणैवेति भिन्नक्रमतया संबन्धान्नान्यतरवैयर्थ्यं

कृच्छ्रेणाचरणाच्च शुभस्येत्यस्य लक्षणयाऽशुभपरित्यागपरत्वेन शुभाचारपरत्वाभावान्न पौनरुक्त्यमपीत्यभिप्रेत्यान्वयप्रदर्शनपूर्वकं तत्तात्पर्यमाह **कृच्छ्रेणैवेत्यादि ॥ विशेषफलमिति ।** शुभाचारस्य स्वभावप्रयुक्तत्वशङ्कानिवृत्तिलक्षणमित्यर्थः ।

**प०**— अन्यथाऽप्युपपद्यत इत्युक्तमाह **ते हि प्रागिति ।**

**श्री०**— तदेवोपपादयति **ते हीति ॥ एवं भवितुमर्हतीति ।** कृच्छ्रवती भवितुमर्हतीत्यर्थः ।

**सु०**— **नन्वेते प्रागनुष्ठानकाले** भयपूर्वं **कृच्छ्रेणाशुभपरित्यागेनैवानुष्ठितवन्तः । अतः तत्स्वभावा एव संवृत्ता इदानीमपि तत्स्वाभाव्येन तथैव कुर्वन्तीत्यङ्गीकारे को दोष इत्याशङ्क्याह** तादृशोऽपीति ।

अनु०— तादृशोऽपि स्वभावश्चेदज्ञस्यापि भवेत्तथा ॥

**भयपूर्वप्रवृत्त्यादिरूपोऽपि ।**

**शे०**— नन्वित्यादिशङ्कासमाधानग्रन्थः स्पष्टार्थः ।

**श्री०**— **संवृत्ताः** सञ्जाताः ।

**सु०**— ज्ञानिनस्तावदनुष्ठानेऽज्ञेभ्यो **न विशिष्यन्ते ।** तत्र ज्ञानिनां **शुभप्रवृत्तिः पूर्वतरपूर्वतमस्वभावबलायातैव न तु फलवतीत्यङ्गीकुर्वाणं प्रति यदि कश्चिद् ब्रूयात् अज्ञानिनामपि शुभा प्रवृत्तिः पूर्वतरपूर्वतमस्वभावागतैव न तु फलवती विशेषाभावादिति, तदा किं वाच्यमिति । प्रतिबन्दीं मोचयितुमाशङ्कते** फलवत्त्व इति ।

अनु०— फलवत्त्वे प्रमाणं चेत्तत्र ज्ञस्य समं हि तत् ।

**अज्ञानिनां कर्मणोऽस्तीति शेषः । साम्ये हि प्रतिबन्दीग्रहः । न च तदत्रास्ति । यतोऽज्ञानिकृतकर्मणां सफलत्वे 'कर्मजं बुद्धियुक्ता ही'त्यादिकं प्रमाणमस्ति । उपलक्षणं चैतत् । अधिकारिणश्चैते विधिगोचराश्चेत्यपि द्रष्टव्यम् । न ह्येवं सति स्वभावकल्पनाऽवकाशोऽस्तीति । एवं तर्हि ज्ञानिष्वपि न स्वभावकल्पना युक्तेत्याशयवानाह** तत्रेति ।

तत्र **कर्मणः फलवत्त्वे ।** तत् **प्रमाणं । अत्राप्यधिकारादिकमुपलक्षणीयम् ।**

**शे०**— ननु ज्ञानिनो भयपूर्वप्रवृत्त्यादिरूपव्यापारस्य स्वभावप्रयुक्तत्वेऽज्ञस्यापीति तथाविधव्यापारः स्वभावप्रयुक्तः स्यादित्युक्ततर्कमूलभूतव्याप्तौ दृष्टान्ताभावेन प्रशिथिलमूलत्वं तस्येत्यतो विशेषव्याप्त्यभावेऽप्यविशेषलक्षणसामान्यव्याप्तिसद्भावान्न तदाश्रयेण तर्कप्रवृत्तौ बाधकं किञ्चिदित्यभिप्रेत्य तर्कमुपपादयति **ज्ञानिनस्तावदिति ।** ननु ज्ञानिनामिवाज्ञानिनामपि कर्मस्वनधिकारादनधिकारिकृतकर्मणां

च विफलत्वावश्यम्भावान्न प्रमाणमात्रेण फलवत्त्वसिद्धिरिति न वैषम्यसिद्धिरित्यतोऽस्य वाक्यस्य लक्षणयाऽधिकारादिसद्भावपरत्वस्याप्यङ्गीकारेण मुख्यवृत्त्या तत्कर्मणां फलवत्त्वमात्रपरत्वाभावाद्युक्तं वैषम्योपपादकत्वमित्याह **उपलक्षणं चैतदिति ॥ एवं सतीति** । प्रमाणेनाधिकारिकृतत्वयुक्त्या चाज्ञानिकृतकर्मणां फलवत्त्वे सिद्धे सतीत्यर्थः ॥ **स्वभावेति** । तस्या निष्फलत्वमात्रमूलकत्वेन तदभावेऽनवकाशादिति भावः । तथाऽप्यनधिकारिकृतत्वाज्ज्ञानिकर्मणां निष्फलत्वसिद्ध्या स्वभाव-प्रयुक्तत्वकल्पनाऽस्त्वित्यतोऽस्यापि वाक्यस्य लक्षणयाऽधिकारादिसद्भावप्रतिपादकत्वान्नोक्तयुक्त्याऽपि तत्कर्मणां निष्फलत्वमिति न तत्रापि स्वभावकल्पनेत्याशयवानाह **अत्रापीति** । आदिपदेन विधि-गोचरत्वपरिग्रहः ।

**प०** — शङ्कावाक्यं व्याचष्टे **साम्ये हीति ॥ कर्मजमिति** । 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः । जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयं' इति द्वितीयाध्यायगीतावाक्यं प्रमाण-मस्तीत्यर्थः ।

**सु० — किं तत्प्रमाणमित्यतस्तद्दर्शयति** निष्काममिति ।

**अनु०** — निष्कामं ज्ञानपूर्वं च निवृत्तमिह चोच्यते ॥
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥

इह **प्रवृत्तनिवृत्तयोर्मध्ये** । अभ्येति **अतिशयेनैति** । **आनन्दोद्रेकसाहित्येन मुक्तो भवतीत्यर्थः । एतत्स्मृतिवाक्यार्थविवरणाय वाक्यान्तरं पठति** शुभेनेति ।

शुभेनानन्दवृद्धिः स्याद्ध्रासश्चैवाशुभेन हि ॥
ज्ञानिनोऽपि यतस्तेन कर्तव्यं शुभमेव तैः ॥

**ह्रासश्चानन्दस्य । शुभमेव कर्तव्यमशुभं त्याज्यं च । अनेन विधिसद्भावोऽपि सिद्धः । ततोऽधिकारश्च ।**

**अत्र श्रुतिमप्याह** उपास्त इति ।

उपास्ते स य आत्मानं क्षीयते नास्य कर्म हि ॥
अस्माद्ध्येवात्मनो यद्यत्कामयेत्सृजते च तत् ॥

**अनेन 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्य-त्कामयते तत्तत्सृजत' इति श्रुतिमुपादत्ते** । आत्मानं **परमात्मानम्** । लोकं **सर्वाश्रयम्** । उपास्ते **कारणेन कार्योपलक्षणं पश्यतीत्यर्थः । स विद्वान्मुक्तो भूत्वा यद्यत्कामयते तत्तत्कर्मास्माद्ध्ये-वात्मनोऽस्यात्मनः प्रसादेन सृजते ।**

अविद्वान्बहुकर्मापि ह्यन्तवत्फलमाप्नुयात् ॥

**अविद्वानित्यनेन 'यद्यप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवे'ति श्रुतिमुपादत्ते । अनया चार्थाज्ज्ञानिकर्मणः साफल्यं सिध्यति । उपरि चोपयोगो भविष्यति ।**

यदेव विद्यया कुर्यात्तदेव ह्यतिवीर्यवत् ॥

इत्यादिवाक्यसामर्थ्यात्तारतम्यं विमुक्तिगम् ॥

**यदेवेत्यनेन 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'ति श्रुतिमुपादत्ते । विद्यया ब्रह्मसाक्षात्कारपूर्वकमुपनिषदा स्वयोग्य(म्)या वीर्यवत्तरमधिकफल-मित्यादिवाक्यसामर्थ्याज्ज्ञानिकृतकर्मणां फलवत्त्वं तावत्प्रतीयते । ततस्तेषां वैचित्र्याद्विमुक्तिगं तारतम्यं च सिद्धमित्यर्थः ।**

**शे०— प्रवृत्तनिवृत्तयोर्मध्य इति** । एतत्पूर्ववाक्ये प्रवृत्तत्वात्तयोरेव परामर्शोऽयमिति भावः । ननु ज्ञानिकृतकर्मणोऽत्र ब्रह्मप्राप्तिरूपमोक्षं प्रति साधनत्वमेव ब्रह्माभ्येतीत्यनेनोच्यते न तु तस्य मोक्षगततारतम्यरूपफलं प्रति; तत्कथमस्य मोक्षतारतम्यप्रमाणतयोपन्यास इत्यतो ब्रह्माभ्येतीत्येत-न्मोक्षगततारतम्यप्रतिपादकतया व्याचष्टे **अभ्येतीत्यतिशयेनैतीति** । तस्यैव विवरणामानन्दोद्रेकेति ॥ **विवरणायेति** । विवरणत्वं चास्यानन्दोद्रेकमाप्नुयादिति पूर्ववाक्यस्थब्रह्माभ्येतीत्येतद्व्याख्यानादिति द्रष्टव्यम् । नन्वत्रोपासककर्मणोऽतिशयसाधनत्वमुच्यते न तु ज्ञानिकर्मणस्तत्कथमनेन ज्ञानिकर्मणो मोक्ष-गतातिशयसाधनत्वसिद्धिरित्यतोऽत्रोपास्त इत्यस्य लक्षणया पश्यतीत्यर्थकत्वेनोपासनमात्रपरत्वाभावात् भवेदेवानेन ज्ञानिकर्मणो मोक्षगतातिशयसाधनत्वसिद्धिरित्यभिप्रायेण लक्षणाबीजभूतं शक्यसंबन्धं दर्शय-न्नेव तल्लक्ष्यमर्थं दर्शयति **कारणेनेति** ॥ **उपरिचोपयोग इति** । 'न हि ज्ञानं विना क्वापि फलस्या-क्षयता भवे'दित्युत्तरवाक्यार्थोपपादने चोपयोग इत्यर्थः ॥ **उपनिषदा स्वयोग्यमिति** । 'स्वयोग्यन्तु परिज्ञानं यत्तस्योपनिषत्स्मृतम्' । इति छान्दोग्यभाष्योदाहृतप्रमाणादिति भावः ।

**स०— उपरि चोपयोग इति** । 'न चात्रोपासकस्यैव फलमक्षयमुच्यते इत्युपरीत्यर्थः ।

**प०—** शुभकरणोक्तिमुपलक्षणं मत्वाह **अशुभं त्याज्यं चेति** । प्रकृतोपयोगाय उपास्त इत्यस्यार्थमाह **पश्यन्तीत्यर्थ इति** । तदर्थलाभप्रकारोक्तिः **कारणेनेति** । उपास्तिरूपकारणेन तत्कार्यस्यापरोक्षस्य लक्षणया लाभ इत्यर्थः । कुत एवंरूपवाक्योक्तिरित्यत आह **उपरि चोपयोग इति** । 'न हि ज्ञानं विना क्वापि फलस्याक्षयता भवेदि'ति वक्ष्यमाणार्थोपादकत्वेनोपयोगो भविष्यतीत्यर्थः । उपनिषदेत्येतद्विद्याविशेषणं मत्वाह **उपनिषदा योग्ययेति** । योग्यसाक्षात्कारपूर्वकं करोतीत्यर्थ उक्तो भवति ।

**या०— उपरि चोपयोग इति ।** 'न हि ज्ञानं विना क्वापि फलस्याक्षयता भवेदि'ति वक्ष्यमाणवाक्यार्थोपपादने चोपयोग इत्यर्थः ।

**सु०— स्यादेतत् । नैतानि वाक्यानि ज्ञानिकर्मणां साफल्यं प्रतिपादयन्ति । स य आत्मानमित्यत्र तावदुपासककर्मणामक्षयफलत्वश्रवणात् । इतरत्र च ज्ञानविद्याशब्दयोः परोक्षज्ञानार्थत्वस्याप्युपपत्तेरित्याशङ्कां परिहरति** न चेति ।

**अनु०—** न चात्रोपासकस्यैव फलमक्षयमुच्यते ॥

अत्र **वाक्येषु ।** फलं **कर्मणाम् । तथा ज्ञानादिपदं परोक्षज्ञानार्थतया न व्याख्येयमित्यपि ग्राह्यम् ॥ कुतो नेत्यत आह** न हीति ।

न हि ज्ञानं विना क्वापि फलस्याक्षयता भवेत् ॥

ज्ञानं **ब्रह्मसाक्षात्कारम् ।** क्वापि **मोक्षेऽन्यत्र च ।** फलस्य **कर्मणाम् ।**

**इदमुक्तं भवति । ब्रह्मसाक्षात्काररहितेनोपासकेन कृतानि कर्माण्यक्षयफलानि केन प्रकारेणेति चिन्त्यम् । किमक्षयं मोक्षं कुर्वन्तीति । उत स्वर्गादिकम् । नाद्यः । नान्यः पन्था इति श्रुतिविरोधात् । न द्वितीयः । पुण्यचितो लोकः क्षीयत इति स्वर्गादिफलानां क्षयित्वश्रवणात् । 'अनेवंविन्महत्पुण्यं कर्म करोति' 'तदेव वीर्यवत्तरं भवती'त्युदाहृतश्रुतिविरोधश्च पक्षद्वयेऽपि । तदेवमज्ञपक्षे वाक्यार्थानुपपत्तेरुपासकपदस्य ज्ञान्युपलक्षकत्वमेव युक्तम् । तथा ब्रह्माभ्येतीति श्रवणाज्ज्ञानपदस्य साक्षात्कारवाचित्वमेव युक्तमिति । अत एव वाक्यसामर्थ्यादित्युक्तम् । यद्यपि पश्यन्नपीममात्मानमित्याद्याः स्पष्टार्थाः श्रुतयोऽत्र सन्ति । तथाऽपि मीमांसार्थमेतासामुदाहरणम् ।**

**शे०— एतानि वाक्यानीति ।** निष्काममित्याद्युदाहृतस्मृतिश्रुतिरूपाणीत्यर्थः ॥ **इतरत्र चेति ।** उक्तवाक्यातिरिक्तस्मृत्यादिवाक्येष्वित्यर्थः । ब्रह्माभ्येतीति श्रवणादित्युपलक्षणम् । वीर्यवत्तरं भवतीति श्रवणादित्यपि द्रष्टव्यम् । ज्ञानपदस्येत्युपलक्षणम् । विद्यापदस्येत्यपि द्रष्टव्यम् ॥ **अत एवेति ।** उदाहृतवाक्यानामागमतया विवक्षितार्थगमकत्वाभावादेवेत्यर्थः ।

**प०— पक्षद्वयेऽपीति ।** मोक्षं कुर्वन्ति इति पक्षे स्वर्गं कुर्वन्तीति पक्षे चेत्यर्थः । आद्ये 'अनेवंविदि'ति श्रुतिविरोधो वक्तव्यः । 'तद्धास्यान्ततः क्षीयत' इति वाक्यशेषात् अपरोक्षज्ञानिकृतकर्मणामक्षयफलकत्वान्मोक्षस्याक्षयत्वादिति भावः । द्वितीये 'यदेव विद्यया करोति तदेवेतिश्रुतौ विद्यापूर्वकृतकर्मणैवोत्पन्नफलस्य वीर्यवत्तरशब्देनाक्षयत्वोक्तेस्तद्विरोध इति भावः ॥ **वाक्यार्थेति ।** अक्षयकर्म-

फलवत्स्वरूपवाक्यार्थानुपपत्तेरित्यर्थः ॥ **इत्याद्या इति** । अत्रैव पादे विहितत्वाच्चाश्रमकर्मापीत्यादिसूत्रे भाष्योक्ता इत्यर्थः ।

**श्री० — इतरत्र च ज्ञानविद्याशब्दयोरिति** । 'निष्कामं ज्ञानपूर्वन्त्वि'ति वाक्ये, 'यदेव विद्यये'ति च वाक्ये इत्यर्थः ॥ **उदाहृतश्रुतिविरोधश्च पक्षद्वयेऽपीति** । अक्षयं मोक्षं कुर्वन्तीति पक्षे 'यदि ह वा अनेवं विद्'िति तत्कृतकर्मणो वैयर्थ्योक्तेस्तद्विरोधः । स्वर्गादिकं कुर्वन्तीति पक्षे 'यदेव विद्यये'ति मोक्षफलकत्वोक्तेस्तद्विरोध इत्यर्थः ।

सु० — **नन्वज्ञपक्षेऽपि नानुपपत्तिः । उपासकेन कृतानि खल्वसङ्कल्पितफलानि कर्माणि ज्ञानमुपजनयन्ति । कर्मणा ज्ञानमाप्नोतीति श्रुतेः । ज्ञानेन मोक्षो भवतीत्यज्ञकृत-कर्मणामपि ज्ञानद्वारेणाक्षयफलत्वोपपत्तेरित्याशङ्क्याह** ज्ञानेति ।

**अनु०** — ज्ञानद्वारेण चेत्तस्य नास्मत्पक्षप्रतीपता ॥

**कर्मफलस्याक्षयतेति वर्तते** । तस्य **परकृतव्याख्यानस्य** । **अस्मत्पक्षप्रतीपता मुक्ततारतम्यविरोधिता । प्रत्युत तदनुकूलतैव । मुक्तौ तारतम्यमसहमानेन खल्वेवमन्यथा व्याख्यानं क्रियते तन्मुक्ततारतम्यमेव साधयति । कर्माणि हि जिज्ञासवो विचित्राणि कुर्वन्ति । तैश्च जायमानेन ज्ञानेन विचित्रेणैव भाव्यम् । अन्यथा कृतविप्रणाशाकृताभ्यागमापत्तेः । विचित्रेण ज्ञानेन विचित्र एव मोक्षो भावनीयः । पूर्वोक्तादेव हेतोरिति । तदेवं स्वमतविरोधिपरानुकूलमन्यथाव्याख्यानं न कार्यमेव । तथा चास्मद्व्याख्याने स्थिते प्रकृतं युक्तमिति** ।

शे० — **भावनीयो** जननीयः ॥ **पूर्वोक्तादेव हेतोरिति** । अन्यथा कृतविप्रणाशाकृताभ्यागमरूपादित्यर्थः ।

स० — **पूर्वोक्तादेवेति** । कृतविप्रणाशाकृताभ्यागमप्रसङ्गरूपादित्यर्थः ।

प० — **पूर्वोक्तादिति** । कृतप्रणाशादिरूपाद्धेतोरित्यर्थः ।

श्री० — **प्रकृतमिति** । मुक्तानां तारतम्यमित्यर्थः ।

सु० — **अस्तु वाऽन्यथाव्याख्यानं युक्तम् । ततश्चैतेषां वाक्यानां प्रकृतासाधकत्वम् । एवमपि ज्ञानोत्तरकर्मणो मोक्षान्तर्गतफलहेतुतायाः प्रमाणान्तरेण सिद्धेर्मुक्ततारतम्यं न हातुं शक्यमित्यभ्युपगमवादेनाह** ज्ञानोत्तरस्येति ।

**अनु०** — ज्ञानोत्तरस्यैवमपि ह्यक्षयत्वं

कर्मणोऽक्षयत्वमक्षयमोक्षानुप्रवेशिफलत्वं सिध्यति । कथमित्यत आह न चेति ।

न चान्यथा ॥

प्रकारान्तराभावात् । परिशेषप्रमाणादिति यावत् । एतेन ज्ञानोत्तरस्य कर्मणः साफल्येऽपि तस्य फलस्य मोक्षानुप्रवेशितायां प्रमाणाभावान्न मोक्षतारतम्यसिद्धिरित्यपि प्रत्युक्तम् ।

शे० — ननु ज्ञानोत्तरस्येत्युत्तरवाक्यमनर्थकम् । न च ज्ञानोत्तरकर्मणोऽक्षयफलत्वस्य प्रमाणेन समर्थनार्थत्वान्न तदिति वाच्यम् । तस्य प्रागेव समर्थितत्वात् । न च परिशेषप्रमाणान्तरकथनार्थमेतदिति वाच्यम् । ज्ञानोत्तरस्य ह्यक्षयत्वमित्येतावतैव तत्सूचनेनैवमपीत्यंशवैयर्थ्यापातात् । न च पूर्वोपन्यस्तप्रमाणानां प्रकृतसाधनत्वसूचनार्थत्वान्न तदंशस्यापि वैयर्थ्यमिति वाच्यम् । तेषामन्यथाव्याख्याननिरासेन प्रकृतार्थसाधकतायाः पूर्वं समर्थितत्वेन प्रकृतासाधकत्वकथनस्य तद्विरुद्धत्वेन तत्सूचकत्वायोगादित्यतोऽभ्युपगमवादेनैतत्प्रवृत्तेर्न वस्तुस्थितिमनुरुध्य प्रवृत्तपूर्वग्रन्थविरोध इत्यभिप्रेत्य प्रमाणान्तरोपपादकतयोत्तरग्रन्थं सङ्गमयति अस्तु वेति ॥ कर्मणोऽक्षयत्ववचनस्य बाधितार्थत्वात्प्रकृतानुपयोगित्वाच्च तदनुपपत्तिमाशङ्क्य गौणतया तद्व्याचष्टे अक्षयत्वमिति ॥ नन्वत्र मूले सिद्ध्युपायस्यानुपन्यस्तत्वान्नानेन, कथं सिध्यतीतिशङ्कापरिहार इत्यतस्तत्तात्पर्यमाह परिशेषेति ॥ एतेनेति । ज्ञानोत्तरस्य कर्मणो मोक्षानुप्रवेशिफलतायां परिशेषप्रमाणोपन्यासेनेत्यर्थः ।

श्री० — एतेनेति । मोक्षानुप्रवेशस्य प्रमाणसिद्धत्वेनेत्यर्थः ।

सु० — परिशेषमेव दर्शयति पूर्वेति ।

अनु० — पूर्वभाविशुभानां हि ज्ञानेनैव कृतार्थता ॥
प्रारब्धानान्तु भोगेन तज्ज्ञानोत्तरकर्मणाम् ॥
मुक्तावनुप्रवेशः स्यादन्यथा तत्कृतिर्न हि ॥

ज्ञानिकृतेषु कर्मस्वेता विधास्तावत्संभवन्ति । ज्ञानार्थत्वं वा भोगार्थत्वं वा व्यर्थत्वं वेति । तत्र ज्ञानिकर्मणां ज्ञानार्थत्वं तावन्नोपपद्यते । पूर्वभाविशुभैरेव ज्ञानस्य कृतत्वात् । तत्र हेतुः पूर्वभावीति । ज्ञानात्पूर्वभाविनां शुभानां यस्माज्ज्ञानेनैव कार्येण कृतार्थता नान्येन । तेषां कार्यान्तराभावात् । ज्ञानार्थत्वाभावे वैयर्थ्यं स्यादित्यर्थः । पूर्वजातं प्रति पश्चाद्भाविनः कारणत्वायोगाच्च । नापि भोगार्थत्वम् । प्राचीनप्रारब्धकर्मभिरेव भोगस्य जायमानत्वात् । तत्र हेतुः प्रारब्धानां च कर्मणां भोगेनैव कृतार्थतेति । पूर्ववत्तात्पर्यम् । वैयर्थ्यनिरास-

**हेतुरन्यथेति । ज्ञानिकर्मणां व्यर्थत्वे तदनुष्ठानं न स्यात् । न हि प्रेक्षावन्तो व्यर्थं (कर्म) कुर्वन्ति । करणस्वाभाव्यादिति चेत् । अबुद्धिपूर्वताप्रसङ्गात् । लोकसंग्रहार्थमिति चेन्न । तत्प्रयोजनस्यापि वाच्यत्वात् । ईश्वरवदिति चेन्न । मुक्तावपि प्रसङ्गात् । परिशेषफलकथनं तत्तस्माज्ज्ञानोत्तरकर्मणां मुक्तावनुप्रवेशो मुक्तिगतानन्दवृद्ध्यर्थत्वं स्यादिति ।**

शे० — **पूर्ववदिति** । कार्यान्तराभावात्तेषां भोगार्थत्वाभावे वैयर्थ्यं स्यादिति पूर्ववत्तात्पर्यमित्यर्थः । ननु व्यर्थत्वेऽपि ज्ञानिकर्मणां तदनुष्ठानमस्त्वित्यतस्तथा सति तेषामप्रेक्षावत्त्वं स्यादित्यभिप्रेत्य मूलस्थहिशब्दार्थमाह **न हीति** ॥ **करणस्वाभाव्यादिति** । प्राक् ज्ञानोदयादादरनैरन्तर्याभ्यां कर्मानुष्ठानेन लब्धात्कर्मकरणस्वाभाव्याज्ज्ञानोदयानन्तरमपि कर्मानुष्ठानं तेषां युक्तमित्यर्थः । **अबुद्धिपूर्वतेति** । न चेष्टापत्तिः । 'कृच्छ्रेणापि तप' इत्यादिना पूर्वत्र ज्ञानिनां कर्माचरणस्य प्रेक्षापूर्वकत्वस्य समर्थितत्वेन तदनवकाशादिति भावः ॥ **तत्प्रयोजनस्यापीति** । लोकसंग्रहस्य सुखदुःखाभावेतरत्वेन स्वतः प्रयोजनत्वानुपपत्तेरिति भावः । ईश्वरस्येव ज्ञानिनां लोकसंग्रहसाध्यप्रयोजनाभावेऽपि लोकसंग्रहार्थमेव कर्मकरणं भवत्वन्यथेश्वरस्यापि तत्साध्यप्रयोजनवत्त्वापत्त्या कृतकृत्यत्वभङ्गापत्तेरिति शङ्कते **ईश्वरवदितीति** । हन्त तर्हि जीवन्मुक्तदशायामिव मुक्तिदशायामपि तदर्थमेव कर्मकरणापातादिति समाधत्ते **मुक्तावपीति** । न चेष्टापत्तिः । 'न प्रेत्य संज्ञाऽस्ती'त्यादिश्रुत्या मुक्तानाममुक्तदृष्ट्यगोचरत्वेन तत्कर्मकरणस्य लोकसंग्रहार्थताया बाधितत्वादिति भावः ॥ **ज्ञानोत्तरकर्मणामिति** । तदुत्तरशुभकर्मणामित्यर्थः ।

स० — **पूर्ववदिति** । तेषां भोगार्थत्वाभावे वैयर्थ्यं स्यादिति पूर्ववत्तात्पर्यमित्यर्थः ।

प० — **पूर्ववत्तात्पर्यमिति** । तेषां फलान्तराभावात् भोगार्थत्वाभावे वैयर्थ्यं स्यादित्येवं ध्येयमित्यर्थः । मोक्षाननुप्रवेशे हेतुरिति भ्रमनिरासायाह **वैयर्थ्यनिरासहेतुरिति** । एवं सति तस्य हेतुतोपपद्यते इति भावः । मोक्षाननुप्रवेशे हेतुत्वे त्वन्यफलकत्वेनाप्युपपत्तेरप्रयोजकत्वं स्यादिति भावः । 'लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसी'तिगीतोक्तेराह **लोकसंग्रहार्थमिति** । 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन' इति न्यायादिति भावः ॥ **ईश्वरवदिति** । फलाभावेपि ईश्वरो यथा सृष्ट्यादि करोति लीलात्वेन तथा लीलात्वेन कुर्वन्तीत्यर्थः ।

या० — **पूर्ववत्तात्पर्यमिति** । तेषां भोगार्थत्वाभावे कार्यान्तराभावाद्वैयर्थ्यं स्यादित्यत्र तात्पर्यमित्यर्थः ॥ **तत्प्रयोजनस्यापीति** । ईश्वरप्रसादद्वारा मौक्तानन्दाभिवृद्धिरेव तत्प्रयोजनमिति भावः । **मुक्तावपि प्रसङ्गादिति** । ईश्वरस्येव, लोकसङ्ग्रहेण प्रयोजनाभावेऽपि, ज्ञानिनां यदि

तदर्थमेव कर्मकरणं तर्हि तेषां मुक्तावपि जीवन्मुक्तिदशायामिव लोकसङ्ग्रहार्थं कर्मकरणादिप्रसङ्गादित्यर्थः । मुक्तानां लोकदृष्ट्यगोचरत्वान्नात्रेष्टापत्तिरित्यवधेयम् ॥

**श्री०— वैयर्थ्येति** । व्यर्थत्वं वेति तृतीयपक्षेत्यर्थः । **व्यर्थं** कर्म ॥ **करणेति** । कर्मकरणं तेषां स्वभाव एव । तथा च न प्रयोजनापेक्षेति भावः ।

**सु० — पूर्वभाविशुभानि** ज्ञानार्थानीत्युक्तम् । तत्र सर्वेषां ज्ञानार्थतायां प्रसक्तायां **विशेषमाह** ज्ञानादिति ।

**अनु०—** ज्ञानात्पूर्वाणि कर्माणि शुभानि ज्ञानसिद्धये ॥

अकाम्यानि

**ज्ञानात्पूर्वाण्यकाम्यान्येव शुभानि कर्माणि पुण्यकर्माणि ज्ञानसिद्धये भवन्ति न तु काम्यानि । शुभानीति विशेषणस्य कृत्यमाह** निषिद्धानीति ।

निषिद्धानि ज्ञानरोधाय भुक्तये ॥

**ज्ञानानुत्पाद, उत्पन्नस्याप्यभिभवो वा ज्ञानरोधः** । भुक्तये **दुःखस्य** । **एवं काम्यस्यापि विनियोगो** ज्ञातव्यः । **एतच्च(च)तुर्थे** व्युत्पादनीयम् ।

**शे० — सर्वेषामिति** । काम्याकाम्यसाधारण्येन सर्वेषामित्यर्थः ॥ **विशेषमाहेति** । अपवादमाहेत्यर्थः । नन्वकाम्यानामत्र ज्ञानसिद्ध्यर्थत्वमात्रमुच्यते न तु काम्यानां तदसाधनत्वं तत्कथमयं तस्यापवादः स्यादित्यतः परिसंख्यान्यायमाश्रित्य सावधारणतया व्याचष्टे **अकाम्यान्येवेति** । एवकारार्थकथनं न तु काम्यानीति **कृत्यमाहेति** । अन्यत्र विनियोगप्रदर्शनमुखेन निषिद्धव्यावृत्तिरूपप्रयोजनं सूचयतीत्यर्थः । ज्ञानात्पूर्वं निषिद्धकर्मणां केषाञ्चिज्ज्ञानोत्पत्तिप्रतिबन्धकत्वं केषाञ्चित्कथञ्चिदुत्पन्नज्ञानाभिभावकत्वमिति भावेन निरोधपदमुभयपरतया व्याचष्टे **ज्ञानानुत्पाद इति** ॥ **भुक्तये दुःखस्येति** । एतच्च पूर्वनिषिद्धप्रारब्धकर्माभिप्रायेणोक्तम् । अप्रारब्धनिषिद्धकर्मणो विनाशकथनेन स्वफलजनकत्वाभावादिति द्रष्टव्यम् । भाष्येऽकाम्यपदस्य काम्यानामन्यत्र विनियोगकथनमुखेन कृत्यस्यानुक्तत्वान्न्यूनतामाशङ्क्य स्पष्टत्वात्तदनुक्तिरिति भावेन स्वयं तदाह **एवं काम्यस्यापीति** । निषिद्धानीव काम्यान्यप्युक्तरूपज्ञानरोधाय स्वफलभुक्तये च भवन्तीत्येवं विनियोगो ज्ञातव्य इत्यर्थः । ननु प्रारब्धयोर्निषिद्धकाम्यकर्मणोः स्वफलभुक्त्यर्थत्वे, न ज्ञानिनो मोक्षः सिध्येत्तेषामनन्तत्वेन भोगेन क्षेप्तुमशक्यत्वादित्यतो ब्रह्मणां शतस्य यः कालस्तत्समाप्तेः पूर्वमेव सर्वेषामपि ज्ञानिनामारब्धसंक्षयान्मुक्त्युपपत्तिरिति 'ब्रह्मणां शतकालात्त्वि'त्यादिना चतुर्थे व्युत्पादनीयं तत एव प्रतिपत्तव्यमित्याह **एतच्चेति** ।

स०— **एतच्चतुर्थे व्युत्पादनीयमिति ।**

प०— **एवं काम्यस्यापीति ।** ज्ञानात्पूर्वं काम्यं ज्ञानरोधाय सुखभुक्तये ज्ञानोत्तरकाम्यमपि ज्ञानाभिभवाय सुखभोगाय चेत्येवं विनियोगो ध्येय इत्यर्थः । एतेन मूले काम्यानीत्युक्तेः कृत्यं व्यक्तीकृतं ध्येयम् । सर्वं भुक्त्यर्थमेव किमित्यत आह **एतच्चेति ।** कर्मक्षयपादे तदधिगमेतिनये 'यथोपास्याञ्जसा दृष्टमि'त्यादिना कर्मनाशनमपि व्युत्पादनीयमित्यर्थः ।

या०— **उत्पन्नस्याप्यभिभव इति ।** अनेन ज्ञानोत्तरकर्मणामित्यत्रापि शुभानामिति विशेषणीयमिति सूचयति । अकाम्यानीति विशेषणस्य कृत्यं स्वयमाह **एवं काम्यस्यापीति ।** ज्ञानात्पूर्वाणि काम्यानि ज्ञानानुत्पादाय स्वफलभुक्तये च भवन्ति तदितराणि तु ज्ञानाभिभवायेति विनियोगो ज्ञातव्य इत्यर्थः । ननु यदि काम्यनिषिद्धयोः सुखदुःखभोगार्थता तदा तेषामनन्तत्वान्न ज्ञानेन मुक्त्युपपत्तिरित्यत आह **एतच्च चतुर्थ इति ।** 'तथोपास्याञ्जसा दृष्टं ब्रह्म पापं च भस्मसात् । करोति निखिलं पूर्वमि'त्यत्रेति शेषः ।

सु०— **ननु यथाऽकाम्यानि शुभानीति च विशेषणमुपादीयते तथा नित्यनैमित्तिकव्यतिरिक्तानीत्यपि विशेषणमुपादेयम् । नित्यादेरपि प्रत्यवायपरिहारार्थत्वेन ज्ञानकारणत्वाभावादित्यत आह** योग्यताया इति ।

अनु०— योग्यताया बलाद्यच्च शुभबाहुल्यमादितः ॥
ज्ञानबाहुल्यमेवैतत्कुर्यान्नान्यस्य

योग्यता **ब्राह्मणत्वादिरूपा पितृमरणादिरूपा च ।** आदितो **ज्ञानात्पूर्वं कृतम् ।** अन्यस्य **प्रत्यवायमात्रपरिहारस्य । 'आध्यानाय प्रयोजनाभावादि'त्यत्रास्यार्थस्य समर्थितत्वान्नेह हेतुरुक्तः । अत्र योग्यताया बलाच्छुभमादितः कृतमेतच्च ज्ञानमेव कुर्यादिति च वक्तव्ये यदुभयत्र बाहुल्यग्रहणं कृतं तत्तस्य नास्मत्पक्षप्रतीपतेत्युक्तप्रपञ्चनार्थमिति ।**

शे०— **ब्राह्मणत्वादिरूपेति ।** एतच्च नित्याभिप्रायेणोक्तम् । सत्यकरणे प्रत्यवाये ब्राह्मण्यादिनिमित्तमुपादाय विहितस्य सन्ध्यावन्दनादेर्नित्यत्वादिति ज्ञेयम् ॥ **पितृमरणादिरूपा चेति ।** इदन्तु नैमित्तिकाभिप्रायेणोक्तम् । सत्यकरणे प्रत्यवाये पितृमरणाद्यागन्तुकं निमित्तमुपादाय विहितस्य पितृश्राद्धादेर्नैमित्तिकत्वादिति भावः । नित्यादेर्ज्ञानसाधनताया मूलारूढत्वसिद्ध्यर्थमादित इत्येतदपेक्षितपूरणेन योजयति **ज्ञानात्पूर्वं कृतमिति ॥ प्रत्यवायमात्रपरिहारस्येति ।** प्रत्यवायपरिहारमात्रस्येत्यर्थः । अत्र ज्ञानात्पूर्वस्य शुभस्य ज्ञानमात्रार्थत्वप्रतिज्ञायां हेत्वनुक्त्या प्रसक्तां न्यूनतां तदनुक्तौ निमित्त-

कथनेन परिहरति **आध्यानायेति** ॥ **समर्थितत्वादिति** । 'ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा । ज्ञातव्याश्चैव ध्यातव्या गुणाः सर्वेऽप्यतो हरेः । नान्यत्प्रयोजनं ज्ञानाद्ध्यानात्कर्मकृतेरपि । श्रवणाच्चाथ पाठाद्वा विद्याभिः किञ्चिदिष्यते । गुणाः सर्वेऽपि वेत्तव्या ध्यातव्यास्तु न संशयः । नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत् । ज्ञानध्यानसमायोगाद्गुणानां सर्वशः फलम् । मुख्यं भवेन्न चान्येन फलं मुख्यं कचिद्भवेत्' । इति कर्मब्रह्मविद्यासाधारण्येन विद्यामात्रस्य महाफलकज्ञानमात्रप्रयोजनकत्वप्रतिपादकपरमसंहितादिवाक्यानुरोधेन यथा ज्ञानार्थत्वेन विहितश्रवणादेर्जनोलोकादिफलकत्वेऽपि न तदेव मुख्यं फलं किन्तु महाफलं ज्ञानमेव जनोलोकादिकं त्वमुख्यम् । तथा कर्मणा ज्ञानमातनोतीति ज्ञानार्थत्वेन विहितस्य कर्मणः प्रत्यवायपरिहारफलकत्वेऽपि न स एव मुख्यं फलं किन्तु महाफलं ज्ञानमेव । प्रत्यवायपरिहारस्त्वमुख्यं फलमित्यस्यार्थस्य भाष्ये समर्थितत्वादित्यर्थः ॥ **इति वक्तव्य इति** । तावतैव ज्ञानात्पूर्वस्य शुभस्य ज्ञानार्थत्वलाभादिति भावः ॥ **प्रपञ्चनार्थमिति** । तत्प्रकारश्च 'मुक्तौ तारतम्यमसहमानेन खल्पासकेन कृतान्यसङ्कल्पितफलानि कर्माणि ज्ञानमुपजनयन्ति । कर्मणा ज्ञानमातनोतीति श्रुतेः । ज्ञानेन च मोक्षो भवतीत्यज्ञकृतकर्मणामपि ज्ञानद्वारेणाक्षयफलकत्वमिति व्याख्यानं क्रियते । तच्च मुक्ततारतम्यमेव साधयति । कर्माणि हि जिज्ञासवो विचित्राणि कुर्वन्ति । तैश्च जायमानेन ज्ञानेन विचित्रेणैव भाव्यम् । अन्यथा कृतविप्रणाशाकृताभ्यागमापत्तेः । विचित्रेण च ज्ञानेन विचित्र एव मोक्षो भावनीयः । पूर्वोक्तादेव हेतोः । तदेवं स्वमतविरोधिपरानुकूलमन्यथाव्याख्यानं न कर्तव्यमेवे'ति तद्व्याख्यानावसर एवोक्तोऽवधेयः ।

**प०— आध्यानायेति** । उपासनापादे सूत्रकृता कर्मविद्ययोर्ज्ञानार्थत्वस्य समर्थितत्वादित्यर्थः । **इत्युक्तप्रपञ्चनार्थमिति** । मुक्तौ तारतम्यमस्तीत्युक्तप्रपञ्चनार्थमित्यर्थः । शुभबाहुल्येन ज्ञानाधिक्योक्त्या तेन फलबाहुल्यस्यापि लाभात् कर्मणः विचित्राक्षयफलवत्त्वं प्रपञ्चितं भवतीति भावः ।

**या०—प्रत्यवायमात्रपरिहारस्येति** । प्रत्यवायपरिहारमात्रस्येत्यर्थः ॥ **समर्थितत्वादिति** । भाष्य इति शेषः । तत्र ब्रह्मकर्मविद्यानां ज्ञानमेव प्रयोजनमन्यस्याभावादिति सूत्रकृतोक्तेऽसिद्धोऽयं हेतुर्दुःखहेतुप्रत्यवायपरिहारादिफलकस्य कर्मकरणस्य जनलोकादिफलकस्य श्रवणादेर्वा प्रयोजनस्य सम्भवादित्याशङ्क्य कर्मकरणादेरपि महाफलं ज्ञानमेव प्रयोजनं 'कर्मणा ज्ञानमातनोती'त्यादौ तदर्थतया तस्य विहितत्वात् । महाफलज्ञानसाधनत्वेन विहितस्यान्यन्न प्रयोजनमल्पत्वादिति समर्थित्वादित्यर्थः । यद्यपीदं समर्थनं भाष्ये न स्पष्टमभिहितम् । तथाऽपि कर्मकृतेरपि श्रवणाच्चाथ पाठाद्वेति कर्मकरणस्य श्रवणादिसमानतयोक्तत्वेन 'नान्यत्प्रयोजनं मुख्यमि'ति चोक्तत्वेन तत्राभिप्रेतम् । अत एव तत्त्वप्रकाशिकायां यद्यपि श्रवणादेर्जनलोकादिफलस्य प्रयोजनत्वसम्भवस्तथाऽपि महाफलज्ञानसाधनत्वेन विहितस्य न तत्फलमित्युक्तम् । तत्राद्येनादिपदेन कर्मकरणस्य, द्वितीयेन प्रत्यवायपरिहारादेर्गृहीतत्वान्न तत्त्वप्रका-

शिकायामपीदमभिहितमिति शङ्काऽनवकाश इति ध्येयम् ॥ **प्रपञ्चनार्थमिति** । प्रपञ्चनप्रकारश्च **'मुक्तौ** तारतम्यमसहमानेन खल्वेवमन्यथा व्याख्यानं क्रियत' इत्यादिना तत्रैवोक्त इति ज्ञातव्यम् ।

**श्री०** — **अस्मत्पक्षेति** । मुक्ततारतम्यसमर्थनरूपास्मत्पक्षेत्यर्थः ।

**सु०— अत्र 'पुरुषार्थोऽतःशब्दादि'त्यादिना ज्ञानस्य मोक्षसाधनत्वमुक्तम् । अत्र च कर्मतारतम्याज्ज्ञानतारतम्यं ज्ञानतारतम्यान्मोक्षतारतम्यमिति** वदता च **सूचितम्** । ज्ञानपदं **चावबोधमात्रस्य प्रतिपादकमिति प्रतीतिनिरासार्थमाह** ज्ञानस्येति ।

**अनु०** — ज्ञानस्य भक्तिभागत्वाद्भक्तिर्ज्ञानमितीर्यते ॥

**अस्मिञ्छास्त्रे यत्र यत्र ज्ञानस्य मोक्षसाधनत्वमुच्यते तत्र तत्र ज्ञानमिति पदेन भक्तिरीर्यते लक्ष्यते । कुतः । संबन्धात् । ज्ञानस्य भक्तिभागत्वात् । माहात्म्यज्ञानस्नेह-समुदायो हि भक्तिरित्युक्तम् । ततो ज्ञानं भक्तेर्भाग एकदेशः । तथा चैकदेशैकदेशित्व-लक्षणात्संबन्धादित्युक्तं भवति । एकदेशेनैकदेशिलक्षणा च द(शमा)शामात्रं दत्तमित्यादौ प्रसिद्धैव ।**

**शे०** — ननु ज्ञानस्येत्युत्तरवाक्यमनर्थकम् । न च ज्ञानपदस्य भक्तिपरत्वप्रतिपादनार्थत्वान्न तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न चावबोधमात्रवाचकत्वप्रतीतिनिरास एव तत्प्रयो-जनमिति वाच्यम् । तत्परत्वेऽपि बाधकाभावेन तस्याप्यनर्थकत्वात् । न चावबोधमात्रस्य मोक्षसाधन-त्वप्रसङ्ग एव तत्र बाधकमिति वाच्यम् । अत्राधिकरणे ज्ञानस्य मोक्षसाधनत्वानुक्त्या प्रसञ्जकाभावेना-वबोधमात्रस्य तत्साधनत्वस्याप्रसङ्गेन तस्य बाधकत्वायोगादित्यतोऽत्राधिकरणे तदनुक्तावप्यधिकरणान्तरे तदुक्त्यादेरेव प्रसञ्जकत्वसंभवाद्युक्तस्तत्प्रसङ्ग इति भावेन प्रसञ्जककथनेन तत्प्रसक्तिं सूचयन्नेवोक्तशङ्कानि-वर्तकतया तद्योजयति **अत्रेत्यादि** ॥ **सूचितमिति** । ज्ञानस्य मोक्षसाधनत्वेऽकारणतारतम्येनाकार्ये तारतम्यस्याप्रयोजकताशङ्काकवलितत्वात्तत्तारतम्येन मोक्षतारतम्यसाधनानुपपत्त्या तद्बलेन तत्साधनत्व-लाभादिति भावः । अवबोधमात्रस्य प्रतिपादकं तत्रैव प्रयोगप्रत्ययप्राचुर्यादिति भावः । नन्वेवं कथ-मवबोधमात्रे ज्ञानपदस्य प्रयोगप्रत्ययावित्यतोऽत्र नाविशेषेण ज्ञानपदस्य भक्तिपरत्वमभिमतं येनोक्तानु-पपत्तिः स्यात्किं नाम विशेषेणैवेति युक्तावेवावबोधमात्रेऽपि तत्प्रयोगप्रत्ययाविति भावेन विशेषमुपदर्शय-न्नेव वाक्ययोजनामाह **अस्मिन् शास्त्र इति** । ननु ज्ञानशब्दस्य भक्तिप्रतिपादकत्वोपदर्शकभक्तिर्ज्ञान-मितीर्यत इति भाष्यखण्डेनैवोक्तशङ्कानिराससिद्धेर्ज्ञानस्य भक्तिभागत्वादिति तत्खण्डवैयर्थ्यमित्यतो नास्य भाष्यखण्डस्य ज्ञानपदे भक्तिवाचकत्वोपदर्शकत्वं किन्तु तल्लक्षकत्वोपदर्शकत्वमेव । ततश्च ज्ञानस्येत्यादि-

भाष्यखण्डस्य लक्षणाबीजशक्यसंबन्धोपदर्शकत्वान्नानर्थक्यमिति भावेन तत्परतया भाष्यखण्डं योजयितुं तदाकाङ्क्षोत्थापनाय ज्ञानपदस्य भक्तिलक्षकत्वोपदर्शकतया तद्व्याचष्टे **ईर्यते लक्ष्यत इति** । ननु च केयं भक्तिर्यद्भागत्वं ज्ञानस्योच्यते कथं च तदवयवस्य ज्ञानस्य तद्भागत्वमित्यत आह **माहात्म्येति** । 'ज्ञानस्यैव विशेषो यदि'ति वक्ष्यमाणप्रकारान्तरस्यासंभावितत्वशङ्कापरिहाराय 'परोक्षत्वापरोक्षत्व' इति मूले दृष्टान्तोक्तिवद्भक्तिभागत्वादित्युक्तलक्षणाप्रकारस्याप्यसंभावितत्वशङ्कापरिहारायावश्यवक्तव्यस्य दृष्टान्तस्य मूलेऽनुक्त्या प्रसक्तां न्यूनतां तदनुक्तौ निमित्तकथनेन परिहरति **एकदेशेनेति** । एकदेशवाचकेनेत्यर्थः । लक्षणाया वृत्तित्वेन शक्तिवत्पदमात्रवृत्तितयाऽर्थनिष्ठत्वाभावात् । एवमेवैकदेशान्तरेणेति परोक्षत्वेनेत्युत्तरत्रापि तद्वाचकत्वेनेत्यर्थो बोद्धव्यः । अर्थगतैव लक्षणा शब्दे त्वारोप इति मताश्रयणेन वाऽयं ग्रन्थः । यथोक्तम् । लक्षणारोपिता क्रियेति । व्याख्यातं च तट्टीकाकृताऽऽरोपितः शब्दव्यापार इतीति द्रष्टव्यम् ।

प० — **इत्युक्तमिति** । जिज्ञासासूत्रे 'ज्ञानी प्रियतमोऽतो मे' इत्यादिसार्धश्लोकतात्पर्योक्तिप्रस्तावसुधायां परमेश्वरे भक्तिर्नामेत्यादिग्रन्थेन तथोपासनापादादिभागानुव्याख्याने चोक्तमित्यर्थः ॥ **दशामात्रमिति** । वैद्यके हि मात्रशब्द औषधैकदेशवाची प्रसिद्धः । दशमात्रमित्यत्रैकदेशवाचिपदेन तत्समुदायं औषधं गृह्यते तथेत्यर्थ इत्येके । अन्येतु दशामात्रपदमिति पाठमुपेत्य दशाशब्दितवस्त्रान्तभागविशिष्टाल्पपटखण्डे दत्ते दशामात्रं दत्तमित्यादिलौकिकव्यवहारे दशाशब्दो दशोपेताल्पपटखण्डपरः तथेत्यर्थ इत्याहुः । अपरेतु तैलार्द्रवर्तिदानेपि दशामात्रन्दत्तमित्यत दशाशब्दो वर्तिं तैलसंमेलनरूपैकदेशिपर इत्याहुः । आदिपदेन वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दश्चातुर्मास्याख्यकर्मगतवैश्वदेवपर्वशब्दितवैश्वदेवावैश्वदेवाष्टकयागसमुदाये लाक्षणिकः तथैवाद्याध्यायान्त्यपादीयैकादशाधिकरणेऽभिधानादिति वैश्वदेवादिशब्दग्रहः ।

या० — वक्ष्यमाणे प्रकारान्तरे मूले दृष्टान्तस्य वक्ष्यमाणत्वादत्र स्वयं तं दर्शयति **एकदेशेनेति** ॥ **दशामात्रमिति** । दशाशब्दः संयोगविशेषशून्यतन्त्वात्मकपटान्तिमभागवाचीत्याहुः । एकदेशान्तरस्येत्येतस्य समानाधिकरणान्तरेण समानाधिकरणान्तरस्येत्यर्थः । एको देशोऽधिकरणं यस्येति विग्रहात् । ज्ञानस्नेहौ चैकदेशित्वलक्षणसंबन्धेन भक्तिरूपैकाधिकरणगतौ । परोक्षत्वापरोक्षत्वे च यद्यपि नैकज्ञानगते, तथाऽपि ज्ञानत्वेनैकीकृते ज्ञाने वर्तेते इति समानाधिकरणे एव विवक्षिते । अत एव ज्ञानस्य द्वौ धर्माविति वक्ष्यति । एवं च परोक्षत्वापरोक्षत्वयोर्ज्ञानैकदेशत्वाभावात् । ज्ञानस्नेहयोर्वा भक्तिधर्मत्वाभावात्कथं दृष्टान्तदार्ष्टान्तिकभाव इति शङ्काऽनवकाश इति ध्येयम् ।

श्री० — **दशामात्रमिति** । तन्तुमात्रमित्यर्थः । दशां छिनत्तीति वैदिकप्रयोगात् । तथा चात्र यथा प्राघुणिकानां दशामात्रदानस्य बाधिततया दशापदेन दशामात्रं विहाय समग्रैकदेशी पटो लक्ष्यते । एवमिहापि ज्ञानमात्रस्य मोक्षसाधनताया बाधिततया ज्ञानपदेन ज्ञानं विहाय समग्रा भक्तिर्लक्ष्यत इतीयं जहत्स्वार्थलक्षणेत्यर्थः ।

सु० — **प्रकारान्तरमाह** ज्ञानस्यैवेति ।

अनु० — ज्ञानस्यैव विशेषो यद्भक्तिरित्यभिधीयते ॥

**यद्यदा ज्ञानस्यैव विशेषः स्नेहादिसाहित्यलक्षणो धर्मो भवति तदा स पिण्डो भक्तिरित्यभिधीयते । एतदुक्तं भवति । ज्ञानं स्नेहश्च भक्तेरंशौ । तत्रैकेनांशेनांशान्तरस्योपलक्षणम् । तथा चाजहल्लक्षणया भक्तिरेव सिध्यतीति । एकदेशान्तरेणैकदेशान्तरस्योपलक्षणे दृष्टान्तमाह** परोक्षत्वेति ।

परोक्षत्वापरोक्षत्वे विशेषौ ज्ञानगौ यथा ॥

**यथा ज्ञानस्य परोक्षत्वापरोक्षत्वलक्षणौ द्वौ धर्मौ । तत्र तमेवं विद्वानिति परोक्षज्ञानस्य मोक्षसाधनत्वेऽभिहिते परोक्षत्वेनापरोक्षत्वं लक्ष्यत इत्यर्थः । दार्ष्टान्तिकं दर्शयति** स्नेहयोगोऽपीति ।

स्नेहयोगोऽपि तद्वत्स्याद्विशेषो ज्ञानगोऽपरः ॥

**स्नेहश्चासौ योग उपायश्चेति स्नेहयोगः । स्नेहेन योगः संबन्ध इति वा । तत ए(कैनै)-कदेशेनैकदेशान्तरलक्षणा च स्यादिति शेषः ।**

शे० — **एकदेशान्तरेणेति** । यद्यपि ज्ञानस्नेहयोर्भक्त्यंशत्ववत्परोक्षत्वापरोक्षत्वयोर्न ज्ञानांशत्वं किन्तु तद्धर्मत्वमेव । नापि परोक्षत्वापरोक्षत्वयोर्ज्ञानधर्मत्ववज्ज्ञानस्नेहयोर्भक्तिधर्मत्वं किन्नाम तदंशत्वमेवेति न दृष्टान्तदार्ष्टान्तिकभावः संभवति । तथाऽपि परोक्षत्वापरोक्षत्वयोः सतोऽपि ज्ञानधर्मत्वरूपविशेषस्य ज्ञानस्नेहयोश्च सतोऽपि भक्त्यंशत्वस्य विशेषस्याविवक्षया परोक्षत्वादेर्ज्ञानरूपैकपिण्डसंबन्धस्येव ज्ञानस्नेहयोरपि भक्तिरूपैकपिण्डसंबन्धस्यांशतया सत्त्वेन यौ द्वावेकपिण्डसंबन्धिनौ तयोरेकस्यापरोपलक्षकत्वमित्येतावन्मात्रानुगमविवक्षयैव दृष्टान्तदार्ष्टान्तिकभावोऽभिमतः । यद्यपि परोक्षत्वापरोक्षत्वयोर्नैकपिण्डसंबन्धित्वमपि ज्ञानभेदेन वृत्तेस्तथाऽपि ज्ञानत्वेनैकीकृतपिण्डसबन्धित्वविवक्षयेयमुक्तिरिति ध्येयम् । स्नेहयोगः साहित्यलक्षणेन संबन्धेन ज्ञानगो विशेषः स्यादित्युक्त्या ज्ञानस्नेहयोगयोर्भक्त्यंशत्वप्राप्तावपि स्नेहस्य तदंशत्वाप्राप्तेस्तल्लाभाय स्नेहयोगपदं स्नेहमात्रपरतया व्याचष्टे **स्नेहश्चासाविति** । अस्मिन्पक्षे श्रुतस्य योगशब्दस्य वैयर्थ्यं साहित्येनेत्यश्रुतकल्पना च भवतीत्यतः प्रकारान्तरमाह

**स्नेहेति ।** संबन्धः साहित्यरूपः । मूले स्नेहस्य भक्त्यंशत्वोक्तेः प्रयोजनानुक्तेः शेषपूरणेन तदाह **तत इति ॥ एकेनेति ।** ज्ञानरूपांशेनेत्यर्थः । क्वचिदेकदेशेनेत्यपि पाठः । तत्राप्ययमेवार्थः ।

प० — **एकदेशान्तरेणेति ।** ज्ञानत्वेनैकीकृते ज्ञाने परोक्षत्वापरोक्षत्वयोरेकदेशत्वादेवमुक्तम् ॥ **परोक्षज्ञानस्येति ।** ज्ञानसामान्यप्रत्यायकस्यापि एवमिति सहस्रशीर्षत्वादिप्रकारश्रवणात् परोक्षपरत्व-मुपेत्यैवमुक्तम् ।

या० — **परोक्षज्ञानस्येति ।** यद्यपि विद्वानिति ज्ञानसामान्यमेव प्रतीयते न तस्य परोक्षत्वम् । तथाऽपि तमेवमिति पदयोरुक्तपरामर्शकत्वात्तं पूर्वोक्तपुरुषमेवमुक्तप्रकारेण विद्वानिति व्याख्याने पूर्वोक्तिरेव ज्ञाने करणतया प्रतीयते । अयं मदुक्तं जानातीत्यादौ तथैव प्रतीतेरनुभवसिद्धत्वात् । उक्तिकरणकं च ज्ञानं परोक्षमेवेत्याशयः । परोक्षत्वेनेत्युक्तिर्लक्षणाऽर्थगतेति मतमाश्रित्य । वस्तुतस्तु परोक्षत्वप्रापकपदेनेत्येवार्थः । एवं पूर्वमेकदेशान्तरेणेत्येतदपि व्याख्येयम् । यद्यपि दृष्टान्तेऽजहत्स्वार्थ-लक्षणा, तथाऽपि सामानाधिकरण्यरूपशक्यसंबन्धवत्त्वमात्रे दृष्टान्तोऽयमिति ध्येयम् ॥ **स्नेहश्चासा-विति ।** अत्र तद्वत्स्यादित्यन्तमेव मूलं योजनीयम् । अपरोक्षत्ववत् शक्यार्थसंबन्धवान्स्यादिति तदर्थः । अत्रापेक्षितं पूरयति **तत एकदेशेनेति ।** लक्षणयाऽपि लब्धमर्थं दर्शयितुं तद्वदित्येतद्विहाय समग्रं मूलमित्याशयेनाह **स्नेहेन योग इति ।** तथा चात्र स्नेहेन योगः साहित्यरूपो ज्ञानगो विशेषोऽवस्थाविशेषोऽपरो भक्तिशब्दार्थः स्यादिति व्याख्येयमिति भावः । एवं चाजहल्लक्षणया भक्तिरेव सिध्यतीति यत्पूर्वं स्वयमुक्तं तदेवात्र प्रदर्शितं भवतीति ज्ञातव्यम् ।

श्री० — **प्रकारान्तरमिति ।** अजहत्स्वार्थलक्षणारूपप्रकारान्तरमित्यर्थः ।

सु० — **लाक्षणिकप्रयोगे सूत्रकारस्य किं प्रयोजनमित्यत** आह इत्यभिप्रायत इति ।

**अनु०** — इत्यभिप्रायतः प्रायो ज्ञानमेव विमुक्तये ॥

वदन्ति श्रुतयः

**द्विविधलक्षणाभिप्रायेण श्रुतयः तरति शोकमात्मविदित्याद्याः । इदमुक्तं भवति । द्विविधा लक्षणा भवति रूढारूढभेदात् । तत्र द्वितीयायां प्रयोक्तुः प्रयोजनानुसन्धानेन भाव्यम् । न त्वाद्यायामभिधातुल्यायाम् । इयं च रूढलक्षणा । श्रुतिषु प्रायिकव्यवहारदर्श-नात् । अतः किं प्रयोजनान्वेषणेनेति ।**

**शे०**— ननु लाक्षणिकप्रयोगे सूत्रकारस्य प्रयोजनानुक्तेः कथमनेनोक्तशङ्कायाः परिहार इत्यतस्तदनुक्तावपि तदनपेक्षत्वसूचनात्तत्परिहार इत्याह **इदमुक्तं भवतीति** ।

**प०— सूत्रकारस्येति** । 'विद्यैव तु निर्धारणात्' 'दर्शनाच्च' 'पुरुषार्थोऽत' इत्यादि-सूत्रकारस्येत्यर्थः ॥ **द्विविधलक्षणेति** । एकदेशेनैकदेशिलक्षणा तथा एकदेशान्तरेण एकदेशान्तरस्य लक्षणेत्येवं द्विधेत्यर्थः ।

**सु०— भक्तिशब्दो माहात्म्यज्ञानपूर्वकस्य स्नेहस्य वाचक इत्युक्तं तथा ज्ञानशब्दो भक्त्यर्थ इति । तदुभयमप्यनुपपन्नम् । भक्तिज्ञानाभ्यां मोक्षो भवतीत्यपि दर्शनात् । तत्र भक्तिशब्दस्योक्तार्थत्वे ज्ञानग्रहणवैयर्थ्यात् । ( तस्य तत्रान्तर्भूतत्वात् ) । ज्ञानपदस्य चोभयार्थत्वे भक्तिग्रहणवैयर्थ्यादित्यत** आह सोऽयमिति ।

**अनु०**— सोऽयं विशेषोऽपि ह्युदीर्यते ॥

भक्तिर्ज्ञानमिति क्वापि

**क्वापि भक्तिर्ज्ञानमिति पदाभ्यां सोऽयं स्नेहलक्षणो बोधलक्षणश्च विशेषोऽप्युदीर्यते । न तूक्त एवार्थ इति नियमस्तस्मान्नानुपपत्तिः । यत्र भक्तिज्ञाने(ज्ञानं) सहोच्येते तदा पुनरुक्ति-प्रसङ्गाद्भक्तिपदं स्वार्थैकदेशत्यागेन स्नेहांशस्य लक्षकम् । न तु मुख्यार्थनिष्ठम् । ज्ञानपदं चानुपपत्त्यभावान्मुख्यार्थमेव न तु लक्षकमिति भावः ।**

**शे०**— ननु सोऽयमित्याद्युत्तरवाक्ये भक्तिशब्दस्य स्नेहमात्रप्रतिपादकत्वं ज्ञानशब्दस्यावबोध-मात्रवाचकत्वं कश्चिदस्तीत्युच्यते तदनर्थकम् । न च भक्तिशब्दे माहात्म्यज्ञानपूर्वकस्नेहवाचकत्व-नियमस्य ज्ञानशब्दे च भक्त्यर्थनियमस्य निराकरणार्थमेतदिति वाच्यम् । असति बाधके नियम-निराकरणायोगादित्यतस्तन्नियमेऽनुपपत्तिं दर्शयन्नियमनिराकरणपरतयोत्तरवाक्यं योजयति **भक्तिशब्द इति ॥ अनुपपत्तिरिति** । ज्ञानग्रहणवैयर्थ्यादिलक्षणेत्यर्थः । कथं विशिष्टार्थकस्य भक्त्यादिशब्दस्य स्नेहादिमात्रपरत्वमित्यतोऽभिप्रायमाह **यत्रेति** । ( **दशामात्रमिति** । तन्तुमात्रमित्यर्थः । दशां छिनत्तीति वैदिकप्रयोगात् । तथा च यथा प्राघुणिकानां दशामात्रदानस्य बाधिततया दशामात्रपदे-नैकदेशीयपटो लक्ष्यते । तथेहापि ज्ञानस्य मोक्षसाधनताया बाधितत्वाज्ज्ञानपदेन समग्रा भक्तिर्लक्ष्यते ।

**श्री०— भक्त्यर्थ इति** । लक्षणयेत्यर्थः ।

**सु०— ननु विना स्नेहाज्ज्ञानमात्रेण यदि मुक्तिरनुपपन्ना स्यात् । तदा ज्ञानपदस्य लक्षकत्वमाश्रयणीयम् । न चैवम् । पुरुषार्थस्य भक्त्येकसाध्यत्वे प्रमाणाभावात् । द्वेषिणामपि शिशुपालादीनां मोक्षदर्शनाच्च । द्विषिणः स्निग्धा इत्यस्य च विप्रतिषिद्धत्वात् । अतोऽनुपपन्नं लक्षणाश्रयणमित्यतो द्वेषस्य मोक्षसाधनत्वं तावन्निराकरोति** न हीति ।

न हि द्वेषयुता दृशिः ॥

पुरुषार्थाय भवति सर्वश्रुतिविरोधतः ॥

**अत्र द्वेषस्य पुरुषार्थसाधनत्वं निषिध्यते । दृशिरिति तु प्रसङ्गादुक्तम् । ज्ञानस्यात्रऽयकतामुपादाय स्नेहनिरासाय हि परः प्रत्यवस्थितः । कैमुत्यार्थं वा । माहात्म्यज्ञानमपि न द्वेषयुक्तं मोक्षहेतुः । किमुत केवलो द्वेष इति । यथोक्तम् । 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं विरञ्जनमि'ति ।**

**शे०—** ननु द्वेषिणामपि शिशुपालादीनां भक्त्यैव मोक्षः किन्न स्यादित्यत आह **द्वेषिण इति** । 'द्वेषो नैव सन्मुक्तिकारणमि'त्युत्तरग्रन्थानुरोधेन द्वेषस्य मोक्षसाधनत्वनिवारणाय प्रवृत्तेऽत्र वाक्ये द्वेषस्य मोक्षसाधनतानिराकरणस्यैव सङ्गतत्वाद्द्वेषयुतदृशेस्तन्निराकरणमसङ्गतमित्यत **आह अत्रेति** । तर्हि द्वेषो न पुरुषार्थसाधनमित्येव वक्तव्यम् । किं दृशिग्रहणेनेत्यतो नात्र दृशिग्रहणं तन्मोक्षसाधनताया निरस्यत्वाभिप्रायेण किन्तु प्रासङ्गिकमेवेत्याह **दृशिरिति** । प्रासङ्गिकतामेवोपपादयति **ज्ञानस्येति** । अत्र पक्षे दृशिग्रहणस्य प्रासङ्गिकत्वं समाश्रयणीयं भवतीत्यरुच्या पक्षान्तरमाह **कैमुत्यार्थं वेतीति** । तदर्थतामेव स्पष्टयति **माहात्म्येति** ॥ **नैष्कर्म्यमपीति** । विधिनिषेधरहिततया निष्कर्मशब्दवाच्यमोक्षसाधनत्वयोग्यत्वान्नैष्कर्म्यं वैराग्योपेतत्वान्निरञ्जनमलं समीचीनं यद्धरिमाहात्म्यज्ञानं तदच्युते भक्तिवर्जितं द्वेषेणोपेक्षया वा युक्तं चेन्न शोभते मोक्षसाधनं न भवतीत्यर्थः ।

**स०—** प्रासङ्गिकत्वे निमित्तमाह **ज्ञानस्येति** ।

**प०—** दृशेरपि मुक्तिहेतुत्वनिरासे पूर्वोक्तविरोध इत्यत आह **अत्र द्वेषस्येति** ॥ **यथोक्तमिति** । द्वादशस्कन्धेऽनुक्रमणिकायां नैष्कर्म्यपदेन कर्मसाध्यत्वान्मोक्ष उच्यते कार्यकारणयोरभेदोपचारान्मोक्षसाधनमपि । **निरञ्जनं** कामादिदोषरहितं, ज्ञानं, **अच्युतभाववर्जितं** हरिभक्तिहीनं चेत् द्वेषयुक्तं चेदित्यर्थः । **न शोभते** मोक्षहेतुर्नेत्यर्थः ।

**या०— नैष्कर्म्यमपीति** । विधिनिषेधरहिततया निष्कर्मशब्दवाच्यमोक्षसाधनयोग्यत्वान्नैष्कर्म्यं वैराग्योपेतत्वान्निरञ्जनं अलं समीचीनं यद्धरिमाहात्म्यज्ञानं तत् अच्युते भक्तिवर्जितं द्वेषेणोपेक्षया वा युतं चेन्न शोभते मोक्षसाधनं न भवतीत्यर्थः ।

**श्री०— परः प्रत्यवस्थित इति** । अतो दृशिग्रहणं कृतमित्यर्थः । आवश्यकी दृशिरपि न द्वेषयुता मोक्षसाधनमिति भावः ॥ दृशिशब्दार्थो **माहात्म्यज्ञानमिति** ।

**सु०— द्वेषस्य मुक्तिसाधनत्वाङ्गीकारे कथं सर्वश्रुतिविरोध इत्यतस्तावदेकां श्रुतिं पठति** चेतनस्येति ।

**अनु०**— चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेव च ॥
संसारस्त्रिविधस्तत्र स्वर्गो मध्यमधस्तथा ॥
मुक्तिश्च द्विविधा तत्र सुखं नित्यं तथाऽपरम् ॥ नित्यदुःखमिति ज्ञेयं साधनं संसृतावपि ॥
काम्यं कर्म निषिद्धं च साज्ञानमिति निश्चयः ॥ द्वेषो भक्तिश्च मुक्तौ तु मुक्तिद्वयविधायकम् ॥
इति पैङ्गिश्रुतेर्द्वेषो नैव सन्मुक्तिकारणम् ॥

जीवजातस्य । **द्वयमेव** । तत्र **मुक्तिसंसारयोर्मध्ये** । मध्यं **मानुषत्वम्** । अधो **नरकादि** । **नित्यं सुखमेकं मुक्तित्वेन ज्ञेयम्** । **तथा नित्यदुःखमपरमिति** ज्ञेयम् । **संसृतौ संसृतिविषये, साधनमपि द्वेषो भक्तिश्चेति योग्यतया संबन्धः** । **विधायकं कारकम्** । **नित्यसुखरूपा सन्मुक्तिः** । **इति ज्ञायत इति शेषः** ।

**शे०** — चेतनशब्दस्य भगवद्रमादिसाधारण्येन चेतनमात्रपरताया बाधितत्वादाह **जीवजातस्येति** ।

---

मुक्तिरेव चेत्यत्र चैवशब्दयोर्विरुद्धार्थयोरेकत्रान्वयानुपपत्तेरेवशब्दं भिन्नक्रमतया योजयति **द्वयमेवेति** । अधिकरणत्वस्य बाधितत्वात्तत्रेति निर्धारणसप्तमीत्यभिप्रेत्य व्याचष्टे **तत्रेति** । संसृतावपीत्यपिशब्दो भिन्नक्रम इत्यभिप्रेत्याह **साधनमपीति** । द्वेषभक्त्योरुभयोरपि द्विविधमुक्तिकारणत्वभ्रमस्य द्वेषस्य सन्मुक्तिकारणत्वं भक्तेश्च नित्यदुःखकारणत्वमिति यथाक्रमसंबन्धभ्रमस्य द्वेषो भक्तिश्चैतद्द्वयं सन्मुक्तेः केवलो द्वेषस्त्वसन्मुक्तेः कारणमिति टीकाकृतैव वक्ष्यमाणान्यथाप्रतीतेश्च निवारणायाह **द्वेषो भक्तिश्चेति यथायोग्यतया संबन्ध इति** । विधायकत्वस्य शब्दधर्मत्वाद्द्वेषादेः कथं तद्विधायकत्ववचनमित्यत आह **कारकमिति** । प्रकृतोपयोगितया व्याचष्टे **नित्यसुखेति** ।

**प०** — कस्यचिज्जीवस्येति भ्रमनिरासाय वा देवदेव्योर्व्यावृत्तये वाह **जीवजातस्येति** । द्वेषो भक्तिश्च मुक्तौत्वित्यत्रान्वयाप्रतीतेराह **साधनमपि द्वेषो भक्तिश्चेतीति** ॥ **योग्यतयेति** । द्विविधमुक्तौ **यथायोग्यं** संबन्ध इत्यर्थः । शब्दरूपत्वाभावात् कथं विधायकत्वमित्यत आह **विधायकं कारकमिति** । प्रागुक्तसन्मुक्तेरन्यत्वधीनिरासायाह **नित्यसुखरूपा सन्मुक्तिरिति** । सन्मुक्तिकारणमित्यनन्तरं शेषमाह **इति ज्ञायत इति शेष इति** ।

या० — लक्ष्मीनारायणव्यावृत्त्यर्थमाह **जीवजातस्येति** । विधायकत्वस्य शब्दधर्मत्वादाह **कारकमिति** ।

श्री० — चेतनशब्देनेश्वरस्य रमायाश्च प्राप्तेस्तद्व्यावृत्त्यर्थमाह **जीवजातस्येति** ॥ **योग्यतयेति** । **मुक्तौ भक्ति**र्नित्यसुखरूपमुक्तौ, **मुक्तौ द्वेषो** नित्यदुःखरूपमुक्ताविति मुक्तिद्वयविधायकमिति यथायोग्यं संबन्धो न तु यथाक्रममित्यर्थः ।

**सु० -- सन्मुक्तिकारणत्वस्याप्रतिषेधात्कथमेवमुच्यत इत्यत आह** असदिति ।

**अनु०** -- असन्मुक्तेः कारणं च

**नित्यदुःखस्वरूपाया मुक्तेः कारणत्वेन तावद् द्वेष उक्तः । तेन सन्मुक्तिकारणं न भवतीति ज्ञायते विरोधादिति । नन्वस्यां श्रुतौ मुक्तिविषयौ भक्तिद्वषौ सदसन्मुक्तिकारणत्वेनोच्येते । विष्णुविषयौ तु प्रकृतौ । अतः किं केन सङ्गतमित्यत आह** मुक्ताविति ।

मुक्तावित्यत्र केशवः ॥

मुक्तिशब्दोदितो

**मुक्तावित्यत्र सप्तम्यन्ते पदे मुक्तीति प्रातिपदिकेनोदितः । केवलं मुक्तिशब्दोदित इत्युक्ते मुक्तिद्वयेत्यत्रापि प्राप्तिः । अतो मुक्तावित्यत्रेत्युक्तम् । केन निमित्तेनेत्यत आह** मोक्षमिति ।

मोक्षं स्वभक्तानां करोति यत् ॥

**मुच्लृ मोक्षण इत्यस्मात्स्त्रियां क्तिनिति क्तिन्प्रत्ययः । स च बहुलग्रहणात्कर्तर्यपि भवति । यद्वा करोतीति करणे कर्तृत्वोपचारः । मुच्यतेऽनेनेति मुक्तिरिति करणे क्तिन्प्रत्ययः ।**

**शे० — विरोधादिति** । नित्यदुःखरूपासन्मुक्तिकारणस्य द्वेषस्य नित्यसुखरूपसन्मुक्तिकारणताया विरुद्धत्वादित्यर्थः ॥ **क्तिन्प्रत्यय इति** । ततश्च क्तिनः कित्त्वाल्लघूपधगुणाभावे चोःकुरिति कुत्वे च मुक्तिशब्दनिष्पत्तिरिति भावः । ननु स्त्रियां क्तिनित्यत्र भावेऽकर्तरि चेत्यनुवृत्त्या तस्य स्त्रीलिङ्गे भावादावेव धातोः क्तिन्प्रत्ययविधायकत्वात्कथमत्र कर्तरि क्तिन्व्याख्यात इत्यतः सूत्रारम्भसामर्थ्यादेव यत्र कृत्यल्युटो विहितास्ततोऽन्यत्रापि तेषां कृत्यल्युट इत्येतत्सूत्रखण्डेनैव सिद्धया कृत्यल्युटो बहुलमिति बहुलग्रहणानर्थक्यमित्याशङ्क्य कृत्यप्रत्ययमात्रस्य स्वार्थव्यभिचारबोधनार्थत्वात्तस्यार्थवत्त्वमिति स्थित्या तद्बलेन क्तिन्प्रत्ययस्यापि स्वाभिधेयव्यभिचारसिद्धेर्युक्तं कर्तर्यप्यस्य क्तिन्प्रत्ययविधायकत्वमित्या-

**शयेनाह स चेति** । अत्र पक्षे बाहुलकाश्रयणं भवतीत्यपरितोषादाह **यद्वेति** । यद्वा मुच्यतेऽनेनेति मुक्तिरिति करणे क्तिनिति संबन्धः । नन्वेवं करणसाधनत्वे मुक्तिशब्दस्य कर्तृसाधनत्वोपदर्शनपरेण स्वभक्तानां मोक्षं करोतीति भाष्येण विरोधः स्यादित्यतोऽवान्तरव्यापारवतःकारकस्यैव करणत्वाद्व्यापार-कर्तृत्वविवक्षया भाष्यकारीयकर्तृत्वोक्त्युपपत्तेर्न तद्विरोध इति भावेनाह **करोतीति** । ननु स्त्रियां क्तिनि-त्येतत्सूत्रीयश्रुयुजीषिस्तुभ्यः करण इति वार्तिकबलेन धातुविशेषेभ्य एवास्य करणे क्तिन्विधायकत्वस्थित्या न मुचः करणे क्तिन्विधायकत्वमिति चेन्न । धातुविशेषेभ्यः करणे क्तिन्विधानमूलभूताभियुक्तप्रयोग-सत्त्वेनास्य तत्रोपसंख्येयत्वे तात्पर्यात् ।

स०— **बहुलग्रहणात् कर्तर्यपीति** । स्त्रियां क्तिनितिसूत्रे वृत्तौ 'भावेऽकर्तरि च कारके' इति वर्तते । स्त्रीलिङ्गे भावादौ धातोः क्तिन् प्रत्ययो भवति इति व्याख्यानात् कर्तरि सूत्रस्वार-स्येनैव क्तिन्प्रत्ययानुपपत्तेः बहुलग्रहणात् भवतीत्युक्तमिति भावः । **यद्वेति** । मुच्यतेऽनयेति मुक्तिरिति करणे क्तिनिति संबन्धः । नन्वेवं करणव्युत्पत्तौ मोक्षं स्वभक्तानां करोति यदि'ति भाष्यविरोध इत्यतो भाष्योक्तं कर्तृत्वमौपचारिकमित्याह **करोतीति** । ननु स्त्रियां क्तिनिति सूत्र एव श्रुजीविस्तुभ्यः करण इति वार्तिकेन श्रूयतेऽनयेति श्रुतिरिति धातुविशेषेभ्य एव क्तिनो विधानात मुच् इत्यस्मात् करणे क्तिनो-ऽविधानात्कथमयं पक्ष इति चेत् । न । तत्राप्यस्योपसंख्येयत्वे तात्पर्यात् ।

---

प०—ननु तृतीयाध्यायतृतीयपादे अकर्तरि च कारके संज्ञायामित्यधिकारे स्त्रियां क्तिन्नित्युक्तेः कथं कर्तरि क्तिन्नित्यत आह **स च बहुलेति** । उणादयो बहुलमिति उपक्रमात्तद्बहुलग्रहणमत्राप्यनु-वर्त्यमिति भावः ॥ **करण इति** । भगवांश्च मुक्तेः कारणमिति जिज्ञासासूत्रे प्रत्यपादि । तथा च मुच् क्तिन्निति स्थिते लशक्वतद्धिते हलंत्यमिति योगाभ्यां अनुबन्धद्वयलोपे कित्वात् क्ङितिचेति सूत्रेण पुगन्तेतिप्राप्तगुणनिषेधे चोःकुरिति चकारस्य कुत्वे मुक्तिरिति रूपं ज्ञेयम् ।

या० — **क्तिन् प्रत्यय इति** । तथा क्तिनः कित्त्वाद्गुणाभावे चकारस्य ककारे मुक्तीति रूपमिति भावः । ननु स्त्रियां क्तिन्नित्यत्र भावेऽकर्तरि च कारक इत्यनुवर्तते इत्युक्तत्वात्कथं कर्तर्ययं प्रत्यय इत्यत आह **स च बहुलेति** । कृत्यल्युटो बहुलमित्यत्र बहुलग्रहणादित्यर्थः । एतत्सूत्र-व्याख्यानसमये बहुलग्रहणादन्येऽपि कृतः प्राप्तमभिधेयं व्यभिचरन्तीति काशिकायामुक्तत्वात् ।

श्री०— **अप्रतिषेधादिति** । **अस्यां** श्रुतावित्यर्थः ॥ **विरोधादिति** । सन्मुक्तिकारणत्वा-ङ्गीकार इत्यर्थः ।

**सु०**-- **द्वेषस्य मोक्षसाधनत्वाङ्गीकारे युक्तिविरोधं चाह** द्वेषतोऽपीति ।

**अनु०** — द्वेषतोऽपि विमुक्तिश्चेन्महातात्पर्यरोधनम् ॥

**न केवलं भक्त्या किन्तु द्वेषतोऽपि विशिष्टा मुक्तिश्चेदङ्गीक्रियते तदा यत्सर्वश्रुत्यादीनां भगवद्गुणोत्कर्ष एव महातात्पर्यं तद्विरुद्धमापद्येत । कथमित्यत आह** भक्त्येति ।

भक्त्या प्रसन्नतो देवान्मुक्तिरित्येव तद्गुणान् ॥

वदन्ति श्रुतयस्सर्वाः पुराणान्यागमा अपि ॥

अन्येऽप्यागमाः । **श्रुत्यादयो मुक्तिप्रयोजनाः परमेश्वरगुणविषयाश्चेति** तावत्**प्रसिद्धम्** । **तत्र संबन्धोऽयमेव । यद्भगवत एव जीवानां मुक्तिः । सा च प्रसन्नादेव । प्रसादश्च भक्त्यैव । भक्तिश्च गुणज्ञा(नादेवे)न एवेत्येवं श्रुत्याद्यास्तद्गुणान्वदन्तीति । तथा च कथं द्वेषतो मुक्त्यङ्गीकारे न महातत्पर्यविरोधः ।**

**शे०**-- श्रुतिपुराणयोरप्यागमत्वादागमशब्दस्यागममात्रपरत्वानुपपत्तेरप्यागमा इत्यन्वयमभिप्रेत्यापेक्षिताध्याहारेण योजयति **अन्येऽप्यागमा इति** ॥ **प्रसिद्धमिति** । तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत इत्यादिवचनादिति भावः ॥ **तत्र संबन्ध इति** । श्रुत्यादेर्मुक्तिप्रयोजनतायां विषयप्रयोजनयोः परस्परं श्रुत्यादिना च सह संबन्धोऽयं वक्ष्यमाण इत्यर्थः । तमेव दर्शयति **यदित्यादि** । वदन्तीतीत्यत्रत्यस्येतिशब्दस्येत्ययं संबन्ध इति पूर्वेणान्वयः ।

**प०**-- आगमा अपीत्यस्यार्थोऽन्येऽप्यागमा इति । श्रुतिपुराणेभ्योऽन्ये पञ्चरात्रादय इत्यर्थः ॥ **प्रसिद्धमिति** । 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत' इत्यादिश्रुत्यादौ सिद्धमित्यर्थः ॥ **तत्र संबन्धोऽयमेवेति** । गुणोक्तेर्मोक्षस्य च अयं वक्ष्यमाण इत्यर्थः ।

**या०**-- **तत्र संबन्ध इति** ॥ उक्तविषयप्रयोजनयोः परस्परं ताभ्यां शास्त्रस्य चायं वक्ष्यमाणसंबन्ध इत्यर्थः ॥

**श्री०**-- **विशिष्टेति** ॥ आनन्दाविर्भावरूपेत्यर्थः ॥ **विषयाः** प्रतिपादकाः ॥

**सु०**-- **भक्तेर्मोक्षसाधनत्वमनेन गम्यते । न च तदस्माभिरपाक्रियते । किन्तु भक्तिवद् द्वेषस्यापीत्यत आह** यदीति ॥

**अनु०**-- यदि द्वेषेण मुक्तिः स्याद्भक्त्यो दोषसञ्चयः ॥

तदा द्वेषोत्पादनार्थमिति शेषः । **न चैवम्** । **गुणमात्रप्रतिपादनस्य प्रतिपादितत्वात् । ततो मोक्षार्थं प्रवृत्तो वेदादिर्गुणानेव प्रतिपादयन्मोक्षस्य भक्तिमात्रसाध्यत्वमभिप्रैतीति गम्यत इति भावः** ॥

**ननु द्वेषाच्चैद्यादयो नृपा इत्यादीनि द्वेषस्यापि मोक्षसाधनतां प्रतिपादयन्ति वाक्यानि सन्ति । तत्कथं द्वेषस्य मुक्तिसाधनत्वाभाव इत्यत आह** स्मर्तव्य इति ।

स्मर्तव्यो भगवान्नित्यमित्यर्थेनैव हि क्वचित् ॥
द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवत् ॥

**पुराणे क्वचित्प्रदेशे । भगवान्नित्यं स्मर्तव्य इत्यभिप्रायेणैव द्वेषान्मुक्तिमाहेव पुराणकृदिति संबन्धः । तस्मान्नोक्तविरोध इति हेरर्थः ।**

**इदमुक्तं भवति । पुराणवाक्यं द्वेषस्य मुक्तिसाधनत्वं प्रतिपादयदिवापाततो यद्यपि प्रतीयते । तथाऽपि तन्न तदभिप्रायम् । किन्तु मुमुक्षुणा भगवान्सर्वदा स्मर्तव्य इति तस्याभिप्रायः । यथा 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीदि'त्यत्र नाकार्यकरणे तात्पर्यं किन्तु सर्वथा भर्तव्यत्वे, तथेहापीति । गुणानाहेति तात्पर्यान्तरम् । चैद्यादीनां द्वेषतो मुक्तिं प्रतिपादयद्वाक्यं भगवतः कृपालुत्वादीन्गुणानाहेति । शापादिना द्वेषिणोऽपि चैद्याद्यास्तात्कालिकद्वेषमनिरूप्य पूर्वतनीं भक्तिमेवापेक्ष्य भगवता मोचिताः । अहो कृपालुत्वं निर्विकारत्वं सत्यसङ्कल्पत्वं च तस्येत्यत्र तात्पर्यं तेषां वाक्यानामित्यर्थः । द्विविधानि वाक्यानि, वैरेण यन्नृपतय इत्यादीनि स्मरणप्रधानानि तेषां प्रथमा गतिः । द्वेषाच्चैद्यादय इत्यादीनि द्वेषप्रधानानि तेषां द्वितीयेति हृदयम् ।**

---

**प्रथमव्याख्याने लौकिकदृष्टान्तमाह** क्रुद्धवाक्यवदिति । **क्रुद्धवाक्यस्य यथा न प्रतीत एवार्थप्रामाण्यम् किन्त्वन्यत्र; तथैवेत्यर्थः ।**

**शे०— गुणमात्रप्रतिपादनस्येति** । अनेन मुक्तिरित्येवेत्येवकारस्य गुणानित्यनेनापि संबन्ध उक्तो भवति । नन्वेवं योजनायां गुणानाहेत्येतद्भाष्यखण्डवैयर्थ्यम् । तदतिरिक्तेनैव तेनोक्तशङ्कापरिहारादित्यत आह **गुणानाहेति तात्पर्यमिति** । द्वेषाच्चैद्यादय इत्यादेरिति शेषः । किं तदित्यत आह **चैद्यादीनामिति** । द्वेधा तात्पर्यवर्णने निमित्तमाह **द्विविधानीति** ॥ **स्मरणप्रधानानीति** । वैरेणेत्यादीनां स्मरणप्राधान्यं च ध्यायन्त इति विशेषणोपादानाद्गम्यते । अखण्डस्मृतेरेव ध्यानत्वादित्यवधेयम् ।

**प०— प्रतिपादितत्वादिति** । 'प्रीत्या मोक्षपरत्वाच्च तात्पर्यं नैव दूषण' इति । जिज्ञासासूत्रे आनुमानिकपादादौ तत्र तत्रेति भावः ॥ **कृपालुत्वादीनिति** । कृपालुशब्दनिर्वाहो जिज्ञासानये अतो यथार्थबन्धस्येत्येतद्व्याख्यानसुधापरिमळे दर्शितः । गतिद्वयोक्तेर्व्यवस्थितविषयत्वेन कृत्यमाह **द्विविधानि वाक्यानीत्यादिना** । 'वैरेण यन्नृपतयश्शिशुपालपौण्ड्रसाल्वादयो गतिविलासविलोकनाद्यैः ।

ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियः पुनः किमि'त्यादिषु ध्यायन्त इति श्रवणात् स्मरणप्रधानानीत्युक्तम् ॥ **द्वेषप्रधानानि** द्वेषसाधकानीत्यर्थः ।

**या०— प्रतिपादितत्वादिति** । युक्तिपादीयान्तिमाधिकरण इति शेषः ॥ **स्मरणप्रधानानीति** । 'वैरेण यं नृपतयः शिशुपालपौण्ड्रसाल्वादयो गतिविलासविलोकनाद्यैः । ध्यायन्त आकृतधियः शयासननादौ तत्साम्यमापुरनुरक्तधियः पुनः किमि'त्यत्र ध्यायन्त इत्युक्त्या स्मरणप्रधानत्वमवगन्तव्यम् । ध्यानस्य स्मृतिरूपत्वात् ।

**श्री०— द्वेषस्यापीति** । मुक्तिसाधनत्वमुच्यत इत्यर्थः । **प्रथमा गतिः** । स्मर्तव्य इत्युक्ता गतिः ॥ **द्वितीयेति** । गुणानाहेत्युक्ता गतिरित्यर्थः ।

**सु०— एतद्विवृणोति** यथेति ।

**अनु०—** यथा क्रुद्धः पिता पुत्रं मरेत्याक्षेपपूर्वकम् ॥
प्रोक्तस्यान्यस्य कृत्यर्थं वदत्येवं पुराणगम् ॥
वाक्यं

**मरेति प्रकृत्यन्तरस्यैतद्रूपम् । 'जीव वा मर वा साधो व्याध मा जीव मा मरे'ति प्रयोगदर्शनात् । आक्षेपो निन्दा । स्वेन प्रोक्तस्यान्यस्य कार्यस्य । पिता किञ्चित्पुत्रं प्रति विधत्ते इदं कुर्विति । स तु श्रमादिभीरुरकुर्वाण एवावतिष्ठते । तदा क्रुद्धः पिता ब्रवीति । अरे जाल्म वैधवेय म्रियस्वेति । तस्य वाक्यस्य यथा न पुत्रमरणविधाने तात्पर्यं किन्तु स्वविहितकरणे । तथा च द्वेषेण स्मरणे मुक्तिर्भवतीति पुराणवाक्यस्यापि न द्वेषस्य मुक्तिसाधनत्वे तात्पर्यम् । किन्तु स्मरणस्य कर्तव्यतायामिति ।**

**शे०—** ननु मृङ् प्राणत्याग इत्यस्य म्रियतेर्लुङ्लिङोश्चेति शिद्विषये आत्मनेपदनियमाल्लोडात्मनेपदमध्यमपुरुषैकवचने थासि तुदादिभ्यः श इति विकरणप्रत्यये रिङ्शयग्लिङ्क्षिवति ऋकारस्य रिङि अचि श्नुधात्विवतीयङादेशे निष्पन्नान्म्रियतेत्यस्मात्परस्य थासः से भावे कृते सवाभ्यां वामाविति सकारात्परस्यैकारस्य वकारे च सति म्रियस्वेति भवितव्यम् । मरेति तु कथमित्यतो न मृङ् प्राणत्याग इत्यस्येदं रूपं किन्तु तत्समानार्थकस्य भौवादिकस्य मृ प्राणत्याग इत्यस्यैव । तथा च तस्यात्मनेपदित्वाप्राप्ते । तस्माल्लोण्मध्यमपुरुषैकवचने सिपि कर्तरि शबिति शपि सार्वधातुकेति गुणे रपरे च सति निष्पन्नान्मरेत्यस्मात्परस्य सेः सेर्ह्यपिच्चेति ह्यादेशेऽतो हेरिति तल्लोपे च सति युक्तैव मरेति रूपनिष्पत्तिरित्याह

**प्रकृत्यन्तरस्येति** । किं धात्वन्तराश्रयणे कल्पकमित्यतोऽभियुक्तप्रयोग एव तथेति भावेन तं दर्शयति **जीव वेति** । 'राजपुत्र चिरञ्जीव मा जीव ऋषिपुत्रके'ति पूर्ववाक्यम् । अत्र राजपुत्रस्यैहिकसुखसद्भावेऽप्यामुष्मिकतदभावाज्जीवनमेव प्रार्थितम् । ऋषिपुत्रस्यामुष्मिकसुखसद्भावेऽप्यैहिकतदभावादजीवनमेव प्रार्थितम् । साधोश्चेहलोके परलोके च सुखसद्भावाज्जीवनमरणोभयप्रार्थनम् । व्याधस्य तूभयथा दुःखमेवेत्युभयाभावप्रार्थनमिति ध्येयम् ।

**स०— प्रकृत्यन्तरस्येति** । मृङ् प्राणत्याग इत्यस्य रूपत्वे म्रियस्वेति स्यादिति भावः । संमतिग्रन्थे साधो व्याधेति पदच्छेदः ।

**प०—** म्रियस्वेति वक्तव्ये कथं मरेत्युक्तिरित्यत आह **प्रकृत्यन्तरस्येति** । शब्विकरणं मृधात्वन्तरं परस्मैपदं च तथाच मरेति साध्वित्यर्थः ॥ **जीव वा मर वेति** । (राजपुत्र चिरञ्जीव मा जीव ऋषिपुत्रकेति पूर्ववाक्यं) साधोरिह परत्र च सुखमेवेति तथोक्तम् । व्याधस्य जीवने मरणे च उभयत्र न सुखमतो मा जीव मा मरेत्युक्तम् । **जाल्मेति** । निन्दितेत्यर्थः । **वैधवेय** विधवापुत्र ।

**या०—** ननु मृङ् प्राणत्याग इत्यस्य ङित्त्वेनात्मनेपदित्वात्तस्माल्लोण्मध्यमपुरुषे थासि तुदादिभ्यः श इति शप्रत्यये कृते मृ इति ऋकारस्य रिङ्शयग्लिङ्क्ष्विति रिङादेशे इकारस्याचिश्नुधात्वित्यनेनेयङादेशे थासः से इति थास् इत्यस्य सेभावे सवाभ्यां वामाविति से इत्यत्रत्यैकारस्य वकारे म्रियस्वेति रूपेण भाव्यं मरेति तु कथमित्यत आह **मरेति प्रकृत्यन्तरस्येति** । धात्वन्तरस्येत्यर्थः । तथा च तस्य परस्मैपदित्वात्सिपि कर्तरि शबिति शपि सार्वधातुकार्धधातुकयोरिति गुणे सेर्ह्यपिच्चेति हिभावे अतो हेरिति हेर्लोपे मरेति रूपमिति भावः । साधोरिहलोके परलोके च सुखमेवास्तीत्यभिप्रेत्य जीव वा मर वेत्युक्तम् । व्याधस्य तूभयत्र कष्टमेवेत्यभिप्रेत्य मा जीवेत्याद्युक्तमित्यवगन्तव्यम् ।

**श्री०— प्रकृत्यन्तरस्येति** । मर प्राणवियोग इति धात्वन्तरस्येत्यर्थः । जीव वेत्यतः पूर्वं वाक्यं 'राजपुत्र चिरञ्जीव मा जीव ऋषिपुत्रके'ति । **जाल्म** खट्वारूढ । खट्वारूढो जाल्म इति वचनात् । **वैधवेय** विधवाऽपतिनी(?) रण्डा, तत्पुत्र ।

**सु०— इयं च व्यञ्जनावृत्तिरिति केचित् । तात्पर्यवृत्तिरित्यपरे । वाक्यलक्षणा(अ)नुमा(नमित्या)नं चेत्याचार्याः । प्रतीत एवार्थः किन्न स्यादित्यत आह** श्रुतीति ।

**अनु०—**　　श्रुतिविरोधेन स्वविरोधेन चाञ्जसा ॥
बह्वागमविरोधाच्च न द्वेषान्मुक्तिवाचकम् ॥

**पुराणगं वाक्यमिति वर्तते । श्रुतयोऽतीतपादेऽत्र चोदाहृताः । यत्र द्वेषस्य मुक्तिसाधनत्वमुच्यते तत्रैव तद्विरुद्धमुच्यत इति स्वविरोधः । सोऽपि हिरण्यकशिपुश्चेत्यादिभागवतवाक्यानां पठितत्वात्प्रदर्शित एव । अञ्जसा मुख्यया वृत्त्या । द्वेषान्मुक्तिं प्रतिपादयन्न भवति ।**

**शे०**——ननु वैरेण यन्नृपतय इत्यादीनां स्मरणप्रधानानां द्वेषाच्चैद्यादयो नृपा इत्यादीनां द्वेषप्रधानानां च वाक्यानां क्रुद्धपित्रादिवाक्यदृष्टान्तेन वाचनिकार्थव्यतिरिक्तार्थान्तरगमकत्वमाचार्यैरुक्तं तत्किं शब्दप्रमाणतया तेषामभिमतं किंवाऽनुमानप्रमाणतया । नाद्यः । शाब्दत्वहेतूनां शक्तिलक्षणागौणीनामसंभवेन वाचनिकार्थव्यतिरिक्तार्थस्य शाब्दत्वायोगात् । नान्त्यः । तत्प्रकाराप्रतिभासादित्यतोत्र वादिविप्रतिपत्तिं दर्शयन्नाचार्यपक्षमाह **इयं चेत्यादि** । शक्त्यादेरिव व्यञ्जनतात्पर्ययोरपि शाब्दत्वानुकूलशब्दवृत्तित्वाद्दार्ष्टान्तिकवाक्यानां दृष्टान्तवाक्यानां च शक्तिलक्षणागौणीभिर्वाचनिकार्थव्यतिरिक्तार्थान्तरगमकत्वासंभवेऽप्यालङ्कारिकसम्मतव्यञ्जनावृत्त्या मीमांसकसम्मततात्पर्यवृत्त्या वाऽर्थान्तरप्रतिपादकत्वसंभवान्न तस्य शाब्दत्वानुपपत्तिरिति भावः । **अत्र केचिदित्यपर इति** चास्वरसोद्भावनम् । तद्बीजं तु व्यञ्जनस्य शब्दवृत्तिताया आनुमानिकपादे निरस्तत्वात् । तात्पर्यस्य 'वाचकत्वं हि तात्पर्यमि'त्यादिनोत्तरत्र तस्या निरसिष्यमाणत्वादिति द्रष्टव्यम् ॥ **वाक्यलक्षणानुमानं चेत्याचार्या इति** । विशिष्टवचनरूपं लिङ्गमेव वाचनिकार्थव्यतिरिक्तार्थान्तरगमकमित्यर्थः । वचनलिङ्गानुमा हि सेत्यन्यत्र तदुक्तेः । तथा हि । वैरेण यन्नृपतय इत्यादिपुराणकर्ता व्यासो नापातप्रतीतार्थाभिप्रायवानाप्तत्वे सति प्रमाणविरुद्धार्थवादित्वात्सम्मतवत् । ततोऽप्ययं मुमुक्षुणा विष्णुस्मरणकर्तव्यत्वाभिप्रायवानबाधिताभिप्रायान्तरशून्यत्वात् । ततो विष्णुः सर्वदा स्मर्तव्य आप्तेन तथाऽभिमतत्वादित्यनया प्रनाड्या विष्णुस्मरणकर्तव्यताप्रतीतिर्वचनलिङ्गानुमितानुमितिरेव । तथा द्वेषाच्चैद्यादय इत्यादिपुराणकर्ता नापातप्रतीतार्थाभिप्रायवानाप्तत्वे सति प्रमाणविरुद्धवादित्वात्सम्मतवदिति । ततोऽप्ययं विष्णो कृपालुत्वाद्यभिप्रायवानबाधिताभिप्रायान्तरशून्यत्वात् सम्मतवत् । ततश्च विष्णुः कृपालुत्वादिगुणविशिष्ट आप्तेन तथाऽभिप्रेतत्वादिति वचनलिङ्गानुमितिरेव । अप्यकार्यशतं कृत्वेत्यादिवाक्यस्य कर्ता नाकार्यकरणतात्पर्यवानाप्तत्वे सति प्रमाणविरुद्धार्थवादित्वात् । ततश्चायं सर्वथा भर्तव्यत्वाभिप्रायवानबाधिताभिप्रायान्तरशून्यत्वात् । ततः पित्रादयः सर्वथा भर्तव्या आप्तेन तथाऽभिप्रेतत्वादित्यनया प्रनाड्या भर्तव्यत्वप्रतीतिर्वचनलिङ्गानुमिताऽनुमितिरेव । अरे जाल्म वैश्ववेयेत्यादिवाक्यवक्तेदानीं मह्यं क्रुद्धो वर्तते । आप्तत्वे सति प्रमाणविरुद्धकर्तव्यतावादित्वात् । क्रोधश्चास्य विहिताकरणादेव । दृष्टपरित्यागेनादृष्टस्य कल्पयितुमशक्यत्वात् । ततोऽयमेतत्कर्तव्यत्वाभिप्रायवांस्तदकृतिजनितक्रोधवत्त्वादिति वक्त्रभिप्रायमनुमायेदं मया कर्तव्यं मत्कार्यत्वेनाप्ताभिप्रेतत्वादित्यनया प्रनाड्या स्वविहितकर्तव्यताप्रतीतिर्वचनलिङ्गानुमितिरिति

दिक् ॥ अत्रानुमानं चेति पाठेऽपि चशब्दोऽवधारणार्थ एव द्रष्टव्यः । क्वचिद्वाक्यलक्षणार्थान्तरगमिका क्वचिच्चानुमानमित्येतद्वाक्यव्याख्यानं तु व्यञ्जनावृत्तिविषये वाक्यलक्षणायाः काप्याचार्यैरनुक्तत्वाद्वचन-लिङ्गानुमा हि सेति तद्विषयस्य वाक्यलिङ्गकानुमानवेद्यताया एव तैरुक्तत्वात् । शक्तिवल्लक्षणाया अपि वृत्तित्वेन पदमात्रधर्मत्वेन वाक्यलक्षणाया अनुक्तत्वाच्चोपेक्ष्यम् ।

**वर्तत इति** । अनुवर्तत इत्यर्थः । ननु पुराणवाक्यस्य प्रतिज्ञाते द्वेषान्मुक्तिप्रतिपादकत्वाभावे हेतुतयोपन्यस्तानां श्रुतिविरोधस्वविरोधब्रह्मागमविरोधानां त्रयाणामप्यत्र कथंभावशङ्कायामुपदर्शनीयत्वा-च्छ्रुतिविरोधस्वविरोधावनुपदर्श्य ब्रह्मागमविरोधमात्रस्योपदर्शनमनुचितमित्यतस्तदुपपादनाय तयोरनुप-दर्शनीयतायां निमित्तमुपदर्शयञ्छ्रुतिविरोधस्य तावदाह **श्रुतय इति** । 'रिपवो ये तु रामस्य विमुखत्वा-न्निरामिण' इत्यादिना पूर्वपादे 'चेतनस्य द्रव्यं भोग्यं संसारो मुक्तिरेव चे'त्यादिनाऽस्मिन्पादे च विरोधिश्रुतय उपदर्शिता एवेत्यतो न तद्विरोधोपपादनमपेक्षितमिति भावः । स्वविरोधशब्दार्थं वदन्नेव तस्याप्युपदर्शनीयतामाह **यत्रेति** ॥ **सोऽपीति** । स्वविरोधोऽपीत्यर्थः ॥ **पठितत्वादिति** । पूर्वपाद इति शेषः ।

**स० — वाक्यलक्षणेत्यादि** । अत्र वाक्यस्थानां केषांचित्पदानां लक्षणा वाक्यलक्षणेत्य-भिमतम् । शक्तिवल्लक्षणाया अपि वृत्तित्वेन पदधर्मत्वेन वाक्यधर्मत्वानुपपत्तेरिति बोध्यम् । इदं चाखण्डार्थताभङ्गे न्यायामृते स्पष्टम् । **अनुमानं वेति** । अयमिदानीं मह्यं क्रुद्धः आप्तत्वे सति प्रमाणविरुद्धाभिधायित्वात् । क्रोधश्चास्य सन्निहितात्तदुक्ताननुष्ठानादेवदृष्टहेतुत्यागेनादृष्टकल्पनायोगात् । अतो मयेदं कार्यमित्येवमनुमेत्यर्थः ।

**प० — इदं चेति** । वैरेणेत्यादिषूक्तार्थधीहेतुरित्यर्थः ॥ **वाक्यलक्षणा अनुमानं चेति** । वाक्यमेव स्वान्तर्गतपदैर्लक्षणयोक्तमर्थं बोधयति स्वयं लिङ्गविधयाऽनुमापयति चेत्यर्थः । व्यक्तमेत-त्कर्मनिर्णयटीकयोः । एवं व्याप्त्यनुमानप्रकारः । वैरेणेत्यादिवाक्यं न प्रमाणविरुद्धप्रतीतार्थकं प्रमाण-वाक्यत्वात्, तद्वाक्यकर्ता वा प्रमाणविरुद्धप्रतीतार्थतात्पर्यको न प्रमाणवाक्यकर्तृत्वात्, प्रमाणान्तरा-नुगुणार्थान्तरतात्पर्यकं तादृशार्थान्तरतात्पर्यको वा उक्तादेव हेतोः संमतवदित्यादिरूपेण ज्ञेयः ॥ **अतीतपाद इति** । 'रिपवो ये तु रामस्य विमुखत्वान्निरामिण' इत्यादिनेति भावः ॥ **अत्र चेति** । पाद इति वर्तते । 'चेतनस्य द्रव्यं भोग्यमि'ति ग्रन्थेनेति ज्ञेयम् ।

**या० — इयं चेति** । उक्तोदाहरणेषु विवक्षितार्थप्रतीतिजनिकेत्यर्थः ॥ **व्यञ्जना वृत्ति रिति** । तेषामयमाशयः । पदैरभिहितेष्वर्थेष्वप्याकाङ्क्षादिवशादन्योन्यान्विततया प्राकरणिकार्थपर्यव-सितेष्वपि व्यङ्ग्यरहितस्य वाक्यस्य काव्यस्य वाऽनात्मकशरीरवदचारुत्वाद्वाक्यार्थशोभायै पुनर्वाच्यलक्ष्याति-

रिक्तार्थप्रतिपादको यः शब्दार्थव्यापारः सा व्यञ्जनावृत्तिः। इयं च त्रिविधा। शब्दशक्तिमूलाऽर्थशक्तिमूलोभयशक्तिमूला चेति। तत्राद्या यथा 'वाहिन्यो राघवेन्द्रस्य सर्वतोमुखसम्भ्रमाः। कुर्वन्त्युद्युक्तबन्धाढ्यं प्रतिपक्षबलार्णवम्।' अत्र वाहिनीसर्वतोमुखकबन्धशब्दानामर्थप्रकरणादिना सैन्यसर्वतोमुखलूनमस्तकदेहपराणामप्राकरणिकनदीजलवाचकत्वे निवारितेऽपि वाहिन्यादिशब्दशक्तिमूलया व्यञ्जनया वृत्त्या जलेन सम्यग्भ्रमणवत्यो नद्योऽर्णवमुदकजलाढ्यं कुर्वन्तीति व्यज्यते। वाहिनीशब्दस्य नदीवाचकत्वात्। 'कबन्धमुदकं पाथः पुष्करं सर्वतोमुखमि'त्यभिधानेन सर्वतोमुखकबन्धशब्दयोर्जलवाचकत्वात्। द्वितीया यथा। 'श्रुत्वा राघवभूभर्तुः क्षोणीपाणिग्रहोत्सवम्। अंगुष्ठेनालिखन्भूपाः पादपीठनताननाः'। अत्र भूपा विषण्णा इत्यर्थशक्तिमूलयोक्तवृत्त्या व्यज्यते। तृतीया यथा। 'विजितारिपुरो मूर्तौ विलसत्सर्वमङ्गलः। राजमौलिरसौ भाति रुद्रदेवो जगत्पतिः'। रुद्रराजस्तुतिपरेऽप्यस्मिन् श्लोके शङ्करस्तुतिर्व्यज्यते। तत्र विजितारिपुर इत्येतदर्थशक्तिमूलयोक्तवृत्त्या शङ्करो व्यज्यते। विलसत्सर्वमङ्गलराजमौलिपदे तु शब्दशक्तिमूलयैव तथा शङ्करव्यञ्जके। शर्वाणी सर्वमङ्गलेत्यभिधानाद्विलसन्ती सर्वमङ्गला पार्वती यस्येति राजा मृगाङ्के क्षत्रिये नृप इत्यभिधानाद्राजा चन्द्रो मौलौ यस्येति च व्याख्यानसंभवात्। एवं च प्रकृतोदाहरणेष्वप्यर्थशक्तिमूलया व्यञ्जनावृत्त्यैवोक्तार्थप्रतीतिर्वक्तव्येति। अत्र केचिदित्यस्वरसोद्भावनम्॥ तद्बीजं त्वाद्यायास्तावन्न वृत्त्यन्तरत्वम्। तत्र शब्दशक्त्यैवाप्राकरणिकोक्तार्थस्यापि प्रतीतिसंभवेन तदर्थं तन्मूलकवृत्त्यन्तरकल्पकाभावात्। द्वितीयोदाहरणे तु स्पष्टमनुमानत्वम्। यद्यपि व्यङ्ग्यव्यञ्जकयोरविनाभावाभावान्नानुमानं संभवति। तथाऽपि नम्राननत्वादिकार्यं तावत्सकारणकं कार्यत्वात्संमतवदिति सामान्यतः कारणसिद्धौ तच्च प्रकरणादन्यन्न संभवतीति परिशेषाद्विषाद एव परिकल्प्यते। तत्रश्चायं प्रयोगः। विवादास्पदं कार्यं विषादकारणकं तदन्याजन्यत्वे सति जन्यत्वात्। यद्यदन्याजन्यत्वे सति जन्यं तत्तत्कारणकम्। यथा घटादि मृदादिकारणकमिति। तृतीयोदाहरणे विजितारिपुर इत्यत्राप्युत्तरपदद्वयवच्छब्दशक्त्यैव शङ्करप्रतीतिसंभवे तदर्थमर्थशक्तिमूलकवृत्त्यन्तरकल्पनं निर्मूलम्। प्रकृतोदाहरणेषु तु वक्ष्याम इति। तात्पर्यवृत्त्यङ्गीकारे स्वरसबीजं त्वनुपदं वक्ष्यमाणाचार्यपक्षोपपादनेनैव स्पष्टं भविष्यति।

**वाक्यलक्षणेति**। वाक्यान्तर्गते कस्मिंश्चित्पदे लक्षणेत्यर्थः। न तु समग्रवाक्ये लक्षणेत्यर्थः। लक्षणायाः पदवृत्तित्वात्। गम्भीरायां नद्यां घोष इत्यत्रापि गम्भीरनद्योरन्वयबोधानन्तरं गम्भीरान्वितनदीबोधके नदीपद एव लक्षणया तत्राभिमतार्थप्रतीतिसंभवे वाक्ये लक्षणाकल्पनस्य निर्मूलत्वात्।

वाक्यस्यान्वयलक्षकता तु न संमता । अन्विताभिधानाङ्गीकारात् । लक्षणेत्यमुख्यवृत्तिमात्रोपलक्षणम् ॥ **अनुमानं चेति** । तात्पर्यविषयार्थप्रतीतिजनका न सर्वत्र लक्षणैव । अपि त्वनुमानं च क्वचित्तथा भवतीति समुच्चये चशब्दः । ततश्चायमाशयः । यत्र गङ्गायां घोषोऽग्निर्माणवको यष्टीः प्रवेशयेत्यादौ वाक्ये तात्पर्यविषयार्थप्रतीतेः शाब्दत्वमनुभवसिद्धम् । तत्र कस्मिंश्चित्पदे लक्षणाद्यमुख्यवृत्तिरेव प्रदर्शनीया न तदतिरिक्ता तात्पर्यवृत्तिः कल्पनीया मानाभावात् । यत्र च प्रकृतोदाहरणादिरूपे वाक्ये शब्दवृत्तिरमुख्या काऽप्युपपादयितुं च न शक्या तत्र तात्पर्यविषयार्थप्रमितिरनुमानजैव । अतस्तदर्थमपि न तत्कल्पनम् । तथा हि । वैरेण यन्नृपतय इत्यादिवाक्यवक्ता भगवान्व्यासः । नापातप्रतीत प्रमाणविरुद्धस्ववाक्यार्थतात्पर्यवानाप्तत्वात् । अप्यकार्यशतं कृत्वेत्यादिवाक्यवक्तृवत् अरे जाल्मेत्यादि-वाक्यवक्तृवच्चेति प्रतीतार्थे तात्पर्याभावं तावदनुमाय परिशेषात्स्मर्तव्यं सततं विष्णुरित्यादिस्वोक्तस्या-न्यस्यार्थस्य कर्तव्यतायामेव तात्पर्यवानित्यवसीयते । यथा मात्रादयः सर्वथा भर्तव्या इति स्वविहि-तस्यान्यस्यार्थस्य कर्तव्यतायां मनुर्यथा वा इदं कुर्विति स्वविहितस्यान्यस्य कर्तव्यतायां पितेति परिशेषादव-गम्यते तथैवेति । द्वेषाच्चैद्यादय इत्यादिवाक्ये तु द्वेषपदस्य तत्पूर्वभाविन्यां भक्तौ लक्षणा । ततश्च भगवतः कृपालुत्वादिप्रतीतिरनुमानजैव । भगवान्कृपालुर्निर्विकारः सत्यसङ्कल्पश्च । तात्कालिक-द्वेषवद्भ्योऽपि स्वभावतः स्वभक्तेभ्यो बन्धमुक्तिदानात् सत्प्रभुवत् । यदि कृपालुत्वादिमान्न स्यात्तर्हि तात्कालिकद्वेषेण तेभ्यो मुक्तिदो न स्यात् भवति च तथा. तस्मादुक्तगुणवानित्यनुमानसंभवात् । एवमन्यत्राप्यनुमानप्रकारो द्रष्टव्य इति । उक्तं च भगवत्पादैः । वचनलिङ्गानुमा हि सा विरोधाद-मुख्या वृत्तिर्वेति । तदेवं यत्र शाब्दी प्रतीतिस्तत्रास्मदभिमतवृत्तिष्वन्यतमां व्युत्पादयामो यत्र तदव्युत्पादनं तत्र शाब्दत्वमेव निराकुर्म इति न तात्पर्यवृत्तिरन्या सिध्यतीति ।

**श्री०— व्यञ्जनावृत्तिरितीति** । 'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानि'ति वाक्येन भार्याया मरणं व्यज्यते । एवं 'वैरेणे'त्यादि-वाक्येन स्मरणस्य कर्तव्यत्वं व्यज्यते । एवं 'द्वेषाच्चैद्यादय' इति वाक्येन भगवतः कृपालुत्वादिगुणा व्यज्यन्त इत्यर्थः ॥ **तात्पर्यवृत्तिरिति** । वैरेण द्वेषादित्यादिवाक्यानां व्यासेन स्मरणकर्तव्यत्वकृपा-लुत्वादिगुणप्रतीतीच्छयैव, उच्चरितत्वादियं तात्पर्यवृत्तिरित्यर्थः ॥ **वाक्यलक्षणेति** । वाक्यरूपेत्यर्थः । वाक्यलिङ्गकेति यावत् । 'वैरेण यन्नृपतयो' 'द्वेषाच्चैद्यादय' इत्यादिवक्ता भगवान्व्यासः, स्मरणकर्तव्यत्व-कृपालुत्वादिगुणाभिप्रायवान्, आप्तत्वे सति प्रमाणाविरुद्धवक्तृत्वात्, वृद्धवाक्यवदिति वाक्यलिङ्ग-कानुमानमित्यर्थः ।

**सु० — आगमविरोधं दर्शयति** तम इति ।

**अनु०** — तमो द्वेषेण संयान्ति भक्त्या मुक्तिं तथैव च ॥
विष्णौ विष्णुप्रसादेन विलोमत्वेन चाञ्जसा ॥
इति षाड्गुण्यवचनमप्युक्तार्थनियामकम् ॥

**विष्णौ भक्त्या जातेन विष्णुप्रसादेनैव मुक्तिं संयान्ति । तथा विष्णौ द्वेषेण जातेन विलोमत्वेन विष्णुकोपेनाञ्जसा तमः संयान्तीति योजना । चशब्दौ समुच्चयार्थौ । उक्तार्थनियामकं विष्णुभक्तिरेव मुक्तिसाधनं न द्वेष इत्यस्यार्थस्य नियामकम् । एतद्वाक्यसमाख्यया चेतनस्येति श्रुतौ मुक्ताविति शब्दो विष्णोर्वाचक इति सिध्यति । तथा च द्वेषो भक्तिश्चेत्येतद्द्वयं सन्मुक्तेः केवलो द्वेषस्त्वसन्मुक्तेः कारणमित्यन्यथाप्रतीतिरपास्ता भवति ।**

**शे०** — नन्वत्र तमो द्वेषेण विष्णौ भक्त्या विष्णुप्रसादेन विलोमत्वेनाञ्जसा मुक्तिं संयान्तीति योजनायां विष्णुद्वेषस्य तमःसाधनत्वानुक्तिर्भक्तिप्रसादयोश्च समकक्षतया सन्मुक्तिसाधनत्वप्राप्तिस्तत्तुल्यतयैव विलोमत्वस्यापि सन्मुक्तिकारणत्वप्राप्तिश्च भवतीत्यतोयथावद्वाक्यं योजयति **विष्णावित्यादि** । उक्तरीत्या वाक्ययोजनायां न चशब्दद्वयस्य कृत्यमित्यतो भक्त्या मुक्तिं संयान्ति तमो द्वेषेण संयान्तीत्युक्तयोर्मिथः समुच्चयार्थत्वान्न तद्वैयर्थ्यमिति भावेन तदर्थतया चशब्दौ व्याचष्टे **चशब्दाविति** । तमो द्वेषेणेत्यादिषाड्गुण्यवचनस्याव्यवहितप्रकृतं यद्द्वेषवाक्यस्य प्रतीतार्थेऽतात्पर्यं तदुपपादकतयाऽव्यवहितेनैव पूर्वग्रन्थेन सङ्गतिरित्येव न किन्तु व्यवहितपूर्वोक्तार्थोपपादकतया व्यवहितसङ्गतिरप्यवधेयेत्याशयेनाह **एतद्वाक्येति** ॥ **इति सिध्यतीति** । इति च सिध्यतीत्यर्थः । अनेन प्रागुक्तस्य मुक्तावित्यत्र केशव इति व्याख्यानस्योपपादकतया तद्ग्रन्थसङ्गतिरुक्ता भवति । प्रकारान्तरेण व्यवहितसङ्गतिं सूचयति **तथेति** ॥ **केवलो द्वेष इति** । अनेन द्वेषपदमावर्तते । तच्च केवलद्वेषपरमित्युक्तं भवति ॥ **अन्यथाप्रतीतिरिति** । चेतनस्येति पूर्वोदाहृतश्रुताविति वर्तते ।

**श्री० — अपास्ता भवतीति** । षाड्गुण्यवाक्यादिति शेषः ।

**सु० — इतश्च नैतद्वाक्यं प्रतीतार्थपरमित्याह** महातात्पर्येति ।

**अनु०** — महातात्पर्यरोधेन कथं वाक्यं प्रमाणताम् ॥
याति

**मोक्षप्रयोजनानां सर्वागमानां भगवद्गुणेष्वेव यन्महातात्पर्यं तदन्यथाऽनुपपत्त्या भक्तिरेव मुक्तिसाधनं न द्वेष इत्यवगम्यते । अतो महातात्पर्यविरोधेन च द्वेषवाक्यं प्रतीतार्थे कथं प्रमाणतां याति ।**

**ननु श्रुत्यादीनां कथं प्राबल्यम्। येन तद्विरोधादिदं वचनं स्वार्थात्प्रच्याव्यते। उच्यते। श्रुतेः श्रुतित्वादेव प्राबल्यम्। स्ववाक्यस्य निरवकाशत्वात्। अत एव तत्रोक्तमञ्जसेति। इतरागमानां च बहुत्वेन। अत एव बह्वागमेत्यभिहितम्। महातात्पर्ययुक्तेर्वाक्यतः प्राबल्यमुपपादयितुमाह** सर्वेति।

सर्वार्थरूपं हि महातात्पर्यमिष्यते ॥

**सर्वेषां शास्त्राणामनन्यार्थतया यदेकार्थप्रतिपादकत्वं तद्रूपमित्यर्थः।**

**शे०** — द्वेषवाक्यस्य श्रुत्यादिविरोधेन प्रतीतार्थेऽतात्पर्यस्य प्रतिपादितत्वात्किमुत्तरेणेत्यतो युक्त्यन्तरेण द्वेषवाक्यस्य प्रतीतार्थेऽतात्पर्योपपादकत्वान्न तदानर्थक्यमिति भावेन तथोत्तरवाक्यं योजयति **इतश्चेति**। ननु तथाऽपि सर्वार्थरूपं हीत्याद्युत्तरवाक्यमनर्थकम्। न च महातात्पर्ययुक्तेर्वाक्यतः प्राबल्योपपादनार्थत्वान्न तदिति वाच्यम्। तद्व्युत्पादनस्याप्यनर्थकत्वात्। न च द्वेषवाक्यविरोधेन महातात्पर्ययुक्तेर्विषयान्तरपरत्वस्यापि वक्तुं शक्यत्वान्न महातात्पर्ययुक्तिविरोधेन द्वेषवाक्यस्य प्रतीतार्थेऽतात्पर्यमित्यविशेषशङ्काया विशेषोपदर्शनेन परिहारार्थत्वान्न तदानर्थक्यमिति वाच्यम्। तथा सति तादृगविशेषशङ्काया महातात्पर्ययुक्ताविव श्रुत्यादावपि संभवेन तत्रापि विशेषोपदर्शनस्यावश्यकत्वाच्छ्रुत्यादीनां प्राबल्यमनुपपाद्य महातात्पर्ययुक्तिमात्रस्यैव प्राबल्योपपादनस्याश्लिष्टत्वादित्यतस्तत्प्राबल्यव्युत्पादनस्य पूर्वग्रन्थेनैव सिद्धेर्युक्तमेव श्रुत्यादीनां पृथक् प्राबल्यमनुपपाद्यापि महातात्पर्ययुक्तिमात्रस्यैव तद्व्युत्पादनमित्यभिप्रेत्य तदुपपादकतयोत्तरग्रन्थं सङ्गमयितुं श्रुत्यादिसाधारण्येनाविशेषशङ्कामुत्थाप्य तत्प्राबल्यस्य पूर्वग्रन्थेनैव सिद्धतामुपपादयति **ननु श्रुत्यादीनामिति** ॥ **स्ववाक्यस्येति**। पुराणवाक्यस्येत्यर्थः ॥ **अत एवेति**। निरवकाशत्वादेवेत्यर्थः।

**स०** — **इतश्चेति**। द्वेषस्य मुक्तिसाधनत्वे महातात्पर्यविरोधः प्रागुक्तः इदानीं तु द्वेषस्य मुक्तिसाधनत्वप्रतिपादकवाक्यस्य तदर्थपरत्वे महातात्पर्यविरोध इति न पौनरुक्त्यमित्याहुः।

**प०** — **द्वेषवाक्यस्येति**। द्वेषाच्चैद्यादय इति वाक्यं प्रतीतार्थे द्वेषस्य मुक्तिसाधनत्वे इत्यर्थः ॥ **स्ववाक्यस्येति**। हिरण्यकशिपुश्चापीत्यादेरित्यर्थः।

**सु० — कथमिदं लभ्यते। अर्थशब्दो मुख्यं प्रतिपाद्यमाह। 'सत एव पदार्थस्ये'ति यथा। स चैकवचनान्तः। तेन च तत्प्रतिपादकत्वं लक्ष्यत इति। कथमयं महातात्पर्यशब्दार्थ इत्यत आह** वाचकत्वं हीति।

**अनु०** — वाचकत्वं हि तात्पर्यं

तत् परं प्रतिपाद्यं यस्य तत्तत्परम् । तस्य भावस्तात्पर्यमित्ये(वमर्थवा)वं वाचकत्वं प्रतिपादकत्वं हि तात्पर्यमुच्यते । तस्य च महच्छब्देन विशेषणे योग्यतयैषोऽर्थो महातात्पर्यशब्दस्य भवतीति भावः । ततः किमित्यत आह यदर्था इति ।

यदर्था अखिला रवाः ॥

सोऽर्थः कथं परित्याज्य एकशब्दस्य संशये ॥

योऽर्थो येषां ते यदर्थाः । रवा आगमाः । एकशब्दस्य संशये एकवाक्यसंबन्धिनि संशये सत्येकं सन्दिग्धं विरुद्धार्थं वाक्यमादायेत्यर्थः ।

एतदुक्तं भवति । सर्वाणि वाक्यानि सम्भूयानन्यार्थतया यमेकमर्थं प्रतिपादयन्ति तद्विरुद्धार्थं प्रतिपादयत्तदवान्तरवाक्यं यदुपलभ्यते सावकाशं च तन्महावाक्यार्थविरोधादन्यथा क्रियते न तु तद्विरुद्धो महावाक्यार्थस्त्यज्यत इति तावत्प्रसिद्धम् । महावाक्यस्य प्रधानत्वादुपक्रमादिभिर्निश्चितार्थत्वाच्च । अवान्तरवाक्यस्याप्रधानत्वात्सन्दिग्धार्थत्वाच्च । प्रकृते तु भक्तिरेव मुक्तिसाधनं न द्वेष इति सर्ववाक्यैः सम्भूय प्रतिपादितोऽर्थः । अर्थाक्षि(आक्षि)प्तस्यापि प्रतिपाद्यस्येव तदर्थत्वात् । द्वेषान्मुक्तिं प्रतिपादयदेकं तदवान्तरवाक्यं सावकाशं चोक्तप्रकारेण । तस्मादिदमेव बाध्यत इति ।

शे० — कथमिदमिति । सर्वार्थरूपं हीत्यत्र मुख्यत्वप्रत्यायकांशस्य तदेकत्वप्रत्यायकांशस्य तत्प्रतिपादकत्वप्रत्यायकांशस्य चाभावान्न तल्लाभ इत्याशयः । अर्थशब्दस्यैव मुख्यत्वप्रत्यायकत्वमेकवचनस्य तदेकत्वप्रत्यायकत्वं लक्षणया च तत्प्रतिपादकप्रत्यायकत्वमिति युक्तोऽनेन सर्वशास्त्राणामनन्यार्थतया यदेकार्थप्रत्यायकत्वं तद्रूपमहातात्पर्यसिद्धिरित्यभिप्रेत्यार्थशब्दस्य मुख्याभिधेयार्थतां तावदाह **अर्थशब्दो हीति** । तत्कुत इत्यत आह **सत एव पदार्थस्येति यथेति** । 'सत एव पदार्थस्य स्वरूपावस्थितस्य यत् । कैवल्यं परममहान्निर्विशेषो निरन्तरः' ॥ इति भागवतवाक्यस्थार्थशब्दस्य 'मुख्याभिधेयस्त्वर्थः स्याद्वाच्यमन्यच्च भण्यते । अमुख्येष्वर्थशब्दस्तु नीचोपरिहितो भवदि'ति तत्तात्पर्योदाहृतब्रह्मतर्कवाक्यसंमत्या सत्पदस्य यो मुख्याभिधेय इत्यनेन प्रकारेण मुख्याभिधेयार्थत्वसिद्धेस्तद्दृष्टान्तेनात्रापि तस्य तदर्थत्वसिद्धिरिति भावः ॥ **अयमिति** । सर्वेषामपि शास्त्राणामनन्यार्थतयैकार्थप्रतिपादकत्वरूप इत्यर्थः ॥ **अर्थप्रतिपादकत्वं हि तात्पर्यमिति** । अनेन शक्त्या शक्यसंबन्धेन वाक्यस्य गुणयोगेन वाऽर्थप्रतिपादकत्वमेव तात्पर्यमित्युक्त्या मुख्यामुख्यवृत्त्यतिरिक्ततात्पर्याभावसूचनात्तात्पर्यवृत्तिस्तु नातिरिच्यत इत्याचार्यः स्वयमेव वक्ष्यतीत्यानुमानिकपादोक्तं विवृतं भवति । ननु यदि मुख्यामुख्यवृत्तिविषयत्वातिरिक्ततात्पर्यं नास्ति कथं तर्हि विषं

भुङ्क्ष्वेत्यादेर्लौकिकवाक्यस्य निषिद्धभोजनवर्जनादौ तात्पर्यम् । न हि तत्रोक्तवृत्तिसंभवः । न च तस्यार्थस्यानुमानिकत्वेनाशाब्दत्वाच्छाब्दार्थ एव च वाक्यतात्पर्याङ्गीकारात्तत्र वाक्यतात्पर्याभावो न दोषायेति वाच्यम् । 'स्मर्तव्यो भगवान्नित्यमित्यर्थेनैव हि क्वचित् । द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्य-वत् । यथा क्रुद्धः पिता पुत्रं मरेत्याक्षेपपूर्वकम् । प्रोक्तम्यान्यस्य कृत्यर्थं वदत्येवं पुराणगम् । वाक्यमि'त्यनुव्याख्याने 'वैरेण यन्नृपतय'इत्यादे'र्द्वेषाच्चैद्यादयो नृपाः'इत्यादेश्च पुराणवाक्यस्य लौकिक-वाक्यदृष्टान्तेन वाक्यलिङ्गकानुमानवेद्येऽपि विष्णुस्मरणकर्तव्यत्वे विष्णोः कृपालुत्वादौ च तात्पर्यस्योक्त-त्वेन तद्विरोधात् । न च तत्र वक्तुरभिप्रायस्तत्रेत्येवोच्यते न तु वाक्यस्य तत्र तात्पर्यमुक्तमिति वाच्यम् । क्रुद्धवाक्यवत्पुराणवाक्यमिति वाक्यस्य ग्रहणात् । न च तत्रान्यार्थत्वमेवोक्तं वाक्यस्य न तात्पर्यमिति वाच्यम् । अर्थशब्दस्य वृत्तिलभ्यार्थपरत्वे बाधे तात्पर्यार्थपरत्व एव पर्यवसानात् । न चार्थशब्दो वृत्तिलभ्यार्थपरः । न वा तात्पर्यविषयपरः । किन्तु प्रयोजनपर इति वाच्यम् । तस्य वाक्यस्य यथा न पुत्रमरणविधाने तात्पर्यं किन्तु स्वविहितकरणे तथा द्वेषेण स्मरणे मुक्तिर्भवतीति पुराणवाक्यस्यापि न द्वेषस्य मुक्तिसाधनतायां तात्पर्यं किन्तु स्मरणस्य कर्तव्यतायामिति ।

इयं च व्यञ्जनावृत्तिरिति केचित् । तात्पर्यवृत्तिरित्यपरे वाक्यलक्षणानुमानं चेत्याचार्या इति पूर्वटीकाग्रन्थविरोधापातादिति चेन्न । भावानवबोधात् । न हि भगवत्पादानां टीकाकृतश्च वृत्तिव्यतिरिक्तं तात्पर्यं नास्तीत्याशयः । किन्तु योगादिरूपाया मुख्यवृत्तेर्गौण्यादिरूपाया अमुख्य-

---

वृत्तेश्चातिरिक्तताात्पर्याख्या वृत्तिर्नास्तीति । ततश्च वचनलिङ्गानुमानवेद्येऽर्थेऽशाब्दतयोक्ततात्पर्याख्य-वृत्त्यभावेऽपि लोकवेदयोः साधारणस्य तदर्थप्रतिपत्त्यभिप्रायेण प्रयुक्तत्वरूपस्य पदवाक्यतात्पर्यस्य विद्यमानत्वान्न पूर्वग्रन्थविरोधः । अत एव कर्मनिर्णयटीकाकृता वाचनिकार्थातिरिक्तोक्तविधतात्पर्य-सद्भावाभिप्रायेण, न च वाचनिकार्थस्तात्पर्यार्थ इति विशेष; इत्याचार्यवाक्यमेतद्व्यतिरिक्तायां तात्पर्यवृत्तौ तद्विषये च मानाभावादित्यादिना तात्पर्याख्यवृत्त्यन्तरनिषेधपरत्वेनैव व्याख्यातम् । अत एव तात्पर्य-वृत्तिस्त्वित्यादौ वृत्तिपर्यन्तधावनम् । अन्यथा तात्पर्यं तु नातिरिच्यत इत्येवावक्ष्यत् । न चैवं तत्परं मुख्यं शक्तिगोचरो यस्येत्यादितन्निरुक्तिविरोधः । उक्ततात्पर्यविषये तदभावादिति वाच्यम् । तस्य वाक्यसाधारणतात्पर्यातिरिक्तपदमात्रवृत्तिनिष्ठतात्पर्यविशेषनिरुक्तिपरत्वात् । तथा च मुख्यामुख्यवृत्त्यति-रिक्तनिषेधस्यास्य ग्रन्थस्य वृत्तिव्यतिरिक्तसाधारणतदर्थप्रतीत्यभिप्रायेण प्रयुक्तत्वरूपतात्पर्याङ्गीकारपरेण पूर्वग्रन्थादिना विरोधशङ्कैव नास्तीति किमनुपपन्नमिति संक्षेपः । (**महच्छब्देनेति** । मुख्यत्वापरपर्याया-नन्यत्वार्थकमहच्छब्देन तात्पर्यस्य विशेषणे सतीत्यर्थः) ॥ **एषोऽर्थ इति** । सर्वेषामपि शास्त्राणामनन्या-र्थतयैकार्थप्रतिपादकत्वरूप इत्यर्थः । अखिलागमानामर्थत्वाभावेन ये च तेऽर्थाश्चेति कर्मधारयस्य,

यस्यार्था इति षष्ठीतत्पुरुषस्य चासंभवाद्बहुव्रीहिरेवायमित्याशयेन तं दर्शयति **योऽर्थ इति**। एकत्व-सन्दिग्धत्वमात्रेणैव न द्वेषान्मुक्तिं प्रतिपादयतोऽस्य वाक्यस्य महातात्पर्ययुक्त्या बाध्यत्वं तत्प्रयोजकस्यान-भिधानादित्याशङ्क्यैकत्वाद्युक्तेस्तदुपलक्षणत्वान्नानुपपत्तिरित्यभिप्रेत्यैकवाक्यस्य संशय इत्येतत्तात्पर्यमाह **एकमिति**। मूले एकत्वसन्दिग्धत्वाद्यभिधानस्य वैयर्थ्यमाशङ्क्य द्वेषान्मुक्तिं प्रतिपादयता पुराणवाक्येनैव महातात्पर्ययुक्तेर्बाधोऽस्त्विति विपरीतबाध्यबाधकभावशङ्कापरिहारार्थत्वान्न तस्यानर्थक्यमिति भावेन तत्सूचितं प्रकारं दर्शयन्नुक्तशङ्कां परिहरति **एतदुक्तं भवतीति**॥ **प्रसिद्धमिति**। अग्निहोत्रादेः स्वर्गसाधनत्वविधायकवाक्यविरोधिनि यद्यमुष्मिंल्लोकेऽस्ति न वेत्यादितदवान्तरवाक्य इति शेषः। ननु भक्तेरेव मुक्तिसाधनमित्यस्यार्थस्य मोक्षप्रयोजनानां सर्वागमानां यद्भगवद्गुणेष्वेव यन्महातात्पर्यं तदन्यथाऽनुपपत्त्या गम्यमानत्वान्न वाक्यप्रतिपाद्यत्वमिति कथं तदुक्तिरित्यत आह **अर्थाक्षिप्तस्यापीति**।

**स० — सत एव पदार्थस्येति**। अयमर्थः। सत्पदस्य यो मुख्याभिधेयस्तस्येति। यथोक्तं 'मुख्याभिधेयस्त्वर्थः स्यात् वाच्यमन्यच्च भण्यते। अमुख्येष्वर्थशब्दस्तु नीचोपरिहितो भवेदि'त्यादिना तृतीयस्कन्धतात्पर्ये द्वादशाध्याये।

**प० — कथमिदं लभ्यत इति**। अर्थपदप्रयोगमात्रेणोक्तरूपं तात्पर्यं कथं लभ्यत इत्यर्थः॥ **सत एव पदार्थस्येति यथेति**। 'सत एव पदार्थस्य स्वरूपावस्थितस्य यत्। कैवल्यं परममहानविशेषो निरन्तर' इति तृतीयस्कन्धद्वादशाध्यायस्थवाक्ये अर्थशब्दो यथामुख्यप्रतिपाद्यपरः तथेति। उक्तं हि तत्र तात्पर्ये 'मुख्याभिधेयस्त्वर्थः स्यादि'त्यादिना॥ **एषोऽर्थ इति**। अनन्यार्थ-तयेत्यादिनोक्तोऽर्थ इत्यर्थः॥ **इति तावत्प्रसिद्धमिति**। उपपादितमेतत् 'प्रीत्या मोक्षपरत्वाच्च तात्पर्यं नैव दूषणे' इत्येतद्व्याख्यावसर इति भावः। विष्णुमहिमोक्तिपरवाक्यानां कथं भक्त्यर्थकत्व-मित्यत आह **अर्थाक्षिप्तस्यापीति**॥ **उक्तप्रकारेणेति**। स्मर्तव्यो भगवानित्यादिनोक्तप्रकारेणेत्यर्थः।

**या० — सत एव पदार्थस्येति**। 'सत एव पदार्थस्य स्वरूपावस्थितस्य यत्। कैवल्यं परममहान्निर्विशेषो निरन्तर' इति भागवतेऽर्थशब्दस्य मुख्याभिधेयो यस्तस्येति 'मुख्याभिधेयस्त्वर्थ-स्याद्वाच्यमन्यत्र भण्यते। अमुख्येष्वर्थशब्दस्तु नीचोपरिहितो भवेदि'ति ब्रह्मतर्कसम्मत्या भगवत्पादै-र्व्याख्यातत्वादिति भावः।

**श्री० — एकवचनान्त इति**। सर्वशास्त्राणां य एकोऽर्थ इत्येवमर्थशब्द एकवचनान्त इत्यर्थः॥ **महच्छब्देनेति**। मुख्यत्वापरपर्यायानन्यत्वार्थकमहच्छब्देन तात्पर्यस्य विशेषणे सतीत्यर्थः। तर्हि गुणोत्कर्षे कथं तात्पर्यमित्यत आह **अर्थाक्षिप्तस्यापीति**। भक्तेः मोक्षसाधनत्वप्रतिपादनेऽर्था-

द्गुणोत्कर्षप्रतिपादनमेव प्राप्तमित्यर्थः । यथोक्तं 'भक्त्यर्थं हि भगवन्महिमोक्तिरि'ति । **तदर्थत्वात्** वाक्यार्थत्वात् । अत एवाहुः । द्विविधो हि सूत्रार्थः श्रौत आर्थश्चेति ।

सु०— **द्वेषस्य मुक्तिसाधनत्वनिराकरणमुपसंहरति** अत इति ।

अनु०— अतो विज्ञानभक्तिभ्यां पुरुषार्थः परो भवेत् ॥

**माहात्म्यज्ञानस्नेहाभ्यामेव न तु द्वेषेणेत्यर्थः । मोक्ष इति वक्तव्ये परः पुरुषार्थ इति वदता ज्ञानादिकमपि द्वेषिणां न भवतीति सूचितम् । ज्ञानादेरपि धर्माद्यपेक्षया परपुरुषार्थत्वात्** ।

शे०— विज्ञानभक्तिभ्यामिति मूले विज्ञानपदेन माहात्म्यज्ञानसमर्पणाद्भक्तिशब्दस्य विशिष्टार्थत्वानुपपत्त्याऽत्र लक्षणया स्नेहरूपविशेष्यार्थक एव भक्तिशब्द इत्यभिप्रेत्य व्याचष्टे **माहात्म्यज्ञानस्नेहाभ्यामिति** । द्वेषस्य मुक्तिसाधनत्वनिराकरणमुपसंहारारूढं कर्तुं विज्ञानभक्तिभ्यामित्यस्य सावधारणत्वमाश्रित्य तद्व्यावर्त्यं दर्शयति **एव न त्विति** । ननु द्वेषस्य मुक्तिसाधनताया एव निरस्तत्वान्न तदनुसारेण मोक्ष इत्येव वक्तव्यम् । किमधिकोक्त्येत्यतस्तत्प्रयोजनकथनेन तां समर्थयते **मोक्ष इतीति** । ननु परमपुरुषार्थत्वाभावाज्ज्ञानादेः कथमनेन संग्रह इत्यत आह **ज्ञानादेरपीति** । स्वर्गादिरूपाल्पफलकधर्माद्यपेक्षया महाफलभूतमोक्षफलकज्ञानस्य परमपुरुषार्थत्वमिति भावः ।

प०— अपौनरुक्त्याय भक्तिशब्दस्तदेकदेशपर इति भावेन विशब्दार्थं विवृण्वन्नाह **माहात्म्यज्ञानेति** ।

सु०— **एवं द्वेषस्य मुक्तिसाधनत्वं निराकृत्येदानीं भक्तेः परमपुरुषार्थसाधकत्वे प्रमाणं नास्तीति यदुक्तं तन्निरासाय प्रमाणान्याह** यस्येति ।

अनु०— यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ भक्त्या ज्ञानं ततो भक्तिस्ततो दृष्टिस्ततश्च सा ॥
ततो मुक्तिस्ततो भक्तिः सैव स्यात्सुखरूपिणी ॥ भक्त्या प्रसन्नो भगवान्दद्याज्ज्ञानमनाकुलम् ॥
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥ नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ इत्यादिवाक्यतश्चैव सोऽयमुक्तार्थ ईयते ॥

यथा देवे तथा गुराविति । **यथा देवे देवयोग्या तथा गुरौ गुरुयोग्येत्यर्थः । अनेन ज्ञानस्य भक्तिसाध्यत्वमुच्यते । भक्त्या ज्ञानमित्यनेन ज्ञानादेः । ज्ञानं परोक्षनिश्चयो जायते** ।

ततो ज्ञानात्पक्वा भक्तिर्भवति । ततो दृष्टिस्ततश्च सा परिपक्वा भक्तिः । ततो मोक्षानन्तरं भक्तिरवतिष्ठते । सा सुखरूपिण्येव स्यान्न फलवती । भक्त्या प्रसन्न इत्यनेनापीदमेवोच्यते । ज्ञानाभावे भक्त्यभावादनाकुलमित्युक्तम् । तयैव पक्वया एतया परिपक्वया । वेदैरिति भक्ति रहितश्रवणादिभिरित्यर्थः । न विद्यतेऽन्यो विषयो यस्याः साऽनन्या । 'यादृशी तत्र भक्तिः स्यात्तादृश्यन्यत्र नैव चेत् । अनन्यभक्तिः सा ज्ञेया विष्णावेव च सा भवेदि'ति च स्मृतिः । विवक्षितस्तु सन्धिर्भवतीति वचनाच्छक्य अहमिति युज्यते । तत्त्वेन याथार्थ्येन ज्ञातुम् । इत्यादिवाक्यतश्चेति चशब्देन चेतनस्य द्वयमित्यादीनि पूर्वोदाहृतवाक्यानि समुच्चिनोति । वाक्यत एव न त्वर्थात् ।

शे० — यथा देवे देवयोग्येति । अनेन यथातथाशब्दौ सादृश्यार्थौ । योग्यतानुसारित्वे च सादृश्यं विवक्षितमित्युक्तं भवति । ततश्च यस्य देवे विष्णौ परा सर्वाधिका भक्तिस्तादृशभक्तेरेव तद्योग्यत्वात् । यथा च देवे विष्णौ तद्योग्यैव भक्तिस्तथा देवे तदितरदेवेष्वपि तत्तद्देवयोग्यैव भक्तिः । तथा गुरौ साक्षात्स्वोत्तमेषु च तत्तद्योग्यैव भक्तिर्न तु साम्येनाक्रमेण वेति योजना । 'भक्तिश्चैव हरावेव मुख्याऽन्यत्र यथाक्रममि'त्युपासनापादीयानुव्याख्यानानुसारिभाष्यटीकानुसारादिति द्रष्टव्यम् । ज्ञानादेर्भक्तिसाध्यत्वमुच्यत इति पूर्वानुवृत्त्या योजनीयम् ॥ ज्ञानं परोक्षनिश्चय इति । ततो दृष्टिरिति परोक्षज्ञानसाध्यभक्तिसाध्यतया दृष्टेरुत्तरत्रोच्यमानतया ज्ञानशब्दस्य तदर्थत्वायोगादिति भावः । भक्तिमात्रस्य परोक्षज्ञानसाधनतया ततः पूर्वभाविन्याः परोक्षनिश्चयसाध्यत्वायोगादाह पक्वा भक्तिरिति । पक्वभक्तेर्दृष्टिसाधनतया तत्पूर्वभाविन्या दृष्टिसाध्यत्वायोगात्तद्विलक्षणभक्तिपरत्वेन सेत्येतद्व्याख्याति परिपक्वा भक्तिरिति । सैवेत्येवकारस्य यथाश्रुतान्वये वैयर्थ्यादिप्रसङ्गाद्भिन्नक्रमतया तद्योजनाप्रदर्शनपूर्वकं तद्व्यावर्त्यमाह सुखरूपिण्येवेत्यादि ॥ इदमेवेति । ज्ञानादेर्भक्तिसाध्यत्वमेवेत्यर्थः । भक्त्या ज्ञानमित्येतावतैव पूर्तेः किमनाकुलमिति ज्ञानविशेषणेत्यत आह ज्ञानाभाव इति । माहात्म्यज्ञानपूर्वकस्नेहस्यैव भक्तित्वेन तदभावे भक्त्यसंभवादित्यर्थः ॥ इत्युक्तमिति । तथा च ज्ञानमात्रस्य पूर्वं सतो भक्तिसाध्यत्वानुपपत्तावपि विशिष्टज्ञानस्य भक्तेः पूर्वमसतो भक्तिसाध्यत्वं नानुपपन्नमिति भावः । अनाकुलज्ञानसाधनत्वेनोक्तभक्तेरेव तद्दर्शनसाधनत्वानुपपत्तेस्तयैवेत्येतज्ज्ञानसाध्यभक्तिविशेषपरत्वेन व्याख्याति तयैव पक्वयेति । दर्शनसाधनत्वेनोक्तभक्तेरेव मोक्षसाधनत्वाभावात्कथं तस्या मुक्तिसाधनत्वेनोक्तिरित्यतो नैतयेति तद्दर्शनसाधनभक्तिपरामर्शः किन्तु दर्शनसाध्यभक्तेरेवेति नानुपपत्तिरिति भावेन तत्परतयैतच्छब्दं व्याचष्टे परिपक्वयेति । 'न चैतानि विना कश्चिज्ज्ञानमाप कुतश्चने'त्यादिप्रमाणेन श्रवणादीनां ज्ञानोत्पत्तौ प्रधानसाधनत्वस्थितेर्नार्हं वेदैरिति कथं तन्निषेध इत्यतो

भक्तिपूर्वकस्य श्रवणादेरेव तथात्वमत एव 'श्रवणं मननं चैव ध्यानं भक्तिस्तथैव चे'ति पूर्ववाक्ये भक्ति-सङ्कीर्तनम् । अत्र तन्निरपेक्षश्रवणादेस्तत्साधनत्वनिराकरणान्नानुपपत्तिरित्याशयेन भक्तिरहितश्रवणादि-परतया वेदशब्दं व्याचष्टे **वेदैरितीति** । भक्तेरप्यन्यत्वोक्तिरित्यतः सप्रमाणकमन्यशब्दं बहुव्रीहि-माश्रित्य व्याचष्टे **न विद्यत इति** । ननु शिवस् अर्च्य इत्यादाविव 'स्वौजसमौडि'ति सुप्रत्यये शक्यस् अहमिति स्थिते 'ससजुषो रुरि'ति सस्य रुत्वे तस्य च परत्वा'द्भोभगो अघो अपूर्वस्य योशी'ति प्राप्तयत्व-स्यापवादेन 'अतो रोरप्लुतादप्लुत इत्युत्वे आद्गुण इति गुणे एङः पदान्तादतीति पूर्वरूपे शिवोऽर्च्य इत्यादिवच्छक्योऽहमिति सन्धिना भवितव्यम् । शक्य अहमिति तु कथमित्यत आह **विवक्षित-स्त्विति** । तथा चात्र विवक्षाया अभावादुक्तरीत्या प्राप्तसन्ध्यभावे सति व्यत्ययो बहुलमिति वचना-दुत्वापवादेन यत्वे 'लोपः शाकल्यस्ये'ति पाक्षिकयलोपे सति युक्त एव शक्य अहमिति निर्देश इति भावः वाक्यतश्चैवेत्यत्र विरुद्धार्थयोश्चैवशब्दयोः कथं संबन्ध इत्यतोऽविरोधेनोभयोरर्थभेदं दर्शयन्नेवकार-व्यावर्त्यमाह **चशब्देनेति** ।

**प०— यदुक्तमिति** । न हि द्वेषयुता दृशिरित्येतदवतारिकायामुक्तमित्यर्थः । देवसमभक्तिः कार्येति भ्रमनिरासाय यथापदस्य योग्यतार्थत्वं गुरावित्यत्राप्यन्वयं चोपेत्यार्थमाह **यथा देवे देव-योग्येति** । व्याख्येयव्याख्यानभावः तथेति समुच्चय इति ज्ञेयम् । प्रकाशत इति श्रवणादाह **अनेनेति ॥ ज्ञानादेरिति** । साक्षात्कारो मुक्तिश्चादिपदार्थः । व्याहतिनिरासायाह **वेदैरित्यादि** । ननु शक्यशब्दात्सुप्रत्यये तस्य रुत्वे उत्वे गुणे पूर्वरूपे च शक्योहमिति भाव्यमित्यत आह **विवक्षित-स्त्विति** । सन्धिस्तु विवक्षितश्चेत्तदा स्यान्न चेन्न भवतीत्यर्थः । अत एव इकोऽचि विभक्ताविति सूत्रवृत्तौ नुमा अपीत्यादिप्रयोग इति भावः ॥ **वचनैर्भक्तेरेव पुमर्थहेतुत्वोक्तिः** ।

**या०— यथा देवे देवयोग्येति** । अनेन यथातथाशब्दौ सादृश्यार्थौ योग्यतानुसारित्वेन च सादृश्यं विवक्षितमित्युक्तं भवति । ननु शक्य अहमिति कथं, विसर्गस्य सत्त्वे तस्य रुत्वे तस्य चोत्वे गुणे पूर्वरूपे च सति शक्योऽहमिति भवेदित्यत आह **विवक्षितस्त्विति** ।

**श्री०— देवे देवयोग्येति** । इन्द्रादिदेवसमूहे तद्योग्येत्यर्थः ॥ **ज्ञानाभावे भक्त्यभावा-दिति** । तथा च ज्ञानजनितया भक्त्या प्रसन्नो भगवान् अनाकुलं परिपक्वं ज्ञानं दद्यादित्यर्थो द्रष्टव्यः ।

सु० — **अनुमानेनाप्युक्तमर्थं साधयति** न चेति ।

**अनु०** — न च प्रसादमाप्नोति द्वेषाद्भक्त्या तमाप्नुयात् ॥

इति दृष्टानुसारित्वमप्यस्मिन्नर्थ इर्यते ॥

**भगवद्द्वेषाद्भगवत्प्रसादं नैवाप्नोति। भगवद्भक्त्या तं भगवत्प्रसादं प्राप्नुयादित्यस्मिन्नर्थे दृष्टानुसारित्वं प्रत्यक्षदृष्टव्याप्तिकानुमानानुसारित्वमपीर्यते ज्ञायते ।**

**एतदुक्तं भवति । भगवत्प्रसादादेव मोक्ष इति तावन्निष्टङ्कितम् । भगवत्प्रसादो भगवद्द्वेषसाध्यो न भवति । भगवत्प्रसादत्वात् । यो यत्प्रसादो नासौ तद्द्वेषसाध्यो यथा गुरुप्रसादः । यद्वा भगवद्द्वेषो भगवत्प्रसादसाधनं न भवति । भगवद्द्वेषत्वात् । यो यद्द्वेषः स तत्प्रसादसाधनं न भवति । यथा गुरुद्वेषः । अथवा भगवान्स्वद्वेषिणि न प्रसीदति प्रेक्षावत्पुरुषत्वात् देवदत्तवत् । यद्वा भगवद्द्वेषी भगवत्प्रीतिविषयो न भवति भगवद्द्वेषित्वात् । यो यद्द्वेषी नासौ तत्प्रीतिविषयः यथा संप्रतिपन्न इति द्वेषस्य प्रसादसाधनत्वेऽपास्ते मुक्तिसाधनत्वमेवापास्तं भवति । तथा भगवत्प्रसादो भगवद्भक्तिसाध्यो भगवत्प्रसादत्वात् । यो यत्प्रसादः स तद्भक्तिसाध्यो यथा गुरुप्रसादः । यद्वा भगवद्भक्तिः भगवत्प्रसादसाधनं भगवद्भक्तित्वात् । या यद्भक्तिः सा तत्प्रसादसाधनं यथा गुरुभक्तिः । अथवा भगवान्स्वभक्ते प्रसीदति प्रेक्षावत्पुरुषत्वात् । संमतवत् । यद्वा भगवद्भक्तो भगवत्प्रीतिविषयो भगवद्भक्तत्वात् । यो यद्भक्तोऽसौ तत्प्रीतिविषयः । यथा गुरुभक्त इति । भक्तेः प्रसादसाधनत्वे सिद्धे मुक्तिसाधनत्वमेव सिद्धं भवतीति ।**

प० — **निष्टङ्कितमिति ।** निर्णीतं 'ज्ञानी प्रियतमोऽतो मे' इत्यादिना जिज्ञासासूत्रानुव्याख्यानादावित्यर्थः ।

सु० — **नन्वलौकिके भगवति लोकदृष्टान्तेनैवमनुमानं न युज्यते । अन्यथाऽणुत्वादिनियमस्याप्यनुमानापत्तेः । अतो लोकविलक्षणो द्विष्टोऽपि प्रसीदतीत्यङ्गीकारे न बाधकमिति शङ्कामागमवाक्येन परिहरति य इति ।**

**अनु०** — ये पृथग्विहिता विष्णोर्गुणा वेदेन सादरम् ॥

त एव दृष्टवैलोम्यादङ्गीकार्या न चापरम् ॥

अन्यद्दृष्टानुसारेण वासुदेवेऽपि गृह्यते ॥

पृथग् **लोकवैलक्षण्येन,** सादरं तात्पर्येण, दृष्टवैलोम्याद् **दृष्टवैलोम्यमनादृत्य** । अपरं **वेदानुक्तं लोकविलक्षणं गुणजातं नैवाङ्गीकार्यम्। किन्तु वेदोक्तादणुत्वमहत्त्वयौगपद्यादेरन्यद्गुणजातम् । गुणा इत्यस्य प्रयोजनमुच्यते** दोषाभावा इति ।

दोषाभावाश्च ये वेदैरुदिता अविहाय तान् ॥
अनुक्ता अपि **च** ग्राह्या महातात्पर्यशक्तितः ॥
**एवं** बृहत्संहितावाक् सिद्धान्तो हि तदीरितः ॥

**चस्त्वर्थः । लोकविलक्षणा अविलक्षणाश्चेति शेषः ॥** महातात्पर्यशक्तित इति ।

**सर्वथाऽपि दोषो भगवति नास्तीत्यत्र सामान्यतः सर्वशास्त्राणां तात्पर्यस्य निर्णीतत्वादित्यर्थः । वेदानुक्तस्याप्रामाणिकार्थस्य ग्रहणमयुक्तमित्याशङ्कामनेन निराचष्टे । विशेषतोऽनुक्तावपि सामान्यतः सिद्धेरिति भावः ।** तत् **तस्मादीरितोऽर्थः** सिद्धान्तः **प्रामाणिकः । यद्वा बृहत्संहितेरितोऽर्थो हि सिद्धान्त इति तत्र बहुमानमुत्पादयति ।**

**शे० — अणुत्वादिनियमस्यापीति** । लोकेऽणोर्महत्त्वाभावस्य महतोऽणुत्वाभावस्य च दर्शनेनेश्वरस्याप्यणुत्वेन महत्त्वाभावस्य महत्त्वेनाणुत्वाभावस्य साधनप्रसङ्गादित्यर्थः । ननु वेदेन तात्पर्यतः पार्थक्येन विहितगुणेषु दृष्टवैलोम्यप्रसक्तेरेवाभावात्तदनङ्गीकारेणाङ्गीकार्यत्वोक्तिरयुक्तेत्यतोऽत्र पृथक्पदस्य लोकवैलक्षण्यार्थत्वात्पार्थक्यपरत्वाभावेन लोकवैलक्षण्येन विहितेषु गुणेषु दृष्टवैषम्यप्रसक्तेः सत्त्वाद्युक्तैव तदनादरेण तेषामङ्गीकर्तव्यत्वोक्तिरिति भावेन तत्परतया पृथक्पदं व्याचष्टे **पृथक् लोकवैलक्षण्येनेति** । दृष्टवैलोम्यस्याङ्गीकर्तव्यत्वे हेतुत्वाभावात्पञ्चम्यनुपपत्तिमाशङ्क्य ल्यब्लोपनिमित्तेयं पञ्चमीत्याशयेनाह **दृष्टवैलोम्यमनादृत्येति** । वेदोक्तानां धर्माणामङ्गीकर्तव्यत्वोक्त्याऽपरशब्दस्य तत्परत्वानुपपत्तेरपरपदं वेदानुक्तपरतया व्याचष्टे **अपरं वेदानुक्तमिति** । वेदानुक्तस्यापि गुणजातस्य दृष्टानुसारिणोऽङ्गीकर्तव्यताया अन्यद्दृष्टानुसारेणेत्युत्तरत्र वक्ष्यमाणत्वेनानङ्गीकर्तव्यत्वानुपपत्तेरनुक्तलोकविलक्षणधर्मपरतया तद्योजयति **लोकविलक्षणमिति** । तत्किं वेदानुक्तगुणजातं भगवति सर्वथाऽनङ्गीकर्तव्यमिति पृच्छति **किन्त्विति** । तदुत्तरतयाऽन्यद्दृष्टानुसारेणेत्युत्तरवाक्यं सङ्गमयितुं किन्तद्वेदोक्तं यदन्यद्दृष्टानुसारेणाङ्गीकार्यमित्युच्यत इत्यतस्तदुभयं दर्शयति **वेदोक्तादिति** । ननु ये पृथग्विहिता इत्यनेनैवोक्ताक्षेपसमाधानान्न दोषाभाव इत्युत्तरेण कृतकृत्यमित्यतः पूर्ववाक्यस्थगुणपदवैयर्थ्यशङ्कापरिहाराय तद्व्यावर्त्यप्रदर्शनार्थत्वान्न तदिति भावेन तत्परतया तद्योजयति **गुणा इत्यस्येति** । लोकविलक्षणतदविलक्षणभेदभिन्नवेदोक्ततदनुक्तदोषाभावमात्रस्य विष्णौ ग्राह्यत्वेन गुणेष्विव लोकविलक्षणदोषाभावानां वेदानुक्तानां ग्राह्यत्वं दृष्टानुसारिणां च वेदानुक्तानामपि ग्राह्यत्वमिति विभागाभावेनासति

पूर्वत्र ग्रहणे गुणेष्विव दोषाभावेऽप्युक्तविभागप्रसङ्गात् । तन्निरासाय पूर्ववाक्ये गुणग्रहणं सार्थकमिति भावेन दोषाभावेऽपूक्तविभागाभावलाभाय तदनुरूपं शेषं पूरयति **लोकविलक्षणा अविलक्षणाश्चेति शेष इति** । भाष्ये महातात्पर्ययुक्त्युपन्यासस्यानर्थक्यमाशङ्क्य परिहरति **वेदानुक्तस्येति** । कथमनेन वेदानुक्तानामप्रामाणिकत्वशङ्कानिरास इत्यत आह **विशेषतोऽनुक्तावपीति** । शङ्कितातदप्रामाणिकत्वपरिहारोपसंहारतया पदभेदमाश्रित्य सिद्धान्तो हीति वाक्यं व्याचष्टे **तत्तस्मादिति** । अनेन मूले तदित्यव्ययं तच्च पञ्चम्यर्थ इत्युक्तं भवति । अत्र पक्षेऽव्ययत्वं कल्पनीयं भवतीत्यरुच्या पक्षान्तरमाह **यद्वेति** ।

प० — **अणुत्वादिनियमस्यापीति** । अणुत्वे अणुरेवायं न महान् महत्त्वे महानेवायं नाणुरित्यादिनियमस्यानुमानापत्तेरित्यर्थः । दृष्टवैलोम्यादिति ल्यब्लोपे पञ्चमीत्युपेत्याह **दृष्टवैलोम्यमनादृत्येति** ॥ **अणुत्वमहत्वयौगपद्यादेरिति** । अणुत्वमहत्वयोर्यौगपद्यमिति विग्रहः । गुरुत्वलघुत्वयौगपद्यादिरादिपदार्थः । सिद्धान्त इत्यनुवादः । प्रामाणिक इति व्याख्या ॥ **भक्तेरेव पुमर्थहेतुत्वे युक्त्युक्तिः** ।

या० — **अणुत्वादिनियमस्यापीति** । अणुरेव न महानित्येवंरूपस्यापीत्यर्थः । ततश्च लोकदृष्टान्तेनेश्वरेऽणुत्वेन महत्त्वाभावस्य वा महत्त्वेनाणुत्वाभावस्य वाऽनुमानं स्यादिति भावः ।

श्री० — **ईरितोऽर्थ इति** । अस्माभिः प्रतिपादितोऽर्थ इत्यर्थः ।

सु० — **एवं भक्तेरेव मोक्षसाधनत्वमुपपादितम्** । **भक्तिश्च केवलं भगवद्विषयैवेति**

प्रतीतिमपाकर्तुमाह तारतम्येनेति ।

अनु० — तारतम्येन तद्भक्तेष्वपि भक्तिर्विनिश्चयात् ॥

कर्तव्या

**न केवलं विष्णौ किन्तु** तद्भक्तेषु **रमादिष्वपि, विनिश्चयात् सर्वथा, सा च क्रियमाणा तारतम्येनैव । कुत इत्यत आह** एषाऽपीति ।

एषाऽपि तद्भक्तिः

**यतस्तद्भक्तेषु क्रियमाणैषाऽपि भगवद्भक्तिरेवातस्तद्विषयेऽपि भक्तिः कर्तव्या । एतदुक्तं भवति । विष्णुभक्तिस्तावत्कर्तव्येत्युपपादितम् । सा च तद्भक्तभक्त्यैव साङ्गा नान्यथेति । एतदपि कुत इत्यत आह** लोकेति ।

लोकवेदानुसारतः ॥

**लोकशब्देन लोकसिद्धव्याप्तिमदनुमानमुच्यते । वेदशब्देनागममात्रम् ।**

**शे०** — ननु भक्तेस्तद्भक्तेषु कर्तव्यत्वसिद्धिं विना न तस्यास्तारतम्येन कर्तव्यताविचारावसर इति कथं भाष्ये तत्कर्तव्यतामनुक्त्वा तारतम्येन तस्याः कर्तव्यत्वाभिधानमित्याशङ्क्येदमेव कर्तव्यत्वविधानं तारतम्येन तद्विधानं चेत्यतो नानुपपत्तिरित्यभिप्रेत्य वाक्यभेदेन योजयति **न केवलमित्यादिना** । भगवद्भक्तित्वेऽपि कुतस्तस्या रमादिविषयेऽपि कर्तव्यत्वं कथं चास्या भगवद्भक्तित्वमित्यत आह **एतदुक्तं भवतीति** । लक्ष्मीविरिञ्चेत्यादिनोत्तरत्र षाड्गुण्यादिवचनमात्रोदाहरणात्तत्परतया वेदशब्दं व्याचष्टे **तत्तस्मादिति** ॥ **वेदशब्देनेति** । अत एव तत्र टीका 'वेदानुसारत इति यदुक्तं तदप्यनेन दर्शितं भवतीति' ध्येयम् ।

**प०** — **उपपादितमिति** । पूर्वग्रन्थे अतीतपादे च 'विषयेषु च संसर्गादि'त्यादिना 'अतो विष्णौ परा भक्तिरि'त्यन्तेन चोपपादितमित्यर्थः । अग्रे पौरुषेयस्योदाहरणादाह **वेदशब्देनेति** ।

**या०** — **वेदशब्देनेति** । उत्तरत्र वेदं विहाय षाड्गुण्यवचनमात्रोदाहरणादेवं व्याख्यानमिति ध्येयम् ।

**सु०** — **लोकानुसारितां दर्शयति यो हीति** ।

अनु० — यो हि भक्तः प्रधाने स्यात्तदीयेष्वपि भक्तिमान् ॥
दृश्यतेऽसौ नियमतो विपरीतो विपर्यये ॥

---

**प्रधाने राजादौ । विपर्यये तदीयभक्तिराहित्ये । विपरीतः प्रधानभक्तिरहितः । नियमेन** दृश्यते । **अनेनान्वयव्यतिरेकावुक्तौ । तथा चायं प्रयोगः । विमतो** भगवद्भक्त**भक्तिमान्भवेत्** भगवद्भक्त्या **पुरुषार्थभाक्त्वात् । यो यद्भक्त्या पुरुषार्थभागसौ तद्भक्तभक्तो दृष्टो यथा** मम्मतः । **यश्च यद्भक्तभक्तो न भवति नासौ तद्भक्त्या पुरुषार्थभाग्यथा सम्मत इति** ।

**ननु दैत्यादयो ब्रह्मादिषु भक्तिमन्तोऽपि तद्भक्तेष्विन्द्रादिषु भक्तिरहिता दृश्यन्ते । ततो व्यभिचार इत्यत आह** व्यभिचार इति ।

व्यभिचारो यदि क्वापि भक्तिह्रासोऽत्र कल्प्यते ॥

**यदि क्वापि परेण व्यभिचारश्चोद्यते तदाऽस्माभिरत्र पुरुषे भक्तिह्रासः कल्प्यते विफल**भक्तित्व**मुच्यते । तथा च विपक्षे विशिष्टस्य हेतोरभावान्न व्यभिचार इत्यर्थः । कुत एवं कल्प्यत इत्यत आह** भक्तीति ।

भक्तिदोषो ह्यसौ यन्न तद्भक्तेष्वपि भक्तिमान् ॥

**तद्भक्तेष्वपि भक्तिमान्नेति यदसौ प्रधानभक्तेरेव दोषो हि । तेन प्रधानभक्तिरेव दुष्टा न फलायालमिति प्रसिद्धम् । हिरण्यगर्भादिभिर्दैत्यादिभ्योऽमरत्वादिकं सच्छलमेव दीयते मृषा न भवतीति पुराणेषु सुप्रसिद्धमेवेति । वेदानुसारित्वं तूत्तरत्र प्रदर्शयिष्यते ।**

**शे०**— अत्र प्रधानभक्तत्वमात्रेण तद्भक्तभक्तत्वानुमानभ्रान्तिनिवारणाय प्रयोगप्रकारमाह **तथा चेति** । अनेन यो हीति मूलं प्रधाने भक्तः स्यादित्येतत्प्रधानभक्त्या फलभाक् स्यादिति व्याख्यातं भवति **विशिष्टस्य हेतोरिति** । प्रधानभक्त्या फलभाक्त्वरूपविशिष्टहेतोरित्यर्थः ॥ **उत्तरत्रेति** । लक्ष्मीविरिञ्चवाणीशेत्यादिनेति शेषः ।

**स०— वेदानुसारित्वं तूत्तरत्रेति** । 'सर्वेपि गुरवश्चैते पुरुषस्ये'त्यत्रेत्यर्थः ।

**प०— ब्रह्मादिषु** विरिञ्चरुद्रादिष्वित्यर्थः ॥ **विशिष्टस्य हेतोरिति** । प्रधानभक्त्या पुरुषार्थभाक्त्वरूपविशिष्टहेतोरित्यर्थः । अवध्यत्वादिपुरुषार्थभाक्त्वं तेषामप्यस्तीत्यत आह **हिरण्यगर्भादिभिरिति** ॥ **उत्तरत्रेति** । लक्ष्मीविरिञ्चवाणीशेत्यत्रेत्यर्थः ॥ **हरिभक्तेषु भक्तिकरणे युक्त्युक्तिः** ॥

**या०— उत्तरत्रेति** । लक्ष्मीविरिञ्चवाणीशेत्यादिनेति शेषः ।

**श्री०— विशिष्टस्य हेतोरिति** । सफलभक्त्या पुरुषार्थभाक्त्वादिहेतोरित्यर्थः ॥ **अमरत्वादिकमिति** । अवध्यत्वादिकमित्यर्थः । **सच्छलं** सकपटम् । 'यावदेव रमया रमेश्वर'-मित्यादिवत् ।

---

**सु०— तद्भक्तभक्तिः कर्तव्येत्येतदनुमानेनोपपाद्य सा च तारतम्येन कार्येत्येतदनुमानेन साधयति** तारतम्येनेति ।

**अनु०** — तारतम्येन तेष्वद्धा भक्तिर्दृष्टानुसारतः ॥
विष्णुप्रसादानुसारात्कार्या दोषस्तदन्यथा ॥

**तेषु तद्भक्तेषु क्रियमाणा भक्तिरद्धा सर्वथा तारतम्येन कार्या । कुतः दृष्टानुसारतः । तारतम्येनेत्यस्यैव विवरणं विष्णुप्रसादानुसारादिति । यस्मिन्नधिको विष्णुप्रसादस्तस्मिन्नधिकेत्यादि ।** तदन्यथा **साम्येन वैपरीत्येन च करणेऽनर्थो भवति ।**

**दृष्टानुसारत इत्युक्तं दर्शयति** स्वेति ।

स्वप्रीत्यनुसृतौ प्रीतिर्लोकेऽप्यद्धैव दृश्यते ॥

**अत्र स्वशब्देन राजादिः कथ्यते । तत्प्रीत्यनुसारेण तस्य यस्मिन्यथा प्रीतिस्तदनुसारेण भक्तिकरणे सति तस्मिन्भक्ते तस्य राजादेः प्रीतिरद्धा नियमेनैव दृश्यते । अयमत्र प्रयोगः ।**

**ईश्वरः स्वप्रीत्यनुसारेण स्वभक्तेषु भक्तेः प्रसीदति । प्रेक्षावत्पुरुषत्वाद्राजवदिति । अनेन प्रमेयान्तरमपि सिद्धमित्याह** तारतम्येति ।

तारतम्यपरिज्ञानमप्येतेनैव साधनम् ॥

**एतेनैव भगवद्भक्तेषु रमाब्रह्मादिषु तारतम्येनैव मुक्तिः करणीयेति समर्थितेनैव देवतातारतम्यपरिज्ञानं यत्प्रागुक्तं तदपि मोक्षस्य साधनमिति सिद्धम् । न ह्यविदिते तारतम्ये तारतम्यानुरोधेन मुक्तिकरणं संभवति ॥ अनेनैव प्रकारेणानुमानसंभवादिति वाऽतिदेशार्थः ।**

**शे०— विवरणमिति** । ततश्च न तद्वैयर्थ्यमिति भावः । विष्णुप्रसादादित्युक्तमेव प्रपञ्चयति **यस्मिन्निति** । लोक इत्येतद्विशेषणसामर्थ्यादाह **अत्र स्वशब्देनेति** । तत्प्रीत्यनुसरणमित्यस्य विवरणं तस्य यस्मिन्निति ॥ **अनेनैव प्रकारेणेति** । ईश्वरस्तारतम्येन स्वभक्तज्ञानिनि भक्ते प्रसीदति । प्रेक्षावत्पुरुषत्वात् । राजवदित्यनुमानसंभवादित्यर्थः ।

**स०— अनेनैव प्रकारेणानुमानसंभवादिति** । भगवान् स्वभक्तेषु तारतम्येन प्रसीदति प्रक्षावत्पुरुषत्वात् राजादिवदित्यनुमानसंभवादित्यर्थः ।

**प०—** एतेनैवेति मूलानुवादः । भगवद्भक्तेष्वित्यादिव्याख्या ॥ **यत्प्रागुक्तमिति** । पूर्वपादान्त्यभागे उक्तमित्यर्थः । एतेनैवेत्यस्यार्थान्तरमाह **अनेनैव प्रकारेणेति** । देवतातारतम्यज्ञानं मुक्त्यर्थमावश्यकं मुक्तिहेतुदेवताभक्तितारतम्यहेतुत्वात् यत् यद्धेतुकारणं तत् तत्रावश्यकं यथा संमतमिति वा देवताभक्तितारतम्यं तत्तारतम्यज्ञानपूर्वकं तेन विना तदसंभवात् । यद्येन विना न संभवति तत्तत्पूर्वकं यथा संमतमित्यादिरूपेणेति भावः । भक्तितारतम्यस्य मुक्तिहेतुत्वात् तद्धेतुज्ञानस्यापि तत्सिद्धिरिति भावः ॥ **देवताभक्तितारतम्ये युक्त्युक्तिः ।**

**या०— अनेनैव प्रकारेणेति** । ईश्वरः स्वप्रीत्यनुसारेण स्वभक्तज्ञानिनि भक्ते प्रसीदतीत्यनुमानसम्भवादित्यर्थः ।

**सु०— भगवत्प्रसादतारतम्यानुसारेण तदीयेषु मुक्तिः कार्येत्यत्रागममप्याह** लक्ष्मीति ।

**अनु०—** लक्ष्मीविरिञ्चवाणीशगिरिजेन्द्रा गिरां पतिः ॥
सूर्यादयश्च क्रमशो भगवत्प्रीतिगोचराः ॥
तेषु भक्तिः क्रमेणैव कार्या नित्यं मुमुक्षुभिः ॥

**तेन भगवत्प्रीतिक्रमेणैव । तिष्ठतु क्रमस्तेषु भक्तिकरणमेव कुतः । भगवत्प्रीतिगोचरत्वादेव । कारणान्तरं चोच्यते** सर्वेऽपीति ।

सर्वेऽपि गुरवश्चैते पुरुषस्य सदैव हि ॥ तस्मात्पूज्याश्च नम्याश्च ध्येयाश्च परितो हरिम् ॥
इति षाड्गुण्यवचनादप्येषोऽर्थोऽवसीयते ॥ हरिभक्तिः क्रमेणैव तदीयेषु हरिस्मृतिः ॥
हरिस्तुतिस्तत्स्मृतिश्च तत्स्तुतिर्हरिपूजनम् ॥ तत्पूजा विहितात्याग इति मुक्तेः क्रमेण हि ॥
नियमात्साधनान्येव नित्यसाध्यानि चाखिलैः ॥ इति प्रवृत्तवचनं साधनस्य विनिर्णये ॥

**गुरुत्वं विद्याप्रवर्तकत्वेन प्रसिद्धमेव । पूज्याश्चेत्यादिना** भक्तेरेव **प्रपञ्चनं हरिं परितो न तु पृथक् । वेदानुसारत इति यदुक्तं तदप्यनेन दर्शितं भवति । क्रमेणैव तदीयेषु भक्तिस्तत्स्मृतिरित्यादौ तच्छब्देन तदीया उच्यन्ते । क्रमेणैवेति सर्वत्र संबध्यते । क्रमेणेति हरिविषयाणि भक्त्यादीनि मुख्यसाधनानि तदीयविषयाणि त्वमुख्यसाधनानीत्यर्थः । मुक्तिसाधनत्वादखिलैर्मुमुक्षुभिर्नित्यसाध्यानि । साधनस्य विनिर्णय इति साधनविनिर्णयाख्येऽवान्तरप्रकरणेऽस्तीत्यर्थः ।**

**एतदेव विवृणोति** प्रवृत्त इति ।

प्रवृत्ते पञ्चरात्रे हि साधनस्य विनिर्णयः ॥

**पञ्चरात्रे प्रवृत्तं नामावान्तरो ग्रन्थः । तत्रापि साधनस्य विनिर्णयो नाम प्रकरणमस्तीत्यर्थः ।**

---

शे० — भक्तेरेव **प्रपञ्चनमिति** । 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनमि'त्यत्र पूजादेरपि नवविधभक्तिमध्ये परिगणितत्वादिति भावः । भक्तिशब्दस्य हरिशब्देन समस्तस्यापि बुद्ध्या विवेकेन तदीयेष्वित्यत्रापि संबन्ध इति भावेनाह **तदीयेषु भक्तिरिति ॥ तदीयेति** । हरिस्तुतिस्मृतिपूजानां हरिस्मृतिस्तत्स्तुतिपूजनमिति पृथग्विधानेन तत्स्मृतिरित्यादौ तच्छब्दस्य हरिपरत्वे पौनरुक्त्यप्रसङ्गात् । तदीयमात्रपरामर्शोऽयमिति भावः । तत्स्मृतिरित्यादिपदेन तत्स्तुत्यादेः परिग्रहः ॥ **सर्वत्र संबध्यत इति** । न केवलं क्रमेणेत्यस्य तदीयेषु क्रमेणैव भक्तिरिति यथाश्रुत एव संबन्धः । किन्तु तत्स्मृतितत्स्तुतितत्पूजेत्यादौ सर्वत्रापि संबन्ध इत्यर्थः । हरिभक्त्यादित्रयवत्तदीयभक्त्यादेरपि मुक्तिसाधनत्वोक्तिमात्रेणैव कर्तव्यत्वसिद्धेः किं क्रमेण तत्साधनत्वप्रतिपादनेनेत्यतोऽविशेषेण सर्वेषां मुक्तिसाधनत्वशङ्कावारणाय विशेषसूचनार्थत्वात्तस्य नानर्थक्यमिति भावेन तत्सूचितं विशेषमुपपादयति **क्रमेणेतीति** । नित्यसाध्यत्वे मूले हेत्वनुक्तेस्तं

पूरयति **मुक्तिसाधनत्वादिति** । तस्याखिलैः कर्तव्यतायां हेतुत्वानुपपत्तेरखिलपदं संकुचितार्थपरतया व्याचष्टे **मुमुक्षुभिरिति** ।

**स०— क्रमेणैवेत्यस्य व्याख्यानं तेन भगवत्प्रीतिक्रमेणैवेति ।**

**प०**— भगवत्प्रीतिगोचरा इति हेतुगर्भमिति भावेनाह **भगवत्प्रीतिगोचरत्वादेवेति** । एवं गुरवश्चेत्यपि ज्ञेयम् । अन्यप्रस्तावे अन्यधर्मविधिरसङ्गत इत्यत आह **पूज्याश्चेत्यादिनेति** । पूजनमननध्यानानां 'अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनमि'ति, श्रुतिस्मृत्यादेश्च 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनं' इति सप्तमस्कन्धे भक्तित्वेन परिगणनादिति भावः ॥ **अनेन दर्शितमिति** । तत्र वेदशब्दस्यागममात्रोपलक्षणत्वेन व्याख्यानादिति भावः ।

**या०— भक्तेरेव प्रपञ्चनमिति** ॥ 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनमि'त्यत्र पूजादेरपि नवविधभक्तिमध्ये परिगणितत्वादिति भावः ।

**श्री०**-- **तेन भगवत्प्रीतिक्रमेणैवेति** । लक्ष्मीविरिञ्चेत्युक्तेन क्रमेणेत्यर्थः ॥ **तदप्यनेन दर्शितं भवतीति** । वेदशब्देनागममात्रस्य गृहीतत्वादिति भावः । **तत्रापि प्रवृत्तेऽपि** ॥३-४-५,६ ॥

**सु०— उक्तार्थेष्वनुमानान्तराण्याह** हरीति ।

**अनु०—** हरिद्वेषो न शुभदः सद्द्वेषत्वाद्यथा गुरोः ॥
क्रमाद्भक्तिर्हरिप्रीतिकारणं तत्प्रियोपगा ॥
भक्तिर्यतो यथा स्वस्मिन्नित्याद्या युक्तिरत्र च ॥

सद्द्वेषत्वात् **उत्तमपुरुषद्वेषत्वात्** । **वैष्णवैर्दैत्यादिषु क्रियमाणे द्वेषे व्यभिचारं वारयितुं सदित्युक्तम्** । **गुरोर्द्वेषः** । **प्राग्द्वेषस्य भगवत्प्रसादसाधनत्वाभावे सामान्यव्याप्तिमाश्रित्य भगवद्द्वेषत्वं हेतुरुक्तः, अत्र तु शुभमात्रसाधनत्वाभावे विशेषव्याप्तिमेवाश्रित्य सद्द्वेषत्वमिति महान्भेदः** ॥ क्रमाद्भक्तिरिति । **क्रममनुसृत्य रमादिषु भक्तिर्धर्मिणीत्यर्थः** ॥ तत्प्रियोपगा भक्तिर्यत इति । **हरिप्रियविषयभक्तित्वादित्यर्थः** । **तत्प्रियानुपगच्छति विषयीकरोतीति तत्प्रियोपगा** । **या यत्प्रियविषया भक्तिः सा तत्प्रीतिकारणम्** । **यथा स्वस्मिन्भक्तिः** । **अत्र स्वशब्देन देवदत्त उच्यते** । **यथा राजप्रिये देवदत्ते भक्ती राजप्रीतिकारणमित्यर्थः** । **इह क्रमादिति प्रतिज्ञायां विशेषणप्रक्षेपेण भगवद्भक्तभक्तेः कर्तव्यत्वं तत्तारतम्यस्य चावश्यकत्वं सिध्यति** । **यद्वाऽनेन प्रयोगद्वयं सूचयति** । **भागवतभक्तिर्भगवत्प्रीतिकारणं भगवत्प्रियभक्तित्वा-**

दिति । भगवान्रमादिषु तारतम्योपेतभक्त्यैव प्रसीदति । तारतम्येनैव तद्विषयप्रीतिमत्त्वादिति च । युक्तिश्चेति संबन्धः । अत्र प्रागुक्तेऽर्थे ।

किं सामान्यव्याप्त्या, विशेषव्याप्तिरप्यस्तीत्याशयेन प्रयोगान्तरमुच्यते प्राधान्येति ।

प्राधान्यतारतम्यानुसारिणी भक्तिरुत्तमा ॥
प्रीतिदैव हरेर्यस्माद्भक्तिः सा स्वोपगा यथा ॥
इति वा ॥-३-४-५।६ ॥

उत्तमत्वतारतम्यानुसारिणी रमादिषु भक्तिर्हरेः प्रीतिदैव । यस्मात्सोत्तमा भक्तिः ॥ शास्त्रविहितभक्तित्वादित्यर्थः । स्वोपगा सा विष्णुविषया भक्तिर्यथेत्यर्थः । इति वा अनुमातव्यमिति शेषः । अत्रापि पूर्ववद्विशिष्टसाधनात्पृथक्प्रयोगद्वयेन वा साध्यद्वयसिद्धिः ॥ ३-४-५।६ ॥

शे०— 'न हि प्रसादमाप्नोति द्वेषादि'त्यादिपूर्वग्रन्थेनास्य पौनरुक्त्यमाशङ्क्य प्रमेयभेदोपदर्शनेन तत्परिहरति प्रागित्यादिना । ननु रमादिषु प्रीतिर्भगवत्प्रीतिकारणमित्येतावतैव भगवद्भक्तभक्तेः कर्तव्यत्वसिद्धेः किं प्रतिज्ञायां क्रमादिति विशेषणेनेत्यतस्तन्मात्रेण तद्भक्तभक्तेः कर्तव्यत्वसिद्धावपि प्राक्प्रतिज्ञातस्य तारतम्येन कर्तव्यत्वस्यासिद्धेस्तस्यापि सिद्ध्यर्थं तदुपादानमित्याह इहेति । ननु च रमादिषु प्रीतिर्हरेः प्रीतिदैवेत्येतावतैव तत्कर्तव्यत्वसिद्धेः किमुत्तमत्वतारतम्यानुसारिणीति प्रतिज्ञायां विशेषणेनेत्यतस्तावता तत्कर्तव्यतासिद्धावपि तारतम्येन कर्तव्यतायाः प्राक् प्रतिज्ञातायास्तावताऽसिद्धेः प्राचीनानुमाने क्रमादिति विशेषणवदेतद्विशेषणस्यापि तत्तारतम्येन कर्तव्यत्वसिद्ध्यर्थत्वादवैयर्थ्यमिति भावेनाह अत्रापीति । इह टीकायां पूर्ववद्विशिष्टसाधनादित्येव मूलपाठः । तस्य चोत्तमत्वतारतम्यानुसारिणीति विशेषणविशिष्टे रमादिविषयभक्तिरूपे धर्मिणि हरिप्रीतिदत्वसाध्यस्य साधनाद्भक्तेः कर्तव्यत्वस्य तत्तारतम्यस्य चावश्यकत्वसिद्धेर्न प्रतिज्ञायां विशेषणवैयर्थ्यमित्यर्थः ॥ पृथक् प्रयोगद्वयेनेति । रमादिषु भक्तिर्हरिप्रीतिदा शास्त्रविहितभक्तित्वाद्विष्णुभक्तिवत् तारतम्योपेता च तत एव तद्वदेवेति प्रयोगद्वयेन साध्यसिद्धेस्तत्सूचकत्वान्न विशेषणवैयर्थ्यमित्यर्थः ॥ ३-४-५।६ ॥

स०— अत्रापि पूर्ववत् विशिष्टसाधनादित्येव पाठः । मूलकोशेषु दर्शनात् । पूर्वोक्ताद्विशिष्टसाधनादिति क्वचित्क इति ज्ञेयम् । यद्वाऽनेन प्रयोगद्वयं सूचयतीति पूर्ववदित्यर्थः ।

प०— ल्यब्लोपे पञ्चमीत्युपेत्याह क्रममनुसृत्येति ॥ धर्मिणीति । तत्तत्प्रीतिकारणत्वरूपसाध्यं प्रति धर्मिभूतेत्यर्थः ॥ भगवद्भक्तभक्तेः कर्तव्यत्वमिति । क्रमादित्यस्य क्रममनुसृत्य रमादिष्विति व्याख्यानादिति भावः ॥ इति चेति । प्रयोगद्वयमितिपूर्वेणान्वयः ॥ विशिष्टसाधना-

**दिति** । उत्तमत्वानुसारिणी रमादिषु क्रियमाणेत्येवमुत्तमत्वानुसारित्वविशेषणयुक्तभक्तिं धर्मीकृत्य साधनादित्यर्थः ॥ **पृथक् प्रयोगद्वयेनेति** । भगवद्भक्तेषु रमादिषु भक्तिः भगवत्प्रीतिदा शास्त्रविहित-भक्तित्वात्, रमादिषु तारतम्येन क्रियमाणैव भक्तिर्भगवत्प्रीतिदा उक्ताद्धेतोरित्येवंरूपेणेत्यर्थः । **देवतादिभक्तेः कर्तव्यत्वे तारतम्येन कार्यत्वे चागमयुक्त्योरुक्तिः** ॥ ३ । ४ । ५, ६ ॥

**यां०— विशिष्टसाधनादिति** । उत्तमत्वतारतम्यानुसारिणीति विशेषणविशिष्टे रमादि-विषयभक्तिरूपे धर्मिणि हरिप्रीतिदत्वरूपसाध्यस्य साधनादित्यर्थः । उत्तमत्वतारतम्यानुसारिणीति विशेषणविशिष्टस्य हरिप्रीतिदत्वस्य साधनादिति वाऽर्थः । सर्वोत्तमतया कृताया एव विष्णुभक्तेर्हरि-प्रीतिदत्वान्न दृष्टान्ते साध्यवैकल्यम् ॥ **प्रयोगद्वयेन वेति** । रमादिषु भक्तिः हरिप्रीतिदा शास्त्र-विहितभक्तित्वाद्विष्णुभक्तिवत् । रमादिषु भक्तिरुत्तमत्वतारतम्यानुसारेण कर्तव्या तारतम्योपेतशास्त्र-विहितभक्तित्वात्तद्वदेवेति प्रयोगद्वयेन वेत्यर्थः ॥ ३ । ४ । ५, ६ ॥

॥ इति उभयलिङ्ग-आधिकारिकाधिकरणे ॥

## ॥ अथ फलश्रुत्यधिकरणम् ॥

सु० — ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ॥ ज्ञानं महाफलकारणमिति पुरुषार्थाधिकरणे प्रतिपादितम् । ज्ञानोत्तरमनुष्ठितं वर्णाश्रमकर्म शमदमादिकं चानन्दातिशयकारणमिति स्तुत्यधिकरणे । तदेतज्ज्ञानकर्मादिफलं किं प्रेरकत्वाद्देवानां भवति उत कर्तृत्वाद्देवदत्तस्येति संशये प्रथमसूत्रेण देवानामेवेति पूर्वपक्षयित्वा । 'आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते' इत्येकदेशिमतेन सिद्धान्तमभिधाय 'सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवदि'ति परमसिद्धान्तोऽभिहितः । तत्र देवानां ज्ञानादिफलमिति पूर्वपक्षांशो ग्राह्य एव । अवधारणमात्रमेव त्याज्यम् । अतः पूर्वपक्षसूत्रार्थं विवृणोति ज्ञानेति ।

अनु० — ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ॥

ज्ञानकर्मादिफलं चैषु क्रमोपगम् ॥

फलं च देवानां भवतीति शेषः । भवच्चैषु देवेषु क्रमोपगं क्रमेणैवोपगच्छति ।

शे० — ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ॥ ननु 'ज्ञानकर्मादिफलं चैषु क्रमोपगमि'त्युत्तरवाक्यमनर्थकम् । न चैतत्पूर्वपक्षसूत्रार्थविवरणरूपत्वान्नानर्थकमिति वाच्यम् । ज्ञानकर्मादेः फलवत्त्वासिद्ध्या ज्ञानकर्मादिफलरूपस्य धर्मिण एवासिद्ध्या तद्धर्मिकस्य किं देवानामित्यादिसन्देहस्यानुदयेन तत्पूर्वकपूर्वपक्षसिद्धान्तयोः सुतरामनुत्थानात्कथञ्चित्तदुत्थानेऽपि पूर्वपक्षसूत्रार्थविवरणे निमित्ताभावेन तदर्थत्वायोगादित्यतः सूत्रार्थविवरणरूपतयोत्तरभाष्यं सङ्गमयितुं सन्देहधर्मिभूतस्य ज्ञानकर्मादिफलस्य सिद्धिं तावद्दर्शयति **ज्ञानमित्यादिना** । एवं धर्मिसिद्धिमुक्त्वा तत्तत्कोटिप्रापकोक्त्या सन्देहमुपपादयन्नेव पूर्वपक्षसिद्धान्तोपदर्शकतया सूत्रत्रयमपि व्यापारयति **तदेतदिति** । एवमधिकरणशरीरं प्रदर्श्य पूर्वपक्षसूत्रार्थविवरणे निमित्तमुपदर्शयति **तत्रेति** । तावन्मात्रांशस्य प्रमितत्वादिति भावः ॥ **त्याज्यमिति** । कर्तुः फलवत्त्वस्यापि प्रामाणिकत्वेन देवानामेवेत्यवधारणांशस्य प्रमाणबाधितत्वादिति भावः । ज्ञानकर्मादिफलस्य देवगतत्वसिद्धिं विना तेषु तस्य क्रमोपगतत्वविचारानुत्थानादपेक्षितं पूरयन्नेव वाक्यभेदेन भाष्यं योजयति **फलं चेत्यादि** ।

प० ॐ **स्वामिनः** फलश्रुतेः । आत्रेयपदश्रवणादाह **पूर्वपक्षयित्वेति** । सूत्राक्षरार्थस्तंत्रदीपिकायां व्यक्तः । विशेषोक्तेः सामान्योक्तिपूर्वकत्वादाह **इति शेष इति** ।

च० — ॐ **स्वामिनः फलश्रुतेरित्यात्रेयः** ॐ ॥ **ज्ञानकर्मादिफलमिति** । तद्गुणसंविज्ञानघटितस्तत्पुरुषः ।

**सु०— देवदत्तेनानुष्ठितस्य ज्ञानादेः फलं देवानां भवतीत्येका प्रतिज्ञा । भवच्च तत्क्रमेणैव न तु साम्येन वैपरीत्येन वेति द्वितीया । तत्राद्यायां हेतुं सूचयन्द्वितीयमुपपादयति** स्वातन्त्र्येति ।

**अनु०—** स्वातन्त्र्यतारतम्येन फलं हि फलिनां भवेत् ॥

**फलिनां फलभाजां, स्वातन्त्र्यतारतम्येन स्वाम्यतारतम्यानुसारेणैव हि फलेन भाव्यम् । न तु साम्येन वैपरीत्येन वेत्यर्थः । ब्रह्मादयस्तारतम्येनैव फलवन्तस्तत्र तारतम्येनैव स्वातन्त्र्यादित्युक्तं भवति । अनेन प्रथमप्रतिज्ञायां स्वातन्त्र्यहेतुः सूचितो भवति यः सूत्रे स्वामिपदेनोक्तः । यद्यपि फलप्राप्तौ तारतम्यं न सूत्रितम् । तथाऽपि फलप्राप्तावुक्तस्य स्वामित्वहेतोः सामर्थ्येन प्राप्तमिति तदप्युपपादितम् ।**

**शे०—** ननु देवसंबन्धिनो ज्ञानकर्मादिफलस्य देवगामितानिश्चयान्नास्य विचारविषयत्वं संभवतीत्यतस्तद्विवरणपूर्वकं वाक्यभेदमेव स्पष्टयति **देवदत्तेनेत्यादिना ॥ न त्विति** । अन्यथाऽकृताभ्यागमकृतविप्रणाशप्रसङ्गादिति भावः । ननु देवानां फलप्राप्तेः सूत्रितत्वाज्ज्ञानादिफलं देवानां भवतीति तत्प्रतिज्ञापूर्वकं तदुपपादनमेव भाष्ये सङ्गतम् । न तु फलप्राप्तौ तारतम्यस्य प्रतिज्ञापूर्वकमुपपादनमपि तस्यासूत्रिततया तदुपपादकत्वेऽभाष्यत्वप्रसङ्गादित्याशङ्कते **यद्यपीति** । श्रुत्या सूत्रलब्धस्येवार्थात्तल्लब्धस्यापि सूत्रार्थत्वात्फलप्राप्तौ हेतुतयोपन्यस्तस्य स्वातन्त्र्यस्य वस्तुतस्तारतम्यवत्फलतारतम्यं विनाऽनुपपत्त्या तत्सामर्थ्येन लब्धस्य फलप्राप्तौ तारतम्यस्यापि सूत्रार्थत्वात्तदुपपादकस्य भाष्यस्य नाभाष्यत्वमित्याशयेन परिहरति **तथाऽपीति** ।

**प०—** उत्सूत्रितत्वनिरासायाह **यः सूत्रे स्वामिपदेनोक्त इति** । **फलप्राप्तौ तारतम्यं न सूत्रितमिति** । देवदत्तानुष्ठितज्ञानकर्मादिफलं देवास्तारतम्यानुसारेण प्राप्नुवन्ति हीत्येतत्प्रमेयं न सूत्रितमित्यर्थः ।

**श्री०—** ॐ **स्वामिनः फलश्रुतेरित्यात्रेयः** ॐ ॥ **स्वातन्त्र्यतारतम्येनेति** । प्रेरकत्वतारतम्येनेत्यर्थः । तथाऽपीत्यनन्तरं देवानामिति शेषः ॥ **सामर्थ्येनेति** । प्रेरकत्वापरपर्यायस्वातन्त्र्यस्वामित्वस्य तारतम्येन सद्भावादिति भावः ।

**सु०— यदि स्वातन्त्र्याद्देवदत्तानुष्ठितज्ञानादिफलं देवानां स्यात्तर्हि तदनुष्ठितमिथ्याज्ञानादिफलमपि प्रसज्येताविशेषादित्यत आह** अशुभं त्विति ।

**अनु०—** अशुभं त्वशुभेऽप्येषां स्वातन्त्र्यात्प्रीतितो हरेः ॥
आज्ञया चान्यगं नैव भोगाय भवति क्वचित् ॥

**अन्यगमशुभं त्वेषां देवानां क्वचिदपि भोगाय न भवति। कुतः । हरेः प्रीतितोऽशुभेऽप्येषां स्वातन्त्र्याद्भगवत्प्रसादेन मैतदस्मान्प्रापदिति निवारणे तेषां सामर्थ्यसद्भावात् । मैतदेतान्प्रापदिति हरेरेवाज्ञया च । अन्यगमिति वदता स्वगतं तु भवतीति सूचितम् । अनेनासति निवारणकारण इति स्वामित्वहेतुर्विशेषितो भवति ।**

शे० — यत्र देवदत्तानुष्ठितसम्यग्ज्ञानादिफलं तत्र तन्मिथ्याज्ञानादिफलमपीति तर्कमूलविशेषव्याप्तौ दृष्टान्ताभावेन मूलशैथिल्यान्नैतदापादनं युक्तमित्यतो विशेषव्याप्तिवदविशेषलक्षणसामान्यव्याप्तेरपि तन्मूलत्वाद्विशेषव्याप्त्यभावेऽपि सामान्यव्याप्त्याश्रयणेन युक्तः प्रसङ्ग इत्याह **अविशेषादिति ।** नन्वेवमशुभफले सत्यपि स्वामित्वे तत्फलभाक्त्वाभावेन न स्वामित्वहेतोस्तत्र व्यभिचारपरिहार इत्यत आह **अनेनेति** । 'अशुभेऽप्येषां स्वातन्त्र्यात्प्रीतितो हरेः । आज्ञया चे'त्यशुभफलनिवारणसामर्थ्यप्रतिपादकभाष्येणेत्यर्थः ।

श्री० — **प्रसज्येतेति** । स्वामित्वाविशेषादित्यर्थः ।

**सु०— यदुक्तमविशेषादिति तदसिद्धम् ।** व्यवस्थापकश्रुतिसद्भावादित्याह पुण्यमेवेति ।

अनु० — पुण्यमेवामुमाप्नोति न देवान्पापमाप्नुयात् ॥
इत्यादिश्रुतयो मानमुक्तेऽर्थे

---

**अनेन 'पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छती'ति श्रुतिमुपादत्ते । अमुं सप्तान्नविद्योपासनेन प्रेरकतया परपुरप्रवेशिनं परकृतं पुण्यमेवाप्नोति न पापम् । कुतः । देवो ह्यसौ जातो । न हि देवान्प्राप्नोतीत्यर्थः । उक्तेऽर्थे शुभमेव भवति नाशुभमित्यर्थे ।**

प० — **इति श्रुतिमिति** । वाजसनेये तृतीयेऽध्याये सप्तान्नविद्यागतां श्रुतिमित्यर्थः ।

**सु०—** व्यवस्थापकान्तरमाह युक्तय इति ।

अनु० — युक्तयोऽपराः ॥

**अपराः पूर्वोक्ताभ्याम् । उक्तेऽर्थे मानमिति संबन्धः ।**

**कास्ता युक्तय इत्यतस्ता दर्शयितुमागमवाक्यं पठति** उपासनेति ।

उपासनाधर्मफलं यतो देहान्तरे स्थितिः ॥ वासुदेवाज्ञया चैव पूर्वकर्मानुसारतः ॥
प्रेरयन्ति हि ते जीवान्पुण्यपापेषु नित्यशः ॥ अरागद्वेषतश्चैव कथं दोषानवाप्नुयुः ॥
हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यते ॥ हरिपूजेति चोद्देशात्कथं न शुभमाप्नुयुः ॥

यतः कारणाद्देहान्तरे स्थितिः, परपुरं प्रविश्य तत्र पुण्यपापप्रेरणं, देवानां भगवदुपासनाजनितधर्मफलम्। अतः कथं पापादिकं प्रेरयन्तोऽपि दोषानवाप्नुयुः। न हि सात्त्विको धर्मो दुःखपर्यवसायी। तत्त्वव्याघातादित्यर्थः। परपुरे देवानां पापादिप्रेरणं न दुःखहेतुः। सात्त्विकधर्मफलत्वात्तत्त्वज्ञानवदित्युक्तं भवति। किञ्च ते देवा वासुदेवाज्ञयैव न तु स्वेच्छया तत्तत्कृतपूर्वकर्मानुसारत एव। अत एवारागद्वेषतो रागद्वेषौ विनैव नित्यशो जीवान्पुण्यपापेषु प्रेरयन्ति हि यस्मात्तस्मात्कथं दोषानवाप्नुयुः। प्रभोराज्ञयाऽपराधानुसारेण चोरशासकराजपुरुषवदिति भावः। पापादिप्रेरणेन देवानामशुभं न भवतीत्येव केवलं न, किन्तु हर्याज्ञाऽनुष्ठानाज्ज्योतिष्टोमाद्यनुष्ठातृभिरिवैभिर्देवैः पुण्यमेवाप्यते। किञ्च स्वविहितपरप्रेरणे हरिपूजेयमिति चोद्देशात्कथं देवा न शुभमाप्नुयुः। अत इत्युपसंहारः।

अतो यथाक्रमं धर्मज्ञानयोः फलमञ्जसा ॥
सर्वप्राणिगतं देवाः प्राप्नुवन्त्याविरिञ्चतः ॥

धर्मज्ञानयोरेवेति योज्यम्। प्राप्नुवन्तोऽप्याविरिञ्चतो यथाक्रमं प्राप्नुवन्तीत्यपूर्वोक्तिर्नोपसंहारः। अन्यगतं ज्ञानादिफलं देवाः प्राप्नुवन्ति। देवगतं तु कथमित्यपेक्षायामुक्तं देवा इति।

देवा एव हि देवानां विशिष्टा विनियामकाः ॥

देवानामपकृष्टानाम्। अतस्तदीयज्ञानादिफलं तेषां भवतीति शेषः। ब्रह्मा त्विति आविरिञ्चत इत्युक्तस्य विवरणम्।

ब्रह्मा त्वखिलदेवानां नराणां च नियामकः ॥
अतः सर्वगुणानेव प्राप्नोत्यधिकमन्यतः ॥

देवादिग्रहणमुपलक्षणम्। अधिकमिति क्रियाविशेषणम्।

भवत्वन्यगतज्ञानादिफलप्राप्तिर्देवानाम्। तत्रापि तारतम्ये को हेतुरित्यत उक्तं द्रव्येति।

द्रव्यस्वातन्त्र्यविज्ञानप्रयत्नैरधिकं फलम् ॥
देवानामन्यगं चापि तेषु हि ब्रह्मणोऽधिकम् ॥
बृहत्तन्त्रोदितं वाक्यं हरिणा फलनिर्णये ॥

द्रव्याणीन्द्रियादीनि तेषु स्वातन्त्र्यं द्रव्यस्वातन्त्र्यं विज्ञानप्रयत्नौ धर्माद्युत्पादनिमित्ते। अधिकैरिति शेषः। चशब्दोऽनुक्तसमुच्चयार्थः। मध्यमैर्द्रव्यस्वातन्त्र्यादिभिर्मध्यमम्। अल्पैरल्पमिति। तेष्वपि देवेषु निरवधिकद्रव्यस्वातन्त्र्यमस्त्वादिति हिशब्दार्थः। फलनिर्णय इति तत्रापि प्रकरणविशेषोक्तिः।

द्रव्यस्वातन्त्र्याद्यतिशयात्फलातिशय इत्युक्तस्य व्याप्तिं दर्शयति लोकेऽपीति ।

लोकेऽप्येतादृशगुणैः फलाधिक्यं हि दृश्यते ॥

**एतादृशगुणैरित्यधिकैर्द्रव्यस्वातन्त्र्यादिभिः समुदितायां कृषौ, यस्याधिकं क्षेत्रादिद्रव्यस्वातन्त्र्यं, यस्य चाऽऽवापादौ ज्ञानप्रयत्नाधिक्यं तस्य फलाधिक्यं दृश्यत इत्यर्थः। एवं मध्यल्पयोरप्युदाहर्तव्यम्। अनेन स्वातन्त्र्यतारतम्येनेत्युक्तमुपपादितं भवति।**

**शे०** — **तत्त्वव्याघातादिति** । शुभमात्रपर्यवसायिन एव धर्मस्य सात्त्विकधर्मस्वरूपतया शास्त्रनिर्णीतत्वादित्याशयः । ज्ञानकर्मफलं त्रैष्वित्युक्तस्यैव पुनः प्रतिपादनात्पौनरुक्त्यमाशङ्क्याह **अत इत्युपसंहार इति** । ननु शुभफलमेव प्राप्नुवन्ति नाशुभफलमित्युक्तस्य कथमुपसंहार इत्यतः सावधारणत्वमाश्रित्य तदुपपादयति **धर्मज्ञानयोरेवेति योज्यमिति** । तर्हि प्राप्नुवन्त्याविरिञ्चत इत्युपसंहारः किमित्यत आह **प्राप्नुवन्तोऽपीति** ॥ **अपूर्वोक्तिरिति** । प्रतिज्ञोक्तिरित्यर्थः । अस्यार्थस्याग्रे उपपादयिष्यमाणत्वादित्यर्थः ॥ **देवादिग्रहणमुपलक्षणमिति** । देवानां चेत्येतदृषिगन्धर्वपितृपादीनामप्युपलक्षणम् । न देवमात्रपरम् । आदिपदेन नराणां चेत्येतदपि दैत्यरक्षःपिशाचादेरप्युपलक्षणम् । न तु नरमात्रपरमित्यर्थः । अधिकमित्यस्य गुणविशेषणतायां गुणानिति बहुवचनानुरोधेनाधिकानिति बहुवचनेन भवितव्यम् । अधिकमित्येकवचनं तु कथमित्यतोऽस्य साधनं परित्यज्य धात्वर्थमात्रविशेषणत्वेन क्रियाविशेषणत्वात्तेषां च क्रियाद्वारा स्त्रीलिङ्गत्वे प्राप्ते तद्बाधेन क्रियाव्ययविशेषणानां क्लीबत्वैकवचनान्तत्वयोरनुशासनान्नानुपपत्तिरित्याशयेनाह **अधिकमितीति** ॥ **तत्रापि तारतम्य इति** । फलप्राप्तावपि तारतम्य इत्यर्थः । यद्यपि 'स्वातन्त्र्यतारतम्येन फलं हि फलिनां भवेदि'ति तारतम्येन फलप्राप्तौ स्वातन्त्र्यतारतम्यस्य हेतुत्वेनोक्तत्वान्न पुनर्हेत्वाकाङ्क्षा युज्यते । तथाऽपि हेतुत्वेनोपन्यस्तं स्वातन्त्र्यतारतम्यमेवोपपादयितुमियमाशङ्का । अत एवानेन स्वातन्त्र्यतारतम्येनेत्युक्तमुपपादितं भवतीत्युत्तरत्र वक्ष्यतीति ध्येयम् । द्रव्यस्वातन्त्र्यविज्ञानप्रयत्नानां फलप्राप्तिहेतुत्वेऽपि तत्तारतम्यहेतुत्वासंभवान्न तथोक्तिर्युक्तेत्यतोऽपेक्षितपूरणेन तदुक्तिमुपपादयति **अधिकैरिति शेष इति** । मूले चशब्दानर्थक्यमित्याशङ्क्य तत्प्रयोजनमाह **चशब्द इति** । अनुक्तसमुच्चेयमेव दर्शयति **मध्यमैरित्यादि** । तथाऽप्यपिपदस्य वैयर्थ्यमित्यतो भिन्नक्रमतया तद्योजयति **तेष्वपीति** ॥ **निरवधिकेति** । यद्यपि भगवतो रमायाश्च तदवधिकत्वान्न निरवधिकद्रव्यस्वातन्त्र्यादिमत्त्वं तस्यास्ति तथाऽपि देवेषु निरवधिकद्रव्यस्वातन्त्र्यादिमत्त्वमप्रत्यूहमेव विद्याकर्मभ्यां प्राप्तदेवपदानामेव देवशब्देन विवक्षिततयाऽतादृशयोर्लक्ष्मीनारायणयोरदेवत्वादित्याशयात् ।

**स० — अपूर्वोक्तिरिति** । प्रतिज्ञोक्तिरित्यर्थः । **धर्माद्युत्पादं प्रति निमित्ते** ।

**प० — पूर्वोक्ताभ्यामिति** । तरतमभावापन्नस्वामित्वहर्याज्ञारूपाभ्यामित्यर्थः । स्थितपदास्कर्मापि ग्राह्यमिति भावेनोक्तं **तत्र पुण्यपापप्रेरणमिति** ॥ **तत्त्वव्याघातादिति** । सात्त्विकधर्मत्वव्याघातादित्यर्थः । सुखपर्यवसायित्वस्वभावत्वात्तस्येति भावः । **परपुरे** परदेहे । आगमशेषं योजयति **किञ्चेत्यादिना** । प्रागनुक्तेराह **नोपसंहार इति** ॥ **देवादिग्रहणमिति** । देवानां नराणां चेत्युक्तिर्देवर्षिगन्धर्वाद्यशेषप्राण्युपलक्षणमित्यर्थः ॥ **तत्रापीति** । बृहत्तन्त्रेपीत्यर्थः ।

**या० — ॐ स्वामिनः** फलश्रु**तेरित्यात्रेयः** ॐ ॥ **तत्त्वव्याघातादिति** । सुखमात्रपर्यवसायिन एव धर्मस्य सात्त्विकधर्मस्वरूपतया शास्त्रे निर्णीतत्वादिति भावः ॥ **देवादिग्रहणमिति** । देवानां चेत्येतदृषिगन्धर्वपितृपादीनामप्युपलक्षणमित्यर्थः । आदिपदेन नराणां चेत्येतदपि दैत्यरक्षःपिशाचादेरुपलक्षणमित्यर्थः ॥ **निरवधिकद्रव्येति** । लक्ष्मीनारायणयोरवधिभूतयोः सत्त्वादिदमसिद्धमिति न वाच्यम् । देवेष्विति निर्धारणसप्तम्या हेतावपि विवक्षितत्वात् । लक्ष्मीनारायणौ च न देवौ । विद्याकर्मभ्यां प्राप्तपदानामेवात्र देवशब्देन विवक्षितत्वादिति भावः ।

**श्री० — अपूर्वोक्तिः** यथाक्रममित्यंशः ।

---

**सु० — प्रसङ्गात्पापादिफलं प्रेरकाणामसुराणां तारतम्येन भवतीत्याह** एवञ्चेति ।

अनु० — एवञ्च कलिपूर्वाणामसुराणां महत्फलम् ॥
अशुभेषु सदैव स्यान्मिथ्याज्ञानादिकेषु हि ॥

**महाप्रेरकाणां महदित्यादीत्यर्थः । अशुभेष्वशुभनिमित्तम् । हिशब्देन स्वातन्त्र्यं हेतुमाह । एवमिति देवदृष्टान्तम् । असुराणां चेति संबन्धः ।**

**शे० —** ज्ञानकर्मादिफलस्य देवेषु तारतम्यव्युत्पादनावसरे मिथ्याज्ञानपापादिफलस्य तत्प्रेरकेष्वसुरेषु तारतम्यव्युत्पादनस्यासङ्गतिमाशङ्क्य परिहरति **प्रसङ्गादिति** । नन्वत्र **कलिपूर्वाणामसुराणां** पापप्रेरकतया महत्पापफलस्योक्तावपि तत्तारतम्यस्यानुक्तेर्नास्य पापफलतारतम्यप्रतिपादकत्वमित्याशङ्क्य भवेदेतदेवं **यदि सर्वेषां** महत्फलमुच्येत । न चैवं किन्तु महाप्रेरकाणां कलिपूर्वाणामेव महत्फलं मध्यमप्रेरकाणां च तेषां मध्यमं फलमधमप्रेरकाणां चाल्पं फलमुच्यते । तथा च युक्तं तत्तारतम्यप्रतिपादकत्वमित्यभिप्रेत्यापेक्षितं पूरयन्नेव कलिपूर्वाणां महत्फलमित्येतद्व्याचष्टे **महाप्रेरकाणामिति** । अशुभानां महाफलाधिकरणत्वासंभवादशुभेष्विति सप्तम्यनुपपत्तिमाशङ्क्याह **अशुभेष्विति** । मूले हिशब्दस्यानर्थक्यमाशङ्क्य फलभाक्त्वहेतुभूतस्वातन्त्र्यसूचकत्वान्न तद्वैयर्थ्यमित्याशयेन तत्समर्पकतया तं योजयति **हिशब्देनेति** ।

एवञ्चेत्यस्योपसंहारपरत्वानुपपत्तेरानर्थक्यमित्याशङ्क्यासुराणां स्वातन्त्र्यतारतम्येनोक्तस्य फलतारतम्यस्य दृष्टान्तोपदर्शनेनोपपादनार्थत्वान्न तदिति भावेन तदुपदर्शकतया तद्योजयति **एवमितीति** । एवमिति पदं देवदृष्टान्तमाहेत्यर्थः । तर्हि चशब्दोऽनर्थकः स्यादित्यतो भिन्नक्रमतया तं योजयति **असुराणां चेति** । न केवलं देवानामिति चार्थः ।

प० — **प्रसङ्गादिति** । शुभफले तारतम्योक्तिप्रसङ्गादित्यर्थः ।

च० — **महाप्रेरकाणामिति** । महत्पदं समानाधिकरणं प्रेरकपदान्वयि ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणश्रीमत्सत्यप्रियतीर्थपूज्यपादतनूज-
सर्वतन्त्रस्वतन्त्रगालवपुरीश्रीनिवासार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां
श्रीमत्सुधाचषकनाम्न्यां कतिपयफक्किकाव्याख्यायां तृतीयाध्यायस्य चतुर्थपादः ॥

सु० — **प्रागुक्तेऽर्थेऽत्र च प्रमाणान्तरमाह** शुभेति ।

**अनु०** — शुभाशुभफलं देवा असुराश्च समाप्नुयुः ॥
क्रमेणैव यथाशक्ति यथा ये ये प्रयोजकाः ॥
प्रेरका अपि पापानां न देवाः पापमाप्नुयुः ॥
इति प्रकाशिकायां हि प्रोवाच हरिरञ्जसा ॥

**यथासंख्येन शुभाशुभफलम् । यथाशक्तीति क्रमेणैवेत्यत्र युक्तिः । तस्य विवरणं ये ये यथा प्रयोजकास्तथा तथेति । प्रेरका इत्यस्य पूर्ववच्छङ्कापरिहारश्च ।**

शे० — प्रत्येकं देवा असुराश्च शुभाशुभं फलं समाप्नुयुरित्यन्यथाप्रतीतिनिरासायान्वयमाह **यथासंख्येनेति** ॥ **क्रमेणैवेत्यत्रेति** । क्रमेणैवेत्युक्तशुभाशुभफलतारतम्य इत्यर्थः । तर्हि यथाशक्तीत्यनेनैव फलतारतम्ये हेतुकथनाद्यथेत्यादिभाष्यखण्डवैयर्थ्यमित्यत आह **तस्य विवरणमिति** ॥ **पूर्ववदिति** । अशुभं त्वशुभेऽप्येषां स्वातन्त्र्यात्प्रीतितो हरेरित्यस्येवेत्यर्थः ॥ **शङ्कापरिहारश्चेति** । यदि स्वातन्त्र्याद्देवदत्तानुष्ठितज्ञानादिफलं देवानां स्यात्तर्हि तदनुष्ठितमिथ्याज्ञानादिफलमपि तेषां प्रसज्येताविशेषादिति शङ्का, परमेश्वरप्रीतिबलेनाशुभनिवारणे तेषां सामर्थ्यसद्भावादियुक्तिभिर्न तत्प्रसङ्ग इति परिहारश्चेत्यर्थः ।

स० — **पूर्ववच्छङ्कापरिहारश्चेति** । शुभफलभोगे प्रेरकत्वाविशेषादशुभफलभोगेपि स्यादिति शङ्का, तद्वारणे सामर्थ्यान्न तत्प्राप्तिरिति परिहारश्चेत्यर्थः ।

प० — **पूर्ववच्छङ्कापरिहार इति** । यदि स्वामित्वात्प्रजानुष्ठितशुभफलं देवानां तर्हि तदनुष्ठिताशुभफलमपि तेषां स्यादिति शङ्कायां प्रेरका अपीति वाक्यं प्राप्तमिति द्रष्टव्यम् । भगवत्प्रीतिहेतुत्वात्स्वातन्त्र्याच्चाशुभफलं न तेषामिति परिहाराभिप्रायश्च 'अशुभं त्वशुभेप्ये(ष्वे)षामि'त्यत्रैव द्रष्टव्य इत्यर्थः ।

या० — **पूर्ववच्छङ्कापरिहारश्चेति** । 'अशुभं त्वशुभेऽप्येषां स्वातन्त्र्यात्प्रीतितो हरेरि'त्यत्र यथा शङ्कापरिहारौ तथैवेहापीत्यर्थः ।

श्री० — **पूर्ववच्छङ्कापरिहारश्चेति** । 'अशुभत्वं शुभेऽप्येषामि'त्यत्रैवेत्यर्थः । तत्प्रकारश्च यदि स्वातन्त्र्यात् देवतानुष्ठितशुभफलं देवानां स्यात्तर्हि तदनुष्ठितपापफलमपि प्रसज्येत, स्वामित्वाविशेषादिति शङ्का । अन्यगतं पापं देवानां क्वचिदपि भोगाय न भवति कुतः पापेष्वप्येषां स्वातन्त्र्यात, भगवत्प्रसादेन मैतदस्मान्प्रापदिति निवारणे तेषां सामर्थ्यसद्भावात, मैतदेतान्प्रापदिति हरेराज्ञया चेति परिहारश्च द्रष्टव्यः । (तत्रापीति । बृहत्तन्त्रेऽपीत्यर्थः) ।

सु० — ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ ॥ ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ ॥ **एवं प्रपञ्चेन पूर्वपक्षमुक्त्वा सिद्धान्तसूत्रतात्पर्यमागमवाक्येनाह** यद्यपीति ।

अनु० — ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ ॥
ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ ॥
यद्यप्येवं सुराणां च दैत्यानां च महत्फलम् ॥
शुभाशुभेभ्य एवं च कर्तुश्च स्याद्यथोदितम् ॥

**एवमुक्तप्रकारेण यद्यपि शुभाशुभेभ्यो ज्ञानादिभ्यो भवत्फलं सुराणां च दैत्यानां च भवतीत्युपपादितम् । एवञ्च तथाऽपि कर्तुर्देवदत्तादेरपि** फलं **स्यादेव । आगमेऽप्यस्यार्थस्य प्रकृतत्वाद्यद्यपीत्यादि युज्यते । एतदुक्तं भवति । देवासुराणां शुभाशुभफलमित्येतावदभ्युपगम्यते प्रमितत्वात् । तेषामेवेति तु न क्षम्यते । किन्तु कर्तुरपि भवतीति । कर्तुः** फलाङ्गीकारे **यदु किञ्चेमाः प्रजा इति सावधारणश्रुतिविरोध** आत्रेयवचन**विरोधश्च स्यादित्यत उक्तं महदिति ।** देवादीनां **महत्फलं कर्तुस्त्वल्पम्** । अल्पस्य चामत्त्वविवक्षा **बहुलमुपलभ्येति भावः** ।

कुतः कर्तुः फलाङ्गीकार इत्यत आह यथोदितमिति । श्रुतिस्मृतिसद्भावादित्यर्थः । ताश्च भाष्यादावुदाहृता द्रष्टव्याः ।

शे० — ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ ॥ ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ ॥ बहुलमुपलब्धेरिति । अनुदरा कन्या, अलोमिकैडिक इत्यादाविति शेषः ॥ भाष्यादाविति । 'ज्ञानादिदानं देवानां विष्णुना साधु चोदितम् । वेदेषु तेषां विहितं तत्राचार्यो महत्तरः । विहितः सहकारित्वे सहकार्यन्तरं प्रजाः । पातृत्वेन यथा राज्ञो यथा शिष्या गुरोरपि । तस्माच्छ्रुतं फलं तासामाचार्याणां महत्तरम् । ततो महत्तरं प्रोक्तमि'ति वाराहवचनं भाष्योदाहृतम् । 'त्वरयैव मनुष्याणां सिद्धिरत्वरयैव तु । देवानां तत्प्रसादेन मुक्तिरेव सतां नृणमि'त्यादिपदोपात्तन्यायविवरणोदाहृतश्रुत्यादिवाक्यमित्येवमाद्याः श्रुतिस्मृतयो भाष्यन्यायविवरणोदाहृता द्रष्टव्या इत्यर्थः ।

प० — एवं चेत्यनुवादः । तथापीति व्याख्या ॥ अस्यार्थस्येति । शुभाशुभफलं क्रमाद्देवासुराणां महदित्यस्यार्थस्येत्यर्थः । श्रुतीति । स्वामिन इत्यत्र भाष्योक्तश्रुतिविरोध इति भावः ॥ अल्पस्येति । लोके अल्प(स्वोनिः)स्वे निःस्व इति अल्पसु(खीन)खिनि न दुःखीति अल्प(ज्ञोनवि)ज्ञानेऽविद्वानित्यादेः वेदे च नाल्पे सुखमस्तीति नान्योऽतोऽस्ति द्रष्टेत्यादेर्दर्शनादिति भावः ॥ भाष्यादाविति । न्यायविवरणमादिपदार्थः ।

या० — बहुलमुपलब्धेति । अल्पस्वादौ निःस्वादिप्रयोगदर्शनादिति भावः ।

सु० — युक्तिमप्याह तस्मादिति ।

अनु० — तस्मान्निरयमानुष्यस्वर्गमुक्त्युपभोगिनः ॥

मानुषोत्तममारभ्य

कर्तुः शुभाशुभफलसद्भावादेव मानुषोत्तममारभ्य देवपर्यन्ता दैत्यपर्यन्ताश्च निरयाद्युपभोगिन इति युज्यते नान्यथेत्यर्थः । उक्तस्यापवादमाह देवास्त्विति ।

देवास्तु निरयं विना ॥

असुरास्तु विना मुक्तिं तमोऽन्धमपि चाप्नुयुः ॥

इति तत्त्वविवेकोक्तं स्वयं भगवतो वचः ॥ ३–४–७ ॥

अन्यफलोपभोगिनः । न केवलमसुराणां मुक्त्यभावः किन्त्वन्धन्तमोऽपि चाप्नुयुः ।

**एतदुक्तं** भवति । मनुष्योत्तमास्तावन्निरयमानुष्यस्वर्गमुक्तीः प्राप्नुवन्ति । **देवाश्च मानुष्यस्वर्गमुक्तीः** । असुराश्च स्वर्गमानुष्यनिरयान्धतमसानि । **न च निरयादीनि निर्निमित्तानि** । **न च** स्वकृतपापादीनि विना **निमित्तमस्ति** । तस्मात्कर्तुरप्यस्ति शुभाशुभफलप्राप्तिरिति ज्ञायते । अन्यथा **निरयाद्यभावप्रसङ्गात्** । **न च** वाच्यं सुरासुराणां कर्तृत्वप्रयुक्तफलाभावेऽपि प्रेरणनिमित्तफलसद्भावान्मुक्त्याद्युपपत्तिरिति । देवानां मानुष्यप्राप्तेरयोगात् । दैत्यानां स्वर्गादिप्राप्तेरनुपपत्तेः । सर्वथा मनुष्याणां निरयादिप्राप्तेरसंभवादिति । तदिदमुक्तं मानुषोत्तममारभ्येति, मनुष्योत्तमानामादिन्योक्त्या, निरयाद्यनेकफलोक्त्या च । वचोऽस्तीति शेषः । ॥ ३–४–७ ॥

**शे०**— ननु च मनुष्योत्तमादीनां निरयादिमत्त्वस्यैवासिद्धेः सिद्धौ वा निर्निमित्तकस्यैवोपपत्तेः सनिमित्तकत्वेऽपि वा स्वकृतपापादिव्यतिरिक्तयत्किञ्चिन्निमित्तप्रयुक्तत्वोपपत्तेः कर्तृत्वप्रयुक्तफलाभावेऽपि प्रेरणादिनिमित्तफलसद्भावादन्यथोपपत्तेश्च नानया युक्त्या कर्तुः फलसिद्धिरित्यत आह **एतदुक्तं भवतीति** । मानुष्यस्वर्गमुक्तीरित्यादौ प्राप्नुवन्तीत्यनुवर्तते । सकलप्रमाणप्रमितत्वादस्यार्थस्य नापन्हवः संभवतीति भावः ॥ **न चेति** । तथा सति कादाचित्कत्वानुपपत्तेरिति भावः ॥ **न चेति** । दृष्टादृष्टपरित्यागकल्पनाप्रसङ्गादिति भावः । अन्यथासिद्धिमाशङ्क्य निषेधति **न चेति** ॥ **देवानामिति** । मनुष्यप्राप्तेरशुभफलत्वाद्देवानां चाशुभफलाभावस्य 'अशुभत्वं शुभेऽप्येषां स्वातन्त्र्यात्प्रीतितो हरेः । आज्ञया चान्यगं नैव भोगाय भवति क्वचिदि'त्यादिनोक्तत्वान्न देवानां मानुष्यप्राप्तिर्युक्तेत्यर्थः ॥ **दैत्यानामिति** । तेषां शुभकर्मप्रेरकत्वाभावेन तत्फलीभूतस्वर्गादिप्राप्तेरयोगादित्यर्थः ॥ **सर्वथेति** । तेषामन्यप्रेरकत्वस्यैवाभावादित्यर्थः । (कर्तृत्वेनैव फलमङ्गीकार्यमिति भावः) । मनुष्याणां निरयादिप्राप्तेः सर्वथाऽसंभवस्य मूलाभिप्रेततां ज्ञापकोक्त्या परिहरति **मनुष्योत्तमानामिति** । तत्रैव ज्ञापकान्तरमाह **निरयाद्यनेकेति** । निरयादिचतुर्विधेत्यर्थः ॥ ३–४–७ ॥

**स०** — **देवानामिति** । मानुष्यप्राप्तेरशुभफलत्वात् देवानां चान्यगताशुभफलभाक्त्वस्य 'अशुभत्वं शुभेऽप्येषां स्वातन्त्र्यात प्रीतितो हरेः । आज्ञया चान्यगं नैव भोगाय भवती'त्यादिनोक्तत्वादित्यर्थः ॥ **दैत्यानामिति** । तेषां शुभप्रेरकत्वाभावेन तत्फलीभूतस्वर्गादिप्राप्तेरयोगादित्यर्थः ॥ **सर्वथेति** । तेषां प्रेरकत्वस्यैवाभावादित्यर्थः । मानुषाणां निरयादिप्राप्तिः सर्वथा न संभवतीत्येतत्कथं मूलादवगम्यत इत्यत आह **मनुष्योत्तमानामिति** । तेषामेव निरयादिचतुर्विधफलभाक्त्वादित्यर्थः ॥

॥ **इति तृतीये चतुर्थः** ॥

प० — मूले विवेकस्यास्फुटत्वादाह **एतदुक्तं भवतीति** ॥ **मानुष्यप्राप्तेरयोगादिति** । मानुषयोनिप्राप्तेर्विष्णुपूजादिरूपप्रेरणाफलत्वायोगादिति भावः ॥ **दैत्यानां स्वर्गादीति** । तत्प्राप्तेः शुभफलत्वेन दैत्यानां शुभप्रेरकत्वाभावादिति भावः ॥ **सर्वथेति** । अस्य पदस्यासंभवादित्यनेनान्वयः । तेषां परपुरुषाप्रवेशनात् तत्प्रेरकत्वाभावादिति भावः ॥ **फलोक्त्या चेति** । उक्तमिति पूर्वेणान्वयः ॥ ॥ ३-४-७ ॥

या० — **सर्वथा मनुष्याणामिति** । तेषामन्यप्रेरकत्वाभावादिति भावः ॥ ३-४-७ ॥

श्री० — **सर्वथा मनुष्याणामिति** । तेषां सर्वथा प्रेरकत्वाभावेन तत्प्रयुक्तफलाभावात्कर्तृत्व-प्रयुक्तमेव फलमङ्गीकार्यमिति भावः ॥ ३-४-७ ॥

॥ इति फलश्रुत्यधिकरणम् ॥

॥ अथ अनाविष्काराधिकरणम् ॥

सू० — ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥ ज्ञानदानं किमाविष्कारेण कार्यमुतानाविष्कारेणेति संशये पूर्ववदत्रापि पूर्वपक्षमत्यन्तहेयत्वाभावात्प्रपञ्चेनाह ज्ञानदा अपीति ।

अनु० — ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥

ज्ञानदा अपि चाचार्या विशेषात्फलमाप्नुयुः ।

न केवलं शिष्याः किन्तु ज्ञानदा आचार्या अपि ज्ञानफलमाप्नुयुः । तच्च विशेषाच्छिष्यादप्यतिशयेन । आचार्या इत्यनेनैव सिद्धे ज्ञानदा इति वचनं ज्ञानदानेनेति ज्ञापनार्थम् । चशब्दः परमाचार्यादिसंग्रहः । कुत एतदित्यत आह मुक्ताविति ।

मुक्तावष्टगुणं शिष्याद्गुरुराप्नोति शोभनम् ॥
तद्गुरुर्द्विगुणं तस्मात्सार्धं तावत्ततोऽपरे ॥
देवाः सहस्रगुणितं क्रमात्तस्माद्यथोत्तरम् ॥
ब्रह्मा महौघगुणितमेवं फलविनिर्णयः ॥
इत्याह भगवांश्छास्त्रे गुरुवृत्ताभिधे स्वयम् ॥

शिष्यात्, शिष्यस्य यच्छ्रवणफलं ततोऽष्टगुणं गुरुर्ज्ञानदानेनाप्नोति । तद्गुरुर्गुरोर्गुरुस्तस्माद्गुरुफलाद्द्विगुणं फलमाप्नोति । सन्तानकारणत्वात् । ततः परमगुरोरपरे गुरवः स्वशिष्यफलापेक्षया सार्धं तावत् अध्यर्धं फलमाप्नुवन्ति । यथोत्तरं तस्मात्क्रमादित्यध्यर्धप्राप्तिक्रमाद्देवाज्ञानप्रवर्तकत्वात्सहस्रगुणितम् । यथोत्तरं तस्मात्क्रमादिति ब्रह्मा महौघगुणितमित्यनेनापि संबध्यते । सहस्रमहौघशब्दावुपलक्षणार्थौ । परम्पराया अनियतत्वात् ।

आगमसिद्धेऽत्रार्थे युक्तिरप्यस्तीत्याह युक्तं च तदिति ।

युक्तं च तत्

प्रतिग्रहीतुः शिष्यस्य ज्ञानफलादप्याचार्यस्य ज्ञानदानफलमधिकमित्येतद्युक्तिसिद्धं च । तां युक्तिं सूचयति नेति ।

न गोदाता गोमात्रफलमाप्नुयात् ॥

प्रतिग्रहीतुर्हि गोमात्रफलम् । गोदाता न गोमात्रफलवान्भवति । किन्तु महाफलं स्वर्गादिकं च प्राप्नोति । यथैतत्तथा प्रकृतेऽपीत्यर्थः । अयमत्र प्रयोगः । ज्ञानदाता दत्तवस्तुफलादप्यधिकदानफलवान्पुरुषार्थहेतुवस्तुदातृत्वाद्गोदातृवदिति ।

**ज्ञानफलादप्याचार्यस्य ज्ञानदानफलमधिकमित्यत्र भगवद्गीतासंवादमाह** य इममिति ।

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ॥
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥
भविता न च मे तस्मादन्यः प्रियतमो भुवि ॥
इत्याह भगवान्

**अध्येष्यत इत्युत्तरवाक्यमत्र पठनीयम् ।**

**यत एवं ज्ञानदानं तत्सम्प्रदायप्रवर्तनं च महाफलम् । अतो बहूनां ग्रहणायाविष्कारेण ज्ञानदानं कार्यमिति प्राप्ते सिद्धान्तमाह** एवमपीति ।

एवमपि

**सत्यं ज्ञानदानमुक्तप्रकारेण महाफलम् । तथाऽपि नाविष्कारेण कार्यं कुत इत्यत आह** पात्रमिति ।

पात्रमपेक्ष्यते ॥ ३-४-९ ॥

**दानफलेनेति शेषः । पात्रे क्रियमाणं खलु दानं फलायालम् । नापात्रे । प्रत्युत प्रत्यवायस्यैव हेतुः । आविष्कारेण ज्ञानदाने चायोग्यानामपि तत्प्राप्तिर्भवति । सा च प्रतिषिद्धेति भावः ॥ ३-४-९ ॥**

शे० — ॐ **अनाविष्कुर्वन्नन्वयात्** ॐ ॥ **अत्यन्तहेयत्वाभावादिति** । अवधारणांशमात्रस्य प्रमाणविरुद्धतयाऽसंग्राह्यत्वेऽप्याविष्करणांशमात्रस्य प्रमितत्वेन संग्राह्यतयाऽत्यन्तहेयत्वाभावादित्यर्थः । गुरुफलस्य शिष्यापेक्षयाऽष्टगुणताया बाधितत्वाच्छिष्यपदं लक्षणया तत्फलपरत्वेन व्याख्याति **शिष्यादिति** । द्विगुणत्वेन तत्फलस्य किं कारणमित्यत आह **सन्तानेति** । मूलकारणत्वादित्यर्थः । सार्धं तावदित्येतदनूद्य व्याख्याति **सार्धं तावदिति** । देवाः सहस्रगुणितमित्युक्तं यद्देवफलस्य श्रवणादिसाध्यशिष्यमौक्तफलापेक्षया सहस्रगुणितत्वं तत्प्रकारस्यानुपदर्शनात्तदनुपपत्तिमाशङ्क्य क्रमात्तस्माद्यथोत्तरमित्यस्यैव तत्प्रकारोपदर्शकत्वान्नानुपपत्तिरिति भावेनान्वयोपदर्शनपूर्वकं तद्व्याकुर्वन्नेव सहस्रगुणितत्वोपपादकतया तद्योजयति **यथोत्तरमित्यादिना** ॥ **ज्ञानेति** । तत्संप्रदायेत्यर्थः । नन्वेवं सति ब्रह्मफलस्य ब्रह्मा-महौघगुणितमिति यच्छ्रवणादिसाध्यशिष्यमौक्तफलापेक्षया महौघगुणितत्वमुक्तं तदनुपपन्नं प्रसज्यते । तत्प्रकारोपदर्शकस्यान्यस्याभावादित्यतो न केवलं क्रमात्तस्माद्यथोत्तरमित्यस्य देवफलसहस्रगुणितत्वप्रकारोप-

दर्शकतया तदन्वितत्वमेव । किन्तु ब्रह्मा महौघगुणितमित्युक्ततत्फलमहौघगुणितत्वप्रकारोपदर्शकतया तदन्वितत्वमपीति न तदनुपपत्तिप्रसङ्गोऽपीत्याशयेन तदन्विततयाऽपि तद्योजयति **यथोत्तरमिति**। देवाः सहस्रगुणितं ब्रह्मा महौघगुणितमिति विशेषोक्त्या श्रवणादिसाध्यसकलशिष्यमौक्तफलापेक्षया प्राप्तं देवानां मौक्तफलस्य सहस्रगुणितत्वनियमं ब्रह्मफलस्य महौघत्वनियमं चापाकरोति **सहस्रमहौघशब्दाविति**। अयमर्थः । देवफलस्य ब्रह्मफलस्य च श्रवणादिसाध्यशिष्यमौक्तफलापेक्षया सहस्रगुणितत्वमहौघगुणितत्वसद्भावमात्राभिप्रायेण तत्फलयोः सहस्रगुणितत्वाभिधानं न तु देवफलस्य सहस्रगुणितत्वमेव । ब्रह्मफलस्य च महौघगुणितत्वमेवेति तन्नियमाभिप्रायं क्वचिद्देवफलस्य सहस्रापेक्षया न्यूनसंख्यागुणितत्वस्य क्वचित्तदधिकसंख्यागुणितत्वस्यापि सत्त्वेन ब्रह्मफलस्य क्वचिन्महौघसंख्यापेक्षया न्यूनसंख्यागुणितत्वस्य क्वचित्तदधिकसंख्यागुणितत्वस्य सत्त्वेन तन्नियमासंभवादिति । तदेव कुत इत्यतो भवेदयं नियमो यदि श्रवणादिसाध्यशिष्यविशेषसंबन्धिमौक्तफलापेक्षया देवफलस्य सहस्रगुणितत्वकल्पिका ब्रह्मफलस्य च महौघगुणितत्वसम्पादिका प्रवर्तकपरंपरैव सकलशिष्यापेक्षया देवानां ब्रह्मणश्च नियता स्यात् । न च सा नियता किन्तु किञ्चिदपेक्षयैव सहस्रगुणितत्वमहौघगुणितत्वसम्पादिका प्रवर्तकपरंपरा अस्ति । क्वचिन्न्यूना क्वचिच्चाधिका । तत्र यच्छिष्यव्यक्त्यपेक्षया सहस्रगुणितत्वमहौघगुणितत्वसम्पादिकैव प्रवर्तकपरम्पराऽस्ति तत्र देवफलब्रह्मफलयोः सहस्रगुणितत्वमहौघगुणितत्वनिर्वाहेऽपि यच्छिष्यव्यक्त्यपेक्षया न्यूनाधिका वा सा स्यात् तत्र तत्फलयोर्न्यूनाधिकसंख्यागुणितत्वध्रौव्येण तन्नियमानुपपत्तेरित्याशयेनाह **परम्पराया इति** । प्रवर्तकपरम्पराया इत्यर्थः ।

**ज्ञानफलादिति** । मुक्तिगतानन्दरूपादित्यर्थः ॥ **गोमात्रमिति** । दुग्धरूपतद्रसमात्रमित्यर्थः ।

नन्वत्राचार्यस्य ज्ञानदानफलतया मुक्तिमात्रं श्रूयते । न तु तस्य शिष्यज्ञानफलापेक्षयाऽऽधिक्यमिति कथमस्य वाक्यस्य तत्साधकतयोपन्यास इत्यतो नास्य केवलस्य विवक्षितार्थसाधकत्वाभिप्रायेणात्रोपन्यासः किन्तु 'अध्येष्यते च य इमं धर्म्यं संवादमावयोः । ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिरि'त्युत्तरवाक्यसहितस्यैवेत्यतो युक्त एव तत्साधकतयोपन्यास इत्याशयेनाह **अध्येष्यते चेति** । यद्यप्यत्र ज्ञानिनो भगवदिष्टत्वोक्त्या मोक्षमात्रं सिध्यति न तु तन्मोक्षादाचार्यमोक्षस्यातिशय इति नोत्तरवाक्यसहितस्यापि विवक्षितार्थसाधकत्वं संभवति । तथाऽपि 'मुक्तिर्ज्ञात्वाऽपि विष्णुं स्याच्छास्त्रं श्रुत्वा ततोऽधिकम् । मुक्तौ सुखं तत्पठतस्ततोऽप्यधिकमिष्यते । व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् । ततोऽधिकं तु देवानां मुख्यव्याख्याकृतो यत' इति 'य इममि'त्यादिवाक्यद्वयार्थविवरणरूपगीतातात्पर्योदाहृतप्रमाणाच्छिष्यश्रवणमोक्षापेक्षयाऽऽचार्यज्ञानदानफलमोक्षस्यातिशयसिद्ध्यभिप्रायेण गीतावाक्यस्य संवादतयोपन्यासो युक्त इति ध्येयम् ॥ ३-४-९ ॥

प० — ॐ **अनाविष्कुर्वन्नन्वयात्** ॐ ॥ आदिपदस्वारस्याय वाक्यद्वयतया योजनामाह ज्ञानफलमाप्नुयुः । **तच्च विशेषाच्छिष्यादपीति** । गुरुपरंपरोक्त्या सूचितं हेतुं स्वयमाह **सन्तानकारणत्वादिति** । उक्तमिति पूर्वेणान्वयः । **सन्तानः** शिष्यसन्ततिः । सार्धं तावदित्यनुवादः अध्यर्धमिति व्याख्या । अर्धेनाधिकं तावत्फलमित्यर्थः । प्रागुक्तो हेतुरत्रापि ज्ञेयः यथोत्तरं तस्मात्क्रमादित्यन्वयप्रदर्शनेन मूलानुवादः । अध्यर्धप्राप्तिक्रमादिति व्याख्या । व्याख्यातार्थं पदमनुवदति **यथोत्तरं तस्मात्क्रमादिति** । अध्यर्धक्रमादित्यर्थः ॥ **इत्यनेनापि संबध्यत इति** । ब्रह्मा तस्मात्क्रमाद्वाणीफलादध्यर्धं तावत्फलं प्राप्नोतीत्येवं ध्येयमित्यर्थः । नन्वेवं चेत्तर्हि सहस्रगुणितं महौघगुणितमिति कथं निर्धारणोक्तिः अध्यर्धक्रमादित्युक्तक्रमे स्वावरप्राप्यफलापेक्षयाऽध्यर्धफलप्राप्तिपक्षे अधिकगुणितफलप्राप्तेरपि संभवादित्यत आह **सहस्रमहौघशब्दाविति** । तथाच स्वावरस्य यावत्प्राप्यमध्यर्धं तावत्फलं ततोऽधिकस्येत्येवं ब्रह्मपर्यन्तं ज्ञेयमित्यर्थः । ननु सहस्रमहौघशब्दौ यथाश्रुतावेव ग्राह्यौ नोपलक्षकतया व्याख्येयौ सहस्रमहौघावधिभूतं यत्किञ्चिदेव प्राप्यं फलमुपादाय व्याख्याने महौघत्वादेरुपपत्तेरित्यत आह **परंपराया अनियतत्वादिति** । संप्रदायप्रवर्तने परंपराया अनियतत्वात् । तस्मा(त् शिष्यप्राप्यफला)दुपदिशति तत्फलादध्यर्धफलमुपदेष्टा प्राप्नोतीत्येवं व्याख्यानं युक्तं न त्वेतावदिति निर्धारणमित्यर्थः । ज्ञानदानफलमेवात्र मूले प्रतीयते न ज्ञानफलमित्यत आह **इत्युत्तरवाक्यमिति** । अष्टादशेऽध्याये गीतायां प्रियतरो भुवीत्यनन्तरं 'अध्येष्यते च य इमं धर्म्यंसंवादमावयोः । ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिरि'ति श्लोकोऽप्यत्र मूले पठनीय इत्यर्थः । तथाच मुक्तौ शिष्यप्राप्यसुखादधिकं सुखमाचार्यस्य सुज्ञानम् । न च तस्मादित्यादिवाक्यशेषादिति भावः । एवंशब्दार्थः सत्यमित्यादि ॥ **पात्रे क्रियमाणं खलु दानं फलायेति** । 'अथो(प)शमेनोपरता मनुष्या' इत्यादिवचनादिति भावः ॥ **प्रत्युतेति** । 'मानस्तेनेभ्य' इत्यादिश्रुतौ अयोग्योपदेशस्य निषेधादिति भावः ॥ ३-४-९ ॥

या० — ॐ **अनाविष्कुर्वन्नन्वयात्** ॐ ॥ **ज्ञानप्रवर्तकत्वादिति** । ज्ञानसम्प्रदायप्रवर्तकत्वादित्यर्थः । ततश्चायमर्थः । मनुष्योत्तमादिरूपस्य शिष्यस्य यच्छ्रवणफलं तत्सहस्रगुणितं फलं तत्सम्प्रदायप्रवर्तकः कश्चिन्नीचो देवः प्राप्नोति । क्रमेण तदुत्तमास्तु देवाः स्वस्वावरसम्प्रदायप्रवर्तकदेवफलापेक्षयाऽध्यर्धफलं प्राप्नुवन्ति । ब्रह्माऽप्यनेन क्रमेण प्राप्तं यत्सरस्वत्यादिफलं तदध्यर्धमेव फलमाप्नोतीति । नन्वेवं मध्यस्थदेवफलेषु न सहस्रगुणितत्वं ब्रह्मफले वा न सरस्वत्यादिफलापेक्षया महौघगुणितत्वम् । उक्तक्रमेण गणनायामाधिक्यस्यैवोभयत्र प्राप्तेरित्यत आह **सहस्रमहौघशब्दाविति** । तथा च नीचदेवफलमारभ्य ब्रह्मफलपर्यन्तं यस्मिन्यस्मिन्देवफले या यासंख्योक्तक्रमेण प्राप्ता

भविष्यति तत्त्परावित्यर्थः । ननु यथा नीचः सम्प्रदायप्रवर्तको देवो मनुष्योत्तमादिरूपशिष्यश्रवण-फलापेक्षया सहस्रगुणितं फलमाप्नोति तथा ब्रह्माऽपि तत्फलापेक्षया साक्षादेव महौघगुणितं फलमाप्नोतीत्येव कस्मान्न व्याख्यायते । किं यथोत्तरं तस्मात्क्रमादित्यस्य ब्रह्मा महौघगुणितमित्यनेनापि संबन्धमभिधाय महौघशब्दस्योपलक्षणार्थत्वकल्पनयेत्यत आह **परम्पराया इति** । देवानां सम्प्रदाय-प्रवर्तन इति शेष । तनश्च यथोत्तरं तस्मात्क्रमादित्यस्य ब्रह्मा महौघगुणितमित्यनेनाप्यन्वयमभिधायैव ब्रह्मणः फलं व्याख्येयम् । नोक्तरीत्या साक्षात् येन महौघशब्द उपलक्षणार्थो न स्यादिति भावः ॥ **ज्ञानफलादपीति** । मुक्तिगतानन्दरूपादित्यर्थः । एवमग्रेऽपि ॥ **गोमात्रमिति** । गोरसमात्रमित्यर्थः । नन्वत्राचार्यस्य ज्ञानदानफलं मुक्तिरित्येव प्रतीयते न तस्य शिष्यज्ञानफलापेक्षयाऽऽधिक्यमत आह **अध्येष्यत इति** । 'अध्येष्यते च य इमं धर्म्यं संवादमावयोः । ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिरि'ति वाक्यमित्यर्थः । तेन तस्य मुक्तावानन्ददः स्यामिति वाक्यशेषोऽत्राभिप्रेतः । मुक्तौ सुखं तत्पठन इति वचनात् । ततश्चैतच्छ्लोकोक्तशिष्यज्ञानफलापेक्षया पूर्वश्लोकोक्ताचार्यज्ञानफलस्याधिक्यं ज्ञातु शक्यमेव । न च तस्मान्मनुष्येष्वित्यादिवचनादिति भावः ॥ ३-४-९ ॥

विरक्तिभक्तिध्यानोत्थज्ञानाद्यः श्रीनिकेतनः ॥ प्रसीदति निजे भवते स नः प्रीतोऽस्तु साधनैः ॥

इति श्रीवेदेशपूज्यपादशिष्येण यदुपतिना विरचितायां सुधाटिप्पण्यां

---

तृतीयाध्यायस्य चतुर्थः पादः ॥ ३-४ ॥

श्री० ॐ **अनाविष्कुर्वन्नन्वयात्** ॐ ॥ **कुत एतदिति** । एतत्प्रमेयं कुतः प्रमाणात्प्रतिपत्तव्यमित्यर्थः । उपलक्षणकरणनिमित्तमाह **परम्पराया अनियतत्वादिति** । गुरुशिष्यपरंपराया इत्यर्थः । यं शिष्यमारभ्य देवानां सहस्रगुणितफलवत्त्वं तदपेक्षया ब्रह्मणो महौघफलवत्त्वं तस्यैव शिष्यस्य पुनः स्वशिष्यं प्रति गुरुत्वे तस्यापि पुनर्गुरुत्वे उक्तसंख्यायां परिनिष्ठाया अयोगेन तत्क्रमेण गणनायां या संख्या प्राप्नोति तत्परावेव सहस्रमहौघशब्दावित्याशयः ॥ **गोमात्रमिति** । क्षीरदध्यादिरूपगोरसमात्रमैहिकमेव फलं नामुष्मिकं स्वर्गादिकमस्ति । प्रत्युत यावद्गोरोमसंख्याकनरकस्यैव सद्भावादिति भावः ॥ **गोमात्रफलवान्न भवतीति** । इह जन्मनि गोदानकरणेनोत्तरजन्मनि यथेष्टगोदत्वस्या गोरसप्राप्तिमात्रफलवान्न भवतीत्यर्थ ॥ **दत्तवस्तुफलादपीति** । इह जन्मनि दत्तं यद्गवादिरूपं वस्तूत्तरजन्मनि तज्जातीयगवादिप्राप्तिरूपं यत्फलं तस्मादप्यधिकं यद्दानफलं स्वर्गादि तद्दानित्यर्थः ॥ **ज्ञानफलादपीति** । शिष्यस्य श्रवणफलादपीत्यर्थः ॥ **प्रतिषिद्धेति** । मानस्तेभ्य इति भाष्योदाहृतश्रुतिप्रतिषिद्धेत्यर्थः ॥ ३-४-१० ॥

॥ **इति अनाविष्काराधिकरणम्** ॥

\

## ।। ऐहिकाधिकरण–मुक्तिफलाधिकरणे ।।

**सु०**—ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ।। ॐ एवं मुक्तिफलानियमस्तदवस्थावधृते स्तदवस्थावधृतेः ॐ ।। **अधिकरणद्वयस्य तात्पर्यं सङ्क्षेपेणाह** एवमेवेति ।

**अनु०** — ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ।। ३–४–१० ।।
ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ । ३–४–११।।
एवमेवाविरोधेन प्रारब्धस्यैव कर्मणः ।।
ज्ञानं दृष्टफलं प्रोक्तं मुक्तिश्चैवेह लभ्यते ।।३–४–१०।११।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
तृतीयाध्यायस्य चतुर्थः पादः ।। ३–४ ।।

**प्रारब्धस्य कर्मणोऽविरोधेनैव** ज्ञानं दृष्टफलं **प्रोक्तमिति प्रथमाधिकरणतात्पर्यम्** । **दृष्टं च तत्फलं चेति दृष्टफलम्** । श्रवणादिसम्पूर्त्यनन्तरमेव **ज्ञानमुत्पद्यते** । **यदि प्रारब्धकर्मप्रतिबन्धकं नास्ति** । **तस्मिंस्तु सति तदवसान इति** । **एवमेव मुक्तिश्चैवेह लभ्यत इति द्वितीयस्य** । **यस्मिन्देहे ज्ञानमुत्पन्नं तत्पातानन्तरमेव मुक्तिर्लभ्यते प्रारब्धकर्मप्रतिब(न्धाभावे)न्धकाभावे** । **तद्भावे तु तदवसान इति** ।। ३–४–१०।११ ।।

---

**इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ।।**
**कृतायां टीकायां विषमपदवाक्यार्थविवृतौ तृतीयाध्यायेऽस्मिंश्चरमचरणः पर्यवसितः ।।३–४।।**

**शे०** — उत्तरटीकार्थस्तु स्पष्टः ।। ३–४–१०।११ ।।
यद्विद्याधीशगुरोः शुश्रूषान्या न रोचते तस्मात् ।। अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ।।

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां
श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्यस्य केशवस्य कृतौ
श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां
तृतीयाध्यायस्य चतुर्थः पादः ।। ३–४ ।।

**प०** — **ऐहिकम्** ।। **ज्ञानं दृष्टफलमिति** । ज्ञानरूपं दृष्टं फलमित्यर्थः ।।३।४।१०,११।।
**इति चतुर्थः पादः ।।३।।४।।**

श्री०— ॐ **ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्** ॐ ॥ ॐ **एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः** ॐ ॥ दृष्टफलमित्येतद्विवृणोति **श्रवणादीति** ॥ **सम्पूर्त्यनन्तरमेवेति ।** तस्मिन्नेव जन्मनीत्यर्थः । ज्ञानमपरोक्षम् । प्रतिबन्धकमपरोक्षज्ञानोत्पत्तिप्रतिबन्धकमित्यर्थः ॥ **तद्भाव इति ।** मुक्तिप्रतिबन्धकस्य देहान्तरापादकस्य प्रारब्धस्य कर्मणः सद्भावे त्वित्यर्थः ॥ **तदवसान इति ।** भोगेन प्रारब्धकर्मावसाने मुक्तिर्लभ्यत इत्यर्थः ॥ ३–४–१०।११ ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितेऽगृहीतसुधावाक्यार्थविवरणे

तृतीयाध्यायस्य चतुर्थः पादः ॥ ३–४ ॥

**॥ इति तृतीयाध्यायस्य चतुर्थः पादः ॥**

## इति तृतीयाध्यायः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---



॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

सु०— यदीयचरणांभोजच्छायामाश्रित्य निर्वृताः ॥
नंदंति सततं मुक्ताः संश्रये तं श्रियः पतिं ॥ १ ॥

फलं निगद्यतेऽस्मिन्नध्याय इति भाष्यं । फलनिरूपणस्येदानीं का संगतिरित्यत आह समन्वयेति ।

अनु०— समन्वयाविरोधाभ्यां सिद्धे वस्तुनि, साधने ॥
विचारितेष्वशेषेषु साधनेषु, विशेषतः ॥
नित्यशःकार्यमत्यंतमवश्यंभावि साधनं ॥
चिंत्यते प्रथमं तत्र

---

समन्वयाविरोधाभ्यां प्रथमद्वितीयाध्यायप्रतिपादिताभ्यां, परब्रह्मादिरूपे वस्तुनि सिद्धे सति, साधने साधनविषये तृतीयाध्याये, अशेषेषु मोक्षसाधनेषु, विचारितेषु सत्सु, फलप्रतिपादनस्यावसरप्राप्तिः । जिज्ञासितेष्वर्थेष्वन्येषां विचारितत्वादस्यैवावशिष्टत्वात् । अतो मोक्षलक्षणं फलमत्राध्याये निगद्यते इति वाक्यशेषः ।

पादचतुष्टयप्रतिपाद्यं संगतिं च लाघवायैकत्रैव वक्ष्यति । ततश्च फलविषयेऽस्मिन्नध्याये कर्मनाशाख्यं फलं प्रथमपादे निगद्यत इत्युक्तं भवति । तस्यापवादमाह विशेषत इति । तत्र (अत्र)चतुर्थस्य प्रथमपादे, प्रथमं कैश्चित्सूत्रैः, साधनमेव चिंत्यते । कथं । विशेषतः परमादरेण, नित्यशो नैरंतर्येण च कार्यमिति । कुतः । यतो मोक्षसिद्धावत्यंतमवश्यंभावि ।

इदमुक्तं भवति । तृतीये अध्याये यानि साधनानि विचारितानि तेष्वेव केषांचित्परमादरनैरंतर्याभ्यामनुष्ठेयत्वमत्रादौ प्रतिपाद्यते । तथाऽनुष्ठान एव मोक्षस्य भावादन्यथाऽभावात् । एतज्ज्ञापना(यैव)य तृतीये इदमनुक्त्वाऽत्रेदमुच्यते । तत्रानुक्त्या हि ततो वैलक्षण्यं ज्ञायते । फललक्षणे चोक्त्या फलान्तरङ्गत्वम् । अध्यायादिव्यवस्था च प्रायिकत्वादुपपद्यत इति ॥

**शे०—**

सर्वाभीष्टप्रदं रामं सर्वानिष्टविनाशकं ॥ जानकीजानिमनिशं वंदे सद्गुरुवंदितं ॥ १ ॥

वेदव्यासं तथानंदतीर्थं जयमुनिं गुरुं ॥ व्यासतीर्थं गुरून्साक्षादभिवंद्य यथामति ॥ २ ॥

सुधाया भावगूढायास्तुरीयाध्यायपंचिका ॥ प्रकाश्यते केशवेन गुरुराजोक्तमार्गतः ॥ ३ ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् । अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा॥४॥

एतदध्यायगतपादप्रतिपाद्यगुणविशिष्टभगवत्स्तुतिपूर्वकं तत्संश्रयणरूपं मंगलमाचरति **यदीयेति** । **मुक्ता** भगवज्ज्ञानभोगाभ्यां निवृत्तसमस्तानिष्टकर्माणस्तथा **मुक्ताः** स्वोत्तमप्रवेशेन ब्रह्मनाड्योत्क्रमेण वा परित्यक्तदेहाः स्वोचितेनार्चिरादिना वा पथा वैकुंठलोकवासिभगवच्चरणांभोजच्छायां, **आश्रित्य** हिरण्यगर्भेण सह प्राप्य, **मुक्ता** भिन्नलिङ्गशरीरास्तथा **मुक्ता** विध्वस्तप्रकृतयस्तथा **मुक्ता** अत्यंतनिवृत्तानिष्टास्तथा **मुक्ता** अपसृतेश्वरेच्छावरणास्तत एव **निर्वृताः** सम्यगाविर्भूतानंदादिगुणा यदीयचरणांभोजच्छायामाश्रित्य भगवत्समीप एव तमुपासीना इति यावत् **नंदंति** स्वरूपेण वा लीलागृहीतविग्रहैर्वा सङ्कल्पमात्रसाध्यान् दिव्यान्भोगांस्तारतम्येन सततं भुञ्जते । न कदाचित्पुनरावर्तन्त इति यावत् । सकलवाङ्मनसदेवतायाः श्रीदेव्याः पतिमहं संश्रय इति योजना । त्यदादीनि चेति वृद्धसंज्ञायां वृद्धाच्छ इति यद् शब्दात् शैषिके छप्रत्यये तस्य ईयादेशे यदीयेति रूपसिद्धिः । छायांतत्वेऽपि तत्पुरुषस्य पूर्वपदार्थबाहुल्यस्यागम्यमानत्वेन नपुंसकत्वाप्राप्तेर्यदीयचरणांभोजच्छायामित्येतत्साधु । नन्वेकवाक्यत्वादिसिद्धयेऽध्यायप्रतिपाद्यस्यावश्यं वक्तव्यत्वात्तदनुक्तिर्दोष इत्यतस्तस्य भाष्य एव प्रतिपादनात्तदनुक्तिर्न दोषायेत्यभिप्रेत्य तत्रानुक्तसंगतिप्रदर्शकतयोत्तरग्रंथमवतारयितुमध्यायप्रतिपाद्यप्रदर्शनपरभाष्यमनूद्य संगतिशंकामुत्थापयति **फलमिति** ।

मूले विचारितेष्वित्यतःपरमवसरप्राप्तं मोक्षलक्षणं फलमत्र निगद्यत इत्यपेक्षितशेषपूरणेन साकाङ्क्षत्वप्रयुक्तवाक्याभासतां परिहरन् फलनिरूपणस्यावसरप्राप्ततां चोपपादयन् समन्वयेत्यादिग्रन्थं व्याचष्ट **समन्वयेति** । मूले समन्वयाविरोधाभ्यामिति तदर्थयोरध्याययोरुपलक्षणमिति भावेन लक्षणाबीजसंबन्धं दर्शयति **प्रथमेति** ॥ **सिद्ध इति** । अशेषजगत्कर्तृत्वनिर्दोषाशेषसद्गुणत्वरूपलक्षणविशिष्टतया निर्णीत इत्यर्थः । टीकायां ब्रह्मरूपे वस्तुनीति स्वरसः पाठः । तार्तीयटीकाग्रन्थानुसारात् ॥ **सतीति** । अनेन सिद्ध इति सति सप्तमीत्युक्तं भवति **साधनविषये तृतीयेऽध्याय इति** । अनेन मूले साधनशब्दस्तत्प्रतिपादकाध्यायोपलक्षक इत्युक्तं भवति ॥ **जिज्ञासितेष्विति** । जिज्ञास्यत्वेन प्रथमसूत्रप्रतिज्ञातस्वरूपसाधनफलेष्वित्यर्थः । न च ब्रह्मजिज्ञासेति कर्मषष्ठीपरिग्रहेण स्वरूपस्य जिज्ञास्यत्वप्रतिज्ञासिद्धावपि साधनफलयोः कथं तत्सिद्धिरिति वाच्यम् । प्रधानभूतब्रह्मवाचकेन ब्रह्मपदेनाप्रधान-

साधनफलयोरुपलक्षणस्याङ्गीकृतत्वेन तदुपपत्तेः । **अन्येषामिति** । स्वरूपसाधनानामित्यर्थः । तद्विचारस्य पूर्वकर्तव्यतायाश्च जन्मादिसूत्रोक्तहेतुरवधेयः ।

नन्वेवमस्याध्यायस्य फलरूपैकार्थप्रतिपादकत्वेनैकवाक्यत्वात्कथं पादभेद इत्यतः फलेऽप्यवान्तरभेदात्तत्प्रतिपादकतया युक्तः पादभेद इत्यभिप्रेत्य तथाऽप्येकवाक्यत्वादिसिद्धय एतत्पादप्रतिपाद्यस्य तत्सङ्गतेश्चावश्यंवक्तव्यत्वात्तदनुक्त्या भाष्यन्यूनत्वमेवेत्यत एतदध्यायगतपादचतुष्टयप्रतिपाद्यतत्सङ्गतिप्रतिपादकोत्तरग्रन्थेनैवैतत्पादप्रतिपाद्यतत्सङ्गत्योरपि सिद्धत्वान्न तदनुक्तिर्भाष्यन्यूनत्वापादिकेत्याशयवान् भाष्ये तदनुक्तौ निमित्तकथनपूर्वकमुत्तरग्रन्थानुसारेणैतत्पादप्रतिपाद्यतत्सङ्गती लाघवाय दर्शयति **पादचतुष्टयेत्यादिनोक्तं भवतीत्यन्तेन** । कर्मक्षयोत्क्रान्तिमार्गभोगरूपमित्यर्थः । सङ्गतिं अन्तर्भावलक्षणामानन्तर्यलक्षणां चेत्यर्थः । एकीकृत्य पादचतुष्टयप्रतिपाद्यतत्सङ्गत्योरेकत्र कथने निमित्तमाह **लाघवायेति** । **एकत्रैव** अस्यैवाध्यायस्य द्वितीये, 'कर्मक्षयस्तथोत्क्रान्तिरि'त्यादिनेति शेषः ॥ **तस्येति** । अध्यायपादप्रतिपाद्यस्येत्यर्थः ॥ **कैश्चित्सूत्रैरिति** । तदधिगम इत्येतत्प्राक्तनैरेतत्पादगतैरित्यर्थः ।

ननु तृतीयाध्याय एवाशेषमोक्षसाधनानां विचारितत्वेन पुनर्विचारस्य व्यर्थत्वात् । अत्राध्याये विचारयिष्यमाणसाधनानामादरनैरंतर्याभ्यामनुष्ठेयत्वे नियामकाभावेन पुनर्विचारस्य तत्सिद्ध्यर्थत्वायोगात् । तत्सिद्ध्यर्थत्वेऽपि वा तृतीय एव पुनस्तद्विचारेणापि तत्सिध्युपपत्त्या चतुर्थे तद्विचारानर्थक्याच्चत्रानुवृत्त्यत्रोक्तिभ्यामेव तत्सिद्ध्यर्थत्वस्याप्यदर्शनात्तत्फलाध्यायकर्मक्षयपादयोरपि साधनस्यैव विचारे चतुर्थः फलाध्यायः तत्राप्याद्यः कर्मक्षयपाद इत्यध्यायपादव्यवस्थानुपपत्तेर्नात्र साधनस्य विचार्यता संभवतीति न तथोक्तिर्भाष्यटीकायां युक्तेत्येताः शङ्काः क्रमेण परिहरन्नेव साधनस्य विचार्यतामुपपादयति **एतदुक्तं भवतीति** ॥ **प्रायिकत्वादिति** । यद्यप्यस्मिन्नध्याये फलस्येव कर्मनाशस्य प्रथमपादे बाहुल्येनाप्रतिपादनान्न प्रायिकत्वमस्ति तथाऽप्यध्याये फलस्येव पादेऽपि कर्मक्षयस्यानन्यार्थतया प्रतिपादनात्साधनस्य च फलार्थतया निरूपणात्प्राधान्यरूपं प्रायिकत्वमभिप्रेत्येयमुक्तिरिति ध्येयम् ।

**स०— पादचतुष्टयप्रतिपाद्यमिति** । कर्मक्षयोत्क्रान्तिमार्गभोगरूपमित्यर्थः । **सङ्गतिं** अन्तर्भावलक्षणामानान्तर्यलक्षणां वेत्यर्थः । **उपरि** द्वितीयपादे । **वक्ष्यति** । 'कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोगश्चतुष्टयम् । फलं मोक्ष इति प्रोक्तं क्रमात्पादेषु चोदितं' इत्यादिनेति शेषः । नन्वेवं फलाध्यायेप्यस्मिन् साधनप्रतिपादने कर्मनाशाख्यफलप्रतिपादकेप्यस्मिन् साधनप्रतिपादनेऽस्य साधनाध्यायत्वापत्त्या तृतीयः साधनाध्यायः चतुर्थः फलाध्याय इत्यध्यायव्यवस्था न स्यादित्यत आह **अध्यायादीति** । आदिपदेन पादव्यवस्थोक्तिः । अत्राध्यायव्यवस्थायां प्रायिकत्वं बाहुल्येन फलप्रतिपादकत्वम् । पादे तु साधनस्यैव बाहुल्येन प्रतिपादनात् प्रायिकत्वं उपदेश्यतया प्राधान्यमेव विवक्षितमिति ज्ञेयम् ।

**प०**— आराधितः साधनैर्यो मुक्तिं दद्याच्चतुर्विधाम् । तं वन्दे कमलानाथमभीष्टावा-(प्तये हरिम् ॥)प्तिसिद्धये ॥ मङ्गलमाचरति **यदीयेति** । **निर्वृताः** मुक्तक्लेशाः । **नन्दन्ति** सुखमनु-भवन्ति । **मुक्ताः** चतुर्विधमुक्तिमन्तः । यद्वा **निर्वृताः** क्षीणकर्माणः, **मुक्ताः** देहबन्धादिति पाद-द्वयार्थः । यदीयेत्यादिस्तृतीयपादार्थः । नन्दन्तीति चतुर्थपादार्थः । प्रतिपाद्यमनुक्त्वा सङ्गत्युक्तिरनव-सरदुःस्थेत्यत आह **फलमिति** ॥ **परब्रह्मादीति** । आदिपदेनाधिदैवाधिभूतादिग्रहः । साधन इत्यध्यायपरमेतदित्याह **साधने साधनविषय इति** । विषयसप्तमीयमित्युक्तं भवति । अवसरप्राप्तं व्यनक्ति **जिज्ञासितेष्विति** । प्रथमसूत्रे जिज्ञासाविषयतयोक्तेषु ब्रह्मलक्षणप्रमाणसाधनमोक्षेष्वित्यर्थः ॥ **सङ्गतिमिति** । पादानामिति योज्यम् ॥ **वक्ष्यतीति** । द्वितीयपादे ॥

**या०**—

श्रीशं प्रक्षीणकर्मौघैरुत्क्रान्तैरर्चिरादिना ॥ यथाप्राप्यं(यथायथं)भोगवद्भिर्मुक्तैः सेव्यं हरिं भजे ॥१॥

व्यासपादाम्बुजे ध्यात्वा मध्वमानससंस्थिते ॥ व्याकरिष्ये सुधाऽस्पष्टचतुर्थाध्यायफक्किकाः ॥ २ ॥

आद्ये श्लोके मुक्ता इत्यस्य कर्मणो देहाच्चेत्यर्थः । तेनाद्यद्वितीयपादार्थकथनम् । छायामाश्रित्य निर्वृता इत्यनेन मार्गगमनं ध्वन्यते । मार्गगतानामेव छायाश्रयणेन निर्वृतत्वस्य प्रसिद्धत्वात् । तेन तृतीयपादार्थसूचनम् । अत एव निर्वृता नन्दन्तीत्यनयोरर्थभेदः । मार्गेषु निर्वृता आनन्दपूर्णाः वैकुण्ठादिस्थानेषु भोगातिशयेन नन्दन्तीति । निर्वृता इत्यस्य संसारमार्गे गमनप्राप्तक्लेशवर्जिता इत्यर्थः । अतो न पौनरुक्त्यमित्याहुः ॥ **जिज्ञासितेष्विति** । जिज्ञास्यत्वेन प्रथमसूत्रोक्तेष्वित्यर्थः । तत्र ब्रह्मपदेन साधनफलयोरुपलक्षितत्वादिति भावः ॥ **सङ्गतिं चेति** । पादानां परस्परमिति शेषः ॥ **वक्ष्यतीति** । द्वितीयपादारम्भे 'कर्मक्षयस्तथोत्क्रान्तिरि'त्यादिनेति शेषः ॥ **ततश्चेति** । कर्मक्षयस्य प्रथमपादप्रति-पाद्यतया वक्ष्यमाणत्वादित्यर्थः ॥ **इत्युक्तं भवतीति** । अनेनाध्याहृतवाक्यस्थानां 'फलमत्र निगद्यत' इति पदानामावृत्तिं प्रथममिति वक्ष्यमाणस्यात्राप्यन्वयं च सूचयति । **फललक्षण इति** । फलाध्याय इत्यर्थः ॥ **प्रायिकत्वादिति** । प्राधान्यादित्यर्थः । तेनास्य पादस्य प्रायेण साधनप्रतिपादकत्वात्कथं कर्मक्षयरूपफलप्रतिपादकत्वमिति शङ्काऽनवकाशः ।

**श्री०**— **सङ्गतिं** । अन्तर्भावलक्षणामानन्तर्यलक्षणां वेत्यर्थः ।

**सु०**— ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ **अधिकरणोत्थानकारणं दर्शयति** श्रवणादीति ।

**अनु०**— ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥

श्रवणादिसकृत्क्रिया ॥

आवृत्तिर्वेति संदेहे

प्रथमं तत्रेति वर्तते । श्रोतव्यो मंतव्यो निदिध्यासितव्य इति दर्शनार्थं श्रवणादिकं विधीयते । तस्य श्रवणादेर्ज्योतिष्टोमादिवत्सकृत्क्रिया वा व्रीह्यवघातादिवदावृत्तिर्वेति संदेहे सति । उपलक्षणमेतत् । सकृत्क्रियेति पूर्वपक्षे च सतीत्यपि ग्राह्यं । इदमधिकरणमारभ्यत इति शेषः । पूर्वपक्षबीजं च न्यायविवरणे स्पष्टमवगंतव्यम् ।

सूत्रं व्याख्याति कर्तव्येति ।

कर्तव्याऽऽवृत्तिरेव हि ॥

उपदेशोऽतत्त्वमसीत्यादिर्ह्यसकृदेव यत् ॥

श्रवणादीनामिति वर्तते । हिशब्दो तत्त्वमसीत्युपदेशस्य प्रसिद्धत्वं द्योतयति । यदि हि शिष्येणावृत्तिर्न कर्तव्या तदा गुरोरसकृदुपदेशोऽनर्थकः स्यात् । तेन ज्ञायते कर्तव्या श्रवणावृत्तिरिति ।

शे० — ॐ आवृत्तिरसकृदुपदेशात ॐ ॥ उत्थानकारणमिति । विषयादिकमित्यर्थः । श्रवणादेः कर्तव्यत्वासिद्धौ सकृत्कर्तव्यत्वासकृत्कर्तव्यत्वादिविशेषविचारानुपपत्तेः तदुपपत्त्यर्थं विषय-वाक्योदाहरणेन तत्कर्तव्यत्वसिद्धिं दर्शयति श्रोतव्य इति । ननु सूत्रावतारिकारूपपूर्वपक्षस्यैव सिद्धांत-सूत्रप्रापकत्वात्तदनुक्तौ कथं संदेहोपदर्शनमात्रेण सिद्धान्तसूत्रप्रवृत्तिरित्यतः पूर्वपक्षोपलक्षणतया संदेह-भाष्यं व्याचष्टे उपलक्षणमेतदिति ॥ न्यायविवरण इति । 'श्रवणाद्यनावृत्त्याऽपरोक्षज्ञानोदये सर्वेषां सुशक्यत्वमिति गुण' इति न्यायविवरणे सुशक्यत्वरूपं पूर्वपक्षसाधकं स्पष्टमित्यर्थः ॥ वर्तत इति । यद्यपि श्रवणादीनामिति न पूर्वं श्रूयते यच्च श्रवणादीति श्रुतं तदपि सकृत्क्रियेत्यनेन समस्तं नात्रान्वेतुमर्हति । तथाऽपि समासे गुणभूतस्य तस्य बुध्या विवेकेनेयमनुवृत्तिरिति ध्येयम् ॥ हिशब्द इति । उपदेशोऽतत्त्वमसीत्येतद्वाक्यगत इत्यर्थः । अप्रयोजकत्वं परिहरति यदि हीति । आद्यो हिशब्दो हेत्वर्थ इत्याशयेनाह तेनेति । ज्ञापकश्चायमर्थो न कारक इत्याशयेनाह ज्ञायत इति ।

स० — ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ पूर्वपक्षबीजं वेति । श्रवणाद्यनावृत्त्याऽपरोक्ष-ज्ञानोदये सर्वेषां सुशकत्वमिति पूर्वपक्षबीजमित्यर्थः ।

प० — ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ उत्थानकारणमिति । अवतारिकारूपं सूत्रव्यावर्त्यसंशयादिकं दर्शयतीत्यर्थः ॥ इति वर्तत इति । पूर्वं तत्रेत्यस्य चतुर्थाध्याये प्रथमपाद इति प्रथममित्यस्य तदधिगम इत्यर्थतः पूर्वं कैश्चित्सूत्रैरिति व्याख्यानात् इह च साधनविचाररूप-सूत्रेषु प्रथममित्यर्थकतया पदद्वयमावर्तनीयमित्यर्थः । श्रुत्यर्थनिर्णायकत्वलाभायाह श्रोतव्य इत्यादि विधीयत इत्यन्तम् । ज्योतिष्टोमादिदृष्टान्तोक्तोभयविधसाधनदर्शनं संशयबीजमुक्तं भवति ॥ न्यायविवरण

**इति** । श्रवणाद्यनावृत्त्याऽपरोक्षज्ञानोदये सर्वेषां सुशकत्वमिति गुण इत्युक्तसु(खकरत्वयुक्तिरित्य)-शक्यत्वयुक्तिरित्यर्थः । तद्विवरणं च भाष्यटीकायामित्यर्थः ॥ **इति वर्तत इति** । बुद्ध्या विभज्य विपरिणम्य वर्तत इत्यर्थः ।

**या०— ॐ आवृत्तिरसकृदुपदेशात् ॐ॥ उत्थानकारणमिति** । संशयादिकमित्यर्थः । **न्यायविवरण इति** । 'श्रवणाद्यनावृत्त्याऽपरोक्षज्ञानोदये सर्वेषां सुशक्यत्वमिति गुण' इत्यनेनेति शेषः ।

**सु०— अनेन श्रवणावृत्तेः कर्तव्यता सिद्धा । त्रयाणामप्यावृत्तिं साधयल्लिंगाच्चेति सूत्रं पठित्वा तदभिप्रेतानि लिङ्गान्यागमवाक्येनैव दर्शयति** लिङ्गादित्यादिना ।

**अनु०— ॐ लिङ्गाच्च ॐ**

लिङ्गाल्लातव्यतः पूर्वमृजोर्ब्रह्मत्वतः शतात् ॥
शुश्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः ॥
सार्धं परार्धं विष्णोस्तु गुणान्भक्त्या सदोद्यतः ॥
तत्त्रिभागमुपासां च चक्रे संभृतमानसः ॥

लातव्य **आदातव्यः शिष्यैरुपासितव्यः । तस्मात्** । **ब्रह्मत्वत इति षष्ठीबहुवचनान्तात्तसिः । ब्रह्मत्वानां शतात्पूर्वमिति ऋजोर्विशेषणं । यस्यैतस्माद्ब्रह्मकल्पादारभ्य ब्रह्मकल्पानां शते गते ब्रह्मत्वं भविष्यति तस्मादिति** यावत् । **सार्धं परार्धमित्यत्यंतसंयोगे द्वितीया** ॥ तत्त्रिभागं **तस्य श्रवणकालस्य, तृतीयभागं कालं** । उपासां **मनननिदिध्यासनरूपाम्** । संभृतमानस इति **उपासितव्य एवार्थे धृतचित्तः** ।

दशमन्वंतरं शक्रपदयोग्यो गरुत्मतः ॥ पदयोग्यात्सुमनसःसुनंदो नाम चाशृणोत् ॥
उपासां चक्र उद्युक्तो मन्वन्तरचतुष्टयम् ॥ सूर्याचन्द्रमसोश्चैवपदयोग्यौ सुतेजसौ ।
सुरूपः शान्तरूपश्च मन्वन्तरचतुष्टयम् ॥ अशृण्वतां सुमनसो मन्वंतरमुपासतां ॥
ततः प्रोक्तास्तु ते सर्वे भक्त्योग्रतपआदयः ॥ अपश्यन्परमं विष्णुं तत्प्रसादेषिताः सदा ॥
इत्युक्तं विष्णुना साक्षाद्ग्रन्थे सत्तत्त्वसंज्ञिते ॥

**दश मन्वंतराणि यस्मिन्काले स तथोक्तः** ॥ गरुत्मतः पदयोग्यादिति । **गरुत्मतो यत्पदं तत्र योग्या**दित्यर्थः । सुतेजसावेव **सुप्रज्ञावेव न तु मंदौ** । अशृण्वतां **अशृणुतां । व्यत्ययो बहुलमिति द्विविकरणता । सुमनस एव** । मन्वंतरं **मन्वंतरावच्छिन्नं कालम्** । उपासतामुपासातां । **छांदसो वर्णविकारः** ।

**नन्वत्र श्रवणादिकालबाहुल्यमेव प्रतीयते । न पुनरावृत्तिः । श्रुतस्यैव वाक्यस्य पुनः श्रवणमित्यादिरूपा हि सेति । मैवं । एकेन वाक्येनावगतस्य तत्त्वस्य पुनः पुनस्तेनान्येन वा**

**अवगतिः श्रवणावृत्तिः । एवमेकया युक्त्याऽनुसंहितस्य भूयो भूयः तथाऽन्यया वाऽनुसंधानं मननावृत्तिरित्यभिप्रेतत्वात् ।**

**नन्वेवं चेत्सर्ववेदान्तप्रत्ययमित्यनेनैव गतमेमत् । सत्यम् । तस्यैवात्यन्तावश्यकत्व-प्रदर्शनाय पुनरारंभ इत्युक्तमेव । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ४ । १ । १ ॥**

**शे० — लिङ्गानीति ।** उग्रतपःप्रभृतिभिरावर्त्यमानत्वरूपाणीत्यर्थः ॥ **लातव्य इति ।** लातव्यनामेत्यर्थः । कथं तस्य नामत्वमित्यतो योगेन तदुपपादयति **आदातव्य इति ।** ला आदान इतिधातोरिति भावः । तत्त्वं चोपास्यतयेत्यभिप्रेत्य तद् व्याचष्टे **शिष्यैरुग्रतपःप्रभृतिभिरुपासितव्य इति ॥ बहुवचनान्तात्तसिरिति ।** आद्यादिभ्य उपसंख्यानादिति भावः ॥ **शतादिति ।** एकोन-शतादित्यर्थः ॥ **ऋजोर्विशेषणमिति ।** ततश्च पूर्वमित्येतत्पूर्वादिति व्याख्येयमित्युक्तं भवति । ब्रह्मत्वतः शतात्पूर्वमित्युक्तमेव विवृणोति **यस्येति ॥ शते गत इति ।** एकोनशते गत इत्यर्थः । एकोनशते ब्रह्मस्वतीतेष्विति सन्न्यायरत्नावल्यनुसारात् सार्धं परार्धमित्यस्यायमर्थः । एकोनशतब्रह्ममहाकल्पेभ्यः पूर्वं महाकल्पस्यादिमारभ्य ब्रह्ममानपरिगणितपञ्चसप्ततिवत्सरकालमिति । नन्वधिकरणत्वादधिकरणे सप्तमीति सप्तम्या भवितव्यं सार्धं परार्धमिति द्वितीया तु कथमित्यत आह **अत्यन्तसंयोगे इति । अन्तः** विरामः । अतिक्रान्तोऽन्तोऽत्यन्तः । स चासौ संयोगश्चेत्यत्यन्तसंयोगो निरन्तरसन्निकर्ष इति यावत् । तत्र द्वितीयेत्यर्थः । 'कालाध्वनोरत्यन्तसंयोग' इति स्मरणादिति भावः ।

**तृतीयभागं कालमिति ।** ब्रह्ममानपरिगणितपञ्चविंशतिसंवत्सरकालमित्यर्थः ॥ **मननिदि-ध्यासनरूपामिति ।** सोपासना च द्विविधेत्याद्यनुसारेणोपासनाशब्दस्य श्रवणादित्रितयपरत्वेऽपि शुश्रावेति श्रवणस्यात्र पृथगुपादानादुभयमात्रपरतया व्याख्यातमिति ध्येयम् । विषयानुक्तेस्तं दर्शयन्व्याचष्टे **संभृतेति ।** दशमन्वन्तराणि समाहृतानीति समाहृतप्रधानद्विगुपक्षे, दशानां मन्वन्तराणां समाहार इति समाहारप्रधानद्विगुपक्षे वा कालालाभाद्बहुव्रीहिमाश्रित्य तल्लाभं दर्शयति **दशेति ।** गरुत्मतःपदयोग्या-दिति समानाधिकरणे पञ्चम्याविति भ्रमनिरासायाह **गरुत्मत इति ।** देवदत्तस्य गुरुकुलमित्यादाविव नित्यसापेक्षत्वात्समास इति हृदयम् । सूर्याचन्द्रमसोश्चेवेत्यत्र विरुद्धार्थयोश्चेवशब्दयोरेकत्र संबन्धानु-पपत्तेश्चशब्दस्य यथाश्रुतसंबन्धमङ्गीकृत्यैवशब्दं भिन्नक्रमतया योजयति **सुतेजसावेवेति ।** अत्रापि किं तेनेत्यतस्तद्व्यावर्त्यमाह **न त्विति ।** ननु श्रु श्रवण इत्यस्माल्लङि प्रथमपुरुषद्विवचने तसि श्रुवः शृ चेति श्नुप्रत्यये शृभावे च सति अपित्वात्सार्वधातुकमपिदिति श्नोर्ङित्वाद् गुणाभावे शकारलोपे णत्वे च सति पूर्ववत्तसोर्ङित्वात् श्नोर्गुणाभावेऽडागमे तसस्तामादेशे अशृणुतामित्येव भवितव्यम् । तत्कथमशृण्व-तामित्युक्तमित्यत आह **व्यत्यय इति ।** व्यत्ययो बहुलमित्यस्मिन्सूत्रे छन्दसि शानजपीति पूर्वसूत्रात्

छन्दस्यपीत्यस्यानुवृत्तौ सत्यां छन्दसि व्यत्ययो भवति । अपिशब्दाद्यथाप्राप्तं चेत्येतावन्मात्रेणेष्टसिध्या बहुलग्रहणवैयर्थ्यमाशङ्क्य बह्वर्थादानप्रवृत्तिनिमित्तकबहुलग्रहणस्य प्रकृताप्रकृतसर्वाभिविधिव्यत्ययलक्षण-व्यभिचारार्थताया आश्रितत्वा'दितिहास: पुराण: पञ्चमो वेदानां वेद' इति वेदेनैव सत्तत्वस्यापि छन्दस्त्वस्थित्या तद्बलेन द्विविकरणत्वस्यापि प्राप्त्या श्नोरनन्तरं तौदादिकस्य शस्यापि प्राप्तौ तस्य ङित्वाद् गुणासंभवेन यणादेशे सति अश्रुण्वतामित्यस्यापि छन्दस्त्वादुपपत्तिरिति भाव: । सूर्याचन्द्रमसोश्चैवेत्येव-शब्दस्य सुमनस इत्यनेनापि संबन्ध इत्याशयेनाह **सुमनस एवेति** । ननु सुरूपशान्तरूपयोर्द्वित्वादुप-पूर्वादास्तेर्लेङात्मनेपदप्रथमपुरुषद्विवचने आतामि उपासातामिति द्विवचनेन भवितव्यम् । तत्कथमुपा-सतामित्यागमवाक्ये ह्रस्व इत्यत आह **छान्दस इति** । दीर्घस्य ह्रस्वत्वलक्षण इत्यर्थ: ।

इत्यादीत्यादिपदेनानुसंहिताया युक्ते: पुनरनुसन्धानरूपमननावृत्तिपरिग्रह: ।

**नन्विति** । तत्र श्रवणाद्यावृत्ते: कर्तव्यत्वसिद्धेरिति भाव: ॥ **उक्तमेवेति** । 'विशेषतो नित्यश: कार्यमत्यन्तमवश्यम्भावी'त्यादिनेति शेष: ॥ ४।१।१ ॥

स० — **ब्रह्मकल्पानां शते गत इति** । एकोनब्रह्मसु अतीतेषु इति संन्यायरत्नावल्यामुक्त-त्वात्तदनुसारेणापि तथैव व्याख्येयम् । सार्धं परार्धमित्यस्यायं भाव: । एकोनशतब्रह्ममहाकल्पेभ्य: पूर्वं महाकल्पस्यादिमारभ्य ब्रह्ममानपरिगणितपञ्चसप्ततिवत्सरकालमिति । **तस्य श्रवणकालस्येति** । ब्रह्ममानपरिगणितपञ्चविंशतिवत्सरकालस्येत्यर्थ: । **द्विविकरणतेति** । श्नुविकरणता शब्विकरणतेति द्विविकरणतेत्यर्थ: । **वर्णविकार इति** । दीर्घस्य ह्रस्वत्वलक्षण इत्यर्थ: ।

प० — लातव्य इत्यनुवाद: । आदातव्य इति व्याख्या । ला आदान इति धातोरिति भाव: । उपासितव्य इति फलितोक्ति: ॥ **ऋजोर्विशेषणमिति** । ब्रह्मत्वानां शतात्पूर्वं विद्यमानो यो ब्रह्मपदयोग्य: ऋजु: (लातव्य इति नामा)तस्मात् शुश्राव रुद्रपदयोग्य इत्येवमर्थ इति भाव: ॥ **अत्यन्तसंयोग इति** । 'कालाध्वनोरत्यन्तसंयोग' इति सूत्रं अत्यन्तसंयोगविषये द्वितीया भवतीत्यर्थ: । तथाच सार्धं परार्धं ब्रह्मण: पञ्चसप्ततिवर्षमध्ये एकदिनमपि श्रवणशून्यमकृत्वा प्रतिदिनं शुश्रावेत्यर्थ: । पदविशेषणत्वाप्रतीतेराह **गरुत्मतो यत्पदमिति** । नित्यसापेक्षत्वात्समास इति भाव: । एवम-व्याख्याने हि पदेत्यस्य कस्य पदेत्याकाङ्क्षा न शान्ता स्यादिति ज्ञेयम् ॥ **द्विविकरणतेति** । श्रु श्रवण इत्यस्य श्नुविकरणे कृते पश्चात्तुदादिभ्यश्श इत्युक्तशविकरणमपि कार्यं । पश्चाद्यणादेशेऽश्रुण्वतामिति छान्दसं रूपमित्यर्थ: शब्विकरणे हि गुणावादेशौ प्राप्नुत: ॥ **वर्णविकार इति** । ह्रस्वरूपो विकार इत्यर्थ: ॥ **इत्यनेनैव गतमिति** । तत्रैकत्रोक्तं गुणानां केषांचिच्छाखान्तरेऽपि श्रवणादेकस्यामपि केषांचित्पुन: पुन: श्रवणादिति भाव: ॥ ४ । १ । १ ॥

**या०** — **ऋजोर्विशेषणमिति** । ततश्च पूर्वमित्यस्यानन्तरं विद्यमानादिति शेष इति भावः || **मननध्यानरूपामिति** । 'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी । ध्यानरूपा परे'त्युक्तत्वादिति भावः । सामानाधिकरण्यभ्रमं वारयितुमाह **गरुत्मतो यत्पदमित्यादि** । ततश्च नित्यसापेक्षत्वात्समास इति भावः । ननु श्रु श्रवण इति धातोः श्रुवः शृचेति श्नुप्रत्यये शृभावे च सति श्नोर्ङित्वाद्गुणाभावे शकारलोपे णत्वे अडागमे तसस्तामादेशे अश्रुणुतामित्येवंरूपेण भाव्यं कथमशृण्वतामिति रूपमित्यत आह **व्यत्ययो बहुलमिति** । यथायथं विकरणप्रत्ययाः शबादयो विहितास्तेषां छन्दसि विषये बहुलं व्यत्ययो भवतीति सूत्रार्थः । एवं चात्र श्नुप्रत्ययानन्तरं शपोपि प्राप्तौ यणादेशेऽशृण्वतामित्यपि रूपं छन्दस्त्वादुपपन्नमिति भावः ॥ ४।१।१ ॥

**श्री०** — ॐ **आवृत्तिरसकृदुपदेशात्** ॐ ॥ **ऋजोर्विशेषणमिति** । ब्रह्मत्वानां शतात्पूर्वं विद्यमानादृजोर्लतव्यत इत्यर्थो द्रष्टव्यः । एतद्विवृणोति **यस्यैतस्मादिति** । अपरोक्षज्ञानाधिकरणा- दित्यर्थः । यस्मिन्कल्पेऽपरोक्षज्ञानं जातमिति यावत् । तथा च यस्मिन्कल्पेऽपरोक्षज्ञानं जातं तदारभ्य शतब्रह्मकल्पानन्तरं ब्रह्मत्वं भवति । अत एव 'स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिंचतामेती'त्यस्यापि **स्वधर्मनिष्ठः पुमान्** अपरोक्षज्ञानीति यावत् । सः **शतजन्मभिः** अपरोक्षज्ञानाधिकरणभूतब्रह्मकल्प- साहित्येन शतजन्मभिः शतब्रह्मकल्पानन्तरं विरिंचतामेतीति द्रष्टव्यम् ॥ **वर्णविकार इति** । आकारस्य अकारत्वेन विपरिणाम इत्यर्थः । सूर्याचन्द्रमसोश्चेत्यत्रत्यैवकारस्य सुतेजसावित्यनेन संबन्धमुक्त्वा सुमनस इत्यनेनापि संबन्ध इत्याह **सुमनस एवेति** । न त्वन्येनेत्यर्थः । ननु श्रवणावृत्तिर्नाम येनैकेन वाक्येन तत्त्वमवगतं तस्यैव तत्त्वस्य पुनः पुनस्तेनैव वाक्येनावगतिः । यथा स य एषोऽणि- मेत्यादि । मननावृत्तिर्नाम यया एकया युक्त्या तत्त्वमनुसंहितं तयैव युक्त्या तस्यैव भूयो भूयोऽनु- संधानम् । न ह्येतादृशी श्रवणाद्यावृत्तिः प्रकृते वक्तुं शक्यते । सार्धपरार्धादिकालपर्यंतमेकेनैव वाक्येन तस्यैव तत्त्वस्य श्रवणेऽसुज्ञत्वप्राप्तेः । तत्त्रिभागकालपर्यन्तं तस्यैव तत्त्वस्य तयैव युक्त्यानुसन्धान- करणेऽपि तथा । अतः श्रवणाद्यावृत्तिमन्यथाऽप्याचष्टे **एकेन वाक्येनेत्यादिना** ॥ **अन्येन वा** वाक्येन । **अनुसंहितस्य** तत्त्वस्य । **तया अन्यया वेति** । युक्त्येत्यर्थः । तथा च बहुकालं तस्यैव तत्त्वस्य वाक्यान्तरेण श्रवणे, युक्त्यन्तरेणानुसन्धाने च विशेषावगतिसंभवादिति भावः ॥ **सर्ववेदा- न्तेति** । 'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी' इत्येव शास्त्राभ्यासरूपश्रवणमननरूपोपासनायाः कर्तव्यत्वस्य तत्रैवोक्तत्वादिति भावः ॥ ४–१–१ ॥

**॥ इति आवृत्त्यधिकरणम् ॥**

## ।। अथ आत्मोपगमाधिकरणम् ।।

सु० — ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ।। **एतत्सूत्रं व्याख्यातुमात्मशब्दार्थं तावदाह** आत्मेति ।

**अनु० — ॐआत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ।।**

आत्मेति नाम कथितं साक्षान्नारायणस्य हि ।।

**यस्मादात्मेति नाम** साक्षात् **मुख्यया वृत्त्या नारायणस्य कथितम्** । **मुख्ये च संभवत्यमुख्यं न युज्यते** । **तस्मादत्र सूत्रेऽपि** आत्मा जनार्दनः **आत्मशब्दोदितो जनार्दन इति वक्ष्यमाणेनान्वयः** ।

**शे० — ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ।।** आत्मेति नाम कथितमित्यादेस्तस्मादात्मा जनार्दन इत्यन्तस्य भाष्यस्य असूत्रार्थकथनरूपत्वादानर्थक्यमाशङ्क्य सौत्रात्मशब्दार्थकथनरूपत्वान्न तदित्यभिप्रेत्य तत्कथनस्यापि प्रयोजनं दर्शयन्सौत्रात्मशब्दार्थकथनरूपतया भाष्यं संगमयति **एतदिति ।। व्याख्यातुमिति** । 'तस्मादुपास्यो विष्णुरि'त्यादिनेति शेषः ।। **तावदिति** । पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्येति भावः । उत्तरत्र तस्मादिति श्रवणात्तदपेक्षितयस्मादित्यर्थतया हिशब्दं व्याचष्टे **यस्मादिति** । मूले साक्षात्पदमनर्थकमित्याशङ्क्यात्मशब्दस्य भगवन्नामतामात्रेण सौत्रात्मशब्दस्य भगवदर्थत्वे, तस्य जीवनामताया अपि सत्त्वेन सौत्रात्मशब्दस्य तदर्थत्वस्यापि प्राप्त्या, भगवन्नामतामात्रस्य सौत्रात्मशब्दार्थत्वव्यवस्थापकत्वानुपपत्त्या कथमनेन तत्सिद्धिरित्यतोऽत्रात्मशब्दस्य मुख्यया वृत्त्या भगवन्नामत्वस्यैवोक्तार्थव्यवस्थापकत्वेन तन्नामतामात्रस्य तद्विरहान्नातिप्रसङ्ग इत्यर्थसूचकत्वात्साक्षात्पदस्य नानर्थक्यमित्याशयेन तत्पदं मुख्यवृत्तिपरतया व्याचष्टे **साक्षान्मुख्यया वृत्त्येति** । नन्वथाऽप्यमुख्यया वृत्त्याऽन्यनामत्वस्यापि सत्त्वात् अत्र सूत्रेऽन्यनामत्वमपि तस्य किं न स्यादित्यतो भगवति तस्य मुख्यत्वोक्त्या तदसंभव एवान्यपरतायाः सूचितत्वान्न तत्संभवेऽपि तत् । अन्यथा मुख्यामुख्यन्यायविरोधादित्यभिप्रेत्य तात्पर्यमाह **मुख्ये चेति** । अव्यवहितग्रन्थान्वयानुपपत्तेर्योग्यतया व्यवहितान्वयमाह **तस्मादिति** । आत्मशब्दस्य मुख्यया वृत्त्या भगवन्नामतायाः सौत्रात्मशब्दस्य भगवदर्थत्वे एव हेतुत्वं तदविवक्षायां सौत्रात्मशब्दार्थकथनत्वासिद्ध्या भाष्यानर्थक्यप्रसङ्गाच्च आत्मपदं आत्मपदवाच्यपरतया व्याचष्टे **आत्मशब्दोदित इति** ।

**प० — आत्मेति ।। व्याख्यातुमिति** । तस्मादुपास्य इत्यादिनेति ज्ञेयम् । हिशब्दार्थो यस्मादिति ।

**श्री०— ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च** ॐ ॥ 'तस्मादात्मा जनार्दन' इति वक्ष्यमाणमनूद्य व्याख्याति **आत्मशब्दोदित इति** ।

**सु०— किं तदात्मशब्दस्य भगवन्नामत्वकथनमित्यत आह** आत्मेति ।

**अनु०—** आत्मा ब्रह्म महांस्तारः परमेशः शुचिश्रवाः ॥
विष्णुर्नारायणोऽनन्त इति श्रीपतिरीर्यते ॥
इति पैङ्गिश्रुतिश्चैव तथैव परमश्रुतिः ॥

**इति नामभिः । पैङ्गिश्रुतिः आत्मशब्दं भगवन्नामत्वेनाह । च शब्दः श्रुत्यन्तरसमुच्चयार्थः । श्रुतिरेव न तु मानुषप्रणीतमभिधानमित्येवशब्दः । तेन 'क्षेत्रज्ञ आत्मा पुरुष' इत्यादिविरोधो नाशङ्कनीयः ॥ ओमात्मेति परमश्रुतिः ।**

ओमात्मा भगवान्विष्णुरात्मानन्दोऽक्षरः स्वराट् ॥
विश्वत्राता नृसिंहोऽजो नारायण उरुक्रमः ।
अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ॥
दत्तं दूर्वाससं सोममात्मेशब्रह्मसंभवान् ॥
इति भागवते चैव तस्मादात्मा जनार्दनः ॥

**आत्मानन्देति समस्तमेकं नाम । अनसूयेति भागवते चात्मशब्दस्य भगवत्येव प्रयोगोऽस्ति । तथैवेति तत्र प्रकृतेन समुच्चयार्थं ।** जज्ञे **जनयामास । अन्तर्णीत(णिजर्थोऽत्र)-ण्यर्थो वाऽत्र जनिः ।** आत्मेशब्रह्मसंभवान् **विष्णुशिवब्रह्मसंभवान् । सह भवन्तीति संभवाः । अत्र दत्तदूर्वाससौ विष्णुशिवावेव । सोमो ब्रह्मणा सहभूतः । तद्धर्मोऽन्ययोरप्युपचारादुच्यते । छत्रिण इति यथा ।**

**शे०— इति नामभिरिति** । इति श्रीपतिरिति मूले ईर्यत इति प्रतिपाद्यतायाः श्रवणान्नाम्नामेव च प्रतिपादकत्वात्तदनुरोधेनेतीत्यतः परं नामभिरित्यध्याहारो दर्शित इति ध्येयम् । साकाङ्क्षत्वादिति पैंगिश्रुतिरित्यतःपरमपेक्षितं पूरयति **आत्मशब्दमिति** । विरुद्धार्थयोश्चैवशब्दयोः कथमेकत्रान्वय इत्यतोऽविरोधेनार्थमाह **चशब्द इति** । परमश्रुतिरूपवक्ष्यमाणश्रुत्यन्तरसमुच्चयार्थ इत्यर्थः । एवशब्दाभिप्रायकथनं **श्रुतिरेवेति ॥ इत्येवशब्द इति** । इति सूचयितुमेवशब्द इत्यर्थः । किमस्य मानुषप्रणीतत्वाभावसूचनेनापीत्यत आह **तेनेति** । 'तथैव परमश्रुतिरि'त्यत्र परमश्रुतिरपि **तथा** उदाहृतपैङ्गिश्रुतिवदेवेत्यतो नोदाहृता । ओमात्मेत्यादिका त्वन्येत्यन्यथाप्रतीतिमपाकरोति **ओमात्मेति**

**परमश्रुतिरिति** । अत्र च ओमात्मेति परमश्रुतिरपि **तथैव** आत्मशब्दं भगवन्नामत्वेनाहेति योजना । एवशब्दस्य तूक्तमेव प्रयोजनमवधेयम । आत्मानन्द इत्यत्र भिन्नपदतायामोमात्मेत्यनेन पौनरुक्त्य-प्रसङ्गादाह **आत्मानन्देतीति** ।

**तत्र प्रकृतेनेति** । भागवते 'पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजे'ति पूर्वश्लोकप्रकृतेनेत्यर्थः । जनेरकर्मकत्वात्कथं पुत्रानिति कर्मोक्तिरित्यत आह **जनयामासेति** । जज्ञ इत्यनेन जनयामासेत्यस्य कथं लाभ इत्यतोऽनेकार्थत्वाद्धातूनां लक्षणया वा जनिरत्र ण्यर्थमप्यन्तर्भावयति तदा प्रयोज्येन कर्मणा सकर्मको भवतीत्याशयेनाह **अन्तर्भावितेति** । ननु दत्तादीनां त्रयाणामत्रेरुत्पन्नत्वेनात्मेशब्रह्मभ्यः संभूतत्वाभावात्कथं तत्संभूतत्वोक्तिरित्यतः संभवपदं व्याख्याति **सह भवन्तीति** ।

यद्यपि संशब्दः सम्यक्त्वमाह तथाऽप्यव्ययानामनेकार्थत्वात्साहित्यार्थत्वम् । नत्विं दत्तादीनां त्रयाणामपि सहभूतता येन तदर्थकसंभवशब्दविषयतेत्यतो विवेकं दर्शयति **अत्रेति** ॥ **विष्णुशिवा-वेवेति** । 'दत्तो विष्णोस्तु योगवित्' 'दुर्वासाः शङ्करस्यांश' इति भागवतवचनादिति भावः ॥ **सोमो ब्रह्मणा सहभूत इति** । यद्यपि 'सोमोऽभूद्ब्रह्मणोंऽशेने'ति सोमस्यापि ब्रह्मांशत्वं तत्रैवोक्तम् । तथाऽपि 'ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलम् । ऋते विष्णोरात्मनश्च तदंशोक्तिः प्रवेशत' इति तात्पर्यानुसारेण सहभूतत्वमेव तदर्थ इत्यभिप्रायेणैवेयमुक्तिरिति ध्येयम् । नन्वेवं सोमस्य सहभूत-त्वात्तस्यैव तदर्थकसंभवशब्दविषयत्वेऽपि दत्तदूर्वाससोस्तद्विषयत्वाभावात् त्रयाणां तथोक्तिरयुक्तेत्यतः मुख्यतः सोमस्यैव तद्विषयत्वेऽपि अमुख्यवृत्त्या दत्तदूर्वाससोरपि तद्विषयत्वान्नानुपपत्तिरित्याह **तद्धर्म इति** । सोमधर्म इत्यर्थः । कथमन्यधर्मस्यान्यत्रोपचारादपि प्रयोग इत्यतोऽत्रानुरूपदृष्टान्तमाह **छत्रिण इतीति** ॥ **यथेति** । यद्यपि संभवशब्दस्योक्तरीत्या यौगिकत्वेऽप्यात्मा चेशश्च ब्रह्मसंभवश्चेति द्वन्द्वाश्रयणेन व्याख्याने मुख्यवृत्त्यैवाभिमतसिद्धिरित्युपचाराश्रयणमनर्थकम् । तथाऽपि दत्तदूर्वाससोरा-त्मेशत्वोक्तौ तयोरंशत्वस्याप्राप्त्यैतद्वाक्यबलेनांशत्वासिद्धेरुक्तसमासाश्रयणेन संभवशब्दस्य त्रिष्वप्यन्वया-ङ्गीकारे वाक्यार्थानुपपत्त्या लक्षणाया अवश्याश्रयणीयत्वेन तत्प्रयोजनतयैतद्वाक्यादेव 'अथास्मदंशभूतास्त आत्मजा लोकविश्रुताः । भवितार' इति वरदानवाक्ये 'सोमोऽभूद्ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित् । दूर्वासाः शङ्करस्यांश' इति वाक्ये चोक्तस्य तदंशस्य सिद्धिसंभवात्तदर्थमुक्तविग्रहमाश्रित्यो-पचाराश्रयणं कृतमित्यवधेयम् ।

**स०— ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ** ॥ **अत्रेति** । **दत्तो** विष्णुः, **दुर्वासाः** शिव इति संबन्धः । नन्वेवं दत्तदुर्वाससोरेव विष्णुशिवरूपत्वे तत्सहभूतत्वाभावेन संभवशब्दानुपपत्तिरित्यत आह **तद्धर्म इति** । सोमधर्मः सहभाव इति शेषः । **अन्ययोः** दत्तदुर्वाससोः । **छत्रिण इति** । छत्र्यच्छत्रि-

समुदाये छत्रिपदस्येव सहभूतासहभूतसमुदाये सहभूतशब्दस्याप्युपपत्तेरिति भावः । ननु किमर्थं लक्षणाश्रयणम् । न च दत्तदुर्वाससो सहभूतत्वाभावेन संभवशब्दार्थस्तत्र नेति लक्षणाश्रणम् । आत्मा चेशश्च ब्रह्मसंभवश्चेत्येवं यथास्थितव्याख्यानपरित्यागे कारणाभावादिति चेत् न, 'तस्मात्स ब्रह्मरुद्राभ्यां सह विष्णुर्जगत्पतिः । आगत्य तु त्रिमूर्त्यंशान् पुत्रान् प्रादाज्जनार्दन' इति प्रमाणानुसारेणैव व्याख्यातत्वात् ।

प० — ईयत इत्यस्य कर्त्राकाङ्क्षां पूरयितुं श्रीपतिरित्यतः पूर्वं शेषमाह **इति नामभिरिति** । प्रथमान्तस्यान्वयं शेषेणाह **पैङ्गिश्रुतिरिति** ॥ **श्रुत्यन्तरेति** । वक्ष्यमाणेति योज्यम् ॥ **इत्यादिविरोध इति** । जीवपर्यायत्वोक्तिपगमरकोशादिविरोधो न शङ्कनीय इत्यर्थः । अपौनरुक्त्यायाह **इति समस्तमेकं नामेति** । सप्तम्यन्तस्यान्वयं शेषोक्त्याह **प्रयोगोऽस्तीति** ॥ **तत्र प्रकृतेनेति** । चतुर्थस्कन्धे प्रथमेऽध्याये 'याः कर्दमसुताः प्रोक्ता आसन्ब्रह्मर्षिपत्नयः' इत्युपक्रम्य 'पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजे'त्यादिना प्रकृतेनेत्यर्थः । षष्ठाध्यायबृहद्भाष्योक्तिं हृदि कृत्वाऽऽह **अन्तर्णीतणिजर्थोऽत्र जनिरिति** । सोमस्य ब्रह्मांनंशत्वात्संपदस्य सहार्थत्वमुपेत्य संभवपदं तदनुगुणतया व्याचष्टे **सह भवन्तीति** ॥ **सोमो ब्रह्मणेति** । 'ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलमि'त्यादितत्तात्पर्योक्तेरिति भाव ॥ **तद्धर्म इति** सहभावरूपो धर्म इत्यर्थः ।

---

या० ॐ **आत्मेति तूपगच्छन्ति ग्राहयन्ति च** ॐ ॥ **एकं नामेति** । अन्यथा पौनरुक्त्यमिति भावः । **तत्र प्रकृतेनेति** । भागवते 'पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजे'ति पूर्वश्लोकोक्ते प्रकृतेनेत्यर्थः । जनयामासेति व्यत्ययमाश्रित्य व्याख्यानं । अत एवापरितोषादाह **अन्तर्णीतण्यर्थो वेति** । ननु दत्तदूर्वाससोरात्मेशांशत्वेन तत्संभवत्वेऽपि न सोमस्य ब्रह्मसंभवत्वं युक्तम् । तस्य तदनंशत्वात् । ब्रह्मणो मुख्यवताराभावाच्चेत्याशङ्कायां 'ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलं । ऋते विष्णोरात्मनश्च तदंशोक्तिः प्रवेशत' इति भागवततात्पर्यं मनसि निधाय संभवशब्दं व्याख्याति **सह भवन्तीति** । तथा च नायं संभवशब्दः रूढ्योत्पत्तिमात्रवाचकः किन्तु योगेन सहभूतत्ववाचकः । तच्चोक्तप्रमाणादस्येवेति भावः । अव्ययानामनेकार्थत्वात् । तां समभवत् ॥ तेऽर्चिषमभिसंभवन्तीत्यादिश्रुतौ संभोगप्राप्तिरिति सूत्रे संभोगो नेशजीवयोरिति स्मृतौ प्रयोगात् 'मम तेजोंऽशसंभवमि'त्यस्य गीतातात्पर्यनिर्णये तेजोंऽशेन संयुक्तं भवतीति व्याख्यानाच्च समित्यस्य साहित्यार्थता युक्तैवेति ध्येयम् । नन्वयं सहभूतत्वरूपो यौगिकार्थो यद्यपि सोमे संभवति; न दत्तदूर्वाससोः; तयोरात्मेशस्वरूपत्वादित्याशङ्क्यौपचारिकस्तत्रायं प्रयोग इत्याह **अत्र दत्तेत्यादिना** । **सहभूत इत्यनन्तरम् इति यद्यपि तथाऽपीति शेषः** ॥ **तद्धर्म इति** । तस्य सोमस्य **सहभूतत्वरूपो**

धर्म इत्यर्थः ॥ **उपचारादिति** । यद्यपि संभवशब्दस्योक्तरीत्या यौगिकत्वेऽपि आत्मा चेशश्च ब्रह्मसंभवश्चेति द्वन्द्वाश्रयणेन व्याख्याने मुख्यवृत्त्यैवाभिमतसिद्धिः । तथाऽप्यात्मेशब्रह्मभिः संभवा इति तृतीयातत्पुरुषस्य झडिति प्रतीत्येत्थं समाहितमिति ज्ञातव्यम् ।

**श्री०** — आत्मानन्द इत्यस्य पदद्वयमङ्गीकृत्य नामद्वयाभिप्राये पुनरुक्तिप्रसङ्गादाह **आत्मानन्द इतीति** । आत्मपदेन समस्तमानन्द इति पदमेकमेवातो न पुनरुक्तिरित्यर्थः ।

**सु०— अस्त्वात्मशब्दो विष्णुपरस्तथाऽपि कः सूत्रार्थ इत्यत आत्मेतीति प्रतिज्ञांशं व्याख्याति(चष्टे)** तस्मादिति ।

**अनु०**— तस्मादुपास्यो विष्णुरिति ज्ञातव्यः सज्जनैः सदा ॥

**यस्मादात्मशब्दो विष्णुपरस्तस्मात् । अयं प्रतिज्ञार्थः । आत्मा विष्णुः आत्मेति सज्जनैः सदा ज्ञातव्यः उपास्यो ध्येयश्च ।**

**हेत्वंशं व्याचष्टे** तथैवेति ।

तथैवोपासते संतस्तथैवोपदिशन्ति च ॥

**अनेनात्म(त्मेति)शब्दस्याऽऽवृत्तिस्तुशब्दश्चावधारणार्थ इत्युक्तं भवति । सतामेवोपासनोपदेशौ भाष्योदाहृताभ्यां श्रुतिभ्यां सिद्धौ । उपगच्छन्तीत्येतज्ज्ञानार्थमुपासनार्थं च । तत्र ज्ञानार्थत्वं स्पष्टमित्येक एवार्थो व्याख्यातः । अत एव प्राक् ज्ञातव्य उपास्यश्चेत्युक्तम् ।**

**शे०**— तस्मादित्यस्य यस्मादित्येतत्सापेक्षत्वात् 'तस्मादात्मा जनार्दन' इति पूर्ववाक्यार्थमेव हेतुतयाऽनुवदन्प्रतिज्ञाव्याख्यानपरतया भाष्यं योजयति **यस्मादित्यादि** । तस्मादित्यस्योपास्य इत्याद्युत्तरेण हेतुतयाऽन्वयानुपपत्तेर्योग्यं साध्यमध्याहरति **अयं प्रतिज्ञार्थ इति** । आत्मेतीति सौत्र-प्रतिज्ञार्थ इत्यर्थः । तमेवोपदर्शयति **आत्मेति सज्जनैः सदा ज्ञातव्य इत्यादि** । यद्यपि कर्मणः उक्तत्वेऽपि कर्तुरनुक्तत्वादनभिहिते कर्तरि कर्तृकरणयोस्तृतीयेति प्राप्तायास्तृतीयाया बाधेन कर्तृकर्मणोः कृतीति नित्यं प्राप्तया षष्ठ्या सज्जनानामिति षष्ठ्या भवितव्यम् । तथाऽपि नित्यप्राप्ताया अपि कृद्योगलक्षणषष्ठ्या विकल्पार्थप्रवृत्ते कृत्यानां कर्तरि वेति सूत्रे कृद्योगे कर्तरि तृतीयाषष्ठ्योरुभयोरप्यभ्यनु-ज्ञानात्पक्षे तृतीयोपपत्तिरिति ज्ञेयम् । उपास्य इत्यस्यैव विवरणं **ध्येय इति** । आत्मेतीति प्रतिज्ञांशस्य प्राग्व्याख्यातत्वेन तदर्थत्वासंभवात्तथैवेति भाष्यखण्डस्यासूत्रार्थकथनरूपतया प्रसक्ताभाष्यत्वशङ्कां तस्य सौत्रा'त्मेति त्वि'ति हेतुशरीरप्रविष्टपदव्याख्यानतोपदर्शनेन परिहरति **अनेनेति**॥ **भाष्योदाहृताभ्यामिति**। 'नान्यं विचिंतय आत्मानमेवाहं विजानीयां आत्मानमुपासे' 'आत्मेत्येवोपास्व आत्मेत्येव विजानीहि'

इत्यादि श्रुतिभ्यामित्यर्थः । उपासत इत्यादिभाष्यानुसारेणोपगच्छन्तीति सौत्रपदस्योपासनामात्रार्थत्वभ्रान्तिं परिहरति **उपगच्छन्तीत्येतदिति** । तर्ह्युपासनस्येव ज्ञानस्यापि तदर्थतया भाष्ये वक्तव्यत्वान्नोपासनमात्रस्य तदर्थतयोक्तिर्युक्तेत्यतस्तदनुक्तेर्निमित्तं सूचयन्नेवैकार्थोक्तिं समर्थयते **तत्रेति** ॥ **स्पष्टमिति** । गत्यर्थानां ज्ञानार्थत्वादिति भावः । किमेवं क्लिष्टकल्पनया उपासत इति भाष्यस्वारस्यानुरोधेनोपगच्छन्तीति सौत्रपदस्योपासनामात्रार्थत्वमेव भाष्यकृत्संमतं किं न स्यादित्यतोऽर्थद्वयस्य भाष्यकृत्संमततामुपदर्शयति **अत एवेति** । सौत्रपदस्योपगच्छन्तीतिपदस्य ज्ञानोपासनरूपोभयार्थतायाः संमतत्वादेवेत्यर्थः ।

**स०** — उपासत इत्यस्य व्याख्यानं **ध्येय इति** ॥ **भाष्योदाहृताभ्यामिति** । आत्मेत्येवोपास्वेत्यादिश्रुतिभ्यामित्यर्थः ।

**प०** — **प्रतिज्ञांशमिति** । आत्मेत्यंशमित्यर्थः । मूलं व्यत्यासेन योजयति **ज्ञातव्य इति** ॥ **ध्येयश्चेति** । सूत्रे शेषोक्तिरियम् ॥ **हेत्वंशमिति** । उपगच्छन्तीत्याद्यंशम् ।

**या०** — **अयं प्रतिज्ञार्थ इति** । इत्ययं प्रतिज्ञार्थ इत्यन्वयः । मूले शेषोक्तिः । **अन्यथा** तस्मादित्यस्य साध्याप्रतीत्या ॥ **स्पष्टमिति** । गत्यर्थानां ज्ञानार्थत्वादिति भावः ।

---

**सु०** — **नन्वनेन विष्णुर्विष्णुरित्युपास्य इत्युक्तं भवति । ततश्च किमनेन कृतं स्यात् । न ह्यविष्णुत्वेनोपास्तिरत्र प्रसक्तेत्यत आह** आदानेति ।

**अनु०** — आदानार्थत्वतश्चायमात्मशब्दः पतिं वदेत् ॥

**अयं सूत्रगत आत्मशब्दः पतिं च वदेत् । कथम् । आदानार्थत्वत आदानकर्तृत्वार्थत्वात् । आङ्पूर्वात् दाञः आतो मनिन्निति मनिन् प्रत्ययः आकारलोपो दस्य तश्च निर्वचनत्वात् । तथा चोक्तं 'यच्चाप्नोति यदादत्त' इत्यादि । पतिर्हि स्वीयतया भृत्यानादत्ते ।**

**शे०** — 'आदानार्थत्वतश्चे'ति चशब्दस्य हेत्वन्तरानुक्तितदसंभवाभ्यां वैयर्थ्यविरुद्धार्थत्वप्राप्त्या यथाश्रुतसंबन्धानुपपत्तेर्भिन्नक्रमतया तं योजयति **पतिं चेति** । कर्तृत्वार्थकमनिन्प्रत्ययस्य आत्मशब्दस्यादानकर्तृत्वार्थकत्वेऽप्यादानार्थत्वाभावाद्भाष्यानुपपत्तिमाशङ्क्य परिहरति **आदानकर्तृत्वार्थत्वादिति** । एतदेव प्रकृतिप्रत्यययोर्विभागोपदर्शनेनोपपादयति **आङ्पूर्वादिति** । नन्वेवमादामेति भवितव्यं । आत्मेति तु कथमित्यत आह **आकारेति** । ननु लोपादिप्रापकस्य शास्त्रस्याभावात्कथं तदित्यत आह **निर्वचनत्वादिति** । पृषोदरादित्वादित्यर्थः । नन्वेवं सर्वत्रापि लोपादिप्राप्त्याऽतिप्रसङ्ग इत्यतोऽस्य न्यायस्य प्रामाणिकनिर्वचनविषयत्वान्नातिप्रसङ्ग इति भावेन प्रकृतनिर्वचनस्य लोपादि-

प्रसंजकस्य प्रामाणिकत्वं दर्शयति **तथा चोक्तमिति** । आदानकर्तृत्वार्थकत्वेऽप्यात्मशब्दस्य कथं पतित्वस्य तेन लाभ इत्यत आह **पतिर्हीति** ।

**प०— आतो मनिन्निति** । 'आतो मनिन्क्वनिब्वनिपश्चे'ति सूत्रेणेत्यर्थः । आकारलोपतकारौ केनेत्यतो निरुक्तिरूपप्रमाणादिति भावेनाह **निर्वचनादिति** ॥ **यच्चेति** । 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति भण्यते' इति वाक्यशेषः ।

**या०— आतो मनिनिति** । आतो मनिन् क्वनिब्वनिपश्चेति सूत्रेणेत्यर्थः । सुपि उपपदे वा अकारान्तेभ्यः धातुभ्यः छन्दसि विषये मनिन्क्वनिब्वनिपश्चेति एते प्रत्यया भवन्तीति सूत्रार्थः । अश्वकामा सुपीवेत्याद्युदाहरणं **आकारलोप इति** । डुदाञ् दाधात्वाकारलोप इति भावः । ननु प्रामाणिकेष्वेव निर्वचनेषु वर्णलोपादिकं विहितं न स्वेच्छाकल्पितेष्वित्याशङ्कायां इदमपि निर्वचनं प्रामाणिकमेवेत्याह **तथा चोक्तमिति** ।

**सु०— ततः किमित्यतः सूत्रार्थं विवृणोति** स्वामीति ।

**अनु०**— स्वामी मे विष्णुरित्येव नित्यदोपास्यमञ्जसा ॥

**अत्र सूत्रे द्वावात्मशब्दौ । एकोनुवादार्थो द्वितीयो विध्यर्थः । आत्मात्मेन्युपास्य इति द्वावपि विष्णुविषयौ । तत्राद्योऽविवक्षितावयवार्थः संज्ञात्वेन वर्तते । द्वितीयो विवक्षितावयवार्थः स्वामिनं वदति । तथा चात्मा विष्णुरात्मेति स्वामीत्युपास्य इति सूत्रार्थो भवतीत्यर्थः ।** अञ्जसा **परमादरेण । नन्वेतदानन्दादयः प्रधानस्येत्यनेनैव गतम् । सत्यम् । सर्वथोपास्यत्वस्य ज्ञापनाय पुनर्वचनम् । तदिदमुक्तं नित्यदैवाञ्जसेति ।**

**शे०— सूत्रार्थमिति** । सौत्रप्रतिज्ञार्थमित्यर्थः । सूत्रे आत्मेतीत्येव श्रवणात् 'स्वामी विष्णुरि'त्यस्यासूत्रार्थत्वभ्रान्तिनिवारणाय तद्व्याख्येयभेदं दर्शयति **अत्रेति** । सूत्रे त्वेकेनैव चरितार्थत्वात्किं द्वाभ्यामित्यत आह **एक इति** । अनुवादविधिप्रकारमेव दर्शयति **आत्मेत्यादि** । शब्दभेदेऽर्थभेदनियमादात्मशब्दद्वयस्य सूत्रान्तर्भावेऽर्थभेदोऽपि स्यादित्यत आह **द्वावपीति** । एवं तर्हि पौनरुक्त्यमित्यत आह **तत्राद्य इति** । सौत्रात्मादिपदार्थमुक्त्वा वाक्यार्थमाह **तथा चेति** । **सूत्रार्थः** सौत्रप्रतिज्ञार्थ इत्यर्थः ॥ **गतमिति** । तत्रानन्दादेर्मोक्षार्थतयोपास्यत्वसमर्थनात् । स्वामित्वापरपर्यायस्यात्मत्वस्यानन्दादिचतुष्टयान्तर्भूतत्वेन तत्रैवोपास्यत्वसिद्धेरिति भावः ॥ मूले **नित्यदैवेति** । यद्यपि सर्वदा एकदा अन्यदा यदा कदेति सर्वादिभ्य एव सर्वैकान्यकियत्तदः कालेदेति काले वाच्ये दाप्रत्ययोऽभिहितो न तु नित्यशब्दादपि । तथाऽपि कालेदेति योगविभागमाश्रित्य नित्यदेति प्रयुक्तमित्यवधेयम् ।

**या० — आनन्दादय इत्यनेनेति** । तत्र 'सत्यो ज्ञानः परमानन्दरूपः आत्मेत्येवं नित्यदोपासनं स्यादि'त्यात्मत्वेन ह्युपासनस्यापि कर्तव्यतताया उक्तत्वादिति भावः ॥ ४-१-२ ॥

**सु० — अस्य सर्वथोपास्यत्वे किं प्रमाणमित्यत** आह स्वामीति ।

**अनु०** — स्वामी विष्णुरिति ध्यानं विशेषणविशेष्यतः ॥
कर्तव्यं सर्वथैवैतन्न कथञ्चन विस्मरेत् ॥
इति सत्तत्त्ववचनं षाड्गुण्यवचनं परम् ॥
मम स्वामी हरिर्नित्यं सर्वस्य पतिरेव च ॥
इति ध्येयः सर्वदैव भगवान् विष्णुरव्ययः ॥ २ ॥

विशेषणविशेष्यत इति **स्वामित्वं विशेषणं विष्णुर्विशेष्य इति विशेषणविशेष्यभावेनैव । न तु तटस्थं स्वामित्वं निर्गुणस्य विष्णोरुपलक्षणमित्येवमित्यर्थः** । कथञ्चन **आधिव्याधिसत्त्वेऽपि** । परम् **उपरितनम्** । **मम स्वामीत्यनेन प्रसक्तमल्पत्वं निवारयति** सर्वस्येति ॥ ॥ ४-१-२ ॥

**शे० — विशेषणविशेष्यभावेनेति** । अनेन मूले विशेषणविशेष्येति भावप्रधानो निर्देश आद्यादित्वात्प्रकारार्थकतृतीयान्तात्तसिरित्युक्तं भवति । विशेषणविशेष्यत इत्येतद्व्यावर्त्यमाह **न त्विति** ॥ ४॥१।२ ॥

**प० — आधिव्याधीति** । आधिर्मानसी व्यथा । व्याधिर्ज्वरादिदेहपीडा ॥ **परं उपरितनमिति** । अनुपदमुदाहरिष्यमाणमित्यर्थः ॥ ४।१।२ ॥

**श्री० — विशेषणमिति** । सार्वकालिकमित्यर्थः ॥ **तटस्थेति** । कादाचित्केत्यर्थः ॥४-१-२॥

**॥ इति आत्मोपगमाधिकरणम् ॥**

## ॥ अथ प्रतीकाधिकरणम् ॥

सु० — ॐ न प्रतीके न हि सः ॐ ॥ मनो ब्रह्मेत्युपासीतेत्यादिश्रुतिप्राप्तं मनःप्रभृति-प्रतीकानां ब्रह्मत्वेनोपासनमत्र प्रतिषिध्यते। तत्र प्रतीक इत्यधिकरणसप्तमीति प्रतीतिः स्यात्। प्रतीकाधिकरणस्य चोपासनं ब्रह्मणो युक्तमेव। अतोऽन्यथा प्रतिज्ञां व्याख्याति प्रतीकेति।

अनु० — ॐ न प्रतीके न हि सः ॐ ॥

प्रतीकविषयत्वेन न कार्या विष्णुभावना ॥

इत्थंभूतलक्षणे तृतीया। इदं मनआदिकं विष्णुरित्येवंरूपोपासना न कार्येत्यर्थः। न हि स इति हेतुं व्याचष्टे प्रतीकमिति।

प्रतीकं नैव विष्णुर्यत्

यद्यस्मात्प्रतीकं, ब्रह्मणः प्रतिमात्मकं, मनःप्रभृति, स विष्णुर्नैव तस्मादिति पूर्वेणान्वयः। नन्वसङ्गतोऽयं हेतुः। प्रतीकस्य विष्णोश्चाभेदाभावो ह्यभेदस्य तत्प्रमितेश्च निवारको न त्वभेद-भावनामात्रस्येत्यत आह मिथ्येति।

मिथ्योपासा ह्यनर्थदा ॥

न हि स विष्णुः प्रतीकम्। अतस्तयोरभेदभावना मिथ्योपासना। सा चानर्थस्यैव हेतुः। अतो न कर्तव्येत्येवं हेतुहेतुमद्भावः सूत्रकृतोऽभिप्रेतो न पुनः साक्ष। अतो नासङ्गतिः।

शे० — ॐ न प्रतीके न हि सः ॐ ॥ प्रतीकविषयत्वेनेत्याद्युत्तरभाष्यानर्थक्यमाशङ्क्य न प्रतीक इति प्रतिज्ञाया अन्यथा व्याख्यानार्थत्वान्न तदिति भावेन तद्व्यावर्त्यां शङ्कामुत्थापयितुं विषयं तावदाह मन इत्यादि ॥ इत्थंभूतेति। प्रतीकविषयत्वस्य कर्तृत्वाद्ययोगेन कर्तृकरणयोस्तृतीयेत्यनेन तत्र तृतीयाया अप्राप्तत्वादिति भावः। प्रतीकमित्यस्य व्याख्यानं प्रतिमात्मकमिति। तस्यैव शृङ्गिग्राह-कतया प्रदर्शनं मनःप्रभृतीति ॥ पूर्वेणेति ॥ प्रतीकविषयत्वेनेति प्रतिज्ञावाक्येनेत्यर्थः ॥ नन्विति। विवक्षितार्थासाधकत्वेन प्रकृतानुपयुक्त इत्यर्थः। प्रकृतानुपयोगमेवोपपादयति ॥ प्रतीकस्येति। कथमनेनासङ्गतिपरिहार इत्यतोऽपेक्षितं पूरयन्सङ्गतिं दर्शयति न हीत्यादिना।

स० — ॐ न प्रतीके न हि सः ॐ ॥ पूर्वेणान्वय इति। प्रतिज्ञावाक्येनान्वय इत्यर्थः।

प० — ॐ न प्रतीके न हि सः ॐ ॥ व्याख्याने बीजमाह तत्र प्रतीक इति। अन्यथा-प्रतिपत्तिप्रदर्शनायैव प्रागधिकरणप्रतिपाद्योक्तिः। कर्त्राद्यर्थत्वायोगादाह इत्थंभूतलक्षणे तृतीयेति।

प्रतीकविषयत्वप्रकारं प्राप्ता भावनेतीयं तृतीया भावनायां प्रतीकविषयत्वप्रकारप्राप्तिं लक्षयति ज्ञापयतीत्यर्थः । तद्दर्शयति **इदमित्यादि** ।

**या०— ॐ न प्रतीके न हि सः ॐ ॥ इत्थंभूतलक्षणेति** । अकार्यत्वरूपं प्रकारं प्राप्तायां विष्णुभावनायां प्रतीकविषयकत्वं लक्षणमतस्तृतीयेत्यर्थः ।

**सु०— मिथ्योपासनस्यानर्थहेतुत्वं कुत इत्यतस्तदुपपादनपूर्वकमिममेव सूत्राभिप्रायं स्पष्टमाचष्टे** योऽन्यथेत्यादिना भगवान्प्रभुरित्यन्तेन ॥

**अनु०—** योन्यथासन्तमात्मेशमन्यथा प्रतिपद्यते ॥
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥

योन्यथासन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणेशापहारिणा ॥

योन्यथैव स्थितं विष्णुमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेण ब्रह्महारिणा ॥

अन्यथासंतं **प्रतीकभिन्नत्वादिप्रकारं सन्तम्** । आत्मनां **जीवानाम् ईशम्** । अन्यथा **प्रतीकत्वादिना** । प्रतिपद्यते **जानाति ध्यायति च** । **चोरत्वस्यैव विवरणं** आत्मापहारिणेति । **अभेदे खल्वेकावशेषः स्यात्** । **तत्र प्रतीकावशेषे ध्याते स्फुटं परमात्मापहारित्वम्** । **प्रतीकप्रविलयेऽप्यैश्वर्यापलापात्परमात्मापहारित्वमेव** । आत्मानं **परमात्मानम्** ।

**एतानि त्रीणि वाक्यानि विष्णोः प्रतीकताध्याने बाधकानि । प्रतीकस्य विष्णुत्वध्याने तु न बाधकमित्यतः स्वात्मानमिति** वाक्यं **पठितम्** ।

स्वात्मानं प्रतिमां वापि देवतान्तरमेव वा ॥
चेतनाचेतनं वान्यद्ध्यायेद्यः केशवस्त्विति ॥
किं तेन न कृतं पापं चोरेणेशापहारिणा ॥

**योऽन्यदिति त्रीण्युभयार्थे ।**

योऽन्यद्विष्णुरिति ध्यायेज्जानीयाद्वा हरिं तथा । अन्धेतमसि मज्जेत्स यत्र नैवोत्थितिः क्वचित् ॥
योऽन्यद्विष्णुरिति ध्यायेद्विष्णुरन्यदिति स वा । अन्यथाध्यानदोषेण सोऽन्धेतमसि मज्जति ॥
योऽन्यद्विष्णुरिति ध्यायेद्विष्णुरन्यदिति स वा । महातमसि मग्नस्य तस्य नैवोत्थितिः क्वचित् ॥

यत्र **पतितस्य** । **अन्यथाध्यानमेव दोषोऽन्यथाध्यानदोषः** ॥

**यत्किञ्चिदित्यादीनि प्रथमार्थ एव कैमुत्यार्थानि** ।

यत्किञ्चिदन्यथासंस्थमन्यथा ध्यातमञ्जसा । ध्यातुर्महादोषकरं किमु सर्वेश्वरो हरिः ॥
यत्किञ्चिदन्यथासंस्थमन्यथाध्यातमञ्जसा । महादोषकरं विष्णुः किमु सर्वेश्वरेश्वरः ॥
यत्किञ्चिदन्यथासंस्थमन्यथाज्ञातमञ्जसा । अनर्थकारणं लोके किमु सर्वेश्वरेश्वरः ॥
न किञ्चिदन्यथा ज्ञेयं ध्येयं वा तेन कुत्रचित् । किमु सर्वोत्तमो विष्णुर्ज्ञेयो नीचतया क्वचित् ॥
तस्माद्वस्तु यथारूपं ज्ञेयं ध्येयं च सर्वदा । कारणं पुरुषार्थस्य नान्यथा भवति क्वचित् ॥

**यत्किञ्चिद्गङ्गोदकादिकमन्यथासंस्थं पवित्रं सत् अन्यथाऽपवित्रं ध्यातं ध्यातुरञ्जसा महादोषकरं किमु सर्वेश्वरो हरिरप्रकृष्टतया ध्यातः ॥** तेन **अनर्थप्रसङ्गेन ।**

इति श्रुतिपुराणोक्तिबलतो न प्रतीकता ।
ध्येया विष्णोः क्वचिद्यस्मान्मिथ्याज्ञानमनर्थदम् ॥
इत्यभिप्रेत्य न हि स इत्याह भगवान्प्रभुः ॥

**इति श्रुतिपुराणोक्तिबलतो मिथ्याज्ञानमनर्थदं प्रतीयते यस्मात्तस्माद्विष्णोः** प्रतीकता **न ध्येयेति परंपरया हेतुहेतुमद्भावमभिप्रेत्य भगवान्सूत्रकारो न हि स इति हेतुमाह । अतो नासङ्गतिरित्यर्थः । वक्ष्यमाणप्रकारेण द्विरूपस्यापि ध्यानस्य साम्यात् बलत इत्युक्तम् । ध्यानस्यापि ज्ञानविशेषत्वात्सङ्कीर्णोक्तिः ।**

---

शे० — **इममेवेति** । उक्तप्रतिज्ञायां न हि स इत्यस्य परंपरया हेतुहेतुमद्भावलक्षणमेवेत्यर्थः । अन्यथासंतमित्यस्य मनआदिप्रतीकाद्यभिन्नं संतम् । अन्यथा भिन्नत्वेन प्रतिपद्यत इति योजनायां वक्ष्यमाणम्यात्मापहारित्वस्यालाभात्तदुपयोगितया तद् व्याचष्टे **प्रतीकभिन्नत्वादिप्रकारं संतमित्यादि** । आत्मा चासावीशश्चेति कर्मधारयपक्षे आत्मत्वाद्युक्तेः प्रयोजनविशेषालाभात् अन्यथासंतमिति विशेषणोक्तभिन्नत्वोपपादकतया प्रकृतोपयुक्तत्वलाभात् षष्ठीतत्पुरुषमेवाश्रित्यात्मेशमित्येतद् व्याचष्टे **आत्मनामिति ॥ जानातीति ।** पद्यतेर्गत्यर्थत्वाद्गत्यर्थानां ज्ञानार्थत्वादिति भावः । अन्यथोपासनस्याकर्तव्यतायाः प्रमाणारूढत्वलाभायोपासनपरतयाऽपि व्याचष्टे **ध्यायति चेति** । ज्ञानध्यानयोरुभयोरप्यनर्थसाधनतायाः उत्तरत्रोक्तेस्तदनुरोधेनात्रोभयार्थतया व्याख्यानं कृतम् । उत्तरत्रोभयोरनर्थसाधनत्वोक्तेः प्रयोजनं त्वाकर एव स्पष्टम् ॥ **विवरणमिति** । अनेन कथमन्यथोपासकस्य चोरत्वमित्यत आह **आत्मापहारिणेतीति** । इति योजनोक्ता भवति । भवेदन्यथोपासकस्य चोरत्वं यद्यात्मापहारित्वं तस्य स्यात् । तदेव कथमित्यतस्तदुपपादयति **अभेदे खल्विति** । ततोऽपि किमित्यतस्तदवशिष्टं किं प्रतीकमुत ब्रह्मेति विकल्पं मनसि निधायाद्यं दूषयति **प्रतीकावशेष इति ॥ स्फुटमिति** । ब्रह्मस्वरूपोपमर्देन प्रतीकावशेषस्य ध्यातत्वादित्यर्थः । द्वितीयं दूषयति **प्रतीकप्रविलय इति** ।

प्रतीकस्वरूपोपमर्देन ब्रह्मावशेषे ध्यातेऽपीत्यर्थः || **ऐश्वर्येति** । प्रतीकसापेक्षस्य तदैश्वर्यस्य तदवशेषे संभवेऽपि तदुपमर्देऽसंभवादित्यर्थः । अनेनात्मरूपधर्म्यपहारित्वं आत्मत्वरूपतद्धर्मापहारित्वं चेत्युभयविधमप्यात्मापहारित्वमिह विवक्षितमिति युक्तमस्य विवरणत्वमित्युक्तं भवति ।

बाधकानीत्यतः परं अतोऽस्तु विष्णोः प्रतीकत्वेन ध्यानस्याकर्तव्यत्वमिति शङ्कावाक्यशेषः । बाधकमित्यतः परं अतस्तस्य कर्तव्यत्वं स्यादेवेति शेषः । यच्छब्दार्थस्य तमस उत्थितिं प्रत्यनधिकरणत्वाद्यत्रेति सप्तम्यनुपपत्तिमाशङ्क्योत्थितिकर्तारं प्रत्याश्रयत्वात्तदुपपत्तिरिति भावेन तत्कर्तारं पूरयति **यत्र पतितस्येति** । अन्यथाध्यानस्य दोष इति षष्ठीतत्पुरुषे ध्यानजन्यो दोष इति मध्यमपदलोपिसमासाश्रयणे वा दोषस्यैवानर्थहेतुत्वप्राप्त्याऽन्यथाध्यानस्य तदप्राप्तेः प्रक्रमविरोधः स्यादित्यत आह **ध्यानमेवेति** || **प्रथमार्थ एवेति** । विष्णोः प्रतीकताध्यान एवेत्यर्थः । योग्यत्वादनर्थकारणत्वस्य तच्छब्देन तन्मात्रपरामर्श इत्याह **तेनानर्थप्रसङ्गेनेति** ।

ननु च 'इति श्रुतिपुराणोक्तिन' इत्येव वक्तव्ये किं 'बलत' इत्यनेनेत्यतः इति श्रुतिपुराणोक्तित उपासनद्वयस्याप्यनर्थसाधनत्वसिद्धेरकर्तव्यतेत्युक्तमसत् । राज्ञि क्षत्तृदृष्ट्याऽनर्थदर्शनात् । तन्न्यायेन ब्रह्मणि प्रतीकदृष्टेरनर्थसाधनत्वावश्यंभावेन श्रुत्यादिना तदकर्तव्यतासिद्धावपि क्षत्तरि राजदृष्टेः फलवत्त्वदृष्ट्या तन्न्यायेन प्रतीके ब्रह्मदृष्टेरपि फलवत्त्वसंभवेनोपपत्तिविरुद्धतयोदाहृतश्रुत्यादिना प्रतीके ब्रह्मदृष्टेरनर्थसाधनत्वासिद्धेरित्यत उदाहृतश्रुत्यादिमात्रेण तदसिद्धावपि पुरतो नरदेवस्येत्यादिना वक्ष्यमाणसिंहो देवदत्त इत्यादाविव राजत्वोपचारेणोक्तिमात्रस्यैव क्षत्तरि सद्भावेऽपि राजदृष्टेरभावात्तत्सद्भावेऽपि वा तत्राप्यनर्थस्यैव सद्भावेन फलवत्त्वाभावान्न प्रतीकेऽपि ब्रह्मदृष्टेस्तन्न्यायेन फलवत्त्वम् अपि त्वनर्थसाधनत्वमेवेत्यादिरूपा योपपत्तिस्तत्सहितश्रुत्यादिनाऽनर्थसाधनत्वसिद्धिर्युक्तैव इत्याशयेन बलत इत्युक्तमित्याशयवानाह **वक्ष्यमाणेति** । वक्ष्यमाणोपपत्त्येत्यर्थः । तत्सहकारेणेति यावत् । उदाहृतश्रुत्यादिनेति शेषः । साम्यादनर्थसाधनत्वसिद्धेरिति यावत् । तातचरणास्तु 'तत्त्वं वाऽहमस्मि भगवो देवते अहं च त्वमसी'त्यादिवक्ष्यमाणप्रकारेण ब्रह्मणः प्रतीकत्वेन प्रतीकस्य च ब्रह्मत्वेन ध्यानस्य श्रौतत्वात् । अपिशब्दोक्ततन्निषेधस्यापि न किंचिदित्याद्युदाहृतश्रुत्यादिसिद्धत्वेनोभयोरपि श्रौतत्वसाम्ये कथं निर्णय इत्यतोऽन्यथोपासनकर्तव्यताप्रापकस्य त्वं वा अहमस्मीत्यादेरागमस्य सावकाशत्वान्निषेधकस्य न किंचिदित्यादेश्च निरवकाशत्वेन प्राबल्याद्युक्तोऽनेन तस्य बाध इति दर्शयितुं बलत इत्युक्तमित्यर्थ इत्याहुः । ननु मिथ्योपासनस्यानर्थसाधनत्वप्रतिपादनमुखेनाकर्तव्यतामुपदर्शयितुं योऽन्यथासंतमित्यादिवाक्येष्वन्यथोपासनस्यैवानर्थसाधनत्वेन कथनीयत्वात् अन्यथोपासनतज्ज्ञानयोः संकरेणानर्थतासाधनत्ववर्णनमयुक्तमित्यतः संकीर्णोक्तौ निमित्तमाह **ध्यानस्यापीति** ।

**स०**— ननु सूत्रकारेण 'न प्रतीके न हि सः' इति प्रतीकस्यैव ब्रह्मत्वेनोपासनस्य निषिद्धत्वात् तथोपासनस्यानर्थसाधनत्वप्रतिपादकवाक्योदाहरणस्यैव कर्तव्यत्वे योऽन्यथासन्तमित्यादिविष्णोर्मनआदिप्रतीकात्मत्वोपासनस्याकर्तव्यत्वप्रतिपादकवाक्योदाहरणमयुक्तमित्यत आह **वक्ष्यमाणप्रकारेणेति** । 'ध्याते चैकस्य तद्भावे तद्भावोऽन्यस्य किं न तत्' इत्यादिवक्ष्यमाणप्रकारेण विष्णोः प्रतीकत्वेन प्रतीकस्य विष्णुत्वेनोपासनमित्येवं द्विरूपस्यापि ध्यानस्य साम्यादित्यर्थः । उक्तार्थोऽपि न श्रौतः किंत्वर्थापत्तिसिद्ध इत्याशयेन बलत इत्युक्तम् । **बलतः** श्रुतिद्वयप्राबल्यात् । 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि देवते' इत्यादिवक्ष्यमाणप्रकारेण ध्यानद्वयस्य साम्यादित्यर्थ इति केचित् ।

**प०**— ननु विष्णोर्मनआदिनीचरूपत्वेन ध्यानस्य दोषकृत्त्वेऽपि मनःप्रभृतेरुत्कृष्टब्रह्मत्वध्यानं न दोषकृदित्यत आह **वक्ष्यमाणेति** । 'चण्डालो नृप इत्युक्ते नृपश्चण्डाल इत्यपि । को विशेष' इत्यादिना वक्ष्यमाणेत्यर्थः । ननूक्तवचनेषु क्वचिदन्यथाज्ञाननिषेधः क्वचिद्ध्यानस्य कुत एवं सङ्करोक्तिः ध्याननिरासस्यैव प्रस्तावादित्यत आह **ध्यानस्यापीति** ।

**या०**— **जानातीति** व्याख्यानं प्रसङ्गात्तथा ज्ञानस्याप्यनर्थहेतुत्वोपपादनाय । प्रकृताभिप्रायेण व्याख्यानम् **ध्यायति चेति** । ननु विष्णोः प्रतीकताध्यानेऽनर्थकथनं युक्तम् । उत्तमस्य नीचताध्यानेऽनर्थदर्शनात् । प्रतीकस्य विष्णुत्वध्याने तु नानर्थः । क्षत्तरि राजदृष्ट्या फलदर्शनात् । अतः स्वात्मानमित्यादितन्निषेधकथनं न युज्यत इत्यत आह **वक्ष्यमाणप्रकारेणेति** । चण्डालो नृप इत्युक्ते नृपश्चण्डाल इत्यपि । को विशेषः परिज्ञात' इत्यादिनेति शेषः । तथा च बलत इत्युक्त्या स्वात्मानमित्यादि वाक्यं वक्ष्यमाणोपपादनसापेक्षमेव स्वार्थप्रापकं न केवलमिति सूचितमिति भावः । ननु मिथ्याज्ञानमनर्थकं चेद्विष्णोः प्रतीकता न ज्ञेयेत्येव वक्तव्यं न तु न ध्येयेति । ध्यानस्य ज्ञानभिन्नत्वादित्यत आह **ध्यानस्यापीति** । तथा च यस्मान्मिथ्याज्ञानमनर्थदं प्रतीयत इति हेतुवाक्ये ज्ञानपदेन ज्ञानविशेषरूपस्य ध्यानस्यैव सङ्कीर्णतया साधारण्येन ज्ञानत्वेन रूपेणोक्तत्वान्न ध्येयेति वचनं नानुपपन्नमिति भावः ।

**सु०— एवं तर्हि मनो ब्रह्मेत्यादिश्रुतीनां कोऽर्थ इत्यत आह** प्रतीकेति ।

**अनु०**— प्रतीकसंस्थितत्वेन ध्येयो विष्णुर्न चान्यथा ॥ ३ ॥

**व्यत्ययो बहुलं, सप्तसु प्रथमा, षट्सु द्वितीया, इत्यादिस्मरणाद्विभक्तिव्यत्ययेनाधिकारणार्थतया श्रुतयो व्याख्येया इति भावः ॥ ४-१-३ ॥**

**शे०**— ननु मनो ब्रह्मेत्यादेर्विभक्तिव्यत्ययेनाधिकरणार्थतया व्याख्यानं भाष्यकारीयमनर्थकम् । विभक्तिव्यत्यये नियामकाभावात् इत्यतस्तदाश्रयणे प्रसिद्धव्याकरणस्य नियामकं तावदाह **व्यत्यय इति** । व्युत्पादितमेतदत्रैव प्राक् । महाव्याकरणस्थमपि तन्नियामकमाह **सप्तस्विति** । सप्तसु प्रथमादिसप्तविभक्त्यर्थेषु प्रथमाविभक्तिः स्यादित्याद्यसूत्रार्थः । प्रथमाविभक्त्यर्थातिरिक्तद्वितीयादिषड्विभक्त्यर्थेषु द्वितीयाविभक्तिः स्यादिति द्वितीयसूत्रार्थः । स यो वाचं ब्रह्मेत्युपास्त इत्यादौ द्वितीयाया अपि सप्तम्यर्थत्वसिद्धये द्वितीयसूत्रोदाहरणं कृतम् । यद्यपि महाव्याकरणस्थसूत्रानुसारेण न विभक्तिव्यत्ययस्तथाऽपि प्रसिद्धव्याकरणानुरोधेन तत्सद्भावात । टीकायामिह व्यत्ययेनेत्युक्तम् । अत एव टीकाकृता तस्य प्रथममुदाहरणं कृतमित्यवधेयम् ॥ ४।१।३ ॥

**प०**— पाणिनीयं सूत्रमाह **व्यत्ययो बहुलमिति** । 'सप्तसु प्रथमा यस्माद्भूयोभूयस्त्वतस्तथा । षट्सु द्वितीया यस्माच्चेत्' इत्यादिछान्दोग्यभाष्यं हृदि कृत्वाह **सप्तस्विति** । वाचं ब्रह्मेत्येतन्निर्वाहायाह **षट्स्विति** । द्वितीयादिविभक्तिष्वित्यर्थः । आदिपदेन सुपां सुलुगित्यादिग्रहः ॥ **विभक्तिव्यत्ययेनेति** । 'नामादिप्राणपर्यन्ताः सप्तम्यर्थाः प्रकीर्तिता' इति सप्तमे छान्दोग्यभाष्योक्तिरिति भावः ॥ ४।१।३ ॥

---

**या०**— व्यत्ययो बहुलमिति प्रसिद्धव्याकरणस्थं विभक्तिव्यत्ययेन व्याख्याने विधायकमुक्तम् । महाव्याकरणस्थमपि तदाह **सप्तसु प्रथमेत्यादि** । सप्तसु प्रथमेत्यादिविभक्त्यर्थेषु प्रथमाविभक्तिः स्यादिति आद्यसूत्रार्थः । प्रथमाविभक्त्यर्थं विना द्वितीयादिविभक्त्यर्थेषु षट्सु, द्वितीयाविभक्तिः स्यादिति द्वितीयसूत्रार्थः । इदं च सूत्रं 'स यो वाचं ब्रह्मेत्युपास्त' इत्यादिद्वितीयाऽपि सप्तम्यर्थ इति दर्शयितुम् । एवं चात्र विभक्तिव्यत्ययेनेत्यस्य प्रसिद्धव्याकरणरीत्या विभक्त्यर्थस्तद्व्यत्ययेनेत्यर्थो ज्ञातव्यः ॥ ४।१।३ ॥

**॥ इति प्रतीकाधिकरणम् ॥**

॥ अथ ब्रह्मदृष्टयधिकरणम् ॥

सु० — ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ अत्र ब्रह्मदृष्टिः कर्तव्येत्युच्यते । कुत्रेत्याकाङ्क्षायां सन्निधानात्प्रतीक इति प्राप्नोति । तच्च योग्यताविरहान्निराकृतम् । अतः साकाङ्क्षं प्रतिज्ञावाक्यं व्याख्याति ब्रह्मेति चेति ।

अनु० — ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥

ब्रह्मेति च सदा ध्येयो भगवान्विष्णुरञ्जसा ॥

अत्र चशब्दं प्रयुञ्जानेनात्मेत्यनेन व्यवहितेनाप्यस्य योग्यतयाऽन्वयः । आत्मशब्दश्च प्रथमान्तः प्रकृतः, सप्तम्यन्तेन चेहार्थः । अर्थवशाद्विभक्तिविपरिणामः । अतः सप्तम्यन्तोऽत्र अनुवर्तत इति सूचितम् । भगवान्विष्णुर्ब्रह्मेति ध्येय इति तात्पर्यकथनं, नाक्षरार्थः । नन्वेतत् भूम्नः क्रतुवज्ज्यायस्त्वमित्यनेनैव गतमित्यतः सदाऽञ्जसेत्युक्तम् । उत्कर्षादिति हेतुः । तत्र न ज्ञायते कस्योत्कर्ष इति । अतो व्याचष्टे उत्कृष्ट इति ।

उत्कृष्टो ब्रह्मशब्दार्थः

यत इति वक्ष्यमाणमिहापि संबध्यते । उत्कर्षादुत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वादिति सूत्रकृतोत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वमुक्तम् । अनुव्याख्यानकृता तूत्कर्षवान् ब्रह्मशब्दाभिधेय इत्यभिहितम् । फलतस्त्वेक एवार्थः । कथमुत्कर्षो ब्रह्मशब्दप्रवृत्तिनिमित्तमित्यत आह पूर्णत्वमिति ।

पूर्णत्वं ब्रह्मता यतः ॥

बृह्यर्थात् बृहतेरन्येभ्योऽपि दृश्यन्त इति मनिन्प्रत्ययः दृशिग्रहणसामर्थ्याद्धातोरमागमश्च । वृद्धिः पूर्णत्वमित्येक एवार्थः । ब्रह्मता ब्रह्मशब्दप्रवृत्तिनिमित्तम् । पूर्णत्वमेव चोत्कर्षः । हेतुहेतुमद्भावश्च भाष्य एव समर्थितः ।

टी० — ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ सन्निधानादित्युपलक्षणम् । सप्तम्यन्ततया कुत्रेत्याकाङ्क्षापूरकत्वाच्चेत्यपि द्रष्टव्यम् । अस्तु तर्हि प्राप्तस्य तस्यैवात्रान्वयित्वमित्यतः प्रतीकस्य ब्रह्मत्वाभावेन तत्र तद्दृष्टेर्मिथ्यादृष्टित्वादनर्थसाधनत्वेन कर्तव्यतान्वयायोग्यत्वान्न तस्यान्वय इत्याह तच्चेति ॥ निराकृतमिति । पूर्वाधिकरण इति शेषः ॥ योग्यतयेति । आत्मनो ब्रह्मत्वेन तत्र तद्दृष्टेः सम्यग्दृष्टित्वादनर्थसाधनत्वाभावेन कर्तव्यत्वान्वययोग्यत्वात् 'यस्य येनार्थसंबन्धो दूरस्थेनापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणमि'त्युक्तरीत्या सन्निधानाद्योग्यताया एव बलवत्त्वात् । व्यवहितेनात्मेत्यने-

नैवेत्यस्यान्वय इत्यर्थः ॥ **सप्तम्यन्तेनेति** । तस्यैव कुत्रेत्यधिकरणाकाङ्क्षापूरकत्वेन प्रथमान्तस्य तदभावादिति भावः । प्रथमान्ततया प्रकृतस्य कथं सप्तम्यन्तत्वं येन सप्तम्यन्तस्यात्रानुवृत्तिरित्यत उक्तम् ॥ **अर्थवशादिति** । नियामकं तु 'व्यत्ययो बहुलमि'ति प्रागुक्तमेवावगन्तव्यम् । इति सूचितमित्यस्य चशब्दं प्रयुञ्जानेनेति पूर्वेण संबन्धः । तर्हि 'ब्रह्मेति सदा ध्येयो भगवानि'तिभाष्यविरोधः । तदनुरोधेन प्रथमान्तस्यैवात्मशब्दस्यात्रान्वयप्रतिभासादित्यत आह **भगवानिति** । एवं सूत्रभाष्ययोर्वि-संवादं परिहरति **उत्कर्षादिति** ॥ **बृहतेरिति** । यद्यपि बृंहेर्नोचेति बृंहेर्मनिनि नकारस्याकारे च सति ब्रह्मशब्दो व्युत्पादितः । तथाऽपि बृह बृहि वृद्धाविति बृहतेरपि पाठात्तस्य चेदं रूपमित्यभिसन्धायैव-मुक्तम् । यद्यपि बृहते रूपाश्रयणेन दृशिग्रहणसामर्थ्यमाश्रयणीयं तथाऽपि बृहजातिजीवेतिधात्वन्तरादप्ये-तद्रूपनिष्पत्तिरिति सूचनायैवमुक्तमिति द्रष्टव्यम् । उक्तरीत्या वृद्धेर्ब्रह्मशब्दप्रवृत्तिनिमित्तत्वप्राप्तावपि पूर्णत्वस्य तदप्राप्तेः । पूर्णत्वस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वपरभाष्यानुपपत्तिमाशङ्क्याह **वृद्धिरिति** । उत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वं कथंभावशङ्कायां पूर्णत्वस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वकथनमेव सङ्गतं न तु तस्य ब्रह्मत्वकथनमित्यतो ब्रह्मतेत्येतत्तत्परतया व्याचष्टे **ब्रह्मतेति** । तावताऽपि सूत्रितस्य ब्रह्मोत्कर्षस्य तच्छब्दप्रवृत्तिनिमित्ततायाः अलाभात्कथमुत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वमिति शङ्काया अनिरास इत्यत आह **पूर्णत्वमेव चेति** । नन्वस्तूत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वम् । तथाऽपि कथं तस्यात्मनि ब्रह्मदृष्टिः कार्येति प्रतिज्ञातार्थेन सह हेतुहेतुमद्भाव इत्यत आह **हेतुहेतुमद्भावश्चेति** । पूर्णत्वरूपोत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वाद्ब्रह्मत्वोपासनं नामोत्कृष्टत्वोपासनमेव । तच्चान्योपासनेभ्योऽति-शयेन भगवत्प्रीतिजनकमतस्तत्सर्वथा कार्यमिति परंपरया हेतुहेतुमद्भावश्च 'महत्त्ववाची शब्दोऽयं महत्त्वज्ञानमेव हि । सर्वतः प्रीतिजनकमतस्तत्सर्वथा भवेदि'ति स्मृत्युदाहरणेन भाष्ये समर्थित इत्यर्थः ।

स० — ॐ **ब्रह्मदृष्टिरुत्कर्षात्** ॐ ॥ **योग्यतयेति** । सन्निधानाद्योग्यतायाः प्राबल्यादिति भावः । **हेतुहेतुमद्भावश्चेति** । उत्कर्षः ब्रह्मत्वध्यानं प्रति हेतुः इति हेतुहेतुमद्भावश्चेत्यर्थः । **भाष्य एवेति** । 'महत्त्वज्ञानमेव हि । सर्वतः प्रीतिजनकम् अतस्तत्सर्वथा भवेदि'त्यादिना भाष्य एव समर्थितं इत्यर्थः ।

प० — ॐ **ब्रह्मदृष्टिरुत्कर्षात्** ॐ ॥ **तच्च योग्यताविरहान्निराकृतमिति** । प्रतीकं ब्रह्मेत्येतच्चाभेदस्य बाधेन मिथ्योपास्तेर्निरासान्निराकृतमित्यर्थः । उपलक्षणमेतत् । प्रतीके ब्रह्मेत्युपा-स्तेर्योग्यत्वेऽपि पूर्वेण गतत्वान्नायमप्यर्थ इत्यपि ध्येयम् ॥ **योग्यतयाऽन्वय इति** । 'आनन्तर्यमचोदने'ति जैमिनिसूत्रे योग्यतैव बलीयसीत्युक्तेः । 'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेदि'ति चतुर्थस्कन्धे-

कविशाध्याये तात्पर्योक्तेश्चेति भावः ॥ **अन्येभ्योऽपीति** । विवृतमेतदस्माभिर्जिज्ञासासूत्रे ॥ **दृशि-ग्रहणेति** । दृशिग्रहणं प्रयोगानुसारार्थ इति वृत्तावुक्तेः ॥ **हेतुहेतुमद्भावश्चेति** । ब्रह्मशब्दार्थस्योत्कृष्टतया तथोपास्तेरन्योपास्त्यपेक्षयोत्कर्षात् ब्रह्मत्वोपास्तिस्सर्वथा कार्येत्येवंरूपेण 'महत्ववाचिशब्दोऽयमि'ति स्मृत्युक्त्या समर्थित इत्यर्थः ।

या० ॐ **ब्रह्मदृष्टिरुत्कर्षात्** ॐ ॥ **योग्यतयाऽन्वय इति** । सन्निध्यपेक्षया योग्यतायाः बलवत्वादिति भावः ॥ **ब्रह्मशब्दप्रवृत्तिनिमित्तत्वादिति** । कथमिदं लभ्यत इति चेत् । सूत्रे ब्रह्मशब्दाभिधेयस्येत्यध्याहारबलादिति ब्रूमः ॥ उत्कृष्टो ब्रह्मशब्दार्थ इति धर्मिप्राधान्येनानिर्देशेन तथाविधाध्याहारस्य सूचितत्वात । अन्यथा न ज्ञायते कस्योत्कर्षादिति षष्ठ्यन्ताकाङ्क्षाया अपरिहृतत्वेनोक्तानुव्याख्यानस्यासङ्गतत्वप्रसङ्गात् । ततश्च ब्रह्मशब्दाभिधेयस्योत्कर्षादुत्कृष्टत्वात्पूर्णत्वादिति सूत्रस्य श्रौतोऽर्थः संपद्यते । तद्बलादुत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वं लभ्यते । शब्दाभिधेयविशेषणतयोच्यमानस्य धर्मस्य शब्दप्रवृत्तिनिमित्ततानियमादिति । नन्वातो मनिनित्याकारान्तधातोरेव मनिन्प्रत्ययविधानात् कथमत्र मनिन्प्रत्यय इत्यत आह **अन्येभ्योऽपीति** । अन्येभ्योऽपि धातुभ्यो नकारान्तेभ्यो मनिन्क्वनिब्वनिब्विचश्चेत्येते प्रत्यया भवन्तीति सूत्रार्थः । सुशर्मा प्रातरित्वेत्याद्युदाहरणम् । न च पूर्वसूत्रे सुप्युपसर्गेऽपीत्यनुवृत्तेरुक्तत्वादत्र च तयोरभावात्कथमस्य सूत्रस्य प्राप्तिरिति वाच्यम् । अपिशब्दः सर्वविधिव्यभिचारार्थः । तेन निरुपपदादपि भवन्तीति काशिकायामुक्तत्वात् ॥ **दृशिग्रहणसामर्थ्यादिति** । दृशिग्रहणं प्रयोगानुसारार्थमिति प्रकाशिकायामुक्तत्वादिति भावः ॥ **अमागम इति** । तथा च मित्त्वादन्त्यादचो ऋवर्णात्परममागमे ऋकारस्य चेको यणचीति यणादेशे ब्रह्मेति रूपमिति भावः । ननूत्कृष्टत्वस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वं विष्णौ ब्रह्मदृष्टिः कार्येत्यत्र कथं हेतुरप्रयोजकत्वादित्यत आह **हेतुहेतुमद्भावश्चेति** । उत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वाद्ब्रह्मत्वोपासनं नामोत्कृष्टत्वोपासनं तच्चान्येभ्य उपासनेभ्योऽतिशयेन विष्णुप्रीतिजनकमतस्तत्सर्वथा कार्यमिति परंपरया हेतुहेतुमद्भावो भाष्ये 'महत्ववाची शब्दोऽय महत्वज्ञानमेव हि । सर्वतः प्रीतिजनकमतस्तत्सर्वथा भवे'दिति स्मृत्युदाहरणेन समर्थित इत्यर्थः ।

श्री०— ॐ **ब्रह्मदृष्टिरुत्कर्षात्** ॐ ॥ **प्रथमान्त इति** । आत्मेति सूत्रे विद्यमानात्मशब्दः प्रथमान्त इत्यर्थः ॥ **सप्तम्यन्तेन चेहार्थ इति** । अस्मिन्सूत्रे सप्तम्यन्तेनार्थवानित्यर्थः । प्रथमान्तस्य कथं सप्तम्यन्तत्वमित्यत आह **अर्थवशादिति** । प्रथमाविभक्तेः सप्तमीविभक्तित्वेन विपरिणामः कर्तव्य इत्यर्थः ॥ **भूम्न इति** । पूर्णत्वेनोपासनायाः भूम्न इति सूत्रे कथितत्वादित्यर्थः ॥ **अञ्जसेति** । आवश्यकत्वमनेन द्योतयतीति भावः ।

**सु०— ब्रह्मत्वस्य सर्वथा ध्येयत्वे किं प्रमाणमित्यत आह** आधिव्याधीति ।

**अनु०** – आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु ॥
ध्येयैव ब्रह्मता नित्यं विष्णोर्भक्त्या निरन्तरम् ॥
इति प्रकाशिकायां च वचनं विष्णुनेरितम् ॥ ४–१–४ ॥

**आधिव्याधीति द्वन्द्वैकवद्भावः । तच्च तन्निमित्तं च, तेन । कृत्यानां कर्तरि वेति षष्ठी । चशब्देन भाष्योदाहृतानि वचनानि समुच्चिनोति ॥ ४–१–४ ॥**

**शे०** – आधिव्याध्योरेव मनोविक्षेपनिमित्तत्वात्तन्निमित्तस्य विक्षेपनिमित्तत्वाभावेनाधिव्याध्योर्निमित्तमिति षष्ठीतत्पुरुषस्य बाधितत्वाद्विशेषणसमास एवात्र कर्तव्यः । न चासौ युज्यते । आधिव्याध्योर्भेदेन आधिश्चासौ व्याधिश्चेति विशेषणसमासानुपपत्त्या आधिश्च व्याधिश्च आधिव्याधी इति द्विवचनान्तस्य आधिव्याधी इति द्वन्द्वस्याप्येकवचनान्तेन निमित्तशब्देन विशेषणविशेष्यभावासंभवादित्यत उक्तरूपद्वन्द्वस्याप्येकवचनान्तत्वान्नानुपपत्तिरित्यभिप्रेत्य तदुपपादयति **द्वन्द्वैकवद्भाव इति** । सर्वो द्वन्द्वो विभाषयैकवद्भवतीति भावः । ननु ध्यायतेः कर्मणि अचो यदिति यति 'आदेच उपदेशेऽशिती'त्यात्वे ईद्यतीत्याकारस्य ईत्वे निष्पन्नस्य ध्येयशब्दस्य कर्मणि निष्पन्नतया कर्मणस्तेनोक्तत्वेन कर्तुरनुक्तत्वात् ॥ तिङाद्यनभिहिते कर्तरि 'कर्तृकरणयोस्तृतीये'ति प्राप्ततृतीयाबाधकतया नित्यं प्राप्तायाः कर्तृकर्मणोः कृतीति कृद्योगषष्ठ्याः 'कृत्यानां कर्तरि वे'ति सूत्रे कृद्योगे कर्तरि षष्ठ्या विकल्पितत्वात् । यत्प्रत्ययस्य च 'कृत्याः प्राङ्ण्वुल' इति कृत्यप्रत्ययत्वात् । तद्योगे षष्ठीपक्षे विक्षिप्तमनस इत्यस्योपपत्तेरित्याशयेनाह **कृत्यानामिति** ॥ **वचनानीति** । यद्यपि भाष्ये एतत्सूत्रव्याख्यानावसरे 'ब्रह्मदृष्ट्या सदोपास्य' इति ब्रह्मतर्कवचनमेकमेवोदाहृतम् । तथाऽपि उत्तराधिकरणोदाहृतस्याधिव्याधीत्यादिनारायणतन्त्रवचनस्य 'भूम्नः क्रतुवज्ज्यायस्त्वमि'त्युपासनापादीयाधिकरणोदाहृतस्य 'भूमैव देवः परमो ह्युपास्य' इति वचनस्यापि तदवश्यकर्तव्यतासाधकत्वात्तद्विवक्षया वचनानीति बहुवचनम् । अत एवातीताधिकरणसहितैतदधिकरणार्थे स्मृतिं चाहे'त्युत्तराधिकरणटीका 'नन्वेतद्भूम्नः क्रतुवज्ज्यायस्त्वमि'त्येतदधिकरणीयपूर्वग्रन्थश्चेति द्रष्टव्यम् ॥ ४ । १ । ४ ॥

**स०** — ननु तिङाद्यनभिहिते कर्तरि तृतीयाया विहितत्वात् । सुमनसां च तिङाद्यनभिहितत्वात् तत्र तृतीयायां सुमनोभिरिति भाव्यं सुमनस इति षष्ठी तु कथमित्यतो ध्येयेति कृत्यप्रत्यययोगेनेयं षष्ठी उपपद्यत इत्याह **कृत्यानामिति** ।

**प०** — निमित्तेनेत्येकवचनश्रवणादाह **द्वन्द्वैकवद्भाव इति**। कर्तृकरणयोस्तृतीयेति विक्षिप्त-मनसेति कर्तरि तृतीयया भाव्यमित्यत आह **कृत्यानामिति**। कृत्याः प्राङ्ण्वुल इति सूत्रोक्तकृत्य-संज्ञकप्रत्ययानां योगे कर्त्रर्थे विकल्पेन षष्ठी भवतीति द्वितीयाध्यायतृतीयपादस्थसूत्रस्यार्थः। इह च यत्प्रत्ययान्तध्येयेत्यस्य कृत्यप्रत्ययान्तत्वादिति भावः ॥ **भाष्योदाहृतानीति**। अत्र सूत्रे एकस्यैव वचनस्योक्तावपि आत्मेत्यादिसूत्रोक्तवचनान्तरापेक्षया वचनानीत्युक्तम् ॥ ४।१।४ ॥

**या०** — **द्वन्द्वैकवद्भाव इति**। अन्यथैकवचनान्तनिमित्तशब्दविशेषणत्वानुपपत्तिरिति ज्ञेयम्। **कृत्यानामिति**। कृत्यानां प्रयोगे कर्तरि षष्ठी विकल्पेन भवतीति सूत्रार्थः। भवता कटः कर्तव्यः। भवतः कटः कर्तव्य इत्याद्युदाहरणम्। प्रकृते च ध्येयेत्यस्य कृत्यप्रत्ययान्तत्वात्तद्योगे षष्ठ्युपपत्तिरित्यर्थः। अन्यथा कर्तुः प्रत्ययेनानभिधानात् तृतीयया भाव्यमिति भावः ॥ **भाष्योदाहृतानीति**। यद्यपि भाष्ये 'ब्रह्मदृष्ट्या सदोपास्य' इत्यादि ब्रह्मतर्कवचनं 'आधिव्याधी'त्यादिना नारायणतन्त्रवचनं चेति वचनद्वयमेवोदाहृतम्। तथाऽपि 'आत्मेत्येवं यदोपासा तदा ब्रह्मत्वसंयुते'त्यस्यापि वचनस्य प्रकृतार्थ-साधनतयाऽत्र विवक्षितत्वाद्बहुवचनोपपत्तिरिति द्रष्टव्यम्।

---

**श्री०**— नन्वाधिव्याधिनिमित्ताभ्यामिति वक्तव्यं, तत्कथं निमित्तेनेत्येकवचनमित्यत आह **द्वन्द्वैकवद्भाव इति**। आधिश्च व्याधिश्चाधिव्याधि(धी) तच्च तन्निमित्तं च, तेनेत्यर्थः ॥ ४।१।४ ॥

## ॥ इति ब्रह्मदृष्ट्यधिकरणम् ॥

## ॥ अथ आत्मोपगमाधिकरणान्यथाव्याख्याननिराकरणम् ॥

सु० — 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च', 'न प्रतीके न हि सः', 'ब्रह्मदृष्टि-रुत्कर्षात्' इति त्रिसूत्रीमेकेऽन्यथा व्याचक्षते ।

तथा हि । परमात्मा किमहमिति ग्रहीतव्यः । किं वा मदन्य इति संशये नाहमिति ग्राह्य इति प्राप्तम् । कुतः । अपहतपाप्मत्वादिगुणो हि परमात्मा । तद्विपरीतगुणश्च शारीरः । अतः कथं तयोरभेदो भवेत् । ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावस्ततः शास्त्रानर्थक्यम् । संसारिणोऽपीश्वरत्वेऽधिकार्यभावाच्छास्त्रानर्थक्यमेव । प्रत्यक्षादिविरोधश्च । एवं प्राप्ते ब्रूमः । आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः । तथा हि । परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवैनमुप-गच्छन्ति । 'त्वं वाऽहमस्मि भगवो देवते अहं वै त्वमसि देवते' इति । तथाऽन्येऽपि 'अहं ब्रह्मास्मी'त्येवमादय आत्मत्वोपगमा द्रष्टव्याः । ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदवाक्यानि । 'एष त आत्मा सर्वान्तरः', 'तत्त्वमसी'त्यादीनि । 'अथ योऽन्यां देवतामुपास्त' इत्यादिका श्रुतिरपवदति च भेददर्शनम् । यत्तूक्तं विरुद्धगुणयोरन्योन्यात्मत्वं न संभवतीति तदसत् । विरुद्धगुणताया मिथ्यात्वात् । न चेश्वराभावप्रसङ्गः । न हीश्वरस्य संसारित्वं प्रतिपाद्यते किं तर्हि संसारित्वापोहेनेश्वरत्वम् । न चाधिकार्यभावः प्रत्यक्षादिविरोधश्च । प्राक् प्रबोधा-त्संसारित्वाभ्युपगमात् । तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य । प्रबोधे तु प्रत्यक्षाद्यभाव एव । तथा सत्यद्वैतश्रुतेरप्यभावप्रसङ्ग इति चेत् । इष्टमेवैतत् । तस्मादात्मेत्येवेश्वरे मनो दधीतेति प्रथमसूत्रार्थः ॥

शे० — **तद्विपरीतगुणश्चेति** । अनपहतपाप्मत्वादिलक्षणश्चेत्यर्थः ॥ **ईश्वरस्य चेति** । ईश्वरस्वरूपोपमर्देनेति शेषः ॥ **तत इति** । प्रतिपाद्यस्येश्वरस्याभावादित्यर्थः ॥ **संसारिणोऽपीति** । संसारिस्वरूपोपमर्देनेति शेषः ॥ **प्रत्यक्षादीति** । संसारिण ईश्वरभेदस्य नाहं सर्वज्ञ इति प्रत्यक्षादि-सिद्धत्वेन तस्येश्वरत्वं प्रत्यक्षादिविरुद्धमित्यर्थः । **परमेश्वरप्रक्रियायां** तत्प्रकरणे ॥ इत्यादिकेत्यादिपदेन 'अन्योऽसावन्योऽहमस्मीति न स वेदे'ति वाक्यशेषस्य, 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदे'त्यादिश्रुत्यन्तरस्य च परिग्रहः ॥ **मिथ्यात्वादिति** । तस्याश्च भेदासाधकत्वात् । अन्यथैकस्मिन्नपि तादृशविरुद्धगुणताया वक्तुं शक्यत्वेन भेदप्रसङ्ग इति भावः ॥ **न चेति** । ईश्वरस्वरूपोपमर्देन तस्य संसार्यात्मत्वाभ्युपगमादित्यर्थः । ततश्च प्रतिपाद्याभावाच्छास्त्रानर्थ-

कथमिति भावः । ईश्वरस्य स्वरूपोपमर्देन संसार्यात्मत्वानभ्युपगमान्नोक्तदोष इति परिहरति **न हीति** । तर्हि नाहमिति ग्राह्य इति वदता पूर्वपक्षिणा जितमिति पृच्छति **किं तर्हीति** । उत्तरमाह **संसारित्वेति** । संसारिण इति शेषः ॥ **अधिकार्यभाव इति** । संसारित्वापोहेन संसारिण ईश्वरात्मत्वाभ्युपगमादिति भावः ॥ **प्रबोधे त्विति** । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदि'त्यादिनेति शेषः ॥ **इष्टमेवैतदिति** । 'अत्र हि पिताऽपिता भवती'त्युपक्रम्य 'वेदा अवेदा' इति वचनानुरोधेन प्रबोधे प्रत्यक्षाद्यभाववच्छ्रुत्यभावस्याप्यभ्युपगमादिति भावः ।

स० — **तत इति** । प्रतिपाद्याभावादित्यर्थः । **परमेश्वरप्रक्रियायां** परमेश्वरप्रकरणे ।

प० — **एके इति** । अद्वैतिनः इत्यर्थः यथाश्रुतं परभाष्यमनुवदति **परमात्मा किमहमिति** । जीव इति ग्राह्य इत्यर्थः । ईश्वरस्यात्मत्वे आत्मन ईश्वरत्वपक्षे चोभयत्र दोषमाह **ईश्वरस्येत्यादिना** । आद्यपक्षाश्रयेण सिद्धान्तं तावदाह **आत्मेत्येवेति** । सूत्रशेषस्यार्थमाह **परमेश्वरेति** । उपगच्छन्ति स्वीकुर्वन्तीत्यर्थः । आत्मत्वोपगमाः आत्मत्वाङ्गीकारा इत्यर्थः ॥ **इत्यादिकेति** । 'अन्योसावन्योहमस्मीति न स वेद यथा पशुरि'ति वाक्यशेष आदिपदार्थः । द्वितीयकल्पमाश्रित्याह **न हीति** । दोषद्वयस्योत्तरं **प्राक्प्रबोधादिति** । ब्रह्मज्ञानात्प्रागित्यर्थः ॥

या० — **उपगच्छन्तीति** । अभ्युपगच्छन्तीत्यर्थः ॥ **इत्यादिका श्रुतिरिति** । 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरि'त्यर्थः ।

श्री० — **ईश्वराभाव इति** । ईश्वरस्य संसार्यात्माभेदाङ्गीकार इत्यर्थः ॥ **शास्त्रेति** । सदेव सोम्येत्यादि शास्त्रेत्यर्थः ॥ **ईश्वरत्वमिति** । संसारिण इति शेषः ।

**सु० — मनो ब्रह्मेत्युपासीतेत्येवमादिषु प्रतीकोपासनेषु संशयः किं तेष्वप्यात्मग्रहः कर्तव्यो न वेति । किं तावत्प्राप्तम् । तेष्वप्यात्मग्रह एव युक्तः । कस्मात् । ब्रह्मण आत्मत्वात्, प्रतीकानामपि ब्रह्मविकारत्वात् ब्रह्मत्वे सत्यात्मत्वोपपत्तेरिति । ब्रूमः । न प्रतीकेष्वात्ममतिं बध्नीयात् । न हि स उपासकः प्रतीकानि यत्तान्यात्मत्वेनाकलयेत् । यत्पुनर्ब्रह्मविकारत्वात्प्रतीकानां ब्रह्मत्वं ततश्चात्मत्वमिति तदसत् । प्रतीकाभावप्रसङ्गात् । विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति । स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकस्वरूपत्वमात्मग्रहो वा । किञ्च यथा रुचकस्वस्तिकयोर्नेतरेतरात्मत्वम् । द्वयोरपि विकारत्वात् । तथा प्रतीकात्मनोरपि । सुवर्णात्मनेव ब्रह्मात्मनैकत्वे प्रतीकाभावप्रसङ्गमवोचाम । अतो न प्रतीकेष्वात्मदृष्टिः कर्तव्येति द्वितीयसूत्रार्थः ॥**

**शे०** — प्रतीकानामपि ब्रह्मत्वे सत्यात्मत्वोपपत्तेरिति संबन्धः । तेषां ब्रह्मत्वे हेतुमाह **ब्रह्मेतीति** । विकारस्य च विकार्यनन्यत्वादिति भावः । अस्त्वेवं तेषां ब्रह्मत्वमात्मत्वं तु कुत इत्यत आह **ब्रह्मण इति** । तथा श्रुतिप्रसिद्धेरिति भावः ॥ **न हि स उपासक इति** । अनुभवाद्वा प्रतीकानामात्मत्वकल्पनं श्रुतेर्वा न त्वेतदुभयमत्रास्तीत्यर्थः । प्रतीकाभावप्रसङ्गमेवोपपादयति **विकारेति** । अन्यथैक्यानुपपत्तेरिति भावः । ननु यथा तत्त्वमसीत्यादाववच्छिन्नस्याहंकारास्पदस्यानवच्छिन्नब्रह्मात्मतया भवत्यभावः । एवं प्रतीकानामपि भविष्यतीत्यत आह **स्वरूपोपमर्दे च नामादीनामिति** । न तत्त्वमसीत्यादावहंकारास्पदमुपास्यमवगम्यते किन्तु सर्पत्वानुवादेन रज्जुत्वज्ञापन इवाहङ्कारास्पदस्यावच्छिन्नस्य प्रविलय एवावगम्यते । इह तु प्रतीकान्यहङ्कारास्पदत्वेनोपास्यतया प्रधानत्वेन विधित्सितानि । अतो न प्रधानीभूतानां तेषामुच्छेदो युक्तः । तथा सति हि विधेयस्याप्याश्रयाभावेनानुपपत्तेरिति भावः ॥ **तथा प्रतीकात्मनोरिति** । यद्यप्यात्मनोऽनादित्वान्न विकारित्वं तथाऽप्यध्यस्तत्वमेव विकारत्वमत्राभिमतम् । तच्चात्मनोऽप्यविद्यावच्छिन्नस्यानाद्यध्यासाङ्गीकारादस्त्येवेत्यभिप्रायेणेदमुक्तमिति ध्येयम् । ननु रुचिकस्वस्तिकयोस्तत्त्वेन अभेदाभावेऽपि सुवर्णात्मनाऽभेदवत्प्रतीकात्मनोर्ब्रह्मविकारयोः प्रतीकत्वादिनाऽभेदाभावेऽपि ब्रह्मात्मनाऽभेदो भविष्यतीत्याशङ्क्याह **सुवर्णात्मनेवेति** ।

---

**म०** — प्रतीकाभावप्रसङ्गमेव दर्शयति **विकारेति** ।

**प०** — द्वितीयसूत्रव्याख्यानमनुवदति **मनो ब्रह्मेतीत्यादिना** आत्मग्रहः अहंत्वग्रह इत्यर्थः । प्रतीकाभावप्रसङ्गादित्युक्तं व्यनक्ति **विकारस्वरूपेति** ॥ **नामादिजातस्य** नामवागादिसमूहस्य ॥

**या०** — प्रतीकाभावप्रसङ्गादित्युक्तमुपपादयति **विकारस्वरूपोपमर्देनेति** । अन्यथैक्यानुपपत्तिरिति भावः । ननु यथा तत्त्वमसीत्यत्र जीवस्य ब्रह्मताबोधने जीवचैतन्ये विशिष्टाकारापगमः । एवं प्रतीकानामपि स्वरूपोपमर्द इष्ट एवेत्यत आह **स्वरूपोपमर्दे चेति** । तत्त्वमसीत्यत्र हि अवच्छिन्नतयाऽनूदितस्यानवच्छिन्नब्रह्मात्मताविधाने अवच्छिन्नस्य प्रविलयो युक्त एव । सर्पतया अनूदितस्य पुरोवर्तिनो रज्जुताविधाने सर्पत्वप्रविलय इव । न चैवं प्रकृते । प्रतीकानि हि आत्मत्वेनोपास्यतया प्रधानत्वेन विधित्सितानि । अतो न प्रधानीभूतानां तेषामुच्छेदो युक्तः । तथात्वे च विधेयस्याप्याश्रयाभावेनानुपपत्तिरिति । तदिदमाह **कुतः प्रतीकत्वमात्मग्रहो वेति** ॥ **तथा प्रतीकात्मनोरपीति** । यद्यप्यात्मनोऽनादित्वान्न विकारत्वं तथाऽपि अध्यस्तत्वमेव विकारत्वमत्राभिप्रेतम् । तच्चात्मनोऽप्यविद्यावच्छिन्नस्याध्यासाङ्गीकारादस्त्येवेति ज्ञातव्यम् ।

**श्री० — आत्मग्रहो** जीवात्माभेदेनोपास्तिः ॥ **ब्रह्मण आत्मत्वादिति** । ब्रह्मणो जीवाभिन्नत्वादित्यर्थः । ब्रह्मत्वे सतीत्यत्र प्रतीकानामिति वर्तते । **आत्मत्वोपपत्तेः** जीवाभेदोपपत्तेः । तथा च यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तिबलात्प्रतीकानामात्माभिन्नब्रह्माभिन्नत्वादात्माभिन्नत्वमपि प्राप्तमित्यर्थः । **आकलयेत्** भावयीत ॥ **विकारस्वरूपेति** । ब्रह्मविकारभूतप्रतीकस्वरूपोपमर्देनेत्यर्थः । **नामादिजातस्य** नामवागादिप्रतीकसमुदायस्य ॥ नामादीनां स्वरूपोपमर्द इत्यन्वयः ।

**सु० — तेष्वेवोदाहरणेष्वन्यः संशयः । किमादित्यादिदृष्टयो ब्रह्मणि कार्याः किंवा ब्रह्मदृष्टिरादित्यादिष्विति । सामानाधिकरण्यस्योभयथोपपत्तेः । तत्रानियमो नियमकारिणः शास्त्रस्याभावात् । अथवाऽऽदित्यादिदृष्टय एव ब्रह्मणि कर्तव्याः । एवं हि ब्रह्मोपासितं भवति । ब्रह्मोपासनं च फलवदिति प्राप्ते ब्रूमः । ब्रह्मदृष्टिरेवादित्यादिषु स्यात् । कस्मात् । उत्कर्षात् । एवमुत्कर्षेणादित्यादयो दृष्टा भवन्ति । तथा च लौकिको न्यायोऽनुगतो भवति । क्षत्तरि खलु राजदृष्टिः क्रियते न तु राज्ञि क्षत्तृदृष्टिर्विपर्यये प्रत्यवायप्रसङ्गात् । यत्तु फलवत्त्वाय ब्रह्मोपासनं युक्तमिति तदयुक्तम् । आदित्याद्युपासनस्यापि फलवत्त्वोपपत्तेः । ब्रह्मैव च सर्वाध्यक्षत्वात्फलं दास्यति । इदमेव च ब्रह्मोपासनं यदादित्यादिषु तद्दृष्टिः प्रतिमादिष्विव विष्ण्वादीनामिति तृतीयसूत्रा(स्या)र्थ इति ॥**

**शे० — तेष्वेवेति** । मनो ब्रह्मेत्युपासीतेत्यादिष्वेवेत्यर्थः । किमस्य संशयस्य बीजमित्यतः सामानाधिकरण्यमेवेत्यभिप्रेत्य तस्य कोटिद्वयोपस्थापकतामुपपादयति **सामानाधिकरण्यस्येति** । आदित्यो ब्रह्म प्राणो ब्रह्मेति ब्रह्मशब्दस्यादित्यादिशब्दैः समानविभक्तिकत्वरूपसामानाधिकरण्यस्येत्यर्थः । नन्वेवं पूर्वपक्षस्य संदेहादविशेषप्रसङ्ग इत्यरुचेराह **अथवेति** ॥ **एवं हीति** । ब्रह्मविशेष्यकोपासनस्यैव ब्रह्मोपासनत्वादिति भावः ॥ **लौकिक इति** । निकृष्टदृष्टिर्नोत्कृष्टे किं तूत्कृष्टदृष्टिरेव निकृष्ट इति लौकिको न्याय इत्यर्थः । तमेवोपदर्शयति **क्षत्तरीति** । ननु ब्रह्मणः स्वातन्त्र्यात्फलदत्वसंभवेन तदुपासनस्य फलवत्त्वसंभवेऽप्यस्वतन्त्रतया आदित्यादीनां फलदत्वासंभवात् कथं तदुपासनस्य फलवत्त्वमित्यत आह **ब्रह्मैव चेति** । ननु सर्वाध्यक्षत्वेऽपि ब्रह्मणोऽनुपासितस्य कथं फलदत्वमित्यत आह **इदमेव चेति** । ब्रह्मत्वप्रकारकत्वमेव तदुपासनतायां प्रयोजकं न तु तद्विशेष्यकत्वम् । तच्चादित्याद्युपासनस्याप्यस्त्येवेति न फलवत्त्वानुपपत्तिरिति भावः । ब्रह्मत्वप्रकारकत्वमेव तदुपासनत्वे प्रयोजकम् । अन्यथा प्रतिमादिषु विष्ण्वादिदृष्टेर्ब्रह्मविशेष्यकत्वाभावेन ब्रह्मोपासनत्वाभावप्रसक्त्या फलवत्त्वाभावप्रसङ्गादित्याशयेन तत्र दृष्टान्तमाह **प्रतिमादिष्विवेति** ।

प० — तृतीयसूत्रव्याख्यानमनुवदति **तेष्वेवेति** । मनो ब्रह्मेत्यादिप्रागुक्तेष्वित्यर्थः । **आदित्यो** ब्रह्मेत्यादेश इत्यादेरपि तत्र श्रवणादिति भावः । **लौकिकन्याय** इत्युक्तं व्यनक्ति **क्षत्तरीति** ॥ **विपर्यय इति** । उत्तमे नीचदृष्टिकरण इत्यर्थः । **अपव्याख्यानानुवादः** ॥

या० — **लौकिको न्याय इति** । उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यवसितव्या, न निकृष्टदृष्टिरुत्कृष्ट इति लौकिको न्याय इत्यर्थः । अत्रोदाहरणमाह **क्षत्तरि खल्विति** । अत्र यथेत्यादौ पूरणीयम् । नन्वनुपासितं ब्रह्म कथं फलदं स्यादित्यत आह **इदमेव चेति** । ब्रह्मत्वप्रकारकमेवोपासनं न ब्रह्मविशेष्यकमपीत्यर्थः ।

श्री० — **एवमिति** । **एवं सति** ब्रह्मविकारत्वेन ब्रह्मत्वे सतीत्यर्थः । **क्षत्तरि** ग्रामाद्यधिपे समर्थे शूद्रे । ननु तर्ह्यादित्यादीनामेवोपासितत्वेन ब्रह्मणोऽनुपासितत्वात्कथं ब्रह्म फलप्रदं स्यादित्यत आह **ब्रह्मैव चेति** ।

**सु० — तत्र तावत्प्रथमसूत्रस्यापव्याख्यानं दूषयति** नेति ।

अनु० — नात्मेतिसूत्रमीशस्य जीवत्वप्रतिपादकम् ॥

**अत्र प्रतिपत्तिर्नाम प्रमितिरेव परस्याभिमता । प्रतीकदर्शनमित्याशङ्क्य निराकरणात् । अतो जीवत्वेन प्रतिपत्तव्यत्वस्य प्रतिपादकमिति, जीवत्वस्य प्रतिपादकमिति चैक एवार्थः ।**

शे० — नन्वस्य सूत्रस्य परेणेशस्य आत्मेति प्रतिपत्तव्यत्वप्रतिपादकतया व्याख्यातत्वेऽप्यात्मत्वप्रतिपादकतयाऽव्याख्यातत्वात् । नात्मेति सूत्रमीशस्य जीवत्वेन प्रतिपत्तव्यत्वप्रतिपादकमित्यनुवादोऽत्रोचितः । तत्कथं जीवत्वप्रतिपादकमित्यन्यथाऽनुवाद इत्यत आह **अत्रेति** । प्रतिपत्तिशब्दस्योपासनामात्रपरत्वसंभवे किं प्रमितिपरत्वकल्पनेनेत्यत आह **प्रतीकदर्शनमित्याशङ्क्येति** । पूर्वपक्षिणाऽपहतपाप्मत्वानपहतपाप्मत्वलक्षणविरुद्धधर्मवत्त्वादीश्वरशरीरयोर्भिन्नत्वनिश्चयात् । नेश्वरस्याहमिति ग्राह्यत्वमिति स्वप्रतिज्ञातार्थे तर्हि, तत्त्वमसीत्याद्यभेदोपदेशानुपपत्तिरिति बाधकमुद्भाव्य प्रतिमादिषु विष्ण्वादिदर्शनमिवान्यत्वेऽपि जीवेश्वरयोस्तादात्म्यदर्शनं कर्तव्यमित्येवंपरत्वात्तत्त्वमस्यादिवाक्यस्य न विरोधित्वमित्याशङ्कितं पक्षं, यदुक्तं प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति सिद्धान्तेऽनूद्य तथा सति तत्त्वमसीत्यादिसामानाधिकरण्यस्य गौणत्वप्रसङ्गः । तत्प्रतिपाद्यमुख्याभेदस्याभावात्प्रतीकदर्शनविधायकवाक्ये वैरूप्यप्रसङ्गश्च । यत्र हि प्रतीकदृष्टिरभिधीयते सकृदेव तत्र वचनं भवति । यथा 'मनो ब्रह्म' 'आदित्यो ब्रह्मे'त्यादि । इह पुनः 'त्वमहमस्म्यहं च त्वमसी'त्याह । अतः प्रतीकश्रुतिवैरूप्यादभेदप्रतिपत्तिः । 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मी'ति भेददर्शनस्यापवादाच्चेति

गौणत्वप्रसङ्गादिहेतुभिस्तन्निराकरणादित्यर्थः। अस्तु प्रतिपत्तिशब्दस्य प्रमितिपरत्वविवक्षा परस्य, किं तावताऽपीत्यत आह **अत इति**। प्रतिपत्तिशब्दस्य प्रमितिपरतया आत्मेति प्रतिपत्तव्यत्वविधानस्य तथा-प्रमितिपरत्वापत्त्या तद्विधानस्य च तद्विषयसत्वाविधानेऽनुपपन्नतया तत्रैव पर्यवसन्नत्वेनेश्वरस्य जीवत्व एव पर्यवसन्नत्वान्नानुक्तोपालम्भोऽयमिति भावः।

**स०**— ननु आत्मेति सूत्रमीशस्य जीवत्वेनोपास्यत्वप्रतिपादकमिति वक्तव्यम्। तस्यैव परेणोक्तत्वात्। न तु जीवत्वप्रतिपादकमिति। तस्य परेणानुक्तत्वेनानुक्तोपालम्भप्रसङ्गादित्यत आह **अत्रेति**। जीवत्वप्रतिपादकत्वं जीवत्वेनोपास्यत्वप्रतिपादकत्वं चैकमेव। न चाद्यपक्षे जीवत्वस्य विद्यमानता लभ्यते। द्वितीये त्वविद्यमानता। अविद्यमानस्यापि प्रतिपत्तव्यत्वस्य योषितमग्निं ध्यायीते-त्यादौ दृष्टत्वात् तत्कथमेतयोरैक्यमुच्यत इति वाच्यम्। जीवत्वेन प्रतिपत्तव्यत्वस्य प्रतिपादकमित्यत्र प्रतिपत्तिशब्देन प्रमितेरेव विवक्षितत्वेन पक्षद्वयस्यैक्योपपत्तेरिति। कुत एतत् प्रतिपत्तिशब्दस्य प्रमिति-परत्वकल्पनम्। 'योषितमग्निं ध्यायीते'त्यादाविवाविद्यमानोपासनापरत्वमेव किं न स्यादित्यत आह **प्रतीकेति**। प्रतीक आत्मत्वदर्शनमाशङ्क्य निवारितत्वादित्यर्थः। अयं भावः। यद्यत्र प्रतिपत्ति-शब्दस्य प्रमितिपरत्वमनङ्गीकृत्याविद्यमानोपासनापरत्वमङ्गीक्रियते तर्हि 'न प्रतीके न हि स' इत्युत्तराधि-करणे 'प्रतीकेऽप्यात्ममतिः कर्तव्या न वे'ति संशये ब्रह्मण आत्मत्वात् प्रतीकानामपि ब्रह्मविकारत्वेन ब्रह्मत्वे सति आत्मत्वोपपत्तेरात्मबुद्धिः कार्येत्याशङ्क्य प्रतीकानामात्मत्वाभावात् तत्त्वेन प्रतिपत्तिर्न कार्येति निराकरणमनुपपन्नं स्यात्। तत्रापि प्रतिपत्तिशब्दस्योक्तार्थत्वसंभवेन प्रतीकानामात्मत्वाभावेप्यात्मत्वोपास-नायाः संभवात्। तथाच निराकरणान्यथानुपपत्त्या प्रतिपत्तिशब्दस्य प्रमितिपरत्वात् पक्षद्वयस्योक्ति-र्युक्तेति। अन्ये तु प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीत्यादिनेश्वरात्मत्वप्रतिपत्तेः प्रतीकदर्शनतुल्यप्रतिमारूपतामाशङ्क्य गौणत्वप्रसङ्गादित्यादिना निराकरणेन प्रमितिरूपत्वोपपादनादित्यर्थ इत्याहुः।

**प०**— ननु पूर्वसूत्रार्थानुवादवेलायां आत्मेत्येवेश्वरः प्रतिपत्तव्य इत्युक्त्या तथादृष्टिमात्रमेव न त्वीशस्य जीवत्वं वास्तवमिति ईशस्य जीवत्वेन दृष्टिमात्रप्रतिपादकं सूत्रमिति भाति। इह तूच्यते ईश्वरस्य(वास्तव)जीवत्वप्रतिपादकमिति तत्कथमित्यत आह **अत्र प्रतिपत्तिरिति**। प्रतिपत्तव्यपदो-क्तेत्यर्थः। अभिमतेति कथं ज्ञायत इत्यत आह **प्रतीकेति**। परभाष्ये विरुद्धगुणयोर्जीवेशयोरभेदो न युक्तः इत्युक्त्वा तर्ह्यभेदोपदेशपरवाक्यानां का गतिरिति शङ्कित्वा ब्रह्मतादात्म्येन नामादिप्रतीकदर्शनं कार्य-मित्येतत्परोऽयमभेदोपदेश इति पूर्वपक्षयित्वा तथात्वेऽभेदोपदेशस्य गौणत्वप्रसङ्गादित्यादिना निराकृतम्।

तेन ज्ञायते प्रतीकदृष्टिनिरासादीश्वर एव जीवत्वप्रतिपत्तिः प्रमितिरभिमतेति । तथाच जीवेशयोरभेदो यथार्थ एव प्राप्तः न तथा दृष्टिमात्रमिति प्रतिपत्तव्यत्वप्रतिपादकमिति जीवत्वप्रतिपादकमिति च एक एवार्थस्संपन्न इत्यर्थः ।

**या०**— नन्विदं सूत्रं परेणेशस्यात्मेतिप्रतिपत्तव्यत्वप्रतिपादकमिति व्याख्यातं न त्वीशस्यात्मत्वप्रतिपादकमिति अतोऽनुक्तोपालम्भोऽयमित्यत आह **अत्र प्रतिपत्तिर्नामेति ॥ प्रतीकदर्शनमाशङ्क्येत्यादि** । अत्राशङ्क्येत्यस्यानूद्येत्यर्थः ॥ ततश्चायमर्थः ॥ परेण हि स्वभाष्ये पूर्वपक्षग्रन्थेऽपहतपाप्मत्वादिगुणक ईश्वरस्तद्विपरीतगुणकश्च शारीरोऽतस्तयोर्विरुद्धधर्मवत्वेन भेदनिश्चयान्नेश्वरोऽहमिति ग्राह्य इत्युक्त्वा, न चैवं तत्त्वमसीत्याद्यभेदोपदेशानुपपत्तिः । प्रतिमादिषु विष्ण्वादिदर्शनमिवाऽन्यत्वेऽपि तादात्म्यदर्शनं कर्तव्यमित्येवंपरत्वात्तेषामिति यदुक्तं, तत्सिद्धान्तग्रन्थे, यदुक्तं प्रतीकदर्शनमिति विष्णुप्रतिमान्यायेन भविष्यतीत्यनूद्य । तदयुक्तं जीवेश्वरयोर्भेदे तत्त्वमसीत्यादिसामानाधिकरण्यस्य गौणत्वप्रसङ्गात् । प्रतीकदर्शनविधायकवाक्यवैरूप्याच्च । यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति । यथा मनो ब्रह्मादित्यो ब्रह्मेत्यादि । इह च त्वमहमस्म्यहं च त्वमसीति चासकृदाह । अतः प्रतीकदृष्टिश्रुतिवैरूप्यादभेदप्रतिपत्तिः । भेददृष्ट्यपवादाच्च । तथा ह्याह । 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद'त्यादिना निराकृतमिति । तथा चाभावनिराकरणपूर्वकं भावप्रतिपत्तिविधाने तत्प्रमितिविधानमेव लभ्यते । प्रमितिविधानं च तद्विषयसत्वविधान एव पर्यवसितमतो नानुक्तोपालम्भोऽयमिति भावः ।

**श्री०— प्रतिपत्तव्यत्वस्य** प्रमितिविषयत्वस्य ॥ **जीवत्वस्येति** । प्रामाण्यस्यार्थसत्ताघटितत्वादिति भावः ।

**सु०— कुतो नेत्यतः पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थज्ञानस्य प्रथमं पदार्थं निराकरोति आत्मशब्दमिति ।**

**अनु०**— आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत् ॥
स्वशब्दात्प्राणभृच्चैव नोक्त इत्येव वेदराट् ॥

**स्वशब्दादेव प्राणभृच्च नोक्त इति वेदराडेवात्मशब्दं हेतुं कृत्वा जीवं न्यवारयद्यतस्तस्मादात्मशब्दोदितो विष्णुरेव न चापरो जीव इति योजना ।**

**शे०— स्वशब्दादेवेति** । प्राणभृच्चैवेत्यत्रत्यस्यैवशब्दस्य विरुद्धार्थतया यथाश्रुतसंबन्धासंभवात्स्वशब्दादित्यनेन संबन्ध इति भावः । इत्येवेत्येवशब्दो भिन्नक्रमत्वान्नानर्थक इति भावेनाह

**वेदराडेवेति ॥ इति योजनेति** । यत इत्यादेर्यदीत्यादिना सन्निधानेऽप्ययोग्यत्वाद्योग्यतया व्यवहिते-नाप्यात्मशब्दोदित इत्युत्तरग्रन्थेनैवान्वय इति भावः ।

**प०** — एवकारद्वयस्याप्यन्वयं दर्शयन्योजनामाह **स्वशब्दादेवेति** ।

**सु०** —**एतदुक्तं भवति । भवेदयं सूत्रार्थो यद्यात्मशब्दो जीववाची भवेत् । न चैवम् । सूत्रकारवचनसामर्थ्यादेव तस्य तद्वाचित्वाभावावगमात । तथा हि । यस्मिन्द्यौरिति वाक्य-मुदाहृत्य किमत्र द्युभ्वाद्यायतनत्वेन प्रधानमुच्यते उत जीवः किंवा परमात्मेति संशये प्रधानादौ प्राप्ते सिद्धान्तितम् । 'द्युभ्वाद्यायतनं स्वशब्दादि'ति । स्वशब्दात् 'तमेवैकं जानथ आत्मानमि'ति द्युभ्वाद्यायतने आत्मशब्दश्रवणात् द्युभ्वाद्यायतनं परमात्मैवेति । ततो 'नानुमानमतच्छब्दात्' इति प्रधानं निराकृत्य जीवनिराकरणार्थं सूत्रितम् । प्राणभृच्चेति । तत्र चशब्दो नेत्यस्य स्वशब्दादिति हेतोश्चानुकर्षणार्थः । ततश्चात्मशब्दाज्जीवोऽपि नेत्यर्थः । यदेवमात्मशब्दं हेतुं कृत्वा जीवं निवारितवान्सूत्रकारः, तदन्यथाऽनुपपत्त्या जानीमः सूत्रकारस्यात्मशब्दो न जीव-वाचीत्यभिप्रेतमिति । तथा च कथं स्वाचरितविरुद्धमिदानीमाचरेदिति ।**

**शे०** — ननु प्राणभृच्चेति सूत्रे स्वशब्दादिति हेतोः, नेति निषेधस्य चाश्रवणात्पूर्वत्राप्रकृतत्वेन सौत्रचशब्दस्य तदनुषङ्गाभिप्रायकत्वस्याप्यसंभवात् । प्रकृतत्वेन तत्संभवेऽपि वा जीवस्याप्रसक्ततया तन्निषेधानर्थक्यात् । 'स्वशब्दात्प्राणभृच्च नोक्त' इति कथमेतत्सूत्रार्थानुवाद इत्यतो जीवस्य तत्प्रसक्ति हेतुनिषेधयोः प्रकृततां च दर्शयन् तावताऽपि को दोष उक्तो भवतीत्यतः फलितं दोषं चोपदर्शयन् आकाङ्क्षाक्रमेण भाष्याभिप्रायमाह **एतदुक्तं भवतीति** ।

**प०** — नन्वेतावता आत्मपदार्थो जीवो नेत्यत्र किमुक्तं भवति जीवनिरासे च तत्र का प्रसक्तिरित्यत आह **एतदुक्तमिति** । यद्यपि परभाष्ये वायुकोटिरप्युक्ता तथापि तस्य प्रकृतानुपयोगा-त्कोटित्रयमेवानुवदति **प्रधानमुच्यत इत्यादिना** ।

**सु०** — **एतदेव विशदयति** यदीति ।

**अनु०** — यद्यात्मशब्दो जीवेपि कथं स विनिवारयेत ॥
आत्मशब्दोदितस्तस्माद्विष्णुरेव न चापरः ॥

**जीवेऽपि वर्तत इति सूत्रकृतोऽभिप्रेतमिति शेषः । तर्हि कथं सूत्रकारो जीवमात्मशब्देन विनिवारयेत् । न हि गन्धवत्त्वेन घटो निवारयितुं शक्यते । अथवा यद्यात्मशब्दो जीवेऽपि वर्तेत तदा स आत्मशब्दः कथं जीवं निवारयेत् । प्रत्युत प्रतिपादयेदिति योजना ।**

शे० — ननु योग्यतया व्यवहितेनात्मशब्दोदित इत्यादिना आत्मशब्दमित्यादिपूर्वग्रन्थस्य संबन्धे तावतैव विवक्षितसिद्धेर्यदीत्यादिमध्यस्थवाक्यवैयर्थ्यमित्यत उक्तार्थविवरणरूपत्वात्तस्य नानर्थक्यमिति भावेनोक्तार्थविवरणतया तद्योजयति ॥ **एतदेवेति** । यदीत्यादिवाक्यस्य कथमुक्तार्थविवरणरूपत्वमित्यतोऽपेक्षितं पूरयन्वाक्यं व्याचष्टे **जीवेऽपीत्यादिना** । अत्र पक्षे वर्तत इत्याद्यनेकपदाध्याहारः समाश्रयणीयो भवतीत्यपरितोषात्पक्षान्तरमाह **अथवेति** । अत्र च वर्तेत जीवमित्येतयोरध्याहारेऽपि न पूर्ववद्बहोरध्याहार इति भावः ।

प० — स इत्येतत् सूत्रकारपरतया पूर्वं व्याख्याय शब्दपरतया व्याचष्टे **अथवेति** ।

सु० — **आगमवाक्यमप्यत्र पठति** आत्मेति ।

**अनु०** — आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ॥
न वदन्ति यतो नाप्ता क्वापि तैर्गुणपूर्णता ॥
नारायणाध्यात्मगतमिति यद्वैष्णवं वचः ॥

**अन्यान्न वदन्ति कुतो यत आत्मादिशब्दाः पूर्तिवाचिनस्तैरन्यैर्गुणपूर्णता क्वाप्यवस्थायां न प्राप्ता । यत्किञ्चित्पूर्णतार्थत्वे चामुख्यार्थतापात इति । आत्मशब्दोऽप्याङ्पूर्वात्तनोतेर्मनिन्प्रत्यये टिलोपे च सति निष्पन्नः पूर्णतावचनः । यद्यस्मादेवं वचोऽस्ति तस्मादपीति पूर्वेणैव अन्वयः ।**

शे० — नन्वत्रात्मादिशब्दास्तमृते विष्णुं न वदन्तीति विष्णुवाचित्वाभावप्रतिपादनान्नास्यागमस्य विवक्षितार्थसाधकत्वेनोपन्यासो युक्त इत्यतोऽत्र नोक्तरीत्याऽन्वयः किं त्वन्यथैवेत्यभिप्रेत्य योग्यकर्माध्याहारेणान्वयमाह **अन्यान्न वदन्तीति** । उक्तप्रतिज्ञायां यतो नाप्तेत्याद्युक्तस्य हेतोरप्रयोजकत्वेनान्वयायोगात्तदुपपादकहेत्वन्तराध्याहारं दर्शयंस्तदुपपादकतया मौलं हेतुं योजयति **यत आत्मादिशब्दाः पूर्तिवाचिन इति** । कथमेतेषां पूर्तिवाचित्वमित्यतः प्रकृतिप्रत्ययविभागोपदर्शनेन तदुपपादयति **आत्मशब्दोऽपीति** । आङ्पूर्वात्तनोतेरौणादिके डमनप्रत्यये डित्वाट्टिलोपे आत्मन्निति प्रातिपदिकनिष्पत्तिः । मनिन्निति पाठेऽपि अन्येभ्योऽपि दृश्यत इति मनिनि दृशिग्रहणसामर्थ्याट्टिलोपे च सति तन्निष्पत्तिः । विस्तृतिः पूर्तिश्चेत्येक एवार्थ इति भावः ।

प० — **अत्रेति** । आत्मशब्दार्थो विष्णुरेवेत्यत्रेत्यर्थः । न वदन्तीत्यत्र कर्माकांक्षायामाह **अन्यानिति** । शेषोक्त्या वाक्यं योजयति **कुत इत्यादिना** । तैरित्यस्यार्थोऽन्यैरिति ।

**सु०— इदानीं वाक्यार्थं दूषयति** यदीति ।

**अनु०—** यदि जीवेशयोर्वेदपतिरैक्यं च मन्यते ॥
आत्मशब्दं कथं तस्मान्निवारयति युक्तितः ॥

**मन्यते ( अत्र )** तत्र **सूत्रे तदा** तस्मात् **जीवादात्मशब्दं कथं निवारयति । कुत्र निवारितवानित्यत उक्तम्** युक्तित इति ।

**जीवनिराकरणयुक्तित्वेनोक्तत्वादिति यावत् ।**

**इदमुक्तं भवति । आत्मशब्दश्रवणात् द्युभ्वाद्यायतनं न जीव इति आत्मशब्दं जीवनिवारणे हेतुं वदता सूत्रकारेणात्मशब्दो जीवान्निवारित इति गम्यते । नायं पुरुषो विषाणित्वादिति यथा । न हि तत्रस्थेन तन्निरासो युज्यते । नायं गौर्विषाणित्वादित्यपि प्रसङ्गात् । प्रथमसूत्रे च द्युभ्वाद्यायतनं परमेश्वरो न जीव आत्मशब्दादित्यात्मशब्दस्य परमेश्वरे प्रवृत्तिरभ्युपगता । अन्यथा तेन तत्साधनानुपपत्तेः । तत्र यदि जीवेश्वरावेकमेव तत्त्वमिति सूत्रकारस्य मतं स्यात् । तदा तेनात्मशब्दस्तत्रैव वर्तते, न वर्तते चेत्युक्तं भवति । न च व्याहतं सूत्रकारो भाषत इति युक्तम् । तस्मान्न जीवेश्वरैक्यं तस्य मतमिति गम्यत इति ।**

---

**उपलक्षणं चैतत् । द्युभ्वाद्यायतनं परमेश्वरो, न जीव इति, प्रतिज्ञाद्वयं च व्याहतमित्यपि द्रष्टव्यम् ।**

**शे० — युक्तित्वेनोक्तत्वादितीति ।** अनेन मूले युक्तिशब्दो युक्तित्वेनोक्तिपर इत्युक्तं भवति । ननु जीवनिवारणे आत्मशब्दस्य युक्तित्वेन सूत्रकारस्य उक्तिरेवासिद्धेति न तया आत्मशब्दस्य जीवान्निवारणसिद्धिः । जीवनिवारणे युक्तित्वेन तदुक्तिसिद्धावपि जीवसाधारणस्यापि तस्य तन्निवारणे हेतुत्वेनोक्तिसंभवान्न तस्य जीवान्निवारणसिद्धिः । अस्तु वा तस्य तत्सिद्धिस्तथाऽपि न तेनैक्यानभ्युपगमः शक्य उपपादयितुमप्रयोजकत्वात् । न चैक्याभ्युपगन्तुः स्वव्याहत्युपपादनार्थत्वेन तत्साधकत्वाभावान्नाप्रयोजकत्वं जीवान्निवारणसिद्धावपि परमेश्वरे वृत्त्यभ्युपगमे नियामकाभावेन तदसिद्ध्या स्वव्याहत्यप्रसङ्गात् । तत्प्रसङ्गेऽपि वा नानिष्टं पश्यामः । इत्येताः शङ्काः क्रमेण परिहरन्नेव तात्पर्यमाह **इदमुक्तं भवतीति ॥ प्रथमेति ।** द्युभ्वाद्यायतनं स्वशब्दादिति तदधिकरणप्रथमसूत्र इत्यर्थः । एवमात्मशब्दस्य जीवेऽवृत्तिं परमेश्वरे वृत्तिं चोपपाद्यैक्याभ्युपगमे सूत्रकारस्य स्वव्याहतिमुपपादयति **तत्रेति ॥ प्रतिज्ञाद्वयं चेति ।** यदि जीवेश्वरैक्यं सूत्रकारस्य मतं स्यात्तदा परमेश्वरस्य द्युभ्वाद्याश्रयत्वप्रतिज्ञाने तदभिन्नजीवस्यापि तत्प्रतिज्ञालाभान्न जीवो द्युभ्वाद्यायतनमिति प्रतिज्ञा स्वव्याहता स्यात् ।

एवं न जीवो द्युभ्वाद्याश्रय इति प्रतिज्ञयैव तदभिन्नेश्वरस्य द्युभ्वाद्याश्रयत्वाभावलाभात् पुनस्तस्य तदाश्रयत्वप्रतिज्ञा सूत्रकारस्य स्वव्याहता स्यात् । इति प्रतिज्ञाद्वयं परस्परं व्याहतमित्यर्थः ।

**स० — प्रतिज्ञाद्वयं चेति** । यदि जीवपरमात्मनोरेकत्वं सूत्रकारस्याभिप्रेतं स्यात् तर्हि परमेश्वरस्य द्युभ्वाद्याश्रयत्वे प्रतिज्ञाते जीवस्यापि तदभिन्नत्वेन द्युभ्वाद्याश्रितत्वं प्रतिज्ञातमेवेति पुनर्विष्णुर्द्युभ्वाद्याश्रय इति प्रतिज्ञाते व्याघातः स्यादित्यर्थः ।

**या० —** ननु सूत्रकृज्जीवेशयोरैक्यं न मन्यत इत्यत्र नात्मशब्दस्य जीवान्निवारणं हेतुरप्रयोजकत्वादित्यतोऽस्य वाक्यस्य व्याहतौ तात्पर्यमित्यभिप्रेत्य तामुपपादयितुमाह **प्रथमसूत्रे चेत्यादिना** ।

**श्री० — नायं पुरुषो विषाणित्वादिति** । अयं गौः । अनेन विषाणित्वं पुरुषान्निवारितवानिति गम्यते । कुत इत्यत आह **न हि तत्रस्थेनेति** । तत्रस्थेनापि धर्मेण तन्निरासाङ्गीकारे गवि विद्यमानेन विषाणित्वेनापि गौर्नेति निषेधप्रसङ्गादित्याह **नायं गौरिति** । **अयं** गोत्वेन दृश्यमानः । **प्रथमसूत्रे** द्युभ्वाद्यायतनमिति सूत्रे ॥ **अत्र यदीति** । आत्मेति स्विति सूत्र इत्यर्थः ॥ **प्रतिज्ञाद्वयं चेति** । जीवेश्वरैक्ये परमेश्वरस्य द्युभ्वाद्यायतनत्वे जीवस्यैव द्युभ्वाद्यायतनत्वप्राप्तेर्न जीवो द्युभ्वाद्यायतनमित्युक्ते व्याहतिरिति भावः ।

**सु० — सूत्रान्तरविरोधं** चाह भेदस्येति ।

---

अनु० — भेदस्य व्यपदेशं च स्थितिं चादनमेव च ॥
भेददार्ढ्ये हेतुमाह सतात्पर्यं जगत्पतिः ॥

**यदि जगत्पतिः सूत्रकारो जीवेश्वरयोरैक्यं मन्यते तर्हि कथं स एव 'भेदव्यपदेशादि'ति भेदस्य व्यपदेशं च 'स्थित्यदनाभ्यां चे'ति स्थितिं चादनं च सतात्पर्यं जीवेशभेदं दृढयितुं हेतुमाह । भेदस्य प्रागपि प्रतिपादितत्वाद्दार्ढ्यं इत्युक्तम् । अत्राप्यनेकप्रमाणोपन्यासात्सतात्पर्यमिति ।**

**शे० — प्रागपीति** । भेदव्यपदेशाच्चेत्यादिना प्रथमपादे शारीरश्चोभयेऽपि हीत्यादिना द्वितीयपादे चेत्यर्थः ॥ **अत्रापीति** । द्युभ्वाद्यधिकरणेऽपीत्यर्थः ॥ **अनेकेति** । जीवनिवारणे हेतुत्वेनोक्त्यन्यथाऽनुपपत्त्यादिरूपानेकप्रमाणेत्यर्थः ।

**प० — प्रागपीति** । पूर्वपादद्वये 'भेदव्यपदेशाच्चान्यः ।' 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते । 'विशेषणभेदव्यपदेशाभ्यां च नेतरावि'ति सूत्रैरित्यर्थः ॥ **अत्रापीति** । द्युभ्वाद्यधिकरणेऽपि स्वशब्दमुक्तोपसृप्यत्वावस्थित्यदनरूपविरुद्धधर्माधिकरणत्वानामनेकप्रमाणानामुक्तेः सतात्पर्यमुक्तमित्युक्तमित्यर्थः ।

या०— **प्रागपीति** । प्रथमपादद्वितीयपादयोरित्यर्थः ॥ **अत्रापीति** । द्युभ्वाद्यधिकरणेऽपीत्यर्थः ॥ **अनेकप्रमाणोपन्यासादिति** । स्वशब्दात्प्राणभृच्च नोक्त इत्यात्मशब्दस्य जीवनिराकरणहेतुत्ववचनाद्यन्यथाऽनुपपत्तेः । भेदव्यपदेशादित्यागमस्य स्थित्यदनाभ्यां चेति विरुद्धधर्माधिकरणत्वरूपानुमानस्योक्तत्वादिति भावः ।

**सु०— न कोऽप्ययं विरोधोऽस्ति । परमार्थतो जीवेशयोरेकत्वेऽपि हि व्यावहारिकभेदोऽस्ति तदपेक्षया तानि सूत्राणि । इदं तु परमार्थापेक्षयेति व्यवस्थोपपत्तेरित्याशयेन शङ्कते** व्यावहारिकेति ।

अनु०— व्यावहारिकभेदश्चेत्

**अत्र व्यावहारिकशब्देन भ्रान्तिसिद्धोऽभिप्रेयते । प्राक् प्रबोधादित्युक्तानुवादत्वात् । जीवेश्वरभेदो भ्रान्तिसिद्ध इति वदन्प्रष्टव्यः । किमयमेव भेदो भ्रान्तिसिद्धः किं वा भेदमात्रमिति । नाद्यः । अपसिद्धान्तात् । द्वितीये दोषमाह** केति ।

कासावव्यावहारिकः ॥

**भ्रान्तेरभ्रान्तिपूर्वकत्वात् । जीवेश्वरभेदस्य भ्रान्तिकल्पितत्वे क्वचित्सत्यो भेदोऽङ्गीकर्तव्यः ।** क्वासौ **न क्वापि । कुत्रापि भेदस्य सत्यत्वानङ्गीकारे जीवेशभेदारोपोऽपि न संभवतीति भावः ।**

शे०— ननु व्यावहारिकेत्युत्तरवाक्यमनर्थकम् । न चैतदुदाहृतभेदसूत्राणां विषयकथनेन भिन्नविषयत्वोपपादकतया तत्सूत्रविरोधपरिहारार्थत्वान्न तदिति वाच्यम् । भेदसूत्रविषयोपदर्शनेऽप्यात्मेति त्वित्यभेदसूत्रविषयानुपदर्शनेन भिन्नविषयत्वासिध्द्याऽस्योदाहृतसूत्रविरोधपरिहारायापर्याप्तत्वादित्यतोऽत्र भेदव्यावहारिकत्वकथनेनाभेदपारमार्थिकत्वस्य सूचितत्वेन भेदाभेदसूत्रयोर्भिन्नविषयत्वसिद्धिसंभवाद्युक्तमस्य तद्विरोधपरिहारकत्वमित्यभिप्रेत्य शङ्काग्रन्थतात्पर्यमाह **न कोऽपीति** । विरोधितयोदाहृतसूत्रेषु न केनापि विरोध इत्यर्थः । व्यावहारिकशब्दस्य भ्रान्तिसिद्धपरत्वे उपष्टम्भकमाह **प्राक् प्रबोधादित्युक्तानुवादत्वादिति** । व्यावहारिकभेदश्चेदित्यस्याः शङ्काया इति शेषः । तत्र प्रबोधात्प्राक्पदस्य भ्रान्तिदशापरत्वेन भेदस्य भ्रान्तिसिद्धत्वावभासादिति भावः । ननु जीवेश्वरभेदस्य भ्रान्तिसिद्धत्वेऽपि भेदमात्रस्य तदनभ्युपगमादभ्रान्तिपूर्वकभेदारोपसंभवात्तदसंभवपरकासावित्युत्तरग्रन्थासङ्गतिरित्यतो नेदं जीवेश्वरभेदमात्रस्य भ्रान्तिसिद्धत्वे दूषणं किन्तु भेदमात्रस्य तथात्व एवेत्यतो नानुपपत्तिरित्यभिप्रेत्य तत्पक्षदूषणपरत्योत्तरग्रन्थं योजयितुं संभावितविकल्पद्वयप्रदर्शनपूर्वकमाद्यं पक्षं बहिरेव दूषयति

**जीवेश्वरभेद इत्यादि ॥ अपसिद्धान्तादिति** । भेदमात्रस्य भ्रान्तिसिद्धतायास्तत्सिद्धान्तत्वेन जीवेश्वर-भेदस्यैव तत्सिद्धत्ववर्णनस्य सिद्धान्तविरुद्धत्वादिति भावः ॥ **अभ्रान्तीति** । आरोप्यसदृशप्रधानप्रमिति-पूर्वकत्वादित्यर्थः ॥ **अङ्गीकर्तव्य इति** । तस्य भ्रान्तिहेतुभूतप्रधानप्रमित्युपपादकत्वादिति भावः ॥ **न क्वापीति** । भेदमात्रस्य भ्रान्तिसिद्धत्वाभ्युपगमादिति भावः । किमनेनोक्तं भवतीत्यतस्तात्पर्यमाह **कुत्रापीति** ।

**स०— प्राक्प्रबोधादित्युक्तानुवादत्वादिति** । अस्याः शङ्काया इति शेषः ।

**प०** मूलमवतारयति **न कोपीति ॥ तानीति** । त्रिपाद्यामुक्तानि । **इदं त्विति** । आत्मेतीति सूत्रमित्यर्थः । व्यावहारिकशब्देन व्यवहारसिद्धत्वोक्तौ सत्यत्वप्राप्त्याऽभ्रेतनमूलघटना-ऽयोगादाह **अत्र व्यावहारिकशब्देनेति** । कथमेवमभिप्रायो ज्ञायते इत्यत आह **प्राक्प्रबोधादिति** । परभाष्ये सिद्धान्ते जीवशयोरेकत्वे संसार्यभावं प्रत्यक्षविरोधं च पूर्वपक्ष्युक्तमनूद्य प्रबोधात्प्राक्संसारित्वाभ्युपगमादित्युक्त्या भ्रान्तिसिद्ध इत्यवगम्यते । तदनुवादत्वान्मूलस्येत्यर्थः ।

**या०—** अत्र व्यावहारिकशब्दो न व्यवहारनिर्वाहहेतुत्वरूपार्थक्रियाकारित्वपरो विवक्षितः, वक्ष्यमाणदूषणानुपपत्तेः । नापि बाध्यत्वपरः, 'तस्यापि बाध्यता चेत्स्यादि'ति ग्रन्थपर्यालोचनया बाध्यत्वस्य व्यावहारिकत्वादन्यत्वेनावगमात् । अत आह **अत्र व्यावहारिकशब्देनेति ॥ प्राक्प्रबोधादित्युक्तत्वादिति** । परेण ह्यत्र सिद्धान्तग्रन्थे, यदप्युक्तमधिकार्यभावः प्रत्यक्षादिविरोधश्चेति पूर्वपक्ष्युक्तमनूद्य तदप्यसत् । प्राक् प्रबोधात्संसारित्वाभ्युपगमात् । तद्विषयत्वाच्च प्रत्यक्षादिव्यवहार-स्येत्याद्युक्तम् । अत्र प्रबोधात्प्रागित्युक्त्या भ्रान्तिदशायामित्यर्थलाभे भ्रान्तिसिद्धो भेद इत्यभिप्रेतमिति ज्ञायते । तदनुवादरूपं मूलवाक्यमित्यर्थः ॥ **अभ्रान्तीति** । आरोप्यसदृशप्रधानप्रमितिपूर्वकत्वादित्यर्थः ।

**श्री०— इदं त्विति** । आत्मेति सूत्रमित्यर्थः । **अयमेव** जीवेश्वरभेद एव ।

**सु०— स्यादेतत् । नास्त्येव कोऽपि भेदः सत्यः । तथाऽपि जीवेशभेदभ्रांतिरुप-पद्यते । भ्रांतिर्हि संस्कारमपेक्ष्यते । संस्कारश्च ज्ञानमात्रं । अतः पूर्वपूर्वभ्रमसंस्कारादुत्तरो-त्तरभ्रान्त्युत्पादः । अनादिश्चायं संसार इति । मैवं । भेदमात्रस्य मिथ्यात्वे प्रमिते खलु तद्बलादेषा कल्पनोपपद्यते । न चैवं । सर्वोऽपि भेदो भ्रांत इति हि प्रतिज्ञैव तावद्व्याहता । दूरे प्रमाणोपन्यास इत्याशयवान्सोपपत्तिकं तावत्पृच्छति** व्यावहारिकमिति ।

**अनु०** — व्यावहारिकमित्येव वचनं व्यावहारिकं ॥

उत नेति विकल्पे तु

**भेदमात्रमिति शेषः । तिष्ठतु तावदन्यदित्येवार्थः । इति विकल्पे तु पक्षद्वैते (द्वये) (द्वैधे)संभवति कं पक्षमवलंबस इति शेषः । अत्र सर्वत्र वचनशब्देन तदर्थो लक्ष्यते । सर्वोऽपि भेदो भ्रांतिकल्पित इति वाक्यार्थो भ्रांतिकल्पितोऽथ परमार्थ इति प्रश्नार्थः ।**

**शे०— नास्त्येवेति** । ततश्च नापसिद्धान्त इति भावः । नन्वेवं भेदमात्रस्य कल्पितत्वप्राप्त्याऽऽरोप्यसदृशसत्यप्रधानाभावेन न तत्सापेक्षजीवेश्वरभेदारोपः स्यादित्यत आह **तथाऽपीति** । तत्कथमित्यतो न तावत्प्रधानं स्वरूपेणोपयुज्यते । तथा सत्यज्ञातरजतस्यापि रजतारोपप्रसङ्गात् । नापि ज्ञानेन । ज्ञानस्य चिरविनष्टस्य कारणत्वानुपपत्तेः । किन्तु संस्कारेण । तथा च मिथ्यार्थस्याप्युपपद्यत एव प्राधान्यमित्याशयेनाह **भ्रान्तिर्हीति** । तर्हि भ्रान्तिहेतुभूतसंस्कारार्थतयैव प्रधानसत्तापेक्षाऽस्त्वित्यतस्तस्य ज्ञानमात्रजन्यतया तत्प्रमयेव तद्भ्रमेणाप्युत्पादान्न प्रधानसत्तापेक्षत्वमित्याशयेनाह **संस्कारश्चेति** । न च संस्कारस्य ज्ञानमात्रजन्यत्वेऽपि प्रमाजन्यसंस्कारस्यैव भ्रान्तिहेतुत्वमिति संस्कारजनकप्रमोपयोगितया प्रधानसत्ताऽपेक्षितैवेति वाच्यम् । सत्यपि संस्कारे प्रमाजन्यत्वाभावापराधेन भ्रमाभावादर्शनेन प्रमाभ्रमसाधारणज्ञानमात्रस्यैव तद्धेतुत्वात् । न च तार्किकस्येवारोप्यमेव देशान्तरादौ सदित्यावयोर्मतमित्याशयात् । नन्वेवमपि पूर्वभेदभ्रमानुपपत्तिः । प्रधानाभावादिति चेत् । न । तत्पूर्वं भ्रान्तिसिद्धभेदस्यैव तत्र प्रधानत्वाभ्युपगमेन तदप्रसङ्गादित्याशयेनाह **अत इति** । **भ्रमसंस्कारात्** भ्रमजन्यसंस्कारादित्यर्थः । नन्वेवमपि कल्पाद्यभेदभ्रमानुपपत्तिः । तत्पूर्वं भेदभ्रमाभावेन तज्जन्यसंस्काराभावादित्यतस्तत्कल्पीयभ्रमजन्यसंस्काराभावेऽपि पूर्वकल्पीयभ्रमजन्यसंस्कारसद्भावान्न तदनुपपत्तिरपीत्याशयेनाह **अनादिश्चेति ॥ सोपपत्तिकमिति** । पक्षद्वयस्यैव विकल्पनीयत्वप्रयोजकीभूतसंभावनारूपायाः पक्षांतराविकल्पनिमित्तभूतासंभावनारूपायाश्चोपपत्तेर्मूले विकल्प इत्यनेन सूचितत्वादिति भावः । भेदः स्यात्पारमार्थिक इत्युत्तरग्रन्थानुरोधेनापेक्षितं पूरयति **भेदमात्रमितीति** । ननु प्रतिज्ञाया इव तत्प्रमाणस्याप्युक्तरीत्या विकल्प्यं दूषयितुं शक्यत्वादेवकारवैयर्थ्यमित्याशङ्क्य तात्कालिकतद्दूषणानास्थासूचकत्वात्तस्य नानुपपत्तिरित्याशयेन तदर्थमाह **तिष्ठतु तावदिति ॥ इति शेष इति** । अन्यथा विकल्प इति सप्तम्या अनन्वयापातादिति भावः ॥ **अत्र सर्वत्रेति** । वचनेति यत्र श्रूयते यत्रानुवर्तते तत्र सर्वत्र इत्यर्थः । वचनशब्देन तदर्थलक्षणया सिद्धविकल्पार्थमाह **सर्वोऽपीति** ।

**प०**— सृष्ट्यादौ कथमित्यत आह **अनादिश्चेति ॥ सोपपत्तिकमिति** । तृतीयकल्पावकाशो यथा नास्ति तथाविकल्पकरणात्सोपपत्तिकमित्युक्तम् । यद्वा व्यावहारिकशब्दार्थमपृष्ट्वा तत्तद्रूपविकल्पकरणात्सोपपत्तिकमित्युक्तम् ॥ **इति शेष इति** । भेदमात्रं व्यावहारिकं इति वचनमित्यर्थः ॥ **अन्यदिति** । प्रमाणोपन्यासादीत्यर्थः ।

या०— आदिसृष्टौ कथमित्यत आह **अनादिश्चेति** ॥ **सोपपत्तिकमिति** । मूले विकल्प्य इत्यनेन पक्षद्वयमेव संभावितं । तृतीयश्च पक्षो न संभावितः । अत इत्युपपत्तेरुक्तत्वादिति भावः ॥ **अन्यदिति** । प्रमाणोपन्यासादिकमित्यर्थः ॥ **इति शेष इति** । अन्यथा सप्तम्या उत्तरवाक्येनान्वय इति भावः ।

सु०— **आद्यं शङ्कते** यदीति ।

अनु०— यदि स्याद्व्यावहारिकम् ॥

**एतद्वचनमिति** वर्तते । **अत्रापि पृच्छामो वाक्यार्थोऽयं बाध्यो न वेति । नेति पक्षे भ्रान्तिकल्पितोऽपि न भवेत्** । **कुत्रापि कदाऽपि केनाप्यबाध्यस्य भ्रान्तिकल्पितत्वे ब्रह्मणोऽपि तथात्वापत्तेः** । **प्रथमं शङ्कते** तस्येति ।

तस्यापि बाध्यता चेत्स्यात्

**तस्य वचनस्य न केवलं भ्रान्तिकल्पितत्वं किन्तु बाध्यताऽपि स्याच्चेदित्यर्थः** । **दूषयति** भेद इति ।

भेदः स्यात्पारमार्थिकः ॥

---

**सर्वोऽपि भेदो भ्रान्त इति वाक्यार्थस्य भ्रान्तत्वे बाध्यत्वे च सकल(लो)भेदः पारमार्थिकः स्यात्** ।

शे०— आद्यपक्षस्य मूलारूढतामुपदर्शयितुमपेक्षितं पूरयति **एतद्वचनमितीति** । भेदमात्र व्यावहारिकमित्येतद्वचनमित्यर्थः । ततश्च सर्वोऽपि भेदो भ्रान्तिकल्पित इति वाक्यार्थो व्यावहारिको मूलार्थोऽवधेयः । ननूक्तवाक्यार्थस्य भ्रान्तिसिद्धत्वेऽप्यबाध्यत्वाभ्युपगमात् । तद्बाध्यतोपजीवनेन भेदपारमार्थिकत्वापादनपरोत्तरग्रन्थानुपपत्तिरित्यतोऽस्य बाध्यत्वपक्ष एव दूषणत्वेन तत्पक्षदूषणत्वाभावान्ना-नुपपत्तिरित्यभिप्रेत्यात्र संभावितपक्षद्वयं विकल्प्य द्वितीयपक्षं बहिरेव प्रदूष्याद्यपक्षशङ्कासमाधानपरत-योत्तरग्रन्थं सङ्गमयति **अत्रापीति** ॥ **वाक्यार्थोऽयमिति** । सर्वोऽपि भेदो भ्रान्तिकल्पित इत्येतद्वाक्यार्थ इत्यर्थः । तद्बाध्यत्वाबाध्यत्वविचारस्यैव तद्भ्रान्तिसिद्धत्वाभ्रान्तिसिद्धत्वोपपादकत्वादिति भावः ॥ तस्यापीति मूले तच्छब्दपरामर्शविषयो न प्रतीयते । अपिशब्दस्यापि यथाश्रुतसंबन्धे वैयर्थ्यं चेत्यतस्तस्येत्येतत्परामर्शविषयप्रदर्शनपूर्वकमपिशब्दस्य भिन्नक्रमत्वेन समुच्चयप्रदर्शनेन च सार्थक्यं दर्शयन्नेव शङ्काभाष्यं व्याचष्टे **तस्येत्यादि** । सर्वोऽपि भेदो भ्रान्तिसिद्ध इत्येतद्वचनार्थस्येत्यर्थः । प्रथमपक्षदूषणतां भाष्यस्य मूलारूढां कर्तुमपेक्षितमापादकं पूरयन्योजयति **सर्वोऽपीति** ।

**या० — किन्तु बाध्यताऽपीति** । अत्रोक्तवाक्यार्थस्यासत्यतालाभायोभयोक्तिः । एकैकमात्रोक्तौ तदलाभात् । तथा हि । भ्रान्तिकल्पितत्वमात्रोक्तौ पररीत्याऽनिर्वाच्यत्वमेव स्यान्नासत्यत्वम् । बाध्यत्वमात्रोक्तौ च 'विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मत'मित्यस्मद्रीत्या सत्यत्वमेव स्यात् । असत्यत्वालाभे च 'भेदः स्यात्पारमार्थिक' इति वक्ष्यमाणमापादनं न श्लिष्टतरं परस्परविरहरूपत्वाप्राप्त्या वक्ष्यमाणव्याप्त्यसंभवात् । उभयोक्तौ भ्रान्तिकल्पितस्य बाध्यत्वं त्रैकालिकनिषेधप्रतियोगित्वमेव प्राप्नोति नान्यत् । तदेवासत्यत्वमिति तल्लाभः । एवं चाग्रेतनमेकस्यासत्यतायां हि इत्याद्युदाहरणवाक्यमपि श्लिष्टतरं भवति । न च व्यावहारिकपदेनोक्तरूपमसत्यत्वमेव कस्मान्न विवक्षितमिति वाच्यम् । प्राक् प्रबोधादित्यादिना तदलाभेनानुक्तोपालंभापत्तेरिति ।

**सु० — द्वितीयमाशङ्कते** अव्यावहारिकत्वमिति ।

**अनु०** — अव्यावहारिकत्वं चेत्

**तस्य वचनस्येति वर्तते । निराकरोति** भेद इति ।

भेदोऽयं सत्यतां गतः ॥

**तिष्ठतु तावदन्यः । वाक्यार्थस्य सत्यत्वे तस्य ब्रह्मणश्च यो** भेदो, **यश्च पदार्थानामसत्यत्वे वाक्यार्थस्य सत्यत्वानुपपत्तेः पदार्थानां परस्परं वाक्यार्थाद्ब्रह्मणश्च भेदः; स तावत् सत्यतां गतः । उभयथाऽपि वाक्यार्थो व्याहत इत्यर्थः** ।

**शे० —** सर्वोऽपि भ्रान्तिसिद्ध इति वाक्यार्थः परमार्थ इति द्वितीयमित्यर्थः । द्वितीयपक्षशङ्काया भाष्यारूढतामुपदर्शयितुमपेक्षितमनुवृत्त्या पूरयति **तस्येति** । वर्तत इति तत्परामृष्टदर्शनं वचनस्येति सर्वोऽपि भेदो भ्रान्तिसिद्ध इत्येतद्वचनार्थस्येत्यर्थः । अयमितीदमा व्यावर्त्यतया सूचितं प्रदर्शयन्नेव तत्संग्राह्यं विशेषमुपदर्शयति **तिष्ठतु तावदिति ॥ वाक्यार्थस्य चेति** । सर्वोऽपि भेदो भ्रान्तिकल्पित इति वाक्यस्य योऽर्थस्तस्य परमार्थत्व इत्यर्थः ॥ **उभयथाऽपीति** । सर्वोऽपि भेदो भ्रान्तिकल्पित इति वाक्यार्थस्य भ्रान्तत्वे अभ्रान्तत्वे चेत्युभयथाऽपीत्यर्थः ॥ **वाक्यार्थ इति** । सर्वस्य भेदस्य भ्रमसिद्धत्वरूप इत्यर्थः ।

**स० — वाक्यार्थस्येति** । सर्वोपि भेदो भ्रान्त इत्येतद्वाक्यस्य योऽर्थः सर्वस्य भेदस्य भ्रमसिद्धत्वमित्येवंरूपस्तस्येत्यर्थः । वाक्यार्थस्य सत्यत्वे भेदचतुष्टयस्य सत्यत्वम् । वाक्यार्थस्य ब्रह्मणश्च भेदस्तावदेकः, पदार्थानामसत्त्वे वाक्यार्थसत्यत्वानुपपत्तेः । पदार्थानां परस्परं भेदो द्वितीयः । पदार्थानां वाक्यार्थात् भेदः तृतीयः । पदार्थानां ब्रह्मणो भेदः चतुर्थ इति ॥ **उभयथापीति** । सर्वोपि भेदो भ्रान्त इत्येतद्वाक्यार्थस्य भ्रान्तत्वेऽभ्रान्तत्वे चेत्यर्थः ॥ **वाक्यार्थः** सर्वोपि भ्रान्त इत्येतद्वाक्यार्थः

सर्वभेदस्य भ्रमसिद्धत्वादिरूपः । आद्ये सर्वस्यापि भेदस्य सत्यत्वापत्त्या द्वितीये भेदचतुष्टयस्योक्तरीत्या सत्यत्वापत्त्या वाक्यार्थस्य सर्वभेदभ्रान्तत्वस्य व्याहतत्वादित्यर्थः ।

प०— **अन्य इति** । भेदान्तरसत्त्वोपपादनादित्यर्थः । यश्चेत्यस्य भेद इति दूरेणान्वयः ॥ **पदार्थानामसत्त्वेति** । सर्वोपि भेदो भ्रान्तिकल्पित इति वाक्यगतानि यानि पदानि तदर्थानामसत्त्वे इत्यर्थः ॥ **वाक्यार्थसत्यत्वेति** । पदार्थसंसर्गातिरिक्तवाक्यार्थस्याभावादिति भावः ॥ **उभयथाऽपीति** । भेदमात्रं भ्रान्तिसिद्धमिति वाक्यार्थस्य भ्रान्तिसिद्धत्वाभ्रान्तिसिद्धत्वपक्षद्वयेपि भेदमात्रं भ्रान्तिसिद्धमिति वाक्यार्थोऽनुपपन्न इत्यर्थः ।

या०— **व्याहत इति** । प्रमाणबाधित इत्यर्थः । तथा चाद्ये बाधो द्वितीयेंऽशे बाध इति ज्ञातव्यं ।

श्री०— अन्यो घटपटादिभेदः । यो भेदः स तावत्सत्यतां गत इत्यन्वयः । पदार्थानां परस्परं भेदस्य सत्यत्वोपपादनायोक्तं **पदार्थानामसत्यत्व इति** ॥ **वाक्यार्थेति** । पदसमुदायरूपत्वाद्वाक्यस्येत्याशयः । पदार्थानां यः परस्परं भेदो यश्च पदार्थानां वाक्यार्थात् भेदः यश्च पदार्थानां ब्रह्मणः सकाशाद्भेद इति योज्यं ।

---

**सु०— सर्वोऽपि भेदो भ्रान्त इति वाक्यार्थस्य भ्रान्तत्वे बाध्यत्वे च सर्वस्यापि भेदस्य सत्यता स्यादित्युक्तम् । तत्कुत इत्यतस्तदुपपादनाय व्याप्तिं तावदाह** एकस्येति ।

**अनु०—** एकस्यासत्यतायां हि द्वयोरेव विरुद्धयोः ॥
अन्यस्य सत्यतैव स्यादिति केन निवार्यते ॥

**यौ द्वावेव विरुद्धौ तयोर्मध्ये एकस्यासत्यतायां सत्यामन्यस्य सत्यता स्यादेवेति व्याप्तिः केन निवार्यते । उपाधिव्यभिचारयोरभावान्न केनापि । पुरोवर्तिनः पुरुषत्वेऽसति स्थाणुत्वमेव भवतीति नियमो नास्ति । वल्मीकत्वस्यापि संभवात् । अतो द्वयोरेव विरुद्धयोरित्युक्तम् । द्वयोरिति विशेषणस्यासमर्थतापरिहाराय विरुद्धग्रहणम् । यः पदार्थो द्वयोरेव विरुद्धयोरेकस्य असत्यत्ववान् असावन्यस्य सत्यत्ववानित्युक्तं भवति ।**

शे०— एकस्येत्याद्युत्तरग्रन्थस्य पूर्वोक्तार्थानुपपादकत्वादसङ्गतिमाशङ्क्याव्यवहितार्थोपपादकत्वाभावात्तदसङ्गतावपि व्यवहितार्थोपपादकत्वेन तद्ग्रन्थसङ्गतिसंभवान्नानुपपत्तिरित्यभिप्रेत्य तथा सङ्गतिमाह **सर्वोऽपीति** ॥ **उक्तमिति** । 'भेदःस्यात्पारमार्थिक' इत्यादिनेति शेषः ॥ **तदुपपादनायेति** । 'स्ववाचोऽसत्यता चेत्स्यादि'त्यादिनेति शेषः । एकपदस्य कृत्यमाह **पुरोवर्तिन इति** ॥

**विशेषणस्यासमर्थतेति** । द्वावेव यौ धर्मावित्यनुपपन्नम् । धर्माणां बहुत्वेन धर्मयोर्द्वित्वानुपपत्तेः । विरुद्धौ द्वावेवेत्यत्र नानुपपत्तिः । नित्यत्वानित्यत्वयोर्द्वयोरेव विरुद्धतया तद्विरोधिनस्तृतीयस्याभावादित्यर्थः । यौ द्वावेव विरुद्धौ तयोर्मध्ये एकस्यासत्यतायां सत्यामन्यस्य सत्यतैव स्यादित्यनुपपन्नम् । असत्यतासत्यतयोर्भिन्नभिन्ननिष्ठतया व्यधिकरणत्वादित्यत आह **य इति** ।

**स०**— ययोर्द्वयोरेव मध्ये एकस्यासत्यतायां सत्यामन्यस्य सत्यता स्यादित्येव व्याप्त्युपपत्तौ किं विरुद्धग्रहणेनेत्यत आह **द्वयोरिति विशेषणस्येति** । ययोर्द्वयोरित्येवोक्तेऽविरुद्धद्वयोर्मध्ये एकस्यासत्यतायां सत्यामपि अन्यस्य सत्यत्वाभावात् द्वयोरितिविशेषणस्यासमर्थत्वम् । तत्परिहाराय विरुद्धग्रहणम् । अयं भावः । वक्ष्यमाणप्रकारेण यः ययोर्द्वयोर्विरुद्धयोर्मध्ये एकासत्यत्ववान् स अपरसत्यत्ववान् इति व्याप्तिरत्राभिप्रेता । तत्र यदि विरुद्धद्वयोरिति नोच्येत तदा पटस्य घटत्वपृथुबुध्नोदराकारत्वरूपधर्मद्वयमध्ये एकासत्त्ववत्त्वेपि अपरसत्त्ववत्त्वाभावात् । तत्र व्यभिचारेण व्याप्तिरनुपपन्ना स्यात् । अतो विरुद्धग्रहणमिति । यौ द्वावेव विरुद्धौ तयोर्मध्ये एकस्यासत्यतायां सत्यां अन्यस्य सत्यता स्यादिति नोपपद्यते व्यधिकरणत्वात् । असत्यतासत्यतयोर्भिन्ननिष्ठत्वादित्यत आह **य इति** ।

**प०— असमर्थतेति** । व्याप्त्युपपादनासमर्थतेत्यर्थः । व्याप्तिप्रकारं निष्कृष्य दर्शयति **यः पदार्थ इति** । वचनमात्रस्याभासत्वेनाप्युपपत्त्या प्रकृतार्थानिर्वाहकत्वादाह **इत्युक्त इतीति** ।

**या०— अतो द्वयोरेव विरुद्धयोरिति** । तथा चैवकारसमभिव्याहारेण परस्परविरुद्धरूपयोरित्यर्थलाभान्नोक्तव्यभिचारशङ्केति भावः ॥ **असमर्थतेति** । एवशब्दसमभिव्याहृतस्य द्वयोरिति विशेषणमात्रस्य योग्यताभावेन न स्वार्थबोधने समर्थता । न हि परस्परविरहरूपविरुद्धाविवाविरुद्धावपि क्वचित् द्वावेव प्रसिद्धौ येनात्र योग्यता स्यात् । अतस्तत्परिहाराय विरुद्धयोरिति वक्तव्यमिति भावः । एवं च रूपादिषु पंचसु मध्य इत्यस्येवाप्रसिद्धिवारकतया व्याप्तिग्रहोपयुक्तत्वेन विरुद्धयोरित्यस्य सार्थक्यमुक्तं भवतीति ज्ञातव्यं । ननु परस्परविरहरूपयोरपि कथमेकासत्त्वमपरसत्त्वाक्षेपकं व्यधिकरणत्वादित्यत आह **यः पदार्थ इति** ।

**सु०**— **निदर्शनमाह** असत्यमिति ।

**अनु०**— असत्यं नोक्तमित्युक्ते सत्यमुक्तमिति प्रजाः ॥
जानन्त्युक्तं तु नो सत्यमित्युक्तेऽसत्यतामपि ॥

**आप्तेनोक्तमसत्यं नेत्युक्ते सत्युक्तं सत्यमिति प्रजा जानन्ति । तथा विप्रलम्भकेनोक्तं सत्यं नो इत्युक्ते तु तस्यासत्यतामपि जानन्ति । सत्यत्वासत्यत्वयोर्द्वयोरेव विरुद्धता । तत्र**

**आप्तोक्तेऽर्थेऽसत्यतायामसत्यां सत्यतायाः सत्वमनाप्तोक्ते च सत्यतायामसत्यामसत्यतायाः सत्वं च प्रसिद्धमित्यर्थः। इत्युक्त इति प्रमितत्वोपलक्षणम्। प्रजा जानन्तीत्यनेन आऽविपालाङ्गनमेषा व्याप्तिः सिद्धा न केवलं परीक्षकाणामिति सूचयति।**

**शे०—** यः पदार्थो द्वयोरेवेत्यभिमतव्याप्तेरत्राप्रदर्शनात्कथमस्य निदर्शनत्वमित्यतो विरुद्धधर्मद्वयोपदर्शनेनोपपादयति **सत्यत्वेति**। नन्वाप्तेनोक्तमसत्यं नेति प्रत्यक्षादिनाऽपि प्रमिते सत्युक्तं सत्यमिति प्रतिजानंत्येव तत्किमुक्तवचनग्रहणेनेत्यत आह **इत्युक्त इतीति**। ततश्च मूले प्रकृताभिप्रायेणैव वचनग्रहणम्। वस्तुतस्तु प्रमितमित्येव वक्तव्यमित्युक्तं भवति॥ **आऽविपालाङ्गनमिति**। अविपालाङ्गना अभिव्याप्येत्यर्थः। ततश्च आबालं हरिभक्तिरित्यादाविव आङ् मर्यादावचन इति वचनग्रहणादभिविध्यर्थकस्याङःकर्मप्रवचनतया तद्योगेन पञ्चम्यपाङ्परिभिरिति पञ्चम्यां जातायां कर्मप्रवचनीयस्याङः पञ्चम्यन्तेनाविपालाङ्गनाशब्देन आ अविपालाङ्गनाभ्य इति आङ् मर्यादाभिविध्योरित्यव्ययीभावसमासे विभाषेति महाविभाषाधिकारेणास्य समासस्य वैकल्पिकत्वेन समासाभावपक्षे आऽविपालाङ्गनाभ्य इति पञ्चमीश्रवणसंभवेऽपि समासपक्षे सुपो धातुप्रातिपदिकयोरित्यवयवसुब्लोपादिके सत्याऽविपालाङ्गनमित्यस्योपपत्तिरिति ध्येयम्।

**प०—** यद्वा आप्तोक्तमसत्यं नेत्यनुमितेपि सत्यमुक्तमिति जानन्त्येवातः कथं वचनग्रहणमित्यत आह **इत्युक्त इति**॥ **आऽविपालाङ्गनमिति**। आ अविपालाङ्गनाभ्यः अविपालाङ्गनापर्यन्तमित्यर्थः। आङ् मर्यादाऽभिविध्योरित्यव्ययीभावः।

**या०—** भूयःसहचारप्रदर्शनाय मूले नो सत्यमित्याद्युक्तं। तदुपपादयति **तथा विप्रलंभकेनेति**। नन्वत्र लोकानुभव एव प्रदर्शितो न तु यः पदार्थो द्वयोरेवेत्यादिरूपा व्याप्तिरित्यत आह **सत्यत्वासत्यत्वयोरिति**। नन्वाप्तोक्तमसत्यं नेति प्रत्यक्षादिनाऽपि प्रमिते सत्युक्तं सत्यमिति प्रजानंत्येवातः किमुक्त इति वचनमात्रग्रहणेनेत्यत आह **आऽविपालांगनमिति**। आ अविपालांगनेभ्य इति विग्रहे आङ् मर्यादाभिविध्योरित्यनेनाव्ययीभावसमासे सवर्णदीर्घादिके सति आऽविपालांगनमिति रूपमिति ज्ञातव्यं।

**सु०— ननु स्वप्नेऽत्र घट इति दृष्ट्वा नात्र घट इत्यपि पश्यति। तत्र घटः तदभावश्च द्वयमपि मिथ्या। अतो व्याप्तिभङ्ग इत्यत आह** नेति।

**अनु०—** न स्वप्नेऽपि द्वयं मिथ्या

**तत्किं द्वयमपि सत्यमित्यत आह** तत्रेति।

तत्रैकं सत्यमेव हि॥

तत्र घटतदभावयोर्मध्ये । यदाऽभावस्यासत्यता तदा घटः सत्य एव । यदा च घटस्य असत्यता तदाऽभावः सत्य एवेत्यर्थः । तस्मान्न व्याप्तिभङ्ग इति हिशब्दार्थः । कुतो न द्वयमपि मिथ्येत्यत आह भावेति ।

भावाभावावुभौ तत्र कथं मिथ्या भविष्यतः ॥

यो यस्याभावो यश्च यस्याभावस्य प्रतियोगी तावुभावप्येकत्रैकदैव न मिथ्येति व्याप्तेः । स्वप्नेऽपि घटतदभावौ कथं तथा भविष्यत इति भावः । व्याहतं च भावाभावयोरुभयोरसत्त्ववर्णनमित्याशयेनाह भावस्य हीति ।

भावस्य हि निषेधे तु नाभावस्य निषेधनम् ॥

हिशब्दो हेतौ । भावस्य निषेधे कृते तु अभावस्यैव विहितत्वात् । पुनर्नाभावस्य निषेधनं कर्तुं शक्यते व्याघातात् । एवमभावस्य निषेधे कृतेऽभावाभावो भाव एव तद्व्याप्तो वेति भावस्य विहितत्वात् पुनर्न भावस्य निषेधनं युक्तं व्याहतत्वादिति । अस्त्वेवं व्याप्तिस्ततः किमित्यत आह स्ववच इति ।

स्ववचोऽसत्यता चेत्स्यात्तस्माद्भेदस्य सत्यता ॥

स्वशब्देन प्रतिवाद्युच्यते । तद्वागर्थस्य सकलभेदमिथ्यात्वस्य । तस्मात् व्याप्तिसद्भावात् मिथ्यात्वं सत्यत्वं च द्वौ विरुद्धधर्मौ । भेदे तयोः, मिथ्यात्वेऽसति सत्यत्वं सत्स्यादेवोक्तव्याप्तिबलादित्यर्थः ।

**शे० — यो यस्याभाव इत्यादि ।** यद्यपि सिद्धान्ते प्रामाणिकस्य निषेधप्रतियोगित्वाभावान्न भावाभावयोः परस्परनिषेधप्रतियोगिभावोऽस्ति तथाऽपि तदभ्युपगन्तृतार्किकरीत्याऽयं ग्रन्थ इत्यविरोधः । यद्वा प्रतियोगित्वमत्र न निषेध्यत्वं विवक्षितं किन्तु निषेधप्रमितिजनकारोपप्रधानत्वरूपमन्यदेव यत्किंचित्पारिभाषिकम् । ततश्च प्रामाणिकस्य निषेध्यत्वरूपप्रतियोगित्वाभावेऽपि निरुक्तप्रतियोगित्वं नानुपपन्नमेव । यस्याभाव इत्येतदपि यत्प्रधानकारोपविषयस्याभाव इति व्याख्येयम् । यस्य भावस्य प्रतियोगीत्येतदपि यदभावप्रमितिजनकारोपप्रधान इत्येव व्याख्येयम् । आरोप्यवत्प्रधानस्यापि तत्प्रतिषेधविरोधित्वेनानुभूयमानत्वात् । तत्प्रतिषेधप्रतियोगित्वमप्युपपन्नम् । अत एव प्रतियोगित्वस्याभावविरोधित्वकथनमपि सैद्धान्तिकं समन्जसम् । अनेनैवाभिप्रायेणाप्रेतनव्याहत्युपपादनमपि व्याख्येयमित्यन्यत्र विस्तरः ॥ **अभावस्यैवेति ।** तस्यैव भावनिषेधत्वादिति भावः ॥ **एवमिति ।** निषेधविशिष्टभावनिषेधस्य विशेषणीभूतनिषेधविषयकत्वस्य सविशेषणे हीति लाघवमूलकन्यायसिद्धत्वान्निषेध-

निषेधरूपातिशयलाभाय च नञ्द्वयसार्थक्यसंभवान्निषेधनिषेधो भावविधिरेव सिध्यतीत्यर्थः । एतच्चा-भावप्रतियोगिकातिरिक्ताभावाङ्गीकारेऽनवस्थानात् स नास्तीति मतमवलंब्योक्तम् । अभावप्रतियोगि-कातिरिक्ताभाववादिमतमाश्रित्याप्याह **तद्व्याप्तो वेति** । एतन्मते तृतीयाभावस्य प्रथमाभावत्वान्नानवस्थेति हृदयम् । नन्वस्तु विरुद्धयोरर्थयोर्यत्रैकस्यासत्त्वं तत्र परस्य सत्त्वमिति नियमोऽन्यत्र यथातथा । तावताऽपि प्रकृते किमायातमित्यत आह **मिथ्यात्वमिति** । भेदधर्मिणि तयोः सत्यत्वमिथ्यात्वयोर्मध्ये मिथ्यात्वेऽसतीत्यर्थः ।

स०— अस्तु विरुद्धयोर्धर्मयोर्मध्ये यत्र एकासत्यता तत्रापरसत्त्वमिति व्याप्तिः । प्रकृते तु किमायातमित्यत आह **मिथ्यात्वमिति** । भेद इत्यधिकरणसप्तमी । भेदरूपे धर्मिणीत्यर्थः । **तयोः** सत्यत्वमिथ्यात्वयोर्मध्ये । **उक्तव्याप्तीति** । एकस्यासत्यतायामित्युक्तव्याप्तीत्यर्थः ।

प०— **प्रतिवाद्युच्यत इति** । असत्प्रतिवादी मायावादीत्यर्थः । अत्र प्रकरणे वचनशब्दः तदर्थ इत्युक्तत्वात् । तद्वागर्थस्य सकलभेदमिथ्यात्वस्येत्युक्तम् । मिथ्यात्वे असतीति विभागः । अविद्यमान इत्यर्थः ।

या०— **यो यस्याभाव इत्यादि** । अत्र भावाभावयोः सत्त्वासत्त्वयोर्वा यत्परस्परनिषेध-प्रतियोगित्वमुच्यते तत्र निषेध्यत्वरूपं विवक्षितं किं तु निषेधे प्रमितिजनकारोपप्रधानत्वरूपमन्यदेव-पारिभाषिकम् । तेन सिद्धांते प्रामाणिकस्य निषेधप्रतियोगित्वाभावात् कथमेतदिति शङ्काऽनवकाशः । प्रामाणिकस्य प्रतिषेध्यत्वरूपप्रतियोगित्वाभावेऽपि निरुक्तप्रतियोगित्वसंभवात् । एवं यस्याभाव इत्येतत् यत्प्रधानकारोपविषयस्याभाव इति व्याख्येयं । यस्याभावस्य प्रतियोगीत्येतदपि यदभावप्रमितिजनकारोप-प्रधान इत्येव व्याख्येयम् । आरोपप्रधाने कथमारोप्यप्रतिषेधप्रतियोगित्वमिति चेत् । न । आरोप्यवत्त-स्यापि तत्प्रतिषेधविरोधित्वेनानुभवात् । एवं च प्रतियोगिसत्त्वं अभावविरोधीत्यादिकमपि सिद्धान्ते समंजसं भवतीति ज्ञातव्यं । अनेनैवाभिप्रायेणाग्रेतनं व्याहत्युपपादनं व्याख्येयम् ।

श्री०— **भेदे तयोर्मिथ्यात्वेऽसतीति** । तयोर्धर्मयोर्मध्ये **भेदे** भेदरूपे धर्मिणि मिथ्यात्व-रूपधर्मेऽसतीत्यर्थः ।

सु०— **प्रकृतमुपसंहरति** तस्मादिति ।

अनु०— तस्माज्जीवेशयोर्भेद उक्तन्यायेन गम्यते ॥ २ ॥

**भेदमिथ्यात्वासंभवाज्जीवेशयोः पारमार्थिकभेद एवोक्तन्यायेन द्युभ्वादिसूत्रैर्गम्यते । तथा च तद्विरोधान्नेदमभेदं प्रतिपादयति सूत्रमिति सिद्धम् । श्रुतयस्तु प्रागेव सम्यग्व्या-ख्याताः । विरुद्धगुणसत्यता चोपपादिता । प्रत्यक्षादीनामतत्त्वावेदकत्वमपि नि(रस्तं)राकृतम् । श्रुतिमिथ्यात्वस्यानिष्टत्वं च समर्थितमित्युक्त एव सूत्रार्थः ॥ ४–१–२ ॥**

**शे०** — उक्तन्यायेनेत्यस्य व्याख्यानं द्युभ्वादिसूत्रैरिति ॥ **इदमिति** । आत्मेति तूपगच्छन्तीति सूत्रमित्यर्थः । इदं सूत्रमिति संबन्धः । **श्रुतयः** तत्त्वमसीत्याद्याः ॥ **प्रागेवेति** । पृथगधिकरण इत्यर्थः । **व्याख्याताः** 'सादृश्याच्च प्रधानत्वादि'त्यादिना सादृश्याद्यर्थतया व्याख्याता इत्यर्थः । जीवेश्वरयोरपहतपाप्मत्वानपहतपाप्मत्वादिविरुद्धधर्मवत्त्वाच्च नैक्यमिति भावेनात्र यदुक्तं विरुद्धगुणताया मिथ्यात्वादिति तदपाकरोति **विरुद्धेति** । 'सत्यत्वात्तेन दुःखादेरि'त्यादिनेति शेषः । तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्येत्यादिनोक्तप्रत्यक्षादेरतत्त्वावेदकत्वं निराकरोति **प्रत्यक्षादीनामिति** । प्रथमाधिकरणादौ तत्र तत्र प्रपञ्चसत्यतासमर्थनेनेति शेषः ॥ **अनिष्टत्वं चेति** । मिथ्यायाः साधकत्वं चेत्यादिनेति शेषः ॥

**स०** — **श्रुतयस्त्विति** । तत्त्वमस्याद्याः श्रुतय इत्यर्थः । **प्राक्** पृथगुपदेशादित्यत्र । किञ्च जीवपरयोः सर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्माधिकरणत्वाच्च नैक्यम् । यदत्रोक्तं विरुद्धगुणताया मिथ्यात्वादिति तन्निराकरोति **विरुद्धेति** । अपि च प्रत्यक्षेण भेदस्य सिद्धत्वान्न जीवेश्वराभेदपरत्वमस्य सूत्रस्य । अन्यथा तद्विरोधात् । न च प्रत्यक्षमतात्त्विकभेदपरं श्रुतिस्तु तात्त्विकाभेदपरेति भिन्नविषयत्वान्न विरोध इति वाच्यम् । बाधाभावेपि तत्सिद्धभेदस्यातात्त्विकत्वे श्रुत्या सिद्धब्रह्मणोपि तदापत्त्या तात्त्विकपरत्वमेव वाच्यमित्याह **प्रत्यक्षादीनामिति** ।

**प०** — तर्हि तत्त्वमसीत्याद्यभेदश्रुतीनां का गतिरित्यत आह **श्रुतयस्त्विति** ॥ **प्रागेवेति** । पृथगुपदेशादित्यधिकरणे 'तथापि तु चिदानन्दपूर्वास्ते सदृशा गुणा' इत्यादिना व्याख्याता इत्यर्थः । विरुद्धगुणताया मिथ्यात्वादिति प्रागुक्तं निराह **विरुद्धगुणसत्यता चेति** । 'न दुःखानुभवः क्वापि मिथ्याऽनुभवतां व्रजेदि'त्यादिना पृथगधिकरण एवोपपादितेत्यर्थः । तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्येत्यादिनोक्तं निराह **प्रत्यक्षादीनामतत्त्वेति** ॥ **निराकृतमिति** । 'वेद्यवेद्यस्य मिथ्यात्वं यदि नैक्यस्य तत्कथं' इत्यादिना 'ततो हि प्रत्यक्षसिद्धं नान्येन केनचित् । शक्यं वारयितुं क्वापी'त्यन्तेन भक्तिपादादाविति ज्ञेयम् ॥ **समर्थितमिति** । 'मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याप्रतो भवेदि'त्यादिना जिज्ञासासूत्र इति भावः ॥ ४।१।२ ॥

**या०** — **प्रागेवेति** । पृथगधिकरण इत्यर्थः । विरुद्धगुणताया मिथ्यात्वादित्युक्तं दूषयति **विरुद्धगुणसत्यता चेति** । **उपपादिता** 'सत्यत्वात्तेन दुःखादेरि'त्यादाविति शेषः । तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्येत्यनेनोक्तं प्रत्यक्षादेरतत्त्वावेदकत्वं निराकरोति **अतत्त्वावेदकत्वमपीति** । प्रथमाधिकरणादौ तत्र तत्र प्रपञ्चसत्यतायाः समर्थितत्वादिति भावः ॥ **अनिष्टत्वं च समर्थितमिति** । 'मिथ्यायाः साधकत्वं चे'त्यादाविति शेषः ।

**श्री०** — **श्रुतयस्त्विति** । त्वं वाऽहमस्मि अहं ब्रह्माऽस्मीत्यात्मत्वोपगमप्रतिपादिका इत्यर्थः ॥

## ॥ अथ प्रतीकाधिकरणान्यथाव्याख्याननिराकरणम् ॥

सु० — एवं प्रथमसूत्रस्यापव्याख्यां प्रत्याख्याय द्वितीयस्यापि प्रत्याख्याति एतस्मादिति ।

अनु० — एतस्मादात्मशब्दोऽयं परमात्माभिधा भवेत् ॥

एतस्मादुक्तन्यायादात्मेति सूत्रगतोऽयमात्मशब्दः परमात्माभिधा परमात्मन एवाभिधायकस्तावद्भवेत् । ततः किमित्यत आह प्रतीकेति ।

प्रतीकविषयत्वेन विष्णुदृष्टिर्न तद्भवेत् ॥

तत् तस्मात्पूर्वसूत्रगतस्यात्मशब्दस्य परमात्मवाचित्वान्न प्रतीक इति प्रतिज्ञावाक्यस्य प्रतीकविषयत्वेन विष्णुदृष्टिः कर्तव्या न भवेदित्येवार्थः । इदमुक्तं भवति । न प्रतीक इत्यत्र तावदात्मेतीत्यनुवर्तनीयं पूर्वसूत्रात् । अन्यथा प्रतिज्ञावाक्यस्यापरिपूर्णत्वात् । पूर्वसूत्रे चात्मशब्दो विष्णुविषय इति समर्थितम् । तथा च प्रतीकविषयाया विष्णुदृष्टेरेवायं प्रतिषेधो व्याख्येयः । न प्रतीकेषु जीवमतिं बध्नीयादिति तु प्रतिज्ञाव्याख्याने प्रकृतपरित्यागोऽप्रकृतस्वीकारश्च प्रसज्येयातामिति ।

---

शे० — प्रत्याख्यातीति । प्रत्याख्यातुं तदुपयुक्ततया पूर्वोक्तमनुवदतीत्यर्थः । अत एव ततः किमितीति शङ्काग्रन्थः, उक्तस्य प्रमेयस्य प्रत्याख्यानोपयुक्ततासूचकस्तावच्छब्दश्चेति ध्येयम् । शक्त्या प्रतिपादकत्वरूपाया अभिधायाः शब्दधर्मत्वेन शब्दमात्रत्वानुपपत्तेराह परमात्मन एवाभिधायक इति । ततश्च मूलेऽभिधाशब्दोऽभिधावत्पर इति भावः । तदिति मौलपदस्य व्याख्यानं तस्मादिति । तस्यैव विवरणं पूर्वसूत्रेत्यादि । अपव्याख्याननिरासस्य भाष्यारूढतासिध्यर्थं प्रतिज्ञावाक्यस्येत्याद्यपेक्षिताध्याहारप्रदर्शनपूर्वकं भाष्यं व्याचष्टे न प्रतीक इतीति । ननु न पूर्वसूत्रस्थस्यात्मशब्दस्य विष्णुविषयत्वमात्रेणात्रोक्तरीत्या प्रतिज्ञार्थसिद्धिः । निमित्तनैमित्तिकभावाप्रतिभासनात् । न च तत्सूत्रस्थात्मशब्दानुवृत्तिबलात्तत्सिद्धिरित्यभिप्रायः । तदनुवृत्तेर्निर्मूलत्वादित्यतस्तदनुवृत्तौ निमित्तकथनेन हेतुहेतुमद्भावं दर्शयन्नेव ततोऽपि किमपव्याख्यानस्य दूषणमुक्तं भवतीत्यतः फलितं दोषं दर्शयन्नेवाभिप्रायमाह इदमुक्तं भवतीति ॥ प्रकृतेति । आत्मशब्दार्थतया पूर्वसूत्रे प्रकृतस्य विष्णोः परित्यागात्तदर्थतयाऽप्रकृतजीवपरत्वाङ्गीकाराच्चेति भावः ।

स० — **किञ्चेति** । (१) प्रबोधे प्रत्यक्षाद्यभावश्रुतेरपि अभावे तदर्थत्वेनाप्रकृतजीवपरत्वाङ्गीकारः स्यात् । ननु चात्रोक्तं सत्यमिष्टमेवैतदिति तत्राह **प्रकृतपरित्याग इति** । आत्मशब्दार्थभूतविष्णुपरित्यागेन प्रकृतपरित्यागात् , तदर्थत्वेनाप्रकृतजीवपरत्वाङ्गीकारेणाप्रकृतस्वीकाराच्चेत्यर्थः ।

प० — **उक्तन्यायादिति** । 'आत्मशब्दं यतो हेतुमि'त्यादिनोक्तन्यायादित्यर्थः । एतावता परकीयसूत्रार्थे किं दूषणमुक्तमित्यत आह **इदमुक्तं भवतीति** ।

श्री० — **पूर्वसूत्रेति** । आत्मेति त्विति सूत्र इत्यर्थः ॥ **विष्णुदृष्टेरेवेति** । तथा च प्रतीके आत्मा न, प्रतीकविषये आत्मशब्दोदितविष्णुदृष्टिर्न कर्तव्येत्यर्थः ॥ **न प्रतीकेष्विति** । तथा च आत्मशब्दस्य जीववाचित्वमङ्गीकृत्य 'प्रतीके आत्मा न' प्रतीकविषये जीवमतिं न बध्नीयादिति न प्रतीक इति प्रतिज्ञाभागव्याख्यानकरण इत्यर्थः ॥ **प्रकृतेति** । आत्मेति त्विति पूर्वसूत्रे आत्मशब्देन प्रकृतविष्णुपरित्यागोऽप्रकृतजीवस्वीकारश्चेत्यर्थः ।

**सु० — मनो ब्रह्मेत्यादिश्रुत्यर्थत्वेन यत्प्रतीकसंस्थितत्वेनेत्युक्तम् । तदपि नोत्सूत्र-(त्रित)म् । किन्तु प्रतीक इति सप्तम्यन्तं पदमावर्तते । तत्राद्यं विषयसप्तम्यन्तं नेत्यनेन संबध्यते । द्वितीयमधिकरणसप्तम्यन्तं श्रुतिव्याख्यानम् । उभयत्रात्मेतीति पदद्वयं पूर्वसूत्रादनुवर्तत इत्याशयवान्प्रसङ्गाद् द्वितीयं व्याख्याति** प्रतीक इति ।

**अनु०** — प्रतीके विष्णुरित्येव तस्मात्कार्या ह्युपासना ॥

**यस्मात्प्रतीकविषयत्वेन विष्णुदृष्टिः कर्तव्या न भवेत्तस्मादिति श्रुत्यर्थ इति शेषः । हिशब्देन प्रथमादिविभक्तेः सप्तम्यर्थवाचित्वं शाब्दिकानां प्रसिद्धमिति द्योतयति ।**

शे० — ननु प्रतीकविषयत्वेनेति पूर्ववाक्येनैवापव्याख्याननिरासंसिद्धेरुत्तरभाष्यखण्डवैयर्थ्यं । न च मनो ब्रह्मेत्यादिश्रुतिव्याख्यानार्थत्वादस्य न तदिति वाच्यम् । तासां पूर्वमेव व्याख्यातत्वेनास्य तादर्थ्यायोगादित्यतः पूर्वमुक्तस्य श्रुत्यर्थस्य सूत्रारूढत्वोपदर्शनेनोत्सूत्रितत्वशङ्कापरिहारार्थत्वान्न तदानर्थक्यमिति भावेन तत्परतयोत्तरार्धं संङ्गमयितुमाह **मनो ब्रह्मेत्यादीति** । नन्वपव्याख्याननिरासेन न प्रतीक इत्यस्य चरितार्थत्वान्न प्रतीके विष्णुरित्यस्य श्रुत्यर्थतया सूत्राल्लाभ इत्याशयेन पृच्छति **किंत्विति** । उत्तरमाह **प्रतीक इतीति** ॥ **द्वितीयमिति** । अधिकरणसप्तम्यंतपदोपेतवाक्यमित्यर्थः ॥ **उभयत्रेति** । विषयसप्तम्यन्तेऽधिकरणसप्तम्यन्ते च प्रतीकपद इत्यर्थः । अपव्याख्याननिराकरणावसरे स्वाभिमतश्रुत्यर्थस्य सूत्रारूढताकथनस्यासङ्गततामाशङ्कयाह **प्रसङ्गादिति** । तस्मादित्यस्य यस्मादित्येतत्सापेक्षत्वात्प्रतीकविषयत्वेनेति पूर्ववाक्योक्तमर्थमेव हेतुतया योजयति **यस्मादिति** । अस्य भाष्यस्य

श्रुत्यर्थतायाः मूलारूढतासिध्यर्थमपेक्षितं पूरयति इति **श्रुत्यर्थ इति शेष इति** । प्रथमादीत्यादिपदेन द्वितीयापरिग्रहः ॥ **शाब्दिकानामिति** । व्यत्ययो बहुलमिति सप्तसु प्रथमा षट्सु द्वितीयेत्यादि-लक्षणशास्त्ररहस्यज्ञानिनामित्यर्थः ।

स० — **श्रुतिव्याख्यानमिति** । मनो ब्रह्मेत्युपासीतेत्यादिश्रुतिव्याख्यानमिति भावः । उभयत्र विषयसप्तम्यन्तेऽधिकरणसप्तम्यन्ते चेत्यर्थः ।

प० — परमते दोषोक्तिप्रस्तावे सिद्धान्तसूत्रार्थोक्तिरसङ्गतेत्यत आह **मनो ब्रह्मेति** । यद्वा भवदर्थोऽप्यप्रकृतस्वीकाररूप एव सूत्रेऽप्रतीतेरित्यत आह **मनो ब्रह्मेत्यादीति** ॥ **प्रसङ्गादिति** । सूत्रार्थदूषणभूषणप्रसङ्गादिति । यद्वा स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गादित्यर्थः ॥ **शाब्दिकानामिति** । सप्तसु प्रथमेति पठतामित्यर्थः । तथाच श्रुतौ नाम्नि ब्रह्मेत्यादियोजनेति भावः ।

या० — नन्वपव्याख्याननिराकरणसमये न स्वाभिप्रेतसूत्रव्याख्यानं सङ्गतमत आह **प्रसङ्गा-दिति** ॥ **शाब्दिकानामिति** । सप्तसु प्रथमा षट्सु द्वितीयेत्येवं वदतामिति शेषः ।

श्री० — **आवर्तत इति** । न प्रतीक इति सूत्रे प्रतीक इति पदमावर्तनीयमित्यर्थः ॥ **नेत्य-नेनेति** । प्रतीकविषये विष्णुदृष्टिर्न कर्तव्येति तदर्थः । **द्वितीयं** आवर्तितं प्रतीक इति पदम् । **श्रुतीति** । मनो ब्रह्मेत्यादि श्रुतीत्यर्थः । **उभयत्रेति** । प्रतीक इत्यस्य विषयसप्तम्यंतत्वपक्षेऽधिकरण-सप्तम्यन्तत्वपक्षे चेत्यर्थः । **द्वितीयं** अधिकरणसप्तम्यन्तं प्रतीक इति पदम् । तस्मादित्यर्थतया आद्य-व्याख्यानमनुवदति **यस्मात्प्रतीकेति** ।

सु० — **इतश्च नायं प्रतिज्ञार्थ इत्याह** न चेति ।

अनु० — न च विष्णुः प्रतीकं यत्तस्मात् ॥ ३ ॥

**यस्माद्विष्णुः प्रतीकं, चशब्दाज्जीवश्च न भवति; तस्मात्प्रतीकेष्वात्मेति जीव इत्युपासना न प्रसक्तेति** शेषः । **अयमर्थः । प्राप्तौ सत्यां हि प्रतिषेधो वक्तव्यः । न च प्रतीकेषूपासकस्य आत्मदृष्टिः प्रसक्ता प्रसञ्जकाभावात् । यत्तु प्रसञ्जकमुक्तं ब्रह्मण आत्मत्वं प्रतीकानां च ब्रह्मविकारत्वं तदुभयमप्रामाणिकं प्रमाणविरुद्धं च । न ह्यत्यन्ताभासेन प्रसक्तिर्भवति । अतिप्रसङ्गात् । ततः प्रसक्त्यभावात्प्रतिषेधोऽनर्थक इति ।**

**न हि स इति हेतुव्याख्यानं दूषयति** न च विष्णुः प्रतीकं यत्तस्मादिति । **तच्छब्दो हि प्रकृतपरामर्शे वर्तते प्रकृतश्चात्मा । आत्मशब्दश्च विष्णुवाच्येवेति समर्थितम् । तथा च हि**

**यस्मात्स विष्णुः प्रतीकं नैव तस्मादित्येवार्थः संपद्यते । न हि स उपासकः प्रतीकानीति व्याख्याने तु प्रकृतपरित्यागेनाप्रकृतपरामर्शः प्रसज्यत इति ॥ ४-१-३ ॥**

**शे० — अयमिति** । न प्रतीकेषु जीवमतिं बध्नीयादित्ययमित्यर्थः । उक्तस्य प्रतिज्ञार्थत्वाभावे हेत्वन्तरतया विवक्षितस्याप्रसक्तत्वस्य मूलारूढतासिध्यर्थमपेक्षितं शेषमाह **प्रसक्तेति शेष इति** । ननु चोक्तप्रतिज्ञाहेतुतया प्रतीकानां जीवत्वाभावस्यैव भाष्यकारेण वक्तव्यत्वाद्विष्णोर्जीवत्वप्रतीकत्वाभावप्रतिपादनपरस्य 'न च विष्णुः प्रतीकं यदि'ति भाष्यखण्डस्यानर्थक्यमित्यतोऽस्य प्रतीकेष्वात्मदृष्टिप्रसंजकतया पराभिप्रेतयुक्तिखण्डनार्थत्वान्नानर्थक्यमित्याशयेन प्रसञ्जकाक्षेपोत्थानपूर्वकं पराभिप्रेतां युक्तिमुपन्यस्य तन्निरासकतया तमंशं योजयन्नेव भाष्याभिप्रायमाह **अयमर्थ इति** ।

प्रतिज्ञार्थस्येव हेत्वर्थस्याप्यनभिमततयाऽवश्यदूषणीयत्वात्तददूषणप्रयुक्तां भाष्ये न्यूनतां परिहर्तुं न चेत्यादिभाष्यमेव हेत्वपव्याख्याननिरासपरतयाऽपि योजयति **न हीत्यादि** । **प्रकृतपरित्यागेनेति** । आत्मशब्दार्थस्य विष्णोरेव सर्वनामतया प्रकृतपरामर्शकतच्छब्दार्थतया प्रकृतत्वाज्जीवस्य चाप्रकृतत्वादुक्तरीत्या हेतुव्याख्याने प्रकृतपरित्यागाप्रकृतस्वीकारप्रसङ्ग इति भावः ॥ ४ ॥ १ ॥ ३ ॥

**स० — प्रकृतपरित्यागेनेति** । तच्छब्दस्य प्रकृतपरामर्शकत्वात् आत्मशब्दार्थविष्णोरेव पूर्वं प्रकृतत्वात् तत्परित्यागेनोपासनापरत्वे प्रकृतत्यागोऽप्रकृतस्वीकारश्चेत्यर्थः ।

**प० — प्रतीकेष्विति** । विषयसप्तमीयं न त्वाधारसप्तमी । अनेन कः प्रतिज्ञादोष उक्त इत्यत आह **अयमर्थ इति** ॥ **प्रसञ्जकाभावादिति** । नामब्रह्मेत्येव श्रवणेन नामात्मेत्यश्रवणादिति भावः ॥ **प्रमाणविरुद्धमिति** । 'द्वा सुपर्णा' 'निर्विकारोऽक्षर' इत्यादिप्रमाणविरुद्धमित्यर्थः ॥ **अतिप्रसङ्गादिति** । अंगुल्यग्रे हस्तिशतमित्यादेरपि केनचिदुक्तस्य निषेधप्रसङ्गादित्यर्थः ॥ **तस्मादितीति** । **हेत्वंशार्थोऽप्ययुक्त इति शेष इति भावः** । अन्यथाऽनन्वयप्रसङ्गात् ॥ **परामर्श इति** । पुनरनुसंधानं परामर्शः ।

**या० —** नन्वेवं 'न च विष्णुप्रतीकं यदि'त्यस्य कथमुपयोग इत्याशङ्कायां परोक्तप्रसञ्जकखण्डनाय तदित्याशयेनाह **अयमर्थ इति** ।

**श्री० — प्रकृतश्चात्मेति** । आत्मेति त्विति सूत्र इत्यर्थः ॥ ४-१-३ ।

**॥ इति प्रतीकाधिकरणान्यथाव्याख्याननिराकरणम् ॥**

॥ अथ ब्रह्मदृष्ट्यधिकरणान्यथाव्याख्याननिराकरणम् ॥

सु० — इदानीं ब्रह्मदृष्टिरिति सूत्रस्यापव्याख्यामपाकरोति नात्मेति ।

अनु० — नात्मेत्युपासना ॥

इति पक्षो यदा ब्रह्मदृष्टिश्चात्र विरुध्यते ॥

नात्मेत्युपासनेत्येकदेशोत्कीर्तनेन 'न प्रतीके न हि सः' इति समग्रसूत्रार्थमनुवदति । प्रतीकेष्वात्मेति जीव इत्युपासना न कार्या । न हि स उपासकः प्रतीकानि इति पक्षो यदा इत्येवं पूर्वसूत्रव्याख्यानं यदा तदाऽत्र प्रतीकेषु ब्रह्मदृष्टिश्च विरुध्यते । चशब्दोऽपव्याख्यान-निराससमुच्चये ।

श्री० — कोऽसौ समग्रसूत्रार्थोपपादनानुवादकतैकदेशोत्कीर्तनेन नात्मेत्युपासनेति भाष्यस्योच्यत इत्यतस्तं दर्शयन्नेवैकवाक्यतया योजयति प्रतीकेष्विति । इति पक्षो यदेत्येतदनूद्य विवृणोति इतीति । ब्रह्मदृष्टिर्विरुध्यत इत्येतावता पूर्तेर्दृष्टिश्चेति चशब्दस्यानर्थक्यमित्याशङ्क्य न केवलं पूर्वसूत्रापव्याख्यान-मनुपपन्नं किं त्वेतत्सूत्रव्याख्यानमपीति पूर्वोत्तरसूत्रापव्याख्याननिराससमुच्चयार्थत्वान्नानर्थक्यमित्या-शयेनाह चशब्द इति ।

प० — इतिपक्षो यदेत्यस्यार्थमाह इत्येवमिति । अत्रेति मूलानुवादः । प्रतीकेष्विति व्याख्या ॥ चशब्दोऽपव्याख्यानेत्यादि । न केवलं नात्मेत्यादिसूत्रार्थो न युक्तः । किन्त्वेतत्सूत्रार्थो-पीति समुच्चय इत्यर्थः ।

श्री० — पूर्वसूत्रेति । न प्रतीक इति सूत्रे इत्यर्थः । प्रतीकेषु आदित्यादिषु ।

सु० — एतद्विवृणोति स इति ।

अनु० — स नेति युक्तिस्तत्रापि समेत्युक्तविरुद्धता ॥

प्रतीकानामात्मत्वेनोपासनस्याकर्तव्यत्वे त्वया या तादात्म्याभावलक्षणा स नेति युक्ति-रभिहिता सा तत्रापि ब्रह्मप्रतीकयोरपि समेति हेतोः प्रतीकेषु ब्रह्मदृष्टिः कर्तव्येति सूत्रे व्याख्यायमाने सति उक्तयुक्तिविरुद्धता भवतीति । एतदुक्तं भवति । प्रतीकेषु ब्रह्मदृष्टिः कर्तव्येति सूत्रव्याख्यानमसत् । प्रतीकं ब्रह्मतया नोपास्यम् । अब्रह्मत्वात् । यद्यन्न भवति न तत्त्त्वेनोपास्यमिति युक्तिविरुद्धत्वात् । न चेयं युक्तिरप्रमा । प्रतीकानामात्मत्वेनोपासनस्य अकर्तव्यतायां पूर्वसूत्रे परेणैवोपन्यस्तत्वात् । अन्यथाऽनैकान्त्येन तत्रापि साधिका न स्यात् । न च ब्रह्मप्रतीकयोरभेदः ब्रह्मणः सत्यत्वात् प्रतीकानां कल्पितत्वात् । पारमार्थिकभेदाभावः तावदस्तीति चेत् । तर्हि जीवप्रतीकयोरपि स नास्तीत्यसिद्धिः स्यादिति ।

शे०— उक्तस्यैव पुनर्वचनात् 'स ने'त्युत्तरभाष्यवैयर्थ्यमाशङ्क्य परिहरति **एतद्विवृणोतीति** । ननु युक्तिविरुद्धत्वकथनमात्रेणैव परकीयसूत्रव्याख्यानस्यापव्याख्यानत्वसिद्धेर्भाष्ये युक्तेः समत्वकथनमनर्थकमित्यतः प्रामाण्यासिद्धिपरिहारव्युत्पादनार्थत्वान्न तदिति भावेन युक्तिविरुद्धत्वोक्तिफलकथनपूर्वकं विरोधियुक्तिस्वरूपोपदर्शनपूर्वकं च वाक्यतात्पर्यमाह **एतदुक्तं भवतीति** । विशेषव्याप्तौ दृष्टान्ताभावेन व्याप्यत्वासिद्धिमाशङ्क्य तदभावेऽपि सामान्यव्याप्तिसत्वान्न तदिति भावेन तामुपदर्शयति **यद्यन्नेति** ॥ **अनैकान्त्येनेति** । अत्राब्रह्मरूपस्यापि प्रतीकस्य ब्रह्मत्वेनोपास्यत्वेन प्रतीकेऽनैकान्त्यप्रसङ्गेनेत्यर्थः ॥ **तत्रापीति** । प्रतीकानामात्मत्वेनोपासनस्याकर्तव्यतायामपीत्यर्थः ॥ **अभेद इति** । ततश्चाब्रह्मत्वहेतुरसिद्ध इति भावः । न तथाऽप्यनैकान्तिकपरिहार इत्यत आह **प्रतीकानामिति** । प्रतीकेषु विशेषणाभावायत्तविशिष्टहेत्वभावप्राप्त्या हेत्वगमनान्नानैकान्तिकमिति भावः ।

स०— **अन्यथेति** । अब्रह्मत्वयुक्तेरप्रमात्वं न वाच्यं तथा सति प्रतीकानि आत्मतया नोपास्यानि अनात्मत्वादिति त्वदीयानुमानेपि अनात्मत्वस्याभासत्वं स्यादविशेषात् । अन्यथा ब्रह्मभूतानामपि प्रतीकानां ब्रह्मत्वेनोपास्यत्वदर्शने यद्यन्न भवति तत्तत्वेन नोपास्यमिति व्याप्तेरत्रैव व्यभिचारेणासाधकत्वापातादित्यर्थः । प्रतीकं ब्रह्मतया नोपास्यं अब्रह्मत्वादित्यनुमानेऽसिद्धिमाशङ्कते **न चेति** ॥ **ब्रह्मण इति** । तथाच विरुद्धधर्माधिकरणत्वान्नाभेद इति भावः । ननु ब्रह्मप्रतीकयोर्विरुद्धधर्माधिकरणत्वेन काल्पनिकभेदसद्भावेपि पारमार्थिकभेदाभावेनाब्रह्मत्वरूपहेतुरसिद्ध एवेति शङ्कते **पारमार्थिकेति** । तर्हि प्रतीकं नात्मतयोपास्यं अनात्मत्वादितित्वदीयानुमानेपि प्रतीकात्मनोर्विरुद्धधर्माधिकरणत्वेन काल्पनिकभेदसद्भावेपि पारमार्थिकभेदाभावेनानात्मत्वहेतुरप्यसिद्धः स्यादित्याह **तर्हीति** ।

प०— परमसाध्यं वदन्नेव युक्तिप्रकारं व्यञ्जयति **एतदुक्तं भवतीति** ॥ **अप्रमेति** । अप्रमाणमित्यर्थः ॥ **अनैकान्त्येनेति** । ब्रह्मप्रतीकयोरतादात्म्येपि ब्रह्मदृष्टेर्नामादावङ्गीकारादिति भावः । **तत्रापि** पूर्वसूत्रेपीत्यर्थः । हेतोरभावान्नानैकान्त्यमित्याशङ्क्य निराह **न चेति** ॥ **असिद्धिरिति** । तादात्म्याभावरूपहेतोरिति योज्यम् ।

श्री०— **ब्रह्मप्रतीकयोरिति** । ब्रह्मादित्यादिप्रतीकयोरप्यभेदेन दृष्टेरकर्तव्यत्व इत्यर्थः । **अन्यथेति** । यद्यन्न भवति न तत्तत्त्वेनोपास्यमिति युक्तेरमानत्वाङ्गीकार इत्यर्थः ॥ **तत्रापीति** । प्रतीके जीवमतिं न बध्नीयादित्यत्रापीत्यर्थः । कुत इत्यत उक्तम् **अनैकान्त्येनेति** । ब्रह्मानात्मकेऽप्यादित्यादिप्रतीके ब्रह्मत्वेन दृष्ट्यङ्गीकारेण न हि स इत्युक्तयुक्तेर्व्यभिचारप्रसङ्गादित्यर्थः । ननु स नेति युक्तिः समेत्युक्तमयुक्तम् । ब्रह्मप्रतीकयोरभेदाङ्गीकारादित्याशङ्क्य निराकरोति **न च ब्रह्मप्रतीकयोरभेद**

इति । कुतो नेत्यतो विरुद्धधर्माधिकरणत्वादित्याह **ब्रह्मणः सत्त्वादिति** । सत्यत्वादित्यर्थः । **सः** पारमार्थिकभेदः ॥ **असिद्धिरिति** ॥ प्रतीकं जीवत्वेन नोपास्यमतत्त्वात् तादात्म्याभावादिति यावदित्येवं 'न हि स' इत्यनेनोक्तहेतोरसिद्धिः स्यात् । पारमार्थिकभेदाभावरूपतादात्म्यस्यैव सत्त्वादित्यर्थः ॥

**सु०—स्यादेतत् । 'न हि स' इति न निर्विशेषणो हेतुः सूत्रकारस्याभि(प्रेतो)मतो येन ब्रह्मदृष्टिः प्रतीकेषूक्तयुक्तिविरुद्धा स्यात् । किं तूपास्यस्योत्कर्षप्राप्त्यभावे सतीत्यनेन विशिष्टः । प्रतीकानां ब्रह्मत्वेनोपासने तूत्कर्षप्राप्तिरस्ति । अतोऽतद्भावेऽप्युपासना (कार्या) युज्यत इत्यत** आह यदीति ।

**अनु०—** यद्यप्युत्कर्षमात्रेण ह्यतद्भावेऽप्युपासना ॥

**आद्योऽपिशब्दोऽतिप्रसङ्गसमुच्चयार्थः । हिशब्दस्योत्तरार्धेनान्वयः । यदि विशिष्टहेतुं व्याख्याय प्रतीकानामतद्भावेऽब्रह्मत्वेऽप्युत्कर्षप्राप्तिमात्रेण ब्रह्मत्वेनोपासनाऽङ्गीक्रियते । तदा आत्मत्वेनापि तदुपासनमङ्गीकार्यं न तु निराकार्यम् । कुत इत्यत आह** उत्कर्ष इति ।

उत्कर्ष आत्मनोऽपि स्याच्चेतनत्वादचेतनात् ॥

**यस्माद्ब्रह्मवदात्मनोऽपि प्रतीकादुत्कर्षोऽस्ति । कथम् । आत्मनश्चेतनत्वात् । अचेतनं खलु प्रतीकम् । तस्यात्मत्वेनोपासनायामुत्कर्षप्राप्तिः स्यादिति । अतिप्रसङ्गस्य विपर्ययपर्यवसानमाह** तस्मादिति ।

तस्मादतत्त्वं नोपास्यमिति वेदविदां मतम् ॥

**यस्माद्विशिष्टहेतौ व्याख्यायमाने पूर्वसूत्रेऽसिद्धिः स्यात् । तत एव प्रतीकेषु ब्रह्मोपासनवदात्मोपासनं च प्रसज्येत । तस्मात्, अतत्त्वं, यद्यन्न भवति तत्त्वेन नोपास्यमिति सामान्यमेव सूत्रकारस्याभिमतम् । न तु विशेषणप्रक्षेपः । तथा च ब्रह्मदृष्टिरिति प्रतिज्ञा स्वोक्तयुक्तिविरुद्धैवेति । अत्र व्याप्तेर्निर्विशेषणत्वाभिधानस्य हेतोर्निर्विशेषणत्व एव तात्पर्यम् । स्पष्टत्वार्थं तु व्याप्त्यभिधानमिति वाच्यम् ।**

**शे०— अत इति** । हेत्वसिद्धेरित्यर्थः ॥ **अतिप्रसङ्गेति** । न केवलं विशिष्टहेतौ व्याख्यायमाने पूर्वसूत्रेऽसिद्धिरेव 'उत्कर्ष आत्मनोऽपि स्यादि'त्यनेनैवोच्यते किन्तु प्रतीकेषु ब्रह्मोपासनावदात्मोपासनमपि प्रसज्येतेत्यतिप्रसङ्गोऽपीत्यतिप्रसङ्गसमुच्चयार्थः । ननु तस्मादतत्त्वादित्येव हेतुर्न तु विशिष्ट इति हेतोर्निर्विशेषणत्वमेव वक्तव्यम् । व्याप्तेर्निर्विशेषणत्ववचनं तु असङ्गतमित्यत आह **अत्रेति** ।

**स०— तत एवेति ।** असिद्धेरेवेत्यर्थः ।

**प०— अतद्भाव इति ।** तादात्म्येऽसत्यपीत्यर्थः ॥ **अतिप्रसङ्गसमुच्चयार्थ इति ।** अविशिष्टहेतुपक्षे युक्तिविरुद्धत्वरूपातिप्रसङ्गेन सह विशिष्टहेतोरप्यात्मत्वेनोपासनापादनरूपातिप्रसङ्ग-समुच्चयार्थ इत्यर्थः । यद्वा विशिष्टहेतुव्याख्यानपक्षे न केवलं पूर्वसूत्रेऽसिद्धिः । किन्तु आत्मत्वोपा-सनप्रसङ्गश्चेत्येवं समुच्चयार्थ इत्यर्थः । अतद्भाव इत्यनुवादः । अब्रह्मत्व इति व्याख्या । हिशब्दार्थो यस्मादिति ॥ **असिद्धिः स्यादिति ।** न हि स इत्यत्राभिमतस्योपास्यस्योत्कर्षप्राप्त्यभावे सत्यतद्भावरूपहेतोरिति योज्यम् । ननु परेण विशिष्टहेतोरुक्तत्वादिहातत्त्वान्नोपास्यमिति विशेषणं विना-कृतस्य व्याप्त्युक्तिरसङ्गतेत्यत आह **अत्र व्याप्तेरिति ।**

**या०— अतिप्रसङ्गसमुच्चयार्थ इति ।** न केवलं विशिष्टहेतौ व्याख्यायमाने पूर्वसूत्रेऽ-सिद्धिरेव 'उत्कर्ष आत्मनोऽपि स्यादि'त्यनेनोच्यते । अपि तु प्रतीकेषु ब्रह्मोपासनवत् आत्मोपासनं च प्रसज्येतेत्यतिप्रसङ्गोऽपि इति अतिप्रसङ्गसमुच्चयार्थ इत्यर्थः । ननु तस्मादतत्त्वादित्येव हेतुर्न तु विशिष्ट इति हेतोर्निर्विशेषणत्वे वक्तव्ये व्याप्तेर्निर्विशेषणत्ववचनमसङ्गतमित्यत आह **अत्र व्याप्तेरिति ।**

**श्री०— अनेन विशिष्ट इति ।** न हि स इत्युक्तस्तादात्म्याभावरूपो हेतुरिति शेषः ॥ **असिद्धिः स्यादिति ।** अचेतनानां चेतनत्वेन ध्यानप्राप्त्योत्कर्षप्राप्तेर्विशेषणासिद्धिः स्यात् इत्यर्थः ॥ **तत एवेति ।** असिद्धेरेवेत्यर्थः । अचेतनानां चेतनत्वोपास्त्योत्कर्षप्राप्तेरेवेत्यर्थः ॥ **स्वोक्तयुक्तीति ।** न हि स इत्युक्तयुक्तीत्यर्थः । अतत्त्वं नोपास्यमित्येवं व्याप्तेर्निर्विशेषणत्वकथनमसङ्गतम् । अतत्त्वा-दित्येव हेतुर्वक्तव्यो न तूक्तविशेषणविशिष्ट इत्येवं हेतोरेव निर्विशेषणत्वस्य वक्तव्यत्वादित्यत आह **अत्र व्याप्तेरिति । व्याप्त्यभिधानं** व्याप्तेर्निर्विशेषणत्वेनाभिधानम् ।

**सु०—एवं प्रतिज्ञाव्याख्यानमपाकृत्य उत्कर्षादिति हेतुव्याख्यानमपाकरोति** उत्कर्षादिति ।

**अनु०—** उत्कर्षाद्ब्रह्मताध्याने यदि स्यात्फलमञ्जसा ॥
ब्रह्मणो नीचताज्ञानादनर्थः किं न जायते ॥

**ब्रह्मताध्याने प्रतीकानामुत्कर्षादुत्कर्षस्य दृष्टत्वादञ्जसा फलं पुरुषार्थरूपं फलं यदि स्यात्तदा, तदेव ब्रह्मणो नीचताध्यानमिति, तस्मादनर्थः किं न जायते, जायत एवेति** समन्वय-**फलत्वादकार्यमेवेदमिति ।**

**अभ्युपगम्येदं समन्वयफलत्वमुक्तम् । वस्तुतस्तु न पुरुषार्थः किं त्वनर्थ एवेत्याह** अचेतनस्येति ।

अचेतनस्य ब्रह्मत्वध्याने तुष्टिर्न हि क्वचित् ॥
नीचस्य स्वात्मताज्ञानात्कुप्यति ब्रह्म लोकवत् ॥

**तुष्ट्यभावाच्च न पुरुषार्थलाभस्ततः । क्वचिदित्यनेन यदचेतनं तदुपचिकीर्षालक्षणतुष्टि-रहितमिति व्याप्तिं सूचयति । नीचस्य प्रतीकस्य स्वात्मताध्यानाद्ब्रह्म कुप्यति । ततश्चानर्थं प्रयच्छति । तत्र दृष्टान्तो** लोकवदिति । **यथा लोके शिलादिकं राजत्वादिना चिन्तितं न प्रसीदति नापि पुरुषार्थं प्रयच्छति । यथा च राजा चण्डालत्वेन** ध्यातः **कुप्यति अनर्थं च ददाति तथेत्यर्थः । अनेन प्रतीकानामचेतनत्वेऽपि ब्रह्मैव सर्वाध्यक्षत्वात्फलं दास्यतीति च प्रत्युक्तम् । तस्यानेनोपासनेन कुपितत्वात् ।**

**शे०**— हेत्वपव्याख्याननिरासस्य मूलारूढतासिध्यर्थमपेक्षितं पूरयन् भाष्यं योजयति **प्रतीकानामिति** । ध्यानस्य वास्तवोत्कर्षानापादकत्वादाह **उत्कर्षस्य दृष्टत्वादिति** । प्रतीकानां ब्रह्मत्वेन ध्यानापेक्षया ब्रह्मणः प्रतीकत्वेन ध्यानस्य भिन्नत्वे, तस्यानर्थसाधनत्वेऽपि प्रतीके ब्रह्मताध्यान-स्यानर्थसाधनत्वाप्राप्तेस्तस्यैव ब्रह्मणो नीचताध्यानत्वमाह **तदेवेति** । अस्त्वेवमेकस्यैवार्थसाधनत्वमनर्थ-साधनत्वं च । ततोऽपि किमित्यतस्तत्फलं तस्यापि च फलं दर्शयति **समव्ययफलत्वादकार्यमेवेति** । 'असत्यानि दुरन्तानि समव्ययफलानि च । अशक्यानि च वस्तूनि नारभेत विचक्षण' इत्यभि-युक्तोक्तेरिति भावः ।

प्रतीकानां ब्रह्मत्वोपासनस्य समव्ययफलत्वप्रतिपादनेन फलवत्त्वसमर्थनात्तदभावप्रतिपादन-परोत्तरग्रन्थस्य तद्विरोधमाशङ्क्य परिहरति **अभ्युपगम्येदमिति** । मूले प्रतीकानां ब्रह्मत्वध्यानस्य तुष्ट्यसाधनत्वमात्रप्राप्तावपि पुरुषार्थासाधनत्वालाभात्साध्यमाह **तुष्ट्यभावाच्चेति** । अचेतनस्य ब्रह्मत्व-ध्याने तुष्टिर्नेत्येतावता पूर्तेः किं क्वचिदित्यनेनेत्यतोऽचेतनत्वस्य तुष्ट्यभावसाधकत्वोपयोगिव्याप्त्युप-दर्शकत्वान्न तस्यानर्थक्यमित्याह **क्वचिदितीति** ॥ **तत्रेति** । उभयविधव्याप्तावित्यर्थः ॥ **ब्रह्म कुप्यतीति** । यद्यपि नीचस्य स्वात्मताध्यानं न कोपजनकमपि तु स्वात्मनो नीचताध्यानमेव तथाऽपि नीचस्य स्वात्मताध्यानस्यैव स्वात्मनो नीचताध्यानताया उक्तरीत्या सिद्धत्वात्तदभिप्रायेण ब्रह्म कुप्यती-त्युक्तमत एवात्र यथा राजा चण्डालत्वेन ध्यातः कुप्यतीति वक्ष्यमाणो दृष्टान्तोऽपि सङ्गच्छत इति ध्येयम् । **अनेनेत्युक्तं हेतुमेव दर्शयति तस्येति** ।

**स०** — अनेनेत्युक्तहेतुं दर्शयति **तस्येति** ।

**प०**— **तत इति** । अचेतनस्य ब्रह्मत्वध्यानान्न पुरुषार्थलाभ इति पूर्वेणान्वयः ।

या० — **ब्रह्म कुप्यतीति** । यद्यपि नीचस्य स्वात्मताध्यानं न कोपजनकं किन्तु स्वात्मनो नीचताध्यानमेव । तथाऽपि नीचस्य स्वात्मताध्यानं स्वात्मनो नीचताध्यानमपि भवतीति पूर्वमुक्त्वा-तदभिप्रायेण ब्रह्म प्रकुप्यतीत्युक्तमिति ज्ञातव्यम् । अत एवात्र यथा राजा चण्डालत्वेन ध्यातः कुप्यतीति वक्ष्यमाणो दृष्टान्तोऽपि सङ्गच्छत इति ।

**सु० — न वयं ब्रह्मणि प्रतीकत्वोपासनं ब्रूमः । येन ब्रह्म कुपितमनर्थं प्रयच्छेत् किन्तु प्रतीके ब्रह्मत्वोपासनम् । ततः पुरुषार्थप्राप्तिरित्यत** आह चण्डाल इति ।

**अनु०** — चण्डालो नृप इत्युक्ते नृपश्चण्डाल इत्यपि ॥
को विशेषः परिज्ञाते नृपेण स्यात्कथञ्चन ॥

**चण्डालमुद्दिश्य चण्डालो नृप इत्युक्ते तथा नृपमुद्दिश्य नृपश्चण्डाल इत्युक्ते नृपेण परिज्ञाते सत्यनर्थप्राप्तौ कथञ्चन को विशेषः स्यान्न कथञ्चित्कोऽपि । अत्रोक्तशब्देन ध्यान-मुपलक्ष्यते । अज्ञातोपासनो राजा नानर्थं करोतीति नृपेण परिज्ञात इत्युक्तम् । तथा च प्रतीकं ब्रह्मेत्युपासने ब्रह्म प्रतीकमित्युपासने च सम एवानर्थ इति वाक्यशेषः ।**

---

शे० — गूढाभिसंधिर्यथाश्रुते शङ्कते **न वयमिति** । ततः पुरुषार्थप्राप्तिरिति कोपकारण-स्योपासनस्याभावेन ब्रह्मैव सर्वाध्यक्षत्वात्फलं दास्यतीति भावः । उक्तिसाम्यस्य वक्ष्यमाणत्वादत्र तद्विवक्षायां पौनरुक्त्यमित्यत्राह **अत्रोक्तशब्देनेति** । मूले दार्ष्टान्तिकमनुक्त्वा दृष्टान्तमात्रोक्तिरयुक्तेत्य-तस्तत्पूरयति **तथेति** ।

प० — शङ्कते **न वयं ब्रह्मणीति** ॥ **ततः पुरुषार्थप्राप्तिरिति** । अकुपितं ब्रह्मैव फलं दास्यतीति भावः । प्रकृतानुगुण्यायाह **अत्रोक्तशब्देनेति** । अन्यथोक्तिमात्रस्योपचारेणापि संभवा-दनानुगुण्यं स्यादिति ज्ञेयम् । राजवदित्यस्यार्थो राजा यथेति । तत्र तस्येवेत्यस्य प्रायिकत्वात्प्रथमा-न्तादपि वतिरिति भावः ।

या० — उक्तमभिप्रायं स्पष्टयितुं यथाश्रुते शङ्कामुपस्थापयति **न वयमिति** ॥ **ततः पुरुषार्थ-प्राप्तिरिति** । कोपकारणोपासनस्याभावेन ब्रह्मैव सर्वाध्यक्षस्तत्फलं दास्यतीति भावः । ज्ञानस्यैव प्रकृतत्वादुक्तेरुपचारेणाप्युपपत्त्याऽनर्थहेतुत्वाभावसंभवाच्चाह **अत्रोक्तशब्देनेति** ।

श्री० — कथञ्चन को विशेषः स्यादिति पदानामन्वयं दर्शयित्वाऽभिप्रायमाह **कथञ्चनेत्यादि** ।

**सु०— ननु क्षत्तरि राजदृष्टिः फलवती, राज्ञि क्षत्तृदृष्टिरनर्थहेतुर्दृष्टा । तत्कथमुभयस्य साम्यमुच्यत इति चेन्न । तत्र दृष्टेरभावात् । उक्तिमात्रं तूपचारेण । सिंहो देवदत्त इति यथा । दृष्टौ तु तत्राप्यनर्थसाम्यमेवेत्याशयेनाह** पुरत इति ।

**अनु०—** पुरतो नरदेवस्य चण्डालो यदि पूज्यते ॥
राजवत्किं न कोपः स्याद्राज्ञो लोकेऽभिपश्यति ॥

**राजा यथा पूज्यते तथा । तदा राज्ञः कोपो न स्यात्किम् । लोकेऽभिपश्यति सतीति कोपातिशयप्रदर्शनार्थम् । पूजया दर्शनमुन्नीयत** इत्यतः पूज्यत इत्युक्तम् ।

**न केवलं दृष्टेरुन्नायिकायां पूजायामेव राजकोपः किन्तु तादृश्यामुक्तावपीत्याह** राज्ञस्त्विति ।

राज्ञस्तु पुरतः प्रोक्ते चण्डालो(ले) नृप इत्यपि ॥
आत्मानं स इति प्रोक्तमितिवच्चैव कुप्यति ॥

**नाज्ञाता प्रोक्तिः कोपजननीत्यतो राज्ञस्तु पुरत इत्युक्तम् । चण्डाले नृप इति प्रोक्तेऽपि प्रकर्षेण न मयोपचारेणोच्यते अपि तु वस्तुत एवेत्युक्तेऽपि राजा कुप्यत्येव हि । आत्मानं प्रति हि स चण्डाल इति प्रोक्तं प्रकर्षेणोक्तमितिवदित्यत्र** यथा **तथैवेत्यर्थः । पूजैव कोपकारणं न दर्शनमित्याशङ्कानिरासाय विवेकार्थमयं श्लोकः ।**

---

शे०— पूर्वपक्ष्यभिसंध्युद्घाटनपूर्वकं तत्परिहारतयोत्तरवाक्यमवतारयति **ननु क्षत्तरीति** ॥ **उक्तिमात्रं त्विति** । दृष्ट्यनुन्नायकोक्तिरित्यर्थः ॥ **राजा यथेति** । अनेन मूले राजवदिति प्रथमान्ताद्वतिस्तत्र तस्येवेति लक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्याततया नियमत्वाभावादित्युक्तं भवति । नन्वत्र राजवच्चण्डालदर्शनस्यानर्थसाधनत्वाभिप्राये पूज्यत इति पूजाग्रहणानर्थक्यापत्त्या तदनुरोधेन राजवच्चण्डालपूजाया एवानर्थसाधनतयाऽकर्तव्यता लभ्यते । तत्कथमनेन दर्शनस्य तत्सिद्धिरित्यतो नात्र पूज्यत इत्युक्त्यनुरोधेन तथा पूजाया अनर्थसाधनत्वं शङ्कनीयम् । राजवच्चण्डालदर्शनस्यानर्थसाधनत्वेऽभिहिते परबुद्धेः परं प्रत्यप्रत्यक्षत्वात्कथं परसंबन्धिनो राजवच्चण्डालदर्शनस्य परं प्रति सिद्धिरिति । येनानर्थसाधनत्वं तस्येत्यतः प्रत्यक्षेण तदसिद्धावपि पूजाया दर्शनकार्यतया तदविनाभूतत्वाच्च तदनुमापकत्वेनानुमानादेव तत्सिद्धिसंभवान्न दर्शनस्यानर्थसाधनत्वानुपपत्तिरित्यनर्थसाधनदर्शनानुमापकतया पूज्यत इति पूजाग्रहणस्यार्थवत्त्वसंभवेनान्यथासिद्धतया न तदनुरोधेन तस्यास्तत्साधनत्वलाभ इत्याशयेनाह **पूजयेति** ॥ **तादृश्यामिति** । दृष्टेरुन्नायिकायामित्यर्थः । प्रोक्तिरित्यत्रोक्त इत्येतावता पूर्तेः किं प्रशब्देनेत्यत उक्तौ प्रकर्षसूचकत्वान्न तदानर्थक्यमित्यभिप्रेत्य कोऽसावुक्तेः प्रकर्षो

यत्सूचकत्वं प्रशब्दस्य स्यादित्यतस्तदर्थकथनपूर्वकं तत्सूचितमुक्तौ विशेषमपि दर्शयति **प्रकर्षेणेत्यादि** । इतिवदित्यस्य विवरणमित्यत्र यथेति । ननु पूजाया अनर्थसाधनत्वाभिप्रायमेव पूजाग्रहणमस्तु किं तत्साधनदर्शनानुमापकतया तद्ग्रहणमित्यन्यथासिद्धिकल्पनयेत्यतस्तादृशपूजाया एवानर्थसाधनत्वे यत्र तादृशोक्त्युन्नीतदृष्ट्याऽनर्थस्तत्र तत्साधनपूजाया अभावेनानर्थाभावापत्त्या पूजयोक्त्या वोन्नीतदृष्टेरेवानुगताया अनर्थसाधनत्वसंभवे क्वचित्तादृशी पूजा क्वचिच्च तादृश्युक्तिरेवानर्थसाधनमित्यननुगतयोस्तादृशपूजोक्त्योस्तत्साधनत्वकल्पनाया असंभवेनोन्नीता दृष्टिरेव साधनं न पूजेति युक्तमन्यथासिद्धत्वकल्पनं पूजाग्रहणस्येत्याशयवानाह **पूजैवेति** ।

प० — दृष्टेः प्रकृतत्वादाह **पूजयेति** ॥ **तादृश्यामिति** । दृष्टेरुन्नायिकायामित्यर्थः । प्रोक्तेपीत्यत्र प्रशब्दार्थं प्रकर्षेणेत्यनूद्य तं प्रकर्षं व्यक्तीकुर्वन्नाह **न मयेत्यादिना** । इतिवदित्यनुवादः । इत्यत्र यथा तथैवेति व्याख्या ॥ **विवेकार्थमिति** । पूजातोऽसङ्कीर्णस्य दृष्ट्युन्नायकस्य प्रवचनस्योक्त्यर्थमयं श्लोक इत्यर्थः । तर्हि तथा प्रोक्तिरेव कोपहेतुरस्त्विति न वाच्यम् । आचार्यपित्रादिना शिक्षारूपेणैतादृशवाक्योक्तौ कोपादर्शनेन तथादृष्टेरेव तथात्वादिति भावः ।

या० — 'तत्र तस्येवे'त्यस्य प्रकृतेऽसंभवात् 'तेन तुल्यं क्रिया चेद्वतिरि'त्यस्यापि राजकर्तृकक्रियातौल्याभावेनासंभवात् 'तत्र तस्येवे'त्यस्य लक्षणस्याभियुक्तैः प्रायिकत्वेन व्याख्यातत्वेन प्रथमान्तादयं वतिरित्याशयेनाह **राजा यथा पूज्यत इति** ॥ **विवेकार्थमिति** । पूजाऽसङ्कीर्णस्य दर्शनस्यैव कोपकारणताप्रदर्शनार्थमित्यर्थः । न च तत्रापि तथा प्रोक्तिरेव कोपकरणं न दर्शनमिति वाच्यम् । शुकबालाद्युदीरिततथाविधप्रोक्तावपि कोपाभावात् । अतस्तादृशदर्शनोन्नायकप्रोक्तिरेव कोपकारणतया वाच्या । एवं च लाघवादावश्यकत्वादनुगतत्वाच्च तादृशं दर्शनमेव कोपकारणमिति निश्चीयत इति भावः ।

श्री० — 'उन्नीयत इत्यतः' इत्यभिप्रेत्य ॥ **इत्युक्तेऽपीति** । न केवलं पूजिते सतीत्यर्थः । प्रोक्तमितिवदिति वतिः सप्तम्यर्थे इत्याह **इत्यत्र यथेति** ॥ **विवेकार्थमिति** । स्पष्टत्वार्थमित्यर्थः । **अयं श्लोकः** राज्ञस्त्विति श्लोकः । पूर्वं पूजया दर्शनमुन्नीयत इत्याशयेनैव पूज्यत इत्युक्तं न तु दर्शनं स्पष्टमुक्तम् ; अत्र च प्रोक्त इति वचनात्तस्य च प्रकर्षेण न चोपचारेणोच्यते अपि तु वस्तुत एवेत्युक्त्या दर्शनस्य स्पष्टमवगमात् । वास्तवोक्तेर्ज्ञानाव्यभिचरितत्वात् । पूजा च न ज्ञानाव्यभिचारिणी । उत्कर्षज्ञानाभावेऽपि लोकानुकरणाय लोके पूजाया बहुलमुपलम्भादित्यवगन्तव्यम् ।

**सु०— एवमुद्देशविधानोक्त्या द्वैरूप्यमङ्गीकृत्य फलतः साम्यमुक्तम् । इदानीं तदपि नास्तीत्याह** अभेदेनेति ।

**अनु०—** अभेदेनैतयोर्ध्याने को विशेषो वचस्यपि ॥

**एतयोर्ब्रह्मप्रतीकयोरभेदेन ध्यानेऽङ्गीकृते न केवलमनर्थसाम्यं किन्तु वचस्यपि को विशेषः । वचनद्वयार्थोऽप्यविशिष्ट एवेत्यर्थः । अत्रैव दृष्टान्तमाह** अयमिति ।

अयं राजा त्वमित्युक्ते चण्डालेऽथ नृपेऽपि च ॥

चण्डाल इति तु प्रोक्ते सममेव हि दूषणम् ॥

**व्यक्तिभेदेन दूषणपरिहारः स्यादित्यतोऽयमित्युक्तम् ।** दूषणं **नीचत्वलक्षणम् । द्वयोरभेदेन ध्याने दूषणं संभवत्येव । न चैवम् । प्रतीकस्य हि ब्रह्मत्वं भाव्यते । न तु ब्रह्मणः प्रतीकत्वमित्यत आह** ध्यात इति ।

ध्यातेऽप्येकस्य तद्भावे तद्भावोऽन्यस्य किं न तत् ॥

**तत्तयोर्ब्रह्मप्रतीकयोरेकस्य प्रतीकस्य तद्भावे ब्रह्मभावे ध्याते सत्यन्यस्य ब्रह्मणस्तद्भावः प्रतीकभावः ध्यातो न किम् ।**

**एतदुक्तं भवति । भवेदयं परिहारो यदि प्रतीक(स्य)स्वरूपोपमर्देन तस्य ब्रह्मत्वमुपास्यमिति पक्षः स्यात् । न चैवम् । प्रतीकाभावप्रसङ्गस्य परेणैवोक्तत्वात् । भेदाभेदाभिप्रायेणायं परिहार इत्यपि नास्ति । न हि घटो मृदभिन्नो मृद्घटाद्भिन्नेति भेदाभेदौ किन्नाम परस्परम् । तस्मादनुपमर्दितस्वरूपस्य प्रतीकस्य ब्रह्मत्वे ध्याते ब्रह्मणोऽपि प्रतीकत्वं ध्यातमेवेति युक्तमुक्तमिति ।**

**नन्वस्मिन्नुपासने ब्रह्मणा ज्ञातेऽनर्थः स्यान्न त्वज्ञाते । अतस्तथोपासनं करिष्यत इत्यत आह** न चैवेति ।

न चैव तदविज्ञातं सर्वज्ञब्रह्मणा क्वचित् ॥

तत् **उपासनम् । ब्रह्मणोऽज्ञाने सर्वाध्यक्षं ब्रह्मैव फलं दास्यतीत्यपि रिक्तं वचः स्यात् ।**

**शे०—** पूर्वोत्तरविरोधपरिहारायाह **एवमिति । द्वैरूप्यं** भिन्नार्थत्वम् । स्वं रूपं शब्दस्याशब्दसंज्ञेत्यादाविव रूपशब्दस्याभिधेयपरत्वादिति भावः ॥ **तदिति ।** द्वैरूप्यमित्यर्थः ॥ **व्यक्तिभेदेनेति ।** राजव्यक्तिभेदेनेत्यर्थः । ननु प्रतीकस्य स्वस्वरूपानुपमर्देन ब्रह्मभावध्यानाभ्युपगमे भवेद् ब्रह्मणोऽपि प्रतीकभावस्य ध्यानत्वप्राप्तिः । न चैवमभ्युपगच्छामः । किं नाम प्रतीकस्वरूपोपमर्देन

तस्य ब्रह्मभावध्यानम् । तत्कथं ब्रह्मणः प्रतीकभावस्य ध्यातत्वप्राप्तिः स्यात् । यद्वा कार्यं कारणाभिन्नं कारणं च कार्याद्भिन्नमिति कार्यकारणयोर्व्यवस्थितभेदाभेदाङ्गीकारात्प्रतीकस्य ब्रह्मकार्यतया तदभेदेऽपि कारणस्य ब्रह्मणः प्रतीकाद्भिन्नत्वेन प्रतीकस्य ब्रह्मत्वध्यानेऽपि न ब्रह्मणः प्रतीकतया ध्यातत्वप्राप्तिरित्यतोऽभिप्रायमाह **एतदुक्तं भवतीति** । यद्येवंरूपौ न भेदाभेदौ तर्हि किंरूपौ ताविति पृच्छति **किं नामेति** । परिहरति **परस्परमिति** । भेदाभेदौ द्वावपि कार्यकारणयोः परस्परप्रतियोगिकावेव वर्तेते भेदसाधकस्य खण्डितत्वादेरभेदसाधकस्य सामानाधिकरण्यस्य चोभयत्राविशिष्टत्वादिति भावः ॥ **तस्मादिति** । कार्यकारणयोः परस्परमभेदस्य सत्त्वादित्यर्थः ।

**प० — द्वैरूप्यमिति** । नामादिप्रतीकोद्देशेन ब्रह्मत्वविधानं ब्रह्मोद्देशेन प्रतीकत्वविधानमित्येवमुद्देशविधानोक्त्योर्द्वैरूप्यमित्यर्थः ॥ **व्यक्तिभेदेनेति** । चण्डाले राजान्तरतादात्म्यमन्यस्मिन्देशान्तरे तस्मिन्नेव राज्ञि चण्डालत्वमुक्तं चेदपि पुरःस्थिते राजनि नीचत्वदूषणं न प्राप्नोति । अत एकस्मिन्नेव तद्वचनप्राप्त्यर्थमब्रमित्युक्तिरित्यर्थः । शङ्कते **द्वयोरभेदेनेत्यादि** । भाव्यते चिन्त्यत इत्यर्थः । तदित्यनुवादेन तयोरिति विपरिणामेन निर्देशः । ब्रह्मप्रतीकयोरिति व्याख्या । अभिप्रायस्यास्फुटत्वादाह **एतदुक्तं भवतीति** । ननु ब्रह्मकार्यस्य नामादिप्रतीकस्य ब्रह्मरूपकारणाभेदेऽपि ब्रह्मरूपकारणस्य नामादितो भेदादित्येवं भेदाभेदाभिप्रायेण ब्रह्मणो नीचत्वं न प्राप्नोतीत्यत आह **भेदाभेदेति** । एवंविधं भेदाभेदं निराह **न हीति** । मृदिति भिन्नं पदम् । घटाद्भिन्नेत्यन्वयः ॥ **परस्परमिति** । कार्यस्य कारणात्कारणस्य कार्याद्भिदाभेदावित्यर्थः ॥ **तस्मादिति** । कारणे ब्रह्मणि कार्याभेदस्य सत्त्वादित्यर्थः ।

**या०— व्यक्तिभेदेनेति** । राजव्यक्तिभेदेनेत्यर्थः ॥ **दूषणपरिहार इति** । एकस्यैव राज्ञो नीचतादात्म्यरूपं दूषणं यदत्र वाक्यद्वयेऽभिप्रेतं तद्राजव्यक्तिभेदेन लभ्यत इत्यर्थः । शङ्कते **द्वयोरभेदेनेति** । द्वावुद्दिश्याभेदे ध्यात इत्यर्थः । न चैवमित्यस्यानन्तरं किन्त्विति शेषः ॥ **प्रतीकस्वरूपोपमर्देनेति** । प्रतीकस्वरूपस्यैवाभावे कथं ब्रह्मणि तत्प्रतियोगिकाभेदध्यानं संभवतीति भावः । प्रतीकं हि ब्रह्मणः कार्यम् । कार्यं हि कारणादभिन्नम् । कारणं कार्याद्भिन्नम् । अतः कथं प्रतीके ब्रह्मत्वे ध्याते ब्रह्मणि प्रतीकता ध्याता स्यात् । उक्तरीत्या कार्यस्य प्रतीकस्य कारणादभिन्नत्वेऽपि कारणस्य ब्रह्मणः प्रतीकाद्भिन्नत्वाङ्गीकारादित्याशङ्क्य निराकरोति **भेदाभेदाभिप्रायेणेति** ॥ **परस्परमिति** । भेदाभेदौ द्वावपि कार्यकारणयोः परस्परप्रतियोगिकौ वर्तेते । भेदसाधकस्य खण्डितत्वादेरभेदसाधकस्य सामानाधिकरण्यादेरुभयत्राविशिष्टत्वादित्यर्थः ॥ **तस्मादिति** । अभेदस्योभयगतत्वादित्यर्थः ।

श्री० — **न चैवमिति** । ब्रह्मप्रतीकयोर्द्वयोरप्यभेदेन ध्यानं नाङ्गीक्रियत इत्यर्थः । तदुपपादयति **प्रतीकस्य हीति** । प्रतीकस्य ब्रह्मविकारत्वेन विकारभूतप्रतीकस्वरूपोपमर्देन ब्रह्मत्वं भाव्यत इत्यर्थः ॥ **न तु ब्रह्मण इति** । तस्य प्रतीकविकारत्वाभावेन तत्स्वरूपोपमर्दाभावादित्यर्थः ॥ **उक्तत्वादिति** । प्रतीकाभावप्रसङ्गात् । 'विकारस्वरूपोपमर्देन हि नामादिजातस्ये'त्यादिना ग्रन्थेनेत्यर्थः ॥ **भेदाभेदेति** । कार्यकारणयोर्भेदाभेदावङ्गीकृतौ । तत्रायं विवेकः । कार्यस्य कारणाभेदः कारणस्य कार्याद्भेद इति । तथाच प्रतीकस्य ब्रह्मविकारत्वेन ब्रह्मकार्यत्वात्प्रतीकस्वरूपोपमर्देनाभेदो ब्रह्मणाऽङ्गीक्रियते । कारणस्य ब्रह्मणस्तु प्रतीकाद्भेद एव । तथा च प्रतीकस्वरूपोपमर्देन तस्य ब्रह्मत्वे ध्याते ब्रह्मणि प्रतीकता कथं ध्याता स्यात् । तस्य ततो भिन्नत्वादित्येवं भेदाभेदाभिप्रायेणेत्यर्थः । **अयं परिहार इति** । द्वयोरभेदेन ध्यानदूषणं समं भवत्येव । न चैवं प्रतीकस्य हि ब्रह्मत्वं भाव्यते न तु ब्रह्मणः प्रतीकत्वमित्युक्तः परिहार इत्यर्थः ॥ **परस्परमिति** । कार्ये कारणप्रतियोगिकभेदाभेदौ कारणेऽपि कार्यप्रतियोगिकभेदाभेदाविति परस्परमित्यर्थः । तदुपपादयति **न हीति** । कार्ये कारणाद्भेदकथनस्य प्रयोजनमाह **तस्मादिति** । कारणेन ब्रह्मणा कार्यस्य प्रतीकस्य भेदसद्भावादित्यर्थः । अनुपमर्दितस्वरूपस्य विकारस्येत्यत्रायं हेतुः । भेदसद्भावादेव विकारस्वरूपोपमर्दो नास्तीति ॥ **युक्तमुक्तमिति** । 'ध्याते त्वेकस्य तद्भाव' इत्युक्तं युक्तमित्यर्थः ।

---

सु० — **ननु श्रुतिविहितमाचरता कथं ब्रह्मकोपेनानर्थप्राप्तिरित्याशङ्कां परिहरन्नपव्याख्याननिराकरणमुपसंहरति** तस्मादिति ।

अनु० — तस्मादपेशलं सर्वमन्यस्य ब्रह्मतावचः ॥

**सर्वमिति श्रुतिसूत्रव्याख्यानरूपम् । एतेन सालग्रामादौ विष्ण्वादिप्रतिपत्तिरपि परास्ता वेदितव्या । सूत्रव्याख्यानमुपक्रम्यापव्याख्यानदूषणमसङ्गतमित्यतः स्वोक्तदाढर्यार्थमिति भावेनाह** तस्मादिति ।

तस्माद्यथोक्तमार्गेण ब्रह्मोपास्यं मुमुक्षुभिः ॥ ४ ॥

**परकीयव्याख्यानस्य दूषितत्वात्** । यथोक्तमार्गेण **अस्मदुक्तं सूत्रार्थमनतिक्रम्य वर्तमानेन मार्गेण ॥ ४–१–४ ॥**

शे० — **श्रुतिविहितमिति** । मनो ब्रह्मेत्युपासीतेत्यादिश्रुतिविहितमित्यर्थः ॥ **एतेनेति** । तथा ध्यानस्यानर्थफलकत्वकथनेनेत्यर्थः ॥ ४ । १ । ४ ॥

प०— **श्रुतिविहितमिति** । 'नामब्रह्मेत्युपासीते'त्यादिश्रुतिविहितमित्यर्थः ॥ **एतेनेति** । अन्यस्यान्य(थाध्या)ताध्यानादनर्थकथनेनेत्यर्थः ॥ **परमतदूषणं** ॥ ४ । १ । ४ ॥

या०— **श्रुतिविहितमिति** । मनो ब्रह्मेत्युपासीतेत्यादिश्रुतिविहितमित्यर्थः । इयमाशङ्का मूलगतसर्वपदनिवर्त्या प्रदर्शितेति ज्ञेयम् ॥ ४ । १ । ४ ॥

**श्री०**— इदमेव च ब्रह्मोपासनं यदादित्यादिषु तद्दृष्टिः प्रतिमादिष्विव विष्ण्वादीनामित्युक्तं दूषयति **एतेनेति** । 'प्रतीकसंस्थितत्वेन ध्येयो विष्णुरिति' वचनेनेत्यर्थः ॥ ४ । १ । ४ ॥

॥ इति ब्रह्मदृष्ट्यधिकरणान्यथाव्याख्याननिराकरणम् ॥



## ॥ अथ तदधिगमाधिकरणम् ॥

सु०— ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ ॥ **निवृत्ता साधनचिन्ता । प्रतिबन्धा(का)नां पूर्वोत्तराणामनन्तकर्मणां भावान्न ज्ञानिनो मोक्षः संभवतीत्याशङ्कानिरासाय कर्मनाशाख्यं ज्ञानफलमिदानीं निरूप्यते । तत्र ज्ञानसामर्थ्येनैव कर्मक्षयो भवतीति प्रतीतिं निराकर्तुं सूत्रतात्पर्यमाह** तथेति ।

अनु०— ॐ **तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्** ॐ ॥

तथोपास्याञ्जसा दृष्टं ब्रह्म पापं च भस्मसात् ॥

करोति निखिलं पूर्वं पाश्चात्यस्याप्यसङ्गताम् ॥

करोति

तथा **उक्तप्रकारेण,** अञ्जसा **आदरनैरन्तर्याभ्यां,** उपास्य दृष्टं, **ज्ञानात्** पूर्वं, निखिलं पापं, **चशब्दादनिष्टं पुण्यं च,** पाश्चात्यस्य **पापस्यानिष्टपुण्यस्य** च । **अनेन 'अतोऽन्यदपीत्येकेषामुभयो'रिति सूत्रतात्पर्यमुक्तं भवति ॥**

**शे०** -- ॐ **तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात** ॐ ॥ **साधनचिंतेति** । मोक्षान्तरङ्गतयाऽवश्यंभाविसाधनचिंतेत्यर्थः ॥ **पूर्वोत्तराणामिति** । द्वन्द्वे सर्वनामसंज्ञाया द्वन्द्वे चेति प्रतिषेधादामि सर्वनाम्नः सुडिति न सुडिति ज्ञेयम् । न च द्वन्द्वे चेति समुदायस्य संज्ञानिषेधेऽप्यवयवानामनिषेधात्तदन्तविधिना सर्वनाम्नः परस्यामः सुट् स्यादेवेति वाच्यम । **दक्षिणोत्तरपूर्वाणामिति** भाष्यप्रयोगात्सर्वनाम्नो विहितस्याम एव सुड्विधानस्थित्याऽत्र च समासादेव तस्योत्पन्नत्वेनावयवादविहिततया तदप्रसङ्गात् । पापं भस्मसात्करोतीत्येतावता पूर्तेः पापं चेति चशब्दानर्थक्यमाशङ्क्य ज्ञानिकृतज्ञानात्पूर्वभाव्यनिष्टपुण्यसमुच्चयार्थत्वान्न तदिति भावेन चशब्दं तदर्थतया व्याचष्टे **चशब्दादिति** । सूत्रेऽघमात्रस्य श्रवणादसूत्रितानिष्टपुण्यसमुच्चयार्थत्वे उत्सूत्रार्थत्वादभाष्यत्वमित्याशङ्क्यात्र सूत्रे तस्याश्रुतत्वेऽपि सूत्रान्तरे श्रुतत्वात्तदर्थतयाऽस्य नाभाष्यत्वप्रसङ्ग इत्यभिप्रेत्यैतद्व्याख्येयसूत्रोदाहरणपूर्वकं तद्व्याख्यानतां भाष्यस्योपदर्शयति **अनेनेति** । अनिष्टपुण्यसमुच्चायकचशब्देनेत्यर्थः ।

प० -- ॐ **तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ** ॐ । पूर्वोत्तरमूलयोः सङ्गतिं वक्तुमाह **निवृत्तेति** । निरूप्यते सूत्रकृतेति योज्यम् ॥ **तत्रेति** । तदधिगमसूत्रे । तथेत्यनुवादः, उक्तेत्यादि व्याख्या । विष्णुः स्वामीति, प्रतीकेषु ब्रह्मास्तीति, विष्णुर्ब्रह्म गुणपूर्ण इतिचोक्तप्रकारेणेत्यर्थः ॥

**अनेनेति** । अनिष्टपुण्यनाशकथनेनेत्यर्थः । अतः मुक्तावनुभवकारणादन्यत्पुण्यं नश्यति अप्रारब्धमनभीष्टं चेति तत्रार्थकथनादिति भावः ।

सु० — ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ॥ **इदं सूत्रं केचिद्ब्रह्मविद एवाघस्येव पुण्यस्या(संश्ले)शेषो विनाशो भवति, शरीरपाते प्रत्यासन्ने सतीति** व्याचक्षते; **तदसत्** । **अतोऽन्यदपीत्यस्य पुनरुक्तताप्रसङ्गात्** । व्याख्यानव्याख्येयभावस्य चानन्यगतित्वात । **पूर्वसूत्र एवाघपदस्थाने कर्मपदप्रक्षेपेणोपपत्तौ सूत्रान्तरारम्भवैयर्थ्यात्** । **अस्माकं** त्वग्निहोत्रादीत्यादि**सूत्राणि पुण्येऽपि विभागसूचनार्थानि** । **ज्ञानोत्तरं पुण्यार्जनस्याभावादश्लेषशब्दो विनाशार्थो** व्याख्यातव्यः । **तथा च प्रकृतपरित्यागोऽप्रकृतस्वीकारश्चेत्याशयवानन्यथा सूत्रतात्पर्यमाह** तद्द्विषश्चेति ।

**अनु० — ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ॥**

तद्द्विषश्चैवं पुण्यनाशोऽप्यसङ्गता ॥

**ब्रह्मद्विषश्च** । एवं ज्ञानिवत् । **द्वेषपरिपूर्तेः पूर्वस्य पुण्यस्य नाशो भवत्युत्तरस्यासङ्गतापि** । **अत्र सूत्रं यदेव विद्ययेति हीति, तत्पुनरुक्तम्** । **एतदर्थस्य तच्छ्रुतेरिति सूत्रेण प्रागुक्तत्वादित्यत आह** यदेवेति ।

यदेव विद्ययेत्यत्र पूर्वोक्ताद्धि विशिष्यते ॥

**अत्रोक्तं प्रमेयमिति शेषः** । **अतो न पुनरुक्तिदोष इति हेरर्थः** । वक्ष्यमाणोऽर्थविभागः **प्रकरणवशात् प्रसिद्ध इति** वा । **कथं विशिष्यत इत्यतः पूर्वसूत्रतात्पर्यं** तावदाह पूर्वमिति ।

पूर्वं स्वर्गादिलब्ध्यर्थं वीर्यवत्त्वेन चोदितम् ॥

कर्म विद्यायुतं

**स्वर्गादीति मोक्षेतरपुरुषार्थग्रहणम्** । **उत्तरसूत्रतात्पर्यमाह** पश्चादिति ।

पश्चान्मोक्षे वीर्यप्रदं त्विति ॥

**पश्चान्निति संबन्धः** । **विद्यायुतं कर्मेति वर्तते** । वीर्यप्रदं **आनन्दातिशयप्रदम्** । **इति चोदितमिति** संबन्धः । **सकलकर्मक्षये तदैव मुक्तिः स्यात्** । **न चैवम्** । **जीवन्मुक्तानामुपलंभादित्याशङ्कापरिहारायोक्तं सूत्रकारेण** अनारब्धकार्ये एव तु पूर्वे तदवधेः **इति** । **तर्हि प्रारब्धकर्मभावात्कथं मोक्ष इत्याशङ्क्य पुनः सूत्रितं** भोगेन त्वितरे क्षपयित्वाथ संपत्स्यत इति । **एतदपि न ब्रह्मविन्मात्रविषयमित्याशयवान् व्याचष्टे** तत इति ।

ॐ **भोगेन त्वितरे क्षपयित्वाथ संपत्स्यते** ॐ ॥
तत्तो भोगेन पुण्यं च क्षपयित्वेतरत्तथा ॥
ब्रह्मद्विट् ब्रह्मदर्शी च तमोमोक्षाववाप्नुतः ॥

**अनारब्धक्षयानन्तरम् । इतरत्पापम् ।**

**शे० — पुनरुक्ततेति ।** अत्र सूत्रे ज्ञानिकृतपुण्यनाशस्यैव त्वया प्रतिपाद्यत्वाङ्गीकारात्तस्य चेतरस्याप्येवमित्यत्रैव प्रतिपादनादिति भावः । व्याख्यानव्याख्येयभावाभ्युपगमात्सूत्रद्वयस्य न तत्प्रसङ्ग इत्यत आह **व्याख्यानेति ।** अत्र चास्मदुक्तरीत्या गत्यन्तरस्यैव सत्त्वान्न तदाश्रयणं युक्तमिति भावः । नन्वेवं भवत्पक्षेऽप्याद्यसूत्र एवाघपदस्थाने कर्मपदप्रक्षेपेणैवोपपत्तौ सूत्रान्तरारंभवैयर्थ्यम-विशिष्टमित्यतोऽस्मन्मते इतरस्येत्यस्य ज्ञानिकृतपुण्यविषयत्वाभावस्याग्रे स्फुटत्वान्न तद्वैयर्थ्यं । नाप्य-ग्निहोत्रादीत्यादिसूत्राणां । तेषां ज्ञानिपुण्यविषयतायामपि तदीयपुण्ये विभागपूर्वकं विनियोगप्रति-पादकत्वात् । तथाहि । अग्निहोत्रादीत्यत्र यज्ज्ञानिसंबन्ध्यग्निहोत्रादिपुण्यमकाम्यं तस्य ज्ञानात्पूर्व-कालीनस्य ज्ञानार्थतायास्तदुत्तरस्य च मुक्तावानन्दातिशयानुभवार्थताया, अतोऽन्यदपीत्यत्राकाम्यपुण्या-दन्यस्य ज्ञानात्पूर्वकालीनस्याप्रारब्धानभीष्टभेदभिन्नस्य काम्यस्याघवदेव विनाशिताया, प्रारब्धस्य चेष्ट-स्यानाशिताया, उत्तरकालीनस्यापीष्टानिष्टरूपस्य संश्लेषाश्लेषयोर्यदेवेत्यत्र ज्ञानिकृताकाम्यकर्मणो महानन्द-फलतया मोक्षानुप्रवेशस्य समर्थितत्वेन पुण्ये विभागस्य सद्भावादाद्यसूत्र एवाघपदस्थाने कर्मपदप्रक्षेपेण ज्ञानात्पूर्वोत्तरयोरप्रारब्धानभीष्टकाम्यपुण्ययोर्ग्रहीतुमशक्यत्वान्नोत्तरसूत्रवैयर्थ्यप्रसङ्ग इति भावेनाह **अस्माकं त्विति ॥ किंचेतरस्यापीति ।** सूत्रस्य त्वदुक्तार्थत्वेऽश्लेषशब्दस्य पूर्वसूत्रगताश्लेषशब्दार्थतया प्रकृत-संबन्धाभावरूपार्थपरित्यागस्तत्राप्रकृतविनाशार्थतया विकल्पनं च प्रसज्यत इत्याह **ज्ञानोत्तरमिति ।** नन्वत्राप्यश्लेषशब्दस्य संबन्धाभावार्थतया विनाशार्थत्वाभावान्न प्रकृतत्यागादीत्यत उक्तं **ज्ञानोत्तरमिति प्रागिति ।** तृतीयस्य चतुर्थ इति शेषः ॥ **हेरर्थ इति ।** अव्ययानामनेकार्थत्वादिति भावः ॥ **वक्ष्यमाण इति ।** पूर्वं स्वर्गादीत्यादिनेति शेषः ॥ **इति चेति ।** हेरर्थ इति संबन्धः । स्वर्गादीत्यादि-पदसंग्राह्यतावच्छेदकमाह **मोक्षेतरेति ।**

**स० — अतोन्यदित्यस्येति ।** इतरस्याप्येवमित्यनेनेति शेषः । ननु व्याख्यानव्याख्येय-भावाभ्युपगमान्न पौनरुक्त्यमित्यत आह **व्याख्यानेति ।** प्रकृते चास्मदुक्तप्रकारेण गत्यन्तरमेवास्तीति न व्याख्यानव्याख्येयभाव इति भावः ॥ **पूर्वसूत्र एवेति ।** तदधिगमेति पूर्वसूत्र एवेत्यर्थः । नन्वेवं

भवतामपि तदधिगमेति पूर्वसूत्र एवाघपदस्थाने कर्मपदप्रक्षेपेणैवोपपत्तावतोन्यदपीत्येकेषामुभयोरित्यादि-सूत्रवैयर्थ्यमित्यत आह **अस्माकं त्विति** । किञ्चितरस्यापीति सूत्रस्य त्वदुक्तार्थे प्रकृतत्यागादि प्रसज्येत । तदधिगमेतिसूत्रेऽश्लेषशब्दस्य संबन्धाभावार्थत्वेन तस्यैव प्रकृतत्वेन विनाशार्थत्वे संबन्धाभावरूपप्रकृत-परित्यागात् तदर्थत्वेनाप्रकृतविनाशार्थत्वाभ्युपगमात् । न चाश्लेषशब्दो न विनाशपर इति नोक्त दोष इति वाच्यम् । ज्ञानोत्तरं पुण्यार्जनभावेन संबन्धाभावार्थकत्वानुपपत्त्या विनाशार्थकत्वस्यैवाङ्गीकार्यत्वात् । तथा च प्रकृतपरित्यागाप्रकृतस्वीकारौ स्यातामित्यत आह **ज्ञानोत्तरमिति** ॥ **वक्ष्यमाण इति** ।

॥ इति चतुर्थे प्रथमः ॥

प० — **पुनरुक्ततेति** । तत्रापि ब्रह्मविदः पुण्यनाशोक्तेरिति भावः । भवत्पक्षेऽपि कथं न पुनरुक्तिराद्यसूत्रेणेत्यत आह **अस्माकं त्विति ॥ सूत्राणीति** । 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्', 'अतोऽन्यदपीत्येकेषामुभयोः', 'भोगेन त्वितरे क्षपयित्वाऽथ संपत्स्यते' इति त्रीणि सूत्राणि यथाक्रमं काम्याकाम्यप्रारब्धरूपपुण्यविभागसूचनार्थानीत्यर्थः । यदेव विद्ययेति सूत्रं त्वग्नि-होत्रादिति सूत्रार्थोपोद्बलकमिति भावः । परोक्तसूत्रार्थे दोषान्तरमाह **ज्ञानोत्तरमिति ॥ प्रकृतेति** । पूर्वत्राश्लेषशब्दितासंबन्धरूपार्थस्यैव प्रकृतत्वादिति भावः ॥ **सूत्रेणेति** । पुरुषार्थाधिकरणस्थसूत्रेणेत्यर्थः । दोषोक्तेः स्थानप्रदर्शनाय अत्रेत्यनुवादः ॥ **वक्ष्यमाण इति** । उत्तरश्लोक इति भावः । पूर्वत्रान्वि-तत्वात्पुनरनुसन्धानायाह **वर्तत इति ॥ अनारब्धेति** । अनारब्धकार्ये एव पूर्वपुण्यपापे विनश्यतः । 'तस्य तावदेव चिरं यावन्न विमोक्षे अथ संपत्स्यत इति तदवधेरिति' सूत्रार्थः ।

या० — **पुनरुक्तताप्रसङ्गादिति** । अत्रापि पुण्यनाशे एव प्रतिपाद्येते इति त्वयाऽङ्गीकारा-दिति भावः । नन्वेवं भवत्पक्षेऽपि तदधिगम इति पूर्वसूत्र एवाघपादस्थाने कर्मपदप्रक्षेपेणोपपत्तावग्रिम-सूत्राणां वैयर्थ्यमित्यत आह **अस्माकं त्विति** । अस्माकमितरस्याप्येवमसंश्लेषः पाते त्विति सूत्रं तावन्न व्यर्थम् । तस्य ज्ञानिकृतपुण्यविषयत्वाभावस्याग्रे स्फुटत्वात् । नाप्यग्निहोत्रादीत्यादिसूत्राणां तेषां ज्ञानिविषयत्वेऽपि तदीयपुण्ये विभागपूर्वकं, विनियोगप्रतिपादकत्वात् । तथा हि । अग्निहोत्रादीत्यत्र यज्ज्ञानिसंबन्धि अग्निहोत्रादिपुण्यमकाम्यं तज्ज्ञानात्पूर्वकालीनं ज्ञानायैव, ज्ञानोत्तरं तु मोक्ष आनन्दाति-शयानुभवायेत्युच्यते । अतोऽन्यदपीत्यत्र तु अकाम्यपुण्यादन्यत् काम्यं पुण्यं ज्ञानात्पूर्वकालीनम-प्रारब्धमनभीष्टं च तदघवदेव विनश्यति । ज्ञानोत्तरं तु काम्यं पुण्यमनिष्टं चैतस्याश्लेष इत्युच्यते । यदेव विद्ययेत्यत्रापि ज्ञानोत्तरस्याकाम्यपुण्यस्य मोक्षानुप्रवेशः श्रुत्युदाहरणेन समर्थ्यते । ततश्चैवास्मन्मते पुण्ये विभागस्याभिप्रेतत्वेनाघपदस्थाने कर्मपदप्रक्षेपेण ज्ञानात्पूर्वोत्तरप्रारब्धानभीष्टकाम्यपुण्ययोरेव

ग्रहीतुमशक्यत्वान्नोत्तरसूत्राणां वैयर्थ्यमित्यर्थः । किं चेतरस्याप्येवमिति सूत्रस्य त्वदुक्तार्थकत्वेऽत्र-त्याश्लेषशब्दस्य पूर्वसूत्रगताश्लेषशब्दार्थतया प्रकृतसंबन्धाभावरूपार्थपरित्यागस्तत्राप्रकृतस्य विनाशस्यार्थतया कल्पनं च प्रसज्यत इत्याह **ज्ञानोत्तरमित्यादिना** । नन्वत्राप्यश्लेषशब्दो न विनाशार्थो व्याख्यायते किं त्वसंबन्धार्थ एव, तथा च नोक्तदोष इत्यत उक्तम् **ज्ञानोत्तरमिति** ॥ **हेरर्थ इति** । अव्यया-नामनेकार्थत्वादिति भावः ।

**श्री०— ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ॥ कर्मपदप्रक्षेपेणेति** । उत्तरपूर्वकर्मणो-रिति कर्मपदप्रक्षेपेणेत्यर्थः । एवं ज्ञानिवदिति व्याख्याने दृष्टं ब्रह्म पापं भस्मसात्करोतीतिवत् तद्-द्विषोऽपि दृष्टं ब्रह्म पुण्यं भस्मसात्करोतीत्यपरोक्षज्ञानातिदेशोऽपि प्रतीयते । न चैतद्युक्तम् । निर्गुणस्य ब्रह्मणः साक्षात्कर्तुमशक्यत्वात् । 'न मे गुरोरप्यपरोक्षतां गतमि'ति मध्वविजयपञ्चमसर्गवचनात् । अतस्तेषां द्वेषपरिपूर्तिरेव पुण्यनाशसाधनमित्येवमपरोक्षज्ञानस्थाने द्वेषपरिपूर्तिरेव वक्तव्येत्याशयेनाह **द्वेषपरिपूर्ताविति** । 'पश्यतो ब्रह्म निर्द्वंद्वं हीनं च ब्रह्म पश्यतः' इत्यत्रापि हीनब्रह्मदर्शनं नाम तद्द्वेषपरिपूर्तिरेव नान्यत् । 'न मे गुरोरप्यपरोक्षतां गतम् । अतो निर्गुणोपासने मा स्म बिश्वसीरि'त्य-च्युतप्रेक्षं प्रति तद्गुरुणोक्तत्वादित्यवगन्तव्यमिति संप्रदायः । आदिपदेन मोक्षग्रहणनिरासायाह **मोक्षेतरेति** । इष्टापत्तिं परिहरति **न चैवमिति** । कुत इत्यत आह **जीवन्मुक्तानामिति** । शुकादी-नामित्यर्थः ॥ ४ । १ । ८ ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽधृतसुधावाक्यार्थविवरणे

॥ चतुर्थाध्यायस्य प्रथमः पादः ॥

**सु०— प्रारब्धकर्मणामनन्तत्वे भोगेन क्षयो न शक्य(ते) इत्याशङ्कामागमवाक्येन परिहरति** ब्रह्मणामिति ।

**अनु०—** ब्रह्माणां शतकालात्तु पूर्वमारब्धसङ्क्षयः ॥

ब्रह्मणस्त्वेव तावत्त्वं पञ्चाशद्ब्रह्मणस्तथा ॥

रुद्रस्य विंशदेवस्यादिंद्रस्यार्कादिके दश ॥ अन्येषां ब्रह्ममात्रस्य त्वंत आरब्धसंक्षयः ॥

ब्रह्मणैव सहातश्च परं नारायणं व्रजेत् ॥ इति सत्तत्ववचनं स्वयं भगवतोदितम् ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने

चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

ब्रह्मणां शतमिति षष्ठ्या अलुक् । तस्य कालो ब्रह्मणां शतकालः तस्मात्तत्समाप्तेः पूर्वमेव सर्वेषां ज्ञानिनामारब्धसंक्षयो भवति । अस्यैव विवरणं ब्रह्मणस्तु तावत्त्वमेव ब्रह्मकल्पानां शतेनैव कर्मक्षयवत्त्वम् । ब्रह्मण इति जातावेकवचनम् । पञ्चाशतां ब्रह्मणां कालात्पूर्वं रुद्रस्यारब्धसङ्क्षयः । तथाशब्दः समुच्चये । विंशतिपर्यायो विंशच्छब्दः । ब्रह्मणां विंशतिरेव तदवच्छिन्न एवेंद्रस्य प्रारब्धकर्मसंक्षयकालः । अर्कादिके अर्कादीनां दश ब्रह्मणस्तदवच्छिन्नः कर्मक्षयकालः । ब्रह्ममात्रस्य एकस्यैव ब्रह्मणः । अतः परं प्रारब्धकर्मसङ्क्षयानन्तरमपि ब्रह्मणा सहैव नारायणं व्रजेत् ॥ ४ । १ । ८ ॥

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ।
कृतायां टीकायां विषमपदवाक्यार्थविवृतौ चतुर्थेऽध्यायेऽस्मिन्प्रथमचरणः पर्यवसितः ॥
इति श्रीमन्न्यायसुधायां चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ । १ ॥

शे० – ॐ भोगेन त्वितरे क्षपयित्वाऽथसंपत्स्यते ॐ ॥ ब्रह्मणामित्येतस्य भिन्नपदत्वेन तत्सापेक्षशतशब्दस्यासमर्थत्वान्न कालशब्देन समासः संभवति । देवदत्तस्य गुरुकुलमित्यादाविव नित्यसापेक्षत्वात् समासकल्पनं तु अगतिका गतिरित्यतो ब्रह्मणां शतकालादित्येतावत् एकपदतामाश्रित्य समासं समर्थयते ॥ **ब्रह्मणां शतमितीति** । तर्हि सुपो धातुप्रातिपदिकयोरिति सुलोपप्रसक्त्या ब्रह्मशतकालादिति भवितव्यम् । ब्रह्मणां शतकालादिति तु कथमित्यत आह **षष्ठ्या अलुगिति** । षष्ठ्या आक्रोश इति स्मरणादिति भावः । सर्वज्ञानिप्रारब्धकर्मभोगस्य ब्रह्मशतकालाभिव्याप्तिप्रतीतिं परिहरति **तस्मादिति** । अनेन मूले कालशब्दस्तत्समाप्तिपर इत्युक्तं भवति । पौनरुक्त्यमाशङ्क्य परिहरति **अस्यैवेति** । ब्रह्मणो हिरण्यगर्भत्वयोग्यजीवस्येत्यर्थः ॥ **ब्रह्मकल्पानां शतेनैवेति** । ब्रह्मशतकालस्यादौ कियतः कालस्य ब्रह्मापरोक्षज्ञानसाधनार्थं गतत्वात् । अपरोक्षज्ञानकालमारभ्य किंचिन्न्यूनब्रह्मकल्पशतेनैवेत्यर्थः । व्यक्त्यैक्यस्य बाधितत्वेन तन्निबन्धनैकवचनानुपपत्तेर्जातिरूपार्थैक्यविवक्षानिबन्धनं पञ्चाशद्ब्रह्मण इत्यत्र ब्रह्मण इत्येकवचनमित्याह **ब्रह्मण इतीति** । बुद्ध्या विविक्तस्य कालादित्यस्य पूर्वमित्यस्यारब्धसंक्षय इत्यस्य चानुवृत्तिमभिप्रेत्य पञ्चाशद्ब्रह्मणस्तथा रुद्रस्येत्येतद्व्याचष्टे ॥ **पञ्चाशतामिति** । यद्यपि रुद्रपदयोग्यस्य जीवस्य किंचिन्न्यूनपञ्चाशद्ब्रह्मकालमनुवर्तत इति सामान्यमेव सन्न्यायरत्नावल्यामुक्तं तथाऽपि तत्रैव चत्वारिंशद्भिः पदं शैवं च जन्मभिरिति भागवततात्पर्यस्थवाक्यानुरोधेन किंचिन्न्यूनशब्दस्तदर्थो व्याख्येयः । ततश्चैकचत्वारिंशद्ब्रह्मकल्पसमाप्तेः पूर्वमित्यर्थः । रुद्रस्य शेषत्वानन्तरमेव मुक्तेः क्लृप्तत्वादिति ध्येयम् । ननु पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतमिति सूत्रे

द्वयोर्दशतोर्विंशतिरित्येव निपातनात् विंशतिरित्येव वक्तव्यं विंशदिति तु कथमित्यतः प्रमाणबलाद्विंशति-शब्दपर्यायविंशच्छब्दस्यापि सिद्धत्वान्नानुपपत्तिरित्याह **विंशतीति** । ब्रह्मणां विंशतेर्ब्रह्मधर्मत्वेन न कालत्वमित्यत आह **तदवच्छिन्न इति** । किञ्चिन्न्यूने तद्विंशतीत्यवच्छिन्न एवेत्यर्थः । इन्द्रादिपद-योग्यानामप्येवं कालतो ह्रासक्रमो भवतीति सन्न्यायरत्नावल्यामुक्तत्वादिति ध्येयम् । ब्रह्मण इत्यादि-षष्ठी । प्राय(:)पठितत्वाद्योग्यत्वाच्चार्कादिक इति सप्तमी षष्ठ्यर्थे । एकवचनं तु जात्यभिप्रायमित्यभिप्रेत्य व्याख्याति **अर्कादीनामिति** । अनुवृत्तस्य षष्ठ्येकवचनान्तस्य ब्रह्मशब्दस्य दशेति प्रथमाबहुवचनेन सामानाधिकरण्यानुपपत्तेस्तन्निर्वाहाय विभक्तिविपरिणामं जात्येकवचनतां चाभिप्रेत्य विशेष्यमाह **दशब्रह्मण इति** । दशब्रह्मणामेवारब्धसंक्षयकालत्वानुपपत्तेराह **तदवच्छिन्न इति** । दशब्रह्मण इति क्वचित्पाठः । तत्र दशशब्दो दशकपरः । ब्रह्मण इत्यनुवर्तते । तच्च जात्यभिप्रायम् । ततश्च ब्रह्मणां दशकमर्कादीनामारब्धसंक्षय इति योजना । तदवच्छिन्नेत्यादि पूर्ववदेव योज्यमित्यवगन्तव्यम् ॥ **एकस्यैव ब्रह्मण इति** । एकब्रह्मावच्छिन्नः काल इत्यर्थः । ब्रह्मणैवेत्येवकारस्य वैयर्थ्यादिप्रसङ्गेन यथाश्रुत-संबन्धानुपपत्तेर्भिन्नक्रमतया तं योजयति **सहैवेति** ॥ ४ । १ । ८ ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यचरणानां निजशिष्यस्य केशवस्य कृतौ गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ

---

शेषवाक्यार्थचन्द्रिकायां चतुर्थाध्यायस्य प्रथमः पादः ॥

प०— ब्रह्मणामित्यस्य भिन्नपदत्वे शतपदेन समस्तेनान्वयसामर्थ्याभावादाह **ब्रह्मणां शत-मितीति** । 'पंक्तिविंशतित्रिंशच्चत्वारिंशदि'त्यादिपञ्चमाद्यपादीयसूत्रे विंशतिपदस्यैवोक्तेर्विंशदिति कथमित्यत आह **विंशतिपर्याय इति** । प्रामाणिकप्रयोगात् सोऽपि शब्दोऽभ्युपेय इति भावः । ब्रह्मणां विंशतिरेवेन्द्रस्येत्यादेरन्वयमाह **ब्रह्मणां विंशतिरेवेत्यादि** । जातावेकवचनमित्युक्तेर्ब्रह्मणामित्युक्तिः । व्यवहितत्वादन्वयमाह **ब्रह्मणा सह नारायणं व्रजेदिति** ॥ ४ । १ । ८ ॥

इति श्रीमन्न्यायसुधापरिमळे

॥ चतुर्थाध्यायस्य प्रथमः पादः ॥

या०— ननु ब्रह्मणामित्यस्य पृथक्पदत्वात्कथं तस्य कालपदसमस्तेन शतपदेनान्वय इत्यत आह **ब्रह्मणांशतमिति ॥ षष्ठ्या इति** । तथा चैकपद्यमैकस्वर्यं च समासप्रयोजनमित्युक्तत्वात् तदेकमेव पदमिति भावः । 'तथैव चत्वारिंशद्भिः पदं शैवं च जन्मभिरि'ति भागवततात्पर्यविरोध-

परिहाराय बुद्ध्या विविक्तस्य कालादित्यस्य पूर्वमित्यस्य चानुवृत्तिमभिप्रेत्य पञ्चाशद्ब्रह्मण इत्येतद्व्याचष्टे **पञ्चशतां ब्रह्मणामिति** ॥ **पूर्वमिति** एकचत्वारिंशद्ब्रह्मकल्पानन्तरमित्यर्थः । रुद्रस्य शेषत्वानन्तरमेव मुक्तेः क्लृप्तत्वात् । ननु पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतमित्यत्र द्वयोर्दशतोर्विंशतिरिति शब्दस्य निपातनात्कथं विंशदिति प्रयोग इत्यत आह **विंशतिपर्याय इति** । विंशतिशब्दपर्यायो विंशदित्यपि शब्दः प्रमाणबलादङ्गीकार्य इति भावः । ननु ब्रह्मणां विंशतेर्ब्रह्मधर्मभूतायाः कथं कालत्वमित्यत आह **तदवच्छिन्न इति** । एवमग्रेऽपि । एकस्यैव ब्रह्मण इत्यत्रापि तदवच्छिन्नकालस्येत्यर्थः ॥ ४ । १ । ८ ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्येण यदुपतिना कृतायां सुधाटिप्पण्यां
॥ चतुर्थाध्यायस्य प्रथमः पादः ॥

**॥ इति चतुर्थाध्यायस्य प्रथमः पादः ॥**



श्रीमत्-जयतीर्थ(टीकाकृत्पादाचार्य)विरचिता

# श्रीमन्-न्यायसुधा

—षट्टिप्पणीसमेता—

## अथ चतुर्थाध्यायस्य द्वितीयः पादः

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

सु०— द्वितीयपादप्रतिपाद्यप्रदर्शनपरं भाष्यं 'देवानां मोक्ष उत्क्रान्तिश्चास्मिन्पाद उच्यत' इति । तत्र देवानामित्येतद्यदि मोक्षोत्क्रान्तिभ्यां संबध्यते तदा देवेभ्योऽन्येषां सशरीराणामेवावस्थानमिति प्राप्नोति । अन्यत्र वा तच्छरीरपरित्यागप्रकारश्चिन्तनीयः । अचिन्तने वा कारणं वाच्यम् । यदि च मोक्षेणैव संबध्यते तदा देवानां मोक्ष इतरेषामुत्क्रान्तिश्चेत्युक्तं भवति । मोक्षश्च प्रकरणवशाद्देहादिति गम्यते । तथा च प्रथमपादे कर्मनाशाख्यं फलमस्मिन्पादे उच्यत इति यथा सामान्येनोक्तं तथाऽत्राप्युत्क्रान्तिरस्मित्पाद उच्यत इति वक्तव्यम् । किमनेन विभागे(नेत्य)न कृतं स्यादित्यत आह देवानां चेति ।

अनु०— देवानां च मनुष्याणामेतावत्सममेव हि ॥
उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः ॥

यदतीतपादे चिन्तितं कर्मनाशाख्यं फलमेतावद्देवानां मनुष्याणां च सममेव । कर्मनाशाभावे तत्फलानुवृत्तेरावश्यकत्वात् । मनुष्यशब्दो देवव्यतिरिक्तान् लक्षयति । तस्मात् सामान्येन पूर्वपादप्रतिपाद्यमुक्तम् । एतत्पादप्रतिपाद्या देहादुत्क्रान्तिस्तृतीयपादप्रतिपाद्योऽर्चिरादिमार्गश्च देवानां न प्रायेण भविष्यतोऽतो विभागेनोक्तिर्युक्तेति । अनेन 'मार्गो गम्यं चास्मिन्पाद उच्यत' इत्येतद्भाष्यमपि देवव्यतिरिक्तानां मार्गः सर्वेषां गम्यं चेति व्याख्येयमिति सूचितं भवति । स्फुटं चैतद्वक्ष्यति । 'उत्क्रान्तिमार्गश्च विमुक्तगम्यमि'ति ।

शे०— यद्विद्याधीशगुरोः शुश्रूषान्या न रोचते तस्मात् ॥
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥

ननु देवानां च मनुष्याणामिति भाष्यमनर्थकम् । न च देवानां मोक्ष उत्क्रान्तिश्चास्मिन्पाद-उच्यत इति विभागेन पादप्रतिपाद्योक्तिसमर्थनार्थत्वान्नानर्थक्यमिति वाच्यम् । तथा पादप्रतिपाद्योक्ति

बिना तदलाभेन तत्समर्थनार्थत्वायोगात्कथञ्चिल्लाभेऽपि विभागेनोक्तौ बाधकाप्रतिभासेन तत्समर्थनानर्थ-क्याच्चेत्यतोऽत्रानुक्तावपि भाष्ये तथोक्त्या तल्लाभात् तत्रानुपपत्तिसद्भावाच्च न तत्समर्थनपरोत्तरभाष्यवैयर्थ्य-मित्याशयेन पादप्रतिपाद्यप्रदर्शनपरभाष्योदाहरणपूर्वकं तत्रानुपपत्तिशङ्कामुत्थापयति **द्वितीयपाद इति** ॥ **अन्यत्रेति** । पादान्तर इत्यर्थः । अन्यथा नियमाधिकरणविरोधादिति भावः ॥ **कारणं वाच्यमिति** । शास्त्रान्तरसिद्धत्वासंभावनादिराहित्यरूपमित्यर्थः । अन्यथाऽवश्यवक्तव्यानुक्तिप्रसङ्गादिति भावः ॥ **प्रकरणवशादिति** । कर्ममोक्षानन्तरभावितया वक्ष्यमाणमार्गादिरूपतत्प्राप्तिपूर्वभावितया देहमोक्षस्यैवा-वशिष्टतया प्रकरणप्राप्तत्वादित्यर्थः । किमत आह **तथा चेति** ॥ **उत्क्रान्तिरस्मिन्पाद उच्यत इति वक्तव्यमिति** । चरमदेहनाशोऽत्र प्रतिपाद्यत इत्येव वक्तव्यम् । उत्क्रान्तिर्मोक्ष इति विभागेनोक्ति-र्व्यर्थेति भावः ॥ **मनुष्यशब्द इति** । यद्यपि देवशब्दस्यैव लक्षकत्वमाश्रयितुं शक्यम् । प्रथमपठितदेव-पदत्यागेन चरमश्रुतमनुष्यशब्दे तत्स्वीकारायोगात् । तथाऽपि एकप्रकरणपठितत्वादुत्तरवाक्यगतदेवशब्द-स्यापि तथा सति तल्लक्षकत्वप्रसङ्गेन तन्निरासार्थं मनुष्यपदस्यैव लक्षणाश्रयणमिति भावः । ननु 'देवानां च मनुष्याणामेतावत्सममेव हि । उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः'इत्येतावतैव भाष्यखण्डेन देवानामित्यादिविभागेन पादप्रतिपाद्योक्तिसमर्थनसिद्धेरितरांशवैयर्थ्यमित्यतस्तावतैतत्पादप्रतिपाद्यार्थ-विभागोक्तिपरभाष्यसमर्थनसिद्धावपि तृतीयपादप्रतिपाद्यार्थविभागोक्तिपरभाष्यसमर्थनासिद्धेस्तत्समर्थनार्थ-त्वान्न तदंशस्यापि वैयर्थ्यमिति भावेन तदुदाहरणपूर्वकमनेन सूचितं तद्व्याख्यानप्रकारं दर्शयति **अनेनेति** । मार्ग इत्याद्यंशान्तरेणेत्यर्थः ॥

**स०— अन्यत्र चेति** । । पदान्तरे इत्यर्थः ।

**प०** — स्वयं कृतापि तद्व्याख्ये'त्यादिस्वप्रतिज्ञानुसारेण भाष्यं स्पष्टीकरोतीत्याशयेन मूलमवता-रयितुं स्पष्टीकृतौ काऽनुपपत्तिरित्यतो भाष्यमनूद्य तत्रानुपपत्तिं दर्शयति **द्वितीयेति** ॥ **अन्यत्र वेति** । पादान्तरे ॥ **प्रकरणेति** । देहत्यागोक्तिप्रकरणवशादित्यर्थः ॥ **देहादिति** । तथाच मोक्षोऽप्युत्क्रान्ति-रूप एव प्राप्त इति भावः । ऋषिगन्धर्वादिग्रहणायाह **मनुष्यशब्द इति** ॥ **न प्रायेणेति** । प्रायपदव्यावर्त्यस्याग्रे 'जातानां मानुषे लोके' इत्यादिना मूल एव व्यक्तत्वादिहानुक्तिः ॥ **एतद्भाष्य-मपीति** । उत्तरपादभाष्यमपीत्यर्थः ॥ **(स्फुटंचै) स्पष्टं चैतदिति** । इति व्याख्येयमिति स्वोक्तं प्रमेयं उत्तरपादे 'ये शरीरादुत्क्रान्ताः मानुषास्तेषां भगवल्लोकागमनार्थो मार्गः ये कर्मणो देहाच्च विमुक्ताः तेषां सर्वेषामपि गम्यमिदमुभयमेतत्पादोदितमि'ति वक्ष्यतीत्यर्थः ।

**या०— देहादिति ॥ गम्यत इति** । तथा च मोक्षोऽप्युत्क्रान्तिरूप एवेति प्राप्तमिति भावः । ततः किमित्यत आह **तथा च प्रथमपाद इति** । प्रायेणेत्यस्य व्यावर्त्यं 'जातानां मानुषे लोक' इत्यत्राचार्यः स्वयमेव दर्शयिष्यति । 'उत्क्रान्तिमार्गश्च विमुक्तगम्यमि'त्यस्य ये शरीरादुत्क्रान्ता मानुषास्तेषां मार्गो भगवल्लोकगमनार्थः । ये कर्मणो देहाच्च विमुक्तास्तेषां सर्वेषामपि गम्यमित्यर्थः ।

**श्री०— तथाऽत्राप्युत्क्रान्तिरिति** । तथा च देहान्मोक्षस्याप्युत्क्रान्तिरूपत्वेन सर्वसाधारण्यादिति भावः ॥ **विभागेनेति** । इतरेषामुत्क्रान्तिरितिविभागेनेत्यर्थः ।

**सु०— भवत्विदं प्रतिपाद्यं एत(त्पादप्रति)त्प्रतिपादने का सङ्गतिरित्यतः प्रसङ्गात्पादचतुष्टयस्यापि सङ्गतिमाह** कर्मेति ।

**अनु०—** कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोगश्चतुष्टयम् ॥
फलं मोक्ष इति प्रो(क्तं)क्तः क्रमात्पादेषु चोदि(तं)तः ॥

**तथाशब्दः समुच्चये । उत्क्रान्तिशब्देन देवतदितरसाधारणश्चरमदेहनाशो लक्ष्यते; मार्गशब्देन ब्रह्मप्राप्तिश्च । इतिशब्दो भोग इत्यतः परो (परं) योज्यः । क्वचित्पाठः प्रोक्तमित्युदितमिति च तत्र यथास्थान एव इतिशब्दः । आद्ये मोक्षानुवादेन फलचतुष्टयात्मकत्वं विधेयम् । द्वितीये तु विपर्ययेण । क्रमादित्येतदावर्तनीयम् ।**

**ततश्चायमर्थः । फलं खल्वत्राध्याये निरूपणीयम् । फलं च मोक्षः । स च कर्मक्षयादिचतुष्टयात्मकः । आत्यन्तिकानिष्टनिवृत्तीष्टप्राप्त्योरत्रैवान्तर्भावात् । कर्मक्षयादयश्च क्रमाद्भवन्ति । ज्ञानोदयानन्तरमेव हि कर्मक्षयः क्षीणकर्मणश्चोत्क्रान्तिः उत्क्रान्तस्य च स्वयोग्यमार्गेण गतस्य ब्रह्मप्राप्तिः ततो भोग इति । तस्मादेतेषु पादेषु क्रमादेवोदिता इत्यन्तर्भावलक्षणा चानन्तर्यलक्षणा च सङ्गतिरिति ।**

**शे० — पादचतुष्टयस्यापीति** । एकीकृत्य पादचतुष्टयस्यापि सङ्गतिप्रतिपादने निमित्तं तु लाघवायेति पूर्वपादोक्तमवधेयम् । ननूत्क्रान्तिवद्द्वितीयपादप्रतिपाद्यतयाऽभिमतस्य देवानां मोक्षस्यावश्यवक्तव्यस्यापरिग्रहान्न्यूनत्वं तत्परिग्रहे चार्थद्वयप्रतिपादकतयाऽर्थैकत्वाभावान्नैकपादत्वम् । एवं मार्गवद्गम्यस्यापि तृतीयपादप्रतिपाद्यतया तदनुक्तेर्न्यूनत्वं तस्याप्यत्र परिग्रहे चार्थैक्याभावान्नैकपादत्वमित्यत आह **उत्क्रान्तिशब्देनेति ॥ देवतदितरसाधारण इति** । नाशो लक्ष्यत इत्यनुवर्तते । इतिशब्दस्य यथाश्रुतसंबन्धे फलचतुष्टयानुवादेन मोक्षत्वविधानापत्त्या फलचतुष्टयं मोक्ष इति प्रोक्तमिति नपुंसकस्य वक्तव्यतया प्रोक्त इति पुलिङ्गानुपपत्तेर्नेत्थं वचनव्यक्तिः। किन्तु मोक्षः फलचतुष्टयं प्रोक्त इति मोक्षानुवादेन फलचतुष्टयत्वविधानमेवेति न पुलिङ्गानुपपत्तिरित्याशयेनेतिशब्दस्य भिन्नक्रमतयाऽन्वयमाह **इतिशब्द**

**इति** । **यथास्थान एवेति** । यद्यप्यत्र भोग इत्यतः परं इतिशब्दस्यावश्यकत्वान्न यथाश्रुतस्थान एवेतिशब्दो योजयितुं शक्यत इति तथोक्तिरयुक्ता तथापि यथा पूर्वत्र यथाश्रुतसंबन्धपरित्यागेन भिन्नक्रमतयैव तत्संबन्धो न तथाऽत्र किन्तु यथाश्रुतसंबन्धोऽप्यस्तीत्यभिप्रायेणैवमुक्तम् । तदर्थं च यत्रेतिशब्दः श्रूयते तत्रास्त्येवेति योज्यम् । इतिशब्दस्य भिन्नक्रमत्वं यथाश्रुतान्वयाश्रयणेन सूचितं पाठभेदेनोद्दिश्य विधानभेदमुपदर्शयति **आद्य इति** । पुल्लिङ्गपाठ इत्यर्थः ॥ **द्वितीय इति** । नपुंसकपाठ इत्यर्थः ॥ **विपर्ययेणेति** । फलचतुष्टयानुवादेन मोक्षात्मत्वं विधेयमिति विपर्ययेणेत्यर्थः ॥ **आवर्तनीयमिति** । अन्यथा कर्मक्षयादीनां क्रमात्पादेषूदितत्वप्रयोजकीभूतायाः कर्मक्षयादीनां क्रमभाविताया अलाभेन क्रमात्पादेषूदितत्वानुपपत्तिप्रसङ्गादितिभावः ।

ननु च भाष्यकारीयं फलस्य मोक्षत्वकथनमनर्थकम् । न च तस्यैतदध्यायप्रतिपाद्यत्वसिद्ध्यर्थं तदिति वाच्यम् । फलस्यैतदध्यायार्थत्वासिद्ध्या तदानर्थक्यात । तत्सिद्धावपि फलस्यान्यादृशस्यापि संभवान्न तस्य मोक्षतायां नियामकमस्ति । अस्तु वा फलस्य मोक्षत्वमपि । तथाऽपि न तच्चातुर्विध्यं भाष्यकृदुक्तं युक्तम् । आत्यन्तिकानिष्टनिवृत्तीष्टप्राप्त्योरपि पृथक् सत्वात् । अस्तु वा तच्चातुर्विध्यमपि । तथाऽपि न भाष्यकृदुक्तस्तत्क्रमो युज्यते । उक्तक्रमे नियामकाभावात् । भावेऽपि क्रमादुदितत्वे न नियामकं पश्यामः । अस्तु वा क्रमेणोदितत्वमपि । तथाऽपि सङ्गत्यनुक्तिस्तदवस्थैवेत्येताः शङ्काः क्रमेण परिहरति **ततश्चेति** ॥ **फलमिति** । जिज्ञास्यतया प्रथमसूत्रप्रतिज्ञातेष्वर्थेषु फलस्यैवावशिष्टत्वादिति भावः ॥ **फलं चेति** । धर्मार्थकामानामनित्यतया फलत्वानुपपत्तेर्मोक्षस्य च नित्यतया तदुपपत्तिरिति भावः ॥ **अन्तर्भावादिति** । ततश्च नोक्तचातुर्विध्यानुपपत्तिरिति भावः । क्रममेवोपदर्शयति **ज्ञानोदयानन्तरमेवेत्यादिना** ॥ **स्वयोग्यमार्गेणेति** । मनुष्याणामर्चिरादिरूपेण देवानां स्वस्वष्टप्रवेशार्थं तदभिसर्पणरूपेणेत्यर्थः ॥ **अन्तर्भावलक्षणेति** । कर्मनाशादिफलचतुष्टयस्योक्त्या तत्प्रतिपादकानां चतुर्णां पादानां फलाध्यायेऽन्तर्भावलक्षणा सङ्गतिरुक्तेत्यर्थः । पूर्वपूर्वपादस्योत्तरोत्तरपादार्थं प्रत्युपजीव्यत्वादुत्तरोत्तरपादानां पूर्वपूर्वपादेन सहानन्तर्यलक्षणा सङ्गतिरपि क्रमादुदितत्वोक्त्या भवतीत्याह **आनन्तर्येति** ।

**स०** — ननूत्क्रान्तेरनेकप्रकारत्वेन तत्प्रतिपादकस्यास्य पादस्यैकार्थप्रतिपादकत्वाभावादैवयं न स्यादित्यत आह **उत्क्रान्तिशब्देनेति** ॥ **अन्तर्भावलक्षणेत्यादि** । कर्मक्षयादिचतुष्टयस्य फलत्वोक्त्यान्तर्भावलक्षणा क्रमादुदितत्वोक्त्या चानन्तर्यलक्षणा च सङ्गतिरुक्ता भवतीत्यर्थः ।

प० — समस्तपादप्रतिपाद्यलाभायाह **उत्क्रान्तिशब्देनेति** ॥ **मार्गशब्देनेति** । प्राप्तिश्चेति लक्ष्यत इत्यन्वेति । **विपर्ययेणेति** । चतुष्टयफलानुवादेन मोक्षत्वं विधेयमित्यर्थः । **आवर्तनीयमिति** । कर्मक्षयादयः क्रमात् भवन्त्यतः पादेषु क्रमादुदिता इत्यावर्तिता इत्यन्वयः इत्यग्रे व्यक्तम् ॥ **स्वयोग्यमार्गेणेति** । अर्चिरादिमार्गेणेत्यर्थः । उत्क्रान्तिपदोपलक्षितदेवानां च स्वोत्तमदेवप्रवेशमार्गेणेत्यर्थः । शेषगरुडमार्गेणेति वाऽर्थः ॥ **अन्तर्भावेति** । फलाध्याये चतुर्विधफलबोधकपादानामन्तर्भावात्क्रमिकार्थबोधकानां पूर्वपूर्वपादानन्तर्याच्चेति भावः । अयमर्थ इत्यनेनेतिशब्दान्वयः ।

या० — ननु द्वितीयपादप्रतिपाद्यतयाऽभिमतस्य देवानां मोक्षस्यात्रापरिग्रहान्न्यूनता । तत्परिग्रहे चार्थभेदात्कथं द्वितीयपादैक्यमित्यत आह **उत्क्रान्तिशब्देनेति** । ननु तृतीयपादप्रतिपाद्यतयाऽभिमताया ब्रह्मप्राप्तेरत्रापरिग्रहान्न्यूनता स्यादित्यत आह **मार्गशब्देनेति** ॥ **ब्रह्मप्राप्तेरिति** । देवतदितरसाधारणीति शेषः । तथा च तृतीयपादे सर्वसाधारणब्रह्मप्राप्तिरेव प्राधान्येन प्रतिपाद्यतया विवक्षिता । मार्गस्तु तादर्थ्येन केषांञ्चिदेवातो न पादैक्यानुपपत्तिरिति भावः । यथास्थाने इतिशब्दो विवक्षित एवेत्यर्थः । तथा चात्र भोग इत्यतः परोऽपि योज्य इति भावः ॥ **स्वयोग्यमार्गेणेति** । मनुष्याणामर्चिरादिरूपेण देवानां स्वस्रष्टृप्रवेशरूपेणेत्यर्थः ॥ **अन्तर्भावलक्षणेत्यादि** । उक्तरीत्या फलभूतमोक्षविशेषरूपकर्मक्षयादिप्रतिपादकानां पादानां फलाध्यायेनान्तर्भावलक्षणा सङ्गतिः पूर्वपूर्वपादार्थस्योत्तरोत्तरपादार्थं प्रत्युपजीव्यत्वाच्च स्वस्वपूर्वपूर्वपादावधिकानन्तर्यलक्षणा सङ्गतिरुत्तरोत्तरपादस्येत्यर्थः ।

श्री० — **आद्य इति** ॥ प्रोक्त उदित इति पुल्लिङ्गान्तपाठ इत्यर्थः ॥ **मोक्षानुवादेनेति** । मोक्षः कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोग इति चतुष्टयं फलं तदात्मक इति यावत् । (प्रोक्तः) स च क्रमात्पादेषूदित इति योज्यमित्यर्थः ॥ **द्वितीये त्विति** । प्रोक्तमुदितमिति नपुंसकान्तपाठ इत्यर्थः ॥ **विपर्ययेणेति** । फलचतुष्टयानुवादेन मोक्षत्वं विधेयमित्यर्थः । ततश्च कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोग इति फलचतुष्टयं मोक्ष इति प्रोक्तं तच्च क्रमात्पादेषूदितमिति योज्यमिति भावः । नन्वनिष्टनिवृत्तीष्टप्राप्तिरूपफलस्यैवैतदध्यायप्रतिपाद्यत्वात्कर्मक्षयादीनां चातथात्वात्कथं तेषामध्यायान्तर्भाव इत्यत आह **आत्यन्तिकेति** । कर्मक्षयोत्क्रान्त्योरनिष्टनिवृत्तिरूपत्वान्मार्गभोगयोरिष्टप्राप्तिरूपत्वाद्युक्तस्तेषां फलाध्यायान्तर्भाव इति भावः ।

सु० — **देवानां मार्गो नास्तीत्युक्तम्** । **तर्त्कि यत्र स्थितास्तत्रैव मुक्ता भवन्तीत्यत आह** स्रष्टृष्वेवेति ।

अनु० — स्रष्टृष्वेव च सृज्यानां प्रवेशो ब्रह्मणो लये ॥
देवानां मार्ग उद्दिष्टो

**क्वचिदस्रष्टृष्वपीति चशब्दः, तथा च न्यायविवरणे । ब्रह्मणो लये प्रत्यासन्ने सति प्रवेशार्थं तदभिसर्पणमेव मार्गगमनमित्यर्थः । तर्हि देवानां मार्गो नास्तीत्युक्तस्य को विषय इत्यत आह नेति ।**

नार्चिरादिः

**देवानां देहादुत्क्रमो नास्तीत्युक्तम् । तत्कुतः । सदेहानामेवावस्थानप्रसक्तेरित्यत आह न चेति ।**

न चोत्क्रमः ॥

**अत एवेत्युपस्कर्तव्यम् । चशब्देन सदेहानामवस्थानं समुच्चिनोति ।**

**एतदेव विवृणोति** स्रष्टु(स्त्विति)रिति ।

स्रष्टुस्तु ग्रासभूतस्य देहस्तत्र लयं व्रजेत् ॥
यतः, सृज्यस्य देवस्य नैवोत्क्रान्तिस्ततो भवेत् ॥

**देहश्चेतनाधिष्ठित एव । तत्र स्रष्टरि । उत्क्रान्तिः शरीरात् । चेतननिष्क्रमणात्प्रागेव सृज्यानां देहः स्रष्टृषु विलीयत यत इत्यर्थः । स्रष्टृषु लये निमित्तं स्रष्टुर्ग्रासभूतस्येति । देहस्त्विति संबन्धः ।**

**शे० — मार्गो नास्तीत्युक्तमिति ।** मार्गाभावे च तत्र गमनमपि नास्तीत्युक्तप्रायमिति भावः । ननु तत्तत्सृज्यानां तत्तत्स्रष्टृष्वेव प्रवेश इति तु नियमो न युक्तः । तथा सत्यग्निप्रभृतीनां वरुणादौ लयाभावप्रसङ्गादित्यतोऽत्र चशब्देनास्रष्टृष्वपि लयप्रतिपादनेनोक्तनियमासिद्धेर्नानुपपत्तिरित्याशयेन चशब्दार्थमाह **क्वचिदिति** । तथा सति नियामकाभावादतिप्रसङ्ग इत्याशङ्क्याह **तथा चेति** । तत्समानानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेरित्ति । अस्रष्टृष्वपि लयोऽभिहित इत्यर्थः । न्यायविवरणे वरुणाद्युत्पन्नावादिदेवतासमानानां वरुणाद्यनुत्पन्नानामग्निप्रभृतीनां स्वसमानादिदेवतालयस्थाने वरुणे युक्त्या लयसमर्थनान्नातिप्रसङ्ग इति भावः । ननु ब्रह्मणो लयात्पूर्वमेव देवतानामपि लयावश्यंभावात्कथं प्रवेशोक्तिस्तदेत्यत आह **प्रत्यासन्न इति** । ननु मूले मार्गगमनस्यानुक्तत्वात्कथमनेनैवोक्तशङ्कापरिहार इत्यतोऽत्र प्रवेशशब्दस्य लक्षणया तदर्थाभिसर्पणपरत्वेन प्रवेशमात्रपरत्वाभावात् तस्यैव च मार्गगमनत्वसंभवादुक्तशङ्कापरिहारकत्वमस्येत्याह **प्रवेशार्थमिति ॥ तर्हीति ।** तदभिसर्पणस्य मार्गगमनत्व इत्यर्थः । असति मार्गे तद्गमनानुपपत्त्या तत एव मार्गस्य सिद्धेरिति

भावः ॥ **अत एवेति** । सृज्यदेहानां स्रष्टृप्रवेशेन लयादेवेत्यर्थः ॥**चशब्देनेति** । अनेनात एवोत्क्रमः चशब्दात्सदेहानामवस्थानं च नेति चशब्दो भिन्नक्रमतया योजितो भवति ॥ **एतदेवेति** । अत एवेत्युक्तमेवेत्यर्थः । मूले स्रष्टृस्त्विति तुशब्दो विशेषार्थ इति भावेन तं दर्शयति **चेतनाधिष्ठित एवेति** । अन्यथा तत्रत्यचेतनस्योत्क्रान्तिप्रसङ्गेन तन्निषेधानुपपत्तेरिति भावः । अनेनात एवेत्येतत्कथं विवृतं भवतीत्यतस्तं प्रकारमाह **चेतनेति** । मूले स्रष्टृस्तु ग्रासभूतस्येत्यस्यानर्थक्यमाशङ्क्य सृज्यदेहस्य स्रष्टृषु लये किं निमित्तमित्याशङ्कानिरासाय तन्निमित्तोपदर्शनार्थत्वान्न तदिति भावेन तत्परतया तद्योजयति **स्रष्टृष्विति** । अनेन तत्र ग्रासत्वं तत्र लये निमित्तम् । यो यद्ग्रासः स तत्र लीयत इति व्याप्तेरित्युक्तं भवति ।

स०— ननु यदि तत्तदुत्पन्नानां तत्तत्स्रष्टृषु लयः । तर्हि वरुणाद्यनुत्पन्नाश्विप्रभृतीनां वरुणादौ लयो न स्यादित्यत आह **क्वचिदस्रष्टृष्वपीति चशब्द इति** । तत्र नियामकमाह **तथाचोक्तं न्यायविवरण इति** । 'तत्समानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेरि'ति न्यायविवरणे उक्तमित्यर्थः । न्यायविवरणस्य चायमर्थः । वरुणाद्युत्पन्नाबादिदेवतासमानां वरुणाद्यनुत्पन्नानामश्विप्रभृतीनां स्वसमानाबादिदेवतालयस्थाने वरुणादावेव लयोपपत्तेरिति । **एतदेवेति** । अत एवेत्येतदेवेत्यर्थः ।

---

प०— **न्यायविवरण इति** । 'भूतेषु तच्छ्रुतेरि'ति सूत्रन्यायविवरणे तत्तद्भूतोद्भवत्वात्तत्तद्देवानामित्युक्त्वा तत्समानानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेरित्युक्तेरस्रष्टृष्वपि प्रवेशोऽभिमत इति भावः, यथाऽश्विप्रभृतीनां वरुणाद्यजातत्वेपि स्वसमानाऽबादिदेवतालयस्थाने वरुणादौ लय इति ध्येयम् । उक्तं हि भाष्ये । 'वरुणेऽश्विनावग्नावग्नयः तथा ऋभवः पृथिव्यां वरुण आपोऽग्नय' इत्यादि । ननु ब्रह्मलयात्पूर्वमेव देवानां लयात्कथं स्रष्टृषु प्रवेशोक्तिः ब्रह्मणो लय इत्युच्यत इत्यत आह **प्रत्यासन्न इति** । ननु कथं प्रवेशो मार्ग उद्दिष्ट इत्यत आह **प्रवेशार्थमित्यादि** ॥ **अत एवेतीति** । स्रष्टृषु देहलयादेवेत्यर्थः । जीवे उत्क्रान्ते देहमात्रस्य तत्र लय इति भ्रमनिरासायाह **चेतनाधिष्ठित एवेति** । तत्रेत्यनुवादः, स्रष्टरीति व्याख्या । तत इत्यस्योपपत्तये यत इत्यस्यान्वयमाह **चेतनेत्यादि** ॥ इति **संबन्ध इति** । तेन चेतनाधिष्ठितत्वरूपविशेषलाभ इति भावः ।

या०— **तथा च न्यायविवरण इति** । 'तत्समानां च विशेषवचनाभावे स्वसमानदेवतालयस्थान एव लयोपपत्तिरिति न्यायविवरणेऽस्रष्टृष्वपि प्रवेशोऽभिहित इत्यर्थः । यथाऽश्विप्रभृतीनां वरुणाद्यनुत्पन्नत्वेऽपि स्वसमानाबादिदेवतालयस्थान एव वरुणादौ लय इति भावः । ननु ब्रह्मणो लये देवानामपि लयात्कथमेतदित्यत आह **प्रत्यासन्न इति** ॥ **मार्गो नास्तीत्युक्तमिति** । मार्गाभावे तत्र

गमनं नास्तीत्यप्युक्तप्रायमिति भावः। ननु मूले मार्गगमनस्यानुक्तत्वात्कथमुक्तशङ्कापरिहार इत्यत आह **प्रवेशार्थमिति**। तथा च मूले प्रवेशशब्देन तदर्थकमभिसर्पणं, मार्गशब्देन च तद्गमनं लक्षणीयमिति भावः॥ **अत एवेति**। स्रष्टृप्रवेशेन लयादेवेत्यर्थः॥ **चेतनाधिष्ठित एवेति**। तत्र चेतनस्योत्क्रमणप्राप्तिरिति भावः। एतच्च विशेषार्थकतुशब्देन लब्धमिति ज्ञातव्यम्। अत एव देहस्त्विति संबन्ध इति वक्ष्यति। ग्रासभूतस्येत्यनेन यो यद्ग्रासभूतः स तस्मिन् लीयत इति व्याप्तेर्ग्रासत्वं निमित्तमुक्तमिति ज्ञातव्यम्।

**सु० — देवनामर्चिरादिमार्गो नास्तीत्युक्तं तत्कुत इत्यतो यत्पुरा मार्गान्तरमुक्तं तत एवैतत्सिद्धमित्याशयवांस्तदनुवादेन युक्त्यन्तरमाह** लयाच्चेति।

**अनु०** — लयाच्चैवार्चिरादीनां लोकानामपि सर्वशः॥
कथं मार्गो भवेत्तेषां विशतामुत्तरं स्वतः॥

**देवतामुक्तेः प्रागेवेत्यर्थः। अर्चिरादीनां लोकानामिति व्यधिकरणे षष्ठ्यौ।** सर्वेषामपि भवेत् **अर्चिरादिरिति शेषः। स्वत(कं) उत्तरं विशतामित्युक्तानुवादः। ननु प्रायेणेत्युक्तत्वात्कदाचिद्देवानामुत्क्रान्तिमार्गावङ्गीकार्यौ। तत्रोक्तयुक्तिविरोध इत्यत आह** जातानामिति।

जातानां मानुषे लोके देवानां तु कदाचन॥
उत्क्रान्तिमार्गौ भवतो न तदा मुक्तिरिष्यते॥

**यद्यपि भवतस्तथाऽपि न तदा मुक्तिरिष्यते किन्तु ब्रह्मणा सहैव। अतो नोक्तयुक्तिविरोधः। एतदुक्तं भवति। उत्क्रान्तिमार्गसामान्यमपेक्ष्यैव प्रायेणेत्युक्तम्। न तु मुक्तिकालीनावुत्क्रान्तिमार्गौ। तस्य च व्यावर्त्यावमोक्षकालीनौ। युक्तिस्तु मुक्तिविषयेति न विरोध इति।**

**शे० — मार्गांतरमिति**। स्रष्टृप्रवेशरूपमित्यर्थः। अर्चिरादयो ये लोकास्तेषामिति समानाधिकरणा षष्ठीति भ्रमनिरासायाह **अर्चिरादीनामिति**। लोकानामपीत्यपिशब्दस्य वैयर्थ्यादिप्रसङ्गेन यथाश्रुतसंबन्धानुपपत्तेर्भिन्नक्रमतया तं योजयति **सर्वेषामपीति**। स्रष्टृप्रवेशरूपमार्गसद्भावात्कथमित्याक्षेपानुपपत्तिमाशङ्क्य न तदाक्षेपोऽत्राभिमतः किंनामार्चिरादिरूपस्यैवेति नानुपपत्तिरिति भावेनापेक्षितं शेषमाह **अर्चिरादिरिति शेष इति**। ननु मुक्तिकालीनावुत्क्रान्तिमार्गौ कदाचिद्देवानां विद्येते न वा। आद्ये उक्तयुक्तिविरोधः। द्वितीये प्रायेणेत्यस्य वैयर्थ्यमित्यत आह **एतदुक्तं भवतीति**।

स० — **मार्गान्तरमिति** । सृज्याना स्रष्टृषु प्रवेशरूपम् । **उक्तयुक्तीति** । 'लयाच्चैवा-र्चिरादीनामि'त्युक्तयुक्तिविरोध इत्यर्थः । ननु प्रायेणेत्यस्य किं प्रयोजनमित्यतः 'उत्क्रान्तिमार्गौ देवानां न भविष्यत' इत्युक्तेर्मोक्षकालीनावमोक्षकालीनौ वा सर्वथादेवानामुत्क्रान्तिमार्गौ न स्त इति प्राप्तम् । तत्र प्रायेणेत्युक्तेऽमोक्षकालीनावुत्क्रान्तिमार्गौ प्रायेण न भविष्यतः कदाचित्तु भविष्यत इत्यर्थो लभ्यत इति भावेनाह **तस्य चेति** । प्रायेणेत्यस्यार्थः ।

प० — **मार्गान्तरमिति** । स्रष्टरि प्रवेशार्थं तदभिसर्पणरूपमित्यर्थः । सर्वेश इत्यस्यापि पदान्वयेनार्थः **सर्वेषामपीति** । भवेदित्यनुवादेन तत्र शेषमाह **अर्चिरादिरिति शेष इति** । अर्थोन्-रुक्त्यायाह **इत्युक्तानुवाद इति** ॥ **इत्युक्तत्वादिति** । आद्यश्लोके उक्तत्वादित्यर्थः ॥ **उक्तयुक्तीति** । स्रष्टृष्विति श्लोके लयाच्चैवेतिश्लोके चोक्तयुक्तीत्यर्थः । ननु न तदा मुक्तिरित्यनेन न चोद्यपरिहारः । प्रायःपदव्यावर्त्यसत्त्वे प्रागुक्तयुक्तिविरोधः, तदसत्त्वे तत्पदवैयर्थ्यमित्यतः कालभेदेन समाधिमाह **एतदुक्तमिति** ॥ **सामान्यमिति** । मोक्षामोक्षकालीनत्वविशेषमनादाय मोक्षामोक्षकालीनसाधारण्यम-पेक्ष्येत्यर्थः ।

या० — **मार्गान्तरमिति** । स्रष्टृप्रवेशरूपमित्यर्थः ॥ **तत एवैतत्सिद्धमिति** । 'विशतामुत्तरं स्वत' इत्यनुवादेन देवतामुक्तेः प्रागेवेत्यस्य सूचितत्वादिति भावः । ननु मोक्षकालीनोत्क्रान्तिमार्गौ कदाचिद्देवानां विद्येते न वा । आद्ये उक्तयुक्तिविरोधः । द्वितीये प्राय इत्यस्य वैयर्थ्यमित्यत आह **एतदुक्तं भवतीत्यादि** ।

श्री० — अर्चिरादीनां लोकानामिति सामानाधिकरण्यभ्रमं निवारयति **व्यधिकरण इति** । अर्चिरादीनां लयाल्लोकानां महरादीनां च सप्तानां लयादित्यर्थः । अर्चिरादयोऽन्तरिक्षलोकान्तर्गता एवेत्याशयः । सर्वेश इत्यस्यार्थः **सर्वेषामिति** ॥ **उक्तयुक्तीति** । लयाच्चैवार्चिरादीनामित्युक्त-युक्तीत्यर्थः ॥ **प्रायेणेत्युक्तमित्यादि** । उत्क्रान्तिमार्गौ देवानां न भविष्यत इत्येतत्प्रायः कदाचि-दुत्क्रान्तिमार्गौ भवत इति सामान्यमेव नेत्यस्य व्यावर्त्यं न तु मोक्षकालीनोत्क्रान्तिमार्गौ व्यावर्त्य-कथनपरप्रायःशब्दार्थौ । देवानां मोक्षसमये उत्क्रान्तिमार्गौ न भवतः कदाचिन्मोक्षसमयेऽप्युत्क्रान्ति-मार्गौ भवत इति व्यावर्त्यकथनपरप्रायःशब्दार्थो न भवतीत्यर्थः ॥ **तस्य चेति** । देवानामुत्क्रान्ति-मार्गौ न भविष्यत इत्यस्य व्यावृत्तिकथनपरप्रायःशब्दार्थभूतौ न भविष्यत इत्यस्य व्यावर्त्यावित्यर्थः । तथाच देवानां मोक्षसमये उत्क्रान्तिमार्गौ न भविष्यत इत्येतत्प्रायः । कोऽर्थः । कदाचिदमोक्षसमये स्त इति ।

**सु०— किं देवानामेव ब्रह्मणा सह मुक्तिः । अन्येषामपीति ब्रूमः । तर्हि 'भेजे खगेन्द्रध्वजपादमूलमि'त्यादिविरोध इत्यत आह** अन्येषामपीति ।

**अनु०**— अन्येषामपि साक्षात्तु मुक्तिः प्राप्यापि तं हरिम् ॥
सहैव ब्रह्मणा भूयादिति शास्त्रस्य निर्णयः ॥

साक्षान्मुक्तिः **लिङ्गशरीरभङ्गलक्षणा । प्राप्यावस्थितानामपीति योज्यम्** । तमिति **वैकुण्ठादिस्थम् । छन्दस्युभयथेति अनाशीर्विषयस्यापि लिङ आर्धधातुकत्वाद्भूयादिति साधु । इतीश्वराशीरिति वा । अस्मिन्पक्षे साध्यमादौ पृथग्वाच्यं तस्य निमित्तं ज्ञापकं चानेनोच्यत इति ।**

**शे०**— ननु समानकर्तृकयोः पूर्वकाल इति समानकर्तृकत्व एव क्त्वाप्रत्ययविधानात् । प्रकृते च हरिप्राप्तिं प्रति पुरुषाणां, भवनक्रियां प्रति च मुक्तेः कर्तृत्वात्क्रियाद्वयस्य समानकर्तृकत्वाभावेन क्त्वाप्रत्ययस्याप्रसक्त्या कथं तदादेशः प्राप्येति ल्यप् स्यादित्यतोऽवस्थितिरूपक्रियान्तराध्याहारस्यात्राभिप्रेतत्वेन प्राप्त्यवस्थितिरूपक्रियाद्वयस्यैव कर्तृत्वेन क्त्वाप्रत्ययप्रसक्त्या न तदादेशस्य ल्यपोऽनुपपत्तिरित्याशयेन क्रियान्तरमध्याहरति **प्राप्यावस्थितानामपीति** । ननु भवतेर्लिङि तस्य लिङाशिषीत्याशीर्विषय एव लिङ आर्धधातुकसंज्ञाविधानेन प्रकृते चानाशीर्विषयतया आर्धधातुकसंज्ञाया अप्रसङ्गेन तिङ्शित् सार्वधातुकमिति सार्वधातुकसंज्ञायां कर्तरि शबिति कर्त्रर्थकसार्वधातुकनिमित्तकशपि सार्वधातुकार्धधातुकयोरिति गुणे अवादेशे च सति, यासुट् परस्मैपदेषूदात्तो ङिच्चेति लिङ्निमित्तयासुटि सुट्तिथोरिति तकारनिमित्ते सुटि च सार्वधातुकलिङः लिङः सलोपोऽनन्त्यस्येति सकारद्वयस्यापि लोपे इतश्चेति तिप इकारलोपेन तकारमात्रावशेषे अतो येय इति या इत्यस्य इयादेशे लोपो व्योर्वलीति यलोपे आद्गुण इति गुणे च सति भवेदिति भवितव्ये भूयादिति कथमित्यतश्छन्दस्युभयथेत्यनाशीर्विषयस्यापि लिङ आर्धधातुकसंज्ञाविधानेन तिप आर्धधातुकसंज्ञोपपत्त्या सार्वधातुकसंज्ञाया अप्रसङ्गेन तन्निमित्तकशपोऽप्राप्त्या यासुट् परस्मैपदेष्विति यासुटि लिङो ङित्वे च तस्मिन्परत क्ङिति चेति निषेधेन सार्वधातुकार्धधातुकयोरिति गुणाप्राप्त्या स्कोः संयोगाद्योरिति सलोपे इकारलोपे च सति भूयादित्यस्याप्युपपन्नत्वात् न दोष इत्याशयेनाह **छन्दस्युभयथेति** । यद्यपि छन्दसि विषये सार्वधातुकासार्वधातुकं चेत्युभयथापि भवतीत्येतावत्सूत्राल्लभ्यते न त्वनाशीर्विषयस्यापि आर्धधातुकत्वमिति नैतद्बलेन तत्सिद्धिः । तथाऽप्येतत्सूत्रव्याख्यानावसरे सर्वमपि प्रकरणमपेक्ष्यैव तदुच्यते व्यत्ययो बहुलमित्यस्यैवायं प्रपञ्च इति वृत्तिकृतोक्तत्वात् । एतत्सिद्धयभिप्रायेणास्यात्रोपन्यास इत्यवधेयम् । अस्मिन्पक्षे छान्दसत्वमाश्रयणीयं भवतीत्यपरितोषात्पक्षान्तरमाह **इतीश्वराशीरिति वेति** । नन्वेवं साध्यानुक्तिप्रसङ्गेन तत्किमित्याकाङ्क्षाऽनुपरमेण साकाङ्क्षत्वाद्वाक्याभासत्वं स्यादित्यत आह **अस्मिन्पक्ष इति** । ईश्वराशीरिति

पक्ष इत्यर्थः । सर्वेषामपि ब्रह्मणा सहैव मुक्तिर्भवतीति साध्यं पृथगेव श्लोकाद्बहिरेव वाच्यमित्यर्थः ॥ **तस्येति** । तस्य साध्यस्य, किं कारणमिति जिज्ञासायामीश्वराशीर्लक्षणं तद्भूयादित्यनेन, किं ज्ञापकमित्याकाङ्क्षायां शास्त्रलक्षणं ज्ञापकं च शास्त्रस्य निर्णय इत्यनेनोच्यत इत्यर्थः ।

स० — ननु प्राप्येतिक्त्वाप्रत्ययोऽनुपपन्नः समानकर्तृकयोः पूर्वकाल इति समानकर्तृकत्व एव क्त्वाप्रत्ययविधानात् । प्रकृते च हरिप्राप्तिं प्रति पुरुषाणां कर्तृत्वात् भवनक्रियां प्रति च मुक्तेः कर्तृत्वात्क्रियाद्वयस्य समानकर्तृकत्वाभावेन क्त्वाप्रत्ययानुपपत्तिरित्यत आह **प्राप्यावस्थितानामपीति** । तथा चोभयत्रापि पुरुषाणामेव कर्तृत्वेन न दोष इति भावः । ननु सर्वेषामपि ब्रह्मणा सहैव मुक्तिर्भवतीति वस्तुस्थितिरेव वक्तव्या भूयादित्याशीः कथनमयुक्तम् । न च भूयादित्यपि नाशीः । किं नाम वस्तुस्थितिरेवेति वाच्यम् । अनाशीर्विषयत्वे भूयादितिरूपनिष्पत्तेरेवासंभवात् । तथाहि । लिङाशिषीत्याशीर्विषय एव लिङस्तिङ आर्धधातुकसंज्ञाविधानेन प्रकृते आशीर्विषयत्वाभावे आर्धधातुकसंज्ञाऽभावापत्त्या तिङ्शित्सार्वधातुकमित्यनेन लिङः सार्वधातुकसंज्ञाविधानेन कर्तरि शबिति शपि सार्वधातुकार्धधातुकयोरिति गुणे लिङः सलोपोनन्त्यस्येति सलोपे इतश्चेतीकारलोपे अतोय इति य इत्यस्य इयादेशे लोपे व्योर्वलीति यलोपे आद्गुण इति गुणे च भवेदित्येव स्यात् न तु भूयादितीत्यतोऽनाशीर्विषयत्वेपि भूयादिति रूपनिष्पत्तिः संभवतीत्याह **छन्दस्युभयथेतीति**। आशीर्विषयेऽनाशीर्विषये वा । लिङस्तिङार्धधातुकसंज्ञा स्यादिति सूत्रार्थः । तथा चानाशीर्विषयस्यापि लिङस्तिङ आर्धधातुकसंज्ञाविधानेन प्रकृतेऽप्यार्धधातुकसंज्ञायां जातायां आर्धधातुकत्वेन च शबाद्यप्राप्तौ भूयादिति रूपनिष्पत्तिरिति भावः । **अस्मिन्पक्ष इति** । भूयादितीश्वराशीरित्यस्मिन्पक्ष इत्यर्थः । सर्वेषामपि ब्रह्मणा सहैव मुक्तिर्भवतीति साध्यं पृथगेव श्लोकात् बहिरेव द्रष्टव्यम् । न तु पदार्थत्वेनेति भावः ॥ **तस्य निमित्तमिति** । अयं भावः । सर्वेषामपि ब्रह्मणासहैव मुक्तिर्भवतीति प्रतिज्ञाते किमत्र निमित्तं किञ्चात्र ज्ञापकमिति शङ्काद्वयं प्राप्नोति । अत्र किं निमित्तमिति शङ्कानिरासाय ईश्वराशीर्लक्षणं निमित्तं भूयादित्यनेनोच्यते । किं ज्ञापकमिति द्वितीयशङ्कानिरासाय 'इतिशास्त्रस्य निर्णय' इत्यनेन शास्त्रलक्षणज्ञापकमुच्यत इति सर्वं सुस्थम् । यद्वा यतो धूमवान् अत एवाग्निमान् इत्यत्र धूमस्य लिङ्गत्वे वह्निज्ञापकत्वमिव यतोन्येषामपि ब्रह्मणा सह मुक्तिः भूयादितीश्वराशीः अत एव ब्रह्मणा सहान्येषां मुक्तिर्भवतीत्यत्रान्येषां मुक्तिभवने ईश्वराशिषो लिङ्गत्वेन ज्ञापकत्वमित्यर्थः ।

प० — **भेज इति** । प्रथमस्कन्धे सप्तदशेऽध्याये 'स वै महाभागवतः परीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः । ज्ञानेन वैयासकिशब्दितेने'ति पूर्वशेषः । समानकर्तृकक्रियापूर्वकालीनत्ववाचिक्त्वाऽऽदेशल्यपो निर्वाहाय क्रियान्तरमाह **प्राप्यावस्थितानामपीति योज्यमिति** ॥ **वैकुण्ठादित्थमिति** ।

अमुक्तस्थानगतमिति भावः। ननु भूसत्तायामित्यतः आशिषिलिङ्लोटावित्याशीरर्थे लिङि लिङाशिषीति तस्यार्धधातुकसंज्ञायां तिबादेशशपोऽप्राप्तौ यासुट्परस्मैपदेषूदात्तो ङिच्चेति तिपो यासुडागमे गुणाभावे इतश्चेति ति। इकारलोपे स्कोःसयोगाद्योरिति सकारलोपे भूयादिति रूपं भवति न चेहाशीर्विषयत्वमस्ति येन लिङ आर्धधातुकतया शपोऽप्राप्तौ भूयादिति रूपं साधु स्यात् किन्तु भवेदिति भाव्यमित्यत आह **छन्दसीति**। यद्यपि तृतीयाध्यायस्य चतुर्थपादे तिङ्शित्सार्वधातुकम्, आर्धधातुकं शेषः, लिट् च, लिङाशिषि, छन्दस्युभयथेति छन्दोविषये आशीर्लिङ् सार्वधातुकमार्धधातुकं चेत्युभयथा भवतीत्येव प्रस्तावात्प्राप्तं न त्वनाशीर्विषयविषयं आर्धधातुकमित्यपि तथापि सर्वप्रकरणमपेक्ष्यैतदुच्यते। व्यत्ययो बहुलमित्यस्यैवायं प्रपञ्च इति वृत्तावुक्तत्वादेतदपि तत्राभिप्रेतमिति भावः॥ **साध्यमादाविति**। साक्षान्मुक्तिर्लिङ्गभङ्गरूपा मुक्तिर्ब्रह्मणा सहैव भवेदिति साध्यं श्लोकस्यादौ वाच्यमित्यर्थः। कुतो हेतोरित्यतः यतः साक्षान्मुक्तिर्ब्रह्मणा सहैव भूयादितीश्वरस्याशीः आशासनमस्ति अतः कारणादिति निमित्तम्। कुतो ज्ञायत इत्यत इति शास्त्रनिर्णय इति ज्ञापकं चानेन श्लोकेनोच्यत इत्यर्थः। शास्त्रेण क्रियमाणो निर्णयः शास्त्रनिर्णय इति तस्यार्थो ध्येयः।

या० — **प्राप्यावस्थितानामिति**। अन्यथा क्त्वादेशल्यबनुपपत्तिरिति भावः॥ ननु भवतेर्लिङि तस्य तिपि लिङाशिषीत्याशीर्विषयस्य लिङ आर्धधातुकत्वेन शबाद्यप्राप्तौ यासुट् परस्मैपदेषूदात्तो ङिच्चेत्यनेन यासुटि इतश्चेतीकारलोपे स्कोः संयोगाद्योरन्ते चेति सकारलोपे भूयादिति रूपं भवति। अनाशीर्विषयत्वे तु आर्धधातुकत्वाभावाच्छबादिप्राप्त्या गुणावादेशादेरपि प्रसङ्गेन भवेदित्येवं रूपं स्यादित्यत आह **छन्दस्युभयथेति**। यद्यपीदं छन्दसि विषये उभयथा भवति सार्वधातुकमार्धधातुकं चेत्येव व्याख्यातं न त्वनाशीर्विषयस्याप्यार्धधातुकत्वमिति। तथाऽपि सर्वमपि प्रकरणमपेक्ष्यैतदुच्यत इति व्यत्ययो बहुलमित्यस्यैवायं प्रपञ्च इति च काशिकायामुक्तत्वादिदमप्यत्राभिप्रेतमिति भावः॥ **साध्यमिति**। अन्येषां साक्षान्मुक्तिर्ब्रह्मणा सहैव भवतीति साध्यं पृथग्वाच्यं बहिरेवाध्याहार्यमित्यर्थः॥ **तस्य निमित्तमित्यादि**। तस्य साध्यस्य किं कारकं किंवा ज्ञापकमिति जिज्ञासायां भूयादित्यनेनेश्वराशीर्लक्षणं कारकं, शास्त्रस्य निर्णय इत्यनेन ज्ञापकं चोच्यत इत्यर्थः।

श्री० — हरिं प्राप्य मुक्तिर्भूयादित्यत्र प्राप्तिभवनयोः पुरुषमुक्तिकर्तृकत्वेन समानकर्तृकत्वाभावात् क्त्वादेशभूतल्यबनुपपत्तिरित्यत आह **प्राप्यावस्थितानामिति**। तथा च प्राप्त्यवस्थानयोः पुरुषकर्तृकत्वान्न दोष इति भावः। भू इत्यस्मात् तिपि इप् इत्यस्य लोपे यासुडागमे सुट् इत्यस्य लोपे भूयादिति रूपम्। सार्वधातुकत्वे भवेदिति रूपं तस्य स्यादिति द्रष्टव्यम्।

सु० — **इति शास्त्रस्य निर्णय इत्युक्तमेव विवृणोति** क्ष्मेति ।

अनु० — क्ष्मांभोनलानिलवियन्मनइन्द्रियार्थभूतादिभिः परिवृतः प्रतिसंजिघृक्षुः ॥
अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं परं स्वमनुभूय परः स्वयंभूः ॥
एवं परेत्य भगवन्तमनुप्रविष्टा ये योगिनो जितमरुन्मनसो विरागाः ॥
तेनैव साकममृतं पुरुषं पुराणं ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥
भगवन्तमनुप्राप्ता अपि तु ब्रह्मणा सह ॥
परमं मोक्षमायान्ति लिङ्गभङ्गेन योगिनः ॥
प्राप्ता अपि परं देवं सहैव ब्रह्मणा पुनः ॥
आनन्दव्यक्तिमायान्ति पूर्णां लिङ्गस्य भङ्गतः ॥
इति श्रुतिपुराणोक्ति(णादि)बलाद्विज्ञायते च तत् ॥

**भूतानामादिर्भूतादिः** । **क्ष्माऽऽदिपदैः पञ्चानां महाभूतानां, मनसो, दशानामिन्द्रियाणां, पञ्चानां विषयाणां, भूतादिपदोपलक्षितस्य त्रिविधस्याप्यहङ्कारस्याभिमानिनो देवा उच्यन्ते** । अव्याकृतं **परमेश्वरम्** । यर्हि **यदा** । **गुणत्रयस्यात्माभिमानी** । परं **परसंख्योपेतम्** । परः **क्ष्मादिभ्यः** । एवं **तदा** । भगवन्तमिति **तदीयं लोकम्** । अगताभिमाना **अगतजीवभावाः** । **परमं मोक्षमित्यस्यैव विवरणं** लिङ्गभङ्गेनेति । **इत्थम्भूतलक्षणे तृतीया** । **यद्वा** । **लिङ्गभङ्गेन निमित्तेन परमं मोक्षमानन्दाविर्भावमायान्तीति** व्याख्येयम् । **तच्चेति** चशब्देन **स्रष्ट्र्ष्वेवेत्युक्तं समुच्चिनोति** । **श्रुत्यादिकं भाष्योदाहृतं ग्राह्यम्** ।

शे० — भूतादिपदस्य भूतेन्द्रियादिपरत्वे क्ष्मांभोनलेत्यादिपूर्वेण पौनरुक्त्यप्रसङ्गादन्यथा व्याचष्टे **भूतानामादिरिति** क्ष्मादिपदानां जडपरतायां वक्ष्यमाणमुक्त्यसंभवप्रसङ्गाद्देवतापरतामाह **क्ष्मादिपदैरिति** । भूतादिपदस्य स्ववाच्यमात्रपरतायां तामसाहङ्कारस्यैव तथात्वेन भूतादिपदेन तदभिमानिमात्रलाभेन त्रिविधाहङ्काराभिमानिनामलाभप्रसङ्गात्तल्लाभाय लक्षणया त्रिविधाहङ्कारपरतया भूतादिपदं व्याचष्टे **भूतादिपदोपलक्षितस्येति** । क्ष्मादिपदानां तत्तद्देवतापरत्वे लक्षणाप्रसङ्ग इत्यतोऽभिमन्यमानवाचकशब्दानामभिमानिषु मुख्यताया अभिमान्यधिकरणसिद्धत्वान्न तत्प्रसङ्ग इत्याशयेनोक्तम् **अभिमानिन इति** । अमृतं पुरुषं पुराणं, ब्रह्म प्रधानमित्युत्तरत्र श्रवणादाह **अव्याकृतं परमेश्वरमिति** । 'सहैव ब्रह्मणा भूयादि'ति पूर्वोक्ताया, अन्येषां **लिङ्गभङ्गस्य** ब्रह्मलिङ्गभङ्गेन समानकालतायाः, क्ष्मेत्यादिप्रमाणारूढत्वस्यात्र प्रमाणे ब्रह्मलिङ्गभङ्गस्य कालविशेषस्य तत्कालेऽन्येषां लिङ्गभङ्गस्य चानुक्तावसंभवा-

तदुपपत्तये यर्ह्येवशब्दौ यदातदेत्यर्थतया व्याचष्टे **यर्हि यदा, एवं तदेति** । गुणत्रयमात्मा यस्येति न स्वरूपार्थकस्यात्मशब्दस्य बहुव्रीहिर्युक्तः गुणत्रयस्यैतत्स्वरूपताया बाधितत्वादित्यभिप्रेत्य समासप्राबल्यात् षष्ठीतत्पुरुष इत्याह **गुणत्रयस्यात्मेति** । तथाऽपि हिरण्यगर्भस्य गुणत्रयस्वरूपताया बाधितत्वात्कथं षष्ठीतत्पुरुषोऽपीत्यतो वाऽऽत्मशब्दस्याभिमानिपरत्वेन स्वरूपार्थत्वाभावाद् गुणत्रयाभिमानिताया श्चाबाधितत्वान्नानुपपत्तिरित्याशयेनाह **अभिमानीति** । वैयर्थ्येनान्यत्वाद्यर्थकत्वासंभवात्परशब्दस्य विवक्षितमर्थमाह **परमिति** । ब्रह्मवर्षशतरूपमित्यर्थः । हिरण्यगर्भस्य परत्वोक्तेर्मूले वैयर्थ्यमाशङ्क्य क्ष्मादिदेवैः कुतस्तस्य परिवृतत्वमित्यतस्तत्र तदुत्तमत्वस्वरूपहेतुकथनपरत्वान्न तदानर्थक्यमिति भावेन परशब्दं तदुत्तमत्वार्थतया व्याचष्टे **परः क्ष्मादिभ्य इति** । भगवन्तमिति भगवच्छब्दस्येश्वरपरत्वे तमनुप्रविष्टानां तेनैव साकमित्यादिनोच्यमानब्रह्मप्राप्त्युक्तिविरोधात्तल्लोकपरतया भगवत्पदं व्याचष्टे **भगवन्तमितीति** । नन्वगताभिमानिनां दोषित्वेन भगवत्प्राप्तेरयोगात्तथोक्तिरयुक्तेत्यतोऽत्रागताभिमानपदस्य जीवभावात्यागपरत्वेन दोषात्यागपरत्वाभावान्नानुपपत्तिरित्याशयेनाह **अगतेति** ॥ **विवरणमिति** । विशेषकथनतया लिङ्गभङ्गेनेत्यस्य परमं मोक्षमिति सामान्योक्तिविवरणत्वमिति भावः । लिङ्गभङ्गस्य कर्तृत्वकरणत्वयोरयोगेन तत्र तृतीयाया अयोगात्तदनुपपत्तिमाशङ्क्याह **इत्थम्भूतलक्षण इति** । किंचित्प्रकारं प्राप्त इत्थम्भूतस्तस्य लक्षणं चिन्हं तत्र तृतीयेत्यर्थः । तथा च परमत्वरूपं प्रकारं प्राप्तस्य मोक्षस्य लिङ्गभङ्ग एव चिन्हम् । **अनेनैव** मोक्षस्य परमत्वादिति भावः । 'आनन्दव्यक्तिमायान्ति पूर्णा लिङ्गस्य भङ्गतः' इत्युदाहरिष्यमाणप्रमाणानुसारेण लिङ्गभङ्गस्य पूर्णामानन्दव्यक्तिं प्रति निमित्तत्वस्थित्या लिङ्गभङ्गस्य कर्तृत्वाद्यभावेऽपि निमित्तत्वात्तत्रैवेयं तृतीयेति पक्षान्तरमाह **यद्वेति** । भगवन्तमनु प्राप्ता इत्यादिश्रुत्यपेक्षया क्ष्माम्भ इत्यादिपुराणस्य प्रथममुक्तत्वेऽपि श्रुतेरव्यवधानेन प्रकृतत्वादभ्यर्हितत्वाच्च मूले श्रुतिपुराणादीति श्रुत्यादित्वेन निर्देश इति ज्ञेयम् । चशब्दस्य मूले यथाश्रुतान्वये वैयर्थ्यप्रसङ्गात्स्रष्टृष्वेवेत्युक्तस्यार्थस्य श्रुत्यादिसिद्धत्वालाभप्रसङ्गाच्च तत्सिद्ध्यर्थं भिन्नक्रमतया तदन्वयप्रदर्शनपूर्वकं तत्प्रयोजनमाह **तच्चेति** ॥ **चशब्देनेति** । ननु ब्रह्मणा सहैव सर्वेषां लिङ्गभङ्गमित्यत्रैव पूर्वं श्रुतिपुराणयोरुदाहृतत्वात्स्रष्टृष्वेव सृज्यानां लय इत्यत्रार्थे तयोरनुदाहृतत्वात्कथं तस्य श्रुत्यादिप्रमाणकत्ववचनं सङ्गच्छेतेत्यतोऽत्र भाष्ये श्रुत्यादिशब्दस्य भाष्योक्तश्रुत्यादिपरत्वस्याप्यभिप्रेतत्वेनात्रोक्तश्रुत्यादिमात्रपरत्वाभावादत्रोदाहृतश्रुत्यादिना तदसिद्धावपि 'पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनावग्नावग्नयो वायाविद्रः सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्त' इति 'मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते । अग्निरिन्द्रस्तथेन्द्रश्चे'त्यादिभाष्योदाहृतश्रुत्यादिभिस्तत्सिद्धिसंभवान्न तस्याप्यर्थस्य श्रुत्याद्यप्रामाणिकत्वप्रसङ्ग इत्याशयेनाह **श्रुत्यादिकमिति** ।

प० — क्ष्मांभो निलेत्यादिनाऽपौनरुक्त्यायाह **भूतानामादिरिति** । स च त्रिविधोऽहङ्कार इत्यग्रे व्यक्तम् ॥ **त्रिविधस्येति** । तैजसतामसवैकारिकभेदेन त्रिविधस्येत्यर्थः । तामसाहङ्कारस्यैव भूतकारणतया भूतादिपदेन ग्रहणेऽप्यन्यांशयोरप्राप्तेर्भूतादिपदोपलक्षितस्येत्युक्तं छत्रिन्यायेनेति भावः ॥ **देवाः उच्यन्त इति** । तथाच भूतादिभिः परिवृतः सन् अव्याकृतं विशतीत्युपपन्नं जडत्वे तदयोगादिति भावः । परो विविक्त इत्यस्यावधिमाह **क्ष्मादिभ्य इति** । एवमित्यस्यार्थः **तदेति** । भगवत्पदेन तल्लोको विवक्षितः । अन्यथा ब्रह्मोपयान्तीत्युत्तरवाक्यानुपपत्तिरिति भावः । कर्त्राद्यर्थायोगादाह **इत्थंभूतेति** । मुक्तस्वरूपप्रकारं प्राप्तानां लिङ्गभङ्गो लक्षणं ज्ञापकमिति कमण्डलुना तापसमद्राक्षीदिति वत्तृतीयेत्यर्थः । चशब्दान्वयेनानुवादः **तच्चेति** । ननु सहैव ब्रह्मणेत्यत्र भगवन्तमिति श्रुतेः क्ष्मेति पुराणस्य चोक्तावपि चशब्देन समुच्चितेऽर्थे नोक्तं श्रुत्यादिकमित्यत आह **श्रुत्यादिकमिति** । 'नैकस्मिन्दर्शयतो हीति सूत्रे 'पृथिव्यामृभवो विलीयन्त' इत्यादिश्रुतेः 'ऋभवः पृथिव्यामि'त्यादिश्रुतेः । तथा सोऽध्यक्ष इति सूत्रे 'मुक्ताः सन्तोऽग्निमाविश्ये'त्यादिस्मृतिवाक्यादेरुक्तत्वादिति भावः ।

या० — **भूतानामादिरिति** । अन्यथा क्ष्मेत्यादेर्वैयर्थ्यमिति भावः ॥ **भूतादिपदोपलक्षितस्येति** । तामसाहङ्कारस्यैव भूतादिपदवाच्यत्वादिति भावः ॥ **देवा उच्यन्त इति** । जडानां वक्ष्यमाणमुक्त्यसंभवादिति भावः ॥ **विवरणमिति** । विशेषकथनस्य सामान्योक्तिविवरणरूपत्वादिति भावः । लिङ्गभङ्गस्य कर्तृत्वकरणत्वयोरभावात्कथं तृतीयोपपत्तिरित्यत आह **इत्थंभूतलक्षण इति** । परमस्वरूपप्रकारं प्राप्तो मोक्षः इत्थंभूतस्तद्विशेषरूपतया तज्ज्ञापको लिङ्गभङ्गस्तल्लक्षणमतस्तत्र तृतीयेत्यर्थः । सामान्यविशेषयोरभेदेऽपि ज्ञाप्यज्ञापकभावः शिंशुपारूपवृक्ष इत्यादाविव नानुपपन्न इति ध्येयम् । 'भगवन्तमनुप्राप्ता' इत्यादिश्रुत्यपेक्षया 'क्ष्मांभ' इत्यादिपुराणस्य प्रथममुक्तत्वेऽपि श्रुतेरव्यवधानेन प्रकृतत्वादभ्यर्हितत्वाच्च मूले श्रुतिपुराणोक्तीत्युक्तम् । ननु सर्वेषां ब्रह्मणा सहैव मुक्तिरित्यत्रैव श्रुतिपुराणयोरुदाहरणं कृतम् । चशब्दोक्ते स्रष्टृष्वेव सृज्यानां प्रवेश इत्यस्मिन्नर्थे तु न श्रुत्यादिकमुदाहृतमतः कथं तत्प्रतिपत्तव्यमित्यत आह **श्रुत्यादिकमिति** । 'पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनावग्नावग्नयो वायाविन्द्रः सोम आदित्ये बृहस्पतिरित्याकाश एव साध्या विलीयन्त' इत्यादिका श्रुतिः 'मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते । अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपितु । आविश्य परमात्मानं भुंक्ते भोगांस्तु बाह्यकानि'त्यादिका स्मृतिश्च भाष्योदाहृता चशब्देनोक्तेऽर्थे ग्राह्येत्यर्थः । अत्र मूले इति शब्दो न ग्रन्थप्रकृतस्य परामर्शकः, किन्तु बुद्धिसन्निहितस्येति ज्ञातव्यम् ॥

**सु०— ननु यथा द्वितीयतृतीयपादप्रतिपाद्यमुत्क्रमादिकमसाधारणं तथा चतुर्थपादोदितो भोगः किमसाधारणः । किंवा प्रथमपादोदितकर्मक्षय इव साधारण इत्यपेक्षायामाह** भोगस्त्विति ।

**अनु०**— भोगस्तु सर्वदेवानां नरादीनां च विद्यते ॥

**असाधारण्ये प्रमाणाभावादिति भावः । अस्मिन्प्रथमभाष्ये देवानां मोक्ष इति प्रथमनिर्देशः कृतस्तस्य तात्पर्यमाह** तत्रेति ।

तत्र प्रवेशो देवानामुत्तरोत्तरतः क्रमात् ॥

उच्यते

तत्र **द्वितीयपादे । प्रथममिति शेषः ।** उत्तरोत्तरतः **उत्तरोत्तरेषु । अतः प्रथममसौ निर्दिष्ट इति ।**

**शे०**— ननु भोगस्त्वित्युत्तरवाक्ये भोगस्य सर्वसाधारण्यमुच्यते । तदनर्थकम् । न च तस्य साधारण्यासाधारण्यजिज्ञासापरिपूर्त्यर्थं तदिति वाच्यम् । तत्साधारण्यासाधारण्यकोटिद्वयप्रापकाभावेन तन्मूलकजिज्ञासाया एवायोगेन तत्पूरकत्वानुपपत्तेरित्यतो द्विविधफलदर्शनस्यैव तत्प्रापकत्वसंभवेन तन्मूलकजिज्ञासोदयसंभवादित्यभिप्रेत्य तन्मूलोपदर्शनेन जिज्ञासायाः संभावितत्वं दर्शयन्नेव तत्परिपूरकतया उत्तरग्रन्थं योजयति **ननु यथेति** । ननु चोत्क्रान्तिवदसाधारण्यमेव तस्य किं न स्यादित्यत आह **असाधारण्य इति ॥ अस्मिन्प्रथमभाष्य इति** । 'देवानां मोक्ष उत्क्रान्तिश्चास्मिन्पाद उच्यत' इत्येतत्पादीयप्रथमभाष्ये देवानां मोक्ष इति प्रथमं देवमोक्षस्य निर्देशः कृत इत्यर्थः ॥ **तस्य तात्पर्यमाहेति ।** किं तस्य प्रथमनिर्देशे कारणमिति जिज्ञासायां तदाहेत्यर्थः । यत्र क्वचिद्देवानामुत्तरोत्तरतः प्रवेशचिन्तनस्य द्वितीयपादे देवानां मोक्षस्य भाष्ये प्रथमनिर्देशे कारणत्वायोगात्तत्रेत्येतद्द्वितीयपादपरतया योजयति **तत्रेति** । द्वितीयपादे तत्प्रवेशनिरूपणस्य देवानां मोक्षे द्वितीयपादार्थत्वमात्रसंभावकत्वेऽपि प्रथमनिर्देशे कारणत्वं कथमित्यतः प्रथमं तन्निरूपणस्यैव तत्प्रयोजकतयाऽभिमतत्वात्तत्रानुपपत्तिरित्यभिप्रेत्यापेक्षितं पूरयति **प्रथममिति शेष इति ॥ उत्तरोत्तरेष्विति** । अनेनोत्तरोत्तरत इत्याद्यादित्वात्सप्तम्यर्थे तसिरिति उक्तं भवति । अतः प्रथममिति सूत्रकारेण वाङ्मनसि दर्शनादित्यादिना ग्रन्थेन प्रथमं देवानां मोक्षस्यैव प्रतिपादितत्वात्तदनुसारेण भाष्यकृताऽपि भाष्ये देवानां मोक्ष एव प्रथमं निर्दिष्ट इति न भाष्यकारीयः प्रथमं निर्देशो निर्निबन्धनः, सूत्रकृता त्वितरापेक्षया देवानां प्राधान्यात्तद्देहलय एव प्रथमं चिन्तित इति न तं प्रत्यपि पर्यनुयोगावकाश इति भावः ।

स० — **अस्मिन्प्रथमभाष्य इति** । एतत्पादीयप्रथमभाष्य इत्यर्थः ।

प० — **अस्मिन्निति** । पाद इत्यर्थः ॥ **भाष्य इति** । श्रीमत्सूत्रभाष्य इत्यर्थः । आद्यादिभ्य उपसंख्यानमिति तसिप्रत्ययान्तत्वमुपेत्याह **उत्तरोत्तरेष्विति** ॥ **अत इति** । सूत्रकृता प्रथमं देवानां लयस्योक्तत्वादित्यर्थः ।

या० — **तस्य तात्पर्यमाहेति** । तस्य प्रथमं निर्देशे कारणमाहेत्यर्थः ॥ **अतः प्रथममिति** । तथा च सूत्रकारेण द्वितीयपादे वाङ्मनसि दर्शनादित्यादिग्रन्थेन प्रथमं देवानां मोक्षस्यैव प्रतिपादितत्वात्तदनुसारिणा भाष्यकारेण भाष्ये देवानां मोक्ष एवं प्रथमं निर्दिष्ट इति कारणमनेनोक्तमिति ज्ञातव्यम् । सूत्रकारेणापीतरापेक्षया देवानां प्राधान्यात्तद्देहलय एवात्र प्रथममुक्त इति भावः ।

सु० — **नन्वयुक्तमेतत्** । वाङ्मनसीत्यादिसूत्रेषु देवानामश्रवणात् । अथ वागादिशब्दास्तदभिमानिनामुपलक्षका इति मतं तदा, सति वाचके लाक्षणिकप्रयोगस्य प्रयोजनं वाच्यम् । यद्वा वाचका एवेति पक्षस्तथाऽपि प्रसिद्धशब्दपरित्यागेनाप्रसिद्धपदप्रयोगे प्रयोजनं वक्तव्यमेवेत्यत आह देहेति ।

अनु० — देहगानां च वृत्तीनामेवमेव तु ॥

**बाह्यतत्त्वव्यावृत्त्यर्थं देहगानामित्युक्तम् । वर्तते देह एताभिरिति वृत्तयो जडा वागाद्याः यथा मुच्यमानानां देवानामेवमेव देहगानां तदभिमतानां वागादीनामुत्तरोत्तरेषु मरणकाले लयो भवतीत्येतदपि प्रसङ्गाज्ज्ञापयितुं वागादिपदप्रयोग इति भावः । वागादिशब्दा देवानां वाचका एवेति तुशब्देन सूचयति ।**

शे० — **बाह्यतत्त्वेति** । ब्रह्माण्डबाह्यानां वागादीन्द्रियरूपतत्त्वानां तैजसाहङ्कारादुत्पन्नत्वात्तत्र, मनस्तत्त्वस्य च वैकारिकाहङ्कारकार्यत्वात्तत्रैव विलयादत्रोच्यमानो वागादीनां मनआदौ लयो न बाह्यतत्त्वविषय इत्यर्थः । एवमेवेत्युक्तं विवृण्वन्नेव किमनेन वागादिपदप्रयोजनमुक्तमित्याशङ्कापरिहारकतया वाक्यं योजयति **यथेति** । एतज्ज्ञापनस्य न प्रकृते कश्चिदुपयोगो दृश्यत इत्यत उक्तम् ॥ **प्रसङ्गादिति** । ननु वागादिशब्दप्रयोगस्य प्रयोजनोक्त्या तैर्देवानां लक्षणया मुख्यवृत्त्या वा श्रवणसिद्ध्या तदश्रवणप्रयुक्त-नन्वित्युक्तदोषोद्धारसिद्धेर्न भाष्ये तुशब्देन किंचित्प्रयोजनमित्यत आह **वागादिशब्दा इति** । अनेन भाष्ये तुशब्दो विशेषार्थो विशेषश्च वाचकत्वमित्युक्तं भवति ।

प० — **बाह्येति** । अण्डाद्बाह्यानां वागादीन्द्रियरूपतत्त्वानां तैजसाहङ्कारे लयात् मनस्तत्त्वस्य च वैकारिके लयादत्रोक्तलयो न तद्विषय इति ज्ञापनाय देहगानामित्युक्तिरित्यर्थः ॥ **वाचका एवेति** । तदधीनत्वन्यायादिति भावः । **पादार्थसङ्गत्योरुक्तिः** ।

**या० — बाह्यतत्त्वेति ।** ब्रह्माण्डबाह्यानां वागादींद्रियरूपतत्त्वानां तैजसेऽहङ्कारे मनस्तत्त्वस्य च वैकारिके विलयादत्रोक्तो विलयो न तद्विषय इति भावः ।

**सु० — भवेदेवं पादार्थः सङ्गतिश्च । यदि भगवज्ज्ञानभोगाभ्यां निवृत्तसमस्तानिष्टकर्माणः, स्वोत्तमप्रवेशेन ब्रह्मनाड्योत्क्रमेण वा परित्यक्तदेहाः, स्वोचितेनार्चिरादिना वा पथा वैकुण्ठलोकवासिनं भगवन्तं हिरण्यगर्भेण सह प्राप्ता भिन्नलिङ्गशरीराः विध्वस्तप्रकृतयोऽत्यन्तनिवृत्तानिष्टाः सम्यगाविर्भूतानन्दादिगुणा भगवत्समीप एव तमुपासीनाः, स्वरूपेण वा लीलागृहीतविग्रहैर्वा सङ्कल्पमात्रसाध्यान्दिव्यभोगांस्तारतम्येन भुञ्जाना न कदाचित्पुनरावर्तन्त, इत्येतन्मोक्षस्वरूपं 'कर्मक्षयस्तथोत्क्रान्तिरि'त्यादिनोक्तं निश्चितं स्यात् । न चैवम् । तैस्तैः वादिभिरन्यथामोक्षस्वरूपस्य वर्णितत्वात् । विप्रतिपत्तौ च संशयस्य ध्रुवत्वादित्यत आह** तत्रेति ।

**अनु० —** तत्र मोक्षस्वरूपं तु वादिनः प्रतिभाऽऽश्रयात् ॥
नाना वदन्ति

तत्र । **तथा सति, सूत्रकारेणोक्तलक्षणे मोक्षे श्रुत्यादिप्रमाणैरुपपादिते सति । वादिनस्तु** प्रतिभाश्रयात् **स्वोत्प्रेक्षामात्रेण नाना वदन्ति । अतः प्रमाणमूलत्वादस्याप्रमाणमूलानामुत्प्रेक्षामात्रयोनीनां वादानां च साम्याभावान्न संशयावकाशः ।**

**शे० — स्वोचितेनेति ।** शेषगरुडमार्गयोरन्यतरेण स्वयोग्यमार्गेणेत्यर्थः ॥ **वैकुण्ठलोकवासिनमिति ।** इदं चार्चिरादिमार्गगतानपेक्ष्योक्तं न तु गरुडशेषमार्गगतान् । तेषां भगवत्प्राप्तेर्ब्रह्माण्डलयोत्तरभावित्वेन ब्रह्माण्डान्तरस्थवैकुण्ठलोकगतभगवत्प्राप्तेरयोगात् । ततश्च 'ये पूर्वमर्चिरादिना पथा वैकुण्ठगतभगवन्तं प्राप्ता ये च ब्रह्माण्डलये स्वोत्तमप्रवेशेन त्यक्तदेहाः स्वोचितेन शेषगरुडमार्गयोरन्यतरेण पथा पुन्नामकं हिरण्यगर्भं प्राप्तास्ते सर्वेऽपि पुन्नामकेन हिरण्यगर्भेण सह भिन्नलिङ्गशरीरा विध्वस्तस्वगुणाच्छादकप्रकृतयोऽत एवात्यन्तनिवृत्तानिष्टा' इत्यतः परं 'महाप्रलये भगवदुदरे स्थित्वा पुनः सृष्टौ भगवल्लोकाविर्भावे सति श्वेतद्वीपगतभगवद्दर्शनेनापगतभगवदिच्छाऽऽवरका' इत्येतावत्पूरणीयम् । ततः 'सम्यगाविर्भूतानन्दादिगुणा' इति योजना । एवं च 'प्रधानावरणव्योम्नोरन्तरे विरजानदी । विधेर्देहापगमने लिङ्गमात्रशरीरगाः । पूर्णसाधनसंपन्ना अपरोक्षदृशश्च ये । निर्गत्य चोर्ध्वं वैकुण्ठादतीत्यावरणानि च । विरजायां कृतस्नाना ब्रह्मणा सह सर्वशः । त्यक्तलिङ्गास्ततः सर्वे स्वरूपेण व्यवस्थिता' इत्यादिप्रमाणानुरोधात् । अस्मिन्नेव कल्पे लिङ्गशरीरभङ्गो न तु 'योगी तावन्न मुक्तः स्यादि'ति वचन-

बलादुत्तरकल्पे स मन्तव्यः । योगी तावदिच्छाऽऽवरकान्न मुक्तः स्यादित्यर्थकत्वेन तस्य सावकाशत्वात् । अन्यथोदाहृतनिरवकाशप्रमाणविरोधादिति गुरुसम्प्रदायः ॥ तत्रेतिभाष्यपदानुवादेन तथा सतीति व्याख्यानम् । स्वपदव्याख्यानं, सूत्रकारेणोक्तलक्षणे मोक्षे प्रमाणैरुपपादिते सतीति ॥ मोक्षस्वरूपं त्विति तुशब्दो भिन्नक्रम इत्याशयेनाह **वादिनस्त्विति** । कथमेतावताऽप्युक्तशङ्कापरिहार इत्यतस्तत्रेति सूत्रकृदुक्तस्य मोक्षस्य प्रामाणिकत्वोक्त्या वाद्यन्तरोक्तमोक्षस्योत्प्रेक्षामूलकत्वोक्त्या च लब्धं परिहारमाह **अत इति** ।

प० — मूलोक्तान् पादानामर्थान् बुद्ध्यारोहायानुवदन्नुत्तरग्रन्थसन्दर्भमवतारयति **भवेदेवमित्यादिना** । कर्माण इत्यन्तं प्रथमपादार्थः । प्रारब्धबुद्धयोक्तं **भोगाभ्यामिति** । देहा इत्यन्तं द्वितीयपादार्थः ॥ **स्वोचितेनेति** । शेषगरुडमार्गयोरन्यतरेणेत्यर्थः । उपासीना इत्यन्तं तृतीयपादार्थः । स्वरूपेणेत्यादि चतुर्थपादार्थः ॥ **इत्यादिनोक्तमिति** । तत्र सङ्क्षेपेणोक्तस्य ग्रन्थकर्त्रभिमतस्य विवरणेनास्माभिरनूदित इति तत्रानुक्तानुवाददोषो न शङ्क्यत इति भावः ॥

या० — **स्वोचितेनेति** । स्वयोग्येन शेषगरुडमार्गयोरन्यतरेणेत्यर्थः । वैकुण्ठलोकवासिनमित्यर्चिरादिमार्गगतानपेक्ष्यैवोक्तम् । न तु शेषादिमार्गगतान् । तेषां भगवत्प्राप्तेर्ब्रह्माण्डलयोत्तरभावित्वात् । वैकुण्ठलोकस्य च ब्रह्माण्डान्तःस्थत्वात् । ततश्च ये पूर्वमर्चिरादिना पथा वैकुण्ठलोकगतं भगवन्तं प्राप्ता ये च ब्रह्माण्डलये स्वोत्तमप्रवेशेन त्यक्तदेहाः स्वोचितेन पथा पुन्नामकं हिरण्यगर्भं प्राप्तास्ते सर्वेऽपि पुन्नामकेन हिरण्यगर्भेण सह विरजास्नानेन भिन्नलिङ्गशरीरा विध्वस्तस्वगुणाच्छादिकादिप्रकृतयोऽत एवात्यन्तनिवृत्तानिष्टा इत्यनन्तरं महाप्रलये भगवदुदरे स्थित्वा, पुनः सृष्टौ भगवल्लोकाविर्भावे श्वेतद्वीपगतभगवद्दर्शनेनापगतभगवदिच्छावरका इत्येतद्ग्राह्यम् । अन्यत्रोक्तत्वात् । ततः सम्यगाविर्भूतानन्दादिगुणा इत्यादीत्येवं योजना द्रष्टव्या । एवं च 'अन्तिमावरणव्योम्नोरन्तरे विरजा नदी । विधेर्देहापगमने लिङ्गमात्रशरीरकाः । पूर्णसाधनसंपन्ना अपरोक्षदृशश्च ये । निर्गत्य चोर्ध्वं वैकुण्ठादतीत्यावरणानि च । विरजायां कृतस्नाना ब्रह्मणा सह सर्वशः । त्यक्तलिङ्गास्ततः सर्वे स्वरूपेण व्यवस्थिताः' इत्यादिप्रमाणसद्भावादस्मिन्नेव कल्पे लिङ्गशरीरभङ्गः । न तु योगी तावन्न मुक्तः स्यादि'ति वचनबलादुत्तरकल्पे । योगी तावदिच्छावरकान्न मुक्तः स्यादित्यर्थकत्वेन सावकाशत्वात् । अन्यथोदाहृतप्रमाणविरोधादिति ज्ञातव्यम् ॥ **इत्यादिनोक्तमिति** । यद्यपि विध्वस्तप्रकृतय इत्यादिकं तत्र नोक्तं तथाऽपि उपलक्षणया तदपि तत्राभिप्रेतमित्याशयेनैवमुक्तमिति ज्ञातव्यम् ।

सु० — ननु यदि तथा तथा प्रमाणानि सन्ति तर्हि तत्तद्वादिनां तादृशानि ज्ञानानि कुतो न जायन्ते । प्रमाणाभासैर्विमोहितास्त इति चेत् । तत्त्वज्ञाभिमता अपि कुतस्तैर्न विमूढाः । दोषदर्शनादिति चेत् । इतरेऽपि कुतो न दोषान्पश्यन्ति प्रमाणैस्तत्त्वज्ञानोदयोऽपि समान इत्यतो मूलकारणमाह पुंसां हीति ।

अनु० — पुंसां हि मतयो गुणभेदतः ॥

पृथक् पृथक् प्रजायन्ते

गुणभेदो गुणविशेषः । हिशब्देन 'ज्ञानं कर्म च कर्ते'त्यादिप्रमाणप्रसिद्धिं द्योतयति । एतद्विशदयति तमसैवेति ।

तमसैवान्यथा मतिः ॥

रजसा मिश्रबुद्धित्वं सत्त्वेनैव यथा मतिः ॥

मिश्रज्ञानेऽन्यथात्वं सम्यक्त्वं चास्तीत्यतोऽन्यथैवेत्युक्तम् । यथेति भिन्नं पदं सम्यग्वाची । तमोगुणः प्रमाणेषु चेतःप्रवृत्तिं प्रतिबध्याभासानां दोषानाच्छाद्य विपरीतज्ञान(मुत्पा)-मप्युत्पादयतीत्यादि द्रष्टव्यम् ।

शे० — नन्विति । यद्यप्युत्प्रेक्षामात्रयोनीनामिति वादानामुत्प्रेक्षामात्रमूलत्वाभिधानान्नेयं शङ्का युक्ता । तथाऽपि तदेव व्यवस्थापयितुमुत्प्रेक्षायामपि मूलकारणं वक्तुं चेयं शङ्केति ध्येयम् ॥ न विमूढा इति । अविशेषादिति भावः । दोषदर्शनभावाभावाभ्यां विशेषादविशेषोऽसिद्ध इति शङ्कते दोषेति । अविशेषादेव दोषदर्शनभावाभावरूपविशेषस्याप्यनुपपत्तिरेवेत्यविशेषतादवस्थ्यमिति परिहरति इतरेऽपीति । प्रमाणजन्यतत्त्वज्ञानोत्पत्तितदनुत्पत्तिरूपवैलक्षण्याद्युक्तो दोषदर्शनभावाभावरूपो विशेष इत्याशङ्क्याविशेषादेव तत्त्वज्ञानोत्पत्त्यनुत्पत्तिरूपवैलक्षण्यस्याप्यनुपपत्तिरेवेत्यविशेषतादवस्थ्य-मित्याह प्रमाणैरिति । इत्यादिप्रमाणेत्यत्रादिपदेन 'तथैव गुणभेदत' इति वाक्यशेषपरिग्रहः । 'तमसैवान्यथामतिः' 'सत्त्वेनैव यथामतिरि'त्यत्र तमसा सत्त्वेनेत्येतावता पूर्तेरेवशब्दयोर्निष्प्रयोजनत्वात्त-मसेव रजसाप्यन्यथामतेः, सत्त्वेनेव रजसाऽपि यथामतेश्च, दृष्टत्वेन विरुद्धार्थत्वाच्च नैवशब्दयोर्मूले यथा-श्रुतसंबन्धः किन्तु भिन्नक्रमतयेति भावेन तत्पक्षे तयोर्वैयर्थ्यं तद्व्यावर्त्योपदर्शनेन परिहरति मिश्र इति ॥ अन्यथैवेत्युक्तमिति । एतच्च वक्ष्यमाणभिन्नपदत्वसिद्धवत्कारेणैवोक्तमित्यवधेयम् । योग्यताद्यर्थकयथा-शब्दस्य मतिशब्देनाव्ययीभावसमासे योग्यतादेरेव सत्त्वगुणजन्यत्वप्राप्त्या सम्यङ्मतेस्तदलाभादव्ययी-भावश्चेति तस्याव्ययसंज्ञायामव्ययादाप्सुप इति सुब्लोपप्रसङ्गेन विभक्तिश्रवणानुपपत्तेश्च समासपक्षं परित्यज्य भिन्नपदतामाश्रित्य तत्रापि सादृश्यार्थताया बाधितत्वात् मतेः सम्यक्त्वसमर्पकपदाभावेन सम्यङ्मतेः

सत्त्वगुणजन्यत्वासिद्धेश्च तत्सिद्ध्यर्थं यथापदं सम्यगर्थतया व्याचष्टे **यथेत्यादि** । 'निवृत्तिमार्गः कथित आदौ भगवता यथे'त्यादौ तद्दर्शनादिति भावः ॥ **इत्यादि द्रष्टव्यमिति** । रजोगुण एकत्रैव धर्मिणि विरुद्धाकारावगाहिनोः स्वस्वविषये प्रवृत्तिं प्रतिबध्य तयोर्गुणान्दोषांश्चाच्छाद्य मिश्रज्ञानमुत्पादयति । सत्त्वगुणस्त्वाभासान् दोषान्प्रकाश्य तत्र चेतःप्रवृत्तिं प्रतिबध्य प्रमाणैर्यथार्थमेव ज्ञानमुत्पादयतीत्यस्यार्थस्यादिपदेन परिग्रहः ।

**प०— इत्यादीति** । गीतायामन्तिमेऽध्याये 'ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः । प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपीति प्रतिज्ञापूर्वकं ज्ञानकर्मकर्तॄणां सात्त्विकराजसतामसभेदेन प्रत्येकं त्रैविध्योक्तेरिति भावः । एवकारयोरन्वयं दर्शयन्नेव कृत्यं व्यनक्ति **मिश्रज्ञान इत्यादिना** । अव्ययीभावसमासे विसर्गो न युक्त इत्यत आह **भिन्नं पदमिति** । ननु यदीत्यादिना कृतचोद्यस्य कथं तमसाऽन्यथैव मतिरित्यनेन निरास इत्यत आह **तमोगुण इति** । **आभासानां** प्रमाणाभासानामित्यर्थः ॥ **इत्यादीति** । रजोगुणः प्रमाणेष्वेव चेतःप्रवृत्तिं प्रतिबध्याऽऽभासेषु दोषानाच्छाद्य प्रमाणाभासानां सम्यग्बुद्धिमुत्पाद्य मिश्रज्ञानं जनयति । सत्वगुणः प्रमाणेष्वेव चेतःप्रवृत्तिमुत्पाद्य आभासेषु दोषान् व्यक्तीकृत्य यथावन्मतिं जनयतीत्येवं ज्ञेयमित्यर्थः ।

---

**या०—** 'ज्ञानं कर्म च कर्ता चे'त्यस्य 'त्रिधैव गुणभेदत' इत्युत्तरं वाक्यं तेन प्रकृतसिद्धिरिति ज्ञातव्यम् । **भिन्नपदमिति** । अन्यथा यथामतीति स्यादिति भावः ॥ **इत्यादीति** । रजोगुण एकत्रैव धर्मिणि विरुद्धाकारावगाहिनोः प्रमाणतदभासयोः स्वविषये प्रवृत्तिं प्रतिबध्य तयोर्गुणान्दोषाभावांश्चाच्छाद्य संशयरूपं ज्ञानमुत्पादयति । सत्त्वगुणस्तु आभासानां दोषान्प्रकाश्य तत्र चेतःप्रवृत्तिं प्रतिबध्य प्रमाणैर्यथार्थज्ञानमेवोत्पादयतीति द्रष्टव्यमित्यर्थः ।

**सु०— सम्यग्ज्ञानं सत्त्वगुणेन भवतीत्युक्तम् । तस्य मुक्तेषु तावदपवादमाह** गुणेति ।

**अनु०—** गुणातीता विमुक्तानां मतिः शुद्धचितिर्यतः ॥
सम्यगेवाथ नित्या च

**यद्यपि विमुक्तानां मतिः सम्यगेव अथापि गुणातीता सत्त्वजन्या न भवति । कुतः शुद्धचितिः नित्या च यतः । जडं हि कुतश्चिज्जायते न चेतनम् । तथाऽनित्यमेव न नित्यम् । दैत्यानां स्वरूपज्ञानेष्वविद्यमानं सम्यक्त्वं तर्हि कथमित्यतः शुद्धेत्युक्तम् । स्वाभाविकदोषरहितेत्यर्थः ।**

**स्वरूपोपाधिगतदोषनिबन्धनं हि दैत्यानां ज्ञानानामसम्यक्त्वम् । करणनिमित्तो ज्ञानानां विषयनियमो वैशद्यभेदश्च । तत्र यदि मुक्तानां ज्ञानं नित्यं तर्हि निर्विषयं वा स्यात् सर्वविषयं वा । एवं वैशद्येऽपीति ।** तत्राह तत्तदिति ।

तत्तन्माहात्म्ययोगतः ॥

बहुला चातिविशदा

**तेषां तेषां माहात्म्यं योग्यतारूपं तदेव योगो निमित्तं ततस्तदनुसारेण (बहुल) बहुलार्थविषयिण्यतिविशदा च ।**

शे० — भगवदवतारसूत्रकृज्ज्ञान एवोक्तस्यापवादे वक्तव्ये तदधीनमुक्तादिज्ञानेष्वपवादकथनं कैमुत्यार्थमित्याशयेनाह **तस्य मुक्तेषु तावदिति ।** स्पष्टा चेत्यादिना श्रीदेव्यादिमतावप्युत्तरत्रापवाद कथनात्तावच्छब्दः ॥ **शुद्धचितिरित्यादि ।** अनेन शुद्धचितित्वं नित्यत्वं चेति हेतुद्वयमुक्तं भवति । तत्राद्यहेतुमुपपादयति **जडं हीति ।** द्वितीयमुपपादयति **तथेति ।** कुतश्चिज्जायत इति प्रतिज्ञाद्वये शेषः । ननु जडं हि कुतश्चिज्जायते न चेतनमित्युक्तरीत्या चितित्वमात्रेणैव मुक्तमतेः सत्त्वगुणजन्यत्वाभावसिद्धयोक्तापवादसिद्धेः किमिति शुद्धत्वेन चितेर्विशेषणम् । न च तस्या याथार्थ्योपपादनार्थत्वान्नानर्थकमिदमिति वाच्यम् । चितित्वमात्रेणैव तत्सिद्धिसंभवेनास्य तादर्थ्यायोगादित्यतश्चितित्वमात्रस्य तदसाधकत्वात्तेन तदसिद्ध्या याथार्थ्योपपादनाय शुद्धत्वविशेषणस्यार्थवत्त्वादिति भावेन चेतनत्वमात्रस्य तदसाधकत्वव्युत्पादनपूर्वकं तत्साधकतया शुद्धत्वं व्यापारयति **दैत्यानामिति ॥ तर्हि कथं सम्यक्त्वमिति ।** सत्त्वगुणाजन्यत्वे मुक्तमतेः सम्यक्त्वं कथमित्यर्थः । ननु चेतनत्वमात्रेण तदस्त्वित्यत उक्तं **दैत्यादीनां स्वरूपज्ञानेष्वविद्यमानमिति ।** यदि मुक्तमतेश्चेतनत्वमात्रेण सत्त्वगुणजन्यत्वाभावेऽपि याथार्थ्यं तर्ह्यविशेषाद्दैत्यादीनां स्वरूपज्ञानस्यापि चेतनत्वाद्याथार्थ्यं स्यात् । न चैतदस्ति । अतो न चेतनत्वेन मुक्तमतेर्याथार्थ्यसिद्धिरिति भावः । ननु मुक्तमतेः कथं शुद्धत्वोक्त्याऽपि याथार्थ्यसिद्धिरित्यतस्तद्व्याचष्टे **स्वाभाविकेति ।** दैत्यानां स्वरूपज्ञाने बाह्यदोषराहित्यस्य सत्त्वात्तस्यापि सम्यक्त्ववारणाय **स्वाभाविकेत्युक्तम् ।** तथाच शुद्धत्वेन स्वतस्त्वापवादकदोषरहितत्वलाभात्तदप्रामाण्यशङ्कायां निरस्तायां स्वत एव तद्याथार्थ्यसिद्धिरिति भावः । स्वाभाविकदोषराहित्यस्याप्रयोजकत्वात् सम्यक्त्वासाधकत्वमाशङ्क्य व्यतिरेकव्याप्त्युपदर्शनेन तत्परिहरति **स्वरूपेति ।** शङ्कते **करणनिमित्त इति ।** यत्सन्निकृष्टकरणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इति व्यवस्थाश्रयणादिति भावः ॥ **वैशद्यभेद इति ।** रेखोपरेखाद्यशेषविशेषविषयकत्वमित्यर्थः ॥ **एवं वैशद्येऽपीति ।** यदि मुक्तानां ज्ञानं नित्यं स्यात्तर्ह्यविशदं वा स्यादतिविशदमेव वा स्यादितिप्रसङ्ग इत्यर्थः ।

**स०** शङ्कते **करणेति ॥ एवं वैशद्येऽपीति** । यदि मुक्तानां ज्ञानं नित्यं स्यात् तर्ह्यतिविशदं वा स्यात् अविशदमेव वा स्यादित्यर्थः ।

**प०**— विधेयत्वे प्रकृतासङ्गतिरित्यत आह **यद्यपीति ॥ अनित्यमेवेति** । कुतश्चिज्जायत इत्यनुकर्षः । उत्तरवाक्यमवतारयितुं शङ्कामाह **करणनिमित्त इति** । यत्सन्निकृष्टेनेत्यादिना विषय-लक्षणस्य जिज्ञासासूत्रेऽन्यथाख्यातिवादेऽभिधानादिति भावः ॥ **वैशद्यभेदश्चेति** । प्रत्यक्षजन्यस्य वैशद्यं दृष्टं विषयगतरेखोपरेखादेरपि विषयीकरणात् अनुमानजातस्य च तदभावादिति भावः ॥ **सर्व-विषयं वेति** । विशेषविषयनियामकादिति भावः ॥ **एवं वैशद्येपीति** । अविशदं वा सर्वथा विशदं वा स्यादित्यर्थः ।

**या०**—शङ्कते **करणनिमित्त इति** । यत्सन्निकृष्टेन करणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इति व्यवस्थाऽऽश्रयणादिति भावः ॥ **वैशद्यभेद इति** । रेखोपरेखादिविशेषविषयकत्वभेद इत्यर्थः । करणं यथा यथा स्वच्छं तथा तथा रेखोपरेखादिविशेषविषयकं ज्ञानं भवतीति भावः ॥ **एवं वैशद्येऽपीति** । अविशदं वा स्यात्सर्वत्र विशदं वा स्यादित्यापादनीयमित्यर्थः ।

**श्री०**— तत्सन्निकृष्टकरणजन्यत्वाभावेऽपि तद्विषयकत्वाङ्गीकारे दोषमाह **सर्वविषयं वेति** । असन्निकृष्टकरणजन्यत्वाविशेषादित्यर्थः ।

---

**सु०— श्रीदेव्यामप्युक्तस्यापवादमाह** स्पष्टा चेति ।

**अनु०**— स्पष्टा चैव श्रियो मतिः ॥

महाशुद्धचितित्वेन

**श्रियो मतिश्च सम्यक्त्वेऽपि गुणातीतेति संबन्धः । महाशुद्धचितित्वेनेति पूर्ववदेव तत्र हेतुः । महच्छब्देन कदाऽपि (बाह्य)दोषसंबन्धो नास्तीत्युच्यते । स्पष्टेवेति मुक्तमतेरप्यति-शयेन विशदेत्यर्थः । एतदपि पूर्ववद्व्याख्येयम् ।**

**भगवज्ज्ञानेऽप्यपवादमाह** ततोऽपीति ।

ततोप्यतिमहाच्चितिः ॥

अशेषोरुविशेषणामतिस्पष्टतया दृशिः ॥

नित्यमेकप्रकारा च नारायणमतिः परा ॥

सूर्यप्रभावदखिलम् भासयन्ती निरन्तरा ॥

निर्लेपा वीतदोषा च नित्यमेवाविकारिणी ॥

नारायणमतिश्च सम्यक्त्वेऽपि परा गुणेभ्य इति शेषः । तत्र पूर्ववदेव हेतुः । ततः श्रियोऽप्यतिशयेन महाशुद्धचितिः । विशिष्यन्त इति विशेषाः पदार्थाः । अशेषाणामुरूणामनन्तानां विशेषाणां दृशिर्विषयीकारिणी । अतिस्पष्टतयाऽशेषपदार्थविषयेत्येतदपि बहुला चातिविशदेतिवद्व्याख्येयम् । दृशिः साक्षात्कार इति वा । नित्यमेकप्रकारेत्युत्पत्तिविनाशरहितेत्ययमपि गुणातीतत्वे हेतुः । केचिदेकमेवेश्वरज्ञानमित्यास्थिताः । अपरे त्वनेकानीति । तद्विवेकार्थमुक्तं निरन्तरा निर्भेदेति । तर्हि किं तेषु तेषु पदार्थेषु ज्ञातेषु विक्रियते नेत्याह नित्यमविकारिण्येवेति । कथं तर्हि तत्तद्विषयीकरणमित्यत उक्तम् ःयेति । यथा सूर्यप्रभा स्वयं निर्विकाराऽपि तांस्तान्प्राप्तान्विषयान्प्रकाशयति तथेयमपीत्यर्थः । अत्र च विशेष एव निर्वाहकः । अत एवैकेत्यनुक्त्वा निरन्तरेत्युक्तम् । निर्लेपा वीतदोषा चेति शुद्धत्वव्याख्यानम् । लेपः कर्मसंबन्धः । महच्छब्दव्याख्यानं पूर्ववत् । यद्वा नित्यमेवेति तदर्थमत्रापि योज्यम् । परा स्वतन्त्रेत्यतिशब्दस्य व्याख्यानत्वेनापि व्याख्येयम् । अत एव तत्तन्त्रत्वाचेति वक्ष्यति ।

शे० — उक्तस्येति । सम्यग्ज्ञानं सत्त्वगुणेन भवतीत्युक्तस्येत्यर्थः । चैवशब्दयोर्विरुद्धार्थतयैकत्र संबन्धासंभवात् स्पष्टा चैवेत्यत्र यथाश्रुतमेव शब्दसंबन्धमभ्युपगम्य चशब्दं भिन्नक्रमतया योजयति श्रियो मतिश्चेति ॥ पूर्ववदेवेति । मुक्तमतेर्गुणातीतत्वे शुद्धचितित्वस्येव श्रियो मतेर्गुणातीतत्वे महाशुद्धचितित्वस्य हेतुत्वव्युत्पादनप्रकारो द्रष्टव्य इत्यर्थः । चितित्वमात्रमेव पूर्ववत्तन्मतेर्गुणातीतत्वहेतुरन्यथायाथार्थ्यापवादकदोषनिरासायेति विशेषणकृत्यमपि तद्वदेव द्रष्टव्यमिति भावः । शुद्धत्वमात्रेणैव पूर्ववत्तन्निरासिद्धेर्महदिति विशेषणवैयर्थ्यमित्याशङ्क्य स्वभाविकदोषराहित्यस्य शुद्धत्वविशेषणेन लाभेऽपि बाह्यदोषसंबन्धस्य कदाऽप्यभावात्तल्लाभाय महदिति विशेषणमित्याशयेन तत्परतया महच्छब्दं योजयति महच्छब्देनेति । इदं च स्वरूपकथनार्थमिति ज्ञेयम् । स्पष्टैवेत्येवशब्दवैयर्थ्यमाशङ्क्य तत्तात्पर्यकथनेन परिहरति स्पष्टैवेतीति ॥ एतदपीति । स्पष्टैवेत्येतदपि पूर्ववद् 'बहुला चातिविशदे'तिवद्व्याख्येयमित्यर्थः । करणनिमित्तकत्वाद्वैशद्यभेदस्य लक्ष्मीज्ञानस्य स न स्यादित्याशङ्क्य नित्यत्वेऽपि तद्योग्यतानुसारेणातिविशदत्वस्योपपत्तिरिति व्याख्येयमित्याशयः ।

अपवादमिति । उक्तस्येति शेषः ॥ पूर्ववदेवेति । यथा शुद्धचि त्वं मुक्तमतेर्गुणातीतत्वे हेतुर्यथा वा महाशुद्धचितित्वं श्रियो मतेर्गुणातीतत्वे हेतुस्तथा ततोऽप्यतिमहाशुद्धचितित्वं भगवन्मतेर्गुणातीतत्वे हेतुरित्यर्थः । गृहीतग्राहिणां ज्ञानानामित्यादाविव प्रकृत्यर्थस्याविवक्षया विषयीकारित्वमत्र दृशिरित्यस्यार्थ इत्याशयेनाह दृशिर्विषयीकारिणीति ॥ इतिवद्व्याख्येयमिति । ईश्वरज्ञानस्य नित्यत्वे विषयनियमो वैशद्यभेदश्च न स्यात् । तस्य करणनिमित्तकतया नित्येश्वरज्ञाने तदयोगादित्याशङ्क्य

तन्माहात्म्ययोग्यतया तदुपपत्तिरिति व्याख्येयमित्यर्थः । दृशिरित्यत्र प्रकृत्यर्थस्याविवक्षाऽऽश्रयणीया भवतीत्यपरितोषादाह **दृशिः साक्षात्कार इति वेति** ॥ **विक्रियत इति** । तत्तत्पदार्थविषयकत्वेनेति शेषः ।

ननु दृष्टान्तमात्रस्यानिर्णायकत्वात्सविषयकत्वस्वाभाव्याद्भगवन्मतेस्तदा तदा प्राप्ततत्तद्वस्तुविषयकत्वरूपविशेषाणां तत्रोत्पत्त्यवश्यम्भावेन तदभिन्नाया मतेर्न निर्विकारत्वम् । अन्यथेदानीमेतद्विषया भगवन्मतिरिति कादाचित्कव्यवहारानुपपत्तिप्रसङ्गात् इत्यत आह **अत्र चेति** । भगवन्मतेस्तदा तदा प्राप्ततत्तद्वस्तुविषयकत्वस्वाभाव्येऽपि निर्विकारत्व इत्यर्थः । चशब्देन श्रीमुक्तमत्योः संग्रहः । विशेषशब्दश्च शक्तिव्यक्त्यात्मकत्वरूपावस्थाविशेषवचनः । अयमर्थः । स्यादयं दोषो यदीश्वरादिमतिषु कादाचित्कव्यवहारास्पदानां तत्तद्वस्तुविषयकत्वरूपविशेषाणां तदा तदोत्पत्तिरिति स्यात् । न चैवम् । किं नाम शक्त्यात्मना पूर्वं विद्यमानानामेव तेषां तदा तदा व्यक्त्योक्तव्यवहारास्पदत्वमिति । ननु शक्तिव्यक्त्योरपि परस्परमभेदात्कथमेतदपीत्यत्राप्येतदेवोत्तरम् ॥ **अत्र चेति** । शक्तिव्यक्त्योरभेदे-चेत्यर्थः । **विशेषः** अभेदेऽपि भेदकार्यसंपादनक्षमो विशेष एव निर्वाहक इत्यर्थः । भवेदेतद्यदि विशेषोऽपि ग्रन्थकृत्संमत इति स्यात् । तदेव कुतः सिद्धमित्यत आह **अत एवेति** । विशेषस्य ग्रन्थकृत्संमतत्वादेवेत्यर्थः । यद्वा विशेषसूचनार्थमेवेत्यर्थः । नित्यमविकारिण्येवाखिलं भासयन्तीत्यनेन भेदकार्यमुपदर्श्य तत्कार्यकारकतया प्रसक्तं भेदं प्रतिषेद्धुं **निरन्तरेत्युक्तम्** । अन्यथैकैवेत्येवावक्ष्यदित्यर्थः । केचित्तु 'नैकस्या भगवन्मतेरनेकविषयत्वं तस्य भेदसाध्यत्वादित्यतो भेदाभावेऽपि तत्प्रतिनिधिविशेषसद्भावात्तद्बलेनैकस्या अपि भगवन्मतेरनेकविषयत्वमुपपन्नमेवेत्याह **अत्र चेति** । एकस्यानेकविषयत्वे चेत्यर्थः । चस्त्वर्थः ॥ **अत एवेति** । भेदाभावेऽपि तत्कार्यनिर्वाहकविशेषाभ्युपगमादेवेत्यर्थ' इत्याहुः । **अन्ये** तु 'नन्वेतावता ज्ञानानेकत्वपक्षोऽभ्युपगतः स्यात् । न चासौ संभवति । अनेकत्वस्य भेदव्याप्तत्वेन भेदस्यापि तथा सति प्रसङ्गात्तस्य च प्रमाणविरुद्धत्वात् इत्यत आह **अत्र चेति** । ईश्वरज्ञानस्य भेदं विनाऽप्यनेकत्वे इत्यर्थः । ननु भवेदेवं यदीश्वरज्ञानानेकत्वं ग्रन्थकृत्संमतं स्यात् । तत्रैव किं नियामकमित्यत आह **अत एवेति** । ईश्वरज्ञानस्यानेकत्वाभावे एकेत्येव ब्रूयान्न तु निर्भेदेति । तथाऽनुक्त्या निर्भेदेत्युक्त्या च ग्रन्थकृतोऽप्येतत्संमतमिति ज्ञायत इत्यर्थ' इत्याहुः । 'एकेत्युक्तौ बहुत्वानापत्त्या तत्प्रयोजकभेदस्याप्यप्रसक्ततया तन्निरासानुपपत्तेरखिलं भासयन्तीति बहुत्वप्रयोजकभेदकार्यमभिधाय निरन्तरेति तन्निराकरणात्तत्प्रयोजकभेदप्रतिनिधिविशेषाङ्गीकारो ज्ञायत इत्यर्थ इत्यप्याहुः ।

ननु भगवन्मतेरतिमहाशुद्धचितित्वप्रतिपादकेन ततोऽप्यतिमहाचितिरिति विशेषणेनैव शुद्धत्वकथनात् तत्प्रतिपादकस्य निर्लेपेत्यादेः पौनरुक्त्यमित्यतो व्याख्यानव्याख्येयभावान्न तदित्याशयेनाह **निर्लेपेत्यादि** । ननु वीतदोषेत्यस्य भवतु तद्व्याख्यानत्वं निर्लेपेत्यस्य तु कथमित्यतो लेपपदस्य पुण्यपापरूपकर्मसंबन्धपरत्वेन दोषवाचकत्वात्तस्यापि शुद्धत्वव्याख्यानत्वोपपत्तिरित्याशयेन लेपपदार्थमाह **लेप इति** । ननु निर्लेपा वीतदोषा चेत्यनेन ततोऽपीत्येतत्पूर्ववाक्योक्तशुद्धत्वस्य व्याख्यानेऽपि तत्रोक्तमहत्त्वस्याव्याख्यानान्नास्य पूर्वेण व्याख्यानव्याख्येयभावो युक्त इत्यतो महाशुद्धचितित्वेनेत्यत्रत्यमहच्छब्दव्याख्यानस्यैव ततोऽप्यतिमहाशुद्धचितिरित्यत्रत्यमहच्छब्दव्याख्यानत्वसंभवान्न पुनस्तदव्याख्यानं दोषायेत्याशयेनाह **महच्छब्देति** । अत्र पक्षे कस्यचित्पूर्वं व्याख्यानं कस्यचिदेव त्विदमिति वैचित्र्यमाश्रयणीयं भवतीत्यरुच्या पक्षान्तरमाह **यद्वेति** । **तदर्थं** महच्छब्दव्याख्यानार्थं नित्यमेवेतिपदमत्रापि निर्लेपा वीतदोषा चेत्यत्रापि योज्यम् । न केवलमविकारिणीत्यत्रैव नित्यमिति संबध्यते किन्तु निर्लेपेत्यादावपीत्यपिशब्दार्थः । ततश्च, ततोऽप्यतिमहाचितिरिति पूर्ववाक्योक्तमहत्त्वस्य नित्यमेवेत्यनेन, शुद्धत्वस्य च निर्लेपा वीतदोषा चेत्यनेन, व्याख्यानान्न व्याख्यानव्याख्येयभावानुपपत्तिरिति भावः । यद्वा महच्छब्दार्थभूतकदाऽपिबाह्यदोषसंबन्धाभावान्तर्गतकदाऽपीत्यंशस्यात्रानुक्तेः कथं व्याख्यानव्याख्येयभाव इत्यत आह **यद्वेति** । **तदर्थं** महच्छब्दव्याख्यानोपपादनार्थं नित्यपदस्यान्वयानन्वयाभ्यां यद्वेति पक्षान्तरोक्तिरिति ध्येयम् । तथाऽप्यतिमहाशुद्धचितिरित्यत्रत्यातिशब्दस्याव्याख्यानान्न व्याख्यानव्याख्येयभावः संभवतीत्यत आह **परा स्वतन्त्रेतीति** । न केवलं परेत्यस्य भगवन्मतेर्गुणातीतत्वोपपादकत्वं किं त्वतिमहाचितिरित्यत्रत्यातिशब्दार्थकथनत्वमपीत्यपिशब्दार्थः । अत एवेतीश्वरज्ञानस्यातिशब्देन स्वातन्त्र्यस्योक्तत्वादेवेत्यर्थः ॥ **वक्ष्यति** लक्ष्मीज्ञान इति शेषः ।

**म० — पूर्ववदेवेति** । शुद्धचितिरित्यस्य यथा गुणातीतत्वे हेतुत्वमुपपादितं यद्वदित्यर्थः । **एतदपीति** स्पष्टा चैवेत्येतदपि पूर्वव'द्वहुला चातिविशदा चे'तिपूर्ववत् व्याख्येयमित्यर्थः । लक्ष्मीज्ञानस्य नित्यत्वे विषयनियमवैशद्ये न स्यातामित्याशङ्क्य तद्योग्यतानुसारेण लक्ष्मीज्ञानस्यातिविशदत्वस्य चशब्दोक्तस्य बहुलार्थविषयत्वस्य चोपपत्तिरिति व्याख्येयमिति भावः । **पूर्ववदेवेति** । शुद्धचितिर्येत इत्येतद्वत् ततोऽप्यतिमहाचितिरिति गुणातीतत्वे हेतुरित्यर्थः । **अतिस्पष्टतयेति** ईश्वरज्ञानस्य नित्यत्वे विषयनियमो वैशद्यभेदश्च न स्यात् इत्यत्र तात्पर्यम् । तद्योग्यतया तदुपपत्तिरिति व्याख्येयमित्यर्थः । न चैकस्यानेकविषयत्वं कथम् । तस्य भेदनिमित्तत्वादित्यतः भेदाभावेपि तत्प्रतिनिधिविशेषबलेनैकस्या अपि भगवन्मतेः अनेकविषयत्वमुपपन्नमित्याह **अत्र चेति** । एकस्यानेकविषयत्वे चेत्यर्थः । चस्त्वर्थे । **अत एवेति** । भेदकार्यनिवाहकविशेषाभ्युपगमादेवेत्यर्थः । यद्वा

नन्वेतावता ज्ञानानेकत्वपक्षोभ्युपगतः स्यात् । स चानुपपन्नः अनेकत्वस्य भेदव्याप्तत्वेन भेदाङ्गीकारापत्तेः तस्य च प्रमाणविरुद्धत्वादित्यत आह **अत्र चेति** । ईश्वरज्ञानस्य भेदं विनाप्यनेकत्वरूपार्थ इत्यर्थः । नन्वीश्वरज्ञानानेकत्वस्य ग्रन्थकृदभिमतौ किं मानमित्यत आह **अत एवेति** । ईश्वरज्ञानस्यानेकत्वाभावे एकेत्येव प्रब्रूयात् । तथानुक्त्यैवैतज्ज्ञायत इत्यर्थः । ननु महाशुद्धचितित्वस्य ततोप्यतिमहाचितिरित्यनेनोक्तत्वात् निर्लेपा वीतदोषा चेत्यनेन तदुक्तौ पौनरुक्त्यमित्यतो व्याख्यानव्याख्येयभावान्न दोष इत्याह **निर्लेपेत्यादिना** । ननु निर्लेपा वीतदोषा चेत्यनेन शुद्धत्वव्याख्यानेपि तत्रोक्तस्य महेत्यस्याव्याख्यानात् न व्याख्यानव्याख्येयभाव इत्यत आह **महच्छब्दव्याख्यानं पूर्ववदेवेतीति** । महाशुद्धचितित्वेनेत्यत्र महच्छब्दे यद्व्याख्यानं तदेव ततोप्यतिमहाचितिरित्यत्र महच्छब्दव्याख्यानमिति न पुनस्तद्व्याख्यातमिति भावः । **नित्यमेवेति** । **तदर्थं** महच्छब्दव्याख्यानार्थं नित्यमेवेति पदं निर्लेपा वीतदोषा चेत्यत्रापि योज्यम् । न केवलमविकारिणीत्यत्रैव नित्यमिति संबध्यते किन्तु निर्लेपेत्यादावपीत्यपि शब्दार्थः । अयं भावः । व्याख्यानव्याख्येयभावेन पौनरुक्त्यपरिहारो युक्तः । ततोप्यतिमहाचितिरिति पूर्वमुक्त इदानीं च नित्यं निर्लेपा वीतदोषा चेति व्याख्यानव्याख्येयभावस्योपपन्नत्वात् । ननु महच्छब्दार्थभूतकदापिबद्धदोषसंबन्धातीतत्वान्तर्गतकदापीत्यस्यात्रानुक्तेः कथं व्याख्यानव्याख्येयभाव इत्यत आह **यद्वेति** ॥ **तदर्थं** महच्छब्दोपपादनार्थम् । नित्यपदस्यान्वयानन्वयाभ्यां यद्वेति पक्षान्तरत्वोक्तिरिति ध्येयम् । ततोप्यतिमहाचितिरित्यत्रत्यातिशब्दार्थाकथनात् कथं व्याख्यानव्याख्येयभावस्तत्राह **परेति** । न केवलं परेत्येतस्य भगवन्मतेर्गुणातीतत्वप्रतिपादकत्वं किं नामातिमहाचितिरित्यत्रातिशब्दव्याख्यानत्वमपीत्यपिशब्दार्थः । **अत एवेति** । ईश्वरज्ञानस्यातिशब्देन स्वातन्त्र्यस्योक्तत्वादेवेत्यर्थः । लक्ष्मीज्ञान इति शेषः ।

प० **गुणातीतेति** । सत्त्वगुणजन्या नेति तदर्थः प्रागेवोक्त इति भावः । कुतो न जायत इत्यत आह **महाशुद्धेति** । जडमनित्यं च कुतश्चिज्जायते स्वरूपचेतनात्मकं नित्यं चाश्रियो ज्ञानं कथं जायेत इति चेतनत्वं नित्यत्वं चेतिद्वयं चेतिपदलब्धं तत्र हेतुरित्यर्थः । दैत्यरक्षःप्रभृतीनां स्वरूपज्ञानेऽविद्यमानं सम्यक्त्वं श्रीज्ञाने कथमित्यतः शुद्धेत्युक्तम् । स्वाभाविकदोषरहितेत्यर्थः । इति **पूर्ववदेव** व्याख्येयमिति भावः ॥ **एतदपीति** । ननु स्पष्टैवेत्यस्यातिविशदैवेत्यर्थः तत्र वैशद्यविषयनियमयोः यत्सन्निकृष्टकरणेनेत्युक्त्या करणनिमित्तत्वात् कथंश्रियश्चितिरजन्यापि विशदैवेत्युच्यत इत्यतः तन्माहात्म्ययोगत इत्येतदत्राप्याकृष्य तदुपपादकत्वेन व्याख्येयमित्यर्थः ॥ **परा गुणेभ्य इति** । **गुणजन्या नेत्यर्थः** । महाशुद्धचितिरित्यनन्तरमितिशब्दोऽध्याहार्थः ॥ तथात्वे इति तत्र पूर्ववदेवहेतुरित्यन्वयः श्लिष्टो भवति । व्याख्यातप्रायमेतत् ॥ **इतिवद्व्याख्येममिति** । वैशद्यविषयनियमयोः

**करणनिमित्तत्वदर्शनेपि** यथा मुक्तज्ञानानां नित्यमाहात्म्ययोगत इत्यनेन बह्वर्थविषयकत्वं वैशद्यं चोपपादितं अत्रापि तथोपपादनं कार्यमित्यर्थः । **गुणातीतत्व इति** । गुणाजन्यत्व इत्यर्थः ॥ **विक्रियत इति** । तत्तदाकारतया मायावादमत इव विकारवत्किमित्यर्थः । ननु निर्भेदज्ञानस्याविकारिणस्तदातदा प्राप्तानेकपदार्थविषयकत्वं कथमित्यत आह **अत्र च विशेष एवेति** । ज्ञानगतसामर्थ्यलक्षणविशेष एव भेदप्रतिनिधितया भेदकार्यनिर्वाहक इत्यर्थः ॥ **अत एवेति** । विशेषनिर्वाह्यत्वसूचनार्थत्वादेवैकाऽखण्डेत्यनुक्त्वा निरन्तरा निर्भेदेत्युक्त्या भेदप्रतिनिधिविशेषः सूचित इति भावः । अपौनरुक्त्यायाह इति **शुद्धत्वव्याख्यानमिति पूर्ववदिति** । कदापि बाह्यदोषसंबन्धो नेति वक्तुं महच्छब्दप्रयोग इति भावः ॥ **नित्यमेवेति** । नित्यमेवेति पदद्वयं न केवलमविकारिणीत्यत्रान्वेति किन्तु **तदर्थं** महच्छब्दव्याख्यानार्थं **अत्रापि** वीतदोष इत्यत्रापि योज्यमित्यर्थः । तथाच निर्लेपेति शुद्धत्वव्याख्यानम् । नित्यमेव वीतदोषेति महच्छब्दव्याख्यानमिति भावः । यद्वा नित्यमेवेत्येतत्तदर्थदोषसंबन्धस्य सार्वकालिकत्वार्थमत्रापि महच्छब्देऽपि योज्यमित्यर्थः ॥ **व्याख्यानत्वेनापीति** । न केवलं गुणेभ्यः परेति गुणातीतत्वं व्याख्यानत्वेनेत्यपेरर्थः ।

**या० — पूर्ववद्व्याख्येयमिति** । करणनिमित्तत्वाद्वैशद्यभेदस्य श्रीज्ञानस्य नित्यत्वे स न स्यादित्याशङ्कानिवर्तकतया तन्माहात्म्ययोगत इत्यस्याप्यनुवृत्तिं कृत्वा पूर्ववदुपपादनीयमित्यर्थः ॥ **इतिवद्व्याख्येयमिति** । उक्तशङ्कापरिहारस्तत्र यथा माहात्म्ययोगत इत्यनेन कृतस्तथाऽत्रापि तदनुवर्त्य कर्तव्य इत्यर्थः ॥ **विक्रियत इति** । तत्तत्पदार्थविषयकत्वेनेति शेषः ॥ **निर्विकाराऽपीति** । स्वप्रकाश्यवस्तुकृतविशेषशून्याऽपीत्यर्थः । ननु तथेयमपीत्ययुक्तम् । स्वभावतो निर्विषयकत्वेन तत्र प्रकाश्यवस्तुकृतविशेषानुत्पत्तावपि भगवन्मतेः सविषयकत्वस्वाभाव्यात्तदा तदा प्राप्ततत्तद्वस्तुविषयकत्वरूपविशेषाणां तत्रोत्पत्त्यवश्यंभावेन तदभिन्नाया मतेर्निर्विकारत्वस्य वक्तुमशक्यत्वात् । अन्यथेदानीमेतद्विषया भगवन्मतिरिति कादाचित्कव्यवहारानुपपत्तिरित्यत आह **अत्र चेति** । चशब्देन श्रीमुक्तमत्योर्ग्रहणम् । भगवन्मतेस्तदा तदा प्राप्ततत्तद्वस्तुविषयकत्वस्वाभाव्येपि निर्विकारत्व इत्यर्थः । **विशेष एवेति** । अत्र विशेषशब्देन शक्तिव्यक्त्यात्मकत्वरूपावस्थाविशेषः । भेदप्रतिनिधिभूतश्चेत्युभावपि विवक्षितौ ॥ ततश्चायमर्थः ॥ स्यादयं दोषो यदि भगवदादिमतौ कादाचित्कव्यवहारास्पदानां तत्तद्वस्तुविषयरूपविशेषाणां तदा तदोत्पत्तिरित्यङ्गीकुर्मः । न चैवम् । किं तु शक्त्यात्मना पूर्वं विद्यमानानामेव तेषां तदा तदा व्यक्त्योक्तव्यवहारास्पदत्वमिति । तत्र शक्तिव्यक्त्योरपि परस्परमभेदात्कथमेतदित्याशङ्कायामभेदेऽपि भेदकार्यकारी विशेष एव निर्वाहकतया वक्तव्य इति ॥ **अत एवेति** । विशेषसूचनार्थमेवेत्यर्थः ।

नित्यमविकारिण्येवाखिलं भासयन्तीत्यनेनोक्तरीत्या भेदकार्यं प्रदर्श्य निरन्तरेत्यनेन तत्र भेदप्रतिषेधे तदुपपादको विशेषस्तत्र कल्पनीय इति सूचितमिति भावः । नन्वेवं वीतदोषेत्यनेन बाह्यदोषसंबन्धाभावस्यापि शुद्धशब्दार्थतया सामान्यतो व्याख्यातत्वेन महच्छब्दवैयर्थ्यमित्यत आह **महच्छब्दव्याख्यानमिति** । न बाह्यदोषसंबन्धाभावमात्रं महच्छब्दार्थः । किं तु तस्य सार्वकालिकत्वमपि । अत एव पूर्वं कदाऽपीत्युक्तमिति भावः ॥ **अत्रापीति** । निर्लेपा वीतदोषा चेत्यत्रापीत्यर्थः । तथा च नित्यमेवेत्यनेनासमभिव्याहृतं निर्लेपेत्यादिकं शुद्धत्वव्याख्यानं, तत्समभिव्याहृतं तु महत्वव्याख्यानमिति ज्ञातव्यम् ।

सु०— **एतानि विशेषणानि लक्ष्मीज्ञानेऽप्यतिदिशति** विशेषानिति ।

अनु०— विशेषांस्तद्गतांस्त्यक्त्वा प्रायस्तल्लक्षणा श्रियः ॥

तद्गतान्**भगवद्गतांस्तानि लक्षणानि यस्याः सा तथोक्ता । श्रियो मतिः प्रतिपत्तव्येति शेषः । भगवद्गताशेषविशेषविषयीकारित्वं विहायान्यधर्मवती ज्ञातव्येत्यर्थः । प्राय इत्युक्तस्य तात्पर्यमाह** तथैवेति ।

तथैव स्पष्टताभावात्तत्तन्त्रत्वात्तु केवलं ॥

न तादृशी

**यथा भगवन्मतेर्निरतिशयस्पष्टत्वं तथैव** । केवलं तत्तन्त्रत्वात् **भगवन्मात्राधीनत्वात्** । **अत्र केवलमिति स्वरूपकथनम् । पराधीनत्वादित्येव हेतुः** । तादृशी **भगवन्मतिसदृशी** । **अतः प्राय इत्युक्तमिति भावः** ।

शे०— श्रियो मतेर्भगवन्मतिसादृश्याभावे निरतिशयस्पष्टत्वाभावस्येव भगवन्मात्राधीनत्वस्य हेतुत्वमिति भ्रमनिरासायाह **अत्र केवलमितीति** । श्रियो मतेर्भगवन्मात्राधीनत्वमेव न तु हिरण्यगर्भादिज्ञानवत्तदितराधीनत्वमप्यस्तीति वस्तुस्थितिकथनार्थमेव केवलं तत्तन्त्रत्वादिति तस्या भगवन्मात्राधीनत्वमुक्तं न तु तस्या भगवन्मतिसादृश्याभावे तस्य हेतुशरीरप्रविष्टत्वाभिप्रायेण तत्कीर्तनमित्यर्थः । उक्ताभिप्रायेणैव लक्ष्मीज्ञानस्य भगवन्मात्राधीनत्वमुक्तमित्येव किं न स्यात् किं स्वरूपकथनत्वाश्रयणेनेत्यत आह **पराधीनत्वादित्येवेति** । तावतैव श्रीमतेरपराधीनभगवन्मतिसादृश्याभावसमर्थनादिति भावः । अत्र लक्ष्मीज्ञानस्येव भगवज्ज्ञानस्यापि भगवदधीनत्वेन तन्मात्रेण लक्ष्मीज्ञानस्य भगवन्मतिसादृश्याभावसिद्ध्यनुपपत्तेर्भगवदधीनत्वादित्यनुक्त्वा पराधीनत्वादित्युक्तमित्यवधेयम् ॥ **अत इति** । श्रीमतेः भगवन्मतिसादृश्याभावादित्यर्थः ।

प०— **स्वरूपकथनमिति** तत्तन्त्रत्वमात्रस्य 'न तादृशी'त्यत्र हेतुत्वसंभवादिति भावः ॥

**सु० — लक्ष्मीमतिविशेषणानि मुक्तब्रह्ममतावतिदिशति** ब्रह्मणस्त्विति ।

**अनु० —** ब्रह्मणस्तु प्रायेणैवं श्रियो यथा ॥

**ब्रह्मणस्तु मतिः श्रियो यथैवं प्रायः । तथा वैशद्याद्यभावात्प्राय इत्युक्तम् । केवलमित्युक्त्यभावाच्च । अत एव तत्र तदुक्तम् । ब्रह्मण इति विशिष्याभिधाने को हेतुरित्यत आह** मुक्तानां त्विति ।

मुक्तानां तु तदन्येषां समुद्रतरलोपमा ॥

**विशेषबलेन वृद्धिह्रासवतीत्यर्थः । यथोक्तं अवृद्धिह्रासरूपत्वमित्यादि । मुक्तग्रहणस्य तात्पर्यमाह** अग्नीति ।

अग्निज्वालावदेव स्यात्सृतिगानां दृशो भवः ॥

**अग्निज्वालाया अग्नेरिव संसारिणां दृशोऽन्तःकरणाद्भव उत्पत्तिरेव स्यान्न तु व्यक्तिमात्रम् ॥**

**शे० — तथेति** । लक्ष्मीमतेर्यथा वैशद्यं तथा वैशद्याभावादित्यर्थः । तदुक्तौ निमित्तान्तरमाह **केवलमित्युक्त्यभावाच्चेति** । केवलमित्यनेन यल्लक्ष्मीज्ञानस्य भगवन्मात्राधीनत्वमुक्तं तस्य मुक्तब्रह्ममतावभावाच्च प्राय इत्युक्तमित्यर्थः । तस्य भगवदधीनत्ववल्लक्ष्म्यधीनत्वस्यापि सद्भावेन भगवन्मात्राधीनत्वाभावादिति भावः ॥ **अत एवेति** । मुक्तब्रह्मज्ञानस्य भगवन्मात्राधीनत्वाभावादेवेत्यर्थः । तत्र लक्ष्मीज्ञाने तन्मात्राधीनत्वमित्यर्थः । लक्ष्मीज्ञानस्य भगवन्मात्राधीनत्वोक्त्यन्यथाऽनुपपत्त्या मुक्तब्रह्मज्ञानस्य तदभावसिद्धेर्युक्ताऽत्र प्राय इत्युक्तिरिति भावः ॥ **विशेषबलेन वृद्धिह्रासवतीत्यर्थ इति** । ननु कथं चतुर्मुखेतरमुक्तमतेर्वृद्धिह्रासवत्त्वं 'गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तगौ । नृणामि'त्युक्तरीत्या मनुष्याणां सुखपदोपलक्षितज्ञानादेर्मुक्तौ वृद्धिह्रासवत्त्वेऽपि 'सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रममि'त्यनेन देवानां मुक्तौ ज्ञानादीनां गुणानां वृद्धिह्रासाभावाभिधानात् । न चात्रापि चतुर्मुखेतरमुक्तमात्रस्य मतेर्न वृद्धिह्रासावुच्येते किंतु मनुष्याणामेवेत्यविरोध इति वाच्यम् । मुक्तानां तु तदन्येषामिति मूलग्रन्थास्वारस्यप्रसङ्गात् । 'समुद्रतरलोपमेति मुक्तरुद्रादिमतेः संकोचविकासप्रकारो दर्शितः । अग्निज्वालावदिति अमुक्तरुद्रादिमतेरेवंरूपत्वातिशयो दर्शित' इति सन्न्यायरत्नावलीविरोधापाताच्चेति चेन्न । उदाहृतग्रन्थद्वयानुरोधेनात्र टीकायां संकोचविकासरूपयोरेव वृद्धिह्रासयोरभिमततया निषिद्धवृद्धिह्रासपरत्वाभावेनाविरोधात् । ज्ञानोत्तरकृतोपासनादिजनितपुण्यातिशयलब्धभोगविशेषभावाभावयोरेव वृद्धिह्रासशब्दार्थतया विवक्षितत्वादविरोधः । 'भोगानां तु विशेषेषु वैचित्र्यं लभ्यते क्वचिदि'ति वचनादित्यप्याहुः । बहुपरिमाणत्वाल्पपरिमाणत्वरूपावेव

वृद्धिह्रासाविहाभिमतौ 'अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ । करोति सुमहत्तेज' इति बृहद्भाष्य-वचनान्न तु प्रसिद्धावित्यविरोध इत्यप्याहुः । तदन्यमुक्तमतेर्वृद्धिह्रासवत्त्वाभ्युपगमे 'न हीयते यत्र गत्वे'ति वृद्ध्याद्यभावप्रतिपादकश्रुत्यादिविरोध इत्यतस्तस्य प्रायिकतयाऽपि प्रमाणेनैव प्रतिपादनान्न तद्वि-रोध इति भावेन तत्प्रायिकत्वप्रतिपादकं प्रमाणवाक्यं पठति **यथोक्तमिति** । अत्रोक्तयोरपि वृद्धिह्रासयोः संकोचविकासमात्ररूपत्वेन निषिद्धवृद्धिह्रासरूपत्वाभावान्न कश्चिद्विरोध इति हृदयम् ।

**स०** प्राय इत्युक्तौ निमित्तान्तरमाह **केवलमित्युक्त्यभावाच्चेति** । केवलमित्यनेन यल्लक्ष्मी-ज्ञानस्य भगवन्मात्राधीनत्वमभिहितं तस्य ब्रह्ममतावभावाच्च प्राय इत्युक्तमिति भावः । तस्य भगव-दधीनत्ववत् लक्ष्म्यधीनत्वस्यापि सद्भावेन तन्मात्राधीनत्वस्याभावादिति भावः । **अत एवेति** । ब्रह्म-ज्ञानस्य भगवन्मात्राधीनत्वाभावादेवेत्यर्थः । अत्र लक्ष्मीज्ञाने तन्मात्राधीनत्वमुक्तमित्यर्थः । यदि ब्रह्मज्ञानस्यापि भगवन्मात्राधीनत्वं स्यात् तर्हि लक्ष्मीज्ञानस्योच्यमानं भगवन्मात्राधीनत्वमयुक्तं स्यात् । तथाच तदन्यथानुपपत्त्या ब्रह्मज्ञानस्य तन्मात्राधीनत्वाभावात्प्राय इत्युपपद्यत इति । **विशेषबलेन वृद्धिह्रासवतीत्यर्थ इति** । ननु कथं चतुर्मुखेतरमुक्तमतेर्वृद्धिह्रासवत्त्वं 'गुणदोषैः सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ । नृणामि'त्यनेन मनुष्याणां सुखपदोपलक्षितज्ञानादेर्मुक्तौ वृद्धिह्रासवत्त्वेपि 'सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रममित्यनेन देवानां मुक्तौ ज्ञानादेर्वृद्धिह्रासाभावाभिधानात् । न च चतुर्मुखेतरमुक्त-मात्रस्य मतौ वृद्धिह्रासौ नोच्येते किं तु मनुष्याणामेवेति सांप्रतम् । 'समुद्रतरलोपमेति मुक्तरुद्रादि-मतेः सङ्कोचविकासप्रकारो दर्शितः । अग्निज्वालावदित्यमुक्तरुद्रादिमतेरेवंरूपत्वातिशयो दर्शित' इति सन्न्यायरत्नावलीविरोधादिति चेत् सन्न्यायरत्नावल्यनुसारेण सङ्कोचविकासवत्त्वेपि वृद्धिह्रासवत्त्वा-भावेनाविरोधादिति ।

**प०— वैशद्यादीति** । अत्रादिपदेनेश्वरविषये श्रियो मतेरिवाधिकविषयत्वाभावादिति गृह्यते । **केवलमित्युक्तीति** । तस्य भगवन्मात्राधीनत्वार्थपरत्वेन ब्रह्ममतेश्चेशरमोभयाधीनत्वात्तदभिप्रायेण प्राय इत्युक्तमित्यर्थः ॥ **अत एवेति** । ब्रह्ममतिव्यावृत्त्यर्थत्वादेवेत्यर्थः ॥ **तत्रेति** । श्रीप्रकरणे केवल-मित्युक्तमित्यर्थः ॥ अस्मिन्पक्षे न स्वरूपकथनं तदिति भाति । 'समुद्रतरलोपमे'त्यस्य तात्पर्यार्थः **वृद्धिह्रासवतीति** । शक्तिव्यक्त्यात्मना बह्वर्थाल्पविषयिणीत्यर्थः । निर्भेदमतौ कथमेतदित्यत उक्तम् **विशेषबलेनेति ॥ यथोक्तमिति** । एतदध्यायान्ते 'भोगमात्रसाम्यलिङ्गाच्चे'ति सूत्रभाष्ये । 'अवृद्धि-ह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् । कादाचित्कविशेषस्तु नैव तेषां निषिध्यत' इत्युक्तमित्यर्थः ।

**या०— केवलमित्युक्तीति** । एवमित्यतिदिष्टे तत्तन्त्रत्वादिति ब्रह्ममतिविशेषणे केवलमित्युक्तेर-योग्यतापराहतत्वेनाभावादित्यर्थः । न हि ब्रह्ममतिः केवलं भगवत्तन्त्रा किं तु रमातन्त्राऽपि तथा च

भगवत्तन्त्रत्वरूपविशेषणं केवलमित्युक्तिः । नापि प्रायःपदव्यावर्त्येति भावः । केवलमित्युक्तिर्वचनं यस्येति बहुव्रीहेर्विवक्षितत्वेन कैवल्याभावाच्चेत्यर्थ इत्यप्याहुः ॥ **अत एवेति** । प्रायःपदव्यावर्त्य-प्रदर्शनार्थमेवेत्यर्थः । तथा च स्वरूपकथनार्थमेव तन्न भवतीति भावः ॥ **अवृद्धिह्रासरूपत्वमित्या-दीति** । 'अवृद्धिन्ह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् । कादाचित्कविशेषस्तु नैव तेषां निषिध्यत' इति भाष्योदाहृतवचने इदमुक्तमित्यर्थः । इदं च ज्ञानोत्तरकृतोपासनादिजनितपुण्यातिशयलब्धभोग-विशेषभावाभावनिमित्तमिति मन्तव्यम् ।

**सु० — भवत्वेवं ज्ञानानां गुणनिमित्तं नानाविधत्वम् । प्रकृते तु किमित्यत आह** एवंविधेष्विति ।

**अनु०** — एवंविधेषु ज्ञानेषु तमसा मुष्टदृष्टयः ॥

**ज्ञानेष्वेवंविधेषु सत्सु मुष्टदृष्टयोऽपहृतसम्यग्ज्ञानाः । सम्यग्ज्ञानाभावेऽन्यथादृक्त्वमपि नोपपद्यते । अधिष्ठानसामान्यज्ञानस्य भ्रांत्युपयोगित्वादित्यत उक्तम्** खद्योतेति ।

खद्योतसदृशात्यल्पज्ञानत्वादन्यथादृशः ॥
वदन्ति वादिनो मोक्षं नानामतसमाश्रयात् ॥

**यथाऽन्धतमसे खद्योता अपि भयहेतवस्तथा विपर्ययबहुलमल्पं सम्यग्ज्ञानमपि तामस-मेव । यथोक्तम् । अतत्त्वार्थवदल्पं चेति । नानामतसमाश्रयान्नाना वदन्तीति योजना । ज्ञानानां गुणवशादनेकविधत्वोपपत्तेस्तमसाऽऽवृता** वादिनः **प्रमाणावधीरणात्सम्यग्ज्ञानविकला आभासादरणादधिष्ठानसामान्यज्ञानवत्त्वाच्च विपरीतज्ञानिनो मोक्षं नानाविधमाचक्षत इत्यर्थः । कारणैकत्वान्मिथ्याज्ञानेनाप्येकविधेन भाव्यमिति चेन्न । सहकारिवैचित्र्याद्वैचित्र्योपपत्तेः । तदिदमुक्तं** नानामतसमाश्रयादिति । **मतानां च प्रवाहेणानादित्वमुक्तम् । मूलकारणे तमोगुणेऽपि वैचित्र्याच्च । अत एवोक्तं** गुणभेदत इति ।

**शे० — यथोक्तमिति** ॥ **अतत्त्वार्थवदल्पं चेति** । अतत्त्वार्थकल्पनायुक्तं यदल्पं सम्यग्ज्ञानं तत्तामसमुदाहृतमिति विपर्ययबहुलस्याल्पसम्यग्ज्ञानस्यापि तामसत्वं गीतायामुक्तमित्यर्थः ॥ **प्रमाणाव-धीरणादिति** । तमोगुणप्रयुक्तप्रमाणविषयकचेतःप्रवृत्तिप्रतिबन्धनिमित्ततदवज्ञानादित्यर्थः ॥ **आभा-सेति** । तमोगुणप्रयुक्तप्रमाणदोषाच्छादननिमित्तकतदादरणादित्यर्थः । पूर्वेणैव शङ्कापरिहाराद्भाष्ये नानामतसमाश्रयादित्येतद्व्यर्थमित्याशङ्क्य तद्व्यावर्त्यां शङ्कामुत्थापयति **कारणैकत्वादिति** । मिथ्याज्ञान-मूलकारणतमोगुणस्यैकत्वादित्यर्थः ॥ **सहकारीति** । सहकारिभूतानां मतानां वैचित्र्यादित्यर्थः ।

नन्वाधुनिकानां मतानां कथं मोक्षविषयकनानाविधभ्रममूलकारणतमोगुणसहकारित्वं सङ्गच्छत इत्यत आह **मतानां चेति ॥ उक्तमिति** । 'अनादिकालतो वृत्ताः समया हि प्रवाहत' इत्यादिना समयपाद इति शेषः । अङ्गीकृत्य चेदं मूलकारणे तमोगुणेऽवैचित्र्यं सहकारिवैचित्र्यान्मिथ्याज्ञानवैचित्र्योपपादनं कृतम् । वस्तुतस्तु मूलकारणस्यावैचित्र्यमेवासिद्धमित्याह **मूलकारण इति ॥ अत एवोक्तमिति** । अनेन गुणभेदत इति वाक्य सत्त्वरजस्तमोलक्षणगुणभेदत इति, तमोगुणे भेदतोऽवान्तरभेदत इति च द्वेधा व्याख्यातं भवति ।

स० — **अत एवोक्तं गुणभेदत इति** । अनेन गुणभेदत इत्येतन्न केवलं सत्त्वरजस्तमो-लक्षणभेदात् नाना वदन्ति किं नाम तमोगुणेऽपि वैलक्षण्यात् नाना वदन्तीत्येवं वाक्यं व्याख्यातं भवति ।

प० — भयहेतव इत्यस्यानन्तरमत एव तामसा इति ग्राह्यम् । **अन्धतमस इति** । अव-समन्धेभ्यस्तमस इति समासान्तः ॥ **अतत्त्वेति** । गीतायामन्तिमेऽध्याये 'यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् । अतत्वार्थवदल्पं च तत्तामसमुदाहृतमि'ति तामसज्ञानस्वरूपमुक्तमित्यर्थः । अतत्त्वार्थ-विषयकं यदल्पं सम्यग्ज्ञानं तत्तामसमित्यर्थः । तत्र मोक्षस्वरूपमित्यादेर्व्यवहितत्वाद्बुद्ध्यारोहाय सर्वस्य निष्कृष्टार्थमाह **ज्ञानानामिति** । अवधीरणादनादरणादित्यर्थः । धृञ् अनादर इति धातोः ॥ **सह-कारीति** । नानाविधतत्तद्दर्शनरूपसहकारिवैचित्र्यादित्यर्थः । आधुनिकमतानां मोक्षविषयकभ्रमहेतुमूल-कारणवैचित्र्यापादकं कथमित्यत आह **मतानामिति** । **उक्तं** समयपादादिभागे उक्तमित्यर्थः ।

या० — **अतत्त्वार्थवदल्पं चेति** । अतत्त्वार्थकल्पनायुक्तं यदल्पं सम्यग्ज्ञानं तत्तामसमुदा-हृतमिति विपर्ययबहुलस्याल्पसम्यग्ज्ञानस्यापि तामसत्वमुक्तमित्यर्थः । **अवधीरणात्** अनादरणात् । धृङ् अनादर इति धातोः । अवज्ञानादिति यावत् ॥ **आभासेति** । प्रमाणाभासेत्यर्थः । न चाधुनिकानां मतानां कथं मोक्षविषयकनानाविधभ्रममूलकारणे सहकारित्वमित्यत आह **मतानां चेति ॥ उक्तमिति** । 'अनादिकालतो वृत्ताः समया हि प्रवाहतः' इति समयपाद इति शेषः ।

सु० — **समधिगतमेतत् नानाविधेषु मोक्षवादेष्वेकः प्रमाणमूलोऽन्ये मिथ्याज्ञानमूला इति । न तु विशेषोऽतः पुनः संशय एवेत्यतः परमतानां सर्वेषां हेयत्वं दिदर्शयिषुरादौ तावज्जिनोदितं मोक्षस्वरूपमनुवदति** आश्रित्येति ।

**अनु०** — आश्रित्य प्रतिभामाह जिनस्तत्रातितामसीम् ॥

तत्र **तेषु वादिषु** । **वेदप्रामाण्या(स्या)नङ्गीकारादतितामसीमित्युक्तम्** । **किमाहेत्यत आह** ज्ञानादिति ।

ज्ञानात्कर्मक्षयान्मोक्षो भवेद्देहाख्यपञ्जरात् ॥

**ज्ञानात्केषाञ्चित्कर्मणां क्षयो भवति । केषाञ्चिद्भोगात् । ततः कर्मक्षयात् पक्षिणः पञ्जरादिव आत्मनो देहान्मोक्षो भवेत् । देहावस्थानस्य कर्मनिमित्तत्वात् । ततः कथं वर्तत इत्यत आह** पञ्जरेति ।

पञ्जरोन्मुक्तखगवदलोकाकाशगोचरः ॥
नित्यमूर्ध्वं व्रजत्येव पुद्गलो हस्तपादवान् ॥
इति

**यथा पञ्जरोन्मुक्तः खग ऊर्ध्वं व्रजत्येवमेवोर्ध्वं व्रजति । अयं तु विशेषः । अलोकाकाशो गोचरो यस्य स तथोक्तः । नित्यमेवेति च । देहपरिमाणस्यात्मनो देहाभावे परिमाणाभावप्राप्तौ उक्तं** हस्तपादवानिति । **चरमदेहस्य यः सन्निवेशस्तथाभूत इत्यर्थः । इत्याहेति संबन्धः ।**

**अनूदितं दूषयति** तदिति ।

तत्केन मानेन मोक्षरूपं प्रदर्श्यते ॥

प्रदर्श्यते **परं प्रति जिनेन । यद्यप्यनन्तचतुष्टयावाप्तिर्मुक्तस्योच्यते जिनेन । तथाऽपि सा सम्प्रतिपन्नत्वान्नानूदिता नापि दूषिता ।**

---

**शे०— एकः प्रमाणमूल इति ।** वस्तुनि विकल्पापत्त्या परस्परविरुद्धानां सर्वेषां वादानां प्रमाणमूलत्वस्य, निःस्वभावत्वापत्त्या च सर्वेषामप्रमाणमूलत्वस्य वाऽसंभवात् । **न तु विशेष इति** सूत्रकारीय एव मोक्षवादः प्रमाणमूलो न त्वन्य इति विशेषो न समधिगत इत्यर्थः । यद्यपि निर्दोषश्रुत्यादिमूलः सूत्रकारीयो मोक्षवाद इतरे त्वप्रमाणमूला उत्प्रेक्षामात्रमूला इति साम्याभावेन संशयानवकाशाद्विशेषावधारणमपि 'तत्र मोक्षस्वरूपं तु' इत्यादिना व्युत्पादितमिति नैवं शङ्काऽवकाशः । तथाऽपि तत्तद्वाद्युक्तप्रमाणाभासनिराकरणेनाप्रमाणमूलत्वमुत्प्रेक्षामात्रमूलत्वं च यावन्न व्युत्पाद्यते तावत्तदनुक्तप्रायमेवेति तदुपपादनार्थमेवायं यत्न इत्यवधेयम् । यद्वा मतानामपि प्रवाहतोऽनादित्वेन श्रुतितुल्यतां मन्यमानस्येयं शङ्काऽत एव मतानां प्रागुक्तस्यानादित्वस्यात्र स्मारणं कृतम् । यथा चानादिमतानां श्रुतितुल्यतया संशयाजनकत्वं तथा समयपादारंभ एवोक्तमिति ध्येयम् ॥ **परमतानामिति ।** अन्यमोक्षवादानामित्यर्थः । कर्मक्षयस्य देहान्मोक्षं प्रति हेतुतामुपपादयति **देहावस्थानस्येति ॥ अयं त्विति ।** अलोकाकाशगोचरत्वादिः दृष्टान्तापेक्षया दार्ष्टान्तिके विशेष एव । न तु यथा पञ्जरोन्मुक्तः खगोऽलोकाकाशगोचरो नित्यमूर्ध्वं व्रजति एवमेव नित्यमूर्ध्वं व्रजतीत्यलोकाकाशगोचरत्वाद्यन्तर्भावेन व्याप्ति-

शरीरमिहाभिमतम् । तथा सति पञ्जरोन्मुक्तखगस्योर्ध्वं गतिसद्भावेऽपि उक्तविधगतेरभावाद्दृष्टान्तासिद्धिप्रसङ्गादिति भावः । नित्यमेवेति चेत्यतः परं विशेष इत्यनुवर्तते **परिमाणाभावप्राप्ताविति** । ततश्च परिमाणरहितस्य द्रव्यस्य शून्यत्वेनोर्ध्वगत्यनुपपत्तिरिति शङ्काशेषः । **तथाभूतः** तत्परिमाणः । ननु नित्योर्ध्वगतेरिवानन्तचतुष्टयावाप्तेरपि परैरभ्युगतत्वेन तस्या अप्यनूद्य दूषणीयत्वात्तदभावाद्भाष्ये न्यूनतेत्याशङ्कामननुवादादौ निमित्तकथनेन परिहरति **यद्यपीति** ॥ **अनन्तचतुष्टयेति** । ज्ञानदर्शनवीर्यसुखलक्षणं यदनन्तचतुष्टयं तदवाप्तिराविर्भाव इत्यर्थः । अत्र जीवो ज्ञानदर्शनवीर्यसुखलक्षण इति, आद्यं जीवगुणानां ज्ञानादीनां प्रतिबन्धकमिति, मोक्षः स्वाभाविकस्वरूपाविर्भाव इति च समयपादीयं वाक्यत्रयं ज्ञापकम् ।

प्र० — **अनन्तचतुष्टयावाप्तिरिति** । ज्ञानदर्शनवीर्यसुखलक्षणानन्तचतुष्टयावाप्तिरित्यर्थः । अत्र च 'जीवो ज्ञानदर्शनसुखवीर्यलक्षण' इत्याद्यं 'जीवगुणानां ज्ञानादीनां प्रतिबन्धकमि'ति च समयपादीयं ज्ञापकं बोध्यम् ।

प० — उत्तरग्रन्थमवतारयति **समधिगतमेतदित्यादिना** ॥ **एक इत्यादि** । सर्वस्य प्रमाणमूलत्वे हि विरुद्धानेकप्रकारता मोक्षस्य प्राप्नोति । सर्वस्य मिथ्याज्ञानमूलत्वे च वस्तुनो

---

निःस्वरूपत्वता स्यात् अत एवं वाच्यमित्यर्थः । हेयत्वं मोक्षविषये इति योज्यम् । तेन समयपा(दापौ)-दादपौनरुक्त्यं ध्येयम् । एवकारान्वयेनानुवादो **नित्यमेवेति चेति** । अयं विशेष इति पूर्वेणान्वयः । **अनन्तचतुष्टयेति** । जीवो ज्ञानदर्शनसुखवीर्यगुण इति समयपादे सुधोक्तदिशाऽनन्तं (पूर्णं) यच्चतुष्टयं ज्ञानादितदवाप्तिः तदाविर्भाव इत्यर्थः । ज्ञानादेर्जीवस्वभावत्वात् अनन्तत्वं ज्ञेयम् । ज्ञानदर्शनयोः सामान्यविशेषभावेन भेदः । **केवलमिति** । मूलप्रमाणशून्यमित्यर्थः । देहबन्धान्मुक्तो जीवः ऊर्ध्वगतिमान् बन्धमुक्तत्वात् पञ्जरोन्मुक्तखगवदित्यनुमानमित्यर्थः । यद्वा विमता गतिः सुखयुता दुःखहीना च ऊर्ध्वगतित्वात् पञ्जरोन्मुक्तखगगतिवदित्याद्यनुमानमित्यर्थः ।

या० — **एकः प्रमाणमूल इत्यादि** । वस्तुनि विकल्पापातेन परस्परविरुद्धानां सर्वेषां प्रमाणमूलत्वासंभवादिति भावः ॥ **न तु विशेष इति** । सूत्रकारीय एव मोक्षवादः प्रमाणमूल इति विशेषो न समधिगत इत्यर्थः । यद्यपि निर्दोषश्रुत्यादिमूलः सूत्रकारीयो मोक्षवाद इतरे च न तथेति साम्याभावाद्विशेषनिश्चयोपपत्तिरिति पूर्वमुक्तम् । तथाऽपि मतानामपि प्रवाहतोऽनादित्वेन श्रुतितुल्ययोगक्षेमतैवेति मन्यमानस्येयं शङ्केति ज्ञातव्यम् । अत एव मतानामनादित्वं पूर्वोक्तं स्मारितम् ॥ **हेयत्वं दिदर्शयिषुरिति** । मोक्षविषय इति शेषः । तेन समयपाद एव तेषां हेयत्वस्य दर्शितत्वादत्र

तत्प्रदर्शनं व्यर्थमिति शङ्काऽनवकाशः । तत्र जगत्कारणत्वविषय एव हेयताया दर्शितत्वात् । नित्यमेवेति च विशेष इत्यन्वयः । **तथाभूतः** तत्परिमाणः ॥ **यद्यप्यनन्तचतुष्टयेति** । अनन्तं यच्चतुष्टयं ज्ञानदर्शनसुखवीर्यरूपं तदवाप्तिराविर्भाव इत्यर्थः । जैनमते ज्ञानादिचतुष्टयस्यात्मस्वभावभूतस्यापि सत्त्वेन तेषामनन्तत्वात् । अत्र च 'जीवो ज्ञानदर्शनसुखवीर्यगुणः', 'मोक्षः स्वाभाविकात्मस्वरूपाविर्भाव' इति समयपादीयं वाक्यद्वयमेव ज्ञापकमिति ज्ञेयम् ।

**श्री०— अनन्तचतुष्टयेति** । ज्ञानदर्शनसुखवीर्यरूपा जीवगणाः संसारे घातुकबन्धप्रतिबद्धा मुक्तावाविर्भवन्तीति जैनमतमिति समयपादे उक्तत्वादित्यवधेयम् ।

**सु०— कथमुक्तमोक्षस्वरूपमप्रामाणिकमिति चेत् । न तावदत्र प्रत्यक्षमस्ति नापि आगमः । तदीयागमस्यास्माभिरनङ्गीकारात् । वेदादेश्च परेणानङ्गीकृतत्वात् । अतः केवलं किञ्चिदनुमानं वक्तव्यं तत्राह** गतिरिति **।**

अनु०— गतिरूर्ध्वा च दुःखेता गतित्वाल्लौकिकी यथा ॥
इत्युक्ते चानुमानैकशरणस्य किमुत्तरम् ॥

**चशब्दोऽनुक्तसमुच्चयार्थः । तेन विप्रतिपन्नेति प्रतिज्ञायां सिध्यति । हेतौ च चेतनाश्रितेति । तेनाचेतनगतौ बाधो, देवदत्तगतौ सिद्धार्थत्वं, अचेतनगतौ व्यभिचारश्च न संभवति । दुःखेनेता प्राप्ता दुःखेता । प्राप्तिश्च न साध्यसाधनभावलक्षणा । तथा सति देवदत्तस्य सुखार्थायां मन्दगतौ व्यभिचारापातात् । दूरत्वस्य चानियतत्वात् । तीव्रत्वस्याप्यपरिनिष्ठितत्वात् । किं तर्हि समानकालीनेन दुःखेन सहैकाधिकरणत्वलक्षणा । कदाचिद्देवदत्तः दुःखेन विनापि गच्छति तत्र व्यभिचार इति चेन्न । देवदत्तस्य कदाऽपि निर्दुःखताया अनङ्गीकारात् । आध्यात्मिकादिष्वन्यतमेन महताऽल्पेन वाऽयं खलु सदा संवलितः । चेतनशब्देन जाग्रतोऽभिधानान्न सुप्तगतौ व्यभिचारः । सुखार्थोऽपि गतिरल्पं दुःखमुत्पादयतीत्यभ्युपगम्य दुःखसाधनत्वं वा साध्यम् । लौकिकी देवदत्तादिगतिः । इति च प्रत्यनुमाने केनचिदुक्ते, एकं च तच्छरणं चैकशरणं अनुमानमेकशरणं यस्यासौ तथोक्तः । अन्यथा पूर्वकालैकेत्येकशब्दस्य पूर्वनिपातः स्यात् ।**

**शे०— न तावदिति** । मुक्तस्यातीन्द्रियत्वेन तदाश्रितपरिस्पन्दस्याप्यतीन्द्रियत्वेन प्रत्यक्षायोग्यत्वादिति भावः । अनङ्गीकृतत्वादित्यत्र प्रमाणतयेति शेषः ॥ **किंचिदनुमानमिति** । विप्रतिपन्ना गतिः स्वसमानकालीनदुःखविरहसमानाधिकरणा बन्धमुक्तगतित्वात् पञ्जरबन्धमुक्तखगगतिवत्

इत्यनुमानमित्यर्थः । गतिरूर्ध्वा दुःखेता गतित्वादित्येतावतैव पूर्तेः किं भाष्ये **चशब्देनेत्यत आह चशब्द इति** । किं तदनुक्तिर्यत्समुच्चयार्थश्चशब्द इत्यतस्तद्दर्शयति **तेनेति** । अनुक्तसमुच्चयार्थकचशब्देनेत्यर्थः ॥ **चेतनाश्रितेति** । सिध्यतीति पूर्वेणान्वयः । किं प्रतिज्ञायां हेतौ चोक्तविशेषणसिध्याऽपि प्रयोजनमित्यत आह **तेनेति** । प्रतिज्ञायां विप्रतिपन्नेतिविशेषणेन हेतौ चेतनाश्रितेतिविशेषणेनेत्यर्थः ॥ **अचेतनगताविति** । गतिमात्रस्य पक्षत्वेऽचेतनगतावंशबाध इत्यर्थः ॥ **अचेतनगताविति** । चेतनगतिमात्रस्य पक्षत्व इति शेषः । ननु दूरगतित्वात्तीव्रगतित्वादिति दूरत्वादिना गतिविशेषणाद्विशिष्टहेत्वगमनादेव न देवदत्तस्य सुखार्थायां मन्दगतौ व्यभिचार इत्यत आह **दूरत्वस्य चेत्यादि** । पक्षे विवक्षितदूरत्वस्य दृष्टान्ते, तत्र विवक्षितस्य च पक्षेऽसत्वात्साधनवैकल्यादिकम् । दूरत्वसामान्यविवक्षायां च तस्य यत्किंचिदपेक्षया मन्दगतावपि सत्त्वाद्व्यभिचारतादवस्थ्यमिति भावः ॥ **अपरिनिष्ठितत्वादिति** । अनियतत्वादित्यर्थः । तथा च पूर्ववत्साधनवैकल्यमेवेति भावः । तर्हि किंरूपा प्राप्तिः साध्यतयाऽभिमतेति पृच्छति **किं तर्हीति** । उत्तरमाह **समानेति** । तथाच मन्दगतावपि गतिसमानकालीनेन दुःखेन सहैकाधिकरणकत्वरूपवैवक्षिकदुःखप्राप्तिरूपसाध्यस्यापि सत्वान्न व्यभिचार इति भावः । उदाहरणस्यानादरणीयत्वान्मन्दगतौ व्यभिचारस्योक्तविवक्षया परिहारेऽप्यन्यत्र व्यभिचारो दुर्वार एवेत्याशयेन शङ्कते **कदाचिदिति** ॥ **अनङ्गीकारादिति** । तथा च साध्यस्यापि सत्वान्न व्यभिचार इति भावः । अनङ्गीकारमेव तन्निमित्तकथनेनोपपादयति **आध्यात्मिकादिष्विति** । ननु सुप्तगतेश्चेतनगतित्वेऽपि तद्दशायां दुःखस्यासत्वेन समानकालीनदुःखसमानाधिकरणत्वस्य तत्राभावाद्व्यभिचार इत्यत आह **चेतनशब्देनेति** । तथाच हेतोरेवागमनान्न तत्र व्यभिचार इति भावः । उक्तरूपप्राप्तिविवक्षायां गौरवं मन्वानः साध्यसाधनभावलक्षणमेव प्राप्तिसाध्यत्वेन विवक्षितत्वात्तत्रोद्भावितं दोषं साध्यसद्भावप्रतिपादनेन परिहरति **सुखार्थोऽपीति** । नन्वेकशब्दस्य पूर्वेणानुमानशब्देन समानाधिकरणसमासमनभ्युपगम्योत्तरेण शरणशब्देन तत्स्वीकारे किं निमित्तमित्यत आह **अन्यथेति** । पूर्वेणानुमानशब्देनानुमानं च तदेकं चेति विशेषणं विशेष्येण बहुलमिति विशेषणसमासो नाङ्गीकर्तुं शक्यते । तस्य दिक्संख्ये संज्ञायामिति संज्ञायामेव नियमितत्वेन प्रकृते च एकशाठीत्यादाविव विशिष्टस्य संज्ञात्वाभावेन तदसंभवात् । अतः संख्यार्थकस्यैकशब्दस्य समानाधिकरणेन समासविधानार्थं प्रवृत्तेन पूर्वकालैकेतिसूत्रेणैव स वाच्यः । न चासौ वक्तुं शक्यः । तथा सति तस्य पूर्वकालैकेति समासशास्त्रे प्रथमानिर्दिष्टतया प्रथमानिर्दिष्टं समास उपसर्जनमिति उपसर्जनत्वेनोपसर्जनं पूर्वमिति पूर्वनिपातः स्यादित्यर्थः । ननु तथाऽप्यनुमानमेकं शरणं यस्येति त्रिपदबहुव्रीहिसंभवे किं द्विपदबहुव्रीह्याश्रयणेनेति चेन्न । बहुव्रीहौ सर्वनामसंख्ययोः प्राङ्निपातो वक्तव्य इति संख्यायाः प्राङ्निपातनियमना-

देकशब्दस्य पूर्वनिपातप्रसङ्गेन तत्परित्यागसंभवात् । अत एवानित्यैकरूपा इत्यादावनित्यमेकं रूपं येषा-मिति त्रिपदबहुव्रीह्यनाश्रयणमभियुक्तानाम् । किंत्वेकं रूपमेकरूपं अनित्यमेकरूपं येषां ते तथोक्ता इति द्विप-दबहुव्रीह्याश्रयणमेव । एकशब्दस्य संख्यार्थकत्वेऽपि एकरूपशब्दस्यासंख्यार्थतया पूर्वनिपाताभावसंभवात् । तथा प्रकृतेऽप्येकशब्दस्य संख्यार्थकत्वेऽप्येकशरणशब्दस्यासंख्यार्थतया द्विपदबहुव्रीहौ सर्वनामसंख्ययोरिति पूर्वनिपाताप्रसङ्गादित्याशयात् ।

स० — **अतः केवलं किञ्चिदनुमानं वक्तव्यमिति** । ननु दूरत्वं तीव्रत्वं वा गतौ विशेषणं दीयते अतो न देवदत्तस्य सुखार्थायां मन्दगतौ व्यभिचार इत्यत आह **दूरत्वस्येति** ॥ **अनिश्चितत्वादिति** । अनियतत्वादित्यर्थः । **अन्यथेति** । अनुमानशब्देन एकशब्दस्य समास इत्यर्थः ।

प० — **बाध इति** । विप्रतिपन्नेत्यनुक्तावचेतनदेवदत्तगत्योरपि पक्षतापत्तेर्बाधसिद्धार्थत्वे इत्यर्थः । हेतौ चेतनाश्रितेत्यनुक्तौ चाचेतनगतौ व्यभिचारश्च प्राप्नोतीत्यर्थः । दुःखेतेत्यत्र दुःखहेतुरिति भ्रमनिरासायाह **दुःखेनेति** । दूरगतित्वादिति वा तीव्रगतित्वादिति वा हेतुर्विशेष्यतेऽतो न व्यभिचार इत्यत आह **दूरत्वस्येति** । मुक्तगतेः संसारदशापन्नदुःखेन अस्ति सामानाधिकरण्यमित्यतः सिद्धार्थ-त्वनिरासाय समानकालीनेत्युक्तम् ॥ **सुप्तगताविति** । उत्तमानां जाग्रति चक्षुरादौ रूपान्तरस्य सतः प्राज्ञं प्रति गतौ तथा सर्वजीवानां हृत्कर्णिकामूलस्थानां कर्णिकामध्यस्थप्राज्ञं प्रति गतौ चेत्यर्थः । 'प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्ती'ति सुप्तस्य गतिश्रवणात् 'द्गतिशब्दाभ्यामि'ति सूत्रोक्तेश्च । एकत्र सुप्तस्यान्यत्र नीयमानस्य गताविति वाऽर्थः । एकं च तदनुमानं चेति विग्रहे त्वेकानुमानशरणस्येति भाव्यमित्यत आह **अन्यथेति** ॥ **पूर्वेति** । 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेने'ति समासविधायके द्वितीयाद्यपादस्थसूत्रे एकशब्दस्य प्रथमानिर्दिष्टतया प्रथमानिर्दिष्टं समास उपसर्जनमित्युप-सर्जनसंज्ञायां उपसर्जनं पूर्वमिति पूर्वनिपातः स्यादित्यर्थः ।

या० — **किंचिदनुमानमिति** । विप्रतिपन्ना गतिः स्वसमानकालीनदुःखविरहसमानाधिकरणा बन्धमुक्तगतित्वात् पञ्जरबन्धमुक्तखगगतिवदित्यनुमानमित्यर्थः । व्यभिचारपरिहाराय दूरत्वविशेषणे त्वाह **दूरत्वस्येति** । पक्षे विवक्षितस्य दूरत्वस्य दृष्टान्ते, दृष्टान्तीयस्य च तस्य पक्षेऽभावादित्यर्थः । दूरत्व-सामान्यविवक्षायां च तस्य यत्किंचिदपेक्षया मन्दगतावपि सत्त्वेन व्यभिचारापरिहारादिति भावः । एवं तीव्रत्वस्येत्येतदपि व्याख्येयम् । मुक्तगतेः पूर्वतनेन दुःखेन सहैकाधिकरणत्वसत्त्वात्सिद्धसाधनतापरिहाराय समानकालीनेनेति विशेषणम् ॥ **अन्यथेति** । एकपदस्यानुमानपदेन समानाधिकरणसमासे 'पूर्वकालैक-

सर्वजरत्पुराणनवकेवलाः समानाधिकरणे'नेति सूत्रेणैकशब्दस्यानुमानशब्दापेक्षया पूर्वनिपातः स्यादित्यर्थः । यद्यपीदं सूत्रं समासविधायकमेव न पूर्वनिपातविधायकम् । तथाऽप्यत्रैकशब्दस्य प्रथमानिर्दिष्टत्वेनोपसर्जनसंज्ञाया'मुपसर्जनं पूर्वमि'ति पूर्वनिपातविधिप्रवर्तनात्परंपरया पूर्वनिपातविधायकमपि भवतीत्याशयेनैवमुक्तमिति ज्ञातव्यम् । इदं चैकशब्दस्य संख्यार्थत्वमाश्रित्यैव । केवलार्थत्वे तु दोषैकदृगित्यादाविव पूर्वनिपाताभावो न दोषायेत्यन्यत्रोक्तम् ।

**श्री०— विप्रतिपन्नेति** । मोक्षकालीनोर्ध्वगतिरित्यर्थः ॥ **तेनेति** । प्रतिज्ञायां हेतौ च विप्रतिपन्नचेतनपददानेनेत्यर्थः ॥ **अचेतनगताविति** । उर्ध्वगतिमात्रस्य पक्षत्वे पाषाणस्योर्ध्वमुत्क्षेपणं कदाचित् क्रियते साऽप्यूर्ध्वगतिः पक्षवत्तया आयास्यति । तत्र दुःखत्वसाधने बाधः । यदा देवदत्त ऊर्ध्वलंघनं करोति तदा तदीयोर्ध्वगतौ सिद्धसाधनता च स्यादतः प्रतिज्ञायां विप्रतिपन्नेत्युक्तमित्यर्थः । ननु मन्दगतौ व्यभिचारवारणाय दूरगतित्वादिति हेतुः क्रियत इत्यत आह **दूरत्वस्येति** । ननु तीव्रगतित्वं हेतुरतो न मन्दगतौ व्यभिचार इत्यत आह **तीव्रत्वस्यापीति** ॥ **अपरिनिष्ठितत्वादिति** । देवदत्तस्य मन्दगतिरपि बालकगत्यपेक्षया तीव्रा भवत्येवेति एतावत्येव गतिस्तीव्रेति निष्ठा नास्तीत्यर्थः ॥ **सुप्तगताविति** । यदा गाढनिद्रया सुप्तमेव कश्चित्पुरुषं हस्ते गृहीत्वा कश्चिन्नयति तदा तदीयायां गतौ व्यभिचार इत्यर्थः । ननु दुःखसाधनत्वे साध्ये सुखार्थायां देवदत्तगतौ व्यभिचारः स्यादित्यत उक्तम् ॥ **सुखार्थाऽपीति** । एकं च तदिति । एकशब्दः केवलार्थ इत्यर्थः । सङ्ख्यार्थत्वे बाधकमाह **अन्यथेति** । पूर्वकालैकसर्वजरत्पुराणनवकेवला इति सूत्रे प्रथमानिर्दिष्टस्यैकशब्दस्य प्रथमनिर्दिष्टं समास उपसर्जनमित्युपसर्जनसंज्ञायामुपसर्जनं पूर्वमिति पूर्वनिपाते सत्येकानुमानेति स्यादित्यर्थः ।

सु०— **प्रत्यनुमानस्योत्तरं शङ्कते** अनूर्ध्वेति ।

**अनु०—** अनूर्ध्वगतिता तत्र यद्युपाधिः

**तत्र देवदत्तगतेर्दुःखत्वेऽनूर्ध्वताविशिष्टं गतित्वं प्रयोजकं न गतित्वमात्रमिति यदि ब्रूयादित्यर्थः । पक्षेतरोऽयं कस्माच्छङ्कित इति चे(त्)न । लक्षणसंपत्तौ तदुपाधित्वस्योक्तत्वात् । निराकरोति** खगस्येति ।

**अनु०—** खगस्य च ॥

दूरोर्ध्वगमने दुःखमिति साध्यानुगो न सः ॥

तदा वदाम इत्यादावुपस्कर्तव्यम् । खगस्य पारावतादेर्दूरोर्ध्वगमने च दुःखमस्तीति हेतोः स उपाधिः साध्यानुगः साध्यव्यापको न भवतीत्यतोऽनुपाधिः । इदमुक्तं भवति । किमयं केवलसाध्यव्यापकोऽभिमतः किं वा साधनावच्छिन्नसाध्यव्यापकः । न प्रथमः । अधर्मे साध्यसद्भावेऽप्यनूर्ध्वताविशिष्टगतित्वस्याभावेन साध्याव्यापकत्वात् । न द्वितीयः । खगस्य दूरोर्ध्वगतौ गतित्वावच्छिन्ने दुःखेतत्वे सत्यप्यनूर्ध्वगतित्वस्याभावात् । अनेनोर्ध्वगतित्वाभावोऽनूर्ध्वगतित्वं केवलसाध्ये उपाधिरित्यपि प्रत्युक्तमिति । दूरग्रहणं खगस्य दुःखं व्यञ्जयितुम् । तदा हि तस्मिन्दुःखकार्याणि दृश्यन्ते । प्रत्यागमनसमयवर्तिदुःखकार्याणि तानीति चेन्न । ऊर्ध्वं गच्छत्येव तद्दर्शनात् ।

शे० — अनुमानमात्रोच्छेदकत्वेन पक्षेतरस्यानुपाधित्वान्न तदाशङ्का युक्तेत्याशङ्कते **पक्षेतर इति** । ऊर्ध्वताविशिष्टगतित्वस्य पक्षेऽपि सत्त्वेनानूर्ध्वगतित्वस्य पक्षमात्रव्यावर्तकविशेषणवत्त्वात् पक्षेतरत्वमित्यर्थः ॥ **उक्तत्वादिति** । न विलक्षणत्वाधिकरणे 'साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य चे'त्येतद्ग्रन्थव्याख्यानावसरे तर्हि विशेषणद्वयसम्पन्नं न वेत्यादिना ग्रन्थेन विशेषणद्वयसम्पन्नस्य पक्षेतरस्योपाधितायाः समर्थितत्वादित्यर्थः । खगस्येत्यादिग्रन्थस्य परिहारत्वे ज्ञापकाभावादपेक्षितं पूरयति **तदेत्यादि** । सर्वाणि वाक्यानि सोपस्कराणि भवन्तीत्यभियुक्तवचनादिति भावः । नन्वधर्मे

साध्याव्यापकताया वक्तुं शक्यत्वात्तामनुक्त्वा खगस्य तदूर्ध्वगमनपर्यन्तं भाष्यकाराणां धावनमनर्थकमित्याशङ्क्य , साधनावच्छिन्नसाध्यव्यापकत्वपक्षदूषणार्थत्वान्न तदिति भावेनात्र संभावितकल्पद्वयमाद्यपक्षदूषणं च बहिरेवोक्त्वा द्वितीयपक्षदूषणपरतया भाष्यं योजयितुमाह **इदमुक्तं भवतीति** । खगस्य दूरोर्ध्वगमनपर्यन्तं भाष्यकारीयधावनस्य प्रयोजनान्तरमप्याह **अनेनेति** ॥ **प्रत्युक्तमितीति** । खगस्य दूरोर्ध्वगतौ सत्यपि दुःखसाधनत्वे ऊर्ध्वगतित्वस्यैव सत्त्वेन तदभावरूपानूर्ध्वगतित्वस्य तत्राभावेनोक्तोपाधेरपि साध्याव्यापकत्वमिति भावः ॥ **तदा हीति** । दूरोर्ध्वगमने हीत्यर्थः ॥ **दुःखकार्याणीति** । गात्रस्वेदकंपपूर्ववद्वेगाभावादीनीत्यर्थः ।

स० — **अनेनेति** । खगस्य दूरोर्ध्वगतौ गतित्वाच्छिन्ने सुखेतत्वे सत्यपि उर्ध्वगतित्वस्यैव सत्त्वेन उर्ध्वगतित्वाभावरूपानूर्ध्वगतित्वस्य तत्राभावात्तस्य साध्याव्यापकत्वेनेत्यर्थः ।

प० —तत्रेत्यनुवादः देवदत्तेत्यादि व्याख्या ॥ **अनूर्ध्वताविशिष्टमिति** । तच्च दृष्टान्ते सत्त्वात् पक्षे चासत्त्वात् साध्यव्यापकत्वे सति साधनाव्यापकत्वाद्भवत्युपाधिरिति भावः ॥ **लक्षणेति** । व्याप्तिरूपेत्यर्थः॥ **उक्तत्वादिति** । युक्तिपादे तद्ग्रन्थे साध्यव्यापकवैलोम्यमित्युपाधिलक्षणविवरणप्रकरणे साध्यसमव्यापकस्योपाधित्वखण्डनप्रस्तावे उक्तत्वादित्यर्थः । अधर्मत्यागेन खगगत्युक्तौ तात्पर्यं वक्तुमाह **इदमुक्तमिति** ॥

**अनेनेति** । खगगतौ साध्याव्यापकत्वकथनेनेत्यर्थः ॥ **प्रत्यागमनेति** । तथा चोर्ध्वगतौ दुःखेतत्वरूपसाध्यस्यैवाभावान्न साध्याव्यापकत्वदोष इति भावः ।

या० — **उक्तत्वादिति** । द्वितीयाध्याय इति शेषः ॥ **दुःखकार्याणीति** । पूर्ववद्वेगाभावादीनीत्यर्थः । तैश्च दुःखमनुमेयमिति भावः ॥

श्री० — **उक्तत्वादिति** । अनुकूलतर्काभावदशायामित्यर्थः ॥ **ऊर्ध्वगतित्वाभाव इति** । तथा च नाधर्मे साध्याव्यापकेति भावः । अयमप्युपाधिः खगस्य दूरोर्ध्वगतौ साध्याव्यापकत्वादेव प्रत्युक्त इत्यवधेयम् ।

**सु० — मा भूदयमुपाधिः शरीरवृत्तित्वं तु भविष्यति । देवदत्तगतौ यद्दुःखेतत्त्वं तत्र न गतित्वं प्रयोजकं किं नाम शरीरवृत्तित्वम् । न चेदं साध्याव्यापकम् । यद्दुःखेतं तच्छरीरिवृत्तीत्यस्य व्यभिचारादर्शनादित्यतः सर्वोपाधिसाधारणं दूषणमाह** प्रतिसाधनेति ।

अनु० — प्रतिसाधनरूपस्य नानुमानस्य दूषणम् ॥
उपाधिः

---

**जिनोक्तानुमानानां प्रतिसाधनं खल्वस्माभिरुपन्यस्तम् । प्रतिसाधनरूपस्यानुमानस्य चोपाधिर्न दूषणम् । अतोऽत्रोपाध्युद्भावनमेवासङ्गतं किं तपद्दूणगवेषणेन । पूर्वोपाधेस्त्वङ्गीकारेण दूषणमभिहितमिति । कुतो नेत्यत आह** प्रतिरूपं हीति ।

प्रतिरूपं हि साधनं तन्न चापरम् ॥

**यदुपाधिर्नाम दूषणं तत्प्रतिरूपं साधनं न त्वनैकान्त्यादिकम् । हिशब्दो यस्मादित्यर्थे ।**

**एतदुक्तं भवति । उपाधिस्तावत्प्रतिपक्षोन्नायकः नेतरथा दूषणम् । ततः प्रतिपक्षस्योपाधिमुद्भावयता प्रतिपक्ष एवोद्भावितो भवति । प्रतिपक्षश्च साधनाय प्रवृत्तं प्रतिबध्नाति न पुनः किंचित्साधयति । प्रथमेनैव प्रतिबद्धत्वात् । अतः प्रतिपक्षस्य प्रतिपक्षोऽकिंचित्करत्वान्न दूषणम् । अत एवोपाधिरपीति ।**

शे० — **सर्वोपाधीति** । निरस्तानिरस्तसर्वोपाधीत्यर्थः । **अत इति** । दूषणस्यैवोद्भाव्यत्वादित्यर्थः ॥ **तद्दूषणेति** । उपाधेः साध्याव्यापकत्वरूपदूषणेत्यर्थः । तर्ह्यनूर्ध्वगतित्वरूपोपाधेरपि प्रतिसाधनरूपानुमानदूषणत्वाभावापत्त्या तस्याः साध्याव्यापकत्वेन दूषणं भाष्यकारीयं कथं सङ्गच्छत इत्यत

आह **पूर्वोपाधेस्त्विति** ॥ **प्रतिरूपं साधनमिति** । प्रतिरूपसाधनोन्नायकमित्यर्थः । न त्वनैकान्त्यमित्यत्रापि नानैकान्त्याद्युन्नायकमित्यर्थः । आदिपदेन व्याप्यत्वासिद्ध्यादिपरिग्रहः ।

ननु व्यभिचाराद्युन्नायकत्वेनाप्युपाधेर्दूषणत्वसंभवान्न प्रतिपक्षोन्नायकत्वेनैव तस्य दूषणत्वमिति नियमसिद्धिः । तत्सिद्धावपि प्रतिपक्षस्यापि प्रतिपक्षदूषणत्वसंभवान्न तत्र तस्यादूषणत्वसिद्धिः । तदसिद्धौ च नोपाधेरपि प्रतिपक्षेऽदूषणत्वसिद्धिरित्यत आह **एतदुक्तं भवतीति** ॥ **उपाधिस्तावदिति** । पक्षादिप्रविभागोत्तरकालमिति शेषः ॥ **नेतरथेति** । व्यभिचारोन्नायकत्वेन दूषणं नेत्यर्थः । अयमाशयः । साधनस्य साध्यव्यापकपरित्यागो हि पक्षादन्यत्र वा स्यात्पक्षे वा । नाद्यः । स्फुटे व्यभिचारे सति तदर्थमुपाध्यप्रतीक्षणात् । द्वितीये साध्यव्यापकव्यावृत्तिः पक्षात्साध्यमपि व्यावर्तयतीति प्रतिपक्षोन्नायकतैव । न च तदाऽप्यव्याप्त्युन्नायकमेवास्तु । उपाधिव्यावृत्त्या साध्यरहिते पक्षे वर्तमानस्य हेतोर्व्यभिचारावश्यंभावादिति वाच्यम् । तथा सति बाधप्रतिरोधयोरपि व्यभिचारोन्नायकत्वापातात् । तत्र ताभ्यामेवानुमाने दुष्टे किं तदुपजीविना व्यभिचारेणेति चेत् । तर्ह्यत्रापि व्यापकव्यावृत्तिरूपप्रतिपक्षेणैवानुमाने दुष्टे किं तदुपजीविना व्यभिचारेणेति तुल्यम् । किंच पक्षे व्यभिचारः किं निश्चित उत सन्दिग्धः । आद्येऽपि पक्षे साध्याभावो निश्चितो न वेति वाच्यम् । आद्येऽपि किं प्रमाणान्तरेणोत साध्यव्यापकोपाधिव्यावृत्त्या । प्रथमे तत एवानुमानं दुष्टमिति किमुपाधिना । न द्वितीयः । परस्पराश्रयत्वप्रसङ्गात् । नेति पक्षे उपाधेः साध्यव्यापकत्वानिश्चयात्कथं तद्व्यावृत्त्या पक्षे साधनस्य साध्यव्यभिचारः स्यात् । नान्त्यः । पक्षे सन्दिग्धव्यभिचारस्य स्वतःसिद्धत्वेन तदर्थमुपाधिमुखनिरीक्षणानपेक्षात् । सर्वानुमानोच्छेदापत्तेश्चेत्यन्यत्र विस्तरः ॥ **प्रतिपक्ष इति** । लोक इति शेषः ॥ **न पुनरिति** । स्वसाध्यं न साधयतीत्यर्थः । तथात्वे हि खलु स्थापनानुमाने प्राबल्यापादकतया प्रतिपक्षान्तरं सार्थकं स्यादिति भावः । अस्तु तर्हि प्रतिपक्षप्रतिबन्धकत्वेनैव प्रतिपक्षदूषणत्वं इत्यत आह **प्रथमेनैवेति** । स्थापनानुमानेनैव प्रतिपक्षस्य प्रतिबद्धत्वान्न प्रतिपक्षस्य तत्प्रतिबन्धकत्वमिति भावः । कुतः स्वसाध्यं न साधयतीत्यस्याप्येतदेवोत्तरं **प्रथमेनैवेति** । **अकिञ्चित्करत्वादिति** । साधनबाधनान्यतरकारित्वाभावादित्यर्थः ॥ **अत एवोपाधिरपीति** । अकिञ्चित्करप्रतिपक्षस्योन्नायकत्वादेव प्रतिपक्ष उपाधिरपि न दूषणमित्यर्थः । एतच्चाङ्गीकृत्योक्तं न वस्तुतः । प्रतिपक्षेऽपि प्रतिपक्षोपाध्योः 'विमतं सकर्तृकं कार्यत्वात् घटवदित्युक्ते विमतं विकर्तृकमस्मत्संमतकर्तृरहितत्वादित्युत्तरं, अकार्यत्वमुपाधिरित्युक्ते शरीरजन्यत्वमितरत्राप्युपाधिरित्युत्तरमि'ति तत्र तत्राचार्यैरुद्भावितत्वेन प्रतिपक्षेऽपि तयोर्दूषणत्वस्थितेः। न च प्रतिपक्षे उपाध्युद्भावनस्य वैयर्थ्यात्कथं दूषणत्वमिति वाच्यम् । स्वपक्षसाधनार्थमेकं परसाधनप्रतिरोधनार्थमपरमिति सार्थकत्वात् । न च पूर्वेण प्रतिपक्षेण प्रतिबद्धस्य कथं स्वपक्षसाधकत्वमिति वाच्यम् ।

एकेनैकस्य प्रतिबन्धसंभवेऽपि बहूनामेकेन प्रतिबन्धस्यान्याय्यतया तदयोगात् । उक्तं च 'द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः' इति । अन्यथा बहुत्वप्रयुक्तस्य प्राबल्यस्य दत्तजलाञ्जलिता स्यात् । तस्यैतत्परित्यागेनासङ्कीर्णोदाहरणाभावात् । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः ।

म० — **अत एवोपाधिरपीति** । प्रतिपक्षे प्रतिपक्षयोगस्य अकिञ्चित्करत्वादेवेत्यर्थः ।

प० — **शरीरवृत्तित्वमिति** । पक्षे च देहबन्धान्मुक्तगतौ गतित्वरूपसाध्ये सत्यपि उपाधेरभावात् साधनाव्यापकत्वमिति भावः । तदित्यनुवादः दूषणपदेनान्वयः । उपाधिनिमित्तदूषणमित्यर्थः ॥ **न त्वनैकान्त्यादिकमिति** । व्याप्यत्वासिद्धिरादिपदार्थः । अस्फुटत्वादाह **एतदुक्तमिति** । उपाधेः प्रतिपक्षोन्नायकस्य प्रतिपक्षत्वोक्तिरयुक्तेत्यतो वाह **एतदुक्तमिति** । न त्वित्युक्त्या चस्त्वर्थ इति सूचितम् । **अत एवेति** । अकिञ्चित्करत्वादेवोपाधिरपि न दूषणमित्यर्थः ।

या० — **प्रतिरूपं साधनमिति** । प्रतिरूपसाधनोन्नायकमित्यर्थः । न त्वनैकान्त्यादिकमित्यत्रापि नानैकान्त्याद्युन्नायकमित्यर्थः । आदिपदेन व्याप्यत्वासिद्ध्यादिकं ग्राह्यम् ॥ **प्रतिपक्षश्चेति** । लोक इति शेषः ॥ **न पुनः किंचिदिति** । स्वसाध्यं न साधयतीत्यर्थ । तथात्वे हि स्थापनानुमाने प्राबल्यसंपादकतया प्रतिपक्षान्तरं सार्थकं स्यादित्याशयः ॥ **अकिंचित्करत्वादिति** । अयमाशयः । प्रतिपक्षे प्रतिपक्षान्तरमुद्भाव्यमानं न तावत्स्वसाध्यं साधयति । पूर्वेण प्रतिपक्षेण प्रतिबद्धत्वात् । नापि पूर्वं प्रतिपक्षं प्रतिबध्नाति । तस्य स्थापनानुमानेनैव प्रतिबद्धत्वात् । नापि स्थापनायामनेकत्वप्रयुक्तं प्राबल्यं संपादयति पूर्वेण प्रतिपक्षेण प्रतिबद्धस्य तस्य स्वसाध्यसाधनासमर्थस्यान्यत्र प्राबल्यानापादकत्वात् । शतमप्यन्धानां न पश्यतीति न्यायादिति । **अत एवेति** । अकिंचित्करप्रतिपक्षोन्नायकत्वादेव प्रतिपक्षानुमाने उपाधिरपि न दूषणमित्यर्थः ।

श्री० — **व्यभिचारादर्शनादिति** । सुखे दुःखसामानाधिकरण्यरूपदुःखत्वशरीरवृत्तित्वयोः सद्भावेन कुत्रापि व्यभिचारादर्शनादित्यर्थः । **प्रतिरूपं साधनमिति** । स्वव्यावृत्त्या पक्षे साध्याभावसाधकमित्यर्थः । सत्प्रतिपक्षरूपमिति यावदिति भावः ॥ **प्रथमेनैवेति** । यथा नित्यः शब्दः श्रावणत्वादित्यनुमानस्य प्रतिपक्षभूतं शब्दोऽनित्यः कृतकत्वादित्यनुमानं तत्र चेदुपाधिः कश्चनोद्भाव्यते । तर्हि तेन सत्प्रतिपक्षोन्नयने पुनर्नित्यत्वमेव साधितं स्यात् । तच्च प्रथमेनानित्यत्वसाधककृतकत्वानुमानेनैव प्रतिरुद्धम् । न च नित्यत्वसाधकानुमानानामनेकत्वप्राप्त्या प्राबल्यमिति वाच्यम् । शतमप्यन्धानां न पश्यतीति न्यायात् एकेनापि बहूनां प्रतिबन्धादिति भावः ॥ **अत एवोपाधिरपीति** । प्रतिपक्षस्याकिंचित्करत्वात्तदुन्नायकोपाधिरप्यकिंचित्कर इत्यर्थः ।

**सु०— ननु पक्षादिप्रविभागोत्तरकालमुपाधिः प्रतिपक्षस्योन्नायको भवत्येव । प्राक्तु ततोऽव्याप्तेरुन्नायकः । अतस्तदपेक्षया शरीर(रि)वृत्तित्वमुपाधिर्भवत्वित्यतोऽभ्युपगम्य दूषयति** अथापीति ।

अनु०— अथापि सशरीरत्वं चात्रोपाधिर्न वै भवेत् ॥

**यदि कयाचिद्विवक्षया प्रतिपक्षस्याप्युपाधिरुच्यते तथाऽपि सशरीरत्वं शरीरेण सह वर्तमानत्वं शरीरसमानाश्रयत्वं शरीर(रि)वृत्तित्वमिति** यावत् । न **केवलमनूर्ध्वगतित्वमिति चशब्दः** । अत्रा**स्मदुक्तानुमाने** । **वैशब्दोऽवधारणे** । **कुतो न भवेदित्यत आह** गतित्वमिति ।

गतित्वं यत्र देहित्वमिति यत्साधनानुगम् ॥

**यत्र** गतित्वं वि**शिष्टं तत्र** देहित्वं **देहेन संबन्धः पूर्वोक्तः देहिवृत्तित्वमिति यावत् । इति प्रकारेण शरीर(रि)वृत्तित्वं साधनानुगं साधनस्य विशिष्टगतित्वस्य** व्यापकं **यद्यस्मादित्यर्थः** ।

**शे०— प्राक्ततोऽव्याप्तेरुन्नायकमिति** । साध्यव्यापकं परित्यजतो हेतोः साध्यपरित्यागस्यावश्यकत्वात्साध्यपरित्यागस्यैव चाव्याप्तित्वात् । न तु तदा सत्प्रतिपक्षस्य । पक्षे हि साध्योपसंहारे प्रतिपक्षावसरः । न तु ततः प्राक् । न च व्याप्तिग्रहणसमये पक्षे साध्योपसंहारोऽस्तीति कथं तदा सत्प्रतिपक्षत्वं स्यादित्यव्याप्त्युन्नायकत्वमेव तस्येत्याशयः । सशरीरत्वमिति भाष्यपदानुवादेन शरीरेण सह वर्तमानत्वमिति तदर्थो निरूपितः । तदुक्ताभिमतसंबन्धप्रदर्शनं **शरीरसमानाश्रयत्वमिति** । तात्पर्यार्थकथनं **शरीरवृत्तित्वमिति यावदिति** । ननु घटादिगतौ गतित्वसत्वेऽपि देहवृत्तित्वरूपदेहित्वाभावेन कथमस्योपाधेः साधनव्यापकत्वमित्यत आह **यत्र गतित्वं विशिष्टमिति** । चेतनाश्रितत्वरूपविशेषणविशिष्टमित्यर्थः । घटादिगतौ च न विशिष्टं गतित्वमिति न तत्र व्यभिचार इति भावः ॥ **पूर्वोक्त इति** । देहसमानाश्रयत्वरूप इत्यर्थः ।

स०— ननु देहित्वरूपोपाधेः साधनव्यापकत्वमभिहितम् । तदयुक्तम् । घटादिगतौ गतित्वस्य सद्भावेपि देहित्वस्य तत्राभावादित्यत आह **यत्र गतित्वं विशिष्टमिति** । चेतनाश्रितत्वरूपविशेषणविशिष्टमित्यर्थः । घटादिगतौ च न विशिष्टगतित्वमिति नोक्तदोषः ।

प०— **विशिष्टमिति** । (अचेतनव्यावृत्तमि)चेतनाश्रितत्वविशिष्टमित्यर्थः । **पूर्वोक्तः** पूर्ववाक्योक्तः ॥ **विशिष्टगतित्वस्य व्यापकमिति** । (उपाध्यभावादित्यर्थः) तथा च पक्षे तदभावात्तद्व्याप्यगतिरपि मुक्तस्य नोपपद्यत इति भावः । (दुःखेतत्वशरीरिवृत्तित्वरूपेणापीत्यर्थः) व्याघातानव-

स्याद्यापादनस्थलेऽपसिद्धान्तस्याभावात्क्लेशेन तत्संपादनस्य तत्र कार्यत्वात्कथञ्चिदित्युक्तम् । कार्यमस्तु कारणं मास्तु, धूमोऽस्तु वह्निर्मास्तु, मूकोऽहमिति यदि ब्रूषे तर्हि स्वक्रियाविरोध, इत्यादावपसिद्धान्तो न हि स्फुटोऽस्ति । तत्र तत्र हि कार्योद्देशेन तत्तत्कारणे प्रवृत्तिस्तव न स्यादित्यादौ प्रवृत्तेः प्रत्यक्षावगतत्वेन सर्वसंमततया तदभावापादनेऽपसिद्धान्त इत्यादिरूपेण क्लेशेनापसिद्धान्तस्य वाच्यत्वादिति भावः ।

या० — **विशिष्टमिति** । चेतनाश्रितत्वविशिष्टमित्यर्थः । अचेतनगतौ व्यभिचारपरिहारायेदमुक्तम् ।

श्री० — **प्राक्तु इति** । पक्षादिप्रविभागात्प्राक् व्याप्तिग्रहणवेलायामित्यर्थः ॥ **कयाचिद्विवक्षयेति** । पक्षादिप्रविभागात् प्राक् व्याप्तिग्रहणवेलायां प्रवृत्तस्योपाधेरव्याप्त्युन्नायकत्वविवक्षयेत्यर्थः ॥ **शरीरसमानाश्रयत्वमिति** । शरीरेण सहैकस्मिन्नधिकरणे वर्तमानत्वं नाम शरीरसमानाश्रयत्वमेवेत्यर्थः । **गतित्वं विशिष्टमिति** । चेतनत्वविशिष्टं गतित्वमित्यर्थः । **पूर्वोक्तः** सामानाधिकरण्यरूपः ।

सु० — **स्यादेतत् । यत्किञ्चिद्गतिपक्षीकारे बाधादिप्रसङ्गात् मुक्तानां गतिः पक्षीकरणीया । तस्या दुःखेतत्वसाधने भवतामपसिद्धान्तः स्यात् । भवद्भिरपि मुक्तानां निर्दुःखत्वस्याभ्युपगतत्वात् । तथा या गतिः सा दुःखेतेति व्याप्तिं वदता ईश्वरस्यापि दुःखमङ्गीकरणीयम् । अन्यथा तत्र व्यभिचारापत्तेः । ततोऽप्यपसिद्धान्त एव । शरीर(रि)वृत्तित्वस्य साधनव्यापकताऽङ्गीकारे गतिमत्त्वादीश्वरस्यापि शरीरित्वमङ्गीकार्यम् । ततश्चापसिद्धान्त एवेत्यत आह** आगमेति ।

अनु० — आगमाननुसारित्वे प्रसङ्गोऽयं यतस्ततः ॥
नापसिद्धान्तता दोषः

**यतो वेदादिकमागममनुसृत्य मोक्षस्वरूपानुमानेऽतिप्रसङ्गोऽयमस्माभिरुक्तः यदि वेदादिनिरपेक्षस्त्वमेवमनुमिमीषे तदैवमपि कस्मान्नानुमिनुया इति । ततः कारणादपसिद्धान्तता दोषो न भवति । प्रसङ्गेऽप्यपसिद्धान्तमुद्भावयन्तं बोधयितुमाह** प्रसङ्ग इति ।

प्रसङ्गे यदि सा भवेत् ॥
तदैवातिप्रसङ्गः स्यात्

**सा अपसिद्धान्तता । भवेद्दोष इति शेषः । कथमतिप्रसङ्ग इत्यत आह नेति ।**

न प्रसङ्गः क्वचिद्भवेत् ॥

**इतिशब्दोऽत्रान्तेऽध्याहार्यः । सर्वेष्वपि प्रसङ्गेष्वपसिद्धान्तस्य कथञ्चिदुद्भावयितुं शक्यत्वादिति भावः । एतेन मुक्तानां सततोर्ध्वगतिः सिद्धा चेद्बाधोऽन्यथाऽऽश्रयासिद्धिरित्यपि परास्तम् । परसिद्धाश्रये प्रतिपक्षस्य प्रसञ्जनात् ।**

**शे० — बाधादीति** । अचेतनगतेर्दुःखेतत्वाभावस्य प्रमाणसिद्धत्वेन तत्र तत्साधने बाधः संसारिगतेर्दुःखेतत्वस्य प्रमाणसिद्धत्वेन तस्यास्तत्साधने सिद्धसाधनमित्यर्थः ॥ **तत्रेति** । ईश्वरगताविर्त्यथः । तत्र गतित्वसद्भावेऽपि दुःखेतत्वाभावादिति भावः ॥ नन्वतिप्रसङ्गप्रकारोपदर्शकत्वेन प्रसङ्ग इत्यादिभाष्यस्य 'न प्रसङ्गः कचिद्भवे'दिति भाष्ये इतिशब्देन भवितव्यमिति तदभावो दोष इत्यतस्तदध्याहारस्यात्राभिप्रेतत्वाद्युक्तमस्य तत्प्रकारोपदर्शकत्वमिति भावेनाह **इतिशब्द इति** ॥ **सर्वेष्वपीति** । यदि निर्वह्निः स्यात्तर्हि निर्धूमोऽपि स्यादित्यादिप्रसङ्गेष्वपीत्यर्थः ॥ **अपसिद्धान्तस्येति** । धूमादिलिङ्गजातस्य स्वयमभ्युपगतत्वेन निर्धूमत्वाद्युक्तस्तद्विरुद्धत्वादिति भावः । 'प्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्य दूषका' इत्यादिभक्तिपादीयानुव्याख्यानतट्टीकोक्तरीत्या वस्तुतस्तत्रापसिद्धान्ताभावसिद्धेः कथञ्चिदित्युक्तम् । एतेनेत्युक्तमेव विवृणोति **परसिद्धेति** ।

**स० — बाधादिप्रसङ्गादिति** । अचेतनगतौ दुःखेतत्वाभावस्य प्रमाणसिद्धत्वेन तत्र तत्साधने बाधः। आदिपदेन देवदत्तस्य दुःखसाधनगतेरपि पक्षत्वप्राप्त्या तत्र दुःखेतत्वस्य सिद्धत्वेनांशतः सिद्धसाधनं स्यादित्यस्य संग्रहः । **तत्रेति** । ईश्वरगतावित्यर्थः । गतित्वस्येश्वरगतौ सद्भावेपि दुःखेतत्वाभावेन व्यभिचारापातादिति भावः ।

**प० —**एतेन प्रसङ्गरूपताकथनेनेत्यर्थः ॥ **बाध इति** । शरीरिवृत्तित्वरूपव्यापकनिवृत्त्या गतेरपि निवृत्त्युक्तौ बाध इति वा सततोर्ध्वगतिः दुःखहीनेत्याद्यनुमाने भवद्भिरुक्तदुःखेतत्वरूपप्रत्यनुमाने बाध इति वाऽर्थः ।

**या० — सर्वेष्वपि प्रसङ्गेष्विति** । यद्यपि धूमादिकं न कस्यापि सिद्धान्तः येन तदभावापादनेऽपसिद्धान्तता । तथाऽपि प्रामाणिकं न परित्याज्यमप्रामाणिकं न स्वीकार्यमिति सामान्यतः सर्वैराचार्यैरभ्युगतत्वेन धूमाभावाद्यापादनमपि केनचित्क्रियमाणं सामान्यतः स्वाचार्याभ्युपगमविरुद्धमेव प्रामाणिकपरित्यागादिरूपत्वात् । अतस्तत्राप्यपसिद्धान्तता वक्तुं शक्यैव । तदिदमाह **कथञ्चिदिति** । सामान्यतः स्वाचार्याभ्युपगतविरुद्धाचरणरूपत्वेनेत्यर्थः ॥ **एतेनेति** । उक्तरीत्या मुक्तगतौ व्यभिचारस्य परिहर्तुं शक्यत्वेनेत्यर्थः ।

श्री० — **नानुमिनुयाः** एवमपि कस्मान्नानुमानं करोषीत्यर्थः । **सततोर्ध्वगतिः** मुक्तिकालीना ॥ **सिद्धा चेदिति** । सिद्धान्तिनां भवतामिति शेषः ॥ **बाध इति** । दुःखेतत्वाभावादिति भावः ।

सु० — **उपाध्यन्तरमाशङ्कते** लोकेति ।

अनु० — लोकाकाशगतित्वं चेदुपाधिः

**अत्र लोकाकाशसंबन्धित्वमेवोपाधिः** । साध्यव्यापकत्वात् । **गतित्वं तु स्वरूपकथनम्** । **दूषयति** साधनेति ।

साधनानुगः ॥

सोऽपीत्युक्ते वदेत्किं स

**या गतिः सा लोकाकाशसंबन्धिनीति सोऽप्युपाधिः साधनमनुगच्छति व्याप्नोति । मुक्तगतावुपाधेरभावान्नेति चेन्न । तत्रापि गतित्वेन तत्साधनात् । एतेन शरीरिवृत्तित्वस्यापि साधनव्यापकत्वं समर्थितं वेदितव्यम् । तदिदमुक्तं** इत्युक्ते वदेत्किं स इति । **स्वाभिमते मोक्षे प्रमाणमुपदर्शयन्नुपसंहरति** तस्मादिति ।

तस्माद्वेदोदितो भवेत् ॥

मोक्षः

**जिनोक्ते मोक्षस्वरूपे प्रमाणाभावात् ।**

शे० — **तत्रापीति** । मुक्तगतिर्लोकाकाशसंबधिनी गतित्वादिति गतित्वेनैव लोकाकाशसंबन्धित्वसाधनादित्यर्थः ॥ **एतेनेति** । लोकाकाशसंबन्धित्वरूपोपाधेः साधनव्यापकत्वव्युत्पादनेनेत्यर्थः ॥ **समर्थितं वेदितव्यमिति** । या गतिः सा शरीरिनिष्ठेति शरीरिवृत्तित्वमपि साधनव्यापकमेव । न च मुक्तगतावुपाधेरभावान्न साधनव्यापकतेति वाच्यम् । तत्रापि गतित्वेनैव तत्साधनसौलभ्यादिति व्यभिचारपरिहारसंभवादिति भावः ।

स० — **तत्रापीति** । मुक्तगतिर्लोकाकाशसंबधिनी गतित्वादिति गतित्वेनैव लोकाकाशसंबन्धित्वसाधनादित्यर्थः ॥ **एतेनेति** । लोकाकाशसंबन्धित्वरूपोपाधेः साधनव्यापकत्वोपपादनेनेत्यर्थः । मुक्तगतिः शरीरिणि वर्तते गतित्वादिति तत्राप्युपाधेः पक्षे साधनसंभवादिति भावः ।

प० -- **एतेनेति** । गतित्वेन तत्साधनस्य कथनेनेत्यर्थः । तस्मादित्यस्यार्थः **जिनोक्तेति** ॥ **जिनोक्तमोक्षस्वरूपभङ्गः** ॥

श्री० — **एतेनेति** । मुक्तगतावपि गतित्वेन शरीरिवृत्तित्वसाधनादिति भावः ।

सु०— **उक्तदोषातिदेशेन बौद्धोक्तमपि मोक्षं दूषयति** एवमिति ।

अनु०— एवं स्वयं विष्णुर्यद्यपीशो ह्यशेषवित् ॥
चकार सौगतमतं मोहायैव चकार यत् ॥
असुराणामयोग्यानां वेदमार्गे प्रवर्तताम् ॥
अतोऽसुराधिकारत्वान्न ग्राह्यं तन्मतं क्वचित् ॥

**यथाऽप्रामाणिकत्वाज्जैनमतं न ग्राह्यमेवं** तन्मतं **सौगतमतमपि क्वचिद् ग्राह्यं न भवति । ननु परमाप्तेन बुद्धरूपेण(पिणा) विष्णुना कृतमिदं कथं न ग्राह्यमित्यत उक्तम्** स्वयमिति । **यद्यपि सौगतमतं स्वयं विष्णुश्चकार तथाऽपि न ग्राह्यमिति संबन्धः । ईश इति करणपाटवमभ्युपैति । अशेषविदिति तत्त्वज्ञानम् । अभ्युपगमे कारणं प्रमाणप्रसिद्धिं हिशब्देनाह । तर्हि कुतो न ग्राह्यमित्यत उक्तम्** मोहायैवेति । **यद्यस्मादसुराणां मोहायैव तच्चकार । अतोऽसुराधिकारत्वान्न ग्राह्यम् । अधिक्रियन्तेऽस्मिन्नित्यधिकारः । असुराणामधिकारोऽसुराधिकारस्तस्य भावस्तत्त्वं तस्मात् । असुराः कुतो मोहनीया इत्यत उक्तम्** अयोग्यानामिति । **वेदमार्ग इति पूर्वेणोत्तरेण च संबध्यते । एतदुक्तं भवति । यद्यपि भगवान्बुद्धः पटुकरणस्तत्त्वज्ञानवांश्च श्रुत्यादिसिद्धः । ग्रन्थकरणादेव विवक्षुश्च । नैतावताऽप्याप्तः । विप्रलम्भकत्वात् । यथोक्तम् 'ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम् । बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यती'ति । अतस्तदुक्तं मोक्षस्वरूपं हेयमेवेति ॥**

शे०— एवमित्यस्य 'न ग्राह्यं तन्मतं क्वचिदि'त्यनेन व्यवहितत्वेऽपि योग्यत्वात्संबन्ध इत्यभिप्रेत्य तद्व्याचष्टे **यथेति** । तत्त्वज्ञानमित्यतः परमभ्युपैतीत्यनुवर्तते । **अभ्युपगम इति** । बौद्धशास्त्रप्रणेतुर्बुद्धस्य करणपाटवतत्त्वज्ञानयोरभ्युपगम इत्यर्थः ॥ **प्रमाणेति** । श्रुत्यादिप्रमाणेत्यर्थः । अधिकारशब्दस्य अधिकृतिरधिकार इति भावसाधनत्वपक्षेऽसुराधिकृतित्वात्तस्या तदधिकारिकत्वालाभप्रसङ्गात् असुराणामधिकृतिरधिकारो यस्मिन्निति व्यधिकरणबहुव्रीह्याश्रयणस्य जघन्यत्वेनायोग्यत्वात् असुराधिकारिकत्वलाभायाधिकरणसाधनतामाह **अधिक्रियन्त इति ॥ पूर्वेणोत्तरेण चेति** । अयोग्यानामिति पूर्वेण वेदमार्ग इत्युत्तरेण चेत्यर्थः । अनेन वेदमार्गेऽयोग्यानामथापि वेदमार्गे प्रवर्ततामिति योजना सूचिता भवति **यथोक्तमिति** । भागवत इति शेषः ।

स०— **अभ्युपगम इति** । बौद्धशास्त्रप्रणेतुर्बुद्धस्य करणपाटवतत्त्वज्ञानयोरभ्युपगम इत्यर्थः । अधिकरणमधिकार इति भावव्युत्पत्तिनिरासायाह **अधिक्रियन्त इति ॥ पूर्वेणोत्तरेण चेति** । अयोग्या-

नामितिपूर्वेण, प्रवर्ततामित्युत्तरेण चेत्यर्थः। तथाच वेदमार्गे अयोग्यानां वेदमार्गे प्रवर्ततामिति योजना सूचिता भवति ।

प० — **तत्त्वज्ञानमिति** । अभ्युपैतीत्यन्वयः ॥ **अभ्युपगम इति** ॥ यद्यपीत्यादिना विष्णुकृतत्वाङ्गीकार इत्यर्थः। यद्वा करणपाटवाद्यभ्युपगम इत्यर्थः ॥ **प्रमाणेति** । 'मोहनार्थं दानवानामि'त्यादिप्रथमस्कन्धतात्पर्यायुक्तप्रमाणेत्यर्थः ॥ **अधिक्रियन्त इति** । अधिपूर्वात्कृञोऽकर्तरि च कारक इति कर्मणि घञ्प्रत्यये अचोञ्णितीति वृद्धौ रूपमिति भावः। कर्तृकर्मणोः कृतीति कर्तरि षष्ठीति भावेनोक्तम् ॥ **असुराणामिति** । असुरैरधिक्रियमाणत्वादित्यर्थः ॥ **पूर्वेणोत्तरेणेति** । वेदमार्गे अयोग्यानां, वेदमार्गे प्रवर्ततामित्यर्थः। ननु पटुकरणतत्त्वज्ञानविवक्षावत आप्तत्वादाप्तोक्तं कुतो न ग्राह्यमित्यत आह **एतदुक्तं भवतीति** ॥ **यथोक्तमिति** । प्रथमस्कन्धे तृतीयेऽध्याये ।

या० — असुराणामधिकारो यस्मिन्निति व्यधिकरणबहुव्रीह्याश्रयणं जघन्यमित्याशयेनान्यथा व्याचष्टे **अधिक्रियन्त इति** ।

श्री० — बुद्धरूपिणा विष्णुनेत्यर्थः ॥ **अभ्युपगमे कारणमिति** । तत्त्वज्ञानादिमता आप्तेन बुद्धेन प्रणीतत्वादिदं मतमवश्यमभ्युपगन्तव्यम् । एतादृशमतस्याभ्युपगन्तव्यतायाः प्रमाणसिद्धत्वादित्यर्थः। असुराणामधिकार इति कर्तरि षष्ठी । तथा चासुराणामधिकारत्वादसुरैरधिक्रियमाणत्वादित्यर्थः ॥ **विवक्षुश्चेति** । तथा च तन्मतमभ्युपगन्तव्यमित्यर्थः ।

सु० — **एवं सामान्यतो दूषितं बौद्धमतं विशेषतो निराकर्तुं तद्भेदानाह** चतुरिति ।

**अनु०** — चतुष्प्रकारं तच्चोक्तं

**व्याख्यातृमतिभेदादिति** भावः। **कथमित्यत** आह शून्यमिति ।

शून्यं विज्ञानमेकलम् ॥

अनुमेयबहिस्तत्त्वं तथा प्रत्यक्षबाह्यगम् ॥

इति

**एकलमद्वितीयं शून्यमेव तत्त्वमित्येकं मतम् । एकं विज्ञानमेव तत्त्वमित्यपरम् । अनुमेयं बहिस्तत्त्वं ज्ञानव्यतिरिक्तं यस्मिंस्तत्तथोक्तम् । अस्त्येव ज्ञानव्यतिरिक्तमपि तत्त्वं किं तु तदनुमेयमिति सौत्रान्तिकमतमन्यदित्यर्थः। तथाशब्दः समुच्चयार्थः । प्रत्यक्षं बाह्यगं यस्मिंस्तद्वैभाषिकमतं चैकमित्येवं चतुष्प्रकारमिति । एतेषु शून्यवादिनोऽतितामसाः । प्रमित-**

**सकलवस्त्वपलापात् । ततो ज्यायांसो विज्ञानवादिनः । रूपाद्यपलापेऽपि विज्ञानमात्राङ्गीकारात् । ततः सौत्रान्तिका बाह्यार्थाभ्युपगमात् । तस्य चानुमेयत्वाभ्युपगमेन वैभाषिकेभ्यः कष्टाः । ततो वैभाषिकाः । बाह्यार्थमभ्युपगम्य तस्य यथायथं प्रत्यक्षादिगम्यताऽभ्युपगमादित्येतज्ज्ञापयितुमनेन क्रमेणोद्देशः कृतः ।**

**शे०—** शास्त्रकर्तुर्बुद्धस्यैकत्वात्कथं तच्चातुर्विध्यमित्यतो विनेयव्याख्यातृमतिभेदात्तदित्याशयेनाह **व्याख्यातृमतीति ।** यद्यपि मन्दमध्योत्तमबुद्धिभेदाद्विनेयानां व्याख्यातॄणां त्रैविध्यकथनात्तदनुरोधेन मतत्रैविध्यमेव वक्तुं युक्तम् । तथाऽपि मन्दबुद्धीनां वैभाषिकसौत्रान्तिकभेदेन द्वैविध्याश्रयणात् साक्षात्परम्पराप्रयोजकोपाधीनेकीकृत्येदं चातुर्विध्यकथनमित्यवधेयम् । ननु चतुष्प्रकारत्वं प्रतिज्ञाय प्रकारपञ्चकोपदर्शनमसङ्गतमित्यत एकलमित्यस्य शून्यविज्ञानयोरद्वितीयत्वप्रतिपादनार्थतया विध्यन्तरोपदर्शकत्वाभावान्न तदनुपपत्तिरित्यभिप्रेत्य तथा योजनां दर्शयति **एकलमद्वितीयमित्यादि ।** ननु समयपादे निरस्तत्वक्रमानुरोधेन तथा प्रत्यक्षबाह्यगमिति वैभाषिकमतस्य प्रथममनन्तरं चानुमेयबहिस्तत्त्वमिति सौत्रान्तिकमतस्य तदनन्तरमेकलं शून्यमिति माध्यमिकमतस्यानन्तरमेकलविज्ञानवादिमतस्य निर्देशः कर्तुमुचितः तत्कथं शून्यादित्वेन चातुर्विध्यप्रदर्शनमित्यतो निमित्तकथनपूर्वकं निर्देशक्रममुपपादयति **एतेष्विति ॥ प्रमितसकलेति ।** ज्ञानज्ञेयरूपसकलेत्यर्थः । शून्यं स्वप्रमितमिति भावः । **रूपाद्यपलापेऽपीति ।** ज्ञेयप्रपञ्चापलापेऽपीत्यर्थः । **सौत्रान्तिकाः** ज्यायांस इत्यनुवर्तते । एवमुत्तरत्रापि द्रष्टव्यम् ।

**प०—** बहिस्तत्वमित्यस्यार्थो ज्ञानव्यतिरिक्तमिति ॥ **यस्मिन्निति ।** मत इति योज्यम् । एवमग्रेपि । निर्देशक्रमबीजमाह **एतेष्विति ॥ प्रमितसकलेति ।** शून्यं तु न प्रमितमिति तदङ्गीकारोऽप्रामाणिकाङ्गीकार इति प्रमितसकलेत्युक्तम् ॥ **रूपाद्यपलापेऽपीति ।** अर्थात्मकनामात्मकप्रपञ्चापलापेऽपीति वा शून्यवाद्युक्तरूपविज्ञानवेदनासंज्ञासंस्काररूपजगदपलापेपीति वाऽर्थः ।

**या०— प्रमितसकलेति ।** ज्ञानज्ञेयादिसकलेत्यर्थः । शून्यं तु न प्रमितमित्याशयः ॥ **रूपाद्यपलाप इति ।** ज्ञेयप्रपञ्चापलापेत्यर्थः ।

**सु०— तत्र शून्यवाद्युक्तं मोक्षमनुवदति** तत्रेति ।

**अनु०—** तत्र तु ये शून्यं वदन्त्यज्ञानमोहिताः ॥
ते मोक्षं तादृशं ब्रूयुर्निःशङ्कं मायिनो यथा ॥

तेषु चतुर्षु । ये शून्यमेव तत्त्वं वदन्ति ते मायिना यथाभूतं मोक्षमाचक्षते तादृशमेव ब्रूयुः । इयांस्तु विशेषः । मायिनो वेदः प्रमाणमित्यभिमानात् 'परमं साम्यमुपैति', 'सोऽश्नुते सर्वान्कामानि'त्यादेर्वेदाच्छङ्कमानास्तस्यान्यथाव्याख्यानं विधाय स्वाभिमतं मोक्षं प्रतिपादयन्ति । शून्यवादिनस्तु वेदप्रामाण्यानभ्युपगमादुच्छृंखलमेवेति । तदिदमुक्तं निःशङ्कमिति । अज्ञानेति तमोगुणो लक्ष्यते । अज्ञानकारणत्वात् । 'प्रमादमोहौ तमसो भवतोऽज्ञानमेव चे'ति वचनात् । तेन मोहिताः ।

शे० — **इयांस्तु विशेष इति** । दृष्टान्तापेक्षया दार्ष्टान्तिके निःशङ्कमिति विशेषोक्तिरेव । न त्वेतदन्तर्भावेनापि दृष्टान्तदार्ष्टान्तिकभावोऽवधेय इति भावः ॥ **अन्यथाव्याख्यानमिति** । गौणमुक्तिपरत्वेन व्याख्यानमित्यर्थः । तमोगुणः प्रमाणेषु चेतःप्रवृत्तिं प्रतिबध्याभासानां दोषानाच्छाद्य विपरीतज्ञानमुत्पादयतीत्युक्तरीत्या तमोगुणस्यैव विपरीतमतिरूपमोहं प्रति मूलकारणत्वात्प्रमाणजन्यज्ञानाभावरूपस्याज्ञानस्य तन्मूलकारणत्वानुपपत्त्याऽज्ञानशब्दस्य तत्परत्वानुपपत्तेः तमोगुणपर एवात्राज्ञानशब्द इत्यभिप्रेत्य कथं तत्राशक्तस्तत्परः स्यादित्यतो लक्षणयेत्याह **अज्ञानेति तमोगुणो लक्ष्यत इति** । लक्षणाबीजभूतं शक्यसंबन्धमाह **अज्ञानकारणत्वादिति** । तमोगुणस्याज्ञानं प्रति कारणत्वादित्यर्थः । यद्यपि प्रमाणजन्यज्ञानप्रागभावरूपाज्ञानस्यानादित्वान्न तमोगुणजन्यत्वं संभवति । तथाऽपि तस्याग्रिमक्षणसंबन्धरूपपरिपालनसद्भावात्तद्रूपकार्यत्वविवक्षयेयमुक्तिरिति द्रष्टव्यम् । ननु भवेदज्ञानशब्दस्य तमोलक्षकत्वं यदि तमोगुणस्य मोहकारणत्वमज्ञानस्य तमोजन्यत्वं च प्रमितं स्यादित्यतस्तमोमोहयोरज्ञानतमसोश्च कार्यकारणभावोपपादकं प्रमाणं पठति **प्रमादेति** । तथा च मुख्यार्थानुपपत्तिशक्यसंबन्धयोः प्रमाणेन सिद्धेर्युक्ता लक्षणेति भावः ।

स० — **अज्ञानेति** । अज्ञानस्य मोहकारणत्वाभावादिति भावः । नन्वज्ञानशब्देन कथं तमोगुणस्य लक्षणा । तद्बीजशक्यसंबन्धाभावादित्यतस्तमाह **अज्ञानकारणत्वादिति** । अज्ञानं प्रति कारणत्वात् तमोगुणस्येति शेषः । एतेन कार्यकारणभाव एव शक्यसंबन्ध इत्युक्तं भवति । नन्वेवमपि न लक्षणोपपद्यते । तस्य शक्यसंबन्धस्येव मुख्यार्थानुपपत्तेरपि बीजत्वात् । प्रकृते चाज्ञानशब्दस्य मुख्यार्थत्वाभ्युपगमे बाधकाभावात् । किं च शक्यसंबन्धोऽपि नास्त्येव । न च कार्यकारणभाव एव शक्यसंबन्ध इति वाच्यम् । तमोगुणस्याज्ञानं प्रति कारणत्वे मानाभावात् । इत्यतो मुख्यानुपपत्तिं वदन्नेव अज्ञानस्य तमोगुणकार्यत्वं च व्युत्पादयितुं प्रमाणवाक्यमेव पठति **प्रमादेति** । तथा चाज्ञानशब्दस्य मुख्यार्थत्वे मोहकारणत्वायोगः । तमोगुणस्य मोहकारणत्वस्योदाहृतप्रमाणसिद्धत्वेन तद्बाधादिति मुख्यार्था-

नुपपत्तिसंभवात् लक्षणा संभवतीत्युक्तं भवति । तमोगुणस्याज्ञानकारणत्वस्य उदाहृतप्रमाणसिद्धत्वेन कार्यकारणभावरूपशक्यसंबन्धश्चोपपादितो भवति ।

प० — **अन्यथाव्याख्यानमिति** । साम्यशब्दस्यैक्यपरत्वेन सर्वानित्यस्यापरममुक्तिपरत्वेन व्याख्यानं विधायेत्यर्थः । मोहिता इत्युक्तं मिथ्याज्ञानं न ह्यज्ञानमात्राद्भवतीति मूलकारणमाह **तमोगुणो लक्ष्यत इति** । लक्षणाबीजमाह **अज्ञानकारणत्वादिति** । अज्ञानं तत्त्वज्ञानाभावः ॥ **इति वचनादिति** । गीतायां चतुर्दशेऽध्याये 'सत्त्वात्सञ्जायतेऽज्ञानं रजसो लोभ एव च । प्रमादे-त्यादि । **मोहिता इति** । मिथ्याज्ञानिन इत्यर्थः ।

या० — **अन्यथाव्याख्यानमिति** । गौणमुक्तिपरत्वेन व्याख्यानमित्यर्थः । अज्ञानमात्रस्य सज्जीवसाधारणत्वान्न मोहकारणत्वमत आह **तमोगुण इति** । अजहत्स्वार्थलक्षणेयं अधिष्ठानगत-विशेषाज्ञानस्यापि मोहकारणत्वात् । लक्षणाबीजं शक्यार्थसंबन्धं दर्शयति **अज्ञानकारणत्वादिति** । अत्र यद्यप्यज्ञानशब्देन नाधिष्ठानगतविशेषज्ञानप्रागभावात्यन्ताभावौ गृहीतुं शक्यौ तयोरजन्यत्वात् । अत एव न तद्विषयं भावरूपाज्ञानम् । तस्याप्यनादित्वात् । तथापि सञ्जनसङ्गत्यादिना कथञ्चि-त्प्रसक्तस्याधिष्ठानगतविशेषज्ञानस्य प्रध्वंस एव ग्राह्य इत्याहुः । वस्तुतस्तु भावरूपस्यानाद्यज्ञानस्य ज्ञानप्रागभावस्य वा ग्रहणेऽपि न दोषः । तमोगुणोद्रेकेण तयोरग्रिमक्षणसत्त्वरूपस्य परिपालनस्य सत्वात् । परिपालनस्यैव चात्र कार्यतया विवक्षितत्वादिति ध्येयम् ।

श्री० — **यथाभूतं** ब्रह्मभावरूपं परमं साम्यमित्यादि । ब्रह्मभावस्य मोक्षत्वे परमं साम्यमुपैतीति श्रुतिविरोधः ॥ साम्यस्य भेदगर्भत्वात् । सोऽश्नुत इत्यत्र ब्रह्मणा सहेति भेदोक्तेः । **अन्यथाव्याख्यानं** व्यावहारिकभेदपरत्वरूपम् । ननु 'प्रमादमोहौ तमसो भवतोऽज्ञानमेव चे'त्यज्ञानमोहयोरुभयोरपि तमो-गुणकार्यत्वेनाज्ञानमोहिता इति **कथमुक्तं** तमोगुणमोहिता इति वक्तव्यत्वादित्यतो लक्षणया तथैवोच्यत इत्याह **तमोगुण इति** । लक्षणाबीजं संबन्धं दर्शयति **अज्ञानकारणत्वादिति** । मुख्यार्थे बाधकं लक्षणाबीजसंबन्धं च प्रमाणेन दर्शयति **प्रमादेतीत्याहुः** ।

सु० — **एवं सामान्येनोक्तं स्पष्टमाचष्टे** न किञ्चिदिति ।

**अनु०** — न किञ्चिन्मुक्त्यवस्थायामात्माऽऽत्मीयमथापि वा ॥

**किञ्चिदित्यस्यैव विवरणम्** । **आत्माऽप्यथवाऽऽत्मीयमिति** । **आत्मेति** (वि)ज्ञान-**मुच्यते** । **आत्मीयमिति** ज्ञेयम् । **तदुभयमपि मोक्षे नास्ति** ।

शे०— **विवरणमिति** । अतो न पौनरुक्त्यमिति भावः ॥ **ज्ञानमुच्यत इत्यादि** । न तु तद्व्यतिरेकेणात्मा ज्ञेयव्यतिरेकेणात्मीयं वाऽस्त्येतन्मत इत्यर्थः ।

**या०**— शून्यवादिमतेऽपि मुक्त्यवस्थायां शून्यस्यात्मनः सत्त्वादाह **आत्मेति** । ज्ञानमुच्यते । एवं च विज्ञानवादिभिर्हि मुक्त्यवस्थायां ज्ञेयाभावादुपप्लवरहितं ज्ञानमात्रमस्तीति स्वीकृतम् । शून्यवादिभिस्तूभयमपि तत्र नास्तीत्युच्यत इति भावः ।

सु०— **शून्यवादोऽपि द्विविधः । एकात्मवादोऽनेकात्मवादश्चेति । तत्र प्रथम एव मुख्यसिद्धान्तः । मन्दानां तु बुद्ध्यावारोहाय तु द्वितीयोऽवतारितः । तदुभयसाधारणमुक्त्वा विशेषं विवक्षुरादावाद्यमाह** एकस्मिन्निति ।

**अनु०** एकस्मिन्संसृतेर्मुक्ते न किञ्चिदवशिष्यते ॥

किञ्चित् **चेतनमचेतनं च । एकमुक्तौ कुत एतदित्यत आह** तदिति ।

तत्संवृत्यैव भेदोऽयं चेतनाचेतनात्मकः ॥
दृश्यते संसृतेर्ध्वंसे निर्विशेषैव शून्यता ॥

**तस्यैकस्यैवात्मनः संवृत्याऽज्ञानेनैवायं परिदृश्यमानश्चेतनाचेतनात्मको, भिद्यत इति भेदः पदार्थसमूहो, दृश्यते । न तु परमार्थो नाप्यनेकाज्ञानकल्पितः । अतस्तस्यैकस्यैवात्मनः संवृतेर्ध्वंसे जाते सति शून्यतैव पारमार्थिकी (अव)विशिष्यत इति युक्तमेवेति । निर्विशेषेति शून्यस्य स्वरूपसङ्कीर्तनम् । संवृतेर्ध्वंस एव मोक्ष इति वक्ष्यति । निर्विशेषत्वमेव विवृणोति** न सत्त्वमिति ।

न सत्त्वं नैव चासत्त्वं शून्यतत्त्वस्य विद्यते ॥
न सुखत्वं न दुःखत्वं न विशेषोऽपि कश्चन ॥

सत्त्वं **परसामान्यादिरूपम्** । असत्त्वमभावप्रतियोगित्वम् । **किंबहुना कश्चनापि विशेषो न विद्यते ।**

शे०— **आद्यमिति** । एकात्मवादमित्यर्थः । किञ्चिदित्येतद्विवरणरूपात्मात्मीयमथापि वेति पूर्वग्रन्थानुसारेण चेतनाचेतनात्मक इत्युत्तरग्रन्थानुसारेण च किञ्चिदित्येतद्व्याचष्टे **किञ्चिच्चेतनमचेतनं वेति** । ज्ञानं ज्ञेयं चेत्यर्थः । तत्संवृत्यैवेत्यत्र तस्य संवृतिरिति विग्रहः ॥ एकस्मिन्निति प्रकृतस्यैवात्मनस्तदिति परामर्शं संवृत्यैवेत्येवकारस्यात्रापि संबन्धं चाभिप्रेत्य तत्संवृत्येत्यत्रत्यतत्पदार्थमाह **तस्यैकस्यैवात्मन इति** । चेतनाचेतनात्मकस्य प्रपञ्चस्य भेदत्वाभावान्मूले तथोक्तेरनुपपत्तिमाशङ्क्य तां घटयति **भिद्यत इति** ।

**अज्ञानेनैवे**त्येवकारव्यावर्त्यं दर्शयति **न त्विति** । पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्वं तस्यैवेत्यस्यावृत्तिं चाभिप्रेत्योत्तरार्धं योजयति **अत इति** ।। **स्वरूपसङ्कीर्तनमिति** । अनेन केयं शून्यता नामेत्यतो निर्विशेषेत्युक्तमिति मूले योजनोक्ता भवति । निर्विशेषत्वमेव शून्यत्वमित्यर्थः । नन्वेवं संवृतिध्वंसदशायां न किञ्चिदवशिष्यत इत्यायातं न तु मोक्षे तत्कथं न किञ्चिन्मुक्त्यवस्थायामित्युक्तार्थविशेषकत्वमस्येत्यत आह **संवृतिध्वंस एवेति** ।। **वक्ष्यतीति** । 'नानासंवृतिवर्जितमि'त्यत्रेति शेषः । यद्यपि तत्र संवृतिध्वंसोपलक्षितं शून्यमेव मोक्ष इत्युच्यते न तु संवृतिध्वंसमात्रं मोक्ष इति ध्वंस एवेत्यवधारणं नोपपद्यते । तथाऽपि भावनाप्रकर्षसाध्यो मोक्षः संवृतिध्वंस एवेत्यभिप्रेत्येदमवधारणमिति ध्येयम् । ननु पारमार्थिकसत्त्वस्य शून्यस्वरूपभूतस्य परेणाप्यङ्गीकृतत्वान्न सत्त्वमिति कथं तन्निषेध इत्यतो नायमङ्गीकृतसत्त्वस्य निषेधः किं नामानभिमतस्यैव तस्येत्यतो नानुपपत्तिरित्यभिप्रेत्य तन्निरूपयति **परसामान्यादिरूपमिति** । आदिपदेन प्रमाणसिद्धत्वार्थक्रियाकारित्वयोः परिग्रहः । ननु च शून्यस्य शून्यत्वं तावत्परेणाभ्युपगम्यते तदेव चासत्त्वम् । अतः कथं नैव चासत्त्वमिति तन्निषेध इत्यतो नायं निर्विशेषत्वरूपशून्यत्वापरपर्यायस्यासत्त्वस्य निषेधः किंत्वत्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वापरपर्यायस्यैवासत्त्वस्येत्यतो नानुपपत्तिरित्याशयेनाह **अभावेति** । धर्माणामानन्त्यात्प्रातिस्विकरूपेण तन्निषेधस्य जन्मसहस्रेणापि कर्तुमशक्यत्वाद्विशेषतः कांश्चिद्धर्मान्निषिध्य सामान्यतो विशेषमात्रनिराकरणपरस्य मूलस्थ'नविशेषोऽपि कश्चने'त्यस्य तात्पर्यमाह **किं बहुनेति** । अयं धर्मो नास्त्ययं धर्मो नास्तीति विशिष्य किं बहुनोक्तेन शून्यातिरिक्तो न कोऽपि विशेषः शून्येऽस्तीत्यर्थः ।

स०— **आद्यम्** एकात्मवादम् । **वक्ष्यतीति** । निर्विशेषमित्यादिना ज्ञाननिवृत्त्युपलक्षितं शून्यमेव मोक्ष इति वक्ष्यतीत्यर्थः ।

प०— **भिद्यत इति भेद इति** । भिदृ्ल् विदारण इत्यस्य कर्मणि घञि पुगन्तेति गुणे भेद इति रूपसिद्धेरिति भावः । भिन्नोऽयमित्यर्थः । भावसाधनत्वे अनन्वयादेवमुक्तम् । अयमित्यस्यार्थः **पदार्थसमूह इति** । एवकारान्वयपूर्वकं शेषं पूरयति **शून्यतैवेत्यादि** । संवृतेर्ध्वंसे न किञ्चिदित्युक्ते तर्हि मोक्षः क इत्यत आह **संवृतीति** ।। **वक्ष्यतीति** । 'निर्विशेषं स्वयं भातमि'त्यादौ वक्ष्यतीत्यर्थः । तत्र संवृतिवर्जितमिति संवृतिध्वंसोपलक्षितं शून्यं मोक्ष इत्युक्तावप्युपलक्षणार्थं भावनाद्युपयोग इति तत्रैव तात्पर्यात् संवृतिध्वंसो मोक्ष इति वक्ष्यतीत्युक्तम् ।। **परसामान्येति** । सत्ता जातिर्वा तद्व्याप्यार्थक्रियाकारित्वादिर्वा नेत्यर्थः । ननु सत्त्वराहित्यमेवासत्त्वं तथाच सत्त्वं नेत्युक्त्वा कथमसत्त्वमपि नेत्युच्यते व्याघातादित्यत आह **असत्त्वमभावप्रतियोगित्वमिति** ।

**या०**— नन्वेवं संवृतिध्वंसदशायां न किञ्चिदवशिष्यत इत्यागतं न मोक्ष इत्यत आह **संसृतिध्वंस एवेति** ॥ **वक्ष्यतीति** । नानासंवृतिवर्जितमित्यत्रेति शेषः । यद्यपि तत्र संवृतिध्वंस एव मोक्ष इति नोच्यते किन्तु संवृतिध्वंसोपलक्षितं शून्यमेव मोक्ष इति । तथाऽपि भावनासाध्यो मोक्षः संवृतिध्वंसरूप एवेति तत्राभिप्रेतत्वादत्रावधारणोपपत्तिरिति ध्येयम् । ननु पारमार्थिकं शून्यस्वरूपभूतं परेणाङ्गीकृतमतः कथमेतदित्यत आह **परसामान्यादिकमिति** । आदिपदेन प्रमाणसिद्धत्वार्थक्रिया-कारित्वादिरूपस्य संग्रहः । ननु परेण शून्यस्य शून्यत्वं तावदङ्गीक्रियते तदेव चासत्त्वमतः कथं नैव चासत्त्वमित्युक्तमित्यत आह **अभावप्रतियोगित्वमिति** । तथा चात्र निषिध्यमानमसत्त्वमत्यन्ताभाव-प्रतियोगित्वरूपमिथ्यात्वापरपर्यायं, न निर्विशेषत्वरूपशून्यत्वापरपर्यायमिति भावः ॥

**सु०**— **ननु मोक्षस्तावदसन्न भवति । सदा संसारापत्तेः । अतः सता मोक्षेण सविशेषं शून्यमित्यत** आह निर्विशेषमिति ।

> **अनु०**— निर्विशेषं स्वयं भातं निर्लेपमजरामरम् ॥
> शून्यं तत्त्वमसंबाधं नानासंवृतिवर्जितम् ॥
> अशेषदोषरहितं मनोवाचामगोचरम् ॥
> मोक्ष इत्युच्यतेऽसद्भिः

---

**शून्यं तत्त्वमेवासद्भिर्मोक्ष इत्युच्यते । न तु शून्यातिरिक्तो मोक्षोऽस्ति । अतो न तेन सविशेषत्वम् । तर्हि सर्वदा मोक्षभावाच्छून्यभावनादेर्वैयर्थ्यमित्यतो निर्विशेषमित्याद्युक्तम् । स्वयंभातमित्यस्यैव विवरणं मनोवाचामगोचरमिति** । निर्लेपं **धर्माधर्मरहितं अजरं च तदमरं च** अजरामरम् । संबाधो **वस्त्वन्तरोपमर्दः । असंबाधमद्वितीयमिति यावत् । दोषाः कामादयः । न, केवलं शून्यं, मोक्षः किन्तु नानासंवृतिवर्जितत्वाद्युपलक्षितम् । उपलक्षणनिष्पत्तये च भावनाद्युपयोग इति ।**

**शे०**— शून्यभावनाऽऽदेरित्यादिपदेन शून्यज्ञानपरिग्रहः । विशेषणं विशेष्येण बहुलमित्यत्र बहुलग्रहणसामर्थ्याद्विशेषणयोरेव परस्परमयं समास इत्याशयेनाह **अजरं च तदमरं चेति** ॥ **वस्त्वन्तरोपमर्द इति** । वस्त्वन्तरेणोपमर्द इत्यर्थः । ननु शून्यस्यास्त्वेवंविधत्वं तथाऽपि शून्यतत्त्व-रूपमोक्षस्य सर्वदा भावाच्छून्यभावनाऽऽदेर्वैयर्थ्यशङ्कायाः कथं परिहार इत्यत आह **न केवलमिति** ।

**स०**— बहुव्रीहेरन्यपदार्थप्रधानत्वेन जघन्यत्वात्तत्परित्यागेनोत्तरपदार्थप्रधानकर्मधारयमेवाह **अजरं चेति** ।

प॰ — **नानासंवृतिवर्जितत्वादीति ।** वर्जितपदेन ध्वंसो ग्राह्यः ॥ **भावनादीति ।** बौद्धागमश्रवणमननवैराग्याद्युपयोग इत्यर्थः ।

या॰ — **वस्त्वन्तरोपमर्द इति ।** वस्त्वन्तरेणोपमर्द इत्यर्थः । अज्ञाननिवृत्त्यादीत्यत्रादि-पदेन तत्कार्यप्रवाहनिवृत्तिर्ग्राह्या ।

श्री॰ — **उपमर्दः** संबन्धविशेषः ।

सु॰ — **अज्ञाननिवृत्त्याद्युपलक्षितं शून्यमेव मोक्ष इत्येतत्कुत इत्यत आह** नानेति ।

अनु॰ — नानासंवृतिदूषितम् ॥
संसृत्यवस्था विज्ञेया

**नानासंवृतिभिर्दूषितं शून्यमेव संसारावस्था विज्ञेया यतोऽतस्तद्विपरीतं शून्यमेव मोक्ष इति युक्तम् ।**

एतदुक्तं भवति । शून्यं तत्त्वं स्वतो निर्विशेषमेकमेव । तस्य परमसूक्ष्मस्य वाङ्मनसा-तीतस्य स्वप्रकाशस्यावरणविक्षेपाद्यनेकशक्तिमत्या मूलसंवृत्या कर्तृत्वभोक्तृत्वशक्तिमदहङ्कारो-पाधिवशात्किञ्चित्स्थूलता जायते, ततः सद्द्वितीयत्वेन सविशेषतायां स्थूलता सम्पद्यते । ततो मनोवचनगोचरत्वे जाते विधिनिषेधगोचरत्वेन सलेपत्वम् । रागादिदोषसंसर्गश्च । ततो देहेन्द्रियान्तःकरणविषयसंबन्धे स्थूलतरता भवति । ततो ममकारवतो दुःखादिमत्त्वे स्थूल-तमत्वमित्येवं संवृत्या तत्कार्यत्वात्संवृतिसंज्ञकैरहङ्कारादिभिश्च संवलितं शून्यमेव संसारः । भावनाप्रकर्षादिना मूलसंवृतौ ध्वस्तायां तत्कार्यप्रवाहे च विलीने तदुपलक्षितं शून्यमेव मोक्ष इति ।

शून्यमेव चेन्मोक्षः संसारश्च । तदा मोक्षसंसारशब्दयोः पर्यायत्वमित्यादिकमापद्यते इत्येतदपि चोद्यमनेनैव परिहृतमित्याशयवानाह संवृत्यैवेति ।

संवृत्यैव विशिष्यते ॥
स्थितया ध्वस्तया चैव संसृतिर्मोक्ष इत्यपि ॥

**यद्यपि शून्यमेव संसारो मोक्षश्च । तथाऽपि संसृतिरिति मोक्ष इत्यपि विशिष्यत एव । कथम् । स्थितया च ध्वस्तया च संवृत्यैव ।** उपलक्षणभेदादर्थभेदे सति न शब्दपर्यायत्वा-दिकमिति भावः ॥

**शे०** — अज्ञाननिवृत्त्यादीत्यादिपदेन वक्ष्यमाणतत्कार्यप्रवाहनिवृत्तिपरिग्रहः । शून्यं तत्त्वमित्यस्यात्रावृत्तिं यतोऽत इत्यस्योपस्कारं चाश्रित्योक्तोपपादकतया वाक्यं योजयति **नानेति** ।

ननु नानासंवृतिदूषितस्य शून्यतत्त्वस्यैव संसारत्वे सिद्धे भवेदज्ञाननिवृत्त्याद्युपलक्षितस्य शून्यस्यैव मोक्षत्वं । तदेव कुतः । किंच शून्यतत्त्वस्यासंबाधमित्यद्वितीयत्वस्य निर्विशेषमिति निर्विशेषत्वस्य चोक्तत्वात्कथं तद्विरुद्धं सदद्वितीयत्वं सविशेषत्वं च स्यात्संवृतेरेकत्वात्तन्नानात्ववचनमपि न युक्तम् । यथाकथञ्चिन्नानात्वाश्रयणेऽपि कास्ता नानाभूताः संवृतयः किञ्च ताभिः शून्यस्य दूषणमित्यतो द्वितीयत्वसदद्वितीयत्वयोर्निर्विशेषत्वसविशेषत्वयोश्च स्वाभाविकत्वौपाधिकत्वाभ्यामविरोधं गौणमुख्यभेदेन संवृतिनानात्वं तादृशसंवृतिस्वरूपं तद्दूषणं च शृङ्गिग्राहिकया दर्शयन्नेव नानासंवृतिदूषितस्य शून्यस्य संसारत्वं व्यवस्थापयितुमाह **एतदुक्तं भवतीति ॥ परमसूक्ष्मस्येति** । यद्यपि परमते शून्यस्यापरिच्छिन्नत्वान्न परमसूक्ष्मत्वं किञ्चित्स्थूलत्वादिकं वाऽस्तीति न तदुक्तिर्युज्यते । तथाऽपि स्वभावतो वस्त्वन्तरोपमर्दराहित्याभिप्रायेण इयं परमसूक्ष्मत्वोक्तिरुपाधिवशात्किंचिद्वस्त्वन्तरोपमर्दस्तदधिकवस्त्वंन्तरोपमर्दाद्यभिप्रायेण किञ्चित्स्थूलत्वाद्युक्तिश्चेत्यविरोध इति द्रष्टव्यम् । अहङ्कारादिभिरित्यत्रादिपदेन देहेन्द्रियादिपरिग्रहः ॥ **भावनाप्रकर्षादिनेति** । चतुर्विधभावनाप्रकर्षेण शून्यपरिज्ञानेन चेत्यर्थः ॥ **तत्कार्येति** । अहङ्कारादिरूपतत्कार्येत्यर्थः । पर्यायत्वादिकमित्यत्रादिपदेन तत्प्रयुक्तसहप्रयोगानुपपत्तेर्वैयर्थ्यस्य च परिग्रहः । कथमनेन पर्यायत्वादिपरिहार इत्यत आह **उपलक्षणभेदादिति** । पाचकपाठकादाविवेति शेषः ।

**प०** — **अज्ञानेति** । संवृतीत्यर्थः । आदिपदेन तत्कार्यनिवृत्तिग्रहः । ननु निर्विशेषादिरूपशून्यस्य कर्तृत्वभोक्तृत्वादिनानावस्थापन्नत्वादिकं कथमित्यत आह **एतदुक्तं भवतीति ॥ परमसूक्ष्मस्येति** । अप्रतिघरूपस्येत्यर्थः । यद्वा स्थौल्यादिपरिमाणशून्यस्येत्यर्थः । स्वत इति सर्वत्रानुषज्यते ॥ **वाङ्मनसेति** । अचतुरविचतुरेत्यादिसूत्रेण निपातनात्साधुः ॥ **आवरणेति** । आवरकशक्तिः स्वरूपाच्छादनशक्तिः । विक्षेपशक्तिः व्यामोहनशक्तिः । नानाविधतया भासकत्वशक्त्यादिरादिपदार्थः । संवृत्या विलसितो यः कर्तृत्वादिशक्तिमान्योऽहङ्कारः स एवोपाधिः तद्वशादित्यर्थः ॥ **भावनाप्रकर्षादिनेति** । शून्यमहमित्युपासनोत्कर्षेण आदिपदोक्ततपआदिना चेत्यर्थः । शङ्कते **शून्यमेव चेदिति ॥ इत्यादिकमिति** । भावनावैयर्थ्यादिरादिपदार्थः ॥ **उपलक्षणेति** । संवृतिध्वंसरूपोपलक्षणभेदादित्यर्थः ।

**या०** — **परमसूक्ष्मस्येति** । स्वभावतो वस्त्वन्तरोपमर्दरहितस्येत्यर्थः । अत एव किञ्चित्स्थूलतादिशब्दैरप्युपाधिशब्दाद्वस्त्वन्तरोपमर्द एव व्याख्येयः । तेन परैः शून्यस्यापरिच्छिन्नत्वाङ्गीकारात्कथमेतदिति शङ्काऽनवकाशः ॥ **उपलक्षणभेदादिति** । पाठकपाचकादाविवेति भावः ।

सु०— एवमेकात्मवादमुपन्यस्यानेकात्मवादं दर्शयति केचिदिति ।

अनु०— केचित्त्वन्यथा प्राहुः

तेषु शून्यवादिषु । अन्यथा एकात्मवादिमतात् । कथमित्यत आह संवृत्यैवेति ।

संवृत्यैव त्वनेकधा ॥

अवच्छिन्नं महाशून्यं नानापुद्गलशब्दितम् ॥

तुशब्देनैकात्मवादं स्वाभाविकानेकात्मवादमुपाधिकृतानेकात्मवादं च व्यावर्तयति । संवृत्या नानाभूतया संवृत्यावच्छिन्नमेव न तु स्वभावतः । संवृतेस्तत्कृतावच्छेदानां च मिथ्यात्वान्नानापुद्गलशब्दितमित्युक्तं भवतीति शेषः ।

ततः किमित्यत आह यस्येति ।

यस्य शून्यैकरसताज्ञानात्सा त्वपगच्छति ॥

स पुद्गलत्वनिर्मुक्तो महाशून्यत्वमेष्यति ॥

संवृत्या यस्त्ववच्छिन्नो दुःखान्यनुभवत्यलम् ॥

इति

तत्रानेकेष्वात्मसु यस्यात्मनस्तु शून्यैकरसताज्ञानाच्छून्याद्वितीयताज्ञानात्सा संवृतिरपगच्छति मूलसंवृतिर्व्यावृत्ता भवति । अन्या नश्यति । स पुद्गलत्वात्कर्तृत्वादिरूपान्निर्मुक्तो महाशून्यत्वमेष्यतीव । यस्तु संवृत्याऽवच्छिन्न आत्मा स पुद्गलभावेन दुःखान्यलं परमार्थबुद्ध्यैवानुभवति । इति प्राहुरिति संबन्धः ।

शे०— नानाभूतयेति । अन्यथैकस्य जीवस्य तत्त्वज्ञानेन मूलसंवृतिनाशे सर्वेषां मोक्षप्रसङ्गः । अनाशे च नैकस्यापि मोक्ष इत्यतिप्रसङ्गादिति भावः । संवृत्यैवेत्येवकारो भिन्नक्रम इति भावेनाह अवच्छिन्नमेवेति । तत्प्रयोजनमाह न त्विति । नानापुद्गलरूपमित्यनुक्त्वा नानापुद्गलशब्दितमित्युक्तौ निमित्तं दर्शयन्योजयति संवृतेरिति । साकाङ्क्षत्वान्मूलेऽपेक्षितं पूरयति भवतीति शेष इति । मूले सेति तच्छब्दः संवृतितदितरसाधारणः । अपगच्छतीत्येतदप्यपसरणनाशपरमित्यभिप्रेत्य योजयति मूले संवृतिरित्यादि ॥ व्यावृत्ता भवतीति । भीरुभटवदपसरतीत्यर्थः । अन्यथा सर्वमोक्षप्रसङ्गादिति भावः ॥ अन्येति । प्रातिस्विकीत्यर्थः । पुद्गलत्वादित्यस्य विवरणं कर्तृत्वादिरूपादिति । ननु महाशून्यत्वस्य स्वाभाविकत्वेन सर्वदा सत्त्वात्कथमेष्यतीत्युक्तिरित्यत आह एष्यतीवेति ।

स०— एष्यतीवेति । महाशून्यत्वरूपायाः सर्वदा सत्त्वादेष्यतीत्ययुक्तमित्यत इवशब्दप्रयोगः ।

प०— अनेकधेति श्रवणादुक्तम् **नानाभूतयेति** । बहुविधया प्रतिस्विकरूपयेत्यर्थः । संवृत्यैवेत्येवकारान्वयमाह **अवच्छिन्नमेवेति** । शब्दितपदस्वारस्यमाह **संवृतेरिति** । शब्दितमित्यत्र शेषमाह **भवतीति शेष इति** ॥ **व्यावृत्ता भवतीति** । शैवालवदिति भावः ॥ **अन्येति** । अवच्छेदकत्वेन प्रातिस्विकं विद्यमानेत्यर्थः ।

या०— **नानाभूतयेति** । अन्यथैकस्य जीवस्य तत्त्वज्ञानेन मूलसंवृतिनाशे सर्वेषां मोक्षप्रसङ्ग इति भावः । न तु स्वभावतः । संवृतेः तत्कृतावच्छेदानां च मिथ्यात्वादिति भावः । नानापुद्गलतां यातीत्यनुक्त्वा शब्दितामिति किमर्थमुक्तमित्यतोऽभिप्रायमाह **संवृतेरित्यादिना** ॥ **व्यावृत्तेति** । भीरुभटवदपसरतीत्यर्थः । अन्यथा सर्वमोक्षप्रसङ्ग इति भावः ॥ **अन्यथेति** । प्रातिस्विकेत्यर्थः । महाशून्यस्य स्वभाविकत्वादाह ॥ **एष्यतीवेति** । अनाद्यनिर्वाच्यस्येत्यत्र प्रागभावादिव्यावृत्त्यर्थं भावत्वमपि विवक्षितमिति ज्ञातव्यम् ।

श्री०— **एकात्मवादम्** एकजीववादम् । स्वाभाविकात्मवादमिति सिद्धान्तरीत्य भास्करमतानुसारेणोक्तमुपाधिकृतानेकात्मवादमिति । तन्मते आत्मभेदस्यौपाधिकत्वात् । संवृत्यावच्छिन्नमेव नानापुद्गलशब्दितमिति संबन्धः । न तु स्वभावतः इत्यत्र हेतुः **संवृतेरिति** ॥ **तत्कृतावच्छेदानां** संवृतिकृतभेदानाम् । भास्करमत इव सत्योपाधिकृतसत्यभेदवादो नाभ्युपगत इति भावः । शब्दितमित्येतदनूद्य व्याख्याति **इत्युक्तमिति** । अध्याहार्यमाह **भवतीति शेष** इति ।

**सु० — शून्यवाद्यभिमतमोक्षनिरासेन मायावाद्यभिमतोऽपि निरस्तो भविष्यतीत्याशयेन यदुक्तं मायिनो यथेति सिद्धान्तसाम्यं तदुपपादयति** (इत्ये)एवमिति ।

**अनु०—** एवं मायिनश्चाहुरेकजीवत्ववादिनः ॥
बहुजीवमताश्चेति

**एकजीवत्ववादिनो बहुजीवमताश्चेति द्विविधमायिनश्चैवं द्विविधशून्यवादिवदेव मोक्षस्वरूपमाहुः । एको जीवो यस्मिंल्लोके स तथोक्तस्तस्य भावस्तत्त्वं तद्वदन्तीत्येकजीवत्ववादिनः । बहवो जीवा यस्मिंस्तत्तथोक्तं बहुजीवमतं येषां ते बहुजीवमताः ।**

**ननु शून्यवादिनः संवृतिनिबन्धनः संसारस्तन्निवृत्तिश्च मोक्ष इत्याचक्षते । मायावादिनस्तु मायाहेतुकोऽयं संसारस्तन्निवृत्तिश्च मोक्ष इति । अतो वैषम्यमित्यत आह** मायेति ।

माया तेषां तु संवृतिः ॥

या शून्यवाद्यभ्युपगता संवृतिः सैव तेषां मायिनां माया । अनाद्यनिर्वाच्यत्वलक्षणस्य आवरणविक्षेपादेः कार्यस्य चैकत्वादिति भावः ॥ शून्यवादिनः शून्यं तत्त्वमाहुर्मायावादिनस्तु ब्रह्म । अतोऽस्ति वैषम्यमित्यत आह निर्विशेषत्वेति ।

निर्विशेषत्ववाचैव शून्यं ब्रह्मेति नो भिदा ॥

शून्यं ब्रह्मेति चैनयोर्भिदा नो विद्यते । कुतः निर्विशेषत्वस्य वाचैव द्वाभ्यां द्वयोर्निर्विशेषत्वेनोक्तत्वात् । वैधर्म्यं खलु वस्तुनो भेदकम् । तच्चात्र नास्तीति द्वयोरपि सम्मतम् । अतः शब्दभेदमात्रं न वस्तुभेद इति ।

शे०— मूले एकजीववादिन इति वक्तव्ये एकजीवत्वेति त्वप्रत्ययो व्यर्थ इत्याशङ्क्य तत्सार्थक्यमाह **एको जीव इत्यादि** । मायासंवृत्योरैक्यलाभाय यत्तच्छब्दाध्याहारेण योजयति **या शून्यवाद्यभ्युपगतेति** ॥ **अनाद्यनिर्वाच्यत्वलक्षणस्येति** । अत्र भावत्वमपि संग्राह्यम् । ततश्चानादिभावत्वे सति अनिर्वाच्यत्वरूपलक्षणस्येत्यर्थः । अन्यथा प्रागभावस्याप्यनाद्यनिर्वाच्यतयाऽज्ञानत्वप्रसङ्गादिति ध्येयम् ॥ **आवरणविक्षेपादेरिति** । स्वरूपाच्छादनमावरणम् । अतदाकारप्रतिभासो विक्षेपः । आदिपदेन (नानाविधतया भासकत्वादिशक्तिः) । **द्वाभ्यां** शून्यवादिमायावादिभ्यां । **द्वयोः** शून्यब्रह्मणोः । ननु निर्विशेषत्वोक्तिर्न भेदाभावसाधिकेति कथं तस्यास्तत्साधकतया भाष्यकारीयोक्तिरित्यतो न तस्यास्तत्साधकतया अत्रोपन्यासः किन्तु तत्साधकभेदकधर्माभावस्यासिद्धिपरिहारकतयैवेत्याशयेन तदुपपादकतया तदुपयोगमाह **वैधर्म्यमिति** ।

स०— **द्वाभ्यां** शून्यवादिमायावादिभ्याम् । **उभयोः** शून्यब्रह्मणोः ।

प०— **यदुक्तमिति** । एतन्मतोपन्यासोपक्रमभागे उक्तमित्यर्थः ।

सु०— अथ मतम् । सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्मेवेति श्रुत्यैव सत्यादिलक्षणं ब्रह्म सर्वतो व्यावर्तितं तत्कथं शून्यं ब्रह्मेति नो भिदेत्युच्यते इति । सत्यम् । सदादिलक्षणैर्ब्रह्म श्रुत्या सर्वतो व्यावर्तितमिति । तत्तु मायावादिमते नोपपद्यत इत्याशयवानाह सदिति ।

अनु० सच्चित्सुखादिकं चैव किं कुतोऽखण्डवादिनः ॥

सदादिकं च किमेव न किमपीत्यर्थः । तथा हि । सदादिकं किं ब्रह्मस्वरूपमुतान्यत् । आद्ये न लक्ष्यलक्षणभावः । अनेकपदवैयर्थ्यं च । न द्वितीयः । अखण्डवादित्वात् । यथा भवतां सत्यत्वादिकं ब्रह्मस्वरूपमपि तल्लक्षणं तथा ममापि किं न स्यादिति चेन्न । अस्माभिः विशेषशक्त्या तन्निर्वाहाङ्गीकारात् । परेण तु कुतो निर्वाह्यमेतत् । मयापि विशेषोऽङ्गीक्रियत इति चेत् । न । अखण्डवादित्वात् ।

**शे०**— निर्विशेषत्ववचनं सिद्धान्त इव स्वमतेऽपि भिन्नधर्माभावाभिप्रायमेव न तु सर्वथा धर्माभावाभिप्रायमतो भेदकधर्मसद्भावाद्युक्तः शून्यब्रह्मणोर्भेद इति गूढाभिसन्धिः शङ्कते **अथ मतमिति** । लक्ष्यलक्षणभावनिर्वाहकविशेषसद्भावात्सिद्धान्ते तदुपपत्तावप्यखण्डवादित्वात्परस्य न तन्मते तदुपपत्तिरिति गूढाभिसन्धिरेव परिहरति **तथाहि सदादिकमित्यादिना** ॥ **न लक्ष्यलक्षणभाव इति** । तत्प्रयोजकस्य प्रसिद्धाप्रसिद्धविभागस्याभावादिति भावः । पूर्ववादी स्वाशयमुद्धाटयति **यथेति** । सिद्धान्त्यपि तमुद्धाटयति **अस्माभिरिति** ॥ **अखण्डेति** । अखण्डत्वस्य निर्विशेषत्वरूपत्वादिति भावः ।

**प०**— सत्यत्वादिकं स्वरूपं सदेव व्यावर्तकमिति मनसि निधाय शङ्कते **अथ मतमिति** । एवकारान्वयेनानुवादः ॥ किमेवमिति मनोगतं शङ्कते **यथेति** ।

**या०**— गूढाशयः शङ्कते **अथेति** । अविदिताशय इव विकल्पयति **सदादिकं किमिति** । पूर्वपक्षी स्वाशयमुद्धाटयति **यथा भवतामिति** ॥ **तथा ममापीति** । तथा च मदीयं निर्विशेषत्ववचनं भिन्नधर्माभावाभिप्रायकमेवेति तदाशय इति ध्येयम् । एवं च तच्चात्र नास्तीति द्वयोरपि संमतमित्युक्तत्वादथ मतमिति शङ्कायाः कथमुत्थानमिति चोद्यानवकाश इति ज्ञातव्यम् ।

**सु०— यद्यपि सत्यादिपदप्रतिपाद्यवस्तुनि न भेदः । तथाऽपि** व्यावर्त्यानामसत्त्वा**दीनामस्त्येव । अतस्तद्व्यावृत्तिप्रयोजनानि तद्वाचीनि** वाऽनेकानि **पदानि ब्रह्मणि वर्तन्त इत्यभ्युपगमात्कथमस्मन्मते श्रुत्यर्थानिर्वाह इत्यत आह** व्यावर्त्येति ।

अनु० — व्यावर्त्यमात्रभेदस्तु विद्यते शून्यवादिनः ॥

**व्यावर्त्यमात्रभेदस्त्वित्येकदेशोत्कीर्तनेन सकलमप्युक्तमुपलक्षयति । एषा प्रक्रिया समस्ता शून्यवादिनोऽपि मतेऽस्त्येवातो नैतयाऽपि ब्रह्मशून्ययोर्भेदो वक्तुं शक्यते । शून्यवादिनोऽपि विद्यत इति किमापादनेनोच्यते । नेत्याह** अनृतादेरिति ।

अनृतादेरपोहं तु स्वयमेव हि मन्यते ॥

**सत्यादिपदार्थत्वेन शून्यविशेषणत्वेन चेति शेषः । मन्यते** शून्यवादी । **अपोहपदार्थवादिनो बौद्धा इति प्रसिद्धमेवेति हिशब्देनाह । 'जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यदि'ति प्रसिद्धं च ।**

**आस्तां** तावद्ब्रह्मशून्ययोर्विशेषप्रतिपादनं **निर्विशेषयोः । विशेषोऽस्तीति प्रतिज्ञैव तावदेषा नाङ्गं धत्ते । व्याहतत्वादिति भावेनाह** निर्विशेषत्वत इति ।

निर्विशेषत्वतो नैव विशेषो ब्रह्मशून्ययोः ॥

**नैव प्रतिज्ञातुं शक्यत इति शेषः ।**

**शे०**— 'न व्यावृत्त्या प्रयोजनमि'ति जन्माधिकरणे निरस्तपक्षाश्रयणेनाह **व्यावृत्तिप्रयोजनानीति** । यद्यसत्यविशेषणमित्यहिकुण्डलाधिकरणेऽपोहवादाश्रयणेनाशङ्क्य निरस्तपक्षाश्रयणेनाह **तद्वाचीनि वेति** ॥ **सकलमिति** । यद्यपीत्यादिना शङ्कितं सकलमपीत्यर्थः । स्वयमेव हीति भाष्ये हिशब्दस्यानर्थक्यमाशङ्क्य सत्यादिपदार्थत्वेनानृतादेरपोहं स्वयमेव मन्यत इति शून्यविशेषणत्वेन च मन्यत इति प्रतिज्ञातप्रमेयद्वयोपपादकप्रसिद्धिद्योतनार्थत्वान्नानर्थक्यमित्याशयेन प्रथमप्रतिज्ञातप्रमेयोपपादकप्रसिद्धिप्रदर्शनपूर्वकं तत्सूचकतया हिशब्दं योजयति **अपोहेति** । अनन्तरप्रतिज्ञातप्रमेयोपपादकप्रसिद्धिपूर्वकं तत्सूचकतयाऽपि हिशब्दं योजयति **जाड्येति** । इति प्रसिद्धं चेत्यस्य हिशब्देनाहेत्यनुवृत्तेनान्वयः । 'निर्विशेषत्ववाचैव शून्यं ब्रह्मेति नो भिदे'ति पूर्वग्रन्थेन 'निर्विशेषत्वतो नैव विशेषो ब्रह्मशून्ययोरि'त्यस्य गतार्थतामाशङ्क्य परिहरति **आस्तामिति** । उक्तमर्थं मूलारूढं कर्तुमपेक्षितं पूरयति **नैवेत्यादि** ।

**प०**— पुनः शङ्कते **यद्यपीति** ॥ **अस्त्येवेति** । भेद इत्यनुकर्षः ॥ **तद्वाचीनीति** । अपोहवादिमत इवासत्यादिव्यावृत्तिवाचीनि वेत्यर्थः ॥ **सकलमपीति** । यद्यपीत्यादिनोक्तमित्यर्थः ॥ **अङ्गमिति** । स्वरूपं न धत्त इत्यर्थः ।

**या०**— **अपोहेति** । घटादिपदेष्वप्यघटादिव्यावृत्त एव वाच्य इति बौद्धैरङ्गीकारादिति भावः । इति प्रसिद्धं चेत्यस्य हिशब्देनाहेत्यनेनान्वयः ।

**श्री०**— **एषा प्रक्रियेति** । तच्चित्सुखादिकमित्युक्ता यद्यपीत्यादिनोक्ता च प्रक्रियेत्यर्थः ।

**सु०**—**ननु मायावादिना वेदस्य प्रामाण्यं स्वतः प्रामाण्यं नित्यत्वं चाङ्गीकृत्य वेदवाक्यनिर्वाहोऽयं कृतः । शून्यवादी तु वेदप्रामाण्यमेव नाङ्गीकुरुते । तत्कथमुक्तं** व्यावर्त्यमात्रेति । **तत्राह** प्रामाण्यादीति ।

**अनु०**— प्रामाण्यादि च वेदस्य फलतः सममेव हि ॥

**शब्दमात्रेण विषमम् । अर्थस्तु द्वयोरपि सम एव । तस्माद्वाक्यार्थनिर्वाहोऽपि सम इत्युक्तमुपपन्नम् । वेदवाक्यपुरस्कारस्तु मायावादिनां छद्ममात्रं प्रमेयं तु समानमेवेति भावः ।**

**कथं फलतः समानमित्यत आह** अतत्त्वावेदकमिति ।

अतत्त्वावेदकं यस्मात्प्रमाणं तेन कथ्यते ॥

**वेद इति वर्तते । सर्वमपि प्रमाणमिति वा ।** तेन **मायावादिना** । कथ्यते **अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेत्यादाविति शेषः ॥ अतत्त्वावेदकत्वेऽङ्गीकृतेऽपि कुतः सममित्यत आह** अतत्त्वावेदकत्वमिति ।

अतत्त्वावेदकत्वं यदप्रामाण्यं सतां मतम् ॥

यत् यस्मात् सतां विदुषाम् । **नानाविधानि लक्षणानि प्रणयन्तोऽपि परीक्षका अतत्त्वावेदकव्यावृत्तये प्रयतन्त एव । अनुभूतिः प्रमाणमिति** वदताऽप्यतत्त्वावेदकाभावाभिमानेनैव न **प्रयत्नः कृतः । न पुनरतत्त्वावेदकस्यापि प्रामाण्याभिप्रायेण । अतो** मायावादिनाऽभ्युपगतं **वेदप्रामाण्यं नामाप्रामाण्यमेव । प्रामाण्याभावे च तत्स्वतस्त्वं दूरोत्सारितम् । नित्यत्वव्युत्पादनं च व्यर्थमेवेति ।**

**श्रे०** मूले प्रामाण्यादीत्यादिपदसंग्राह्यप्रदर्शनं **स्वतःप्रामाण्यमित्यादि** ॥ **नित्यत्वं चेति** । यद्यपि ध्वंसाप्रतियोगित्वरूपं नित्यत्वं न तेनाङ्गीकृतं शास्त्रयोनित्वाधिकरणे पौरुषेयत्वाभिधानात् । तथाऽप्याकाशादिसाधारणबहुकालावस्थायित्वरूपनित्यत्वविवक्षया अयं ग्रन्थं इत्यवधेयम् ॥ **अयमिति** । व्यावृत्तिप्रयोजनकत्वतद्वाचकत्वरूप इत्यर्थः । **द्वयोः** मायावादिशून्यवादिनोः । सम इत्यत्र द्वयोरित्यनुवर्तते । **उक्तं** व्यावर्त्यमात्रभेद इत्याद्युक्तम् । पूर्ववाक्याद्वेदस्येत्यनुवृत्तिमर्थवशाद्विभक्तिविपरिणामं चाभिप्रेत्याह **वेद इति वर्तत इति** । तेन मायावादिना वेदो यस्मादतत्त्वावेदकं प्रमाणं कथ्यत इति योजनायां वेदपदानुवृत्तिविभक्तिविपरिणामौ उपाश्रयणीयौ भवतः । प्रत्यक्षादिप्रमाणानामतत्त्वावेदकत्वलाभश्च न भवतीत्यपरितोषाद्वस्तुस्थितिकथनाय पक्षान्तरमाह **सर्वमपीति** । अनेन सर्वमपीत्यध्याहृतेन सर्वमपि प्रमाणं यस्मादतत्त्वावेदकं कथ्यत इति योजना सूचिता भवति । अत्र पक्षे प्रमाणत्वरूपसामान्यधर्मपुरस्कारेण वेदस्यातत्त्वावेदकत्वलाभः न तु वेदत्वेन रूपेण । पूर्वयोजनायां तु तत्त्वेनैव तल्लाभ इति द्रष्टव्यम् ॥ **अविद्यावद्विषयिणीति** । अत्राविद्याशब्देनात्मानात्मनोरितरेतराध्यासपरिग्रहः । तमेतमेव लक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते इति पूर्वग्रन्थानुरोधात् । ततश्च कूटस्थे चैतन्ये बुध्यादितादात्म्याध्यासं विना प्रमातृत्वस्याभावेन प्रमाणप्रवृत्तेरसंभवात् प्रमाणान्यध्यासवत्पुरुषविषयाणि तदाश्रितानि तत्प्रयोज्यानीति यावत् । करणानां कर्तृप्रयोज्यत्वनियमात् । एवं चात्र प्रमाणप्रवृत्तेरात्मन्यनात्माध्यासपूर्वकताया उक्तत्वादविद्यावदाश्रितानां प्रमाणानां 'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्य' इति पञ्चपादिकारीत्या 'भाष्यकारेण दोषमात्रमेव विषयतोऽपि ज्ञानमिथ्यात्वे हेतुरुक्त इति विवरणग्रन्थानुरोधाच्चायथार्थज्ञानजनकत्वलाभेन प्रमाणानामतत्त्वावेदकत्वसिद्धिरुक्तग्रन्थादिति युक्त एवास्य वाक्यस्य संवादितयोपन्यास इति ध्येयम् । यादृशतादृशसत्त्वस्य प्रकृतानुपयोगित्वात्प्रकृतोपयोगितया सच्छब्दं व्याचष्टे ॥ **विदुषामिति** । तदुपपादयति **नानाविधानीति** ॥ **प्रयतन्त एवेति** । सम्यगित्यादि तद्व्यावर्तकविशेषणोपादानादिति भावः । प्रामाण्यस्वतस्त्वनित्यत्वयोरदूषणा-

द्भाष्ये न्यूनत्वमाशङ्क्य स्पष्टत्वात्तदनुक्तिरित्याह **प्रामाण्याभावे चेति** ॥ **व्यर्थमिति** । प्रामाण्यप्रयोजकनिर्दोषत्वव्युत्पादनार्थस्य नित्यत्वव्युत्पादनस्य वेदप्रामाण्यपक्षेऽर्थवत्त्वेऽपि त्वन्मते तस्यातत्त्वावेदकत्वेनाप्रामाण्यात् न प्रामाण्यप्रयोजकनिर्दोषव्युत्पादनार्थस्य नित्यत्वव्युत्पादनस्य किञ्चित्प्रयोजनमिति भावः ॥ **इति** इत्यतः परं 'स्पष्टमेवेत्यतो न भाष्ये तदुक्तिरि'ति शेषः ।

स० — **नित्यत्वव्युत्पादनमिति** । वेदस्य नित्यत्वव्युत्पादनं प्रामाण्योपपादनार्थं वाच्यं पौरुषेयत्वे पुरुषदोषनिबन्धनदोषवत्त्वापत्त्या अप्रामाण्यकारणदोषशून्यत्वाभावेन प्रामाण्यानुपपत्तेः । त्वन्मते च तस्यातत्त्वावेदकत्वेन प्रामाण्यस्यैवाभावेन कस्योपपत्त्यर्थं नित्यत्वव्युत्पादनमिति भावः ।

प० — आदिपदार्थः **तस्मादित्यादि** । निर्भेदत्वमित्यादिना वक्ष्यमाणतत्वमस्यादिवाक्यार्थनिर्वाहोपीत्यर्थः ॥ **वेद इति वर्तत इति** विभक्तिविपरिणामेनानुवर्तत इत्यर्थः । कथ्यत इत्युक्तं तत्कुत्रेत्यतस्तद्वाक्यं पठति **अविद्यावदिति** । नन्वनुभूतिः प्रमाणमिति मते शुक्तिरूप्यज्ञानस्याप्यनुभवत्वात्तत्संग्रहः कृत इति भातीत्यत आह (**अतत्वावेदकाभावाभिमानेनेति** । अनुभूतिरिति । नन्वनुभूतिः प्रमाणमिति प्रमाणलक्षणं प्रणयताऽतत्त्वावेदकस्यापि प्रामाण्यमङ्गीकृतमन्यथाऽयथार्थज्ञानव्यावृत्त्यर्थविशेषणमुपाददेत । न चैवम् । तस्मात्कथमतत्त्वावेदकव्यावृत्तये प्रयतत एवेत्युक्तमित्यत आह) ॥ **अतत्वावेदकव्यावृत्तय इति** ॥ **प्रयतन्त एवेति** । ज्ञानमात्रस्य प्रमात्वाभ्युपगमादिति भावः । तदेव व्यनक्ति **अनुभूतिरित्यादिना** ॥ **व्यर्थमेवेति** । प्रामाण्यार्थं निर्दोषताव्युत्पादनाय नित्यत्वकथनम् । प्रामाण्यस्यैवाभावे तद्व्युत्पादनं व्यर्थमेवेत्यर्थः ।

या० — **वेद इति वर्तत इति** । विभक्तिपरिणामेनेति शेषः ॥ **अविद्यावद्विषयाणीति** । अत्राविद्याशब्देनात्मानात्मनोरितरेतराध्यासो ग्राह्यः । 'तत एतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्त' इति पूर्वमुक्तत्वात् । तथा च कूटस्थे चैतन्ये बुद्ध्यादितादात्म्याध्यासं विना प्रमातृत्वस्याभावेन प्रमाणप्रवृत्तेरसंभवात्प्रमाणान्यध्यासवत्पुरुषविषयाणि तदाश्रितानि । तत्प्रयोज्यानीति यावत् । करणानां कर्तृप्रयोज्यत्वनियमात् । एवं चात्र प्रमातृप्रवृत्तेरात्मन्यनात्माध्यासपूर्वकताया उक्तत्वेनाध्यस्तपदार्थविषयकत्वमप्यर्थादुक्तमेवेत्यतत्त्वावेदकताऽपि प्रमाणानामभिप्रेतैवेति भावः । न च तत्त्वावेदकं यत्तदप्रमाणमिति नैयायिकादीनामपि मतम् । न हि ते सन्तोऽत आह **विदुषामिति** । परीक्षकाणामित्यर्थः ॥ **व्यर्थमेवेति** । प्रामाण्यप्रयोजकनिर्दोषताव्युत्पादनाय हि नित्यत्वं व्युत्पादनीयम् । प्रामाण्यस्यैवाभावे तद्व्युत्पादनं व्यर्थमित्यर्थः ।

**श्री०— तत्कथमिति** । तथा चैषा प्रक्रिया समानेत्युक्तमयुक्तमिति भावः । ननु प्राभाकरेणातत्त्वावेदकस्य प्रामाण्यमङ्गीकृतमेव । अनुभूतिः प्रमाणमिति प्रमाणलक्षणे तद्व्यावर्तकविशेषणादानादित्यत आह **अनुभूतिः प्रमेति** ॥ **अतत्त्वावेदकाभावाभिमानेनेति** । अयथार्थज्ञानमेव नास्तीत्यभिमानेनेत्यर्थः ।

**मु०— नन्वतत्त्वावेदकत्वेऽपि यस्य विषयो ब्रह्मज्ञानात्प्रागेव बाध्यते तदप्रमाणम् । यस्य तु विषयो ब्रह्मज्ञानेनैव बाध्यस्तदतत्त्वावेदकं प्रमाणमिति विभागः । वेदविषयस्तु ब्रह्मज्ञानेनैव बाध्यते । अतस्तस्य प्रामाण्यमित्याशयेनाशङ्कते** दीर्घेति ।

**अनु०—** दीर्घभ्रान्तिकरी चेत्स्यादतत्त्वावेदकप्रमा ॥

**या दीर्घभ्रान्तिकरी साऽतत्त्वावेदकप्रमेति यदि मतं स्यादित्यर्थः । किमिदं लोकवृत्तमनुसृत्योच्यते । किं वा स्वसङ्केतमात्रेण । आद्ये दोषमाह** रज्ज्विति ।

रज्जुसर्पादिविज्ञानादप्याधिक्यान्मानता ॥
स्यादागमस्यानिवर्त्यमहामोहप्रदत्वतः ॥

आगमस्य **वेदस्य । कुतः । अल्पेन कालेनानिवर्त्यत्वाद्यो महान्मोहस्तत्प्रदत्वतः । अप्रामाण्ये विशेषाभावेऽपि तद्धेतुकानर्थातिशयाभिप्रायेणाधिक्यादित्युक्तमिति** भावः । **द्वितीये अतिप्रसङ्गमाह** तलेति ।

तलनैल्यादिविज्ञानमाकाशे मानतां व्रजेत् ॥

**तलमिन्द्रनीलं तस्य नैल्यमिव नैल्यं तलनैल्यम् । आदिपदार्थं स्वयमेव** भाष्यकृद्विवृ**णोति** छत्रेति ।

छत्राकारत्वविज्ञानं चन्द्रप्रादेशतामतिः ॥

**आकाश इति वर्तते । मानतां व्रजेदिति सर्वत्र संबध्यते । अल्पकालानिवर्त्यभ्रान्तिहेतोः प्रामाण्यसङ्केतं कुर्वता एतेषामपि प्रामाण्यसङ्केतः करणीयोऽविशेषात् । ब्रह्मज्ञाननिवर्त्यविषयत्वमाश्रित्यायं सङ्केतः क्रियते न त्वल्पकालानिवर्त्यभ्रान्तिहेतुत्वमिति चेत् । (न) ब्रह्मज्ञाननिवर्त्यविषयत्वोक्त्याऽप्यस्यैवार्थस्य मायावादिना विवक्षितत्वात् । अन्यथा 'न खलु नाग इति नग इति वा पदात्कुञ्जरं गिरिं वा प्रतिपद्यमाना भवन्ति भ्रान्ता' इति वर्णदैर्घ्यादिज्ञानं कथमुदाहरेत् ।**

**शे०—** अतस्तस्य प्रामाण्यमित्यतः परं नैवमतत्त्वावेदकस्य प्रामाण्यं शून्यवादी मन्यते इत्यतोऽस्त्येव मतयोर्वैलक्षण्यमिति शेषः । उक्तमर्थं मूलारूढं कर्तुं यत्तच्छब्दाध्याहारेण योजयति

**या दीर्घेति** ॥ **अतत्त्वावेदकप्रमेति** । अतत्त्वावेदकत्वेऽपि प्रमाणमित्यर्थः । तद्धेतुकानर्थेत्यत्र तच्छब्देनाप्रमारूपज्ञानपरामर्शः । अन्यत्र सत एव नैल्यस्यारोपभ्रान्ति निवारयति **तस्य नैल्यमिव नैल्यमिति** । मूले आपादकानुक्तेस्तत्प्रदर्शनपूर्वकमतिप्रसङ्गमुपदर्शयति **अल्पकालेति** । प्रसङ्गमूलभूत-विशेषव्याप्तेर्दृष्टान्ताभावेनासंभवेऽप्यविशेषलक्षणसामान्यव्याप्तेरविकलत्वान्न प्रसङ्गमूलशैथिल्यमित्याशयेन तामाह **अविशेषादिति** ॥ **अयमिति** । दीर्घभ्रान्तिहेतुः अतत्त्वावेदकं प्रमाणमिति सङ्केत इत्यर्थः ॥ **अस्यैवेति** । अल्पकालानिवर्त्यभ्रान्तिहेतुत्वस्यैवेत्यर्थः । परस्य तथा विवक्षायां ज्ञापकं बाधकप्रदर्शन-मुखेनाह **अन्यथेति** । सत्त्वाविशेषेऽपि चक्षुषा रूपज्ञानमेव न तु रसज्ञानमितिवत् । अतात्त्विकप्रमा-णभावधूमबाष्पादिज्ञानात्तत्त्वप्रतिपत्तेरभावेऽपि सांव्यावहारिकेभ्योऽतात्त्विकप्रमाणभावेभ्यस्तत्त्वप्रतिपत्ति-रविरुद्धा । तथाच वर्णे ह्रस्वत्वदीर्घत्वादयोऽन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतव इत्युक्त्वा तदुपपादनाय न खल्वित्यादि भामत्यामुक्तम् । तत्र वर्णदैर्ध्यादिज्ञानं तावदतत्त्वावेदकप्रमाणत्वेना-भिमतम् । तच्च न ब्रह्मज्ञाननिवर्त्यविषयकत्वाभिप्रायेण । तद्विषयस्य दैर्ध्यादेर्ब्रह्मज्ञानेतरनिवर्त्यत्वात् । नापि दैर्ध्यादिज्ञानजन्यभ्रान्तेस्तद्विषयस्य वा ब्रह्मज्ञाननिवर्त्यत्वाभिप्रायेण । तथा सति क्षणिकत्वादि-भ्रान्तेस्तद्विषयक्षणिकत्वादेश्च ब्रह्मज्ञाननिवर्त्यत्वेन क्षणिकत्वज्ञानसाधनस्यापि अतत्त्वावेदकप्रमाणत्वापातात् । तस्मादल्पकालानिवर्त्यभ्रान्तिहेतुत्वेनैव तस्यातत्त्वावेदकप्रमाणत्वं ब्रह्मज्ञानस्य च प्रायशः कालान्तरभावि-त्वात्तदुपादानमित्येव वाच्यम् । अन्यथा तदुदाहरणमसङ्गतं स्यात् । ततश्चास्मदभिहितातिप्रसङ्गसिद्धि-रिति भावः । अत्र टीकायां नग इति वा नाग इति वा शब्दात्कुञ्जरं गिरिं वा प्रतिपद्यमाना इति प्रायिकः पाठः । तत्र नाग इति शब्दात्कुञ्जरं नग इति शब्दाद्गिरिं वेति यथायोग्यमन्वयः । क्वचित्तु नाग इति वा नग इति वा शब्दात्कुञ्जरं गिरिं वेतिभामतीपाठानुसार्यपि पाठः । तत्र यथाश्रुत एव संबन्धः ।

स० — **तलमिन्द्रनीलम्** (?) । **अस्यैवार्थस्येति** । अल्पकालनिवर्त्यमप्रमाणं बहुकालनिवर्त्यं प्रमाणमित्यस्यैवार्थस्येत्यर्थः । परस्य तथा विवक्षायां ज्ञापकं बाधकोपदर्शनमुखेनाह **अन्यथेति** । अत्र योग्यतया अन्वयः, न यथाक्रमम् । अयं भावः । यदिब्रह्मज्ञाननिवर्त्यत्वमेव प्रामाण्यहेतुः, तदितर-निवर्त्यत्वं चाप्रामाण्यहेतुरिति परस्य विवक्षितं स्यात् तदा परोक्त वर्णदैर्ध्यादिज्ञानस्य प्रामाण्यं न स्यात् । तस्य ब्रह्मज्ञानेतरबाध्यत्वेन ब्रह्मज्ञानबाध्यत्वाभावात् । न च, तस्य प्रामाण्यं परस्य संमतमिति कथमवगत-मिति वाच्यम् । तद्वाक्यादेव तदवगमात् । तदेतदाह **न खल्वित्यादि** । तथा च बहुकालनिवर्त्य-त्वमेव प्रामाण्यहेतुरिति उक्तापादनमसङ्गतमिति भावः ।

प०— **यस्येति** । ज्ञानस्येत्यर्थः ॥ **विशेषाभावेऽपीति** । बाध्यत्वाविशेषेणेति भावः ॥ **तद्धेतुकेति** । दीर्घभ्रान्तिकरणत्वहेतुकेत्यर्थः । ब्रह्मज्ञानबाध्यवेदाप्रामाण्यहेतुकेति वार्थः ॥ **वर्णदैर्घ्यादिज्ञानमिति** । तन्मते तस्य भ्रान्तित्वात्तस्य च लौकिकत्वेन ब्रह्मधीबाध्यत्वाभावात् अल्पकालानिवर्त्यभ्रान्तिहेतुत्वस्याविवक्षितत्वे वर्णदैर्घ्यादिभ्रान्तिरूपज्ञानं कथमुदाहरेदित्यर्थः ।

या०— तद्धेतुकानर्थेत्यत्र तच्छब्देनाप्रमारूपज्ञानपरामर्शः ॥ **अन्यथा न खल्विति** । अल्पकालानिवर्त्यभ्रान्तिहेतुत्वस्याविवक्षितत्व इत्यर्थः । न खलु नाग इति वा नग इति वा पदात्कुञ्जरं वा गिरिं वा प्रतिपद्यमान इत्येव भामतीवाक्यपाठः । अन्यस्तु प्रामादिक इति ज्ञातव्यं ।

श्री०— **भ्रांतिहेतुः** वेदस्य । **तेषामपि** आकाशे नैल्यादिज्ञानानामपि । **अविशेषात्** अल्पकालानिवर्त्यभ्रांतिहेतुत्वाविशेषात् ॥ **ब्रह्मज्ञानेति** । वेदस्य ब्रह्मज्ञाननिवर्त्यविषयकत्वादाकाशनैल्यादिज्ञानस्य तदभावादित्यर्थः ॥ **न त्वल्पकालेनेति** । येन तेषामपि प्रामाण्यसंकेतः कार्यः स्यादिति भावः ॥ **अस्यैवार्थस्येति** । अल्पकालानिवर्त्यभ्रांतिहेतुत्वरूपार्थस्यैवेत्यर्थः ॥ **अन्यथेति** । अल्पकालानिवर्त्यभ्रांतिहेतोः प्रामाण्यानङ्गीकार इत्यर्थः । नागशब्दात्कुञ्जरम् , नगशब्दाद्गिरिम् , भ्रांता न भवन्ति खल्वित्यन्वयः । **वर्णदैर्घ्यादिकं** आकाशनैल्यादिवदारोपितम् । **उदाहरेत्** अर्थप्रमापकत्वेन स्वग्रन्थे पर इति शेषः । तथाच नाग इत्यादिशब्दादर्थभेदं प्रतिपद्यमाना भ्रान्ता न भवन्तीत्युक्त्या वर्णदैर्घ्यादेर्ब्रह्मज्ञानात्प्रागबाध्यतयाऽल्पकालानिवर्त्यभ्रान्तिहेतोर्वर्णदैर्घ्यादिज्ञानस्यातत्त्वावेदकत्वलक्षणं प्रामाण्यमङ्गीकृतमिति ज्ञायते । भ्रान्ता न भवन्तीत्येतदेव प्रकृतप्रामाण्यसाधकम् । तथा च तलनैल्यादिज्ञानस्यापि प्रामाण्यसंकेतः कार्य इति भावः ।

सु०— **किं चैवंविधं वेदप्रामाण्यं शून्यवादिनाऽप्यङ्गीकृतमेवेति कुतोऽयं विशेषः । न सर्वस्यापि वेदस्य मायावादिनाऽतत्त्वावेदकत्वमुच्यते किं नाम विधिप्रतिषेधविषयस्य । अद्वितीयं तत्त्वं प्रतिपादयतस्तत्त्वमसीत्यादेर्महावाक्यस्य निर्विशेषं सच्चिदानन्दात्मकं तत्पदार्थं प्रतिपादयतो 'यत्तदद्रेश्यमग्राह्यं' 'सत्यं ज्ञानमि'त्यादेरवान्तरवाक्यस्य च तत्त्वावेदकत्वमङ्गीक्रियत एव, न चैवं शून्यवादिना; इत्यतः कथं साम्यमित्यतः शून्यवादिनाऽप्येवमेवाङ्गीक्रियते । तत्त्वावेदकत्वं हि न विषयविसंवादाभावातिरिक्तं किञ्चिदस्ति । वाक्यद्वयार्थस्य चाविसंवादः शून्यवादिनाऽप्यङ्गी(कृत)क्रियत एवेत्याशयवान्महावाक्यार्थाङ्गीकारं तावद्दर्शयति** निर्भेदत्वं त्विति ।

अनु०— निर्भेदत्वं तु शून्यस्य तेनाप्यङ्गीकृतं सदा ॥

तेन **शून्यवादिना अपि, सदेत्यनेन स्वयमेव नास्मदापादनेनेति सूचयति ।**

**शे०**— भाष्यकारीयमल्पकालानिवर्त्यभ्रान्तिहेतुत्वस्य प्रामाण्यप्रयोजकत्वेऽतिप्रसङ्गाभिधानं तस्य मतवैषम्यानापादकत्वाभिप्रायं चेत्यभिप्रेत्य स्वयं तस्य मतवैषम्यानापादकतामुपपादयति **किञ्चेति** ॥ **एवंविधमिति** । दीर्घभ्रान्तिहेतुत्वलक्षणमित्यर्थः ॥ **अङ्गीकृतमेवेति** । वेदविषयस्य शून्यभावनासाध्यशून्यसाक्षात्कारनिवर्त्यताया उक्तत्वादिति भावः । पुनर्वैषम्यं शङ्कते **न सर्वस्यापीति** ।

**स०**— शून्यवादिना निर्विशेषत्वाभिप्रायेणैव शून्यमित्युच्यते न त्वसत्त्वाभिप्रायेणेत्येतत्कुत इत्यत आह **तत्त्वमिति** ।

**प०**— **एवं विधमिति** । अल्पकालानिवर्त्यभ्रान्तिहेतुकत्वरूपं वा शून्यज्ञानबाध्यविषयकत्वरूपं वेत्यर्थः । शङ्कते **न सर्वस्यापीति** ॥ **विधीति** । यजेत स्वर्गकामः, ब्राह्मणो न हन्तव्य, इत्यादिविधिप्रतिषेधविषयस्येत्यर्थः ।

**श्री०**— **अविसंवादः** शून्यवादिनाऽपीति । अविसंवादिविज्ञानं प्रमाणमिति सौगता इति वचनादिति भावः ॥ **सत्त्वेतीति** । तथाच तत्त्वस्य सत्त्वादिधर्माणां विशेषाणामभाव उभयो संमत इत्यनेन निर्विशेषत्वाङ्गीकारः प्रदर्शित इति द्रष्टव्यम् ।

---

**सु०**— **अवान्तरवाक्यार्थाङ्गीकारोऽपि द्वयोः समान इति दर्शयन्निर्विशेषत्वं तावदुभयसम्मतमित्याह** सत्त्वेति ।

**अनु०**— सत्त्वासत्त्वादिधर्माणामभाव उभयोर्मतः ॥

**तत्त्वस्येति शेषः । उभयोर्मायावादिशून्यवादिनोर्मतः सम्मतः । सत्यत्वमपि शून्यवादिनाऽङ्गीक्रियत इत्याशयेन शून्यं नामासत्तस्य सत्त्वं कथमित्यत** आह न हीति ।

न हि सत्प्रतियोगित्वं शून्यत्वं तेन चेष्यते ॥

सत्प्रतियोगित्वं **सद्विरोधित्वमसत्त्वम्** । तेन च **शून्यवादिनाऽपि । निर्विशेषत्वाभिप्रायेण शून्यमित्युच्यते नासत्त्वाभिप्रायेण । तत्त्वमित्यङ्गीकारादिति भावः । आनन्दताऽपि शून्यवादिना अभ्युपगम्यत इति वक्तुं मायाव्राद्यभ्युपगतानन्दतां तावदनुवदति** न चेति ।

न च दुःखविरोधित्वादन्या ह्यानन्दतेष्यते ॥

मायिना

**दुःखविरोधित्वमेवानन्दत्वं न तु धर्मरूपं किमपीत्यर्थः । हिशब्देनानृतजडविरोधीत्यादितत्प्रसिद्धिं सूचयति । ततः किमित्यत** आह शून्येति ।

शून्यपक्षेऽपि

तत्समानमिति शेषः । 'जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यदि'त्यादितद्वचनात् । ज्ञानत्वाङ्गीकारं दर्शयति ज्ञानमिति ।

ज्ञानं जाड्यविरोधि च ॥

ज्ञानं च जाड्यविरोधिस्वरूपमेवोच्यते मायिना । तच्छून्यवादिनोऽपि समानमित्यर्थः ।

शे०— नासत्त्वाभिप्रायेणेति प्रतिज्ञाया हेतुमाह तत्त्वमितीति ।

प०— निर्विशेषत्वमिति । निर्विशेषमवान्तरवाक्यार्थ इत्युक्तेरिति भावः । मूले असत्त्वपदेनाभावप्रतियोगित्वग्रह इति भावः ॥ इत्यादितत्प्रसिद्धिमिति । अनृतजडविरोधिरूपमंतत्रयमलबन्धनदुःखताविरुद्धम् । अतिनिकटमविक्रियं मुरारेः परमपदं प्रणयादभीष्टवीमी'ति भाष्यकारीयमुरारिशतकगतश्लोकोऽयम् । शून्यपक्षेऽपि कुतस्तत्सममित्यतः स्वयं हेतुमाह जाड्येति । तत इत्यनुवादः, व्यावर्तकाभावादिति व्याख्या ॥

श्री०— सत्यत्वमपीति । निर्विशेषत्वाङ्गीकारवत्सत्त्वानन्दत्वज्ञानत्वाङ्गीकारोप्युभयोः संमत इति वक्तुमादौ तत्त्वस्य सत्त्वं शून्यवादिनाऽङ्गीक्रियत इत्याशयेन शून्यं नामासत्तस्य कथं सत्त्वं शून्यवादिनाऽङ्गीक्रियत इत्याशङ्कां परिहर्तुमाहेत्यर्थः । सद्विरोधित्वमत्यन्तासत्त्वम् ।

सु०— स्यादेतत् । मायावादिना ब्रह्मणो निर्विशेषत्वादिकमङ्गीक्रियते शून्यवादिना तु शून्यस्य । तत्कथं साम्यमित्यतो मैवम् । ब्रह्मशून्ययोर्भेदाभावस्योक्तत्वादित्याह धर्मा इति ।

अनु०— धर्माः केऽपि न सन्त्येव को विशेषस्ततस्तयोः ॥

ततो व्यावर्तकाभावात्तयोर्ब्रह्मशून्ययोः को विशेषः किंकृतो भेदः स्यात् । ननूक्तविधमद्वैततत्त्वं सूत्रकारस्य सिद्धान्त एव । तत्कथं दूषणाय तदनुवादः क्रियत इत्यत आह एतादृशानामिति ।

एतादृशानां पक्षाणां दूषणं प्रभुणा कृतम् ॥

स्वपक्षसाधनेनैव

शून्यपक्षसदृशपक्षाणाम् । कथम् । तद्विरुद्धस्य स्वपक्षस्य साधनेनैवार्थात् । एतदुक्तं भवति । नाद्वैतं सूत्रकारस्य सिद्धान्तः । तेन तस्य दूषितत्वात् । पृथगुपदेशादित्यादिना तद्विरुद्धार्थस्य साधितत्वात् । न हि तस्य दुष्टतामननुसन्दधत्तद्विरुद्धं साधयतीति संभवतीति ।

न केवलमर्थाद्दूषणं कृतं किन्तु 'नाभाव उपलब्धेरि'त्याद्युक्तितोऽपीत्याह नाभाव इति ।

नाभाव इति चोक्तितः ॥

**शे०** — निर्विशेषत्वप्रतिपादनपरपूर्वग्रन्थेन धर्मा:केऽपीत्याद्युत्तरग्रन्थस्य पौनरुक्त्यमाशङ्क्य परिहरति **स्यादेतदिति** ॥ **सिद्धान्त एवेति** । प्रामाणिकत्वादनिराकृतत्वाच्चेति भावः ।

प० — **कः स्वपक्षः** कुत्र तत्साधनं तावता कथं दूषणमित्यत आह **एतदुक्तं भवतीति** ॥ **पृथगुपदेशादित्यादिनेति** । 'अत एव चोपमे'त्यादिरादिपदार्थः ॥ **तस्येति** । अद्वैतस्येत्यर्थः । **नाभाव इतीति** । प्रपञ्चोऽभावो न, अध्यस्तो न, सत्त्वेन प्रमीयमानत्वादिति समयपादीयसूत्रार्थः ।

सु० — **एवं सप्रभेदं शून्यवाद्यभिमतं मोक्षमनूद्य साधारणदोषेण तावद्दूषयन् यः शून्यवादिना 'प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिन (भाविन)' इत्यात्मविनाशो मोक्ष उक्तस्तं दूषयति** आत्मेति ।

अनु० — आत्माऽभावे पुमर्थः कः ॥

**मोक्ष इति वक्ष्यमाणं सिंहावलोकनन्यायेनेहा(नेनेहा)पि सम्बध्यते । आत्मनोऽभावे विनाशे सति मोक्षः कः किंसम्बन्धी पुमर्थः । एतदुक्तं भवति । आत्मविनाशलक्षणो मोक्षः किमात्मनः फलमुतानात्मनः । नाद्यः । तस्याभावात् । न हि फलिनोऽभावे फलमुपपद्यते । धर्मादिषु तथा दर्शनात् । न द्वितीयः । आत्मनाशेऽनात्मनोऽप्यभावात् । भावेऽप्यपुरुषार्थत्वप्रसङ्गात् । अनात्मनस्तेनोपकाराभावाच्चेति ।**

**नन्वात्मन एवायम् । धर्मादिवदभ्युदयत्वाभावादसमानकालताऽप्युपपद्यत इत्यत आह** आत्मेति । **मोक्षः कः पुमर्थः पुमर्थो न भवेदित्यर्थः ।**

**तत्र हेतुमाह** इष्टस्येति ।

इष्टस्यात्माऽवधिर्यतः ॥

**इष्टोत्कर्षपरंपरायाः पर्यन्तो यतः सर्वमात्मार्थतयेष्टम् । आत्मा त्वनन्यार्थतया । इष्टमात्रस्य वित्तादेर्विनाशं पुरुषो नार्थयते, किमुतेष्टतमस्यात्मनः ।**

**शे०** — 'प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिन' इत्येव मूलपाठः । तायिनो विस्तारिणो बोधसन्तानस्य निर्वाणं निवृत्तिः स एव मोक्ष इत्यर्थः । नन्वनेन कथमात्मनाशस्य मोक्षत्वप्राप्तिरिति चेत् । परमते ज्ञानस्यैवात्मत्वेन तन्नाशस्यैवात्मनाशत्वात् । अत्र च 'न किंचिन्मुक्त्यवस्थायामात्मात्मीयमथाऽपि वे'त्यत्रत्यमात्मेति ज्ञानमुच्यत इति व्याख्यानम् । तथा समयपादस्य'अरूपज्ञानसन्ततिमि'त्यनुव्याख्यानस्य 'सन्तन्यमानं ज्ञानमेव चात्मे'ति व्याख्यानं च ज्ञापकम् । बद्धस्यात्मनो बन्धेन सह नाश एव मोक्ष इति मकरन्दोक्तमोक्षलक्षणसंवादित्वैतद्वाक्योदाहरणेनोक्तप्रकारस्यैव निर्णीतत्वाच्चेति ध्येयम् ।

नन्वात्मविनाशलक्षणो मोक्षोऽनात्मन एव फलं भविष्यतीति कथमयमाक्षेप इत्यत आह **एतदुक्तं भवतीति ॥ तस्याभावादिति ।** अनेनात्मनाशो नात्मनः फलं आत्मासमानकालीनत्वात् व्यतिरेकेण धर्मादिवदित्यनुमानमुक्तं भवति । अप्रयोजकत्वमाशङ्क्य परिहरति **न हीति** । फलभोक्तुरित्यर्थः । कथमस्य गमकत्वमित्यतस्तथा व्याप्तेरित्याह **धर्मादिष्विति ॥ आत्मनाश इति ।** कार्यमात्रं प्रत्यदृष्टस्य कारणत्वेन तस्य चात्मधर्मत्वेन धर्मिभूतात्मनाशे तद्धर्मभूतादृष्टस्यापि नाशावश्यम्भावेनासत्यदृष्टे तज्जन्यानात्मन उत्पत्तेरेवासंभवेनानात्मनोऽप्यभावादित्यर्थः । अनादिनित्यानात्मनोऽपि सत्वात्स एव फली स्यादित्यत आह **भावेऽपीति ।** अनात्मन इति शेषः । पुरुषैरर्थ्यत्वमेव पुरुषार्थत्वं । तदभावश्च द्वेधा संभवति । कर्तुः पुरुषत्वाभावेन कर्मणोऽर्थ्यत्वाभावेन चेति । तत्राद्यं प्रकारमभिप्रेत्याह **अपुरुषार्थत्वेति** । कर्तृत्वेनाभिमतस्यानात्मनः पुरुषत्वाभावादित्याशयः । द्वितीयं प्रकारमभिप्रेत्याह **अनात्मन इति । तेन** आत्मनाशेनेत्यर्थः । तथा च कर्मतयाऽभिमतस्यात्मनाशस्यार्थ्यत्वं न संभवतीति भावः । ननु फलिनोऽभावे कथं फलं, धर्मादिषु तथाऽदर्शनादित्यत आह **धर्मादिवदिति ॥ अभ्युदयत्वेति** । कर्मसाध्यफलत्वमभ्युदयत्वं तदभावादित्यर्थः । ततश्चानेन पूर्वमभिप्रेते आत्मनाशपक्षकेऽनुमाने व्यतिरेकेऽभ्युदयत्वमुपाधिः हेतोरन्यथासिद्धिश्चेत्युक्तं भवति । नन्विष्टोत्कर्षपरंपरापर्यन्तत्वे आत्मनः सिद्धे भवेदात्मनाशस्यापुमर्थत्वं तस्येष्टोत्कर्षपरंपरापर्यंतत्वमेव कुतः सिद्धमित्यत आह **सर्वमिति** । नन्वात्मन इष्टत्वमात्रकथनेन तथा तन्नाशस्यापुमर्थत्वसिद्धिसंभवाद्भाष्यकारीयमिष्टोत्कर्षपरंपरापर्यन्तत्वधावनमनर्थकमित्यतो नेदं तन्नाशस्यापुमर्थत्वव्युत्पादनार्थं येनेष्टत्वमात्रोक्त्याऽपि तत्सिद्धेस्तदानर्थक्यं स्यात् । किं नाम कैमुत्यद्योतनार्थमेवेति भावेन तदुपदर्शयति **इष्टमात्रस्येति** ।

**स०**— 'प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिन' इत्येव कारिकामूलपाठः । अस्यार्थः । तायिनः तत्त्वाध्यवसायसंरक्षणक्षमसंप्रदायप्रवर्तकस्येत्यर्थः ॥ 'नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने । निधये वाग्विशुद्धीनामक्षयाद्यतायिने' इति न्यायवाचस्पतिग्रन्थस्थकारिकागततायिन इतिपदं तात्पर्यपरिशुद्धावुदयनेनैवमेव व्याख्यातम् । तनोतीति तायी विस्तारी । तनुविस्तार इति धातोः । तस्य तायिनः विस्तारिणः, तस्यावबोधसन्तानस्य प्रदीपस्येव निवृत्तिर्मोक्ष इति । नन्वनेनात्मनाशस्य कथं मोक्षत्वावगमः । ज्ञाननाशस्यैव तथात्वावगमात् । तत्कथमात्मनाशस्य मोक्षत्वे एतद्वाक्योदाहरणमिति चेत् । न । परेणात्मशब्देन ज्ञानस्यैव विवक्षितत्वात् । तथा चात्मनाशो नाम ज्ञाननाश एवेति युक्तं तस्य मोक्षत्वे एतद्वाक्योदाहरणम् । अत्र 'न किञ्चिन्मुक्त्यवस्थायामात्मात्मीयमथापि वे'त्यत्रात्मा ज्ञानमिति व्याख्यानम् । तथा समयपादस्थस्य अरूपज्ञानसन्ततिमित्यनुव्याख्यानस्य सन्तन्यमानं ज्ञानमेवात्मेति

व्याख्यानं च ज्ञापकं द्रष्टव्यमिति गुरुचरणाः । **तस्याभावादिति ।** अनेनात्मनाशो नात्मफल फलीभूतात्मशून्यत्वादिति अनुमानमुक्तं भवति । फलिनोऽभावेपि फलं किं न स्यात् । तथा चाप्रयोजको हेतुरित्यत आह **न हीति ।** कथमस्य गमकत्वमित्यतस्तथा व्याप्तेरित्याह **धर्मादिष्विति ॥ आत्मनाश इति ।** कार्यमात्रं प्रत्यदृष्टस्य कारणत्वेन तस्य च स्वात्मधर्मत्वेन धर्मिभूतात्मनाशेन तद्धर्मभूतादृष्टस्यापि नाशेऽनात्मन उत्पत्तेरेवासंभवादित्यर्थः । अनादिनित्य एवानात्मा फली किं न स्यादित्यत आह **भावेपीति ।** अनात्मभावेपीत्यर्थः । पुरुषकृत्युत्पाद्यस्यैव पुरुषार्थत्वात् अनात्मनश्च कृत्यसंभवादिति भावः । **अनात्मन इति ।** तस्याचेतनत्वेन सुखानुभवरूपोपकारासंभवादिति भावः । ननु फलिनोऽभावे कथं फलं धर्मादिषु तथा दर्शनादित्यत आह **धर्मादिवदिति ।** अभ्युदयस्यैव समानकालीनत्वनियम इति भावः ।

प० — **सप्रभेदमिति ।** एकजीवबहुजीवप्रभेदसहितम् ॥ **साधारणदोषेणेति ।** एकजीव(वाद)बहुजीव(वाद)साधारणेत्यर्थः ॥ **प्रदीपस्येवेति ।** प्रदीपस्य यथा निर्वाणशब्दितो निःशेषविनाशस्तथा भाविनः शून्यमहमस्मीति ध्यायतः सविलाससंवृतिनाशरूपनिःशेषनाशे तदवच्छिन्नपुद्गलशब्दिताहमर्थरूपजीवस्यापि विनाश इत्यर्थः । अनात्मसंबन्धित्वेनापि संभवात्कथमाक्षेप इत्यत आह **एतदुक्तमिति ।** फलिनः फलभोक्तुरित्यर्थः ॥ **अनात्मनोऽपीति ।** तदीयशून्यभावनातिशयेन मूलकारणसंवृतेः स्वकार्येण सह विनाशादिति भावः ॥ **अपुरुषार्थत्वेति ।** पुंसंबन्धिन एव पुरुषार्थत्वादपुरुषसंबधी कथं पुरुषार्थः स्यादित्यर्थः ॥ **अयमिति ।** मोक्ष इत्यर्थः । अवधिपदस्यार्थः पर्यंत इति ।

या० — **प्रदीपस्येवेति ।** यथा प्रदीपस्य तैलाद्यपगमे स्वयमेव निर्वाणं विनाशस्तथा **भाविनो** वस्तुतः शून्यमहमस्मीति ध्यायिनस्तस्याधिकारिणः शून्यसाक्षात्कारेण मूलसंवृत्यपगमे कर्तृत्वभोक्तृत्वशक्तिमहदहंकाररूपोपाधिनिर्वाणं मोक्ष इत्यर्थः । अहंकारोपाधिनाश एवात्मविनाशशब्देन तदभिप्रेतः । अत एव प्रागुपलक्षणनिवृत्तये भावनाद्युपयोग इत्युक्तं । अत्र विमोक्षस्तस्य तायिन इति पाठश्चिंत्यः । समयपादे भाविन इति पठितत्वात् । तत्र तायिन इति पाठस्यासंगतत्वात् । भाविन इति पाठस्य तु नित्योपासापरोऽक्षितमित्यनुव्याख्यानोक्तेः संमतित्वसंभवेन संगतत्वादिति ध्येयं । एतेन पूर्वमनुवादसमये आत्मविनाशस्य मोक्षताया अनुक्तत्वात्कथमिदानीं निराकरणमिति शंकाऽपि निरस्ता । नानासंवृतिवर्जितमित्यत्र संवृतिकार्यत्वात्संवृतिसंज्ञकैरहंकारादिभिर्वर्जितमित्यहंकारप्रविलयस्योक्तत्वात् ॥ **फलिन इति ।** फलभोक्तुरित्यर्थः ॥ **अनात्मनोऽपीति ।** भावनाप्रकर्षादिना मूलसंवृतौ ध्वस्तायामहंकाररूपस्यात्मनो विलये तत्कार्यप्रवाहरूपस्यानात्मनोऽपि विलीनत्वादिति भावः । अभ्युपेत्याह **भावेऽपीति ।** पुरुषैर-

र्थ्यत्वमेव पुरुषार्थत्वं । तदभावश्च द्वेधा कर्तुः पुरुषत्वाभावेन च कर्मणोऽर्थ्यत्वाभावेन चेति । तत्राद्यं प्रकारमभिप्रेत्याह **अपुरुषार्थत्वेति** । कर्तृत्वेनाभिमतस्यानात्मनः पुरुषत्वाभावादित्याशयः । द्वितीयं प्रकारमुपपादयति ॥ **अनात्मनस्तेनेति** । आत्मनाशेनेत्यर्थः । तथा च कर्मताभिमतस्यात्मनाशस्यार्थत्वं न संभवतीति भावः ॥ **अभ्युदयत्वाभावादिति** । कर्मसाध्यफलत्वमभ्युदयत्वं तदभावादित्यर्थः । तथा चात्मविनाशो नात्मनः फलं । आत्मासमानकालीनत्वात् । व्यतिरेकेण धर्मादिवदिति पूर्वमभिप्रेतेऽनुमानेऽभ्युदयत्वमुपाधिर्हेतोरन्यथासिद्धिश्चेति भावः ।

**सु० — यद्वाऽऽत्माभावे सति मोक्षः कः पुमर्थः किमिष्टावाप्तिरूपोऽथानिष्टनिवृत्तिरूप इत्यर्थः । नाद्यः । तत्र हेतुः** इष्टस्येति । **सर्वस्याप्यात्मेतरस्येष्टस्यात्माऽवधिराश्रयो यतः । आत्मार्थं हि सर्वमिष्टम् । स चेन्न स्यात्तदा कस्यायं पुरुषार्थः स्यादित्यर्थः । न द्वितीयः । तत्र हेतुः** इष्टस्येति । **अनिष्टनिवृत्तिरपि पुरुषार्थो भवन्ती तदा स्याद्यदीष्टं न विहन्यात् । तद्विघातेऽपि वा यदि महतोऽनिष्टस्य विघातिनी स्यात् । तथा लोके दर्शनात् । न हि कश्चिन्महदिष्टं विनाश्य अल्पानिष्टनिवृत्तिं कुर्वाणः प्रेक्षावानुपलभ्यते । आत्मा च सर्वतोऽपीष्टतमः । तद्विघातेन भवन्त्यनिष्टनिवृत्तिः कथं पुरुषार्थो भवेत् । रोगादिपीडिता उद्बन्धादिनाऽऽत्मविनाशं कुर्वन्तो दृश्यन्त इति चेन्न । रोगाद्यायतनदेहपरित्यागेनात्मानं निर्दुःखीकर्तुमेव तेषां प्रवृत्तेः । निर्दुःखो भूयासमिति हि सर्वस्याशीः । न तु न भूयासमिति । देहात्मविवेकज्ञानविधुरास्त्वात्मनाशायैव प्रयतन्त इति चेन्न । तेषामप्रेक्षावत्त्वेनात्रानुदाहार्यत्वात् । उपपादितं चैतत् । यत्पशवोऽपि देहात्मविवेकज्ञानवन्त इति ।**

**शे० —** आत्मनाशस्य पुरुषार्थत्वसामान्याक्षेपपरतया वाक्यं व्याख्याय तद्विशेषाक्षेपपरतयाऽपि वाक्यं व्याचष्टे **यद्वेति** ॥ **आश्रयेति** । भोक्त्रेत्यर्थः ॥ **आत्मार्थं हीति** । आत्मनो भोगार्थमित्यर्थः । ननु मोक्षस्यानिष्टनिवृत्तिरूपपुरुषार्थत्वाभावे इष्टस्यात्मावधिर्यत इत्यस्य कथं हेतुत्वमित्यतोऽनेनात्मनः सर्वतोऽपीष्टतमत्वोक्त्या मोक्षस्येष्टतमात्मविघातकत्वसूचनेनानिष्टनिवृत्तेः पुरुषार्थतायां प्रयोजकस्य इष्टाविघातकत्वस्य तद्विघाते वा महतोऽनिष्टस्य विघातकत्वस्य वा भावप्रतिपादनाद्युक्तमस्य तत्र हेतुत्वमित्यभिप्रेत्य तस्य तत्र प्रयोजकत्वं विपक्षे बाधकोपदर्शनेनोपपादयन्नाह **अनिष्टनिवृत्तिरपीति** ॥ **उद्बन्धनादिनेति**। ऊर्ध्वं गलबन्धनमुद्बंधनं । आदिपदेन विषपानादिपरिग्रहः । नन्वात्मानं निर्दुःखीकर्तुमेव तेषां प्रवृत्तेर्नात्मनाशायेत्येतत्कुतो, वैपरीत्यस्यापि वक्तुं शक्यत्वादित्यत आह **निर्दुःखो भूयासमिति हीति** । अन्यथा

न भूयासमित्येव आशा स्यादिति भावः । अभ्युपेत्य चेदमुदितं । वस्तुतस्तु देहात्मविवेकज्ञानविधुरा एव न संति येषामात्मनाशायैव प्रवृत्तिरुद्भाव्येतेत्याह **उपपादितं चेति** । तृतीयस्य द्वितीये 'जातमात्रा मृगा गाव' इत्यादिनेति शेषः ।

स० — **उपपादितं चैतदिति** । तृतीयस्य द्वितीये 'जातमात्रा मृगा गावः' इत्यादिनेति शेषः ।

प० — **आश्रय इति** । उपकार्य इत्यर्थः । ननु त्यजेदेकं कुलस्यार्थ इत्यादेः महानिष्टनिवृत्तयेऽल्पत्यागो दृष्ट इत्यत आह **तद्विघातेऽपि वेति** । शङ्कते **रोगादीति** । देहात्मभेदज्ञानहीना एव न संत्यतोऽपि ते नात्रोदाहरणमित्याह **उपपादितं चेति** । 'जातमात्रा मृता गावो हस्तिनः पक्षिणो झषाः' इत्यादिना भक्तिपादे उपपादितमित्यर्थः ।

या० — **आश्रय इति** । भोक्तेत्यर्थः ॥ **आत्मार्थमिति** । आत्मभोगार्थमित्यर्थः ॥ **उद्बन्धनेति** । ऊर्ध्वं गलं बध्वेत्यर्थः । आदिपदेन विषपानादिसंग्रहः ॥ **उपपादितमिति** । जातमात्रा मृगा गावः पक्षिणो हस्तिनो झषा' इत्यादाविति शेषः ।

---

**सु० — ननु दुःखात्यन्तनिवृत्तिस्तावदवश्यमेष्टव्या । सा च कारणनिवृत्त्यैव भवति नान्यथा । कारणं च दुःखस्यात्मैव । अधर्मार्जनादाधारत्वाच्च । तत्कथमात्मनाशेन शून्यभावापत्तिर्नेष्यत इति चेत् । मैवं । न ह्यात्मैव दुःखकारणं । किन्तु जागर एव भावात्सुप्तावभावादन्वयतिरेकाभ्यां शरीरेन्द्रियविषयवेदनादिकमपि । ततो ज्ञानभोगाभ्यां कर्मणि क्षीणे निर्बीजस्य देहादेरनुत्पादे सामग्रीवैकल्येन दुःखानुत्पादस्य सम्भवात्किमात्मनाशकल्पनया । कुतो विनिगमनमिति चेत् । सर्वस्याप्यात्मार्थत्वात् । आत्मनश्चात्यन्ताभ्यर्हितत्वादिति ब्रूमः । विप्रकृष्टव्ययेन हि साध्यासिद्धौ सन्निकृष्टव्ययं प्रेक्षावन्तः कुर्वंति । तस्मा'दात्मार्थे पृथिवीं त्यजेदि'ति न्यायेन दुःखं जिहासताऽऽत्मावधिकस्यैव कारणस्य मोक्ष एष्टव्यो न त्वात्मनोऽपीति युक्तमुत्पश्यामः । तदेतत्सूचयन्निपक्षे बाधकमाह** यदीति ।

**अनु०** — यदि नात्मावधिर्मोक्षो मोक्षः स्याद्घटशून्यता ।

**यद्यस्मदभिमतप्रकारेणात्मावधिर्मोक्षो न भवेत् । आत्मव्यतिरिक्तानां दुःखकारणानां देहादीनामेव निवृत्तिरात्मनस्तु स्वरूपेणावस्थानमिति पक्षो यदि न स्यादित्यर्थः । आत्मनोऽपि शून्यतापत्तिर्यदि स्यादिति यावत् । तदा घटशून्यताऽपि देवदत्तस्य मोक्षः स्यात् । तथा च साधनानुष्ठानवैयर्थ्यम् । घटशून्यतायाः पारिव्राज्यादिकारणानपेक्षत्वात् ।**

शे०— **दुःखात्यन्तनिवृत्तिरिति।** अन्यथा संसारसमानधर्मत्वेन मुक्तेरपुमर्थत्वापातादिति भावः। अस्तु तर्हि मुक्तौ दुःखस्यात्यन्तिकी निवृत्तिरपि किं तावतेत्यत आह **सा चेति।** तर्हि भवतु मुक्तौ कारणनिवृत्तिरपि किं तावताऽपीत्यत आह **कारणं चेति।** कथमात्मन एव दुःखकारणत्वमित्यतो दुःखासाधारणकारणाधर्मसंपादकत्वात्तत्स्वामित्वाच्चेत्याह **अधर्मेति॥ कुत इति।** शरिरादिनाशेनेवात्मनाशेनापि दुःखानुत्पादसंभवेऽपि नात्मनाशेन दुःखानुत्पादः किन्तु देहादिनाशेनैवेत्यवधारणे, न देहादिनाशेन दुःखानुत्पादः किन्तु आत्मनाशेनैवेति विपरीतावधारणमपि स्याद्विनिगमकाभावादिति भावः॥ **आत्मावधिकस्यैवेति।** आत्मव्यतिरिक्तस्येत्यर्थः॥ **कारणस्येति।** दुःखकारणस्य देहादेरित्यर्थः॥ **आत्मनोऽपीति।** अहमिति प्रतीयमानस्वरूपनाश इत्यर्थः। इष्टापत्तिमाशंक्याह **तथा चेति।** वैयर्थ्यमुपपादयति **घटशून्यताया इति।**

प०—**वेदनादिकमिति।** वेदनं ज्ञानं, आदिपदेन शरीराद्यभिमानः कण्टकवेधादिश्च ग्राह्यः। **कर्मणीति।** अप्रारब्धप्रारब्धरूपे। (किंविनिगमकमिति) कुतो विनिगमनमिति। मदुक्तभवदुक्तयोरात्मानात्मनाशयोरिति योज्यम्। नियामकान्तरमाह **विप्रकृष्टेति।** एवं च देहादिव्ययेन दुःखनिवृत्तिरूपसाध्यासिद्धौ सत्यां खल्वात्मव्यय एष्टव्यः। देहादिव्ययेन दुःखनिवृत्त्यसिद्धिर्नेत्युपपादितमित्यात्मव्ययस्तदर्थं नेष्टव्य इति भावः॥ **आत्मार्थ इति।** 'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे' इति पूर्वशेषो भारते॥ **आत्मावधिकस्यैव कारणस्येति।** आत्मपर्यन्तविद्यमानं यद्दुःखकारणमनात्मरूपं तस्य मोक्षो विनाश इत्यर्थः। अस्मदभिमतेत्युक्तं व्यनक्ति **आत्मव्यतिरिक्तानामिति॥ शून्यतेति।** देहेन्द्रियाहङ्काराद्यपगमे शून्यतापत्तेरेव प्राप्तेरेवं पर्यवसानमिति भावः॥ **घटशून्यतेति।** घटनाशे घटस्य शून्यभावोऽस्तीति घटरूपशून्यतेत्यर्थः।

या०— **कारणस्येति।** दुःखकारणस्येत्यर्थः॥ **आत्मनोऽपि शून्यतापत्तिरिति।** देवदत्तस्याहमिति प्रतीयमानरूपापगमे शून्यभावापत्तिरित्यर्थः। एवं घटशून्यतेत्यत्रापि घटशून्याभावापत्तिरित्यर्थः।

श्री०— आधारत्वात् अधर्माधिकरणत्वादित्यर्थः। **न ह्यात्मैवेति।** येन कारणीभूतस्यात्मनो नाशोऽपेक्षितः स्यादिति भावः। जागरे शरीराद्यभिमानसद्भावदशायामित्यर्थः। सुप्तौ शरीराद्यभिमानाभावदशायामिति यावदित्यर्थः॥ **विनिगमनमिति।** देहेन्द्रियादिरूपसामग्रीवैकल्येनैव दुःखानुत्पादो नात्मनाशेनेत्यत्र किं विनिगमनमित्यर्थः॥ **अत्यन्तेति।** तथा च न तन्नाशेन

दुःखहानिरेष्टव्येत्यर्थः । **विप्रकृष्टं** बहिष्ठं धनादि । **सन्निकृष्टं** अन्तर्निक्षिप्तं धनादि । एवमत्रापि विप्रकृष्टं देहादिकं । साध्यं दुःखहानिः । सन्निकृष्टः आत्मा ।

**सु०— ननु कुतोऽयं प्रसङ्गोऽविशेषादिति चेन्न । आत्मशून्यता घटशून्यतेति भवद्भिरेव विशेषस्योक्तत्वादित्यत आह** कल्पितत्वादिति ।

**अनु०** — कल्पितत्वाद्विशेषाणां

**न खल्वत्र शून्यताशब्देनाभावोऽभिधीयते । 'भावार्थप्रतियोगित्वं भावत्वं वा न तत्त्वतः । यस्ये'त्यभिधानात् किन्तु (वि) नष्ट आत्मा घटश्च । तौ चाप्रामाणिकौ । न च तथाविधयोर्विशेषाः प्रामाणिकाः संभवन्ति । न हि तुरगशृङ्गं शशशृङ्गं च व्यावर्तकधर्मवती इति संभवतः । तस्मादात्मशून्यता घटशून्यतेति व्यवहर्तृभिः केवलं व्यवहारार्थं विशेषाः कल्पिता इत्यङ्गीकार्यम् । तथा च नाविशेषोऽसिद्ध इति ।**

**दूषणातिदेशार्थं प्राङ्मतसाम्यमुपपादितम् । अतः शून्यवादिनां दूषणं मायावादिनामतिदिशति** मायिनोऽपीति ।

मायिनोऽपि समं हि तत् ॥

**तदित्यात्मभाव इत्यादिनोक्तं समस्तं परामृशति ।**

**शे०— कुतोऽयमिति** । यद्यात्मनाशो मोक्षः स्यात्तर्हि घटनाशोऽपि मोक्षः स्यादित्यतिप्रसंगमूलभूतायामापाद्यापादकव्याप्तौ दृष्टान्ताभावेन मूलशैथिल्यात्प्रसंगाभासोऽयमिति भावः । विशेषव्याप्त्यसंभवेऽप्यविशेषलक्षणसामान्यव्याप्तेरविकलत्वान्न प्रसंगाभासत्वमिति शङ्कते **अविशेषादिति ॥ विशेषस्योक्तत्वादिति** । अन्यथा धर्मार्थकतल्प्रत्ययवैयर्थ्यादिति भावः ॥ **नष्ट आत्मेत्यादि** । नाशविशिष्ट आत्मा नाशविशिष्टो घटश्चेत्यर्थः **। तौ चेति** । विशेष्याश्रितद्रव्यान्तरस्यैव विशिष्टतया नष्टशब्दार्थत्वात् । प्रकृते चात्मघटयोर्नाशदशायां तयोरसत्त्वेन तदाश्रितविशिष्टयोरप्यसत्त्वाद्विशिष्टद्वयस्याप्रामाणिकत्वमिति भावः ।

**प०— भावार्थेति** । 'विश्वाकारं च संवृत्या यस्य तत्पदमक्षयमि'ति चतुर्थपादस्थयस्येत्यस्यान्वयेनानुवादो न तत्त्वतो यस्येति **घटश्चेति** । नष्ट इत्यन्वयः ॥ **ताविति** । आत्मघटौ **अस्यैव रूपस्येति** । अहमित्येवंरूपस्येत्यर्थः ॥ **उपपादितत्वादिति** । 'मा न भूवं भूयासमि'त्यादिना अहं मा भूवं सत्ताहीनवान् न भवामीति व्यतिरेकनिरासः । भूयासं सर्वदा सत्तावान्स्यामिति अहमर्थस्य लौकिकानामसत्त्वनिवृत्तिपूर्वं सत्त्वाशंसनोपदर्शनेनोपपादितत्वात्परेणेत्यर्थः ।

या० — **अविशेषादिति** । परस्परव्यावर्तकधर्मरूपविशेषवत्त्वाभावादित्यर्थः ॥ **अभावोऽभिधीयत इति** । येनात्मघटप्रतियोगिकत्वादयो धर्मास्तत्र कल्पिता न स्युरिति शेषः ॥ **विनष्ट इति** । विनाशोपलक्षित इत्यर्थः । विनाशकालीनमात्मस्वरूपं घटस्वरूपं चेति यावत् । ततश्चायमभिप्रायः । नात्र शून्यशब्देन विनाशरूपोऽभावो गृहीतुं शक्यः । तस्याभावत्वादिधर्मोपेतस्य निर्विशेषशून्यरूपत्वासंभवात् । किं त्वहमिति परमप्रेमास्पदतया प्रतीयमानात्मविनाशोपलक्षितं यन्निर्विशेषात्मस्वरूपं तदेव ग्राह्यम् । नानासंवृतिवर्जितत्वाद्युपलक्षितं निर्विशेषं शून्यमेव मोक्ष इति प्रागुक्तत्वात् । अन्यथाऽनुक्तोपालम्भप्रसङ्गात् । ततश्च यदि देवदत्तस्यात्मविनाशोपलक्षिता निर्विशेषात्मरूपशून्यता मोक्षस्तर्हि घटविनाशकालीननिर्विशेषघटरूपशून्यताऽपि मोक्षः स्यात् । न घटविनाशकालीनं निर्विशेघटरूपं शून्यमप्रामाणिकम् अहमिति प्रतीयमानात्मनाशकालीननिर्विशेषमात्मस्वरूपमस्तीत्यत्रापि प्रमाणाभावात् । अप्रामाणिकयोरत एव व्यावर्तकधर्मशून्ययोस्तयोः समानत्वादिति । एवमग्रेऽप्यात्मशून्यताघटशून्यताशब्दानां विनाशकालीनात्मघटरूपतापरत्वमेवाभिप्रेतमिति मन्तव्यम् ।

श्री० — कुत इत्यत आह **भावार्थेति** । भावार्थः प्रतियोगी यस्य तस्य भावस्तत्त्वम् । तथा च भावार्थप्रतियोगित्वमभावत्वमित्यर्थः । **नष्ट आत्मा घटश्चेति** । नाशसमानकालीन आत्मा नाशसमानकालीनो घटश्चेत्यर्थः ॥ **अप्रामाणिकाविति** । ध्वंससमानकालीनप्रतियोगिनोऽप्रामाणिकत्वादित्यर्थः ।

सु० — स्यादेतत् । नात्मनाशो मायावादिनोच्यते । येनेष्टनाशादपुरुषार्थत्वं मोक्षस्य स्यात् । नापि शून्यताऽऽपत्तिः । यतो घटशून्यताऽपि मुक्तिर्भवेत् । किं नाम जीवभावापगमेन ब्रह्मभावाविर्भावः । ब्रह्म च परमानन्दात्मकमिति भवत्येव तद्भावः पुरुषार्थ इति ।

मैवम् । कोऽयं जीवभावो नाम कश्च ब्रह्मभावः । यद्यविद्याकामकर्मादिबद्धत्वं जीवत्वं परमानन्दभोक्तृत्वं च ब्रह्मत्वमित्यभिधीयते तदाऽनुज्ञया वर्तामहे । न चैवं परस्य पन्थाः । यदेतत्कर्तृत्वभोक्तृत्वशक्त्युपेतं साकारं देहादिव्यतिरिक्तं रूपमहमिति साक्षिसिद्धं तदपगमस्य परेणेष्टत्वात् । इदमेव च रूपं परमेष्टमनुभूयत इति कथं नोक्तदोषः । आनन्दरूपतोपपादनाय परेणाप्यस्यैवरूपस्य परमप्रेमास्पदताया उपपादितत्वात् । न ह्येतस्माद्रूपाद्विविक्तं किमपि निराकारं रूपमनुसन्धाय मा न भूवं भूयासमिति लोक आशास्ते । चक्षुषी निमील्य तथेति वदतस्तु कः प्रतिमल्लः । संवलितरूपे तदप्यस्तीत्यत इयमाशीरिति चासत् । तस्य सर्वथाऽप्यबुद्धिस्थत्वात् । आशासनं च साकारमेव । निराकारस्य तदनुपपत्तेः । न चान्यस्यान्यस्मिन्निरुपाधिकः प्रेमा संभवतीतीदमेवेष्टतम् । एवं तर्हि देहादिसहितत्वस्यापीष्टत्वात्तन्नाशेन

भवतामपि मोक्षस्यापुरुषार्थत्वं स्यादिति चेन्न। परमेष्टलाभहेतोरल्पेष्टनाशस्यापि पुरुषार्थत्वेन लोके दृष्टत्वात्।

ब्रह्मभावश्च न शून्यभावाद्भिद्यत इत्युपपादितम्। आनन्दरूपता च वाङ्मात्रमित्युक्तमेव।

किं चानन्दत्वमपि न पुरुषार्थः। न हि कश्चिदानन्दो भूयासमित्याशास्ते। किन्तु तमनुभूयासमिति। न चानुभाव्यत्वं परेणेष्यते। अनुभवितुरन्यस्याभावात्। स्वस्मिन्कर्मकर्तृभावानभ्युपगमात्।

अपि चानन्दत्वं प्राक् सिद्धमिति न पुरुषेणार्थनीयम्। प्रागविद्यावृतं न प्रकाशते पश्चादविद्यावरणापगमे प्रकाशतेऽतो नैवमिति चेन्न। प्रागपि स्वरूपस्य स्वयंप्रकाशमानताऽभ्युपगमात्। तन्मात्रस्य चानन्दस्याप्रकाशानुपपत्तेः। प्रकाशमानोऽप्यानन्दो न विशदः प्रकाशत इति चेन्न। निर्विशेषत्वात्। वैशद्यावैशद्ययोश्च विशेषनिबन्धनत्वात्। यद्धि सह विशेषैः प्रकाशते तद्विशदमुच्यते। यत्तु साधारणधर्मैः सह तदविशदमिति॥ अविद्यावरणापगमे प्रकाशत इति च कोऽर्थः। किं प्रतीयत इति उत प्रत्येतीति। नोभावपि। अनङ्गीकारात्। प्रदीपः प्रकाशत इति कोऽर्थ इति चेत्। भास्वररूपवान्वर्तत इति न किञ्चिदेतत्। तदिदं सूचितं हिशब्देन।

---

शे० — **अनुज्ञयेति**। अस्माभिरप्यविद्याकामकर्मादिबद्धत्वरूपजीवभावापगमेन परमानन्दभोक्तृत्वरूपब्रह्मभावाभ्युपगमादिति भावः॥ **इदमेव चेति**। कर्तृत्वभोक्तृत्वशक्त्युपेतमेवेत्यर्थः॥ **उक्तदोष इति**। इष्टनाशादपुरुषार्थत्वप्रसंगलक्षण इत्यर्थः। न केवलमस्य रूपस्य परमेष्टत्वमनुभूयत इत्येव किं नाम परेणाप्युपपादितमित्याह **आनन्दरूपतोपपादनायेति**। ब्रह्मण इति शेषः। 'परप्रेमास्पदतया मा न भूवमहं सदा। भूयासमिति यो द्रष्टा सोऽहमित्यवधारये'ति शाङ्करीयायां वाक्यविवृताविति शेषः। ननु न विशिष्टाकारस्याहमर्थस्य परमप्रेमास्पदत्वमनेनानुभवेन मयोपपादितं किं त्वेतद्व्यतिरिक्तनिराकारस्यैवेति नेष्टनाशप्रसङ्गः। परमप्रेमास्पदतयेष्टस्य निराकारस्यानाशात्। नष्टस्य च विशिष्टाकारस्याप्रेमास्पदत्वादित्यत आह **न हीति**। मा न भूवं भूयासमित्येव मूलपाठः। 'परप्रेमास्पदतया मा न भूवमहं सदा। भूयासमिति यो द्रष्टा सोऽहमित्यवधारये'ति शाङ्करीयवाक्यवृत्त्यनुसारात्. मा भूवमिति न भूयासं= मदभाववान्न भूयासमित्यर्थः॥ **लोक इति**। कृमिकीटादिसाधारण्येन प्राणभृन्मात्रमित्यर्थः॥ **तदप्यस्तीति**। निराकारं रूपमस्तीत्यर्थः। तथाच तस्य तत्र सत्त्वादेव विशिष्टाकारस्याशास्यत्वं न तु विशिष्टाकारत्वप्रयुक्तमिति प्राप्ताप्राप्तविवेकेन निराकारमेवाशास्य-

तया पर्यवस्यतीति भावः । भवेदेतदेवम् । यदि तस्याशास्यता संभाविता स्यात् । न च सकल-प्रमाणातीतत्वेनाबुद्धिस्थस्य तस्याशास्यता संभवतीत्याशयेनाह **तस्येति** । आशस्यमानं साकारमेव न निराकारमित्येतद्युक्त्याऽपि समर्थयते **आशासानं चेति** । आशासनकर्त्रित्यर्थः । निराकारमेव किं न स्यादित्यत आह **निराकारस्येति** । तदनुपपत्तेः आशासनकर्तृत्वानुपपत्तेः । अस्त्वेवमाशासनकर्तृ साकारं, आशास्यमानं तु निराकारमेव किं न स्यादित्यत आह **न चेति** । अतिप्रसङ्गादिति भावः । जातेष्ट्यधिकारिणं पितरं प्रति पुत्रगतस्यापि पूतत्वादेराशास्यमानत्वादन्यस्यान्यस्मिन् तत्सद्भावनिश्चयात् कथं प्रेमा न संभवतीत्यत उक्तम् ॥ **निरुपाधिक इति** । पुत्रस्य स्वार्थत्वेन सोपाधिकप्रियत्वान्न निरुपाधिकप्रियत्वमिति युक्तस्तन्निषेधः । निराकारस्य तु न तादर्थ्यमस्तीति न सोपाधिकमपि प्रियत्वम् । निरुपाधिकप्रियत्वं तु दूरनिरस्तमिति भावः ॥ **एवं तर्हीति** । देहादिरहितस्याशासन-कर्तृत्वानुपपत्त्या तत्सहितस्यैवाशासनकर्तृत्वेनोक्तयुक्त्याऽऽशास्यमानत्वसिद्धेरिति भावः ।

नन्वेवं मन्मतेऽपि नापुरुषार्थत्वप्रसङ्गः । परमेष्टपरमानन्दरूपब्रह्मभावलाभेनाल्पेष्टरूपात्मनाशस्य पुरुषार्थत्वसंभवादित्यत आह **ब्रह्मभावश्चेति** ॥ **उपपादितमिति** । 'निर्विशेषत्ववाचैव शून्यं ब्रह्मेति नो भिदे'त्यादिना शून्यब्रह्मणोरविशेषोपपादनेन तद्भावयोरप्यविशेष इति उपपादितमित्यर्थः । ननु मायावादिना ब्रह्मण आनन्दरूपत्वाभ्युपगमाच्छून्यवादिना च तस्य तदनभ्युपगमात् भवेदेव ब्रह्मशून्ययोर्विशेष इत्यत आह **आनन्दरूपता चेति** ॥ **उक्तमेवेति** । न च 'दुःखविरोधित्वादन्या ह्यानन्दतेष्यते । मायिने'त्यनेन ग्रन्थेनेति शेषः ।

आनन्दरूपता किं स्वरूपेण पुरुषार्थः, अनुभूयमानतया वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **किञ्चेति** ॥ आनन्दत्वं आनन्दरूपत्वमित्यर्थः । स्वरूपेण पुरुषार्थतायामानन्दो भूयासमित्ये-वाशीः स्यान्न तु तमनुभूयासमित्यतिप्रसङ्गं मनसि निधायोभयत्रापीष्टापत्तिं परिहरति **न हीति** । अस्तु तर्हि अनुभूयमानतयैव पुरुषार्थत्वमित्यतः परानभ्युपगमेन तद्दूषयति **न चानुभाव्यत्वमिति** । अनुभाव्यत्वं वदन् प्रष्टव्यः । किं अनुभाव्यानुभवित्रोर्भेदमभ्युपगम्य तस्यानुभूयमानत्वमभिप्रेतं किंवा तदभेदमिति विकल्पद्वयं मनसि निधाय क्रमेण पक्षद्वयं दूषयति **अनुभवितुरित्यादिना** । सिद्धे इच्छाविरहात्पुरुषेच्छाविषयस्यैव पुरुषार्थत्वादिति भावः ।

किञ्चानन्दरूपत्वं पुरुषार्थ इत्यभिमतं आवरणनिवृत्तिद्वारा तत्प्रकाशो वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **अपि चेति** । द्वितीयमाशङ्कते **प्रागिति** । ततश्च तत्प्रकाशस्य प्रागसिद्धतया पुरुषेच्छाविषयत्वसंभवान्न पुरुषार्थत्वानुपपत्तिरिति भावः । अत्रापि तत्प्रकाशमात्रं पुरुषार्थ इत्यभिमतं

विशदस्तत्प्रकाशो वा । आद्येऽपि किं प्रागावरणनिवृत्तेश्चैतन्यस्वरूपमेव नावभासत इति मतं किंवा तज्ज्ञानेऽप्यानन्दरूपत्वमेव नावभासत इति विकल्पान्मनसि निधायाद्यं दूषयति **प्रागपीति** । द्वितीयं दूषयति **तन्मात्रस्य चेति** । चैतन्येन निर्विशेषाभिन्नस्येत्यर्थः । अन्यथा चैतन्यस्यापि प्रकाशो न स्यात् । ततश्च सिद्धत्वान्नेच्छाविषयत्वं तस्येति न पुरुषार्थत्वमिति भावः । द्वितीये (आद्यद्वितीये । आद्य)द्वितीयमाशङ्कते **प्रकाशमानोऽपीति** ।

यावद्विशेषबाधात्सामान्यस्यापि बाध इत्यभिप्रेत्य यावद्विशेषबाधमुपदर्शयितुं विकल्पयति **अविद्येति** ।। **अनङ्गीकारादिति** । आद्ये कर्मत्वस्य द्वितीये कर्तृत्वस्य च प्रसङ्गेन सविशेषत्वापत्त्या निर्विशेषत्वव्याघातेन तदनङ्गीकारादित्यर्थः । ननु न प्रतीतिकर्मत्वं तत्कर्तृत्वं चेत्युभयमेव प्रकाशत इति व्यवहारनिदानं ब्रूमः । तथा सति प्रदीपः प्रकाशत इति व्यवहारानुपपत्तिप्रसङ्गात् । न हि तत्र प्रतीतिकर्मत्वं तन्निमित्तमिति शक्यं वक्तुम् । तस्य घटादिसाधारणत्वेन प्रदीप एव विशेषतः प्रकाशत इति व्यवहारं प्रत्यप्रयोजकत्वात् । नापि तत्कर्तृत्वम् । तस्य जडत्वेन तदयोगात् । किन्तु स्वप्रकाशत्वमपि । ततश्च प्रदीपः प्रकाशत इत्यस्य यथा प्रतीयत इति वा प्रत्येतीति वा नार्थः । किन्तु स्वप्रकाश इति । तथा आनन्दः प्रकाशत इत्यस्य न प्रत्येतीत्यर्थः । नापि प्रतीयत इति । किन्तु स्वप्रकाश इत्येवेति कथं तत्खण्डनमित्यभिप्रेत्य शङ्कते **प्रदीपः प्रकाशत इति कोऽर्थ इति चेदिति** । न प्रदीपस्य स्वप्रकाशत्वं वक्तुं युक्तम् । तद्धि स्वविषयप्रकाशत्वं वा पराप्रकाश्यत्वं वा । नाद्यः । तस्य भौतिकत्वेन जडतयोक्तरूपस्वप्रकाशताया व्याहतत्वात् । न द्वितीयः । नयनादिप्रकाशप्रकाश्यत्वेन तदयोगात् । पराप्रकाश्यत्वस्य शशविषाणादिसाधारणतया तत्रापि प्रकाशत इति व्यवहारप्रसङ्गाच्च । किं त्वन्यदेव किञ्चित् । अतस्तदादाय प्रदीपे तदुपपत्तावप्यानन्दे तदयोगान्न तेनोक्तव्यवहारनिर्वाह इत्यभिप्रेत्य तन्निमित्तमाह **भास्वरेति** । उद्भाव्यत्वशङ्कापरिहारायाह **तदिदं सूचितमिति** । स्यादेतदित्यादिनोक्तं समस्तमित्यर्थः ।

स० — **इदमेव चेति** । कर्तृत्वादिशक्तियुक्तमेवेत्यर्थः । **नोक्तदोषः** । दृष्टनाशाङ्गीकारेण शून्यमतसाम्यरूप इत्यर्थः । न केवलमस्य रूपस्य परमेष्टत्वमनुभवसिद्धमेवेत्येव किं नाम परेणाप्येवमुदितमित्याह **आनन्दरूपेति** । मा न भूवं भूयासमिति लोक आशास्त इत्येव पाठः । यद्यपि विरोधचिदानन्दभोगाशिनः प्राणभृद्भेदाः तथापि सर्वेषां जरामरणकृतं दुःखमनिष्टं सर्वस्य खलु क्रिमेरपि मरणत्रासे मा न भूवं भूयासमित्येवमाकारोऽस्ति । दुःखं च भयहेतुरिति मरणं दुःखमिति सांख्यपरीक्षा । तत्र मा नेति निषेधद्वयम् । उत्तमपुरुषप्रयोगादहमिति लभ्यते । तत्र द्वौ नञौ प्रकृतमर्थं

सातिशयं गमयत इति यावत् । अहं मा भूवमिति न भूयासम् । अभाववान्न भूयासमिति तात्पर्यलब्धार्थबलात् स्वस्य परमप्रेमास्पदत्वमेवोक्तं भवतीति भावः । **ब्रह्मभावश्चेति** । 'निर्विशेषत्ववाचैव शून्यं ब्रह्मेति नो भिदे'त्यादिनोपपादितमित्यर्थः । **आनन्दरूपता चेति** । 'न च दुःखविरोधित्वादन्याह्यानन्दतेष्यते । मायिने'त्यादिनेत्यर्थः ॥ **तन्मात्रस्येति** । तेन ब्रह्मणा निर्विशेषाभिन्नस्येत्यर्थः । अन्यथा स्वरूपप्रकाशोऽपि न स्यादिति भावः । **नोभावपीति** । प्रकाशत इत्यस्य प्रतीयत इत्यर्थाङ्गीकारे तस्य कर्मत्वं वाच्यम् । द्वितीये कर्तृत्वम् । न च तत्परेणाङ्गीकर्तुं शक्यते निर्विशेषत्वाभ्युपगमादिति भावः ।

प० — **तदप्यस्तीति** । निर्विकारं वस्त्वित्यर्थः । अहमर्थस्यैवेष्टत्वं व्यनक्ति **आशासनं चेति** । आशासनकर्तृ चेत्यर्थः । नन्वाशंसनकर्ताऽहमर्थः प्रेमास्पदनिराकारार्थमेवाशास्त इत्यस्त्वित्यत आह **न चान्यस्येति** ॥ **लोक इति** । तृणधान्यरूपमहाफलहेतोरल्पवित्तव्ययस्येष्टत्वरूपदर्शनादिति भावः । नापि शून्यताऽऽपत्तिरित्यादिना यत्स्वमते पुमर्थत्वोपपादनं पूर्वत्र कृतं तन्निराह **ब्रह्मभावश्चेति** । **उपपादितमिति** । 'निर्विशेषत्ववाचैव शून्यं ब्रह्मेति नोभिदे'त्यादिग्रन्थेन ब्रह्मशून्ययोर्भेदाभावोपपादनेति भावः ॥ **उक्तमेवेति** । सच्चित्सुखादिकं चेत्यादिग्रन्थेन । तथा 'न च दुःखविरोधित्वादन्याह्यानंदते'त्यादिना चेति भावः । तमनुभूयासं आनन्दानुभववान्स्यामित्यर्थः । निर्विशेषत्वे कुतो वैशद्याद्ययोग इत्यत आह **यद्धीति** । कर्मत्वं वा कर्तृत्वं वाभिप्रेतमिति भावेन विकल्प्य निराह **अविद्यावरणेति** ॥ **नोभावपीति** । अनुभवितुरन्यस्येत्युक्तदिशा कर्मत्वस्य स्वस्मिन्नित्यादिनोक्तरीत्या कर्तृत्वस्यायोगेन सकलकारकशक्तिविधुरताऽयोगेन वाऽनङ्गीकारादित्यर्थः । शङ्कते **प्रदीप इति** । तत्रैकस्यैव कर्तृत्वकर्मत्वविरोधात् परप्रकाश्यत्वाभावमात्रेण प्रकाशत इत्युक्तिस्तथात्रापीति भावः ॥ **भास्वररूपेति** । परप्रकाशकं रूपं भास्वररूपं तद्वानित्यर्थः ॥ **तदिदमिति** । किञ्चानन्दत्वमपीत्यादिनैतत्पर्यन्तमुक्तं प्रमेयमित्यर्थः ।

या० — **तदाऽनुज्ञयेति** । अस्मन्मतेऽपि जीवस्याविद्याद्यपगमे परमानन्दभोक्तृत्वाङ्गीकारादिति भावः ॥ **उपपादितत्वादिति** । स्वग्रन्थेऽहं मा न भूवं अपि तु भूयासमित्यनुभवेनेति शेषः । ननु न विशिष्टाकारस्याहमर्थस्य परमप्रेमास्पदत्वं मयाऽनेनानुभवेनोपपादितं किन्तु तदतिरिक्तं निराकारं यद्रूपं तस्यैवेत्यत आह **न ह्येतस्मादिति** ॥ **तदप्यस्तीति** । निराकारं रूपमप्यस्तीत्यर्थः । साकारमेवात्राशास्यं न तु निराकारमित्येतत्प्रकारान्तरेणोपपादयति **आशासनं चेत्यादिना** । **आशासनं** आशासनकर्तृ । अन्यस्याशासनकर्तुः साकारस्यान्यस्मिन्निराकारे । **इदमेव** आशासनकर्त्रैवेत्यर्थः । ननु मन्मतेऽपि

परमेष्टपरमानन्दरूपब्रह्मभावलाभेनाल्पेष्टरूपात्मनाशः पुरुषार्थः स्यादेवेत्यत आह **ब्रह्मभावश्चेति** । शून्यभावश्च न पुरुषार्थ इति भावः । एतेन परोक्तमोक्षस्वरूपे ब्रह्मभावाविर्भाव इत्यंशो दूषित इति ज्ञातव्यम् ॥ ननु ब्रह्मण आनन्दरूपत्वाद्भवति तद्भावः पुरुषार्थ इत्यत आह **आनन्दरूपता चेति** ॥ **न चानुभाव्यत्वमिति** । आनन्दस्येति शेषः ॥ **अनङ्गीकारादिति** ॥ अनभ्युपगमात् । कर्तृत्वकर्मत्वयोर्निर्विकारे निर्विशेषे चानङ्गीकारादित्यर्थः ॥ **प्रदीप इति** । तत्र यथा पराप्रकाश्यत्वं प्रकाशत इत्यस्यार्थः । तथा प्रकृतेऽपीति शङ्कितुराशयः ॥ **भास्वररूपवानिति** । अन्यथा शशविषाणादावपि पराप्रकाश्यत्वसद्भावेन प्रकाशत इति प्रतीतिप्रसङ्ग इति भावः ।

**श्री॰— अनुज्ञयेति** । जीवस्य ब्रह्मत्वं नाम अविद्याकामकर्मादिबद्धस्य परमानन्दभोक्तृत्वमित्युक्तं स्यात् । तच्चास्माकमिष्टमेव । अविद्यापगमानन्तरं जीवस्य तथाभावाङ्गीकारादिति भावः ॥ **मा न भूवमिति** । अहं निराकाररूपं माभूवमिति न । मम निराकाररूपत्वं मास्त्विति नेति यावत् । किन्तु भूयासं निराकाररूपमेव भूयासमिति लोको न ह्याशास्त इत्यर्थः । **चक्षुषी निमील्येत्यादि** तूष्णीं तथा वदत इत्यर्थः । **प्रतिमल्लः** प्रतिवादी । यद्वा इदानीमहमिति परमप्रेमास्पदतयाऽनुभूयमानं यद्रूपं तन्मा भूवं एतद्रूपं त्यक्ष्ये इति न । किन्तु भूयासमित्थमेव सर्वदा भूयासमित्येवाशास्त इति प्रसिद्धम् । निराकाररूपमनुसन्धायेत्थमाशास्त इति न हीत्यर्थः ॥ **संवलितरूप इति** । परमप्रेमास्पदतया आशास्यमानेऽहमिति चिदचित्संवलिते रूपे निराकारं रूपमप्यस्त्येवेत्यर्थः । अतो निराकाररूपं भूयासमित्याशीर्युक्तेति भावः । **तस्य** निराकाररूपस्य ॥ **अन्यस्येति** । यदा मा न भूवं भूयासमित्याशासनकर्तृ साकारं तस्य निराकाररूपभवने कथमाशासा स्यात् । कुत इति चेत् । अन्यस्यान्यस्मिन्निरुपाधिकप्रेमोत्पत्तेरसंभवादित्यर्थः ॥ **स हि तस्यापीति** । आत्मन इत्यर्थः । **तन्नाशेन** देहेन्द्रियादिनाशेन । **परमेष्टं** अप्राकृतस्वरूपानन्दाविर्भावः । **अल्पेष्टं** प्राकृतदेहादि ॥ **उक्तमेवेति** । 'न च दुःखविरोधित्वादन्या ह्यानन्दतेष्यत' इत्युक्तमित्यर्थः । **अनुभूयासमिति** । आनन्दानुभववान् भूयासमित्यर्थः । द्रविणवत्त्वे हि पारिव्रढ्यं न तु द्रविणत्व इतिवदिति भावः । नन्वानन्दानुभव एव पुरुषार्थ इत्येवोच्यत इति चेत्तत्राह **न चेति** । आनन्दस्यानुभवविषयत्वमित्यर्थः । **प्रतीयते** प्रतीतिविषयो भवति । **प्रत्येति** प्रतीतिमान्भवति ।

सु॰— ननु **निर्विशेषां शून्यतां मोक्षमाचक्ष्महे । तत्प्रत्ययोऽपि हि** व्यवहारार्थमेव **उपादीयते न तु कमपि धर्मं प्रतिपादयति । घटशून्यता तु सविशेषा घटेन विशेषितत्वात् । तत्कथमतिप्रसङ्ग इति चेन्न । विवक्षिताया अपि शून्यताया एवमेवात्मशून्यतेत्यात्मना विशेषि**

तत्वेन सविशेषत्वदर्शनादमोक्षत्वप्रसङ्गात् । अथैवमात्मशून्यताया विशेषे दृश्यमानेऽपि केनचिदभिसन्धिना निर्विशेषतोच्यते तत्राह दृश्यमान इति ।

अनु०— दृश्यमाने विशेषेऽपि यदि चेदविशेषता ॥
घटाभावेऽविशेषः स्यात्पाश्चात्यश्चेदनागतः ॥

**मोक्षत्वेनाभिमतस्य शून्यभावस्येति शेषः । चेच्छब्दः स्यादित्यर्थे । भावशब्दः कर्तृसाधनः । एवं तर्हि घटशून्यताऽपि तेनैवाभिसन्धिना निर्विशेषा स्यादित्यतिप्रसङ्गतादवस्थ्यमिति । पूर्वपक्षिणोऽभिसन्धिमुद्धाटयति** पाश्चात्यश्चेदिति । **आत्मशून्यभावः । पाश्चात्यो विशेषरहित इति चेदित्यर्थः । पाश्चात्यत्वं चात्र व्यवहारापेक्षया ।**

**ततश्चैतदुक्तं भवति । इदानीं निरूपणसमये व्यवहारार्थं कल्पितेनैव विशेषेणात्मशून्यभावः सविशेष इवाभाति । अक्रियमाणे तु निरूपणे स्वरूपेण निर्विशेष एवेति । सिद्धान्तिनोऽभिसन्धिमुद्धाटयति** अनागत इति । **एवं तर्हि घटशून्यभावोऽपि निरूपण एव सविशेषो दृश्यते । निरूपणमनागतोऽप्राप्तस्तु निर्विशेष एवेत्यस्माभिरपि शक्यते वक्तुमित्यर्थः ।**

शे०— 'मोक्षः स्याद्धटशून्यते'त्यादिनोक्तप्रतिबन्दीं मोचयितुं शङ्कते **नन्विति** । ननु धर्मप्रतिपादकतत्प्रत्ययोपपादनेन मोक्षस्य सविशेषत्वलाभान्न निर्विशेषशून्यताया मोक्षत्वं युक्तमित्यत आह **तत्प्रत्यय इति** ॥ **केनचिदभिसन्धिनेति** । निरूपणसमये व्यवहारार्थं कल्पितेन विशेषेण शून्यभावस्य सविशेषत्वप्रतीतावपि अक्रियमाणे निरूपणे स्वरूपेण निर्विशेषत्वमेवेति केनचिदभिसन्धिनेत्यर्थः ॥ **स्यादित्यर्थ इति** । अन्यथा यदिशब्दवैयर्थ्यापातादिति भावः ॥ **भावशब्दः कर्तृसाधन इति** । घटाभाव इत्यभावशब्दान्तर्गतो भावशब्दो भवतीति भाव इति कर्तृसाधनः । तथा सत्येव न भवतीत्यभावः घटश्चासावभावश्चेति घटाभाव इति । घटाभावशब्देन नष्टघटलाभान्नष्टस्यात्मनो मोक्षत्ववादिनं प्रति तत्प्रतिबन्दीत्वेन नष्टघटस्य मोक्षत्वापादनलाभेन प्रक्रमानुगुण्यसंभवात् । न तु भवनं भाव इति भावसाधनः । तथा सति घटासत्वस्यैव घटाभावशब्दाल्लाभेन तन्मोक्षत्वापादनस्य आत्मासत्वस्य, मोक्षत्ववादिनं प्रत्येव सङ्गतत्वेन, नष्टस्यात्मनो मोक्षत्ववादिनं प्रति प्रक्रमविरुद्धतया प्रतिबन्दीत्वेन तस्य कर्तुमनुचितत्वादिति भावः ॥ **तेनैवेति** । अनिरूपणे स्वरूपेण निर्विशेषत्वमित्यनेनैवाभिसन्धिनेत्यर्थः ।

स०— **केनचिदभिसन्धिनेति** । निरूपणसमये व्यवहारार्थं कल्पितेनैव विशेषेणात्मशून्यभावस्य विशेषत्वप्रतीतावपि अक्रियमाणे निरूपणे निर्विशेषत्वमेवेति केनचिदभिसन्धिनेत्यर्थः । **भावशब्दः**

**कर्तृसाधन इति** । नष्टस्यात्मन एव मोक्षत्वे परेणोक्ते, तत्प्रतिबन्दीत्वेन घटस्यैव मोक्षत्वापादनस्या कर्तव्यत्वात् घटाभाव इत्यत्र भावशब्दस्य भवनं भाव इति भावसाधनत्वे घटासत्त्वस्यैव मोक्षत्वमुक्तं स्यात् । तथाच प्रक्रमविरोधापत्त्या कर्तृसाधनत्वमाश्रितम् । तथाच भवतीति भावः । न भावोऽभावः । घटश्चासावभावश्चेति नष्टघट इत्युक्तं भवति । अत्र च न खलु शून्यताशब्देनाभावोऽभिधीयते । 'भावार्थप्रतियोगित्वं भावत्वं वा न तत्त्वतः । यस्ये'त्यभिधानात् । किन्तु नष्ट आत्मा घटश्चेति जयतीर्थपूज्यचरणस्य कल्पितत्वाद्विशेषाणामित्येतद्वाक्यव्याख्यानमेव ज्ञापकं ज्ञेयम् । **तेनैवाभिसन्धिनेति** । अनिरूपणे स्वरूपेणैव निर्विशेषत्वमित्युक्ताभिसन्धिनेत्यर्थः ।

प० — मोक्षः स्याद्घटशून्यतेत्युक्तातिप्रसङ्गपरिहारशङ्कानिरासकतया मूलमवतारयितुं शङ्कामाह **ननु निर्विशेषामित्यादिना** । ननु तर्हि शून्यतेति भावार्थे 'तस्य भावस्त्वतलावि'त्युक्ततल्प्रत्ययः कथमित्यत आह **तल्प्रत्यय इति** ॥ **अतिप्रसङ्ग इति** । घटशून्यता मोक्षः स्यादित्युक्तातिप्रसङ्ग इत्यर्थः । **विवक्षिताया अपीति** । आत्मशून्यताया अप्येवमेवेत्यर्थः । तद्व्यनक्ति **आत्मशून्यतेति** ॥ **केनचिदभिसन्धिनेति** । व्यवहारमात्रेणैव विशेषितत्वं वस्तुतो निर्विशेषत्वमेवेत्यभिप्रायेणेत्यर्थः । यदीत्यस्यावैयर्थ्यायाह **स्यादित्यर्थ इति** । (घटाभावस्य सविशेषत्वात् अविशेषत्वो) घटशून्यताया अविशेषत्वमनभिधाय घटाभावस्य निर्विशेषत्वोक्तिरयुक्तेत्यत आह **भावशब्द इति** । भवतीति भवनकर्तृत्वे विवक्षिते भवतेश्चेति सूत्रेण णप्रत्यये वृद्ध्यावादेशयोः कृतयोर्भावेतिरूपसिद्धेर्भावः सन् अभावोऽसन् घटरूपोऽसन् नष्टे घटः घटशून्य(भावोपी)तापीत्यर्थः । तथा च सिद्धमर्थमाह **एवं तर्हीति** । अस्फुटत्वादाह **ततश्चैतदुक्तं भवतीति** ॥ **अप्राप्तस्त्विति** । निरूपणाभावदशायामित्यर्थः ।

या० — विनाशकालीनघटरूपशून्यभावोऽपि मोक्षः स्यादित्युक्तप्रतिबन्दीं मोचयितुं शङ्कते **ननु निर्विशेषामिति** । निर्विशेषशून्यभावमित्यर्थः ॥ **घटेन विशेषितत्वादिति** । निर्विशेषत्वाद्विनष्टघटोऽपि शून्यमिति प्रागुक्तम् । तथाच घटशून्यपदयोः कर्मधारयसमासे नीलघट इत्यत्र घटो नैल्येनेव घटशून्यमित्यत्रापि शून्यं घटेन विशेषितमिति भावः । एवमात्मशून्यमप्यात्मना कर्मधारयविवक्षयैव विशेषितमिति ज्ञातव्यम् ॥ **केनचिदभिसन्धिनेति** । निरूपणसमये सविशेष इव दृश्यते । अक्रियमाणे तु निरूपणे स्वरूपेण निर्विशेष एवेत्यभिसन्धिनेत्यर्थः ॥ **स्यादित्यर्थ इति** । अन्यथा यदिशब्दवैयर्थ्यमिति भावः । अभावस्य सविशेषत्वान्निर्विशेषत्वोक्तिरयुक्ता अत आह **भाव शब्द इति** । घटाभाव इत्यभावशब्दान्तर्गतो भावशब्दो भवतीति भाव इति कर्तृसाधन इत्यर्थः । तथा च न भवतीत्यभाव इति अभावशब्दस्यार्थे तस्य घटशब्देन कर्मधारयसमासे विनष्टो घट एवात्रोच्यते तस्य

चोक्तरीत्या निर्विशेषत्वोक्तिर्युक्तैवेति भावः । घटशून्यतेत्यादिरप्रेतनव्यवहारोऽपि कर्मधारयाभिप्रायेणैवेति मन्तव्यम् । 'कल्पितत्वाद्विशेषाणामि'त्यत्र व्यवहारबलेन विशेषः कल्पनीय इति शङ्का निराकृता । अत्र तु दर्शनबलाद्विशेषो वक्तव्य इति शङ्का निराक्रियत इति महान्भेदः । अत एव तत्र शङ्कासमये विशेषस्योक्तत्वादित्युक्तम् । अत्र तु सविशेषत्वादर्शनादित्युच्यत इति ।

**श्री०— भावशब्द इति** । अभावशब्दान्तर्गतो भावशब्द इत्यर्थः । तथाच भवतीति भावः सन् , न भवतीत्यभावोऽसन् शून्यमित्यर्थः । **निवृत्तिः** ध्वंसः ॥

**सु०— किञ्चोक्तरूपे शून्यवादिमायावादिभ्यामुत्प्रेक्षिते मोक्षे न किञ्चित्प्रमाणमस्ति । तथा हि । न तावदत्र प्रत्यक्षं प्रमाणम् । प्रत्यक्षाविषयत्वादस्यार्थस्य । नाप्यागमः । वेदाद्यागमस्य शून्यवादिना प्रमाणत्वेनानभ्युपगमात् । तदीयागमस्यास्माभिरनङ्गीकृतत्वात् । मायावादिनं प्रति तु वक्ष्यामः । तस्मादात्मशून्यता पुरुषार्थो दुःखनिवृत्त्युपयोगित्वाच्छरीरादिशून्यतावदित्यनुमानमेव वक्तव्यम् । यथोक्तम् । 'न तैर्विना दुःखहेतुरात्मा चेत्तेऽपि तादृशाः । निर्दोषं द्वयमप्येवं वैराग्यं च द्वयोस्ततः' इति । तदिदं सत्प्रतिपक्षतया नानुमानमित्याह** न मोक्ष इति ।

**अनु०**— न मोक्षो विमतो यस्माददेहो घटशून्यता ॥
यथेत्युक्ते वदेत्किं स योऽनुमामात्रमानकः ॥

**विमतः शून्यभावो ब्रह्मभावो वा न मोक्ष इति प्रतिज्ञा । यस्माददेह इति हेतुः अदेहत्वादिति । घटशून्यता यथेति दृष्टान्तः । योऽनुमामात्रमानकः स इत्युक्ते किं वदेदित्यनेनोक्तविधया प्रमाणान्तराभावं तत एव स्वानुमानस्याबाधितविषयत्वं च सूचयति ।**

**शे०**— ननु 'न मोक्षः' इत्युत्तरग्रन्थस्योक्तार्थानुपपादकतया पूर्वग्रन्थेनासङ्गतेः सङ्गत्यन्तराप्रतिभासाच्चानर्थक्यम् । न च स्वाभिमतमोक्षसाधकतया परोपन्यस्तानुमानस्य सत्प्रतिपक्षतया दूषणेन तत्सङ्गतत्वात्सार्थक्यमिति वाच्यम् । निमित्ताभावेन स्वाभिमतमोक्षे परेण प्रमाणस्यैवावक्तव्यत्वात् । वक्तव्यत्वेऽप्यनुमानस्यैव वक्तव्यतायां नियामकाभावात् । तद्भावेऽपि वा तदभिमतानुमानविशेषनिर्धारणोपायाभावेन तस्य सत्प्रतिपक्षतया तद्दूषणार्थत्वायोगादित्यतोऽत्र भाष्ये अप्रामाणिकत्वेन पराभिमतमोक्षदूषणस्याप्यभिप्रेतत्वेन तत्परिजिहीर्षया परस्य तत्प्रमाणोक्तेरावश्यकत्वात्प्रमाणान्तरासंभवेनानुमानस्यैव वक्तव्यत्वाच्च तदनुमानविशेषनिर्धारणोपायसद्भावेन तन्निर्धारणस्याप्युपपन्नत्वेन सत्प्रतिपक्षतयोपपन्नतन्निरासकभावस्य 'न मोक्ष' इत्यादेर्वाक्यस्य भाष्यकृदभिमतपूर्ववाद्यभिप्रेतमोक्षाप्रामाणिकत्व-

समर्थनार्थतया तत्सङ्गतत्वान्न तस्यानर्थक्यमिति भावेन तत्परतयोत्तरग्रन्थं सङ्गमयितुं भाष्यकृदभिमतां पूर्ववाद्युक्तमोक्षस्याप्रामाणिकत्वरूपदोषान्तरप्रतिज्ञां दर्शयन्नेव प्रमाणान्तरासंभवव्युत्पादनेनानुमानस्य वक्तव्यतामनुमानविशेषनिर्धारणोपायं च दर्शयति **किञ्चेत्यादिना** ॥ **उक्तरूपेति** । अहमिति प्रतीयमानात्मविनाशरूप इत्यर्थः ॥ **वक्ष्याम इति** । 'न च मायी वदेदत्र पूर्वोक्तेनैव वर्त्मने'-त्यादिनाऽनुपदमेवेति भावः ॥ **दुःखनिवृत्त्युपयोगित्वादिति** । विदेहावस्थाया अपि पुरुषार्थत्वान्न तत्र व्यभिचार इति भावः । उक्तार्थे माध्यमिकसंमतिमाह **यथोक्तमिति** । तदीयपूर्वग्रन्थे देहेन्द्रिया-दीनामिवात्मनोऽपि दुःखहेतुत्वेन त्याज्यत्वमुपवर्णितं तदाक्षेपसमाधानपूर्वकमुपपादयितुं 'न तैर्विने'ति वाक्यम् । तस्यायमर्थः । केवल आत्मा तैर्देहेन्द्रियादिभिर्विना दुःखहेतुर्न भवति । अतस्तत्र वैराग्यं नापेक्षितमिति चेत् । तर्हि तेऽपि देहादयोऽपि तादृशा आत्मना विना केवला दुःखादिहेतवो न भवन्ति । ततः किमित्यत उक्तं निर्दोषमिति । एवं विशकलितमात्मा देहादिश्चेति द्वयं निर्दोषं स्याद्द्वयं न भवेत् । केवले आत्मनि केवले देहादावपि वैराग्यं न स्यादिति भावः । अथ केवलस्य देहादेर्दुःखाहेतुत्वेऽप्यात्मसहितस्य तथात्वात्तत्र वैराग्यमावश्यकं तर्हि केवलस्यात्मनो दुःखाहेतुत्वेऽपि देहादिसहितस्य तद्धेतुत्वादात्मन्यपि वैराग्यमावश्यकमित्याह **वैराग्यमिति** ॥ **तत इति** । कथञ्चिद्दुःख-हेतुत्वादित्यर्थः । तथा चात्र देहादितुल्यतयाऽऽत्मनो दुःखहेतुत्वेन हेयत्वोक्त्या देहादिनाशतुल्य-तयाऽऽत्मविनाशस्यापि दुःखनिवृत्त्युपयोगित्वेन पुरुषार्थत्वसिद्धेरिति युक्तोऽस्य प्रकृतोपयोग इति । न मोक्ष इत्यादेर्यथाश्रुतस्यैव प्रतिपक्षप्रयोगप्रकारत्वभ्रान्तिनिरासायाह **विमत इत्यादि** । **न मोक्ष इतीति** । प्रतिज्ञेत्युपलक्षणम् । विदेहावस्थाऽपि न मोक्ष इत्यपि द्रष्टव्यम् ॥ **प्रमाणान्तराभाव-मिति** । प्रत्यक्षागमरूपप्रमाणान्तराभावमित्यर्थः । तत्कथमित्यत उक्तम् ॥ **उक्तविधयेति** । 'न तावदत्र प्रत्यक्षं प्रमाणम् । तदविषयत्वादस्यार्थस्ये'त्यादिपूर्वोक्तविधयेत्यर्थः ।

**स०—वक्ष्याम इति** । 'न च मायी वदेदत्र पूर्वोक्तेनैव वर्त्मने'त्यादिनेति शेषः । **यथोक्तमिति** । तैः शरीरादिभिर्विनात्मा दुःखहेतुर्न भवति । **अतः** शरीरादिसंबन्धाभावे दुःखाहेतुत्वात् । नात्मा दुःख-हेतुरिति चेत् । तर्हि शरीरादयोऽप्यात्मसंबन्धेनैव दुःखहेतवः न त्वात्मसंबन्धाभावे दुःखाहेतुत्वेन शरीरादेरपि निर्दोषत्वं स्यात् । आत्मसंबन्धेनापि दुःखहेतुत्वात् शरीरादौ वैराग्यं चेत् । तर्हि शरीरसंबन्धेनापि दुःखहेतुत्वात् । आत्मन्यपि वैराग्यं स्यादिति दूषणं बोधलक्षणम् ।

**प०—उक्तरूप इति** । अहमर्थात्मकात्मविनाशरूप इत्यर्थः ॥ **उभयेति** । वादिनस्तव प्रतिवादिनो मम चेत्यर्थः ॥ **वक्ष्याम इति** । न च मायी वदेदत्रेत्यादिनेति भावः ॥ **यथोक्तमिति** ।

शून्यवादिनोक्तमित्यर्थः । आत्मा तैर्देहेन्द्रियादिभिः विना केवलो दुःखहेतुर्न भवतीति तत्रैव **वैराग्यं कार्यमिति** चेत्तर्हि **तेऽपि** देहादयोऽपि । **तादृशा** आत्मना विना केवलाः दुःखहेतवो न भवन्ति । एवं प्रत्येकं द्वयमपि **निर्दोषं** दुःखहेतुर्न भवतीत्युभयत्रापि वैराग्यं न कार्यमित्यर्थः ॥ यद्यन्योन्यसहायेन द्वयमपि दुःखहेतुस्तर्हि **द्वयोः**रात्मनि देहेन्द्रियादौ चोभयत्र **ततो** दुःखहेतुत्वाद्वैराग्यं कार्यमित्यात्मनाशः पुरुषार्थ एवेति भावः ॥ **विमत इति** । मूलानुवादः ॥ **उक्तेति** । न तावदत्रेत्यादिनोक्तविधयेत्यर्थः ।

**या० — उक्तरूप इति** । अहमिति प्रतीयमानात्मविनाशरूप इत्यर्थः ॥ **वक्ष्याम इति** । 'न च मायी वदेदत्रे'त्यनुपदमेवेति शेषः ॥ **न तैर्विनेति** । तदीये पूर्वग्रन्थे देहेन्द्रियादीनामिवात्मनोऽपि दुःखहेतुत्वेन त्याज्यत्वं प्रकृतम् । तदाक्षेपसमाधानपूर्वकमुपपादयति **न तैरिति** । केवल आत्मा तैर्देहेन्द्रियादिभिर्विना न दुःखहेतुस्ततस्तत्र वैराग्यं नापेक्षितमिति चेत्तर्हि तेऽपि देहादयोऽपि तादृशाः केवला दुःखहेतवो न भवन्ति । ततः किमित्यत आह **निर्दोषमिति** । एवं विशकलितमात्मा देहादिश्चेति द्वयं निर्दोषं स्याद्धेयं न भवेत् । केवले आत्मनीव केवले देहादावपि वैराग्यं न स्यादिति भावः । अथ केवलस्य देहादेर्दुःखाहेतुत्वेऽप्यात्मसहितस्य तस्य तथात्वात्तत्र वैराग्यमावश्यकं तर्हि केवलस्यात्मनो दुःखाहेतुत्वेऽपि देहादिसहितस्य तथात्वादात्मन्यपि वैराग्यमावश्यकमित्याह **वैराग्यमिति** ॥ **तत इति** । कथञ्चिद्दुःखहेतुत्वादित्यर्थः । तथा चात्र देहादिवदात्मनोऽपि दुःखहेतुत्वाद्धेयत्वमित्युक्त्यः देहादिनाशवदात्मनाशोऽपि दुःखनिवृत्त्युपयोगित्वात्पुरुषार्थ इत्यपि सूचितमतो नासङ्गतिरिति ज्ञातव्यम् । **विमत इति** । आत्मदेहादिनाशकालीन इत्यर्थः । यद्यप्यात्मनाशो न मोक्ष इत्येव साधनीयम् । परेण तस्यैव पुरुषार्थतायाः साधितत्वात् । तथाऽपि तदभिप्रेतं समग्रमपि मोक्षं दूषयितुमित्थं प्रतिज्ञा व्याख्याता । विशिष्टनिषेधस्य च विशेषणनिषेधेऽपि पर्यवसानादुक्तानुमाने प्रतिपक्षत्वमपि सिद्ध्यतीति ध्येयम् ।

**श्री० — यथोक्तमिति** । आत्मनो दुःखनिवृत्त्युपयोगित्वमुक्तमित्यर्थः । तैर्देहादिभिर्विना केवल आत्मा दुःखहेतुर्न चेत्तर्हि ते देहादयोऽपि तादृशाः केवला न दुःखहेतवः । किंत्वात्मसहिताः । एवमात्मनो दुःखहेतुत्वं देहादेश्च दुःखहेतुत्वमिति पक्षद्वयमपि निर्दोषम् । ततः कारणात् द्वयोर्देहविषये आत्मविषये च वैराग्यं संपाद्यं तन्नाशः संपाद्य इति यावदित्यर्थः । **अदेहत्वादिति** । देहशून्यत्वादित्यर्थः ।

**सु० — अत्राह मायावादी । नेदं प्रत्यनुमानं मानम् । विदेहावस्थैव मोक्ष इति श्रुतिसद्भावेन कालातीतत्वात् । किञ्च श्रुत्यैव ब्रह्मभावाविर्भावो मोक्ष इत्युक्तत्वात्किमनुमानेनेति । तत्राह** न चेति ।

अनु० — न च मायी वदेदत्र

अत्रानुमानविषये श्रुतिमालम्ब्य दूषणं न वदेत् । तथाऽत्र स्वामिमते मोक्षे श्रुतिं प्रमाणं नैव वदेदित्यर्थः । कुत इत्यत आह पूर्वेति ।

पूर्वोक्तेनैव वर्त्मना ॥

अमानत्वात् श्रुतेस्तस्य

तस्य मायावादिनो मते श्रुतेरमानत्वात् । कथम् । 'प्रामाण्यादि च वेदस्ये'त्यादिना पूर्वोक्तेनैव वर्त्मना । ननु न सर्वो वेदोऽतत्त्वावेदकः किन्तु विधिनिषेधात्मक एव । अतथाभूतास्तु वेदान्तास्तत्त्वावेदका इति चेन्न । सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यत इत्यादिना पूर्वोक्तेनैव वर्त्मनाऽत्र तत्त्वे श्रुतेरमानत्वात् ।

शे० — विदेहावस्थानं मोक्ष इति प्रतिपक्षं दूषयति **विदेहावस्थैवेति** । दूषणं बाधलक्षणम् ॥ **स्वामिमते इति** । ब्रह्मभावाविर्भावलक्षणमित्यर्थः ।

प० — **श्रुतिसद्भावेनेति** । 'अशरीरं वाव सन्तमि'त्यादिश्रुतीत्यर्थः ॥ **श्रुत्यैवेति** । 'स्वरूपेणाभिनिष्पद्यते' 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुत्यैवेत्यर्थः ॥ **सर्वधर्मेति** । भक्तिपादे ।

---

या० — **विदेहावस्थैवेति** । अत्र विमत इत्यत्र देहनाशकालीनत्वस्यापि विशेषतया विवक्षितत्वात्तदंशे नोक्तनिषेधपर्यवसानं कालातीतत्वादित्यर्थः । तेन कालातीतत्वोपपादनाय ब्रह्मभावश्च मोक्ष इति श्रुतिसद्भावेनेत्येव वक्तव्यम् । देहावस्थैव मोक्ष इत्यत्र श्रुतिसद्भावकथनमसङ्गतमिति शङ्काऽनवकाशः । ब्रह्मभावाविर्भाव इत्यत्राविर्भावग्रहणेनोक्तविनाशकालीनत्वमप्युक्तप्रायम् । देहादिविनाशाभावे ब्रह्मभावाविर्भावासंभवादिति ध्येयम् ।

सु० — अस्तु वा कथञ्चित् श्रुतिः प्रमाणम् । तथाऽपि नास्मदनुमानस्य तद्बाध इत्याह न चेति ।

अनु० — न चादेहत्ववादिनी ॥

श्रुतिः काचित्

मुक्ताविति शेषः । तथा तदभिमतमोक्षवादिनीत्यपि ग्राह्यम् । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इत्यादिश्रुतिसद्भावात्कथमदेहत्ववादिनी श्रुतिर्नास्तीत्युच्यत इत्यत आह अदेहत्वमिति ।

अदेहत्वमप्राकृतशरीरता ॥

**यदस्यां श्रुतावदेहत्वमुच्यते तत्प्राकृतशरीरराहित्यमेव । न तु सर्वथाऽप्यदेहत्वम् । प्राकृतशब्देन जडमुपलक्ष्यते । तद्राहित्य च चतुर्थपादोदितप्रकारेण ज्ञातव्यम् । एवं 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतिराशङ्क्य व्याख्यातव्या च ।**

**अशरीरत्वश्रुतेः कुतोऽर्थसङ्कोचः क्रियत इत्यत आह** मोक्ष इति ।

मोक्षे भोगं यतो ब्रूते जक्षन् क्रीडन्निति श्रुतिः ॥

**'स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वे'ति श्रुतिर्मोक्षे स्त्र्यादिभोगं ब्रूते । न चाशरीरस्यासौ संभवतीत्यतः सङ्कोच इत्यर्थः ।**

**शे०**— मुक्तानां प्राकृतशरीराभावेऽपि अस्मदादीनामिव भौतिकशरीरप्राप्त्या दुःखादिप्रसङ्ग इत्यतोऽत्र प्राकृतशब्दस्याजहत्स्वार्थलक्षणया भौतिकपरत्वस्याप्यभिमतत्वेन प्राकृतमात्रपरत्वाभावाद्भौतिक-देहराहित्यस्यापि प्राप्तेर्न दुःखादिप्रसङ्ग इत्याशयेनाह **प्राकृतशब्देनेति** । ननु न जडशरीरराहित्यं श्रुत्यर्थतया वक्तुं शक्यम् । तथा सत्यपसिद्धान्तापातात् । 'भावं जैमिनिर्विकल्पाम्नानात् । द्वादशाह-वदुभयं बादरायण' इत्यादौ मुक्तानां जडशरीरसद्भावस्य समर्थितत्वात् इत्यत आह **तद्राहित्यं चेति** । 'प्रदीपवदावेशस्तथा हि दर्शयती'त्यादिना मुक्ताः स्वेच्छया जडशरीरमनुप्रविश्य पुण्यानेव भोगाननु-भवन्ति, न दुःखादीन्कदाचनेति कर्मारब्धदुःखापादक एव जडदेहो मुक्तानां नास्तीति चतुर्थपादो-दितप्रकारेण कर्मारब्धदुःखापादकजडशरीरराहित्यस्यैव श्रुत्यर्थतयाऽभ्युपगमान्नापसिद्धान्त इति भावः । ननु मायावादिना श्रुतिप्रामाण्यावलम्बनेनास्मदनुमानदूषणस्य स्वाभिमतमोक्षसमर्थनस्य च शङ्कितत्वा-द्भाष्यकृता अदेहत्वश्रुतिमाशङ्क्य तस्या अर्थान्तरपरत्ववर्णनात् । मायावादिनोक्तास्मदनुमानदूषण-निराससिद्धावपि तदभिमतब्रह्माविर्भावरूपमोक्षसाधकश्रुतिमाशङ्क्य भाष्यकृता अव्याख्यानात्कथं तन्निरास-सिद्धिरित्यत आह **एवमिति** । अतस्तन्निरासोऽपि सिध्यतीति भावः ।

**स०**— **तदभिमानेति** । ब्रह्मभावाऽऽविर्भावलक्षणेत्यर्थः । ननु कथं मोक्षे प्राकृतशरीरा-भावः । तथा सति भवतामपसिद्धान्तः स्यादित्यत आह **तद्राहित्यं चेति** । 'स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचिदि'त्यादि चतुर्थपादोदितप्रकारेण प्राकृतशरीरराहित्यं ज्ञेयमित्यर्थः ।

**प०**— **तदभिमतेति** । ब्रह्मभावापत्तिरूपमोक्षवादिनी काचिन्नेत्यपि ग्राह्यमित्यर्थः । ननु प्राकृतस्याभावे पाञ्चभौतिकमस्ति किमित्यतो नेति भावेनाह **प्राकृतशब्देनेति** । 'भावं जैमिनिर्विकल्पा-म्नानादिति सूत्रे कदाचिन्मुक्तानां भोगार्थं चिन्मात्रदेहान्यशुद्धसत्त्वात्मकप्राकृतदेहभावं जैमिनिर्मन्यत

इति मुक्तानां प्राकृतदेहसद्भावस्याङ्गीकारात् कथमेवमुक्तिरित्यत आह **तद्राहित्यं चेति**। पाञ्चभौतिकस्य सर्वात्मनाऽभावेपि उक्तरूपप्राकृतदेहस्य कदाचिद्भोगार्थमिच्छयोपादानं तस्येच्छया परित्याग इत्येवमैच्छिकं कादाचित्कं तद्राहित्यं न तु सर्वथेति तत्रोक्तं ध्येयमित्यर्थः। ननु तदभिमतमोक्षवादिनी काचिच्छ्रुति-र्नेत्यपि ग्राह्यमिति प्रागुक्तिरयुक्ता ब्रह्मवेदेत्यादिश्रुतेर्भावादित्यत आह **एवं ब्रह्मेति**। ब्रह्म भवति स्वरूपज्ञानानन्दादिना बृंहितो भवतीत्यादिरूपेण व्याख्येयेत्यर्थः।

**या०**— नन्वेवं मुक्तानां प्राकृतशरीराभावेऽपि अस्मदादीनामिव भौतिकशरीरप्राप्त्या दुःखाद्य-नुभवप्रसङ्ग इत्यत आह **प्राकृतशब्देनेति**। नन्वेवमपसिद्धान्तः प्राप्नोति। 'भावं जैमिनिर्विकल्पाम्ना-नादि'त्यादिना मुक्तानां जडशरीरस्योक्तत्वादत आह **तद्राहित्यं चेति**। चतुर्थपादे हि 'प्रदीपवदावे-शस्तथा हि दर्शयती'त्यादौ मुक्ताः स्वेच्छया जडशरीरमनुप्रविश्य पुण्यानेव भोगाननुभवन्ति न तु दुःखादीन्कदाचनेति कर्मारब्धदुःखापादक एव जडदेहो मुक्तानां नास्तीत्युक्तम्। अतोऽत्रापि तेनैव **प्रकारेण** कर्मारब्धदुःखापादकजडदेहराहित्यमेव श्रुत्यर्थतया वर्णनीयं न सर्वथाऽतो नोक्तदोष इति भावः। **आशङ्क्येत्यादि**। तदभिमतमोक्षवादिनी काचिच्छ्रुतिर्नेत्युक्तार्थोपपादनायेति शेषः।

**श्री०**— ननु 'ब्रह्म वेद ब्रह्म भवती'त्यादि श्रुतिरेव मदभिमतमोक्षवादिनी भविष्यति। अतस्तदभिमतमोक्षवादिनी श्रुतिर्नास्तीत्यपि ग्राह्यमिति यदुक्तं तदसदित्यत आह **एवं ब्रह्म वेदेति**॥ **व्याख्यातव्येति**। ब्रह्म पूर्णं वेद चेत्स्वयमपि योग्यतानुसारेण पूर्णो भवतीति व्याख्यातव्येत्यर्थः। **न चाशरीरस्येति**। इन्द्रियाणां शरीरसंयुक्तत्वेन तदभावे तेषामप्यभावेन भोगासंभवादिति भावः।

**सु०**— **परकीयानुमानस्य प्रतिपक्षान्तरमाह** निर्दुःखत्वादिति।

**अनु०**— निर्दुःखत्वान्न तन्मोक्षः प्रतिपन्नं यथेति च॥
अनुमा दूषणं किं स्याद्वादिनोः शून्यमायिनोः॥

**तच्छून्यत्वं ब्रह्मत्वं वा मोक्षो न भवति निर्दुःखत्वात् प्रतिपन्नं घटशून्यत्वं यथेति चानुमायाः किं दूषणं स्यान्न किमपि। शून्यशब्देन तदङ्गीकारवान् लक्ष्यते। शू(न्यं च मा)-न्यश्च मायी चेति द्वन्द्वः। यद्वा शून्यं च माया चेति द्वन्द्वः। ते विद्येते ययोरिति व्रीह्यादि-लक्षण इनिः। तत्र च तदन्तविधिरिष्यते।**

**शे०**— ननु शून्यवादिमायिनोरिति वक्तव्यं शून्यमायिनोरिति तु कथं इत्यतोऽत्र शून्यशब्दस्य लक्षणया शून्यवादिपरत्वेन शून्यपरत्वाभावेन शून्यमायिनोरित्युपपत्तेरित्यभिप्रेत्य शून्यपदं लक्षणया तद्वादिपरतया व्याचष्टे **शून्यशब्देनेति**। लक्षणाबीजसंबन्धोपदर्शनं **तदङ्गीकारवानिति**। लक्षणया

तद्वादिपरशून्यशब्दस्यासकृत्साधुतया प्राग्व्युत्पादितमायिशब्देन द्वन्द्वमाह **शून्यश्च मायी चेति** ॥ **द्वन्द्व इति** । अत्र पक्षे शून्यपदस्य तद्वादिपरत्वं लक्षणया कल्पनीयं भवतीत्यतः शून्यपदस्य शून्यपरतामेवाश्रित्य मायाशब्देन द्वन्द्वमाह **यद्वेति** । कथं तर्हि वादिनोर्लाभ इत्यतो मत्वर्थे इनिप्रत्ययादेवेति भावेन मत्वर्थसंबन्धप्रदर्शनपूर्वकं तद्विधायकमाह **ते विद्येते इति** । व्रीह्यादिलक्षणो व्रीह्यादित्वं लक्षणं प्रापकं यस्येति तथोक्तः । तथा च मायाशब्दादस्मायामेधास्रजो विनिरिति विनिप्रत्ययस्य विशेषशास्त्रेण विधानेऽपि व्रीह्यादिगणे पठितत्वेन व्रीह्यादित्वात् व्रीह्यादिभ्यश्चेत्यनेन इनिप्रत्ययस्याप्यनुज्ञातत्वात् इनिप्रत्यये सति यस्येति चेति मायाशब्दान्त्याकारलोपे शून्यमायिन्निति प्रातिपदिकसिद्धिः । ननु मायाशब्दस्य व्रीह्यादिगणे पठितत्वात् केवलात्तस्मादिनिप्रत्ययोत्पत्तिसंभवेऽपि शून्यमायेति समस्तस्य तत्रापठितत्वात् । कथमस्मादिनिप्रत्ययो व्रीह्यादिलक्षणः स्यादित्यतो वनमालीत्याद्यभियुक्तप्रयोगसंरक्षणाय तत्र तदन्तविधेरवश्याश्रयणीयत्वान्मायाशब्दान्ततया शून्यमायाशब्दादपि इनिप्रत्ययसिध्या युक्त एव तस्मादपि व्रीह्यादिलक्षण इनिरित्याह **तत्र च तदन्तविधिरिति** ।

स० — ननु शून्यं च मायी चेति द्वन्द्वे इन्प्रत्ययानुपपत्तिः । व्रीह्यादौ मायाशब्दमात्रस्य पठितत्वेन तन्मात्रादिन्प्रत्ययसंभवेपि शून्यमायाशब्दात्तदनुपपत्तेरित्यत आह **तत्र तदेवेति** ॥ तथा च शून्यमायाशब्दस्य मायाशब्दान्तत्वान्नोक्तदोष इति भावः ।

प० — **परकीयेति** । आत्मशून्यता पुरुषार्थ इति प्रागुक्तानुमानस्य न मोक्षो विमत इति प्रागुक्तप्रतिपक्षापेक्षया प्रतिपक्षान्तरमित्यर्थः । शून्यमायिनोरित्यत्र शून्यपदेन शून्यवादी ग्राह्य इति भावेनाह **शून्यशब्देनेति** । एतत्पक्षे विग्रहं दर्शयति **शून्यश्चेति** । 'अस्मायामेधास्रजोविनिरि'ति मायावीति भाव्यं मायीति कथमित्यत आह **व्रीह्यादिलक्षण इति** । पञ्चमस्य द्वितीयपादे अत इनिठनाविति प्रकरणे व्रीह्यादिभ्यश्च व्रीह्यादिगणस्थशब्दानां मकारान्तत्वाभावेऽपि मत्वर्थे इनिप्रत्ययो भवतीत्युक्तेर्व्रीह्यादिनिमित्तक इनिप्रत्यय इत्यर्थः । ननु व्रीह्यादिगणस्थकेवलमायाशब्दाद्विहितः शून्यमायाशब्दात्कथं भवतीत्यत आह **तत्र चेति** । वनमालीत्यादिप्रयोगात्तदन्तविधिरेष्टव्यः । वृत्त्यादावनुक्तत्वेपि प्रयोगवशात्तदन्तविधिरिति ग्रन्थकारैरेवोच्यत इति ज्ञेयम् ।

या० — ननु 'अस्मायामेधास्रजो विनिरि'ति मेधाशब्दाद्विनिप्रत्ययस्य विहितत्वेन मायाविनोरिति वक्तव्यं मायिनोरिति तु कथमुक्तमित्यत आह **व्रीह्यादीति** । व्रीह्यादिभ्यश्चेति सूत्रप्रतीकग्रहणं । लक्षणशब्दः सूत्रपरः । ततश्च व्रीह्यादिभ्यश्चेति सूत्रं यस्येति बहुव्रीह्याश्रयणेनैतत्सूत्रविहित इत्यर्थो द्रष्टव्यः । एवं च मायाशब्दस्य व्रीह्यादिगणे पठितत्वात्तस्मादिनिप्रत्यये यस्येति चेत्यनेनाकारलोपे

मायिन् इति प्रातिपदिकसिद्धिरिति भावः । ननु केवलो मायाशब्द एव व्रीह्यादिगणे पठितो न शून्य-मायेति समस्तोऽतः कथमयमिनः व्रीह्यादिलक्षण इत्यत आह **तत्र चेति** । अन्यथा केवलमालाशब्दस्यैव तद्गणपठितत्वे 'परिस्फुरत्कुण्डलमौलिमालिनां,' 'वनमाली हलायुध,' इत्यादौ समस्तान्मालाशब्दादिनेः प्रयोगोऽनुपपन्नः स्यादिति भावः ।

**श्री०— परकीयानुमानस्येति ।** आत्मशून्यता पुरुषार्थः दुःखनिवृत्त्युपयोगित्वाच्छरीरादि-शून्यतावदित्यनुमानस्येत्यर्थः ।

**सु०— प्रतिपक्षान्तरमाह** दुःखमिति ।

**अनु०—** दुःखं दुःखादभिन्नत्वान्मोक्षोऽपि स्यादसंशयम् ॥

**मोक्ष इति शून्यं ब्रह्म चोच्यते । प्रतिवादिभ्यां तथाऽभ्युपगतत्वात् । स मोक्षो दुःखात्मा स्यात् दुःखादभिन्नत्वात् । दुःखप्रतियोगिकभेद(रहितत्वा)शून्यत्वात्प्रसिद्धदुःखवत् इत्यर्थः । शून्यब्रह्मणोर्दुःखत्वे तद्भावापत्तिर्न पुरुषार्थ इति सिध्यति । अपिशब्दः प्रतिपक्षा-न्तरसमुच्चयार्थः । असंशयमिति व्याप्तेर्निश्चितत्वमाचष्टे ।**

**दुःखप्रतियोगिकभेदाभावः कुत इत्यत आह** भेद इति ।

भेदे सद्द्वैततैव स्यात्

**दुःखात् शून्यब्रह्मणोरिति शेषः । तथा चापसिद्धान्त इति भावः ।**

**शे०—** साध्यावैशिष्ट्यं परिहरति **दुःखप्रतियोगिकेति ॥ प्रतिपक्षान्तरेति** । 'न मोक्षो विमतो यस्मादि'त्यादिनोक्तप्रतिपक्षान्तरसमुच्चय इत्यर्थः । अस्तु सद्द्वैतत्वमित्यत आह **तथा चेति** ।

**स०— प्रतिपक्षान्तरेति** । निर्दुःखत्वान्न तन्मोक्ष इत्यादिनोक्तप्रतिपक्षान्तरसमुच्चयार्थ इत्यर्थः ।

**प०— प्रतिपक्षान्तरसमुच्चयार्थ इति** । पूर्वोक्तप्रतिपक्षाभ्यां अस्य समुच्चयार्थ इत्यर्थः ।

**सु०— किञ्च दुःखापायस्यात्मनाशेन विना देहादिनाशेनापि संभवादन्यथासिद्धिश्च अनुमानस्य । शरीरादिशून्यताऽपि न दुःखध्वंसोपयोगित्वात्पुरुषार्थः । किं नामात्मनो निर्दुःखतां प्रति हेतुत्वात् । न हि दुःखं नश्यत्विति कश्चिदाशास्ते । अपि तर्हि निर्दुःखः स्यामिति ।**

**ननु शून्यभावो ब्रह्मभावो वा भवतां सिद्धश्चेदपसिद्धान्तः, न चेदाश्रयासिद्धिरिति चेन्न । परानुमानेऽप्यात्मशून्यताया असिद्धत्वेनाश्रयासिद्धेः । इयांस्तु विशेषः । यत्परप्रसिद्धिमात्रेण प्रतिपक्षः संभवतीति ।**

**ननु भोगश्रुतिः सगुणमुक्तिविषयास्त्विति चेन्न। 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इत्युक्तिविरोधात्। निर्दुःखत्वान्मोक्षो न भवतीति विरुद्धमिति चेत्। परमेष्टस्य आत्मनो नाशः पुरुषार्थ इति कथं न विरुद्धम्।**

**अथ सतो दुःखाद्भेदे सद्द्वैतता स्यात्। दुःखं तु मिथ्येति चेन्न। अनुभवविरोधादेरुक्तत्वात्।**

**बहुजीववादिनं प्रति नान्तिमानुमानमिति न कुचोद्यावकाशः।**

**तदेतत्सर्वमभिसंधायोपसंहरति** इत्यादीति।

**अनु०—** इत्याद्यमितदोषतः ॥
हेयं मायामतेनैव सह शून्यमतं बुधैः ॥

**सहैवेति संबन्धः।**

**शे०—** इत्याद्यमितदोषत इत्युपसंहारभाष्ये आदिपदवैयर्थ्यमाशङ्क्य दोषान्तरपरिग्रहार्थत्वान्न तदिति भावेनादिपदसंग्राह्यं दोषान्तरं स्वयमुपदर्शयति **किञ्चेति** ॥ **अन्यथासिद्धिश्चेति**। अत्र चशब्दोऽसिद्धिपरिग्रहार्थः न तु दूषणान्तरसमुच्चयार्थः। तस्य किञ्चेत्यनेनैव लब्धतया तदर्थत्वे चशब्दवैयर्थ्यात्। एवं चान्यथासिद्धियतोऽतोऽनन्यथासिद्धिपरिगर्भोपायत्वरूपानुमानस्यासिद्धिरिति पदद्वयाध्याहारेण योजना। अन्यथासिद्धिविवरणं 'दुःखापायस्ये'त्यादि 'संभवादि'त्यन्तम्। सोपाधिकत्वमप्याह **शरीरादिशून्यताऽपीति**। आत्माविशेषितस्य दुःखध्वंसमात्रस्य यदि मुख्यतः पुरुषैरर्थ्यत्वरूपं पुरुषार्थत्वं स्यात् तदा शरीरादिशून्यतायास्तदुपयोगित्वेन पुरुषार्थत्वं स्यात्। न चैवम्। किं त्वात्मविशेषितस्य दुःखध्वंसस्य मुख्यतः पुरुषार्थत्वात्तदुपयोगित्वेनैव तस्य पुरुषार्थत्वम्। पक्षीभूते त्वात्मनाशे नात्मविशेषितदुःखध्वंसोपयोगित्वं संभवति। अतः साधनाव्यापकत्वात्साध्यव्यापकत्वाच्चात्मविशेषितदुःखध्वंसोपयोगित्वमुपाधिरिति भावः। आत्माविशेषितदुःखध्वंसमात्रस्य नोक्तरूपं पुरुषार्थत्वमिति कुतः इत्यतस्तथाऽननुभवादित्याह **न हीति**। आत्मविशेषितदुःखध्वंसस्य तदित्येतत्कुत इत्यतोऽनुभवबलादित्याह **अपि तर्हीति**। ननु प्रतिपक्षतयोपन्यस्तानुमानेष्वाभासानुद्धारा'दित्याद्यमितदोषत' इत्युपसंहारानुपपत्तिमाशङ्क्य भाष्यकारीयस्य 'भेदे सद्द्वैततैव स्यादि'त्यनुमानविशेषेऽसिद्धिपरिहारस्य सर्वत्राभासोद्धारसूचकत्वाद्युक्त एवोपसंहार इत्यभिप्रेत्य तत्सूचितं तदुद्धारं दर्शयितुं तत्र तत्र संभावितान्दोषानाशङ्क्य परिहरति **नन्वित्यादिना**। ततश्चासमानबलत्वान्न प्रतिपक्षत्वमिति भावः ॥ **असिद्धत्वेनेति**। अस्माकमिति शेषः ॥ **आश्रयासिद्धेरिति**। ततश्च समानबलत्वात्प्रतिपक्षत्वमविकलमिति

भावः । अङ्गीकृत्यैव च प्रतिपक्षेऽप्याश्रयासिद्धेर्दूषणत्वं प्रतिबन्द्येदं समाधानं कृतम् । वस्तुतस्तु प्रतिपक्षे न तस्या दूषणत्वमित्याह **इयांस्त्विति** ॥ **परप्रसिद्धिमात्रेणेति** । आश्रयस्येति शेषः ।

**सगुणमुक्तिविषया इति** । तथाच देहत्वानुमानस्य कालात्ययापदिष्टत्वेनासमानबलत्वान्न प्रतिपक्षत्वमिति भावः ॥ **उक्तविरोधादिति** । ततश्च कालात्ययापदिष्टत्वाभावेन समबलत्वात्प्रतिपक्षत्वमेवेति भावः । निर्दुःखत्वानुमानस्य विरुद्धत्वेनासमानबलत्वान्न प्रतिपक्षत्वमित्याशङ्कते **निर्दुःखत्वादिति** ॥ **विरुद्धमिति** । निर्दुःखत्वस्य मोक्षत्वव्याप्तत्वादिति भावः ॥ **परमेष्टस्येति** । ततश्च परमेष्टनाशस्यापुरुषार्थत्वव्याप्तत्वेन स्थापनानुमानस्यापि विरुद्धत्वेन समानबलत्वात् प्रतिपक्षत्वमविकलमिति भावः ।

दुःखप्रतियोगिकभेदरहितत्वानुमानस्यासिद्धत्वेनासमानबलत्वान्न प्रतिपक्षत्वमित्याशङ्कते **अथेति** ॥ **उक्तत्वादिति** । 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेदि'त्यादिनेति शेषः । ततश्चासिद्धेरभावेन समानबलत्वात्प्रतिपक्षत्वमेवेति भावः ।

ननु विमतो मोक्षो दुःखात्मा दुःखप्रतियोगिकभेदरहितत्वात् प्रसिद्धदुःखवदित्यनुमानं न बहुजीववादिनः प्रति संभवति । तेन दुःखप्रतियोगिकभेदरहितत्वस्यानभ्युपगमेन हेतोरसिद्धत्वात् । तथा हि । लोकेऽनेकेषु मायामयान् गजतुरगादीन्पश्यत्सु यस्य कारणविशेषेण मायाऽपगच्छति स एव तान्न पश्यति । अन्ये तु पश्यन्त्येव । तथा द्वैतदर्शनकारणमज्ञानं यस्यापगतं स एव तं न पश्यति । अन्येषां तु दुःखादिप्रपञ्चदर्शनमनुवर्तत एवेति खलु बहुजीववादिनो मन्यन्ते । तत्कथं तान्प्रत्ययं प्रसङ्ग इत्यतो न च तान्प्रतीदमनुमानं विरोधितयाऽस्माभिरुपन्यस्यते येन हेतोरसिद्धिः स्यात् किं त्वेकजीववादिनः प्रत्येवेत्याशयवानाह **बहुजीववादिनं प्रति नान्तिममनुमानमितीति** । केचित्तु भास्करादिमते दुःखप्रतियोगिकभेदस्य सत्त्वेन तद्राहित्यमसिद्धम् । न च 'भेदे सद्द्वैततैव स्यादि'त्युक्तरीत्या दुःखस्य सत्यत्वं स्यादित्यादिना हेत्वसिद्धिः परिहृतेति वाच्यम् । तन्मिथ्यात्वमङ्गीकुर्वाणान्प्रति तस्य संभवेऽपि तत्सत्यत्वमङ्गीकुर्वाणं भास्करं प्रति दुःखादेः सत्त्वाङ्गीकारे बाधकाभावेनासिद्धितादवस्थ्यादित्यत आह **बहुजीववादिनं प्रतीति** व्याचक्षते ।

**तदेतत्सर्वमिति** । किञ्चेत्यादिनोक्तं सर्वमित्यर्थः । मूले यथाश्रुतैवकारसंबन्धवैयर्थ्यमाशङ्क्य भिन्नक्रमतया संबन्धमाह **सहैवेति संबन्ध इति** ।

**स० — अन्यथासिद्धिश्चानुमानस्येति** । दुःखनिवृत्त्युपयोगित्वं नाम दुःखनिवृत्तिकारणत्वम् । तच्चानन्यथासिद्धनियतपूर्ववर्तित्वम् । प्रकृते तु शरीरनाशेनान्यथासिद्धिरित्यर्थः । दृष्टान्तदोषमप्याह **शरीरादिशून्यतापीति** ॥ **परानुमानेपीति** । आत्मशून्यता पुरुषार्थो दुःखनिवृत्त्युपयोगित्वात् इति

परानुमानेपीत्यर्थः । **उक्तत्वात्** 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेदि'त्यादिनेति शेषः । विमतो मोक्षो दुःखात्मा, दुःखप्रतियोगिकभेदरहितत्वात् प्रसिद्धदुःखवादित्यनुमानमयुक्तम् । तद्धि एकजीववादिनः प्रति संभवति न तु बहुजीववादिनः । तेन दुःखप्रतियोगिकभेदरहितत्वस्यानभ्युपगमेन हेतोरसिद्धत्वात् । यथा हि लोके अनेकेषु मायामयान् गजतुरगादीन् पश्यत्सु यस्य कारणविशेषेण मायाऽपगच्छति स एव तान्न पश्यति अन्ये तु पश्यन्त्येव । तथा द्वैतदर्शनकारणमज्ञानं यस्यापगतं स एव तन्न पश्यति । अन्येषां तु दुःखादिप्रपञ्चदर्शनमनुवर्तत एवेति खलु बहुजीववादिनो मन्यन्ते । तत् कथं तान्प्रति अयं प्रसङ्गः इत्यतः सत्यमेवं बहुजीववादिनो मायावादिनः । न च तान्प्रतीदमनुमानं विरोधितयास्माभिरुपन्यस्यते । येन हेतोरसिद्धिः स्यादित्याह **बहुजीववादिनं प्रतीति** । अत्र नान्तिममनुमानमित्येव पाठः । **कुचोद्यावकाश इति** । दुःखप्रतियोगिकभेदरहितत्वरूपस्यासिद्धिलक्षणकुचोद्यावकाश इत्यर्थः । यद्वा ननु भास्करादिमते दुःखप्रतियोगिकभेदस्य सत्त्वेन तद्राहित्यमसिद्धं न च 'भेदे सद्द्वैततैव स्यादि'त्युक्तरीत्या दुःखस्य सत्त्वं स्यादित्यादिना हेत्वसिद्धिः परिहृतेति वाच्यम् । तन्मिथ्यात्वमङ्गीकुर्वाणान्प्रति तस्य संभवेपि तत्सत्यत्वमङ्गीकुर्वाणं भास्करं प्रति दुःखादेः सत्त्वाङ्गीकारे बाधकाभावादसिद्धितादवस्थ्यादित्यत आह **बहुजीववादिनं प्रतीति** ।

---

**प०— अन्यथासिद्धिश्चानुमानस्येति** । आत्मशून्यता पुरुषार्थः दुःखनिवृत्त्युपयोगित्वादिति प्रागुक्तानुमानस्य अन्यथा देहादिनाशरूपप्रकारान्तरेणाऽपि, दुःखनिवृत्तेरात्मशून्यताया दुःखनिवृत्त्युपयोगित्वस्यासिद्धिरित्यर्थः ॥ तेन साध्येन विना हेतोरन्यथोपपत्तेरनुक्तेः कथमन्यथासिद्ध्युक्तिरिति शङ्काऽनवकाशः । यद्वा पुरुषार्थपदेन दुःखाभावत्वग्रहः । तथाच दुःखाभावत्वस्यात्मशून्यताया दुःखनिवृत्त्युपयोगित्वाभावेऽप्युपपत्त्या साध्यस्य हेतुना विनापि योगादन्यथासिद्धिरित्येवं योज्यम् ॥ **निर्दुःखतामिति** । दुःखानुत्पत्तिं प्रतीत्यर्थः । तथा च दृष्टान्तः साधनविकल इति भावः ॥ **असिद्धत्वेनेति** । मानाभावादिति भावः ॥ **भोगश्रुतिरिति** । जक्षन्नित्यादिप्रागुक्तश्रुतिरित्यर्थः ॥ **इत्युक्तेति** । पूर्ववाक्योक्तेत्यर्थः । प्रागुक्तप्रतिपक्षानुमानेऽपि दोषमाशङ्क्य प्रतिबन्द्योत्तरमाह **निर्दुःखत्वादिति ॥ उक्तत्वादिति** । 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेदि'त्यादिना पृथगधिकरणे उक्तत्वादित्यर्थः । श्रुत्यादिविरोध आदिपदार्थः । ननु बहुजीववादे एकस्य मुक्तावप्यन्यस्य दुःखवतः सत्वेन दुःखाद्भेदराहित्यमसिद्धमित्यत आह **बहुजीवेति ॥ तदेतदिति** । किञ्चिद्दुःखाभावस्येत्यादिनोक्तं सर्वमित्यर्थः । **शून्यवादिमायावादिभिरभिमतमोक्षनिरासः ॥**

**या०**— इत्याद्यमितदोषत इत्युपसंहारगतादिशब्दार्थं वक्तुमाह **किं चेत्यादि ॥ अन्यथासिद्धिश्चेति** । नन्वात्मशून्यता पुरुषार्थः दुःखनिवृत्त्युपयोगित्वादित्युक्तानुमानस्य कथमन्यथासिद्धिः ।

साध्येन विना हेतोरन्यथाऽप्युपपत्तौ ह्यन्यथासिद्धिर्लोके दृष्टा न चात्र तथोच्यते । अतः **कथमेतदिति चेदुच्यते** । अन्यथासिद्धिश्चेति चशब्दोऽनुक्तासिद्धिसमुच्चयार्थः । दूषणान्तरसमुच्चयस्य किं चेत्यनेनैव लाभात् । ततश्चान्यथासिद्धिर्यतोऽतोऽनन्यथासिद्धिगर्भोपायत्वरूपानुमानस्यासिद्धिरिति योज्यम् । अतो न कोऽपि दोष इति । सोपाधिकत्वमप्याह **शरीरादिशून्यताऽपीति** । आत्मविशेषितस्य दुःखध्वंसमात्रस्य यदि मुख्यतः पुरुषैरर्थ्यत्वरूपं पुरुषार्थत्वं स्यात्तदा शरीरादिशून्यतायास्तदुपयोगित्वेन पुरुषार्थत्वं स्यात् । न चैवं किं त्वात्मविशेषितस्यैव दुःखध्वंसस्य मुख्यतः पुरुषैरर्थ्यत्वेन तदुपयोगितयैव । पक्षीभूते त्वात्मनाशे नात्मविशेषितदुःखध्वंसोपयोगित्वं संभवति । अतः साधनाव्यापकत्वात्साध्यव्यापकत्वाच्च आत्मविशेषितदुःखध्वंसोपयोगित्वमुपाधिरित्यर्थः । न चात्माविशेषितस्य दुःखध्वंसमात्रस्य नोक्तरूपं पुरुषार्थत्वमित्येतत्कुत इत्यपेक्षायां तथाऽननुभवादित्याह **न हि दुःखमिति** । आत्मविशेषितस्यैव दुःखध्वंसस्य तदित्येतत्कुत इत्यतोऽनुभवबलादाह **अपि तर्हीति** ॥ **असिद्धेनेति** । अस्माकमिति शेषः ॥ **उक्तत्वादिति** । 'न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेदि'त्यादिनेति शेषः । ननु बहुजीववादिनां मते एकस्य मुक्तिदशायामन्येषां दुःखसद्भावात्तत्प्रतियोगिकभेदवत्त्वेनान्तिममनुमानं बाधितविषयम् । न च भेदे सद्द्वैततापसङ्ग उक्त इति वाच्यम् । पारमार्थिकभेदाङ्गीकारे हि तथा स्यात् । न चैवम् । व्यावहारिक एवासावङ्गीक्रियते । व्यावहारिकस्यापि तस्य स्वप्रतियोगिकतादात्म्यविरोधित्वस्य लोके दर्शनादित्यत आह **बहुजीववादिनं प्रतीति** । अभ्युपेत्य चेवमुदितम् । वस्तुतस्तु पारमार्थिकभेदवादित्वेन पारमार्थिकमेव दुःखात्मकत्वं साध्यतयाऽस्मदभिप्रेतम् । न च व्यावहारिको दुःखभेदस्तद्विरोधी । **अतो न** बाधशङ्कावकाश इत्याशयेनोक्तं **कुचोद्येति** ।

**श्री०**— परकीयानुमाने आत्मनो निर्दुःखतां प्रति हेतुत्वमुपाधिरित्याह **शरीरादिशून्यतामपीति** । दृष्टान्तीकृतेत्यर्थः ॥ **दुःखध्वंसेति** । आत्माविशेषितकेवलदुःखध्वंसमात्रोपयोगित्वादित्यर्थः । तदुभयमुपपादयति **न हि दुःखमिति** ॥ **निर्दुःखः स्यामिति** । शरीरहानेनेत्यर्थः । अत्र स्यामित्युत्तमपुरुषेणात्मनो भानादिति भावः । तथा च शरीरादिशून्यतायां पुरुषार्थत्वस्यात्मनो निर्दुःखतां प्रति हेतुत्वस्य च विद्यमानत्वात् साध्यव्यापकत्वं सिद्धमिति भावः । पक्षीभूत आत्मशून्यतायां हेतौ सत्यपि उपाधिर्नास्ति आत्मनो नष्टत्वेन अभावादेव आत्मनो निर्दुःखतां प्रति हेतुत्वाभावादिति साधनाव्यापकत्वं द्रष्टव्यमिति स्पष्टत्वान्नोक्तं । अस्मदुक्तप्रतिपक्षत्रये दूषणमाशङ्कते **ननु शून्यभाव इति** । शून्यभावो ब्रह्मभावो वा न मोक्षः । अदेहत्वादित्याद्यनुमाने पक्षीभूत इत्यर्थः । सममेतत्तवापीत्याह ॥ **परानुमान इति** । शून्यभावो ब्रह्मभावो वा पुरुषार्थ इत्यनुमानेऽपीत्यर्थः ॥ **असिद्धत्वेनेति** । पक्षीभूतायाः आत्मशून्यतायाः ब्रह्मभावस्य वा अस्मान्प्रत्यसिद्धत्वेनेत्यर्थः । स्थापनानुमाने आश्रयस्योभयसिद्धत्वम-

पेक्षितम् । प्रतिपक्षानुमाने तु परप्रसिद्धिरेवातस्तवैवाश्रयासिद्ध्यादिर्न तु प्रतिपक्षकर्तृणामस्माकमित्याशयेनाह **इयांस्त्विति ॥ परंज्योतिरिति ।** परंज्योतिःशब्दवाच्यनिर्गुणब्रह्मसंपत्तिरूपपरममुक्तिमत एव स्वरूपाविर्भावेनैव जक्षन्नित्यादिना भोगोक्तेः । सगुणमुक्तिविषयत्वाङ्गीकारे तद्विरोधादित्यर्थः **विरुद्धमिति** । निर्दुःखत्वस्य मोक्षत्वेनैव व्याप्तत्वादिति भावः ॥ **कथं न विरुद्धमिति** ॥ इति प्रतिज्ञापि कथं न प्रमाणविरुद्धेत्यर्थः । आत्मस्वरूपस्य परमेष्टत्वेन तन्नाशस्य पुरुषेणार्थ्यत्वाभावादिति भावः । 'भेदे सदद्वैततैव स्यादि'त्येतदयुक्तमित्याशङ्कते ॥ **अथेति** । **सतः** सत्यभूताद्दुःखादित्यर्थः । ननु बहुजीववादिमते एकस्य मुक्तिदशायामन्येषां दुःखसद्भावेन दुःखप्रतियोगिकभेदसद्भावात्तं प्रति मोक्षः दुःखात्मा दुःखप्रतियोगिकभेदरहितत्वादित्यन्तिमानुमाने स्वरूपासिद्धिरित्यत आह **बहुजीववादिनं प्रतीति** ।

**सु०— विज्ञानवाद्यभिमतं मोक्षस्वरूपमप्युक्तदोषेणातिदिशति** एवमिति ।

**अनु०**— एवं विज्ञानवादोऽपि

**शून्यवादिमायावाद्यभिमतमोक्षवद्विज्ञानवाद्यभिप्रेतोऽपि मोक्षो हेय इत्यर्थः । ननु विज्ञानवादिनो विज्ञानं तत्त्वमाहुः तस्यापि क्षणिकत्वं स्वकर्मकप्रकाशकत्वलक्षणं स्वप्रकाशत्वं च । न चैवं पूर्वकावित्यतो वैषम्यात्कथमतिदेश इत्यत आह** ज्ञानेति ।

---

ज्ञानमात्रविशेषतः ॥

तस्यापि भंगुरत्वादिविशेषमपहाय हि ॥

अद्वैततामतं साक्षादुक्तदोषस्ततो भवेत् ।

**ज्ञानमात्रं चासौ विशेषश्च ज्ञानमात्रविशेषः । तमिति द्वितीयार्थे तसिः । यस्माज्ज्ञानमात्रविशेषं तस्य ज्ञानस्य भंगुरत्वादिविशेषमप्यपहाय विज्ञानवादोऽप्यद्वैततामतं ज्ञातव्यं । न विद्यते द्वैतं यस्य तत्त्वस्य तदद्वैतं तस्य भावोऽद्वैतता । तस्या मतमद्वैततामतं । ततः कारणादुक्तदोषोऽपि समो भवेत् ।**

इदमुक्तं भवति । **अस्तु विज्ञानवादस्य पूर्वस्मात्कश्चिद्विशेषः । तथाऽपि स प्रकृतानुपयोगित्वान्नादरणीयः । मोक्षस्वरूपं तु प्रकृतं समानं । प्रतिपन्नं जीवभावं विहायाद्वितीयविज्ञानत्वापत्तिर्मुक्तिरिति विज्ञानवादिनाऽप्यङ्गीकृतत्वात् । अतो युक्त एवातिदेश इति । यद्वा ज्ञानमात्रविशेषं तस्य भंगुरत्वादिविशेषं चापहाय विज्ञानवादोऽपि साक्षादद्वैततामतं ज्ञातव्य इत्यनेनेदमभिप्रैति । न कश्चिद्विज्ञानवादस्य पूर्वाभ्यां विशेषः । ज्ञानमिति विशेषस्य शब्दमात्रत्वेन हेयत्वात् । न हि ज्ञानत्वं नाम धर्मोऽभ्युपगम्यते परेण । भंगुरत्वादिकं तु तेनैव**

**कल्पितमित्युक्तत्वाद्धेयमेव । न तु वस्तुतो मतभेदहेतुः । यथोक्तं 'तत्र सन्ततिभेदश्चे'त्यादि । अतो युक्तोऽतिदेश इति । अतिदेशप्रकारस्तु स्पष्ट एव ।**

**शे०**— कर्मप्रवचनीयेन प्रतिना योगे या पञ्चमी विहिता तदन्तादेव प्रतियोगे पञ्चम्यास्त-सिरिति तसिविधानात् । प्रकृते च कर्मप्रवचनीयप्रतियोगाभावेन पञ्चम्या एवासंभवेन तदन्तात्तसेर-योगात्पञ्चम्यन्तस्यापहायेत्यनेनान्वयानुपपत्तेश्च द्वितीयार्थात्तसिरित्याह **द्वितीयार्थे तसिरिति** । तस्यादित उदात्तमर्धह्रस्वमिति सूत्रज्ञापितादाद्यादिभ्य उपसंख्यानमिति वार्तिकादिति भावः । मूले तत इति श्रवणात्तदपेक्षितयस्मादित्यर्थतया हिशब्दं योजयति **यस्मादिति । भंगुरत्वादिविशेषमपीति** । अनेन मूले तस्यापीत्यपिशब्दो भिन्नक्रम इत्युक्तं भवति । आदिपदेन स्वप्रकाशत्वपरिग्रहः । अद्वैतमतमित्ये-तावता पूर्तेस्तल्प्रत्ययवैयर्थ्यमित्याशङ्क्य परिहरति **न विद्यत इति** । ननु वैषम्योपदर्शनेनातिदेशप्रयोज-कस्य मतसाम्यस्याभावात् प्राप्ताया अतिदेशानुपपत्तिशङ्काया नानेन वाक्येन परिहारः । अत्र भंगुरत्वा-दिविशेषमपहाय हीत्यादिना मतवैषम्यस्योपपादितत्वादित्यत आह **इदमुक्तं भवतीति । सर्वांशे** साम्यस्यातिदेशेऽप्रयोजकत्वान्निराकार्यांशसाम्यस्यैव च तत्प्रयोजकत्वात्तस्य च प्रकृतेऽपि सद्भावान्नाति-देशानुपपत्तिरित्येवंपरतया समाधानमभिहितम् । इदानीं **सर्वांशसाम्यस्यैव** तत्र **प्रयोजकत्वेऽपि प्रकृते** तस्यापि सद्भावान्नानुपपत्तिरित्याशयेन वैषम्योपदर्शनपरभाष्यतात्पर्यकथनेन मतसाम्योपदर्शनपूर्वकमतिदेश-मुपपादयति **यद्वेति** । ज्ञानमिति विशेषस्य शब्दमात्रत्वमेव कथं येन हेयत्वमित्यत आह **न हि ज्ञानत्वं नामेति** । तथा सति तेनैव सद्वितीयत्वापत्त्याऽपसिद्धान्तापातादिति भावः । भंगुरत्वादेः कल्पितत्वे ज्ञापकमाह **यथोक्तमिति** । 'न भावोऽनुपलब्धेरि'त्यधिकरणनिवर्त्यपूर्वपक्षप्रदर्शनावसर इति (भावः) । तत्र त्रिविधभेदस्य कल्पितत्वप्रतिपादनमुखेन ज्ञानव्यतिरिक्तस्य सर्वस्यापि कल्पितत्वसमर्थनात्तत्सिद्धिरिति भावः । अस्त्वेवं मतसाम्यं तथाऽप्येवमित्युक्तोऽतिदेशस्तु कथमित्यत आह **अतिदेशेति** । 'आत्माभावे पुमर्थः क' इत्यादिनोक्तसमस्तदूषणातिदेशप्रकारः स्पष्ट इत्यर्थः ।

प०— **पूर्वकौ** पूर्वोक्तावित्यर्थः ॥ **तसिरिति** । आद्यादिभ्य उपसंख्यानं इत्युक्तेः आद्या-देराकृतिगणत्वादिति भावः । ननु वैषम्यात्कथमतिदेश इत्यस्य नानेनोत्तरमित्यतो व्यनक्ति **इदमुक्त-मिति ॥ यथोक्तमिति** । समयपादीयानुव्याख्याने 'तत्र सन्ततिभेदश्च स्वभेदोऽभेद एव च । कल्पिता' इत्यादिना एतन्मतानुवादप्रस्तावे उक्तमित्यर्थः ॥ **स्पष्ट इति** । 'एतादृशानां पक्षाणां दूषणं प्रभुणा कृतमि'त्यादिनोक्तदोषाणामत्रापि योजयितुं शक्यत्वादित्यर्थः ।

श्री०— पूर्वोक्तौ शून्यवादिमायावादिनौ । कश्चिद्विशेषो भंगुरत्वादिरूपः । पूर्वाभ्यां शून्यवादिमायावादिभ्यां ॥ **स्पष्ट एवेति** । अहमिति परमप्रेमास्पदतया साक्षिणाऽनुभूयमानाकारापगमस्य तेनाऽप्यङ्गीकारेण तन्नाशस्यापुरुषार्थत्वमेवेत्यादिदूषणप्रकारातिदेशः । तथोक्तरूपे मोक्षेऽनुमानविरोधातिदेशश्च स्पष्ट इत्यर्थः ।

**सु०— अनुमानान्तरमपि तन्निरासार्थमाह** काल इति ।

**अनु०** – कालो न केवलज्ञानी कालत्वात्प्रतिपन्नवत् ॥
एतयानुमया रोधान्न तादृङ्मोक्षरूपता ॥

**मोक्षकालोऽद्वितीयज्ञानवान्न भवतीत्यर्थः** । प्रतिपन्नवद्वर्तमानकालवत् । रोधाद्विरोधात् । **तादृक् मोक्षरूपं यस्यात्मनोऽसौ तादृङ्मोक्षरूपस्तस्य भावस्तत्ता । ज्ञानातिरिक्तस्य कल्पितत्वाद्वर्तमानकालोऽपि केवलज्ञानीति चेन्न । मुक्तिसंसारयोरविशेषापत्तेः । यस्तु विशेषोऽङ्गीक्रियते तदभाव एवानेन साध्यते ।**

शे०— दूषणाधिक्यप्रसङ्गवारणायाह **विरोधादिति** । दृष्टान्तस्य साध्यवैकल्यं शङ्कते **ज्ञानातिरिक्तस्येति** ॥ **यस्त्विति** । मुक्तौ व्यावहारिकद्वितीयाभावरूपो यः संसाराद्विशेष इत्यर्थः ।

प०— तादृङ्मोक्षरूपतेति बहुव्रीहिरित्याह **तादृङ्मोक्षरूपमिति** । अद्वितीयज्ञानतादात्म्यरूपमित्यर्थः । शङ्कते **ज्ञानेति** ॥ **यस्तु विशेष इति** । कल्पितद्वितीयाभावरूपः संसाराद्विशेषो य इत्यर्थः ।

या०— **यस्तु विशेष इति** । मुक्तौ व्यावहारिकद्वितीयाभावरूपो यः संसाराद्विशेष इत्यर्थः ।

श्री०— वर्तमानकालस्यापि केवलज्ञानित्वोपपादनार्थमुक्तम् । **ज्ञानातिरिक्तस्य कल्पितत्वादिति** । तथाच साध्यवैकल्यमिति भावः । **विशेषः** संसारान्मुक्तेर्व्यावहारिकद्वितीयाभावरूपः ॥ **तदभाव इति** । तथा कालो व्यावहारिकद्वितीयाभाववान्नेति साध्यत इत्यर्थः ।

**सु०— ज्ञानव्यतिरिक्तं किमपि नास्तीति मते कालोऽपि नास्त्येव । अतः किमाश्रयाऽनुमानप्रवृत्तिरित्यत आह** यदीति ।

**अनु०** — यदि कालोपि नेत्याह कदेति प्रश्न उत्तरं ॥
किं वक्ष्यति

आह विज्ञानवादी। तदा कदा कालो नेति प्रश्ने परेण कृते सति किमुत्तरमसौ वक्ष्यति। निरधिकरणस्याभावस्य निरूपयितुमशक्यत्वात्कालो नेत्येतदपि दुर्निरूपमापद्येतेत्यर्थः। मोक्षावस्थायां कालो नेत्युत्तरं वक्ष्यामीत्याशङ्क्याह यदेति।

यदावस्थां वदेत्सा पक्षतां व्रजेत् ॥

वदेत्कालाभावाधिकरणत्वेनेति शेषः। तर्हि सा मोक्षावस्था पूर्वानुमाने पक्षतां व्रजेत्। पक्षशब्देन तदेकदेशो धर्मी लक्ष्यते। मोक्षावस्था न केवलज्ञानवतीति प्रतिज्ञास्यत इत्यर्थः।

एवं तर्हि कालत्वादिति हेतुः स्वरूपासिद्धः स्यादित्यत आह अवस्थात्वादिति।

अवस्थात्वादिति ह्येव हेतुः

यदाऽवस्था पक्षीक्रियते तदाऽवस्थात्वादित्येव हि हेतुरुच्यते न कालत्वादित्यतो नोक्तदोषः।

शे०— किमनेनोक्तं भवतीत्यतस्तात्पर्यमाह निरधिकरणस्येति। पक्षशब्दस्यात्र साध्यधर्मविशिष्टधर्मिवाचकत्वानुपपत्तेर्लक्षणया धर्मिमात्रपरतामाह पक्षशब्देनेति। तदेकदेश इति लक्षणाबीजशक्यसंबन्धकीर्तनम्। उक्तदोषः स्वरूपासिद्धिलक्षणः।

प०— परेणेति। प्रतिवादिनेत्यर्थः। साध्यधर्मविशिष्टः पक्ष इत्याचार्योक्तेः साध्यविशिष्टस्य साध्यवैशिष्ट्यसाधने आत्माश्रयापत्तेराह पक्षशब्देनेति।

श्री०— शङ्कते ज्ञानव्यतिरिक्तमिति। साध्यधर्मस्याश्रयासिद्धौ चोदितायामवस्था आश्रयतां व्रजेदिति वक्तव्यं न तु पक्षतामिति। साध्यधर्मविशिष्टधर्मिण एव पक्षत्वादित्यत आह पक्षशब्देनेति।

सु०— एवं संसारावस्थैव दृष्टान्तीक्रियत इति न दृष्टान्तदोषोऽपीति वाच्यं। प्रथमोक्तपक्षहेतुदृष्टान्तानां त्यागे प्रतिज्ञाहानिः स्यादिति चेत्। मैवं। कालाभावस्यावस्थामधिकरणं वदता न किंचिदात्महितमाचरितम्। अनुमानान्तरविरोधस्यापरिहार्यत्वात्। न हि प्रतिवादिनिग्रहमात्रेण विरुद्धं तत्त्वं व्यवतिष्ठते। मा हि भूत्कस्मिंश्चिदनुमाने सद्दूषणद्वयेन दूषितेऽधिकत्वेन च प्रतिवादिनि निगृहीते तस्य सदनुमानत्वमिति प्रदर्शनार्थमेवानुमानान्तरमुपन्यस्तम्। वस्तुतस्तु कालाभावमेव निराकुर्म इत्याशयवानाह साऽपीति।

अनु०— सापि कदेति च ॥

पृष्टे कालश्च वक्तव्यो नाकालत्वं ततो भवेत्।

**मोक्षावस्थां कालाभावस्याधिकरणत्वेन वदता सा मोक्षावस्थाऽपि कदेति केनचित्पृष्टे भावनापरिपाकोत्तरकाल इत्यवस्थाधिकरणत्वेन काल एव वक्तव्यः। न ह्येवं कदाऽपि न प्रष्टव्यमिति नियामकमस्ति। ततः कालस्य सर्वथाऽपरिहार्यत्वादकालत्वं कालाभावो न भवेत्। तथा च तदाश्रयेण प्रथमानुमानमपि प्रवर्त्स्यतीति।**

शे० — ननु हेत्वसिद्धिपरिहारवद् दृष्टान्तदोषस्यापि अवश्यं परिहर्तव्यस्यापरिहारात् भाष्ये न्यूनत्वमित्यतोऽपेक्षितं पूरयति **एवमिति ॥ दृष्टान्तदोषोऽपीति**। साधनवैकल्यलक्षण इत्यर्थः। ननु पूर्वोक्तदोषस्य परिहारात्कथं न हितमाचरितमित्यत आह **अनुमानान्तरेति**। ननु प्रतिवादिनिग्रहमात्रेणैव मदभीप्सितसिद्धिः स्यादित्यत आह **न हीति**। विपक्षे बाधकमाह **मा हि भूदिति**। न भवति हीत्यर्थः ॥ **तस्येति**। सद्दूषणद्वयेन दूषितानुमानस्येत्यर्थः ॥ **प्रथमानुमानमपीति**। कालो न केवलज्ञानीत्यनुमानमपीत्यर्थः। ततश्च प्रथमोक्तपक्षे हेतुदृष्टान्तानामत्यागान्न प्रतिज्ञाहानिरपीति भावः।

प० — **प्रतिज्ञाहानिरिति**। येन यद्यथा प्रतिज्ञातं तत्र दूषणे प्राप्ते तेनैव तस्य तथा परित्यागः प्रतिज्ञाहानिरिति तल्लक्षणादिति भावः ॥ **निग्रहेति**। निग्रहस्थानेन प्राप्तपराजयमात्रेणेत्यर्थः ॥ विरुद्धमपि तत्वं व्यवतिष्ठतां को दोष इत्यत आह **मा हि भूदिति**। सदनुमानत्वमित्यन्वयः ॥ सदनुमानत्वं मा भूदित्येतदर्थं विरुद्धं तत्वं व्यवस्थितमिति नाभ्युपेयमित्यर्थः। अन्यथा तदपि सदनुमानं प्राप्नोतीति भावः।

श्री० — तर्हि वर्तमानकालरूपे दृष्टान्ते साधनवैकल्यमित्यत आह **संसारावस्थैवेति ॥ अनुमानान्तरेति**। अवस्थापक्षकेत्यर्थः। ननु प्रतिज्ञाहान्या भवतां निग्रहस्तावत्प्राप्तस्तन्मात्रेण मदीयं मोक्षतत्त्वं व्यवतिष्ठत इति चेत्तत्राह **न हीति**। प्रतिवादिनिग्रहमात्रेण विरुद्धं तत्त्वं न व्यवतिष्ठत इत्येतावन्मात्रे दृष्टान्तमाह **मा हि भूदिति**। न हि भवतीत्यर्थः ॥ **कस्मिंश्चिदिति**। नित्यः शब्दः कृतकत्वादिति वादिना प्रयुक्ते विरुद्धत्वमनैकान्त्यं वेति दूषणद्वये प्रतिवादिनोक्ते, वादिना दूषणाधिक्यं नाम निग्रहस्थानमिति प्रतिवादिनि निगृहीते सति तन्मात्रेण नित्यत्वानुमानस्य समीचीनत्वप्राप्त्या तेन नित्यत्वरूपं प्रमेयं न सिद्ध्यति। आधिक्येनानैकान्तिकत्वपरित्यागेऽपि विरुद्धत्वेन दुष्टत्वात्। एवं वाद्युक्ते मोक्षे कालपक्षकानुमानेन प्रतिवादिना दूषिते तस्मिन्नाश्रयासिद्ध्या दूषिते तत्परित्यागेनावस्थापक्षकानुमानकरणे प्रतिज्ञाहानिरूपनिग्रहस्थानप्राप्तौ सत्यां प्रतिवादिभूतास्मन्निग्रहमात्रेण त्वदीयं मोक्षतत्त्वं न सिद्ध्यति। अवस्थापक्षकानुमानविरोधस्यापरिहार्यत्वादित्यर्थः। दूषणद्वयस्यासमीचीनत्वे

आधिक्येन प्रतिवादिनि निगृहीते प्रथमदूषणदूषितत्वेनानुमानस्यासमीचीनत्वं वक्तुं न शक्यते । तस्य दूषणस्यासमीचीनत्वात् । अतः सद्दूषणद्वयेनेत्युक्तम् ।

सु० — **ननु कालाभावादाश्रयासिद्धमाद्यानुमानम् । यदत्रोक्तं कदेति तदसत् । प्रतियोग्यधिकरणमेव ह्यभावस्याधिकरणम् । न च कालस्य कालोऽधिकरणम् । येन तदभावः कालाधिकरणः स्यात् । अतः कदेति प्रश्न एवानुपपन्नः । किमुत्तरेणेति चेत् । एवं तर्हि कालविशेषमधिकरणत्वेनानुपादाय कालं निषेधता सामान्यनिषेध एव कृतः स्यात् । ततः किमित्यत आह** नेति ।

अनु० — न काल इति सामान्यनिषेधे, कालगप्रमा ॥
निरुणद्धि

**कालो नेति सामान्यतो निषेधे क्रियमाणे हि कालस्य स्वरूपमेव निषिद्धं स्यात् । तथा च कालं गच्छति विषयीकरोतीति कालगा प्रमा साक्षी (निरु)विरुणद्धि । स हि पूर्वोत्तरकोटिरहिततया कालसद्भावं गृह्णातीति । न केवलमयं साक्षिविरोधो विज्ञानवादिनः किं नाम पूर्वाभ्यां सह त्रयाणां चेत्याह** समश्चेति ।

समश्चायं त्रयाणामुक्तवादिनाम् ॥

---

**उक्ताः प्रत्युक्ताः** ।

शे० — **प्रतियोग्यधिकरणमेवेति** । प्रतियोगिप्रसक्तिमदेवेत्यर्थः ॥ **च न कालस्येति** । आत्माश्रयप्रसक्तेरिति भावः । ननु कालो नेति सामान्यतस्त्रैकालिकनिषेधवचनस्य न वर्तमानमात्रग्राहिप्रत्यक्षविशेषसाक्षिविरोध इत्यतस्तृतीयस्य द्वितीये प्रत्यक्षस्य चाक्षुषमानससाधारण्येन वर्तमानमात्रग्राहित्वनिराकरणात्साक्षिणश्च तन्नियमस्यासक्तन्निराकरणाद्युक्त एव साक्षिणा विरोध इत्याशयेनाह **स हीति** । पूर्वाभ्यां शून्यमायावादिभ्याम् । **उक्ताः प्रत्युक्ता इति** । यद्यपि वादिनां प्रत्याख्यातत्वप्रदर्शनार्थं प्रत्युक्ता इति भाष्ये वक्तुमुचितम् । तथाऽप्युपसर्गस्य धातुगतशक्यतावच्छेदकत्वरूपोपसंदानत्वापरपर्यायद्योतकत्वमात्रं धातोरेव तु प्रत्याख्यातत्वप्रतिपादकत्वमिति प्रदर्शनार्थमुक्ता इत्येवोक्तमित्यवधेयम् ।

प० — **प्रतियोग्यधिकरणमेव ह्यभावस्याधिकरणमिति** । पूर्वोत्तरकालभेदेनेति भावः ॥ **न चेति** । आत्माश्रयापत्तेरिति भावः । ननु साक्षी मुक्तौ कालसत्त्वं कथं गृह्णाति येन तद्विरोध इत्यत आह **स हीति** । उक्तवादिनामित्यत्रोक्तपदार्थमाह **उक्ताः प्रत्युक्ता इति** । निरस्तवादिनामित्यर्थः ।

**या०— प्रतियोग्यधिकरणमेवेति** । प्रतियोगिप्रसक्तिमदित्यर्थः । एवं कालप्रसक्तेरित्यर्थः । आत्माश्रयादिति भावः । ननु कालो नेति सामान्यतस्त्रैकालिकनिषेधवचनस्य कथं वर्तमानमात्र-विषयकप्रत्यक्षविशेषसाक्षिविरोध इत्यत आह **स हि पूर्वोत्तरेति** । तथा च न प्रत्यक्षमात्रस्य वर्तमान-मात्रग्राहित्वनियम इति भावः ।

**श्री०— एवं तर्हीति** । कालाधिकरणत्वेन कालनिषेधस्य कर्तुमशक्यत्वे सतीत्यर्थः ॥ **सामान्येति** । कालो नास्तीति सामान्यनिषेध एवेत्यर्थः ॥ **पूर्वोत्तरकोटीति** । कोटिरवधिः । एतदारभ्यैतावत्पर्यंतमस्तीत्येवं पूर्वोत्तरावधिरहिततयेत्यर्थः ॥ **पूर्वाभ्यां सहेति** । शून्यवादिमायावा-दिभ्यां सह विद्यमानस्य अस्य विज्ञानवादिनश्चेति त्रयाणामित्यर्थः ।

**सु०— ननु कथं शून्यवादिमायावादिनोरयं साक्षिविरोधः । ताभ्यां कालाभावस्यान-भ्युपगतत्वात् । यथा हि लोकेऽनेकेषु मायामयान् गजतुरगादीन्पश्यत्सु यस्य कारणविशेषेण मायाऽपगच्छति स एव तान्न पश्यति अन्ये तु पश्यन्त्येव । तथा द्वैतदर्शनकारणमज्ञानं यस्यापगतं स एव तन्न पश्यति । अन्येषां तु कालादिप्रपञ्चदर्शनमनुवर्तत एवेति खलु ताभ्यामभ्युपेतमित्यत आह** एकेति ।

अनु०— एकजीवत्वपक्षे तु कालाभावादियं प्रमा ॥
कुपिता

**सत्यमेवं बहुजीववादिनः शून्यवादिनो मायावादिनश्च मतम् । न च तयोरस्माभिः साक्षिविरोधोऽभिहितः । किं तर्ह्येकमुक्तिरेव सर्वमुक्तिः एकस्मिन्मुक्ते न किञ्चिदवशिष्यत इत्येकजीववादपक्षे तु मुक्तौ कालाभावाभ्युपगमादियं प्रमा साक्षिरूपा कुपिता विरोधिनी भवत्येव ।**

**शे०**— साक्षिप्रमाणे कोपलक्षणविरोधादिभिन्नदोषस्य सिद्धान्तेऽनङ्गीकारादाह **विरोधिनीति** ।

**प०**— शङ्कते **शून्यवादिमायावादिनौ प्रतीति** ॥ **तस्येति** । विरोधाभिधानस्येत्यर्थः । ताभ्यां भवदुक्तानुमाने विज्ञानवादिनेवाश्रयासिद्धेरनाशङ्कितत्वादप्रस्तुतत्वादित्युक्तम् ।

**श्री०— शून्यमायावादिनोः** बहुजीववादिनोरित्यर्थः ।

सु० — शून्यवादिमायावादिनौ प्रति साक्षिविरोधाभिधानमसङ्गतम् । कालाभावाभ्युपगमेऽपीदानीं तस्याप्रस्तुतत्वादित्यत आह कालमिति ।

अनु० — कालमाधाय द्वैतमेवोपपादयेत् ॥

इयं प्रमेति वर्तते । आधाय उपपाद्य । अयमभिसन्धिः । अद्वितीयस्य शून्यस्य ब्रह्मणो वाऽवस्थानं मुक्तिरिति तावदेकजीववादिभ्यां ताभ्यामभिधीयते । तत्र वयं ब्रूमः । कालसद्भावान्नाद्वैतत्वमुपपद्यत इति । तत्र परः कालोऽपि नास्तीति वदति तदा साक्षिविरोधोऽभिधीयत इत्येतां सङ्गतिमाश्रित्यातिदेशः कृतो, न त्वाश्रयासिद्धिप्रसङ्गेनेति ।

शे० — तस्येति । कालाभावादाश्रयासिद्धमनुमानमिति विज्ञानवादिनाऽऽश्रयासिद्धौ चोदितायां तं प्रत्येव साक्षिविरोधाभिधानं सङ्गतं; आश्रयासिद्धिकथनाय कालाभावस्य तेनाशङ्किततया प्रस्तुतत्वात् । नैकजीववादिनौ शून्यवादिमायावादिनौ प्रति । ताभ्यामाश्रयासिद्धिकथनाय कालाभावस्यानाशङ्किततयाऽप्रस्तुतत्वादित्यर्थः ।

नन्वेतावताऽपि शून्यवादिमायावादिनौ प्रति साक्षिविरोधाभिधानस्य नासङ्गतिपरिहार इत्यत आह अयमभिसन्धिरिति ॥ अतिदेशः कृत इति । समश्चायमित्येवंरूपोऽतिदेशः कृत इत्यर्थः ।

प० — अस्पष्टत्वाच्छङ्कोत्तरस्य स्वयमभिधेयं व्यनक्ति अयमभिसन्धिरिति ।

या० — तस्याप्रस्तुतत्वादिति । कालाभावादाश्रयासिद्धमाद्यमनुमानमिति विज्ञानवादिनाऽऽश्रयासिद्धौ चोदितायां तं प्रत्येव साक्षिविरोधाभिधानं सङ्गतम् । कालाभावस्याश्रयासिद्धिकथनाय तेनाशङ्किततया प्रस्तुतत्वात् । न शून्यमायावादिनौ प्रति । ताभ्यां कालाभावस्याश्रयासिद्धिकथनायानाशङ्कितत्वादित्यर्थः ॥ न त्वाश्रयासिद्धीति । गौरवादिति भावः ॥ प्रयोजनं चेति । मुक्तस्याद्वितीयत्वनिराकरणरूपमित्यर्थः ।

श्री० — एकजीववादिभ्यां शून्यवादिमायावादिप्रभेदाभ्याम् ॥ अतिदेशः कृत इति । समश्चायमित्यनेनेत्यर्थः ।

सु० — वादित्रयसाधारणमनुमानान्तरमाह विमत इति ।

अनु० — विमतः प्रपञ्चवान्कालः कालत्वात्प्रतिपन्नवत् ॥
इति चान्यानुमैकत्वं जीवस्य विनिवारयेत् ॥

कालः प्रपञ्चवानित्युक्ते सिद्धसाधनता स्यात् । अतो विमत इत्युक्तम् । मोक्षकाल इत्यर्थः । तस्य स्पष्टीकरणाय काल इत्युक्तम् । कालाभावस्यानुपदमेव निरस्तत्वान्नाश्रया-

**सिद्धिः** । प्रपञ्चो **वियदादिः** प्रतिपन्नो **वर्तमानकालः** । **पूर्वोक्तमेवेदं कुतः पुनरुच्यत इत्याशङ्का-निरासायोक्तमन्याऽनुमा चेति । यद्यपि द्वयोर्धर्म्यादिकं प्रयोजनं च समानम् । तथाऽपि पूर्वमद्वैतनिषेधमुखेन प्रवृत्तम् । इदं तु प्रपञ्चविधिमुखेनेति भेदः** । जीवस्य **मुक्तस्य** ।

**शे०— पूर्वोक्तमेवेदमिति** । यद्यप्येतन्न प्रागुक्तं तथाऽपि धर्म्या(र्मा)द्यैक्यं प्रयोजनैक्यं चाभिप्रेत्येयमुक्तिरिति ध्येयम् ॥ **प्रयोजनं चेति** । मुक्तस्याद्वितीयत्वनिराकरणमित्यर्थः ॥ **पूर्वमिति** । पूर्वमनुमानमित्यर्थः ॥ **इदमिति** । इदमनुमानमित्यर्थः । मुक्तैकत्वनिराकरणस्य प्रस्तुतत्वाज्जीवशब्दो मुक्तपर इत्याह **जीवस्य मुक्तस्येति** ।

**प०— पूर्वोक्तमेवेति** । विमतः कालो न केवलज्ञानवानित्युक्तमित्यर्थः ॥ तस्याप्यद्वितीयार्थनिरास एव तात्पर्यादिति भावः ॥ **द्वयोरिति** । अनुमानयोरित्यर्थः ॥ **प्रयोजनं चेति** । मुक्ताद्वितीयनिरासरूपमित्यर्थः ।

**श्री०— स्पष्टीकरणायेति** । विमतशब्देनैव मोक्षकालस्य प्राप्तत्वादित्यर्थः । **द्वयोः** पूर्वानुमानैतदनुमानयोः ॥ **निषेधमुखेनेति** । कालः केवलज्ञानवान्नेति निषेधमुखेनेत्यर्थः ॥ **विधिमुखेनेति** । विमतः कालः प्रपञ्चवानिति विधिमुखेनेत्यर्थः ।

**सु०— उक्तातिदेशेनाद्वैतमतान्तराणि दूषयति** कालेति ।

---

**अनु०**— कालशब्देश्वरैकत्वमतान्यप्येवमेव हि ॥
निराकृतानि

**यद्यदनुविद्धं प्रतीयते तत्तत्रारोपितम् । यथेदमाकारे रजतम् । कालानुविद्धं च समस्तं प्रतिभाति । तस्मात्तत्रैवारोपितम् । स एव तु परमार्थः । अतस्तन्मात्रावस्थानं मुक्तिरिति कालैकत्ववादिनः । एवमेव शब्दैकत्ववादिनो वैयाकरणाः प्राहुः । यथा 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यत' इति । शैवैकदेशिनः स्वागममाश्रित्येश्वरैकत्वमाहुः ।**

**कथं निराकृतानीत्यत आह** तेषां चेति ।

तेषां च समत्वात्पक्षदोषयोः ॥

**तेषां शून्यवादिप्रभृतीनां एतेषां च पक्षस्तावत्समान एव । शून्यादिशब्दभेदस्याप्रयोजकत्वात् । प्रतिपन्नस्वरूपजीवविनाशादेः सर्वैरभ्युपगतत्वात् । अतः परमेष्टनाशेनापुरुषार्थत्वमित्यादिदोषोऽपि समान एवेति । अनुमानं तु प्रत्यक्षविरोधादिना दुष्टमेव । तथाऽऽगमोऽपीति स्फुटत्वान्नोक्तम् ।**

**शे०— उक्तातिदेशेनेति** । 'आत्माभावेऽपुमर्थ' इत्याद्युक्तदोषातिदेशेनेत्यर्थः ॥ **एवमेवेति** । यद्यदनुविद्धतया प्रतीयते तत् तत्रारोपितं, यथेदमाकारे रजतं, शब्दानुविद्धं च समस्तं प्रतिभाति तस्मात्तत्रैवारोपितं शब्द एव तु परमार्थः इति वैयाकरणाः प्राहुः । अत्र चशब्देन स्फोटाख्यं शब्दब्रह्मैवाभिमतम् । मायावादिना नित्यनिरतिशयचिदानन्दैकरसे ब्रह्मण्यसतोऽपि प्रपञ्चस्यानाद्यनिर्वाच्याविद्यायाः सत्त्वेनावभासस्येव वैयाकरणैरपि अनवयवे नित्ये स्फोटाख्ये शब्दब्रह्मण्यसतोऽप्यशेषजगतो वर्णपदविभागस्य च अनाद्यविद्यायाः सत्त्वेनावभासस्याभ्युपगतत्वादिति द्रष्टव्यम् । शब्दानुविद्धतया प्रतीयमानत्वहेतोरसिद्धिमाशङ्क्य परिहरति **यथा न सोऽस्तीति** । यः प्रत्ययः स्वविषयवाचकशब्दानुवेधमन्तरेणोत्पद्यते स प्रत्ययो लोके नास्त्येव । कुतः । सर्वमपि ज्ञानं गृह्यमाणं घटस्य ज्ञानमिति शब्दविशिष्टविषयघटितत्वाकारेणैवानुव्यवसायस्य विषयो भवति । इवशब्दस्तु वाक्यालङ्कार इति संमतिग्रन्थार्थः । पाशुपतैकदेशिनां शैवानां भेदवादित्वेऽपि तच्छैवैकदेशिनां शैवानामैक्यवादित्वाच्छैवैकदेशिन इत्युक्तम् ॥ **आगममिति** । शैवाद्यागममित्यर्थः । मूले पक्षसाम्यं दोषसाम्यहेतुतया विवक्षितमित्यभिप्रेत्य तदुभयमुपदर्शयति **तेषामित्यादिना** । जीवविनाशादेरित्यादिपदेनाप्रतिपन्नशून्यब्रह्मभावादेः परिग्रहः । ननु तदुपन्यस्तयोरनुमानागमयोरनिराकरणे तन्निरासासिद्धेर्भाष्यकृता तन्निरासस्यावश्यं कर्तव्यत्वात्तदकरणाद्भाष्यन्यूनत्वमित्यतः स्फुटत्वात्तन्निरासस्य शिष्यैरेव कर्तुं शक्यत्वात्तदनुक्त्युपपत्तेर्न न्यूनत्वमित्याशयेन स्वयमनुमानागमनिरासप्रकारं दर्शयन्नेव भाष्यकृतस्तदनुक्तौ निमित्तमाह **अनुमानं त्विति** । सर्वं काले शब्दे वाऽऽरोपितं तदनुविद्धतया प्रतीयमानत्वात् इत्यनुमानं दुष्टम् । प्रपञ्चस्य प्रत्यक्षानुमानागमबलेन सत्यत्वनिश्चयेन तद्विरुद्धत्वात् । तथेश्वरे सर्वस्यारोपितत्वसाधनतया परस्याभिमत आगमोऽपि दुष्ट एव । प्रत्यक्षादिप्रमाणात्तत्सत्यतानिश्चयेन तद्विरुद्धत्वादिति स्फुटत्वाद्भाष्यकृता नोक्तमित्यर्थः ।

**स०— अनुमानं त्विति** । सर्वं काले आरोपितं तदनुविद्धतया प्रतीयमानत्वादित्यनुमानमित्यर्थः । **आगमोपीति** । अपिः प्रत्यक्षविरोधाद्दुष्ट इत्यनुकर्षणार्थः ।

**प०— न स इति** । शब्दानुगमादृते यः प्रत्ययः स नास्ति सर्वं शब्देनानुविद्धमिव ज्ञानं गम्यतेऽनुभूयत इत्यर्थः ॥ **ईश्वरैकत्वमीश्वरेण** जीवानामेकत्वम् ॥ **इत्यादिदोषोऽपीति** । अनुमानविरोधानुभवविरोधादिरादिपदार्थः ॥ **अनुमानं त्विति** । सर्वं काले शब्दे ईश्वरे वाऽरोपितं तदनुविद्धतया प्रतीयमानत्वात् इदं रूप्यमितीदमाकारानुविद्धतया प्रतीयमानरजतवदिति प्रागभिमतानुमानं त्वित्यर्थः । **आगमोऽपि** शैवागमोपि । अद्वैतबोधकांशः प्रत्यक्षादिविरोधाद्दुष्ट इत्यर्थः ।

**शून्यवादिमायावादिविज्ञानवादिकालशब्देश्वरैकत्ववाद्यभिमतमोक्षनिरासः ॥**

**या०— शब्दैकत्ववादिन इति ।** अत्र शब्दशब्देन तदभिव्यङ्ग्यः स्फोटो लक्ष्यते । एवं शब्दानुगमादृत इत्यत्रापि पदवाक्यस्फोटः पदशब्दशब्देन ग्राह्यः । प्रसिद्धशैवानां भेदवादित्वादाह **शैवैकदेशिन इति ॥ आगममिति ।** शैवाद्यागममित्यर्थः । शिवस्याप्रत्यक्षत्वेनात्र युक्तेरसंभवादित्यर्थः ।

**श्री०— पक्षस्तावदिति ।** सिद्धान्त इत्यर्थः । **अनुमानं त्विति ।** यद्यदनुविद्धतया प्रतीयते तत्तत्रारोपितमित्येवं कालावयवारोपितत्वसाधकानुमानमित्यर्थः ॥ **प्रत्यक्षविरोधादिनेति ।** सन्घट इत्यादिप्रत्यक्षेण प्रमाणदृष्टत्वानुमानेन विश्वं सत्यमित्यागमेन च विरुद्धत्वाद्दुष्टमित्यर्थः ॥ **आगमोऽपीति ।** ईश्वरैकत्वसाधकशैवाद्यागमोऽपि द्वैतागमविरुद्धत्वाद्दुष्ट इत्यर्थः ।

**सु०— वैभाषिकसौत्रान्तिकाभिमतं मोक्षं निरूपयति** ज्ञानमिति ।

**अनु०—** ज्ञानं स्वरसभङ्ग्येव नित्यसन्तानमिष्यते ॥
बौद्धाभ्यामपराभ्यां तु

**एवशब्देन विषयसंबन्धं व्यावर्तयति ।** इष्यते **मुक्तौ । अयमर्थः । ज्ञानमेवात्मा । तच्च ज्ञानं स्वभावेनैव भंगुरम् । अत एव क्षणिकम् । तत्सन्तानस्तु नित्यः । तस्यानादिवासनावशाद्यो विषयोपरक्तस्योत्पादः स संसारः भावनाप्रकर्षवशेन वासनायामुत्सन्नायां यो विषयोपप्लवं विना शुद्धस्यैवोदयः स मोक्षः इत्युभयसमानम् । सौत्रान्तिकास्तु संसारे साकारत्वं मुक्तौ निराकारत्वं च विशेषमाहुरिति ।**

**निराकरोति** तत्रापीति ।

तत्राप्युक्तानुमा रिपुः ॥

**विमतः कालो न निर्विषयैतज्ज्ञानसन्ततिमान् कालत्वादिदानीन्तनकालवदित्यादिरुक्ता उक्तसरूपा अनुमा** रिपुर्विरोधिनीत्यर्थः ।

**शे०—** मूले स्वरसभंग्येवेत्येवशब्दवैयर्थ्येन यथाश्रुतसंबन्धायोगात् ज्ञानमित्यनेन संबन्धमभिप्रेत्य तद्व्यावर्त्यमाह **एवशब्देनेति ।** विषयसंबन्धस्य ज्ञानस्य संसारत्वेन मोक्षत्वाभावादिति भावः । **तस्य** ज्ञानसंतानस्य ॥ **अनादिवासनावशादिति ।** रागादिरूपचतुर्विधवासनावशादित्यर्थः ॥ **भावनाप्रकर्षवशेनेति ।** क्षणिकदुःखशून्यस्वलक्षणरूपचतुर्विधभावनायाः यः प्रकर्षः परिपाकस्तद्वशेनेत्यर्थः । क्षणिकं क्षणिकमिति भावना क्षणिकभावना । दुःखं दुःखमिति भावना दुःखभावना । शून्यं शून्यमिति भावना शून्यभावना । स्वलक्षणं स्वलक्षणमिति भावना स्वलक्षणभावना तत्राद्यया

स्थायित्वभ्रमनिवृत्तिः द्वितीयया रागादिनिवृत्तिः तृतीयया विषयाकारोपप्लवविच्छेदः चतुर्थया द्रव्यगुणादिवैलक्षण्यबुद्धिनिवृत्तिरिति ज्ञेयम् । **शुद्धस्यैव** विषयानुपप्लुतज्ञानसंतानस्येत्यर्थः । ततश्च भावनाप्रकर्षपरिलब्धविषयानुपप्लुतज्ञानसंतानोत्पादो मोक्ष इति फलितं भवति । **विमत इति** । संसारिणो यज्ञदत्तस्य भावी मोक्षकाल इत्यर्थः ॥ **निर्विषयेति** । साध्ये एतत्पदत्यागे दृष्टान्ते साध्यवैकल्यम् । इदानींतनकालस्य यत्किंचित्पुरुषीयनिर्विषयज्ञानसंततिमत्त्वात् । गृहीते तु न । यज्ञदत्तीयनिर्विषय-ज्ञानसंततिमत्त्वाभावात् । नन्विदमनुमा न पूर्वमुक्तेति कथमुक्तानुमा रिपुरित्युक्तमित्यतस्तात्पर्यमाह **उक्तोक्तमरूपेति** । चेतनधर्मत्वाद्रिपुत्वस्य कथमचेतनानुमानधर्मत्वोक्तिरित्यत आह **विरोधिनीति** ।

**प०— तस्येति** । स्वतो निर्विषयकक्षणिकज्ञानाख्यात्मन इत्यर्थः ॥ **विषयोपरक्तस्येति** । विषयसंबन्धविशिष्टस्येत्यर्थः ॥ **इत्यादिरिति** । विमतः कालः प्रपञ्चवान् कालत्वादिदानीन्तनकाल-वदित्याद्युक्तानुमानमादिपदार्थः ।

**या०— निर्विषयैतज्ज्ञानेति** । परमते इदानीन्तनकालेऽपि कस्यचिद्देवदत्तस्य मुक्त्यङ्गीकारेण तदीयनिर्विषयज्ञानस्य सत्त्वेन साध्यवैकल्यशङ्का स्यादत एतदित्युक्तम् । तथा च संसारीयो यज्ञदत्तस्य भावी यो मोक्षकालः स पक्षः वर्तमानकालस्तु दृष्टान्तः । तत्र च तदीयज्ञानसन्ततिर्न निर्विषयेति न साध्यवैकल्यशङ्केति भावः ।

---

**श्री० – भंगुरं** अनित्यम् **क्षणिकं** क्षणमात्रावस्थायि । **शुद्धस्यैव** निर्विशेषस्यैव । एतदनुमानस्य पूर्वमनुक्तत्वादुक्तसरूपेत्युक्तम् । उक्तानुमानसदृशेत्यर्थः । मुक्तस्य अद्वितीयत्वनिराकरण-परत्वेनोक्तसादृश्यं द्रष्टव्यम् ।

**सु०— अनुमानान्तरमाह** मोक्ष इति ।

**अनु०** — मोक्षो न शुद्धविज्ञानसन्तानी कालगत्वतः ॥
प्रतिपन्नो यथेत्येतदनुमानं तदुत्तरम् ॥

शुद्धविज्ञानसन्तानी(ति) **निर्विषयचित्सन्तानसंबन्धी** । कालगत्वतः **कालसंबन्धित्वात्** । प्रतिपन्नः **संसारः** । तदुत्तरं **तत्पक्षस्य दूषणम्** । **अप्रामाणिकश्चायं मोक्षः** । **पूर्ववत्प्रत्यक्षागमयो-रभावात्केवलानुमानानि वाच्यानि** । **तत्राह** अनुमानानीति ।

अनुमानानि सर्वाणि प्रतिसाधनयोगतः ॥
निषिद्धान्युक्तभङ्गैव

उक्तभङ्गैव **प्रतिसाधनसंबन्धेन** । **श्रुतिविरुद्धत्वेन कालात्ययापदिष्टानि चेति भावेनाह** श्रुतयश्चेति ।

श्रुतयश्चास्मदुक्तिगाः ॥

उच्यत इत्युक्तिः अस्मदुक्तिं गच्छन्ति प्रतिपादयन्तीत्यस्मदुक्तिगाः । अस्मदभिमतमेव मोक्षस्वरूपं प्रतिपादयन्तीत्यर्थः । श्रुतिप्रामाण्यं तु प्रागेव समर्थितमिति ॥

**शे०— पूर्ववदिति** । प्रत्यक्षायोग्यत्वादस्यार्थस्य न तत्र प्रत्यक्षं प्रमाणं । नाप्यागमः परकीयागमस्यास्मान्प्रति प्रामाण्यासंमतेः । वेदादेश्च तं प्रति तदसंमतेरिति पूर्ववदित्यर्थः ॥ **अनुमानानीति** । मोक्षकालो विषयानुपप्लुतज्ञानसंतानवान् विषयोपप्लवहेतुवासनानिवृत्तिमत्त्वात् । तथा विषयोपप्लवहेतुभूतवासनानिवृत्तिमांश्चतुर्विधभावनापरिपाकोत्तरकालत्वादिति वा । तत्कालीनं ज्ञानं विषयानुपप्लुतं निवृत्ततत्कारणत्वात् । तथा विप्रतिपन्नं निवृत्ततत्कारणकं चतुर्विधभावनापरिपाकोत्तरभावित्वात् इत्यनुमानानीत्यर्थः । उक्तिशब्दस्य भावसाधनत्वे स्वोक्तमोक्षस्य श्रुतिसिद्धत्वालाभेन परोक्तमोक्षस्य तद्विरुद्धत्वालाभप्रसङ्गात् तल्लाभाय कर्मणि क्तिनित्याशयेनाह **उच्यत इत्युक्तिरिति** ॥ **प्रागेवेति** । जिज्ञासासूत्रादावेवेत्यर्थः ।

**प०— प्रागेव समर्थितमिति** । 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य ही'त्यत्र जिज्ञासाधिकरणे समर्थितमित्यर्थः । **वैशेषिकसौत्रान्तिकाभिमतमोक्षनिरासः** ॥

**या०— प्रागेवेति** । प्रथमाध्याय इत्यर्थः ।

---

**श्री०— पूर्ववदिति** । कथमुक्तमोक्षस्वरूपमप्रामाणिकमिति चेत् । न तावदत्र प्रत्यक्षमस्ति । नाप्यागमः । तदीयागमस्यास्माभिः प्रामाण्यानङ्गीकारात् । वेदादेश्च प्रमाणतया परेणानङ्गीकृतत्वादित्येवं जिनाद्यभिमतमोक्ष इवात्र प्रत्यक्षागमयोरभावादित्यर्थः । **अस्मदुक्तं** अस्मदुक्तं प्रमेयम् ।

**सु०— सांख्याद्यभिमतं मोक्षमनुवदति** सांख्येति ।

**अनु०—** सांख्यनैयायिकाद्याश्च प्राहुर्मोक्षं च निःसुखम् ॥

**आद्यग्रहणेन वैशेषिका उच्यन्ते । यथा पूर्वेऽनुपपन्नभाषिणस्तथैतेऽपीति ज्ञापनार्थश्चशब्दः । कुत एवं प्राहुरित्यत आह** इच्छेति ।

इच्छाद्वेषप्रयत्नादेरपि सर्वात्मना लयम् ॥

तत्राहुः

तत्र **मुक्ताविच्छाद्वेषप्रयत्नादेरपि लयमाहुः । सुप्तिप्रलयवैलक्षण्यं दर्शयितुं सर्वात्मनेत्युक्तम् । निवृत्तजातीयस्य तस्मिन्नेवात्मनि पुनरनुत्पादः सर्वात्मना लयः । आदिपदेन बुद्धिदुःखधर्माधर्माणां शरीरेन्द्रियाणां च ग्रहणम् ।**

शे०— **चशब्द इति**। तथाच चशब्द उपमार्थः। पूर्वप्रकरणान्ते च तस्मात्सर्वे एतेऽनुपपन्नभाषिण इत्युपसंहारेऽध्याहार्य इत्युक्तं भवति सांख्यनैयायिकाद्याः (सर्वे)पूर्वे इवानुपपन्नभाषिणो यतो मोक्षो निःसुखमाहुरिति योजना सूचिता भवति **सुप्तीति**। इच्छाद्वेषप्रयत्नादिनिवृत्तेः सुप्तिप्रलययोरपि सद्भावात्तयोरप्यपवर्गत्वपरिहारार्थत्वमित्यर्थः। ननु सर्वात्मनेत्युक्तमिच्छादिनिवृत्तेरात्यन्तिकत्वं, न तावदिच्छाद्यसमानकालीनत्वम्। मौक्तेच्छादिनिवृत्तेरपि व्यधिकरणेच्छादिसमानकालीनत्वेनामुक्तित्वापातात्। नापि समानाधिकरणेच्छाद्यसमानकालीनत्वम्। सुप्तिप्रलययोरपि तन्निवृत्तेः समानाधिकरणेच्छाद्यसमानकालीनत्वेन मुक्तित्वप्रसङ्गात्। नापि प्रवृत्तिद्वेषेच्छाद्यजनकेच्छादुःखादिप्रतियोगित्वम्। योगिनोऽप्येवंभावेन मुक्तित्वप्रसङ्गात् परममुक्तेश्चात्र लक्ष्यमाणत्वादित्यतो न्यायवाचस्पतिमिश्रैर्निरुक्तं तात्पर्यपरिशुद्धिकृता परिष्कृतं तन्निर्वचनमाह **निवृत्तजातीयस्येति**। निवृत्तस्येच्छादेः पुनरनुत्पादस्तस्मिन्नेवात्मनि संसारदशायामप्यस्तीत्यतिप्रसङ्गपरिहाराय तज्जातीयस्येत्युक्तम्। एकात्मनि निवृत्तजातीयस्यापीच्छादेः परात्मन्युत्पत्तेरपवर्गेऽपि सत्त्वेनासंभवपरिहाराय तस्मिन्नेवात्मनीत्युक्तम्।

स०— तात्पर्यपरिशुद्धावुदयनोदीरितामात्यन्तिकतानिरुक्तिमाह **निवृत्तेति**। चेतनान्तरे तथाविधोत्पत्तिसंभवेनासंभवनिवृत्त्यर्थं तस्मिन्नात्मनीति विशेषणम्। निवृत्तस्यानुत्पादः संसारदशायामप्यस्तीति तज्जातीयस्येत्युक्तम्।

---

प०— **चशब्द इति**। अयुक्तवादिभिः समुच्चित्य निर्देशे सति त इवैतेपि तथेति लभ्यत इत्याह **यथा पूर्व इति**। तत्रेत्यनुवादः मुक्ताविति व्याख्या॥ **सुप्तिप्रलयेति**। ननु सुप्त्यादावपि सूक्ष्मरूपेणाप्यनवस्थानात्सर्वात्मना लयोऽस्त्येवेत्यतस्तस्यार्थमाह **निवृत्तेति**। निवृत्तं यदिच्छादि तज्जातीयस्येच्छाद्यन्तरस्यानुत्पाद इत्यर्थः। सुप्त्यादौ तु अस्त्युत्तरकालं तदुत्पाद इति भावः।

या०— **चशब्द इति**। तथा च चशब्द उपमार्थः। पूर्वप्रकरणान्ते तस्मात्सर्व एतेऽनुपपन्नभाषिण इत्युपसंहारोऽध्याहार्य इति भावः। एवं च सांख्यनैयायिकाद्याः पूर्वे इवानुपपन्नभाषिणो यतो मोक्षं निर्दुःखं प्राहुरिति योजना द्रष्टव्या॥ **निवृत्तजातीयस्येति**। इच्छादिप्रागभावासमानाधिकरण इच्छादिलय इत्यर्थः।

**सु०— ततश्चायमाशयः। न तावन्मुक्तस्य सुखमनादीत्युपपद्यते। संसारेऽपि तत्प्रतिभासप्रसङ्गात् प्रतिभासत एवेति चेन्न। प्रतिभासमानस्यानादितायां साधनोपादानवैयर्थ्यापत्तेः।**

**अव्यक्तत्वात्संसारे न प्रतिभासते व्यक्तत्वात्तु मुक्तौ प्रतिभासत इति चेन्न। अव्यक्तिर्हि प्रतिभासाभावो व्यक्तिश्च प्रतिभासः। ततश्चाप्रतिभासान्न प्रतिभासते प्रतिभासनाच्च प्रतिभासत इत्युक्तं स्यात्। किञ्च प्रतीतिकारणान्तःकरणसद्भावे संसारे न प्रतीयते। मुक्तौ तु तदपगमे**

**प्रतीयत इति सुभाषितम् ॥ आवृतत्वान्न प्रतीयत इति चेन्न । मूर्तत्वाभावेनावरणानुपपत्तेः । तदनिरूपणाच्च ॥ सुखमिव तत्प्रतीतिरप्यनादिश्चेत्किमावरणकृत्यम् । विषयविषयिभावः प्रतिबध्यत इति चेन्न । निर्विषयायाः प्रतीतेरनुपपत्तेः । सुखतत्प्रतीत्योरनादितायां प्रमितायामेव चैषा कल्पना युक्ता । न च तत्र प्रमाणं पश्यामः ॥ ततः सुखस्य तत्प्रतीतेश्च मुक्तावुत्पत्तिरेव वक्तव्या । साऽपि न संभवति । कारणाभावात् । शरीरे सति तदाश्रयेन्द्रियसद्भावः, तैरर्थालोचनं, ततः पूर्वानुभूतसारूप्येणेष्टानिष्टसाधनत्वानुमानं, तस्मादिच्छाद्वेषौ, ताभ्यां प्रयत्नः, ततश्चेष्टसाधनोपादानं, अनिष्टसाधनहानं च, ततः सुखोत्पादः, तदनन्तरं तत्प्रतीतिरित्येष दृष्टकारणक्रमः । अदृष्टं च सर्वत्र विजयते । न चैष कारणप्रवाहो मुक्तावस्ति । तत्सद्भावे दुःखस्यापि प्रसङ्गेन मुक्तत्वव्याघातात् ।**

**तस्मात्सुखरहित एव मोक्षः ।**

**शे०** — ननु पुरुषार्थत्वानुरोधेन सुखतत्प्रतीत्योर्मुक्तावश्यमभ्युपगन्तव्यतया मुक्ताविच्छादिविशेषगुणध्वंसो संभावित एव । अन्यथाऽपुरुषार्थत्वप्रसङ्गादित्यतो मुक्तौ सुखतत्प्रतीत्योः सर्वथाऽप्यसंभवोपपादनपूर्वकं तत्पुरुषार्थत्वं दर्शयितुमाह **ततश्चेति ॥ न तावदिति** । करिष्यमाणसादिसुखनिरासापेक्षया तावच्छब्दः ॥ **संसारेऽपीति** । सतो योग्यस्याप्यप्रतिभासे कारणाभावादिति भावः । अत्रेष्टापत्तिमाशङ्कते **प्रतिभासत एवेतीति** । अत्र तथा सति मुक्तसंसारिणोरविशेषप्रसङ्ग इति सत्येव दोषे दोषान्तरमाह **प्रतिभासमानस्येति** । सुखस्यानादित्वं वदता मोक्षसाधनोपादानस्य तदर्थताया वक्तुमशक्यत्वेन तदभिव्यक्त्यर्थताया एव वक्तव्यत्वात्संसारदशायां तत्प्रतिभासस्याप्यभ्युपगमे तादर्थ्यस्याप्यसंभवान्मोक्षसाधनोपादानवैयर्थ्यं स्यादित्यर्थः ।

अस्तु तर्हि संसारे सतोऽपि सुखस्याव्यक्त्याऽप्रतिभास इत्याशङ्कते **अव्यक्तत्वादिति** । अव्यक्तत्वं किमप्रतिभासमानत्वं किंवा तत्प्रयोजकमावृतत्वमिति विकल्पद्वयं मनसि निधायाद्यमनूद्याभेदेन प्रयोज्यप्रयोजकभावानुपपत्त्या दूषयति **अव्यक्तिर्हीति** । विरोधेनापि पराचष्टे **किंश्चेति** । द्वितीयमाशङ्कते **आवृतत्वादिति ॥ मूर्तत्वाभावेनेति** । सुखस्य गुणत्वादमूर्तत्वेनावृतत्वव्यापकमूर्तत्वाभावेन तद्व्याप्यस्यावृतत्वस्यानुपपत्तेरित्यर्थः । अङ्गीकृत्यैव चावरकममूर्तत्वेनावरणानुपपत्तिरभिहिता । वस्तुतस्त्वावरकमेव तस्य दुर्निरूपमित्याह **तदनिरूपणाच्चेति** ।

अस्तु वाऽऽवरकमपि । तथाऽपि न सुखस्य तदावृतत्वं संभवति । तत्कृत्याभावात् । तद्धि भवत्प्रकाशप्रतिबन्धो वा स्याद्विषयविषयिभावप्रतिबन्धो वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति

**सुखमिवेति** । वक्ष्यमाणरीत्या तत्प्रतीतेः सादित्वानुपपत्त्या सुखादिवदनादित्वात् विषयविषयिभाव-दशायामपि ( संसारदशायामपि ) सत्त्वेन प्रकाशप्रतिबन्धस्य नावरणकृत्यत्वमित्यर्थः । द्वितीयमाशङ्कते **विषयेति** । किञ्च संसारावस्थायां सुखस्यावृतत्वं विषयविषयिभावप्रतिबन्धश्चावरणकृत्यमिति किं सुखतत्प्रतीत्योरनादितायाः प्रमितत्वात्कल्प्यते किंवाऽप्रमितायामपि तस्यामिति विकल्पद्वयं मनसि निधाय द्वितीयमतिप्रसङ्गेन दूषयति **सुखतत्प्रतीत्योरिति** । प्रथममसिद्ध्या दूषयति **न च तत्रेति** । ननु नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुतिरेव तत्र मानमिति कथं तदभाव इति चेन्न । विकल्पानुपपत्तेः । तथाहि । किं लोकसिद्धेन सुखेन ब्रह्माभेदोऽनया श्रुत्या बोध्यते किंवा सुखान्तरेण । नाद्यः । लोकसिद्धसुखस्य विनाशित्वेन ब्रह्माभेदे बाधात् । अन्त्येऽपि सुखान्तरं प्रमाणान्तरसिद्धं श्रुतिसिद्धमेव वा । नाद्यः । तथाविधसुखबोधकस्य प्रमाणान्तरस्याभावात् । नान्त्यः । श्रुतेर्नित्यसुखांशेऽसामर्थ्यात् । न च नित्यत्वविशेषणबलात्प्रथमतस्तावन्नित्यं सुखं श्रुत्या बोध्यतेऽनन्तरं तेन सह ब्रह्माभेद इति वाच्यम् । तथा सति वाक्यभेदप्रसङ्गात् । किञ्च सुखाभेदबोधनमपि ब्रह्मणोऽनुपपन्नमेव । तस्य सुखी अहमित्यनु-भवेन तदाश्रयत्वेन विषयीक्रियमाणत्वात् । न च ब्रह्माभेदान्यथाऽनुपपत्त्या नित्यसुखसिद्धिरिति वाच्यम् । इतरेतराश्रयप्रसङ्गात् । सिद्धे हि तथाविधसुखेऽनेन ब्रह्माभेदप्रतिपत्तिः । ब्रह्माभेदप्रतिपत्तौ च तथाविधसुखसिद्धिरिति । तस्माद्बाधिताया ग्रावप्लवनश्रुतिवदुपचरितार्थत्वान्न तस्या नित्यसुखे प्रामाण्यमिति भावः ॥ **तत इति** । सुखतत्प्रतीत्योरनादित्वायोगादित्यर्थः ।

अस्तु तर्हि तयोर्मुक्तावुत्पत्तिरेव । तथाऽपि न मुक्ताविच्छादिगुणविलयसिद्धिरित्यतो भवेदेतदेवं यदि तयोस्तत्रोत्पत्तिरुपपन्ना स्यात् । न च तयोरुत्पत्तिस्तत्र संभवतीत्यतो नोक्तविधमोक्षहानिरित्या-शयेनाह **साऽपीति** । तत्र हेतुमाह **कारणेति** । कथं कारणाभाव इत्यतस्तमुपपादयितुं कृत्स्नं कारणकलापमुपदर्शयति **शरीरे सतीत्यादिना** ॥ **सर्वत्रेति** । शरीरमारभ्योक्तकारणकलापे सर्वत्र कारणं भवतीत्यर्थः । अस्तु तर्ह्येतत्कारणचक्रबलादेव मुक्तावपि सुखतत्प्रतीत्योरुत्पत्तिरित्यतस्तस्या-सिद्धिमाह **न चेति** । तत्रापि तत्सद्भावे बाधकमाह **तत्सद्भाव इति** । शरीरादेर्दुःखाविनाभूतत्वात्तत्प्रसङ्ग इत्यर्थः । तत्रापीष्टापत्तौ बाधकान्तरमाह **मुक्तत्वेति** । 'दुःखेनात्यन्तं विमुक्तश्चरती'त्यादिश्रुति-बलान्मुक्तस्यात्यन्तदुःखविरहसिध्या सदुःखत्वे मुक्तत्वव्याघातादित्यर्थः ॥ **तस्मादिति** । तत एव तत्प्रतीतिरहितोऽपीति युक्त एव मुक्ताविच्छादिगुणविलय इति भावः ।

स० — **मूर्तत्वाभावेनेति** । गुणत्वेनामूर्तत्वादिति भावः ॥ **तदिति** । आवरणानिरूपणा-च्चेत्यर्थः । **अदृष्टं चेति** । सर्वत्र विजातीयसमस्तकार्येषु प्रभवतीत्यर्थः । (यदि मदीयानर्थो भवती-त्युच्यते तर्हि कथं तस्य पुरुषार्थत्वमित्यत आह **स्वरूपेणेति** ।)

**प०**— ननु सुखाभावं प्रतीच्छादेरभावस्य कथं हेतुता सुखस्यानादित्वेनाप्युपपत्त्या तदुत्पत्तेरभावेन उत्पत्ताविच्छादेरनुपयोगादित्यत आह **अयमाशय इति** ॥ **मूर्तत्वाभावेनेति** । परिच्छिन्नपरिमाणयोगित्वाभावादित्यर्थः । तादृशस्यैव घटादेः पटादिनाऽऽवृतत्वदर्शनादिति भावः । रूपादेरन्धकारावृतत्ववत्किं न स्यादित्यत आह **तदनिरूपणाच्चेति** । ज्ञानाभावातिरेकेणावरणस्यानिरूपणाच्चेत्यर्थः । एवमनादित्वं सुखतत्प्रतीत्योर्निरस्योत्पत्तिमापाद्यमुक्तौ सुखाभावे इच्छाद्यभावस्य हेतुतां व्यनक्ति **ततः सुखस्येति** । अनादित्वासंभवादित्यर्थः ॥ **सर्वत्र विजयत इति** । शरीरीन्द्रियादिरूपोक्तकारणसमूहे प्रतिकारणं अदृष्टमपेक्ष्यत एवेत्यर्थः ।

**या०**— **अव्यक्तत्वादिति** । तथा च संसारे सुखवत्तत्प्रतीतिरपि न वक्तव्येति भावः । नन्वमूर्तमपि रूपादिकं अन्धकारावृतमुपलब्धमत आह **तदनिरूपणाच्चेति** ॥ **सर्वत्र विजयत इति** । शरीरमारभ्योक्तकारणकलापे सर्वत्र कारणं भवतीत्यर्थः ।

**श्री०**— **साधनोपादानेति** । स्रक्चन्दनादिरूपसुखसाधनेत्यर्थः ॥ **एषा कल्पनेति** । सुखस्यानादित्वे प्रमितत्वेऽव्यक्तत्वान्न प्रतिभास इति कल्पना । तत्प्रतीतेरनादित्वे प्रमितत्वे विषयविषयिभावः प्रतिबद्ध्यत इति कल्पना च युक्तेत्यर्थः । **अर्थालोचनं** अर्थसन्निकर्षः ।

---

**सु०**— **कथमयं पुरुषार्थ इति चेत् शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेत्येकविंशतिभेददुःखात्यन्तनिवृत्तित्वादिति ब्रूमः ॥ दुःखनिवृत्तिः पुरुषार्थ एव न भवति । तदीयपुरुषार्थत्वस्य सोपाधिकत्वात् । सुखं दुःखाभावे सत्येव भवतीति सुखार्थं दुःखाभावो मृग्यते न तु स एव पुरुषस्य समीहित इति चेत् (न) । विपर्ययस्यापि सद्भावात् । भोजनादिसुखे सत्येव बुभुक्षादिदुःखं निवर्तत इति दुःखनिवृत्त्यर्थमेव भोजनादिसुखं मृग्यते न पुनस्तदेव पुरुषस्य समीहितमिति कल्प्यते । क्वचिद्दुःखनिवृत्त्यभावेऽपि सुखस्येष्यमाणत्वादिति चेन्न । दुःखनिवृत्तेरपि क्वचित्सुखाभावेऽपीष्यमाणत्वात् । दुःखनिवृत्तौ सत्यां सुखमेव भविष्यतीत्यभिसन्धिस्तावदस्तीति चेत् । सुखावस्थायां नियतो दुःखविरहो भवतीत्यभिसन्धेस्तत्रापि सद्भावात् । तस्माद्यद्यपि दुःखाभावे सुखं सुखे च दुःखाभावो नियतः । तथाऽपि परस्परं निरपेक्षमेव पुरुषार्थत्वमनयोः । इच्छाया असङ्कीर्णविषयत्वादिति ।**

**शे०**— कथमित्याक्षेपे न कथमपीत्यर्थः । सुखतत्प्रतीत्योरेवेष्यमाणत्वेन तद्राहित्ये मोक्षस्य पुरुषैरनिष्यमाणत्वप्रसक्त्या पुरुषार्थत्वव्यापकस्य पुरुषैरर्थ्यत्वस्याभावेन व्यापकव्यावृत्त्या व्याप्यस्य पुरुषार्थत्वस्यापि व्यावृत्त्यवश्यंभावान्न तस्य पुरुषार्थत्वमित्याशयः । सुखवद्दुःखाभावस्यापि पुरुषार्थ-

त्वदर्शनेन सुखदुःखाभावयोरन्यतरत्वस्यैव पुरुषार्थत्वव्यापकत्वसिध्या सुखरूपत्वाभावेऽपि मोक्षस्य दुःखाभावरूपत्वात्तदन्यतरत्वोपपत्त्या व्यापकव्यावृत्त्यसिद्धेर्न तद्व्याप्यपुरुषार्थत्वस्यापि व्यावृत्तिरित्याशयेन समाधत्ते **शरीरमिति** । तत्र शरीरावच्छिन्नात्मप्रदेशस्य सुखदुःखायतनत्वेनावच्छेदकशरीरस्यापि दुःखायतनत्वेनेन्द्रियाणां गन्धादिविषयबोधकत्वेन विषयाणां बोध्यत्वेन बुद्धीनां च साक्षाद्दुःखहेतुत्वेन सुखस्य दुःखानुषङ्गेण दुःखस्य च स्वरूपतो दुःखत्वमित्यवधातव्यम् । षष्ठमिन्द्रियं मनस्तस्य विषया इच्छाद्वेषप्रयत्नाः ।

दुःखनिवृत्तेर्न स्वतःपुरुषार्थत्वं किन्तु स्रक्चन्दनवनितादिवत्सुखशेषतयैवेत्याशङ्कते **दुःखनिवृत्तिरिति** ॥ **सोपाधिकत्वादिति** । जन्येच्छाऽजन्यजन्येच्छाविषयस्यैव स्वतः प्रयोजनत्वात् । दुःखाभावस्य च सुखेच्छाप्रयुक्तेच्छाविषयत्वान्न स्वतः प्रयोजनत्वमित्यर्थः । सोपाधिकत्वमेव दर्शयति **सुखमिति** ॥ **विपर्ययस्यापीति** । सुखं पुरुषार्थ एव न भवति । तदीयपुरुषार्थत्वस्यापि जन्येच्छानधीनेच्छाविषयत्वाभावेन सोपाधिकत्वादिति विपर्ययस्यापीत्यर्थः । विपर्ययमेवोपपादयति **भोजनादिसुख इति** ॥ **क्वचिदिति** । परदाराभिगमनादावित्यर्थः । बहुतरदुःखसंभावनायामपि उपभुञ्ज्महे तावदापातरमणीयां पराङ्गनां । को हि हस्तगतं पादगतं कुर्यात् इति तदङ्गनोपभोगसुखस्य दुःखाभावेच्छाधीनेच्छाविषयत्वाभावान्नान्यशेषत्वमपि तु स्वतः पुरुषार्थत्वमिति भावः ॥ **क्वचिदिति** । गुरुतरभारपरिश्रान्ते पुरुष इत्यर्थः । तत्र गुरुतरभारनिमित्तं दुःखं तावदपगच्छतु । सुखं भवतु वा मा वेत्यभिसंधिना परित्यज्यमानकाष्ठभारसंबन्धिदुःखाभावस्य सुखेच्छाधीनेच्छाविषयत्वाभावान्न सुखशेषत्वं किन्तु स्वतःपुरुषार्थत्वमेवेति तुल्यमिति भावः ॥ **दुःखनिवृत्तौ सत्यामिति** । तथा च तत्र सुखेच्छाधीनेच्छाविषयत्वमेव दुःखाभावस्येति न तस्य स्वतःपुरुषार्थत्वमिति भावः ॥ **सुखावस्थायामिति** । तथा च तत्रापि दुःखाभावेच्छाजन्येच्छाविषयत्वमेव सुखस्येति न तस्यापि स्वतः पुरुषार्थत्वमिति भावः । तथाऽपि किं विनिगमकमित्यतः पुरुषार्थत्वावगमिकायाः कामनाया उभयत्राविशिष्टत्वात्तस्याश्च परस्परविषयकान्येच्छानधीनेच्छाविषयत्वात्तादृशकामनानुरोधेनोभयोरपि स्वतः प्रयोजनत्वसिद्ध्या सुखदुःखाभावान्यतरत्वस्य व्यापकत्वोपपत्तेर्युक्तं दुःखनिवृत्तेः पुरुषार्थत्वमिति भावः ।

प० — हेत्वभावेन सुखाभावं मुक्तावुपपाद्येदानीं पुमर्थत्वं तस्य दूषणसौकर्याय व्यनक्ति **कथमयमिति** । सुखहीनो मोक्ष इत्यर्थः । षडिन्द्रियाणि घ्राणरसनचक्षुःश्रोत्रत्वङ्मनांसि । गन्धरसरूपशब्दस्पर्शा आत्मा ज्ञानादिश्चेति षड्विषयाः । एतद्विषयकज्ञानानि षड्बुद्धयः । शङ्कते **दुःखनिवृत्तिरिति** ॥ **सोपाधिकत्वादिति** । सुखोपाधिकत्वादित्यर्थः । तदेव व्यनक्ति **सुखमिति** ॥ **भोजनादि-**

**सुखे इति** । तज्जन्यसुखे सत्येवेत्यर्थः । बुभुक्षादिदुःखं तज्जन्यदुःखमित्यर्थः ॥ **क्वचिदिति** । परवनितादौ ॥ **क्वचित्सुखाभावेऽपीति** । विष्टिगृहीतपुरुषप्रवृत्त्यादौ सुखाभावेऽपि तात्कालिकराजोपद्रवदुःखनिवृत्तेरिष्यमाणत्वदर्शनादिति भावः ।

**या०** — **सोपाधिकत्वादिति** । स्रक्चन्दनादिवदन्यार्थमर्थ्यत्वादिति भावः । एतदेव दर्शयति **सुखमित्यादिना** ॥ **क्वचिदिति** । परदाराभिगमनादावित्यर्थः । तत्र बहुतरदुःखसंभावनायामपि सुखमात्रमुद्दिश्य शिरो मदीयं यदि यास्यति तर्हि यातु हस्तप्राप्तमिदं सुखं सर्वथा न हातव्यमित्यभिसन्धिना प्रवर्तमाना दृश्यन्ते ॥ **क्वचित्सुखाभावेऽपीति** । गुरुतरभारपरिश्रान्ते पुरुष इत्यर्थः । स हि गुरुतरभारनिमित्तमिदं दुःखं तावदपगच्छतु । सुखं भवतु मा वेत्यभिसन्धिना गुरुतरं काष्ठादिभारं परित्यजन्दृश्यते ।

**श्री०** — सिद्धान्ती शङ्कते **दुःखनिवृत्तिरिति** । स्वयमेवेति शेषः । **सोपाधिकत्वादिति** । स्रक्चन्दनादिवत्सुखार्थमर्थ्यत्वादित्यर्थः । सुखार्थमेव दुःखाभावो मृग्यत इत्येतदुपपादयति **सुखमिति** । **विपर्ययस्यापीति** । सुखमपि न पुरुषार्थः । तदीयपुरुषार्थत्वस्यापि सोपाधिकत्वाद्दुःखनिवृत्त्यर्थत्वादित्यर्थः । दुःखनिवृत्त्यर्थमेव सुखं मृग्यत इत्येतदुपपादयति **भोजनादिसुखे सत्येवेति** । यदुक्तं सुखं दुःखाभावार्थं मृग्यत इति तस्य पुरुषार्थत्वं सोपाधिकमिति पुनः सिद्धान्ती शङ्कते **क्वचिदिति** । परदाराभिगमनादावित्यर्थः । तर्हि सुखार्थमेव दुःखभावो मृग्यत इति दुःखनिवृत्तेरपि पुरुषार्थत्वं सोपाधिकमिति यदुक्तं तदप्ययुक्तमित्याह **दुःखनिवृत्तेरपीति** । शिरसि गुरुतरकाष्ठभारपरिश्रान्तस्तं परित्यजति यदा तदेत्यर्थः । पुनः सिद्धान्ती शङ्कते **दुःखनिवृत्तिरिति** ॥ **तावदिति** । काष्ठभारं परित्यजतः पुरुषस्येत्यर्थः । तथा च सुखाभावेऽपीष्यमाणत्वादित्ययुक्तमिति भावः ॥ **तत्रापीति** । परदाराभिगमनस्थलेऽपीत्यर्थः । तथा च दुःखनिवृत्त्यभावेऽपि सुखस्येष्यमाणत्वादित्युक्तमयुक्तमिति भावः । कथमनयोः परस्परनिरपेक्षपुरुषार्थत्वमित्यत आह **इच्छाया इति** । कदाचित्सुखमेव मे स्यादित्येवेच्छा भवति । कदाचिद्दुःखमेव मनागपि माभूदित्येवमिच्छयोरसङ्कीर्णसुखदुःखाभावविषयकत्वानुभवादित्यर्थः ।

**सु०** — **भवति दुःखहानिः पुरुषार्थः किं त्वनुभूयमानतया । न हि विषादिजन्यमोहावस्थायां दुःखनिवृत्तिरिति तत्र प्रेक्षावन्तः प्रवर्तन्ते । तस्मान्मोक्षे दुःखहानेरननुभूयमानत्वान्न पुरुषार्थत्वमिति चेन्न । पुत्रादिवियोगजन्यदुःखहानिमिच्छतां केषांचिद्विषशस्त्रोद्बन्धनादावपि प्रवृत्तिदर्शनात् । प्रेक्षावन्तो नैवं कुर्वन्तीति चेन्न । पुरुषार्थत्वाविरोधात् ।**

न हि परदारेषु शास्त्रनिषेधांकुशवारिताः प्रेक्षावन्तो नाभिवर्तन्त इति न तत्र कामः पुरुषार्थः। अपि त्वल्पीयः सुखं महीयाननर्थ इति निवृत्तिः। तथा विषादावपि प्रवृत्तस्य शास्त्रे गर्हितत्वादल्पीयाननर्थो निवर्तते महीयान्प्रवर्तत इति न ते प्रवर्तन्ते। इयमेव हि प्रेक्षा यत्पुरुषार्थेऽपि शास्त्रलोकविरोधपरामर्शः। स्वरूपेणेष्यमाणतामात्रनिबन्धनत्वात्पुरुषार्थतायाः। अत एव यत्र लोकशास्त्राविरोधस्तत्र व्याध्यादिपरिपीडिताः प्रयागवारिपातानशनादिनाऽपि देहं त्यजन्तः प्रेक्षावन्तोऽपि दृश्यन्ते।

न क्वचिद्दुःखनिवृत्तिमनुभविष्यामीति तत्साधने प्रवर्तन्ते। अपि तु दुःखं हास्यामीति। अपि च दुःखनिवृत्तेरनुभूयमानतामात्रं विवक्षितं, दुःखनिवृत्तिसत्ताऽपि वा। आद्यश्चेत्तुष्यतु दुर्जनः चरमे जन्मन्यनुभूयत एव। समाधिभावा(वधिव)दात्यन्तिकी दुःखनिवृत्तिरप्यनागताऽवर्तमानाऽप्यचिरमनुभूयत एव। द्वितीये तु प्रसक्तकण्टकादिहेतुकदुःखनिवृत्तेरपुरुषार्थत्वप्रसङ्गः। सर्वदाऽननुभूयमानत्वात्। तथात्वे वा विषयान्तरसंचाराभावप्रसङ्गः। निवृत्तेः सर्वदा तादवस्थ्यात्॥

तस्मात्सुखरहितो मोक्षः पुरुषार्थ इति।

---

शे० — ननु न दुःखनिवृत्तेः पुरुषार्थत्वं तद्व्यापकस्यानुभूयमानत्वस्य ततो व्यावृत्तत्वात्। अव्यावृत्तौ च नाशेषविशेषगुणोच्छेदो ज्ञानस्यानुच्छिन्नत्वात्। व्यापकव्यावृत्तौ च व्याप्यव्यावृत्तिरवश्यंभाविनी। तत्कथं तस्याः पुरुषार्थत्वमिति तात्पर्यपरिशुद्धावुत्थापितं कस्यचित्पक्षमाशङ्कते भवतीति। पुत्रादिवियोगजन्यदुःखहानेः पुरुषार्थत्वेऽप्यननुभूयमानत्वात्तत्र व्यभिचारेणानुभूयमानत्वस्य तद्व्यापकत्वासिद्धेर्न तद्व्यावृत्त्या पुरुषार्थत्वव्यावृत्तिरित्युदयनोक्तदूषणेन दूषयति पुत्रादीति। प्रेक्षावत्पुरुषार्थत्वव्यापकत्वादनुभूयमानत्वस्य न पुत्रादिवियोगजन्यदुःखहानौ व्यभिचारः। तस्य प्रेक्षावत्पुरुषार्थत्वाभावात् इत्याशङ्कते प्रेक्षावन्त इति। तथा सत्यननुभूयमानत्वेन तद्व्याप्यभूतप्रेक्षावत्पुरुषार्थत्वस्य व्यावृत्तिसिद्धावपि न पुरुषार्थत्वव्यावृत्तिसिद्धिरिति नोक्तानुपपत्तिरित्याशयेनाह पुरुषार्थत्वेति। अननुभूयमानत्वेन साक्षात्पुरुषार्थत्वव्यावृत्त्यसिद्धावपि तेन प्रेक्षावत्पुरुषार्थत्वस्य व्यावृत्तिसिद्धौ प्रेक्षावत्पुरुषार्थत्वस्य पुरुषार्थत्वव्यापकया तद्व्यावृत्त्या पुरुषार्थत्वव्यावृत्तिरवर्जनीयैवेत्यतो भवेदेतदेवं यदि प्रेक्षावत्पुरुषार्थत्वस्यापि पुरुषार्थत्वव्यापकत्वं स्यात्। न च तदस्ति। परदारकामस्य पुरुषार्थत्वेऽपि प्रेक्षावत्पुरुषार्थत्वाभावेन व्यभिचारात्। अन्यथा व्यापकव्यावृत्त्या तत्रापि पुरुषार्थत्वाभावप्रसङ्गात्। ततश्च न प्रेक्षावत्पुरुषार्थत्वाभावेनापि दुःखनिवृत्तेः पुरुषार्थत्वाभावसिद्धिरित्याशयेनाह

**न हि परदारेष्विति** । तर्हि प्रेक्षावतां परदारेषु कुतो निवृत्तिर्विषपानादौ च न प्रवृत्तिरिति **पृच्छति अपि त्विति** । आद्यस्य परिहारमाह **महीयानिति** । द्वितीयस्य तमाह **तथेति** । तत्कथमित्यत उक्तमर्थं प्रेक्षास्वरूपकथनेनोपपादयति **इयमेव हीति** । ननु किमेवं कल्पनया प्रेक्षावद्भिरनिष्यमाणत्वा-द्विषपानादिजन्यदुःखनिवृत्तेरपुरुषार्थत्वमेव किं न स्यादित्यत आह **स्वरूपेणेति** । मात्रशब्देन प्रेक्षाव-दिष्यमाणत्वं व्यावर्तयति । अत्रैवोपष्टंभकमाह **अत एवेति** । पुरुषार्थतायाः स्वरूपेणेष्यमाणता-मात्रनिबन्धनत्वादेवेत्यर्थः ।

दुःखनिवृत्तेः स्वरूपेणैव पुरुषार्थत्वं नत्वनुभूयमानतयेत्युक्तमर्थं युक्त्याऽप्युपपादयति **न क्वचि-दिति** ॥ **अनुभूयमानतामात्रमिति** । यदा कदाचिदनुभूयमानत्वमित्यर्थः ॥ **सत्ताऽपि वेति** । यावति काले दुःखनिवृत्तिस्तिष्ठति तावति कालेऽनुभूयमानत्वमित्यर्थः । आद्येऽप्यनुभवः किमनुमित्यादि-साधारणोऽभिमतः साक्षात्कार एव वा । आद्ये तु संभव एवानुमानागमाभ्यां मुक्तेरनुभूयमानत्वादित्य-भिप्रेत्य द्वितीयं दूषयति **चरमे जन्मनीति** । समाधियोगस्तत्प्रभावादित्यर्थः । योगप्रभावात्सर्वविषयक-ज्ञानवद्भिर्योगिभिरनागताया दुःखनिवृत्तेः साक्षात्कारादित्यर्थः । ततोऽपि दुर्जनतरो यदि वर्तमानदुःखा-भावविषयकसाक्षात्कारविषयतयैव दुःखाभावस्य पुरुषार्थत्वं मन्यते तत्राह **वर्तमानाऽपीति** । योगिनः सार्वज्ञ्याद्भाविमुक्तिविषयकेन चरमदुःखसाक्षात्कारेण दुःखे विनाशिते वर्तमानदुःखाभावविषयकः साक्षात्कारो भोगनाश्यादृष्टनाशान्नश्यतीत्यचिरमनुभवस्तस्यापीत्यर्थः । यद्वा । ननु कथं वर्तमानायाः सकलदुःखनिवृत्तेरनुभवसंभवो, येन हि चरमज्ञानेन दुःखनिवृत्तिरनुभूयते तदपि तावदेकं दुःखम् । न च तत्समये तस्य निवृत्तिरस्ति. नापि तन्निवृत्तिसमये तदनुभवान्तरमस्ति, चरमत्वभङ्गादिति । तत्राह **वर्तमानाऽपीति** । अयमाशयः । योगिनश्चरमज्ञानेन सकलविषयेण दुःखतदभावौ युगपत्साक्षात्कृतौ । तेनैव विरोधिगुणप्रादुर्भावेन निवृत्ते दुःखे विनश्यदवस्थज्ञाने च वर्तमानाऽपि दुःखनिवृत्तिरनुभूयत इति । केचित्तु आत्मविशेषगुणपदेन मुख्यदुःखमात्रविवक्षयाऽयं ग्रन्थः । अत एव द्रव्यवर्धमानप्रकाशकृता प्रौढिवादेनैवायं निबन्धो ग्रन्थो न तु सिद्धान्त इति ग्रन्थतात्पर्यमुक्त्वा वस्तुतस्त्वित्यादिना मुख्यदुःख-विवक्षयैवानुभवः समर्थ्यत इत्याहुः ॥ **द्वितीये त्विति** । यावद्दुःखनिवृत्तेः सत्वं तावन्तं कालमनु-भूयमानत्वमिति द्वितीय इत्यर्थः ॥ **प्रसक्तेति** । यद्यपि कण्टकादिनिवृत्तिस्तदानीमनुभूयते । तथाऽपि न यावत्सत्त्वं तदनुभवः । तथा च सर्वदाऽननुभूयमानाया अपि यथा पुरुषार्थत्वं तथा सर्वथाऽननु-भूयमानाया अपि तदस्त्विति भावः । कण्टकादिनिवृत्तेरपि सर्वदाऽनुभूयमानत्वादेव पुरुषार्थत्वम् । तत्राह **तथात्वे वेति** । स्वसत्ताकालेऽनुभूयमानत्वं विवक्षितम् । कण्टकादिनिवृत्तेश्च स्वसत्ताकालेऽनु-

भूयमानत्वादेव पुरुषार्थत्वम् । न च विषयान्तरसंचाराभावप्रसङ्गो दोषः । तस्याः कादाचित्कत्वेन तदुत्तरक्षणे विषयान्तरसञ्चारोपपत्तेरित्यत आह **निवृत्तेरिति** । ततश्च प्रशिथिलमूलत्वमिति भावः ।

स०— ननु दुःखाभावस्य पुरुषार्थत्वं अननुभूयमानत्वात् अनुभवे च नाशेषविशेषगुणऽव्यवच्छेदः ज्ञानस्या(नष्ट)नुष्ठितत्वादित्याशङ्कते **भवति दुःखहानिरिति** । तत्र दुःखनिवृत्तेरनुभूयमानत्वमात्रं पुरुषार्थत्वोपयोगि किंवा यावद्दुःखनिवृत्तेः सत्त्वं तावत्कालमनुभूयमानत्वमिति विकल्प्याद्ये आपादकासिद्धिमाह **चरमे जन्मनीति** ॥ **समाधिभावात्** भूतभविष्यद्वर्तमानवेदनादित्यर्थः । **वर्तमानाप्यचिरमनुभूयत एवेति** । अत्र वदन्ति । कथं वर्तमानायाः सकलदुःखनिवृत्तेरनुभवसंभवः । न च सुप्तौ विद्यमानस्यापि देहेन्द्रियस्य मुक्तिनिष्ठश्रोत्रमनसोरिव दुःखाजनकत्वात् एकविंशतिदुःखाभावस्योत्तरकालपरामर्शादनुमितोऽनुभव इति वाच्यम् । ज्ञानस्यैवोपरमेणासंभवात् । अन्यथा दुःखस्यापि तदोत्पत्तिप्रसङ्गात् । तस्मिन्नेवात्मनि तद्देहावच्छेदेन तैरिन्द्रियैरुत्तरकाले दुःखोत्पादने तन्निवृत्तेः दुःखप्रागभावासमानाधिकरणत्वरूपस्यात्यन्तिकत्वस्याभावाच्च । अथ चरमज्ञानेन सकलदुःखात्यन्तिकनिवृत्त्यनुभवः । चरमज्ञानस्य तत्करणदेहेन्द्रियादेश्च दुःखस्य सत्त्वेन तदनुभवसंभवात । नापि दुःखशब्दार्थमुख्यदुःखमात्रविषयत्वात् चरमज्ञानेन मुख्यदुःखनिवृत्त्यनुभव इति वाच्यम् । शरीरापरित्यागे दुःखोत्पत्तेरवर्जनीयत्वेनात्यन्तिकमुख्यनिवृत्तेरयोगात् । अनन्तरं च देहाद्यभावादेवाननुभवत्वात् । एकविंशतिदुःखात्यन्तिकनिवृत्तेरेव मोक्षत्वेनोक्तत्वाच्चेति । अत्र ब्रूमः । योगिनः सकलविषयकेण चरमज्ञानेन युगपद्दुःखाभावौ साक्षात्कृत्याश्रयसत्त्वेन तन्नाशप्रयुक्तदुःखनाशासंभवेपि सुखेनैव प्रादुर्भूतेन विरोधिना गुणेन दुःखे निवृत्ते च ज्ञाने च विनश्यदवस्थापन्ने सति वर्तमानाया वर्तमानसामीप्यादेव क्षणव्यवहिताया अप्यशेषदुःखनिवृत्तेर्योगसामर्थ्येनानुभवोपपत्तेरिति । यत्तूक्तं सुखान्तमुक्तिपक्षे एतत्संभवतीति । तन्न । तत्र मानाभावात् । अत एवोक्तं तत्त्वप्रदीपिकायाम् । वर्तमानाया अप्यचिरमनुभवोपपत्तिः । तथाहि । योगिनश्चरमज्ञानेन सकलविषयकेण दुःखतदभावौ युगपत्साक्षात्कृतौ तेनैव विरोधिगुणप्रादुर्भावेन निवृत्ते दुःखेपि विनश्यदवस्थज्ञाने च वर्तमानापि दुःखनिवृत्तिरनुभूतेति । नयनप्रसादिन्यामपि । ननु कथं वर्तमानायाः सकलदुःखनिवृत्तेरनुभवसंभवः । येन हि चरमज्ञानेन दुःखनिवृत्तिरनुभूयते तदपि तावदेकं दुःखम् । न च तत्समये तस्य निवृत्तिरस्ति । नापि तन्निवृत्तिसमये तदनुभवान्तरमस्ति चरमत्वभङ्गापातादिति । **तत्र वर्तमानाया अपीति** । तस्यैवोपपादकं **तथा हीति** । विनश्यदवस्थेत्यत्र हृदयम् । नित्यद्रव्यत्वादाश्रयविनाशाभावेन विरोधिगुणप्रादुर्भावेन पूर्वगुणविनाशादुक्तं विरोधिगुणप्रादुर्भावेन नश्यतीतिद्रष्टव्यम् । **द्वितीये त्विति** । यावद्दुःखनिवृत्तेः सत्त्वं तावत्कालमनुभूयमानत्वमिति द्वितीय इत्यर्थः ।

**प्रसक्तेति** । यद्यपि कण्टकादिनिवृत्तिस्तदानीमनुभूयते तथापि न यावत्सत्त्वं तदनुभवः । तथाच सर्वदाननुभूयमानाया अपि यथा पुरुषार्थता तथा सर्वथाप्यननुभूयमानाया अपि तदस्त्विति भावः । कण्टकादिनिवृत्तेरपि सर्वदाननुभूयमानत्वादेव, पुरुषार्थत्वं तत्राह **तथात्वे चेति** । स्वसत्ताकाले अनुभूयमानत्वं विवक्षितं कण्टकादिनिवृत्तेश्च स्वसत्ताकालेऽनुभूयमानत्वात् पुरुषार्थत्वम् । न च विषयान्तरसञ्चाराभावप्रसङ्गः । तस्याः कादाचित्कत्वेन तदुत्तरक्षणे विषयान्तरसञ्चारोपपत्तेरित्यत आह **निवृत्तेरिति** ।

प०— शङ्कते **भवति दुःखहानिरित्यादिना** । विषादिजन्यमोहावस्थायां दुःखनिवृत्तिरिति पररीत्याऽनुवादः । सिद्धान्ते तत्रापि दुःखसत्त्वस्य 'मुग्धेऽर्धसंपत्तिरि'त्यत्रोक्तत्वात् ॥ **पुरुषार्थत्वाविरोधादिति** । दुःखहानीच्छया लौकिकैः क्रियमाणस्य प्रेक्षावदननुष्ठानमात्रेण पुरुषार्थत्वं न विरुध्यत इत्यर्थः ॥ **न तत्र काम इति** । काम्यमानं सुखमित्यर्थः । पुमर्थत्वे कुतो निवृत्तिः प्रेक्षावतामित्यत आह **अपि त्विति** ॥ **महीयानिति** । अनर्थ इत्यनुषङ्गः ॥ **प्रवर्तत इति** । जायत इत्यर्थः ॥ **न त इति** । प्रेक्षावन्त इत्यर्थः । अल्पानर्थनिवृत्त्युद्देशेनापि कुतो न प्रवर्तन्ते प्रेक्षावन्त इत्यत आह **इयमेव हि प्रेक्षेति** । ननु प्रेक्षावदप्रवृत्तिमात्रेणापुमर्थत्वमेव कुतो नेत्यत आह **स्वरूपेणेति** । जनैरिति योज्यम् ॥ **आत्यन्तिकीति** । एकविंशतिदुःखनिवृत्तिरित्यर्थः । अवर्तमानेति पदच्छेदः । अतीतेत्यर्थः । अचिरं अल्पकालमित्यर्थः ॥ **तथात्व इति** । प्रसक्तकण्टकनिवृत्तेरनुभूयमानत्वेन पुमर्थत्वे सदा तन्निवृत्तेर्भावेन सदा तन्निवृत्तेरनुभवप्रसङ्गापत्त्या विषयान्तरज्ञानानवकाशः स्यादित्यर्थः । इतिपदस्यायमाशय इति पूर्वेणान्वयः । **सांख्यादिमतानुवादः** ।

या० शङ्कते **भवति दुःखहानिरित्यादिना** ॥ **मोहावस्थायामिति** । यद्यपि सिद्धान्ते दुःखमात्रप्रतिस्मृतेरिति वचनान्न मोहावस्थायां दुःखनिवृत्तिस्तथाऽपि 'दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते । न हि मूर्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीरि'ति परैरुक्तत्वात्तद्रीत्यैवेदमुक्तमिति द्रष्टव्यम् ॥ **पुरुषार्थत्वाविरोधादिति** । दुःखहानेरिति शेषः ॥ **काम इति** । काम्यत इति कामः । परदाराभिगमनजन्यसुखमित्यर्थः ॥ **महीयानिति** । नरकादिरूप इत्यर्थः । ननु पुरुषार्थे कथं प्रेक्षावतां निवृत्तिरित्याशङ्क्य प्रेक्षास्वरूपकथनेन परिहरति **इयमेव हीति** । ननु तर्हि शास्त्रादिविरुद्धस्य प्रेक्षावद्भिरनिष्यमाणत्वान्न पुरुषार्थत्वमपीत्यत आह **स्वरूपेणेति** । येन केनापीति शेषः । न ज्ञाततयेत्यर्थः । मात्रशब्देन शास्त्राद्यविरोधस्य पुरुषार्थताशरीरनिवेशं वारयति । स्वरूपेष्यमाणत्वरूपं पुरुषार्थत्वं दुःखनिवृत्तावुपपादयति **न कश्चिदिति** ॥ **अनुभूयमानतामात्रमिति** । यदा कदाचिदनुभूयमानत्वमित्यर्थः । **सत्ताऽपि वेति** । अपिशब्दोऽनुभूयमानतासमुच्चयार्थः । तथा च यावत्पर्यन्तं तस्याः सत्वं तावत्पर्यन्त-

मनुभूयमानत्वं वेति द्वितीयकल्पार्थः । तेन सर्वदाऽननुभूयमानत्वादिति वक्ष्यमाणं दूषणमुपपन्नमिति ज्ञातव्यम् ॥ **समाधिभावादिति** । समाधिर्ध्यानविशेषस्तत्प्रभावादित्यर्थः । समाधिर्योगजः साक्षात्कार-स्तत्सद्भावादिति वाऽर्थः ॥ **आत्यन्तिकी दुःखनिवृत्तिरिति** । स्वसमानाधिकरणदुःखप्रागभावासमान-कालीनदुःखनिवृत्तिरित्यर्थः । इदानीन्तनदुःखध्वंसेऽतिव्याप्तिवारणाय दुःखप्रागभावासमानकालीनत्वं ध्वंसविशेषणम् । संसारिदुःखप्रागभावसमानकालतया मुक्त्यव्याप्तेराह **स्वसमानाधिकरणेति** । प्रागभाव-विशेषणं संयोगादिप्रागभावसमानकालतया दोषतादवस्थ्यादाद्यं दुःखपदं । तच्चैकविंशतिप्रभेददुःखपरम् । अतश्चरमभोगरूपदुःखप्रागभावसमानदेशकालतयोपान्त्यदुःखध्वंसे नातिव्याप्तिः । अत एव प्रागभाव-पदमर्थवत् । वक्ष्यमाणरीत्या यदा चरमदुःखध्वंसो वर्तमानोऽप्यचिरमनुभूयते तदा भोगरूपदुःखसमान-देशकालतयाऽसंभववारकत्वात् । रूपादेरपि विषयरूपदुःखत्वेन तद्ध्वंसेऽतिव्याप्तिवारणाय चरमं दुःखपदम् । तच्च मुख्यदुःखपरमतो न तत्रातिव्याप्तिरिति ॥ **वर्तमानाऽप्यचिरमिति** । चरमदुःखानुभवे योगजधर्मबलादनागतदुःखनिवृत्तिरपि विषयः । तथा चाग्रिमक्षणे तन्निवृत्तिः । तद्विषयकश्च विनश्य-दवस्थोऽनुभवस्तदाऽस्तीति वर्तमानाऽप्यचिरमनुभूयत इत्यर्थः । अनुभवरूपदुःखसमये उक्तमुक्तिलक्षण-सत्त्वादनुभवरूपं दुःखं न मुक्तिविरोधि । अशेषविशेषगुणोच्छेदश्च न मुक्तितयाऽत्राभिप्रेत इति भावः । दुःखनिवृत्तेः पुरुषार्थत्वोपपादनाय प्रसक्तेति दुःखविशेषणं । अप्रसक्तदुःखनिवृत्तेः केनाप्यनिष्यमाणत्वात् ।

---

**ताश्चोदाहरिष्यन्त इति** । 'पुनरानन्दपूर्वकान् धर्मानाहाप्यनुच्छिन्नांस्तार्किकैर्विनिवारितानि'त्यादिनेति शेषः ।

श्री० — पुनः सिद्धान्ती **शङ्कते भवतीति** । स्वरूपसद्दुःखहानेः पुरुषार्थत्वे बाधकमाह **न हि विषयादिजन्येति** ॥ **दर्शनादिति** । तथाच तत्राननुभूयमानाया अपि दुःखहानेः पुरुषार्थ-त्वदर्शनान्मुक्तावप्येवमेवेत्यर्थः ॥ **अविरोधादिति** । दुःखनिवृत्तेरिति शेषः । पुत्रादिवियोगवद्भिः पुरुषैरर्थ्यत्वं तावदस्त्येवेत्यर्थः । एतद्दृष्टान्तेनोपपादयति **न हि परदारेष्विति** । **कामः** काम्यं सुखम् । पुरुषार्थो नेति न हीत्यन्वयः । पुरुषैरर्थ्यत्वं तावदस्त्येवैवं प्रकृतेऽपीत्यर्थः । ननु यथा-कथञ्चित्सुखस्य पुरुषार्थत्वे परदाराभिगमनादौ कुतो न प्रवर्तत इति पृच्छति **अपि त्विति** । उत्तरमाह **अल्पीय इति** । **अनर्थः** ऐहिकः पारत्रिकश्च । प्रवृत्तस्याल्पीयाननर्थो निवर्तत इत्यादिरन्वयः । महीयाननर्थ इति वर्तते । कुत इत्यत उक्तम् ॥ **शास्त्रे गर्हितत्वादिति** । विषपानादिना बुद्धिपूर्वकं देहपरित्यागस्य । 'नरकं चात्महत्यये'त्यादिना शास्त्रे निन्दितत्वादित्यर्थः । ननु भवत्वल्पीयः सुखं महाननर्थस्तथाऽपि काममात्रस्य पुरुषैरर्थ्यत्वात्कुतस्तत्र न प्रेक्षावतां प्रवृत्तिरित्यत आह **इयमेव हीति** ।

तथात्वे प्रेक्षावत्त्वमेव व्याहन्येतेति भावः । उपसंहरति **स्वरूपेणेत्यादि** । नानुभूयमानत्वनिबन्धनत्वमिति मात्रशब्दार्थः । **पुरुषार्थताया** दुःखनिवृत्तेरिति शेषः । **अत एवेति** । दुःखनिवृत्तेः पुरुषार्थताया अनुभूयमानत्वं विहाय स्वरूपेणेष्यमाणतामात्रनिबन्धनत्वादेवेत्यर्थः । अनुभविष्यामीत्याशयेन । **तत्साधने** दुःखनिवृत्तिसाधने प्रयागवारिपातादिना देहत्यागे । **अनुभूयमानतामात्रमिति** । अतीतायाः अनागतायाः वर्तमानताया वा दुःखनिवृत्तेर्यदाकदाचिदनुभूयमानत्वमित्यर्थः ॥ **दुःखनिवृत्तिसत्ताऽपीति** । अपिशब्दोऽनुभूयमानत्वसमुच्चायकः । तथाच यावत्पर्यन्तं दुःखनिवृत्तिसत्ताऽस्ति तावत्पर्यन्तं सर्वदाऽनुभूयमानत्वं विवक्षितं वेत्यर्थः ॥ **अनागता** भविष्यन्ती अनागतदुःखनिवृत्त्यनुभवे निमित्तकथनं **समाधिभावादिति** । समाधिर्ध्यानं तज्जन्यसाक्षात्कारो वा तत्प्रभावादित्यर्थः ॥ **वर्तमानाऽपीति** । आत्यन्तिकी दुःखनिवृत्तिरिति वर्तते । **अचिरं** कदाचित् । सुखान्तमुक्त्यभिप्रायेणेदम् । सुखमनुभवन्नेव चरमदेहं विसृज्य मुक्तो यदा भवति सा सुखान्तमुक्तिस्तत्र वर्तमानाऽप्यात्यन्तिकी दुःखनिवृत्तिस्तदानीमनुभूयत एव । दुःखनिवृत्तेरात्यन्तिकत्वं नाम स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वरूपं द्रष्टव्यम् । ननु तदानीमात्यन्तिकदुःखनिवृत्तिरेव नास्ति । सुखानुभवकाले शरीरेन्द्रियबुद्धिरूपाणां दुःखानामेव सत्त्वादिति चेन्न । अत्र दुःखशब्देन यन्मुख्यं तदेव विवक्षितं न तु दुःखापादकतया दुःखशब्दवाच्यं शरीरादि । अतो नानुपपत्तिरित्यवधेयमित्याहुः । कुत इत्यत आह **सर्वदेति** । **तथात्वे** दुःखनिवृत्तेः सदाऽनुभूयमानत्वे । ननु सर्वकालीनानुभवविषयदुःखनिवृत्तेर्निवृत्तौ विषयान्तरसञ्चाररूपो व्यासङ्गो भविष्यतीत्यत आह **निवृत्तेरिति** । दुःखध्वंसरूपायाः दुःखनिवृत्तेः इत्यर्थः ॥ **तादवस्थ्यादिति** । ध्वंसस्य नित्यत्वेन निवृत्त्यसंभवादित्यर्थः । तथा च विषयान्तरसञ्चाराभावस्तदवस्थ इति भावः ॥

**सु०— निराकरोति** नैतदिति ।

**अनु०—** नैतदप्यत्र शोभनं

अत्र **मुक्तौ** । एतत् **सुखराहित्यमतमपि न शोभनम्** । **कुत इत्यत आह** श्रुतय इति ।

श्रुतयो यतः ॥

महानन्दं च भोगं च नियमेन वदन्ति हि ॥

**अत्रेति वर्तते** । भोगम् **तदनुभवम्** । नियमेन **अविगानेन** । हीति **श्रुतीनां प्रसिद्धतामाचष्टे** । **ताश्चोदाहरिष्यन्ते** ॥

**शे०— अत्रेति** । मुक्तेरेव प्रकृतत्वाद्योग्यत्वाच्चात्रेत्यनेन तस्या एव परामर्श इति भावेनाह **अत्रेति** । मुक्ताविति मुक्तावानन्दराहित्यमतस्य श्रुतिविरुद्धतायाः श्रुतीनां मुक्तानन्दादिप्रतिपादकत्व एव

संभवात् तल्लाभाय अत्रेत्यस्यानुवृत्तिमाह **अत्रेति वर्तत इति** ॥ भुज्यत इति भोग इति भोगशब्दस्य कर्मसाधनत्वे सुखरूपत्वात् महानन्दशब्देन पौनरुक्त्यम् । श्रुतीनां मुक्तौ ज्ञानप्रतिपादकत्वालाभेन मुक्तौ तत्प्रतीतिराहित्यमतस्य श्रुतिविरोधालाभाच्चेत्यतो भोगशब्दस्य भावसाधनतया भोजनार्थतामाश्रित्य तत्राप्यभ्यवहारादिरूपभोगस्यानन्दविषयस्यायोगाद्भोगोऽनुभव इति गीताभाष्यं मनसि निधाय तत्तात्पर्यमाह **तदनुभवमिति** । स्वीयतया तत्साक्षात्कारमित्यर्थः । देवदत्तादीनां यज्ञदत्तादिगतसुखविषयकपरोक्षानुभवस्य भोगत्ववारणाय साक्षात्कारग्रहणम् । ईश्वरस्य देवदत्तादिगतसुखसाक्षात्कारस्य भोगत्ववारणाय स्वीयतयेत्युक्तम् । शब्दजन्यस्वकीयसुखपरोक्षानुभवस्य तद्वारणाय साक्षात्कारोपादानमित्यवधेयम् । तत्तात्पर्यमाह **तदनुभवमिति** ॥ **उदाहरिष्यन्त इति** । 'सोऽनानन्दाद्विमुक्तः सन्नानन्दीभवति स्फुटमि'त्यादिनेति शेषः ।

म० — **ताश्चोदाहरिष्यन्त इति** । 'मोनानन्दाद्विमुक्तः सन्नि'त्यादिनेति शेषः ।

प० — **उदाहरिष्यन्त इति** । 'पुनरानन्दपूर्वकान् । धर्मानाद्याप्यनुच्छिन्नानि'त्यादाविति भावः ।

**सु० — ननु 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति मुक्तस्य दुःखवत्सुखस्यापि हानिः श्रूयते । तथा 'न प्रेत्य संज्ञाऽस्ती'ति ज्ञानाभावश्च । तत्कथमेतदित्यतः सुखास्पृष्टिश्रुतिं तावद्व्याचष्टे** प्राकृतेति ।

अनु० — प्राकृतप्रियहानिस्तु प्रियास्पृष्टिरितीर्यते ॥

**अस्यां श्रुतौ प्राकृतं यदन्तःकरणपरिणतिरूपं प्रियं तद्धानिरेव प्रियास्पृष्टिरितिशब्देन प्रतिपाद्यते । न तु सर्वथा सुखाभावः ।**

शे० — अपेक्षितं पूरयन्मूले प्राकृतत्वस्य प्रियहानिविशेषणत्वभ्रान्तिं परिहरंस्तुशब्दस्यावधारणार्थतया सार्थक्यं तद्व्यावर्त्यकथनेनोपदर्शयन्नेव व्याचष्टे **अस्यामिति** ।

**सु० — एवं तर्ह्यप्रियास्पृष्टिरप्येवं विभागेन व्याख्यातव्या । विशेषाभावात् । तथा च मोक्षे दुःखसद्भाव(प्राप्तिरि)प्रसक्तिरित्यत आह** अप्रियमिति ।

अनु० — अप्रियं प्रतिकूलं तदविशेषेण शब्दितम् ॥

**यस्मात्सकलमप्यप्रियं (दुःखं) प्रतिकूलं मुमुक्षोरनपेक्षितम् । तत्तस्मादप्रियमत्राविशेषेण शब्दितम् ।**

**एतदुक्तं भवति । सर्वात्मनाऽनिष्टनिवृत्तिर्मोक्ष इति तावदविवादं सर्ववादिनाम् । दुःखं तु यादृशतादृशमप्यनिष्टमेव । अतो न तद्विभागेन व्याख्यातुं युक्तमिति ।**

**यद्वा । येन न्यायेन प्रिये विभागः क्रियते तदविशेषश्चेदप्रिये स्यात्तदा तदपि विभागेन व्याख्यातव्यं भवेत् । न चैवम् । सामस्त्येन प्रियहानिरनिष्टा । अनिष्टप्राप्तौ च मोक्षस्यापुरुषार्थत्वं स्यादित्यतो हि प्रिये विभागः कल्प्यते । तथा च वक्ष्यामः । न च सामस्त्येन दुःखहानिरनिष्टा । सर्वस्यापि दुःखस्यानिष्टत्वेन तद्धानेरिष्टत्वात् । तर्हि सर्वस्यापि सुखस्येष्टत्वात् प्राकृतसुखहानिरपि नाङ्गीकरणीयेति चेन्न । तस्य दुःखानुषक्तत्वेन विषसंपृक्तमधुवदनिष्टपक्षनिक्षेपादिति भावः ।**

**शे०** — प्राप्तिरित्यतः परं ततश्च मोक्षत्वव्याघात इति शेषः । मूले तदिति श्रवणाद्यदित्यस्य लाभं, उक्ताक्षेपपरिहाराय सकलमित्यस्याध्याहारं, तदित्यस्यावृत्तिं चाभिप्रेत्य व्याचष्टे **यस्मादिति** । सकलस्यापि दुःखस्य मुमुक्षोरनपेक्षितत्वेऽप्यस्त्वप्रियास्पृष्टिश्रुतेर्विभागेन व्याख्यानमित्यप्रयोजकत्वशङ्कां सर्वात्मनाऽनिष्टनिवृत्तिरूपमोक्षत्वानुपपत्तिलक्षणबाधककथनेन परिहरन्नेव मूलोक्तहेतुहेतुमद्भावमुपदर्शयति **एतदुक्तं भवतीति** । प्रियास्पृष्टिश्रुतिवदप्रियास्पृष्टिश्रुतिरपि विभागेनव्याख्यातव्येति शङ्कितुः प्रधानप्रमेयनिरासपरतया वाक्यतात्पर्यमभिधाय तद्धेतुतया परोपन्यस्तविशेषाभावनिरासपरतयाऽपि तत्तात्पर्यमाह **यद्वेति** ॥ **वक्ष्याम इति** । 'आत्मप्रियहानाय को यतेत च बुद्धिमानि'त्यादिना समस्तप्रियहानेरनिष्टत्वं वक्ष्याम इत्यर्थः ।

**स०** — **तथा चेति** । सामस्त्येन 'प्रियहानेरनिष्टतः' इत्यादिनेति शेषः ।

**प०** — **विभागेनेति** । प्राकृतदुःखं नास्त्यप्राकृतं त्वस्तीति विभागेनेत्यर्थः । **विशेषेति** । वैषम्येण पदद्वयव्याख्याने विशेषहेत्वभावादित्यर्थः । विशेषाभावात् विभागेन व्याख्यातव्येत्यस्य किमनेनोत्तरमुक्तमित्यत आह **एतदुक्तमिति** । अविभागेन व्याख्याने मुक्तेः पुमर्थत्वयुक्तिरयुक्ता भवति । ननु सुखदुःखयोरविनाभावाद्दुःखाभावार्थं सामस्त्येन सुखहानिः कथमनिष्टैवेत्यत आह **तथा च वक्ष्याम इति** । 'आत्मप्रियहानाय को यतेत च बुद्धिमानि'त्यत्रेति भावः ।

**या०** — **विशेषाभावादिति** । प्रियाप्रिये इति सामान्यतः समानपदोपात्तयोः प्रियाप्रियास्पृष्ट्योः प्रियास्पृष्टिरेव विभागेन व्याख्यातव्येत्यत्र विशेषकारणाभावादित्यर्थः । ननु प्रियस्याप्रियसंपृक्ततया विषसंपृक्तमधुवदनिष्टत्वेन सामस्त्येन हानिरनिष्टैवेत्यत आह **तथा वक्ष्याम इति** । 'आत्मप्रियहानाय को यतेत च बुद्धिमानि'त्यत्रेति शेषः ।

**श्री०** — **विभागेनेति** । प्राकृतं दुःखं नास्त्यप्राकृतं दुःखमस्तीति विभागेनेत्यर्थः ।

सु० — इतश्च **नाप्रियं प्राकृतत्वेन विशेषणीयमित्याह** नास्तीति ।

अनु० — नास्ति ह्यप्राकृतं दुःखं सतो जीवस्य कुत्रचित् ॥

**अप्राकृते दुःखे सति तद्व्यावृत्तये प्राकृतमिति विशेषणीयं स्यात्** । सतो **मुक्तियोग्यस्य । जीवस्याप्राकृतं दुःखं नास्ति प्रमाणाभावात्** । **अतो व्यर्थं विशेषणमिति** । कुत्रचित् **श्रुतौ स्मृतौ चोक्तमिति शेषः** ।

**शे०** — सतो जीवस्याप्राकृतदुःखाभावेऽप्यस्तु विभागेनाप्रियास्पृष्टिश्रुतेर्व्याख्येयत्वमित्यप्रयोजकत्वशङ्कां बाधकोक्त्या परिहरन्नेव वाक्यं योजयति **अप्राकृत इति** । कुतो नास्तीत्यत उक्तं मूले कुत्रचिदितीति योजनामभिप्रेत्य तत्तात्पर्यमाह **प्रमाणाभावादिति** । प्रमाणाभावस्य भाष्यारूढतामुपदर्शयितुमपेक्षितपूरणेन कुत्रचिदिति व्याचष्टे **कुत्रचिच्छ्रुतावित्यादि** ।

सु० — **एवं तर्ह्यप्राकृतस्य सुखस्याप्यप्रमितत्वात्तत्रापि विशेषणप्रक्षेपेण व्याख्यानमयुक्तमित्यत आह** प्रियमिति ।

अनु० — प्रियं स्वरूपमेवास्य बलानन्दादिवाक्यतः ॥

**'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः' इति श्रुतिवाक्यादस्य सतो जीवस्य प्रियं स्वरूपमेवेत्यवगम्यते । स्वरूपं चाप्राकृतम् । अतस्तद्व्यवच्छेदाय विशेषणप्रक्षेपेण व्याख्यानं युज्यते । (एतेन) अनेन सुखस्योत्पत्तिमत्त्वे यो दोषोऽभिहितः सोऽनङ्गीकारपरास्तो वेदितव्यः । स्वरूपत्वेनानादित्वस्योक्तत्वात् । यदत्रोक्तं तदप्यसत् । आवृताः सन्तो व्यज्यन्त इति श्रुतत्वात् । आवरणं च मायाऽविद्यादिसमाख्याता प्रकृतिरेव । न च विशदश्रुतिसिद्धेऽर्थे काचिदनुपपत्तिः । ज्ञानस्य स्वरूपत्वेनानादित्वेऽप्यविद्यया विषयविषयिभावः प्रतिबध्यते । न चोक्तदोषः । आत्मस्वरूपादौ तस्याप्रतिबद्धत्वात् ।**

**शे०** — भाष्यस्यार्थतः श्रुत्यनुवादकतामाद्यादिभ्य उपसंख्यानात्पञ्चम्यन्तात्तसिं च वाक्यस्य ज्ञापकहेतुतां चाभिप्रेत्य योजयति **बलमित्यादि** । उदाहृतश्रुत्यनुसारेण स्वरूपसुखस्य प्रमिततालाभेऽप्यप्राकृतसुखस्य तदलाभान्नोक्तशङ्कापरिहार इत्यत आह **स्वरूपं चेति** । प्रियं स्वरूपमेवेति भाष्यं न केवलं प्रियास्पृष्टिश्रुतेर्विशेषेण व्याख्यानस्यैवोपपादकं किन्तु मुक्तौ सुखाङ्गीकारे परोपन्यस्तबाधकनिरासपरं चेत्यभिप्रेत्य तन्निरासेऽप्यतिदिशति **एतेनेति** ॥ **यो दोष इति** । शरीरादिराहित्यलक्षण इत्यर्थः ॥ **यदत्रोक्तमिति** । मुक्तसुखस्यानादित्वे संसारेऽपि तत्प्रतिभासप्रसङ्गादिति यदुक्तमित्यर्थः । तदनिरूपणाच्चेत्युक्तं निराकरोति **आवरणं चेति** । मूर्तत्वाभावेनावरणानुपपत्तेरित्युक्तदोष-

माशङ्क्य परिहरति **न चेति** । किमावरणकृत्यमित्युक्तामपि तां परिहरति **ज्ञानस्येति** । निर्विषयायाः प्रतीतेरनुपपत्तेरित्युक्तदोषमाशङ्क्य परिहरति **न चोक्तेति** ।

**स०**— मुक्तानां सुखस्यानादित्वेन संसारित्वेपि तत्प्रतिभासप्रसङ्गादिति यदुक्तमित्यर्थः । आवरणनिवृत्तेरनिरूपणाच्चेत्युक्तं दूषयति **आवरणं चेति** । सुखवत्तत्प्रतीतेरप्यनादित्वे किमावरणकृत्यं तत्राह **ज्ञानस्येति** । अविद्यावरणेन विषयविषयिभावः प्रतिबध्यत इत्यङ्गीकारे निर्विषयायाः प्रतीतेरनुपपत्तिरित्युक्तदोषो नेत्यर्थः ।

**प०— यो दोष इति** । शरीरेन्द्रियादिरूपकारणाभावाख्यदोष इत्यर्थः ॥ **यदत्रोक्तमिति** । न तावन्मुक्तस्य सुखमनादीत्युपपद्यते संसारेपि तत्प्रतिभासप्रसङ्गादित्यादीत्यर्थः । तदनिरूपणाच्चेत्युक्तदोषं निराह **आवरणं चेति** । मूर्तत्वाभावेनेत्युक्तदोषं निराह **न च विशदेति** । किमावरणकृत्यमित्युक्तं पराचष्टे **ज्ञानस्येति ॥ न चोक्तदोष इति** । निर्विषयाया इत्युक्तदोष इत्यर्थः ।

**या०— यो दोष इति** । शरीरादिलक्षणकारणाभावरूप इत्यर्थः ॥ **यदत्रोक्तमिति** । संसारेऽपि तत्प्रतीतिप्रसङ्ग इति यदुक्तमित्यर्थः । मूर्तत्वाभावेनावरणानुपपत्तेरित्युक्तामनुपपत्तिं परिहरति **न च विशदेति** । किमावरणकृत्यमित्युक्तदोषं परिहरति **ज्ञानस्येति** । निर्विषयायाः प्रतीतेरनुपपत्तेरित्युक्तदोषमाशङ्क्य परिहरति **न चोक्तेति** ।

---

**श्री०— यो दोषोऽभिहित इति** । शरीरे सति तदाश्रयेन्द्रियसद्भाव इत्यादिनेत्यर्थः । **अनङ्गीकारेति** । सुखस्योत्पत्त्यनङ्गीकारेत्यर्थः ॥ **स्वरूपत्वेनेति** । सुखस्येति वर्तते ॥ **यदत्रोक्तमिति** । न तावन्मुक्तस्य सुखमनादीत्युपपद्यते । संसारेऽपि तत्प्रतिभासप्रसङ्गादिति यदुक्तमित्यर्थः । तदनिरूपणादित्युक्तदोषं परिहरति **आवरणं चेति** । मूर्तत्वाभावेन आवरणानुपपत्तिरित्युक्तमिति चेत्तत्राह **न च विशदश्रुतीति** । स्पष्टश्रुतिसिद्धेत्यर्थ इत्यर्थः । सुखमिव तत्प्रतीतिरप्यनादिश्चेत्किमावरणकृत्यमित्युक्तं दोषं परिहरति **ज्ञानस्येति ॥ उक्तदोष इति** । निर्विषयायाः प्रतीतेरनुपपत्तिरित्युक्तदोष इत्यर्थः ॥ **आत्मस्वरूपादाविति** । सुखविषयीकरणस्य प्रतिबद्धत्वेऽपि आत्मस्वरूपविषये तस्य साक्षिरूपज्ञानस्याप्रतिबद्धत्वेन सविषयकत्वोपपत्त्या न निर्विषयत्वमिति भावः ।

**सु०— उक्तमर्थं संक्षिप्याह** हेयत्वादिति ।

**अनु०**— हेयत्वादप्रियस्यैव प्रियहानेरनिष्टतः ॥
न समस्तप्रियाभावो मोक्षे प्रोक्ते तु युज्यते ॥

**अप्रियस्य दुःखस्य हेयत्वादेवेत्येवशब्देन सर्वथेति सूचयति । 'अशरीरं वाव सन्तम्' इत्यस्यां श्रुतौ प्रोक्ते मोक्षे समस्तप्रियाभावो न व्याख्यातुं युज्यते । कुतः प्रियहानेरनिष्टत्वतः ।**

**किन्तु प्राकृतत्वविशेषणप्रक्षेपेणेति तुशब्दः । अप्रियहानं त्वविशेषेण व्याख्येयमित्युपस्कर्तव्यम् । तत्र हेतुरप्रियस्य सर्वथा हेयत्वादिति । उपलक्षणं चैतत् । सतो जीवस्याप्राकृतदुःखाभावाच्चेत्यपि द्रष्टव्यम् ।**

**शे०— संक्षिप्येति ।** ततश्च न पौनरुक्त्यमिति भावः । अप्रियस्येव प्राकृतप्रियस्यापि हेयत्वादप्रियस्यैवेत्येवशब्दस्य वैयर्थ्यं समस्तदुःखस्याप्रियत्वालाभश्चेत्यतो भिन्नक्रमतां दुःखस्य सामस्त्यलाभार्थतया तत्सार्थक्यं चोपदर्शयन्नेव प्रोक्त इत्यत्रापेक्षितं पूरयन्वाक्यं योजयति **अप्रियस्येति ॥ तुशब्द इति ।** अनेन तुशब्दो विशेषार्थ इत्युक्तं भवति । अप्रियस्य सर्वथा हेयतायाः, न प्रोक्ते मोक्षे विभागो व्याख्यातुं शक्यत इति प्रतिज्ञायां हेतुत्वानुपपत्तेरानर्थक्यमित्याशङ्क्य श्रुतप्रतिज्ञायां तत्त्वेनान्वयाभावेऽपि उपस्कृतप्रतिज्ञायामन्वयस्य संभवान्न वैयर्थ्यमित्याशयेन तदुपदर्शनपूर्वकं तत्र हेतुतयाऽन्वयमाह **अप्रियेति ।** अप्रियस्य स्वरूपत्वमित्युत्तरग्रन्थं सङ्गमयितुं नास्तीत्यादिनोक्तं हेत्वन्तरमुपस्कृतप्रतिज्ञायां हेतुत्वेन द्रष्टव्यमित्याशयेनाह **उपलक्षणं चेति ।**

**सु०— ननु सज्जीवस्याप्यप्रियं स्वरूपभूतमप्राकृतमस्ति । तत्कथमेतदित्यत आह** अप्रियस्येति ।

---

**अनु०—** अप्रियस्य स्वरूपत्वमसुरेष्वेव हि श्रुतम् ॥

**असुराश्च न मोक्षयोग्या इति भावः । तां श्रुतिमर्थतः पठति** असुरा इति ।

असुरा नैवमेवं च नैवं चाखिलमानुषाः ॥

इति

**अनेन 'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा । नैवमसुरा एवमनेवं च मनुष्या इति श्रुतिमुपादत्ते । नित्यत्वोक्त्या स्वरूपत्वं सिद्धम् । वृत्तीनामनित्यत्वात् ।** परमात्मा **परमेश्वरः । सज्जीव इति वा ।** नैवमिति । **एतद्विरुद्धस्वभावा इत्यर्थः ।** एवमनेवं चेति । **उभयस्वभाव' इत्यर्थः । असुरा नैवं, अखिलमानुषा एवं च नैवं चेति योजना । इति श्रुतमिति संबन्धः ।**

**शे०— अप्राकृतमस्तीति ।** तदभावे प्रमाणाभावादिति भावः ॥ **तत्कथमिति ।** प्रियास्पृष्टिश्रुतिरेव विभागेन व्याख्यातव्याऽप्रियास्पृष्टिश्रुतिस्तु नेत्येतत्कथमित्यर्थः । नन्वसुरेष्वेवाप्रियस्य स्वरूपतायाः श्रुतत्वेऽपि तेषामपि सज्जीवत्वे कथमुक्तशङ्कापरिहार इत्यत आह **असुराश्चेति ।** ननु 'नित्यानन्दो नित्यज्ञान' इत्यादि श्रुत्या ज्ञानादीनां नित्यत्वोक्तावपि स्वरूपत्वानुक्तेः कथं तत्र प्रमाणतया

अस्या उपन्यास इत्यतस्तस्या आगमतया तत्स्वरूपत्वानवगमकत्वेऽपि तद्धेतुभूतनित्यत्वप्रतिपादकतया स्वरूपत्वावगमकत्वाद्युक्तस्तस्यास्तत्र प्रमाणतयोपन्यास इत्याह **नित्यत्वोक्त्येति**। तर्हि सर्वेषामप्यानन्दादीनामन्ते तच्छ्रुतिसिद्धनित्यत्वबलेन स्वरूपत्वलाभान्न प्रियास्पृष्टिश्रुतेर्विभागेन व्याख्येयत्वमित्यतः स्यादेतदेवं यदि वृत्तीनां नित्यत्वं स्यान्न तदस्ति । तथा सत्यन्तःकरणपरिणतत्वरूपवृत्तित्वानुपपत्तेः । ततश्च नित्यत्वप्रतिपादकश्रुतिविषयताया बाधितत्वान्न सर्वेषां स्वरूपत्वप्राप्तिरिति युक्तमेव विभागेन व्याख्यानमित्याशयेनाह **वृत्तीनामिति** ॥ **परमेश्वर इति** । अत्र बिम्बभूतपरमेश्वरस्यानन्दादिरूपत्वोक्त्या तत्प्रतिबिम्बानामपि सज्जीवानामानन्दादिरूपत्वस्यार्थतः सिद्धत्वात्प्रकृतसङ्गतिरिति द्रष्टव्यम् । साक्षात्तल्लाभायाह **सज्जीव इति वेति** । निःस्वभावतां वारयितुमाह **नैवमिति** । आनन्दादिविरुद्धदुःखादिस्वभावा इत्यर्थः । एवमनेवं चेत्यत्र पूर्वाभिमतकेवलानन्दादिरूपत्वदुःखादिरूपत्वयोः परामर्शो नोपपद्यते । तयोरेकत्रैकदा विरुद्धत्वेन समावेशायोगादित्यतोऽन्यथा व्याचष्टे **उभयेति** । आनन्दादिदुःखादिस्वभावा इत्यर्थः । असुरा नैवमनेवं चेति मानुषास्तु नैवमित्यन्यथाप्रतीतिनिरासायासुरा नैवमित्यादिभाष्यस्य योजनामाह **असुरा इत्यादिना** ।

**स०— योजनेति** । असुरा नैवमेवं त्विति अनुभाष्ययोजनेत्यर्थः ।

---

**प०— इति श्रुतिमिति** । भाष्योक्ताम् ॥ **वृत्तीनामिति** । मनःपरिणतिरूपाणामित्यर्थः । श्रौतपदानामर्थमाह **परमात्मेति** ॥ **सज्जीव इति वेति** । तस्य परमजीवत्वेन परमात्मपदेनोक्तिसंभवादिति भावः ॥ **उभयेति** । सुखदुःखाद्युभयस्वभावा इत्यर्थः । अत्र मनुष्यपदेन नित्यसंसारिणो ग्राह्या इति भावः । मूलयोजनामाह **असुरा नैवमित्यादिना** ।

**या०— अप्राकृतमस्तीति** । तदभावे प्रमाणाभावादिति भावः ॥ **वृत्तीनामिति** । अन्तःकरणपरिणतिरूपाणामानन्दादीनामित्यर्थः ॥ **परमेश्वर इति** । अत्र बिम्बभूतस्य परमेश्वरस्यानन्दादिस्वरूपत्वोक्त्या तत्प्रतिबिम्बानां सज्जीवानामपि तदर्थात्सिध्यतीति प्रकृतसङ्गतिरिति द्रष्टव्यम् । अत एवास्वरसादाह **सज्जीव इति वेति** । निःस्वभावतां वारयितुमाह **एतद्विरुद्धेति** । नन्वेवमनेवं चेत्यत्र केवलानन्दादिरूपत्वकेवलदुःखादिरूपत्वयोः परामर्शे तयोरेकदैकत्रासमावेशात्तत्समावेशोक्तिर्विरुद्धेत्यत आह **उभयस्वभावा इति** । तथा चानन्दादेरेव परामर्शो न केवलस्यापीति भावः ।

**श्री०— मूलं व्याख्याति नैवमितीति** ।

सु० — अप्रियहानावपि सङ्कोचः क्रियतामित्यतिप्रसङ्गं निवारयतैव सामान्यतः श्रुता प्रियास्पृष्टिः कुतो विशेषेऽवस्थाप्यत इत्याशङ्काऽपि परिहृता । नियामकस्य सूचितत्वात् । तदेव नियामकं विस्पष्टमाचष्टे आत्मेति ।

अनु० — आत्मप्रियहानाय को यतेत च बुद्धिमान् ॥

आत्मा च तत्प्रियं चेति आत्मप्रियम् । आत्मनः प्रियमिति वा । तदिच्छति चेति चशब्दः ।

यदि प्रियास्पृष्टिरविशिष्टा स्यात्तदा न कश्चित्प्रेक्षावान्मोक्षमिच्छेत् । नापि तदर्थं प्रयतेत । यद्यपि द्वेषवशात्परकीयसुखहानादाविच्छादिकं संभवति । तथाऽपि न कश्चिद् बुद्धिमानात्मनः सुखहानमिच्छति । तदर्थं प्रयतते वा । वृत्तिरूपसुखस्यानिष्टभूयिष्ठत्वात्तस्या-(गेच्छा)गायेच्छादिकं युज्यते । स्वरूपसुखं तु निष्कण्टकं कस्मात्त्याज्यम् ।। न च तन्नास्ति, श्रुतिसिद्धत्वात् । कारणैक्यनिमित्तो हि सुखस्य दुःखानुषङ्गः । न चात्मसुखस्य कारणमस्ति । अशक्यं चात्मसुखहानम् । न चाशक्यविषयेच्छाप्रयत्नौ बुद्धिमतः संभवतः । आत्महानं खलु विनाशलक्षणमनुत्पादलक्षणं च न संभवति, नित्यत्वात् । नापि वियोगलक्षणं, परेषां मते विभुत्वात् । अस्माकं स्वात्मनि क्रियाविरोधात् । नाप्यज्ञानलक्षणं स्वप्रकाशत्वात् ।

तदेवं बाधकसद्भावात्प्रियास्पृष्टिर्विशेषनिष्ठैव व्याख्येया । तथाच 'अशरीरं वाव सन्तम्' इति श्रुत्युक्तोपपत्तिः श्लिष्यत इति ॥

शे० — निवारयतैवेति । 'अप्रियं प्रतिकूलं तदि'त्यादिना पूर्वग्रन्थेनेति शेषः ॥ नियामकस्येति । समस्तप्रियहानेऽनिष्टत्वस्याप्राकृतसुखसद्भावेन व्यावर्त्यसद्भावाद्विशेषणावैयर्थ्यरूपस्य चेत्यर्थः ॥ स्पष्टमिति । अतो नाप्रियं प्रतिकूलमिति पूर्वग्रन्थेनात्मप्रियहानायेत्युत्तरग्रन्थस्यार्थिकं पौनरुक्त्यमिति भावः ॥ आत्मा च तदित्यादि । संभवसप्रयोजनत्वाभ्यां समासद्वयाश्रयणमिति ध्येयम् ॥ तदिच्छति चेति चशब्द इति । चशब्दः तदिच्छति चेति अनुक्तसमुच्चयार्थ इत्यर्थः ।

षष्ठीसमासाश्रयणेन सूचितं प्रयोजनमाह यदीति । आत्मनः सुखहानिरूपतया मोक्षस्येच्छाद्यविषयत्वादिति भावः । परसुखहानादेरिवात्मसुखहानादेरपीच्छादिविषयत्वं किं न स्यादित्यतो द्वेषभावाभावाभ्यां वैषम्यान्नैवमित्याह यद्यपीत्यादिना । नन्वात्मनो वृत्तिरूपसुखहानस्येच्छादिविषयत्ववत्स्वरूपसुखहानरूपमोक्षस्यापि तत्किं न स्यादित्यतोऽनिष्टभूयिष्ठत्वभावाभावाभ्यां वृत्तिसुखस्वरूपसुखयोर्वैषम्याद्युज्यते तत्त्यागयोरिच्छादिविषयत्वतदभावाविति कर्मधारयसमासाश्रयणेन सूचितमर्थं दर्शयति वृत्तीति ।

अस्तु स्वरूपसुखं तथाऽपि तस्यानिष्टभूयिष्ठत्वमेव किं न स्यादित्यत आह **कारणैक्येति** । शरीरादिकारणैक्येत्यर्थः । अङ्गीकृत्यैव च हानसंभवमनिष्टभूयिष्ठत्वभावाभावाभ्यां वैषम्यमुपदर्शितम् । वस्तुतस्त्वात्मस्वरूपसुखहानस्यात्महानरूपत्वादशक्यत्वमेवेत्यभिप्रेत्य कर्मधारयाश्रयणेनैव सूचितमर्थमाह **अशक्यं चेति** । अस्त्वशक्यत्वं तावताऽपि हानं किं न स्यादित्यप्रयोजकत्वं परिहरन्मूलं योजयति ॥ **न चेति** । तादृशचन्द्रमण्डलाहरणादाविच्छाप्रयत्नयोरदर्शनादित्यर्थः । भवेदेवं यद्यात्महानस्याशक्यत्वं स्यात्तदेव कथमित्यतस्तत्किं कालिकमभिमतं किं दैशिकमाहोस्विदज्ञानमाद्येऽपि किं विनाशलक्षणं प्रागभावलक्षणमिति विकल्पं मनसि निधायोभयमपि दूषयति **आत्महानं खल्विति** ॥ **नित्यत्वादिति** । सदातनत्वादित्यर्थः । द्वितीयेऽपि किं पररीत्या तदभिमतं स्वरीत्या वेति विकल्पं मनसि निधायाद्यं दूषयति ॥ **परेषामिति** । द्वितीयं दूषयति ॥ **अस्माकमिति** । स्वस्य स्वावधिकनिर्गमनादिक्रियाया विरुद्धत्वादित्यर्थः । देवदत्तस्य ग्रामवियोगो हि तदवधिकनिर्गमनादिक्रियासाध्यो दृष्टः । न चात्र स्वात्मनि स्वावधिकनिर्गमनक्रिया संभवति । यया स्वस्मादेव स्वस्य वियोगो भवेदिति भावः । न च सिद्धान्ते ईशकृतस्यांशिनः सकाशादंशव्यतिरेकस्याङ्गीकारात्स्वावधिकं स्वस्य निर्गमनं स्यादिति वाच्यं । तस्य सर्वमुक्तसाधारणत्वाभावात् । प्रकृतायाश्च प्रियास्पृष्टेः सर्वमुक्तसाधारणत्वादिति भावः । तृतीयं दूषयति **नापीति** ।

---

**विशेषेण** व्याख्येयत्वे आन्तरोपपत्तिमप्याह **तथा चेति** । प्रियास्पृष्टिश्रुतेर्विशेषेण व्याख्यान एवेत्यर्थः । उपपत्तिरशरीरत्वलक्षणा ॥ **श्लिष्यत इति** । अयमर्थः । श्रुतौ प्रियास्पृष्टिहेतुत्वेनोक्तमशरीरत्वं तावन्न सर्वथाऽशरीरत्वं किन्तु प्राकृतशरीरराहित्यरूपमेवेत्युक्तमधस्तात् । प्राकृतशरीराभावश्च प्राकृतसुखस्यैवाभावसाधको न स्वरूपसुखस्याप्रयोजकत्वापातात् । तथाच प्राकृतसुखाभावस्यैव तदर्थतया वाच्यत्वात् । श्रुत्युक्तोपपत्तेरप्रयोजकत्वाभावात् श्लिष्टत्वमिति ।

**स०** — विभागो हि स्वपरित्यागेन स्वस्य गमनम् । न तत्परमते युक्तम् । तन्मते तस्य विभुत्वेन गमनानुपपत्तेरित्याह **परेषामिति** । अस्मन्मतेत्वात्मनोऽणुत्वेन तस्य गमनसंभवेपि स्वस्य स्वपरित्यागस्य विरुद्धत्वान्न वियोग इत्याह **अस्माकं त्विति** ॥ **तथा चेति** । प्रियास्पृष्टेर्विशेषेणैव व्याख्यान इत्यर्थः । **श्रुत्युक्तेति** । अशरीरत्वलक्षणेत्यर्थः । अयमाशयः । श्रुतौ प्रियास्पृष्टिहेतुत्वेनोक्तमशरीरत्वं तावन्न सर्वथाऽशरीरत्वं किं नाम प्राकृतशरीरराहित्यमेवेति वक्ष्यते । प्राकृतशरीराभावश्च प्राकृतसुखाभावस्यैव साधकः । न तु स्वरूपभूतस्य अप्रयोजकत्वापातात् । तथा च प्राकृतसुखाभावहेतुत्वस्यैव वाच्यत्वात् तदुक्ताशरीरत्वोपपत्तेर्नाप्रयोजकमिति श्लिष्टत्वमन्यथा तु नेति ।

प० — प्रियास्पृष्टिरिति पदच्छेदः ॥ **सूचितत्वादिति** । 'प्रियं स्वरूपमेवास्य बलानन्दादि वाक्यत' इत्यत्राप्राकृतसुखरूपत्वस्योक्त्या सङ्कोचे नियामकस्य सूचितत्वादिति भावः । यद्वा 'हेयत्वाद-प्रियस्यैव प्रियहानेरनिष्टत' इत्यत्र मुक्तेः पुमर्थत्वभङ्गरूपस्य नियामकस्य सूचितत्वादित्यर्थः ॥ **आत्मा चेति** । आत्मरूपं प्रियमित्यर्थे कर्मधारयोऽयम् । षष्ठ्यन्तविग्रहेण प्राप्तमर्थमुपपाद्य कर्मधारयविग्रहकृतौ तात्पर्यमाह **वृत्तिरूपेति** । इच्छादिकमिति । प्रयत्न आदिपदार्थः ॥ **श्रुतीति** । 'बलमानन्द ओजश्चे'ति श्रुत्या 'नित्यानन्दो नित्यज्ञान' इत्यादिश्रुत्या च सिद्धत्वादित्यर्थः ॥ **कारणैक्येति** । प्राकृतदेहेन्द्रियाद्यैक्येत्यर्थः । अशक्यं चात्मरूपप्रियहानमित्युक्तं तत्कथमित्यतः आत्महानेन विना तदभिन्नसुखहानमशक्यमिति भावेनात्महानं पराकरोति **आत्महानं खल्विति** । यद्वा सुखस्येति योज्यम् । स्वरूपसुखस्यात्मपरित्याग इत्यर्थः ॥ **नित्यत्वादिति** । अनादित्वाच्चेत्यपि ग्राह्यम् ॥ **वियोगेति** । आत्मस्वरूपसुखस्य आत्मना वियोगलक्षणम् । **स्वात्मनीति** । जीवाणुत्ववादिनामस्माकं मते स्वात्मनि क्रियोत्पत्तौ तदभिन्नसुखस्य वियोगो भवति । न च स्वस्मिन्नेव स्वरूपसुखवियोगजनक-क्रिया युक्ता स्वस्मिन्स्वावधिकक्रियाया विरोधादित्यर्थः । केचित्स्वात्महान्यनुपपत्तिपरतयैव ग्रन्थार्थमुपेत्य वियोगपदस्यात्मनैवात्मनो वियोगेत्यर्थः स्वात्मनीत्यस्य स्वावधिकक्रियायाः स्वस्मिन्विरोधादित्यर्थ इत्याहुः ॥ **श्रुत्युक्तोपपत्तिरिति** । अशरीरित्वयुक्तिरित्यर्थः । शरीरस्य वृत्तिरूपसुखं प्रति हेतुतया स्वरूपसुखे हेतुत्वाभावादशरीरत्वयुक्तिर्जन्यसुखाभावे युज्यते । न स्वरूपसुखाभावे स्वरसा । तस्मात्स्वारस्यानुरोधा-द्विशेषनिष्ठैव व्याख्येयेत्यर्थः । अप्रियं तु सतामजन्यं नेत्यप्रियश्रुतिर्विशेषनिष्ठा न व्याख्यातुं शक्येति सा युक्तिरप्रिये सर्वात्मना निषेध एव श्लिष्यत इति भावः ॥ **अशरीरं वावेति श्रुत्यर्थः** ।

या० — **नियामकस्येति** । सुखस्यात्मस्वरूपत्वकथनेन हातुमशक्यत्वादिरूपस्य नियामक-स्येत्यर्थः । षष्ठीसमासेन लब्धमर्थं दर्शयति **यदि प्रियास्पृष्टिरित्यादिना** । ननु सुखमपि दुःखानु-षङ्गात्त्याज्यमेवेत्याशङ्कां परिहरन् कर्मधारयलब्धमर्थमुपपादयति **वृत्तिरूपसुखस्येत्यादिना** । प्रिया-स्पृष्टिर्विशेषेणैव व्याख्येयेत्यत्र कर्मधारयसूचितं नियामकं दर्शयति **कारणैक्येत्यादिना** । शरीरादि-रूपकारणैक्यनिमित्त इत्यर्थः । आत्मस्वरूपसुखहानं आत्महानमेवेत्यभिप्रेत्याह **आत्महानमिति** । नित्यत्वेन कालिकं स्वात्महानं न संभवतीत्युक्त्वा दैशिकमपि तन्न संभवतीत्याह **नापि वियोगेति** ॥ **स्वात्मनीति** । स्वात्मनि स्वावधिकनिर्गमनादिक्रियाया अभावादित्यर्थः । देवदत्तस्य ग्रामवियोगो हि ग्रामावधिकनिर्गमनरूपक्रियासाध्यो दृष्टः । न चात्र स्वात्मनि स्वावधिकनिर्गमनरूपक्रिया संभवति । यया स्वस्मादेव स्वस्य वियोगो भवेदिति भावः । न चेशकृतस्वांशातिरेकस्याङ्गीकारात्स्वावधिकं निर्गमनं देवादीनामस्तीति वाच्यम् । तस्य सर्वमुक्तसाधारण्याभावात् । प्रियास्पृष्टिश्च सर्वमुक्तसाधारणी

प्रकृता ॥ **तथा चाशरीरमिति** । प्राकृतप्रियास्पृष्टिपरतया श्रुतिव्याख्याने तत्राशरीरमिति हेतुगर्भ-विशेषणेन समर्पिताऽशरीरत्वयुक्तिः श्लिष्यते । शरीरस्य प्रकृतं प्रियं प्रति कारणत्वेन कारणाभावे कार्याभावनियमात् । स्वरूपप्रियास्पृष्टिपरतया व्याख्याने तु तदंशेऽशरीरत्वयुक्तिरप्रयोजकतया न श्लिष्यत इति भावः ।

**श्री०**— आत्मशब्दस्याभिप्रायमाह **यद्यपीति** । आत्महानं किं कालिकं हानं, दैशिकं वा । आद्येऽपि किं विनाशलक्षणं स्वस्योत्पत्त्यभावो यथा स्यात्तथा करणरूपानुत्पादो वेति विकल्प्य दोषमाह **विनाशलक्षणमिति** ॥ **नित्यत्वादिति** । नित्यत्वेन विनाशलक्षणं हानमयुक्तम् । नित्यत्वोक्त्याऽना-दित्वं प्राप्तम् । तथा चानादित्वेनोत्पादप्रसक्तेरेवाभावादनुत्पादकरणरूपं हानं न संभवतीत्यर्थः । दैशि-कहानरूपो द्वितीयपक्षोऽप्ययुक्त इत्याह **नापीति** ॥ **परेषां मते** । अस्माकं मते ॥ **स्वक्रियेति** । स्वकर्मक परित्यागरूपक्रियाविरुद्धत्वान्न संभवतीत्यर्थः ।

**सु०** **एवं सुखास्पृष्टिश्रुतिं व्याख्याय ज्ञानाभावश्रुतिं च व्याख्याति** संज्ञेति ।

**अनु०** -- संज्ञा नास्तीत्यपि ह्यस्य नामुक्तज्ञेयतेति हि ॥

**श्रुतिर्वक्तीति वक्ष्यमाणमत्रापि संबध्यते । 'न प्रेत्य संज्ञाऽस्ती'त्यपि श्रुतिरस्य मुक्तस्या-मुक्तज्ञेयता नास्तीत्येव वक्ति । न तु मुक्तो न जानातीति । एको हिशब्द एवार्थः । द्वितीयस्तु स्वोक्तार्थस्य शब्दशक्त्यनतिक्रमं सूचयति ।**

**तथा हि । प्रेत्य मरणानन्तरं संज्ञा ज्ञानं नास्तीति तावच्छ्रौतोऽर्थः । तत्र प्रकरणवशा-त्प्रेत्येत्येतन्मरणविशेषमोक्षानन्तरमिति व्याख्येयम् । ज्ञानं तु मुक्तसंबन्धि प्रतिषिध्यमानं तत्कर्तृकमेवेति कल्पने न नियामकं पश्यामः । अतस्तत्कर्मकस्यैव ज्ञानस्यायं प्रतिषेधो विज्ञा-यते । सर्वथाऽज्ञे(यतायां चा)यानां चासत्त्वं प्रसज्यत इत्यमुक्तज्ञेयतानिषेध इति कल्प्यते । अमुक्तानामप्यस्मदादीनामपरोक्षज्ञानस्यायं प्रतिषेधः । नारदादिभिरापरोक्ष्येणास्मदादिभिश्च शास्त्रेण तज्ज्ञानात् । अत एव संशब्दप्रयोग इति ॥**

**शे०**— **प्रकरणेति** । 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाये'ति वक्ष्यमाणरीत्याऽस्य मोक्ष-प्रकरणत्वादित्यर्थः । नन्वस्मदादिसाधारण्येन सर्वेषामप्यपरोक्षज्ञानस्यैवास्मदादीनामपि परोक्षापरोक्षसाधा-रण्येन ज्ञानमात्रस्यैव च निषेधसंभवात्कुतोऽस्य वाक्यस्यास्मदादीनामपरोक्षज्ञानप्रतिषेधकत्वमित्यत आह **नारदादिभिरिति** ॥ **अत एवेति** । अस्माभिरापरोक्ष्येणाज्ञायमानत्वादेवेत्यर्थः । अन्यथा ज्ञानमात्रस्यैव प्रतिषेध्यतया संशब्दवैयर्थ्यापातादिति भावः ।

**स० — अत एवेति** । अस्माभिरापरोक्ष्येणाज्ञायमानत्वादेवेत्यर्थः ।

**प० — श्रुतिर्वक्तीति** । काण्वश्रुतिर्द्वितीयेऽध्याये वक्तीत्यर्थः । इत्येव वक्तीत्येवकारं न पश्यामो मूल इत्यत आह **एको हिशब्दः एवार्थ इति** । निपातानामनेकार्थत्वादिति भावः ॥ **प्रकरणवशादिति** । वक्ष्यमाणदिशा 'विज्ञानघन एवैतेभ्य' इत्यादिप्रकरणस्य मुक्तिपरत्वादिति भावः ॥ **अत एवेति** । अस्मदादेरपरोक्षज्ञानाभावादेव ज्ञानं नास्तीत्यनुक्त्वा संज्ञानास्तीति संशब्दप्रयोग इत्यर्थः ।

**या० — प्रकारणवशादिति** । 'विज्ञानघन एवैतेभ्य' इत्यादिप्रकरणस्य वक्ष्यमाणरीत्या मुक्तिपरत्वादिति भावः ।

**श्री० — असत्त्वमिति** । वस्तुसत्त्वस्य प्रतीतिप्रमाणकत्वादिति भावः ॥ अस्मदादीनामिति विशेषणस्य कृत्यमाह **नारदादिभिरिति** । अमुक्तैरपीत्यर्थः । अपरोक्षज्ञानस्येति पदाभिप्रायमाह **अस्मदादिभिश्च शास्त्रेणेति** । **तज्ज्ञानात्** मुक्तानां ज्ञायमानत्वादित्यर्थः । **अत एव** परोक्षज्ञान-सद्भावादेव ॥ **संशब्देति** । तस्यापरोक्षज्ञानाभिप्रायकत्वादिति द्रष्टव्यम् ।

**सु० — ननु साधारणे वाक्ये मुक्तविषयस्य ज्ञानस्यायं प्रतिषेधो न तु तत्कर्तृकस्येति कुतः कल्प्यत इत्यत आह** धर्मेति ।

**अनु० —** धर्मानुच्छित्तिमेवास्य यतो वक्त्युत्तरश्रुतिः ॥

**यतः कारणा'दयमात्मानुच्छित्तिधर्मे'त्युत्तरश्रुतिरस्य मुक्तात्मनो धर्मानुच्छित्तिमेव वक्ति । न विद्यते उच्छित्तिर्येषां ते तथोक्ताः । अनुच्छित्तयो धर्मा यस्यासावनुच्छित्तिधर्मेति । तस्मादेवं व्याख्यात इति ।**

**शे० — न विद्यत इत्यादि** । अत्र च न विद्यते उच्छित्तिर्येषां ते तथोक्ताः । अनुच्छित्तयो धर्मा यस्यासावनुच्छित्तिधर्मेति बहुव्रीहिपूर्वपदो बहुव्रीहिर्धर्माणामनुच्छित्तिलाभार्थमनिच्प्रत्ययनिर्वाहार्थं च समाश्रितः । एवं सत्येव हि 'धर्मादनिच्केवलादि'ति धर्मान्ताद्बहुव्रीहेः समासान्तोऽनिच्प्रत्यय उपपद्यते । तथाहि । बहुव्रीहिणा पूर्वपदमाक्षिप्यते तस्य केवलादिति विशेषणं । तेन केवलादन्यनिरपेक्षात् परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच्प्रत्ययो भवतीति सूत्रार्थः संपद्यते । अत एव परमः स्वः धर्मो यस्येति परमस्वधर्म इति त्रिपदे बहुव्रीहौ नानिच्प्रत्ययः प्रसज्यते । तत्र स्वशब्दस्य मध्यत्वादन्यसापेक्षत्वेन केवलस्य तस्य पूर्वपदत्वाभावात् । यदा च स्वो धर्मः स्वधर्मः परमः स्वधर्मो यस्येति परमस्वधर्म इति बहुव्रीहिस्तदा यद्यपि पूर्वपदमन्यानपेक्षरूपकेवलं भवति तथाऽपि स्वशब्देन व्यवधानान्न ततः परो धर्मशब्द इति न भवति समासान्तः । ततश्चात्रानुच्छित्तिशब्दो बहुव्रीहेः पूर्वपदं भवन्नान्यमपेक्षत इति

केवलात्परो धर्मशब्द इति भवत्येवात्र समासान्तोऽनिच्प्रत्ययः । अत एव निवृत्तिधर्मा स्थानी भवतीति प्राचां प्रयोगः संगच्छते । एवमेव साध्यसमानधर्मा धर्मी सपक्ष इति टीकाकारीयोक्तिरपि निर्वाह्या । इयांस्तु विशेषः । यदत्र बहुव्रीहिपूर्वपदो बहुव्रीहिः तत्र साध्येन समानः साध्यसमानः स धर्मो यस्येति तृतीयान्ततत्पुरुषपूर्वपदो बहुव्रीहिरिति । एवं संदिग्धसाध्यधर्मा धर्मी पक्ष इत्याद्यपि निर्वाह्यं । नन्वेवं बहुव्रीहिणा पूर्वपदमाक्षिप्यते । तच्च केवलादित्यनेन विशिष्यत इत्यङ्गीकारे केवलपदमनर्थकं स्यात् । पूर्वपदशब्दस्य समासप्रथमावयवे रूढत्वेनैव मध्यपदव्यावृत्तिसंभवादिति चेन्न । पूर्वपदाक्षेपे तात्पर्यग्राहकत्वेन सार्थक्यसंभवादिति । केचित्तु केवलं पदान्तरेणाविशिष्टं समासानात्मकमिति यावत् यत्पूर्वपदं तस्मात्परो धर्मशब्द इत्येव सूत्रार्थः । ततश्चोच्छित्तिर्धर्मो यस्येत्युच्छित्तिधर्मा, नोच्छित्तिधर्मा इत्येव विग्रहोऽत्राभिमतः । न विद्यते उच्छित्तिर्येषां तेऽनुच्छित्तयोऽनुच्छित्तयो धर्मा यस्येति तु तात्पर्यकथनमात्रं टीकायां कृतं न तु विग्रहप्रदर्शनमेतत् । धर्माणामविनाशित्वसिद्धिस्तु आर्थिक्येव । संदिग्धसाध्यधर्मा धर्मी पक्ष इत्यादावपि साध्यं धर्मो यस्येति साध्यधर्मेति व्युत्पाद्य संदिग्धश्चासौ साध्यधर्मा चेति कर्मधारयः । स च संदेहः साध्यधर्मद्वारक एव पर्यवस्यतीति न कश्चिद्दोष इत्याहुः । तत्रोक्तरीत्या धर्माणामविनाशित्वस्य, साध्यस्य संदिग्धतायाश्च, साक्षाल्लाभसंभवेन क्लिष्टकल्पनाऽनवकाशात् भवदुक्तार्थकल्पनाया आकरग्रन्थानारूढत्वान्निवृत्तिधर्मा स्थानीभवतीत्याद्यभियुक्तप्रयोगं प्रत्यननुकूलत्वाच्चास्मदुक्तार्थस्य च भ्वादिगणे धृञ् धारण इति धातौ माधवग्रन्थे स्पष्टत्वादिति दिक् ।

---

स० — **नेति** । उच्छिद्यन्त इत्युच्छित्तयः । उच्छित्तयः धर्मा यस्यासावुच्छित्तिधर्मा, न उच्छित्तिधर्मा अनुच्छित्तिधर्मेत्येवात्र व्युत्पत्तिर्द्रष्टव्या । तात्पर्यकथनमात्रमेवैतदिति बोध्यम् ।

प० — **अनुच्छित्तिधर्मेतीति** । नित्य इत्यर्थः ।

**सु० — स्यादेतत्** । **अनुच्छित्तिधर्मेत्येतत्संख्यादिधर्माणामनुच्छित्तिं वक्तीत्यपि शक्यते वक्तुम् । यद्वा उच्छित्तेरभावोऽनुच्छित्तिः सा धर्मो यस्यासावनुच्छित्तिधर्मेति । तत्कथमेतन्नियामकमित्याशङ्कानिरासायादित एव वाक्यं व्याचष्टे** आशङ्क्येति ।

**अनु०** — आशङ्क्यास्य ज्ञानहानिं मैत्रेय्या मोहमाह माम् ॥
भवानित्युक्तवत्या हि नाहं मोहं वदामि ते ॥
इत्युक्त्वा याज्ञवल्क्यो हि स्वरूपानाशमूचिवान् ॥

**'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति' विज्ञानमूर्तिरयमात्माऽनादिरपि चरमे जन्मन्येतेभ्यो भूतेभ्यः समुत्थाय भूतात्मकशरीरोत्पत्ति-**

निमित्तमेवोत्पन्नव्यवहारविषयो भूत्वा पुनस्तानि भूतान्यन्वेव तन्नाशनिमित्तमेव नित्योऽपि विनश्यति । विनष्टव्यवहार(गोचरो भ)विषयो भवति । अपवृज्यत इति यावत् । ततः प्रेत्य मोक्षानन्तरमस्य मुक्तस्य संज्ञा ज्ञानं नास्तीत्यविशदं याज्ञवल्क्यवाक्यं श्रुत्वा अस्य मुक्तस्य ज्ञानहानिमाशङ्क्यानेन वाक्येन मुक्तो न जानातीत्युच्यत इति मत्वा मैत्रेय्या 'अत्रैव मा भवान्मोहान्तमापिपदि'ति वाक्येन भवान्मां प्रति यदाह मुक्तो न जानातीति तन्मोहकमेवेत्यर्थमुक्तवत्या चोदित इति शेषः ।

याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीमीत्यनेन ज्ञानोपदेशाय प्रवृत्तोऽहं परमप्रियायै ते मोहं न वदामीति प्रतिज्ञामुक्त्वा कथमित्याशङ्कायामविनाशी वा अरेऽयमात्मेत्यात्मस्वरूपस्यानाशमूचिवान् ।

यद्वा आशङ्क्येति णिजन्ताल्ल्यप् । याज्ञवल्क्यः संमुग्धेन वचसाऽस्य(।)मैत्रेय्या ज्ञानहानिमाशङ्क्योचिवानिति योजना ।

तस्यास्तथा शङ्का जातेत्यत्र किं मानमित्यत्रोक्तं मोहमाह मां भवानित्युक्तवत्या हीति वचनलिङ्गेनाशङ्का(व)गम्यत इत्यर्थः । अयमर्थः स्पष्ट एव श्रुताविति द्वितीयो हिशब्दः ।

शे० — अत्र पक्षे सामान्यस्य धर्मशब्दस्य विशेषपरत्वं कल्पनीयं भवतीत्यपरितोषादाह **यद्वेति** ॥

---

**नियामकमिति** । न प्रेत्येत्यस्य मुक्तविषयकज्ञानप्रतिषेधार्थत्व इति शेषः ॥ **विज्ञानमूर्तिरिति** । 'मूर्तौ घन' इति स्मरणादिति भावः । वाक्येनेत्यस्येत्यर्थमुक्तवत्येत्यनेन संबन्धः । नन्वाशङ्कां प्रति मैत्रेय्याः कर्तृत्वात्स्वरूपानाशवचनं प्रति च याज्ञवल्क्यस्य कर्तृत्वादसमानकर्तृकत्वेन क्त्वाप्रत्ययाप्रसङ्गादाशङ्क्येति तदादेशस्य ल्यपोऽनुपपत्तिरित्यतोऽत्र चोदित इति शेषपूरणेनाशङ्काचोदनयोर्मैत्रेयीकर्तृकत्वेन समानकर्तृकतालाभान्नानुपपत्तिरिति भावेन शेषं पूरयति ॥ **चोदित इति शेष इति** ।

उक्तयोजनायां चोदित इति शेषः पूरणीयो भवतीत्यपरितोषात्तमनाश्रित्य प्रकारान्तरेण योजनामाह **यद्वेति ॥ णिजन्तादिति** । अन्तर्भूतण्यर्थादित्यर्थः । **अस्य** मुक्तस्य ज्ञानहानिमिति संबन्धः ॥ **वचनलिङ्गेनेति** । शङ्काकार्यस्य वचनस्य तज्ज्ञापकत्वं सुप्रसिद्धमिति आद्यहिशब्दार्थ इति भावः ।

स० — नन्वाशङ्क्येति क्त्वाप्रत्ययः कथम् । आशङ्कां प्रति मैत्रेय्याः कर्तृत्वात् स्वरूपानाशवचनं प्रति च याज्ञवल्क्यस्य कर्तृत्वात् । ततो न समानकर्तृत्वमित्यत आह **चोदित इति शेष इति** । शेषापूरणेपि न दोष इत्याह **यद्वेति** ।

प० — इति शक्यते वक्तुमिति पूर्वेणान्वयः । तथा च धर्माणामनुच्छित्तिर्न लभ्यत इति भावः ॥ **कथमेतदिति** । उत्तरवाक्यमित्यर्थः । श्रुत्यर्थमाह **विज्ञानमूर्तिरिति** । मूलपदानि व्याचष्टे

**अस्येत्यादिना** । आशङ्क्य ज्ञानहानिमित्यस्य व्यक्तमर्थमाह **अनेनेति** । संज्ञा नास्तीति **वाक्ये-**नेत्यर्थः । अत्रैव ज्ञानविषये मा मोहान्तं मोहाख्यनाशमापिपत् प्रापितवानिति श्रुतिवाक्यार्थं मनसि निधाय मूलपदानि योजयति **भवान्मां प्रतीत्यादिना** ॥ **इत्यनेनेति** । वाक्येनेत्यनुषङ्गः । नाहमित्यादिमूलार्थमाह **ज्ञानेति** । 'मोहं मां प्रापयामासे'ति बृहद्भाष्यानुरोधादाह **यद्वेति** ॥ **णिजन्ता-ल्ल्यबिति** । शकि शङ्कायामिति धातोः हेतुमति चेति णिच्प्रत्यये समानकर्तृकयोरिति क्त्वाप्रत्यये समासेऽनञ्पूर्वेति ल्यपि णेरनिटीति णिलोपे इदितो नुम् धातोरिति नुमागमे सत्याशङ्क्येतिरूपसिद्धे-रिति भावः । अस्येत्यस्य लिङ्गव्यत्ययमुपेत्योक्तमस्या इति । आशङ्क्य शङ्कां जनयित्वा । **श्रुताविति** । न प्रेत्य संज्ञास्तीति श्रुतावित्यर्थः ।

या० — चोदित इत्यध्याहारेऽतुष्यन् अस्येत्यस्य लिङ्गव्यत्ययेन स्त्रीलिङ्गत्वं मैत्रेय्या उक्तवत्या इत्यनयोः षष्ठ्यन्तत्वं चाभिप्रेत्य योजनान्तरमाह **यद्वेति** । **वाक्येन** इत्यर्थमुक्तवत्येति संबन्धः ।

श्री० — **संख्यादिधर्माणामिति** । संख्यापरिमाणपृथक्त्वसंयोगविभागरूपाणां सामान्य-गुणानां मुक्तेष्वपि सद्भावादित्यर्थः ॥ **स धर्मो यस्येति** । तथा च विनाशाभावरूपधर्मवानित्यर्थः । **अपव्रज्यते** अपवर्गवान्भवति । **मुक्तस्य ज्ञानहानिमाशङ्क्येति** । मैत्रेयी स्वयमेवाशङ्क्येत्यर्थः । मोहं मां प्रापयामास भवानत्रेति चोदितः याज्ञवल्क्यः प्रियामाहेति प्रमाणानुसारेणाह **चोदित इति शेष इति** । अस्य मैत्रेय्या ज्ञानहानिमाशङ्क्येति । अस्य मुक्तस्य विषये मैत्रेय्या ज्ञानहानिमाशङ्क्य तद्विषय-कशङ्का तया कारिता । तस्यास्तादृशशङ्कामुत्पादयित्वेति यावदित्यर्थः ।

सु० — **ज्ञानविनाशवचनं मोहकमित्याक्षेपे स्वरूपानाशोऽसङ्गतः कथमुक्त इत्यत आह** ज्ञानरूपस्येति ।

**अनु०** — ज्ञानरूपस्य विज्ञाननाशस्तन्नाश एव यत् ॥

इति

यत् **यस्माज्ज्ञानरूपस्तावदात्मा तस्य च विज्ञाननाशो नाम तन्नाश एव । न चात्म-नाशोऽस्ति । तथा सति मुक्तेरपुरुषार्थत्वप्रसङ्गात् । अतो न ज्ञाननाशोऽस्ति । अत एव न मद्वचनं** तदर्थम्, **किं त्वमुक्तानां मुक्तविषये संज्ञा नास्ति, मुक्तानामेव वा वृत्तिरूपा संज्ञा नास्तीत्यादिरेव मद्वचनार्थं इत्यभिप्रायवान्स्वरूपानाशमूचिवानिति संबन्धः ।**

शे० — **कथमुक्त इति** । अविनाशीत्यनेनेति शेषः । इत्यादिरेवेत्यादिपदेन 'मुक्तानां संज्ञा-ऽप्यन्यैर्न ज्ञायते शास्त्रं विने'ति बृहद्भाष्योक्तार्थस्य संग्रहः ।

या॰— **संज्ञा नास्तीत्यादिरेवेति** आदिपदेन 'मुक्तानां संज्ञाप्यन्यैर्न ज्ञायते शास्त्रं विने'ति बृहद्भाष्योक्तार्थस्य संग्रहः ।

श्री॰ — **अत एव** ज्ञाननाशाभावादेव । **मद्वचनं** न मे प्रेत्य संज्ञाऽस्तीति वचनम् । **तदर्थकं** ज्ञाननाशार्थकम् ।

सु॰— अस्त्वेवं सङ्गतिस्तथाऽपि ज्ञानं न नश्यतीति साक्षादनुक्त्वैवं वचनं **किमर्थमित्यत आह** शून्येति ।

अनु॰ — शून्यमतोच्छित्त्यै

**न केवलमत्र प्रमेयनिरूपणमात्रार्थं प्रवृत्तो याज्ञवल्क्यः किन्तु परी(क्षायां)क्षया । अत एव न प्रेत्य ज्ञायत इति विशदमनुक्त्वा शङ्कोत्पादनाय न प्रेत्य संज्ञाऽस्तीति साधारणं वाक्यमाह । परीक्षा च स्वानभिमतनिरासरूपा । अत एवमुत्तरे दत्ते शून्यमतस्यात्मनाशलक्षणस्य निरासोऽपि कृतो भवतीति तदर्थं स्वरूपानाशमूचिवान् ।**

प॰— **परीक्षयेति** । प्रमेयनिर्णयार्थमित्यनुषङ्गः ॥ **अत एवेति** । परीक्षापूर्वं निरूपयितुं प्रवृत्तत्वादेवेत्यर्थः ।

श्री॰— **एवं वचनमिति** । 'अविनाशी वा अरेऽयमात्मे'त्येवमात्मनाशाभावद्वारा ज्ञानाविनाशवचनमित्यर्थः ।

सु॰— **यदर्थमादितो वाक्यं व्याख्यातं तदिदानीमनुच्छित्तिधर्मेत्येतद्व्याचष्टे** पुनरिति ।

अनु॰ — पुनरानन्दपूर्वकान् ॥
धर्मानाहाप्यनुच्छिन्नान्

**स्वरूपानाशमुक्त्वा पुनरपि मुक्तस्यानन्दपूर्वकान्धर्माननुच्छिन्नानाह याज्ञवल्क्यः । स्वरूपानाशोक्त्यैव धर्मानुच्छित्तिसिद्धौ पुनरुक्तिरियमित्यत उक्तमानन्दपूर्वकानिति । वाक्योपक्रमे विज्ञानघन एवेति विज्ञानस्यात्मस्वरूपत्वमुक्तं न पुनरानन्दपूर्वकाणाम् । अतः स्वरूपानाशोक्त्या विज्ञानाविनाश एव सुज्ञानो नानन्दाद्यविनाशः । अतस्तेऽपि विज्ञानवत् आत्मस्वरूपभूता एव नोच्छिद्यन्ते इत्यर्थप्रतिपत्त्यर्थमिदं वाक्यमिति ।**

प॰— **यदर्थमिति** । अनुच्छित्तिधर्मेतिवाक्यार्थनिर्णयार्थं । **आदितो** 'विज्ञानघन एवैतेभ्य इत्यादिवाक्यमाशङ्क्ये'त्यादिना व्याख्यातमित्यर्थः ।

श्री॰— **धर्मानुच्छित्तिसिद्धाविति** । ज्ञानवदानन्दादिधर्माणामप्यात्मस्वरूपत्वेन तत्स्वरूपाविनाशसिद्धौ तत्स्वरूपभूतानां तेषामप्यविनाशः सिद्ध एवेत्यर्थः ।

सु०— **तात्पर्यान्तरं सूचयति** तार्किकैरिति ।

**अनु०—**  तार्किकैर्विनिवारितान् ॥

**उक्तमेतत्परीक्षायां प्रवृत्तो याज्ञवल्क्य इति । अतः स्वरूपाविनाशमङ्गीकृत्य ये तार्किका बुद्धिसुखादीन्धर्मान्मुक्तस्य विनिवारयन्ति तेऽप्यसमीचीनवादिन इति ज्ञापनायेदं वाक्यमिति न पौनरुक्त्यदोषः ।**

**ननु स्वरूपाविनाशोक्त्या धर्माविनाशोऽपि सिद्ध एव । सत्यम् । स्वमतरीत्या बत । तार्किकास्तु न ज्ञानसुखादीनामात्मस्वरूपत्वं मन्यन्ते । अतः किमिदानीं मोक्षप्रसङ्गे तेषामात्मस्वरूपत्वोपपादनेन । आत्मस्वरूपप्रक्रियायां तदपि वक्तव्यमित्याशयेनानुच्छित्तिरेवोक्तेति ।**

**इदमत्राकूतम् । अनुच्छित्तिधर्मेति यदि संख्यादिधर्माणामनुच्छित्तिरुक्ता स्यात् तदा असङ्गतमिदं वाक्यमापद्येत । ज्ञानविनाशवचनं मोह इत्याक्षेपे संख्याद्यविनाशकथनस्य सङ्गत्यदर्शनात् । यदि च स्वरूपाविनाशोऽनेनोक्त इति स्यात्तदा तस्य पूर्ववाक्येनैवोक्तत्वात् पुनरुक्तिदोषः स्यात् । अस्मत्पक्षे त्वस्ति सर्वेषां वाक्यानामुक्तरीत्या साफल्यम् । तस्माज्ज्ञानानन्दादिगुणानामेवानुच्छित्तिमाहेदं वाक्यमिति गम्यते । तद्बलाच्च न प्रेत्य संज्ञाऽस्तीत्येतदपि उक्तार्थमेवेति ।**

---

शे०— **पूर्ववाक्येनेति** । अविनाशी वा अरेऽयमात्मेत्यनेनेत्यर्थः ॥ **उक्तरीत्येति** । शून्यमतोच्छित्या इत्याद्युक्तरीत्येत्यर्थः ।

स०— **उक्तरीत्या** । शून्यमतोच्छित्त्या इत्युक्तरीत्या ।

प०— **तात्पर्यान्तरमिति** । नामुक्तज्ञेयतेत्युक्तेऽर्थे ज्ञापनरूपं तात्पर्यं धर्मानुच्छित्तिमेवास्येत्यनेनोक्तम् । तदपेक्षया तात्पर्यान्तरमित्यर्थः । (तार्किकैर्विनिवारितानिति किमर्थमुक्तं अनुच्छित्तिधर्मेत्युक्त्यैव मैत्रेय्या उत्तरितत्वादित्यत आह **तार्किकैरितीति**) ॥ **स्वमतरीत्येति** । सिद्ध एवेत्यन्वयः ॥ ननु 'संख्यादिधर्माणां अनुच्छित्तिं वक्तीत्यपि शक्यते वक्तुमि'त्यादिना कृतचोद्यस्य किमनेनोत्तरमुक्तमित्यत आह **इदमत्राकूतमिति** । अभिप्राय इत्यर्थः ॥ **पूर्ववाक्येनैवेति** । अविनाशीत्यनेनैवेत्यर्थः ॥ **उक्तरीत्येति** । ज्ञानरूपस्येत्यादिनोक्तरीत्येत्यर्थः ॥ **उक्तेति** । न मुक्तज्ञेयतेत्युक्तार्थमित्यर्थः ।

या०— **पूर्ववाक्येनेति** । 'अविनाशी वा अरे अयमात्मे'ति वाक्येनेत्यर्थः ।

**श्री०**—नन्वानन्दादिधर्मा अपि विज्ञानवत् आत्मस्वरूपभूता एव नोच्छिद्यन्त इत्यर्थप्रतिपत्त्यर्थमिदं वाक्यमित्युक्तमप्ययुक्तम् । स्वरूपाविनाशोक्त्यैव तदभिन्नानन्दादिधर्माविनाशप्रतिपत्तिसंभवेनानु-

च्छित्तिधर्मेति वाक्यं पुनरुक्तत्वाद्व्यर्थमेवेति पूर्वोक्तमाशङ्क्य परिहरति **ननु स्वरूपेति** ॥ **स्वमतेति** । अस्माभिस्तेषां धर्माणामात्मस्वरूपत्वाङ्गीकारादित्यर्थः । तर्हि तान्प्रत्यात्मस्वरूपत्वमुपपाद्यतामिति चेत्तत्राह **किमिदानीमिति** ॥ **आत्मस्वरूपक्रियायामिति** । धर्माणामात्मस्वरूपत्वप्रतिपादनप्रकरण इत्यर्थः । इदानीं तु मोक्षप्रसङ्ग एव प्रवृत्तोऽस्तीति भावः ।

सु० — **इतश्चैतदुक्तार्थमेवेत्याह** मात्रेति ।

अनु० — मात्रासंसर्गमप्याह तथा

**यथा धर्मानुच्छित्तिमाह तथा मीयन्त इति मात्रा रूपादयो विषयास्तेषां संसर्गमुपभोग-लक्षणमप्यस्याह 'मात्रासंसर्गस्त्वस्य भवती'ति वाक्येन । ततो न ज्ञानविलोपो व्याख्यातुं शक्यते । नेदं वाक्यं श्रुतावुपलभ्यत इत्यत उक्तम्** माध्यन्दिनश्रुतिरिति ।

माध्यन्दिनश्रुतिः ॥

**मैत्रेयीयाज्ञवल्क्यसंवादरूपमिदं प्रकरणं काण्वमाध्यन्दिनश्रुत्योः समानम् । इदं तु वाक्यं यद्यपि काण्वश्रुतौ नास्ति तथाऽपि माध्यन्दिनश्रुतावस्त्येवेति ।**

शे० — **रूपादय इति** । यद्यपि मात्राणां मध्ये शब्दस्यैवादित्वाच्छब्दादय इत्येव वक्तु-मुचितं । तथाऽप्युत्तरवाक्ये 'इतर इतरं पश्यती'ति चाक्षुषज्ञानविषयस्य रूपस्यैवादौ वक्ष्यमाणत्वाद-त्रापि तस्यैवादित्वेन वचनमिति मन्तव्यम् ।

प० — **रूपादय इति** । रूपरसगन्धस्पर्शशब्दाः । प्रधानचक्षुर्विषयत्वाद्रूपस्यादितो ग्रहणम् ।

या० — **रूपादय इति** । यद्यपि मात्राणां मध्ये शब्दस्यैवादित्वाच्छब्दादय इत्येव वक्तव्यं तथाऽप्युत्तरवाक्य इतर इतरं पश्यतीति चाक्षुषज्ञानविषयस्य रूपस्यैवादौ वक्ष्यमाणत्वादत्रापि रूपस्यैवा-दित्वेन वचनमित्यवगन्तव्यम् ।

श्री० — **इतश्चैतदिति** । न प्रेत्य संज्ञाऽस्तीति वाक्यमित्यर्थः । विज्ञातारमिति वाक्यप्रति-पाद्यो जीव इत्युक्तम् ।

सु० — **इतोऽपि संज्ञा नास्तीति वाक्यमुक्तार्थमेवेत्याह** आचिक्षेपेति ।

अनु० — आचिक्षेप मतं तच्च यस्मिन्नविषयादनम् ॥

**श्रुतिरिति वक्ष्यति । यत्र हि 'द्वैतमिव भवती'त्यादिरुत्तरा श्रुतिर्यस्मिन्मते मुक्तस्य न विषयादनं रूपादिविषयभोगो नास्तीत्यभ्युपगमस्तन्मतमाचिक्षेप निन्दितवतीति । ततश्च न तद्वाक्यं मुक्तस्य ज्ञानाभावं प्रतिपादयति । न हि ज्ञानरहितस्य घटकल्पस्य विषयसंसर्गो वा**

तदभावनिन्दा वोपपद्यते । कथमाचिक्षेपेति चेत् । उच्यते । यत्र यदि, द्वैतं भवति तत् तर्ह्येव, इतर इतरं पश्यतीत्यादिना व्याप्तिमभिधाय हिशब्देन तस्याः प्रमितत्वं चोक्त्वा यत्र यदि, तु, अस्यात्मनोऽपेक्षितं सर्वमात्मैवाभूत् स्वव्यतिरिक्तं न स्यात् । तत् तर्हि केन साधनेन कम् अर्थं पश्येत् । न केनापि किञ्चिदित्यनिष्टप्रसङ्गोऽभिधीयते ।

शे०— वक्ष्यतीति । घ्राणादिभोगाभावस्येत्युत्तरवाक्य इति शेषः ॥ व्याप्तिमिति । वक्ष्यमाणप्रसङ्गाङ्गभूतां व्यतिरेकव्याप्तिमित्यर्थः ।

प०— आचिक्षेपेत्यत्र कर्त्राकाङ्क्षायामाह श्रुतिरिति वक्ष्यतीति । उत्तरार्धे ॥ तदभावेति । विषयभोगाभावनिंदेत्यर्थः ॥ हिशब्देनेति । यत्र हीति हिशब्देनेत्यर्थः । 'यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि'ति श्रुत्यर्थमाह यत्र यदीत्यादिना ।

सु०— एवं तर्हि यदि मुक्तौ द्वैतं न स्यात्तदा रूपदर्शनादिकं न भवेदिति तर्कितं भवति । तथा च द्वैताभावमतमनयाक्षिप्तं, न विषयभोगाभावमतमित्यत आह घ्राणादीति ।

---

अनु०— घ्राणादिभोगाभावस्य त्वनिष्टत्वहृदा श्रुतिः ॥

घ्राणादिना गन्धादेर्भोगो घ्राणादिभोगः । केन कमिति करणस्य कर्मणश्चोक्तत्वात् । तुशब्दो विशेषार्थः । हृदाऽभिप्रायेण । पूर्वेणैव संबन्धः ।

सत्यमेतत् शून्यमतं तार्किकमतं च निराकृत्याद्वैतमतमनया श्रुत्या निराक्रियत इति । तच्च विषयभोगाभावप्रसञ्जनेन । प्रसञ्जनीयं च तद्भवति यदनिष्टम् । अतोऽद्वैतमते घ्राणादिभोगाभावं प्रसञ्जयन्ती श्रुतिस्तस्यानिष्टत्वमभिप्रैतीति गम्यते । अनिष्टं च तदुच्यते यदप्रामाणिकं प्रमाणविरुद्धं च । अतो विषयभोगाभावनिन्दा श्रुत्यभिप्रायव्याप्ता भवत्येवेति ।

शे०— पूर्वेणैव संबन्ध इति । आचिक्षेपेति पूर्वेणैव संबन्ध इत्यर्थः ।

प०— तुशब्दो विशेषार्थ इति । भोगाभावेऽनिष्टत्वप्रसङ्गोऽयं न त्वद्वैतमताक्षेपपरमिति तर्कं विशेषयितुं अयं तुशब्द इत्यर्थः । अद्वैतमेवानया श्रुत्याऽऽक्षिप्तं न विषयभोगाभावमतमिति शङ्कितस्य किमुत्तरं जातमित्यत आह सत्यमेतदित्यादिना ॥ अनयेति । यत्र हि द्वैतमिवेति श्रुत्येत्यर्थः ॥ तच्चेति । निराकरणं विषयभोगाभावापादनेन कर्तव्यमित्यर्थः ।

सु० — भवेदेवमर्थापत्त्या विषयभोगाभावनिन्दावगमो यद्यत्राद्वैतमते विषयभोगाभावः प्रसञ्जनीयः स्यात् । न चैवम् । अपि तर्हि वस्तुस्थितिकथनमेतत् । तथा हि । अयमात्मा अविनाशी अत एवानुच्छित्तिस्तस्य धर्मः । मुक्तौ मात्राभिरसंसर्गस्तस्य भवति । कुतः । यत्र हि संसारे द्वैतमिव भवति तत्तत्रेतर इतरं पश्यतीत्यादि । यत्र तु मुक्तावस्य सर्वमात्मैवाभूत्स्वव्यतिरिक्तं किमपि नास्ति तत्र केन कं पश्येन्न केनापि न किमपीत्यद्वैतिनः । तत्राह येनेति ।

अनु० — येनेदमखिलं वेद विज्ञातारं स्वमेव च ॥
केन तं च विजानीयादित्यनिष्टं च सर्वथा ॥

येनेदमखिलं वेद तं च केन विजानीयात् विज्ञातारं च केन विजानीयादित्यनेन येनेदं सर्वं विजानाति तं च केन विजानीयात् विज्ञातारमरे केन विजानीयादिति वाक्यद्वयमुपादत्ते । विज्ञातारमित्येतत्स्वमेवेति व्याचष्टे । प्रथमवाक्यविषयं तूत्तरत्र वक्ष्यति । इति वाक्यद्वयोक्तं विष्णुज्ञानराहित्यं स्वज्ञानराहित्यं च ।

एतदुक्तं भवति । अत्रान्ते येनेदमिति वाक्यद्वयं श्रूयते । तदर्थः परमेश्वरज्ञानाभावः स्वज्ञानाभावश्च तावदनिष्टो न वास्तवः । ततस्तत्प्रसञ्जकथनमेवेति ज्ञायते । तत्साहचर्यात्केन कं पश्येदित्यादिकमपि प्रसञ्जनमेव न वस्तुस्थितिकथनमिति ज्ञातव्यमिति ।

शे० — प्रथमेति । येनेदं सर्वं विजानातीति प्रथमवाक्यविषयं 'नाखिलज्ञापको विष्णुरि'त्यादिनोत्तरत्र वक्ष्यतीत्यर्थः । नन्वेवमप्यविनाशीत्यादिवाक्यं वस्तुस्थितिकथनपरमिति शङ्कायाः कथं परिहार इत्यत आह इदमुक्तं भवतीति ॥ तत्साहचर्यादिति । तत्प्रकरणादित्यर्थः ।

प० — शङ्कते भवेदेवमिति ॥ अर्थापत्त्येति । विषयभोगाभावस्यापादनान्यथानुपपत्तिरूपार्थापत्त्येत्यर्थः ॥ इत्यद्वैतिन इति । आहुरिति योज्यम् ॥ उत्तरत्रेति । उत्तरश्लोके । 'इत्यनिष्टं हि सर्वथे'त्यत्राकाङ्क्षां पूरयति इति वाक्यद्वयोक्तमित्यादि । (भवेदेवमितिकृ)प्रकृतचोद्यस्य येनेदमिति मूलेनोत्तरस्यास्पष्टत्वादाह एतदुक्तमिति ।

स० — प्रथमेति । येनेदं सर्वं विजानातीति प्रथमवाक्यविषयं 'नाखिलज्ञापको विष्णुरि'-त्यादिनेति शेषः ।

या० — उत्तरत्र वक्ष्यतीति । उत्तरश्लोके वक्ष्यतीत्यर्थः ।

श्री० — येनेदमिति वाक्यप्रतिपाद्यः क इत्यत आह प्रथमेति । 'नाखिलज्ञापको विष्णुरि' त्यत्रेत्यर्थः ।

सु० — नन्वीश्वरस्तावत्सर्वथाऽप्यविज्ञेय एव । यतो वाच इत्यादिश्रुतेः । जीवात्मा च न स्वविज्ञानी । एकस्यां क्रियायामेकस्यैव कर्तृकर्मभावस्य विरुद्धत्वात् । अतः परमेश्वरज्ञानाभावः स्वज्ञानाभावश्च कथमनिष्ट इत्यतः परमेश्वरस्य सर्वथाऽप्यविज्ञेयत्वं तावन्निराकरोति नेति ।

अनु० — नाखिलज्ञापको विष्णुरज्ञेयो नियमेन हि ।

अत्राखिलज्ञापक इत्यनेन येनेदमिति वाक्यार्थमनूद्य विष्णुरिति तस्य विषयो दर्शितः । प्रागव्याख्यातत्वात् । विष्णुं विनैतद्वाक्यार्थस्यासंभवात् । हिशब्दस्तावदर्थे । विष्णुर्नियमेन सर्वथाऽप्यज्ञेय इति तावन्न भवति । कुत इत्यत आह तदिति ।

तज्ज्ञानार्थं हि वेदानामखिलानां प्रवर्तनम् ।

सर्वे वेदा इत्यादेरिति शेषः । विष्णोः सर्वथाऽप्यज्ञेयत्वेऽखिलवेदवैयर्थ्यप्रसङ्गाद्यतो वाच इत्यादिकमन्यथा व्याख्येयमिति भावः ।

शे० — विष्णुरेव येनेदमिति वाक्यविषयः कस्मादित्यत आह **विष्णुं विनेति** ॥ **तावदर्थ इति** । अव्ययानामनेकार्थत्वादिति भावः ॥ **अन्यथाव्याख्येयमिति** । साकल्येनाविज्ञेयत्वपरत्वेन व्याख्येयमित्यर्थः ।

म० — विष्णुरेवैतद्विषयः कुत इत्यत्राह **विष्णुं विनेति** ।

प० — कुत उक्तविषयप्रदर्शनमित्यत आह **प्रागव्याख्यातत्वादिति** । **तावदर्थे** तावच्छब्दार्थ इत्यर्थः ॥ **इत्यादेरिति** । 'सर्वे वेदा यत्पदमामनन्ति', 'सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण' इत्यादिश्रुतेरिति भावः ॥ **अन्यथाव्याख्येयमिति** । 'अद्भुतत्वादनिर्वाच्यमतर्क्याज्ञेयमेव चे'ति भाष्योक्तदिशेति भावः ।

या० — **अन्यथाव्याख्येयमिति** । साकल्येनाविज्ञेयत्वपरतया व्याख्येयमित्यर्थः ।

सु० — एवं परमात्मनो ज्ञेयत्वमुपपाद्य जीवात्मनः स्वज्ञानमुपपादयति प्रत्यक्षमिति ।

अनु० — प्रत्यक्षमात्मविज्ञानाविरोधानुभवादपि ॥

न स्वविज्ञानितायां च विरोधः कश्चनेयते ।

क्रियाविशेषणमेतत् । आत्मविज्ञानं चाविरोधश्चेति द्वंद्वः । अविरोधश्च प्रसङ्गादात्मविज्ञान एव । तयोरनुभवः । स च प्रत्यक्षरूपः तस्मात् । अपिपदेन श्रुत्यादिग्रहणम् । स्वविज्ञानितायां जीवस्य कश्चन विरोधो नेयते । न काऽप्यनुपपत्तिः प्रतीयते । आत्मविज्ञानानुभवस्तावत् मामहं जानामीति साक्षिरूपः प्रसिद्ध एव । यथा घटमहं जानामीत्यत्र न काचि-

**दनुपपत्तिः प्रतीयते । किं त्वनुपलम्भसनाथेन साक्षिणाऽनुपपत्त्यभाव एव साक्षात्क्रियते । तथा तदविशिष्टे मामहं जानामीति ज्ञानेऽपि । श्रुतयोऽपि 'अहमित्येव यो वेद्य' इत्याद्याः । यदि चात्मा न स्वात्मानं जानीयात्तदा ममेदमिष्टसाधनमित्यादिज्ञानाभावात्तथाविधेच्छाप्रयत्नयोरप्यभावात्सर्वप्रवृत्तिनिवृत्तिविलोपप्रसङ्गः । स्वप्रकाशत्वं ज्ञानाश्रयतया प्रकाशमानत्वं च न स्वज्ञानातिरेकेणोपपद्यत इति ।**

**शे० — क्रियाविशेषणमिति** । प्रत्यक्षं यथा भवति तथेति क्रियाविशेषणमित्यर्थः । अन्यथाऽनुभवविशेषणत्वाऽनुभवादिति पञ्चम्यनुरोधेन प्रत्यक्षादिति पञ्चमी श्रूयेतेति भावः । श्रुत्यादीत्यादिपदेन तर्कपरिग्रहः । एवमात्मविज्ञानानुभवमुक्त्वा अविरोधानुभवमुपपादयति ॥ **यथेति** । श्रुत्यादीत्यादिपदसंगृहीतं तर्कमाह **यदि चेति** । विशेषणाज्ञाने ममेदमिति विशिष्टज्ञानासंभवादिति भावः । ननु स्वप्रकाशतया स्वप्रकाशज्ञानाश्रयतया वाऽऽत्मप्रकाशसंभवेन तदधीनस्य ममेदमिष्टसाधनमिति विशिष्टज्ञानस्य संभवान्न प्रवृत्त्यादिविलोपप्रसङ्ग इत्यत आह **स्वप्रकाशत्वमिति** ॥ **स्वज्ञानातिरेकेणेति** । स्वविषयताऽतिरेकेणेत्यर्थः ।

**स० —** आत्मविज्ञानानुभवमुक्त्वा इतराविरोधानुभवमप्याह **यथेति** । ननु स्वप्रकाशतया वा तादृशज्ञानाश्रयतया वाऽऽत्मप्रकाशान्न प्रवृत्त्यादिविलय इत्यत्राह **स्वप्रकाशत्वमिति** ।

**प० — प्रसङ्गादिति** । आत्मविज्ञान एव विरोधस्य परेण प्रसंजितत्वेन तस्यैव प्रकृतत्वादिति भावः ॥ **अनुपलम्भेति** । यद्यत्रानुपपत्तिः स्यात्तर्ह्युपलभ्येत नोपलभ्यत इत्यनुपलंभसनाथेनेत्यर्थः ॥ **अहमितीति** । 'अहमित्येव यो वेद्यः स जीव इति कीर्तितः । स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः' इत्याद्या इत्यर्थः । अपिपदेन श्रुत्यादिग्रहणमित्युक्तम् । तत्रादिपदार्थस्तर्कोऽपीति भावेनाह **यदि चेति** ॥ **ममेदमिष्टेति** । स्वात्मज्ञानाभावे ममेत्यसदर्थोपरक्ततयेष्टानिष्टज्ञानाभावादित्यर्थः ॥ **तथा विधेति** । फलमिदमिच्छामि, ममेदमिष्टं, अहमत्र प्रयते, ममायं कृतिविषय, इतीच्छाप्रयत्नयोरित्यर्थः । स्वप्रकाशत्वाज्जीवस्य सर्वमुपपत्स्यत इत्यत आह **स्वप्रकाशत्वमिति** ।

**या० —** अविरोधानुभवमुपपादयितुमाह **यथा घटमित्यादिना** । श्रुत्यादिग्रहणमित्यत्रादिपदेनोपात्तं तर्कं दर्शयति **यदि चात्मेति** ॥ **ममेदमिति** । विशेषणाज्ञाने विशिष्टज्ञानासंभवादिति भावः । नन्वात्मनः स्वज्ञानकर्मत्वाभावेऽपि दीपवत्स्वप्रकाशतया प्राभाकररीत्या स्वप्रकाशज्ञानाश्रयतया वा प्रकाशमानत्वसंभवान्नोक्तविशिष्टज्ञानानुपपत्तिरित्यत आह **स्वप्रकाशत्वमित्यादि** । अत्र पक्षद्वयेऽपि प्रकाशकर्मत्वातिरिक्तस्य प्रकाशमानत्वस्य वक्तुमशक्यत्वेन स्वज्ञानकर्मत्वमनिवार्यमित्यर्थः ।

**श्री०**— अविरोधश्च घटपटयोरित्यन्यथाप्रतीतिपरिहारायाह **अविरोधश्चेति** ॥ **अनुपलंभसनाथेनेति** । यद्यनुपपत्तिः स्यात्तर्ह्युपलभ्येत । नोपलभ्यते । तस्मान्नास्तीत्येवं योग्यानुपलंभसहकृतेनेत्यर्थः ॥ **तदविशिष्ट इति** । घटमहं जानामीत्येतदनुभवसमान इत्यर्थः ।

**सु०**— छिदादिषु कर्तृकर्मणोर्भेददर्शनात्तदेकत्वाभ्युपगमो विरुद्ध इति यदुक्तं तन्निराकरोति कर्तृकर्मेति ।

अनु०— कर्तृकर्मविरोधश्च नित्यानुभवरोधतः ॥
कथमेव पदं गच्छेद्विरोधोऽदृष्टबाधनम् ।

**एकस्यां क्रियायां कर्तृकर्मत्वयोर्विरोधः कर्तृकर्मविरोधः** । नित्यानुभवः **उक्तसाक्ष्यनुभवः** । पदम् **आस्पदम्' प्रकृत इति शेषः** ।

**अयमाशयः । उक्तमेतल्लिंगपादे । यत्कर्तृकर्मणोर्भेद इत्यौत्सर्गिकोऽयं न्यायः । अपवादे सत्यभेदोऽपि भवतीति । अत्र च मामहं जानामीति साक्ष्यनुभवविरोधान्नायमस्य न्यायस्य विषयः । किन्तु यत्रादृष्टबाधनं प्रमाणविरोधाभावस्तत्रैवायं विरोधः प्रवर्तते । यथाऽगुल्यग्रेणांगुल्यग्रस्पर्शने । यथा वाऽसिधारयाऽसिधाराछेदन इति ।**

**शे०**— **उक्त इति** । मामहं जानामीत्युक्त इत्यर्थः । अविरुद्धन्यायविषयमेवोदाहरति ॥ **यथेति** ।

**प०**— ननु छिदिक्रियादौ कर्त्रादेर्भेददृष्टेरेकत्वाभ्युपगमोविरुद्ध इत्यस्य न समाधिः प्राप्त इत्यत आह **अयमाशय इति** ॥ **अस्येति** । एकस्यां क्रियायामित्युक्तन्यायस्येत्यर्थः ।

**श्री०**— **अत्र चेति** । प्रकृते कर्तृकर्मणोर्भेदाङ्गीकार इत्यर्थः ॥ **साक्ष्यनुभवेति** । कर्तृकर्मणोरभेदावगाहिसाक्ष्यनुभवविरोधादित्यर्थः । अदृष्टबाधनमित्यस्य दृष्टबाधाभाव इत्यर्थः । दृष्टशब्दः प्रमाणपरः । तथाच प्रमाणविरोधरूपापवादाभाव इत्यर्थ इत्यभिप्रेत्याह **अदृष्टबाधनमित्यादि** । तथा चादृष्टबाधनं यत्र कर्तृकर्मणोरभेदसाधकप्रमाणविरोधो नास्ति । अभेदसाधकं प्रमाणं यत्र नास्तीति यावत् । अपवादो नास्तीत्यत्र तात्पर्यं । तत्रैव विरोधः कर्तृकर्मणोरेकत्वं विरुद्धम् । भेद एवाङ्गीकर्तव्य इत्यर्थः । यथांऽगुल्यग्रेणांगुल्यग्रस्पर्शनेऽसिधारयाऽसिधाराच्छेदे वा कर्तृकर्मणोरभेदावगाहिप्रमाणाभावाद्भेद एवाङ्गीक्रियते । प्रकृते च कर्तृकर्मणोर्भेदाङ्गीकारे मामहं जानामीत्यभेदसाधकप्रमाणविरोधसद्भावाद्भेदं परित्यज्याभेदोऽङ्गीक्रियत इति भावः ।

**सु०— अस्त्वेवमीश्वरस्य ज्ञेयत्वं, जीवस्य च स्वज्ञानित्वम् । तथाऽपि मुक्तौ तज्ज्ञानाभावः कथमनिष्ट इति चेत् । उच्यते । 'नात्मानं न परांश्चैव न सत्यं नापि चानृतम् । प्राज्ञः किञ्चन संवेत्ति तुर्यं तत्सर्वदृक् सदे'ति श्रुतौ सुप्तस्य स्वज्ञानमीश्वरज्ञानं च नास्तीत्यभिधाय मुक्तस्य तु तदस्तीत्युच्यते । अतस्तदभावः प्रमाणविरुद्ध इति कथं नानिष्टः । न केवलमेवमनिष्टप्रकरणाद्विषयभोगाभावस्यानिष्टत्वं गम्यते किन्तु विषयभोगस्यापि श्रुतिसिद्धत्वाच्चेत्याह** स इति ।

**अनु०**— सोऽश्नुते सर्वकामांश्च कामान्नी कामरूप्यथ ॥
इत्यादिश्रुतयश्चोक्तमर्थमेव वदन्ति हि ॥

अथ **मुक्तेरनन्तरमिति श्रुतिद्वयस्योपक्रमे संबध्यते** । उक्तमेवार्थं **मुक्तस्य विषयभोगसद्भावम् । अत एव मात्राभिरसंसर्ग इति व्याख्यानमसदेवेति ॥**

**शे०— नास्तीत्यभिधायेति** । नात्मानमित्यत्रात्मशब्देन जीवस्य, न परांश्चेत्यत्र परशब्देनेश्वरस्याप्यभिप्रेतत्वादिति भावः । यद्यप्यत्र प्राज्ञतुर्ययोरेवाज्ञानज्ञाने कथ्येते न सुप्तस्य स्वज्ञानमीश्वरज्ञानं वेति न प्रकृतसङ्गतिरित्याभाति । तथाऽपि संवेत्तीत्यस्य सर्वदृगित्यस्य च संवेदयति सर्वं दर्शयतीत्यर्थतया तद्भाष्ये व्याख्यातत्वेन स्वज्ञानलाभात्प्रकृतसङ्गतिः । अत्र सुप्तौ जीवस्य स्वज्ञानाभावोक्तिर्विशेषाकारेण स्वज्ञानाभावाभिप्रायेणैव न तु सर्वथा । तस्याप्यहमिति स्वज्ञानवत्त्वात् । अत एवैतद्वाक्यव्याख्यानावसरे माण्डूकभाष्ये 'जीवकालतमो विना । सुप्त्यवस्थां सुखं चापि विना नान्यत्प्रदर्शयेदि'ति जीवज्ञानं सुप्त्यवस्थायामुक्तम् । अन्यथा तद्विरोधप्रसङ्गादिति ध्येयम् । मुक्तौ विषयभोगस्य श्रुतिसिद्धताया भाष्यारूढतां दर्शयितुमथशब्दस्य श्रुत्यन्तर्गतत्वभ्रान्तिं च परिहर्तुं तदर्थकथनपूर्वकं तत्संबन्धं च दर्शयति ॥ **अथ मुक्तेरनन्तरमिति ॥ अत एवेति** । श्रुत्यन्तरे भोगस्योक्तत्वादेवेत्यर्थः ॥

स०— अङ्गीकृतं च मायावादिना भास्कारेण चात्मनो ज्ञानविषयत्वमित्याह **नात्मानमिति** । न च तुर्यस्यैव सर्वदृक्त्ववचनात् न जीवस्य तदिति वाच्यम् । तुरीयशब्देन तस्य तं प्राप्तस्य मुक्तस्य च ग्रहणेनादोषात् । **अत एव** श्रुत्यन्तरे भोगस्योक्तत्वादेव ।

**प०— नात्मानमिति** । आत्मानं परमात्मानं जीवं च परान् जीवस्वरूपतमःकालसुखेभ्योऽन्यान् संवेत्ति संवेदयतीत्यन्तर्णीतणिच् सर्वदृक् सर्वं दर्शयतीति सर्वदृक् । **इति श्रुताविति** माण्डूकश्रुतौ ॥ **अनिष्टप्रकरणादिति** । 'येनेदमखिलं वेद तं च केनविजानीयात् विज्ञातारं च केन विजानीयादि'ति वाक्यद्वयोक्तापादनस्यानिष्टत्वसमर्थनेन तत्साहचर्यरूपप्रकरणादित्यर्थः ॥ **अत एवेति** । (भोगस्य श्रुति)विषयसंसर्गसद्भावस्य श्रुत्यन्तरसिद्धत्वादेव । मात्रासंसर्गस्त्वस्य भवतीति माध्यन्दिनश्रुतिवाक्ये पूर्वोक्ते मात्राभिः रूपादिविषयैः संसर्गो भोगलक्षणः इति सिद्धान्तीयव्याख्यानं विना मात्राभिर-

संसर्गो भोगाभाव इति परकीयव्याख्यानम् 'येनेदमखिलं वेदे'त्येतदवतारिकायामुक्तमसत् श्रुतिविरोधप्राप्तेरिति भावः । क्वचिदित्यस्यार्थो अभिधानादाविति ।

**या० — नास्तीत्यभिधायेति** । नात्मन इत्यत्रात्मशब्देन जीवस्य, न परांश्चेत्यत्र परशब्देनेश्वरस्यापि अभिप्रेतत्वादिति भावः । अत्र संवेत्तीत्यस्य सर्वदृगित्यस्य च संवेदयति सर्वं दर्शयतीत्यर्थतया तद्भाष्ये व्याख्यातत्वेन प्रकृतसङ्गतिर्द्रष्टव्या । तेनात्र प्राज्ञतुरीययोरेवाज्ञानज्ञाने कथ्येते न सुप्तजीवस्येति प्रकृतासङ्गतिरिति शङ्काऽनवकाशः । अत्र स्वज्ञानाभावोक्तिर्विशेषाकारेणैव स्वज्ञानाभिप्राया । सुप्तस्याप्यहमिति सामान्यतः स्वज्ञानवत्त्वात् । अत एवैतद्वाक्यव्याख्यानसमये मांडूकभाष्ये 'तमो विना । सुप्त्यवस्थां सुखं चापि विना नान्यत्प्रदर्शयेदि'ति जीवज्ञानं सुप्त्यवस्थायामुक्तम् । अन्यथा तद्विरोधप्रसङ्ग इति ध्येयम् ।

**सु० — स्यादेतत् । यत्र हि द्वैतमिव भवतीति इवशब्देन द्वैताभावः प्रतिपाद्यते तत्कथं द्वैताभावेऽनिष्टप्रसङ्गाभिधानमेतदित्यत आह** अस्वातन्त्र्यादिति ।

**अनु० —** अस्वातन्त्र्यादिवेत्युक्तं न द्वैताभावतः क्वचित् ॥

---

**द्वैतस्यास्वातन्त्र्यमभिप्रेत्य द्वैतमिवेत्युक्तम् । न तु द्वैताभावमभिप्रेत्य । कुतः । क्वचिदभिधानादाविवशब्दस्याभाववाचिताऽनुक्तेरित्यर्थः । अस्वातन्त्र्यं चात्र स्वरूपमात्रमुक्तम् ।**

**इवशब्दस्याभावार्थत्वे बाधकं चाह** आत्मैवेति ।

आत्मैवाभूदिति ह्यस्मादविशेषप्रसङ्गतः ॥

**इवशब्दस्याभावार्थत्वे द्वैतमिव भवतीत्यस्य द्वैतं नास्तीत्यर्थः स्यात् । यत्र त्वस्य सर्वमात्मैवाभूदित्यस्य तावद् द्वैताभावोऽर्थः स्फुट एव । ततस्तस्मादस्य विशेषो न भवेत् । तथा च द्वैताभावे इतर इतरं पश्येत् । द्वैताभावे केन कं पश्येदिति वाक्यद्वयार्थः प्रसज्येत । ततश्च उन्मत्तवाक्यता श्रुतेरापद्यत इति ।**

**नन्विवशब्दस्यास्वातन्त्र्यवाचित्वं कुत इत्यत आह** अस्वातन्त्र्येति ।

अस्वातन्त्र्योपमाभेदभेदेष्विव उदीरितः ॥
शब्दतत्त्व इति प्रोक्तं

**अभेदभेदेति प्रतियोगिद्वयोपलक्षणम् । इवान्त एकस्मिन्नुक्ते तत्प्रतियोगी द्वितीयोऽपि लभ्यत इत्यर्थः ।**

**नन्वस्माकमुपमायामेवेवशब्दः । द्वैताभावस्त्वर्थसिद्धः । यथा गौरिव गवय इत्युक्ते गवयस्य गोत्वाभावोऽवगम्यत इति चेत् । तर्हि द्वैतसदृशं किं तदिति वाच्यम् । कल्पितं द्वैतमिति चेन्न । तस्य सत्ताभावेन भवतीत्यनुपपत्तेः । भवनमपि तस्य काल्पनिकमिति चेत् । एवं तर्हि यदि द्वैतदर्शनं स्यादिति स्यात् । तथा चेतर इतरं पश्यतीत्येतदपि तदेवेति न हेतु-हेतुमद्भावोऽवकल्पत इति ।**

**शे०**— नन्वस्वातन्त्र्यार्थत्वेऽपीवशब्दस्य न व्याप्तिकथनेऽस्वातन्त्र्यस्योपयोग इत्यत आह **अस्वातन्त्र्यं चेति ॥ ततश्चेति** । व्याघातादित्यर्थः । ननु भेदाभेदरूपविरोधिद्वयमात्रस्यैवेवशब्दार्थ-त्वेऽन्यत्र 'इवोभये च सादृश्य' इति सामान्यत एव प्रतियोगिद्वयस्येवशब्दार्थतावचनं 'प्रविविक्ताहार इवैव भवत्यस्माच्छारीरादात्मन' इति हरेः सूक्ष्माशनप्रतिपादके वाक्येऽवतारेषु स्थूलमपि भुङ्क्त इतीव-शब्दव्याख्यानं चानुपपन्नं प्रसज्यत इत्यत आह **प्रतियोगिद्वयोपलक्षणमिति** । विरोधिद्वयोपलक्षण-मित्यर्थः । नन्विवशब्दस्यैव यदि प्रतियोगिद्वयं वाच्यं तर्हि द्वैतमिव भवति नानेव पश्यतीत्यादाविव-शब्देनैव द्वैताद्वैतयोर्भेदाभेदयोश्च प्राप्तत्वेन द्वैतमित्यादेर्वैयर्थ्यमित्यत आह **इवान्त इति ॥ लभ्यत इति** । इवशब्देनेति शेषः । यदुक्तं पूर्वपदेन तत्प्रतियोगिनि द्वितीये इवशब्दवृत्तेरिति भावः ॥ **उपमायामेवेति** । तदर्थत्वं चोक्ताभिधानसिद्धमेवेति द्वैताभाववाचित्वं व्यावर्तयति । ततश्च न क्वचिद-भिधानादाविवशब्दस्याभाववाचित्वानुक्तिरिति दोष इति भावः । तर्हि कथमस्य द्वैताभावसाधक-तयोपन्यास इत्यतोऽर्थतस्तत्सिद्ध्यभिप्रायेणेत्याह **द्वैताभाव इति** । शक्त्योपमार्थस्यापीवशब्दस्यार्थतो द्वैताभावसाधकत्वं कथमित्यतस्तत्रानुरूपं दृष्टान्तमाह **यथेति** । सादृश्यसंबंधिनो द्वितीयस्यानिरूपणान्न सादृश्यार्थत्वमपि तस्येत्याह **तर्हीति** । कल्पितद्वैतस्यैव तत्प्रतिसंबन्धित्वान्न तदर्थत्वानुपपत्तिरिति शङ्कते **कल्पितमिति ॥ एवं तर्हीति** । द्वैतवत्तद्भवनस्यापि कल्पितत्व इत्यर्थः । इष्टापत्तिमाशङ्क्याह **तथा चेति** ।

**स०**— नन्वस्वातन्त्र्यार्थत्वेपीवशब्दस्य, प्रकृतेऽस्वातन्त्र्यकथनस्य, क्वोपयोग इत्यत आह **अस्वातन्त्र्यमिति ॥ ततश्चेति** । व्याघातादित्यर्थः । प्रविविक्तभुगिवैष भवति । व्यतिषक्त इव वै पाप्मनेत्यत्रेवशब्देनावतारे स्थूलभोगस्य मुक्तौ पापाव्यतिषङ्गस्य चोक्तत्वात्तत्संग्रहाय व्याचष्टे **प्रतियोगि-द्वयोपलक्षणमिति** । अभेदभेदेतिप्रतियोगिद्वयोपलक्षणम् । **यथोक्तं** गीतातात्पर्य इति शेषः ।

**प०**— तत्राकाङ्क्षां पूरयति **अभाववाचिताऽनुक्तेरिति ॥ स्वरूपमात्रमिति** । युक्ति-र्नोक्तेत्यर्थः । यद्वाऽस्वातन्त्र्यमेवार्थ इत्युपेत्य नोक्तमित्यर्थः । न तु व्याप्त्युपयोगितयोक्तमिति वार्थः । व्यभिचाराभावात् । भेदाभेदमात्रपरत्वभ्रमनिरासाय विरोधिद्वयमात्रग्रहणायाह **प्रतियोगिद्वयोप-**

**लक्षणमिति** । ननु भेदाभेदादिरूपप्रतियोगिवाचित्वे द्वैतमिवेत्यत्रेवशब्देनैव भेदाभेदयोर्लाभात्पुनर्द्वैतमिति व्यर्थमित्यत आह **इवान्त इति** ॥ **अस्माकमिति** । द्वैताभाववादिनामित्यर्थः ।

**या० — अभाववाचिताऽनुक्तेरिति** । कचिदित्यनन्तरं एतावदध्याहार्यमिति भावः । ननु भेदाभेदरूपविरोधिद्वयमात्रस्येवशब्दार्थत्वेऽन्यत्र 'इवोभये च सादृश्य' इति सामान्यत एव प्रतियोगिद्वयस्येवशब्दार्थतावचनं, 'प्रविविक्ताहारतर इवैव भवत्यस्माच्छरीरादात्मन' इति **हरेः** सूक्ष्माशनप्रतिपादके वाक्ये अवतारेषु स्थूलमपि भुंक्त इतीवशब्दव्याख्यानं चानुपपन्नमित्यत आह **प्रतियोगिद्वयोपलक्षणमिति** । विरोधिद्वयोपलक्षणमित्यर्थः । नन्विवशब्दस्यैव प्रतियोगिद्वयं यदि वाच्यं तर्हि नानेव पश्यतीत्यादाविवशब्देनैव भेदाभेदयोः प्राप्तत्वेन नानेत्यादीनां वैयर्थ्यमित्यत आह **इवान्त इति** । ततश्च यत्र द्वयोर्विरुद्धयोर्मध्ये यदेकमिवशब्दशिरस्कमुच्यते तत्र तद्विरुद्धमपरमिवशब्देनोच्यत इति विवक्षितत्वान्नोक्तदोष इति भावः ॥

**श्री० -- अस्वातन्त्र्यं चात्रेति** । द्वैतमिवेति श्रुतावित्यर्थः ॥ **स्वरूपमात्रमिति** । भेद ईश्वराधीन इति भेदस्येश्वराधीनत्वरूपं स्वरूपमात्रमेवोक्तमित्यर्थः ॥ **ततस्तस्मादिति** । ततः कारणात् । तस्मादात्मैवाभूदिति वाक्यादस्य यत्र हि द्वैतमिवेति वाक्यस्य विशेषो न भवेदेकार्थत्वादित्यर्थः । ततोऽपि किमित्यत आह **तथा चेति** । यत्र हि द्वैतमिवेति वाक्यार्थमनुवदति । तथाच **द्वैताभाव इति** । यत्र त्वस्येति वाक्यार्थमनुवदति **द्वैताभाव इति** । तथाच यत्र त्वस्य सर्वमात्मैवाभूदित्यस्यार्थो द्वैताभाव इति ॥ **केन कं पश्येदितीति** । न केनापि किमपि पश्यति । इतर इतरं न पश्यतीति यावदित्यर्थः ॥ **गोत्वाभाव इति** । तथाच तत्सादृश्यमवगम्यत इत्यर्थः । सादृश्यस्य भेदगर्भत्वादेवमुक्तमिति ज्ञेयम् ॥ **किं तदिति** । द्वैतमिवेत्युक्ते द्वैतसदृशं किमित्यर्थः ॥ **कल्पितमिति** । वास्तवद्वैतसदृशं कल्पितं द्वैतमित्यर्थः । **तस्य** कल्पितद्वैतस्य । **काल्पनिकं** प्रातीतिकम् । **तदेव** द्वैतदर्शनमेव । तथाच पुनरुक्तिरिति भावः ।

**सु० — न प्रेत्य संज्ञाऽस्तीति वाक्यस्य मुक्तो न जानातीत्येवार्थमङ्गीकृत्याविनाशीत्यादिवाक्यान्य(प्य)न्यथा व्याकुर्वतो बाधकमाह** मैत्रेयीति ।

**अनु० —** मैत्रेय्युक्तोत्तरं च किम् ॥

**न प्रेत्य संज्ञाऽस्तीति वाक्यं श्रुत्वा मैत्रेय्योक्तमत्रैव मा भवानित्यादि । तत्तावन्नाहृदयं निर्दलाक्षेपकरणेऽसुज्ञत्वप्रसङ्गात् । ततः प्रज्ञानघन इत्यात्मनो ज्ञानस्वरूपत्वमभिधायेदानीं ज्ञानाभावं वदतस्तव वाक्यं मोहकमित्यभिप्रायः कल्प्यः । अपुरुषार्थत्वप्रसङ्गो वा । यथोक्तं**

**'संज्ञानाशो यदि भवेत्किं मुक्त्या नः प्रयोजनम् । मोहं मां प्रापयामास भवानत्रेति चोदितः' इति । अन्यथाव्याख्याने मैत्रेय्युक्तं निरुत्तरं प्रसज्येत । न ह्येतैर्वाक्यैः स्ववचनव्याघातः परिहृतो नापि पुरुषार्थता समर्थितेति ।**

शे० **अन्यथा व्याकुर्वत इति** । वस्तुस्थितिकथनमेतत् ॥ तथा हीत्यादिपूर्वोक्तप्रकारेण व्याकुर्वत इत्यर्थः ॥ **नाहृदयमिति** । न निरभिप्रायं ॥ **मोहकमिति** । व्याहतार्थप्रतिपादकत्वान्मोहकमिति भावः । अभिप्रायः कल्प्य इत्यत्र त्वद्रीत्येति शेषः । तत्त्वनिर्णयटीकायामस्याप्यभिप्रायस्याशङ्क्य दूषितत्वात् । अपुरुषार्थत्वप्रसङ्गो वेत्यत्र कल्प्य इति वर्तते । मद्रीत्येति शेषः । अपुरुषार्थत्वप्रसङ्गस्य स्वसिद्धान्तत्वं गीतातात्पर्यवाक्योदाहरणेन समर्थयते **यथोक्तमिति** ॥ **अन्यथेति** । यत्र हीत्यस्य वस्तुस्थितिकथनत्वे मैत्रेय्युक्तस्य स्वव्याघातादेर्निरुत्तरत्वप्रसङ्गमेवोपपादयति **न हीति** ।

प०-- **अन्यथा व्याकुर्वत इति** । आशङ्क्यास्येत्येतदवतारिकायामुक्तदिशेति भावः । यद्वा येनेदमखिलं वेदेत्येतदवतारिकायामुक्तदिशेति भावः ॥ **कल्प्य इति** । त्वयेति योज्यम् । सिद्धान्तदिशाऽऽह **अपुरुषार्थत्वेति** । तत्रैव संमतिमाह **(यथोक्त)तदुक्तमिति** । बृहद्भाष्ये ॥ **सांख्याद्यभिमतमोक्षस्याप्रामाणिकत्वोक्तिः** ॥

या०— **अन्यथा व्याकुर्वत इति** । वस्तुकथनमेतत्तथाहीत्यादिना पूर्वोक्तप्रकारेण व्याकुर्वत इत्यर्थः । अभिप्रायः कल्पित इत्यत्र पररीत्येति शेषः । विष्णुतत्त्वनिर्णयटीकायामस्याभिप्रायस्याशङ्क्य दूषितत्वात् । स्वरीत्या वाऽऽह **अपुरुषार्थताप्रसङ्गो वेति** ।

श्री०— **अन्यथा व्याकुर्वत इति** । वस्तुस्थितिकथनपरत्वेनेत्यर्थः ॥ **नाहृदयमिति** । अभिप्रायशून्यं न भवतीत्यर्थः । **असुज्ञत्वं** सम्यग्ज्ञानित्वाभावः । अविवेकित्वमिति यावत् । अपुरुषार्थत्वप्रसङ्गो वाऽभिप्रायः कल्प्य इत्यत्र ज्ञापकमाह **यथोक्तमिति** ॥ **किं मुक्त्या नः प्रयोजनमिति** । 'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेदि'ति भावः । इति चोदिते इत्यस्य याज्ञवल्क्यः प्रियामाहेत्युत्तरेण संबन्धो द्रष्टव्यः । नापीत्यनन्तरं ज्ञानाभावस्येति शेषः । समर्थितेत्यनन्तरं याज्ञवल्क्येनेत्यर्थः ।

सु०— **एवं सांख्यनैयायिकाद्यभिमतस्य मोक्षस्याप्रामाणिकत्वमभिधाय; यदुक्तं मोक्षस्यापुरुषार्थत्वप्रसङ्ग इति तत्प्रपञ्चयति सुखादीति** ।

**अनु०**— सुखादिधर्महानौ तु मुक्तेः किं च प्रयोजनम् ॥

**सुखादिधर्महानौ मुक्तित्वेनाङ्गीकृतायामिति शेषः । तुशब्दः स्वपक्षाद्विशिनष्टि । परस्यापाद्यमानो दोषः स्वमते नास्तीत्याशयः । मुक्तेरिति संबन्धमात्रे षष्ठी । किमाक्षेपे ।**

**चशब्दोऽप्रामाणिकत्वेन समुच्चयार्थः** । **प्रयुज्यते प्रवर्त्यते पुरुषोऽनेनेति प्रयोजनम्** । **मुक्तेः** प्रयोजनं किमिति । **मुक्त्यर्थे पुरुषं प्रवर्तयत्किमपि नास्तीत्यर्थः** ।

**शे०— यदुक्तमिति** । 'आत्मप्रिहयानाय को यतेते'त्यादिनेति शेषः । तुशब्दोक्तं विशेषमेव दर्शयति **परस्येति** ॥ **आपाद्यमानो दोष** इति । अर्थ्यत्वाभावलक्षण इत्यर्थः । स्वमते मुक्तेरिष्टप्राप्त्यादिरूपत्वेनार्थ्यत्वसंभवादिति भावः । कर्तरि कर्मणि वा षष्ठीपरिग्रहेऽनन्वयादाह **मुक्तेरितीति** । यद्वा मुक्तिसाध्यं प्रयोजनमिति प्रतीतिनिरासायाह **मुक्तेरितीति** ॥ **समुच्चयार्थ** इति । अप्रामाणिकत्वेन सहार्थ्यत्वाभावस्य समुच्चयार्थ इत्यर्थः । यदीत्युत्तरग्रन्थेऽर्थ्यत्वप्रयोजकतयाऽनिष्टनिवृत्तिरूपताया आशङ्क्य निराकरणादत्र प्रयोजनशब्दोऽर्थ्यत्वप्रयोजकपर इत्यभिप्रेत्य तत्परतया प्रयोजनशब्दं व्याचष्टे **प्रयुज्यत** इति । षष्ठ्यर्थसंबन्धमुपदर्शयन् वाक्यार्थमाह **मुक्तेरित्यादिना** ॥ **मुक्त्यर्थ** इति । तथा च मुक्तिजनकप्रवृत्तिमत्पुरुषेष्यमाणत्वमेव संबन्ध इति भावः ॥ **किमपीति** । इष्टप्राप्तिरूपत्वमनिष्टनिवृत्तिरूपत्वं चेत्यर्थः । इष्टप्राप्तिरूपतायाः परेणैवानङ्गीकृतत्वादनिष्टनिवृत्तिरूपतायाश्च वक्ष्यमाणरीत्या असंभवादिति भावः ।

**स०**— विशेषार्थत्वमाह **परस्येति** ॥ **मुक्तेरिति** । कर्तरि कर्मणि वा षष्ठीपरिग्रहेऽनन्वयादिति भावः ।

**प०— यदुक्तमिति** । 'हेयत्वादप्रियस्ये'त्यत्रेति भावः ॥ मुक्तिजन्यप्रयोजनमितिधीनिरासायाह **संबन्धमात्रे षष्ठीति** । न केवलं प्रागुक्तदिशाऽप्रामाणिकाः अपित्वपुमर्थश्चेति समुच्चये चशब्द इत्याह **चशब्द** इति । संबन्धमात्र इत्युक्तस्य विवरणम् **मुक्त्यर्थ** इति ।

**या०**— मुक्तिसाध्यं प्रयोजनमिति प्रतीतिनिरासायाह **संबन्धमात्र** इति । तमेव संबन्धं दर्शयति **मुक्त्यर्थ** इति । तथा च मुक्तिजनकप्रवृत्तिमत्पुरुषेष्यमाणत्वमेव संबन्ध इति भावः ॥ **दुःखोपादनेति** । संसारस्यैवोपादानप्राप्तेरित्यर्थः ।

**सु० — द्विविधं प्रयोजनम्** । **इष्टावाप्तिरनिष्टनिवृत्तिश्च** । **तत्र यद्यपि मुक्तिरिष्टप्राप्तिरूपा न भवति तथाऽप्यनिष्टनिवृत्तिरूपा भवत्येव** । **अतः पुरुषेणार्थ्यत इत्याशङ्कते** यदीति ।

**अनु०**— यद्यर्थो दुःखहानिः स्यात्

**दुःखहानिरूपा मुक्तिः पुरुषस्यार्थोऽर्थनीयः स्यादिति यदि ब्रूषे** । **अत्रोच्यते** । **भवत्यनिष्टनिवृत्तिः पुरुषार्थः** । **मुक्तिश्च समस्तदुःखहानिस्तथाऽपि न पुरुषार्थः कथमित्यत आह अनर्थ** इति ।

अनर्थः सुखनाशनम् ॥

**सुखनाशरूपोऽनर्थोऽप्यस्ति यतः ।**

**इदमुक्तं भवति । केवलस्य दुःखस्यात्यन्तिकी निवृत्तिर्भवति पुरुषार्थः, इयं तु दुःखवत् सुखस्याप्यात्यन्तिकी निवृत्तिरिति कथं पुरुषार्थः । अनिष्टनिवृत्त्याशया प्रवृत्तौ इष्टनिवृत्तिभिया निवृत्त्यापत्तेः । दुःखशबलसुखहानौ सुखशबलदुःखोपादानप्राप्तेश्च ।**

**शे०**— अनर्थ इत्याद्युत्तरग्रन्थे परिहारत्वज्ञापकाभावात् साक्षात्परिहारत्वानुपपत्तेश्चासङ्गतिमाशङ्क्य साक्षात्परिहारत्वाभावेऽपि तदुपपादकत्वान्नासङ्गतिरित्यभिप्रेत्य मध्ये परिहारमध्याहृत्य तदुपपादकतयोत्तरग्रन्थं सङ्गमयति **अत्रोच्यत इति** । एतद्वाक्यार्थस्योक्तार्थोपपादकतया मूलारूढतासिद्ध्यर्थमपेक्षितं पूरयति **अप्यस्ति यत इति** । ननु सुखनाशरूपत्वेऽप्यनिष्टदुःखनिवृत्तिरूपत्वान्मुक्तेः पुरुषार्थत्वं भविष्यत्येव । सुखस्य दुःखशबलत्वेन हेयत्वान्न तन्नाशेनेष्टनाशरूपत्वमपीत्यत आह **इदमुक्तं भवतीति** ॥ **दुःखोपादानेति** । ततश्च नानिष्टनिवृत्तिरूपत्वमपि मुक्तेरिति भावः ।

**श्री०**— यदि विषसंपृक्तमधुवत् दुःखमिश्रितत्वात्सुखमनुपादेयं स्यात्तन्निवृत्तिः पुरुषार्थः स्यादिति यावत् । तर्हि सुखस्योपादेयत्वेन तन्मिश्रितत्वाद्दुःखशब्दोदितं संसारस्याप्युपादेयत्वं स्यादित्याह **दुःखशबलेति** । दुःखमिश्रितेत्यर्थः ।

---

**सु०**— **यदत्रोक्तं 'यस्य दुःखमुपादेयं तस्य हेयं किमुच्यताम् । हेयहीनस्य का मुक्तिः केन चाप्युपदिश्यते' इति, तदिदमसङ्गतम् । न हि वयं दुःखस्योपादेयत्वमुपपादयामः । किन्तु समव्ययफलत्वेन विनिगमने कारणाभावान्न प्रवृत्त्युपपत्तिरिति ब्रूमः । यथोक्तम् 'असत्यानि दुरन्तानि समव्ययफलानि च । अशक्यानि च वस्तूनि नारभेत विचक्षणः' इति । अङ्गीकृत्यैव समव्ययफलत्वमुक्तम् । वस्तुतस्तु आयादपि व्ययो गरीयानित्याह** तयोश्चेति ।

**अनु०** -- तयोश्च दुःखहानाद्धि सुखनाशोऽधिको भवेत् ॥

**सुखदुःखहानयोर्मध्ये । न हि राजादयो राज्याद्यपगमे दुःखहानेन सुखहानव्यथां समादधति । ततो निवृत्तिरेव मुक्तेरिति भावः ।**

**शे०**— **यदत्रोक्तमिति** । निबन्धकृतेति शेषः ॥ **यस्य दुःखमिति** । यद्यप्यत्र यस्य सुखं हेयं तत्किमुपादेयमिति तुल्यम् । न च दुःखनिवृत्तिरेवोपादेया । तर्हि केवलं दुःखं हेयं सुखशबलं तूपादेयमित्यपि तुल्यम् । तथाऽपि सुखे सत्युत्तरकालसुखासंभिन्नदुःखस्यावश्यकत्वेन केवल दुःखस्य हातुमशक्यतया केवलदुःखहानार्थं प्रवृत्तः शरीरादिदुःखहेतुनिवृत्त्याऽर्थतः सुखनिवृत्तिमप्यासादयतीत्यत्र तात्पर्यमित्यवधेयम् ॥ **समव्ययफलत्वेनेति** । मुक्तेरात्यन्तिकदुःखनिवृत्तित्ववत्सुखनिवृत्ति-

त्वस्याप्यङ्गीकृतत्वात्समव्ययफलत्वेन **विनिगमने** कारणाभावात् न पुरुषार्थत्वम् । ततश्च न प्रेक्षावत्प्रवृत्त्यङ्गत्वम् । अनिष्टनिवृत्त्याशया प्रवृत्तिवदिष्टनिवृत्तिभयेन निवृत्तेरपि प्रसङ्गादित्येव **ब्रूमो वयम्** । न पुनर्दुःखस्याप्युपादेयतामिति नोक्तदोष इति भावः । उक्तमर्थं नीतिशास्त्रसंमत्या दर्शयति **यथोक्तमिति** । **दुरन्तानि** दुःखोत्तराणि, समे व्ययफले येषां तानि समव्ययफलानि, अशक्यानि साधकप्रयत्नासाध्यानि 'व्यसनानि दुरन्तानीति', 'असत्यानि दुरन्तानि' च चिरन्तननिबन्धादिग्रन्थेषु पाठद्वयस्यापि दर्शनादिह टीकायां पाठद्वयमपि नायुक्तम् । अनर्थः सुखनाशनमित्यादिना समव्ययफलत्वस्योक्तत्वात्तयोश्चेत्यादिनोत्तरत्र तदभावोक्तेर्विरुद्धत्वमाशङ्क्य परिहरति **अङ्गीकृत्यैवेति** ।

प०— **यदत्रेति** । दुःखस्योपादानविषये मुक्तिर्नेत्युक्तमित्यर्थः । तद्वाक्यं पठति **यस्येति** । नीतिवाक्यं पठति **असत्यानीति** । दुरन्तानि उत्तरावधिशून्यानि ॥ **दुःखहानेनेति** । राज्यव्यापारविक्षेपनिमित्तदुःखहानेन भोगनिमित्तसुखहानेत्यर्थः । मुक्तेरिति पञ्चमी ।

श्री०— **दुःखं** संसारः । **उपपादयामः** साधयामः ॥ **समव्ययफलत्वेनेति** । अनिष्टनिवृत्त्याशया प्रवृत्तस्येष्टनिवृत्त्यापत्त्या समव्ययफलत्वमित्यर्थः ॥ **विनिगमन इति** । दुःखमिश्रितत्वेन सुखस्यापुरुषार्थत्वे सुखमिश्रितत्वेन दुःखस्याप्युपादेयत्वप्राप्त्या विनिगमने कारणाभावादित्यर्थः । **ब्रूमः** आपादयामः । अत एवोक्तं इष्टनिवृत्तिभयान्निवृत्त्यापत्तेरिति । दुःखोपादानप्राप्तेश्चेति द्रष्टव्यम् ॥ **अङ्गीकृत्यैवेति** । दुःखहानिसुखहान्योः साम्यमिति शेषः ॥ **आयादिति** । दुःखहानिरूपादायादपीत्यर्थः । **व्ययः** सुखहानिरूपः । राजादय इत्यादिपदेन धनिकानां ग्रहणम् । राज्यादीत्यादिपदेन धनग्रहणम् ॥ **दुःखहानेनेति** । राज्यपालनस्य धनसंरक्षणस्य च बहुदुःखरूपत्वादित्यर्थः ॥ **मुक्तेर्निवृत्तिरेवेति** । मुक्तेः सकाशान्निवृत्तिरेव स्यादित्यर्थः ।

सु०— **यत्र निवर्तमानं दुःखमल्पीयः । सुखं तु महत्तत्रैवमेतत । इह तु महद्दुःखं निवर्तते सुखं त्वल्पीयस्तत्कथं न पुरुषार्थत्वम् । यथोक्तम् । 'यस्तु घनतरदुःख(तिमिर)निरन्तरात्संसारकान्तारात्सुखखद्योतिकासु द्योतमानास्वपि बिभेति, तं प्रत्ययं निरस्ततस्करतया सुगमो मार्ग उप(दिश्यत)दर्शित' इति** । तत्राह प्राप्यापीति ।

अनु०— प्राप्यापि दुःखं सुमहत्सुखलेशाप्तये जनः ॥
यतते सुखहानौ हि को मोक्षाय यतेत्पुमान् ॥

**यतो जांघिकादिर्जनः सुमहद्दुःखं प्राप्यापि सुखलेशाप्तये यतते । तस्मादल्पस्यापि सुखस्य हानौ महतोऽपि दुःखस्य मोक्षाय कः पुमान्यतेत न कोऽपि । अभ्युपगमवादश्चायम् ।**

**न हि सांसारिकसुखस्य दुःखापेक्षयाऽल्पत्वं प्रमितम् । कस्मिंश्चन जन्मन्ययं (दरिद्रो) (दुर्भगो) दुःखितो भवति कस्मिंश्चित्सार्वभौमः कदाचिन्नरकमनुभवति कदाचित्स्वर्गम् । या च मोक्षशास्त्रेषु सांसारिकसुखनिन्दा सा निरस्तसमस्तदुःखं मोक्षगतं परमानन्दमपेक्ष्याल्पत्वाभिप्रायेणेति ।**

**शे** — शङ्कते **यत्रेति ॥ एवमेतदिति ।** आयादपि व्ययस्य गरीयस्त्वमित्यर्थः ॥ **तत्कथमिति ।** अपुरुषार्थत्वहेतो समव्ययफलत्वस्याभावान्निवृत्तिमात्रहेतोश्च सुखनाशाधिक्यस्यैवाभावात्कथं न पुरुषार्थत्वं कथं च न प्रवृत्त्यङ्गत्वमित्यर्थः । अत्रार्थे निबन्धनवाक्यं संमतित्वेन पठति **यथोक्तमिति ।** इह टीकायां दुःखतिमिरनिरन्तरादित्येव मूलपाठः । क्वचिद्दुःखनिरन्तरादिति पाठः । तत्रापि दुःखतिमिरनिरन्तरादित्येवार्थो ध्येयः । निरस्ततमस्तयेति च श्लिष्टः पाठः । **जांघिकादिरिति ।** 'जंघालो(ऽतिजवस्तुल्यौ) जंघाकरिकजांघिकावि'त्यभिधानेन यो जंघामुपजीव्य शीघ्रं गच्छति । एतादृशः शीघ्रगामी नरो जांघिकादिर्जन इत्यर्थः । मूले हिशब्दो यस्मादित्यर्थः । यच्छब्दश्रवणात्तस्मादित्यस्य लाभ इत्यभिप्रेत्य यत्तस्मादिति योजितमित्यवधेयम् । बहुलमेतन्निदर्शनमिति स्मरणाद्यतेदिति परस्मैपदमित्यादि समाधानं मनसि निधायाह **पुमान्यतेतेति ।** सांसारिकदुःखापेक्षयाऽल्पत्वमुक्तं तद्वास्तवमिति भ्रमं परिहरति **अभ्युपगमेति ।** ननु चैवं सांसारिकसुखस्य दुःखापेक्षया महत्त्वे कथं मोक्षशास्त्रे तस्याल्पत्वोक्तिरित्यत आह **या चेति ।**

**स०** — **जांघिकादिरिति ।** 'जंघालोतिजवस्तुल्यौ जंघाकरिकजांघिकावि'त्यभिधानेन जंघाभ्यामुपजीव्य गच्छत्येतादृशशीघ्रगामी नरः जांघिकादिर्जन इत्यर्थः ।

**प०** — शङ्कते **यत्रेति ॥ एवमेतत्** निवृत्तिरित्येतदेवमेवेत्यर्थः । **निरन्तरात्** निबिडात् **कान्तारात्** दुर्गममार्गात् **'कान्तारं वर्त्म दुर्गममि'**त्यभिधानात् ॥ **निरस्ततस्करतयेति ।** दस्युनिबिडे कान्तारे गन्तुं बिभ्यतस्तस्करनिरासेन सुगमो मार्गो लोके दयालुनोपदिश्यते तथेत्यर्थः । **जांघिकादिर्जन इति ।** जङ्घाभ्यां जीवति यो जनः स जाङ्घिकः । जङ्घापदात् जीवतीत्यर्थे चतुर्थाध्यायान्त्यपादस्थेन वेतनादिभ्यो जीवतीति सूत्रेण ठकि सति तस्येकादेशादिवृद्धियस्येतिलोपेषु रूपसिद्धेः । वैतनिक इत्यादिवत् । अन्यवार्तां राजानं प्रति वा राजवार्तामन्यं प्रति वा राजपत्रादिकं वा इतस्ततो नेतुं नित्यं बहुयोजनं सञ्चरन्पुरुष इत्यर्थः । आदिपदेन समुद्रे प्लवेन वाणिज्यं कुर्वन्वणिक् तस्करः सेवकश्चेत्येवमादिर्ग्राह्यः ॥ **या चेति ।** 'धर्मार्थकामास्सर्वेपि न नित्या मोक्ष एव तु । नित्यस्तस्मात्तदर्थाय यतेत मतिमान्नर' इति । 'अनित्यत्वात्सदुःखत्वान्न धर्माद्याः परं सुखम् । मोक्ष एव परानन्दः संसारे परिवर्ततामित्यादौ च निन्देत्यर्थः ।

या०— **जांघिकादिरिति** । जंघाभ्यां जीवति यः स जांघिकः । एकस्मिन्दिवसे बहुयोजनपरिमितमार्गगमनशीलो नरस्तदादिर्जनेत्यर्थः ।

श्री०— शङ्कते **यत्रेति** ॥ **एवमेतदिति** । इष्टनिवृत्तिभयान्निवृत्त्यापत्तेरिति भवद्भिरापादितं समव्ययफलत्वमस्त्वित्यर्थः । अल्पीयो निवर्तते ॥ **न पुरुषार्थत्वमिति** । दुःखनिवृत्तेरिति शेषः । उक्तार्थे स्वाचार्यवाक्यसंमतिमाह **यथोक्तमिति** । अत्र घनतरेत्यनेन दुःखस्य महत्त्वमुक्तं, संसारसुखस्य खद्योतिकासमत्वोक्त्याऽल्पीयस्त्वमुक्तं ज्ञातव्यम् ॥ **जांघिकादिरिति** । 'जांघिकः शीघ्रपादवानि'त्यमरः । कालारीत्यपभ्रष्टभाषा ॥ **अभ्युपगमवाद इति** । प्राप्यापीति मूलेन दुःखस्य महत्त्वं सुखस्य लेशशब्देनाल्पीयस्त्वकथनं चाभ्युपगमवाद इत्यर्थः । आमुष्मिकापेक्षयाऽऽह **कदाचिन्नरकमिति** । ननु सांसारिकसुखस्याल्पीयस्त्वाभावे 'अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेते'त्यादिना मोक्षशास्त्रे उपनिषदादौ तन्निन्दाकरणं न स्यादिति चेत्तत्राह **या चेति** ।

सु०— **महादुःखहानादल्पं सुखं गरीय इत्येतत्प्रकारान्तरेणोपपादयति** अल्पाच्चेति ।

**अनु**०— अल्पाच्च सुखनाशाद्धि बिभेत्यतितरां जनः ॥
महच्च दुःखमाप्नोति सुखनाशनिवृत्तये ॥

---

**(हानस्या)नाशस्याल्पत्वं प्रतियोग्यल्पत्वनिमित्तम् । अल्पस्यापि सुखस्य (हानादि)नाशादिति यावत्** । सुखनाशनिवृत्तय इति । **प्रसक्तस्य सुखनाशहेतोर्निवृत्तय इत्यर्थः । उदाहरणानि तु लोके स्पष्टान्येव कथं तर्हि मधुविषसंपृक्तान्न(भोजन)परित्याग इति चेत् । बहुतरसुखहानिप्राप्तेरिति ब्रूमः । अन्यथा परेणापि व्यवस्थायाः कर्तव्यत्वात्** ।

शे०— नाशस्योत्कर्षापकर्षशून्यत्वादपकर्षरूपाल्पत्वोक्त्यनुपपत्तिमाशङ्क्याह **हानस्येति** ॥ **प्रतियोगिनिमित्तमिति** । प्रतियोग्यल्पत्वनिमित्तमित्यर्थः । अनेन मूले नाशशब्दो नश्यत्यनेनेति नाश इति करणसाधन इत्युक्तं भवति । नाशस्य नित्यत्वेनानिवर्त्यत्वात् तन्निवृत्त्युक्त्यनुपपत्तिमाशङ्क्याह **प्रसक्तस्येति** ॥ **कथं तर्हीति** । अल्पस्य सुखस्य पुरुषार्थत्वात्तस्य च तत्रापि सत्त्वादित्यर्थः ॥ **अन्यथेति** । बहुतरसुखहान्यननुबन्ध्यल्पसुखस्य पुरुषार्थत्वान्नातिप्रसङ्ग इत्युक्तसमाधानानभ्युपगम इत्यर्थः ॥ **व्यवस्थाया इति** । जान्घिकादावल्पस्यापि सुखस्य पुरुषार्थत्वं मधुविषयसंपृक्तान्नभोजनादौ च तस्यापुरुषार्थत्वमित्यत्र व्यवस्थापकस्यावश्यं वक्तव्यत्वादस्मदुक्तव्यवस्थापकातिरिक्तव्यवस्थापकस्याभावात् । अस्मदुक्तैव व्यवस्थाऽऽश्रयणीयेति भावः ।

स०— **अन्यथेति** । मधुविषसंपृक्तान्नस्य बहुतरसुखहानिसाधनत्वेन हेयत्वानभ्युपगमेऽनिष्टपक्षनिक्षेपमात्रेणैव हेयत्व इत्यर्थः । **व्यवस्थाया इति** । अनिष्टपक्षनिक्षेपात् अत्र निवृत्तिश्चेद्विषसंपृक्तौषधादावपि निवृत्तिः स्यात् । अनिष्टपक्षनिक्षेपस्य तत्रापि सत्वात् । ततोनिष्टपक्षनिक्षिप्तत्वाविशेषेपि बहुतरसुखहानिसाधनत्वबहुतरसुखसाधनत्वाभ्यां विशेषान्नातिप्रसङ्ग इत्येव वाच्यम् । तच्च ममापि समानमिति भावः ।

प०— नाशस्य ध्वंसरूपस्य नित्यतया निवृत्त्ययोगादाह **प्रसक्तस्येति** ॥ **स्पष्टान्येवेति** । जांघिकास्तस्करसेवककृषीवलादीमीति भावः ॥ **परेणापीति** । दुःखहानिः पुमर्थ इति वदताऽपि तात्कालिकक्षुन्निमित्तदुःखहानेस्तत्रापि सत्त्वात्कथं त्याग इत्युक्ते दुःखहानिरल्पा दुःखावाप्तिरधिकेत्येवोक्त्या यत्र महादुःखहानिः तत्रैव प्रवृत्तिर्नान्यत्रेति व्यवस्थायाः कर्तव्यत्वादित्यर्थः । यद्वा जांघिकादावल्पसुखं पुमर्थत्वं मधुविषसंपृक्तान्ने सत्यप्यल्पसुखे पुमर्थत्वाभाव इत्यत्र महादुःखानवाप्त्यवाप्तिभ्यां व्यवस्थायाः कार्यत्वादित्यर्थः ।

या०— नाशस्यानिर्वर्त्यत्वादाह **प्रसक्तस्य सुखनाशहेतोरिति** ॥ **कथं तर्हीति** । यद्यल्पमपि सुखं पुरुषार्थ इत्यर्थः ॥ **अन्यथेति** । बहुतरसुखहानाननुबन्ध्यल्पसुखं पुरुषार्थोऽतो नोक्तव्यभिचार इत्युक्तसमाधानानादर इत्यर्थः ॥ **व्यवस्थाया इति** । जांघिकादावल्पस्यापि सुखस्य पुरुषार्थत्वं मधुविषसंपृक्तान्नभोजनादौ तस्यापुरुषार्थत्वमित्यत्र व्यवस्थापकस्य वाच्यत्वादित्यर्थः ।

श्री०— नाशस्य निवृत्तेरभावादाह **नाशहेतोरिति** ॥ **कथं तर्हीति** । अल्पमपि सुखं यदिष्टं स्यादित्यर्थः ॥ **परित्याग इति** । तत्रापि भोजनजनिततात्कालिकाल्पसुखसद्भावादिति भावः ।

**सु०— स्यादेतत् । द्विविधाः पुरुषाः रागिणो वीतरागाश्च । तत्र रागिणः सुखार्थं दुःखमप्यनुभवन्ति । ते हि मधुविषसंपृक्तमप्यन्नं मधुतयाऽऽपातरमणीयं विष(विषंगा)संयोगात्तु मारयतु मा वा मौमरदुप(भुंज्महे)युंक्ष्महे तावदापातसुखं को हि हस्तगतं पादगतं करोतीति विचिन्त्योपभुञ्जते । वीतरागास्त्वा(यति)पत्तिमालोचयन्तः स्वर्गमपि कुपितभोगिफणामण्डलच्छायाप्रतिममित्यपजहतीत्यत आह** न चेति ।

**अनु०**— न च रागनिमित्तं तत्

**यदेतदुक्तं, प्राप्यापीत्यादि तद्रागनिमित्तम् । मुमुक्षवस्तु वीतरागाः तस्मात्सुखमनादृत्य दुःखध्वंसायैव यतन्त इति, तच्च नेत्यर्थः ॥ कुत इत्यत आह** वीतेति ।

वीतरागा अपि स्फुटम् ॥

नारदाद्याः सुखार्थाय सहन्ते दुःखमञ्जसा ॥

**स्फुटमिति नारदादीनां वीतरागत्वं श्रुत्यादिप्रसिद्धमित्यर्थः । अञ्जसेति श्रवणादल्पाय सुखरूपार्थायेति योज्यम् । यस्मादिति वक्ष्यमाणमिहापि संबध्यते ॥ एतत्कुत इत्यत आह युद्धादीति ।**

युद्धादिदर्शनं यस्मात्सुदुःखेनापि कुर्वते ॥

**सुखार्थायेति वर्तते । नारदाद्या इति च । आदिपदेन दूरगमनादिसाध्यं स्वयंवरदर्शनं च गृह्यते ॥ एतदपि कुत इत्यत आह यदेति ।**

यदेन्द्रवैरोचनयोर्ब्रह्मास्त्राभ्यां सुतापिताः ॥

अपि नैवाजहुर्युद्धरसात्ते नारदादयः ॥

इति स्कान्दवचः

**नैवाजहुर्युद्धदर्शनं युद्धरसाद्युद्धदर्शननिमित्तात्सुखात्कारणात् । यदाशब्दस्य पूर्वत्रोत्तरत्र वा संबन्धः । यस्मादिति अत्रापि संबध्यते ।**

शे० — अत्र न्यायवाचस्पतिमिश्रोक्तं व्यवस्थापकं निराकर्तुमाशङ्कते **स्यादेतदिति** ॥ **आयतिमिति** । यद्यप्यायतिशब्दस्योत्तरकालमात्रमर्थः । 'उत्तरः काल आयतिरि'त्यभिधानात् । तथाऽप्यत्र लक्षणया तत्कालीनानर्थफलपर एव सः । कालालोचनमात्रस्य परित्यागानुपपादकत्वादिति भावः । नन्वल्पाय्येत्यस्यात्र कथं लाभ इत्यत उक्तम् **अञ्जसेति** ॥ **श्रवणादिति** । अंजसेत्यनेन सह्यमानदुःखस्य बाहुल्याभिधानात्तस्य च प्राप्तसुखस्य दुःखापेक्षयाऽल्पत्व एव श्लिष्टत्वादाधिक्ये चाधिकसुखप्राप्तये तादृशदुःखसहनस्य न्याय्यत्वेनाश्लिष्टत्वात् । तद्बाहुल्यसूचकस्यांजसेतिपदश्रवणात्प्राप्तसुखस्याल्पत्वलाभ इति भावः ॥ **इहापि संबध्यत इति** । तेन विनैतद्वाक्यार्थस्य हेतुत्वालाभेन कुत एतदिति हेत्वाकाङ्क्षापरिपूरकत्वासंभवेन तत्प्रापकस्य तस्यावश्यकत्वादिति भावः । अत्र कर्मानुक्तावपि युद्धरसादित्यनेनाक्षिप्तयुद्धदर्शनस्य कर्मतया संबन्धसंभवान्न न्यूनत्वमित्याशयेनाह **युद्धदर्शनमिति** । शाकपार्थिवादित्वमभ्युपेत्याह **युद्धदर्शनमिति** । निमित्तादिति हेतौ पञ्चमीति भावेनाह **कारणादिति** ॥ **पूर्वत्रोत्तरत्र वेति** । तत्पुराणस्थपूर्वोत्तरवाक्ययोरन्यतरस्मिन्नित्यर्थः ॥ **अत्रापि संबध्यत इति** । अन्यथैतद्वाक्यार्थस्य हेतुत्वालाभेनोक्तशङ्कापरिहारकत्वायोगादिति भावः ।

स० — **यदाशब्दस्येति** । तत्पुराणस्थपूर्वोत्तरवाक्ययोरित्यर्थः । **पूर्वत्र** वीतरागा इत्यत्र, **उत्तरत्र** ते नारदादय इत्यत्रेत्यर्थ इत्यप्याहुः ।

प० — उत्तरवाक्यमवतारयितुं शङ्कामाह **स्यादेतदिति** । **विषविषङ्गात्** विषेण विशिष्य संसर्गादित्यर्थः ॥ **मीमरदिति** । मृङ् प्राणत्याग इत्यतो लुङि प्रत्यये तस्य णिश्रिद्रुस्रुभ्यः कर्तरि चङिति चङि चङि चेति द्विर्वचने सन्वल्लघुनि चङ्परेऽनग्लोप इति सन्वद्भावे सन्यत इत्यभ्यासस्येत्वे दीर्घ लघोरित्यभ्यासस्य दीर्घे न माङ्योग इत्यडभावे इतश्चेति तिप इकारलोपे मीमरदिति रूपम् । मा वा मारयतु इत्यर्थः । उपयुङ्क्ष्महे उपयुक्तं करिष्याम इत्यर्थः ॥ **आपत्तिमिति** । तादृशात्राद्युपभोगेन जनिष्यमाणविपदमालोचयन्त इत्यर्थः ॥ **इहापि संबध्यत इति** । यस्माद्वीतरागा अप्येवमल्पसुखाय महद्दुःखं सहन्ते तस्माद्रागनिमित्तं तदिति न चेत्यर्थः । कर्माकाङ्क्षां पूरयति **युद्धदर्शनमिति** । इह श्लोके यदेत्यस्यानन्वयादाह **पूर्वत्रोत्तरत्र वेति** । स्कन्दपुराणवाक्य एव पूर्वत्र उत्तरत्रेवेत्यर्थः । तस्मादिति श्रवणादाह **यस्मादितीति** । इति स्कन्दवचो यस्मात्तस्मादित्यर्थः ।

या० व्यवस्थापकमाशङ्कते **स्यादेतदिति** ॥ **आयतिमिति** । यद्य'प्युत्तरः काल आयतिरि'-त्यभिधानं तथाऽपि तदालोचनस्य प्रकृतानुपयोगाल्लक्षणया तत्कालीनफलमत्रायतिशब्देन विवक्षितमिति द्रष्टव्यम् **पूर्वत्रोत्तरत्र वेति** । स्कान्दपुराण एव पूर्ववाक्ये उत्तरवाक्ये वा संबन्ध इत्यर्थः ।

श्री०—आपातसुखं तात्कालिकसुखम् । **आयतिमालोच्येति** । दीर्घकालं विचारं कृत्वेत्यर्थः । 'उत्तरः काल आयतिरि'त्यभिधानम् ॥ **दूरगमनादिसाध्यमिति** । दुःखव्यञ्जनार्थमुक्तमिति ज्ञातव्यम् ।

---

**सु० — इदमत्राकूतम् । अत्र रागशब्देन किं सुखेच्छाऽभिप्रेता । उत लक्षणया अविवेकः । आद्ये सत्यमेतत् । किन्तु मुमुक्षवोऽपि रागिण एव । रागिणां कथं मुक्तिरिति चेत् द्वेषिणामपि कथम् । दुःखद्वेषाद्धि ते दुःखं जहति । अस्थाने द्वेषो बन्धक इति चेत् । रागोऽपि तथेति समानम् । किञ्च दुःखोच्छेदे रागः परेणापि स्वीकार्यः । न दुःखद्वेषोऽसौ किन्तु निर्वेद एवेति चेत् । तर्हि न सुखरागोऽसौ अपि तु श्रद्धैवेति वदामः । द्वितीये तु नारदादयो निदर्शनम् । तेऽपि तदाऽविवेकिन इति चेत् । कथमेतद्विज्ञातं लौकिकवैदि(कलौ)-कोत्तरप्रज्ञेनेति ।**

**न च रागेत्यादिनोक्तमुपसंहरति** तस्मादिति ।

**अनु० —** तस्मात्सुखाभावाय को यतेत् ॥

**वीतरागोऽपीति शेषः ।**

**शे०** — नारदादीनामपि सुखेच्छावत्त्वेन रागित्वादल्पसुखार्थे तेषां प्रवृत्तावपि वीतरागाणां तदर्थं तद्रागेणेन स्यादित्येतदुक्तनियमभङ्ग इत्यत आह **इदमत्राकूतमिति** ॥ **रागिण एवेति** ।

सुखरागिण एवेत्यर्थः। ततश्च तेषां वीतरागत्वाभावान्न सुखमनादृत्य दुःखध्वंसाय प्रवृत्तिरुपपद्यत इति भावः ॥ **कथमिति**। सुखरागस्य बन्धकत्वादिति भावः ॥ **द्वेषिणामपीति**। दुःखद्वेषिणामपीत्यर्थः। सुखरागवद्द्वेषस्यापि बन्धकत्वादिति भावः। स एव तेषां कुतः सिद्ध इत्यत आह **दुःखेति**। न द्वेषमात्रं बन्धकं किं नामास्थाने द्वेष एव। दुःखद्वेषस्तु नास्थानद्वेष इत्यतो न बन्धक इत्याशङ्कते **अस्थान इति**। तर्हि न रागमात्रं बन्धकं किं त्वस्थाने रागः। सुखरागस्तु नास्थाने राग इति न बन्धक इति युक्तैव तद्रागिणामपि मुक्तिरित्याशयेन परिहरति **रागोऽपीति**। ननु च रागमात्रं बन्धकं न तु विशेषितमिति न रागिणां मुक्तिरित्याशय इत्यतस्तर्हि द्वेषमात्रमेव बन्धकं न तु विशेषितमिति न दुःखद्वेषिणामपि मुक्तिः स्यादिति सत्येव दोषे तस्य प्रागुक्तरीत्या ज्ञातुं शक्यत्वात्तमनुक्त्वा रागमात्रस्य बन्धकत्वमेव युक्त्यन्तरेण निराचष्टे **किञ्चेति**। द्वेषिणामपि कथमिति प्रतिबन्दीं मोचयितुं शङ्कते **नेति**। तथा च युक्ता तेषां मुक्तिरिति भावः ॥ **तर्हीति**। तथा सुखरागिणामपि युक्ता मुक्तिरिति भावः।

स०— **रागिणामिति**। रागस्य बन्धकत्वादिति भावः। **द्वेषिणामपीति**। तस्यापि बन्धकत्वादिति भावः। न तेषां द्वेष इत्यत्राह **दुःखेति**। न द्वेषमात्रं बन्धकं किं नामास्थाने। स्थाने द्वेषस्तु युक्त इति शङ्कते **अस्थान इति** ॥ **रागोऽपि तथेति**। अस्थाने रागो बन्धको न रागमात्रम् इति समानमित्यर्थः।

प०— अविवेक इति पदच्छेदः ॥ **कथमिति**। मुक्तिरित्यनुषङ्गः ॥ **अस्थान इति** अयुक्तस्थल इत्यर्थः ॥ **नारदादयो निदर्शनमिति**। विवेकिनोऽपि ते सुखार्थं यतन्त इति निदर्शनमित्यर्थः।

श्री०— **रागिण एवेति**। सुखेच्छावन्त एवेत्यर्थः। **रागिणां** सुखरागवताम्। **द्वेषिणां** दुःखद्वेषवताम्। तेषां दुःखद्वेषोऽस्तीत्यत्र ज्ञापकमाह **दुःखद्वेषाद्धीति** ॥ **अस्थान इति**। अविषय इत्यर्थः, द्वेषाविषये, द्वेषायोग्य इति यावत्, यो द्वेषः स बन्धकः। द्वेषयोग्ये द्वेषस्तु न बन्धकः। दुःखं च द्वेषयोग्यम्। अतस्तत्र द्वेषस्य अबन्धकत्वाद्दुःखद्वेषिणामपि मुक्तिर्युक्तेत्यर्थः ॥ **रागोऽपीति**। अस्थाने दुर्विषय एव रागो बन्धको न तु स्थाने। सुखं च रागयोग्यमतस्तत्र रागस्य अबन्धकत्वात्सुखरागिणामपि मुक्तिर्युक्तेत्यर्थः ॥ **स्वीकार्य इति**। तथा च दुःखद्वेषिणामपि रागसद्भावान्न मुक्तिः स्यादित्यर्थः। तथा चास्थान एव रागो बन्धको न स्थाने। दुःखोच्छेदश्च रागयोग्य इति न तत्र रागो बन्धक इति त्वयाऽपि वाच्यं तदस्माकमपि समानमिति भावः। दुःखद्वेषिणां कथं मुक्तिः इत्यस्य उत्तरमाशङ्कते **ननु दुःखद्वेषोऽसाविति**। ये दुःखद्वेषाद्दुःखं त्यजन्ति तैस्त्यज्यमानदुःखनिमित्तभूतोऽसौ

द्वेषः प्रसिद्धद्वेषो न भवति । येन द्वेषिणां कथं मुक्तिरिति परिचोदना स्यात् । किंत्वसौ द्वेषो दुःख-विषयो निर्वेद एव दुःखवैराग्यरूप एवेत्यर्थः ॥ **श्रद्धैवेति** । तर्हि नारदादिभिः क्रियमाणे युद्धादिदर्शने निमित्तभूतः सुखरागोऽपीच्छारूपो रागो न भवति । येन रागिणां कथं मुक्तिरिति प्रतिबन्दी स्यात् । किन्तु श्रद्धैव युद्धादिदर्शने नारदादीनामाग्रहविशेष एवेत्यर्थः ॥ **द्वितीय इति** । रागशब्देन लक्षणयाऽविवेक इति द्वितीयपक्ष इत्यर्थः ॥ **नारदादय इति** । तथाच वीतरागाः वीताविवेकिनोऽपि नारदाद्याः सुखार्थाय दुःखं सहन्तेऽतो रागिण एव सुखार्थं दुःखमनुभवन्तीत्युक्तमसदिति भावः ॥ **तदेति** । ब्रह्मास्त्रतापजनितं महादुःखं सोढ्वा युद्धदर्शनसमय इत्यर्थः । एतत् नारदादीनामविवे-कित्वम् ॥ **लौकिकेति** । लौकिकानां वैदिकानां च या प्रज्ञा तदतिक्रान्तप्रज्ञेनेत्यर्थः । परममूर्खेणेति यावत् ।

सु० — **एवं परनिरूपिते मोक्षे दुःखाभावमभ्युपेत्य तत्र प्रवृत्त्यभावप्रसङ्गोऽभिहितः । इदानीं तु दुःखाभावोऽपि नोपपद्यत इत्याह** विमत इति ।

**अनु०** — विमतो दुःखयुग्यस्माच्चेतनः सन्सुखोज्झितः ॥
प्रतिपन्नो यथेत्येव चानुमा केन वार्यते ॥

---

**मुक्तत्वेन पराभ्युपगतोऽत्र पक्षः । दुःखयुगित्यापाद्यम् । यस्माच्चेतनः सन्सुखोज्झित इत्यापादकम् । घटादौ व्यभिचारनिरासाय चेतनः सन्नित्युक्तम् । अत्र चेतन इत्यात्मत्वोप-लक्षणमिति नापादकासिद्धिः । स्वर्गवासिष्वनैकान्त्यपरिहाराय** सुखोज्झित इति । **ईश्वरस्यापि सुखसाधनान्न तत्र व्यभिचारः । प्रतिपन्नो नारको** यथा । **एवशब्दः प्रतिज्ञया संबध्यते । न चेयं साधनानुमा येन बाधादिकस्यावसरः किन्तु प्रसङ्गानुमैव । तदिदमाह** इत्यनुमा केन वार्यत इति । **यदि मुक्तः सुखी न स्यात्तदाऽनात्मा वा दुःखी वा स्यात् संमतवदित्यादयोऽपि अतिप्रसङ्गा द्रष्टव्याः ।**

**शे०** — मोक्षे दुःखाभावस्य पूर्वमुक्तत्वात्तत्र तदनुपपत्तिवर्णनस्य पूर्वविरुद्धतामाशङ्क्य परिहरति **एवं परनिरूपितमिति** । साधनानुमानत्वप्रतीतिमापादनत्वेऽपि **निर्देशक्रमेणैव** आपादकत्वापाद्यत्व-प्रतीतिं च निराकर्तुमाह **दुःखयुगित्यापाद्यमित्यादि** । ननु चेतयत इति चेतनशब्दार्थभूतज्ञातृत्वस्य मुक्तत्वाभिमते परेणानङ्गीकाराच्चद्घटितापादकासिद्धेः । नायं प्रसङ्ग इत्यतोऽत्र चेतनशब्दस्यात्ममात्र-परत्वान्न तद्घटितस्यापादकस्यासिद्धिरित्याशयेनाह **अत्रेति** । ईश्वरे सत्यपि चेतनत्वे सति सुखोज्झितत्वे

दुःखित्वाभावेन व्यभिचारात्तर्कमूलव्याप्त्यसिद्धेः मूलशैथिल्यात्तर्काभासोऽयमित्यत आह **ईश्वरस्यापीति** ॥ **साधनादिति** । 'न चामन्दसदानन्दस्यन्यनन्तगुणार्णवः । ईश्वरोऽष्टगुणत्वेन प्रमेयोऽप्रमितत्ववत्' इत्यादिना वैशेषिकपरीक्षायामिति शेषः ॥ **प्रतिज्ञयेति** । तथा च विमतो दुःखयुगेवेति प्रतिज्ञयैवकारसंबन्धान्न दुःखाभाववानित्यर्थलाभादिदानीं दुःखाभावोऽपि नोपपद्यत इत्याहेति प्रागुक्ता संमतिः श्लिष्टा भवतीति भावः । मूले चशब्दोऽनुक्तप्रसङ्गसमुच्चायक इत्याशयेन तानाह **यदीति** । नन्वापादनद्वयमप्यनुपपन्नम् । आद्ये यत्र सुखित्वाभावस्तत्रानात्मत्वमिति प्राचीनप्रसङ्गमूलभूतव्याप्तेस्तमोगेषु व्यभिचारात् । द्वितीये च यत्र सुखित्वाभावस्तत्र दुःखित्वमिति तन्मूलव्याप्तेर्घटादौ व्यभिचारात् । न चोभयत्रापि चेतनत्वे सतीत्यापादकविशेषणमभिमतम् । तथाऽपि प्रथमस्योक्तव्यभिचारानिरस्तात् । द्वितीयस्य च 'विमतो दुःखयुक् यस्माच्चेतनः सन्सुखोज्झित' इति प्रसङ्गाभेदप्रसङ्गाच्चेति चेत् । उच्यते । नेदमापादनद्वयमभिमतम् । किं नाम मुक्तत्वेनाभिमतो यदि सुखी न स्यात्तदाऽनात्मदुःख्यन्यतरः स्यादित्येकमेव । ततश्च तमोगेषु दुःखित्वसत्त्वेन घटादौ चानात्मत्वसत्त्वेनानात्मदुःख्यन्यतरत्वस्योभयत्रापि सत्त्वान्न मूलशैथिल्यमिति ।

केचित्तु परीत्या परं प्रत्यापादनान्न तमोगेषु व्यभिचारः । द्वितीयापादने तु चेतनत्वेन विशेषणान्न घटादौ व्यभिचार इत्यापादनद्वयमेवेदमित्याहुः ॥ अन्ये तु प्रथमापादने दुःखरहितत्वरूपस्यापादकविशेषणस्य विवक्षितत्वात् । न च तमोगेषु व्यभिचारः । द्वितीये तु चेतनत्वेन विशेषणान्न घटादौ व्यभिचार इति प्रसङ्गद्वयमेतदित्याहुः ॥ अपरे तु सुखी न स्यादित्यस्य सुखध्वंसवानित्यर्थत्वान्न घटादौ व्यभिचारो दुःखरहितत्वेन विशेषणाच्च न तमोगेष्वपि सः । नापि पूर्वप्रसङ्गाभेद इत्याहुः ।

**आदिपदेन मुक्तो यदि सुखी दुःखी च न स्यात्तदाऽनात्मा स्यादित्यतिप्रसङ्गसंग्रहः ।**

**स०** — अत्र चेतनत्वेन आत्मशब्दार्थभूतज्ञानवत्त्वस्य मुक्तौ परेणानङ्गीकारात् आपादकासिद्धिः । अत चेतनत्वात् आत्मत्वमेव वक्तव्यमित्यर्थः । यत्र चेतनत्वे सति सुखोज्झितत्वं तत्र दुःखित्वमिति प्रसङ्गमूलभूतव्याप्तेरीश्वरे व्यभिचार इत्यत आह **ईश्वरस्यापीति** ॥ **यदि मुक्त इत्यादि** । नन्वापादनद्वयमप्यनुपपन्नम् । आद्ये यत्र सुखित्वाभावः तत्रानात्मत्वमिति व्याप्तेः तमोगेषु व्यभिचात् । द्वितीयेपि यत्र सुखित्वाभावस्तत्र दुःखित्वमिति प्रसङ्गमूलव्याप्तेर्घटादौ व्यभिचारात् । न चोभयत्रापि चेतनत्वे सतीत्यापादकविशेषणान्नोक्तदोषः तथापि प्रथमस्योक्तव्यभिचारानिस्तरात् । द्वितीयस्य विमतो दुःखयुगित्युक्तप्रसङ्गाभेदापाताच्चेति । मैवम् । नेदमापादनद्वयं किंनाम मुक्तत्वेनाभिमतो यदि सुखी

न स्यात् तर्ह्यनात्मदुःख्यन्यतरः स्यादित्यापादनस्यात्राभिप्रेतत्वात् । तमोगेष्वपि दुःखित्वस्य सत्त्वेन घटादौ चानात्मत्वस्य सत्त्वेनानात्मदुःख्यन्यतरत्वस्योभयत्रापि सत्त्वेन मूलव्याप्तेरप्रतिहतत्वादित्यसदुरवः । परीत्या परं प्रत्यापादनान्न तमोगेषु व्यभिचारः । द्वितीयापादने च चेतनत्वविशेषणान्न घटादौ व्यभिचारः इत्यापादनद्वयमप्युपपन्नमिति तु तातचरणाः । वयं तु ब्रूमः । प्रथमापादने दुःखरहित-त्वरूपमापादनविशेषणं विवक्षितमिति न तमोगेषु व्यभिचारः । द्वितीयापादने च चेतनत्वविशेषणान्न घटादौ व्यभिचार इति सर्वं सुस्थम् ।

प०— **पराभ्युपगत इति** । तेन यदि तादृशो मुक्तः सिद्धः दुःखयुगित्ययुक्तम् । यद्यसिद्धः तर्ह्याश्रयासिद्धिरितिदोषो निरस्तः । पराभ्युपगममात्रेणापादने पक्षतोपपत्तेरिति सूचितम् । ननु चैतन्यवान् चेतनः न च मुक्तस्य ज्ञानरूपं चैतन्यं तार्किकैरुपेयते अतो विशेषणाभावाद्विशिष्टापादकासिद्धिरित्यत आह **आत्मत्वोपलक्षणमिति** ॥ **सुखसाधनादिति** । सुखस्य समर्थनादित्यर्थः ॥ **प्रतिज्ञयेति** । दुःखयुगेव न तु तदभाववानित्युक्त्या पराभिमतदुःखाभाववान्न भवतीत्यर्थलाभ इति भावः । ननु मुक्तो दुःखयुगिति साधने बाधोऽपसिद्धान्तश्चेत्यत आह **न चेयमिति** । आपाद्यद्वयं अनात्मा वा दुःखी वा स्यादिति ॥ **संमतवदिति** । घटवदिति संसार्यादिवदिति यथाक्रमं दृष्टान्तौ ज्ञेयौ । नारकिणोऽप्यस्ति-किञ्चित्सुखं 'नारिक्यां निर्वृतौ सत्यामि'त्यादेः । अतोऽत्र विवक्षितस्य सर्वात्मना सुखाभावरूपापादकस्य नारकिण्यभावात् न व्यभिचार इति भावः । आत्मत्वे सतीत्यापाद्येऽभिमतत्वान्न घटादौ दुःखी वा स्यादित्यस्याभावाद्व्यभिचार इति चोद्यानवकाशः । यदि मोक्षः सुखानुभवहीनः तर्ह्यपुमर्थः स्यान्मोहवत् इत्यादिरादिपदार्थः ।

या०— ननु मया मुक्ते ज्ञानाश्रयत्वरूपचेतनत्वस्यैवानङ्गीकृतत्वेन विशेषणाभावाद्विशिष्टस्यापादकस्यासिद्धिरित्यत आह **अत्र चेतन इतीति** ॥ **प्रतिज्ञयेति** । तथा च विमतो दुःखयुगेवेति प्रतिज्ञया एवकारस्य संबन्धेन दुःखाभाववानित्यर्थलाभादिदानीं दुःखाभावोऽपि नोपपद्यत इत्याहेति पूर्वोक्ता सङ्गतिः श्लिष्यत इति भावः । मूले चशब्दोऽनुक्तप्रसङ्गान्तरसमुच्चायक इत्याशयेनाह **यदि मुक्त इत्यादिना** ॥ **अनात्मा वा दुःखी वा स्यादिति** । दुःख्यनात्मान्यतरः स्यादित्येकमेवापाद्यमत्र विवक्षितं नापाद्यद्वयम् । तेनाद्ये नारकिणि द्वितीये घटादौ व्यभिचार इति शङ्काऽनवकाश इति ध्येयम् । आदिपदाद्यदि मुक्तः दुःखरहितत्वे सति सुखी न स्यात् । तदाऽऽत्मा न स्यात् । यदि मुक्तिः सुखानुभववर्जिता स्यात्तदा पुरुषार्थो न स्यादित्यादयो ग्राह्याः ।

श्री०— **इत्यनुमेति** । एवंप्रकाराऽनुमा दूषणानुमेत्यर्थः ।

सु० — **यदुक्तं प्राक् श्रुतयो यत इति तदिदानीं प्रपञ्चयति** सर्वेति ।

**अनु०** – सर्वश्रुतिपुराणेषु सुखभावोक्तितस्तथा ॥
मुक्तौ न ग्राह्यमेवैतत्सुखाभावमतं बुधैः ॥

तथाशब्दः **समुच्चये । तानि श्रुत्यादीन्युदाहरति** स इति ।

सोनानन्दाद्विमुक्तः सन्नानन्दीभवति स्फुटं ॥
निर्गुणे ब्रह्मणि मयि धारयन्विशदं मनः ॥
परमानन्दमाप्नोति यत्र कामोऽवसीयते ॥
न विष्णुसदृशं दैवं न मोक्षसदृशं सुखं ॥
न वेदसदृशं वाक्यं न वर्णोङ्कारसंमितः ॥
यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ॥
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि ॥

**अनेन 'सोऽनानन्दाद्विमुक्तः आनन्दीभवती'ति श्रुतिमुपादत्ते । आनन्दस्य स्वभावसिद्धत्वाद्भवतीति कथमित्यतः स्फुटमित्युक्तम् ।** अनानन्दात् **दुःखात् ॥ निर्गुण इति भागवते भगवद्वाक्यम्** । यत्र **परमानन्दे प्राप्ते का(मस्तृष्णाऽत्र)मः स्पृहाऽवसीयते । अवसानं गच्छति ।**

---

**न विष्णुसदृशमित्येतदपि पुराणवाक्यम्** । यत्र **लोके । आनन्दादिशब्दाः सुखविशेषाणां वाचकाः** । कामस्य कामाः **इच्छाया विषयाः** । आप्ताः **पर्याप्ताः । कृधि कुर्विति वायुं प्रति प्रार्थनम् । श्रुशृणुपृकृवृभ्यः छन्दसि । श्रुत्योर्मध्ये पुराणपठनं तस्य श्रुतिकल्पत्वप्रदर्शनार्थम् ।**

**उदाहृतानां श्रुत्यादीनां फलमुपसंहरति** इति श्रुतीति ।

इति श्रुतिपुराणानि तत्र तत्र वदन्ति हि ॥
अतो मोक्षे सुखाभाव इति यत्किंचिदेव हि ॥

**तत्र तत्र प्रदेशे वदन्ति मुक्तस्य सुखम् । आद्यो हिशब्दो यस्मादित्यर्थे । द्वितीयः प्रसिद्धौ** । यत्किञ्चिदेव **फल्गिवत्यर्थः** ।

**शे० — समुच्चय इति ।** दुःखाभावानुपपत्त्या सह सुखाभावानुपपत्तेः समुच्चय इत्यर्थः । मूले मयीत्यस्यार्थप्रतिपत्त्यर्थं भगवद्वाक्यमित्युक्तम् । आनन्दादिशब्दा इत्यादिपदेन मोदादिशब्दानां परिग्रहः ॥ **सुखविशेषाणामिति** । उपकारजं प्रियं, प्रकृष्टाप्रकृष्टविषयोत्थौ मोदप्रमोदौ, स्वरूप-

भूतानन्द इति । श्रवणोत्थं प्रियं, दर्शनोत्थो मोदः भोगोत्थः प्रमोदः स्वरूपभूतानन्द इत्युक्तरीत्या सुखविशेषाणां वाचका इत्यर्थः । कामशब्दः षष्ठ्यन्तो भावसाधनः । प्रथमान्तस्तु कर्मसाधनः । भावे कर्मणि च घञः स्मरणादित्याशयेन पदद्वयं व्याख्याति **इच्छाया विषया इति** । ननु कृञो लोटि तस्य सिपि तनादिकृञ्भ्यः उरित्युप्रत्यये गुणे सिपः सेर्ह्यपिच्चेति हिभावे अत उत्सार्वधातुक इति कृञोकारस्योकारे उतश्च प्रत्ययादसंयोगपूर्वादिति हेर्लोपे **कुर्विति** मध्यमपुरुषैकवचनेन भवितव्यम् । तत्कथं श्रुतौ कृधीति प्रयोग इत्यतः श्रुशृणुपॄकृवृभ्यश्छन्दसीति कृञः परस्य हेर्धिभावस्य विकरणाभावस्य छन्दसि विधानाद्युक्तः श्रुतौ कृधीति प्रयोग इत्याशयेनाह **श्रुशृणुपॄकृवृभ्य इतीति** ॥ **यत्किंचिदेवेति** । अत्र यत्तत्किंचिदेव फल्गिवति योजना द्रष्टव्या ।

स०— **श्रुशृणुकृवृभ्यः छन्दसि** । एभ्यः परस्य हेर्धिरादेशो भवति छन्दसि विषये । इति सूत्रार्थः ।

प०— **समुच्चय इति** । प्रागुक्तसाधकबाधकाभ्यां सह समुच्चय इत्यर्थः ॥ **सुखविशेषाणामिति** । आनन्दः स्वरूपसुखं विषयोत्थं सुखं मुदित्युच्यते । प्रकृष्टविषयोत्थं प्रमुदिति भावः । कृधीत्यस्य साधुत्वार्थं हेर्धिरादेशविकरणलोपविधानपरं षष्ठान्त्यपादस्थं सूत्रं पठति **श्रुशृण्विति** । किं वदन्तीत्यपेक्षायामाह **मुक्तस्य सुखमिति** ।

या०— **श्रुशृपॄकृवृभ्यः छन्दसीति** । एभ्यो धातुभ्यः परस्य हेर्धिः विकरणाभावश्चेति सूत्रार्थः । अन्यथा लोटि तसि तनादिकृञ्भ्य उरिति उप्रत्यये गुणे सिपः सेर्ह्यपिच्चेति हिभावे अत उत्सार्वधातुक इति कृञोकारस्योकारे उतश्च प्रत्ययादसंयोगपूर्वादिति हेर्लोपे कुर्विति रूपेण भाव्यमिति ज्ञातव्यम् ।

श्री०— **यदुक्तं प्रागिति** । श्रुतयो यतः । महानन्दं च भोगं च नियमेन वदन्ति हीति यत्प्रागुक्तमित्यर्थः ॥ **स्फुटमिति** । तथा चानन्दीभवति आनन्दव्यक्तिमान् भवतीत्यर्थो द्रष्टव्यः । ननु कृञ् करणेऽस्मात् लोटि तस्य सिप् इत्यादेशे इप् इत्यस्य लोपे तनादिकृञ्भ्य उरिति सूत्रेण उप्रत्यये कृ उस् इति जाते गुणे तस्य रपरत्वे कर् उस् इति जाते सेर्ह्यपिच्चेति सिपः सकारस्य हिभावे कर् उहीति जाते अत उत्सार्वधातुक इति कृञ् धातोरकारस्य उकारे कुरु हीति जाते उतश्चेति सूत्रेण हेर्लोपे कुर्विति रूपं स्यादिति चेत्तत्राह **श्रुशृणुपॄकृवृभ्यश्छन्दसीति** । एतेभ्यो धातुभ्यः परस्य हेर्धिः स्यात् उ विकरणाभावश्चेति सूत्रार्थः । तथाच कृ अस्माल्लोटि सिपि तस्य हिभावे तस्य धिभावे उविकरणाभावेन गुणाप्राप्तौ कृधीति छन्दसि रूपमित्यर्थः ।

**सु०— यच्च सांख्यादिभिरुक्तं सुखाभावोपपादनाय शरीराद्यहिरहित्यं मुक्तस्य, तत्स्वरूपसुखस्योक्तत्वाद्वैयर्थ्येनापास्तम् । असिद्धं च तदित्याशयेनाह** शिर इति ।

अनु० - शिरःकराद्यभावश्च न मुक्तस्य भवेत् क्वचित् ॥

**न केवलं सुखाद्यभाव इति चशब्दः । जीवन्मुक्तौ शिरःकरादिभावो न परममुक्ताविव्यतः क्वचिदित्युक्तम् । कुत इत्यत आह** श्रुतयश्चेति ।

श्रुतयश्च पुराणानि मानमत्र बहूनि च ॥

**शिरःकराद्यभावो नेत्युपस्थापितं शिरआदिभावं अत्रेति परामृशति । अन्यश्चो यस्मादित्यर्थे । सन्तीति शेषः । अशरीरत्वादेर्गतिश्चोक्तेति च चार्थः ।**

**शे०—** ननु शिरःकरादीन्युत्तरग्रन्थेन मुक्तस्य शरीरसद्भावप्रतिपादनं क्रियते तदसङ्गतम् । न च सुखाभावोपपादनाय परोपन्यस्ताशरीरत्वहेतुनिरासार्थत्वान्नासङ्गतमिति वाच्यम् । 'प्रियस्वरूपमेवास्य बलानन्दादिवाक्यत' इत्यादिना सुखस्य स्वरूपत्वसमर्थनेनाप्रयोजकतया तस्य पूर्वमेव निरस्तत्वात् इत्यतोऽप्रयोजकतया निरस्तस्यापि तस्य वस्तुस्थितिकथनार्थमसिद्ध्या निरासार्थत्वान्न तदिति भावेन पूर्वोक्ताप्रयोजकत्वानुवादपूर्वकमसिद्ध्युपपादकतया मूलं सङ्गमयति **यच्चेति ॥ वैयर्थ्य नेति** । जन्यसुखस्यैव शरीरादिसापेक्षत्वेन तदभावेन तदभावस्योपपादयितुं शक्यत्वेऽपि स्वरूपसुखस्य तदनपेक्षत्वेन स्वरूपसुखाभावस्योपपादयितुमशक्यत्वादित्यर्थः । ननु 'शिरःकराद्यभावश्च न मुक्तस्य भवेदि'त्येतावतैव पूर्तेर्भाष्ये क्वचिदित्यस्य वैयर्थ्यमित्यतस्तद्व्यावर्त्यमतप्रदर्शनेन तत्सार्थक्यमाह **जीवन्मुक्ताविति** । नन्वत्रेति सर्वनाम्नः प्रकृतपरामर्शकाच्छरीराद्यभावाभावस्य पूर्वत्रोक्तत्वेन प्रकृतत्वेऽप्युदाहरिष्यमाणश्रुत्यादौ तस्याप्रतिपादनेन तत्परामर्शकत्वायोगात् । शरीरादिभावस्य च पूर्वत्रानुक्तत्वेनाप्रकृतत्वेन तत्परामर्शकत्वस्याप्ययोगात् । शरीरादिभावस्य श्रुत्यादिसिद्धत्वालाभान्न कुत इत्याशङ्कानिवर्तकत्वमस्य भाष्यस्येत्यतस्तस्य पूर्वत्रानुक्तत्वेऽपि अभावाभावस्य भावत्वेन भावव्याप्तत्वेन वा शरीराद्यभावाभावोक्त्या उपस्थापितत्वेन प्रकृततया तत्परामर्शसंभवेन शरीरादिभावस्य श्रुत्यादिसिद्धत्वलाभाद्युक्तमुक्ताकाङ्क्षापूरकत्वमस्येत्याशयेनाह **उपस्थापितमिति** । नन्वाद्यस्य चशब्दस्य श्रुतिपुराणयोः परस्परसमुच्चयार्थतया सार्थक्येऽप्यन्त्यस्य वैयर्थ्यमित्यत एतद्वाक्यार्थस्य प्रतिज्ञाऽर्थहेतुत्वलाभार्थत्वान्न तदिति भावेन तदर्थतया तं व्याचष्टे **अन्त्यश्च इति ॥ उक्तेतीति** । 'अदेहत्वमप्राकृतशरीरते'त्यादिनेति शेषः । अनेन साधकोक्तेर्बाधकाभावेन समुच्चयार्थश्चान्त्यश्चशब्द इत्युक्तं भवति ।

प० — नन्वेवम् 'अशरीरं वा व संतमि'ति 'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामि'त्यादेः का गतिरित्यत आह **अशरीरत्वादेर्गतिश्चेति** । 'प्राकृतप्रियहानिस्त्वि'त्यादिना प्राकृतसुखाभावोक्त्या अशरीरत्वस्यापि प्राकृतशरीराभावपरत्वमुक्तप्रायमिति गतिश्चोक्तेत्युक्तम् ।

**श्री०— वैयर्थ्येनेति** । स्वरूपसुखसिद्धौ सत्यां सुखाभावोपपादनाय यच्छरीरादिराहित्यमुपपादितं तद्व्यर्थमित्यर्थः । **तत्** शरीरादिराहित्यम् । **अत्र** शिरःकराद्यभावे इत्यन्यथाप्रतीतिनिरासायाह **शरीरादिभावमात्रेति** ॥ **परामृशतीति** । ननु शिरःकराद्यभावस्यैव प्रकृतत्वेन शरीरादिभावस्याप्रकृतत्वात्कथमत्रेति परामर्श इत्यत उक्तम् ॥ **शिरःकराद्यभावो नेतीति** । तथाच प्रतियोगितया शिरःकराद्यात्मकं शरीरमप्युपस्थापितं बुद्धिसन्निहितमेवेत्यर्थः ।

**सु०— तत्र तावत्स्फुटार्थत्वात्पुराणमादावुदाहरति** न वर्तत इति ।

**अनु०**— न वर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः ॥
न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥
श्यामावदाताःशतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः ॥
सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ॥
प्रवालवैदूर्यमृणालवर्चसां परिस्फुरत्कुण्डलमौलिमालिनाम् ॥
भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनाम् ॥
विद्योतमानप्रमदोत्तमाभिः सविद्युदभ्रावलिभिर्यथा नभः ॥
श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः ॥
ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु ॥
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः ॥

**यत्र लोके । सत्त्वशब्दोऽनेकार्थः । क्वचित्प्रकृतिपरिणामविशेषस्य वाचकः । क्वचित् साधुत्वस्य । तत्र सत्त्वं च न विद्यत इत्युक्ते न ज्ञायते कस्य प्रतिषेध इति । अतस्तयो रजस्तमसोर्मिश्रं सहचरितमित्युक्तम् । रज आदिप्रकरणाज्ज्ञास्यत इति चेत् । श्रुत्यभावे प्रकरणाद्यन्वेषणात् । रजःप्रभृतीनामवृत्तिर्नाम बन्धकतया व्यापाराभावः ।** कालविक्रमः **कालसामर्थ्यकृ(ता भावाविकाराः)तो भावविकारः ।** माया **प्रकृतिः ।** अपरे **महदादयो न वर्तन्त इति किमुत वक्तव्यम् । हरेरनुव्रता यत्र वर्तन्ते ।** असुराः **साधवः सन्ति ॥** अवदाता **निर्मलाः ।** सुपेशसः **सुरूपाः ।** उन्मिषन्मणिप्रवेकनिष्काभरणाः **रश्मिमद्रत्नप्रवरहाराभरणाः । रुक् प्रभा ।**

वर्चो बलम् । हरेरनुव्रता इत्यनेन संबन्धः । यो लोक एवंविधानां महात्मनां लसद्विमानावलिभिः परितो विराजते ॥ केचित्प्रवालवर्चस इत्यादि ॥ परिस्फुरत्कुण्डलमौलयश्च ते मालिनश्चेति विग्रहः । यद्वा परिस्फुरन्त्यश्च ताः कुण्डलमौलिमालाश्चेति कर्मधारयं विधाय पश्चादिनिरुत्पाद्यः ॥ विद्योतमानाः प्रमदोत्तमाः यासु विमानावलिषु तास्तथोक्तास्ताभिः । यद्वा विद्योतमानाभिः प्रमदोत्तमाभिर्भ्राजिष्णुभिरिति व्यधिकरणत्वेन योजना । प्रमदोत्तमाः विद्युतः । विमानावलयः अभ्रावलयः । रूपिणी प्रत्यक्षा । मानं पूजा । बहुधा स्थिताभिः विभूतिभिः स्वमूर्तिभिः ॥ एवंभूतं लोकं सन्दर्शयामासेति पूर्वेणान्वयः ।

कामान्नरूपी चरति

**कामान्नरूपी चरतीत्यनेन 'कामरूप्यनुसञ्चरन्नि'ति श्रुतिमुपादत्ते ।**

**उदाहृतवाक्यानां फलमाह** इतिपूर्वेति ।

इतिपूर्वश्रुत्या पुराणोक्तिभिरप्यदोषः ॥
देहः स्वरूपात्मक एव तेषां मुक्तिं गतानामपि चेयते हि ॥

**इत्येषा पूर्वा यस्याः सा तथोक्ता । देहित्वे दुःखादिप्रसक्त्या मुक्तत्वव्याघात इत्यत उक्तम्** अदोष इति ॥ **दोषाहेतुः कथमित्यत उक्तम्** स्वरूपात्मक एवेति । **जीवस्वरूपमेवात्मा स्वरूपं यस्यासौ तथोक्तः । किं जीवन्मुक्तानामित्यत उक्तं** तेषामपि च मुक्तिं गतानामिति । **पुराणवाक्ये हि श्यामावदाता इत्यादिना देहः प्रतीयते । न वर्तत इत्यत्र च प्रकृत्याद्यभावोक्त्या परममुक्तित्वं, देहस्य च स्वरूपत्वं, तत एवादोषत्वम् । श्रुतावृगुच्चारणादिना देहित्वम् ।**

शे०— श्रुतयश्च पुराणानीति निर्देशक्रमभङ्गेन पुराणस्यैवादावुदाहरणे निमित्तमाह **स्फुटार्थत्वादिति** । प्रतिपिपादयिषितशरीरादिसद्भावस्य पुराणे स्फुटत्वादित्यर्थः ॥ **यत्र लोक इति** । 'तस्मै स्वलोकं भगवान्सभाजितः संदर्शयामासे'ति पूर्वग्रन्थे लोकस्य प्रकृतत्वात्तस्यैव यच्छब्देन परामर्श इति भावः । 'न वर्तते यत्र रजः' इत्यविशेषेण रजआदेरिव 'सत्त्वं यत्र ने'त्यविशेषेणैव सत्त्वनिषेधस्य कर्तव्यत्वात्तयोर्मिश्रमिति किं तद्विशेषणेन । न च सत्त्वविशेषस्यैवायं निषेधो, न सत्त्वसामान्यस्येति ज्ञापनार्थमेतदिति वाच्यम् । सत्त्वशब्दस्य रजआदिशब्दवद्विशेषनिष्ठत्वेन सामान्यपरत्वस्यैवासिद्ध्या व्यावर्त्याभावादित्यतोऽस्यानेकार्थतया सत्त्वं नेति सामान्यनिषेधस्य साधुत्वस्य तल्लोकेऽनुवृत्तत्वेनानुपपत्त्या विशेषनिषेधसिद्ध्यर्थत्वाद्विशेषणस्य नानर्थक्यमिति भावेन तस्यानेकार्थत्वोपपादनपूर्वकं व्यावर्त्यप्रदर्शनेन सार्थकतामाह **सत्त्वशब्द इति** । प्रकृतिपरिणामरूपसत्त्वस्य रजस्तमोमिश्रितत्वा-

भावादाह **सहचरितमिति** । उक्तप्रयोजनस्यान्यथासिद्धत्वान्नोक्तविशेषणप्रयोजनत्वमित्याशयेन शङ्कते **रज आदीति** । श्रुतिलिङ्गादौ समवाये परदौर्बल्यस्य निर्णीतत्वेन विलम्बेनार्थोपस्थापकस्य प्रकरणस्य शीघ्रोपस्थापकश्रुत्यपेक्षया दुर्बलत्वान्न प्रकरणेन श्रुतिकार्यसिद्धिरित्याशयेन समाधत्ते **श्रुत्यभाव इति** । यद्यपि तयोर्मिश्रमित्यस्य लिङ्गत्वान्न श्रुतित्वम् । तथाऽपि श्रुतिशब्देन लिङ्गात्मकशब्दस्यैव विवक्षितत्वाददोष इत्याहुः । वस्तुतोऽत्र श्रुतिशब्दः प्रकरणापेक्षया शीघ्रोपस्थापकप्रमाणपरः । ततश्च लिङ्गस्यापि तथात्वात्तदभाव एव प्रकरणस्यार्थनिर्णायकतया आश्रयणीयत्वात्, सति तस्मिंस्तदाश्रयणमनुचितमिति भावः । ननु ब्रह्माण्डान्तः सर्वत्र प्रकृतिपरिणामभूतानां रजःप्रभृतिगुणानां व्याप्तत्वाद्ब्रह्माण्डान्तःस्थत्वात् भगवल्लोकस्य कथं तेषामवृत्तिरित्यतः स्वरूपेण सतामपि तेषां केनचिद्विशेषेणावृत्त्युपपत्तेर्नानुपपत्तिरित्यभिप्रेत्य तथाऽवृत्तिमाह **रजआदीनामिति** । वर्तते इत्यस्यानुवृत्तिमर्थवशाद्वचनविपरिणामं चाश्रित्याह **वर्तत इति** । भावविकार इत्यत्र भावशब्द पदार्थपरः । कथमसुराणां विष्णुलोकेऽवस्थानमित्यत आह **असुरा इति** । तथा च स्वरूपेण साधूनां निमित्तविशेषेणासुरकुलोत्पन्नानामेवासुरशब्देन ग्रहणान्नानुपपत्तिरिति भावः । बहुलग्रहणाद्विशेषणयोरेव समास इत्यभिप्रेत्यावदातशब्दं व्याचष्टे ॥ **अवदाता निर्मला इति** । 'अवदातः सिते गौरे शुद्धे' इति यादवोक्तेरिति भावः ॥ **सुरूपा इति** । सुन्दरा इत्यर्थः । रत्नं मणिर्द्वयोरित्यभिधानं मनसि निधायाह **रत्नेति** । 'क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः' इत्यमरोक्तेः प्रवेकशब्द उत्तमार्थ इत्याह **प्रवरेति** । 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री'त्यमरोक्तेर्निष्कशब्दो हारपर इत्यभिप्रेत्य व्याख्याति ॥ **हारेति** । रुक् प्रभेति । 'स्युः प्रभा रुग्रुचिस्त्विड्भाभाच्छविद्युतिदीप्तयः' इत्यमरोक्तेरिति भावः **वर्चो बलमिति** । 'तेजःपुरीषयोर्वर्च' इत्यमरोक्तेर्वर्चःशब्दस्य तेजःशब्दस्य च 'प्रभावे दीप्तौ च बले शुक्रे' इत्यमरोक्तेर्बलपर्यायत्वादिति भावः ॥ **संबन्ध इति** । अनेन यत्र हरेरनुव्रता वर्तन्ते ते कीदृशा इत्यतः सुरासुरार्चिता इत्येकं विशेषणमुक्तं, विशेषणान्तराण्याह **श्यामावदाता** इति योजना सूचिता भवति । सर्वेषां महात्मनां प्रवालादिवर्चस्त्वभ्रमनिरासायाह **केचिदिति** । आदिपदेन केचिद्वैडूर्यवर्चस इत्यादेः परिग्रहः ।

ननु परिस्फुरन्त्यः कुण्डलमौलिमाला येषामिति बहुव्रीहिणैव मत्वर्थस्य लाभादिनिप्रत्ययवैयर्थ्यमित्यतो न बहुव्रीहिमाश्रित्य मतुबर्थप्रयोगोऽत्राभिमतः किन्तु व्रीह्यादित्वान्मालाशब्दस्य तस्माद्व्रीह्यादिभ्यश्चेति इनिप्रत्ययोपपत्तौ निष्पन्नमालिन्शब्देन परिस्फुरत्कुण्डलमौलिशब्दस्य कर्मधारयः । यद्यपि विशेषणविशेष्ययोरेव स नियमितः । तथाऽपि बहुलग्रहणसामर्थ्यात्क्वचिद्विशेषणयोरपि परस्परसमासाभ्यनुज्ञानान्न कर्मधारयानुपपत्तिरित्यभिप्रेत्य तमुपदर्शयति **परिस्फुरत्कुण्डलमौलयश्च ते मालिनश्चेति**

**विग्रह इति** ॥ **यद्वेति** । ततश्च, बहुव्रीहिमाश्रित्य मतुबर्थप्रत्ययप्रयोगे वैयर्थ्यदोषेऽपि कर्मधारयमाश्रित्य तत्प्रयोगे शब्दान्तरत्वान्न वैयर्थ्यमित्युक्तं भवति । न च तथाऽपि कर्मधारयमत्वर्थीयाद्बहुव्रीहिरेवेष्टो लघुत्वादिति न्यायात् । शब्दान्तरत्वाश्रयणेऽपि बहुव्रीहिविवक्षयाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसंभवे बहुयत्नाश्रयणं दोषः स्यादेवेति वाच्यम् । बहुव्रीह्यपेक्षया कर्मधारयमत्वर्थीये शब्दगौरवस्थले बहुयत्नाश्रयणस्य दोषत्वेऽपि शब्दसाम्ये तददोषत्वस्य टीकाकृदभिमतत्वात् । अत एव टीकायां यद्विकारीत्यत्र कर्मधारयमत्वर्थीयमभ्युपगम्यानादिमदित्यत्र तदनङ्गीकारः । बहुव्रीहौ कर्मधारयमत्वर्थीये चार्थगौरवाप्रसङ्गेन शब्दगौरवस्यैव लाघवन्यायविरुद्धत्वात् । प्रकृते च तदभावेनादोषत्वात् । लाघवन्यायानादरेण शब्दगौरवेऽपि न्यासादिगतकर्मधारयमत्वर्थीयप्रयोगाणां एकगो पूर्वाठ्ञ् नित्यमिति सूत्रे दुर्घटवृत्तिकृता दर्शितत्वाच्च सकलमकलंकमिति संप्रदायः । गुरवस्तु यदा कर्मधारयान्मत्वर्थीयः क्रियते तदा स्वपदार्थप्राधान्यमाश्रित्य कर्मधारयः कर्तव्यः । तेषामेव च पदार्थानामन्यत्र गुणभावमाश्रित्य मत्वर्थीय उत्पद्यत इति प्रतिपत्तिगौरवम् । यदा च पूर्वमेवान्यपदार्थप्राधान्यविवक्षा तदा वर्तिपदार्थानां गुणभावश्च आश्रीयत इति प्रतिपत्तिलाघवम् । कर्मधारयो मत्वर्थीयसहित एवान्यपदार्थस्य प्रतिपादक इति शब्दगौरवम् । बहुव्रीहिस्त्वन्यानपेक्ष एव तत्प्रतिपादक इति शब्दलाघवं च भवतीति न कर्मधारयमत्वर्थीयाश्रयणं युक्तम् । तथाऽप्यन्यपदार्थप्राधान्यविवक्षायां बहुव्रीहेरेव प्रसङ्गेन सर्वधनी सर्वबीजी सर्वकेशी नट इत्याद्यभियुक्तप्रयोगानुपपत्तिप्रसङ्गात्तदुपपादनार्थं प्रवृत्तात् 'ससर्वादेः कर्मधारयादिनिः' इति भाष्यवचनाल्लाघवानाश्रयणेन वाचनिक एव कर्मधारयादिनिरित्यत्र तात्पर्यमिति वर्णयाम्बभूवुः । एतच्च व्रीह्यादिभ्यश्चेत्यत्र तदन्तविध्याश्रयणेन द्रष्टव्यम् । अन्यथा मालाशब्दस्य व्रीह्यादित्वात्तत इनिप्रत्ययोत्पत्तावपि समस्तस्यातथात्वात् । ततो व्रीह्यादिलक्षणस्य इनेरनुत्पत्तिप्रसङ्गात् । अत एवेह टीकायां शून्यमायिनोरित्यत्र द्वन्द्वात्तदन्तविध्यभ्युपगमेन प्रागिनिः समर्थित इति द्रष्टव्यम् ।

'विद्योतमानप्रमदोत्तमाभिः' इत्यस्य विमानावलिविशेषणत्वाश्रयणे उक्तरीत्या जघन्यबहुव्रीह्याश्रयणं भवतीत्यरुच्या समासप्राबल्यात्कर्मधारयमाश्रित्य योजयति **यद्वेति** ॥ **व्यधिकरणत्वेनेति** । अनेन विद्योतमानप्रमदोत्तमाभिः कृत्वा भ्राजिष्णुभिरिति विमानावलिविशेषणमित्युक्तं भवति । अन्यथा भ्राजिष्णुभिरित्यस्य तद्विशेषणत्वोपपत्तावपि विद्योतमानप्रमदोत्तमाभिरित्यस्य कर्मधारयपक्षे विमानावलिविशेषणत्वानुपपत्तेरनन्वयप्रसङ्ग इति भावः ।

दृष्टान्तदार्ष्टान्तिकभावविवरणं प्रमदोत्तमा इत्यादि । **पूर्वेणेति** । 'तस्मै स्वलोकं भगवान्सभाजितः सन्दर्शयामास' इति भागवते पूर्वेणान्वय इत्यर्थः ।

न विद्यते दोषो यस्मादिति बहुव्रीहिमभिप्रेत्याह **दोषाहेतुरिति** । यद्यपि दोषाहेतुत्वोक्तावपि दुःखाहेतुत्वानुक्तेर्नोक्तशङ्कापरिहारः सिध्यति । तथाऽपि दुःखस्य दोषप्रयुक्तत्वात् दोषाहेतुत्वोक्तावर्थतः दुःखाहेतुत्वलाभात्तदभिप्रायेण शङ्कापरिहार इति भावः । उदाहृतवाक्यानामविशेषेण विवक्षिताशेषार्थसाधकत्वभ्रमं वारयति **पुराणवाक्ये हीत्यादिना** ।

स० — **रजःप्रभृतीनामिति** । स्वरूपेण तेषां नित्यत्वादवृत्त्यनुपपत्तेरिति भावः । सुरुचः सुवर्चसः इत्येतयोः पौनरुक्त्यं परिहरति **रुक् प्रभेति** ॥ **यद्वेति** । न कर्मधारयान्मत्वर्थीय इति नञा निर्दिष्टत्वादनित्यमिति ध्येयम् । दृष्टान्तदार्ष्टान्तिकभावविवरणं प्रमदोत्तमा इति । **पूर्वेणेति** । भागवत एव पूर्वेणेत्यर्थः ।

प० — **प्रकृतिविपरिणामविशेषस्येति** । 'सत्त्वात्सञ्जायते ज्ञानमि'त्यादौ ॥ **साधुत्वेति** । 'सद्भावे साधुभावे च सच्छब्दः पार्थ उच्यत' इत्यादौ । संवलनभ्रान्तिं निराह **सहचरितमिति** ॥ **श्रुत्यभाव इति** । मिश्रपदरूपश्रुत्यभाव इत्यर्थः । भावा इत्यस्य विवरणं विकारा इति । जरावलीपलितादयः ॥ **प्रकृतिरिति** । बाधकतया नेत्यर्थः ॥ **साधव इति** । प्रल्हादादय इत्यर्थः । सुरुचः सुवर्चस इत्यनयोरपौनरुक्त्यायार्थभेदमाह **रुक्प्रभेति वर्चोबलमिति** । य इत्यत्र लोक इति विशेष्योक्तिः । प्रकरणवशादाह **एवंविधानामिति** । प्रवालेत्यादिविशेषणोक्तार्थपरामर्शः । एकत्र बाधादाह **केचिदिति** । बहुव्रीहिगर्भः समास इत्याह **इति विग्रह इति** ॥ **इनिरुत्पाद्य इति** । व्रीह्यादिभ्यश्चेति इनिरित्यर्थः । तत्र तदन्तविधिरिष्यत इत्युक्तं वादिनोः शून्यमायिनोरित्येतद्व्याख्यावसरे । दृष्टान्तदार्ष्टान्तिकभावं व्यनक्ति **प्रमदोत्तमा विद्युत इति** ॥ **पूर्वेणान्वय इति** । द्वितीयस्कन्धे नवमेऽध्याये 'तस्मै स्वलोकं भगवान्सभाजितः सन्दर्शयामास परं न यत्पदं' इति श्लोकेनान्वय इत्यर्थः । ऋचां त्व इति श्रुतेः पृथगधिकरणे व्याख्यानादिह त्यागः ॥ **श्रुताविति** । ऋचां त्व इति श्रुतावित्यर्थः ॥ **ऋगुच्चारणादिनेति** । सामगानादिरादिपदार्थः ।

या० — प्रकृतिपरिणामरूपसत्त्वस्य रजस्तमोमिश्रत्वादाह **सहचारित्वमिति** ॥ **ज्ञास्यत इति** । तथा चास्य विशेषणस्य नोक्तं प्रयोजनमन्यथासिद्धत्वादित्येव शङ्कितुरभिप्रायः । एतद्विशेषणमेव माऽस्त्विति चेन्न । तथात्वेऽग्रिमसमाधानस्याश्लिष्टत्वप्राप्तेरित्यवधेयम् ॥ **श्रुत्यभाव इति** । अत्र श्रुतिशब्देन लिङ्गात्मकशब्दस्य विवक्षितत्वात्तयोर्मिश्रमित्यस्य लिङ्गत्वात्कथं श्रुतित्वमिति शङ्काऽनवकाशः । प्रकरणापेक्षस्य लिङ्गस्य शीघ्रोपस्थापकत्वाल्लिङ्गेनैवोक्तनिश्चय इति समाधानाभिप्रायः । ननु ब्रह्माण्डान्तःस्थत्वात्तत्र कथं तेषामवृत्तिरित्यत आह **अबन्धकतयेति** ॥ **भावविकारः** पदार्थविकृतिः । सर्वे

चतुर्बाहव इति सारूप्यमुक्त्यधिकारिविवक्षयोक्तमिति ज्ञातव्यम् । बहुव्रीहित्वे इनो वैयर्थ्यप्रसङ्गादाह **परिस्फुरत्कुण्डलेति ॥ पूर्वेणेति** । भागवतपूर्ववाक्येनेत्यर्थः ॥ **दोषाहेतुरिति** । दुःखस्य दोषसाध्यत्वाद्दोषाहेतुत्वे दुःखाहेतुत्वमपि लब्धमेवेति भावः ॥

**श्री०**— ननु मिश्रं सत्त्वं नास्तीति सत्त्वस्य कथं मिश्रत्वमुच्यते । प्रकृतिपरिणामभूतस्य सत्त्वस्य रजस्तमोभ्यामविमिश्रत्वेन प्रमितत्वात् । यथोक्तं तृतीयतात्पर्ये । 'तत्र सत्त्वं केवलं स्यादि'ति । **अतो** मिश्रशब्दं व्याख्याति **सहचरितमिति** । तथाच तयोर्मिश्रं रजस्तमोभ्यां सहचरितं सहपठितमित्यर्थः । सत्त्वगुण इति यावदित्युक्तं भवतीत्यर्थः ॥ **ज्ञायत इति** । अनेकार्थस्यापि सत्त्वशब्दस्य सत्त्वगुणपरत्वमित्यर्थः । अतो मिश्रपदमनपेक्षितमिति भावः । **श्रुतिः** । तयोर्मिश्रमिति लिङ्गात्मकः शब्द इत्यर्थः । प्रकृते च शीघ्रोपस्थापकस्य तयोर्मिश्रमिति लिङ्गात्मकशब्दस्य विद्यमानत्वात्तदपेक्षया विलम्बेनोपस्थापकस्यात एव तदपेक्षया दुर्बलस्य प्रकरणस्यान्वेषणं न कर्तव्यमिति भावः । विशेषणं विशेष्येण बहुलमिति बहुलग्रहणात् मौलयश्च ते मालिनश्चेति विशेषणयोरेव समास इति द्रष्टव्यम् । अत एवास्वरसादाह **यद्वेति ॥ पश्चादिभिरिति** । मौलिमाला एषां सन्तीति मौलिमालिनस्तेषामित्यर्थः । अनेन बहुव्रीहित्वे इनेर्वैयर्थ्यमिति शङ्काऽनवकाश इति ज्ञातव्यम् । अभ्रावलय इत्यनन्तरं वैकुण्ठलोको नभःस्थानीय इत्यपि द्रष्टव्यम् ॥ **दोषाहेतुरिति** । दोषकार्यदुःखाहेतुरित्यर्थः । तेषामपि च मुक्तिगतानामिति जीवन्मुक्तानामपि परममुक्त्यनन्तरमित्यर्थः ॥ **देहस्य स्वरूपत्वमिति** । एतदपि प्रकृत्याद्यभावोक्त्यैव प्रतीयत इत्यर्थः । **तत एव** स्वरूपत्वादेव ।

**सु०— अत्र अनुमानमप्याह** शिर इति ।

**अनु०**— शिरःकराद्यैरपि मुक्तिभाजो युक्ता यतस्ते पुरुषा इदानीम् ॥
यथेति पूर्वा अनुमाश्च जीवस्वरूपमङ्गादिकमाव(प)यन्ति ॥

**यतस्ते पुरुषा इत्यात्मत्वादित्यर्थः** ॥ इदानीं यथेति । **अस्मदादिवदित्यर्थः** । **ईश्वरादीनां पक्षतुल्यत्वान्न दोषः** । **पूर्वग्रहणेन, मुक्तिर्देहिनिष्ठा जीवावस्थात्वात् संसारवदित्यस्य ग्रहणम्** । जीवस्वरूपं **मुक्तजीवस्वरूपम्** । अङ्गं **शरीरम्** । **आदिपदेनेन्द्रियाणि** । आवयन्तीति **करणे कर्तृत्वोपचारः । आपयन्तीति क्वचित्पाठः** ।

**शे०— आत्मत्वादित्यर्थ इति** । अन्यथा मुक्तस्त्रीषु भागासिद्धिप्रसङ्गादिति भावः । नन्वीश्वरादीनां सत्यप्यात्मत्वे शिरःकरादिमत्त्वाभावात्तत्र व्यभिचार इत्यत आह **ईश्वरादीनामिति** । आदिपदेन तमोगलपरिग्रहः । मुक्तिभाज इति धर्मिनिर्देशानुसारात्सामान्यशब्दोऽपि विशेषपर इत्याह

**जीवस्वरूपमिति** । अनुमायाः करणत्वेन कर्तृत्वाभावादावयन्तीति कर्तृत्वनिर्देशानुपपत्तिरित्यत आह **करण इति** । अवान्तरव्यापारवतः कारकस्य करणत्वात्प्रधानक्रियायां करणत्वेऽप्यवान्तरव्यापारं प्रति कर्तृत्वात्तद्विवक्षया युक्तः कर्तृत्वनिर्देश इति भावः ॥ **पाठ इति** । तत्रापि चेयमेव गतिरनुसन्धेयेति भावः ।

**स०**— नन्वात्मत्ववत्यपीश्वरे शिरःकराद्यभावात् व्यभिचार इत्यत आह **ईश्वरादीनामिति** । आदिपदेन पराभ्युपगतशिरआदिरहितयोगिपरामर्शः ।

**प०**— पुरुषपदस्य देहविशिष्टपरत्वे परस्यासिद्धिः साध्याविशेषो वा स्त्रीषु भागासिद्धिर्वेत्यत आह **आत्मत्वादित्यर्थ इति** ॥ **आपयन्तीति** । प्रापयन्तीत्यर्थः ॥ **सांख्याद्यभिमतमोक्षस्यापुमर्थत्वोक्तिः** ॥

**या०** — **आत्मत्वादित्यर्थ इति** । अन्यथा मुक्तस्त्रीषु भागासिद्धिरिति भावः । ईश्वरादीनामित्यत्रादिपदेन तमोगतानां प्रलयकालीनानां च ग्रहणम् ।

**श्री०** — नन्वीश्वरस्याशरीरत्वेन शिरःकरादिरहितत्वात्तत्र पुरुषत्वहेतोर्व्यभिचार इत्यत आह **ईश्वरादीनामिति** । आदिपदेन प्रलयकालीनानां ग्रहणम् । तत्रापि पुरुषत्वेन शिरःकरादियुक्तत्वसाधनान्न व्यभिचाराख्यदोष इत्यर्थः । यथाहुः । न हि पक्षे पक्षतुल्ये वा व्यभिचार इति ॥ **आवयन्तीति** । ज्ञापयन्ति । आपयन्ति प्रापयन्ति साधयन्तीत्यर्थः ।

**सु०** — **एवं सांख्यादिमतमपाकृत्येदानीं ये प्राग् भिन्नस्य भिन्नाभिन्नस्य वा जीवस्य मुक्तौ परब्रह्मणाऽत्यन्तैक्यं भवतीति मन्यन्ते तेषां मतमपाकरोति** नेति ।

**अनु०** — न ब्रह्मरूपत्वममुष्यदेहिनो मुक्तावपि स्यात्प्रमया कथञ्चित् ॥

कथञ्चित्प्रमयेति **केनापि प्रमाणेनेत्यर्थः** । **श्रुतीनां प्रागन्यथा व्याख्यातत्वात्** । **यद्वा** कथञ्चित् **केनापि साधनेन न स्यात् कुतः** । प्रमया **मुक्तावपि भेदे प्रमाणसद्भावादित्यर्थः** ॥ **तत्प्रमाणं पठति** स इति ।

स ब्रह्मणा सहितोऽशेषभोगान्भुंक्ते तथोपेत्य सुखार्णवं तम् ॥
यत्तत्परं ज्योतिरुपेत्य जीवो निजस्वरूपत्वमवाप्य कामान् ॥
भुंक्ते स देवः पुरुषोत्तमोऽज आत्मेति चोक्तो गुणपूर्तिहेतोः ॥
सेतुः स देवोऽखिलमुक्तिभाजामुतामृतस्येष्ट इहेशिता यत् ॥

अनेन 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति श्रुतिमुपादत्ते । तथाशब्दः श्रुतिसमुच्चये । उपेत्येत्यने'नैतमानन्दमयमात्मानमुपसंक्रम्ये'ति । उपेत्य तथाऽशेषभोगान्भुंक्त इति वा । यत्तदित्यनेन 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षन्क्रीडन्रममाणः, परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मे'ति श्रुति-द्वयम् । यः परं ज्योतिरुपसंपद्यते स एवोत्तमपुरुष आत्मेति चान्यथाप्रतीतिरर्थतः श्रुती पठतैव निराकृता । पराक्रान्तं चात्र सूत्रकृतैव 'अन्यार्थश्च परामर्श' इति । गुणपूर्तिहेतोः इति आत्मशब्दव्याख्यानं पुरुषोत्तमत्वस्य चोपपादकम् । सेतुरित्यनेन 'अमृतस्यैष सेतुरि'ति । उतेत्यनेन 'उतामृतत्वस्येशानो यदन्नेनातिरोहती'ति ।

उदाहृतवाक्यफलं दर्शयति इत्यादीति ।

इत्यादिवाक्यैर्भगवद्वशः सन्मुक्तोऽखिलान्मुक्तिगतोऽपि भोगान् ॥

इति ज्ञायत इति शेषः । भगवद्वश इत्युपलक्षणम् । तत्समीपं प्राप्त इत्यपि ग्राह्यम् । अद्वैतिनो भोगं न मन्यन्त इत्यतः सोऽप्यत्र वर्णितः ।

शे० — प्राग्भिन्नस्येति । प्रागत्यन्तभिन्नस्येत्यर्थः । प्रतिज्ञातार्थे प्रमाणाभावकथनपरत्वा-

---

त्कथञ्चित्प्रमयेत्यस्य न वैयर्थ्यमित्याशयेन तदनूद्य व्याख्याति कथञ्चिदिति । ननु 'परेऽव्यये सर्व एकीभवन्ती'त्यादिश्रुतीनामेव तत्र प्रामाण्यात्कथं तत्र प्रामाण्याभाव इत्यत आह श्रुतीनामिति ॥ प्रागिति । पृथगुपदेशादित्यधिकरणे 'सादृश्याच्च प्रधानत्वात्स्वातन्त्र्यादपि चाभिदामि'त्यादिनेति शेषः । बाधकसद्भावोपदर्शकत्वाच्च न प्रमयेत्यंशस्य वैयर्थ्यमित्यभिप्रेत्य तथा तद्व्याचिख्यासुः कथञ्चिदित्येतत्प्रतिज्ञाशेषतया योजयति यद्वेति । स इत्यादि भाष्ये तथाशब्दो न श्रुतेरर्थानुवादः किन्तु श्रुतिसमुच्चयार्थ इत्याह तथाशब्द इति । उपेत्येत्येतावन्मात्रस्य श्रुत्यन्तरोपदर्शकत्वमङ्गीकृत्य तथाशब्दः श्रुतिसमुच्चयार्थतया व्याख्यातः । इदानीं स इत्यादि संपूर्णस्य भाष्यस्य श्रुत्यर्थानुवादकत्व-मभिप्रेत्य 'इमांल्लोकान्कामान्नी कामरूप्यनुसंचरन्नि'ति उपेत्येत्येतत्संगृहीतश्रुतिशेषार्थानुवादरूपतामभि-प्रेत्याशेषभोगान्भुंक्त इति पूर्वप्रकृतपरामर्शकतया तथाशब्दं व्याचष्टे उपेत्य तथाऽशेषान्भोगान्भुंक्त इति वेति । यत्तत्परमित्यादिभाष्यं न केवलमर्थतः श्रुतिमात्रपरिग्राहकं किन्तु परकीयतच्छ्रुत्यपव्याख्यान-निराकरणपरं चेत्यभिप्रेत्यापव्याख्यानप्रकारोपदर्शनपूर्वकं तन्निरासेऽपि तद्व्यापारयति य इत्यादिना । नन्वियमन्यथाप्रतीतिरेव कुतः । यथावत्प्रतीतिरेव किं न स्यादित्यतस्तत्सूत्रकृताऽस्यार्थस्य निराकृतत्वा-दित्याशयेन तन्निरासकं सूत्रं पठति पराक्रान्तं चेत्यादि । इह टीकायां पुरुषोत्तमत्वस्य चोपपादकमिति

प्रायिकपाठः । पुरुषोत्तमत्वस्योपपादकमिति क्वचित्कश्च । तत्राद्ये भाष्ये गुणपूर्तिहेतोरित्यस्य वैयर्थ्यमाशङ्क्य श्रौतात्मशब्दव्याख्यानार्थत्वात्पुरुषोत्तमत्वस्योपपादकत्वाच्च न वैयर्थ्यमित्याह **गुणपूर्तिहेतोरिति** इत्यवतारः कर्तव्यः । द्वितीये यथास्थितश्रुतियोजनाप्रदर्शनेनैवान्यथाव्याख्याननिराससिद्धेर्गुणपूर्तिहेतोरिति भाष्यकारीयश्रौतात्मशब्दव्याख्यानस्य वैयर्थ्यमाशङ्क्य तत्प्रयोजनमाहेति द्रष्टव्यम् ॥ **पुरुषोत्तमत्वस्य चोपपादकमिति** । अनेन श्रुतौ स उत्तमः पुरुष इत्युक्तं पुरुषोत्तमत्वं कुत इत्याकांक्षायामात्मेत्युक्तम् । तत्कथमस्य गमकत्वमित्यतो भाष्यकृता आत्मशब्दो व्याख्यातः । ततश्चात्मशब्देनास्य पुरुषस्य गुणपूर्त्यभिधानात् युक्तमस्य पुरुषोत्तमत्वमित्युपपाद्योपपादकभावेन पदद्वययोजना सूचिता भवति ।

ज्ञापकश्चायमर्थो न कारक इत्याशयेनानुरूपं शेषमाह **इति ज्ञायत इति शेष इति** । ननु 'सोऽश्नुते सर्वान्कामानि'त्यादिवाक्यैर्भगवद्दृशत्वस्येव 'एतमानन्दमयमात्मानमुपसंक्रम्ये'त्यादिभिस्तत्समीपप्राप्तेरप्यभिहितत्वाद्भगवद्दृशत्वमात्रकथनं भाष्यकारीयमनुपपन्नमित्यतोऽस्य तत्समीपप्राप्त्युपलक्षकत्वान्नानुपपन्नपपत्तिरित्याशयेनाह **भगवद्दृश इत्युपलक्षणमिति** । ननु भगवद्दृशत्वतत्समीपप्राप्त्युक्तिमात्रेणैव मुक्तस्येश्वरभेदसिद्धेस्तावदेव भाष्यकृता वक्तव्यम् । भोगकथनस्य तु कोपयोग इत्यत आह **अद्वैतवादिन इति** ।

प० — **श्रुतीनामिति** । मुक्तावैक्यबोधकश्रुतीनां वियत्पादे पृथगधिकरणे तथा भक्तिपादे अत एव चोपमेत्यत्र च स्थानैक्यमत्यैक्यपरत्वेन 'स्थानैक्यमैकमत्यं च मुक्तस्य तु विशेषत' इत्यादिना व्याख्यानादित्यर्थः । प्रमयेत्यनुवादः मुक्तावपीत्यादि व्याख्या ॥ **उपेत्य तथेति** । नेदं श्रुतिप्रतीकग्रहणं किंत्वर्थोक्तिपरमिति भावः ॥ **अन्यार्थ इति** । अन्यार्थो भगवदर्थः स उत्तमः पुरुष इति परामर्श इति दहराधिकरणस्थसूत्रार्थः ॥ **अमृतत्वमिति** । मुक्तवर्गस्येत्यर्थः । अन्नेनान्नं मर्त्यसंचारिणम् । **अतिरोहति** अतिक्रम्य वर्तते । 'मर्त्यमन्नं यदत्यगात्' इति प्राग्व्याख्यानात् । परं ज्योतिरुपसंपद्येत्यादिश्रुत्युक्तानुरोधायाह **तत्समीपं प्राप्त इति** । प्रस्तुताद्वैतिनं प्रति मुक्तौ भेदस्यैव वाच्यत्वात् भोगोक्तिरसङ्गता । भोगस्य चतुर्थपाद एव वक्तव्यत्वादित्यत आह **अद्वैतिन इति** ।

**या० — तत्समीपं प्राप्त इत्यपीति** ॥ उपसंपद्येति श्रुतेरपि पूर्वमुदाहृतत्वादिति भावः । **सोऽप्यत्र वर्णित इति** । वस्तुतस्तु मुक्तौ भेदप्रतिपादनमेव प्रकृतसङ्गतमिति भावः । यदैक्यमिति बुद्ध्या विवेकप्रदर्शनेनैक्यशब्दस्य नित्यसापेक्षत्वात्समाम इति सूचितम् ॥

**श्री० — श्रुतीनां 'परेऽव्यये सर्व एकीभवन्ती'त्यादीनाम्** । मूले सुखार्णवं तमित्येतत् आनन्दमयमात्मानमित्यस्यार्थकथनमिति ज्ञातव्यम् । तथाशब्दः श्रुतिसमुच्चयार्थतया व्याख्यातः । इदानीं

भोगान् भुंक्त इत्यस्य परामर्शक इत्यभिप्रेत्याह **उपेत्य तथाऽशेष इति** । सुखार्णवं तमुपेत्येत्यर्थः । 'इमान् लोकान्कामान्नी'त्यादिनोत्तरत्र भोगोक्तेरिति द्रष्टव्यम् ।। **आत्मेति चेति** । स एवोत्तमः पुरुष आत्मा जीवं इत्यर्थः ।। **अन्यार्थश्चेति** । यं प्राप्य जीवः स्वेन रूपेणाभिनिष्पद्यते स एष आत्मेति परमात्माऽर्थश्च परामर्श इति सूत्रार्थः ।

**सु०** — **अत्रानुमानमप्याह** कालोऽपीति ।

**अनु०** — कालोप्यसौ नैक्ययुतः परेण जीवस्य कालो यत एष यद्वत् ।।
इत्यादिका अप्यनुमाः प्रमाणं मुक्तौ च जीवस्य परत्वरोधे ।।

असौ **मोक्षसंबन्ध्यपि, जीवस्य परेण यदैक्यं तद्युतो न** भवतीत्यर्थः । कालो यतः कालत्वात् । एष यद्वत्संसारकालवत् । अनुमा अपि । **मुक्तावपि जीवस्य परब्रह्मत्वनिवारणे प्रमाणमस्ति, किं तत् अनुमा इति योजना । ये प्रागत्यन्तभिन्नस्य मुक्तावैक्यं** वदन्ति । **तेषामैक्यमिति परत्वमिति च यथाश्रुतं** व्याख्येयम् । **ये तु प्राग्भेदाभेदावुपेत्य मुक्तावत्यन्ताभेदमाहुस्तान्प्रत्यैक्यादिशब्दोऽत्यन्ताभेदपरो** व्याख्येयः । **तथा च न दृष्टान्तदोषः । जीवशब्दश्च निष्कृष्टव्यक्तिविषयो वर्णनीयः । अन्यथा पुनर्दृष्टान्तदोषापत्तेरिति ।**

**स्वकीयमादिपदं व्याकुर्वन्ननुमानान्तरमाह** कथं चेति ।

कथं च यः पूर्वमसौ न पश्चाद्भवेत्स एवेत्यपि युक्तिमेति ।।

यो जीवः पूर्वं **संसारेऽसौ परमात्मा न भवति,** असौ पश्चान्मुक्तौ स **परमात्मैव भवेदित्येतत्कथं** युक्तिमेति । **अनुपपन्नमित्यर्थः । अत्रापि पूर्ववन्मतभेदेन** व्याख्यानं **कर्तव्यम्** । **अत एव स एवेत्यवधारणम् । प्रयोगस्तु** प्रागेव दर्शितः । **अपिशब्दोऽनुमानसमुच्चये । अस्य व्याप्तिमुपपादयति** यत इति ।

यतो न दृष्टं यदभून्न पूर्वं पश्चात्तदासेति कुतश्च किंचित् ।

यतः **कारणात् यत्किंचिद्धटादिकं वस्तु पूर्वं यद्धटादिकं नाभूत । येन सता वस्त्वन्तरेणैकीभूतं न भवतीति यावत्** । तत् पश्चात्कुतश्चित्**कारणात्तदास तेनैक्यमापन्नमित्येतन्न दृष्टम् । न च दृश्यते नापि द्रक्ष्यते । तस्मादिति पूर्वेण संबन्धः । एतेनादधिभूतस्य क्षीरस्य पश्चाद्दधिभावदर्शनाद्व्यभिचार इत्यसङ्गतम् ।**

**शे०** — कालोऽपीत्यपिशब्दस्य वैयर्थ्येन यथाश्रुतसंबन्धाभावाद्भिन्नक्रमतया तं योजयति **असौ मोक्षसंबन्ध्यपीति । नित्यसापेक्षत्वाद्देवदत्तस्य गुरुकुलमित्यादिवत्समास इत्यभिप्रेत्य प्रतिज्ञावाक्यार्थमाह**

**जीवस्येत्यादि** । अप्यनुमेत्यपिशब्दो भिन्नक्रम इत्याह **अनुमा अपीति** । ननु प्रमाणशब्दस्य भावसाधनस्य नित्यनपुंसकलिङ्गत्वेऽपि भावसाधनताया अनुमानानां लिङ्गांशे प्रमितिरूपत्वाभावेन सामानाधिकरण्यानुपपत्त्याऽसंभवेन करणसाधनत्वावश्यंभावात् । करणसाधनस्य च तस्य विशेष्यनिघ्नत्वेन विशेष्यभूतानुमानलिङ्गवचनप्रसङ्गेन टिड्ढाणञित्यादिना ङीपि सति प्रमाण्य इति भाव्यत्वात्प्रमाणमिति नपुंसकैकवचनानुपपत्तिरित्यतो यदत्र प्रमाणमिष्टं ते वेदा इत्यादिवत् यदत्र प्रमाणमिष्टं ता अनुमा इति प्रमाणमुद्दिश्यानुमात्वस्यैवात्र विधानात् । उद्देश्यवाचकप्रमाणशब्दस्य नपुंसकत्वेऽप्यनियतलिङ्गस्यैव विधेयस्योद्देश्यसमानलिङ्गतानियमात् । प्रकृते च विधेयसमर्पकस्यानुमाशब्दस्य नित्यस्त्रीलिङ्गत्वेनोद्देश्यसमानलिङ्गत्वाप्राप्तेर्नानुपपत्तिरित्यभिप्रेत्य मौलपदानुवादपूर्वकमुद्देश्यविधेयभावेन योजनामुपदर्शयति **मुक्तावपीत्यादिना** । ननु संसारे भेदाभेदाङ्गीकारमते इदानींतनकालेऽप्यैक्यस्य सत्त्वाज्जीवस्य परेणैक्ययुतत्वाभावरूपसाध्यस्य तत्रासत्त्वाद्दृष्टान्ते साध्यवैकल्यमित्यत आह **ये प्रागिति** । भेद औपाधिकोऽभेदः स्वाभाविक इति भेदाभेदावुपेत्येत्यर्थः । ततश्च भेदाभेदवादिनं प्रत्यैक्याभावमात्रस्यासाधनात् । जीवस्तु परेणात्यन्ताभेदयुक्तो न भवतीत्येव साधनादिदानीन्तनकाले ऐक्यसद्भावेन तदभावाभावेऽपि अत्यन्ताभेदाभावरूपसाध्यसद्भावात् न दृष्टान्तस्य साध्यवैकल्यमित्याशयेनाह **तथा चेति** ॥ **निष्कृष्टेति** । देहेन्द्रियाद्युपाधिपरिच्छिन्नचेतनांशव्यक्तिवचन इत्यर्थः ॥ **अन्यथेति** । जीवशब्दस्य चेतनमात्रविषयत्व इत्यर्थः । **पुनरिति** । जीवशब्दस्य चेतनमात्रपरत्वे परिच्छेदशून्यचैतन्यस्यापि तेन प्राप्त्या तस्य ब्रह्मात्यन्ताभेदस्य संसारकालेऽपि सत्त्वेन तन्निषेधाभावात् साध्यवैकल्यरूपो दृष्टान्तदोषः पुनरपि स्यादित्यर्थः । आसेत्यस्य प्रतिपदं भवेदिति । मौलस्यासेत्यस्य व्युत्पादनं तु 'यथा द्रौणेरुल्केन कृतमप्यास बोधकमि'ति युक्तिपादीयानुव्याख्याव्याख्यानावसरे टीकाकृतोक्तमवधेयम् ।

**पूर्ववदिति** । ऐक्यवादिनं प्रति प्रतिज्ञायामवधारणाविवक्षया भेदाभेदवादिनं प्रति च तत्र तद्विवक्षयेति पूर्ववदित्यर्थः ॥ **प्रयोगस्त्विति** । जीवो न कालान्तरेऽपि ब्रह्मणैक्यमापत्स्यते प्राक्ततोऽत्यन्तभिन्नत्वात् । यः कदाचिद्यतोऽत्यन्तं भिद्यते नासौ कदाचिदपि तदैक्यमापद्यते । यथा घटः पटेनेति प्रयोगप्रकारो भोक्त्रापत्तेरित्येतदधिकरणीय'नान्यदन्यत्वमापन्नं क्वचिद्दृष्टं कथंचन । 'अतो जीवस्य न ब्रह्मभावः स्याद्धि कदाचने'त्येतदनुव्याख्याव्याख्यानावसरे, अयमत्र प्रयोग इत्यादिना दर्शित इत्यर्थः ॥ **अनुमानसमुच्चय इति** । कथं च यः पूर्वमित्येतद्वाक्योक्तानुमानस्य 'कालोऽप्यसौ नैक्ययुतः परेणे'ति पूर्ववाक्योक्तानुमानेन, जीवब्रह्मणोर्भेदः सतोर्भेदिनोर्न निवृत्तिमान् भेदत्वात् स्तम्भकुम्भादिभेदवत् इति पूर्ववाक्योक्तानुमानेन च समुच्चय इत्यर्थः । पूर्वमतद्भूतस्य तद्भावादर्शनेनोक्तनियम-

स्यातीते व्यभिचाराभावप्राप्तावपि वर्तमानानागतयोर्व्यभिचारः स्यादेवेत्यतोऽत्रातीते तन्निषेधस्य वर्तमानानागतयोरपि तन्निषेधोपलक्षणत्वान्न तत्राप्युक्तनियमस्य व्यभिचार इत्याशयेन व्याचष्टे **न च दृश्यत इत्यादि** । येन सता वस्त्वन्तरेणैकीभूतं न भवतीति किमिति तात्पर्यं वर्ण्यते । यद्धटादिकं वस्तु यत्पूर्वं वाऽभूदिति यथाश्रुतमेव किं न स्यादित्यत आह **एतेनेति** । येन सता वस्त्वन्तरेणेति विशेषणदानेनेत्यर्थः ।

**स०**— एकवचनान्तप्रमाणशब्दस्य तादृशानुमाशब्देन कथमन्वय इत्यत उद्देश्यविधेयभावेन तमाह **अनुमा अपीति** । ननु मुक्तिसंबन्धी कालः, जीवस्य परैक्ययुतो न, कालत्वात्, इदानीन्तनकालवदित्यनुमाने दृष्टान्ते साध्यवैकल्यम् । संसारेपि भेदाभेदाङ्गीकारिमते तत्कालेप्यैक्यस्य सत्त्वात् जीवस्य परैक्ययुतत्वाभावरूपसाध्यस्याभावात् साध्यवैकल्यमित्यत आह **ये प्रागिति** । भेद औपाधिकः अभेदः स्वाभाविक इति भेदाभेदावुपेत्येत्यर्थः । तथा च भेदाभेदवादिनं प्रत्यैक्याभावमात्रस्यासाधनात् । जीवस्य परेणात्यन्ताभेदयुक्तो न भवतीत्येव साधनात् इदानीन्तनकाल ऐक्यमात्रसद्भावेपि अत्यन्तैक्याभावसद्भावान्न दृष्टान्तदोष इत्याह **तथा चेति** । नन्वेवमपि दृष्टान्तदोष एव । देवदत्तसंसारदशायामपि मुक्तयज्ञदत्तस्य परेण यदैक्यं तद्युतत्वस्यैव विद्यमानत्वेन तदभावरूपसाध्यस्य दृष्टान्ते आभावादित्यत आह **जीवशब्दश्च निष्कृष्टव्यक्तिविषय इति** । देवदत्तादिरूपनिष्कृष्टव्यक्तिविषय इत्यर्थः । तथा च देवदत्तसंसारदशायां देवदत्तस्य परेण यदैक्यं तद्युतत्वाभावो वर्तत एवेति न साध्यवैकल्यमिति भावः । जीवशब्दस्य चैतन्यमात्रपरत्वेन चैतन्यात्यन्ताभेदस्य संसारकाले सत्त्वात् । न च भेदाभेदवादिमतेपि कथं संसारेत्यन्ताभेद इति वाच्यम् । भेदाभेदवादिभिरपि संसारेऽभेदस्य स्वाभाविकताङ्गीकारेण चेतनात्यन्ताभेदस्य तत्रापि सद्भावेनात्यन्ताभेदाभावरूपसाध्यस्य तत्राभावादित्यत आह **जीवशब्दश्चेति** । स्यादेतत् । यदि जीवशब्दश्चेतनमात्रपरः स्यात् । किंनाम उपाधिना निष्कृष्टा या ब्रह्मांशव्यक्तिः तत्पर एव । तथा च चेतनात्यन्ताभेदस्य संसारावस्थायां सद्भावेपि जीवस्य परेण साकं भेदाभेदयोरेव विद्यमानत्वेनात्यन्ताभेदस्याभावेन दृष्टान्तस्य साध्यविकलत्वासंभवादिति भावः । अत्र च 'अत एव चोपमा' इत्येतदधिकरणीयं 'ईशाख्या समुदाये स्यादि'त्येतदनुव्याख्यानं जयतीर्थपूज्यचरणीयं ज्ञापकं बोध्यम् । **प्रयोगस्त्विति** । द्वितीयस्य प्रथमे भोक्त्रापत्तेरित्यधिकरणे 'नान्यदन्यत्वमापन्नमि'त्यनुव्याख्यानव्याख्यानावसरे 'अयमत्रप्रयोगः जीवो न कालान्तरेपि ब्रह्मणैक्यमापत्स्यते प्राक् ततो भिन्नत्वात् । यः कदाचिद्यतोत्यन्तं भिद्यते नासौ कदाचित्तदैक्यमापद्यते यथा घटः पटेन' इत्यादिना प्रयोगो दर्शित इत्यर्थः । **एतेनेति** । येन सता वस्त्वन्तरेण एकीभूतं न भवतीति व्याख्यानेनेत्यर्थः ।

प० — जीवस्य परेणेत्येतदैक्यपदेनान्वेतीत्याह **जीवस्येत्यादिना** । नित्यसापेक्षत्वादैक्यपदस्य समास इति भावः । अपिपदान्वयोक्तिः **अनुमा अपीति** । प्रमाणशब्दस्य करणे ल्युडन्तस्य विशेष्यनिघ्नतया प्रमाण्य इति भाव्यमित्यतः उद्देश्यविधेयव्यत्यासेन योजनामाह **मुक्तावपीत्यादिना** ॥ विवृतमेतद्युक्तिपादे स्मृतिनये । 'पिपीलिकालिपिश्चापि प्रमाणमि'त्यत्र ॥ **ऐक्यादिशब्द इति** । परत्वशब्द आदिपदार्थः । मुक्तिसंबन्धी कालः, जीवपरात्यन्ताभेदयुतो न, कालत्वात् इदानींतनकालवदित्याद्यनुमा जीवस्य परत्वरोधे परेणात्यन्ताभेदनिवारणे इत्येवं व्याख्येयमित्यर्थः ॥ **दृष्टान्तदोष इति** । अभेदयुतो नेत्येवोक्ते संसारकाले भेदाभेदयुक्तत्वाङ्गीकारादभेदो नेति साध्यस्यासत्त्वात्साध्यवैकल्यमिति दोषो नेत्यर्थः । अत्यन्ताभेदाभावस्य तदानीमपि सत्त्वादिति भावः ॥ **निष्कृष्टव्यक्तीति** । अहंकाराद्युपाधिपरिच्छिन्नोऽहंधीविषय इत्यर्थः ॥ **अन्यथेति** । विशेष्यभूतचेतनपरत्वे तस्य परेणैक्यं संसारकालेऽप्यस्तीति साध्यवैकल्यदोषः स्यादित्यर्थः । न चैवं मुक्तौ तादृशस्यैक्यानङ्गीकारात्सिद्धसाधनतेति शङ्क्यम् । तस्यैव उपाधिहीनस्य मुक्तौ जीवशब्देन ग्रहणादिति भावः । असावित्यस्य आवृत्तिं परमात्मपरत्वं जीवपरत्वं चोपेत्य योजयति **जीव इति** । फलितमाह **अनुपपन्नमित्यर्थ इति ॥ मतभेदेनेति** । यो जीवः पूर्वं परेणाऽत्यन्तं भिन्नः असौ जीवः पश्चात्स परमात्मा भवेदिति कथं युक्तिमेतीत्यवधारणेन विना आद्यमते व्याख्यानम् । द्वितीयमते तु यः पूर्वं असावेव न, परमात्मैव न, परमात्मनात्यन्ताभिन्नो न, किंतु भिन्नाभिन्नः । असौ जीवः पश्चान्मुक्तौ स एव परमात्मैव तेन परमात्मनात्यन्ताभिन्न इति कथं युक्तिमेतीति व्याख्यानं कार्यमित्यर्थः ॥ **अत एवेति** । भेदाभेदमतस्याप्यत्र निराकार्यत्वादेवेत्यर्थः ॥ **प्रागेवेति** । युक्तिपादे भोक्त्रापत्त्यधिकरणे 'नान्यदन्यत्वमापन्नं क्वचिद्दृष्टं कथञ्चन । अतो जीवस्य न ब्रह्मभावः स्याद्धि कदाचने'त्येतद्व्याख्यावसरे जीवो न कालान्तरेण ब्रह्मणैक्यमापत्स्यते ततो भिन्नत्वादिति दर्शित इत्यर्थः । यदित्यस्यावृत्तिमुपेत्य योजयति **यत्किंचिदित्यादिना** । तात्पर्यमाह **येन सतेति** । नासतेत्यर्थः । एवमर्थोक्तिः कृत्यमग्रे एतेनेत्यनेन स्वयमेव वक्ष्यति । यदिति श्रवणात्तदिति स्वयमेवाह **तत्पश्चादिति** ॥ **एतेनेति** । येन सतेत्यर्थकथनेनेत्यर्थः । क्षीरत्वसमये दध्नोऽसत्त्वान्नेदं व्यभिचारस्थलमिति भावः ॥

**भास्करादिमतनिरासः ।**

या० — **इति योजनेति** । अन्यथा ल्युडन्तस्येध्मव्रश्चनः कुठार इत्यादौ विशेष्यनिघ्नतादर्शनेन प्रमाण्य इति स्यादिति भावः । यथा चैतत्तथोक्तं 'पिपीलिकालिपिश्चापि प्रमाण'मित्येतद्व्याख्यावसरे ॥ **परत्वमिति चेति** । परत्वशब्दस्यापि परमात्मतादात्म्यपरत्वादिति भावः ॥ **निष्कृष्टव्यक्तिविषय इति** । देहेन्द्रियाद्युपाधिपरिच्छिन्नचेतनांशरूपव्यक्तिविषय इत्यर्थः । न चैवं सिद्धसाध्यता

उपाधिपरिच्छिन्नचेतनांशस्य मुक्तौ परेणात्यन्ताभेदानङ्गीकारादिति वाच्यम् । यः पूर्वमुपाधिपरिच्छिन्न आसीत्तस्यैव चेतनांशस्य जीवशब्देन ग्रहणमित्याशयात ॥ **अन्यथेति** । जीवशब्दश्चेतनमात्रविषयो यदीत्यर्थः ॥ **पुनर्दृष्टान्तदोषेति** । जीवशब्दस्य चेतनमात्रपरत्वे परिच्छेदशून्यचेतनस्यापि चेतनत्व-प्राप्त्या तत्र ब्रह्मात्यन्ताभेदस्य संसारकालेऽपि सत्त्वेन तन्निषेधासंभवात् । साध्यवैकल्यरूपदृष्टान्तदोषः पुनः स्यादित्यर्थः । यद्वा जीवशब्दो देवदत्तादिरूपैकजीवव्यक्तिपरतया वर्णनीयः । अन्यथा संसार-काले प्राचीनमुक्तजीवस्य ब्रह्मात्यन्ताभेदमादाय पुनः साध्यवैकल्यं स्यादित्यर्थः । अथवा निष्कृष्टशब्दः शरीराद्यविशिष्टशुद्धचैतन्यपरः । अवर्णनीय इति पदच्छेदः । तथा च जीवशब्देन शरीराद्यसंयुक्तशुद्ध-चैतन्यमात्रविवक्षायां चैतन्यमात्रस्य ब्रह्मात्यन्ताभिन्नत्वात्पुनः साध्यवैकल्यं स्यात् । अतस्तथा न व्याख्या-तव्यमित्यर्थः ॥ **मतभेदेनेति** । आद्यमतेऽवधारणं न विवक्षितम् । द्वितीयमते तु तदावश्यकमिति व्याख्येयमित्यर्थः ॥ **अत एवेति** । द्वितीयमतस्याप्यत्र निराकार्यतयाऽभिप्रेतत्वादेवेत्यर्थः ॥ **प्रागेवेति** । 'नान्यदन्यत्वमापन्नं क्वचिद्दृष्टमि'त्यनुव्याख्याव्याख्यावसरे जीवो न कालान्तरेऽपि ब्रह्मैक्यमापत्स्यते ततो भिन्नत्वादिति दर्शित इत्यर्थः । अदधिभूतस्य क्षीरस्य पश्चाद्दधिभावदर्शनाद्व्यभिचार इत्यत आह **येन सतेति** । दध्नोऽपि कारणात्मना प्राक् सत्त्वादाह **वस्त्वन्तरेणेति** । तथा च सतोर्द्वयोर्मध्ये यत्पूर्वं यन्न भवति तत्पश्चादपि न भवतीति व्याप्तिरभिमताऽतो न व्यभिचार इति भावः ॥ **एतेनेति** । येन सता वस्त्वन्तरेणेति विशेषणस्य विवक्षितत्वेनेत्यर्थः ।

---

श्री० — अनुमाऽपीति प्रतीकग्रहणम् । तद्योजयति **मुक्तावपीति** । अनुमा इत्युद्दिश्य प्रमाण-त्वविधाने प्रमाणम् इति स्यादतो वेदाः प्रमाणमितिवत् प्रमाणमित्यनूद्यानुमा इत्येतद्विधेयमिति भावेनाह **अनुमा इति योजनेति** । **ये प्रागिति** । संसारे जीवेश्वरयोरत्यन्तभेदः मुक्तौ त्वभेद इत्येकं मतं, संसारे जीवेश्वरयोर्भेदाभेदौ मुक्तौ त्वत्यन्ताभेद इत्यपरं मतम् । जीवेश्वरयोः संसारे भेदाभेदौ मुक्तावपि भेदाभेदा-वेवेत्यन्यन्मतमिति भास्कराणां मतत्रयसद्भावादिति ज्ञेयम् । परत्वं परमात्माभेदः । ननु ये भास्करैकदेशिनः संसारे जीवेश्वरयोर्भेदाभेदावुपेत्य मुक्तावत्यन्ताभेदमाहुस्तेषां मते दृष्टान्तभूते संसारकाले साध्यवैकल्यं स्यात् । जीवस्य यत्परेणैक्यं तद्युक्तत्वस्यैव सत्त्वादित्यत आह **ये प्राग्भेदाभेदावुपेत्येति** । तथा च जीवस्य यत्परेणैक्यं तद्युतो न भवतीति व्याख्येयम् । तथाच संसारकाले भेदाभेदसद्भावेनात्यन्तैक्ययुत-त्वाभावरूपसाध्यसद्भावान्न साध्यवैकल्यरूपदृष्टान्तदोष इत्यर्थः । ननु जीवशब्दस्य चैतन्यमात्रपरत्वे भास्करमते जीवचैतन्यस्यापरिच्छिन्नत्वेनोपाध्यनवच्छिन्नजीवचैतन्यस्यापि जीवशब्देन प्राप्त्या जीवस्य परेण ब्रह्मणा यदत्यन्तैक्यं तद्युतत्वमेव संसारकालेऽप्यस्तीति साध्यवैकल्यं स्यादित्यत **आह जीवशब्द-**

**श्चेति** ॥ **निष्कृष्टेति** । देहेन्द्रियाद्युपाधिपरिच्छिन्नचेतनांशो निष्कृष्टव्यक्तिशब्दार्थः । तथाच परिच्छिन्नचेतनांशरूपव्यक्तेर्ब्रह्मांशत्वेनांशिना परब्रह्मणा भेदाभेदसद्भावाद्दृष्टान्तभूते संसारकालेऽपि जीवस्य यत्परैक्यं परिच्छिन्नचेतनांशरूपव्यक्तिविशेषस्य यत्परब्रह्मणाऽत्यन्तैक्यं तद्युतत्वाभावोऽस्तीति न दृष्टान्ते साध्यवैकल्यमित्यर्थः । न चैवं सिद्धसाधनता । उपाधिपरिच्छिन्नस्य चेतनांशस्य परेणात्यन्ताभेदानङ्गीकारेण यत्परेणात्यन्तैक्यं तद्युतत्वाभावस्य सिद्धत्वादिति वाच्यं । यः पूर्वमुपाधिपरिच्छिन्न आसीत्तस्यैव चेतनांशस्य जीवशब्देन ग्रहणात् । तथा च मोक्षकामः यः पूर्वं उपाधिपरिच्छिन्नः आसीत् तस्यैव चेतनांशस्योपाध्यपगमानन्तरं यत्परेणात्यन्तैक्यमुच्यते मुक्तौ भास्करेण तद्युतो न भवतीति । न चैतत्परस्य सिद्धमिति न सिद्धसाधनतेति द्रष्टव्यम् । **व्याख्यानं कर्तव्यमिति** । जीवो न कालान्तरेऽपि ब्रह्मणैक्यमापत्स्यते प्राक् ततो अत्यन्तभिन्नत्वात् इत्यनुमाने प्रागत्यन्तभिन्नस्य मुक्तावैक्यमिति मतानुसारेण स एव इत्यवधारणपरित्यागेन, स न भवेत्. अभिन्नो न भवेदित्येव व्याख्येयम् । ये तु संसारे भेदाभेदावुपेत्य मुक्तावत्यन्ताभेदमाहुस्तान् प्रति स एवेत्यवधारणसाहित्येन व्याख्येयम् । अत्यन्ताभेदस्तु तदर्थ इति भेद इति भावः । ननु क्षीरत्वावस्थायां यत्क्षीरं येन वस्त्वन्तरेण दध्ना एकीभूतं न भवति तत्क्षीरं कुतश्चन आतञ्चनादेः कारणात् पश्चाद्दध्यासेति क्षीरे व्यभिचार इत्यत उक्तं **सतेति** । वस्त्वन्तरस्य दध्नः क्षीरतादशायामभावादित्यर्थः । दध्नोऽपि कारणात्मना क्षीरे सत्त्वात्पुनः क्षीरे व्यभिचार इत्यत उक्तम् **वस्त्वन्तरेणेति** । अनेन सतोर्द्वयोर्मध्य इति विशेषणं देयमिति सूचितं भवति । तथा च सतोर्मध्ये यत्पूर्वं यन्न भवति तत्पश्चादपि तन्न भवतीति व्याप्तिर्विवक्षिताऽतो न क्षीरे व्यभिचार इति भावः । सता वस्त्वन्तरेणेति विशेषणदानेन क्षीरादौ व्यभिचारः परिहृत इति स्वयमेव दर्शयति ॥ **एतेनेति** ।

**सु०— एवं भास्करादिमतमपाकृत्य ये यादवप्रकाशादयः स्वभावत एव परमात्मना भिन्नाभिन्नो जीवस्तस्य संसारे भेद एव व्यक्तोऽभेदस्त्वविद्यादिनाऽऽवृतो वर्तते, मुक्तौ तु द्वावपि व्यक्तौ भवतः, इत्याचक्षते तेषां मतमधुना निराकरोति** न चेति ।

**अनु०**— न चैव मुक्तेन हरेः पृथक्त्वमैक्यं तथा स्यादिति युक्तिमेति ॥

**तथाशब्दः समुच्चये । इति च मतं युक्तिं नैवैतीति संबन्धः । कुतः । उदाहृतवचनानां भेदज्ञापकत्वेनास्मन्मताविरोधित्वात् । अनुमानस्य चाद्यस्यास्मान्प्रत्यसिद्धव्याप्तिकत्वात् द्वितीयस्य चातद्भूतस्य तद्भावनिरासहेतोः सिद्धसाधनत्वादित्यतोऽनुमानान्तरमाह** यत इति ।

यतो न कुत्रापि भिदाभिदा च दृष्टा चितश्चेतनया कुतश्चित् ॥

यतः **कारणा**च्चितश्चेतनया **चेतनस्य चेतनेन भिदाभिदा च** कुत्रापि **देशे** कुतश्चित्**प्रमाणान्न दृष्टे**त्यनेन **जीवेश्वरौ न भिन्नाभिन्नौ चेतनत्वात् देवदत्तयज्ञदत्तवत् । ईश्वरो जीवेन भिन्नाभिन्नो न भवति चेतनत्वाद्यज्ञदत्तवदित्याद्यनुमानं सूचितम्** ।

**शे०— समुच्चय इति** । पूर्वं निरस्तभास्करादिमतेन सहास्य मतस्य समुच्चय इत्यर्थः । उक्तमर्थमाक्षिपति **कुत इति** । इति च मतं युक्तिं नैवैतीत्येतत्कुत इत्यर्थः । किं श्रुतिविरुद्धत्वादुत कालोऽप्यसौ नैक्ययुत इति पूर्वानुमानविरुद्धत्वात् किं वा कथं च यः पूर्वमसावित्युक्तानुमानविरुद्धत्वादिति विकल्पान्मनसि निधायाऽऽद्यं दूषयति **उदाहृतेति** । 'सोऽश्नुते सर्वान्कामान्सहे'त्यादीनामित्यर्थः । द्वितीयं प्रत्याह **अनुमानस्य चेति** । दृष्टान्तीकृतेनेदानीन्तनकालेऽपि जीवस्य परैक्यसद्भावेन तदभावरूपसाध्यासिद्ध्या दृष्टान्ते साध्यवैकल्येनाद्यानुमानस्याभासत्वादित्यर्थः । न चात्यन्ताभेदाभावस्य साध्यत्वेनाभेदाभावमात्रस्यासाध्यत्वात् अभेदसद्भावेन तदभावाभावेऽपि भेदाभेदवादिनाऽत्यन्ताभेदानभ्युपगमेन तदभावरूपसाध्यस्य दृष्टान्ते सद्भावान्न साध्यवैकल्यमिति वाच्यम् । संसारे भेदाभेदावुपेत्य मुक्तावत्यन्ताभेदवादिनः प्रति तत्साधनावसरेऽपि संसार इव मुक्तावपि भेदाभेदावभ्युगच्छतो यादवप्रकाशादीन्प्रति अत्यन्ताभेदाभावसाधने सिद्धसाधनत्वप्रसक्त्यैक्याभावमात्रस्यैव साध्यत्वावश्यंभावेन दृष्टान्ते साध्यवैल्यस्य वज्रलेपत्वादित्याशयात् । न तृतीय इत्याह **द्वितीयस्य चेति** । प्राक्ततोऽत्यन्तभिन्नत्वादिति तृतीयानुमानस्येत्यर्थः । सिद्धसाधनतामुपपादयति **अतद्भूतस्येति** । पूर्वमत्यन्ताभेदशून्यस्येत्यर्थः ॥ **तद्भावनिरासहेतोरिति** । तदत्यन्ताभेदनिरासहेतोरित्यर्थः । सिद्धसाधनत्वादित्युपलक्षणम् । प्राक्ततोऽत्यन्तभिन्नत्वाभावेन हेत्वसिद्धिश्चेत्यपि द्रष्टव्यम् । यद्वा हेत्वसिद्धेरत्र वक्तुं शक्यत्वेऽपि प्रथमप्राप्तत्वात्प्रतिज्ञाश्रयदोषस्य सिद्धसाधनत्वमात्रोद्भावनमिह टीकायां कृतमिति द्रष्टव्यम् ।

**स०—अनुमानस्य चेति** । मुक्तिसंबन्धी कालः जीवस्य परैक्ययुतो न, कालत्वात् इदानीन्तनकालवदिति प्रथमानुमानं नास्माकं परिपन्थि । असिद्धव्याप्तिकत्वेनाभासत्वात् । दृष्टान्तीकृतेदानीन्तनकालेपि जीवस्य परैक्यसद्भावेन दृष्टान्ते साध्याभावात् । ननु च नाभेदाभावमात्रं साध्यं किंनामात्यन्ताभेदाभाव एव । स च दृष्टान्तीकृतेदानीन्तनकालेपि विद्यत एव । संसारे भेदाभेदावङ्गीकुर्वताऽत्यन्ताभेदस्यानभ्युपगमादिति चेत् । सत्यमेतदिति । ये संसारे भेदाभेदावङ्गीकृत्य मुक्तावत्यन्ताभेदमङ्गीकुर्वन्ति तान्प्रत्येवात्यन्ताभेदाभावसाधनावसरः । न तु यादवप्रकाशादीन्प्रति तैः संसार इव मुक्तावपि भेदाभेदयोरभ्युपगतत्वेनात्यन्ताभेदानभ्युपगमात् तदभावस्य साधयितुमशक्यत्वेनाभेदाभावमात्रस्यैव साध्यत्वात् दृष्टान्ते साध्यवैकल्यमेवेति भावः । **द्वितीयस्येति** । जीवो न कालान्तरे ब्रह्मणैक्यमापत्स्यते

प्राक् ततो भिन्नत्वादिति द्वितीयानुमानस्येत्यर्थः । **सिद्धसाधनत्वादिति** । संसारे मुक्तौ च भेदाभेदावङ्गीकुर्वतां संसारे भिन्नस्य मुक्तावभेदो भवतीत्यनभ्युपगमात् प्राक् भिन्नत्वेन मुक्तौ भिन्नत्वाभाव, साधनस्य सिद्धसाधनत्वप्रसङ्गादित्यर्थः ।

**प०** — मुक्तावपि भेदाभेदवादी शङ्कते **कुत इत्यादिना** । कुतोऽस्मन्मतमयुक्तम् । भवदुक्तवचनानां अनुमानयोश्च भेदाभेदवादिनो ममाविरोधादित्युपपादयति **उदाहृतेति** । न वर्तते यत्रेत्यादिवचनानां भेदज्ञापकत्वात् । भेदस्य च मन्मते मुक्तावपि सत्त्वादिति भावः ॥ **आद्यस्येति** । 'कालोऽप्यसौ नैक्ययुतः परेण जीवस्ये'त्यत्रोक्तस्येत्यर्थः ॥ **असिद्धव्याप्तिकत्वादिति** । संसारकालेऽप्यभेदस्य सत्त्वादिति भावः । **द्वितीयस्य चेति** । 'कथं च यः पूर्वमसौ न पश्चादि'त्यत्राभिमतस्य भोक्रापत्तिनयोक्तस्येत्यर्थः ॥ **सिद्धसाधनत्वादिति** । पूर्वं भिन्नाभिन्नस्य पश्चादपि तथैवोपगमनेनातद्भूतस्य तद्भावानभ्युपगमादिति भावः ।

**या०** — शङ्कते **कुत इत्यादिना** ॥ **अनुमानस्य चेति** । मोक्षसंबन्धी कालो जीवस्य परेण यदैक्यं तद्युतो न भवति कालत्वात्संसारकालवदित्याद्यनुमानस्येत्यर्थः । अत्र यथाश्रुतमेव साध्यं विवक्षितं नैक्यशब्दोऽत्यन्ताभेदपरो व्याख्येयः । तथात्व एतन्मते सिद्धसाध्यताप्रसङ्गात् । दृष्टान्ते साध्याभावेनासिद्धव्याप्तिकत्वमुपपन्नमिति ध्येयम् । **द्वितीयस्य चेति** । जीवो न कालान्तरेऽपि ब्रह्मणैक्यमापत्स्यते । प्राक् ततो भिन्नत्वादिति द्वितीयानुमानस्येत्यर्थः ॥ **अतद्भूतस्येति** । पूर्वमत्यन्ताभेदशून्यस्येत्यर्थः ॥ **तद्भावनिरासहेतोरिति** । तदत्यन्ताभेदनिरासहेतोरित्यर्थः । ततश्च प्राक् ततो भिन्नत्वादित्यस्य प्राक् तदभेदशून्यत्वादित्येवार्थो वर्णनीयः । यः पूर्वमसौ नेति मूलस्वारस्यात् । भेदाभेदवादिमते भिन्नेऽप्यभेदाङ्गीकारेणाप्रयोजकत्वप्रसङ्गाच्च । न चासिद्धिः । तन्मते पूर्वमप्यभेदसद्भावात् । अतः पूर्वमत्यन्ताभेदशून्यत्वात्पश्चादत्यन्तमैक्यं नेत्येव साधनीयम् । तथा च सिद्धसाधनत्वमित्यर्थः ।

**श्री०** — शङ्कते ॥ **कुत इत्यादिना** । कुत इत्यनन्तरं मुक्तिं नैतीति वर्तते । सोऽश्नुत इत्याद्युदाहृतवचनविरोधस्तावदस्मन्मते नास्तीत्युपपादयति **उदाहृतेति** ॥ **आद्यस्येति** । मोक्षकाले जीवस्य यत्परेणैक्यं तद्युतो न भवतीति साधने संसारकाले भेदाभेदाङ्गीकारेण दृष्टान्ते साध्यवैकल्यापत्त्याऽस्मान्प्रत्यसिद्धव्याप्तिकत्वादित्यर्थः ॥ **अतद्भूतस्येति** । पूर्वमत्यन्ताभेदशून्यस्य तदत्यन्ताभेदानिरासहेतोः प्राक् ततोऽत्यन्तभिन्नत्वादित्यस्यैर्थः । जीवो न कालान्तरे ब्रह्मणाऽत्यन्तैक्यं आपत्स्यते । प्राक् ततोऽत्यन्तभिन्नत्वादित्यनुमानस्य सिद्धसाधनता । मुक्तौ भेदाभेदाङ्गीकारात् । संसारेऽपि भेदाभेदाङ्गीकारेण प्राक् ततोऽत्यन्तभिन्नत्वहेतोः स्वरूपासिद्धिश्च स्यादित्यपि द्रष्टव्यम् ।

सु०— **मोक्षवादार्थमुपसंहरति** इत्थमिति ।

अनु०— इत्थं मतानि भ्रमजानि

इत्थ**मुक्तप्रकारेण जैनादिमतानि** भ्रमजानि । **उपलक्षणमेतत्** । **कानिचिद्विप्रलम्भजानि इत्यपि ज्ञेयम् । तस्माद्धेयानीति शेषः । ननु वक्तॄणां क्वचिद्भ्रमः संभवत्येव । को दोष इत्यत आह** यस्मादिति ।

यस्मान्मोक्षं समुद्देश्यमपि भ्रमेण ॥

विदुर्न सम्यक्

**मतानां प्रणेतार इति शेषः । अप्राकरणिकं प्रसक्तानुप्रसक्त्यागतमर्थं कथञ्चिदन्यथा जानन्तोऽपि नातीव निन्द्या भवन्ति । एते तु प्रधानोद्देश्यमपि मोक्षं सम्यङ् न विदुः । किन्तु** भ्रमेन **वैपरीत्येन विदुः । तस्मात्तत्प्रणीतानि मतानि भ्रमजानीति संबन्धः ।**

**न चातिसूक्ष्मप्रमेये अज्ञानविपर्ययावेतेषां, किन्तु गोपालाविपालप्रमुखैः पामरैरपि सुविदित इत्याशयेनाह** यदपीति ।

यदपीह लौकिकाः सुखं मम स्याद्धि सदेति जानते ॥

यद्यस्मादिह प्राणिषु लौकिका **वैदिकबुद्धिरहिता अपि, मे सदा सुखं स्यादिति स्वोद्देश्यं जानते हि । न तु वयमेव न भूयास्मेत्यादि । अतस्तेभ्योऽप्येते मन्दा इति । तदनेन प्रबन्धेन पादप्रतिपाद्यं सङ्गतिकथनं च समर्थितम् ॥**

शे०— बौद्धमतस्य भ्रमजत्वासंभवात्तत्संग्रहायाह **उपलक्षणमेतदिति** । शिष्टं स्पष्टम् । **समर्थितमिति** । तत्तद्वाद्युक्तमोक्षस्वरूपनिराकरणपूर्वकं 'कर्मक्षयस्तथोत्क्रान्तिरि'त्यादिना स्वोक्तमोक्षस्वरूप-समर्थनेनेति शेषः ॥

स०— **बौद्धमतसंग्रहायाह उपलक्षणमेतदिति** ।

प०— भगवदवतारादिसर्वज्ञकृतानां बौद्धशैवादिमतानां भ्रमजत्वाभावादाह **कानिचिदिति** । सुविदित इति सप्तम्यन्तम् । प्रमेये इत्यनुषङ्गः ॥ **वयमेव न भूयास्मेति** । मम सत्त्वं मा भूदिति स्वात्माभावमेवोद्देश्यं न जानत इत्यर्थः । इत्यादीत्यादिपदेन मम क्लेशनिवृत्तिरेवास्तु सुखं मा भूदिति न जानत इति ग्राह्यम् ॥ **तदनेन प्रबन्धेनेति** । 'तत्र मोक्षस्वरूपं त्वि'त्यतोऽधस्तनग्रन्थेन पादप्रतिपाद्यं पादानां सङ्गतिं चोक्त्वा तत्स्थैर्याय तत्र मोक्षेत्यादिना परमतानां हेयत्वोपपादनेन समर्थितमित्यर्थः ॥

**( पादप्रतिपाद्यसङ्गतिसमर्थनम् । )**

**या०— कानिचिदिति ।** **बौद्ध**पाशुपतादीनीत्यर्थः ॥ **पादप्रतिपाद्यमिति ।** एतत्प्रकरणोप-क्रमे 'भवेदेवं पादार्थः सङ्गतिश्च'त्याक्षिप्तत्वादिति भावः ॥

**श्री०**— कानिचित् **बौद्ध**मतानि । **प्रसक्त्यनुप्रसक्त्यागतं** प्रसङ्गानुप्रसङ्गाभ्यामागतमर्थम् । **सुविदिते** प्रमेयेऽज्ञानविपर्ययाविति संबन्धः ॥ **वयमेवेत्यादि ।** शून्यवाद्युक्तप्रकारेणेत्यर्थः ॥ **तेभ्यः** वैदिकबुद्धिरहितेभ्यः ॥

॥ इति अन्यथामोक्षस्वरूपनिराकरणम् ॥



सु०— इदानीमेतत्पादाधिकरणेषु **पूर्वपक्षसिद्धान्तयुक्तीर्विवक्षुः प्रसङ्गात्सिंहावलोकनेन पूर्वपादद्वययुक्तिकथनपूर्वकमस्मिन्पादे** चाह औदार्यमिति ।

**अनु०**— औदार्यमुच्चावचशक्तिरात्मस्वरूपदार्ढ्यं च निजस्वभावः ।

स्वातन्त्र्यमापूर्णविशेषयोग्यता विरोधहानिश्च चतुर्थपादे ॥

**चतुर्थपादे तृतीयाध्यायस्य । पूर्वपक्षयुक्तय इति शेषः ।**

व्यवस्थितिस्त्वविशेषस्थितिश्च निषेधसामान्यविधिक्रियाणाम् ॥

विभक्तता चात्वरयैव सिद्धिर्विपक्षसंप्राप्तिवि(नि)रोधहेतवः ॥

विपक्षसंप्राप्तिकृतां निरोधाः । **पूर्वपक्षसंप्राप्तिं कुर्वन्तीनां युक्तीनां निवारका हेतवः । विपक्षसंप्राप्तिविरुद्धहेतव इति क्वचित्पाठः । तत्र संप्राप्तिशब्दः करणसाधनः ॥**

सुशक्यता शश्वदतिप्रसिद्धिर्विवेकविन्यासविचारसंज्ञाः ।

नानाप्रवृत्तिः कृतकृत्यता च विपक्षतर्काः समतीतपादे ॥

समतीतपादे **निरन्तरातीतपादे ।**

महाफलत्वं प्रविविक्तता च सन्धिग्रहः साधनमाप्तकृत्यम् ॥

विशेषकार्यं कृतिसंस्थितिश्च सुयुक्तयो निर्णयगाः स्वपक्षे ॥

स्वपक्षे **सिद्धान्तविषये ।** निर्णयगा **निर्णयहेतवः सुयुक्तयः ॥**

व्यामिश्रता कार्यकरत्वमर्थक्लृप्तिः सुदार्ढ्यं परतन्त्रता च ।

समानधर्मः कृतशेषता च लोकोपमा पूर्वमतानुसाराः ॥

**पूर्वमतानुसारा युक्तयो अस्मिन्पादेऽनुस्रियन्त एताभिरित्यनुसाराः ।**

विशेषसाम्यश्रुतिराढ्यता च समानलोपो महिमा विशेषः ।

कृतार्थता शश्वदनुप्रवृत्तिः सिद्धान्तनिर्णीतिविशिष्टहेतवः ॥

**सिद्धान्तनिर्णीतेर्विशिष्टहेतवः ॥**

शे०— **विवक्षुरिति** । अन्यथा 'व्याख्यां करोमी'ति प्रतिज्ञाव्याघातप्रसङ्गादिति भावः । पूर्वपादद्वयपूर्वपक्षसिद्धान्तयुक्तिकथनस्यात्रासङ्गतिमाशङ्क्य परिहरति **प्रसङ्गादिति** । तत्रैवानुक्तौ निमित्तमाह **सिंहेति** । उक्तयुक्तीनां पूर्वपक्षयुक्तित्वस्य भाष्यारूढत्वसिद्ध्यर्थमपेक्षितं पूरयति । **पूर्वपक्षेति** । ननु सिद्धान्तहेतूनां पूर्वपक्षप्रापकयुक्तिविरुद्धत्वेऽपि न विपक्षसंप्राप्त्या विरुद्धत्वमिति न तद्विरुद्धत्वोक्तिर्युक्तेत्यतोऽत्र विपक्षः संप्राप्यतेऽनयेति संप्राप्तिशब्दस्य करणसाधनतया पूर्वपक्षप्रापकयुक्तिपरत्वेन पूर्वपक्षकोटिपरत्वाभावात् सिद्धान्तहेतूनां च तद्विरुद्धार्थत्वान्नानुपपत्तिरित्याह **तत्रेति** । तृतीयाध्यायस्य चतुर्थ-

पादस्यापि समतीतपादत्वात्तत्प्रतीतिनिरासायाह **निरन्तरेति** । अव्यवहितेत्यर्थः । पक्षशब्दार्थकथनपूर्वकं सप्तम्यर्थमाह **स्वसिद्धान्तेति** । युक्तीनाममूर्तत्वेन निर्णयगमनस्यासंभवादाह **निर्णयहेतव इति** । अनेन निर्णयगत्वं निर्णयसंबन्धित्वमात्रं । तच्च हेतुत्वेन युक्तीनामप्यस्तीति नानुपपत्तिरित्युक्तं भवति । युक्तीनां पूर्वमतानुसारताऽनुपपत्तिमाशङ्कयाऽऽह **अनुस्रियन्त इति** ।

प० — **पूर्वपादद्वयेति** । ज्ञानपादकर्मक्षयपादयुक्तीत्यर्थः । पुरुषार्थोऽतः औदार्यं पूर्वपक्षयुक्तिः व्यवस्थितिः सिद्धान्तयुक्तिः । एवमग्रेऽपि ॥ असार्वत्रिकी औदार्यं व्यवस्थितिः ॥ नाविशेषात् उच्चावचशक्तिः अविशेषः ॥ स्तुतयेऽनुमतिर्वा आत्मस्वरूपदार्ढ्यं स्थितिः ॥ सर्वथाऽपि तु त एवोभयलिङ्गात् आत्मस्वरूपदार्ढ्यं स्थितिः ॥ न चाधिकारिकमपि निजस्वभावः निषेधसामान्यविधिक्रियाणां विभक्तता ॥ स्वामिनः फलश्रुतेः स्वातन्त्र्यं अत्वरयैव सिद्धिः ॥ कृत्स्नभावात्तु आपूर्णविशेषयोग्यता, अत्वरयैव सिद्धिः ॥ अनाविष्कुर्वन् आपूर्णविशेषयोग्यता अत्वरयैव सिद्धिः ॥ ऐहिकमप्रस्तुतप्रतिबन्धे, एवं मुक्तिफलानियमः । विरोधहानिः, अत्वरयैव सिद्धिः ॥ ३ ॥ ४ ॥ आवृत्तिरसकृदुपदेशात् सुशक्यता महाफलत्वम् ॥ आत्मेति तु शश्वदतिप्रसिद्धिः प्रविविक्तता ॥ न प्रतीके विवेकः सन्धिग्रहः । ब्रह्मदृष्टिः विन्यासः साधनम् ॥ आदित्यादिमतयश्च विचारः आसकृत्यम् । आसीनः संज्ञा विशेषकार्यम् ॥ आप्रायणात् नानाप्रवृत्तिः विशेषकार्यम् ॥ तदधिगमे कृतकृत्यता संस्थितिः ॥ ४ ॥ १ ॥ वाङ्मनसि दर्शनात् व्यामिश्रता विशेषसाम्यश्रुतिः ॥ तन्मनः प्राणे कार्यकरत्वं आढ्यता च ॥ सोऽध्यक्षे कार्यकरत्वं आढ्यता ॥ भूतेषु तच्छ्रुतेः अर्थक्लृप्तिः समानलोपः नैकस्मिन्दर्शयतो हि अर्थक्लृप्तिः समानलोपः ॥ समना च सुदार्ढ्यं ( सर्वसाम्याभावः ) महिमा ॥ तदपीतेः सुदार्ढ्यं महिमा ॥ तानि परे तथा ह्याह परतन्त्रता विशेषः ॥ अविभागो वचनात् समानधर्मः कृतार्थता ॥ तदोकोग्रज्वलनं कृतशेषता शश्वदनुप्रवृत्तिः ॥ योगिनः प्रतिस्मर्येते लोकोपमा शश्वदनुप्रवृत्तिः ॥ ४ ॥ २ ॥

या० — **करणसाधन इति** । विपक्षाः पूर्वपक्षाः संप्राप्यन्ते याभिर्युक्तिभिः ता विपक्षसंप्राप्तयः तासां विरुद्धहेतव इत्यर्थ इति भावः । पूर्वमतानुसारा इत्यत्र शेषमाह **युक्तयोऽस्मिन्पाद इति** । करणसाधनतामुपेत्याह **अनुस्रियन्ते एताभिरितीति** । पूर्वमतानीति योज्यम् । पूर्वपक्षप्रापिका इत्यर्थः ॥

श्री० — **पूर्वपादद्वयेति** । तृतीयाध्यायस्य यश्चतुर्थः पादः, चतुर्थाध्यायस्य यः प्रथमः पादस्तद्द्वये पूर्वपक्षसिद्धान्तयुक्तिपूर्वकमित्यर्थः ॥ **करणसाधन इति** । विपक्षः पूर्वपक्षः संप्राप्यते एभिरिति विपक्षसंप्राप्तयः विपक्षसंपादका इत्यर्थः । **निरन्तरातीतपादे** अव्यवधानेनातीतपादे । एतदध्यायस्य प्रथमपाद इत्यर्थः ॥ **अनुस्रियन्त इति** । पूर्वपक्षानुसरणकरणीभूता युक्तय इत्यर्थः ॥ **विशिष्टहेतव इति** । पूर्वपक्षे हेत्वपेक्षया विलक्षणहेतव इत्यर्थः ।

सु० — ॐ नैकस्मिन्दर्शयतो हि ॐ ॥ अत्राग्नौ सर्वे देवा विलीयन्ते । भूतेषु देवा विलीयन्ते इति श्रुतिद्वयविप्रतिपत्त्या किमग्नावेकस्मिन्सर्वे देवा विलीयन्ते, उत पञ्चस्वपि भूतेष्विति संशयेऽग्नावेकस्मिन्नेव सर्वेषां देवानां लयः । अग्निश्रुतेर्निरवकाशत्वात् । भूतश्रुतेस्तु सावकाशत्वात् । एकस्मिन्नग्नौ सर्वेषां च लयेऽग्नेश्च वायौ वायोराकाशे सति भूतेष्विति बहुवचनोपपत्तेरिति प्राप्ते सिद्धान्तितम् । नैकस्मिन्नग्नौ सर्वेषां देवानां लयः । किन्तु पञ्चस्वपि भूतेषु । कुतः । 'पृथिव्यामृभवो विलीयन्ते, वरुणेऽश्विनौ, अग्नावग्नयो, वायाविन्द्रः, सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्ते' (मृत्स्नः) 'ऋभवः पृथिव्यां, वरुण आपः, अग्नयस्तेजसि, मरुतो मारुते, आकाशे विनायका विलीयन्त' इति श्रुती यथायोगं पञ्चस्वपि भूतेषु देवानां लयं दर्शयतो हीति ।

अत्र वायाविन्द्र इति वायुशब्दो भूतवायोरप्रधानस्य वाचको विवक्षित इति प्रतीयते । पृथिव्यादिसङ्कीर्तनेन भूत(प्रकर)कारणात् । सूत्रकृता च सर्वेषु भूतेषु देवानां लय इत्यत्रार्थे गृहीतेऽयं श्रुतिः । भूतेषु तच्छ्रुतेरित्युपक्रमात् । ततोऽप्यप्रधानो वायुरिति प्रतीतिनिवारणाय आह प्रधानेति ।

अनु० — ॐ नैकस्मिन्दर्शयतो हि ॐ ॥

प्रधानवायुस्त्विह वायुनामा भूतेष्विति प्रोक्तगतोऽपि युक्त्या ॥

तुशब्दोऽवधारणे । इह श्रुतौ भूतेष्विति प्रोक्तगतोऽपीति शङ्काबीजानुवादः । भूतेषु लयं वक्ष्यामीत्याशयेन श्रुत्या प्रोक्तं यत्पृथिव्यादिकं तद्गतोऽपीति । यद्वा भूतेषु देवानां लय इत्यत्रार्थे प्रोक्तं सूत्रकृता गृहीतं श्रुतिवाक्यं तद्गतोऽपीति । कुतः । युक्त्या उत्तमानामिन्द्रादीनामधमे भूतवायौ लयानुपपत्तेरित्यर्थः । प्रधानवायावपि कथमिन्द्रादीनां लयोपपत्तिरित्यत आह यस्मादिति ।

यस्माच्छ्रुतौ पवते चेति भूरिप्रोक्तो

यस्मात्कारणात् 'सा वा एषा देवताऽनादिर्योऽयं पवत' इति श्रुतौ चशब्दादन्यास्वपि श्रुतिषु प्रधानवायुः भूरि भूरित्वेन सकलजीवोत्तमत्वेन प्रोक्तः, तस्मात् तस्मिन्निन्द्रादीनां प्रलयोपपत्तेः, प्रधानवायुस्त्विह वायुनामेति संबन्धः । यद्वा 'एष वै ब्रह्म योऽयं पवते तमेताः पञ्च देवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरि'ति श्रुतिरत्र विवक्षिता । तत्र भूरि स्पष्टं सूर्यादीनां संहर्ता प्रोक्त इति । एवं तर्हि भूतप्रकरणबाधः स्यादित्यत आह यत इति ।

यतो भूतमानी च सोऽपि ॥

**न केवलमप्रधानवायुः किन्तु स प्रधानवायुरपि भूतमानित्वाद्भूतनामा चेति चार्थः । अतः प्रकरणविरोधाभावात्प्रधानवायुरेवेह वायुनामेति ।**

**उक्तमेव प्रपञ्चयति** महामानीति ।

महामानी त्वल्पमानी च यस्मात्तच्छब्देनाप्युच्यते तेन सोऽपि ॥ ५॥

**महांश्चासौ मानी चेति महामानी सर्वाभिमानीति यावत् । यथा समस्तराष्ट्राधिपती राजा तदन्तर्गतस्य ग्राम(क)स्याधिपतिर्भवत्येवं सर्वाभिमानी प्रधानवायुरल्पस्य वायोर्भूतस्याभिमानी भवेदेव ।** तच्छब्देन **भूतशब्देन । न केवलं वायुशब्देनेत्यपेरर्थः ॥ ४-२-५ ॥**

**शे०— निरवकाशत्वादिति ।** अग्नाविन्त्येकवचनश्रुतियुक्ततयेति शेषः । ननु बहुवचनश्रुतियुक्तत्वाद्भूतश्रुतेरपि निरवकाशत्वमेवेति कथं निर्णय इत्यतस्तस्याः सावकाशतामुपपादयति **एकस्मिन्निति ॥ शङ्काबीजेति** । भूतप्रकरणादिरूपशङ्काबीजेत्यर्थः । तदुभयानुवादतामेव दर्शयति **भूतेष्वित्यादिना ॥ यद्वेति ।** पूर्वोदाहृतश्रुतौ वायोरुत्तमत्वोक्त्या तत्रेन्द्रादीनामार्थिको लयलाभः । अत्र तु पक्षे वायाविन्द्र इत्यादौ निर्दिष्टानां केषाञ्चित्साक्षादेव तत्र लयोक्तिरिति पक्षयोर्भेदोऽवधेयः । नन्वनेन महत्तत्त्वाभिमानित्वप्राप्तावपि न सर्वाभिमानित्वप्राप्तिरिति विवक्षितासिद्धिरित्यतो भवेदेवं यद्यत्र महतोऽभिमानीति षष्ठीतत्पुरुषो विवक्षितः स्यात् । न चैवं । किन्तु समानाधिकरणसमास एव । तथा च परमधार्मिक इत्यादौ धर्मेण परमत्वलाभवदत्रापि सन्निधानादभिमानित्वेनैव महत्त्वलाभात्सर्वाभिमानित्वसिद्धिरित्यभिप्रेत्य समानाधिकरणसमासमाह **महांश्चासाविति ॥ ग्रामकस्येति** । अल्पार्थे कप्रत्ययविधानादल्पस्य ग्रामस्येत्यर्थः ॥ ४ ॥ २ ॥ ५ ॥

**प०— नैकस्मिन्दर्शयतो हि ।** इहेत्यनुवादः श्रुताविति व्याख्या । 'पृथिव्यां ऋभव' इति श्रुतावित्यर्थः ॥ **शङ्काबीजेति ।** भूतवायुरेवेति शङ्कायां यद्बीजं भूतप्रेरणरूपं तदनुवाद इत्यर्थः । भूतेष्वित्यस्य श्रुतावभावात्तथोक्तिं घटयति **भूतेष्विति** । प्रोक्तमित्यनुवादः । सूत्रकृता गृहीतमिति व्याख्या । इत्यर्थ इत्युत्तरवाक्यमत्र पूर्वत्र चाकृष्यते । युक्त्येत्यनुवादः ॥ **इति श्रुताविति** । बह्वृचब्राह्मणे ॥ **राष्ट्राधिपती राजेति ।** ढ्रलोपे पूर्वस्य दीर्घोऽण इति दीर्घः ॥ ४ ॥ २ ॥ ५ ॥

**श्री०— ॐ नैकस्मिन्दर्शयतो हि ॐ॥ श्रुती** महोपनिषच्चतुर्वेदशिखे । **अत एव** अस्वरसात् अशेषजीवाः समस्तजीवा इति कर्तृवाचकपदद्वयसार्थक्याय समस्तजीवा इत्यस्य हरौ लयं यान्तीति क्रियापदस्यैकस्य सद्भावादशेषजीवा इत्यस्यैकं क्रियापदमध्याहरति **यद्वेति** ॥ ४ ॥ २ ॥ ५ ॥

**॥ इति अनेकलयाधिकरणम् ॥**

## ॥ अथ पर(लय)ाधिकरणम् ॥

सु० — ॐ तानि परे तथा ह्याहेतिसूत्रम् । अस्यार्थः । तानि भूताभिमानिप्रभृतीनि दैवानि परे परमात्मनि लीयन्ते तथा ह्याह श्रुतिरिति । अत्र सर्वेषां देवानां परमात्मनि साक्षाल्लयः प्रतीयते । तत्परिहाराय भाष्यं 'प्राणद्वारेणे'ति । तत्रापि प्राणे सर्वेषां साक्षाल्लयः प्रतीयते । अतो विस्पष्टं व्याचष्टे तस्मिन्निति ।

अनु० — ॐ तानि परे तथा ह्याह ॐ ॥

तस्मिंल्लयं याति भूतान्यशेषक्रमाविरोधेन स एव विष्णौ ॥

अशेषक्रमाविरोधेन श्रुत्याद्युक्तं सर्वं क्रममनुसृत्य । भूतानि भूतादीनि दैवानि तस्मिन्प्र, धानवायौ लयं यांति । स एव विष्णौ लयं याति । यश्च वायाविन्द्र इति श्रुताविन्द्रादीनां प्रधानवायौ लयोऽभिहितः सोऽपि न साक्षादित्याह इन्द्रादीनामिति ।

इन्द्रदीनां तत्र लयः क्रमं तु प्रोक्तं विशेषादनुसृत्य नान्यत् ॥

तत्र प्रधानवायौ । विशेषादिति तृतीयार्थे पञ्चमी । विशेषवाक्येन प्रोक्तमनुसृत्य व्याख्यातव्यः । न त्वन्यद्व्याख्यानं साक्षात्तत्र लय इति । विशेषवाक्यविरोधादिति भावः ।

शे० — सर्वं क्रममिति । तस्मादशेषा इत्यादिना वक्ष्यमाणं सर्वं क्रममित्यर्थः ॥ मूले भूतानीति बहुवचनमाद्यर्थे भूतादिपदं चाभिमानिदेवतापरं प्राणद्वारेण सर्वाणि दैवतानि परमात्मनि विलीयन्त इत्यादिभाष्यादित्यभिप्रेत्य तद्व्याचष्टे भूतानि भूतादीनि दैवानीति । विशेषात्प्रोक्तमित्यत्र करणत्वाद्विशेषस्य विशेषेणेति तत्र तृतीयया भवितव्यम् । पञ्चमी तु कथमित्यत आह तृतीयार्थ इति । सुपां सुलुगिति स्मरणादिति भावः । विशेषपदं च योग्यत्वाद्विशेषवाक्यपरमित्याह विशेषवाक्येनेति ॥ न त्वन्यद्व्याख्यानमिति । निषिद्धं व्याख्यानमेवोपदर्शयति साक्षात्तत्र लय इतीति । कुतो नेत्यत आह विशेषेति ।

स० — तानि परे तथा ह्याह ॥ विशेषस्योपादाननिमित्तत्वयोरभावात् पञ्चम्यनुपपत्तिरित्यतो व्याचष्टे तृतीयार्थ इति । तृतीया चेत्थं भूतलक्षणेति हृदयम् ।

प० — तानि परे तथा ह्याहेति सूत्रम् ॥ तथा ह्याह श्रुतिरितीति । 'सर्वे देवाः प्राणमाविश्य देबे मुक्ता लयं परमे यांतीति श्रुतिरित्यर्थः ॥ श्रुत्याद्युक्तं सर्वं क्रममिति । वक्ष्यमाणमित्यर्थः । प्रोद्गातॄणां चमसभक्ष इत्यत्रेव बहुवचनमाद्यर्थ इत्याह भूतादीनीति ॥ तृतीयार्थे इति । चैत्ररथेन

लिङ्गादित्यत्रेव तृतीयापञ्चम्योर्हेतुरूपैकार्थ्यादिति भावः । ल्यपः समानकर्तृकक्रियांतरापेक्षामाह **व्याख्यातव्य इति** । तुशब्दान्वयेनानूद्यार्थमाह **न त्वन्यदिति** । तर्हि व्याख्यानमित्यत आह **साक्षात्तत्र लय इति** ।

**या०— सर्वं क्रममिति** । वक्ष्यमाणमित्यर्थः ।

**श्री०— ॐ तानि परे तथा ह्याह ॐ ॥**

**सु०— तमेव क्रमं संक्षेपेण तावदाह** तस्मादिति ।

**अनु०**— तस्मादशेषा गिरिजां प्रविश्य तयैव रुद्रं सह तेन वाणीम् ॥
तया पतिं प्राप्य सहैव तेन लयं हरौ यान्ति समस्तजीवाः ॥

**विशेषप्रमाणस्य सर्वथाऽनुसर्तव्यत्वादिति भावः । अत्र गिरिजाशब्दो वारुणीसौपर्णीपरो व्याख्येयः । तथा रुद्रशब्दः शेषगरुडपरः । तथा च वक्ष्यति** । तया **गिरिजया सहैव रुद्रं प्राप्य, पतिं वाण्याः** । समस्तजीवा **इत्यस्यैव विवरणमशेषा** इति । **यद्वा रुद्रं प्रविशन्तीत्यध्याहारेण व्याख्येयम् । अस्यैव विवरणमुत्तरवाक्यजातम्** ।

**शे०— तमेव क्रममिति** । तस्मादशेषा इत्यादिना वक्ष्यमाणं सर्वं क्रममित्यर्थः । **तावदिति** । सोमस्त्वित्यादिना विस्तरस्याप्युच्यमानत्वादिति भावः ॥ **वक्ष्यतीति** । 'उमागिरीशावपि भारतीरावि'-त्यादिना गिरिजारुद्रशब्दयोर्वारुणीशेषपरत्वं । 'इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी'त्यादिना च तयोः सुपर्णसुपर्णीपरत्वं च वक्ष्यतीत्यर्थः । तयेत्यत्र रुद्रं, सहेति वक्ष्यमाणसहशब्दस्यान्वयं, तेन चावधारणस्यान्वयं चाभिप्रेत्याह **गिरिजया सहैवेति** । तया पतिं प्राप्येति प्राप्यशब्दस्य न यथाश्रुत एवान्वयः किन्तु योग्यत्वाद्रुद्रमपीत्यभिप्रेत्याह **रुद्रं प्राप्येति** । ननु समस्तजीवा गिरिजां प्रविश्य तया सह रुद्रं प्रविश्य तेन सह वारुणीं प्रविश्य तया सह तत्पतिं प्राप्य हरौ लयं यान्तीत्येतावतैव विवक्षितक्रमाभिधानात् अशेषा इत्यनर्थकमित्यतः समस्तशब्दार्थे प्राप्तसंकोचशङ्कापरिहारेण तद्विवरणरूपत्वान्न तद्वैयर्थ्यमित्याशयेनाह **अशेषा इतीति** । क्रियांतराध्याहारमात्रेण वाक्यभेदमाश्रित्य कर्तृवाचकपदद्वयसार्थक्यसंभवे नागतिकविवरणत्वकल्पनमुचितमित्याशयेन क्रियाध्याहारेण वाक्यभेदमाश्रित्याह **यद्वेति** । अनेनाशेषा गिरिजां प्रविश्य रुद्रं प्रविशन्ति । अनन्तरं रुद्रेण सह वाणीं प्राप्य तया सह तत्पतिं प्राप्य हरौ समस्तजीवा लयं यांतीति वाक्यभेदेन योजनोक्ता भवति ॥ **अस्यैवेति** । तस्मादशेषा इति श्लोकोक्तस्यैव प्रमेयस्य सोमस्त्वित्याद्युत्तरवाक्यजातं विवरणमतो नानर्थक्यमित्युक्तं भवति । अत एव प्राक् संक्षेपेणेत्युक्तमिति द्रष्टव्यम् ।

**स०** — तदेव व्याख्यानमुदाहरति **तथाच वक्ष्यतीति** । 'उमागिरीशावपि भारतीराविति स वाग्वेदगता ब्रवीति । अहीन्द्रपत्नीमहिपं विरिञ्चपत्नीं विरिञ्चं च विमुक्तिकाले । इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी । उक्ता सुपर्णश्च गिरीशनाम्ना ततो विरोधश्च न कश्चनात्रे'त्यादिना वक्ष्यतीत्यर्थः । अशेषाः समस्तजीवा इत्यनयोः पौनरुक्त्यं परिहरति **समस्तजीवा इत्यस्य विवरणं अशेषा इति** । अयं भावः । सयस्तजीवा इत्युक्ते संकोचोपि प्रतीयते । समस्तशब्दस्य संकुचितार्थत्वेनापि प्रयोगस्य 'समस्ताः समागता' इत्यादौ दृष्टत्वात् । **अतोऽशेषा इत्युक्तम्** । न विद्यते शेषो येषां तेऽशेषाः । शेषरहिता इति यावत् । शेषरहिताः समस्ता अपीति लीनत्वेन प्रसक्ताः सर्वेपि न तु केचिदेवेति न संकोचः कार्य इत्युक्तं भवति । समस्तजीवा गिरिजां प्रविश्य तया सह रुद्रं प्रविश्य तेन सह वाणीं प्रविश्य तया सह तत्पतिं प्राप्य हरौ लयं यान्तीत्यन्वयः । तत्र समस्तजीवा गिरिजां प्रविशन्तीत्यत्र केचिदेव गिरिजां प्रविशन्ति केचिन्नेति न संकोचनीयम् । सर्वेषामपि गिरिजायामेव प्रवेश इत्यत्र (उमा?) अशेषा इत्यनेन समस्तजीवा इत्येतद्विवृतं भवतीति ज्ञातव्यम् । अत्र च तृतीये 'हरेरेवमशेषेण सर्वशब्दसमन्वय' इत्यनुव्याख्यानव्याख्यानं 'सर्वेपि ते मुक्तगणा' इत्यनुव्याख्यानव्याख्यानं च टीकाकारीयं ज्ञापकम् । **अस्य चेति** । अशेषाः समस्तजीवा गिरिजां प्रविशन्तीत्यस्यैव सोमस्त्वित्याद्युत्तरवाक्यजातं विवरणमित्यर्थः ।

---

**प०** — **तथा च वक्ष्यतीति** । 'उमागिरीशावपि भारतीराविति स्मे'त्यत्र तथा 'इन्द्रप्रवेशस्तु यदोच्यत' इत्यत्र चेति भावः । तयैव रुद्रमित्यत्र तच्छब्दार्थमाह **तया गिरिजयेति** । पतिमित्यत्राकाङ्क्षां पूरयति **वाण्या इति** । वाक्यभेदेन पदद्वयस्य सार्थक्यमिति भावेनाह **यद्वेति** ॥ **अस्यैव विवरणमिति** । 'तस्मिन्लयं यान्ती'त्यादिश्लोकद्वयोक्तस्येत्यर्थः । अत एव प्राक् तमेव क्रमं संक्षेपेणाहेत्युक्तमिति ।

**या०**—**तथा च वक्ष्यतीति** । उमागिरीशावितीत्य'त्रेन्द्रप्रवेशस्तु यदोच्यतेत्रे'त्यत्रेति शेषः ॥ **अशेषा इतीति** । न चात्र समस्तेत्येतदेवाशेषा इत्यस्य विवरणं किं न स्यादिति शङ्का । न विद्यते शेषो येषां तेऽशेषा इति सङ्कोचनिषेधपरस्याशेषपदस्यैव सङ्कोचनार्हसमस्तपदविवरणरूपत्वस्य न्याय्य-त्वात् । अशेषाः समस्तजीवा इति कर्तृवाचकपदद्वयसार्थक्याय वाक्यभेदमाश्रित्याह **यद्वेति** ॥ **अस्यैवेति** । अस्मिन् लयं यान्ति भूतानीत्यादिश्लोकद्वयोक्तस्यैवेत्यर्थः ।

**श्री०** — **अस्यैवेति** । तस्मिन् लयं यान्तीति श्लोकद्वयोक्तस्यैव विवरणं 'सोमस्तु वारीशयुत' इत्यादिना वाक्यजातेन क्रियत इत्यर्थः ।

सु० — तत्र वायाविन्द्र इति श्रुतावुक्तानामिन्द्रादीनां चतुर्णां पृथिव्यादीनां भूतानां च क्रमेणैव वायौ प्रवेश इति यदुक्तं तत्तावत्प्रपंच्यते ।

इह द्वौ मार्गौ शेषमार्गो गरुडमार्गश्च ॥ तत्र शेषमार्गमादावाह सोमस्त्विति ।

अनु० — सोमस्तु वारीशयुतोऽनिरुद्धं विशत्यसौ काममसौ तु वारुणीम् ॥
सा शेषदेवं स गिरं च सैव वायुं विशत्यञ्ज इतीह निर्णयः ॥

वारीशयुत इत्यनेनाब्देवताया वरुणस्य सोमे लय इत्युच्यते । इहेन्द्रादिचतुष्टये सोमस्य भूतेष्वपां च वायुप्रवेशे निर्णयः । प्राग्गिरिजां रुद्रमित्युक्तम् । इदानीं च गिरं वायुमिति । एते चत्वारः शब्दाः प्रसिद्धपदार्थका इति प्रतीतिं वारयितुमाह उमेति ।

उमागिरीशावपि भारतीराविति स्म वाग्वेदगता ब्रवीति ॥
अहीन्द्रपत्नीमहिपं विरिञ्चपत्नीं विरिञ्चं च विमुक्तिकाले ॥

उमागिरीशाविति भारतीराविल्यपि । ईरः समीरः । वागित्येतत्पर्यायसमुदायो गृह्यते । प्रतीतार्थत्वे किं बाधकमित्यत उक्तम् विमुक्तिकाल इति विमुक्तिप्रतिपादनावसरे । एतेनोमादीनां चतुर्णामिह जन्मनि मुक्त्यभावादिति बाधकं सूचितं भवति । वेदवाक्यानुसारिणो वयमपि तथैव प्रयुक्तवन्तः स्म इति भावः । उमादिशब्दानां वारुण्यादिवृत्तौ किं निमित्तमित्यत आह त एवेति

त एव यत्तत्पदमाप्नुवन्ति

यद्यस्मात्त उमाद्या एव तत्पदं वारुण्यादिपदमुत्तरकल्पे प्राप्नुवन्ति तस्मादिति पूर्वेण संबन्धः । अनेनोमात्वादीनां वारुणीत्वादीनां चैकद्रव्यसंबन्धो लक्षणाबीजमित्युक्तं भवति । प्रसिद्धपदत्यागेनाप्रसिद्धपदप्रयोगे किं प्रयोजनमित्यत आह तत्काल इति ।

तत्काल एतान्समुपास्य जीवाः ॥
ब्रह्मत्वकाले प्रविशन्ति चैतानिति स्म वाक्तादृशतामुपैति ॥

तत्काले उमात्वादिकाले । एतानुमादीन्देवान् । ब्रह्मत्वकाले तेषामेव वाय्वादीनां ब्रह्मत्वादेः काले । एतान् वारुण्यादीन् । चो यस्मादित्यर्थे । इति तस्मात् । वाक् वेदवाणी । तादृशताम् उमादिशब्दवत्ताम् ।

एतदुक्तं भवति । यो यस्मिन्नतिपरिचयवांस्तस्याश्रमान्तरप्राप्त्यादिना नामान्तरे प्राप्तेऽपि तदभिज्ञास्तं प्रति तं पूर्वनाम्नैव व्यवहरन्तीति लोके सुप्रसिद्धम् । तथाऽत्रापि प्रयोग इति किं प्रयोजनान्वेषणेनेति ।

**शे०—यदुक्तमिति**। इन्द्रादीनां 'तत्र लय' इत्यादिना 'तस्मिंल्लयं यांति भूतानी'त्यादिना चेति शेषः ॥ **प्रागिति**। संक्षेपेण क्रमाभिधायके वाक्य इत्यर्थः ॥ **इदानीमिति**। सोमस्त्विति प्रपञ्चवाक्य इत्यर्थः। भारतीराविितीत्यत्रत्येति शब्दः योग्यत्वात्पूर्वत्रापि संबध्यत इत्याशयेनाह **उमागिरीशावितीति**। उमागिरीशावपीत्यपिशब्दस्य यथास्थितयोजनायां वैयर्थ्यमाशङ्क्य भिन्नक्रमतया तं योजयति ॥ **इत्यपीति**। निर्दिष्टशब्दमात्रपरत्वे वाकूशब्दस्य तत्पर्यायशब्दसमुदायस्य प्रसिद्धार्थपरित्यागेन अप्रसिद्धार्थपरत्वालाभ-प्रसङ्गात्। तल्लाभायाह **वागित्येतत्पर्यायेति**। किमनेन प्रसिद्धार्थत्वे बाधकमुक्तमित्यत आह **एतेनेति** ॥ **वृत्ताविति**। अमुख्यवृत्तावित्यर्थः। तस्याः शक्यसंबन्धादिरूपनिमित्तापेक्षत्वादिति भावः। ननु तथाऽपि किं प्रयोजनमिति शङ्काया न परिहारः प्रयोजनानुक्तेरित्यतः प्रयोजनानुक्तावपि तदुपासनादिना तत्रातिपरिचयसूचनेन प्रयोजनानपेक्षत्वसूचनात्तत्परिहारोपपत्तिरित्याह **एतदुक्तं भवतीति** ॥ **तस्येति**। यस्मिन्नित्युक्तस्येत्यर्थः। **तदभिज्ञाः** तत्परिचयाभिज्ञाः **तं प्रति** यः परिचयवांस्तम् प्रतीत्यर्थः ॥ **तमिति**। यस्य नामान्तरप्राप्तिस्तस्येत्यर्थः।

**प०— यदुक्तमिति**। अशेषक्रमानुरोधेनेत्यत्रोक्तमित्यर्थः। तस्य श्रुत्याद्युक्तसर्वक्रममनुसृत्येति व्याख्यानात्। इहेत्यनुवादः, इन्द्रादिचतुष्टय इति व्याख्या ॥ **भूतेष्विति**। प्रवेश इत्यन्वयः। ननु प्राक् उमादिशब्दानां अप्रयोगात् 'उमागिरीशौ भारतीराविति वागि'ति कथमेकवचनं प्र(वा)युक्तं वाच इति वक्तव्यत्वादित्यत आह **वागिति** ॥ **एतत्पर्यायेति**। उमादिशब्दपर्यायाणां श्रुत्यन्तराद्युक्तपर्यायाणां च गिरिजां रुद्रं गिरं वायुं इत्याद्युक्तगिरिजोमादिशब्दानां समुदायो गृह्यत इत्यर्थः। वेदगता वाक् तथा वदतु नाम भवन्तः किमर्थमेवं वदन्तीत्यत आह **वेदवाक्येति**। **वयं** मूलकाराः। **तथैव** गिरिजोमादि-शब्देनैवेत्यर्थः। अस्फुटत्वादाह **एतदुक्तं भवतीति** ॥ **आश्रमान्तरप्राप्त्यादिनेति**। राजाऽऽदिना प्रीत्यादिना नामान्तरे प्राप्त इत्याद्यादिपदेन ग्राह्यम्।

**श्री०— द्वौ मार्गाविति**। शेषगरुडमार्गौ ब्रह्माण्डाद्बहिरेवेति ज्ञातव्यम् ॥ **इन्द्रादि चतुष्टय इति**। 'वायाविन्द्रः सोम आदित्यो बृहस्पतिरि'ति वाक्योक्तेन्द्रादिचतुष्टयमध्ये सोमस्य वायुप्रवेशो निर्णयः कृतः। भूतेषु मध्ये अपां वायुप्रवेशो निर्णय इत्यर्थः ॥ **एतत्पर्यायेति**। उमागिरीशपर्यायाणां पार्वतीशङ्करादिशब्दानां भारतीवायुपर्यायाणां विद्युत्प्राणादिशब्दानामित्यर्थः ॥ **एकद्रव्येति**। देवानां जीवस्वरूपैकद्रव्येत्यर्थः।

सु० — इदानीं गरुडमार्गमाह सूर्य इति ।

अनु०— सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रं सहैतेन सुपर्णपत्नीम् ॥
तया सुपर्णे सह तेन वाणीं ब्रह्माणमेतद्गत एव याति ॥

अग्नियुक्त इत्यनेनाग्नेः सूर्ये लय इत्युच्यते । अनेनाग्निरिन्द्र इति श्रुतिः परम्परापेक्षेत्युक्तं भवति । एतद्गतो वाणीगत एव । एतेनेन्द्रादिष्विन्द्रादित्यबृहस्पतीनां, भूतेषु तेजसो, वायौ लयो विवृतो भवति ।

नन्वेतत् 'इन्द्र उमायामुमा रुद्रे विलीयत' इति श्रुतिविरुद्धम् । उमारुद्रशब्दयोः स्वार्थपरित्यागेऽपि वारुणीशेषपरतया व्याख्यातत्वादित्यत आह इन्द्रेति ।

इन्द्रप्रवेशस्तु यदोच्यतेऽत्र तदा ह्युमेत्येव सुपर्णपत्नी ॥
उक्ता सुपर्णश्च गिरीशनाम्ना ततो विरोधश्च न कश्चनात्र ॥

यदातदाशब्दावधिकरणमात्रस्योपलक्षकौ यत्र श्रुतौ अत्र उमायामिन्द्रप्रवेश उच्यते । तस्याश्चोमाया रुद्रे । सुपर्णपत्न्येव । गिरीशनाम्ना गिरीशपर्यायेण । सौपर्ण्यामिन्द्रलयस्य बलवच्छ्रुतिसिद्धत्वादिति हिशब्दः । अत्र पदसादृश्यं प्रवृत्तिनिमित्तमिति भावः ।

---

शे०— यदातदाशब्दयोः कालरूपाधिकरणविशेषवाचकत्वात्तस्य च प्रकृतेऽसंभवादुपलक्षणया श्रुतिरूपाधिकरणपरतामाह यदातदेति । एतदेव दर्शयति ॥ यत्र श्रुताविति । उमेत्येवेत्येवशब्दस्य वैयर्थ्यादिप्रसङ्गाद्भिन्नक्रमतया तं योजयति ॥ सुपर्णपत्न्येवेति । तावता गिरीशपदस्य सुपर्णपरत्वलाभेऽपि रुद्रशब्दस्य तदलाभान्नोमा रुद्रे विलीयत इति श्रुतिविरोधपरिहारसिद्धिरित्यत आह गिरीशपर्यायेणेति । प्रतीतार्थपरत्वे बाधकाभावान्न लक्षणया सुपर्ण्यादिपरत्वमित्यत आह सौपर्ण्यामिति । उमागिरीशपदयोः सुपर्ण्यादिषु वृत्तौ किं निमित्तं । न हि तेन विना लक्षणा संभवतीत्यत आह अत्रेति ।

स०— यदेति । श्रुतिरूपाधिकरणस्योपलक्षकावित्यर्थः ।

प०— एतेनेन्द्रादिष्विन्द्रादित्यबृहस्पतीनामिति । इन्द्रादित्यबृहस्पतीनां क्रमाल्लयकथनेन इन्द्रस्य सुपर्णपत्न्यां आदित्यस्य तु गुरौ, गुरोश्च शक्रे, इत्येवं लयो विवृतः । तथा सूर्योऽग्नियुक्त इत्युक्त्या सूर्यद्वारा तेजसो वायाविति विवृतं भवतीत्यर्थः ॥ अधिकरणमात्रस्येति । न तु कालरूपाधिकरणविशेषस्येत्यर्थः । तथात्वे कोऽर्थस्संपन्न इत्यत आह यत्र श्रुताविति ॥ अत्रेति । इन्द्र उमायां उमा रुद्र इति श्रुतावित्यर्थः । एवकारान्वयेनानुवादः सुपर्णपत्न्येवेति । गिरीशशब्दग्रहणमतन्त्र-

मिति भावेनाह **गिरीशनाम्ना गिरीशपर्यायेणेति** । उमादिशब्देन सुपर्णपत्न्यादिग्रहणं किं निमित्त-मित्यत आह **अत्र पदेति** । उमादिपदं सौपर्ण्यादिपदसदृशं न न्यूनाधिकभावापन्नमित्यर्थः ।

**श्री०**— भूतेषु मध्ये तेजसोऽग्नेः । यस्मिन्काले इन्द्रप्रवेशः कथ्यते तदा तस्मिन्काले एवं इन्द्र उमायामित्यत्रोमाशब्देन सुपर्णपत्नी उक्ता नान्यदेत्येवं प्रतीतिनिरासायाह **अधिकरणमात्रस्येति** । न तु कालरूपाधिकरणस्येत्यर्थः । तदेव दर्शयति **यत्र श्रुताविति** । तथा च **यदा** यत्र श्रुतौ **तदा** तत्र श्रुतावित्यर्थो द्रष्टव्यः । उमाशब्दस्य सुपर्णपत्न्यां प्रवृत्तौ गिरीशनाम्नः सुपर्णे प्रवृत्तौ च किं निमित्तमित्यत आह **अत्र पदसादृश्यमिति** । उमासुपर्णीपदयोर्गिरीशसुपर्णपदयोश्च साम्यं प्रवृत्तिनिमित्तमित्यर्थः ।

**सु०**— **अधुना 'तानि पर'** इत्युक्तानां **हिरण्यगर्भे लयप्रकारमाह** भृग्वादय इति ।

**अनु०** — भृग्वादयो दक्षमवाप्य तेन प्राप्येन्द्रमेतेन सुपर्णपत्नीम् ॥
विशन्ति ये मनवो राजमुख्या मनुं प्रविश्यात्र गता महेन्द्रम् ॥

**सुपर्णपत्न्याः सुपर्णे लयः सिद्ध एव** । **इन्द्रपर्यन्तमेव वक्तव्येऽधिकवचनमुक्तदाढर्यार्थम्** । **एवमुत्तरत्रापि** । ये मनवो **वैवस्वताद्याः** ये च राजमुख्याः **प्रियव्रताद्यास्ते स्वायंभुवमनुं प्रविश्य** अत्र **स्वायंभुवे मनौ** गता **वर्तमाना** महेन्द्रम् । **विशन्तीत्युभयत्र संबध्यते** ।

**भूतेषु पृथिव्याकाशयोर्लयप्रकारो वक्तव्यस्तमाह** आकाश इति ।

आकाश उर्वी च गुरुं प्रविश्य तेनैव यातः पुरुहूतदेवम् ॥
सनादयो यतयः काममेव विशन्ति शिष्टा अपि हव्यवाहम् ॥

**वायुभूतस्य मुख्याभिमानी प्रधानवायुरित्युक्तम्** । **अमुख्याभिमानिनस्तु 'शक्रं मरुद्गणा'** **इति लयो वक्ष्यते** ॥ सनादय इति । **सनत्कुमारव्यतिरिक्ताः** । **तस्य कामावतारत्वात्** । **कामस्य तु वारुण्यामुक्त एव लयः** । शिष्टा **उक्तेभ्यः** । **एतेन 'अग्नौ सर्वे देवा विलीयन्त' इत्यस्य विषयो** दर्शितः ।

**अस्यापवादमाह** वर्णाश्रमेति ।

वर्णाश्रमाचाररता मनुष्या धर्मं मनुं सोऽपि समेति काले ॥
तमेव सर्वे पितरः सुरानुगाः सर्वे कुबेरं स च सोममेव ॥

**एतत्प्रसङ्गान्मुक्तौ प्रवेशमात्रमुक्तं न तु देहलयः** । **तेषामुत्क्रमणस्य विद्यमानत्वात्** । **वर्णाश्रमाचाररता इत्यनेन मनुष्याणां मुक्तौ वर्णाश्रमवत्त्वमस्तीति सूचयति** । **धर्मस्य तु**

**स्वायम्भुवे मनौ लय एव** । काले **मोक्षकाले** । सर्वे पितरः **तं धर्ममेव संयान्ति** । सर्वे सुरानुगा **गन्धर्वाद्या कुबेरम्** ।

**उपसंहरति** विमुक्तीति ।

विमुक्तिकाले प्रविशन्त्यभीक्ष्णं भोगांश्च तद्देहगताः प्रभुंजते ॥

**एवं सर्वे यथोक्तप्रकारेण विमुक्तिकाले प्रविशन्त्युत्तमानिति शेषः । न केवलं प्रविशन्ति किं तर्हीत्यत आह** अभीक्ष्णमिति । **आविष्टग्रहवदित्यर्थः** ॥ **किमनेन प्रवेशेनेत्यत आह** आनन्देति ।

आनन्दसुव्यक्तिरमुत्र तेषां भवति

अमुत्र **उत्तमेषु प्रवेशेन** ।

**शे॰**— ननु तथाऽपि हिरण्यगर्भे लयप्रकारानुक्तेः कथं तत्र लयमाहेत्यवतार इत्यतः सुपर्ण्याः सुपर्णेतरस्य च वाणीद्वारा हिरण्यगर्भे उक्तरीत्या लयस्य सिद्धत्वान्न तदनुक्तिर्दोष इत्याह **सुपर्णपत्न्या इति** । ननु तर्हि इन्द्रपर्यंतमेव लयो वक्तव्यः स्यात् । इन्द्रस्य सुपर्णपत्न्यादिद्वारेण हिरण्यगर्भे लयस्य सिद्धत्वादित्यत आह **इन्द्रपर्यन्तमेवेति** ॥ **एवमिति** । यत्र यत्राधिकवचनं दृश्यते तत्सर्वमुक्तदार्ढ्यार्थमित्यवगंतव्यमित्यर्थः । **उभयत्रेति** । सुपर्णपत्नीं विशंतीति पूर्वत्र महेन्द्रं प्रविशन्तीत्युत्तरत्र, चेत्युभयत्र संबध्यत इत्यर्थः ॥ **उक्त एवेति** । 'काममसौ च वारुणीमि'त्युक्तत्वादिति भावः ॥ **अस्येति** । 'विशन्ति शिष्टा अपि हव्यवाहमि'त्यस्येत्यर्थः । मनुष्या धर्मं इत्येतावता पूर्तेर्वर्णाश्रमेत्यादितद्विशेषणानर्थक्यमाशङ्क्य तत्प्रयोजनमाह **वर्णेति** ॥ **लय एवेति** । न प्रवेशमात्रमित्यर्थः । सप्तम्यर्थेऽत्र लय इत्यभिप्रेत्यापेक्षितं पूरयन्योजयति **उत्तमेषु प्रवेशेनेति** ।

**स॰**— **एवमिति** । अधिकवचनमुक्तदार्ढ्यार्थमित्यर्थः । **उभयत्रेति** । विशंतीत्येतद्गिरिजां विशन्तीति महेन्द्रं विशन्तीत्युभयत्र संबध्यत इत्यर्थः ।

**प॰**— सुपर्णपत्नीं विशंतीत्यत्र विशंतीति पदस्य महेन्द्रमित्यत्राप्यन्वय इति भावेनाह **इत्युभयत्र संबध्यत इति** । भूतचतुष्टयस्य लय उक्तः वायुभूतस्य लयो वक्तव्य इत्यत आह **वायुभूतस्येति** ॥ **प्रधानेति** । तस्य तु लयः प्रागुक्त इति भावः ॥ **लय एवेति** । न तूत्क्रान्तिरित्यर्थः ।

**या॰**— **एतत्प्रसङ्गादिति** । इदमुपलक्षणम् । वक्ष्यमाणानामपि पितॄणां सुरानुगानां च प्रवेशमात्रं न देहलयः । तेषां प्रतीकालंबनत्वेनोत्क्रमणस्य विद्यमानत्वात् । गन्धर्वाद्या इत्यत्राद्यपदेन सिद्धचारणानां ग्रहणम् ।

**श्री०**— नन्वत्र सुपर्णपत्नीपर्यन्तमेव लय उक्तो न तु तस्या अन्यत्र लयोऽतो न्यूनतेत्यत आह **सुपर्णपत्न्या इति** । ननु शक्रसहितेन सुपर्णपत्नीमिति पूर्ववाक्येनैवेन्द्रस्य सुपर्णपत्न्यां लय उक्त एवास्त्यत एतेन सुपर्णपत्नीमिति पुनः किमर्थमुच्यत इत्यत आह **इन्द्रपर्यन्तमेवेति** ॥ **उभयत्रेति** । विशन्तीत्येतत् सुपर्णपत्नीं महेन्द्रमित्युभयत्र संबद्ध्यत इत्यर्थः । भूतेषु वायोर्लयानुक्तेराह **वायुभूतस्येति** । भूतवायोरित्यर्थः । एतेन शिष्टा इत्यनेन ॥ **विषयो दर्शित इति** । 'अग्नौ सर्वे देवा विलीयन्त' इत्यत्र सर्वदेवशब्देन, 'अग्नावग्नय' इति महोपनिषदि 'अग्नयस्तेजसी'ति चतुर्वेदशिखायां च प्रधानाग्नौ लीयमानत्वेन ये निर्दिष्टा एकोनपञ्चाशदग्नयस्त एव सर्वे देवा इत्यनेन ग्राह्या इत्यर्थः । अग्नीनामनेकत्वं च 'त एवैकोनपञ्चाशत्साकं पितृपितामहैरि'ति भागवते प्रसिद्धम् । अत एवानलकुलेन्द्र इति प्रधानाग्निनाम । यथोक्तं भाष्ये । 'अग्नौ सर्वे देवा विलीयन्त इति तत्र तत्र निर्दिष्टानामेवे'ति ॥ **अपवादमिति** । शिष्टा इति सामान्योक्त्या यमधर्मपितृगन्धर्वादीनामप्यग्नौ लयप्राप्तेस्तदपवादमाहेत्यर्थः ।

**सु०** —**प्रविष्टानां पुनर्निर्गमोऽस्ति न वेति शङ्कायामाह** अतश्चेति ।

**अनु०**— अतश्चेष्टत एव निर्गताः ॥

क्रीडन्ति

अत **एभ्य उत्तमेभ्यो निर्गताश्चेति संबन्धः** । इष्टम् इच्छा । **नपुंसके भावे क्तः** । **निर्गतानां पुनः प्रवेशोऽस्ति न वेत्यत आह** भूयश्चेति ।

भूयश्च समाविशन्ति तानेव

तान् **पूर्वप्रविष्टानेव** ॥

**नन्वेवंविधा मुक्तिः क्वापि नोपलब्धेत्यत आह** सायुज्यमिति ।

सायुज्यमिदं वदन्ति ॥

वदन्ति **पुराणादीनि । सयुजां भावो हि सायुज्यम् । किमिदं सायुज्यं सर्वेषामस्ति । नेति ब्रूमः । तर्हि सायुज्यहीनानां कीदृशी वृत्तिरित्यत आह** सायुज्येति ।

सायुज्यहीनास्तु लये तु सर्वे प्रोक्तेन मार्गेण विशन्ति सृष्टौ ॥

बहिश्च निर्यान्ति

**लये तु लय एव । विशन्त्युत्तमान् ।** बहिस्तेभ्यः । **एतत्सायुज्यभाजामपि समानमिति न त्याह** तत इति ।

ततोऽन्यदापि सायुज्यभाजां भवति प्रवेशः ॥

ततः **लयकालात्** ।

**शे०— अत एभ्य इति** । यद्यप्येतत्तदोशित्युक्तत्वादत इत्येतददोरूपमित्येतेभ्य इति वक्तुमुचितं । तथाऽप्येतत्तदोशित्यत्रेदम इशित्यत इदम इत्यस्यानुवृत्तिरस्त्वित्याशयेनैवमुक्तम् । क्वचित्तु एतेभ्य इत्येव पाठः । तत्र न किंचिदेतदित्यवधेयम् । अतश्चेति चशब्दो न यथाश्रुतसंबन्धः । किन्तु भिन्नक्रम इति भावेनाह **निर्गताश्चेतीति** । मूले आद्यादित्वात्तृतीयान्तात्तसिरित्यभिप्रेत्य कर्मसाधनताप्रतीतिनिरासाय भावसाधनतामाश्रित्येष्टशब्दं व्याख्याति ॥ **इष्टमिच्छेति** । अत्र टीकायामिच्छानुरूपमिति पाठः कल्पितः । मूलकोशेष्वदर्शनात् । **नपुंसक इति** । एषणमिष्टमिति भावे क्त इत्यर्थः । **वदन्ति पुराणादीनीति** । करणे कर्तृत्वोपचारेण समाधेयं ।

**स०— नपुंसक इति** । एषणमिष्टमिति भावे क्त इत्यर्थः । न तु यो यस्माज्जातः स तस्मिन् लीयत इत्युक्तम् । तथात्वे भृग्वादीनां दक्षे लयाभावापातात् । तेषां ततोऽनुत्पन्नत्वात् । तत्राह **एतदिति** ।

**प०**—अत इत्यनुवादः एभ्य इति व्याख्या । तादात्म्यमिति भ्रमनिरासायाह **सयुजामिति** । यद्वा कथमिदं सायुज्यमित्यतः अवयवशक्त्येत्याह **सयुजामिति** । भावार्थे ष्यञ्प्रत्यये आदिवृद्धौ रूपमिति भावः ॥

**सु०— नन्वेतत्सर्वं कुतः प्रमाणात्प्रतिपत्तव्यमित्यत आह उक्तमिति** ।

**अनु०**— उक्तं समस्तं परमश्रुतौ हि प्रोक्तं च

**अस्मिंल्लय इत्युक्तं समस्तम् । परमश्रुतिश्च विस्तरभयान्न पठिता । चशब्द उत्तरवाक्येन संबध्यते । प्रमाणान्तरमाह** सर्गेति ।

सर्गक्रमतो विपर्ययः ॥

मुक्तौ

**मुक्तौ सर्गक्रमतो विपर्यय इति । यो यस्माज्जातस्तस्य तस्मिन्मुक्तिरिति तावदङ्गीकरणीयमित्यर्थः । एतच्चापवादाभावे सतीति ज्ञेयम् । तथा च न्यायविवरणे । कुत एतदित्यत आह लय इति** ।

लये यद्वत्

साधारणप्रलये सर्गक्रमाद्विपर्ययस्य सत्त्वादिति भावः । एतदपि कुत इत्यत आह अथो इति ।

अथो लयश्च विपर्ययेणेत्यवदद्गिरां प्रभुः ॥

अथोशब्दोऽर्थान्तरे । विपर्ययेण सर्गक्रममपेक्ष्य । अवदत् उपपादितवान् । गिरां वेदवाचां प्रभुः सूत्रकारः । यथा 'विपर्ययेण तु क्रमोऽत उपपद्यते चे'ति ।

लये सृष्टिक्रमतो विपर्ययश्चेन्मुक्तौ तथा भाव्यमित्यत्र किं नियामकमित्यत आह लय इति ।

लयो यतो मुक्तिरियं सुराणां

यतः कारणात्सुराणां लय एवेयं मुक्तिर्न तु मनुष्याणामिव प्रागेव देहादुत्क्रान्तिः । तस्मादुक्तं युक्तम् । सामान्यविशेषभावान्न साध्याविशिष्टतादोषः । सर्गश्चोक्तानुगुण एव श्रुत्यादिसिद्ध इति भावः ।

ननु प्राङ् मुक्तानां भोगादिकं समर्थितम् । इदानीं तूच्यते लय एव मुक्तिरिति । तत्कथं पूर्वापरविरोधो न भवतीत्यत आह भोग इति ।

भोगो विशेषेण च

विशेषेण देवपदादप्यतिशयेन । देहहानिलक्षणा मुक्तिर्लयान्न विशिष्यत इत्युक्तं न तु सर्वाऽपीति भावः । अत एव प्रागियमित्युक्तम् ।

शे० — उत्तरवाक्येन संबध्यत इति । सर्गक्रमत इत्युत्तरवाक्येन संबध्यत इत्यर्थः । अनेनोत्तरवाक्योक्तस्यानुमानस्य प्रमाणान्तरत्वसूचकश्चशब्द इत्युक्तं भवति । अत एव प्रमाणान्तरमाहेति वक्ष्यतीति ध्येयम् ॥ तस्य तस्मिन्मुक्तिरितीति । तस्य तस्मिंल्लय इत्यर्थः । तत्तदुत्पन्नानामेव यदि तत्र तत्र लयस्तर्हि वरुणाद्यनुत्पन्नानामश्विप्रभृतीनां वरुणादौ लयो न स्यादित्यत आह एतच्चेति । कुतोऽस्य नियमस्यौत्सर्गिकत्वमित्यत आह तथा चेति । 'तत्समानानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेरि'ति न्यायविवरणेऽनुत्पादकेऽपि लयस्योक्तत्वाद्वरुणाद्यनुत्पन्नानामपि तदुत्पन्नाब्दादिदेवतासमानानामश्विप्रभृतीनां स्वसमानाबादिदेवतालयस्थाने वरुणादौ लयो नानुपपन्न इति भावः ॥ साधारणप्रलय इति । महदादिजडसाधारणप्रलय इत्यर्थः ॥ अर्थान्तर इति । मुक्तिरूपलयविशेषस्य सर्गक्रमापेक्षया विपरीतक्रमवत्त्वं प्रकृतोऽर्थः । ततोऽन्यद्यत्साधारणलयस्य सर्गक्रमविपरीतक्रमवत्त्वरूपमर्थान्तरं तत्राथोशब्दो वर्तत इत्यर्थः । तथा च प्रकृतसुरमुक्तिभिन्नः प्रलयः साधारणो लय इत्युक्तं भवति ॥ उपपादितवानिति । अतो न तदुपपादनीयमिति भावः ॥ किं नियामकमिति । लयेत्यस्य

सृष्टिक्रमतो विपर्ययेऽप्यदेवानामिव देवानामप्यन्यथैव मुक्तिसंभवादप्रयोजकत्वमिति भावः ॥ **इयं मुक्तिरिति** । देहहानिलक्षणा मुक्तिरित्यर्थः । मनुष्याणामिवेत्यत्र मनुष्यशब्दो देवव्यतिरिक्तलक्षको न तु मनुष्यमात्रविषय इति प्रागुक्तमवधेयम् । नन्वेतावता, देवा मुक्तौ सर्गक्रमविपरीतक्रमवन्तो, लये सर्गक्रमविपरीतक्रमवत्त्वात्, संमतवदित्यनुमानमुक्तं भवति । तच्चानुपपन्नम् । मुक्तेरपि लयत्वेन लयगतविपरीतक्रमेण लयगतविपरीतक्रमसाधने हेतुसाध्ययोरभेदेन साध्यवैशिष्ट्यापातादित्यतः साधारणलयसुरमुक्त्योः सामान्यविशेषभावाल्लयसामान्यगतसर्गक्रमविपरीतक्रमवत्त्वेन हेतुना लयविशेषभूतसुरमुक्तौ सर्गक्रमविपरीतक्रमवत्त्वसाधनान्न साध्यावैशिष्ट्यमित्याशयेनाह **सामान्येति** ॥ **उक्तानुगुण एवेति** । लयक्रमविपरीतक्रमवानेवेत्यर्थः । तथाऽपि कथं पूर्वोत्तरविरोधपरिहार इत्यत आह **देहहानिलक्षणयेति** ॥ **अत एवेति** । सर्वस्या अपि मुक्तेर्लयाविशेषाभावादेवेत्यर्थः । अन्यथा मुक्तिरित्येव पूर्वत्र वक्तव्यतया इयमिति तद्विशेषणमनर्थकं स्यादिति भावः ।

स० — **तथा चेति** । स्पष्टमिति शेषः । न्यायविवरणं प्रागेवोदाहृतम् ॥ **अर्थान्तर इति** । मुक्तिरूपलयविशेषस्य सर्गक्रमापेक्षया विपरीतक्रमवत्त्वं प्रकृतोऽर्थः । ततोऽन्यद् यत्साधारणलयस्य सर्गक्रमविपरीतक्रमवत्त्वरूपमर्थान्तरत्वं तत्राथोशब्दो वर्तत इत्यर्थः । नन्वेतावता देवा मुक्तौ सर्गक्रमविपरीतक्रमवन्तः लये सर्गक्रमविपरीतक्रमवत्त्वादित्युक्तं भवति । तन्न । मुक्तेरपि लयत्वेन हेतुसाध्ययोरभेदापातेन साध्यावैशिष्टमित्याशङ्क्य लयविशेषभूताया मुक्तेः सर्गक्रमविपरीतक्रमवत्त्वं साध्यं लयसामान्यस्य तत्त्वं हेतुरिति सामान्यविशेषभावान्न दोष इत्याह **सामान्येति** ॥ **उक्तानुगुणः** । लयक्रमवैपरीत्येनेत्यर्थः । **अत एव** सर्वस्या मुक्तेर्लयाविशेषाभावादेवेत्यर्थः ।

प० — **उत्तरवाक्येनेति** । किञ्चेति वा गिरां प्रभुश्चावददिति वा संबध्यत इत्यर्थः ॥ **तथा च न्यायविवरण इति** । तत्समानानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेरित्यजनकेपि लयस्योक्तत्वादिति भावः । उदाहरणं तु वरुणादजातानामप्यश्विप्रमुखानां विशेषवचनाभावेन स्वसमानाबादिदेवतालयस्थाने वरुणे लयः । उक्तं हि '(मृत्य)ऋभवः पृथिव्यां वरुण आप' इति श्रुतौ 'पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनावि'ति ॥ **साधारणप्रलय इति** । महदादिजडसाधारणप्रलय इत्यर्थः ॥ **अर्थान्तरे इति** । प्रकृतमुक्त्यपेक्षया साधारणलयरूपार्थान्तर इत्यर्थः ॥ **उपपादितवानिति** । न्यायनिबन्धनेन निर्णयात्मकत्वात् न तत्र संशयः कार्य इति भावः ॥ **किं नियामकमिति** । तथात्वे मनुष्याणामपि तथाभावः स्यादिति भावः । ननु 'लयो यतो मुक्तिरियं सुराणामि'त्यनेन विमतः सुरलयः मुक्तिर्भवितुमर्हति सुरलयत्वात् व्यतिरेकेण साधारणलयवदित्यभि(मतेप्रयोगेसा)प्रेतानुमाने साध्याविशिष्टता साधनस्येत्यत आह **सामान्येति** । सुरलयत्वरूपविशेषेण मुक्तित्वसामान्यं साध्यते ।

अयं वृक्षः शिंशुपात्वात् इतिवदित्यतो न दोष इति । सुराणां लयः सर्गक्रमाद्विपर्ययेण भवितुमर्हति लयत्वात्साधारणलयवत् इति पूर्वश्लोकाभिमते प्रयोगे तु साध्याविशेषशङ्कैव नास्ति हेतुसाध्ययोरत्यन्त-भेदात्। केचित्तु विमतो लयः सृष्टितो विपरीतक्रमवान् लये विपरीतक्रमसत्त्वादिति पूर्वत्र प्रयोगोऽभिमतः । तथाच लये विपरीतक्रमसत्त्वाल्लयो विपरीतक्रमवानित्युक्तं स्यात् एवं च साध्याविशेषः लयसामान्यगतेन विपरीतक्रमेण लयविशेषसुरलयरूपमुक्तौ साध्यत इति न दोष इत्यर्थः इत्याहुः । ननु सृष्टिक्रमो (यदि) भवदुक्तलयक्रमात् क्वचिदन्यथाऽप्यस्तु न हि जनकजन्ययोरानुपूर्वीनियमे नियामकमस्तीत्यत आह **सर्गश्चेति** । तस्मादशेषा इत्यादिना येन क्रमेण लय उक्तः तद्विपरीतक्रमो नियमेन श्रुत्यादिसिद्धो न क्वचिदन्यथाऽस्तीत्यर्थः ॥ **प्राङ्मुक्तानामिति** । 'भोगांश्च तद्देहगताः प्रभुञ्जत' इत्यत्रेत्यर्थः । यथेष्टतो निर्गत्यादिरादिपदार्थः । ननु लये विपरीतक्रमश्चेत् मुक्तावपि तथा भाव्यमित्येतत्कुतः तथात्वे मनुष्याणामपि तथा स्यादिति भावेन शङ्कितस्य किमुत्तरमित्यत आह **देहहानीति** ॥ **अत एवेति** । सुरलयरूपा मुक्तिरेव लयाविशिष्टेत्यभिमतत्वादेवेत्यर्थः ।

या०—**तथा च न्यायविवरण इति** । तत्समानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेरिति न्यायविवरणेऽमुत्पादकेऽपि लयस्योक्तत्वादित्यर्थः । यथा वरुणाद्यनुत्पन्नानामश्विप्रभृतीनां विशेषवचनाभावात्स्वसमानाबादिलयस्थाने वरुणादौ लय इति ज्ञातव्यम् ॥ **साधारणप्रलय इति** । महदादिजडसाधारणप्रलय इत्यर्थः । यद्वा सामान्यप्रलय इत्यर्थः ॥ **अर्थान्तर इति** । प्रकृतमुक्त्य-पेक्षयाऽर्थान्तर इत्यर्थः । तथा च प्रकृतसुरमुक्तिभिन्नः साधारणो लय इत्युक्तं भवति **उपपादितवा-निति** । अतो न तदस्माभिः साधनीयमिति भावः ॥ **सुराणां लय एवेयं मुक्तिरिति** । नन्वेवं साधारणलये सर्गक्रमतो विपर्ययस्य सत्वात्सुरमुक्तिरूपप्रलयोऽपि तद्वानिति साधने प्रलयगतेन विपरीत-क्रमेण प्रलयेऽपि विपरीतक्रमः साध्यत इत्युक्तं स्यात् । ततश्च साध्यसाधनयोरभेदेन साध्याविशिष्टतेत्यत आह **सामान्यविशेषेति** । साधारणलयसुरमुक्त्योरिति शेषः । तथा च लयसामान्यधर्मभूतः सर्गक्रमतो विपर्ययस्तद्विशेषरूपायां मुक्तौ साध्यते न तु लयसामान्य एव येनोक्तदोषः स्यादिति भावः । ततश्चायं प्रयोगः । सुराणां सायुज्यरूपा मुक्तिः लयसामान्यधर्मभूतसर्गक्रमविपरीतक्रमवती । लयविशेषत्वात् । यो यद्विशेषः स तत्सामान्यधर्मवान् यथा ब्राह्मणविशेषस्तत्सामान्यधर्मभूताध्ययनादिमानिति । यद्वा सुरा मुक्तौ सर्गक्रमवैपरीत्यवन्तो लये सर्गक्रमवैपरीत्यवत्त्वात् । व्यतिरेकेण यज्ञदत्तवदिति प्रयोगः । अत्राप्रयोजकत्वमाशङ्क्य तन्निवर्तकतया लयो यतो मुक्तिरिति पदत्रयं व्याख्यातम् ।

श्री०— **उक्तानुगुण इति** । यस्य यस्मिन् लयस्तस्य तस्मादुत्पत्तिरित्येव श्रुत्यादिसिद्ध इत्यर्थः ॥ **लय एव मुक्तिरिति** । न हि प्रलये भोगोऽस्तीति भावः ॥ **देहहानिलक्षणा मुक्तिरिति** ।

मुक्तिरेवेत्यर्थः ॥ **सर्वाऽपीति** । मुक्तिरित्यर्थः । 'कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोगश्चतुष्टयमि'ति मुक्तेश्चातुर्विध्यस्य प्रतिपादितत्वादित्यर्थः ॥ **इयमित्युक्तमिति** । 'लयो यतो मुक्तिरियं सुराणामि'त्यत्र इयं मुक्तिर्लय इति विशिष्योक्त्या भोगादिरूपा सर्वा मुक्तिर्लयरूपेति लभ्यतेऽतो न पूर्वोत्तरविरोध इति भावः ।

सु०— **भोगश्च मुक्तिरिति सूत्रकारानुक्तं कस्मादुपसंख्येयमित्यत आह** यमिति ।

यं वदिष्यति ॥

**यं भोगं चतुर्थपादे सूत्रकारो वक्ष्यति मुक्तित्वेन सः । प्रमाणान्तरं चाह** उक्तश्चेति ।

उक्तश्च बिम्बप्रतिबिम्बभावः पैङ्गिश्रुतावुक्तलयानुसारतः ॥

बिम्बप्रतिबिम्बभावो देवानामुक्तलयानुसारत इति । **यस्मिन्यस्यास्मामिर्लय उक्तः स बिम्बः अपरः प्रतिबिम्ब इत्युक्तमस्तीत्यर्थः । ततः किमित्यत आह** बिम्ब इति ।

बिम्बे लयो यन्नियतश्च मुक्तौ चिदात्मनां तद्वशता च सर्वदा ॥

**मोक्षानन्तरमपि सर्वदा । एतदुत्तरत्रोपयोगि । प्रसङ्गादिहोक्तम् । यद्यस्मान्मुक्तौ प्रतिबिम्बस्य बिम्बे लयो नियतः प्रमाणप्रसिद्धः, तानि चान्यत्र पठितानि, तस्मादुक्तं युक्तमिति ।**

---

**शे०— स इति** । स इत्यस्य पूर्वेण सबन्धः । ननु मोक्षानन्तरमपि चिदात्मना भगवद्वशत्वमस्तीत्येत'दत एवानन्याधिपतिरि'ति चतुर्थपादीयाधिकरणप्रमेयमिति तत्रैवेदं वक्तुमुचितम् । अत्र तु तत्कथनस्य का सङ्गतिरित्यत आह **एतदुत्तरत्रेति** । अत्र यद्यपि तथापीति पूरणीयम् । ततश्च यद्यप्येतदुत्तरत्रोपयोगि तथाऽपि प्रसङ्गादिहोक्तिर्नानुपपन्नेत्युक्तं भवति ॥ **उक्तं युक्तमिति** । देवानां मुक्तेः सर्गक्रमविपरीतक्रमवत्त्वमिति यदुक्तं तद्युक्तमित्यर्थः ।

**स०— स भोगः** । ननु मोक्षानन्तरमपि भगवद्वशत्वमस्तीति चतुर्थपादप्रतिपाद्यं किमर्थमत्रोच्यत इत्यत आह **एतदुत्तरत्रोपयोगीति** ॥ **तानि चान्यत्र पठितानीति** ।

**प०— उपसंख्येयमिति** । वक्तव्यमित्यर्थः । यमित्यस्यान्वयमाह **स इति** । स भोगो विशेषेणेत्यर्थः । सर्वदेत्येतत्संसार इति भ्रमनिरासायाह **मोक्षानन्तरमपि सर्वदेति** ॥ **एतदिति** । मुक्तौ सदा बिम्बवशत्वकथनं 'अत एव चानन्याधिपतिरि'त्येतद्व्याख्याने 'अनन्यभृत्यत्वमिहोदितेभ्य' इत्यादावुत्तरत्रोपयोगीत्यर्थः । यत्तच्छब्दाध्याहारेणान्वयमाह **यद्यस्मान्मुक्ताविति** । नियत इत्यस्यार्थः प्रमाणसिद्ध इति ॥ **तानि चेति** । प्रमाणानि **अन्यत्र** तात्पर्यनिर्णये ॥ **उक्तमिति** । सृष्टिक्रमतो विपरीतक्रमो लय इत्युक्तं युक्तमित्यर्थः ।

या० — एतदुत्तरत्रेति । एतन्मुक्तौ चिदानन्दात्मना बिम्बवशत्वमुत्तरत्र, 'अत एव चानन्याधिपतिरि'ति सूत्रव्याख्यान इत्यर्थः ॥ उक्तं युक्तमिति । सुरमुक्तेः सर्गक्रमविपरीतक्रमवत्त्वं युक्तिसिद्धमित्यर्थः । युक्तिश्च, 'प्रतिबिम्बस्य बिम्बे लयरूपत्वाद्यतिरेकेण पितापुत्रादिलयवदि'त्येवंरूपा । श्रुत्युपात्तस्यास्य हेतोर्बलवत्त्वात्तत्त्वलयरूपसपक्षाद्व्यावृत्तत्वेऽपि नासाधारण्यं दोष इति ज्ञातव्यम् । तदधीनत्वे सति तत्सदृशत्वरूपप्रतिबिम्बत्वस्य तत्त्वेष्वपि सत्त्वेनान्वय्येवायम् ।

सु० — यदुक्तं सर्वेषां भूतानां प्राणे लयस्तस्य विष्णाविति तदसत् । 'प्राणस्तेजसि तेजः परस्यां देवतायामि'ति श्रुतिविरोधात् । बिम्बे प्रतिबिम्बस्य लय इति चासत् । न हि प्राणस्तेजोभूतस्य प्रतिबिम्ब इत्यत आह तेजोऽभिधामिति ।

अनु० — तेजोऽभिधां तु श्रियमाप्य विष्णुमग्रे ततः पुत्रतयैव वायुः ॥
आप्तः प्रसूतः पुनरेव विष्णुं प्रविश्य मुक्तः प्रलयेऽत्र तिष्ठति ॥

वायुः प्रलये तेजोऽभिधां श्रियमाप्य तत्र लीनो भूत्वा विष्णुमाप्तः । सृष्टिकाले जातेऽग्रे सर्वेभ्यः पूर्वं, ततो विष्णोः, पुत्रतया हिरण्यगर्भत्वेन प्रसूतः । पुनरेव प्रलये मुक्तौ विष्णुं प्रविश्य अत्र विष्णौ तिष्ठति ।

इदमुक्तं भवति । तेजःशब्दस्य लक्ष्मीवाचित्वान्नोक्तविरोधः । एवं तर्हि 'विलीनो हि प्रकृतौ संसारमेती'ति श्रुतेर्वायोः संसारप्रसङ्ग इति चेन्न । इष्टत्वात् । हिरण्यगर्भत्वेन पुनर्जननाङ्गीकारात् । एवमपि ब्रह्मविदो मुक्त्यभावप्रसङ्ग इति चेन्न । हिरण्यगर्भत्वानन्तरं मुक्तिस्वीकारादिति । इदं च प्राणशब्दस्य वायुवाचित्वपक्षमादायोक्तम् । हिरण्यगर्भवाचित्वपक्षे तु भाष्योक्तं द्रष्टव्यम् ।

मुक्तानां स्वस्वोत्तमदेवताः प्रविश्यावस्थानमित्युक्तम् । नैतावदेव । किन्तु भगवत्प्रवेशोऽप्यस्ति । उक्तश्च भोगो नानन्दस्य जनकः किन्तु व्यञ्जक एव । आनन्दस्तु स्वरूपभूत इत्याह सर्वेपीति ।

सर्वेऽपि ते मुक्तगणा अमन्दसान्द्रं निजानन्दमशेषतोऽपि ॥
भुञ्जन्त एवासत ईशदेहे लयेऽथ सर्गे बहिरेव यान्ति ॥

सर्वेऽपीत्युक्ते देवानां प्रकृतत्वात्त एवेति प्रतीतिं वारयितुमशेषतोऽपीत्युक्तम् । भुञ्जन्तः अनुभवन्तः ।

शे०— **तेजोभूतस्येति ।** तदभिमानिनोऽग्नेरित्यर्थः । तेजोभिधामिति तेजःशब्दस्य लक्ष्मीवाचित्वकथनमात्रेणैवोक्तविरोधपरिहाराद्भाष्ये इतरांशवैयर्थ्यमित्यतः तत्तद्व्यावर्त्यशङ्काप्रदर्शनपूर्वकं तत्तदंशसार्थक्यं दर्शयन्नेवाभिप्रायमाह **इदमुक्तं भवतीति ॥ नोक्तविरोध इति ।** प्रतिबिम्बस्य बिम्बे लय इत्युक्तस्य तथा सति प्राणस्य तेजोभूताप्रतिबिम्बत्वात्तेजसि लयाभावप्रसङ्गरूपो विरोधो नेत्यर्थः । नन्वेतद्विरोधपरिहारेऽपि, यदुक्तं प्राणस्य भगवति लय इति तत्तावद्गतमेव । प्राणस्य तेजसि लयाभ्युपगमादित्यत आह **इदं चेति ।** प्राणस्य तेजसि लयोपपादनमित्यर्थः । तर्हि प्राणस्य तेजसि लयात्साक्षाद्भगवल्लयाभावप्राप्त्या तदुक्तिरनुपपन्ना स्यादित्यतो हिरण्यगर्भवाचकत्वाभिप्रायेण प्राणस्य भगवति साक्षाल्लयाभिधानमप्युपपन्नमेव । 'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतमि'ति भाष्योक्तरीत्या हिरण्यगर्भस्य तेजोभिधायां लक्ष्म्यां तत्प्राप्तिरूपलयस्याभ्युपगमेऽपि तत्र साक्षाद्देहलयस्यानभ्युपगमेन भगवत्येव तद्देहलयस्याविरुद्धत्वादित्याशयेनाह **हिरण्यगर्भवाचित्वपक्षे त्विति ॥ अशेषतोऽप्युक्तमिति ।** आद्यादिभ्य उपसंख्यानात्प्रथमान्तात्तसिः । ततश्चाशेषा निःशेषा अपि देवा इत्यर्थलाभादुक्तप्रतीतिनिराससिद्धिरिति भावः ॥ **अनुभवन्त इति ।** इति यावदिति शेषः ।

स०— **नोक्तविरोधः** प्रतिबिम्बस्य बिम्बे लय इति यदुक्तं तद्विरोधः । प्राणस्य तेजोभूतप्रतिबिम्बत्वे तेजसि लयो न स्यादिति विरोधो नेत्यर्थः । नन्वेतद्विरोधपरिहारेऽपि यदुक्तं प्राणस्य भगवति लय इति तत्तावद्गतमेव । प्राणस्य तेजसि लयाभ्युपगमादित्याशङ्क्य प्राणशब्दस्य वायुपरत्वात् तस्य तेजसि लयः संभवत्येवेत्याह **इदं चेति ।** तर्हि साक्षाल्लयकथनं कथमित्यतस्तत्र प्राणशब्दस्य वायुपरत्वात् तस्य च तेजसि लयसंभवात् साक्षाल्लयोपपत्तिरित्याह **हिरण्यगर्भेति ॥ भाष्योक्तम् ।** 'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतमि'ति भाष्योक्तं समाधानमित्यर्थः ।

प०— श्रियमाप्येत्येतस्यार्थः तत्र विलीनो भूत्वेति । व्यवहितपदयोरन्वयेनानुवादो **विष्णुमाप्त इति ।** अग्रे इत्यनुवादः, सर्वेभ्यः पूर्वमिति व्याख्या । ततो विष्णोरित्यपि व्याख्येयव्याख्यानभावेन ज्ञेयम् । यदुक्तमित्यादिना कृतशङ्कोद्धारप्रकारमाह **इदमुक्तमिति ।** यद्वा मूले पुनर्जननाद्युक्तेः कृत्यं व्यनक्ति **इदमुक्तमिति ॥ प्राणशब्दस्येति ।** 'प्राणस्तेजसी'ति श्रौतस्येत्यर्थः ॥ **भाष्योक्तमिति ।** 'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतमि'ति 'सोऽध्यक्ष' इति सूत्रभाष्योक्तं प्राणशब्दितहिरण्यगर्भस्य तेजःशब्दितश्रियःप्राप्तिमात्रं न तु तत्र देहलय इत्युक्तं द्रष्टव्यमित्यर्थः ।

या०— **तेजोभूतस्येति ।** तेजोभूताभिमानिनोऽग्नेरित्यर्थः ॥ **इदं चेति ।** प्राणस्य तेजसि लयोपपादनमित्यर्थः ॥ **भाष्योक्तमिति ।** 'प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम् । सर्वेशितुश्च

सर्वादिस्तस्यान्यत्र लयः कथम्ति' ति भाष्योक्तम् । हिरण्यगर्भस्य तेजसि लयो नाम तत्प्राप्तिमात्रं न तु तत्र देहलय इति प्रमेयं द्रष्टव्यमित्यर्थः ॥ ४ । २ । ७ ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादानां शिष्येण यदुपतिना विरचितायां सुधाटिप्पण्यां
चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ । २ ॥

**श्री०— नोक्तविरोध** इति । प्राणस्तेजसीति श्रुतिविरोधो नेत्यर्थः ॥ **एवमपीति** । ब्रह्मविदोऽपि वायोर्हिरण्यगर्भत्वेन पुनर्जननाङ्गीकार इत्यर्थः ।

**सु०— शिष्टा हव्यवाहमित्यस्यापवादान्तरमाह** प्रयातीति ।

**अनु०—** प्रयाति धर्मं निर्ऋतिस्तु शक्रं मरुद्गणाः पारिषदास्तथैव ॥
सर्वेऽनिरुद्धं पृतनाधिपाद्याः

**निर्ऋतिस्तु धर्मं प्रयाति । मरुद्गणाः शक्रं प्रयान्ति । तथाशब्दः समुच्चये ।** पृतनाधिपाद्या **विष्वक्सेनाद्याः** सर्वे **भगवतः पार्षदा अनिरुद्धं प्रयान्ति । देहलयार्थमिति शेषः । अनिरुद्धस्य तु कामे लय उक्त एवेत्येवार्थः । अत्र प्रमाणमाह** तुरेति ।
तुरश्रुतिर्हीत्थम्

---

**अत एवैतत्तत्रैव नोक्तं परमश्रुतावनुक्तत्वात् ।**

**शे०— अपवादान्तरमिति** । वर्णाश्रमाचाररता इत्यपवादस्योक्तत्वादपवादान्तरमित्युक्तम् । ननु च शक्रं मरुद्गणा इत्यपि प्रागेव किं नोक्तमित्यत आह **अत एवेति** । अत एवेत्युक्तमेव दर्शयति **परमेति** । तुरश्रुत्युदितत्वेन तच्छ्रुत्यनुक्तत्वादेव तच्छ्रुत्युक्तक्रमोक्तिदशायामेवास्यानुक्तियुक्तेत्यर्थः ॥

यद्विद्याधीशगुरोः शुश्रूषान्या न रोचते यस्मात् ॥ अस्त्वेषा भक्तियुता श्रीविद्याधीशपादयोः सेवा ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशपूज्यपादानां
निजशिष्यकेशवस्य कृतौ
श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्यायसुधाविषमपदवाक्यार्थविवृतौ
शेषवाक्यार्थचन्द्रिकायां
चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४–२ ॥

स०— ननु शक्रं मरुद्गणा इत्येतत्प्रागेव किं नोक्तमित्यत आह **अत एवेति** । यतोस्मिन्नर्थे तुरश्रुतिः प्रमाणत्वेन प्रदर्श्यतेऽत एवेत्यर्थः ॥

इति चतुर्थे द्वितीयः ॥

प० — **अपवादान्तरमिति** । 'वर्णाश्रमाचाररता' इत्युक्तापवादापेक्षाऽपवादान्तरमित्यर्थः ॥ **तत्रैवेति** । लयक्रमोक्तिप्रकरण एवेत्यर्थः । अत एवेत्युक्तं व्यनक्ति **परमश्रुतावनुक्तत्वादिति** । अस्यार्थस्य तत्रैवोक्तौ 'उक्तं समस्तं परमश्रुतौ हि प्रोक्तमि'त्येतदसाधु स्यात् । परमश्रुतौ अस्यार्थस्याभावात् अतोऽत्र व्यवधानेनोक्तमित्यर्थः ।

श्री० — **अपवादान्तरमिति** । शिष्टा इति सामान्योक्तेर्निर्ऋतिमरुद्गणपार्षदानामपि अग्नौ लयप्राप्तेरपवादमाहेत्यर्थः । वर्णाश्रमाचारेत्यादिना धर्मपितृगन्धर्वादिविषयेऽपवादस्योक्तत्वादपवादान्तरमित्युक्तम् । **अत एवेति** । तुरश्रुत्युक्तत्वादेवेत्यर्थः । यद्यप्ययमपवादो वर्णाश्रमाचारेत्याद्यनन्तरं तत्रैव वक्तव्यो न तु व्यवधानेनात्र । तथाऽपि तत्रोक्तं समस्तं परमश्रुतौ हि प्रोक्तमित्युच्यते । प्रयाति धर्ममित्यादिप्रमेयं परमश्रुतौ नोक्तं किन्तु तुरश्रुतावेवातो व्यवधानेनोक्तमित्यर्थः ॥ ४ । २ । ७ ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽभ्रतसुधावाक्यार्थविवरणे चतुर्थाध्यायस्य द्वितीयः पादः समाप्तः ॥ ४ । २ ॥

सु० — **पादार्थमुपसंहरति** इयमिति ।

**अनु०** — इयं विमुक्तिः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

**देवादीनां देहलयरूपा विमुक्तिरुक्तेति ॥ ४ । २ । ७ ॥**

**इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ॥ कृतायां टीकायां विषमपदवाक्यार्थविवृतौ चतुर्थेऽध्यायेऽत्रोत्क्रमणचरणः पर्यवसितः ॥**

**इति श्रीमन्न्यायसुधायां चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥**

प० — शेषस्योपयोगमाह **पादार्थमिति** ॥ ४ । २ । ७ ॥

इति श्रीमन्न्यायसुधापरिमळे राघवेन्द्रयतिकृते चतुर्थाध्यायस्य द्वितीयः पादः संपूर्णः ॥

## ॥ इति चतुर्थाध्यायस्य द्वितीयः पादः ॥



|| श्रीगुरुभ्यो नमः || हरिः ॐ ||

सु०— **मार्गो गम्यं चास्मिन्पाद उच्यत इति भाष्यम् । तत्प्राक् प्रसङ्गाद्विवृतमपीहावमरप्राप्तौ विशेषतो विवृणोति** उत्क्रान्तेति ।

**अनु०** — उत्क्रान्तमार्गश्च विमुक्तगम्यं पादोदितं

**ये शरीरादुत्क्रान्ता मानुषास्तेषां मार्गो भगवल्लोकगमनार्थः । गम्यमपि तेषामेवेति प्रतीतिनिरासायोक्तं** विमुक्तेति । **ये कर्मणो देहाच्च विमुक्तास्तेषां सर्वेषामपि गम्यम् । इदमुभयमेतत्पादोदितम् ।**

**शे०— प्रागिति** । 'उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः' इत्यादिना पूर्वपाद इति शेषः । एतत्पादप्रतिपाद्यस्य पूर्वपादे विवरणमसङ्गतमित्यत उक्तम् ॥ **प्रसङ्गादिति** । अत्र पादे तद्विवरणस्य का सङ्गतिरित्यत उक्तम् ॥ **अवसरेति** । तर्हि विवृतस्य पुनर्विवरणात्पौनरुक्त्यमित्यत उक्तम् ॥ **विशेषत इति** । स्फुटतयेत्यर्थः । पूर्वं देवानां तृतीयपादोदितो मार्गो नेति निषेधेन उत्क्रान्तानामेव मार्गः तत्पादोदितं गम्यं तु सर्वेषामित्यर्थतः सूचितस्यार्थस्यात्र मुखतः संकीर्तनान्न पौनरुक्त्यमिति भावः ।

**प०— प्राक् प्रसङ्गाद्विवृतमपीति** । 'देवानां मोक्ष उत्क्रान्तिश्चास्मिन्पाद उच्यते' इति द्वितीयपादीयभाष्यविवरणप्रसङ्गात् 'उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यत' इत्यनेन विवृतमपीत्यर्थः ।

**या० — प्रागिति** । 'उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यत' इत्यत्रेत्यर्थः । **विशेषत इति** । स्फुटतयेत्यर्थः ।

**सु०— अत्राधिकरणेषु पूर्वपक्षयुक्तिः सिद्धान्तयुक्तीश्चाह** सुक्रमेति ।

**अनु०—** सुक्रमविक्रमौ च ॥

सान्तानिकप्राप्तिरभीष्टता च सौकर्यमित्यन्यमतस्य तर्काः ॥

विशेषसंप्राप्तिरुरुत्वमाप्तिः क्रमानुरागः कथितानुवृत्तिः ॥

सिद्धान्तनिर्णीतिकराः

**अन्यमतस्येति जातावेकवचनम् । सिद्धान्तनिर्णीतिकरास्तर्का इति शेषः ॥**

शे०— एतत्पादीयतत्तदधिकरणनिरसनीयपूर्वपक्षाणामनेकत्वादन्यमतानामिति बहुवचनेन भवितव्यम् । अन्यमतस्येत्येकवचनं तु कथमित्यतो नेदं व्यक्त्यैक्यनिबन्धनमेकवचनं किं नाम जाति-रूपार्थैक्यनिमित्तकमेवेति नानुपपत्तिरित्याह अन्यमतस्येतीति ।

प०— सुक्रमेत्यादेर्मूलस्यायं संबन्धः । अर्चिरादिना तत्प्रथितेः सुक्रमः पूर्वमतस्य युक्तिः विशेषसंप्राप्तिः सिद्धान्तस्य ॥ वायुशब्दादविशेषविशेषाभ्यां सुक्रमः विशेषसंप्राप्तिः ॥ तटितोऽधिवरुणः सुक्रमः विशेषसंप्राप्तिः ॥ आतिवाहिकत्वलिङ्गात् सुक्रमः विशेषसंप्राप्तिः । वैद्युतेनैव ततस्तच्छ्रुतेः विक्रमः उरुत्वम् । कार्यं बादरिः सान्तानिकप्राप्तिः अभीष्टता च सौकर्यमिति पूर्वपक्षयुक्तयः । आप्तिः क्रमानुरागःकथितानुवृत्तिरिति सिद्धान्तस्य । पूर्वत्र तर्का इति श्रवणादत्रापि तथैवेति भावेनाह तर्का इति शेष इति ।

सु०— ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ॥ विमुक्त-गम्यं प्रतिपादयितुमिदं सूत्रम् । तद्भाष्ये न विस्पष्टमित्यतः स्पष्टीकरिष्यन्प्रतीकशब्दार्थं तावदाह प्रतीकमिति ।

अनु०— ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ॥
प्रतीकं देहादिकं

आदिपदेन मनःप्रभृतीनां भगवत्प्रतिमानां ग्रहणम् । यद्यपि सूत्रेऽप्रतीकालम्बनानां गम्यमुक्तं प्रतीकालम्बनानां तु परिशेषसिद्धम् । तथाप्यस्पष्टस्पष्टीकरणार्थं प्रवृत्तत्वादभावस्य भावपूर्वकत्वाच्च परिशेषसिद्धमेवार्थमादावाह तद्गतमिति ।

तद्गतमेव ये नराः ॥
उपासते ते पुरतः समाप्नुयुर्ब्रह्माणमस्मान्मतिमाप्य विष्णुम् ॥
प्राप्स्यन्ति

प्रतीकगतमेव विष्णुम् । ते प्रतीकालम्बनाः । पुरतः प्राक् प्रलयकालात् । अस्मात् ब्रह्मणः । मतिं भगवज्ज्ञानविशेषम् । प्राप्स्यन्ति प्रलये । इदानीं सूत्रितामप्रतीकालम्बनानां गतिं प्रपञ्चयति अत इति ।

अतोऽन्येऽपि तमाप्य तस्माद्धरिं गता मुक्तिभाजः परान्ते ॥

इति श्रीमद्भगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने

चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥

**प्रतीकालम्बनेभ्योऽन्ये व्याप्तोपासका अप्रतीकालम्बनाः । प्रथमतस्तं विष्णुमाप्यापि परान्तकाले । तस्माद्विष्णोस्तं ब्रह्माणमाप्य हरिं गता भवन्तीति ॥ ४ । ३ । ६ ॥**

**इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृतेरनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना । कृतायां टीकायां विषमपदवाक्यार्थविवृतौ चतुर्थाध्याये(र्चिःप्रभृति)स्मिन्गमनचरणः पर्यवसितः ॥**

**इति श्रीमन्न्यायसुधायां चतुर्थाध्यायस्य तृतीयः पादः संपूर्णः ॥ ४-३ ॥**

**शे० — विष्णुमाप्येति ।** वैकुण्ठलोकगं विष्णुमाप्येत्यर्थः ॥ **ब्रह्माणमिति ।** पृथिव्याद्यन्तर्गतं महत्तत्त्वगतं च ब्रह्माणं क्रमेण प्राप्य हरिं वासुदेवं गता भवन्तीत्यर्थः ।

यद्विद्याधीशगुरोः शुश्रूषान्या न रोचते तस्मात् ॥

अस्त्वेषा भक्तियुता श्रीविद्याधीशपादयोः सेवा ॥

---

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यपादानां

निजशिष्यस्य केशवस्य कृतौ

श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ

शेषवाक्यार्थचन्द्रिकायां

चतुर्थाध्यायस्य तृतीयः पादः संपूर्णः ॥ ४ । ३ ॥

**प० — अप्रतीकालम्बनान्नयति ॥ मनः प्रभृतीनामिति ।** 'मनो ब्रह्मेत्युपासीते'त्यादिश्रुत्युक्तानां मनःप्रभृतीनामित्यर्थः । त इत्यनुवादः प्रतीकालम्बना इति व्याख्या । पुरत इत्यस्यार्थः **प्राक् प्रलयकालादिति ।** विष्णुं प्राप्स्यन्तीत्यत्र कदेत्याकाङ्क्षायामाह **प्रलय इति ॥ विष्णुं प्राप्यापीति ।** वैकुण्ठे अमुक्तस्थानगतं विष्णुं प्राप्यापीत्यर्थः । अपिपदस्य प्राप्यापीत्यन्वय इति भावः ॥

इति श्रीमन्न्यायसुधापरिमळे राघवेन्द्रयतिकृते

चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ । ३ ॥

या० — **प्राक्** तृतीयपादोदिते । मार्गो देवानां नेति प्रतिषेधेनोत्क्रान्तानामेव मार्गस्तृतीयपादोदितं गम्यं तु सर्वेषामपीत्येनदर्थात्सूचितम् । अत्र तु तन्मुखत एव वक्तीति भावः ॥ **विष्णुमाप्येति** । वैकुण्ठलोकगतं विष्णुमाप्येत्यर्थः ॥ **ब्रह्माणमिति** । पृथिव्याद्यन्तर्गतं महत्तत्त्वगतं च ब्रह्माणं क्रमेण प्राप्य **हरिं** वासुदेवं गता भवन्तीत्यर्थः ॥ ४ । ३ । ७ ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादानां शिष्येण यदुपतिना विरचितायां
सुधाटिप्पण्यां
चतुर्थाध्यायस्य तृतीयः पादः ॥ ४-३ ॥

श्री०— **ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ** ॥ **तं विष्णुमिति** । वैकुण्ठादिस्थितं विष्णुमाप्य स्थिता अपीत्यर्थः ॥ **परान्तकाले** । परं ब्रह्मायुस्तदन्तकाले प्रलयकाल इत्यर्थः । **तस्माद्विष्णोरिति** । तल्लोकादित्यर्थः ॥ **हरिमिति** । लिङ्गभङ्गानन्तरं वासुदेवं गता भवन्तीत्यर्थः । 'आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे । एतां गतिं भागवतो गतो य' इत्यादिवचनैर्वासुदेवप्रवेशस्यैव मुक्तित्वावगमादिति ज्ञातव्यम् ॥ **उक्तं च** भगवत्पादैः 'इत्थं विचिन्त्य परमः स तु वासुदेवनामा बभूव निजमुक्तिपदप्रदाले'ति ॥ ४ । ३ । ६ ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽघृतसुधावाक्यार्थविवरणे
चतुर्थाध्यायस्य तृतीयः पादः समाप्तः ॥ ४ । ३ ॥



॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

**सु०— पादप्रतिपाद्यं तत्सङ्गतिश्च प्रसिद्धैवेत्यतः पूर्वोत्तरपक्षयुक्तीरेवाह** अतिक्रमेति ।

**अनु०—** अतिक्रमोक्तिः कृतिरर्थलाभः परागतिः पारगतिस्तदोकः ।
समस्तकार्यं वशिता च विश्वसंभावना युक्तयस्त्वन्यपक्षे ॥
सामान्यरूपं प्रतिभानमुक्तिराश्चर्यता कृत्रिमताऽस्तदोषः ।
विशेषक्लृप्तिः कृतनिश्चयश्च माहात्म्यमित्येव सुनिर्णयार्थाः ॥

अन्यपक्षे **पूर्वपक्षेषु** । सुनिर्णयः **सिद्धान्तनिर्णयः** अर्थः **प्रयोजनं यासां ताः** सुनिर्णयार्था **युक्तयः** ॥

**शे०—** नन्वेकवाक्यतासिद्धये पादप्रतिपाद्यस्य, तस्य संगतेश्चावश्यवक्तव्यत्वात्तदनुक्तेर्मूले न्यूनत्वमित्यतो 'भोगमाहास्मिन्पाद' इति भाष्या'त्कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोगश्चतुष्टयमि'त्यनुव्याख्यानाद्वा तयोः सिद्धत्वान्न तदनुक्तिर्न्यूनत्वापादिकेत्याशयवानाह **पादेति** । अत इत्यतःपरं तदुभयमनुक्त्वेति शेषः ॥ **पूर्वोत्तरेति** । अन्यथा 'व्याख्यां करोम्यन्वपि चे'ति प्रतिज्ञाव्याघातादिति भावः। सिद्धान्तस्यापि पूर्वपक्षादन्यत्वादन्यशब्देन तत्प्रतीतिं निवारयन्नेव जात्यभिप्रायमेकवचनमित्याशयेनाह **पूर्वपक्षेष्विति** । सिद्धान्तस्यैव सुनिर्णयविषयत्वाद्युक्तीनां तदसंभवेन षष्ठीतत्पुरुषानुपपत्तेः सुनिर्णयस्य साध्यत्वालाभेनार्थशब्देन चतुर्थीसमासस्याप्यनुपपत्तेर्बहुव्रीहिपक्षेऽपि सुनिर्णयशब्दस्य यथार्थनिर्णयमात्रपरत्वे तत्प्रयोजनत्वलाभेऽपि सिद्धान्तनिर्णयप्रयोजनकत्वालाभात् तल्लाभाय सुनिर्णयशब्दार्थकथनपूर्वकं बहुव्रीहिमेवाह **सुनिर्णय इति** । पूर्ववाक्यादनुवर्तत इत्याशयेनाह **युक्तय इति** ।

**प०— प्रसिद्धैवेति** । 'कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोग' इति प्रागुक्तदिशेति भावः ॥ अतिक्रमेत्यादिमूलपदानामयं संबन्धः ॥ संपद्याविहाय स्वेन शब्दात्, अतिक्रमोक्तिः पूर्वपक्षस्य युक्तिः सामान्यरूपं सिद्धान्तस्य ॥ मुक्तः प्रतिज्ञानात्, कृतिः प्रतिभानम् ॥ आत्मा प्रकरणात्, अर्थलाभः उक्तिः ॥ अविभागेन दृष्टत्वात्, परागतिः आश्चर्यता ॥ ब्राह्मेण जैमिनिः, परागतिः अकृत्रिमता ॥ सङ्कल्पादेव च, तदोकः अस्तदोषः ॥ अत एव चानन्याधिपतिः, तदोकः अस्तदोषः ॥ अभावं बादरिः, समस्तकार्यं विशेषक्लृप्तिः ॥ जगद्व्यापारवर्जं, समस्तकार्यं विशेषक्लृप्तिः ॥ स्थितिमाह दर्शयतश्चैवं,

वशिता कृतनिश्चयः ॥ अनावृत्तिश्शब्दात् , विश्वसंभावना माहात्म्यम् ॥ युक्तय इति पूर्वत्र श्रवणात्तदनुवृत्तिं मत्वाह **सुनिर्णयार्था इति** ।

**या०— प्रसिद्धैवेति** । 'भोगमाहास्मिन्पादे' इति वा, 'कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोगश्चतुष्टयमि'ति पूर्वग्रन्थे वेति शेषः ।

**सु०—** ॐ अत एव चानन्याधिपतिः ॐ ॥ **इदं (एतत्)सूत्रं कश्चिद्व्याख्याति । अत एव चावन्ध्यसङ्कल्पत्वा(देवान)दन्यानधिपतिर्विद्वान्भवति । नास्यान्योऽधिपतिर्भवतीत्यर्थ इति । तदिदमसदिति भावेनाह** अनन्येति ।

**अनु०— ॐ अत एव चानन्याधिपतिः ॐ ॥**

अनन्यभृत्यत्वमिहोदितेभ्यस्त्वन्यस्य भृत्यत्वनिवारणाय ॥

**इह सूत्रे मुक्तस्यानन्याधिपतिरिति यदनन्यभृत्यत्वमुक्तं तदुदितेभ्यो ये यस्य मुक्तस्याधिपतित्वेनोदिताः शास्त्रे तेभ्यः** अन्यस्य **भृत्यो न भवति मुक्त इति प्रतिपादनाय । न तु सर्वथा अधिपतिनिवारणाय । कुतः । अनन्यपदप्रयोगात् । अन्यथाऽगतिरित्यवक्ष्यत् ।**

**इतश्चैवमेवेत्याह** पतिमिति ।

पतिं यदेषामपि विष्णुमाह ह्युतामृतत्वस्य पतित्ववाग्घरेः ॥

**यत् यस्माद्धरेरमृतत्वस्योत यत्पतित्वं तस्य वाक् 'उतामृतत्वस्येशान' इति श्रुतिरिति यावत् । विष्णुमेषां मुक्तानां पतिमाह । ततोऽप्युक्त एव सूत्रार्थो नापर इति ।**

**शे०— ॐ अत एव चानन्याधिपतिः ॐ ॥ अन्यथेति** । तदुक्तेः सर्वथाऽधिपतिनिवारणार्थत्व इत्यर्थः ॥ **अवक्ष्यदिति** । तावतैव विवक्षितप्रमेयसिद्धेरिति भावः ।

**प०— ॐ अत एव चानन्याधिपतिः ॐ** । विद्वान् ब्रह्मज्ञानी यत्तच्छब्दाध्याहारेण योजयति **तदनन्येति** । उदितेभ्य इत्यनुवादः य इत्यादि व्याख्या ॥ **हरेरिति** । यत्पतित्वमित्यन्वयः । कस्य पतित्वमित्यत आह **अमृतत्वस्योतेति** । मुक्तवर्गस्यापीत्यर्थः । मूले अर्थानुवाद इति भावेन तद्वाक्यमाह **उतामृतत्वस्येति** । 'मुक्तवर्गस्यापीशान इत्यर्थः ।

**श्री०— ॐ अत एव चानन्याधिपतिः ॐ॥ अवन्ध्यसंकल्पत्वादिति** । सर्वथा पतिशून्यो भविष्यामीति संकल्पवशादिति भावः ॥ **अनन्यभृत्यत्वमिति** । अन्योऽधिपतिरस्य नास्तीत्युक्तेऽयमन्यभृत्यो न भवतीति लब्धमित्यर्थः । **इत्यवक्ष्यदिति** । लघु चैवं सति सूत्रं स्यादिति भावः ।

**सु० — अनुमानेनाप्येतमर्थं समर्थयते** एतेऽपीति ।

**अनु० —** एतेऽपि चान्याधिपतित्वयुक्ता विष्ण्वन्यचित्त्वेन यथा पुमांसः ।
प्रसिद्धिभाजस्त्विवति चानुमैव ह्यभीष्टसिद्ध्यै भवतीह निश्चयात् ॥

**अपि चेति प्रमाणसमुच्चये ।** एते **मुक्ताः । अन्योऽधिपतिर्येषां तेऽन्याधिपतयः । तेषां भावोऽन्याधिपतित्वं तेन युक्ताः । विष्ण्वन्यत्वेन चित्त्वेन जीवत्वेन च । तुशब्दो विशेषार्थः । परकीयव्याख्यानानुसारेणान्याधिपतित्वयुक्ता इति प्रतिज्ञातम् । स्वमते त्वधिपतियुक्ता इत्येव प्रतिज्ञेति । यदि कश्चिदुदाहृतश्रुत्यर्थे विप्रतिपद्येत तस्यानुमानेनैवाल(मित्युक्त)मित्यनुमैव चेह मुक्तेष्वभीष्टस्याधिपतिसाहित्यस्य सिद्ध्यै भवतीति। कथम् । व्याप्तिपक्षधर्म(त्व)तयोः प्रमितत्वादिति हिशब्दः । मुक्ता अधिपतिरहिता मुक्तत्वादवन्ध्यसङ्कल्पत्वादीश्वरवदित्यनुमानप्रतिरोध इति चेन्न । मूलप्रकृतावनैकान्त्यात् । विपक्षे बाधकाभावाच्च । तदिदमुक्तं** निश्चयादिति ।

**शे० — अपि चेतीति** । निपातसमुदाय इत्यर्थः । तेन चापिशब्दयोरन्यतरेणैव प्रमाणसमुच्चयसिद्धेर्नान्यतरवैयर्थ्यप्रसङ्ग इति भावः । समासप्राबल्यात् षष्ठीतत्पुरुषाश्रयणे मुक्तानामन्यान्प्रत्यधिपतित्वप्राप्तावपि तस्येदानीमप्रसक्तत्वात्प्रस्तुतस्य च मुक्तानामन्याधिपतियुक्तत्वस्यालाभात् । अन्यश्चासावधिपतिश्चान्याधिपतिस्तेन युक्त इति कर्मधारयगर्भतृतीयातत्पुरुषपक्षे प्रकृतोपयोगलाभेऽपि त्वप्रत्ययवैयर्थ्यापातात् । तदुभयपरित्यागेन जघन्यपदार्थबहुव्रीहिमेव समाश्रयते **अन्य इति** । विष्ण्वन्यचित्त्वेनेति भाष्ये हेतुरुक्तः स न युक्तः । विष्ण्वन्यत्वमात्रस्यैव तत्र हेतुत्वसंभवेन व्यर्थविशेष्यत्वात् हेतुद्वये तात्पर्यस्य च चित्त्वस्य विष्णावपि सत्त्वेन व्यभिचरिततया तस्य हेतुत्वासंभवेनायोगात् नास्य हेतुसमर्पकत्वमित्यतो विष्णुव्यावृत्ततया चित्त्वं व्याकुर्वन्नेव हेतुद्वयपरतया तद्व्याचष्टे **विष्ण्वन्यत्वेनेत्यादि** । तुशब्दोक्तं विशेषमेव दर्शयति **परकीयेति** । केचित्त्वबाधितविषयत्वरूपविशेषद्योतनार्थ इत्यर्थः । अन्यथा हिशब्देन व्याप्तिपक्षधर्मतयोः प्रमितत्वकथनेन लिङ्गराहित्यरूपासिद्धेः त्रिविधाव्याप्तेश्चाभावप्रतिपत्त्या तत्प्रयुक्ताभासत्वशङ्कानुदयसमर्थनेऽपि वक्ष्यमाणरीत्या निश्चयादित्यसत्प्रतिपक्षितत्वसूचनेन सत्प्रतिपक्षितत्वप्रयुक्तस्याभासत्वस्य निवारणेऽप्यबाधितत्वस्यासूचनेन बाधितत्वप्रयुक्ताभासत्वस्यानिवारणात् अनुमैवेत्यवधारणस्याश्लिष्टत्वप्रसङ्गादिति भावमुक्त्वा, परकीयेत्युत्तरग्रन्थः अधिपतियुक्ता इत्येतावतैव पूर्तेः प्रतिज्ञायामन्यपदस्य वैयर्थ्यपरिहारार्थ इत्याहुः । श्रुतेरुपन्यस्तत्वात्तदनुमैवेत्यवधारणानुपपत्तिमाशङ्क्य परिहरति **यदीति** । ननु मूलप्रकृतेरपि पक्षतुल्यत्वाद्वा ईश्वरकोटिनिविष्टत्वाभ्युपगमाद्वा न तत्रानैकान्त्यमित्यत आह **विपक्ष इति** ।

**स०—अत एव चानन्याधिपतिः**। तुशब्दद्योतितं विशेषमाह **परकीयेति**। मूलप्रकृताविति मुक्तत्वावन्ध्यसंकल्पत्वयोस्तत्र सत्त्वेऽपि अधिपतिरहितत्वस्य तत्राभावादित्यर्थः। ननु मुक्तत्वावन्ध्यसंकल्पत्वाभ्यामेव अधिपतिराह हीति सिसाधयिषितत्वात् पक्षतुल्यत्वान्न व्यभिचार इत्यत आह **विपक्ष इति**। तथा चाप्रयोजकत्वमिति भावः।

**प०— प्रमाणसमुच्चय इति**। उदाहृतश्रुतेस्समुच्चय इत्यर्थः ॥ **विशेषार्थ इति**। संसारिरूपपुंविशेषग्रहणार्थमित्यर्थः ॥ **परकीयेति**। नास्यान्योधिपतिर्भवतीत्यर्थः इति परेण व्याख्यानादिति भावः ॥ **मूलप्रकृताविति**। देहेन्द्रियादिबन्धहीनत्वरूपमुक्तत्वहेतोः वन्ध्यसंकल्पत्वाभावस्य वा परमते धर्माणां जडगतत्वेन अवन्ध्यसंकल्पत्वस्यैव वा तत्र सत्त्वादिति भावः।

**श्री०— विशेषार्था** इत्युक्तं विशदयति **परकीयेति**। न अस्य अन्यः अधिपतिः भवतीति परेण व्याख्यातत्वादिति भावः। इति विशेषार्थ इति संबन्धः ॥ **उदाहृतश्रुत्यर्थ इति**। न केवलं मनुष्याणामीशानः किंत्वमृतत्वस्यामरवर्गस्य देवताजातस्यापीशान इत्यर्थसंभवेन मुक्तनियामकत्वस्य तदर्थत्वादिति भावः ॥ **अनुमैवेति**। माऽस्तु श्रुतिरिति भावः।

---

**सु०— न केवलं मुक्तानां भगवानधिपतिः किं त्वन्येऽपि यथासंभवं भवन्तीत्याशयवानाह** मुक्तेति।

**अनु०**-- मुक्तस्वकीयावरयन्तृतास्ति मुक्तावपि ब्रह्मपुरःसराणाम् ॥

**ब्रह्मपुरःसराणामपि मुक्तौ मुक्ताश्च ते स्वकीयाः स्वैः सह मुक्तिं गताश्च च तेऽवराश्च मुक्तस्वकीयावरास्तान्नियन्तृताऽस्ति। अमुक्तान्प्रति यन्तृता सर्वथा नास्ति। यथाऽऽह सूत्रकारः 'विकारावर्ति चे'ति। मुक्तेष्वपि कल्पान्तरे मुक्तान्स्वकल्पे मुक्तेष्वप्युत्तमान्समांश्च प्रति नास्तीत्यतो मुक्तेत्याद्युक्तम्। अनेन परोदाहृतश्रुतीनां गतिश्चोक्ता भवति ॥**

**कुत एतदित्यत आह** अनेनेति।

अनेन देवेन तथामुना च हीष्टे परार्वाक्तनलोकिनामिति ॥

फलं श्रुतिर्ज्ञानत आह

**अनेन चक्षुरन्तस्थेन देवेन प्रसन्नेन तथाऽमुनाऽऽदित्यान्तर्गतेन च परार्वाक्तनलोकवर्तिनां मुक्तानामीष्टे ईशिता भवतीति श्रुतिर्ज्ञानतो मुक्तनियन्तृत्वं फलमाह** हीति। **अत्रामुना परलोकिनां,** अनेन **अर्वाक्तनलोकिनामिति ज्ञेयम्। अनेन 'अथ य एवं विद्वा'नित्याद्यां 'सोऽमुनैव**

**ये चामुष्मात्पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च, अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्चे'ति श्रुतिमुपादत्ते ।**

**नन्वस्यां श्रुतावुक्तमिदं ज्ञानफलं मुक्तिगतमित्येतत्कुत इत्यत** आह मुक्ताविति ।

मुक्तावेतच्च सर्वाशुभनाशलिङ्गात् ।

**एतच्च सर्वलोकाप्तिलक्षणं फलं मुक्तावेव । 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति सर्वपापक्षयलिङ्गात् । न हि मुक्तेरितरत्रैतत्संभवति । प्रारब्धपापस्य आमोक्षं विद्यमानत्वात् ।**

**शे॰** — यन्तृशब्दस्य तृन्नन्तत्वेऽपि तद्योगे न लोकेति षष्ठ्या निषेधेन तत्समासस्य दूरापास्तत्वात् । तृजन्तत्वे च तद्योगे कर्तरि चेति वा तृजकाभ्यां कर्तरीति वा षष्ठीसमासनिषेधेन षष्ठीसमासासंभवात्कथं समास इत्यतो द्वितीयासमास एवायं श्रितादिषु गम्यादीनामुपसंख्यानात् गम्यादेश्चाकृतिगणत्वादित्याशयवान् अवरान्प्रति यन्तारः अवरयन्तारस्तेषां भावस्तत्तेति विग्रहमभिप्रेत्याह **तान्यन्तृतेति** । इदं च तृन्योगे न लोकेति योगस्य षष्ठीमात्रनिषेधकत्वम् । निषेधस्य नित्यत्वं कर्तरि चेत्यादेः षष्ठीमात्रसमासनिषेधकत्वं कारकषष्ठीसमासनिषेधकत्वेऽपि निषेधस्य नित्यत्वं चाभ्युपगम्यैव न तु वस्तुतः । यथा चैतत्तथा 'सृष्टिबन्धनमोक्षादिकर्तृत्वस्य श्रुतत्वतः' इत्यत्रैव प्रपञ्चितमिति न पुनः प्रपञ्च्यत इति ध्येयम् । मुक्तस्वकीयावरेत्यत्र मुक्तग्रहणप्रयोजनमाह **अमुक्तानिति** । स्वकीयत्वविशेषणकृत्यमाह **मुक्तेष्वपीति** । अवरत्वविशेषणस्य तदाह **स्वकल्प इति** ॥ **परोदाहृतेति** । जगद्व्यापारवर्जमिति सूत्रव्याख्यानावसरे 'आप्नोति स्वाराज्यं' 'सर्वेऽस्मै देवा बलिमावहन्ति' । 'तेषां सर्वेषु लोकेषु कामचारो भवती'ति संकरोदाहृतश्रुतीनामित्यर्थः । मुक्तस्वकीयावरयन्तृत्वनिरूपणेन तद्वाक्यानामप्येतदर्थकत्वसूचनादिति भावः ॥ अनन्वयपरिहाराय इतिशब्दाध्याहारेण योजयति **इति श्रुतिरिति** । चक्षुरन्तस्थप्रसादेन परार्वाक्तनवर्तिनां लोकानामीष्ट इत्यादित्यान्तःस्थभगवत्प्रसादेनापि परार्वाक्तनलोकवर्तिनां मुक्तानामीष्ट इति चक्षुरन्तरस्थप्रसादेन परलोकवर्तिनां मुक्तानामीष्ट इति आदित्यान्तःस्थभगवत्प्रसादेनार्वाक्तनलोकवर्तिनां मुक्तानामीष्ट इति चान्यथाप्रतीतिनिरासाय यथावत्संबन्धमाह **अत्रेति** । 'अनेन देवेने'त्यादि भाष्यं न स्वरूपेण श्रुतेरनुवादरूपं किं त्वर्थत इत्यभिप्रेत्य तत्संगृहीतां श्रुतिं दर्शयति **अनेनेति** । मुक्तनियन्तृताया ज्ञानफलत्वस्य श्रुत्यारूढतालाभाय **अथ य एवं विद्वानित्याद्यामित्युक्तम्** । प्रारब्धपापस्येत्यत्र पापशब्दोऽशुभमात्रपरः । अत एव पाप्मशब्देनाशुभस्य प्रकृत्यादेर्बन्धस्य विवक्षितत्वादिति वक्ष्यतीति ध्येयम् ॥ **आमोक्षमिति** । लिङ्गदेहभङ्गलक्षणमोक्ष-

पर्यन्तमित्यर्थः । 'प्रारब्धकर्मशेषस्तु विरजातरणावधिरि'ति वचनात्ततोऽपि प्रारब्धकर्मशेषस्याल्पत्वात् । अल्पत्वे च निःस्वप्रयोगदर्शनात् । 'वैश्वानरे द्युनद्यां वा देहे वा सूर्य एव वा । विधूय सर्वपापानि यान्ति किन्त्वप्रकेशवमि'ति ततः पूर्वमेव सर्वपापविधूननवचनमप्युपपन्नम् । अत एवात्र शेषस्त्विति शेषपदं प्रयुक्तमित्यवधेयम् ।

स०— **अनेन परोदाहृतेति** । अथ य इह आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यकामास्तेषां सर्वेषु लोकेषु कामचारो भवति इति परोदाहृतेत्यर्थः ।

प०— अपिपदान्वयेनानुवादो **ब्रह्मपुरस्सराणामपि मुक्ताविति** । मुक्तेत्युक्तिकृत्यमाह**अमुक्तानिति** ॥ (तथा)**यथाऽऽहेति** । अत्रैव पादे ॥ **विकारेति** । विकारं संसारं आवर्तयतीति विकारावर्ति तद्विषयं व्यापरणं मुक्तानां नास्ति । चशब्दो नञनुकर्षणार्थः । इमं मानवमावर्तं नावर्तन्त इति तथाहि दर्शयतीति सूत्रशेषस्यार्थः ॥ **इत्याद्युक्तमिति** । मुक्तस्वकीयावरनियन्तृतेत्युक्तमित्यर्थः ॥ **अनेनेति** । मुक्तस्वावरनियंतृताकथनेन 'आप्नोति स्वाराज्य' 'सर्वेऽस्मै देवा बलिमावहंति' 'तेषां सर्वेषु लोकेषु कामचारो भवती'त्यादिश्रुतीनां जगद्व्यापारेतिप्रधानसूत्रे परभाष्योदाहृतानां मुक्तस्वकीयावरनियामकविषयत्वेन गतिश्चोक्ता भवतीत्यर्थः । **कुत एतदिति** । मुक्तस्वकीयावरनियंतृत्वं कुतो मानाज्ज्ञेयमित्यर्थः । मूलपदानामर्थयोजनां चाह **अनेन चक्षुरन्तःस्थेनेत्यादिना** । मूले अनेनामुनेत्युक्तिक्रमानुरोधेन परार्वाक्तनलोकिनामित्यपि यथाक्रममन्वेतीति भ्रमनिरासायाह **अत्रेति** । मूल इत्यर्थः ज्ञानिपरत्वज्ञापनायोक्तं **इत्याद्यामिति** । अस्य इति श्रुतिमिति वक्ष्यमाणेनान्वयः ॥ **इति श्रुतिमिति** । प्रथमाध्यायस्थछन्दोगश्रुतिमित्यर्थः ।

**या०—तान् यन्तृतेति** । तृजंतस्य कर्तरि चेति षष्ठीसमासप्रतिषेधात्तृन्नंतेनायं द्वितीयासमासः । गम्यादावस्याप्युपसंख्येयत्वादिति भावः ॥ **परोदाहृतश्रुतीनामिति** । जगद्व्यापारवर्जमिति सूत्रव्याख्यानावसरे सङ्करेणोदाहृतानां 'आप्नोति स्वाराज्यं' 'सर्वेऽस्मै देवा बलिमावहंति' 'तेषां सर्वेषु लोकेषु कामचारो भवती'त्याद्यानां श्रुतीनामित्यर्थः । स्वाराज्यादिपदानां मुक्तस्वकीयावरपरतया अनेन सूचितत्वादिति भावः ॥ **आमोक्षमिति** । शिंशुमारप्राप्तिरूपमोक्षपर्यंतमित्यर्थः । न तु लिङ्गशरीरभङ्गरूपमोक्षपर्यंतमिति । 'वैश्वानरे द्युनद्यां वा देहे वा सूर्यमंडले । विधूय सर्वपापानि यान्ति किंस्तुप्रकेशवमि'ति प्रमाणविरोधात् । 'प्रारब्धकर्मशेषस्तु विरजातरणावधिरि'ति वचनं तु पुण्यप्रारब्धावस्थानपरमन्यथोक्तवचनविरोधादिति ज्ञातव्यं ।

श्री०— **विकारावर्ति चेति** । चशब्दान्नञः समाकर्षः । विकारावर्तिव्यापारो मुक्तानां न विद्यत इत्यर्थः । अनेन देवेन तथाऽमुना च देवेन परार्वाक्तनलोकिनामीष्ट इत्यत्र यथायोगं संबन्धो

न यथाक्रममित्याह **अत्रामुनेति** । सोऽमुनैवेत्यत्र तच्छब्दो ज्ञानिपरामर्शक इति दर्शयितुम् **अथ य एवं विद्वानित्याद्यामित्युक्तम्** ।

सु० — **यदिदं सर्वलोकाधिपत्यं मुक्तौ फलमुक्तं तत्सर्वेषामपि मुक्तानामिति प्रतीति-निरासायाह** लोकेति ।

अनु० — लोकाधिपत्यं च विधातुरेव सर्वात्मना

**सर्वात्मना लोकाधिपत्यं च मुक्तस्य विधातुरेव । अन्येषां यथायोग्यमिति** भावः । **स्वकीयेत्युक्तमनुसन्धेयम् । अत्र प्रमाणमाह** इत्याहेति ।

इत्याह तुरश्रुतिश्च ||

**सा चान्यत्र द्रष्टव्या । चशब्दो वक्ष्यमाणयुक्तिसमुच्चयार्थः । श्रुत्यन्तरमप्येवमेव व्याख्येयमित्याह** सर्व इति ।

सर्वे बलिं देवगणा वहन्तीत्येतच्च

नान्यस्य तु युक्तिमेति ||

**'स वेद ब्रह्म, सर्वेऽस्मै देवा बलिमावहन्ती'ति श्रुत्युक्तं मुक्तस्य सर्वदेवपूज्यत्वं चानवधिकं विधातुरेव न सर्वेषामुक्तश्रुतेरेवेत्यर्थः । इतोऽप्येवमित्याह** नेति । **पूजका अपि हि देवा मुक्ता एव । अमुक्तानां मुक्तसंबन्धस्य निवारितत्वात् । तथा च सर्वे देवा मुक्ताः सर्वैर्मुक्तैर्देवैः पूज्यन्त इत्युक्तं स्यात् । एतच्च व्याहतम् । तत एव त(स्यैवोत्त)स्योत्तमत्वस्याधमत्वस्य काप्यदर्शनात् । अत उक्त एव श्रुत्यर्थः ।**

शे० — **सर्वलोकाधिपत्यमिति** । परावाक्तनलोकाधिपत्यमित्यर्थः || **स्वकीयेत्युक्तमिति** । परावाक्तनलोकवर्तिस्वकीयावरमुक्तनियामकत्वमेव न तु मुक्तामुक्तस्वकीयास्वकीयादिसाधारण्येन तल्लोकवर्तिसकलनियामकत्वमित्यर्थः || **सा चान्यत्र द्रष्टव्येति** । अत्र सा चान्यत्र पठितेति वक्तव्ये तथाऽनुक्त्वाऽन्यत्र द्रष्टव्येत्येकवचनात्तादृशश्रुतिरुन्नेतव्येत्येव ग्रन्थकृदभिप्रेतमिति विज्ञायते || **वक्ष्यमाणेति** । 'नान्यस्य हि युक्तिमेती'त्युत्तरत्र वक्ष्यमाणेत्यर्थः || **सर्वेषामिति** । न सर्वेषामनवधिकं किं तु यथायोग्यमेवेत्यर्थः || **उक्तश्रुतेरेति** । तुरश्रुतेरेवेत्यर्थः || **निवारितत्वादिति** । 'न प्रेत्य संज्ञाऽस्ती'त्यादिश्रुतेरिति भावः || **उक्त एवेति** । स्वकीयावरसर्वदेवपूज्यत्वं विधातुरेव; अन्येषां तु यथायोग्यमित्युक्त एवेत्यर्थः ।

स०— **सा चान्यत्र द्रष्टव्या ॥ उक्तश्रुतेरेवेति** । तुरश्रुतेरेवेत्यर्थः । **उक्त एवश्रुत्यर्थ इति** । मुक्तस्य विधातुरेवानवधिकसर्वपूज्यत्वमित्येवं श्रुत्यर्थ इत्यर्थः ।

प०— असंकुचितं लोकाधिपत्यमिति भ्रमनिरासाह **इत्युक्तमनुसन्धेयमिति ॥ सा चान्यत्रेति** । 'मुक्तानां न जगद्यत्नस्तथापि विबुधाः सदा । मुक्तानां तु नियन्तारः तेषां ब्रह्माऽस्य वै हरिरि'ति न्यायविवरणे द्रष्टव्येत्येके । **वक्ष्यमाणेति** । 'न चेह विज्ञानफलं समुक्तमि'त्यादिना वक्ष्यमाणेशधर्मत्वादिरूपयुक्तिसमुच्चयार्थ इत्यर्थः । **उक्तेति** । तुरश्रुतेरेवेत्यर्थः ॥ **निवारितत्वादिति** । 'मुक्तस्वकीयावरयन्तृते'ति मूलकृता विकारावर्ति चेति सूत्रकृता चेति भावः ।

या०— **सा चान्यत्रेति ॥ उक्तश्रुतेरेवेति** । तुरश्रुतेरेवेत्यर्थः ।

श्री०— **वक्ष्यमाणयुक्तीति** । 'नान्यस्य तु युक्तिमेती'ति वक्ष्यमाणेत्यर्थः ॥ **अनवधिकमिति** । अधिकारिवर्ग इति शेषः ॥ **उक्तश्रुतेरेवेति** । तुरश्रुतेरेवेत्यर्थः । अमुक्ताः पूजकाः किं न स्युरित्यत आह **अमुक्तानामिति ॥ निवारितत्वादिति** । 'न प्रेत्य संज्ञाऽस्ती'ति श्रुत्येत्यर्थः । अमुक्तानां मुक्तविषयकज्ञानस्यैवाभावे तत्पूजकत्वस्यैवायोगादिति भावः ।

---

सु०— **स्यादेतत् । तांश्चाप्नोतीत्युक्त आप्ता सर्वाशुभनाशलिङ्गाद्भवतु मुक्तः । तस्य चात्र लोकाप्तिरेवोच्यते । न तु (मुक्त)स्वकीयावरयन्तृतेत्यत आह** लोका इति ।

अनु०— लोका इतीहापि तु लोकिनां वचो

**इह श्रुतौ लोका इति पदं तावल्लोकिनां वचःप्रतिपादकम् । न केवलमाप्ता मुक्तः । लोकपदमपि लोकिविषयमित्यपिशब्दः । तुशब्दो वृत्तिविशेषद्योतकः । यथा मञ्चशब्दो मञ्चस्थेषु पुरुषेषु विद्यते तथा लोकशब्दोऽपि लोकस्थेषु पुरुषेष्विति । अत्र लक्षणाबीजसंबन्धस्तु स्फुट एव । लाक्षणिकप्रयोगप्रयोजनं वाच्यमित्यत आह** लोका इति ।

लोका इति ह्येव रवः प्रजासु ।

प्रयुज्यते सर्वजनैः सदैव

**हिशब्दः प्रसिद्धौ । प्रयोजनानुसंधानेन विनेत्येवशब्दः** । रवः शब्दः । प्रजासु **प्रजाविषये । रूढलक्षणैषा तत्र किं प्रयोजनान्वेषणेनेति भावः ।**

**अथवा किं लक्षणया । यतो वाचक एव लोकशब्दो जनानामिति भावेनाह** लोका **इति सर्वजनैरिति शब्दशक्तिज्ञैः ।**

**प्रकारान्तरेण लोकशब्दस्य पुरुषवाचित्वमाह** तदिति ।

तन्मानिनो लोकपदेन चोक्ताः ।

**लोकाभिमानिनः । अभिमान्यधिकरणन्यायेनेति भावः ।**

**शे०**— तुशब्दद्योतितं वृत्तिविशेषमेव सूचयति **संबन्ध इति** । तत्तल्लोकस्थत्व इत्यर्थः ॥ **स्फुट एवेति** । अतस्तदनिरूपणं न भाष्ये न्यूनत्वापादकमिति भावः ॥ **वाच्यमिति** । अन्यथा स्वायत्तन्यायविरोधादिति भावः । विषयत्वं सप्तम्यर्थ इति भावेनाह **प्रजाविषय इति** । तथाऽपि प्रयोजनानुक्तेः किं प्रयोजनमिति शङ्काया नानेन परिहार इत्यतस्तदनुक्तावपि तदनपेक्षत्वसूचनात्तत्परिहार इत्याह **रूढेति** । अस्वतन्त्रप्रयोगरूपेत्यर्थः । अखण्डशक्त्युपपादकतया भाष्यकारीयप्रयोगबाहुल्य-कथनस्योपयोगसंभवे तत्परित्यागेन प्रयोजनानपेक्षत्वसूचकतया रूढलक्षणात्वोपपादकत्वेन तदुपयोगवर्णनं क्लिष्टमित्यपरितोषात्पक्षान्तरमाह **अथवेति** । अङ्गीकारवादत्वाल्लक्षणापक्षस्य न पूर्वोत्तरविरोध इत्याशये-नाह **किं लक्षणयेति** ॥ **वाचक इति** । 'लोकस्तु भुवने जन' इत्यभिधानादिति भावः । अखण्ड-शक्त्युपपादनानुरूपतया सर्वजनैरित्येतद्व्याचष्टे **शब्दशक्तिज्ञैरिति** । सर्वजनानामव्यवधानेन प्रकृतत्वेऽपि योग्यत्वाल्लोकानामेव तच्छब्देन परामर्श इत्याह **लोकाभिमानिन इति** । नन्वस्तु लोकिनां लोकाभि-मानित्वं लोकशब्दवाच्यत्वं तु कुत इत्यतोऽभिमन्यमानवाचकानां शब्दानामभिमानिनि मुख्यताया 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामि'त्यभिमान्यधिकरणसिद्धत्वाल्लोकशब्दस्यापि तदभिमानिवाच-कत्वमेवेत्याह **अभिमान्यधिकरणन्यायेनेतीति** ।

**स०**— वृत्तिविशेषमेव दर्शयति **यथेति** ।

**प०** — **इत्युक्त आ(प्त इति)प्तेति** । अनेन देवेनेत्यत्र सुधायामुदाहृतछन्दोगश्रुत्युक्तलोकाप्ति-मानित्यर्थः । मूलं योजयति **इह श्रुताविति** ॥ **आप्ता इति (प्ते ति)** । लोकाप्ति(मानित्य)मन्त इत्यर्थः ॥ **वृत्तिविशेषेति** । लक्षणावृत्तेर्मुख्यवृत्तेर्वा द्योतकः । **स्फुट एवेति** । आधाराधेयभावरूपो व्यक्त इत्यर्थः ।

**या०** — **यतो वाचक एवेति** । 'लोकस्तु भुवने जन' इत्यभिधानादिति भावः ।

**श्री०** — **संबन्धस्त्विति** । तत्रस्थरूप इत्यर्थः । **शब्दशक्तिज्ञैरिति** । **'लोकस्तु भुवने जने'** इत्यभिधानादिति भावः । **तद्विवक्षेति** । जनविवक्षेत्यर्थः ।

सु०— अस्तु लोकशब्दस्य जनेषु वृत्तिस्तथाऽप्यस्यां श्रुतौ तद्विवक्षा कुतो ज्ञायते। न तावताऽपीष्टसिद्धिः। मुक्तविषयतायां प्रमाणाभावात्। आप्तिरेव चेहोच्यते न तु तन्नियमनमित्यत आह तद्वा इति।

अनु०— तद्वास्तु मुक्ता इह लोकशब्दा अन्योन्यनाथा इति पैङ्गिनां श्रुतिः॥

तुशब्दोऽवधारणे। इह ये चामुष्मादित्यस्यां श्रुतौ तद्वाः परावरलोकगताः मुक्ता एव लोक इति शब्दो एषां ते लोकशब्दाः। ते चान्योन्यनाथाः उत्तमा अधमानां स्वीयानां नियामका इत्येवमेतच्छ्रुतिव्याख्यानरूपा पैङ्गिश्रुतिरस्ति। यद्यपि मुक्तस्य विकारावर्तिव्यापारनिषेधादेवैतत्सिद्धम्। तथाऽपि दार्ढ्याय श्रुत्युदाहरणम्। एतेन लक्षणापक्षे मुख्ये बाधकं चोक्तं भवति। अभिमानिपक्षे तु भूतपूर्वगत्या मुक्तेषु लोकशब्दो व्याख्येयः॥

शे०— अङ्गीकृत्यापि तद्विवक्षां दूषयति तावतेति। अङ्गीकृत्यापि मुक्तविषयतादूषणमाह आप्तिरेवेति। अन्योन्यनाथा इत्यस्य परस्परनियम्यनियामकभाववन्त इत्यन्यथाप्रतीतिनिरासाय तात्पर्यमाह उत्तमा इति॥ एतत्सिद्धमिति। मुक्तानामवरनियामकत्वमित्येतत्सिद्धमित्यर्थः। एतेनेति। श्रुत्युदाहरणेनेत्यर्थः। बाधकमिति। लोकशब्दस्य तद्वाच्यलोकपरत्वे लोकिपरत्वव्यवस्थापकश्रुतिविरोधलक्षणमित्यर्थः। नन्वभिमान्यधिकरणन्यायेन लोकशब्दस्य लोकिपरत्वपक्षे कथं लोकशब्देन मुक्तप्राप्तिः। मुक्तानां लोकाभिमानाभावादित्यत आह अभिमानिपक्ष इति॥ भूतपूर्वेति। मुक्तिदशायां लोकाभिमानाभावेऽपि पूर्वं तदभिमानित्वेनेत्यर्थः।

स०— एतेनेति। लोकशब्दस्य लोकलक्षणेत्यस्मिन्पक्षे लोकशब्दस्य मुख्यार्थभूतलोकमात्रपरत्वे मुक्तानाममुक्तविषयकव्यापारे निषेधरूपबाधकमित्यर्थः।

प०— तद्विवक्षा लोकस्थजनविवक्षा॥ न तावतापीति। लोकविवक्षयापीत्यर्थः॥ आप्तिरेवेति। लोकप्राप्तिरेवेत्यर्थः। इहेति व्याख्येयानुवादः॥ एतत्सिद्धमिति। लोकस्थमुक्तनियन्तृत्वं सिद्धमित्यर्थः॥ एतेनेति। व्याख्यानरूपश्रुतिकथनेन। लक्षणापक्षे साधकीभूतमिति शेषः। मुख्ये लोकपदस्य लोकरूपेऽर्थे पैङ्गिश्रुतिविरोधरूपबाधकं चोक्तम्। न केवलं तत्स्थत्वरूपसंबन्धाख्यं लक्षणाबीजमिति चार्थः॥ भूतपूर्वगत्येति। मुक्तेः पूर्वं लोकाभिमानित्वं भूतमिति इदानीमपि लोकशब्देन गृह्यन्ते। अष्टाधिकारेऽपि लोके षष्टाधिकार्ययमिति व्यवहारदर्शनादिति भावः।

श्री०— **कुतः** प्रमाणात् ॥ **तावताऽपीष्टसिद्धिरिति** । जनविवक्षाज्ञापकसद्भावमात्रेणापि भवतामिष्टसिद्धिर्न भवतीत्यर्थः । कथमित्यत आह **मुक्तविषयतायामिति** । तथा च लोकशब्दोक्तजनानां मुक्तत्वमित्यर्थः । इदमेव च भवतामिष्टं तन्न सिद्धमिति भावः । अस्तु वा मुक्तविषयकत्वं तथाऽपि भवदिष्टं तन्नियमनमपि अत्र नोच्यत इत्याह **आप्नोरेवेति** ॥ **पैङ्गिश्रुतिरस्तीति** । सा चात्र न पठिताऽन्यत्र द्रष्टव्येति भावः ॥ **यद्यपीति** । मुक्तो लोकान् जनानाप्नोतीति नियमनं तावदुक्तं मुक्तानाममुक्तनियमनस्य निषिद्धत्वात्तदन्यथाऽनुपपत्त्या मुक्तनियमनमेवात्रोच्यत इत्येवमस्य वाक्यस्य मुक्तविषयकत्वं मुक्तस्य विकारावर्तिव्यापारनिषेधादेव सिद्धमिति नैतच्छ्रुतिव्याख्यानरूपपैङ्गिश्रुत्युदाहरणं कर्तव्यमित्यर्थः ॥ **लक्षणापक्ष इति** । लोकशब्दस्य तत्रस्थेषु पुरुषेषु लक्षणेति पक्ष इत्यर्थः ॥ **बाधकं चेति** । जडभूतलोकनियामकत्वरूपामुख्यार्थाङ्गीकारो न युक्तः । लोकानां विकारत्वेन मुक्तानां विकारावर्तिव्यापारस्य निषिद्धत्वाद्वा तद्वान्तु मुक्ता इह लोक इत्याद्यर्थे पैङ्गिश्रुतिसद्भावेन मुख्यार्थाङ्गीकारे तद्बाधापत्तेरिति बाधकं चोक्तं भवतीत्यर्थः ।

**सु०— प्रकारान्तरेणास्यां श्रुतौ मुक्तस्य मुक्तनियामकत्वं प्रतिपादयन्नाह** अलोकेति ।

**अनु०** — अलोकशब्देन विमुक्तिभाजो वाच्याः

**लोकदोषातीतत्वाद्विदेहत्वाद्वेति भावः । ततः किं प्रकृत इत्यत आह** पदमिति ।

पदं तादृगपीह युक्तम् ।

**इह पराञ्चो लोका अर्वाञ्चो लोका इत्यत्र तादृगलोक इत्यपि पदं छेत्तुं युक्तम् । लोकालोकशब्दयोः संहिताय(यां)ाः समानरूपत्वादिति भावः ।**

**शे०— संहिताया इति** । लोका इति पदच्छेदपक्षेऽलोका इति पक्षे च, परांचो लोका इति, अर्वाञ्चो लोका इति, संहितायाः समानत्वादित्यर्थः ।

**प०— प्रकारान्तरेणेति** । दर्शयन्नित्यन्वयः ।

**श्री०— संहितायामिति** । संध्युच्चारणकाल इत्यर्थः ।

**सु०— योगवृत्त्याऽपि लोकशब्दस्य मुक्तेषु वृत्तिः संभवतीत्याह** लोकेति ।

**अनु०**— लोकाभिधाश्चापि यतो हि मुक्ताः प्रकाशरूपाः सततं च सर्वे ।

**यतः सर्वेऽपि मुक्ताः सततमपि प्रकाशरूपाः प्रसिद्धास्ततोऽपि लोकाभिधाः । लोकतेः पचाद्यचि कृते रूपमेतत् । दर्शनं प्रकाश इति च नार्थान्तरम् ।**

**शे०** – मूले यत इत्युक्तत्वात्तत इत्यस्य लाभम् अपिशब्दस्याध्याहृतेन संबन्धं, चशब्दस्याप्यर्थत्वं हिशब्दस्य प्रसिद्ध्यर्थत्वं चाभिप्रेत्य यथाश्रुतहेतुहेतुमद्भावप्रतीतिं निवारयन्नेव लोकेत्यादिभाष्यं योजयति **यत इत्यादिना** ॥ **रूपमेतदिति** । लोकृ दर्शने इत्यस्मात्पचाद्यचि लोकशब्दनिष्पत्तिरिति भावः । ननु दर्शनार्थत्वाद्धातोः कथं प्रकाशरूपा इति यौगिकार्थप्रदर्शनमित्यत आह **दर्शनमिति** ।

**प०— लोकतेरिति** । लोकृ दर्शन इत्यतो नन्दिग्रहिपचादिभ्यो ल्युणिन्यच इति अच्प्रत्यये लोक इति रूपमित्यर्थः । ननु दर्शनार्थकशब्दस्य कथं प्रकाशार्थत्वमित्यत आह **दर्शनमिति** ।

**या०—** ननु लोकृदर्शन इति लोकतेर्दर्शनार्थतया व्याख्यातत्वात्कथं प्रकाशरूपा इति यौगिकार्थप्रदर्शनमित्यत आह **दर्शनं प्रकाश इति** ॥ **उक्तमिति** । 'लोकाधिपत्यं च विधातुरेव सर्वात्मनेत्याह तुरश्रुतिश्चे'त्यनेन यदुक्तं तदेव सप्रमाणकं प्रमेयं ब्रह्मैवेत्यारभ्य तुरश्रुतिश्चेत्यन्तेन वाक्येन स्मारयितुमाहेत्यर्थः ।

**श्री०— लोकतेरिति** । लोकृ दर्शन इति धातोरित्यर्थः । नन्दिग्रहिपचादिभ्य इति सूत्रेण कर्त्रर्यच्प्रत्यय इत्यवधेयम् । कर्त्रर्थकाच्प्रत्यये सति निष्पन्नो लोकशब्दः प्रकाशवत्त्वमेवाह न तु प्रकाश रूपत्वम् । तथाऽपि मुक्तानां प्रकाशो न तद्भिन्न इत्याशयेन प्रकाशरूपा इत्युक्तमित्यवधेयम् ।

---

**सु०— यदुक्तं प्राग्लोकाभिमानिनो ये मुक्तास्त इह लोकशब्दार्था इति तदसत् । ते हि उत्तमाः । न च तन्नियमनं मुक्तानां संभवतीत्यतो मोक्तं विस्मार्षीरित्याह** ब्रह्मैवेति ।

अनु०— ब्रह्मैव लोकाधिपतिर्विमुक्तो भवेदिति प्राह तुरश्रुतिश्च ।

**तथा च नानुपपत्तिरिति ।**

**शे०— संभवतीति** । बाधितत्वादिति भावः । **उक्तमिति** । 'लोकाधिपत्यं च विधातुरेव सर्वात्मनेत्याह तुरश्रुति'रित्यादिनोक्तमित्यर्थः । तथा च ब्रह्मैवेत्युत्तरग्रन्थस्य लोकाधिपत्यमित्यादिना प्रागुक्तार्थस्मारकत्वान्न पुनरुक्तिरिति भावः ।

**प०— मोक्तमिति** । मा विस्मार्षीरिति माङोऽन्वयः । 'लोकाधिपत्यं च विधातुरेवे'त्यादिनोक्तमित्यर्थः ।

**श्री०— मुक्तानां** नीचानाम् ॥ **उक्तमिति** । 'लोकाधिपत्यं च विधातुरेवे'त्युक्तमित्यर्थः ।

सु० — एवं स्वमतेन श्रुतिं व्याख्याय यत्परेषां व्याख्यानमादित्यमण्डले परमेश्वर-मुपासीनस्य विदुषः परलोकाधिपत्यं भवति चक्षुष्युपासीनस्यावाक्तनलोकाधिपत्यं भवतीति तन्निराकरोति न चेति ।

अनु० — न चेह विज्ञानफलं समुक्तं लोकाधिपत्यं

इह श्रुतौ । लोकाधिपत्यं विज्ञानफलं समुक्तमिति व्याख्यानं न युक्तम् । कुत इत्यत आह रवीति ।

रविबिम्बगे हरौ ।

उक्तं पृथक्तच्च पुरैव यस्मात्

चशब्देन चक्षुर्गते चेति समुच्चिनोति । यस्मात् कारणात् तत् लोकाधिपत्यं पुरैव पूर्व-वाक्य एव रविबिम्बगे हरौ चक्षुरन्तर्गते च पृथक् विभागेनोक्तम् । आदित्यगतं प्रकृत्य 'स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे (देवे) देवकामानां चे'ति । तथाऽक्षिगतम् । 'स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चे'ति । तस्मान्नेति ।

एतदुक्तं भवति । न समस्तलोकाधिपत्यं विदुषो युज्यते । तस्य भगवद्धर्मत्वेनात्रैवो-क्तत्वादिति ।

शे० — श्रुतिं व्याख्यायेति । अथ य एवं विद्वानित्याद्यां श्रुतिं व्याख्यायेत्यर्थः । विभागेनोक्तमित्येतदेव विशदयति आदित्यगतमित्यादि । 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत' इत्युपक्रमे श्रवणादिति भावः ॥ अक्षिगतमिति । प्रकृत्येति वर्तते । 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इत्युपक्रमे श्रवणादिति भावः । एतावताऽपि कथमुक्तशङ्कापरिहार इत्यत आह एतदुक्तं भवतीति ।

प० — स्वमतेन श्रुतिं व्याख्यायेति । मुक्तब्रह्मणः परावाक्तनलोकमानिनः तेन सह मुक्तान् प्रति नियंतृत्वपरेयं श्रुतिरिति व्याख्यायेत्यर्थः । अमुष्मात् सूर्यमण्डलादित्यर्थः । पराञ्च उपरितनाः ॥ अक्षिगतमिति । प्रकृतेत्यनुषङ्गः ।

श्री० — विदुषो ज्ञानिनः अमुक्तस्य । समुक्तं सम्यगुक्तम् । निराकरोति । लोकाधिपत्यं रविबिम्बचक्षुरन्तर्गतभगवद्धर्मत्वेनोक्तमस्ति तज्ज्ञानिनः फलत्वेन वक्तुं न युक्तमित्येवं निराकरोतीत्यर्थः । प्रकृत्य अधिकृत्य । अक्षिगतं प्रकृत्येति वर्तते ।

**सु०— भगवद्धर्मोऽपि विदुषो भवतीत्यङ्गीकारे को दोष इति चेत् । तर्किं भगवान् स्वीयसर्वलोकाधिपत्यं** परित्यज्य **विदुषे ददातीति । उत विद्वांसमवान्तरेश्वरं करोतीति । अथ विद्वांस्तादात्म्यं प्राप्नोतीति** ।

**नाद्यः । भगवदैश्वर्यस्य समस्तश्रुत्यादौ नित्यत्वावगमात् । किं चैकस्मै विदुषे दत्त- स्वाधिपत्यो भगवानन्यस्मै (विदुषे) किं दद्यात् । सर्वपापक्षयलिङ्गविरोधाच्च ॥ अत एव न द्वितीयः । हिरण्यगर्भे तद्युज्यत इति चेन्न । पाप्म(प)शब्देन प्रकृत्यादेर्बन्धस्य विवक्षितत्वात् । अत एवोक्तं** सर्वाशुभेति । **'तस्योदिति नामे'ति हि परमेश्वरस्योच्छब्दं नामत्वेनोक्त्वा तस्य निर्वचनं क्रियते** 'स एष सर्वेभ्यः पाप्मभ्य उदित' **इति । तत्रोदितत्वमेवोच्छब्दार्थः । कस्मादित्यपेक्षायां योग्यं किमपि ग्राह्यम् । न च** तत्पापमेवेति **नियामकमस्ति । अतः सर्वमप्यशुभं तत्र विवक्षितम् । तदेव च विदुषः फलमुच्यते ॥ तृतीयं निराकरोति** भेद इति ।

**अनु०—** भेदोऽमुनेत्यादि च सम्यगुक्तः ॥

**विदुषः । परमेश्वरादिति शेषः । आदिपदेनानेनेत्यस्य ग्रहणम् । क्रियाविशेषणं चैतत् । भेदश्चेति संबन्धः** । सम्यगिति । **स्पष्टम् । न हि तदात्मा तत्प्रसादात्तद्धर्मा भवति ॥**

---

**शे०— सर्वेति** । 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'ति वाक्योक्तं यत्सर्वपापक्षय-रूपमुक्तलिङ्गं तद्विरोधाच्चेत्यर्थः । प्रारब्धपापवति ज्ञानिनि सर्वपापक्षयासंभवादिति भावः ॥ **अत एवेति** । सर्वपापक्षयलिङ्गविरोधादेवेत्यर्थः ॥ **तदिति** । सर्वपाक्षयरूपलिङ्गमित्यर्थः । हिरण्य-गर्भस्यावान्तरेश्वरत्वादिति भावः ॥ **पापेति** । हिरण्यगर्भे प्रकृत्यादिबन्धस्य सत्त्वेन सर्वाशुभनाश-रूपसर्वपापक्षयाभावादित्यर्थः । ननु सर्वेभ्यः पाप्मभ्य उदित इत्यत्र सर्वाशुभनाशोक्तौ किं विनिगमक-मित्यत आह **तस्योदिति नामेत्यादिना ॥ उदितत्वमेवेति** । उद्गतत्वमेवेत्यर्थः ॥ **सर्वमपीति** । परमेश्वरे तत्संकोचे कारणाभावादिति भावः ॥ **तदेव चेति** । 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'ति श्रुतेरिति भावः । ननु करणत्वाद्वाक्यस्यामुनेत्यादिनेति तृतीयया भवितव्यम् । इत्यादीति तु कथमित्यत आह **क्रियाविशेषणं चैतदिति** । साधनं परित्यज्य धात्वर्थमात्रविशेषणं क्रिया-विशेषणमित्यर्थः । ततश्च क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं च वाच्यमिति क्लीबत्वस्यैकवचनान्तत्वस्याव्ययत्वस्य च विधानात् अव्ययादाप्सुप इति सुब्लोपे इत्यादीत्युपपन्नमिति भावः । इत्यादि चेत्यत्र चशब्दस्य वैयर्थ्येन यथाश्रुतसंबन्धानुपपत्तेर्भिन्नक्रमतया तं योजयति **भेदश्चेति संबन्ध इति** । सम्यग्भेदोक्तिमेव स्पष्टयति **न हीति** ।

स०— **सर्वपापक्षयेति** । न हि मुक्तेरितरत्रैतत्संभवति । प्रारब्धपापस्याऽऽमोक्षं विद्यमानत्वादिति भावः । **अत एवेति** । सर्वपापक्षयलिङ्गविरोधादेवेत्यर्थः । **तद्युज्यत इति** । सर्वपापक्षयलिङ्गं युज्यत इत्यर्थः । तस्यावान्तरेश्वरत्वादिति भावः । **पापेति** । हिरण्यगर्भे प्रकृत्यादिबन्धस्य सत्त्वेन सर्वाशुभनाशरूपसर्वपापक्षयाभावादित्यर्थः । ननु सर्वेभ्यः पाप्मभ्य इत्यत्र सर्वाशुभनाशो नोच्यत इत्यत आह **तस्योदितिनामेति** ।

प०— **नित्यत्वेति** । 'एष नित्यो महिमा ब्राह्मणस्ये'त्येवमवगमादित्यर्थः । श्रुतीनामनादिनित्यतया सर्वदा भगवन्महिमप्रतिपादनात् तत्प्रतिपादितैश्वर्यं नित्यमिति भावेन समस्तश्रुत्यादावित्युक्तम् । सर्वत्र नित्यपदाश्रवणादाह **किञ्चेति** ॥ **सर्वपापक्षयेति** । 'उदेति ह वै सर्वेभ्यः पाप्मभ्य' इत्युक्तस्य मुक्तलिङ्गतयोपासके अयोगादिति भावः ॥ **अत एवेति** । लिङ्गविरोधादेवेत्यर्थः ॥ **सर्वाशुभेति** । एतच्च सर्वाशुभनाशलिङ्गादिति पूर्ववाक्ये पापनाशलिङ्गादित्यनुक्त्वा सर्वाशुभेत्युक्त्या प्रकृत्यादिबन्धनाशस्य विवक्षितत्वं ज्ञायत इति भावः । पाप्मभ्य इत्येव श्रवणात् कथं प्रकृत्यादिबन्धविमुक्तत्वं व्याख्यायत इत्यतः प्रकरणबलादित्याह **तस्योदितिनामेतीति** ॥ **क्रियाविशेषणमिति** । अमुनेत्यादि यथा भवति तथा भेदश्चेत्यर्थः । चशब्दान्वयेनानुवादो **भेदश्चेति** ।

या०— **सर्वपापक्षयलिङ्गेति** । 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे'ति वाक्योक्तं सर्वपापक्षयरूपं यन्मुक्तलिङ्गं तद्विरोधाच्चेत्यर्थः । प्रारब्धपापवति विदुषि सर्वपापक्षयासंभवादिति भावः । उदेति ह इत्यस्मिन्वाक्ये सर्वपापपदं प्रकृतिबन्धादिरूपसर्वाशुभपरमित्यत्र नियामकं वक्तुमाह **तस्योदितनामेत्यादिना** ॥ **उदितत्वमेवेति** । उद्गतत्वमेवेत्यर्थः ॥ **सर्वमपीति** । परमेश्वरे संकोचे कारणाभावादिति भावः ॥ **तदेव चेति** । 'तं यथा यथोपासत इति श्रुतेर्वक्तुमुचित' इति शेषः ।

श्री०— **नित्यत्वावगमादिति** । तथा च स्वीयं परित्यज्य ददातीति वक्तुं न शक्यत इत्यर्थः ॥ **अत एवेति** । सर्वपापक्षयलिङ्गविरोधादेवेत्यर्थः ॥ **न द्वितीय इति** । अवान्तरेश्वरस्य सर्वलोकाधिपत्यं न युज्यते तस्मिन्सर्वपापक्षयरूपलिङ्गस्य बाधितत्वादिति भावः । **हिरण्यगर्भे** अवान्तरेश्वरभूते । 'उदेति ह वै सर्वेभ्यः पाप्मभ्य' इति श्रुतौ पाप्मशब्देन प्रकृतिबन्धादिसर्वाशुभमेव विवक्षितं न संकोच इत्यभिप्रेत्योपपादयति **तस्योदितिनामेत्यादिना** । सर्वमप्यशुभं प्रकृतिबन्धादिरूपम् ॥ **फलमुच्यत इति** । इदं चामुक्ते ज्ञानिनि हिरण्यगर्भे न संभवतीत्याशयः ॥ **क्रियेति** । इत्यादि यथा स्यात्तथोक्त इति उक्तरूपक्रियाविशेषणमित्यर्थः । अन्यथा इत्यादिनेति वक्तव्यत्वादिति भावः ।

**सु०— भवेदेतद्यद्यमुनाऽनेनेत्येतदमुना देवेन प्रसन्नेन निमित्तेनेति** व्याख्यायेत। **न चैवम्। किं** नाम। **अमुना रूपेणामुष्य तादात्म्यं प्राप्य, तथाऽनेन रूपेणास्य तादात्म्यं प्राप्येति। न चैवं सति भेदोक्तिरस्तीत्यत आह** त्वप्रत्ययमिति।

**अनु०**— त्वप्रत्ययं चाप्यतिहाय नैव रूपेण तेनेति भवेदिहार्थः ॥

**चशब्दस्तत्समान(ार्थे)प्रत्ययान्तरसमुच्चयार्थः। अपिशब्दो रूपेणेति पदस्य।** तेन **इत्यमुना अनेनेत्युभयोर्ग्रहणम्।** अतिहाय **प्रवृत्तायामिह श्रुतौ। भवे(देवं प)दयं परस्याभिलाषः श्रुतिस्तु न तथा वक्ति। यदि खल्वदस्त्वेनादस्तयेदंत्वेनेदंतयेति भाववाची प्रत्ययः स्यात्। यदि वा(चा )मुना रूपेणात्मना, अनेन रूपेणात्मनेति पदं स्यात्। तदा प्रतीमोऽयमर्थः श्रुत्यभिप्रेत इति। न चैतदस्तीति।**

**शे०— प्रत्ययान्तरेति।** भाववाचकतल्प्रत्ययरूपप्रत्ययान्तरेत्यर्थः।

**प०— शङ्कते भवेदिति।** । अमुना रूपेणेत्यनुवादः। अमुष्य तादात्म्यमाप्येत्यर्थोक्तिः। एवमग्रेपि ॥ **प्रत्ययान्तरेति।** तल्प्रत्ययेत्यर्थः ॥ **रूपेणेति पदस्येति।** समुच्चयार्थ इत्यनुकर्षः। रूपेणेति पदमपि अतिहायेत्यर्थकतया अपिशब्दः समुच्चयार्थ इत्यर्थः। स्यबन्वयघटनाय क्रियान्तरमाह **प्रवृत्तायामिति।** इहेत्यनुवादः श्रुताविति व्याख्या। अस्फुटत्वान्निकृष्य स्वयमर्थं व्यनक्ति **भवेदेवमिति।**

**श्री०— प्रत्ययान्तरेति।** तल्प्रत्ययेत्यर्थः। 'तस्य भावस्त्वतलावि'ति सूत्रादित्यर्थः। तथा च त्वप्रत्ययं चशब्दात्तत्समानार्थकं तल्प्रत्ययमपिशब्दाद्रूपेणेतिपदं चातिहाय प्रवृत्तायामिह श्रुतौ। **तेन** अमुना। अनेन रूपेणेत्यर्थो न भवेदिति मूलार्थो द्रष्टव्यः। **प्रत्ययः** त्वतलोरन्यतरः प्रत्ययः। अपिशब्दसमुच्चेयमर्थं दर्शयति **यदि चेति।** रूपेणेत्यस्यार्थः ॥ **आत्मनेति।** अमुष्य-तादात्म्यं प्राप्येत्यर्थः। अनेन रूपेणेत्यस्यार्थः **आत्मनेति।** अस्य तादात्म्यं प्राप्येत्यर्थः।

**सु०— ननु भावप्रधाना निर्देशा बहुलमुपलभ्यन्ते। ततो विनाऽपि प्रत्ययेन सोऽर्थो भविष्यति। सोपस्कराणि च वाक्यानि भवन्ति। ततो रूपेणेत्यादिपदाध्याहारो वा करिष्यते। को दोष इति चेन्न। निश्चिते हि वाक्यार्थे तदुपपद्यते। न च तन्निश्चायकमत्रास्तीत्याशयवान्दोषान्तरमाह** भवतीति।

**अनु०**— भवत्यसावित्यणुशब्दमत्र विहाय वाक्यानि बहूनि दोषः।

**यद्यस्यां श्रुतौ तादात्म्यप्राप्त्या(प्तौ) तदीयं सर्वलोकाधिपत्यमस्य भवतीत्यर्थो विवक्षितः स्यात् । तर्ह्यत्रैतदर्थप्रतिपादनेऽयं विद्वानसौ परमात्मा भवतीत्येतावदेव वक्तव्यम् । न तु सोऽमुनैवेत्यादिकम् । तादात्म्यप्राप्तौ तद्धर्म(र्म्य)स्य स्वतः सिद्धत्वात् । अयमसौ भवतीत्यल्पं शब्दं विहाय बहूनि वाक्यानि प्रयुञ्जानायाः श्रुतेरकुशलत्वदोषः स्यात् । न हि कश्चिदल्पीयसा प्रयत्नेन सिद्ध्यत्यर्थे महान्तं प्रयत्नमातिष्ठमा(नः सद्भि)र्नो महद्भिराद्रियते । किं चात्र परमेश्वरः सगुणो वा विवक्षितो निर्गुणो वा । आद्ये न विदुषस्तत्तादात्म्यमस्ति । परेणा(ण्य)नभ्युपगतत्वात्(मात्) । न द्वितीयः । निर्गुणस्याऽऽदित्यादिपरिच्छेदानुपपत्तेः । ऐश्वर्यासंभवाच्च । न च तद्भूयंगतस्य सर्वलोकाधिपत्यं भवतीति ।**

**शे०— बहुलमिति** । इहैव शास्त्रे 'मुक्तोपसृप्यव्यपदेशादि'त्यादयः । व्याकरणे च 'द्व्येकयोर्द्विवचनैकवचन इत्यादय इत्यर्थः ॥ **तत इति** । वाक्यस्य सोपस्करत्वादित्यर्थः । भाष्यकारीयं शाब्ददोषव्युत्पादनं शाब्ददोषोऽपि लगतीत्यभिप्रेत्यैव न त्वर्थदोषोऽत्र न लगतीत्यभिप्रेत्येत्याशयवान्स्वयमर्थदोषमाह **किंचेति ॥ अनभ्युपगमादिति** । सगुणस्य कल्पितत्वादिति भावः ॥ **निर्गुणस्येति** । आदित्यादिपरिच्छिन्नत्वे सगुणत्वापातादित्यर्थः ॥ **ऐश्वर्येति** । निर्गुणस्याप्यैश्वर्याभ्युपगमे निर्गुणत्वव्याघातादित्यर्थः ॥ **न चेति** । नापीत्यर्थः ॥ **तद्भूयं गतस्येति** । यद्यपि वदः सुपीत्यतः सुपीत्यनुवृत्तौ भुवो भाव इत्यनेन तस्य भावमिति तच्छब्दे उपपदे भवतेर्धातोर्भवनरूपेऽर्थे क्यप्प्रत्यये कित्त्वाद्गुणाभावे च सति निष्पन्नत्वाद् भूयशब्दस्य तद्भवनमात्रार्थतया न तत्त्वार्थत्वं । तथाऽपि 'स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपी'त्यभिधाने ब्रह्मभूयब्रह्मत्वब्रह्मसायुज्यशब्दानां पर्यायतामभिधाय 'देवभूयादिकं तद्वदि'त्युत्तरवाक्ये देवभूयदेवत्वसायुज्यशब्दानामपि पर्यायतामुक्त्वा आदिपदेन मूर्खभूयमूर्खत्वमूर्खसायुज्यशब्दानामिव तद्भूयतत्त्वतत्सायुज्यशब्दानामपि पर्यायत्वस्याभिधानिकत्वाद्व्याकरणस्य च साधुत्वाद् व्याख्यानमात्रपरत्वाद्युक्तमेव तद्भूयशब्दस्य तत्त्वार्थत्वम् । तथाच तद्भूयं तत्त्वं ब्रह्मत्वमिति यावत् तत्प्राप्तस्येत्यर्थः पर्यवस्यति ॥ एतदेवाभिप्रेत्योक्तं टीकायां ब्रह्मभूयाय परब्रह्मत्वायेतीति ध्येयम् ।

**स०— निर्गुणस्येति** । आदित्यादिपरिच्छिन्नत्वे सगुणत्वापातादित्यर्थः । **ऐश्वर्येति** । निर्गुणस्याप्यैश्वर्याभ्युपगमे निर्गुणत्वव्याघातः स्यादित्यर्थः ।

**प०**— ननु परागर्वाक्तनलोकाधिपत्यरूपभगवद्धर्मप्राप्त्यर्थमेतावान् शब्दः प्रयुक्त इत्यत आह **तादात्म्यप्राप्ताविति** । ऐश्वर्यासंभवं व्यनक्ति **न च तद्भूयमिति** । तत्तादात्म्यं प्राप्तस्येत्यर्थः ।

**या०— तद्भूयं** तद्भावं ॥ ४–४–७ ॥

**श्री०—** नन्वयं विद्वानसौ परमात्मा भवतीत्युक्तौ तादात्म्यमेव प्राप्तं न तु सर्वलोकाधिपत्यरूपस्तद्धर्मोऽतस्तत्प्रतिपादनाय सोऽमुनैवेत्यादिकं सार्थकमित्यत आह **तादात्म्यप्राप्ताविति** । **ताद्धर्म्यस्य** तद्धर्मवत्त्वस्येत्यर्थः ॥ **न विदुष इति** । विशिष्टयोरैक्यायोगादिति भावः ॥ **परेणापीति** । तथात्वे तत्त्वमस्यादिवाक्ये चिन्मात्रलक्षणा न क्रियेतेति भावः ॥ **आदित्यादिपरिच्छेदेति** । निर्गुणस्यापरिच्छिन्नत्वेनादित्यचक्षूरूपपरिच्छिन्नस्थानस्थितत्वमत्रोच्यमानमनुपपन्नमित्यर्थः ॥ **ऐश्वर्येति** । निर्गुणस्य लोकाधिपत्यादिरूपैश्वर्यस्य पूर्ववाक्योक्तस्यासंभवादित्यर्थः । **तद्भूयं** निर्गुणब्रह्मभावम् ।

**सु०— अपव्याख्याननिराकरणमुपसंहरन्पादार्थं सङ्क्षेपेणाह** अत इति ।

**अनु०—** अतो जगद्व्यापृतिमन्त एव ब्रह्मादयः पूर्णगुणाः क्रमेण ।
अमन्दमानन्दमजस्रमेव भुञ्जन्त आत्मीयमजात्समासते ॥ ७ ॥

**जगच्छब्देन स्वी(स्वकी)यावरमुक्ता गृह्यन्ते । जगद्व्यापारवर्जमित्येतन्मुक्तेतरजगद्विषयम् । अतो न तद्विरोध इत्येतदप्यनेन सूचयति । अन्यथा स्वावरमुक्तनियामका एवेत्यवक्ष्यत् । तथा चानन्याधिपतिपदमुक्तार्थमेवेति भावः । आत्मीयं न तु पारमेश्वरम् । अजात् परमेश्वरात्तमविहायेत्यर्थः । तत्प्रसादादिति वा ॥ ४–४–७ ॥**

**श्ये०—** मुक्तेतरजगद्विषयमित्येतदुपलक्षणम् । मुक्तेष्वपि स्वसमानोत्तममुक्तविषयमित्यपि द्रष्टव्यम् ॥ **अन्यथेति** । जगद्व्यापृतिमन्त इति विशेषणस्य जगद्व्यापारवर्जमित्येतन्मुक्तेतरजगद्विषयमित्येतदर्थसूचकत्वाभाव इत्यर्थः ॥ **अवक्ष्यदिति** । आवश्यकत्वात्प्रतिपत्तिलाघवाच्चेत्यर्थः ॥ **उक्तार्थमेवेति** । 'अनन्यभृत्यत्वमिहोदितेभ्य' इत्यादिनोक्तार्थमेवेत्यर्थः । अजादिति ल्यब्लोपनिमित्ता पञ्चमीत्याशयेनाह **तमविहायेति** । सहभोगेऽपि न मुक्तस्य स्वातन्त्र्यमित्येतदर्थोपपादकत्वेनापि व्याचष्टे **तत्प्रसादादिति वेति** ॥ ४ । ४ । ७ ॥

**स०— तमविहायेति** । अनेन ल्यब्लोपनिमित्ता पञ्चमीत्युक्तं भवति ।

**प०— उक्तार्थमेवेति** । स्वावराधिपतिरहिताः किन्तूत्तमाधिपतिमन्त इत्युक्तार्थं न तु सर्वात्मनाऽधिपतिशून्या इति परोक्तार्थमित्यर्थः । अजशब्दस्तत्प्रसादलक्षक इति भावेनाह **तत्प्रसादादिति वेति** ।

**श्री०— अपव्याख्यानेति** । अनन्याधिपतिरित्यस्य नास्यान्योऽधिपतिर्भवतीति परकृतापव्याख्यानेत्यर्थः । ननु पूर्वं मुक्तस्वकीयावरयन्तृताऽस्तीत्युक्तम् । अत्र जगद्व्यापृतिमन्त इत्युच्यते । तत्र जगच्छब्देन स्वावरामुक्तनियामकत्वस्यापि प्राप्त्या 'विकारावर्ति चे'त्युक्तविरोधः स्यादित्यत आह **जगच्छब्देनेति** । ननु स्वकीयावरमुक्तविषयकनियमनादिरूपव्यापृत्यङ्गीकारेऽपि जगद्व्यापारवर्जमिति सूत्रविरोधः स्यात् । तत्र मुक्तामुक्तजगद्व्यापारमात्रप्रतिषेधादित्यत आह **जगद्व्यापारवर्जमित्येतदिति** ॥ **अनेनेति** । जगद्व्यापृतिमन्त इति वचनेनेत्यर्थः । कथमनेन तत्सूचनमित्यत आह **अन्यथेति** । सूत्रविरोधपरिहारसूचनस्यानभिप्रेतत्व इत्यर्थः । स्वावरमुक्तनियामका एवेत्यवक्ष्यदिति । न तु जगद्व्यापृतिमन्त इतीत्यर्थः ॥ अयं भावः ॥ पूर्वं मुक्तस्वकीयावरनियन्तृताऽस्तीत्युक्तत्वात्संक्षेपतः पदार्थकथनसमयेऽपि तदनुसारेण स्वावरमुक्तनियामका एवेति स्पष्टमेव वक्तव्यं न तु जगद्व्यापृतिमन्त इति । तेन ज्ञायते जगच्छब्द उक्तरीत्या स्वकीयावरमुक्तपरः । जगद्व्यापारवर्जमिति प्रतिषेधस्तु मुक्तेतरजगद्विषय इति । तथा चोपक्रमे मुक्तस्वावरनियामकत्वमुक्तमुपसंहारे च जगद्व्यापृतिमन्त इति । सूत्रे च जगद्व्यापृतिः प्रतिषिद्धा । एतत्त्रयान्यथाऽनुपपत्त्या ज्ञायते उपसंहारे जगच्छब्द उपक्रमानुसारेण स्वावरमुक्तपरः सौत्रो जगच्छब्दोऽमुक्तपर इति प्रतिपत्तव्यमिति । केचित्तु अन्यथेत्यस्य जगद्व्यापृतिमन्त इत्यत्र जगच्छब्देन स्वकीयावरमुक्तानामग्रहण इत्यर्थः ॥ **स्वावरेति** । उपक्रमे मुक्तस्वकीयावरयन्तृताया उक्तत्वादुपसंहारेऽपि तथैव वक्तव्यमित्यर्थ इत्याहुः ॥ **तथा चेति** । मुक्तस्वकीयावरयन्तृत्वे सिद्धे सतीत्यर्थः ॥ **उक्तार्थमेवेति** । 'अनन्यभृत्यत्वमिहोदितेभ्य' इत्युक्तप्रकारेणेत्यर्थः । अजादिति ल्यब्लोपनिमित्ता पञ्चमीत्यभिप्रेत्य व्याचष्टे **तमविहायेति** । तत्समीप इत्यर्थः ॥ ४ । ४ । ७ ॥

## ॥ इति अनन्याधिपतित्वाधिकरणम् ॥



**सु० — एवं परिसमापितग्रन्थो भगवानाचार्यः स्वप्रतिपादितप्रकारं स्वस्यातिविशदानादिसार्वज्ञप्रदं निरुपाधिकपरमप्रेमास्पदगुणगणं पुरुषोत्तमं पौनःपुन्येन प्रणमति** नम इति ।

**अनु०** — नमोनमोऽशेषविशेषपूर्णगुणैकधाम्ने पुरुषोत्तमाय ।
भक्तानुकम्पादतिशुद्धसंविद्दात्रेऽनुपाधिप्रियसद्गुणात्मने ॥

**अशेषविशेषैः पूर्णा ये गुणास्तेषां प्रधानाश्रयाय, भक्ते मय्यनुकम्पादनुक्रोशात् । अत एव ताच्छीलिकस्य तृनः प्रयोगः । सद्गुणानुवादेनानुपाधिप्रियत्वं तादात्म्यं च विधीयत इति न पुनरुक्तिः ॥**

**शे०** — नमोनम इत्येतावतैव पौनःपुन्येन प्रमाणानुष्ठानसिद्धेः किमशेषेत्यादिविशेषणसमूहेनेत्याशङ्क्य नम्यत्वप्रयोजकधर्मकथनार्थत्वान्न तद्वैयर्थ्यमित्याशयेनाद्यविशेषणस्य कृत्यं सूचयन्नेव तत्तात्पर्यमाह **स्वप्रतिपादितेति** । अनेनाशेषपूर्णगुणैकधाम्न इति विशेषणं वंद्यत्वप्रयोजकीभूताधिकृतत्वसमर्पकमित्युक्तं भवति । 'भक्तानुकंपादतिशुद्धसंविद्दात्रेऽनुपाधिप्रियसद्गुणात्मन' इति विशेषणद्वयकृत्यं सूचयन्नेव तत्तात्पर्यमाह **स्वस्येति** । अनेन विशेषणद्वयं वन्द्यत्वप्रयोजकेष्टत्वसमर्पकमित्युक्तं भवति ।

मूले वन्द्यत्वप्रयोजकवैशिष्ट्योपपादनार्थं क्षराक्षरपुरुषोत्तमत्वसङ्कीर्तनमित्यभिप्रेत्य तदनुवदति **पुरुषोत्तममिति** । संकोचे कारणाभावेन गुणशब्दादेव सकलशुभधर्मप्राप्त्या तत्पूर्णत्वस्य गुणैकधाम्न इत्येतावतैव लाभात् । मूलेऽशेषविशेषपूर्णत्वोक्तेर्वैयर्थ्यमाशङ्क्य नेदं भगवतोऽशेषविशेषपूर्णत्वप्रतिपादनपरं येनानर्थक्यं स्यात् । किं नाम गुणानां प्रत्येकमशेषपूर्णत्वप्रतिपादनपरमित्यतो न वैयर्थ्यमित्याशयेन तथा व्याचष्टे ॥ **अशेषविशेषैरिति** । यत्किंचिद्भक्तानुकम्पस्य स्वसंविद्दानोपयोगित्वाभावाद्भक्तपदस्य स्वमात्रपरत्वं दर्शयन्नेवानुकम्पशब्दार्थमाह **भक्ते मयीति** । **अनुक्रोशात्** । कृपाविशेषात् । अनेन संविद्दानं न प्रयोजनापेक्षं किन्तु कृपामात्रनिमित्तमित्युक्तं भवति । अत्रैवोपष्टंभकमाह **अत एवेति** । यतोऽनुक्रोश एव निमित्तं न किमपि स्वप्रयोजनमत एवेत्यर्थः । गुणैकधाम्न इत्यनेन गुणमात्रस्याशेषविशेषपूर्णत्वाभिधानेनैव सत्त्वलाभात्तदर्थकस्य सद्गुणात्मन इत्यस्यानर्थक्यमित्याशङ्क्य परिहरति ॥ **सद्गुणानुवादेनेति** ।

**स०** — यतोऽनुक्रोश एव न किमपि स्वप्रयोजनमत एवेत्यर्थः । गुणैकधाम्ने सद्गुणात्मन इत्यनयोः पौनरुक्त्यं परिहरति **सद्गुणेति** ।

प० — मूलोपात्तपुरुषोत्तमविशेषणत्रयस्य नमो नम इति द्विरुक्तेश्च कृत्यं वदन्नवतारयति **स्वप्रतिपादितप्रकारमित्यादिना** । बहुव्रीहिरयम् । **प्रकाराः** शुभधर्माः । अतिशुद्धेत्यस्यार्थं **अति-विशदेति निरुपाधिकेति** । मोक्षादिफलान्तरोपाधिहीनेत्यर्थः ॥ **अत एवेति** । दानस्य दयया स्वाभाविकत्वादेवेत्यर्थः ॥ **ताच्छीलिकस्य तृन इति** । आ केस्तच्छीलतद्धर्मतत्साधुकारिष्विति तृतीयाध्यायद्वितीयपादस्थपूर्वसूत्रप्रकृतताच्छील्यार्थे तृन्निति सूत्रेण तृनो विधानादिति भावः । आद्यान्त्यविशेषणयोः पौनरुक्त्यशङ्कायामाह **मद्गुणानुवादेनेति** ॥ **तादात्म्यं चेति** । आत्मेतिपदेनेति भावः ॥ ४ । ४ । ७ ॥

या० — आद्यविशेषणस्य कृत्यं सूचयंस्तत्तात्पर्यमाह **स्वप्रतिपादितेति** । अनेनैतद्ग्रन्थप्रति-पाद्यानंतगुणपूर्णत्ववत्त्वेन पुरुषोत्तमस्याधिकृतत्वादंतेऽपि वंदनं युक्तमिति तस्य वंद्यत्वोपपादनायैतद्विशेषण-मित्युक्तं भवतीति ज्ञातव्यं । वंद्यत्वोपपादकेष्टत्वप्रदर्शनायोत्तरार्धगतं विशेषणद्वयमित्याशयेनाह **स्वस्येत्यादि** । अत्र संविदः शुद्धत्वं नाप्राकृतत्वं वृत्तिरूपाया अपि संविदो भगवता दीयमानत्वात् । नाप्यभ्रान्तित्वरूपं । इतरसाधारण्यात् । अतोऽत्र विवक्षितं शुद्धत्वं दर्शयन्नाह **अतिविशदेत्यादि** । **तथा** चाचार्यसंविदो भारत्यादिसंविदपेक्षयाऽतिस्पष्टत्वमनादितः सर्वविषयकत्वं च निर्दोषत्ववाचिनः शुद्धशब्दस्यार्थतयाऽत्र विवक्षितं । अस्पष्टत्वकादाचित्कत्वासर्वविषयकत्वानां संविद्दोषतया प्रसिद्धत्वा-दिति भावः । पुरुषोत्तमेत्यनेन वंद्यत्वप्रयोजकं विशिष्टत्वमप्युक्तं भवतीति ज्ञातव्यं ॥ **अनुक्रोशा-दिति** । निरुपाधिकपरदुःखप्रहाणेच्छालक्षणकृपाविशेषादित्यर्थः । अनेन संविद्दानं तस्य न सोपाधिक-मिति सूचितं । अत्रैवोपष्टंभकमाह **अत एवेति** ।

श्री० — **प्रधानाश्रयाय** मुख्याश्रयाय । एके मुख्यान्यकेवला इत्यभिधानात् संख्यार्थत्वे पूर्वनिपातः स्यादित्यवधेयम् ॥ **अनुकंपादिति** । 'मनसा चान्यदाकांक्षादि'त्यत्राकांक्षादिति घञंत इति उपासनापादे टीकाकारैरुक्तत्वात्तद्वदनुकंपादिति शब्दो घञंतो द्रष्टव्यः । घञंताश्च पुल्लिङ्गा इति भावः ॥ **तृन इति** । दातृशब्दस्य तृनन्तत्वादित्यर्थः । गुणैकधाम्न इति सद्गुणत्वस्योक्तत्वात्पुनरुक्तिरित्यत आह **सद्गुणानुवादेनेति** । बुद्ध्या विवेकेनेति भावः ॥ **तादात्म्यं चेति** । भगवद्गुणानामेव निरुपाधिक-प्रीतिविषयत्वं प्राप्तं न भगवत इत्याशङ्काऽप्यनेन परिहृता । गुणानां निरुपाधिकप्रीतिविषयत्वे भगवत एव तत्प्राप्तं तदभेदादिति द्रष्टव्यम् ।

**सु०** — **यथा भगवत्स्वरूपविज्ञानं समस्तपुरुषार्थसाधनं तथा स्वस्वरूपविज्ञानमपीत्यतः तदाविष्कुर्वन्नाह** यस्येति ।

**अनु०** — यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं

यस्य **वायोर्देवस्य** वेदवचने **बळित्थेत्यादावलं** दिव्यान्यद्**भुतानि** त्रीणि रूपाण्यु**दितानि** । अमुना **वायुनाऽयं** केशवे **विषये ग्रन्थः कृत इत्यन्वयः** ।

**शे०** — स्वस्वरूपज्ञानस्य निष्प्रयोजनत्वात्तन्मात्रफलकतत्कथनपरोत्तरपद्यवैयर्थ्यमाशङ्क्य स्वरूपज्ञानप्रयोजनकथनेन तत्परिहरन्नेव तत्परतयोत्तरवाक्यमवतारयति **यथेति** । व्यवहितत्वाद्दुर्गमार्थत्वाच्चान्वयप्रदर्शनपूर्वकं श्लोकं व्याचष्टे **यस्येति** । अत्र वायोरित्यनेन मन्त्रे सहःशब्दो वायुपरः । 'प्राणं वाव महान्सह ओजो बलमित्याचक्षते' इति श्रुतेर्वायुरित्युक्तं भवति । **अलं दिव्यानीति** । यद्यपि टीकायामलमित्येतद्बलित्यनेनान्विततया योजितम् । तथाऽपि दिव्यत्वेऽप्यर्थातिशयलाभाय **दिव्यानी**त्यनेनान्विततयाऽत्र योजितमिति द्रष्टव्यम् । कथमधिकरणत्वं केशवस्येत्यतो विषयत्वेनेत्यभिप्रेत्य तत्तात्पर्यमाह **केशवविषय इति** ।

**प०**— व्यवधानादन्वयेनानुवादो **यस्य वायोर्देवस्येति** ॥

**श्री०** — **केशवे विषय इति** । तस्य गुणपूर्णत्वनिर्दोषत्वज्ञेयत्वगम्यत्वप्रतिपादको ग्रन्थः कृत इत्यर्थः ।

**सु०**—**कीदृशं तस्य मूलरूपं कथंभूतानि च तानि त्रीणि रूपाणीत्यत उक्तं** बडित्यादि ।

**अनु०** — बट्तद्दर्श(र्शि)तमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥

**यस्य तन्मूलरूपं** बट् **बलात्मकं** दर्शतं **ज्ञानरूपं च** । **दृशेरौणादिकोऽतच्प्रत्ययः** ।

**अनेन वायुशब्दो निरुक्तः । वशब्दो बलवाची । अयतिः गत्यर्थः । गत्यर्थाश्चावगत्यर्थाः । तत उण् । वश्चासौ आयुश्चेति वायुरिति ।**

**किञ्च** भर्गो **भरणगमनयोः कर्तृ । डुभृञ् भरणे, गम्लृ गतौ, आभ्यामसुन्प्रत्ययो डिच्च । इदमपि वायुशब्दव्याख्यानम् । वा गतिगन्धनयोरित्यतः कृवापाजिमिस्वदिसाध्यशूभ्य उणित्युण् । अनेकार्थत्वाद्धातूनां वातिर्भरणेऽपि वर्तते । अपि च** महत् **श्रेष्ठम् । वयः श्रेष्ठत्व इत्यस्मादुण् ।**

न केवलं मूलरूपमेवं किन्तु यस्यावतारेषु निहितं रूपमित्थमेव ।

यस्य प्रथमकं प्रथमं रूपं रामविषयाणि वचांसि मूलरामायणादीनि रामवचांसि तेषां नयं नीयन्ते शिष्येषु प्रवर्त्यन्तेऽनेनेति । एरजित्यच् ।

यस्य द्वितीयं वपुः पृक्षः । पृच्छदः पृतनावाची प्रसिद्धः । तस्मिन्कर्मण्युपपदे क्षि क्षय इत्येतस्मात् आतोऽनुपसर्गे क इति कः । उपपदतकारलोपश्छान्दसः । पुल्लिङ्गं(ङ्गः)च श्रुत्यनुसारेण । असुन्वा प्रत्ययः । किदिति नपुंसकमेवेदम् । रिपुपृतनाक्षयकारीत्यर्थः ।

यस्य तृतीयं वपुः एतन्मध्वः । मधुशब्दः सुखवाची । 'मधु द्यौरस्तु नः पिते'ति प्रयोगात् । वशब्दः शास्त्रापरपर्यायतीर्थवाची । वातेरवगत्यर्थात्करणे घञर्थे कविधानमिति कः । सुखसाधनं तीर्थमस्येति । स्वरित्यत्रेवोकारलोपः ।

शे०— औणादिक इति । उणादयो बहुलमित्युक्तत्वात् । भृमृदृशियजिपर्विपच्यमितमिनमिहर्यभ्योऽतच् इति विशेषविहितत्वेऽप्यतच्प्रत्ययस्य बहुलग्रहणाद्दृशेरपि प्राप्त्या तस्मिन्परतो लघूपधगुणे सति दर्शतशब्दनिष्पत्तिरिति भावः ।

तत उणिति । अयतेरुणादेर्बाहुलकादुणि णित्वादत उपधाया इत्युपधाऽकारवृध्या वायुरिति रूपनिष्पत्तिरिति भावः ।

---

किञ्चेति । कीदृशं तस्य मूलरूपमिति शङ्कायां अन्यदप्युत्तरमस्तीत्यर्थः ॥ आभ्यामसुन्प्रत्यय इति । उणादयो बहुलमित्युक्तत्वात् । धातुसमुदायादसुन्प्रत्यये तत्सन्नियोगेन पूर्वधातोः सार्वधातुकार्धधातुकयोरिति गुणे रपरत्वे प्रत्ययस्य ङित्त्वविधानसामार्थ्यात् गमेष्टेरिति टिलोपे च सति भर्गशब्दनिष्पत्तिरिति भावः । न च भृञः साक्षात्प्रत्ययसन्नियोगाभावेऽपि यथाकथञ्चित्संयोगेन गुणवत्तस्य डित्वविधाने तत्सन्नियोगात् भृञोपि टिलोपः स्यादिति वाच्यम् । बहुलवचनेनैव प्राप्तस्यापि तस्य बाधकसंभवादित्याहुः । वस्तुतो ङित्करणस्येष्टसिद्ध्यर्थत्वान्न किञ्चिदेतदिति ध्येयम् । उणिति वातेरुण्प्रत्यये आतो युक् चिण्कृतोरिति युगागमे च सति वायुशब्दनिष्पत्तिरिति भावः ॥ वयः श्रेष्ठत्व इति । ननु वयतेः श्रेष्ठत्वार्थत्वे क्रियावाचित्वाभावात्कथं धातुत्वम् । न हि श्रेष्ठत्वस्य 'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयत, इति । 'गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पितो भेदः क्रियेति व्यपदिश्यत' इति । 'स च पूर्वापरीभूत एकत्वादक्रमात्मकः । पूर्वापराणां धर्मेण तदर्थेनानुगम्यत', इति वैयाकरणपरिकल्पितक्रियात्वमस्ति येन तदर्थकस्य वयतेर्धातुत्वं स्यादिति चेन्न । ऋग्भाष्यटीकोक्तरीत्या वदनैकदेशस्य कपोलस्योक्तलक्षणक्रियात्वा-

भावेऽपि वदनैकशब्देन विवक्षितस्य तद्व्यापारस्य क्रियात्वात् तद्वाचित्वेन वैयाकरणमते गण्डयतेर्धातुत्ववत् श्रेष्ठत्वशब्देन विवक्षितस्य तद्व्यापारस्य क्रियात्वात्तद्वाचितया वयतेरपि धातुत्वस्याप्रत्यूहत्वात् । ततश्च वयतेरुणि णित्त्वादत उपधाया इति उपधावृद्धौ वायुशब्दनिष्पत्तिरिति भावः ।

**निहितमिति** । प्रेरितमित्यर्थः । भगवतेति शेषः । उपलक्षणं चैतत् । अवतीर्णं चेत्यपि द्रष्टव्यम् । अनेन मन्त्रे, तन्मूलरूपं । **यत** आद्यादित्वात्तृतीयान्तात्तसिः । ततश्च **येनेत्यर्थः** ॥ भगवतेति यावत् । वपुषेऽवताराय । इत्था इत्थमेव । अधायि निहितम् । इत्थमेवाजनि चावतीर्णं चेति योजना सूचिता भवति ।

**प्रथमकमिति** । स्वार्थे कप्रत्यय इति भावेनोक्तं प्रथमकमिति । रामस्य वचांसि सीतां प्रति नीतवदिति वा रामवचःसु यो नय आज्ञारूपस्तद्युक्तमिति वा टीकोक्तरीत्या सत्येव व्याख्यानेऽर्थान्तरमप्याह **रामेति** । अत्र विषयत्वं षष्ठ्यर्थः संबन्ध इत्यभिप्रेत्योक्तम् **विषयाणीति** । तान्येव शृङ्गिग्राहिकया दर्शयति **मूलेति** ॥ **एरजित्यजिति** । इवर्णान्ताद्धातोर्भावेऽजिति अच्प्रत्ययविधानान्नयतेः करणेऽच्प्रत्यये गुणायादेशयोर्नयशब्दनिष्पत्तिः । अत्र च वायुना कर्त्रा करणभूतहनुमदाख्यप्रथमरूपेण रामायणादीनि शास्त्राणि नीयन्त इत्यर्थस्य विवक्षितत्वाद्युक्तमेव हनुमतः शास्त्रप्रवृत्तिं प्रति करणत्वमत एव चामुना वायुनेति प्रागुक्तमिति ध्येयम् ।

**क इति** । आदेच उपदेशेऽशितीति कृतात्वात् क्षै क्षय इत्यस्माद्धातोरातोनुपसर्गे क इति कप्रत्यये आतो लोप इटि चेत्याकारलोपे पृक्ष इति रूपसिद्धिरिति भावः । ननु तथाऽपि पृत्क्ष इति रूपं स्यात् । पृक्ष इति तु कथमित्यत आह **उपपदेति** । ननु च वपुःशब्दस्य नपुंसकलिङ्गत्वात् विशेषणानां च विशेष्यनिघ्नत्वात् पृक्षं द्वितीयं वपुरिति नपुंसकलिङ्गेन भवितव्यं पृक्ष इति पुलिङ्गं तु कथमित्यतः 'पृक्षो वपुः पितुमानिति' श्रुतौ पुलिङ्गस्य श्रुतत्वात्तदनुसारेण भाष्येऽपि पुलिङ्गप्रयोग इत्याह **पुलिङ्गमिति** । अत्र च पक्षे पुलिङ्गस्य छान्दसत्वं कल्पनीयं भवतीत्यपरितोषात्पृक्ष इत्यस्यापि नपुंसकतामेवाश्रित्य विशेषणविशेष्यभावमुपपादयति **असुन्वेति** । नन्वस्मिन्पक्षे आतो लोप इटि चेत्यनेनाकारलोपः सिध्यति तस्य किन्निमित्तकत्वात् । असुनश्च अकित्त्वादित्यतोऽत्र पक्षेऽसुनोऽपि कित्त्वाश्रयणाद्युक्त एवाकारलोप इत्याशयेनाह **किदितीति** ।

भाष्ये मध्वशब्द आनन्दतीर्थशब्दसमानार्थ इत्यभिप्रेत्य तदुपपादनाय मध्वशब्दावयवभूतं मधुशब्दं 'मध्वित्यानन्द उद्दिष्ट'इति प्रमाणानुसारेण सुखवाचितया व्याचष्टे **मधुशब्द इति** । प्रमाणाभावेन तत्र तस्याखण्डशक्त्यसिद्धेरवयवार्थाननुगमेन तत्सापेक्षयोगवृत्तेरप्यनुपपत्तेः कथं मधुशब्दस्यानन्द-

वाचित्वमित्यतोऽखण्डशक्तिमेवाभिप्रेत्य तत्साधकं प्रमाणमाह **मधु द्यौरिति** । पिता द्यौर्नो मधु सुखम-स्त्वित्यर्थः । 'वेति तीर्थमुदाहृतमि'ति प्रमाणं मनसि निधाय तदवयवशब्दं तीर्थवाचितया व्याचष्टे **वशब्द इति** । प्रमाणाभावेन तत्र तस्याखण्डशक्त्यसिद्धेः प्रकृतिप्रत्ययविभागस्यात्रास्फुटत्वेनावयववृत्त्य-नुपपत्त्या तत्सापेक्षयोगस्याप्यनुपपत्तेः । न वशब्दस्य शास्त्रापरपर्यायतीर्थवाचित्वमित्यतो योगवृत्त्यैव तस्य तद्वाचित्वमित्यभिप्रेत्य प्रकृतिप्रत्ययविभागप्रदर्शनेनावयववृत्तिमुपदर्शयति **वातेरिति**।अवगत्यर्थाद्वातेर्वात्यव-गच्छत्यनेनेति घञर्थे करणे कप्रत्यये आतो लोप इटि चेत्याकारलोपे व इति रूपनिष्पत्तिरिति भावः । ननु कर्तर्येव कप्रत्ययविधानात् कथं करणार्थत्वं तस्येत्यतो घञर्थे कमिति घञर्थे तद्विधानात् । घञश्च 'अकर्तरि च कारके संज्ञायामि'ति कर्तृभिन्नभावकरणादिसाधारणत्वेन तदर्थे विहितस्य कस्यापि भाव-करणादिसाधारणत्वाद्युक्तं करणार्थत्वमित्याशयेनोक्तं **घञर्थे कविधानमितीति** । ननु मध्व इत्यत्र न मधुनो व यस्येति बहुव्रीहिराश्रयितुं शक्यः । तथा सति व्यधिकरणबहुव्रीह्याश्रयणप्रसङ्गात् । नापि मधु व यस्येति समानाधिकरणः । वशब्दोक्तशास्त्रस्य सुखत्वाभावेन तदयोगादित्यतोऽत्र सुखवाचक-स्यापि मधुशब्दस्य लक्षणया तत्साधनपरत्वेन सुखपरत्वाभावान्न समानाधिकरणतदनुपपत्तिरित्यभिप्रेत्य तं दर्शयति **सुखसाधनमिति** । नन्वेवं मध्वशब्दनिर्वचने मधुव इति भवितव्यम् । मध्व इति तु कथमित्यत आह **स्वरित्यत्रेवेति** । स्वरित्यत्रेव निरुक्तत्वादत्रोकारलोप इत्यर्थः ।

---

स० — **अनेनेति** । बट् दर्शतमिति पदद्वयेनेत्यर्थः । **एरजित्यजिति** । इवर्णान्ताद्धातोर-च्प्रत्ययः स्यात् अकर्तरि कारके भावे चेत्यनेन भावेऽच्प्रत्ययस्य विहितत्वात्कथं प्रकृते कर्मण्यजिति चेत् । मैवम् । अत्रापि नयनं नयः रामवचसां नयो येनेति विग्रहाश्रयणेन भावप्रत्ययाङ्गीकारेणा-दोषात् । न चैवं नीयते शिष्येषु प्रवर्त्यतेऽनेनेति मूलविरोधः । तस्यार्थकथनमात्रत्वात् । यद्वा बहुल-ग्रहणात् कर्मण्यच्प्रत्ययोपपत्तिः । बाहुलकर्तरिघञादिवदिति भावः । आतोनुपसर्गे क इति कप्रत्यये आतो लोप इटि चेत्याकारलोपे पृक्ष इति रूपसिद्धिरिति भावः । ननु पृक्षं इति भवेत् पृक्ष इति तु कथमित्यत आह **उपपदेति** । वपुःशब्दस्य नपुंसकलिङ्गत्वात् विशेषणानां च विशेष्यनिघ्नत्वात्पृक्षं द्वितीयं वपुरिति भवितव्यम् । पृक्ष इति पुल्लिङ्गं कथमित्यत आह **पुल्लिङ्गमिति** । 'पृक्षो वपुःपि-पितुमामि'ति श्रुत्यनुसारेणात्र पुल्लिङ्गमित्यर्थः । **क्विदितीति** । एवं चाकारलोपोपपत्तिरिति भावः । **वातेरिति** । वाति गच्छत्यनेनेति वः इति विग्रहः । ननु मधुव इति भविष्यति । मध्व इति तु कथमित्यत आह **स्वरित्यत्रेवेति** ।

प० — **अतच्प्रत्यय इति** । उणादयो बहुलमिति सूत्रादिति भावः ॥ तथाच पुगन्तेतिगुणे दर्शतमितिरूपमित्यर्थः ॥ **अनेनेति** । वट्दर्शतेतिकथमनेनेत्यर्थः ॥ **गत्यर्थ इति** । अयपय गताविति धातुपाठादिति भावः ॥ **तत उणिति** । अयधातोरौणादिके उण्प्रत्यये अत उपधाया इति वृद्धावायुरिति रूपम् । तस्य वशब्देन कर्मधारय इत्याह **वश्चासाविति** ॥ **किञ्चेति** । मूलरूपं बलात्मकं ज्ञानरूपं चेत्येतावदेव न किन्तु गुणान्तरयुक्तं चेत्यर्थः । तदाह **भर्ग इति** ॥ **असुन्प्रत्ययो डिच्चेति** । डित्वात् गमेष्टिलोपः भृञोऽकारोन्तादेश इति भावः॥ **कृवापाजीति** उणादिसूत्रम् । डुकृञ् करणे । वा गतिगन्धनयोः । पा पाने । जि जये । डुमिञ् प्रक्षेपे । स्वदि आस्वादने । साध संसिद्धौ अशु व्याप्तौ । एभ्यो धातुभ्य उण्प्रत्ययो भवतीत्युण्प्रत्यये आतो युक् चिण्कृतोरिति युगागमे वायुरिति रूपसिद्धेरिति भावः ॥ **वातिरिति** । वा धातुरित्यर्थः ॥ **अपि चेति** । गुणान्तरोपेतं च तद्रूपमित्यर्थः । इदमपि वायुशब्दव्याख्यानमिति भावेन तदारूढं दर्शयति **वय श्रेष्ठत्व इति** । वय् इत्यस्मादुणि उपधावृद्धौ वायुरिति सिद्धेरिति भावः ॥ **इत्थमेवेति** । उक्तगुणविशिष्टमित्यर्थः । नयशब्दस्य नेतृत्वमर्थ इति भावेन व्युत्पत्तिमाह **नीयन्त इति** ॥ **शिष्येष्विति** योग्यतयान्वेति ॥ **अनेनेति** । रूपेणेत्यर्थः ॥ **एरजितीति** । इवर्णान्ताद्धातोरच्प्रत्ययो भवतीति णीञ् प्रापणे इत्यतोऽच्प्रत्यये सार्वधातुकार्धधातुकयोरिति गुणे अयादेशे नयेति रूपसिद्धेरिति भावः ॥ **आतोऽनुपसर्ग इति** । अनुपसर्गे सुप्युपपदे धातोः कप्रत्ययो भवतीति ऐकारान्तात् क्षै क्षय इति धातोः कप्रत्यये आदेच उपदेशेऽशिति इति धात्वैकारस्य आत्वे आतो लोप इटि चेति तस्य लोपे पृदित्यत्र तकारलोपे च पृक्ष इति सिद्धेरिति भावः । न चैवं वपुर्विशेषणत्वात् पृक्षमिति भाव्यमित्यत आह **छान्दसः पुल्लिङ्ग** इति । पृक्षो वपुरिति श्रुतौ छान्दसपुल्लिङ्गत्वेन तदनुकरणत्वेनात्रापि पुल्लिङ्ग इति भावः । यद्वा छान्दस इति पूर्वेणान्वेति । नन्वसुन्प्रत्यये कथमादेच उपदेशेऽशितीति एकारस्य प्राप्तात्वलोप इत्यत आह **किदिति** । तथाचातो लोप इटि चेति आकारलोप इति भावः । **मध्व इति** । मध्वाभिधमित्यर्थः । तत्पदं निर्वक्ति **मधुशब्द इत्यादिना** ॥ **मधु द्यौरिति** । द्यौर्द्युलोकदेवता नोऽस्माकं पिता अतः मधु सुखदास्त्वित्यर्थः ॥ **तीर्थवाचीति** । कथमित्यतोऽवयवार्थमाह **वातेरिति** । वा गतिगन्धनयोरिति धातोरित्यर्थः ॥ **घञर्थ इति** । स च भावे अकर्तरि च कारकेऽपि विहित इति तदर्थ इत्यर्थः । कप्रत्यये आतो लोपे वेति रूपसिद्धेरिति भावः ॥ **अस्येतीति** । मध्व इति पूर्वेणान्वयः । नन्वेवं मधुव इति भाव्यमित्यत आह **स्वरित्यत्रेवेति** । सुवरिति वक्तव्ये उकारलोपेन स्वरिति पठन्ति बह्वृचाः । तथेहापि मधुशब्दोकारलोप इत्यर्थः ।

**या०** — ननु भृमृयजिपर्विपच्यमितमिनमिहर्येभ्योऽतच् इति सूत्रे दृशोऽग्रहणात्कथं तस्मादतच् व्याख्यायत इत्यत उक्तं **औणादिकमिति** । तथा च उणादयो बहुलमित्युक्तत्वात् दृशेरप्यतच् भविष्यतीति भावः ॥ **तत उणिति** । बहुलमित्युक्तत्वादिति भावः । ततश्च णित्वादुपधाकारवृद्ध्या वायुरिति रूपमिति ज्ञातव्यम् ।

**किंचेति** । कीदृशं तस्य रूपमिति शङ्कायामन्यदप्युत्तरमुच्यत इत्यर्थः । एवमेवापि चेत्येतदपि नेयम् ॥ **आभ्यामसुन्प्रत्यय इति** । अयमपि बाहुलिक एवेति ज्ञातव्यम् । तथा च गमेष्टिलोपे भृञो गुणे च भर्ग इति रूपमिति भावः । धातुसमुदायात्प्रत्ययश्च प्रागेवोपपादितः ॥ कृवापाजीत्याद्युणादिसूत्रस्यायमर्थः । डुकृञ् करणे कृञ् हिंसायां कृकरण इति त्रयाणामपि कृ इत्यनेन ग्रहणम् । निरनुबन्धग्रहणे सामान्यग्रहणमिति परिभाषितत्वात् । वा गतिगन्धनयोः, पा पाने जि जये, डुमिञ् प्रक्षेपणे, स्वदि आस्वादने, साध् संसिद्धौ, अशू व्याप्तौ एभ्यो धातुभ्य उण्प्रत्ययो भवतीति । उदाहरणानि तु कारुः वायुः पायुरित्यादीनि द्रष्टव्यानि । तथा चानेनोणि कृते आतो युक् चिण्कृतोरिति युगागमे च वायुरिति रूपमिति ज्ञातव्यम् ॥ **वयः श्रेष्ठत्व इति** । अत्र श्रेष्ठत्वशब्देन श्रेष्ठस्य भावस्तद्व्यापारः क्रियारूपो विवक्षितः । अन्यथा तद्वाचिनो वयतेर्धातुत्वाभावप्रसङ्गात् । भूवादयो धातव इति क्रियावाचिनामेव धातुत्वाभिधानात् । ततश्चात्रापि णित्वादुपधावृद्धौ वायुरिति रूपमिति ज्ञेयम् ।

**तेषामिति** । कर्तृकर्मणोः कृतीति प्राप्तायाः षष्ठ्याः प्रतिपदविधानषष्ठ्या न समास इति प्रतिषेधेऽपि तस्य कृद्योगलक्षणा षष्ठी समस्यत इति वार्तिकेनापोदितत्वात्समासोपपत्तिरिति भावः ॥ **एरजित्यजिति** । इवर्णान्ताद्धातोर्भावेऽकर्तरि च कारके संज्ञायामच्प्रत्ययो भवतीति सूत्रार्थः । उदाहरणं तु जयः चयः क्षय इत्यादि ज्ञेयम् । तथा चानेन सूत्रेण नयतेः करणेऽच्प्रत्यये गुणेऽयादेशे च सति नयमिति रूपमिति भावः । अत्र वायुना कर्त्रा हनुमदाख्येन प्रथमेन रूपेण रामायणादिशास्त्राणि नीयन्त इति विवक्षितत्वाद्धनुमतः शास्त्रप्रवृत्तिकरणत्वमिति ज्ञातव्यम् । अत एवामुना वायुनेति प्रागुक्तम् । अकर्तरि च कारके संज्ञायामित्यत्र चकारः संज्ञाव्यभिचाराय इति काशिकायामुक्तत्वेन नयमित्यस्य संज्ञात्वाभावेऽप्युक्तप्रत्ययोपपत्तिः ॥ **आतोनुपसर्गे इति** । क्षै क्षय इत्यस्यादेच उपदेशेऽशितीत्यनेनात्व आदन्तत्वमिति ॥ **उपपदे तकारलोप इति** । आतो लोप इटि चेति धात्वाकारलोपोऽपि द्रष्टव्यः । नन्वसुन्प्रत्यये तस्याकित्त्वात्कथं किन्निमित्त आकारलोप इत्यत आह **किदिति** । कित्कार्यकारी विवक्षितः ॥ **मधु द्यौरिति** । द्यौर्द्युलोकाभिमानी देवो नःपिताऽतो नः मधु सुखमुद्दिश्यास्त्वित्यर्थः । इदमुपलक्षणम् । मध्वित्यानन्द उद्दिष्ट' इति वचनादित्यपि ग्राह्यम् ॥

**तीर्थवाचीति** । 'वेति तीर्थमुदाहृतमि'ति वचनादिति भावः । ननु कप्रत्ययस्य कर्तर्येव विधानात्कथं करणार्थत्वं तस्येत्यत आह **घञर्थे कविधानमिति** । घञ् चाकर्तरि कारके विहित इति भावः । सुखवाचकेन मधुशब्देन तत्साधनं लक्षणीयमित्याशयेनाह **सुखसाधनमिति** । अस्येति इतिशब्दस्यैतन्मध्व इति पूर्वेणान्वयः । नन्वेवं मधुव इति स्यादत आह **स्वरित्यत्रेवेति** । सुवरिति वक्तव्ये उकारलोपेन यथा स्वरिति पठन्ति ऋग्वेदिनस्तथाऽत्रापीति भावः ।

श्री० — **अतच्प्रत्यय इति** । दृशिर् प्रेक्षण इत्यस्मादतच्प्रत्यये हलन्त्यमिति चकारलोपे दृशतेति जाते ऋवर्णस्य गुणे तस्य च रपरत्वे दर्शतेति रूपम् । बलवाची । वबयोरभेदादिति भावः । गत्यर्थः । अयपयगताविति धातोरित्यर्थः ॥ **तत उणिति** । अ धातोरुण्प्रत्यये णित्त्वादादिवृद्धौ आयुरिति भवतीत्यर्थः ।

**किंचेति** । कीदृशं तन्मूलरूपमिति शङ्कायां विशेषणान्तरमुच्यत इत्यर्थः । **भरणेति** । वायोर्जगद्धारणकर्तृत्वं च सप्तमस्कन्धगते 'लोकान्यो बिभर्ति महाबलः' । 'वायुना वै गौतमसूत्रेणे'त्यादिश्रुतिसिद्धमिति द्रष्टव्यम् । गमनं ज्ञानं तत्कर्तृत्वं नाम ज्ञातृत्वं तथा च सर्वज्ञमित्यर्थः ॥ **आभ्याममुनुप्रत्यय इति** । भृञ् भरणे गम्लृ गतौ आभ्याममुनुप्रत्यय उन् इत्यस्य लोपे तस्य डित्कार्यकारित्वात्तस्मिन् परतो गमेष्टिभूतस्याम् इत्यस्य लोपे भृधातोर्ऋवर्णस्य गुणे तस्य च रपरत्वे सस्य रुत्वे विसर्गे च सति भर्ग इति सकारान्तं नपुंसकमिति भावः । तथा च भर्गः भर्गसी भर्गांसीति शब्दप्रकारः । **वा गतीति** । तथा च वा धातोः कृवापाजीत्याद्युणादिसूत्रेण उण्प्रत्यणे आतो युक्चिण्कृतोरिति सूत्रेण वाधातोः पुरतो युगागमे उक् इत्यस्य लोपे वाय् उ वायुरिति रूपम् । ननु भर्ग इत्येतत्कथं वायुशब्दव्याख्यानम् । वातेर्गत्यर्थत्वेन गमनकर्तृत्वस्यैव प्राप्त्या भरणकर्तृत्वस्याप्राप्तेरित्यत आह **अनेकार्थत्वादिति** । 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातव' इति वचनादिति भावः ॥ **अपि चेति** । मूलरूपस्य विशेषणान्तरमुच्यत इत्यर्थः । **वयः श्रेष्ठत्व इति** वयधातोरुण्प्रत्यये यकारस्याकारलोपे णित्त्वादुपधावृद्धौ वायुरिति रूपम् ।

**इत्थमेवेति** । मूलरूपवदेव बलाद्यात्मकमित्यर्थः ॥ **एरजित्यजिति** । ईशब्दस्य षष्ठी एरिति । इवर्णान्ताद्धातोरकर्तरि कारकेऽच्प्रत्ययः स्यादित्यर्थः । तथाच नीत्यस्माद्धातोः करणेऽच्प्रत्यये इकारस्य एकाररूपे गुणे तस्य अयादेशे नयमिति रूपम् ॥ **क्षै क्षय इत्यस्मादिति** । तथा च धृतशब्दे कर्मण्युपपदे क्षै धातोः आदेच उपदेशेऽशितीति ऐकारस्य आत्वे आतोनुपसर्गे क इति कप्रत्यये कित्वाद्धात्वाकारलोपे

छन्दस्त्वादुपपदतकारलोपे पृक्ष इत्यकारान्तं रूपम् । नन्वकारान्तपुलिङ्गोऽयं पृक्षशब्दः । कथं द्वितीयवपुषो विशेषणमित्यत आह **पुल्लिङ्गमिति** ॥ **श्रुत्यनुसारेणेति** । 'पृक्षो वपुः पितुमानि,ति श्रुत्यनुसारेणेत्यर्थः । अत एवास्वरसादाह **असुन्वा प्रत्यय इति** ॥ **किदिति** । धात्वाकारलोपरूपकित्कार्यकारीत्यर्थः । तथा च पृच्छब्दे कर्मण्युपपदे क्षै क्षय इति धातोरसुन्प्रत्यये ऐकारस्यात्वेऽसुन् प्रत्ययस्य कित्कार्यकारित्वात्तस्मिन्परतो धात्वाकारलोपे सस्य रुत्वे विसर्गे उपपदतकारलोपे च सति पृक्ष इति सकारान्तं नपुंसकमेवेदं वपुषो विशेषणं युक्तमित्यर्थः । पृक्षः पृक्षसी पृक्षांसीति शब्दाकारः ॥ **वातेरिति** । वा गतिगन्धनयोरिति धातोरवगत्यर्थाद्वा धातोर्घञर्थे कविधानमिति वार्तिकेण करणस्यापि घञर्थत्वात्करणे कप्रत्यये कित्वाकारलोपे व् अ वेति रूपम् ॥ **अस्येतीति** । इति हेतोरेतत्तृतीयं वपुर्मध्व इति पूर्वेणान्वयो द्रष्टव्यः । ननु तर्हि मधुव इति स्यान्न तु मध्व इति उकारलोपविधायकाभावादित्यतश्छान्दसोऽयमुकारलोपः । भूर्भुवःसुवरिति वक्तव्ये छान्दसत्वेन यथा उकारलोपमाश्रित्य स्वरिति ऋग्वेदिनः पठन्ति तद्वदित्याह **स्वरित्यत्रेवेति** ।

**सु०—** **भगवत्स्वरूपप्रतिपादनेनैव ग्रन्थोपसंहारः समुचित इत्याशयवान्नित्यापरोक्षं भगवन्तं संबोध्य स्तौति** निःशेषमिति ।

**अनु०—** निःशेषदोषरहित कल्याणाखिलसद्गुण ॥
भूतिस्वयम्भुशर्वादिवन्द्य त्वा नौमि मे प्रियम् ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४–४ ॥

अध्यायः संपूर्णः ॥ ग्रन्थश्चायं संपूर्णः ॥ श्रीकृष्णार्पणमस्तु ॥

भूतिः **महालक्ष्मीः** ॥

**शे०—** मंगलाचरणस्य पूर्वमेव कृतत्वात्किं पुनस्तत्करणेनेत्यतस्तत्र निमित्तं वदन्नेव संबोधनपूर्वकस्तुतौ च निमित्तं सूचयन्नेव स्तुतिरूपमंगलाचरणपरतयोत्तरपद्यं सङ्गमयति **भगवदिति** । अप्रसिद्धेर्भूतिपदार्थमाह **महालक्ष्मीरिति** । अत्र च ग्रन्थे श्रियः पत्य इत्यादौ, महालक्ष्मीरिति चान्ते श्रीवाचकशब्दस्य संपुटाकारेण प्रयोगाच्छ्रीकरोऽयं ग्रन्थ इति सूचितमिति गुरुचरणाः ।

**प०—** भूतिपदस्यानेकार्थत्वाद्विवक्षितमर्थमाह **भूतिर्महालक्ष्मीरिति** ।

**या०—** विभूतिपदव्याख्यानव्याजेनान्ते माङ्गलिकं शब्दं पठति भगवाट्टीकाकारः ॥ **विभूतिर्महालक्ष्मीरिति** । आदौ श्रिय इति अन्ते च महालक्ष्मीरिति श्रीवाचकशब्दस्य संपुटाकारेण प्रयोगाच्छ्रीकरोऽयं ग्रन्थ इति सूचयितुमिदमिति सांप्रदायिकाः ।

**श्री०—** संबोधनाभिप्रायमाह **नित्यापरोक्षमिति** । भूतिपदव्याख्यानव्याजेनान्ते माङ्गलिकं पदं बध्नाति **भूतिर्महालक्ष्मीरिति** ।

**सु०—　वचनप्रसूनमाला जयतीर्थाख्येन भिक्षुणा रचिता ।**
**ध्रियतां हृदये सदये कमलामहिलेन पूरुषेण ॥ १ ॥**

**शे०—** एवं समापितग्रन्थव्याख्यानो भगवांष्टीकाकारः स्वकीर्त्यनुवृत्तये स्वनाम ग्रन्थे उपनिबध्नन्नेव स्वकृतस्य ग्रन्थस्य प्रचयाद्यभिमतसिद्ध्यर्थं तस्य पुष्पमालात्वेन प्रीतिपूर्वकं भगवता हृदये धारणप्रार्थनारूपमङ्गलमाचरति **वचनेति** । सकलवाङ्मनसदेवतया रमया युत एव भगवति पुष्पमालात्वेन ग्रन्थसमर्पणमभिमतसिद्ध्यङ्गमिति ज्ञापयितुं **कमलामहिलेनेत्युक्तम्** । कमला लक्ष्मीर्महिला वनिता यस्य तेनेत्यर्थः । वनिता महिला तथेत्यभिधानात् ।

**प०—** कृतं व्याख्यानं स्वामिने समर्पयति **वचनेति** । यथा हि लोके भिक्षुकः तत्र तत्रोद्यानेषु पुष्पाण्याहृत्य मालां कृत्वा समर्पयेच्चेत्तां यथा दयालुर्हृदये बिभर्ति एवं वजनप्रसूनमाला मया समर्पिता हृदये दयया ध्रियतां इयं साध्वीत्यङ्गीक्रियतामित्यर्थः । कमला लक्ष्मीर्महिला भार्या यस्येति स तथा तेनेत्यर्थः । माला हि प्रमदायुक्तस्यैव हृदयङ्गमेति कमलामहिलेनेत्युक्तम् ।

---

**या०— कमलामहिलेति** । कमला रमा, महिला वनिता, यस्य स तथोक्तः । 'वनिता महिला तथे'त्यभिधानात् ।

**श्री०— वचनप्रसूनेति** । यथा कश्चिद्भिक्षुकः पुष्पमालां विरचय्य ऐश्वर्यवन्तं कञ्चनप्रभुं प्रति दत्ता चेत्सा यथा तदुपरि दयया हृदये तेन ध्रियते तद्वदित्यर्थः । 'महिला वनिता तथे'त्यभिधानात्कमला महिला यस्यासौ कमलामहिलो लक्ष्मीपतिस्तेनेत्यर्थः ।

सु० — न वैदुष्यभ्रान्त्या न च वचनचातुर्यकुधिया
न मात्सर्यावेशान्न च चपलतादोषवशतः ।
परं श्रद्धाजाड्यादकृषि कृतिमाचार्यवचसि
स्खलन्नप्येतस्माज्जगति न हि निन्द्योऽस्मि विदुषाम् ॥ २ ॥

शे० — केवलं गुरुदेवताभक्त्यतिशयसाध्यतत्प्रसादलब्धैतद्ग्रन्थप्रतिपादितपदस्वरूपप्रमाणप्रमेयोपपादकन्यायजाते नानादरः कार्य इतीममर्थं व्यञ्जयन्नेव स्वगर्वं परिहरति **न वैदुष्यभ्रान्त्येति** । आचार्यवचसि पूर्णप्रमतिभगवत्पादरचितश्रीमदनुव्याख्यानरूपवचनविषये कृतिं तत्रत्यविषमपदवाक्यविवृतिं **अकृषीति** । करोतेर्लुङात्मनेपदोत्तमपुरुषैकवचनम् । व्यञ्जकं चात्र विदुषामित्येतदेवेति गुरुचरणाः ।

स० — **अकृषीति** । डुकृञ्करण इत्यस्य लुङुत्तमपुरुषैकवचनम् ।

इति श्रीचतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ श्रीकृष्णार्पणमस्तु ॥

---

प० — **श्रद्धाजाड्यादिति** । भक्तिपारवश्यादित्यर्थः । **अकृषि** कृतवानस्मि । एतस्मात्स्खलनदोषान्न हि निन्द्योऽस्मि । किन्तु मान्य एव भवामीत्यर्थः ।

या० — **श्रद्धाजाड्यात्** भक्तिपारवश्यात् । **आचार्यवचसि** विषये । **कृतिं** तदर्थप्रकाशनरूपाम् । आचार्यवचसीत्यस्य श्रद्धाजाड्यादित्यनेनान्वयः ॥

श्री० — **अकृषि** अकार्षम् ।

सु०— अनुव्याख्याऽमृताम्भोधेः समुत्पन्नाऽतिनिर्मला ।
इयं न्यायसुधा भौमैर्विबुधैः सेव्यतां सदा ॥ ३ ॥

**शे०** — श्रवणमननाभ्यामसकृदेतद्ग्रन्थसेवनमेवैतद्ग्रन्थतात्पर्यविषयीभूतार्थावगतिकारणं न तुप्रसिद्ध-सुधाया इव कादाचित्कमपि तत्तथेति व्यञ्जयन्नेव स्वकृतग्रन्थस्य हेतुकथनपूर्वकं सर्वदा सकलभूसुरसेव्यतां प्रार्थयते **अनुव्याख्याऽमृताम्भोधेरिति** ।

**प०**— **भौमैः** भूमिगतैः । **विबुधैः** भूसुरैः ब्राह्मणैरित्यर्थः ।

सर्वेन्द्रियप्रेरकेण श्रीप्राणपतिनेरितः । यदवोचमहं तेन प्री(णातु)यतां कमलालयः ॥
ये तु न्यायसुधापानकामुका रसिका बुधाः । आघ्रायेमं परिमळं सेवन्तां ते सुधामिमाम् ॥
( सेवन्ते तामिमां सुधाम् )

ज्ञानाब्धिरप्यवादीद्यत्स्खलत्त्वं स्वात्मनस्तदा ।
मादृशानां स्खलत्त्वं किं वाच्यं क्षाम्यन्तु तद्बुधाः ॥

इति श्रीमन्न्यायसुधापरिमळे सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते
चतुर्थाध्यायस्य चतुर्थः पादः संपूर्णः ॥ ४–४ ॥

---

श्रीलक्ष्मीहयग्रीवार्पणमस्तु ॥

**या०** — **न्यायसुधेति** । अमृतहेतुत्वेन सुधारूपा न्यायाः यस्यामिति विग्रहः । अभ्याहि-तादिवत्परनिपातः । **भौमैर्विबुधैः** भूसुरैर्ब्राह्मणैरिति यावदित्यशेषमतिमङ्गलम् ॥

वासवीवियति व्यक्तं परापरविभासकम् ॥
व्यासाभिधमहं वन्दे महामोहतमोपहम् ॥ १ ॥
अपारागाधश्रीजयमुनिकृतग्रन्थहृदयप्रपञ्चे मे यत्नो यदपि परिहासैकफलकः ।
तथापि श्रीव्यासालवमतिकृपादृष्टिबलतः कृतो यत्तेन स्यात्सकलसुजनाल्हादजनकः ॥ २ ॥
वेदेशयोगिवरमानसनीरजस्थश्रीमध्वहृत्कमलवासिरमानिवासः ॥
व्यासोस्त्वनेन जयतीर्थमुनीन्द्रवाक्यगूढाशयप्रकटनेन सदा विभूत्यै ॥ ३ ॥

इति श्रीमद्वेदेशतीर्थपूज्यपादानां शिष्येण यदुपतिना कृतायां सुधाटिप्पण्यां
चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४–४ ॥
श्रीकृष्णार्पणमस्तु ॥ समाप्तोऽयं ग्रन्थः ॥

**श्री०**— प्रसिद्धा सुधा दिविष्ठैर्विबुधैः सेव्यते । इयं तु **भौमैः** भुविष्ठैः, **विबुधैः** भूसुरैः विद्वद्भिर्ब्राह्मणैः, सेव्यतामित्यर्थ इत्यशेषमतिमङ्गलम् ॥

यादवाचार्यहृत्स्थश्रीमध्वाचार्यहृदब्जगः । आनन्दादिगुणोद्रिक्तः प्रीयतां बादरायणः ॥ १ ॥

वेदेशमुनिसत्पादसेवासंप्राप्तवैभवान् । यादवार्यान् वरसुधाटीकाकारान् वयं नुमः ॥ २ ॥

श्रीमन्न्यायसुधाटीका यादवाचार्यनिर्मिता ॥ तत्राधृतानि वाक्यानि तान्यत्र विवृतान्यलम् ॥३॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽधृतसुधावाक्यार्थविवरणे चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४–४ ॥

समाप्तोऽयं ग्रन्थः ॥ श्रीकृष्णार्पणमस्तु ॥

मु० — इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृते-
रनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ।
कृतायां टीकायां विषमपदवाक्यार्थविवृतौ
चतुर्थेऽध्यायेऽस्मिंश्चरमचरणः पर्यवसितः ॥ ४-४ ॥

इति श्रीमन्न्यायसुधायां चतुर्थोऽध्यायः संपूर्णः ॥ ४ ॥

श्रीकृष्णार्पणमस्तु ॥

शे० — 'इति श्रीमदि'ति पद्ये प्रगुणत्वं ऋजुत्वं अवक्रगतित्वमिति यावदित्यशेषमतिमङ्गलम् ॥

सकलसुगुणपात्रं सर्वदोषैकजैत्रं सुमतिसुगतिदात्रं सुष्ठुसज्ज्ञाननेत्रम् ।
निखिलजनिजनित्रं नित्यदुष्टैकवेत्रं नवनवमुचरित्रं नौमि लक्ष्मीकलत्रम् ॥ १ ॥

शुभगुणगणगात्रं शुद्धविज्ञाननेत्रं श्रुतिविततचरित्रं श्रान्ततापातपत्रम् ।
श्रमजलधिवहित्रं शान्तमन्तःपवित्रं श्रयत विबुधमित्रं शक्तियोगीन्द्रपौत्रम् ॥ २ ॥

---

विद्याख्यरत्नप्रभवाय बुद्धौ विद्योतमानाय सुबृंहिताय ॥
शुद्धाय नित्यं मुनिसेविताय मध्वाद्भुताम्भोनिधये नमोऽस्तु ॥ ३ ॥

श्रीमद्व्याससुशास्त्रशुद्धजलधिं मध्वोक्तसत्तर्कदुस्तर्काख्यामरदानवाश्रितमतिश्रेष्ठं हि हृद्भूभृता ।
आलोड्याखिलतत्त्वभासकमहारत्नानि चाप्तोत्सुधां सोऽयं योगिमहेन्द्रसन्निभजयार्याख्यो भवेन्मे मुदे ॥४॥

श्रीमद्व्यासमतापगापतिवरं श्रीमज्जयप्रोक्तसत्सर्पावेष्टितमध्वसन्मुनिवरग्रन्थागवर्येण यः ।
संलोड्याखिलसन्नयामृतवरं तत्त्वादिसद्दीपिकासत्तात्पर्यसुचन्द्रिकातरुवरं यस्तर्कसत्ताण्डवम् ॥ ५ ॥

निष्काश्याद्भुतखण्डनत्रयमुखव्याख्यानरत्नोच्चयं दृष्ट्वा कुत्सितयुक्त्यरातिपिहितं श्रीव्यासतीर्थो बुधः ।
स्वोक्तिं रक्षितुमत्र यः प्रतिपदं सम्यग्विशेषार्पको विद्याधीशयतीन्द्रसद्गुरुवरः किं नावतीर्णः स हि ॥ ६ ॥

यद्धस्ताम्बुजसङ्गतोऽहमभवं देव्याः कटाक्षाश्रयो यद्व्याख्यानदिवाकरेण विदुषामन्तस्तमः संहृतम् ।
ये प्रीता भुवि चन्दनद्रुम इव स्वीयं स्ववत्कुर्वते तान्भक्त्यादियुजो भजे परगुरूनानन्दभट्टारकान् ॥ ७ ॥

यः श्रीनिवासमृगराट् सकलान्मदान्धमायाविसिन्धुरसुकुम्भगिरीन्विदार्य ।
सत्तर्कतीक्ष्णनखरैर्विरराज मध्वसिद्धान्तचारुविपिने तमलं भजेऽहम् ॥ ८ ॥

श्रीमत्सुधाद्भुताम्भोधिविक्रीडनविचक्षणान् । श्रीमद्विद्याधीशमुनीन्वन्दे विद्यागुरून्मम ॥ ९ ॥

अथ तत्कृपयैवाहं तत्सुशिक्षितमार्गतः । तेषामाज्ञां पुरोधाय तत्प्रसादाप्तवैभवः ॥ १० ॥

शिक्षितान्युक्तिनिचयान्स्मारं स्मारं यथामति । अकार्षं भावगूढायाः सुधायाः शेषपञ्चिकाम् ॥११॥

व्यक्तं त्यक्त्वा यदव्यक्तं तत्तच्छास्त्रानुसारतः । मूलग्रन्थान्समालोच्य न चोद्ग्रन्थं बहूदितम् ॥१२॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् । अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥१३॥

मया विरचिता शेषसुधावाक्यार्थचन्द्रिका । अनया भावि यत्पुण्यं तदाप्नोतु गुरुर्मम ॥ १४ ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपूज्यपादानां निजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४–४ ॥ चतुर्थाध्यायः समाप्तः ॥

श्रीकृष्णार्पणमस्तु ॥ समाप्तोऽयं ग्रन्थः ॥

## ॥ इति चतुर्थाध्यायः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

एते कृष्णाचार्याः पण्डितपञ्चाननाः अपि स्वात्मानं बालिशशेखरत्वेन ख्यापयन्तो दृश्यन्ते । अहो विनयसम्पत्तिः पण्डितशेखराणाम् । तथाहि तैरेव निबद्धं चषकमङ्गलाचरणीयपद्यम्—

व्याचक्रिरे ये तु महानुभाविनस्तत्पादपाथोजरजःस्मृतिर्हि नौः ।
सुधां गभीरद्युसरिन्निभामलं तितीर्षतो बालिशशेखरस्य मे ॥

एषां पण्डिततल्लजानां व्याख्या न्यायादिपरिभाषापरिप्लुता भवतीत्यतिरोहितं भवेत् विदुषाम् अधस्तनचषकग्रन्थप्रारम्भपंक्तीर्वाचयताम्—

"वृद्धिसूत्रे एतदेकमाचार्यस्य मङ्गलार्थं मृष्यतां माङ्गलिक आचार्यो महतश्शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते" इति व्याख्यासमर्थनौपयिकतया "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च मङ्गलयुक्ता वृद्धियुक्ता यथा स्युः" इति पातञ्जलाभिधानाद्ग्रन्थोऽयमित्यानुपूर्वीकभगवत्पादीयवचोधर्मिकप्रामाण्योपरक्तप्रतिसंहित्युत्पादनानुकूल-व्यापारविशेषितोऽनुव्याकृतिव्याकृतिमारिप्सुष्टीकाकृत्पूज्यचरणस्समीहितसमापनादिफलकश्रीजान्यभिष्टुत्या-दिरूपमङ्गलविधानोत्तरकालिकानभ्यर्णवृत्तिविनेयाधिकरणकतद्गोचरानुसंहितिप्रयोजनकं मङ्गलप्रत्यायकपदघट-कवर्णानुवादकरेखाविशेषरूपोपनिबन्धमादितो विधत्ते 'श्रियः पत्य' इत्यादि ॥

इयं चषकनाम्नी एषां पण्डिताग्रेसराणां सुधाटिप्पणी अस्मिन् ग्रन्थे सप्तमं स्थानं लभते ।

एवं विख्यातटिप्पणीसप्तकसनाथोऽयं श्रीमन्न्यायसुधाख्यो ग्रन्थराजः सर्वेषां कूलंकषज्ञानलिप्सूनां विदुषां वैशद्यापेक्षिणां व्युत्पन्नविद्यार्थिनामत्युपयुक्तोऽत्युपादेयश्च बोभवीतीति द्रढीयान्नो विश्वासः । तमेनं विश्ववन्द्यप्रमेयगर्भं सन्न्यायमहारत्नाकरं माध्वसिद्धान्तव्यध्वसमस्तमतततमस्ततिविध्वंसकं ग्रन्थराजं महा-प्रयत्नैः आदरनैरन्तर्येण समभ्यस्य निर्मलं ज्ञानं सर्वे सुज्ञा अधिकारिणो लभन्तामिति अस्मत्समाराध्यस्य प्रसन्नविठ्ठल–वंशराम–दिग्विजयराम–सीतासमेतमूलरामपञ्चरूपात्मकव्यासादिरूपप्रपञ्चात्मकस्य लक्ष्मी-जानेर्नारायणस्य पादपद्मयोः प्रार्थयामहे ।

माध्वसिद्धान्तदुग्धाब्धेर्नाकीन्द्रजयिनोद्धृता ।
सुधा बोधाय मोदाय सम्भूयाच्छाश्वतीः समाः ॥

इति शम् ।

श्रीमज्जयतीर्थगुरुसार्वभौमश्रीमच्चरणरेण्वेकशरणाः
**श्रीमत्सत्यप्रमोदतीर्थश्रीचरणाः**